# SRIMAD VĀLMIKI RĀMĀYANA

A CRITICAL EDITION

## With the commentary of Sri Govindaraja

AND

Extracts from many other commentaries and Readings.

---

BĀLAKĀṆDA I.

EDITED AND PUBLISHED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilâs Book Depot, Kumbakonam.

*Printed by B. R. Ghanekar for the proprietors,*

*at the "Nirnaya-sagar" Press, 23, Kolbhat Lane,*

**BOMBAY.**

---

1911.

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीयव्याख्यानसमलंकृतम् ।

तथा

तिलकप्रभृत्यनेकापूर्वव्याख्यानोद्धृतैः
गोविन्दराजीयानुक्तापूर्वविषयैश्च संवलितम् ।



## बालकाण्डम् १.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन नानादेशीयकोशानुसारेण

संशोध्य

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८३२ साधारणनाम संवत्सरे ।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

## श्रीमद्गोविन्दराजीयव्याख्यासमलंकृतम् ।

## बालकाण्डम् १

श्रीरामचन्द्राय नमः ॥

### प्रथमः सर्गः ॥ १ ॥

लोके उत्तमः पुरुषः क इति नारदंप्रति वाल्मीकिप्रश्ने तेन तंप्रति श्रीरामस्य पुरुषोत्तमत्वज्ञापनाय तद्गुणानुवादपूर्वकं संक्षेपेण तच्चरित्रकथनम् ॥ १ ॥

**तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥**

श्रीरामचन्द्राय नमः ॥ ॥ आचार्यं शठकोपदेशिकमथ प्राचार्यपारंपरीं श्रीमल्लक्ष्मणयोगिवर्ययमुनावास्तव्यनाथादिकान् । वाल्मीकिं सह नारदेन मुनिना वाग्देवतावल्लभं सीतालक्ष्मणवायुसूनुसहितं श्रीरामचन्द्रं भजे ॥ १ ॥ श्रीमत्यञ्जनभूधरस्य शिखरे श्रीमारुतेः सन्निधावग्रे वेङ्कटनायकस्य सदनद्वारे यतिक्ष्माभृतः । नानादेशसमागतैर्बुधगणै रामायणव्याक्रियां विस्तीर्णां रचयेति सादरमहं स्वप्नेऽस्मि संचोदितः ॥ २ ॥ क्वाहं मन्दमतिर्गभीरहृदयं रामायणं तत्क च व्याख्यानेऽस्य परिभ्रमन्नहमहो हासास्पदं धीमताम् । को भारोत्र मम स्वयं कुलगुरुः कोदण्डपाणिः कृपाकूपारो रचयत्यदः सपदि मज्जिह्वाग्रसिंहासनः ॥ ३ ॥ वैयर्थ्यं पुनरुक्ततामनुचितारंभं विरोधं मिथोसाधुत्वं च पदप्रबन्धरचनावाक्येषु निश्शेषयन् । स्वारस्यं च पदेपदे प्रकटयन् रामायणस्य स्वयं व्याख्यामेष तनोति सज्जनमुदे गोविन्दराजाह्वयः ॥ ४ ॥ पूर्वाचार्यकृतप्रबन्धजलधेस्तात्पर्यरत्नावलीर्ग्राहंग्राहमहं शठारिगुरुणा संदर्शितेनाध्वना । अन्यव्याकृतिजातरूपशकलैरायोज्य सज्जीकृतैः श्रीरामायणभूषणं विरचये पश्यन्तु निर्मत्सराः ॥ ५ ॥ सुस्पष्टमष्टादशकृत्व एत्य श्रीशैलपूर्णाद्यतिशेखरोयम् । शुश्राव रामायणसंप्रदायं वक्ष्ये तमाचार्यपरंपरात्तम् ॥ ६ ॥ क्वचित्पदार्थं क्वचिदन्वयार्थं क्वचित्पदच्छेदसमर्थनानि । क्वचित्क्वचिद्गाढनिगूढभावं वक्ष्ये यथापेक्षमवेक्षणीयम् ॥ ७ ॥

अवतारिका ॥ श्रियःपतिरवाप्तसमस्तकामः समस्तकल्याणगुणात्मकः सर्वेश्वरः "वैकुण्ठेतु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ।" इत्युक्तरीत्या श्रीवैकुण्ठाख्ये दिव्यलोके श्रीमहामणिमण्टपे श्रीभूमिनीलाभिःसह रत्नसिंहासनमध्यासीनो नित्यैर्मुक्तैश्चनिरन्तरपरिचर्यमाणचरणनलिनोपि तद्वदेवस्वचरणयुगलपरिचरणार्हानपितद्धीनान् प्रलयेप्रकृतिविलीनान् मधूच्छिष्टमग्नहेमकणसदृक्षान् क्षीणज्ञानान् जीवानवलोक्य "एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ।" इत्युक्तरीत्या दयमानमनाः "विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ।" इत्युक्तप्रकारेण महदादिसृष्टिक्रमेण तेषां स्वचरणकमलसमाश्रयणोचितानि करणकलेबराणि दत्त्वा नदीतरणाय दत्तैः प्लवैर्नदीरयानुसारेण सागरमवगाहमानेष्विव तेषु तैर्विषयान्तरप्रवणेषु तेषांसदसद्विवेचनाय "शासनाच्छास्त्रं"इत्युक्तरीत्या स्वशासनरूपं वेदाख्यं शास्त्रं प्रवर्त्यापि तस्मिन्नप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिभिस्तैरनादृते स्वशासनातिलङ्घिनं जनपदं स्वयमेव साधयितुमभियियासुरिव वसुधाधिपतिः स्वाचारमुखेन तान् शिक्षयितुं रामादिरूपेण चतुर्धाऽवतितीर्षुरन्तराऽमरगणैः सद्रुहिणैरभ्यर्थितः स्वाराधकस्य दशरथस्य मनोरथमपि पूरयितुं चतुर्धाऽवततार ।

तत्ररामरूपेणावतीर्य रावणं निहत्य पितृवचनपरिपालनादिसामान्यधर्ममन्वतिष्ठत् । लक्ष्मणरूपेण रावणिं निरस्य भगवच्छेषत्वरूपंविशेषधर्मं भरतरूपेण गन्धर्वान्निर्वास्य भगवत्पारतन्त्र्यरूपं शत्रुघ्नरूपेण लवणासुरं ध्वंसयित्वा भागवतशेषत्वं। तानिमान् धर्मान् तानीमानि चापदानानि तत्कालमात्रपर्यवसितानि भविष्यन्तीतिमन्वानः सर्वलोकहितपरः पितामहो भगवान् ब्रह्मा रामचरित्रपवित्रितं शतकोटिप्रविस्तरं प्रबन्धंनिर्माय तं नारदादीनध्याप्य भूलोकेऽपिसंततरामभन्त्रानुसन्धानसन्धुक्षितहृदयवाल्मीकिमुखेन संग्रहेणप्रवर्तयितुं नारदंप्रेषयामास। तदुक्तंमात्स्ये "वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् । ब्रह्मणाचोदितं तच्च शतकोटिप्रविस्तरम् । आहृत्य नारदेनैव वाल्मीकाय निवेदितं "इति । वाल्मीकिरपिनिखिलवेदान्तविदितपरतत्त्वनिर्दिधारयिषया यदृच्छयोपगतंनारदंपृष्ट्वाऽवगतपरतत्त्वस्वरूपः तदनुप्रसन्नेन विधिनादत्तसकलसाक्षात्कारप्रबन्धनिर्माणशक्तिर्वेदोपबृंहणमारभमाणः तस्यार्थप्रधानसुहृत्संमितेतिहासतां व्यङ्ग्यप्रधानकान्तासंमितकाव्यतांच पुरस्कुर्वन् "काव्यालापांश्चवर्जयेत्" इतिनिषेधस्यासत्काव्यविषयतां चनिर्धारयन्स्वग्रन्थेप्रेक्षावतांप्रवृत्त्यर्थंतदङ्गानिदर्शयति प्रथमतश्चतुस्सर्ग्या । तत्रप्रथमसर्गेणविषयप्रयोजनेदर्शयति । तत्रच "तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया" इतिवेदान्तरहस्यस्यप्रश्नपूर्वकंज्ञेयत्वविधानात् "नापृष्टःकस्यचिद्ब्रूयात्" इत्यपृष्टोत्तरस्यप्रत्यादिष्टत्वाच्च प्रश्नमाविष्करोत्यादितःपञ्चश्लोक्या ।

अथप्रारिप्सितस्यग्रन्थस्यनिष्प्रत्यूहपरिपूरणायप्रचयगमनायचगुरुनमस्कारंदेवतानमस्कारंचविदधाति—

तपस्स्वाध्यायेति । तत्र "आचार्याद्धैवविद्याविदितासाधिष्ठंप्रापत् । आचार्यवान् पुरुषोवेद" इत्यादिश्रुत्या सदाचार्योपदेशस्यैवातिशयावहत्वात्स्वगुरोराचार्यलक्षणपूर्तिंदर्शयति द्वितीयान्तपदैः । तत्रवेदसंपन्नत्वमाह तपस्स्वाध्यायनिरतमिति । तपश्चस्वाध्यायश्चतपस्स्वाध्यायौ "अल्पाच्तरं" इतितपश्शब्दस्यपूर्वनिपातः । तपः चान्द्रायणादि स्वाध्यायो वेदः । "स्वाध्यायोवेदतपसोः" इतिवैजयन्ती । तयोर्निरतंनिरन्तरासक्तं । आवश्यकत्वादेतदुभयमुक्तम् । तदाहमनुः "तपोविद्याचविप्रस्यनिश्श्रेयसकरंपरं । तपसाकल्मषंहन्तिविद्ययाज्ञानमश्नुते"इति । यद्वा तपोज्ञानं तपआलोचनइत्यस्माद्धातोरसुन्प्रत्ययः । श्रुतिश्चात्रभवति "यस्यज्ञानमयंतपः" इति । योगइतियावत् । स्वाध्यायोवेदः तयोर्निरतं "स्वाध्यायाद्योगमासीतयोगात्स्वाध्यायमावसेत् । स्वाध्याययोगसंपत्त्यागमिष्यतिपरांगतिं" इत्युक्तप्रकारेणसक्तमित्यर्थः । यद्वा तपोवेदः "तपोहिस्वाध्यायः"इतिश्रुतेः । स्वाध्यायोजपः "स्वाध्यायो वेदजपयोः"इत्युक्तेः। तत्रनिरतम् । "स्वाध्यायान्माप्रमदः । वेदमेवजपेन्नित्यं" इत्युक्तरीत्यासक्तमित्यर्थः । यद्वा तपोब्रह्म "ब्रह्मैतदुपास्स्वैतत्तपः" इतिश्रुतेः तपःप्रधानःस्वाध्यायस्तपस्स्वाध्यायः । शाकपार्थिवादित्वान्मध्यमपदलोपीसमासः । वेदान्तइतियावत् । तत्रनिरतम् "स्वाध्यायप्रवचनाभ्यांनप्रमदितव्यम्" इत्युक्तरीत्याऽध्ययनाध्यापनादिपरमित्यर्थः । यद्वा तपो व्याकरणम् । तथोक्तंवाक्यपदीये । "आसन्नंब्रह्मणस्तस्यतपसामुत्तमंतपः । प्रथमंछन्दसामङ्गमाहुर्व्याकरणंबुधाः इति" । तत् इतरेषामङ्गानामुपलक्षणम् । तत्सहितःस्वाध्यायःतपस्स्वाध्यायः तत्रनिरतं साङ्ग-

श्रीरामचन्द्रायनमः । **महेश्वरतीर्थीयं** । परब्रह्मात्मिकां देवीं भुक्तिमुक्तिफलप्रदाम् । प्रणम्य स्तौमि तामेव ज्ञानशक्तिं सरस्वतीम् ॥ १ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवोप्रेन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामांबुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ २ ॥ प्रणम्य नारायणतीर्थदेशिकान्भवानलार्तामृतपूरनीरदान् । करोति रामायणतत्वदीपिकां महेशतीर्थाख्यमुनिर्यथामति ॥ ३ ॥ सर्वेषां ग्रन्थकर्तॄणां लेखकोऽहं न कल्पकः । लिखितान्यत्र तैर्यानि लिख्यन्ते तान्यतो मया ॥ ४ ॥ ग्रन्थबाहुल्यभीत्याऽत्र क्वचिच्छब्दसुशोधनम् । निघण्टुकथनं चार्थः पदानां लिख्यतेऽधुना ॥ ५ ॥ सीतारामौसमुद्दिश्य विराधखररावणैः । उक्तानां परुषोक्तीनां वास्तवार्थोऽत्रवर्ण्यते ॥ ६ ॥ ब्रह्मलोकप्रसिद्धंशतकोटिप्रविस्तरंरामचरितं भूलोकवर्तिनांचतुर्णांवर्णानांतापत्रयविमोचनाय संक्षिप्यरचयितुमुद्युक्तः परमकारुणिकोब्रह्मा वाल्मिकिरूपेण भूमौ स्वांशेनसमभवत् । तथाचस्कान्दे पार्वतींप्रति शिववचनम् । "वाल्मीकिरभवद्ब्रह्मा वाणी वाक्तस्य रूपिणी । चकार रामचरितं पावनं चरितव्रतः " इति । एवंच ब्रह्मांशभूतोभगवान्प्राचेतसः स्वचिकीर्षितं श्रीमद्रामचरितं गुरुमुखाच्छ्रोतव्यमिति न्यायेन भगवत्कथोपदेशेन स्वगुरुं नारदं प्रतीक्षमाण आस्तेस्म । अथब्रह्मनियोगेनसमागतंभगवन्तं नारदमभ्यर्च्य वाल्मीकिः कोन्वस्मिन्नित्यादिपप्रच्छ। सचदेवर्षिः परमेश्वरकथाप्रश्नमुदितमनाः श्रीरामचरितंसंक्षिप्यवाक्यरूपेणोपदि-

वेदाध्यायिनमित्यर्थः । यद्वा तपः स्वं यस्यासौ तपस्वः ।
अध्यायोवेदः इङ्अध्ययनेइत्यस्माद्धातोः "अध्यायन्या-
य–" इत्यादिनानिपातनात् । अतएव "स्वाध्यायोध्येत-
व्यः " इत्यत्रस्वस्यअध्यायःस्वाध्यायःस्वशाखेत्याचा-
र्यैर्व्याख्यातं तत्रनिरतोऽध्यायनिरतः । तपस्वश्चासा-
वध्यायनिरतश्च तपस्वाध्यायनिरत इतिकर्मधारयः
तम् । यद्वा तपोब्रह्म तद्रूपः स्वाध्यायः तपस्स्वाध्यायः
तस्मिन्निरतं सामगानलोलमित्यर्थः । "वेदानांसाम-
वेदोस्मि " इतिभगवतागीतत्वात् । एवंवेदाध्ययनमु-
क्तम् । अथ "यदधीतमविज्ञातंनिगदेनैवशब्द्यते ।
अनग्नाविवशुष्कैधोनतज्ज्वलतिकर्हिचित्" इतिकेवला-
ध्ययनस्यनिन्दितत्वात्तदर्थज्ञत्वमाह । वाग्विदांवरमि-
ति । वाक् वेदः " अनादिनिधनाह्येषावागुत्सृष्टास्वयं-
भुवा " इतिवाक्शब्दस्यवेदेप्रयोगात् । तांविदन्तिजा-
नन्तीतिवाग्विदः वेदार्थज्ञाः तेषांमध्येवरंश्रेष्ठं । निर्धा-
रणेषष्ठी । यद्वा वाक् व्याकरणं "यश्चव्याकुरुतेवाच-
म् " "वाग्योगविदुष्यतिचापशब्दैः " इत्यादौव्याक-
रणपर्यायत्वेनशिष्टैर्व्यवहृतत्वात् । एतदङ्गान्तराणा-
मुपलक्षणं । षडङ्गविदामग्रेसरमित्यर्थः । एतेनवेदार्था-
भिज्ञत्वमर्थसिद्धम् । यद्वा वाग्विदः यावद्विवक्षितार्थ-
प्रतिपादनक्षमशब्दप्रयोगविदः तेषांवरम् । पूर्ववेदा-
ध्ययनमुक्तं अत्रतदध्यापनम् । यद्वा गोबलीवर्दन्या-
येन वाचः वेदव्यतिरिक्तानिशास्त्राणि तद्विदांवरम् ।
अनेनचतुर्दशविद्यास्थानवेदित्वमुक्तम् । यद्वा भूमवि-
द्योपक्रमे नारदेनात्मनःसर्वविद्याभिज्ञत्वमुक्तम् " ऋ-
ग्वेदंभगवोध्येमियजुर्वेदंसामवेदमाथर्वणंचतुर्थमितिहा-
सपुराणंपञ्चमंवेदानांवेदंपित्र्यंराशिंदैवंनिधिंवाकोवा-
क्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्ष-
त्रविद्यांसर्पदेवजनविद्यामेतद्भगवोध्येमि " इति । तदि-
दमुच्यतेवाग्विदांवरमिति । यद्वा वाक्सरस्वती "गी-
र्वाग्वाणीसरस्वती " इतिवचनात् । तयाविद्यन्तेलभ्य-
न्तइतिवाग्विदः सरस्वतीपुत्रामरीच्यादयः । विद्लृलाभे
इत्यस्माद्धातोःकर्मणिक्विप् । भगवद्भक्ततयातेषांवरम् ।
अनेनाभिजात्यमुक्तम् । तपस्वाध्यायनिरतमित्यनेन
विद्योक्ता । समाहितत्वमाह—मुनिपुङ्गवमिति । तेन
" अभिजनविद्यासमुदेतंसमाहितंसंस्कर्तारमीप्सेत् "
इत्यापस्तंबोक्तमाचार्यलक्षणंज्ञापितम् । मुनयोमनन-
शीलाः "मनेरुच्च " इतिइन्प्रत्ययः । पुमांश्चासौगौ-
श्चेतिपुंगवः "गोरतद्धितलुकि " इतिसमासान्तष्टच्-
प्रत्ययः । श्रेष्ठइत्यर्थः । "बुधेचपुङ्गवःश्रेष्ठेवृषभेभिषजां-
वरे " इतिविश्वः । मुनिषुपुङ्गवोमुनिपुङ्गवः । " सप्त-
मी " इतियोगविभागात् नागोत्तमादिवत्समासः तं ।
तपस्वाध्यायनिरतमित्यनेनवेदार्थस्यश्रवणमुक्तम् । वा-
ग्विदांवरमित्यनेनमननम् । मुनिपुङ्गवमित्यनेननिदि-
ध्यासनम् । यद्वा "तस्माद्ब्राह्मणःपाण्डित्यंनिर्विद्यबा-
ल्येनतिष्ठासेत् । बाल्यंचपाण्डित्यंचनिर्विद्याथमुनिः "
इत्युक्तक्रमेणत्रिभिरेतैःपदैः पाण्डित्यबाल्यमौनान्यु-
क्तानि । नरस्यसंबन्धि नारं "नराच्चेतिवक्तव्यं "
इत्यण् । अज्ञानमित्यर्थः । तत्द्यतिखण्डयतीतिनारदः ।
दोअवखण्डनेइत्यस्माद्धातोः "आदेचउपदेशेऽशिति "
इत्यात्वेसति "आतोनुपसर्गेकः " इतिकप्रत्ययः । अ-
ज्ञाननिवर्तकइत्यर्थः । उक्तंचनारदीये " गायन्नाराय-
णकथांसदापापभयापहाम् । नारदोनाशयन्नेतिनृणाम-
ज्ञानजंतमः " इति । यद्वा नारंज्ञानंतद्ददातीतिनार-
दः । यद्वा नरतिसद्गतिंप्रापयतीतिनरः परमात्मा ।
नृनयइत्यस्माद्धातोःपचाद्यच् । तदुक्तंभारते " नरती-
तिनरःप्रोक्तःपरमात्मासनातनः " इति । सएवनारः ।
तंददात्युपदिशतीतिनारदः तं । एवमाचार्यलक्षणपू-
र्तिमुक्त्वा अधिकारित्वसंपूर्तिप्रदर्शनाय शिष्यलक्षणमा-
ह—तपस्वीत्यादिना । तपोस्यास्तीतितपस्वी " तपस्स-
हस्राभ्यांविनीनी" इतिमत्वर्थीयोविनिप्रत्ययः । भूमा-
दयोमत्वर्थाः । तदुक्तं " भूमनिन्दाप्रशंसासुनित्य-
योगेऽतिशायने । संसर्गेऽस्तिविवक्षायांभवन्तिमतुबा-
दयः " इति । प्रशस्ततपस्कइत्यर्थः । तेन " तपसा-
ब्रह्मविजिज्ञासस्व । सतपोतप्यत । सतपस्तप्त्वा आन-
न्दोब्रह्मेतिव्यजानात् " इतिश्रुतंब्रह्मज्ञानसाधनंतपउ-
क्तम् । यद्वा तपोवेदोव्याकरणंज्ञानंच तद्वान् । तप-
श्शब्दानांतत्रावृत्त्येकशेषाद्यन्यतमेन अर्थस्मरणेसति

श्य जगाम । तदनु तमसातीरमुपसृत्यचरतः व्याधविद्धक्रौञ्चदर्शनजनितशोकस्यवाल्मीकेर्वदनात् मानिषादेतिश्लोकउदभूत् । ततः स्वाश्रममागत्य तमेवानुसंदधानः सविस्मयमास्त । अथभगवांश्चतुर्मुखआगत्य "मच्छन्दादेवतेब्रह्मन्" इत्यभिधाय रामचरितं सर्वंविदितंभवत्वितिवरंप्रदाय पद्यैरेवरामायणंकुर्वित्युपदिश्य स्वधामजगाम । अथचतुर्विंशत्यक्षरगायत्र्याख्यपरब्रह्मविद्याविलास-भूतंरामायणं चतुर्विंशतिसहस्रैःश्लोकैश्चकार तदिदंव्याक्रियते । तपःस्वाध्यायेत्यादिगायत्रीवर्णसंयुक्तश्लोकसंकेतः । चतुर्विंश-तिसंख्याका गायत्रीवर्णसंयुताः । ये श्लोकाः सन्ति तानत्र विलिखामि यथाक्रमम् ॥ १ ॥ श्लोके च प्रतिसाहस्रं प्रथमेप्रथमे क्रमात् । गायत्र्यक्षरमेकैकं स्थापयामास वै मुनिः ॥ २ ॥ गायत्र्यास्त्रीणि चत्वारि द्वेद्वे त्रीण्यथ षट्क्रमात् । चत्वारि सप्तकाण्डेषु

एकपदोपात्तकृतिकालादीनामिव अन्वयबोधःसुलभः । तथाचाधीतसाङ्गसशिरस्कवेदोऽधिगताल्पास्थिरफलकेवलकर्मज्ञानइत्युक्तं । निर्वेदश्चतपः "तपस्वीतापसे शोच्ये" इतिवैजयन्ती । तेन संजातमोक्षाभिलाष इत्युक्तं । तादृशएवहि ब्रह्मज्ञानाधिकारी । तपस्वीत्यनेन शमदमादिसंपत्तिरपिसिद्धा । यद्वा तपोन्यासः "तस्मान्न्यासमेषांतपसामतिरिक्तमाहुः" इतिश्रुतेः । न्यासःशरणागतिःप्रणिपातरूपा । एवं "तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया" इत्याद्युक्तानिप्रणिपातपुरःसराणिदर्शितानि । वल्मीकस्यापत्यंवाल्मीकिः । "अतइञ्" इतीञ्प्रत्ययः । नन्वसौकथंवल्मीकापत्यं । यतोयंभृगुपुत्रएवप्रतीयते । तथाचश्रीविष्णुपुराणे "ऋक्षोभूद्भार्गवस्तस्माद्वाल्मीकिर्योभिधीयते" इति । अत्रापि उत्तरकाण्डेवक्ष्यति "भार्गवेणेतिसंस्कृतौ । भार्गवेणतपस्विना" इतिच । अन्यत्रचप्रचेतोपत्यत्वमभिधीयते "चक्रेप्रचेतसःपुत्रस्तंब्रह्माप्यन्वमन्यत" इति "वेदःप्राचेतसादासीत्" इतिच प्रसिद्धं । अतः कथमस्यवल्मीकापत्यत्वम् । उच्यते । निश्चलतरतपोविशेषेणास्यवल्मीकावृतौजातायांप्रचेतसावरुणेनकृतनिरन्तरवर्षेणप्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्यप्रचेतसःपुत्रत्वंवल्मीकापत्यत्वंचसंगच्छते । ननुकथंतत्प्रभवत्वमात्रेणतदपत्यत्वम् । मैवम् । गोणीपुत्रःकलशीसुतइत्यादिव्यवहारस्यतत्प्रभवेपिबहुलमुपलब्धेः । उक्तं चब्रह्मवैवर्ते "अथाब्रवीन्महातेजाब्रह्मालोकपितामहः । वल्मीकप्रभवोयस्मात्तस्माद्वाल्मीकिरित्यसौ" इति । मास्त्वपत्यार्थत्वं । तथापिवाल्मीकिशब्दस्साधुरेव गर्ह्यादिषुपठितत्वात् । यद्वाभृगुवंश्यःकश्चित् प्रचेतानाम तस्यायंपुत्रः ऋक्षोनाम । "चक्रेप्रचेतसः पुत्रः" इतिपुत्रत्वाभिधानात् । भार्गवभृगुनन्दनशब्दौ रामेराघवरघुनन्दनशब्दवत् उन्नेयौ । वाल्मीकिशब्दः पुत्रत्वोपचारात् । अतएव कचित् "वाल्मीकेनमहर्षिणा" इतिसंबन्धमात्रेऽण्प्रयुज्यते । सत्स्वपिनामान्तरेषुवाल्मीकिशब्देनाभिधानं ज्ञानाङ्गशमदमाद्युपेतत्वस्फोरणाय । परिपप्रच्छ परि विशेषेण पृष्टवान् । "कोन्वस्मिन्" इत्यादिवक्ष्यमाणमितिशेषः । तपइतिभिन्नंपदंवाब्रह्मवाचि । नारदंब्रह्मपरिपप्रच्छेत्यर्थः । अतोनद्विकर्मकत्वहानिः । उक्तंहिवृत्तिकृता "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषां" इत्यादिनाप्रच्छेर्द्विकर्मकत्वं । परिपप्रच्छेति परोक्षेलिट् । प्रश्नस्यपरोक्षत्वं विवक्षितभगवद्गुणानुसंधानकृतवैचित्यात् । "सुप्तोहंकिलविललाप" इतिवत् । विभक्तिप्रतिरूपकमव्ययंवा । स्वविनयव्यञ्जनायप्रथमपुरुषनिर्देशोवा "ईश्वरःसर्वभूतानांहृद्देशेऽर्जुनतिष्ठति" इतिवत् । स्वस्मिन्नन्यत्वमारोप्यपरोक्षनिर्देशोवा । अनेन "परीक्ष्यलोकान्कर्मचितान् ब्राह्मणोनिर्वेदमायात् नास्त्यकृतःकृतेन । तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियंब्रह्मनिष्ठं । तस्मै सविद्वानुपसन्नायसम्यक्प्रशान्तचित्तायशमान्विताय । येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतांतत्त्वतोब्रह्मविद्याम्" इत्याथर्वणिकीश्रुतिर्गुरूपसदनविषयोपबृंह्यते । तथाहि तपस्वीत्यनेन "परीक्ष्यलोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायात्" इत्यस्यार्थोऽदर्शि । अधीतसाङ्गसशिरस्कवेदोऽधिगताल्पास्थिरफलकेवलकर्मज्ञानतयासंजातमोक्षाभिलाषोहि तपस्विशब्दार्थोवर्णितः । वाल्मीकिरित्यनेन "सम्यक्प्रशान्तचित्तायशमान्विताय" इत्यस्यार्थोदर्शितः । स्वाध्यायनिरतमित्यनेन श्रोत्रियपदार्थउक्तः । "श्रोत्रियंश्छन्दोऽधीते" इतिश्रोत्रियशब्दार्थप्रकाशनात् । वाग्विदांवरमित्यनेन विद्वच्छब्दार्थः । मुनिपुङ्गवमित्यनेन ब्रह्मनिष्ठशब्दार्थः । नारदशब्देनगुरुशब्दार्थः । "गुशब्दस्त्वन्धकारःस्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते" इतितन्निरुक्तिः । परिपप्रच्छेत्यनेन तद्विज्ञानार्थंसगुरुमेवाभिगच्छेदित्येतदुपपादितं "विधिवदुपसन्नः पप्रच्छ" इति श्रुतेः । अत्र ब्रह्मवाचितपःशब्दप्रयोगेण देवतानमस्काररूपंमङ्गलमाचरितं । तथोक्तं । "अइतिभगवतोनारायणस्यप्रथमाभिधानमभिदधताकिंनाममङ्गलंनकृतम्" इति । "देवतावाचकाःशब्दायेचभद्रादिवाचकाः । ते सर्वेमङ्गलार्थाःस्युर्लिपितोगणतोपिच" इति निरन्तरनिरतिशयानन्दरूपंतपोज्ञानरूपंब्रह्म स्वाध्याय सुष्ठुध्यात्वेतिवा देवतानमस्कारः । गुरुनमस्कारश्चकृतोभवति । कथम् । तपस्सुनिरतंनारदमाध्याय परिपप्रच्छेति । यद्वा परि पूजयित्वेत्यर्थः "परिः समन्ततोभावव्याप्तिदोषकथासुच । भाषाश्लेषेपूजनेचवर्जनेवसनेशुभे" । इतिवचनात् नारदंसंपूज्यपप्रच्छेत्यर्थः । "पराशरंमुनिवरंकृतपौर्वाह्णिकक्रियम् । मैत्रेयःपरिपप्रच्छप्रणिपत्या

स्थापितान्यक्षराणितु ॥ ३ ॥ तत्र तत् इतिगायत्र्याःप्रथमाक्षरम् । तपःस्वाध्यायेति । **शिरोमणिः** । वाल्मीकिरिति । "ऋक्षोभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते" इति विष्णुपुराणवचनात् ऋक्षइतितस्यरूढंनाम । तस्यात्राननुक्तिस्तु "आत्मनामगुरोर्ना-

**को न्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान् । धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥**

भिवाद्यच" इतिवत् । अस्यश्रीरामायणस्यगायत्र्यक्षरसङ्ख्यानुसारेणचतुर्विंशतिसहस्रग्रन्थसङ्ख्ययाप्रवृत्तत्वात्प्रथमसहस्रोपक्रमेतकारःप्रयोक्तव्यइति सत्स्वपिब्रह्मवाचकेषुशब्दान्तरेषु तपश्शब्दस्यैवप्रयोगः । प्रबन्धादौतकारप्रयोगश्चावश्यकः । तस्यवक्तुर्वाचकस्यचसौख्यकरत्वात् । तथोक्तं "वस्तुलाभकरोणस्तुतकारःसौख्यदायकः" इति । साहित्यचूडामणौतु "तकारोविघ्ननाशकः" इत्युक्तम् । किंच तकारस्यजलंभूतंबृहस्पतिर्देवता । अतःशुभावहोऽनेनप्रबन्धारंभः । अतएवोक्तंचमत्कारचन्द्रिकायाम् "वर्णानामुद्भवःपश्चाद्व्यक्तिः सङ्ख्याततःपरम् । भूतबीजविचारश्चततोवर्णग्रहाअपि" इत्यारभ्य "एतत्सर्वमविज्ञाययदिपद्यंवदेत्कविः । केतकारूढकपिवद्भवेत्कण्टकपीडितः" इति । "कारणात्पञ्चभूतानामुद्भूतामातृकायतः । अतोभूतात्मकावर्णाःपञ्चपञ्चविभागतः । वाय्वग्निभूजलाकाशाःपञ्चाशल्लिपयःक्रमात् । पञ्चह्रस्वाःपञ्चदीर्घाबिन्द्वन्ताःसन्धयस्तथा । तत्रस्वरेशःसूर्योयंकवर्गेशस्तुलोहितः । चवर्गप्रभवःकाव्यष्टवर्गाद्बुधसंभवः । तवर्गोत्थःसुरगुरुः पवर्गोत्थःशनैश्चरः । यवर्गजोयंशीतांशुरितिसप्तग्रहाः क्रमात्" इति । अत्रतपस्वाइतियगणः आदिलघुत्वात् । तदुक्तं "आदिमध्यावसानेषुयरतायान्तिलाघवम् । भजसागौरवंयान्तिमनौतुगुरुलाघवम्" इति । यगणप्रयोगश्चार्थकरइत्युक्तंचमत्कारचन्द्रिकायाम् "करोत्यर्थानादिलघुर्यगणोवायुदैवतः" इति । ननुतपस्तापः सुतरामाधिःस्वाधिः तयोरायेनिरतमितिग्रन्थारंभेअश्लीलवचनमनुचितम् । तदुक्तं "अश्लीलंयदमाङ्गल्यजुगुप्साव्रीडभीकरम्" इति । मैवम् । प्रसिद्धिविशेषेणतपोवेदयोरेवप्रथमतरंबुद्ध्यारोहेणाश्लीलत्वप्रसङ्गाभावात् । यथाभगिनीलिङ्गादिप्रयोगेषु । अत्रसर्वत्रप्रायेणपथ्यावक्त्रंवृत्तम् । तदुक्तंवृत्तरत्नाकरे "युजोर्जेनसरिद्भर्तुःपथ्यावक्त्रंप्रकीर्तितम्" इति । वृत्तविशेषास्तुतत्रतत्रवक्ष्यन्ते । अत्रवृत्त्यनुप्रासःशब्दालंकारः तकारादीनामावृत्तेः । तदुक्तंकाव्यप्रकाशे "वर्णसाम्यमनुप्रासः" इति । विशेषणानांसाभिप्रायत्वात्परिकरोनामार्थालंकारः । उक्तमलंकारसर्वस्वे "विशेषणानांसाभिप्रायत्वेपरिकरः" इति । तपस्स्वाध्यायनिरतत्वादीनांगुरूपसत्तिहेतुज्ञानानुष्ठानप्रतिपादकत्वात् पदार्थहेतुकंकाव्यलिङ्गमलंकारः "हेतोर्वाक्यपदार्थत्वेकाव्यलिङ्गमलंकृतिः" इतिलक्षणात् । अत्रवाल्मीकिनारदयोः स्वरूपकथनेन शिष्याचार्याभ्यामेवंभवितव्यमितिद्योतनात् वाक्यगतवस्तुनावस्तुध्वनिः ॥ १ ॥

॥ कथंपरिपप्रच्छेत्याकाङ्क्षायांप्रश्नप्रकारंदर्शयति—को न्वित्यादिश्लोकत्रयेण । "नुपृच्छायांविकल्पेच"इत्यमरः । अस्मिन्लोके भूलोके सांप्रतं अस्मिन्काले । "अस्मिन्कालेधुनेदानींसंप्रत्येतर्हिसांप्रतम्" इतिबाणः । लोकान्तरेविष्णोर्विदितत्वात् अत्रैवकालान्तरेनृसिंहादेः प्रसिद्धत्वात्तद्व्यावृत्त्यर्थमेवमुक्तम् । गुणाअस्यसन्तीति गुणवान् । भूमादयोमत्वर्थाः । अस्मिँल्लोकेअस्मिन्कालेकोवासकलकल्याणगुणसंपन्नइत्यर्थः । एवंसामान्येन गुणसमुदायं पृष्ट्वा विशिष्यतत्तद्गुणाश्रयंपृच्छति—कश्च वीर्यवानित्यादिना । यद्वा गुण्यतेआवर्त्यते पुनःपुनराश्रितैरनुसन्धीयतइतिगुणः सौशील्यम् । "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु"इतिविश्वः । सुशीलं हिनाम महतोमन्दैःसहनीरन्ध्रेणसंश्लेषः । तस्याधिक्यं सौशील्यं तद्वान् । सौशील्येगुणशब्दोभियुक्तैःप्रयुक्तः । "वशीवदान्योगुणवानृजुःशुचिः" इति । कोवासौशील्यवानित्यर्थः । सर्वत्र प्रश्ने नु इति किंशब्दोपियत्रनप्रयुक्तस्तत्रानुषञ्जनीयः । एकेनैवकिंशब्देनोपपत्तावप्यादरातिशयात् पुनःपुनस्तत्प्रयोगः । "प्रदानवद्देवतदुक्तं" इतिन्यायेन प्रतिगुणंगुण्यावृत्त्यभिप्रायेणवा लोके गुण संबन्धाद्गुण्यतिशयः इहतुगुणिसंबन्धाद्गुणातिशय इतिद्योतनाय गुणिनःप्रथमंनिर्देशः । "गुणास्सत्यज्ञान—"इत्युक्तेः । कश्चवीर्यवान् चकारउक्तसमुच्चये । सत्स्वपिविकारहेतुष्वविकृतत्वंवीर्यं औषधंवीर्यवदित्यादौतथादर्शनात् तद्वान् । धर्मः अलौकिकश्रेयस्साधनं तंसामान्यरूपंविशेषरूपंचजानातीतिधर्मज्ञः । चका-

---

म—"इतिस्मृत्याआत्मनामग्रहणस्यनिषिद्धत्वात् । निषेधस्यचरूढनामविषयत्वात् । वस्तुतस्तु स्मृतौग्रह उच्चारणमर्थः ज्ञानाद्यर्थत्वे निषेधस्यासंभवापत्तिः । यदि लेखनमात्रेचनोच्चारणमित्यङ्गीकारः तदा रामचरितस्यदुर्लभत्वबोधनफलकस्वतपःप्रख्यापनार्थयौगिकनामोक्तिरितिबोध्यम् ॥१॥ **तनिश्लोकी** ॥ हेमारविन्दवदाश्रयवैलक्षण्येन निस्सीमार्भ्यधिकत्वंवक्तुं कोन्वितिप्रथमंधर्मिनिर्देशः । स्वस्याविकृतत्वेसतिपरविकारकारित्वंवीर्यंतद्वान् वीर्यवान् ॥ २ ॥

**चारित्रेण च को युक्तः सर्वभूतेषु को हितः । विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥**
**आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः । कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥४॥**
**एतदिच्छाम्यहं श्रोतुं परं कौतूहलंहि मे । महर्षे त्वं समर्थोसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥**

रोऽनुक्तसमुच्चयार्थः परिहार्याधर्मज्ञश्चेत्यर्थः । कृतमुपकारंस्वल्पंप्रासङ्गिकमपिबहुतयाजानातीतिकृतज्ञः अपकारास्मरणंचशब्दार्थः । वक्ष्यति "नस्मरत्यपकाराणां शतमप्यात्मवत्तया । कथंचिदुपकारेणकृतेनैकेनतुष्यति"इति । सत्यं कृच्छ्रेष्वप्यनृतशून्यं वाक्यं वचनं यस्यसः सत्यवाक्यः । तथावक्ष्यति "अनृतंनोक्तपूर्वं मेनचवक्ष्ये कदाचन"इति । दृढव्रतः निश्चलसंकल्पः "अप्यहंजीवितंजह्यांत्वांवासीतेसलक्ष्मणाम् । नहिप्रतिज्ञांसंश्रुत्यब्राह्मणेभ्योविशेषतः"इति ॥ २ ॥ चरित्रमाचारःतदेवचारित्रं वायसराक्षसादिवत्स्वार्थेऽण्प्रत्ययः तेनयुक्तःसर्वदाप्यनुल्लङ्घितकुलाचारइत्यर्थः । सर्वभूतेषु सर्वप्राणिषुविषये "भूतंक्ष्मादौचजन्तौचनस्त्रियां गुणसत्त्वयोः"इतिबाणः । हितःहितकरः । हितशब्दात्"तत्करोति"इतिणिच् पचाद्यच् णिलोपेपूर्वरूपेचरूपम् । भूतशब्देनस्वपरतारतम्याभावउक्तः । सर्वशब्देनसापराधेष्वपिहितकरत्वमुक्तम् । वेत्तीतिविद्वान् सर्वशास्त्रज्ञः "विदेःशतुर्वसुः" । समर्थः सर्वकार्यधुरंधरः । प्रियंदर्शनंयस्यासौप्रियदर्शनः एकश्चासौप्रियदर्शनश्चएकप्रियदर्शनः । अयमिवनान्योलोकेप्रियदर्शनोस्तीत्यर्थः । यद्वा एकप्रियदर्शनः एकरूपप्रियदर्शनः । लोकेहिकस्यचिद्दर्शनं कदाचित्प्रियंभवति कदाचिदप्रियंचभवति "तस्माद्दुःखात्मकंनास्तिनचकिंचित्सुखात्मकम्"इतिवचनात् । अयंतुनतथा । किंतु "क्षणेक्षणेयन्नवतामुपैतितदेवरूपंरमणीयतायाः"इत्युक्तरीत्यासदानुभवेप्यपूर्ववद्विस्मयमादधानइत्यर्थः । तथैवोत्तरयिष्यति—सदैकप्रियदर्शनइति । "एकेमुख्यान्यकेवलाः"इत्युभयत्राप्यमरः ॥ ३ ॥ आत्मवान् धैर्यवान् "आत्माजीवेधृतौदेहेस्वभावेपरमात्मनि"इत्यमरः । अप्रकंप्यधैर्यइत्यर्थः । जितक्रोधः विधेयकोपः । दण्डार्हेष्वेवाहितकोपइत्यर्थः । "क्रोधमाहारयत्तीव्रम्" इति हिवक्ष्यति । द्युतिमान् कान्तिमान् । "रूपसंहननंलक्ष्मीं सौकुमार्यंसुवेषताम् । ददृशुर्विस्मिताकारारामस्यवनवासिनः"इतिहिवक्ष्यति । गुणेषुदोषाविष्करणमसूया "असूयातुदोषारोपोगुणेष्वपि"इत्यमरः । अविद्यमानाऽसूयायस्यासावनसूयकः । "शेषाद्विभाषा"इतिकपि "आपोन्यतरस्यां" इतिह्रस्वः । यद्वा असूयकःअसूञ् कण्ड्वादौपठितः । तस्मात्"कण्ड्वादिभ्योयक्"इतियक्प्रत्ययः । "अकृत्सार्वधातुकयोः"इतिदीर्घः । ततो "निन्दहिंस–"इत्यादिनावुञ् सनभवतीत्यनसूयकः । देवाश्चेतिचकारेणासुरादयःसमुच्चीयन्ते । जातरोषस्य कस्यसंयुगे देवादयःसर्वेबिभ्यतीत्यन्वयः । अतोन "भीत्रार्थानां–" इतिकिंशब्दात्पञ्चमी । शत्रुविषयः कोपोमित्राणामपिभयमावहतीत्यर्थः । यद्वा चकारोप्यर्थः । अनुकूलाअपिबिभ्यति किंपुनःप्रतिकूलाइत्यर्थः । यद्वा संयुगेजातरोषस्यकस्यबिभ्यतीत्येवान्वयः । शेषेषष्ठी । "संज्ञापूर्वकोविधिरनित्यः" इत्यपादानसंज्ञापूर्वकपञ्चम्यभावः ॥ अत्रश्लोकत्रयेसमृद्धिमद्वस्तुवर्णनादुदात्तालंकारः ॥ ४ ॥ अथायंप्रश्नोविजिगीषामूलमितिनारदोमन्येतापीतिमन्वानः स्वप्रश्नोजिज्ञासाहेतुकइतिदर्शयन्प्रश्नमुपसंहरति–एतदिति । एतत्पूर्वोक्तगुणाश्रयभूतंवस्तु अहं जिज्ञासुः नविजिगीषुः श्रोतुं नतुक्षेप्तुं इच्छामि नतुब्रूहिइतिनिर्बध्नामि । अहंतावदिच्छामिमयिभवतःप्रसादोस्तिचेद्वक्तुमर्हसीतिभावः । तत्रहेतुमाह—परमिति । हिर्हेतौ "हिर्हेताववधारणे" इतिबाणः । यस्मात्कारणान्मेपरमुत्कृष्टंकौतूहलंविस्मयोस्तितस्मादिच्छामि । यद्वा हिःप्रसिद्धौ । मुखविकासाद्यनुभावैर्ममहर्षस्तवस्पष्टइत्यर्थः । स्वप्रश्नोत्तरदानेदेशिकालाभान्निर्विण्णः संप्रतिभवद्दर्शनेनसंजाताभिलाषोस्मि ब्रूहिमत्पृष्टमितिभावः । "आचार्यस्यज्ञानवत्तामनुमायशिष्येणोपसत्तिःक्रियते"इतिन्यायेननारदस्यप्रष्टव्यविषयज्ञानसंभावनामाह—महर्षइति । ऋषिः ज्ञानस्यपारंगन्ता । ऋषगतावित्यस्माद्धातोः "इगुपधा-

**तिलकं** ॥ लौकिकव्यवहारे प्रजारञ्जनादौचातुर्यसामर्थ्यं तद्वान् समर्थः । एकप्रियदर्शनः । कन्दर्पाधिकसौन्दर्यवत्त्वेन नित्यसुखरूपत्वेनच एकप्रियं केवलप्रियं दुःखासंभिन्नप्रियत्ववद्दर्शनंयस्यसः ॥ ३ ॥ **तीर्थी०** आत्मवान् वशीकृतान्तःकरणः । जितक्रोधः अत्रक्रोधशब्दःकामादीनामुपलक्षकः जितारिषड्वर्गइत्यर्थः ॥ ४ ॥ **तनि०** कथंममसामर्थ्यं तत्राह—महर्ष इति । ऋषयो ह्यलौकिकार्थद्रष्टारः तत्रमहर्षित्वात्त्वमत्तोपि वेदान्तरहस्यज्ञानमधिकमिति । एवंविधंनरं परमपुरुषम् ॥ ५ ॥

**श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः । श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥**
**बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः । मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥**

त्कित्" इतीन् । गत्यर्थोज्ञानार्थः । महांश्चासौऋषिश्च महर्षिः । "आन्महतः समानाधिकरणजातीययोः" इत्यात्वं । हेतुगर्भविशेषणं । महर्षित्वात्त्वमेवंविधं नरं पुरुषं ज्ञातुमर्हसि । ब्रह्मणःसकाशाद्विदितसकलविशेषस्त्वंकथंमेजिज्ञासोर्नवदेरितिभावः । अत्रपूर्वार्धेकाव्यलिङ्गमलंकारः । उत्तरवाक्यार्थस्यपूर्ववाक्यार्थहेतुत्वात् । "हेतोर्वाक्यपदार्थत्वेकाव्यलिङ्गमलंकृतिः" इतिलक्षणात् । उत्तरार्धेपरिकरइत्यनयोःसंसृष्टिः । अन्तेचास्येतिकरणंबोध्यं । इतिपरिपप्रच्छेतिसंबन्धः । नन्वयंप्रश्नोवाल्मीकेर्नसंगच्छते तस्यविदितसकलरामवृत्तान्तत्वेननिश्चयेसंशयायोगात् । वक्ष्यतिह्ययोध्याकाण्डे । "इतिसीताचरामश्चलक्ष्मणश्चकृताञ्जलिः । अभिगम्याश्रमंसर्वेवाल्मीकिमभिवादयन्"इति । कथंरामविषयमध्यवर्तीवाल्मीकिस्तद्गुणान्नविजानीयात् । वक्ष्यतिहि "विषयेतेमहाराजरामव्यसनकर्शिताः । अपिवृक्षाःपरिम्लानाःसपुष्पाङ्कुरकोरकाः"इति । कथंवा "रामोरामोरामइतिप्रजानामभवन्कथाः । रामभूतं जगदभूद्रामेराज्यंप्रशासति"इतिपृथग्जनैरपिविदितंरामवैभवंमुनिरेषनजानीयात् । कथंचैतावन्मात्रं सत्यलोकादागतोनारदःप्रष्टुमर्हति । यएवमुत्तरयति "रामो नामजनैःश्रुतः" इति । तत्रोच्यते । नायमापाततोभासमानःप्रश्नार्थः । नाप्युत्तरार्थः । अत्रकरतलामलकवद्विदितरामवृत्तान्तस्यवाल्मीकेःकुतूहलासंभवात् बुद्ध्वा-वक्ष्यामीत्युत्तरवाक्यानुपपत्तेश्च । किंतु वक्तृबोद्धृानुगुण्यात् वेदान्तेषुनानाविद्यासुतत्तद्गुणविशिष्टतयाऽवगम्यमानंपरंतत्त्वं किंविष्णुरुतरुद्रादिष्वन्यतमइतिप्रश्नार्थः । तदिदंवाल्मीकेर्हृदयमाकलयन्भगवान्नारदोपि रामत्वेनावतीर्णोविष्णुरेववेदान्तवेद्यःपुरुषः ब्रह्मादयः सर्वेतद्भ्रुकुटीभटास्तत्परतन्त्राः । सद्ब्रह्मात्मादिशब्दाश्च पर्यवसानवृत्त्याऽवयववृत्त्याच विष्णुपराइत्येवमाशयेन सकलवेदान्तोदितगुणजातं रामेयोजयन्नुत्तरयतीति सर्वमनवद्यम् ॥ ५ ॥ एवं"तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्"इत्युक्तं गुरूपसदनविधिमुपबृंह्य "येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतांतत्त्वतोब्रह्मविद्यां"इत्युक्तंप्रवचनविधिमुपबृंहयति–श्रुत्वेत्यादिना । तत्र "नासंवत्सरवासिनेप्रब्रूयात्" इतिनियमस्यज्येष्ठपुत्रव्यतिरिक्तविषयत्वात् वाल्मीकेश्चभृगुपुत्रतया भ्रातृपुत्रत्वात्शुश्रूषानिरपेक्षंप्रीत्योपदिदेशेत्याह—श्रुत्वाचेति । त्रयाणांलोकानांसमाहारस्त्रिलोकं । पात्रादित्वान्नङीप् । यद्वा त्रित्वविशिष्टोलोकस्त्रिलोकः । "नवरसरुचिरां"इत्यत्रकाव्यप्रकाशेतथैवव्याख्यानात् । यद्वा त्रयोलोकायस्मिन् तत्त्रिलोकमितिब्रह्माण्डमुच्यते । तज्जानातीतित्रिलोकज्ञः । भूर्भुवःस्वरितित्रैलोक्यं । यद्वा विष्णुपुराणोक्तरीत्या कृतकमकृतकंकृतकाकृतकमिति त्रयोलोकाः । महर्लोकपर्यन्ताःकृतकाः । जनोलोकः कृतकाकृतकः । सत्यलोकोकृतकइति । यद्वा लोकाःजनाः । "लोकस्तुभुवनेजने"इत्यमरः । बद्धनित्यमुक्तास्त्रयोलोकाः । नारदः ब्रह्मपुत्रतयातज्ज्ञानार्हः । एतत् पूर्वोक्तरीत्याव्यङ्ग्यार्थगर्भं वाल्मीकेःस्वाभिमतस्यपुत्रस्यवचःपरिपूर्णार्थंवाक्यं श्रुत्वा निशम्य चकारेणतदूहित्वाचेत्यर्थः । प्रहृष्टः स्वेनोपदिदिक्षितस्यैवपृष्टत्वेनसंतुष्टः शतकोटिप्रविस्तररामायणेस्वावगतस्यैवानेनपृष्टत्वात् रामगुणस्मरणामृतपानलाभादपूर्वशिष्यलाभाद्वा "सोहंमन्त्रविदेवास्मिनात्मवित्"इत्युक्तरीत्या सनत्कुमारंप्रति स्वस्योपसर्पणस्मारकत्वाद्वा प्रहृष्टःसन् । कर्तरिक्तः । रामगुणानुसन्धानजनितंनिजवैचित्र्यंव्याजेनपरिहर्तुं श्रूयतामित्यामन्त्र्य अभिमुखीकृत्य वाक्यमुत्तररूपंअब्रवीत् व्यक्तमुक्तवान् ॥ ६ ॥ वक्ष्यमाणस्यासदुत्तरत्वपरिहाराय आत्मनोवाल्मीकेराशयाभिज्ञत्वमाह बहवइति । यद्वा वेदान्तोदितगुणानां विष्णोरन्यत्रासंभवात् तेषांपुरुषशब्दवाच्यत्वासंभवात् चतुर्मुखसंप्रदायाच्च विष्णावेवपरतत्त्वतांपरिशेषयन्नाह— बहवइति । बहवो विपुलाः अनेकगुणविततिमूलभूताइत्यर्थः । अनेनापृष्टानामपिवक्ष्यमाणानांगुणानांनिदानमुपदर्शितम् । यद्वा बहवः अपरिच्छिन्नाइत्यर्थः । श्रूयते ह्यपरिच्छिन्नत्वंगुणानां । "यतोवाचोनिवर्तन्ते

**तीर्था०** प्रहृष्टः "कस्यबिभ्यतिदेवाश्च" इतिदृष्टदेवादिभीषकत्वगुणसंपत्तेः ब्रह्मादिष्वप्रसक्तोयंप्रश्नः सकलगुणविशिष्टसार्वभौमविषयकः इत्यवगम्यते । तत्रापि सार्वभौममात्रे पृष्टप्रशस्तसकलगुणसंपत्तेरसंभवात् सकलजगद्रक्षणार्थं नृरूपेणावतीर्णेपरमपुरुषएवसंभवात् दिष्ट्यातद्गुणकीर्तनंलब्धमितिप्रहर्षः ॥ ६ ॥

**इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः । नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥ ८ ॥**

अप्राप्यमनसासह । आनन्दंब्रह्मणोविद्वान् । नबिभेतिकुतश्चन"इति । अत्रानन्दस्यैकस्यापरिच्छिन्नत्वोक्तिः इतरेषामप्यपरिच्छिन्नत्वप्रदर्शनार्था । उक्तंहियामुनाचार्यैः"उपर्युपर्यब्जभुवोपिपूरुषान्"इत्यादिना । दुर्लभाः परमपुरुषादन्यत्रासंभाविताः । अन्येषां "न ब्रह्मानेशानः"इत्यादिनाऽसंभाव्यत्वादिवचनादितिभावः । अनेनप्रश्नस्यदेवताविशेषनिर्धारणपरत्वमात्मनाऽवगतमितिव्यञ्जितम् । चकारउक्तसमुच्चयार्थः अनुक्तसमुच्चयार्थोवा । तेन स्वाभाविकानवधिकातिशयाऽसङ्ख्येयकल्याणरूपाः इत्युक्तम् । एवकारः इतरत्रसर्वात्मनाऽसंभावितत्वमभिव्यनक्ति । यइतिवेदान्तप्रसिद्धिरुच्यते । गुणाःवीर्यादयः कीर्तिताइत्यनेनगुणानां प्रश्नकालेपिभोग्यतातिशयःसूच्यते । तैर्युक्तोनतुकल्पितइतिनिर्गुणवादनिरासः । नरः पुरुषः । "पुरुषाः पूरुषानराःइतिनिघण्टुः । "यएषोऽन्तरादित्येहिरण्मयःपुरुषोदृश्यते । पुरुषःपुण्डरीकाक्षः"इतिश्रुतिस्मृत्यनुगतः पुरुषशब्दोऽनेनप्रत्यभिज्ञाप्यते । श्रूयतां नतुयथाकथंचित्परिकल्प्यताम् । शृण्वित्यनभिधानात् विनयोक्तिरियम् । तात्कालिकंकिंचित्प्रकल्प्यतइतिभ्रमंवारयति—अहंबुद्ध्वावक्ष्यामीति । मत्पितुर्ब्रह्मणः सकाशात्शतकोटिप्रविस्तररामायणमुखेनविदित्वावक्ष्यामि । अनेनसंप्रदायाभिज्ञत्वमात्मनोदर्शितम् । यद्वा रामगुणानुसंधानवैचित्र्येन नमेकिंचित्प्रतिभाति क्षणात्बुद्ध्वावक्ष्यामीत्यर्थः । अतोमध्येवाक्यान्तरमलंकाराय । अन्यथा वाक्यगर्भितमितिकाव्यदोषःस्यात् । अहंवक्ष्यामि अहंभूत्वावक्ष्यामि नेदानींनारदोस्मि रामगुणश्रवणशिथिलत्वात् । रामगुणमग्नोयंनदीप्रवाहमग्नइवावलंबनयष्टिमपेक्षते—हेमुनइति । यद्वा प्रश्नकालेसमवधानविशेषमालक्ष्य श्लाघते—मुनइति । अथक्षणात्संधुक्षितोनारदोवाक्यशेषंपूरयति—तैरिति । नरइत्यनेन परतत्त्वनिर्धारणंप्रश्नफलितार्थंद्योतयति । बुद्ध्वा इत्यनेन श्रुतिस्थतत्तच्छब्दार्थोविवृतः ॥ ७ ॥ अथवेदान्तोदितगुणानांरामेप्रदर्शनमुखेन रामत्वेनावतीर्णोविष्णुरेव वेदान्तवेद्यंपरंतत्त्वमितिदर्शयति—इक्ष्वाकुवंशप्रभवइत्यादिनासर्गशेषेण । तत्रवेदान्तोदितगुणगणानांनिधीरामत्वेनावतीर्णोविष्णुरेवेतिमहावाक्यार्थः । "इक्ष्वाकुवंश" इत्यारभ्य "सत्येधर्मइवापरः" इत्यन्ता सार्धैकादशश्लोकी एकान्वया । इक्ष्वाकुर्नाम वैवस्वतमनोर्ज्येष्ठःपुत्रः तस्यवंशः पुत्रपौत्रादिपरंपरा । प्रभवत्यस्मादितिप्रभवः प्रादुर्भावस्थानम् । इक्ष्वाकुवंशःप्रभवोयस्यसः इक्ष्वाकुवंशप्रभवः । जनकादिमहाकुलेषुविद्यमानेषु कुतोत्रैवभगवानवतीर्णइत्यपेक्षायांइक्ष्वाकुपदंप्रयुक्तम् । इक्ष्वाकुर्हि चिरंहरिमाराध्य तन्मूर्तिविशेषं रङ्गनाथमलभतेति पौराणिकीगाथा । अतस्तत्पक्षपातेनतद्वंशेऽवतीर्णइतिसूचयितुमिक्ष्वाकुपदम् । वंशेत्यनेन गुणवान्कइतिपृष्टंसौशील्यमुक्तम् । रमयतिसर्वान्गुणैरितिरामः "रामोरमयतांवरः" इत्यार्षनिर्वचनबलात् कर्तर्यपिकारकेघञ्वर्ण्यते । यद्वा रमन्तेस्मिन्सर्वेजनागुणैरितिरामः । "अकर्तरिचकारके संज्ञायां"इतिघञ् । तथाचागस्त्यसंहितायामुक्तं "रमन्तेयोगिनोऽनन्तेसत्यानन्देचिदात्मनि । इतिरामपदेनासौपरंब्रह्माभिधीयते"इति । नामेतिप्रसिद्धौ । चित्रकूटवासिनात्वया विदितोहीत्यर्थः । नकेवलंभवता पामरैरपिविदितइत्याह—जनैःश्रुतइति । श्रुतः अवधृतः । "श्रुतंशास्त्रावधृतयोः" इत्यमरः । ताटकाताटकेयवधविश्वामित्राध्वरत्राणाहल्याशापविमोक्षहरधनुर्भङ्गपरशुरामनिग्रहसप्ततालवेधवालिवधसिन्धुबन्धमूलबलनिबर्हणादिभिरवधारितनारायणभावइत्यर्थः । यएवंभूतःसएवनियतात्मा सएवमहावीर्य इत्येवंप्रतिपदंवक्ष्यमाणंतत्पदमनुषज्यते । रामरूपेणावतीर्णोविष्णुरेव

**तनि०** बहवः पृष्टगुणानांद्व्यष्टकत्वेपिप्रत्येकमेकैकस्यानेकगुणविततितयाराशीकरणादसंख्याताः । दुर्लभाःअनीश्वरेईश्वरेपरमव्योमवासिन्यवतारांतरेचदुर्लभाःकीर्तिताः । वाचिकव्यापारप्रतिपन्नाअपिदुर्लभाः । एवंविधेप्रश्नेअन्यस्यनाधिकारइत्याह—मुनइति । मुनिर्मननशीलः । तेनशशश्रृङ्गप्रश्नवत्नरेउक्तगुणवैशिष्ट्यप्रश्नस्यदोषमूलत्वंव्युदस्तं । उत्तरेपिनान्यस्याधिकारइत्याह—अहमिति । ममापि सहसावक्तुंनशक्यमित्याह—बुद्ध्वेति । **तीर्था०** बुद्ध्वावक्ष्यामि महापुरुषंनिश्चित्यवक्ष्यामि । श्रूयतां प्राप्तकालेलोट् । तस्य श्रवणं ते प्राप्तकालमित्यर्थः ॥७॥ **तनि०** इक्ष्वाकुवंशप्रभवः तपस्समासादितश्रीरङ्गनाथाराधनफलतया तद्वंशएवावतीर्णइतिइक्ष्वाकुग्रहणम् । "वैष्णवो नः कुले जातः स नः संतारयिष्यति" इत्येकवैष्णवजनिमात्रेण तद्वंशस्यसर्वस्याप्युत्तारः । यत्रतुसर्वेगृहाराधनीकृतश्रीरङ्गनाथाः तस्यवंशस्यमहत्त्वे किंवक्तव्यमितिवंशपदाभिप्रायः । वशी गुणवशीकृतसर्वजनः । **तीर्था०** नियतात्मा शिक्षितमनाः । वशी जितेन्द्रियः ॥ ८ ॥

**बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्शत्रुनिबर्हणः । विपुलांसो महाबाहुः कंबुग्रीवो महाहनुः ॥ ९ ॥**
**महोरस्को महेष्वासो गूढजत्रुररिंदमः । आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १० ॥**

वेदान्तोदिततत्तद्गुणकइति सर्वत्रतात्पर्यार्थः । आदौ स्वरूपनिरूपकधर्मानाह—नियतात्मेत्यादिना । नियतात्मा नियतस्वभावः । निर्विकारइतियावत् । " नास्यजरयैतज्जीर्यते नवधेनास्यहन्यते अपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोपिपासः " इत्यादिश्रुतेः । महावीर्यः अचिन्त्यविविधविचित्रशक्तिकः । " परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रियाच " इतिश्रुतेः । द्युतिमान् स्वाभाविकप्रकाशवान् स्वयंप्रकाशः ज्ञानस्वरूपइतियावत् । " विज्ञानघनएव प्रज्ञानघनः " इतिश्रुतेः । धृतिमान् निरतिशयानन्दः । " धृतिस्तुतुष्टिः संतोषः " इतिवैजयन्ती । " आनन्दोब्रह्म " इतिश्रुतेः । सर्वजगद्वशेऽस्यास्तीति वशी सर्वस्वामीत्यर्थः । " सर्वस्यवशी सर्वस्येशानः " इतिश्रुतेः ॥ ८ ॥ अथ सृष्ट्युपयोगिगुणानाह—बुद्धिमानित्यादिना । बुद्धिमान् सर्वज्ञः । " यःसर्वज्ञः सर्ववित् " इतिश्रुतेः । नीतिमान् मर्यादावान् । श्रुतिरत्र " धातायथापूर्वमकल्पयत् । एषसेतुर्विधरणएषांलोकानामसंभेदाय " इति । शोभनावागस्यास्तीति वाग्मी । " वाचोग्मिनिः " इतिग्मिनिप्रत्ययः कुत्वेजश्त्वेचकृतेगकारलाभात् पुनर्गकार उक्तिशोभनत्वज्ञापनायेतिन्यासकारः । सर्ववेदप्रवर्तकइत्यर्थः । "योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै " इति श्रुतिः । श्रीमान् समृद्धोभयविभूत्यैश्वर्यः । " श्रीः कान्तिसंपदोर्लक्ष्म्यां " इतिबाणः । "सर्वमिदमभ्यात्तः " इतिश्रुतिः । शत्रून् तद्विरोधिनोनिबर्हयतिनाशयतीति शत्रुनिबर्हणः । बर्हहिंसायामित्यस्माद्धातोःकर्तरिल्युट् । " एषभूतपतिरेषभूतपालः " इतिश्रुतेः । " अथयएषोन्तरादित्येहिरण्मयःपुरुषोदृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्वएवसुवर्णस्तस्ययथाकप्यासंपुण्डरीकमेवमक्षिणी तस्योदितिनाम सएषसर्वेभ्यःपाप्मभ्यउदित उदेतिहवैसर्वेभ्यःपाप्मभ्योयएवंवेद " इत्यन्तरादित्यविद्योदितंसर्वाङ्गसुन्दरविग्रहंदर्शयति—विपुलांसइत्यादिनासार्धश्लोकद्वयेन । विपुलांसः उन्नतस्कन्धः । उन्नतस्कन्धत्वंचमहापुरुषलक्षणमिति सामुद्रिकोक्तं—" कक्षःकुक्षिश्चवक्षश्चघ्राणःस्कन्धोललाटिका । सर्वभूतेषुनिर्दिष्टाउन्नतास्तुसुखप्रदाः " इति । महाबाहुः वृत्तपीवरबाहुः । आयतत्वंतुवक्ष्यति " आजानुबाहुः " इति । " आजानुलंबिनौबाहूवृत्तपीनौमहीश्वरः" इतिसामुद्रिकलक्षणम् । "कंबुग्रीवः शङ्खतुल्यकण्ठः । " इन्दुमुखीतिवत्शाकपार्थिवादित्वान्मध्यमपदलोपीसमासः । " कंबुग्रीवश्चनृपतिर्लंबकर्णोतिभूषणः " इतिलक्षणम् । " रेखात्रयान्विताग्रीवाकंबुग्रीवेतिकथ्यते " इतिहलायुधः । महत्यौहनूयस्यासौ महाहनुः । " स्त्रियाःपुंवत्—" इत्यादिनापुंवद्भावः । हनुःकपोलोपरिभागः । " अधस्ताच्चिबुकंगण्डौकपोलौतत्परोहनुः " इत्यमरः । " मांसलौतुहनूयस्यभवतस्त्वीषदुन्नतौ । सनरोमृष्टमश्नातियावदायुःसुखान्वितः " इतिलक्षणम् ॥ ९ ॥ महोरस्कइति । महद्विशालमुरोयस्यासौमहोरस्कः । " उरःप्रभृतिभ्यःकप् " इतिकप् । लक्षणंतु "स्थिरंविशालं कठिनमुन्नतंमांसलंसमम् । वक्षोयस्यमहीपालस्तत्समो वाभवेन्नरः " इति । मांसलत्वंतुवक्ष्यति पीनवक्षा इति । महान्इष्वासोधनुर्यस्यासौमहेष्वासः । अनेन तदुचितसंहननविशेषोलक्ष्यते । अतोनप्रक्रमविरोधः । गूढे मांसलत्वेनाप्रकाशे जत्रुणी अंसद्वयसन्धिगतास्थिनी यस्यासौ गूढजत्रुः । " स्कन्धोभुजशिरोंसोस्त्री सन्धीतस्यैवजत्रुणी " इत्यमरः । " विषमैर्जत्रुभिर्निस्स्वाअतिसूक्ष्मैश्चमानवाः । उन्नतैर्भोगिनोनिम्नैर्निस्स्वाः पीनैर्नराधिपाः" इतिलक्षणम् । अरीन्दमयतिनिवर्तयतीत्यरिंदमः । " संज्ञायांभृतृवृजिधारिसहितपिदमः"

**तीर्थी०** बुद्धिमान् प्रशस्तधीः । बुद्धेः प्राशस्त्यंनाम "शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्वज्ञानं च धीगुणाः " इत्युक्तगुणविशिष्टत्वम् । श्रीमान् सर्वातिशायिश्रीः । "ऋचःसामानियजूंषि साहिश्रीरमृतासताम्" इत्युक्तश्रौतश्रीरत्रविवक्षिता। **तिल०** नीतिमान् कामन्दकादिनीतिमान् । महाबाहुः अस्यसुलक्षणत्वमुक्तंब्राह्मे—"शिरोललाटश्रवणे ग्रीवा वक्षश्च हृत्तथा । उदरं पाणिपादं च पृष्ठं दश महत्सुखम्" इति । महाहनुःमांसलकपोलापरभागः । "पूर्णमांसलहनुस्तुभूपतिः" इतिसंहिता ॥ ९ ॥ **तीर्थी०** अरीन्कामादीन्दमयतीति अरिंदमः । **तिल०** निजभक्तानां अरीन्कामादीन्दमयतीति अरिन्दमः ॥ १० ॥

**समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् । पीनवक्षा विशालाक्षो लक्ष्मीवाञ्शुभलक्षणः ॥ ११ ॥**
**धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः । यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् ।**
**प्रजापतिसमः श्रीमान्धाता रिपुनिषूदनः ॥ १२ ॥**

इतिखच् असंज्ञायामप्यार्षः । अरिशब्देनपाप्माविवक्षितः अपहतपाप्मेत्यर्थः । अनेनायंविग्रहपरिग्रहो नकर्ममूलः किन्त्वनुग्रहमूलः । " इच्छागृहीताभिमतोरुदेहः " इतिस्मृतेः । अतोनप्रक्रमभङ्गः । जानु ऊरुपर्व तत्पर्यन्तंविलंबिबाहुः आजानुबाहुः । सुष्ठुसमंवृत्तंछत्राकारंशिरोयस्यासौसुशिराः । " समवृत्तशिराश्चैवच्छत्राकारशिरास्तथा । एकच्छत्रांमहींभुङ्क्तेदीर्घमायुश्चजीवति " इतिलक्षणम् । सुललाटः । ललाटसौष्ठवंप्रोक्तम्—" अर्धचन्द्रनिभंतुङ्गंललाटंयस्यसप्रभुः " इति । शोभनःविक्रमःपदविक्षेपोयस्यासौसुविक्रमः । शोभनत्वंचगजादितुल्यत्वम् । तथोक्तंजगद्वल्लभायाम् " सिंहर्षभगजव्याघ्रगतयोमनुजामुने । सर्वत्रसुखमेधन्तेसर्वत्रजयिनःसदा " इति ॥ १० ॥ समः नातिदीर्घोनातिह्रस्वः । तथात्वंचतत्रैवोक्तम्—" षण्णवत्यङ्गुलोच्छ्रायःसार्वभौमोभवेन्नृपः " इति । समानिअन्यूनाधिकपरिमाणानि विभक्तानिअश्लिष्टानि अङ्गानिकरचरणाद्यवयवायस्यसः समविभक्ताङ्गः । तानिचोक्तानि सामुद्रिकैः—" भ्रुवौनासापुटेनेत्रेकर्णावोष्ठौचचूचुकौ । कूर्परौमणिबन्धौचजानुनीवृषणौ कटी । करौपादौस्फिचौ यस्यसमौज्ञेयःसभूपतिः " इति । स्निग्धः स्नेहयुक्तो वर्णोयस्यसः स्निग्धवर्णः । तत्रोक्तंवररुचिना—" नेत्रस्नेहेनसौभाग्यंदन्तस्नेहेनभोजनम् । त्वचःस्नेहेनशय्याचपादस्नेहेनवाहनम् " इति । प्रतापवान् तेजस्वी समुदायशोभासंपन्नइत्यर्थः । पीनवक्षाः मांसलवक्षाः । विशाले पद्मपत्रायते अक्षिणीयस्यसः विशालाक्षः । " बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्—" इतिषच् । अत्रसामुद्रिकम् । "रक्तान्तैः पद्मपत्राभैर्लोचनैःसुखभोगिनः " इति । लक्ष्मीवान् अवयवशोभायुक्तः शुभलक्षणः अनुक्तसकललक्षणसंपन्नः ॥ ११ ॥ एवमाश्रितानुभाव्यदिव्यमङ्गलविग्रहशालित्वमुक्त्वाऽऽश्रितरक्षणोपयोगिगुणानाह—धर्मज्ञइत्यादिना स्वजनस्यचरक्षितेत्येतेन । धर्मंशरणागतरक्षणरूपं जानातीति धर्मज्ञः । वक्ष्यति " मित्रभावेनसंप्राप्तंनत्यजेयंकथंचन । दोषोयद्यपितस्यस्यात्सतामेतदगर्हितम् " इति । सत्या सन्धा प्रतिज्ञा यस्यस सत्यसन्धः । " प्रतिज्ञानेऽवधौसन्धा " इतिवैजयन्ती । " अप्यहंजीवितंजह्यांत्वांवासीतेसलक्ष्मणाम् । नहिप्रतिज्ञांसंश्रुत्यब्राह्मणेभ्योविशेषतः" इति । प्रजानां प्राणिनां हिते हितकरणे रतः तत्परः । यशस्वी आश्रितरक्षणैककीर्तिः । "तस्यनाममहद्यशः" इतिश्रुतेः । ज्ञानसंपन्नः " यःसर्वज्ञःसर्ववित् " इत्युक्तरीत्यास्वरूपतःस्वभावतश्चसर्वविषयज्ञानशीलः । शुचिः पावनः परिशुद्धोवा ऋजुरितियावत् । वश्यःवशंगतः । " वशंगतः " इतिनिपातनाद्यत् । आश्रितपरतन्त्रइत्यर्थः । समाधिमान् समाधिः आश्रितरक्षणचिन्ता तद्वान् । प्रजापतिसमः " मध्येविरिञ्चिगिरिशंप्रथमावतारः" इत्युक्तरीत्या जगद्रक्षणाय प्रजापतितुल्यतयाऽवतीर्णः । श्रीमान् पुरुषकारभूतया लक्ष्म्या अविनाभूतः । धाता पोषकः । डुधाञ्धारणपोषणयोरितिधातोस्तृच् । रिपून् शत्रून् निषूदयति निरस्यतीति रिपुनिषूदनः । " सूददीपदीक्षश्च " इति प्रतिषेधस्यानित्यत्वात् " अनुदात्तेतश्चहलादेः " इतियुच्

**तीर्था०** प्रतापवान् श्रवणमात्रेणशत्रुहृदयविदारणेनप्रशस्तपौरुषः । **तिल०** स्निग्धवर्णः स्निग्धश्यामलवर्णइत्यर्थः । "स्निग्धेन्द्रनीलवर्णस्तुभोगंविन्दतिपुष्कलम्" इत्युक्तेः । लक्ष्मीवान् सीतारूपलक्ष्मीवान् ॥ ११ ॥ **तीर्था०** शुचिः बाह्याभ्यन्तरशुद्धियुक्तः । वश्यः पित्राचार्यादिविनीतः । **तिल०** सत्यसन्धः सत्याअमोघासन्धा "सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददामीति व्रतं मम" इत्यादिरूपिणीप्रतिज्ञायस्यसः । ज्ञानसंपन्नः ब्रह्मज्ञानपरिपूर्णः । अतएवजटायुषंप्रति "मयात्वं समनुज्ञातो गच्छ लोकाननुत्तमान्" इत्युक्तिः संगच्छते । ब्रह्मज्ञस्यैव ब्रह्मोपदेशेऽधिकारात् । विना ब्रह्मोपदेशं अनुत्तमलोकावाप्त्यसंभवात् । नविद्यन्तेउत्तमायेभ्यस्ते अनुत्तमाः । "आत्मानंमानुषंमन्येरामंदशरथात्मजम्" इतिवचस्तु मायामात्रमित्यन्यत्र विस्तृतम् । **तीर्था०** श्रीमान् अखण्डितैश्वर्यसंपन्नः । रिपुनिषूदनः आश्रितजनानांयेरिपवस्तेषां नाशकः । **तिल०** प्रजापतिसमः यद्यपिरामोब्रह्मैवतथापिमानुषधर्माणांशोकमोहादीनांमायिकानांतत्रदर्शनेन औपाधिकभेदमादायतत्समत्वोक्तिः । भार्गवलोकप्रतिबन्धरूपाज्जटायुषोमोक्षप्रदानरूपात् स्वेनसहसर्वायोध्यावासिजनस्यसशरीरस्यब्रह्मलोकनयनरूपाच्चकारणात् तत्समत्वम् । सर्वथास्वतन्त्रस्यैवेदृशेषुयोग्यत्वात् ॥ १२ ॥

**रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता । रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ॥ १३ ॥**
**वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः । सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ॥ १४ ॥**

नन्द्यादिपाठाद्वा ल्युः । सुषामादित्वात्षत्वं । आश्रितविरोधिनिरसनशीलइत्यर्थः ॥ १२ ॥ अथावतारैकान्तान्गुणानाह—रक्षितेति । लोकेसार्वभौमःस्वकीयजनरक्षणएवयतते । अयंतुनतथा किंतुसर्वस्यप्राणिजातस्य रक्षिता। ताच्छील्येतृच्। शेषेषष्ठी । ननु यदिसर्वेषांरक्षिता तर्हिदुष्कृतिनमपि सुखिनमापादयेदित्यत्राह—धर्मस्यपरिरक्षितेति । आचरणप्रचारणाभ्यां सर्वधर्मस्य व्यवस्थापयिता । उच्छास्त्रप्रवर्तिनोपि चिकित्सकन्यायेन अनघयितेत्यर्थः । स्वस्य स्वकीयस्य शरणागतरक्षणरूपस्यधर्मस्य विशेषधर्मस्य विशिष्यरक्षिता । यद्वा धर्मस्य तत्तद्वर्णाश्रमधर्मस्य समन्ततोरक्षिता । लोकेसर्वधर्मप्रवर्तकोपि "धर्मोपदेशसमयेजनाःसर्वेपिपण्डिताः । तदनुष्ठानसमयेमुनयोपिनपण्डिताः" इतिन्यायेनस्वधर्मानुष्ठानेस्खलति नतथाऽयमित्याह । स्वस्यधर्मस्यरक्षिता स्वासाधारणस्य क्षत्रियधर्मस्यरक्षितेत्यर्थः । लोकेसर्वरक्षकोपिकश्चित्स्वजनरक्षणंकर्तुंनप्रगल्भते । "दास्यमैश्वर्यभावेन ज्ञातीनांचकरोम्यहम् । अर्धभोक्ताच भोगानां वाग्दुरुक्तानिचक्षमे" इतिभगवताप्युक्तेः । तदपिकर्तुमीहतइत्याह—स्वजनस्यचरक्षितेति । स्वजनस्यच स्वजनस्यापीत्यर्थः । अनेनस्वजनरक्षणस्यदुर्घटत्वंसूचितं । यद्वा चस्त्वर्थः। स्वजनस्य शरणागतस्य विशेषेणरक्षिता । विशेषस्तु तदपराधसहिष्णुत्वं । वक्ष्यति "मित्रभावेनसंप्राप्तंनत्यजेयंकथंचन । दोषोयद्यपितस्यस्यात्सतामेतदगर्हितम्" इति । यद्वा लोकेकश्चित्सर्वान् रक्षन् स्वजनंपीडयति । असौतु स्वजनस्यापिरक्षितेत्यर्थः। अथवा स्वावतारप्रयोजनमाह—रक्षितेति। गीतंहि "परित्राणायसाधूनांविनाशायचदुष्कृताम् । धर्मसंस्थापनार्थायसंभवामियुगेयुगे" इति । स्वजनस्य स्वशेषभूतस्येतिसर्वलोकविशेषणं रक्षणहेतुसंबन्धद्योतनार्थम् । रक्षिताइष्टप्रापकः । अनेन साधुपरित्राणमुक्तं । चशब्दोऽन्वाचये । रक्षिताच अनिष्टनिवर्तकः । अनेनानुषङ्गिकदुष्कृद्विनाशउक्तः । धर्मस्यसामान्यविशेषरूपस्य स्थापनमाहेतरवाक्यद्वयेन । रक्षितास्वस्यधर्मस्य सीतापरिणयमुखेन स्वाश्रमोचितधर्माणामनुष्ठाता । यद्वा स्वस्यधर्मःपरत्वं तस्य रक्षिता । हरधनुर्भङ्गपरशुरामजयादिनाहि परत्वं स्थापितम् । यद्वा धर्मोधनुः । "स्वाम्यस्वभावसुकृतेष्वस्त्रीधर्मंतुकार्मुके" इतिबाणः । सदाधनुर्धरः । स्वजनस्यचरक्षिता स्वभूतोजनः स्वजनः ज्ञानी । "ज्ञानीत्वात्मैवमेमतं" इतिगीतत्वात् । तस्यरक्षिता । आत्मनइवसर्वयोगक्षेमावहइत्यर्थः ॥ १३ ॥ अथास्याष्टादशविद्यास्थानाभिज्ञत्वमाह—वेदेति । विदन्त्यनेनधर्मादिकमितिवेदः । करणेघञ् । सचतुर्विधः । ऋग्यजुस्सामाथर्वणभेदात् । वेदस्यकिंचित्कराणिवेदाङ्गानि । तानिचषट् । तथोक्तं "शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषांगतिः । छन्दसांविचितिश्चेतिषडङ्गानिप्रचक्षते" इति । तत्रशिक्षानाम अकारादीनांवेदवर्णानां स्थानकरणप्रयत्नस्वरादिबोधिका । यागक्रियाक्रमोपदेशः कल्पः । साधुशब्दव्याख्यानं व्याकरणं । "वर्णागमो वर्णलोपोवर्णविपर्ययः" इत्यादिना निश्चयेनोक्तंनिरुक्तं । कर्मानुष्ठानकालादिप्रतिपादकंशास्त्रंज्यौतिषम् । छन्दसांपद्यानांशास्त्रंछन्दोविचितिः । वेदाश्चवेदाङ्गानिच वेदवेदाङ्गानि तेषांतत्त्वं तत्त्वार्थः तंजानातीतितथोक्तः । "इगुपधज्ञाप्रीकिरःकः" इतिकप्रत्ययः । धनुर्वेदोनामधनुर्हस्तमुष्टिस्थितिविशेषाकर्षणविमोक्षणदिव्यास्त्रादिप्रयोगप्रतिपादकोग्रन्थः । चकारः इतरोपवेदसमुच्चयार्थः । क्षत्रियोधनुर्वेदप्रधान इतितस्यनिर्देशः । तेचोपवेदाश्चत्वारः । तथाहि । "आयुर्वेदोधनुर्वेदोवेदोगान्धर्वएवच । अर्थशास्त्रमितिप्रोक्तमुपवेदचतुष्टयम्" इति । आयुर्वेदोबाहटं वैदिकधर्मानुष्ठानविरोधिरोगनिवर्तकौषधादिप्रतिपादकम् । गान्धर्ववेदोभरतशास्त्रं सामगानोपयोगि । अर्थशास्त्रं चाणक्यादिप्रणीतं नीतिशास्त्रं कर्मानुष्ठानेपूपयोग्यर्थसाधनं तेषुनिष्ठितः निष्ठावान् । सर्वशास्त्रार्थतत्त्वज्ञइति । सर्वशास्त्राणि उपात्तव्यतिरिक्तानिउपाङ्गानि गोबलीवर्दन्यायात् । "धर्मशास्त्रंपुराणंचमीमांसाऽऽन्वीक्षिकीतथा। चत्वार्येतान्युपाङ्गानिशास्त्रज्ञाःसंप्रचक्षते" इति ।

**तिल०** स्वजनस्य स्वभक्तजनस्य । अवश्यभाविनोप्यनिष्टस्यनिरासपूर्वकंपरमेष्टमोक्षदानेनरक्षिता । तच्च अंबरीषप्रह्लादध्रुवादीनांरक्षणेनप्रसिद्धमेव ॥ १३ ॥

**सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः । सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ॥ १५ ॥**
**आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः । स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ॥ १६ ॥**

तत्रधर्मशास्त्रंपूर्वकाण्डोपबृंहणं पुराणंवेदान्तोपबृंहणम् । न्यायमीमांसे सर्ववेदसाधारण्यौ तेषामर्थतत्वं अर्थयाथात्म्यं निगूढाशयमित्यर्थः । तत्जानातीतितथा । अष्टादशविद्यास्थानतत्वज्ञइत्यर्थः । स्मृतिमान् ज्ञातार्थविषयेविस्मरणलेशरहितः । प्रतिभानवान् व्यवहारकाले श्रुतस्याश्रुतस्यवाझटितिस्फुरणंप्रतिभानं तद्वान् ॥ १४ ॥ अथसर्वदासदुपास्यत्वमाह—सर्वेति । सर्वेलोकाःप्रिया यस्यसः सर्वलोकप्रियः । सर्वेषांलोकानांप्रियः सर्वलोकप्रियः । सर्वलोकप्रियत्वात्सद्भिरभिगन्तव्यइत्यर्थः । साधुः तत्कार्यसाधकः । उण्प्रत्ययः । यद्वा साधुः उचितः सदभिगमनोचितइत्यर्थः । "साधुस्त्रिषूचितेसौम्येसज्जनेवार्धुषावपि" इतिवैजयन्ती । अदीनात्मा अकार्पण्यात्मा । अतिगंभीरप्रकृतिरिति यावत् । विचष्टइतिविचक्षणः । नन्द्यादित्वात्ल्युः "अस्युस्यनेचक्षिङःख्याञ्नेतिवाच्यं" इतिख्याञादेशाभावः । विविधंवक्तीत्यर्थः । अतएवसर्वदासदुपास्यमानत्वमाह—सर्वदेति । सर्वदा अस्त्राभ्यासकालादिष्वपि सद्भिः सत्पुरुषैः अभिगतःपरिगतः । परिवारितइत्यर्थः । कथमिव समुद्रःसिन्धुभिरिव नदीभिरिव । "स्त्रीनद्यांनानदेसिन्धुर्देशभेदेंबुधौगजे" इतिवैजयन्ती । सर्वदाभिगतः सद्भिः खुरलीकेलिश्रमविश्रान्तयेकांचिच्छायामवगाह्मानेरामेसन्तःसर्वेतत्तदर्थविशेषश्रवणायपरिवृत्यस्थिताइत्यर्थः । तथाचवक्ष्यति । "ज्ञानवृद्धैर्वयोवृद्धैःशीलवृद्धैश्चसज्जनैः । कथयन्नास्तवैनित्यमस्त्रयोग्यान्तरेष्वपि" इति । अस्त्रयोग्यः अस्त्राभ्यासः । समुद्र इवसिन्धुभिः । एवंसद्भिरभिगमनंनरामस्याज्ञातज्ञापनाय तस्यस्वतएवपूर्णत्वात् । किंतुस्वेषामेवापूर्वार्थविशेषलाभाय गत्यन्तराभावादितिभावः । सिन्धवोहि स्वसत्तालाभायैवसमुद्रमभियान्ति । नतुतस्यातिशयापादनाय ॥ १५ ॥ एवमभिगमनहेतुभूतंसौलभ्यादिकंविशदयति—आर्यइति । आङ्पूर्वाद्गतावित्यस्माद्धातोःकर्मणिण्यत्प्रत्ययः । अभिगन्तुमर्हइत्यर्थः । किंसतामेव नेत्याह—सर्वसमः । जातिगुणवृत्त्यादितारतम्यंविनासर्वेषामाश्रयणीयत्वेतुल्यः । अस्यकादाचित्कत्वंवारयत्येवकारः । चकारउक्तसमुच्चयार्थः । किंचिदुपदेशाभावेऽपिसौन्दर्यादभिगन्तव्यत्वमाह—सदैकप्रियदर्शनइति । सदाऽनुभवेऽपि नवनवतयाभासमानइत्यर्थः । अथ "इषुक्षयान्निवर्तन्तेनान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्तेनगोविन्दगुणक्षयात्" इतिभगवद्गुणानांवर्षायुतेनापिवर्णयितुमशक्यत्वेन संग्रहेणवदन्नुत्तरमुपसंहरति । सचेति । कोसलस्यराज्ञोपत्यंस्त्रीकौसल्या । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ्प्रत्ययः । "यङश्चाप्" इतिचाप् । तस्याआनन्दंवर्धयतीति कौसल्यानन्दवर्धनः । चशब्दएवकारार्थः । कौसल्यासुतत्वेनावतीर्णोविष्णुरेववेदान्तोदितसकलगुणसंपन्नः परमात्मा नतुब्रह्मादिष्वन्यतमइत्यर्थः । दशरथनन्दनइत्यनुक्तिः पुत्रलाभफलस्य कौसल्ययैवलाभात् । अतएववक्ष्यति "कौसल्या लोकभर्तारं सुषुवेयंमनस्विनी" इति ॥ १६ ॥

**तीर्थी०** साधुः अपकारिष्वपिउपकारशीलः । अदीनात्मा अतिव्यसनपरंपरायामपिअक्षुभितान्तःकरणः । विचक्षणः तत्तत्कालकर्तव्यवैदिकलौकिकक्रियासुकुशलः । **तनि०** सिन्धुभिः अनर्गलप्रवाहाभिर्यथासमुद्रोक्षोभ्यः एवंजाबालिप्रभृतिभिः क्षोभितोपि अक्षोभ्यइतिव्यञ्जितम् । सर्वदेत्यनेन कालविशेषेएकदासिन्धुभिः परिगतः समुद्रः अयंतु सर्वदेति वैलक्षण्यंद्योत्यते । सर्वदाभिगतइत्यनेन लोकेप्रयोजनवशेनसतामभिगमनेतैःसहजल्पवितण्डादिकरणेतेचासह्यतयापुनर्नाभिगच्छेयुः रामस्तुनतथेतिध्वन्यते । वक्ष्यतिच "नविगृह्यकथारुचिः" इति । रत्नाकराभिगतसिन्धूनांतदभिगमनदेशएवकतिपयरत्नसंबन्धः । एवं गुणाकररामसंबन्धादेवकतिपयगुणाः प्रकाश्यन्तइतिअभिगतपदव्यङ्ग्यं । लोके राजकुमाराः कदाचिद्विनोदार्थंएकान्तगोष्ठ्यां शृङ्गारहास्यरसविद्भिः परिगताभवन्ति अयंतुनतथेतिसत्पदव्यङ्ग्यम् । सिन्धुभिः समुद्रइवेति सतांप्राप्यान्तरराहित्यंरामस्यसौलभ्यं चव्यज्यते । **तीर्थी०** सर्वदेत्यनेन नदीनांसमुद्रसेवायामिवभक्तानांभगवत्सेवायांकालनियमोनास्तीत्युक्तंभवति । अभिगतइत्यनेन परमप्राप्यत्वं समुद्रइव सिन्धुभिरित्यनेन सतांप्राप्यान्तरराहित्यं प्राप्तानांच सतांतैक्यंच प्रतीयते ॥ १५ ॥ **ती०** आर्यः पूज्यः । सर्वसमः शत्रुमित्रोदासीनेषुवैषम्यरहितः । **तिल०** सर्वेषु सुखदुःखोदर्केषु समः हर्षविषादरहितः । **ति० शि (पा०)** सदैवप्रियदर्शनः । सदैव सर्वावस्थासु । **तिल०** कौसल्यानन्दवर्धनइत्यनेन महाकुलप्रसूतत्वप्रधानमहिषीपुत्रत्वादिरूपस्यअभिषेकोचितधर्मस्यसत्तादर्शिता ॥ १६ ॥

**समुद्र इव गांभीर्ये धैर्येण हिमवानिव । विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ॥ १७ ॥**
**कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः । धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥ १८ ॥**
**तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् । ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ॥ १९ ॥**

अथास्य निस्समाभ्यधिकत्वंवक्तुं लोकेप्रकृष्टवस्तूनांतदेकैकगुणसाम्यमाह—समुद्रइवेत्यादिश्लोकद्वयेन । गांभीर्यंनाम स्वान्तर्गतपदार्थाप्रकाशकत्वं । यथासमुद्रःस्वान्तर्गतंरत्नादिकमप्रकाशयन्नेववर्तते तथाऽयमपि स्वीयंपरत्वमप्रकटयन्नेवास्तइत्यर्थः । वक्ष्यति "आत्मानंमानुषंमन्ये" इति । धैर्यंनाम शोकहेतुसद्भावेपि निश्शोकत्वम् । तेन हिमवानिव हिमवत्सदृशः । "गिरयोवर्षधाराभिर्हन्यमानानविव्यथुः । अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः" इतिह्युक्तं । अत्रवस्तुतः समुद्रादेरुपमानत्वाभावेपिप्रतिपत्तृणामुपमानत्वंसंभवतीत्येवमुक्तं । यथा "इषुवद्गच्छतिसविता" इत्यत्र । विष्णुनेति । वीर्यविषयेविष्णुनासदृशः । विष्णोरर्धत्वेन रामस्यविष्णुसादृश्यंसुवचमेव । "सउश्रेयान्भवति जायमानः" इत्युक्तत्वेनतदंशस्यापितत्सदृशत्वंयुक्तमेव । सोमवत्प्रियदर्शनः शोकनिवृत्तिपूर्वकमाह्लादकरः ॥ १७ ॥ क्रोधेकालाग्निसदृशः कालाग्निक्रोधसमक्रोध इत्यर्थः । स्वविषयापराधमेवस्वयंसहते । स्वाश्रितविषयापराधकरणेतु ज्वलज्ज्वलनइव शीतलतरेपिहृदये कोपमावहतीत्यर्थः । जलेहि कालाग्निर्ज्वलति । क्षमया क्षमारूपसदृशधर्मेण पृथिवीसमः पृथिवीतुल्यक्षमइत्यर्थः । स्वस्मिन्नपकारकरणेअचेतनवद्वर्ततइत्यर्थः । "नस्मरत्यपकाराणांशतमप्यात्मवत्तया" इतिवक्ष्यति । त्यागे त्यागविषये धनदेनकुबेरेणसमः तद्वद्दातेत्यर्थः । कुबेरस्यत्यागित्वं "त्यागेचधनदोयथा" इत्यादिवक्ष्यमाणवचनशतसिद्धं । नचतस्यलुब्धत्वंकुतश्चित्सिद्धं । त्यागेसत्यपिधनदवदाढ्यइतिव्याख्यानंतुप्रक्रमविरुद्धं । नह्याढ्यत्वंकश्चिद्गुणः । तथासति लुब्धत्वमेवास्यसिद्धंस्यात् । सत्ये सत्यवचने अपरः उत्कृष्टवस्त्वन्तररहितः । धर्मः धर्मदेवतेवस्थितः । धर्मदेवतेवनिरपायसत्यवचनइत्यर्थः । सत्ये अपरोधर्मइवस्थितइतिव्याख्याने प्रकृतौपम्येविरोधः । तस्योत्प्रेक्षारूपत्वात् । क्वचिदुपमाक्वचिदुल्लेखः क्वचिदुत्प्रेक्षेतिविजातीयसंकरइत्यप्याहुः ॥ १८ ॥ एवंवेदान्तोदितजगत्कारणत्वसर्वज्ञत्वसर्वशक्तित्वसर्वान्तर्यामित्वप्रमुखसमस्तकल्याणगुणाकरंब्रह्म किंरामत्वेनावतीर्णोविष्णुरुतब्रह्मरुद्रादिष्वन्यतमइतिवाल्मीकिनावेदोपबृंहणायपृष्टे वेदान्तोदितगुणानांतदन्येष्वसंभवात्तस्यैवसंभवाच्च सएववेदान्तोदितंपरंतत्वमित्युपदिष्टं । तत्रतत्रजगत्कारणप्रकरणेषुप्रयुक्ताःस्वयंभूशिवादिशब्दाः सद्ब्रह्मादिसामान्यशब्दवदपर्यवसानवृत्त्यावयववृत्त्यावापरमात्मपराइत्यप्यर्थसिद्धम् । एवंवेदान्तसारार्थः संदर्शितः । ननु ब्रह्मस्वरूपमिवफलस्वरूपं तदुपायस्वरूपमपि वेदार्थत्वादुपबृंहणीयं तदुभयंकिमितिनपृष्टं नोपदिष्टंच । मैवं । परिपप्रच्छेत्यत्र परिणा तदुभयस्वरूपमपिपृष्टमेव । उत्तरेच "प्रजानांचहितेरतः" इत्यादिनोपायत्वं "सदैकप्रियदर्शनः" इत्यादिनोपेयत्वं चतस्यैवेत्युक्तं । ननु सिद्धस्यैवतस्योपायत्वे सर्वमुक्तिप्रसंगइतिचेन्न । यउपायोपेयाधिकारी तस्यैवफलंदिशति नानधिकारिणइतिव्यवस्थापनात् । अधिकारश्च तत्प्राप्त्यपेक्षासाधनान्तरपरित्यागश्चेत्युत्तरग्रन्थेसुव्यक्तं । ननु वेदोपबृंहणमिदंरामायणमित्युक्तं धर्मोपि वेदार्थः सकथं नोपबृंहितः । किंचेयताग्रन्थेनवेदान्तार्थउपबृंहितः किमतःपरेणग्रन्थेन । उच्यते । उक्तानुक्तांश्चकल्याणगुणांस्तच्चरित्रनिदर्शनमुखेनप्रतिपादयितुमुत्तरग्रन्थः पूर्वभागोपबृंहणंच रामायणपुरुषाचारमुखेनहि सामान्यधर्मो विशेषधर्मश्चोपबृंहितः । ननु तथापिकथंबालकाण्डकथानोपदर्शिता । मैवं । तत्रप्रदर्शनीयगुणविशेषाभावात् । नच साप्यत्यन्तमप्रदर्शिता । इक्ष्वाकुवंशप्रभवइत्यवतरणं महावीर्यइतिताटकाताटकेयादिवधः धनुर्वेदेचनिष्ठितइतिकौशिकाधिगतनिखिलदिव्यास्त्रवत्त्वं श्रीमानिति-

**तीर्थी०** यद्यपि अयमेवरामोविष्णुः । मानुषोपाधिभेदाद्विष्णुनेतिसादृश्यम् । यद्वा विष्णुनास्वेनैववीर्येसदृशः । उपमानान्तरराहित्यमनेनोक्तम् । **तिल०** सोमवत् व्यवहारनिरीक्षणकालेसौम्यदर्शनः ॥ १७ ॥ **तिल०** क्षमया प्रतीकारसामर्थ्येपि अपकारसहिष्णुतया । **विषमपदविवृतिः** । धनंददतीतिधनदाः धनदातारः तेषांइना अधिपतयः चिन्तामणिकल्पवृक्षप्रभृतयः तैः समः ॥ १८ ॥

**प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया । यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ॥ २० ॥**
**तस्याभिषेकसंभारान्दृष्ट्वा भार्याऽथ कैकयी । पूर्वं दत्तवरा देवी वरमेनमयाचत ।**
**विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २१ ॥**

वैदेहीलाभश्चेतिबालकाण्डकथासूचनात् । अथायोध्याकाण्डकथांप्रस्तौति—तमेवमित्यादिना । आदौश्लोकद्वयमेकान्वयं । दशसु दिक्षुरथोयस्यसदशरथः । अप्रतिहतरथत्वेन रामायराज्यंदत्तं । भीतिदत्तत्वाभावेन पुनरनादातव्यत्वमुक्तं । महीपतिः अस्वामिदत्तत्वाभावउच्यते । एवंदातृदोषेण पुनरनाहरणीयत्वमुक्त्वा संप्रदानगुणेनाप्याह—तमित्यादिना । तं प्रसिद्धं । एवंगुणसंपन्नं पूर्वोक्तसर्वगुणसमृद्धं । सर्वस्यस्वामिभूतमितियावत्।सत्यपराक्रमं अमोघपराक्रमं। सर्वरक्षणशक्तमितियावत् । ज्येष्ठं जन्मक्रमेणापिराज्यार्हं । श्रेष्ठगुणैर्युक्तं नीतिशास्त्रोक्तषाड्गुण्ययुक्तं । सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः कामन्दकोक्ताः। प्रियं प्रीतिविषयं । अनेन तात्कालिकप्रीतिदानव्यावृत्तिः । सुतं जन्मनैवराज्यार्हं ॥ १९ ॥ प्रकृतीनां प्रजानां हितैः हितकरणैर्युक्तं । अनेन सर्वानुकूल्यमुक्तं । एवंभूतं रामं प्रकृतिप्रियकाम्यया अमात्यादीनां प्रीतिकरणेच्छया । इच्छायांकाम्यच्प्रत्ययः । " अप्रत्ययात् " इत्यप्रत्ययः । " अजाद्यतष्टाप् " । प्रीत्या स्वप्रीत्याच । चकारोर्थसिद्धः । "गामश्वंपुरुषं जगत्" इतिवत् । मन्त्रिवृद्धैरालोचनपूर्वकंकृतत्वादप्रत्याख्येयत्वमुच्यते । "प्रकृतिःपञ्चभूतेषु स्वभावेमूलकारणे । छन्दःकारणगुह्येषुजन्मामात्यादिमातृषु " इत्युभयत्रवैजयन्ती । युवाचासौराजाचयुवराजः तस्यभावःकर्मवायौवराज्यं । ब्राह्मणादित्वात्ष्यञ् । तेन पितरिराज्यं निर्वहत्येव सर्वनिर्वाहकत्वेनाभिषिक्तःपुत्रोयुवराजः तस्यभावेनेत्यर्थः । संयोक्तुं घटयितुं ऐच्छत् तत्संभारान्समभरदित्यर्थः ॥ २० ॥ एवंपुनरादानायोग्यं रामायराज्यप्रदानमुक्त्वा अपरिहरणीयमनन्तरभावि कैकेय्यायाचनमाह—तस्येति । सार्धश्लोकएकान्वयः । अथ रामायराज्यप्रदानेच्छानन्तरं तस्य रामस्यअभिषेकःकर्मविशेषः । तस्यसंभारान् उपकरणानि—"औदुंबर्यासन्दी तस्यैप्रादेशमात्राःपादाःस्युः" इत्यादीनि" "दधिमधुसर्पिरातपवर्ष्याआपः" इत्यन्तानि ब्राह्मणोक्तानि दृष्ट्वा मन्थरामुखेनदर्शनइवज्ञात्वा। भार्या भर्तुयोग्या नतु स्वातन्त्र्यार्हा । पूर्वंपूर्वकाले । विभक्तिप्रतिरूपकमव्ययं । तेन दशरथेन दत्तवरा शंबरासुरविजयकाले सारथ्यकरणपारितोषिकतया दत्तवरा । याचनहेतुत्वेनेदमुक्तं । दीव्यतीतिदेवी । पचाद्यच् । देवडिति टित्त्वेनपाठात् ङीप् । भोगोपकरणभूतेति व्यामोहमूलोक्तिः । कैकयी केकयानां राजा केकयः । " क्षत्रियसमानशब्दाज्जनपदात्तस्यराजन्यपत्यवत् " इत्यञ् । " जनपदेलुप् " केकयस्यापत्यंस्त्रीकैकयी । "जनपदशब्दात्क्षत्रियादञ् " इत्यपत्यार्थेऽञ् " टिड्ढाणञ्—" इत्यादिनाङीप् । नन्वञ्प्रत्यये " केकयमित्रयुप्रलयानांयादेरियः " इतीयादेशःकिंनस्यात् । उच्यते । " जरायाजरसन्यतरस्याम् " इत्यतोऽन्यतरस्यामित्यनुवृत्तेस्तस्यवैकल्पिकत्वात् । नचेयादेशाभावआर्षइतिवाच्यं । कैकेयीकैकयीतिशब्दभेदप्रकाशिकायामुक्तेः । " प्राक्कैकयीतोभरतस्ततोभूत् " इतिभट्टिप्रयोगात् । केकयीतिपाठेतुकेकयान्जन्मभूमित्वेनाचष्ट इतिकेकयी । तदाचष्टइतिणिजन्तादौणादिकेक्रियासिकारप्रत्ययेटिलोपेणिलोपेचकृते " कृदिकारादक्तिनः " इतिङीषित्याहुः । " पुंयोगादाख्यायां " इतिवाङीष् तत्रयोगशब्देनाविशेषात् जन्यजनकभावोपिगृह्यते । केकयशब्दोमूलप्रकृतिरेवोपचारात्तस्यपत्येवर्तते । शार्ङ्गरवादिपाठात्ङीनितिन्यासकारः । कैकयी । एनंदश-

**तिल०** प्रकृतिप्रियकाम्यया प्रकृतीनां प्रियंकर्तुमिच्छया । युवराजेनहि प्रजाकृत्येसंपादितेसति व्यवहारादिनिरीक्षणजन्यश्रमनिवृत्तिरूपंप्रियंस्वस्यापिभवति ॥ २० ॥ **तीर्था०** पूर्वं पुरादत्तौवरौयस्यै इन्द्रसहायार्थं प्रवृत्तदशरथयुद्धकाले दशरथेपरप्रयुक्तामासुरीमायां धवलाङ्गाख्यमुनिदत्तविद्ययावारयन्त्यैकैकेय्यै तुष्टेनदशरथेनदत्तंवरद्वयमितिपौराणिकीप्रसिद्धिः । **तिल०** कैकयी राज्ञः कनीयसीभार्या । अत्रयद्यपिकेकयशब्दादञि "केकयमित्रयु–" इत्यादिनायादेरियादेशेगुणे आदिवृद्धौङीपियस्येतिलोपेकैकेयीत्येवसाधुः । तथापि "अपिमाषंमषं कुर्याच्छन्दोभङ्गंनकारयेत्" इतिन्यायेन कैकयीतिप्रयोगः । पुंयोगलक्षणेङीषि केकयीतिपाठइत्यन्ये । **शिरो० (पा०)** अथकेकयी । केकयस्य केकयजनपदाधिपतेः कन्या । "पुंयोगादाख्यायाम्" इतिङीष् । तत्रयोगशब्देन अविशेषाज्जन्यजनकभावोपिगृह्यते । कैकयीतिपाठे कंसुखमेव एकं केवलं कैकं तद्याति देवादीन्प्रापयतीति कैकयी । गौरादित्वंप्रज्ञादित्वंवाकल्प्यमिति ॥ २१ ॥

**स सत्यवचनाद्राजा धर्मपाशेन संयतः । विवासयामास सुतं रामं दशरथः प्रियम् ॥ २२ ॥**
**स जगाम वनं वीरः प्रतिज्ञामनुपालयन् । पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २३ ॥**
**तं व्रजन्तं प्रियो भ्राता लक्ष्मणोनुजगामह । स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ।**
**भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ २४ ॥**

रथं । " द्वितीयाटौस्स्वेनः " इत्यन्वादेशेएनादेशः ।
रामस्यविवासनं भरतस्याभिषेचनंच वरमयाचत अ-
र्थितवती । याचिर्द्विकर्मकः ॥२१॥ सइति । राजास-
र्वरञ्जकः । " राजाप्रकृतिरञ्जनात् " इतिप्रयोगात्।
औणादिकःकनिन्प्रत्ययः । यद्यपि " रजकरजनरज-
स्सूपसंख्यानं " इतिवचनादत्रनलोपप्रसक्तिर्नास्ति
तथापिरजस्साहचर्यादौणादिकस्यतत्रग्रहणं। स पूर्वरा-
मायदत्तराज्यः । मन्त्रिप्रमुखैरालोचनपूर्वकंप्रतिज्ञातरा-
माभिषेकइत्यर्थः । दशरथः । धर्मः पाशइवधर्मपाशः।
" उपमितंव्याघ्रादिभिः—" इतिसमासः । व्याघ्रादे-
राकृतिगणत्वात् । तेनसंयतः बद्धः सन् सत्यवचनात्
स्त्रीविषयवचनासिद्धिहेतोः । प्रियं सुतं विवासयामा-
स । " रामोविग्रहवान्धर्मः " इत्युक्तरीत्याप्रथमंअ-
ङ्गीकृतंपरमधर्मपरित्यज्यानन्तरंप्रवृत्तंस्त्रीविषयंक्षुद्रधर्म-
मवलंबितवानित्यर्थः । एतेन " सांकेत्यंपारिहास्यंवा
स्तोभंहेलनमेववा । वैकुण्ठनामग्रहणमशेषाघविनाश-
नं " "आक्रुश्यपुत्रमघवान्यदजामिलोपिनारायणेति-
म्रियमाणउपैतिमुक्तिं । " " कामाद्गोप्योभयात्कंसः"
इत्येवं यथाकथंचित्भगवन्नामवतांमुक्तिसिद्धौ सर्वदा-
रामपरायणस्यदशरथस्य कथंनमुक्तिरितिशङ्कादूरो-
त्सारिता। सिद्धसाधनत्यागात्काशकुशावलंबनात् धर्म-
पाशप्रतिबन्धाच्चमुक्तिप्रसङ्गाभावात् । तथाच मुमुक्षु-
णादशरथवन्नवर्तितव्यमित्युक्तंभवति ॥ २२ ॥ पितृ-
वचनपरिपालनमवश्यंकर्तव्यमित्येतद्रामाचारमुखेनद-
र्शयति—सजगामेति । सरामः वीरोपि राज्यपरिपा-
लनसमर्थोपि कैकेय्याःप्रियकारणात् प्रीतिहेतुभूतात्
स्त्रीपारवश्येनोक्तादपीत्यर्थः । पितुर्वचननिर्देशात्
वचनमेवनिर्देशः आज्ञा । " आज्ञायामपिनिर्देशः "
इतिबाणः । तस्माद्धेतोः प्रतिज्ञां कैकेयीसमक्षंकृतांप्र-
तिज्ञां अनुपालयंश्च । " लक्षणहेत्वोः क्रियायाः "
इतिहेत्वर्थे शतृप्रत्ययः । वक्ष्यति । " तद्ब्रूहिवचनं
देविराज्ञोयदभिकाङ्क्षितं । करिष्येप्रतिजानेचरामो
द्विर्नाभिभाषते " इति स्वप्रतिज्ञापालनार्थं पितृ-
वचनपालनार्थंचेत्यर्थः । वनंदण्डकावनमुद्दिश्यज-
गाम ॥ २३ ॥ " इक्ष्वाकुवंश— " इत्यादिना
समस्तकल्याणगुणपरिपूर्णत्वोक्त्या परत्वमुक्तं "तमे-
वम्—" इत्यादिनाऽभिषेकप्रवृत्तिनिवृत्तिकथनात्
सौलभ्यमुक्तं । अथ परत्वसौलभ्यानुगुणं समा-
श्रयणमाह—तंव्रजन्तमिति । यद्वा । अथसिद्धसाध-
ननिष्ठैःलक्ष्मणवत्कैङ्कर्यपरैर्भवितव्यमितिव्यञ्जयन्ना-
ह । तंव्रजन्तमिति सार्धश्लोकएकान्वयः । प्रीणातीति
प्रियः। रामेप्रीतिमान् । "इगुपधज्ञाप्रीकिरःकः" इति
कः । अनेनानुगतिहेतुर्भक्तिरुक्ता । भ्राता"भ्रातास्वा-
मूर्तिरात्मनः"इति मूर्तिभूतः । विनयसंपन्नः कैङ्कर्यहे-
तुविनययुक्तः । विनयः शेषत्वज्ञानं रामकैङ्कर्यरूपा-
चारोवा । "विनयोधर्मविद्यादिशिक्षाचारप्रशान्तिषु"
इति वैजयन्ती । सुमित्रायाःआनन्दंवर्धयतीति सुमि-
त्रानन्दवर्धनः।"सृष्टस्त्वंवनवासाय" "रामंदशरथंवि-
द्धिमांविद्धिजनकात्मजाम् । अयोध्यामटवींविद्धिगच्छ-
तातयथासुखं"इति सुमित्रयैवोक्तत्वात् । दयितःराम-
स्येष्टतमः । "यमेवैषवृणुतेतेनलभ्यः"इत्युक्तरीत्याप्रि-
यतमत्वेनवरणीयइत्यर्थः । लक्ष्मणःकैङ्कर्यलक्ष्मीसंपन्नो
भविष्यतीतिज्ञात्वा लक्ष्मणइति वसिष्ठेनकृतनामधेयः
"सतुनागवरःश्रीमान्" " अन्तरिक्षगतःश्रीमान् "
इत्युक्तेः। कैङ्कर्यलक्ष्मीवत्त्वं लक्ष्मणोलक्ष्मिसंपन्नइतिव-
क्ष्यति । "लक्ष्म्याअच्च" इतिपामादिगणसूत्रान्मत्वर्थी-
योनप्रत्ययः अकारश्चान्तादेशः । "लक्ष्मीवाँल्लक्ष्मणः
श्रीमान्" इति पर्यायपाठश्च। सुभ्रातुर्भावः सौभ्रात्रं ।
भावे अण् अनुशतिकादित्वात् उभयपदवृद्धिः । रामं-
विना क्षणमपिजीवनाक्षमत्वं सुभ्रातृत्वम् । वक्ष्य-

**शिरो०** धर्मस्यपः पालनं तस्याशोव्याप्तिः तेनसंयतः धार्मिकशिरोमणिरित्यर्थः ॥ २२ ॥ **शिरो०** कैकेय्याः प्रिये विवास-
नेयत्कारणं ब्रह्मप्रार्थनास्वीकारसिद्ध्याभवितव्यं तस्माज्जातात्पितुर्वचननिर्देशाद्धेतोः प्रतिज्ञां स्वकृतप्रतिश्रवमनुपालयन्सवीरो
रामोवनंजगाम ॥ २३ ॥

**रामस्य दयिता भार्या नित्यं प्राणसमा हिता । जनकस्य कुले जाता देवमायेव निर्मिता ॥ २५ ॥**
**सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः । सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥ २६ ॥**
**पौरैरनुगतो दूरं पित्रा दशरथेन च । शृङ्गिबेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।**
**गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २७ ॥**

ति । "नचसीतात्वयाहीनानचाहमपिराघव । मुहूर्तमपिजीवावोजलान्मत्स्याविवोद्धृतौ" इति रामस्यलक्ष्मणविरहासहत्वंसुभ्रातृत्वं । तच्चवक्ष्यति । "नचतेनविनानिद्रांलभतेपुरुषोत्तमः।मृष्टमन्नमुपानीतमश्नाति नहि तंविना " इति । तदनुदर्शयन्सन् । यद्वा एवं सुभ्रातृभिर्वर्तितव्यमिति दर्शयन्निवेति गम्योत्प्रेक्षा । व्रजन्तं एकान्तेस्वाभिमतसकलकैङ्कर्यप्रधानप्रवृत्तं भ्रातरं उपलक्षणमिदं। "मातापिताचभ्राताचनिवासः शरणं सुहृत् । गतिर्नारायणः " इत्युक्तसकलविधबन्धुः । वक्ष्यति । " अहंतावन्महाराजेपितृत्वंनोपलक्षये । भ्राताभर्ताचबन्धुश्च पिताचममराघवः" इति स्नेहात् " बाल्यात्प्रभृतिसुस्निग्धोलक्ष्मणोलक्ष्मिवर्धनः " इत्युक्तरामभक्तेरेवहेतोः अनुजगाम । " येनयेनधातागच्छतितेनतेनसहगच्छति " इतिवदपूर्वोयंकश्चिद्वृत्तिविशेषइतिऋषिर्विस्मयते हेति । " हविस्मयेविषादे च " इतिबाणः । आशालेशमात्रेण स्वस्मिन्नेवाधिकप्रेमाणंभगवन्तंकुत्रचिदेकान्तस्थले स्वमनोरथानुरूपविशिष्टविषयसकलकैङ्कर्यलाभायानुसरन्नधिकारी अत्रध्वन्यते ॥ २४ ॥ अथसीतायाः साधनदशायांपुरुषकारतया फलदशायांप्राप्यतयाचान्वयात् तयानित्ययोगंदर्शयति—रामस्येत्यादिश्लोकद्वयेन । रामस्य अभिरामस्यापि दयिता अभिरामा नित्यंभार्या हृदिसंततंधार्या । बिभर्तेः " ऋहलोर्ण्यत् " इतिण्यत् । प्राणसमा उक्तार्थद्वयेहेतुरयं । हिता चेतनहितपरा । " मित्रमौपयिकंकर्तुं " इत्यादि वक्ष्यति । रामहितपरावा । वक्ष्यति " स्मारयेत्वांनशिक्षये " इति । जनकस्यकुलेजाता आचारप्रधानेत्यर्थः । देवमायेव निर्मिता अमृतमथनानन्तरमसुरमोहनार्थंनिर्मिताविष्णुमायेवस्थिता । "माययामोहयित्वातान्विष्णुःस्त्रीरूपमास्थितः " इत्युक्तेः । यद्वा निर्मिता कृतमूर्तिः । देवमाया विष्णोराश्चर्यशक्तिरिवस्थिता । अनेन सौन्दर्यस्यपराकाष्ठोक्ता। अथवा निर्मिता कृतावतारा देवमाया देवस्य विष्णोर्लक्ष्मीः । वक्ष्यति उत्तरकाण्डे "ऋतेमायांविशालाक्षींतवपूर्वपरिग्रहाम्" इति। इवशब्दोवाक्यालंकारे एवकारार्थेवा ॥ २५ ॥ सर्वलक्षणसंपन्ना सामुद्रिकोक्तैःसर्वैरुत्तमस्त्रीलक्षणैःसंपन्ना । नारीणामुत्तमा पूर्वोक्तसर्वप्रकारेणसर्वस्त्रीश्रेष्ठा । पुरुषोत्तमरामानुरूपनार्युत्तमेत्यर्थः । वधूः दशरथस्नुषा अचिरोढावा । " अचिरोढावधूः " इतिवैजयन्ती । सीता । " सीतालाङ्गलपद्धतिः " । तज्जन्यत्वात्तद्व्यपदेशः । अनेनायोनिजत्वोक्तेः दिव्यलोकवासकालिकसौन्दर्यान्यूनतोक्ता । अपिशब्देनलक्ष्मणानुगतिःसमुच्चीयते । राममनुगता निरवधिकसौन्दर्याकृष्टहृदयतयानुगतवती । रोहिणीयथा । यथाशब्दइवार्थः । " यथातथैवैवंसाम्ये " इत्यमरः । रोहिणीनामचन्द्रस्यासाधारणपत्नी । " वरिष्ठासर्वनारीणामेषाचदिवि देवता । रोहिणीनविनाचन्द्रंमुहूर्तमपिदृश्यते " इति । नकेवलंरामसौन्दर्याकृष्टानुगता किंतु कलङ्किनं रोहिणीव पातिव्रत्यस्वरूपप्रयुक्तागतेत्यर्थः । अयमर्थोऽनसूयासमक्षंव्यक्तीभविष्यति ॥ २६ ॥ रामभक्त्यविशेषाल्लक्ष्मणसीतावत्पौराणामप्यनुवृत्तिंदर्शयति—पौरैरिति । पुरेभवाः पौराः । अनेनस्त्रीबालवृद्धाविशेषउक्तः । दूरमनुगतइत्यनेन विरहासहिष्णुत्वोक्त्या पौराणांपरमाभक्तिरुक्ता । " पुनर्विश्लेषभीरुत्वंपरमाभक्तिरुच्यते " इतिवचनात् । पौरैरित्यनेन तद्देशवासएव रामभक्तिहेतुरित्युक्तं । पित्रादशरथेनच । चशब्दोऽन्वाचये अल्पमनुगतइत्यर्थः । आद्वारंहितेनानुगतं। पित्रेत्यनेन पुत्रकृतवात्सल्यादनुगतइत्युक्तं। एवंपरत्वसौलभ्ये दर्शिते । अथवात्सल्यसौशील्ये दर्शयति —शृङ्गिबेरपुरइति । धर्मौ आश्रितवात्सल्यसौशील्ये

**तीर्थी०** देवमायेव सुन्दोपसुन्दमोहनार्थं देवैरुत्पादिता सर्वोत्तमसौन्दर्यातिलोत्तमेव । **तिल०** जनकस्यकुले अन्वयेजाता । यद्यप्येषा अयोनिजैव तथापि सीरध्वजस्य देवयजनलाङ्गलपद्धतौ आविर्भूतत्वादेवमुक्तिः । अतएवाह—देवमायेवेति । सेव अचिन्त्योदयस्थितिलया देवैरेव स्वकार्यसिद्ध्याकाङ्क्षिभिः निर्मिता आविर्भाविता ॥ २५ ॥

**गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ २८ ॥**
**ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः। चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥ २९ ॥**

आत्मास्वभावोयस्यसतथा। आश्रितवात्सल्यसौशील्यस्वभावोरामः। शृङ्गिबेरपुरे शृङ्गिणः कृष्णसारादयः तेषांबेराणि कृत्रिमशरीराणि। "प्रतिछन्दः प्रतिनिधिर्बेरंचप्रतिरूपकं" इतिवैजयन्ती। वञ्चनेनसजातीयमृगग्रहणार्थानियस्मिन् तत् शृङ्गिबेरं। तथात्वात् तदाख्येपुरेगङ्गाकूलेशृङ्गिबेरपुरसन्निहितगङ्गातीरइत्यर्थः। एतेन गङ्गातीरत्वमात्रेणनोद्देश्यत्वं किंतु भक्तसेवितत्वेनेत्युक्तं। "साकाशीतिनचाकशीति—" इतिवेदान्तदेशिकाद्यभियुक्तोक्तेः। निषादाः प्रतिलोमजातिविशेषाः। "निषादोमृगघातीस्यात्" इतिवैजयन्ती। तेषामधिपतिरितिजात्यपकर्षउक्तः। प्रीणातीतिप्रियःतं स्वस्मिन्प्रीतिमन्तमित्यर्थः। गूहति गोपयतिवञ्चयतिपरस्वमितिगुहः। इगुपधलक्षणः कप्रत्ययः। तं। जातितोवृत्तितोगुणतःकुलतश्चहीनमपि स्वस्मिन्नानुकूल्यमात्रेणादरणीयत्वमुक्तं। निषादाधिपतिमासाद्येत्यनेन सौशील्यमुक्तम्। महतोमन्दैस्सह नीरन्ध्रसंश्लेषोहि सौशील्यं। धर्मात्मेत्यनेन महत्त्वमुक्तं। आसाद्येत्यत्राभिविधिवाचिनाआङाअर्थान्नैरन्ध्र्यमुक्तं। शृङ्गिबेरपुरेगुहमासाद्येत्यनेन दोषेपि भोग्यत्वरूपंवात्सल्यमुक्तं। सूतं सुमन्त्रं। पारंपर्येणानुवर्तमानमपिव्यसर्जयत् व्यसृजत्। स्वार्थेणिच्। सद्यःप्रसूतवत्सवात्सल्यात् पूर्ववत्संपरिहरन्त्याधेनोरिव वात्सल्यातिशयउक्तः ॥ २७ ॥ स्वस्मिन्नाशालेशमात्रेणजनितंगुहविषयप्रेमातिशयंदर्शयति—गुहेनेति। रामः गुहेनसहितःसन् लक्ष्मणेनसीतयाच सहितः। गुहसन्धानानन्तरमेव लक्ष्मणसीताभ्यां नित्यानपायिभ्यांसाहित्यमासीत्। ततःपूर्वसिद्धमपि सदसत्प्रायमासीदित्यर्थः। यद्वा दृष्टान्तार्थंलक्ष्मणसीतासाहित्यकथनं तादृशसौहार्दंगुहेप्यासीदितिभावः। सहितःसंहितः। "समोवाहितततयोः" इतिमलोपः। सःरामः। लक्ष्मणेनसीतयाचसहगुहेनहितः प्रहितः गङ्गांतारितइत्यप्याहुः ॥ २८ ॥ तेवनेनेति श्लोकद्वयमेकान्वयं। ते रामादयस्त्रयइत्यनेन गुहनिवर्तनंद्योतितं। वनेनवनंगत्वा वनाद्वनंगत्वा। पञ्चम्यर्थेतृतीया हेतौतृतीयावा। अनेन नूतनवनावलोकनकुतूहलित्वं नगरप्रवेशस्यस्वाधिकारविरुद्धत्वंच द्योत्यते। यद्वा अवनेनवनंगत्वा अन्योन्यरक्षणेनवनंगत्वेत्यर्थः। वक्ष्यति "अग्रतोगच्छसौमित्रेसीतात्वामनुगच्छतु। पृष्ठतोऽहंगमिष्यामित्वांचसीतांचपालयन्। अन्योन्यस्येहनोरक्षाकर्तव्यापुरुषर्षभ" इति। यद्वा अवनेन पितृवचनपरिपालनेनहेतुना वनंगत्वा। अवनेन लोकरक्षणेनहेतुनावा। रावणादिदुष्टनिबर्हणमुखेन लोकरक्षणार्थंहि तेषां वनगमनं। यद्वा तेवृदेवनइतिधातोर्भावेल्युट्। तेवनेन देवनेन लीलया अनायासेनेत्यर्थः। मृगयाक्रीडनेनवा। अनयैवव्युत्पत्त्या तेवनंपादसंचारइतिलभ्यते। सूतविसर्जनानन्तरंरथादवरुह्यपादसंचारेणवनंगत्वेत्यर्थः। यद्वा अवनेनसहवनंगत्वा मध्येमध्येस्थलप्रदेशंवनंचगत्वेत्यर्थः। वनेन जलेन सहितंवनं नतु मरुकान्तारमितिवार्थः। "पयःकीलालममृतंजीवनंभुवनंवनं" इत्यमरः। बहूदकाः विपुलोदकाः अधिकोदकावा। "विपुलानेकयोर्बहुः" इतिवैजयन्ती। नौतार्याइत्यर्थः। नदीःगङ्गां। तीर्त्वा उत्तीर्य। "गङ्गानदीनां" इतिनदीमुख्यत्वात् निरुपपदनदीशब्देनगङ्गोच्यते। "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यां" इतिबहुवचनं पूजायांबहुवचनंवा। "अदितिःपाशान्" इतिवदवयवबहुत्वाभिप्रायेणवा बहुवचनं। अत्र "अग्निहोत्रंजुहोति" "यवागूंपचति" इतिवत् अर्थक्रमेण नदीस्तीर्त्वावनंगत्वेतियोजनीयं। यद्वा अपूर्वकालेपिक्त्वाप्रत्ययः। "आस्यंव्यादायस्वपिति" इतिवत्। यद्यपि "आस्यंव्यादायस्वपितिसंमील्यहसतिइत्युपसंख्यानं" इतिवार्तिकेस्थलद्वयमेवोपात्तं तथापिन्यासकृता "परावरयोगेच" इतिपूर्वसूत्रे चकारात् सर्वत्रायंप्रयोगःसंभवतीत्युक्तं। यद्वा तेवनेनेत्यनेन गङ्गातरणमर्थसिद्धम्। नदीशब्दो यमुनापरः। यद्वा नदीः गङ्गायमुनामन्दाकिनीः। मन्दाकिनीनाम चित्रकूटपरिसरेपरिसरन्तीस्रवन्ती। सौकर्याययुगपदुक्तं। यद्वा पूर्वार्धेसरामोलक्ष्मणेनसीतयाचसहगुहेनहितः प्रहितः। सीतालक्ष्मणरामाःगुहेनगङ्गांतारिताइत्यर्थः। अतः पादसंचारेणवनगमनमत्रोक्तम् ॥ २९ ॥ भरद्वाजस्यशासनात् चित्रकूटमनुप्राप्य। प्रजाभरणशीलोभरद्वाजः। इत्थंनिरुक्तमृगारण्यके। "एषएव-

**रम्यमावसथं कृत्वा रममाणा वने त्रयः । देवगन्धर्वसंकाशास्तत्र ते न्यवसन्सुखम् ॥ ३० ॥**
**चित्रकूटं गते रामे पुत्रशोकातुरस्तथा । राजा दशरथः स्वर्गं जगाम विलपन्सुतम् ॥ ३१ ॥**
**मृते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः । नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ॥ ३२ ॥**

बिभ्रद्वाजःप्रजावैवाजःताएषबिभर्तियद्बिभर्तितस्माद्भरद्वाजइत्याचक्षते" इति । यद्वा वाजं रेतः वाजकरणमित्यादौ तथाप्रयोगात् । बिभ्रद्वाजं भरद्वाजः । नित्यब्रह्मचारीत्यर्थः । "भरद्वाजोहत्रिभिरायुर्भिर्ब्रह्मचर्यमुवास" इतिश्रुतेः । तस्यशासनात् नियमनात् चित्रकूटेभवद्भिःस्थातव्यंतस्यायमेवमार्गइत्येवंरूपात् । अनु सदृशं । "पश्चात्सादृश्ययोरनु" इत्यमरः । राजकुमाराणांस्वेषामुचितमित्यर्थः । "सुभगश्चित्रकूटोसौगिरिराजोपमोगिरिः । यस्मिन्वसतिकाकुत्स्थःकुबेरइव नन्दने" इतिवक्ष्यति । पश्चाद्भागेवा चित्राणि । आश्चर्यावहानि कूटानि शिखराणियस्यासौ चित्रकूटः तं । "आश्चर्यालेख्ययोश्चित्रं" इत्यमरः । प्राप्य गत्वा रम्यं रमणीयं जलरामणीयकस्थलरामणीयकादियुक्तं आवसथं पर्णशालारूपंगृहं । "धिष्ण्यमोकोनिवसनं स्थानावसथवास्तुच" इत्यमरः । कृत्वा निर्माय । अत्रपर्णशालानिर्माणेलक्ष्मणस्यसाक्षात्कर्तृत्वं । इतरयोस्तु उचितदेशप्रदर्शनादिनाप्रयोजककर्तृत्वं । "समानकर्तृकयोःपूर्वकाले" इत्यत्रसूत्रे गृहैकत्ववदुद्देश्यगतत्वेन द्वित्वस्याविवक्षितत्वादनेकक्रियास्वपि क्त्वाप्रत्ययस्संभवतीति न्यासकारोक्तेःक्त्वाप्रत्ययबाहुल्यं । तत्रवने चित्रकूटोपान्तवने । रममाणाः लीलारसमनुभवन्तः सन्तः । सीतारामयोःपुष्पापचयसलिलक्रीडादिकंरतिः । "वैदेहिरमसेकच्चिच्चित्रकूटेमयासह । पश्यन्तीविविधान्भावान्मनोवाक्कायसंयुतान्" इतिहिवक्ष्यति । लक्ष्मणस्यतुविशिष्टविषयकैङ्कर्यलाभजाप्रीतिः । वक्ष्यति "भवांस्तुसहवैदेह्यागिरिसानुषुरंस्यते । अहं सर्वंकरिष्यामिजाग्रतःस्वपतश्चते" इति । त्रयोरममाणाइत्यनेनानन्दहेतुभेदेऽपि आनन्दांशेतौल्यमुच्यते । "परमंसाम्यमुपैति" "भोगमात्रसाम्यलिङ्गाच्च" इतिवत् । रममाणाइति वर्तमाननिर्देशेन नैरन्तर्यमुक्तं । वर्तमानार्थकस्याप्यस्यन्यवसन्निति भूतप्रत्ययान्तविशेषणत्वं "धातुसंबन्धेप्रत्ययाः" इत्यनुशासनात् "अग्निष्टोमयाजीपुत्रस्तेभविता" इतिवत्संभवति । अतएवदेवगन्धर्वसंकाशाःसन्तः । देवगन्धर्वामनुष्यगन्धर्वेभ्योऽधिकानन्दाः । यद्वा देवीचदेवश्चदेवौ लक्ष्मीनारायणौ । "पुमान्स्त्रिया" इत्येकशेषः । गानंधारयतीति गन्धर्वः । "एतत्सामगायन्नास्ते" इत्युक्तः सर्वदासामगानपरोमुक्तः । देवौचगन्धर्वश्चदेवगन्धर्वाः । तत्सदृशाः देवगन्धर्वसंकाशाः । निभादित्वाद्युत्तरपदभूताएवसन्तःसदृशवचनाः । तथाह्यमरः । "स्युरुत्तरपदेत्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः" इति । ते तएवसन्तः साकेतवासिन एवसन्तः । सुखंन्यवसन् । वक्ष्यति "सुरम्यमासाद्यतु चित्रकूटंनदींचतांमाल्यवतींसुतीर्थां । ननन्दरामोमृगपक्षिजुष्टांजहौचदुःखंपुरविप्रवासात्" इति । यद्वा तएवसन्तः वनवासिनएवसन्तः । नागरिकाअपि चिरंवनचराइवावसन्नित्यर्थः । सुखग्लान्यादिभिस्तेषां वैदेशिकत्वगन्धोपिनाज्ञायतेतिभावः । सुखंयथाभवतितथा न्यवसन् । कदाचिदपिदुःखलेशोपिनान्वभावीत्यर्थः । अत्र क्रियाभेदात्तच्छब्दद्वयप्रयोगइत्याहुः । वेतीर्लोजग्मुरिति क्रियापदमध्याहृत्यकेचिद्योजयन्ति । अत्र देवगन्धर्वसंकाशाइतिपदगतेनोपमालंकारेणकिंचिद्वस्तुध्वन्यते । यस्तावत्स्वरूपज्ञानपूर्वकंभगवत्यनुरक्तोभवति तं भगवान्देव्यासमागत्य दिव्यंविमानमारोप्यआतिवाहिकगणैःसत्कार्य विरजां तीर्त्वातिल्यकान्तारमासाद्यअमानवेनानुज्ञाप्यदिव्यलोकेमहामणिमण्टपमुपेत्यदिव्यसिंहासनारूढः श्रियासहमोदमानस्तद्रचितसर्वदेशसर्वकालसर्वावस्थोचितसकलविधकैङ्कर्योस्मैस्वानन्दसममानन्दंदत्वातेनसह यावत्कालमास्तइति ॥ ३० ॥ एवंलक्ष्मणस्यभगवच्छेषत्ववृत्तिंप्रतिपाद्यभरतस्यपारतन्त्र्यवृत्तिंदर्शयति–मृते तुतस्मिन्नित्यादिना । तदुपोद्घातत्वेनाह—चित्रेति । रामेचित्रकूटं तथा उक्तप्रकारेणगतेसति । दशरथो राजा । पुत्रशोकेनपुत्रादर्शनजदुःखेनातुरः पीडितःसन् । सुतमुद्दिश्य हासुतेत्येवंविलपन् प्रलापंकुर्वन् । स्वर्गंजगाम ॥ ३१ ॥ तस्मिन्दशरथेमृतेसति । स्वर्गप्राप्तिरपिनश्वरत्वेनानुपादेयेतिमृतेइत्युक्तं । महाबलः राज्यभरणसमर्थः । अतएवभरतः "भरतइतिराज्य-

तिल० तथापुत्रशोकातुरः अनिर्वाच्यपुत्रवियोगजन्यशोकपीडितः । क० [ पा० ] पुत्रशोकातुरस्तदा ॥ ३१ ॥

**स जगाम वनं वीरो रामपादप्रसादकः ॥ ३३ ॥**
**गत्वा तु सुमहात्मानं रामं सत्यपराक्रमम् । अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥ ३४ ॥**
**त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् । रामोपि परमोदारः सुमुखः सुमहायशाः ।**
**न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ॥ ३५ ॥**
**पादुके चास्य राज्याय न्यासं दत्त्वा पुनःपुनः । निवर्तयामास ततो भरतं भरताग्रजः ॥ ३६ ॥**

स्यभरणात्" इत्युक्तरीत्या भावज्ञेनवसिष्ठेनभरतइतिकृतनामा । वसिष्ठप्रमुखैर्द्विजैः वसिष्ठादिभिर्ब्राह्मणैः । राज्याय राज्यंकर्तुंनियुज्यमानः । "क्रियार्थोपपदस्य चकर्मणिस्थानिनः" इतिचतुर्थी । राज्यं राजत्वं । "येचाभावकर्मणोः" इतिप्रतिषेधादनोनप्रकृतिभावः । नैच्छत् नाभ्यलषत् । महाबलइत्यनेन सत्यामेवशक्तौ स्वरूपविरुद्धत्वाद्राज्यंनाङ्गीचकारेत्यवगम्यते । अतएववक्ष्यति "राज्यं चाहंचरामस्यधर्मंवक्तुमिहार्हसि । विललापसभामध्येजगर्हेचपुरोहितं । कथंदशरथाज्जातोभवेद्राज्यापहारकः" इति ॥ ३२ ॥ सजगामेत्यर्धमेकंवाक्यं । वीर्येणयुक्तोवीरः । वीर्यमत्र शत्रुभूतरागादिजेतृत्वं विषयानाकृष्टचित्तइत्यर्थः । यद्वा "एभिश्चसचिवैःसार्धंशिरसायाचितोमया । भ्रातुःशिष्यस्यदासस्यप्रसादंकर्तुमर्हसि" इत्युक्तरीत्या चतुरङ्गबलसहितः सभरतः रामपादप्रसादकः । पादशब्दः पूज्यवाची । "पूज्येतुपादनामाङ्कः" इत्यमरशेषः । प्रसादकः "तुमुन्ण्वुलौक्रियायांक्रियार्थायां" इति ण्वुल् । पूज्यंरामंप्रसादयितुमित्यर्थः । यद्वा रामचरणयोःप्रसादकः रामस्यैवप्रसाद्यत्वेपिपादयोःप्रसाद्यत्वोक्तिः शेषभूतव्यवहारानुसारेण । राजानंद्रष्टुमितिवक्तव्येराजपादौद्रष्टुमितिहिभृत्यजनोव्यवहरति । वनंजगाम प्राप । वस्तुतोरामस्यकोपाभावेपि भरतायराज्यंदत्तमितिबुद्धिंनिवर्तयितुमित्यर्थः । "पूजिता मामिकामातादत्तंराज्यमिदंमम । तद्ददामिपुनस्तुभ्यं यथात्वमददामम" इत्युत्तरत्रापिवक्ष्यति ॥ ३३ ॥ अत्र सइत्यनुषज्यते । सआर्यभावपुरस्कृतः पुरस्कृतः आर्यभावःयेनसः । आहिताग्न्यादित्वात् परनिपातः । यद्वा आर्यभावेन स्वस्यार्यभावेन पुरस्कृतः पूजितः उचितमनेनक्रियतइतिश्लाघितइत्यर्थः । "पूजितःस्यात्पुरस्कृतः" इतिबाणः । तथाविधःसन् । सुमहान् आत्माअन्तःकरणंयस्यतं सुमहात्मानं स्वतःप्रसन्नहृदयमित्यर्थः । सत्यपराक्रमं सत्येपराक्रमोऽप्रच्युतत्वं यस्य तं रामं । गत्वातु प्राप्य तुविशेषोस्ति । तस्याग्रेस्थितिरेवालंयाचनमतिरिच्यतइतिभावः । भ्रातरं रामं । अयाचत् प्रार्थयामास । स्वाभीष्टमितिशेषः । याचेर्द्विकर्मकत्वात्स्वरितेत्त्वादुभयपदी । क्रियाभेदाद्रामशब्दस्य नपुनरुक्तता ॥ ३४ ॥ स्वाभीष्टमेवाह—त्वमेवेति । धर्मज्ञः ज्येष्ठेविद्यमाने नकनिष्ठोराज्यमर्हतीतिधर्मं जानन् त्वमेवराजानान्यइतिरामंवचोब्रवीत् । "अकथितंच" इतिद्विकर्मकत्वं । ननुभरतकृताप्रपत्तिःकुतोनाफलत् अधिकारिवैगुण्याद्वा शरण्यवैगुण्याद्वा । नाद्यः । अपेक्षातिरिक्तस्याभावात् । नान्त्यः । तस्य सर्वगुणपरिपूर्णत्वादित्याशङ्क्यप्रबलप्रतिबन्धकस्यप्रारब्धस्यसद्भावान्नसाफलितेत्याह—रामोपीति । अपिशब्दः प्रतिविशेषणमन्वेति । रामोपि रमयतीतिव्युत्पत्त्या स्वरूपरूपगुणैराश्रितचित्तरञ्जनस्वभावोपि । परमोदारोपि स्वपर्यन्तापेक्षितार्थप्रदोपि । "यआत्मदाबलदा" इति श्रुतेः । सुमुखोपि अर्थिजनलाभेनप्रसन्नमुखोपि । सुमहायशाअपि "नह्यर्थिनःकार्यवशादुपेताःककुत्स्थवंशेविमुखाःप्रयान्ति" इतिविष्णुपुराणोक्तरीत्या महाकीर्तिरपि । महाबलोपि आश्रितमनोरथपूरणेनिपुणोपि । रामः पितुरादेशात् बलवत्प्रतिबन्धकात् । नैच्छत् । चकारात्तदवसानेत्वैच्छदित्यर्थः । आदेशोनियोगः ॥ ३५ ॥ सर्वथा प्रपत्तेर्वैफल्यमनुचितमिति यावत्प्रतिबन्धकानिवृत्ति फलप्रतिनिधिंदिशतिस्मेत्याह—पादुकेचेति । चस्त्वर्थः । किंतु भरताग्रजः फलप्रदानोचितसंबन्धशीलः । राज्याय राज्यंकर्तुं । "क्रियार्थोपपदस्यचकर्मणिस्थानिनः" इतिचतुर्थी । अस्य भरतस्य पादुके न्यासं स्वप्रतिनिधिं दत्वा रामपादुकेराज्यंकुरुतः अहंतयोःपरिचारकइतिभावयेति दत्वेत्यर्थः । पुनःपुनर्भरतंतस्मादेशान्निवर्तयामास । पुनःपुनरित्यनेन भरतस्य राम-

**तीर्थी०** रामं अभिरामम् ॥ ३४ ॥ **कतकम्** सुमहायशाः प्रतिज्ञापालनजन्ययशोभङ्गभियानैच्छत् ॥ ३५ ॥ **तीर्थी०** अहल्यादृष्टवैभवपादस्पृष्टेपादुके न्यासरूपेणदत्त्वा । **तिल०** राज्याय राज्यलक्षणसामर्थ्यंलंभयितुम् ॥ ३६ ॥

**स काममनवाप्यैव रामपादावुपस्पृशन् । नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ ३७ ॥**
**गते तु भरते श्रीमान्सत्यसन्धो जितेन्द्रियः । रामस्तु पुनरालक्ष्य नागरस्य जनस्य च**
**तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ॥ ३८ ॥**
**प्रविश्य तु महारण्यं रामो राजीवलोचनः । विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।**
**सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ ३९ ॥**

विरहासहिष्णुत्वंद्योत्यते । स्वार्थत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपत्वाभावात् नचतुर्थी । किंतु संबन्धसामान्ये षष्ठी ॥ ३६ ॥ अथप्रपन्नस्य यावत्प्रारब्धनिवृत्ति शेषिणि वृत्तिंदर्शयन्नाह—स इति । सभरतःकामं रामकैङ्कर्यमनोरथमप्राप्यैव । रामपादौ रामस्यपादुके । पादशब्दः पादुकोपलक्षकः । उपस्पृशन् प्रत्यहंसेवमानःसन् । रामागमनकाङ्क्षया कदारामआगमिष्यतीतिप्रत्याशया । चतुर्दशवर्षरूपप्रतिबन्धकमुत्तीर्य कदारामकैङ्कर्यंलप्स्यइतिमनोरथमभिवर्धयन्नित्यर्थः । रामरहिततन्निवासस्यातिदुःखावहतयाऽयोध्यांविहाय । नन्दिग्रामे नन्दिग्रामाख्येअयोध्यासन्निहितेकुत्रचित्ग्रामे । राज्यमकरोत् तदाज्ञाकैङ्कर्यमकरोत् । परस्मैपदेन स्वस्यतस्मिन्फलत्वनिवृत्तिरवगम्यते॥३७॥ अयोध्याकाण्डप्रतिपाद्यपितृवचनपरिपालनसिद्धिंनिगमयन्नुत्तरकाण्डार्थंप्रस्तौति—गतेत्विति । अत्रार्धत्रयमेकंवाक्यं । भरते गतेतुविशेषोस्तीतितमेवाह । श्रीमान् प्रतिज्ञाभङ्गभयजनितविषादविगमादुत्पन्नकान्तिविशेषः । सत्यसन्धः भरतनिर्बन्धेनाप्यविचाल्यप्रतिज्ञः । "सन्धाप्रतिज्ञामर्यादा" इत्यमरः । जितेन्द्रियः मातृभरतादिप्रार्थनाव्याजेसत्यपिराज्यभोगलौल्यरहितः । रामः । नगरेभवोनागरः । "तत्रभवः" इत्यण् । तस्य जनस्य । तत्र चित्रकूटे । पुनरागमनमालक्ष्य आलोच्य । चकारादृषिविप्रकारदर्शनाच्च तत्प्रदेशंविहाय । एकाग्रः पितृवचनपालनेदत्तावधानः विरोधिभूयिष्ठदेशत्वेन सावधानोवा । दण्डकान्प्रविवेश । हेति विषादे । "एकसर्गोनन्यवृत्तिरेकाग्रैकायनावपि" इतिवैजयन्ती । सीतालक्ष्मणयोश्चप्रवेशोर्थसिद्धः । दण्डकस्यराज्ञोजनपदोदण्डकः "तस्यनिवासः" इत्यण् । जनपदेलुप्" इति लुप् । शुक्रशापेन वनतांप्राप्तः । कुत्सायांकन् । अवान्तरवनबहुत्वाद्बहुवचनं । वक्ष्यत्युत्तरकाण्डे । "शप्तोब्रह्मर्षिणातेनपुरावैदण्डकोहतः । ततःप्रभृतिकाकुत्स्थदण्डकारण्यमुच्यते । तपस्विनः स्थितायत्रजनस्थानमतोऽभवत्" इति । दण्डकामितिपाठे दण्डकोनामराजाऽस्यामटव्यामस्तीतिदण्डका "अर्शआदिभ्योच्" इत्यच्प्रत्ययः । ततष्टाप् क्षिपकादित्वान्नेत्वं ॥ ३८ ॥ एवमयोध्याकाण्डवृत्तान्तसंग्रहेण पितृवचनपरिपालनरूपसामान्यधर्मः शेषभूतस्यशेषिविषयकैङ्कर्यवृत्तिः प्रपन्नस्यभगवत्पारतन्त्र्यंचप्रदर्शितं । शत्रुघ्नवृत्तान्तप्रदर्शनेन तस्यभागवतपारतन्त्र्यंचसूचितं। अथब्राह्मणेषुविशिष्य सत्यप्रतिज्ञत्वप्रतिपादनपरं आरण्यकाण्डवृत्तान्तंसंगृह्णाति—प्रविश्येत्यादिना । रामोमहारण्यंदण्डकारण्यं । प्रविश्य । तुर्विशेषोस्ति तमाह । राजीवलोचनः अपूर्वसंस्थानविपिनविलोकनजनितकुतूहलेनविकसितनयनारविन्दःसन् । तेनैवोत्साहेन विराधंराक्षसंहत्वा"रिक्तहस्तेननोपेयाद्राजानंदैवतंगुरुं" इतिस्मरणात् तद्धननमुपहारीकृत्य शरभङ्गं ददर्श । हेत्यैतिह्ये । तदनुज्ञया सुतीक्ष्णं चापीत्येकनिपातः समुच्चयार्थकः । अगस्त्यमगस्त्यभ्रातरंचददर्श । तथेति समुच्चये । अगस्त्यभ्राता सुदर्शनाख्यः । तदुक्तं सनत्कुमारसंहितायामगस्त्येन । "यवीयानेषमेभ्राता सुदर्शनइतिस्मृतः" इति । कुंभसंभवस्यागस्त्यस्यभ्राता सहपोषणादिति बोध्यं । अगस्त्यंच अगस्त्यभ्रातरं इत्यत्रसन्धिकार्याभावोवाक्येसंहितायाअनित्यत्वात् । तथोक्तं । "संहितैकपदेनित्यानित्याधातूपसर्गयोः । नित्यासमासेवाक्येतुसाविवक्षामपेक्षते" इति ॥३९॥

**तीर्थी०** कामं अभिषेकार्थं रामप्रत्यानयनलक्षणमनोरथम् । **विषम०** एवंलक्षणस्य भरतस्य च क्रमेणश्रीरामकैङ्कर्यं तत्पारतन्त्र्यंचप्रदर्शितम् । शत्रुघ्नवृत्तान्ताप्रदर्शनेनतस्यभागवतपारतन्त्र्यंसूचितम् ॥ ३७ ॥ **तिल०** आलक्ष्य संभाव्य तेषां प्रतिनिवर्तनप्रयासात् वरमितोपिदूरगमनमितिसंचिन्त्येतियावत् । **शिरो०** एकां मुख्यां समाधिकरहितां अग्र्यं गतिं रातिददातीति एकाग्रः परमपुरुषार्थदाता ॥ ३८ ॥ **तीर्थी०** राजीवलोचनविशेषणं रामस्यमहावनप्रवेशसंभावितराक्षसयुद्धार्जितंहर्षंद्योतयति ॥ ३९ ॥

**अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् । खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ ४० ॥**
**वसतस्तस्य रामस्य वने वनचरैः सह । ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥ ४१ ॥**
**स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥ ४२ ॥**
**प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् । ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४३ ॥**

अगस्त्येति । अत्ररामइत्यनुषज्यते । रामः परमप्रीतःसन् जगदेकवीरस्यस्वस्यसदृशायुधजाललाभात्भृशंसंतुष्टःसन् । अगस्त्यवचनादेव नतुस्वाभ्यर्थनात् । ऐन्द्रं इन्द्रेणदत्तं । "तस्येदं" इति संबन्धसामान्येऽण् । "दत्तोममहेन्द्रेण" इतिवक्ष्यमाणत्वात् । इदंशरासनादित्रयसाधारणंविशेषणं । शराअस्यन्ते क्षिप्यन्तेऽनेनेतिशरासनं धनुः । तच्च खड्गंच । अक्षयसायकौ समरसीम्निसहस्रशोविनियोगेप्यक्षयशरौ । तूणी निषङ्गौ । जग्राह स्वीकृतवान् । वचनाज्जग्राहेत्यनेन खड्गादिकमगस्त्योनस्पृष्टवान् किंतु निर्दिष्टवानित्युच्यते ॥ ४० ॥ एवं विरोधिनिरसनानुकूल्यदर्शनलब्धावसरमुनिजनाभ्यर्थनमाह—वसतइति । वने शरभङ्गवने । तस्यवसतः तस्मिन्वसतीत्यर्थः । "षष्ठीच" इति योगविभागात् "यस्यचभावेनभावलक्षणं" इत्यस्मिन्नर्थे षष्ठी । यद्वा षष्ठ्यर्थसंबन्धसामान्यस्य उक्तविशेषेपर्यवसानं । "शरभङ्गाश्रमेराममभिजग्मुश्च तापसाः" इतिवक्ष्यमाणत्वाच्छरभङ्गवनइतिसिद्धं । सर्वे वैखानसवालखिल्यादयः । ऋषयः शरभङ्गाश्रमवासिनः । वनचरैः चित्रकूटपंपावनप्रभृतिवनवासिभिःसह । वक्ष्यति "पंपावननिवासानामनुमन्दाकिनीमपि । चित्रकूटालयानांचक्रियतेकदनंमहत्" इति । यद्वा वनचरैःसह वनेवसतस्तस्य । "षष्ठीचानादरे" इत्यनादरेषष्ठी । "सविशेषणेहि—" इतिन्यायेन तस्यवनेवासमनादृत्येत्यर्थः । वक्ष्यतिहि "ते वयंभवतारक्ष्याभवद्विषयवासिनः । नगरस्थोवनस्थो वात्वंनोराजाजनेश्वरः" इति । यद्वा वनेवसतस्तस्य समीपमित्युपस्कार्यं । आसुराणि असुरप्रकृतीनिरक्षांसि । अनेन "विभीषणस्तुधर्मात्मानतुराक्षसचेष्टितः" इत्युक्तविभीषणव्यावृत्तिः । यद्वा असुराश्चरक्षांसिचेतिद्वन्द्वः । असुराः कबन्धादयः । तत्रदनुशब्दप्रयोगात् । यद्वा असून्प्राणान्रान्ति गृह्णन्तिइत्यसुराणि । असुराणिच तानिरक्षांसिचेतिकर्मधारयः । तेषां वधाय वधंकारयितुं । प्रार्थयितुंवा । "क्रियार्थोपपदस्यचकर्मणिस्थानिनः" इतिचतुर्थी । अभ्यागमन् अभिमुखतयाआगताः । नह्यभिमुख्यादन्यत् शरणागतिर्नामास्ति । "सत्सुकार्यवतांपुंसामलमेवाग्रतःस्थितिः" । यद्वा असुररक्षसांवनेवसतस्तस्य असुररक्षसांवधायाभ्यागमन्नित्युभयत्राप्यन्वयः काकाक्षिन्यायात् मध्यमणिन्यायाद्वा ॥ ४१ ॥ मुनीनांदुर्दशामालोक्यतद्विरोधिनिरसनंप्रतिज्ञातमित्याह—सइति । सरामः । राक्षसानांवने दण्डकारण्ये । तेषां ऋषीणां । तथाप्रतिशुश्राव यथातैरर्थितं तथाप्रतिजज्ञइत्यर्थः । "आश्रवसंगरसन्धाःप्रतिश्रवःसंश्रवःप्रतिज्ञाच" इतिहलायुधः ॥ ४२ ॥ मुनिभिरार्थितोरामेणप्रतिज्ञातश्चकोर्थ इत्यत्राह—प्रतिज्ञातश्चेति । रामेणप्रतिज्ञातोर्थस्तु । अग्निकल्पानां ईषन्न्यूनमग्निसादृश्यंप्राप्तानां । "ईषदसमाप्तौकल्पब्देश्यदेशीयरः" इतिकल्पप्प्रत्ययः । अतएवदण्डकारण्यवासिनामृषीणां । चतुर्थ्यर्थेषष्ठी । संयति युद्धे । "समुदायःस्त्रियांसंयत्समित्याजिसमिद्युधः" इत्यमरः । रक्षसांवधः । "कर्तृकर्मणोःकृति" इति कर्मण्यर्थेषष्ठी । प्रतिज्ञातंत्वितिपाठे सामान्येनपुंसकं ।

**तीर्थी०** इन्द्रः परमेश्वरोविष्णुः तस्येदमैन्द्रं । निजायुधलाभात्परमप्रीतः । **तिल०** पूर्वं भार्गवंजित्वा ततः प्राप्तंयद्वैष्णवंधनुर्भगवतारामेणवरुणेन्यस्तं तदिन्द्रेणवरुणादानीय अगस्त्येस्थापितमित्यग्रेआरण्यकाण्डेस्फुटीभविष्यति ॥ ४० ॥ **तीर्थी०** वनेवसतइत्यनादरेषष्ठी । हिंसानर्हरामस्यतापसरूपेणावस्थानंअनादृत्य । अभ्यागमन् सर्वेश्वरोयंदुष्टान्संहृत्यअस्मान्रक्षिष्यतीतिनिश्चित्यराघवंशरणमागताइत्यर्थः ॥ ४१ ॥ **तीर्थी०** सः रामः । राक्षसानांवने राक्षसावासभूतेवने । तेषां ऋषीणां । तथा प्रार्थनावचनं । प्रतिशुश्राव अङ्गीचकारेत्यर्थः । **शिरो० ( पा० )** राक्षसानांतदावने । तदा तस्मिन्काले । अवनेसर्वरक्षणेप्रवृत्तः सरघुनाथः । राक्षसानांसंबन्धि तेषामृषीणांप्रार्थनावचनं प्रतिशुश्राव अङ्गीचकार । यद्वा तेषामृषीणां प्रति प्रत्येतिप्रत्याययतिबोधयत्यर्थमितिवचनं । प्रतिपूर्वकेण्धातुप्रकृतिकक्विबन्तप्रयोगः । नपुंसकत्वाद्ध्रस्वत्वं । आगमशास्त्रस्यानित्यत्वात्तुगभावः । गत्यर्थकदीर्घप्रकृतिकक्विबन्तोवा । गत्यर्थानां ज्ञानार्थकत्वं प्रसिद्धमेव । अतएवानेनप्रतिज्ञातश्चेत्यस्यनपौनरुक्त्यम् । अन्यथा प्रतिपूर्वकश्रुधातोः प्रतिज्ञार्थकत्वेन तद्दुरुपपादंस्यात् ॥ ४२ ॥ **तिल०** अग्निकल्पानां ऋषीणां संनिधावितिशेषः । अपेक्षितइतिवा शेषः ॥ ४३ ॥

**तेन तत्रैव वसता जनस्थाननिवासिनी । विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४४ ॥**
**ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् । खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ।**
**निजघान रणे रामस्तेषां चैव पदानुगान् ॥ ४५ ॥**
**वने तस्मिन्निवसता जनस्थाननिवासिनाम् । रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ॥ ४६ ॥**
**ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः । सहायं वरयामास मारीचं नाम राक्षसम् ॥ ४७ ॥**
**वार्यमाणः सुबहुशो मारीचेन स रावणः । न विरोधो बलवता क्षमो रावण तेन ते ॥ ४८ ॥**
**अनादृत्य तु तद्वाक्यं रावणः कालचोदितः । जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ ४९ ॥**
**तेन मायाविना दूरमपवाह्य नृपात्मजौ । जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ ५० ॥**

प्रतिज्ञातंवस्तु वधइत्यर्थः ॥ ४३ ॥ अथप्रतिज्ञानिर्वाहबीजमुपक्षिपति—तेनेति । तत्रैव जनस्थाने। वसता तेन रामेण । जनस्थानेनिवसतीति जनस्थाननिवासिनी । "सुप्यजातौणिनिस्ताच्छील्ये" इतिणिनिः । कामेनेच्छया रूपमस्याअस्तीति कामरूपिणी । शूर्पतुल्यानखायस्याःसा शूर्पणखा । "पूर्वपदात्संज्ञायामगः" इतिणत्वं । "नखमुखात्संज्ञायां" इतिङीष्प्रतिषेधः । शूर्पणखाख्याराक्षसी । विरूपिता कर्णनासिकाछेदेनवैरूप्यंप्रापिता । "रामस्यदक्षिणोबाहुः" इतिलक्ष्मणस्यरामबाहुत्वात् रामस्यविरूपकरणकर्तृत्वोक्तिः । शूर्पनखीतिपाठे नसासंज्ञा ॥ ४४ ॥ ततइत्यादिसार्धश्लोक एकंवाक्यम् । ततः शूर्पणखावैरूप्यकरणानन्तरं । शूर्पणखावाक्यात्उद्युक्तान् युद्धार्थं संनद्धान्। सर्वराक्षसान् चतुर्दशसहस्रसंख्याकप्रधानराक्षसान्। तेष्वपिप्रधानं। खरं त्रिशिरसंचैव दूषणंचैव राक्षसम् । चैवेतिनिपातद्वयसमुदायः समुच्चयार्थः । तेषां पूर्वोक्तानांराक्षसानां खरादीनांच । पदानुगान् अनुचरांश्च । रणे युद्धे। निजघान हतवान्। यद्वा खरादीन् तेषांपदानुगान्सर्वराक्षसांश्च निजघानेतियोजना ॥४५॥ हतान्राक्षसान्परिसंचष्टे—वनइति । तस्मिन्वनेनिवसतारामेणेत्यनेनासहायत्वंदर्शितं ।जनस्थाननिवासिनामित्यनेनारण्यवर्तित्वेनातिघोरत्वमुक्तं। रक्षसांचतुर्दशसहस्राणीतियौगपद्यमुक्तं । निहतानीतिनिश्शेषत्वमुच्यते । सहस्राणीतिसंख्यासंख्येययोरभेदेननिर्देशः । चतुर्दशसहस्रसंख्याकानि सैन्यानिवा ॥ ४६ ॥ एवंरामस्यसत्यप्रतिज्ञत्वेदर्शिते सीतायाःपुरुषकारत्वंवक्तुंबीजमुपक्षिपति—ततइति । ततः खरादिवधानन्तरं । ज्ञातिवधं खरवधं । खरस्यज्ञातित्वं स्वमातृष्वसुर्विश्रवसोजातत्वादित्यारण्यपर्वणिव्यक्तम् । श्रुत्वा अकंपनशूर्पणखामुखेनज्ञात्वा । रावणः रौतिरावयतीति रावणः । वक्ष्यत्युत्तरकाण्डे । "यस्माल्लोकत्रयंह्येतद्रावितंभयमागतं । तस्मात्त्वंरावणोनाम नाम्नाराजन्भविष्यसि" इति । यद्वा विश्रवसोपत्यं रावणः । शिवादिगणे "विश्रवसो विश्रवणरवण" इतिपाठात् रवणादेशःअण्च । क्रोधमूर्च्छितः क्रोधेनमूर्च्छितःमूढः । "मूर्च्छितौमूढसोच्छ्रायौ" इतिवैजयन्ती। नचायंप्रत्ययोमूर्च्छेतोर्निष्ठा मूर्तइतितद्रूपत्वात् । किंतुमूर्च्छास्यसंजातेतिमूर्च्छितः तारकादित्वादितच् । मारीचंनाम राक्षसं सहायं वरयामास ॥ ४७ ॥ अत्र अन्ते इतिकरणंद्रष्टव्यं । सरावणः । हेरावण । ते तेन बलवता खरादिषुदृष्टापदानवताबलीयसा । रामेण । विरोधोनक्षमः नयुक्तः । "क्षमस्त्रिषुहितेयोग्ये युक्तेशक्तेपटावपि" इतिशब्दरत्नाकरे । इति सुबहुशो मुहुर्मुहुःवार्यमाणोऽभूत् ॥ ४८ ॥ रावणःकालचोदितः कालेनमृत्युना प्रेरितःसन् । तद्वाक्यं मारीचवाक्यं अनादृत्य । सहमारीचः मारीचसहितः । "तेनसहेतितुल्ययोगे" इतिसमासः । "वोपसर्जनस्य" इतिसहशब्दस्य सभावाभावः । तदा तस्मिन्नेवकाले । तस्य खरदूषणादिहन्तृत्वेनप्रसिद्धस्य रामस्य । आश्रमपदं आश्रमस्थानं । "पदंव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । जगाम प्राप ॥ ४९ ॥ मायाविना प्रशस्तमृगमायावता । "अस्मायामेधास्रजोविनिः" इतिविनिप्रत्ययः । लोभनीयविचित्रकनकमृगवेषधारिणेत्यर्थः । तेन मारीचेन प्रयोज्येन । नृपात्म-

तीर्थी० जनस्थानंनाम दण्डकारण्येरावणस्यबलनिवेशस्थानम् ॥ ४४ ॥ शिरो० रक्षसामित्यत्रषष्ठी राहोःशिरइतिवद्बोध्य ॥ ४६ ॥ तिल० बलवता विश्वामित्राश्रमेमदनुभूतबलेन ॥ ४८ ॥

**गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् । राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ॥ ५१ ॥**
**ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ।**
**मार्गमाणो वने सीतां राक्षसं संददर्श ह । कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५२ ॥**

जौ दशरथपुत्रौ । दूरंयथाभवतितथा । अपवाह्य अपसार्य । दृश्यादृश्यतयारामं रामस्वरतुल्यस्वरेण लक्ष्मणंच दूरंनिस्सार्येत्यर्थः । मध्येसीताविमोचनाय प्राप्तं जटायुषं जटायुर्नामकंगृध्रं । हत्वा मरणपर्यवसायिनींहिंसांकृत्वा । रामस्यभार्यां नित्यानपायिनींसीतां । जहार हृतवान् । अत्र "आस्यंव्यादायस्वपिति" इतिवदपूर्वकालेक्त्वाप्रत्ययः । सीतांहृत्वाजटायुषंजघानेत्यर्थः । अत्रमायानिर्मितासीतैवापहृता स्वयमग्नावन्तार्हिता । अतएवमायासीतायामग्निप्रविष्टायांनिजसीतायाउत्थानं यथाकथंचिल्लोकापवादात्पुनःसंत्यागश्चोपपद्यतइत्याहुः ॥ ५० ॥ मृगरूपमारीचहननं पर्णशालायांसीतायाअदर्शनेनतदन्वेषणंच चकारेणसमुच्चीयते । निहतं मुमूर्षुं । गृध्रं जटायुषं । दृष्ट्वा । तद्वचनान्मैथिलीं सीतां । हृतां रावणेनापहृतां । श्रुत्वा राघवः । शोकेनसंतप्तः सम्यक्तप्तःसन् सीतायाअदर्शनेनतप्तः जटायुर्मरणेनसुतरांतप्तः । अतएव आकुलेन्द्रियः कलुषितसर्वेन्द्रियस्सन् । विललाप परिदेवनमकरोत् । "विलापःपरिदेवनं" इत्यमरः । "राज्याद्भ्रंशोवनेवासःसीतानष्टाहतोद्विजः । ईदृशीयंममालक्ष्मीर्निर्दहेदपिपावकं" इति । अत्र राघवमैथिलीशब्दाभ्यां कुलद्वयावद्यकरमिदमपहरणमिति शोकातिशयहेतुरुच्यते । ननु विष्णववतारभूतस्यास्यकथंशोकमोहौसंभवतइति । संभवतएवपुरुषधौरेयस्य । यदिहिलोकोत्तरगुणविशिष्टवस्तुविनाशेपितौनस्यातां तर्हि सकथंपुरुषधौरेयःस्यात् तच्चकथमतिसुन्दरंस्यात् तयोरुभयोर्नमस्कारएवस्यात् । वक्ष्यतिचमहापुरुषगुणमणिवर्णनप्रकरणे "व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः" इति । मारुतिश्चवक्ष्यति "दुष्करंकृतवान् रामोहीनोयदनयाप्रभुः । धारयत्यात्मनोदेहंनशोकेनावसीदति" इति ॥ ५१ ॥ अर्धत्रयमेकंवाक्यं । तेनैवशोकेन गृध्रहननजनितेनैवशोकेन सीतापहरणजशोकादप्यधिकेनेत्यर्थः । ततः व्याप्तोरामः । गृध्रं तिर्यग्विशेषमपिजटायुषं । पितृसखत्वात् शेषिकार्यायत्यक्तप्राणत्वाच्च दग्ध्वा ब्रह्ममेधेनसंस्कृत्य । "यत्तुप्रेतस्य मर्त्यस्यकथयन्तिद्विजातयः । तत्स्वर्गगमनंतस्यक्षिप्रं रामोजजापह" इति वक्ष्यमाणत्वात् मुक्तत्यक्तशरीरत्वाच्च इदंब्रह्ममेधमर्हतीति । तथोक्तंनृसिंहपुराणे "मत्कृतेनिधनंयस्मात्त्वयाप्राप्तंद्विजोत्तम । तस्मात्त्वं मत्प्रसादेनविष्णुलोकमवाप्स्यसि" इति । सामान्यतश्चोक्तं । यथाऽऽग्नेये "विष्णोःकार्यंसमुद्दिश्यदेहत्यागोयतःकृतः । ततोवैकुण्ठमासाद्यमुक्तोभवतिमानवः" इति । आश्वमेधिकेच "प्राणांस्त्यजतियोमर्त्योमां प्रपन्नोपिमत्कृते । बालसूर्यप्रकाशेनव्रजेद्यानेनमद्गृहं" इति । अत्रापिवक्ष्यति "यागतिर्यज्ञशीलानामाहिताग्नेश्चयागतिः । अपरावर्तिनांयाचयाचभूमिप्रदायिनां । मयात्वंसमनुज्ञातोगच्छलोकाननुत्तमान्" इति । अत्रापरावृत्तिः "नचपुनरावर्तते" इत्युक्ता मुक्तिरेव नतु युद्धे अपलायनं । तत्फलस्यस्वतःसिद्धत्वेन तदनुग्राह्यत्वाभावात् । नच संस्काराभावेसुकृतफलस्यानुत्पत्त्यातत्करणेनतदनुग्राह्यत्वमेवेतिवाच्यं । तिरश्चो यज्ञानधिकारेण तस्यतदभावेनतस्यतदननुग्राह्यत्वात् । अङ्गिफलस्यैवाङ्गफलत्वेन उपासनाङ्गानांयज्ञदानादीनामपि मुक्तिरेवफलमित्यभिप्रायेण "यागतिर्यज्ञशीलानां" इत्याद्युक्तम् । यद्वा "इमाँलोकान्कामान्नीकामरूप्यनुसंचरन्" इत्यादिश्रुत्युक्तरीत्या मुक्तस्यसर्वलोकसंचारसंभवात् यागतिरित्याद्युक्तंक्रममुक्तिपरमिदंवचनं । ननु "आत्मानंमानुषंमन्ये" इति मनुष्यत्वंभावयतः कथंपरत्वासाधारणचिह्नंमोक्षप्रदत्वमुच्यतइतिचेन्न । "सत्येनलोकाञ्जयति" इत्युक्तस्यसर्वलोकजयस्यमानुषत्वेप्यविरोधात् । एवं जटायुषंदग्ध्वा वने सीतां मार्गमाणः अन्वेषणंकुर्वन् । मृगअन्वेषणइत्यस्माद्धातोःशानच् । "आधृषाद्वा" इतिविकल्पाणिजभावः । रूपेण शरीरेण । विकृतं विकारयुक्तं । "येनाङ्गविकारः" इतितृतीया । कुक्षिनिक्षिप्तमस्तकमित्यर्थः । घोरदर्शनं भयंकरदर्शनं । कबन्धं कबन्धाकारत्वात्कबन्धनामकंराक्षसं । ददर्श । हेतिखेदे । अमृतमन्वेषता कालकूटमलंभीत्यर्थः । यद्यप्ययंदानवएव तथापिराक्षसप्र-

**तीर्थी०** ततः प्रलापानन्तरं शोकेन उपलक्षितः । **तिल०** तेनैवशोकेन निवृत्तिहेतुमप्राप्तेनअभिभूयमानएवसन् ॥ ५२ ॥

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ ५३ ॥
स चाऽऽस्य कथयामास शबरीं धर्मचारिणीम् । श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् ॥ ५४ ॥
सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः । शबर्या पूजितः सम्यग्रामो दशरथात्मजः ॥ ५५ ॥
पंपातीरे हनुमता संगतो वानरेण ह । हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ ५६ ॥
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः । आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥ ५७ ॥

कृतित्वात्तथोक्तमितिज्ञेयम् ॥५२॥ महाबाहुः कबन्धभुजनिकर्तनक्षमभुजोरामः । तं कबन्धंनिहत्य । तत्प्रार्थनया ददाह दग्धवान् । सच कबन्धो दाहेनहेतुना । स्वः स्वर्गंगतः । इदमर्धमेकंवाक्यम् ॥५३॥ सः स्वर्गंगच्छन्कबन्धोपि । आस्य उपकारस्मृत्या क्षणमाकाशेस्थित्वा । धर्मचारिणीं गुरुशुश्रूषादिधर्माचरणशीलां आचार्याभिमानरूपचरमपर्वनिष्ठामित्यर्थः "पादमूलंगमिष्यामियानहंपर्यचारिषं" इतिवक्ष्यमाणत्वात् । धर्मे अतिथिसत्काररूपे । निपुणां समर्थां धर्मसूक्ष्मज्ञामित्यर्थः । रामः समागमिष्यतीति स्वादूनिफलान्यास्वाद्यास्वाद्य परीक्ष्य निक्षिप्तवतीतिप्रसिद्धिः । श्रमणीं परिव्राजिकां । "चतुर्थमाश्रमंप्राप्ताःश्रमणा नामतेस्मृताः" इतिस्मरणात् । शबरींप्रतिलोमस्त्रियं । तदुक्तंनारदीये । "नृपायांवैश्यतोजातःशबरःपरिकीर्तितः । मधूनिवृक्षादानीयविक्रीणीतेस्ववृत्तये" इति । "जातेरस्त्रीविषयात्—" इतिङीष् । अभिगच्छ आभिमुख्येनगच्छेति राघवंकथयामास । राघवइतिपाठे तस्योत्तरश्लोकेनान्वयः । यद्वा राघवेतिपाठेहेराघवशबरीमभिगच्छेतिअस्यरामस्यकथयामासेत्यर्थः । अत्रभागवतभक्तिमहिम्नाहीनजातेरप्यभिगन्तव्यत्वमुक्तम् ॥५४॥ महातेजाः चरमपर्वनिष्ठजनलिप्सयातिसंतुष्टः । सः राघवः । शत्रुसूदनः "गमिष्याम्यक्षयाँल्लोकांस्त्वत्प्रसादादरिंदम" इत्युक्तरीत्या तत्प्राप्तिप्रतिबन्धकनिवर्तकः । "सात्पदाद्योः" इति षत्वाभावः। शबरीं नीचत्वसीमाभूमिभूतां अभ्यगच्छदितिसौशील्यातिशयोक्तिः । दशरथात्मजः रामः । शबर्या सम्यक्पूजितः । षष्टिवर्षसहस्राणिवन्ध्यस्यदशरथस्यप्रसादे अत्यन्तादरकृतभोजनादप्यतिशयितं तत्कालमात्रसमागतशबरीसमर्पितमृष्टान्नमितिभावः । शरभङ्गादिभिरगस्त्यान्तैः कृतं पूजामात्रं शबर्याकृतं तुसम्यक्पूजा । तस्याश्चरमपर्वनिष्ठत्वादितिभावः । उक्तंहि "ममभद्भक्तभक्तेषुप्रीतिरभ्यधिकाभवेत्" इति। यद्वा सम्यक्पूजनं परीक्षितरसैःफलैर्भोजनं । पूजितइत्यत्र "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमानेक्तः । तथाचशबर्येत्यत्र "क्तस्यचवर्तमाने" इति कथंनषष्ठीतिचेत् अत्रकेचिदाहुः । आर्षःषष्ठ्यभावइति । अन्येतु नायंवर्तमानेक्तः । किंतु भूते । तद्योगेच "नलोकाव्यय—" इत्यादिना षष्ठीप्रतिषेधात्तृतीयैवेति । वस्तुतः पूजास्यसंजातेतिपूजितः । तारकादित्वादितच्प्रत्ययः । अनेनतृतीयाभवत्येव ॥ ५५ ॥ एवं सत्यप्रतिज्ञत्वप्रधानमारण्यकाण्डचरितं संगृह्य मित्रकार्यनिर्वाहकत्वपरां किष्किन्धाकाण्डकथां संगृह्णाति—पंपेति। पंपानाम पद्मसरः तस्यास्तीरे तटकानने इत्युद्दीपकसंनिधानोक्तिः । हनुमता प्रशस्तहनुना वीरकिणाङ्कितमुखेनेत्यर्थः । वानरेणसंगतः संयुक्तोरामइतिशेषः । हेतिहर्षे । विरहिजनप्राणापहारिणिपंपोपवने स्वकामिनीघटकसमागमोऽयं चोरैर्वनेऽपहृतसर्वस्वस्य स्वजनमुखावलोकनवदतीवाश्वासनमितिमुनेर्हर्षः । हनुमता कागतिरिहेदानीमितिअतिमात्रपर्याकुलतादशायांविजयकिणाङ्कितवदनवतापुरुषेण संगमोयदृच्छयासंजातः । वानरेणेतिविशेषणेन रावणवत्संन्यासिवेषरहिततयास्ववेषेणसमागमाद्विश्वसनीयताद्योत्यते । हनुमद्वचनात्सुग्रीवेणसमागतः । चैवेतिनिपातसमुदायस्समुच्चयार्थः । अनुकूलपुरुषकारलाभादुचितमित्रलाभोजातइतिभावः ॥ ५६ ॥ अथसख्यहेतुंरहस्योद्भेदं दर्शयति—सुग्रीवायेति । महाबलइत्यनेन वृत्तस्मरणकालिककातर्यगोपनहेतुधैर्यमुच्यते । रामः आदितः जन्मनआरभ्य । तत्प्रसिद्धं । सर्ववृत्तं । सुग्रीवाय

**तिल०** स्वर्गतः स्वर्गगमनयोग्यंस्वकीयंगन्धर्वरूपंप्राप्तवानित्यर्थः ॥ ५३ ॥ **तिल०** **(पा०)** ततोस्यकथयामास । ततः तेनरूपेण । श्रमणीमित्यत्रकर्तरिल्युद तपसाश्राम्यतीत्यर्थात् ॥५४॥ **शिरो०** दशरथात्मजः दशरथनित्यसुतः दशरथस्यजन्मान्तरेपिरामएवसुतइतियावत् ॥ ५५ ॥ **तीर्थी०** महाबलइतिविशेषणसामर्थ्यात्सहायमन्तरेण सर्वनिर्वाहकत्वेपिलोकरीतिमनुसृत्यसुग्रीवसहायमुद्दिश्यसर्वमकथयदित्यवगम्यते ॥ ५७ ॥

**सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः । चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ ५८ ॥**
**ततो वानरराजेन वैरानुकथनं प्रति । रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ ५९ ॥**
**प्रतिज्ञातं च रामेण तदा वालिवधं प्रति । वालिनश्च बलं तत्र कथयामास वानरः ॥ ६० ॥**
**सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६१ ॥**
**राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् । दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६२ ॥**
**उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः । पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ६३ ॥**

शंसत् । अनित्यमागमशासनमित्यडभावः । अकथयदित्यर्थः । सीतायाः तद्वृत्तंच रावणहृतत्वादिकं । यथावृत्तं वृत्तमनतिक्रम्य । पदार्थाऽनतिवृत्तावव्ययीभावः । तदन्वेषणस्यावश्यकर्तव्यतया विशेषेणाशंसत् ॥ ५७ ॥ चापीतिनिपातसमुदायःसमुच्चयार्थः । वानरःसुग्रीवोपि । रामस्य संबन्धि तत्सर्वं पूर्वोक्तंवृत्तान्तं । श्रुत्वा प्रीतः रामस्यप्रयोजनापेक्षित्वान्मामकमपिप्रयोजनंनिर्वर्तयिष्यतीतिसंतुष्टःसन् । अग्निःसाक्षीसाक्षाद्द्रष्टायस्यतत् अग्निसाक्षिकं । "शेषाद्विभाषा" इतिकप्प्रत्ययः । रामेणसख्यं सखित्वं । "सख्युर्यः" इतिभावार्थेयप्रत्ययः । चकार कृतवान् । वानररामशब्दाभ्यां सख्यस्यासदृशत्वंव्यञ्जितं । तेनच रामस्यसौशील्यातिशयोव्यज्यते । गुहस्यहीनमनुष्यजातितया तत्सख्यंसौशील्यहेतुः । तत्रापि स्त्रीत्वेनशबर्यभिगमनं ततस्तरांसौशील्यं । सुग्रीवस्यतिर्यक्त्वेन ततस्तमांसौशील्यमितिभावः ॥ ५८ ॥ ततः सख्यकरणानन्तरं । दुःखितेन परमसुहृद्भूतरामसन्निधानादुद्बुद्धपूर्ववृत्तान्ततया बाष्पंमुञ्चतेत्यर्थः । वानरराजेन सुग्रीवेण । "कर्तृकरणयोस्तृतीया" इति कर्तरितृतीया । वैरस्य वालिविरोधस्यानुकथनं अनुकूलकथनं प्रश्नानुकूलमुत्तरमित्यर्थः । वालिनासहतवकुतोवैरमासीदित्येवंप्रश्नः । तंप्रतिवक्तव्यं सर्वं रहस्यप्रकाशरूपं । प्रणयात् स्नेहाद्विस्रंभाद्वा । "प्रणयास्त्वमी । विस्रंभयाच्ञाप्रेमाणः" इत्यमरः । रामायावेदितं आसमन्तादुक्तं कार्त्स्न्येनोक्तमित्यर्थः ॥५९॥ प्रतिज्ञातंचेतिचशब्दोभिन्नक्रमः । रामेणच तदा आवेदनानन्तरकाले । वालिवधंप्रति प्रतिज्ञातं वालिवधप्रतिज्ञाकृतेत्यर्थः । भावेक्तः । वानरः सुग्रीवश्च । तत्र ऋश्यमूके । वालिनोबलं "समुद्रात्पश्चिमात्पूर्वंदक्षिणादपिचोत्तरं । क्रामत्यनुदितेसूर्येवालीव्यपगतक्लमः" इत्यादिनावक्ष्यमाणंबलं । उत्साहवर्धनायकथयामास ॥ ६० ॥ सुग्रीवो राघवे विषये । वीर्येणहेतुना नित्यं दर्शनमारभ्यसालभेदनपर्यन्तं । मुहुर्मुहुः शङ्कितः आसीच्च । अयंवालितुल्यवीर्योनवेतिशङ्कितवानित्यर्थः । नित्यशब्दस्यवीप्सापरत्वंमहाभाष्ये "नित्यप्रहसितोनित्यप्रजल्पितः" इति । "मतिबुद्धि—" इत्यादिसूत्रेशङ्कितादयोप्यर्थसिद्धाइतिसूचनात्कर्तरिनिष्ठा ॥ ६१ ॥ तुशब्दो विशेषवाची । नकेवलंशङ्कितोऽभूत् । किंतु प्रत्ययार्थमन्यद्दर्शयामासचेत्यर्थः । राघवप्रत्ययार्थं रामविषयज्ञानार्थं रामबलविज्ञानार्थमित्यर्थः । रामविषयविश्वासजननार्थमितिवा । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । दुन्दुभेः दुन्दुभ्याख्यस्यवालिहतस्यासुरस्य । उत्तमं अशिथिलम् । अतएव महापर्वतसन्निभं । उत्तमं उन्नतंवा । कायं कायाकारास्थि । दर्शयामास । रामायेतिशेषः । वालीएतदस्थिपादाग्रेन्यस्यऊर्ध्वंक्षिपतीत्युक्त्वा दर्शयामासेत्यर्थः ॥ ६२ ॥ महाबलः अपरिमेयबलः । महाबाहुः बलानुगुणकार्यकरणसमर्थभुजः रामः । अस्थिप्रेक्ष्य । स्मयित्वा कियन्मात्रमेतदित्यनादृत्यस्मित्वा । इडार्षः । पादाङ्गुष्ठेन । संपूर्णं अन्यूनं । दशयोजनं । पात्रादित्वात्समाहारे क्लीबभावः । अत्यन्तसंयोगे द्वितीया । उच्चिक्षेप उद्यम्यचिक्षेप । "व्यवहिताश्च" इति उपसर्गस्य व्यवहितप्रयोगः । वालिनापादेनक्षिप्तं रामेणतुपादांगुष्ठेनउत्क्षिप्यते । तेन द्वैधनुश्शते

**तीर्थी०** स्वसमानदुःखमहाबलसंबन्धलाभात् प्रीतःसन् ॥ ५८ ॥ **तिल०** वालिनोबलं अरुणोदयानन्तरंसूर्योदयात्प्रागेव रावणंगृहीत्वाचतुस्समुद्रलङ्घनादिरूपम् । **शिरो०** चोप्यर्थे । तत्रच तस्मिन्नपिसमये ॥ ६० ॥ **शिरो०** नित्यंशङ्कितश्चशङ्कितएवासीदित्यनेनबलवद्द्रोहस्यदुर्निवारत्वंसूचितम् ॥ ६१ ॥ **तीर्थी०** महाबाहुः बाह्वोर्महत्त्वंनाम अङ्गुल्येकदेशेनलोकविरोधिसकलदैत्यादिहननशक्तत्वम् । तथायुद्धकाण्डे "पिशाचान्दानवान्यक्षान्पृथिव्यांचैवराक्षसान् । अङ्गुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वर" इति । ज्ञानिनोपिमुह्यन्ति किंवनकपिरित्युत्स्मयित्वा उदारमीषद्धास्यंकृत्वा ॥ ६३ ॥

**बिभेद च पुनस्सालान्सप्तैकेन महेषुणा । गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ॥ ६४ ॥**
**ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः । किष्किन्धां रामसहितो जगाम च गुहां तदा ॥६५॥**
**ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः । तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६६ ॥**
**अनुमान्य तदा तारां सुग्रीवेण समागतः । निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६७ ॥**
**ततः सुग्रीववचनाद्धत्वा वालिनमाहवे । सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ६८ ॥**
**स च सर्वान्समानीय वानरान्वानरर्षभः । दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ६९ ॥**
**ततो गृध्रस्य वचनात्संपातेर्हनुमान्बली । शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७० ॥**

अनेन दशयोजनमितिविशेषः ॥ ६३ ॥ चिरंयुद्धपरिश्रान्तेनवालिनाआर्द्रशरीरंप्रक्षिप्तं त्वयातुस्वस्थेनशुष्कमित्यनाश्वसन्तंप्रतिप्रत्ययान्तरमकरोदित्याह—बिभेदेति । अत्र रामइत्यनुषज्यते । पुनश्चसप्तसालान् सर्जकतरून् । तत्समीपस्थंगिरिं । रसातलं अधोलोकेषु षष्ठलोकंच । प्रत्ययं विश्वासं । जनयन् प्रत्ययजननार्थं । "लक्षणहेत्वोः—" इतिशतृप्रत्ययः । एकेन महेषुणाबिभेद । महेषुणेत्यनेन सुग्रीवकार्यसाधनायरामेणतप्तपरशुधारणंकृतमितिध्वन्यते ॥ ६४ ॥ ततः सालादिभेदनानन्तरं । तेन अतिमानुषचरित्रेण । विश्वस्तः अयमवश्यंवालिहननक्षमइतिविश्वासंप्राप्तः । प्रीतमनाः अचिरादेवराज्यंलप्स्यइतिसंतुष्टचित्तः । महाकपिः आत्मानंकपिराजंमन्यमानः सः सुग्रीवः । रामसहितःसन् । तदा तस्मिन्नेवकाले । किष्किन्धां किष्किन्धाख्यां । गुहां गुहावत्पर्वतमध्यवर्तिनींपुरीं । जगाम । चकारेण पुनर्गमनंसमुच्चीयते ॥ ६५ ॥ ततः किष्किन्धागमनानन्तरं । हरिवरः आत्मनःकपिवरत्वनिश्चयवान् । हेमपिङ्गलः स्वर्णवत्पिङ्गवर्णः । हर्षप्रकर्षेण निवृत्तवैवर्ण्यइत्यर्थः । सुग्रीवः गर्जितानुगुणकण्ठध्वनिः । अगर्जत् घोषंचकार । महता पूर्वगर्जितविलक्षणेन । तेन नादेनहेतुना । हरिवरः वाली । गृहान्निर्जगाम ॥ ६६ ॥ वाली । तदा निर्गमनकाले । तारां अद्यवनादागतेनाङ्गदेनसुग्रीवोरामसहायस्तिष्ठतीतिकथितं अद्यपराजितोनिर्गतःपुनरागतः अतस्त्वद्गमनमनुचितमितिवारयन्तींतारां । अनुमान्य धार्मिकाग्रेसरोरामःकथंमामनपराधिनंहन्यादितिपरिसान्त्व्य । सुग्रीवेण समागतः अयुध्यतेत्यर्थः । राघवः महाकुलप्रसूतत्वेनधर्मसूक्ष्मज्ञः । तत्र युद्धभूमौ । एनं परेणयुद्धकृतमपिवालिनं । तदा परेणयुद्धकाले । चोवधारणार्थः । एकेनशरेण निजघान । द्वितीयशरप्रयोगेतदाभिमुख्येनतद्वधोदुर्लभइतिभावः । युद्धेऽभिमुखस्यबलं वालिनमेवगच्छतीतिवरप्रसिद्धिः । सुग्रीववचनात् "वालिनंजहिकाकुत्स्थमयाबद्धोऽयमञ्जलिः" इतिसुग्रीवप्रार्थनावचनात् । आहवे सुग्रीवस्ययुद्धे । वालिनंहत्वा । ततः वालिवधानन्तरं राघवः । तद्राज्ये वालिराज्ये । सुग्रीवमेव । प्रत्यपादयत् स्थापयामासेत्यर्थः ॥६७॥६८॥ अथ सुग्रीवस्यप्रत्युपकारंदर्शयति—सचेति । वानरर्षभः वानरराजत्वेनाभिषिक्तः । सच सुग्रीवोपि । जनकात्मजांदिदृक्षुः द्रष्टुमिच्छुःसन् । सर्वान् नानादेशनिवासिनः । वानरान् समानीय आहूय । दिशश्चतस्रःप्रति । प्रस्थापयामास शीघ्रंसीतांदृष्ट्वाऽऽगच्छतेति आदिष्टवानित्यर्थः ॥ ६९ ॥ ततः सुन्दरकाण्डकथांसंगृह्णाति—ततइति । ततः प्रस्थानानन्तरं । बली अपरिच्छेद्यबलः । भूमार्थेमत्वर्थीयः । हनुमान् प्रशस्तहनुः । अन्वर्थसंज्ञेयं । तथाचेन्द्रोवक्ष्यति । "मत्करोत्सृष्टवज्रेणहनुस्तस्यतदाक्षतः । नाम्नैषहरिशार्दूलोभविताहनुमानिति" इति । आभ्यांपदाभ्यांपूर्वकथाप्रस्तावेन जांबवता कृतोत्साहत्वं तदुद्भूतनिरवधिकबलवत्त्वंचद्योत्यते । संपातेः संपातिनामकस्यजटायुर्ज्येष्ठस्यपक्षिणः । वचनात् इतःशतयोजनात्परे समुद्रमध्येलङ्कायांसीतावर्तते तर समुद्रं तांपश्यसीतिवचनात् । शतयोजनविस्तीर्णलवणा-

**तीर्थी०** एकसालमात्रभेदनेअस्यवालिनासाम्यशङ्काजायतेतन्माभूदितितन्निवृत्त्यर्थं अचोदितानामपिअन्यसालप्रस्थादीनांभेदनमितिमन्तव्यम् । **शिरो०** जनयन् हेत्वर्थकःशतृप्रत्ययः ॥ ६४ ॥ **शिरो०** निजघान भक्तापकारजनितंवालिनोदोषंनिवर्तयामास । अतएवनिशब्दप्रयोगः ॥ ६७ ॥ **तिल०** सुग्रीववचनादित्यनेनानपकारिवालिवधस्यायुक्तत्वेपिमित्रापकारित्वेनतदुक्त्याहननमितिध्वनितम् । **शिरो०** एवकारेणाङ्गदव्यवच्छेदः ॥ ६८ ॥ **तीर्थी०** चकारात् अशोकवनंचमर्दयामास ॥ ६९ ॥

[ पा० ] १. घ. समाहूय ।

तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् । ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७१ ॥
निवेदयित्वाऽभिज्ञानं प्रवृत्तिं च निवेद्य च । समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७२ ॥
पञ्च सेनाग्रगान्हत्वा सप्त मन्त्रिसुतानपि । शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७३ ॥
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । मर्षयन्राक्षसान्वीरो यन्त्रिणस्तान्यदृच्छया ॥ ७४ ॥
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् । रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥७५॥
सोभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् । न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७६ ॥
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः । समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७७ ॥
दर्शयामास चात्मानं समुद्रः सरितांपतिः । समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ७८ ॥

र्णवं । पुप्लुवे प्लुत्वाततारेत्यर्थः ॥ ७० ॥ हनुमान् रावणपालितांलङ्कांपुरींसमासाद्य । तत्र लङ्कायां । अशोकवनिकां अन्तःपुरोद्यानं गतां । ध्यायन्तीं राममेव नैरन्तर्येणस्मरन्तीं । सीतां ददर्श ॥ ७१ ॥ ततोहनुमान् । अभिज्ञानं अङ्गुलीयकरूपंरामचिह्नं । निवेदयित्वा समर्प्य । अनित्यत्वात्समासेपिल्यबभावः । अतएवन्यासकारः "वाछन्दसीतिवक्तव्ये "क्त्वापिच्छन्दसि" इतिवचनमसमासेपिल्यबर्थं तेनाच्र्यदेवानागतइतिसिद्धं"इति । अनेनव्यभिचारेण समासेल्यब्विधेरनित्यत्वंसिद्धमेव । प्रवृत्तिं सुग्रीवसख्यकरणसेनासमूहीकरणप्रभृतिरामागमनवृत्तान्तं । "वार्ताप्रवृत्तिर्वृत्तान्तः" इत्यमरः । चकारात् "नैवदंशान्नमशकान्नकीटान्नसरीसृपान् । राघवोपनयेद्गात्रात्त्वद्गतेनान्तरात्मना" इति रामस्यसीतैकपरायणत्वादिकंसमुच्चीयते । निवेद्य उक्त्वाच । वैदेहींसमाश्वास्य सद्यस्ते कान्तःसमागमिष्यतीतिसान्त्वयित्वा । तोरणं अशोकवनिकाबहिर्द्वारं । मर्दयामास । "तोरणोस्त्रीबहिर्द्वारं" इत्यमरः ॥७२॥ अग्रेगच्छन्तीत्यग्रगाः सेनायाअग्रगाः सेनाग्रगाः । अन्तादिष्वपाठेपि "अन्यत्रापिदृश्यते" इतिडप्रत्ययः । तान् पञ्च पिङ्गलनेत्रप्रमुखान् । जंबुमालिप्रमुखान्सप्तमन्त्रिसुतानपिहत्वा । शूरं अक्षं अक्षकुमारं रावणद्वितीयपुत्रं । निष्पिष्य चूर्णीकृत्य । ग्रहणं इन्द्रजित्प्रयुक्तब्रह्मास्त्रेणबन्धनं । समुपागमत् प्राप्तः ॥ ७३ ॥ अस्त्रेणेत्यादिश्लोकद्वयमेकान्वयं । वीरः सुरासुराप्रधृष्यरावणपालितलंकाप्रधर्षणादिना प्रख्यातवीर्यः । महाकपिः स्वयमक्षतएवानेकराक्षसहननक्षमइत्यर्थः । पैतामहात् पितामहदत्तात् वरात् । आत्मानं यदृच्छया प्रयत्नंविना । अस्त्रेण ब्रह्मास्त्रेण । उन्मुक्तं परित्यक्तं । ज्ञात्वा यन्त्रिणः आत्मानंरज्जुयन्त्रेणबद्ध्वाइतस्ततःकृषतइत्यर्थः । राक्षसान् मर्षयन् तदपराधान्क्षममाणइत्यर्थः । मैथिलीं मिथिलराजसुतांसीतांऋते विना । कुलप्रभावात्तन्मात्रमदग्ध्वा । लङ्कांपुरींदग्ध्वा । रामाय प्रियं सीतादर्शनप्रियं । आख्यातुं वक्तुंपुनरायात् ॥ ७४ ॥ ७५ ॥ अमेयात्मा अपरिच्छेद्यबुद्धिः । सः हनुमान् । महात्मानं सीतावियोगज्वरेप्यवार्यधैर्यं । रामं । अभिगम्य आभिमुख्येनप्राप्य । अनेन हनुमतःकृतकार्यत्वंद्योतितं । प्रदक्षिणंचकृत्वा । सीता तत्वतो यथावत् । दृष्टेति । न्यवेदयत् अकथयत् । सीतादृष्टेतिवक्तुंशक्यत्वेपि दृष्टासीतेत्युक्तिः रामस्यसीतादर्शनजीवनादिविषयसंशयोमाभूदितीतिवदन्ति । अन्येतु अदृष्टेतिप्रतिभासेतेति दृष्टेत्युक्तभिति । अपरेतु संतोषातिशयप्रकटनाय प्रथमंकृतकार्यनिर्देशइति ॥ ७६ ॥ अथयुद्धकाण्डकथांसंगृह्णाति—ततइत्यादि । ततः हनुमद्वाक्यश्रवणानन्तरं । सुग्रीवसहितः सन् । महोदधेः शतयोजनविस्तीर्णसिन्धोः तीरंगत्वा । आदित्यसंनिभैः शरैः । समुद्रं मार्गदानेउदासीनं क्षोभयामास आपातालमाकुलीचकार ॥ ७७ ॥ सरितां नदीनांपतिः । अनेन रामकोपशान्तये कालीयइवसमुद्रःसपत्नीकःसमागतइतिध्वन्यते । समुद्रः आत्मानं निजरूपं । दर्शयामास । रामायेतिशेषः । समुद्रवचनादेव नलं सेतुमकारयच्च नलेनसेतुं कारयामास । "हृक्रोरन्यतरस्यां" इतिप्र-

**तीर्थी०** ब्रह्मास्त्रस्यअमोघतयाबन्धनमात्रंपञ्चघटिकानन्तरंतन्मोक्षश्चभवतीतिब्रह्मणाहनूमतेवरोदत्तः ॥ ७४ ॥ **शिरो०** चकारात्स्वापराधक्षमापनवचनंसमुच्चारयामासेत्यर्थः ॥ ७८ ॥

[ पा० ] १. झ. गृहीत्वाप्रत्यभिज्ञानंप्रवृत्तिंविनिवेद्यच ।

**तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे । रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ७९ ॥**
**तामुवाच ततो रामः परुषं जनसंसदि । अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८० ॥**
**ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् । बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ ८१ ॥**
**कर्मणा तेन महता त्रैलोक्यं सचराचरम् । सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८२ ॥**
**अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८३ ॥**

योज्यकर्तुःकर्मत्वं ॥ ७८ ॥ रामस्तेन सेतुना लङ्कांपुरीं गत्वा । आहवे युद्धे । रावणंहत्वा सीतांप्राप्य । अनु पश्चात् । परां अतिशयितां । व्रीडां लज्जां । उपागमत् । पौरुषनिर्वहणायरिपुहननपूर्वकंसीतापुनःप्राप्ता परगृहस्थितांकथंअङ्गीकरिष्यामीतिलोकापवादशङ्कयालज्जितोभूदित्यर्थः ॥ ७९ ॥ ततः व्रीडाप्राप्तेर्हेतोः । "यत्तद्यतस्ततोहेतौ"इत्यमरः । तां तादृशपातिव्रत्यांसीतां । जनसंसदि देवादिसभायां । परुषं वचनमुवाच । "अकथितंच" इति द्विकर्मकत्वं । जनसंसदीत्यनेन प्रत्ययोत्पादनार्थं शपथंकुर्वितिसूचितं । सती पतिव्रतासीता । अमृष्यमाणा रामोक्तपरुषवचनमसहमाना । ज्वलनं लक्ष्मणानीतमग्निं विवेश ॥ ८० ॥ "ततोऽग्निवचनात्सीतांज्ञात्वाविगतकल्मषां । बभौरामःसंप्रहृष्टःपूजितःसर्वदैवतैः"इत्येवक्रमः । अन्यस्तुलेखकप्रमादकृतः । ततः अग्निप्रवेशानन्तरं । अग्निवचनात्सीतां विगतकल्मषां करणत्रयेपिदोषगन्धरहितां । ज्ञात्वा रामः संप्रहृष्टःसन् । बभौ सर्वदैवतैःपूजितश्च बभूव । अहोरामस्यधर्मापेक्षितेतिस्तुतोऽभूदित्यर्थः ॥ ८१ ॥ महात्मनो महास्वभावस्यराघवस्य । तेनकर्मणा रावणवधेन । सचराचरं स्थावरजंगमसहितं सदेवर्षिगणं । त्रैलोक्यं त्रिलोकी । स्वार्थेष्यञ् । तुष्टं संतुष्टमासीत् । स्थावरस्यसंतोषः पल्लवोद्गमादिनाऽवगम्यते । "अन्तःसंज्ञाभवन्त्येते" इतिविष्णुपुराणं ॥ ८२ ॥ यद्यपि सीतासमागमात्पूर्वंविभीषणाभिषेकः तथाप्यत्रक्रमोनविवक्षितइतिज्ञेयं । रामः । विभीषयतीति विभीषणः । नन्द्यादित्वाल्ल्युः । शत्रुभयंकरइत्यर्थः । तं लङ्कायांचाभिषिच्य । समुद्रतीरेभिषेकःसमुच्चीयते । यद्वा चोऽवधारणार्थः । अभिषिच्यैवकृतकृत्यः नतुरावणंहत्वैव । लङ्कायांविभीषणमभिषिच्य स्नुहिवनंछित्त्वासहकारंस्थापयित्वेतिवत् । यद्वा चोऽन्वाचये । प्रधानतयाऽपवर्गमनुगृह्य आनुषङ्गिकतयाराज्येभिषिच्येत्यर्थः । "शरीरारोग्यमर्थांश्चभोगांश्चैवानुषङ्गिकान् । ददातिध्यायतांपुंसामपवर्गप्रदोहरिः" इतिवचनात् । अभिषिच्य तदा रामः । अभिषेकात्पूर्वंकथंस्यादितिविवर्णोऽभूत् । अथ रमणीयोभूत् तदारामोरामोऽभूत् । विज्वरः भरतोयथाराज्यंनस्वीकृतवान् तथाऽयमपिचेत् किंकुर्यामितिपूर्वंज्वरोऽभूत् । सइदानींनिवृत्तइत्यर्थः । यद्वा नागपाश-

**शिरो०** सती सतीभिःपतिव्रताभिःईयतेमनसाप्राप्यते स्वसतीत्वनिर्वाहार्थंनित्यंस्मर्यतइत्यर्थः ॥ ८० ॥ **तिल०** ततः अग्निवचनात् "विशुद्धभावांनिष्पापांप्रतिगृह्णीष्वराघव" इत्येवंरूपात् । विगतकल्मषां निष्पापां । स्वयं ज्ञात्वा लोकस्यचतथात्वं प्रत्याय्य सीतामङ्गीचकारेतिशेषः । क्वचित्तु "अग्रहीदमलांरामोवचनाच्चगुरोस्तदा" इतिपठ्यते । तत्रामलामितिपुनरुक्तमापद्यते । तेनकर्मणा सीताप्रत्यायनान्तेनकर्मणा । ऋषिदेवगणसहितंचराचरप्रजासहितंत्रैलोक्यंतुष्टंतुतोष । तत्संतोषेणचप्रहृष्टः संतोषवशादेवसर्वदैवतैः पूजितश्चरामोबभौ । अत्रकेचित् अचराणांवृक्षादीनांरावणकृतपीडापरिज्ञानाभावेनरावणवधजन्यसंतोषाभावात्एवंव्याचक्षते । देवऋषिगणं इतिपाठः "ऋत्यकः" इतिप्रकृतिभावः । तत्रदेवगणाइन्द्रादयः ऋषिगणाविश्वामित्रादयः एतद्रूपंयत्त्रैलोक्यंसचराचरं । अत्रचरप्रजाः गतिभक्षणमात्रप्रधानास्तिर्यक्स्रोतसः पशुपक्ष्यादयः ऐरावतादयः । अचरप्रजाः चरप्रजाभिन्नाः ज्ञानयुक्तप्रजाअवाक्स्रोतसोमनुष्याः । एवंचस्वस्वशेषतिर्यगवाक्स्रोतोयुतदेवऋषिगणरूपंत्रैलोक्यंतुष्टं । रावणस्यमर्त्योपेक्षित्वात्प्राधान्येनदेवर्षिग्रहणमिति । **शिरो०** विगतकल्मषां कल्मषसंबन्धशून्यांसीतां । ज्ञात्वा जनान्बोधयित्वा स्वीचकारेतिशेषः । श्लोकद्वयंसंमिलितान्वयि । विगतकल्मषांबोधयित्वेत्यनेन रामस्यलोकापवादभीरुत्वंबोधितं । तेनरघुनाथेसौशील्यगुणोव्यक्तः । सर्वदैवतैः पूजितइत्यनेन यदिसर्वदैवतैःपूजितस्तर्हिमनुष्यादिभिःपूजितइतिकिंवक्तव्यमितिकाव्यार्थापत्तिरलंकारोव्यक्तः । ज्ञात्वेत्यत्रान्तर्भावितोणिच् ॥ ८१ ॥ ॥ ८२ ॥ **तनि०** प्रधानाभिलषितकैङ्कर्यसाम्राज्यलाभेनयदिलङ्कैश्वर्यमनभ्युपगतंस्यात्तदा "अहंहत्वादशग्रीवंसप्रहस्तंसबान्धवम् । राजानंत्वांकरिष्यामिलङ्कायांराक्षसेश्वर ।" इतिकृताप्रतिज्ञाविफलास्यादितिमहाञ्ज्वरःप्रवृत्तः सइदानींनिवृत्तइतिप्रमुमोद ॥ ८३ ॥

[ **पा०** ] १. झ. ट. कर्मणातेनमहतात्रैलोक्यंसचराचरम् । सदेवर्षिगणंतुष्टं राघवस्यमहात्मनः । बभौरामःसंप्रहृष्टःपूजितः सर्वदैवतैः ।

**देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् । अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥८४॥**
**भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः । भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ८५ ॥**
**पुनराख्यायिकां जल्पन्सुग्रीवसहितस्तदा । पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ८६ ॥**
**नन्दिग्रामे जटां हित्वा भ्रातृभिस्सहितोऽनघः । रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥८७॥**
**प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः । निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ८८ ॥**

प्रभृतिषु " यन्मयानकृतोराजाराक्षसानांविभीषणः । तच्चमिथ्याप्रलप्तंमांप्रधक्ष्यतिनसंशयः" इति योयमन्तस्तापः सइदानींनिवृत्तइत्यर्थः । नकेवलंविज्वरः प्रमुमोदच प्रकर्षेणमोदंप्राप्तश्च । चक्षिङोङित्करणादनित्यमनुदात्तेतआत्मनेपदत्वं । अतोऽत्रपरस्मैपदप्रयोगः । अनेनरामस्यरावणवधसीताप्राप्ती आनुषङ्गिकफले । स्वाश्रितविभीषणाभिषेचनमेव परमपुरुषार्थइत्यवगम्यते । यद्वा । वौ पक्षिणिजटायुषि ज्वरोयस्यसः । यथालोकेकस्यचित्पुत्रस्योत्सवे कथंचिन्मोदमानोपिपिता पूर्वातीतपुत्रस्मरणात्संतप्तएवभवति । एवंसर्वलोकपितास्वामीच विभीषणाभिषेकसमये विनाभिषेकमतीतंजटायुषंस्मरन् किंचिदन्तस्तापोपपन्नएवमुमुदइत्यर्थः । यद्वा । विज्वरइत्यनिष्टनिवृत्तिरुक्ता । प्रमुमोदेतीष्टप्राप्तिः । हेति प्रसिद्धौ विस्मयेवा । हन्त रामस्यसत्यप्रतिज्ञत्वमित्यर्थः ॥ ८३ ॥ रामः । देवताभ्यः रामविजयश्लाघनायागताभ्यः । वरंप्राप्य तेनवरेण । वानरान् रणेमृतान् । समुत्थाप्य सुप्तानिवोत्थाप्य । सुहृद्भिः सुग्रीवविभीषणादिभिर्वृतःसन् । पुष्पकेण कुबेरंविजित्यरावणेनसमानीतेनपुष्पकाख्यविमानेन । अयोध्यांप्रति प्रस्थितः ॥८४॥ सत्यपराक्रमः सत्यविषयपराक्रमवान् । रामइति क्रियाभेदात्द्विरुक्तिः । भरद्वाजाश्रमंगत्वा । भरतस्यान्तिकं समीपंप्रति । हनूमन्तं व्यसर्जयत् व्यसृजत् । हनूशब्दऊकारान्तोप्यस्ति । भरद्वाजेनात्र स्थातव्यमितिप्रार्थिते तद्दिवसेन चतुर्दशवर्षपूर्तेः पूर्णेचतुर्दशेवर्षेआगमिष्यामीतिभरतंप्रत्युक्तेःसत्यत्वरक्षणाय हनूमन्तंप्रेरितवानितिभावः ॥ ८५ ॥ रामस्तत्पुष्पकं समारुह्य सुग्रीवसहितःसन् । तदा गमनकाले । आख्यायिकां पूर्ववृत्तकथां । "आख्यायिकोपलब्धार्थाः" इत्यमरः । पुनःपुनःजल्पन् कथयन् । अर्थात्भरतविषयाख्यायिकां सुग्रीवेणजल्पन्नितिगम्यते । नन्दिग्रामं भरतस्थानं । तदा तस्मिन्नेवकाले शीघ्रमित्यर्थः । ययौ प्राप ॥ ८६ ॥ अनघः सम्यगनुष्ठितपितृवचनः । यद्वा "शिरसायाचतस्तस्यवचनंनकृतंमया" इत्युक्तपापरहितइत्यर्थः । यद्वा । निरस्तसमस्तव्यसनः । "दुःखैनोव्यसनेष्वघं" इतिवैजयन्ती । रामः भ्रातृभिःसहितः । "कदान्वहंसमेष्यामिभरतेनमहात्मना । शत्रुघ्नेनचवीरेणत्वयाचरघुनन्दन" इत्युक्तमनोरथपूर्णइत्यर्थः । नन्दिग्रामे जटा हित्वा शोधयित्वा । उपलक्षणमेतत् । "विशोधितजटःस्नातश्चित्रमाल्यानुलेपनः । महार्हवसनोरामस्तस्थौ तत्रश्रियाज्वलन्" इत्युक्तरूपः । सीतामनुप्राप्य समीपेप्राप्य । "रामंरत्नमयेपीठेसहसीतंन्यवेशयत्" इत्याद्युक्तरीत्यादिव्यसिंहासनेसीतयाभिषेकंप्राप्येत्यर्थः । राज्यंपुनरवाप्तवान् । पितुर्वचनात्पूर्वप्राप्तंविशिष्यपुनरद्यप्राप्तमित्यर्थः ॥ ८७ ॥ रामस्यराज्यप्राप्तिकृतं लोकस्यातिशयंदर्शयति—प्रहृष्टेति । लोकः जनः । प्रहृष्टमुदितः तदानीमासीदितिशेषः । एवमुत्तरत्रापि । प्रहृष्टः संजातरोमाञ्चः । "हृषेर्लोमसु" इति अनिट्त्वविधानात् । मुदितइतितन्मूलसंतुष्टान्तःकरणत्वमुच्यते । तुष्टः समस्तकामलाभजनितप्रीतियुक्तः । यद्वा । "इच्छामोहिमहाबाहुंरघुवीरंमहाबलं । गजेनमहतायान्तंरामंछत्रावृताननं" इत्यभिलषितलाभउच्यते । पुष्टः "विषयेतेमहाराजरामव्यसनकर्शिताः । अपिवृक्षाःपरिम्लानाःसपुष्पाङ्कुरकोरकाः" इत्युक्तरामविर-

**तिल०** महत्यावानरसेनयासहअकस्माद्गमनेभरतादेःशङ्कामाभूदितितद्विसर्जनम् । **शिरो०** सत्यपराक्रमः सत्योध्वंसाप्रतियोगीपराक्रमोयस्य । किंच सत्याअयोध्या साऽस्त्याधारत्वेनयेषांतेसत्याअयोध्यावासिनः तान्नित्यंपिपर्तीतिसत्यपरः अतएवनक्रमते अयोध्यांपरित्यज्यनक्वचिद्गच्छतीत्यक्रमः सचासौसचेतिउभयपदविशेषणकर्मधारयः ॥ ८५ ॥ **तिल०** पुनरिति । पुष्पकादवतीर्णत्वात्पुनस्तत्पुष्पकंसमारुह्य ॥ ८६ ॥ **तीर्था०** सीतामनुप्राप्य सीतासादृश्यंप्राप्य । मुनिवेषत्यागेनसीतामनुरूपः प्राप्येतियावत् ॥ **शिरो०** अनघः दूरीकृतदेवव्यसनः ॥ ८७ ॥ **तीर्था०** एतदन्तंचरितंवृत्तत्वेनोपदिश्यदेवर्षिरतःपरंउत्तरकाण्डविषयंभविष्यत्त्वेनोपदिशति—**प्रहृष्टेति** ॥ ८८ ॥

**न पुत्रमरणं किंचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् । नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥८९॥**
**न चाग्निजं भयं किंचिन्नाप्सु मज्जन्ति जन्तवः । न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ।**
**न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ ९० ॥**
**नगराणि च राष्ट्राणि धनधान्ययुतानि च । नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ ९१ ॥**
**अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः । गवां कोट्ययुतं दत्त्वा ब्रह्मलोकं प्रयास्यति ।**
**असङ्ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ९२ ॥**

---

ह्रजकार्श्यत्यागात्पुष्टः । सुधार्मिकः सुधर्मः रामभक्ति-
पूर्वकंकर्म तच्चरतीतिसुधार्मिकः । "धर्मंचरति" इति
ठक् । "स्त्रियोवृद्धास्तरुण्यश्च" इत्युक्तधर्मफलभागि-
त्यर्थः । निरामयः शारीररोगरहितः । अरोगः मान-
सव्याधिरहितः । दुर्भिक्षभयवर्जितः । भिक्षाणां-
व्यृद्धिःदुर्भिक्षं । व्यृद्धावव्ययीभावः । दुर्भिक्षात्भयं
दुर्भिक्षभयं तेनवर्जितः । अनेन पूर्वंसीताविशिष्ट-
रामवियोगे प्रजानामामयादिकमासीत् । तदिदानीं
निवृत्तमित्युच्यते । प्रहृष्टेत्यादि रामाभिषेकदर्शनसंतो-
षौनवर्णयितुंशक्यइत्याहकविः प्रहृष्टमुदितोलोकस्तु-
ष्टःपुष्टः इति । अथ प्रीतिकारितकैङ्कर्यसिद्धिं दर्शय-
ति—सुधार्मिकइति । शोभनोधर्मः विशिष्टविषयकै-
ङ्कर्यमेव । अथकैङ्कर्यविरोधिनिवृत्तिमाह—निरामयो-
ह्यरोगश्चेति । कैङ्कर्योपकरणसमृद्धिमाह—दुर्भिक्षेति
॥ ८८ ॥ अथ वर्णाश्रमधर्मपरिपालनप्रधानामुत्तर-
काण्डकथां संगृह्णाति—नपुत्रेत्यादि । केचिदपि-
पुरुषाः क्वचित् कुत्रापिदेशे किंचित् कादाचित्कमपि ।
पुत्रमरणं नद्रक्ष्यन्ति । नद्रक्ष्यन्तीत्यनेन ब्राह्मण-
पुत्रइव कदाचित्प्राप्तमपिपरिहरिष्यतीतिभावः । ना-
र्यश्चाविधवाः नित्यंपतिव्रताश्च भविष्यन्ति । यद्वा ।
विविधाधवायासांताः विधवाव्यभिचारिण्यः । अव्य-
भिचारित्वेपि पत्यावप्यनुरागःकासांचित्स्यात्सनेत्या-
ह—पतिव्रताइति । कौसल्यादयस्तु पुत्रवत्तयावृद्ध-
तयाचनविधवाइतिभावः ॥ ८९ ॥ तत्र राज्ये ताप-
त्रयगन्धोपिनभविष्यतीत्याह—नचेत्याद्यर्धत्रयं । अ-
ग्निजंभयं नकिंचित् नभविष्यति । जन्तवःनाप्सुमज्ज-
न्ति । मङ्क्त्वानमरिष्यन्तीत्यर्थः । एवमाधिदैविक-
निवृत्तिरुक्ता अथाध्यात्मिकादिनिवृत्तिमाह—नापि-
ज्वरकृतंतथानचापिक्षुद्भयमिति । नतस्करभयमित्या-
धिभौतिकोपलक्षणं ॥ ९० ॥ तत्ररामराज्येअनिष्टनि-
वृत्तिमुक्त्वेष्टसिद्धिमाह—नगराणीति । नगराणिधन-
युतानि राष्ट्राणिधान्ययुतानिचभविष्यन्ति । अतएव-
सर्वेनागरिकाजानपदाश्च यथाकृतयुगे तथात्रेतायाम-
पि नित्यंप्रमुदिताभविष्यन्ति । "गत्यर्थाकर्मक—"
इत्यादिनाकर्तरिक्तः ॥ ९१ ॥ एवं क्षत्रियासाधारणं
प्रजापालनरूपंधर्ममुक्त्वा द्विजातिधर्मानाह—अश्व-
मेधेति । अर्धत्रयमेकान्वयम् । महायशाः प्रजापाल-
नलब्धमहाकीर्तिः । अनेनद्रव्यशुद्धिरुक्ता । अश्वमेध-
शतैः अनेकाश्वमेधैः । "दशवर्षसहस्राणिवाजिमेधमु-
पाकरोत्" इति वक्ष्यमाणत्वात् । तथा बहुसुवर्णकैः
बहुसुवर्णकाख्यक्रतुविशेषैश्च । "सुबहूनिसुवर्णानिय-
त्रोपकरणत्वतः । विन्दतेसक्रतुःसद्भिःस्मृतोबहुसुवर्ण-
कः" इतिवचनात् । एवमुत्तरक्रत्वनुष्ठानप्रदर्शनेन
पूर्वक्रतवोग्निष्टोमादयोपिह्यनुष्ठिताइतिसिद्धम् । गवां-
कोट्ययुतंदत्त्वा दशसहस्रकोटिपरिमिताःगाःब्राह्मणे-
भ्योदत्त्वा। ब्रह्मलोकं ब्रह्मणःस्वस्य लोकं अप्राकृतस्था-
नं परमपदं प्रयास्यति । अत्रमहायशाइत्यनेन यत्किं-
चिदपवादश्रवणमात्रेणसीतात्यागःसूचितः । दशव-
र्षसहस्राणिअश्वमेधानुष्ठानकालइत्युक्त्या सीतांविनैव
क्रत्वनुष्ठानस्यवक्ष्यमाणत्वाच्च अभिषेकात्परं स्वल्पएव-

---

**तिल०** अविधवाः भर्त्रनुगमनात् धवांशपुत्रसद्भावाद्वा ॥ ८९ ॥ **तीर्थी०** असङ्ख्येयंधनंदत्वाब्रह्मलोकंप्रयास्यतीतियोजना । ब्रह्मैवलोकः तंपरमात्मस्वरूपं सगुणस्यब्रह्मणोविष्णोः स्वस्यलोकंवैकुण्ठाख्यंचप्रयास्यतीत्यर्थः । **तिल०** इष्ट्वादत्वेत्यादिस्वरूपकथनं नतुतेषांरामस्यस्वलोकप्राप्तिंप्रतिहेतुतेतिबोध्यम् । यत्तुकतकक्कृता अश्वमेधाद्यनुष्ठानस्यमानुषोपाधिप्रयुक्तावर्ज्याघशमनद्वाराब्रह्मलोकप्राप्तौहेतुत्वमित्युक्तं तन्न । भगवदवताराणांपुण्यपापसंबन्धस्यसर्वतन्त्रविरुद्धत्वात् । अश्वमेधाद्यनुष्ठानंतु लीलामात्रं लोकोपदेशार्थेत्यन्यत्रविस्तरः । **शिरो०** विद्वद्भ्योब्राह्मणेभ्यः । विधिपूर्वकं यथाविधि । गवांकोट्ययुतंदत्वा । **विषम०** गवांकोट्ययुतं दशसहस्रोत्तरकोटिपरिमितागाः विद्वद्भ्योब्राह्मणेभ्यःविधिपूर्वकंदत्वाब्रह्मलोकंप्रयास्यतीत्युत्तरेणान्वयः ॥ ९२ ॥

[ पा० ] १. झ. ञ. ट. विद्वद्भ्योविधिपूर्वकं ।

**राजवंशाञ्शतगुणान्स्थापयिष्यति राघवः । चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥ ९३ ॥**
**दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ ९४ ॥**
**इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् । यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९५ ॥**
**एतदाख्यानमायुष्यं पठन्रामायणं नरः । सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९६ ॥**

वर्षसहस्रकाले सीतावियोगइत्यवसीयते । अश्वमेधारंभश्च रावणवधरूपपापनिबर्हणार्थतयाप्रसक्तइत्यविलंबितः । ततःपूर्वमेवसीतावियोगः प्रथमाश्वमेधेसीताप्रतिरूपकरणात् । प्रतिकूल्यापियज्ञानुष्ठानस्यप्रामाणिकत्वंवक्ष्यतिदर्भशयनप्रकरणादौ ॥ ९२ ॥ एवं धर्मानुष्ठातृत्वमुक्त्वा धर्मप्रवर्तकत्वमाह—राजेति । अस्मिन्लोके राघवः राजवंशान् क्षत्रियवंशान् शतगुणान् शतगुणितान् । स्थापयिष्यति । शतगुणंविवृद्धान्राजवंशान् प्रत्येकंराज्यप्रदानेनपालयिष्यतीत्यर्थः । चत्वारोवर्णाः चातुर्वर्ण्यं । स्वार्थेष्यञ् । स्वेस्वे स्वस्ववर्णाश्रमोचिते । धर्मे । पूर्वादित्वात्सर्वनामत्वविकल्पः । नियोक्ष्यति प्रवर्तयिष्यति ॥ ९३ ॥ धर्मसंस्थापनातिशयप्रदर्शनायराज्यपरिपालनकालबहुत्वंदर्शयति—दशेति । दशवर्षसहस्राणिदशवर्षशतानिच । एकादशसहस्रसंवत्सरानित्यर्थः । उपासित्वा उपास्य । वाछन्दसीतिवक्तव्ये "क्त्वापिच्छन्दसि" इतिप्रयोगादनित्योल्यबादेशः । सान्त्वपूर्वजनानुवर्तनेनपरिपाल्येत्यर्थः । अत्यन्तसंयोगेद्वितीया । राज्यपालनेव्यासङ्गाभावोदर्शितः । ब्रह्मलोकं वैकुण्ठं । गमिष्यति ॥ ९४ ॥ अथैतत्पठनस्यमोक्षसाधनत्वमाह—इदमिति । पूयतेनेनेति पवित्रं । "कर्तरिचर्षिदेवतयोः" इतिकरणेइत्रप्रत्ययः । परिशुद्धिसाधनमित्यर्थः । नकेवलंशुद्ध्यापादकं किंतुपापघ्नं । "अमनुष्यकर्तृकेच" इतिटक्प्रत्ययः । पुण्यं लाङ्गलंजीवनमितिवत् पुण्यसाधनं । अनेनप्रायश्चित्तव्यावृत्तिरुक्ता । तद्धि पापमेवनिवर्तयति । उक्तार्थत्रयेहेतुमाह—वेदैश्चसंमितमिति । सर्ववेदसदृशमित्यर्थः । इदंरामचरितं संक्षेपरूपं । यःपठेत् वेदवत्सनियमंप्रतिदिनंपठेत् । ससर्वपापैः पूर्वोत्तराद्यैः । प्रमुच्यते । तदुक्तं रामोपनिषदि "ब्रह्महत्यासहस्राणिवीरहत्याशतानिच । स्वर्णस्तेयसुरापानगुरुतल्पायुतानिच । कोटिकोटिसहस्राणिउपपातकजान्यपि । सर्वाण्यपिप्रणश्यन्तिरामचन्द्रस्यकीर्तनात्" इति ॥ ९५ ॥ एवं रामचरितपाठस्यमोक्षंफलमुक्त्वा आनुषङ्गिकफलोक्तिपूर्वकं तस्यसंबन्धिसंबन्धपर्यन्ततामाह—एतदिति । आयुः प्रयोजनमस्य आयुष्यं । "स्वर्गादिभ्योयद्वक्तव्यः" इति यत्प्रत्ययः । आख्यानं आख्यायिकारूपं । एतद्रामायणं बालरामायणं । रामस्यायनं रामायणं । अयगताविितिधातोर्भावेल्युट् । रामचरितमित्यर्थः । रामः अय्यते प्राप्यतेअनेनइतिवा रामायणं । रामः अयनं प्रतिपाद्योयस्येतिवा रामायणं । "पूर्वपदात्संज्ञायामगः" इतिणत्वम् । पठन्नरः वर्णाश्रमादिनियमंविना योपिकोपि । सपुत्रपौत्रः दशपूर्वापरसहितइत्यर्थः । सगणः सभृत्यबन्धुः । प्रेत्य आत्यन्तिकशरीरनाशंप्राप्य । स्वर्गे परमपदे । "तस्याᳶ हिरण्मयःकोशःस्वर्गोलोकोज्योतिषावृतः" इतितस्मिन्स्वर्गशब्दप्रयोगात् । विमुक्तसर्वपापंप्रति स्वर्गमात्रस्याफलत्वाच्च । महीयते पूज्यते । "तंपञ्चशतान्यप्सर-

**तनि०** राज्येनखलुरामःस्वयमुपास्यःस्वयमत्यन्तानुकूल्याचरणेनराज्योपासनंचकारेतिसौशील्यमुक्तं । **तिल०** अवतारत्यागकालमाह—**दशेति** । उपासित्वा नित्यवदनुष्ठायेत्यर्थः । ब्रह्मलोकं मायिकंवैकुण्ठादिलोकं । अनेननिजनित्यकर्मयोगोपेतस्यैवसाक्षात्परंपरयावाब्रह्मलोकप्राप्तिरितिध्वनिः । **शिरो०** दशवर्षसहस्राणिदशसङ्ख्यागुणितानिवर्षसहस्राणि त्रिसहस्रसङ्ख्यासङ्ख्यातवर्षाणि त्रिंशत्सहस्रवर्षाणीत्यर्थः । दशवर्षशतानिच दशसङ्ख्यागुणितानिवर्षशतानिशतत्रयवर्षाणि सहस्रत्रयवर्षाणीत्यर्थः । एवंचत्रयस्त्रिंशत्सहस्रवर्षाणिराज्यंरामोनित्यरमणशीलः उपासित्वाकृत्वेत्यर्थः । ल्यबभावआर्षः । आब्रह्मलोकं अःविष्णुः आःप्रजापतिः ब्रह्मशिवः तैर्लोक्यतेहृदिनित्यंस्मर्यतेतेतत् । किंच ब्रह्माभिन्नंलोकंआनन्दघनं अप्रकटायोध्यापुरंप्रयास्यतिप्राप्स्यति । अप्रकटतयातत्रैवस्थास्यतीत्यर्थः । अत्रप्रशब्दोपादानेनतत्परिकराणामपिताहृक्स्थितिरितिव्यञ्जितम् । बहुवचनान्तसहस्रशब्देनबहुवचनान्तशतशब्देनच सहस्रत्रयशतत्रयलाभः कपिञ्जलाधिकरणन्यायेनावगन्तव्यः । एकसहस्रैकशतार्थकत्वंतुनोपपद्यते तयोर्बहुवचनान्तत्वात् । " विंशत्याद्याःसदैकत्वे " इत्यनुशासनेनैकशेषमन्तराबहुवचनान्तत्वस्यदुर्लभत्वात् । अतएव " त्रयोदशाब्दसाहस्रंब्रह्मचर्यमखण्डितं " इति ॥ ९४ ॥

[ **पा०** ] १- च—ट. प्रयास्यति ।

**पठन्द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् । वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोपि महत्त्वमीयात् ॥ ९७ ॥**

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे श्रीमद्रामायणकथासंक्षेपोनाम प्रथमः सर्गः ॥ १ ॥**

---

सांप्रतिधावन्तिशतंमालाहस्ताःशतंचूर्णहस्ताः" इति-श्रुतेः ॥ ९६ ॥ अथ चातुर्वर्ण्यव्यतिरिक्तस्यनाधिकारइतिसूचयन्वर्णविशेषनियतानिफलानिदर्शयति— पठन्निति । स्यादित्येतदव्ययंयद्यर्थे । इदंबालरामायणं पठन् द्विजोयदि । वागृषभत्वं वाचिश्रैष्ठ्यं वेदवेदाङ्गपारगत्वं । ईयात् प्राप्नुयात् । ईगतावित्यस्माद्धातोःलिङ् । पठन् क्षत्रियोयदि भूमिपतित्वं चक्रवर्तित्वमीयात् । पठन् वणिग्जनोयदि पण्यफलत्वमीयात् । पणंमूल्यंतदर्हतीतिपण्यं क्रयविक्रयार्हंवस्तु तदेवफलं लाभोयस्य स पण्यफलः । तस्यभावः पण्यफलत्वं । "पणोद्यूतादिषूत्सृष्टेभृतौमूल्येधनेपिच " इत्यमरः । पणशब्दादर्हार्थेयत्प्रत्ययः । "अवद्यपण्य—" इत्यादिना पणतेर्यत्प्रत्ययान्तोनिपातोवा । पठन् शूद्रोपि जनोयदि महत्त्वं स्वजातिश्रेष्ठत्वमीयात् । यद्वा । स्यादित्येतदल्पार्थेऽव्ययं । स्यात्क्षत्रियः अल्पनृपतिः । भूमिपतित्वं अखण्डभूमण्डलेश्वरत्वमीयात् । एवमल्पब्राह्मणइत्यादि नेयम् । यद्वा स्याच्छब्दः कथंचिदर्थेनिपातः । "स्यादस्तिस्यान्नास्ति—" इत्यादिसप्तभङ्गीव्याख्याने तथोक्तत्वात् । तथाच कथंचित्पठन् शास्त्रोक्तनियमंविनापिपठन्नित्यर्थः । एकदेशंपठन्नितिवा । अथवा वागृषभत्वादिकमीयात् । स्याच्च सत्तांलभेतचेति सर्वसाधारणंसत्तालाभरूपंफलं । "अस्तिब्रह्मेतिचेद्वेद। सन्तमेनंततोविदुः" इतिश्रुतेः । कश्चित् "स्यात्प्रबन्धेचिरातीते" इतिवचनात् स्याच्छब्दःप्रबन्धपरइत्याह । तदज्ञानविजृंभितं । "स्यात्प्रबन्धेचिरातीतेनिकटागामिकेपुरा" इति वाक्यशेषात् पुराशब्दस्यनानार्थत्वंहितत्रोच्यतइति । यद्यपि "श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतः" इतिशूद्रस्येतिहासपुराणयोःश्रवणमात्रंस्मृतिभिरनुज्ञातं नतु पठनं । तथापि "पठन्" इत्यादिऋषिवचनप्रामाण्यात् "वचनाद्ग्रथकारस्य" इतिन्यायेनास्मिन्संक्षेपपाठमात्रेधिकारोस्तीतिसिद्धं । तथा सहस्रनामाध्यायान्तेचदृश्यते "यइदंशृणुयान्नित्यंयश्चापिपरिकीर्तयेत्" इत्यारभ्य "वेदान्तगोब्राह्मणःस्यात्क्षत्रियोविजयीभवेत् । वैश्योधनसमृद्धःस्याच्छूद्रःसुखमवाप्नुयात्" इति । यद्वा वेदोपबृंहणेशूद्रस्यसर्वथाऽनधिकारात् शूद्रइत्यत्र पठन्नितिनानुषज्यते किंतु शृण्वन्नित्यध्याह्रियते । "शृण्वन्रामायणंभक्त्या" इतिश्रवणस्यापिमहाफलत्ववचनात् । अत्रसंक्षेपे तकारेणोपक्रम्य यादितिसमापनात् गायत्रीरूपत्वमस्यगम्यते । अत्रश्लोके उपजातिवृत्तं । "स्यादिन्द्रवज्रातजास्ततोगौ" । "उपेन्द्रवज्राजतजास्ततोगौ" । "अनन्तरोदीरितलक्ष्मभाजःपादायदीयाउपजातयस्ताः" इतिलक्षणात् ॥९७॥ प्रथमसर्गमुपसंहरति—इतीति । ऋषिणाप्रोक्तमार्षं "तेनप्रोक्तं" इत्यण् । श्रीमद्रामायणे श्रीमद्रामायणाख्ये । आदिकाव्ये प्रथमकाव्ये । बालकाण्डे संक्षेपोनाम प्रथमःसर्गः । समाप्तइतिशेषः । काव्यलक्षणंसर्गलक्षणंचोक्तंदण्डिनाकाव्यादर्शे "नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः । विप्रलंभैर्विवाहैश्चकुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि । अलंकृतमसंक्षिप्तंरसभावनिरन्तरं । सर्गैरनतिविस्तीर्णैःश्राव्यवृत्तैः सुसन्धिभिः । सर्वत्रभिन्नवृत्तान्तैरुपेतं लोकरञ्जनं । काव्यंकल्पान्तरस्थायिजायतेसदलंकृति" इति ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने प्रथमः सर्गः ॥१॥

---

# द्वितीयः सर्गः ॥ २ ॥

वाल्मीकिना सादरपूजितेनारदे ब्रह्मलोकंप्रति प्रस्थिते शिष्येणभारद्वाजेनसह स्नानायतमसातीरंगतेनतेन तत्र क्रौञ्चमिथुनदर्शनम् । १ ॥ व्याधेन क्रौञ्चमिथुने पुंसोवधे वाल्मीकिना तंप्रति मानिषादेत्यादिशापवचनोक्तिः । २ ॥ तथा पश्चाद्विमर्शेन स्वोक्तशापवचनस्यानुष्टुप्छन्दोबद्धश्लोकरूपत्वावधारणम् । ३ ॥ तदनु सविस्मयं शिष्येतन्निवेद्य माध्याह्निकमज्जनादिकरणपूर्वकं पुनस्स्वाश्रमंप्रत्यागमनम् । ४ ॥ तदनु वाल्मीक्याश्रममुपागतेनब्रह्मणा तंप्रति रहस्यप्रकाशरूपश्रीरामादिनिखिलवृत्तान्तप्रतिभानरूपवरदानेन श्रीरामायणप्रणयनप्रेरणापूर्वकं स्वलोकगमनम् । ५ ॥

**नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ॥ पूजयामास धर्मात्मा सहशिष्यो महामुनिः ॥ १ ॥**
**यथावत्पूजितस्तेन देवर्षिर्नारदस्तदा ॥ आपृष्ट्वैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २ ॥**
**स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा ॥ जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥ ३ ॥**

श्रीमच्छठारिगुरुणागुरुणोपदिष्टंरामायणस्यहृदयंसरसंगृहीत्वा ॥ श्रीकौशिकान्वयकुलेन्दुरशेषबन्धुर्गोविन्दराजविबुधोविशदीकरोति ॥ १ ॥ अथपरमकारुणिकोवाल्मीकिः "इष्टंहिविदुषांलोकेसमासव्यासधारणं" इत्युक्तरीत्यासंक्षेपेणोक्तंरामचरित्रंपुनर्विस्तरेणप्रतिपिपादयिषुः तत्रप्रेक्षावत्प्रवृत्त्यर्थं वक्तृवैलक्षण्यंप्रबन्धवैलक्षण्यंप्रतिपाद्यवैलक्षण्यंचेति वैलक्षण्यत्रयंनिदिदर्शयिषुः वक्तृवैलक्षण्यंतावदादौदर्शयति नारदस्येत्यादिनाद्वितीयसर्गेण । वक्तृवैलक्षण्यंतु परमाप्तत्वं । आप्तत्वंच यथार्थदर्शित्वेसति यथार्थवादित्वं । तस्यपरमत्वं तु पितामहवरप्रसादलब्धत्वं तदेतदुपदर्शयितुमुपोद्घातत्वेनाह—नारदस्येत्यादि । तुशब्दोवैलक्षण्यपरः । "तुःस्याद्भेदेऽवधारणे" इत्यमरः । सचकाकाक्षिन्यायेनोभयत्रान्वेति । त्रिलोकज्ञतयेतरविलक्षणस्यनारदस्य शब्दतोर्थतश्चेतरवाक्यविलक्षणोत्कर्षं । तत् पूर्वसंक्षेपरूपेणोक्तं । वाक्यं संपूर्णार्थप्रतिपादकपदसमूहं प्रश्नानुरूपोत्तरं । श्रुत्वा निशम्य । वाक्ये विशारदो विद्वान् । "विद्वत्सुप्रगल्भौविशारदौ" इत्यमरः । वाक्यविशेषज्ञइत्यर्थः । धर्मेआत्माबुद्धिर्यस्यासौ धर्मात्मा । धर्मस्वभावो वा । अत्र प्रकरणाद्गुर्वनुवर्तनधर्मज्ञइत्यर्थः । महामुनिः वेदान्तार्थनिर्णयसंपत्त्यासर्वोत्कृष्टमुनिर्वाल्मीकिः । सहशिष्यः शिष्यसहितःसन् । "वोपसर्जनस्य" इति पक्षे सहशब्दस्यसभावाभावः । पूजयामास अहोवाक्यवैखरीतितद्वाक्यंश्लाघयामासेतिवाक्यविशारदत्वोक्तिभङ्ग्याऽवगम्यते । महामुनिमितिपाठे वाल्मीकिपदाध्याहारः । तमितिप्रयोक्तव्ये अन्यत्वप्रतीतिकरमहामुनिपदप्रयोगास्वारस्यं ॥ १ ॥ देवश्चासौऋषिश्च देवर्षिः नारदः । "नारदाद्याःसुरर्षयः" इत्युक्तेः । तेन वाल्मीकिना । यथावत् यथार्हं । पूजितः प्रदक्षिणनमस्कारादिभिरर्चितःसन् । तदा पूजावसाने । आपृष्ट्वा आपृच्छ्य । "क्त्वापिछन्दसि" इतिल्यबभावः । अभ्यनुज्ञातः गच्छत्वमितिवाल्मीकिनाकृताभ्यनुज्ञानः । विहायसं आकाशं जगाम ॥ २ ॥ तस्मिन् नारदे । मुहूर्तं अल्पकालं । "मुहूर्तमल्पकालेस्यात्" इतिनिघण्टुः । अत्यन्तसंयोगेद्वितीया । देवलोकं ब्रह्मलोकं । गते वाल्मीकेरामभक्तिंब्रह्मणेकथयितुंप्राप्तेसति । समुनिः वाल्मीकिः । तदा नारदगमनोत्तरकाले । जाह्नव्याः गङ्गायाः । अविदूरतः समीपे । सप्तम्यर्थेतसिः । स्थितमितिशेषः । तु गङ्गातोपिविलक्षणं । तमसातीरं जगाम माध्याह्निकाभिषेकायप्राप्तः ॥ ३ ॥

**तिल०** वाक्यविशारदः विशिष्टा व्याकरणसंस्कारादिविशेषवतीविचित्रार्थाचशारदावाणीयस्यसःविशारदः । **शिरो०** धर्मात्मा धर्मेआत्मायत्नोयस्य परमधर्मोपदेष्टेत्यर्थः । तत् वाङ्मनसागोचरेश्वरेश्वरबोधकं । वाक्यं । **विषम०** महामुनिं शतकोटिविस्तररामायणमननशीलं । नारदंपूजयामास । १ ॥ **तिल०** मुहूर्तंस्वाश्रमेस्थित्वापश्चान्माध्याह्निकार्थं जाह्नव्याअविदूरतःसमीपेवर्तमानं तमसातीरंजगाम । यत्तु मुहूर्तमात्रेण देवलोकंगतइत्यन्वयइति तन्न । छान्दसत्वकल्पनेमानाभावात् अव्ययत्वकल्पनस्यागतिकगतिकत्वाच्च । ३ ॥

**[ पा० ]** १ घ. ङ. ध्यैर्म. २ ङ. च. ञ. मुनिम्. ३ ङ. च. छ. ज. झ. ञ. पृच्छ्यै. ४ ग. जगामच. ५ च. द्रूतें.

स तु तीरं समासाद्य तमसाया मुनिस्तदा ॥ शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ४ ॥
अकर्दममिदं तीर्थं भरद्वाज निशामय ॥ रमणीयं प्रसन्नांबु सन्मनुष्यमनो यथा ॥ ५ ॥
न्यस्यतां कलशस्तात दीयतां वल्कलं मम ॥ इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥ ६ ॥
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना ॥ प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥ ७ ॥
स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः ॥ विचचार ह पश्यंस्तत्सर्वतो विपुलं वनम् ॥ ८ ॥
तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम् ॥ ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिस्स्वनम् ॥ ९ ॥
तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ॥ जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥
तं शोणितपरीताङ्गं वेष्टमानं महीतले ॥ भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥ ११ ॥

समुनिः तमसायाविलक्षणंतीरमासाद्य । तदा आसादनकाले । अकर्दमं अपङ्कं । तीर्थं जलावतरणं । " तीर्थमन्त्राद्युपाध्यायशास्त्रेष्वंबुनिपावने । पात्रोपायावतारेषु " इतिवैजयन्ती । दृष्ट्वा पार्श्वेस्थितं शिष्यं आह ॥४॥ भरद्वाजइतिवाल्मीकेःप्रधानशिष्यस्यनाम । हेभरद्वाज । अकर्दमं अपङ्कं । अधःप्रदेशेपङ्करहितमित्यर्थः । अन्यत्र पापरहितं । प्रसन्नांबु प्रसन्नसलिलं । लोकेकिंचिदधःपङ्करहितत्वेपिजलंकलुषमेवभवति । किंचिन्निर्मलोदकत्वेप्यधःसपङ्कमेवदृश्यते नतथेदमितिभावः । अन्यत्रांबुवत्प्रसन्नं । अतएवरमणीयं । सन्मनुष्यमनोयथा सत्पुरुषहृदयसदृशमिदंतीर्थं । निशामय पश्य । " शमोऽदर्शने " इतिमित्वाभावाद्दर्शनार्थोऽयंशब्दः । सन्मनुष्यमनोवत्प्रसन्नांब्वितिवा योजना ॥ ५ ॥ हेतात वत्स । कलशः उदपात्रं । न्यस्यतां भूमौस्थाप्यतां । ममवल्कलं स्नानशाट्यर्थावृक्षत्वक् । दीयतां । किमर्थमित्यत्राह—इदमेवेति । उत्तमं अकर्दमत्वादिगुणयोगेनजाह्नवीतीर्थात्श्रेष्ठं इदमेवतमसातीर्थं अवगाहिष्ये अत्रैवस्नास्यामि । माध्याह्निककालातिक्रमादगत्वाजाह्नवीमितिशेषः । त्वमप्यत्रैव स्नाहीत्यर्थः ॥ ६ ॥ महात्मना महामनसा । वाल्मीकेन वाल्मीकिना । " तस्येदं " इतिसंबन्धमात्रेऽण् । संबन्धश्चात्रपुत्रत्वं । एवं पूर्वोक्तरीत्या । उक्तः । गुरोर्नियतः परतन्त्रः भरद्वाजः । मुनेस्तस्य वाल्मीकेः । वल्कलं । प्रायच्छत प्रादात् । दाणः यच्छादेशः । छन्दसिबहुलग्रहणादात्मनेपदं संबन्धसामान्येषष्ठी तस्या इत्यर्थः ॥ ७ ॥ नियतेन्द्रियः निगृहीतेन्द्रियोपि । सः वाल्मीकिः । शिष्यहस्ताद्वल्कलमादाय । विपुलं विशालं । वनं । सर्वतःपश्यन्सन् । विचचार । हेतिविस्मये । निगृहीतेन्द्रियस्यविपुलवनावलोकनं दैवकृतत्वाद्विस्मयनीयमित्यर्थः ॥ ८ ॥ भगवान् माहात्म्यवान् । " भगःश्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु " इत्यमरः । शापानुग्रहसमर्थइत्यर्थः । वाल्मीकिः । तत्र वने । तस्य तीर्थस्य । अभ्याशे समीपे । चरन्तं वर्तमानं । अनपायिनं अविनाभूतं । क्षणविरहासहिष्णु क्रौञ्चमिथुनमितिप्रसिद्धं । चारुनिस्स्वनमितिरतिकालिकस्वरोक्त्या रतिर्द्योत्यते । क्रौञ्चयोर्मिथुनं द्वन्द्वं । पुँल्लिङ्गत्वमार्षं । ददर्श ॥ ९ ॥ पापनिश्चयः रतिसमयेपिहननकरणात्क्रूरनिश्चयः । वैरनिलयः सर्वजन्तुविषयसहजशात्रवयुक्तः । निषादः । तस्मान्मिथुनात् तन्मिथुनमासाद्य । ल्यब्लोपेपञ्चमी । पुमांसंएकं अवयवं । तस्यपश्यतः तंपश्यन्तंमुनिमनादृत्य "षष्ठीचानादरे " इत्यनादरेषष्ठी । जघान हतवान् ॥ १० ॥ भार्या क्रौञ्ची । निहतं व्याधहतं । अतएव । महीतले भूतले । वेष्टमानं घूर्णमानं । शोणितपरीताङ्गं रुधिरव्याप्तशरीरं । तं क्रौञ्चं । दृष्ट्वा । करुणां श्रोतुः कारुण्यावहां । गिरं । रुराव करुणशब्दमकरोत् । ओदनपाकंपचतीतिवत् । अरोदीत् ॥ ११ ॥

**शिरो०** तीर्थं ऋषिसेविततमसाजलं । "तीर्थंशास्त्राध्वरक्षेत्रमन्त्रोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टांभस्स्त्रीरजस्सुचविश्रुतं" इतिविश्वकोशात्तीर्थशब्दस्यऋषिजुष्टांभःपरत्वं । ४ **शिरो०** प्रायच्छत । संज्ञापूर्वकविधेरनित्यत्वादात्मनेपदम् । ७ ॥

**[ पा० ]** १ छ. सन्नंतु. २ न्मानुष. ३ घ. स्तावद्दी. ४ ख. च. लानि.

**वियुक्ता पतिना तेन द्विजेन सहचारिणा ॥ ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२ ॥**
**तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् ॥ ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३ ॥**
**ततः करुणवेदित्वादधर्मोऽयमिति द्विजः ॥ निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४ ॥**
**मानिषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ॥ यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥१५॥**

पतिना पत्या । नाभावआर्षः । सहचारिणा सहचारशीलेन । ताच्छील्येणिनिः । सहितेनेत्यनेन मनस्सङ्गतिरुच्यतइति नतेनपुनरुक्तिः । ताम्रशीर्षेण रक्तशिरसा । "उत्तमाङ्गंशिरःशीर्षं" इत्यमरः । मत्तेन रतिपरवशेनेत्यर्थः । पत्रिणा प्रशस्तपक्षेण । तेनद्विजेन पक्षिणा । "दन्तविप्राण्डजाद्विजाः" इत्यमरः । भार्या वियुक्ता विरहितासती । करुणांगिरं रुरावेतिपूर्वेणान्वयः । वै इतिपादपूरणे । "तुहिचस्महवैपादपूरणे" इत्यमरः । अत्रविशेषणानि भार्यायाः शोकातिरेकहेतुत्वेननिर्दिष्टानि ॥ १२ ॥ तथा शोणितपरीताङ्गमित्याद्युक्तरीत्या । निषादेन निपातितं हिंसितमित्यर्थः । तंद्विजंदृष्ट्वा स्थितस्य । धर्मात्मनः धर्मस्वभावस्य । ऋषेर्वाल्मीकेः । करुणैव कारुण्यं । स्वार्थेष्यञ् । दया । समपद्यत आसीत् ॥ १३ ॥ ततः क्रौञ्चीविषयकारुण्यसंपत्त्यनन्तरं । द्विजः सहजकारुण्यस्वभावोमुनिः । रुदन्तींक्रौञ्चीं । निशाम्य दृष्ट्वा । करुणवेदित्वात् कारुण्यभाक्त्वात् । विद्लाभइत्यस्मात्णिनिः । अयं रतिकालेहिंसनमधर्मइतिमत्वा इदं वक्ष्यमाणं । वचनमब्रवीत् ॥१४॥ तदेववचनमाह— मानिषादेति । हेनिषाद त्वं शश्वदेव शाश्वत्यः । स्वार्थेअण् । ततोङीप् । ताः अनारताइत्यर्थः । समाः संवत्सरान् । "संवत्सरोवत्सरोब्दोहायनोस्त्रीशरत्समाः" इत्यमरः । अत्यन्तसंयोगेद्वितीया । प्रतिष्ठां कंचित्स्थानं । "प्रतिष्ठास्थितिमाहात्म्य—" इतिवैजयन्ती । मागमः माप्राप्नुहि । "आशंसायांभूतवच्च" इतिलुङतिदेशात्लुङ् लदित्वादङ् । नायंमाङ् अपितुमाशब्दइतिकाशिकाकारः तेनाडागमेपिनविरोधः । दुर्घटवृत्तिकारस्तु अमेतिपदच्छेदः हेअम हेअलक्ष्मीक इतिनिषादविशेषणं ततो "नमाङ्योगे" इत्यडभावइत्याह । एवंपूर्वार्धेनशापउक्तः तत्रहेतुरुत्तरार्धेनोच्यते। यद्यस्मात्कारणात् क्रौञ्चमिथुनात् क्रौञ्चमिथुनमासाद्य ल्यब्लोपेपञ्चमी । एकंकाममोहितं कामेनमोहंप्रापितं रतिक्रीडाविवशमित्यर्थः । एकमवयवमवधीः हिंसितवानसि । तस्मात्तद्वदेवप्रतिष्ठांमागमइतियोजना । चतुर्मुखप्रसादेनवाल्मीकिमुखात्प्रथमोदितोऽयंश्लोकः केवलंशापपरोनभवितुमर्हतीतिभगवन्मङ्गलाशासनपरतयामङ्गलाचरणपरोऽयंप्राथमिकश्लोकइतिपूर्वाचार्यावर्णयन्ति । तथाहि । निषीदन्त्यस्मिन्नितिनिषादो

**तनि०** हेनिषाद, त्वंशाश्वतीःसमाःप्रतिष्ठांमागमः । नगतोसीतिकाकुः । भार्यासहितएकत्रनिवासेस्थित्वासांसारिकसुखंनानुभूतवानित्यर्थः । यद्यस्मात् क्रौञ्चमिथुनादेकंकाममोहितमवधीः । एवंदुस्सहजीवनादपिस्वहननमेवश्रेयइतिभावः । **तिल०** ममतुप्रतिभाति । नारदात्स्वगुणश्रवणानन्तरंमुनेःस्ववर्णनेच्छांज्ञात्वा स्वचरित्रस्यचकरुणारसमयत्वेन तत्प्रधानकाव्येऽतिकरुणचित्तस्यैवाधिकारादृषेः करुणचित्तत्वजिज्ञासयेवपूर्वंभृगुदत्तशापस्यपुनरुक्तत्वकरणेनदार्ढ्यसंपादनायमुनेरीक्षणायचभगवान्राम एवनिषादरूपेणपश्यतोमुनेःपुरतस्तमनादृत्य क्रौञ्चंरक्षोविशेषरूपंजघान । ततस्तदिच्छावशादन्तर्यामितयातथाप्रेरणाच्चमहानधर्मोऽयमनेनकृतइतिरुषा पापमते निषाद यत्त्वंकाममोहितंक्रौञ्चमिथुनात् मिथुनीभूतात्क्रौञ्चयुगाद्विभक्तमेकमवधीः तत्त्वमपिशाश्वतीःसमाः आयुश्शेषभूतानिबहूनिवर्षाणि । प्रतिष्ठां स्वस्त्रीसाहित्येनस्थितिं । इहलोके मागमोमाप्राप्नुहि । किंतु अत्यल्पकालमेवतथावासः एकस्मिथुनीभावपर्यन्तमितियावत् । इतिशप्तवान्मुनिः । एकमवधीरित्युक्तेः यथासत्वयास्त्रीविरहितःकृतः, साचनायकहीनाकृता तथात्वमपि प्रिययास्वभार्ययाहीनोभव । साचत्वयाहीनाभवत्वितिपर्यवसानम् । अगमइत्यडागमस्तुमाङ्योगेप्यार्षत्वात् । तस्यरक्षोरूपत्वंत्वेतदुत्तरंब्रह्मणः सकाशात्सकलरामवृत्तान्तज्ञानवरलाभोत्तरकालकृतेतस्मात्तुमिथुनादेकमितिश्लोके वैरनिलयइतिविशेषणेनसूचितम् । रक्षस्स्वेवतस्य लोकदृष्ट्यावैरनिलयत्वप्रसिद्धेः । निषादस्यापिप्राणिषुनवैरं किंत्वाहाराद्यर्थमेवतद्धननमितिप्रसिद्धेश्च । अतएवारण्यकाण्डेमृगयाव्यसनमुपक्रम्य "विनावैरंचरौद्रः" इति "तृतीयंयदिदंरौद्रंपरप्राणाभिहिंसनं । निर्वैरंक्रियतेमोहात्तच्चतेसमुपस्थितम्" इतिचवक्ष्यति । "त्रीण्येवव्यसनान्यत्रकामजानिभवंतुते" इतिचोपक्रमेउक्तम् । नन्वीदृशोर्थस्त्वयाकेनमानेननिर्णीतइतिचेच्छृणु । ऋष्यक्षरस्वार-

**[ पा० ]** १ घ. तथागतं. ङ. च. छ. ञ. तथाविधं.

निवासः । अधिकरणेघञ् । मालक्ष्मीःतस्यानिषादो-मानिषादः श्रीनिवासः । तत्रसंबुद्धिः हेश्रीनिवास । त्वं शाश्वतीःसमाःसर्वकालंप्रतिष्ठांमाहात्म्यंअगमः गच्छ । लकारव्यत्ययः । यद्यस्मात्क्रौञ्चमिथुनात् राक्षसमिथुनाद्रावणमन्दोदरीरूपात् कामेनमन्मथेनमोहितंसीतापहर्तारमेकंरावणमवधीः रावणंहत्वाकृतत्रैलोक्यत्राणस्त्वंयावत्कालंविजयीभवेत्यर्थः । वाक्यार्थहेतुकंकाव्यलिङ्गमलंकारः । एवमनेनश्लोकेनेष्टदेवतास्मरणरूपंमङ्गलमाचरितं । "काव्यार्थसूचनंकैश्चिन्नान्द्यामेवनिरूप्यते" इतिवचनादस्मिन्नेवश्लोकेवक्ष्यमाणकाव्यार्थःसंक्षेपेणदर्शितः । तथाहि । मानिषादेत्यनेन सीतापरिणयपर्यवसायिनीबालकाण्डकथोद्बोधिता । प्रतिष्ठांत्वमगमइत्यनेन पितृवचनपरिपालनप्रतिष्ठाभिधायिन्ययोध्याकाण्डकथाऽऽवेदिता । शाश्वतीःसमाइत्यनेन ऋषिगणविषयप्रतिज्ञानिर्वहणेनरामस्यप्रतिष्ठानुवृत्तिमभिदधत्यारण्यकाण्डकथासूचिता । क्रुञ्चगतिकौटिल्याल्पीभावयोरित्यस्माद्धातोः "ऋत्विक्—"इत्यादिनाकिन्निपातनात् नलोपःसंयोगान्तलोपश्चनभवति । क्रुञ्चेवक्रौञ्चः स्वार्थेअण् । तथाचक्रौञ्चयोः कुटिलयोस्तिरश्चोस्तारावालिनोर्मिथुनादेकंकाममोहितंसुग्रीवभार्यापहर्तारंवालिनमवधीरितिकिष्किन्धाकाण्डकथाऽभिहिता । क्रौञ्चौ अल्पीभूतौ कृशावितियावत् । तयोरन्योन्यविरहक्लेशकृशीयसोःसीतारामयोरेकमवयवंसीतारूपंअवधीः भृशंपीडितवानसीति । सीताविरहदुःखातिशयवर्णनपरासुन्दरकाण्डकथाबोधिता । क्रौञ्चौकुटिलौराक्षसौतन्मिथुनादेकंकाममोहितंरावणमवधीरितियुद्धकाण्डकथासूचिता । दण्डकारण्यवासिऋषिपत्नीदर्शनाभिलाषमोहितसीतापीडाभिधानेनोत्तरकाण्डार्थोपिसंक्षिप्तः । ननुमृगपक्ष्यादिवधस्यव्याधकुलधर्मत्वात् कथमनपराधिनमेनंमुनिःशप्तुमर्हति । वक्ष्यति रामएववालिवधप्रस्तावे । "प्रमत्तानप्रमत्तान्वानरामांसार्थिनोभृशं । वध्यन्तिविमुखांश्चापिनचदोषोत्रविद्यते" इति । सत्यं । तथापि रतिपरवशतादशायां तद्वधोदोषएवेतिमुनेराशयः । सूचयतिहिरतिपरवशतांकाममोहितमितिपदेन । अतएवभारतेपाण्डुंप्रतिमुनिः । "अस्वर्ग्यमयशस्यंत्वमनुतिष्ठसिभारत ॥ कोहिविद्वान्मृगंहन्याच्चरन्तंमैथुनंवने" इति । नन्विदं मलयंगच्छतोमन्दरपथोपवर्णनं । यद्यमासनोवैलक्षण्यंपरमाप्तत्वंवक्तुमारभ्य स्वचरित्रवर्णनंकरोति । ब्रह्मागमनवरप्रदानादेरेवतदर्थंवक्तव्यत्वात् । उच्यते । श्रूयतामवधानेन । "अर्थतःशब्दतोवाऽपि मनाक्काव्यार्थसूचनं" इतिदर्शितरीत्याकाव्यार्थसूचनमियताग्रन्थसंदर्भेणक्रियते । तथाहि । अकर्दममित्यादिना पावनंसमुद्रसेतुस्थलमुच्यते । तस्याभ्याशइत्यादिना तत्तीरेमन्दोदर्यासहचरन्तंभोगान्भुञ्जानं अनपायिनं चतुर्मुखवरप्रदानेनलब्धचिरायुष्कं चारुनिस्वनंरम्यवीणादिविनोदं क्रौञ्चयोराक्षसयोर्मिथुनंददर्श धर्मबलेनालोकितवान् तस्मादित्यादिना पापनिश्चयो निश्चितरावणपापः । वैरनिलयः हिरण्यकशिपुरावणशिशुपालरूपजन्मत्रयानुसारित्वात्सहजशात्रवः । निषीदन्त्यत्रसर्वाणिजगन्तीतिनिषादोविष्णुः । पुमांसंरावणंजघानेत्युच्यते । भार्यात्वित्यादिना मन्दोदरीप्रलापः । द्विजेन पुलस्त्यवंशत्वात् ब्राह्मणेन । ताम्रशीर्षेण रत्नमुकुटधारित्वात् । पत्रिणा वाहनपरिच्छदादिमता ।

स्यात् । तच्चाग्रे स्फुटम् । तत्रसंदेहश्चेत्स्वान्तर्यामिणंपृच्छ । तदुक्तंपाद्मेशिवाशिवसंवादेरामवैभववर्णनेचतुर्विंशेध्याये । "ततोजानपदःकश्चित्पामरःकाष्ठविक्रयी । स्ववधूगर्हणद्वारारावणस्यगृहोषिताम् । गर्हयामासवैदेहींदुर्वृत्तोलोकनिन्दकः । तच्छ्रुत्वादेविचारेभ्योभीतोलोकापवादतः । आहूयलक्ष्मणंप्राहरामोराजीवलोचनः । शृणुमेवचनंगुह्यंसीतासंत्यागकारणम् । वाल्मीकिनाथभृगुणाशप्तोस्मिकिललक्ष्मण । तस्मादेनांत्यजाम्यद्यजनोनैवात्रकारणम्" इति । **कत०** प्रत्यक्षसंहन्तृनिषादशापरूपोऽर्थस्तु स्पष्टएव । किंचनितरां सदेवर्षिगणंत्रैलोक्यंसादयतिपीडयतीतिनिषादः तस्यसंबुद्धिर्हेनिषादरावण । यद्यस्मात् क्रौञ्चमिथुनात् । अल्पीभावार्थकक्रुञ्चेःपचाद्यच् । क्रुञ्च । ततस्स्वार्थिकोऽण् । क्रौञ्चं राज्यक्षयवनवासादिदुःखेनात्यल्पीभूतं परमकार्श्यंगतंयन्मिथुनंसीतारामरूपं तस्मादेकं सीतारूपं यस्मादबधीः वधाभ्यधिकपीडांप्रापितवानसि तस्मात्त्वं प्रतिष्ठांयालङ्कापुरेपुत्रपौत्रभृत्यगणवैशिष्ट्येन ब्रह्मणा प्रतिष्ठादत्तातामतःपरं मागमइतिकाव्यार्थसूचनम् ॥ **शिरो०** त्वमेतिनिषादविशेषणं त्वेन आत्मभिन्नेनरागादिना मःबन्धनंयस्य अनात्मभूतरागादिवशइत्यर्थः । "माचमातरिमोमानेबन्धनेचप्रकीर्तितः" इतिमशब्दस्य बन्धनवाचकत्वं । त्वशब्दस्यान्यपरत्वंतु सर्वादिगणेप्रसिद्धम् । अत्रपक्षे अड्विरहः भविष्यत्कालबोधकलुङ्चसिद्धइतिबोध्यम् ॥ मानिषाद मानिनांगर्वविशिष्टानां षः श्रेष्ठः परशुरामः तं आसमन्ताद्भावेन द्यतिखण्डयति वैष्णवधनुस्सज्जीकरणादिनातद्गर्वं निवर्तयतीतिमानिषादः तत्संबुद्धिः । इति बाल-

तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ॥ शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६ ॥
चिन्तयन्स महाप्राज्ञश्चकार मतिमान्मतिम् ॥ शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ १७ ॥
पादबद्धोक्षरसमस्तन्त्रीलयसमन्वितः ॥ शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ १८ ॥
शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् ॥ प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः ॥ १९ ॥

सहितेन कुंभकर्णेन्द्रजिदादिसहायसंपन्नेन। कारुण्यं जुगुप्सा "जुगुप्साकरुणाघृणा" इतिनिघण्टुः। अधर्मोयमितिरावणकृतोयमधर्मइति एतत्सर्वरावणवधवृत्तान्तमवलोक्यपौलस्त्यवधाभिधानं तद्विषयप्रबन्धंनिरमिमीतेतिमानिषादेत्यस्यरामायणार्थसंग्रहपरत्वंचोक्तं । अथ वा। अकर्दममित्यादिना गोदावरीतीर्थमुच्यते। तत्तीरे पञ्चवट्यांरामस्यसीतयासहवर्तनं तयोरेकस्याःसीतायारावणेनदुरात्मनाहिंसनंपीडनमित्येतत्सर्वंसाक्षात्कृत्य विधिचोदितोमुनिःसीतायाश्चरितमितितद्विषयंप्रबन्धमकरोदित्यर्थः । तस्मिन्पक्षेअनपायिनमाद्यन्तशून्यं। चारुनिस्स्वनंसर्ववेदान्तप्रवर्तकं। क्रौञ्चयोःकृशयोःतपस्विनोःसीतारामयोःपापनिश्चयोवैरनिलयः निषादोलोकहिंसको रावणःसीतामपजहार साचरुरोद। द्विजेनक्षत्त्रियेणताम्रशीर्षेणरत्नमुकुटारुणेन पत्रिणाशरेणोपलक्षितेन सहितेनलोकहितपरेण । अन्यत्सर्वंसमानं। मानिषादेत्याद्यर्थःशापार्थेनदर्शितः ॥ १५ ॥ वीक्षतः तन्मिथुनंवीक्षमाणस्य। "संज्ञापूर्वकोविधिरनित्यः" इतिवा चक्षिङोनुदात्तत्वङित्करणज्ञापितानित्यत्वेनवा परस्मैपदं । एवं मानिषादेत्येवं । ब्रुवतः क्रौञ्चींदृष्ट्वामानिषादेत्येवंवदतइत्यर्थः। तस्य वाल्मीकेः हृदि।अस्यशकुनेः एतत्पक्षिनिमित्तंशोकार्तेनमया। व्याहृतमिदंवाक्यं किं किंरूपमितिचिन्ताबभूव ॥ १६ ॥ प्रकर्षेणजानातीतिप्रज्ञःऊहापोहसमर्थः प्रज्ञएवप्राज्ञः। "प्रज्ञादिभ्यश्च" इतिस्वार्थेऽण्। यद्वा। प्रज्ञाधीः "धीः प्रज्ञाशेमुषीमतिः इत्यमरः"। साऽस्यास्तीतिप्राज्ञः। "प्रज्ञाश्रद्धार्चाभ्योणः" इतिमत्वर्थीयोणः। महांश्चासौ प्राज्ञश्चेतिमहाप्राज्ञः। मतिमान् शास्त्रज्ञानवान्। सः वाल्मीकिः । मतिं उत्तरश्लोकेवक्ष्यमाणंनिश्चयं । चकार। समुनिपुङ्गवः । शिष्यमिदंवाक्यमब्रवीच्च। "ब्रूशासि" इत्यादिनाद्विकर्मकत्वं। अयोगव्यवच्छेदकएवकारः ॥ १७ ॥ शोकार्तस्य क्रौञ्चीशोकेनार्तस्य। मेप्रवृत्तः मत्तः प्रवृत्तः अयंसंदर्भइत्यर्थः। पादबद्धः। चतुर्भिःपादैर्युक्तः । अक्षरसमः प्रतिपादंसमाक्षरः। तन्त्री वीणागुणः। लयः तौर्यत्रिकस्यैककालविरामः। "नाशेसंश्लेषणेतौर्यत्रिकसाम्येभवेल्लयः" इतिरत्नमाला । ताभ्यांसमन्वितः तन्त्र्यामारोप्यवाद्यैःसहगातुंशक्यइत्यर्थः। श्लोकोभवतु श्लोकलक्षणलक्षितत्वात् श्लोकशब्दवाच्योभवतु । नान्यथा श्लोकादन्यः केवलपदसंदर्भोनभवति । इतिमतिंचकारेतिपूर्वेणान्वयः ॥ १८ ॥ शिष्यः भरद्वाजः। तस्यमुनेर्ब्रुवतः तस्मिन्मुनौब्रुवतिसति। "यस्यचभावेनभावलक्षणं" इत्यस्मिन्नर्थेषष्ठी। अनुत्तमं सर्वरामायणार्थसंग्रहरूपत्वेन

काण्डकथासूचिता ॥ १५ ॥ **तिल०** मयामुनिनाशान्तेनतपस्विनाशकुनिशोकपीडितेनइदं ईदृशं क्रूरं तपोनाशकरं किंव्याहृतमितिवीक्षतोऽन्तर्यामिप्रेरणयानिषादेसर्वतोमहत्त्वसंभावनया दृश्यमानक्रौञ्चेतद्वैपरीत्यसंभावनयाऽतिनिन्द्यमयशस्करंमहापातकेभ्योप्यधिकंपापंवृत्तमितिचिन्ताबभूव। यद्यप्येतत्सर्ववाल्मीकिकृतमेव तथापि कुशलवगेयतयाऽस्यकाव्यस्यकरणात् तदुक्तितयैवमुक्तिः। अन्यथा स्वचिन्तायाःस्वापरोक्षत्वात् बभूवेतिलिडसंगतिःस्यात्। यद्वा सर्गचतुष्टयमाद्यमुपोद्घातरूपंकस्यचिच्छिष्यस्य। वाल्मीकीयोपोद्घातत्वाच्च वाल्मीकीयोक्तिः। पारोक्ष्यमारोप्यस्वयमपि तथोक्तिरुपोद्घातत्वद्योतनायेत्यन्ये । **विष०** इदंवाक्यं किं किंरूपं गद्यंपद्यंवेतिचिन्ताबभूवेतिसंबन्धः ॥ १६ ॥ **तिल०** अतःशोकार्तस्यशापरूपतयाऽनौचित्येनप्रवृत्तोपिमेममश्लोकोयशोरूपोभवतु अन्यथा अयशोरूपोमाभूदित्यर्थः। "श्लोकोयशसिपद्येच" इतिनिघण्टुः ॥ **शिरो०** तन्त्रीलयसमन्वितः तन्त्रिणांशास्त्राभिज्ञानां इलंप्रतिष्ठांतत्कृतमहत्त्वंतस्य यः प्राप्तिः तेनसमन्वितःयुक्तः। पादबद्धोक्षरसमः पादेबद्धोयउक्षरः उक्षावृषभश्चासौ रश्चेति वृषभश्रेष्ठइत्यर्थः। तत्समःतत्सदृशःशोकार्तस्यमेप्रवृत्तःश्लोकः अन्यथा अन्यपरकः नभवतु । यथाबद्धोवृषभःस्वस्थानादन्यत्रगन्तुंनशक्नोति तथाऽयंश्लोकः तात्पर्यविषयीभूतरघुनाथादन्यत्रनगच्छत्वितिफलितोऽर्थः । "रश्चभूपेप्रकीर्तितः" इतिकोशात् रशब्दः श्रेष्ठपरः ॥ १८ ॥

[ पा० ] १ ङ. झ. ञ. स्येत्थं. २ घ. यन्मनसा प्रा, ३ ग. त्तोयं. ४ ङ. च. झ, वन्मुनिः ।

**सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन्यथाविधि ॥ [1]तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥ २० ॥**
**भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान्मुनिः ॥ कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१ ॥**
**स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ॥ उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ॥ २२ ॥**
**आजगाम ततो ब्रह्मा लोककर्ता स्वयं प्रभुः ॥ चतुर्मुखो महातेजा [3]द्रष्टुं तं मुनिपुङ्गवम् ॥ २३ ॥**
**वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ॥ प्राञ्जलिः [4]प्रयतो भूत्वा तस्थौ परमविस्मितः ॥२४॥**

स्वापेक्षयोत्तमान्तररहितं । वाक्यं मानिषादेत्यादिकं । संहृष्टःसन् । प्रतिजग्राह वाग्विधेयंचकारेत्यर्थः । गुरुः । वाल्मीकिः तस्य तुष्टोऽभवत् स्वश्लोकधारणात्तस्मिन्प्रीतोभवदित्यर्थः ॥ १९ ॥ ततः शिष्यविषयसंतोषानन्तरं । सः मुनिः । तस्मिन्तीर्थे अकर्दममिदंतीर्थमित्यादिनावर्णितेतीर्थे । यथाविधि विधिमनतिक्रम्य । अभिषेकं माध्याह्निकस्नानं । कृत्वा । तमेवार्थं अवशात्श्लोकोत्पत्तिरूपमेवार्थं । चिन्तयन्सन् । उपावर्तत आश्रममागच्छत् । अभिषेकविधिस्तुव्यासस्मृतौविशेषतोदर्शितः । "ततोमध्याह्नसमयेस्नानार्थंमृदमाहरेत् । पुष्पाक्षतान्कुशतिलान्गोमयंगन्धमेवच । नदीषुदेवखातेषुतटाकेषुसरस्सुच । स्नानंसमाचरेन्नित्यंनदीप्रस्रवणेषुच । मृदैकयाशिरःक्षाल्यद्वाभ्यांनाभेस्तथोपरि । अधश्चतसृभिःक्षाल्यंपादौषड्भिस्तथैवच । मृत्तिकाचसमादिष्टात्वाद्रामलकमात्रतः । गोमयस्यप्रमाणंतत्तेनाङ्गंलेपयेत्ततः । लेपयेदथतीरस्थस्तल्लिङ्गैर्नैवमन्त्रतः । प्रक्षाल्याचम्यविधिवत्ततःस्नायात्समाहितः। अभिमन्त्र्यजलंमन्त्रैरब्लिङ्गैर्वारुणैःशुभैः ॥ आपोनारायणोद्भूतास्ताएवास्यायनंपुनः । तस्मान्नारायणंदेवंस्नानकालेस्मरेद्बुधः । प्रेक्ष्यसोङ्कारमादित्यंत्रिर्निमज्जेज्जलाशये । अथोपतिष्ठेदादित्यमूर्ध्वंपुष्पंजलान्वितं । प्रक्षिप्यालोकयेद्देवमृग्यजुःसामरूपिणं" इत्यादि॥२०॥ ततः मुनेरुपावर्तनानन्तरं । विनीतः विनयसंपन्नः । श्रुतवान् शास्त्रवान् अवधृतवान्वा । "श्रुतंशास्त्रावधृतयोः" इत्यमरः । धृतगुरुश्लोकइत्यर्थः । मुनिः मननवान् । भरद्वाजः भरद्वाजाख्यःशिष्यः । पूर्णं जलपूर्णं । कलशमादाय । पृष्ठतः पश्चात् । अनुजगाम । अनुगमनोक्तौपृष्ठतइत्युक्तिरव्यवधानसूचनार्था॥२१॥ सः वाल्मीकिः । शिष्येणसह । आश्रमपदं आश्रमस्थानं । प्रविश्य । धर्मवित् कृतदेवपूजादिधर्मः । उपविष्टः कृतसुखासनःसन् । ध्यानं अवशोत्पन्नश्लोकविषयचिन्तां । आस्थितः प्राप्तएवसन् । अन्याःकथाः पुराणपारायणानि । चकार ॥ २२ ॥ लोककर्ता लोकस्रष्टा । प्रभुः स्वामी । चतुर्मुखः वेदचतुष्टयोच्चारणोपयोगिमुखचतुष्कः । महातेजाः महाप्रभावः । ब्रह्मा । मुनिपुङ्गवं नारदोक्तवैभववाल्मीकिं । द्रष्टुंकुतूहलात्स्वयमाजगाम स्वस्थानस्थितएवरामायणप्रवर्तनसमर्थोप्यादरातिशयेनस्वयमेवाजगामेत्यर्थः ॥ २३ ॥ अथ ब्रह्मागमनानन्तरं । तं ब्रह्माणं दृष्ट्वा सहसाउत्थाय "ऊर्ध्वंप्राणाह्युत्क्रमन्तेयूनःस्थविरआगते। प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यते " इतिवचनात् स्वप्राणाउत्क्रामेयुरितिसहसोत्थायेत्यर्थः । परमविस्मितः सन् । वाग्यतः यतवाक् । आहिताग्न्यादित्वात्परनिपातः । प्रयतः नियतमनस्कः । प्रकृष्टःअञ्जलिर्यस्यासौप्राञ्जलिः सचभूत्वा । तस्थौ स्थितवान् ॥ २४ ॥

**तनि०** तमेवार्थंशापापदेशेनप्रवृत्तस्ववाक्यस्यव्यञ्जितंलोकोत्तरचमत्कारंलक्ष्मीपतिप्रतिष्ठारूपं ॥ २० ॥ **तिल०** मुखतोऽन्याः कथाश्चकार मनसातुशापार्थकश्लोकविषयंध्यानमास्थितः ॥ २२ ॥ **तिल०** अथतच्चिन्तांनिवर्तयितुंब्रह्मागमनमाह—आजगामेति । स्वयंप्रभुः अनन्यमुखनिरीक्षकतया सर्वलोकसृष्ट्युपयोगिज्ञानैश्वर्यादिशक्तिमान् अतएव भूरादिलोकनिर्माता तं चिन्ताक्रान्तं ॥ २३ ॥ **तनि०** परमविस्मितः । प्रथममतर्कितंनारदागमनं । ततोलोकोत्तरविषयप्रश्नः । तदनुरूपमुत्तरं । अतर्कितमेवशकुनिमिथुनदर्शनं । तत्रच करुणरसोदयः । एतत्सर्वं दैवतन्त्रमितिविस्मितः । अनन्तरं अतर्कितचतुर्मुखागमनेनपरमविस्मितः ॥ **तिल०** प्रयतः अतिनम्रः ॥ २४ ॥

**[ पा० ]** १ ख. ज. तमेवं. २ ग. वान्मुनेः. ङ. झ. ञ. वान्गुरोः. ३ च. प्रष्टुं तं. ख. दृष्टवान्मुनि. ४ ग. प्रणतो.

पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः ॥ प्रणम्य विधिवच्चैनं पृष्ट्वाऽनामयमव्ययम् ॥ २५ ॥
अथोपविश्य भगवानासने परमार्चिते ॥ वाल्मीकये महर्षये संदिदेशासनं ततः ॥
ब्रह्मणा समनुज्ञातः सोप्युपाविशदासने ॥ २६ ॥
उपविष्टे तदा तस्मिन्साक्षाल्लोकपितामहे ॥ तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥ २७ ॥
पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ॥ यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥ २८ ॥
शोचन्नेव मुहुः क्रौञ्चीमुप श्लोकमिमं पुनः ॥ जगावन्तर्गतमना भूत्वा शोकपरायणः ॥ २९ ॥
तमुवाच ततो ब्रह्मा प्रहसन्मुनिपुङ्गवम् ॥ श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥ ३० ॥

मुनिः तंदेवं ब्रह्माणं । पाद्यार्घ्यासनवन्दनैः पाद्यं पादोदकप्रदानं अर्घ्यं अर्घजलसमर्पणं वन्दनं स्तुतिः एतैरुपचारैःपूजयामास । एनं ब्रह्माणं । अन्वादेशेइदमएनादेशः । विधिवत् शास्त्रोक्तरीत्या । प्रणम्य । अव्ययं अविच्छिन्नं । अनामयं कुशलं । पृष्ट्वा च पूजयामासेतियोजना । प्रणामशास्त्रंतु "मनोबुद्ध्यभिमानेनसहन्यस्यधरातले । कूर्मवच्चतुरःपादाञ्छिरस्तत्रैवपञ्चमं । प्रदक्षिणसमेतेनह्येवंरूपेणसर्वदा । अष्टाङ्गेननमस्कृत्यह्युपविश्याग्रतःप्रभोः" इति । यद्वा तमेनंदेवंविधिवत्प्रणम्यानामयंपृष्ट्वाचपाद्यार्घ्यासनवन्दनैः पूजयामास । वदिअभिवादनस्तुत्योरितिधातुः ॥२५॥ अथेतिसार्धश्लोकएकः । अथ पूजानन्तरं । भगवान् ब्रह्मा । परमार्चिते परमंयथाभवतितथावाल्मीकिनार्चिते । ब्रह्मोपवेशार्थपूजिते । आसने विष्टरे । उपविश्य स्थित्वा । महर्षये वाल्मीकये । आसनं उपवेशनं । संदिदेश आज्ञापयामास । सोपि ब्रह्मणासमनुज्ञातःसन् । आसने उचितनीचासने । उपाविशत् । आसनानुज्ञानं लोकहितार्थमनेनकाव्यंकारयितुं । वाल्मीकयेमहर्षयइत्यत्रायुजिपादेपथ्यावक्त्रस्यगणनियमाभावात्तथोक्तं । नन्वर्धत्रयकरणमीदृशैः करवाण्यहमित्यनेन विरुध्यते । मैवं । लेखकदोषेणार्धान्तरपतनसंभवात् ॥ २६ ॥ लोकपितामहे तस्मिन् साक्षात् प्रत्यक्षतया । उपविष्टेपि तदा तद्गतेन क्रौञ्चहननगतेन मनसा ध्यानमास्थितः तद्विषयचिन्तामकरोत् ॥ २७ ॥ वैरग्रहणबुद्धिना वैरेणक्रौञ्चग्रहणबुद्धिना । पापात्मना पापस्वरूपेणव्याधेन । कष्टं कुत्सितं कर्म । कृतं । कथमित्यत्राह—यइति । योव्याधः । तादृशं रतिलालसमित्यग्राह्यत्वोक्तिः । चारुरवं रम्यरतिकूजितं । क्रौञ्चं । अकारणात् निष्कारणं । "निमित्तकारणहेतूनांप्रयोगेसर्वासांप्रायदर्शनं" इत्युक्तेःपञ्चमी । हन्यात् हन्तुं शक्नुयात् । शकिलिङ् ॥ २८ ॥ शोकपरायणः क्रौञ्चवधदर्शनेनदुःखपरवशः । पुनः क्रौञ्चींगतमनाभूत्वा क्रौञ्चींविचिन्त्येत्यर्थः । मुहुःशोचन्नेव वाल्मीकिः इमं मानिषादेत्यादिंश्लोकं । अन्तः मनसि । उपजगावित्यन्वयः । "व्यवहिताश्च" इत्युपसर्गस्यव्यवहितप्रयोगः ॥ २९ ॥ ततः मनसिश्लोकपाठश्रवणानन्तरं । मुनिपुङ्गवंप्रहसन् मन्नियोगेनस्वजिह्वाग्रेऽवतीर्णांसरस्वतीमयंनजानातीतिप्रहसन् । उवाच । मानिषादेत्यस्यश्लोकत्वनिश्चयंद्रढयति—श्लोकइति । त्वया बद्धः मानिषादेत्यादिः । श्लोकएव । अत्र श्लोकविषये ।

तिल० एनमित्याद्युत्तरान्वयि । अनामयं आमयःपीडातद्रहितं । अव्ययं व्ययहीनं । तपइतिशेषः । एतेन "ब्राह्मणंकुशलंपृच्छेक्षत्रबन्धुमनामयम्" इत्युक्तेः ब्राह्मणंप्रत्ययंप्रश्नः स्मार्ताचारविरुद्धः तंदेवमित्यनेनैवसिद्धे एनमित्यस्यवैयर्थ्यापत्तिश्चेत्यपास्तम् । विषम० अनामयं अनामयोपलक्षितं अव्ययं नित्यसिद्धं कुशलं ॥२५॥ शिरो० तद्गतेन रघुनाथचरिताविष्टेनैव ॥२७॥ तिल० हन्यात्हतवानित्यर्थेछान्दसम् । पापात्मनेति । मयेतिशेषः । तपोनाशसंपादकशापनिःसारणेनकष्टंकृतमितिवार्थः ॥ शिरो० यः व्याधः चारुरवंमनोहरशब्दं तादृशंपूर्वोक्तविशेषणविशिष्टं क्रौञ्चंअकारणाद्धन्यात् अहन् तस्य उपसमीपेइतिउत्तरेणान्वयः ॥२८॥ शिरो० उप व्याधस्यसमीपे क्रौञ्चींशोचन्नेवअहं इमं ब्यर्थकंमानिषादेतिश्लोकं जगौ अवदम्, "बहुजगदपुरस्तात्तस्यमत्ताकिलाहम्" इतिवत् लिट्प्रयोगः । अन्तर्गतमनाः अन्तः अन्तरङ्गार्थेगतंनिविष्टंमनोयस्यतादृक् शोकपरायणः शोकात्परः सकारणशोकसंबन्धशून्यः नारदोपदिष्टरघुनाथः तस्मिन् अयनंस्थितिर्यस्यसः आसमितिशेषः ॥ २९ ॥ तनि० श्लोकएवयशोभिव्यञ्जकंपद्यमेवनतुकेवलपदसमुदायः नापिकेवलनिषादशापरूपार्थश्च ॥ ३० ॥

[ पा० ] १ घ. विधिवच्चैनमामन्त्र्य. २. ङ. झ. पृष्ट्वाचैवनिरामयं. ३ ख. पविष्टो. ४ झ. कये च ऋषये. ५ ख. ग. नं तदा. ६ घ. कृतमिदं. ७ ङ. झ. एवास्त्वयं.

**मच्छन्दादेव ते ब्रह्मन्प्रवृत्तेयं सरस्वती ॥ रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ॥ ३१ ॥**
**धर्मात्मनो गुणवतो लोके रामस्य धीमतः ॥ वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥ ३२ ॥**
**रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥ रामस्य सहसौमित्रे राक्षसानां च सर्वशः ॥ ३३ ॥**
**वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ॥ तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥ ३४ ॥**
**न ते वागनृता काव्ये काचिदत्र भविष्यति ॥ कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥३५॥**
**यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ॥ तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ३६ ॥**

विचारणा चिन्ता । नकार्या ॥ ३० ॥ अकारणकार्योत्पत्तिकृतविस्मयंवारयति—मदिति । हेब्रह्मन्, ते इयंसरस्वती मानिषादेत्यादिरूपा । मच्छन्दादेव मदभिप्रायादेव । नतुकारणान्तरात् प्रवृत्ता । प्रवर्तनप्रयोजनमाह—रामस्येति । हेऋषिसत्तम "नानृषिःकुरुतेकाव्यं" इत्युक्तरीत्याप्रतिलब्धकाव्यनिर्माणशक्तिक । सर्वं रामस्यचरितं रामचरितविषयप्रबन्धं । कुरु । ईदृशैःश्लोकैरितिशेषः । ईदृशैःकरवाण्यहमित्यनुवादात् ॥ ३१ ॥ एवंसामान्येनरामचरितविषयप्रबन्धनिर्माणमनुज्ञायसंक्षेपकरणमादिशति—धर्मेति । अत्र विशेषणैःप्रबन्धनायकस्यरामस्य नायकगुणादर्शिताः । नायकगुणवर्णनेनहिकाव्यंप्रथते । उक्तंहिभोजेन "कवेरल्पापिवाग्वृत्तिर्विद्वत्कर्णावतंसति । नायकोयदिवर्ण्येतलोकोत्तरगुणोत्तरः" इति । नायकगुणास्तु "महाकुलीनतौज्ज्वल्यंमहाभाग्यमुदारता । तेजस्वितावैदग्धत्वंधार्मिकत्वादयोगुणाः" इत्युक्ताः । तत्रधर्मात्मनइत्यनेन धार्मिकत्वमुक्तं । लोके लोकमध्ये । गुणवतः बहुगुणकस्य । अनेनउदारतोक्ता । रामस्येत्यनेन तेजस्वित्वमौज्ज्वल्यंच । धीमतइत्यनेन पण्डितत्वं । धीरस्येत्यनेन वसुंधराधुरंधरत्वरूपंमहाभाग्यं । अन्यद्गुणशब्देनज्ञेयं । एवंभूतस्यरामस्य वृत्तं चरित्रं । "वृत्तं पद्येचरित्रे" इत्यमरः । यथा येनप्रकारेण । नारदात् ते त्वया । श्रुतं । तेनप्रकारेण । कथय संक्षेपेणकथयेत्यर्थः ॥३२॥ पुनर्विस्तरेणरामचरित्रवर्णनंनियोक्ष्यमाणस्तद्विषयज्ञानलाभमनुगृह्णाति—रहस्यमित्यादिना । श्लोकद्वयमेकवाक्यं । धीमतइतिरहस्यवृत्तसंभवहेतुतयोक्तं । सुमित्रायाअपत्यंपुमान्सौमित्रिः । बाह्वादित्वादिञ् । सहसौमित्रेः सौमित्रिसहितस्य । धीमतस्तस्य रामस्य । रहस्यं अनितरविदितंच । प्रकाशं सर्वविदितंच । यद्वृत्तं । राक्षसानां रावणादीनांच । सर्वशः सर्वप्रकारं रहस्यप्रकाशरूपंयद्वृत्तंतत् । वैदेह्याः सीतायाश्च । अपिशब्दाद्भरतादीनांच । प्रकाशं । यदिवा रहो रहस्यंवा । यद्वृत्तं तच्चसर्वमविदितमपिनारदमुखेनाज्ञातमपि । तेविदितंभविष्यतीतियोजना ॥ ३३ ॥ ॥ ३४ ॥ एवंयथार्थदर्शित्वमनुगृह्ययथार्थवादित्वमनुगृह्णाति—नेति । अत्र करिष्यमाणेकाव्ये ते वाक्काचिदपि किंचिदपिवाक्यमित्यर्थः । अनृता बाधितार्था । नभविष्यति । यद्वा । वाक् पदं । कदाचिदपि । अनृता दुष्टा । नभविष्यति । तेन काव्यदोषत्वेनोक्तपदवाक्यतदर्थदोषशून्यत्वमुक्तं । अतः रामकथां रामविषयप्रबन्धकल्पनां । कुरु । काव्यनिर्माणप्रयोजनमाह । पुण्यां पापहरां । प्रयोजनान्तरमाह । मनोरमां शब्दश्रवणसमनंतरमेवविगलितवेद्यान्तरमानन्दंजनयन्तीमित्यर्थः । श्लोकबद्धामित्यनेन गद्यप्रबन्धेभ्योहर्षचरितजातीयेभ्योमिश्रप्रबन्धेभ्योनाटकादिभ्यश्चव्यावृत्तिरुक्ता ॥३५॥ यशोपिकाव्यनिर्माणप्रयोजनमित्याह—

**तनि०** मच्छन्दात् भगवच्छन्दानुवृत्तमत्संकल्पादेव नतु घुणाक्षरन्यायात् । प्रवृत्ता "स्वयमेवागतावरा" इतिस्वारसिकतया प्रवृत्ता । इयं रसभावालंकारवस्तुभेदभिन्नध्वनिसमुदायाश्रयतयाप्रवृत्ता । सरस्वती सृगताविति धातोरुत्पन्नःसरश्शब्दःप्रवाहेवर्तते । सरोस्यास्तीतिसरस्वती । तेनानर्गलप्रवाहतयासर्वतोमुखत्वमुक्तं । रूढ्यादेवताविशेषोक्तिः । वागधिष्ठानदेवतैवजिह्वाग्रेवर्ततइति भावः । सरस्वतीत्यन्तर्वाहिनीत्वप्रतीत्याकाव्यस्यानेकध्वनिगर्भितत्वंद्योत्यते । रामस्य रमतइति रमन्तेऽत्रेतिच स्वयमानन्दपूर्ण तयास्वेतररमयितृत्वेनप्रसिद्धस्य । एतेन "नायकोयदिवर्ण्येतलोकोत्तरगुणोत्तरः" इतिप्रसिद्धलोकोत्तरनायकत्वंद्योत्यते । कृत्स्नं चरितं रहस्यप्रकाशात्मकं सर्वंचरितंत्वंकुरु राममन्त्रानुसंधानजनितजन्मपरिशुद्धिस्त्वमेवकुर्वित्यर्थः । ऋषिसत्तम जन्मान्तरसहस्रतपोध्यानादिपरिपक्वकषायतयानिष्पन्नभगवद्भक्तिपरीवाहप्रवृत्तरामावताररहस्यज्ञानेन चिकीर्षितप्रबन्धेसामर्थ्यं तवैवास्तीतिभावः ॥ ३१ ॥ **शिरो०** यद्वा अलोकेषुप्राकृतलोकविलक्षणेषुवैकुण्ठादिषुगीयमाना रामायणकथा यावत्कालं गिरयःपर्वताः सरितो नद्यश्चस्थास्यन्ति तावत्कालंमहीतलेप्रचरिष्यतित्वन्नाम्नाप्रचारंप्राप्स्यति अतएवमहीतलेइत्यस्यनवैयर्थ्यम् ॥ ३६ ॥

**[ पा० ]** १ ख. श्रीरामचरितं. २ ज. लोकनाथस्य. ३ ख. वीरस्य. घ. तत्त्वेन. ङ. रामस्य. ४ घ. ह्याश्चापि.

यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति ॥ तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ॥ ३७ ॥
इत्युक्त्वा भगवान्ब्रह्मा तत्रैवान्तरधीयत ॥ ततः सशिष्यो वाल्मीकिर्मुनिर्विस्मयमाययौ ॥ ३८ ॥
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः ॥ मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥३९॥
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ॥ सोनुव्याहरणाद्भूयः श्लोकः श्लोकत्वमागतः ॥ ४० ॥
तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः ॥ कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥४१॥
उदारवृत्तार्थपदैर्मनोरमैस्तदास्य रामस्य चकार कीर्तिमान् ॥
समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारधीर्मुनिः ॥ ४२ ॥

यावदिति । गिरयः सरितश्च । महीतले भूतले । यावत्स्थास्यन्ति । तावत् । रामायणकथा रामायणरूपा कथा । लोकेषु सप्तसु । प्रचरिष्यति । यावत्त्वत्प्रबन्धप्रचारस्तावत्तव यशो भविष्यतीतिहृदयं ॥३६॥ यशसःस्वतोऽपुरुषार्थत्वात्तत्फलमाह्—यावद्रामेति । किंच त्वत्कृता रामस्यकथा । यावत्प्रचरिष्यति तावत् । मल्लोकेषुमध्ये यावच्छरीरपातं अधः भूमौ । तदुपरि ऊर्ध्वंच । निवत्स्यसि ॥ ३७ ॥ तत्रैव आसनएव ॥ ३८ ॥ ततः मुनिविस्मयानन्तरं । सर्वे तस्य वाल्मीकेः । शिष्याः । मुहुर्मुहुःप्रीयमाणाःसन्तः । इमं मानिषादेतिश्लोकं । पुनर्जगुः । भृशंविस्मिताः अत्यन्तंविस्मिताःसन्तः । "अव्ययमात्रस्यसमासेतुलोपः" इतिमलोपः । प्राहुश्च अन्योन्यमिदमद्भुतमितिप्राहुश्चेत्यर्थः । आश्रमएवस्थिताभ्यांकुशलवाभ्यांभरद्वाजेनचात्रबहुवचनं ॥ ३९ ॥ यः । समाक्षरैरिति विषमवृत्तव्यावृत्तिः । चतुर्भिरित्यर्धसमवृत्तव्यावृत्तिः । पादैश्चतुर्थांशैः । महर्षिणा गीतः उक्तः । सः श्लोकः । अनुव्याहरणात् शिष्यैःपुनःपुनर्व्यवह्रियमाणत्वात् । भूयः श्लोकत्वमागत इति । पूर्वंश्लोकलक्षणलक्षितत्वात् श्लोकत्वंगतः संप्रतिश्लोक्यमानत्वात् पुनःश्लोकत्वंगतइत्यर्थः । शोकःश्लोकत्वमागत इतिपाठे शोककृतश्लोकएवशोकइत्युच्यतइतिज्ञेयं । यःश्लोकः महर्षिणासमाक्षरैश्चतुर्भिःपादैर्बद्धःश्लोकःक्रौञ्चीविषयः तादृशश्लोकत्वमागतः सशोकवेगादुत्पन्नइत्यर्थः । कथमवगम्यते । अनुव्याहरणात् । अनु पश्चात् शोकानन्तरं उच्चारणात् शोकेसतिजातत्वादित्यर्थः ॥४०॥ अथमुनेःकृतिप्रणयनविषयसंकल्पमाह्—तस्येति । भावितात्मनः चिन्तितपरमात्मनः । अनेनारंभकर्तव्यं विघ्नविघातकंमङ्गलंमुनिनाआचरितमित्युक्तं । तस्य वाल्मीकेः । इयंबुद्धिर्जाता ॥ इदंशब्दार्थमाह्—कृत्स्नमित्यादिना । सर्वंरामायणाख्यंकाव्यं । ईदृशैः मानिषादेतिश्लोकप्रकारैःश्लोकैः । करवाणि इतिइयंबुद्धिरित्यन्वयः । ईदृशैरिति प्रायिकाभिप्रायमेतत् । वृत्तान्तराणामपितत्रतत्रप्रयोगात् ॥ ४१ ॥ अथयथासंकल्पं काव्यरचनामाह्—उदारेति । कीर्तिरस्यास्तीतिकीर्तिमान् । अनेन "काव्यंयशसेऽर्थकृतेव्यवहारविदेशिवेतरक्षतये । सद्यःपरनिर्वृतयेकान्तासंमिततयोपदेशयुजे" इत्यालंकारिकोक्तकाव्यप्रयोजनेष्वस्ययशएवप्रधानंप्रयोजनमितिदर्शितं । काव्यनिर्माणानन्तरंभाविनोयशसःपूर्वभावोक्त्याऽतिशयोक्तिरुक्ता । उदारामहती

**शिरो०** मल्लोकेषु ममलोकोदर्शनं येषुतेषुस्थानेषु निवत्स्यसि । मत्समीपएव त्वां निवासयिष्यामीत्यर्थः । एतेनवाल्मीकिमुखनिस्सृतरामायणकथातिशुश्रूषा ब्रह्मणोस्तीति ध्वनितम् ॥ ३७ ॥ **तिल०** अनु अतिशयितशोकोत्पत्त्यनन्तरंव्याहरणात्भूयः शोकोविपुलः शोकएवश्लोकत्वंप्राप्तइति वयंमन्यामहेइतिप्राहुरितिपूर्वेणसंबन्धः । उत्प्रेक्षाचेयं । तेनास्य श्लोकस्य करुणरसमयत्वं ध्वनितम् । अत्र नष्टक्रौञ्चालंबनकःक्रौञ्चीविरावानुदीपितः निषादविषयक्रोधव्यभिचारिकः "मानिषाद" इत्यादिवाक्यानुभाविकः करुणोरसइतिबोध्यम् ॥ ४० ॥ **तिल०** ईदृशैः "मानिषाद" इतिवत् करुणरसप्रधानैरित्यर्थः । अनेनान्येरसाः अत्रगुणीभूता इतिध्वनितम् । **शिरो०** ईदृशैः "मानिषाद" इतिवद्गानयोग्यैः पद्यैः ॥ ४१ ॥ **तिल०** उदारस्ययद्वृत्तं चरितं उदारंवायच्चरितं तद्रूपार्थबोधकैः पदैः । मनोरमैः श्रुतिकटुत्वादिदोषरहितैः अस्य यशस्विनोरामस्यदाशरथेरामस्यनारदोपदिष्टस्य । श्लोकशतैरिति-शतशब्दोऽनन्तवाची । **शिरो०** उदारवृत्तार्थपदैः उदाराः अभीष्टार्थदातारः वृत्तार्थाः रघुनाथचरितरूपार्थाःयेषु तान्येव पदानितैः "उदारोदातृमहतोः" इतिकोशः ॥ ४२ ॥

**[ पा० ]** १ घ. मम लोके. २ क.—झ. भगवान्मुनिः. ३ क.—झ. शोकः श्लोकत्वं. ४ ङ. च. ज. झ. महर्षेर्भा. ५ घ. च. छ. तदस्य. ६ ङ. झ. मुदारदर्शनः.

**तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ॥**
**रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ४३ ॥**
**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्वितीयः सर्गः ॥ २ ॥**

धीर्यस्यासौ उदारधीः । "उदारोदातृमहतोः" इत्यमरः । तेन कवित्वबीजभूता निपुणतोक्ता । तदुक्तंकाव्यप्रकाशे "शक्तिर्निपुणतालोककाव्यशास्त्राद्यवेक्षणात् । काव्यज्ञशिक्षयाभ्यासइतिहेतुस्तदुद्भवे" इति । मुनिः मननशीलः । अनेन विविक्तसेवित्वमरोचकित्वंचोक्तं । तदुक्तंवामनेन "द्वयेहिकवयःअरोचकिनःसतृणाऽभ्यवहारिणश्च" इत्यादि । तदा ब्रह्मवरप्रदानानन्तरकाले । अनेनकवित्वहेतुभूताशक्तिरुक्ता । यशस्विनोपिरामस्य यशस्करं । तदुक्तंदण्डिना "आदिराजयशोबिंबमादर्शंप्राप्यवाङ्मयं । तेषामसन्निधानेपिनस्वयंपश्यनश्यति" इति । इतरकीर्त्यपेक्षयाकाव्यनायकत्वकृताकीर्तिरनुपमेत्यर्थः । काव्यं । कविर्लोकोत्तरवर्णननिपुणः । कवेःकर्मकाव्यं शब्दार्थयुगलं । तथोक्तं "सगुणौसालंकारौशब्दार्थौदोषवर्जितौकाव्यं" इति । अत्रकाव्यशब्देनकाव्यसंदर्भरूपंमहाकाव्यमुच्यते । तल्लक्षणमुक्तंकाव्यादर्शे "सर्गबन्धो महाकाव्यमुच्यतेतस्यलक्षणं । आशीर्नमस्क्रियावस्तुनिर्देशोवाऽपितन्मुखं । इतिहासकथोद्भूतमितरद्वारसंश्रयं । चतुर्वर्गफलायत्तंचतुरोदात्तनायकं । नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः । विप्रलंभैर्विवाहैश्चकुमारोदयवर्णनैः । मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि । अलंकृतमसंक्षिप्तंरसभावनिरन्तरं । सर्गैरनतिविस्तीर्णैःश्राव्यवृत्तैःसुसन्धिभिः । सर्वत्रभिन्नसर्गान्तैरुपेतंलोकरञ्जनं । काव्यंकल्पान्तरस्थायिजायतेसदलंकृति" इति । एवंभूतंकाव्यंश्लोकशतैरवयवैश्चकार । श्लोकशब्देनगद्यपद्यमिश्रप्रबन्धेषुस्वग्रन्थस्यपद्यरूपतादर्शिता । शतैरित्यनेन शतकादिक्षुद्रप्रबन्धव्यावृत्तिरुक्ता । बहुवचनार्थंच स्वयमेवविवरिष्यति "चतुर्विंशतसहस्राणि" इति । कीदृशैःश्लोकशतैः । उदारवृत्तार्थपदैः उदाराणिमहान्ति वृत्तार्थपदानियेषांतैः । वृत्तानिपथ्यावक्त्रोपजातिवंशस्थवसन्ततिलकादीनि । तेषामुदारत्वंनामतत्तद्रसाभिव्यञ्जकत्वं । अर्थाः वाच्यलक्ष्यव्यङ्ग्याः । तेषामुदारत्वंद्राक्षापाकनारिकेलपाकरसालपाकेषुद्राक्षापाकवत्त्वं । एतल्लक्षणमुक्तंरुद्रटेन "द्राक्षापाकःसकथितोबहिरंतःस्फुरद्रसः" इति । पदानि वाचकलक्षकव्यञ्जकानि । तेषामुदारत्वं "यापदानांपरान्योन्यंमैत्रीशय्येतिकथ्यते" इत्युक्तलक्षणशय्यावत्त्वं । पुनःकीदृशैः । मनोरमैः रमणीयैः । अनेन वैदर्भीगौडीपाञ्चालीचेत्युक्तासुरीतिषुवैदर्भीरीतिमत्त्वमुक्तं । तल्लक्षणंचोक्तं "बन्धपारुष्यरहिताशब्दकाठिन्यवर्जिता । नातिदीर्घसमासाचवैदर्भीरीतिरिष्यते" इति । समाक्षरैः प्रतिपादंसमानाक्षरैः । अनेन विषमवृत्तादिरूपताव्यावृत्ता ॥ ४२ ॥ एवंप्रबन्धनिर्माणमभिधायकुशलवादिभ्यस्तत्प्रतिपादनंसंग्रहेणदर्शयति—तदिति । स्वग्रन्थस्योत्तमकाव्यत्वप्रदर्शनायनिर्दोषत्वमाह—उपगतसमाससन्धियोगमिति । समासास्तत्पुरुषादयः । सन्धयःसंहिताः । योगःपदव्युत्पत्तिः । उपगताः शास्त्रानुरूपेणप्राप्ताः समाससन्धियोगायस्मिन्तत्तथोक्तं । अनेन समासदोषसन्धिदोषपददोषशून्यत्वमुक्तं । प्रधानमल्लनिबर्हणन्यायेनैतत्सर्वदोषराहित्यस्योपलक्षणं । अथकाव्यगुणान्प्राधान्येनदर्शयति—समेति । समैर्मधुरैरुपनतार्थैर्वाक्यैर्बद्धंरचितं । तत्रसमतालक्षणमुक्तंदण्डिना "समंबन्धेष्वविषमंतेमृदुस्फुटमध्यमाः" इति । माधुर्यलक्षणंचतेनैवोक्तं । "मधुरंरसवद्वाचिवस्तुन्यपिरसस्थितिः । येनमाद्यन्तिधीमन्तोमधुनेवमधुव्रताः" इति । उपनतार्थत्वं अर्थव्यक्तिः । तत्स्वरूपंचतेनैवोक्तं "अर्थव्यक्तिरमेयत्वमर्थ-

**ती०** सममधुरोपनतार्थवाक्यबद्धं समः सर्वोपादानत्वेनसर्वानुरागः मधुरः आनन्दैकरसः उपनतः नित्यापरोक्षतया प्राप्तः । यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेः । अर्थः श्रीरामब्रह्मरूपार्थो येषांतैर्वाक्यैर्बद्धम् ॥ **तिल०** एवंकाव्यनिर्माणमुक्त्वातत्रश्रोतॄनभिमुखीकरोति—तदिति ॥ ईदृशस्यापिमिथ्यार्थकत्वेऽनुपादेयत्वंस्यादतआह । मुनिप्रणीतं ब्रह्मानुग्रहप्राप्तसत्यवागृषिप्रणीतम् । पुरुषार्थस्वर्गमोक्षादिसाधनत्वंतु रघुवरचरितमित्यनेनोक्तप्रायमेव । दशशिरसश्चवधमित्यनेन वनान्तमिदं श्रोतव्यमितिसूचितम् । तेनैवसूचितफललाभात् । उत्तरकाण्डंत्वस्यखिलं भारतस्यहरिवंशवत् । अतएवाग्रिमसर्गे वनसंचरणपर्यन्तवृत्तान्वेषणमेवसमाधिनाऽऽर्षेर्वक्ष्यतीतिप्राञ्चः । परेतुदशशिरसोवधंचेत्यन्वयः । चेनसीतात्यागादिरूपोत्तरकाण्डीयवृत्तान्तसंग्रहइत्याहुः ॥

# तृतीयः सर्गः ॥ ३ ॥

वाल्मीकिना ब्रह्मप्रसादाद्योगेन यावदर्थापरोक्षीकरणपूर्वकं काण्डसप्तकात्मकश्रीरामायणप्रणयनम् ॥ १ ॥

**श्रुत्वा वस्तु समग्रं तद्धर्मात्मा[1] धर्मसंहितम् ॥ व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १ ॥**
**उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः ॥ प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २ ॥**
**रामलक्ष्मणसीताभी राज्ञा दशरथेन च ॥ सभार्येण[2] सराष्ट्रेण यत्प्राप्तं तत्र तत्वतः ॥ ३ ॥**
**हसितं भाषितं चैव गतिर्या[3] यच्च चेष्टितम् ॥ तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ॥ ४ ॥**

स्य " इति । रघुवंश्यारघवस्तेषुवरोरामस्तच्चरितं तच्चरितविषयकं । मुनिनावाल्मीकिनामयाप्रणीतं । मुनिनानारदेनवाप्रणीतं । दशशिरसः रावणस्य वधमधिकृत्यकृतंग्रन्थं । " अधिकृत्यकृतेग्रन्थे " इतिविहितस्याणोलुप् । निशामयध्वं निशामयध्वंनिशामयध्वमिति न्यशामयतेत्यर्थः । " क्रियासमभिहारेलोट्लोटोहिस्वौवाचतध्वमोः " इतितध्वमोर्हिस्वादेशस्यवैकल्पिकत्वात्ध्वमःपाक्षिकस्वादेशाभावः । " मितांह्रस्वः " इतिविहितस्यह्रस्वस्य " संज्ञापूर्वकोविधिरनित्यः " इतिअनित्यत्वात् तदभावः । किंतुणिचिदीर्घएव । अश्रावयदित्यर्थः । शिष्यानितिशेषः । " णिचश्च " इत्यात्मनेपदं । यद्वा । मुनिःरघुवरचरितंचकार । तन्निशामयध्वमितिशिष्यान्प्रतिपरोक्षतयोच्यते । श्रवणेपिचरितस्यदर्शनसमतयाभानान्निशामयध्वमित्युच्यते। "चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिवदर्शितं" इतिहि वक्ष्यते । पूर्वश्लोकेवंशस्थवृत्तं । "जतौतुवंशस्थमुदीरितंजरौ " इतिलक्षणात् । अत्रपुष्पिताग्रावृत्तं । "अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्चपुष्पिताग्रा" इतिलक्षणात्।।४३।। ।। इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वितीयः सर्गः ।। २ ।।

---

पूर्वस्मिन्सर्गेस्वग्रन्थस्यात्यन्तादरणीयत्वद्योतनायपरमाप्तत्वरूपवक्तृवैलक्षण्यंप्राधान्येनोक्तं । संप्रतितदर्थमेवविषयवैलक्षण्यंदर्शयति । विषयस्यवैलक्षण्यंनाम सम्यग्ज्ञानावधृतत्वं लोकोत्तरनायकगुणपरिष्कृतत्वं च । तत्रप्रथमंसम्यग्ज्ञानावधृतत्वंविवक्षंस्तद्धेत्वन्वेषणमाह—श्रुत्वेति । धर्मेआत्मास्वभावोयस्यासौधर्मात्मा इत्यन्वेषणहेतूक्तिः । धर्मसंहितं धर्मसहितं "समोवाहिततयोः" इतिविकल्पितत्वान्मकारलोपाभावः । समग्रं कृत्स्नं । तत् नारदोक्तं । वस्तु कथाशरीरं । श्रुत्वा भूयः ततोधिकं । धीमतोरामस्य यद्वृत्तं चरित्रमस्ति तद्व्यक्तंयथाभवतितथा । अन्वेषते पर्यालोचयतिस्म । "वर्तमानसामीप्येवर्तमानवद्वा" इति लट् ॥ १ ॥ धर्मात्मेत्यनेनसूचितमन्वेषणप्रकारमाह—उपेति । मुनिः सम्यक्यथाशास्त्रं उदकं उपस्पृश्य आचम्येत्यर्थः । " उपस्पर्शस्त्वाचमनं " इत्यमरः । प्राचीनाग्रेषु दर्भेषु स्थित्वा निजगुरुमुद्दिश्यकृताञ्जलिःसन् । धर्मेण ब्रह्मप्रसादरूपश्रेयस्साधनेन । गतिं रामादिवृत्तं । अन्वेषते ।।२।। गतिशब्दार्थंविवृण्वन्धर्मेणअन्वेषणफलमाह—रामेति । रामादिभिर्यत्प्राप्तं तत्र विषये । तत्वतः तत्वेन । संप्रपश्यति समन्तात्प्रकर्षेणपश्यति । तत्सर्वंविशदतरंपश्यतीत्यनुषज्यते ।। ३ ।। किंप्राप्तंतत्राह—हसितमिति । पूर्वोक्तरामादीनांयत् हसितं हासः । यच्चभाषितं भाषणं भावोक्तः । याचगतिः गमनं । यच्चचेष्टितं चेष्टा युद्धादिकमितियावत्। तत्सर्वं । धर्मवीर्येण ब्रह्मवरप्रसादशक्त्या । यथावत् तत्वेन । संप्रपश्यति । अत्रयोगजधर्मस्थानीयत्वात् ब्रह्मप्रसादोधर्मशब्देनोच्यते । सचसाक्षात्कारहेतुश्च-

---

**विषम०** अत्ररघेर्गत्यर्थान्निष्पन्नरघुवरशब्देनतस्यसर्वान्तर्यामित्वंध्वनितं तेनतच्चरितस्य स्वर्गमोक्षादिसर्वपुरुषार्थसाधनत्वमुक्तं भवति ॥ ४३ ॥ इतिद्वितीयःसर्गः ॥ २ ॥

**तिल०** धर्मार्थसहितं धर्मार्थेतित्रिवर्गोपलक्षणम् फलत्वेनतत्सहितम् । हितंमोक्षफलकम् अन्वेषतेस्मेतिशेषः ॥ १ ॥ **तिल०** धर्मेणयोगजेन । अन्वेषतेअतियत्नेनपश्यतिस्म । **शिरो०** कृताञ्जलिः प्रार्थनासूचकबद्धकरयुगलः ॥ २ ॥ **तीर्था०** तत्र राष्ट्रे । **तिल०** तत्रसमाधौ पश्यतिस्म ॥ ३ ॥ **शिरो०** धर्मवीर्येण रघुनाथस्मरणरूपबलेन ॥ ४ ॥

[ **पा०** ] १ क. ङ. छ. झ. मर्थिसहितं हितं. घ. ज. मर्थिसमसम्मितं. २ ख. सभार्येणचयत्प्राप्तंतत्रतत्रचतत्वतः ३ घ. ङ. च. छ. झ. यविच.

स्त्रीतृतीयेन च [1]तथा यत्प्राप्तं चरता वने ॥ सत्यसन्धेन रामेण तत्सर्वं [2]चान्ववेक्षितम् ॥ ५ ॥
ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः ॥ पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६ ॥
तत्सर्वं तत्वतो दृष्ट्वा धर्मेण स [3]महाद्युतिः ॥ अभिरामस्य रामस्य [4]चरितं कर्तुमुद्यतः ॥ ७ ॥
कामार्थगुणसं[5]युक्तं धर्मार्थगुणविस्तरम् ॥ समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥
[6]स यथा कथितं पूर्वं नारदेन [7]महर्षिणा ॥ [8]रघुवंशस्य चरितं चकार भग[9]वानृषिः ॥ ९ ॥
जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् ॥ लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥१०॥
नाना[10]चित्रकथाश्चान्या विश्वामित्र[11]समागमे ॥ जानक्याश्च विवाहं च धनुषश्च विभेदनम् ॥ ११ ॥

क्षुरादिवदितिप्रमाणतोऽध्यवसीयते ॥ ४ ॥ नगरनिवासकालिकचरितावलोकनमभिधायवनवासकालिकवृत्तान्तनिरीक्षणमाचष्टे—स्त्रीति । स्त्रीतृतीयायस्यतेन सीतालक्ष्मणसहितेनेत्यर्थः । वने दण्डकारण्ये । चरता। सत्यसन्धेन सत्यप्रतिज्ञेन । रामेण । यत्प्राप्तं तत्सर्वंच । अन्ववेक्षितं साक्षात्कृतं । वाल्मीकेनेतिशेषः । धर्मवीर्येणेतिसिद्धं ॥ ५ ॥ एवंरामादिवृत्तान्तदर्शनस्यविशदतमत्वमाह—ततइति । ततः अवेक्षणानन्तरं । धर्मात्मा वाल्मीकिः । योगं ब्रह्मप्रसादरूपोपायं । आस्थितःसन् । “ योगःसन्नहनोपायध्यानसंगतियुक्तिषु ” इत्यमरः । तत्र रामादौ । पुरा यन्निर्वृत्तं निष्पन्नं । तत्सर्ववृत्तं पाणौ आमलकमिवपश्यतिस्म ॥ ६ ॥ अथदर्शनफलग्रन्थनिर्माणोद्योगमाह—तदित्यादि । श्लोकद्वयमेकान्वयं । महाद्युतिः रामगुणानुभवजनितहर्षप्रकर्षकृतद्युतियुक्तः । सः वाल्मीकिः । तत्सर्वं रामवृत्तान्तं । तत्वतोधर्मेण पूर्वोक्तेन दृष्ट्वा । अभिरामस्य निरवधिकभोग्यस्य । चरितं चरितविषयप्रबन्धं । कर्तुमुद्यतः उद्युक्तोऽभूत् । कीदृशंचरित्रमित्यत्राह—कामार्थेति । कामश्चार्थश्चकामार्थौ गुणशब्देनाप्राधान्यमुच्यते । अप्रधानाभ्यामर्थकामाभ्यांसंयुक्तं त्याज्यताप्रदर्शनार्थंतत्रतत्रार्थकामप्रतिपादकमित्यर्थः । धर्मार्थयोर्धर्ममोक्षयोर्गुणोतिशयस्तंविस्तृणातीति धर्मार्थगुणविस्तरं । पचाद्यच् । प्राधान्येनधर्मापवर्गप्रतिपादकमित्यर्थः । “ अर्थःस्याद्विषयेमोक्षेशब्दवाच्येप्रयोजने ” इतिवैजयन्ती । अतएव रत्नाढ्यंसमुद्रमिवस्थितं । समुद्रोयथाशङ्खशुक्त्यादियुक्तोपि प्राधान्येनरत्नानिवहतितथास्थितमित्यर्थः । सर्वेषांजनानां । श्रुतिमनसीश्रोत्रहृदये हरतीति सर्वश्रुतिमनोहरं । शब्दमाधुर्याच्छ्रोत्राकर्षकं अर्थसौष्ठवाच्चित्ताकर्षकमित्यर्थः ॥ ७ ॥ ८ ॥ यथोद्योगंप्रबन्धनिर्माणमाह—सइति । भगवान्सऋषिः । रघुवंशस्य रघुवंशोद्भवस्यरामस्य । चरितं । पूर्वंनारदेनमहर्षिणा । यथा कथितं येनप्रकारेणोक्तं । तथा चकार ॥ ९ ॥ अथ विस्तरेणब्रह्मोपदिष्टरीत्यारामचरितनिर्माणंदर्शयति—जन्मेत्यादिनासर्गशेषेण । द्वितीयान्तानांतत्प्रतिपादकपरत्वंबोध्यं । वाल्मीकिर्भगवान्ऋषिश्चकारेतिवक्ष्यमाणेकर्तृक्रिये अनुषञ्जनीये । जन्मनःसुमहत्त्वं दशरथमहातपोबललभ्यत्वं विष्णोरवतारत्वंच । वीर्यं ताटकाताटकेयादिहननक्षमंबलं । सर्वानुकूलतां सर्वानुवर्तित्वं आर्जवमितियावत् । लोकस्यप्रियतां प्रेमास्पदत्वं । क्षान्तिं अपराधसहिष्णुतां । सौम्यतां रम्यतामनुग्रतांवा । “ सौम्यःपुमान्बुधेविप्रेत्रिषुस्यात्सोमदैवते । रम्येनुग्रेच ” इतिरत्नमाला । सत्यशीलतां सत्यस्वभावतां “ शीलंस्वभावेसद्वृत्ते ” इत्यमरः ॥ १० ॥ विश्वामित्रसमागमे विश्वामित्रेणरामलक्ष्मणयोःसंयोगेसति । अन्याः रामचरितादन्याः । नाना नानाप्र-

**तिल०** तत्सर्वंचेतिचस्यतदुत्तरकालिकमुत्तरकाण्डस्थचेत्यर्थइत्यपरे ॥ ५ ॥ **तीर्थी०** रत्नाढ्यं रत्नतुल्यैःपदैरर्थैः आढ्यं संपूर्णम् । सर्वश्रुतिमनोहरम् सर्वाभिः षड्जादिसर्वसंबन्धिनीभिः कान्ताप्रभावतीप्रभृतिभिः द्वाविंशतिश्रुतिभिः मनोहरम् । श्रुतिशब्देन नाडीसमुद्भवःसुखहेतुर्ध्वनिविशेषउच्यते ॥ यद्वा सर्वासांश्रुतीनामुपनिषदांमनोहृदयंतात्पर्यंहरतिगृह्णातिप्रतिपादयतीतितथा । **तिल०** रत्नाढ्यंरत्नैः काव्यगुणालंकारव्यङ्ग्यैः आढ्यंपूर्णम् ॥ ८ ॥ **तिल०** विश्वामित्रसहायनेविश्वामित्रेण सहगमने

**[ पा० ]** १ क. ख. ग. घ. च. छ. तदा. २ ङ. ज. झ. चान्ववैक्षत. ३ क. ग. ङ. झ. महामतिः. ज. महामुनिः. ४ क. ग. ङ. च. छ. झ. तत्सर्वंकर्तुं. ५ ख. संपन्नं. ६ घ. तद्यथा. ७ ङ—झ. महात्मना. ख. सुरर्षिणा. ८ क. ख. रघुनाथस्य. ९ ङ. च. छ. झ. वान्मुनिः. ख. सुमहानृषिः. १० ग—छ. झ. चित्राः कथाः. क. विधाः कथाः. ११ ङ. च. छ.झ. सहायने. ज. समागमं.

रामरामविवादं च गुणान्दाशरथेस्तथा ॥ तथा[1]भिषेकं रामस्य कैकेय्या दुष्टभावताम् ॥ १२ ॥
वि[2]घातं चाभिषेकस्य रामस्य च विवासनम् ॥ राज्ञः शोकं[3]विलापं च परलोकस्य चाश्रयम् ॥ १३ ॥
प्रकृ[4]तीनां विषादं च प्रकृतीनां विसर्जनम् ॥ निषादाधिपसंवादं सूतो[5]पावर्तनं तथा ॥ १४ ॥
गङ्गायाश्चापि संतारं भरद्वाजस्य दर्शनम् ॥ भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५ ॥
वास्तुकर्म विवे[6]शं च भरतागमनं तथा ॥ प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥ १६ ॥
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् ॥ दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७ ॥
दर्शनं शरभङ्गस्य सुतीक्ष्णेना[7]भिसंगमम् ॥ अनसूयासहा[8]स्यामप्यङ्गरागस्य चार्पणम् ॥ १८ ॥
[9]अगस्त्यदर्शनंचैवजटायोरभिसंगमम् ॥ पञ्चवट्याश्च गमनं शूर्पणख्याश्च दर्शनम् ॥ १९ ॥
शूर्पणख्याश्च संवादं विरूपकरणं तथा ॥ वधं खरत्रिशिरसोरुत्थानं रावणस्य च ॥ २० ॥
मारीचस्य वधं चैव वैदेह्या हरणं तथा ॥ राघवस्य विलापं च गृध्रराजनिबर्हणम् ॥ २१ ॥
कबन्धदर्शनं चापि पंपायाश्चापि दर्शनम् ॥ शबर्यां[10] दर्शनं चैव हनूमद्दर्शनं तथा ॥
विलापं चैव पंपायां राघवस्य महात्मनः ॥ २२ ॥

काराः चित्रकथाः आश्चर्यावहकथाश्च । जानक्याश्चेतिचकारेणोर्मिलादयः समुच्चीयन्ते । धनुषः हरचापस्य । विभेदनं भङ्गंच ॥११॥ रामेण परशुरामेण । रामस्य राघवस्यविवादं । रामेणरामविवादमित्यत्रतृतीयेतियोगविभागात्समासः । अतोनैकशेषप्रसक्तिः । दाशरथेर्गुणान् अयोध्याकाण्डादौवक्ष्यमाणान् । तथेति समुच्चयार्थःसर्वत्रद्रष्टव्यः । रामस्यअभिषेकं अभिषेकोद्योगं कैकेय्यादुष्टभावतां दुष्टहृदयत्वंच ॥ १२ ॥ अभिषेकस्य रामाभिषेकस्य । विघातं कैकेयीदुष्टहृदयत्वकृतंविघ्नंच । रामस्यविवासनंच राज्ञः दशरथस्य । शोकेनविलापं प्रलापंच । राज्ञः परलोकस्य स्वर्गस्य । आश्रयं आश्रयणं च ॥ १३ ॥ प्रकृतीनां प्रजानां । विषादं दुःखं । प्रकृतीनांविसर्जनं वञ्चनेननिर्यापणंच । निषादाधिपसंवादं गुहेनसहसंभाषणं । सूतस्योपावर्तनं पुनरागमनंच ॥ १४ ॥ १५ ॥ वास्तुकर्म शास्त्रोक्तप्रकारेणयथोचितमन्दिरनिर्माणं । विवेशं शास्त्रोक्तवास्तुपूजादिपूर्वकंगृहेप्रविश्यावस्थानं । रामस्यप्रसादनं भरतेनेतिशेषः । सलिलक्रियां सलिलदानं ॥ १६ ॥ पादुकाग्र्ययोःपादुकाश्रेष्ठयोः । श्रैष्ठ्यंधृतत्वात् । अभिषेकं राज्यनियंतृतयास्थापनं । नन्दिग्रामे निवासनं निवसनं । स्वार्थेण् । पादुकयोःस्थापनं वा ॥ १७ ॥ अनसूयया अत्रिपत्न्या । सहास्यां सहासनं । सीतायाइतिशेषः । "आस्यात्वासनमासीनं—" इत्यमरः । यद्यप्येतद्विराधवधात्पूर्वमेवतथापि अत्रसर्वत्रक्रमोनविवक्षितः । रामायणप्रतिपाद्यसंक्षेपमात्रेतात्पर्यात् । अङ्गरागस्य चन्दनस्य ॥ १८ ॥ शूर्पणख्याइतिङीबत्रार्षः ॥ १९ ॥ खरत्रिशिरसोरितिदूषणादीनामुपलक्षणं । उत्थानं निर्गमनं ॥ २० ॥ एवकारःपादपूरणार्थः । एवमुत्तरत्रसर्वत्रद्रष्टव्यं ॥ २१ ॥ चापीत्येकनिपातःसमुच्चयार्थः

तदुपस्थितिकालेसभायां मार्गेगमनकालेच । चित्रानानाकथाः अन्याश्चकथाः योगवासिष्ठोक्ताःब्रह्मप्रतिपादिकाःकथाः अत्रग्रंथेउक्तागङ्गादिकथाश्चेत्यर्थः । एतेनात्र श्लोके नानेति अन्याइतिचव्यर्थमित्यपास्तम ॥११॥ **शिरो०** दुष्टभावतां प्रातिभासिकदुष्टस्वभावत्वं ॥ १२ ॥ **शिरो०** शोकं प्रकटीभूतरामवियोगजनितशोचनम् । विलापं तच्छोकजनितहारामेत्याद्युच्चारणंच । परलोकस्य अप्रकटायोध्यापुरस्य आश्रयंस्थितिंच ॥ १३ ॥ **तिल०** अभ्युज्ञानात् संमतेः ॥ १५ ॥ **तीर्थी०** निवेशं तत्रगृहेऽवस्थानम् ॥ १६ ॥ **तिल०** नन्दिग्रामनिवासनं नन्दिग्रामस्य नितरां अतिशयेनवासनम् । भरते तत्रगते सर्वप्रजास्तत्रैव वासंकृतवत्यइत्यर्थः ॥ १७ ॥ **तिल०** धनुषोग्रहणं अगस्त्यसकाशादितिशेषः ॥ १९ ॥ **विषम०** उत्थानं जानकीहरणोद्योगम् ॥ २० ॥

**[पा०]** १ ख. तथारामाभिषेकंच. २ ख. ग. घ. ज. व्याघातं. ३ ङ—झ. ट. शोकंविलापं, ४ प्रकृतेः सामवादंच. ५ ख. सूतस्यपरिवर्तनं. ६ क—झ. निवेशं. ७ क—झ. क्षणेनसमागमं. ८ क. ग—छ. झ. समास्यां च अङ्ग. ख. सपर्यांच. ९ क. ख. छ. झ. दर्शनं चाप्यगस्त्यस्यधनुषोग्रहणंतथा. १० घ—छ. झ. शबरीदर्शनं. ङ. झ. शबरीदर्शनंचैवफलमूलाशनंतथा. प्रलापंचैवपम्पायांहनूमद्दर्शनंतथा. ऋश्य०.

ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् ॥ प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३ ॥
वालिप्रमथनं चैव सुग्रीवप्रतिपादनम् ॥ ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २४ ॥
कोपं राघवसिंहस्य बलानामुपसंग्रहम् ॥ दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५ ॥
अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम् ॥ प्रायोपवेशनं चैव संपातेश्चैव दर्शनम् ॥ २६ ॥
पर्वतारोहणं चैव सागरस्य च लङ्घनम् ॥ समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २७ ॥
राक्षसीतर्जनं चैव छायाग्राहस्य दर्शनम् ॥ सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ॥
रात्रौ लङ्काप्रवेशं च एकस्य च विचिन्तनम् ॥ २८ ॥
आपानभूमिगमनमवरोधस्य दर्शनम् ॥ दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् ॥ २९ ॥
अशोकवनिकायानं सीतायाश्चैव दर्शनम् ॥ अभिज्ञानप्रदानं च सीतायाश्चाभिभाषणम् ॥ ३० ॥
राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम् ॥ मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ॥ ३१ ॥
राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम् ॥ पञ्चसेनाग्र्यनिधनं सप्तमन्त्रिनिबर्हणम् ॥ ३२ ॥
तथाऽक्षस्यापि निधनं तोरणस्य विभञ्जनं ॥ ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ॥ ३३ ॥
प्रतिप्लवनमेवाथ मधूनां हरणं तथा ॥ राघवाश्वासनं चैव मणिनिर्यातनं तथा ॥ ३४ ॥
संगमं च समुद्रेण नलसेतोश्च बन्धनम् ॥ प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ॥ ३५ ॥
विभीषणेन संसर्गं वधोपायनिवेदनम् ॥ कुंभकर्णस्य निधनं मेघनादनिबर्हणम् ॥ ३६ ॥

॥ २२ ॥ ऋश्यमूकस्येतिकर्मणिषष्ठी । प्रत्ययोत्पादनं सालभेदनादिभिःसुग्रीवस्यविश्वासजननं । वालिसुग्रीवविग्रहं वालिसुग्रीवयुद्धं । वालिसुग्रीवयोर्वैरानुकथनंवा ॥ २३ ॥ वालिप्रमथनं वालिवधं । सुग्रीवप्रतिपादनं सुग्रीवायराज्यप्रदानमित्यर्थः । ताराविलापं ताराप्रलापं । समयं शरदिसीतान्वेष्टव्येतिरामसुग्रीवयोः-संकेतं । "समयःकालसिद्धान्तप्रतिज्ञाशपथेषुच । संकेताचारयोश्च" इतिरत्नमाला । ताराविलापसमयमितिपाठे "सर्वोद्वन्द्वोविभाषयैकवद्भवति" इत्येकवद्भावः । वर्षरात्रनिवासनं वर्षवृष्टिः तद्युक्तारात्रयोवर्षरात्राः "रात्राह्नाहाःपुंसि" इतिपुँल्लिङ्गत्वं । तेषुनिवासनंनिवसनं । स्वार्थेण् । वर्षदिनेष्वित्यर्थः । रात्रिशब्दस्यदिवसपरत्वं त्रिरात्रादौदृष्टं ॥ २४ ॥ राघवसिंहस्य राघवाणांश्रेष्ठस्य । कोपं सुग्रीवविषयक्रोधं । बलानां सेनानां । उपसंग्रहं संमेलनं । दिशः प्रति वानराणांप्रस्थापनं । पृथिव्याश्चनिवेदनं पृथिव्याः द्वीपसमुद्रादिसंनिवेशकथनं ॥ २५ ॥ अङ्गुलीयकदानं हनुमतइतिशेषः । ऋक्षस्य बिलं स्वयंप्रभाबिलं । तस्यतथासंज्ञा । प्रायोपवेशनं प्रायायमरणाय उपवेशनं शयनं । संपातेः जटायुभ्रजस्य ॥ २६ ॥ पर्वतारोहणं समुद्रलङ्घनायमहेन्द्रपर्वतारोहणं । समुद्रवचनाच्चेतिचकारेण देवानुज्ञासमुच्चीयते । मैनाकस्य हिमवत्पुत्रस्यगिरेः ॥ २७ ॥ सिंहिकायाः असुरस्त्रियः । लङ्कामलयस्य लङ्काधारपर्वतैकदेशस्य । "मलयःपर्वतान्तरे । पर्वतांशेप्रियोद्याने" इतिरत्नमाला । एकस्य हनुमतः ॥ २८ ॥ आपानभूमिः मद्यपानभूमिः । अवरोधस्य अन्तःपुरस्य ॥ २९ ॥ अशोकवनिकायानं हनुमतोशोकवनिकागमनं । अभिज्ञानप्रदानं सीतायैअङ्गुलीयकदानं ॥ ३० ॥ राक्षसीनांतर्जनं सीतांप्रतीतिशेषः। त्रिजटाविभीषणपुत्री। तस्याःस्वप्नदर्शनं रामश्रेयोविषयस्वप्नदर्शनं । मणिप्रदानं हनुमतेचूडामणिप्रदानं । वृक्षभङ्गं अशोकवनिकावृक्षभङ्गं ॥ ३१ ॥ राक्षसीविद्रवं एकाक्ष्येककर्णीप्रभृतिराक्षसीनांपलायनं हनुमद्भयादितिशेषः । किङ्कराणांरावणभटानां ॥३२॥ वायुसूनोः हनुमतः । ग्रहणं इन्द्रजितेतिशेषः । लङ्कादाहेनाभिगर्जनं राक्षसानामित्यर्थः ॥३३॥ प्रतिप्लवनं पुनःसमुद्रलङ्घनं । मधूनां मधुवनस्थमधूनां हरणं ग्रहणं । वानरैरितिशेषः । मणिनिर्यातनं रामायचूडामणिप्रदानं ॥ ३४ ॥ नलसेतोः नलेनबन्धनीयसेतोः । प्रतारं प्रतरणं ॥३५॥ वधोपायनिवेदनं इन्द्रजिदादि-

विषम० प्रायोपवेशनं प्रायेण अनशनेन वानराणां उपवेशनंसमुद्रसमीपेवासः ॥ २६ ॥ तिल० लङ्कादाहाभिगर्जनं लङ्कादाहे हनुमद्गर्जनमित्यर्थोवा । अभिमर्दनमितिपाठे लङ्कायादाहेनाभितोमर्दनमित्यर्थः ॥ ३२ ॥

रावणस्य विनाशं च सीतावाप्तिमरेः पुरे ॥ विभीषणाभिषेकं च पुष्पकस्य च दर्शनम् ॥ ३७ ॥
अयोध्यायाश्च गमनं भरतेन समागमम् ॥ रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ॥
स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ॥ ३८ ॥
अनागतं च यत्किंचिद्रामस्य वसुधातले ॥ तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ॥ ४ ॥

रामायणघटककाण्डसर्गश्लोकसङ्ख्यानिर्धारणम् ॥ १ ॥ वाल्मीकिनास्वप्रणीतरामायणप्रचारणाय समुचितशिष्यलाभचिन्तने कुशलवाभ्यां शिष्यतयास्वपरिग्रहणाय तत्पादाभिवादनम् ॥ २ ॥ कुशलवाभ्यां कदाचनमुनिमण्डलमध्ये वाल्मीकिनोपदिष्टरामायणस्य गान्धर्वशास्त्रानुसारेण तन्त्रीस्वनसाहित्येनगानम् ॥ ३ ॥ मुनिभिस्ताभ्यांपारितोषिकदानम् ॥ ४ ॥ भरतमुखेनकुशलवौदृष्टवता श्रीरामेण तयोः स्वावासानयनेन सत्कारपूर्वकं रामायणगानचोदना ॥ ५ ॥ ततस्ताभ्यांसपरिवारं श्रोतुकामेरामे रामायणगानोपक्रमः ॥ ६ ॥

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ॥ चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ १ ॥

वधोपायदर्शनं ॥ ३६ ॥ अरेःपुरइतिशौर्यातिशयोक्तिः उत्तरत्रचान्वयः ॥३७॥ रामाभिषेकाभ्युदयं रामाभिषेकमहोत्सवं। स्वराष्ट्रेत्यर्धमधिकं । वैदेह्याश्चविसर्जनमित्यन्तं "चकारभगवानृषिः" इतिपूर्वेणसम्बन्धनीयं ॥३८॥ सीताभूप्रवेशप्रभृत्युत्तरकाण्डकथामाह—अनागतंचेति। वाल्मीकिनामाभगवान्ऋषिः रामस्यवसुधातले। अनागतं भावियत्किंचिच्चरितमस्ति ब्राह्मणपुत्रजीवनाश्वमेधादिकं । तत् उत्तरेकाव्ये उत्तरकाण्डे । चकार प्रतिपादितवान्। यत्किंचिदित्यनेन सीताविसर्जनात्पूर्वकालस्यभूयस्त्वं अनन्तरकालस्याल्पत्वंचद्योत्यतइत्याहुः । एतदुत्तरकाण्डे विचारयिष्यते ॥३९॥ ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने तृतीयःसर्गः।

पूर्वस्मिन्सर्गेप्रतिपाद्यवैलक्षण्यमुक्तं । संप्रतिप्रबन्धवैलक्षण्यंकथ्यते । प्रबन्धस्यवैलक्षण्यंनाम परमाप्तप्रणीतत्वं । पुण्यश्लोकविषयत्वं महाजनपरिगृहीतत्वं प्रबन्धनायकश्लाघितत्वमित्यादि । परमाप्तप्रणीतत्वं पुण्यश्लोकविषयत्वंचानेनोच्यते ॥ प्राप्तराज्यस्य स्वीकृतराजभावस्य । पुरोहितादित्वाद्यक्प्रत्ययः । लोकरक्षणायरघुकुलेवतीर्णस्येत्यर्थः । रामस्य सकलगुणाभिरामस्य । अनेनप्रतिपाद्यमहिम्ना काव्यस्यआदरणीयतातिशयउक्तः । तदुक्तंवामनेन "उपश्लोक्यस्यमाहात्म्यादुज्ज्वलाःकाव्यसंपदः"इति । विचित्रपदं आश्चर्यपदसंनिवेशं । अनेन काव्यस्यात्मभूतारीतिरुक्ता । तदुक्तंवामनेन " रीतिरात्माकाव्यस्य विशिष्टपदरचनारीतिः । समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरुदिता वैदर्भीनामरीतिः " इत्यादिना । यद्वा। विविधानांविचित्राणां शब्दार्थालंकाराणां पदंस्थानं। कृत्स्नंचरितं प्रतिपादकग्रन्थसंदर्भम् । अनेन विज्ञानाद्यनेकफलसुपुरुषचरित्रत्वमुक्तं ॥ तथोक्तं [ प्राकृतं ] " परिवड्ढइ विण्णाणं संभाविज्जइ जसो विसप्पन्दि गुणा । सुव्वइसुपुरिसचरिअं किंतज्जेण णहरन्ति कव्वालावा " ॥ [ छा० ] " परिवर्धतेविज्ञानंसंभाव्यतेयशोविसर्पन्तिगुणाः ॥ श्रूयतेसुपुरुषचरितंकिंतद्येननहरंतिकाव्यालापाः" इति ॥ भगवान् ब्रह्मप्रसादलब्धदिव्यज्ञानवान्। आत्मवान् प्रबन्धरचनानुकूलयत्नवान्। ऋषिः " नानृषिःकुरुतेकाव्यं " इत्युक्तरीत्या काव्यनिर्माणपटुःवाल्मीकिः । चकार परोपकारायकृतवान्। उदारधीरितिपूर्वमुक्तं । प्राप्तराज्य-

**तिल०** अयोध्यायाश्चगमनं तदुद्देश्यकंगमनम् ॥ **शिरो०** भरतेनसमागमं हनुमद्द्वारासाक्षाच्चभरतसंमेलनम् ॥ ३८ ॥ इतितृतीयःसर्गः ॥ ३ ॥ **तीर्था०** "तेवयंभवतारक्ष्याभवद्विषयवासिनः" इतिऋषिभिरेवोक्तत्वात् रामस्यविषयेवसन्वाल्मीकिरित्यर्थोलभ्यते । चरितं चरित्रप्रतिपादकंकाव्यं ॥ **तिल०** अर्थवत् ध्वन्यलंकारादिप्रशस्तार्थं । आत्मवानितिपाठे अवहितान्तःकरणः । प्राशस्त्येमतुप् । आत्मशब्दश्चान्तःकरणवाची ॥ १ ॥

**[ पा० ]** १ ङ. झ. ट. अयोध्यायाश्चगमनंभरद्वाजसमागमं. प्रेषणंवायुपुत्रस्यभरतेनसमागमं. २ ङ. पदमर्थवत्.

**चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः ॥ तथा सर्गशतान्पञ्च षट्काण्डानि तथोत्तरम् ॥ २ ॥**

स्येत्यनेन रामराज्यकरणकालेरामायणकरणमितिगम्यते । एतज्ज्ञापनायैवपुनरारंभः ॥ १ ॥ अथप्रक्षेपभ्रंशसंभावनापरिहाराय नातिसंकोचविस्तरश्लोकसर्गकाण्डवत्तयाऽत्यन्तादरणीयत्वायचाह—चतुर्विंशदिति । ऋषिः वाल्मीकिः । "तपःस्वाध्याय—" इत्यारभ्य "तद्ब्रह्माप्यन्वमन्यत" इत्यन्तेन चिकीर्षिते रामायणाख्येप्रबन्धे श्लोकानांचतुर्विंशत्सहस्राण्युक्तवान् । इकारलोपश्छान्दसः । "पङ्क्तिविंशति—" इतिसूत्रे विंशतीत्येवनिपातनात् । "आदशतःसङ्ख्याः-सङ्ख्येयेवर्तन्ते । ततःपरंसंख्यानेसंख्येयेचवर्तन्ते" इति नियमात्सहस्रशब्दोत्रसंख्यापरः । चतुर्विंशतिसहस्रसङ्ख्याकश्लोकांश्चकारेत्यर्थः । तथेतिसमुच्चये । पञ्चसर्गशतांश्चकृतवान् । "शतायुतप्रयुताःपुंसिच" इतिलिङ्गानुशासनवचनात्पुँल्लिङ्गत्वं । सर्गशतंपञ्चेतिपाठे शतमित्येतत्पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतं" इतिसूत्रेशतमितिबहुत्वेनिपातनात्साधु । षट्काण्डानि उत्तरं च षड्भ्यःउत्तरं । सप्तमकाण्डंचकृतवान् । परत्वमोक्षप्रदत्वादीनांव्यक्ततयाप्रतिपादनेन सर्वोत्तरत्वादुत्तरमितिपृथगुक्तिः । यद्यप्याधुनिकेपाठेश्लोकानांसर्गाणांचविपर्यासोदृश्यते तथापि बहुचतुर्युगान्तरितत्वेनविप्लवोयुक्तः । यद्वा । संकल्पमात्रपरोयंश्लोकः । कृतवान् कर्तुमुद्युक्तइत्यर्थः । ग्रन्थसमाप्तिदशायां कापिवृद्धिरुपजातेतिनकोपिविरोधः । यद्वा । अन्यूनाभिप्रायमिदंवचनं । पञ्चशतसर्गेषुचतुर्विंशतिसहस्रश्लोकेषुचनन्यूनतेत्यर्थः । यद्वा । अल्पीयसीमधिकसंख्यामनादृत्य प्रकृष्टसंख्ययाव्यपदेशोयं । यथा "मन्वन्तरंतुदिव्यानांयुगानामेकसप्ततिः" इत्यमरः । "चतुर्युगसहस्राणिब्रह्मणोदिनमुच्यते" इत्युक्तब्रह्मदिनस्य चतुर्दशमन्वनुसारेणचतुर्दशधाविभागेमन्वन्तरस्य एकसप्तत्याधिक्यात् । वर्तमानसंख्यातु "बालकाण्डेतुसर्गाणांसप्तसप्ततिरीरिता । अयोध्याकाण्डगास्सर्गाश्शतंचैकोनविंशतिः । आरण्यकाण्डे सर्गाणांपञ्चसप्ततिरीरिता । किष्किन्धाकाण्डगास्सर्गास्सप्तषष्टिरुदीरिताः । सर्गाणांसुन्दरेकाण्डेत्वष्टषष्टिरुदीरिता । एकत्रिंशच्छतंसर्गादृश्यन्तेयुद्धकाण्डगाः । दशोत्तरशतंसर्गाउत्तरेकाण्डईरिताः [६४७] ॥ अत्रसर्गशतान्पञ्चेत्येतत् षट्काण्डानामेव नतुसोत्तराणां । षट्काण्डानीत्येतत्प्रत्यासत्तेः । चतुर्विंशतिसहस्रश्लोकात्मकतातु सप्तकाण्डापेक्षयेत्यप्याहुः । बालकाण्डगताःश्लोकाश्चमरारिप्रकीर्तिताः [ २२५६ ] । अयोध्याकाण्डगाःश्लोकाश्शुकभावाःप्रभाषिताः [४४१५] आरण्यकाण्डगाःश्लोकाःखगसाराःप्रदर्शिताः [ २७—३२ ] । किष्किन्धाकाण्डगाःश्लोकानीरचाराःप्रकीर्तिताः [ २६२० ] श्लोकास्तुसुन्दरेकाण्डेताननागाः प्रभाषिताः [ ३००६ ] युद्धकाण्डगताःश्लोकानिधिधीशाःप्रवेदिताः [ ५९९० ] । श्लोकाःस्युरुत्तरेकाण्डेवलरागाःप्रभाषिताः [ ३२३४ ] । श्लोकाः २४२५३ तत्रैवमवधातव्यं । बालकाण्डेत्रिंशेसर्गे "सतेनपरमास्त्रेणमानवेनसमाहतः" इत्यतःपूर्वमेकंसहस्रं । त्रिषष्टितमे "विश्वामित्रोमहातेजाभूयस्तेपे महत्तपः" इत्यतःपूर्वंद्वेसहस्रे । अयोध्याकाण्डेचतुर्दशे "चतुरश्वोरथःश्रीमान्निस्त्रिंशोधनुरुत्तमं" इत्यतः पूर्वं त्रीणिसहस्राणि । चतुश्चत्वारिंशे "वर्ततेचोत्तमांवृत्तिंलक्ष्मणोस्मिसदानघः" इत्यतःपूर्वं चत्वारिसहस्राणि । एकसप्ततितमे "द्वारेणवैजयन्तेनप्राविशच्छ्रान्तवाहनः" इत्यतःपूर्वं पञ्चसहस्राणि । एकोनशततमे "उटजेराममासीनंजटामण्डलधारिणं" इत्यतःपूर्वं षट्सहस्राणि । आरण्यकाण्डेद्वादशे "तेवयंवनमत्युग्रंप्रविष्टाःपितृशासनात्" इत्यतःपूर्वं सप्तसहस्राणि । सप्तचत्वारिंशे "ममभर्तामहातेजावयसा-

**तीर्था०** । श्रीमद्बालकाण्डेद्विसहस्रादुपरिद्विशतंचाशीतिर्ग्रन्थाः [ २२८० ] । श्रीमदयोध्याकाण्डेचतुस्सहस्राणिचतुश्शतानिपञ्चदशग्रन्थाः [ ४४१५ ] । श्रीमदारण्यकाण्डेद्विसहस्रादुपरिसप्तशतानिद्वात्रिंशद्ग्रन्थाः [२७३२] । श्रीमत्किष्किन्धाकाण्डेद्विसहस्रादुपरिषट्शतानिविंशतिर्ग्रन्थाः [ २६२० ] । श्रीमत्सुन्दरकाण्डेत्रिसहस्रादुपरिषट्ग्रन्थाः [ ३००६ ] । श्रीमद्युद्धकाण्डेपञ्चसहस्राणिनवशतानिनवतिश्चग्रन्थाः [ ५९९० ] । श्रीमदुत्तरकाण्डेत्रिसहस्राणिद्विशतंसप्तसप्ततिश्चग्रन्थाः [ ३२७७ ] । अत्रयदेतदधिकंसप्तसप्तत्युत्तरद्विशतं तत्त्रिष्टुब्जगत्यादिच्छन्दोवृत्तानामक्षराधिक्येनजनितं । उत्तरकाण्डस्यकाण्डैस्सहाकथनमादरातिशयेन । तथाहि । यद्यप्यत्रकाण्डेषुरामस्यपरत्वानुसन्धानं । तथाप्युत्तरकाण्डेप्राचुर्येणपरत्वाभिव्यक्तिः । कोसलानांसर्वेषामपिभगवतासहतल्लोकप्राप्तिश्चापरोतिशयोगम्यते । अतएवसर्वोत्तरत्वात्तस्योत्तरकाण्डत्वसंज्ञा । **कतक०** । उक्तसङ्ख्यापेक्षयाषट्त्रिंशत्सर्गसङ्ख्याधिक्यदर्शनात्चतुर्विंशत्सहस्रापेक्षयाश्लोकसङ्ख्यायाअप्याधिक्यदर्शनाच्चउत्तरकाण्डीयसर्गसङ्ख्यानुक्तेश्चप्रक्षिप्तोयंश्लोकःनत्वार्षः ॥ २ ॥

**[1]कृत्वापि तन्महाप्राज्ञः [2]सभविष्यं सहोत्तरम् ॥ चिन्तयामास को न्वेतत्प्रयुञ्जीयादिति प्रभुः ॥ ३ ॥**
**तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः ॥ [3]अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४ ॥**
**कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ ॥ भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५ ॥**
**स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ॥ वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६ ॥**

पञ्चविंशकः" इत्यतःपूर्वं चाष्टौसहस्राणि। किष्किन्धाकाण्डेचतुर्थे "ततःपरमसंहृष्टोहनूमान्प्लवगर्षभः" इत्यतः पूर्वं नवसहस्राणि। एकत्रिंशे "नरेन्द्रसूनुर्नरदेवपुत्रंरामानुजःपूर्वजमित्युवाच" इत्यतःपूर्वं दशसहस्राणि। किष्किन्धाकाण्डसमाप्तावेकादशसहस्राणि। सुन्दरकाण्डेसप्तविंशे "ततस्तस्यनगस्याग्रे" इत्यतः पूर्वं द्वादशसहस्राणि। षट्चत्वारिंशे "नावमान्योभवद्भिश्चहरिर्धीरपराक्रमः" इत्यतःपूर्वं त्रयोदशसहस्राणि। सुन्दरकाण्डसमाप्तौचतुर्दशसहस्राणि। युद्धकाण्डेअष्टाविंशे "रक्षोगणपरिक्षिप्तोराजाह्येषविभीषणः" इत्यतःप्राक् पञ्चदशसहस्राणि। पञ्चाशे "प्रदर्शनं चबुद्धिश्चस्मृतिश्चद्विगुणंतयोः" इत्यतः प्राक् षोडशसहस्राणि। उत्तरभागारंभे "कुंभकर्णहतंदृष्ट्वाराघवेणमहात्मना" इत्यतः प्राक् सप्तदशसहस्राणि। अशीत्यन्तेन अष्टादशसहस्राणि। द्वादशशततमे "मरणान्तानिवैराणि" इत्यतःप्राक् एकोनविंशतिस्सहस्राणि। युद्धकाण्डसमाप्तौ विंशतिस्सहस्राणि। उत्तरकाण्डेद्वाविंशे "ततःप्राचोदयत्सूतस्तान्हयान्रुचिरप्रभान्" इत्यतःपूर्वं एकविंशतिस्सहस्राणि। चत्वारिंशत्समाप्त्या द्वाविंशतिस्सहस्राणि। षट्सप्ततितमे "ब्राह्मणस्यचधर्मेणत्वयावैरक्षितस्सुतः" इत्यतःपूर्वं त्रयोविंशतिस्सहस्राणि। ततःप्रबन्धसमाप्त्याचतुर्विंशतिस्सहस्राणीत्याहुः ॥ २ ॥ अथास्यकाव्यस्यमहाजनपरिग्रहंवक्तुं पीठिकामारचयति—कृत्वेति। महाप्राज्ञः प्रकर्षेणजानातीतिप्रज्ञः प्रज्ञएवप्राज्ञः। "प्रज्ञादिभ्यश्च" इतिस्वार्थेऽण्प्रत्ययः। यद्वा। प्रज्ञा धीः। "धीःप्रज्ञाशेमुषीमतिः" इत्यमरः। साऽस्यास्तीति प्राज्ञः। "प्रज्ञाश्रद्धार्चाभ्योणः" इतिमत्वर्थीयोणप्रत्ययः। महांश्चासौप्राज्ञश्चेतिमहाप्राज्ञः। निरतिशयज्ञानसंयुतो वाल्मीकिः। सहोत्तरं रामाभिषेकादुत्तरेणवृत्तान्तेन सहितं विकल्पात्सहशब्दस्यसभावाभावः। सभविष्यं अश्वमेधोत्तरभाविवृत्तान्तसहितं। अश्वमेधपूर्वकालेअस्यकाव्यस्यप्रवृत्तत्वात्। तत् काव्यं कृत्वापि। एतत् काव्यं। प्रभुः समर्थः। "प्रभुःशक्ताधिपौ" इतिभास्करः। कः पुरुषः। प्रयुञ्जीयात् वाग्विधेयं कुर्यात् इतिचिन्तयामास। प्रयुञ्जीयादित्यत्रात्मनेपदाभावोऽनित्यत्वात्। सभविष्यमित्यत्र औणादिकेस्यप्रत्यये इण्निमित्तंषत्वं ॥ ३ ॥ ततः वाल्मीकिचिन्तानन्तरं। मुनिवेषौ वस्तुतोराजकुमारौ। कुशीलवौ कुशलवौ। ईकारश्छान्दसः। चिन्तयमानस्य। भावितात्मनः चिन्तितपरमात्मनः। तदनुकूलशिष्यलाभायकृतपरमात्मनमस्कारस्येत्यर्थः। तस्य महर्षेः। पादौ अगृह्णीतां रामायणग्रहणार्थमन्ववर्तेतामित्यर्थः ॥ ४ ॥ धर्मज्ञौ गुरुशुश्रूषाधर्मज्ञौ राजपुत्रौ आसमाप्तेः वीर्यवन्तौ। यशस्विनौ विद्यान्तराभ्यासजकीर्तियुक्तौ भ्रातरौ तुल्यस्वरौ स्वरसंपन्नौ शारीरवन्तौ। आश्रमवासिनौ स्वाश्रमवासित्वेनस्नेहविषयभूतौ। कुशीलवौ कुशलवौ ददर्श उपदेशयोग्यावाकलयांचकारेत्यर्थः। अनेनरामाभिषेकानन्तरकालेरामायणकरणं "प्राप्तराज्यस्यरामस्य" इतिसर्गादावुक्तं। अनन्तरंकुशलवोत्पत्तिरितिसूचितं। एतज्ज्ञात्वेववाल्मीक्याश्रमे सीतात्यक्तारामेण ॥ ५ ॥ वेदेषु ऋग्यजुःसामाथर्वणलक्षणेषु चतुर्षुविषये मेधाविनौ मेधाधारणक्षमाबुद्धिः "मेधाधीर्धारणक्षमा" इतियादवः। तद्वन्तौ "अ-

**तिल०** सहोत्तरमित्यत्र उत्तरपदार्थस्य स भविष्यमितिसविशेषणत्वेपि आर्षःसमासः। भविष्यंचसीताविसर्जनमारभ्येत्येके। तस्याभूप्रवेशोत्तरकालिकमित्यपरे। प्रयुञ्जीयादितिच्छान्दसं। **वि०** भविष्येणसहितंयदुत्तरं तेनसहितं ॥ ३ ॥ **तिल०** अगृह्णीतामितिच्छान्दसं। कुशीलवौ कुशलवौ। कुशशब्दस्यकुशीभावःपृषोदरादित्वात् ॥ ४ ॥ **तनि०** तुशब्देनइतरवैलक्षण्यमुक्तं। वेदेषुपरिनिष्ठितौ एतेनस्वरानुगुणार्थज्ञानवत्त्वंसामगानवेदित्वं तदादरेणैवगान्धर्वशास्त्राभ्यासश्चावगम्यते। वेदोपबृंहणंवेदार्थव्यक्तीकरणं। **तिल०** उपबृंहणं वेदस्यतत्तदर्थेतात्पर्यग्रहणं। तद्रूपायार्थायप्रयोजनाय। अनेनश्रुतितात्पर्यविषयीभूतार्थप्रतिपादकतयाप्रामाण्यमस्योपादेयत्वंचसूचितं ॥ **शिरो०** प्रभुः दुर्बोधवस्तुबोधनसमर्थः ॥ ६ ॥

**[ पा० ]** १ घ. ङ. झ. कृत्वातु. २ झ. सभविष्यसहोत्तरं. ३ झ. अगृह्णीतां.

**काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ॥ पौलस्त्यवधमित्येवं चकार चरितव्रतः ॥ ७ ॥**

स्मायामेधास्रजोविनिः "इतिमत्वर्थीयोविनिप्रत्ययः । अनेनाक्षरराशिग्रहणफलमध्ययनमुक्तं । परितोनिष्ठापरिनिष्ठा साङ्गाध्ययनं साऽनयोःसंजातेतिपरिनिष्ठितौ । तारकादित्वादितच् । अनेनविशेषणद्वयेनाधीतसाङ्गवेदत्वादापातप्रतिपन्नवेदार्थत्वाच्च तदुपबृंहणापेक्षित्वमुक्तं । तौ कुशलवौ । प्रभुः स्वतन्त्रोवाल्मीकिः । वेदोपबृंहणार्थाय वेदोपबृंहणरूपप्रयोजनाय वेदोपबृंहणरूपस्वग्रन्थपठनायेत्यर्थः । उपबृंहणंनाम नानाशास्त्रानुसारेणनिर्णीतवेदार्थप्रतिपादकोग्रन्थः । अग्राहयत अगृह्णात् । स्वार्थेणिच् ॥ ६ ॥ चरितव्रतः चरितव्रतत्वेननिरतिशयज्ञानोवाल्मीकिः । काव्यं कवेःकर्म । कवयतेवर्णयतीतिकविः । कविवर्णनइत्यस्माद्धातोरौणादिकइप्रत्ययः । लोकोत्तरवर्णननिपुणइत्यर्थः । यद्यपि "इगन्ताच्चलघुपूर्वात् "इतिअणाभवितव्यं तथापिब्राह्मणादित्वात्ष्यञ्इतिकाशिकाकारः । यद्वा तस्मादेवधातोः"ऋहलोर्ण्यत् "इतिण्यत्प्रत्ययेआदिवृद्धौचकाव्यमितिरूपं । दोषवर्जितं गुणालंकारसहितंशब्दार्थयुगलमित्यर्थः । तदुक्तंकाव्यप्रकाशे "तददोषौशब्दार्थौसगुणावनलंकृतीपुनःक्वापि " इति । वेदोपबृंहणत्वेपिकान्तासंमितत्वादस्यकाव्यत्वव्यपदेशः । तथाहि । त्रिविधःसंदर्भः प्रभुसंमितः सुहृत्संमितः कान्तासंमितश्चेति । शब्दप्रधानोवेदः प्रभुसंमितः । अर्थप्रधानइतिहासादिः सुहृत्संमितः । व्यङ्ग्यप्रधानंकाव्यं कान्तासंमितं । महदितिकाव्यविशेषणं । तस्यमहत्त्वमुत्तमकाव्यत्वं । तदप्युक्तंतत्रैव "इदमुत्तममतिशयिनिव्यङ्ग्येवाच्याद्ध्वनिर्बुधैःकथितः " इति । यद्वा महत्काव्यं महाकाव्यं । तल्लक्षणमुक्तंदण्डिना । "सर्गबन्धोमहाकाव्यमुच्यतेतस्यलक्षणं " इत्यादिना । ननुकाव्यंनारंभणीयं काव्यालापांश्चवर्जयेदितिनिषेधादित्याशङ्क्याह—रामायणमिति । रमयतीतिरामः । "रामोरमयतांवरः "इत्यार्षनिर्वचनात् । यद्वा । रमन्तेस्मिन्सर्वेजना इतिरामः । "अकर्तरिचकारकेसंज्ञायां "इति घञ् । सःअय्यतेप्रतिपाद्यतेऽनेनेतिरामायणं । अयगतावितिधातोः कर्मणिल्युट् । "पूर्वपदात्संज्ञायामगः " इतिणत्वं । समस्तगुणसंपन्नरामविषयत्वान्नास्यनिषिद्धत्वं किंतूपादेयत्वमेवेत्यर्थः । तदुक्तंभामहेन । "उपश्लोक्यस्यमाहात्म्यादुत्तमाः काव्यसंपदः "इति । प्रतिपादितंचोद्भटेन "गुणालङ्कारचारुत्वयुक्तमप्यधिकोज्ज्वलं । काव्यमाश्रयसंपत्त्यामेरुणेवामरद्रुमः "इति । रुद्रटेनाप्युक्तं "उदारचरितनिबन्धनात्प्रबन्धप्रतिष्ठा " इति । निषेधस्त्वसत्काव्यविषयइतिभावः । इदंचरामचरितप्रतिपादनमप्राधान्येन प्राधान्येनतु सीताचरितमेवप्रतिपाद्यतइत्याह । कृत्स्नंसीतायाश्चरितमिति कृत्स्नंरामायणंसीताचरितपरं । अतएवोक्तं श्रीगुणरत्नकोशे "श्रीमद्रामायणमपिपरंप्राणितित्वच्चरित्रे "इति । आभाणकश्च । "प्रातर्द्यूतप्रसङ्गेनमध्याह्नेस्त्रीप्रसङ्गतः । रात्रौचोरप्रसङ्गेनकालोगच्छतिधीमतां" इति । "उपायपुरुषकारयोर्मध्येउपायस्वरूपंभारतेदर्शितं । पुरुषकारस्वरूपं श्रीरामायण " इतिरहस्यपदवी । अतएव "कृपावानविकत्थनः "इत्याद्युक्तलक्षणधीरोदात्तरूपोरामः कुशलवाभ्यांरामायणंश्रुतवान् । रामायणस्यरामैकपरत्वेस्वेनैवसदसिश्रवणंनसंगच्छते सीतापरत्वेतुसंगच्छते । विरहिणः कामिनीकथाचरितश्रवणस्यस्वाभाव्यात् । एवंव्यञ्जनावृत्त्यासीतारामयोःप्रतिपादनमुक्त्वाशब्दवृत्त्यासिद्धमितिवृत्तमाह—पौलस्त्येति । पु-

**तनि०** कृत्स्नंसीतायाश्चरितमितिसीतायाःप्रबन्धनायिकात्वमुक्तं । तस्यैवोपपादकं रामायणमिति । कृत्स्नस्यसीताचरितत्वेपिरामायणव्यपदेशः रामचरितस्यतदुपयुक्तार्थत्वज्ञापनार्थः । रमायाइदंचरितंरामं तस्यायनमितिवाव्युत्पत्तिः । रामशब्दस्यलक्ष्मीपत्यादिशब्दवत्स्त्रीपुरस्सरनिर्देशःप्रबन्धस्यलक्ष्मीप्राधान्यज्ञापनार्थः । तेनसीतायाश्चरितमितिसुष्ठूक्तं । हारिद्रमाक्षिकादिशब्दवदण्प्रत्ययोपपत्तिर्द्रष्टव्या । "हारिद्रभङ्गायवितीर्णभङ्गं" इतिश्रीहर्षः । महत् नारायणकथापेक्षयामहत् । सापराधेष्वपिरक्षणप्रवणत्वप्रतिपादनान्महत्त्वं । "मातर्मैथिलिराक्षसीस्त्वयितदैवार्द्रापराधास्त्वयारक्षन्त्यापवनात्मजाल्लघुतरारामस्यगोष्ठीकृता । काकं तंचविभीषणंशरणमित्युक्तक्षमौरक्षतःसानःसान्द्रमहागसःसुखयतुक्षान्तिस्तवाकस्मिकी" इत्यभियुक्तोक्तेः । अनेनशरणागतिमन्त्रोपबृंहणत्वमस्यप्रबन्धस्यव्यञ्जितम् । अष्टाक्षरोपबृंहकश्रीभागवतादिषुहिभगवत्प्राधान्यं । अतएव "नारायणकथामिमां" इति तत्रोक्तं । **शिरो०** चरितव्रतः चरितं आचरितं व्रतं रघुनाथोपासनं येन स मुनिः । कृत्स्नं कृतां सुकृतिनां स्नः स्नानं सादरावलोकनादि यस्मिन् सुकृद्भिरादृतमित्यर्थः ॥ ७ ॥

[ पा० ] १ क. ङ. ञ. त्येवं.

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ॥ जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८ ॥
रसैः शृङ्गारकारुण्यहास्यवीरभयानकैः ॥ रौद्रादिभिश्च संयुक्तं काव्यमेतदगायताम् ॥ ९ ॥

लस्त्यस्यगोत्रापत्यं पौलस्त्यः । गर्गादित्वाद्यञ् । तस्य वधः । वधस्यफलत्वात्तेनव्यपदेशः । पौलस्त्यवधमधिकृत्यकृतोग्रन्थः पौलस्त्यवधः "अधिकृत्यकृतेग्रन्थे" इत्यण् । "लुबाख्यायिकाभ्यःप्रत्ययस्यबहुलं" इतितस्य लुप् । यद्वा अणिपुनरादिवृद्धौतदेवरूपं । वधप्रधानत्वादितिवृत्तस्यफलेनव्यपदेशः । तथाहि । पञ्चकाव्यप्रतिपाद्यानि । तदुक्तं "बीजबिन्दुपताकाख्याःप्रकरीकार्यमित्यपि । अर्थप्रकृतयःपञ्चपञ्चावस्थासमन्विताः" इति । "आरंभयत्नप्राप्त्याशानियताप्तिःफलागमः" इतिपञ्चावस्थाः । तत्र "स्वल्पोद्दिष्टःकार्यहेतुर्बीजंविस्तार्यतेतथा" । तच्चबालकाण्डोक्तंविष्णववतरणसीतापरिणयादि । "वस्तुनःसतिविच्छेदेबिन्दुरच्छेदकारणं" इति । यथाऽयोध्याकाण्डे अभिषेकवृत्तान्तेन रावणवधरूपकार्यविच्छेदेप्राप्तेवनवासकरणमच्छेदकारणं । "यदन्तरानुवृत्तंस्यात्सापताकेतिकीर्त्यते" । यथासुग्रीववृत्तान्तः । कथान्तरप्रसङ्गेनप्रकरीस्यात्प्रदेशभाक् । यथाविभीषणादिवृत्तान्तः । "समग्रफलसंपत्तिःफलयोगोयथोचितः" । यथारावणवधः । एवंफलत्वात्पौलस्त्यवधमितिनिर्देशः । इत्येवेत्यस्यायमर्थः पौलस्त्यवधव्याजेनाप्रधानरामचरितंप्रधानसीताचरितं कृतवानिति । यच्चकारतद्ग्रापयामासेतियोजना उत्तरश्लोकेऽगायतामित्यनुवादात् ॥ ७ ॥ यथोपदेशमगायतामित्याह—पाठ्ये इत्यादिश्लोकद्वयेन । पाठ्यं पाठः भावेण्यत् । केवलोच्चारणविशेषः । तदुक्तंभरतेन "षडलङ्कारसंयुक्तंकलाकालसमन्वितं । यत्पठ्यतेनाटकादौतत्पाठ्यमभिधीयते" इति । गेयं स्वरविशेषसमन्वितंगानं । भावेयत् । तत्रोभयत्र मधुरं श्राव्यं । लोकेकानिचित्पद्यानिपाठदशायांमधुराणि नगानदशायां अपराणिपुनर्गानदशायामेव नपाठदशायां इदंतूभयत्रापीत्यर्थः । इतःपरंत्रीणिक्रियाविशेषणानि । त्रिभिःप्रमाणैः गानध्वनिपरिच्छेदकैः त्र्यश्रचतुरश्रमिश्रसंज्ञकैः द्रुतमध्यविलंबितैर्वा । अन्वितं विशिष्टं । सप्तभिर्जातिभिर्बद्धं शुद्धविकृतसंकीर्णादिष्वष्टादशसुजातिषुप्रधानभूताभिःसप्तभिर्बद्धं । तदुक्तंशाण्डिल्येन "सवेगीतसमाधारोजातिरित्यभिधीयते । षाड्जीचैवार्षभीचैव गान्धारी... 

वेगीतसमाधारोजातिरित्यभिधीयते । षाड्जीचैवाथनैषादीधैवतीपाञ्चमीतथा । माध्यमीचैवगान्धारीसप्तमीत्वार्षभीमता" इति । तन्त्रीलयसमन्वितं । तन्त्रीशब्देनतन्त्रीयुक्तवीणालक्ष्यते । लयशब्देनतालवेणुमृदङ्गादीनामेककालविरामउच्यते । ताभ्यांसमन्वितम् ॥ ८ ॥ पुनःकाव्यविशेषणमाह—रसैरिति । आदिशब्देनबीभत्साद्भुतशान्तागृह्यन्ते । रसोनाम स्थायिभावरूपचित्तवृत्त्यभिव्यक्तिः । स्थायिभावश्चनवविधः । तदुक्तं "रतिर्हासश्चशोकश्चक्रोधोत्साहौभयंतथा । जुगुप्साविस्मयशमाःस्थायिभावाःप्रकीर्तिताः" इति । तदभिव्यक्तिश्चविभावादिभिः । तदुक्तं "विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः । आनीयमानःस्वादुत्वंस्थायीभावोरसःस्मृतः" इति । विभावादिस्वरूपंसंग्रहेणोक्तम् । "कारणान्यथकार्याणिसहकारीणियानिच । रत्यादेःस्थायिनोलोकेतानिचेन्नाट्यकाव्ययोः । विभावाअनुभावाश्चकथ्यन्तेव्यभिचारिणः । व्यक्तःशतैर्विभावाद्यैःस्थायीभावोरसःस्मृतः" इति । तत्र शृङ्गारो द्विविधः संभोगोविप्रलंभश्चेति । "संयुक्तयोस्तुसंभोगोविप्रलंभोवियुक्तयोः" इत्युक्तेः । अस्यशृङ्गारादिसर्वरससंयुक्तत्वंप्रदर्श्यते । तत्र "रामस्तुसीतयासार्धं" इत्यारभ्यसीतापहरणवृत्तान्तपर्यन्तेनसंभोगोदर्शितः । ततःपरेणविप्रलंभः । विकृताचारवाक्याङ्गविकारवेषैर्धूर्तप्रलापैश्चहास्यरसोव्यज्यते । सच शूर्पणखादिवृत्तान्तेन सुगमः । इष्टवियोगादनिष्टसंबन्धाद्वाकरुणः । सचदशरथादिवृत्तान्तेन । व्यवसायाऽविषादाऽसंमोहादिभिर्वीरः । यथालक्ष्मणादिवृत्तान्ते । पाटनताडनादिभीरौद्रः । यथारावणादिवृत्तान्ते । विकृतक्रूरदर्शनादिभिर्भयानकः । यथामारीचवृत्तान्ते । कुत्सितदर्शनादिभिर्बीभत्सः । यथाविराधकबन्धादिवृत्तान्ते । विचित्रशिल्पवाक्यादिभिरद्भुतः । यथारामरावणयुद्धादिषु । शान्तरसः श्रमणादिवृत्तान्तादौ । अलंविस्तरेण । अत्रकेचित् "शोकःश्लोकत्वमागतः" इत्युक्त्याऽस्मिन्प्रबन्धेशोकरसएवप्राधान्येनोच्यते अन्ये तदङ्गतयेत्याहुः । अन्येतु वीरएवप्रधानभूतः । पौल-

तीर्थी० पाठ्येगेयेचेत्यारभ्य रामदेहात्तथापराविल्यन्तंकुलकं ॥ ८ ॥

[ पा० ] १ घ. ङ. झ. भिर्युक्तं. २ ङ. झ. करुण.

**तौ तु गान्धर्वतत्त्वज्ञौ मूर्छनास्थानकोविदौ ॥ भ्रातरौ स्वरसंपन्नौ गन्धर्वाविव रूपिणौ ॥ १० ॥**
**रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ ॥ बिंबादिवोत्थितौ बिंबौ रामदेहात्तथाऽपरौ ॥ ११ ॥**
**तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् ॥ वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥१२॥**
**ऋषीणां च द्विजातीनां साधूनां च समागमे ॥ यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥**
**महात्मानौ महाभागौ सर्वलक्षणलक्षितौ ॥ १३ ॥**

स्त्यवधइतिकाव्यनामकरणादित्याहुः । वयंतुब्रूमः शृङ्गारएवप्रधानरसः "सीतायाश्चरितंमहत्" इत्युक्तेः । तथोक्तं "एकोरसोभवेदङ्गीवीरश्शृङ्गारयोर्द्वयोः । अङ्गान्यन्येरसाःसर्वेतस्यनिर्वहणोद्यताः" इति ॥ ९ ॥ अथकुशलवयोर्गानसामर्थ्यमाह—तौत्वित्यादिश्लोकद्वयेन । अस्यागायतामितिपूर्वेणसंबन्धः । गान्धर्वं गानशास्त्रम् "गान्धर्वंगानशासनं" इतिवैजयन्ती । तस्यतत्त्वंतात्पर्यार्थः । तत्जानीतइतिगान्धर्वतत्त्वज्ञौ । मूर्छना वीणादिवादनं । "वादनेमूर्छनानना" इति वैजयन्ती । स्थानानि मन्द्रमध्यतारारूपस्वरत्रयोत्पत्तिस्थानानि । यथोक्तंशाण्डिल्येन "यदूर्ध्वंहृदयग्रन्थेः कपालफलकादधः । प्राणसंचरणस्थानंस्थानमित्यभिधीयते । उरःकण्ठशिरश्चेतितत्स्वरास्त्रिविधाःस्मृताः । मन्द्रंमध्यंचतारंचनामतेषांयथाक्रमम्" इति । तेषुकोविदौ तद्विषयसमीचीनज्ञानयुक्तौ । एतेन गानशास्त्रज्ञानतदनुगुणवीणादिवादनतदनुगुणोच्चारणनिपुणावितिदर्शितं । भ्रातरावित्यनेन श्राव्यताहेतुसमस्वरत्वमुक्तं । स्वरसंपन्नौ शारीरयुक्तौ । अतएव रूपिणौ मनुष्यवेषधारिणौ । गन्धर्वाविवस्थितौ । रूपलक्षणसंपन्नौ नाटकलक्षणज्ञौ । गत्यर्थाज्ञानार्थाः । "रूपंस्वभावेशुक्लादौसौन्दर्येनाटकेपशौ" इतिभास्करः । गानकालिकाभिनयप्रकारज्ञावित्यर्थः । मधुरस्वरंयथाभवतितथाभाषितुंशीलमनयोरिति मधुरस्वरभाषिणौ । ताच्छील्येणिनिः । केवलभाषणकालेपिमधुरस्वरौ किमुतगानकालइतिभावः । उक्तसकलगुणसंपत्तिमूलंरामपुत्रत्वमाह—बिंबादिति । रामदेहरूपाद्बिंबात् तथा उत्थितौ उद्भूतौ । बिंबौ प्रतिबिंबाविवस्थितौ । यद्वा प्रतिमानिर्माणार्थचातुर्येणनिर्मिताप्रतिकृतिर्बिंबः रामदेहाख्यात्तस्मात्तथाउत्थितौउत्कीर्णौ । अपरौ बिंबाविवस्थितौ । "प्रतिबिंबेतत्कृतौचप्रतिकृत्यांचमण्डले । लाञ्छनेपिचबिंबोस्त्री"इतिभास्करः । एवंभूतौकुशलवावेतत्काव्यमगायतामितिसंबन्धः ॥ १० ॥ ११ ॥ नकेवलंतस्याध्ययनं धारणंप्रकाशनंचकृतमित्याह—तावित्यादि । सार्धश्लोकद्वयमेकान्वयं । क्रियाभेदात्तच्छब्दावृत्तिः । यद्वा राजपुत्रौसन्तौ । तौ मुनिपुत्रौ मुनिपुत्रवेषधरावित्यर्थः । अनिन्दितौ यथोपदेशंगानेननिन्दानर्हौ । यथोपदेशं गुरूपदेशमनतिक्रम्य तत्त्वज्ञौ पाठशुद्धिज्ञौ । समाहितौ सावधानौ । कुत्राप्यंशेविस्मृतिरहितावित्यर्थः । महात्मानौ महाबुद्धी । महाभागौ एतादृशगुणहेतुभूतमहाभाग्यौ । "भागाभाग्यांशतुल्यांशाः" इतिवैजयन्ती । सर्वलक्षणलक्षितौ लक्षितसर्वलक्षणौ ज्ञातसर्वशब्दलक्षणावित्यर्थः । तौ कुशलवौ । कार्त्स्न्येन धर्म्यं धर्मादनपेतं । उत्तममाख्यानं पुरावृत्तकथनरूपं । तद्रामायणाख्यंसर्वकाव्यं । वाचोविधेयं आवृत्तिबाहुल्येनवाग्वशवर्ति कृत्वा । ऋषीणांच साधूनां द्विजातीनांच समागमे सदसि ।

**तिल०** स्थानं च मूर्छनाचतयोस्समाहारः स्थानमूर्छनं तत्रकोविदौ ॥ **तीर्था०** गान्धर्वतत्त्वज्ञौ गान्धर्वनाम पदावस्थिततालपरिच्छेदयुक्तावधानेन प्रयुक्तषड्जादिस्वरसमुच्चयः । तदाह दत्तिलः । "पदस्थस्वरसंघातस्तालेनसुमितस्तथा । प्रयुक्तश्चावधानेनगान्धर्वमभिधीयते" इति । मूर्छनास्थानकोविदाविति । मूर्छनाषड्जादिस्वरसंपूर्णता । तदुक्तंशाण्डिल्येन "यत्रैवस्युःस्वराःपूर्णा मूर्च्छनासेत्युदाहृता ।" इति ॥ १० ॥ **तिल०** बिम्बात्सूर्यादेरुत्थितौबिंबाविवप्रतिबिम्बाविव तथारामदेहादुत्थितौ परौरामदेहावित्यर्थः ॥ ११ ॥ **तिल०** लक्ष्यलक्षणेतिपाठेसामुद्रिकविद्भिः लक्ष्यंपरीक्ष्यंलक्षणंसुलक्षणं तेन लक्षितौयुतौ । अतएवमहात्मानौ महाभागौ च । ऋषीणांद्विजातीनामितिगोबलीवर्दन्यायेन । साधूनांद्विजेतराणामपि यथोपदेशं जगतुः **शिरो०** तौ अमृतवदास्वादनीयगानविशिष्टौ । "तश्चोराम्रतपुच्छेषु" इति मेदिनी ॥ १३ ॥

[ पा० ] १ झ. स्थानमूर्छनकोविदौ. २ ञ. न्नावश्विनाविव. ३ क. घ. वोद्भृतौ. ४ क. च. छ. धर्माख्यानमनुत्तमम्. ५ झ. स्सुसमाहितौ.

तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ॥ आसीनानां समीपस्थाविदं काव्यमगायताम् ॥१४॥
तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ॥ साधुसाध्विति तावूचुः परं विस्मयमागताः ॥ १५ ॥
ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः ॥ प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १६ ॥
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ॥ चिरंनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् ॥ १७ ॥
प्रविश्य तावुभौ सुष्ठु तदा भावमगायताम् ॥ सहितौ मधुरं रक्तं संपन्नं स्वरसंपदा ॥ १८ ॥
एवं प्रशस्यमानौ तौ तपश्श्लाघ्यैर्महात्मभिः ॥ संरक्ततरमत्यर्थं मधुरं तावगायताम् ॥ १९ ॥
प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ ॥ प्रसन्नो वल्कले कश्चिद्ददौ ताभ्यां महायशाः ॥२०॥
[अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रमथापरः ॥ कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ॥२१॥
बृसीमन्यस्तदा प्रादात्कौपीनमपरो मुनिः ॥ ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ॥ २२ ॥
काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः ॥ जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदाऽन्वितः ॥ २३ ॥
यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथाऽपरः ॥ औदुंबरीं बृसीमन्ये स्वस्ति केचित्तदाऽवदन् ॥ २४ ॥
आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः ॥ ददुश्चैव वरान्सर्वे मुनयः सत्यवादिनः ॥ २५ ॥ ]
आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् ॥ परं कवीनामाधारं समाप्तं च यथाक्रमम् ॥ २६ ॥

जगतुः ॥ १२ ॥ १३ ॥ अथतस्यकाव्यस्यमहाजनपरिगृहीतत्वंदर्शयितुमाह—तावित्यादि । तौ कुशीलवौ । कदाचित् रामाश्वमेधकाले । भावितात्मनां निश्चितधियां । समेतानां अश्वमेधेसंमिलितानां । आसीनानां क्रियाकलापावसानेसुखमासीनानां । ऋषीणां । समीपस्थौसन्तौ । इदंकाव्यं अगायताम् ॥ १४ ॥ सामान्यतः काव्यप्रशंसामाह—तदिति । तत् काव्यं । श्रुत्वा । परं विस्मयं आगताः बाष्पपर्याकुलेक्षणाः सर्वेमुनयः । तौ साधुसाध्विति । ऊचुः प्रशशंसुरित्यर्थः ॥ १५ ॥ गातृप्रशंसामाह—तइति । धर्मवत्सलाः निर्मत्सराइत्यर्थः । तेसर्वेमुनयः प्रीतमनसःसन्तः । गायमानौ अतएवप्रशस्तव्यौ प्रशंसितुमर्हौ । कुशलवौ प्रशशंसुः ॥१६॥ काव्यप्रशंसाप्रकारमाह—अहोइति । गीतस्य गानस्य । माधुर्यं अहो आश्चर्यं । श्लोकानांतु माधुर्यं विशेषतः अहोआश्चर्यं । गानतोपिश्लोकमाधुर्यं अतिशयितमित्यर्थः । तमेवविशेषमाह—चिरेति । एतत् काव्यप्रतिपाद्यंकथाशरीरं । चिरनिर्वृत्तमपि बहुकालान्निष्पन्नमपि । प्रत्यक्षमिव प्रत्यक्षतयानुभूयमानमिव । दर्शितं अनेनकाव्येनबोधितं । पाकविशेषात्सद्यःसर्वार्थविशदतरंअवगमयतीदंकाव्यमित्यर्थः ॥ १७ ॥ गातृप्रशंसाप्रकारमाह—प्रविश्येति । सहितौ समलयादियुक्तावित्यर्थः । तावुभौ कुशीलवौ । तदा मुनिजनश्रवणकाले । भावं सुष्टुप्रविश्य रतिहासादिभावोयथाप्रकाशितोभवति तथावगाह्येत्यर्थः । स्वरसंपदा षड्जादिस्वरसंपदा । संपन्नं । अतएवमधुरंरमणीयं । रक्तं रागयुक्तं च यथाभवतितथा । अगायताम् ॥१८॥ प्रशंसाजनितोत्साहौपुनरतिशयेनागायतामित्याह—एवमिति । तपश्श्लाघ्यैः श्लाघ्यतपस्कैः । अनसूयकैरितियावत् । महात्मभिः महाबुद्धिभिः । विशेषज्ञैरितिभावः । तादृशैरेवमुक्तरीत्या । प्रशस्यमानौ । श्लाघ्यमानौ तौ । संरक्ततरं अतिशयेनसमीचीनरागयुक्तं । अत्यर्थं भृशं । मधुरंच यथाभवतितथा तावगायतां । क्रियाभेदात्तच्छब्दावृत्तिः ॥ १९ ॥ अथप्रीतिकारितयथोचितपारितोषिकप्रदानमाह—प्रीतइति । संस्थितः उत्थितः । "संस्थास्थितौव्यवस्थायां" इतिभास्करः । कलशं जलाहरणपात्रं प्रीत्यतिशयेनोत्थाय ददावित्यर्थः । महायशाः गानशास्त्रविषयकीर्तिमान् गीतितारतम्यज्ञइत्यर्थः ॥ २० ॥ ॥२१॥२२॥२३ ॥ २४ ॥ २५ ॥ एवंमुनिजनप्रशंसा-

**शिरो०** भावितात्मनां परिशीलितपरमात्मनां ॥ १४ ॥ **तीर्थी०** तत् गानम् ॥ १५ ॥ **तिल०** प्रशस्तव्याविति इडभावनलोपौ छान्दसौ । **शिरो०** धर्मवत्सलाः धर्माः धर्मस्वरूपाः वत्सलाः वात्सल्यरसवन्तः ॥ १६ ॥ **तीर्थी०** भावंप्रविश्यसुष्ठुगायतामितिसंबन्धः । भावपुरस्कारेण काव्यकर्तुरभिप्रायंहृदिनिधायशृङ्गारादिरसाविर्भावोयथाभवतितथा अगायतामित्यर्थः । मधुरं पाठतोगानतश्च ॥ १८ ॥ **शिरो०** तपश्श्लाघ्यैः ज्ञानजनितप्रशंसाविशिष्टैः ॥ १९ ॥

[ **पा०** ] १ ङ. च. छ. मध्येसभंसमीपस्थौ. २ ग. गायन्तौतौकुशीलवौ. ३ क. ख. ङ. चिरंनिर्वृत्त. ४ ङ. झ. तथा. ५ क. ग. ङ. च. छ. ज. झ. अन्यःकृष्णाजिनमित्यादिपञ्चश्लोकाः. ६ ग. ज. औदुंबरींबृसीमन्योजपमालांतथाऽपरः.

**अभिगीतमिदं गीतं सर्वगीतेषु कोविदौ ॥ आयुष्यं पुष्टिजनकं सर्वश्रुतिमनोहरम् ॥ २७ ॥**
**प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ ॥ रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥ २८ ॥**
**स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ ॥ पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ॥ २९ ॥**
**आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ॥ उपोपविष्टः सचिवैर्भ्रातृभिश्च समन्वितः ॥ ३० ॥**
**दृष्ट्वा तु रूपसंपन्नौ तावुभौ नियतस्तदा ॥ उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा ॥ ३१ ॥**
**श्रूयतामिदमाख्यानमनयोर्देववर्चसोः ॥ विचित्रार्थपदं सम्यग्गायिनौ तावचोदयत् ॥ ३२ ॥**
**तौ चापि मधुरं रक्तं स्वञ्चितायतनिःस्वनम् ॥ तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ ३३ ॥**
**ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ॥ श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि ॥ ३४ ॥**

मुक्त्वातदितरसकलजनप्रशंसामाह—आश्चर्यमित्यादिना। श्लोकत्रयमेकंवाक्यं । आख्यानंप्रबन्धविशेषः। "कथात्वाख्यायिकाख्यानं" इतियादवः। इतिहासइत्यर्थः । मुनिना वाल्मीकिना । संप्रकीर्तितं सम्यक्लक्षणवत्तयाप्रकर्षेणविस्तरेणकीर्तितं कथितं । कवीनांपरं आधारं। "काव्यंकाव्यस्यलक्षणं" इत्युक्तरीत्याकवीनां काव्यनिर्माणमूलमित्यर्थः । यथाक्रमं क्रममनतिक्रम्य समाप्तं मध्ये अविच्छिन्नमित्यर्थः । यथाकृतमितिपाठे यथाकर्तुमारब्धं तथासमाप्तमित्यर्थः । इदमाश्चर्यं आश्चर्यावहमित्यर्थः ॥ २६ ॥ प्रबन्धंप्रशस्यगातारौ प्रशंसति—अभिगीतमिति। हेसर्वगीतेषुकोविदौ समर्थौ । युवाभ्यां । आयुष्यं आयुर्वर्धकं । पुष्टिजनकं सत्यपिआयुषिकार्श्येतस्याकिंचित्करत्वात्पुष्टिकरं । सर्वाभिःश्रुतिभिः स्वरारंभकावयवैर्मनोहरं । तदुक्तं "प्रथमश्रवणाच्छब्दःश्रूयतेयःस्वमात्रतः । साश्रुतिः संपरिज्ञेयास्वरावयवलक्षणा"इति । इदंगीतं अभिगीतं शोभनंगीतं । अभिःपूजायां । यद्वा इदंगीतं सर्वगीतेषुअभिगीतमित्यन्वयः ॥ २७ ॥ प्रशस्यमानाविति । अस्यादावितिशब्दोऽध्याहार्यः। तत्र यज्ञवाटे । रथ्यासुराजमार्गेषुच सर्वत्रेत्थंप्रशस्यमानौतौ । कदाचित् । भरताग्रजः रामः । ददर्श भरतमुखेनददर्शेत्यर्थः ॥ २८ ॥ ततः दर्शनानन्तरं शत्रुनिबर्हणोरामः । पूजार्हौ स्वप्रबन्धगातृत्वेनश्लाघार्हौ । भ्रातरौकुशीलवौ । तुल्यवयोरूपादिमत्त्वेनाश्चर्यकरौ । स्ववेश्म स्वशालागृहं आनीय । नयतिर्द्विकर्मकः । पूजयामास श्लाघयामास ॥ २९ ॥ अथास्यप्रबन्धस्यप्रबन्धनायकभूतमहापुरुषपरिग्रहमाह—आसीनइत्यादिना । द्वयोरेकान्वयः । प्रभुः स्वामी । तदनुरूपतया काञ्चने सौवर्णे । दिव्ये स्वर्गाद्दशरथेनानीते । सिंहासने आसीनः सचिवैर्मन्त्रिभिर्भ्रातृभिश्च उपोपविष्टः परिवृतइत्यर्थः । "प्रसमुपोदःपादपूरणे" इतिद्विरुक्तिः । परंशत्रुंतापयतीतिपरंतपः । "द्विषत्परयोस्तापेः" इति खच् "खचिह्रस्वः" इत्युपधाह्रस्वः । "अरुर्द्विषदजन्तस्यमुम्" इतिमुमागमः । अनेनव्यासङ्गरहितत्वंसूचितं । नियतः अश्वमेधेदीक्षितः । स रामः । रूपसंपन्नौ भ्रातरौ दृष्ट्वा। लक्ष्मणादीनुवाच ॥ ३० ॥ ३१ ॥ देववर्चसोः देवतुल्यतेजसोः । रूपसंपत्तिरपि गीतिरस्यतासामग्रीतिभावः । अनयोः कुशीलवयोः संबन्धि । विचित्रार्थपदं इदमाख्यानं। श्रूयतां इत्युक्त्वेत्युपस्कार्यं । सम्यग्गायिनौ । अचोदयत् गानायप्रेरयामासेत्यर्थः ॥३२॥ सर्वाणिक्रियाविशेषणानि । मधुरं पाठतोगानतश्चमनोहरं । रक्तं रागवत् । स्वञ्चितः सुतरांपूजितः आयतोदीर्घः निस्वन आलापोयस्मिन् । तन्त्रीलयवत् तन्त्र्यारोपलयाभ्यांयुक्तं । अत्यर्थं भृशं । विश्रुतार्थं विस्पष्टार्थं ॥ ३३ ॥ गात्राणि सर्वावयवान् । हृदयानि गात्रान्तरवर्तीनिमनोधिष्ठानानि । मनांसिच ह्लादयत् सुखयत् । श्रोत्राश्रयसुखं श्रोत्रंकर्णशष्कुली तदाश्रयं श्रोत्रेन्द्रियं तत्सुखंतत्सुखकरं । तत् कुशलवकृतं । गेयं गानं । भावयत् । जनसंसदि सभायां । जनशब्दोमण्डपव्यावृत्त्यर्थः । बभौ प्रच-

**तिल०** अविगीतमितिपाठे अनवद्यं यथातथा गीतमित्यर्थः ॥ २७ ॥ **तिल०** "उपोपविष्टसचिवः" इति पाठे उपसमीपे उपविष्टाःसचिवायस्येत्यर्थः । "उपोपविष्टैः सचिवैः" इति पाठे समीपस्थैः मन्त्रिभिर्भ्रातृभिश्चसमन्वितइत्यर्थः ॥ ३० ॥ **तीर्था०** आत्मरूपसंपन्नौ आत्मसदृशौ । **तिल०** दृष्ट्वातुरूपसंपन्नावितिप्रचुरःपाठः ॥ ३१ ॥

**[ पा० ]** १ गायनौ. २ ग. ङ. उपोपविष्टैः. क. सुखोपविष्टः. ३ ज. दृष्ट्वात्म-. ४ घ–झ. पन्नौविनीतौभ्रातरावुभौ. ५ ज. ग्गायन्तौ समचोद–. ङ. झ. ग्गायकौ सम–. ६ ज. व्यक्तं. ७ ख. ङ–. झ. स्वचितायत. ८ घ. श्रोतुः सुखकरं.

इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ ॥
ममापि तद्भूतिकरं प्रवक्ष्यते महानुभावं चरितं निबोधत ॥ ३५ ॥
ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसंपदा ॥
स चापि रामः परिषद्गतः शनैर्बुभूषया सक्तमना बभूव ह ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्थः सर्गः ॥ ४ ॥

काशे अजृंभतेत्यर्थः ॥ ३४ ॥ उक्तमेवार्थंवृत्तान्तरेणसर्गान्तेसंगृह्णाति—इमावित्यादिश्लोकद्वयेन । इमौ मुनिवेषावपि पार्थिवलक्षणान्वितौ । कुशीलवावपि गायकावपि महातपस्विनौ महान्तौतपस्विनौ भवतः । तत् तस्मात् । ममापि प्रियाविरहक्लेशस्यापि । भूतिकरं श्रेयस्करं धारकमित्यर्थः । महाननुभावोयस्यतत् महानुभावं । चरितं सीताचरित्रमित्यर्थः । प्रवक्ष्यते आभ्यांव्यक्तं पठिष्यते । तन्निबोधत तच्छृणुतेत्यर्थः । अत्रपौराणिकाः । वक्तारौमहात्मानौवक्ष्यमाणंचमच्चरितंमहानुभावं । अतस्तन्निबोधतेत्याहुः । एवंह्यात्मप्रशंसास्यात्साचनयुक्ता अयंहिरामोधीरोदात्तः तस्यचाविकत्थनइतिलक्षणं । तस्यचस्वविषयप्रबन्धश्रवणंमहानुभावत्वोक्तिश्चनकथमप्युपपन्नं । लोकेहिक्षुद्रोपिकश्चित्स्वविषयप्रबन्धश्रवणेलज्जते । अतोऽन्यथायोजयन्त्याचार्याः । नायंप्रबन्धोरामचरित्रपरः किंतुसीताचरित्रपरः "सीतायाश्चरितंमहत्" इतिपूर्वमुक्तत्वात् । "श्रीमद्रामायणमपिपरंप्राणितित्वच्चरित्रे" इत्यभियुक्तवचनात् स्त्रीप्रसङ्गइत्याभाणकश्च । तद्विषयस्तुप्रबन्धोरामेणश्राव्यएव । विरहिणोहिकान्ताचरित्रगाथाःशृण्वन्तिश्रावयन्तिच । अतएव ममापिभूतिकरमित्युक्तं । विरहिणोपिमेसत्ताप्रदमित्यर्थः । यद्वा "अप्रमेयंहितत्तेजो यस्यसाजनकात्मजा" इत्युक्तरीत्याममाप्यतिशयावहमित्यर्थः । महानुभावमित्यस्यचप्रणयिन्यसन्निधानदशायामपिधारकमित्यर्थः । यद्वा । महानुभावं । "लघुतरारामस्यगोष्ठीकृता" इत्युक्तरीत्यास्वविषयेनिरवधिकापराधकारिराक्षसीरक्षणेन स्वस्मादप्यतिशयितवैभवमित्यर्थः । यद्वा । "दोषोयद्यपितस्यस्यात्सतामेतदगर्हितं" इतिमयोक्तं । अनयातु नकश्चिन्नापराध्यति" इति । अतोमत्तोप्युत्कृष्टचरितमित्यर्थः । यद्वा । स्वचरणेनिगडबद्धादेवस्त्रीचरणनिगडविच्छेदकारितयामत्तोप्याश्रितरक्षणेऽतिशयितत्वरायुक्तमित्यर्थः । यद्वा पितृत्वप्रयुक्तहितपरतयामयिसापराधविषयेकलुषधियि मातृत्वप्रयुक्तवात्सल्येन मामपिक्षमापयन्त्याश्चरितत्वेन महानुभावमित्यर्थः ॥ ३५ ॥ ततः श्रोतृप्रोत्साहनानन्तरं । रामस्यवचसाप्रचोदितौ नतुचेष्टयेत्यादरातिशयोक्तिः । तौ कुशीलवौ । मार्गविधानसंपदा देशी मार्गश्चेतिद्वौगानप्रकारौ । तत्रमार्गः सार्वत्रिकः । देशीकाचित्कः । तयोर्मध्ये मार्गनिर्वाहसामर्थ्या । अगायतां । स रामोपि । शनैः परिषद्गतः झटित्युत्थायगमनेपरिषदोप्युत्थानाद्रसभंगोभविष्यतीति मन्दंमन्दंसिंहासनादवतीर्य परिषदंप्राप्तः । "एकःस्वादुनभुञ्जीत"इतिन्यायादुन्नतसिंहासनावस्थानेनस्वात्मानमेकाकिनंमन्यमानःसभामध्यगतः । बुभूषया अनुबुभूषया श्रोत्रसुखानुभवेच्छयेत्यर्थः । यद्वा । बुभूषया भवितुमिच्छया कान्ताकथाश्रवणेनस्वसत्तालाभेच्छयेत्यर्थः । सक्तमनाः गानश्रवणासक्तचित्तः । बभूवह स्वशिष्योक्तप्रबन्धश्रवणेरामः स्वयमेवसादरंप्रसक्तइति मुनिस्तुष्यति । अत्रश्लोकद्वयेवंशस्थवृत्तं । "जतौतुवंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ ३६ ॥ इति श्रीगोविन्दविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्थःसर्गः ॥ ४ ॥

**तनि०** मुनीमननशीलौ । पृथिव्याःपतिःपार्थिवः । तस्य लक्षणानि असाधारणावयवसंस्थानविशेषाः तैरन्वितौ । कुशीलवौ गायकौ । इमौअतिबालौ । क्वमुनित्वं क्वराज्यार्हता क्वमहातपस्वित्वं क्वगायकत्वं क्वैमेगुणाः क्वातिबालाविमाविति विरोधालंकारध्वनिः । गायमानौ चापि महातपस्विनावित्याश्चर्यालंकारध्वनिश्च । तपस्विनौ कुशीलवावित्यनेन गानस्य वंशपरंपरागतत्वाभावेन तत्प्रयुक्ताहंकाराद्यभावः केवलेश्वरप्रसादसिद्धत्वंचव्यञ्जितम् । ममापिभूतिकरं उभयविभूतिनायकस्यापि भूतिकरं संपत्करं किमुतान्येषां । यद्वा तदभावेममापिसत्तानिर्वहतीत्यर्थः । महानुभावं महामहिमवत् ममापि महानुभावमिति "सोअङ्गवेदयदिवानवेद" इत्युक्तरीत्यादुर्विज्ञेयमहिमयुक्तमित्यर्थः ॥ ३५ ॥ **विषम०** प्राकृतावलंबिगानं देशी संस्कृतावलंबितु मार्गः । स्वयं श्रवणेचोत्तरोत्तरं लोकानामुपादेयत्वबुद्ध्या श्रवणेप्रवृत्तौतस्यस्थिरत्वंभवतीतितदाशयः ॥ ३६ ॥ **इति चतुर्थः सर्गः ॥ ४ ॥**

**[ पा० ]** १ ङ. ज. झ. प्रचक्ष्यते.

इदंच तपस्स्वाध्यायेत्यारभ्यसर्गचतुष्टयंमहत्परिग्रहसिद्धयेउक्तवैलक्षण्यत्रयप्रतिपादनपरत्वेनप्रबन्धोपोद्घातत्वात् श्रीरामायणान्तर्गतं कथाशरीरानुप्रविष्टप्रस्तावनाग्रन्थवत्। ननु रामायणनिर्माणानन्तरभाविनः कथाशरीरस्यास्य कथंतत्पूर्वभावइतिचेन्न। अनन्तरभावित्वेपित्रिकालज्ञेनमहर्षिणाप्रथमंतन्निर्माणसंभवात्। नन्वात्मप्रशंसापरमिदंसर्गत्रयंकथमृषिः स्वयमेषवक्तुमर्हतीतिचेन्न। अन्यापरिज्ञातस्यैतस्यवृत्तान्तस्यप्रेक्षावत्प्रवृत्त्यर्थमादाववश्यंवक्तव्यत्वात्। यद्वा। सर्गत्रयमिदंकेनचिद्वाल्मीकिशिष्येणरामायणनिर्वृत्त्यनन्तरंनिर्मायवैभवप्रकटनायसंगमितं। यथायाज्ञवल्क्यस्मृत्यादौ तथैवतत्रविज्ञानेश्वरेणव्याकृतं। नन्वेतस्यसर्गत्रयस्यरामायणादित्वेकुशलवाभ्यांएतद्गानेप्रथमंक्रियमाणेतौरामेणादावेवस्वपुत्राविति परिज्ञातौस्यातां। तथाच। तदैवसीतानयनापत्तिः। "बिंबादिवोत्थितौबिंबौरामदेहात्तथापरौ। तौराजपुत्रौ" इत्यादिनाहिरामपुत्रत्वमनयोःसूच्यते तस्मादिदमसंगतमितिचेन्न। सीतापुत्रत्वादेरत्राकथनात्। रामसादृश्यमात्रस्यराजपुत्रान्तरेष्वपिसंभवात्। अयंचप्रबन्धोवेदोपबृंहणरूपोवेदान्तार्थमुपबृंहयति। "प्रायेणपूर्वभागार्थोधर्मशास्त्रेणकथ्यते। इतिहासपुराणाभ्यांवेदान्तार्थःप्रकाश्यते" इति वचनात्। तत्र "यतोवाइमानिभूतानिजायन्तेयेनजातानिजीवन्तियत्प्रयन्त्यभिसंविशन्तितद्विजिज्ञासस्वतद्ब्रह्म" इति श्रुतं। तत्किंजगज्जन्मादिकारणंब्रह्मविष्णुरुतब्रह्मरुद्रादिष्वन्यतमइत्यपेक्षायांरामत्वेनावतीर्णोविष्णुरेववेदान्तवेद्यंपरब्रह्मेत्युच्यते। "उपक्रमोपसंहारावभ्यासोपूर्वताफलं। अर्थवादोपपत्तीचलिङ्गंतात्पर्यनिर्णये" इत्युक्तषड्विधतात्पर्यलिङ्गसंभवात्। तथाहि। उपक्रमेतावत् "कोन्वस्मिन्—" इत्यादिनावेदान्तोदितसकलगुणसंपन्नःकिंविष्णुरुतान्योब्रह्मादिष्वन्यतमइतिवाल्मीकिनापृष्टे "इक्ष्वाकुवंशप्रभवोरामः—" इत्यादिनारामत्वेनावतीर्णो विष्णुरेवेतिनारदेनोक्तं। उपसंहारेचचतुर्मुखःप्राह। "तवाहंपूर्वकेभावेपुत्रःपरपुरंजय। संक्षिप्यचपुरालोकान्माययास्वयमेवहि। महार्णवेशयानोप्सुमांत्वंपूर्वमजीजनः। पद्मेदिव्येर्कसंकाशेनाभ्यामुत्पाद्यमामपि। प्राजापत्यंत्वयाकर्ममयिसर्वंनिवेशितं" इत्यादिनासर्वजगत्कारणप्रजापतिजनकत्वेनसकलजगत्कारणंब्रह्मविष्णुरेवेत्युक्तं। अभ्यासश्चतस्यैवदृश्यते बालकाण्डे। "एतस्मिन्नन्तरेविष्णुरुपजातोमहाद्युतिः। शङ्खचक्रगदापाणिःपीतवासाजगत्पतिः" इति जगत्कारणत्वमुक्तं। ततउत्तरत्रदेवाः। "त्वंगतिःपरमादेवसर्वेषांनः परंतप" इत्याहुः। तेनपरत्वासाधारणं सर्वशरण्यत्वमुक्तं। ततउत्तरत्र। "ततोदेवर्षिगन्धर्वाःसरुद्राःसाप्सरोगणाः। स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनं" इति सर्वस्तुत्यत्वमुक्तं। ततोविश्वामित्रः "अहंवेद्मिमहात्मानंरामंसत्यपराक्रमं। वसिष्ठश्चमहातेजायेचान्ये तपसिस्थिताः" इति। "वेदाहमेतंपुरुषंमहांतं तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसानाशकेन" इतिश्रुत्युक्तरीत्या महापुरुषत्वं तपोबलंविनातस्यदुर्ज्ञेयत्वंचाह। सीताविवाहेवसिष्ठोपि "अव्यक्तप्रभवोब्रह्माशाश्वतोनित्यअव्ययः। तस्मान्मरीचिःसंजज्ञेमरीचेःकाश्यपःसुतः" इति सर्वमूलकारणत्वंप्राचीकशत्। परशुरामोपि "अधिकंमेनिरेविष्णुंदेवाःसर्षिगणास्तदा" इतिसर्वाधिकत्वंनिदर्शितवान्। अयोध्याकाण्डे। "सहिदेवैरुदीर्णस्यरावणस्यवधार्थिभिः। अर्थितोमानुषेलोकेजज्ञेविष्णुःसनातनः" इति सनातनत्वमुक्तं। उत्तरत्र "आकाशप्रभवोब्रह्माशाश्वतोनित्यअव्ययः" इत्याकाशशब्देनस्वयंप्रकाशत्वं व्यापकत्वं चाह। आरण्यकाण्डे मारीचेन "अप्रमेयंहितत्तेजोयस्यसाजनकात्मजा" इतिपरिच्छेदातीतमहिमत्वमुक्तं। किष्किन्धाकाण्डेतारावचनं। "निवासवृक्षः साधूनामापन्नानांपरागतिः। आर्तानांसंश्रयश्चैवयशसश्चैकभाजनं। ज्ञानविज्ञानसंपन्नोनिदेशेनिरतःपितुः। धातूनामिवशैलेन्द्रोगुणानामाकरोमहान्" इति। "त्वमप्रमेयश्चदुरासदश्चजितेन्द्रियश्चोत्तमधार्मिकश्च। अक्षय्यकीर्तिश्चविचक्षणश्चक्षितिक्षमावान्क्षतजोपमाक्ष" इतिच। अनेनचज्ञानानन्दादिसमस्तकल्याणगुणाकरत्वमुक्तं। सुन्दरकाण्डे "ब्रह्मास्वयंभूश्चतुराननोवारुद्रस्त्रिनेत्रस्त्रिपुरान्तकोवा। इन्द्रोमहेन्द्रःसुरनायकोवा त्रातुंनशक्तायुधिरामवध्यं" इतिसर्वसंहर्तृत्वंद्योतितं। उत्तरत्र। "किंवैष्णववंवाकपिरूपमेत्यरक्षोविनाशायपरं सुतेजः। अनन्तमव्यक्तमचिन्त्यरूपंस्वमाययासांप्रतमागतंवा। द्वितीयो वाकारोऽवधारणार्थः। अनेनानन्तरूपत्वमुक्तं। युद्धकाण्डे विष्णुरेवकथंजगत्कारणं अन्येषामपि "हिरण्यगर्भस्समवर्तताग्रे" "यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएवकेवलः"। "इन्द्रोमायाभिःपुरुरूपईयते" इत्यादिनातत्त्वश्रवणादि-

त्याशङ्क्य तेभ्यःसर्वेभ्यःश्रेष्ठत्वप्रतिपादनाद्धिरण्यगर्भशिवेन्द्रादिशब्दाःसद्भ्रह्मात्मशब्दवद्विष्णुपराएवेत्याशयेनोच्यते । "व्यक्तमेषमहायोगीपरमात्मासनातनः । अनादिमध्यनिधनोमहतःपरमोमहान् । तमसःपरमो धाताशङ्खचक्रगदाधरः । श्रीवत्सवक्षानित्यश्रीरजय्यः शाश्वतोध्रुवः" इति । अनेनचपरमात्मत्वश्रीपतित्वादिकमुक्तं । उत्तरत्र "भवान्नारायणोदेवःश्रीमांश्चक्रायुधोविभुः । एकशृङ्गोवराहस्त्वंभूतभव्यसपत्नजित्" इत्यादि । अनेनतस्यनारायणशब्दवाच्यत्वमुक्तं । अपूर्वताचप्रमाणान्तराप्राप्तिः । नहि परतत्त्वस्यविष्णुत्वं प्रमाणान्तरादवगन्तुंशक्यं । फलंच भगवत्सालोक्यादिकमित्यन्तेसुव्यक्तं । अर्थवादोपपत्तीच बालकाण्डेदर्शिते । "इमेद्वेधनुषीश्रेष्ठे" इत्यादिनाऽर्थवादमुक्त्वा जृंभितंतद्धनुर्दृष्ट्वाशैवंविष्णुपराक्रमैः । अधिकंमेनिरेविष्णुंदेवाःसर्षिगणास्तदा" इत्यादिनाब्रह्मप्रमुखैस्सर्षिगणैर्देवैर्मीमांसापूर्वकंविष्णुरुद्रयोर्मध्येविष्णोराधिक्यनिर्णयोक्तेरुपपत्तिरुक्ता । नचवाच्यं मेनिरइतिवचनात् "महाशूरतरस्तथा" इतिवरदानकृतमिदमाधिक्यमिति । तथात्वे तस्यरोषानुपपत्तेः । "धनूरुद्रस्यसंक्रुद्धः" इतिह्युक्तं । किंचागस्त्याश्रमे "सतत्रब्रह्मणःस्थानंविष्णोःस्थानंतथैवच । अग्नेःस्थानंमहेन्द्रस्यस्थानंचैवविवस्वतः । सोमस्थानंभगस्थानंस्थानंकौबेरमेवच" इत्यादिनाब्रह्मादीनांअगस्त्योपास्यत्वमुक्त्वा रुद्रस्यतदकथनादपूज्यत्वमुच्यते । नचेमान्यगस्त्यपूजकब्रह्मादिस्थानानीतिवाच्यं । असंभवात् । "अत्रदेवाःसगन्धर्वास्सिद्धाश्चपरमर्षयः । अगस्त्यंनियताहारंसततंपर्युपासते" इतिवचनंब्रह्मादिव्यतिरिक्तकेवलदेवविषयं । किंच । यथा गृहस्थस्यगृहेदेवगृहसत्त्वेगृहस्थस्यैवपूजकत्वंस्वरसतःप्रतीयते । एवमेवात्रापि नापलापावकाशः । किंच । दक्षयज्ञवधे "यस्माद्भागार्थिनोभागःकल्पितो नैवमेसुराः । वराङ्गानिमहार्हाणिधनुषाशातयामिवः" इतिरुद्रस्ययज्ञभागाकल्पनादपूज्यत्वादत्रतस्यस्थानानिर्देशः । ननु यदिविष्णुःपरादेवता कथं तर्हितस्यरामत्वेनजन्मेतिचेन्न । "अजायमानोबहुधाविजायते" इत्युक्तरीत्या लोकानुजिघृक्षाकृतंतदितिचोद्यानवकाशात् । मोक्षप्रदत्वंचपरदेवताऽसाधारणमत्रोच्यते । "यागतिर्यज्ञशीलानामाहिताग्नेश्चयागतिः । अपरावर्तिनांयाचयाचभूमिप्रदायिनां । मयात्वंसमनुज्ञातो गच्छलोकाननुत्तमान्" इति । अत्रापरावर्तित्वंपुनरावृत्तिशून्यत्वं । मुक्तिरितियावत् । "नचपुनरावर्तते" इतिश्रुतेः । नच रणादपलायनमुच्यतइतिवक्तुंशक्यते तस्यस्वतस्सिद्धत्वेनतत्फलस्यानुग्राह्यत्वात् । तथाच यज्ञादिफलावधिभूतांमुक्तिंप्राप्नुहीत्यर्थः । अतएवनृसिंहपुराणे "मत्कृतेनिधनंयस्मात्त्वयाप्राप्तंद्विजोत्तम । तस्मात्त्वंमत्प्रसादेनविष्णुलोकमवाप्स्यसि" इति । एवमुपक्रमादिषड्विधतात्पर्यलिङ्गैर्वेदान्तवेद्यंपरतत्त्वंविष्णुरेवेतिश्रीरामायणेनोपबृंह्यते । एवमेवान्तेब्रह्माप्याह "अस्याःपरिषदोमध्येयद्ब्रवीमिनिबोधतत् । एतदेवहिकाव्यंतेकाव्यानामुत्तमंश्रुतं । सर्वविस्तरतोराजन्व्याख्यास्यतिनसंशयः । आदिकाव्यमिदंरामत्वयिसर्वप्रतिष्ठितं । नह्यन्योऽर्हतिकाव्यानांयशोभाग्राघवादृते" इति । एवंस्थितेयत्केनचिन्नवीनेनजल्पितं व्यञ्जनावृत्त्याशिवपरंरामायणमितितदपहास्यमेव । नह्यन्योर्हतीतिप्रतिषिद्धरुद्रस्यप्रतिपाद्यकोट्यन्तर्भाववचनस्यकेवलबालिशप्रलपितत्वात् । यच्चरामेणादित्योपस्थानादिकंकृतंतत्सर्वविश्वामित्राद्युपासनवन्मनुष्यभावनानुसारेणेतिविज्ञेयं । विशेषतश्चतत्रतत्रवक्ष्यामः । "श्रीविष्णोःप्रथमेकाण्डेजगज्जननहेतुता । द्वितीयेस्थितिहेतुत्वंतृतीयेमोक्षदायिता । चतुर्थेगुणसंपत्तिःपञ्चमेसर्वहन्तृता । षष्ठेवेदान्तवेद्यत्वंसप्तमेस्रष्टृहेतुता । एवंविष्णुःपरंतत्त्वंरामात्मेतिसुनिश्चितम् । श्रीशैलपूर्णाद्यतिशेखरेणश्रुतान्पुराष्टादशधाप्रभिन्नान् । रामायणार्थान्क्रमशःकरोमिव्यक्ताञ्छठारातिगुरूपदिष्टान्" । गतएकोर्थः । द्वितीयस्तु एवंभूतंपरतत्वंकेनप्राप्यतइत्याकाङ्क्षायांतत्प्राप्त्युपायभूताशरणागतिं "योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै । तंहदेवमात्मबुद्धिप्रसादंमुमुक्षुर्वैशरणमहंप्रपद्ये" इतिश्रुतिमुपबृंहयन् वाल्मीकिर्ह्यस्मिन्रामायणे उपक्रमप्रभृत्युपसंहारान्तमनेकाधिकारिफलविशेषादिप्रदर्शनमुखेनाखिलफलसाधनतयाप्रतिपादयति । तथाहि । उपक्रमेतावत् "एतस्मिन्नन्तरेविष्णुरुपयातोमहाद्युतिः । शङ्खचक्रगदापाणिःपीतवासाजगत्पतिः" इति सर्वेशेषीसर्वेश्वरोरक्षापेक्षाप्रतीक्षोरक्षणसमयोलब्धइतिसमुद्भूतौज्ज्वल्योरक्षणोपकरणैःसहसन्नद्धोभ्येत्यतस्थौ । तदा । "देवगन्धर्वयक्षाश्चततस्त्वांशरणंगताः" इति रावणवधरूपफलार्थंब्रह्मरुद्रादिदेवगणशरणागतिरुक्ता । ततस्त्रिशंकुशुनःशेफादिवृत्तान्तेषुविश्वामित्रादिव्यापारविशेषानुदीर्य शरणागतरक्षणंपरमोधर्मः सम-

र्थकारुणिकविषयाशरणागतिः फलाविनाभूतेतिप्रदर्शितं। ततश्च "सभ्रातुश्चरणौगाढंनिपीड्यरघुनन्दनः। सीतामुवाचातियशाराघवंचमहाव्रतं"इति पुरुषकारपुरस्करणपुरस्सराशरणागतिःकार्येत्युदीरितं । ततोभरतः "शेष्येपुरस्ताच्छालायायावन्मेनप्रसीदति"इतिरामाभिषेकफलायशरणवरणमकरोत् । अत्र रावणवधायकृतदेवगणप्रपत्तिफलदानायनिर्गमनात् तदानींरामस्स्वप्रतिनिधिभूतपादुकाप्रदानेन तत्सफलंकृत्वापश्चाद्देवगणमनोरथपूरणानन्तरमात्मानंअभ्यषिञ्चत् । अतोनशरणागतिवैफल्यंचोद्यं । अथदण्डकारण्यवासिभिर्विरोधिनिरसनायशरणागतिरनुष्ठिता । "तेवयंभवतारक्ष्याभवद्विषयवासिनः । नगरस्थोवनस्थोवात्वंनोराजाजनेश्वर"इति । अत्रकोसलजनपदवासिनामिवभगवद्विषयवासएवशरणागतिः । तदनन्तरं"सपित्राचपरित्यक्तःसुरैश्चसमहर्षिभिः । त्रींल्लोकान्संपरिक्रम्यतमेवशरणंगतः । सतंनिपतितंभूमौशरण्यःशरणागतं । वधार्हमपिकाकुत्स्थःकृपयापर्यपालयत्"इति काकवृत्तान्तेनाग्रतःपतनमेवशरणागतिरित्यदर्शि । तदनुसुग्रीववृत्तान्तेन "कृतापराधस्यहिते नान्यत्पश्याम्यहंक्षमं । अन्तरेणाञ्जलिंबद्धालक्ष्मणस्यप्रसादनात्" इतिशरणागतिरञ्जलिरूपोक्ता । अथसीतावचनेन । "मित्रमौपयिकंकर्तुंरामःस्थानंपरीप्सता । वधंचानिच्छताघोरंत्वयासौपुरुषर्षभः । विदितःसहिधर्मज्ञःशरणागतवत्सलः । तेनमैत्रीभवतु तेयदिजीवितुमिच्छसि"इत्यनेनानुकूल्यमेवशरणागतिरित्यबोधि । उपरि "सोहंपरुषितस्तेनदासवच्चावमानितः । त्यक्त्वापुत्रांश्चदाराश्चराघवंशरणंगतः" इति विभीषणशरणागत्याविरोधिपरित्यागपूर्वकत्वमुक्तं । "ततःसागरवेलायांदर्भानास्तीर्यराघवः । अञ्जलिंप्राङ्मुखःकृत्वाप्रतिशिश्येमहोदधेः" इतिरामशरणागत्यायोग्यस्यनायोग्यताऽन्वेष्टव्या । अयोग्यस्यचनयोग्यतेत्युक्तं । अशुचिभूतलङ्कानिर्गतमात्रएवहिविभीषणश्शरणमवृणोत् । रामशरणागतेःफलाभावः समर्थकारुणिकविषयत्वाभावादित्याहुः । उत्तरत्र "अभियाचामवैदेहीमेतद्धिममरोचते । राघवाद्धिभयंघोरं राक्षसानामुपस्थितं" इतित्रिजटावचनानुमतिमात्रेणहनुमद्भयात् सर्वासांरक्षितत्वकथनादन्यविषयेऽन्येनापिकृताशरणागतिः फलवतीतिनिदर्शितं । विभीषणशरणागत्यैवतत्सचिवानांरक्षणात् शरणागतसंबन्धिनोपिभगवत्कटाक्षपात्रभूताएवेतिनिरणायि । एवमन्यत्रापिद्रष्टव्यं । एवमुपक्रमप्रभृत्योपसंहारात् प्रतिपादिताशरणागतिरेवसर्वफलप्रदा सैवमुक्तेरपिहेतुरित्युक्तं । विशेषस्तुतत्रप्रकरणेप्रपञ्चयिष्यते ॥ २ ॥ अस्यचोपायस्यप्राप्यंभगवत्प्राप्तिपूर्वकंतत्कैङ्कर्यमेवेतिरामायणेनप्रतिपाद्यते । तथाहि । उपक्रमेदेवजातीयशरणागतेरामकैङ्कर्यप्रधानफलमित्युच्यते । अप्सरःप्रभृतिष्ववतीर्यतैस्तदनुवर्तनोपदेशात् । रावणवधस्त्वानुषङ्गिकः । लक्ष्मणोपिप्रपद्याह "अहंसर्वंकरिष्यामि जाग्रतःस्वपतश्चते । भवांस्तुसहवैदेह्यागिरिसानुषुरंस्यते"इति । तेनसर्वदेशसर्वकालसर्वावस्थोचितसर्वकैङ्कर्यफलमितिव्यञ्जितं । भरतोपिरामकैङ्कर्यायैवतदभिषेकंप्राश्यपादुकाविषयकैङ्कर्यक्रमेणमनीषितमलभत । दण्डकारण्यवासिनांशरणागतेरपिवाचिकादिरूपमेवकैङ्कर्यफलमित्यवगम्यते । "तेतंसोममिवोद्यन्तंदृष्ट्वावैधर्मचारिणः । मङ्गलानिप्रयुञ्जानाःप्रत्यगृह्णन्दृढव्रताः" इत्युक्तेः । सुग्रीवविभीषणादिप्रपत्तेरपिमुख्यं फलंकैङ्कर्यमन्यदानुषङ्गिकमितिस्पष्टं । "अथहरिवरनाथःप्राप्यसंग्रामकीर्तिंनिशिचरपतिमाजौयोजयित्वाश्रमेण । गगनमतिविशालंलङ्घयित्वाऽर्कसूनुर्हरिवरगणमध्येरामपार्श्वंजगाम । परित्यक्तामयालङ्कामित्राणिचधनानिच । भवद्गतंमेराज्यंचजीवितंचसुखानिच" इत्यादिना । एवंप्राणार्थिनःकाकस्यप्राणप्रदानेनतत्प्रपत्तिःसफला । असत्प्रकृतेरस्यपुनरप्येवंदुरितप्रवृत्तिर्माभूदितिशिक्षणरूपानुग्रहायैकाक्षिनिरसनेनास्त्रंनिवर्तयामास । यथा परशुरामंप्रतिप्रयुक्तमस्त्रं तस्मिन्प्रातिकूल्यान्निवृत्तेतन्मनीषितविरोधिसुकृतेषुप्रायुङ्क्त । यथाच समुद्रंप्रत्युपात्तमस्त्रम् तस्मिन्सानुतापेशरणागते द्विषत्सु आश्रितानांपापकृत्याप्रवेशनन्यायेनतद्विरोध्यसुरेषुप्रयुयुजे । रामप्रपत्तिस्त्वाकिञ्चन्यानन्यगतित्वरूपाधिकाररहितेनकृतत्वादल्पज्ञाल्पशक्तिकविषयत्वाच्चविफलेतिध्येयम् । "समुद्रंराघवोराजाशरणं गन्तुमर्हति" इतिविभीषणोक्तिस्तुस्वप्रपत्तेःफलदर्शनकृता । तस्मादनेनप्रकारेणशरणागतेर्देशकालाधिकारिफलनियमाभावेपि विषयनियमोस्तीत्युक्तं । इयंचप्रपत्तिरस्मिन्प्रबन्धेप्रधानतयाप्रतिपाद्यते । अतएव "श्रीरामायणमृदीर्घशरणागतिः" इत्याभाणकः । तदुपयुक्ततयेतरेषामर्थानांप्रतिपादनम् । तथाहि । समर्थकारुणिकसुशीलविषयिणीशरणागतिःफलदा-

यिनी । तत्र रौद्रधनुर्भङ्गपरशुरामजयसालभेदनसमुद्रबन्धनादिभिरुक्तपरत्वप्रतिपादनैश्चसामर्थ्यं सर्वज्ञत्वादिकंचोक्तम् । सीतावियोगकालिकवृत्तान्तविशेषैः परमकारुणिकत्वम् । गुहशबरीसुग्रीवादिभिर्नीरन्ध्रसंश्लेषेणसौशील्यम् । विश्वामित्राध्वरत्राणदण्डकारण्यवासिमुनिजनरक्षणरावणबाधितेन्द्रादिसकलदेवगणपरिपालनैः निजजनपदजनानामात्मसौन्दर्यशीलादिभिःप्रीतिमुत्पाद्यस्वपदप्राप्तिरूपसाक्षादवतारप्रयोजनभूतमोक्षप्रदानैश्चसर्वरक्षकत्वम् । अतःसमर्थपरमकारुणिकसुशीलभगवत्प्रपत्तेःसकलफलसाधनत्वेपि अधिकारिविशेषानुष्ठितायास्तस्याभगवत्प्राप्तिपूर्वकतत्कैङ्कर्यरूपमोक्षएवमुख्यंफलम् । आनुषङ्गिकंफलान्तरमितिसुस्पष्टम् । एवंसर्वत्रद्रष्टव्यं ॥ ३ ॥ इयंचप्रपत्तिःपुरुषकारेणविनानफलायभवतीत्यर्थोस्मिन्प्रबन्धे प्रधानतयाप्रतिपाद्यते । "सीतायाश्चरितंमहत्"इतिह्युक्तं । तस्याश्चविश्लेषत्रयेणकृपापारतन्त्र्यानन्यार्हत्वरूपपुरुषकारधर्मप्रतिपादनात् । तत्संनिधानेनकाकः शिरोलेभेतदभावान्नरावणः । विभीषणोपि "निवेदयतमांक्षिप्रंविभीषणमुपस्थितं" इतिघटकमुखेनैवरामंशरणमवृणुत । रामोपि । "आनयैनंहरिश्रेष्ठ" इतिघटकमुखेनैवविभीषणंविषयीचकार । एवंसुग्रीवोपि रामभक्तहनुमन्मुखेनरामंशरणंययौइत्येवंज्ञातव्यं॥४॥ एवंभूतोपायाधिकारिस्वरूपंशेषत्वंपारतन्त्र्यंच । तत्रशेषत्वंलक्ष्मणाचारेणप्राचीकशत् । "अहमस्यावरो भ्रातागुणैर्दास्यमुपागतः । कुरुष्वमामनुचरंवैधर्म्यंनेहविद्यते । कृतार्थोऽहंभविष्यामितवचार्थःप्रकल्पते" इत्यादिना ॥ ५ ॥ भरतमुखेनपारतन्त्र्यंप्रकटीकृतं "विललापसभामध्येजगर्हेचपुरोहितं । राज्यंचाहंच रामस्यधर्मंवक्तुमिहार्हसि"इत्यादिना "सर्वात्मनापर्युनुनीयमानोयदानसौमित्रिरुपैतियोगं । नियुज्यमानो भुवियौवराज्येततोभ्यषिञ्चद्भरतंमहात्मा" इत्यन्तेन ॥ ६ ॥ श्रीशत्रुघ्नव्यापारेणभागवतपारतन्त्र्यंप्राचीकशत् । "गच्छतामातुलकुलंभरतेनतदानघः । शत्रुघ्नो नित्यशत्रुघ्नोनीतःप्रीतिपुरस्कृतः" इत्यादिना ॥ ७ ॥ अस्यचाधिकारिणोज्ञातव्यमर्थपञ्चकमत्रोच्यते । तथोक्तं । "प्राप्यस्यब्रह्मणोरूपंप्राप्तुश्चप्रत्यगात्मनः । प्राप्त्युपायंफलंप्राप्तेस्तथाप्राप्तिविरोधिच । वदन्तिसकलावेदाःसेतिहासपुराणकाः । मुनयश्चमहात्मानोवेदवेदाङ्गपारगाः" इति । तत्र रामप्रस्तावेनपरस्वरूपं । लक्ष्मणादिवृत्तान्तेनप्रत्यगात्मस्वरूपं । शरणागतिवर्णनेनोपायस्वरूपं । विभीषणादिकथयाफलस्वरूपं भगवत्कैङ्कर्यरूपम् । रावणादिवृत्तान्तेनविरोधिस्वरूपंचोक्तमितिज्ञेयं ॥ ८ ॥ अस्याधिकारिणआकिञ्चन्यंअनन्यगतित्वंचापेक्षितमितिवक्तुंब्रह्मरुद्रादिदत्तवरस्यरावणस्यवधेनब्रह्मरुद्रादिदेवतान्तराणां । दशरथचरितेनपितुः । कैकेय्यादिवृत्तान्तेनमात्रादेः । विभीषणमेघनादादिवृत्तान्तेनभ्रातृपुत्रादेश्चारक्षकत्वोक्तिः ॥ ९ ॥ अस्यचभगवज्ज्ञानलाभआचार्यमूलइतिहनुमच्चरितेनदर्शितं । तदेवसुन्दरकाण्डेवक्ष्यामः ॥ १० ॥ अनेनचाधिकारिणा "कृतकृत्याःप्रतीक्षन्तेमृत्युंप्रियमिवातिथिम्" इत्युक्तरीत्याशरीरपातावधिकालःप्रतीक्षणीयइतिसीताध्यवसायेनोच्यते । "शरैस्तुसंकुलांकृत्वालङ्कांपरबलार्दनः । मांनयेद्यदिकाकुत्स्थस्तत्तस्यसदृशंभवेत्"इतिह्युक्तं । लङ्कानामशरीरं । रावणकुंभकर्णावहंकारममकारौ । इन्द्रजिदादयःकामक्रोधादयः । विभीषणोविवेकः । तत्ररुद्धासीताचेतनः । तस्यचभगवज्ज्ञानंहनुमताऽऽचार्येण । तादृशशरीरध्वंसपूर्वकं तदन्तर्निरुद्धचेतनोद्धरणम् भगवतैवेतिविस्तरोभविष्यति ॥ ११ ॥ अस्यचयावच्छरीरंकर्तव्यविषयेरामादिवद्वर्तितव्यं नरावणादिवदित्युपदेशश्चयथायोगंक्रियते ॥ १२ ॥ अस्यचवासयोग्योदेशोभगवत्संनिधिमान्देशएवेतिकोसलजनपदस्थजनवृत्तान्तेनोक्तं ॥ १३ ॥ अस्यचकालक्षेपोपिरामायणेनैव । द्वयविवरणरूपत्वात् । अतएव "रामायणंदीर्घशरणागतिः" इत्यभियुक्तैरुक्तं । "द्वयमर्थानुसंधानेनसहसदैवंवक्ता" इतिचभाष्यकारः । तत्रबालकाण्डेन श्रीमच्छब्दार्थउक्तः । अयोध्याकाण्डेन नारायणशब्दार्थः । कल्याणगुणानामुपवर्णनात् । आरण्यकाण्डेन "तेतंसोममिवोद्यन्तं" इत्यादिनादिव्यमङ्गलविग्रहवर्णनात् । चरणशब्दार्थः । किष्किन्धाकाण्डसुन्दरकाण्डाभ्यां शरणशब्दार्थः । युद्धकाण्डेन प्रपद्यइत्यस्यार्थः । उत्तरकाण्डेन मुक्तिफलकीर्तनादुत्तरखण्डार्थः ॥ १४ ॥ अस्यचाधिकारिणःसदाजप्यंरामायणमेवेतिदर्शयितुं गायत्र्यर्थोत्रप्रतिपाद्यते । तथाहि । बालकाण्डेवेदप्रसिद्धजगत्प्रसूतिहेतुभूतभगवत्स्वरूपवर्णनात् तत्सवितृशब्दार्थः । अयोध्याकाण्डकिष्किन्धाकाण्डयोःगुणगणवर्णनात् वरेण्यशब्दार्थः । आरण्यकाण्डेतेजोमयशरीरवर्णनात् भर्गश्शब्दार्थः । सुन्दरकाण्डेदिव्यम-

## पञ्चमः सर्गः ॥ ५ ॥

अयोध्यावर्णनम् ॥ १ ॥

**सर्वापूर्वमियं येषामासीत्कृत्स्ना वसुंधरा ॥ प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १ ॥**
**येषां स सगरो नाम सागरो येन खानितः ॥ षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २ ॥**
**इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ॥ महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३ ॥**

ङ्गलविग्रहलक्षणवर्णनात् देवशब्दार्थः । युद्धकाण्डे धीमहिशब्दार्थः । शरणागत्युक्तेः । उत्तरकाण्डे मुक्तिफलकीर्तनात्तृतीयपादार्थइति ॥ १५ ॥ एतेनचाधिकारिणा चार्वाकबौद्धादिदर्शनाद्यसच्छास्त्रस्पर्शोपि नकार्यइतिजाबालिलक्ष्मणवचनतत्प्रत्यादेशादिना निर्णीयते ॥ १६ ॥ महतामपिव्यसनंभवति । अतःसंसारेजिहासाकार्येतिवैराग्यसंपत्तये नागपाशब्रह्मास्त्रबन्धसीतापहरणराज्यभ्रंशादिना व्यक्तमुक्तं । विस्तरस्तुतत्रतत्र प्रदर्शयिष्यते । दिङ्मात्रमत्रप्रदर्शितं ॥ १७ ॥ लोकव्यवहाराय चतुष्षष्टिकलार्थोपि संग्रहेणात्रप्रतिपाद्यते । "यदिहास्तितदन्यत्रयन्नेहास्तिनतत्क्वचित्" इतिन्यायात् । तथाहि । प्रतिपादितयादिशावेदार्थोदर्शितः । हनुमद्वचनश्लाघायां "अनयाचित्रयावाचात्रिस्थानव्यञ्जनस्थया"इत्यादौ शीक्षार्थः । अश्वमेधादिप्रकरणे कल्पसूत्रार्थः । "नूनंव्याकरणंकृत्स्नमनेन बहुधाश्रुतं"इत्यादौव्याकरणार्थः । एवमन्यत्सर्वंअत्र सूक्ष्मबुद्ध्याज्ञातव्यं । एवमेतेष्टादशार्थाआचार्योपदिष्टाः ॥ १८ ॥ तत्र प्रथमंरावणनिबर्हणफलांगीर्वाणगणशरणागतिंदर्शयितुंपीठिकामारचयति । वाजिमेधपर्यन्तवृत्तान्तेन । अग्निपुरुषोत्थानमारभ्यरावणवधपर्यन्तोवृत्तान्तस्तत्फलम् । उत्तरकाण्डेस्वावतारप्रयोजनम् धर्मस्थापनंमुक्तिप्रदानंच । "वक्तव्यमन्यत्तात्पर्यंतत्रतत्राभिधीयते ॥ सन्तोत्युक्तमनुक्तंचसमाधातुमिहार्हथ । नमःशठारिगुरवेनमोवल्मीकजन्मने । नमोनारायणायेदंनमोरामायविष्णवे" ॥

इत्थंसंक्षेपेण"आचार्यवान् पुरुषोवेद । आचार्याद्धैवविद्याविदितासाधिष्ठंप्रापत्" इतिश्रुत्युक्तरीत्याऽऽचार्योदेवविद्याप्राप्तव्येत्यमुमर्थमभिव्यञ्जयन्स्वेननारदाद्विदितमर्थंप्राचीकशत् । अथसर्गत्रयेणाचार्यप्रसादकार्यं सर्ववस्तुसाक्षात्कारस्तद्विषयप्रबन्धनिर्माणचातुर्यंचाभिहितं । अथपरमकारुणिकोभगवान्वाल्मीकिः रामायणाख्यंकाव्यमारभमाणः प्रारिप्सितप्रबन्धस्यनिर्विघ्नपरिसमाप्त्यर्थंप्रचयगमनार्थं च "आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखं" इत्युक्तरीत्याकाव्यमुखत्वेनादौकर्तव्यंवस्तुनिर्देशंकुर्वन् अर्थाद्विषयप्रयोजनेचदर्शयन् कर्तव्यंप्रतिजानानः सत्परिग्रहमर्थयते—सर्वापूर्वमित्यादिश्लोकचतुष्टयेन । कृत्स्ना सप्तद्वीपात्मिका इयंवसुंधरा भूमिः । जयेनशालन्ते भासन्तइति जयशालिनः तेषां येषांनृपाणां प्रजापतिं मनुं "मनुःप्रजापतिःपूर्वमिक्ष्वाकुस्तुमनोःसुतः"इतिवक्ष्यमाणत्वात् । उपादाय आरभ्य सर्वापूर्वं सर्वेषामितरेषांराज्ञांअपूर्वंदुर्लभं यथाभवतितथा आसीत् स्वमासीदित्यर्थः ॥१॥ जयशालित्वंकुत्रचिदुदाहृत्यदर्शयति—येषामिति । येषां नृपाणांमध्ये सः प्रसिद्धः सगरः । प्रसिद्धिमेवाह—सागरः समुद्रः स्वनामाङ्कितः येन सगरेण खानितः षष्ट्यापुत्रसहस्रैरवदारितः । नामप्रसिद्धौ । किंच यान्तं दण्डयात्रयागच्छन्तं यं षष्टिःपुत्रसहस्राणि पर्यवारयन् परितोऽगच्छन् । इक्ष्वाकुप्रभृतिषुविद्यमानेषुसगरमात्रकीर्तनं तेनाखिलायाःभूमेः पुनरुद्धृतत्वात् । षष्टिरिति पङ्क्तिसूत्रेनिपातितः । अतएकवचनस्यापिबहुवचनविशेषणत्वं ॥२॥ महात्मनां महाप्रभावानां । इक्ष्वाकूणांइक्ष्वाकुवंश्यानां । "तद्राजस्यबहुषुतेनैवास्त्रियां" इतितद्राज-

**तीर्थी०** अविद्यमानःपूर्वो यस्मादपूर्वंसर्वेषांराज्ञां अपूर्वंप्रथममितियावत् । क्रियाविशेषणमेतत् । **तिल०** सर्वापूर्वंऐहिकामुष्मिकसर्वापूर्वसाधनं यथाभवतितथाआसीत् । सर्वापूर्वशब्दोह्युपादेयपरोनियतनपुंसकलिङ्गइतिकेचित् ॥ १ ॥ **तिल०** येषांवंशे ससगरोनामाभूत् । षष्टिगुणितानिपुत्रसहस्राणिषष्टिपुत्रसहस्राणि । अनेनतदुद्धारार्थं तद्वंश्येनजगत्पवित्रीकरणसमर्थागङ्गायद्वंशेऽवतारितेतिव्यज्यते । तेनचातिशयितंतद्वंशमाहात्म्यंसूचितं । तद्वंशस्यगङ्गापरनामकभगवदवतारयोग्यताचतेनसूचिता ॥ २ ॥ **शिरो०** इक्ष्वाकूणांवंशेरामायणमुत्पन्नमित्यनेन रामरामायणयोस्तादात्म्यंसूचितम् । प्रसिद्धंचप्रतिपाद्यप्रतिपादकयोस्तादात्म्यं "रामेतिद्व्यक्षरंनाम" इत्यादौ ॥ ३ ॥

[ पा० ] १ च. यशस्विनां. २ ङ. षष्टिपुत्रसहस्राणि.

**तदिदं वर्तयिष्यामि[1] सर्वं निखिलमादितः ॥ धर्मकामार्थसहितं श्रोतव्यमनसूयया[2] ॥ ४ ॥**
**कोसलो नाम मुदितः स्फीतो जनपदो महान् ॥ निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥**
**अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ॥ मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥**
**आयता दश च द्वे च योजनानि महापुरी ॥ श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥**
**राजमार्गेण महता सुविभक्तेन शोभिता ॥ मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥**
**तां तु राजा दशरथो महाराष्ट्रविवर्धनः ॥ पुरीमावासयामास [3]दिवं देवपतिर्यथा ॥ ९ ॥**

प्रत्ययस्यबह्वर्थत्वाल्लुक् । तेषांराज्ञां वंशे वंश्येरामेविषये रामायणमिति श्रुतं प्रसिद्धं महत् पूजनीयं इदमाख्यानं कथाप्रबन्धः । उत्पन्नं ब्रह्मणःप्रसादादितिशेषः । तत्रनिमित्तमात्रमहमितिविनयोक्तिः । अत्रवर्णनीयस्य नायकस्यसर्वापूर्वमित्यनेनमहाभाग्यत्वंनामगुणउक्तः । येषामित्यादिश्लोकद्वयेनमहाकुलीनत्वम् ॥३॥ब्रह्मप्रसादादेवोत्पन्नत्वेतवकिंकृत्यं तत्राह—तदिति । तत् ब्रह्मप्रसादोत्पन्नं इदं रामायणं वर्तयिष्यामि प्रवर्तयिष्यामि । धर्मकामार्थसहितं तत्प्रतिपादकं तत्फलकंवा सर्वं रामायणं आदितः तदवतारदेशात्प्रभृति निखिलं अन्यूनंयथाभवतितथा अनसूयया असूयाभिन्नया श्रद्धयेत्यर्थः । श्रोतव्यं नतुस्वयंलिखितपाठेननिरीक्षितव्यं ब्रह्मणएवोत्पन्नमिदं ममतुतत्प्रवर्तनएवाधिकारः । अतः प्रेक्षावद्भिरत्रासूयानकर्तव्या किंतुभक्त्यैवश्रोतव्यमिति भावः । अत्रतेषांवंशइत्यनेन विषयउक्तः । धर्मकामार्थसहितमित्यनेन प्रयोजनमुक्तं । अनसूययेत्यनेन अनसूयवोऽधिकारिणः । कार्यकारणभावः संबन्धइत्यादिबोध्यं । अत्रमोक्षस्यापिप्रयोजनत्वंसिद्धं "सर्वपापैः प्रमुच्यते"इत्युक्तत्वात् ॥ ४ ॥ अथरामचरित्रप्रतिज्ञातंवक्तुंतदवतरणयोग्यदेशवैभवंदर्शयति—कोसलइति । मुदितः संतुष्टजनः । "मञ्चाःक्रोशन्ति"इतिवल्लक्षणा । स्फीतःसमृद्धः "स्फायःस्फीनिष्ठायां"इतिस्फीभावः । प्रभूतानिबहूनिचतानिधनधान्यानिचतद्वान् । कर्मधारयादपिमत्वर्थीयोदृष्टः । यथा"कोकप्रीतिचकोरपारणपटुज्योतिष्मतीलोचने"इत्यादि । प्रभूतधनश्चासौधान्यवांश्चेतिकर्मधारयोवा । अत्र धनधान्यसमृद्धेरुक्तत्वात्स्फीतइतिजनसमृद्धिरुच्यते । कोसलोनाम कोसलइतिप्रसिद्धः । महान् विस्तीर्णः जनपदो देशः । "नीवृज्जनपदोदेशविषयौ"इत्यमरः । सरयूतीरे सरयूनामकनद्याउभयतीरे । निविष्टः स्थितः ॥५॥ तत्रावतारयोग्यनगरंवर्णयति—अयोध्येति । श्लोकत्रयमेकंवाक्यं । अयोध्येतिनगरी तत्र कोसले आसीत् अस्ति । लकारव्यत्ययः । लोके विश्रुता प्रसिद्धा । यापुरी मानवानां मनुष्याणां इन्द्रेणस्वामिना मनुना स्वयं स्वसंकल्पेन निर्मितानाम ॥ ६ ॥ दशचद्वेचयोजनानि द्वादशयोजनानि । अत्यन्तसंयोगेद्वितीया । आयता दीर्घा । मण्डलप्रमाणमिदं । महापुरी मूलनगरं । उपनगरसाहित्येत्वनेकयोजनाऽस्तीतिभावः । श्रीमती कान्तिमती । त्रीणियोजनानिविस्तीर्णा योजनत्रयवैपुल्यवती । सुष्ठुविभक्ताःउभयपार्श्ववृक्षावलीमत्तयाक्लृप्ताः महापथाः नानाजनपदगामिमार्गाःयस्यास्सा ॥ ७ ॥ महता आनगरान्तेन सुविभक्तेन ऋजुतयाक्लृप्तेन मुक्तपुष्पावकीर्णेन । मुक्तैःअसूत्रग्रथितैःपुष्पैरवकीर्णेन नित्यशः सर्वकालेपि । सप्तम्यर्थेशस्प्रत्ययः । जलसिक्तेन वर्षासुस्वतएव अन्यदामनुष्यैः । राजमार्गेण राजगृहद्वारात् प्रवृत्तेनमार्गेण शोभिता ॥ ८ ॥ अथनगर्यामहाराजाधिष्ठितत्वरूपं

**तीर्थी०** धर्मकामार्थसहितं धर्मकामार्थप्रतिपादकं । इदंत्ववान्तरफलाभिप्रायेणोक्तं । वस्तुतोमोक्षएवपरमफलं । सर्वंनिखिलंकाव्यंप्रतिपाद्यार्थेषुएकार्थानुक्तावपिसर्वशब्दप्रयोगसंभवात्निखिलमित्युक्तं । वर्तयिष्यामि । श्रोतव्यमितितव्यप्रत्ययेनरामायणस्यश्रवणविधिः । श्रूयमाणत्वेनाश्रवणेप्रत्यवायसंभवात् । धर्मकामार्थसहितं धर्मकामार्थप्रदमित्यनेनास्यैवसर्वपुरुषार्थसाधनत्वाच्चान्यत्सर्वंपरित्यज्येदमेवात्यादरेणश्रोतव्यमितितात्पर्यम् । **विषम०** तदिदंबुद्धिस्थं । आदितआदिमारभ्यनिखिलं उत्तरकाण्डान्तं । सर्ववर्णपदच्युतिरहितं । धर्मकामार्थाःसहितायस्मात्तत् । सहिताइत्यत्रकेनेत्याकाङ्क्षायां मोक्षेणेतिगम्यते । तेनपुरुषार्थचतुष्टयसाधनं वर्तयिष्यावःगास्यावः । तत् अनसूयता असूयतीत्यसूयन्नअसूयन्अनसूयन्स्वस्यान्यस्यचोपतापमकुर्वन् तेनानसूयता श्रोतव्यमित्यर्थः । असुउपतापेइतिकण्ड्वादियगन्तस्यशतरिरूपम् ॥ ४ ॥ **शिरो०** कोसलस्यमुदितत्वोक्त्यातद्देशस्यचेतनत्वंसूचितं तेनतस्याप्राकृतत्वंध्वनितम् ॥ ५ ॥ **तिल०** पुरी "अयोध्यामथुरा" इत्याद्युक्तसप्तपुर्यन्तर्गता ॥ ६ ॥ **विष०** स्वर्गेअमरावतीमिन्द्रइव ॥ ९ ॥

[ **पा०** ] १ ङ. झ. ञ. वर्तयिष्यावः. २ ङ. झ. ञ. मनसूयता. ३ क, ङ. झ. ञ. दिविदेवपतिः,

कवाटतोरणवतीं सुविभक्तान्तरापणाम् ॥ सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १० ॥
सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् ॥ उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११ ॥
वधूनाटकसङ्घैश्च संयुक्तां सर्वतः पुरीम् ॥ उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥
दुर्गगंभीरपरिघां दुर्गामन्यैर्दुरासदाम् ॥ वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥
सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् ॥ नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥
प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् ॥ कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ १५ ॥
चित्रामष्टापदाकारां वरनारीगणैर्युताम् ॥ सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥

गुणमाह—तांत्विति। महच्चतद्राष्ट्रंचमहाराष्ट्रं "आन्महतः—"इत्यात्वं। तद्विवर्धयति धर्मेणपालयतीतिमहाराष्ट्रविवर्धनः। कर्तरिल्युट्। महांश्चासौराष्ट्रविवर्धनश्चेतिवा। पूर्वराजेभ्योधिकइत्यर्थः। दशरथाख्योराजा दिवं स्वर्गं अमरावतीं देवपतिर्यथा इन्द्रइव तांपुरीं तु पूर्वनृपवैलक्षण्येन आवासयामास स्थापयामास। "हेतुमतिच" इतिणिच्॥ ९ ॥ वैलक्षण्यमेवदर्शयन्नयोध्यांवर्णयति सर्गशेषेण। तोरणोबहिर्द्वारालंकारदारुबन्धः। प्रशस्तकवाटतोरणयुक्तां। प्रशंसायांमतुप्। सुविभक्तंपरस्परासंश्लिष्टं अन्तरंमध्यप्रदेशोयेषांताद्दशाःआपणाःनिषद्याः यस्यांसा तां। "आपणस्तुनिषद्यायां"इत्यमरः। सर्वाणिसर्वविधानि यन्त्राणिशिलाक्षेपणीप्रभृतीनि आयुधानिबाणादयः लोकेयानियानियन्त्रायुधानिसन्तितद्वतीमित्यर्थः। शिल्पिभिश्चित्रकारप्रभृतिभिः उपेतां युक्तां॥१०॥ सूताःवन्दिनः "सूतोनातक्षिणसारथौ। क्षत्राद्विप्रासुतेव्यासशिष्यपारदवन्दिनोः" इतिभास्करः। मागधाः राजप्रबोधकाः "मागधःस्याद्वाग्मीराजप्रबोधकः"इतियादवः। तैःसंबाधांनिरन्तरां श्रीमतीं धनधान्यसमृद्धिमतीं। अतुलप्रभां निरुपमकान्तिं अट्टाट्टालशब्दौपर्यायौ। "स्यादट्टःक्षौममस्त्रियां" इत्यमरः। मण्टपोपरिनिर्मितगृहाणीत्यर्थः। उन्नतैरट्टालध्वजैर्युतां। शतघ्नी प्राकारस्थयन्त्रविशेषः "शतघ्नीतुचतुस्तालालोहकण्टकसंचिता" इतियादवः। शतशब्दोऽनन्तवचनः "शतंसहस्रमयुतंसर्वमानन्त्यवाचकं" इत्युक्तेः। अनेकशतघ्नीसंवृताम्॥ ११ ॥ सर्वतःपुरीमिति "उभसर्वतसोः–" इतिद्वितीया। सर्वत्रपुर्यां वधूनांयेनाटकाःनर्तयितारस्तत्सङ्घैःसंयुक्तां। आम्राणांचूतानांवनमाम्रवणं। "प्रनिरन्तः—" इत्यादिनाणत्वं। आहिताग्न्यादित्वात्परनिपातः। आम्रवणरूपोद्यानोपेतां। सालःप्राकारः मेखला मेखलावदावरणभूतायस्यास्तां। "प्राकारोवरणःसालः" इत्यमरः। महतीमितिसालद्वारानगरविशेषणम्॥ १२ ॥ अत्र दुर्गशब्देनविशालतोच्यते। विशालागाधपरिघां दुर्गां स्थलदुर्गभूतां अतएव अन्यैः शत्रुभिः दुरासदां दुराक्रमां वाजिभिर्वारणैश्च संपन्नां समृद्धां गोभिरुष्ट्रैः खरैः खरविशेषैश्च तथा संपन्नामित्यर्थः॥ १३ ॥ समन्ताद्भवाःसामन्ताः "सामन्ताराज्यसन्धिस्थाः" इतिवैजयन्ती। ताद्दशराजसङ्घैः। कीद्दशैः बलिकर्मभिः। बलिःकरः "भागधेयःकरोबलिः"इत्यमरः। बलिशब्देन बलिप्रदानमुच्यते तत्कर्मयेषांतैः नानादेशनिवासैः क्रयविक्रयार्थमागतैः वणिग्भिश्च उपशोभिताम्॥ १४ ॥ रत्नविकृतैः रत्नैःविकृतैःविशेषेणकृतैः प्रासादैः राजगृहैः पर्वतैः क्रीडापर्वतैः कूटागारैः वलभिभिः "कूटागारंतुवलभिः"इत्यमरः। संपूर्णां अतएव इन्द्रस्येवामरावतीं इन्द्रपालिताममरावतीमिव स्थितामित्यर्थः॥ १५ ॥ चित्रां नानाराजगृहवतीं। अष्टौपदानिस्थानानियस्यतदष्टापदं। "अष्टनःसंज्ञायां" इतिदीर्घः। "अष्टापदंशारिफलं"इत्यमरः। तदाकारां

**तिल०**। सर्वयन्त्रायुधवतीं। प्राकारोपरीतिशेषः। उषितां कृतवासां॥ १०॥ **तीर्थी०** उद्यानाम्रवणोपेतां क्रीडार्थमसाधारणत्वेननिर्मितान्युद्यानानि। आम्रवणानितुसर्वजनोपभोग्यत्वेनकल्पितानि। **तिल०** वधूनांनाटकशालासमुदायैः। **शिरो०** सर्वतश्चतुर्दिक्षुपुर्यः वाराणस्यादयोयस्यास्सासर्वतःपुरी तां। तथाचस्मृतिः "साकेतपश्चिमद्वारिवृन्दावनमदूरतः" इत्यादि। समासान्तविधेरनित्यत्वात्कबभावः॥ १२॥ **तिल०** कूटाख्यैरगारैर्गृहैःस्त्रीणांक्रीडागृहैरितियावत्॥ १५॥ **तिल०** वरनारीगणैः आयुतांव्याप्तां। अष्टापदंसुवर्णंतज्जलेनकृतआकारोऽलंकारोयस्यास्सा॥ १६॥

**[ पा० ]** १ ङ. झ. वतीमुषितां. २ घ. सर्वतश्चोपशोभितां. ङ. च. छ. ज. झ. पर्वतैरिवशोभितां. ३ घ. नरनारी. ४ ङ. च. छ. झ. ट. गणायुताम्. ५ घ. विमानवरशोभितां.

गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् ॥ शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ॥ नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८ ॥
विमानमिव सिद्धानां तपसाऽधिगतं दिवि ॥ सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९ ॥
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ॥ शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २० ॥
सिंहव्याघ्रवराहाणां मत्तानां नर्दतां वने ॥ हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २१ ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ॥ पुरीमावासयामास राजा दशरथस्तदा ॥ २२ ॥
तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ॥
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

तत्सदृशसंस्थानामित्यर्थः । मध्येराजगृहंचतुर्दिक्षुराजवीथयः तन्मध्येष्ववकाशाश्चेत्येवंविधसंस्थानामित्यर्थः । वरनारीगणैः सुन्दरस्त्रीगणैः । युतां युक्तां । सर्वरत्नैःसमाकीर्णां व्याप्तां । तानितु "गारुत्मतंमरकतमश्मगर्भोहरिन्मणिः । शोणरत्नंरोहितकंपद्मरागोरुणोपलः । विद्रुमोनाप्रवालोस्त्रीवज्रोस्त्रीहीरकःपुमान् । इन्द्रनीलंमहानीलंवैडूर्यवालवायजं । कुरुविन्दास्तुकल्माषारत्नभेदास्तुमौक्तिकं । माणिक्यंपौष्पकंशङ्खः–"इत्यादिनिघण्टुपर्यायोक्तानि । विमानाख्यगृहैःशोभितां । "विमानोस्त्रीदेवयानेसार्वभौमिकसद्मनि"इतिभास्करः॥१६॥ गृहैःकुटुंबिगृहैः गाढांनिबिडां । अविच्छिद्रां निर्दूषणां । "छिद्रंरन्ध्रेदूषणेपि"इतिभास्करः । समभूमौ अनिम्नोन्नतप्रदेशे। निवेशितां निर्मितां ।शालयः श्वेततण्डुलाव्रीहयः । "शालयःश्वेततण्डुलाः"इतिवैजयन्ती । तेषां तण्डुलैःसंपूर्णां । इक्षुकाण्डस्य इक्षुदण्डस्य योरसःतत्तुल्यमुदकंयस्यांताम् ॥ १७ ॥ दुन्दुभीभिः भेरीभिः । ईकारान्तत्वमार्षं । मृदङ्गैः मृत्अङ्गंयेषांतैः । पणवैः मर्दलैः। तथेतिसमुच्चये । भृशंनादितां । पृथिव्यां अत्यर्थमनुत्तमां श्रेष्ठां । तां प्रसिद्धाम् ॥ १८ ॥ सिद्धानां तपस्सिद्धानां पुरुषाणां । दिवि स्वर्गे । तपसाऽधिगतं लब्धं विमानमिव देवयानसमूहमिवस्थितां । जातावेकवचनं । सुनिवेशिताः सुष्ठुनिर्मिताः वेश्मान्ताःगृहप्रान्तायस्यां सा । सर्वतःसम्यक्निर्मितगृहामित्यर्थः । नरोत्तमैः विद्वद्भिः समावृतां॥ १९ ॥ श्लोकत्रयमेकान्वयं । लघुहस्ताः शिक्षितास्त्राः । "लघुहस्तःसुहस्तश्चकृतास्त्रःकृतपुङ्खकः"इतिवैजयन्ती । विशारदाः समर्थाः उपायज्ञाइतियावत् । तथाभूताअपि ये राजानः । विविक्तं विजनमसहायमितियावत् । "विविक्तौपूतविजनौ"इत्यमरः । अपरापरं अविद्यमानपरापरं परे पित्रादयः अपरे पुत्रादयः तैर्हीनं । वंशस्यैकतन्तुमितियावत् । शब्दवेध्यं शब्देनलक्ष्येणवेध्यं । एतेन प्रच्छन्नवेधनमुपलक्ष्यते । विततं पलायितंच बाणैश्च नविध्यन्ति नप्रहरन्ति । किंपुनर्यन्त्रादिभिरितिभावः ॥ २० ॥ मत्तानां वने स्वदेशे नर्दतां गर्वेणगर्जतां । सिंहव्याघ्रवराहाणां बलात् मनोबलेन । बाहुबलैरपिसहकारिभिः । निशितैः तीक्ष्णैः । शस्त्रैः आयुधैः करणैः हन्तारः । "शस्त्रमायुधलोहयोः"इत्यमरः ॥ २१ ॥ महारथैः "आत्मानंसारथिंचाश्वान्रक्षन्युद्ध्येतयोनरः । समहारथसंज्ञःस्यात्"इत्युक्तलक्षणैः । तादृशानां तेषां सहस्रैः अभिपूर्णां । तां तथात्वेनप्रसिद्धां पुरीं आवासयामास ॥ २२ ॥ अग्निमद्भिः आहिताग्निभिः । गुणवद्भिः शमदमादिगुणवद्भिः । वेदानांषडङ्गानांच पारमन्तमध्ययनेनगच्छन्तीतितथा । "अन्तात्यन्त–"इत्यादिना डप्रत्ययः । सहस्रदैः बहुप्रदैः । सत्येसत्यवचने रतैः निरतैः । महात्मभिः महामतिभिः । केवलैःऋषिभिरपि महर्षिकल्पैः वसिष्ठादिमहर्षितुल्यैः । ईषदसमाप्तौ कल्पप्प्रत्ययः । द्विजोत्तमैःआवृतांतामावासयामासेत्यनुषज्यते । अत्रवंशस्थवृत्तेप्रथमचरणेजगणाभावेनोपजा-

शिरो० गृहगाढामविच्छिद्रांगृहगाढांकुटुंबिगृहनिबिडां अमां अपरिमितप्रभावां विच्छिद्रांदोषरहितां ज्योतिश्शास्त्रानुकूलामित्यर्थः । त्रयाणांकर्मधारयः ॥ १७ ॥ तिल० शब्दवेध्यंशब्दमात्रानुमितसत्तयावेधयोग्यं । प्रच्छन्नमितियावत् । शिरो० विततं विगतःततः युद्धविस्तारोयस्य । नष्टसामर्थ्यादिनाभ्रष्टयुद्धकमित्यर्थः ॥ २० ॥ इतिपञ्चमःसर्गः ॥ ५ ॥

[पा०] १ ग. मवरावरम्. घ. मपरावरम्. २ ख. ङ. छ. झ. नदतां.

## षष्ठः सर्गः ॥ ६ ॥

अयोध्यायादशरथेनपरिपालनसमयेस्थितिप्रकारकथनम् ॥ १ ॥

**तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः ॥ दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥**
**इक्ष्वाकूणामतिरथो यज्वा धर्मरतो[1] वशी ॥ महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥**
**बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः ॥ धनैश्च संग्रहैश्चान्यैः[2] शक्रवैश्रवणोपमः ॥ ३ ॥**
**यथा मनुर्महातेजा लोकस्य परिरक्षिता ॥ तथा दशरथो राजा[3] वसञ्जगदपालयत् ॥ ४ ॥**
**तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता ॥ पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥**
**तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ॥ नरास्तुष्टा धनैः स्वैःस्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥**

तिवृत्तमितिबोध्यं । आचार्याःप्राहुः "तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्ति यज्ञेनदानेनतपसानाशकेन" इतिश्रुतिरनेनोपबृंह्यते । द्विजोत्तमैः"अष्टवर्षंब्राह्मणमुपनयीत" इत्युक्तरीत्याकृतोपनयनैः । वेदषडङ्गपारगैः अधीतसाङ्गसशिरस्कवेदैः । अग्निमद्भिः अनुष्ठितयज्ञैः । सहस्रदैः यथाशक्तिब्राह्मणसात्कृतद्रव्यैः । महात्मभिः महायत्नैः कृततपस्कैरित्यर्थः । गुणवद्भिः "शमदमाद्युपेतःस्यात् । शान्तोदान्तउपरतस्तितिक्षुस्समाहितोभूत्वा"इत्युक्तशमादिमद्भिः । सत्यरतैः "सत्यस्यसत्यं" इत्युक्तेब्रह्मणिभक्तिरूपापन्नज्ञानवद्भिः । केवलैः "तस्माद्ब्राह्मणःपाण्डित्यंनिर्विद्यबाल्येनतिष्ठासेत्"इत्युक्तरीत्याअनाविष्कृतस्वरूपैः । ऋषिभिः "बाल्यंचपाण्डित्यंचनिर्विद्याथमुनिः"इत्युक्तस्वरूपैः । महर्षिकल्पैः "यत्रर्षयःप्रथमजायेपुराणाः" इत्युक्तरीत्यासूरिसदृशैः । आवृतां अवतरिष्यतिभगवानत्रेतिसमागम्यसंसेवितां । तामावासयामास । यद्वा हेकेवल परिशुद्धचित्त ऐः त्वमपिवासायगच्छेति कविराह "तदुपगत"इतिवत् ॥२३॥ इति श्रीगोविन्दराजवि० श्रीमद्रामायभू० मणिमञ्जीराख्याने बाल०पञ्चमःसर्गः ५

---

एवंभगवदवतारयोग्यदेशोदर्शितः अथतद्योग्यंपुरुषंदर्शयति सर्गेषष्ठे । तस्यामित्यादिश्लोकचतुष्टयमेकान्वयं । दशरथःतस्यांवसन्सन्जगत्अपालयत् । सकीदृशः । वेदंवेदार्थं वेत्तीति वेदवित् । संगृह्णातिधनप्रदानादिना स्वीकरोतीतिसंग्रहः पचाद्यच् । सर्वेषांशूराणांविदुषांच संग्रहः सर्वसंग्रहः । दीर्घदर्शी दीर्घंचिरकालभाविपदार्थंद्रष्टुंशीलमस्यास्तीतितथा । ताच्छील्येणिनिः । महातेजाः महाप्रतापः "तेजःपराक्रमेप्राणेवर्चस्यर्चिषिरेतसि"इति रत्नमाला । पुरेभवाजनाःपौराः । जनपदेभवाजानपदाः । तेप्रियायस्यसतथा ॥ १ ॥ इक्ष्वाकूणां मध्ये अतिरथः बहुभिर्महारथैरेकोयोद्धारथी । यज्वा विधिनेष्टवान् । धर्मेषु तटाकखननारामप्रवर्तनादिषु रतः । वशी स्वाधीनसर्वजनः । "त्रिष्वधीनेवशोवाञ्छाप्रभुत्वाधीनतासुना"इतिभास्करः । महर्षिकल्पः महर्षितुल्यः । राजर्षिः राजरूपऋषिः । त्रिषुलोकेषु भूर्भुवस्स्वर्लोकेषु विश्रुतः प्रसिद्धः ॥ २ ॥ बलवान् चतुरङ्गसेनायुक्तः । अतएव निहतामित्रः निहतशात्रवः । मित्रवान् प्रशस्तमित्रयुक्तः । विजितेन्द्रियः निषिद्धेषुशब्दादिष्वप्रवर्तितेन्द्रियः । धनैः हिरण्यरत्नदिव्यांबराभरणादिभिः । अन्यैः तदपेक्षयान्यैः । संग्रहैः संचयैः । निधिभिरिति यावत् । शक्रवैश्रवणोपमः यथाक्रमं इन्द्रकुबेरोपमः ॥ ३ ॥ यथा मनुः वैवस्वतमनुः लोकस्यपरिरक्षिता तथा दशरथो राजा तस्यांवसन् जगत् भूलोकं अपालयत् ॥ ४ ॥ एवंराजगुणाउक्ताः लोकपालनंचोक्तं संप्रतिपुरपरिपालनमाह—तेनेति । सत्ये अभिसन्धा अभिप्रायोयस्य तेन त्रिवर्गं धर्मार्थकामान् अनुतिष्ठता अनुसरता । पालिता सत्यादिपुरस्सरंत्रिवर्गार्थंपालितेत्यर्थः ॥ ५ ॥ पालनफलंदर्शयति—"तस्मिन्"इत्यादिना "मानवेन्द्रेणधीमता" इत्यन्तेन । हृष्टाः वाससौख्येनप्रीताः । धर्मात्मानः । बहु श्रुतंशास्त्रश्रवणं येषांते बहुश्रुताः । स्वैःस्वैः धनैस्तुष्टाः परधनानभिलाषिणइत्यर्थः । वी-

तिल० अतिरथःदशसहस्रमहारथैःअसहायेनयोद्धा ॥ २ ॥

[पा०] १ ङ. च. छ. झ. धर्मपरो. २ क.ख. ग. ङ. च. छ. झ. संचयैश्चान्यैः. ३ ङ.च. छ. झ. राजालोकस्यपरिरक्षिता.

नाल्पसन्निचयः कश्चिदासीत्तस्मिन्पुरोत्तमे ॥ कुटुंबी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७ ॥
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ॥ द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥८॥
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ॥ उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९ ॥
नाकुण्डली नामकुटी नास्रग्वी नाल्पभोगवान् ॥ नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥१०॥
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ॥ नाहस्ताभरणो वाऽपि दृश्यते नाप्यनात्मवान् ॥११॥
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ॥ कश्चिदासीदयोध्यायां न च निर्वृत्तसंकरः ॥१२॥
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ॥ दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३ ॥
न नास्तिको नानृतको न कश्चिदबहुश्रुतः ॥ नासूयको न वाऽशक्तो नाविद्वान्विद्यते तदा ॥१४॥
नाषडङ्गविदत्रासीन्नाव्रतो नासहस्रदः ॥ न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ १५ ॥

प्सया स्ववर्णस्वाश्रमोचितधनमात्रपरिग्रहः सूच्यते । अलुब्धाः दानेप्राप्तेलोभरहिताः । सत्यवादिनः सत्यवचनशीलाः । आसन्निति शेषः ॥ ६ ॥ तस्मिन्पुरोत्तमे पुरश्रेष्ठे । अल्पसन्निचयः अल्पकोशवान् । अगवाश्वधनधान्यवान् असिद्धार्थः धनादिभिरप्राप्तधर्मार्थकामरूपपुरुषार्थः । यः कुटुंबी सकश्चिन्नासीत् । "मातापितास्नुषेपुत्रौपुत्रीपत्न्यतिथिःस्वयं । दशसङ्ख्यःकुटुंबीति विष्णुनोक्तंद्विजोत्तम" ॥ ७ ॥ कामी कामैकपरः । पुरुषः अयोध्यायां क्वचित् कोणेपि द्रष्टुंनशक्यं । शक्यमितिनिपातः "शक्यमरविन्दसुरभिः" इतिकालिदासेनापिप्रयुक्तः । कदर्योवा द्रष्टुंनशक्यं । "आत्मानंधर्मकृत्यंचपुत्रदारांश्चपीडयेत् । लोभाद्यःपितरौभ्रातृन्सकदर्यइतिस्मृतः" । नृशंसः क्रूरोपि नद्रष्टुंशक्यं । "नृशंसोघातुकःक्रूरः" इत्यमरः । अविद्वान् विद्यारहितः । परलोकोनास्तीतियोमन्यते सनास्तिकः । "अस्तिनास्तिदिष्टंमतिः" इतिठक् ॥ ८ ॥ अयोध्यायां सर्वे नराः सर्वा नार्यश्च धर्मशीलत्वादिविशिष्टाभवन्ति । सुसंयताः सुष्ठुनियतेन्द्रियाः । शीलवृत्ताभ्यां उदिताः उत्पन्नाः । सहजशीलवृत्ताइत्यर्थः । शीलं सत्स्वभावः । वृत्तं आचारः । "शीलंस्वभावेसद्वृत्ते" "वृत्तंपद्येचरित्रे"इत्युभयत्राप्यमरः । अमलाः निर्मलमनस्काः ॥ ९ ॥ अकुण्डली अयोध्यायां नविद्यते एवमुत्तरत्राप्यन्वयः । अल्पभोगवान् अल्पसुखवान् । "भोगःसुखेस्त्र्यादिभृतावहेश्चफणकाययोः" इत्यमरः । मृष्टः अभ्यङ्गस्नानशुद्धः । नानुलिप्ताङ्गइत्यत्रसुप्सुपेति समासः । चन्दनाद्यननुलिप्ताङ्गइत्यर्थः । अत्रापिनञनुषज्यते । सुगन्धशब्देनकुङ्कुमकस्तूर्यादिकमुच्यते॥१०॥ मृष्टंपूर्णं अन्नाभावप्रयुक्ताल्पभोजनवानयोध्यायांनदृश्यते । एवमुत्तरत्रापियोज्यं । दाता प्रकरणादन्नदाता । अङ्गदं बाहुभूषणं । निष्कं उरोभूषणं । "साष्टेशतेसुवर्णानांहेम्न्युरोभूषणेपले । दीनारेपिचनिष्कोऽस्त्री"इत्यमरः । तेधरतीतिअङ्गदनिष्कधृक् । धृगित्येवपाठः । हस्ताभरणं कटकाङ्गुलीयकादि । अनात्मवान् अजितान्तःकरणः ॥ ११ ॥ आहिताग्निः अजस्राग्निहोत्री । यज्वापिहि कश्चिद्विच्छिन्नाग्निर्भवति । अयज्वा सोमयागरहितः । क्षुद्रः अल्पविद्यैश्वर्यवान् । तिरस्कारार्हइतियावत् । निर्वृत्तः अनुष्ठितः संकरः परक्षेत्रेबीजावापादिर्येनसः ॥ १२ ॥ अध्ययनं जपरूपाध्ययनं । संयताः संकुचिताः ॥ १३ ॥ अनृतं असत्यं कायति वक्तीत्यनृतकः । कैशब्दइत्यस्मादात्वे "आतोनुपसर्गेकः"इतिकप्रत्ययः । श्रुतं श्रवणं भावेनिष्ठा । बहुप्रकारशास्त्रश्रवणरहितइत्यर्थः । असूयतीत्यसूयकः । "कण्ड्वादिभ्योयक्"इतियक् । धातुसंज्ञायांवुञ् । अशक्तः ऐहिकामुष्मिकार्थसाधनाशक्तः । तदा दशरथराज्यपालनकाले । अनेनायंश्लोकोजानपदविषयइतिगम्यते । तेनात्रनपौनरुक्त्याशङ्का ॥ १४ ॥ षडङ्गानि शिक्षाक-

**तीर्थी०** सतामुत्कृष्टधनानां निचयस्सन्निचयः । अल्पस्सन्निचयोयस्मात्तथासनास्ति ॥ ७ ॥ **तीर्थी०** शक्यमितिवस्तुसामान्येननपुंसकलिङ्गनिर्देशः ॥ ८ ॥ नलिप्ताङ्गइतिसुप्सुपेतिसमासः । शोभनोगन्धः स्वाभाविकशरीरामोदोयस्य ॥ १० ॥ **तिल०** अवृत्तः सदाचाररहितः । संकरः कुण्डगोलकादिः ॥ १२ ॥ परिग्रहेस्वभार्यायां संयताःनियताः ॥ १३ ॥

[ **पा०** ] १ क—झ. ट. मुदिताः. २ झ. ननलिप्ताङ्गः. ३ ट. नासुगन्धिश्च. ४ घ. ज. विप्रोवाप्यसहस्रदः. ५ झ. नचावृत्तोनसंकरः. ६ च. परिग्रहे. ७ ङ. ज. झ. नाबहुश्रुतः. च. छ. नासहस्रवान्. ८ च. छ. निन्दितः, ९ ज. व्याधितोवापि ख. व्याधितोवानकश्चन.

कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ॥ द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥१६॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ॥ कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७ ॥
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ॥ सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥१८॥
क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ॥ शूद्राः स्वधर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ १९ ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ॥ यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २० ॥
योधानामग्निकल्पानां पेशलानाममर्षिणाम् ॥ संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१ ॥
कांभोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ॥ वनायुजैर्नदीजैश्च पूर्णाहरिहयोत्तमैः ॥ २२ ॥
विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ॥ मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३ ॥
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ॥ अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २४ ॥
भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा ॥ भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ।
नित्यमत्तैः सदा पूर्णा नागैरचलसन्निभैः ॥ २५ ॥

ल्पोव्याकरणंनिरुक्तिश्छन्दोविचितिर्ज्योतिषामयनंच । अव्रतः चान्द्रायणादिव्रतरहितः । असहस्रदः अबहुप्रदः । दानाध्ययनेत्यत्रविद्यादानमुक्तं । अत्रहिरण्यादिदानं । क्षिप्तचित्तः व्याकुलमनस्कः । व्यथितः व्याध्यादिनापीडितः ॥ १५ ॥ अश्रीमान् कान्तिरहितः । अरूपवान् सौन्दर्यरहितः । नारीपक्षे अश्रीमती अरूपवती अभक्तिमती चेत्यूह्यं । राजनि दशरथे अभक्तिमान् भक्तिरहितः । भक्तिः अधिकमान्यविषयस्नेहः ॥ १६ ॥ अग्रेभवोग्र्यः "अग्राद्यत्" । ब्राह्मणः । सचतुर्थोयेषांतेषु वर्णेषु वर्तमानाःनराः । देवतातिथिपूजकाः । शूद्राणांदेवतापूजा तान्त्रिकमन्त्रेण । अतिथिपूजनं हिरण्यादिदानेन । कृतज्ञाः उपकारज्ञाः । वदान्याः दानशौण्डाः । "वदान्योदानशौण्डःस्यात्" इतिविश्वः । शूराः ब्राह्मणेष्वध्ययनशूरत्वं । विक्रमसंयुताः पराक्रमसंयुताः । ब्राह्मणानांपराक्रमोवादकथासु । आसन्निति शेषः ॥ १७ ॥ तस्मिन्पुरोत्तमे सर्वेनराः धर्मं सत्यंच संश्रिताः । अतएवहेतोः दीर्घायुषः । स्त्रीभिः पुत्रपौत्रैश्च संयुताः । आसन् ॥ १८ ॥ क्षत्रं क्षत्रियजातिः । ब्रह्ममुखं ब्राह्मणप्रधानं आसीत् । तदाज्ञानुवर्तीति यावत् । "मुखंनिस्सरणेवक्रेद्वार्युपायप्रधानयोः"इतियादवः । वैश्याः क्षत्रमनुव्रताः क्षत्रस्यानुवर्तिनः । शूद्रास्त्रीन्वर्णानुपचारिणः त्रयाणां वर्णानामुपचारशीलाःसन्तः स्वधर्मनिरताआसन्

॥ १९ ॥ एतत्सर्वंदशरथपालनकृतमित्याह—सेति ॥ २० ॥ अग्निकल्पानां शौर्यातिशयादग्नितुल्यानां पेशलानां अकुटिलानां । अमर्षिणां पराभिभवासहिष्णूनां । कृतविद्यानां शिक्षितशस्त्रास्त्रादिविद्यानां । योधानां भटानां । "पूरणगुण—" इत्यादिनाषष्ठी । सा पुरी । योधैःसंपूर्णा । गुहा केसरिभिः सिंहैरिव । तथादुर्धर्षाभूदित्यर्थः ॥ २१ ॥ एवं चतुरङ्गसंपत्तिषु पदातिसंपत्तिमुक्त्वा तुरङ्गसंपत्तिमाह—कांभोजेति । कांभोजविषये कांभोजाख्यदेशे जातैः । बाह्लीकैः बाह्लीकदेशभवैः । "तत्रभवः"इत्यण् । वनायुजैः वनायुदेशजातैः । नदीजैः सिन्धुदेशोद्भवैः । हरेरिन्द्रस्य हयोहरिहयः उच्चैश्रवाः तद्वदुत्तमैः हरिहयोत्तमैरश्वश्रेष्ठैः । सा पूर्णाऽभवत् ॥२२॥ गजसंपत्तिमाह—विन्ध्येत्यादिना । श्लोकद्वयमेकान्वयं । मत्तैर्विन्ध्यपर्वतजैर्मातङ्गैः । हैमवतैः हिमवतिजातैः । "तत्रजातः"इतिशैषिकोण् । मदान्वितैः अतिबलैः मातङ्गैः गजैरपि पर्वतोपमैः ॥ २३ ॥ ऐरावतकुलीनैः ऐरावतकुलोद्भवैः । "कुलात्खः" । द्विपैश्च महापद्मः पुण्डरीकाख्योदिग्गजः तस्यकुलंयेषांतैः । द्विपैश्च अञ्जनात् वरुणदिग्गजात् निष्पन्नैर्द्विपैरपि वामनात् यमदिग्गजात् निष्पन्नैःद्विपैरपि सा पूर्णाऽऽसीत् ॥ २४ ॥ भद्रैरित्यादिसार्धश्लोकएकान्वयः । भद्राः मन्द्राः मृगाश्चेतिगजजातित्रयं । "भद्रोमन्द्रो-

**मुनिभा०** "भद्रोमन्द्रोमृगश्चेतिविज्ञेयास्त्रिविधागजाः" । तल्लक्षणं"पञ्चोन्नतंसप्तमृगस्यदैर्घ्यमष्टौचहस्ताःपरिणाहमानं । एकद्वि-

**[ पा० ]** १ घ. छ. झ. स्वकर्म. ख. श्वधर्म. २ ख. ननुयायिनः. ३ ग. च. नांसुवर्चसाम्. ज. नामनीषिणाम्. ४ ख, घ. संघैः पूर्णा सुरारणां. ५ घ. हयोपमैः, ६ ङ, च. छ. झ. निष्क्रान्तैः.

सा योजने च द्वे भूयः सत्यनामा प्रकाशते ॥ यस्यां दशरथो राजा वसञ्जगदपालयत् ॥ २६ ॥
तां पुरीं स महातेजा राजा दशरथो महान् ॥ शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥ २७ ॥
तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ॥
पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ॥ ७ ॥

दशरथस्य प्रधानामात्यानां प्रधानर्त्विजोश्चनामधेयनिर्देशः ॥ १ ॥ तथाऽन्येषाममात्यानांसामर्थ्यकथनम् ॥ २ ॥

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः ॥ मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १ ॥
अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ॥ शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २ ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः ॥ अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ३ ॥

---

मृगश्चेतिविज्ञेयास्त्रिविधागजाः ''इतिहलायुधः । भद्रमन्द्रोभद्रमृगोमृगमन्द्रश्चेतिद्विप्रकृतिकाःसंकीर्णजातयस्तिस्रः । भद्रमन्द्रमृगास्त्रिप्रकृतिकाःसंकीर्णगजाः । तल्लक्षणमुक्तंवैजयन्त्यां "अङ्गप्रत्यङ्गभद्रत्वंसंक्षिप्तंभद्रलक्षणं । पृथुत्वंश्लथतास्थौल्यंसंक्षिप्तंमन्द्रलक्षणं । तनुप्रत्यङ्गदीर्घश्चप्रायोमृगगुणोमतः । भद्रमन्द्रोभद्रमृगो भद्रमन्द्रमृगोपिच । मृगमन्द्रादयोप्येवमितिसंकरजातयः'' इति । एवंभूतैर्नित्यमत्तैरचलसंनिभैः नागैः । सासदापूर्णाऽभवत् ॥२५॥ अतिरथमहारथादिशब्दैः रथसंपत्तिरपिसूचिता । एवं चतुरङ्गबलसंपत्त्या ननगरसात्रमप्रधृष्यं किंतु अभितोद्वेयोजनेदुर्गमेइत्याह—सेति । सा नगरी भूयः नगराद्बहिरपि द्वेयोजने द्वयोर्योजनयोः । अत्यन्तसंयोगेद्वितीया । सत्यनामा यथार्थनामा अयोध्यानामा । "डाबुभाभ्यामन्यतरस्यां" इतिडाप् । अत्रहेतुमाह—यस्यामिति । योजनत्रयविस्तारवत्यांतस्यां मध्येयोजनद्वयमत्यन्तंयोद्धुमशक्येत्यर्थ इत्यप्याहुः ॥ २६ ॥ पालनंचाह्लादनपूर्वकमित्याशयेनाह— तामिति ॥ २७ ॥ सर्गोक्तमर्थंसंक्षेपेण सर्गान्ते पुनर्दर्शयति—तामिति । अर्गलंनाम कवाटनिश्चलत्वायतिर्यङ्निबद्धोदारुविशेषः । "तद्विष्कंभोर्गलंनना ''इत्यमरः । शिवां मङ्गलवतीं । वंशस्थोपजातिवृत्तं ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

---

अथोक्तगुणसंपन्नस्यदशरथस्यधर्मानुष्ठानसहायसाधिष्ठसचिवसंपत्तिंदर्शयति सप्तमे—तस्येत्यादि । महात्मनः महामतेः । तस्य इक्ष्वाकोः । दशरथस्य तद्वंशजत्वात्तच्छब्दः । मन्त्रज्ञाः कार्यविचारज्ञाः । इङ्गितं पराभिप्रायः तं मुखविकाससंकोचव्यङ्ग्यवचनादिभिर्जानन्तीति इङ्गितज्ञाः । अमात्याः अमा राज्ञःसर्वराज्यव्यापारेषुसहभवन्तीत्यमात्याः । "अव्ययात्त्यप्" गुणैः वक्ष्यमाणमन्त्रिगुणैः । उपेताआसन् ॥ १ ॥ "मन्त्रिणःसप्तवाष्टौवाप्रकुर्वीतपरीक्षितान्''इतिमनुनोक्तरीत्याह—अष्टाविति । शुचयः सर्वात्मनास्वामिद्रोहचिन्तारहिताः । नित्यशः राजकृत्येषु तदनुष्ठानेषु । अनुरक्ताः तत्पराः । अष्टावमात्याः बभूवुः ॥ २ ॥ तेषांनामानिदर्शयति—धृष्टिरिति । धृष्टिः प्रथमोऽभ-

---

वृद्धावथमन्द्रभद्रौसंकीर्णनागोऽनियतप्रमाणः'' । अत्रपूर्वार्धेमृगाख्यगजस्यलक्षणमुक्तं । मृगाख्यगजप्रमाणादेकहस्तमात्रवृद्धौमन्द्राख्यगजइत्युच्यते । मन्द्राख्यगजात् द्विहस्तवृद्धौभद्राख्यगजइत्युच्यते । भद्राख्यगजात् त्रिहस्तवृद्धौभद्रमन्द्रमृगाख्यगजइत्युच्यते । भद्रमन्द्रैःभद्राख्यगजस्यऔन्नत्यदैर्घ्यपरिणाहादिप्रमाणैःमन्द्राख्यगजस्यऔन्नत्यदैर्घ्यपरिणाहादिप्रमाणैश्चयुक्तागजाःभद्रमन्द्रास्तैः । भद्रमृगैःभद्राख्यमृगाख्ययोर्गजयोःप्रमाणयुक्ताभद्रमृगास्तैः । मृगमन्द्रैः मृगाख्यमन्द्राख्ययोर्गजयोःप्रमाणयुक्तागजामृगमन्द्रास्तैः । संकीर्णनागाःइतरगजाअनियतप्रमाणाः ॥ २५ ॥ इतिषष्ठस्सर्गः ॥ ६ ॥

**शिरो०** तुशब्दइवार्थे । किंचइक्ष्वाकोरेवामात्यास्तस्यदशरथस्यामात्याआसन्नित्यन्वयः । अत्रार्थेतुरेवार्थे ॥ १ ॥

**[पा०]** १ ङ.झ. इदमर्धंनदृश्यते.२ ट. नृपसिंहसंकुलां. ३ ङ. झ. सुराष्ट्रोराष्ट्रवर्धनः. अकोपोधर्मपालश्चसुमन्त्रश्चाष्टमोऽर्थवित्.

ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ ॥ वसिष्ठो वामदेवश्च मन्त्रिणश्च तथाऽपरे ॥ ४ ॥
[ सुयज्ञोप्यथ जाबालिः काश्यपोप्यथ गौतमः ॥ मार्कण्डेयस्तु दीर्घायुस्तथा कात्यायनो द्विजः ।
एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः ॥ ५ ॥ ]
विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ॥ [ परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः ॥ ]
श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ॥ ६ ॥
कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ॥ तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ॥ ७ ॥
क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ८ ॥
तेषामविदितं किंचित्स्वेषु नास्ति परेषु वा ॥ क्रियमाणं कृतं वाऽपि चारेणापि चिकीर्षितम् ॥ ९ ॥
कुशला व्यवहारेषु सौहृदेषु परीक्षिताः ॥ प्राप्तकालं तु ते दण्डं धारयेयुः सुतेष्वपि ॥ १० ॥
कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ॥ अहितं वाऽपि पुरुषं न विहिंस्युरदूषकम् ॥ ११ ॥
वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः ॥ शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ १२ ॥

वत् । जयन्तोद्वितीयोऽभूत् । इति क्रमेणयोजयित्वा सुमन्त्रोष्टमोऽभवदिति योज्यं ॥ ३ ॥ वसिष्ठः वामदेवश्च द्वौ ऋषिसत्तमौ ऋत्विजौ पुरोहितौ । अभिमतौ प्रधानौआस्तां । तथा अभिमताः अपरेमन्त्रिणः । ऋत्विजः जाबालिप्रभृतयश्चासन् ॥४-५॥ अथमन्त्रिगुणान् प्रपञ्चयति सर्गशेषेण । विद्यासुआन्वीक्षिकीप्रभृतिषु विनीताःशिक्षिताः । ह्रीमन्तः अकृत्यकरणेषु लज्जावन्तः । कुशलाः नीतौसमर्थाः । नियतेन्द्रियाः अविहितविषयेभ्योनिवृत्ताः ।श्रीमन्तः लक्ष्मीसमृद्धाः । महात्मानः महाबुद्धयः । शास्त्रज्ञाः नीतिशास्त्रज्ञाः । दृढविक्रमाः अप्रतिहतपराक्रमाः ॥ ६ ॥ प्रणिहिताः राजकृत्येष्वप्रमत्ताः । यथावचनकारिणः यथोक्तवन्तस्तथैवकुर्वन्ति । नतु "मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यत्" इतिन्यायतइतिभावः । तेजःक्षमायशांसिप्राप्ताः । "द्वितीयाश्रित—"इत्यादिनासमासः ।अत्रयशः प्रतापक्षमाजन्याप्रथा । कीर्तिमन्तइत्यत्र कीर्तिस्तु मन्त्रज्ञताकृताप्रथा । स्मितपूर्वाभिभाषिणइत्यनेन निर्मत्सरत्वमुच्यते । आसन्मन्त्रिणइति श्लोकद्वयशेषः ॥ ७ ॥ अर्धमेकान्वयं । क्रोधाद्वा कामहेतोरर्थहेतोर्वा अनृतंअसत्यं वचोनब्रूयुः ॥ ८ ॥ तेषां मन्त्रिणां । स्वेषु स्वराष्ट्रीयवृत्तान्तेषु । परेषु परराष्ट्रीयवृत्तान्तेषुच । कृतं क्रियमाणं चिकीर्षितं कर्तुमिष्टं । करिष्यमाणमितियावत् । यत्किंचिदपिवावृत्तं । चारेण चारमुखेन । अविदितंनास्ति । सर्वोपिस्वराष्ट्रपरराष्ट्रवृत्तान्तभेदस्तैर्ज्ञातइत्यर्थः ॥ ९ ॥ व्यवहारेषु निश्चितार्थप्रतिपादनेषु । कुशलाः समर्थाः । सौहृदेषुविषयेषु । परीक्षिताः राज्ञाबहुधापरीक्षिताः । ते मन्त्रिणः । सुतेष्वपि । प्राप्तकालं प्राप्तसापराधत्वलक्षणकालं । दण्डं । धारयेयुः प्रवर्तयेयुः ॥१०॥ कोशस्य अर्थनिचयस्य । संग्रहणे संपादने । बलस्य चतुर्विधसैन्यस्य । परिग्रहे अर्थप्रदानेनसंरक्षणेच । युक्ताः अवहिताः सन्तः । अहितं शत्रुमपि । अदूषकं अनपराधिनं । नविहिंस्युः नपीडयेयुः । शकिलिङ् ॥ ११ ॥ वीराः शत्रुनिवारणक्षमाः । नियतोत्साहाः शत्रुजयेनित्योत्साहाः । राजशास्त्रं नीतिशास्त्रं । अनुष्ठिताः अनुष्ठितवन्तः । अतएव विषयवासिनां स्वराज्यवासिनां । शुचीनां साधूनां । नित्यंरक्षितारः । अशुचीनांतुनिहन्तारइतिचसि-

**तीर्था०** प्रधानर्त्विजोर्वसिष्ठवामदेवयोरपिमन्त्रिमध्येपाठान्मन्त्रपर्यालोचनायामप्यन्तर्भावोद्योत्यते । **तिल०** अमात्याः देशादिकार्यनिर्वाहकाः । मन्त्रिणोव्यवहारद्रष्टारइतिभेदः ॥ ४ ॥ **तिल०** परानेवाह—सुयज्ञइत्यादि । सुयज्ञःऋषिविशेषः । एतैर्ब्रह्मर्षिभिर्नित्यंसहितास्तस्यऋत्विजइत्यनेनसर्वथाकर्मसाद्गुण्यंदर्शितं । पौर्वकाःपरंपरागताइत्यर्थकममात्यर्त्विजांविशेषणम् ॥ ५ ॥ **तिल०** शस्त्रज्ञाःशस्त्रप्रतिपादकधनुर्वेदविदः ॥ ६ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. सार्धश्लोकोधिकोदृश्यते. २ घ. कुलीनाविजितेन्द्रियाः. ३ ग. इदमर्धमधिकं दृश्यते. ४ घ. शास्त्रेष्वकुहबुद्धयः. ङ. झ. शस्त्रज्ञादृढविक्रमाः. ५ छ. ष्षुच. ६ ख. घ. नीतिज्ञाः सत्यवादिनः. ७ क. ख. घ. ज. कालंचयेदण्डं. च. छ. कालेयथादण्डं. ङ. झ. ट. कालंयथादण्डं. ८ ख. साधयेयुः. ९ ख. संरक्षणे. क. ग्रहणसंयुक्ताः. १० ख. स्वपरिसंग्रहे. ११ ङ—झ. नहिंस्युरविदूषकं. १२ ख. रक्षितारश्चवर्णानां.

ब्रह्मक्षत्रमहिंसन्त[1]स्ते कोशं समपूरयन् ॥ सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ १३ ॥
शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् ॥ नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥१४॥
कश्चिन्न[2] दुष्टस्तत्रासीत्परदारे[3]रतो नरः ॥ प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ॥ १५ ॥
सुवाससः सुवेषाश्च ते च सर्वे सु[4]शीलिनः ॥ हिता[5]र्थं च नरेन्द्रस्य जाग्रतो नयच[6]क्षुषा ॥ १६ ॥
गुरौ[7] गुणगृहीताश्च प्रख्याताश्च परा[8]क्रमे ॥ विदेशेष्वपि वि[9]ज्ञाताः सर्वतो बुद्धिनिश्चया[10]त् ॥ १७ ॥
[ [11]अभितो गुणवन्तश्च न चासन्गुणवर्जिताः ॥ ]
सन्धिविग्रहतत्त्वज्ञाः प्रकृत्या संपदाऽन्विताः ॥ मन्त्र[12]संवरणे[13] शक्ताः श्लक्ष्णाः[14]स्सूक्ष्मासु बुद्धिषु ॥१८॥

द्धं । ते आसन्नित्यनुषज्यते ॥ १२ ॥ ब्रह्म ब्राह्मणान् । क्षत्रं क्षत्रियांश्च । अहिंसन्तः विनाऽपराधंतत्स्वमनपहरन्तः । सत्यप्यपराधे । पुरुषस्य अपराधिनः । बलाबलं अपराधतारतम्यं शक्तितारतम्यंवा । संप्रेक्ष्य । अपराधगुरुत्वे सुतीक्ष्णदण्डाः । अपराधाल्पत्वे मृदुदण्डाश्च । शक्तत्वे सुतीक्ष्णदण्डाः । अशक्तत्वे मृदुदण्डाश्च । कोशं समपूरयन् ॥ १३ ॥ अथमन्त्रिगुणसंपत्तिफलंदर्शयति—शुचीनामित्यादिश्लोकद्वयेन । शुचीनां एकरूपकरणत्रयवतां । एकबुद्धीनां एककण्ठानां सर्वेषां । मन्त्रिणां । संप्रजानतां राज्यतन्त्रंविचारयतां । भावलक्षणसप्तम्यर्थेषष्ठी । "षष्ठीचानादरे"इत्यत्रयोगविभागेन । सर्वेषुमन्त्रिषुराज्यतन्त्रंविचारयत्स्वित्यर्थः । पुरेवा राष्ट्रेवा । क्वचित्कोणेपि । मृषावादी असत्यवादी । नरः नासीत् ॥ १४ ॥ किंच तत्र पुरराष्ट्रेषु । कश्चिन्नरः । दुष्टः कुटिलः । परदाररतश्च नासीत् । प्रत्युत यद्राष्ट्रं पुरवरंच तत्सर्वं प्रशान्तमेव आसीत् । नगरजनपदवासिनःसर्वेप्यन्यायाधर्मरहिताएवासन्नित्यर्थः ॥ १५ ॥ पुनस्तान्विशेषयति—सुवाससःइत्यादिनासार्धश्लोकत्रयेण । सुवाससः शुभ्रवाससः । सुवेषाः शोभनालंकाराः । सुशीलिनः सुसद्वृत्ताः । नरेन्द्रस्य स्वामिनः । हितार्थं नयचक्षुषा जाग्रतः जागरूकाः । सर्वदानीतिषुदत्तावधानाइत्यर्थः ॥ १६ ॥ गुरौ गुरुषु । जात्येकवचनं । गुणगृहीताः गृहीतगुणाः । गुणमात्रग्राहिणोदोषमपश्यन्तइत्यर्थः । पराक्रमेविषये प्रख्याताः । विदेशेषु देशान्तरेष्वपि । सर्वतः सर्वत्रातीतानागतविषयेषु । बुद्धिनिश्चयात् निश्चयरूपबुद्धेर्हेतोः । विज्ञाताः विख्याताः ॥ १७ ॥ सन्धिः सामन्तैःसमाधानं विग्रहः तैः कलहः तयोस्तत्त्वं देशकालाद्युचितत्वं । तज्जानन्तीतितथा । उक्तंचमनुना "यदावेवात्मिकापीडातदासन्धिंसमाश्रयेत । अभ्युच्छ्रयोयदात्मानंतदा मन्येतविग्रहं"इति । प्रकृत्या स्वभावेन । संपदा ऐश्वर्येण । अन्विताः । संपदभावे तच्चापलेनान्यथाकुर्युरिति भावः । मन्त्रोराष्ट्रकार्यचिन्ता तस्यसंवरणे बहिरप्रकटने शक्ताः । संपत्कार्यमिदं । सूक्ष्मासुबुद्धिषु सूक्ष्मार्थविशेषविचारेषु । श्लक्ष्णाः अपरुषाः । सद्यःप्रतिभावन्तइत्यर्थः । नीतिशास्त्रविशेषज्ञाः नीत्याशासनविशेषज्ञाः । "ग्रन्थशासनयोःशास्त्रं" इतिभास्करः । सततं राज्ञःप्रियवादिनः । हितवचनस्यैवराज्ञःप्रिय-

**तिल०** । अभिपूरयन्नितिपाठेअडभावआर्षः । **शिरो०** ब्रह्मक्षत्रं ब्रह्मणोवेदस्यक्षत् अप्रामाण्यप्रतिपादकत्वेनहिंसनंयेषांतेनास्तिकास्तेभ्यस्त्रायतेवेदाप्रामाण्यवादनिवर्तनपूर्वकं वेदप्रामाण्यव्यवस्थापकत्वेनजनान्रक्षतीतिब्रह्मक्षत्रं ब्राह्मणकुलमित्यर्थः ॥ १३ ॥ **तिल०** हितार्थाः हितप्रयोजनाः ॥ १६ ॥ **ती०** गुणागुणगृहीताः गृहीतगुणदोषाः । अयंगुणवानयंदोषवानितिज्ञानवन्तः । आहिताग्न्यादित्वात्परनिपातोनिष्ठान्तस्य । **ति०** गुरोः संबन्धसामान्येषष्ठी । गुरुणा स्वाचार्येणराज्ञाच । अर्शआद्यजन्तगुणशब्देनगुणवत्तयागृहीताइत्यर्थः । तेनगुर्वनुग्रहप्राप्तसर्वैश्वर्यत्वंसूचितं । विदेशेष्वपिसर्वतोविज्ञातत्वेहेतुः बुद्धिनिश्चयाः बुद्धिसंपन्नाः ॥ १७ ॥ **तिल०** अभितोगुणवन्तः सर्वदेशेसर्वकालेचगुणवन्तः । प्रकृत्या त्रिगुणयासंपदाऽन्विताः । तत्रसात्त्विक्यासंपदाशिष्टपालने । तामस्यासंपदादुष्टनिग्रहकाले । भोगकालेराजस्यासंपदाधनधान्यदासीदासशिबिकाश्वगजादिरूपया ॥ १८ ॥

**[ पा० ]** १ ग. तेकोशंसमवर्धयन्. घ. तेचकोशमपूरयन्. २ ग. नमन्दः. ३ ख. ङ.—झ. रतिर्नरः. ४ ङ. च.–झ. शुचिव्रताः. ५ ग. घ. ङ. झ. हितार्थाश्च. ६ घ. चक्षुषः. ७ ङ. च. झ. गुरोर्गुण. ख. छ. ज. गुणागुण. ८ ङ. च. छ. झ. पराक्रमैः. ९ ख. ग. विख्याताः. १० ङ. निश्चिताः. ज. झ. निश्चयाः. घ. निश्चये. ११ ङ. झ. इदमर्धंदृश्यते. १२ ट. संग्रहणे. १३ ग. घ. च. युक्ताः. १४ ग. घ. च. शाक्ताः. ङ. सक्ताः. क. छ. ज. झ. शक्ताः.

नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ॥ ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः ॥
उपपन्नो गुणोपेतैरन्वशासद्वसुंधराम् ॥ १९ ॥
अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन् ॥ प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन् ॥ २० ॥
विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः ॥ स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ २१ ॥
नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ॥ मित्रवान्नतसामन्तः प्रतापहतकण्टकः ॥ २२ ॥
स शशास जगद्राजा दिवं देवपतिर्यथा ॥ २३ ॥
तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तैर्वृतोऽनुरक्तैः कुशलैः समर्थैः ॥
स पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ॥ ८ ॥

पुत्राभावात्परिखिद्यतादशरथेनतदर्थमश्वमेधयजननिर्धारणेन सुमन्त्रमुखादाहूतेषुवसिष्ठादिषुस्वाभिप्रायनिवेदनम् ॥ १ ॥ तैस्तदनुमोदनेनसरयूत्तरतीरेयज्ञशालानिर्माणविधानपूर्वकं भूसंचारणायाश्वमोचनचोदना ॥ २ ॥ दशरथेनमन्त्रिषुयज्ञसंभारसंभरणादिनियोजनपूर्वकं पत्नीनांतन्निवेदनेनदीक्षाविधानम् ॥ ३ ॥

तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः ॥ सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १ ॥

त्वात् । आसन्निितिपूरणीयं ॥ १८ ॥ ईदृशैः उक्तगुणविशिष्टैः । गुणोपेतैः उक्तगुणातिरिक्तगुणोपेतैः । तैः अमात्यैः । उपपन्नः । अनघः व्यसनरहितः । उक्तं मनुना "दशकामसमुत्थानितथाष्टौक्रोधजानिच । व्यसनानिदुरन्तानिप्रयत्नेनविवर्जयेत्"इति । व्यसनस्वरूपंचोक्तं "मृगयाक्षोदिवास्वापःपरिवादःस्त्रियोमदः । तौर्यत्रिकंवृथाट्याचकामजोदशकोगुणः । पैशुन्यंसाहसंद्रोहईर्ष्यासूयार्थदूषणे । वाग्दण्डनंचपारुष्यंक्रोधजोपिगुणोष्टकः" इति । दशरथोराजा । वसुंधरां भूमिं । अन्वशासदितिलुङ् । "सर्तिशास्त्यर्तिभ्यश्च"इत्यङ् ॥ १९ ॥ श्लोकद्वयमेकान्वयम् । चारेण चक्षुःस्थानीयेन । अवेक्षमाणः स्वपरराष्ट्रवृत्तान्तान्पश्यन् । जात्येकवचनमिदं । अनेकचारैर्ज्ञेयत्ववचनात् । यथाहमनुः "वनेवनचराःकार्याःश्रमणाटविकादयः ॥ परप्रवृत्तिज्ञानार्थंशीघ्राश्चारपरंपराः" इति । धर्मेण दण्ड्यदण्डनादिना । प्रजाः । रञ्जयन् आह्लादयन् । पालनमनिष्टनिवृत्तिपूर्वकेष्टप्रापणं । अधर्मं अदण्ड्यदण्डनादि । विश्रुतः दानविक्रमादिभिः प्रसिद्धः । वदान्यः दानशीलः । सत्यसंगरः सत्यप्रतिज्ञः । "संगरोनाक्रियाकालेप्रतिज्ञाविपदोर्युधि" इति यादवः । सः । पुरुषव्याघ्रः पुरुषश्रेष्ठः । तत्र अयोध्यायां । वसन्निितिशेषः ॥ २० ॥ २१ ॥ विशिष्टं अधिकं । तुल्यंवा । आत्मनः शत्रुं नाध्यगच्छत् नज्ञातवान् । तत्रहेतुमाह । मित्रवान् । नतसामन्तः पादानतसमानसीमाधिपतिकः । प्रतापेनहृताः कण्टकाः शत्रवोयस्यसतथा "वेणौद्रुमाङ्गेरोमाञ्चेक्षुद्रशत्रौचकण्टकः"इतियादवः । सइतिशेषः ॥ २२ ॥ उक्तमर्थंसदृष्टान्तमाह—सइति । अर्धमेकं ॥२३॥ सर्गार्थसंग्रहेणदर्शयति—तैरिति । मन्त्रहिते मन्त्रे हितेच । नियुक्तैः । कुशलैः बुद्धिकुशलैः । समर्थैः कार्यकरणसमर्थैः । मन्त्रिभिः । वृतः नृपः । तेजोमयैः । स्वार्थेमयट् । गोभिः किरणैः । युक्तः । उदितोऽर्कः बालसूर्यइव । दीप्तिमवाप । त्रिष्टुबुपजातिवृत्तम् ॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तमः सर्गः ॥७॥

एवंधार्मिकत्वेनदशरथस्यभगवदवतारयोग्यत्वमुक्त्वा अथतदुपयुक्ततदाराधनोपक्रमंदर्शयत्यष्टमे—

ति० प्रजाः धर्मेणयुक्तायथाभवन्तितथा पुरुषैः रक्षयन् । सर्वत्रहेतौ शता ॥ २० ॥ ती० प्रतापाहतकण्टकइति पाठे प्रतापेन समन्तान्निहतकण्टकइत्यर्थः ॥ २२ ॥ इतिसप्तमःसर्गः ॥ ७ ॥

ति० एवंसमग्रगुणस्याप्यपुत्रत्वेनाजितपितृलोकत्वात्पुत्रार्थमश्वमेधप्रस्तावः ॥ १ ॥

[ पा० ] १ ङ. नीतिशास्त्रे. २ च. छ. उपपन्न. ३ ङ. छ. झ. रक्षयन्. ४ ख. ङ. झ. दिवि. ५ क. झ. निविष्टैः. ६ ख. घ. समतैः. ७ च. छ. मयोगोभि.

**चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः ॥ सुतार्थी वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २ ॥**
**स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् ॥ मन्त्रिभिः सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥३॥**
**ततोऽब्रवीदिदं[4] राजा सुमन्त्रं मन्त्रिसत्तमम् ॥ शीघ्रमानय मे सर्वान्गुरूंस्तान्सपुरोहितान् ॥ ४ ॥**
**ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ॥ समानयत्स तान्सर्वान्समस्तान्वेदपारगान् ॥ ५ ॥**
**सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ॥ पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ६ ॥**
**तान्पूजयित्वा धर्मात्मा राजा दशरथस्तदा ॥ इदं धर्मार्थसहितं वाक्यं श्लक्ष्णमथाऽब्रवीत् ॥ ७ ॥**
**मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ॥ तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥**
**तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ॥ कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥ ९ ॥**
**ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ॥ वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् ॥**
**ऊचुश्च परमप्रीताः सर्वे दशरथं वचः ॥ १० ॥**
**संभाराः संभ्रियन्तां ते तुरङ्गश्च विमुच्यताम् ॥ [ सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ] ॥११॥**

तस्येति । उत्तरश्लोकवक्ष्यमाणचिन्ता युक्तेतिसूचयितुं राज्ञोविशेषणानि । तप्यमानस्य तपश्चरतः । यद्वा । पुत्रोत्पादनानुगुणदृष्टसामग्रीसत्त्वेपि पुत्राभावात् परितप्यमानस्य ॥ १ ॥ चिन्तयानस्य पुत्रोत्पत्त्युपायंमार्गमाणस्य । मुगभावआर्षः । एवं वक्ष्यमाणरीत्या । नयजामि नायाक्षिषं ॥ २ ॥ सइत्यादिश्लोकद्वयमेकान्वयं । कृतात्मभिः पर्याप्तबुद्धिभिः । "क्लीबेकृतंयुगेपिस्यात्फलपर्याप्तयोरपि"इतिभास्करः ॥ ३ ॥ तान् प्रसिद्धान् ॥ ४ ॥ त्वरितं तत्क्षणएव । त्वरितविक्रमः त्वरितगमनः । समस्तान् संमिलितान् । समानयत् । राजगृहमितिशेषः ॥ ५ ॥ गुरूनेवाह—सुयज्ञमिति । समानयदितिपूर्वेणान्वयः । सुयज्ञादीनांगुरुत्वमार्त्विज्यकरणात् ॥ ६ ॥ अथ गुर्वागमनानन्तरं । श्लक्ष्णं मधुरम् ॥ ७ ॥ लालप्यमानस्य भृशंविलपतः । लापेर्यङन्ताच्छानच् ॥ ८ ॥ तत् पुत्रेच्छुत्वात् । यष्टुं दीक्षितुं । शास्त्रदृष्टेनकर्मणा विधिना । प्रकारेणेतियावत् । कर्मणा क्रियाकलापेनेतिवा । कामं काम्यमानं यज्ञं । कथंप्राप्स्यामि विघ्नभूयस्त्वादितिभावः । अत्र निर्विघ्नयागकरणे । बुद्धिः उपायः । विचार्यताम् ॥९॥ प्रत्यपूजयन् तुष्टुवुः । पार्थिवस्यमुखाच्च्युतं साक्षाद्राज्ञोक्तमित्यर्थः ॥ १० ॥ ऊचुरित्यर्धमेकं । दशरथं वच ऊचुः । "ब्रूशासि"इत्यादिनाद्विकर्मकत्वम् । ते प्रसिद्धाः । संभाराः यज्ञोपकरणानि यूपपात्रादीनि । संभ्रियन्तां संपाद्यन्तां । तुरङ्गः अश्वमेधीयोऽश्वः ॥११॥

**शिरो०** बुद्धिमान् परमबुद्धिविशिष्टः । धर्मात्मा वेदोक्तकर्मप्रवृत्तिविषयकयत्नवान् । कृतात्मभिः सकलकर्मफलीभूतरघुनाथविषयकबुद्धिभिः ॥ ३ ॥ **शिरो०** पुरोहितशब्दस्यवृत्तिघटकीभूतत्वेपि नित्यसापेक्षत्वात्तत्रमेशब्दान्वयः ॥ ४ ॥ **शि०** तान् राजबोधितान् ॥ ५ ॥ **तिल०** सुयज्ञादयोविद्यागुरवः । वसिष्ठस्यैवपुरोहितत्वेनोपनेतृतयाउपनेतुरेवाध्यापकतयागुरुत्वेपि स्वसमशिष्याणांस्वतपोव्याक्षेपभियातेनाध्यापनेनियोगात्तेषामपिविद्यागुरुत्वमक्षतं । अन्ये अश्वमेधार्त्विज्याद्युपयुक्ताः ॥ ६ ॥ **तिल०** तातप्यमानस्येतिपाठे पुनःपुनर्भृशंचतपःकुर्वतइत्यर्थः ॥ ८ ॥ **शिरो०** बुद्धिरत्र बुद्धिरतः विचाररतान् त्रायतेनिश्चितवस्तूपदेशेनरक्षतीतितत्संबोधनंहेवसिष्ठेत्यर्थः । तत् वाङ्मनसगोचरातीतंवस्तु । यष्टुं प्रत्यक्षतःमेलयितुमिच्छामि । तत् शास्त्रदृष्टेन वेदबोधितेन । कर्मणाअहं कथं किंप्राप्स्यामि वाङ्मनसगोचरातीतं वस्तुप्रत्यक्षतः किंलब्धास्मीत्यर्थः । इतिकामंनितरांविचार्यतां । एतेन "नकर्मणानप्रजयाधनेन" इतिश्रुत्याकर्मणांतत्प्रापकत्वाभावनिश्चयात् वाङ्मनसगोचरातीतवस्तुनःप्रत्यक्षत्वेसर्वप्रमाणविरुद्धत्वाच्च तत्प्राप्तिर्दुर्घटेतिप्रश्नकर्तुराशयोध्वनितः ॥ ९ ॥ **शि०** परमप्रीताः । राजकृतगूढप्रश्नस्यसूत्तरप्रस्फूर्त्यापरमहर्षप्राप्ताएव सर्वे वसिष्ठप्रमुखाः । दशरथं । वचःसूत्तरवचनमूचुः । एतेन प्राकृतवाङ्मनसगोचरातीतत्वंतस्य । भवन्तस्त्वप्राकृतकरणाइतिभवत्करणविषयत्वंतस्यसिद्धमेव । एतावत्कालंभवत्करणाविषयत्वंतुवात्सल्यरसप्रभूतये "नकर्मणानप्रजयाधनेन—"इत्यादीनिप्राकृतजनपराणि । तत्रापिकाम्यकर्मजनिततल्लाभाभावप्रतिपादकानीतिकाम्यनिषिद्धवर्जितानिकर्माण्यनुष्ठेयान्येवेत्युत्तरंसूचितं ॥ १० ॥

**[ पा० ]** १ क. ख. घ.—झ. सुतार्थं. २ क. च. छ. ज. सुनि. ३ ङ. च. झ. सर्वैरपि. ४ ङ. झ. ब्रवीन्महातेजाः. ५ क. घ. छ. सर्वान्गुरूंस्तान्सपुरोहितान्. ६ झ. श्लक्ष्णंवचनमब्रवीत्. ७ क. झ. मुखेरितं. ८ इदमर्धं क.—ट. पुस्तकेष्वधिकंदृश्यते.

सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ॥ यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥
ततः [1]प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ॥ अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षणः ॥ १३ ॥
संभाराः संभ्रियन्तां मे गुरूणां वचनादिह ॥ समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १४ ॥
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥
शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता ॥ नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे ॥ १६ ॥
छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ॥ निहतस्य च यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७ ॥
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ॥ तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८ ॥
तथेति चाब्रुवन्सर्वे मन्त्रिणः प्रत्यपूजयन् ॥ पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तं निशम्य ते ॥ १९ ॥
तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम् ॥ अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥
विसर्जयित्वा तान्विप्रान्सचिवानिदमब्रवीत् ॥ ऋत्विग्भिरुपदिष्टोऽयं यथावत्क्रतुराप्यताम् ॥ २१ ॥
इत्युक्त्वा नृपशार्दूलः सचिवान्समुपस्थितान् ॥ विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २२ ॥
ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयप्रियाः ॥ उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ॥ २३ ॥

एकपुत्रस्यापुत्रप्रायत्वात् । "एष्टव्याबहवःपुत्राः"इति वचनाच्च पुत्रानितिबहुवचनं । प्राप्स्यसइति कर्मकर्तर्यात्मनेपदं । धार्मिकी "धर्मंचरति"इतिठक् । धर्माचरणविषयिणीत्यर्थः ॥ १२ ॥ हर्षेण हर्षाश्रुणा पर्याकुलेव्याप्तेईक्षणेयस्यसः हर्षेणव्याकुलदृष्टिमान् । क्रियाभेदाद्राजपदद्वयमितिनविरोधः ॥ १३ ॥ मे गुरूणामित्यन्वयः। इह इदानीं। समर्थैः । "चतुःशतारक्षन्ति यज्ञस्याघाताय"इत्युक्तरीत्यारक्षणसमर्थैः अधिष्ठितः रक्षितः । सोपाध्यायः अध्वर्युप्रभृतिऋत्विक्सहितः ॥ १४ ॥ सरय्वाइति । अनेन सरयूदक्षिणतीरे अयोध्येतिगम्यते । शान्तयः विघ्ननिवारकाणिकर्माणि । अभिवर्धन्तां अभिवर्धयन्तां । अन्तर्भावितण्यन्तोयंशब्दः । यथाकल्पं यथाक्रमं । "क्रमस्तुकथ्यतेकल्पे" इतिभागुरिः । यथाविधि यथाशास्त्रं ॥ १५ ॥ अयंयज्ञः अश्वमेधः । सर्वेणापि राजमात्रेणापि। महींक्षयतीतिमहीक्षित्। क्षि निवासगत्योरित्यस्मात्क्विप् । तेन । प्राप्तुंशक्यः । कष्टः क्लेशकरः अनर्थकरोवा । अपराधः अपचारः । यदि नभवेत् प्रमादेसत्यनर्थःसिद्धएवेतिभीत्याक्षुद्राराजानोनकुर्वन्तीत्यर्थः ॥ १६ ॥ विद्वांसः अश्वमेधस्वरूपाभिज्ञाः । ब्रह्मराक्षसाः अकृतप्रायश्चित्ताप्रतिग्राह्यप्रतिग्रहायाज्ययाजनादिपापैःराक्षसत्वंप्राप्ताःब्राह्मणाः । यज्ञस्वरूपतदपराधज्ञत्वात् अत्र अश्वमेधे। छिद्रं अपराधं। मृगयन्ते अन्वेषयन्ते। मृगअन्वेषण इतिधातुः। "छिद्रंरन्ध्रापराधयोः"इतिवैजयन्ती। अपराधदर्शने यज्ञमात्मसात्कृत्यनाशयन्तीतिभावः । किंततइत्यतआह—निहतस्येति ॥ १७ ॥ फलितमाह—तदिति । विधिपूर्वं अनपराधंयथाभवतितथा यथासमाप्यते । तथा विधानं यत्नः । क्रियतां । इह-करणेषु यज्ञानुष्ठानेषु। समर्थाः । यूयमितिशेषः । यूयंसमर्थाःखल्वितिस्तुतिः ॥ १८ ॥ ते सर्वे मन्त्रिणः । पार्थिवेन्द्रस्य तद्वाक्यं निशम्य । यथा आज्ञप्तं आज्ञापितं । "वादान्त—"इत्यादिना वैकल्पिकइडभावो निपातितः । तथा कुर्मइत्यब्रुवन् । समीचीनोमहाराजस्याध्यवसायइति प्रत्यपूजयंश्च ॥ १९ ॥ वर्धयन्तः आशीर्भिरितिशेषः । द्विजाः ऋत्विजः । भाविन्यां चैत्रपौर्णमास्यांतथैवकरिष्यामइत्युक्त्वाजग्मुरित्यर्थः ॥ २० ॥ क्रतुः क्रतुसंभारः । आप्यतां संपाद्यतां ॥ २१ ॥ महाद्युतिरितिप्रीत्यतिशयद्योतनं ॥ २२ ॥ ताः प्रसिद्धाःकौसल्याद्याः । पत्नीः यज्ञार्हाः । "पत्युर्नोयज्ञसंयोगे" इतिपतिशब्दस्ययज्ञफलभोक्तृत्वरूप-

**शि०** सोपाध्यायः मुख्यऋत्विक्सहितः । उपाध्यायप्रयोजनंतु "पदेपदेजुहोति" इतिश्रुतिबोधितकर्मनिर्वहणं ॥ १४ ॥ **तीर्थी०** यज्ञादिषुमन्त्रलोपक्रियालोपादिनाराक्षसत्वंप्राप्ताब्राह्मणा ब्रह्मराक्षसाइत्युच्यन्ते । **तिल०** उप सं दिष्ट इति त्रिपदं । समित्यस्यआप्यतामित्यनेनान्वयः । व्यवहितप्रयोगआर्षः ॥ २१ ॥ इत्यष्टमस्सर्गः ॥ ८ ॥

**[ पा० ]** १ झ. स्तुष्टो. २ झ. व्याकुललोचनः. ३ ङ. छ. झ. विधिहीनस्य. ४ झ. साधनेष्विति. ५ च. छ. ष्विति. ६ ङ. झ. प्रतिपूजिताः. ७ झ. यथापूर्वं. ८ ख. तान्सर्वान्. ९ क. ङ. च. झ. रुपसंदिष्टो. १० ङ.—झ. महामतिः. ११ ङ. च. छ. झ. हृदयंगमाः.

तासां तेनातिक्रान्तेन वचनेन सुवर्चसाम् ॥ मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ॥ ९ ॥

सुमन्त्रेणदशरथंप्रतितस्य अङ्गराजेनअनावृष्टिनिवारणार्थमानीतस्यऋश्यशृङ्गस्यानुग्रहेणपुत्रोत्पत्तिप्रतिपादकसनत्कुमारवचसो रहसिसंग्रहेणविनिवेदनम् ॥ १ ॥

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् ॥ [ श्रूयतां तत्पुरावृत्तं पुराणे च मया श्रुतम् । ]
ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः ॥ १ ॥
सनत्कुमारो भगवान्पूर्वं कथितवान्कथाम् ॥ ऋषीणां संनिधौ राजंस्तव पुत्रागमं प्रति ॥ २ ॥
कश्यपस्य तु पुत्रोस्ति विभण्डक इति श्रुतः ॥ ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥ ३ ॥
स वने नित्यसंवृद्धो मुनिर्वनचरः सदा ॥ नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् ॥ ४ ॥
द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ॥ लोकेषु प्रथितं राजन्विप्रैश्च कथितं सदा ॥ ५ ॥
तस्यैवं वर्तमानस्य कालः समभिवर्तत ॥ अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् ॥ ६ ॥
एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ॥ अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥ ७ ॥
तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ॥ अनावृष्टिः सुघोरा वै सर्वभूतभयावहा ॥ ८ ॥

---

यज्ञसंयोगे नकारादेशविधानात् । दीक्षां दीक्षाध्यवसायं । विशत गच्छतेत्यर्थः । सुतकारणात् सुतार्थं । "निमित्तकारणहेतूनांप्रयोगेसर्वासामिष्टिः" इतिपञ्चमी ॥ २३ ॥ अतिक्रान्तेन अत्यन्तमिष्टेन । मुखपद्मानि सुन्दराणिमुखानीत्यर्थः ॥ २४ ॥ इति श्रीगोविन्दराजविरचितेश्रीमद्रामायणभूषणेमणिमञ्जीराख्याने बालकाण्डव्याख्यानेअष्टमस्सर्गः ॥ ८ ॥

---

अथभगवदवतारासाधारणकारणंपुत्रेष्टिमुपक्षिपति- सर्गत्रयेण । सूतः सारथित्वेनमन्त्रित्वेनचस्थितःसुमन्त्रः । रहः एकान्ते । इदमब्रवीत् अन्तःपुरमागत्योक्तवानित्यर्थः । अयं अश्वमेधप्रवृत्तिरूपःपुत्रार्थोपायः । ऋत्विग्भिः वसिष्ठादिभिः । उपदिष्टः । मयातु पुरावृत्तः इतिहासरूपः यः श्रुतः ॥ १ ॥ कथमित्यत्राह— सनत्कुमारइत्यादि । भगवान् भविष्यज्ज्ञानवत्त्वरूपमाहात्म्यवान् । कथां भविष्यद्विषयिणीं ॥ २ ॥ ख्यातोभविष्यतीत्यत्र "धातुसंबन्धेप्रत्ययाः" इति- भूतभविष्यतोःसाधुत्वं ॥ ३ ॥ अन्यं ग्रामग्रामीणादिकं । नजानाति नज्ञास्यति ॥ ४ ॥ द्वैविध्यं द्वैधीभावः । स्त्रीसङ्गकृतोभङ्गइत्यर्थः । लोकेषुप्रथितमित्यत्रब्रह्मचर्यमित्यनुषङ्गः । यद्वा । मेखलाजिनदण्डादिना लोकेषुप्रथितं । विप्रैः स्मर्तृभिः । कथितं ऋतुगमनलक्षणंच । ब्रह्मचर्यस्यद्वैविध्यंभविष्यति । आह्याज्ञवल्क्यः । "षोडशर्तुर्निशःस्त्रीणांतस्मिन्युग्मासुसंविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्चवर्जयेत्" इति ॥ ५ ॥ तथाविधस्य द्वितीयब्रह्मचर्यस्य प्रसक्तिंदर्शयति—तस्येत्यादिना । तस्य । अग्निं । यशस्विनंपितरं । चाद्गुरुंच । शुश्रूषमाणस्य । प्रथमेब्रह्मचर्येवर्तमानस्येत्यर्थः । कालः कतिपयकालः । समभिवर्तत । भविष्यदर्थेलङ् । "छन्दसिलुङ्लङ्लिटः" इतिसर्वलकारापवादत्वेनलङोपिविधानात् । अडभावश्चार्षः ॥ ६ ॥ एतस्मिन्काले तस्यब्रह्मचर्यदशायां । अङ्गेषु अङ्गदेशेषु ॥ ७ ॥ व्यतिक्रमात् धर्मातिक्रमात् । सुदारुणा बहुकालव्यापिनी । सुघोरा तदीयसर्वराष्ट्रव्यापिनी ।

---

ति० पितुः नक्वापिलयागन्तव्यमित्याज्ञानुवर्तनाद्वनचरत्वं ॥ ४ ॥

[ पा० ] १ च.–ज. यत्पुरा. ख. ङ.—झ. इदमर्धमधिकं. २ ख. ग. ङ. विभाण्डक. ३ ढ. वैचनरैः सह. ४ ग. ज. मर्त्यं. ५ ख. समतिवर्तत. ग. समभिवर्तते. ६ ख. घ. ङ. झ. सर्वलोक.

अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ॥ ब्राह्मणान्[1]श्रुतवृद्धांश्च समानीय प्रवक्ष्यति ॥ ९ ॥
भवन्तः [2]श्रुतधर्माणो लोक[3]चारित्रवेदिनः ॥ समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् ॥
[ [4]इत्युक्तास्ते ततो राज्ञा सर्वे ब्राह्मणसत्तमाः ] ॥ १० ॥
वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः ॥ विभण्डकसुतं राजन्सर्वोपायैरिहानय ॥ ११ ॥
आनाय्य[5] च महीपाल ऋश्यशृङ्गं सुसत्कृतम् ॥ [ वि[6]भण्डकसुतं राजन्ब्राह्मणं वेदपारगम् ॥ ]
प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ १२ ॥
तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ॥ केनोपायेन वै [7]शक्यमिहानेतुं स वीर्यवान् ॥ १३ ॥
ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् ॥ पुरोहितममात्यांश्च [8]ततः प्रेष्यति सत्कृतान् ॥ १४ ॥
ते तु राज्ञो वचः श्रुत्वा व्यथिता वि[9]नतानना ॥ न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १५ ॥
वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तत्क्षमान् ॥ आनेष्यामो वयं विप्रं न च दोषो भविष्यति ॥ १६ ॥
एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः ॥ आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ १७ ॥
ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति ॥ सनत्कुमारकथितमेतावद्व्याहृतं मया ॥ १८ ॥

---

अतएवसर्वभूतभयावहा ॥८॥ श्रुतेनवृद्धाःश्रुतवृद्धाः । बहुभ्योबहुधाश्रुतशास्त्राइत्यर्थः । प्रवक्ष्यतिचेत्यन्वयः ॥ ९ ॥ श्रुतधर्माणः । "धर्मादनिच्केवलात्"इत्यनिच् । लोकचारित्रवेदिनः लोकाचारज्ञाः । अतः अनावृष्टिमूलस्यमत्पापस्य प्रायश्चितं यथाभवेत् तादृशं नियमं अनुष्ठेयधर्मं आदिशन्तु ॥ १० ॥ शुद्धब्रह्मचारिणेकन्याप्रदानमेवपरमंप्रायश्चित्तमितिवक्ष्यन्तीत्याह—वक्ष्यन्तीत्यादिना । सर्वोपायैः नानाविधोपायैः ॥ ११ ॥ ऋश्यशृङ्गंइत्यत्र "ऋत्यकः" इतिप्रकृतिभावः । आनाय्येति आङुपसृष्टाण्णीञ्प्रापणइत्यस्माद्धेतुमण्ण्यन्ताह्यप् । प्रयच्छ देहि । ऋश्यशृङ्गायेतिशेषः । सुसत्कृतमित्यानयनक्रियाविशेषणं । सुसमाहितः निर्विचारइतियावत् ॥१२॥ चिन्ताप्रकारमाह—केनेति । वीर्यवान् नियतब्रह्मचर्यः ॥ १३ ॥ विनिश्चित्य ब्राह्मणंब्राह्मणाएवानेष्यन्तीतिनिश्चित्य । ततः तस्मादेशात् । प्रेष्यति प्रेषयिष्यति । भविष्यदर्थेलट् । "कालसामान्येलड्वक्तव्यः" इतिवचनात् ॥ १४ ॥ व्यथिताः खिन्नाः । अतएव विनताननाः नम्रमुखाः । ऋषेःविभण्डकात् । भीताइत्यनन्तरमितिकरणंबोध्यं । अनुनेष्यन्ति नवयंगन्तुंशक्ताः । किंतु तदानयनउपायंविचिन्त्यवक्ष्यामइति सान्त्वयिष्यन्ति ॥ १५ ॥ तत्क्षमान् ऋश्यशृङ्गानयनोचितान् उपायांश्चिन्तयित्वा । तान् तस्य राज्ञोवक्ष्यन्ति । एतैरुपायैर्वयंविप्रमानेष्यामः । नचदोषोभविष्यति । ऋश्यशृङ्गस्यब्रह्मचर्यवैकल्यदोषश्चनभविष्यति । तत्रभवतानशङ्कनीयं । यथागणिकासंपर्कोनभवेत्तथाऽऽनेष्यामइत्यर्थः । ऋषिशापदोषोनभविष्यतीतिवार्थः । अनावृष्टिदोषोनभविष्यतीतिवा । इतिवक्ष्यन्तीतिपूर्वेणान्वयः ॥ १६ ॥ सनत्कुमारोक्तंसमाप्य स्वयमाह—एवमिति । यथाआनयिष्यामइत्युक्तं एवमानीतः । देवः पर्जन्यश्च अवर्षयत् । शान्ता रोमपादकन्याच । अस्मै ऋश्यशृङ्गाय । प्रदीयते प्रादीयत । कालसामान्येलट् ॥ १७ ॥ जामाता रोमपादस्यदशरथस्यापिवा । दशरथस्यौरसी । शान्ता दत्तारोमपादस्य । सनत्कुमारकथितमेतावत् । एवमङ्गाधिपेनेत्यादितु मयाव्याहृतमित्यर्थः । यद्वा सर्वसनत्कुमारवचनमेव । अवर्षयत्

---

**ति॰** श्रुतकर्माणः अनावृष्टिकरश्रुतमत्कर्माणः ॥ १० ॥ **ति॰** वीर्यं जितेन्द्रियत्वं विद्यावृत्ततपोवीर्यंच ॥ १३ ॥ **तिल॰** वनताननाः नम्रमुखाः । अवस्यआदेर्लोपः ॥ १५ ॥

**[ पा॰ ]** १ च. छ. श्रुतसंपन्नान्. ङ. झ. श्रुतसंवृद्धान्. क. श्रुतवृत्तांश्च. २ ङ. झ. श्रुतकर्माणो. ३ क. ख. ग. लोकेचारित्र. ४ ङ. च. छ. झ. ञ. इदमर्धमधिकंदृश्यते. ५ ख. ग. ज. आनीयच. क. च. छ. आनयित्वा. घ. आनाय्यत्वं. ६ ङ. झ. इदमर्धमधिकंदृश्यते. ७ क. ख. ग. ज. शक्यइहा. ८ झ. ञ. त्यांश्चप्रेषयिष्यति. ट. ततःप्रेष्यतिधर्मवित्. ९ क. ङ. च. छ. झ. वनताननाः ।

अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत ॥ यथर्श्यशृङ्गस्त्वानीतो विस्तरेण त्वयोच्यताम् ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे नमवः सर्गः ॥ ९ ॥

## दशमः सर्गः ॥ १० ॥

सुमन्त्रेणदशरथंप्रतिऋश्यशृङ्गस्यरोमपादेनस्वनगरंप्रत्यानयनप्रकारादेर्विस्तरेणप्रतिपादनम् ॥ १ ॥ तथासनत्कुमारोक्तकथाशेषस्यविस्तरेणकथनपूर्वकं अङ्गदेशादृश्यशृङ्गानयनचोदना ॥ २ ॥

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तदा ॥ यथर्श्यशृङ्गस्त्वानीतः शृणु मे मन्त्रिभिः सह ॥
[ तन्मे निगदितं सर्वं विस्तरेण शृणुष्वह ] ॥ १ ॥
रोमपादमुवाचेदं सहामात्यपुरोहितः ॥ उपायो निरपायोऽयमस्माभिरभिचिन्तितः ॥ २ ॥
ऋश्यशृङ्गो वनचरस्तपस्स्वाध्यायने रतः ॥ अनभिज्ञः सनारीणां विषयाणां सुखस्य च ॥ ३ ॥
इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ॥ पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् ॥ ४ ॥
गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलंकृताः ॥ प्रलोभ्य विविधोपायैरानयिष्यन्ति सत्कृताः ॥ ५ ॥
श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् ॥ पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा ॥
वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् ॥ ६ ॥

वर्षयिष्यति । प्रदीयते प्रदास्यते ॥ १८ ॥ अथेत्युत्तरशेषः श्लोकः । अत्र सर्गविच्छेदोलेखकदोषकृतइतिप्रतिभाति ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेनवमःसर्गः ॥ ९ ॥

मे मत्तः । सः ऋश्यशृङ्गः । यथामन्त्रिभिरानीतः तथा शृणु । हेतिप्रसिद्धौ ॥ १ ॥ निरपायः अव्यभिचारिफलः ॥ २ ॥ तपस्स्वाध्यायने तपस्स्वाध्याययोः "सर्वोद्वन्द्वोविभाषयैकवद्भवति" इत्येकवद्भावः । "अन्येषामपिदृश्यते" इतिदीर्घः । तेन पुराणेतिहासादिमुखेनापिनस्त्रीस्वरूपंजानातीतिभावः । नारीणामनभिज्ञइतिकर्मणिषष्ठी । विषयाणां शब्दस्पर्शरूपरसगन्धानांसंबन्धिनः सुखस्यचानभिज्ञश्च भवति ॥ ३ ॥ नरचित्तप्रमाथिभिः नरचित्ताकर्षकैः । तमितिशेषः । क्षिप्रं शीघ्रंआनाययिष्यामः । अध्यवसीयतां निश्चीयतां । अस्मदुक्तप्रकारइतिशेषः ॥ ४ ॥ केइन्द्रियार्थाःकथंतैरानयनंतत्राह—गणिकाइति । गणिकाः वेश्याः । प्रलोभ्य वञ्चयित्वा । सत्कृताः अस्माभिः कृतबहुमानाःऋश्यशृङ्गेणवा ॥ ५ ॥ राजापुरोहितंतथेतिप्रत्युवाच । पुरोहितोपि मन्त्रिणस्तथेतिप्रत्युवाच । तेच मन्त्रिणस्तथाचक्रुः । तेषामेवाधिकारात् । वारमुख्याःप्रेषयामासुरित्यर्थः । वारेति अर्धमेकं । वारशब्देन वारस्त्रियउच्यन्ते नामैकदेशे-

ति० सोच्यतां सः उच्यतामित्यर्थः । सन्धिरार्षः । यद्वा सा तद्विषयकाकथा उच्यतामित्यर्थः ॥१९॥ इतिनवमःसर्गः ॥९॥
ति० मन्त्रिभिस्सहसंमन्त्र्य रोमपादेन यथा ऋश्यशृङ्गआनीतः येनचोपायेनानीतः तन्मयानिगदितं सर्वप्रकारं मे मत्तः मन्त्रिभिस्सहशृण्वितियोजना ॥ १ ॥ शिरो० तपस्स्वाध्यायतत्परः तपस्स्वाध्याययोर्निरतः ॥ ३ ॥ ति० अध्यवसीयतां अस्मदुक्तकरणाययत्यतां ॥ ४ ॥ ति० राजा पुरोहितं । तथेति । त्वयैवतथाकर्तव्यमित्युवाच । अल्पविषयत्वाद्राज्ञएवंवादः । अथपुरोहितस्यविप्रत्वाद्गणिकाभिस्सहसंवादोऽनुचितइतिसोपिमन्त्रिणःप्रत्युवाच ॥ ६ ॥

[ पा० ] १ ङ. च. झ. येनोपायेनसोच्यताम्. २ क—झ. स्तदा. ३ ख. ङ. झ. स्त्वानीतोयेनोपायेनमन्त्रिभिः । तन्मेनिगदितंसर्वंशृणुमे. ४ इदमर्धं क. ख. ङ. झ. दृश्यते. ५ क. च. सहामात्यं. ६ ङ. च. झ. स्स्वाध्यायसंयुतः. घ. ट. स्वाध्यायतत्परः. ७ ङ. झ. सुनारीणां. ८ च. साध्ववसीयताम्. ९ क—ङ. ज. झ. रानेष्यन्तीहसत्कृताः. १०. च. हसत्कृतम्. ११ ख. श्चतेमतिम्.

आश्रमस्या[1]विदूरेऽस्मिन्यत्नं कुर्वन्ति दर्शने ॥ ऋषिपुत्रस्य[2] धीरस्य नित्यमाश्रमवासिनः ॥ ७ ॥
पितुः स नित्यसंतुष्टो नातिचक्राम चाश्रमात् ॥ ८ ॥
न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ॥ स्त्री वा पुमान्वा यच्चान्य[3]त्सर्वं नगरराष्ट्रजम् ॥ ९ ॥
ततः कदाचित्तं देशमाजगाम यदृच्छया ॥ विभण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १० ॥
ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुर[4]स्वरैः ॥ ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११ ॥
कस्त्वं किं वर्तसे ब्रह्मञ्ज्ञातुमिच्छामहे वयम् ॥ एकस्त्वं विजने [5]घोरे वने चरसि शंस नः॥१२॥
अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः ॥ हार्दा[6]त्तस्य मतिर्जाता ह्याख्यातुं पितरं स्वकम् ॥१३॥
पिता विभण्डकोऽस्माकं तस्याहं सुत औरसः ॥ ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ॥१४॥
इहाश्रमपदोऽस्माकं समीपे शुभदर्शनाः ॥ करिष्ये वोऽत्र पूजां वै सर्वेषां विधिपूर्वकम् ॥ १५ ॥
ऋषिपुत्रवचः श्रुत्वा [7]सर्वासां मतिरास वै ॥ तदाश्रमपदं द्रष्टुं जग्मुः [7]सर्वाश्च तेन ताः ॥ १६ ॥
[8]आगतानां ततः पूजामृषिपुत्रश्चकार ह ॥ इदमर्घ्यमिदं पाद्यमिदं [9]मूलमिदं फलम् ॥ १७ ॥
प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः ॥ [10]ऋषेर्भीतास्तु शीघ्रं ता गमनाय मतिं दधुः ॥१८॥

नामग्रहणात् ॥ ६ ॥ अस्मिन् वने आश्रमस्याविदूरे । दर्शने ऋष्यश्रृङ्गदर्शने । यत्नं अवधानं । कुर्वन्ति अकुर्वन् । ऋषिपुत्रस्येत्यादिविशेषणत्रयं यत्नस्य कर्तव्यत्वेहेतुः ॥ ७ ॥ उक्तहेतुंविवृणोति—पितुरित्यर्धेन । पितुःसकाशात् । नित्यसंतुष्टः पितृशुश्रूषणैकरतइत्यर्थः ॥ ८ ॥ हेत्वन्तरमाह—नतेनेति । जन्मप्रभृति जन्मारभ्य । नगरजं अश्वादि । राष्ट्रजं कुक्कुटादि ॥९॥ यदृच्छया दैववशात् ॥ १० ॥ चित्रवेषाः नानालंकाराः ॥११॥ कस्त्वं किंजातिः कस्यपुत्रइत्यर्थः । किं किमर्थं । वर्तसे । इच्छामहइत्यात्मनेपदमार्षं । भवान् किंजातिः किंनामधेयः कस्यपुत्रः त्वं घोरेस्मिन्वने किमर्थं वर्तसे । किमर्थमेकश्चरसीति योजना ॥ १२॥ यस्मात्कारणात् । काम्यरूपाः काम्यमानरूपाः ताः स्त्रियः । वने तेन अदृष्टरूपाः तस्मात् । हार्दात् दर्शनजस्नेहात् । स्वकंपितरं पित्रादिकं । आख्यातुं मतिर्जाता ॥ १३ ॥ अस्माकमिति मृगाद्यपेक्षयाबहुवचनं । किंतद्द्रौणःपुत्रोसि । नेत्याह—औरसइति । पुराकिल महाभूततटाकाख्येसरसि उपस्पृशतोविभण्डकस्यउर्वशींदृष्ट्वारेतोस्खलत् । तन्मृगी जलेनसहपीत्वागर्भिण्यासीत् । तस्यांजातः ऋश्यमृगतुल्यश्रृङ्गत्वात् ऋश्यशृङ्गाख्योऽभूदिति पौराणिकीकथा । मे ऋश्यशृङ्गेति नाम ख्यातं । मे तपोरूपं कर्मच । भुवि वनभुवि । ख्यातं ॥ १४ ॥ इह वनसमीपेप्रदेशे । अस्माकं आश्रमपदः । पुंस्त्वमार्षं । अत्र वःपूजां करिष्ये । आगन्तव्यमितिभावः । सर्वेषामितिपुंल्लिङ्गनिर्देशः स्त्रीस्वरूपाऽपरिज्ञानकृतः ॥ १५ ॥ द्रष्टुंमतिः । आस अभूत् । अस्तेर्भूभावाभावआर्षः । तेनसह । तदाश्रमपदं जग्मुश्च ॥ १६ ॥ आगतानां आश्रमपदंआगतानां । अन्तेइतिकरणंद्रष्टव्यं ॥ १७ ॥ समुत्सुकाः तत्संलापसाभिलाषाः । ताःसर्वाः । तां पूजां ऋषिपुत्रदत्तांपूजाम् । प्रतिगृह्य । ऋषेः विभण्डकात् । भीतास्सत्यः । शीघ्रंगमनाय मतिंदधुः

**तीर्थी॰** अस्मिन् दर्शने । ऋश्यश्रृङ्गदर्शनस्यबुद्धिस्थत्वादस्मिन्निति निर्देशः ॥ ७ ॥ **ति॰** रूपादिकंजन्मप्रभृतिदृष्टपूर्वंनभवति यथातथाव्यवह्रियते इतिशेषः ॥ ९ ॥ **ति॰** कस्त्वं किंजातिः कस्यपुत्रः किंनामाच किंवर्तसे किंकर्मासि । अपि च । एकस्संस्त्वं विजनेदूरे जनवासरूपग्रामादिभ्योदूरे वने किमर्थं चरसीति प्रश्नत्रयं ॥ १२ ॥ **ति॰** स्त्रियइत्यस्यदृष्टाइतिशेषः । अनेनहार्दमूलभूता "चलस्यचेतसोयास्यादुदासीनेष्ववस्तुषु । अवारणीयावृत्तिस्सादृष्टिशब्देनकथ्यते" इत्युक्तलक्षणादृष्टिरुक्ता । ततस्सर्वांशेऽनुपेक्षात्मकज्ञानरूपःपरिचयोपिमध्येज्ञेयः । अतस्तासु हार्दात् दर्शनजस्नेहात् । "दोषानालोकिनीप्रीत्याख्यचित्तवृत्तिर्हार्दं"इत्युक्तेः ॥१३॥ **ति॰** नामेत्यन्तं आद्यप्रश्नोत्तरं । द्वितीयप्रश्नोत्तरमाह । कर्मचमदीयं भुविप्रसिद्धं ॥१४॥ **ति॰** तृतीयप्रश्नस्योत्तरमाह । इहेति ॥ १५ ॥ **ति॰** नः अस्माकं भक्ष्यमितिशेषः ॥ १७ ॥

[ **पा॰** ] १ ख. स्याविदूरस्य. २ ङ. च. झ. ऋषेःपुत्रस्य. ३ क—च. झ. त्सत्वंनगर. ४ ङ. मधुरस्वरम्. ख. मधुरस्वनम्. ग. स्वनैः. ५ ङ. झ. दूरेवने. ६ घ. तासांप्रीतिरजायत. ७ क. च. सर्वाश्चतेनहि. ङ. ज. झ. सर्वास्ततोङ्गनाः. ८ क. ख. घ. ङ. ज. झ. गतानांतुततः. ९ क. ख. ङ. च. छ. झ. मूलंफलंचनः. १० ङ. झ. ऋषेर्भीताश्चशीघ्रंतु.

अस्माकमपि मुख्यानि फलानीमानि [1]वै द्विज ॥ [2]गृहाण प्रति भद्रं ते भक्षयस्व च माचिरम् ॥१९॥
ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ॥ मोदकान्प्रददुस्तस्मै [3]भक्षांश्च विविधाञ्शुभान् ॥ २० ॥
तानि चास्वाद्य तेजस्वी फलानीति स मन्यते ॥ अनास्वादितपूर्वाणि वने नित्य[4]निवासिनाम् ॥२१॥
आपृच्छ्य तु [5]तदा विप्रं व्रतचर्यां निवेद्य च ॥ गच्छन्ति स्मापदेशात्ताः भीतास्तस्य पितुः स्त्रियः ॥२२॥
गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ॥ [6]अस्वस्थहृदयश्चासीद्दुः[7]खं स परिवर्तते ॥ २३ ॥
[8]ततो परेद्युस्तं देशमाजगाम स वीर्यवान् ॥ [ [9]विभण्डकसुतः श्रीमान्मनसा चिन्तयन्मुहुः ॥]
मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलङ्कृताः ॥ २४ ॥
दृष्ट्वैव च [10]तदा विप्रमायान्तं हृष्टमानसाः ॥ उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः ॥ २५ ॥
एह्याश्रमपदं सौम्य ह्यस्माकमिति चाब्रुवन् ॥ [ [11]चित्राण्यत्र बहूनि स्युर्मूलानि च फलानि च ।]
[12]तत्राप्येष विधिः श्रीमान्विशेषेण भविष्यति ॥ २६ ॥
श्रुत्वा तु वचनं तासां सर्वासां हृदयंगमम् ॥ गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः ॥२७॥
तत्र चानीयमाने तु विप्रे तस्मिन्महात्मनि ॥ ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥ २८ ॥
हर्षेणैवागतं विप्रं वि[13]षयं स्वं नराधिपः ॥ प्रत्युद्गम्य मुनिं प्रह्वः शिरसा च महीं गतः ॥ २९ ॥
अर्घ्यं च प्रददौ तस्मै न्यायतः सुसमाहितः ॥ वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं [14]मन्युराविशत् ॥३०॥

॥ १८ ॥ प्रतिगृहाणेत्यन्वयः । "छन्दसिपरेपि"इति प्रतीत्यस्योपसर्गस्यधातोरुपरिष्टात्प्रयोगः । "छन्दोवत्पुराणानिभवन्ति" इतिन्यायात् । माचिरं विलंबंमाकुरु ॥ १९ ॥ अत्र आदावित्युक्त्वेत्युपस्कार्यं । स्नेहिजनवद्वशीकारार्थमालिङ्ग्य ॥ २० ॥ वनेनित्यनिवासिनांअनास्वादितपूर्वाणि । तैःपूर्वमनास्वादितानि फलानीमानीति मन्यतेस्म । अपूर्वरसत्वात् । "पूरणगुण—"इतिसमासप्रतिषेधादेवज्ञापकात्तृतीयार्थेषष्ठी ॥ २१ ॥ व्रतचर्यांनिवेद्य अस्माभिःकिंचिद्व्रतमनुष्ठेयमस्तीति व्रतानुष्ठानंनिवेद्य । तस्मादपदेशात् व्याजात् । तस्यपितुर्भीतास्सत्योगच्छन्तिस्म ॥ २२ ॥ काश्यपस्य कश्यपपुत्रस्यविभण्डकस्य । अस्वस्थहृदयः कर्षितचित्तः । दुःखंयथाभवतितथा परिवर्ततेस्म संचरतिस्म ॥ २३ ॥ ततः अस्वस्थचित्तत्वाद्धेतोः ॥ २४ ॥ अस्माकमाश्रमपदमेहीतिपूर्वेणान्वयः । तत्रापि श्रीमान् समृद्धिमान् । एषविधिः सत्कारः । स्वदेशत्वाद्विशेषेणभविष्यति । इतिचाब्रुवन्नितियोजना ॥ २५ ॥ २६ ॥ हृदयंगमं मनोज्ञं । "खश्प्रकरणेगमेःसुप्युपसंख्यानं"इतिखश् । निन्युः नावमारोप्यगङ्गाप्रवाहेणेतिशेषः । तथैवभारतेप्रतिपादनात् ॥ २७ ॥ तत्र अङ्गदेशइत्यर्थः ॥ २८ ॥ स्वंविषयं स्वदेशं । प्रह्वः विनीतः ॥ २९ ॥ अर्घः पूजा तदर्थमुदकमर्घ्यं । "पादार्घाभ्यांच" इति यत्प्रत्ययः । न्यायतः शास्त्रक्रमेण । विप्रेन्द्रात् ऋश्यशृङ्गात् । प्रसादं गणिकाभिःप्रलोभ्यानयनकृतकोपनिवृत्तिं । वव्रे । कथंवव्रे । विप्रं त्वां मन्युः कोपो मा-

**ति॰** माचिरं । ऋषेरागमनात्पूर्वमेवभक्षणीयमित्याशयः ॥ १९ ॥ **ति॰** हर्षसमन्विताः बालब्रह्मचारितोगाढतरालिङ्गनप्राप्त्या । स्वकार्यानुकूलस्पर्शप्राप्त्या च । **शिरो॰** भक्ष्यान् भक्षयितुंयोग्यान्मोदकान् ॥ २० ॥ **ति॰** अस्वस्थहृदयः अप्रसन्नचित्तआसीत् । दुःखात् तादृशचाक्षुषादिविषयसुखविश्लेषजात् । परिवर्तनं एकदेशानवस्थितिः ॥ २३ ॥ **ति॰** ततः अस्वस्थचित्तत्वाद्धेतोः । मनसाचिन्तयन् । तासां दर्शनस्पर्शनगमनादिप्रकारान्स्मरन्नित्यर्थः । तत्रगमनमेतद्द्वारकमवश्यंभावीति चिन्तयन्नित्यर्थश्च ॥ २४ ॥ **ति॰** यद्यत्रैवचित्राणिमूलानिफलानिचभवेयुः । अतस्तत्रगमनंव्यर्थमितिचेत्तत्रापि । एषविधिः विचित्रफलमूलभक्षणविधिः । विशेषेण इतोप्याधिक्येन भविष्यति ॥ २६ ॥

**[ पा॰ ]** १ ङ. झ. हेद्विज. २ ङ. ज. झ. गृहाणविप्र. ३. ट. भक्ष्यांश्च. ४ क. ख. घ. च. ज. निवासिना. ५ च. तदाक्षिप्रं. ६ ज. अस्वस्थहृदयस्तत्रनलेभेधृतिमात्मनः. ७ ग. ङ. च. छ. झ. दुःखाच्चपरिवर्तते—कः घ. दुःखात्संपरि. ८ ज. ततः प्रभातेतंदेशं. ९ इदमर्धं ख. ङ—झ. दृश्यते. १० ङ. च. छ. झ. ततोविप्रं. ११ इदमर्धं ङ—झ. दृश्यते. १२ ङ. झ. तत्राप्येष विशेषेणविधिर्हिभविताध्रुवं. १३ ङ. झ. तापसंसनराधिपः. क. ग. च. छ. ज. विषयंसनराधिपः. १४क—घ. च. झ राविशेत्.

अन्तःपुरं [1]प्रविश्यास्मै कन्यां दत्त्वा यथाविधि ॥ शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥३१॥
एवं स न्यवसत्तत्र सर्वकामैः सुपूजितः ॥ [ [2]ऋश्यशृङ्गो महातेजाः शान्तया [3]सह भार्यया ] ॥३२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ॥ ११ ॥

दशरथेनाङ्गदेशमेत्य रोमपादमुखादृश्यशृङ्गस्य भार्यया सह शान्तयाऽयोध्यां प्रत्यानयनम् ॥ १ ॥

भूय एव च राजेन्द्र शृणु मे वचनं हितम् ॥ यथा स देवप्रवरः [4]कथायामेवमब्रवीत् ॥ १ ॥
इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ॥ [5]राजा दशरथो नाम श्रीमान्सत्य[6]प्रतिश्रवः ॥ २ ॥
अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति ॥ कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥३॥
[7]पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद [8]इति श्रुतः ॥ [9]अङ्गराजं दशरथो गमिष्यति [10]महायशाः ॥ ४ ॥
अनपत्योसि [11]धर्मात्मन्[12]शान्ताभर्ता मम क्रतुम् ॥ आहरेत त्वयाज्ञप्तः संतानार्थं कुलस्य च ॥ ५ ॥

---

विशेदिति । माविशत्वित्यर्थः । लकारव्यत्ययः । यद्वा विप्रं विभण्डकं । मन्युः पुत्रविश्लेषणकृतःकोपः माविशेदिति । एवंप्रसादनादेवविभण्डको नचुकोप । पुत्रप्रसादवरणादेवपितात्रिलोकज्ञस्तुष्यतीति पूर्वमेवमन्त्रिभिर्निर्णीतंचेतिबोध्यं । कथमन्यथा उपायंचिन्तयन्तः प्राज्ञाः अपायमपिनचिन्तयेयुः ॥ ३० ॥ प्रविश्यतेनसहेतिसिद्धं । शान्तेन निर्दुःखेन । मनसा उपलक्षितः । प्रसादकार्योपदर्शनात् प्रसन्नत्वंसिद्धम् ॥ ३१ ॥ एवंसर्वकामैः सुपूजितः । तत्र रोमपादान्तःपुरे ॥३२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

---

एवं दशरथप्रश्नस्योत्तरमुक्त्वा कथाशेषंसुमन्त्रः प्रस्तौति—भूयइत्यादि । देवप्रवरः सनत्कुमारः । कथायां कथाप्रसङ्गे । एवं वक्ष्यमाणरीत्या । यथा उक्तवान् । तथा शृणु ॥ १ ॥ धार्मिकोभविष्यतीत्यन्वयः । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ २ ॥ अस्य अङ्गराजस्य ॥ ३ ॥ अङ्गस्य राज्ञः अङ्गराजस्य ॥ ४ ॥ अहमनपत्योस्मि । तस्मात् ममकुलस्य । संतानार्थं

---

**तीर्थी०** प्रविश्य प्रवेश्य । **ति०** तदनुज्ञयान्तःपुरंप्रवेश्य । हर्षं वृष्टिजं ऋषिसंबन्धजंच ॥३१॥ **ति०** ननुगणिकास्पर्शतत्स्पृष्टफलभक्षणादिभिरस्यतपोहानौ कथंतद्गमनमात्रेणवृष्टिः । नच स्त्रीत्वाद्यज्ञानान्नतपोहानिः । ईषद्दोषस्तुतपसैवदग्धइतिवाच्यं । निर्मलब्रह्मचर्येण विदितवेदशास्त्रतत्त्वस्य शास्त्रतःस्त्रीस्वरूपज्ञानस्य ब्रह्मचर्येतत्परिहारज्ञानस्यच दुर्निवारत्वात् । वनेवनचरस्त्रीणामनुभवाच्च । सर्वथाऽज्ञत्वेऽनुग्रहशक्त्यभावापत्तेश्चेतिचेन्न । निर्मलब्रह्मचर्येणब्रह्मज्ञतया सर्वत्रब्रह्मदृष्ट्याचदोषलेशस्याप्यस्पर्शात् । प्रारब्धवशात्क्षत्रियस्त्रीसंबन्धंभाविनंतद्द्वारकंजानन्नेवगणिकाभिस्तथाव्यवजहेतासांभयानुत्पत्तये । अतएव नतेनेतिनवमश्लोके तथाव्यवहियतइतिशेषःपूरितोस्माभिःप्राक् । एतत्सर्वंजानन्पितापितमनुयाय नशप्तवान्राजानमित्येवात्रतत्वं । अनेनतत्त्वज्ञस्यसर्वदोषासंबन्धोध्वनितः । ब्रह्मज्ञेदानसंकल्पमात्रेणफलसिद्धिरित्यादिचसूचितं । यत्तु क्वचिद्विभाण्डकस्यपुत्रान्वेषणंक्रोधेन ततोमार्गेऋष्यशृङ्गायशान्तादानादिवृत्तान्तलाभेनपुनराश्रमं परावृत्यागमनं तदपितत्त्वज्ञत्वएवोपपद्यते । अन्यथा स्वपुत्रस्यगणिकाद्वारकब्रह्मचर्यविलोपकृतोरोषोऽज्ञस्यतस्यकेनाप्युपायेनवारयितुमशक्यइत्यलम् ॥ ३२ ॥ इतिदशमस्सर्गः ॥ १० ॥

**ती०** कथायां पूर्वकथायांसमाप्तायांसत्यां । यथेति यदित्यर्थे । **शि०** कथायां नानेतिहासवर्णनावसरे । यथा येनप्रकारेणाब्रवीत् । एवं तेनप्रकारेणैव । मे मत्तः । शृणु ॥ १ ॥ **ति०** अङ्गराजः रोमपादः । तस्य दशरथस्य । अस्य रोमपादस्य ॥ ३ ॥ तं रोमपादं । गमिष्यति ऋश्यशृङ्गानयनार्थमितिशेषः ॥ ४ ॥ चकारेणधर्माद्यर्थंच ॥ ५ ॥

**[ पा० ]** १ ङ. ज. झ. प्रवेश्यास्मै. २ इदमर्धं ख. घ. दृश्यते. ३ घ. सहतत्पुरे. ख. सहसत्कृतः. ४ ख. ङ. झ. कथयामासबुद्धिमान्. ५ क. ग. घ. ज. नाम्नादशरथोनाम. ङ. च. छ. झ. नाम्नादशरथोराजा. ६ ख. घ. ङ. छ. प्रतिश्रवाः. ग. प्रतिश्रयः. ७ ख. ग. पुत्रस्त्वङ्गाधिराजस्य. क. सपुत्रस्त्वंगराजस्य. ८ ख. इतिस्मृतः. ९ क.—छ. तंसराजादशरथो. १० ख. घ. झ. महारथः. ११ क. ग. घ. छ. धर्मात्मा. १२ घ. महाक्रतुम्.

श्रुत्वा राज्ञोथ तद्वाक्यं मनसा स विचिन्त्य च ॥ प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६ ॥
प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः ॥ आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७ ॥
तं[1] च राजा दशरथो य[2]ष्टुकामः कृताञ्जलिः ॥ ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८ ॥
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च [3]जनेश्वरः ॥ लभते च स तं कामं वि[4]प्रमुख्याद्विशांपतिः ॥ ९ ॥
पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः ॥ वंशप्रतिष्ठानकराः [5]सर्वलोकेषु विश्रुताः ॥ १० ॥
एवं स देवप्रवरः पूर्वं कथितवान्कथाम् ॥ सनत्कुमारो भगवान्पुरा देवयुगे प्रभुः ॥ ११ ॥
स त्वं पुरुषशार्दूल [6]तमानय सुसत्कृतम् ॥ स्वयमेव [7]च राजेन्द्र गत्वा सबलवाहनः ॥ १२ ॥
[ सु[8]मन्त्रस्य वचः श्रुत्वा हृष्टो दशरथोऽभवत् । ] ॥ १३ ॥
अनुमान्य [9]वसिष्ठं च सूतवाक्यं नि[10]शम्य च ॥ [ [11]वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः ] ॥
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ १४ ॥
वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः ॥ अभिचक्राम तं देशं यत्र वै मुनिपुंगवः ॥ १५ ॥
आसाद्य तं द्विजश्रेष्ठं रोमपाद[12]समीपगम् ॥ [13]ऋषिपुत्रं [14]ददर्शादौ दीप्यमानमिवानलम् ॥ १६ ॥
ततो राजा यथान्यायं पूजां चक्रे विशेषतः ॥ सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना ॥ १७ ॥

अविच्छेदार्थं । शान्ताभर्ता । क्रतुं आहरेत अनुतिष्ठतु । इति वक्ष्यतीतिशेषः ॥ ५ ॥ सः रोमपादः । मनसा विचिन्त्य । नतुमन्त्रिभिः । पुत्रवन्तं पुत्रप्रदानसमर्थं पुत्रयुक्तंवा ॥ ६ ॥ आहरिष्यति करिष्यतीत्यर्थः । अन्तरात्मना मनसा । उपलक्षितः ॥ ७ ॥ तस्मिन्यज्ञेतमेवऋत्विजंकरिष्यतीत्याह—तंचेति श्लोकद्वयमेकवाक्यं । यष्टुंकामोयस्यसयष्टुकामः । "लुंपेदवश्यमः कृत्येतुंकाममनसोरपि" इतिमकारलोपः । एवंभूतो राजा तंवरयिष्यति । वरोवरणं "तत्करोति"इतिणिच्। अल्लोपस्यस्थानिवत्त्वाद्वृद्ध्यभावः ॥ ८ ॥ किमर्थं यज्ञार्थं पुत्रकामेष्ट्यर्थं तद्द्वारा प्रसवार्थं पुत्रार्थं तद्द्वारा स्वर्गार्थं। "नापुत्रस्य लोकोस्ति" इतिश्रुतेः । कामं काम्यक्रतुं ॥९॥ अमितविक्रमाः अपरिच्छिन्नपराक्रमाः ॥ १० ॥ पूर्वं पूर्वकाले । विभक्तिप्रतिरूपकमव्ययं । पुरा पुराणः । देवयुगे कृतयुगे । यद्वा हेदेव पुरायुगे कृतयुगइत्यर्थः ॥११॥ स त्वं पुत्रार्थी त्वं । सुसत्कृतं सुसत्कारार्हं स्वयमेव नतुपुरोहितादिद्वारा ॥ १२ ॥ १३ ॥ अनुमान्य कृतानुमतिकं कृत्वा । अन्यथा मयिस्थितेकथमयमन्यमाह्वयतीतिवसिष्ठःकुप्येत् । अतः सुमन्त्रोक्तकथोक्तिपूर्वकमनुमान्येत्यर्थः । "अनुमान्यवसिष्ठंचसूतवाक्यंनिशम्यचेतिवचनभङ्ग्या पुनर्वसिष्ठसन्निधौसाकथाप्रस्ताविता सुमन्त्रमुखेनैवेतिगम्यते । अतोवसिष्ठेनानुमतिःकृतेतिमन्तव्यं। सान्तःपुरतयागमनं जामातृउपलालनरीत्याशान्तयासहानयनार्थं । यत्र रोमपादनगरे ॥ १४ ॥ वनादिविलोकनकुतुकित्वं शनैःशनैरित्यनेनद्योत्यते ॥ १५ ॥ तंदेशमासाद्य तमृषिपुत्रं । आदौ रोमपाददर्शनात्पूर्वं । ददर्श । तस्मिन्भक्त्यतिशयद्योतनार्थं ॥ १६ ॥ राजा रोमपादः । राज्ञः

**ति०** पुत्रवन्तमित्यनेन । "जातपुत्रःकृष्णकेशोऽग्नीनादधीत" इतिविध्युक्ताग्न्याधानादिकारित्वंसूचितं । तेनाहिताग्नित्वेनार्त्विज्याधिकारस्तस्यसूचितः । शान्ताभर्तारमित्यनेन शान्तासाहित्यमपिसूचितं ॥ ६ ॥ **शि०** स्वर्गार्थं रावणोपद्रुतस्वर्गादिस्वास्थ्यार्थंच वरयिष्यति ॥ ९ ॥ **ति०** पुरादेवयुगे एतच्चतुर्युगीप्राक्तनचतुर्युग्याद्ये सत्ययुगइत्यर्थः ॥ ११ ॥ **ति०** अनुमतौहेतुः सूतवाक्यंनिशाम्येति । श्रावयित्वेत्यर्थः ॥ १४ ॥ **शि०** वैशब्दः यथायोग्यावान्तरदेशनिवाससूचकः ॥ १५ ॥

[ **पा०** ] १ ख. सचराजा. २ क. ग—झ. यशस्कामः. ३ क. ख. ग. ङ—झ. नरेश्वरः. ४ क—झ. द्विजमुख्याद्वि. ५ ङ. झ. सर्वभूतेषु. ६ क. ङ. च. छ. झ. समानय. ७ क—छ. झ. महाराज. ८ इदमर्धं ङ. च. छ. झ. ञ. दृश्यते. ९ ङ. वरिष्ठंच. १० झ. निशाम्यच. ११ इदमर्धं ञ. दृश्यते. १२ ख. समन्वितम्. १३ ञ. ऋषेःपुत्रं. १४ ङ. च. छ. झ. ददर्शाथो.

रोमपादेन चाख्यातमृषिपुत्राय धीमते ॥ सख्यं संबन्धकं चैव तदा तं प्रत्यपूजयत् ॥ १८ ॥
एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ॥ सप्ताष्टदिवसान्राजा राजानमिदमब्रवीत् ॥ १९ ॥
शान्ता तव सुता राजन्सह भर्त्रा विशां पते ॥ मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ २० ॥
तथेति राजा संश्रुत्य गमनं तस्य धीमतः ॥ उवाच वचनं विप्रं गच्छ त्वं सह भार्यया ॥ २१ ॥
ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ॥ स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया ॥ २२ ॥
तावन्योन्याञ्जलिं कृत्वा स्नेहात्संश्लिष्य चोरसा ॥ ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् ॥ २३ ॥
ततः सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः ॥ पौरेभ्यः[1] प्रेषयामास दूतान्वै शीघ्रगामिनः ॥ २४ ॥
क्रियतां नगरं सर्वं क्षिप्रमेव स्वलंकृतम् ॥ धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् ॥ २५ ॥
ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ॥ तथा[3] चक्रुस्तत्सर्वं राज्ञा यत्प्रेषितं तदा ॥ २६ ॥
ततः स्वलंकृतं राजा नगरं प्रविवेश ह ॥ शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् ॥ २७ ॥
ततः प्रमुदिताः सर्वे दृष्ट्वा तं नागरा द्विजम् ॥ प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा ॥
[ यथा[7] दिवि सुरेन्द्रेण सहस्राक्षेण काश्यपम् ] ॥ २८ ॥
अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा विधानतः ॥ कृतकृत्यं तदाऽऽत्मानं मेने तस्योपवाहनात् ॥ २९ ॥
अन्तःपुरस्त्रियः सर्वाः शान्तां दृष्ट्वा तथाऽऽगताम् ॥ सह भर्त्रा विशालाक्षीं प्रीत्यानन्दमुपागमन् ॥ ३० ॥
पूज्यमाना च ताभिः सा राज्ञा चैव विशेषतः ॥ उवास तत्र सुखिता कंचित्कालं सहर्त्विजा ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकादशः सर्गः ॥ ११ ॥

---

दशरथस्य ॥ १७ ॥ संबन्धकं शान्तायाजनकपितृत्वरूपंसंबन्धं । प्रत्यपूजयत् ऋश्यशृङ्गइतिशेषः ॥ १८ ॥ तेन रोमपादेन । सप्ताष्टेति लोकवचनपरिपाटी संख्यानियमोपेक्षाकृता ॥ १९ ॥ उद्यतं उद्युक्तं ॥ २० ॥ तस्य ऋश्यशृङ्गस्य । गमनं संश्रुत्य प्रतिज्ञाय ॥ २१ ॥ प्रतिश्रुत्य आकर्ण्य । नृपं रोमपादं ॥ २२ ॥ अन्योन्यमञ्जलिमित्यर्थः ॥ २३ ॥ सुहृदं रोमपादं ॥ २४ ॥ सिक्तंचसंमृष्टंचसिक्तसंमृष्टं । "पूर्वकाल—" इत्यादिनासमासः । स्वलंकृतं पुष्पकदलीकाण्डादिभिः ॥ २५ ॥ आगतं आगतप्रायं । राज्ञा यद्यथाप्रेषितं तत्तथा । तदा श्रवणकालएव चक्रुः ॥ २६ ॥ द्विजर्षभंपुरस्कृत्य शङ्खदुन्दुभिनिर्घोषैःसह प्रविवेश ॥ २७ ॥ नागराः नगरवासिनः । नरेन्द्रेण दशरथेन । सत्कृत्य नगरालङ्कारादिभिःसंमान्य । प्रवेश्यमानंतंद्विजंदृष्ट्वा । प्रमुदिताः संतुष्टाः । आसन् । इन्द्रस्येव कर्म पराक्रमादिकं यस्यसः इन्द्रकर्मा तेन ॥ २८ ॥ उपवाहनात् आनयनात् ॥ २९ ॥ भर्त्रासहागतां । अनेन पूर्वकन्यात्वदशायामपिकदाचिदागमनं व्यज्यते ॥ ३० ॥ विशेषतः जनकत्वसंबन्धात् । ऋत्विजा ऋश्यशृङ्गेण । पितृगृहत्वात् शान्तायाःप्राधान्यं ॥ ३१ ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकादशःसर्गः ॥ ११ ॥

---

**शि०** संबन्धकं शान्ताजनकत्वेनतच्छ्वशुरत्वं । "अनेनमेऽनपत्यायदत्तेयंवरवर्णिनी । याचतेपुत्रतुल्यैषाशान्ताप्रियतरात्मजा । सोयंतेश्वशुरोब्रह्मन्यथैवाहंतथानृपः" इतिपौराणिकीगाथा ॥ १८ ॥ **ति०** सहद्विजा सभर्तृपुत्रकेतियावत् ॥ ३१ ॥ इत्येकादशस्सर्गः ॥ ११ ॥

**[ पा० ]** १ ख. ततस्तं. २ ङ. झ. पौरेषु. ३ ङ. झ. चक्रुश्चतत्सर्वं. ४ ख. यत्प्रेरितं. ५ ङ. झ. निर्हादैः. ६ ङ. झ. दृष्ट्वावै. ७ इदमर्धं ज. दृश्यते. ८ ख—झ. कृत्वाचशास्त्रतः. ९ क—झ. अन्तःपुराणिसर्वाणि. १० क—झ. सहद्विजा.

# द्वादशः सर्गः ॥ १२ ॥

दशरथेनशिरसाप्रसादनपूर्वकमृश्यशृङ्गस्ययज्ञार्थंवरणम् ॥ १ ॥ तथासुमन्त्रेणसुयज्ञाद्यानयनपूर्वकंतदनुमत्यामन्त्रिणांसंभारसंभरणाश्वमोचनादिचोदना ॥ २ ॥ मन्त्रिभिरश्वमोचनपूर्वकंसंभारसंभरणाद्युद्यमनम् ॥ ३ ॥

ततः काले बहुतिथे कस्मिंश्चित्सुमनोहरे ॥ वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १ ॥
ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम् ॥ यज्ञाय वरयामास सन्तानार्थं कुलस्य वै ॥ २ ॥
तथेति च स राजानमुवाच च सुसत्कृतः ॥ संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥
[ सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ] ॥ ३ ॥
ततो राजाऽब्रवीद्वाक्यं सुमन्त्रं मन्त्रिसत्तमम् ॥ सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः ॥ ४ ॥
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ॥ पुरोहितं वसिष्ठं च येचाप्यन्ये द्विजातयः ॥ ५ ॥
ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ॥ समानयत्स तान्सर्वान्समर्थान्वेदपारगान् ॥ ६ ॥
तान्पूजयित्वा धर्मात्मा राजा दशरथस्तदा ॥ धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् ॥ ७ ॥

एवंदशरथःसर्वकामसमृद्धोपिपुत्रालाभसंतप्तस्तन्मूलानिपापानिस्वाधिकारानुरूपेणाश्वमेधेनविनानविनश्यन्तीतिमन्वानः "सर्वंपाप्मानंतरति तरतिब्रह्महत्यांयोश्वमेधेनयजते" इतिश्रुत्या "राजसार्वभौमोश्वमेधेनयजेत" इतिस्मृत्याच विहितमश्वमेधं यष्टुंसंकल्प्य तदानीमुद्बुद्धसंस्कारेणसुमन्त्रेणोदीरितवचनाज्ञामात्रुपलालनव्याजेन शान्तयासहऋश्यशृङ्गमानीय प्राप्तकालेपूर्वसंकल्पितमश्वमेधंकर्तुमारभतेत्याह—ततःकालइत्यादि । ततः ऋश्यशृङ्गानयनानन्तरं । बहुतिथे अनल्पे । काले । गते । संख्यासंज्ञाद्बहुशब्दात् पूरणार्थेडटि "बहुपूगगणसंघस्यतिथुक्" इति तिथुगागमः । कस्मिंश्चित् मलिम्लुचत्वादिदोषरहिततया विलक्षणे । सुमनोहरे पौर्णमास्याःकालत्वेनातिमनोज्ञे । वसन्ते । समनुप्राप्ते प्रारब्धे । चैत्र्यांपौर्णमास्यामित्यर्थः । राज्ञः दशरथस्य । यष्टुं सांग्रहणीमिष्टिंकर्तुं । मनः मनोरथः । अभूत् । "चैत्र्यांपौर्णमास्यांप्रातरश्वमेधेनयक्ष्येइतिसंकल्प्यसांग्रहण्येष्ट्यायजत" इतिस्मरणात् ॥ १ ॥ अथसांग्रहणीमिष्टिंकर्तुमृत्विग्वरणेप्राप्ते प्रथममृश्यशृङ्गंब्रह्मत्वेन वृतवानित्याह—ततइति । देववर्णिनं देववर्चसं ॥ २ ॥ सच ऋश्यशृङ्गश्च ॥३॥ अथ "अपदातीनृत्विजःसमावहन्त्यासुब्रह्मण्यायाः" इतिविहितमध्वर्युप्रभृतिवरणमाह—ततइत्यादिना । अस्याःश्रुतेरयमर्थः । तस्यतस्यगृहेगत्वासोमप्रवाकवृतानध्वर्युब्रह्महोतॄनाग्नीध्रंच हस्त्यश्वादिकमारोप्य राजगृहमानयन्तिराजपुरुषाः । अनन्तरायाममावास्यायां पूर्ववृताएवते संज्ञानेष्ट्यर्थंपुनर्व्रियन्ते । अथवैशाख्यांपौर्णमास्यांप्राजापत्यर्षभपश्वर्थंपूर्ववत्सोमप्रवाकवृतौमैत्रावरुणप्रतिप्रस्थातारौहस्त्यादिकमारोप्यानयन्तिराजपुरुषाः । अनन्तरायाममावास्यायांतथैववृतमुद्गातारंहस्त्यादिभिरानयन्ति । अथागामिनिवसन्तेपञ्चदश्यांहस्त्यादिभिःप्रस्तोतारमानयन्ति । त्रैधातवीयार्थंयत्रदीक्षारंभस्तद्दिवसादूर्ध्वंतृतीयादिष्वहस्स्वन्वहमितरानष्टावृत्विजोहस्त्यादिकमारोप्यानयन्ति । ब्राह्मणाच्छंसिनमच्छावाकंनेष्टारंप्रतिहर्तारंग्रावस्तुतंपोतारंउन्नेतारंसुब्रह्मण्यमितिसोमार्थं । एवमासुब्रह्मण्याह्वानादपदातीनृत्विजआवहन्तीति । एवं क्रमेणकर्तव्यानिऋत्विग्वरणानि कार्यकरत्वात्संग्रहेणदर्शयति—सुमन्त्रावाहयेति । आवाहय आनय । ऋतौयजन्तीतिऋत्विजः । ब्रह्मवादिनः वेदपाठकान् ॥ ४ ॥ ऋत्विजःपरिगणयति—सुयज्ञमिति ॥ ५ ॥ त्वरितविक्रमः त्वरितपदन्यासः ॥ ६ ॥ धर्मार्थसहितं धर्मार्थरूपप्रवि० युक्तंयथार्थं ॥ ७ ॥

[ पा० ] १ ख. ज. मनोगतम्. २ ङ. च. छ. झ. प्रणम्य. ३ ज. यज्ञार्थं. ४ ख. ङ. झ. कुलस्यच. ५ ज. मुवाचेदं. ६ ङ. च. छ. झ. वसुधाधिपम्. ख. ग. ज. चसुसत्कृतम्. ७ इदमर्धं क—ट. दृश्यते. ८ ङ. ततोब्रवीन्नृपोवाक्यं. झ. नृपोवाक्यंब्राह्मणान्वेदपारगान्. ख. घ. ततोराजाब्रवीत्सूतंब्राह्मणान्वेदपारगान्. ९ ख. ग. ङ. च. झ. येचान्येद्विजसत्तमाः. ज. येचान्येच. १० घ. ज. स्त्वरितो. ११ क—झ. समस्तान्वेद. ज. सतान्विप्रान्समस्तान्वै. १२ ख. दशरथोबली.

मम [1]लालप्यमानस्य [2]पुत्रार्थं नास्ति वै सुखम् ॥ [3]तदर्थं [4]हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥
तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ॥ ऋषिपुत्रप्रभावेन कामान्प्राप्स्यामि चाप्यहम् ॥ ९ ॥
ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ॥ वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् ॥१०॥
ऋश्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा ॥ संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥
[[5]सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्] ॥ ११ ॥
सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् ॥ यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥
ततः प्रीतोऽभवद्राजा श्रुत्वा [6]तु द्विजभाषितम् ॥ [7]अमात्यांश्चाब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥१३॥
गुरूणां वचनाच्छीघ्रं संभारास्संभ्रियन्तु मे ॥ समर्थाधिष्ठितश्चाश्वस्सोपाध्यायो विमुच्यताम् ॥१४॥
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ [8]शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥
[10]शक्यः कर्तुमयं यज्ञस्सर्वेणा[11]पि महीक्षिता ॥ नापराधो भवेत्कष्टो यद्यस्मिन्क्रतुसत्तमे ॥ १६ ॥
छिद्रं हि [12]मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ॥ [13]विघ्नितस्य हि यज्ञस्य सद्यः कर्ता विनश्यति ॥१७॥
तद्यथा विधि[14]पूर्वं मे क्रतुरेष समाप्यते ॥ तथा विधानं क्रियतां समर्थाः [15]करणेष्विह ॥ १८ ॥
तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् ॥ पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तमकुर्वत ॥ १९ ॥
ततो [16]द्विजास्ते धर्मज्ञमस्तुवन्पार्थिवर्षभम् ॥ अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥

---

योजनयुक्तं । श्लक्ष्णं मधुरं ॥ ७ ॥ ८ ॥ यष्टुमिच्छामि प्रतिबन्धकदुरितशान्त्यर्थं । ऋषिपुत्रप्रभावेन ऋश्यशृङ्गकृतयज्ञप्रभावेन । पश्चात् कामान् पुत्रान् प्राप्स्यामिच ॥ ९ ॥ ऋश्यशृङ्गश्लाघागर्भत्वाद्वसिष्ठप्रमुखाइत्युक्तं ॥ १० ॥ ११ ॥ सनत्कुमारवचश्श्रवणाच्चतुरइत्युक्तं ॥ १२ ॥ क्रियाभेदान्नराजपदपुनरुक्तिः ॥ १३ ॥ संभ्रियन्तु संभ्रियन्तां । आर्षपरस्मैपदं । अत्रसंभाराः यज्ञीयाश्वमोचनोपकरणानि । "द्वादशारत्नीरशनाभवति"इत्युक्त्या द्वादशारत्निपरिमिता मुञ्जाख्यतृणविशेषनिर्मितारशना "चतुष्टय्यआपोभवन्ति"इत्यनुवाकोक्ताः आतपतिवर्ष्याःकूप्याःस्थावरावहन्त्यश्चेतिचतुर्विधाआपइत्यादीनि । समर्थैः "चतुःशतारक्षन्ति"इतिश्रूयमाणैराजपुत्राद्यैः । अधिष्ठितः रक्षितः । सोपाध्यायः उपाध्यायैश्चतुर्भिःऋत्विग्भिः सहितः । अश्वोविमुच्यतां । "चत्वारऋत्विजःसमुक्षन्तीत्यारभ्य शतेनराजपुत्रैःसहअध्वर्युः शतेनाराजभिरुग्रैःसहब्रह्माशतेनसूतग्रामणीभिःसहहोताशतेनक्षत्रसंग्रहीतृभिःसहोद्गाता"इतिश्रुतेः । संगृहीतंचभट्टभास्करैः । "सन्नाहवन्तःक्षितिपालपुत्राःसन्नद्धसूताःशतमस्यतल्प्याः । गोपायितारःशतमेवमुग्राःसन्नाहिनस्तादृशसूनुयुक्ताः । वैश्याःशतंप्रान्तचराःपथिस्युर्वरूथिनस्तैःशतमेवशूद्राः"इति ॥ १४ ॥ अथ "पुण्यनामदेवयजनमध्यवस्यति"इत्युक्तरीत्या यागार्हपुण्यस्थलपरिग्रहंदर्शयति—सरय्वाइति । उत्तरं विविक्तमितितत्परिग्रहः । शान्तयः शान्तिकर्माणि । अभिवर्धन्तां प्रवर्तन्तां । यथाकल्पं यथाक्रमं । यथाविधि यथाशास्त्रं ॥ १५ ॥ कष्टः क्लेशकरः ॥ १६ ॥ छिद्रं अपराधमित्यर्थः ॥ १७ ॥ यथेतिछेदः ॥ १८ ॥ अकुर्वत साङ्ग्रहणेष्टिप्रभृत्यश्वविमोचनान्तमकुर्वन्नित्यर्थः ॥ १९ ॥ अनुज्ञाताः तेनेतिशेषः ॥ २० ॥

---

**वि०** अनुष्ठानारंभायपुनरुपन्यस्यति । ममलालप्यमानस्येति ॥ ८ ॥ **शि०** ऋषिपुत्रस्य ऋश्यशृङ्गस्य प्रभावेण । रामसाक्षात्कारजनिततेजसा अहंकामान्प्राप्स्याम्येव । अपिना देवकार्यसिद्धिश्चभविष्यति । चशब्दएवार्थे ॥ ९ ॥ **शि०** धार्मिकी प्रजा. संरक्षणरूपधर्मप्रयोजना ॥ १२ ॥

**[पा०]** १ ङ. झ. तातप्यमानस्य. २ ज. सुतार्थं. ३ क. ग. ङ. झ. पुत्रार्थंहय. ४ क. ख. घ. ङ—झ. हयमेधेनकर्मणा- ५ इदमर्धं क—ट. दृश्यते. ६ क—घ. तद्विजभाषितम्. ७ ङ—झ. त्यानब्रवी. ज. श्चाब्रवीत्तत्र. ८ ग. घ. छ. शान्तयश्चापि. ९ घ. यथाशास्त्रं. १० ग. घ. शक्यंकर्तुमयं. ख. शक्यःप्राप्तु. ११ ख. सर्वेणैव. १२ ङ. झ. मृगयन्त्येते. १३ ङ. च. छ. विधिहीनस्ययज्ञस्य. ख. निहतस्य. ग. विहतस्य. १४ छ. पूर्ववै. १५ ग. करणेष्वपि. १६ ङ. द्विजास्तं.

गतेष्वथ द्विजाग्र्येषु मन्त्रिणस्तान्नराधिपः ॥ विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ॥ १३ ॥

दशरथेनसम्प्रार्थनंवसिष्ठेयागीयसकलकार्यभारसमारोपणम् ॥१॥ वसिष्ठेनयागीयसकलकार्येषुसमुचितजननियोजनपूर्वकंसुमन्त्रंप्रतिनानादेशीयराजानयनादिनियोजनम् ॥२॥ दशरथेनवसिष्ठऋश्यशृङ्गानुज्ञयासर्वैःसहशुभमुहूर्तेयज्ञशालाप्रवेशः ॥३॥

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् ॥ प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥ १ ॥
अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ॥ अब्रवीत्प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥
यज्ञो मे क्रियतां विप्र यथोक्तं मुनिपुङ्गव ॥ २ ॥
यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम् ॥ ३ ॥
भवान्स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् ॥ वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४ ॥

स्वंवेश्म । अग्निगृहाद‍न्तःपुरमित्यर्थः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वादशःसर्गः॥१२॥

एवंप्रथमवसन्तेचैत्रपौर्णमास्यांसांग्रहणेष्टिंविधाय द्वितीयेह्निब्रह्मौदनमेध्याश्वबन्धनस्नापनप्रोक्षणविमोचनादिकं "चत्वारऋत्विजःसमुक्षन्ति" इत्युक्तरीत्याकृत्वा "सावित्रमष्टाकपालंप्रातर्निर्वपति"इत्युक्तरीत्याप्रतिदिनंसावित्रादिषुकर्मस्वनुष्ठीयमानेषु संवत्सरेपूर्णे देवयजनंप्रतिप्रस्थानं दर्शयतित्रयोदशे—पुनःप्राप्तइत्यादि । पुनर्वसन्ते द्वितीयवसन्ते । प्राप्ते । संवत्सरः पूर्णोऽभवत् । अमावास्याप्राप्तेत्यर्थः । तत्र भाविन्यां पौर्णमास्यां प्रसवार्थं । हयमेधेनयष्टुं हयमेधाख्यंयज्ञंकर्तुं । गतः देवयजनमितिशेषः । प्रथमसंवत्सरान्तिमावास्यायांउखासंभरणत्रैधातवीयदीक्षणीयादिकं देवयजनएवह्रिकर्तव्यं । यथोक्तंभास्करैः "संवत्सरस्यास्यतुयाऽन्तिमामावास्याविधेयामिहदीक्षणीयां।त्रैधातवीयांप्रवदन्तिसप्तदिनानिदीक्षाहुतयस्तथाष्टौ " इति ॥ १ ॥ एवमेतत्सर्गप्रतिपाद्यंदेवयजनगमनंसंग्रहेणोक्त्वा पुनस्तद्विस्तरेणवक्तुमुपक्रमते सर्गशेषेण। तत्रब्रह्मौदनमारभ्य यावदश्वमेधसमाप्ति यजमानस्यस्वातन्त्र्यप्रतिषेधेन स्वयंयज्ञोपकरणसंपादनाद्ययोगादध्वर्युणैवतस्यसर्वस्यकर्तव्यत्वादध्वर्युत्वेनवृतंवसिष्ठंप्रतिप्रार्थ्यते—अभिवाद्येत्यादिना । तदुक्तंभट्टभास्करैः "रशनाञ्जनतःपश्चादध्वर्युःपरिवीयते । राज्यायसचराजास्याद्यावत्सन्तिष्ठतेक्रतुः" इति । येयं "द्वादशारत्नीरशनाभवतिमौञ्जीभवति" इत्यश्वबन्धनरज्जुर्विहिता तस्याः " यदाज्यमुच्छिष्यतेतस्मिन्रशनान्युनक्ति " इतियद्ब्रह्मौदनशिष्टाज्येनाभ्यञ्जनंविहितं ततःपश्चादित्यर्थः । अर्धत्रयमेकान्वयं । वसिष्ठंअभिवाद्यच । न्यायतः शास्त्रतः । प्रतिपूज्यच । प्रश्रितं विनययुक्तं । वाक्यं अब्रवीत् । कथं।प्रसवार्थं पुत्रार्थं । आरब्धोमेयज्ञः । यथोक्तं शास्त्रोक्तमनतिक्रम्य। क्रियताम् ॥२॥ यज्ञाङ्गेषु द्रव्यदेवताकर्मादिरूपेषु । यथाविघ्नोनक्रियते राक्षसैरितिशेषः । तथा क्रियतामित्यर्थः ॥ ३ ॥ भवान् मह्यं स्निग्धः अविच्छिन्नस्नेहः । सुहृत् । परमः

**ति॰** सप्तम्यर्थेषष्ठी । गतेषुद्विजातिष्वित्यर्थः । विसर्जयित्वा संप्रेष्य । संवत्सरान्तेयागार्थमितिशेषः । ल्यबभावआर्षः ॥२१॥ इतिद्वादशस्सर्गः ॥ १२ ॥

**ती॰** प्रसवार्थं प्रसवफलंभावयितुं । गतः गन्तुमुपक्रान्तः । **ति॰** "संवत्सरान्तेदीक्षेत"इतिसूत्रात्पूर्ववसन्तविसृष्टाश्वस्यपुनस्संवत्सरान्तेवसन्तेप्राप्तेदीक्षाप्रवृत्तिरुपदिश्यते । पुनरिति । प्रसवरूपफलंहयमेधेनभावयितुंगतः । वसिष्ठान्तिकमितिशेषः ॥ १ ॥ **ति॰** वसिष्ठंच चादरुन्धतीं ॥ २ ॥ **शि॰** चशब्दएवार्थे । अपरौचकारौहेत्वर्थे । स्निग्धःस्नेहविशिष्टःअतएवसुहृत् मह्यं ममपरमउत्कृष्टःगुरुः । अतएवमहान् सर्वपूज्यःभवानेव । अतोयज्ञस्यभारोभवतैववोढव्यइत्यर्थः ॥ ४ ॥

१ ख. घ. ङ. गतेषुतेषुविप्रेषु. क. ग. च. छ. ज. गतानांतुद्विजातीनां. झ. गतानांतेषुविप्रेषु. २ ङ. च. छ. झ. महामतिः. ३ ख. ग. ङ. च. छ. झ. क्रियतांब्रह्मन्. ४ ङ. झ. विघ्नाःक्रियन्ते. ५ क. घ. ङ. भवान्.

तथेति च स राजानमब्रवीद्द्विजसत्तमः ॥ करिष्ये सर्वमेवैतद्भवता यत्समर्थितम् ॥ ५ ॥
ततोऽब्रवीद्द्विजान्वृद्धान्यज्ञकर्मसु निष्ठितान् ॥ स्थापत्ये निष्ठितांश्चैव वृद्धान्परमधार्मिकान् ॥ ६ ॥
कर्मान्तिकाञ्शिल्पकरान्वर्धकीन्खनकानपि ॥ गणकाञ्शिल्पिनश्चैव तथैव नटनर्तकान् ॥
तथा शुचीञ्शास्त्रविदः [1]पुरुषान्सुबहुश्रुतान् ॥ ७ ॥
यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ इष्टका [2]बहुसाहस्री शीघ्रमानीयतामिति ॥ ८ ॥
[3]औपकार्याः क्रियन्तां च [4]राज्ञां बहुगुणान्विताः ॥ ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः ॥९॥
भक्ष्यान्नपानैर्बहुभिः [5]समुपेताः सुनिष्ठिताः ॥ तथा पौरजनस्यापि [6]कर्तव्या [7]बहुविस्तराः ॥ १० ॥
[[8]आगतानां सुदूराच्च पार्थिवानां पृथक्पृथक् ॥ वाजिवारणशालाश्च तथा शय्यागृहाणि च ॥
भटानां महदावासा वैदेशिकनिवासिनाम् ] ॥ ११ ॥
आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिताः ॥ [9]तथा जानपदस्यापि जनस्य बहु शोभनम् ॥ १२ ॥
दातव्यमन्नं विधिवत्सत्कृत्य न तु लीलया ॥ १३ ॥
[10]सर्ववर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ॥ न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि ॥ १४ ॥
[11]यज्ञकर्मणि ये व्यग्राः पुरुषाः शिल्पिनस्तथा ॥ तेषामपि विशेषेण पूजा कार्या यथाक्रमम् ॥
ते [12]च स्युः संभृताः सर्वे वसुभिर्भोजनेन च ॥ १५ ॥

वामदेवादिभ्यउत्कृष्टः । महान् वस्तुतोनिरुपमः । गुरुः । अतः उद्यतः उपक्रान्तः । यज्ञस्यभारोभवतैवबोढव्यः । चकारेणार्त्विज्यंचकर्तव्यंइत्युच्यते ॥४॥ समर्थितं सम्यक्प्रार्थितं ॥ ५ ॥ ततइतिसार्धश्लोकत्रयमेकान्वयं । यज्ञकर्मसु यज्ञप्रयोगेषु । स्थापत्ये तद्द्रव्यानयनस्वाम्ये । निष्ठितान् पूर्वराज्ञानियुक्तान् ॥६॥ कर्मणामन्तःसमाप्तिः सएषामस्तीतिकर्मान्तिकाः । "अतइनिठनौ" इतिठन् भृतकानित्यर्थः । शिल्पकरान् इष्टकादिनिर्मातॄन् । वर्धकीन् तक्ष्णः । स्रुक्स्रुवचमसग्रहयूपादिनिर्मातॄन् । खनकान् वापीकूपादिकृतः । गणकान् लेखकान् । शिल्पिनः चित्रादिकरान् । नटाः रसाभिनयकृतः । नर्तकाः भावाभिनयकृतः । शास्त्रविदः प्रयोगशास्त्रविदः ॥ ७ ॥ अथाज्ञापनप्रकारमाहअष्टभिः—यज्ञकर्मेत्यादि । ऋत्विजःप्रत्याह यज्ञकर्मेति । समीहन्तां व्याप्रियन्तां । शिल्पकरान्प्रत्याह इष्टकेति । जात्येकवचनं । इत्यब्रवीदितिपूर्वेणान्वयः ॥ ८ ॥ औपकार्याः राजसदनानि । स्वार्थेष्यञ् । "राजसदनमुपकार्योपकारिका"इत्यमरः । बहुगुणान्विताः औन्नत्यविशालत्वादिबहुगुणान्विताः । ब्राह्मणावसथाइति आर्षोलिङ्गव्यत्ययः ॥ ९ ॥ कठिनफलादि भक्ष्यं । सुनिष्ठिताः वातवर्षादिभिरप्रकंप्याः ॥ १० ॥ सर्वकामैः स्रक्चन्दनादिभिः । उपस्थिताः संयुक्ताः । बहु अधिकं ॥ ११ ॥ विधिवत् यथाविधि । सत्कृत्य गन्धादिभिरभ्यर्च्य । लीलया अनादरेणेत्यर्थः ॥ १२ ॥ यथा पूजांप्राप्नुवन्ति तथाकर्तव्यमित्यर्थः ॥ १३ ॥ कामक्रोधवशात् स्नेहद्वेषवशात् । अपिशब्देन लीला समुच्चीयते ॥ १४ ॥ विशेषेण अत्यादरेणेत्यर्थः । यथाक्रमं यथावृद्धं । तेचेत्यत्र चश-

**ति॰** स्थापत्यं स्थपतेःरथकारस्यकर्म । तत्रनिष्ठितान् प्रवीणान् ॥ ६ ॥ **ति॰** गणकान् ज्योतिर्विदः ॥ ७ ॥ **ती॰** बहुसाहस्राः बहुसहस्रसङ्ख्याकाः । आनीयतामितिव्यत्ययेनैकवचनम् ॥ ८ ॥ **शि॰** बहुगुणान्विताः अनेकविधान्नपानादियुक्ताएव ॥९॥ **ति॰** महदावासाइत्यत्रालाभावआर्षः । वैदेशिकनिवासिनां वैदेशिकानांस्वदेशनिवासिनांचेत्यर्थः ॥ ११ ॥ **ति॰** जनस्य इतरक्षुद्रजनस्यापि ॥ १२ ॥ **शि॰** तेषामपि । अपिशब्देनातिथ्यभ्यागतादिसंग्रहः ॥ १५ ॥

१ घ. पुरुषांश्च. २ क—घ. बहुसाहस्रा. च. छ. ज. बहुसाहस्राः. ३ झ. उपकार्याः. ४ ङ. ज. झ. राज्ञोबहु. ५ ख. समवेताः. ६ ङ. च. छ. कर्तव्याश्चसुविस्तराः. ७ घ. ङ. बहुशोभनाः. ८ इदमर्धत्रयं च. छ. झ. ञ. दृश्यते. ९ च. छ. झ. ञ. तथापौरजनस्यापि. १० ख. ग. ङ. ज. झ. सर्ववर्णाः. ११ क—झ. यज्ञकर्मसु. १२ ङ. च. छ. झ. येस्युःसंपूजितास्सर्वे. क. तेस्युः. ग. घ. झ. तेचस्युःसुहृदः.

यथा सर्वं सुविहितं न किंचित्परिहीयते ॥ तथा भवन्तः कुर्वन्तु [1]प्रीतिस्निग्धेन चेतसा ॥ १६ ॥
ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन् ॥ [2]यथोक्तं तत्सुविहितं न किंचित्परिहीयते ॥ १७ ॥
यथोक्तं तत्करिष्यामो न किंचित्परिहास्यते ॥ १८ ॥
ततः सुमन्त्र[3]मानीय वसिष्ठो वाक्यमब्रवीत् ॥ निमन्त्रयस्व नृपतीन्पृथिव्यां ये च धार्मिकाः ॥ १९ ॥
ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैव सहस्रशः ॥ [4]समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ॥ २० ॥
मिथिलाधिपतिं [5]शूरं जनकं [6]सत्यविक्रमम् ॥ निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ॥ २१ ॥
तमानय महाभागं स्वयमेव सुसत्कृतम् ॥ [7]पूर्वसंबन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥ २२ ॥
तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् ॥ [8]वयस्यं राजसिंहस्य स्वयमेवानयस्व ह ॥ २३ ॥
तथा केकयराजानं वृद्धं परमधार्मिकम् ॥ श्वशुरं राजसिंहस्य सपुत्रं [9]त्वमिहानय ॥ २४ ॥
अङ्गे[10]श्वरं महाभागं रोमपादं [11]सुसत्कृतम् ॥ वयस्यं राजसिंहस्य [12]समानय [13]यशस्विनम् ॥ २५ ॥
[[14]तथा कोसलराजानं भानुमन्तं सुसत्कृतम् ॥ मगधाधिपतिं शूरं सर्वशास्त्रविशारदम् ॥ २६ ॥
प्राप्तिज्ञं परमोदारं सत्कृतं पुरुषर्षभम् ॥ राज्ञश्शासन[15]मादाय चोदयस्व नृपर्षभान् ] ॥ २७ ॥
प्राचीनान्सिन्धुसौवीरान्सौराष्ट्रेयांश्च पार्थिवान् ॥ दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह ॥२८॥
सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले ॥ तानानय यथाक्षिप्रं सानुगान्सहबान्धवान् ॥
[[16]एतान्दूतैर्महाभागैरानयस्व नृपाज्ञया] ॥ २९ ॥
वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्व[17]रितस्तदा ॥ व्यादिशत्पुरुषांस्तत्र राज्ञामानयने शुभान् ॥ ३० ॥
स्वयमेव हि धर्मा[18]त्मा प्रययौ मुनिशासनात् ॥ सुमन्त्रस्त्वरितो भूत्वा समानेतुं [19]महीक्षितः ॥३१॥

ब्दोभिन्नक्रमः । ते भोजनेन वसुभिः धनैश्च । संभृताः तृप्ताश्चस्युः ॥ १५ ॥ सर्वमपि यथा सुविहितं सुष्ठुअनुष्ठितंस्यात् । किंचिदपि नपरिहीयते नत्यक्ष्यते । प्रीतिस्निग्धेन स्नेहार्द्रेण ॥ १६ ॥ यथोक्तप्रवृत्तिंदर्शयति—ततइति । तत् पूर्वोक्तकार्यजातं ॥१७॥ १८॥ एवमुपकरणनिष्पत्त्यनन्तरंराजाह्वानमाज्ञापयति—ततइत्यादिना । निमन्त्रयस्व आह्वय ॥ १९ ॥ सर्वदेशेषु स्थितानितिशेषः ॥२०॥ श्लोकद्वयमेकंवाक्यं । तं प्रसिद्धं । स्वयमेव नतुदूतमुखेन । पूर्वसंबन्धिनं चिरंतनसुहृदं । ततः पूर्वोक्तेभ्योनृपतिभ्यः ॥ २१ ॥ ॥ २२ ॥ स्वयमेवगमनेहेतवोविशेषणानि ॥ २३ ॥ केकयराजानमिति । समासान्तविधेरनित्यत्वाट्टजभावः ॥ २४ ॥ समानय त्वमेवेतिशेषः ॥ २५ ॥ २६-॥ २७ ॥ प्राचीनान् प्राग्देशवर्तिनः । सिन्धुदेशेसौवीरदेशेचभवाः सिन्धुसौवीराः । सौराष्ट्रेयान् सुराष्ट्रदेशभवान् । दाक्षिणात्यान् दक्षिणदेशभवान् । आनयस्व दूतमुखेनेतिशेषः ॥ २८ ॥ यथाक्षिप्रं शैघ्र्यमनतिक्रम्य ॥२९॥ शुभान् अन्तरङ्गान् ॥३०॥ मही-

**शि०** सुविहितं वेदबोधितं । अतःकिंचिद्भवदुक्तंनपरिहीयते । **ति०** यत्त्वयोक्तंतद्यथोक्तं त्वदुक्तानतिक्रमेणसुविहितं । नकिंचित्तत्रलुप्यतइतिशेषः ॥१७॥ किंच उक्तं । भावेक्तः । वचनं यथाकथयिष्यसितच्चतथैवकरिष्यामः । तत्रापिनकिंचिद्धीनंभविष्यति ॥ १८ ॥ **वि०** मानवान् चतुर्वर्णातिरिक्तान्संकरजातीयान् ॥ २० ॥ **ति०** मिथिलाधिपंस्वयमेवानयेतिसंबन्धः । नतुदूतमात्रप्रेषणेन । कुतएवंविशेषः कुतश्चतदानयनस्यप्रथममुपदेशस्तत्राह । पूर्वसंबन्धिनं पूर्वस्मिन्नेवकालेभाविनंसंबन्धिनं । तंयोगबलेनज्ञात्वा । ततोहेतोः भाविसंबन्धित्वाद्धेतोः । सर्वेभ्यः पूर्वं पूर्वकाले । तदानयनंब्रवीमीत्यर्थः ॥ २१ ॥ २२ ॥ **ति०** वसिष्ठेनविशिष्योक्तानितिशेषः ॥ ३१ ॥

[ **पा०** ] १ ङ. झ. प्रीतियुक्तेन. २ क. ङ. च. छ. झ. यथेष्टंतत्सुविहितं. ३ ख. ग. ङ. च. छ. झ. सुमन्त्रमाहूय. ४ क. ख. च. छ. समानयसुसत्कृत्य. ५ क. वीरं. ६ ग. ङ—झ. सत्यवादिनं. ७ झ. पूर्वसंबन्धिनं. ८ क—झ. सद्वृत्तंदेवसंकाशं. ९ क. ङ. च. ज. झ. तमिहानय. १० ङ. झ. श्वरंमहेष्वासं. च. छ. ज. श्वरंचराजानं. ११ च. ठ. समीपगम्. घ. सुधार्मिकम्. १२ ङ. झ. सपुत्रंतमिहानय. क—घ. तमानय. १३ घ. सुसत्कृतम्. १४ एतच्छ्लोकद्वयं ङ. च. छ. झ. ञ. दृश्यते. १५ ख. माज्ञाय. १६ इदमर्धं ङ. च. झ. दृश्यते. १७ ङ. च. छ. झ. स्त्वरितंतदा. १८ ख. ङ. ज. प्रयातो. १९ ङ. झ. महामतिः.

ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते ॥ सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् ॥ ३२ ॥
ततः प्रीतो द्विजश्रेष्ठस्तान्सर्वान्पुनरब्रवीत् ॥ ३३ ॥
[भवद्भिर्न तथा यज्ञे परिहास्येत कश्चन] ॥ अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा ॥
अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ॥ ३४ ॥
ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ॥ बहूनि रत्नान्यादाय राज्ञो दशरथस्य हि ॥ ३५ ॥
ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् ॥ उपयाता नरव्याघ्र राजानस्तव शासनात् ॥ ३६ ॥
मया च सत्कृताः सर्वे यथार्हं राजसत्तमाः ॥ यज्ञियं च कृतं राजन्पुरुषैः सुसमाहितैः ॥ ३७ ॥
निर्यातु च भवान्यष्टुं यज्ञायतनमन्तिकात् ॥ सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥ ३८ ॥
द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ॥ ३९ ॥
तथा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः ॥ शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ॥ ४० ॥
ततो वसिष्ठप्रमुखाः सर्वएव द्विजोत्तमाः ॥ ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ॥
यज्ञवाटगताः सर्वे यथाशास्त्रं यथाविधि ॥ ४१ ॥
[श्रीमांश्च सह पत्नीभी राजा दीक्षामुपाविशत्] ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

क्षितः वसिष्ठेनविशिष्योक्तान् ॥ ३१ ॥ तेचेति । उपलक्षणमेतच्छिल्पकरादीनां । यज्ञे यज्ञनिमित्तं । यत् उपकल्पितं निर्मितं । तत्सर्वंनिवेदयन्तिस्म ॥३२॥ अवश्यंशिक्षणीयांशंपुनःशिक्षयति—ततःप्रीतइति । अर्धमेकान्वयम् ॥ ३३ ॥ लीलया विनोदेन ॥३४॥ ततः दशरथनिर्गमनानन्तरं । रत्नानि श्रेष्ठवस्तूनि मणिमुक्ताप्रवालवस्त्राभरणचन्दनादीनि ॥ ३५ ॥ ३६ ॥ यज्ञमर्हतिइति यज्ञियम् । "यज्ञर्त्विग्भ्यांघखञौ"इतिघः । यज्ञाययत्संपाद्यं तत्सर्वंसंपादितमित्यर्थः ॥ ३७ ॥ अन्तिकात् समीपे । "दूरान्तिकार्थेभ्योद्वितीयाच"इतिचकारेणपञ्चमी । समीपे उपहृतैः । सर्वकामैः सर्वोपकरणैः । उपेतं ॥ ३८ ॥ द्रष्टुमित्यर्धमेकान्वयम् । मनसेवेतिक्षिप्रसिद्धत्वेदृष्टान्तः ॥ ३९ ॥ वसिष्ठेत्यविभक्तिकोनिर्देशः । वसिष्ठस्य ऋश्यशृङ्गस्यचोभयोरित्यर्थः । ऋश्यशृङ्गस्यब्रह्मत्वेनवृतत्वात् तद्वचनमप्यपेक्षितं । शुभेदिवसे सोमसौम्यवारादौ । शुभेनक्षत्रे रोहिण्यादौ । निर्यातः गृहात् । यज्ञशालांप्रतिइत्यर्थसिद्धं । अत्राहुः "शङ्खदुन्दुभिमृदङ्गवादनैर्मङ्गलैःपटहकाहलादिभिः । स्वस्तिवादमुखरैर्मखक्षितिं ब्राह्मणैश्चसहसंप्रपद्यते"इति ॥ ४० ॥ ततइतिसार्धश्लोकः । आरभन्निति छान्दसः । यज्ञवाटगताः सर्वे यजमानर्त्विगादयः । यथाविधि यथाक्रमं । यथाशास्त्रं । सर्वेयज्ञकर्मारभन् स्वस्वकर्मारभन्तेत्यर्थः ॥ ४१ ॥ ४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

**ती०** अन्तिकं अन्तिकेस्थितं ॥ ३८ ॥ **ति०** मनसेवेति । क्षिप्रसिद्धत्वोपकरणसौष्ठवज्ञापनायोत्प्रेक्षेयं ॥ ३९ ॥ **ती०** यथाशास्त्रं वेदोक्तमनतिक्रम्य । यथाविधि कल्पसूत्रानुसारेण ॥ ४१ ॥ इतित्रयोदशस्सर्गः ॥ १३ ॥

[ **पा०** ] १ ङ. झ. महर्षये. २ ङ. झ. मुनिरब्रवीत्. ख. ग. घ. निदमब्र. ३ इदमर्धं ज. दृश्यते. ४ ङ. कदाचिल्लीलया. ५ ङ. झ. राजसत्तम. ६ च. छ. यज्ञियश्चकृतोराजन्. क—घ. ज. याज्ञियं च. ७ ङ. ज. झ. कृतंसर्वं. ८ च.छ. ज. मन्तिकम्. ९ ख. ज. मनसैव. १० ज. ततोवसिष्ठ. ११ ङ—झ. दिवसेशुभनक्षत्रे. १२ घ. जगतःप्रभुः. १३ घ—छ. झ. यज्ञवाटगताः. १४ क. ख. ङ. च. छ. झ. ञ. इदमर्धमधिकंदृश्यते.

## चतुर्दशः सर्गः ॥ १४ ॥

ऋश्यशृङ्गपुरस्कारेणवसिष्ठादिभिर्दशरथस्याश्वमेधयाजनम् ॥ १ ॥ विस्तरेणयागवैभववर्णनम् ॥ २ ॥ दशरथेनाश्वमेधान्ते दक्षिणादिभिर्ऋत्विगादिसंमाननपूर्वकं ऋश्यशृङ्गंप्रतिपुत्रेष्टियाजनप्रार्थना ॥ ३ ॥

अथ संवत्सरे पूर्णे तस्मिन्प्राप्ते तुरङ्गमे ॥ सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १ ॥
ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः ॥ अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २ ॥
कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः ॥ यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३ ॥
प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः ॥ चक्रुश्च विधिवत्सर्वमधिकं कर्म शास्त्रतः ॥ ४ ॥
अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि ॥ प्रातस्सवनपूर्वाणि कर्माणि मुनिपुङ्गवाः ॥ ५ ॥
ऐन्द्रश्च विधिवद्दत्तो राजा चाभिष्टुतोऽनघः ॥ माध्यन्दिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६ ॥

पूर्वसर्गान्तेशालाप्रवेशानन्तरमश्वमेधारंभस्संग्रहेणदर्शितः । तदनुष्ठानंविस्तरेणदर्शयिष्यन् तस्याश्वागमनपूर्वकत्वात्तदनुवादपूर्वकं यज्ञानुष्ठानंदर्शयतिचतुर्दशे—अथेत्यादि । अथ अश्वविमोचनानन्तरं । तुरङ्गमेप्राप्ते क्रमेणप्राप्ते । तस्मिन्संवत्सरेपूर्णे । राज्ञोयज्ञः । अभ्यवर्तत प्रावर्तत । अश्वागमनक्रमस्तु । विमुक्तमश्वंस्वैरंचरन्तं राजपुत्रराजोग्रसूतग्रामणिक्षत्रसंग्रहितारश्चतुश्शताः परिपालयन्तोनावर्तयन्तोनुचरन्ति । ब्रह्माध्वर्युहोत्रुद्गातारश्चत्वारऋत्विजः तं रथकारगृहेसमानीयबध्वा तस्यचतुर्षुपदेषु "इहधृतिस्वाहा" इत्याद्याहुतिचतुष्टयंजुह्वति । तथाहुः । " रथकारगृहेश्वस्यवसतःसायमस्यतु । चतुर्षुपत्सुहोतव्याश्चतस्रोधृतयःक्रमात्" इति । अथैकादशमासादूर्ध्वं तंसदस्याः समानीयआश्वत्थेव्रजेबध्नन्ति । तथाहआपस्तंबः । "ऊर्ध्वमेकादशान्मासादाश्वत्थेव्रजेश्वंबध्नीयात्" इति । ततोद्वादशेमासे शालानिर्माणादिसकलसंभारान्संभृत्य फाल्गुनामावास्यायामृत्विग्भिःशालांप्रविश्य प्रतिपदमारभ्याश्वमेधंप्रारभन्ते ॥ १ ॥ ऋश्यशृङ्गमिति । अनेनप्रधानार्त्विज्यं ब्रह्मत्वंतस्येतिगम्यते ॥ २ ॥ प्रतिपदमारभ्यसप्तसुदिनेषुकर्तव्यान् " त्रीणित्रीणिवैश्वदेवानिजुहोति" इतिविहितानेकविंशतिहोमान् "पूर्णाहुतिमुत्तमांजुहोति" इतिविहितंकर्मविशेषंच अभिप्रेत्याह—कर्मेति । याजकाः ऋत्विजः । वेदपारं तदर्थावबोधः तद्गच्छन्तीतिवेदपारगाः । कर्म पूर्वोक्तं । विधिवत्कुर्वन्तिस्म । यथाविधि यथावेदोक्तं । यथान्यायं यथामीमांसं । शास्त्रतः कल्पसूत्रानुसारेण । परिक्रामन्ति । "नासंस्थितेसोमेध्वर्युःप्रत्यङ्सदोतीयात्" इत्याद्युक्तक्रममतिलङ्घ्यऋत्विजोनविहरन्तीत्यर्थः ॥ ३ ॥ अथसोमक्रयानन्तरंसोमराजाप्यायनकर्मविशेषान्दर्शयति—प्रवर्ग्यमिति । द्विजा ऋत्विजः। प्रवर्ग्यं "देवावैसत्रमासत" इत्यादिप्रवर्ग्यब्राह्मणोक्तकर्मविशेषं । शास्त्रतः विधिमीमांसाकल्पसूत्रानुसारेण। कृत्वा। उपसदं इष्टिविशेषं। तथैव शास्त्रतएव। कृत्वा । शास्त्रतः उपदेशशास्त्रात् । अधिकं अतिदेशतःप्राप्तं। सर्वंकर्मच चक्रुः । "तिस्रएवसाह्नस्योपसदोद्वादशाहीनस्य" इतिप्राप्ताः द्वादशप्रवर्ग्योपसदश्चक्रुरित्यर्थः ॥ ४ ॥ अथसोमप्रयोगंदर्शयति—अभिपूज्येति । बहिष्पवमानादिभिस्तत्तत्कर्मदेवताः । अभिपूज्य ततः प्रवर्ग्योपसदनावसाने । प्रातस्सवनपूर्वाणिप्रातस्सवनमाध्यंदिनसवनतृतीयसवनानि । कर्माणि चक्रुः ॥ ५ ॥ ऐन्द्रः इन्द्रग्रहनिष्ठःसोमांशः । सः विधिवत् इन्द्रायदत्तः । अनघः पापनिवर्तकः । राजा सोमराजः । अभिष्टुतः स्तोत्रशस्त्रैस्स्तुतः । यद्वा । ऐन्द्रः इन्द्रदेवताकोहविर्भागः । धानाःकरंभःपरिवापः पुरोडाशःपयस्येति प्रातःसवनहवींषि । इन्द्रायहरिवतेधानाः । इन्द्रायपूषण्वतेकरंभः । सरस्वतेपरिवापः ।

ति० अत्र त्रिंशद्दिनात्मकसावनमासपरिच्छिन्नोवत्सरः ॥ १ ॥ ति० अग्रेपुत्रेष्टौ । "इष्टिंतेऽहंकरिष्यामि" इतिऋश्यशृङ्गोक्तेः "जुहावाग्नौचतेजस्वी" इतिऋष्यशृङ्गंप्रक्रम्यवाल्मीक्युक्तेश्चाऽऽध्वर्यवमस्येतियुक्तं ॥ २ ॥ ती० प्रवर्ग्यं आरादुपकारककर्मविशेषं ॥ ४ ॥

[ पा० ] १ ख. घ. राज्ञस्तस्य. २ ख. तथैवोपसदो. ३ ङ. झ. तदाहृष्टाः. ४ ग. ङ. झ. चाभिषुतो. ५ ङ. झ. मध्यंदिनंच. ६ घ. यथाविधि.

तृतीयसवनं चैव राज्ञोस्य सुमहात्मनः ।। चक्रुस्ते शास्त्रतो दृष्ट्वा [1]तथा ब्राह्मणपुङ्गवाः ।। ७ ।।
[[2]आह्वयाञ्चक्रिरे तत्र शक्रादीन्विबुधोत्तमान् ।। ऋश्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ।। ८ ।।
गीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः ।। होतारो ददुरावाह्य हविर्भागान्दिवौकसाम् ] ।। ९ ।।
न चाहुतमभूत्तत्र स्खलितं वाऽपि [3]किंचन ।। दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ।। १० ।।
न तेष्वहस्सु श्रान्तो वा क्षुधितो [4]वाऽपि दृश्यते ।। नाविद्वान्[5]ब्राह्मणस्तत्र [6]नाशतानुचरस्तथा ।।११।।
ब्राह्मणा भुञ्जते नित्यं [7]नाथवन्तश्च भुञ्जते ।। तापसा भुञ्जते [8]चापि [9]श्रमणा भुञ्जते तथा ।। १२ ।।
वृद्धाश्च व्याधिताश्चैव [10]स्त्रियो बालास्तथैव च ।। अनिशं [11]भुञ्जमानानां न तृप्तिरुपलभ्यते ।। १३ ।।
दीयतांदीयतामन्नं वासांसि विविधानि च ।। इति संचोदितास्तत्र तथा चक्रुरनेकशः ।। १४ ।।
अन्नकूटाश्च बहवो दृश्यन्ते पर्वतोपमाः ।। दिवसेदिवसे तत्र सिद्धस्य विधिवत्तदा ।। १५ ।।

---

इन्द्रायपुरोडाशः । मित्रावरुणाभ्यांपयस्येतिहोतव्यानीन्द्रमुद्दिश्यैव "अथकस्मादेतेषांहविषामिन्द्रमेवयजन्ति" इत्यादिश्रुतेः । माध्यंदिनसायंतनसवनयोःपयस्यावर्जमन्यत्सर्वंसमानं । अभिषुतइतिपाठे चतसृषुदिक्षुचतुर्भिःऋत्विग्भिःपाषाणैरभिहत्यनिःसारितसारा सोमलताऽभूदित्यर्थः । तथाहिसूत्रं "सोमंराजानंदृषदिनिधायदक्षिणतोब्रह्मापश्चादध्वर्युरुत्तरतोहोताप्रागुद्गातास्थित्वादृषद्भिरभिहन्यात्" इति। अनघः अंशुस्कन्दनरहितः ।। ६ ।। तथा शास्त्रप्रकारेण । "प्रातस्सवनपूर्वाणि" इत्युक्तस्यैवायंप्रपञ्चः ।। ७ ।।८।।९ ।। अहुतं स्खलितं अन्यथाहुतंवा । किंचन नाभूत् । सर्वं होमादिकं । ब्रह्मवत् मन्त्रवत् । दृश्यतेस्म । हि यस्मात् । क्षेमयुक्तं निर्विघ्नम् । चक्रिरे । अत्रान्नहोमादिकमश्वमेधीयंसूचितं । तेषांबहुत्वेनस्खालित्यादिसंभावनयातत्परिहारस्यवक्तव्यत्वात् । तथाहुर्याज्ञिकाः "पत्नीसंयजनान्तेहन्यग्निष्टोमेतुसंस्थिते ।। प्रजापतिसमेगीतेवीणागाणिकिभिर्नृपे ।। अस्तंगतेसहस्रांशावारुह्याश्वत्थनिर्मिताः ।। षट्त्रिंशतमथासन्दीस्तावन्तोऽध्वर्यवोवृताः ।। अप्राकृतैःस्रुवैर्दीर्घदण्डैःखदिरसंभवैः ।। सर्वांतांरात्रिमन्नानिदशाज्यादीनिजुह्वति ।। संख्याहुतीस्ताःसकृदेवहुत्वापरार्धपर्यन्तमथक्रमेण ।। हुत्वाऽश्वनामप्रभृतीनिरात्रेश्शेषोक्थ्यसङ्ख्याहुतिभिःसमाप्यः" इति ।। १० ।। अथतत्रान्नदानसमृद्धिंदर्शयत्यष्टभिः—नतेष्वित्यादि । यद्यपिक्रीतेसोमेयज्ञान्नंनभोज्यं तथापि सर्वद्रव्यस्यवसिष्ठसात्कृतत्वेननदोषः। तेष्वहस्सु यज्ञीयदिनेषु । श्रान्तः पिपासितः । क्षुधितः बुभुक्षितः । नदृश्यते नादृश्यत । अशतानुचरः शतशिष्यरहितः ।। ११ ।। नाथवन्तः दासाः । शूद्रादयइतियावत् । श्रमणाः दिगंबराः । "श्रमणावातवसनाः" इतिनिघण्टुः । यद्वा "चतुर्थमाश्रमंप्राप्ताःश्रमणानामतेस्मृताः" इतिस्मृतिः ।। १२ ।। व्याधिताः संजातव्याधयः। अनिशंभुञ्जमानानां भुञ्जानेष्वपि । यजमानस्य तृप्तिः अलंबुद्धिः । नासीदित्यर्थः । यद्वा रस्यतातिशयाद्भुक्त्यनन्तरमपिभोजनेच्छाजायतइत्यर्थः ।। १३ ।। तथा चक्रुः ददुरित्यर्थः ।। १४ ।। विधिवत् पाकविध्युक्तक्रमेण । सिद्धस्य पक्वस्य । अन्नेति लुप्तषष्ठीविभ-

---

**ति०** यथेत्यस्ययथाविधीत्यर्थः ।। ७ ।। **ती०** तत्र यागे । स्खलितं स्कन्नं । पात्रादितिशेषः ।। १० ।। **ति०** श्रान्तः स्वस्वार्त्विज्याशक्तः ।। ११ ।। **ति०** ब्राह्मणाइतित्रैवर्णिकोपलक्षणं । द्विजत्वात् । **शि०** । नाथवन्तः ब्राह्मणस्वामिकाः क्षत्रियविट्शूद्राश्च । तापसाः ब्रह्मचारिप्रभृतयः । वाशब्देनवर्णाश्रमबहिर्भूतपरिग्रहः । तुशब्देनयथेच्छलाभः ।। १२ ।। **ति०** भोज्यसौष्ठवात्उदरपूर्तावपिरसातिशयलोभेनमानसीतृप्तिर्नोपलभ्यतइत्यर्थः । **शि०** भुज्यमानानां भोज्यमानानांजनानां तृप्तिर्नोपलभ्यते । एतेनभोज्यानामतिस्वादुत्वंध्वनितं । किंच अमानानां गर्वरहितानांभोजनदातॄणां अनिशं निरन्तरं भुजि भोजनायां । भोजनदानेइत्यर्थः । अन्तर्भावितणिजर्थकभुजेर्भावेक्विप् ।। १३ ।।

**[ पा० ]** १ ङ.—झ. यथाब्राह्मण. २ ङ. च. छ. झ. ञ. ट. इदंश्लोकद्वयमधिकंदृश्यते. ३ ख. चापिकिंचन ङ—झ. वानकिंचन. ४ ख. वानकश्चन. ङ. झ. वानदृश्यते. ५ ङ. च. छ. झ. ब्राह्मणःकश्चित्. ६ ग. नावादकुशलस्तथा. घ. नानाचाररतस्तथा. ७ ट. नाथवन्तस्तु. ८ ट. वापि, क. नित्यं. ९ ङ. झ. श्रमणाश्चैवभुञ्जते. १० क. घ—झ. स्त्रीबालाश्चतथैवच. ११ ट. भुज्यमानानां.

**नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा ॥ अन्नपानैः सुविहितास्तस्मिन्यज्ञे महात्मनः ॥ १६ ॥**
**अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः ॥ अहो तृप्ताः स्म भद्रं त इति शुश्राव राघवः ॥१७॥**
**स्वलंकृताश्च पुरुषा ब्राह्मणान्पर्यवेषयन् ॥ उपासते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १८ ॥**
**कर्मान्तरे तदा विप्रा हेतुवादान्बहूनपि ॥ प्राहुः स्म वाग्मिनो धीराः परस्परजिगीषया ॥ १९ ॥**
**दिवसेदिवसे तत्र संस्तरे कुशला द्विजाः ॥ सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ २० ॥**
**नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः ॥ सदस्यास्तस्य वै राज्ञो नावादकुशला द्विजाः ॥ २१ ॥**
**प्राप्ते यूपोच्छ्रये तस्मिन्षड् बैल्वाः खादिरास्तथा ॥ तावन्तो बिल्वसहिताः पर्णिनश्च तथाऽपरे ॥२२॥**
**श्लेष्मातकमयस्त्वेको देवदारुमयस्तथा ॥ द्वावेव तत्र विहितौ बाहुव्यस्तपरिग्रहौ ॥ २३ ॥**

क्तिकंपदं । अन्नस्यखाद्यभक्ष्यलेह्यचोष्यभेदभिन्नस्य । कूटाः राशयः ॥ १५ ॥ सुविहिताः सुतर्पिताः ॥१६॥ अन्नं विधिवत् उपचारवत् । स्वादुच । अनेनतृप्ताः स्म । अहो इदंवर्णितुंनशक्यं । इति द्विजर्षभाः प्रशंसन्ति प्राशंसन् । तद्राघवःशुश्राव । "नतेष्वहस्सु" इत्यारभ्यप्रशंसाप्रकारोनतुकविवाक्यं । अनेन "ब्राह्मणौ वीणागाथिनौगायतः" इत्यारभ्य "इत्यददाइत्ययजथाइत्यपचइतिब्राह्मणोगायेत् " इत्युक्तस्तुतिश्रवणमुक्तम् ॥ १७ ॥ ब्राह्मणान् ब्राह्मणेभ्यः । पर्यवेषयन् भक्ष्यान्नपानादीनितिशेषः । सुमृष्टमणिकुण्डलाः उत्तेजितरत्नकुण्डलाः । अन्येपुरुषाःसाहाय्यार्थंतानसेवन्तेत्यर्थः ॥ १८ ॥ कर्मान्तरे सवनयोरन्तरालकाले । धीराः धीमन्तः । वाग्मिनः पटुवाचः । विप्राः ऋत्विजः । परस्परजिगीषया बहूनहेतुवादान् प्राहुःस्म । अनेन ब्रह्मोद्यमुक्तं । यथा "किंस्विदासीत्पूर्वचित्तिः" इत्यादि होतृब्रह्मणोःप्रश्नप्रतिवचनानि ॥१९॥ अथ "ऊमोर्व्यकाव्याधिदैवत्यानि द्विनाराशंसनंप्रातःसवनं द्विनाराशंसनंमाध्यंदिनंसवनं सकृन्नाराशंसनं तृतीयसवनं" इतिविहितानित्रिकालकर्माणिदर्शयति–दिवसेदिवसइति । दिवसेदिवसे अश्वमेधाहेषुप्रत्यहं । संस्तरे आस्तीर्णबर्हिषि । "संस्तरौप्रस्तराध्वरौ" इत्यमरः । सर्वकर्माणि ऊमादिदैवत्यकर्माणि । यथाशास्त्रं । वृद्धैः प्रचोदिताःसन्तः । चक्रुः । "ऊमाऊर्व्याश्चका व्याश्चपितरः सवनत्रये" ॥ नाराशंसनंनाम सकृद्भक्षिताप्यायितासादितचमसं ॥ २० ॥ अत्र यज्ञे । अषडङ्गवित्कश्चिन्नासीत् । अव्रतश्च कश्चिन्नासीत् । अबहुश्रुतश्चकश्चिन्नासीत् । तस्य राज्ञः । सदस्याः सदसिसमवेताः । द्विजाः । अवादकुशलाः नासन् ॥ २१ ॥ अथौपवसथ्यदिनकृत्यंपश्वालंभंवक्तुंयूपोच्छ्रयणप्रकारमाह—प्राप्तइति । श्लोकद्वयमेकान्वयं । यस्मिन् अश्वमेधे । यूपानामुच्छ्रयोयूपोच्छ्रयः । उच्छ्रयः उत्क्षेपणं । उद्धृत्यस्थापनमितियावत् । तत्कालोत्र लक्ष्यते । "यूपायोच्छ्रीयमाणायानुब्रूहि" इतिप्रैषेप्राप्तइत्यर्थः । बिल्वस्यविकाराबैल्वाः । " बिल्वादिभ्योऽण्" इत्यण् । बैल्वायूपाष्षट् उच्छ्रिताइतिशेषः । खदिरस्यविकाराःखादिराः । तथेतिसमुच्चये । खादिरायूपाश्च । तावन्तःषडेव । बिल्वसहिताइति खादिराणांबिल्वसमीपवर्तित्वं नतुपर्णिसमीपवर्तित्वमित्युच्यते । षट्खादिरायथाबिल्वसहिताभवन्ति तथोच्छ्रिताइत्यर्थः । अपरे उक्तेभ्योऽन्ये । पर्णिनः पर्णीपलाशः "पलाशे किंशुकःपर्णी " इत्यमरः । तत्प्रकृतिकाः पर्णिन इत्युच्यन्ते । पर्णिनोयूपाः । तथा षट्उच्छ्रिताइत्यर्थः ॥ २२ ॥ श्लेष्मातकमयः राज्जुदालविकारः । एकोयूपः उच्छ्रितः । देवदारुमयस्तथा देवदारुविकारश्चयूपउच्छ्रितः । अत्रैकत्वमविवक्षितं । द्वयोः श्रुत्याचोदितत्वात् । " राज्जुदालमग्निष्ठंमिनोतिपौतुद्रवावभितोभवतः" इतिश्रुतिः । राज्जुदालः श्लेष्मातकः । पौतुद्रवौ देवदारू । अयमत्रविन्यासक्रमः । राज्जुदालो-

**शि०** विधिवत् पाकशास्त्रोक्तविधिनिर्मितम् ॥ १७ ॥ **ति०** स्वलंकृताइति । अनेन राजकृतोयज्ञपरिचारकसत्कारोध्वनितः ॥ १८ ॥ **शि०** प्रचोदिताः प्रेष्य ब्रूहीत्यादिवैदिकशब्दैःप्रेरिताः । ते प्रसिद्धाः ॥ २० ॥ **ति०** श्लेष्मातकः रज्जुदालः । तन्मय एकोयूपः । अश्वमेधेदिष्टः उपदिष्टइत्यर्थः । **शि०** अग्निष्ठः अग्निसंमुखवर्ती ॥ २३ ॥

**[ पा० ]** १ ज. उपासतेतथान्येच. २ क—झ. प्राहुःसुवाग्मिनो. क. ख. प्राहुःस्सवेदकुशलाः. ३ क. ग—छ. झ. मयोदिष्टो. ट. मयोऽग्निष्ठो. ज. मयश्चैव.

कारिताः सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः ॥ शोभार्थं तस्य यज्ञस्य काञ्चनालंकृता भवन् ॥ २४ ॥
एकविंशतियूपास्ते एकविंशत्यरत्नयः ॥ वासोभिरेकविंशद्भिरेकैकं समलंकृताः ॥ २५ ॥
विन्यस्ता विधिवत्सर्वे शिल्पिभिः सुकृता दृढाः ॥ अष्टाश्रयः सर्व एव श्लक्ष्णरूपसमन्विताः ॥२६॥
आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च पूजिताः ॥ सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥२७॥
इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः ॥ चितोऽग्निर्ब्राह्मणैस्तत्र कुशलैः शुल्बकर्मणि ॥ २८ ॥

ग्निष्ठः अग्नौतिष्ठतीत्यग्निष्ठः।अग्निशब्देनाग्निस्थानवेदिरुच्यते। "अर्धमन्तर्वेदिमिनुयादर्धबहिर्वेदि" इतिश्रुतेः। सोग्निष्ठःप्रथमयूपः "तानग्निष्ठप्रथमान्मन्त्रेणछिनत्ति" इतिसूत्रात्। तस्यदक्षिणोत्तरपार्श्वयोर्देवदारुयूपौ तेषांत्रयाणांदक्षिणतस्त्रयोबैल्वाः उत्तरतस्त्रयः। तेषांनवानांदक्षिणतस्त्रयः खादिराउत्तरतस्त्रयः। तेषांपञ्चदशानां दक्षिणतस्त्रयः पालाशाःउत्तरतस्त्रयः। प्रथमंपालाशषट्कमन्तेबिल्वषट्कंवा। सर्वथाखादिराएवबिल्वसहिताः नपुनःपालाशाः। तमिममर्थंग्रन्थकारोबिल्वसहिताइत्यसूचयत्। आपस्तंबश्चासूत्रयत्। "राज्जुदालमेकविंशत्यरत्निंसंमिनोति पौतुद्रवावभितस्त्रयोबैल्वादक्षिणतस्त्रयउत्तरतस्त्रयः खादिरादक्षिणतस्त्रयउत्तरतस्त्रयः पालाशादक्षिणतस्त्रयउत्तरतः" इति। एवंयूपानामुच्छ्रयणक्रममुक्त्वातेषामन्तरालप्रदेशविस्तारंदर्शयति—द्वाविति। तत्र यूपेषु। द्वौद्वौबाहुव्यस्तपरिग्रहौ विहितौ कृतौ। व्यस्तौबाहू बाहुव्यस्तौ ताभ्यांपरिग्रहःस्पर्शोययोस्तौ। द्वौद्वौयूपौ व्यस्तबाहुस्पृश्यौविहितौ। व्याममात्रान्तरप्रदेशावित्यर्थः। तथाहधर्मनिर्णयकारः। "षण्णवत्यङ्गुलंबाहुदण्डमष्टोत्तरंतुवा। यूपान्तरालंतन्मात्रमश्वमेधेमहाक्रतौ" इति ॥ २३ ॥ यूपनिर्माणमाह—कारिताइति। एतेसर्वेयूपाः शास्त्रज्ञैः यज्ञशास्त्रज्ञैः। यज्ञकोविदैः यज्ञप्रयोगकुशलैः। कारिताः काञ्चनैःकाञ्चनपट्टैश्चालंकृताः। भवन् "बहुलंछन्दस्यमाङ्योगेपि" इत्यडभावः। अलंकारोपिकिंशास्त्रीयःनेत्याह—तस्ययज्ञस्यशोभार्थमिति। यज्ञभूमेः शोभार्थमित्यर्थः ॥२४॥ तेषांसङ्ख्याप्रमाणेदर्शयति—एकविंशतीति। ते यूपाः। एकविंशति "सुपांसुलुक्" इत्यादिनासुलोपः। एकविंशत्यरत्नयश्च एकविंशत्यरत्न्युन्नताइत्यर्थः। "एकविंशत्यरत्निरश्वमेधस्य" इतिश्रुतेः। "चतुर्विंशत्यङ्गुलयोरत्निः" इतिसूत्रं। एकविंशद्भिरितीकारलोपबहुवचनेआर्षे। एकैकमितिसामान्येनपुंसकं। एकोयूपएकेनवाससेतिक्रमेणसर्वेपिवासोभिरलंकृताइत्यर्थः ॥ २५ ॥ यूपस्थापनविशेषमुक्तानुवादपूर्वमाह—विन्यस्ताइति। शिल्पिभिः सुकृताः सुष्ठुकृताः अन्यूनातिरिक्ततयाकृताः। दृढाः सुषिरादिदोषरहिताः। अष्टाश्रयः अष्टकोटयः। "स्त्रियःपाल्यश्रिकोटयः" इत्यमरः। श्लक्ष्णरूपसमन्विताः यूपाभ्यञ्जनेनस्निग्धरूपयुक्ताः। सर्वएव विन्यस्ताः स्थापिताः। यद्वा। "प्राप्तेयूपोच्छ्रये" इत्यादिश्लोकत्रयमेकान्वयं। शास्त्रज्ञैःकारिताबैल्वादयः सर्वेएतेकाञ्चनालंकृताः भवन्नितियूपनिर्माणमुक्तं। एकविंशतीत्यनेन संख्याप्रमाणेदर्शिते। विन्यस्ताइत्यनेन स्थापनमुच्यते ॥ २६ ॥ यूपान्वर्णयति—आच्छादिताइति। दिविसप्तर्षयइव तेयूपाविराजन्तेस्म। दीप्तिमात्रेदृष्टान्तः। सप्तानांसप्तानांवा ॥ २७ ॥ यूपोच्छ्रयपूर्वभाविचयनमाह—इष्टकाइति। शुल्बकर्मणि यज्ञकर्मणि। "शुल्बंताम्रेयज्ञकर्मण्याचारेजलसन्निधौ" इतिवैजयन्ती। प्रकृतेचयनंविवक्षितं। शुल्बमेकसरारज्जुः। शुल्बसाध्यंकर्म शुल्बंचयनं। अतएवाहरुद्रदत्तः। "रज्जूनांविहरणसाधनत्वादेतत्कर्मशुल्बमाचष्टआचार्यः" इति। तत्रकुशलैः ब्राह्मणैः। यथान्यायं यथाशास्त्रं। प्रमाणतः प्रमाणेन। विशिष्टाइष्टकाःकारिताः। अत्रसूत्रं "पादमात्रोर्धमात्रोणुकमात्रऋजुरेखादक्षिणावृतासव्यावृतारूयालिखिताश्च" इति। अग्निः अग्न्याधारवेदिः। चितः ताभिरिष्टकाभिः कृतचयनः।

ति० शास्त्रज्ञैः शास्त्रंशिल्पशास्त्रं शुल्बशास्त्रंच ॥ २४ ॥ ति० महोच्छ्रयपरीणाहोयूपोन्यःसर्वकाञ्चनः। यज्ञेसमभवत्तत्रशोभार्थमुपकल्पितः। इतिक्वचित्पाठः ॥ २५ ॥

[ पा० ] १ शोभनार्थंचयज्ञ. २ घ. ङ. श्लक्ष्णारूप. ३ ग. घ. ज. गन्धैश्चभूषिताः. ४ क. ङ. झ. कुशलैःशिल्पकर्मणि. च. छ. कुशलैर्यज्ञकर्मणि.

स चित्यो राजसिंहस्य सञ्चितः कुशलैर्द्विजैः ॥ गरुडो रुक्मपक्षो वै त्रिगुणोष्टादशात्मकः ॥२९॥
नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् ॥ उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥ ३० ॥
शामित्रे तु हयस्तत्र तथा जलचराश्च ये ॥ ऋत्विग्भिः सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा ॥ ३१ ॥
पशूनां त्रिशतं तत्र यूपेषु नियतं तदा ॥ अश्वरत्नोत्तमं तत्र राज्ञो दशरथस्य च ॥ ३२ ॥
कौसल्या तं हयं तत्र परिचर्य समन्ततः ॥ कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३३ ॥

अभूत् ॥ २८ ॥ चयनसंस्थानमाह—सचित्यइति । सः चित्यः चयननिर्वर्त्योग्निः । राजसिंहस्य राजश्रेष्ठस्य । अनेन पूर्वमनेकधानुष्ठितक्रतुत्वंसूच्यते । कुशलैः रीतिभेदंविनाचयननिर्माणसमर्थैः । द्विजैः ब्राह्मणैःऋत्विग्भिः । संचितः सम्यग्यथाशास्त्रंचितः । कथंचितइत्यत्राह—गरुडइति । गरुडः गरुडाकारः । पक्षौपुच्छंचप्रसार्याधोवीक्षमाणःप्राङ्मुखंतिष्ठन्गरुडइवस्थितः । "श्येनचितंचिन्वीत" इतिश्रुतौश्येनशब्दोगरुडपरएव । "सुपर्णोसिगरुत्मान्" इति मन्त्रलिङ्गात् । यद्वा । गरुडः गरुडप्रतिकृतिः । "जीविकार्थेचापण्ये" इतिवासुदेवादिवत्प्रतिकृतौविहितस्यकनोलुप् । रुक्मपक्षः स्वर्णगर्भपक्षः । "सहस्रंहिरण्यशकलैःप्रतिदिशमग्निंप्रोक्षति" इतिसूत्रात् । त्रिगुणः त्रिगुणप्रस्तारः । प्रकृतौषट्प्रस्तारात्मकस्यचित्याग्नेरश्वमेधेत्रैगुण्यविधानात् । "षट्चितयोभवन्ति" इतिश्रुतेः । "त्रिस्तावोग्निर्भवतीत्यश्वमेधेविज्ञायते" इतिसूत्राच्च । अतएवअष्टादशात्मकः अष्टादशप्रस्तारात्मकः । ननु षट्प्रस्तारात्मकस्यचित्यस्यत्रैगुण्यविधानेनैव अष्टादशप्रस्तारात्मकत्वंसिद्धं किं पुनस्तदुपदेशेन । उच्यते । त्रिगुणइत्युक्तेपञ्चदशात्मकत्वंप्रतीयते । तैत्तिरीयके "पञ्चचितयोभवन्ति" इतिविधानात् । तदिदंवाजसनेयकपक्षावलंबनंद्योतयितुमष्टादशात्मकत्वोक्तिः । एवंभूतश्चितइत्यन्वयः ॥ २९ ॥ अथपूर्वोक्तेषुयूपेषुपशुनियोजनमाह—नियुक्ताइति । यथाशास्त्रं शास्त्रमनतिक्रम्य । प्रचोदिताः विहिताः । पशवउरगाःपक्षिणश्च । तत्तद्दैवतंइन्द्रादिदेवतांउद्दिश्यतत्र यूपेषु नियुक्ताबद्धाः । यूपेष्वित्यारोकाणामुपलक्षणं । "यूपेषुग्राम्यान्पशून्नियुञ्जन्ति । आरोकेष्वारण्यान्धारयन्ति" इतिश्रुतेः । अत्राशक्यानामुरगादीनांनियोजनंपञ्जरद्वारा । एतेचपशवस्तत्तद्देवताश्च "इन्द्रायराज्ञेसूकरः" इत्याद्यनुवाकेषुप्रतिपाद्यन्ते ॥ ३० ॥ तत्र "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इतिश्रुतेरारण्यान्पशून्पर्यग्निकृतानुत्सृज्य ग्राम्याणांपशूनां शामित्रेनियोजनमाह—शामित्रेत्विति । तुशब्देनारण्येभ्योवैलक्षण्यमुच्यते । हयःअश्वमेधीयः । येजलचराःकूर्मादयः तेच तदन्यत्सर्वंच ग्राम्यपशुजातं तत्र यज्ञे तदा विशसनकाले । ऋत्विग्भिः शामित्रे विशसनकर्मणि । शास्त्रतोनियुक्तं ॥३१॥ यूपनियुक्तानांपशूनांसंख्यामाह—पशूनामिति । तत्र यूपेषु । पशूनांत्रिशतं नियतंबद्धं । तदाराज्ञोदशरथस्य अश्वरत्नोत्तमं अश्वश्रेष्ठोत्तमंचनियतं । त्रिशतमितिप्रधानापेक्षया । अधिकानामपिश्रवणात् । तथाह भास्करः "अश्वमेधपशुसङ्ख्यातुपञ्चशतमेकोनविंशतिश्च" इति । अश्वरत्नोत्तरइतिपाठे रत्नोत्तरोरत्नप्रधानोश्वइतिपरनिपातेनयोजना । तथाहभास्करः "सौवर्णान्महिषी मणीन्दशशतानस्यावयत्यावहाद्वावाता वयते मणीन्दशशतान्प्रत्यग्वहाद्राजतान् ॥ प्रत्यक्श्रोणिसहस्रमेवपरिवृत्त्यस्यावयेन्मौक्तिकान्सख्यःशङ्खमणीनथैषुसमुपग्रथ्नन्त्यविस्रस्तयः" इति । आवयति उतान्करोति ॥३२॥ मृताश्वोपचारमाह—कौसल्येति । कौसल्या महिषी । तत्र शामित्रप्रदेशे । तं मृतंहयं । समन्ततः परिचर्य प्रदक्षिणाप्रदक्षिणंसंचार्य । अत्रसूत्रं "दक्षिणान्केशपक्षानुद्ग्रथ्यसव्यान्प्रग्रथ्य दक्षिणानूरूनाघ्नाना इदंमध्विदंमध्वितिजपन्त्यः स्त्रियोमहिष्यश्चाश्वतूबरगोमृगाणांपरिक्रम्य सव्यानुद्ग्रथ्य दक्षिणान्प्रग्रथ्य सव्यानू-

**ति०** सचित्यः अग्निः । संचितः स्थापितः । कथंसंचितइत्यत्राह । गरुडः गरुडसंस्थानः । रुक्मपक्षः "सहस्रंहिरण्यशल्कैः प्रतिदिशमग्निंप्रोक्षति" इतिसूत्राद्रुक्मपक्षत्वमितिकेचित् । अत्रपक्षे "त्रिगुणोष्टादशात्मकः" इत्यस्यासामञ्जस्यंमत्वा चितदेशविशेषणानीमानि । स्वर्णेष्टकाभिःपक्षनिर्माणाद्रुक्मपक्षत्वमित्यन्ये । **शि०** रुक्मपक्षः सुवर्णमयपक्षविशिष्टः ॥ २९ ॥ **ती०** परिचर्यप्रोक्षणादिभिःसंस्कृत्य । एनं कृपाणैर्विशशासेति असिभिर्वधंचकारेत्यर्थः । **मुनिभावप्रकाशिका** कृपाणैः आयुधैः । त्रिभिः मन्त्रैः ॥ ३३ ॥

[ **पा०** ] १ घ. ङ. ज. झ. ऋषिभिस्सर्वं. २ ज. शास्त्रतलतः. ३ ज. यूपेषुविनियोजितम्.

पतत्त्रिणा तदा सार्धं सुस्थितेन[1] च चेतसा ॥ अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३४ ॥
होताऽध्वर्युस्तथोद्गाता हस्तेन[2] समयोजयन् ॥ महिष्या परिवृत्या[3] च वावातामपरां तथा ॥ ३५ ॥
पतत्त्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः ॥ ऋत्विक् परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३६ ॥
धूमगन्धं वपायास्तु जिघ्रति[4] स नराधिपः ॥ यथाकालं यथान्यायं निर्णुदन्पापमात्मनः ॥ ३७ ॥
हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः ॥ अग्नौ प्रास्यन्ति विधिवत्स[5]मन्त्राः षोडशर्त्विजः ॥ ३८ ॥

रूनाम्नाना सक्थीरवधून्वन्त्यस्त्वप्रदक्षिणंपरिक्रम्य प्रदक्षिणमन्त्रतोयथापुरस्तान्नवकृत्वः संपादयन्ति'' इति । कृपाणैस्त्रिभिस्तिसृभिः सौवर्णीभिःसूचीभिः एनं परमयामुदा निरवधिकश्रद्धया । विशशास असिपथान्कल्पयामास । कौसल्येति इतरासामुपलक्षणं । "सौवर्णीभिः सूचीभिः पत्नयोश्वस्यासिपथान्कल्पयन्ति प्राक्रोडात्प्रत्यश्चीभिः'' इति सूत्रात् । क्रोडं वक्षः ॥३३॥ महिष्याःकर्तव्यांतरमाह—पतत्त्रिणेति । तदा विशसनोत्तरकाले । कौसल्या । धर्मकाम्यया धर्मसिद्धीच्छया । काम्यजन्तादकारप्रत्ययेटाप् । सुस्थितेन सुस्थिरेण । चेतसा उपलक्षितासती । शवस्पर्शकुत्सारहितासतीत्यर्थः । पतत्त्रिणा अश्वेन । सार्धंएकांरजनीमवसत् । अत्रसूत्रं "अंबेअंबाल्यंबिकेइतिजपन्तीमहिषी अश्वमुपसंगम्य गणानांत्वागणपतिंहवामहइत्यभिमन्त्र्य। उत्सक्थ्योर्गृदंधेहीतिप्रजननेप्रजननंसंनिधायोपविशति । सुभगेकांपीलवासिनीतिक्षौमेनवाससाध्वर्युर्महिषीमश्वंचप्रच्छाद्य वृषावांरेतोधा रेतोदधात्वितिजपत्याम्रीप्रएतांरात्रिमृत्विजोयजमानंजागरयन्ति'' इति॥३४ तादात्विकदक्षिणामाह—होतेति । तथेत्यनुक्तसमुच्चयार्थः । ब्रह्माचेत्यर्थः । एतेब्रह्मादयश्चत्वारःप्रधानर्त्विजोमहिषीपरिवृत्तिभ्यांसह वावातामपरां पालाकलीं च । राज्ञोदक्षिणार्थं परिगृह्य । हस्तेनसमयोजयन् । रमणवद्धस्तेनागृह्णन्नित्यर्थः । अत्रश्रुतिः "अंबेअंबाल्यंबिकेइतिपत्नीमुदानयति'' इत्यादि । उदानयति हस्तेनगृह्णातीत्यर्थइतिभास्करः । सूत्रंच "महिषींब्रह्मणेददातिवावातांहोत्रेपरिवृत्तिमुद्गात्रेपालाकलीमध्वर्यवे'' इति । पश्चात्प्रतिनिधिद्रव्यदानेन निवर्त्येरन् । "कृताभिषेकामहिषीपरिवृत्तिरुपेक्षिता । वावाताभोगिनीपात्रप्रदापालाकलीमता'' इतिवैजयन्ती ॥ ३५॥ तस्यपतत्त्रिणः अश्वस्य । "पतत्रीपक्षितुरगौ'' इत्यमरः । वपां वपास्थानीयां तेजनीं । "नाश्वस्यवपाविद्यते'' इतिसूत्रात् । "नान्येषां पशूनांतेजन्या अवद्यन्त्यवद्यन्त्यश्वस्य'' इतिश्रुतेश्च । उद्धृत्य आदाय । नियतेन्द्रियः एकाग्रः । परमसंपन्नः परमेणप्रयोगचातुर्येणसंपन्नः । ऋत्विक् अध्वर्युः । शास्त्रतः श्रपयामास पपाच । श्रापाके । शास्त्रंचस्वयमेववक्ष्यतिप्लक्षेति॥३६॥ अथवपाहोमंसूचयन्नाह—धूमेति । नराधिपः दशरथः । यथाकालं होमकालमनतिक्रम्य । यथान्यायं यथाशास्त्रं । आत्मनः पापं निर्णुदन् निवर्तयन्सन् । वपायाधूमगन्धंजिघ्रतिस्म ॥ ३७ ॥ वपाहोममुक्त्वा

**ति०** पतत्त्रिणेति । पुराअश्वानांपक्षाःसन्तीतिप्रसिद्ध्यैवंवादः ॥ ३४ ॥ **ति०** अथहोत्रादयः । महिष्या कृताभिषेकया । परिवृत्त्या राज्ञोभोगाद्बहिष्कृतयादास्याचसह । वावातां राज्ञोवल्लभांभुजिष्यां । अश्वेनसमयोजयन्नितिसंबन्धइतिकेचित् । अपरे तु वावाताशब्दोराज्ञोमध्यमजातीयद्वितीयभार्यावाची । तदुक्तमैतरेयब्राह्मणभाष्ये तृतीयपञ्चिकास्थद्वाविंशखण्डस्थवावातेतिप्रतीकव्याख्यानावसरे । राज्ञांहित्रिविधाःस्त्रियः । उत्तममध्यमाधमजातीयाः । तासांमध्ये उत्तमजातेःक्षत्रियायामहिषीतिनाम । मध्यमजातेर्वैश्यायाःवावातेति । अधमजातेःशूद्रायाःपरिवृत्तिरिति । अतएवाश्वलायनसूत्रे दशमाध्याये अष्टमखण्डस्थवावातेतिप्रतीकंगृहीत्वा द्वितीयाभार्येतिव्याख्यातं नारायणवृत्तिकृता । **शि०** रात्रिवासोत्तरकालिकंहोत्रादिकृत्यमाहहोतेति । होत्रादयस्त्रयः । तथाशब्देनब्रह्माच । महिष्या कृताभिषेकया । परिवृत्त्या उपेक्षितयाच सहितांवावातां भोगिनीं । अपरां पालाकलींच । हयेनाश्वेनसमयोजयन् । अश्वाङ्गसंयोजनरूपविधिंकारयामासुरित्यर्थः । तथाशब्दश्चार्थे । एतेन "महिषींब्रह्मणेददाति वावातांहोत्रे परिवृत्तिमुद्गात्रे पालाकलीमध्वर्यवे'' इतिसूत्राण्युपन्यस्य पत्नीदानपरत्वेनव्याख्यानंप्रत्युक्तं । दानस्यात्रानुक्तेः । अध्याहारे गौरवाच्च । हस्तेनसमयोजयन्नितिपाठेतु हयहस्तेनेत्यर्थः । पशूनामग्रिमपादयोर्हस्तत्वात् । अतएव हयेनसमयोजयन्नितिपाठेन न विरोधः ॥ ३५ ॥ **शि०** पापं प्रकटपुत्रवियोगहेतुत्वेनप्रतीयमानविघ्नविशेषं ॥ ३७ ॥ **शि०** समस्ताः मिलिताः ॥ ३८ ॥

**[ पा० ]** १ ज. सत्कृतेन च. २ क.—ङ. छ. ज. हयेन. ३ ख. ङ. छ. ज. झ- परिवृत्याथ. ४ ख. ग. च. जिघ्रन्तिस्म नराधिपाः. ५ ख. घ.—झ. ट. विधिवत्समस्ताः.

प्लक्षशाखासु यज्ञानामन्येषां क्रियते हविः ॥ अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ ३९ ॥
त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः ॥ चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥
उक्थ्यं द्वितीयं संख्यातमतिरात्रं तथोत्तरम् ॥ ४० ॥
कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ४१ ॥
ज्योतिष्टोमायुषी चैवमतिरात्रौ विनिर्मितौ ॥ अभिजिद्विश्वजिच्चैवमाप्तोर्यामो महाक्रतुः ॥ ४२ ॥
प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः ॥ अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥४३॥
उद्गात्रे वै तथोदीचीं दक्षिणैषा विनिर्मिता ॥ हयमेधे महायज्ञे स्वयंभूविहिते पुरा ॥ ४४ ॥

अङ्गहोममाह—हयस्येति । सर्वाणि ब्राह्मणाइत्यत्रगुर्वक्षरमार्षं । सर्वाणीत्यनेन सर्वस्यहुतत्वेनशेषभक्षणं नास्तीत्युक्तं । अङ्गहोमफलंश्रूयते । "अङ्गेअङ्गेवैपुरुषस्यपाप्मोपश्लिष्टः । अङ्गादङ्गादेवैनंपाप्मनस्तेनमुञ्चति" इति । यजमानस्यसर्वंपापंनिवर्ततइत्यर्थः ॥३८॥ पूर्वंशास्रतःश्रपयामासेत्युक्तं तदवदानमाह—प्लक्षेति । अन्येषांयज्ञानां संबन्धिहविः वपा । प्लक्षशाखासु क्रियते अवदीयते । अश्वमेधस्ययज्ञस्य भागः हविर्भागः । वैतसः वैतसेकटेअवदातव्योभवति । शैषिकोण् । अत्रयज्ञशब्देनपशवोलक्ष्यन्ते । तथाचश्रुतिः "प्लक्षशाखायामन्येषांपशूनामवद्यन्ति वेतसशाखायामश्वस्य" इति । अत्रवेतसशाखाशब्दोवैतसकटपरः । यद्वा वेतसस्यशाखावैतसी वैतस्यांसंस्कृतोवैतसः । "यस्येतिच" इतीकारलोपः । वैतसकटस्तु पश्वासादनार्थः । "वैतसःकटोभवतिअप्सुयोनिर्वाअश्वः अप्सुजोवेतसः स्वएवैनंयोनौप्रतिष्ठापयति" इतिश्रुतेः । "वैतसकटेऽश्वंप्राञ्चमासादयति" इतिसूत्राच्च । अतोवैतसकटेवपावदानमितिव्याख्यानंचिन्त्यं ॥ ३९ ॥ अत्रसवनीयदिनानिकतीत्याकाङ्क्षायामाह—त्र्यहइति । "अश्वमेधस्यत्रीणिसवनीयान्यहानि" इतिकल्पसूत्रेण ब्राह्मणैः तन्मूलभूतब्राह्मणवाक्यैश्च । अश्वमेधः त्र्यहःसङ्ख्यातः । अश्वमेधस्यानेकाहसाध्यत्वेपिसवनीयाहानांप्राधान्यात्तद्ग्रहः । त्रीणिअहानियस्यसत्र्यहः । "अच्प्रत्यन्वव" इत्यत्रयोगविभागादच् । इदमर्धमेकंवाक्यं । तान्यहानिपरिगणयति—चतुष्टोममिति । त्रिवृत्पञ्चदशः सप्तदशएकविंशइतिस्तोमचतुष्टययुक्तत्वादग्निष्टोमश्चतुष्टोमइत्युच्यते । तदनुष्ठानयुक्तत्वात्तद्व्यपदेशः । एकविंशोक्थ्ययुक्तत्वादुक्थ्यमितिज्योतिष्टोमस्यद्वितीयासंस्था तद्युक्तंद्वितीयमहः । सर्वस्तोमोतिरात्रः तद्युक्तमुत्तरमहः । द्वितीयादुत्तरंतृतीयमहइत्यर्थः ॥४०॥ एवमश्वमेधस्यत्र्यहत्वेनत्रयाणांकर्तव्यत्वेपिप्रकृतेऽश्वमेधेशास्त्रान्तरदर्शनात् विहिताअन्येपिबहवःक्रतवोराज्ञाकारिताइत्याह कारिताइत्यर्धेन ॥४१॥ केतेक्रतवइत्यपेक्षायामाह—ज्योतिष्टोमेति । अतिरात्रावितिद्विवचनेनतस्यावृत्तिरुच्यते । विनिर्मितौ अनुष्ठितौ ।अन्यत्रापिविभक्तिविपरिणामेनायंशब्दअनुषज्यताम् । उक्तदिनत्रयादुत्तरेष्वहस्सुज्योतिष्टोमादयःषट्क्रतवःकारिताइत्यर्थः । शास्त्रान्तरेज्योतिष्टोमादीनामपिविहितत्वेनषोडशिग्रहणवत्तेषामप्यनुष्ठानेमहानभ्युदयइतिमन्वानेनराज्ञा तेपिकारिताइत्यर्थः । अत्र चयनयूपोच्छ्रयपशुनियोजनवपाहोमचतुष्टोमसवनानिक्रमेणवक्तव्यानीतितत्क्रमेणश्लोकाःपठितव्याः व्युत्क्रमपाठोलेखकप्रमादकृतः । ऋषिरेववा क्रममविवक्षन्प्रणिनाय ॥ ४२ ॥ अथदक्षिणादानमाह—प्राचीमिति । द्वयमेकं । स्वकुलस्य इक्ष्वाकुकुलस्य वर्धनः । बहुदक्षिणादानं ह्युचितमिक्ष्वाकुकुलस्येतिभावः ॥ ४३ ॥ एतावद्दक्षिणादानेकिंप्रमाणंतत्राह—एषादक्षिणा । विनिर्मिता विहिता । "प्रतिदिशंदक्षिणांददातिप्राचीदिग्घोतुर्दक्षिणाब्रह्मणःप्रतीच्यध्वर्योरुदीच्युद्गातुः" इत्यादिसूत्रेणेतिशेषः । स्वयंभूविहिते ब्रह्मनिर्मिते । "प्रजापतिरश्वमेधमसृज-

**शि०** तानेवगणयन्नाह **ज्योतिष्टोमेति** । ज्योतिष्टोमायुषी अग्निष्टोमायुष्टोमौप्रथमद्वितीयौ । अतिरात्राविति द्विवचनात्तेनातिरात्रद्वयलाभः । तृतीयचतुर्थौचेत्यर्थः । निर्मितौ विधिनासंपादितौ । पञ्चमोऽभिजिच्च । षष्ठोविश्वजिच्च । आप्तोर्यामौसप्तमाष्टमौच । महाक्रतुः जातावेकवचनं । एतेमहाक्रतवइत्यर्थः ॥ ४२ ॥

[ पा० ] १ ख. ग. घ. छ. झ. अश्वमेधस्यैकस्य. २ ख. घ. च. अग्निष्टोम. ३ ज. रात्रंचनिर्मितम्. ४ ग. ज. मप्तोर्यामो. ट. मप्तोर्यामौ. ५ क.-झ. अश्वमेधे. ६ क.-घ. च. छ. ज. स्वयंभुविहिते.

क्रतुं [1]समाप्य तु तथा न्यायतः पुरुषर्षभः ॥ ऋत्विग्भ्यो हि ददौ राजा धरां [2]तां क्रतुवर्धनः ॥४५॥
[ [3]एवं दत्त्वा प्रहृष्टोऽभूच्छ्रीमानिक्ष्वाकुनन्दनः ॥ ] ॥ ४६ ॥
ऋत्विजश्चाब्रुवन्सर्वे राजानं गतकल्मषम् ॥ भवानेव महीं कृत्स्नामेको रक्षितुमर्हति ॥ ४७ ॥
न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने ॥ रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप ॥
निष्क्रयं किंचिदेवेह प्रयच्छतु भवानिति ॥ ४८ ॥
मणिरत्नं [4]सुवर्णं वा गावो यद्वा समुद्यतम् ॥ तत्प्रयच्छ नरश्रेष्ठ धरण्या न प्रयोजनम् ॥ ४९ ॥
एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगैः ॥ गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ॥ ५० ॥
दश कोटीस्सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ५१ ॥
ऋत्विजस्तु ततः सर्वे प्रददुः सहिता वसु ॥ ऋश्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ५२ ॥
ततस्ते न्यायतः कृत्वा [5]प्रविभागं द्विजोत्तमाः ॥ सुप्रीतमनसस्सर्वे प्रत्यूचुर्मुदिता भृशम् ॥ ५३ ॥
ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः ॥ जांबूनदं कोटिसङ्ख्यं ब्राह्मणेभ्यो ददौ तदा ॥ ५४ ॥
दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् ॥ [ [6]काञ्चनानां शतोपेतं नवरत्नैः समाहितम् ॥ ]
कस्मैचिद्याचमानाय ददौ राघवनन्दनः ॥ ५५ ॥
ततः प्रीते[7]षु नृपतिर्द्विजेषु द्विजवत्सलः ॥ प्रणाममकरोत्तेषां [8]हर्षपर्याकुलेक्षणः ॥ ५६ ॥
तस्याशिषोथ [9]विधिवद्ब्राह्मणैः समुदाहृताः ॥ उदारस्य नृवीरस्य धरण्यां [10]प्रणतस्य च ॥ ५७ ॥
ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् ॥ पापापहं स्वर्नयनं [11]दुष्करं पार्थिवर्षभैः ॥ ५८ ॥

त" इतिश्रुतेः ॥ ४४ ॥ क्रतुमित्यादिश्लोकद्वयमेकान्वयं । न्यायतः शास्त्रतः । हि यस्माद्राजाददौ तस्मादृत्विजोऽब्रुवन्नित्यन्वयः । यद्यपि "महापृथिवीनदेया" इतिइदंनिषिद्धं तथाप्यत्रप्रदेशविशेषएवदत्तइति ज्ञेयं । प्रतिषेधवदत्रविधेरपिदर्शनात् केसरिदानवद्विकल्पोवा ॥ ४५–४७ ॥ नभूम्येतिसार्धश्लोकः । अशक्तौहेतुः—रताइति । स्वाध्यायकरणे स्वाध्यायाध्ययने । कथंदत्तस्यपुनरपहारस्तत्राह—निष्क्रयमिति । निष्क्रयं मूल्यं । कृत्स्नपृथिव्यामूल्यंकुतोलभ्यतेतत्राह—किंचिदिति । यथोपपन्नमित्यर्थः ॥ ४८ ॥ किंचिदित्यस्यप्रपञ्चः—मणीति । मणिरत्नं मणिश्रेष्ठं । समुद्यतं समुपस्थितं ॥४९॥ नरपतिरेवमुक्तःसन् । दश शतसहस्राणि दशलक्षमितियावत् । ददौ ॥ ५० ॥ दशेत्यर्धमेकंवाक्यं । नृपइत्यस्यपूर्वश्लोकस्थस्यात्रान्वयः । चतुर्गुणं चतुर्दशकोटीरित्यर्थः । अत्ररजतानिप्रतिनिधित्वेनदत्तानि नतुदक्षिणात्वेन । अतः "तस्माद्विरजतमदक्षिण्यं" इतिश्रुत्यानविरोधः ॥५१ ॥ सर्वे ऋत्विजः सहिताःसन्तः । वसु दक्षिणाप्राप्तंधनं । अंशीकृत्यदानाय ऋश्यशृङ्गाय वसिष्ठायचददुः॥५२॥ न्यायतः शास्त्रतः । "यावदध्वर्युर्वेददातितदर्धंप्रतिप्रस्थात्रे तृतीयंनेष्ट्रे चतुर्थमुन्नेत्रे एतेनेतरेषांदानमुक्तंभवति" इत्युक्तक्रमेण । ततः ऋष्यशृङ्गवसिष्ठमुखेनप्रविभागंकृत्वा सुप्रीतमनसः प्रत्यूचुः । सुप्रीतमनसइतिविशेषणेन सर्वेवयंप्रीताःस्मइतिप्रतिवचनप्रकारोवगम्यते ॥ ५३ ॥ प्रसर्पकेभ्यः यज्ञदर्शनार्थमागतेभ्यः । "यावन्तोवैसदस्यास्तेसर्वेदक्षिण्याः" इतिश्रुतेः । जांबूनदं जंबूनदीप्रभवमितिहिरण्यविशेषणम् ॥ ५४ ॥ हस्ताभरणंयाचमानायकस्मैचिद्दरिद्राय तदेवददावित्यर्थः॥ ५५ ॥ ततः । यथेष्टदक्षिणादानेनेत्यर्थः ॥५६॥ तस्य तस्मै ॥ ५७ ॥ पापं पुत्रोत्पत्तिप्रतिबन्धकदुरि-

**वि०** सुवर्णं षोडशमाषकं । चतुर्गुणं चत्वारिंशत्कोटिं ॥ ५१ ॥ **ति०** अथ सर्वदक्षिणादानानन्तरं । याचमानायदरिद्राय कस्मैचित् दातव्यवस्त्वन्तराभावात् हस्ताभरणमेवददौ ॥ ५५ ॥ **ति०** दुस्तरं प्राकृतैराजभिःअप्राप्तसमाप्तिकं ॥ ५८ ॥

**[पा०]** १ ङ. च. ज. झ. समाप्यतुतदा. २ घ–झ. तांकुलवर्धनः. ३ ख. ङ. च. छ. झ. इदमर्धमधिकंदृश्यते. ४ ख.सुवर्णंवायद्वत्समुपकल्पितम्. ५ ख. ऋत्विग्भागं. ६ ज. इदमर्धमधिकंदृश्यते. ७ क. ङ. च. छ. झ. प्रीतेषुविधिवद्द्विजेषु. ८ ङ. च. झ.हर्षव्याकुलितेन्द्रियः. छ. हर्षव्याकुलितेक्षणः. ९ क–छ. झ. विविधाब्राह्मणैः. १० ङ.च.झ. पतितस्यच. ११ क. ङ.च. छ.झ. दुस्तरं.

ततोऽब्रवीदृश्यशृङ्गं राजा दशरथ[1]स्तदा ।। कुलस्य वर्धनं [2]त्वं तु कर्तुमर्हसि सुव्रत ।। ५९ ।।
तथेति च स राजानमुवा[3]च द्विजसत्तमः ।। भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ।। ६० ।।
[[4]स तस्य वाक्यं मधुरं निशम्य प्रणम्य तस्मै प्रयतो नृपेन्द्रः ।।
जगाम हर्षं परमं महात्मा तमृश्यशृङ्गं पुनरप्युवाच] ।। ६१ ।।
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्दशः सर्गः ।। १४ ।।

---

## पञ्चदशः सर्गः ।। १५ ।।

ऋश्यशृङ्गेणदशरथस्यपुत्रेष्टिप्रारंभः ।। १ ।। अत्रान्तरेदेवैर्ब्रह्माणंप्रतिरावणकृतलोकपीडाप्रकारवर्णनपूर्वकंतद्वधोपायकल्पनाप्रार्थना ।। २ ।। अत्रान्तरेयदृच्छासमागतं विष्णुंप्रतिब्रह्मादिभिर्दशरथगृहेऽवतारप्रार्थनापूर्वकंरावणवधप्रार्थना ।। ३ ।। विष्णुनातान्प्रतिरावणवधप्रतिज्ञानपूर्वकंसमाश्वासनम् ।। ४ ।।

मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तरम् ।। लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ।। १ ।।
इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।। अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ।। २ ।।
ततः [5]प्रारब्धवानिष्टिं पुत्रीयां पुत्रकारणात् ।। जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ।। ३ ।।
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।। [6]भागप्रतिग्रहार्थं वै समवेता यथाविधि ।। ४ ।।

---

तंअपहन्तीतिपापापहम् । "अपेक्लेशतमसोः" इतिहन्तेर्डप्रत्ययः । तमःपर्यायोत्र पापशब्दः । स्वर्नयनं पुत्रप्रापणद्वारास्वर्गप्रापकं । इतरैः पार्थिवर्षभैः दुष्करं । नविद्यते उत्तममस्मादित्यनुत्तमं सर्वोत्तमं । यज्ञं अश्वमेधं । प्राप्य प्रीतमनाः बभूवेतिशेषः ।। ५८ ।। एवंपुत्रोत्पत्तिप्रतिबन्धकसकलदुरितनिवारणक्षमेभगवदङ्गभूतब्रह्मादिदेवताराधनरूपेऽश्वमेधेनिर्वृत्ते साक्षाद्भगवदाराधनंपुत्रप्राप्तिकारणं क्रतुंसुमन्त्रोक्तंमनसिनिधाय ऋश्यशृङ्गमर्थयते—ततइति । कुलस्यवर्धनं पुत्रोत्पत्तिहेतुभूतंकर्मेत्यर्थः । त्वंतुकर्तुमर्हसीत्यन्तेइतिरध्याहार्यः ।। ५९ ।। पुत्रीयंकर्मकरिष्ये सुताश्चभविष्यन्तीत्युवाचेत्यन्वयः ।। ६० ।। इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्दशः सर्गः ।। १४ ।।

---

अथदशरथाराधनव्याजेनसाधुलोकरक्षणायभूमाववतितीर्षुर्भगवानानुषङ्गिकदुष्कृद्विनाशायदेवैरभ्यर्थ्यतेपञ्चदशे—मेधावीत्यादि । ततः प्रतिज्ञानन्तरं । मेधावी मेधा धारणक्षमाधीः तद्वान् । "अस्मायामेधास्रजोविनिः" इतिविनिप्रत्ययः । वेदज्ञः अथर्वणवेदज्ञः । सः ऋश्यशृङ्गः । किंचिद्ध्यात्वा किंकर्मकर्तुमत्रोचितमितिक्षणंविचिन्त्य । मेधावितया । ततः तदुत्तरक्षणएव । लब्धसंज्ञः प्राप्तस्मृतिःसन् । तंनृपं । इदमुत्तरमब्रवीत् । द्विकर्मकोब्रुविः ।। १ ।। पुत्रीयां पुत्रोत्पत्तिनिमित्तभूतां । "पुत्राच्छच" इतिछप्रत्ययः । इष्टिं यागविशेषं । ते पुत्रकारणात् पुत्रनिमित्तं । "निमित्तकारणहेतुषुसर्वासांप्रायदर्शनं" इतिपञ्चमी । करिष्यामि इत्युक्तवान् ।। २ ।। मन्त्रदृष्टेन वेदावगतेन । कर्मणा । अग्नौजुहावच । शास्त्रदृष्टक्रमेणएकामाहुतिमकरोदित्यर्थः ।। ३ ।। एतच्छेषं "ततोवैयजमा-

---

**ति०** पुनरप्युवाच पुत्रजनककर्मणे पुनरपिप्रेरयामासेत्यर्थः ।। ६१ ।। इतिश्चतुर्दशस्सर्गः ।। १४ ।।

**शि०** ततः सकलयागविस्तारकर्ता ।। १ ।। **शि०** प्रोक्तैः पुत्रेष्टिसाधकत्वेननिर्णीतैः ।। २ ।। **शि०** ततः स्वांशभूतसत्यलोकादिस्थब्रह्मादिद्वाराजगत्सृष्ट्यादिविस्तारकर्तारः साकेतस्थब्रह्मविष्णुमहेश्वराः । सगन्धर्वाः गन्धर्वसहितादेवाश्च । सिद्धाः सिद्धगणाश्च । परमर्षयश्च भागप्रतिग्रहार्थंयथाविधिसमवेताः प्रकटीभूययागेस्थिताः । वैशब्दश्चार्थे । सचहीनेप्यन्वेति । इमेसर्वेसाकेतस्थाएवेत्यत्रबीजं "त्वांनियोक्ष्यामहे" इत्यादौवक्ष्यामः । **वि०** चकारेणब्रह्मापिसमुच्चीयते ।। ४ ।।

**[ पा० ]** १ क. रथोबली. २ ङ. छ. झ. तत्तु. ३ ख. घ. मब्रवीद्विज. ४ ख. ङ. च. छ. झ. ञ. ट. अयंश्लोकोऽधिकोदृश्यते. ५ क. ग. घ. ङ. झ. ततःप्राक्रामदिष्टिंतां. ६ क. च. छ. ज. भागप्रतिग्रहार्थंवैपूर्वमेवसमागताः.

ताः समेत्य यथान्यायं तस्मिन्सदसि देवताः ॥ अब्रुवँल्लोककर्तारं ब्रह्माणं वचनं महत् ॥ ५ ॥
भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः ॥ सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६ ॥
त्वया तस्मै वरो दत्तः प्रीतेन भगवन्पुरा ॥ मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७ ॥
उद्वेजयति लोकांस्त्रीनुच्छ्रितान्द्वेष्टि दुर्मतिः ॥ शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८ ॥
ऋषीन्यक्षान्सगन्धर्वानसुरान्ब्राह्मणांस्तथा ॥ अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९ ॥
नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः ॥ चलोर्मिमाली तं दृष्ट्वा समुद्रोपि न कंपते ॥ १० ॥
तन्महन्नो भयं तस्माद्राक्षसाद्धोरदर्शनात् ॥ वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ ११ ॥
एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् ॥ हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ॥ १२ ॥
तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ॥ अवध्योस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३ ॥
नाकीर्तयदवज्ञानात्तद्रक्षो मानुषांस्तदा ॥ तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योस्य विद्यते ॥ १४ ॥

---

नस्य" इत्यादिनावक्ष्यति । मध्येभगवदवतरणस्यनिमित्तान्तरंदेवताभ्यर्थनंदर्शयति—ततइत्यादिना । ततः तत्राश्वमेधे देवादयः । यथाविधि यथाक्रमं । भागप्रतिग्रहार्थं स्वस्वहविर्भागस्वीकारार्थं । समवेताः संमिलिताः । यज्ञसदसीतिशेषः । अनुक्तसमुच्चयार्थेनचकारेण ब्रह्मापिसमुच्चीयते ॥ ४ ॥ ताः देवताः । तस्मिन् प्रकृते । सदसि अश्वमेधसदसि । यथान्यायं यथाक्रमं । समेत्य लोककर्तारं स्वस्वामिनं ब्रह्माणं । महत् फलद्वारागुरुतरं । वचनं ब्रुवन् ॥ ५ ॥ त्वत्प्रसादेन जनिताद्वीर्यादित्यन्वयः ॥ ६ ॥ कोमतप्रसादः कथंभवतांतत्प्रतीकाराशक्तिस्तत्राहुः—त्वयेति । वरः अस्माभिरवध्यत्वरूपः । तं वरं । मानयन्तः पूजयन्तः । सर्वं पीडनं ॥ ७ ॥ बाधनमेवोपपादयन्ति—उद्वेजयतीत्यादिना । उद्वेजयति भीषयति । उच्छ्रितान् उन्नतान्लोकपालान् । त्रिदशराजानं । समासान्तस्यानित्यत्वाट्टजभावः । प्रधर्षयितुं तिरस्कर्तुं । स्थानात्प्रच्यावयितुमित्यर्थः ॥ ८ ॥ असुरान् राहुप्रभृतीन् । अतिक्रामति पीडयतीतियावत् ॥ ९ ॥ एनं रावणंप्रति नप्रतपति मन्द्रकिरणोभवति । क्रीडापर्वतसञ्चारादिदशायामितिभावः । पार्श्वे अस्येतिशेषः । नवाति पुष्पवाटिकादिषु पुष्पपतनादिभयादितिभावः । चलोर्मिमाली सदाचञ्चलस्वभावतरङ्गपङ्क्तिमान् नकंपते गर्वितोऽयमुल्लतीतिशोषणभयादितिभावः ॥ १० ॥ तदिति भयादितिभावः । भयं उत्पन्नमितिशेषः । कर्तुं चिन्तयितुं ॥ ११ ॥ उक्तः ब्रह्मेतिशेषः । चिन्तयित्वा उपायमितिशेषः । हन्तेत्युपायस्मरणजहर्षे ॥१२॥ अयंशब्दार्थमाह—तेनेति । तत् तथोक्तमित्यन्वयः ॥ १३ ॥ तदा अवध्यत्ववरणावसरे । अवज्ञा-

---

**वि०** समेत्य अन्तर्धानशक्त्याइतरानवलोकमितिशेषः । **शि०** लोकनं लोकः दृष्टिः । तत्कर्तारं यज्ञद्रष्टृत्वेनाहूतम् ॥ ५ ॥ **शि०** हेभगवन् त्वत्प्रसादेन त्वत्कृपया । प्राप्तं यद्वीर्यं साकेताधीशातिरिक्तसर्वावध्यत्वंतस्माद्वीर्यात् नोस्माकं विहारास्पदीभूतान्ये सर्वलोकास्तान् रावणोनामराक्षसोबाधते । तं रघुनाथेच्छयासाकेतादवतीर्णरावणं शासितुं स्वांशभूतदेवादिद्वारासाक्षाद्वानशक्नुमः । एतेन साकेतपुरवासिनांयथाकामंसर्वत्रगमनमितिव्यज्यते । यथाच साकेताद्रावणावतारः तथातज्जन्मप्रतिपादकग्रन्थेवक्ष्यामः ॥६॥ **ति०** प्रधर्षयितुमिच्छतीत्युक्तेः एतदुत्तरकालमिन्द्रजित्कृतइन्द्रबन्धइतिज्ञायते ॥ ८ ॥ **शि०** अवात् ईश्वरस्यापिरक्षकात्रामात्प्राप्तंयज्ज्ञानंनियोगःआज्ञा इतःप्रभृतिप्राप्तरक्षश्शरीरेमांनज्ञास्यसीतिसंकुचितबोधोवा इतःप्रभृतिमदतिरिक्तमेवज्ञास्यसीतिवा । तस्मात् । तद्रक्षो रावणः । तदा वरयाचनसमये । मानुषान् " परमात्मानराकृतिः " इत्यागमगम्यंसाकेताधीशंनित्यद्विभुजं नाकीर्तयत् । तस्माद्धेतोः सः मानुषात् नराकृतिपरमात्मनोरामात् वध्यः । अन्यः तस्माद्भिन्नः अस्य मृत्युः विघातकोनविद्यते । बहुत्वमादरार्थं । तेनसाकेताधीशरघुनाथस्यविष्ण्वादिवैलक्षण्यंईश्वरेश्वरत्वंचव्यक्तं । एतेन "नाकीर्तयदवज्ञानात्" इत्यस्य-अवज्ञानादनादरात्मानुषान्नाकीर्तयदित्यर्थःप्रत्युक्तः । दशरथनहुषादीनांदेवसाहाय्यकर्तृत्वस्यप्रसिद्धत्वान्मानुषानादरस्यासंभवात् । किंचरावणस्य सुराद्यवध्यत्वे वरदानमेवकारणंवा रावणबलवत्त्वंवा उभयंवा । नप्रथमं । तात्कालिकमानुषैरेवतस्यवध्यत्वेसिद्धे तद्वधार्थंपरमात्मप्रार्थनाव्यर्थास्यात् । नद्वितीयं । वाल्यादिभिःकृततत्पराभवस्यासंभवापत्तेः । अतएवनतृतीयं । किंचविष्णववध्यत्वंस्वस्यरावणेनप्रार्थितंवानवा । नप्रथमं । त्वन्मतेरामस्यापिविष्णवभिन्नत्वेनतेनाप्यवध्यत्वापत्तेः । नान्त्यं । मानुषानादरोक्ति-

[ पा० ] १ ङ. झ. वचनंततः. २ ङ. झ. भगवंस्तदा. ३ घ. तस्यसहामहे. ४ ख. ग. विहितस्तस्य. ५ घ. मानुषान्प्रति.

**एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ॥ सर्वे महर्षयो देवा प्रहृष्टास्तेऽभवंस्तदा ॥ १५ ॥**
**एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः ॥ शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६ ॥**

नात् अवमानात् । मानुषात् मानुषेण । मृत्युः मारकः ॥ १४ ॥ प्रहृष्टाः यथाकथंचिद्वधोपायसंभावनयेतिभावः ॥ १५ ॥ अथपरमकारुणिकोभगवान् "परित्राणायसाधूनांविनाशायचदुष्कृताम् ॥ धर्मसंस्थापनार्थायसंभवामियुगेयुगे" इत्युक्तरीत्या धर्मसंस्थापनादित्रयकृते स्वाराधकदशरथमनोरथपरिपूरणायचावतितीर्षुराजगामेत्याह—एतस्मिन्निति । एतस्मिन्नन्तरे रक्षापेक्षासमये । अनेनचिरमस्यावसरप्रतीक्षत्वंगम्यते । "सर्वज्ञोपिहिदेवेशस्सदाकारुणिकोपिसन् । संसारतन्त्रवाहित्वाद्रक्षापेक्षांप्रतीक्षते" इतिह्युक्तं । विष्णुः सर्वान्तर्यामितयाव्याप्यवर्तमानः भोगादप्यासेधनमेववरमितिस्थितइत्यर्थः । "त्वंमेऽहंमे" इत्यादि । महाद्युतिः रक्षणावकाशलाभसमुदितहर्षप्रकर्षकृतकान्तिविशेषयुक्तः । अनेनइतःपूर्वंसंसारिजनदुर्दशावलोकनेनदूयमानमानसत्वमुक्तं । "सएकाकीनरमेत" इतिश्रुतेः । शङ्खचक्रगदापाणिः आश्रितानांरक्षणापेक्षायां रक्षणोपकरणग्रहणायविलंबो माभूदिति सर्वदातैरुपेतः । "पातुप्रणतरक्षायांविलंबमसहन्निव ॥ सदापञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः" इत्यभियुक्तोक्तं । पीतवासाः आश्रितरक्षणत्वरयाबद्धकक्षः । जगत्पतिः उक्तसकलविशेषहेतुभूतस्वस्वामिभावसंबन्धवान् । उपयातः वैकुण्ठाद्दशरथयज्ञवाटमाजगाम ॥ १६ ॥

निष्प्रयोजनत्वापत्तेरित्यतोस्मदुक्तएवार्थोग्रन्थकृदभिमतः । अतएवविष्णुप्रहृतचक्रेणनरावणमृतिः । वक्ष्यतिचक्रव्रणवत्त्वंरावणस्येतीतिदिक् । रघुनाथाज्ञयारावणावतारेप्रमाणं "प्रतापीराघवसखोभ्रात्रावैसहरावणः" इत्यादि ॥ १४ ॥ **तनि०** एतस्मिन्नन्तरे तेषांरक्षापेक्षावसरे । एतस्मिन्नन्तरे क्षणंविलंबितंचेत्तएवागच्छन्ति ततःपूर्वमेवगन्तव्यमिति । एतस्मिन्नन्तरे देवगोष्ठ्यांयदारक्षाप्रसङ्गोजातस्तदैवज्ञातमिति सर्वज्ञस्यास्याश्रितरक्षानुकूल्यमार्जवंचव्यञ्जितं । एतस्मिन्नन्तरे अन्यस्यचेद्रक्षणमनुमतंस्वस्यरक्ष्यलाभोनस्यादिति "अतन्त्रितचमूपतिप्रहितहस्तं" इत्यादिवत् त्वराधिक्यंगम्यते । उपयातः देवानामपित्वरातिशयेनमध्येमार्गमेलनंयथानस्यात् तथोपयातः । यस्यफलापेक्षासएवफलप्राप्त्यर्थंस्वयमेवागच्छतीत्युपेक्षामकृत्वाउपयातः । रक्षणप्रसङ्गविच्छेदभयेनयावदासनमपरिज्ञातएवोपयातः "सचापिरामःपरिषद्गतःशनैः" इत्यादिवत् । विष्णुरुपयातः पूर्वमेवतत्र स्थितोपिइदानींविग्रहेणाभिव्यक्तःसन्उपयातः । सर्वेश्वरोप्युपयातइतिसौलभ्यमुक्तं । एतस्मिन्नन्तरेविष्णुरुपयातइति देवाःविधिशिवादिषुकंचनरावणहननेप्रार्थयेयुः तदातेतद्धननाशक्त्यानोत्तरंब्रूयुः । तदातेषामवमतिःशरणागतारक्षणजन्यमानसखेदश्च स्यातामिति तेषामवमानमानसखेदौमाभूतामिति अविलंबितमुपयातः । महाद्युतिरुपयातइति "दिविसूर्यसहस्रस्यभवेद्युगपदुत्थिता । यदिभाःसदृशीसास्याद्भासस्तस्यमहात्मनः" इत्याद्युक्तदुस्सहाप्रमेयतेजोवत्त्वेपितादृशतेजसःसर्वजनाह्लादकत्वंव्यज्यते । विष्णुर्महाद्युतिरिति स्वरूपवद्द्युतेरप्यपरिमेयत्वंध्वनितम् । विष्णुरुपयातइति उपगमनसमकालमेवशिवादीनामवमानभयमिन्द्रादीनांरावणभयंचनिवृत्तमितिध्वनितम् । शङ्खचक्रगदापाणिः "नैनंसूर्यःप्रतपति" इत्याद्युक्तरीत्यास्वस्वव्यापारेष्वपिसंकोचवन्तःस्वपदभ्रंशशङ्किनोदेवाःसभासुनिश्शङ्कंकिलरावणवधोपायमालोचयन्ति । तदानीमेवचेद्रावणस्तत्रागच्छतितदासकलदेवशिरश्छेदकःस्यात् । सकललोकशरण्यत्वहानिःस्वस्यभवेदिति ततःपूर्वमेवायुधादिसकलयुद्धपरिकरयुक्तएवागतः नतुभोजनपरिकरयुक्तइति । भागप्रतिग्रहार्थत्वंत्वानुषङ्गिकं । पीतवासाः "तस्यमहारजतंवासः" इत्याद्युक्तपीतांबरयुक्तः । जगत्पतिः जगत्पोषकः । जगतःपोषणंनाम अन्येभ्यःपरिभवनिवारणम् । एवंविधस्योपास्यत्वंशरणागतिमन्त्रोक्तचरणपदोपलक्षितप्रपत्तव्यविग्रहवैशिष्ट्यंचव्यञ्जितम् । **शिरो०** एतस्मिन्नन्तरे देवब्रह्मसंवादानन्तरकाले । महाद्युतिः समाधिकरहितप्रकाशविशिष्टः । शङ्खचक्रगदापाणिः शङ्खचक्रगदाभिःपातिलोकमितिशङ्खचक्रगदापोविष्णुस्तेनअण्यतेप्रार्थनावचनमुच्चार्यतेअसौसः । किंच शङ्खचक्रसहितागदायस्यसशङ्खचक्रगदोविष्णुस्तेनआसमन्तात्पाण्यतेस्तूयतइतिपाणिः । किंच शङ्खादयोरेखारूपेणपाणावस्यसः । पीतवासाः । पीतवस्त्रधारी जगत्पतिः सर्वलोकस्वामी अविष्णुः अस्यवासुदेवस्यविष्णुर्व्यापकःविष्णोर्विष्णुरित्यर्थः । किंच विष्णुःब्रह्मविष्णुमहेशव्यापकःरामइत्यर्थः । किंच आसमन्तादेतिसर्वंव्याप्नोतीतिएःविष्णुःतस्यविष्णुर्व्यापकः । अन्तर् अन्तःबन्धकः प्रापकइत्यर्थः । र्रकाराक्षरोयस्यसरामइत्यर्थः । किंच अन्तः प्रापकः रः रकाराक्षरोयस्यसः अन्तरः । आसमन्तादेतिसर्वंव्याप्नोतीति एर्विष्णुः तस्यविष्णुर्व्यापकः सएवसइतिकर्मधारयः । उपयातः प्राप्तः । अन्तरइत्यादिपक्षद्वये एतस्मिन् देवब्रह्मसंवादानन्तरकालेइत्यर्थोबोध्यः । अस्मिन्प्रकरणे विष्णुशब्दः ब्रह्मादित्रिदेवव्यापकपरएव नतुचतुर्भुजेरूढः । अतएव "ततोनारायणोविष्णुः" इतिवक्ष्यमाणपद्ये न नारायणपदवैयर्थ्यं । अन्यथा द्वयोस्तत्रैवरूढत्वेनान्यतरवैयर्थ्यंदुर्निवारंस्यात् । अतएव "प्रभोःप्रभुः" इतिवक्ष्यमाणंसानुकूलं ॥ १६ ॥

[ वैनतेयं समारुह्य भास्करस्तोयदं यथा ॥ तप्तहाटककेयूरो वन्द्यमानस्सुरोत्तमैः ॥ ] ॥ १७ ॥
ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः ॥ तमब्रुवन्सुराः सर्वे समभिष्टूय संनताः ॥ १८ ॥
त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ॥ १९ ॥
राज्ञो दशरथस्य त्वं अयोध्याधिपतेर्विभोः ॥ धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः ॥ २० ॥
तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च॥ विष्णो पुत्रत्वमागच्छ कृत्वाऽऽत्मानं चतुर्विधम्॥२१॥
तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ॥ अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥ २२ ॥
स हि देवान्सगन्धर्वान् सिद्धांश्च ऋषिसत्तमान् ॥ राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते॥२३॥
ऋषयस्तु ततस्तेन गन्धर्वाप्सरसस्तथा ॥ क्रीडन्तो नन्दनवने क्रूरेण किल हिंसिताः ॥ २४ ॥
वधार्थं वयमायातास्तस्य वै मुनिभिः सह ॥ सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ॥ २५ ॥
त्वं गतिः परमा देव सर्वेषां नः परन्तप ॥ वधाय देवशत्रूणां नृणां लोके मनः कुरु ॥ २६ ॥
एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः ॥ पितामहपुरोगांस्तान्सर्वलोकनमस्कृतः ॥
अब्रवीत्रिदशान्सर्वान्समेतान्धर्मसंहितान् ॥ २७ ॥

---

॥१७॥ तत्र सदसि । ब्रह्मणा समागम्य । समाहितः करिष्यमाणरक्षणकृत्येएकाग्रः । तस्थौ । तं आश्रितरक्षणसन्नद्धं । सर्वेसुराः ब्रह्मादयः । पितामहपुरोगमानित्युपसंहारात् । समभिष्टूय सम्यक्स्तुत्वा । संनताः सम्यक्नताः प्रणताःसन्तः । अब्रुवन् ॥ १८ ॥ अर्धमेकंवाक्यं । हेविष्णो लोकानां हितकाम्यया हितेच्छया । त्वां नियोक्ष्यामहे उत्साहयिष्यामहे । "योगः सन्नहनोपायध्यानसंगतियक्तिषु" इत्यमरः । "स्मारयेत्वांनशिक्षये" इतिवत् । केवलंत्वांप्रोत्साहयिष्यामः । स्वयमेवस्वकीयरक्षणेप्रवृत्तत्वादितिभावः । यदिनियोजनमेवार्थःस्यात् तदापूर्वश्लोकोक्तंअभिष्टूयसंनताइत्येतद्विरुद्ध्येत । किंच नियोजनमत्रप्रार्थनमेव । एवमुत्तरत्रभगीरथवचने "हरस्तत्रनियुज्यतां" इतिवक्ष्यति ॥ १९ ॥ किंनियोज्यमित्यत्राहद्वाभ्यां—राज्ञइत्यादि । पितृभावयोग्यत्वपराणिविशेषणानि ॥ २० ॥ तस्येति यजमानोहस्तेननिर्दिश्यते । ह्रीश्रीकीर्तयोदक्षकन्याः ताउपमायासांतास्तथा । चातुर्विध्यविधानं रावणरावणिलवणगन्धर्वविनाशाय ॥२१॥ ममपुत्रभावेनभवतांकिंप्रयोजनंतत्राहुः—तत्रेति । तत्र दशरथभार्यासु । प्रवृद्धं वरबलभुजबलैरभिवृद्धम् । मानुषभावःकिमर्थं भजनीयस्तत्राहुः—अवध्यंदैवतैरिति । "कृत्यानांकर्तरिवा" इतिपक्षेतृतीया ॥ २२ ॥ सकिमर्थंहन्तव्यस्तत्राहुः—सहीति । वीर्योत्सेकेन वीर्यकृतगर्वेण॥२३॥ ततः वीर्योत्सेकात् । क्रूरेण तेन रावणेन । ऋषयो हिंसिताः । क्रीडन्तः क्रीडन्त्यः । लिङ्गविपर्ययआर्षः । मिथुनतयाचरतांहिंसनात्क्रूरेणेत्युक्तं । किलेत्यैतिह्ये ॥ २४ ॥ तस्य वधार्थं वयं मुनिभिःसहायाताः । त्वत्समीपमितिशेषः । सिद्धादयश्चायाताः । ततः रावणवधार्थं । त्वां शरणं उपायंगताः ॥ २५ ॥ रुद्रादिषुविद्यमानेष्वहमेवकिमर्थमर्थ्यइत्यत्राहुः—त्वमिति । हेदेव त्वं नः परमागतिः उपायः । नान्ये । परान्शत्रून्तापयतीतिपरंतपः । "द्विषत्परयोस्तापेः" इतिखच् । अनेनशत्रुवधसामर्थ्यमुक्तं । मनःकुरु । अवतरितुमितिशेषः । देवशत्रूणामितिबहुवचनेन रावणरावणिलवणगन्धर्वादीनामपिवधोऽर्थितः । अनेनाभिप्रायेणपूर्वं "कृत्वात्मानंचतुर्विधं" इत्युक्तम् ॥ २६ ॥ एवमित्यादिसार्धश्लोकएकान्वयः । पितामहपुरोगान् ब्रह्मप्रधानान् । धर्मसंहितान् शरणागतिरूपधर्मसंयु-

---

**तिल०** आत्मानं सोपकरणमात्मानं । "अन्येद्युःपाञ्चजन्यात्माकैकेय्यांभरतोऽभवत् । तदन्येद्युस्सुमित्रायामनन्तात्माच लक्ष्मणः । सुदर्शनात्माशत्रुघ्नोद्वौजातौयुगपत्प्रिये" इतिपाद्मोक्तेः । अत्रात्मानमित्युक्त्या शङ्खचक्रानन्तानामपिभगवद्रूपतासूचिता । हुंकारेणभगवानिव पाञ्चजन्यश्शब्दमात्रेणसकलभुवनक्षोभकत्वाद्विष्णुतुल्यएवेतिबोध्यं ॥ २१ ॥

**[ पा० ]** १ अयंश्लोकः ख. ङ. च. छ. झ. पुस्तकेष्वेवदृश्यते. २ ङ. च. ज. झ. अयोध्याधिपतेर्विभोः ३ ङ. झ. अस्य भार्यासु. ४ घ. ह्रीश्रीकीर्तिसमासुच. ५ ङ. च. छ. झ, वीर्योद्रेकेणबाधते. ६ ङ. च. छ. झ. नन्दनवनेरौद्रेणविनिपातिताः. क, ख. घ. ज, नन्दनवनेरौद्रेणकिल,

भयं त्यजत भद्रं वो हितार्थं युधि रावणम् ॥ सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ॥ २८ ॥
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ॥ दशवर्षसहस्राणि दशवर्षशतानि च ॥
वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् ॥ २९ ॥
एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान् ॥ मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥ ३० ॥
ततः पद्मपलाशाक्षः कृत्वाऽऽत्मानं चतुर्विधम् ॥ पितरं रोचयामास तदा दशरथं नृपम् ॥ ३१ ॥
ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ॥ स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ३२ ॥
तमुद्धतं रावणमुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ॥
विरावणं साधु तपस्विकण्टकं तपस्विनामुद्धरतं भयावहम् ॥ ३३ ॥
तमेव हत्वा सबलं सबान्धवं विरावणं रावणमुग्रपौरुषम् ॥
स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

तान् ॥ २७ ॥ भयमित्यादिसार्धश्लोकद्वयमेकान्वयम् । भयंत्यजत । वः युष्माकं । भद्रं अस्तु । यस्मादहं सर्वेषांहितार्थं । रावणंहत्वा धर्मसंस्थापनायदशवर्षसहस्राणिवत्स्यामीतियोजना । शङ्खचक्रगदापाणिरुपयातइतिहिपूर्वमुक्तं ॥ २८ ॥ २९ ॥ आत्मवान् सर्वात्मशेषी । मानुषे मनुष्येषु । जात्येकवचनं । चिन्तयामास यथादेवैराज्ञप्तंतथेतिशेषः । जन्मभूमिं जन्मस्थानं ॥ ३० ॥ ततः चिन्तानन्तरं । पद्मपलाशाक्षः दशरथगुणस्मरणकृतनयनविकासोक्तिः । यद्वा । पद्मपलाशाक्षः सर्वैःस्पृहणीयनयनयुगलः । तथाच सर्वस्पृहणीयःस्वयमन्यंस्पृहयामास । यद्वा । "तस्ययथाकप्यासंपुण्डरीकमेवमक्षिणी" इत्युक्तरीत्यापरत्वचिह्नपुण्डरीकाक्षत्वयुक्तः । एवंच सर्वस्मात्परोपिजन्मरोचयामास । यथाजनिमतोजन्महानिरभिलषिता तथाजनिरहितस्यापिजनिरभिलषितेत्यर्थः । दुर्लभंह्यभिलषितं भवति । कृत्वात्मानंचतुर्विधं जन्माभिलाषेपिदशरथगुणातिरेकेणचतुर्विधशरीरपरिग्रहमभिलषितवान् । आत्मानं स्वशरीरं । चतुर्विधं पायसविभागक्रमेण । पितरं "पितापुत्रेणपितृमान्योनियोनौ" इत्युक्तरीत्या सर्वपिता स्वपुत्रंकंचित् पितरमभिललाष । रोचयामास ऐच्छत् । तदा रक्षणोद्योगसमये । दशरथंनृपं "गुणैर्दशरथोपमं" इत्युक्तरीत्या जनित्वार्जितैःस्वाभाविकैश्चगुणैःस्वसदृशंदेवोक्तंदशरथमेवस्वजन्मभूमित्वेन निश्चितवानित्यर्थः ॥ ३१ ॥ ततः भगवदिच्छानन्तरं । सरुद्राइत्यनुवादात् पूर्वंरुद्रोपिशरणागतइतिसिद्धं । दिव्यरूपाभिः दिव्यात्मस्वरूपविषयिणीभिः । स्तुतिभिः स्तुतिरूपप्रबन्धैः । तुष्टुवुः श्लाघयामासुः । मधुसूदनमिति मधुवद्यमपिनिरसनीयइत्याशयेनोक्तं ॥ ३२ ॥ उक्तमर्थंसर्गान्तेपुनःसंगृह्णाति—तमिति । उद्धतं जन्मतएवोद्धतं । तं प्रसिद्धं । उग्रतेजसं उग्रप्रतापं वरदानेनप्रवृद्धदर्पं । लोकान्विरावयतीतिविरावणं । सर्वलोकानामाक्रन्दयितारं । तपस्विनांकण्टकं शत्रुं । "क्षुद्रेशत्रौचकंटकः" इतिवैजयन्ती । अतएव तपस्विनांभयावहं तं रावणं । साधु निश्शेषं । उद्धर उन्मूलय ॥ ३३ ॥ एवकारेणविभीषणव्यवच्छेदः । स्वर्लोकं वैकुण्ठं । क्वचित्स्वलोकमितिपाठः । चिरं चिरकालस्थायी । अनेन ब्रह्मलोकादिव्यावृत्तिः । सुरेन्द्रेतिसंबोधनं । गुप्तं अस्मदादिभिःदुरधिगमं । "अत्यर्कानलदीप्तंतत्स्थानंविष्णोर्महात्मनः । स्वयैवप्रभया राजन्दुष्प्रेक्ष्यंदेवदानवैः" इतिमहाभारतोक्तेः । गतदोषकल्मषं दोषाः रागद्वेषादयः । गतानि तद्रूपकल्मषाणियस्मात्तत्तथा । अनेनेन्द्रलोकादिव्यावृत्तिः । गतज्वरः आश्रितसंरक्षणेनगतव्यथः । अनेन पुनःप्राप्तिपर्यन्तं संसारिविषये कदैतेनिस्तरिष्यन्तीति चिन्ताकुलत्वमुक्तं । आगच्छेत्यनेन वैकुण्ठादवतीर्णत्वंगम्यते । अत्रस्वर्लोकपदस्येन्द्रलोकपरत्वे गुप्तत्वगतदोषकल्मष-

ति० चिन्तयामास योग्यत्वेनविचारयामास ॥ ३० ॥ इतिपञ्चदशस्सर्गः ॥ १५ ॥

[ पा० ] १ घ. ङ. च. छ. झ. समन्त्रिज्ञातिबान्धवम्. २ ङ. च. छ. झ. क्रूरंदुराधर्षं. ३ घ. तदादेवर्षिगन्धर्वाः.

# षोडशः सर्गः ॥ १६ ॥

देवैर्विष्णुंप्रतिरावणस्यब्रह्मवरान्मनुष्येतरावध्यत्वनिवेदनपूर्वकंमानुषभावेनावतारस्यतदुपायत्वनिवेदनम् ॥ १ ॥ ततोविष्णुनाभुव्यवतारादिप्रतिज्ञानपूर्वकमन्तर्धानम् ॥ २ ॥ तथादशरथस्ययज्ञाग्निमध्यात्प्रादुर्भूतेनदिव्यभूतेनदशरथहस्तेदिव्यपायसपूर्णस्वर्णपात्रसमर्पणम् ॥ ३ ॥ तथातत्पायसस्यपुत्रहेतुत्वकथनेनपत्नीभ्योदानचोदनपूर्वकमन्तर्धानम् ॥ ४ ॥ कौसल्यादिभिर्दशरथदत्तदिव्यपायसप्राशनाद्गर्भधारणम् ॥ ५ ॥

ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः ॥ जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥ १ ॥
उपायः को वधे तस्य राक्षसाधिपतेः सुराः ॥ यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २ ॥
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्विष्णुमव्ययम् ॥ मानुषीं तनुमास्थाय रावणं जहि संयुगे ॥ ३ ॥
स हि तेपे तपस्तीव्रं दीर्घकालमरिन्दम ॥ येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वजः ॥ ४ ॥
संतुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः ॥ नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५ ॥
अवज्ञाताः पुरा तेन वरदाने हि मानवाः ॥ ६ ॥
एवं पितामहात्तस्माद्वरं प्राप्य स दर्पितः ॥ उत्सादयति लोकांस्त्रीन्स्त्रियश्चाप्यपकर्षति ॥
तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परन्तप ॥ ७ ॥
इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान् ॥ पितरं रोचयामास तदा दशरथं नृपम् ॥ ८ ॥
स चाप्यपुत्रो नृपतिस्तस्मिन्काले महाद्युतिः ॥ अयजत्पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ९ ॥
स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् ॥ अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥१०॥

त्वादिविरोधः । अन्तरिक्षादुपरितनलोकमात्रस्य स्वर्गपदवाच्यत्वात् । अतएवहि कचिद्ब्रह्मलोकादावपिस्वर्गपदप्रयोगः । "ब्रह्मलोकंप्रयास्यति" इत्यत्रापि ब्रह्मणःस्वस्य लोकं अप्राकृतस्थानं परमपदमिति व्याख्यातं । स्वलोकमितिसम्यक्पाठः । सुरेन्द्रः विष्वक्सेनः ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चदशःसर्गः ॥ १५ ॥

एवंमनुष्यलोकेदशरथपुत्रत्वेनावतीर्यरावणवधःकर्तव्यइत्युक्तं तत्र किंमयाउपेन्द्रादिवत्स्वस्वरूपेणस्थातव्यं उतप्रकारान्तरेणेति भगवान्बहुमानार्थंपृच्छति—ततइत्यादि । नरिष्यन्ति ननश्यन्तीतिनराः नित्यवस्तूनि "अन्येभ्योपिदृश्यते" इतिडप्रत्ययः । "सुप्सुपा" इतिनगनैकादिवत्समासः । नराणांसमूहोनारं "तस्यसमूहः" इत्यण् । नारं अयनं वासस्थानं यस्यासौनारायणः "पूर्वपदात्संज्ञायामगः" इतिणत्वं । सर्वान्तर्यामीत्यर्थः । यद्वा नाराणामयनंनारायणः इध्मप्रश्चनःपलाशशातनइत्यादिवल्ल्युडन्तस्यापिपुँल्लिङ्गत्वं । एवंसर्वस्मात्परोपि सुरसत्तमैर्नियुक्तइत्याश्रितपारतन्त्र्यमुच्यते । तादृशोविष्णुः । जानन्नपि उत्तरनिश्चयज्ञोपि । सन्मानार्थं श्लक्ष्णं मधुरं । वचनं अब्रवीत् ॥ १ ॥ आस्थाय स्वीकृत्य । यमुपायमास्थाय तंनिहन्यां सउपायः कइत्यन्वयः ॥ २ ॥ मानुषीं नतुदैवीम् ॥ ३ ॥तत्रहेतुमाह—सहीति । लोककृत्त्वेहेतुः लोकपूर्वजइति । लोकशब्दोत्र देवादिजनपरः ॥४॥ मानुषादन्यत्र मानुषंविना । नानाविधेभ्योभूतेभ्योभयंनेतिवरंप्रददावित्यन्वयः ॥ ५ ॥ अभयंकुतोनदत्तंमानुषेभ्यइत्यत्राह—अवज्ञाताइति ॥ ६ ॥ दर्पितः संजातदर्पः । प्रकृतमुपसंहरति—तस्मादिति ॥ ७ ॥ पितरमिति मनुष्यरूपेणावतरितुमितिशेषः ॥ ८ ॥ तस्मिन्काले भगवदवतितीर्षाकाले । पुत्रियामित्यत्रह्रस्वआर्षः ॥ ९ ॥ निश्चयं मनुष्यभूतएवावतरिष्यामीति

ति० लोकपूर्वजः सर्वलोकसमष्टित्वात् "हिरण्यगर्भस्समवर्तताग्रे" इतिश्रुतेश्च ॥ ४ ॥ ती० दृष्टः निश्चितः ॥ ७ ॥

[ पा० ] १ ख. ग. नारायणोदेवोनियुक्तः. २ घ. सुरांश्चैवं. ३ घ. ङ. च. छ. झ. मानुषंरूपमास्थाय. ४. क. घ. ङ. छ. ज. झ. दीर्घकालमरिंदमः. ५ ख. ग. घ. ज. लोककृल्लोकपूजितः. ६ क. ग. घ. ज. वरदानेनमानवाः. ७ ङ. झ. द्वरदानेनगर्वितः. च. छ. द्वरंप्राप्यसगर्वितः. ८ क.–च. ज. प्यपकर्षति. झ. प्युपकर्षति. ९ ख. घ. ज. महात्मभिः. क. महाद्युतिः.

ततो वै यजमानस्य पावकादतुलप्रभम् ॥ प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११ ॥
कृष्णरक्तांबरधरं[1] रक्ताक्षं[2] दुन्दुभिस्वनम् ॥ स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२ ॥
शुभलक्षणसंपन्नं दिव्याभरणभूषितम् ॥ शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ १३ ॥
दिवाकरसमाकारं[3] दीप्तानलशिखोपमम् ॥ [ सिंहस्कन्धं महाबाहुमङ्गदद्वयशोभितम् ॥ १४ ॥
ताराविकृतकल्पेन हारेणोरसि राजितम् ॥ ताराधिपतिकल्पैश्च दन्तैः परमशोभितम् ॥ १५ ॥
ज्वलन्निव च तेजोभिर्दीपयन्निव च श्रिया ॥ तप्तजांबूनदमयैर्भूषणैर्भूषितं च यत् ] ॥ १६ ॥
तप्तजांबूनदमयीं राजतान्तपरिच्छदाम् ॥ दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ॥
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ १७ ॥
समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ॥ प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ १८ ॥
ततः[4] परं तदा राजा प्रत्युवाच कृताञ्जलिः ॥ भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १९ ॥
अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् ॥ राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ २० ॥
इदं[5] तु नरशार्दूल पायसं देवनिर्मितम् ॥ प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ २१ ॥
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ॥ तासु[6] त्वं लप्स्यसे पुत्रान्यदर्थं यजसे नृप ॥ २२ ॥
तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ॥ पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २३ ॥
अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् ॥ मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २४ ॥
ततो दशरथः प्राप्य पायसं देवनिर्मितम् ॥ बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २५ ॥

---

निश्चयं आमन्त्र्य साधयामीत्युक्त्वा ॥ १० ॥ अथपुत्रकामेष्टिफलं भगवतश्चतुर्धाऽवतारंसूचयन् प्रजापतिप्रेरितपुरुषेणपायसप्रदानंदर्शयति—ततोवाइति । श्लोकपञ्चकमेकान्वयम् । ततः विष्णोरंतर्धानानंतरं । यजमानस्येतिवर्तमाननिर्देशेन द्रव्यत्यागकालएवप्रादुर्भावःसूचितः । पावकात् आहवनीयात् । भूतं पुरुषविशेषः ॥ ११ ॥ स्निग्धाः चिक्कणाः हर्यक्षस्येव तनुजाः लोमानि श्मश्रुप्रवरा मूर्धजाःकेशाश्च यस्यतत्तथा॥१२॥ समुत्सेधः उन्नतिः । दृप्तशार्दूलविक्रमं तद्वद्भयंकरं ॥ १३ ॥ प्रभामण्डलवत्तया दिवाकरसमाकारं । तैक्ष्ण्यातिशयेन दीप्तानलशिखोपमं ॥ १४–१६ ॥ तप्तजांबूनदमयीं द्रुतकनकमयीं । राजतः रजतविकारः अन्ते उपरि परिच्छदः पिधानपात्रं यस्यास्तां । पात्र्यास्स्त्रीलिङ्गत्वेनपत्नीसाम्यं । मायामयीमिव । असंभावितत्वेनाश्चर्यावहामित्यर्थः । स्वयंप्रगृह्यप्रादुर्भूतमीत्यन्वयः । विपुलतरत्वेन हस्तमात्रेणग्रहीतुमशक्यत्वाद्बाहुभ्यामित्युक्तं ॥ १७ ॥ दशरथंसमवेक्ष्येदमब्रवीत् । कथं इहागतंमां प्राजापत्यं प्रजापतेरागतं । "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति प्राग्दीव्यतीयोण्यप्रत्ययः । नरंविद्धि ॥१८॥ ततःपरं तदनन्तरमितियावत् । "प्राजापत्यंचमांविद्धि" इत्युक्त्यनन्तरमित्यर्थः । तदा तदैव ॥ १९ ॥ अथोअथेतिपर्यायौ । अर्चयता अश्वमेधपुत्रकामेष्टिभ्यामितिशेषः ॥२०॥ इदंशब्दार्थमाह—इदंत्विति । देवनिर्मितं देवेनविष्णुनानिर्मितं । धन्यं धनकरं । स्वर्गादित्वाद्यत् ॥ २१ ॥ अनुरूपाणां सवर्णानामित्यर्थः । चतुर्थ्यर्थेषष्ठी ॥२२॥ देवान्नं देवनिर्मितान्नं । देवदत्तां देवप्रेरिताम् ॥ २३ ॥ अभितःप्रदक्षिणं अभिप्रदक्षिणम् ॥ २४ ॥ प्राप्य

---

ति० । अन्तर्धायभगवानेवस्वतेजस्संभृतपायसमादायहुताग्नेस्सकाशात्प्रादुर्भवतिस्म । नह्यन्यस्यभगवत्तेजोधारणेशक्तिरस्ति । तदेवाह महद्भूतमिति । " एकोविष्णुर्महद्भूतं " इत्युक्तेः । अतुलप्रभं विद्युदादिवत्दृष्टिप्रतिघातकतेजोवत् । भूतं प्राणी ॥ ११ ॥ ति० । मायामयीमिव इवशब्दएवार्थे । भगवतोमायैवेत्यर्थः ॥ १६ ॥ ति० । पूर्वंकृत्यातइवभीतएवतदा नरवचनश्रवणानन्तरकाले । अतः तदुक्तिश्रवणाद्धेतोः । परं तृप्तिकरंवचः । तद्वचनश्रवणोत्तरंनिर्भयउवाचेत्यर्थः ॥ १९ ॥

[ पा० ] १ च. ज. कृष्णरक्तांबरधरं. २ क.–ञ. रक्तास्यं. ३ च. छ. दिशागजसमाकारं. ४ च. छ. सान्तःपुरस्तदाराजा. ट. अतःपरंतदाराजा. ख. ग. तमद्भुतंतदाराजा. ५ ख.–ञ. इदंतुनृपशार्दूल. ६ ख. तासुत्वंप्राप्स्यसे.

ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ॥ संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २६ ॥
हर्षरश्मिभिरुद्योतं तस्यान्तःपुरमाबभौ ॥ शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः ॥ २७ ॥
सोन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ॥ पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ २८ ॥
कौसल्यायै नरपतिः पायसार्धं ददौ तदा ॥ अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥ २९ ॥
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥ अनुचिन्त्य सुमित्रायै [1]पुनरेव महीपतिः ॥ ३० ॥

लब्ध्वा ॥२५॥ अद्भुतप्रख्यं अद्भुताकारं । संवर्तयित्वा समाप्य । तत्कर्म पायसप्रदानरूपंकर्म । तत्र अम्नौ॥२६॥ हर्षरश्मिभिः हर्षकृतकान्तिभिः । उद्योतं उद्भूतप्रकाशं । अन्तःपुरं अन्तःपुरस्त्रियः । शारदस्य शरदिभवस्य । अभिरामस्य निष्कलङ्कस्य। अयंहर्षः पायसप्रदानकृतः ॥ २७ ॥ पुत्रीयं पुत्रोत्पत्तिनिमित्तम् ॥ २८ ॥ अथराज्ञःपत्नीभ्योविभज्यपायसप्रदानमाहत्रिभिः—कौसल्यायाइत्यादि । पायसस्यार्धं पायसार्धं । अर्धशब्दोत्रसमांशवचनः "अर्धंसमेंशके"इत्यमरः । ददौ ज्येष्ठपत्नीत्वादितिभावः । अर्धात्पृथक्कृत्य अर्धं सुमित्रायै द्वितीयमहिष्यै । ददौ । चतुर्थांशमित्यर्थः । अवशिष्टस्यपायसस्यार्धंअवशिष्टार्धं अष्टमांशमित्यर्थः । कैकेय्यै तृतीयमहिष्यै । ददौ । पुत्रार्थकारणात् पुत्ररूपप्रयोजननिमित्तात् । इदं त्रिष्वपिदानेष्वन्वेति ॥२९॥ अनुचिन्त्य कैकेय्यपेक्षया सुमित्रायाअधिकांशभाक्त्वं भवेदितिविचार्येत्यर्थः । तस्यापिहिकैकेय्यैदा-

**शि०** । तस्यराज्ञः हर्षरश्मिभिः हर्षवर्धिताङ्गकान्तिभिः उद्योतं अतिप्रकाशितं अन्तःपुरं अभिरामस्य परमानन्ददातुः पूर्णस्येत्यर्थः । शारदस्यचन्द्रस्यांशुभिरुद्योतं नभइव आबभौ ॥ २७ ॥ **ति०** । अनुचिन्त्य कैकेय्यपेक्षयाज्येष्ठत्वंकौसल्यापेक्षयाकनिष्ठत्वं चसुमित्रायाविचार्य पादोनांशार्धदानंतस्यै । कनिष्ठत्वाच्चकैकेय्यै अष्टमांशदानं । एवंचभरतशत्रुघ्नौपादस्यार्धमर्धमित्याहुः । अपरेतु रामभरतौप्रत्येकंत्र्यंशौ । लक्ष्मणशत्रुघ्नौचाष्टमांशौ । तथाहि । कौसल्यायैदत्तार्धस्यार्धादर्धंचतुर्थांशरूपंसुमित्रायैदत्तवान् । कौसल्ययादापितवानित्यर्थः । एवंकैकेय्यैकौसल्यादत्तार्धावशिष्टमर्धंददौ । ततः कौसल्यादत्तावशिष्टस्यकैकेय्यैदत्तस्ययदर्धं तदर्धं विचार्यपुनरपिसुमित्रायैददौ तयादापयामासेत्यर्थः । अत्रार्धपदावृत्तिर्बोध्या । तदुक्तंकालिदासेन " सतेजोवैष्णवंपत्न्योर्विभेजेचरुसंज्ञितम् । द्यावापृथिव्योःप्रत्यग्रमहर्पतिरिवातपम् । अर्चितातस्यकौसल्याप्रियाकेकयवंशजा । अतस्संभावितांताभ्यांसुमित्रामैच्छदीश्वरः । तेबहुज्ञस्यचित्तज्ञेपत्न्यौपत्युर्महीक्षितः । चरोरर्धार्धभागाभ्यांतामयोजयतामुभे । साहिप्रणयवत्यासीत्सपत्न्योरुभयोरपि " इति । अर्धार्धभागाभ्यामित्यस्यस्वस्वलब्धांशसंबंध्यर्धार्धभागाभ्यामित्यर्थः । पृथगिति विभज्येतिशेषः । अतएवलक्ष्मणस्यरामानुवर्तित्वंशत्रुघ्नस्यभरतानुवर्तित्वंच । उक्तंचपाद्मे " युगंबभूवतुस्तत्रसुस्निग्धौरामलक्ष्मणौ । तथाभरतशत्रुघ्नौपायसांशवशात्स्वतः" इतीत्याहुः । कतकस्याप्येषैवरीतिस्संमतेतिदिक् । **शि०** । तदा पायसप्राप्तिकाले । नरपतिःअमृतोपमंपायसार्धंपायसस्यार्धमंशं । महाभागमितिवक्ष्यमाणरामविशेषणात् ज्येष्ठपत्नीत्वाच्च कंचिदधिकमंशंपुत्रार्थकारणात्कौसल्यायैददौ । ततोनुचिन्त्य अप्रकटितसाकेतेएकस्सुमित्रापुत्रःकौसल्यापुत्रानुयायी द्वितीयस्सुमित्रापुत्रःकैकेयीपुत्रानुयायीति विचार्यैव अर्धात् कौसल्याभागतः अर्धं किंचिन्न्यूनमंशं नराधिपस्सुमित्रायैददौ कौसल्ययादापयामासेत्यर्थः । अन्तर्भावितणिजर्थः । कौसल्याभागादवशिष्टभागंअर्धंकृत्वासुमित्रायैददावित्यर्थस्तुनयुक्तः । अत्रावशिष्टपदाभावात् उत्तरत्रावशिष्टपदस्यविद्यमानत्वाच्चयुक्तितोरामानुयायित्वानुपपत्तेश्च । ततोवशिष्टार्धमवशिष्टमर्धं कौसल्याभागतःकिंचिन्न्यूनांशं कैकेय्यैमहीपतिर्ददौ दापयामासेत्यर्थः । पुनरेव पुनरपि । एवोप्यर्थे । अवशिष्टार्धं अवशिष्टस्यदत्तकेकयीभागस्यार्धमंशं सुमित्रायैप्रददौ कैकेय्याप्रदापयामासेत्यर्थः । अयभावः । पायसेऽष्टावंशाः कृताः । तत्रपञ्चांशान्कौसल्यायैदत्तवान् । कौसल्याभागतःसार्धमेकमंशंसुमित्रायैदापयामास । कौसल्याभागतःउर्वरितांस्त्रीनंशान्कैकेय्यैदापयामास । कैकेयीभागात्सार्धमेकमंशंसुमित्रायैदापयामासेति । सार्धत्रीन्स्वांशानेकीकृत्यकौसल्याबुभुजे तदेवरामप्रादुर्भावेनिमित्तीभूतं । सार्धमेकंस्वांशमेकीकृत्यकैकयाबुभुजे तदेवभरतप्रादुर्भावेनिमित्तीभूतं । कौसल्यादत्तंसार्धमंशमेकीकृत्यसुमित्रापूर्वंबुभुजे तदेवलक्ष्मणप्रादुर्भावेनित्तीभूतं । ततःकेकयीदत्तंसार्धमंशंबुभुजे तदेवशत्रुघ्नप्रादुर्भावेनिमित्तीभूतं । भरतलक्ष्मणप्रादुर्भावनिमित्तीभूतपायसयोस्समत्वेपि रामोद्देश्यकभागांशप्रभावाल्लक्ष्मणेऽधिकप्रभावप्रतीतिः । अनुचिन्त्येत्युक्तेर्महाराजाधिराजदशरथस्यसर्वज्ञत्वंसूचितं । तदेवोपसंहरन्नाह । एवमनेनप्रकारेणभार्याणांपायसंपृथक्पृथग्विभज्यराजाददौ । कौसल्यायैइत्यारभ्यश्लोकत्रयमेकान्वयि । अपिशब्दएवार्थे । चशब्दावनन्तरार्थकौ ॥ ३० ॥

[ पा० ] १ ङ. झ. पुनरेवमहामतिः.

**एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ ३१ ॥**
**तास्त्वेतत्पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः ॥ संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ ३२ ॥**
**ततस्तु ताः प्राश्य तदुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् ॥**
**हुताशनादित्यसमानतेजसोचिरेण गर्भान्प्रतिपेदिरे तदा ॥ ३३ ॥**
**ततस्तु राजा प्रतिवीक्ष्य ताः स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः ॥**
**बभूव हृष्टस्त्रिदिवे यथा हरिस्सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ ३४ ॥**

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे षोडशः सर्गः ॥ १६ ॥**

## सप्तदशः सर्गः ॥ १७ ॥

देवगन्धर्वादिभिर्ब्रह्माज्ञयारामसाहाय्यार्थंऋक्षवानरादिभावेनभुव्यवतरणम् ॥ १ ॥

**पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः ॥ उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम् ॥ १ ॥**

नेकैकेयीसुमित्रयोःसमांशतास्यात्तन्नयुक्तं । अन्यथा ज्येष्ठाकनिष्ठावैषम्यंनस्यात् । कैकेयीहिकनिष्ठा । "नतेंबामध्यमातातगर्हितव्याकथंचनं" इतीतरपत्न्यपेक्षयामध्यमात्वमुक्तं । वल्लभायामपिकैकेय्यांसंभोगविषयेपक्षपातः नतुधर्म्यसंविभागे । अतोबहुमानायज्यैष्ठ्यक्रमाद्भागतारतम्यंकृतं । अतएव "समानंमेनिरे" इतिवक्ष्यति । ततोनेनभागेनरामोविष्णोरर्धांशः लक्ष्मणःपादांशः भरतशत्रुघ्नौपादस्यार्धांशौ । नन्वेवंसति कथमुत्तरत्र भरतःसाक्षाद्विष्णोश्चतुर्भागः लक्ष्मणशत्रुघ्नौविष्णोरर्धसमन्वितावित्युच्यते । सत्यं "साक्षाद्विष्णोश्चतुर्भागः" इत्यत्रसाक्षाद्विष्णोःविष्णोरर्धस्यरामांशस्यचतुर्थोभागइत्यर्थः । यद्वा चतुर्थस्यभागश्चतुर्भागः अष्टमांशइत्यर्थः । "अर्धसमन्वितौ" इत्यत्राप्यर्धशब्दएकदेशवाची । "भित्तंशकलखण्डेवापुंस्यर्धोर्धसमेंशके" इत्येकदेशेपिपुँल्लिङ्गार्धशब्दस्यानुशासनात् । अत्रप्राशनादिक्रमवशात् भरतस्यलक्ष्मणशत्रुघ्नाभ्यांज्यैष्ठ्यं । ननु लक्ष्मणस्यभरताज्ज्यैष्ठ्यं अंशाधिक्यात्प्रथमप्राशनाच्च । अतएववक्ष्यति"ततोलक्ष्मणमासाद्यवैदेहींचपरंतपः ॥ अभ्यवादयतप्रीतोभरतोनामचाब्रवीत्"इति । मैवं कैकेय्याएवप्रथमप्राशनं । सुमित्रायाद्वितीयांशग्रहणविलंबेनप्राशनविलंबात् । उत्पत्तिक्रमेतथोक्तेः । "नसङ्ख्येभरतानुजः"इत्युक्तत्वात् । अभिवादनंतु सीतायामेवान्वेति । लक्ष्मणमासाद्य आलिङ्ग्येत्यर्थः । रामानुजत्वव्यवहारआसत्त्याधिक्यात् । एवंसति क्वचिद्भरतस्यलक्ष्मणानुजत्वोक्तिः बहुव्रीहिसमासेनसमाधेया । भरतानुजइतिलक्ष्मणस्याभिधानात्सर्वप्राशनानन्तरमेवसुमित्रयाभुक्तमिति । पुराणांतरविरोधःकल्पभेदेनपरिहार्यः । रामादिमूर्तयश्चपायसपरिणामाः नतुशुक्रशोणितपरिणामाः । तत्प्राशनानन्तरंगर्भधारणवचनात् । "नतस्यप्राकृतामूर्तिः" "नभूतसङ्घसंस्थानोदेहोस्यपरमात्मनः" इत्यादिस्मरणात् । पायसंचभगवतःषाड्गुण्यविग्रहएव । तद्वृद्धिश्चनान्नपानादिकृता किंत्विच्छाकृतेत्यादिकंसर्वमवसेयम् ॥ ३० ॥ उपसंहरति—एवमिति ॥३१॥ संमानंराजकृतपायसप्रदानक्रमरूपंबहुमानं । मेनिरे अनुमेनिरे । प्रहर्षोदितचेतसः उदितप्रहर्षमनसः । तारतम्येनदानंपौर्वापर्यंच ज्यैष्ठ्यानुक्रमकृतत्वेनसर्वासांसंमतमेवासीदितिभावः ॥ ३२ ॥ वक्तव्येपियज्ञवृत्तान्तशेषे प्रसङ्गात्सौकर्यायनगरप्रवेशानन्तरभाविकथाशेषंसंग्रहेणदर्शयति—ततइति । तत्पायसमित्यन्वयः । हुताशनादित्यशब्दौतत्तेजःपरौ ॥३३॥ प्रतिलब्धमानसः स्वस्थचित्तः ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षोडशःसर्गः ॥१६॥

---

विष्णोरन्तर्धानानन्तरंकार्यद्वयंप्रवृत्तं पायसहस्तस्याग्निपुरुषस्योत्थानं देवान्प्रतिब्रह्मनियोगश्च । तत्र

ति० । हुताशनादित्यसमानतेजसइतिगर्भाणांस्त्रीणांचतन्त्रेणविशेषणं ॥ ३३ ॥ इतिषोडशस्सर्गः ॥ १६ ॥

[ पा० ] १ ङ. च. छ. ताश्चैवंपायसं. घ. ताश्चैतत्पायसं. २ ग. ङ. छ. ज. झ. नरेन्द्रस्योत्तमस्त्रियः. ३ च. छ. संतानंमेनिरे. ४ ख. समानवर्चसो. ५ क. ख. ग. च. छ. ज. प्रसमीक्ष्य.

सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः ॥ विष्णोः सहायान्बलिनः सृजध्वं कामरूपिणः ॥ २ ॥
मायाविदश्च शूरांश्च वायुवेगसमाञ्जवे ॥ नयज्ञान्बुद्धिसंपन्नान्विष्णुतुल्यपराक्रमान् ॥ ३ ॥
असंहार्यानुपायज्ञान्सिंहसंहननान्वितान् ॥ सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ॥ ४ ॥
अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च ॥ यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च ॥ ५ ॥
किंनरीणां च गात्रेषु वानरीणां तनूषु च ॥ सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६ ॥
पूर्वमेव मया सृष्टो जांबवानृक्षपुङ्गवः ॥ जृंभमाणस्य सहसा मम वक्त्रादजायत ॥ ७ ॥
ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ॥ जनयामासुरेवं ते पुत्रान्वानररूपिणः ॥ ८ ॥
ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः ॥ चारणाश्च सुतान्वीरान्ससृजुर्वनचारिणः ॥ ९ ॥
वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमूर्जितम् ॥ सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १० ॥
बृहस्पतिस्त्वजनयत्तारं नाम महाहरिम् ॥ सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम् ॥ ११ ॥
धनदस्य सुतः श्रीमान्वानरो गन्धमादनः ॥ विश्वकर्मा त्वजनयन्नलं नाम महाहरिम् ॥ १२ ॥
पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः ॥ तेजसा यशसा वीर्यादत्यरिच्यत वानरान् ॥ १३ ॥
रूपद्रविणसंपन्नावश्विनौ रूपसंमतौ ॥ मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥ १४ ॥

वाचःक्रमवर्तित्वेन प्रथमोपस्थितमग्निपुरुषोत्थानं तत्प्रसक्तंचसर्वमुक्त्वा अथब्रह्मनियोगततत्फलेदर्शयतिसप्तदशे—पुत्रत्वमित्यादि । गतेगन्तुंप्रवृत्ते । भगवान् भाविकार्यज्ञः ॥ १ ॥ सह अप्राधान्येन अयन्तइतिसहायाःकिंकराः । तान् । कामरूपिणः कपटराक्षसयुद्धक्षमशरीरिणः ॥२॥ उक्तसहायान्विशेषयतित्रिभिः—मायेत्यादि । माया आश्चर्यशक्तिः । तद्विदः । जवे वेगेविषये । नयज्ञान् नीतिज्ञान् ॥ ३ ॥ असंहार्यान् परैरितिशेषः । उपायज्ञान् अनागतविधानज्ञान् । यद्वा नयज्ञान् युक्तिशालिनः । उपायज्ञान् सामाद्युपायज्ञान् । सिंहसंहननान्वितान् सिंहतुल्यसंस्थानैर्युक्तान् । सर्वास्त्राणांयोगुणःशक्तिस्तेनसंपन्नान् । अमृतंप्राश्नन्तीत्यमृतप्राशनाः कर्तरिल्युट् । पीतामृतानिवमृत्युरहितानित्यर्थः ॥ ४ ॥ ५ ॥ हरिरूपेण वानररूपेणोपलक्षितान् प्रायिकाभिप्रायमिदं तुल्यपराक्रमान् आत्मसदृशपराक्रमान् ॥ ६ ॥ देवत्वाविशेषात्भवतापि पुत्रोत्पादनंकार्यमिति मावोचध्वमित्याह—पूर्वमिति । सृष्टः भाविरामसहायबुद्ध्येतिशेषः । सृष्टिप्रकारमाह—जृंभमाणस्येति । सइतिशेषः । अत्र पार्वतीशापेन-स्वक्षेत्रेपुत्रोत्पादनासंभवादप्सरःप्रभृतयःक्षेत्रतयोक्ताः। गुणवत्पुत्रलाभायमुख्यास्वित्युक्तं । अयोनिजत्वेन सद्यःप्रवृद्धत्वसिद्धयेतनूष्वित्युक्तं । नन्दिकेश्वरशापानुसारेणहरिरूपेणेत्युक्तं । वक्ष्यतिहिदिग्विजयेरावणंप्रतिनन्दी "तस्मान्मद्रूपसंयुक्तामद्वीर्यसमतेजसः ॥ उत्पत्स्यन्तिवधार्थंहिकुलस्यतववानराः" इति ॥ ७ ॥ प्रतिश्रुत्य अङ्गीकृत्य । एवं वक्ष्यमाणरीत्या ॥८॥ वनचारिणः वानरान् ॥ ९ ॥ महेन्द्राभं महेन्द्रपर्वताभं । ननु वालिनःकथंरामसहायार्थत्वं रामवध्यत्वात् । उच्यते । अङ्गदोत्पादनद्वारातत्साहाय्यकरणात् । किंच यदिवालीनोत्पद्येत तदा सर्वेषांवानराणांसहायत्वंनस्यात् । सतिचवालिनि सुग्रीवविरोधिनि सुग्रीवमैत्र्यावानरसहायसिद्धिः । वालिमैत्र्यांतु रावणः क्षणादेवसीतांदद्यात् । अतःसुग्रीवसख्यनिमित्तत्वाद्वालिनो रामसहायत्वमिति । तपनः सूर्यः ॥ १० ॥ सर्ववानरमुख्यानामिति निर्धारणेषष्ठी । बृहस्पतिपुत्रत्वादनुत्तमंबुद्धिमन्तं ॥ ११ ॥ कुबेरपुत्रत्वात्श्रीमानित्युक्तं । महाहरिं सर्वकार्यनिर्माणदक्षं ॥ १२ ॥ अत्यरिच्यत अतिशयितोभूत् ॥ १३ ॥ रूपमेवद्रविणंधनं तेनसंप-

ती० दिव्यसंहननान्वितान् दिव्यदेहयुक्तान् ॥ ४ ॥ ति० पूर्वमेव पूर्वयुगइत्यर्थः ॥ ७ ॥ ती० पूर्वमेवमयासृष्टइतिश्लोकस्थं पूर्वमितिपदमत्राप्यनुषञ्जनीयं । यथाश्रुतेभगवदवतारसमयेवालिसुग्रीवयोरनुत्पत्तेरिति ॥ १० ॥

[ पा० ] १ क. ग. घ. विष्णोस्तुल्य. २ क—छ. झ. ञ. ज्ञान्दिव्यसंहननान्वितान्. ३ इदमर्धं घ—ट. दृश्यते. ४ क. ऋक्षीविद्याधरीषु. ५ इदमर्धं घ—ट. दृश्यते. ६ ग. महाभागं. ७ ङ. च. छ. झ. ञ. ट. वालिनमात्मजं. ८ ङ. च. छ. झ. ञ. ट. महाकपिं. ९ ख. बुद्धिमान्संमतःप्रियः. १० क. ख. च. छ. ञ. पावकं. ङ. झ. ट. वीर्यवान्. ११ च. छ. रूपसंपदा.

वरुणो जनयामास सुषेणं नाम वानरम् ॥ शरभं जनयामास पर्जन्यस्तु [1]महाबलम् ॥ १५ ॥
मारुत[2]स्यात्मजः श्रीमान्हनुमान्नाम वानरः ॥ वज्रसंहननोपेतो वैनतेयसमो जवे ॥
[[3]सर्ववानरमुख्येषु बुद्धिमान्बलवानपि] ॥ १६ ॥
ते सृष्टा बहुसाहस्रा दशग्रीव[4]वधे रताः ॥ अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ॥ १७ ॥
मेरु[5]मन्दरसंकाशा वपुष्मन्तो महाबलाः ॥ ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे ॥ १८ ॥
यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥ अजायत [6]समस्तेन तस्यतस्य [7]सुतः पृथक् ॥ १९ ॥
गो[8]लाङ्गूलीषु चोत्पन्नाः [9]केचित्संमतविक्रमाः ॥ [10]ऋक्षीषु च तथा जाता वानराः किं[11]नरीषु च ॥ २० ॥
देवा महर्षिगन्धर्वा[12]स्तार्क्ष्या यक्षा यशस्विनः ॥ नागाः किंपुरुषाश्चैव सिद्धविद्याधरोरगाः ॥ २१ ॥
बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ॥ [ [13]चारणाश्च सुतान्वीरान्ससृजुर्वनचारिणः ॥ ]
वानरान्सुमहाकायान्सर्वान्वै वनचारिणः ॥ २२ ॥
अप्सरस्सु च मुख्यासु तथा विद्याधरीषु च ॥ नागकन्यासु च तथा गन्धर्वीणां तनूषु च ॥ २३ ॥
कामरूपबलोपेता [14]यथाकामं विचारिणः ॥ सिंहशार्दूलसदृशा दर्पेण च बलेन च ॥ २४ ॥
शिलाप्रहरणाः सर्वे सर्वे [15]पादपयोधिनः ॥ नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥ २५ ॥
विचालयेयुः शैलेन्द्रान्भेदयेयुः [16]स्थिरान्द्रुमान् ॥ क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ॥ २६ ॥
दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् ॥ नभस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २७ ॥

न्नौ अतएवरूपसंमतौ रूपेणप्रख्यातौ । स्वयमित्यनेन मानससृष्टिर्द्योत्यते ॥ १४ ॥ पर्जन्यो वर्षाभिमानिदेवता ॥ १५ ॥ वज्रसंहननोपेतः वज्रवदभेद्यशरीरयुक्तः । रुद्रोब्रह्मणानियुक्तोपि रक्षःपक्षपातित्वान्नकंचनसृष्टवान् ॥ १६ ॥ एवंप्रधानवानरसृष्टिमुक्त्वा-क्षुद्रवानरसृष्टिंसंग्रहेणाह—तेइति । रताः आसक्ताः ॥ १७ ॥ एवंवानरसृष्टिमुक्त्वाऋक्षादिसृष्टिंप्राधान्येनाह—मेर्विति । वपुष्मन्तः दृढवपुष्काः । अतएवमेरुमन्दरसंकाशाः । ऋक्षाः भल्लूकाः । गोपुच्छाः गोलाङ्गूलाः । अभिजज्ञिरे जाताः । क्षिप्रमित्यनेनमानससृष्टिरुच्यते ॥ १८ ॥ रूपं सौन्दर्यं । वेषः संस्थानविशेषः । तस्यतस्य देवस्य । तेन रूपादिना समःसुतः । पृथक् अन्योन्यविलक्षणः । अजायत मुखमात्रेवानराकारत्वेपिसंस्थानादौसर्वेपितृतुल्याएवासन्नित्यर्थः ॥ १९ ॥ विजातीयास्वपिवानरोत्पत्तिमाह—गोलाङ्गूलीष्विति । संमतविक्रमाः प्रसिद्धविक्रमाः । केचिद्वानरागोलाङ्गूलीषूत्पन्नाः । केचिद्वानराऋक्षीषूत्पन्नाः । केचिद्वानराः किन्नरीषुचोत्पन्नाइतियोजना ॥ २० ॥ उत्पादकक्षेत्रवैविध्यमाह—देवाइत्यादि । श्लोकत्रयमेकान्वयं । तार्क्ष्याः गरुडादयः । नागाः दिग्गजाः । उरगाः वासुक्यादयः । तत्र विष्णववतारकाले ॥ २१ ॥ ॥ २२ ॥ २३ ॥ तेषांप्रभावमाहपञ्चभिः । सर्वत्र सर्वेइत्यनुषञ्जनीयं । सर्वेकामरूपबलोपेताअभवन्नित्येवंयोजनीयं ॥ २४ ॥ सर्वास्त्रकोविदाः देवांशत्वेनस्वयंप्रतिभातास्त्रप्रहारपरिहारोपायाः नत्वस्त्रप्रयोक्तारः शिलाप्रहरणाइत्युक्तेः ॥ २५ ॥ विचालयेयुरित्यादिषु "शकिलिङ्च"इतिलिङ् । "कंपनेचलिः" इतिमित्वेपिह्रस्वाभावश्छान्दसः ॥ २६ ॥ आप्लवेयुः संतरेयुः ॥ २७ ॥

**ति०** धर्मपुत्रोपरस्सुषेणइतियुद्धकाण्डेवक्ष्यति अत्रतुवरुणपुत्रउक्तः ॥ १५ ॥ **ति०** किंचिदुन्नतविक्रमाः देवावस्थातोपिकिंचिदधिकपराक्रमाइत्यर्थः ॥ २० ॥ **ति०** आप्लवेयुः संतरेयुः । **ती०** आप्लवेयुःशोषयेयुः ॥ २७ ॥ इतिसप्तदशस्सर्गः ॥ १७ ॥

[ पा० ] १ क. ख. घ. छ. झ. ञ. ट. महाबलः. २ घ—छ. झ. ञ. ट. स्यौरसः. ३ इदमर्धं. क. ङ—ट. दृश्यते. ४ ङ. च. छ. झ. ञ. वधोद्यताः. क—घ. वधेधृताः. ५ क. ग—ञ. तेगजाचलसंकाशाः. ६ क. ख. ङ—ञ. समंतेन. ७ घ—ञ. पृथक्पृथक्. ८ क. घ—ट. गोलाङ्गुलेषु. ९ ङ—झ. किंचिदुन्नत. १० क. ट. ऋक्षेषु. ११ ख. वानरीषु. १२ ख. घ. झ. ट. स्तार्क्ष्ययक्षाः. १३ इदमर्धं च. छ. झ. ञ. ट. दृश्यते. १४ ग. घ. ङ. ज. झ. यथाकामविचारिणः. १५ ङ. छ. झ. पर्वतयोधिनः. १६ क—घ. स्थितान्द्रुमान्.

गृह्णीयुरपि मातङ्गान्मत्तान्प्रव्रजतो वने ॥ नर्दमानाश्च नादेन पातयेयुर्विहङ्गमान् ॥ २८ ॥
ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ॥ शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ २९ ॥
ते प्रधानेषु यूथेषु हरीणां हरियूथपाः ॥ बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन्हरीन् ॥ ३० ॥
अन्ये ऋक्षवतः प्रस्थानुपतस्थुः सहस्रशः ॥ अन्ये नानाविधाञ्शैलान्काननानि च भेजिरे ॥३१॥
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ॥ भ्रातरावुपतस्थुस्ते सर्वे एव हरीश्वराः ॥
नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ॥ ३२ ॥
ते तार्क्ष्यबलसंपन्नाः सर्वे युद्धविशारदाः ॥ विचरन्तोऽर्दयन्दर्पात्सिंहव्याघ्रमहोरगान् ॥ ३३ ॥
तांश्च सर्वान्महाबाहुर्वाली विपुलविक्रमः ॥ जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३४ ॥
तैरियं पृथिवी शूरैः सपर्वतवनार्णवा ॥ कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३५ ॥
तैर्मेघवृन्दाचलकूटकल्पैर्महाबलैर्वानरयूथपालैः ॥
बभूव भूर्भीमशरीररूपैः समावृता रामसहायहेतोः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

प्रव्रजतः वेगेनगच्छतः ॥२८॥ अन्येषामपरिच्छेद्यत्वा- द्यूथपसंख्यानमाह—ईदृशानामिति । शतंशतसहस्राणि शतलक्षाणीत्यर्थः ॥२९॥ प्रधानप्रधानानाह—तइति । ते प्रागुक्ताःसुग्रीवादिसुषेणान्तायूथपाः । प्रधानेषु हरी- णांयूथेषुसमूहेषु यूथपश्रेष्ठाबभूवुः । वीरान्हरीनजनयं श्च ॥३०॥ तेषांस्थानमाह—अन्यइति । ऋक्षवतः पर्वत- विशेषस्य ।प्रस्थान् सानूनि ॥३१॥ राजयुवराजमन्त्रिणो- दर्शयतिसूर्येत्यादिसार्धश्लोकेन। सुग्रीवं युवराजं। वालिनं राजानं । नलादीन्मन्त्रिणः ॥ ३२ ॥ तेषांदुश्शासनत्व- माह—तइति । तार्क्ष्यः गरुडः ॥ ३३ ॥ सर्वेषांशा- सितारमाह—तांश्चेति ॥ ३४ ॥ साहाय्यसंपत्तिपौष्क- ल्यंदर्शयति—तैरिति । अर्णवः अर्णववद्वीपं । विवधसं- स्थानैः स्थूलसूक्ष्मह्रस्वदीर्घादिविविधदेहसंस्थानवद्भिः । नानाव्यञ्जनलक्षणैः नानात्वाभिव्यञ्जकासाधारणध- र्मवद्भिः ॥ ३५ ॥ उक्तमेवार्थंपुनःसर्गान्तेसंगृह्यदर्शय- ति—तैरिति । भीमशरीररूपैः भयंकरशरीरवेषैः । रामसहायहेतोः रामसाहाय्यार्थं । भावप्रधानोनिर्देशः ॥३६॥ नन्वस्मिन्सर्गे "धनदस्यसुतःश्रीमान्वानरोग- न्धमादनः ॥ वरुणोजनयामाससुषेणंनामवानरं ॥ श- रभंजनयामासपर्जन्यस्तुमहाबलं"इत्युच्यते । युद्धका- ण्डेतु रावणंप्रतिशार्दूलवाक्ये "सुषेणश्चात्रधर्मात्मापुत्रो धर्मस्यवीर्यवान् ॥ पुत्रावैवस्वतस्याथपञ्चकालान्तको- पमाः । गजोगवाक्षोगवयःशरभोगन्धमादनः" इति । कथमिदंसंगच्छते । उच्यते।अत्रवाल्मीकिनोक्तमेवतथ्यं "नतेवागनृताकाव्येकाचिदत्रभविष्यति" इतिब्रह्मव- रप्रसादात् । शार्दूलस्तुभ्रान्त्योक्तवान् "रुधिरासिक्त- सर्वाङ्गोविह्वलश्चलितेन्द्रियः"इतितत्रैवोक्तेः । अत्रेदंश- ङ्क्यते । ऋश्यशृङ्गेणपुत्रेष्ट्युपक्रमानन्तरंदेवादिसंमेलनं ततोविष्णोरवतितीर्षा पुत्रत्वंतुगतेविष्णौवानरोत्पत्ति- रित्युक्तं तद्विरुध्यते। वालिसुग्रीवयोरावणदिग्विजयका- लिकत्वात् । वक्ष्यत्युत्तरकाण्डे "अर्जुनेनविमुक्तस्तुरा- वणोराक्षसाधिपः"इत्यारभ्य "ततःकदाचित्किष्किन्धां नगरींवालिपालितां ॥ गत्वाह्वयतियुद्धायवालिनंहेम- मालिनं"इत्यादिना । तथाचकार्तवीर्यार्जुनकालिको वालीकथंरामसमवयस्कःस्यात् । किंच"भगवन्राक्षसः क्रूरोयदाप्रभृतिमेदिनीं ॥ पर्यटत्किंतदालोकाःशून्या आसन्द्विजोत्तम॥ राजावाराजमात्रोवाकिंतदानात्रक- श्चन ॥ धर्षणांयेननप्राप्तोरावणोराक्षसेश्वरः"इतिदि- ग्विजयवृत्तान्तेरामेणपृष्टेअगस्त्येनार्जुनवालिभ्यांपरि- भवउच्यमानोर्जुनवालिनोरेककालत्वमवगमयति । अ- पिचमयोरावणायमन्दोदरीप्रदानकाले "द्वौसुतौतुमम- त्वस्यांभार्यायांसंबभूवतुः ॥ मायावीप्रथमस्तावद्दुन्दु-

---

[ पा० ] १ क. ख. प्रव्राजितान्वने. ग. घ. प्रव्रजितान्वने. २ ट. वातरंहसाम्. ३ ख. घ. ङ. झ. ट. श्रेष्ठान्वीरांश्चा. ४ घ. ङ. च. झ. ञ. ट. सर्वेचहरियूथपाः. ५ ङ. च. छ. झ. ञ. यन्सर्वान्सिंह. ६ ङ. झ. महाबलोमहा. ७ ज. वृन्दाचल- संनिकाशैः. ८ घ–छ. झ. ञ. कूटसंनिभैः. ९ ङ. झ. यूथपाधिपैः.

भिस्तदनन्तरः" इत्युक्तवान् ॥ तत्रदुन्दुभिर्यौवनमदाद्वरदानाच्चमत्तोवालिनाहतइत्युच्यते । अतोवालिनोरावणदिग्विजयकालिकत्वंव्यज्यते । सुग्रीवश्चवालिभयात्परिभ्रमन्दुन्दुभिकलेवरप्रक्षेपकृतमतङ्गशापानन्तरंऋश्यमूकेप्रत्यतिष्ठत् । अतःसुग्रीवस्यापिवालितुल्यकालत्वंगम्यते । एवंमैन्दद्विविदादयोपिचिरकालस्थायिनोऽवगम्यन्ते । वक्ष्यतिरावणंप्रतिशार्दूलः "मैन्दश्चद्विविदश्चोभौताभ्यांनास्तिसमोयुधि ॥ ब्रह्मणासमनुज्ञातावमृतप्राशनावुभौ" इति । तेनतयोरमृतमथनकालवर्तित्वंप्रतीयते । सारणवाक्येच- "एषगन्धर्वकन्यायामुत्पन्नःकृष्णवर्त्मनः । तदादैवासुरेयुद्धेसाहाय्यार्थंदिवौकसां" इति । क्रोधनस्यदेवासुरयुद्धेव्यापारकथनात् चिरन्तनत्वंतत्प्रायपठितानामन्येषामपिवालिसुग्रीवमन्त्रिप्रभृतीनांसिद्धंचिरकालत्वं । एवमन्यत्रापिवानरयूथपानामतिचिरस्थायित्वंव्यञ्जनावृत्त्यावगम्यते । अतः कथमेषांरामावतारकालिकत्वमत्रोच्यतइति । अत्रास्मद्गुरुचरणाः । यद्यपिपूर्वसर्गान्ते विष्णोर्गर्भप्रवेशमुक्त्वा "पुत्रत्वंतुगतेविष्णौ" इत्यारभ्यब्रह्मानुशासनंकथितं । तथापि "उवाचदेवताःसर्वाःस्वयंभूर्भगवानिदं" इत्यादिनासामान्येनदेवताउद्दिश्य ब्रह्मासंदिष्टवान् । "तेतथोक्ताभगवतातत्प्रतिश्रुत्यशासनं । जनयामासुरेवंतेपुत्रान्वानररूपिणः" इतिसामान्येनदेवैर्वानरसृष्टिश्चोक्ता । अथब्रह्मणोजांबवत्सृष्टिवत्पूर्वसिद्धामिन्द्रादिभ्योवाल्यादिसृष्टिमनुवदति "वानरेन्द्रंमहेन्द्राभमिन्द्रोवालिनमूर्जितं" इत्यादिना । अतएवहि "वालिनंजनयामास" इत्येवोक्तं । नतुतदाजनयामासेति । अन्यत्रतु "बहवोजनयामासुर्हृष्टास्तत्रसहस्रशः" इति तत्कालवाचीतत्रशब्दः प्रयुक्तः । इन्द्रादयः खल्वेवममन्यन्त ब्रह्मनियोगानन्तरंकिमपूर्वसर्गेण पूर्वमन्यार्थमुत्पन्नाएवसहाय्यंकरिष्यन्तीति । यैस्तुपूर्वंपुत्रानोत्पादितास्तेपुनस्तदाजनयामासुः । अतएव "एषगन्धर्वकन्यायामुत्पन्नःकृष्णवर्त्मनः । तदादैवासुरेयुद्धेसहायार्थंदिवौकसां" इत्यादिनाक्रोधनादीनामन्यार्थंसृष्टिरुच्यते । तस्मान्नकोपि विरोधइत्याहुः । यद्वा रामावतारकालएववाल्यादिजन्म । वालिजयश्चनार्जुनजयाव्यवहितोत्तरकालिकः ततश्शब्दस्यानन्तर्यमात्रपरत्वात् । अतएवततःकदाचिदित्युक्तं । अगस्त्येनार्जुनवालिविजययोर्युगपत्कथनंरावणजयत्वेन कृष्णःकंसशिशुपालौजघानेतिवत् । दुन्दुभिश्चवरदानेनसदायुवामत्तश्च । ततश्चतस्यबहुकालानन्तरमपिवालिनायुद्धंसंभवत्येव । एवमन्यदप्यूह्यम् । सर्वथोपक्रमावगतःक्रमोनबाधितव्यः । दैवासुरे युद्धेसाहाय्यार्थमित्यत्रापिसाहाय्यसमर्थइत्यर्थोबोध्यः । अमृतप्राशिनौअमृतप्राशितुल्यावित्यर्थः । यद्वा । अयं ब्रह्मानुशासनप्रकारःप्राचीनएव प्रसङ्गादद्यकविनोपवर्ण्यते । पुत्रत्वंतुगतेविष्णौ गन्तुंव्यवसितइत्यर्थः । व्यवसायश्च । विष्णोर्ब्रह्मणाविविक्तेप्रार्थनात् । अतएवपूर्वसर्गे " हन्तायंविदितस्तस्यवधोपायोदुरात्मनः " इत्युक्तम् । अतएवामुंवृत्तान्तंसनत्कुमारोविदित्वासुमन्त्रायोवाचेतिबोध्यम् । ब्रह्मप्रार्थनंचरावणस्यमानुषादन्यत्रभयंनास्ति त्वंऋश्यशृङ्गेणयक्ष्यमाणस्यदशरथस्य पुत्रोभवेति । अतएवकृतसंकेततयाविष्णुरुपयातइत्युक्तम् । यद्वा "ततोदेवाःसगन्धर्वा" इत्यादिकात्पूर्वसर्गात्प्रभृतिब्रह्मलोकवृत्तान्तः । तस्मिन्सदसि ब्रह्मसदसीत्यर्थः । अतएवस्वलोकमागच्छेत्युक्तं नतुगच्छेति । तथाचैवंसंगतिः । पुत्रकामेष्टिपर्यन्तमुक्त्वातत्राग्निपुरुषाविर्भावोपोद्घाततत्वेनचिरंतनवृत्तान्तमुपक्षिपति । ततोदेवाइत्यादि । ततइतिप्रस्तावान्तरारंभार्थः । अथ "पितरंरोचयामासतदादशरथंनृपं" इत्यन्तेविष्णुवृत्तान्तेभिहिते । पुत्रत्वंतुगते अभ्युपगते इतिपुत्रत्वाङ्गीकारानन्तरंदेवांशवानरोत्पत्तेर्वक्तव्यत्वेपितंवृत्तान्तं तत्रावस्थाप्य "सकृत्वानिश्चयंविष्णुरामन्त्र्यचपितामहं ॥ अन्तर्धानंगतोदेवैःपूज्यमानोमहर्षिभिः" इत्यादिनाविष्णुवृत्तान्तमेवानुक्रम्यगर्भप्रवेशपर्यन्तमुक्त्वा प्रागवस्थापितंदेववृत्तान्तमेवपुत्रत्वंतुगतइत्यादिनापुनःप्रतिपादयति । एतावद्वृत्तान्तकालस्यदेवमानेनाल्पत्वेपिमनुष्यमानेनबहुवर्षागताःरेवतीवरप्रार्थनावत् । अतोभागग्रहार्थंसमवेत्यब्रह्मसदसिगत्वाकार्यंविज्ञाप्यततोश्वमेधभागान्गृहीत्वागतादेवाइतिसर्वसमञ्जसम् ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणेमणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तदशस्सर्गः ॥ १७ ॥

# अष्टादशः सर्गः ॥ १८ ॥

## श्रीरामावतारघट्टः ।

दशरथेनयज्ञसमापनानन्तरंपूर्वमागतानांराज्ञांप्रेषणपूर्वकंपत्नीभिःसहसपरिवारमयोध्यांप्रत्यागमनं ॥ १ ॥ ततोवत्सरान्ते चैत्रशुक्लनवम्यांकर्कटेकौसल्यायांश्रीरामावतारः ॥ २ ॥ परेद्युर्दशम्यांमीनेकैकेय्यांभरतजननम् ॥ ३ ॥ तस्मिन्नेवदिनेकर्कटे सुमित्रायांलक्ष्मणशत्रुघ्नयोर्जननम् ॥ ४ ॥ ततोदशरथेक्रमेणोपनयनादिभाजामात्मजानांदारक्रियांचिन्तयतिदैवाद्विश्वामित्रेणतत्समीपंप्रत्यागमनम् ॥ ५ ॥ दशरथेनतत्पूजनपूर्वकंतदभीप्सितकरणप्रतिज्ञानम् ॥ ६ ॥

**निर्वृत्ते तु क्रतौ तस्मिन्हयमेधे महात्मनः ॥ प्रति[1]गृह्य सुरा भागान्प्रतिजग्मुर्यथागतम् ॥ १ ॥**
**समाप्तदीक्षानियमः पत्नीगणसमन्वितः ॥ प्रविवेश [2]पुरीं राजा [3]सभृत्यबलवाहनः ॥ २ ॥**
**यथार्हं पूजितास्तेन [4]राज्ञा वै पृथिवीश्वराः ॥ मुदिताः प्रययुर्देशान्प्रणम्य मुनिपुङ्गवम् ॥ ३ ॥**
**श्रीमतां गच्छतां तेषां [5]स्वपुराणि पुरात्ततः ॥ बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४ ॥**
**गतेषु पृथिवीशेषु राजा [6]दशरथस्तदा ॥ प्रविवेश [7]पुरीं श्रीमान्पुरस्कृत्य [8]द्विजोत्तमान् ॥ ५ ॥**
**शान्तया प्रययौ सार्धमृश्यशृङ्गः सुपूजितः ॥ [9]अन्वीयमानो [10]राज्ञाऽथ [11]सानुयात्रेण धीमता ॥ ६ ॥**
**एवं विसृज्य तान्सर्वान्राजा संपूर्णमानसः ॥ उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७ ॥**
**ततो यज्ञे समाप्ते तु ऋतूनां षट् [12]समत्ययुः ॥ ८ ॥**
**ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥ ९ ॥**

"कोसलोनाममुदितःस्फीतोजनपदोमहान्" इत्यारभ्यभगवतोवतारनिमित्तान्युक्तानि । अथावतारंदर्शयत्यष्टादशे—निर्वृत्तेत्वित्यादि । अत्रपुत्रोत्पत्तिंविचिन्तयन्नित्येवमन्तोग्रन्थः "हुताशनादित्यसमानतेजसोचिरेणगर्भान्प्रतिपेदिरेतदा" इत्येतच्छेषोनूद्यते । निर्वृत्ते समाप्ते । हयमेधे पुत्रेष्टिसहितइतिशेषः ॥ १ ॥ दीक्षार्थोनियमोदीक्षानियमः । प्रविवेश प्रवेष्टुमुपचक्रमे । आदिकर्मद्योतकःप्रशब्दः ॥ २ ॥ मुनिपुङ्गवं वसिष्ठं ॥ ३ ॥ शुभ्राणि दशरथदत्तवस्त्रादिभिः ॥ ४ ॥ द्विजोत्तमान् वसिष्ठादीन् ॥ ५ ॥ अथ नगरप्रवेशानन्तरं । सानुयात्रेण सभृत्येन । राज्ञा रोमपादेन । अन्वीयमानः अनुगम्यमानः ॥ ६ ॥ एवं ऋश्यशृङ्गवत् । तान् द्विजोत्तमान् । संपूर्णमानसः संपूर्णमनोरथः ॥ ७ ॥ ततइत्यर्धमेकं ॥ ८ ॥ अथ भगवतः प्रादुर्भावंदर्शयतित्रिभिः—ततश्चेत्यादि । ततः अश्वमेधसमाप्त्यपेक्षया पायसोपयोगाद्वा । सच वैशाखादौ भवेत् । द्वादशे "तस्यपूरणे" इतिडट् । चैत्री पौर्णमास्यस्मिन्नितिचैत्रः । " सास्मिन्पौर्णमासीति " इतिसंज्ञायामण् । चकारोवारसमुच्चयार्थः । नावमिके नवम्यां । विनयादित्वात्स्वार्थेठक् । "तिथयोद्वयोः" इति तिथिशब्दस्यपुँल्लिङ्गस्यापिसंभवात्ङीबभावः । अदितिर्देवतायस्य तददितिदैवतं तस्मात् । देवतान्तात्तादर्थ्येयत्कृच्छान्दसः । नक्षत्रे पुनर्वस्वोरित्यर्थः । "पुनर्वसूनक्षत्रमदितिर्देवता" इतिश्रुतेः । पञ्चसुग्रहेषुस्वोच्चसंस्थेषु सूर्यगुरुशुक्राङ्गारकशनिषु स्वोच्चस्थानस्थितेषुसत्सु । उच्चस्थानलक्षणमुक्तंवराहमिहिरेण "अजवृषभमृगाङ्गनाकुलीराझषवणिजौचदिवाकरादितुङ्गाः" इति । कर्कटे कर्कटाख्ये । लग्ने राश्युदये । "राशीनामुदयोलग्नं" इत्यमरः । वाक्पतौ बृहस्पतौइन्दुनासह । प्रोद्यमाने उदयतिसति । आर्षमात्मनेपदं । अत्रप्रोद्यमानइत्युक्त-

**ति०** मुनिपुङ्गवं वसिष्ठं ऋश्यशृङ्गंच ॥ ३ ॥ **शि०** पुनःप्रवेशोक्त्यापूर्वंपुरींप्रविश्यराजप्रस्थापनार्थंबहिर्निर्गतइतिध्वनितम् ॥ ५ ॥ **ति०** ऋतूनामितिप्रथमार्थेषष्ठी ॥ ८ ॥

**[ पा० ]** १ ङ. झ. ञ. गृह्यामरा. २ ख. ग. पुरं. ३ घ. समृद्धबल. ४ झ. राज्ञाच. ५ ङ—झ. स्वगृहाणि. ६ क. घ—झ. ट. दशरथःपुनः. ७ ग. घ. पुरं. ८ क. ग. घ. च. छ. ज. द्विजोत्तमम्. ९ क. घ. ङ—ञ. अनुगम्यमानो. १० क. ख. घ. ङ. च. छ. झ. राज्ञाच. ११ ज. सानुकूल्येन. १२ ख. समाययुः.

ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ॥ १० ॥

त्वात्पुनर्वसुनक्षत्रस्यकर्कटराशित्वाच्च तत्रेन्दुःस्थितइत्यवगम्यते । कर्कटकस्तुगुरोरुच्चस्थानं इन्दुनावर्तमानो गुरुस्तत्रवर्ततइतिगुरुरुच्चस्थः । चैत्रमासेसूर्यस्यमेषप्रवेशात्सूर्योप्युच्चगतएव । बुधःसदारविसंनिहितोनतदोच्चस्थानस्थः । चन्द्रश्चकर्कटगोनोच्चस्थः । तथाच परिशेषात् मन्दाङ्गारकशुक्रास्तुलामकरमीनसंस्थाइति पञ्चानामुच्चस्थत्वं । नामकीर्तनंविनापञ्चोच्चस्थत्वकीर्तनं तत्फलविशेषप्रतिपादनाय । यथाहुः "एकग्रहोच्चजातस्यसर्वारिष्टविनाशनम् ॥ द्विग्रहोच्चेतुसामन्तस्त्रिग्रहोच्चेमहीपतिः ॥ चतुर्ग्रहोच्चेसम्राट्स्यात्पञ्चोच्चेलोकनायकः" इति । प्रत्येकोच्चफलंचाहुः "सूर्येस्वोच्चगते जातस्सेनापत्यमवाप्नुयात् ॥ भौमेस्वोच्चगतेजातोवने राजाभविष्यति ॥ गुरौस्वोच्चगतेजातोधनीराज्याधिपो भवेत् ॥ शुक्रेस्वोच्चगतेजातोराज्यश्रियमवाप्नुयात् ॥ शनौस्वोच्चगतेजातोराज्याधिपसमोभवेत्" इति । गुरुचन्द्रयोगफलमुक्तंमिहिरेण "दृढसौहृदोविनीतःस्वबन्धुसंमानकृद्धनेशश्च ॥ शशिगुर्वोर्गुणशीलःसुरद्विजेभ्योरतोभवेत्पुरुषः" इति । रविबुधयोगफलंचतेनैवोक्तं "वेदान्तवित्स्थिरधनोरविज्ञयोःप्रायशोयशोर्थीस्यात् ॥ आर्यःक्षितिपतिदयितःसतांचबलरूपविद्यावान्" । चैत्रमासजन्मफलं "चैत्रेमधुरभाषीस्याद्हङ्कारसुखान्वितः" ॥ नवमीजन्मफलं "दीर्घवैरीभुविख्यातो वश्यःशूरश्चपण्डितः ॥ निर्भयःसर्वभूतेभ्यो नवम्यांजायतेनरः" ॥ पुनर्वसुनक्षत्रफलं "सहिष्णुर्गूढवृत्तिश्च श्लेष्मलोनाट्यकोविदः ॥ अगृध्नुरल्पसंतुष्टः शीघ्रगोदितिधिष्ण्यजः" ॥ चतुर्थपादजन्मफलं "कान्तप्रियवपुःश्लक्ष्णःसज्जनःप्रियदर्शनः ॥ लक्ष्मीवान्प्रियवादीचआदित्यान्तेप्रजायते" ॥ उच्चस्थेनबृहस्पतिनासमं चन्द्रस्यस्थितिः कर्कटकएवेति पुनर्वसुचतुर्थपादत्वं सिद्धम् । चैत्रपुनर्वसू शुक्लपक्षएवेतिसिद्धं । कर्कटकलग्नजन्मफलं "कर्कटेलग्नकेचन्द्रयुक्तेदृष्टेचभोगवान् ॥ गुरुणावीक्षितेयुक्तेधनाढ्योबहुभोगवान् ॥" तानिमान्फलविशेषान्सूचयितुंमासतिथ्यादिकीर्तनं । तथैवाह—जगन्नाथमित्यादिना। जगन्नाथमित्यनेन"पञ्चोच्चेलोकनायकः" इत्युक्तंफलंदर्शितं । लग्नस्यगुरुयोगफलमाह—सर्वलोकनमस्कृतमिति । यथाहोराप्रदीपे"कविःसुगीतःप्रियदर्शनःसुखीदाताचभोक्तानृपपूजितःशुचिः ॥ देवद्विजाराधनतत्परोथभवेन्नरोदेवगुरौतनुस्थिते" रामं पश्चाद्रामाख्यं । यद्वा रामं श्यामवर्णं "अथोरामौसावित्रौ" इत्यत्राथश्यामाविति व्याख्यानात् । अनेनकर्कटेकन्यांशेजातइतिव्यज्यते । कन्यायाबुधांशत्वात् । बुधस्यचश्यामत्वात् । शुक्रांशत्वाद्वा । यथाह मिहिरः "रक्तश्यामोभास्करोगौरइन्दुर्नात्युच्चाङ्गोरक्तगौरश्चवक्रः ॥ दूर्वाश्यामोज्ञोगुरुर्गौरगात्रःश्यामःशुक्रोभास्करिःकृष्णदेहः" इति । सर्वलक्षणसंयुतं सर्वलक्षणैः सामुद्रिकोक्तैःपूर्णं । इदंलग्नचन्द्रफलं "पूर्णेशीतकरेलग्नेतेजस्वीनित्यगर्वितः" इतिहोराशास्त्रात् । विष्णोरर्धं विष्णुमयस्यपायसस्यार्धांशपरिणामभूतं । पुत्रं पुन्नाम्नोनरकात्त्रायतइतिपुत्रः तं । पुनस्तंविशेषयति ऐक्ष्वाकवर्धनमिति । ऐक्ष्वाकस्यदशरथस्यवर्धनं । अनेनलग्नस्यसौम्यग्रहयोगफलंदर्शितं । यथा "नरश्चिरायुर्नृपपूजितःसुखीलग्नंभवेत्सौम्ययुतंयथातथा ॥ लग्नेतथास्वामिनिरीक्षितेधनीकुशाग्रबुद्धिःकुलकीर्तिवर्धनः" ॥ महाभागं महाभाग्ययुक्तं । अनेन लग्नचन्द्रकृतोपिदोषोगुरुयोगात्परिह्रियतइतिसूच्यते । यथाहुर्होराप्रदीपे "जन्मकालिकलग्नांशेचन्द्रःकेन्द्रगतोयदि॥ जातस्यविनयोवित्तंज्ञानंबुद्धिश्चनैपुणं ॥ हीनंपणफरस्थेस्मिन्मध्यान्येतानितस्यच ॥ आपोक्लिमस्थचन्द्रश्चेदुत्कृष्टानिभवन्तिहि ॥ स्वांशेधिमित्रस्यनवांशकेवाचन्द्रेतुवाचस्पतिनाचदृष्टे॥ एवंविधेशीतकरेचरात्रौशुक्रेणदृष्टेधनवान्सुखीस्यात् ॥" एवंकेमद्रुमयोगोपिनास्तीत्युच्यते । केमद्रुमोनामचन्द्रलग्नस्योभयपार्श्वेग्रहाभावः । नह्यत्रमिथुनेसिंहेवाकश्चिद्ग्रहोस्ति । तथाहगार्ग्यः "व्ययार्थोभयगश्चन्द्राद्विनाभानुंनचेद्ग्रहः ॥ योगःकेमद्रुमोनामजातःस्यादत्रगर्हितः ॥ संतानबन्धुजनवस्त्रसुहृद्विहीनोदारिद्र्यदैन्यगददुःखमलैरुपेतः ॥ प्रेष्यः खलःसकललोकविरुद्धवृत्तिःकेमद्रुमेभवतिपार्थिववंशजोपि" ॥ एतत्सर्वमासानुभावेनपरिह्रियतइत्युच्यते

ति० । सर्वलोकनमस्कृतं अस्यसर्वलोकरूपश्चासौनमस्कृतश्चतमित्यर्थः । तेनादौप्रादुर्भावसमयेमात्राविराड्रूपस्यदर्शनंततस्तद्रूपदर्शनविस्मयात्तयानमस्कृतस्सन्माययाबालभावंदधाविति सूचितम् ॥ १० ॥

[ पा० ] १ ङ. सर्वेदेव.

कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् ॥ विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकवर्धनम् ॥
[लोहिताक्षं महाबाहुं रक्तोष्ठं दुन्दुभिस्वनम् ] ॥ ११ ॥
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ यथा वरेण देवानामदितिर्वज्रपाणिना ॥ १२ ॥

महाभागशब्देन । यथाहमणिबन्धः "लग्नात्केन्द्रगते- चन्द्रेग्रहैरेकादिभिर्युते ॥ केमद्रुमफलंनस्यात्केचित्केन्द्र- नवांशके" ॥ एवंदोषान्तरपरिहारोपि । यथा "अष्ट- मेशेकलत्रस्थेसुतेशेवाकलत्रगे ॥ मङ्गलेवाकलत्रस्थेभा- र्यानाशंप्रकुर्वते"इति ॥ ९ ॥ १० ॥ ११ ॥ रामावता- रोनकेवलंयज्ञकृतः किंतु कौसल्यातपःकृतइत्याह । कौसल्यातेनशुशुभे । कुतः पुत्रेण पुत्रत्वेनावतीर्णेन । पुत्रत्वेनावतीर्यस्वमनोरथपूरणादितिभावः । अमितते- जसा "सउश्रेयान्भवतिजायमानः" इत्युक्तरीत्या ज- न्मलब्धनिरवधिकतेजसा । यथा अदितिः वज्रपाणि-ना परत्वचिह्नभूतरेखामयवज्रयुक्तपाणितलेन । देवा- नांवरेण उपेन्द्रेण शुशुभे तथा यथापूर्वजन्मन्यदितिर- नुष्ठितव्रतविशेषैर्विष्णुंपुत्रंलब्धवती तथेयमपीत्यर्थः । यद्वा अमिततेजसा जगत्प्रकाशकादित्यस्यकुलस्यापिप्र- काशकेन । "सूर्यस्यापिभवेत्सूर्यः" इतिवत् । "ततो- खिलजगत्पद्मबोधायाच्युतभानुना ॥ देवकीपूर्वस- न्ध्यायामाविर्भूतंमहात्मना" इत्युक्ताच्युतभानोरप्य- तिशयिततेजसा । देवानांवरेण इन्द्रेणवज्रपाणिनेत्यु- भयविशेषणं । वज्रहस्तेन वज्ररेखायुक्तहस्तेनच । अनेनैवसाधारणधर्मेणोपमानोपमेयभावः । यद्वा लौ-

**ति०** विष्णोः शङ्खचक्रानन्तविशिष्टस्यविष्णोरित्यर्थः । अर्धं किंचिन्न्यूनमर्धमित्यर्थः । शङ्खचक्रादेरभावादिति भावः । **शि०** महाभागं महान्इतरभागापेक्षयाधिकः भागः प्रादुर्भावनिमित्तीभूतपायसरूपांशो यस्यसतं । किंच महान्भागोभाग्यंयस्मात्सतं । किंचमहतीं लोकदर्शनयोग्यां भांदीप्तिंगच्छतिप्राप्नोतीतिसतं । किंच महान्तोब्रह्मादयो भागाः प्राप्तप्रकाशायस्मात्सतं । किंचमहती सर्वपूज्या या आभा तांगच्छतिप्राप्नोतीतिसतं । किंचमहतींआभांपरमप्रकाशंआगमयतिआश्रितान्प्रापयतिसतं । किंचमहतीआभा- यस्यसमहाभःसः अगोमणिपर्वतोविहाराधारत्वेनयस्यसतं । किंचमहानांसर्वपूज्यानांब्रह्मादीनांकर्तृभूतानांआभागः अतिशयेनसेवा- यस्मिन्सतं । ऐक्ष्वाककुलवर्धनं ऐक्ष्वाकः इक्ष्वाकुकुलप्रादुर्भूतोदशरथः तस्यकुलंवर्धयतीतिसतं रामं सर्वाभिरामदातारं । विष्णोरर्ध- मित्यनेन योहिविष्णोर्वर्धकःसतत्तुल्यानामन्येषांचवर्धकइतिकिंवक्तव्यमितिकाव्यार्थापत्तिरलङ्कारोध्वनितः । तेनरघुनाथस्याघटितघ- टनापटीयस्त्वंव्यक्तं । सर्वाभिरामदातारमित्यनेनरामएवसर्वहितत्वमितिपरिसङ्ख्यालंकारोध्वनितः । तेन यस्सर्वहितःसस्वाश्रित- हितइतिकिंवक्तव्यमितिकाव्यार्थापत्त्यलंकारोध्वनितः । तेन रघुनाथस्यपरमदयालुतातिशयःसूचितः । तेनसर्वाधीशत्वंव्यक्तं । एतेनविष्णोरर्धंविष्णुमयस्यपायसस्यार्धंअर्धांशपरिणामभूतमितिभूषणोक्तार्थआपाततोरमणीयः । वाक्यार्थस्यलाक्षणिकत्वापत्तेः । सर्वेश्वरेश्वरस्यलीलार्थंस्वयंप्रादुर्भूतस्य ब्रह्मादिप्रार्थितस्यसर्वोत्पत्त्यादिकारणीभूतेच्छावतःउपादानासंभवाच्च । ईश्वरेश्वराणांसोपादान- कत्वेऽनवस्थापत्तेश्चकार्यत्वापत्त्याऽनित्यत्वापत्तेश्च । यत्तुभट्टाः विष्णोःशङ्खचक्रानन्तविशिष्टस्यअर्धंकिंचिन्न्यूनंशङ्खचक्रादेरभावादि- तिभावइति । तदपिनशोभनं । तादृशेऽर्थेविष्णुशब्दस्यसंकेताभावात् । एतदभिप्रायेणैवेममर्थमनूद्यवस्तुतस्त्वित्यादिनापाठकैरर्था- न्तरंवर्णितं । यत्त्वत्रपाठकाः " प्रणवंहीश्वरंविद्यात्सर्वस्यहृदयेस्थितं " इत्यादिश्रुतिभ्यः "गिरामस्म्येकमक्षरं" इत्यादिस्मृतिभ्यश्च वाच्यवाचकयोरभेदाच्चात्रविष्णुशब्देनप्रणवउच्यते । तस्यार्धं अर्धमात्रा तदात्मकंराममित्यर्थः । तथाचाथर्वणश्रुतिः । " अकारा- क्षरसंभूतस्सौमित्रिर्विश्वभावनः । उकाराक्षरसंभूतश्शत्रुघ्नस्तैजसात्मकः । प्राज्ञात्मकस्तुभरतोमकाराक्षरसंभवः । अर्धमात्रात्मको- रामस्सच्चिदानन्दविग्रहः" इति । तदपिनसम्यक् । वाक्यार्थस्यलाक्षणिकत्वापत्तेः । नहिशक्यार्थेनेष्टसिद्धौलक्षणांकश्चिदभ्युपैति । किंचयत्प्रणवावयवभूतस्यमात्रार्धस्यरामपरत्वं नतत्प्रणवस्येश्वरवाचकत्वं । यस्यचाखण्डप्रणवस्येश्वरवाचकत्वं नतदवयवीभूतस्यमा- त्रार्धस्यरामपरत्वमितिलक्षणास्वीकारेपितदभीष्टार्थस्यदुरुपपादत्वात् । एतेनविष्णोश्चतुर्भुजस्यार्धंद्विभुजमित्यर्थंवदन्तोपिप्रत्युक्ताः । लाक्षणिकत्वापत्तेस्तुल्यत्वात् । चतुर्भुजमात्रेविष्णुशब्दस्यसंकेताभावाच्च । अतएवभूमदक्षयज्ञादिप्रादुर्भूतानामष्टभुजादीनांविष्णु- त्वेनव्यवहारस्संगच्छते । तावन्मात्रार्थकत्वेद्विभुजंतंमहाभागमित्यपहायविष्णोरर्धमित्युक्त्यातदभिप्रेतार्थस्यऋष्यभिप्रायविरुद्धत्वाच्च । अर्धशब्दस्यवर्धकपरत्वंनदृष्टमितितुनभ्रमितव्यं । अर्धयतिवर्धयतीत्यर्धइतिव्युत्पत्त्यायौगिकत्वस्वीकारेणवर्धकपरत्वस्यसर्वतन्त्रसि- द्धत्वात् । अतएववृहदारण्यकेपञ्चमेऽध्याये नवमब्राह्मणेकतमोऽध्यर्धइतिप्रश्नेयोऽयंपवतइत्युत्तरम् कथमध्यर्धइतिप्रश्ने यदस्मि- न्निदंसर्वमध्यार्ध्नोत् इत्यादिश्रुतौअर्धशब्दस्यवर्धकपरत्वमितिदिक् । अत्राधिकव्याख्यानदर्शनकाङ्क्षिभिर्विष्णुनासदृशोवीर्ये इत्यत्र द्रष्टव्यम् ॥ ११ ॥

[पा०] १ क—ट. दिव्यलक्षण. २ ट. भागमैक्ष्वाककुलवर्धनम्. ३ ज. पुत्रमैक्ष्वाकनन्दनम्. ग. घ. पुत्रमिक्ष्वाकुनन्दनम्. ४ इदमर्धं ङ. ञ. दृश्यते. ५ च. रक्ताक्षं. ख. रक्तास्यं.

**भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥ साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥ १३ ॥**
**अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ ॥ सर्वास्त्रकुशलौ[1] वीरौ विष्णोरर्धसमन्वितौ ॥ १४ ॥**
**पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥ सार्पे जातौ[2] च सौमित्री कुलीरेऽभ्युदिते रवौ ॥ १५ ॥**

किकानामिन्द्रेश्रेष्ठत्वबुद्ध्यातदनुसारेणोपमा "इषुवद्गच्छतिसविता" इतिवत् । यद्वा दृष्टिदोषपरिहारायहीनोपमापिक्रियते । यद्वा अयंश्लोकःपूर्वशेषतयामात्ररिष्टभङ्गेनतदतिशयावहत्वद्योतनाय । तथाहि मातृकारकश्चन्द्रः सच वार्धिष्णुर्गुरुणायुक्तोमातरमभिवर्धयति ॥१२॥ अथ पायसोपयोगक्रमेणकौसल्यानन्तरकैकेयीप्रसवमाह—भरतइति । साक्षाद्विष्णोः प्रत्यक्षविष्णोः । रामस्य चतुर्भागः चतुर्थांशः । रामस्यविष्णवर्धत्वात् तस्यचतुर्थांशःविष्णोरष्टमांशइत्यर्थः । यद्वा साक्षाद्विष्णोर्वैकुण्ठवासिनश्चतुर्थांशः । चतुर्थस्यांशः अष्टमभागइत्यर्थः । यद्वा साक्षात्प्रत्यक्षभूतइतिसौलभ्यमुच्यते । यद्वा साक्षात् अव्यवधानेनजज्ञे रामादनन्तरंजज्ञइत्यर्थः । सर्वैः रामसंबन्धितयोक्तैः गुणैः समुदितः युक्तः ॥ १३ ॥ अथ भरतजननानन्तरंद्विवचनेनयमलत्वमुच्यते । अर्धसमन्वितौ समन्विताधौं । परनिपातः । अर्धशब्दोंशमात्रवाची । समन्वितचतुर्थभागाष्टमभागरूपौ । "भित्तंशकलखण्डेवापुंस्यर्धोर्धसमेंशके" इत्यमरः । अन्यथा पायसप्रदानक्रमविरोधः । समन्वितशब्देनयुगपदुपयुक्तत्वमुच्यते ॥ १४ ॥ त्रयाणांजन्मकालमाह—पुष्यइति । पुष्ये पुष्ययुक्तेतिथौ । "नक्षत्रेणयुक्तःकालः" इति विहितस्याणूप्रत्ययस्य "लुबविशेषे" इतिलुप् । मीनस्यगुरुक्षेत्रत्वात्तज्जन्मफल-

**शि०** सत्यपराक्रमः सत्याअयोध्याराजधानीअस्येतिसत्योरामः तस्यैवपराक्रमोयस्य तस्मादेवपराक्रमोयस्येतिवा सएवपराक्रमोयस्येतिवा रघुनाथाज्ञाकारीत्यर्थः । किंच सत्यःकापट्यरहितः पराक्रमोयस्यसः । साक्षाद्विष्णोर्वैकुण्ठेशस्यचतुर्भागः चत्वारोभागायस्मिन् सर्वांशइत्यर्थः । अतएवविष्णोस्तदवस्थापन्नस्यसर्वैर्गुणैस्समुदितः । यदिच विष्णोरित्यत्रषष्ठी "राहोश्शिरः" इतिवत् तर्हिसर्वैर्गुणैस्समुदितः चतुर्भागः साक्षाद्विष्णुरेवेत्यर्थः । विष्णोरित्युभयान्वयि । अत्रार्थेप्रमाणं "वैकुण्ठेशस्तुभरतः क्षीराब्धीशश्चलक्ष्मणः । शत्रुघ्नस्तुस्वयंभूमारामसेवार्थमागताः" इतिनारदपञ्चरात्रवचनं ॥ १३ ॥ **वि०** अथ भरतजन्मानन्तरं विष्णोरोङ्कारस्य अर्धौ अर्धांशौ अकारोकारौविश्वतैजसौविराड्हिरण्यगर्भौ ताभ्यांसमन्वितौ तदात्मकावितियावत् । सर्वास्त्रकुशलौ लक्ष्मणशत्रुघ्नौसुतौसुमित्राअजनयदित्यन्वयः । उक्तंचाथर्वणवेदेश्रीरामोत्तरतापनीयेप्रणवव्याख्यायां । तथैतेश्लोकाभवन्ति "अकाराक्षरसंभूतस्सौमित्रिर्विश्वभावनः । उकाराक्षरसंभूतश्शत्रुघ्नस्तैजसात्मकः । प्राज्ञात्मकस्तुभरतोमकाराक्षरसंभवः । अर्धमात्रात्मकोरामोब्रह्मानन्दैकविग्रहः" इति । प्रजापतिप्रेषितपायसंतुनित्यसिद्धचिदानन्दविग्रहेनोपादानभावमर्हति । अपितुभगवदाविर्भावसूचनेनदशरथमनुगृह्णाति । अपिच "लोकवत्तुलीलाकैवल्यं" इतिन्यायानुगृहीतश्रुतिपुराणेतिहासादौश्रीरामकथाप्रसिद्धैव । श्रुतौतावात् "पूर्वापरंचरतोमाययैतौशिशूक्रीडन्तौपरियातोअध्वरम् । विश्वान्यन्योभुवनाऽभिचष्टऋतूनन्योविदधज्जायतेपुनः" इति । एतौ श्रीरामलक्ष्मणौ वस्तुतःपुराणपुरुषावेव मायया मायाभिधस्वशक्त्या शिशू दशरथराजकुमारौभूत्वा अध्वरं विश्वामित्रस्ययज्ञं अनेकरक्षोविक्षिप्तं परियातः प्राप्तौ रक्षणायेत्यर्थः । कथंभूतौ । क्रीडन्तौ ताटकासुबाह्वादिवधप्रमुखक्रीडासक्तौ । पुनःकथंभूतौ । पूर्वापरंचरतः अग्रजत्वमनुजत्वंप्राप्तावित्यर्थः । तयोर्मध्येअन्यः एकः श्रीरामः विश्वानि सर्वाणि भुवना भुवनानि अभिचष्टे प्रकाशयति । स्वाध्यस्तविश्वप्रकाशहेतुरित्यर्थः । अन्यः लक्ष्मणः ऋतूनूविदधत् पुनर्जायते । अयमर्थः । लक्ष्मणस्यशेषावतारत्वात्शेषस्यचकालात्मकत्वस्य "योयंकालोमयाख्यातस्सोनन्तः—" इतिपुराणादवगतेः । कालस्यचाखण्डदण्डायमानस्यवसन्तप्रमुखर्तुकारणत्वात्ऋतून्विदधदित्युक्तं । पुनरिति पुनःपुनरित्यर्थः । यदायदाश्रीरामोजायतेतदातदाशेषात्मा लक्ष्मणोपिजायतइति । अथविष्णुरेवकौसल्यायांश्रीरामरूपेणावतीर्णोगुणैरधिकंविरुरुचेइत्याहश्रुतिः । "नवोनवोभवतिजायमानोऽह्नांकेतुरुषसामेत्यग्रं । भागंदेवेभ्योविदधात्यायन्प्रचन्द्रमास्तिरतेदीर्घमायुः" इति । सआदिनारायणः श्रीरामरूपेणजायमानः नवोनवोभवति सुन्दरतयाप्रतिक्षणंनवप्रेक्षणीयोभवतीत्यर्थः । कुतइत्यतआह—चन्द्रमाइति । चन्द्रशब्दाभिलप्य इत्यर्थः । रामेचन्द्रेतिव्यपदेशोहिश्रीरामेप्रेक्षणीयतमत्वमेवाहेतिभावः । कथंभूतः । अह्नां दिनानां केतुः विशेषकः । यानिदिनानिश्रीरघुनाथोपासनयोपयान्तितानिविशिष्टानीतिभावः । यश्चश्रीरामः उषसामग्रं प्रातःकालानामग्रे ब्राह्ममुहूर्ते एति चिन्तनीयत्वेनप्राप्नोतीत्यर्थः । तदाश्रीरामस्मृतेर्बहुशोविहितत्वादितिभावः । यश्चजायमानोदेवेभ्योभागं यज्ञभागं विदधाति रावणादिकृतप्रतिबन्धशून्यंकरोतीत्यर्थः । यश्च आयन् स्मृतिमागच्छन् स्वभक्तानांदीर्घमायुरित्युपलक्षणं । संपदः प्रतिरते ददातीत्यर्थः । एवंपुराणादिषुद्रष्टव्यं । "रामतत्त्वंविजानातिहनुमानथलक्ष्मणः । तद्विमर्शेतुकाशक्तिरितरस्यचकस्यचित्" इति ॥ १४ ॥

[ पा० ] १ घ. सर्वार्थकुशलौ. २ ख. घ. ङ. झ. जातौतु.

**राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ॥ गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ॥ १६ ॥**
**जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च[1] खाच्च्युता[2] ॥ १७ ॥**
**उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १८ ॥**
**रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः ॥ गायनैश्च[3] विराविण्यो वादनैश्च[4] तथाऽपरैः ॥**
**[विरेजुर्विपुलास्तत्र सर्वरत्नसमन्विताः][5] ॥ १९ ॥**
**प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ॥ ब्राह्मणेभ्यो ददौ वित्तं गोधनानि[6] सहस्रशः ॥ २० ॥**
**अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ॥ २१ ॥**
**ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥ सौमित्रिं लक्ष्मण इति शत्रुघ्नमपरं तथा ॥ २२ ॥**

माह—प्रसन्नधीरिति । सार्पे सर्पदेवताकेनक्षत्रे । "आश्लेषानक्षत्रंसर्पादेवता" इतिश्रुतिः । सुमित्रायाःपुत्रौ सौमित्री । बाह्वादित्वादिञ् । कुलीरेकर्कटके । रवौ अभ्युदिते । भरतजननस्योदयात्पूर्वत्वज्ञापनायात्रोदितइत्युक्तं । अन्यथा चैत्रकर्कटकस्यमध्याह्नकालिकत्वेनविरोधात् । यद्वा उदिते प्रवृद्धे मध्याह्नकालइत्यर्थः । "पञ्चोच्चत्वंगुरुचन्द्रयोगः" इत्यादि सर्वत्रसमानं । रामस्यपुनर्वसूनक्षत्रं तिथिर्नवमी । भरतस्यपुष्यनक्षत्रंदशमी । सौमित्र्योश्चदशमीआश्लेषा तारेतिविशेषः ॥ १५ ॥ एकत्वेपिपृथग्वर्तमानाः । एकस्यचतुर्धावस्थानेउपमानमाह—प्रोष्ठेति । प्रोष्ठोगौः तस्येवपादायासांताःप्रोष्ठपदाः "सुप्रात—" इत्यादिसूत्रेअच्प्रत्ययान्तोनिपातितः । रुच्या कान्त्या । प्रोष्ठपदोपमाः । राज्ञोनुरूपाश्चत्वारःपुत्राजज्ञिरे । यज्ञफलंनिर्वृत्तमितिभावः । पृथग्गुणवन्तइतिवा । प्रत्येकमनन्यसाधारणगुणवन्तइत्यर्थः । रामस्यसामान्यधर्मरुचिः लक्ष्मणस्यशेषत्वज्ञानं भरतस्यभगवत्पारतन्त्र्यधीः शत्रुघ्नस्यभागवतपारतन्त्र्यमिति परस्परविलक्षणगुणवन्तइत्यर्थः ॥ १६ ॥ जननकालिकशुभनिमित्तानिदर्शयति—जगुरिति । कलं अव्यक्तमधुरंयथा भवतितथा जगुः । खात् आकाशात् ॥ १७ ॥ अथजातकर्मोत्सवमाह—उत्सवश्चेति । अयोध्यायामित्यनेनप्रतिगृहमुत्सवोभूदित्युच्यते । जनाकुलः आकुलजनः । इदमर्धमेकम् ॥ १८ ॥ गायनैः गायकैः । वादनैः वाद्यशिल्पैः । अपरैः सूतमागधबन्दिभिश्च । विराविण्यः शब्दवत्यः । रथ्याआसन् ॥ १९ ॥ अथदानसमृद्धिमाह—प्रदेयानिति । प्रदेयान् पारितोषिकान् । सूतमागधबन्दिनामितिशेषषष्ठी । सूताःपौराणिकाः । मागधाः वंशावलिकीर्तकाः । बन्दिनः स्तुतिपाठकाः । सूतादीनांप्रदेयान्ददावित्यन्वयः । गोधनानि गोरूपधनानि । सहस्रशः सहस्राणि ॥ २० ॥ अर्धमेकं । लक्ष्मणजन्मदिनापेक्षयाएकादशाहत्वं । रामजन्मदिनापेक्षया द्वादशदिनंतत् । तदत्ययेप्रथमसूतकेनैवनिवृत्तेनसर्वसूतकनिवृत्तेर्द्वादशाहेनामकरणवचनमुपपन्नमेव । अन्यथा क्षत्रियस्यद्वादशाहंसूतकमितिस्मृतिः । त्रयोदशेराज्ञांनामकरणमितिस्मृतिश्चविरुध्येत । नामकर्म नामकरणं । तथा जातकर्मवत् । इत्युत्सवातिशयोतिदिश्यते ॥ २१ ॥ कस्यकिंनामाक-

**ति०** प्रोष्ठपदोपमाः प्रोष्ठपदेतिपूर्वाभाद्रपदोत्तराभाद्रपदयोर्नाम । तयोश्चप्रत्येकंद्वेद्वेतारेइतिज्योतिश्शास्त्रप्रसिद्धं । तैत्तरीयश्रुतिरपि "चत्वारएकमभिकर्मदेवाः प्रोष्ठपदासइतियांवदन्ति" इति । तदुपमाइत्यर्थः । **शि०** प्रोष्ठपदोपमाः प्रोष्ठोगौः तस्यपदेखुरौ उपमायेषांते द्वौद्वौमिलित्वास्थिताबभूवुरित्यर्थः ॥ १६ ॥ **ति०** पतदित्यत्रअडभावश्छान्दसः ॥ १७ ॥ **ति०** एकादशाहशब्दः सूतकान्तोपलक्षणं । अन्यथा "क्षत्रियस्यद्वादशाहंसूतकं" इतिस्मृतिविरोधस्स्यात् । तथाचरामजन्मतस्त्रयोदशेदिनेनामकरणमकरोदित्यर्थः । **शि०** एकादशअहानियस्मिन्दिनसमूहेसतं । किंच एकश्चैकश्चैकौतौचदशचएकादश तेषांसंख्यापूरकमेकादशं । तदेवाहः द्वादशदिनानीत्यर्थः । अतीत्यातिक्रम्यत्रयोदशदिनइत्यर्थः । नामकर्माकरोत् । राजेतिशेषः । किंचवसिष्ठोराज्ञाऽकारयदित्यर्थः । अन्तर्भावितणिजर्थः । एकादशाहमित्यत्र प्रथमपक्षे "अच्प्रत्यन्वव" इत्यत्र अजितियोगविभागादच् । अतएव "क्षत्रियस्यद्वादशाहंसूतकं त्रयोदशेराज्ञोनामकरणं" इत्यादिस्मृतयोनुकूलाः । राजेतिशेषादेव "द्वादशेऽहनि जातस्यपितानामकुर्यात्" इति स्मृत्यानविरोधः । क्षत्रियस्य नामकरणे नाधिकारइत्युक्तौतुमूलंमृग्यं ॥ २१ ॥

**[ पा० ]** १ वृष्टिर्दिवच्युता. २ ङ. च. छ. झ. ञ. खात्पतत्. ३ घ. ज. ट. गायकैश्च. ४ घ. वादित्रैश्च. ख. ग. ज. वादकैश्च. क. वाद्यकैश्च. ५ इदमर्धं ङ. च. छ. झ. ञ. ट. दृश्यते. ६ ज. गोदानानि.

वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ २३ ॥
ब्राह्मणान्भोजयामास पौरजानपदानपि ॥ अददद्ब्राह्मणानां च रत्नौघममितं बहु ॥ २४ ॥
तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ॥ २५ ॥
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥ बभूव भूयो भूतानां स्वयंभूरिव संमतः ॥ २६ ॥
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ॥ सर्वे ज्ञानोपपन्नाश्च सर्वे समुदिता गुणैः ॥ २७ ॥
तेषामपि महातेजा रामः सत्यपराक्रमः ॥ इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥ २८ ॥
गजस्कन्धेऽश्वपृष्ठे च रथचर्यासुसंमतः ॥ धनुर्वेदे च निरतः पितुः शुश्रूषणे रतः ॥ २९ ॥
बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ॥ रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥३०॥

रोदित्यत्राह—ज्येष्ठमिति । रामं रामनामानं । रमन्ते सर्वेजनाः गुणैरस्मिन्निति व्युत्पत्त्येतिभावः । महात्मानं महास्वभावं । निरवधिकगुणमितियावत् । अनेन रामपदप्रवृत्तिनिमित्तमुक्तं । राजाज्येष्ठपुत्रंरामनामानमकरोत् । कैकयीसुतंभरतनामानमकरोत् । "भरतइति राज्यस्यभरणात्" इति सहस्रानीकोक्तरीत्या राजनिमृतेरामेचवनंगते अराजकाराज्यभरणादितिभावः । एवंसौमित्रिं सुमित्रापुत्रं । लक्ष्मणइति नामयुक्तमकरोत् । रामकैङ्कर्यलक्षणसंपद्युक्तत्वाल्लक्ष्मणः । "लक्ष्म्याअच्च"इति पामादिपाठादिकारस्याकारः । मत्वर्थीयोनः । अतएव "लक्ष्मणोलक्ष्मिसंपन्नः" इतिवक्ष्यति । अपरंसौमित्रिं शत्रुघ्नं शत्रुघ्ननामानमकरोत् । शत्रून्हन्तीतिशत्रुघ्नः ॥ २२ ॥ ननु क्षत्रियस्यनामकरणेऽनधिकारात् पुरोहितकर्तृकत्वस्मरणात्कथंदशरथस्यनामकर्मकर्तृत्वमित्याशङ्क्य पुरोहितद्वाराकर्तृत्वमित्यभिप्रेत्याह—वसिष्ठइति । तदा द्वादशेऽह्नि । अतएवाकारयदितिवक्ष्यति ॥२३॥ नामादिनान्दीकरणमितिनियमात् नामकर्मणिनान्दीकरणमाह—ब्राह्मणानिति । पौरेत्यादि ब्राह्मणविशेषणं । राज्ञेतिशेषः । ब्राह्मणानामितिसंबन्धसामान्येषष्ठी । अमितंअसङ्ख्येयं । बहु बहुप्रकारम् ॥२४॥ उक्तानुवादपूर्वकमितरसंस्कारकरणंदर्शयति—तेषामिति । अर्धं । आदिशब्देनान्नप्राशनचौलोपनयनादीनिगृह्यन्ते ॥ २५॥ उक्तंरामस्यमहात्म्यमुपपादयति—तेषामिति । तेषांसुतानांमध्येवयसाज्येष्ठः केतुरिव ध्वजइव निजकुलप्रकाशकः पितुर्भूयो रतिकरः संतोषकरः भूतानांस्वयंभूरिवसंमतः नित्यप्रेमास्पदं बभूव ॥२६॥ उपनीतानांतेषांवेदाध्ययनादिकमाह—सर्वइति । वेदविदः अधीतवेदाः । विद्लृलाभइत्यस्मात्क्विप् । शूराइत्यनेनाधीतधनुर्वेदत्वमुच्यते । लोकहितेरताइत्यनेन धनुर्वेदाभ्यासकार्यपरत्वं । वेदार्थज्ञानसिद्धिमाह—ज्ञानेति । ज्ञानकार्यगुणसंपत्तिमाह—समुदितागुणैरिति । गुणैर्दयादिभिः । आसन्नितिशेषः ॥२७॥ अथप्रत्येकमसाधारणान्गुणान्वक्तुमादौरामगुणानाह—तेषामिति । अपिशब्देनान्येषांरघुवंश्यानामपिमध्यइत्यर्थः । महातेजाः महाप्रतापः । सत्यपराक्रमः अमोघवीर्यः । निर्मलश्शशाङ्कइव सर्वलोकस्य इष्टः सर्वदादर्शनीयः अभवदितिशेषः ॥२८॥ अत्ररामइत्यनुषज्यते । गजस्कन्धेस्थित्वातत्प्रेरणसंमतःरामइवगजस्कन्धारोहणादौनकोपिसमर्थइतिगजसादिभिःश्लाघितइत्यर्थः । एवमुत्तरत्रापियोज्यम् ॥२९॥ अथलक्ष्मणगुणविशेषानाह—बाल्यादित्यादिभिश्चतुर्भिः । लक्ष्मींवर्धयतीतिलक्ष्मिवर्धनः । ङ्यापोःसंज्ञाछन्दसोर्बहुलं" इतिह्रस्वः । कैङ्कर्यसंपद्वर्धकोलक्ष्मणो रामस्यबाल्यात्प्रभृति बाल्यमारभ्य । प्रभृतियोगेपिपञ्चमीप्रयुज्यते । सुस्निग्धः

**ति०** नामानिकुरुते नामकरणमकारयदित्यर्थः । वर्तमानसामीप्येलट् । अन्तर्भावितण्यर्थताच । यत्तुकतकेन राज्ञोनामकरणादावनधिकारइत्युक्तं अकरोदित्यत्रच पुरोहितद्वारेतिशेषपूरणंकृतं तत्रमानंचिन्त्यम् । **शि०** वसिष्ठः नामानितथाइतिकुरुते योग्यानीमानि इत्यवदत् ॥ २३ ॥ **ति०** भोजयामास राजाज्ञयेतिशेषः ॥ २४ ॥ **ति०** अकारयत् वसिष्ठोराज्ञेतिशेषः ॥ २५ ॥ **ति०** गुणकथनेपौनरुक्त्यंदार्ढ्याय ॥ २८ ॥

[ **पा०** ] १ घ.—छ. झ. ञ. ट. कुरुतेतदा. २ क. ख. घ.—छ. ञ. ट. अददात् ज. संददौ. ग. अदाच्चब्राह्मणानांतु. ३ ङ. झ. ममलं. ४ क. झ. कार्याण्यकारयत्. ५ ख. ब्रह्मविदः. ६ ट. पौरहिते. ७ ग.—छ. झ. ञ. ज्ञानोपसंपन्नाः. ८ ट. सुधांशुरिव. ९ ख. ग. घ. पितृशुश्रूषणे.

सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ॥ लक्ष्मणो लक्ष्मिसंपन्नो बहिःप्राण इवापरः ॥ ३१ ॥
न च तेन विना निद्रां लभते पुरुषोत्तमः ॥ मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥ ३२ ॥
यदा हि हयमारूढो मृगयां याति राघवः ॥ तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥ ३३ ॥
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ॥ प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥३४॥
स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ॥ बभूव परमप्रीतो देवैरिव पितामहः ॥ ३५ ॥
ते यदा ज्ञानसंपन्नाः सर्वे समुदिता गुणैः ॥ ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ॥३६॥
तेषामेवंप्रभावानां सर्वेषां दीप्ततेजसाम् ॥ पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ॥ ३७ ॥
ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ॥ पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ॥ ३८ ॥
अथ राजा दशरथस्तेषां दारक्रियां प्रति ॥ चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥३९॥

सुतरांस्निग्धः। अङ्कुरात्प्रभृतिपरिमलेनैवोत्पन्नस्तुलसीकाण्डइवजन्मनःप्रभृतिनिरवधिकभक्तिसंपन्नः । यद्वा सुस्निग्धः रामपर्यङ्केणस्वपर्यङ्कायोजनेबाल्येपिननिद्रातीत्यर्थः। अनेनस्वरूपप्रयुक्तत्वंदास्यस्योक्तं। अथगुणकृतत्वमाह। लोकरामस्य लोकान्रमयतीतिलोकरामः। ण्यन्तात्कर्मण्यण् "गुणैर्दास्यमुपागतः" इत्यन्यत्रोक्तं । तस्य भ्रातुःज्येष्ठस्येत्यनेनजन्मकृतदास्यमुक्तं। नित्यशः नित्यं। सुस्निग्धइत्यन्वयः ॥३०॥ शरीरतइत्युपलक्षणं त्रिविधकरणैरपि। रामस्यसर्वप्रियकरः। यद्वा स्वशरीरादपिरामस्यप्रियकरः। स्वशरीरमुपेक्ष्यापिप्रियकरइत्यर्थः। यद्वा शरीरतोबहिःस्थितः अपरःप्राणइवस्थितः।यद्वा शरीरतः रामशरीरस्य। सार्वविभक्तिकस्तसिरित्युक्तेः। लक्ष्मणस्यदक्षिणबाहुत्वाद्रामसर्वावयवानांसर्वप्रियकरइत्यर्थः। "रामस्यदक्षिणोबाहुर्नित्यंप्राणोबहिश्चरः" इतिवक्ष्यमाणत्वात्। अस्मिन्पक्षे अपिशब्देनरामस्यस्वविषयप्रियकरत्वंसमुच्चीयते । लक्ष्मिसंपन्नइत्यनेनलक्ष्मणशब्दार्थउक्तः॥ ३१ ॥ रामस्यलक्ष्मणेऽनुरागंदर्शयति—नचेति। तेनविना। "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" इतितृतीया। निद्रांनलभते प्राणंविनाकथंनिद्रांलभेतेत्यर्थः। किंचकौसल्ययानीतंमृष्टान्नंतंविनानाश्नाति। दक्षिणबाहुंविनाकथमश्नातीतिभावः। पुरुषोत्तमः प्रेमशालिविषयेसर्वात्मनाविश्लेषासहइत्यर्थः। "क्षणेपितेयद्विरहोतिदुःसहः" इतिह्युक्तम् ॥ ३२ ॥ राघवोरामःयदाहयमारूढःसन् मृगयां आखेटमुद्दिश्ययाति। तदा तदानीमेव। एनं रामं। सधनुःसन्पालयन्। अस्थानेभयशङ्कितयापृष्ठतः वेगवद्धयसमीपएव । अभ्येति । हिःप्रसिद्धौ ॥ ३३ ॥ अथभरतशत्रुघ्नयोःपरस्परानुरागंदर्शयति—भरतस्यापीति। हि यस्मात् सशत्रुघ्नोलक्ष्मणावरजः। तस्मात्ततुल्यप्रकृतिकत्वात् भरतस्यापि प्राणैः प्राणेभ्योपि। प्रियतरआसीत्। तस्य शत्रुघ्नस्यच। भरतः तथाप्रियआसीत् ॥३४॥ दशरथस्यस्वाराधकस्यमनोरथपरिपूरणमेतदवतारस्यप्रथमप्रयोजनं । तन्निर्वृत्तिमाह—सइतिसदेवैश्चतुर्भिर्दिक्पालैः ॥३५॥ पूर्वलाभकृतप्रीतिरुक्ता अथतेषांज्ञानादिसंपत्तिकृतप्रीतिविशेषमाह—तइति। श्लोकद्वयमेकान्वयम्। यदा यस्मिन्वयसि। ज्ञानं शास्त्रज्ञानं। ह्रीमन्तः प्रमादात्प्राप्ताकृत्यचिन्तासुलज्जावन्तः। कीर्तिमन्तः ज्ञानकृतप्रथावन्तः। सर्वज्ञाः सकललौकिकप्रज्ञावन्तः। दीर्घदर्शिनः नित्यभाविज्ञानवन्तः। आसन्निति शेषः। तदातेषांपिताहृष्टोबभूव ॥ ३६ ॥ ३७ ॥ पितृप्रीतिंदृष्ट्वापुनरपिविद्यारतास्तेआसन्नित्याह—तेचापीति। तेचापि पित्रुपलालिताअपि । वैदिकानां वेदसंबन्धिनांस्मृतीतिहासपुराणन्यायादीनामध्ययनेरताः निरताः ॥३८॥ अथैषांसमावर्तनोचितकालप्राप्तिंदर्शयति—अथेति । दारविषयिणीक्रियादारक्रिया। विवाहइत्यर्थः। चिन्त-

**शि०** बहिःप्राणइवापरइत्यभूतोपमालंकारेणलक्ष्मणसदृशोरामस्यप्रियोलक्ष्मणएवेत्यनन्वयालंकारोध्वनितः । तेनरामप्रसादाकाङ्क्षिभिर्लक्ष्मणोऽवश्यमाश्रयणीयइतिवस्तुव्यक्तं ॥ ३१ ॥ **ति०** देवैः चतुर्भिर्दिक्पालैः । यद्वा वसुरुद्रादित्यविश्वेदेवैः ॥ ३५ ॥ **ति०** दारक्रिया विवाहः "कुमारस्यविशालाक्षंपाण्डुतांमुखमाददे । कपोलतलसंलीनपाणिःपद्मासनस्थितः" इत्यादियोगवासिष्ठो-

[ **पा०** ] १ ख. नित्यंप्राणाबहिश्चराः. २ ख. घ. च. ञ. अथैनं. ३ ख. णावरजोपि. ४. ३४ तमश्लोकानन्तरं सचतुर्भिरितिश्लोकात्पूर्वं ख. पाठे एकःश्लोकोऽधिकोदृश्यते. सच—शत्रुघ्नोनुगतःश्रीमान्पुरस्ताद्भरतोऽभवत् । नित्यंसर्वेऽनुरक्ताश्चपितरंतोषयन्तिते. ५ घ. ज. श्रीमन्तः.

तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ॥ [१]अभ्यागच्छन्महातेजा विश्वामित्रो [२]महामुनिः ॥४०॥
स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ॥ शीघ्रमाख्यात मां प्राप्तं कौशिकं [३]गाधिनन्दनम् ॥४१॥
तच्छ्रुत्वा वचनं [४]तस्य [५]राज्ञो वेश्म प्रदुद्रुवुः ॥ संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥ ४२ ॥
ते गत्वा राजभवनं विश्वामित्रमृषिं [६]तदा ॥ प्राप्तमावेदयामा[७]सुर्नृपायैक्ष्वाकवे तदा ॥ ४३ ॥
तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः ॥ प्रत्युज्जगाम [८]तं हृष्टो ब्रह्माणमिव वासवः ॥ ४४ ॥
[९]तं दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ॥ प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ॥ ४५ ॥
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ॥ कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥ ४६ ॥
[१०]पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ॥ ४७ ॥
अपि ते सन्नताः सर्वे [११]सामन्ता रिपवो जिताः ॥ दैवं च मानुषं [१२]चापि कर्म ते साध्वनुष्ठितम् ॥ ४८ ॥
वसिष्ठं च समागम्य कुशलं [१३]मुनिपुङ्गवः ॥ [१४]ऋषींश्चान्यान्यथान्यायं महा[१५]भागानुवाच ह ॥ ४९ ॥
ते सर्वे हृष्ट[१६]मनसस्तस्य राज्ञो निवेशनम् ॥ विविशुः [१७]पूजितास्तत्र निषेदुश्च यथार्हतः ॥ ५० ॥
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥ उवाच परमोदारो [१८]हृष्टस्तमभिपूजयन् ॥ ५१ ॥

---

यामासतुल्यशीलवयोवृत्ताभिजनलक्षणकन्यान्वेषणंकृतवान् । अयमर्थोधर्मात्मेत्यनेनावगम्यते ॥ ३९ ॥ इयताप्रबन्धेनभगवदवतारोदर्शितः । अथभगवदवतारप्रयोजनानिसाधुपरित्राणदुष्कृद्विनाशनधर्मस्थापनानिदर्शयत्याशास्त्रसमाप्तेः । तत्रसाधुपरित्राणंप्रधानं । कर्षकस्यसस्यवृद्धिरिव दुष्कृद्विनाशस्त्वानुषङ्गिकः । सस्यप्रतिबन्धकतृणोन्मूलनवत् । अतोदुष्कृद्विनाशनान्तरीयकंसाधुपरित्राणंवक्तुमुपक्रमतेविश्वामित्रवृत्तान्तेन । अर्थाद्धर्मसंस्थापनमपिसिध्यतीतिबोध्यम् । चिन्तयमानस्य चिन्तयमाने । स्वयंतत्कार्यसमर्थोपिरामवैभवप्रकटनायतदागमनमितिसूचयति—महातेजाइति ॥४०॥ कौशिकं कुशिकगोत्रजं ॥ ४१ ॥ तेनवाक्येनचोदितास्तच्छ्रुत्वावेश्मप्रतिप्रदुद्रुवुः ॥४२॥ ऐक्ष्वाकवे इक्ष्वाकुवंश्याय । क्रियाग्रहणंकर्तव्यमितिसंप्रदानत्वं । अभ्यागतविलंबासहिष्णवइतिभावः ॥ ४३ ॥ सपुरोधाः पुरोहितसहितः । ब्रह्माणं चतुर्मुखं ॥ ४४ ॥ ज्वलितं । अकर्मकत्वात् "गत्यर्थाकर्मक–" इतिकर्तरि क्तः । संशितव्रतं तीक्ष्णनियमं । अर्घ्यं पूजार्थोदकं । उपहारयत् वसिष्ठेनेतिशेषः । अडभावआर्षः ॥४५॥ शास्त्रदृष्टेनकर्मणा समर्पितमितिशेषः । कुशलं अपूर्वार्थप्राप्तिं । अव्ययं तस्याक्षयं ॥ ४६ ॥ कुशलं अनुपद्रवम् ॥ ४७ ॥ दैवं यज्ञादिकं । मानुषं अतिथिसत्कारादिकम् ॥ ४८ ॥ समागम्य समीपंगत्वा । ऋषीन् वामदेवादीन् । यथान्यायं यथाक्रमम् ॥ ४९ ॥ निवेशनं सभां । पूजिताः विश्वामित्रेणेतिशेषः । यथार्हतः यथान्यायं । प्र*थमार्थेतसिः ॥ ५० ॥ हृष्टः पुलकरीत्यासंसारासारत्वदर्शनेन

---

जातानांमुखपाण्डुतादीनांकामकृतत्वसंभावनयाविवाहक्रियाचिन्तनमितिबोध्यं ॥ ३९ ॥ **ति०** विलंबेशापत्रासात् द्वाराध्यक्षाः राजवेश्मत्वरयाप्रविविशुः ॥ ४२ ॥ इक्ष्वाकवे तद्वंशजत्वात्ताच्छब्द्यं ॥ ४३ ॥ **ति०** ब्रह्माणं बृहस्पतिं । "बृहस्पतिर्देवानांब्रह्मा" इतिश्रुतेः ॥ ४४ ॥ **ति०** कुशलपदमनामयोपलक्षणं । "क्षत्रबन्धुमनामयं" इतिस्मृतेः । अव्ययं वृद्धिं ॥ ४६ ॥ **ती०** मानुषंकर्म सामदानभेदादिकंगजबन्धनादिकंच ॥ ४८ ॥ **ति०** राज्ञःप्रेरिताघ्यर्दातृत्वेनप्रथमतोराज्ञेऽनामयादिपृष्ट्वाततोवसिष्ठेनसमागम्यालिङ्गनादिकृत्वा । कुशलमित्यस्यपप्रच्छेतिशेषः । अनेन राजपुरोहितत्वकृतः पूर्वस्पर्धयेषदपमानोवसिष्ठस्यविश्वामित्रकृतस्सूचितः । "वसिष्ठश्चसमागम्यप्रहसन्मुनिपुङ्गवः । यथार्हंपूजयित्वैनंपप्रच्छकुशलंतदा" इति क्वचित्पाठः । तत्रपूर्वंमांस्पर्धमानोपिमद्राजसंनिधावागतइतिहासः ॥ ४९ ॥ **वि०** पूजिताइत्यस्यराज्ञेतिशेषः ॥ ५० ॥

**[पा०]** १ ग. घ. ज. ट. अभ्यगच्छन्महा. २ घ. महामनाः. ज. महाद्युतिः. ३ ख. ग. ङ—ञ. गाधिनःसुतम्. ४ ख. ग. छ. ज. ञ. त्रासाद्राजवेश्म. ५ च. ज. राजवेश्म. ६ ट. तथा. ७ ङ. झ. ञ. ट. नृपायेक्ष्वाकवे. ८ ख. घ. ङ. च. ज. झ. ञ. ट. संहृष्टो. ९ ख. ग. ङ. झ. ञ. सदृष्ट्वा. छ. सदृष्ट्वात्वरितं. १० ज. पुरेजनपदेलोके. ११ झ. सामन्तरिपवो. १२ ङ. च. झ. चैव. १३ ञ. मुनिपुङ्गवम्. १४ ङ.—ट. ऋषींश्चतान्यथा. १५ ङ. झ. भागउवाच. १६ घ. मनसस्ततो. १७ ङ. च. ञ. पूजितास्तेन. १८ घ. हृष्टःसमभि.

यथाऽमृतस्य संप्राप्तिर्यथा वर्षमनूदके ॥ यथा सदृशदारेषु पुत्रजन्माप्रजस्य च ॥ ५२ ॥
प्रनष्टस्य यथा लाभो यथा हर्षो महोदये ॥ तथैवागमनं मन्ये स्वागतं ते महामुने ॥ ५३ ॥
कं च ते परमं कामं करोमि किमु हर्षितः ॥ पात्रभूतोसि मे ब्रह्मन्दिष्ट्या प्राप्तोसि धार्मिक ॥ ५४ ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५५ ॥ [ यस्माद्विप्रेन्द्रमद्राक्षं सुप्रभाता निशा मम ] ॥
पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ॥ ब्रह्मर्षित्वमनुप्राप्तः पूज्योसि बहुधा मया ॥ ५६ ॥
तदद्भुतमिदं ब्रह्मन्पवित्रं परमं मम ॥ शुभक्षेत्रगतश्चाहं तव संदर्शनात्प्रभो ॥ ५७ ॥
ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ॥ इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥ ५८ ॥
कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ॥ कर्ता चाहमशेषेण दैवतं हि भवान्मम ॥ ५९ ॥
मम चायमनुप्राप्तो महानभ्युदयो द्विज ॥ तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥ ६० ॥

इति हृदयसुखं निशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्तम् ॥
प्रथितगुणयशा गुणैर्विशिष्टः परमऋषिः परमं जगाम हर्षम् ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टादशः सर्गः ॥ १८ ॥

कितः । "हृषेर्लोमसु" इतीडभावः । परमोदारः परमदाता । अभिपूजयन् स्तुवन् ॥ ५१ ॥ यथेत्यादिश्लोकद्वयमेकान्वयम् । अमृतस्य सुधायाः । अनूदके अनुदके । "अन्येषामपि दृश्यते" इतिदीर्घः । अप्रजस्य अपुत्रस्य । प्रनष्टस्य निध्यादेः । महः पुत्रविवाहाद्युत्सवः । "मह उद्धव उत्सवः" इत्यमरः । तस्योदये । स्वागतं अचिन्तितोपनतं । ते आगमनं तथा मन्ये ॥ ५२ ॥ ॥ ५३ ॥ कामं अभीष्टं । किमु केनप्रकारेण । करोमि करवाणि । पात्रभूतः दानयोग्यः । दिष्ट्या शुभादृष्टवशेन । दृष्ट्येत्यानन्दद्योतकमव्ययमित्यप्याहुः ॥ ५४ ॥ अद्येत्यर्धमेकम् ॥ ५५ ॥ राजर्षिशब्देनोपलक्षितः राजर्षिशब्दवाच्य इत्यर्थः । अनु पश्चात् । तपसाद्योतितप्रभः सन्ब्रह्मर्षित्वंप्राप्तोसि । अतः बहुधा राजर्षित्वेनब्रह्मर्षित्वेनचै । पूज्योसि ॥ ५६ ॥ हेब्रह्मन्तदिदमागमनं ममपरमंपवित्रं परमम‌द्भुतंच । हेप्रभो तवसंदर्शनादहं शुभक्षेत्रगतः पुण्यक्षेत्रगतः । त्वद्दर्शनादिदंमत्क्षेत्रंतीर्थभूतंजातमित्यर्थः ॥ ५७ ॥ तुभ्यमितितृतीयार्थेचतुर्थी । आगमनंप्रतित्वयायत्कार्ययत्फलंप्रार्थितंतद्ब्रूहि । अहंत्वयानुगृहीतः सन्त्वदर्थपरिवृद्धयेइच्छामि । त्वदर्थपरिवृद्धिंकर्तुमिच्छामीत्यर्थः । "रुच्यर्थानांप्रीयमाणः" इतिचतुर्थी ॥ ५८ ॥ कार्यस्यविमर्शं कार्यविषयंसंशयम् ॥ ५९ ॥ अयं त्वदागमनरूपः ॥ ६० ॥ हृदयसुखं अर्थसौष्ठवाद्धृदयसुखकरं । श्रुतिसुखं शब्दमार्दवाच्छ्रुतिसुखं । आत्मवता बुद्धिमता । विनीतं विनयवद्यथाभवतितथा । उक्तं वाक्यं निशम्य । प्रथितगुणयशाः पृथुतरगुणविषयकीर्तिः । नकेवलंकीर्तिमात्रं गुणैर्विशिष्टः । परमऋषिरित्यत्र "ऋत्यकः" इतिप्रकृतिभावः । पुष्पिताग्रावृत्तम् ॥ ६१ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टादशःसर्गः १८

ति० । हेप्रभो तवसंदर्शनात् शुभक्षेत्रं सकलपापाभावविशिष्टसकलशुभसाधनपुण्यवद्देहं गतः प्राप्तवान् । तेन सफलजन्मतानिष्पापताचध्वनिता । "इदंशरीरंकौन्तेयक्षेत्रमित्यभिधीयते" इतिभगवद्गीतोक्तेः । शि० शुभक्षेत्रगतः शुभानियानिक्षेत्राणि तानिसर्वाणिगतःप्राप्तः । सर्वशुभक्षेत्रयात्राफलंप्राप्तोहमित्यर्थः । चोहेतौ ॥ ५७ ॥ ति० हर्षातिशयाद्द्विजेतिपुनरुक्तिर्नदोषाय ॥ ६० ॥ इत्यष्टादशस्सर्गः ॥ १८ ॥

[ पा० ] १ घ. ङ. च. झ. जन्माप्रजस्यवै. ज. ट. पुत्रजन्मप्रशस्यते. २ ग. ङ. ज. झ. महोदयः. ३ घ. ज. मेविप्रदिष्ट्या. ४ ङ. च. छ. झ. मानद. ५ इदमर्धं ङ. च. छ. झ. ञ. ट. दृश्यते. ६ ञ. मम. ७ ग. घ. च. ज. ञ. ट. मिदंविप्र.वित्रं. ङ. झ. मभूद्विप्रपवित्रं. ८ ज. शुभक्षेत्रेगत, ९ ख. घ. ङ. झ. त्वदर्थपरि. १० ङ. च. छ. झ. ञ. ट. सुव्रत, ११ ङ. च. छ. झ. ञ. ट. द्विज,

# एकोनविंशः सर्गः ॥ १९ ॥

विश्वामित्रेण दशरथंप्रति राममहिमप्रख्यापनपूर्वकं सुबाहुमारीचादिहननेन स्वीययज्ञरक्षणार्थं स्वाश्रमंप्रति तत्प्रेषणार्थना ॥ १ ॥

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ॥ हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥
सदृशं राजशार्दूल तवैतद्भुवि नान्यथा ॥ महाकुलप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २ ॥
यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ॥ कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ॥ ३ ॥
अहं नियममातिष्ठे सिध्यर्थं पुरुषर्षभ ॥ तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४ ॥
व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ ॥ मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥
समांसरुधिरौघेण वेदिं तामभ्यवर्षताम् ॥ ५ ॥
अवधूते तथाभूते तस्मिन्नियमनिश्चये ॥ कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे ॥ ६ ॥
न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ॥ तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥ ७ ॥
स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ॥ काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ ८ ॥
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ॥ राक्षसा ये विकर्तारस्तेषामपि विनाशने ॥ ९ ॥
श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ॥ त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥१०॥
न च तौ राममासाद्य शक्तौ स्थातुं कथंचन ॥ न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ॥११॥

अथविश्वामित्राभ्यर्थनमेकोनविंशे—तच्छ्रुत्वेत्यादि । अद्भुतस्यविस्तरोयस्मिन्तदद्भुतविस्तरं । हृष्टरोमा पुलकितरोमा ॥ १ ॥ नान्यथा नमिथ्योच्यतइत्यर्थः । वसिष्ठेनव्यपदेशः कीर्तिः उपदेशोवा । तृतीयेतियोगविभागात्समासः । सोस्यास्तीतितथा ॥ २ ॥ मेहृद्गतं यत्कार्यं वाक्यंवक्तव्यंतस्यनिश्चयं करणाध्यवसायं । कुरुष्व । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ ३ ॥ हृद्गतंकार्यमाह—अहमित्यादिना । सिद्ध्यर्थं फलार्थं । नियमं यज्ञदीक्षां । आतिष्ठे आस्थितोस्मि । तस्य नियमस्य । विघ्नकरौकामरूपिणौ द्वौराक्षसौ । स्तइतिशेषः ॥ ४ ॥ व्रते दीक्षारूपे । चीर्णे अनुष्ठिते । विघ्नकरणप्रकारमाह—मारीचइति । समांसरुधिरौघेण मांसयुक्तरक्तप्रवाहेण । तांवेदिं यज्ञवेदिं । अभ्यवर्षतां अभ्यषिञ्चताम् ॥ ५ ॥ तथाभूते बहुशश्चीर्णे । नियमनिश्चये व्रतसंकल्पे । अवधूते विघ्निते । अपाक्रमे आगतोस्मि ॥६॥ तर्हिकुतोनतौशप्तौतत्राह—नचेति । तत्रहेतुमाह—तथेति । साचर्या यज्ञाचारः । तथाभूताहि शापानर्हकालाहि । अतः तत्र मारीचसुबाह्वोः । शापोनमुच्यते ॥ ७ ॥ तत्रमयाकिंकर्तव्यंतत्राह—स्वपुत्रमिति । काकपक्षः बालस्यशिखा । काकपक्षधरमपीत्यर्थः ॥ ८ ॥ बालोयंकथंतौनाशयिष्यतितत्राह—शक्तइति । मयाकर्त्रा । तेजसाकरणेन । विकर्तारः विघ्नकर्तारः । तेषां । नकेवलंतयोरितिभावः ॥ ९ ॥ बहुरूपं बहुविधं । कीदृक्श्रेयस्तत्राह—त्रयाणामिति । लोकानांमध्येख्यातिं । विश्वामित्राध्वरत्राताअहल्याशापमोक्षदः हरधनुर्भञ्जकइत्येवंरूपांकीर्तिम् ॥ १० ॥ कथंबालस्तन्निरसनेप्रभविष्यतितत्राह—नचेति । अहमेवतदर्थयास्यामीत्यत्राह

ति० नान्यतः नान्यस्य ॥ २ ॥ शि० समाप्त्यांतु यागसमाप्तिकालेवा । तौ तस्करप्रायौ । "तश्चोरामृत—" इत्यभिधानम् ॥ ५ ॥ शि० चर्या तपश्चरणं । तथाभूता शापदानार्हा ॥ ७ ॥ ति० श्रेयश्चेति । बहुरूपं अस्त्रदानादिविवाहादिरूपं । किंच मुखपाण्डुत्वादिनिवर्तकं बहुरूपं विपुलतरंपरमार्थरूपंच । श्रेयआत्मस्वरूपांप्रदास्यामि वसिष्ठद्वारादापयिष्यामि बोधयिष्यामीत्यर्थः । रामस्यशुद्धमुक्तस्वभावत्वेपिलोकानांतत्प्रबोधनमेव रामबोधनस्यफलं ॥ १० ॥

[ पा० ] १ झ. तवैवभुवि. २ क. घ.—छ. झ. ञ. नान्यतः. ३ क. ग.—ञ. महावंश. ४ क. नरशार्दूल. ५ ग. ङ. च. छ. झ. ञ. ट. व्रतेतु. ६ च. राक्षसावुभौ. ७ क. ग.—ट. तौमांस. ८ ङ. विद्यते. ९ क. त्वंपुत्रं. १० ङ. च. छ. झ. ञ. वीरं. ११ क. येपकर्तार. ज. विघ्नकर्तार.

वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ ॥ रामस्य राजशार्दूल न पर्याप्तौ महात्मनः ॥
न च पुत्रकृतस्नेहं कर्तुमर्हसि पार्थिव ॥ १२ ॥
[ दशरात्रस्तु यज्ञश्च तस्मिन्रामेण राक्षसौ ॥ हन्तव्यौ विघ्नकर्तारौ मम यज्ञस्य वैरिणौ ॥ ]
अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ ॥ १३ ॥
अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ॥ वसिष्ठोपि महातेजा ये चेमे तपसि स्थिताः ॥ १४ ॥

—नचताविति ॥११॥ तथापिमहावीर्यौतौकथंजेतुंशक्यावित्याशङ्क्यपापवशेनासन्नकालीनरामस्यपर्याप्ताविंत्याह—वीर्येति । उत्सिक्तौ गर्वितौ । कालः यमः सएवपाशःतद्वशंगतौ । पुत्रकृतं पुत्रत्वकृतं ॥ १२ ॥ हताविंतिभूतप्रत्ययेनवधस्यसुकरत्वंसूचितम् ॥ १३ ॥ रामस्यपरब्रह्मत्वंसूचयन्नाह—अहमिति । अहं बहुगुरूपासनेनलब्धज्ञानः । यद्वा योगबलसाक्षात्कृतपरावरतत्वयाथात्म्यः । भवांस्तुकेवलकर्मठः । अहं जटावल्कलधारी । त्वंतु क्रोधभराक्रान्तः । अहं सात्विकप्रकृतिः । त्वंतुराजसः । अहं "गर्भभूतास्तपोधनाः" इत्युक्तरीत्या रामस्यगर्भभूतः । त्वंतु रामेगर्भत्वाभिमानी । योगक्रमज्ञानवानहं त्वंतु भोगक्रमज्ञः । अहं मोक्षकामेष्टिकृत् त्वंतु पुत्रकामेष्टिकृत् । अहं धर्ममोक्षपरः त्वंतु अर्थकामपरः । एतत्सर्वप्रसिद्धपरामर्शिनाऽहमित्यनेन सर्वनामशब्देनोच्यते । ननु "सोअङ्ग वेदयदिवानवेदेतिवेदस्संदेग्ध्यनर्घविदमात्मनिरञ्जनाथम्" "विधिशिवसनकाद्यैध्यार्तुमत्यन्तदूरं" इत्युक्तरीत्याअपरिच्छिन्नंवस्तु कथंत्वयाज्ञातमित्यत्राह । महात्मानं । अपरिच्छिन्नमहिमतयावेद्मीत्यर्थः । तथाच श्रुतिः "वेदाहमेतंपुरुषंमहान्तं" इति । श्रुतौएतमितिसौलभ्यमुच्यते । पुरुषमितिपराक्रमः । तदुभयमप्याह—रामंसत्यपराक्रममिति । परत्वसौलभ्येहि राज्ञश्छत्रचामरवदसाधारणे । यद्वा "तेजसांहिनवयःसमीक्ष्यते" इति बाल्येपिनिरवधिकवैभवं । यद्वा महात्मानं "सत्यस्यसत्यं" इतिवदात्मनो जीवस्याप्यात्मानं । "यआत्मनितिष्ठन्" इत्यादिश्रुतेः । यद्वा आत्मा देहः । "आत्माजीवेधृतौदेहे" इत्यमरः । अप्राकृतदिव्यमङ्गलविग्रहमित्यर्थः । "नतस्यप्राकृतामूर्तिः" इतिस्मृतेः । यद्वा महात्मानं महास्वभावं । "अभयंसर्वभूतेभ्योददाम्येतद्व्रतंमम" इतिवक्ष्यमाणत्वात् । यद्वा रामंमहात्मानं अवतारकृतमहास्वभावयुक्तम् । "सउश्रेयान्भवतिजायमानः" इतिश्रुतेः । सत्यपराक्रमं सदैकरूपपराक्रमं । "नाविजित्यनिवर्तते" इतिवक्ष्यते । यद्वा सत्यपराक्रमं परमार्थपराक्रमं । यद्वा सत्यात्परानाक्रमतीतितथा । गच्छानुजानामीति बहुवारंप्रकृतिसंबन्धकृतप्रातिकूल्यनिवर्तनेयत्नंकृत्वा तथाप्यननुकूलत्वेतान्हन्तीत्यर्थः । यद्वा अयत्नकालेपि शत्रुभयङ्करः । "सुखसुप्तःपरंतपः" इतिवक्ष्यति । संस्थानविशेषौज्वल्यदर्शनेनशत्रुहृदयविदारकइतिभावः । नाहंकार्यवशेनवदामीत्याह—वसिष्ठोपीति । आप्ततमोहिभवतःकुलाचार्योवसिष्ठः । अपिशब्दोविरोधे । अस्मद्विरोध्यपीत्यर्थः । यद्वा समुच्चये । महातेजाः सरस्वतीवल्लभपुत्रःयोगसिद्धज्ञानः । यद्वा यद्वाक्येनाहंब्रह्मर्षिरभवं सोपीत्यर्थः । यद्वा "सत्यंवद धर्मंचर" इतितवउपदिश्य स्वयमनुष्ठाता । ननु "यद्ब्राह्मणश्चाब्राह्मणश्चप्रश्नमेयातांब्राह्मणायाधिब्रूयात्" इति तवममचविवादे अस्यत्वयिपक्षपातःस्यादित्यत्राह—येचेति । राजद्वारसंबन्धरहिततयापक्षपातशून्याः । "तस्यधीराःपरिजानन्तियोनिं" इतिअवताररहस्यवेदिनः । येचेमे "पुलस्त्योगस्त्यः" इतिप्रसिद्धाचार्यपदनिर्वाहकाः । यद्वा गर्भस्थऋषिर्वामदेवःप्रतिपेदे "सप्तकल्पस्थितोमुनिरि"त्यादिनोत्तरोत्तरंब्रह्मविदग्रेसरा वामदेवमार्कण्डेयादयस्तिष्ठन्त्येतेतवप्रियकराः । केवलपरमैकान्तिनोविजानन्तीत्याह तपसिस्थिताः । कायिकव्या-

शि० रामस्यरणाजिरे रामरणभूमौ ॥ १२ ॥ शि० हिशब्दोप्यर्थे । महात्मानं महानांसर्वपूज्यानांब्रह्मादीनां आत्मानं नियन्तारं । नच "यस्यामतंतस्यमतंमतंयस्यनवेदसः" इत्यादिश्रुत्या परमात्मामविज्ञातइतिवदतामज्ञानवत्ताप्रतिपादनात् परमप्रमाणभूतेनज्ञानिनाविश्वामित्रेण राममहंवेद्मीतिकथमुक्तमितिवाच्यं । तच्छ्रुतीनांपरमात्मैश्वर्यादिसाकल्यज्ञानविषयत्वनिषेधतात्पर्यकत्वात् । अतएव "यतोवाचोनिवर्तन्तेअप्राप्यमनसासह । वेदाहमेतंपुरुषंमहान्तं" इत्यादिश्रुतयःसानुकूलाइतिदिक् ॥ १४ ॥

[ पा ] १ क. त्सिक्तौतु. २ ट. पर्याप्तौनरणाजिरे. ३ क. घ.—ज. ञ. अयंश्लोकोदृश्यते. ४ च. ञ. यज्ञस्य. ५ ट. वसिष्ठोहिमहातेजायेचेह.

यदि ते धर्मलाभं च यशश्च परमं भुवि ॥ स्थितमिच्छसि राजेन्द्र रामं मे दातुमर्हसि ॥ १५ ॥
यदि ह्यनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः ॥ वसिष्ठप्रमुखाः सर्वे राघवं मे विसर्जय ॥ १६ ॥
अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि ॥ दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् ॥ १७ ॥
नात्येति कालो यज्ञस्य यथाऽयं मम राघव ॥ तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥१८॥
इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ॥ विरराम महातेजा विश्वामित्रो महामुनिः ॥ १९ ॥
स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम् ॥ शोकमभ्यगमत्तीव्रं व्यषीदत भयान्वितः ॥ २० ॥
इति हृदयमनोविदारणं मुनिवचनं तदतीव शुश्रुवान् ॥
नरपतिरभवन्महांस्तदा व्यथितमनाः प्रचचाल चासनात् ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ॥ २० ॥

दशरथेनविश्वामित्रंप्रतिहेतूपन्यासपूर्वकंरामेणराक्षसवधस्यदुष्करत्वोपपादनेनरामस्याप्रेषणोक्तिः ॥ १ ॥

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ॥ मुहूर्तमिव निस्संज्ञः संज्ञावानिदमब्रवीत् ॥ १ ॥
ऊनषोडशवर्षो मे रामो राजीवलोचनः ॥ न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥

---

पारादीन्विनासदातपस्थिताः । तानेकैकशोरहसिपृष्ट्वा- तैरनुमतंचेद्रामंमेदेहीतिभावः । तपसिस्थिताः कायक्लेशसहाः । यद्वा ज्ञानयोगनिष्ठाः । तपआलोचने । "तस्मान्न्यासमेषांतपसामतिरिक्तमाहुः" इत्युक्तन्यासनिष्ठावा ॥ १४ ॥ धर्मलाभं धर्मवृद्धिं । स्थितं स्थिरं ॥ १५ ॥ विसर्जय प्रेषय ॥ १६ ॥ अभिप्रेतं अभीष्टं । आत्मजं । यज्ञस्य यज्ञाय । दशरात्रंदेहि । असंसक्तं अविलंबितमितिक्रियाविशेषणम् ॥ १७ ॥ ममायंयज्ञस्यकालोयथानात्येति तथाकुरुष्वेत्यन्वयः ॥ १८ ॥ धर्मार्थसहितं धर्मार्थपरं ॥ १९ ॥ शोकं दुःखं । व्यषीदत दुःखितोभूत् । विषण्णमुखोभूदित्यर्थः ॥२०॥ हृदयं मनोधिष्ठानं । अतीव अत्यर्थं । व्यथितमनाः महान् कुलेनमहान् । विचचाल मुमूर्च्छेत्यर्थः । महदितिपाठे महदत्यर्थं व्यथितमनाः अतीवविदारणमितिसंबन्धः । वृत्तमुपजातिभेदः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनविंशःसर्गः ॥१९॥

---

कौशिकवचनश्रवणाद्दशरथविषादोविंशे—तच्छ्रुत्वेत्यादि । निस्संज्ञइव चेतनारहितइव । मूर्च्छितइत्यर्थः ॥ १ ॥ "यज्ञविघ्नकरंहन्यां" इत्युक्तरीत्यानिजयज्ञविघ्ननिवर्तकोऽयंभविष्यतीतिमत्वाआगत्यप्रार्थयमाने- विश्वामित्रेवत्सलोदशरथःप्रेमान्धतयाकलुषितहृदयः अहंवेद्मीतितदुक्तमपिमनस्यकुर्वन्रामस्यबाल्यमेवपुर-

---

**ति०** तइतिलमित्यर्थे । **शि०** इदानींरामदाने किंचिच्चेष्टादिनाराज्ञोवैमनस्यमालक्ष्याह यदीति ॥ १५ ॥ **ति०** ततः तदा ॥ १६ ॥ **ति०** तवचासंसक्तं अतीतबाल्यत्वान्मातापितृसक्तिरहितं । ईश्वरत्वात्क्काप्यनासक्तमितिव्यङ्ग्यं ॥ १७ ॥ **ति०** ततो त्थायेतिच्छान्दसं । व्यषीदतेत्यप्येवं । भयान्वितः रक्षोनिमित्तपुत्रवियोगभयान्वितः ॥ २० ॥ **शि०** सहृदयमनोविदारणं हृदयसहितमनसश्चालकं । महान् सर्वपूज्यः । महात्मा अतिधैर्यविशिष्टः ॥ २१ ॥ इत्येकोनविंशस्सर्गः ॥ १९ ॥

**कतकं०** किंचिदूनानिषोडशवर्षाणियस्यसः । इदंचयुद्धायोग्यत्वंप्रतिपादितं । षोडशवर्षः क्षत्रियकुमारएवकवचधरोयुद्धार्ह इतिशास्त्रात् । बालोद्वादशवर्षोऽयमकृतास्त्रश्चराघवइतिरावणंप्रतिमारीचवचने बालष्षोडशवर्षोयमित्येवपाठः । रावणस्यभयातिशया-

**[ पा० ]** १ ङ. झ. लाभंतु. २ क. ग. ङ. च. छ. झ. ञ. स्थिरमिच्छसि. ३ क. ग. ङ. ज. झ. ट. यद्यभ्यनुज्ञां. ४ क. राजेन्द्र. ५ क. ख. घ.—ञ. ततोरामंविसर्जय. ६ ख. ङ. च. छ. झ. ञ. महामतिः. ज. महानृषिः. ७ क. विश्वामित्रमुखोद्गतम्. ८ एतदर्धस्थाने तत्प्रतिनिधित्वेन ङ. च. छ. झ. ञ पाठेषु अर्धद्वयंदृश्यते. तच्च. शोकेनमहताविष्टश्चचालचमुमोहच । लब्धसंज्ञस्ततोत्थायव्यषीदतभयान्वितः. ९ ङ.—ज. ञ. इतिसहृदय. १० ङ. छ.—ट. रभवन्महान्महात्माव्यथित. क. ग. च. रगमद्भयंमहात्माव्यथित. ११ ज. वर्षस्तु.

स्कुर्वन्नाह—ऊनेति । ऊना: असंपूर्णा: षोडशवर्षायस्य-सतथोक्त: । द्वादशवर्षइतियावत् । “ बालोद्वादशवर्षोयमकृतास्त्रश्चराघव:” इतिविशिष्यवक्ष्यमाणत्वात् । परिपूर्णषोडशवर्षोहियुद्धक्षमोभवति । द्वादशवर्षोबाल: कथंयुद्धायप्रभवतीतिभाव: । एवंवय:स्वरूपेविचार्यमाणेनास्ययुद्धयोग्यतेत्युक्तं राक्षसैस्तुसुतरांनेत्याह । राजीवलोचनइति पद्मतुल्यनयन: । पद्मंहिरात्रौमुकुलीभवति तत्तुल्यतोक्त्यारात्रौनिद्रालसोरामोरात्रिंचरै:कथंयोद्धुंशक्नोतीतिभाव: । मेराम: सदामदुत्सङ्गपरिवर्तित्वयामद्विरहासहिष्णुरित्यर्थ: । यद्वा पुत्रालाभेनषष्टिवर्षसहस्राणिलालप्यमानस्यातिक्लेशेनोत्पन्न: । राम: “रामोरतिकर:पितु:”इतिरतिकर: सर्वस्वभूत:। अस्यकाकपक्षधरत्वादिवेषयुतोविद्याभ्यासादपिक्रीडनकस्वीकारकुतूहलीतिहस्तेननिर्दिशति । युद्धयोग्यतांनपश्यामि। किंतु क्रीडनकस्वीकारयोग्यतामेवपश्यामीत्यर्थ: । युद्धयोग्यतां राक्षसशब्दश्रवणमात्रेणैवबिभ्यतां कथंयुद्धयोग्यता । सहराक्षसै: मनुष्येणापियुद्धव्यापारमजानत:कथंराक्षसैर्युद्धं। एकेनापिराक्षसेननयोग्यता-कुतोबहुभि: । अत्रशङ्क्यते । अत्रदशरथेनपित्राऊनषोडशवर्षइत्युक्तं । ऊनत्वंचमासेनमासत्रयेणषण्मासैर्वास्यात् नत्वेकवर्षद्विवर्षादिभि: । तस्मिन्नेववर्षेसीताविवाह: तदनुद्वादशवर्षाण्ययोध्यावास: “समाद्वादशतत्राहंराघवस्यनिवेशने। भुञ्जानामानुषान्भोगान्सर्वकामसमृद्धिनी”इतिसीतयावक्ष्यमाणत्वात् । तथाचवनप्रवेशकालेरामस्याष्टाविंशतिवर्षाणीतिप्रतिभाति । तदनुपपन्नं “ममभर्तामहातेजावयसापञ्चविंशक: ॥ अष्टादशहिवर्षाणिममजन्मनिगण्यते” इतिसीतावचनात् । कौसल्ययाचवनप्रवेशसमयेप्रोच्यते “दशसप्तचवर्षाणिजातस्यतवपुत्रक ॥ आसितानिप्रकाङ्क्षन्त्यामयादु:खपरिक्षयं”इति । तस्मात् अष्टाविंशते:पञ्चविंशते:सप्तदशानांचकथमविरोधइति । अत्रकेचित् । कौसल्यावाक्येजातस्येतिद्वितीयंजन्मोच्यते । क्षत्रियस्यापिद्विजत्वात् । द्वितीयंजन्मचउपनयनं । तच्चवृद्धेनदशरथेनकाम्यपक्षमाश्रित्यगर्भाष्टमएवकृतं । तथाचद्वितीयजन्मापेक्षयासप्तदशत्वं । उपनयनात्पूर्वंसप्तवर्षाणीति वयसापञ्चविंशकइतिसीतावचनमप्युपपन्नं। ऊनषोडशवर्षइत्यत्रपादोनत्वं। द्वादशवर्षइत्यन्यत्रोक्तत्वात् । अत:सर्वथावनप्रवेशकालेपञ्चविंशतिवर्षएवरामइत्याहु: । अन्येबहुक्लेशंसहमानाएवंव्याचख्यु:। अष्टाविंशतिवर्षएववनप्रवेशेराम: । ऊनषोडशवर्षइति यत्किंचिन्मासोनषोडशवर्षवयस्कइत्यर्थ: । “बालोह्यकृतविद्यश्चनचवेत्तिबलाबलं” इतिदशरथवचनेबाल्ययौवनसन्धौबालइतिव्यवहर्तुंशक्यत्वात्“बालआषोडशाद्वर्षात्पौगण्डश्चेतिकीर्त्यते” इतिवचनात् “बालोद्वादशवर्षोयमकृतास्त्रश्चराघव: । अजातव्यञ्जन:श्रीमान्पद्मपत्रनिभेक्षण:” इतिमारीचवचनंतुयुद्धभीरुतयाभ्रान्तिकृतं रावणविभीषिकयोक्तंवा। अतएवस्वयंवायव्यास्त्रभग्नोप्यकृतास्त्रइत्याह । अजातव्यञ्जनत्वंचनिरुदराकन्येतिवदल्पश्मश्रुत्वं “एकवस्त्रधरोधन्वीशिखीकनकमालया”इत्यपिदृढपरिहितोत्तरीयतयासन्नद्धत्वमाह। वयसापञ्चविंशकइतितुपञ्चविंशतुल्यत्वमाह इवार्थेकनोविधानात् । तेननित्ययौवनत्वंज्ञापयति। देवाहि सदापञ्चविंशतिवार्षिकाइत्युच्यन्ते । कौसल्यावाक्यमपि । “गर्भैकादशेषुराजन्यं”इतिविहितोपनयनापेक्षयैवेति

थं त्रामारीचस्यात्युक्तिस्सा । शिरो० अत्रऊनषोडशवर्षोमेइत्युक्त्याविश्वामित्रसहगमनसमयेरामस्यषोडशोवर्ष:प्रविष्टइतिफलितं । तस्मिन्नेववर्षेरामसीताविवाहस्यप्रसिद्धत्वेनषोडशवार्षिकस्यरामस्यविवाहइतिसिद्धं । समाद्वादशतत्राहंराघवस्यनिवेशने इतिरावणंप्रतिवक्ष्यमाणसीतावचनाद्विवाहानन्तरंद्वादशवर्षपर्यन्तंराघवनिकेतेसीतानिवास: ततोवनप्रस्थानमितिवनगमनसमयेऽष्टाविंशतिवर्षकोरामइतिनिष्पन्नं । एतदनुरोधेनदशसप्तचवर्षाणिजातस्यतवपुत्रकेतिकौसल्योक्तिपद्यघटकीभूतदशशब्दस्यैकशेषेणविंशतिरर्थ: । चशब्दस्यचन्द्रवाचकत्वेनैकत्वलाभ: । तथाचदशसप्त चयुक्तान्येव वर्षाणीत्यष्टाविंशतिलाभ: । “ चश्चण्डेशेपुमानुक्त:कच्छपेचन्द्रचोरयो: ” इतिमेदिनी । ममभर्तामहातेजावयसापञ्चविंशकइत्यपिनविरुद्धं । पञ्चविंशयुक्ता: कास्त्रयोयस्येतितदर्थात् । कशब्दस्यवह्निवाचकत्वेनत्रित्वलाभ: । कशब्दस्यवह्निवाचकत्वंतु “ क:प्रजापतिरुद्दिष्ट: कोर्कवाय्वनलेषु ” इतिकोशादवगन्तव्यं । “ ऊनद्वादशवर्षोयमकृतास्त्रश्चराघव: ” इतिमारीचपद्यघटकद्विशब्देनैकशेषात्षड्लाभ: । तेनोनषोडशवार्षिकइत्यर्थस्संपन्न: । अतएवोनषोडशवर्षोयमितिभट्टोक्तपाठान्तरेणनविरोध: । किंच ममभर्तामहातेजावयसापञ्चविंशकइतिश्रुतानुरोधात् ऊनषोडशवर्षोमेइत्येतद्घटकीभू नशब्देनपादोनंगृह्यते । तेनतस्मिन्समयेरामस्यद्वादशवार्षिकत्वंफलितं । ततस्त्रयोदशेवर्षेविवाह: । अतएवमारीचवचनंसानुकूलं । एवंचोक्तदिशावनप्रवेशसमये रामस्यपञ्चविंशतिवार्षिकत्वंसिद्धं । दशसप्तचवर्षाणीत्यत्र सप्तशब्दस्यैवैकशेषेणचतुर्दशलाभइतिनविरोध: । उपनयनप्रभृतिवर्षव्यवस्थापनया भूषणादिव्याख्यानंतुचिन्त्यमेव । लोकेअप्रसिद्धे: क्वचिज्जन्मप्रभृतिवर्षपरिगणनं क्वचिदुपनयनात्परिगणनमित्यत्र विनिगमनाविरहाच्चेतिदिक् ॥ २ ॥

इयमक्षौहिणी पूर्णा यस्याहं पतिरीश्वरः ॥ अनया [2]संवृतो गत्वा योद्धाऽहं तैर्निशाचरैः ॥ ३ ॥
इमे शूराश्च विक्रान्ता [3]भृत्या मेऽस्त्रविशारदाः ॥ योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४ ॥
अहमेव धनुष्पाणिर्गोप्ता समरमूर्धनि ॥ यावत्प्राणान्धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५ ॥
निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ॥ अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥ ६ ॥
बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् ॥ न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७ ॥
न चासौ रक्षसां योग्यः कूटयुद्धा हि [4]ते भृशम् ॥ ८ ॥
विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ॥ जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥ ९ ॥
[5]यदि वा राघवं ब्रह्मन्नेतुमिच्छसि सुव्रत ॥ चतुरङ्गसमायुक्तं [6]मया च सहितं नय ॥ १० ॥
[7]षष्टिवर्षसहस्राणि जातस्य मम कौशिक ॥ [8]दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥ ११ ॥
चतुर्णामात्मजानां हि प्रीतिः [9]परमिका मम ॥ [10]ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसि ॥ १२ ॥
किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते ॥ कथंप्रमाणाः के चैतान्रक्षन्ति मुनिपुङ्गव ॥ १३ ॥
कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ॥ मामकैर्वा बलैर्ब्रह्मन्मया वा कूटयोधिनाम् ॥ १४ ॥

या तस्मान्नकिंचिदनुपपन्नमिति । वस्तुतोवयसापञ्चविंशकइतिसीतायाःशापभीतायाःसंन्यासिनंप्रतिवचनमेवयथार्थं । दशसप्तचवर्षाणीतिकौसल्यावाक्येतुचकारेणसप्तवर्षाणिसमुच्चीयन्ते । तेनजन्मापेक्षयैवपञ्चविंशतित्वसिद्धिः । ननुविवाहानन्तरमेवसंभोगःश्रूयते "रामस्तुसीतयासार्धंविजहारबहूनृतून्" इति । सकथंद्वादशवर्षस्यबालस्यसंभवति । संभवत्येवसौकुमार्यातिशयेनप्रौढशरीरतया । अतएवहिदेव्याश्चषड्वर्षएवयौवनारंभः "अष्टादशहिवर्षाणिममजन्मनिगण्यते" इतिवनप्रवेशेऽष्टादशत्वं विवाहकालेसीतायाःषड्वर्षत्वमवगमयतीतिसर्वंसुस्थं ॥ २ ॥ तर्हितवप्रतिज्ञाव्यर्थास्यात्तत्राह—इयमिति । अक्षोरथावयवःतस्यऊहःतद्योगादिनिः । "ऋन्नेभ्योङीप्" इतिङीपि "पूर्वपदात्संज्ञायां—" इतिणत्वं । "अक्षादूहिन्यां—" इतिवृद्धिः । अक्षौहिणीस्वरूपमुक्तमादिपर्वणि "एकोरथोगजश्चैकोनराःपञ्चपदातयः ॥ त्रयश्चतुरगास्तज्ज्ञैःपत्तिरित्यभिधीयते ॥ पत्तिंतुत्रिगुणामेकंविदुःसेनामुखंबुधाः ॥ त्रीणिसेनामुखान्येकोगुल्मइत्यभिधीयते ॥ त्रयोगुल्मागणोनामवाहिनीतुगणास्त्रयः ॥ स्मृतास्तिस्रस्तुवाहिन्यःपृतनेतिविचक्षणैः ॥ चमूस्तुपृतनास्तिस्रस्ताश्चतिस्रस्त्वनीकिनी ॥ अनीकिनींदशगुणांप्राहुरक्षौहिणींबुधाः" इति । यस्याहंपतिरितिसंधिरार्षः । पतिः पालयिता । पातेर्डतिः । ईश्वरः नियन्ता । योद्धा । योत्स्ये । लुट् । तैः यज्ञविघ्नकरैः ॥ ३ ॥ विक्रान्ताः अक्षतविक्रमाः ॥ ४ ॥ गोप्ता यज्ञस्येतिशेषः । सेनानांवा ॥ ५ ॥ अहंगमिष्यामि तेनसुरक्षिताभविष्यतीतियोजना ॥ ६ ॥ बालः ऊनषोडशवर्षः । अतएवअकृतविद्यः अशिक्षितधनुर्विद्यः । बलाबलं शत्रूणामितिशेषः । "येषांचविरोधः शाश्वतिकः" इतिएकवद्भावः ॥ ७ ॥ रक्षसां युद्धइतिशेषः । कूटयुद्धाः कपटयुद्धाः । इदमर्धं ॥ ८ ॥ तिष्ठतुरामस्वभावः मत्स्वभावश्चैवमित्याह—विप्रयुक्तइति । विप्रयुक्तः विश्लिष्टः ॥ ९ ॥ चत्वारिअङ्गानि चतुरङ्गानि । "दिक्सङ्ख्येसंज्ञायां" इतिसमासः ॥ १० ॥ वर्षसहस्राणि अतीतानीतिशेषः । तदनन्तरं दुःखेन उपवासदीक्षादिक्लेशेन उत्पादितः ॥ ११ ॥ चतुर्णांपुत्राणांमध्ये रामे परमिकाप्रीतिः । स्वार्थेकप्रत्ययः । "प्रत्ययस्थात्" इतीत् । तस्माज्ज्येष्ठत्वादेश्चननेतुमर्हसीतियोजना ॥ १२ ॥ अथसर्वथा रामनयनमयुक्तमितिवक्तुं योद्धव्यस्वरूपंपृच्छति—किमिति । केच किंनामधेयाः । कथंप्रमाणाः कीदृशाकाराइत्यर्थः । केरक्षन्ति के तेषांप्रधानाइत्यर्थः ॥ १३ ॥ प्रति-

ति० प्रीत्याधिक्येकारणमाह ज्येष्ठइति । अनेन राज्ययोग्यताध्वनिता । धर्मप्रधाने त्रिषुपुरुषार्थेषुधर्माधीनप्रवृत्तिके । राक्षसैर्युद्धेहि पाक्षिकनाशसंभावनयाराज्यविच्छेदएवभवेत् । धर्मेणप्रजापालनंचनान्योनिर्वहेत् । अतोरामोनेतुमयोग्यः ॥ १२ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. सेना. २ च. छ. झ. ञ. ट. सहितो. ३ क. भृत्याश्शस्त्रास्त्रकोविदाः. ४ ङ. च. छ. झ. ञ. ढ. राक्षसाः. क. ग. ज. तेध्रुवं. ५ क. अथवा. ६ ग.—च. मयासहचर्तं. ७ क. ग. च.—झ. ट. षष्टिर्वर्षे. ८ ङ. झ. कृच्छ्रेणोत्पादित. ९ क. च. पारमिका. १० ङ. च. ज. झ. ज्येष्ठंधर्मप्रधाने.

सर्वं मे शंस भगवन्कथं तेषां मया रणे ॥ स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः ॥१५॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १६ ॥
[1]पौलस्त्यवंशप्रभवो रावणो [2]नाम राक्षसः ॥ १७ ॥
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः ॥ १८ ॥
[3]श्रूयते हि [4]महावीर्यो रावणो [5]राक्षसाधिपः ॥ साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ॥ १९ ॥
[6]यदा स्वयं न यज्ञस्य विघ्नकर्ता महाबलः ॥ तेन संचोदितौ [7]द्वौ तु [8]राक्षसौ वै महाबलौ ॥
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ २० ॥
इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा ॥ न हि शक्तोस्मि संग्रामे स्थातुं तस्य दुरात्मनः ॥२१॥
स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके ॥ मम चैवाल्पभाग्यस्य दैवतं हि भवान्गुरुः ॥ २२ ॥
देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ॥ न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २३ ॥
[9]स हि वीर्यवतां वीर्यमादत्ते युधि [10]राक्षसः ॥ तेन चाहं न [11]शक्नोमि संयोद्धुं तस्य वा बलैः ॥
सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः ॥ २४ ॥
कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ॥ बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम् ॥ २५ ॥
अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ॥ यज्ञविघ्नकरौ [12]तौ ते [13]नैवं दास्यामि पुत्रकम् ॥ २६ ॥
[ [14]तौ हि[15] यक्षस्य कन्यायां जातौ दैत्यकुलोद्वहौ ] ॥ मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥२७॥
[16]तयोरन्यतरेणाहं योद्धा स्यां ससुहृद्गणः ॥ [ [17]अन्यथा त्वनुनेष्यामि भवन्तं सहबान्धवः ] ॥ २८ ॥

इति नरपतिजल्पनाद्द्विजेन्द्रं कुशिकसुतं सुमहान्विवेश मन्युः ॥
सुहुत [18]इव समिद्भिराज्यसिक्तः समभवदुज्ज्वलितो महर्षिवह्निः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे विंशः सर्गः ॥ २० ॥

---

कर्तव्यं प्रतिविधेयं ॥ १४ ॥ तेषांरणेकथंमयास्थातव्यमिति व्यूहप्रकारप्रश्नः ॥ १५ ॥ १६ ॥ राक्षसः अस्तीतिशेषः ॥ १७ ॥ किंवीर्याइत्यस्योत्तरमाह—सइति ॥ १८ ॥ प्रसिद्धश्चायमित्याह—श्रूयतइति ॥ १९ ॥ अर्धत्रयमेकान्वयं । यदायज्ञस्य स्वयंनविघ्नकर्ता अलक्ष्यत्वादिनेतिशेषः ॥ २० ॥ तस्य रावणस्य ॥२१॥ अल्पभाग्यस्येति। त्वन्नियोगाकरणेनेतिशेषः । प्रसादकरणेहेतुः दैवतमिति ॥ २२ ॥ रावणसंग्रामवैमुख्यंनदोषाय । सर्वाशक्यत्वादित्याशयः ॥२३॥ अर्धत्रयं । वीर्यमादत्ते स्वीकरोति । नाशयतीत्यर्थः । तस्यबलैः मारीचादिभिः ॥ २४ ॥ कथमितिप्रश्ने । राक्षसान् प्रतीतिशेषः ॥ २५ ॥ अथ शत्रुस्वरूपज्ञानानन्तरं । सुन्दोपसुन्दयोःसुतौ मारीचसुबाहू । सुन्दपुत्रोमारीचः । उपसुन्दपुत्रःसुबाहुः । पुत्रकं अनुकंपायांकन् । अतोनदास्यामीत्युपस्कार्यं ॥ २६ ॥ ॥२७॥२८॥ उत्तरसगार्थमन्तेसंगृह्णाति—इतीति । जल्पनात् असङ्गतोक्तेः । कोपाविष्टत्वेदृष्टान्तमाह—सुहुतइति । आदौसमिद्भिःसुहुतः ततआज्यसिक्तोवह्निरि-

---

**ती॰** पुन्नाम्नोनरकात्त्रायतइतिपुत्रकं । अनेन पुत्रतनयशब्दयोर्नपौनरुक्त्यं । **शि॰** कथमपीति । अस्यकथमपिनशक्नोमीतिपूर्वेणान्वयः ॥ २५ ॥ इतिविंशस्सर्गः ॥ २० ॥

**[ पा॰ ]** १ क. ग. च. पुलस्त्य. २ ग. राक्षसाधिपः. ३ ङ. च. छ. झ. ञ. श्रूयतेच. ४ ङ. झ. महाराज. ५ क. राक्षसेश्वरः. ६ क. ङ. छ.—ट. यदानखलु. च. यदामेखलु. घ. सदानखलु. ७ क. ग—ट. तौतु. ८ ङ. च. छ. झ. ञ. राक्षसौच. घ. राक्षसौतु. ग. ज. राक्षसौसु. क. राक्षसौकामरूपिणौ. ९ ग. ङ. च. छ. झ. ञ. सतु. १० ङ. च. छ. ञ. रावणः. ११ ग. ङ. च. छ. झ. ञ. ट. शक्तोस्मि. १२ च. तौतु. क. तौहि. १३ क. ग. च. छ. ज. ञ. ट. नैवदास्याम्यहंसुतम्. १४ इदमर्धं. क. ख. ङ. च. ज. ञ. ट. दृश्यते. १५ क. ङ. च. छ. तौतुराक्षस. १६ ग. ङ. च. छ. झ. ञ. ट. रन्यतरंयोद्धुं यास्यामि. १७ इदमर्धं क. ख. ङ. च. ज. ञ. ट. दृश्यते. १८ ग. ङ—ञ. इवमखेग्निराज्य. क. इवमखाग्निराज्य.

# एकविंशः सर्गः ॥ २१ ॥

दशरथस्यरामाप्रेषणवचनेनरुष्टेविश्वामित्रेवसिष्ठेनदशरथंप्रतिरामविश्वामित्रमहिमनिवेदनपूर्वकंरामप्रेषणप्रार्थना ॥ १ ॥
ततोराज्ञातत्प्रेषणाङ्गीकरणम् ॥ २ ॥

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ॥ समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥
पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि ॥ राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २ ॥
यदीदं ते क्षमं राजन्गमिष्यामि यथागतम् ॥ मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सबान्धवः ॥३॥
तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः ॥ चचाल वसुधा कृत्स्ना [२]विवेश च भयं सुरान् ॥ ४ ॥
त्रस्त[३]रूपं स विज्ञाय जगत्सर्वं महानृषिः ॥ नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ ५ ॥
इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः ॥ धृतिमान्सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६ ॥
त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघवः ॥ स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७ ॥
[४]संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव ॥ इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥ ८ ॥
कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ॥ गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९ ॥
एष विग्रहवान्धर्म एष वीर्यवतां वरः ॥ एष [६]बुद्ध्याधिको लोके तपसश्च परायणम् ॥ १० ॥

व । महर्षिवह्निः महर्षिश्रेष्ठः । उज्ज्वलितस्समभवत् संजातज्वालोबभूव । मुनिपक्षेक्रोधवृद्धिः । पुष्पिताग्रावृत्तं "अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्चपुष्पिताग्रा" इतिलक्षणात् ॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने विंशस्सर्गः ॥ २० ॥

---

एवं रामप्रेषणवृत्तान्तव्याकुलंराजानंवसिष्ठःप्रतिबोधयत्येकविंशे । स्नेहेन पुत्रस्नेहेन । पर्याकुलानि स्खलन्ति अक्षराणि यस्मिन् ॥ १ ॥ अर्थं प्रार्थितार्थं । अयंविपर्ययः प्रतिज्ञाहानिः । राघवाणामस्यकुलस्यायुक्तः ॥ २ ॥ इदं प्रतिज्ञातान्यथाकरणं । सुखीभवेतिव्यङ्ग्योक्तिः ॥ ३ ॥ रोषपरीतस्येतिषष्ठी सप्तम्यर्थे । भयं पूर्वकोपेनान्यथाकृतजगदयमद्य किंकरिष्यतीतिभयं ॥ ४ ॥ त्रस्तरूपं अतिशयेनत्रस्तं । प्रशंसायांरूपप् । धीरः धीमान् ॥ ५ ॥ इक्ष्वाकूणामिति त्वमितिशेषः ॥ ६ ॥ धर्मात्माइतीत्यत्र वाक्येसंहिताऽनित्या । स्वधर्मं प्रतिश्रुतनिर्वाहरूपं ॥ ७ ॥ संश्रुत्येति । एवंकरिष्यामीतिसंश्रुत्य तथाऽकुर्वाणस्येत्यर्थः । इष्टंअश्वमेधान्तोयागः । पूर्तं वाप्यादिनिर्माणं । तदुक्तं "वापीकूपतटाकादिप्रतिष्ठासेतुबन्धनम् । अन्नप्रदानमारामःपूर्तमित्यभिधीयते"इति । तयोर्वधः निष्फलत्वं ॥ ८ ॥ कृतास्त्रं शिक्षितास्त्रं । नशक्ष्यन्ति धर्षितुमितिशेषः । ज्वलनेन अग्निचक्रेण । अमृतमग्निचक्रेण सुरक्षितमितिभारतेव्यक्तं ॥ ९ ॥ राज्ञोभयनिवृत्त्तयेविश्वामित्रमाहात्म्यमाह—एषइति । परायणं परमस्थानं ।

---

ति० अयंविपर्ययः प्रतिज्ञाहानिरूपः राघवाणामयुक्तः । यतोऽयमस्यकुलस्यविपर्ययोनाशः । इतिविपर्ययपदावृत्तिर्बोध्या ॥ २ ॥ ति० । मिथ्यावादी त्वं सुहृद्वृतस्सुखीभवेतिविपरीतलक्षणयोक्तिः ॥ ३ ॥ ति० धीमतइत्यत्र रोषंदृष्ट्वेतिशेषः ॥ ४ ॥ शि० अपरः नविद्यतेपरउत्तमोयस्मात् सोपरः सर्वश्रेष्ठः ॥ ६ ॥ ती० नकेवलंविश्वामित्रकृतसंरक्षणेनैवास्यरघुनाथस्यदुष्प्रसहत्वं किंतु स्वरूपपर्यालोचनयापीत्याह एषविग्रहवानिति । एषः रामभद्रः । वीर्यवतांवरइत्यनेन सहजंवीर्यंतस्यैवोक्तंभवति । एषबुद्ध्याधिकइत्यनेन सहजज्ञानशक्तिःप्रतिपादिता । परायणं परमप्राप्यं । तपसोः विविदिषासाधनत्वात् । "तमेवंवेदानुवचनेन ब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसानाशकेन" इतिश्रुतेः । यद्वा एवंसहजप्रभावेवर्णितेपि पुत्रबुद्ध्यातिरोहितरघुनाथप्रभावापरिज्ञानाद्दशरथस्यप्रत्ययोनोत्पद्यतइतिविचार्य राज्ञोभयनिवृत्तिं राघवस्यभविष्यच्छ्रेयःप्राप्तिंच हृदिनिधाय गोप्तुर्विश्वामित्रस्यापि रक्षणसामर्थ्यमुपपादयितुमाह एषविग्रहवानित्यादिना । ति० न केवलंविश्वामित्रकृतसंरक्षणेनैवरामस्यदुर्धर्षत्वं किंतु स्वतोऽपीत्याह रामविश्वामित्रयोःश्लिष्टवर्णनेन एषइति । एषः रामो विश्वामित्रश्च । रामपक्षे विद्याधिकः सहजज्ञानशक्तिः । तपसः मननादेः

[ पा० ] १ ङ. च. छ. झ. सुहृद्वृतः. २ ङ. झ. देवानांचभयंमहत्. ३ क. ग—ञ. रूपंतु. ४ घ. आश्रुत्यैवंकरिष्यामीत्युक्त्वावाक्यमकुर्वतः. ङ. झ. प्रतिश्रुत्यकरिष्येतिउक्तवाक्यमकुर्वतः. ५ क. ज. इष्टापूर्तंवृथा. ६ ङ. च. छ. झ. ञ. ट. विद्याधिको.

[1]एषोस्त्रान्विविधान्वेत्ति त्रैलोक्ये सचराचरे ॥ नैनमन्यः पुमान्वेत्ति न च वेत्स्यन्ति केचन ॥ ११ ॥
[2]न देवा ऋषयः केचिन्[3]नासुरा न च राक्षसाः ॥ गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ १२ ॥
सर्वास्त्राणि [4]कृशाश्वस्य पुत्राः [5]परमधार्मिकाः ॥ कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥१३॥
तेऽपि पुत्राः कृशाश्वस्य प्रजापतिसु[6]तासुताः ॥ नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १४ ॥
जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे ॥ [7]ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥ १५ ॥
पञ्चाशतं सुतांल्लेभे [8]जया नाम परान्पुरा ॥ वधायासुरसैन्यानाम[9]मेयान्कामरूपिणः ॥ १६ ॥
सुप्रभाऽजनयच्चापि [10]सुतान्पञ्चाशतं पुनः ॥ संहारान्नाम दुर्धर्षान्दुराक्रामान्बलीयसः ॥ १७ ॥
तानि चास्त्राणि वेत्त्येष यथावत्कुशिकात्मजः ॥ अपूर्वाणां च जनने शक्तो [11]भूयस्स धर्मवित् ॥१८॥
[12]तेनास्य मुनिमुख्यस्य [13]सर्वज्ञस्य महात्मनः ॥ न किंचि[14]दप्यविदितं भूतं भव्यं च राघव ॥ १९ ॥
एवंवीर्यो महातेजा विश्वामित्रो [15]महायशाः ॥ न रामगमने राजन्संशयं [16]गन्तुमर्हसि ॥ २० ॥
तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ॥ [[17]धनुर्भृतोस्य शक्रस्तु बिभीयात्समरे विभो ॥ ]
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २१ ॥

इति [18]मुनिवचनात्प्रसन्नचित्तो रघुवृषभश्च मुमोद [19]भास्वराङ्गः ॥
गमनमभिरुरोच राघवस्य प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

एतत्सदृशःकोपितपस्वीनास्तीत्यर्थः ॥१०॥ अस्त्रानिति पुंल्लिङ्गत्वमार्षं। सचराचरइत्यनेन सामस्त्यंगम्यते। एनं एतदवगतमस्त्रसमूहं ॥११॥ केचनेत्युक्तंप्रपञ्चयति—नदेवाइति ॥ १२ ॥ सर्वाविदितंकथमयंवेत्तीत्यत्राह—सर्वेति। कृशाश्वः प्रजापतिष्वेकः। परमधार्मिकाः परमधर्मनिष्ठाः। पापिनमस्पृशन्तइत्यर्थः। दत्ताः कृशाश्वेन। प्रशासति प्रशास्ति। अयमितिशेषः ॥ १३ ॥ पितृप्राशस्त्यमुक्त्वामातृप्राशस्त्यमाह—तेपीति। प्रजापतिः दक्षः। तस्यसुतयोःकन्ययोःसुताः ॥ १४ ॥ केप्रजापतिसुतेतत्राह—जयाचेति। सुवाते असुवातां। शस्त्राणि विशसनकर्तृणि। परमभास्वरमितिशताभिप्रायेणैकवचनं ॥ १५ ॥ काकत्यसूयतेत्यत्राह—पञ्चाशतमिति। अमेयान् अपरिच्छेद्यवैभवान् ॥ १६ ॥ संहारान् अन्वर्थसंहारसंज्ञान्। दुर्धर्षान् परैरभिभवितुमशक्यान्। दुराक्रामान् अमोघानित्यर्थः ॥ १७ ॥ यथावत् कात्स्न्र्येन। अपूर्वाणांअस्त्राणां। सः विदितसकलास्त्रः ॥ १८—२१ ॥ भास्वराङ्गः भासनशीलः। प्रसन्नमुखइतियावत्। मुमोद मुमुदे। व्यत्ययात्परस्मै-

---

परायणंप्राप्यः। विश्वामित्रपक्षे तपसआश्रयः ॥ १० ॥ **ती०** एषोस्त्रान्विविधान्वेत्तीत्यनेन सर्वेश्वरस्यभूतलावतारसमये तदीयानिदिव्यायुधान्यपिसहैवागतानीतिगम्यते। तथाचवक्ष्यति "शरानानाविधाकाराधनुरायतविग्रहम्। अनुव्रजन्तिकाकुत्स्थंसर्वे पुरुषविग्रहाः" इति। नैनमन्यःपुमान्वेत्तीत्यत्र "सहैवसन्तंनविजानन्तिदेवाः" इतिश्रुतिःप्रमाणं। नचवेत्स्यन्तीत्यनेन नविदुश्चेतिगम्यते। **ति०** रामपक्षे अन्यःपुमान् अविद्यावृतःपुमानित्यर्थः। विश्वामित्रपक्षे एनं अस्त्रगणं ॥ ११ ॥ **ती० ति० शि० वि०** दत्ताः शिवेनेतिशेषः ॥ १३ ॥ **ति०** सूते सुवाते इत्यर्थः ॥ १५ ॥ **ति० वि०** अरूपिणः अदृश्यमानरूपान् ॥ १६ ॥ राघवस्य रामस्य। गमनबुंध्या अभिरुरोच स्वीचकार ॥ २२ ॥ इत्येकविंशस्सर्गः ॥ २१ ॥

**[ पा० ]** १ ग. एषोस्त्रंविविधं. २ ग. ङ. छ—ञ. नदेवानर्षयः. ३ ङ. च. छ. झ. न्नामराः. ४ क. ग. घ. च. ञ. भृशाश्वस्य. ५ क. ख. च. छ. ञ. परमदुर्जयाः. ६ क. सुतैस्समाः. ख. समास्सुताः. ७ ख. घ. ङ. झ. ञ. तेसूतेऽस्त्राणिशस्त्राणि. च तेसुवातेततोस्त्राणि. ज. तयोरपत्यान्यस्त्राणिशतं. ट. सुवातेस्त्राणिशस्त्राणि. ८ ङ झ. जयालब्धवरावरान्. च. छ. ञ. जयानामपरावरान्. ज. जयानामसुतान्पुरा. क. जयालब्धवरापुरा. ग. ट. जयानामवरान्पुरा. ९ क. मक्षयान्कामरूपिणः. ङ. च. छ. झ. ञ. मप्रमेयानरूपिणः. ख. मजेयान्कामरूपिणः. १० क. ख. ग. ङ. झ. पुत्रान्पञ्चाशतं. घ. च. ञ. पुत्रान्पञ्चशतं. ११ क. ख. घ—ञ. भूयश्च. १२ अयंश्लोकः क. ङ. ञ. दृश्यते. १३ ङ. च. छ. ञ. धर्मज्ञस्य. १४ ङ. छ. झ. दस्त्यविदितं. क. च. ञ. दस्याविदितं. १५ क. महातपाः. १६ ख. कर्तुमर्हसि. १७ इदमर्धं च. छ. ञ. दृश्यते. १८ ख. इतिमुनिवरवचनात्. १९ ङ. च. छ. झ. ञ. पार्थिवः.

# द्वाविंशः सर्गः ॥ २२ ॥

विश्वामित्रेणदशरथप्रेषिताभ्यांरामलक्ष्मणाभ्यांसहस्वाश्रमंप्रतिप्रस्थानम् ॥ १ ॥ तथामध्येमार्गंक्षुत्पिपासापरिहारकत्वादिबहुगुणवत्ताप्रतिपादनपूर्वकंरामलक्ष्मणाभ्यांबलातिबलाख्यविद्याद्वयोपदेशः ॥ २ ॥

तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम् ॥ प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १ ॥
कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ॥ पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २ ॥
स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ॥ ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३ ॥
[ततो भूयो वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ आदाय विप्रो हृष्टोऽभूत्रिदशा विज्वराऽभवन् ॥ ४ ॥]
ततो वायुः सुखस्पर्शो विरजस्को ववौ तदा ॥ विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनम् ॥ ५ ॥
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिस्वनैः ॥ शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ६ ॥
विश्वामित्रो ययावग्रे ततो रामो महायशाः ॥ काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ७ ॥
कलापिनौ धनुष्पाणी शोभयानौ दिशो दश ॥ विश्वामित्रं महात्मानं त्रिशीर्षाविव पन्नगौ ॥
अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ ॥ ८ ॥
तदा कुशिकपुत्रं तु धनुष्पाणी स्वलंकृतौ ॥ बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ ९ ॥

पदं । राघवस्यगमनमभिरुरोच राघवंकुशिकात्मजाय दातुंबुद्ध्याचिन्तयदित्युपस्कार्यं । पूर्ववत्पुष्पिताग्रावृत्तं ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकविंशस्सर्गः ॥ २१ ॥

---

अथप्रसन्नहृदयेनराज्ञारामविसर्जनंद्वाविंशे—तथेत्यादि । सलक्ष्मणंराममिति तयोरविनाभावज्ञानादितिभावः ॥ १ ॥ कृतेत्यादिश्लोकद्वयमेकान्वयं । पित्रा दशरथेन । स्वेनेतिशेषः । कृतस्वस्त्ययनं कृतमङ्गलानुष्ठानं । मङ्गलैर्मङ्गलसूक्तैः "स्वस्तिनोमिमीतां"इत्यादिभिः ॥२॥३॥अथयात्रायांशुभनिमित्तसंपत्तिंदर्शयति—तत इत्यादि । गतं अनुगतं ॥४॥ प्रयाते प्रयातुमुपक्रान्ते । देवदुन्दुभिनिस्वनश्चअवतारप्रयोजनोपक्रमत्वात् शङ्खदुन्दुभिनिर्घोषोदशरथीयः ॥५॥६॥ धन्वी धनुष्मान् । व्रीह्यादित्वादिनिः ॥ ७ ॥ कलापिनावित्यादिसार्धश्लोक एकान्वयः । कलापिनौ तूणीरधारिणौ । "कलापोभूषणेबर्हेतूणीरेसंहतावपि" इत्यमरः । शोभयानौ प्रकाशयन्तौ । आनेमुगभावश्छान्दसः । विश्वस्यमित्रंविश्वामित्रः । "मित्रेचर्षौ" इतिविश्वशब्दस्यदीर्घः । श्रुतिश्च "तस्योविश्वंमित्रमासीद्यदिदंकिंचतस्माद्विश्वामित्रइत्याचक्षते" इति । प्रत्येकंतूणीरद्वयधारणाच्छिरोभ्यांच त्रिशीर्षाविवेत्युपमानं धनुस्तूणीरशरधरत्वाद्वा । अक्षुद्रौ अनल्परूपवीर्यादिवैभवौ ॥ ८ ॥ तदेत्यादिसार्धश्लोकद्वयमेकान्वयम् । बद्धं गोधाचर्मकृताङ्गुलित्राणंययोस्तौ तथा । गोधाहस्तत्राणमित्येके । द्युतिः सामान्यशोभा । श्रीः विशेषशोभा । शोभयेतां व्यत्ययेनलङर्थेलोट् । विश्वामित्रमनुयातौरामलक्ष्मणौ स्थाणुमनुयातौकुमा-

---

शि० आजुहाव । एतेनगुरुवाक्येराज्ञश्श्रद्धातिशयस्सूचितः ॥ १ ॥ ति० अभिमन्त्रितंबोधितमित्यर्थः । तद्बोधनंचयोगवासिष्ठेप्रसिद्धं ॥ २ ॥ ति० ववावित्यस्यपृष्ठतइतिशेषः ॥ ५ ॥ ती० पञ्चशीर्षाविवोरगावितिपाठे तूणीरद्वयंभुजद्वयंशिरश्चेतिप्रत्येकं पञ्चकस्यविद्यमानत्वात् पञ्चशीर्षावित्युक्तिः । ति० अत्रेदंतूणीरादिवैष्णवं गरुडेनदत्तंरामाय ताटकासुबाहुवधायमारीचस्यसमुद्रे पातनायच । नहिप्राकृतशस्त्रसाध्यमेतत् । तदुक्तंपाद्मे "पक्षीतार्क्ष्यस्समागम्यत्रीणिचास्त्राणिकार्मुकम् । सर्वभूतैरदृश्यस्सन्दत्वाताभ्यांपुनर्ययौ" इति । अस्त्राणि शस्त्राणि खड्गचर्मतूणीररूपाणि ॥ ८ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. दशरथस्स्वयम्. घ. दशरथस्तदा. २ ख. मात्राकैकेय्याचसुमित्रया. * पुरोधसेत्यतःप्राक्.-वादेषुवादिभिर्विप्रैःसमङ्गलकृताशिषम् । आयान्तंसहसौमित्रिंप्रत्युद्गम्यचसस्वजे । अङ्कमारोप्यतौवीरौराजर्षिरमितप्रभः । एतदर्धत्रयं. ख. पाठेदृश्यते. ३ ख. सपुत्रौ. ४ ङ. च. छ. झ. ञ. दशरथस्तदा. ज. दशरथस्स्वयम्. ख. दशरथःप्रियौ. ५ अयं-श्लोकः ख. दृश्यते. ६ क. ग—ञ. नीरजस्को. ७ क. ख. घ. निस्वनः. ८ ग. धनुर्धरः. ९ च. छ. ञ. ट. पञ्चशीर्षाविवोरगौ. १० अनुजग्मतुरित्यारभ्य. शोभयेतामनिन्दितौइत्यन्तं. ख. घ—झ. पाठेषु. अर्धानांक्रमेपौर्वापर्यंदृश्यते.

कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ॥ अनुयातौ श्रिया दीप्त्या शोभयेतामनिन्दितौ ॥
स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी ॥ १० ॥
अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ॥ रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ ११ ॥
गृहाण वत्स सलिलं माभूत्[1]कालविपर्ययः ॥ मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥ १२ ॥
न श्रमो [2]न ज्वरो वा ते न [3]रूपस्य विपर्ययः ॥ [4]न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति [5]नैर्ऋताः ॥१३॥
न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन ॥ त्रिषु लोकेषु [6]वा राम न भवेत्सदृशस्तव ॥ १४ ॥
[ [7]बलामतिबलां चैव [8]पठतस्तव राघव] ॥ न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये ॥
नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ १५ ॥
एतद्विद्याद्वये लब्धे भविता नास्ति ते समः ॥ बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ १६ ॥
क्षुत्पिपासे न ते राम भविष्येते नरोत्तम ॥ बलामतिबलां चैव पठतः पथि राघव ॥ १७ ॥
[ [10]गृहाण [11]सर्वलोकस्य गुप्तये रघुनन्दन ] ॥ विद्याद्वयमधीयाने यशश्[12]चाप्यतुलं त्वयि ॥ १८ ॥
पितामहसुते ह्येते विद्ये तेजस्समन्विते ॥ [13]प्रदातुं तव काकुत्स्थ सदृशस्त्वं हि [14]धार्मिक ॥ १९ ॥
कामं [15]बहुगुणाः सर्वे त्वय्येते नात्र संशयः ॥ तपसा संभृते चैते बहुरूपे भविष्यतः ॥ २० ॥

---

राविवाशोभेतामित्यर्थः । स्थाणुं रुद्रं पावकी पावकात्प्रादुर्भूतौस्कन्दविशाखौ । "ततोभवच्चतुर्मूर्तिःक्षणेनभगवान्प्रभुः ॥ स्कन्दोविशाखःशाकश्चनैगमेषश्चपृष्ठतः" इतिभारतोक्तेः । अचिन्त्यं अचिन्त्यवैभवम् ॥ ९ ॥ १० ॥ अधिकमर्धंयस्मिन्तदध्यर्धं अध्यर्धंच तत्योजनंच अध्यर्धयोजनं । सार्धयोजनमितियावत् । तावद्दूरगमनेनबालयोः क्षुत्तृट्पीडामाभूदितितन्निवर्तकविद्याद्वयोपदेशायाऽऽह्वयते—रामेति । मधुरां भक्तिपूर्वकोच्चारणात्रामनाम्नः श्रवणानन्दकरत्वाच्च ॥११॥ सलिलंगृहाण शुद्धाचमनंकुर्वित्यर्थः । विपर्ययः अतिक्रमः विलंबइतियावत् । मन्त्रग्रामं मन्त्रसमष्टिरूपां । इदंबलातिबलयोःप्रत्येकंविशेषणम् ॥ १२ ॥ तद्ग्रहणफलमाह—नेत्यादि । विपर्ययः अन्यथाभावः । भविष्यतीतिशेषः । सुप्तं त्वामितिशेषः ॥ १३ ॥ बलामतिबलांचपठतस्तवेतिशेषः । अस्ति स्यादित्यर्थः । त्रिष्वित्यत्रसर्वगुणैर्निस्सीमत्वमुच्यते ॥ १४ ॥ सौभाग्ये सौन्दर्ये । दाक्षिण्ये सामर्थ्ये । बुद्धिनिश्चये बुद्ध्याकार्यनिश्चये । समः भवतीतिशेषः ॥ १५ ॥ सामान्येनोपसंहरति—एतदिति । तेसमोनास्ति नभविताचेत्यर्थः । मातरौ कारणभूते ॥१६॥ ते । भविष्येते भविष्यतः ॥ १७ ॥ अधीयानेत्वयि । भवेदितिशेषः ॥ १८ ॥ तेजस्समन्विते प्रभावसमन्विते । तवप्रदातुंत्वमेवसदृशोनान्यइतियोजना ॥ १९ ॥ एतदुपपादयति । काममिति । एते पूर्वोक्ताःसौभाग्यादयः कामं प्रकामं त्वयिसन्ति यद्यपि तथापि तपसासंभृते लब्धे एते विद्ये । त्वदुपदेशात् बहुरूपे लोकेबहुधा विस्तृते

---

**ति०** कालस्य अन्नभोजनकालस्य । पर्ययोतिक्रमः । गृहाणत्वमित्युपलक्षणं लक्ष्मणस्यापि । क्षुत्पिपासाशान्तिरूपफलस्योभयोरपिदर्शनादपेक्षणाच्च ॥ १२ ॥ **ती०** प्रमत्तं प्रमादयुक्तं । कार्यान्तरव्यासङ्गादिनाऽसावधानमितियावत् । **ति०** प्रमत्तंअकृताचमनादिकं ॥ १३ ॥ **शि०** कश्चनजातोनास्तिनचभविष्यति । अभवदित्यस्याप्युपलक्षणमेतत् । वाशब्दश्चार्थे ॥ १४ ॥ **ति०** सर्वज्ञानस्यमातराविति । अप्रतिभामूलक्षुधादिनिवृत्तिसामर्थ्यवत्त्वात्सर्वज्ञानजनिके ॥ १६ ॥ **ति०** अधीयानेत्वयीतिशेषः ॥ १८ ॥ **ति०** प्रदातुंममबुद्धिरितिशेषः । सदृशः तद्दानयोग्यइत्यर्थः ॥ १९ ॥ **ती०** बहुरूपे बहुफलप्रदे । **ति०** तपसा मदीयेनसंभृते पूर्णे । बहुरूपे शास्त्रोक्तफलादधिकफलप्रदे । यद्वा तपसा सर्वतपःप्राप्यत्वेनतपोरूपेणभवता । संभृते धृतेइत्यर्थः ॥२० ॥

**[ पा० ]** १ क—छ. झ. ञ. त्कालस्यपर्ययः. २ ट. नश्रमो. ३ क. रूपस्यापिसंक्षयः. ४ ज. नप्रसुप्तं. ५ क. ज. राक्षसाः. ५ क. च. ञ. वैराम ट. वैरामभविष्यतितवानघ. ७ इदमर्धं क. ख. ङ—ट. दृश्यते. ८ ङ. झ. पठतस्तात. ख. ट. पठतःपथि. ९ ङ. झ. नभवेत्सदृशस्तव. १० इदमर्धं. च. छ. ज. ञ. ट. दृश्यते. ११ च. छ. भद्रकाकुत्स्थप्राप्स्यसेरघुनन्दन. १२ ङ. च. छ. झ. श्चाथभवेद्ध्रुवि. १३ क. च. छ. ञ. प्रदास्ये. १४ ङ. च. छ. झ. ञ. पार्थिव. १५ ख. वरगुणास्सर्वे. ज. महागुणास्सन्ति.

ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ॥ प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥ २१ ॥
विद्यासमुदितो रामः शुशुभे भूरिविक्रमः ॥ सहस्ररश्मिर्भगवाञ्शरदीव दिवाकरः ॥ २२ ॥
गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ॥ ऊषुस्तां रजनीं तत्र सरय्वां सुसुखं त्रयः ॥ २३ ॥
दशरथनृपसूनुसत्तमाभ्यां तृणशयनेऽनुचिते तदोषिताभ्याम् ॥
कुशिकसुतवचोऽनुलालिताभ्यां सुखमिव सा विबभौ विभावरी च ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः ॥ २३ ॥

सरयूतीरे विश्वामित्रेणप्रातःप्रबोधनाच्छयनादुत्थितेनसलक्ष्मणेनरामेणस्नानाद्याह्निकनिर्वर्तनपूर्वकंविश्वामित्रसमीपागमनम् ॥ १ ॥ ततोविश्वामित्रेणराघवाभ्यांसहगङ्गासरयूसंगमेकामाश्रमंप्रत्यागमनम् । तथारामंप्रतितदाश्रमस्याङ्गशब्दवाच्यत्वेनिमित्तकथनपूर्वकं तत्रत्यमहर्षिपूजास्वीकरणेनतदहोरात्रंतत्रैवसुखनिवासः ॥ ३ ॥

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ॥ अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १ ॥
कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ॥ उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ २ ॥

भविष्यतः ॥ २० ॥ जलंस्पृष्ट्वा आचम्येत्यर्थः । भावितात्मनः ध्यातात्मस्वरूपात् ॥ २१ ॥ विद्यासमुदितः समुदितविद्यः । लब्धविद्यइतियावत् ॥२२॥ गुरुकार्याणि गुरौकर्तव्यानि पादसंवाहनादीनि । कुशिकात्मजे नियुज्य कृत्वा । त्रयः स्वयंतौचेतित्रयः । तत्रसरय्वां सरयूतीरे । सुसुखमूषुः । यद्वा एतदर्धस्यपूर्वेणान्वयः कुशिकात्मजे गुरुकार्याणिनियुज्य विद्यासमुदितोरामःशुशुभइति ॥ २३ ॥ चतुर्थ्यर्थे "बहुलंछन्दसि" इति षष्ठ्यर्थेचतुर्थी । दशरथपुत्रयोर्विभावरी सुखमिवविबभौ प्रभातेत्यर्थः । इवशब्दोवाक्यालङ्कारे । अत्र रामाय विद्यादानंलक्ष्मणस्याप्युपलक्षणं । पश्चाद्रामोवालक्ष्मणायोपदिदिशेतिबोध्यम् । पूर्ववत्पुष्पिताग्रावृत्तं ॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

---

अथैषामंगदेशप्राप्तिंपूर्ववृत्तकथनव्याजेनव्यंजयति त्रयोविंशे—प्रभातायामित्यादि । पर्णसंस्तरे पर्णमयास्तरणे । पूर्वसर्गान्तेतृणशयनस्योक्तत्वादत्रतृणमिश्रपर्णशयनेइतिबोध्यम् ॥ १ ॥ उभयप्रबोधनार्थमागतोविश्वामित्रोरामस्य "समयाबोधितःश्रीमान्सुखसुप्तःपरंतपः" इत्युक्तरीत्यानिद्राकालिकश्रियमवलोक्य तदासक्तस्सन्स्वागमनकार्यंविस्मृत्य इमंप्रसूतवतीकौसल्याकिंवातपस्तप्तवतीतिविस्मयते । कौसल्यासुप्रजाः । बोधनकाले विस्मितमुखोमुनिरासीत् । शोभनाप्रजापुत्रोयस्याःसासुप्रजाः "नित्यमसिच्प्रजामेधयोः" इत्यसिच् । त्वज्जननीकौसल्यासुपुत्रा । यद्वा स्वगतवचनं । एतज्जननीकौसल्यासुप्रजाः । "कौसल्याशुशुभेतेनपुत्रेणामिततेजसा" इतिवत् । यद्वा कौसल्यायाःसुप्रजइतिसंबोधनं । कर्मधारयेप्यार्षोसिच् "ढ्रलोपेपूर्वस्यदीर्घोणः" इतिदीर्घः "सुपांसुलुक्" इत्यादिनापूर्वसवर्णदीर्घोवा । परशुरामव्यावृत्त्यर्थंविशेषणम् । कौसल्यादशरथयोरुभयोरपितपःफलत्वेनावतीर्णत्वेपिकथंकौसल्यासुप्रजाइत्युक्तिः । उच्यते । "मातापुत्रस्यभूयांसिकर्माण्यारभते" इत्युक्तरीत्या "मातृदेवोभव पितृदेवोभव" इतिवन्मातृप्राधान्योक्तेः "पितुःशतगुणंमाता" इतिस्मृतेश्च । यद्वा कौसल्यादशरथयोर्महदन्तरमस्ति । दशरथोहि "अहंवेद्मिमहात्मानं" इतिपरत्वेननिवेद्यमानेपित्वद्किंचि-

---

ति० कुशिकात्मजोविश्वामित्रः गुरुकार्याणि गुरुविषयाणिकार्याणि पूर्वोत्थायीपश्चात्संनिवेशीत्यादीनि तानिसर्वाणि नियुज्य उपदिश्येत्यर्थः ॥ २३ ॥ इतिद्वाविंशस्सर्गः ॥ २२ ॥

ति० सुप्रजाः शोभनपुत्रवती । अतस्तादृशस्यसुपुत्रस्यतवास्मिन्समयेनिद्राऽनुचिता ॥ २ ॥

[ पा० ] १ ग. ङ. झ. भीमविक्रमः. २ ङ. झ. कुशिकात्मजः. ३ घ. तीरेसरय्वाः. ४ ख. रचिते. ५ ख. ग. घ. सहोषिताभ्यां. ६ ङ. च. छ. झ. ञ. ट. विभावरी. ७ च. छ. ज. ञ. ट. काकुत्स्थंशयानं. ग. काकुत्स्थंशयनै.

तस्यर्षेः परमोदारं वचः श्रुत्वा [1]नरोत्तमौ ॥ स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३ ॥
कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् ॥ अभिवा[2]द्याभिसंहृष्टौ [3]गमनायाभितस्थतुः ॥ ४ ॥
तौ [4]प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम् ॥ ददृशाते ततस्तत्र सरय्वाः सङ्गमे शुभे ॥ ५ ॥
तत्राश्रमपदं पुण्यमृषीणामु[5]ग्रतेजसाम् ॥ बहुवर्षसहस्राणि [6]तप्यतां परमं तपः ॥ ६ ॥
तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् ॥ [7]ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥
[ [8]कौतूहलात्तौ धर्मज्ञौ वीर्यवन्तं तपोधनम् ] ॥ ७ ॥
कस्यायमाश्रमः पुण्यः को न्वस्मिन्वसते पुमान् ॥ भगवञ्श्रोतुमिच्छावः परं कौतूहलं हि नौ ॥८॥
तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गवः ॥ अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥ ९ ॥
कन्दर्पो मूर्तिमानासीत्काम इत्युच्यते बुधैः ॥ १० ॥
तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् ॥
धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११ ॥

---

त्कृत्य "दुःखेनोत्पादितश्चायंनरामंनेतुमर्हसि" इतिरामेकेवलंपुत्रत्वंमन्वानोवसिष्ठसन्धुक्षितहृदयःरामंप्रेषितवान्।कौसल्यातुकेवलवात्सल्यपरापिद्रुतंसादरंप्रेषितवती। तदिदंतारतम्यमवलोक्यमुदितहृदयोमुनिराह—कौसल्यासुप्रजाइति । मातृवाक्यंपितृवाक्यंचपालनीयमित्यमुंधर्मंलोकेप्रवर्तयितुंस्वयंतदनुष्ठातृत्वेनसुप्रजाइत्युक्तं। अथक्रमेणगुणान्तरावगाहान्निस्तीर्यप्रबोधयति—रामेत्यादि। रामेत्यनेनस्वापकालिकसौन्दर्यमुच्यते। पूर्वासन्ध्याप्रवर्तते पूर्वासन्ध्यादिवाकरमिवरामदिवाकरंत्वांकौसल्याजनितवतीतिभावः। यद्वा मातृवत्पूर्वसन्ध्यामप्युपलालयेति। यद्वा पूर्वासन्ध्याप्रवर्तते आदित्यस्येवभवतोऽयंविरोधिनिरसनारंभसमयइति । यद्वा पूर्वासन्ध्याप्रवर्तते अज्ञानान्धकारोगतः भगवत्साक्षात्कारोमेजातः अद्यमेसुप्रभातमिति। यद्वा जगतः सर्वस्यभगवदवतारात्सत्वोद्रेककालोजातः "अद्यमेसफलंजन्मसुप्रभाताचमेनिशा ॥ यदुन्निद्राब्जपत्राक्षंविष्णोर्द्रक्ष्याम्यहंमुखम्" ॥ उत्तिष्ठ निद्राश्रीरवलोकिता प्रबोधश्रियमप्यवलोकितुमिच्छामि। नरशार्दूल नरश्रेष्ठ। नरश्रेष्ठतयाभवतापिसन्ध्योपास्या "यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः" इत्युक्तेः। उत्तिष्ठनरशार्दूल आश्रितविरोधिनिरसनशीलस्यकिंनिद्रावकाशोप्यस्ति। नरशार्दूल

मद्यज्ञनिर्वाहक। उत्थानप्रयोजनमाह्—कर्तव्यंदैवमाह्निकं । देवेनसर्वेश्वरेणविहितंनित्यकर्मकर्तव्यम् । यद्वा देवशब्दोभवदर्थकः। भवदीयमाह्निकंभवदाज्ञारूपंकर्म मयाकर्तव्यं।तत्स्वीकुर्वित्यर्थः। यद्वा दैवं देवाराधनभूतं। आह्निकं अह्नानिर्वर्त्यमेकसुत्यात्मकंकर्मयज्ञात्मकं। कर्तव्यमित्यर्थः ॥२॥ परमोदारं परमगंभीरमित्यर्थः। कृतोदकौ कृतार्घ्यप्रक्षेपौ। यद्वा कृतदेवार्षितर्पणौ। जप्यतइति जपः तं। गायत्रीमितियावत्। तस्याएवपरमत्वात्। "नसावित्र्याःपरंजप्यं"इतिवचनात् ॥ ३ ॥ अह्निभवमाह्निकं। कालाट्ठञ्। कृतप्रातःकृत्यावित्यर्थः। संध्योपासनब्रह्मयज्ञसमिदाधानानिप्रातःकृत्यानि । अभितस्थतुः अभिमुखंस्थितौ ॥४॥ ततः तस्माद्देशात्। प्रयातौ तत्र प्रसिद्धे। सरय्वाःसङ्गमे त्रिपथगां गङ्गां नदीं ददृशाते ॥ ५ ॥ तत्र गङ्गासरय्वोःसंगमे। ददृशातेइत्यनुषज्यते। तप्यतां तपतां। कर्तरियत्छान्दसः ॥ ६ ॥ ७ ॥ वसते वसति ॥ ८॥ प्रश्नमाधुर्यात्प्रहासः। यद्वा मानुषभावनटनात्। यस्यायमाश्रमः सश्रूयतामितियोजना। रामेतिसंबोधनं प्राधान्यात् ॥९॥ कंदर्पइत्यर्धं। यःकामइत्युच्यते सकन्दर्पः । पुरामूर्तिमानासीत् ॥ १० ॥ सार्धश्लोकः। तपस्युन्तं तपश्चरन्तम्। "कर्मणोरोमन्थतपोभ्यांवार्तिचरोः"इतिक्यङ्। इह आआ-

---

ति० प्रहस्य बालकवचनश्रवणजसंतोषाद्धासः ॥ ९ ॥ ती० कंदर्पःकुत्सितदर्पः ॥१०॥ ती० कृतोद्वाहंकरिष्यमाणोद्वाहं। यद्वाकृतोद्वाहंगच्छन्तंउद्वाहंकृत्वागमिष्यन्तं । वर्तमानसामीप्येभविष्यतिलट् । शि० कृतोद्वाहं कृतः उदि नराकृतिद्विभुजपरमात्मा-

[ पा० ] १ ख. ग. घ. नृपात्मजौ. २ ङ. झ. द्यातिसंहृष्टौ. क. ज. द्योपसंहृष्टौ. ३ क—घ. च. छ. ज. ञ. ट. गमनायोप. ४ ग. ङ. झ. ञ. प्रयान्तौ. ५ क—घ. मग्र्यतेजसाम्. ङ. च. छ. झ. ञ. भावितात्मनाम्. ६ च. ञ. तपतां. ७ ख. ज. ऊचतुस्तौ. ख. ऊचतुस्तौमहात्मानौ. ८ इदमर्धं ख. दृश्यते.

अ[1]वदग्धस्य रौद्रेण चक्षुषा रघुनन्दन ॥ व्यशीर्यन्त शरीरात्स्वात्सर्वगात्राणि दुर्मतेः ॥ १२ ॥
तस्य[2] गात्रं हतं तत्र निर्दग्धस्य महात्मना[3] ॥ अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण[4] हि ॥ १३ ॥
अनङ्ग इति विख्यातस्तदाप्रभृति राघव ॥ स चाङ्गविषयः श्रीमान्यत्राङ्गं प्रमुमोच[5] ह ॥ १४ ॥
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा ॥ शिष्या धर्मपरा नित्यं[6] तेषां पापं न विद्यते ॥ १५ ॥
इहाद्य[7] रजनीं राम वसेम[8] शुभदर्शन ॥ पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥
अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् ॥ इह वासः परोऽस्माकं सुखं वत्स्यामहे निशाम् ॥
स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम ॥ १७ ॥
तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ॥ विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १८ ॥
अर्घ्यं पाद्यं तथाऽऽतिथ्यं निवेद्य कुशिकात्मजे ॥ रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् ॥१९॥
सत्कारं समनुप्राप्य[10] कथाभिरभिरञ्जयन् ॥ यथार्हमजपन्[11]सन्ध्यामृषयस्ते समाहिताः ॥ २० ॥
तत्रवासिभिरानीता[12] मुनिभिः सुव्रतैः सह ॥ न्यवसन्सुसुखं तत्र कामाश्रमपदे तदा[13] ॥ २१ ॥

श्रमे तपस्यन्तं । नियमेन अविच्छेदेन । समाहितं समाधिमन्तं । कृतोद्वाहं कृतपार्वतीपरियणं । गच्छन्तं शुश्रूषणार्थंपार्वतींप्राप्नुवन्तं। देवेशं स्थाणुंरुद्रं। दुर्मेधाः कामोधर्षयामास। कृतोद्वाहमितिक्रियाविशेषणं। यदाऽयंकृतोद्वाहोभवति तदातं पार्वत्यांसाभिलाषचित्तमकरोदित्यर्थः । समरुद्गणमित्यपिक्रियाविशेषणं। तदनुमतिपूर्वकमित्यर्थः । महात्मनाहुंकृतश्चासीत् ॥ ११ ॥ व्यशीर्यन्तविशीर्णानि। शॄहिंसायांकर्तरिश्यन् ॥ १२ ॥ तत्र तदा। महात्मनानिर्दग्धस्यशरीरंहतं। अतःकामोशरीरःकृतः ॥ १३॥ कामस्तदाप्रभृतिअनङ्गइतिविख्यातः सोङ्गविषयः अङ्गदेशश्च विख्यातः । तत्रहेतुमाह—यत्रेति । यस्मात्कारणादत्रकामोङ्गंमुमोच तस्मादयंदेशोङ्गइत्युच्यतइत्यर्थः ॥ १४ ॥ तस्य कामस्य स्थाणोर्वा। अयमाश्रमःइमेमुनयः तस्य। पुरा पूर्वकालमारभ्य। सन्तःनपरंपरयाशिष्याः। अतएवधर्मपराः। अतएवचतेषांपापंनविद्यते । पूर्वरुद्रशिष्यत्वेऽपिसंप्रतितच्छिष्यत्वकृतपापंनविद्यतइत्यर्थः । एतेनप्रश्नद्वयस्याप्युत्तरमुक्तं। हिमवतितपस्यन्तंकामोऽधर्षयदित्युक्तिःपुराणान्तरे कल्पान्तरमपेक्ष्य ॥ १५ ॥ इह अङ्गविषये । तरिष्यामहे। गङ्गामितिशेषः ॥ १६ ॥ स्नाताः । अतएवशुचयोभूत्वापुण्यमाश्रममभिगच्छामहे । व्यत्ययात्तङ् ॥ १७ ॥ तेषांसंवदतां तेषुसंवदत्सु। तपसा दीर्घेण विप्रकृष्टार्थग्रहणसमर्थेन। चक्षुषा ज्ञानेन । विज्ञाय दृष्ट्वा । तेषामागमनंताटकादिनिरासनिमित्तंतपोजन्यज्ञानेनविदित्वेत्यर्थः। हर्षं हर्षपुलकं ॥ १८ ॥अर्घ्यं पूजार्थमुदकं। पाद्यं पादार्थमुदकं "पादार्घाभ्यां च"इतियत्प्रत्ययः । आतिथ्यं आचमनीयपूर्वकंभोज्यप्रदानं । अतिथिक्रियां अतिथिपूजां ॥ १९ ॥ सत्कारं कुशलप्रश्नादिकं। विश्वामित्रात्समनुप्राप्य अभिरञ्जयन् अभ्यरञ्जयन् । अतिथिभूतानितिशेषः। क्रमेण सायंसन्ध्यागमेसति । ते तद्वासिनोविश्वामित्रादयश्च । छत्रिन्यायेनऋषयइत्युक्तं। समाहिताः अनन्यपराः । सन्ध्यां अहोरात्रयोःसंधिं। अत्यन्तसंयोगे द्वितीया । यथार्हं यथायोग्यं। यथाशक्तीतियावत् । "सहस्रपरमांदेवींशतमध्यांदशावरां"इतिवचनात् । अजपन् गायत्रीमितिशेषः ॥ २० ॥ आनीताः निद्रायैस्वाश्रमंप्रा-

रघुनाथविचारे वाहः प्रयत्नोयेनतं । उच्छब्दस्यपरमात्मवाचकत्वमुपनिषत्सुप्रसिद्धं । तदर्थस्तु उद्यते तात्पर्यवृत्त्यावेदैःप्रतिपाद्यते असाविति । **वि०** कृतोद्वाहं समाधेःकृतव्युत्थानं कालोचितविलासदेशंगच्छन्तं ॥ ११ ॥ **ति०** रुद्रेण ज्ञातापराधेन । अवध्यातो दृष्टश्च । **शि०** अथ हुंकारानन्तरं । कामइतिशेषः ॥ १२ ॥ **शि०** उपलक्षणविधयारामलक्ष्मणयोरपिसांध्यप्रवृत्तिर्बोध्या ॥२०॥ इतित्रयोविंशस्सर्गः ॥ २३ ॥

[ **पा०** ] १ क. ङ—ञ. अवध्यातस्य. ग. घ. दग्धस्यतस्यरौद्रेण. ख. ङ. झ. ट. अवदग्धस्तुरुद्रेण. च. छ. झ. अवध्यातश्चरुद्रेण. २ च. छ. ञ. तस्याङ्गान्यपतन्नाम. ३ झ. महात्मनः. ४ ख. क्रोधाद्देवेनचक्षुषा. ५ क. ख. ग. ङ—ञ. समुमोच. ६ ख. ङ. छ—ट. वीर. क. वीराः. च. धीराः. ७ क. इहैवसत्कृता. ८ ट. वत्स्यामः. ९ इदमर्धं च—ट. दृश्यते. १० ज. प्रथमंप्राप्य. ११ ख. घ. ट. न्सन्ध्यांमुनयस्ते. १२ छ. रासीनाः. १३ ज. झ. तथा.

कथाभिरभिरामाभिरभिरामौ नृपात्मजौ ॥ रमयामास धर्मात्मा कौशिको मुनिपुङ्गवः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः ॥ २४ ॥

प्रातःकृताह्निकैर्विश्वामित्रादिभिस्त्रिभिर्गङ्गातरणायनौकारोहणेनप्रस्थानम् ॥ १ ॥ मध्येगङ्गंतुमुलजलघोषश्राविणारामेण-विश्वामित्रंप्रतितत्कारणप्रश्नः ॥ २ ॥ तंप्रतितेनसरयूत्पत्तिप्रकारकथनपूर्वकंतस्यमहाशब्दस्यतदीयत्वकथनम् ॥ ३ ॥ गङ्गामुत्तीर्यदक्षिणतीरंगतेषुतेषुविश्वामित्रेणरामंप्रतितत्रत्यमहावनप्रदेशस्यपुरामलदकरूशदेशत्वकथनपूर्वकंतयोस्तत्पदप्रवृत्तिनिमित्त-कथनम् ॥ ४ ॥ तथातयोर्जनपदयोस्ताटकयाविध्वंसननिवेदनपूर्वकंतद्ध्वंसनचोदनम् ॥ ५ ॥

ततः प्रभाते विमले कृत्वाऽऽह्निकमरिंदमौ ॥ विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १ ॥
ते च सर्वे महात्मानो मुनयः संशितव्रताः ॥ उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥
आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ॥ अरिष्टं गच्छ पन्थानं मा भूत्कालविपर्ययः ॥ ३ ॥
विश्वामित्रस्तथेत्युक्त्वा तानृषीनभिपूज्य च ॥ ततार सहितस्ताभ्यां सरितं सागरंगमाम् ॥ ४ ॥
ततः शुश्राव वै शब्दमतिसंरंभवर्धितम् ॥ मध्यमागम्य तोयस्य सह रामः कनीयसा ॥ ५ ॥
अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम् ॥ वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः ॥ ६ ॥
राघवस्य वचः श्रुत्वा कौतूहलसमन्वितः ॥ कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७ ॥
कैलासपर्वते राम मनसा निर्मितं सरः ॥ ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः ॥ ८ ॥
तस्मात्सुस्राव सरसः साऽयोध्यामुपगूहते ॥ सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९ ॥

पिताः । कामाश्रमपदे कामदाहात्कामाश्रमनामकस्य पदे स्थाने ॥ २१ ॥ कथाभिः तदाश्रमवैभवपराभिः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

एवं कामाश्रमपदं रामचरणनलिनविन्यासेनकृतार्थीकृत्य ताटकावनमपिनिष्कल्मषीकर्तुं रामंप्रापयतिमुनिश्चतुर्विंशे—ततइत्यादि । विमले सूर्योदयेइत्यर्थः । नद्याःगङ्गायाः ॥ १ ॥ उपस्थाप्य आनाय्य ॥ २ ॥ राजपुत्राभ्यांपुरस्कृतः पूजितः । ताटकावधाभिप्रायेणाहुः—अरिष्टमिति । अरिष्टं शुभंयथाभवतितथा । "अरिष्टंपापशुभयोः"इतिहलायुधः । कालविपर्ययः कालविलंब इतियावत् ॥ ३ ॥ ततार तरितुंप्रवृत्तः । सरितं गङ्गां सागरंगच्छतीतिसागरंगमां । खश्प्रकरणे"गमेस्सुप्युपसंख्यानं" इतिखश् ॥४॥ अतिसंरंभेण तरङ्गपरस्परसंघट्टजक्षोभेण। वर्धितं अतिप्रवृद्धं ॥ ५ ॥ भिद्यमानस्य परस्परंमिलितस्य । वारिणः । तुमुलः निबिडोग्रं ध्वनिः । किंवारिसंभेदकृतउतान्यकृतइतिप्रश्नः ॥ ६ ॥ निश्चयं कारणनिश्चयं ॥ ७ ॥ अस्यध्वनेःकारणंवारिसंभेदएवेतिवक्ष्यन्कस्यावारिणइतिप्रक्ष्यतीतिमत्वासरय्वाइतिवक्तुंसरयूवैभवमाह—कैलासेति । कैलासपर्वते कुबेरभवने । ब्रह्मणामनसानिर्मितंसरोस्ति । तेन मनसानिर्मितत्वेन । इदंसरः मानसमित्युच्यते ॥ ८ ॥ उपगूहते आवृत्यप्रवहते । अयोध्यायाःपश्चिमभागमा-

शि० विमले समूलमलनिवर्तकगङ्गाजले ॥ १ ॥ शि० अरिष्टंनिर्विघ्नंयथाभवतितथापन्थानंगच्छ ॥ ३ ॥ ति० सागरंगमां सागरंगच्छति जलपूर्णत्वरूपस्वरूपंप्रापयति तां । अन्तर्भावितण्यर्थः । अगस्त्यशोषितस्यसमुद्रस्यगङ्गयापूरणंकृतमितिप्रसिद्धेः ॥ ४ ॥ ति० वि० पुण्यत्वेहेतुर्ब्रह्मसरश्च्युतत्वं ॥ ९ ॥

[ पा० ] १ ट. तेतुसर्वे. २ च. छ. ञ. शिवां. ३ ख. ट. शुभांनावं. ४ क—छ. झ. ञ. त्कालस्यपर्ययः. ५ ङ. च. झ. ञ. तानृषीन्प्रति. ६ ङ. झ. तत्रशुश्राववैशब्दंतोयसंरंभवर्धितम्. च. छ. ञ. ततश्शुश्रुवतुश्शब्दंतोयसंरंभवर्धितम्. क. ततश्शुश्रावतंशब्दंनद्यास्संरंभवर्धितम्. ज. ततश्शुश्रुवतुश्शब्दंनद्यास्संरंभवर्धितम्. ग. घ. ततश्शुश्रावतंशब्दमतिसंरंभवर्धितम्. ख. ततश्शुश्रावखेशब्दमतिसंरंभवर्धितम्. ७ ङ—ट. तोयस्यतस्यशब्दस्यनिश्चयम् । ज्ञातुकामोमहातेजास्सहरामःकनीयसा. ८ रामस्यवचनं. ९ क. ग—छ. झ. ञ. ट. समन्वितम्. १० ङ. झ. वरम्.

तस्यायमतुलः शब्दो जाह्नवीमभिवर्तते ॥ वारिसंक्षोभजो राम प्रणामं नियतः कुरु ॥ १० ॥
ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ ॥ तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११ ॥
स वनं घोरसंकाशं दृष्ट्वा नृपवरात्मजः ॥ अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुङ्गवम् ॥ १२ ॥
अहो वनमिदं दुर्गं झिल्लिकागणनादितम् ॥ भैरवैः श्वापदैः पूर्णं शकुन्तैर्दारुणारुतैः ॥ १३ ॥
नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवैः स्वनैः ॥ सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम् ॥ १४ ॥
धवाश्वकर्णककुभैर्मरुतिन्दुकपाटलैः ॥ संकीर्णं बदरीभिश्च किं न्वेतद्दारुणं वनम् ॥ १५ ॥
तमुवाच महातेजा विश्वामित्रो महामुनिः ॥ श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनम् ॥ १६ ॥
एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ॥ मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥ १७ ॥
पुरा वृत्रवधे राम मलेन समभिप्लुतम् ॥ क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् ॥ १८ ॥
तमिन्द्रं स्नापयन्देवा ऋषयश्च तपोधनाः ॥ कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् ॥ १९ ॥
इह भूम्यां मलं दत्वा दत्वा कारूशमेव च ॥ शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २० ॥
निर्मलो निष्करूशश्च शुचिरिन्द्रो यदाऽभवत् ॥ ददौ देशस्य सुप्रीतो वरं प्रभुरनुत्तमम् ॥ २१ ॥

रभ्यउत्तरदिग्भागेन पूर्वभागमागत्याङ्गदेशेगङ्गयासहयुज्यतेसरयूः । तयोर्नद्योःसंभेदेस्थाण्वाश्रमः । तस्मात् सरयूयुक्तगङ्गातरणदशायांसरयूजलमुन्नताद्भागीरथ्यांपततीतितस्यध्वनिरितिज्ञेयं।सरयूशब्दंनिर्वक्ति—सरइति। सरसोयौतीतिसरयूः । पाठान्तरंसरसोयातीतिसरयूः।सकारस्य शकन्ध्वादित्वात्पररूपं "ऊङुतः"इति स्त्रीप्रत्ययऊकारः। कस्मात्सरस इत्यतआह—ब्रह्मसरश्च्युतेति ॥९॥ यागङ्गामभिवर्तते गङ्गयासंयुज्यते । अयमतुलःशब्दःतस्याःवारिसंक्षोभजः। सन्धिरार्षः । नियतः नियतमनस्कःसन् । ताभ्यांनदीभ्यां । प्रणामं कुरु । कोयंध्वनिरितिरामेणपृष्टे सरयूवारिसंघट्टजइतिवक्तव्ये तदुत्पत्तिकथनंनन्तव्यत्वाय॥१०॥नदीसंभेदेरात्रिमुषित्वाप्रातर्दक्षिणाभिमुखागङ्गांतेरुः । ततोगङ्गादक्षिणतीरेताटकावनमितिज्ञेयं ॥ ११ ॥ संकाशतइति संकाशः। घोरसंकाशं घोररूपमितियावत् । अविप्रहतं अक्षुण्णं जनसंचाररहितमित्यर्थः ॥१२॥ अहोइत्यादिश्लोकत्रयं । झिल्लिका भूतलाद्यन्तरितकीटविशेषः । भैरवैः भयंकरैः । श्वापदैः क्रूरमृगैः । शकुन्तैः भासैः । "शकुन्तौभासपक्षिणौ" इत्यमरः । शकुनैः पक्षिभिः । वाश्यद्भिः कुत्सितंशब्दायमानैः। धवः अश्वकर्णः ककुभः मरुतिन्दुकः पाटलः इदंवनमेतादृशं । अहोइदं वनंदारुणं। किंनु किंनामकमित्यन्वयः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ एतद्दारुणंवनं यस्यप्राणिनः सश्रूयतामिति योजना ॥१६॥ स्फीतौ प्रवृद्धधनधान्यौ । मलदाश्च करूशाश्च मलदकरूशनामधेयौ । अवयवबहुत्वाद्बहुवचनं मत्स्याःपाञ्चालाइतिवत् । देवनिर्माणेन देवनिर्माणतुल्यनिर्माणेन । निर्मितौ देवलोकसमसंस्थानावित्यर्थः ॥ १७ ॥ मलदकरूशसंज्ञानिमित्तमाह—पुरेत्यादि । वृत्रवधेकृतेसति मलेन अशुचित्वेन क्षुधा बुभुक्षयाच समभिप्लुतं व्याप्तं इन्द्रं ब्रह्महत्या समाविशत् । ब्रह्महत्यावशेनमलक्षुधाविन्द्रस्याभूतामित्यर्थः ॥ १८ ॥ स्नापयन् गङ्गादितीर्थेषुस्नापयन् । पुनर्मन्त्रपूतैः कलशैः कलशोदकैः । स्नापयामासुः । तेन स्नापनेन । अस्य इन्द्रस्य । मलं चकारात्कारूशं । प्रमोचयन् प्रामोचयन् ॥ १९ ॥ करूशमेवकारूशं । स्थानप्रमाणात् । क्षुधमित्यर्थः ॥ २० ॥ शुचिः ब्रह्महत्यातःपूतः ॥ २१ ॥

**शि०** तस्येतिसामान्येनपुंसकं ॥ १० ॥ **शि०** किं किंनामकंकिंस्वामिकंचेत्यर्थः । तुश्चार्थे ॥ १५ ॥ **तीर्था०** मलदाश्चकरूशाश्चेतिबहुवचनंआपोदाराइतिवच्छब्दस्वभावकृतं ॥ १७ ॥

**[ पा० ]** १ ख. ङ. झ. ट. नरवरात्मजः. २ ङ—ञ. संयुतम्. ३ ख. ग. ङ. च. छ. झ. ञ. कीर्णं. ४ क. च. छ. ञ. दारुणस्वनैः. ङ. झ. दारुणारवैः. ज. ट. दारुणैरुतैः. ५ ङ. च. छ. झ. ञ. श्वापिशोभितम्. क. रुपशोभितम्. ६ क. ख. ग. ङ. च. छ. झ. ञ. बिल्वतिन्दुक. ७ ट. किंत्वेतत्. ग. ङ. झ. किंन्विदं. ८ ङ. झ. मलिनंदेवाः. ९ क. ग. च. छ. ञ. सोस्मिन्देशेमलंत्यक्त्वा. १० ङ. झ. देवाः. ११ क. च. छ. ञ. वृत्रारिर्ब्रह्मसंभूतंततोहर्षमवाप्तवान्. १२ ङ. झ. शुद्धइन्द्रोयथा. १३ ङ. च. छ. झ. ञ. ततोदेशस्यसुप्रीतोवरंप्रादादनुत्तमम्.

इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ॥ मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥ २२ ॥
साधुसाध्विति तं देवाः पाकशासनमब्रुवन् ॥ देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥२३॥
एतौ जनपदौ स्फीतौ दीर्घकालमरिंदम ॥ मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥ २४ ॥
कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी ॥ बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥
ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः ॥ २५ ॥
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६ ॥
वृत्तबाहुर्महावीर्यो विपुलास्यतनुर्महान् ॥ राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥ २७ ॥
इमौ जनपदौ नित्यं विनाशयति राघव ॥ मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥ २८ ॥
सेयं पन्थानमावार्य वसत्यध्यर्धयोजने ॥ अतएव च गन्तव्यं ताटकाया वनं यतः ॥ २९ ॥
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ॥ मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३० ॥
न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशम् ॥ यक्षिण्या घोरया राम उत्सादितमसह्यया ॥ ३१ ॥
एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् ॥ यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

## पञ्चविंशः सर्गः ॥ २५ ॥

विश्वामित्रेणरामंप्रति उत्पत्तिप्रभृतिताटकावृत्तान्तकथनम् ॥ १ ॥ तथाब्रह्मवरात्तस्याइतरावध्यत्वकथनेनस्त्रीवधस्यकर्तव्यत्वेपुरावृत्तदृष्टान्तीकरणपूर्वकंतद्वधविधानम् ॥ २ ॥

अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् ॥ श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १ ॥

---

वरमेवाह—इमाविति । मलंद्यतिखण्डयतीतिमलदः "अन्येभ्योपिदृश्यते"इतिखच् । करूशमस्यास्तीतिकरूशः । अङ्गमलधारिणौ करूशस्याप्युपलक्षणमिदम् । एतौममाङ्गमलकरूशधारणान्मलदाःकरूशाश्चेतिख्यातिं गमिष्यतइत्यर्थः ॥ २२ ॥ २३ ॥ अतइत्यादावध्याहार्यम् ॥ २४ ॥ एवंपालनीयत्वायदेशस्यपुण्यत्वमुक्त्वातस्यदारुणत्वेहेतुमाह—कस्यचिदिति । अर्धत्रयम् । कस्मिंश्चित्कालेगतेसति । तदा जन्मकालएव । नागसहस्रस्य गजसहस्रस्य । बलंधारयन्तीताटकानामयक्षी अभूत् । ते तुभ्यं । भद्रमस्तु । ताटकातोभयंमाभूदित्यर्थः ॥ २५ ॥ मारीचइत्यर्धम् ॥ २६ ॥ अत्रयइतिशेषः । यःप्रजाःनित्यंत्रासयतेसमारीचोयस्याःपुत्रःसायक्षीअभूदितिपूर्वेणान्वयः ॥ २७ ॥ अस्तुताटका किंततस्तत्राह—इमाविति ॥ २८ ॥ आवार्य आवृत्य । यतःयस्मिन्मार्गे । ताटकायाःवनं । अतएवमार्गेणगन्तव्यं ॥ २९ ॥ निष्कण्टकं निरुपद्रवम् ॥ ३० ॥ ईदृशं अतीवपुण्यं । असह्यया इतरैरजेयया ॥ ३१ ॥ यथा येनप्रकारेण । दारुणं यथाच उत्सादितं निर्जनीकृतं । यथाचोत्सादनान्ननिवर्तते तदेतत्सर्वमाख्यातमितियोजना ॥३२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुर्विंशःसर्गः ॥ २४ ॥

---

स्त्रियाअपिसर्वलोकविनाशिन्यावधे नदोषइत्याह-

---

**ति०** । ताटकानाम तेभद्रं प्रथमशौर्यस्थानत्वेनशौर्यप्रसिद्धिकरत्वरूपंभद्रत्वमस्याइतिबोध्यं ॥२५॥ **ती०** पन्थानमावृत्य । अतएवन गन्तव्यं । अतस्ताटकानिरसनात्पूर्वंगन्तुमशक्यत्वान्नगन्तव्यमित्युक्तिः । अतएवचगन्तव्यमितिक्वचित्पाठः ॥२९॥ **शि०** मन्नियोगादित्युक्त्यास्त्रियंनहनिष्यामीतिप्रत्युत्तरंत्वयानवक्तव्यमितिहेतुर्ध्वनितः ॥३०॥ **ती०** उत्सादितं विजनीकृतं ॥३१॥ इतिचतुर्विंशस्सर्गः२४
**शि०** अथ मङ्गलमूलंवचनंश्रुत्वा ॥ १ ॥

**[पा०]** १ च. छ. झ. ञ. ट. मुदिताः. २ ङ. च. छ. झ. ञ. यक्षिणी. ३ क. ङ. च. छ. झ. ञ. ट. महाशीर्षो. ४ ङ—ट. मावृत्य. ५ क. प्रति. च. छ. ततः. ६ क. मासाद्य. ७ ङ. च. छ. झ. ञ. शक्तोह्यागन्तु. ८ ग. ज. ट. यदेतत्. घ. ययैतत्.

अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुङ्गव ॥ कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥
[इत्युक्तवचनं श्रुत्वा राघवस्यामितौजसः ॥ हर्षयञ्श्लक्ष्णया वाचा सलक्ष्मणमरिंदमम् ॥ ३ ॥]
विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्तरा ॥ वरदानकृतं वीर्यं धारयत्यबला बलम् ॥ ४ ॥
पूर्वमासीन्महायक्षः सुकेतुर्नाम वीर्यवान् ॥ अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ ५ ॥
पितामहस्तु संप्रीतस्तस्य यक्षपतेस्तदा ॥ कन्यारत्नं ददौ राम ताटकां नाम नामतः ॥ ६ ॥
ददौ नागसहस्रस्य बलं चास्याः पितामहः ॥ न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ॥ ७ ॥
तां तु जातां विवर्धन्तीं रूपयौवनशालिनीम् ॥ जंभपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ॥८॥
कस्यचित्त्वथ कालस्य यक्षी पुत्रमजायत ॥ मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ॥ ९ ॥
सुन्दे तु निहते राम सागस्त्यं मुनिपुङ्गवम् ॥ ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ॥ १० ॥
भक्षार्थं जातसंरंभा गर्जन्ती साऽभ्यधावत ॥ ११ ॥
आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ॥ राक्षसत्वं भजस्वेति मारीचं व्याजहार सः ॥१२॥
अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान् ॥ १३ ॥
पुरुषादी महायक्षी विरूपा विकृतानना ॥ इदं रूपं विहायाथ दारुणं रूपमस्तु ते ॥ १४ ॥
सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता ॥ देशमुत्सादयत्येनमगस्त्यचरितं शुभम् ॥ १५ ॥
एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम् ॥ गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥ १६ ॥
न ह्येनां शापसंस्पृष्टां कश्चिदुत्सहते पुमान् ॥ निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १७ ॥

पञ्चविंशे—अथेत्यादि । अप्रमेयस्य अप्रमेयप्रभावस्य ॥१॥यदा यस्मात् । यदायत्रादर्गोहेतावपि मुनिभिःप्रयुज्यन्ते । यस्माच्छ्रूयन्ते तस्मात् अबला स्त्री । कथं नागसहस्रस्यबलंधारयति ॥ २—३ ॥ येनहेतुनाबलोत्तराभवति तंशृणु । तस्यावरदानकृतंवीर्यबलमस्ति अतोऽबलापिबलंधारयति ॥ ४ ॥ वरदानप्रकारमाह—पूर्वमित्यादि ॥ ५ ॥ नामप्रसिद्धौ ॥ ६ ॥ यक्षाय सुकेतवे ॥ ७ ॥ विवर्धतीं विवर्धमानां । भार्यां ददौ भार्यात्वेनददौ ॥ ८ ॥ कस्मिंश्चित्कालेगतेसति अजायत अजनयत् ॥ ९ ॥ शापप्रकारमाह—सुन्देत्विति । निहते अगस्त्येनेतिशेषः । प्रधर्षयितुंहन्तुं । इच्छति ऐच्छत् ॥ १० ॥ जातसंरंभा स्वभर्तृवधजनितकोपा । अतएवभक्षार्थमभ्यधावत । अर्धं ॥ ११—१२ ॥ अगस्त्यइत्यर्धं ॥ १३ ॥ पुरुषादी मनुष्यभक्षिणी । त्वमिदंरूपंविहायपुरुषादीत्यादिविशेषणयुक्ताभव । अथतेदारुणं क्रूरं । रूपं शरीरंअस्तु ॥ १४ ॥ अगस्त्यचरितं तदानीमितिशेषः ॥१५॥ जहि नाशय ॥ १६ ॥ शाप-

**ति०** यदा यतः । यक्षी यक्षजातिः । श्रूयते पुराणादावितिशेषः । अबलेतिसाभिप्रायं । **शि०** यदा यतः । यक्षी ताटका । अबलाश्रूयते भवदुक्त्याज्ञायते । अतः अल्पवीर्याभवितुमर्हतीतिशेषः । अतः नागसहस्रस्यबलंकथंधारयति ॥ २ ॥ **ती०** अत्र बलमात्रेप्युत्तरत्वेनवक्तव्ये वीर्यस्याभिधानं वीर्यशौर्यादयोऽन्येपिगुणाःसन्तीतिज्ञापयितुं ॥ ४ ॥ **वि०** तदभिसंहितगुणवतापुत्रेणात्यन्तजनपीडाभवेदितिविचार्यपुत्रंनददौ ॥ ७ ॥ **शि०** जंभपुत्रायेत्यत्रखञ्जुपुत्रायेतिपाठः । अत्रपाठे खञ्जूरितिजंभस्यैवनामान्तरंबोध्यं । असुरयक्षयोर्देवयोनित्वेनउचितःसंबन्धइतिनागोजिभट्टाः ॥ ८ ॥

**[ पा० ]** १ क. ङ. च. छ. झ. ञ. यक्षीश्रूयते. २ अयंश्लोकः ङ. छ. झ. ञ. दृश्यते. ३ क. ख. तस्यतद्वचनंश्रुत्वा रामस्यविदितात्मनः. ४ ङ. च. छ. झ. ञ. बलोत्कटा. ५ क. सदाचारः. ६ क. ख. ग. ङ. च. छ. झ. ञ. सुप्रीतः. ७ ङ. च. छ. झ. ञ. बालां. ख. कन्यां. ८ च. कुंभपुत्राय. क–घ. झर्झपुत्राय. छ. गर्गपुत्राय. ९ ङ. झ. ददौचासौ. च. छ. ञ. ददौचास्यै. १० क. ग—छ. झ. ञ. ट. पुत्रंव्यजायत. ११ ङ. झ. अगस्त्यमृषिसत्तमम्. १२ ख. आपतन्तींतुतांदृष्ट्वापुनस्तस्यास्तमात्मजम् । क्रुद्धःकृशानुसंकाशोह्यगस्त्योभगवानभूत् । राक्षसत्वं. १३ ङ. च. छ. झ. ञ. परमामर्षः. १४ क. ख. ङ. च. छ. झ. ञ. विकृता. १५ क. रूपंविसृज्याथ. ख. रूपंपरित्यज्य. ग. घ. रूपमपाहाय. ङ. च. छ. झ. ञ. रूपंविहायाशु. १६ ङ. च. छ. झ. ञ. अगस्त्याचरितं. १७ ट. दुर्धर्षां. १८ ङ. च. छ. झ. ञ. संसृष्टां.

न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ॥ चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ॥ १८ ॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ॥ पातकं वा सदोषं वा कर्तव्यं रक्षता सताम् ॥ १९ ॥
राज्यभारनियुक्तानामेष धर्मः सनातनः ॥ अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ॥ २० ॥
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ॥ पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ २१ ॥
विष्णुना च पुरा राम भृगुपत्नी दृढव्रता ॥ अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥२२॥
एतैश्चान्यैश्च बहुभी राजपुत्र महात्मभिः ॥ अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥
तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ॥ २६ ॥

रामेणस्वधनुष्टङ्कारश्रवणात्साट्टहासमागतायास्ताटकायामुनिचोदनयाहननम् ॥ १ ॥ ततोविश्वामित्रादिभिस्तस्मिन्वने तद्रात्र्यांसुखनिवासः ॥ २ ॥

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ॥ राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १ ॥
पितुर्वचननिर्देशात्पितुर्वचनगौरवात् ॥ वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २ ॥
अनुशिष्टोस्म्ययोध्यायां गुरुमध्ये महात्मना ॥ पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः ॥ ३ ॥
सोहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः ॥ करिष्यामि न संदेहस्ताटकावधमुत्तमम् ॥ ४ ॥
गोब्राह्मणहितार्थाय देशस्यास्य सुखाय च ॥ तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५ ॥

संस्पृष्टां शापयुक्ताम् ॥ १७ ॥ ते त्वया । घृणा जुगुप्सा । कर्तव्यं कर्मेतिशेषः ॥ १८ ॥ नृशंसं क्रूरकर्म । सदोषं सापवादंकर्म रक्षता राजपुत्रेण प्रजारक्षणकारणात्कर्तव्यं ॥ १९॥ सनातनः नित्यः। अधर्म्यां अधर्मादनपेतां । एतदेवाह—धर्मइति ॥२०॥ स्त्रीवधस्यकर्तव्यत्वे इतिहासद्वयमाह—श्रूयतइत्यादिना। मन्थरां मन्थराभिधानां ॥२१॥ काव्यमाता शुक्रमाता। इयंकथामत्स्यपुराणेदर्शिता। स्वपुत्रेशुक्रेदेवशिक्षार्थंरुद्रसमीपेतपस्यतिसतिदेवपीडिताअसुराःशुक्रमातरंभृगुपत्नींशरणमगच्छन् । साचासुररक्षणार्थंदेवान्हन्तुमुद्युक्ता। तांचेन्द्रप्रार्थितोविष्णुरासाद्यतस्याःशिरश्चिच्छेदेति ॥२२॥ एतैः एतादृशैरित्यर्थः ॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चविंशःसर्गः ॥ २५ ॥

---

अथताटकावधःषड्विंशे—मुनेरित्यादि । अक्लीबं धृष्टं ॥ १ ॥ पितुर्वचननिर्देशात् नियोगात् कौशिकवचनं त्वयाकर्तव्यमित्येवंरूपात् । पितृवचनगौरवात् बहुमानाच्च । इति उक्तप्रकारं कौशिकस्यवचनंकर्तव्यमितिमानसव्यापारः ॥ २ ॥ मुनिंप्रत्याह—अनुशिष्टइति ॥ ३ ॥ श्रुत्वास्थितः । सोहमित्यन्वयः ॥ ४ ॥ उद्यतः

**ति॰** वाशब्दइवार्थे । अनृशंसमिव नृशंसंक्रूरमपिकार्यमित्यर्थः । रक्षतासदेति रक्षाधर्मसमृद्धिशेषत्वेनेतिभावः ॥ १९ ॥ **ति॰** अनिद्रं निद्रासुखरहितं ॥ २२ ॥ **ति॰** एतैः एतादृशैः । यद्वा आर्षंबहुत्वं । एताभ्यां शक्रविष्णुभ्यामित्यर्थः । मच्छासनादिति । यथापरशुरामस्यजमदग्नेर्गुरोराज्ञयामातृवधेपिनदोषः । तथा बलादिदातृत्वेनगुरोर्ममाज्ञयास्त्रीवधेतवनदोषइतिभावः ॥ २३ ॥ इतिपञ्चविंशस्सर्गः ॥ २५ ॥

**ती॰** अक्लीबं महार्थं ॥ १॥ **ति॰** तवचहिताय अस्यहितं स्वाज्ञापरिपालनेनसंतोषरूपं । **शि॰** लोकस्य अस्मदृष्टिपथस्यास्य

[ पा॰ ] १ ङ. च. झ. ञ. हितार्थंहि. २ ग. ङ. झ. ट. सदा. ख. घ. सता. ३ झ. ञ. ह्यस्यां. ४ ख. मबलामभ्य. ५ ङ. च. छ. झ. ञ. पतिव्रता. ६ झ. अनिदं. ७ ख. ग. घ. एतैरन्यैश्च. ८ ङ. च. छ. झ. ञ. राजपुत्रैर्महा. ख. राजभिश्च. ९ क. ग. घ. निरता. १० इदमर्धं झ. दृश्यते. ११ ख. घ. ङ. च. छ. झ. ञ. नावज्ञेयंहि. १२ ङ. च. छ. झ. ञ. देशस्यचहिताय. ट. लोकस्यचहिताय.

एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिंदमः ॥ ज्याघोषमकरोत्तीव्रं दिशः शब्देन नोदयन् ॥ ६ ॥
[तस्य संरंभमालोक्य सभ्रातुर्मुनिपुङ्गवः ॥ स हर्षमतुलं लेभे रामं साध्विति चाब्रवीत् ॥ ७ ॥]
तेन शब्देन वित्रस्तास्ताटकावनवासिनः ॥ ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ८ ॥
तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ॥ श्रुत्वा चाभ्यद्रवद्वेगाद्यतः शब्दो विनिःसृतः ॥९॥
तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ॥ प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥१०॥
पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः ॥ भिद्येरन्दर्शनादस्या भीरूणां हृदयानि च ॥ ११ ॥
[एनां पश्य दुराधर्षां निर्भिन्नहृदयां क्षितौ ॥ शयानां शयने वीर धूतपापां भयावहाम् ॥ १२ ॥]
एनां पश्य दुराधर्षां मायाबलसमन्विताम् ॥ विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ १३ ॥
न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् ॥ वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥१४॥
एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता ॥ उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १५ ॥
विश्वामित्रस्तु ब्रह्मर्षिर्हुङ्कारेणाभिभर्त्स्य ताम् ॥ स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १६ ॥
उद्धून्वाना रजो घोरं ताटका राघवावुभौ ॥ रजोमोहेन महता मुहूर्तं सा व्यमोहयत् ॥ १७ ॥
ततो मायां समास्थाय शिलावर्षेण राघवौ ॥ अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥ १८ ॥
शिलावर्षं महत्तस्याः शरवर्षेण राघवः ॥ प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १९ ॥
ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् ॥ सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ २० ॥
कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः ॥ अन्तर्धानं गता यक्षी मोहयन्तीव मायया ॥
अश्मवर्षं विमुञ्चन्ती भैरवं विचचार ह ॥ २१ ॥

अहमितिशेषः ॥ ५—७ ॥ सुसंक्रुद्धा प्रकृत्याअतिकोपना । मोहिता किंकर्तव्यमितिसंभ्रान्ता । आसीत् ॥ ८ ॥ अभिनिध्याय आकर्ण्य । क्रोधमूर्च्छिताआसीत् । श्रुत्वाक्रुद्धासाऽभ्यद्रवच्च ॥९॥ प्रमाणेन औन्नत्येन ॥ १० ॥ भैरवं भयंकरं। दारुणं विकृतम् ॥ ११ ॥ मायाबलं अन्तर्धानबलं विनिवृत्तां पराङ्मुखीं । एतावतैवगुरुवचनानुष्ठानसिद्धेरितिभावः ॥ १२—१३ ॥ वीर्यगतिहननं हस्तपादभञ्जनेन ॥ १४—१५ ॥ अ-
स्त्वित्यत्रइतिशब्दोऽध्याहार्यः । अतिमानुषशक्तिंजानन्नपिताटकायाःक्रौर्यातिशयंदृष्ट्वातिशङ्कयामहर्षिर्मङ्गलमाशास्ते ॥ १६ ॥ उद्धून्वाना उत्किरन्ती ॥ १७ ॥ मायां अन्तर्धानशक्तिम् ॥ १८॥ प्रतिहत्य भङ्क्त्वा । करौचिच्छेद शिलावर्षहेतुत्वात्। पत्रिभिः शरैः ॥१९॥ अभ्याशे समीपे । गर्जतीं गर्जन्तीं । नुमभावआर्षः ॥ २० ॥ कामरूपधरा कामरूपधरणशक्ता । अतएवानेकशोरूपाणिकृत्वामाययाअन्तर्धानंगतासती भैर-

देशस्य । चकारेणयशःप्राप्तिरूपलब्धिताय । चकारान्तरेणस्वनिष्ठभवच्छिष्यत्वप्रकटनाय ॥ ५ ॥ **शि०** यतः शब्दोविनिस्सृतः तंशब्दंश्रुत्वा क्रोधमूर्च्छिता राक्षसी ताटका । अभिनिध्याय शब्ददेशंनिश्चित्य । क्रुद्धायतः क्रुद्धस्यक्रोधस्यआयतोविस्तारोयस्मात्सशब्दोयतोविनिस्सृतः तंदेशमभ्यद्रवत् । अतएवक्रोधमूर्च्छितेत्यनेन क्रुद्धेत्यस्यनपौनरुक्त्यं । चशब्दोयतइत्यर्थे ॥ ९ ॥ **ती०** वीर्यं पराभिभवनशक्तिं । गतिं आकाशादिगतिं ॥ १४ ॥ **ति०** राममेव विश्वामित्रस्यदुर्धर्षत्वेनतंविसृज्यमानुषबुद्ध्यारामामेवेत्यर्थः ॥ १५ ॥ **ती०** रजोमोहेन रजोन्धकारेण । **वि०** रजोमेघेन रजोन्धकारेण । **शि०** रजोमेघेन मेघसदृशरजसा ॥१७॥ **ती०** मायास्त्रं मायानिर्मितास्त्रं । मायाविद्यामितियावत् ॥ १८ ॥

**[पा०]** १ ख. ग. घ. ज्याशब्दं. २ ट. पूरयन्. ३ अयंश्लोकः ख. दृश्यते. ४ क. ङ. च. छ. झ. ञ. ट. चाभ्यद्रवत्क्रुद्धा. ५ ख. ङ. ट. क्रुद्धो. ६ घ. ट. नातिवृत्तां. ७ अयंश्लोकः क. ख. दृश्यते. ८ क. ङ. च. छ. ञ. चैव. ९ ङ. च. छ. झ. ञ. हन्यामितिहि. १० ङ. झ. बाहुं. ११ ङ. झ. ट. उद्धुन्वाना. १२ क. ख. ङ. ञ. ट. मेघेन. १३ क—घ. छ. ञ. ट. त्वमोहयत्. १४ च. छ. ज. मायास्त्रमास्थाय. १५ क. वीर्यवान्. १६ ङ. च. छ. झ. ञ. १७ ख. श्रान्तां. १८ ख. ङ. च. छ. झ. ञ. सातु. १९ ङ. च. छ. झ. ञ. ट. स्वमायया. क. ख. घ. चमायया. २० क. ख. ग. ङ. झ. विचचारसा.

[ज्योत्स्नं चक्रतुर्वीरौ वज्राशनिसमं तदा ॥ मोहिता तेन शब्देन लब्धसंज्ञा चिरात्तदा ॥ २२ ॥]
ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः ॥ दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् ॥ २३ ॥
अलं ते घृणया वीर पापैषा दुष्टचारिणी ॥ यज्ञविघ्नकरी यक्षी पुरा वर्धति मायया ॥ २४ ॥
वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते ॥ रक्षांसि सन्ध्याकालेषु दुर्धर्षाणि भवन्ति वै ॥ २५ ॥
इत्युक्तस्तु तदा यक्षीमश्मवृष्ट्याऽभिवर्षतीम् ॥ दर्शयञ्शब्दवेधित्वं तां रुरोध स सायकैः ॥२६॥
सा रुद्धा शरजालेन मायाबलसमन्विता ॥ अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ॥ २७ ॥
तामापतन्तीं वेगेन विक्रान्तामशनीमिव ॥ शरेणोरसि विव्याध सा पपात ममार च ॥ २८ ॥
तां हतां भीमसंकाशां दृष्ट्वा सुरपतिस्तदा ॥ साधुसाध्विति काकुत्स्थं सुराश्च समपूजयन् ॥ २९ ॥
उवाच परमप्रीतः सहस्राक्षः पुरन्दरः ॥ सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् ॥ ३० ॥
मुने कौशिक भद्रं ते सेन्द्राः सर्वे मरुद्गणाः ॥ तोषिताः कर्मणानेन स्नेहं दर्शय राघवे ॥ ३१ ॥
प्रजापतेः कृशाश्वस्य पुत्रान्सत्यपराक्रमान् ॥ तपोबलभृतो ब्रह्मन्राघवाय निवेदय ॥ ३२ ॥
पात्रभूतश्च ते ब्रह्मंस्तवानुगमने धृतः ॥ कर्तव्यं च महत्कार्यं सुराणां राजसूनुना ॥ ३३ ॥
एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथागतम् ॥ विश्वामित्रं पुरस्कृत्य ततः सन्ध्या प्रवर्तते ॥ ३४ ॥
ततो मुनिवरः प्रीतस्ताटकावधतोषितः ॥ मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ॥ ३५ ॥

वमश्मवर्षविमुञ्चन्तीमोहयन्तीवविचचार । अर्धत्रयम् ॥ २१—२२ ॥ श्रीमान् स्वतएवताटकावधहेतुप्राप्तिकृतहर्षेणकान्तिमान् ॥ २३ ॥ दुष्टचारिणी दुष्टंयथातथाचरणशीला । अन्तर्धानशक्त्याऽश्मवर्षशीलेत्यर्थः । एतेन ऐहिकनाशकत्वमुक्तं । पारलौकिकनाशकत्वमप्याह—यज्ञविघ्नकरीति । पुरावर्धति वर्धिष्यते । "यावत्पुरानिपातयोर्लट्" ॥ २४ ॥ सन्ध्यापुराप्रवर्तते प्रवर्तिष्यते । तावत् पूर्वमेव वध्यतां । सन्ध्याप्रवृत्तौका-हानिस्तत्राह—रक्षांसीति ॥ २५ ॥ अभिवर्षतीं अभिवर्षन्तीं । शब्दवेधित्वं श्रुतःशब्दोयस्मादुत्पन्नःतद्वेधित्वम् ॥ २६ ॥ अभिदुद्राव अप्रयोजकमन्तर्धानंविहायेत्यर्थः । विनेदुषी नादंकुर्वन्ती ॥२७॥ अशनीं "सर्वतोक्तिन्नर्थादित्येके" इतिङीष् ॥ २८ ॥ भीमसंकाशां भीमरूपां । सुरपतिः सुराश्च समपूजयन् ॥ २९ ॥ ॥ ३० ॥ सर्वे वयमितिशेषः । स्नेहंदर्शय स्नेहकार्यं प्रवर्तय ॥ ३१ ॥ एतदेवाह—प्रजापतेरिति ॥ ३२ ॥ अयमितिशेषः । अनुगमने शुश्रूषणे । धृतः स्थिरधीः ॥ ३३ ॥ पुरस्कृत्य पूजयित्वाजग्मुः । सन्ध्या सायं-

शि० ममार मं शिवसंनिधिं आर जगाम पपातच । तद्देशंप्राप्यशिवसंनिधावपतदित्यर्थः । किंच अपपातमं अपगतःपातः पुनरावृत्तिर्यस्मात्सएव मः शिवस्तंकैलासाद्रिमित्यर्थः । आरप्राप । बाणवेगेनतत्रप्रक्षिप्तेत्यर्थः । एतेनस्त्रीत्वादेवत्वंनहतासि । अतस्तत्रपुनर्नगन्तव्यमितिशिवउपदेक्ष्यतीतिहेतुर्व्यक्तः । अतएव "नह्येनामुत्सहेहन्तुंस्त्रीस्वभावेनरक्षितां" इतिप्रतिज्ञयामविरोधः । अतएव " रामोद्विर्नाभिभाषते " इतिसानुकूलं । अतएव "सुन्दस्त्रीदमनप्रमोदमुदितादास्थायविद्योदयंरामस्सत्यवतीसुतादथगतस्तस्याश्रमंलीलया ॥ कृत्तेकौशिकनन्दनेनचमखेतत्रागतान्राक्षसान्हत्वाऽमूमुचदाशुभाविविदसौमारीचमुग्राकृतिम् " इतिहनुमन्नाटकपद्यघटकीभूतसुन्दस्त्रीदमनप्रमोदमुदितादितिपदघटकदमनप्रयोगस्संगच्छते । अन्यथासुन्दस्त्रीहननप्रमोदमुदितादितिवदेदितिदिक् । " मोयमेसमयेऽपिस्याद्विषेचमधुसूदने । मास्त्रीपद्मालयायांस्यात्पुँल्लिङ्गश्चन्द्रशेखरे " इतिमेदिनी ॥ अस्मिन्नर्थे च एव ॥ २८ ॥ इतिषड्विंशस्सर्गः ॥ २६ ॥

[पा०] १ इदमर्धं ख. दृश्यते. २ क—छ. झ. ञ. राम. ३ क. ख. ग. ङ. च. छ. झ. ञ. ट. वर्धेत. ४ ङ. झ. ञ. कालेतु. ५ क. ङ. च. छ. झ. ञ. भवन्तिहि. ६ ख. ङ. झ. इत्युक्तस्सतुतांयक्षी. ट. स्तुतथायक्षी. ७ ङ. झ. वर्षिणीम्. ८ ङ. च. छ. झ. ञ. बाणजालेन. ख. शरवर्षेण. ९ ङ. च. छ. झ. ञ. पपातच. १० ख. देवपतिः. ११ ङ. च. छ. झ. ञ. सुराश्चाप्याधि. १२ क—घ. च. ञ. भृशाश्वस्य. १३ क—घ. च. छ. ञ. भृतान्. १४ ङ. झ. रतः. ट. वृतः १५ घ— छ. झ. ञ. सुमहत्कर्म. १६ ङ. झ. विहायसम्. १७ क—घ. पूजयित्वा. ङ. च. छ. झ. ञ. ट. पूजयन्तः.

इहाद्य रजनीं राम वसाम[1] शुभदर्शन ॥ श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ ३६ ॥
विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ॥ उवास रजनीं तत्र ताटकाया वने सुखम् ॥ ३७ ॥
मुक्तशापं वनं तच्च तस्मिन्नेव तदाऽहनि ॥ [ [2]चंपकाशोकपुन्नागमल्लिकाद्यैस्सुशोभितम् ॥ ३८ ॥
चूतैश्च पनसैः पूगैर्नारिकेलैश्च शोभितम् ॥ वापीकूपतटाकैश्च दीर्घिकाभिरलङ्कृतम् ॥ ३९ ॥
मल्लिकाहेमकूटैश्च मण्टपैरुपशोभितम् ॥ ] रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥ ४० ॥
निहत्य तां यक्षसुतां स रामः प्रशस्यमानः सुरसिद्धसङ्घैः ॥
उवास तस्मिन्मुनिना सहैव प्रभातवेलां प्रतिबोध्यमानः ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये बालकाण्डे षड्विंशस्सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ॥ २७ ॥

विश्वामित्रेण रामलक्ष्मणाभ्यां नानास्त्रमन्त्रदानम् ॥ १ ॥

अथ तां रजनीमुष्य विश्वामित्रो महायशाः[3] ॥ प्रहस्य[4] राघवं वाक्यमुवाच मधुराक्षरम्[5] ॥ १ ॥
परितुष्टोऽसि भद्रं ते राजपुत्र महायशः ॥ प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २ ॥
देवासुरगणान्वाऽपि सगन्धर्वोरगानपि[6] ॥ यैरमित्रान्प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३ ॥
तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः ॥ दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ॥ ४ ॥
धर्मचक्रं ततो[7] वीर कालचक्रं तथैव च ॥ विष्णुचक्रं तथाऽत्युग्रमैन्द्रमस्त्रं[8] तथैव च ॥ ५ ॥
वज्रमस्त्रं वरश्रेष्ठ शैवं शूलवरं[9] तथा ॥ अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥
ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् ॥ ६ ॥
गदे द्वे चैव काकुत्स्थ मोदकी शिखरी[10] उभे ॥ प्रदीप्ते नरशार्दूल[11] प्रयच्छामि नृपात्मज ॥ ७ ॥
धर्मपाशमहं राम कालपाशं तथैव च ॥ पाशं वारुणमस्त्रं च ददाम्यहमनुत्तमम् ॥ ८ ॥
अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ॥ ददामि[12] चास्त्रं पैनाकमस्त्रं नारायणं तथा ॥ ९ ॥

---

सन्ध्या । प्रवर्ततेस्म ॥ ३४-३५ ॥ तत् पूर्वोक्तम् ॥ ३६-३७ ॥ मुक्तशापं मुक्तोपद्रवं । तस्मिन्नहनि । तदैव तत्क्षण एव ॥ ३८—३९ ॥ चैत्ररथं कुबेरोद्यानम् ॥ ४० ॥ प्रतिबोध्यमानः मुनिनेतिशेषः । कौसल्यासुप्रजारामेत्येवंप्रबोधितोऽभूदित्यर्थः । उपजातिवृत्तम् ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

अस्त्रगणलाभः सप्तविंशे—अथेत्यादि । उष्य उषित्वा । प्रहस्य प्रहर्षेणमन्दहासंकृत्वा ॥ १ ॥ महायशइतिसंबुद्धित्वान्नदीर्घः । प्रीत्यापरमयायुक्तइतिपरितुष्टोस्मीत्यस्यानुवादः । सर्वशःसर्वाणि ॥ २ ॥ आजौ युद्धे । जयिष्यसि स्वार्थेणिच् ॥ ३ ॥ दण्डचक्रादयश्चक्रभेदाः ॥ ४ ॥ सार्धश्लोकद्वयमेकान्वयं । शूलवरं शूलश्रेष्ठं । ब्रह्मशिरः ब्रह्मास्त्रादन्यत् ॥ ५—६ ॥ मोदकीशिखरीसंज्ञेयेद्वेगदेस्तः तेउभेदास्यामीतिसंबन्धः ॥ ७ ॥ वारुणमित्यस्यकाकाक्षिन्यायेनोभयत्रान्वयः ॥ ८ ॥ शुष्काशनिरार्द्राशनिरित्यन्वयः । पिनाकिनइदंपैनाकं

---

ति० वाशब्दश्चार्थे । गन्धर्वोरगसहितदेवासुरगणरूपशत्रूनपिप्रसह्य बलेन जयिष्यसि जेष्यसि । यदिवधेदया तदावशीकृत्यसंमोहनास्त्रादिनाजेष्यसि । अन्येषांतुकागणनेतिभावः ॥ ३ ॥ वि० दण्डचक्रादयोस्त्रभेदाः ॥ ४ ॥ ति० शूलवतं तन्नामकं ॥ ६ ॥ ति० द्वेगदे गदासंज्ञिकेअस्त्रे ॥ ७ ॥

[ पा० ] १ ग. घ. वसेम. २ इदमर्धचतुष्टयं ख. च. छ. ञ. दृश्यते. ३ घ. छ. महामुनिः. ४ क.—घ. प्रशस्य. ५ ङ. च. छ. झ. ञ. मधुरस्वरम्. ६ क. ङ. च. छ. झ. ञ. रगान्भुवि. ७ ग. तथा. घ. तदा. ८ क. ख. ङ. च. छ. झ. ञ. मैन्द्रंचक्रं. ९ ङ. झ. शूलवतं. १० क. च. शिखरेउभे. ङ. झ. शिखरेशुभे. ११ ग. नृपशार्दूल. १२ ञ. ददाम्यस्त्रंच.

आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ॥ वायव्यं प्रथनं[1] नाम ददामि च[2] तवानघ ॥ १० ॥
अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ॥ शक्तिद्वयं च काकुत्स्थ ददामि तव राघव ॥ ११ ॥
कङ्कालं मुसलं घोरं कापालमथ कङ्कणम्[3] ॥ धारयन्त्यसुरा[4] यानि ददाम्येतानि सर्वशः ॥ १२ ॥
वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ॥ असिरत्नं महाबाहो ददामि नृवरात्मज ॥ १३ ॥
गान्धर्वमस्त्रं दयितं मानवं[5] नाम नामतः ॥ प्रस्वापनप्रशमने[6] दद्मि[7] सौरं च राघव ॥ १४ ॥
दर्पणं[8] शोषणं चैव संतापनविलापने ॥ मदनं[9] चैव दुर्धर्षं कंदर्पदयितं[10] तथा ॥ १५ ॥
पैशाचमस्त्रं दयितं मोहनं[11] नाम नामतः ॥ प्रतीच्छ नरशार्दूल राजपुत्र महायशः ॥ १६ ॥
तामसं नरशार्दूल सौमनं च महाबल ॥ संवर्तं चैव दुर्धर्षं मौसलं[12] नाम नामतः ॥ १७ ॥
सत्यमस्त्रं महाबाहो तथा मायाधरं[13] परम् ॥ घोरं[14] तेजःप्रभं नाम परतेजोपकर्षणम् ॥ १८ ॥
सौम्यास्त्रं[15] शिशिरं[16] नाम त्वाष्ट्रमस्त्रं सुकामदम्[17] ॥ दारुणं च भगस्यापि[18] शीतेषुमथ मानवम्[19] ॥ १९ ॥
एतान्राम महाबाहो कामरूपान्महाबलान् ॥ गृहाण परमोदारान्क्षिप्रमेव नृपात्मज ॥ २० ॥
स्थितस्तु[20] प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ॥ ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम्[21] ॥ २१ ॥
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ॥ तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २२ ॥
जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ॥ उपतस्थुर्[22]महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २३ ॥
ऊचुश्च[23] मुदिताः सर्वे रामं प्राञ्जलयस्तदा ॥ इमे[24] स्म परमोदाराः किंकरास्[25]तव राघव ॥ २४ ॥
[यद्य[26]दिच्छसि भद्रं ते तत्सर्वं करवाम वै ॥ ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलैः] ॥ २५ ॥

॥ ९ ॥ आग्नेयं अग्निदेवताकं । दयितं अग्नेरितिशेषः ॥ १० ॥ शक्तिद्वयं विष्णुशक्तिःरुद्रशक्तिश्चेति ॥ ११ ॥ —१२ ॥ वैद्याधरंनन्दनंनामअसिरत्नं महास्त्रमित्यर्थः । असिर्हिविद्याधरास्त्रम् ॥ १३ ॥ प्रस्वापनप्रशमनेचगान्धर्वे ॥ १४ ॥ विलापयतिपरिदेवयतीतिविलापनं । मदयतीतिमदनं ॥ १५ ॥ प्रतीच्छ गृहाण ॥ १६ ॥ मुसलान्मौसलमन्यत् ॥ १७—१८ ॥ शीतेषुं शीतेषुनामकं ॥ १९ ॥ कामरूपान् ऐच्छिकशरीरान् ॥ २० ॥ मन्त्रग्राममित्यनेन पूर्वोक्तास्त्रप्रदानंनामतत्तन्मन्त्रप्रदानमित्युक्तंभवति । तेषां कृशाश्वजन्यत्वमधिष्ठातृदेवताद्वारा ॥ २१ ॥ सर्वसंग्रहणं कार्त्स्न्येनसंग्रहणम् ॥ २२ ॥ अस्त्रमन्त्रान्दत्वा मन्त्रदेवताअपिरामाज्ञानुवर्तिनीःकारयितुं ताःस्मृत्वा जपतोविश्वामित्रस्याज्ञयाराघवं उपतस्थुः सिषेविरे ॥२३॥ राघवे-

ति० प्रथमं मुख्यं ॥ १० ॥ ति० दद्मीत्यार्षं ॥ १४ ॥ ति० मन्त्रग्रामं अस्त्राणांमन्त्रमूर्तित्वात् । ननुबलातिबलादानप्रसङ्गेपिमन्त्रग्रामंगृहाणेत्युक्तत्वात्पुनरत्रदानंविफलमितिचेन्न । गृहाणेत्येवतत्रोक्तत्वात्नतुददाविति । तेनतत्कालोपयोगिबलातिबलयोरेवतत्रदानं इतरेषांत्वत्रेतिविवेकः । वस्तुतोबलातिबलेमन्त्रसमूहात्मिकेइतितद्रूपमन्त्रग्राममितितत्रार्थइतिनदोषइतिपरे ॥ शि० अनुस्मरन् तत्तदस्त्रनियोजकत्वेनानुस्मारयन्रामायददौ । तुना लक्ष्मणायचददौ । स्मरन्नित्यन्तर्भावितणिजर्थः तेनरामज्ञानविषयीभूताएवतेमन्त्राइतिबोधितम् । तेनमन्त्रग्रहणंमर्यादापालनायैवेतिध्वनितम् ॥ २१ ॥ इतिसप्तविंशस्सर्गः ॥ २७ ॥

[ पा० ] १ क. च. छ. ञ. मथनंनाम. झ. ट. प्रथमंनाम. ङ. प्रथमंराम. २ ख. तवसुव्रत. ग. घ. ङ. तवराघव. ख. जयतांवर. ३ ङ. झ. ट. ख. किंकिणीम्. ४ क. ङ. च. छ. ज. ञ. वधार्थंरक्षमांयानि. ५ ख—ङ. झ. ट. मोहनंनाम. क. छ. मानवास्त्रंच. ६ क. ङ. झ. प्रस्वापनंप्रशमनं. ७ ख. तथासौम्यंच. ङ. झ. दद्मिसौम्यंच. क. च. छ. दद्मिसौरंच. ८ ङ. च. छ. झ. ञ. वर्षणं. ट. धर्षणं. क. दहनं. ९ ङ. झ. ञ. मादनं. १० क. च. छ. ञ. अस्त्रंकन्दर्पदैवतम्. ११ ख. मानवं. १२ क. ङ. च. छ. झ. ञ. मौसलंचनृपात्मज. १३ ङ. झ. मायामयं १४ क. ङ. च. छ. झ. ञ. सौरंतेजःप्रभं. ट. सौरंतेजःप्रदं. १५ क—च. झ. ञ. सोमास्त्रं. १६ ट. शीतलं. १७ क. घ. ङ. झ. सुदारुणं. ख. च. ञ. ट. सुदामनं. १८ ख. भगस्यास्त्रं. १९ ङ. झ. मानदम्. २० ख. घ. ततस्तु. २१ ट. मनुस्मरन्. २२ ख. घ. महात्मानं. २३ क. ख. ऊचुःप्रमुदिताः. २४ ख. इमेतववयंराम. ङ. झ. इमेचपरमोदाराः. २५ ख. किंकरास्त्वाधिनःप्रभो. २६ अयंश्लोकः ङ. च. झ. ज. ञ. दृश्यते.

प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ॥ मानसा मे भविष्यध्वमिति [1]तानभ्यचोदयत् ॥२६॥
ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ॥ अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

## अष्टाविंशः सर्गः ॥ २८ ॥

विश्वामित्रेणरामायास्त्राणामुपसंहारमन्त्रोपदेशः ॥ १ ॥ ताटकावनान्निर्गत्यसिद्धाश्रमसमीपमुपागतेनरामेणविश्वामित्रंप्रति पुरतोदृश्यमानाश्रमस्यनामधेयादिविशेषप्रश्नः ॥ २ ॥

प्रतिगृह्य ततोस्त्राणि प्रहृष्टवदनः शुचिः ॥ [2]गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १ ॥
गृहीतास्त्रोस्मि भगवन्दुराधर्षः [3]सुरासुरैः ॥ अस्त्राणां त्वहमिच्छामि [4]संहारं मुनिपुङ्गव ॥ २ ॥
एवं ब्रुवति काकुत्स्थे विश्वामित्रो [5]महायशाः ॥ [6]संहारं व्याजहाराथ धृतिमान्सुव्रतः शुचिः ॥ ३ ॥
सत्यवन्तं सत्यकीर्तिं [7]धृष्टं रभसमेव च ॥ प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥
[8]लक्षाक्षविषमौ चैव दृढनाभसुनाभकौ ॥ दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥
पद्मनाभमहानाभौ दुन्दुनाभ[9]सुनाभकौ ॥ ज्योतिषं [10]कृशनं चैव नैराश्यविमलावुभौ ॥ ६ ॥
[11]योगन्धरहरिद्रौ च दैत्यप्रशमनौ तथा ॥ [ [12]शुचिर्बाहुर्महाबाहुर्[13]निष्कुलिर्विरुचिस्तथा ] ॥
[14]सार्चिर्माली[15]धृतिर्माली वृत्तिमान्[16]रुचिरस्तथा ॥ ७ ॥
[17]पितृसौमनसं चैव [18]विधूतमकरावुभौ ॥ [19]करवीरकरं चैव [20]धनधान्यौ च राघव ॥ ८ ॥
कामरूपं कामरुचिं मोहमावरणं तथा ॥ जृंभकं [21]सर्वनाभं च [22]संतानवरणौ तथा ॥ ९ ॥
[23]कृशाश्वतनयान्राम भास्वरान्कामरूपिणः ॥ [24]प्रतीच्छ मम भद्रं ते पात्रभूतोसि राघव ॥ १० ॥

त्यनन्तरमितिकरणंबोध्यम् ॥२४॥२५॥ प्रतिगृह्यअस्त्रसेवामङ्गीकृत्य। समालभ्य संस्पृश्य। "आलंभःस्पर्शहिंसयोः"इत्यमरः। मानसाः मनोनुसारिणः। चिन्तामात्रे उपस्थिताइतियावत् । भविष्यध्वं भवत । मानसास्सन्तोमांप्राप्नुतेतिवार्थः । भूप्राप्ताविितिधातुः ॥२६॥ गमनाय गन्तुं "तुमर्थाच्चभाववचनात्"इतिचतुर्थी ॥२७॥ इति श्रीगोविन्दराजवि० श्रीमद्रामायणभूषणे मणिमञ्जिराख्याने बालकाण्डव्याख्याने सप्तविंशःसर्गः २७

---

अस्त्रसंहारकप्रतिग्रहोष्टाविंशे—प्रतिगृह्येत्यादि । गच्छन् गमिष्यन् । "वर्तमानसामीप्येवर्तमानवद्वा" इति लट् ॥१॥ संहारंअवगतप्रयोगानामस्त्राणांपुनरुपसंहारं । तत्तदस्त्रमूलमन्त्रवर्तितत्तदस्त्रोपसंहारमन्त्रजालमित्यर्थः । जात्येकवचनम् ॥ २ ॥ धृतिमान् प्रीतिमान् ॥ ३ ॥ सत्यवन्तमित्यादिसप्तश्लोक्येकान्वया । सत्यवदादीनिउपसंहाराणांनामानि ॥ ४—६ ॥ सार्चिर्मालीत्यादिषुप्रथमाद्वितीयार्थे ॥ ७—९ ॥ मम

[ पा० ] १ ङ. झ. तान्यभ्यचोदयत्. २ ग. गच्छन्नेवाथ. ३ क—छ. झ. ञ. सुरैरपि. ४ क. ग. ङ. च. छ. झ. ञ. संहारान्. ५ ङ. च. छ. झ. ञ. महातपाः. ख. ग. घ. महामुनिः. क. महामनाः. ६ ङ. च. छ. झ. ञ. संहारान्. ७ ट. हृष्टंरभसमेव. झ. हृष्टसंरंभमेव. ८ क. ख. ङ. ग. च. छ. झ. ञ. ट. लक्ष्यालक्ष्याविमौ. ९ झ. स्वनाभकौ. १० ङ. च छ. झ. ञ. ट. शकुनं. घ. कुशनं. ग. कृथनं. ११ घ. ङ. झ. ञ. यौगन्धरहरिद्रौ. च. क. सौगन्धन. क. ङ. च. छ. झ. ञ. ट. विनिद्रौच. ख. हरिद्रौचमदनप्रमथौतथा. क. ग.—छ. झ. ञ. ट. दैत्यप्रमथनौतथा. १२ इदमर्धं क. ङ. च. छ. झ. ञ. ट. दृश्यते. १३ ङ. च. छ. झ. ञ. ट. निष्कलिर्विरुचस्तथा. १४ क. ग. ङ. च. छ. झ. ञ. ट. सार्चिमाली. १५ ख. धृतिज्वाला. १६ घ. न्विरुचिस्तथा. च. विरजस्तथा. ग. विचिरस्तथा. १७ ख. पित्र्यंसौमनसं. क. चन्द्रासौमनसं. च. छ. चन्द्रसौमनसं. ङ. झ. ट. पित्र्यस्सौमनसं. ञ. चन्द्रंसौमनसं. १८ ख. ग. विधूम. १९ ङ. च. ञ. करवीरंरातिं. झ. परवीरंरातिं. ख. करवीरंकानिं. २० ट. धनधान्ये. २१ ङ. झ. सर्पनाथं. २२ ख. घ. संतानवरुणावुभौ. क. च. छ. ञ. संधानवरुणावुभौ. ङ. झ. पन्थानवरुणौतथा. २३. क. ख. ग, च, भृशाश्व. २४ ग. प्रतीच्छचास्त्रान्भद्रं.

बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ॥ [ [1]तत्सर्वमग्रहीद्रामो विश्वामित्रान्महामुनेः ] ॥११॥
दिव्यभास्वरदेहाश्च मूर्तिमन्तः सुखप्रदाः ॥ [2]केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ॥ १२ ॥
चन्द्रार्कसदृशाः केचित्प्रह्वाञ्जलिपुटास्तथा ॥ रामं प्राञ्जलयो भूत्वाब्रुवन्मधुरभाषिणः ॥ १३ ॥
इमे स्म नरशार्दूल शाधि किं करवाम ते ॥ १४ ॥
मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ॥ गम्यतामिति तानाह यथेष्टं रघुनन्दनः ॥ १५ ॥
अथ ते राममामन्त्र्य [3]कृत्वा चापि प्रदक्षिणम् ॥ एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम् ॥
[ [4]प्रणम्य शिरसा रामं सर्वे संमतविक्रमाः ] ॥ १६ ॥
[ [5]ततस्तु रामः काकुत्स्थः शासनाद्ब्रह्मवादिनः ॥ लक्ष्मणाय च तान्सर्वान्वरास्त्रान्रघुनन्दनः ॥
संहारान्स च संहृष्टः श्रीमांस्तस्मै न्यवेदयत् ] ॥ १७ ॥
स च तान्राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ॥ गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥१८॥
[6]किन्त्वेतन्मेघसंकाशं पर्वतस्याविदूरतः ॥ [7]वृक्षषण्डमितो भाति परं कौतूहलं हि मे ॥ १९ ॥
दर्शनीयं मृगाकीर्णं [8]मनोहरमतीव च ॥ नानाप्रकारैः शकुनैर्[9]वल्गुनादैरलंकृतम् ॥ २० ॥
निःसृताः स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् ॥ २१ ॥
अनया त्ववगच्छामि देशस्य सुखवत्तया ॥ सर्वं मे शंस भगवन्कस्याश्रमपदं त्विदम् ॥ २२ ॥
संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ॥ तव यज्ञस्य विघ्नाय [10]दुरात्मानो [11]महामते ॥ २३ ॥
[12]भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी ॥ रक्षितव्या क्रिया ब्रह्मन्[13]मम वध्याश्च राक्षसाः ॥२४॥
एतत्सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यहं [14]प्रभो ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

मन्त्तः ॥ १० ॥ बाढमित्यर्धं । बाढमित्यङ्गीकारे । प्रहृष्टेनान्तरात्मना प्रतिजग्राहेतिशेषः ॥११॥ मन्त्रस्वीकारानन्तरंमन्त्रदेवतासाक्षात्कारंदर्शयति—दिव्येत्यादिश्लोकद्वयेन । दिव्याःश्लाघ्याःभास्वराश्चदेहायेषांते । तथा । मूर्तिमन्तः शरीरकाठिन्यवन्तः । "मूर्तिःकाठिन्यकाययोः"इत्यमरः । सुखप्रदाः आह्लादकाः॥१२॥ प्रह्वाः नम्राः । अञ्जलिपुटाः अञ्जलिपुटयुक्ताः । अर्शआदित्वादच् । प्राञ्जलयः कृताञ्जलयः । मधुरभाषिणः मधुरभाषणशीलाः । केचित्पुरुषाः राममब्रुवन् ॥ १३ ॥ इमइत्यर्धं । स्मेत्यार्षःसलोपः । शाधि आज्ञापय । "शाहौ"इति शास्तेःशादेशः ॥ १४ ॥ यथेष्टंगम्यतामित्यन्वयः ॥ १५ ॥ ते पुरुषाः ॥ १६ ॥ तान् उपसंहारमन्त्रान् । श्लक्ष्णं व्यक्तं ॥ १७—१८ ॥ श्लोकद्वयं । इतः अस्मिन्प्रदेशे । कौतूहलं श्रोतुमितिशेषः ॥ १९—२० ॥ कान्तारात् ताटकावनात् । रोमहर्षणात् रोमाञ्चकरात् भयंकरादितियावत् । अर्धमेकं ॥ २१ ॥ अनया देशस्यसुखवत्तया इदमाश्रमपदमित्यवगच्छामि । कस्येति नजानामि तत्सर्वंशंस आदितःप्रभृतिवदेत्यर्थः ॥ २२ ॥ संप्राप्ताइत्यादिश्लोकद्वयं । ते पूर्वोक्ताः । तवयज्ञस्य विघ्नाययत्राश्रमपदे संप्राप्ताः साचतवयाज्ञिकाक्रियायत्र रक्षितव्या राक्षसाश्चवध्याः तस्याश्रमस्यकोदेशः ॥ २३—२४ ॥ एतदित्यर्धं ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टाविंशःसर्गः ॥ २८ ॥

---

ति० प्रह्वाञ्जलिपुटाः प्रह्वाःनम्राश्चते अञ्जलेःपुटंसंश्लेषोयेषांतादृशाः॥१३॥ति०वल्गुभाषैः मधुरभाषैः ॥२०॥ इत्यष्टाविंशस्सर्गः२८

[ पा० ] १ इदमर्धं ख. दृश्यते. २ ख. केचिदुग्रग्रहोपमाः. ३ क. कृत्वाचाभि. ट. तंचकृत्वा. ४ इदमर्धं च. छ. दृश्यते. ५ इदमर्धत्रयं च. छ. दृश्यते. ६ ङ. च. छ. झ. ञ. किमेतन्मेघ. ७ झ. ञ. वृक्षखण्डमितोभाति. ख. च. वृक्षषण्डमिवाभाति. ८ ख. ग. मनोरम. ९ क. ङ. च. छ. झ. ञ. वल्गुभाषैः. १० घ. ट. दुष्टात्मानो. ११ ख—छ. झ. ञ. महामुने. १२ ख. भगवन्कस्यदेशोयं. १३ क—छ. झ. ञ. मया. १४ क. मुने.

# एकोनत्रिंशः सर्गः ॥ २९ ॥

विश्वामित्रेणरामंप्रतिसिद्धाश्रमवृत्तान्तकथनारंभः ॥ १ ॥ बलिपराजितेन्द्रादिप्रार्थनयाविष्णुनादित्यांवामनत्वेनावतीर्ययाच्ञाव्याजेनबलिनिग्रहपूर्वकंपुनर्देवानांस्वर्गेस्थापनम् ॥ २ ॥ विश्वामित्रेणरामंप्रतिसिद्धाश्रमपदस्यप्रवृत्तिनिमित्तकथनम् ॥ ३ ॥ तस्यैवस्वाश्रमत्वाभिधानपूर्वकंतत्रैवराक्षसहननस्यकर्तव्यत्वोक्तिः ॥ ४ ॥ ततोविश्वामित्रेणराघवाभ्यांसहसिद्धाश्रमप्रवेशपूर्वकंरामवचनाद्दीक्षाप्रवेशः ॥ ५ ॥

अथ तस्याप्रमेयस्य [1]तद्वनं परिपृच्छतः ॥ विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥
इह राम महाबाहो विष्णु[2]र्देववरः प्रभुः ॥ *वर्षाणि सु[3]बहून्येव तथा युगशतानि च ॥
[4]तपश्चरणयोगार्थमुवास [5]सुमहातपाः ॥ २ ॥
एष पूर्वाश्रमो राम वामनस्य महात्मनः ॥ सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ॥ ३ ॥
एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः ॥ निर्जित्य दैवतग[6]णान्सेन्द्रांश्च समरुद्गणान् ॥
कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ॥ ४ ॥
[ [7]यज्ञं चकार [8]मतिमानसुरेन्द्रो [9]महाबलिः ] ॥ बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः ॥
समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ५ ॥
बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमम् ॥ [10]असमाप्ते क्रतौ तस्मिन्स्वकार्यमभिपद्यताम् ॥ ६ ॥

अथसिद्धाश्रमस्यनित्यंभगवत्संनिधिमत्त्वेनदिव्यदेशत्वंतत्संनिधानेपूर्वेषांसिद्धतपस्कत्वंभगवद्देशस्यैववस्तव्यत्वमित्येतत्प्रतिपादनमुखेनस्थाण्वाश्रमाद्वैलक्षण्यं दर्शयत्येकोनत्रिंशे—अथेत्यादि। अप्रमेयस्य अचिन्त्यवैभवस्य मानुषभावनयापूर्ववृत्तमज्ञातमिवपृच्छतइत्यर्थः । चतुर्थ्यर्थेषष्ठी ॥ १ ॥ इहेतिसार्धश्लोकः । तपश्चरणयोगार्थं तपश्चरणफलसिध्यर्थं । यद्वा तपश्चरणंच योगश्चतदुभयार्थं । केचिदिहइहशब्दद्वयंपठन्ति तदाइहवनेतत्रापिइहप्रदेशइत्यर्थः ॥ २ ॥ वामनस्य वामनरूपेणावतरिष्यतः । पूर्वंविष्णुत्वेनरूपेणेहतपश्चचार पश्चाद्वामनरूपेणापीतितस्याश्रमस्यातिशयोदर्शितः । विष्णोरत्रतपश्चरणंलोकेतपसःप्रवर्तनाय । बदरिकाश्रमइव नारायणस्य । सिद्धाश्रमत्वंनिर्वक्ति—सिद्धइति । महातपाः काश्यपः । अत्र । हि यस्मात् । सिद्धः तपःफलंप्राप्तः । तस्मादेषसिद्धाश्रमोनाम ॥ ३ ॥ एतस्मिन्नितिसार्धश्लोकः । एतस्मिन्काले विष्णोस्तपश्चरणकाले । विरोचनः प्रह्लादसुतः तस्यापत्यंवैरोचनिः । समरुद्गणान् सवायुगणान् । कारयामास मन्त्रिभिरितिशेषः । तद्राज्यं इन्द्रराज्यं ॥ ४ ॥ बलेरिति । भावलक्षणेषष्ठी । बलौयजमाने यागंकुर्वाणे । साग्निपुरोगमाः पुरोगमेनाग्निनासहिताः । अग्निमुखत्वाद्देवानां । स्वयमेवसमागम्यइहाश्रमेतपश्चरन्तंविष्णुमूचुः ॥ ५ ॥ यज्ञंयजते यज्ञंकरोतीत्यर्थः । ओदनपाकंपचतीतिवत् । समाप्तश्चेन्नसजेतुंशक्यइत्यर्थः । स्वकार्यं

ति० । वचनं श्रुत्वेतिशेषः ॥ १ ॥ ति० यजतेःकर्त्रभिप्रायत्वादात्मनेपदं । नन्वसुरस्यबलेर्देवद्विषोयागाद्यनुपपत्तिः । यागतर्पणीयदेवताभावात् । इन्द्रादीनांतद्वेष्यत्वात् । नचशब्दमात्रंदेवतेतियुक्तं । अर्थवादप्रामाण्येनदेवतायाविग्रहवत्त्वस्योत्तरमीमांसायांसिद्धान्तितत्वादितिचेन्न । कर्मदेवाजानदेवभेदेनदेवानांद्वैविध्यात् । तत्रयेकर्मणादेवत्वंप्राप्तास्तेकर्मदेवाः । आजानदेवास्तुयज्ञमन्त्रार्थभूतामन्त्रेणनित्यसंबद्धाःकर्मदेवेभ्यःप्राचीनाएव । तत्कर्मदेवानांद्वेष्यत्वेप्याजानदेवानांयज्ञेतर्प्यत्वेननदोषः । विघ्नकर्तारोप्यत्रकर्मदेवा एव । यज्ञाद्यधिकाराभावोपिआजानदेवानामेव स्वयष्टव्यदेवतान्तराभावात् । कर्मदेवानांत्वस्त्येव । अतएवेन्द्रादीनांयज्ञादिश्रवणं नानुपपन्नमित्यन्यत्रविस्तरः ॥ ६ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. वचनं. २ ङ. च. छ. झ. ञ. देवनमस्कृतः * अत्र इह रामेत्यर्धात्परं ख. पुस्तके—प्रदृश्यः सर्वभूतानांसर्वात्मासर्वलोकभृत् । मोहनार्थंतुलोकस्यसर्वेषांजगतांप्रभुः । इत्यर्धद्वयमधिकं दृश्यते. ३ क. ख. ग. ङ. च. छ. झ. ञ. सुबहूनीह. ४ ग. घ. तपसश्चरणार्थंहि. ५ ख. च. छ. समहातपाः. ६ ङ. च. झ. ञ. गणान्सेन्द्रान्सहमरुद्गणान्. ७ इदमर्धं क. ङ. छ. झ. ञ. ट. दृश्यते. ८ ङ. च. छ. झ. ञ. सुमहान्. क. भगवान्. ९ क. ङ. छ. झ. ञ, महाबलः. १० ङ. झ. असमाप्तव्रते.

**ये चैनमभिवर्तन्ते याचितार इतस्ततः ॥ यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥ ७ ॥**
**स त्वं सुरहितार्थाय मायायोगमुपागतः ॥ वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥ ८ ॥**
**एतस्मिन्नन्तरे राम कश्यपोऽग्निसमप्रभः ॥ अदित्या सहितो राम दीप्यमान इवौजसा ॥ ९ ॥**
**देवीसहायो भगवान्दिव्यं वर्षसहस्रकम् ॥ व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ १० ॥**
**तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् ॥ तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ ११ ॥**

देवकार्यं। आश्रितकार्यस्यस्वकार्यत्वात्तथोच्यते। अभिपद्यतां अभितःकात्स्र्येनसंपाद्यतां ॥ ६ ॥ ननु कथमसुरस्ययज्ञानुष्ठानं "यस्यैदेवतायैहविर्गृहीतं स्यात्तांध्यायेद्वषट्करिष्यन्साक्षाद्देवतद्देवतांप्रीणाति" इतिश्रुतेः। तत्तद्देवध्यानपूर्वकंतत्तन्मन्त्रेणतत्तदुद्देशेनतत्तद्धविःप्रदानस्ययागत्वात्तस्यचदेवशत्रोरयोगात् । नचचतुर्थ्यन्तःशब्दोदेवतेतिवाच्यं। अचेतनप्रीणनासंभवात्। तत्प्रीतिमूलफलासिद्धेश्च । अतएव केवलाक्रियैवफलदेतिप्रत्युक्तं । अतोर्थवादाद्यनुरोधेनशब्दक्रियातिरिक्ता सचेतना वज्रहस्तत्वादिविशिष्टविग्रहवती देवता । नचविग्रहवत्त्वे युगपदनेकयागसंनिधानासंभवः। दिव्यशक्तिमत्त्वेननानाशरीरपरिग्रहसंभवेन तेषांसर्वयागसांनिध्यस्यसुलभत्वात्। तस्मान्नदेवतावैरिणोयागसंभवइति । उच्यते । नायंबलिनाक्रियमाणोयागइन्द्रादिदेवताराध्यकः। येनोक्तदोषःस्यात् । किंतु भगवदाराधनभूतःकश्चिद्यागविशेषः । तस्यविष्णुभक्तत्वेनप्रसिद्धत्वात्। तर्हिभक्तयज्ञविघ्नंविष्णुःकथंकुर्यात्। स्वभक्तस्यापिस्वभक्तविरोधित्वंभगवतोऽसह्यं । ततःपुत्रान्तरविरोधिपुत्रशिक्षणवत् स्वाश्रितदेवविरोधिशिक्षणंयुक्तमेव। अतएवोक्तं "ममम‌द्भक्तभक्तेषुप्रीतिरभ्यधिकाभवेत्" इति। तर्हितस्यधार्मिकस्यकथंनिग्रहःस्यात्तत्राह—येचेत्यादिश्लोकद्वयेन। ये यत्र वस्त्रवाहनादिषुयद्वस्तु याचितारःयाचिष्यमाणाः सन्तः इतस्ततः देशात् एनमभिवर्तन्ते तत्सर्वंतेभ्यःयथावत् सत्कारपूर्वकंप्रयच्छति ॥ ७ ॥ माया विष्णुत्वाच्छादिकाशक्तिःतस्यायोगं संबंधमुपागतः । वामनत्वं वामनरूपत्वं गतः। कल्याणं अस्मत्कार्यंकुरु। तस्मिन्नौदार्याख्योमहागुणोवर्तते। तेनत्वंवामनवेषोभूत्वा याच्ञापदेशेन तद्राज्यमपहृत्यदेहीतिभावः ॥८॥ एतस्मिन्नितिश्लोकद्वयं। एतस्मिन्नन्तरे देवप्रार्थनावसरे। कश्यपोऽदित्यासहितोव्रतंसमाप्य विष्णूद्देशेनकृतंव्रतंसमाप्य। वरदंवरदानायसंनिहितंविष्णुं देवीसहायःसन्तुष्टाव। अत्रारामपदद्वयंरूढ्यायोगेनचनिर्वाह्यं । व्रतानुष्ठानकालेवरकालेचदेवीसाहित्यद्योतनायद्विःप्रयोगोदेव्याः । अयमत्रक्रमः " सोकामयत बहुःस्यांप्रजायेयेति सतपोतप्यत" इत्युक्तरीत्या विष्णुर्जगद्रक्षणचिन्तापरोत्रदेशेचिरमदृश्यउवास । तद्विदित्वातमेवपुत्रंलब्धुकामःकश्यपोदेव्यासहदिव्यवर्षसहस्रनिर्वर्त्यंविष्णवाराधनरूपं किंचिद्व्रतमनुष्ठाय तदन्तेवरदानायदृश्यमानंविष्णुंतुष्टाव । तस्मिन्नेवावसरेदेवाश्चागताःप्रार्थितवन्तइति ॥ ९–१० ॥ तपोमयं तपःप्रचुरं। प्राचुर्यंचाराध्यत्वेन। तपसाराध्यमित्यर्थः। तपोराशिं तपोराशिस्वरूपं तपःफलदमितियावत्। तपोमूर्तिं ज्ञानस्वरूपं । तपआलोचनइतिधातोरसुन्प्रत्ययः। तपात्मकं तपस्स्वभावं। ज्ञानगुणकमित्यर्थः। उक्ताद्धातोर्घञर्थेकविधानमितिकः। पुरुषोत्तमं बद्धमुक्तोभयावस्थाज्जीवाद्विलक्षणं । त्वां। सुतप्तेन अनन्यप्रयोजनतयानुष्ठितेन। तपसा आराधनेन। पश्यामि साक्षात्करोमि। सर्वकर्मसमाराध्यंसर्वकर्मफलप्रदं ज्ञानस्वरूपत्वेनसमस्तहेयप्रत्यनीकज्ञानानन्दाद्यपरिमितगुणवत्त्वेनचसर्वस्माद्विलक्षणंत्वांसा-

**ति०** रामेतिद्विस्संबोधनंस्वाश्रमसंनिधानेनरामपृष्टतन्महत्त्वकथनेनहर्षातिशयाच्चबोध्यं । अदित्यासहितोव्रतंसमाप्य देवीसहायस्तुष्टावेत्यन्वयः । देव्यदितिरेव । यद्वादेवीसरस्वती । **शि०** रामदीप्यमानः रामनाम्नाप्रकाशमानः । देवीसहायः देवीपार्वती सहायोयस्यसभगवान् शंभुरिव ओजसाइव ओजस्तुल्ययाअदित्यासहितः कश्यपः दिव्यवर्षसहस्रकं दिव्यवर्षसहस्रसाध्यंव्रतं समाप्य मधुसूदनंतुष्टावेत्यन्वयः । इवशब्दउभयान्वयी ॥ ९ ॥ १० ॥ **शि०** तपोमयं तपसा वेदबोधिताभिलाषरहितकृच्छ्रचान्द्रायणादिना मयते अन्तःकरणशुद्धिपूर्वकज्ञानोत्पत्तिद्वाराप्राप्नोतितं । अतएव तपोराशिं तपसांराशिरसमूहःयस्मैं । यत्प्राप्तिफलकमेवतपआद्याचरणंतं । अतएवतपोमूर्तिं तपोयुक्तामूर्तिर्विग्रहोयस्यतं । लोकशिक्षणार्थंतपश्चरन्तमित्यर्थः । तपात्मकं तपोज्ञानंआत्मायस्यतं ॥ ११ ॥

[ पा० ] १ ग—छ. झ. ञ. मुपाश्रितः, २ घ, च. छ. ञ. ट. दिव्यवर्ष. ३ क. च, छ. ञ. तपोधनम्.

शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो ॥ त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः ॥ १२ ॥
तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् ॥ वरं वरय भद्रं ते वरार्होसि मतो मम ॥
[किमिच्छसि वरं श्रेष्ठ वरदोसि महाद्युते । ] ॥ १३ ॥
तच्छ्रुत्वा वचनं तस्य मारीचः कश्यपोऽब्रवीत् ॥ १४ ॥
अदित्या देवतानां च मम चैवानुयाचतः ॥ वरं वरद सुप्रीतो दातुमर्हसि सुव्रत ॥ १५ ॥
पुत्रत्वं गच्छ भगवन्नदित्या मम चानघ ॥ भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन ॥
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १६ ॥
अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति ॥ सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः ॥ १७ ॥
अथ विष्णुर्महातेजा अदित्यां समजायत ॥ [ छत्री भिक्षुकरूपेण कमण्डलुशिखोज्वलः ] ॥
वामनं रूपमास्थाय वैरोचनिमुपागमत् ॥ १८ ॥
[ तं दृष्ट्वाऽसुरराजेन्द्रो वामनत्वाच्च विस्मितः ॥ माधवोऽयमिति ज्ञात्वा पूजयामास धर्मतः ॥
पूजितस्तेन धर्मात्मा सर्वलोकहिताय वै ॥ १९ ॥ ]
[*आसाद्य यजमानं तमुवाच भगवान्हरिः ॥ स्वस्ति तेऽस्तु महाराज यज्ञश्चातीव शोभनः ॥२०॥
वयं दानार्थिनो राजञ्श्रुत्वा यज्ञमनुत्तमम् ॥ त्वां दृष्ट्वा तव योगेषु किंचिल्लब्धुमिहागताः ॥ २१ ॥
वामनेनैवमुक्तस्तु मुदा राजा तदाऽब्रवीत् ॥ अद्य मे सफलो यज्ञः कृतार्थोस्म्यद्य वामन ॥ २२ ॥
त्वदर्थं कल्पितं चैव मम सर्वस्वमेव च ॥ धनौघं रत्नराशिं वा भूषणं धान्यसंचयम् ॥ २३ ॥
ग्रामं वा नगरं वाऽपि राष्ट्रं वा यानमेव वा ॥ हस्त्यश्वरथपत्तीर्वा त्वं लभस्वान्यमेव वा ॥
किमिच्छसि महाबाहो तद्ददामि तवानघ ॥ २४ ॥
एवमुक्तस्तदा राज्ञा भगवान्पुरुषोत्तमः ॥ उवाचेषत्स्मितं कृत्वा यजमानं महाबलिम् ॥ २५ ॥
एतैः किं मम राजेन्द्र तैस्तु नास्ति प्रयोजनम् ॥ अस्मत्पादत्रयाक्रान्तां देहि भूमिं विभो तदा ॥ २६ ॥
श्रुत्वा तद्वामनेनोक्तं स्मितं कृत्वाऽसुरोत्तमः ॥ येनेष्टं पूर्यते ब्रह्मंस्तत्कुर्मेति ततोऽब्रवीत् ॥ २७ ॥
वामनाय महीं दातुं निश्चितेऽसुरसत्तमे ॥ तं निवार्य महाराजं प्राह शुक्रो द्विजोत्तमः ॥ २८ ॥
विरिञ्चभवशक्राद्या योगिनश्च सुरासुराः ॥ यं न जानन्ति वेदाश्च स एषो विष्णुरव्ययः ॥ २९ ॥
दानारक्ते ततः शुक्रे शुक्रं राजपुरोहितम् ॥ गृहीत्वा ताडयामास वैनतेयो महाबलः ॥ ३० ॥

क्षात्करोमि । एतदेवमेपरमप्रयोजनमित्यर्थः ॥ ११ ॥ इदं चेतनाचेतनात्मकं सर्वजगत् । तवशरीरेस्मिन्पश्यामि । एवं नु गीतं "पश्यामिदेवांस्तवदेवदेहेसर्वांस्तथाभूतविशेषसंघान् । ब्रह्माणमीशंकमलासनस्थमृषींश्चसर्वानुरागांश्चदिव्यान्" इति । यद्वा जगत्सर्वंशरीरमित्युक्तत्वात् शरीरतयापश्यामीत्यर्थः । त्वमनादिः उत्पत्तिरहितः । अनिर्देश्यः । एतावानितिपरिच्छेत्तुमशक्यइत्यर्थः । अतस्त्वामहं शरणं रक्षितारं । गतः ॥ १२-१३ ॥ तच्छ्रुत्वेत्यर्धं । मारीचः मरीचिपुत्रः ॥ १४ ॥ अदित्याः याचमानायाः । देवतानां याचमानानामित्यूह्यम् ॥ १५ ॥ पुत्रत्वमित्यादिसार्धश्लोकएकान्वयः ॥ १६ ॥ देशेप्यनुग्रहःक्रियतामित्याह— अयमिति । ते प्रसादात् कर्मणि मत्तपसि । सिद्धेसति । त्वयिमेपुत्रत्वंप्राप्तइत्यर्थः । अयंसिद्धाश्रमोनामभवि-

ति० । साहाय्यं बलिच्छलरूपं । शि० इन्द्रस्यभ्राताभवेत्यनेनइन्द्रेप्सितकार्यकारित्वंत्वस्मिन्ननुसंधेयमितिप्रार्थनासूचिता । असुरसूदनेत्यनेनसनातनोसुरद्वेषस्त्वय्यस्तीतिबोधितं । तेनासुरानिरसनीयाभवतेतिद्योतितम् ॥ १६ ॥

[ पा० ] १ इदमर्धं च. छ. दृश्यते. २ ङ. झ. याचितम्. ३ इदमर्धं च. छ. दृश्यते. ४ इदमर्धत्रयं च. छ. दृश्यते.
* अत्रकुण्डान्तर्गताश्चतुर्दशश्लोकाः क. पुस्तकेऽधिकादृश्यन्ते.

पत्न्या सह विनिश्चित्य यजमानो महाबलिः ॥ मायारूपेण देवेशो मम यज्ञं गतो यदि ॥
तदैतद्यज्ञसाफल्यमेवमस्त्विति चाब्रवीत् ॥ ३१ ॥
इति मत्वोदकं दत्तं वामनाय महात्मने ॥ तव पादत्रयाक्रान्तां गृहाणाद्य महीं प्रभो ॥ ३२ ॥
उदके स्पृष्टमात्रे तु विश्वरूपधरो हरिः ॥ तत्रस्थ एव ववृधे येन पूर्णं जगत्रयम् ॥
सायुधैर्बाहुभिः पूर्णा दिग्विदिक्सर्वमेव हि] ॥ ३३ ॥
[1]त्रीन्क्रमानथ भिक्षित्वा प्रतिगृह्य च मानदः[2] ॥ आक्रम्य [3]लोकाँल्लोकात्मा [4]सर्वलोकहिते रतः ॥ ३४ ॥
महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा ॥ त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः ॥ ३५ ॥
[5]तेनैष पूर्वमाक्रान्त आश्रमः श्रमनाशनः ॥ [6]मया तु भक्त्या [7]तस्यैष [8]वामनस्योपभुज्यते ॥ ३६ ॥
एतमाश्रममायान्ति राक्षसा विघ्नकारिणः ॥ [9]अत्रैव पुरुषव्याघ्र हन्तव्या दुष्टचारिणः ॥ ३७ ॥
अद्य गच्छामहे राम सिद्धाश्रममनुत्तमम् ॥ तदाश्रमपदं तात तवाप्येतद्यथा मम ॥ ३८ ॥
[ [10]इत्युक्त्वा परमप्रीतो [11]गृह्य रामं सलक्ष्मणम् ] प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ॥
शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ ३९ ॥
तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः ॥ उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ ४० ॥
[12]यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते ॥ तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ ४१ ॥
[13]मुहूर्तमिव विश्रान्तौ राजपुत्रावरिंदमौ ॥ प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ ४२ ॥
अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुङ्गव ॥ सिद्धाश्रमोऽयं सिद्धः स्यात्सत्यमस्तु वचस्तव ॥ ४३ ॥
एवमुक्तो महातेजा विश्वामित्रो [14]महामुनिः ॥ प्रविवेश [15]ततो दीक्षां नियतो नियतेन्द्रियः ॥ ४४ ॥

ष्यति । तस्मादितआश्रमादुत्तिष्ठ । अवतारायेतिशेषः ॥१७–३३॥ श्लोकद्वयमेकान्वयं । क्रमान् पदविक्षेपान् । भिक्षित्वा याचित्वा । प्रतिगृह्य । मानंद्यतिखण्डयतीतिमानदः । निरभिमानोभिक्षित्वेत्यर्थः । लोकाक्रमणेहेतुर्लोकात्मेति । वामनरूपेणयाचित्वा सर्वलोकव्यापिशरीरेणक्रान्त्वेत्यर्थः । नियम्य बद्ध्वा । त्रैलोक्यस्यापिपदद्वयक्रान्तत्वेन तृतीयपदालाभात्तदर्थंबद्ध्वेत्यर्थः ॥३४–३५॥ प्रकृतमुपसंहरति—तेनेति । तेन वामनेन । श्रमनाशनः संसारश्रमनिवर्तकः । संनिहितंस्थाण्वाश्रमंविहाय भवान्किमर्थमत्रस्थितइत्यत्राह—मयात्विति । मयातु देवतान्तरेषुपरत्वबुद्धिरहितेन । भक्त्या विष्णुभक्त्या । तस्य वामनस्य । एषः आश्रमः । उपभुज्यते आश्रीयते । वामनस्येयंभूमिरितिकेवलंतामेवा जिघ्रन्वर्त इत्यर्थः ॥३६–३७॥ गच्छामहे गच्छामः । तातेत्युपलालने । तदेतदाश्रमपदंयथामम तथातव । स्वमितिशेषः ॥ ३८ ॥ गतनीहारः गतहिमः । पुनर्वसुभ्यांसमन्वितइतिरामलक्ष्मणसाम्यापेक्षया ॥ ३९ ॥ उत्पत्योत्पत्येतिप्रीत्यतिशयोक्तिः । आगत्यागत्येत्यर्थः । अनेननिरन्तरंतदागमनोक्त्यामुनिबहुत्वमुच्यते ॥ ४० ॥ यथार्हं मुनियोग्यतामनतिक्रम्य ॥ ४१ ॥ मुहूर्तं अल्पकालं । विश्रान्ताविवेतिमनुष्यभावेनोच्यते ॥ ४२ ॥ अद्यैव प्रवेशदिनएव । अयंसिद्धाश्रमःसिद्धःस्यात् त्वद्यज्ञसिद्ध्याअन्वर्थसिद्धसंज्ञोस्तु । सत्यमस्तुवचस्तव "अत्रैवपुरुषव्याघ्रहन्तव्यादुष्टचारिणः" इतिवचइत्यर्थः । राक्षसान्सर्वथा हनिष्यइतिभावः ॥ ४३ ॥ नियतः निगृहीतान्तः-

ति० लोकार्थी त्रैलोक्याक्रमणार्थी ॥ ३४ ॥ शि० तेन वामनेन । श्रमनाशनोऽयमाश्रमः । भक्त्या त्वद्विषयकप्रीत्या । पूर्वमेवआक्रान्तः सेवितः मयापित्वद्विषयकप्रीत्यैवतस्यवामनस्यायमाश्रमोनिषेव्यते । एतेन रामस्याखेटखेलनवनंतदितिध्वनितं । तेनाप्रकटरूपेण सदैव तत्ररामस्यस्थितिरितिव्यञ्जितम् । तेनरामप्रश्नोविश्वामित्रज्ञानपरीक्षार्थमेवेतिव्यक्तं ॥ ३६ ॥

[ पा० ] १ च. ट. त्रीन्पदानथ. २ क. च. छ. ञ. वामनः. ङ. झ. मेदिनीम्. ३ ङ. झ. ञ. ट. लोकाँल्लोकार्थी. ४ ग. घ. भूतहिते. ५ ङ. च. छ. झ. ञ. ट. तेनैव. ६ ग.—छ. झ. ञ. मयापि. ७ ङ. च. तस्यैव. ८ क. ख. वामनस्यनिषेव्यते. ९ क.—छ. झ. ञ. ट. अत्रते. १० इदमर्धं च. छ. दृश्यते. ११ ख. रामं लक्ष्मणसंयुम्. १२ ख. चक्रुःपूजांयथार्हते. १३ क. ग—छ. झ. ञ. मुहूर्तमथ. १४ ग. च. झ. ञ. महानृषिः. १५ क—छ. झ. ञ. तदा.

[1]कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ ॥ प्रभातकाले चोत्थाय पूर्वां सन्ध्यामुपास्य च ॥ ४५ ॥
स्पृ[2]ष्टोदकौ शुची जप्यं समाप्य नियमेन च ॥ हु[3]ताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ४६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ॥ ३० ॥

विश्वामित्रेणदिनषट्कनिर्वर्त्यंयज्ञेसमुपक्रान्तेराघवाभ्यांदिनपञ्चकमनिद्रंतद्रक्षणम् ॥ १ ॥ षष्ठेऽहनिसुबाहुमारीचादिभिर्गगनमेत्यपरितोरुधिरवर्षणम् ॥ २ ॥ रामेणमानवास्त्रेणमारीचस्यसागरेप्रक्षेपणम् ॥ ३ ॥ तथासुबाहुवधपूर्वकमितरेषांवायव्येन निरसनम् ॥ ४ ॥ विश्वामित्रेणयज्ञसमापनपूर्वकंरामप्रशंसनम् ॥ ५ ॥

अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ ॥ देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १ ॥
भगवञ्श्रोतुमिच्छावो यस्मिन्काले निशाचरौ ॥ [4]संरक्षणीयौ तौ ब्रह्मन्नातिवर्तेत तत्क्षणम् ॥ २ ॥
एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ॥ सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥
अद्यप्रभृति षड्रात्रं रक्ष[5]तं राघवौ युवाम् ॥ दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४ ॥
तौ[6] च तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ ॥ अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥
उपासांचक्रतुर्वीरौ य[7]त्तौ परमधन्विनौ ॥ ररक्षतुर्मुनिवरं विश्वामित्रम[8]रिंदमौ ॥ ६ ॥
अथ काले गते तस्मिन्षष्ठेऽहनि [9]समागते ॥ सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ ७ ॥
रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ॥ प्रजज्वाल ततो वेदिस्सोपाध्यायपुरोहिता ॥ ८ ॥

करणः ॥ ४४ ॥ कुमारावितिश्लोकद्वयं । स्पृष्टोदकौ दत्तार्घ्यौ नियमेनजप्यंसमाप्य । अग्नेर्होत्रंहोमः औपासनहोमः । दीक्षामध्ये "नाग्निहोत्रंनदर्शपूर्णमासाभ्यांयजतइति" अग्निहोत्रस्यनिषिद्धत्वात् । मानसमग्निहोत्रमित्येके ॥ ४५–४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनत्रिंशःसर्गः ॥ २९ ॥ ॥

---

सुबाहुमारीचप्रभृतिदुष्टनिग्रहस्त्रिंशे—अथताविल्यादि । देशकालज्ञावितिहेतुगर्भं । देशकालज्ञत्वादुचितेदेशेउचितेकालेचाब्रूतां ॥ १ ॥ संरक्षणीयौ निवारणीयौ । धातूनामनेकार्थत्वात् । विपरीतलक्षणावा । यद्वा इष्टप्राप्तिरनिष्टनिवृत्तिश्चरक्षणं । अत्र अनिष्टनिवृत्तिः । तत्क्षणं सकालः । नातिवर्तेत अज्ञातोनातिक्रामेत् ॥ २ ॥ युयुत्सया योद्धुमिच्छया । प्रशशंसुः प्रोचुः ॥ ३ ॥ रक्षतमिति लोण्मध्यमपुरुषद्विवचनं । एतद्दिनमारभ्य षड्रात्रपर्यन्तं मुनिर्मौनित्वंगमिष्यति । अतोवयंवदाम इत्यर्थः ॥ ४ ॥ षडहोरात्रं षण्णामहोरात्राणांसमाहारः षडहोरात्रंतत् ॥ ५ ॥ उपासांचक्रतुः ऊषतुः । यत्तौ सन्नद्धौ । परमंधनुर्ययोस्तौ परमधन्विनौ । व्रीह्यादित्वादिनिः ॥ ६ ॥ कालेपञ्चदिनात्मके गते । तस्मिन् प्रधाने । अहनि सुत्यादिने । समाहितः एकाग्रचित्तः । अत्राद्यप्रभृतिषड्रात्रमित्युक्त्या पूर्वसर्गेतत्पूर्वदिने दीक्षाप्रवेशोक्त्याच सप्तरात्रनिर्वर्त्यःसत्रविशेषोऽयमिति गम्यते ॥ ७ ॥ वेदिप्रज्वलनमुत्पातोराक्षसागमसूचकः । उपाध्यायः विश्वामित्रः । पुरोहिताः ऋत्विजः ॥ ८ ॥

**ति०** कुमाराविव स्कन्दविशाखाविव ॥ ४५ ॥ इत्येकोनत्रिंशस्सर्गः ॥ २९ ॥

**शि०** संरक्षणीयौ । संरक्ष्यतेयागआभ्यामितिअपादानेअनीयर् । किंचसंरक्षणीयौ दुष्टकर्महेतुकनरकपातादितोनिवर्तनीयौ ॥ २ ॥ **वि०** उपाध्यायोब्रह्मा । पुरोहितउपद्रष्टा । इदमृत्विगन्तराणामप्युपलक्षणम् ॥ ८ ॥

[ **पा०** ] १ ङ. च. छ. झ. ञ. कुमाराविव. २ च. स्पृष्टोदकं. ख. शुचीकृतब्रह्मजपौसमाप्यनियमानपि. ङ. झ. प्रशुचीपरमंजाप्यं. ३ ख. हुत्वाग्नि. ४ ङ. झ. ञ. संरक्षणीयौतौब्रूहि. च. छ. संशिक्षणीयौतौब्रह्मन्. ख. तावागमिष्यतोब्रह्मन्. ५ ग. ङ. च. छ. झ. ञ. ट. रक्षतां. ६ क. ग. ङ. च. झ. ञ. तौतुतद्वचनं. ख. तेषांतुवचनं. ७ ख. ग. युक्तौपरमधन्विनौ. छ. यत्तौपरमधार्मिकौ. घ. यत्तापरमरिंदमौ. ८ मरिंदमं. ९ ङ. झ. तथागते.

सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ॥ विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ ९ ॥
मन्त्रवच्च यथान्यायं यज्ञो[1]ऽसौ संप्रवर्तते ॥ [ [2]एवं प्रवर्तिते यज्ञे विश्वामित्रस्य धीमतः ॥ ]
आकाशे च[3] महाञ्शब्दः प्रादुरासीद्भयानकः ॥ १० ॥
आवार्य गगनं मेघो[4] यथा प्रावृषि निर्गतः ॥ तथा मायां विकुर्वाणौ[5] राक्षसावभ्यधावताम् ॥ ११ ॥
मारीचश्च सुबाहुश्च तयोरनुचराश्च[6] ये ॥ आगम्य भीमसंकाशा[7] रुधिरौघमवासृजन् ॥ १२ ॥
सा[8] तेन रुधिरौघेण वेदिर्जज्वाल मण्डिता ॥ [ दृष्ट्वा[9] वेदिं तथाभूतां सानुजः क्रोधसंयुतः ] ॥
सहसाऽभिद्रुतो[10] रामस्तानपश्यत्ततो दिवि ॥ १३ ॥
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः ॥ [ [11]असंभ्रान्तस्त्वरन्किंचित्सज्यं कृत्वा महद्धनुः ] ॥
लक्ष्मणं त्वभिसंप्रेक्ष्य रामो वचनमब्रवीत् ॥ १४ ॥
पश्य लक्ष्मण दुर्वृत्तान्राक्षसान्पिशिताशनान् ॥ *मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५ ॥
[ [12]करिष्यामि न सन्देहो नोत्सहे हन्तुमीदृशान् ॥ इत्युक्त्वा वचनं रामश्चापे[13] संधाय वेगवान् ॥ १६ ॥
एवं वदन्तं तं दृष्ट्वा धनुःप्रवरपाणिनम् ॥ बालोयमिति विज्ञाय तमनादृत्य दुर्मती ॥
विश्वामित्रस्य तां वेदिं सत्वरावभ्यधावताम् ॥ १७ ॥
तावुदीक्ष्य त्वरन्रामश्चापमायम्य वीर्यवान् ] ॥ *मानवं परमोदारमस्त्रं परमभास्वरम् ॥
चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १८ ॥
स तेन परमास्त्रेण मानवेन समाहतः[14] ॥ संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥ १९ ॥
विचेतनं विघूर्णन्तं शीतेषुबल[15]ताडितम् ॥ निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ २० ॥

---

एतद्विवृणोति—सदर्भेति । चमसंनाम पानपात्रं । स्रुक् होमपात्रं । उच्चयः समूहः । कुसुमोच्चयोलङ्कारार्थः ॥ ९ ॥ ननु रक्षोघ्नमन्त्रजपेक्रियमाणे कथंराक्षसागमनप्रसक्तिः । नकथंचित् । किंतु दूरतएवाकाशेमेघवद्रुधिरंववर्षुः । तदिदमाह—आकाशइति । भयानकः भयंकरः ॥ १० ॥ प्रावृषि वर्षाकाले । निर्गतोमेघोयथा-तथाऽभ्यधावतां ॥ ११ ॥ भीमसंकाशाः भयंकराः ॥ १२ ॥ अभिद्रुतः अभिमुखंधावन् ॥ १३—१४ ॥ पिशिताशनान्मांसभक्षकान् । एतद्विधूननार्थंमानवास्त्रं प्रयोक्ष्यइतिभावः ॥ १५—१७ ॥ अत्रादौइत्युक्त्वेत्युपस्कार्यं । ननुसर्वराक्षसेष्वस्त्रप्रयोगंप्रतिज्ञाय मारीचोरसितत्प्रयोगःकथमितिचेन्न । पूर्वश्लोकेराक्षसशब्दस्यमारीचमात्रपरत्वात् ॥ १८ ॥ सागरसंप्लवे समुद्रपूरे । अत्रगायत्रीद्वितीयाक्षरंसः ॥ १९ ॥ शीतेषुशब्दोवयववृत्त्यामानवास्त्रेवर्तते । दृश्य दृष्ट्वा । मारी-

---

**शि०** मन्त्रवदिति मन्त्रउद्यतेउच्यतेअस्मिन्निति । किंचमन्त्रेणवन्यतेरच्यतेइतिमन्त्रवत् ॥ १० ॥ **ति०** समुक्षितां अभ्याशेइतिशेषः ॥ १३ ॥ **ति०** ईदृशान् स्थितायुश्शेषान् दुर्बलान्वा ॥ १६ ॥

**[ पा० ]** १ ट. यज्ञोऽयं. ख. यज्ञोवै. २ इदमर्धं च. छ. दृश्यते. ३ ख. सुमहान्. ४ ख. मेघौयथाप्रावृषिनिर्गतौ. ५ ख. प्रकुर्वाणौ. ६ क. ख. ङ. च. छ. झ. ट. चरास्तथा. ७ ख. च. भीमसंकाशान्रुधिरौघानवा. ट. मेघसंकाशाः. ८ ङ. झ. ञ. तांतेनरुधिरौघेणवेदिंवीक्ष्यसमुक्षिताम्. ९ इदमर्धं ख. दृश्यते. १० क. च. छ. द्रुतान्रामः. ११ इदमर्धं ख. दृश्यते. १२ इदंसार्धपद्यद्वयं ख. दृश्यते. १३ 'चापेशरंसंधायवेगवानासीदित्यध्याहारेणयोजना. च. ट. चापंसंधाय. * एवंब्रुवाणंमारीचो· बालकंहेममालिनम् । तस्यानुजंचहेमाभंशूरंतूच्छ्रितधन्विनम् । १ । राघवौश्यामहेमाभौतावपश्यत्तदादिवि । दृष्ट्वातेजस्विनौतौचअवधूतश्चतेजसा । २ । अवज्ञायसतौविप्रान्प्रधर्षयितुमारभत् । तमापतन्तंरामस्तुप्रहसँल्लीलयाततः । ३ ।' एतच्छ्लोकत्रयं—मानवंपरमोदारमित्यतःपूर्वं कुण्डलनान्तर्गतपाठप्रतिनिधित्वेन च. छ. पाठयोर्दृश्यते. १४ ख. समाहितः. १५ ङ. च. छ. झ. ञ. पीडितं.

[ पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम् ॥ मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यत] ॥२१॥
इमानपि वधिष्यामि निर्घृणान्दुष्टचारिणः ॥ राक्षसान्पापकर्मस्थान्यज्ञघ्नान्रुधिराशनान् ॥ २२ ॥
[ इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव ॥ ] संगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमद्भुतम् ॥
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ २३ ॥
शेषान्वायव्यमादाय निजघान महायशाः ॥ राघवः परमोदारो मुनीनां मुदमावहन् ॥ २४ ॥
स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः ॥ ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २५ ॥
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ॥ निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥ २६ ॥
कृतार्थोस्मि महाबाहो कृतं गुरुवचस्त्वया ॥ सिद्धाश्रममिदं सत्यं कृतं राम महायशः ॥ २७ ॥
[ स हि रामं प्रशस्यैवं ताभ्यां सन्ध्यामुपागमत् ] ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ॥ ३१ ॥

विश्वामित्रेणरामंप्रतिमिथिलायांजनकयज्ञप्रस्तावनेनतत्रत्यदिव्यधनुःप्रभावादिनिवेदनपूर्वकंराघवाभ्यांसहमुनिभिश्चमिथिलांप्रतिप्रस्थानम् ॥ १ ॥ विश्वामित्रादिभिःसहसायाह्नेशोणाकूलंगतेनरामेणमुनिंप्रतितस्यदेशस्यपुरावृत्तकथनप्रार्थना ॥ २ ॥

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ॥ ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥
प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ॥ विश्वामित्रं मुनींश्चान्यान्सहितावभिजग्मतुः ॥ २ ॥
अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् ॥ ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥
इमौ स मुनिशार्दूल किंकरौ समुपस्थितौ ॥ आज्ञापय यथेष्टं वै शासनं करवाव किम् ॥ ४ ॥

चस्यप्राणरक्षणंभाविकार्यान्तरसाधनाय ॥२०–२१॥ वधप्रयोजकानिनिर्घृणत्वादीनि ॥ २२ ॥ अद्भुतं-यथातथाचिक्षेप ॥ २३ ॥ निजघान हिंसितवान् ॥ २४ ॥ पुराविजये असुरविजये ॥ २५॥ निरीतिकाः निर्बाधाः ॥ २६ ॥ गुरुवचः पितृवचः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

एवंकृतार्थोविश्वामित्रोजनकसुतात्वेनावतीर्णयाश्रियारामंयोजयितुंव्याजेनमिथिलाप्रस्थानंप्रस्तौत्येकत्रिंशे—अथेत्यादि । कृतार्थौ कृतविश्वामित्रप्रयोजनौ । प्रहृष्टेन संतुष्टेन । अन्तरात्मना अन्तःकरणेन । उपलक्षितौ ॥ १ ॥ सहितौ अविनाभूतौ ॥२॥ मधुरोदारोक्तौ हेतुःमधुरभाषिणाविति ॥३॥ स्मेतिभूतार्थसूचकमव्ययं । इमौस्म आज्ञापितंसर्वमनुष्ठितवन्तावित्यर्थः । मुनिशार्दूल ब्रह्मध्यायिषुश्रेष्ठ । अनेननिरवधिकभक्तिमत्त्वं सूचितं । किंकरौ "भक्तिक्रीतोजनार्दनः" इत्युक्तरीत्या त्वयाक्रीतौ । समुपस्थितौ भक्त्यात्वांविनाक्षणमपिस्थातुमक्षमौ । "शरतल्पगतोभीष्मःशाम्यन्निवहुताशनः ॥ मां ध्यातिपुरुषव्याघ्रस्ततोमेतद्गतंमनः" इतिवत् । आज्ञापययथेष्टं क्षामकालेअल्पद्रव्यायक्रीतोराजपुत्रःपुनर्नि-

ति० मनुसंहितं मनुप्रयुक्तं ॥ २१ ॥ इतित्रिंशस्सर्गः ॥ ३० ॥

[ पा० ] १ इदमर्धद्वयं क. ख. ङ. च. छ. झ. ञ. ट. दृश्यते. २ ङ. च. छ. झ. ञ. मनुसंहितम्. ३ क. ख. घ—छ. झ. ञ ट. वियुज्यते. ४ इदमर्धं क. ख. ङ. च. छ. झ. दृश्यते. ५ क. ख. च. छ. ञ. ट. संगृह्यसुमहच्चास्त्रं. ङ. झ. विगृह्यसुमहच्चास्त्रं. ६ क. ङ. च. झ. ञ. ट. आग्नेयंरघुनन्दनः. ७ ख. महाबलः. ८ क. कृतार्थोऽहंमहाभाग. ९ ङ. च. छ. झ. ञ. वीर. १० इदमर्धं ङ. च. छ. झ. ञ. दृश्यते. ११ क. घ. च. छ. ञ. शौचंकृत्वामहाबलौ. १२ क. ग. ङ. च. छ. झ. विश्वामित्रमृषींश्चान्यान्सहितावभि. घ. सहितावभिगच्छतः. १३ क. ऊचतुःपरमोदारं. १४ क. उभौस्म. १५ ग—छ. झ. ञ. समुपागतौ. १६ च. छ. झ. ञ. मुनिश्रेष्ठ.

एवमुक्तास्ततस्ताभ्यां सर्व एव महर्षयः ॥ विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥
मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति ॥ यज्ञः परमधर्मिष्ठस्तस्य यास्यामहे वयम् ॥ ६ ॥
त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि ॥ अद्भुतं धनुरत्नं च तत्र तद्द्रष्टुमर्हसि ॥ ७ ॥
तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः ॥ अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥
नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ॥ कर्तुमारोपणं शक्ता न कथंचन मानुषाः ॥ ९ ॥
धनुषस्तस्य वीर्यं तु जिज्ञासन्तो महीक्षितः ॥ न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥
तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः ॥ तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं चाद्भुतदर्शनम् ॥ ११ ॥
तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः ॥ याचितं नरशार्दूल सुनाभं सर्वदैवतैः ॥ १२ ॥
आयागभूतं नृपतेस्तस्य वेश्मनि राघव ॥ अर्चितं विविधैर्गन्धैर्माल्यैश्चागरुगन्धिभिः ॥ १३ ॥
एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ॥ सर्षिसङ्घः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४ ॥
स्वस्ति वोस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् ॥ उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥१५॥

वर्तयितुंनार्हःकिल। शासनंकरवावकिं कर्तव्ये नसंकोचःकार्यइत्यर्थः। अनेनस्वभक्तायस्वान्यंनददाति आहूयनददाति स्वयंगत्वैवददाति स्वात्मानमिष्टविनियोगार्हंकरोतीत्युक्तं ॥ ४ ॥ अत्रविश्वामित्रेणप्रतिवक्तव्येऋषिभिर्नियोजनंरामभक्त्यतिरेकेण । पुरस्कृत्य तदनुज्ञांलब्ध्वेत्यर्थः । यद्वा विश्वामित्रप्रमुखामुनयइत्यर्थः ॥ ५ ॥ मिथिलायाईश्वरोमैथिलः "तस्येदं" इत्यण् । परमधर्मिष्ठः अतिशयेनधर्मवान् । भगवत्कैङ्कर्यरूपत्वेनकाम्यनित्याभ्यामुत्कृष्टइत्यर्थः । तस्य तस्यकृते ॥ ६ ॥ गमिष्यसि । यदीतिशेषः । धनुरत्नं धनुश्श्रेष्ठं दीर्घाभावआर्षः । चकाराद्यज्ञंचेत्यर्थः । तत् प्रसिद्धं ॥ ७ ॥ तस्यधनूरत्नंकुतःसमायातंतत्राह—तद्धीति। मखे सदसि दैवतैर्दत्तमित्यन्वयः ॥ ८ ॥ आरोपणं ज्यारोपणं ॥ ९ ॥ जिज्ञासन्तः जिज्ञासमानाः ॥ १० ॥ यज्ञंद्रक्ष्यसि तत्रतद्धनुश्चद्रक्ष्यसीत्यन्वयः ॥ ११ ॥ मखेकिमर्थंदत्तंतत्राह—तद्धीति । सुनाभं शोभनमुष्टिबन्धनस्थानं। दैवतैः दैवतेभ्यः। याचितं दत्तंचेत्यर्थः ॥ १२॥ आयागभूतं धनुरुत्सवेप्राधान्येनार्चितं धनुरायागउच्यते। अत्रविश्वामित्रेणैवानुक्तिः सर्वसंमतत्वद्योतनाय ॥ १३ ॥ पूर्वविश्वामित्रंपुरस्कृत्येत्युक्त्याप्राधान्यात् विश्वामित्रउक्तवानित्यनूद्यते ॥ १४॥ जाह्नवीतीरेस्थितंहिमवन्तंगमिष्यामीत्यन्वयः। शिलोच्चयं पर्वतं। सिद्धाश्रमाद्धिमवद्गमनंमिथिलामार्गेणेतिज्ञेयं ॥ १५ ॥

**वि०** तयोरितिताभ्यामित्यर्थे ॥ ५ ॥ **ति०** परमेतिपृथक्पदंवा । परा मा शोभायस्मिन्नित्यर्थकंरामसंबोधनं ॥ ६ ॥ **ती०** चकारोनुक्तस्त्रीरत्नसमुच्चयपरः । **वि०** पूर्वं पूर्वस्मिन्काले । देवराताख्यप्राचीनजनकस्ययज्ञेसदसिदैवतैर्दक्षयज्ञवधेप्रसादितात् शिवाल्लब्धं । यज्ञप्रसादितैश्शिवसहितैर्दैवतैर्देवरातहस्तेतदप्रमेयबलंधनुर्दत्तं । अतस्तत्रतिष्ठतीतिशेषः ॥ ८ ॥ **ति०** नकथंचन नकथमपीत्यर्थः । **शि०** अस्य धनुषः । आरोपणं बाणप्रक्षेपयोग्यज्यासंयोगं कर्तुंदेवाःकथंचननशक्ताः । एवंकथंचनेत्यस्यवाक्यचतुष्टयेप्यपकर्षः । मनुष्येष्वपिनहुषादिषुअधिकपराक्रमश्रुतेर्नपतत्प्रकर्षदोषाशङ्का ॥ ९ ॥ **ति०** तद्धनुर्मैथिलेननिजयज्ञप्रीतेभ्योयज्ञफलत्वेनयाचितं । युद्धेरिपूणांजयायसर्वदैवतैश्शिवसहितैर्दत्तंअतस्तत्रतिष्ठतीत्यर्थः । तदुक्तंपाद्मे । "चापंशंभोर्दयादत्तं" इति । कौर्मेपि "प्रीतश्चभगवानीशस्त्रिशूलीनीललोहितः । प्रददौशत्रुनाशार्थंजनकायाद्भुतंधनुः"इति ॥१२॥ **ति०** आयागभूतं । यजनीयदेवताभूतमित्यर्थः ॥ **वि०** अयमत्रधनुरागमनक्रमः । पूर्वंदेवास्त्रिपुरवधायविश्वकर्मणानिर्मितंधनुर्महादेवायददुः । तद्भगवतोर्बलाबलपरीक्षानिमित्तकविश्वरोधेविष्णुपदाक्रमैर्जडीकृतं। देवैःप्रार्थितोमहादेवोधनुरिच्छतोदेवरातस्यहस्तेन्यस्तवान् । ततःप्रभृतिन्यासभावेनवर्तमानंजनकेनस्वयज्ञेस्वलेनयाच्यमानंदेवैस्तस्ययज्ञफलत्वेनदत्तमिति ॥ १३ ॥ **ती०** हिमवतस्स्वाश्रमत्वादितिभावः ॥ १५ ॥

[ **पा०** ] १ क. ख. घ—छ. झ. ञ. ट. एवमुक्तेतयोर्वाक्ये. २ ख. नरेन्द्रस्य. ३ क. ख. घ—छ. झ. ञ. ट स्तत्र. ४ क. ग—छ. झ. ञ. अद्भुतंचधनूरत्नंतत्रत्वं. ट. तद्धनूरत्नं. ५ क—छ. झ. ट. स्तस्यवीर्यंहि. ञ. स्तत्रवीर्यंहि. ६ ङ. च. छ. झ. ञ. यज्ञंचपरमाद्भुतम्. ७ क. अप्रमेयबलंघोरंतस्य. ङ. नृपतेतस्य. ८ ख. विधिवद्गन्धैः. ९ क—छ. झ. ञ. धूपैश्चा. १० ख. एवमुक्त्वारघुवरं.

[इत्युक्त्वा मुनिशार्दूलः कौशिकः स तपोधनः ॥ ] प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् ॥
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥
तं प्रयान्तं मुनिवरमन्वयादनुसारिणम् ॥ शकटीशतमात्रं च प्रायेण ब्रह्मवादिनाम् ॥ १७ ॥
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ॥ अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥ १८ ॥
निवर्तयामास ततः पक्षिसङ्घान् मृगानपि ॥ १९ ॥
ते गत्वा दूरमध्वानं लंबमाने दिवाकरे ॥ वासं चक्रुर्मुनिवराः शोणाकूले समागताः ॥ २० ॥
तेऽस्तं गते दिनकरे स्नात्वा हुतहुताशनाः ॥ विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥ २१ ॥
रामोपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ॥ अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ॥ २२ ॥
अथ रामो महातेजा विश्वामित्रं महामुनिम् ॥ पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ॥ २३ ॥
भगवन्कस्य देशोऽयं समृद्धवनशोभितः ॥ श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्वतः ॥ २४ ॥
चोदितो रामवाक्येन कथयामास सुव्रतः ॥ तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ॥ ३२ ॥

विश्वामित्रेणरामंप्रतिशोणाकूलस्थदेशवृत्तान्तकथनप्रसङ्गेनस्ववंशवृत्तान्तकथनारंभः ॥ १ ॥ तथाशोणातटस्थदेशस्यब्रह्मसूनोःकुशस्यतनयेषुचतुर्षु कुशांबादिषुकनीयसोवसोस्संबन्धित्वकथनम् ॥ २ ॥ कुशात्मजेषुद्वितीयस्यकुशनाभस्यकन्याशते उद्यानमेत्यविहरतिसतिवायुनाताःप्रतिस्वभार्याभवनप्रार्थनम् ॥ ३ ॥ ताभिस्तदनङ्गीकारेतेनतासांशरीरप्रवेशेनकुब्जीकरणम् ॥ ४ ॥ ताभिःपितृसमीपमेत्यपरिशोचनम् ॥ ५ ॥

ब्रह्मयोनिर्महानासीत्कुशो नाम महातपाः ॥ अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १ ॥

---

ततःवनदेवतामन्त्रणानन्तरं ॥१६॥ अनुसारिणं उत्तरदिगनुसारिणंतं । प्रायेण बाहुल्येन । ब्रह्मवादिनांशकटीशतमात्रं शकट्यःशकटानि । तेषांशतमात्रं शतप्रमाणं । अन्वयात् अन्वगात् । यद्वा शतमात्रमन्वयात् । इतरत्सर्वंसिद्धाश्रमएवस्थितमित्यर्थः । अत्र शकटीशब्देन शकट्यारोपिताग्निहोत्रसंभारादिकमुच्यते ॥१७॥ तद्भक्त्येतिभावः ॥ १८ ॥ निवर्तयामासेत्यर्धं । अत्रपक्ष्यादिनिवर्तनेनमुनीनांगमनंद्योतितं ॥ १९ ॥ शोणः पुंनदः सएवशोणेत्यपिव्यपदिश्यते॥२०॥शोणेस्नात्वादिनकरेस्तंगतेसति हुतहुताशनाइत्यन्वयः॥२१॥अभिपूज्य अभिवाद्य॥२२–२३॥ अयं शोणकूलस्थः ॥ २४ ॥ निखिलंवृत्तांतमित्यर्थः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

---

एवंशोणकूलदेशवैभवेपृष्टेअयंमद्वंश्यानांदेशइतिविवक्षन्स्वान्वयं प्रदर्शयतिद्वात्रिंशे—ब्रह्मयोनिरित्यादि । ब्रह्मयोनिःकारणंयस्यसःब्रह्मयोनिः अयोनिजोब्रह्मपु-

---

**ति०** शोणनदस्यैवशोणेत्यपिनामेत्याहुः । वस्तुतःशोणेतिगिरिव्रजसमीपस्थोनदीविशेषइत्येतदुत्तरसर्गेस्पष्टं ॥ २० ॥ **ति०** अस्तंगते । अस्तंजिगमिषतीत्यर्थः ॥ २१ ॥ **ति०** । अयंदेशः शोणाकूलस्थः ॥ २४ ॥ इत्येकविंशस्सर्गः ॥ ३१ ॥

**[पा०]** इदमर्धं १ क. ख. च. छ. झ. दृश्यते. २ क. ख. घ—छ. झ. ञ. ट. व्रजन्तं. ३ क. ख. घ—छ. झ. ञ. मन्वगा. ४ घ. दनुचारिणाम्. ग. ङ. झ. ञ. ट. दनुसारिणाम्. ५ ख. ङ. च. छ. झ. ञ. शतमात्रंतु. ६ क. ख. घ—छ. झ. ञ. ट. प्रयाणे. ७ ङ. झ. महात्मानो. ८ ङ. च. छ. झ. ञ. तपोधनं. ९ क. ङ. छ. झ. ञ. सर्षिसंघस्सपक्षिणः. च. सर्षिसंघसपक्षिणः. १० क. छ. झ. ञ. मुनिगणाः. ११ शोणकूलेसमागताः. क—छ. झ. ञ. शोणाकूलेसमाहिताः. १२ ख. घ. अस्तंगते. १३ ङ. झ. तपोधनं. च. छ. ञ. तपोनिधिम्. घ. महामतिं. १४ क—छ. झ. ञ. मुनिशार्दूलं. १५ ख. ग. झ. समन्वितम्. १६ क—छ. झ. ञ. न्कोन्वयंदेशः. १७ ट. महायशाः. १८ ख. व्रतधर्मश्च.

स महात्मा कुलीनायां युक्तायां सुगुणोल्बणान् ॥ वैदर्भ्यां जनयामास सदृशांश्चतुरः सुतान् ॥
कुशांबं कुशनाभं च अधूर्तरजसं वसुम् ॥ २ ॥
दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ॥ तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः ॥
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥ ३ ॥
ऋषेस्तु वचनं श्रुत्वा चत्वारो लोकसंमताः ॥ निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ४ ॥
कुशांबस्तु महातेजाः कौशांबीमकरोत्पुरीम् ॥ कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ५ ॥
आधूर्तरजसो राम धर्मारण्यं महीपतिः ॥ चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ६ ॥
एषा वसुमती राम वसोस्तस्य महात्मनः ॥ एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ७ ॥
सुमागधी नदी रम्या मगधान्विश्रुताऽऽययौ ॥ पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥८॥
सैषा हि मागधी राम वसोस्तस्य महात्मनः ॥ पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ ९ ॥
कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ॥ जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ १० ॥
तास्तु यौवनशालिन्यो रूपवत्यः स्वलंकृताः ॥ उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ ११ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च सर्वशः ॥ आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १२ ॥
अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि ॥ उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १३ ॥
ताः सर्वगुणसंपन्ना रूपयौवनसंयुताः ॥ दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १४ ॥
अहं वः कामये सर्वा भार्या मम भविष्यथ ॥ मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १५ ॥

---

त्रः । महान् ज्ञानशौर्यादिभिरितरब्रह्मपुत्रविलक्षणः । कौभूमौशेतइतिकुशः । नारदादिवत्ब्रह्मलोकेऽनवस्थायप्रजापालनेदत्तादरतयाभूमाववस्थानात्कुशइत्यस्यनाम । अतएवक्षत्रियव्यापारात्क्षत्रियोयं । अक्लिष्टंनिर्बाधंव्रतंयस्यसोक्लिष्टव्रतः अक्लिष्टव्रतश्चासौधर्मज्ञश्चेतिकर्मधारयः ॥ १ ॥ सार्धश्लोकः । युक्तायां अनुरूपायां ॥२॥ सार्धश्लोकः । क्षत्रधर्मः प्रजापालनं ॥ ३ ॥ पुष्कलं समग्रं । ऋषेः कुशस्य । निवेशं संनिवेशं ॥ ४ ॥ कुशांबइत्यादिश्लोकद्वयं ॥ ५ ॥ ६ ॥ एषा शोणकूलस्था । शैलवराः गिरिव्रजसंज्ञामूलाः ॥ ७ ॥ मगधदेशादागतामागधीतिशोणएवोच्यते । आययावितिच्छेदः ॥ ८ ॥ पूर्वाभिचरिता पूर्वदेशात्प्रत्यङ्मुखवाहिनी । सुक्षेत्रा उभयपार्श्वतइतिशेषः ॥९॥ घृतवत्पुरुषंदृष्ट्वाद्रवतीसत्यञ्चतीतिघृताची कुशनाभभार्या। घृतवत्पुरुषंकृत्वाञ्चतीतिवा । अप्सरसः ॥ १० ॥ श्लोकद्वयं । उद्यानभूमिमागम्यशतह्रदाइवस्थिताः । शतह्रदाः विद्युतः । नृत्यमानाः नृत्यन्त्यः । वादयन्त्यः वीणाइतिशेषः । आमोदं संतोषं । स्वलंकृताः कुसुमचन्दनतिलकादिभिः ॥ ११ ॥ १२ ॥ ताराइव बभुरितिशेषः ॥ १३ ॥ सर्वगुणसंपन्नाः सर्वालंकारसंपन्नाः । सर्वत्रआत्मास्वरूपंयस्यसःसर्वात्मकः सर्वत्रसंचारीत्यर्थः ॥ १४ ॥ वः भवतीः मानुषेभवोमानुषः ।

---

**ति०** युक्तायां अशेषस्त्रीगुणयुक्तायामित्यर्थः । असूर्तरजसं नविद्यतेसूर्तंप्रसूतंरजोयस्यतं । "अच्" इतियोगविभागादच् ॥ २ ॥ **ति०** पूर्वाभिचरिता पूर्वदिग्गामिनी ॥९॥ **ति०** मत्कामनापूरणेममदेवस्यमानुष्योपिभार्याभविष्यथेत्यादिर्वशीकरणायार्थवादः । ननुमानुषीणांदेवसंबन्धोनुचितस्तत्राह—मानुषस्त्यज्यतांभावइति । मदंगीकारमात्रेणविलक्षणशक्त्याविर्भावान्मानुषभाव-

[ पा० ] १ च. छ. ञ. जायायां. २ ङ. च. छ. झ. ञ. ट. सदृशान्सुमहाबलान्. क—छ. झ. ञ. चतुरस्सदृशान्सुतान्. ३ ङ. अमूर्तरजसं. च. झ. ञ. असूर्तरजसं. ट. अमूर्तिरजसम्. ख. आवर्तरजसं. ४ ग. ङ. ञ. कुशस्य. क. ख. झ. ट. पितुस्ते. ५ च. ञ. चत्वारोऽमितविक्रमाः. ङ. झ. चत्वारोलोकसत्तमाः. ६ ख. निवेशांश्चक्रिरे. ७ क. पुराणि. ८ क. ङ. च. झ. ञ. नाम. ९ ङ. झ. महामतिः. १० क. ङ. छ. झ. ञ. वसुर्नामगिरिव्रजम्. च. वसुर्नाममणिव्रजम्. ११ ङ. च. छ. झ. ञ. नाम. १२ ग. पुण्या. १३ झ. मागधान्. १४ ख. घ. च. छ. ञ. ट. नाम. १५ क. ख. ट. वीर. च. छ. ञ. नाम. १६ च. मागत्य. १७ ङ. च. छ. झ. ञ. वादयन्त्यस्तुराघव. क. ख. घ. ट. वादयन्त्यश्चराघव. १८ क. ख. स्सर्वाभरण. १९ ख. मध्येशोभन्ते. २० ङ. संमताः.

चलं हि यौवनं नित्यं मानुषेषु विशेषतः ॥ अक्षयं यौवनं प्राप्ता अमर्याश्च भविष्यथ ॥ १६ ॥
तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः ॥ अपहास्य ततो वाक्यं कन्याशतम[1]थाब्रवीत् ॥ १७ ॥
अन्तश्चरसि भूतानां सर्वेषां [2]त्वं सुरोत्तम ॥ [3]प्रभावज्ञाः स्म ते सर्वाः कि[4]मस्मानवमन्यसे ॥ १८ ॥
कुशनाभसुताः सर्वाः समर्थास्त्वां [5]सुरोत्तम ॥ स्थानाच्च्यावयितुं [6]देवं रक्षामस्तु तपो वयम् ॥१९॥
मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनम् ॥ [7]नावमन्यस्व धर्मेण स्वयंवरमुपास्महे ॥ २० ॥
पिता[8] हि प्रभुरस्माकं दैवतं परमं हि [9]नः ॥ यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २१ ॥
[10]तासां तद्वचनं श्रुत्वा [11]वायुः परमकोपनः ॥ प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥ २२ ॥
[ अरत्निमात्राकृतयो भग्नदर्पा भयार्दिताः ] ॥ ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ॥
[12]प्रापतन्भुवि संभ्रान्ताः सलज्जाः [13]साश्रुलोचनाः ॥ २३ ॥
स च ता दयिता [14]दीनाः कन्याः परमशोभनाः ॥ दृष्ट्वा [15]भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥२४॥
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ॥ कुब्जाः केन [16]कृताः सर्वा [17]वेष्टन्त्यो नाभिभाषथ ॥
[ [18]श्रोतुमिच्छामि तं पुत्र्यो यस्येदं कर्म गर्हितम् ] ॥ २५ ॥
एवं राजा विनिश्वस्य समाधिं संदधे ततः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

भावः अनुरागः । त्यज्यतां । तथासतिदीर्घमायुरवाप्स्यथ ॥ १५ ॥ नित्यं सर्वदा । अक्षयमिति मद्भार्यात्वइतिशेषः ॥१६॥ अक्लिष्टकर्मणः अप्रतिहतकर्मणः । ततः तद्वाक्यश्रवणेन । अपहास्यअथाब्रवीत् ॥ १७ ॥ अन्तश्चरसि प्राणरूपेन । भूतानां प्राणिनां प्रभावज्ञाः एवंविधप्रभावज्ञाः । अस्मान् ज्ञातभवत्प्रभावाः ॥१८॥ स्थानात् अधिकारात् । देवं भवन्तं ॥ १९ ॥ सःनःपिता ते कालः मृत्युः माभूत् । हेदुर्मेधः दुर्बुद्धे । पितरंनावमन्यस्व । धर्मेण पितृप्रदानरूपेण । वरं स्वयमुपास्महे प्रतीक्षामहे । पितास्वयंयस्मैदास्यति तंप्रतीक्षामहइत्यर्थः ॥२०॥ उक्तंविवृणोति—पितेति ॥ २१ ॥ बभञ्ज कुब्जीचकार ॥ २२ ॥ सलज्जाः शरीरवैरूप्यादितिभावः ॥ २३ ॥ संभ्रान्तः पर्याकुलचित्तः ॥ २४ ॥ कोधर्ममवमन्यते बलात्कारंकरोतीत्यर्थः । कुब्जाः वक्रशरीराः ॥ २५ ॥ पृष्टेतिशेषः । विनिश्वस्य व्यथित्वा । समाधिं किंवक्ष्यन्तीतितद्वचनश्रवणावधानं ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्वात्रिंशःसर्गः ॥ ३२ ॥

---

त्यागेस्वतएवभवतीनांसामर्थ्यंभविष्यति ॥१५॥ **ति०** समर्थाइतिशेषः ॥१९॥ **ति०** यत्रकालेपितरंअवमन्य अपमानविषयंकृत्वा । स्वधर्मेण कामेन । स्वयंवरमुपास्महे आत्मनास्वातन्त्र्येणवयमङ्गीकुर्मः सकालःकदाचिदपिमाभूदित्यन्वयः ॥ **शि०** अवमन्य अनादृत्य । स्वधर्मेण शोभनोतिशयितोयोऽधर्मःपितरिसतिस्वातन्त्र्याचरणंतेन वरंस्वयमुपास्महेस्वीकुर्मःसकालोमाभूत् ॥ २० ॥ **ति०** सलज्जाःअन्याय्यपतिप्रसङ्गतःसलज्जाः ॥ २३ ॥ इतिद्वात्रिंशस्सर्गः ॥ ३२ ॥

[ **पा०** ] १ घ. मभाषत. २ ङ. च. छ. झ. ञ. सुरसत्तम. ३ क. ङ. च. छ. झ. ञ. ट. प्रभावज्ञाश्च. घ. प्रभावज्ञास्तु. ४ ङ. च. छ. झ. ञ. किमर्थमव. ५ ङ. झ. देवसमस्तास्सुरसत्तम. क. ख. देवसमर्थास्स्मसुरोत्तम. च. छ. ञ. देवसमर्थाश्चसुरोत्तम. ट. देवसधर्मास्स्मस्सुरोत्तम. ६ घ. च. देव. ७ ङ. झ. ञ. ट. अवमन्यस्व. ८ च. छ. ञ. पितावै. ९ क. ख. घ. च. छ. ञ. हिसः. ग. ङ. च. चसः. १० घ. ङ. च. झ. ञ. तासांतुवचनं. ११ ङ. च. छ. झ. ञ. ट. हरिः. १२ ङ. च. छ. झ. ञ. प्रविश्यचसुसंभ्रान्ताः. १३ क. ख. ग. झ. सास्रलोचनाः. १४ ङ. झ. भग्नाः, १५ ङ. झ. दीनाः, १६ ख. कृतायूयं, १७ च. छ. झ. ञ. ट. चेष्टन्त्यो, १८ इदमर्धं क. ख. दृश्यते.

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

कन्याभिर्वायुवृत्तंनिवेदितेनकुशनाभेनतासां क्षमाप्रशंसनपूर्वकंपरिसान्त्वनम् ॥ १ ॥ तथाचूलिसूनवेब्रह्मदत्तायभार्यात्वेनतासांप्रदानम् ॥ २ ॥ तस्यपाणिस्पर्शमात्रेणतासां कुब्जीभावापगमपूर्वकमद्भुतशोभाप्रादुर्भावः ॥ ३ ॥

**तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ॥ शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ १ ॥**
**वायुः सर्वात्मको राजन्प्रधर्षयितुमिच्छति ॥ अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २ ॥**
**पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः ॥ पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३ ॥**
**तेन पापानुबन्धेन वचनं नप्रतीच्छता ॥ एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् ॥ ४ ॥**
**[1]तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः ॥ प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५ ॥**
**क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतम् ॥ ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६ ॥**
**अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वा ॥ ७ ॥**
**दुष्करं [2]तद्धि वः क्षान्तं त्रिदशेषु विशेषतः ॥ यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः ॥ ८ ॥**
**क्षमा दानं क्षमा सत्यं क्षमा [3]यज्ञश्च पुत्रिकाः ॥ क्षमा यशः क्षमा धर्मः [4]क्षमया विष्ठितं जगत् ॥ ९ ॥**
**विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः ॥ मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः ॥**
**[5]देशकालौ प्रदानस्य सदृशे प्रतिपादनम् ॥ १० ॥**
**[6]एतस्मिन्नेव काले तु चूली नाम [7]महामुनिः ॥ ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११ ॥**

---

अथकुशनाभस्यकन्यावचनंशृण्वतःक्षमाविशेषउच्यतेत्रयस्त्रिंशे—तस्येत्यादि । शिरोभिश्चरणौस्पृष्ट्वा पादयोःप्रणम्येत्यर्थः ॥ १ ॥ प्रधर्षयितुं अभिभवितुं । इच्छति वर्तमानसामीप्याल्लट् । अशुभं बलात्काररूपं ॥ २ ॥ पितृमत्यःस्म अतः स्वच्छन्दे स्वातन्त्र्ये किंचित्पतिस्वीकारविषयेवयंनस्थिताः । अतोनःपितरमेववृणीष्व । सयदि नः अस्मान् तुभ्यं दास्यति तदातवभविष्यामः । तेभद्रमस्तु ॥ ३ ॥ एवंब्रुवन्त्योवयं अस्माकंवचनं नप्रतीच्छता अनंगीकुर्वता । पापानुबन्धेन पापानुसारिणा । तेन वायुना निहताः ॥ ४ ॥ अनुत्तमं क्षमावत्त्वात् ॥ ५ ॥ हेपुत्र्यः क्षमावतां कर्तव्यं कर्तुमर्हं । "कृत्यानांकर्तरि" इतिषष्ठी । क्षान्तं क्षमा भावेनिष्ठा । कृतं इदंसुमहत्कर्म देवेप्रार्थयमानेप्यविकृतचित्तत्वं शरीरंभञ्जयतिसतिनिष्क्रोधत्वंच दुष्करमितिभावः । कुलंचावेक्षितं कुलानुरूपंकृत्यंकृतमित्यर्थः ॥ ६ ॥ उक्तमर्थंविवृणोति—अलङ्कारइति अर्धं । क्षमा अपराधसहिष्णुत्वं ॥ ७ ॥ वः तत्क्षान्तं क्षमा । दुष्करं त्रिदशेषु रूपैश्वर्यसंपन्नेषु । विशेषतोदुष्करं । यादृशीति सर्वासामविशेषतः याक्षमा सापिदुष्करेत्यन्वयः । क्षमैवदुष्करा ततस्त्रिदशेषुदुष्करा ततोपिसर्वासामविशेषेणक्षमा दुष्करैवेत्यर्थः ॥ ८ ॥ क्षमांप्रशंसति क्षमेति । क्षमादानं दानेनयत्फलंप्राप्नोति—तत्क्षमयाप्राप्नोतीत्यर्थः । एवमुत्तरत्रापियोज्यं । धर्मः तटाकाराममनिर्माणादिः । क्षमया भूमिसंबन्धिन्या । जगच्चराचरं । विष्ठितं स्थितंभवति ॥ ९ ॥ अर्धत्रयं । प्रदानं कन्याप्रदानं । चिन्ताप्रकारमाह—देशइति। प्रदानस्य कन्याप्रदानस्य-उचितौदेशकालौ सदृशे स्वकुलस्यसदृशेपात्रे प्रतिपादनंच मन्त्रयामासेत्यर्थः ॥ १० ॥ एतस्मिन्नेवकाले कुशनाभीयकाले । उत्तरत्रान्वयः । ऊर्ध्वरेताः अस्खलितरेताः । ब्राह्मंतपः वैदिकंतपः ब्रह्मोद्देश्यकंवा

---

ति० ब्राह्मंतपः ब्रह्मविषयंचित्तैकाग्र्यं । " मनसश्चेन्द्रियाणांचऐकाग्र्यंपरमंतपः " इतिस्मृतिः ॥ ११ ॥

[पा०] १ घ—छ. झ. ञ. तासांतुवचनं. २ क. घ. च. ञ. तच्चवः. ङ. छ. झ. ट. तच्चवै. क. ग. तच्चयत्. ३ घ. ज्ञाश्च. ४ क. ख. ङ. च. झ. ञ. क्षमायांविष्ठितं. ग. क्षमायांहिस्थितं. ट. क्षमायांनिष्ठितं. ५ ङ. च. छ. झ. ञ. देशेकालेचकर्तव्यं. क. ग. घ. देशेकालेप्रदानस्य. ख. देशेकालेप्रदेयस्य. ६ ख. एतस्मिन्नन्तरेकाले. ७ ङ. च. छ. झ. ञ. महाद्युतिः.

तप्यन्तं[1] तमृषिं तत्र गन्धर्वी पर्युपासते ॥ सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२ ॥
सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ॥ उवास काले धर्मिष्ठा[2] तस्यास्तुष्टोऽभवद्गुरुः ॥ १३ ॥
स च तां कालयोगेन प्रोवाच रघुनन्दन ॥ परितुष्टोस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४ ॥
परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरा[3] ॥ उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५ ॥
लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ॥ ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिक[4] ॥ १६ ॥
अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् ॥ ब्राह्मेणोपगतायाश्च[5] दातुमर्हसि मे सुतम् ॥ १७ ॥
तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रम्[6]अनुत्तमम् ॥ ब्रह्मदत्त[7] इति ख्यातं मानसं चूलिनः सुतम् ॥ १८ ॥
स राजा सौमदेयस्तु[8] पुरीमध्यावसत्[9]तदा ॥ कांपिल्यां[10] परया लक्ष्म्या देवराजो यथा[11] दिवम् ॥ १९ ॥
स बुद्धिं कृतवान्राजा कुशनाभः[12] सुधार्मिकः ॥ ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥ २० ॥
तमाहूय महातेजा ब्रह्मदत्तं महीपतिः ॥ ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१ ॥
यथाक्रमं ततः[13] पाणीञ्जग्राह रघुनन्दन ॥ ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥
स्पृष्टमात्रे ततः[14] पाणौ विकुब्जा विगतज्वराः ॥ युक्ताः[15] परमया लक्ष्म्या बभुः कन्या शतं तदा ॥ २३ ॥

॥ ११ ॥ तत्र तस्मिन्देशे । तदा तत्काले । तप्यन्तं दाहार्थेपिव्यत्ययाच्छयन् । गन्धर्वी जातिवाचित्वात् । पर्युपासते अशुश्रूषत । मध्येमध्येभद्रमस्त्वितिप्रयोगःशुभोत्तरत्वाय ॥ १२ ॥ काले कियतिकाले तुष्टोभवत् । ब्रह्मर्षित्वाद्गुरुरित्युक्तिः ॥ १३ ॥ कालयोगेन शुश्रूषापरिपाककालसंबन्धेन । करोमि कुर्याम् ॥ १४ ॥ वाक्यकोविदं वाक्येवचने कोविदं समर्थं ॥ १५ ॥ ब्राह्म्यालक्ष्म्या ब्रह्मवर्चसेन । समुदितः श्रेष्ठः । अतएवब्रह्मभूतः ब्रह्मतुल्यः । महातपाअसि । तस्मात्त्वत्तःपुत्रमिच्छामि । दीप्यसेपरयालक्ष्म्येतिकोशान्तरे ॥ १६ ॥ विधवाप्यपतिर्भवतितत्राह—भार्येति । उपगतायाः शरणंगतायाः । मे । ब्राह्मेण तपोमहिम्ना ॥ १७ ॥ ब्रह्मणातपोयोगेनदत्तो ब्रह्मदत्तः । चूलिनः स्वस्य । मानसं मनस्संकल्पजं । सुतंददौ ॥ १८ ॥ राजा क्षत्रियः । क्षत्रजत्वात् । लक्ष्म्या संपदा युक्तः । एतस्मिन्नन्तरेपुरीमध्यावसदितिसंबन्धः ॥ १९ ॥ तदा ब्रह्मदत्तस्यकांपिल्याख्यायांपुर्यामावासकाले ॥ २० ॥ राजा रञ्जकः ॥ २१ ॥ तासांपाणीन्जग्राह । देवपतिर्यथा देवपतिसदृशः । तत्तुल्यविभवइत्यर्थः ॥ २२ ॥ ततः चूलिसूनुना । पाणावितिजात्येकवचनं । विकुब्जाः विगतकुब्जभावाः । शतंकन्या बभुः । विसर्गलोपआर्षः । बभुःकन्याशतमितिपाठः

**ति०** पर्युपासतेइतिशबलुगार्षः ॥ १२ ॥ तमितिप्रतियोगेद्वितीया । प्रतीतिशेषः । उवास तत्समीपेआसेत्यर्थः ॥ १३ ॥ **ति०** ब्राह्मंतपस्स्वाध्यायः । **ति०** धार्मिकंपुत्रमिच्छामीत्यनेनतत्संगमस्तयानप्रार्थितइतिव्यक्तं । तेनतस्याःपरमधैर्यंधर्मात्मत्वंचव्यक्तं ॥ ब्रह्मभूतइत्यनेनयथाब्रह्मसकलमभिधातुंसमर्थं तथात्वमपीत्युपमालङ्कारोध्वनितः ॥ १६ ॥ **शि०** ब्राह्मण हेब्रह्मवेत्तः । उपगतायाः त्वांसेवमानायाः ॥ **वि०** ननुपुत्रप्रार्थनापत्यावुचिताअतआह–अपतिश्चास्मीति । इतःपरमपि अस्मि अहं । अहमर्थे अस्मीत्यव्ययं । नकस्यचिद्भार्याभविष्यामीतिशेषः । अथापिनैष्ठिकब्रह्मचारिण्याःउपगतायाःकिंकरत्वंप्राप्तायामे ब्राह्मेण ब्रह्मसंबन्धिनोपायेन सुतं दातुमर्हसि । सनकादयइवमानसःपुत्रोदेयइतिभावः ॥ १७ ॥ **ति०** चूलिनः चूली । फलीफलिनइतिवत्चूलीचूलिनइतिऋषेर्नामद्वयंसाधु । **शि०** तस्याःतस्यैगन्धर्व्यैददौ इतिहेतोःख्यातंब्रह्मदत्तंचूलिनस्सुतंवदंतीतिशेषः ॥ १८ ॥ **शि०** तस्यब्राह्मणदत्तत्वाद्ब्राह्मणत्वेपिक्षत्रियात्वेनप्रसिद्धायागन्धर्व्यास्सुतत्वात्क्षत्रियत्वमपि ॥ १९ ॥ **ति०** बभौकन्याशतंतदा । ताःकन्याविकुब्जाः कुब्जत्वरहिताः । आसन्नितिशेषः । ब्राह्मतपोयुक्तत्वादेवंसामर्थ्यंराज्ञः । एवंचसतितत्कन्याशतंपरमयालक्ष्म्याबभावित्यन्वयः ॥ २३ ॥ इतित्रयस्त्रिंशस्सर्गः ॥ ३३ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. तपस्यन्तमृषिं. २ घ. ट. धर्मिष्ठः. ३ क—च. झ. ञ. ट. मधुरस्वरम्. ४ क. ख. ग. ङ. च. छ. झ. ञ. ट. धार्मिकम्. ५ क. च. छ. ञ. ब्राह्मेणोपगतायास्त्वं. च. छ. ट. ब्राह्मणोपगतायाश्च. ६ ङ. झ. ब्राह्ममनुत्तमम्. ग. पुत्रंतथाविधम्. ७ क. ख. ट. ब्रह्मदत्तमिति. ८ ङ. च. छ. झ. ञ. ट. ब्रह्मदत्तस्तु. ९ ङ. झ. ट. मध्यवसत्. १० ट. कापिलीं. ११ ङ. च. छ. झ. ञ. यथादिवि. १२ च. छ. ञ. कुशनाभस्तु. १३ ङ. च. छ. झ. ञ. ट. तदापाणिं. १४ ङ. च. छ. झ. ञ. ट. तदापाणौ. १५ घ. ङ. च. छ. झ. ञ. ट. युक्तंपरमयालक्ष्म्याबभौकन्याशतंतदा.

स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ॥ बभूव परमप्रीतो हर्षं लेभे पुनःपुनः ॥ २४ ॥
कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः ॥ सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥
सोमदाऽपि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् ॥ यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ॥
स्पृष्ट्वास्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

कुशनाभेनपुत्रेष्ट्यनुष्ठानेगाधिनाम्नोविश्वामित्रपितुः तत्पुत्रत्वेनजननम् ॥ १ ॥ विश्वामित्रभगिन्यासत्यवत्याभर्त्रनुवर्तनेन स्वर्गगमनपूर्वकं अंशान्तरेणकौशिकीनदीत्वेनप्रवर्तनम् ॥ २ ॥ एवंविश्वामित्रेणस्ववंशचरितानुवर्णनपूर्वकमर्धरात्रागमेरामादिभिःसहनिद्रोपसेवनम् ॥ ३ ॥

कृतोद्वाहे गते तस्मिन्ब्रह्मदत्ते च राघव ॥ अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥
इष्ट्यां च वर्तमानायां कुशनाभं महीपतिम् ॥ उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥
पुत्र ते सदृशः पुत्रो भविष्यति सुधार्मिकः ॥ गाधिं प्राप्स्यसि तेन त्वं कीर्तिं लोके च शाश्वतीम् ॥३॥
एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् ॥ जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥
कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ॥ जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥
स पिता मम काकुत्स्थ गाधिः परमधार्मिकः ॥ कुशवंशप्रसूतोस्मि कौशिको रघुनन्दन ॥ ६ ॥
पूर्वजा भगिनी चापि मम राघव सुव्रता ॥ नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥
सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी ॥ कौशिकी परमोदारा प्रवृत्ता च महानदी ॥ ८ ॥

॥ २३ ॥ वायुनामुक्ताः कन्याइतिशेषः । परमप्रीतः अनुकूलवरलाभेनपरमप्रीतः । हर्षं विकुब्जत्वकृतं ॥ २४ ॥ प्रेषयामास कांपिल्यामितिशेषः ॥ २५ ॥ सोमदेतिसार्धश्लोकः । सोमदा चूलिपुत्रमाता । पुत्रसदृशींक्रियां दारक्रियां । दृष्ट्वेतिशेषः । यथान्यायं यथाक्रमं । स्नुषाःकन्याः कुशनाभपुत्रीः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

एवंप्रासङ्गिकंपरिसमाप्यप्रकृतकथाशेषमाहचतुस्त्रिंशे—कृतोद्वाहइत्यादि । अपुत्रः कुशनाभः । पुत्रायेयं पौत्रीतां ॥ १ ॥ कुशः कुशनाभपिता ॥ २ ॥ सदृशः गुणैरितिशेषः।सपुत्रःकिंनामकः तत्राह—गाधिमिति। गाधिनामानंपुत्रंप्राप्स्यसे । तेन गाधिना । शश्वद्भवा शाश्वती । भवार्थेअण् । बहिषष्टिलोपवचनादव्ययानांभमात्रेटिलोपःक्वाचित्कः । अत्रनततोङीप् । तां ॥ ३ ॥ अनेनसदाब्रह्मलोकवासीकुशःपुत्रानुग्रहार्थं भुवमागतइत्यवगम्यते । सनातनंनित्यं ॥ ४ ॥ कस्यचित्कालस्य कस्मिंश्चित्कालेगतेसति । गाधिरित्येव यथापित्रोक्तंतथैवेत्यर्थः । जज्ञे घृताच्यांभार्यायां ॥ ५ ॥ यतःकुशवंशप्रसूतोस्मि अतःकौशिकसंज्ञोस्मि। कुशशब्दात्गोत्रापत्येठक् ॥६॥ पूर्वजा ज्येष्ठा । ऋचीके ऋचीकाख्यमुनयइत्यर्थः ॥ ७ ॥ भर्तारमनुवर्तिनी भर्त्रनुवर्तनधर्मप्रभावादितिभावः । नकेवलंस्वर्गगमनमस्याः महानदीत्वंचजातमित्याह—कौशिकीति ॥८॥

ति० चस्त्वर्थः कन्याशतसमुच्चयार्थोवा ॥ १ ॥ शि० आकाशमाविश्यसनातनंब्रह्मलोकंजगाम । अनेनकुशस्यकामचारगतिमत्त्वंव्यक्तं ॥ ४ ॥

[ पा० ] १ घ. ङ. झ. महीपतिम्. २ ख. सादरं. ३ ङ. झ. ट. सुतंदृष्ट्वा. छ. स्वयंहृष्टा. ४ क. ग. घ. च. दृष्ट्वास्पृष्ट्वा. ५ क. ख. ग. ङ. च. झ. ञ. इष्ट्यांतु. ६ क. ख. ग. ङ. च. छ. झ. ञ. ट. पुत्रस्तेसदृशःपुत्र. ७ क. च. छ. ञ. येन. ८ च. छ. ञ. कुशोनामा. ९ ख. राम.

दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ॥ लोकस्य [1]हितकामार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥
ततोऽहं हिमवत्पार्श्वे वसामि [2]निरतः सुखम् ॥ [3]भगिन्यां स्नेहसंयुक्तः [4]कौशिक्यां रघुनन्दन ॥ १० ॥
सा तु सत्यवती पुण्या [5]सत्ये धर्मे प्रतिष्ठिता ॥ पतिव्रता महाभागा कौशिकी सरितांवरा ॥ ११ ॥
अहं हि नियमाद्राम हित्वा तां समुपागतः ॥ सिद्धाश्रमम[6]नुप्राप्य सिद्धोस्मि तव तेजसा ॥ १२ ॥
एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ॥ [7]देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥१३॥
गतोर्धरात्रः काकुत्स्थ [8]कथाः कथयतो मम ॥ निद्रामभ्येहि भद्रं ते मा भूद्विघ्नोऽध्वनीह नः ॥ १४ ॥
निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः ॥ नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥
शनै[9]र्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् ॥ नक्षत्रतारागहनं ज्योतिभि[10]रवभासते ॥ १६ ॥
[11]उत्तिष्ठति च शीतांशुः शशी लोकतमोनुदः ॥ ह्लादयन्प्राणिनां लोके मनांसि प्रभया [12]विभो ॥१७॥
नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ॥ यक्षराक्षससङ्घाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥

दिव्या श्लाघ्या । हितं आमुष्मिकं । कामः ऐहिकं । तदुभयार्थं प्रवृत्ता नदीरूपेणस्वर्गाद्धिमवन्तमुपाश्रितेत्यर्थः ॥९॥ यतोहिमवन्तमाश्रिता ततइत्यर्थः ॥१०॥ सत्यवतीनामनिमित्तमाह—सात्विति ॥ ११ ॥ एवंभूतस्यसिद्धाश्रमागमननिमित्तमाह—अहंहीति । नियमात् यागनियमाद्धेतोः । समुपागतः सिद्धाश्रममिति शेषः ॥ १२ ॥ ममस्वस्यवंशस्यचोत्पत्तिः प्रसङ्गात्कीर्तिता । यत्त्वयापृष्टं तत् । देशस्य गिरिव्रजदेशस्य वैभवंचोक्तं ॥ १३ ॥ इतःपरंनप्रष्टव्यमित्याशयेनाह—गत इति । अर्धोरात्रेरर्धरात्रः । अनपुंसकत्वेपि "अर्धनपुंसकं" इत्यार्षःसमासः "अहःसर्व"इत्यादिनासमासान्तोऽच् "रात्राह्न—" इतिपुँल्लिङ्गता । अत्रार्धशब्दोंशवाची । उक्तंहि "भित्तंशकलखण्डेवापुंस्यर्धोऽर्धसमेंऽशके" इति । यावतिरात्रिभागेनिद्रानिषिद्धातावान्गत इत्यर्थः । जागरणेकोदोषइत्यत्राह—माभूदिति । श्वोगन्तव्याध्वनिनिद्राभावप्रयुक्तालस्यकृतविघ्नोमाभूदित्यर्थः । ममकथाःकथयतः मयिकथांकथयति ॥ १४ ॥ अथनिशामुखंवर्णयतिचतुर्भिः—निष्पन्दाइत्यादि । निष्पन्दाः पक्षिसंचाराभावादितिभावः । निलीनाः निद्रांप्राप्ताइत्यर्थः । नैशेन सन्ध्यातिरिक्तकालिकेन ॥ १५ ॥ सन्ध्या वियुज्यते वियुक्ता । वर्तमानसामीप्येलट् । नक्षत्रैः अश्विन्यादिभिः ताराभिःकेवलनक्षत्रैश्च गहनं व्याप्तं । नभः ज्योतिर्भिः ज्योतिष्मद्भिर्नेत्रैरावृतमिवावभासते ॥ १६ ॥ उत्तिष्ठतीति "उदोनूर्ध्वकर्मणि" इतिपरस्मैपदं । तमोनुदतीतितमोनुदः । इगुपधलक्षणःकः ॥१७॥ निशायांप्रभवन्ति नैशानि "प्रभवति" इत्यण् । भूतानि उलूकादयः । ततस्ततः तत्रतत्र । पौर्णमास्यांयज्ञंसमाप्यद्वितीयायांप्रस्थानमितिचतुर्घटिकानन्तरंचन्द्रोदय-

**ति०** नियमात् गयापिण्डदानवत्सिद्धाश्रमैकसाध्ययागजन्यसिद्धिहेतोः । आगमनकार्यंचलदनुग्रहात्सिद्धमित्याह–सिद्धाश्रममित्यादि ॥१२॥ **शि०** अर्धरात्रः रात्रेरर्धं । गतः अतीतः । अतोनिद्रामभ्येहि प्राप्नुहि । "अर्धनपुंसकं" इतिसमासः । "रात्राह्नाहाः पुंसि" इतिपुंस्त्वं । एतेनतद्धटकीभूतार्धशब्दःखण्डवाचकइतिस्वीकृत्यआर्षस्समासइतिभूषणोक्तिश्चिन्त्या । समांशवाचकत्वेबाधकाभावात् । खण्डवाचकत्वेप्रमाणाभावाच्च । खण्डवाचकत्वस्वीकारेणार्धशब्दस्यप्रदोषवाचकत्वंस्वीकृत्यव्याख्यानमप्ययुक्तं । "उपास्यरात्रिशेषंतु" इतिवक्ष्यमाणेनविरोधात् ॥ १४ ॥ **ति०** अर्धरात्रचिह्नान्याह–निष्पन्दाइति । **शि०** अर्धरात्रलक्षणानिवदन्नाह–निष्पन्दाइत्यादिभिः । नैशेन निशासंबन्धिना । तमसा अन्धकारेण । दिशः अव्याप्ताः अल्पव्याप्तिविशिष्टाः । अर्धरात्रेपूर्वरात्रापेक्षयाकिञ्चित्प्रकाशाधिक्यस्यानुभवसिद्धत्वमितितात्पर्यं ॥ १५ ॥ **ति०** विसृज्यते व्युच्छतीत्यर्थः । वर्तमानसामीप्येभूतेलट् । सन्ध्याशब्देनतदुपासनयोग्यगौणकालसाहित्येनसार्धयामरूपःकालोविवक्ष्यते ॥ **शि०** अर्धरात्रोपिव्यतीतोभवतीतिबोधयन्नाह–शनैरिति । सन्ध्या सम्यक्एकाग्रतांप्राप्नुवन्तिधियश्चित्तवृत्तयोयस्यांतया पूर्वरात्रोत्तररात्रमध्यभक्त्येत्यर्थः । शनैर्वियुज्यतेव्यतीयते । आवृतं अ न आवृतं आवरणंयस्यतत् । महदित्यर्थः ॥ १६ ॥ **शि०** उत्तिष्ठति उदयते । एतेनतदानींकृष्णनवमीतिव्यक्तम् ॥ १७ ॥

[ **पा०** ] १ ङ. झ. हितकार्यार्थं. २ ङ. च. छ. झ. ञ. नियतः. ३ क. ख. च. ठ. भगिन्याः. ४ क. ख. च. ट. ट. कौशिक्याः. ५ क. ख. सत्यधर्मप्रतिष्ठिता. ६ झ. मनुप्राप्तः. ७ ङ. च. छ. झ. ञ. देशस्यहि. ८ ट. कथां. ९ ङ. झ. र्विसृज्यते. १० च. छ. ञ. रिवभासते. ११ ङ. च. छ. झ. ञ. उत्तिष्ठते. १२ ङ. च. छ. झ. ञ. ट. स्वया.

एवमुक्त्वा महातेजा विरराम महामुनिः ॥ साधुसाध्विति [1]तं सर्वे [2]ऋषयो ह्यभ्यपूजयन् ॥ १९ ॥
कुशिकानामयं वंशो [3]महान्धर्मपरः सदा ॥ ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २० ॥
विशेषेण भवानेव [4]विश्वामित्रो महायशाः ॥ कौशिकी च [5]सरिच्छ्रेष्ठा कुलोद्योतकरी तव ॥ २१ ॥
[6]इति तैर्मुनिशार्दूलैः प्रशस्तः [7]कुशिकात्मजः ॥ [8]निद्रामुपागमच्छ्रीमानस्तं गत इवांशुमान् ॥ २२ ॥
रामोपि सह सौमित्रिः किञ्चिदागतविस्मयः ॥ प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

प्रातर्विश्वामित्रादिभिःशोणोत्तरणपूर्वकंदूराध्वगमनेनमध्याह्नेजाह्नवीतटेनिवासकल्पनम् ॥ १ ॥ गङ्गावृत्तान्तंपृष्टेनविश्वामित्रेण रामंप्रतिप्रासङ्गिकेनोमावृत्तान्तेनसहसंग्रहेणतत्कथनम् ॥ २ ॥

उपास्य [9]रात्रिशेषं तु [10]शोणाकूले महर्षिभिः ॥ निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥
सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥
तच्छ्रुत्वा वचनं तस्य [11]कृत्वा पौर्वाह्णिकीं क्रियाम् ॥ गमनं [12]रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥
अयं शोणः शुभजलो गाधः पुलिनमण्डितः ॥ कतरेण पथा ब्रह्मन्संतरिष्यामहे वयम् ॥ ४ ॥
एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् ॥ एष पन्था [13]मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥
एवमुक्ता महर्षयो विश्वामित्रेण धीमता ॥ पश्यन्तस्ते प्रयाता वै वनानि विविधानि च ॥ ६ ॥

---

इति सर्वथाअर्धरात्रशब्दःप्रदोषपरएव ॥१८॥ अभ्यपूजयम् अस्तुवन् ॥ १९ ॥ गाधेःकुशिकइतिनामान्तरं । कुशिकानां तद्गोत्रजानां । ब्रह्मोपमाः चतुर्मुखोपमाः ॥ २० ॥ विश्वामित्रः विश्वामित्रसंज्ञः । भवानेवमहात्मेत्यनुषङ्गः । कौशिकीच तवकुलोद्योतकरी कुलप्रकाशकरी ॥२१॥ प्रशस्तः स्तुतः । शंसु स्तुतौ । "यस्यविभाषा" इतिनेट् । "अनिदितां—" इतिनलोपः । श्रीमान् । प्रशंसाकृतहर्षजनितश्रीमान् । अस्तंगतोंशुमानिव तद्वत्परप्रबोधाजनकइत्यर्थः ॥ २२ ॥ किञ्चिदागतविस्मयः निद्रापारवश्यादितिभावः । समुपसेवते अध्वश्रमवशात्सम्यक्प्राप्तः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुस्त्रिंशःसर्गः ॥ ३४ ॥

अथ स्वपादोद्भवगङ्गावैभवंलोकेप्रवर्तयितुंपृच्छति पञ्चत्रिंशे—उपास्येत्यादि । उपास्य स्थित्वा शयित्वेतियावत् । रात्रिशेषमिति अत्यन्तसंयोगेद्वितीया । सुप्रभातायां निवृत्तायामितियावत् । अत्ररात्रिशेषमित्यनुवादात् पूर्वसर्गगतोर्धरात्रइत्यत्र निशीथपरत्वंस्वरसमिति गम्यते । यद्वा रात्रिशेषं ब्राह्मेमुहूर्ते । उपास्य परमात्मानमितिशेषः । "ब्राह्मेमुहूर्तेउत्थायचिन्तयेदात्मनोहितं" इतिस्मृतेः ॥१॥ गमनाय गन्तुं । "क्रियार्थोपपदस्य—" इति चतुर्थी ॥२॥ पूर्वाह्णेभवा पौर्वाह्णिकी तां ॥३॥ गाधः स्वल्पजलः । अतएव पुलिनमण्डितः सैकतालङ्कृतः । तथाच नावंविनागन्तुंशक्यते । कतरेणपथासंतरिष्यामहे ॥४॥ उद्दिष्टः गन्तव्यत्वेननिश्चितः ॥५—६॥

---

ति० शि० ब्रह्मोपमाः ब्रह्मर्षितुल्याः ॥ २० ॥ इतिचतुस्त्रिंशस्सर्गः ॥ ३४ ॥
नी० ति० प्रश्नबीजंअगाधइति । अतलस्पर्शइत्यर्थः । शि० कतरेणेत्युक्त्यातत्रमार्गद्वयेनमनुष्यसंतरणमितिध्वनितं । एतेन अगाधइतिपदच्छेदोनरमणीयइतिबोध्यं ॥ ४ ॥

[ पा० ] १ क. ङ. च. छ. झ. ञ. तेसर्वे. २ ग. ङ. च. छ. झ. ञ. मुनयो. ३ ख. छ. ट. महाधर्मपरः. ४ ङ. च. छ. झ. ञ. ट. विश्वामित्र. ५ ङ. च. छ. झ. ञ. सरितांश्रेष्ठा. ६ ङ. झ. मुदितैर्मुनि. ७ ट. कौशिकात्मजः. ८ ट. निद्रामेवोप. ९ ग. रात्रिशेषंच. १० च. ट. शोणकूले. ११ ङ. झ. कृतपूर्वाह्णिकक्रियः. १२ क. चोदयामास. १३ ख. मयोद्दिष्टएते.

ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा ॥ जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ७ ॥
तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् ॥ बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ८ ॥
तस्यास्तीरे ततश्चक्रुस्त आवासपरिग्रहम् ॥ ९ ॥
ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥ हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः ॥१०॥
विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ॥ विश्वामित्रं महात्मानं परिवार्य समन्ततः ॥
[विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ] ॥ ११ ॥
अथ तत्र तदा रामो विश्वामित्रमथाब्रवीत् ॥ भगवञ्श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् ॥ १२ ॥
त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ १३ ॥
चोदितो रामवाक्येन विश्वामित्रो महामुनिः ॥ वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १४ ॥
शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् ॥ तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि ॥ १५ ॥
या मेरुदुहिता राम तयोर्माता सुमध्यमा ॥ नाम्ना मनोरमा नाम पत्नी हिमवतः प्रिया ॥ १६ ॥
तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता ॥ उमा नाम द्वितीयाऽभून्नाम्ना तस्यैव राघव ॥ १७ ॥
अथ ज्येष्ठां सुराः सर्वे देवतार्थचिकीर्षया ॥ शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ १८ ॥
ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् ॥ स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १९ ॥
प्रतिगृह्य त्रिलोकार्थं त्रिलोकहितकारिणः ॥ गङ्गामादाय ते गच्छन्कृतार्थेनान्तरात्मना ॥ २० ॥

जाह्नवीं गङ्गां ॥७॥ सारसः हंसविशेषः ॥ ८ ॥ तस्याइतिअर्धं । आवासायपरिगृह्यतइत्यावासपरिग्रहः तं । संमार्जनादिना वासस्थानंचक्रुरित्यर्थः ॥९॥ ततइत्यादिश्लोकद्वयं । यथान्यायं यथाशास्त्रं अघमर्षणसूक्तादिजपपूर्वकमित्यर्थः । पितृदेवताइतिऋषीणामप्युपलक्षणं । अग्निहोत्राणि अग्नौहोतव्यानिपञ्चमहायज्ञादीनि । अमृतवत् अमृततुल्यं । हविः यज्ञशिष्टमन्नं । "यज्ञशिष्टामृतभुजोयान्तिब्रह्मसनातनं" इतिस्मृतेः । शुचौ दृष्टदोषरहिते भोजनस्थानादन्यत्र ॥ १०—११ ॥ अथ उपवेशानन्तरं । तत्र देशे । तदा तस्मिन्नेवकाले । द्वितीयोथशब्दःप्रश्ने "मङ्गलानन्तरारंभप्रश्नकात्स्र्न्येष्वथोअथ"इत्यमरः । गङ्गां गङ्गावृत्तान्तं ॥ १२ ॥ त्रैलोक्यमित्यर्धं ॥ १३ ॥ वृद्धिं त्रैलोक्यमित्यनेनोक्तां । जन्म गङ्गांश्रोतुमित्युक्तं ॥ १४ ॥ धातूनां अयस्ताम्रादीनां । अस्तीतिशेषः । कन्याद्वयं आसीदितिशेषः ॥ १५ ॥ यामेरुदुहिता हिमवतःप्रियापत्नीमनोरमानामप्रसिद्धा सातयोर्मातेत्यन्वयः ॥ १६ ॥ कन्याद्वयस्यनामनीदर्शयति—तस्यामिति ॥१७॥ देवतार्थचिकीर्षया देवतार्थसंपादनेच्छया । प्रयोजनंच स्नानपानादि वक्ष्यमाणसेनापतिजननंवा परदेवतार्चनार्थंवा । अतएवस्वपदेनानुक्तिः ॥ १८ ॥ धर्मेण याचकानप्रत्याख्येयाइतिधर्मेण । जलप्रवाहरूपायानद्याःकथमाकाशेगमनंतत्राह—स्वच्छन्दपथगामिति । स्वच्छन्दः स्वेच्छा तदायत्तःपन्थाःस्वच्छन्दपथः "ऋक्पूरब्धूः" इत्यादिनाअप्रत्ययःसमासान्तः । तंगच्छतीति तथा । मेघजलवद्द्वारगतिविशेषेणाकाशेपिगतिःसंभवतीतिभावः ॥ १९ ॥ त्रिलोकहितकारिणः देवाइतिशेषः । प्रतिगृह्य स्वीकृत्य । आदाय स्वेष्वन्तर्भाव्य ॥ २० ॥

**ति०** अमृतवत् तत्सदृशंगङ्गाजलंहविश्चप्रागुक्तंप्राश्येत्यर्थः ॥ १० ॥ **ति०** विष्ठिताः विशेषेणस्थिताः । यथार्हतः यथाऽवस्थानमर्हतः तथास्थितावित्यर्थः ॥ १२ ॥ **ती०** धर्मेण स्वकृतधर्मेण । तनयां तनयात्वंगतां ॥ १९ ॥ **ति०** त्रिलोकार्थं तारकतो भीतत्रिलोकरक्षकपुत्रोत्पत्त्यर्थं ॥ २० ॥ इतिपञ्चत्रिंशस्सर्गः ॥ ३५ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. तदासर्वेचक्रुर्वासपरिग्रहम्. २ क. स्नाता. ३ ग. चानुत्तमंहविः. ४. ङ. च. छ. ञ. शुभा. ५ इदमर्धं च. छ. झ. ञ. दृश्यते. ६ क. ग. घ. ङ. झ. ञ. ट. संप्रहृष्टमनारामो. च. छ. ञ. सुप्रहृष्टमनारामो. ७ ङ. च. झ. हिमवान्नाम. ८ क. च. छ. ञ. द्वयंजातं. ९ ङ झ. ञ. नाम्नामेनामनोज्ञावै. च. नाम्नामेनामनुष्येन्द्र. क. ख. ट. नाम्ना चमेनकाराम. १० क. ख. घ. च. छ. ञ. गङ्गासमभवत्. ११ क. ख. ग. ङ. च. त्कन्यातस्यैवराघव. १२ क. घ—छ. झ. ञ. देवकार्यचिकीर्षया. १३ ग. प्रतिगृह्यततोदेवाः. १४ ङ. झ. त्रिलोकहितकाङ्क्षिणः. ट. त्रैलोक्यहितकारिणः. १५ क. ग. वैगच्छन्.

या चान्या शैलदुहिता कन्याऽऽसीद्रघुनन्दन ॥ उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना ॥ २१ ॥
उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् ॥ रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २२ ॥
एते ते शैलराजस्य सुते लोकनमस्कृते ॥ गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव ॥ २३ ॥
एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी ॥ खं गता प्रथमं तात गतिं गतिमतांवर ॥ २४ ॥
सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा ॥ सुरलोकं समारूढा विपापा जलवाहिनी ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

## षट्त्रिंशः सर्गः ॥ ३६ ॥

कदाचनशिवयोःसुरतेचिरायितेअनर्थाशङ्कयासुरैस्तदुपरमप्रार्थनेशिवेनक्षुभितपूर्वस्यस्वतेजसःपृथिव्यामुत्सर्जनम् ॥ १ ॥ रतिविघ्नकरणेनकुपितयादेव्यादेवानामनपत्यत्वशापदानम् ॥ २ ॥ ततःशिवेनशिवयासहहिमवतिगिरौतपश्चरणम् ॥ ३ ॥

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ ॥ अभिनन्द्य कथां वीरावूचतुर्मुनिपुङ्गवम् ॥ १ ॥
धर्मयुक्तमिदं ब्रह्मन्कथितं परमं त्वया ॥ दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥
विस्तरं विस्तरज्ञोसि दिव्यमानुषसंभवम् ॥ २ ॥
त्रीन्पथो हेतुना केन प्लावयेल्लोकपावनी ॥ ३ ॥
कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा ॥ त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता ॥ ४ ॥
तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः ॥ निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत् ॥ ५ ॥
पुरा राम कृतोद्वाहो नीलकण्ठो महातपाः ॥ दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६ ॥

---

गङ्गावृत्तान्तप्रसङ्गेनतदनुजावृत्तान्तमप्याह—या चेति । कन्या अलब्धभर्तृका ॥ २१ ॥ अप्रतिरूपाय अनुकूलाय । रुद्रार्थंतपस्यन्तीमुमांप्रसन्नायतस्मैददावित्यर्थः ॥२२॥ उपसंहरति—एतेइति ॥२३॥ एवंगङ्गोत्पत्तिप्रकारंप्रथमप्रश्नोत्तरमुक्त्वा द्वितीयप्रश्नोत्तरंत्रिपथगामित्वमुच्यतइत्याह—एतदिति । प्रथमंतावत् खं खात्मिकां गतिं गता। गतिमतां सुन्दरगतिमतां ॥२४॥ अथसुरलोकंचसमारूढेत्याह—सैषेति ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

''भगवञ्छ्रोतुमिच्छामिगङ्गांत्रिपथगांनदीं''इति गङ्गायास्त्रिपथगात्वप्रकारेपृष्टेअन्तरिक्षस्वर्गगमनयोःप्रत्युक्तत्वात्तत्रतृतीयपथगमनं कथमित्याशयेनपुनःपृच्छन्तंश्रीरामंप्रत्याहषट्त्रिंशे—उक्तवाक्यइत्यादि । मुनौ उक्तवाक्ये उक्तोत्तरेसति । अत्रोभावित्युक्तेःपूर्वसर्गेरामपदं लक्ष्मणस्याप्युपलक्षणंवेदितव्यं । कथां पूर्वोक्तां ॥ १ ॥ अर्धत्रयं । धर्मयुक्तं धर्मफलकश्रवणमित्यर्थः । इदं वृत्तं ज्येष्ठायादुहितुःवृत्तंत्वयाकथितं । तस्यादिव्यमानुषसंभवं दिव्यलोकेमानुषलोकेच संभवंविस्तरंवक्तुमर्हसि ॥ २ ॥ त्रीन्पथः भूर्भुवस्स्वर्मार्गान् । केनहेतुना प्लावयेत् प्लुता । भावयेदित्यपिपाठः । लकारव्यत्ययः । इतरयोःपूर्वसर्गएवोक्तत्वात्केनहेतुनातृतीयपथंगतेतिद्वितीयप्रश्नार्थः ॥ ३ ॥ तृतीयप्रश्नमाह—कथमिति । त्रिपथगागङ्गा कथंविश्रुता कैःकर्मभिः व्यापारैः । सरिदुत्तमाआसीत् ॥४॥ प्रथमप्रश्नोत्तरमाहेत्याह—तथेति । काकुत्स्थइतिलक्ष्मणस्याप्युपलक्षणं । निखिलेन विस्तरेण । सर्वां दिव्यसंभवां मानुषसंभवांच ॥ ५ ॥ निखिलेनेत्युक्तंगाङ्गेयसंभव-

[ पा० ] १ ङ. झ. ट. उग्रंसुव्रत. २ क. ग. घ. ट. तपोधनाः. ख. हिमालये. ३ ट. उग्रायाप्रतिरूपाय. ४ ङ. झ. यथात्रिपथगामिनी. ट. गङ्गात्रिपथगानदी. ५ ट. प्रथमंराम. ६ ट. शैलेन्द्रतनयातदा. ख. शैलेन्द्रस्यसुतापुरा. ७ क—च. झ. ञ. ट. प्रतिनन्द्यकथां. ८ क. ख. ङ. च. छ. झ. ञ. ट. कृतोद्वाहश्शितिकण्ठो. ९ क. स्पृष्ट्वाचस्पृहयादेवीं. ङ. झ. दृष्ट्वाच भगवान्देवीं.

*[1]शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् ॥ [*[2]तस्य संक्रीडमानस्य [3]महादेवस्य धीमतः ॥ ७ ॥
एवं मन्मथयुद्धे तु तयोर्नासीत्पराजयः ] ॥ न चापि तनयो राम तस्यामासीत्परंतप ॥
[[4]धीमतो देवराजस्य रुद्रस्यापि महात्मनः ] ॥ ८ ॥
[5]ततो देवाः समुद्विग्नाः पितामहपुरोगमाः ॥ यदिहोत्पद्यते भूतं कस्तत्प्रति[6]सहिष्यते ॥ ९ ॥
अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥ १० ॥
देवदेव महादेव लोकस्यास्य [7]हिते रत ॥ सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ ११ ॥
न लोका धारयिष्यन्ति तव तेजः सुरोत्तम ॥ ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ १२ ॥
त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ॥ [[8]रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ] ॥ १३ ॥
देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः ॥ बाढमित्यब्रवीत्सर्वान्पुनश्चेदमुवाच ह ॥ १४ ॥
धारयिष्याम्यहं तेज[9]स्तेजस्येव सहोमया ॥ त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥ १५ ॥
यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् ॥ धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥ १६ ॥
एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् ॥ यत्तेजः [10]क्षुभितं ह्येतत्तद्धरा धारयिष्यति ॥ १७ ॥
एवमुक्तः सुरपतिः [11]प्रमुमोच महीतले ॥ तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १८ ॥
ततो देवाः पुनरिदमूचु[12]श्चाथ हुताशनम् ॥ प्रविश[13] त्वं महातेजो रौद्रं वायुसमन्वितः ॥ १९ ॥

माह—पुरेति । कृतोद्वाहइतिपरपरिग्रहव्यावृत्तिः । हृष्ट्वा स्पृहया महातपोनिष्ठत्वेपिकामबाणवशात्तस्यामभिलाषेण । मैथुनाय मिथुनकर्मकर्तुं । उपचक्रमे ॥ ६ ॥ दिव्यवर्षशतंगतं मैथुनेनैवेतिशेषः ॥ ७ ॥ तनयः तनयप्रापकरेतोविसर्गः ॥८॥ पितामहपुरोगमाःदेवाः । समुद्विग्नाः भीताः । पाठान्तरे समुद्युक्ताः उद्योगंचक्रुः । किमर्थं । इह पार्वत्यां । यद्भूतं पुत्रः । उत्पद्यते उत्पत्स्यते । वर्तमानसामीप्येवर्तमानवत्प्रयोगः । तत् कः प्रतिसहिष्यते । इतिविचार्यतन्निवर्तनायसमुद्युक्ताइत्यर्थः ॥ ९ ॥ तमेवोद्योगमाह—अभिगम्येति । महादेवमितिशेषः ॥ १० ॥ देवदेवेत्यनेनमहादेवशब्दार्थउक्तः । प्रणिपातेन पादमूलपतनेन ॥ ११ ॥ तेजः तेजस्समुद्भूतंपुत्रं । नधारयिष्यन्ति नसहिष्यन्ते । अतो ब्राह्मेण वेदावगतेन । तपसा योगेन । युक्तःसन् तदङ्गतयादेव्यासहतपश्चर । नतेजः पार्वत्यांमोक्तुमर्हसीतिभावः ॥ १२ ॥ त्रैलोक्यहितमेवकामः काम्यमानः पुरुषार्थः तदर्थम् । तेजः रेतः । तेजसि तेजोमयनिजशरीरे । धारय नमुञ्चेत्यर्थः ॥ १३ ॥ सर्वलोकमहेश्वरः सर्वलोकानांपरमनियन्ता । सर्वलोकपितामहइतिपाठान्तरं ॥ १४ ॥ बाढमित्यङ्गीकृतांशमाह—धारयिष्यामीति । तेजः अक्षुभितांशं । उमया उमाप्यक्षुभितंशोणितरूपंतेजोधारयत्वित्यर्थः । पृथिवीशब्देनलोकाउच्यन्ते । निर्वाणं सुखं ॥१५॥ "पुनश्चेदमुवाचह" इत्युक्तमंशंदर्शयति—यदिदमिति । स्थानात् रेतःस्थानहृदयसंपुटात् । अनुत्तमं दुर्भरं । मे मह्यं । ब्रुवन्तु ॥ १६ ॥ धरा सर्वधारणशक्तिमती । अनेन धरा तद्धारणार्थंदेवैःप्रार्थितेतिसिद्धं ॥ १७ ॥ सुरपतिः रुद्रः । प्रमुमोच तेजइतिसिद्धं । येनतेजसापृथिवीव्याप्ता तत्प्रमुमोच॥१८॥ततः पृथिव्यांव्याप्तत्वादेवहेतोः । पृथिवीभग्नाभविष्यतीतिहुताशनमूचुः । पुनरूचुरित्यनेनाग्नेःप्रवेशभीतत्वंगम्यते । अग्निचारणहेतुतयावायुसम-

शि० यत्तेजः अद्य अस्मिन्काले । क्षुभितंतत्तेजःधराधारयिष्यति । अद्येत्युक्त्या इतःप्रभृतिअधिकंवीर्यंच्युतंचेत् तद्धारणे न कश्चनसमर्थोभवितेतिध्वनितं ॥ १७ ॥ महातेजः वायुसमन्वितएवत्वं प्रविश आत्मनिप्रवेशय । अन्तर्भावितणिजर्थः । चशब्द

[ पा० ] * ङ. च. झ. ञ. ट. पाठेषु. तस्यसंक्रीडमानस्य. शितिकण्ठस्यदेवस्य. इत्यर्धयोर्व्युत्क्रमोदृश्यते. १ ख. शितकण्ठस्यदेव्याश्च. * इदमर्धद्वयं क. ञ. दृश्यते. २ ख. तयासंक्रीडमानस्य. ३ ख. देवदेवस्य. ४ इदमर्धं च. दृश्यते. ५ ङ. झ. सर्वेदेवास्समुद्युक्ताः. ६ ङ. च. छ. झ. ञ. ट. सहिष्यति. ७ ट. हितेरतः. ८ इदमर्धं क. ग. च. छ. झ. ञ. दृश्यते. ९ ङ. छ. झ. स्तेजसैव. १० क. ख. घ. छ. झ. ञ. क्षुभितंह्येतद्धरा. ट. क्षुभितंतेद्यतद्धरा. ११ ङ. झ. ट. प्रमुमोचमहाबलः. १२ ङ. च. छ. झ. ञ. ट. श्चापिहुताशनम्. १३ क. ङ. च. छ. झ. ञ. ट. आविशत्वं.

तदग्निना पुनर्व्याप्तं [1]संजातः श्वेतपर्वतः ॥ दिव्यं शरवणं चैव पावकादित्यसन्निभम् ॥
यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः ॥ २० ॥
अथोमां च शिवं चैव देवाः [2]सर्षिगणास्तदा ॥ पूजयामासुरत्यर्थं सुप्रीत[3]मनसस्ततः ॥ २१ ॥
अथ शैलसुता राम त्रिदशानिदमब्रवीत् ॥ [ [4]अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः ॥ २२ ॥
इत्युक्त्वा सलिलं गृह्य पार्वती भास्करप्रभा ] ॥ समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ॥ २३ ॥
यस्मान्निवारिता चैव[5] संगतिः पुत्रकाम्यया ॥ अपत्यं स्वेषु [6]दारेषु तस्मान्नोत्पादयिष्यथ ॥ २४ ॥
अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ॥ [ [7]पत्न्यो न जनयिष्यन्ति ह्यद्यप्रभृति चात्मजान् ] ॥
एवमुक्त्वा सुरान्सर्वाञ्शशाप पृथिवीमपि ॥ २५ ॥
अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ॥
[8]प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥ २६ ॥
[9]तान्सर्वान्व्रीडितान्दृष्ट्वा सुरान्सुरपतिस्तदा ॥ गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २७ ॥
स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे [10]गिरेः ॥ हिमवत्प्रभवे शृङ्गे सहदेव्या महेश्वरः ॥ २८ ॥
एष ते विस्तरो राम शैलपुत्र्या निवेदितः ॥ गङ्गायाः [11]प्रभवं चैव शृणु मे [12]सहलक्ष्मणः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

---

न्वितइत्युक्तं ॥ १९ ॥ अर्धत्रयं । तत् तेजः । अग्निना व्याप्तंसत् श्वेतपर्वतःसंजातः । ततःकालपरिपाकेनशरवणंचसंजातं । शरणांवनंशरवणं । “प्रनिरन्तश्शर–” इतिणत्वं । शरवणंविशेषयति—यत्रेति । कृत्तिकानामपत्यंपुमान्कार्तिकेयः । “स्त्रीभ्योढक्” । स्तन्यदानात्कृत्तिकापुत्रत्वं । अग्निनाधृत्वामुक्तत्वादग्निसंभवः ॥ २० ॥ पूजयामासुः मैथुनविघ्नकृतकोपशान्त्यर्थमित्यर्थः ॥ २१ ॥ अब्रवीदित्येतद्विशिष्योच्यते अशपदिति ॥ २३ ॥ पुत्रकाम्यया मया । संगतिः भर्तृसंयोगो मैथुनरूपः । सायस्मान्निवारिता तस्मात् यूयमपि स्वेषुदारेषु । अपत्यं पुत्रं । नोत्पादयिष्यथ ॥ २४ ॥ पूर्वार्धेनपूर्वश्लोकपठितमुच्यते । पत्नयइत्यार्षह्रस्वत्वं ॥२५॥ अवनइतिसार्धश्लोकः । नैकरूपा ऊषरत्वादिरूपेणनानाविधा । बहुभार्या बहूनांराज्ञांभार्या । ममपुत्रंअनिच्छती अनिच्छन्ती । त्वं मत्क्रोधेन शापरूपेण । कलुषीकृता विपर्यस्तप्रकृतिःसती । पुत्रकृतांप्रीतिं नप्राप्स्यसीतिभावः ॥ २६ ॥ सुरपतिः रुद्रः । तान्सुरान् स्वकीयशापेनव्रीडितान् लज्जितान् । दृष्ट्वा प्रियाशापस्य दुष्परिहरत्वात्स्वीयशापदुःखस्यद्रष्टुमशक्यत्वाच्च वरुणपालितांदिशं हिमवतः प्रतीचींप्रति । गमनायोपचक्राम । परस्मैपदमार्षं ॥ २७ ॥ हिमवत्प्रभवे तस्यहिमवतोगिरेरुत्तरपार्श्वभूतेशृङ्गे देव्यासहतपआतिष्ठत् सदातपोव्रतमसंकल्पयदित्यर्थः ॥ २८ ॥ ननु “दुहितुःशैलराजस्यज्येष्ठायावक्तुमर्हसि” इति पार्वतीवृत्तान्तमुपेक्ष्यगङ्गावैभवएवमयापृष्टे तद्विहायोपेक्षितमेवपार्वतीवृत्तान्तंकिमर्थंकथितवानसीति रामस्यशङ्कांपरि-

---

एवार्थकः ॥ १८ ॥ **शि०** पावकादित्यसंनिभं पावकस्थितादित्यसदृशं ॥ २० ॥ **शि०** संगतिः सम्यक्गतिःपतिसंयोगोयस्याःसा ॥ २४ ॥ **शि०**नार्हथ अतएवयुष्माकं पत्नयःपत्न्यः । अप्रजाःसन्तु । शापेनौरसपुत्रोत्पत्तिंसंनिवार्यक्षेत्रजपुत्रोत्पत्तिंनिवारयन्तीआह । अद्यप्रभृतियुष्माकंपत्न्यः आत्मजान् पुत्रान् । नैवजनयिष्यन्ति पत्यन्तरादपिनोत्पादयिष्यन्तीत्यर्थः ॥ २५ ॥ **ति०** नचपुत्रकृतांप्रीतिंवराहादुत्पन्नस्यापिनरकासुरस्यभौमस्यकृष्णावतारेतेनैवहननात् ॥ २६ ॥ **वि०** हिमवत्प्रभवे हिमवत्प्रभवाख्येशृङ्गे ॥ २८ ॥ इतिषट्त्रिंशःसर्गः ॥ ३६ ॥

**[ पा० ]** १ सजातः. २ क. ङ. च. छ. झ. ञ. ट. सर्षिगणास्तथा. ३ ख. ङ. च. छ. झ. ञ. मनसस्तदा. ४ कुण्डलान्तर्गतंअर्धद्वयं ग. पाठेदृश्यते. ५ क. ग. ङ. च. झ. ञ. चाहंसंगतापुत्रकाम्यया. ट. चाहंसंगतिःपुत्रकाम्यया. ६ क. ग. ङ. च. छ. झ. ञ. ट. दारेषुनोत्पादयितुमर्हथ. ७ इदमर्धं ट. पुस्तकेदृश्यते. ८ ङ. झ. ट. प्राप्स्यसेत्वं. ९ ट. न्सर्वान्व्यथितान्दृष्ट्वा. ङ. झ. न्सर्वान्पीडितान्दृष्ट्वा. १० ग. च. गिरौ. ११ ग. प्रभवंचापि. १२ क. ग. झ. ञ. सहलक्ष्मण.

## सप्तत्रिंशः सर्गः ॥ ३७ ॥

देवैर्ब्रह्माणंप्रतिशिवयोस्तपःप्रवृत्त्याअपत्योत्पादनवैमुख्यनिवेदनपूर्वकंसेनापत्युत्पादनेऽपायकल्पनप्रार्थना ॥ १ ॥ ततोब्रह्म वचनाद्देवानांचोदनयाऽग्निनास्वगतरुद्रतेजसोगङ्गायामुत्सर्जनम् ॥ २ ॥ तद्धारणाशक्तयागङ्गयाऽग्निवचनेनहिमवत्पादेसमुत्सृष्टात्तेजसःस्कन्दस्यप्रादुर्भावः ॥ ३ ॥ देवैःसैनापत्येऽभिषिक्तेनतेनकुमारेणदैत्यसेनाविजयः ॥ ४ ॥

तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा ॥ सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥
ततोऽब्रुवन्सुराः सर्वे भगवन्तं पितामहम् ॥ प्रणिपत्य सुराः सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २ ॥
योनः सेनापतिर्देव दत्तो भगवता पुरा ॥ [ स न जातोऽद्य भगवन्नसद्वैरिनिबर्हणः ॥ ३ ॥
तत्पिता भगवाञ्शर्वो हिमवच्छिखरेऽद्य वै] ॥ तपः परममास्थाय तप्यते स्म सहोमया ॥ ४ ॥
यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ॥ संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥ ५ ॥
देवतानां वचः श्रुत्वा सर्वलोकपितामहः ॥ सान्त्वयन्मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ६ ॥
शैलपुत्र्या यदुक्तं तन्न प्रजाः सन्तु पत्निषु ॥ तस्या वचनमक्लिष्टं सत्यमेतन्न संशयः ॥ ७ ॥
इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः ॥ जनयिष्यति देवानां सेनापतिमरिंदमम् ॥ ८ ॥
ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तत्सुतम् ॥ उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ९ ॥

हरति—एषइति । शैलपुत्र्याः पार्वत्याःसंबन्धी कथाविस्तरो निवेदितः । वक्ष्यमाणगङ्गावैभवकथनोपयोगित्वेनोक्तः । गङ्गायाःप्रभवं प्रभावं । त्वं शृणु । चः प्राधान्ये ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्त्रिंशःसर्गः ॥ ३६ ॥

अथ प्रतिज्ञातं स्कन्दोत्पादकत्वरूपं दिव्यसंभववैभवमाहसप्तत्रिंशे—तप्यमानइत्यादि । तप्यमाने तपःकर्मकत्वादात्मनेपदकर्मवद्भावौ । देवसेनापतित्वंविहाय केवलतपःप्रवणइत्यर्थः ॥ १ ॥ अग्निनापुरोगमेनसहिताः साग्निपुरोगमाः । सुराःसर्वेप्रणिपत्य सुराःसर्वेअब्रुवन्नितिक्रियाभेदान्नपुनरुक्तिः ॥ २ ॥ भगवता भवता यःसेनापतिरस्मभ्यमादिकालेदत्तः सइदानीमुमयासहतप्यते । स्मेतिप्रसिद्धौ ॥ ३-४ ॥ अनन्तरं सेनापतावन्यपरेसति अत्र सेनापतिविषये । यत्कार्यं तत्संविधत्स्व आलोचय । तमेवाहूयसैनापत्येनिवेशय अन्यंवोत्पादयेत्यर्थः ॥ ५ ॥ सान्त्वयन् । उग्रेतपसि वर्तमानस्यतस्यरुद्रस्यनिवर्तनमशक्यं तत्रनाभिनिवेशः कार्यइतिसमादधानइत्यर्थः ॥ ६ ॥ अन्यंवोत्पादयेत्यत्रप्रतिवक्ति—शैलेति । शैलपुत्र्या पार्वत्या देवानांपत्निषुप्रजानसन्त्वितियदुक्तं तद् वचनं अक्लिष्टं अमोघं । मयासत्यमेवोच्यते अत्रसंशयोभवद्भिर्नकर्तव्यः ॥ ७ ॥ तर्हिकागतिरित्यत्राह—इयमिति । इयं बुद्धिस्था । अस्तीतिशेषः ॥ ८ ॥ कथमिदंगङ्गासंमन्यतेकुतोवाउमानकुप्येत्तत्राह—ज्येष्ठेति । तत्सुतं अग्नेःसुतं ।

ति० तप्यमानइति । देवाइतिशेषः ॥ १ ॥ ति० अत्रसुराःसर्वेइतिपुनरुक्तं । अतःपाठान्तरमन्वेषणीयं । द्वितीयार्धेसुराराम इतिपाठः । रामसंबोधनंचैतत् । शि० सर्वे सर्वेषांमुनीनांईःईप्सितप्राप्तिर्यस्मात्तत्संबोधनंहेसर्वे । किंचसर्वान्एतिस्वप्रकाशब्रह्मद्वाराव्याप्नोतितत्संबोधनं । सुराः परमदातःहेराम । रादानइतिधातोः । सर्वेसुराःपितामहमब्रुवन् । एतेनअत्रसुरास्सर्वेइतिपुनरुक्तंअतःपाठान्तरमन्वेषणीयमितिभट्टोक्तिश्चिन्त्या । उक्तरीत्यापौनरुक्त्यस्पर्शाभावात् । यत्तुक्रियाभेदान्नपौनरुक्त्यमितिभूषणकृद्भिरुक्तंतदपिचिन्त्यं । समानकर्तृकेक्त्वोऽनुशासनेनपौनरुक्त्यतादवस्थ्यात् ॥ २ ॥ शि० ज्येष्ठा पूर्वप्रादुर्भूताशैलेन्द्रदुहितागङ्गा । तंसेनापतिंमानयिष्यति । स्वजलादुत्पन्नत्वादितिभावः । तत् गङ्गामानविषयीभूतं । उमायाबहुमतं शिवसंसर्गजनितस्वरजोहेतुक-

[ पा० ] १ ङ. च. छ. ञ. ट. सेन्द्रास्साग्निपुरोगमाः. २ च. छ. ञ. सर्वेसेन्द्रास्सर्षिगणास्ततः. ङ. झ. रामसेन्द्रास्साग्निपुरोगमाः. ३ ङ. झ. येनसेनापतिर्देव. ४ इदमर्धद्वयं क. घ. च. छ. ञ. दृश्यते. ५ च. छ. ञ. हिमवच्छिखरालयः. क. हिमवच्छिखरेऽवसत्. ६ ग. ङ. च. छ. झ. ञ. ट. सतपःपरमास्थाय. ७ क. ख. सान्त्वयन्विविधैर्वाक्यैः. ८ क. तदप्रजास्स्थस्वपत्निषु. ग. ञ. तन्नप्रजास्स्थपत्निषु. ङ. झ. ट. तन्नप्रजास्स्वासुपत्निषु. घ. तन्नप्रजास्त्वथपत्निषु. ९ क. ख. घ. ङ च. झ. ञ. ट. मेवनसंशयः. १० ङ. झ. ट. माकाशगङ्गाच. ११ क. ख. घ.—छ. झ. ञ. ठ. तंसुतम्.

तच्छ्रुत्वा वचनं तस्य कृतार्था [1]रघुनन्दन ॥ प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ १० ॥
ते गत्वा [2]पर्वतं राम कैलासं धातुमण्डितम् ॥ अग्निं नियोजयामासुः पुत्रार्थं [3]सर्वदैवताः ॥ ११ ॥
देवकार्यमिदं देव [4]संविधत्स्व हुताशन ॥ शैलपुत्र्यां [5]महातेजो गङ्गायां तेज उत्सृज ॥ १२ ॥
देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ॥ [6]गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १३ ॥
[7]तस्य तद्वचनं श्रुत्वा दिव्यं रूपमधारयत् ॥ [8]दृष्ट्वा तन्महिमानं स समन्तादवकीर्यत ॥ १४ ॥
[9]समन्ततस्तदा देवीमभ्यषिञ्चत पावकः ॥ सर्वस्रोतांसि पूर्णानि [10]गङ्गाया रघुनन्दन ॥ १५ ॥
तमुवाच ततो गङ्गा [11]सर्वदेवपुरोहितम् ॥ अशक्ता धारणे देव [12]तव तेजः समुद्धतम् ॥
दह्यमानाऽग्निना तेन संप्रव्यथितचेतना ॥ १६ ॥
अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः ॥ इह [13]हैमवते पादे गर्भोऽयं सन्निवेश्यताम् ॥ १७ ॥
श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् ॥ उत्ससर्ज [14]महातेजः स्रोतोभ्यो हि तदाऽनघ ॥ १८ ॥
यदस्या निर्गतं तस्मात्तप्तजांबूनदप्रभम् ॥ काञ्चनं धरणीं प्राप्तं [15]हिरण्यममलं शुभम् ॥ १९ ॥
ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवा[16]भ्यजायत ॥ मलं तस्याभवत्तत्र त्रपु सीसकमेव च ॥

मानयिष्यति बहुमतिपूर्वंजनयिष्यतीत्यर्थः । तदुमायाबहुमतं स्वज्येष्ठायाःप्रीत्यर्थत्वादितिभावः ॥ ९ ॥ कृतार्थाः कृतार्थप्रायाः ॥ १० ॥ दैवतशब्दःपुल्लिंगोप्यस्ति “ दैवतानिपुंसिवा ” इत्यनुशासनात् । दग्धरुद्रतेजसोग्नेःस्थानंकैलासः । पुत्रार्थं पुत्रोत्पादनार्थं अग्निमूर्त्यन्तरं दग्धरुद्रतेजःस्थं ॥ ११ ॥ संविधत्स्व संपादय । अस्यविवरणमुत्तरार्धं । प्रथमंसामान्येनोक्तिरग्निहृदयज्ञानाय । महातेजइतिसंबोधनं । तेजः रेतः ॥ १२ ॥ देवताभ्यस्तथेतिप्रतिज्ञायाकाशगङ्गांगत्वा हे देविगर्भंधारय इत्युवाचेतिशेषः । किमर्थमित्यतआह — देवतानामिदंप्रियमिति ॥ १३ ॥ दिव्यंरूपं दिव्यस्त्रीवेषं । सोग्निस्तस्यामहिमानं सौन्दर्यातिशयंदृष्ट्वा समन्तात् सर्वावयवेभ्यः अवकीर्यत अवाकिरत् । आर्षः श्यन्प्रत्ययः । हृतवीर्योभूत् “अङ्गारसदृशीनारीघृतकुंभसमःपुमान् ” इतिन्यायात् ॥१४॥ समन्ततः सर्वावयवेषु । अभ्यषिञ्चत रेतःसर्वावयवेषुयथाव्याप्तं भवतितथासिक्तवानित्यर्थः । तेनसर्वस्रोतांसि सर्वावयवाः । पूर्णानि व्याप्तानि ॥ १५ ॥ तमित्यर्धत्रयं । तेनाग्निना अग्नितेजसा । दह्यमाना अतएवसंप्रव्यथितचेतना अतिदुःखितचित्तागङ्गा । सर्वदेवानांपुरोहितं “ अग्निमीळेपुरोहितं ” इतिश्रुतेः । तमग्निमुवाच । कथं हेदेव तवतेजः समुद्धतं अभिवृद्धंभवति । अस्यधारणेअशक्तास्मीति ॥ १६ ॥ सर्वदेवानांयत्हुतंतदश्नातीतिसर्वदेवहुताशनः । पादेपर्यन्तपर्वते अग्निदग्धश्वेतपर्वतीकृतरुद्रतेजोराशावित्यर्थः ॥ १७ ॥ महातेजइतिसंबोधनं । स्रोतोभ्यः उत्कृष्येतिशेषः ॥१८॥ अस्याः गङ्गातः । निर्गतंयत् शोणितादि धरणींगतं । तस्मात्तप्तजांबूनदप्रभं द्रुतस्वर्णविशेषकान्ति काञ्चनं अमलं शुभंहिरण्यंरजतंच । अभवदितिवक्ष्यमाणमनुषज्यते । अमलमितिनिर्गतविशेषणंवा ॥ १९ ॥ गङ्गातोनिर्ग-

जनिमत्त्वेनात्यन्तप्रेमविषयीभूतंभविष्यति ॥ ९ ॥ **शि०** सर्वदेवताः सर्वःशिवोविष्णुर्वादेवतायेषांतेतथा । तेदेवाः । दन्त्यादिरपिसर्वशब्दःशिववाचकोस्तीतिकोशादौप्रसिद्धं । विष्णुपरतातुस्पष्टतमस्मिन्निखिलमितिव्युत्पत्त्यालब्धा । अतएवसर्वश्शर्वइतिसहस्रनामोक्तिस्संगच्छते ॥ ११ ॥ **ति०** सः ऐश्वरतेजोराशिः । पारदोऽवशीर्यत शीर्णः ॥ १४ ॥ **ति०** अभ्यषिञ्चत रसेश्वरेणेतिशेषः । स्रोतांसि नाड्यः ॥ १५ ॥ **ति०** सर्वदेवपुरोगमं पुरोगमः पुरोयायी ॥ १६ ॥ अभिजायत अडभावआर्षः ।

**[ पा० ]** १ ख. पिरघूत्तम. २ ङ. झ. परमंराम. ३ क. ग—छ. झ. ञ. ट. सर्वदेवताः. ४ क. ग. ङ. च. छ. झ. ञ. ट. समाधत्स्वहुताशन. ५ क. ग. च. छ. महातेजागङ्गायां. ६ च. गर्भंधारय. ७ क. ख. घ.—छ. झ. ञ. ट. इत्येतद्वचनंश्रुत्वा. ग. अग्नेस्तुवचनं. ८ क. घ. च. छ. ञ. ट. सतस्यामहिमांदृष्ट्वासमन्तादवकीर्यत. ङ. झ. सतस्यामहिमांदृष्ट्वासमन्तादवशीर्यत. ९ क. ख. च. छ. ञ. समन्ततस्तुतांदेवीं. १० ख. घ. च. गङ्गायांरघुनन्दन. ११ ख. ग. ङ. च. छ. झ. ञ. सर्वदेवपुरोगमं. १२ ङ. च. छ. झ. तेजस्तवसमुद्धतम्. १३ क. ख. घ—छ. झ. हैमवतेपार्श्वे. १४ क. ग. झ. महातेजाःस्रोतोभ्यो. १५ ख. घ—छ. झ. ञ. मतुलप्रभम्. क. ममलप्रभम्. ग. मभवद्धनम्. १६ ङ. झ. ञ. देवाभिजायत. क. ख. घ. च. देवाभिजायते.

[1]तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ २० ॥
निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् ॥ सर्वं पर्वतसंनद्धं सौवर्णमभवद्वनम् ॥ २१ ॥
[ [2]तं देशं तु ततो ब्रह्मा संप्राप्यैनमभाषत ॥ जातस्य रूपं यत्तस्माज्जातरूपं भविष्यति ] ॥ २२ ॥
जातरूपमिति ख्यातं तदाप्रभृति राघव ॥ सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ॥
[3]तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम् ॥ २३ ॥
तं कुमारं [4]ततो जातं सेन्द्राः सहमरुद्गणाः ॥ क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन् ॥ २४ ॥
ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ॥ ददुः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः ॥ २५ ॥
ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् ॥ पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ॥२६॥
तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ॥ स्नापयन्परया लक्ष्म्या दीप्यमा[5]नं यथाऽनलम् ॥२७॥
स्कन्द इत्यब्रुवन्देवाः स्कन्नं [6]गर्भपरिस्रवात् ॥ कार्तिकेयं [7]महाभागं काकुत्स्थ ज्वलनोपमम् ॥ २८ ॥
प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् ॥ षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥ २९ ॥
गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा ॥ अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः ॥ ३० ॥
सुरसेनाग[8]णपतिं [9]ततस्तमतुलद्युतिम् ॥ अभ्यषिञ्चन्सुरगणाः समेत्याग्निपुरोगमाः ॥ ३१ ॥
एष ते राम गङ्गाया वि[10]स्तरोऽभिहितो मया ॥ कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ॥ ३२ ॥

तात् तैक्ष्ण्यात्क्षारात् । ताम्रंकार्ष्णायसंचाभ्यजायत । तस्याः गङ्गातः अभवत् निर्गच्छतिस्म । मलं तत्र भूमौ । त्रपु सीसकंचाभ्यजायत । कृष्णायसमेवकार्ष्णायसं । उपसंहरति—तदेतदिति । तदेतत् गङ्गातोनिर्गतं ॥२०॥ एवंगर्भोत्सर्जनकालेगङ्गातोनिर्गतानांशोणितादीनांसौवर्णादिभावमुक्त्वागर्भतेजोरञ्जनात् केषांचित्स्वर्णभावमाह—निक्षिप्तेति । गर्भे गङ्गयानिक्षिप्तमात्रे तस्यतेजोभिः अभिरञ्जितं व्याप्तं पर्वतसंनद्धं पूर्वोक्तश्वेतपर्वतसहितं । सर्वतद्वनं शरवणं । सौवर्णं स्वर्णमयंअभवत् ॥ २१–२२ ॥ यदासुवर्णजातं तदाप्रभृति हुताशनसमप्रभंसुवर्णं जातंरूपंयस्येतिव्युत्पत्त्याजातरूपमितिविख्यातमभूत् । उपसंहरति—तृणेति ॥२३॥ एवं गङ्गयोत्सृष्टस्यगर्भस्यपोषणप्रकारमाह—तमिति । ततः गङ्गोत्सर्जनानन्तरं । जातं तंकुमारं । मरुद्गणाः देवगणाः । सह युगपत् । क्षीरसंभावनार्थाय क्षीरेणवर्धनप्रयोजनाय । कृत्तिकाःसमयोजयन् । ण्यन्तत्वाद्द्विकर्मकत्वं ॥ २४ ॥ कृत्तिकाः अयमस्माकंसर्वासांपुत्रो भवत्वितिदेवैःसह समयं संकेतं । कृत्वा निश्चिताः कृतनिश्चयाःसत्यः । जातमात्रस्यतस्यक्षीरं ददुः दातुमुद्युक्ताः ॥ २५ ॥ उक्तविशेषणःपुत्रः कार्तिकेयः कृत्तिकापुत्रोभविष्यति । इतिब्रुवन् अब्रुवन् ॥ २६ ॥ कृत्तिकाः गर्भपरिस्रवे गर्भोदके । स्कन्नं पतितं । स्नापयन् अस्नापयन् । गर्भस्रवनिवृत्त्यर्थं ॥ २७ ॥ स्कन्नत्वात् स्कन्दइत्यन्वर्थनामचक्रुरित्यर्थः ॥ २८ ॥ ततः स्नापनानन्तरं । षण्णांकृत्तिकानांक्षीरंप्रादुर्भूतं । तच्च स्तनजंपयः षडाननोभूत्वाजग्राह ॥ २९ ॥ एकाह्नेति टजभावः समासान्तस्यानित्यत्वात् । एकदिनेनस्तन्यं पीत्वाक्रमेणसुकुमारवपुरपिदैत्यगणानजयत् ॥ ३० ॥ सुरसेनागणपतित्वेनाभ्यषिञ्चन्नित्यर्थः । प्रथममभिषेकस्ततोजयइत्यर्थक्रमः ॥३१॥ विस्तरः दिव्यसंभवः ।

ति० अयंभावः । तैक्ष्ण्यमलगन्धयुक्तेनशुद्धेनस्पर्शतोविद्धंस्वर्णं । गन्धयुक्तेनविद्धंरजतं । तैक्ष्ण्ययुक्तेनविद्धंताम्रंलोहंच । मलयुक्तेनविद्धं त्रपुसीसे इतिनानाधातुस्तद्रूपं ॥ २० ॥ वि० जातरूपं रूपेणजातमित्यर्थः ॥ २३ ॥ ति० स्कन्नःपरिस्रुतइत्यर्थेस्कन्दइतिपृषोदरादित्वात्साधु ॥ २५ ॥ इतिसप्तत्रिंशस्सर्गः ॥ ३७ ॥

[ पा० ] १ घ. तदेवतंगिरिंप्राप्य. २ अयंश्लोकः ग. ङ च. ञ. दृश्यते. ३ क. तत्रवृक्षलतागुल्मं. ४ ग. तदाजातं. ५ क—घ. मानमिवानलम्. ६ घ. छ. झ. ञ. ट. गर्भपरिस्रवे. ७ क. ख. घ—छ. झ. ञ. महाबाहुं. ८ घ. सेनागणान्प्रभुः. * ङ. झ. गणपतिमभ्यषिञ्चन्महाद्युतिम् । ततस्तममरास्सर्वे. ९ क. च. छ. ञ. ततस्तमनलद्युतिम्. ग. घ. ततस्तमम- लद्युतिम्. १० घ. विस्तरोहितवोदितः. ख. विस्तरोविनिवेदितः.

भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः ॥ आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

## अष्टात्रिंशः सर्गः ॥ ३८ ॥

अयोध्याधिपतिनासगरेणपत्नीद्वयेनसहसुतार्थंहिमवत्पर्वतेतपश्चरणम् ॥ १ ॥ तत्रतपःप्रसादितभृगुवराज्ज्येष्ठायामसमञ्जनाम्नःपुत्रस्यजननम् ॥ २ ॥ कनिष्ठायांषष्टिसहस्रपुत्राणांजननम् ॥ ३ ॥ असमञ्जाद्वंशकरस्यांशुमतोजननम् ॥ ४ ॥ ततोमहतिगतेकालेसगरेणाश्वमेधोपक्रमः ॥ ५ ॥

तां कथां कौशिको रामे निवेद्य कुशिकात्मजः ॥ पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥
अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः ॥ सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजाः ॥ २ ॥
वैदर्भदुहिता राम केशिनी नाम नामतः ॥ ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥ द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥ ४ ॥
ताभ्यां सह तथा राजा पत्नीभ्यां तप्तवांस्तपः ॥ हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥
अथ वर्षशते पूर्णे तपसाऽऽराधितो मुनिः ॥ सगराय वरं प्रादाद्भृगुः सत्यवतांवरः ॥ ६ ॥
अपत्यलाभः सुमहान्भविष्यति तवानघ ॥ कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७ ॥
एका जनयिता तात पुत्रं वंशकरं तव ॥ षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥
भाषमाणं महात्मानं राजपुत्र्यौ प्रसाद्य तम् ॥ ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥
एकः कस्याससुतो ब्रह्मन्का बहूञ्जनयिष्यति ॥ श्रोतुमिच्छावहे ब्रह्मन्सत्यमस्तु वचस्तव ॥ १० ॥
तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः ॥ उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११ ॥
एको वंशकरो वाऽस्तु बहवो वा महाबलाः ॥ कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥ १२ ॥

---

तमेवाह—कुमारेति । एवमेतदाख्यानश्रवणफलमुक्तं—धन्यइत्यादिना ॥३२॥ अथप्रसङ्गात्तद्भक्तिफलमाह—भक्तश्चेति । सलोकएवसालोक्यं स्वार्थेष्यञ् । तस्यभावःसालोक्यता स्कन्दसमानलोकत्वमित्यर्थः ॥३३॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

एवंदिव्यसंभवंविस्तरंप्रतिपाद्यमानुषलोकसंभवविस्तरंवक्तुमुपक्रमतेष्टात्रिंशे—तामित्यादि । रामे रामाय । कौशिकशब्दार्थमाह—कुशिकात्मजइति ॥१॥ अप्रजाः अतएवप्रजाकामः ॥ २ ॥ यावैदर्भदुहिता साज्येष्ठपत्न्यासीत् ॥ ३ ॥ अरिष्टनेमिः कश्यपः ॥ ४ ॥ भृग्वधिष्ठितंप्रस्रवणंवारिप्रवाहोयस्मिंस्तथा । गिरौपर्यन्तपर्वते ॥ ५ ॥ वर्षशतेपूर्णे तपस्यतइतिशेषः ॥६॥ सुबह्वपत्यविषयत्वात्सुमहत्त्वं । कीर्तिमिति तेनेतिशेषः ॥ ७ ॥ जनयितेतिलुट् । तातेत्युपलालने ॥८॥ राजपुत्र्याविति छत्रिन्यायादुक्तं सुमतेःकश्यपपुत्रीत्वात् ॥ ९ ॥ तववचःसत्यमस्तु यस्याएकमिच्छसितस्याएकः यस्याबहूनिच्छसितस्याबहवःसन्त्वित्यर्थः ॥ १० ॥ अत्र पुत्रविषये । स्वच्छन्दः स्वेच्छा । विधीयतां ज्ञाप्यतां ॥ ११ ॥ तदेवविवृणोति—एकइति ॥ १२ ॥

---

ती० भृगुप्रस्रवणे भृगुप्रस्रवणाख्येहिमवतःपादे ॥ ५ ॥ शि० राजपुत्र्यौ क्षत्रियराजवैदर्भद्विजराजकश्यपयोःपुत्र्यौ । राज-

[पा०] १ क. ख. स्कन्दसालोक्यमाप्नुयात्. २ क. ख. ग. ङ. च. छ. ट. निवेद्यमधुराक्षरम्. झ. ञ. निवेद्यमधुराक्षराम्. घ. निवेद्यमधुरांश्रुतेः. ३ ङ. च. छ. झ. ञ. ट. पतिर्वीरः. क. ख. पतिःश्रीमान्. ४ क. ख. घ—छ. झ. ञ. ट. सचाप्रजः. ५ क. ख. च. छ. ञ. विदर्भदुहिता. ६ ङ. झ. ट. अरिष्टनेमेर्दुहितासुपर्णभगिनीतुसा. ७ क. ख. घ. सहतदा. ग. ङ. च. छ. झ. ञ. ट. सहमहाराजः. ८ ग. घ. समाश्रित्य. ९ क. ख. तपसातोषितो. १० घ. सत्यपराक्रमः. ११ च. छ. षष्टिपुत्रसहस्राणि. क. ग. षष्टिःपुत्रसहस्राणि. १२ ङ. च. छ. झ. ञ. नरव्याघ्रं. १३ ख. ग. राजपत्न्यौ.

मुनेस्तु[1] वचनं श्रुत्वा केशिनी रघुनन्दन ॥ पुत्रं वंशकरं राम जग्राह नृपसन्निधौ ॥ १३ ॥
षष्टिं[2] पुत्रसहस्राणि सुपर्ण[3]भगिनी तदा ॥ महोत्साहान्कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४ ॥
प्रदक्षिणमृषिं कृत्वा शिरसाऽभि[4]प्रणम्य च ॥ जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥ १५ ॥
अथ काले गते[5] तस्मिञ्ज्येष्ठा पुत्रं व्यजायत ॥ असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६ ॥
सुमतिस्तु नरव्याघ्र गर्भतुंबं व्यजायत ॥ षष्टिः[6] पुत्राः सहस्राणि तुंबभेदाद्विनिस्सृताः ॥ १७ ॥
घृतपूर्णेषु कुंभेषु धात्र्यस्तान्समवर्धयन् ॥ कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८ ॥
अथ दीर्घेण कालेन रूपयौवनशालिनः ॥ षष्टिः[7] पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९ ॥
स च ज्येष्ठो नरश्रेष्ठस्सगरस्यात्मसंभवः ॥ बालान्गृहीत्वा तु जले[8] सरय्वा रघुनन्दन ॥
प्रक्षिप्य प्रहसन्नित्यं[9] मज्जतस्तां[10]न्समीक्ष्य वै ॥ २० ॥
एवं पापसमाचारः सज्जनप्रतिबाधकः ॥ पौराणामहिते युक्तः पुत्रो[11] निर्वासितः पुरात् ॥ २१ ॥
तस्य पुत्रोंशुमान्नाम असमञ्जस्य[12] वीर्यवान् ॥ संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः ॥ २२ ॥
ततः कालेन महता मतिः[13] समभिजायत ॥ सगरस्य नरश्रेष्ठ यजेयमिति निश्चिता ॥ २३ ॥
स कृत्वा निश्चयं[14] राम सोपाध्यायगणस्तदा ॥ यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

इन्द्रेणसतिरोधानंसगरयाज्ञीयाश्वापहरणम् ॥ १ ॥ सगरनियोगात्तत्सुतैःषष्टिसहस्रैरश्वान्वेषणायभुवोभेदनम् ॥ २ ॥ ततःप्रजाक्षोभक्षुभितहृदयैर्देवादिभिर्ब्रह्माणंप्रतितद्दुश्चेष्टितनिवेदनम् ॥ ३ ॥

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः ॥ उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥

---

जग्राह वरयामास ॥ १३ ॥ सुपर्णभगिनी गरुडभगिनी ॥ १४ ॥ ऋषिं भृगुं ॥ १५ ॥ व्यजायत प्रसूतवती ॥१६॥ गर्भतुंबं वृत्ताकारंगर्भपिण्डं । कथंततःपुत्रोदयइत्यतआह—षष्टिरिति। तुंबभेदात् नतुगान्धार्याइवपश्चाद्विभजनीयइत्यर्थः ॥ १७ ॥ धात्र्यः उपमातरः । तान् विभक्ततुंबान् ॥ १८ ॥ दीर्घेण कालेनेतियौवनशालित्वेहेतुत्वात्तृतीया । यौवनशालिनइतिपुंल्लिङ्गत्वमार्षं ॥ १९ ॥ अर्धत्रयं ज्येष्ठः असमञ्जः । प्रहसन् स्थितइतिशेषः ॥ २० ॥ निर्वासितः विवास्यतेस्म ॥ २१ ॥ अंशुमान्नाम आसीदितिशेषः ॥ २२ ॥ यजेयमिति निश्चितामतिः समभिजायत समभ्यजायत ॥ २३ ॥ यज्ञकर्मणिनिश्चयंकृत्वा यष्टुंसमुपचक्रमे ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टत्रिंशःसर्गः ॥ ३८ ॥

---

अथ रामेणस्वपूर्वकवृत्तान्तप्रस्तावेनकुतूहलात्पृष्टेसति विश्वामित्रेण तदुत्तरकथनमेकोनचत्वारिंशे—वि-

---

शब्देनोभयोर्ग्रहणम् विनिगमनाविरहाद्योग्यत्वाच्च ॥९॥ ति० नृपसंनिधावित्यनेनतस्यापिसाक्षित्वमात्रं नतुवरणनियमकर्तृतेति सूचितं ॥१३॥ शि० असमञ्जसइत्यानुपूर्वीकोप्येतद्वाचकोस्तीतिभागवतात्असमञ्जसवीर्यवानितिवक्ष्यमाणाच्चनविरोधः ॥१६॥ शि० विनिस्सृताः विनिस्सृतानि ॥ १७ ॥ शि० असमञ्जसवीर्यवान् असमञ्जसवीर्यसदृशवीर्यविशिष्टः ॥२२॥ इत्यष्टत्रिंशःसर्गः ॥३८॥

शि० विश्वामित्रवचःश्रुत्वाकथान्तेकथासिद्धान्तंज्ञातुंरघुनन्दनोमुनिमुवाच । अन्तति वादंप्रतिबध्नातिसिद्धान्तइत्यर्थः ।

[पा०] १ ट. मुनेस्तद्वचनं. २ क. च. षष्टिपुत्र. ३ घ. ट. भगिनीतथा. ४ क. घ—छ. झ. ञ. प्रणम्यतं. ५ ङ. च. छ. झ. ञ. गतेतस्यज्येष्ठा. ६ ङ. च. षष्टिपुत्रसहस्राणि. ट. षष्टिःपुत्रसहस्राणि. ७ च. षष्टिपुत्रसहस्राणि. ८ क. सजले. ९ झ. प्राहसन्नित्यं. १० घ. ङ. च. स्तान्निरीक्ष्यवै. ख. स्तानवेक्ष्य. च. ट. स्तान्निरीक्षते. ११ क. ख. घ. ङ. च. झ. ञ. पित्रानिर्वासितः. १२ ट. असमञ्जसवीर्यवान्. १३ ख. बुद्धिस्समभिजायत. १४ क. घ—छ. झ. ञ. ट. निश्चयंराजा, ख. निश्चयंतात.

श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् ॥ पूर्वको[1] मे कथं ब्रह्मन्यज्ञं वै समुपाहरत् ॥ २ ॥
[तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितः ][2] ॥ विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ॥
श्रूयतां विस्तरो राम सगरस्य महात्मनः ॥ ३ ॥
शङ्करश्वशुरो[3] नाम हिमवानचलोत्तमः[4] ॥ विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् ॥ ४ ॥
तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः[5] स पुरुषोत्तम ॥ स हि देशो नरव्याघ्र प्रशस्तो यज्ञकर्मणि ॥ ५ ॥
तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः ॥ अंशुमानकरोत्तात[6] सगरस्य मते स्थितः ॥ ६ ॥
तस्य पर्वणि तं यज्ञं यजमानस्य वासवः ॥ राक्षसीं तनुमास्थाय यज्ञीयाश्वमपाहरत् ॥ ७ ॥
ह्रियमाणे तु काकुत्स्थ तस्मिन्नश्वे[7] महात्मनः[8] ॥ उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् ॥ ८ ॥
अयं पर्वणि वेगेन यज्ञीयाश्वोपनीयते[9] ॥ हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम् ॥ ९ ॥
यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः ॥ तत्तथा क्रियतां राजन्यथाऽच्छिद्रः[10] क्रतुर्भवेत् ॥ १० ॥
उपाध्यायवचः[11] श्रुत्वा तस्मिन्सदसि पार्थिवः ॥ षष्टिं[12] पुत्रसहस्राणि वाक्यमेतदुवाच ह ॥ ११ ॥
गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः ॥ मन्त्रपूतैर्महाभागैरास्थितो[13] हि महाक्रतुः ॥ १२ ॥
तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः ॥ समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत[14] ॥ १३ ॥

---

श्वामित्रेत्यादि । कथान्ते यज्ञोपक्रमकथनानन्तरं ॥ १ ॥ इमां यज्ञकथां । पूर्वकः मद्वंशकूटस्थः । समुपाहरत् कृतवान् ॥ २ ॥ प्रहसन्निव प्रसन्नवदनइत्यर्थः । स्वविवक्षितस्यैवपृष्टत्वात् प्रहासः । अजानन्निवपृष्टवानितिवा । विस्तरइति । यज्ञस्येतिशेषः ॥ ३ ॥ विन्ध्यपर्वतमासाद्य मध्येमहागिरिनिरोधाभावात्प्राप्य तथाविंध्योपिहिमवन्तं इत्येवंपरस्परमासाद्य । वीक्षानिरोधाभावात्निरीक्षेतेपरस्परं निरीक्षमाणाविवस्थिताविल्यर्थः ॥ ४ ॥ अस्त्वेवं ततःकिमित्यत्राह—हि यस्मात् सदेशः यज्ञकर्मणिप्रशस्तः । "आर्यावर्तः-पुण्यभूमिर्मध्यंविन्ध्यहिमागयोः" इतिवचनात् । अतस्तयोर्मध्येयज्ञःप्रवृत्तोऽभूत् ॥ ५ ॥ अश्वचर्यां अश्वानुचरणं । मते आज्ञायां ॥ ६ ॥ तंयज्ञं यजमानस्यतस्य सगरस्य यज्ञीयाश्वं यज्ञार्हाश्वं । राक्षसीं मायामयीं । तनुमास्थाय पर्वणि उक्थ्याहे । "तिथिभेदेक्षणेपर्व" इतिनिघण्टुः । अपाहरत् अपहृतवान् ॥७॥ उपाध्यायगणाः ऋत्विग्गणाः ॥ ८ ॥ अपनीयते "वर्तमानसामीप्येवर्तमानवद्वा" इतिलट् ॥९॥ एतद्यज्ञच्छिद्रं यज्ञापराधः "छिद्रंरन्ध्रापराधयोः" इतिवैजयन्ती । सर्वेषांनःअशिवायभवति तस्मात्क्रतुर्यथा अच्छिद्रोभवेत्तथैवक्रियतां ॥ १० ॥ पार्थिवः सगरः ॥ ११ ॥ हेपुत्राः हियस्मान्महाक्रतुः मन्त्रपूतैर्महाभागैः । आस्थितः अनुष्ठितः । तस्माद्रक्षसांगतिं आगमनं । नपश्यामि प्रसक्त्यभावादितिभावः ॥ १२ ॥ अतःकेनप्रकारेणगतोश्वइतिविचिनुध्वमित्याह—तदिति । यद्वा अहंकर्मव्यग्रःस्थितः अश्वापहर्तृणांरक्षसांगतिंगन्तव्यदेशंनपश्यामि विचिनुध्वमित्याह—तदिति । समुद्रएव मालाआवरणमस्याइतिसमुद्रमालिनी तां अनुगच्छत

---

बन्धनार्थकस्यअतिधातोःकर्तरिक्विप् । "क्रियार्थोपपदस्यचकर्मणिस्थानिनः"इतिचतुर्थी । किंच कथान्ते कथावसानकाले । विद्यमानं मुनिमित्यन्वयः । श्रुत्वेत्यनेनपुनरुक्तिवारणायैषयत्नः । अन्यथातुपौनरुक्त्यंदुर्वारं ॥ १ ॥ **ति०** प्रहसन्निव विकसितवदनः । स्वपूर्वजवृत्तान्ततयाश्रवणकौतुकेनरामभद्रस्यायंप्रश्नः । अतएवमुनेर्हासः । स्ववंश्यइतिरामस्यापिलोकवत्स्नेहस्संपन्नइति ॥ ३ ॥ **ति०** मन्त्रपूतैर्महाभागैर्यद्यपिमहाक्रतुरास्थितःअधिष्ठितः । तथापिरक्षसांमाययायदिछिद्रंस्यात्तदाआत्मनोगतिंनपश्यामि ॥ १२ ॥

**[ पाठ० ]** १ ङ. च. छ. झ. ञ. पूर्वजोमे. २ इदमर्धं ग. ङ. च. छ. झ. ञ. ट. दृश्यते. ३ ङ. च. छ. झ. ञ. श्वशुरोनाम्ना. क. ख. ग. श्वशुरोराम. ४ ङ. च. छ. झ. ञ. हिमवानितिविश्रुतः. ५ ङ. च. झ. समभवद्यज्ञः. ६ च. नकरोत्पौत्रः. ७ क. च. छ. ञ. तस्मिन्यज्ञे. ८ ख. महात्मना. ९ क. ख. घ. च. ञ. याज्ञीयाश्वो. १० क. ङ. च. छ. झ. ञ. न्यज्ञोऽच्छिद्रःकृतोभवेत्. ११ ङ. च. छ. झ. ञ. ट. सोपाध्यायवचः. १२ च. छ. षष्टिपुत्रसहस्राणि. १३ ङ. च. छ. झ. ञ. रास्थितोपि. १४ ख. ङ. च. छ. झ. ञ. मनुगच्छथ.

एकैकं योजनं पुत्रा विस्तारम[1]भिगच्छत ॥ १४ ॥
यावत्तुरगसंदर्शस्तावत्खनत मेदिनीम् ॥ [2]तं चैव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १५ ॥
दीक्षितः पौत्रसहितः सोपाध्याय[3]गणो ह्यहम् ॥ इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १६ ॥
[4]इत्युक्ता हृष्टमनसो राजपुत्रा महाबलाः ॥ जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १७ ॥
[[5]गत्वा तु पृथिवीं सर्वा[6]मदृष्ट्वा तं महाबलाः ] ॥ योजनायामविस्तारमेकैको धरणीतलम् ॥
बिभिदुः [7]पुरुषव्याघ्र वज्रस्पर्श[8]समैर्नखैः ॥ १८ ॥
शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः ॥ भिद्यमाना वसुमती ननाद रघुनन्दन ॥ १९ ॥
नागानां [9]वध्यमानानामसुराणां च राघव ॥ राक्षसानां च [10]दुर्धर्षः सत्वानां निनदोऽभवत् ॥ २० ॥
योजनानां सहस्राणि षष्टिं तु रघुनन्दन ॥ बिभिदु[11]र्धरणीं वीरा रसातलमनुत्तमम् ॥ २१ ॥
एवं पर्वतसंबाधं जंबूद्वीपं नृपात्मजाः ॥ खनन्तो [12]नृपशार्दूल सर्वतः परिचक्रमुः ॥ २२ ॥
ततो देवाः सगन्धर्वाः सासुराः सहपन्नगाः ॥ संभ्रान्तमनसः सर्वे पितामहमुपागमन् ॥ २३ ॥
ते प्रसाद्य महात्मानं विषण्णवदनास्तदा ॥ [13]ऊचुः परमसंत्रस्ताः पितामहमिदं वचः ॥ २४ ॥
भगवन्पृथिवी सर्वा खन्यते सगरात्मजैः ॥ बहवश्च महात्मानो [14]हन्यन्ते तलवासिनः ॥ २५ ॥
अयं [15]यज्ञहरोऽस्माकमनेनाश्वोपनीयते ॥ इति ते सर्वभूतानि [16]निघ्नन्ति सगरात्मजाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

अन्वेषध्वम् ॥ १३ ॥ अर्धमेकं । प्रथममेकंयोजनंविचित्य पश्चाद्योजनान्तरमितिक्रमेणविचिनुध्वमित्यर्थः । यद्वा एकएकंयोजनमितिक्रमेणविचिनुध्वमित्यर्थः ॥१४॥ यदिभूतलेनदृश्यतेतदाकर्तव्यमाह—यावदिति ॥ १५ ॥ ममतुगमनंनयुक्तमित्याह—दीक्षितइति ॥ १६ ॥ यन्त्रिताः नियुक्ताः ॥ १७ ॥ आयामः दैर्घ्यं । विस्तारः विशालता । वज्रस्पर्शसमैः वज्रस्पर्शसमस्पर्शैरित्यर्थः ॥ १८ ॥ अशनिकल्पैः वज्रतुल्यैः ॥१९॥ नागानां सर्पाणां । असुरराक्षसाः पातालवासिनः ॥२०॥ रसातलं पातलं यथाभवतितथा धरणीं बिभिदुः ॥२१॥ संबाधं निबिडं ॥२२–२३॥ प्रसाद्य स्तुत्वा ॥ २४ ॥ तलवासिनः रसातलवासिनः ॥२५॥ यज्ञहरः यज्ञहन्ता । यज्ञहनइतिपाठे हन्तीति हनः पचाद्यच् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

**ति०** दीक्षितइत्यादि । तस्यप्रवासनिषेधात्पौत्रस्यबालकत्वाच्चेतिभावः ॥ १६ ॥ **शि०** अनुत्तमं प्रसिद्धरसातलान्मध्यममुत्तमंवा । रसातलंकर्तुमिववीराधरणींबिभिदुः । तुशब्दइवार्थे ॥ २१ ॥ इत्येकोनचत्वारिंशःसर्गः ॥ ३९ ॥

**[ पा० ]** १ क. ङ. च. छ. ञ. मभिगच्छथ. ख. घ. मधिगच्छथ. २ क. ख. घ—छ. झ. ञ. ट. तमेवहयहर्तारं. ३ ङ. च. छ. झ. ञ. ट. गणस्त्वहम्. ४ क. ख. घ—छ. ञ. ट. तेसर्वेहृष्टमनसो. ५ इदमर्धं क. ख. च. छ. ञ. ट. दृश्यते. ६ क. ख. च. मदृष्ट्वाऽश्वं. ७ ङ. च. छ. झ. ञ. ट. पुरुषव्याघ्राः. ८ क. ग. घ—छ. झ. ञ. ट. स्पर्शसमैर्भुजैः. ९ ग. विध्यमानानां. ञ. बाध्यमानानां. १० ङ. झ. ञ. दुराधर्षैः. ११ ङ. च. छ. झ. ञ. धरणींराम. क—घ. धरणींवीर. १२ क—घ. नरशार्दूल. १३ ट. ऊचुःपरमसंभ्रान्ताः. १४ ख. वध्यन्तेतलवासिनः. ग. घ—छ. झ. ञ. ट. वध्यन्तेजलचारिणः. क. हन्यन्तेजलचारिणः. १५ क—च. ञ. ट. यज्ञहनोस्माकं. १६ ग—छ. झ. ञ. ट. हिंसन्तिसगरात्मजाः.

## चत्वारिंशः सर्गः ॥ ४० ॥

ब्रह्मणादेवान्प्रतिसगरसुतानांकपिलकोपाग्निनाभस्मीभवननिवेदनेनसमाश्वासनम् ॥ १ ॥ सगरपुत्रैःक्रमेणप्राच्यादिदिग्विभेदनेऐशान्यांदिशिकपिलपरिसरचारिणोनिजाश्वस्यावलोकनम् ॥ २ ॥ ततस्तैःकपिलेऽश्वचोरत्वबुद्ध्यातद्वधप्रवृत्तौतेनहुङ्कारमात्रेणतेषांभस्मीकरणम् ॥ ३ ॥

देवतानां वचः श्रुत्वा भगवान्वै पितामहः ॥ प्रत्युवाच सुसंत्रस्तान्कृतान्तबलमोहितान् ॥ १ ॥
यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः ॥ [महिषी माधवस्यैषा स एष भगवान्प्रभुः ] ॥ २ ॥
कापिलं रूपमास्थाय धारयत्यनिशं धराम् ॥ तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः॥ ३ ॥
पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः ॥ सगरस्य च पुत्राणां विनाशोऽदीर्घजीविनाम् ॥ ४ ॥
पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिंदम ॥ देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ॥ ५ ॥
सगरस्य च पुत्राणां प्रादुरासीन्महात्मनाम् ॥ पृथिव्यां भिद्यमानायां निर्घातसमनिःस्वनः ॥ ६ ॥
ततो भित्त्वा महीं सर्वे कृत्वा चापि प्रदक्षिणम् ॥ सहिताः सागराः सर्वे पितरं वाक्यमब्रुवन् ॥ ७ ॥
परिक्रान्ता मही सर्वा सत्ववन्तश्च सूदिताः ॥ देवदानवरक्षांसि पिशाचोरगकिंनराः ॥ ८ ॥
न च पश्यामहेऽश्वं तमश्वहर्तारमेव च ॥ किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ॥ ९ ॥
तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः ॥ समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ॥ १० ॥
भूयः खनत भद्रं वो निर्भिद्य वसुधातलम् ॥ अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तथ ॥ ११ ॥
पितुर्वचनमासाद्य सगरस्य महात्मनः ॥ षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ १२ ॥
खन्यमाने ततस्तस्मिन्ददृशुः पर्वतोपमम् ॥ दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १३ ॥
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन ॥ शिरसा धारयामास विरूपाक्षो महागजः ॥ १४ ॥

---

कृतःअन्तोजननाशोयैस्तेकृतान्ताः सगरपुत्राः ॥ १ ॥ यस्येतिसार्धश्लोकः ॥ २ ॥ आस्थाय यइति शेषः ॥ ३ ॥ सनातनः प्रतिकल्पमवश्यंभावी । दृष्टः निश्चितः । अतोनतत्रापिशोकःकार्यइतिभावः । अदीर्घजीविनामितिछेदः । विनाशः दृष्टइत्यनुषङ्गः ॥ ४ ॥ त्रयस्त्रिंशद्देवाः अष्टौवसवएकादशरुद्राद्वादशादित्याअश्विनौच । इदमुपलक्षणं गन्धर्वादेर्गमनस्यापि ॥ ५ ॥ निर्घातः उत्पातविशेषः ॥ ६ ॥ सर्वेमहींप्रदक्षिणं कृत्वा पितरंगत्वा सर्वेपितरमब्रुवन् ॥ ७ ॥ श्लोकद्वयं। सत्ववन्तोबलवन्तः । करिष्यामेतिविसर्गलोपश्छान्दसः ॥ ८–९ ॥ समन्युः अश्वालाभकृतक्रोधवान् ॥ १० ॥ भूयोनिर्भिद्य खनतेत्यन्वयः । निवर्तथ निवर्तध्वं ॥ ११ ॥ अभिद्रवन् अभ्यद्रवन् ॥ १२ ॥ दिशागजं "वष्टिभागुरिः" इत्याप् । विरूपाक्षंविरूपाक्षाख्यं ॥ १३ ॥ उक्तंविवृणोति—सेति

---

ति० धारयति योगबलेनेतिशेषः ॥ ३ ॥ ति० दीर्घदर्शिनां दीर्घदर्शिभिः । सगरपुत्रविनाशोयंदृष्टएव । अतस्तत्रशोकोनुचितः । शेषेषष्ठी । यद्वा । अदीर्घदर्शिनामितिच्छेदः ॥ ४ ॥ ति० निर्घातसमनिस्वनः निर्घातनिस्वनसमः । शि० निर्घातसमनिस्वनः निर्घातशब्दसदृशशब्दोमहास्वनः । प्रादुरासीत् । नीलोघटोघटइतिवच्छाब्दबोधः । किंचमहान्स्वनःस्वनलंयस्मिन्सः महास्वनः निर्घातसमनिस्वनः प्रादुरासीत् ॥ ६ ॥

[ पा० ] १ घ. झ. सुमन्त्रस्तान्. २ इदमर्धं ङ. च. झ. ञ. ट. दृश्यते. ३. झ. सएवभगवान्. ४ ख. ग. घ. कोपाग्निनिर्दग्धाः. ५ ख. श्चापिनिर्भेदो. घ. श्चैवनिर्भेदो. ६ ङ. झ. ञ. दर्शिनाम्. ७ झ. ट. दरिंदमाः. ८ क. ग. ङ. च. छ. झ. ञ. ट. पुत्राणांप्रादुरासीन्महास्वनः. ख. पुत्रैस्तुप्रादुरासीन्महात्मभिः. ९ क. ग. ततोगत्वा. १० ख—छ. झ. ञ. ट. महींसर्वां. ११ ख. ग. ट. चाभिप्रदक्षिणम्. १२ घ. दानवगन्धर्वाः. १३ घ—छ. झ. ञ. पन्नगाः. १४ झ. ञ. ट. निवर्तत. १५ क. ग. घ. मास्थाय. ख. माश्रित्य. १६ च. षष्टिपुत्रसहस्राणि. १७ क. ख. खन्यमानेतले. १८ क. ख. घ. ङ. च. झ. ञ. ट. धारयामासशिरसा.

यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः ॥ खेदाच्चालयते शीर्षं भूमिकंपस्तदा भवेत् ॥ १५ ॥
तं[2] ते प्रदक्षिणं कृत्वा दिशापालं[3] महागजम् ॥ मानयन्तो हिते राम जग्मुर्भित्वा रसातलम् ॥१६॥
ततः पूर्वां दिशं भित्वा दक्षिणां बिभिदुः पुनः ॥ दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ॥१७॥
महापद्मं महात्मानं सुमहत्पर्वतोपमम् ॥ शिरसा धारयन्तं ते विस्मयं जग्मुरुत्तमम् ॥ १८ ॥
ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः ॥ षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ॥ १९ ॥
पश्चिमायामपि दिशि महान्तमचलोपमम् ॥ दिशागजं सौमनसं ददृशुस्ते महाबला: ॥ २० ॥
तं[8] ते प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ॥ खनन्तः समुपक्रान्ता दिशं हैमवतीं ततः ॥ २१ ॥
उत्तरस्यां[12] रघुश्रेष्ठ ददृशुर्हिमपाण्डुरम् ॥ भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २२ ॥
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् ॥ षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ॥ २३ ॥
ततः प्रागुत्तरां गत्वा सागराः प्रथितां[13] दिशम् ॥ रोषादभ्यखनन्सर्वे पृथिवीं सगरात्मजाः ॥२४॥
ते तु सर्वे महात्मानो भीमवेगा महाबलाः ॥ ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥ २५ ॥
हयं च तस्य देवस्य चरन्तमविदूरतः ॥ प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ॥ २६ ॥
ते[14] तं हयहरं ज्ञात्वा क्रोधपर्याकुलेक्षणाः ॥ खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ॥
अभ्यधावन्त संक्रुद्धास्तिष्ठतिष्ठेति चाब्रुवन् ॥ २७ ॥
अस्माकं त्वं हि तुरगं यज्ञीयं[15] हृतवानसि ॥ दुर्मेधस्त्वं हि संप्राप्तान्विद्धि नः सगरात्मजान् ॥२८॥
श्रुत्वा[16] तु वचनं तेषां कपिलो रघुनन्दन ॥ [17]रोषेण महताऽऽविष्टो हुंकारमकरोत्तदा ॥ २९ ॥
ततस्तेनाप्रमेयेन कपिलेन महात्मना ॥ भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

॥ १४ ॥ पर्वणि काले । खेदाद्धेतोः । विश्रमार्थं श्रमशान्त्यर्थं । चालयते चालयति ॥ १५ ॥ मानयन्तः पूजयन्तः ॥ १६ ॥ ततइत्यस्यविवरणं पूर्वांदिशं भित्वेति ॥ १७ ॥ महागजंविशेषयति—महेति । सुमहदित्यार्षं ॥ १८ ॥ दिक्छब्देन देशउच्यते ॥ १९ ॥ सौमनसं सोमनसाख्यं ॥ २० ॥ निरामयं कुशलं । समुपक्रान्ताः गताः । हैमवतीं हिमवत्संबंधिनीं ॥ २१ ॥ भद्रं भद्राख्यं । भद्रेण शोभनेन ॥ २२ ॥ समालभ्य स्पृष्ट्वा "आलंभःस्पर्शहिंसयोः" इत्यमरः ॥ २३ ॥ प्रागुत्तरां ऐशानींदिशं । प्रथितां अश्वगमनयोग्यतावतीं । गमनखननक्रियाभेदात्सागरसगरात्मजपदप्रयोगः ॥ २४ ॥ महात्मानः महाकायाः । कपिलं कपिलावतारं ॥ २५ ॥ चरन्तं तृणानिभक्षयन्तं ॥ २६ ॥ तेतमितिसार्धश्लोकः । तं कपिलं ॥ २७ ॥ दुर्मेधइतिसंबोधनं ॥ २८–२९ ॥ अप्रमेयेन अप्रमेयवैभवेन ॥ ३० ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणेमणिमञ्जीराख्याने बालकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

शि० हिते अश्वप्राप्तये ॥ १६ ॥ इतिचत्वारिंशःसर्गः ॥ ४० ॥

[ पा० ] १ क. ङ. ञ. विश्रामार्थं. २ झ. ञ. तेतंप्रदक्षिणं. ३ च. दिशांपालं. ट. दिशःपालं. ४ ख. ट. दिशंहित्वा. ५ ग. ङ. झ. ञ. ट. सुमहापर्वतोपमम्. ६ ङ. च. छ. झ. ञ. ट. धारयन्तंगां. ७ क. सुमनसं. ८ झ. ङ. तेतंप्रदक्षिणं. ९ ख. खनितुं. १० क. ग. ङ. झ. ञ. समुपाक्रान्ताः. ११ क—छ. झ. ञ. सोमवतींतदा. ट. हैमवतींतथा. १२ ख. उत्तरस्यामपिदिशि. १३ च. प्रस्थितादिशम्. १४ घ. ङ. झ. ट. तेतंयज्ञहनं. च. छ. तेतंयज्ञहरं. क. तेतंयज्ञहयं. १५ घ. याज्ञीयं. १६ घ. तच्छ्रुत्वावचनं. क. ख. ग. च. छ. झ. ञ. ट. श्रुत्वातद्वचनं. १७ क. ख. क्रोधेनमहता.

# एकचत्वारिंशः सर्गः ॥ ४१ ॥

सगरेणचिरतरमनागतेषुपुत्रेषुतदन्वेषणायपौत्रस्यांशुमतःप्रेषणम् ॥ १ ॥ अंशुमतापितृखातमार्गगमनेनदिशागजपूजनपूर्वकंभस्मीभूतनिजपितृणामश्वस्यचविलोकनम् ॥ २ ॥ तथातेषांजलदानार्थंतदन्वेषणायपरितोदृक्प्रसारणेगरुडस्यदर्शनम् ॥ ३ ॥ गरुडेनतंप्रतिपितृवृत्तान्तनिवेदनपूर्वकंगङ्गावतारणेनतदंभसातदस्थामाप्लवनचोदना ॥ ४ ॥ अंशुमताऽश्वानयनपूर्वकंपुत्रवृत्तान्तंज्ञापितेनसगरेणयज्ञसमापनम् ॥ ५ ॥ तथाचिरतरंराज्यरक्षणपूर्वकंगङ्गावतारणोपायानध्यवसायेनैवस्वर्गगमनम् ॥ ६ ॥

पुत्रांश्चिरगताञ्ज्ञात्वा सगरो रघुनन्दन ॥ नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥
शूरश्च कृतविद्यश्च पूर्वैस्तुल्योसि तेजसा ॥ पितॄणां गतिमन्विच्छ येन [1]चाश्वोपवाहितः ॥ २ ॥
अन्तर्भौमानि सत्वानि वीर्यवन्ति महान्ति च ॥ [2]तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥३॥
अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि ॥ सिद्धार्थस्सन्निवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥
एवमुक्तोंऽशुमान्सम्यक्सगरेण महात्मना ॥ धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५ ॥
स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः ॥ प्रापद्यत [3]नरश्रेष्ठस्तेन [4]राज्ञाऽभिचोदितः ॥ ६ ॥
[5]दैत्यदानवरक्षोभिः पिशाचपतगोरगैः ॥ [6]पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७ ॥
स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम् ॥ पितॄन्स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥
दिशागजस्तु तच्छ्रुत्वा [7]प्रीत्याहांशुमतो वचः ॥ आसमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् ॥ यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥
तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्[8]वाक्यकोविदैः ॥ पूजितः सहयश्चैव गन्तासीत्यभिचोदितः ॥ ११ ॥
तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः ॥ भस्मराशीकृता यत्र [9]पितरस्तस्य सागराः ॥ १२ ॥
स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा ॥ चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३ ॥
[10]यज्ञीयं च हयं तत्र चरन्तमविदूरतः ॥ ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १४ ॥

---

नप्तारं पौत्रं ॥ १ ॥ पूर्वैः पितृभिः । पितॄणां कनिष्ठपितॄणां । गतिं मार्गं । अन्विच्छ अन्वेषय । अश्वोयेनापवाहितस्तस्यचगतिमन्विच्छ ॥ २ ॥ अन्तर्भौमानि भूमेरन्तर्जातानि भूबिलमाश्रितानीत्यर्थः । यानीतिशेषः ॥ ३ ॥ पारगः समाप्तिकरः ॥ ४ ॥ लघुविक्रमः शीघ्रगमनः ॥ ५ ॥ खातं कूपमित्यर्थः ॥ ६ ॥ अपश्यत अपश्यत् ॥ ७ ॥ परिपप्रच्छ कास्तइतिशेषः ॥ ८ ॥ आसमञ्ज असमञ्जपुत्र । इञभावआर्षः ॥ ९ ॥ समुपचक्रमइतिसविनयत्वप्रकटनं ॥ १० ॥ वक्तुमर्हंवाक्यं । "ऋहलोर्ण्यत्" "चजोःकुघिण्ण्यतोः इतिकुत्वं । वाक्यकोविदैः कालदेशोचितवक्तव्यार्थज्ञैः । यद्वा परवाक्याशयज्ञैः स्वयंवाक्यप्रयोगकुशलैश्चेत्यर्थः । सहयःपितामहसमीपंगन्तासीत्यभिचोदितोऽभूत् ॥ ११ ॥ तस्य अंशुमतः । पितरोयत्रभस्मराशीकृतास्तंदेशंजगाम ॥ १२ ॥ पूर्वमदर्शनाद्दुःखवशमापन्नः तेषां वधात् वधदर्शनात् सुदुःखितः परमार्तः भृशंतप्तः । चुक्रोश रुरोद ॥१३॥ शोकः विलापः ॥ १४ ॥

---

शि० महात्मभिः अतिप्रयत्नैः ॥ ६ ॥ शि० हेस अरिनिवर्तकत्वाद्युक्तगुणविशिष्टराम । सोंऽशुमान् ॥ ८ ॥ शि० एतेन गजानांपरमाभिज्ञत्वंसूचितं । विशेषवृत्तानुक्त्यादयालुत्वंचसूचितं । आसमञ्जशब्दःशिवाद्यणन्तः ॥ ९ ॥ शि० सुदुःखितः अत्यन्तदुःखंप्राप्तः । अतएव परमार्तः पृथिव्यांलुण्ठितः ॥ १३ ॥ ति० लोकसंमतः लोकहितः । एतन्मूलकतयासर्वलोकहितगङ्गाया

[ पा० ] १ च. छ. ज. ञ. ट. चाश्वोपहारितः. २ ङ. झ. तेषांतुप्रतिघातार्थं. ३ क. ट. नरश्रेष्ठतेन. ४ ख. राज्ञानियोजितः. ५ ङ. च. छ. झ. ञ. देवदानव. ६ क. च. छ. ञ. पूज्यमानो. ७ ङ. च. छ. झ. ञ. प्रत्युवाचमहामतिः. घ. प्रीत्याहांशुमतोवचः. ८ क. ख. ग. घ. च—ञ. वाक्यकोविदः. ९ क. ख. घ. पितरस्तत्रसागराः. १० क. ख. घ. च. छ. याज्ञीयं.

स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् ॥ [1]सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥१५॥
विसार्य निपुणां दृष्टिं [2]ततोपश्यत्खगाधिपम् ॥ पितॄणां मातुलं राम [3]सुपर्णमनिलोपमम् ॥ १६ ॥
[4]स चैवमब्रवीद्वाक्यं वैनतेयो महाबलः ॥ मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः ॥ १७ ॥
कपिलेनाप्रमेयेन [5]दग्धा हीमे महाबलाः ॥ सलिलं [6]नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ॥ १८ ॥
गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ ॥ तस्यां कुरु महाबाहो [7]पितॄणां तु जलक्रियाम् ॥ १९ ॥
भस्मराशीकृतानेतान्प्लावयेल्लोकपावनी ॥ तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ॥
[8]षष्टिं पुत्रसहस्राणि [9]स्वर्गलोकं [10]नयिष्यति ॥ २० ॥
[[11]गङ्गामानय भद्रं ते देवलोकान्महीतलम् ॥ क्रियतां [12]यदि शक्तोसि गङ्गायास्तव तारणम्] ॥ २१ ॥
[13]गच्छ चाश्वं महाभाग संगृह्य पुरुषर्षभ ॥ यज्ञं पैतामहं वीर [14]संवर्तयितुमर्हसि ॥ २२ ॥
सुपर्णवचनं श्रुत्वा सोंशुमानतिवीर्यवान् ॥ त्वरितं हयमादाय पुनरायान्[15]महायशाः ॥ २३ ॥
ततो राजानमासाद्य दीक्षितं रघुनन्दन ॥ न्यवेदयद्यथावृत्तं सुपर्ण[16]वचनं तथा ॥ २४ ॥
तच्छ्रुत्वा घोरसंकाशं वाक्यमंशुमतो नृपः ॥ यज्ञं [17]निर्वर्तयामास [18]यथाकल्पं यथाविधि ॥ २५ ॥
स्वपुरं [19]चागमच्छ्रीमानिष्टयज्ञो महीपतिः ॥ गङ्गायाश्चागमे राजा निश्चयं [20]नाध्यगच्छत ॥ २६ ॥
[21]अकृत्वा निश्चयं राजा कालेन महता महान् ॥ त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥२७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

जलक्रिया तर्पणं ॥ १५ ॥ विसार्य समन्तात्प्रसार्य । निपुणां दूरवीक्षणक्षमां । अनिलोपमं वेगेनेतिशेषः । लोकसंमतः लोकहितः ॥१७॥ हि यस्मात् कपिलेन हताः । लौकिकं लोकतःप्राप्तं । सलिलंदातुंनार्हसि । "चण्डालादुदकात्सर्पाद्वैद्युताद्ब्राह्मणादपि ॥ दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपापकर्मणां ॥ उदकंपिण्डदानंचएतेभ्योयद्विधीयते ॥ नोपतिष्ठतितत्सर्वमन्तरिक्षेविनश्यति" इतिस्मृतेः । कपिलोब्राह्मणः ॥ १८ ॥ गङ्गा अस्तीतिशेषः ॥ १९ ॥ नकेवलंतत्रजलक्रिया तयासेचनीयंचेत्याह—भस्मेति । सार्धश्लोकः । यदिप्लावयेत् सेचयेत् तदा तया क्लिन्नं सिक्तं । भस्म नयिष्यति नेष्यति ॥ २०—२१ ॥ संवर्तयितुं समापयितुं ॥ २२ ॥ आयात् आगच्छत् ॥ २३ ॥ वृत्तं पितृवृत्तान्तं । सुपर्णवचनंचयथातथान्यवेदयदित्यन्वयः ॥ २४ ॥ यथाकल्पं यथाक्रमं ॥ २५ ॥ निश्चयं उपायं ॥ २६ ॥ महताकालेन दिवंगतइत्यन्वयः॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकचत्वारिंशःसर्गः ॥ ४१ ॥

---

भूलोकेऽवतारणात् ॥ १७ ॥ **ति०** यतश्च महाबलाः महाबलवत्त्वेनप्रायश्चित्तमर्यादातिक्रान्तपापवन्तः अतोलौकिकसलिलंदातुंनार्हसि ॥ १८ ॥ **ति०** गमिष्यति प्रापयिष्यतीत्यर्थः । अनेन अकृतप्रायश्चित्तानामपिमहापातकिनांऔर्ध्वदेहिकायोग्यानां गङ्गाजलस्पृष्टपुद्गलानांविनापिप्रायश्चित्तान्तरंतत्कालएवसकलौर्ध्वदेहिकक्रियायोग्यत्वंचसूचितं ॥ २० ॥ इत्येकचत्वारिंशःसर्गः ॥ ४१ ॥

**[ पा० ]** १ घ—छ. झ. ञ. सजलार्थी. २ क. सचापश्यत्खगाधिपम्. ट. तत्रापश्यत्. ३ क. च. छ. ज. ञ. मनलोपमम्. घ. मनलोपमम्. ४ क—ट. सचैनमब्रवीत्. ५ क. ख. निर्दग्धाहि. ठ. हताहीमे. ६ ङ. च. छ. झ. ञ. नार्हसेप्राज्ञ. ७ ङ—ट. पितृणांसलिलक्रियाम्. ८ च. षष्टिपुत्रसहस्राणि. ९ ख. ब्रह्मलोकं. १० ङ. झ. गमिष्यति. ११ अयंश्लोकः क. च. छ. ञ. दृश्यते. १२ क. च. छ. यदिशक्नोषि. १३ ङ. झ. निर्गच्छाश्वं. १४ ङ. ज. झ. निर्वर्तयितुमर्हसि. १५ क. घ—छ. झ. ञ. न्महातपाः. १६ क. ख. ग. ज. ञ. वचनंयथा. १७ च. छ. ज. ट. निवर्तयामास. १८ क. ग. घ. यथातत्त्वंयथाविधि. १९ ङ. छ. झ. ञ. ट. त्वगमच्छ्रीमान्. २० क. नाभ्यगच्छत. २१ क—ट. अगत्वानिश्चयं.

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

सगरपौत्रेणांशुमतास्वपुत्रेदिलीपेराज्यनिधानपूर्वकंगङ्गावतारणायहिमवच्छिखरेतपश्चरणम् ॥ १ ॥ तस्मिंस्तपःफलालाभेनैवस्वर्गतेतदुपायंचिन्तयतापिदिलीपेनतदप्राप्त्यैवस्वर्गगमनम् ॥ २ ॥ तत्सूनुनाभगीरथेनमन्त्रिषुराज्याधानपूर्वकंगङ्गावतारणायगोकर्णेतपश्चरणम् ॥ ३ ॥ तथातपःप्रसन्नंब्रह्माणंप्रतिगङ्गावतरणवरणपूर्वकंस्वकुलानुच्छित्त्यैसंततिवरणम् ॥४॥ ब्रह्मणा तंप्रतिगङ्गायाधरणीतलावतरणनियोजनपूर्वकंतद्धारणायहरप्रसादनचोदना ॥ ५ ॥

कालधर्मं गते राम सगरे प्रकृतीजनाः ॥ राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥
स राजा सुमहानासीदंशुमान्रघुनन्दन ॥ तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २ ॥
तस्मिन्राज्यं[1] समावेश्य दिलीपे रघुनन्दन ॥ हिमवच्छिखरे[2] पुण्ये तपस्तेपे सुदारुणम् ॥ ३ ॥
द्वात्रिंशच्च[3] सहस्राणि वर्षाणि सुमहायशाः[4] ॥ तपोवनं गतो राम[5] स्वर्गं लेभे[6] तपोधनः ॥ ४ ॥
दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ॥ दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत[7] ॥ ५ ॥
कथं गङ्गावतरणं कथं तेषां जलक्रिया ॥ तारयेयं कथं चैनानिति[8] चिन्तापरोऽभवत् ॥ ६ ॥
तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः[9] ॥ पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥
दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् ॥ त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥
अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति ॥ व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ ९ ॥
इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा[10] ॥ राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः[11] ॥ १० ॥
भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन ॥ अनपत्यो महातेजाः[12] प्रजाकामः सचाप्रजः[13] ॥ ११ ॥
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ॥ १२ ॥
स[14] तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन ॥ ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः ॥ १३ ॥
तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ॥ अतीतानि महाबाहो तस्य राज्ञो महात्मनः ॥ १४ ॥

---

अथ गङ्गायास्त्रिपथगमनहेतुप्रश्नस्यपूर्वप्रकृतस्यसाक्षादुत्तरमाह—कालधर्ममित्यादि । जातमात्रस्यकालेनावश्यंप्राप्तव्योधर्मः कालधर्मः । मरणमितियावत् । प्रकृतीजनाइत्यत्रदीर्घश्छान्दसः । अमात्यवर्गाः । "प्रकृतिःसहजेयोनावमात्येपरमात्मनि" इतिवैजयन्ती । रोचयामासुः न्यायप्राप्तत्वादैच्छन् ॥ १ ॥ सः सुमहान्राजाऽऽसीदित्यन्वयः ॥ २ ॥ तेपे गङ्गावतरणायेतिशेषः ॥ ३ ॥ स्वर्गलेभे नतुगङ्गां ॥ ४ ॥ वधं अपमृत्युं । दुःखोपहतया पित्रादुश्चरेतपसिकृतेपि तेषांगतिर्नाभूदित्येवंरूपया । नाध्यगच्छत नाध्यगच्छत्॥५॥ निश्चयानधिगममेवाह—कथमित्यादिना ॥६॥ धर्मेण प्रयोजकेन । चिन्तयतः ॥ ७ ॥ अकारयत् अकरोत् ॥ ८ ॥ उपेयिवान् ययौ ॥ ९ ॥ अभिषिच्य इन्द्रलोकंगतः ॥ १० ॥ अनपत्यः अतएवप्रजाकामोऽभूत् । सचाप्रजइत्युत्तरशेषः ॥ ११ ॥ गोकर्णे हिमवत्पादविशेषे । पञ्चाग्नयः चतुर्षुपार्श्वेष्वग्नयउपरिसूर्यश्च तेषांमध्येतपोयस्यसः पञ्चतपाः । मासस्यसकृदाहारो यस्यसः मासाहारः । उभयत्रमध्यमपदलोपीसमासः । पृषोदरादित्वात्साधुत्वं ॥ १३ ॥ तस्यराज्ञोमहात्मनइ-

---

ति० तद्दिलीपवंशजरघुपुत्रकोदिलीपः कालिदासोक्तोन्यएवेतिबोध्यं ॥ ८ ॥ ति० सचप्रजाइत्यस्यमन्त्रिष्वाधायेत्युत्तरेणान्वयः ॥ ११ ॥ ति० गोकर्णः दक्षिणदिक्स्थतीर्थविशेषोवा ॥ १३ ॥ ति० यद्यस्तीत्यादि असंदिग्धे संदिग्धवचनं " वेदाश्चेत्प्रमाणं-

[ पा० ] १ ङ. च. छ. झ. ञ. तस्मैराज्यं. २ क. घ—ट. च्छिखरेरम्ये. ३ ङ. च. छ. झ. ञ. द्वात्रिंशच्छतसाहस्रं. ४ ख. ग. सुमहातपाः. ५ क. ख. घ—ट. तपोवनगतोराजा. ६ क. ख. लेभेस्वकर्मभिः. ग. लेभेमहायशाः. ७ क. ग. घ. ज. नाधिगच्छति. ८ क. घ—झ. ट. चैतानितिचिन्ता. ९ क. विजितात्मनः. १० ग. स्वार्जितैरेवकर्मभिः. ११ क. च. ञ. ट. नरर्षभम्. १२ ङ. झ. ट. अनपत्योमहाराजः. १३ ख. समाहितः. झ. सचप्रजाः. १४ ङ. च. झ. ञ. ट. तपोदीर्घसमातिष्ठत्.

सुप्रीतो भगवान्ब्रह्मा प्रजानां पतिरीश्वरः ॥ १५ ॥
ततः सुरगणैः सार्धमुपागम्य पितामहः ॥ भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १६ ॥
भगीरथ [2]महाभाग प्रीतस्तेऽहं [3]जनेश्वर ॥ तपसा [4]च सुतप्तेन वरं वरय सुव्रत ॥ १७ ॥
तमुवाच महातेजाः सर्वलोकपितामहम् ॥ भगीरथो [5]महाभागः [6]कृताञ्जलिरुपस्थितः ॥ १८ ॥
यदि मे [7]भगवन्प्रीतो यद्यस्ति तपसः फलम् ॥ सगरस्यात्मजाः सर्वे [8]मत्तस्सलिलमाप्नुयुः ॥ १९ ॥
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ॥ स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥२०॥
[9]देयां च संततिर्देव नावसीदेत्कुलं च नः ॥ इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ २१ ॥
उक्तवाक्यं तु राजानं सर्वलोकपितामहः ॥ प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २२ ॥
[10]मनोरथो महानेष भगीरथ महारथ ॥ एवं भवतु भद्रं ते इक्ष्वाकु[11]कुलवर्धन ॥ २३ ॥
इयं हैमवती [12]गङ्गा ज्येष्ठा हिमवतः सुता ॥ तां वै [13]धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥ २४ ॥
गङ्गायाः पतनं राजन्पृथिवी न [14]संहिष्यति ॥ तां वै [15]धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ २५ ॥
तमेवमुक्त्वा राजानं [16]गङ्गां चाभाष्य लोककृत् ॥ जगाम त्रिदिवं देवस्सह [17]देवैर्मरुद्गणैः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

त्युत्तरशेषः ॥ १४ ॥ सुप्रीतइत्यर्धम् ॥ १५ ॥ अथउपगमनानन्तरं ॥ १६ ॥ तेतपसाप्रीतः ॥ १७ ॥ महातेजाः तपःकृतनिरवधिकतेजाः ॥ १८ ॥ मेतपसइत्यन्वयः ॥ १९ ॥ नकेवलंसलिलाप्तिरन्यच्चेत्याह— गङ्गायाइति । अत्यन्तं अक्षय्यं ॥ २० ॥ इक्ष्वाकूणां कुलेजातस्यमेसंततिर्देया ययानः कुलंनावसीदेत्एषवरः परः द्वितीयोवरोस्त्वित्यन्वयः । तपसेनिर्गमदशायामपिहिप्रजाकामइत्युक्तं ॥ २१ ॥ शुभां शुभहेतुं । मधुरां अर्थतोमनोज्ञां ॥ २२ ॥ मनोरथः तावकइतिशेषः ॥२३॥ इयं संनिहिता । हैमवती हिमवत्संनिहिता । धारयितुंशक्तः हरः । तत्र धारणे । नियुज्यतां प्रार्थ्यतां ॥ २४ ॥ धारयितुं शक्तमितिशेषः ॥ २५ ॥ आभाष्य वत्सेराजानंयथाकालमनुगृहाणेत्युक्त्वेतियावत् । मरुद्गणैः वायुगणैः ॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

स्युः'' इतिवत् । सलिलं स्पर्शमात्रेणस्वर्गतिसाधनंसलिलं ॥ १९ ॥ **ति०** इक्ष्वाकूणांकुलेजातस्यममसंततिर्देया । ययानःकुलंनावसीदेत् । संतत्यैइतिचतुर्थीप्रथमार्थे । एषपरोवरः द्वितीयवरइत्यर्थः । परेतु संतत्यैतदर्थंनःकुलंनावसीदेदितिचयाचे । मत्कुलेअसंततिःकोपिमाभूदित्यर्थः । उपसंहरति—इक्ष्वाकूणामिति । तत्कुलेजातस्यएषएवपरोवरोस्तु । नातोऽधिकंतृतीयंवरान्तरंयाचेइत्यर्थः । एतेनपूर्वापरोपकारिताभगीरथस्यदर्शितेत्याहुः ॥ २१ ॥ **ति०** तांगङ्गां । तत्रगङ्गागमनसमये धारयितुंहरएवनियुज्यतां । वैशब्दएवार्थे ॥ २४ ॥ **ति०** देवैःआजानजैः । मरुद्गणैःकर्मदेवैः । **शि०** पुनर्मरुद्गणोपादानंब्राह्मणवसिष्ठन्यायेनेतिबोध्यं ॥ २६ ॥ इतिद्विचत्वारिंशस्सर्गः ॥ ४२ ॥

**[ पा० ]** १ क. घ—छ. झ. ञ. प्रभुरीश्वरः. २ घ. ङ. च. झ. ञ. महाराज. ज. ट. महातेजः. ३ ङ—ट. जनाधिप. क. ख. नरेश्वर. ४ ट. तेसुतप्तेन. ५ ङ. च. छ. झ. ञ. महाबाहुः. ६ ङ. च. छ. झ. ञ. कृताञ्जलिपुटस्स्थितः. क. ग. कृताञ्जलिरवस्थितः. ७ झ. भगवान्प्रीतो. ८ च. छ. ञ. सर्वेते. ङ. झ. सर्वेच. ९ ङ. झ. देयायाचेहसंतत्यै. १० घ. तपोधनमहातेजः. ११ घ. कुलनन्दन. क. ञ. कुलमव्ययम्. १२ ङ—ञ. ज्येष्ठागङ्गा. १३ क—ट. धारयितुंराजन्. १४ ग. ङ. झ. ञ. ट. सहिष्यते. १५ क. ङ. च. झ. ञ. ट. धारयितुंराजन्. १६ क. च. ज. ञ. गङ्गामाभाष्य. १७ ग. ङ. च. छ. झ. ञ. देवैस्सर्वैस्सहमरुद्गणैः. ख. देवोब्रह्मासहमरुद्गणैः.

# त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

भगीरथतपस्तुष्टहरेधारणायसमुद्युक्तेगङ्गयासवेगमाकाशाच्छिवशिरसिनिपतनम् ॥ १ ॥ हरेणगङ्गागर्वखण्डनायजटामण्डलेतन्निरोधनम् ॥ २ ॥ भगीरथेनपुनस्तपःप्रसादितेनगङ्गायाबिन्दुसरसिविसर्जनम् ॥३॥ ततोनिर्गत्यभगीरथरथानुयायिन्यागङ्गयाजन्हुकन्यात्वप्राप्तिपूर्वकंस्वजलैःसगरसुतशरीरभस्मनामाप्लावनम् ॥ ४ ॥ तेनधूतकल्मषैस्तैःस्वर्गगमनम् ॥ ५ ॥

देवदेवे गते तस्मिन्सोङ्गुष्ठाग्रनिपीडिताम् ॥ कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १ ॥
ऊर्ध्वबाहुर्निरालंबो वायुभक्षो निराश्रयः ॥ अचलस्स्थाणुवत्स्थित्वा रात्रिंदिवमरिंदम ॥ २ ॥
अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ॥ उमापतिः पशुपती राजानमिदमब्रवीत् ॥ ३ ॥
प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ॥ [तमब्रवीन्नृपवरो गङ्गां धारय वै हर ॥ ४ ॥
इत्युक्तो वचनं भर्गः करिष्यामि प्रियं तव ] ॥ शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ५ ॥
ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ॥ [उमापतेर्वचश्श्रुत्वा गङ्गा क्रोधसमन्विता] ॥ ६ ॥
तदा साऽतिमहद्रूपं कृत्वा वेगं च दुस्सहम् ॥ आकाशादपतद्राम शिवे शिवशिरस्युत ॥ ७ ॥
अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ॥ विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् ॥ ८ ॥
तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान्हरः ॥ तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा ॥ ९ ॥
सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ॥ हिमवत्प्रतिमे राम जटामण्डलगह्वरे ॥ १० ॥
सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ॥ नैव निर्गमनं लेभे जटामण्डलमोहिता ॥ ११ ॥
तत्रैवाबंभ्रमद्देवी संवत्सरगणान्बहून् ॥ तामपश्यन्पुनस्तत्र तपः परममास्थितः ॥ १२ ॥
अनेन तोषितश्चाभूदत्यर्थं रघुनन्दन ॥ विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ १३ ॥
तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥ १४ ॥

अथगङ्गाप्लवनेनसागराणांस्वर्गगतिस्त्रिचत्वारिंशे—देवदेवइत्यादि । उपासत उपास्त । शिवमितिशेषः ॥ १—२ ॥ उमापतिरित्यनेनोमयासहागतइत्युच्यते ॥ ३—४ ॥ प्रियंकरिष्यामीत्येतद्विवृणोति—शिरसेति ॥ ५—६ ॥ अर्धत्रयमेकान्वयं । हैमवती हिमवत्कन्या । शिवे शुद्धे । उतेतिप्रसिद्धौ ॥ ७ ॥ महारूपदुःसहवेगकरणेनिमित्तमाह—अचिन्तयदिति । दुर्धरा धर्तुमशक्या । गृह्य गृहीत्वा ॥ ८ ॥ वलेपनं गर्वं । "वष्टिभागुरिः" इत्यल्लोपः । तिरोभावयितुं तिरोहितां कर्तुं ॥ ९ ॥ जटामण्डलमेवगह्वरंगुहायस्मिंस्तत्तथा ॥ १० ॥ निर्गमनंजटामण्डलान्निस्सरणमात्रमपि जटामण्डलेमोहितासंजातमोहा ॥ ११ ॥ अबंभ्रमत् पुनःपुनरभ्रमत् । यङ्लुगन्ताल्लङ् । आस्थितः राजेतिशेषः ॥ १२ ॥ अनेन तपसा । तोषितश्चासीत् विससर्जेच । बिन्दुसरोनाम हिमवतिब्रह्मनिर्मितस्सरोविशेषः ॥ १३ ॥ तस्यामित्यर्धं । स्रोतांसि प्रवाहाः

ति० देवदेवे आजानजानामपिदेवानांदेवेपूज्ये ॥ १ ॥ ति० तस्यावलेपनमितिसन्धिरार्षः । शि० तदा तु गङ्गाविचारसमयएव । तस्याः गङ्गायाः । लेपनं खेलनेच्छावृद्धिशाला क्रुद्धोव क्रुद्धइवहरः तिरोभावयितुं स्वशिरसिगङ्गांगोपयितुं बुद्धिं निश्चयं चक्रे । एतेनशिवस्यापिखेलनेच्छासूचिता । तुशब्दएवार्थे । वशब्दइवार्थे अतएवसंन्धौनार्षत्वकल्पना ॥९॥ ति० जटामण्डलेनगह्वरे गंभीरे । हिमवत् हिमबिंदुवत्पतिता ॥ १० ॥ ति० जटामण्डलंभ्रान्त्वाप्रान्तमागतापिअन्ततःतत्प्रान्तभागतोपिनिर्गमं नलेभे । प्रान्तभागेपितन्मध्यत्वभ्रमस्यमाययाभगवतोत्पादनात् ॥ ११ ॥ ति० अबभ्रमत् आर्षत्वात्सन्वदित्वं । शि० अवभ्र-

[ पा० ] १ अयंश्लोकः क—छ. ञ. दृश्यते. अचलस्स्थाणुवत्. ऊर्ध्वबाहुरिति ज. पाठेक्रमोदृश्यते. २ ङ. च. छ. ञ. स्थाणुवन्नित्यं. ३ क. घ. च. छ. ञ. रात्रिंदिवमतन्द्रितः. ङ. रात्रिंदिवमुपागतः. ४ इदमर्धद्वयं च. छ. दृश्यते. ५ इदमर्धं च. छ. दृश्यते. ६ क. च. छ. ञ. सासुमहद्रूपं. क. घ. सातुमहद्रूपं. ७ क. ख. घ. च. छ. ञ. ट. दपतद्गङ्गा. ८ घ. एतंनयामिपातालं. ९ ख. ज्ञात्वाऽवलेपनंतस्याः. १० क. सातस्यपतितापुण्या. घ. एतस्मिन्पतिता. ११ च. छ. ज. हिमहत्पतिताराम. १२ क—ट. नैवसानिर्गमंलेभे. १३ ङ. झ. जटामण्डलमन्ततः. १४ क.—ङ. झ. ञ. तत्रैवाबभ्रमद्देवी. ट. तत्रैवावभ्रमत. च. छ- ज. तत्रैवविभ्रमद्देवी. १५ ङ. झ. ञ. सतेनतोषितश्चासी. १६ घ. ङ. झ. ञ. दत्यन्तंरघुनन्दन.

ह्लादिनी पावनी चैव [1]नलिनी च तथाऽपरा ॥ [2]तिस्रः प्राचीं दिशं [3]जग्मुर्गङ्गाश्शिवजलाश्शुभाः ॥१५॥
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ॥ तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥१६॥
[ [4]तथैव चालिकानाम विश्रुता लोकपावनी ]॥ सप्तमी चान्वगात्तासां [5]भगीरथमथो नृपम् ॥१७॥
भगीरथोपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥ प्रायादग्रे महातेजा [6]गङ्गां तं चाप्यनुव्रजत् ॥ १८ ॥
गगनाच्छङ्करशिरस्ततो [7]धरणिमाश्रिता ॥ [8]व्यसर्पत जलं तत्र [9]तीव्रशब्दपुरस्कृतम् ॥ १९ ॥
मत्स्यकच्छपसङ्घैश्च शिंशुमारगणैस्तदा ॥ पतद्भिः [10]पतितैश्चान्यैर्व्यरोचत वसुंधरा ॥ २० ॥
ततो देवर्षिगन्धर्वा [11]यक्षाः सिद्धगणास्तदा ॥ व्यलोकयन्त ते तत्र गगनाद्गां [12]गतां तथा ॥ २१ ॥
[13]विमानैर्नगराकारैर्हयैर्[14]गजवरैस्तदा ॥ [15]पारिप्लवगतैश्चापि देवतास्[16]तत्र विष्ठिताः ॥ २२ ॥
[17]तदद्भुततमं लोके [18]गङ्गापतनमुत्तमम् ॥ दिदृक्षवो देवगणाः [19]समीयुरमितौजसः ॥ २३ ॥
संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ॥ शतादित्यमिवाभाति गगनं गततोयदम् ॥ २४ ॥
शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः ॥ विद्युद्भिरिव [20]विक्षिप्तमाकाशमभवत्तदा ॥ २५ ॥
पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः [21]सहस्रधा ॥ शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ २६ ॥
क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ॥ [22]विनतं [23]क्वचिदुद्भूतं क्वचिद्याति शनैःशनैः ॥ २७ ॥
सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ॥ [24]मुहुरूर्ध्वमुखं गत्वा [25]पपात वसुधातलम् ॥ २८ ॥

॥ १४ ॥ स्रोतसांनामनिर्देशपूर्वकंगतिभेदमाह—ह्लादिनीति । शुभाः शोभमानाः ॥ १४ ॥ महानदीति सर्वविशेषणं॥१६॥ सप्तमीत्यर्धं । तासांमध्ये ॥१७॥ स्यन्दनं रथं अनुव्रजत् अन्वव्रजत् । अत्रस्वर्गाकाशभूमिगमनात् त्रिपथगात्वमित्येके दिक्त्रयगमनादित्यपरे॥१८॥ एवं त्रीन्पथःकेनहेतुनेत्यस्योत्तरमभिधाय कर्मभिःकैः समन्वितेत्यस्यचरितभेदप्रश्नस्योत्तरमाह—गगनादिति । तीव्रशब्देहेतुरयं ॥ १९ ॥ शिंशुमारः अंबुकरी “ शिंशुमारस्त्वंबुकरी ” इतिवैजयन्ती । अन्यैः जलजन्तुविशेषैः ॥ २० ॥ गगनात् रुद्रजटागगनात् । गां भूमिं ॥ २१ ॥ नगराकारैः नगरवद्विपुलैः । पारिप्लवगतैः पारिप्लवंसंभ्रमं गतैरिति विमानादिविशेषणं।तत्र गङ्गापतनप्रदेशे । विष्ठिताः विशेषेणस्थिताः ॥ २२ ॥ लोके भूलोके । अमितौजसइत्यनेन प्रधानदेवाउच्यन्ते ॥ २३ ॥ सुरगणैः अमिततेजोभिरितिसिद्धं । आभाति अभात् ॥ २४ ॥ आकाशं चञ्चलैः शिंशुमारादिभिः विद्युद्भिरिव विक्षिप्तं व्याप्तं अभवत् ॥ २५ ॥ वेगवशेनसहस्रधाकीर्यमाणैः सलिलोत्पीडैः फेनैः हंससंप्लवैः हंससंकुलैः शारदाभ्रैरिव गगनमाकीर्णमित्यन्वयः ॥ २६ ॥ अत्रगङ्गेत्यनुषज्यते । द्रुततरमित्यादिक्रियाविशेषणं । आयतं ऋजु। विनतं निम्नेनसंकुचितं । उद्भूतं पाषाणस्खलनादिनाऊर्ध्वमुखं । सर्वत्रव्यत्ययेनभूतेलट् ॥२७॥ अभ्याहतं वातव्यावर्तितं

मत् अवाभ्रमत् । आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ १२ ॥ ति० शिंशुमारो नक्रः ॥ २० ॥ ति० पारिप्लवः यानभेदः

[ पा० ] १ क. ख. घ—ट. नलिनीचतथैवच. २ ख. ङ. च. झ. ञ. ट. तिस्रश्चैतादिशं. ३ ङ. झ. जग्मुःप्रतीचीं तुदिशंशुभाः. ४ इदमर्धं ख. दृश्यते. ५ ङ. झ. भगीरथरथंतदा. ६ ख. गङ्गातंचान्वगाच्छनैः. ७ क—ट. धरणिमागता. ८ ङ. झ. असर्पतजलं. ९ क. ख. तीव्रवेगपुरस्कृतम्. १० ख. ङ. च. छ. झ. ञ. पतितैश्चैव. ११ घ—ट. यक्षसिद्धगणास्तदा. ख. यक्षास्सुरगणास्तदा. क—ट. सिद्धगणास्तथा. १२ क. ट. गतांतदा. १३ ख. ग. छ. ज. ञ. ट. विमानैर्गगनाकारैः. १४ क—घ. च. छ. ज. ञ. ट. वरैस्तदा. १५ क—ञ. पारिप्लवगताश्चापि. १६ क. ख. च. छ. स्तत्रविस्मिताः. घ. स्तत्रशोभिताः. १७ ङ. च. छ. झ. ञ. तदद्भुतमिमं. १८ ङ. च. छ. झ. गङ्गावतरमुत्तमम्. ञ. गंगावतरणंशुभम्. १९ ख. ग. घ. ज. समेयुरमितौजसः. २० क. ञ. विक्षिप्तैः. २१ ख. सहस्रशः. २२ क. ख. घ. विततं. ट. विनीतं. २३ क—घ. झ. क्वचिदुद्धूतं. २४ क—ञ. मुहुरूर्ध्वपथं. ट. मुहुरूर्ध्वंगतिं. २५ ख. ग. ङ. च. छ. झ. ञ. वसुधांपुनः.

**तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ॥ व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २९ ॥**
**तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ॥ भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ ३० ॥**
**शापात्प्रपतिता ये च गगनाद्वसुधातलम् ॥ कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ ३१ ॥**

तरङ्गसलिलेनाभिमुखमाहतमित्यर्थः ॥ २८ ॥ शंकरशिरसिभ्रष्टं पतितमपि । ततःभूमितले पतितमपि । निर्मलं गतंकल्मषंयेन तद्गतकल्मषं पापापहमित्यर्थः ॥ २९ ॥ पवित्रं पावनं । तत्रज्ञापकहेतुमाह—भवाङ्गपतितमिति । भवेन रुद्रेण शिरसाधृतत्वात्पवित्रमितिज्ञात्वापस्पृशुरित्यर्थः । पवित्रमिति सामान्योक्त्याभवस्यान्येषांचपवित्रमित्युक्तं । अतएव "हरस्य गात्रसंस्पर्शात्पवित्रत्वमुपागता" इत्यत्रापिहरस्यशुद्धिप्रदत्वमुपागतेत्यर्थः । अन्येप्यृषयऊचुः श्रीमद्भागवते । "यच्छौचनिस्सृतसरित्प्रवरोदकेनतीर्थेनमूर्ध्निविधृतेनशिवःशिवोभूत्" इति । भारते "तदम्बुपतितंदृष्ट्वाद्धारशिरसाहरः। पावनार्थंजटामध्येयोग्योस्मीत्यवधारणात्" इति । अत्राप्ययोध्याकाण्डेवक्ष्यति "विष्णुपादोद्भवांदिव्यां" इति । गङ्गायाविष्णुपादोद्भवत्वेन पवित्रत्वरूपंदिव्यत्वं । भवाङ्गात्पतितमितिवार्थः ।"द्वितीयाश्रितातीतपतित—"इतिद्वितीयासमासविधानात् पञ्चमीसमासानुपपत्तेश्च भवेनधृतत्वादस्माभिरपिधार्यमितिपस्पृशुरित्येवार्थः । यद्वा भवाङ्गपतितत्वात्पवित्रंनतुपूर्ववदतिपवित्रं । अतएवपस्पृशुः नतुसस्नुः । यद्वा यद्यपिभवाङ्गात्पतितं तथापि विष्णुपादोद्भूतत्वात्पवित्रमितिवा । "नदीवेगेनशुध्यति" इतिन्यायाद्भवसंपर्कविगमेपवित्रमितिवापस्पृशुः ॥ ३० ॥ शापाद्धेतोः

शिबिकादिरूपःशिबिकादियानस्थाइत्यर्थइत्यन्ये ॥ २२ ॥ **ति०** हंससंप्लवैः हंससंचारैश्च आकीर्णं व्याप्तं ॥ २६ ॥ **शि०** निर्मलं शिलासुपातेनपङ्कादिरूपमलरहितं । किंच निर्गतोयोमःपरिमाणं । "घञर्थेकविधानं" इतिमाधातोःकः । तंलातिगृह्णातीतिनिर्मलं इयत्तारहितप्रभाववदित्यर्थः । गतकल्मषं गतानिनिवृत्तानिकल्मषाणि आश्रितानांपापानियस्मात्तत् । क्तप्रत्ययोपस्थितकालस्यात्राविवक्षा "कर्तुरीप्सिततमं" इतिसूत्रघटकीभूतक्तप्रत्ययोपात्तवर्तमानत्वस्येव । आश्रिताचाविवक्षा "गन्ताविदेशंपथिकःप्रियोमेत्वद्वाक्यमात्रावधिरेवयात्रा । अतोतिमौनंकुरुताम्रचूडत्वांस्वर्णचूडाख्यमहंवदिष्ये" इत्यादौ । तेनयदैवगङ्गादर्शनादितदैवतत्कर्तृणांपापक्षयइतिफलितं । शंकरशिरोभ्रष्टं शंकरशिरश्च्युतं पुनरनन्तरंभूमितलंभ्रष्टं ॥ २९ ॥ **ति०** पस्पृशुः सस्नुरित्यर्थः । **शि०** तत्रेति । तत्र गङ्गापतनकाले । ऋषिगणगन्धर्वाः वसुधातलवासिनश्च । भवाङ्गपतितं भवाङ्गात्पतितमित्यतःपवित्रं अतिशुद्धंतोयंपस्पृशुरेव । "सर्ववाक्यंसावधारणंभवति" इतिन्यायेनैवकारलाभः । अत्रपस्पृशुरेवेत्युक्त्यानसस्नुरितिफलितं । तेनावगाहानर्हवेगवत्त्वं तज्जलस्यसूचितं । पञ्चमीतियोगविभागेन संबन्धसामान्यषष्ठ्यावासमासः पूर्वविधावनत्वविधाविप्यादाविव । अतिपवित्रमित्यनेनस्वतःपवित्रत्वेसिद्धेपि भवाङ्गस्पर्शद्वारालोकानपिपावयिष्यतीतिहेतुर्ध्वनितः । एतेन अनुशासनविरहात्पञ्चमीसमासानुपपत्तिरितिप्रत्युक्तं । यत्तुसामान्योक्त्याशिवस्यापिपवित्रत्वकारकमितिभूषणकृद्भिरुक्तं तच्चिन्त्यं । हरस्येश्वरत्वेनतत्रमलसंबन्धस्यासंभवेनतंतपवित्रत्वकारकत्वस्यदुर्वचत्वात् । यदीश्वरेपिमलसंबन्धस्स्वीक्रियते तर्हि इयन्नुक्तेर्न्यूनतातेषांस्यात् । किंच हरिहरभक्तानांतीर्थपावनसामर्थ्यमस्तीतिस्मृत्यादिसिद्धम् । अतएव"साधवोन्यासिनश्शान्ताब्रह्मिष्ठालोकपावनाः । हरन्त्यघंतेऽङ्गसङ्गात्तेष्वास्तेह्यघभिद्धरिः"इति । गङ्गागमनसमयेगङ्गांप्रतिभगीरथवचनं । "भवद्विधाभागवतास्तीर्थभूतास्स्वयंप्रभो । तीर्थीकुर्वन्तितीर्थानिस्वान्तस्थेनगदाभृता"इत्यादिविदुरंप्रतियुधिष्ठिरवचनंनचसंगच्छते । एतेनगङ्गाजलसंबन्धाद्धरश्शुद्धः हराङ्गसंबन्धाच्चगङ्गामतिपवित्रतातत्याजेतिवचनंश्रेयस्कामैर्दूरतःपरिवर्जनीयं । आदरणीयंचेदंहरगात्रस्पर्शादतिपवित्रत्वंप्राप्तागङ्गेति । अतएव"हरस्यगात्रसंस्पर्शात्पवित्रत्वमुपागता"इत्यादीनिसंगच्छन्ते । संगच्छतेच "विष्णुपादोद्भवांदिव्यां"इत्यादि । पवित्रत्वमुपागतेत्यत्रपवित्रशब्दोतिपवित्रपरः ।"यच्छौचनिस्सृतसरित्प्रवरोदकेनतीर्थेनमूर्ध्न्यधिधृतेनशिवश्शिवोभूत्"इतिभागवतस्यत्वयमर्थः।शिवःस्वतस्सिद्धकल्याणस्वरूपः शिवः लोकानांकल्याणप्रदोऽभूदिति । अयंभावः । यदिशिवोगङ्गांनधारयेत् । तर्हिगङ्गापृथिव्यांनोपलभ्येत । तथाचलोककल्याणंनस्यात् धारणेतुसर्वंसिद्धमिति । अतएव"तदंबुपतितंस्पृष्ट्वादधारशिरसाहरः । पावनार्थंजटामध्येगतोस्मीत्यवधारणात्" इतिभारतपद्ये पूप्रकृतिकणिजन्तप्रकृतिकल्युडन्तप्रयोगः लोकानांपावनार्थमित्यर्थः । अन्यथा "तदंबुपतितंस्पृष्ट्वादधारशिरसाहरः । पूतोभूत्सजटामध्येगतोस्मीत्यवधारणात्"इत्येववदेत् । हरस्येश्वरत्वेप्रमाणंतु "सत्वंरजस्तमइतिप्रकृतेर्गुणास्तैः"इत्यादि । "धारयिष्यतितेवेगंरुद्रस्त्वात्माशरीरिणाम् । यस्मिन्नोतमिदंप्रोतंविश्वंशाटीवतन्तुषु । अहंब्रह्माचशर्वश्चजगतःकारणंपरम्"इत्यादिभागवतादिवचनमितिदिक् ॥ ३० ॥

[ पा० ] १ ट. भूमितलंपुनः. २ क. ख. घ—ट. तत्रर्षिगणगन्धर्वाः.

[1]धूतपापाः पुनस्ते[2]न तोयेनाथ सुभास्वता ॥ पुनराकाशमाविश्य [3]स्वाँल्लोकान्प्रतिपेदिरे ॥ ३२ ॥
मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ॥ कृताभिषेको गङ्गायां [4]बभूव विगतक्लमः ॥ ३३ ॥
[5]भगीरथोपि राजर्षिर्दिव्यं स्यन्दन[6]मास्थितः ॥ प्रायाद[7]ग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥ ३४ ॥
देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ॥ गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ ३५ ॥
[8]सर्वाश्चाप्सरसो राम भगीरथ[9]रथानुगाम् ॥ गङ्गामन्वगमन्प्रीताः सर्वे जलचराश्च ये ॥ ३६ ॥
यतो भगीरथो राजा ततो गङ्गा यशस्विनी ॥ जगाम सरितांश्रेष्ठा [10]सर्वपापविनाशिनी ॥ ३७ ॥
ततो हि यजमानस्य जह्नो[11]रद्भुतकर्मणः ॥ गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ ३८ ॥
तस्यावलेपनं ज्ञात्वा [12]क्रुद्धो जह्नुश्च राघव ॥ [13]अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥ ३९ ॥
[14]ततो देवाः सगन्धर्वा ऋषयश्च [15]सुविस्मिताः ॥ पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥
गङ्गां चापि नयन्तिस्म दुहितृत्वे महात्मनः ॥ ४० ॥
[16]ततस्तुष्टो महातेजाः श्रोत्राभ्या[17]मसृजत्पुनः ॥ ४१ ॥
[ [18]विसृज्य गङ्गां राजेन्द्रो ज्ञात्वा प्राप्तं भगीरथम् ॥ पूजयित्वा यथान्यायं यज्ञवाटमुपागमत् ] ॥
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥ ४२ ॥
जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥ सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ॥
रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मणः ॥ ४३ ॥
भगीरथोपि राजर्षिर्गङ्गामादाय यत्नतः ॥ पितामहान्भस्मकृता[19]नपश्यद्दीनचेतनः ॥ ४४ ॥
अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् ॥ [20]प्लावयद्धूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥ ४५ ॥

॥ ३१ ॥ आकाशमाविश्य आकाशमार्गेणेत्यर्थः ॥३२॥ मुदितो मुमुदे पुनःपुनर्जहर्षेत्यर्थः ॥३३–३४॥ देवाइतिश्लोकद्वयं । भगीरथरथानुगांगङ्गामन्वगमन् ॥ ३५–३६ ॥ यतः यत्र । ततः तत्र ॥ ३७ ॥ अद्भुतकर्मणइतिवक्ष्यमाणगङ्गापानाभिप्रायं । यज्ञवाटं यज्ञक्षेत्रं ॥ ३८ ॥ वलेपनं गर्वं । परमाद्भुतमितिक्रियाविशेषणं ॥ ३९ ॥ ततइतिसार्धश्लोकः । दुहितृत्वे नयतिस्म दुहितरमकुर्वन्नित्यर्थः ॥ ४० ॥ ततः दुहितृत्वप्रापणात् । श्रोत्राभ्यां नरावयवेषुश्रोत्रस्यातिपावनत्वादितिभावः ॥ ४१–४२ ॥ जगामेत्यर्धत्रयं । तस्यकर्मणः भगीरथयत्नस्य ॥ ४३ ॥ भस्मकृतान् भस्मत्वेनकृतान् ॥ ४४ ॥ तत्सलिलं प्लावयत् । अप्लावयत् ।

**ति०** मुदितः दर्शनमात्रेण । मुमुदे स्नानपानादिना ॥ ३३ ॥ **शि०** अत्र प्रार्थनांविनैवगङ्गायज्ञशालांप्रापेत्यनेनजह्नोर्गङ्गोपासकत्वंसूचितं ॥ ३८ ॥ **शि०** हेराघव तस्यागङ्गायाः वले यागशालायाआच्छादने । प्लावनेइत्यर्थः । पनं अहोभाग्यमेतस्ययस्ययज्ञशालांगङ्गाप्राप्तेतिस्वकीयांस्तुतिमेव ज्ञात्वा । अतएव अक्रुद्धः क्रोधरहितएव जह्नुः । परमाद्भुतं लौकिकविलक्षणं सर्वंगङ्गायाजलं अपिबत् । तेनजह्नोःगङ्गाविषयकप्रीत्यतिशयस्सूचितः । तुशब्दावेवार्थे । यत्तुक्रुद्धइतिच्छित्वागङ्गासंप्रदानककोपंवर्णयन्ति तच्चिन्त्यं । गङ्गायाभगीरथानुगमनशीलत्वेनकोपाविषयत्वात् । भगीरथसंप्रदानककोपावर्णनाच्च ॥ ३९ ॥ इतित्रिचत्वारिंशस्सर्गः ॥ ४३ ॥

**[ पा० ]** १ च. छ. ञ. धूतशापाः. २ ङ. झ. तोयेनाथशुभान्विताः. क. ख. च. छ. ञ. तोयेनानेनभास्वता. ट. तोयेनचसुभास्वता. ३ क. च. छ. ञ. स्वर्गलोकंप्रपेदिरे. ४ ख. ङ. च. छ. झ. ञ. बभूवगतकल्मषः. ५ ङ. च. छ. झ. ञ. भगीरथोहि. ६ ख. झ. माश्रितः. ७ ङ. झ. दग्रेमहाराजः. ८ घ. ङ. झ. सर्वाश्चाप्सरसो. ९ क. ट. रथानुगाः. १० ख. ङ. च. छ. झ. ञ. सर्वपापप्रणाशिनी. ११ घ. जह्नोरमिततेजसः. १२ क—ट. क्रुद्धोजह्नुस्तु. ग. क्रुद्धोयज्वाच. घ. ज. क्रुद्धोराजाच. १३ क. ख. घ—ट. अपिबत्तुजलं. १४ क. ख. ततोदेवाश्च. १५ घ. तपोधनाः. १६ घ. ततस्तुष्टोमहाराजः. १७ ङ. झ. मसृजत्प्रभुः. १८ इदमर्धद्वयं ख. च. छ. ञ. दृश्यते. १९ ङ. च. छ. झ. ञ. नपश्यद्गतचेतनः. २० ख. घ. ज. झ. प्लावयत्पूतपाप्मानः.

[1][ ततस्तु गङ्गां प्रतिलभ्य राजा दिलीपसूनुर्गगना.... ।
हृष्टोऽवतार्याशु नृपाच्च जह्नोः संभावयामास पितामहान्सः ] ॥ ४६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

ब्रह्मणाभगीरथंप्रतिसश्लाघंपितामहानांसलिलदानचोदनपूर्वकंस्वलोकगमनम् ॥ १ ॥ भगीरथेनतदनुष्ठानपूर्वकंस्वपुरमेत्य-प्रजापालनेनसुखनिवासः ॥ २ ॥

स गत्वा सागरं राजा गङ्गयाऽनुगतस्तदा ॥ प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १ ॥
भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै ॥ सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २ ॥
तारिता नरशार्दूल दिवं याताश्च देववत् ॥ [2]षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३ ॥
सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ॥ सगरस्यात्मजाँ[3]स्तावत्स्वर्गे स्थास्यन्ति देववत् ॥ ४ ॥
[4]इयं हि दुहिता ज्येष्ठा तव गङ्गा भविष्यति ॥ त्वत्कृतेन च [5]नाम्नाऽथ लोके स्थास्यति विश्रुता ॥५॥
गङ्गा [6]त्रिपथगा राजन्दिव्या भागीरथीति च ॥ त्रीन्पथो [7]भावयन्तीति [8]ततस्त्रिपथगा स्मृता ॥ ६ ॥
पितामहानां सर्वेषां त्वमत्र मनुजाधिप ॥ कुरुष्व सलिलं राजन्प्रतिज्ञामप[9]वर्जय ॥ ७ ॥
पूर्वके[10]ण हि ते राजंस्तेनातिय[11]शसा तदा ॥ धर्मिणां [12]प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ८ ॥
तथैवांशुम[13]ता तात लोकेऽप्रतिमतेजसा ॥ गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९ ॥
राजर्षिणा गुणवता महर्षिसमतेजसा ॥ मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥ १० ॥
दिलीपेन [14]महाभाग तव पित्रातितेजसा ॥ पुन[15]र्न शङ्किता नेतुं गङ्गां प्रार्थयताऽनघ ॥ ११ ॥
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ ॥ प्राप्तोसि परमं लोके यशः परमसंमतम् ॥ १२ ॥

वयत् । प्राप्ताः सगरपुत्राइतिशेषः ॥ ४५-४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिचत्वारिंशःसर्गः ॥ ४३ ॥

पूर्वसर्गान्तेसंग्रहेणोक्तंविस्तृणीते चतुश्चत्वारिंशे—सगत्वेत्यादि । भूमेस्तलं पातालं । भस्मसात्कृताः सर्वात्मनाभस्मस्वभावापत्तयेसंपादिताः । “ विभाषासातिकार्त्स्न्ये ” इतिसातिः ॥ १-२ ॥ तारिताः प्रेतभावान्मोचिताः ॥३॥ स्वर्गप्राप्तेर्विशेषंचाह—सागरस्येति ॥ ४ ॥ त्वत्कृतेननाम्ना लोकेविश्रुता ॥ ५ ॥ तदेवनामद्वयंदर्शयन् त्रिपथगाशब्दंव्युत्पादयति—गङ्गेति ॥ ६ ॥ प्रतिज्ञां गङ्गासलिलप्रदानेनसागरांस्तारयिष्यामीतिप्रतिज्ञां । अपवर्जय समापय ॥ ७ ॥ पूर्वकेण सगरेण ॥ ८ ॥ नापवर्जिता नसमापिता ॥९॥ राजर्षिणेतिश्लोकद्वयं । गङ्गांप्रार्थयतापि सापुनर्नेतुंनशङ्किता नविचारितेत्यर्थः ॥ १०-११ ॥ समतिक्रा-

ति० भस्मसात्कृताःकार्त्स्न्येनभस्मकृताः ॥ १ ॥ ति० पूर्वकेण सगरेण । एषः गङ्गालाभरूपः । पूर्वकेणेतिकप्रत्ययेन एषैवकुत्सा. द्योत्यते ॥ ७ ॥ ति० गङ्गांनेतुंप्रार्थयता सा गङ्गा नेतुंनशकितेत्यर्थः । यत्तुमहेश्वरतीर्थीये गङ्गामानेतुं नशङ्किता नविचारिता प्रतिज्ञेतिशेषः । चिन्ताविषयमपिनप्रापितेत्यर्थइति । तत् प्रार्थयतेतिपदस्वरसविरोधाच्चिन्त्यं ॥ ११ ॥

[ पा० ] १ इदंपद्यं ख. दृश्यते. २ च. छ. ज. षष्टिपुत्रसहस्राणि. ३ च. छ. झ. ञ. स्सर्वेदिविस्थास्यन्ति. ४ क. ख. इयंचदुहिता. ५ ख. ग. घ. ज. ट. नाम्नावै. ६ क.—ट. त्रिपथगानाम. ७ क. गमयन्तीति. ८ ङ. झ. तस्मात्रिपथगा. ९ क. मपवर्तय. घ. ज. मनुवर्जय १० क. ख. घ. च. ञ. पूर्वकेणापिते. ११ ज. ट. यशसातथा. १२ क. ख. घ.—ट. प्रवरेणापि. १३ क. ख. घ.—ट. मतावत्स. १४ घ. महाराज. १५ ङ. झ. नशकितानेतुं.

यच्च गङ्गावतरणं त्वया कृतमरिंदम ॥ अनेन च भवान्प्राप्तो धर्मस्यायतनं महत् ॥ १३ ॥
प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते ॥ सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव ॥ १४ ॥
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ॥ स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप ॥१५॥
इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः ॥ यथाऽऽगतं तथा गच्छद्देवलोकं महायशाः ॥ १६ ॥
भगीरथोपि राजर्षिः कृत्वा सलिलमुत्तमम् ॥ यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७ ॥
कृतोदकः शुची राजा स्वपुरं प्रविवेश ह ॥ समृद्धार्थो नरश्रेष्ठ स्वराज्यं प्रशशास ह ॥ १८ ॥
प्रमुमोद च लोकस्तं नृपमासाद्य राघव ॥ नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ १९ ॥
एष ते राम गङ्गाया विस्तरोऽभिहितो मया ॥ स्वस्ति प्राप्नुहि भद्रं ते सन्ध्याकालोतिवर्तते ॥ २० ॥
धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्ग्यमतीव च ॥ यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥
प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च ॥ २१ ॥
इदमाख्यानमव्यग्रो गङ्गावतरणं शुभम् ॥ यः शृणोति च काकुत्स्थ सर्वान्कामानवाप्नुयात् ॥
सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्धते ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

प्रातःकृताह्निकैर्विश्वामित्रादिभिर्नौकयागङ्गामुत्तीर्यउत्तरतटेविशालाख्यनगरीदर्शनम् ॥ १ ॥ विशालावृत्तान्तंपृष्टेनविश्वामित्रेणरामंप्रतितदुपोद्घाततयाक्षीरोदमथनकथाकथनम् ॥ २ ॥

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ॥ विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १ ॥
अत्यद्भुतमिदं ब्रह्मन्कथितं परमं त्वया ॥ गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २ ॥

---

न्तानिस्तीर्णो ॥ १२ ॥ आयतनं प्रतिष्ठां ॥१३॥ प्लावयस्व स्नानंकुर्वित्यर्थः । सदोचिते सदास्नानयोग्ये । अन्यासामेवहिनदीनांरजोदोषइतिभावः ॥ १४ ॥ गम्यतां त्वयापीतिशेषः ॥१५॥ यथाऽऽगतं तथाऽगच्छत् । एकएवेत्यर्थः ॥ १६ ॥ भगीरथइतिश्लोकद्वयं । यथाक्रमं कृतोदकः अन्येषामपीतिशेषः । प्रशशासह प्रशशासचेत्यर्थः ॥ १७ ॥ १८ ॥ विगतज्वरः निरामयइत्यर्थः ॥ १९ ॥ उपसंहरति—एषइति । भद्रंतेस्त्वितिवचनपरिपाटी । सन्ध्याकालोतिवर्तते । इतःपरंनप्रष्टव्यमितिभावः ॥ २० ॥ अथगङ्गावतारश्रावणफलमाह—धन्यमिति । धनादिप्रदमित्यर्थः । सर्वत्रसाधुत्वार्थेयत्प्रत्ययः । इदमाख्यानमित्यनुषज्यते । अर्धत्रयम् ॥२१॥ श्रावयितुःफलमुक्तं संप्रतिश्रोतुःफलमुच्यते । गङ्गावतरणं गङ्गावतरणाख्यं । अर्धत्रयम् ॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुश्चत्वारिंशःसर्गः ॥ ४४ ॥

---

एवंदशभिःसर्गैर्गङ्गागाङ्गेयसंभववर्णनव्याजेनधातुमोक्षणगङ्गापूतत्वनिमित्तकं देवतान्तरावरत्वं दर्शितं । अथत्रिभिस्सर्गैःमहेन्द्रस्यावरत्वमुपपाद्यते—विश्वामित्रेत्यादि ॥ १ ॥ पूरणं खननेनाभिवर्धनं ॥ २ ॥

---

ति० धर्मस्यायतनं । धर्मप्राप्यस्थानं महद्ब्रह्मलोकरूपं ॥ १३ ॥ ति० पुण्यफलइति मत्वर्थीयाजन्तोबहुव्रीहिर्वा ॥ १४ ॥ ति० गम्यतां स्वपुरमितिशेषः ॥ १५ ॥ ति० उत्तमं उत्तमलोकप्रापकं ॥ १७ ॥ इतिचतुश्चत्वारिंशस्सर्गः ॥ ४४ ॥

ति० पूरणं गङ्गयेतिशेषः ॥ २ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. तच्चगङ्गावतरणं. २ क. ख. ङ.—ट. पुरुषश्रेष्ठ. ३ ख. स्वर्लोकं. ञ. स्वलोकं. ४ क. घ. ट. नरश्रेष्ठः. ५ घ. सराज्यं. ६ ख. घ. पौत्र्यं. ७ क. ङ.—ढ. स्वर्ग्यमथापिच. ८ ङ. च. छ. झ. ञ. मायुष्यं. ९ क. सर्वेपापाः. ट. सर्वेपापानिनश्यन्ति.

क्षणभूतेव नौ[1] रात्रिः संवृत्तेयं महातपः[2] ॥ इमां चिन्तयतस्सर्वां निखिलेन कथां तव ॥ ३ ॥
[ संतुष्टं[3] मे मनो ब्रह्मन्नित्युक्त्वा विरराम हा ] ॥ तस्य सा शर्वरी सर्वा सह[4] सौमित्रिणा तदा ॥
जगाम चिन्तयानस्य विश्वामित्र कथांशुभाम् ॥ ४ ॥
ततः प्रभाते विमले विश्वामित्रं महामुनिम्[5] ॥ उवाच राघवो वाक्यं कृताह्निकमरिंदमः ॥ ५ ॥
गता भगवती रात्रिः श्रोतव्यं परमं[6] श्रुतम् ॥ ६ ॥
तराम सारितां श्रेष्ठां पुण्यां[7] त्रिपथगां नदीम् ॥ नौरेषा हि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम् ॥
भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ॥ संतारं कारयामास सर्षिसङ्घः[8] सराघवः ॥ ८ ॥
उत्तरं तीरमासाद्य संपूज्यर्षिगणं[9] तदा ॥ गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥ ९ ॥
ततो मुनिवर[10]स्तूर्णं जगाम सहराघवः ॥ विशालां नगरीं रम्यां[11] दिव्यां स्वर्गोपमां तदा ॥ १० ॥
अथ रामो महाप्राज्ञो[12] विश्वामित्रं महामुनिम् ॥ पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ॥ ११ ॥
कतरो[13] राजवंशोऽयं विशालायां महामुने ॥ श्रोतुमिच्छामि भद्रं ते परं कौतूहलं हि मे ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुङ्गवः ॥ आख्यातुं तत्समारेभे विशालस्य[14] पुरातनम् ॥ १३ ॥
श्रूयतां राम शक्रस्य कथां कथयतः[15] शुभाम् ॥ अस्मिन्देशे[16] तु यद्वृत्तं तदपि शृणु राघव ॥ १४ ॥
पूर्वं कृतयुगे राम दितेः पुत्रा महाबलाः ॥ अदितेश्च महाभाग वीर्यवन्तः सुधार्मिकाः ॥ १५ ॥
ततस्तेषां नरश्रेष्ठ[17] बुद्धिरासीन्महात्मनाम् ॥ अमरा[18] अजराश्चैव कथं स्याम निरामयाः ॥ १६ ॥
तेषां चिन्तयतां[19] राम बुद्धिरासीन्[20]महात्मनाम् ॥ क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥ १७ ॥

---

क्षणभूतेवनौरात्रिरितिश्लोको गताभगवतीत्यर्धात्परमनुसन्धेयः ॥३॥ क्षणभूतेव जगामेत्यर्थः ॥ ४ ॥ विमले प्रभाते सम्यक्प्रभातइत्यर्थः ॥ ५ ॥ गतेत्यर्धत्रयं । भगवती सत्कथायुक्तत्वात्पूज्या ॥ ६ ॥ तरामेत्यर्धत्रयं । ऋषीणांनौः ऋषितरणार्हा नौः ॥ ७ ॥ सराघवःसर्षिसङ्घः । कारयामास अकरोत् । स्वार्थेणिच् ॥ ८ ॥ ऋषिगणं नौतारणार्थआगतं । संपूज्य पूजापूर्वकंनिवर्त्य । निविष्टाः क्षणंस्थिताः ॥ ९ ॥ विशालां प्रतीतिशेषः ॥ १० ॥ विशालां विशालामाहात्म्यं ॥ ११ ॥ विशालायांवर्तमानो राजवंशःकतरइति द्वितीयःप्रश्नः ॥ १२ ॥ विशालस्य विशालाख्यनगरस्य । पुरातनं कर्म प्रथमपृष्टंवैभवं । आख्यातुंसमारेभे ॥ १३ ॥ अस्मिन्देशेयद्वृत्तंतच्छृणु । तच्छेषतयाशक्रस्यकथांकथयतोमत्तःसाश्रूयतां ॥ १४ ॥ पूर्वं कृतयुगे दितेःपुत्रामहाबलाआसन् । अदितेःपुत्रावीर्यवन्तोधार्मिकाश्चासन् ॥ १५ ॥ म्रियन्तइतिमराः पचाद्यच् । अमराः मरणरहिताः । अजराः जरारहिताः । तेषां देवासुराणां ॥ १६ ॥ रसं अमृतं । तत्र क्षीरोदे

---

**ति०** विश्वामित्रेतिसंबोधनं । उक्तस्यैवादरातिशयबोधनायपुनरुपादानम् ॥७॥ **ति०** कारयामास नाविकैरितिशेषः ॥ ८ ॥ **ति०** विशालस्येतिपाठेतन्नगरीनिर्मातारराजाविशालोनाम ॥ १३ ॥ **ति०** शक्रस्यकथां विशालवैभवप्रतिपादिकांकथांकथयतस्सकाशान्मयाश्रुताम् ॥ १४ ॥ **वि०** रसं अमृतरूपंरसायनम् ॥ १७ ॥

[ **पा०** ] १ ङ. सारात्रिः. २ ङ. झ. परंतप. ३ इदमर्धं ज. ट. दृश्यते. ४ झ. ममसौमित्रिणासह. ५ ङ. च. छ. झ. तपोधनम्. ६ झ. परमाद्भुतम्. ७ ख. गंगांत्रिपथगां. ८ ङ. झ. ञ. सर्षिसंघस्यकौशिकः. ९ क. ख. घ.—ट. गणंततः. १० क. मुनिवरश्रेष्ठः. ११ ग. घ. सौम्यां. १२ क. ट. महाप्राज्ञं. १३ ङ. झ. कतमो. १४ ख. ज. झ. विशालायाःपुरातनम्. १५ झ. कथयतश्श्रुताम्. १६ क. च. ट. तांमेनिगदतोवत्सश्शृणुतत्वेनराघव. ङ. च. छ. झ. ञ. अस्मिन्देशेहि. क. ग. घ. ज. अस्मिन्हिदेशे. १७ क. ग. ङ—ट. नरव्याघ्र. घ. महाभाग. १८ ख. अमरानिर्जराश्चैव. क. घ—ज. ञ. विज्वराश्चैव. झ. ट. विजराश्चैव. १९ ङ. झ. चिन्तयतांतत्र. २० क. ख. ङ—ट. रासीद्विपश्चिताम्.

ततो निश्चित्य मथनं योक्त्रं[१] कृत्वा च वासुकिम् ॥ मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः ॥१८॥
[*[२]अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च ॥ वमन्त्यतिविषं[३] तत्र ददंशुर्दशनैः शिलाः ॥ १९ ॥
उत्पपाताग्निसंकाशं हालाहलमहाविषम् ॥ तेन दग्धं जगत्सर्वं सदेवासुरमानुषम् ॥ २० ॥
अथ देवा महादेवं शंकरं शरणार्थिनः ॥ जग्मुः पशुपतिं रुद्रं त्राहित्राहीति तुष्टुवुः ॥
एवमुक्तस्ततो देवैर्देवदेवेश्वरः प्रभुः ॥ २१ ॥
प्रादुरासीत्ततोऽत्रैव शङ्खचक्रधरो हरिः ॥ उवाचैनं स्मितं कृत्वा रुद्रं शूलभृतं[४] हरिः ॥ २२ ॥
दैवतैर्मथ्यमाने तु यत्पूर्वं समुपस्थितम् ॥ तत्त्वदीयं सुरश्रेष्ठ सुराणामग्रजोसि[५] यत् ॥ २३ ॥
अग्र[६]पूजामिमां मत्वा गृहाणेदं विषं[७] प्रभो ॥ इत्युक्त्वा च सुरश्रेष्ठस्तत्रैवान्तरधीयत ॥ २४ ॥
देवतानां भयं दृष्ट्वा श्रुत्वा वाक्यं तु शार्ङ्गिणः ॥ हालाहल[८]विषं घोरं स जग्राहा[९]मृतोपमम् ॥२५॥
देवान्विसृज्य देवेशो जगाम भगवान्हरः ॥ ततो देवासुराः सर्वे ममन्थू रघुनन्दन ॥ २६ ॥
प्रविवेशाथ पातालं मन्थानः पर्वतो[१०]ऽनघ ॥ ततो देवाः सगन्धर्वास्तुष्टुवुर्मधुसूदनम् ॥ २७ ॥
त्वं गतिः सर्वभूतानां विशेषेण दिवौकसाम् ॥ पालयास्मान्महाबाहो गिरिमुद्धर्तुमर्हसि ॥ २८ ॥
इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः ॥ पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः ॥ २९ ॥
[११]पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः ॥ देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तम ॥ ३० ॥
उदतिष्ठत्स धर्मात्मा आयुर्वेदमयः पुमान् ] ॥ ३१ ॥
अथ वर्षसहस्रेण सदण्डः सकमण्डलुः ॥ [१२]पूर्वं धन्वन्तरिर्नाम अप्सराश्च सुवर्चसः ॥ ३२ ॥
अप्सु निर्मथनादेव [१३]रसस्तस्माद्वरस्त्रियः ॥ उत्पेतुर्मनुजश्रेष्ठ तस्माद्[१४]प्सरसोऽभवन् ॥ ३३ ॥

॥ १७ ॥ योक्त्रं मथनरज्जुं । मन्थानं मथनदण्डं ॥ १८—३१ ॥ धन्वन्तरिरुत्पपात अप्सराश्च उत्पेतुरितिशेषः । आकारान्तत्वमार्षं ॥ ३२ ॥ अप्सरश्शब्दंनिर्वक्ति । अत्राप्शब्देनतद्विकारभूतंक्षीरमुपलक्ष्य-

ति० योक्त्रसर्पोमन्थानरज्जुभूतस्सर्पः । वमन्तइतिपुंस्त्वमार्षं । अतिअतिशयितंविषं ॥ १९ ॥

[ पा० ] १ क. कृत्वायोक्त्रंच. * कुण्डलान्तर्गतपाठस्थाने. क. ख. पुस्तकयोरयंपाठोदृश्यते—

अथ दीर्घेण कालेन कालाग्निसदृशं विषम् । उदतिष्ठन्नरश्रेष्ठ हालाहलमिति श्रुतम् ॥ १ ॥
सुरासुराश्च वित्रस्ता दग्धास्तेन विषाग्निना । शरण्यं शरणं जग्मुर्भगवन्तं महेश्वरम् ॥ २ ॥
कृत्वाऽल्पपिण्डं पाणिस्थं तद्विषं भगवान्हरः । सर्वलोकहितार्थाय भगवान्परमेश्वरः ॥ ३ ॥
कण्ठस्थमकरोत्प्राश्य लीलया लोकपूजितः । प्रणम्य विज्वरा जग्मुर्देवदेवं वृषध्वजम् ॥ ४ ॥
मन्दरं पूर्ववत्कृत्वा ममन्थुरमितौजसः । ततः पर्वतमूलं तु पातालं तु प्रवेशितम् ॥ ५ ॥
सुरासुराश्च निश्चेष्टा बभूवुः क्लेशविक्लवाः । देवदुःखनिवृत्त्यर्थमागतः पुरुषोत्तमः ॥ ६ ॥
भयं त्यजत भद्रं व उद्धरिष्याम्यहं गिरिम् । इत्युक्त्वा कूर्मरूपेण विवेश क्षीरवारिधौ ॥ ७ ॥
मन्दरं पृष्ठतः कृत्वा ववृधे कूर्मरूपधृत् । सुरासुरैरनाक्रान्तमुद्धृतोऽथ नरोत्तम ॥ ८ ॥
नगाग्रं पीडयामास वामहस्तेन माधवः । ममन्थ देवतानां च मध्ये नारायणो हरिः ॥ ९ ॥
अथ वर्षसहस्रेण ज्येष्ठा नाम वराङ्गना । उत्पपात वरारोहा सागरैरेव कल्पिता ॥ १० ॥
अभवत्पारिजाताख्यो वृक्ष इन्द्राय कल्पितः ॥ ११ ॥

२ एतदादयःकुण्डलान्तर्गतास्त्रयोदशश्लोकाः. ङ—ट. पाठेष्वदृश्यन्ते. ३ ङ—ट. वमन्तोतिविषं. ४ ङ. च. छ. झ. ञ. शूलधरं हरिः. ५ ङ. ज. झ. ट. अग्रतोह्यितत्. ६ ङ—ट. अग्रपूजामिहस्थित्वा. ७ ट. विषंविभो. ८ ङ. छ. ज. झ. ञ. हालाहलंविषं. ९ ङ—ट. संजग्राहामृतोपमम्. १० ङ. झ. ञ. ट. मन्थानःपर्वतोत्तमः. ११ च. छ. ज. पर्वताग्रेतु. १२ ङ. च. छ. झ. ञ. ट. अथधन्वन्तरिर्नाम. ज. धन्वन्तरीराम. घ. धन्वन्तरिस्समुत्तस्थावप्सराश्च. १३ ख.—ट. रसात्तस्माद्वरस्त्रियः. क. ततस्तस्माद्वरस्त्रियः. १४ ख. दप्सरसस्स्मृताः.

षष्टिः कोट्योऽभवंस्तासामप्सराणां सुवर्चसाम् ॥ असंख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः ॥३४॥
न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः ॥ अप्रतिग्रहणादेव तेन साधारणाः स्मृताः ॥ ३५ ॥
वरुणस्य ततः कन्या वारुणी रघुनन्दन ॥ उत्पपात महाभागा मार्गमाणा परिग्रहम् ॥ ३६ ॥
दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् ॥ अदितेस्तु सुता वीर जगृहुस्तामनिन्दिताम् ॥३७॥
असुरास्तेन दैतेयाः सुरास्तेनादितेः सुताः ॥ हृष्टाः प्रमुदिताश्चासन्वारुणीग्रहणात्सुराः ॥ ३८ ॥
उच्चैःश्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् ॥ [उदतिष्ठन्नरश्रेष्ठ सोमदेवस्तथैव च ॥ ३९ ॥
तुरगं देवराजाय कौस्तुभं केशवाय च ॥ धन्वन्तरिर्महातेजा लोकरक्षणतत्परः ॥ ४० ॥
आयुर्वेदमयो राम तथा साधारणः स्मृतः ॥ सुरासुराश्च गन्धर्वाः क्षोभयामासुरंबुधिम् ॥ ४१ ॥
ततो दीर्घेण कालेन चोत्पन्ना कमलालया ॥ अतीव रूपसंपन्ना प्रथमे वयसि स्थिता ॥ ४२ ॥
सर्वाभरणपूर्णाङ्गी सर्वलक्षणलक्षिता ॥ मकुटाङ्गदचित्राङ्गी नीलकुञ्चितमूर्धजा ॥ ४३ ॥
तप्तहाटकसंकाशा मुक्ताभरणभूषिता ॥ चतुर्भुजा महादेवी पद्महस्ता वरानना ॥ ४४ ॥
सा च देवी तथोत्पन्ना पद्मा श्रीर्लोकपूजिता ॥ सा पद्मा पद्मनाभस्य ययौ वक्षस्स्थलं हरेः] ॥४५॥
उदतिष्ठन्नरश्रेष्ठ तथैवामृतमुत्तमम् ॥ ४६ ॥
अथ तस्य कृते राम महानासीत्कुलक्षयः ॥ अदितेस्तु ततः पुत्रा दितेः पुत्रानसूदयन् ॥ ४७ ॥
एकतोऽभ्यागमन्सर्वे ह्यसुरा राक्षसैस्सह ॥ युद्धमासीन्महाघोरं वीर त्रैलोक्यमोहनम् ॥ ४८ ॥
यदा क्षयं गतं सर्वं तदा विष्णुर्महाबलः ॥ अमृतं सोहरत्तूर्णं मायामास्थाय मोहिनीम् ॥ ४९ ॥
ये गताऽभिमुखं विष्णुमक्षयं पुरुषोत्तमम् ॥ संपिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥ ५० ॥

ते । अप्सुयन्निर्मथनंतस्माद्योरसस्तस्माद्रसाद्यतउत्पेतुस्तस्मादप्सरसोऽभवन् । पृषोदरादित्वात्साधुः ॥३३॥ तासां प्रधानभूतानां ॥३४॥ नताःस्मप्रतिगृह्णन्ति नासाधारण्येनप्रतिगृह्णन्तिस्मेत्यर्थः । कुतः अप्रतिग्रहणात् कोवाममपतिरितिमार्गणाकरणादित्यर्थः । तेन असाधारण्येनपरिग्रहाकरणेन ॥३५॥ वरुणस्य समुद्राधिदेवतायाः । वारुणी सुराधिदेवता । परिग्रहं ममेयमितिपरिग्रहस्यकर्तारं ॥३६–३७॥ प्रसङ्गात्सुरासुरशब्दौनिर्वक्ति—असुराइति । तेन सुरायाः परिग्रहणेन । सुराः अर्शआदित्वादजन्तः । पिष्टादिविकृतिरेवसुरानिन्द्या । हृष्टाः पुलकिताः ॥३८—४५॥ उत्तमं पूर्वोत्पन्नेभ्यःश्रेष्ठं ॥४६॥ तस्यकृते अमृतस्यग्रहणार्थमित्यर्थः । कुलक्षयः उभयपक्षेपिसञ्जातविनाशः । तदेवोपपादयति—अदितेरित्यादिना ॥ ४७ ॥ अनन्तरमसुराः । एकतः एकतां । अभ्यागमन् । बलवृद्धयइतिभावः ॥ ४८ ॥ मोहिनीं काममोहजननीं । मायां आश्चर्यशक्तिं । आस्थाय अवलंब्य स्वमाययाद्भुतयोषिदाकृतिंपरिगृह्य । तद्रूपेणतानवञ्चयित्वातेभ्योमृतमहरदित्यर्थः । यद्वा सर्वमोहकरीमन्तर्धानशक्तिमास्थायामृतमाहरदित्यर्थः । पुराणान्तरवृत्तान्तःकल्पभेदेनेतिबोध्यम् ॥ ४९ ॥ अत्रसन्धिरार्षः । येअसुराः अक्षयं अस्तिजायतेपरिणमतेविवर्धतेअपक्षीयतेविनश्यतीत्युक्तषड्भावvi-

शि० तेन देवासुरसमूहेन तासामप्रतिग्रहणादेव तास्साधारणास्स्मृताः । ताइत्युभयान्वयि ॥ ३५ ॥ ति० अदितिसुतांगीकारेहेतुः—अनिन्दितामिति । निषेधशास्त्रंतुमानुषविषयं ॥ ३७ ॥ शि० तत्रासुरशब्देबहुव्रीहिः । सुरशब्दोर्शआद्यजन्तः । एतदनुरोधेन "अथासीद्वारुणीदेवीकन्याकमललोचना । असुराजगृहुस्तांवैहरेरनुमतेनते" इतिभागवतस्थलयमर्थः । हरेरनुमतेस्थिताअसुराःतांवारुणींकन्यांनजगृहुः सुराएवजगृहुरित्यर्थः । किंचअसुराःजगृहुःसुरैर्ग्राहयामासुरिति ॥ ३८ ॥ ति० अत्रममन्थुरमितौजसइतिश्लोकानन्तरं "अथवर्ष–"इत्यादि "आयुर्वेदमयःपुमान्" इत्यन्तत्रयोदशश्लोकाःप्रक्षिप्ताइतिबहवः ।

[पा० ] १ ङ. झ. ग्रहणादेवतावै. ग. घ. ग्रहणाच्चैव. क. ग्रहणाच्चेति. २ क. ज. ट. सुराराम. ३ क. उच्चैश्श्रवास्तुतुरगः. ज. ट. उच्चैश्श्रवाहरिश्रेष्ठो. ४ एतत्कुण्डलान्तर्गतंसार्धश्लोकषट्कं क. ख. च. छ. पुस्तकेषुदृश्यते. ५ ख. ममन्थुःक्षीरवारिधिम्. ६ ख. लोकविश्रुता. ७ ङ. च. छ. झ. ञ. दितिपुत्रानयोधयन्. ८ ङ. झ. ञ. एकतामगमन्सर्वे. क. घ. ज. ट. एकतोभ्यगमन्. ९ ज. ह्यमराराक्षसैस्सह. १० क. ख. च. छ. येतदाभिमुखं. ११ ङ. झ. मक्षरंपुरुषोत्तमम्.

अदितेरात्मजा वीरा दितेः पुत्रान्निजघ्निरे ॥ तस्मिन्युद्धे महाघोरे दैतेयादित्ययोर्भृशम् ॥ ५१ ॥
निहत्य दितिपुत्रांश्च राज्यं प्राप्य पुरंदरः ॥ शशास मुदितो लोकान्सर्षिसङ्घान्सचारणान् ॥ ५२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

सुरनिहतपुत्रयादित्याभर्तारंकश्यपंप्रतिइन्द्रहन्तृपुत्रप्रदानप्रार्थना ॥ १ ॥ इन्द्रेणभर्तृचोदनयापुत्रार्थंतपश्चरन्त्यादितेःशुश्रूषणम् ॥ २ ॥ कदाचनदिवास्वपन्त्यास्तस्याउदरंप्रविष्टेनेन्द्रेणसप्तधातद्गर्भविभेदनम् ॥ ३ ॥ ततःप्रतिबुद्धांतांप्रतिइन्द्रेणस्वापराधक्षमापनम् ॥ ४ ॥

हतेषु तेषु पुत्रेषु दितिः परमदुःखिता ॥ मारीचं कश्यपं राम भर्तारमिदमब्रवीत् ॥ १ ॥
हतपुत्राऽस्मि भगवंस्तव पुत्रैर्महाबलैः ॥ शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोर्जितम् ॥ २ ॥
साऽहं तपश्चरिष्यामि गर्भं मे दातुमर्हसि ॥ [ बलवन्तं महेष्वासं स्थितिज्ञं समदर्शिनं ] ॥
ईश्वरं शक्रहन्तारं त्वमनुज्ञातुमर्हसि ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा मारीचः काश्यपस्तदा ॥ प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ४ ॥
एवं भवतु भद्रं ते शुचिर्भव तपोधने ॥ जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ॥ ५ ॥
पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि ॥ पुत्रं त्रैलोक्यभर्तारं मत्तस्त्वं जनयिष्यसि ॥ ६ ॥

कारैःशून्यं । पुरुषोत्तमं सर्वपुरुषेषूत्तमं । विष्णुंअभिमुखंगताः अभिमुखतयाप्रातिकूल्येनगताः । ते विष्णुना संपिष्टाः चूर्णिताः । संविष्टाइतिपाठेयेअमुमभिमुखंगताः शरणागताःदेवाः तेयुद्धे संविष्टाःआविष्टाःआप्यायितबलाआसन्नित्यर्थः ॥५०॥ दितेःपुत्रान् अवशिष्टानितिशेषः । यद्वा अदितेरात्मजाआप्यायितबलाःसन्तःतस्मिन्दैतेयादित्ययोर्देवासुरयोर्युद्धेअसुरान्निजघ्निरे ॥ ५१ ॥ चकारादमृतमपीत्यर्थः । अस्मिन्सर्गेद्वात्रिंशच्छ्लोकाः अन्येकल्पिताः । यद्यप्यत्रकालकूटाद्युत्पत्तिरपेक्षिता तथाप्युत्तरकथाशेषत्वेनसर्वासुरक्षयएवप्रधानतयोपात्तइतिबोध्यम् ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

विष्णुपक्षविरोधेमहानपियत्नोविफलःस्यादित्याह षट्चत्वारिंशे—हतेष्वित्यादि । मारीचं मरीचिपुत्रं ॥१॥ तपोर्जितं तपसाऊर्जितं दृढं । आर्षःसन्धिः ॥ २ ॥ गर्भं पुत्रं । ईश्वरं त्रैलोक्यनियन्तारं । ईदृशमितिपाठेप्ययमर्थोविवक्षितः । अनुज्ञातुं तपइतिशेषः । भर्त्रनुज्ञांविनातपसिस्त्रियाअस्वातन्त्र्यादितिभावः ॥ ३–४ ॥ शुचिर्भव यावत्पुत्रोत्पत्तीतिशेषः ॥ ५ ॥ मत्तः मदनु-

अमृतदानराहुशिरश्छेदाद्यवर्णनवत् हालाहलोत्पत्त्याद्यवर्णनमितितदाशयः ॥ ५० ॥ **शि०** अत्रास्मिन्सर्गेद्वात्रिंशच्छ्लोकाः अन्येकल्पिताइतिभूषणकृद्भिरुक्तं तत्रान्येषांकल्पितत्वमूलयुक्तेरभावात् श्लोकार्थानामबाधकत्वाच्च भारतादिप्रसिद्धविषयबोधकत्वाच्च सर्वपुस्तकेषूपलंभाच्च तदप्रमाणमितिप्रामाणिकाः । अतएवममन्थुरमितौजसइतिश्लोकानन्तरंअथवर्षेत्यादिआयुर्वेदमयःपुमानित्यन्तं त्रयोदशश्लोकाःप्रक्षिप्ताइत्यादिनात्रयोदशानामेवप्रक्षिप्तत्वंभट्टैरुक्तं । तन्मतेऽप्येकोनविंशतेःश्लोकानांकल्पितत्वाभाववत्त्वंसिद्धमेव । उक्तत्रयोदशश्लोकानांकल्पितत्वेपिप्रमाणमलब्ध्वाबहवइत्युक्तं तेनतन्मतेपिसर्वेषांकल्पितत्वाभाववत्त्वमर्थतःफलितं । अतएवतीर्थादिव्याख्ययासुकल्पितत्वप्रसङ्गानुत्थानमितिदिक् ॥ ५२ ॥ इतिपञ्चचत्वारिंशस्सर्गः ॥ ४५ ॥

**शि०** दीर्घतपोर्जितं दीर्घतपेनराज्यविषयकात्यन्तज्ञानेन ऊर्जितं प्रवृद्धं । आलोचनार्थकतपधातोः अच् ॥ २ ॥ **ति०** त्रैलो-

**[पा०]** १ ङ. च. छ. झ. ञ. अस्मिन्घोरेमयायुद्धे. क. घ. ट. तस्मिन्घोरेमहायुद्धे. २ क. ग—झ. ट. दितिपुत्रांस्तु— ख. दितिपुत्रांस्तान्. ३ क. तदाराज्यं. ४ ङ. च. छ. झ. ञ. मैहात्मभिः. घ. महारथैः. ५ ग. पुत्रंमेदातु. ६ इदमर्धं ग. ज. दृश्यते. ७ क. ग. घ—ञ. ईदृशंशक्र. ८ ग. तपोधना. ९ ङ. ज. झ—ट. त्रैलोक्यहन्तारं. घ. छ. त्रैलोक्यहर्तारं.

एवमुक्त्वा महातेजाः पाणिना [1]सं ममार्ज ताम् ॥ [2]समालभ्य ततः स्वस्तीत्युक्त्वा स तपसे ययौ ॥७॥
गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता ॥ [3]कुशप्लवनमासाद्य तपस्तेपे सुदारुणम् ॥ ८ ॥
तपस्तस्यां हि कुर्वन्त्यां परिचर्यां चकार ह ॥ सहस्राक्षो नरश्रेष्ठ परया गुणसम्पदा ॥ ९ ॥
अग्निं कुशान्काष्ठमपः फलं मूलं तथैव च ॥ न्यवेदयत्सहस्राक्षो यच्चान्यदपि काङ्क्षितम् ॥ १० ॥
[4]गात्रसंवहनैश्चैव श्रमापनयनैस्तथा ॥ शक्रः सर्वेषु कालेषु दितिं परिचचार ह ॥ ११ ॥
[5]अथ वर्षसहस्रे तु दशोने रघुनन्दन ॥ [6]दितिः परमसंप्रीता सहस्राक्षमथाब्रवीत् ॥ १२ ॥
*याचितेन सुरश्रेष्ठ [7]पित्रा तव महात्मना ॥ वरो वर्षसहस्रान्ते [8]मम दत्तः सुतं प्रति ॥ १३ ॥
तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर ॥ अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः ॥ १४ ॥
[9]तमहं त्वत्कृते [10]पुत्रं [11]समाधास्ये जयोत्सुकम् ॥ त्रैलोक्य[12]विजयं पुत्रं सह भोक्ष्यसि विज्वरः ॥ १५ ॥
एवमुक्त्वा [13]दितिः शक्रं प्राप्ते मध्यं [14]दिवाकरे ॥ निद्रयाऽपहृता देवी पादौ कृत्वाऽथ शीर्षतः ॥१६॥
दृष्ट्वा तामशुचिं शक्रः [15]पादतः कृतमूर्धजाम् ॥ [16]शिरःस्थाने कृतौ पादौ जहास च मुमोद च ॥१७॥

---

ग्रहादित्यर्थः ॥ ६ ॥ ममार्जेत्याश्वासनप्रकारः । ततः मार्जनानन्तरं । उदरं समालभ्य स्वस्ति पुत्रोत्पत्तिरूपंशुभं भवत्वित्युक्त्वानुगृह्य । सः काश्यपस्तपसेययौ ॥७॥ कुशप्लवनं विशालायाः पूर्वस्थानं ॥८॥ गुणसम्पदा विनयादिसमृद्ध्या ॥९॥ अग्निमिति परिचर्याप्रकारः ॥ १० ॥ मातृत्वात् गात्रसंवहनानि । श्रमापनयनैः व्यजनवीजनादिभिरितिशेषः ॥ ११ ॥ दशोने दशवर्षोने ॥ १२॥ शुश्रूषाकृतप्रीत्यतिशयाद्वैरंविस्मृतवतीतिभावः ॥ १३ ॥ ततः दशवर्षान्ते ॥ १४ ॥ समाधास्ये विगतवैरंभ्रातृस्नेहवंतमेवकरिष्यामीत्यर्थः । त्रैलोक्यविजयं त्वद्भ्रातृकृतमितिशेषः । अमोघभर्त्रनुग्रहेणाप्रतिबन्धसुतोत्पत्तिंमन्वाना ऋजुतयाशुश्रूषाफलमुक्तवती ॥ १५ ॥ मध्यं गगनमध्यं । शीर्षतः शिरसि । पादौकृत्वा स्थितेतिशेषः । मध्याह्नशयनपरिग्रहप्रसङ्गाभावेनासनएवोपविशन्त्यास्तस्यानिद्रापारवश्येननम्रंशिरःपादयोःसंसक्तमभवदित्यर्थः ॥ १६ ॥ पादतःकृतमूर्धजां पादौकृत्वाथशीर्षतइत्यस्यविवरणं । अतएव अशुचिं तां दृष्ट्वा शिरस्स्थानेकृतौपादो शिरस्स्पृष्टौपादाविति । मुमोद तेन जहासच । यद्वा प्राप्तेमध्यंदिवाकर इत्यनेन दिवास्वापरूपाशौचंदर्शितं ।

---

क्यहन्तारं तदधिपशक्रहन्तारं । **शि०** त्रैलोक्यहन्तारं त्रिलोकीहननसमर्थं पुत्रंमत्तस्त्वंजनयिष्यसि । त्रैलोक्यहन्तारमित्यनेनयदित्रिलोकहननयोग्यस्सः तर्हीन्द्रहननयोग्यइतिकिंवक्तव्यमितिकाव्यार्थापत्तिरलङ्कारोध्वनितः । किंच त्रैलोक्यंनियम्यत्वेनास्यास्तीतित्रैलोक्यइन्द्रः । किंचत्रिलोक्याअयंस्वामीत्रैलोक्यः । "तस्येदं"इत्यण् । "यस्येतिच" इतिलोपाभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् ॥ ६ ॥ **ति०** संममार्जतादृशपुत्रोत्पत्तिप्रतिबन्धकीभूतदुरितध्वंसार्थंमार्जनंचकारेत्यर्थः । अथतामालभ्यस्पृष्ट्वा ॥ ७ ॥ **शि०** अथइदंअब्रवीत् । अथशब्दइत्यर्थे ॥ १२ ॥ **ति०** तमाधास्ये हेपुत्र यंपुत्रमहंत्वत्कृतेत्वन्नाशार्थंयाचितवती । तं तवजयोत्सुकमाधास्ये विगतवैरंभ्रातृस्नेहवन्तमेवकरिष्यइत्यन्वयः ॥ १५ ॥ **शि०** पादौशीर्षतः शिरस्स्थापनोचितदेशेदक्षिणेपूर्वेवाकृत्वा निद्रयाअपहृता अपहृतबुद्धिरासीदितिशेषः । अथशब्देनपादयोर्मूर्धजांश्चकृत्वेत्यर्थः ॥ १६ ॥ **शि०** ययाशिरस्स्थानेपादौकृतौतांपादयोःकृतमूर्धजांअतएवाशुचिंतांदितिं शक्रोदृष्ट्वाजहासमुमोदच । जहासेत्यनेन एतावन्तंश्रमंकृत्वापि "सहभोक्ष्यसिविज्वरः" इत्याशीर्वादोमात्रादत्तइतिस्मृतिर्व्यञ्जिता । पादयोर्मूर्धजस्पर्शस्यपूर्वदक्षिणयोःपादस्थापनस्यचाशुचित्वकारणत्वंधर्मशास्त्रादौप्रसिद्धम् ॥ १७ ॥ इतिषट्चत्वारिंशस्सर्गः ॥ ४६ ॥

[ **पा०** ] १ ङ—ट. संममार्जताम्. २ ङ. झ. तामालभ्यततः. ज. ट. समालंब्य. क. च. ञ. समालभ्यस्वभवनंजगामसमहानृषिः. ख. समालभ्यस्वभवनंजगामसहसाऋषिः. ग. स्वस्तीत्युक्त्वाच. ३ ख. ङ—ञ. कुशप्लवंसमासाद्य. ४ क. ग. घ. ङ. छ. झ. ञ. ट. गात्रसंवाहनै. ५ ङ. झ. ट. पूर्णेवर्षसहस्रेसा. च. छ. ञ. पूर्णवर्षसहस्रेसा. घ. ज. अथवर्षसहस्रेसा. ६ ङ—ट. दितिःपरमसंहृष्टा. घ. परमसुप्रीता. * अयंश्लोकः ङ. च. छ. झ. ञ. पुस्तकेषुतमहमितिश्लोकात्परतोदृश्यते. ७ ग. घ. ज. तवपित्रा. ८ क—घ. दत्तोममसुतं. ९ ङ. झ. ट. यमहंत्वत्कृते. १० क. ख. ग. ङ. ज. झ. पुत्र. ११ ङ. झ. तमाधास्ये. क. च. छ. समाधंत्स्ये. १२ क. ख. घ. च. छ. झ. ञ. ट. विजयंपुत्र. १३ ख. घ. च. छ. ञ. ट. दितिस्तत्र. १४ ङ. झ. ञ. ट. दिनेश्वरे. १५ ङ. च. छ. झ. ञ. ट. पादयोःकृतमूर्धजाम्. १६ क. शीर्षोपधानेपादौच.

तस्याः शरीरविवरं विवेश[1] च पुरंदरः ॥ गर्भं च सप्तधा राम बिभेद[2] परमात्मवान् ॥ १८ ॥
भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा ॥ रुरोद सुस्वरं[3] राम ततो दितिरबुध्यत ॥ १९ ॥
मारुदो मारुदश्चेति गर्भं शक्रोऽभ्यभाषत ॥ बिभेद च महातेजा रुदन्तमपि वासवः ॥ २० ॥
न[4] हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ॥ निष्पपात ततः शक्रो मातुर्वचनगौरवात् ॥ २१ ॥
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ॥ अशुचिर्देवि सुप्तासि पादयोः कृतमूर्धजा ॥ २२ ॥
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे ॥ अभिदं[5] सप्तधा देवि तन्मे त्वं क्षन्तुमर्हसि ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

इन्द्रेणसप्तानांगर्भच्छेदानांदितिवचनाद्वायुस्कन्धसप्तकस्थानपालकत्वकल्पनम् ॥ १ ॥ विश्वामित्रेणैवमुपोद्घातकथनेनतस्मिन्नेवदितितपश्चरणदेशेइक्ष्वाकुसूनुनाविशालेनविशालाख्यपुरनिर्माणकथनपूर्वकमद्यतनस्यसुमतिनाम्नोराज्ञोविशालवंश्यत्वकथनम् ॥ २ ॥ सुमतिनाराज्ञाविश्वामित्रमुपगम्यसादरपूजनम् ॥ ३ ॥

सप्तधा तु कृते गर्भे दितिः परमदुःखिता ॥ सहस्राक्षं दुराधर्षं वाक्यं सानुनयाऽब्रवीत् ॥ १ ॥
ममापराधाद्गर्भोऽयं सप्तधा विफलीकृतः[6] ॥ नापराधोस्ति[7] देवेश तवात्र बलसूदन ॥ २ ॥
प्रियं[8] तु कर्तुमिच्छामि मम गर्भविपर्यये ॥ मरुतां सप्त[9] सप्तानां स्थानपाला भवन्त्विमे[10] ॥ ३ ॥
वातस्कन्धा इमे[11] सप्त चरन्तु दिवि पुत्रक[12] ॥ मारुता इति विख्याता दिव्यरूपा ममात्मजाः ॥४॥
ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथाऽपरः ॥ दिवि[13] वायुरिति ख्यातस्तृतीयोपि महायशाः ॥ ५ ॥

शीर्षतः शिरस्स्थाने शिरस्स्थानइत्यनुवादात्। पादतः पादस्थाने। शयनपरिग्रहाभावेपिकृष्णाजिनाद्यास्तरणेपादस्थानेशिरः शिरस्स्थानेचपादौ कृत्वा सुप्तवतीत्यर्थः । पादोपधानेशीर्षं शीर्षोपधानेपादौचकृत्वेत्यर्थः । रन्ध्रान्वेषणफलंजातमितिमोदः । वृथागर्वितेयमितिहासः ॥१७॥ शरीरविवरं योनिविवरं । आत्मवान् धैर्यवान् ॥ १८ ॥ शतपर्वणा शतकोटिना ॥ १९ ॥ मारुद इति। रुदिर् अश्रुविमोचनइत्यस्माल्लुङ् । माङ्योगादडभावः ॥ २० ॥ नहन्तव्यः भेदनेकृतेपिप्राणवियोजनंमाकुर्वित्यर्थः ॥ २१—२२ ॥ अन्तरं अवकाशं। क्षन्तुमर्हसि स्वहिंसापरांगामपिहिंस्यादितिन्यायेनयुक्तत्वादितिभावाः ॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

दुराधर्षं दुर्जयं ॥१॥ अपराधात् प्रमादात् । विफलीकृतः शकलीकृतः ॥ २ ॥ गर्भविपर्यये उपहतगर्भविषये । प्रियं श्रेयः । कर्तुमिच्छामि । तदेवश्रेयआह— मरुतामिति । सप्तानांमरुतां वातस्कन्धानां । इमे सप्तभागाः स्थानपालाः लोकपालाः। भवन्तु । सप्तमरुतश्चोक्ताः । "गगनःस्पर्शनोवायुरनिलश्चतथापरः ॥ प्राणःप्राणेश्वरोजीवइत्येतेसप्तमारुताः" इति । विष्णुपुराणेतु "आवहप्रवहसंवहोद्वहविवहपरिवहपरावहाः सप्तमारुताः"इत्युक्तं ॥३॥ वातस्कन्धाः वातस्कन्धाभिमानिदेवताः । मरुदभिमानिदेवतात्वान्मारुताइतिविख्याताः । त्वत्कृतेन मारुदइत्युच्चारणेन मारुताइतिविख्याताः । पृषोदरादित्वाद्वर्णव्यत्ययइत्याहुः ॥४॥ सप्तमरुतःकुत्रवर्तंतेतेषांस्थानपालनंचकथमित्यत्राह— ब्रह्मेति । दिवि अन्तरिक्षे विष्णुपदाख्ये विष्णुलोके ।

**शि०** वातस्कन्धाः वातभेदाः । सप्त सप्तावयवकसप्तगणाः ॥ ४ ॥ **ति०** एकइति एकः गणइत्यर्थः । प्रथमंसप्तधाविभज्य

**[ पा० ]** १ ङ—ट. प्रविवेशपुरन्दरः. २ ङ—छ. झ. ञ. चिच्छेदपरमात्मवान्. ३ ग. घ. सस्वरं. ४ ग. झ. नहन्तव्यं नहन्तव्यमित्येव. ५ क. ख. ग. ङ. ज. झ. अभिन्दं. ६ ङ. च. ज. झ. ञ. शकलीकृतः. ७ ङ. च. झ. ञ. नापराधोहि. ८ ख. झ. ञ. प्रियंत्वत्कृतमिच्छामि. क. तत्कर्तुमिच्छामि. ९ ख. शक्रसप्तानां. १० ग. छ. झ. ञ. भवन्तुते. घ. च. भवन्तुमे. ११ ग. इमेपुत्र. १२ क—घ. च. छ. ज. ञ. ट. पुत्रकाः. १३ झ. ञ. ट. दिव्यवायुरितिख्यातः. घ. दिविवातइति.

चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात् ॥ संचरिष्यन्तु[1] भद्रं ते देवभूता[2] ममात्मजाः ॥
त्वत्कृतेनैव नाम्ना[3] च मारुता इति विश्रुताः ॥ ६ ॥
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः ॥ उवाच प्राञ्जलिर्वाक्यं दितिं[4] बलनिषूदनः ॥ ७ ॥
सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ॥ विचरिष्यन्ति भद्रं ते देवरूपास्तवात्मजाः[5] ॥ ८ ॥
एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने ॥ जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् ॥ ९ ॥
एष देशस्स काकुत्स्थ महेन्द्राध्युषितः पुरा ॥ दितिं यत्र तपस्सिद्धामेवं परिचचार सः ॥ १० ॥
इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः ॥ अलम्बुसायामुत्पन्नो विशाल इति विश्रुतः ॥ ११ ॥
तेन चासीदिह स्थाने विशालेति पुरी कृता ॥ विशालस्य सुतो राम हेमचन्द्रो महाबलः ॥ १२ ॥
सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः[6] ॥ सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः ॥ १३ ॥
धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत ॥ सृञ्जयस्य सुतः[7] श्रीमान्सहदेवः प्रतापवान् ॥ १४ ॥
कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः ॥ कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ॥ १५ ॥
सोमदत्तस्य पुत्रस्तु[8] काकुत्स्थ इति विश्रुतः ॥ १६ ॥
तस्य पुत्रो महातेजाः संप्रत्येष पुरीमिमाम् ॥ आवसत्यमरप्रख्यः[9] सुमतिर्नाम[10] दुर्जयः ॥ १७ ॥
इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः ॥ दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥१८॥
इहाद्य रजनीं[11] राम सुखं वत्स्यामहे[12] वयम् ॥ श्वःप्रभाते नरश्रेष्ठ जनकं द्रष्टुमर्हसि ॥ १९ ॥
सुमतिस्तु महातेजा विश्वामित्रमुपागतम् ॥ श्रुत्वा नरवरश्रेष्ठः प्रत्युद्गच्छन्महायशाः[13] ॥ २० ॥
पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः ॥ प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥२१॥
धन्योस्म्यनुगृहीतोस्मि यस्य मे विषयं[14] मुनिः ॥ संप्राप्तो दर्शनं[15] चैव नास्ति धन्यतरो मया[16] ॥२२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

चरत्वित्यनुषङ्गः ॥ ५ ॥ चत्वारइतिसार्धश्लोकः ॥६॥ दितिगर्भखण्डनेन सहस्राक्षत्वादीनिसिद्धानीतिभावः ॥ ७ ॥ यथोक्तमित्यस्यविवरणंविचरिष्यन्तीति ॥८॥ नः अस्माभिरित्यर्थः । "क्तस्यचवर्तमाने" इतिषष्ठी ॥९॥ प्रकृतमुपसंहरति—एषइति । सएषइत्यन्वयः । सः इन्द्रः ॥ १० ॥ अथकतरोराजवंशइतिद्वितीयप्रश्नस्योत्तरमाह—इक्ष्वाकोरित्यादिना ॥ ११–१३ ॥ सृञ्जयःसमपद्यत सृञ्जयनामाऽऽसीत् ॥ १४—१५ ॥ सोमदत्तस्येत्यर्धमेकं ॥ १६ ॥ "उपान्वध्याङ्वसः" इत्याधारस्यकर्मत्वं ॥ १७ ॥ कथंकतिपयैरेवपुरुषैरिदानीमिक्ष्वाकुवंशइत्यत्राह—इक्ष्वाकोरिति । विशालानिवासएषांतेवैशालिकाः । कुमुदादित्वात्ठक् । विशालप्रार्थनमिक्ष्वाकुप्रसादनिमित्तं ॥१८॥ वत्स्यामहे आर्षमात्मनेपदं ॥१९॥ प्रात्युद्गच्छत् प्रत्युदगच्छत् ॥२०–२१ ॥ विषयं स्थानं । दर्शनंचप्राप्तइत्यनुषङ्गः । मया सदृश इतिशेषः ॥ २२ ॥ इति गोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

पुनरेकशस्सप्तधाकरणमित्यस्यार्थस्यपुराणान्तरेस्पष्टमुक्तत्वात् इहापि "बिभेदचमहातेजारुदन्तमपि"—इत्यादिनाध्वनितत्वाच्चेतिबोध्यं । एवमपरइत्याद्यपिव्याख्येयं । इन्द्रलोकमिति रुद्रलोकमितिप्रचुरः पाठः । दिव्यवायुः दिविअन्तरिक्षेभवइत्यर्थः ॥ ५ ॥ इतिसप्तचत्वारिंशस्सर्गः ॥ ४७ ॥

[ पा० ] १ क. झ. ञ. ट. संचरिष्यन्तिभद्रंते. २ झ. कालेनहिममात्मजाः. ३ झ. ञ. ट. नाम्नावै. ख. नाम्नाते. क. नाम्नातु. ४ झ. मितीदंबलसूदनः. च. छ. ञ. दितिंचबलसूदनः. ५ क—घ. देवभूतास्तवात्मजाः. ६ क. ख. ज. ञ. हेमचन्द्रादनन्तरम्. ७ क. सुतश्श्रीमान्. ८ क. च. छ. ञ. पुत्रोऽभूत्. ९ क. निवसत्यमरप्रख्यः. १० ग. सुमतिर्नामविश्रुतः. ११ च. छ. झ. ञ. रजनीमेकां. १२ च. छ. स्थास्यामहेवयम्. झ. ञ. ट. स्वप्स्यामहे. १३ ख. च. छ. झ. ञ. ट. प्रत्यागच्छन्महायशाः. १४ छ. झ. ञ. विषयंमुने. ज. ट. विषयंगतः. १५ ञ. दर्शनाच्चैव. १६ च. छ. ञ. ट. धन्यतरोमम.

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

विश्वामित्रेणसुमतयेरामलक्ष्मणवृत्तान्तनिवेदनपूर्वकंतदातिथ्यस्वीकारेणरात्रौतत्रनिवासः ॥ १ ॥ परेद्युःसहरामादिभिर्गौतमाश्रमागमनम् ॥ २ ॥ तथारामंप्रतिइन्द्राहल्यावृत्तान्तकथनपूर्वकंगौतमात्तयोःशापप्राप्तिकथनम् ॥ ३ ॥

पृष्ट्वा तु कुशलं तत्र परस्परसमागमे ॥ कथान्ते सुमतिर्वाक्यं व्याजहार महामुनिम् ॥ १ ॥
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २ ॥
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३ ॥
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ॥ कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ ४ ॥
भूषयन्ताविमं देशं चन्द्रसूर्याविवांबरम् ॥ परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ ५ ॥
किमर्थं च नरश्रेष्ठौ संप्राप्तौ दुर्गमे पथि ॥ वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्वतः ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत् ॥ [अयोध्याधिपतेः पुत्रो राज्ञो दशरथस्य हि ॥
मम यज्ञसमाप्त्यर्थमागतौ रामलक्ष्मणौ ॥ ७ ॥
सिद्धाश्रममनुप्राप्य राक्षसानभिहत्य च ॥ इमं देशमनुप्राप्तौ वीरौ दशरथात्मजौ] ॥
सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ ८ ॥

अथरामस्यपरमपावनत्वंदर्शयत्यष्टचत्वारिंशे—पृष्ट्वात्वित्यादि । परस्परेत्यविभक्तिकनिर्देशः । परस्परंकुशलंपृष्ट्वा कथान्ते तदुत्तरान्तेइतियोजना ॥ १ ॥ इमावित्यादिपञ्चश्लोकी । इमौकुमारौ कोयंकुमारभावइतिविस्मयते । दृष्टिदोषोमाभूदित्याह—भद्रंतइति । देवतुल्यपराक्रमौ संस्थानविशेषदर्शनेननूनमेतौविष्णुतुल्यपराक्रमावितिमन्यामहे । गजसिंहगतीवीरौशार्दूलवृषभोपमौ ॥ चतुर्गतित्वमुच्यते । गांभीर्यगमनेगजतुल्यौ पराभिभवनार्हगमनेसिंहतुल्यौ भयंकरगमने शार्दूलतुल्यौ सगर्वगमनेवृषभसदृशावित्यर्थः । विशेषणरावयतः शत्रूनितिवीरौ अनुभवितॄणांविरोधिनिवर्तकावित्यर्थः । पद्मपत्रविशालाक्षौ द्रष्टॄणामाकर्षकावयवविशेषौ । नयनसौन्दर्यंहि लावण्यपरमकाष्ठा । खड्गतूणीधनुर्धराविति आभरणकोटौ आयुधकोटौच एषामन्तर्भावः । अश्विनाविवरूपेण । रूपवत्सु अश्विनौ प्रसिद्धौ । रूपेणासाधारणधर्मेण ताविवस्थितौ । समुपस्थितयौवनौ रूपानुरूपंप्रादुर्भवद्यौवनौ । यदृच्छयैव भाग्यवशादेव । देवलोकाद्गां भुवं । प्राप्तौ अमरौ कौचिद्देवशेषाविवस्थितौ । तेजसादेवकुमारतुल्यावित्यर्थः । एतत्तेजोविशेषविलोकनेनैतौमर्त्यावपिअमर्त्याविप्रतिभातीतिभावः । कथंपद्भ्यांइहप्राप्तौ अतीवकोमलाभ्यांपद्भ्यामिहदुर्गमेपथिकथंप्राप्तावित्युदरंपरिस्पृशति । किमर्थं एतद्रूपदर्शनेनैवावाप्तसमस्तकामावितिनिश्चिनुमः । कस्यवापुत्रावित्यर्थः । यद्वा कस्यपुरुषस्यकतमप्रयोजनायइहप्राप्तावित्यर्थः । मुने सर्वज्ञोभवानिममर्थंजानात्येवेत्यर्थः । चन्द्रसूर्यावम्बरमिव इमंदेशंभूषयन्तौ शैत्यप्रतापाभ्यामुभावपिचन्द्रसूर्यतुल्यौ । अयंलोकोविष्णुपदमासीदितिभावः । भूषयन्तौ निजतेजसेतिभावः । प्रमाणं शरीरौन्नत्यादि । इङ्गितं अन्तर्गतभावसूचकस्मितादिचेष्टितं गमनभाषणविलोकनादि । एतैः परस्परसदृशौतुल्यपुरुषान्तराभावात् । नरश्रेष्ठावपिदुर्गमेपथिकिमर्थंसंप्राप्तौ । पूर्वंपद्भ्यांकथंप्राप्तावित्युक्तं संप्रतिदुर्गमंवनंकिमर्थंप्राप्तावित्युच्यते । वरायुधधरौ आयुधश्रेष्ठधनुरादिधरौ । पूर्वमाभरणान्वयेनखड्गादिकमुक्तं इदानींतान्येवायुधतयोच्यन्ते । यद्वा पूर्वोक्तानांवरायुधत्वमुच्यते । वरायुधधरौ आयुधश्रेष्ठधनुरादिधरौ । पूर्वमाभरणान्वयेनखड्गादिकमुक्तं इदानींतान्येवायुधतयोच्यन्ते । यद्वा पूर्वोक्तानांवरायुधत्वमुच्यते । वीरौ वीर्ययुक्तौ । पूर्ववीरशब्दोऽन्यथा व्याख्यातः । श्रोतुमिच्छामितत्वतः यद्यपि राजपुत्रौकस्यचिद्विघ्नस्यशान्तयेआगतावितिसामान्यतोजानामि तथापि विशेषतोज्ञातुमिच्छामीत्यर्थः ॥२–७॥ स्वस्य-

ती० देवतुल्यपराक्रमौ इन्द्रतुल्यपराक्रमौ । शार्दूलवृषभोपमौ अधृष्यत्वेशार्दूलोपमौ सविलासगमनेवृषभोपमौ । पद्मपत्रविशा-

[ पा० ] १ घ. पृष्ट्वाच. २ झ. तूणधनुर्धरौ. ३ झ. ञ. परस्परेणसदृशौ. ४ ख. ग. मुनिश्रेष्ठ. ५ च. छ. ञ. कस्यपुत्रौ महामुने. ६ ख. यथान्यायंन्यवेदयत्. ७ एतच्छ्लोकद्वयं घ. च. छ. दृश्यते. ८ ख. ग. ट. राक्षसानांचतद्वधम्.

विश्वामित्रवचः श्रुत्वा राजा परम[1]हर्षितः ॥ अतिथी परमौ[2] प्राप्तौ पुत्रौ दशरथस्य तौ ॥
पूजयामास विधिवत्सत्कारार्हौ महाबलौ ॥ ९ ॥
ततः परमसत्कारं सुमतेः प्राप्य राघवौ ॥ उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः ॥ १० ॥
तां[3]दृष्ट्वा मुनयः सर्वे जनकस्य पुरीं शुभाम् ॥ साधुसाध्विति शंसन्तो मिथिलां समपूजयन् ॥११॥
मिथिलोपवने तत्र आश्रमं दृश्य राघवः ॥ पुराणं निर्जनं[4] रम्यं पप्रच्छ मुनिपुङ्गवम् ॥ १२ ॥
श्रीमदा[5]श्रमसंकाशं किंन्विदं[6] मुनिवर्जितम् ॥ श्रोतुमिच्छामि भगवन्कस्यायं पूर्व आश्रमः ॥ १३ ॥
तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः ॥ प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ॥१४॥
हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव ॥ यस्यैतदाश्रमपदं शप्तं[7] कोपान्महात्मना ॥ १५ ॥
गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मनः ॥ आश्रमो दिव्यसंकाशः सुरैरपि सुपूजितः ॥ १६ ॥
स[8] चेह तप आतिष्ठदहल्यासहितः पुरा ॥ वर्ष[9]पूगाननेकांश्च राजपुत्र म[10]हायशः ॥ १७ ॥
[ [11]कदाचिद्दिवसे राम ततो दूरं [12]गते मुनौ ] ॥ तस्यान्तरं विदि[13]त्वा तु सहस्राक्षः शचीपतिः ॥
मुनिवेष[14]धरोऽहल्यामिदं वचनमब्रवीत् ॥ १८ ॥
ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते ॥ संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥ १९ ॥
मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन ॥ [15]मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ २० ॥
अथाब्रवीत्सुरश्रेष्ठं कृतार्थेनान्तरात्मना ॥ [16]कृतार्थोऽस्मि सुरश्रेष्ठ गच्छ शीघ्र[17]मितः प्रभो ॥ २१ ॥

सिद्धाश्रमनिवासं तत्र स्वयज्ञविघ्नकरराक्षसानामेताभ्यांवधं चकारादिमौदशरथकुमारौहरधनुर्दर्शनायमिथिलांगच्छतइत्येतत्समुच्चीयते । एतत्सर्वंयथावृत्तमब्रवीदितियोजना ॥८॥ विश्वामित्रेतिसार्धश्लोकः ॥९॥ उष्य उषित्वा । ततः प्रातःकाले । मिथिलांप्रतीतिशेषः ॥ १० ॥ तान् मिथिलांप्रतिप्रस्थितान्रामादीन् । पूजाप्रकारः—साधुसाध्विति ॥ ११ ॥ मिथिलाया उपसमीपेवर्तमानंवनं मिथिलोपवनं तस्मिन् । शून्यं उटजसंस्थानरहितं । दृश्य दृष्ट्वा ॥ १२ ॥ आश्रमसंकाशं आश्रमवद्भासमानं । किंन्विदमित्यस्यविवरणंकस्यायमिति ॥ १३—१४ ॥ अहल्यानुग्रहहेतुकालस्मृतिजसंतोषे हन्तेति । महात्मना कोपाच्छप्तं प्राप्तशापं । इदमाश्रमपदंयस्यभवति तंकथयिष्यामितत्त्वेन शृणु ॥ १५ ॥ दिव्यसंकाशः दिव्यत्वेनभासमानः ॥ १६ ॥ वर्षपूगान् वर्षसमूहान् ॥ १७ ॥ अन्तरं मुनिरहितकालं । मुनिवेषधरः गौतमवेषधरः ॥ १८ ॥ ऋतुकालं । "षोडशर्तुर्निशास्त्रीणां" इत्युक्तकालं । आर्थिनः कामाद्भोगार्थिनः । अनृतुकालत्वान्नायमवसरइत्यहल्ययाप्रतिषिद्धमित्यवगम्यते । सुसमाहिते सम्यक्कृब्रह्मणानिर्मिते । अतिसुन्दरीत्यर्थः ॥ १९ ॥ सहस्राक्षंविज्ञाय कदाचिदपिमुनिर्नैवमर्थनाभावादन्यस्यात्रप्रवेष्टुमशक्तेरिन्द्रस्यैवात्मनिबहुकालमभिलाषश्रवणाच्चेतिभावः ॥ २० ॥ कृतार्थेन संतुष्टेनेत्यर्थः । अन्तरात्मना मनसाऽपलक्षिता ॥ २१ ॥

लाक्षावित्यनेन भाग्यसंपत्तिस्सूचिता । ति० प्रभुत्वाद्गजगतीरामः । अन्यगतिर्लक्ष्मणः । तथाशार्दूलाकृतीरामः वृषभाकृतिर्लक्ष्मणः । शि० किंच देवौ क्रीडाशीलौ । तुल्यपराक्रमौ परस्परंसदृशपराक्रमौ ॥ २ ॥ ति० तस्यआश्रमस्य । अन्तरं मुनिसंनिधानरहितंकालं । शचीपतिरित्यनेनशचीतोपिसौन्दर्यमहल्यायाध्वनितं । मुनिवेषधरः गौतमवेषधरः । ममरूपंसमास्थायेतिवक्ष्यमाणत्वात् ॥ १८ ॥ ति० सहस्राक्षंविज्ञाय ऋतुकालंप्रतीक्षन्तेनार्थिनः इतिवचनात्तपसाच आश्रमवर्तिसर्वप्राणिजातस्यशङ्काभावायगौतम-

[ पा० ] १ च. छ. झ. ञ. परमविस्मितः. २ झ. परमंप्राप्तौ. ३ झ. ट. तांदृष्ट्वा. ञ. तेदृष्ट्वा. ४ ख. निर्जनंरामः. ५ झ. ञ. इदमाश्रमसंकाशं. ६ च. छ. ञ. किंत्विदंमुनिवर्जितम्. ७ झ. ट. कोपान्महात्मनः. ख. कोपान्महर्षिणा. क. ञ. महामुनेः. ८ ङ. च. छ. झ. ञ. सचात्रतपआतिष्ठत्. ९ ख. ग. च—ट. वर्षपूगान्यनेकानि. १० ख. ज. महायशाः. ११ इदमर्धं क. ख. ङ. च. छ. ञ. दृश्यते. १२ ङ. च. छ. दूरगतेमुनौ. १३ ज. ट. त्वाथ. ङ. च. छ. ञ. विदित्वाच. १४ ङ. च. छ. झ. ञ. धरोभूत्वाअहल्यामिदमब्रवीत्. १५ क, ख, च, झ. ञ. रतिंचकार, १६ ग. कृतार्थोसि. १७ घ. शीघ्रमलक्षितः.

आत्मानं मां च देवेश सर्वदा[1] रक्ष मानद ॥ इन्द्रस्तु प्रहसन्वाक्यमहल्यामिदमब्रवीत् ॥ २२ ॥
सुश्रोणि[2] परितुष्टोस्मि गमिष्यामि यथागतम् ॥ २३ ॥
एवं संगम्य[3] तु तया निश्चक्रामोटजात्ततः[4] ॥ ससंभ्रमात्त्वरन्[5]राम शङ्कितो गौतमं प्रति ॥ २४ ॥
गौतमं स[6] ददर्शाथ प्रविशन्तं महामुनिम् ॥ देवदानवदुर्धर्षं तपोबलसमन्वितम् ॥ २५ ॥
तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ गृहीतसमिधं[7] तत्र सकुशं मुनिपुङ्गवम् ॥ २६ ॥
दृष्ट्वा सुरपतिस्त्रस्तो विवर्णवदनो[8]ऽभवत् ॥ २७ ॥
अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः ॥ दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ॥ २८ ॥
मम रूपं समास्थाय कृतवानसि दुर्मते ॥ अकर्तव्यमिदं[9] तस्माद्विफलस्त्वं भविष्यसि ॥ २९ ॥
गौतमेनैव[10]मुक्तस्य सरोषेण[11] महात्मना ॥ पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ ३० ॥
[ [12]व्यथितस्सहसा चासीद्धतौजा विफलीकृतः ॥ धर्षितस्तपसोग्रेण कश्मलं चैवमाविशत् ] ॥३१॥
[13]तथा शप्त्वा स[14] वै शक्रमहल्यामपि शप्तवान् ॥ इह वर्षसहस्राणि बहूनि[15] त्वं निवत्स्यसि ॥ ३२ ॥
वायुभक्षा[16] निराहारा तप्यन्ती[17] भस्मशायिनी ॥ अदृश्या सर्वभूतानामाश्रमे[18]ऽस्मिन्निवत्स्यसि ॥ ३३ ॥
यदा[19] चैतद्वनं घोरं रामो दशरथात्मजः ॥ आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ ३४ ॥

---

रक्ष अप्रकाशगमनादितिभावः ॥ २२ ॥ सुश्रोणीत्यर्धं ॥ २३ ॥ सः । संभ्रमात् भयात् । "संभ्रमोह्यादरे भये" इतिनिघण्टुः । शङ्कितः शङ्कावान् ॥ २४ ॥ गौतममितिश्लोकद्वयं । अथ उटजान्निष्क्रमणकालएव । परिक्लिन्नं स्नात्वाऽऽगतमित्यर्थः । तत्र आश्रमे ॥२५—२६ ॥ दृष्ट्वेत्यर्धं । विवर्णवदनः शुष्कमुखः ॥ २७ ॥ मुनिवेषधरं स्ववेषधरं ॥ २८ ॥ स्वभार्यासंगमस्यदुःशीलत्वेनावाच्यत्वादिदमित्याह । विफलः विगतवृषणः । "लाभनिष्पत्तिभोगेषुबीजेफालेधनेफलं" इतिनिघण्टुः ॥ २९—३२ ॥ कथंनिवासमात्रस्यशापत्वमितितद्विवृणोति—वायुभक्षेति । निराहारा अन्नपानादिरहिता । तप्यन्ती तप्यमाना । भस्मशायिनी भस्मशयना । अत्रबुद्धिपूर्वकव्यभिचारस्यविधीयमानंप्रायश्चित्तंशापापदेशेनोच्यते । एवंव्यक्ततयावाल्मीकिवचनेस्थिते शैलीभवेतिशापः रामपादस्पर्शात्शिलात्वमुक्तिरितिपुराणकथा कल्पान्तरवृत्तमनुसृत्येतिबोध्यं ॥ ३३ ॥ पूता भविष्यसि तत्पाद*परागस्पर्शादितिभावः । एतेनबहुवर्षप्रायश्चित्तकरणमपिभगवत्पादरेणुस्पर्शस्यकलांनार्ह-

---

वेषोऽयमिन्द्रइतिज्ञात्वेत्यर्थः । देवराजकुतूहलात् समामभिलषतीतिकौतुकात् दिव्यरतिकौतुकाच्चेत्यर्थः ॥ २० ॥ **ति०** शीघ्रगमनेहेतुःशापतोरक्षणं । विशिष्टस्त्रीचरितेनप्रहासः रक्षणस्यदुर्लभत्वाद्वा गौतमतपोभङ्गस्यस्वेष्टस्यकरणेनाग्रिमशापादिभयमल्पमितिवा ॥२२॥ **ति०** तप्यन्ती स्वकृताकार्यस्मरणेनपीडिता । पुराणादिप्रसिद्धशिलारूपप्राप्तिशापस्तुकल्पान्तरीणइतिनविरोधः । अत्रशिलारूपत्वेतात्पर्यकल्पने वातभक्षेत्यनेनविरोधःस्पष्टएवेतिकेचित् । वस्तुतस्तुअदृश्येत्यस्यस्वरूपेणादृश्या शिलाप्रतिमारूपेणसर्वदृश्येत्यर्थः । नचतावताचैतन्यहानिरितिक्षुधापीडास्यादेवेत्यतोवातभक्षा । तदतिरिक्ताहाराभावाच्चनिराहारा । तप्यन्तीस्वकर्मणेतिशेषः । तादृश्यपिभस्मशायिनीनतुस्थिता इतिनकश्चिद्विरोधः ॥ अयंशापउपलक्षणमत्रानन्तभगवत्त्वशापस्य । तदुक्तंपाद्मे । "शापदग्धापुराभर्त्रारामशक्रापराधतः । अहल्याख्याशिलाजज्ञेशतलिङ्गःकृतस्स्वराट्"इति । शिला तत्प्रतिमाकारा । शतशब्दोऽनन्तवाची । लिङ्गशब्देनभगाकारंचिह्नं । स्वराडिन्द्रः ॥ ३३ ॥

**[पा०]** १ ग. ङ. च. छ. झ. ञ. ट. सर्वथारक्ष. ङ. च. छ. झ. ञ. रक्षगौतमात्. २ क. ख. ग. च. परितुष्टोस्मिसुश्रोणि. ३ ङ. झ. संगम्यतुतदा. च. छ. संगम्यतुतथा. ४ ख. टजात्तदा. ५ ख. घ. ससंभ्रमस्त्वरन्. ज. ससंभ्रमात्परिक्रामन्. ६ क—ज. ञ. ट. संददर्शाथ. ७ ख. समिधंशक्रः. ८ ख. ग. च—ट. विषण्णवदनोऽभवत्. ९ ङ—ट. अकर्तव्यमिदंयस्मात्. १० ग. गौतमेनैवमुक्तेतु. ११ झ. सुरोषेण. घ. गौतमेनैवमुक्तस्यसहस्राक्षस्यतत्क्षणात्. पेततुर्वृषणौभूमौसरोषेणमहात्मना. १२ अयंश्लोकः ख. दृश्यते. १३ घ. अथशप्त्वाचवैशक्रंभार्यामपिचशप्तवान्. ङ. च. छ. झ. ञ. ट. तथाशप्त्वाचवैशक्रं भार्यामपिच. क. तथाशप्त्वासहस्राक्षं. १४ ख. थदेवेशं. १५ ङ. च. छ. झ. ञ. बहूनिनिवसिष्यसि. घ. बहून्यत्रनिवत्स्यसि. १६ ङ. च. छ. झ. ञ. वातभक्षा. क. वायुभक्षाशिलाभूत्वा. १७ ख. मलिनाभस्मशायिनी. १८ ङ—ट. माश्रमेऽस्मिन्वसिष्यसि. क. ख. घ. माश्रमेस्मिन्भविष्यसि. १९ ख. ङ—ट. यदात्वेतद्वनं.

तस्यातिथ्येन[1] दुर्वृत्ते लोभमोहविवर्जिता ॥ मत्सकाशे[2] मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥ ३५ ॥
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ॥ इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

## एकोनपञ्चाशः सर्गः ॥ ४९ ॥

देवैः गौतमशापेनवृषणरहितस्यदेवेन्द्रस्यपितृदेवप्रसादनेनमेषवृषणसंयोजनम् ॥ १ ॥ विश्वामित्रनिदेशेनगौतमाश्रमप्रवेशिनोरामस्यदर्शनमात्रेणप्रादुर्भूतदिव्यरूपयाऽहल्ययातदानींसंनिहितेनगौतमेनसहश्रीरामाराधनम् ॥ २ ॥

अफलस्तु ततः शक्रो देवानग्निपुरोधसः[3] ॥ अब्रवीत्त्रस्तवदनः[4] सर्षिसङ्घान्सचारणान्[5] ॥ १ ॥
कुर्वता तपसो विघ्नं गौतमस्य महात्मनः ॥ क्रोधमुत्पाद्य[6] हि मया सुरकार्यमिदं कृतम् ॥ २ ॥
अफलोस्मि कृतस्तेन क्रोधात्सा च निराकृता ॥ शापमोक्षेण महता तपोस्यापहृतं मया ॥ ३ ॥
तस्मात्सुरवराः[7] सर्वे सर्षिसङ्घाः सचारणाः ॥ सुरसाह्यकरं[8] सर्वे सफलं[9] कर्तुमर्हथ ॥ ४ ॥
शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः ॥ पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः[10] ॥ ५ ॥
[पुराऽविचार्य[11] मोहेन ऋषिपत्नीं शतक्रतुः ॥ धर्षयित्वा मुनेश्शापात्तत्रैव विफलः कृतः ॥
इदानीं कुप्यते देवान्देवराजः पुरन्दरः] ॥ ६ ॥
अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः ॥ मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छथ[12] ॥ ७ ॥

---

तीत्युक्तं ॥ ३४ ॥ पूतत्वेपिपूर्वरूपप्राप्तिस्तत्पादपूजां-विनानसंभवतीत्याह—तस्येति । मत्सकाशे मत्समीपे । स्थितेतिशेषः । स्वंवपुः दृश्यंवपुः । केचिदिदंश्लोकद्वयंप्रक्षिप्तमित्याहुः । तन्न । "स्मरन्तीगौतमवचः" इत्यग्युत्तरसर्गवचनविरोधात् ॥ ३५ ॥ एवमितिसार्धश्लोकः । तपस्तेपे तच्छापकृतपापप्रायश्चित्तार्थं ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

अनयोर्द्वयोःशापयोरेकःपूर्वमेवमुक्तः अपरस्त्वयामोचनीयइत्याशयेनाह एकोनपञ्चाशे—अफलइत्यादि । अग्निपुरोधसः अग्निपुरोगमान् । त्रस्तवदनः त्रस्तशब्देनतत्कार्यदैन्यमुच्यते ॥ १ ॥ महात्मनःगौतमस्य तपसः अस्मत्पदच्यवनकारणस्य विघ्नं । क्रोधमुत्पाद्य तस्यक्रोधजननमुखेन कुर्वतामयाइदं गौतमतपोभङ्गरूपं । सुरकार्यंकृतं सर्वदेवपदच्यवनार्हतपोगौतमेनकृतं । तस्यतपोनाशकमहाक्रोधोत्पादनायतद्भार्ययातुमयाव्यभिचारःकृतइत्यर्थः ॥ २ ॥ तेन गौतमेन । सा अहल्या । निराकृता शापमोक्षपूर्वकंत्यक्ता । शापमोक्षेण मयिअहल्यायांचशापदानेन ॥ ३ ॥ हेसर्वेसुरवरा इतिसंबोधनं । द्वितीयसर्वशब्दस्य सर्वेयूयमितिसंबन्धः । साह्यं साहाय्यं । सफलं मामितिशेषः ॥ ४ ॥ पितृदेवान् अग्निकव्यवाहनादीन् ॥ ५—६ ॥ अयं इदानीं

---

शि० मत्सकाशंममसकाशःसामीप्यंयस्मात् मत्समीपगमनयोग्यमित्यर्थः । स्वंवपुः । अत्रप्रार्थनामन्तरेणानुग्रहवचनोक्त्यामुनेर्दयालुत्वंव्यक्तं । ती० स्वंवपुर्धारयिष्यसीत्यनेन पद्मपुराणोक्तपाषाणावस्थासूच्यते । तथाचपाद्मे "साततस्तस्यरामस्यपादस्पर्शान्महात्मनः । अभूत्सुरूपावनितासमाक्रान्तामहाशिला" इति ॥ ३५ ॥ इत्यष्टचत्वारिंशस्सर्गः ॥ ४८ ॥

[ पा० ] १ ख. तस्यातिथ्यंसुदुर्वृत्तेकृत्वापापविवर्जिता. २ ङ—ट. मत्सकाशं. ३ ङ—ञ. देवानग्निपुरोगमान्. ख. घ. देवान्साग्निपुरोधसः. ४ ङ. च. छ. झ. ञ. त्रस्तनयनः. ख. दार्तवदनः. ५ ङ. च. छ. झ. ञ. सिद्धगन्धर्वचारणान्. ६ ख. कोपमुत्पाद्य. ७ क. ङ. ज. झ. ञ. तन्मांसुरवराः. ख. तन्मांसुरगणाः. ८ ग. सुरसाह्यकृतं. क. ख. ङ. झ. ञ. सुरकार्यंकरं. ९ ङ. झ. यूयंसफलं. ख. नित्यंसफलं. १० ख. ग. सहसर्वैर्मरुद्गणैः. ज. सर्वैस्सहमरुद्गणैः. ११ इदमर्धत्रयं ख. च. छ. दृश्यते. १२ ग. ङ. झ. प्रयच्छत. च. छ. ञ. प्रदीयताम्.

अफलस्तु कृतो मेषः [1]परां तुष्टिं प्रदास्यति ॥ ८ ॥
भवतां [2]हर्षणार्थे च ये च दास्यन्ति मानवाः ॥ [[3]अक्षयं हि फलं तेषां यूयं दास्यथ पुष्कलम् ] ॥९॥
[4]अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः ॥ उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ १० ॥
तदाप्रभृति काकुत्स्थ पितृदेवाः समागताः ॥ अफलान्भुञ्जते मेषान्फलैस्तेषामयोजयन् ॥ ११ ॥
इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव ॥ गौतमस्य प्रभावेन [5]तपसश्च महात्मनः ॥ १२ ॥
तदागच्छ [6]महातेज आश्रमं पुण्यकर्मणः ॥ तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ १३ ॥
विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ॥ विश्वामित्रं पुरस्कृत्य [7]तमाश्रममथाविशत् ॥ १४ ॥
ददर्श च महाभागां तपसा द्योतितप्रभाम् ॥ लोकैरपि समागम्य दुर्निरीक्षां सुरासुरैः ॥ १५ ॥
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ॥ [8]सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव ॥ १६ ॥
[ [9]धूमेनापि [10]परीताङ्गीं दीप्तामग्निशिखामिव ] ॥ मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १७ ॥
[11]सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ॥ त्रयाणामपि लोकानां यावद्रामस्य [12]दर्शनम् ॥
शापस्यान्तमुपागम्य तेषां दर्शनमागता ॥ १८ ॥
[13]राघवौ त्वतिथी तस्याः पादौ जगृहतु[14]स्तदा ॥ स्मरन्ती गौतमवचः प्रतिजग्राह [15]सा च तौ ॥ १९ ॥
पाद्यमर्घ्यं [16]तथाऽऽतिथ्यं चकार सुसमाहिता ॥ प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ॥ २० ॥

यज्ञेयुष्मभ्यंनियुज्यमानोमेषः । गृह्य गृहीत्वा ॥ ७ ॥ तद्दानेऽस्मत्तुष्टिवैकल्यंस्यादित्यत्राह—अफलइत्यर्धं । प्रदास्यतीत्यनुगृह्णन्ति ॥ ८ ॥ दातॄणामपिफलन्यूनतानभवत्वित्यनुगृह्णन्ति । भवतामिति । दास्यन्ति अवृषणमितिशेषः ॥ ९ ॥ अग्निपुरःसराणामित्यर्थः । मेषस्य तदायूपेनियुक्तस्यमेषस्यवृषणौ ॥ १० ॥ तदाप्रभृति वृषणदानात्प्रभृति । दत्तसजातीयत्वाद्वृषणौविनामेषान्भुञ्जते । तेषां सवृषणानां । फलैः सवृषणमेषदानफलैरित्यर्थः । अयोजयन् दातॄनितिशेषः ॥ ११ ॥ गौतमस्यतपसःप्रभावेनवृषणहान्या मेषवृषणोभूदित्यर्थः ॥१२॥ तत् त्वदागमनावधित्वादहल्याशापस्येत्यर्थः ॥ १३–१४ ॥ रामसंनिधानमात्रेणाहल्यामुक्तशापास्वरूपंप्राप्तेत्याह—ददर्शचेति सार्धश्लोकद्वयं । तपसा वाय्वाहारत्वादितपसा । द्योतितप्रभां अतिशयितप्रभां । अतएव लोकैः मानुषैः । सुरासुरैरपि । समागम्य समीपमागत्य । दुर्निरीक्षां । दिव्यां अतिमानुषरूपां । मायामयीमिव मायानिर्मितामिवस्थितां । वृक्षलताकुसुमान्तर्वर्तित्वेनसतुषारावरणां । साभ्रांचन्द्रप्रभामिवस्थितां । आवृतशब्दआवरणार्थकः । भावेनिष्ठा सइतिभिन्नंपदंवा । अक्रौर्यदुर्निरीक्ष्यत्वाभ्यांप्रतिबिंबसूर्यप्रभातुल्यां ॥ १५–१७ ॥ अदृश्यासाकथमिदानींदृश्याऽऽसीदित्यत्राहसार्धेन—साहीत्यादि ॥ १८ ॥ तस्याः वृद्धमुनिपत्न्याः । गौतमवचः "तस्यातिथ्येन दुर्वृत्ते" इत्यादिकं । प्रतिजग्राह पूजनीयत्वेनेतिशेषः ॥ १९ ॥ विधिदृष्टेन शास्त्रदृष्टेन । कर्मणा प्रकारेण ।

**ति०** अंभसः लक्षणयातद्युक्तमेघस्य मध्यस्थांरविप्रभामिवददर्श ॥ १७ ॥ **ति०** तौरामपादौप्रतिजग्राह स्पृष्ट्वाप्रणनाम । यत्तु तौ रामलक्ष्मणौ प्रतिजग्राह पूज्यत्वबुद्धिमकरोदिति । तन्न । अग्रेकाकुत्स्थइत्येकवचनप्रयोगात् ॥ **शि०** तौरामलक्ष्मणौ ॥ १९ ॥ **शि०** काकुत्स्थः लक्ष्मणसहितोरामः । **ति०** काकुत्स्थोरामः । तस्यैवमुख्यतयापूजनात् ॥ २० ॥ इत्येकोनपञ्चाशस्सर्गः ॥ ४९ ॥

**[ पा० ]** १ ज. सर्वांतुष्टिं. २ ङ. च. छ. झ. ञ. ट. हर्षणार्थंच. क. ख. ग. ज. हर्षणार्थाय. ३ इदमर्धं ग. ङ. च. छ. झ. ञ. ट. दृश्यते. ४ ख. इत्यग्नेर्वचनंश्रुत्वा. ५ ङ—ञ. तपसाचमहात्मनः. ट. तापसस्य. ६ ख. ग. महातेजाः. ७ ग. तदाश्रममथाविशत्. क. ख. घ—ट. आश्रमंप्रविवेशह. ८ क. तुषारेणावृतांसाभ्रां. ९ इदमर्धं क. घ—ट. दृश्यते. क. ख. ङ. च. छ. झ. ञ. ट. पुस्तकेषुसतुषारावृतां –धूमेनापिपरीताङ्गीं–इत्यर्धयोर्व्युत्क्रमोदृश्यते. ग. पुस्तकेसूर्यप्रभामिवेत्यनन्तरं–धूमेनापीत्यर्धंदृश्यते. १० ङ. झ. ट. भिपरीतांगीं. ११ च. छ. ज. ट. सापिगौतम. १२ घ. ट. दर्शनात्. १३ ङ. च. छ. झ. ञ. राघवौतुतदातस्याः. क—घ. राघवौतुततस्तस्याः. ज. तथातस्याः. १४ ङ. च. छ. झ. ञ. मुदा. १५ क. घ—छ. झ. ञ. ट. सापितौ. १६ ग. तदातिथ्यं. मथातिथ्यं.

पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिस्वनैः ॥ गन्धर्वाप्सरसां चापि महानासीत्समागमः ॥ २१ ॥
साधुसाध्विति देवास्तामहल्यां समपूजयन् ॥ तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥ २२ ॥
गौतमो हि महातेजा अहल्यासहितः सुखी ॥ रामं संपूज्य विधिवत्तपस्तेपे महातपाः ॥ २३ ॥
रामोपि परमां पूजां गौतमस्य महामुनेः ॥ सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ॥ ५० ॥

जनकेनरामलक्ष्मणाभ्यांसहविश्वामित्रस्यस्वपुरपरिसरागमनश्रवणाच्छतानन्देनसहप्रत्युद्गमनेनपरिपूजनम् ॥ १ ॥ विश्वामित्रेणजनकंप्रतिसाकल्येनरामवृत्तान्तनिवेदनपूर्वकंधनुर्दिदृक्षाकथनम् ॥ २ ॥

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ॥ विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १ ॥
रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः ॥ साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २ ॥
बहूनीह सहस्राणि नानादेशनिवासिनाम् ॥ ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् ॥ ३ ॥
ऋषिवाटाश्च दृश्यन्ते शकटीशतसंकुलाः ॥ देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् ॥ ४ ॥
रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः ॥ निवेशमकरोद्देशे विविक्ते सलिलायुते ॥ ५ ॥
विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा ॥ शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् ॥
प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥ ६ ॥
ऋत्विजोपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ॥ विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् ॥ ७ ॥

---

पाद्यादिकंचकारेत्यन्वयः ॥ २० ॥ रामस्येतिशेषः । सम्यगागमःसमागमः नृत्तगीतादिकमितियावत् ॥ २१ ॥ गौतमस्यवशानुगामित्यनेन गौतमस्तदा रामागमनंविदित्वासमागतइत्यवगम्यते ॥ २२ ॥ तेपे तत्रैवाश्रमइतिशेषः ॥ २३ ॥ ततः तस्माद्देशात् ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनपञ्चाशःसर्गः ॥ ४९ ॥

---

एवंरामस्यपरमपावनत्वमुक्तं अथतस्यसीताविवाहवृत्तान्तंप्रस्तौतिश्रियःपतित्वंप्रतिपादयितुंपञ्चाशे—ततः प्रागित्यादि । प्राच्याउत्तरस्याश्चदिशोन्तरालंयत्साप्रागुत्तरातां ऐशानींदिशमित्यर्थः । ततः तस्मादाश्रमात् । यज्ञवाटं जनकस्येतिशेषः ॥ १ ॥ यज्ञसमृद्धिः यज्ञसंभारसामग्री ॥२॥ तामेवाह—बहूनीति । ब्राह्मणानांसहस्राणीत्यन्वयः । दृश्यन्तइतिवक्ष्यमाणमनुषज्यते ॥ ३ ॥ ऋषिवाटाः ऋषिनिवासाः । विधीयतां कल्प्यतां । बहुसंकुलत्वेनैवमुक्तं ॥४॥ विविक्ते विजने पूतेवा । "विविक्तौपूतविजनौ" इत्यमरः। आयुते युक्ते । यौतेर्मिश्रणार्थात्क्तः ॥ ५ ॥ विश्वामित्रमितिसार्धश्लोकः । प्रत्युज्जगाम दीक्षितविमितप्रदेशसीमानमनतिलङ्घयन्नित्यर्थः ॥ ६ ॥ अर्घ्यमित्यातिथ्यस्योपल-

---

शि० इयंयज्ञसमृद्धिःसाध्वी । हिशब्दइयमित्यर्थे ॥२ ॥ वि० विश्वामित्रमित्यादिसार्धश्लोकद्वयमेकान्वयं । ऋत्विजोपीत्यत्रपुरस्कृत्येत्यनुकर्षः । महात्मानइतिद्वितीयार्थेप्रथमा । धर्मेण धर्मशास्त्रमार्गेण ददौ । अर्घ्यमितिशेषः । धर्मपुरस्कृतमित्यर्घ्यविशेषणं । "महाजंवामहोक्षंवाश्रोत्रियायोपकल्पयेत्" इतिशास्त्रोक्तनधर्मसाधनेनपुरस्कृतं तत्सहितमितियावत् ॥ शि० सत्वराः त्वरायुक्ताः महात्मानऋत्विजः धर्मेण धर्मोत्पादकविधिना मन्त्रपुरस्कृतंअर्घ्यमादाय ग्राहयित्वा ददुः जनकेनदापयामासुः ॥ ७ ॥

[पा०] १ क—घ. च. दुंदुभिनिस्वनः. २ ख. गन्धर्वाप्सरसानांच. क. ङ. च. छ. झ. ञ. अप्सरसांचैव. ३ क. ख. ङ. च. छ. झ. ञ. त्समुत्सवः. ४ ट. महायशाः. ५ ख. घ. ज. ट. महात्मनः. ६ क. ङ. च. छ. झ. ञ. ट. निवासमकरोद्देशे. ७ क. ङ. ञ. झ. ट. सलिलान्विते. ८ क—घ. विश्वामित्रंमुनिश्रेष्ठं. ९ ङ. च. छ. झ. ञ. नृपवरस्तदा. १० ङ. च. छ. झ. ञ. मनिन्दितः. ११ ङ. च. छ. झ. ञ. पुस्तकेषु प्रत्युज्जगामसहसा—ऋत्विजोपिमहात्मानः इत्यर्धयोःपौर्वापर्यंदृश्यते. १२ ज. विस्मयेनसमन्वितः. १३ क. ख. ग. ज. ट. सत्वराः. १४ ङ. छ. झ. ञ. ददौधर्मपुरस्कृतम्.

[१]प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ॥ पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् ॥ ८ ॥
[२]स तांश्चापि मुनीन्पृष्ट्वा [३]सोपाध्यायपुरोधसः ॥ [४]यथान्यायं ततः सर्वैः [५]समागच्छत्प्रहृष्टवत् ॥ ९ ॥
अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥ आसने [६]भगवन्नास्तां सहैभि[७]र्मुनिसत्तमैः ॥ १० ॥
जनकस्य वचः श्रुत्वा निषसाद महामुनिः ॥ पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ॥ ११ ॥
आसनेषु यथान्याय[८]मुपविष्टान्समन्ततः ॥ दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ॥ १२ ॥
अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ॥ १३ ॥
धन्योस्म्यनुगृहीतोस्मि यस्य मे मुनिपुङ्गव ॥ यज्ञोपसदनं ब्रह्मन्प्राप्तोसि मुनिभिः सह ॥ १४ ॥
द्वादशाहं तु ब्रह्मर्षे [९]शेषमाहुर्मनीषिणः ॥ ततो भागार्थिनो देवान्द्रष्टुमर्हसि कौशिक ॥ १५ ॥
इत्युक्त्वा मुनिशार्दूलं [१०]प्रहृष्टवदनस्तदा ॥ [११]पुनस्तं परिपप्रच्छ प्राञ्जलिः [१२]प्रणतो नृपः ॥ १६ ॥
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ [१३]गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ १७ ॥
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ १८ ॥
[१४]यदृच्छयैव [१५]गां प्राप्तौ देवलोकादिवामरौ ॥ [ [१६]पुण्डरीकविशालाक्षौ वरायुधधरावुभौ ॥ १९ ॥
बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ काकपक्षधरौ वीरौ कुमाराविव पावकी ॥
रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणौ ॥ २० ॥
प्राकाश्यं कुलमस्माकं मामुद्धर्तुमिहागतौ ] ॥ कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ २१ ॥
वरायुधधरौ वीरौ कस्य पुत्रौ [१७]महामुने ॥ भूषयन्ताविमं देशं चन्द्रसूर्याविवांबरम् ॥ २२ ॥
परस्परस्य सदृशौ [१८]प्रमाणेङ्गितचेष्टितैः ॥ [१९]काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्वतः ॥ २३ ॥
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ॥ न्यवेदयन्[२०]महात्मानौ पुत्रौ दशरथस्य तौ ॥ २४ ॥

---

क्षणं । मन्त्रपुरस्कृतमित्यनेनमधुपर्ककरणमुच्यते ॥७॥ निरामयं निरुपप्लवत्वं ॥ ८ ॥ तान् अर्घ्यदातॄन् । सोपाध्यायपुरोधसः उपाध्यायाः ऋत्विजः । पुरोधाः शतानन्दः तत्सहितांस्तान् । कुशलंपृष्ट्वेत्यर्थः । सर्वैः जनैः शतानन्दऋत्विगादिभिः । प्रहृष्टवत् सहर्षमित्यर्थः । भावेनिष्ठा । यथान्यायं यथाक्रमं । पृष्ट्वेत्यन्वयः ॥ ९—१० ॥ राजाचेति विश्वामित्रवचनादित्यर्थसिद्धम् ॥ ११ ॥ उपविष्टान् तानितिशेषः ॥ १२ ॥ यज्ञसमृद्धिः समग्रता जातेतिशेषः । सादैवतैःसफलाकृताच । तिष्ठतुयज्ञः भवद्दर्शनमेवयज्ञफलमित्याह—अद्ययज्ञफलमिति ॥ १३—१४ ॥ द्वादशअहानिसमाहृतानिद्वादशाहं "राजाहस्सखिभ्यष्टच्" इतिटच् । "नसङ्ख्यादेः—" इत्यह्नादेशाभावः । द्वादशदिनान्यवशिष्टानियज्ञस्येतिमनीषिणऋत्विजआहुः । ततःभागार्थिनोदेवानिति द्वादशदिनान्तेसुत्याहोमोभविष्यतीत्यर्थः ॥ १५ ॥ प्रहृष्टेतिकुतूहलविशेषःसूच्यते ॥१६॥ इमावित्यादिश्लोकपञ्चकंव्याख्यातं ॥ १७—२३ ॥ तौ दशरथस्यपुत्राविति न्यवेदयदित्यर्थः ॥ २४ ॥

---

**ति०** यज्ञसमृद्धिः अङ्गवैकल्यराहित्यंसाद्गुण्यंच । अतएवसफलाकृता । इष्टिरितिशेषः ॥ १३ ॥ **ति०** दीक्षांकर्तव्यत्वेनाहुः । दीक्षायास्तावन्तिदिनान्यवशिष्टानिऋत्विजआहुः ॥ १५ ॥ इतिपञ्चाशस्सर्गः ॥ ५० ॥

**[ पा० ]** १ क. ग. प्रतिगृह्यच. २ ङ. च. छ. झ. ञ. ट. सतांश्चाथ. ज. सतानितिमुनिःपृष्ट्वा. क. ग. सतांश्चापिमुनिर्दृष्ट्वा. घ. सतांश्चायमुनिश्रेष्ठान्. ख. मुनीन्दृष्ट्वा. ३ क. ख. सोपाध्यायपुरोहितः. ४ ङ. च. छ. झ. ञ. ट. यथार्हमृषिभिस्सर्वैः. ख. यथान्यायंमुनिवरैः. घ. ज. यथान्यायमृषिस्सर्वैः. क. यथान्यायंमुनिवरान्. ५ घ. समागम्यप्रहृष्टवत्. ६ क. ग. ङ. च. छ. झ. ञ. ट. भगवानास्तां. ७ ख. ग. ङ. च. छ. झ. ञ. र्मुनिपुंगवैः. ८ क—छ. झ. ञ. ट. मुपविष्टास्समन्ततः. ९ ङ. झ. दीक्षामाहुर्मनीषिणः. ङ. च. छ. ञ. शेषमाहुर्मनस्विनः. १० क. घ. प्रहृष्टवदनंतदा. ख. प्रहृष्टवदनस्तथा. झ. प्रहृष्टवचनस्तदा. ११ क. ततःपुनस्तंपप्रच्छ. १२ क.—ट. प्रयतोनृपः. १३ ङ. झ. ञ. गजतुल्यगती. १४ ङ—ञ. यदृच्छयेव. १५ घ. ज. ट. संप्राप्तौ. १६ एतदर्धपंचकं क. ख. ज. दृश्यते. च. छ. पुस्तकयोःप्रमाणेङ्गितचेष्टितैरित्यतःपरंदृश्यते. १७ ख. महाबलौ. १८ ख. घ. ज. ट. रूपेणेङ्गितचेष्टितैः. १९ ख. सर्वलक्षणसंपन्नौ. क. कस्यपुत्रौमुनिश्रेष्ठ. २० क. ङ. च. छ. झ. ञ. दमेयात्मा.

सिद्धाश्रमनिवासं च [1]राक्षसानां वधं तथा ।। [2]तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् ।। २५ ।।
अहल्यादर्शनं चैव गौतमेन समागमम् ।। महाधनुषि जिज्ञासां [3]कर्तुमागमनं तथा ।। २६ ।।
एतत्सर्वं महातेजा जनकाय महात्मने ।। निवेद्य विररामाथ विश्वामित्रो महामुनिः ।। २७ ।।
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चाशः सर्गः ।। ५० ।।

---

## एकपञ्चाशः सर्गः ।। ५१ ।।

विश्वामित्रेणशतानन्दंप्रतितन्मातुरहल्यायाःपत्यागौतमेनसौमनस्येनपरिपूजनकथनम् ॥ १ ॥ शतानन्देनरामंप्रतिविस्तरेणविश्वामित्रचरित्रकथनारंभः ॥ २ ॥ ब्रह्मपौत्रपौत्रेणविश्वामित्रेणराज्ञाकदाचनसहसेनयाभूसंचरणानुसारेणवसिष्ठाश्रमाभिगमनम् ॥ ३ ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।। हृष्टरोमा महातेजाः शतानन्दो महातपाः ।। १ ।।
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।। रामसंदर्शनादेव परं विस्मयमागतः ।। २ ।।
[4]स तौ निषण्णौ संप्रेक्ष्य [5]सुखासीनौ नृपात्मजौ ।। शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ।। ३ ।।
[6]अपि ते मुनिशार्दूल मम माता यशस्विनी ।। दर्शिता राजपुत्राय तपोदीर्घमुपागता ।। ४ ।।
अपि रामे [7]महातेजा मम माता यशस्विनी ।। वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ।। ५ ।।
अपि रामाय कथितं [8]यथावृत्तं पुरातनम् ।। मम मातुर्महातेजो [9]दैवेन दुरनुष्ठितम् ।। ६ ।।
अपि कौशिक भद्रं ते गुरुणा मम संगता ।। [10]माता मम मुनिश्रेष्ठ रामसंदर्शनादितः ।। ७ ।।

---

सिद्धेत्यादित्रयः । अव्यग्रं रक्षस्सहस्रावृतेमार्गेनिर्भयागमनं ।।२५।। जिज्ञासांसारासारपरीक्षां ।।२६—२७।। इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चाशः सर्गः ।। ५० ।।

---

अथाचार्यवैभवस्यज्ञेयत्वाभिप्रायेणविश्वामित्रचरित्रंप्रस्तौति—तस्यतद्वचनंइत्यादिभिःपञ्चदशभिःसर्गैः । तस्येत्यादिद्वौ । हृष्टरोमा संजातरोमाञ्चः । विस्मयमागतः अहोमहिमारामस्य यन्मेमाताकृतार्थीकृतेतिविस्मयंप्राप्तोभूदित्यर्थः ।। १—२ ।। निषण्णावित्यस्यविवरणं—सुखासीनाविति ।।३।। स्वमातरिरामकृतानुग्रहस्यश्रुतस्यविस्मयावहतयापुनःपृच्छति—अपीत्यादि । अपिःप्रश्ने । ते त्वया । दीर्घतपउपागता पूर्वोक्तभस्मशायित्वादिलक्षणंतपःप्राप्ता । अनेनपाषाणीभूयस्थितेति पक्षोनवाल्मीकेः ।। ४ ।। रामे रामविषये । वन्यैः कन्दमूलफलादिभिः । अनेनपूर्वमपिवन्यैरेतस्यजीवनमितिगम्यते । सर्वदेहिनांपूजार्हइत्यनेन परत्वंव्यञ्जितं ।। ५ ।। हेमहातेजः विश्वामित्र । ममसातुर्विषये दैवेन इन्द्रेण विधिनावा । दुरनुष्ठितं दुरनुष्ठानरूपं । पुरातनंवृत्तं चरितं । यथा यथावत् । कथितंचापि कथितंकिं ।। ६ ।। गुरुणा पित्रा । इतः अस्मादुपस्थिताद्रामसंदर्शनात् । यद्वा रामसंदर्शनादितः रामसंदर्शनादिना । तृतीयार्थेतसिः । पूजा अपिशब्दार्थः ।। ७ ।।

---

**शि०** विस्मयमागतः प्राप्तः । आसीदितिशेषः । एतेन रघुनाथशरीरशोभादेर्लौकिकविलक्षणत्वंध्वनितम् ॥२॥ **शि०** यशस्विनीत्यनेनपतिवेषोपिनानादरणीयइतिबुद्ध्यैवेन्द्रस्वीकारःकृतइतिध्वनितम् । तेनतस्याःपतिव्रताग्रणीत्वंव्यक्तं ॥४॥ **ति०** । ममगुरुणा ममसातेत्यन्वयः । अत्रवारद्वयंममेतिप्रयोगःहर्षातिशयात् । रामसंदर्शनादितइत्यस्यगतशापेतिशेषः । आदिनापूजापादस्पर्शौ ॥७॥

**[ पा० ]** १ ख. राक्षसानांचतद्वधम्. २ ङ. झ. ट. तत्रागमन. ३ च. कर्तुमारोपणंतदा. क. ख. मारोपणंतथा. छ. ज. मागमनंतदा. ४ ङ. च. छ. झ. ञ. एतौनिषण्णौ. ५ ङ. च. छ. पुस्तकेषु. शतानन्दोनृपात्मजौ. सुखासीनौमुनिश्रेष्ठंइतिपाठक्रमो दृश्यते. ६ ख. घ. अपिसामुनिशार्दूल. ७ च. छ. ञ. महाभाग. ग. ट. महातेजो. ८ ङ. च. छ. झ. ञ. यद्वृत्तंतत्पुरातनम्, ९ ङ—ञ. देवेनदुरनुष्ठितम्. ट. देवेनयदनुष्ठितम्. ख. घ. दैवेनयदनुष्ठितम्. १० ग. ङ. च. छ. ञ. ममसाता,

अपि मे गुरुणा रामः पूजितः कुशिकात्मज ॥ इहागतो महातेजाः [1]पूजां प्राप्तो महात्मनः ॥ ८ ॥
अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज ॥ इहागतेन रामेण [2]प्रयतेनाभिवादितः ॥ ९ ॥
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः ॥ प्रत्युवाच शतानन्दं [3]वाक्यज्ञो वाक्यकोविदम् ॥१०॥
नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया ॥ संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११ ॥
तच्छ्रुत्वा वचनं तस्य [4]विश्वामित्रस्य धीमतः ॥ शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२ ॥
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोसि राघव ॥ विश्वामित्रं पुरस्कृत्य महर्षि[5]मपराजितम् ॥ १३ ॥
[6]अचिन्त्यकर्मा तपसा ब्रह्मर्षि[7]रतुलप्रभः ॥ विश्वामित्रो [8]महातेजा [9]वेत्स्येनं परमां गतिम् ॥ १४ ॥
नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन ॥ गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५ ॥
[10]श्रूयतामभिधास्यामि कौशिकस्य महात्मनः ॥ यथाबलं [11]यथावृत्तं तन्मे निगदतः शृणु ॥ १६ ॥
[12]राजाऽभूदेष धर्मात्मा दीर्घकाल[13]मरिन्दमः ॥ [14]धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७ ॥
प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः ॥ कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः ॥ १८ ॥
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः ॥ गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९ ॥
विश्वामित्रो महातेजाः पालयामास मेदिनीम् ॥ बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २० ॥
[15]कदाचित्तु महातेजा योजयित्वा [16]वरूथिनीम् ॥ अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१ ॥
नगराणि [17]च राष्ट्राणि सरितश्च [18]तथा गिरीन् ॥ आश्रमान्क्रमशो [19]राम विचरन्नाजगाम ह ॥ २२ ॥
वसिष्ठस्याश्रमपदं [20]नानावृक्षसमाकुलम् ॥ नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥
देवदानवगन्धर्वैः किंनरै[21]रुपशोभितम् ॥ [22]प्रशान्तहरिणाकीर्णं द्विजसङ्घनिषेवितम् ॥ २४ ॥

इह अस्मदाश्रमे। आगतः महातेजाः गुरुः। महात्मनः रामात्। पूजां अहल्यालाभरूपां। अपिप्राप्तः ॥ ८॥ शान्तेन कोपरहितेन। मनसा उपलक्षितोगुरुः। इह अस्मदाश्रमे। आगतेन। प्रयतेन मनस्सक्तिरूपयत्नवता। रामेण अभिवादितःकिं ॥ ९—१० ॥ नातिक्रान्तं मयासमयातिक्रमोनकृतः। समयेयत्कर्तव्यं तत्कृतं। तदेवाह—संगतेति। नातिक्रान्तमित्यस्यविवरणं—यत्कर्तव्यमिति। तस्यविवरणं—संगतेति। भार्गवेण जमदग्निना। रेणुका परशुराममातेवेतिभावः ॥ ११—१२ ॥ दिष्ट्या दैवयोगेन ॥ १३ ॥ विश्वामित्रंस्तौति—अचिन्त्येत्यादि। तपसाब्रह्मर्षिः तपसाप्राप्तब्रह्मर्षिभावः। परमांगतिं तवपरमहितप्रदं। वेत्सीत्यत्रकाकुरनुसन्धेया ॥ १४॥ एतदेवाह—नास्तीति। धन्यत्वेहेतुः—गोप्तेति। येन कुशिकपुत्रेण ॥ १५ ॥ बलं तपोबलं। यथा यादृशं। वृत्तं चरित्रंच। यथा यादृशं। तथा तत्सर्वं। मे मत्तः। शृणु ॥१६—१७॥ कस्यराज्ञःपुत्रइत्यत्राह—प्रजापतीत्यादिश्लोकत्रयं ॥ १८—१९॥ पालयामासेत्यस्यविवरणं—बह्विति ॥२०॥ कदाचिदित्याद्यष्टौश्लोकाः। वरूथिनी चतुरङ्गबलं। योजयित्वा उपस्थाप्य ॥ २१—२३ ॥ प्रशान्तत्ववि-

**ति॰** महातेजारामः मद्गुरोस्सकाशात्पूजांप्राप्य इहयज्ञभूमावागतइतिपृष्टस्यैवार्थस्यभङ्ग्यन्तरेणप्रश्नः ॥ ८ ॥ **ति॰** शान्तेनमनसोपलक्षितोमेगुरुः। इहागतेन गौतमाश्रमेआगतेन। गौतमपूजितेनरामेणाभिवादितः। नतुमन्मातृदोषात्तिरस्कृतइति प्रश्नान्तरं। पूजाङ्गीकारवन्दनेअतिरस्कारचिह्नमितिभावः ॥ ९ ॥ **ति॰** गोप्ता अस्त्रदानादिना ॥ १५ ॥ **ती॰** बलं क्षत्रबलं। यथा

**[ पा॰ ]** १ क—ट. पूजांप्राप्य. २ ङ. च. छ. झ. ञ. पूजितेनाभिवादितः. घ. प्रयत्नेनाभि. ३ घ. वाक्यज्ञंवाक्यकोविदः. ४ क—घ. ज. विश्वामित्रस्यभाषितं. ५ क. च. ञ. मभिपूजितम्. ६ च. अचिन्त्यतपसायुक्तो. ७ ग. ङ. च. छ. झ. ञ. रमितप्रभ. ८ ख. महाभाग. क. च. छ. ञ. महाबाहो. ९ ङ. झ. ट. वेद्म्येनं. १० ख—छ. झ. ञ. श्रूयतांचापि. ११ ख. ङ. च. छ. झ. ञ. यथातत्वं. १२ ङ. च. छ. झ. ञ. राजासीदेष. १३ क. ख. घ. च. मरिंदम. १४ क. ख. सर्वज्ञः. १५ घ. कदाचित्समहातेजाः. १६ ग. षडङ्गिनीम्. १७ ख. घ. सराष्ट्राणि. १८ क. ख. च. छ. झ. ञ. महागिरीन्. १९ क. ख. घ—छ. झ. ञ. ट. राजा. २० ङ. ज. झ. ट. नानापुष्पलताद्रुमम्. क. ख. घ. नानापुष्पफलद्रुमम्. च. नानापक्षिलताद्रुतम्. छ. ञ. नानापक्षिलताद्रुमम्. २१ घ. रपिसेवितम्. २२ क. ख. प्रकीर्णद्विजसंघातैर्हरिणौघनिषेवितम्.

ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् ॥ तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५ ॥
[ संततं संकुलं श्रीमद्ब्रह्मकल्पैर्महात्मभिः ] ॥ अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ॥
फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ॥ २६ ॥
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ॥ अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ॥ २७ ॥
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ॥ ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकपञ्चाशस्सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

वसिष्ठेनससैन्यस्यविश्वामित्रस्यातिथ्यायनिजहोमधेनुं शबलांप्रतिसोपस्करान्नसर्जननियोजनम् ॥ १ ॥

स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ॥ प्रणतो विनयाद्वीरो वसिष्ठं जपतांवरम् ॥ १ ॥
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना ॥ आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह ॥ २ ॥
उपविष्टाय च तदा विश्वामित्राय धीमते ॥ यथान्यायं मुनिवरः फलमूलमुपाहरत् ॥ ३ ॥
प्रतिगृह्य च तां पूजां वसिष्ठाद्राजसत्तमः ॥ तपोग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ॥ ४ ॥
विश्वामित्रो महातेजा वनस्पतिगणे तथा ॥ सर्वत्र कुशलं चाह वसिष्ठो राजसत्तमम् ॥ ५ ॥
सुखोपविष्टं राजानं विश्वामित्रं महातपाः ॥ पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६ ॥
कच्चित्ते कुशलं राजन्कच्चिद्धर्मेण रञ्जयन् ॥ प्रजाः पालयसे वीर राजवृत्तेन धार्मिक ॥ ७ ॥
कच्चित्ते संभृता भृत्याः कच्चित्तिष्ठन्ति शासने ॥ कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८ ॥
कच्चिद्बलेषु कोशेषु मित्रेषु च परंतप ॥ कुशलं ते नरव्याघ्र पुत्रपौत्रे तवानघ ॥ ९ ॥

शेषणाय पुनर्हरिणोपादानं ॥ २४—२५ ॥ अब्भक्षैः अम्मात्रभक्षैः । दान्तैर्नियतमनस्कैः ॥ २६ ॥ वालखिल्याः ब्रह्मणोवालजाऋषयः । वैखानसाः तन्नखजाः "येनखास्तेवैखानसाः । येवालास्तेवालखिल्याः" इतिश्रुतेः । वसिष्ठाश्रमवैभववर्णनं एवंभूतेनापिसंमानितोविश्वामित्रइतितस्यवैभवकथनार्थं ॥ २७—२८ ॥ इति गोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

विश्वामित्रसंमानंद्विपञ्चाशे—सदृष्ट्वेत्यादि । वसिष्ठंदृष्ट्वा प्रणतः प्रणनाम ॥ १ ॥ उक्तः ऊचे । व्यादिदेश दापयामासेत्यर्थः ॥ २ ॥ उपविष्टायेत्यादिचत्वारः । फलमूलमिति "जातिरप्राणिनां" इत्येकवत्त्वं ॥ ३—४ ॥ राजसत्तमं प्रतीतिशेषः ॥ ५—६ ॥ कच्चिदित्यादित्रयः कच्चिदितिकामप्रवेदनेऽव्ययं । "कच्चित्कामप्रवेदन" इत्यमरः । तवकुशलंममेप्सितमित्यमुमर्थंद्योतयति । राजवृत्तेन चतुर्विधेन । उपलक्षितः । यथाहुः "न्यायेनार्जनमर्थस्यवर्धनंपालनंतथा । सत्पात्रेप्रतिपत्तिश्चराजवृत्तंचतुर्विधं" इति ॥ ७ ॥ संभृताः पोषिताः । तिष्ठन्तीतिशेषः ॥ ८ ॥ बलेषु-चतुरङ्गबलेषु । कोशेषु अर्थसमूहेषु पुत्रपौत्रइति गवा-

यादृशं । वृत्तं तपोरूपं । ति० तत्वं ब्रह्मर्षित्वंच ॥१६॥ ति० ज्ञानमात्राधिकृतानारदाद्यादेवलोकसंचारिणोदेवर्षयः । ज्ञानकर्मोभयाधिकृताब्रह्मर्षयोभूप्रतिष्ठाः । शि० अग्निकल्पैः अग्निंकल्पयन्तिप्रतिदिनंविधिनास्थापयन्तितेअग्निहोत्रिणइतियावत् । तैः ॥२५॥ शि० श्रीमद्ब्रह्मकल्पैः श्रीमन्तोयेब्रह्म वेदंकल्पयन्ति वेदशाखाविभागकर्तारइतियावत् । तैः ॥ २६ ॥ इत्येकपञ्चाशस्सर्गः ॥५१॥

[ पा० ] १ इदमर्धं ख—ट. दृश्यते. २ घ. अग्निभक्षैः. ३ ङ. झ. जितदोषैः. ४ ङ—ट. तंदृष्ट्वा. ५ क. ख. प्रणम्य. ६ क. ख. मुनिश्रेष्ठः. घ. ऋषिवरः. ७ क. ख. घ. फलमूलान्युपाहरत्. ८ घ—छ. झ. ञ. प्रतिगृह्यतु. ९ ग—ञ. तदा. १० ङ. च. छ. झ. ञ. प्राह. ११ घ—ञ. पालयसेराजन्. १२ ग. ट. सुभृताः. १३ क. ख. घ. द्बलेचकोशेच. ज. द्बलेवाकोशेवा. १४ घ. ज. पुत्रेपौत्रे. १५ ङ—ट. तथानघ.

सर्वत्र कुशलं राजा [1]वसिष्ठं प्रत्युदाहरत् ॥ विश्वामित्रो महातेजा वसिष्ठं [2]विनयान्वितः ॥ १० ॥
[3]कृत्वोभौ सुचिरं कालं [4]धर्मिष्ठौ ताः [5]कथाश्शुभाः ॥ मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११ ॥
ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन ॥ विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२ ॥
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ॥ तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३ ॥
[6]सत्क्रियां हि[7] भवानेतां [8]प्रतीच्छतु [9]मयोद्यताम् ॥ [10]राजा त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४ ॥
एवमुक्तो वसिष्ठेन विश्वामित्रो [11]महामतिः ॥ कृतमित्यब्रवीद्राजा [12]प्रियवाक्येन मे त्वया ॥ १५ ॥
फलमूलेन भगवन्विद्यते यत्तवाश्रमे ॥ पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥
[13]सर्वथा [14]च महाप्राज्ञ पूजार्हेण सुपूजितः ॥ [15]गमिष्यामि नमस्तेस्तु मैत्रेणेक्षस्व चक्षुषा ॥ १७ ॥
एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि ॥ न्यमन्त्रयत धर्मात्मा पुनः पुनरुदारधीः ॥ १८ ॥
बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ॥ यथा प्रियं भगवतस्तथाऽस्तु [16]मुनिसत्तम ॥ १९ ॥
[17]एवमुक्तो महातेजा वसिष्ठो जपतां वरः ॥ आजुहाव ततः प्रीतः कल्माषीं [18]धूतकल्मषः ॥ २० ॥
एह्येहि शबले क्षिप्रं शृणु चापि वचो मम ॥ सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ॥
भोजनेन महार्हेण सत्कारं संविधत्स्व मे ॥ २१ ॥
यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ॥ तत्सर्वं [19]कामधुक् क्षिप्र[20]मभिवर्ष कृते मम ॥ २२ ॥
रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ॥ [21]अन्नानां निचयं सर्वं सृजस्व शबले [22]त्वर ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

श्वप्रभृतित्वादेकवत्त्वं ॥ ९ ॥ सर्वत्र वसिष्ठपृष्टसर्वविषयइत्यर्थः । वसिष्ठं धनिकं ॥१०॥ ताःकथाः अन्योन्यकुशलप्रश्नोत्तररूपाः । प्रीयेतां अप्रीणयतां ॥११॥ ततइत्यादित्रयः। प्रहसन्निव प्रसन्नमुखइत्यर्थः ॥१२॥ संप्रतीच्छ प्रतिगृहाण ॥ १३ ॥ उद्यतांचिकीर्षितां ॥ १४ ॥ एवमितित्रयः । प्रियवाक्येन आतिथ्यंकरिष्यामीत्यनेनवचनेन । आतिथ्यंकृतं ॥ १५ ॥ तवाश्रमेयद्विद्यते तेनफलमूलेनसुपूजितइत्यन्वयः । पूजार्हेण त्वयेतिशेषः । मैत्रेण स्नेहयुक्तेन । मत्वर्थीयाजन्तः ॥ १६—१७ ॥ एवंब्रुवन्तमितिद्वौ । पुनःन्यमन्त्रयत भोजनार्थंप्रार्थनमकरोत् । पुनःपुनरित्यत्र न्यमन्त्रयतेत्यनुषज्यते । बहुशःप्रत्युत्तरेपि पुनःपुनर्न्यमन्त्रयतेत्यर्थः ॥ १८ ॥ गाधेयः गाधिपुत्रः । बाढमित्यस्यैवविवरणं यथेति ॥ १९ ॥ कल्माषीं चित्रवर्णां । शबलामितियावत् । "चित्रंकिर्मीरकल्माष—"इत्यमरः ॥२०॥ एहीतिसार्धश्लोकः । सबलस्यास्यराजर्षेःसत्कारंकर्तुं व्यवसितोस्मि । संविधत्स्व तदुपयोगिवस्तुजातंसंपाद्य ॥ २१ ॥ षड्रसेषु यद्यस्ययस्य अभिपूजितं अभिमतं । तत्सर्वं यथाकामं ममकृते अभिवर्षेत्यन्वयः । " अर्थेकृतेचतादर्थ्येनिपातद्वयमव्ययं " इतिनिघण्टुः ॥२२॥ रसेन रसायनभेदेन । अन्नेन भक्ष्येण शष्कुलीलाजादिना । पानेन पेयेन पानकरसादिना । लेह्य-

---

**ति०** एकोवसिष्ठशब्दोवरिष्ठवाची । **शि०** आवशिष्ठं अतिकान्तिमन्तं । विनयान्वितं विनयो विश्वामित्रकर्तृकविनम्रता । अन्वितःप्राप्तःयस्यैतं । आवशिष्ठशब्दःआङ्पूर्वककान्त्यर्थकवशधातुप्रकृतिकः औणादिकथन्प्रत्ययान्तः ॥ १० ॥ **मुनिभा०** कृतमित्येतत्पदंराजपदादुपरि वाक्यादौनिवेश्यं । वसिष्ठेनैवमुक्तोमहामतिर्विश्वामित्रो राजा कृतं वाक्येनमेपूजात्वयाकृतैवेत्यब्रवीत् ॥ १५ ॥ इतिद्विपञ्चाशस्सर्गः ॥ ५२ ॥

[ **पा०** ] १ ट. वशिष्ठं. २ ङ. च. ज. झ. ट. विनयाम्वितम्. ३ ङ. च. छ. झ. ञ. कृत्वातौ. ४ ख. घ. ज. धर्मिष्ठौतौ. ५ क. ङ. च. छ. झ. ञ. ट. कथास्तदा. ६ क. घ. सत्क्रियांतु. ७ क. महतींत्वेतां. ख. घ. ज. ट. हिभवांस्त्वेतां. ८ क. प्रतीच्छत्वं. ९ ङ. झ. ञ. ट. मयाकृताम्. १० क. ख. घ—ट. राजंस्त्वमतिथि. ११ च. घ.—छ. झ. महामुनिः. १२ ख.—ञ. पूजावाक्येन. १३ ज. सर्वदा. १४ ख. सुमहाप्राज्ञ. १५ झ. नमस्तेऽस्तुगमिष्यामि. १६ ग. ङ. च. छ. झ. ञ. मुनिपुङ्गव. १७ ङ. च. छ. झ. ञ. एवमुक्तस्तथातेन. १८ ङ. च. छ. झ. ञ. ट. धूतकल्मषाम्. १९ ख—ट. कामधुग्दिव्ये. २० ग. ज. प्रवर्षस्वकृतेमम. २१ ग. ज. ट. अन्नाद्यनिचयं. २२ ज. ट. शबलेत्विह.

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

शबलाकल्पितविविधान्नभोजनेनपरिजनैःसहपरितोषमुपगतवताविश्वामित्रेणवसिष्ठंप्रतिप्रतिनिधितयाबहुगोधनधानादि-स्वीकारेण शबलादानप्रार्थनेपिवसिष्ठेनतदनङ्गीकरणम् ॥ १ ॥

**एवमुक्ता वसिष्ठेन शबला शत्रुसूदन ॥ विदधे कामधुक्कामान्यस्य[1] यथेप्सितम् ॥ १ ॥**
**इक्षून्मधूं[2]स्तथा लाजान्मैरेयांश्च वरासवान् ॥ पाना[3]नि च महार्हाणि भक्ष्यांश्चोच्चावचां[4]स्तथा ॥ २ ॥**
**उष्णाढ्यस्यौदन[5]स्यात्र राशयः पर्वतोपमाः ॥ मृष्टान्नानि[6] च सूपाश्च दधिकुल्यास्तथैव च ॥ ३ ॥**
**नानास्वादुरसानां च षाडवानां[7] तथैव च ॥ भाजनानि[8] सुपूर्णानि[9] गौडानि च सहस्रशः ॥ ४ ॥**
**सर्वमासीत्सुसंतुष्टं हृष्टपुष्टजनायुतम्[10] ॥ विश्वामित्रबलं[11] राम वसिष्ठेनातितर्पितम्[12] ॥ ५ ॥**
**विश्वामित्रोऽपि[13] राजर्षिर्हृष्टः[14] पुष्टस्तदाऽभवत् ॥ सान्तःपुरवरो[15] राजा सब्राह्मणपुरोहितः[16] ॥ ६ ॥**
**सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा ॥ युक्तः परमहर्षेण[17] वसिष्ठमिदमब्रवीत् ॥ ७ ॥**
**पूजितोऽहं त्वया ब्रह्मन्पूजार्हेण सुसत्कृतः ॥ श्रूयतामभिधास्यामि[18] वाक्यं वाक्यविशारद ॥ ८ ॥**
**गवां शतसहस्रेण दीयतां शबला मम ॥ ९ ॥**
**रत्नं[19] हि भगवन्नेतद्रत्नहारी च पार्थिवः ॥ तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज ॥ १० ॥**

चोष्येण लेह्येन जिह्वास्वाद्येनक्षौद्रादिना । चोष्येण अधरपुटग्राह्येणदध्यादिनाच । समन्वितं "सर्वोद्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः । अन्नानां शाल्यन्नादीनां । निचयं राशिं । अनेनभक्ष्यभोज्यलेह्यचोष्यपेयखाद्यरूपषड्विधाभ्यवहारादर्शिताः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

कामधेनुप्रार्थनंत्रिपञ्चाशे—एवमुक्तेत्यादि । यस्ययस्ययथेप्सितं तथा कामान् काङ्क्षितान् । विदधे ॥ १ ॥ उक्तमेवप्रपञ्चयति—इक्षूनित्यादि । मधूनितिपुँल्लिङ्गत्वमार्षं । मैरेयाः मद्यविशेषाः मैरेयाख्यानित्यर्थः । "मैरेयमासवोधात्रीधातकीगुडवारिभिः" इतिवैजयन्ती । पानानि पानकादीनि । भक्ष्यान् अपूपविशेषान् । उच्चावचात् नानाप्रकारान् । "उच्चावचंनैकभेदं" इत्यमरः । विदधइत्यनुषज्यते ॥२॥ आसन्निति शेषः । मृष्टान्नानि इष्टान्नानि पायसभेदाइतियावत् ॥ ३ ॥ नानाविधाःस्वादवोरुच्याःरसाःमाधुर्यादयोयेषांतेषां । षाडवाः षड्रसविकृताःभक्ष्यविशेषाः । शैषिकोण् । तेषांपूर्णानि तैःपूर्णानीत्यर्थः । "पूरणगुण–" इत्यादिना तृतीयार्थेषष्ठी । गौडानि गुडविकाराः । अत्राप्यासन्नितिशेषः ॥ ४ ॥ पूर्वमेवहृष्टपुष्टजनायुतंविश्वामित्रबलंसर्वं सुसंतुष्टमासीदित्यन्वयः ॥ ५ ॥ हृष्टः आदरेण । पुष्टः भोजनादिना ॥ ६ ॥ अमात्याः कर्मणिसहायाः । मन्त्रिणः मन्त्रसहायाः ॥ ७ ॥ पूजार्हेण अस्मदादिभिरितिशेषः । पूजितः बहूकृतः । सुसत्कृतः आतिथ्येनसत्कृतः ॥ ८ ॥ शतसहस्रेण निष्क्रयभूतेन । अर्धम् ॥ ९ ॥ हि यस्मात् । एतत्रत्नं स्वजातिश्रेष्ठं । "रत्नंस्वजातिश्रेष्ठेपि" इत्यमरः । यतःपार्थिवोर-

ति० दधिकुल्याइत्युपलक्षणंदुग्धादेरपि ॥ ३ ॥ कत० खाण्डवानां भक्ष्यविशेषाणां । शेषेषष्ठी । तैःपूर्णानि । भोजनानि भोजनपात्राणि । गौडानि राजतानि । आसन्नितिशेषः । "रजतेगुडः" इत्यभिधानं ॥ ४ ॥ शि० सर्वनाम्नामुद्देश्यविधेयान्यतर-

[ पा० ] १ क. ग. ङ. छ. झ. ञ. ट. यस्येप्सितंयथा. ख. यस्ययथेप्सितान्. च. यस्येप्सितान्यथा. घ. यस्येप्सितंतथा. २ ग. मधुरसांल्लाजान्. ३ क. महार्हाणिचपानानि. ४ ङ. च. छ. झ. ञ. वचानपि. घ. वचांस्तदा. ५ क. ख. दनस्यापि घ. दनस्यास्य. ६ क. ख. ग. च. छ. ञ. मृष्टान्नानिचसूपांश्च. घ. मृष्टान्यन्नानिपूपांश्च. ७ ख. ग. घ. च. ज. षड्रसानांतथैवच. ङ. छ. झ. ञ. ट. खाण्डवानां. ८ ङ. च. झ. ञ. ट. भोजनानि. ९ घ. च. सुवर्णानि. १० क—घ. जनाकुलम्. ११ क. ख. बलंसर्वं. १२ ख. ग. घ. नाभितर्पितम्. ङ—ट. नसुतर्पितम्. १३ ङ. च. छ. झ. ञ. विश्वामित्रोहि. १४ ख. ग. ज. तुष्टःपुष्ट. १५ क. घ. सान्तःपुरचरो. १६ ख. ग. पुरोगमः. १७ क. घ—छ. ञ. परेणहर्षेण. १८ घ. चाभिधास्यामि. १९ घ. रत्नंचभगवन्.

एवमुक्तस्तु भगवान्वसिष्ठो [1]मुनिसत्तमः ॥ विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् ॥ ११ ॥
नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ॥ [2]राजन्दास्यामि शबलां राशिभी रजतस्य वा ॥ १२ ॥
न परित्यागमर्हेयं मत्सकाशादरिन्दम ॥ [3]शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा ॥ १३ ॥
अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ॥ आयत्तमग्निहोत्रं च [4]बलिर्होमस्तथैव च ॥ १४ ॥
स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ॥ [5]आयत्तमत्र राजर्षे सर्वमेतन्न संशयः ॥ १५ ॥
सर्वस्वमेतत्सत्येन मम तुष्टि[6]करी सदा ॥ कारणैर्बहुभी राजन्न दास्ये शबलां तव ॥ १६ ॥
वसिष्ठेनैवमुक्तस्तु विश्वामित्रो[7]ऽब्रवीत्ततः ॥ संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥ १७ ॥
हैरण्य[8]कक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ॥ ददामि कुञ्जराणां ते सहस्राणि चतुर्दश ॥ १८ ॥
हैरण्यानां [9]रथानां ते श्वेताश्वानां चतुर्युजाम् ॥ [10]ददामि ते शतान्यष्टौ किं[11]किणीकविभूषितान् ॥१९॥
हयानां देशजातानां कुलजानां महौजसाम् ॥ सहस्रमेकं दश च [12]ददामि तव सुव्रत ॥ २० ॥
नानावर्णविभक्तानां [13]वयस्स्थानां तथैव च ॥ ददाम्येकां गवां कोटिं शबला दीयतां मम ॥२१॥
यावदिच्छसि [14]रत्नं वा हिरण्यं वा द्विजोत्तम ॥ [15]तावद्ददामि तत्सर्वं [16]शबला दीयतां मम ॥ २२ ॥
एवमुक्तस्तु भगवान्विश्वामित्रेण धीमता ॥ न दास्यामीति शबलां प्राह राजन्कथंचन ॥ २३ ॥
[17]एतदेव हि मे रत्नमेतदेव हि मे धनम् ॥ [18]एतदेव हि [19]सर्वस्वमेतदेव हि जीवितम् ॥ २४ ॥
दर्शश्च पूर्णमासश्च [20]यज्ञाश्चैवाप्तदक्षिणाः ॥ एतदेव हि मे राजन्विविधाश्च क्रियास्तथा ॥ २५ ॥

त्वहारी तस्माद्धर्मतः न्यायतः । ममैषा मेदेहीत्यन्वयः ॥ १० ॥ एवमित्यादिषट् ॥ ११—१२ ॥ परित्यागं विश्लेषं । प्राप्तुंनार्हा । आत्मवतः मनस्विनः । कीर्तिरिव । मह्यं मम । शबला शाश्वती नित्यसंबन्धा ॥१३॥ हव्यं देवार्थं । कव्यं पित्रर्थं । प्राणयात्रा प्राणाग्निहोत्रं । अग्निहोत्रं सायंप्रातःकर्तव्योहोमविशेषः । बलिः भूतबलिः । होमः दर्शपूर्णमासादिः । एतत्सर्वं अस्यांआयत्तं एतदधीनं ॥१४॥ स्वाहाकारः स्वाहेतिमन्त्रः । वषट्कारो वषडितिमन्त्रः । विविधाविद्याः वेदाद्याश्च । अस्यामायत्ताः एतत्पयआदिप्राशनेनचित्तशुद्धेःप्राणतृप्तेर्देहबलादेश्चसाध्यत्वात्तदेकमूलत्वं । अत्रार्थे नसंशयः ॥१५॥ सत्येनवदामीत्यर्थः । कारणैः उक्तैरनुक्तैश्च ॥ १६ ॥ संरब्धतरं अत्यन्ताभिनिवेशयुक्तं ॥ १७ ॥ हैरण्यानि हिरण्मयानि कक्ष्याग्रैवेयाणियेषांते । कक्ष्या मध्यबन्धनार्थारज्जुः । "कक्ष्याप्रकोष्ठेहर्म्यादेःकाञ्च्यांमध्येभबन्धने "इत्यमरः । ग्रैवेयाणि ग्रीवाबन्धनरज्जवः । "ग्रीवाभ्योण्च" इतिचाडञ् । सहस्राणीत्यस्यपुँल्लिङ्गविशेषणमार्षं ॥ १८ ॥ चतुर्युजां चतुर्भिरश्वैर्युक्तानां । गमकत्वात्समासः । सङ्ख्यानियमपरत्वान्नपुनरुक्तिः । किङ्किणीकैर्विभूषितान् ॥ १९ ॥ देशाःकांभोजबाह्लीकादयः । कुलजानां गन्धर्वकुलजातानां । "गन्धर्वकुलजातस्त्वं " इतिपुराणवचनात् ॥ २० ॥ नानावर्णैःविभक्तानां अन्योन्यविलक्षणानां ॥ २१ ॥ यावत्प्रमाणमिच्छसि तावत्प्रमाणंसर्वंददामि ॥ २२ ॥ हेराजन् शबलांनदास्यामीत्यन्वयः ॥ २३ ॥ एतदित्या-

लिङ्गतेतिसिद्धान्तात्एतदित्येतच्छब्दस्यनपुंसकत्वं ॥ १० ॥ ति० होमो वैश्वदेवादिः । स्वाहाकारवषट्कारौ तत्साध्ययज्ञौ ॥ १४ ॥ ति० किङ्किणीकविभूषितानिति षष्ठ्यर्थेद्वितीया । रथानांविशेषणमेतत् ॥ १९ ॥ इतित्रिपञ्चाशस्सर्गः ॥ ५३ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. मुनिपुङ्गवः. २ घ. इमांदास्यामि. ग. नाहंदास्यामि. ३ ख. शबलाशाश्वती. ४ क. ख. ग. बलिहोम. ५ घ. आयत्तंमम. ६ ख. ङ. झ. करीतथा. ७ क. ख. ब्रवीद्वचः. ङ. च. झ. ट. ब्रवीत्तदा. ८ झ. कक्षाग्रैवेयान्. ९ ग. ङ. च. झ. ट. रथानांच. १० ज. दास्यामिते. ११ झ. किङ्किणीशत. १२ ज. ट. दास्यामितव. १३ क. ख. सवत्सानां. १४ ङ. च. छ. झ. ञ. रत्नानि. १५ क. ख. तावद्दास्यामि. १६ ङ. च. झ. ञ. दीयतांशबलामम. १७ क. ङ. ज. एतदेवहिमेसर्वं. १८ एतदेवहिसर्वस्वं. दर्शश्चपूर्णमासश्च. इत्यर्धयोः ज. पुस्तकेव्युत्क्रमोदृश्यते. १९ ज. मेरत्नं. २० च. यज्ञाश्चैवसदक्षिणाः.

अ[1]दोमूलाः क्रियाः सर्वा मम राजन्न संशयः ॥ बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥२६॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

विश्वामित्रभटैर्बलात्काल्यमानयाशबलया वसिष्ठनिकटमेत्यसरोदनंशोचनम् ॥ १ ॥ वसिष्ठचोदनयाशबलोत्सृष्टभटैर्विश्वामित्रसेनानिरसनेरुष्टेनतेनास्त्रतेजसा तत्सेनायादूरोत्सारणम् ॥ २ ॥

कामधेनुं वसिष्ठोपि यदा न त्यजते मुनिः ॥ तदास्य शबलां राम विश्वामित्रोन्वकर्षत ॥ १ ॥
नीयमाना तु शबला राम राज्ञा महात्मना ॥ दुःखिता चिन्तयामास [2]रुदन्ती शोककर्शिता ॥२॥
परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ॥ याऽहं [3]राजभटैर्दीना ह्रियेयं भृशदुःखिता ॥ ३ ॥
किं मयाऽपकृतं तस्य महर्षेर्भावितात्मनः ॥ यन्मा[4]मनागसं [5]भक्तामिष्टां त्यजति धार्मिकः ॥ ४ ॥
[ [6]इति सा [7]चिन्तयित्वा तु विनि[8]श्वस्य पुनः[9]पुनः ॥ जगाम वेगेन तदा वसिष्ठं परमौजसम् ] ॥ ५ ॥
निर्धूय तांस्तदा भृत्याञ्शतशः शत्रुसूदन ॥ जगामानिलवेगेन पादमूलं महात्मनः ॥ ६ ॥
शबला सा रुदन्ती च क्रोशन्ती चे[10]दमब्रवीत् ॥ [11]वसिष्ठस्याग्रतः स्थित्वा मेघ[12]दुन्दुभिराविणी ॥ ७ ॥
भगवन्किं परित्यक्ता त्वयाऽहं ब्रह्मणः सुत ॥ यस्मा[13]द्राजभृता मां हि [14]नयन्ते त्वत्सकाशतः ॥ ८ ॥
एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् ॥ शोकसंतप्तहृदयां स्वसारमिव दुःखिताम् ॥ ९ ॥
न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया ॥ एष त्वां नयते राजा [15]बलान्मत्तो महाबलः ॥१०॥
न हि [16]तुल्यं बलं मह्यं [17]राजा त्वद्य विशेषतः ॥ [18]बली राजा क्षत्रियश्च पृथिव्याः [19]पतिरेव च ॥ ११ ॥
इयमक्षौहिणी [20]पूर्णा [21]सवाजिरथसंकुला ॥ हस्तिध्वजसमाकीर्णा तेनासौ [22]बलवत्तरः ॥ १२ ॥

---

दित्रयं ॥ २४—२५ ॥ अदोमूलाः एतन्मूलाः । प्रलापेन भवतइतिशेषः । कामान्दोग्धुंशीलमस्त्यस्या इतिकामदोहिनीं "सुप्यजातौ" इतिणिनिः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

अथबलात्कारकुपितवसिष्ठप्रहितकामधेनोर्बलसृष्टिश्चतुःपञ्चाशे—कामधेनुमित्यादिदशकं ॥१—२॥ ह्रियेयं कर्मणिसंप्रश्नेलिङ् । कथमपिह्रियेयमित्यर्थः । भृशदुःखिता भृशंदुःखिता । वृत्तिविषयेमकारलोपोभृशमादिमान्ताव्ययस्येष्यते ॥ ३—६ ॥ क्रोशन्ती आर्तस्वरंकुर्वन्ती ॥७॥ राजभृताः राजभटाः । त्वत्सकाशतः त्वत्समीपतः ॥८—९ ॥ मत्तः मत्सकाशात् ॥ १० ॥ मह्यं मम । तर्हितपोबलेनकिमितिनदण्ड्यते तत्राह—राजात्वद्यविशेषतइति । राजातपोबलेन नदण्ड्यइत्यर्थः ॥ ११ ॥ इयमित्यादिपञ्च । सवाजि-

---

ति० राजभृतैः राजसेवकैः ॥ ३ ॥ ति० दृष्ट्वा ज्ञात्वापि ॥ ४ ॥ ति० रोदनमश्रुपातः । क्रोशनमार्तशब्दः । रुदन्त्यैव ऋषिसमीपगमनं रुदन्त्यैवच कथनमित्येतदर्थद्विःरुदन्तीति । शि० क्रोशन्ती हेऋषेइत्याह्वानंकुर्वती । रुदन्ती स्वरोदनहेतुककरुणोत्पादनेनान्यानपिरोदयन्तीच ॥७॥ ति० मत्तः अविवेकी ॥१०॥ ती० हस्तिध्वजाः हस्तिषुस्थिताध्वजाः तैस्समाकीर्णा ॥ १२ ॥

[ पा० ] १ क. ख. ग. घ—छ. झ. ञ. अतोमूलाः. ज. ततोमूलाः. २ च. झ. रुदती. ३ झ. ञ. ट. राजभृतैर्दीना ह्रियेय. क. घ. ङ. च. ज. राजभृतैर्दीनाह्रियेयं. ख. दीनाबद्धापाशसुपीडिता. ४ ख. घ. मनागसीं. ५ क. ङ. च. झ. ञ. दृष्ट्वाभक्तांत्यजति. ६ अयंश्लोकः क—ट. दृश्यते. ७ ख. घ. ङ. झ. संचिन्तयित्वातु. ८ ख. ट. निश्वस्यच. ९ क. ख. मुहुर्मुहुः. १० घ. मुनिमब्रवीत्. ११ ख. ग. ज. वसिष्ठस्याभितः. १२ ङ. च. छ. झ. ञ. ट. रुदन्तीमेघनिस्वना. १३ ख. ङ. च. झ. ञ. द्राजभटाः. १४ ग. ट. नयन्ति. १५ घ. बलोन्मत्तो. १६ क. ज. ट. तुल्यबलं. ग. तुल्यबलंकामं. १७ ख. राज्ञानेनविशेषतः. १८ क. ख. सबलीक्षत्रियोराजा. १९ क. पतिरीश्वरः. २० ञ. सेना. २१ ख. घ—ञ. गजवाजिरथाकुला. क. रथकुञ्जरा. २२ ङ. च, छ. झ, ञ, बलवत्तमः.

एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् ॥ वचनं [१]वचनज्ञा सा ब्रह्मर्षि[२]ममतुलप्रभम् ॥ १३ ॥
न बलं क्षत्रियस्याहु[३]र्ब्राह्मणो बलवत्तरः ॥ ब्रह्मन्ब्रह्मबलं दिव्यं [४]क्षत्रात्तु बलवत्तरम् ॥ १४ ॥
[५]अप्रमेयबलं तुभ्यं [६]न त्वया बलवत्तरः ॥ विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ॥ १५ ॥
नियुङ्क्ष्व मां [७]महातेजस्[८]त्वद्ब्रह्मबलसंभृताम् ॥ तस्य [९]दर्पबलं [१०]यत्तन्नाशयामि दुरात्मनः ॥ १६ ॥
इत्युक्तस्तु [११]तया राम [१२]वसिष्ठस्तु महायशाः ॥ सृजस्वेति तदोवाच बलं पर[१३]बलारुजम् ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा सुरभिः साऽसृजत्तदा ॥ १८ ॥
तस्या [१४]हुंभारवोत्सृष्टाः [१५]पप्लवाः शतशो नृप ॥ नाशयन्ति बलं सर्वं विश्वामित्रस्य [१६]पश्यतः ॥ १९ ॥
बलं भग्नं ततो दृष्ट्वा रथेनाक्रम्य कौशिकः ॥ स राजा परमक्रुद्धः [१७]क्रोधविस्फारितेक्षणः ॥
पप्लवान्नाशयामास शस्त्रैरुच्चावचैरपि ॥ २० ॥
विश्वामित्रार्दितान्दृष्ट्वा पप्लवाञ्शतशस्तदा ॥ [१८]भूय एवासृजत्कोपाच्छकान्यवनमिश्रितान् ॥ २१ ॥
तैरासीत्संवृता भूमिः शकैर्यवनमिश्रितैः ॥ प्रभावद्भिर्महावीर्यैर्हेमकिञ्जल्कसन्निभैः ॥ २२ ॥
[१९]दीर्घासिपट्टसधरैर्हेमवर्णाम्बरावृतैः ॥ निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥ २३ ॥
ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह ॥ [२०]तैस्तैर्यवनकाम्भोजाः [२१]पप्लवाश्चाकुलीकृताः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

पुनर्वसिष्ठचोदनयाशबलया निजावयवोत्सृष्टैर्म्लेच्छादिभिर्विश्वामित्रसेनानिश्शेषीकरणम् ॥ १ ॥ ततोवसिष्ठेनजिघांसया समभ्यापततस्तत्सुतशतस्यहुङ्कारेणभस्मीकरणम् ॥ २॥ विश्वामित्रेणहतावशिष्टनिजात्मजस्य राज्यनियोजनपूर्वकं तपसेहिमवद्गमनम् ॥ ३ ॥ तथामहादेवात्सकलास्त्रलाभदर्पेणवसिष्ठाश्रममेत्यमहास्त्रतेजसामुनिजनविक्षोभणम् ॥ ४ ॥ वसिष्ठेनदण्डोद्यमनेनतदग्रेसमवस्थानम् ॥ ५ ॥

ततस्तानाकुलान्दृष्ट्वा विश्वामित्रास्त्रमोहितान् ॥ वसिष्ठश्चोदयामास कामधुक्सृज योगतः ॥ १ ॥

---

रथसंकुला वाजिसहितरथैस्संकुला ॥ १२—१४ ॥ तुभ्यं तव । त्वया त्वत्तः ॥ १५ ॥ त्वद्ब्रह्मबलेन त्वन्मन्त्रबलेन । संभृतां संवर्धितप्रभावां ॥ १६ ॥ इत्युक्तइत्याद्यष्टौ । आरुजति हिनस्तीत्यारुजं । बलं सैन्यं ॥ १७—१८॥ हुंभारवः पशूनां हुंभाशब्दः। उत्सृष्टाः निर्मिताः। पप्लवशकयवनादिशब्दाः म्लेच्छजातिविशेषवचनाः । पश्यतइत्यनादरेषष्ठी ॥ १९ ॥ विस्फारितं विवृतं ॥ २० ॥ अर्दितान् हिंसितान् ॥ २१ ॥ हेमकिञ्जल्कसन्निभैः हेमशब्दश्चंपकपरः तस्यकनकाह्वयत्वात् । तत्केसरतुल्यैरित्यर्थः ॥ २२ ॥ पट्टसः असिविशेषः ॥ २३—२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुष्पञ्चाशःसर्गः ॥ ५४ ॥

---

अथपुनर्दिव्यास्त्रलाभपूर्वविश्वामित्रेणवसिष्ठाश्रमसंरोधःपञ्चपञ्चाशे—ततस्तानित्यादि । हेकामधुक् ।

---

**ति०** क्षत्रात् क्षत्रियबलादपि । बलवत्तरमधिकं ॥ १४ ॥ **ति०** नियुङ्क्ष्वेति । कामधेनुलान्नियोगापेक्षा । परकाम्यार्थसृष्टावेवतस्याःसामर्थ्यात् । ब्रह्मबलसंभृतां तादृशकार्यसमर्थत्वेनमांध्यायस्वेत्यर्थः ॥ १६ ॥ इतिचतुष्पञ्चाशस्सर्गः ॥ ५४ ॥

**[ पा० ]** १ ज. वचनज्ञासौ. २ क—घ. ममितप्रभम्. ३ ङ. च. छ. झ. ञ. ट. ब्राह्मणाबलवत्तराः. ४ च. क्षत्रंचाबलवत्तरं. ङ. छ. झ. ञ. क्षत्राच्चबलवत्तरम्. ५ ख. ग. ङ—ञ. अप्रमेयं. ६ ख. नलत्तोबल. घ. नलसौबल. ७ ग. महाभाग. ८ क. ङ. च. छ. झ. ञ. त्वंब्रह्मबल. घ. त्वद्बृहद्बल. ९ क. ख. ग. ङ—झ. ट. दर्पबलं. १० झ. यत्नंनाश. ११ क. तथा. १२ ख. ग. सुमहायशाः. १३ क. घ. ङ. च. छ. झ. ञ. ट. बलार्दनम्. ख. बलद्रुहम्. ज. बलार्दन. १४ घ. हुंकारतोत्सृष्टाः. ख. हुंकारवोत्सृष्टाः. ङ. च. ज. हंभारवोत्सृष्टाः. १५ क. पह्लवाश्शतशो. ख. पप्लवाश्शस्त्रपाणयः. १६ घ. धीमतः. १७ ग. रोषविष्फारिते. १८ ख. माययैवासृजद्धोरान्. क. घ—छ. झ. ञ. ट. भूयएवासृजद्धोरान्. १९ ख. ङ. च. छ. ञ. तीक्ष्णासिपट्टिश. २० घ. च. झ. तैस्तेयवन. २१ ङ. च. छ. झ. ञ. बर्बराश्चा.

तस्या [1]हुंभारवाज्जाताः कांभोजा रविसन्निभाः ॥ [2]ऊधसस्त्वथ [3]संजाताः [4]पप्लवाः शस्त्रपाणयः ॥ २ ॥
योनिदेशाच्च यवनाः शकृद्देशा[5]च्छकास्तथा ॥ रोमकूपेषु [6]च म्लेच्छा [7]हारीतास्सकिरातकाः ॥ ३ ॥
[8]तैस्तैर्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् ॥ [9]सपदातिगजं साश्वं [10][11]सरथं रघुनन्दन ॥ ४ ॥
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना ॥ विश्वामित्रसुतानां तु शतं नानाविधायुधम् ॥
अभ्यधावत्सुसंक्रुद्धं वसिष्ठं जपतांवरम् ॥ ५ ॥
हुंकारेणैव तान्सर्वान्द[12]दाह भगवानृषिः ॥ ६ ॥
ते [13]साश्वरथपादाता वसिष्ठेन महात्मना ॥ भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्[14]तदा ॥ ७ ॥
दृष्ट्वा [15]विनाशितान्पुत्रान्बलं च सुमहायशाः ॥ [16]सव्रीडश्चिन्तयाविष्टो विश्वामित्रोऽभवत्तदा ॥ ८ ॥
समुद्र इव निर्वेगो [17]भग्नदंष्ट्र इवोरगः ॥ उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥
हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ॥ [18]हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥ १० ॥
स पुत्रमेकं राज्याय पालयेति नियुज्य च ॥ पृथिवीं क्षत्रधर्मेण [19]वनमेवान्वपद्यत ॥ ११ ॥
स गत्वा हिमवत्[20]पार्श्वे [21]किंनरोरगसेवितम् ॥ महादेवप्रसादार्थं तपस्तेपे [22]महातपाः ॥ १२ ॥
केनचित्त्वथ कालेन देवेशो वृषभध्वजः ॥ दर्शयामास वरदो विश्वामित्रं [23]महाबलम् ॥ १३ ॥
किमर्थं तप्यसे राजन्ब्रूहि यत्ते विवक्षितम् ॥ वरदोस्मि [24]वरो यस्ते काङ्क्षितः सोभिधीयताम् ॥ १४ ॥
एवमुक्तस्तु देवेन विश्वामित्रो [25]महातपाः ॥ प्रणिपत्य [26]महादेवमिदं वचनमब्रवीत् ॥ १५ ॥
यदि तुष्टो महादेव धनुर्वेदो ममानघ ॥ साङ्गोपाङ्गोपनिषदः [27]सरहस्यः प्रदीयताम् ॥ १६ ॥

---

योगतः योगमहिम्ना । तिरश्चोपि ब्रह्मप्रसादाद्योगशक्तिरस्तीतिज्ञेयं ॥ १ ॥ तस्याइत्यादिचत्वारः । ऊधसः स्तनात् ॥२॥ हारीताः किरातजातिविशेषाः ॥३—४॥ दृष्ट्वेत्यादिषट् । वसिष्ठमभ्यधावत् तस्यसर्वविनाशमूलत्वादितिभावः । जपतांवरंइति हुंकारेणनिरासेहेतुः ॥ ५—६ ॥ मुहूर्तेनेति मासेनानुवाकोऽधीतइतिवदुपसर्गेतृतीया ॥ ७—८॥ निर्वेगः युद्धप्रवृत्तिरहितः । उरगइव निश्शक्तिरितिशेषः । उपरक्तः राहुग्रस्तः॥९॥ निर्वेदं दुःखं ॥ १० ॥ सइत्यादिचत्वारः । एकं अवशिष्टमितिशेषः । राज्याय राज्यंकर्तुं । पृथिवींक्षत्रधर्मेणपालयेत्यन्वयः ॥ ११—१२ ॥ दर्शयामास आत्मानमितिशेषः ॥१३—१४॥ एवमित्यादिचत्वारः ॥१५॥ साङ्गोपाङ्गोपनिषदइत्यकारान्तत्वमार्षं । अङ्गंसन्निपत्योपकारकं उपाङ्गंआरादुपकारकं उपनिषत्रहस्यमन्त्रः ।

**ति०** सव्रीडमितिक्रियाविशेषणं । **विष०** सर्वान् पुत्रान् ॥ ८ ॥ **ती०** निर्वेदं चतुरङ्गबलेनिष्फलत्वबुद्धिं । **ति०** हतसर्वबलोत्साहः सर्वाणिबलानिशारीरबौद्धास्त्रादीनि तज्जन्योत्साहहीनः ॥ १० ॥ **ती०** क्षत्रधर्मेणपृथिवींपालयेति । अन्यथाऽहमिवभविष्यतीत्याशयः ॥ ११ ॥ **ति०** साङ्गोपाङ्गोपनिषदः । समाहारद्वन्द्वे "द्वन्द्वाच्चुद–" इतिटच् । तेनसहितः ॥ १६ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. हुंकारतोजाताः. ज. हंभारवाज्जाताः. क. हुंफारतोजाताः. २ ङ. च. छ. झ. ञ. ऊधसश्चाथ. ३ ग. ङ—ट. संभूताः. ४ ङ. च. छ. झ. ञ. बर्बराः. ५ ङ. च. छ. झ. ञ. च्छकास्स्मृताः. ६ क. ङ. च. छ. झ. ञ. म्लेच्छाश्च. ज. ट. म्लेच्छास्तु. ७ ग. ट. हारीताः. ८ क. ङ—झ. ट. तैस्तन्निषूदितं. ९ क. सैन्यं. १० ग. सपदातिरथं. ११ ग. सगजं. १२ क—छ. झ. ञ. ट. निर्ददाहमहानृषिः. घ. महामुनिः. १३ घ. साश्वरथसंबाधा. १४ ख. ङ. च. छ. झ. ञ. स्तथा. १५ ङ. झ. ञ. विनाशितान्सर्वान्. १६ झ. सव्रीलंचिन्तया. क. व्रीडितश्चिन्तया. १७ ग. भिन्नदंष्ट्रइवोरगः. १८ च. छ. ञ. गतसर्वबलोत्साहो. ङ. झ. हतसर्वबलोत्साहो. १९ ङ. च. छ. झ. ञ. ट. वनमेवाभ्यपद्यत. घ. वनमेकोन्वपद्यत. २० ङ. झ. त्पार्श्वे. २१ क. ख. किंनरैरुपशोभितम्. ङ. झ. किंनरोरगसेविते. २२ क. सुदारुणम्. २३ क. ख. ङ. च. छ. झ. ञ. महामुनिम्. २४ क. ख. वरोमत्तः. २५ क. ख. महामुनिः. २६ घ—ट. महादेवंविश्वामित्रोऽब्रवीदिदम्. २७ ख. ज. ञ. सरहस्यं.

१ अनेनव्याख्यानेनश्लोकचतुष्टयसद्भावःप्रतीयतेउपलभ्यन्तेतुत्रयएवश्लोकाःअन्योपिगवेषणीयः ।

यानि देवेषु चास्त्राणि दा[1]नवेषु महर्षिषु ॥ गन्धर्वयक्षरक्षस्सु प्रतिभान्तु ममानघ ॥
तव प्रसादाद्भवतु देवदेव ममेप्सितम् ॥ १७ ॥
एवमस्त्विति देवेशो वाक्यमुक्त्वा ग[2]तस्तदा ॥ १८ ॥
प्रा[3]प्य चास्त्राणि राजर्षिर्विश्वामित्रो म[4]हाबलः ॥ द[5]र्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९ ॥
विवर्धमानो वीर्येण समुद्र इव प[6]र्वणि ॥ ह[7]तमेव तदा मेने वसिष्ठमृषिसत्तमम् ॥ २० ॥
ततो गत्वाऽऽश्रमपदं मुमोचास्त्राणि पार्थिवः ॥ यै[8]स्तत्तपोवनं सर्वं निर्दग्धं चास्त्रतेजसा ॥ २१ ॥
उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः ॥ दृष्ट्वा विप्र[9]द्रुता भीता मु[10]नयः शतशो दिशः ॥ २२ ॥
वसिष्ठस्य च ये शिष्यास्[11]तथैव मृगपक्षिणः ॥ विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ॥२३॥
वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः ॥ मुहूर्तमिव निश्शब्दमासीदिरिणसंनिभम् ॥ २४ ॥
वदतो वै वसिष्ठस्य मा[12] भैरिति मुहुर्मुहुः ॥ ना[13]शयाम्यद्य गाधेयं नीहारमिव भास्करः ॥ २५ ॥
एवमुक्त्वा महातेजा वसिष्ठो जपतांवरः ॥ विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥
आश्रमं चिर[14]संवृद्धं यद्वि[15]नाशितवानसि ॥ दु[16]राचारोसि त[17]न्मूढ तस्मात्त्वं नभविष्यसि ॥ २७ ॥
इत्युक्त्वा परमक्रुद्धो दण्डमुद्यम्य सत्वरः ॥ वि[18]धूममिव कालाग्निं य[19]मदण्डमिवापरम् ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

सरहस्यः उपदेशगम्यार्थसहितः ॥ १६ ॥ प्रतिभान्तु तानीतिशेषः । ममेप्सितं अन्यदपीतिशेषः ॥ १७—१८ ॥ प्राप्येत्यादिसप्त । दर्पपूर्णइति क्षत्रियत्वादिदर्पयुक्तः । विशेषास्त्रलाभादिदानींदर्पपूर्णोभूदित्यर्थः ॥ १९—२० ॥ यैरस्त्रैः । अस्त्रतेजसा स्वतेजसा ॥२१॥ उदीर्यमाणं प्रयुज्यमानं ॥ २२ ॥ भयात् भयदादस्त्रात् । नानादिग्भ्यइति व्यत्ययेनद्वितीयार्थेचतुर्थी । नानादिग्भ्यः स्वस्वस्थानेभ्यइतिवा ॥ २३ ॥ आश्रमपदं वनं । शून्यं निस्तरुगुल्मं । इरिणं ऊषरं ॥ २४ ॥ वसिष्ठेरक्षकेविद्यमानेकुतोविद्रवन्तीत्यत्राह—वदतइति । भावलक्षणेषष्ठी अनादरेवा । गाधेयंनाशयामिमाभैरितिवदतोवसिष्ठस्यवचनमनादृत्यविद्रवन्तीतिपूर्वेणान्वयः ॥ २५ ॥ एवमित्यादित्रयः । उक्त्वा स्वानितिशेषः ॥ २६ ॥ नभविष्यसि नशिष्यसीतियावत् ॥ २७ ॥ उद्यम्य तस्थावितिशेषः ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

**वि०** तवप्रसादात् नतूपदेशापेक्षेतिभावः ॥ १७ ॥ **शि०** अस्त्रतेजसायुक्तः पार्थिवः विश्वामित्रः । आश्रमपदं श्रमनिवर्तकवसिष्ठस्थानं ॥ २१ ॥ **शि०** दुराचारः परवस्त्वपहरणरूपनिषिद्धाचरणमनाश्वासि । यन्मूढ यतःक्रोधादिनिवृत्तेः मूःबंधनं प्रतिबन्धकत्वमितियावत् वहतिप्राप्नोतितत्संबोधनं निवृत्तिप्रतिबन्धकेत्यर्थः ॥ २७ ॥ इतिपञ्चपञ्चाशस्सर्गः ॥ ५५ ॥

[ **पा०** ] १ घ. मानवेषु. २ क. ख. दिवंगतः. ३ ख. ज. प्राप्यशस्त्राणि. क. ख. ङ. च. छ. झ. ञ. ट. प्राप्यचास्त्राणिदेवेशाद्विश्वामित्रो. ४ ख. महातपाः. ५ हर्षेणमहता. ६ क. पर्वसु. ७ क. ङ. च. छ. झ. ञ. हतंमेनेतदाराम. ८ क. च. यत्तत्तपोवनं. घ. ङ. च. झ. यैस्तत्तपोवनंनाम. ९ ज. विप्रकृता. ग. विप्रद्रुतास्सर्वे. १० घ. शतशोमुनयोदिशः. ११ ङ. च. छ. झ. ञ. येचवैमृग. १२ क. ग. ज. माभैष्टेति. १३ घ. नाशयिष्यामि. क. नाशयामिच. १४ ज. संसिद्धं. क. संवृत्तं. १५ क. ख. तद्विनाशित. १६ ङ. च. झ. ञ. ट. दुराचारोहि. १७ क. ख. च. छ. ट. यन्मूढ. ङ. ग. झ. यन्मूढस्तस्मा. १८ क. ख. घ—छ. झ. ञ. ट. विधूमइवकालाग्निः. १९ क. ख. च. छ. झ. ञ. यमदण्डइवापरः.

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

वसिष्ठब्रह्मदण्डेनविश्वामित्रास्त्राणांनिगिरणेतेनक्षत्रबलगर्हणपूर्वकं ब्राह्मण्याधिगमायतपश्चरणनिर्धारणम् ॥ १ ॥

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः ॥ आग्नेयम[1]स्त्रमुत्क्षिप्य तिष्ठतिष्ठेति चाब्रवीत् ॥ १ ॥
ब्रह्मदण्डं [2]समुत्क्षिप्य कालदण्डमिवापरम् ॥ [ [3]प्राहिणोत्तद्वसिष्ठाय विश्वामित्रो महाबलः ] ॥
[4]वसिष्ठो भगवान्क्रोधादिदं वचनमब्रवीत् ॥ २ ॥
क्षत्रबन्धो [5]स्थितोऽस्म्येष यद्बलं [6]तद्विदर्शय ॥ [7]नाशयाम्यद्य ते दर्पं [8]शस्त्रस्य तव गाधिज ॥ ३ ॥
क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् ॥ पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥ ४ ॥
तस्यास्त्रं गाधिपुत्रस्य [9]घोरमाग्नेयमुद्यतम् ॥ ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवांभसा ॥ ५ ॥
वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं [10]तथा ॥ ऐषीकं चापि चिक्षेप [11]कुपितो गाधिनन्दनः ॥ ६ ॥
मानवं मोहनं चैव गान्धर्वं स्वापनं तथा ॥ जृंभणं [12]मोदनं चैव संतापन[13]विलापने ॥ ७ ॥
शोषणं [14]दारणं चैव [15]वज्रमस्त्रं सुदुर्जयम् ॥ ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ॥ ८ ॥
[16]पैनाकास्त्रं च दयितं [17]शुष्कार्द्रे अशनी उभे ॥ दण्डास्त्रमथ पैशाचं [18]क्रौञ्चमस्त्रं तथैव च ॥ ९ ॥
धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च ॥ [19]वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १० ॥
शक्तिद्वयं च चिक्षेप कङ्कालं मुसलं तथा ॥ वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥
त्रिशूलमस्त्रं घोरं च [20]कापालमथ कङ्कणम् ॥ ११ ॥
एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ वसिष्ठे [21]जपतांश्रेष्ठे तदद्भुतमिवाभवत् ॥ १२ ॥
तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥ [22]तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान्गाधिनन्दनः ॥ १३ ॥
तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ॥ देवर्षयश्च संभ्रान्ता गन्धर्वाः समहोरगाः ॥ १४ ॥
त्रैलोक्यमासीत्संत्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १५ ॥
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ॥ वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ॥ १६ ॥

---

अथसर्वास्त्रबलसंपूर्णक्षत्रवीर्यादपिब्रह्मबलंबलीयइत्याहषट्पञ्चाशे—एवमुक्तइत्यादि । तिष्ठतिष्ठेति भयजननार्थोक्तिः ॥ १ ॥ ब्रह्मदण्डमित्यादित्रयोविंशतिः । ब्रह्मदण्डं ब्राह्मणासाधारणंदण्डं ॥ २ ॥ क्षत्रबन्धो क्षत्रियाधम । तेदर्पंतवशस्त्रस्यदर्पंच नाशयामीत्यन्वयः ॥ ३ ॥ क्षत्रियपांसनेत्यनन्तरंवसिष्ठोऽब्रवीदिति अनुकृष्यते ॥ ४—११ ॥ वसिष्ठेजपतांश्रेष्ठइत्यनेनजपवैभवमिदंग्रसनमितिद्योतितं । तत् अस्त्रक्षेपणं । अद्भुतमिवाभवत् कार्यलेशस्याप्यदर्शनादितिभावः ॥ १२ ॥ अद्भुतमेवाह—तानीति । ग्रसते अग्रसत ॥ १३ ॥ संभ्रान्ताः आसन्नितिशेषः ॥ १४ ॥ समुदीरिते प्रयुक्ते ॥ १५ ॥ ब्राह्मेणतेजसा ब्रह्मविद्याभ्यासजनिततेजसा । उपबृंहितेनब्रह्मदण्डेनेत्यर्थः । अत्र ग्रासक्रियायांनदण्डस्यान्वयः पुत्रैर्गर्दभीभारंवहतीति

---

ति० अग्निपुरोगमोवायुःतत्सहिताः अग्निसहितोवायुःपुरोगमोयेषांयुद्धइतिवा ॥ १४ ॥

[ पा० ] १ ख. घ. मुद्यम्य. ङ. च. छ. झ. ञ. मुद्दिश्य. ग. ज. मुत्सृज्य. २ ग. ज. सचोत्क्षिप्य. ङ. च. झ. ञ. ट. समुद्यम्य. ३ इदमर्धं ज. दृश्यते. ४ ज. तदस्त्रंप्रहितंवीक्ष्यवसिष्ठःप्रत्युवाचह. ५ च. छ. ह्येषः. ६ घ. तन्निदर्शय. ७ ख. घ. ज. म्येषते. क. म्येषवै. ८ ग. च. छ. ञ. क्षत्रस्यतव. ९ क. ङ—ट. माग्नेयमुत्तमम्. १० क. तदा. ११ क—घ. च. ट. रुषितो. १२ क. ग. ज. झ. ञ. मोहनंचैव. ङ. च. छ. ट. मानदंरौद्रं. ख. चैववायव्यं. १३ ख. विलेपने. १४ क. ङ—ज. ञ. ट. दारुणं. १५ क. ग. वज्रमस्त्रंच. क. जृंभमस्त्रं. १६ क—घ. ज. पिनाकास्त्रंच. १७ घ. शुष्कास्त्रमशनिंतथा. ङ. च. झ. ञ. अशनीतथा. ख. चाशनीतथा. क. अशनीतदा. १८ घ. मस्त्रंसुदर्शनम्. १९ घ. आग्नेयमस्त्रंवायव्यं. ख. ब्राह्मंचमथनं. २० ट. कपालमथकिङ्किणीम्. ज. कापालिमथकिङ्किणीम्. २१ ङ. च. ज. जयतांश्रेष्ठे. २२ ख. शान्तेषुतेषुब्रह्मास्त्रं.

ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ॥ त्रैलोक्य[1]मोहनं रौद्रं रूपमासीत्सुदारुणम् ॥ १७ ॥
रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः ॥ मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ १८ ॥
[2]प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ॥ [3]विधूम इव कालाग्निर्यमदण्ड इवापरः ॥ १९ ॥
ततोस्तुवन्[4]मुनिगणा वसिष्ठं [5]जपतांवरम् ॥ अमोघं ते बलं ब्रह्मंस्तेजो [6]धारय तेजसा ॥ २० ॥
निगृहीतस्त्वया ब्रह्मन्विश्वामित्रो [7]महातपः ॥ [8]प्रसीद जपतांश्रेष्ठ लोकाः सन्तु गतव्यथाः ॥ २१ ॥
एवमुक्तो महातेजाः शमं चक्रे महातपाः ॥ विश्वामित्रोपि [9]निकृतो विनिश्वस्येदमब्रवीत् ॥ २२ ॥
धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ॥ एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २३ ॥
[10]तदेतत्समवेक्ष्याहं प्रसन्नेंद्रियमानसः ॥ तपो मह[11]त्समास्थास्ये यद्वै ब्रह्मत्व[12]कारणम् ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

ब्राह्मण्याधिगमाय भार्यया सह दक्षिणस्यां दिशि तपश्चरति विश्वामित्रे ब्रह्मणा तदाश्रममेत्य तस्मै राजर्षित्वदानेन स्वलोकगमनम् ॥ १ ॥ विश्वामित्रेण स्वाभीप्सितानवाप्तेः पुनस्तपश्चरणम् ॥ २ ॥ अत्रावसरे त्रिशङ्कुना राज्ञा सशरीरं स्वर्गजिगमिषया वसिष्ठं प्रति तथायाजनप्रार्थना ॥ ३ ॥ तेन तदधिक्षेपे तत्पुत्रान्प्रति तन्निवेदनपूर्वकं तथायाजनप्रार्थनम् ॥ ४ ॥

ततः संतप्तहृदयः स्मरन्निग्रहमात्मनः ॥ विनिश्श्वस्य विनिश्श्वस्य कृतवैरो महात्मना ॥ १ ॥
स दक्षिणां दिशं गत्वा महिष्या सह राघव ॥ ततापं परमं घोरं विश्वामित्रो [13]महत्तपः ॥ २ ॥
[ [14]फलमूलाशनो दान्त[15]श्चकार [16]परमं तपः ] ॥ अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः ॥
[17]हविष्यन्दो मधुष्यन्दो दृढनेत्रो महारथः ॥ ३ ॥

---

वत् । अतो न वक्ष्यमाणेन विरोधः ॥ १६ ॥ त्रैलोक्यस्य मोहनं भयान्मूर्छाजनकं । रौद्रं स्मरणेपि भयंकरं । सुदारुणं दुर्दर्शं ॥ १७ ॥ एतदेवाह—रोमेति । अग्नेरिव मरीच्यो विस्फुलिङ्गा निष्पेतुरिति योजना ॥ १८ ॥ दण्डश्च प्राज्वलत् पूर्वास्त्रग्रासेनेति शेषः ॥ १९ ॥ तेजः ब्रह्मास्त्रतेजः । तेजसा महिम्ना । धारय उपशमय ॥ २०—२१ ॥ शमं कोपशान्तिं निकृतः अपकृतः तिरस्कृत इति यावत् ॥ २२ ॥ क्षत्रियबलं बलं धिक् निन्द्यं बलमित्यर्थः । "धिगुपर्यादिषु" इति द्वितीया । ब्रह्मतेजसः ब्राह्मण्यरूपतेजसः बलं बलं । तदेव प्रशस्तमिति यावत् । सर्वास्त्राणि ब्रह्मास्त्रभिन्नानि ॥ २३ ॥ ब्रह्मत्वकारणं ब्राह्मण्यापादकं । प्रसन्नेन्द्रियमानसः परित्यक्तक्षत्ररोष इत्यर्थः २४ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

एवं पशुपतिवितीर्णसरहस्यसर्वास्त्रवैघट्यदर्शनेन रुद्रस्यापरत्वमुपपादितं । अथ पूर्वप्रस्तुतब्राह्मण्यस्यात्यन्तदुर्लभत्वं दर्शयति नवभिः सर्गैः । तत्र त्रिशङ्कुशरणागत्यनुगुणशक्तिमत्त्वं दर्शयति सप्तपञ्चाशे—ततः संतप्तहृदय इत्यादि । श्लोकद्वयमेकान्वयं । महात्मना वसिष्ठेन । कृतवैरः अनेनास्य तपोनाशमूलं दर्शितं । ब्रह्मविदपचारो हि सर्वश्रेयोविनाशकः । दक्षिणां शरावत्यपेक्षया । महिष्येत्यनेन भावियाजकत्वानुगुणगार्हस्थ्यं दर्शितं । महत्तपः परमं यथा तथा ततापेत्यन्वयः ॥ १ ॥ २ ॥ कामक्रोधाद्यनुवृत्तिं दर्शयति—अथेति

---

ति० हे ब्रह्मन् ते बलं अमोघमस्तु अरातावविसर्जनेनाक्षीणमस्तु प्रतिब्रह्मास्त्रं माप्रयुङ्क्ष्वेति यावत् ॥ २० ॥ इति षट्पञ्चाशस्सर्गः ॥ ५६ ॥

[ पा० ] १ च. छ. ञ. मोहनघोरं. २ ग. ज. प्रोज्ज्वलन्ब्रह्मदण्डश्च. ख. प्रज्वलद्ब्रह्म. ३ क. घ. च. छ. ज. सधूमइव. ४ घ. न्मुनिगणो. ५ छ. जयतां. ६ घ. धारयतेजसि. ७ क. ख. ङ. च. छ. झ. ञ. महाबलः. ८ ङ. च. छ. झ. ञ. अमोघंतेबलंश्रेष्ठ. ९ क. ख. ग. ङ. च. छ. झ. ञ. विनिकृतो. १० तदद्भुतमवेक्ष्याहं. ग. ङ. च. झ. ञ. तदेतत्प्रसमीक्ष्याहं. ११ क. ख. घ. त्समाधास्ये. १२ ग. कारकम्. १३ क. घ—छ. झ. ञ. ट. महातपाः. ख. महामुनिः. १४ इदमर्धं ग—छ, झ. ञ. दृश्यते. १५ ग—छ, झ. ञ. श्चचार. १६ ग. सुमहत्तपः. १७ ञ. हविष्पन्दोमधुष्पन्दः.

पूर्णे वर्षसहस्रे तु ब्रह्मा[1] लोकपितामहः ॥ अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ ४ ॥
जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ॥ अनेन तपसा त्वां[2] तु राजर्षिरिति विद्महे ॥ ५ ॥
एवमुक्त्वा महातेजा जगाम सह दैवतैः ॥ त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः ॥ ६ ॥
विश्वामित्रोपि तच्छ्रुत्वा ह्रिया किंचिदवाङ्मुखः ॥ दुःखेन महताऽऽविष्टः समन्युरिदमब्रवीत् ॥ ७ ॥
तपश्च सुमहत्तप्तं राजर्षिरिति मां विदुः ॥ देवाः स[3]र्षिगणाः सर्वे नास्ति मन्ये तपःफलम् ॥ ८ ॥
एवं निश्चित्य मनसा भूय एव महातपाः ॥ [ [4]कोपेन महताऽऽविष्टस्त्रैलोक्यं व्यथयन्निव ] ॥
[5]तपश्चकार [6]काकुत्स्थ परमं परमात्मवान् ॥ ९ ॥
एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ॥ त्रिशङ्कुरिति विख्यात इक्ष्वाकुकु[7]लवर्धनः ॥ १० ॥
तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ॥ गच्छेयं [8]सशरीरेण [9]देवानां परमां गतिम् ॥ ११ ॥
[10]स वसिष्ठं समाहूय कथयामास चिन्तितम् ॥ अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना ॥ १२ ॥
प्रत्याख्यातो वसिष्ठेन स [11]ययौ दक्षिणां दिशम् ॥ ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः ॥ १३ ॥
वासिष्ठा दीर्घतपसस्तपो यत्र हि तेपिरे ॥ त्रिशङ्कुः [12]सुमहातेजाः शतं परमभास्वरम् ॥
[13]वसिष्ठपुत्रान्ददृशे तप्यमाना[14]न्यशस्विनः ॥ १४ ॥
सोभिगम्य [15]महात्मानः सर्वानेव गुरोः सुतान् ॥ अभिवाद्यानुपूर्व्येण ह्रिया किंचिदवाङ्मुखः ॥
अब्रवीत्सु[16]महात्मानस्सर्वानेव कृताञ्जलिः ॥ १५ ॥
शरणं वः [17]प्रपद्येऽहं शरण्या[18]ञ्शरणागतः ॥ प्रत्याख्यातोस्मि भद्रं वो वसिष्ठेन महात्मना ॥ १६ ॥

॥ ३ ॥ अतएवतपसोमन्दफलत्वंदर्शयति—पूर्णइति ॥ ४ ॥ विद्महे आर्षमात्मनेपदं ॥ ५ ॥ एवमित्यादि- चत्वारः । ब्रह्माब्रह्मलोकंजगाम । त्रिविष्टपं देवाजग्मुरित्यर्थः ॥ ६ ॥ समन्युः सदैन्यः । "मन्युर्दैन्येक्रतौक्रुधि" इत्यमरः ॥ ७ ॥ नास्तिमन्येतपःफलं एतन्मात्रंमत्तपःफलंनभवति । ब्राह्मण्यस्यैवमदभिमतत्वादितिभावः ॥ ८ ॥ परमंतपः पूर्वकृततपसोप्यतिशयितंतपः । परमात्मवान् अतिशयितयत्नवान् ॥ ९ ॥ विख्यातः अभूदितिशेषः ॥ १० ॥ सशरीरेण आत्मनेतिशेषः । परमांगतिं स्वर्गमितियावत् ॥ ११ ॥ चिन्तितं सशरीरस्वर्गसाधनयज्ञमित्यर्थः । अशक्यं सशरीरस्वर्गसाधनयज्ञकरणमितिशेषः । अशक्यत्वंचनऋषेरसामर्थ्यात् नापिताद्दशकर्मविधानाभावात् "सशरीरएवस्वर्गलोकमेति" इतिश्रुतेः । किंतु । त्रिशङ्कोस्तादृशस्वर्गप्राप्तिर्नास्तीतिपूर्वकल्पवृत्ततज्ज्ञानादितिमन्तव्यं । उक्तः अभूदितिशेषः ॥ १२ ॥ तत्कर्मसिद्ध्यर्थं सशरीरस्वर्गसाधनकर्मसिद्ध्यर्थं ॥ १३ ॥ वासिष्ठाइतिसार्धः । यत्रतेपिरे । तत्रगत्वेतिशेषः । *शतंवासिष्ठानिति । बह्वर्थेशतमितिनिपातनात्सामानाधिकरण्यं ॥ १४ ॥ सइतिसार्धः । ह्रिया वसिष्ठप्रत्याख्यानकृतया । महात्मानस्सुमहात्मानइति व्यत्ययेनप्रथमा ॥ १५ ॥ शरणं

**वि०** परमात्मवान् परमात्मध्यानवान् परमधीरश्च ॥ ९ ॥ **ति०** शरणंगतोऽन्येषांरक्ष्याणांशरणंगतोपि शरणत्वंप्राप्तोपीत्यर्थः । **शि०** वः युष्माकं । शरणं रक्षकत्वं । गतः ज्ञातवानहं शरणं रक्षायथास्यात्तथा । शरण्यान् शरणहितान् । वोयुष्मान् । प्रपद्ये प्राप्तोस्मि । एकश्शरणशब्दोभावप्रधानः । गत्यर्थानांज्ञानार्थकत्वं "गमिरवबोधने" इत्यादिव्याख्यानेस्पष्टमेव । वइत्युभ-

**[ पा० ]** १ घ. ब्रह्मलोकान्पितामहः. २ क. घ. ङ. च. ज—ट. त्वांहि. ३ ऋषिगणास्सर्वे. ४ इदमर्धं ग. ज. दृश्यते. ५ क. ख. ग. ङ. छ. झ. ञ. तपश्चचार. ६ क. ख. ङ. च. छ. झ. ञ. धर्मात्माकाकुत्स्थपरमात्मवान्. ७ क. घ. कुलनन्दनः. ८ क. ख. ग. ङ. छ—ट. स्वशरीरेण. ९ ङ. छ. झ. ञ. देवतानांपरागतिम्. १० ङ. च. ज—ट. वसिष्ठंससमाहूय. क. छ. वसिष्ठं च. ११ क. घ. प्रययौ. १२ क. ख. ग. समहातेजाः. ङ. च. छ. झ. ञ. स्तुमहातेजाः. १३ घ. वसिष्ठस्यचतान्पुत्रांस्तप्य. ज. ट. वासिष्ठान्संददर्शाथतप्य. १४ ङ. च. ज. झ. ञ. न्मनस्विनः. १५ घ. महातेजाः. १६ ग. त्सुमहाभागान्. घ. सुमहातेजाः, १७ ङ. च. ज—ट. प्रपन्नोऽहं. १८ क. ख. ङ. च. छ. झ. ञ. ट. शरणंगतः.

यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ ॥ गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये ॥ १७ ॥
शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ॥ ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः ॥
सशरीरो यथाऽहं हि देवलोकमवाप्नुयाम् ॥ १८ ॥
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ॥ गुरुपुत्रानृते सर्वान्नाहं पश्यामि कांचन ॥ १९ ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ॥ पुरोधसस्तु विद्वांसस्तारयन्ति सदा नृपान् ॥ २० ॥
तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

वासिष्ठैःपित्रतिक्रमेणयाजनानङ्गीकारे त्रिशङ्कुनातान्प्रतिस्वस्ययाजकान्तरानुसरणवचनम् ॥ १ ॥ वासिष्ठैश्चण्डालतांप्रापितेनत्रिशङ्कुनाविश्वामित्रमेत्यस्ववृत्तान्तनिवेदनपूर्वकंयाजनप्रार्थना ॥ २ ॥

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् ॥ ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥
प्रत्याख्यातो हि दुर्बुद्धे गुरुणा सत्यवादिना ॥ तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २ ॥
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमो गुरुः ॥ न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३ ॥
अशक्यमिति चोवाच वसिष्ठो भगवानृषिः ॥ तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४ ॥
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ॥ याजने भगवाञ्शक्तस्त्रैलोक्यस्यापि पार्थिव ॥ ५ ॥
अवमानं च तत्कर्तुं तस्य शक्ष्यामहे कथम् ॥ ६ ॥

---

रक्षितारं आगतः "शरणंगृहरक्षित्रोः" इतिवचनात् । रक्षित्रपेक्षयाआगतोहं । शरण्यान् शरणसमर्थान् । शरणंप्रपद्ये रक्षितृत्वंप्राप्नोमीत्यर्थः । यद्वा शरणागतःप्रत्याख्यातइत्युत्तरेणान्वयः । तर्ह्याचार्यएवगन्तव्यइत्यत्राह—प्रत्याख्यातइति ॥ १६ ॥ किमर्थंशरणागतिस्तत्राह—यष्टुकामइति । तत् यज्ञानुष्ठानं ॥ १७ ॥ शिरसेतिसार्धः । ब्राह्मणान् ब्रह्मविदः । समाहिताः अवहिताः ॥ १८ ॥ गुरुपुत्रानृते अन्यांकांचनगतिं यजनोपायंनपश्यामीत्यन्वयः ॥ १९ ॥ पुरोधाः पुरोहितः वसिष्ठः ॥ २० ॥ तस्मादित्यर्धं । तस्मात् वसिष्ठात् । अनन्तरं पश्चात् । तस्यारक्षकत्वेभवन्तएवरक्षकाइतिभावः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तपञ्चाशःसर्गः ॥ ५७ ॥

---

गुरुत्यागिनांफलंदर्शयत्यष्टपञ्चाशे—ततस्त्रिशङ्कोरित्यादि । क्रोधसमन्वितमितिशतविशेषणं ॥ १ ॥ शाखान्तरं आश्रयान्तरं ॥ २ ॥ नशक्यं त्वयैक्ष्वाकेणेतिशेषः । सत्यवादिनः तस्येतिशेषः ॥ ३ ॥ अशक्यं यंक्रतुमितिशेषः ॥४॥ बालिशः मूर्खः । "मूर्खवैधेयबालिशाः" इत्यमरः ॥ ५ ॥ अवमानमित्यर्धं । तत्

---

यान्वयि शब्दाधिकारश्च । यद्वा शरणं स्वेप्सितप्रध्वंसेनवधप्रायं गतः प्राप्तोहं शरणं जीवनालंबोयथास्यात्तथावोयुष्मान्प्रपद्ये । 'शरणंगृहरक्षित्रोर्वधरक्षणयोरपि' इतिमेदिनी ॥ १६ ॥ **ति०** ब्राह्मणान् अन्वर्थब्राह्मणान् ॥ १८ ॥ इतिसप्तपञ्चाशस्सर्गः ॥५७॥

**ति०** सोवाचेति "सोचिलोपेचेत्—" इतिसाधु ॥४॥ **ति०** त्रैलोक्यस्यापि सिद्ध्यर्थंयाजनेइत्यर्थः । भगवान् वसिष्ठः ॥६॥

**[ पा० ]** १ ख नभिवाद्यप्रसादये. २ घ. च. सिद्धार्थं. ३ ङ. च. छ. झ. ञ. यथाहंवै. ४ क. ग. घ. च. छ. ञ. कंचन. ख. किंचन. ५ क. घ. च. इक्ष्वाकूणांतु. ६ क. घ. च. नृपान्सदा. ७ ज. अस्मादनन्तरं. ८ च. झ. ञ. प्रत्याख्यातोसि. ९ ङ. झ. ञ. दुर्मेधः. १० घ. इक्ष्वाकूणांतु. ११ क. ख. ङ. च. छ. झ. ञ. परमागतिः. १२ ग. मितिहोवाच. झ. ञ. मितिसोवाच. १३ ग. कथंशक्ताःक्रतुंतव. ख. घ. ङ. झ. क्रतुंशक्ताःकथंचन. च. ञ. क्रतुंशक्ताःकथंचतत्. १४ घ. स्वपुरंततः. १५ ख. ङ—ट. अवमानंकथंकर्तुं. क. घ. अवमानंवयंकर्तुं. १६ ख. ग. ङ. छ—ट. तस्यशक्ष्यामहेवयम्.

तेषां तद्वचनं श्रुत्वा क्रोधपर्या[1]कुलाक्षरम् ॥ स राजा पुनरेवैतानिदं वचनमब्रवीत् ॥ ७ ॥
प्रत्याख्या[2]तोसि गुरुणा गुरुपुत्रैस्तथैव[3] च ॥ अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ॥८॥
ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ॥ शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ॥९॥
एव[4]मुक्त्वा महात्मानो विविशुस्ते[5] स्वमाश्रमम् ॥ १० ॥
[[6]तच्छ्रुत्वा घोरसं[7]काशमृषिपुत्रैश्च भाषितम् ॥ प्राविशत्स्वपुरं राजा चिन्तयामास दुःखितः] ॥११॥
अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ॥ नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥
चित्यमा[8]ल्यानुलेपश्च आयसाभरणोऽभवत् ॥ १२ ॥
तं दृष्ट्वा मन्त्रिणः सर्वे त्य[9]ज्य चण्डालरूपिणम् ॥ प्राद्रवन्सहिता राम पौरा येऽस्यानुगामिनः ॥१३॥
एको हि राजा काकुत्स्थ जगाम परमात्मवान् ॥ दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् ॥१४॥
विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ॥ चण्डालरूपिणं राम मुनिः कारुण्यमागतः ॥ १५ ॥
कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ॥ इदं जगाद भद्रं ते राजानं घोररू[10]पिणम् ॥ १६ ॥
किमा[11]गमनकार्यं ते राजपुत्र महाबल[12] ॥ अयोध्याधिपते वीर शापाच्चण्डालतां गतः ॥ १७ ॥
अथ तद्वाक्य[13]माज्ञाय राजा [14]चण्डालतां गतः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥१८॥
प्रत्याख्यातोसि गुरुणा गुरुपुत्रैस्तथैव च ॥ [15]अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ॥ १९ ॥
सशरीरो दिवं यायामिति मे सौम्य[16]दर्शनम् ॥ मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् ॥२०॥

असाध्यार्थसाधनरूपं ॥ ६ ॥ तेषामितिद्वौ । अन्यां-गतिं याजकान्तरं ॥ ७ ॥ ८ ॥ घोराभिसंहितं साक्षात्कुलगुरुंब्रह्मपुत्रंवसिष्ठमतिक्रम्यपुरोहितान्तराश्रयणरूपघोराभिप्राययुक्तमित्यर्थः । गमिष्यसीत्यनन्तरमितिकरणंद्रष्टव्यं ॥ ९ ॥ एवमित्यर्धं ॥ १०—११ ॥ अत्रचण्डालत्वंनतत्साहश्यमात्रं । किंतुक्षत्रियत्वप्रहाणेनचण्डालत्वजातिप्राप्तिः । ब्राह्मणत्वादिजातेःकर्ममूलत्वेनतदपायेतदपायादित्याह—अथेत्यादि सार्धः । चण्डालतांगतः वक्षस्स्थंयज्ञोपवीतमेववध्र्यासीदित्यर्थः। नीलवस्त्रधरः कटिस्थपीतांबरमेवचण्डालार्हनीलवस्त्रंजातमित्यर्थः । नीलः पूर्वस्थितराजतेजएवनीलवर्णोभवदित्यर्थः । एवमुत्तरत्रापियोज्यं । परुषः रूक्षाङ्गः । ध्वस्तमूर्धजः ह्रस्वकेशः । चित्यमाल्यानुलेपः चिता श्मशानं तत्रभवंचित्यं तादृशंमाल्यं अनुलेपः चिताभस्मरूपोऽङ्गरागश्चयस्यसतथा। आयसाभरणः अयोविकाराभरणः ॥१२–१३॥ परमात्मवान् परमधृतिमान् भूत्वा । दह्यमानः दुःखेनेतिशेषः । विश्वामित्रं वसिष्ठवैरिणं जगाम ॥१४॥ विफलीकृतं वासिष्ठविनाशितैहिकामुष्मिकसाधनमित्यर्थः ॥१५॥ स्ववंशावमानप्रकटनेनरामस्यकोपोभविष्यतीतिसान्त्वयति—भद्रंतइति ॥ १६ ॥ चण्डालतांगतः केन*हेतुनेतिशेषः ॥ १७ ॥ आज्ञाय श्रुत्वेत्यर्थः ॥ १८॥ तंकामं यमुद्दिश्यगुर्वाद्युपासनंकृतमित्यर्थः । विपर्ययः विपरीतप्रयोजनोहेतुविशेषः ॥ १९ ॥ कस्तेकामइत्यत्राह—सशरीरइति । सौम्येतिसंबुद्धिः । दर्शनंबुद्धिः । तच्चफलं क्रतुशतफ-

**शि०** हेवीरयस्त्वंचण्डालतांगतः तस्यतेइहागमनेकिंप्रयोजनंतद्वदेतिभावः । एतेनत्रिशङ्कुशापः पूर्वमेवविश्वामित्रेणश्रुतइतिध्वनितं । **ति०** सौम्यदर्शनेतिसंबोधनम् ॥ २० ॥

**[ पा० ]** १ घ. पर्याकुलेक्षणः. २ क. ख. ङ—ट. ख्यातोभगवता. घ. ख्यातोवसिष्ठेन. ३ ङ. च. छ. झ. स्तथैवहि. घ. विशेषतः. ४ ङ. च. छ. झ. ञ. ट. इत्युक्त्वाते. ५ ङ. च. छ. झ. ञ. ट. स्स्वंस्वमाश्रमम् . ६ अयंश्लोकः क. ङ. च. छ. ञ. दृश्यते. ७ क. संकाशंगुरुपुत्रैश्च. ८ ग. रक्तमाल्यानुलेपश्च. क. चित्रमाल्यांगरागश्च. ख. ङ—ञ. चित्यमाल्यांगरागश्च. घ. भ्रष्टमाल्यांगरागश्च. ९ घ. ट. त्यक्त्वाचण्डाल. क. छ. त्याज्यंचण्डाल. १० ख. घ—ट. घोरदर्शनम्. ११ घ. किमागमनकृत्यं ते. १२ क. ख. घ. महायशः. १३ ङ. च. छ. झ. ञ. ट. माकर्ण्य. क. मादाय. ज. मास्थाय. १४ ख. चण्डालएवसः. १५ क. अनवाप्यचतत्कर्म. १६ क—छ. झ. ञ. ट. सौम्यदर्शन.

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ॥ कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे ॥ २१ ॥
यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः ॥ गुरवश्च महात्मानः शीलवृत्तेन तोषिताः ॥ २२ ॥
धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः ॥ परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव ॥ २३ ॥
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ॥ २४ ॥
तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः ॥ कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः ॥ २५ ॥
नान्यां गतिं गमिष्यामि नान्यः शरणमस्ति मे ॥ दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

## एकोनषष्टितमः सर्गः ॥ ५९ ॥

विश्वामित्रेणत्रिशङ्कुंप्रतिशरीरसाहित्येनैवस्वर्गप्रापणप्रतिज्ञानपूर्वकंशिष्याणांनानाश्रमेभ्योमुनिगणानयनायप्रेषणम् ॥ १ ॥ शिष्यैर्विश्वामित्रंप्रतिमुनिजनागमननिवेदनपूर्वकंवासिष्ठानामपहासवचनानुवादः ॥ २ ॥ विश्वामित्रेणतेषांनीचयोनिजननरूपशापदानम् ॥ ३ ॥

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः ॥ अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालरूपिणम् ॥ १ ॥
ऐक्ष्वाक स्वागतं वत्स जानामि त्वां सुधार्मिकम् ॥ शरणं ते भविष्यामि मा भैषीर्नृपपुङ्गव ॥ २ ॥
अहमामन्त्रये सर्वान्महर्षीन्पुण्यकर्मणः ॥ यज्ञसाह्यकरान्राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३ ॥
गुरुशापकृतं रूपं यदिदं त्वयि वर्तते ॥ अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४ ॥

लं सशरीरस्वर्गः ॥२०॥ वसिष्ठप्रत्याख्यानमूलंपापंमयिनास्तीत्याशयेनाह—अनृतमिति । यद्वा "यज्ञोनृतेनक्षरति" इतिवचनात् क्रतुनाशकत्वेनावगतमनृतमपिमयिनास्तीत्याह । मे मया । क्षत्रधर्मेण तत्साक्षितयेत्यर्थः । कृच्छ्रेष्वपिगतः आपद्गतोपि । ते पुरतइतिशेषः ॥ २१ ॥ यज्ञैरिति पूर्वंसशरीरत्वसाधनक्रतुशतमुक्तं अत्रनित्यकर्मेतिभिदा । यद्वा पूर्वक्रतुशतं इष्टं यष्टुमुपक्रान्तमित्यर्थः । तच्चनावाप्यते तादृशक्रत्वनुष्ठानमनोरथोनावाप्यतइत्यर्थः । शीलवृत्तेन शीलयुक्तवृत्तेन । शीलं सद्गुणः । वृत्तमाचारः ॥ २२ ॥ प्रयतमानस्येतिसप्तम्यर्थेषष्ठी । ममेतिशेषः ॥२३॥ अतइत्युपस्कार्यं । दैवमत्रप्रारब्धफलमदृष्टं । परं श्रेष्ठं । पुरुषहिताहितप्रापकमित्यर्थः । पौरुषं इदानींतनधर्मानुष्ठानं । निरर्थकं प्रारब्धकर्मतिरस्कारानर्हमित्यर्थः । आक्रम्यते अभिभूयते । परमागतिः इतरतिरस्कारेणैहिकसुखदुःखादिप्रापकमित्यर्थः ॥ २४ ॥ प्रसादं दैवानुकूल्यं ॥ २५ ॥ गतिं शरणं । वसिष्ठेनस्वयमाहूतश्चात्विकरिष्यसीत्यत्राह—नान्यःशरणमस्तीति । पुरुषकारेण त्वत्प्रसादरूपानुकूल्यकरणेन ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्यानेऽष्टपञ्चाशःसर्गः ॥५८॥

जातिचण्डालस्यकदाचित्तद्भावनिवृत्तिरस्ति नतुकर्मचण्डालस्येत्याहएकोनषष्टितमे—उक्तवाक्यमित्यादि । साक्षाच्चण्डालरूपिणं चण्डालचिह्नधारित्वान्नशास्त्रगम्यचण्डालभावइत्यर्थः ॥ १ ॥ ऐक्ष्वाकेत्यादिचत्वारः ॥ २ ॥ यज्ञसाह्यकरान् यज्ञसहायकरान् ॥ ३ ॥ गमिष्यसि स्वर्गमितिशेषः । अनेनेत्यनेन

शि० सर्वकालंसद्वृत्तत्वात्पापान्तरस्यापिमयिसंभावनानकर्तव्येतिबोधयितुमाह—**यज्ञैरिति** ॥२२॥ इत्यष्टपञ्चाशः सर्गः ॥५८॥

शि० साक्षादेवाब्रवीत् । तुशब्दएवार्थे । साक्षादब्रवीदित्यनेनचण्डालस्साक्षादभिभाषणानर्हइतिनिषेधस्यानर्हःसइतिध्वनितं । तेनकर्मणाजात्याचसनचण्डालइतिव्यञ्जितं । अतएव चण्डालरूपिणमितिविशेषणम् ॥ १ ॥

[ पा० ] १ ख. दैवतंपरममन्ये. २ ख. नान्यांगतिंप्रपश्यामि. ३ क. घ. ङ. च. झ. ञ. नान्यच्छरणमस्तिमे. ४ ख. उक्तवाक्यंतुराजानंसाक्षाच्चण्डालरूपिणम्। अब्रवीन्मधुरंवाक्यंकृपयाकुशिकात्मजः. ५ घ. शापाच्चण्डालरूपिणम्. ङ. च. छ. झ. ञ. साक्षाच्चण्डालतांगतम्. ६ ख. ङ—ट. इक्ष्वाको. क. घ. ऐक्ष्वाको. ७ क. ख. स्वागतंतेस्तु. ८ क. ख. ङ. च. छ. झ. ञ. तेप्रदास्यामि. ९ घ. माभैषीर्मनुजाधिप. १० घ. यज्ञसाहायिकान्. ११ क. ख. अनेनैवहिरूपेण. १२ घ. स्वर्गलोकंगमिष्यसि.

हस्तप्राप्त[1]महं मन्ये स्वर्गं तव [2]नराधिप ॥ यस्त्वं कौशिकमागम्य शरण्यं [3]शरणागतः ॥ ५ ॥
एवमुक्त्वा महातेजाः पुत्रान्परमधार्मिकान् ॥ व्यादिदेश महाप्राज्ञान्यज्ञसंभारकारणात् ॥
सर्वाञ्शिष्यान्समाहूय वाक्यमेतदुवाच ह ॥ ६ ॥
[4]सर्वानृषिगणान्वत्सा आनयध्वं ममाज्ञया ॥ स[5]शिष्यसुहृदश्चैव सर्त्विजः [6]सुबहुश्रुतान् ॥ ७ ॥
यद[7]न्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः ॥ [8]तत्सर्वमखिलेनोक्तं [9]ममाख्येयमनादृतम् ॥ ८ ॥
तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ॥ आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः ॥ ९ ॥
ते[10] च शिष्याः समागम्य मुनिं [11]ज्वलिततेजसम् ॥ ऊचुश्च [12]वचनं सर्वे सर्वेषां ब्रह्मवादिनाम् ॥१०॥
श्रुत्वा ते [13]वचनं सर्वे समायान्ति द्वि[14]जातयः ॥ सर्वदेशेषु चागच्छन्वर्जयित्वा महोदयम् ॥ ११ ॥
[15]वासिष्ठं तच्छतं सर्वं क्रोध[16]पर्याकुलाक्षरम् ॥ [17]यदाह वचनं सर्वं शृणु त्वं मुनिपुङ्गव ॥ १२ ॥
क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ॥ कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ १३ ॥
ब्राह्मणा वा महात्मानो भक्त्वा [18]चण्डालभोजनम् ॥ कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥१४॥
एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ॥ वासिष्ठा मुनिशार्दूल [19]सर्वे ते समहोदयाः ॥ १५ ॥
तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुङ्गवः ॥ [20]क्रोधसंरक्तनयनः [21]सरोषमिदमब्रवीत् ॥ १६ ॥
ये[22] दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ॥ भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ॥१७॥
अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ॥ सप्तजातिशतान्येव [23]मृतपाः सन्तु सर्वशः ॥ १८ ॥

---

ऋषिशापकृतरूपस्य ब्रह्मणाप्यवार्यत्वेन जातिचण्डालताऽभावेन मत्तपोमहिमोपबृंहितयज्ञेन सशरीरःस्वर्गंगमिष्यसीतिभावः ॥ ४ ॥ हस्तप्राप्तं अनायासेन सद्योलब्धं । तत्रहेतुः—यस्त्वमिति ॥ ५ ॥ एवमितिसार्धः । शिष्यान् भृत्यान् ॥ ६ ॥ सुहृदः मत्सुहृदः । शोभनहृदयान्वा ॥ ७ ॥ मद्वाक्यबलेनचोदितः आहूतः यःकश्चनान्यः अनादृतं उपेक्षारूपं चण्डालंयाजयतीतिनिन्दारूपंवा यद्वाक्यंब्रूयात् तेनोक्तंतत्सर्वमखिलेनममाख्येयं ॥ ८ ॥ तस्येतिद्वौ । ब्रह्मवादिनः शिष्याः ॥ ९ ॥ ब्रह्मवादिनांवचनमित्यन्वयः ॥ १० ॥ यदनादरवचनंमुनीनांतदपिवक्तव्यमित्युक्तत्वात्तदपिवदन्ति श्रुत्वेत्यादिषट् । सर्वदेशेषु स्थिताइतिशेषः । महोदयमिति । तदाख्यमृषिमित्यर्थः । वासिष्ठशतंचवर्जयित्वेतिद्रष्टव्यं ॥ ११ ॥ वासिष्ठंयदाहेत्यत्रमहोदयश्चेत्यपिबोध्यं उपसंहारेतथादर्शनात् ॥ १२ ॥ विप्रस्यैवयाजनाधिकारात् चण्डालस्ययाज्यत्वानधिकारात् तस्यसदसिदेवताःकथंहविर्भोक्तारः । लुट् ऋषयश्चकथमिष्टशिष्टभोक्तारइतिभावः ॥ १३ ॥ पालिताइतिक्षेपोक्तिः । अयाज्ययाजयितारः ऋषयः कथंस्वर्गंगमिष्यन्तीतिभावः ॥ १४—१६ ॥ "तेषांतेजोविशेषेणप्रत्यवायोनविद्यते" इतिन्यायेनचण्डालयाजनमपिजीर्यतीत्यविज्ञाययेदूषन्ति तेभस्मीभूताभविष्यन्तीत्यर्थः ॥ १७ ॥ अद्येत्यादिपञ्च । क्षयं गृहं । सप्तजातिशतानि सप्तजन्मशतानि । मृत-

---

**शि०** महोदयंवर्जयित्वेत्यनेन तस्यवसिष्ठपुत्रानुयायित्वंध्वनितं ॥११॥ **ति०** वासिष्ठंयच्छतंतदपिवर्जयित्वेतियोजना ॥१२॥ **शि०** सुर्षयः सुराश्चऋषयश्च हविर्भोक्तारःकथं नभोक्तारइत्यर्थः ॥ १३ ॥ **शि०** पूर्वमनधिकारियाजकप्रयुक्ताशुद्धिंहविषउक्त्वा इदानींअनधिकारियाज्यप्रयुक्ताशुद्धिंहविषोबोधयन्नाह—**ब्राह्मणाइति** ॥ १४ ॥ **ति०** यत् यस्मात् ॥ १७ ॥ **ति०** मृतपाः

[ पा० ] १ घ. मिमंमन्येस्वर्गलोकं. २ क. ख. घ. नरेश्वरम्. ३ घ. ज. ट. शरणंगतः. ४ ख. ङ. च. छ. झ. ञ. ट. सर्वानृषीन्सवासिष्ठान्. घ. ज. सर्वानृषिवरान्साधून्. ५ ख. घ—ट. सशिष्यान्सुहृदश्चैव. ६ ङ. च. छ. झ. ञ. ट. सुबहुश्रुतान्. ७ ज. यद्यन्यो. ८ घ. तत्सर्वमखिलोक्तंहि. ९ घ. समाख्येयमनावृतम्. १० ख. तेतुशिष्याः. ११ ख. ज्वलिततेजसः. १२ क. ख. ङ. च. झ. ञ. वचनंसर्वे. १३ घ. वचनंसर्वे. १४ ख. द्विजोत्तमाः. १५ ङ. च. छ. झ. ञ. वासिष्ठंयच्छतं. क. वासिष्ठंतुशतं. १६ ज. क्रोधपर्याकुलेक्षणम्. घ. कोपपर्याकुलाक्षरम्. १७ क. ङ—ञ. यथाहवचनं. १८ ङ. छ. झ. ट. चाण्डालभोजनम्. १९ क. ख. घ—ट. सर्वेसहमहोदयाः. २० ख. कोपसंरक्तनयनः. २१ क. इदंवचनमब्रवीत्. २२ क. ग. घ. झ. ञ. ट. यद्दूषयन्ति. २३ ङ. च. छ. झ. ञ. मृतपास्संभवन्तुते.

श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ॥ विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ॥ १९ ॥
महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ॥ दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ॥ २० ॥
प्राणातिपातनिरतो निरनुक्रोशतां गतः ॥ दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति ॥ २१ ॥
एतावदुक्त्वा वचनं विश्वामित्रो महातपाः ॥ विरराम महातेजा ऋषिमध्ये महामुनिः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

विश्वामित्रेणमुनिगणमध्येस्वाभिप्रायनिवेदनेनतैःसहयज्ञोपक्रमः ॥ १ ॥ तथाभागार्थमाह्वानेप्यनागतेषुदेवेषुतपोबलेन त्रिशङ्कोःस्वर्गप्रापणम् ॥ २ ॥ इन्द्रादिभिःप्रतिरोधे अवाक्छिरस्त्वेनपततातेनमुनिंप्रत्याक्रोशनम् ॥ ३ ॥ विश्वामित्रेणत्रिशङ्कुस्तंभनपूर्वकंस्वर्गान्तरसर्जनप्रतिज्ञानेनकतिपयनक्षत्रसर्जने देवैस्तत्परिसान्त्वनम् ॥ ४ ॥ देवैस्त्रिशङ्कोर्मुनिसृष्टनक्षत्राणांचतत्रैवावस्थानानुमतिपूर्वकंपुनःस्वलोकगमनम् ॥ ५ ॥

तपोबलहतान्कृत्वा वासिष्ठान्समहोदयान् ॥ ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥
अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः ॥ धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ॥
तेनानेन शरीरेण देवलोकजिगीषया ॥ २ ॥
यथाऽयं स्वशरीरेण स्वर्गलोकं गमिष्यति ॥ तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ॥ ३ ॥
विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः ॥ ऊचुः समेत्य सहिता धर्मज्ञा धर्मसंहितम् ॥ ४ ॥
अयं कुशिकदायादो मुनिः परमकोपनः ॥ यदाह वचनं सम्यगेतत्कार्यं न संशयः ॥ ५ ॥
अग्निकल्पो हि भगवाञ्शापं दास्यति रोषितः ॥ तस्मात्प्रवर्त्यतां यज्ञः सशरीरो यथा दिवम् ॥६॥
गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ तथा प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत ॥ ७ ॥

---

पाः शवभक्षकाः ॥ १८ ॥ मुष्टिकाः हीनजातिविशेषाः । विकृताः विकृतवचनव्यापारादयः । विरूपाः विकृतवेषाः ॥ १९ ॥ अदूष्यं उक्तन्यायेनेतिभावः । महोदयश्चेत्यनेन पूर्वशप्तावसिष्ठपुत्राएवेतिगम्यते ॥ २० ॥ प्राणातिपातः बलात्प्राणनाशनं । निरनुक्रोशतां निर्घृणतां । वर्तयिष्यति प्राप्स्यति । ननूग्रतपस्वित्वेपिक्षत्रियस्यचण्डालयाजनं सर्वथाअन्याय्यमेवेति कथंयथार्थवादिषुशापप्रवृत्तिरितिचेदत्रोत्तरं । वसिष्ठवैरनिर्यातनकामस्यविश्वामित्रस्य तपःफलमिदमिति ॥ २१—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकोनषष्टितमःसर्गः ॥ ५९ ॥

---

अथसशरीरस्यत्रिशङ्कोस्स्वर्गप्रापणंषष्टितमे—तप इत्यादि ॥ १ ॥ अयमितिसार्धः । दायमत्तीतिदायादः पुत्रपौत्रादिः । पचाद्यच् । वंशइतियावत् । तेन पूर्वक्षत्रियरूपेण । अनेन इदानींचण्डालरूपेण । शरीरेण देवलोकजिगीषया स्वर्गस्ववशीकर्तुमिच्छया । मांशरणंगतः ॥ २ ॥ यथेतिपञ्च ॥ ३ ॥ ऊचुः अन्योन्यमितिशेषः ॥ ४ ॥ सम्यक्कार्यमित्यन्वयः ॥ ५ ॥ स-

---

शववस्त्रादिहारिणः ॥ १८ ॥ **ति०** मुष्टिकानाम तन्नामानः । इदानींडोंबाइतिप्रसिद्धाः ॥ १९ ॥ इत्येकोनषष्टितमस्सर्गः ॥५९॥

**ति०** ज्ञाला योगबलेन ॥ १ ॥

**[ पा० ]** १ ख. घ. महोदयस्तु. २ क. च. ट. मदूषयत्. घ. ञ. हिदूषयन्. ३ ङ. झ. ञ. ट. हताञ्ज्ञाला. ४ क. ख. ग. ङ. च. छ. झ. ञ. ट. स्वेनानेन. घ. स्वकेनैव. ५ ग. ङ. च. छ. झ. ञ. देवलोकं. ६ ङ. च. छ. झ. ञ. ट. ऊचुस्समेतास्सहसा. ७ ङ. झ. ञ. ट. रोषतः. ८ क. ग. च. छ. ज. प्रवर्ततां. ९ ङ. च. छ. झ. ञ. यथादिवि. १० क. ख. च. छ. ज. ततःप्रवर्ततां. घ. ङ. झ. ञ. ट. ततःप्रवर्त्यतां.

एवं[1]मुक्त्वा महर्षयः [2]चक्रुस्तास्ताः क्रियास्तदा ॥ याजकश्च महातेजा विश्वामित्रोऽ[3]भवत्क्रतौ ॥ ८ ॥
ऋत्विजश्चानुपूर्व्येण [4]मन्त्रवन्मन्त्रकोविदाः ॥ चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ॥ ९ ॥
ततः कालेन महता विश्वामित्रो महातपाः ॥ चकारावाहनं तत्र भागार्थं सर्वदेवताः ॥ १० ॥
नाभ्यागमं[5]स्तदाऽऽहूता भागार्थं सर्वदेवताः ॥ ११ ॥
ततः [6]क्रोधसमाविष्टो विश्वामित्रो महामुनिः ॥ स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ १२ ॥
पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ॥ एष त्वां [7]सशरीरेण नयामि स्व[8]र्गमोजसा ॥
दुष्प्रापं स्वशरीरेण दिवं गच्छ नराधिप ॥ १३ ॥
स्वार्जितं [9]किंचिदप्यस्ति [10]मया हि तपसः फलम् ॥ [11]राजन्स्वतेजसा तस्य सशरीरो दिवं व्रज ॥ १४ ॥
उक्तवाक्ये मुनौ तस्मिन्सशरीरो [12]नरेश्वरः ॥ दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा ॥ १५ ॥
[13]देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ [14]सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ॥ १६ ॥
त्रिशङ्को गच्छ भूयस्त्वं नासि [15]स्वर्गकृतालयः ॥ गुरुशापहतो मूढ पत भूमिमवाक्छिराः ॥ १७ ॥
एवमुक्तो महेन्द्रेण त्रिशङ्कु[16]रपतत्पुनः ॥ विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ॥ १८ ॥
तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ [17]रोषमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ १९ ॥
ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ॥ सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः ॥ २० ॥
[18]नक्षत्रमालामपरामसृजत्क्रोधमूर्च्छितः ॥ दक्षिणां दिशमास्थाय [19]मुनिमध्ये [20]महायशाः ॥ २१ ॥

मधितिष्ठत स्वस्वार्त्विज्यमितिशेषः ॥ ६—७ ॥ तास्ताःक्रियाः स्वस्वार्त्विज्यकर्माणि । याजकः अध्वर्युः । स्रुवमुद्यम्येतिवक्ष्यमाणत्वात् ॥ ८ ॥ मन्त्रवदितिक्रियाविशेषणं । यथाकल्पं कल्पसूत्रमनतिक्रम्य । यथाविधि यथाशास्त्रं ॥ ९ ॥ महताकालेन द्वित्रिर्मन्त्रावृत्त्या । सर्वदेवताः प्रतीतिशेषः ॥ १० ॥ नेत्यर्धं । नाभ्यागमन् अनधिकारिणा अन्यायेनच कृतमकृतमितिन्यायादितिभावः ॥ ११ ॥ स्रुवोद्यमनं कोपजचेष्टाविशेषः ॥ १२ ॥ पश्येतिसार्धः । त्वदभिमतयागस्त्वास्तामितिभावः । एषइत्यव्यवधाने । ओजसा तपोवीर्येण । दुष्प्रापं अन्यैरितिशेषः ॥ १३ ॥ स्वार्जितं सुष्ठ्वार्जितं । स्वतेजसा स्वासाधारणप्रभावेन ॥ १४ ॥ मुनीनांपश्यतां मुनिषुपश्यत्सुसत्सु ॥ १५ ॥—देवेतिचत्वारः ॥१६॥ स्वर्गकृतालयः स्वर्गालयार्हः ॥१७—१८ ॥ आहारयत् अकरोत् ॥ १९ ॥ सृजन् अभूदितिशेषः । असृजदित्यर्थः ॥२०॥ मुनिमध्येस्थितएव दक्षिणांदिशमास्थाय तामधिकरणंकृत्वा । नक्षत्रमालां सप्तविंशतिनक्षत्रमालां । यथोत्तरतोध्रुवोचलस्तिष्ठति एवंत्रिशङ्कुस्तिष्ठतु । तंपरितोयथासप्तर्षिमण्डलं तद्वदत्रापिभवतु । तत्रयथानक्षत्राणि तद्वदत्रापीत्यर्थः

**शि०** मन्त्रकोविदाः मन्त्रोपलक्षितयागनिपुणाः ॥ ९ ॥ **शि०** सक्रः अतिक्रियासहितः । अधः कोपान्तर्धारणासमर्थः । क्रइत्यत्रक्रधातोः "घञर्थेकविधानं" इतिकः । नञ्पूर्वकधारणार्थकधाधातुप्रकृतिककप्रत्ययान्तोऽधइति । अतएवक्रोधसमाविष्ट इत्यनेननपौनरुक्त्यं । **ति०** सक्रोधः कोपस्यैवाधिकावस्थाक्रोधः ॥ १२ ॥ **ति०** हेराजंस्त्वं तस्यतेजसा वैभवेन दिवंव्रज । क्रुद्धत्वात्पुनरुक्तिर्नदोषः ॥ १४ ॥

**[ पा० ]** १ ट. एवमुक्ताः. २ क. ख. घ. च. छ. झ. ञ. संजहुस्ताःक्रियास्तदा. ज. ट. संचक्रुस्ताःक्रियास्तदा. च. छ. ञ. चक्रुस्तास्ताःक्रियास्तथा. क. ख. क्रियास्ततः. ३ घ. महाक्रतोः. ४ घ. यथावन्मन्त्रकोविदाः. ५ ङ. च. छ. झ. ञ. स्वादातत्र. ख. घ. ज. ट. स्ततस्तत्र. क. स्तत्रतत्र. ६ ङ. च. छ. झ. ञ. कोपसमाविष्टो. ७ ग. ङ. च. छ. झ. ञ. ट. स्वशरीरेण. ८ ङ. च. छ. झ. ञ. ट. स्वर्गंगच्छनरेश्वर. ९ ज. किंचिदद्यास्ति. घ. किंचिदत्रास्ति. १० घ. मयाद्यतपसः. ११ क. ग. ङ. च. छ. झ. ञ. ट. राजंस्त्वं. १२ क. ख. ग. नराधिपः. १३ ट. देवलोकंगतं. ङ. च. छ. झ. ञ. स्वर्गलोकंगतं. १४ घ. सहस्राक्षस्सुरगणैः. १५ च. छ. स्वर्गेकृतालयः. १६ ख. अपतद्भुवि. १७ ज. ट. क्रोधमाहारयत्तीव्रं. ग. रोषमाहारयंस्तीव्रं. १८ ङ. च, झ. नक्षत्रवंशमवरं. १९ ग. ङ. च. छ. झ, ञ, ऋषिमध्ये. २० क. ग. घ. महातपाः.

[1]सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ॥
दैवतान्यपि स [2]क्रोधात्स्रष्टुं समुपचक्रमे ॥ २२ ॥
ततः परमसंभ्रान्ताः सर्षिसङ्घाः [3]सुरासुराः ॥ [ [4]सकिंनरमहायक्षाः सहसिद्धाः [5]सचारणाः ]
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २३ ॥
अयं राजा महाभाग गुरुशापपरिक्षतः ॥ सशरीरो दिवं यातुं [6]नार्हत्येव तपोधन ॥ २४ ॥
[7]तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः ॥ अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ २५ ॥
सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः ॥ [8]आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ २६ ॥
स्वर्गोस्तु सशरीरस्य त्रिशङ्को[9]रस्य शाश्वतः ॥ नक्षत्राणि च सर्वाणि मामकानि [10]ध्रुवाण्यथ ॥ २७ ॥
यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ॥ [11]मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥ २८ ॥
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुङ्गवम् ॥ २९ ॥
एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ॥ गगने [12]तान्यनेकानि वैश्वानरपथाद्बहिः ॥ ३० ॥
नक्षत्राणि मुनिश्रेष्ठ तेषु [13]ज्योतिषु जाज्वलन् ॥ अवाक्छिरास्त्रिशङ्कुश्च तिष्ठत्वमरसंनिभः ॥ ३१ ॥
अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ॥ कृतार्थं कीर्तिमन्तं च [14]स्वर्गलोकगतं तथा ॥ ३२ ॥
विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ॥ [15]ऋषिभिश्च महातेजा बाढमित्या[16]ह देवताः ॥ ३३ ॥

॥ २१ ॥ सृष्ट्वेतिसार्धः । नक्षत्रवंशं क्षुद्रनक्षत्रगणं । द्वितीयार्धान्तेइतिसंकल्प्येत्युपस्कार्यं । अन्यमिन्द्रंकरिष्यामि विद्यमानलोकस्यान्येन्द्रंकरिष्यासि । अनिन्द्रकोलोकोवास्यात् । इन्द्ररहितंलोकान्तरंवाकरिष्यामीत्यर्थः । अतएवाहुराचार्याः "अन्येन्द्रकंभुवनमन्यदनिन्द्रकंवाकर्तुंक्षमेकविरभूदयमन्ववाये" इति । अस्मिन्नर्थेइन्द्रंनाशयिष्यामीत्यर्थःस्यात् । सोनुचितः । सृष्ट्यन्तरोपक्रमविरोधात् । "दैवतान्यपिसक्रोधात्स्रष्टुं समुपचक्रमे " इत्यनन्तरविरोधाच्च । अतएवायमर्थो भवितुमर्हति मयासृज्यमानस्यस्वर्गस्यान्यमिन्द्रंकरिष्यामि अथवामयासृज्यस्स्वर्गलोकोऽनिन्द्रकोवास्तु तत्रत्रिशङ्कुरेवेन्द्रोभवतु तत्परिवारान्सृजेयमितितादृशदेवान्स्रष्टुमुपचक्रमइत्यर्थः ॥ २२ ॥ परमसंभ्रान्ताः स्वप्रतिसृष्टेरतिदुस्सहत्वादितिभावः । सानुनयं ससान्त्वं ॥ २३ ॥ अनुनयमेवाह—अयमित्यादि । नार्हति अदुष्टत्रैवार्णकसभ्यत्वात्स्वर्गस्येतिभावः ॥ २४ ॥ तेषामितिचत्वारः ॥ २५ ॥ भद्रंवइतिप्रतिसान्त्वं ॥ २६ ॥ स्वर्गोस्तु अयंत्रिशङ्कुस्थितिदेशएवेतिशेषः । मत्कृतानि मत्सृष्टानि । अतएवमामकानि । लोकाः भूरादयः । यावद्धरिष्यन्ति स्थास्यन्ति । सर्वशः सर्वप्रकारेण । ध्रुवाणि भवन्तु । प्रार्थनायांलोट् । तत् पूर्वोक्तं । अनुज्ञातुं अङ्गीकर्तुं ॥ २७—२८ ॥ एवमुक्ताइत्यादिसार्धाःपञ्च ॥ २९ ॥ सर्वशः सर्वाणि । वैश्वानरपथात् वैश्वानरः ज्योतिः तत्पथात्प्रसिद्धानादिज्योतिश्चक्रमार्गात् ॥ ३० ॥ तेषु त्वत्सृष्टेषु । जाज्वलन् अतिशयेनप्रकाशमानः । अवाक्छिराः गुर्वपचारफलप्रकटनायाधोमुखः । अमरसन्निभः तेजसाअमरतुल्यः । तिष्ठतु ध्रुवइवेतिभावः ॥३१॥ अनुयास्यन्ति स्वर्गनक्षत्राणिध्रुवमिवेतिभावः । स्वर्गलोकगतंयथा स्वर्गलोकगतमिव । कृतार्थमित्यन्वयः ॥ ३२ ॥ बाढमित्यङ्गीकारद्योतकंवचनं ॥ ३३ ॥

**तनि०** लोकोवास्यात् सेन्द्रं लोकान्तरंवास्यादित्यर्थः । अनिन्द्रकस्स्यात् विद्यमानंभुवनमिन्द्ररहितमनायकंवास्यादित्यर्थः॥२२॥ **ति०** स्वर्गोस्तु स्वर्गपदवाच्यसुखविशेषानुभवोस्तु ॥ २७ ॥ **ति०** बाढमित्येव आहेतिशेषः । दुराग्रहस्यानर्थहेतुतांप्रतिसंधाय

**[ पा० ]** १ क. कुलानक्षत्र. २ ज. चक्रोधात्. क. ख. ग. संक्रोधात्. ट. सक्रोधस्स्रष्टुं. ३ ज. सचारणाः. ख. सुरर्षभाः. क. सुरर्षयः. ४ इदमर्धं ग. ज. दृश्यते. ५ ज. सुरासुराः. ६ ग. नार्हत्येष. ज. नार्हतीति. घ. नचार्हति. ७ क. ख. घ. ज. तेषांतुव. ८ ङ. च. छ. झ. ञ. ट. आरोहणंप्रतिज्ञातं. ज. आरोहणे. ९ क. घ. ज. रेवशाश्वतम्. ट. रेष. १० क. ध्रुवाणिच. ११ झ. यत्कृतानि. १२ ग. तानिसर्वाणि. १३ ग. घ. च. ज. ज्योतिष्षुजज्वलुः. १४ क. ट. स्वर्गलोकंगतं. घ. ब्रह्मलोकगतं. क—ट. गतंयथा. १५ ङ. च. छ. झ. ञ. ऋषिमध्ये. १६ क. ङ—ट. मित्येवदेवताः.

ततो देवा महात्मानो [1]मुनयश्च तपोधनाः ॥ जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ॥ ६१ ॥

अंबरीषेणयजनारंभेइन्द्रेणगूढंयज्ञपशोरपहारेपुरोहितेनानुकल्पतयाराजानंप्रतिनरपशोरानयनचोदना ॥१॥ पशुक्रयणाय पर्यटताराज्ञाभृगुतुन्देऋचीकमृषिंप्रतिगोशतसहस्रस्वीकारेणपशुभावेन सुतविक्रयणप्रार्थना ॥ २ ॥ मातापितृभ्यांज्येष्ठकनिष्ठयोर्विक्रयणानङ्गीकरणे अंबरीषेणपरिशेषादात्मविक्रयनिश्चयात्स्वयमुपागतेनशुनश्शेपनाम्नामध्यमेनसहनिर्गमनम् ॥ ३ ॥

विश्वामित्रो [2]महात्माऽथ प्रस्थितान्[3]प्रेक्ष्य तानृषीन् ॥ अब्रवीन्नरशार्दूलः[4]सर्वांस्तान्वनवासिनः ॥ १ ॥
[5]महान्विघ्नः प्रवृत्तोऽयं [6]दक्षिणामास्थितो दिशम् ॥ दिशमन्यां [7]प्रपत्स्यामस्तत्र [8]तप्स्यामहे [9]तपः ॥ २ ॥
[10]पश्चिमायां विशालायां पुष्करेषु [11]महात्मनः ॥ सुखं [12]तपश्चरिष्यामो [13]वरं तद्धि तपोवनम् ॥ ३ ॥
एवमुक्त्वा [14]महातेजाः पुष्करेषु महामुनिः ॥ तप उग्रं [15]दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥
एतस्मिन्नेव काले तु अयोध्याधि[16]पतिर्नृपः ॥ अंबरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५ ॥
[17]तस्य वै यजमानस्य पशुमिन्द्रो [18]जहार ह ॥ प्रनष्टे तु [19]पशौ विप्रो राजानमि[20]दमब्रवीत् ॥ ६ ॥
[21]पशुरद्य हृतो राजन्प्रनष्टस्तव दुर्नयात् ॥ अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ७ ॥
प्रायश्चित्तं [22]महद्ध्येतन्नरं वा पुरुषर्षभ ॥ आनयस्व पशुं शीघ्रं यावत्कर्म [23]प्रवर्तते ॥ ८ ॥

यज्ञस्यान्तइत्यनेनविश्वामित्रेणयजमानप्रतिनिधिंकृत्वा यज्ञःसमापितः । देवैर्भागश्चगृहीतइतिगम्यते ॥३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

अथ शरणागतशुनःशेपरक्षणोचितशक्तिवक्तुं तपोन्तरमाहैकषष्टितमे—विश्वामित्रइत्यादि । तान् स्वाज्ञयासमागतान् । वनवासिनः स्वतपोवनवासिनः । ॥ १ ॥ योहंदक्षिणांदिशमास्थितः तस्यमेमहान्विघ्नः प्रवृत्तइत्यर्थः ॥ २ ॥ विशालायां विशालतपोवनवत्यां पश्चिमायांदिशिवर्तमानेषु । पुष्करेषु पुष्करतीर्थेषु । तत्तीरेष्वित्यर्थः । महात्मनः हेमहात्मानः ॥ ३—५ ॥ विप्रः पुरोहितइतियावत् ॥६॥ दुर्नयात् अनवधानादित्यर्थः । हृतः केनापीतिशेषः । प्रनष्टः अदृष्टः । णश अदर्शनइतिधातोर्निष्ठा । दोषाः पशुनाशादयः ॥७॥ प्रायश्चित्तं एतत् पशुनाशनिमित्तकं । नरंवा आनयस्व गोभिःक्रीत्वा पशुप्रतिनिधित्वेनेतिशेषः । यावत्प्रवर्ते-

---

देवतावचनमङ्गीचकार ॥ ३३ ॥ **वि०** इतिकुशलवयोराख्यानेतृतीयेह्निवर्तमानकथासमाप्ता ॥ ३४ ॥ इतिषष्टितमस्सर्गः ॥ ६० ॥

**ति०** सर्वांस्तान्विनयान्वितानितिपाठान्तरं ॥ १ ॥ **ति०** दक्षिणांदिशं आ समन्ताद्याप्य स्थितः अयं त्रिशङ्कुरूपः महाविघ्नः । अस्माकंतपोनाशकत्वात् तच्छायाक्रान्तत्वाच्चायंदेशोतःपरंतपोऽयोग्यइतिभावः ॥ २ ॥ **शि०** पुष्करेषु तीर्थविशेषे । बहुवचनमादरार्थं । महात्मनः अतिप्रयत्नशीलमुनीनां । एकवचनंजात्यभिप्रायेण ॥ ३ ॥ **ति०** अभ्याहृतः इदानींअस्माभिरानीतः पशुः तवदुर्नयात् त्वत्पापवशात् तावकरक्षिणांप्रमादाच्चप्रनष्टः ॥ ७ ॥ **ति०** एतत् पशुनाशरूपं महत्प्रायश्चित्तं महतःप्रायश्चित्तस्यकारणं । प्रक्रान्तंकर्मयावत्प्रवर्तते प्रवर्तिष्यते । तावत् ततःप्रागेव । नष्टंपशुमन्विष्यानय । तत्प्रतिनिधित्वेनक्रीत्वानरंवापशु-

**[ पा० ]** १ घ. ङ. च. छ. झ. ञ. ऋषयश्च. २ ङ. च. छ. झ. ञ. महातेजाः. ३ ङ. च. छ. झ. ञ. ट. न्वीक्ष्यतानृषीन्. ४ ग. स्तान्सर्वान्वनवासिनः. ५ क—घ. झ. ञ. महाविघ्नः. ६ घ. दक्षिणामाश्रितोदिशं. ख. दक्षिणांदिशमास्थितः. ७ क. प्रवेक्ष्यामः. ग. ट. प्रवत्स्यामः. च. प्रयास्यामः. ८ घ. ज. तप्यामहे. ९ घ. ज. वयम्. १० क. घ. च. ज. पश्चिमस्यां. ११ ख. महामुनिः. ख. घ. च. महामनाः. १२ क. ख. तपश्चरिष्यामि. १३ क—घ. ज. परंतद्धि. ङ. च. छ. झ. ञ. सुखंतद्धि. १४ क. महाबाहो. १५ ख. दुराधर्षः. १६ क. घ—ट. पतिर्महान्. १७ ख. तस्यैवयजमानस्य. १८ घ. जहारच. १९ ख. पशौविप्राः. २० ख. मब्रुवन्. २१ ङ. झ. पशुरभ्याहृतो. ख. घ. ञ. पशुरद्याहृतो. २२ ज. मखस्यैतत्. ट. मघस्यैतत्. २३ ज. समाप्यते.

उपाध्यायवचः श्रुत्वा स राजा [1]पुरुषर्षभ ॥ अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ ९ ॥
देशाञ्जनपदांस्तांस्तान्नगराणि वनानि च ॥ आश्रमाणि च [2]पुण्यानि मार्गमाणो महीपतिः ॥ १० ॥
स [3]पुत्रसहितं तात सभार्यं र[4]घुनन्दन ॥ [5]भृगुतुन्दे समासीनमृचीकं संददर्श ह ॥ ११ ॥
त[6]मुवाच महातेजाः प्रणम्याभिप्रसाद्य च ॥ [7]ब्रह्मर्षिं तपसा दीप्तं राजर्षिरमितप्रभः ॥
पृष्ट्वा सर्वत्र कुशलमृचीकं [8]तमिदं वचः ॥ १२ ॥
गवां शतसहस्रेण विक्रीणीषे सुतं यदि ॥ पशोरर्थे महाभाग कृतकृत्योसि भार्गव ॥ १३ ॥
सर्वे परि[9]सृता देशा [10]यज्ञीयं न लभे पशुम् ॥ दातुमर्हसि मूल्येन सुतमे[11]कमितो मम ॥ १४ ॥
एवमुक्तो महातेजा ऋचीकस्[12]त्वब्रवीद्वचः ॥ नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन ॥ १५ ॥
ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम् ॥ उवाच नरशार्दूल[13]मम्बरीषं तपस्विनी ॥ १६ ॥
अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ॥ ममापि दयितं विद्धि कनिष्ठं [14]शुनकं नृप ॥
तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥ १७ ॥
[15]प्रायेण हि नरश्रेष्ठ ज्ये[16]ष्ठाः पितृषु वल्लभाः ॥ मातॄणां च कनीयांसस्तस्मा[17]द्रक्षे कनीयसम् ॥ १८ ॥
उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च ॥ शुनश्शेपः स्वयं राम [18]मध्यमो वाक्यमब्रवीत् ॥ १९ ॥
पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् ॥ [19]विक्रीतं मध्यमं मन्ये राजन्पुत्रं नयस्व माम् ॥ २० ॥
[[20]अथ राजा महाबाहो वाक्यान्ते ब्रह्मवादिनः ॥ हिरण्यस्य सुवर्णस्य कोटिभी रत्नराशिभिः] ॥ २१ ॥
गवां शतसहस्रेण शुनःशेपं [21]नरेश्वरः ॥ गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ २२ ॥

ते प्रवर्तिष्यते "यावत्पुरानिपातयोः—"इतिलट् । तावत् ततःपूर्वमेव । अश्वमेधपशुविसर्जनानन्तरंकर्मकालस्यव्यवहितत्वादितिभावः । वाकारेणपशुंवान्विष्यानयस्वेतिलभ्यते ॥ ८ ॥ सहस्रशः सहस्रसङ्ख्याभिः । मूल्यभूताभिरितिशेषः ॥ ९ ॥ देशानितिजनपदादिसर्वविशेषणं ॥ १० ॥ सइतिच्छेदः । भृगुतुन्दे भृगोर्गिरितटस्यतुन्दे अभ्यन्तरे । भृग्वाख्यऋषिवासस्थानप्रदेशेवा ॥ ११ ॥ सार्धएकान्वयः । तं मुनिं । इदं वक्ष्यमाणं । वचउवाच । ब्रवीतिर्द्विकर्मकः ॥ १२ ॥ पशोः अर्थे प्रयोजनाय । पशुप्रतिनिध्यर्थमित्यर्थः । यदिविक्रीणीषे विक्रीणीथाः । तदाकृतकृत्योस्मि कृतार्थःस्यां ॥ १३ ॥ परिसृताः संचरिताः । याज्ञीयं यज्ञायहितं । "तस्मैहितं" इतिछः । वृद्धिरार्षी । इतः एतेषुसुतेषु । सार्वविभक्तिकस्तसिः ॥ १४ ॥ कथंचन बहुमूल्येनापि । इतरयोरप्रतिषेधादनुमतिर्गम्यते । "अप्रतिषिद्धमनुमतंभवति" इतिन्यायात् शास्त्रेणापत्यदानविक्रययोर्निषेधेपि मूलावसादेधर्मायापत्यदानवद्यज्ञायापत्यविक्रयोनदोषायेतिभावः ॥ १५—१६ ॥ कनीय-

मानयेत्यर्थः । **शि०** यावत्कर्मप्रवर्तते तावदेवनरंपशुंशीघ्रमानयस्व । एतदेव अघस्य अघविशिष्टपुरुषस्य । प्रायश्चित्तं अनवधानताजनितपापशोधनं । "प्रायःपापमितिप्रोक्तंचित्तंतच्छोधनंस्मृतं" इत्यनुशासनम् । एतेनोपायान्तरंनास्तीतिसूचितं । हिवाशब्दौ एवार्थे ॥८॥ **शि०** कापत्यभ्रमवारणायतादृशानुरागेसदाचारंप्रमाणयन्नाह—**प्रायेणेति** । पितृषुवल्लभाः पितृनिष्ठानुरागविषयीभूताः । भवन्तीतिशेषः । **ति०** पितृषु पितॄणां । रक्षिष्यामीत्यर्थेरक्ष्यइत्यार्षं ॥ १८ ॥ **ति०** विक्रेयं मातापित्रोर्विक्रेयत्वेनसंमतं । मन्ये अर्थादितिशेषः ॥ २० ॥ इत्येकषष्टितमस्सर्गः ॥ ६१ ॥

**[पा०]** १ झ. पुरुषर्षभः. २ ग. रम्याणि. ३ ख. तंपुत्रसहितं. ४ क. ख. समहीपतिः. ५ ङ—ट. भृगुतुंगे. ख. भृगुपुत्रं. ६ क. ख. उवाचचमहातेजाः. ७ ग. झ. महर्षिं. ८ ग. सइदंवचः. क. घ. तदिदंवचः. ९ ङ. च. छ. झ. ञ. परिगतादेशाः. ट. परिप्लुतादेशाः. ख. ज. परिष्कृतादेशाः. १० ग. ङ. ज. झ. ट. यज्ञीयं. ११ ख. कमतोमम. घ. कंततोमम. १२ ख. स्त्विदमब्रवीत्. १३ क. ङ. च. छ. झ. ञ. ट. मंबरीषमिदंवचः. ख. घ. मंबरीषंमहातपाः. १४ ङ. च. छ. झ. ञ. ट. शुनकंप्रभो. १५ क. प्रायेणतु. १६ झ. ज्येष्ठःपितृषुवल्लभः. ज. ज्येष्ठाहिपितृवल्लभाः. १७ ख. स्मान्मोक्ष्येकथंसुतम्. १८ घ. राजानंवाक्यमब्रवीत्. १९ ङ. झ. ञ. विक्रेयंमध्यमंमन्येराजन्पुत्रं. क. घ—ट. राजपुत्र. २० अयंश्लोकः ङ. च. छ. झ. ञ. दृश्यते. २१ क. नरेश्वर.

[1]अम्बरीषस्तु राजर्षी रथमारोप्य [2]सत्वरः ॥ [3]शुनःशेपं महातेजा जगामाशु [4]महायशाः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ॥ ६२ ॥

अंबरीषेपुष्करक्षेत्रमेत्यमध्याह्नेविश्रममाणेशुनश्शेपेनतत्रतपस्यन्तंविश्वामित्रमेत्य निजवृत्तान्तनिवेदनपूर्वकंराजकार्याविरोधेनस्वरक्षणप्रार्थना ॥ १ ॥ विश्वामित्रान्मन्त्रद्वयमुपलब्धवताशुनश्शेपेनसहनगरमागतेनांबरीषेणयागोपक्रमः ॥ २ ॥ तत्रपशूकृतेनशुनश्शेपेनविश्वामित्रोपदिष्टगाथाभ्यामिन्द्रोपेन्द्रस्तवनेतुष्टेनेन्द्रेणतन्मोचनपूर्वकंराज्ञोयज्ञफलदानम् ॥ ३ ॥

शुनश्शेपं [5]नरश्रेष्ठ [6]गृहीत्वा तु [7]महायशाः ॥ [8]व्यश्राम्यत्[9]पुष्करे राजा मध्याह्ने रघुनन्दन ॥ १ ॥
तस्य विश्रममाणस्य शुनःशेपो महायशाः ॥ [10]पुष्करक्षेत्रमागम्य विश्वामित्रं ददर्श ह ॥
तप्यन्तमृषिभिः सार्धं मातुलं [11]परमातुरः ॥ २ ॥
[12]विवर्णवदनो दीनस्तृष्णया च श्रमेण च ॥ [13]पपाताङ्के [14]मुनेराशु वाक्यं चेदमुवाच ह ॥ ३ ॥
न मेस्ति माता न पिता ज्ञातयो [15]बान्धवाः कुतः ॥ त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुङ्गव ॥ ४ ॥
त्राता त्वं हि [16]मुनिश्रेष्ठ [17]सर्वेषां त्वं हि भावनः ॥ ५ ॥
राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः ॥ स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा [18]ह्यनुत्तमम् ॥ ६ ॥
त्वं[19] मे नाथो ह्यनाथस्य भव भव्येन [20]चेतसा ॥ पितेव पुत्रं [21]धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ॥ [22]सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ ८ ॥
यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः ॥ परलोकहितार्थाय तस्य कालोयमागतः ॥ ९ ॥

---

समित्यकारान्तत्वमार्षं ॥ १७—२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

अथ शुनःशेपस्य शरणागतिरुच्यते द्विषष्टितमे—शुनःशेपमित्यादि ॥ १ ॥ तस्यविश्रममाणस्य तस्मिन्विश्राम्यतिसति । आगम्येत्यत्र "वा ल्यपि "इत्यनुनासिकलोपाभावःपक्षे । मातुलं "ऋचीकायकौशिकीप्रतिपादिता" इत्युक्तत्वात् ॥ २ ॥ तृष्णयापिपासया । प्राणपरित्राणलोभेनवा । श्रमेण अध्वश्रमेण मातुलत्वादङ्कपतनं ॥ ३ ॥ नास्ति अरक्षकत्वादसत्प्रायाइत्यर्थः । धर्मेण धर्मरूपप्रयोजनोद्देशेन ॥ ४ ॥ त्रातेत्यर्थं । भावनः हितप्रापकः ॥ ५ ॥ यथाचराजाकृतकार्यःस्यात् अहंच अव्ययः अविनाशः दीर्घायुः अनुत्तमं तपस्तप्त्वा स्वर्गलोकमुपाश्नीयां तथाकुरुष्वेतिशेषः ॥ ६ ॥ भव्येन शुभेन । किल्बिषात् तन्मूलकविपत्तेरित्यर्थः ॥ ७—८ ॥ यस्यप्रयोजनस्यकृते यत्प्रयोजनाय । तादर्थ्येऽव्ययं । पुत्रान्जनयन्ति । मम युष्माकंच परलोकहितार्थाय धर्माय । तस्य वाक्यकरणस्य अयंकालआगतः "जीवतोर्वाक्यकरणात्" इतिस्मृतेः

**ती०** अङ्के समीपे ॥ ३ ॥ **ति०** अव्ययः धर्मलोपाभाववान् । अश्नीयां प्राप्नुयां । **शि०** राजकार्यसिद्धिमन्तरास्वरक्षामहंनवाञ्छामीतिबोधयितुंस्वेप्सितंप्रार्थयन्नाह—**राजेति** ॥ ६ ॥ **वि०** भव्येन प्रसन्नेन ॥ ७ ॥

[ **पा०** ] १ ख. अंबरीषोमहातेजाः. २ ख. घ. सत्वरम्. ३ ख. शुनश्शेपंतुराजर्षिः. घ. शुनश्शेपंमहाराज. ४ क. घ. महातपाः. ५ ङ. नरश्रेष्ठं. ६ ख. गृहीत्वाथ. ७ क. महाबलम्. ख. महाबलः. घ. महातपाः. ज. सुमहायशाः. ८ ङ. छ. ज. झ. ञ. व्यश्रमत्. क. ग. विश्राम्यत्. घ. विश्राम्य. ९ ज. ट. पुष्करेतीर्थे. १० क—घ. च. ज. ट. पुष्करंश्रेष्ठमागम्य. ङ. छ. झ. ञ. पुष्करंज्येष्ठमागम्य. ११ परमात्मनः. १२ क—च. ज—ट. विषण्णवदनो. १३ क. पपाताग्रे. १४ ज. मुनिंराम. क. ख. घ—छ. झ. ञ. ट. मुनेराम. १५ क. ख. नचबान्धवाः. १६ क. ङ—ट. नरश्रेष्ठ. १७ घ. सर्वेषामपिकौशिक. क. ख. भावन. १८ घ. सुदुर्लभम्. १९ क. ख. ङ. च. ज. झ. ञ. समेनाथो. ग. ममनाथोह्यनाथस्य. २० ज. ट. ते.सा. २१ क. धर्मज्ञ. घ. धर्मात्मा. २२ ज. ट. शान्तयित्वा.

अयं मुनिसुतो बालो मत्तश्शरणमिच्छति ॥ [1]अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १० ॥
सर्वे [2]सुकृतकर्माणः सर्वे धर्मपरायणाः ॥ पशुभूता नरेन्द्रस्य तृप्तिमग्नेः [3]प्रयच्छत ॥ ११ ॥
नाथवांश्च शुनश्शेपो यज्ञश्चा[4]विघ्नितो भवेत् ॥ देवतास्तर्पिताश्च [5]स्युर्मम चापि कृतं वचः ॥ १२ ॥
[6]मुनेस्तु वचनं श्रुत्वा [7]मधुष्यंदादयः सुताः ॥ साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३ ॥
कथमात्मसुतान्हित्वा त्रायसेऽन्यसुतं विभो ॥ अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४ ॥
तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुङ्गवः ॥ क्रो[9]धसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥
निस्साध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् ॥ अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६ ॥
[10]श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु ॥ पूर्णं वर्षसहस्रं तु पृथिव्या[11]मनुवत्स्यथ ॥ १७ ॥
कृत्वा शापसमायुक्तान्पुत्रान्मुनि[12]र्वरस्तथा ॥ शुनश्शे[13]पमुवाचार्तं कृत्वा रक्षां निरा[14]मयम् ॥ १८ ॥
[ इदमा[15]ह मुनिश्रेष्ठो विश्वामित्रो महातपाः ] ॥
पवित्रपाशै[16]रासक्तो रक्तमाल्यानुलेपनः ॥ वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ १९ ॥
[ * [17]इन्द्राविष्णू सुरश्रेष्ठौ स्तुहि त्वं मुनि[18]पुत्रक] ॥ इमे तु [19]गाथे द्वे दिव्ये गायेथा मुनिपुत्रक ॥
अंबरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ २० ॥
शुनश्शेपो गृहीत्वा ते द्वे गाथे सुसमाहितः ॥ त्वरया राजसिंहं तमंबरीषमुवाच ह ॥ २१ ॥

॥९॥ शरणं रक्षणं। जीवितमात्रेण जीवनप्रदानमात्रेण ॥१०॥ स्वनियोगकरणार्थमुपश्लोकयति—सर्वइति । प्रयच्छतेतिबहुवचनेन युष्मासु यःकश्चन भवत्विति सूच्यते ॥११॥ मयारक्षितोनाथवान्भवतु। कृतं स्यादिति शेषः ॥१२॥ साभिमानं सगर्वं । सलीलं सपरिहासं ॥१३॥ भोजने भोज्ये। प्राप्ते तत्परित्यागेन श्वमांसभक्षणमिवाकार्यमित्यर्थः । द्वितीयइवशब्दोवाक्यालंकारे ॥१४—१५॥ निस्साध्वसं पितृप्रतिवचनभयरहितं । धर्मात् जीवतोर्वाक्यकरणरूपधर्मात् । विगर्हितं भ्रष्टं । इदमुभयंक्रियाविशेषणं । दारुणं पितृभक्तिरहिततया-परुषं। अतएव रोमहर्षणं रोमाञ्चविकारकरं ॥१६॥ अत्रादौ तस्मादित्युपस्कार्यं । जातिषु मुष्टिकजातिषु ॥ १७ ॥ निरामयं निर्भयं यथाभवतितथा । रक्षां मन्त्रितभस्मधूल्यादिप्रक्षेपरूपाम् ॥ १८ ॥ पाशैः दर्भ-रशनादिभिः । आसक्तः बद्धः । वैष्णवं विष्णुदेवता-कं । "वैष्णवोवैदेवतयायूपः" इतिश्रुतेः । वाग्भिः व-क्ष्यमाणगाथाद्वयरूपाभिः । अग्निंप्रत्युदाहर स्तुहि । अग्न्यभिमुखोभूत्वा इन्द्रमिन्द्रानुजंचस्तुहीत्यर्थः ॥१९॥ गाथेदर्शयति—इमेइति। गाथे इन्द्रोपेन्द्रविषये। एका इन्द्रविषया । अन्या उपेन्द्रविषया । ततः गाथाभ्यां । सिद्धिं जीवितसिद्धिं ॥ २० ॥—शुनश्शेपइत्यादि

**शि०** भोजने प्राप्तपायसादिभोज्ये । पतितंश्वमांसमिव अकार्यंकार्यध्वंसकमेव । पश्यामः । यथाऽग्निहोत्रिणांभोज्येपायसादौ पतितंश्वमांसंभोजनरूपकार्यमात्रध्वंसकं तथा रक्षणीयस्वसुतरक्षासमयेप्राप्तैषाऽन्यसुतरक्षाअवश्यकार्यस्वसुतरक्षामात्रविघातिकेत्यर्थः । एकइवशब्दएवार्थे । इतिवयं पश्यामः निश्चिनुमः । एकइवशब्दइत्यर्थकः ॥ १४ ॥ **शि०** जातिषु श्वपचजातिविशेषेषु ॥ १७ ॥ **ति०** निरामयां सर्वदुःखनाशिकां ॥ १८ ॥

**[ पा० ]** १ घ. तस्यजीवित. २ क. ख. सर्वेचकृतकर्माणः. ३ क. ख. ग. ङ. च. छ. ज. ञ. प्रयच्छथ. ४ क. ख. घ. ङ. च. झ. ञ. ट. श्चाविघ्नतोभवेत्. ५ ख. छ. ट. ममापिचकृतंवचः. ६ ङ. च. झ. मुनेस्तद्वचनं. त. ज. ऋषेस्तु. ७ ङ. च. छ. झ. ञ. मधुच्छन्दादयः. ट. मधुस्यन्दादयः. ८ ङ. सुतान्हत्वा. ९ घ. कोपसंरक्त. १० क. ख. च. ज. श्वमांसभोजनाः. पूर्णवर्षसहस्रंतु. श्वमांसभोजिनस्सर्वेइत्यनयोरर्धयोः ट. पुस्तके व्युत्क्रमोदृश्यते. ११ ग. मनुवर्तेथ. १२ ख. ग. घ. ङ. छ. झ. ञ. ट. न्मुनिवरस्तदा. १३ ख. मुवाचेदं. १४ क—छ. झ. ञ. ट. निरामयाम्. १५ इदमर्धं च. छ. ञ. दृश्यते. १६ ङ. छ. झ. ट. राबद्धो. * इदमर्धं क. ख. ङ. च. छ. ञ. ट. दृश्यते. १७ ख. छ. इन्द्रविष्णू. १८ ङ. मुनिपुङ्गव. १९ क. ख. ङ. च. छ. झ. ञ. इमेचगाथे.

[1]राजसिंह [2]महासत्त्व शीघ्रं [3]गच्छावहे सदः ॥ [4]निर्वर्तयस्व राजेन्द्र दीक्षां च [5]समुपाविश ॥ २२ ॥
[6]तद्वाक्यमृषिपुत्रस्य श्रुत्वा [7]हर्षसमुत्सुकः ॥ जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३ ॥
[8]सदस्यानुमते राजा [9]पवित्रकृतलक्षणम् ॥ [10]पशुं रक्तांबरं कृत्वा यूपे तं [11]समबन्धयत् ॥ २४ ॥
स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै [12]सुरौ ॥ इन्द्रमिन्द्रानुजं चैव [13]यथावन्मुनि[14]पुत्रकः ॥ २५ ॥
ततः प्रीतः सहस्राक्षो रहस्य[15]स्तुतितर्पितः ॥ [16]दीर्घमायुस्तदा प्रादाच्छुनश्शेपाय [17]राघव ॥ २६ ॥
स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् ॥ फलं [18]बहुगुणं राम सहस्राक्षप्रसादजम् ॥ २७ ॥
[19]विश्वामित्रोपि धर्मात्मा [20]भूयस्तेपे महातपाः ॥ पुष्करेषु नरश्रेष्ठ दशवर्ष[21]शतानि च ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

ब्रह्मणापुष्करक्षेत्रमेत्यविश्वामित्रायऋषिपददानम् ॥ १ ॥ पुष्करेमेनकादर्शनक्षुभितमनसाविश्वामित्रेणतयासहवत्सरदशकंसुखविहरणम् ॥ २ ॥ ततःपश्चात्तसेनतेनतद्विसर्जनपूर्वकंहिमवद्गिरौतपश्चरणम् ॥ ३ ॥ ब्रह्मणातस्मैमहर्षिशब्ददानम् ॥ ४ ॥ तथापितेनापरितोषात्पुनस्तपश्चरणम् ॥ ५ ॥

पूर्णे वर्षसहस्रे तु [22]व्रतस्नातं महामुनिम् ॥ [23]अभ्यागच्छन्सुराः सर्वे तपःफल[24]चिकीर्षवः ॥ १ ॥
अब्रवीत्सुमहातेजा ब्रह्मा [25]सुरुचिरं वचः ॥ ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः ॥ २ ॥

---

॥ २१ ॥ सदः यज्ञवाटमित्यर्थः ॥२२—२३॥ सदस्यानुमते सदस्यानां उपद्रष्टृप्रभृतीनां अनुमते अनुमतौ स्थितइतिशेषः । पवित्रैर्दर्भरज्जुभिः । कृतलक्षणं कृतलाञ्छनंकृतपशुत्वज्ञापनमित्यर्थः । पशुंकृत्वा उपाकरणादिसंस्कारसंस्कृतंकृत्वा ॥ २४ ॥ इन्द्रं पशुभोक्तारं । इन्द्रानुजं यूपदेवं । तुष्टाव इन्द्रानुजंपुरुषकारीकृत्य फलप्रदमिन्द्रंस्तुतवानित्यर्थः ॥ २५ ॥ ततइन्द्रस्यैव फलप्रदत्वमाह—ततइति । प्रीतः स्वस्तुत्यातुष्टः । रहस्यस्तुतितर्पितः स्वस्वामिभूतविष्णुरहस्यस्तुत्यातोषितः ॥ २६ ॥ समाप्तवान् प्राप्तवान् । ननुहरिश्चन्द्रोहवैधसऐक्ष्वाकोराजापुत्रआसेत्यादिबह्वृचब्राह्मणोक्तेतिहासविरुद्धोयंकथमुपपद्यतइतिचेन्न । अंबरीषस्यैवहरिश्चन्द्र इतिसंज्ञान्तरमित्यविरोधस्यनेयत्वात् ॥ २७—२८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

---

पुत्रविषयक्रूरशापदानेनक्रोधनिर्जयाभावान्नब्रह्मर्षित्वसिद्धिरित्याहत्रिषष्टितमे—पूर्णइत्यादि । व्रतस्नातं व्रतान्तेस्नातं । समाप्तपुनश्चरणमितियावत् । तपःफलचिकीर्षवः तपःफलंदातुमिच्छवः ॥ १ ॥ ऋषिस्त्वमसि । पूर्वतपसाराजर्षिरसि इदानीमृषिरेवासि । अनेन

---

ती० अभितुष्टाववैसुराविति उपदेशसमये अग्निंवाग्भिरुदाहर इमेद्वेगाथेगायेथाइतिमुनिनोक्तत्वात् वाग्भिरग्निमभिष्टूयतदनन्तरंगाथाद्वयगानेनइन्द्रोपेन्द्रावभितुष्टावेतिवेदितव्यं । वैशब्दोऽग्निस्तवनसमुच्चायकः ॥ २५ ॥ शि० ततः तस्मै । चतुर्थ्यन्तात्तसिः ॥ २६ ॥ शि० दशवर्षशतानि सहस्रत्रयवर्षपर्यन्तं ॥ २८ ॥ इतिद्विषष्टितमस्सर्गः ॥ ६२ ॥

शि० वर्षसहस्रे वर्षाणिसहस्राणियास्मिंस्तस्मिन् त्रिसहस्रात्मकेसमये ॥ १ ॥

[ पा० ] १ क. अंबरीषमहाभागशीघ्रंगच्छामहेपुरम्. २ ङ. च. छ. झ. ञ. ट. महाबुद्धे. ३ ङ. च. छ. झ. ञ. गच्छामहेवयम्. ४ घ. निवर्तस्वमहाभाग. ५ क. ख. ग. ङ. च. ज—ट. समुपाहर. घ. समुदाहर. ६ ऋषिपुत्रस्य तद्वाक्यं. ७ ङ. च. छ. झ. ञ. ट. हर्षसमन्वितः. ख. हर्षेणसोत्सुकः. ८ क. ख. ग. छ. सतस्यानुमते. ९ क. ख. ग. पवित्रीकृतलक्षणम्. १० क. पशुंरक्तांबरधरं. ११ घ. समयोजयत्. १२ च. ज. सुरान्. १३ च. यथाहमुनि. १४ ख. ग. छ. मुनिपुङ्गवः. १५ ङ—ट. स्तुतितोषितः. १६ ख. घ. ज. ठ. दीर्घमायुस्ततः. १७ क. ख. घ—छ. झ. ञ. ठ. वासवः. १८ ज. ट. बहुविधं. १९ ञ. विश्वामित्रोऽथ. २० घ. ज. तपस्तेपे. २१ ज. शतानिसः. २२ ज. विश्वामित्रं. २३ क. ख. ङ—ट. अभ्यगच्छन्. २४ ज. चिकीर्षया. २५ घ. सानुनयंवचः.

तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात् ॥ विश्वामित्रो [1]महातेजा भूयस्तेपे [2]महत्तपः ॥ ३ ॥
ततः कालेन महता मेनका [3]परमाप्सराः ॥ पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ ४ ॥
तां ददर्श महातेजा मेनकां कुशिकात्मजः ॥ रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ ५ ॥
[4]दृष्ट्वा कंदर्पवशगो मुनिस्तामिदमब्रवीत् ॥ ६ ॥
अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे ॥ अनुगृह्णीष्व भद्रं ते [5]मदनेन सुमोहितम् ॥ ७ ॥
इत्युक्ता सा वरारोहा [6]तत्र वासमथाकरोत् ॥ तपसो हि महाविघ्नो विश्वामित्रमु[7]पागतः ॥ ८ ॥
तस्यां वसन्त्यां वर्षाणि पञ्चपञ्च च राघव ॥ विश्वामित्राश्रमे [8]राम सुखेन व्यतिचक्रमुः ॥ ९ ॥
अथ काले गते तस्मिन्विश्वामित्रो महामुनिः ॥ सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः ॥ १० ॥
बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन ॥ [9]सर्वं सुराणां कर्मैतत्तपोपहरणं महत् ॥ ११ ॥
अहोरात्रापदेशेन गताः संवत्सरा दश ॥ काममोहाभिभूतस्य [10]विघ्नोऽयं प्रत्युपस्थितः ॥ १२ ॥
विनिश्वसन्[11]मुनिवरः पश्चात्तापेन दुःखितः ॥ भीतामप्सरसं दृष्ट्वा वेपन्तीं [12]प्राञ्जलिं स्थिताम् ॥१३॥
मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ॥ उत्तरं पर्वतं राम विश्वामित्रो जगाम ह ॥ १४ ॥
स कृत्वा नैष्ठिकीं बुद्धिं जेतुकामो महायशाः ॥ कौशिकीतीरमासाद्य तपस्तेपे [13]सुदारुणम् ॥ १५ ॥
[14]तस्य वर्षसहस्रं तु [15]घोरं तप उपासतः ॥ उत्तरे पर्वते राम देवतानामभूद्भयम् ॥ १६ ॥
[16]आमन्त्रयन्समागम्य सर्वे [17]सर्षिगणाः सुराः ॥ महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥ १७ ॥
देवतानां वचः श्रुत्वा सर्वलोकपितामहः ॥ अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ १८ ॥
महर्षे [18]स्वागतं वत्स तपसोग्रेण तोषितः ॥ महत्त्वमृषिमुख्यत्वं ददामि तव कौशिक ॥ १९ ॥

राजपदाप्रयोगेणक्षत्रियत्वविश्लेषःकियान्कृतइतिगम्यते ॥ २ ॥ विश्वामित्रोमहातेजाभूयस्तेपेमहत्तपइति । अत्रगायत्रीतृतीयाक्षरम् ॥ ३ ॥ अथास्यजितेन्द्रियत्वाभावख्यापनायकथान्तरंप्रस्तौति—ततःकालेनेत्यादि । अप्सरश्शब्दएकवचनान्तोप्यस्ति । देवप्रेषितेतिसिद्धं ॥ ४ ॥ तत्र सरसि । स्नान्तीमेनका जलदमण्डलमध्यवर्तिनी विद्युदिव स्थितेतिभावः ॥ ५—६ ॥ अनुगृह्णीष्व मत्कामतापंशमयेत्यर्थः ॥ ७—८ ॥ पञ्चपञ्चचेति दशेत्यर्थः । सुखेनवसन्त्यामित्यन्वयः ॥ ९ ॥ सव्रीडइवेत्यत्र इवशब्दोवाक्यालङ्कारे ॥ १० ॥ बुद्धिरित्यादिद्विकं । अहोरात्रापदेशेन अहोरात्रतुल्यतया । अन्तेइतिकरणमध्याहार्यं । इतिबुद्धिरुत्पन्नेत्यन्वयः ॥ ११—१२ ॥ विनिश्वसन्नित्यादिद्विकं । वेपन्तीं वेपमानां । मधुरैः त्वयाकिंकृतं कामपरतन्त्रस्यममैवापराधोयमित्येवंरूपैरित्यर्थः । उत्तरंपर्वतं हिमवन्तं ॥ १३—१४ ॥ नैष्ठिकीं व्रतसमापनपर्यन्तां । जेतुकामः इन्द्रियाणीतिशेषः ॥ १५—१८ ॥ महत्त्वमि-

**ति०** कन्दर्पकृतोदर्पोमदः ॥ ६ ॥ **शि०** सुखेनव्यतिचक्रमुरित्यन्वयः ॥ ९ ॥ **शि०** तस्मिन् दशवर्षात्मके कालेगतेसत्येव । संवृत्तः सम्यक्वृत्तंवर्तनंयस्यसः । महामुनिर्विश्वामित्रः । सव्रीडः अप्सरस्सङ्गहेतुकव्रीडासहितः । अतएवचिन्ताशोकपरायणः । आसेतिशेषः । इवशब्दएवार्थे ॥ १० ॥ **ति०** मधुरैःमत्प्रार्थनयास्थितासीतितवनकश्चनदोषइत्यादिवाक्यैः ॥ १४ ॥ **ति०** नैष्ठिकीं कामस्याप्यकरणंसंकल्प्यात्युत्कटब्रह्मचर्यविषयां । बुद्धिं दृढनिश्चयं ॥ १५ ॥ **शि०** अयं महर्षिशब्दं लभतां । एतेनमहर्षिपदलाभमन्तराएतत्तपोनिवृत्तिर्नभविष्यतीतिदेवतानांनिश्चयोध्वनितः ॥ १७ ॥ **वि०** देवप्रार्थनयामहर्षिशब्देनैवसंबोधयति—

**[ पा० ]** १ ज. ट. महर्षिस्तु. ङ. पिधर्मात्मा. २ क. घ. ङ. महातपाः. ३ च. ज. झ. ञ. परमाप्सरा. ४ क. घ—ट. कन्दर्पदर्पवशगो. ५ ङ. च. झ. ञ. ट. मदनेनविमोहितम्. ज. मदनेनानुमोहितम्. ६ ङ. च. झ. ञ. तत्रावासमथा. ७ घ—छ. झ. ञ. ट. मुपागमत्. ८ ग. ङ—ञ. सौम्ये. क. ख. तस्मिन्. घ. रम्ये. ९ ज. सत्यं. १० ख. घ. विघ्नोऽयंसमुपस्थितः. ११ ङ. च. छ. झ. ञ. ट. सनिश्वसन्. १२ क. ग. घ. प्राञ्जलिस्थिताम्. १३ ङ. च. छ. झ. ञ. ट. दुरासदम्. १४ क. ङ—ट. तस्यवर्षसहस्राणि. क. घ. तस्यवर्षसहस्रेण. १५ घ. घोरेतपसितिष्ठतः. १६ ख. ग. ङ. च. ज. झ. अमन्त्रयन्. १७ ज. सर्वेऋषिगणाः. १८ ख. स्वागतंतेऽस्तु.

[1]ब्रह्मणस्स वचः श्रुत्वा [2]सर्वलोकेश्वरस्य ह ॥ [3]नविषण्णो न संतुष्टो विश्वामित्रस्तपोधनः ॥ २० ॥
प्राञ्जलिः [4]प्रणतो भूत्वा [5]सर्वलोकपितामहम् ॥ [6]प्रत्युवाच ततो वाचं विश्वामित्रो [7]महामुनिः ॥ २१ ॥
[8]महर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः ॥ [9]यदि मे [10]भगवानाह [11]ततोऽहं विजितेन्द्रियः ॥ २२ ॥
[12]तमुवाच ततो ब्रह्मा न [13]तावत्त्वं जितेन्द्रियः ॥ [14]यतस्व मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः ॥ २३ ॥
[15]विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः ॥ ऊर्ध्वबाहुर्निरालंबो [16]वायुभक्षस्तपश्चरन् ॥ २४ ॥
घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ॥ शिशिरे [17]सलिलस्थायी रात्र्यहानि तपोधनः ॥ २५ ॥
एवं [18]वर्षसहस्रं हि [19]तपोघोरमुपागमत् ॥ २६ ॥
[20]तस्मिन्संतप्यमाने तु विश्वामित्रे महामुनौ ॥ [21]संभ्रमः सुमहानासीत्सुराणां वासवस्य च ॥ २७ ॥
रंभामप्सरसं [22]शक्रस्सह सर्वैर्मरुद्गणैः ॥ उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुष्षष्टितमः सर्गः ॥ ६४ ॥

विश्वामित्रेणस्वतपोभङ्गायइन्द्रप्रेषितायारंभायाःपाषाणीकरणपूर्वकंक्रोधजयेनतपश्चरणप्रतिज्ञानम् ॥ १ ॥

सुरकार्यमिदं रंभे कर्तव्यं सुमहत्त्वया ॥ लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥
तथोक्ता साऽप्सरा राम सहस्राक्षेण धीमता ॥ व्रीडिता [23]प्राञ्जलिर्भूत्वा प्रत्युवाच सुरेश्वरम् ॥ २ ॥
अयं सुरपते घोरो विश्वामित्रो महामुनिः ॥ [24]क्रोधमुत्स्रजते घोरं मयि देव न संशयः ॥

---

त्यस्यविवरणं ऋषिमुख्यत्वमिति ॥ १९—२१ ॥ ततोहंविजितेन्द्रियः यदिमहर्षित्वंभवतादत्तं ततोहंविजितेन्द्रियश्चास्मीत्यर्थः ॥ २२ ॥ नतावत्त्वंजितेन्द्रियः विकारहेतुसंनिधानेपियावन्नविकरोषि तावन्तंकालंतवजितेन्द्रियत्वंनास्तीत्यर्थः ॥ २३—२४ ॥ आकाशसंश्रयः वर्षावरणरहितदेशस्थः ॥ २५–२६ ॥ संभ्रमः किमस्मत्पदंकाङ्क्षतइति अस्थानेभयशङ्का ॥२७॥ अहितंकौशिकस्यचेत्यनेन तद्विषयवैरनिर्यातनार्थंच रंभाप्रेरणमित्यपिगम्यते ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिषष्टितमःसर्गः ॥ ६३ ॥

---

अथरंभयातपोविघ्नश्चतुष्षष्टितमे—सुरकार्यमित्यादि। लोभनं प्रलोभनं। काममोहेन कामकृतवैचित्त्येन। समन्वितं युक्तं। इह अस्मिन्काले। कौशिकप्रलोभनरूपं सुमहत् सुरकार्यं कर्तव्यमित्यन्वयः ॥ १ ॥ व्रीडिता अशक्यार्थवचननिमित्तलज्जावती ॥ २ ॥ उत्सृजते उत्स्रक्ष्यति । ततः तस्मात् क्रोधोत्सर्जनात् । मे

---

**महर्षेइति** ॥१९॥ **ति०** ब्रह्मर्षिशब्दं मदभीष्टं स्वार्जितैःकर्मभिः प्राप्ययदि यतः भगवान्नाह नवदति ततोमन्येहंविजितेन्द्रियः । अत्रकाकुः नविजितेन्द्रियइत्यर्थः ॥ २२ ॥ **शि०** निरालंबः गृहाद्यालंबरहितः ॥ २४ ॥ **शि०** वर्षसहस्राणि त्रिसहस्रवर्षपर्यन्तंघोरंतपः । उपागमत् अकरोत् ॥ २६ ॥ इतित्रिषष्टितमस्सर्गः ॥ ६३ ॥

[ **पा०** ] १ ङ. च. छ. झ. ञ. ब्रह्मणस्तुवचः. घ. ब्रह्मणोवचनं. २ क. ख. घ—ट. विश्वामित्रस्तपोधनः. ३ इदमर्धं ग. पुस्तकवर्जंअन्यपुस्तकेषुनदृश्यते. ४ क. घ. ज. ट. प्रयतोभूत्वा. ५ घ. ट. प्रत्युवाचमहायशाः. ६ इदमर्धं घ. ट. पुस्तकयोर्नदृश्यते. ७ ज. महायशाः. ८ क. ख. घ. ङ. छ. ज. झ. ञ. ब्रह्मर्षिशब्दमतुलं. ९ ख. यतोमे. १० क. ख. घ. ङ. छ—ञ. भगवन्नाह. ११ ख. तदाहं. १२ ज. ट. तमुवाचमहातेजाः. १३ क. ख. तावद्विजितेन्द्रियः. १४ ख. ज. जयस्व. १५ घ. संप्रस्थितेषु. १६ ग. वायुभक्षोचरत्तपः. १७ ङ. च. छ. झ. ञ. सलिलेशायी. १८ ग. ज. ट. वर्षसहस्राणि. क. वर्षसहस्रंतु. १९ ख. तपउग्रंसमागमत्. क. उग्रंतपउपागमत्. २० ग. तस्मिन्हितप्यमानेतु. ख. एवंसुतप्यमानेतु. २१ ङ—ट. संतापस्सुमहानासीत्. २२ ख. सर्वैश्शक्रस्सहमरुद्गणैः. ङ—ट. शक्रस्सर्वैस्सहमरुद्गणैः. २३ क. ग. ङ. च. छ. झ. ञ. प्राञ्जलिर्वाक्यं. २४ झ. ट. क्रोधमुत्स्रक्ष्यते. ख. घोरमुत्सृजतिक्रोधं, च. ज. ञ. क्रोधमुत्सृजतेक्रूरं. क. ग. घोरमुत्सृज्यतेक्रोधं.

ततो हि मे भयं देव प्रसादं कर्तुमर्हसि ॥ ३ ॥
एवमुक्तस्तया राम रंभया[1] भीतया तदा ॥ तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ॥ ४ ॥
मा[2] भैषि रंभे भद्रं ते कुरुष्व मम शासनम् ॥ ५ ॥
कोकिलो हृदयग्राही माधवे[3] रुचिरद्रुमे ॥ अहं कन्दर्पसहितः स्थास्यामि तव[4] पार्श्वतः ॥ ६ ॥
त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् ॥ तमृषिं कौशिकं रंभे[5] भेदयस्व तपस्विनम्[6] ॥ ७ ॥
सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् ॥ लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ ८ ॥
कोकिलस्य[7] तु शुश्राव वल्गु व्याहरतः स्वनम् ॥ संप्रहृष्टेन मनसा तत[8] एनामुदैक्षत ॥ ९ ॥
अथ तस्य च शब्देन गीतेनाप्रतिमेन च ॥ दर्शनेन च रंभाया मुनिः सन्देहमागतः ॥ १० ॥
[[9]ध्यात्वा मुहूर्तं तेजस्वी दण्डाहत इवोरगः । त्रसन्क्रोधसमाविष्टो विपर्वे इव भानुमान्] ॥ ११ ॥
सहस्राक्षस्य तत्कर्म[10] विज्ञाय मुनिपुङ्गवः ॥ रंभां क्रोध[11]समाविष्टः शशाप कुशिकात्मजः ॥ १२ ॥
यन्मां लोभयसे[12] रंभे कामक्रोधजयैषिणम् ॥ दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥ १३ ॥
ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः ॥ उद्धरिष्यति रंभे त्वां मत्क्रोधकलुषीकृताम् ॥ १४ ॥
एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः[13] ॥ अशक्नुवन्धारयितुं क्रोधं[14] संतापमागतः[15] ॥ १५ ॥
तस्य शापेन महता रंभा [16]शैली तदाऽभवत् ॥ वचः श्रुत्वा च कन्दर्पो महर्षेः स च निर्गतः[17] ॥ १६ ॥
कोपेन [18]सुमहातेजास्तपोपहरणे कृते ॥ इन्द्रियैरजितै[19] राम न लेभे शान्तिमात्मनः ॥ १७ ॥
बभूवास्य मनश्चिन्ता[20] तपोपहरणे कृते ॥ १८ ॥
नैव [21]क्रोधं गमिष्यामि न च वक्ष्ये कथंचन ॥ अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ॥ १९ ॥

---

मम । भयं भीतिः । प्रसादं नियोगनिवृत्तिरूपं ॥३–४॥ माभैषिरंभेइत्यत्र आर्षोह्रस्वः ॥ ५ ॥ अहंकोकिलोभूत्वा माधवे वसन्तेसति । स्थास्यामि ॥ ६ ॥ रूपं सौन्दर्यं । बहुगुणं बहवः शृङ्गारचेष्टारूपा गुणा यस्य तथोक्तं । भेदयस्व चलचित्तंकारय ॥ ७ ॥ ललिता सुन्दरी ॥८॥ वल्गु मनोहरं । संप्रहृष्टेन कोकिलरवश्रवणजसंतोषवता ॥ ९ ॥ तस्य कोकिलस्य गीतेन रंभायाइत्यनुषज्यते । सन्देहं सहस्राक्षप्रेरिता स्वयमागतावेति ॥ १०—११ ॥ तत् रंभाप्रलोभनं । सहस्राक्षस्यकर्मेति विज्ञाय संगीतादिप्रलोभनेनहेतुनानिश्चित्य ॥ १२ ॥ शैली शिलाप्रतिमा । दुर्भगे दुष्टप्रयत्ने । "भगःश्रीकाममाहात्म्यवीर्ययत्नार्ककिर्तिषु" इत्यमरः ॥ १३ ॥ स्वामिपरतन्त्रायाःकिमस्याःशापेनेतिपश्चात्तापेनानुगृह्णाति—ब्राह्मणइति । ब्राह्मणः ब्रह्मपुत्रो वसिष्ठइत्याहुः ॥ १४ ॥ संतापं शापनिमित्तपश्चात्तापं ॥१५॥ वचः रंभाशापरूपं । सच इन्द्रश्च ॥१६॥ इन्द्रियैरजितैरिति उक्तरीत्याकामक्रोधाहतत्वादितिभावः । इन्द्रियैःहेतुभिः । आत्मनः मनसः । शान्तिं दुःखोपशमं ॥ १७ ॥ मनश्चिन्ता संकल्पः ॥ १८ ॥ नचवक्ष्येकथंचन मौनमेवकरिष्यामीत्यर्थः । नोच्छ्वसिति० कोपेन चात्कामेनच ॥ १६ ॥ इतिचतुष्षष्टितमस्सर्गः ॥ ६४ ॥

[ पा० ] १ ग. ङ. च. छ. झ. ञ. ट. सभयंभीतया. २ ङ. च. छ. झ. ञ. ट. माभैषीरंभे. ३ क. माधवोरुचिरद्रुमः. ४ ग. मुनिपार्श्वतः. ५ ख. ङ. झ. कौशिकंभद्रे. ६ ख. तपोधनम्. ७ ख. कोकिलस्यच. क. ट. कोकिलस्यस. ८ ङ. च. छ. झ. ञ. सचैनामन्ववैक्षत. ९ अयंश्लोकः क. च. छ. दृश्यते. १० ङ. च. छ. झ. ञ. तत्सर्वं. ११ घ. कोपसमाविष्टः. १२ ख. क्रोधयसे. १३ ज. ट. महातपाः. १४ घ. ङ. ज. झ. ञ. कोपंसंताप. क. ख. ग. च. छ. कोपसंताप. १५ क. ख. ङ—ञ. मात्मनः. १६ क. शैलीरंभातदाभवत्. ग. ज. शैलीरंभाऽभवत्तदा. १७ घ. निस्सृतः. १८ क—घ. ज. समहातेजाः. ङ. च. छ. झ. ञ. ट. चमहातेजाः. १९ ज. इन्द्रियैक्षुभितोराम. २० घ. ज. पुनश्चिन्ता. २१ ज. झ. ट. नैवंक्रोधं. क. नवैक्रोधं.

अहं विशोषयिष्यामि ह्यात्मानं विजितेन्द्रियः ॥ तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् ॥
अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥ २० ॥
न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ॥ २१ ॥
एवं वर्षसहस्रस्य दीक्षां स मुनिपुङ्गवः ॥ चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

पूर्वस्यांदिशिदुश्चरंतपश्चरताविश्वामित्रेण ब्रह्मादिभिर्ब्रह्मर्षित्ववरदानेपितपसोऽनुपरमे देवगणवचसावसिष्ठेनपरमेष्ठिवरानुमोदनेनतन्निवर्तनम् ॥ १ ॥ एवंशतानन्देनविश्वामित्रंबोधितेनजनकेन तत्पूजनपूर्वकंतदनुमत्यास्वभवनगमनम् ॥ २ ॥

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः ॥ पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १ ॥
मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् ॥ चकाराप्रतिमं राम तपः परमदुष्करम् ॥ २ ॥
पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् ॥ विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३ ॥
स कृत्वा निश्चयं राम तप आतिष्ठदव्ययम् ॥ ४ ॥
तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम ॥
इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५ ॥
तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः ॥ निश्शेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥
न किंचिदवदद्विप्रं मौनव्रतमुपस्थितः ॥ ६ ॥
[ तथैवासीत्पुनर्मौनमनुच्छ्वासं चकार ह ] ॥ अथ वर्षसहस्रं वै नोच्छ्वसन्मुनिपुङ्गवः ॥ ७ ॥

ष्यामिकेवलंकुंभकंकरिष्यामीत्यर्थः । उच्छ्वासेनखलुक्रोधादयोभविष्यन्तीतिभावः ॥ १९ ॥ यावत्पर्यन्तं ब्राह्मण्यंप्राप्तंभविष्यतितावत्पर्यन्तं आत्मानं शरीरंशोषयिष्यामि ॥ २० ॥ मूर्तयः शरीरावयवाः । क्षयंनयास्यन्ति । तपःप्रभावादितिभावः ॥ २१ ॥ वर्षसहस्रस्य वर्षसहस्रसंबन्धिनीं । वर्षसहस्रानुयायिनीं । दीक्षां अनुच्छ्वासाभोजनसंकल्पं । उद्दिश्येतिशेषः । अप्रतिमां निस्तुलां । प्रतिज्ञां एवमेवसर्वदाकरिष्यामीत्यध्यवसायं चकार ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुष्षष्टितमःसर्गः ॥ ६४ ॥

अथविश्वामित्रस्यब्रह्मर्षित्वप्राप्तिः पञ्चषष्टितमे— अथहैमवतीमित्यादि ॥ १ ॥ वर्षसहस्रस्य वर्षसहस्रसंबन्धि तत्साध्यमित्यर्थः । मौनंव्रतं मौनरूपंव्रतं । कृत्वा संकल्प्येत्यर्थः ॥ २ ॥ काष्ठभूतं काष्ठवदवस्थितं । आधूतं आकुलीकृतमपि । आन्तरं अन्तरवन्तं । दृढान्तःकरणवन्तमितियावत् । यद्वा तंप्रति क्रोधः अन्तरं अवकाशं । नाविशत् ॥ ३—४ ॥ तस्य पूर्वसंकल्पितस्य । वर्षसहस्रस्य संबन्धिनि । व्रतेपूर्णे । तस्मिन्काले पारणकाले । सिद्धं पक्वं । याचिर्द्विकर्मकः ॥ ५ ॥ निश्चितः तपस्सिद्ध्येसर्वथैवान्नंदातव्यमितिनिश्चयवानित्यर्थः । निश्चितः अशङ्कितइतिवा । निश्शेषितइत्यनेनसर्वमन्नमिन्द्रेणयाचितमितिगम्यते । अभुक्त्वे-

ति० मौनंचात्रकाष्ठमौनं ॥ २ ॥ शि० निश्चितः निर्गतंचितंसंचयोयस्य अन्नान्तरसंचयरहितइत्यर्थः । किंच निश्चितः याचकोनप्रत्याख्येयइतिनिश्चयंप्राप्तः ॥ ६ ॥ शि० मुनिपुङ्गवः विश्वामित्रः । अनुच्छ्वासं उच्छ्वासरहितं । मौनं पुनश्चकार आरेभे । अथ तादृशमौनव्रतप्रारंभानन्तरं । वर्षसहस्रं नोच्छ्वसन् उच्छ्वासरहितस्सन्नेव । तथैववक्रोच्चारादिरहितएवआसीत् । हप्रसिद्धं ।

[ पा० ] १ ङ—ट. अहंहिशोष. २ क. ख. ग. ङ—ट. यिष्यामिआत्मानं. ३ च. तपसोर्जितम्. क—घ. ज. ट. स्वतपोर्जितम्. ४ घ. तीक्ष्णां. ५ क. घ. ङ. च. झ. ञ. ट. आतिष्ठताव्ययम्. ६ ख. सिद्धमन्नं. ७ घ. नभुक्लाच. ८ ट. मौनंव्रत. ९ क. ङ. छ. झ. ञ. ट. मुपास्थितः. ग. घ. ज. मथास्थितः. १० इदमर्धं क—ट. दृश्यते. ११ ङ. च. छ. झ. ञ. सहस्रंच.

तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ॥ त्रैलोक्यं येन संभ्रान्त[1]मादीपितमिवाभवत् ॥ ८ ॥
ततो देवा[2]स्सगन्धर्वाः पन्नगासुरराक्षसाः[3] ॥ मोहिता[4]स्तेजसा तस्य तपसा मन्दरश्मयः ॥
कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ॥ ९ ॥
बहुभिः कारणै[5]र्देवै विश्वामित्रो महामुनिः ॥ लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ॥
न ह्यस्य वृजिनं किंचिद्दृ[6]श्यते सूक्ष्मम[7]प्यथ ॥ १० ॥
न दीयते यदि त्वस्य मनसा यदभीप्सितम् ॥ [8]विनाशयति त्रैलोक्यं तपसा[9] सचराचरम् ॥ ११ ॥
व्याकुलाश्च दिशः सर्वा न[10] च किंचित्प्रकाशते ॥ सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥१२॥
प्रकंपते च[11] पृथिवी वायु[12]र्वाति भृशाकुलः ॥ ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः ॥ १३ ॥
संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् ॥ भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ॥ १४ ॥
बुद्धिं न कुरुते [13]यावन्नाशे देव महामुनिः ॥ तावत्प्रसाद्यो [14]भगवानग्निरूपो महाद्युतिः ॥ १५ ॥
कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम्[15] ॥ देवराज्यं चिकीर्षेत दीयतामस्य यन्मतम्[16] ॥१६॥
ततः सुरगणाः सर्वे पितामहपुरोगमाः ॥ विश्वामित्रं महात्मानं वाक्यं[17] मधुरमब्रुवन् ॥
ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ॥ १७ ॥
ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥ दीर्घमायुश्च ते ब्रह्मन्ददामि समरुद्गणः ॥
स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य[18] यथासुखम् ॥ १८ ॥
पितामहवचः श्रुत्वा सर्वेषां च[19] दिवौकसाम् ॥ कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥१९॥
ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ॥ ओंकार[20]श्च वषट्कारो वेदाश्च वरयन्तु माम् ॥ २० ॥

ति पुनःपाकार्हतण्डुलासंपादनादितिभावः ॥६—७॥ आदीपितं तापितं ॥८॥ तपसातेजसातपोरूपाग्निना । मोहिताः मूर्च्छिताः । कश्मलोपहताः दुःखोपहताः ॥ ९ ॥ लोभितः लोभकारणैरंभादर्शनादिभिःप्रलोभितः । क्रोधितःक्रोधकारणैर्वर्षसहस्रान्तासिद्धकृतान्नयाचनादिभिःक्रोधितः । वृजिनं पापंरागद्वेषादिलक्षणं । सूक्ष्मं स्वल्पं ॥ १० ॥ विनाशयति विनाशयेत् असावितिशेषः॥११–१२॥ नप्रतिजानीमः प्रतिक्रियामितिशेषः । नास्तिकोजायतइति उक्तसंक्षोभवशान्नास्तिकइवकर्मानुष्ठानशून्योजायतइत्यर्थः ॥ १३ ॥ उक्तार्थानुवादपूर्वकमनुष्ठेयांशउच्यते—संमूढमिवेत्यादि ॥१४॥ हेदेव ब्रह्मन् अतःपरंविश्वामित्रः नाशे जगत्क्षये। यावत्बुद्धिंनकुरुते तावत्प्रसाद्यः अनुग्राह्यः ॥ १५ ॥ पूर्वं प्रलयकाले । कालाग्निना त्रैलोक्यं यथा अदह्यत । तथैव त्रैलोक्यं अनेन दह्यते धक्ष्यते । अयंदेवराज्यंचिकीर्षेतापि । अतः अस्ययत्ब्रह्मर्षित्वंमतं । तद्दीयतामित्यर्थः ॥ १६ ॥ ततः देवविज्ञापनानन्तरं ॥१७॥ ब्रह्मवचनंप्राधान्येन ॥ १८—१९ ॥ वरयन्तु अध्या-

वैशब्दएवार्थे ॥ ७ ॥ **ति०** धूमइति धूमकेतुरित्यर्थः । अग्निरितियावत् । अतएवाग्रे "आतापितमिव" इतिवक्ष्यति । अयं शुद्धसत्वगुणप्रभवोऽग्निः इतरेषांरजस्तमःप्रधानानांतन्मिश्रसत्वप्रधानानांचदेवादीनांतापजनकइतिबोध्यं ॥ ८ ॥ **शि०** वृजिनं असत्कृतविघ्नजनितदुःखं ॥ १० ॥ **ती०** नास्तिकः नास्तिपरलोकइतिमन्यमानः । **शि०** नास्तिकः नास्ति कं सुखंयस्यसः अत्यन्तव्याकुलत्वेनसुखरहितइत्यर्थः ॥१३॥ **ति०** यद्यसौदेवराज्यमपिचिकीर्षेत तदा तदप्यस्यदीयतामित्यर्थइतिकेचित् । यद्यस्याभीष्टंनदीयते तदाऽसौदेवराज्यंचिकीर्षेत । अतोस्ययन्मनः तत्स्थंब्रह्मर्षित्वं तद्दीयतामित्यर्थइत्यन्ये ॥ १६ ॥ **शि०** अप्रार्थितमपि ददामीत्याह—**दीर्घमायुश्चेति** । समरुद्गणइत्युक्त्यायावद्वायुसंचारमीदृक्ख्यातिर्भविष्यतीतिसूचितं ॥ १८ ॥ **ति०** ओमिति

[पा०] १ ङ. झ. ञ. मातापितमिवा. ज. मुद्दीपितमिवा. २ घ—ट. देवर्षिगन्धर्वाः. ३ क—ट. पन्नगोरगराक्षसाः. ४ ङ. च. छ. झ. ञ. स्तपसातस्यतेजसा. ट. देवतास्तस्य. क. स्तेजसातस्यतपसो. ५ ङ. दैवैर्विश्वामित्रो. ६ क. ख. द्रक्ष्यते. ७ ङ. झ. मप्युत. ८ ख. विनाशमेति. ९ घ. तपसाच. १० आदित्योनप्रकाशते. ११ झ. वसुधा. १२ ङ. च. छ. झ. ञ. वातीहसंकुलः. ज. वात्यशुभाकुलः. १३ ख. देवयावन्नाशे. ज. देवयावद्शेषजगत्क्षये. १४ ङ—ट. भगवन्नग्नि. १५ क. घ. भृशम्. १६ ङ. झ. ञ. ट. यन्मनः. १७ घ. मिदंवचनमब्रुवन्. १८ ज. सौम्ययथागतम्. १९ ङ—ट. त्रिदिवौकसाम्. २० क. घ—ट. ओंकारोथ.

क्षत्रवेदविदांश्रेष्ठो ब्रह्मवेदविदामपि ॥ ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥
यद्ययं[1] परमः कामः कृतो यान्तु सुरर्षभाः ॥ २१ ॥
ततः प्रसादितो देवैर्वसिष्ठो जपतांवरः ॥ सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥ २२ ॥
ब्रह्मर्षिस्त्वं न संदेहः सर्वं संपत्स्यते[2] तव ॥ इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ॥ २३ ॥
[विश्वामित्रोपि[3] धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ॥ पूजयामास[4] ब्रह्मर्षिं वसिष्ठं जपतांवरम् ॥
कृतकामो महीं सर्वां चचार तपसि स्थितः] ॥ २४ ॥
एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना ॥ एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः[5] ॥
एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ॥ २५ ॥
एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ॥ २६ ॥
शतानन्दवचः श्रुत्वा रामलक्ष्मणसन्निधौ ॥ जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥ २७ ॥
धन्योस्म्यनुगृहीतोस्मि यस्य मे मुनिपुङ्गव[6] ॥ यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक[7] ॥ २८ ॥
पावितोऽहं त्वया ब्रह्मन्दर्शनेन महामुने ॥ [विश्वामित्र[8] महाभाग ब्रह्मर्षीणां वरोत्तम] ॥
गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया ॥ २९ ॥
विस्तरेण[9] च ते ब्रह्मन्कीर्त्यमानं महत्तपः ॥ श्रुतं मया महातेजो रामेण च महात्मना ॥ ३० ॥
सदस्यैः प्राप्य च सदः[10] श्रुतास्ते बहवो गुणाः ॥ ३१ ॥
अप्रमेयं तपस्तुभ्यमप्रमेयं[11] च ते बलम् ॥ अप्रमेया[12] गुणाश्चैव नित्यं ते कुशिकात्मज ॥
[पितामहस्य[13] च यथा यथा चैव ह्युमापतेः] ॥ ३२ ॥
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो ॥ कर्मकालो मुनिश्रेष्ठ लंबते रविमण्डलम् ॥ ३३ ॥

पनयाजनार्हाभवन्त्वित्यर्थः ॥ २० ॥ ब्रह्मानुग्रहेपिस- जातीयपरिग्रहार्थमाह—क्षत्रेति । क्षत्रवेदाः क्षत्रिया- णांशान्तिपुष्ट्यादिप्रयोजनाआथर्वणवेदाः तद्विदांश्रेष्ठः। सूर्यवंशानादिपुरोहितत्वादितिभावः । ब्रह्मवेदाःब्रह्मप्र- तिपादकावेदाः । वेदान्ताइत्यर्थः । यद्वा ब्राह्मणमात्र- प्रवचनार्हावेदास्त्रयीरूपाः । एवंवदतु ब्रह्मर्षिरितिवद- तु । अयंकामः वसिष्ठमुखेनब्रह्मर्षित्ववादरूपःकामः । यदिकृतः। तदैव मद्विषयेकृतकृत्या यान्तु नान्यथेत्यर्थः ॥२१—२२॥ एवमस्त्वित्यस्यविवरणंब्रह्मर्षिस्त्वमिति। सर्वं ब्राह्मण्यं । त्वत्कृतयाजनाध्यापनादिकंच ॥ २३ ॥ अथशतानन्दवचनं—एवमित्यादि । तपइति अकारा- न्तपुँल्लिङ्गत्वमार्षं ॥ २५—३० ॥ सदःप्राप्यस्थितैः स- दस्यैः ॥ ३१ ॥ अप्रमेयाः इयत्तयाज्ञातुमशक्याः॥३२॥ कथानामिति "पूरणगुण–" इतितृतीयार्थेषष्ठी। तृप्तिः

ब्रह्मज्ञानसाधनं । वषडिति यज्ञसाधनं । वेदाश्च तदपेक्षिताङ्गोपाङ्गादिप्रतिपादकाः । वरयन्तु यथावसिष्ठादीन्सहजब्राह्मणान्वरय- न्तितथा । वरणंच अध्यापनयाजनयोरनुमतिः । **शि०** ओं प्रणवं कारयतिप्रकटयतिस्वनियम्यब्रह्मद्वारेति ओंकारोरघुनाथः । वषट्कारः वषडुपलक्षितस्वाहादेःकारः करणं उच्चारणमितियावत् । यस्मिन् स रामोद्देश्यकसाङ्गसकलयागःवरयन्तु वसिष्ठादिष्वि- वमयिसाक्षात्काराःभवन्त्वित्यर्थः । अथशब्दश्चार्थे ॥ २० ॥ **वि०** ब्रह्माद्यनुग्रहेपिजातिब्राह्मण्याभावाद्वसिष्ठेनानङ्गीकारेव्यर्थमे- वसर्वमतआह—**क्षत्रेत्यादि** ॥ २१ ॥ **ति०** सर्वं ब्राह्मण्यप्रयोजकंब्राह्मणाज्जन्मतत्संस्कारादि संपद्यते संपन्नं । अनेनत्रिपुरुषप- र्यन्तंविश्वामित्रस्यब्राह्मण्यलाभस्सूचितः । एतच्च "अनृष्यानन्तर्ये—"इतिसूत्रेमहाभाष्येस्पष्टं। इतिवसिष्ठोक्तंदेवताअप्युक्त्वाजग्मु- रित्यन्वयः ॥ २३ ॥ **ति०** गुणाः कर्मश्रैष्ठ्यजातिश्रैष्ठ्यलक्षणाः ॥ २९ ॥ इतिपञ्चषष्टितमस्सर्गः ॥ ६५ ॥

[ **पा०** ] १ ङ. च. छ. झ. ञ. यद्येवंपरमः. २ क. ख. ङ. च. छ. झ. ञ. संपद्यतेतव. ३ अयंश्लोकः क—ट. दृश्यते. ४ ख. ब्रह्मर्षिंपूजयामास. ५ ख. घ. ट. विग्रहवत्तपः. ६ ग. घ. ट. मुनिपुङ्गवः. ७ ख. घ. धार्मिकः. क. ङ. च. छ. झ. ञ. कौशिक. घ. कौशिकः. ८ इदमर्धं ग. च. ज. दृश्यते. ९ ङ. च. छ. झ. ञ. विस्तरेणचवैब्रह्मन्. घ. सुविस्तरेणतेब्रह्मन्. १० क. ख. ग. च. सदा. ११ ख. तवतेपअप्रमेयं च. १२ क. ग. घ. अप्रमेयगुणाश्चैव. १३ इदमर्धं ग. ज. दृश्यते.

श्वः प्रभाते महातेजो[1] द्रष्टुमर्हसि मां पुनः ॥ [ रामेण[2] रमणीयेन लक्ष्मणेन च संगतः ]॥
स्वागतं[3] तपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ ३४ ॥
एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् ॥ विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३५ ॥
एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ॥ प्रदक्षिणं चकाराशु[4] सोपाध्यायः सबान्धवः ॥ ३६ ॥
विश्वामित्रोपि धर्मात्मा सरामः[5] सहलक्ष्मणः ॥ स्ववाटमभिचक्राम[6] पूज्यमानो महर्षिभिः[7] ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

## षट्षष्टितमः सर्गः ॥ ६६ ॥

परेद्युर्विश्वामित्रेणजनकंप्रतिराघवयोर्धनुर्दर्शनचोदना ॥ १ ॥ जनकेनतंप्रतिधनुष्प्रभाववर्णनपूर्वकंस्वस्यतल्लाभप्रकारकथनम् ॥ २ ॥ तथास्वस्यसीतालाभप्रकारादिनिवेदनपूर्वकंरामेणधनुरारोपणेतद्दानप्रतिज्ञानम् ॥ ३ ॥

ततः प्रभाते विमले कृतकर्मा नराधिपः ॥ विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १ ॥
तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ॥ राघवौ[8] च महात्मानौ तदा वाक्यमुवाच ह ॥ २ ॥
भगवन्स्वागतं तेऽस्तु किं[9] करोमि तवानघ ॥ भवानाज्ञापयतु मामाज्ञाप्यो भवता[10] ह्यहम् ॥ ३ ॥
एवमुक्तस्तु[11] धर्मात्मा जनकेन महात्मना ॥ प्रत्युवाच मुनिर्वीरं[12] वाक्यं वाक्यविशारदः[13] ॥ ४ ॥
पुत्रौ दशरथस्येमौ[14] क्षत्रियौ लोकविश्रुतौ ॥ द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५ ॥
एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ॥ दर्शनादस्य धनुषो यथेष्टं प्रति यास्यतः ॥ ६ ॥
एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ॥ श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ७ ॥

---

अलंबुद्धिः । स्वागतमिति त्वदागमनंशुभकृज्जातमित्यर्थः ॥ ३३—३६ ॥ स्ववाटं स्वनिवेशं ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

एवं स्वमातृशापमोचनघटकत्वकृतोपकारस्मृत्या शतानन्दप्रतिपादितेनप्रासङ्गिकेनविश्वामित्रचरित्रेण उपकारकगुरुवैभवोज्ञेयः कामक्रोधौसर्वदादुर्निरोधौ जितकामक्रोधएवब्राह्मणोत्तमः ब्राह्मण्यंच नसुलभं ब्रह्मविदपचारःसर्वारंभनिरोधकः इत्यादिव्यञ्जितमिति प्रबन्धगतवस्तुना वस्तुध्वनिः । अथ स्वयमेवसमस्तजनरक्षणावसरप्रतीक्षोभगवान् देवशरणागतिंव्याजीकृत्यरावणवधायावतीर्णः तदवान्तरोपायभूतां वेदवत्यवतारेस्वतःकृतसङ्कल्पां लक्ष्मीं तुल्यशीलवयोवृत्ताभिजनैव कन्यावरणीयेत्यमुमर्थविशेषंप्रवर्तयिष्यन् जनककुलेऽवतार्य तत्परिणयनायप्रवृत्तः तत्प्रीणनायताटकाताटकेयादिदुष्टवधं कौशिकाध्वरत्राणाहल्याशापमोक्षादिरूपंशिष्टपरिपालनंच विधाय साक्षात्सीतालाभोपायाय यततइत्याह—ततःप्रभातइत्यादिनासर्गद्वयेन ॥ १ ॥ राघवौचार्चयित्वेत्यन्वयः । कर्मणा अर्घ्यप्रदानादिना ॥ २—४ ॥ द्रष्टुकामौ भवतइतिशेषः ॥५॥ अस्यदर्शनादेवकृतकामौभूत्वा प्रतियास्यतइत्यन्वयः ॥ ६ ॥ धनुः यदर्थं यत्प्रयोजनाय। इह अस्म-

---

**शि०** कृतकामौ प्रकटितधनुर्दर्शनविषयकेच्छावन्तौ नृपात्मजौ । एतत् भवत्स्थापितं । धनुर्दर्शय । दृशेश्वेतिकर्मत्वं । अस्यधनुषोदर्शनात् इष्टमीप्सितं । यथा यथावत् । प्रतियास्यतः प्राप्स्यतः ॥ ६ ॥

**[ पा० ]** १ ग. च. छ. ज. महातेजाः. २ इदमर्धं ख. दृश्यते. ३ क—च. ज—ट. स्वागतंजपतां. ४ क. ख. चकाराथ. ५ क—ञ. सहरामस्सलक्ष्मणः. ६ क. ख. ग. ट. स्ववाट. ङ. झ. स्ववास. ७ ङ. च. छ. झ. ञ. महात्मभिः. ८ च. ञ. राघवौतु. छ. राघवौतौ. ९ ङ. किंकरोस्मि. १० क. ख. ग. ङ. ज. भवताप्यहम्. ११ ख—ञ. स्सधर्मात्मा. १२ ङ—ट. मुनिश्रेष्ठो. १३ क. वाक्यविदांवरः. १४ ञ. स्यैतौ.

देवरात इति ख्यातो निमेः[1]षष्ठो महीपतिः ॥ न्यासोऽयं तस्य भगवन्हस्ते दत्तो[2] महात्मना ॥ ८ ॥
दक्षयज्ञवधे पूर्वं [3]धनुरायम्य वीर्यवान् ॥ [4]रुद्रस्तु त्रिदशान्रोषात्सलीलमिदमब्रवीत् ॥ ९ ॥
यस्माद्भागार्थिनो [5]भागान्नाकल्पयत मे सुराः ॥ वराङ्गाणि महार्हाणि धनुषा [6]शातयामि वः ॥ १० ॥
ततो विमनसः सर्वे देवा वै मुनिपुङ्गव ॥ [7]प्रसादयन्ति देवेशं तेषां प्रीतोऽभवद्भवः ॥ ११ ॥
[8]प्रीतिर्युक्तः स सर्वेषां ददौ तेषां महात्मनाम् ॥ १२ ॥
तदेतद्देवदेवस्य धनूरत्नं महात्मनः ॥ न्यासभूतं [9]तदा न्यस्तमस्माकं [10]पूर्वके विभो ॥ १३ ॥
अथ मे कृषतः क्षेत्रं लाङ्गला[11]दुत्थिता मया ॥ क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ १४ ॥
भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ॥ वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ॥ १५ ॥
भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ॥ वरयामासु[12]रागम्य राजानो मुनिपुङ्गव ॥ १६ ॥
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ॥ वीर्यशुल्केति भगवन्न ददामि सुतामहम् ॥ १७ ॥
ततः सर्वे नृपतयः समेत्य मुनिपुङ्गव ॥ मिथिलामभ्युपागम्य वीर्यजिज्ञासव[13]स्तदा ॥ १८ ॥
तेषां जिज्ञासमानानां [14]वीर्यं धनुरुपाहृतम् ॥ न शेकुर्ग्रहणे तस्य धनुषस्तोलनेपि वा ॥ १९ ॥
तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ॥ प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ॥ २० ॥

---

द्रुहे । तिष्ठति । अस्यधनुषः तत्प्रयोजनं श्रूयतामित्यर्थः ॥ ७ ॥ निमेः जनककूटस्थस्य । न्यासः निक्षेपरूपं ॥८॥ उक्तमर्थंविवृणोति—दक्षेत्यादिना । आयम्य आकृष्य ॥ ९ ॥ भागार्थिनः स्विष्टकृदादिभागार्थिनः । मेममेत्यन्वयः । वराङ्गाणि शिरांसि । अत्रतस्मादित्युपस्कार्यं । शातयामि छिनद्मि ॥ १० ॥ विमनसः दीनाः । भवः रुद्रः ॥११ ॥ ददौ धनुरितिशेषः ॥१२॥ धनूरत्नं धनुश्श्रेष्ठं । पूर्वके देवराते । न्यासभूतंन्यस्तं देवैरितिशेषः ॥ १३ ॥ अथेतिवृत्तान्तान्तरारंभे । क्षेत्रं यागभूमिं । मेकृषतः मयिकर्षतीत्यर्थः । चयनार्थमितिशेषः "लाङ्गलंपवीरवमितिद्वाभ्यामृषभेणकृषति" इत्यादिशास्त्रात् । लाङ्गलात् लाङ्गलपद्धतेरित्यर्थः । उत्थितेति कन्येतिशेषः । साचक्षेत्रंशोधयतामयालब्धेतिहेतोर्नाम्नासीतेतिविश्रुताआसीत् सीता लाङ्गलपद्धतिः । सीतायांजातत्वात्सीतेत्युच्यते ॥ १४ ॥ व्यवर्धत मत्कृतपोषणादितिशेषः । अतोममात्मजा । वीर्यं धनुरारोपणं तदेवशुल्कं मूल्यं यस्याः सावीर्यशुल्का इति हेतौ । वीर्यशुल्कत्वात्स्थापिता नकस्मैचिद्दत्तेतिभावः ॥ १५—१७ ॥ वीर्यजिज्ञासवः धनुस्सारजिज्ञासवः । अभवन्नितिशेषः ॥ १८ ॥ वीर्यजिज्ञासमानानांतेषांकृते धनुः उपाहृतं आनीतं । ग्रहणे धारणे । तोलने भारपरीक्षार्थंहस्तेनचालने ॥ १९ ॥ तन्निबोधेति । तदित्यव्ययं । तस्मात्कारणात् । अनन्तरंयद्वृत्तं

---

**ति०** न्यासोनिक्षेपः । अयं धनूरूपः । अपरेतु नितरामास्तेदेवतायत्रेतिव्युत्पत्त्यान्यासोदेवपूजास्थानं । तत्पूजार्थंशत्रुवधार्थं चदत्तइत्यर्थः । निक्षेपपरतयाव्याख्यानेतु निक्षेपस्यशुल्कीकरणमनुचितं । भगवतातद्भङ्गेचनिक्षेपारक्षणप्रयुक्तदोषभागिता जनकस्य स्यादितिप्राहुः । **शि०** निमेः निमिवंशोद्भवस्य सुकेतोरित्यर्थः । ज्येष्ठः ज्येष्ठपुत्रः । किंच निमिपुत्रस्यमिथेरेवदेवरातइतिनामान्तरं । निमेष्षष्ठइतिपाठेतु निमिंपरित्यज्यषष्ठइत्यर्थः । अतएव देवरातस्यसप्तमत्वेपिनक्षतिः । न्यासो निक्षेपभूतः । यद्वा न्यासः नितरां आ समन्ताद्भावेन अस्यन्तेरिपवोयेनसः शत्रुनाशकइत्यर्थः । युक्तश्चायमर्थः । अन्यस्वामिकेवस्तुनिस्वातन्त्र्यानुपपत्तेः ॥ ८ ॥ **शि०** दक्षयज्ञवधइति निमित्तसप्तमी। **शि०** वधेइति हिंसार्थकवधधातुप्रकृतिकक्विबन्तप्रकृतिकचतुर्थ्यन्तं । साच "क्रियार्थोपपद" इतिविहिता ॥ ९ ॥ **शि०** प्रसादयन्त प्रासादयन्त ॥ ११ ॥ **ति०** शिवसहितैर्देवैः । न्यासभूतं देवपूजास्थानभूतं । न्यस्तं दत्तं । **शि०** न्यासभूतं नितरांआसः शत्रुविध्वंसनानुकूलोव्यापारस्तंभूतं प्राप्तं शत्रुसंहारकमित्यर्थः । आन्यस्तं अपुनर्ग्रहायस्थापितं । शिवाज्ञयादेवैर्दत्तमित्यर्थः ॥ १३ ॥

[ पा० ] १ ङ. झ. निमेर्ज्येष्ठो. २ ख. ग. छ. ञ. महासनः. ३ क. धनुरादाय. ख. धनुरानम्य. ४ क. ख. घ—ञ. विध्वस्यत्रिदशान्. ५ ग. ज. ट. भागंनकल्पयथ. ख. भागंनाकल्पयत. ६ ख. पातयामिवः. ७ क. च. छ. ञ. प्रसादयन्तो. ज. ट. प्रसादयन्त. ८ ङ. च. छ. झ. ञ. प्रीतियुक्तस्तु. ९ घ. तदादत्तं. १० ङ. झ. पूर्वजेविभौ. ११ ङ. च. छ. झ. ञ. दुत्थिताततः. ख. दुत्थिताशुभा. १२ घ—ट. रागत्य. १३ क. स्तथा. १४ ख. ङ. च. छ. झ. ञ. शैवंधनुरुपाहृतम्. क. ऐशंधनु.

ततः परमकोपेन राजानो नृपपुङ्गव ॥ [1]न्यरुन्धन्मिथिलां सर्वे वीर्यसन्देहमागताः ॥ २१ ॥
आत्मानम[2]वधूतं ते विज्ञाय नृप[3]पुङ्गवाः ॥ रोषेण महताऽऽविष्टाः पीडयन्[4]मिथिलां पुरीम् ॥२२॥
ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ॥ साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ॥ २३ ॥
ततो देवगणान्सर्वांस्तपसाहं प्रसादयम् ॥ ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः ॥ २४ ॥
ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ॥ अवीर्या वीर्यसन्दिग्धाः सामात्याः [5]पापकर्मणः ॥२५॥
तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ॥ रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ॥ २६ ॥
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ॥ सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

जनकेनविश्वामित्रचोदनयाभटैर्मुनिनिकटंप्रतिधनुरानयनम् ॥ १ ॥ रामेणमुनिजनकयोरनुमत्याधनुषःसमारोपणेनमध्येभञ्जनम् ॥ २ ॥ जनकेनसहर्षंरामप्रशंसनपूर्वकंविश्वामित्रानुमत्यादशरथानयनायायोध्यांप्रतिदूतप्रेषणम् ॥ ३ ॥

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः ॥ धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥
ततः स राजा जनकः [6]सामन्तान्व्यादिदेश ह ॥ धनु[7]रानीयतां दिव्यं गन्धमाल्य[8]विभूषितम् ॥ २ ॥
जनकेन समादिष्टाः सचिवाः प्राविशन्[9]पुरीम् ॥ तद्धनुः पुरतः कृत्वा [10]निर्जग्मुः पार्थिवाज्ञया ॥ ३ ॥
नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम् ॥ मञ्जूषामष्टचक्रां तां समूहुस्ते कथंचन ॥ ४ ॥
तामादाय तु [11]मञ्जूषामायसीं यत्र तद्धनुः ॥ सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥
इदं धनुर्वरं राजन्पूजितं सर्वराजभिः ॥ मिथिलाधिप राजेन्द्र [12]दर्शनीयं यदिच्छसि ॥ ६ ॥

तन्निबोधेत्यर्थः ॥ २० ॥ वीर्यसंदेहं वीर्यशैथिल्यं ॥२१॥ मिथिलावरोधेनिमित्तान्तरमाह—आत्मानमिति । ते नृपाः । आत्मानं स्वात्मानं । मया अवधूतं वीर्यशुल्ककरणेनतिरस्कृतं विज्ञाय । पीडयन् अपीडयन् ॥ २२ ॥ साधनानि दुर्गरक्षणसाधनानि ॥ २३ ॥ प्रसादयं प्रासादयं ॥ २४ ॥ वीर्यसन्दिग्धाः सन्दिग्धवीर्याः । पापकर्मणः पापकर्माणः ॥२५—२७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्षष्टितमःसर्गः ॥६६॥

अथ धनुर्भङ्गादिवृत्तान्तःसप्तषष्टितमे—जनकस्येत्यादि ॥ १ ॥ सामंतान् कर्मसचिवान् ॥ २—३ ॥ व्यायतानां दीर्घदेहानां । नृणां । पञ्चाशत्शतानि पञ्चसहस्राणि । अष्टचक्रां अष्टचक्रवच्छकटारोपितामित्यर्थः । मञ्जूषां धनुष्पेटिकां । समूहुः आचकर्षुः । तेचपञ्चसहस्रसंख्याविशिष्टाअपि कथंचन महताप्रयत्नेन । समूहुरितियोजना । अन्येतु अष्टचक्रां अष्टाधश्चक्ररक्षाबन्धवतीं । ऊहुः हस्तैरितिशेषइत्याहुः ॥ ४ ॥ यत्र मञ्जूषायां ॥ ५ ॥ यद्धनुर्दर्शनीयमिच्छसि । तदिदं

ति० मे मया ॥ २२ ॥ शि० दाशरथेरेवयोग्यांसीतांसुतामहंदद्यां । दाशरथयएवेतिप्रत्यासत्त्यालब्धं । षष्ठीमहिम्नायोग्यामित्यध्याहृतं । संप्रदानत्वाविवक्षयाषष्ठीवा ॥ २७ ॥ इतिषट्षष्टितमस्सर्गः ॥ ६६ ॥
शि० ते पुण्यस्थाने । "तश्चोरामृतपुच्छेषुक्रोडेम्लेच्छेचकुत्रचित् । अपुमांस्तरणेपुण्येकथितःशब्दवेदिभिः" इत्यभिधानं ॥४॥
[ पा० ] १ क—च. ज. ट. अरुन्धन्. २ ङ. झ. मवधूतंमे. ३ ख. ग. घ. ज. ट. मुनिपुङ्गव. ४ क. ख. न्मिथिलामिमाम्. ५ क. घ. ङ. च. छ. ञ. ट. पापकारिणः. ६ क. ख. ङ—ट. सचिवान्व्यादिदेशह. घ. समेतान्व्या. ग. संमतान्व्या. ७ ख. छ. रादीयतां. ८ ङ. झ. माल्यानुलेपितम्. च. छ. ञ. माल्यानुलेपनम्. ९ क. ख. घ. ङ. छ. ञ. ट. न्पुरम्. १० ङ. च. छ. झ. ञ. ट. निर्जग्मुरमितौजसः. ११ ङ. च. छ. झ. ञ. सुमञ्जूषां. १२ ज. ट. दर्शयैनंयदिच्छसि. क. यथेच्छसि. झ. ञ. ठ. यदीच्छसि.

तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत ॥ विश्वामित्रं महात्मानं [1]तौ चोभौ रामलक्ष्मणौ ॥ ७ ॥
इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम् ॥ राजभिश्च महावीर्यै[2]रशक्तैः पूरितुं पुरा ॥ ८ ॥
नैतत्सुर[3]गणाः सर्वे नासुरा न च राक्षसाः ॥ गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ९ ॥
क्व गतिर्मानुषाणां च धनुषोस्य प्रपूरणे ॥ आरोपणे समायोगे वेपने तो[4]लनेऽपि वा ॥ १० ॥
तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुङ्गव ॥ दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥ ११ ॥
विश्वामित्रः [5]स धर्मात्मा श्रुत्वा जनकभाषितम् ॥ वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ १२ ॥
महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः ॥ मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३ ॥
इदं धनुर्वरं [6]ब्रह्मन्सं[7]स्पृशामीह पाणिना ॥ यत्नवांश्च भविष्यामि तो[8]लने पूरणेपि वा ॥ १४ ॥
बाढमि[9]त्यब्रवीद्राजा मुनिश्च समभाषत ॥ १५ ॥
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ॥ पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ॥ १६ ॥
[ आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ] ॥ आरोपयि[10]त्वा धर्मात्मा पूरयामास तद्धनुः ॥
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७ ॥
तस्य शब्दो महानासीन्निर्घातसमनिःस्वनः ॥ भूमिकंपश्च सुमहान्पर्वतस्येव दीर्यतः ॥ १८ ॥
निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ॥ वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९ ॥
प्रत्याश्वस्ते जने तस्मिन्राजा विगतसाध्वसः ॥ उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुङ्गवम् ॥ २० ॥
भगवन्दृष्टवीर्यो[11] मे रामो दशरथात्मजः ॥ अत्यद्भुत[12]मचिन्त्यं च न तर्कितमिदं मया ॥ २१ ॥
जनकानां कुले कीर्तिमाहरिष्यति मे सुता ॥ सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २२ ॥

---

धनुः । आनीतमितिशेषः ॥ ६ ॥ तौचोभाविति उद्दिश्येतिशेषः ॥ ७ ॥ राजभिः पूर्वसीतार्थिभिः । पूजितं अहोमहासारमैश्वरंधनुरितिश्लाघितमित्यर्थः ॥८॥ एतत् धनुः । सुरगणादयः प्रपूरणादिकंकर्तुंनशक्ताइत्यर्थसिद्धं ॥ ९ ॥ प्रपूरणे नम्रीकरणे । आरोपणे मौर्व्यासंयोजने । समायोगे शरेणयोजने । वेपने मौर्व्याकर्षणे । तोलने भारपरीक्षार्थंकंपनेच मानुषाणांमध्येकपुरुषे गतिःशक्तिः ॥ १० ॥ तथाप्यनयोर्दर्शयेत्याह—तदेतदिति ॥ ११—१२ ॥ अपावृत्य अपगतावरणंकृत्वा ॥१३—१५॥ लीलया अप्रयत्नेन ॥१६॥ पूरयामास आकर्णमाकृष्टवान् । ननु उक्तरीत्यामहोन्नतस्यधनुषःकथंबालेनारोपणंसंभवति अग्रस्पर्शाभावादितिचेत् उच्यते । आश्चर्यशक्तिकस्यरामस्यकरस्पर्शादेवावनतंधनुः॥१७॥ निर्घातेति । तल्लक्षणमुक्तंज्योतिषे "वायुनाभिहतोवायुर्गगनात्पततिक्षितौ ॥ यदादीप्तःखगरुतःसनिर्घातोतिदोषकृत्" इति । पर्वतस्येवदीर्यतः पर्वते दीर्यति भिद्यति यथाभूमिकंपः तथाभूमिकंपश्चासीदित्यर्थः ॥१८—१९॥ विगतसाध्वसइत्यनेन रामजामातृकताप्रापकंधनुरारोपणमपिनभवेदिति पूर्वभीतोऽभूदितिगम्यते॥२०॥ अचिन्त्यं अन्यत्रादर्शनात् । नतार्कितं मनुष्येष्वसंभावितत्वात् । अत्यद्भुतं बालेनकृतत्वात् । इदं ईशधनुरारोपणं ॥२१॥ जनकानां "अनन्तं

---

**ति०** जनकैः देवराततिरिक्तैः । पूजितं ऐश्वरत्वादीश्वरवदेवकेवलंपूजितमित्यर्थः ॥ ८ ॥ **शि०** अथाब्रवीत् मङ्गलवचनमकथयत् ॥ १३ ॥ **ति०** जग्राह पादाङ्गुलेनोन्नतंकृत्वाकरेणजग्राह । तदुक्तंपाद्मे । "रामोपितद्धनुष्कोटिंस्पृष्ट्वापादाङ्गुलात्ततः । उन्नतंचापमारोप्यबभञ्जेमोहिताजनाः "इति । अतिभारवद्वस्तुनःपादाङ्गुल्यामध्यभागपर्यन्तमुन्नमनं मध्येगृहीत्वोद्धारश्च महाबलसाध्यइतिमहाबलवत्त्वमनेनसूचितं ॥ १६ ॥ इतिसप्तषष्टितमस्सर्गः ॥ ६७ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. तावुभौ. २ क. ख. रशक्यंपूरितुंतदा. ङ. ञ. रशक्तैःपूरितुंतदा. झ. रशक्तैःपूरितंतथा. च. छ. अशक्यंपूरितंतदा. ३ क. गणाश्शक्ताः. ४ ङ. च. छ. झ. ञ. तोलनेतदा. ५ क. घ. सुधर्मात्मा. ङ. झ. स्सरामस्तु. ६ ङ. च. छ. झ. ञ. दिव्यं. ७ घ. समाकृष्यामिपाणिना. ८ ग. वेपनेपूरणेपिवा. ९ क—घ. मित्येवतंराजा. १० ग. यत्सधर्मात्मा. क. ङ. च. छ. झ. ञ. ट. यित्वामौर्वींच. ११ ग. वीर्यवान्. १२ ख. ङ—ट. मचिन्त्यंवअतर्कित. क. मचिन्त्यंवाप्यतर्कित.

मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक ॥ सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २३ ॥
भवतोऽनुमते ब्रह्मञ्शीघ्रं गच्छन्तु मन्त्रिणः ॥ मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥ २४ ॥
राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ॥ प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २५ ॥
मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै ॥ प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६ ॥
कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः ॥ अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥
यथावृत्तं समाख्यातुमानेतुं च नृपं तदा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

जनकदूतैरयोध्यामेत्यदशरथंप्रतिधनुर्भञ्जनादिरामवृत्तान्तनिवेदनपूर्वकंसीतारामविवाहमहोत्सवप्रवर्तनार्थंजनकप्रार्थनानिवेदनम् ॥ १ ॥ दशरथेनसहर्षवसिष्ठादिभिःसहपरेद्युर्मिथिलांप्रतिप्रस्थाननिर्धारणम् ॥ २ ॥

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ॥ त्रिरात्रमुषिता मार्गे तेयोध्यां प्राविशन्पुरीम् ॥ १ ॥
[ राज्ञो भवनमासाद्य द्वारस्थानिदमब्रुवन् ॥ शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च ॥
इत्युक्ता द्वारपालास्ते राघवाय न्यवेदयन् ] ॥ २ ॥
ते राजवचनाद्दूता राजवेश्मप्रवेशिताः ॥ ददृशुर्देवसंकाशं वृद्धं दशरथं नृपम् ॥ ३ ॥
बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः ॥ राजानं प्रयता वाक्यमब्रुवन्मधुराक्षरम् ॥ ४ ॥

बतमेवित्तंयस्यमेनास्तिकिंचन ॥ मिथिलायांप्रदीप्तायां नमेकिंचित्प्रदह्यते" इतिप्रोक्तनिरतिशयकीर्तिमतामपि । कुले "कुलंतारयतेतातसप्तसप्तचसप्त च" इतिवत् । कीर्तिमित्येकवचनेनैकरूपत्वंव्यज्यते । आहरिष्यति सद्यःप्रापयिष्यति । सिद्धस्यादानंह्याहरणं । सुता सुतश्चेत्स्वार्जितामेवकीर्तिंप्रापयिष्यति । मेसुता स्वसंबन्धप्रयुक्तातिशयः । सीता जन्मप्रयुक्तातिशयः । भर्तारमासाद्य भर्तृसंबन्धकृतातिशयः । भर्तारं भरणदक्षं । "वित्तमिच्छन्तिमातरः" इत्युक्तधनवन्तमित्यर्थः । रामं "रूपमिच्छतिकन्यका" इत्युक्तरूपवन्तं । दशरथात्मजं "बान्धवाःकुलमिच्छन्ति" इत्युक्तरीत्याबन्धुकाङ्क्षितं । एवं सर्वसंमतवरप्राप्त्या कीर्तिमाहरिष्यतीतिभावः ॥ २२ ॥ सत्या जातेतिशेषः । सीता वीर्यशुल्केतिप्रतिज्ञा सत्याजाता । प्राणैः प्राणेभ्यः । बहुमता । सीतादेयेतिसीतापदमुभयत्रान्वेति ॥ २३ ॥ भवतोनुमते भवदनुमत्या । गच्छन्त्वित्यर्थः ॥ २४ ॥ प्रश्रितैः विनयान्वितैः । सर्वशः सर्वमत्रत्यवृत्तान्तमित्यर्थः ॥ २५—२६ ॥ आभाष्य आहूय । कृतशासनान् दत्तकल्याणसंदेशपत्रिकानित्यर्थः । नृपं दशरथं ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तषष्टितमःसर्गः ॥ ६७ ॥

---

अथजानकीविवाहायदशरथाह्वानमष्टषष्टितमे— जनकेनेत्यादि । त्रिरात्रमिति । तिस्रोरात्रयस्त्रिरात्रं । सङ्ख्यादित्वात्‌राज्यन्तादच्समासान्तः । अत्यन्तसंयोगे द्वितीया ॥१॥ राजवचनात् जनकोस्मानिहप्रेषितवानितिस्वराजसंकीर्तनात् ॥३॥ विगतसाध्वसाः दशर-

---

**शि०** अते निरन्तरगमनविशिष्टाधिकरणीभूतेमार्गे । अतइत्यत्रनिरन्तरगमनार्थकाद्धातोरधिकरणेक्तः । अतएवतेइत्यनेननपौनरुक्त्यं ॥ १ ॥

[पा०] १ ङ. झ. प्रतिज्ञासा. २ ख. नुमताद्ब्रह्मन्. ३ ङ. च. झ. ञ. ट. प्रीतियुक्तंतु. ४ ग—छ. झ. ञ. ट. कौशिकस्तु. ५. ङ.—ट. नृपंतथा. ६. ग. दूतास्तु. ७ इदमर्धत्रयं ग. वर्तते. ८ ङ. च. छ. झ. ञ. राजवचनाद्धता. ९ ख. प्रदुद्रुवुः. १० ख. प्रणतावाक्यं. ख. ङ—ट. प्रश्रितंवाक्यं.

मैथिलो जनको राजा सा[1]ग्निहोत्रपुरस्कृतम् ॥ कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् ॥ ५ ॥
मुहुर्मुहुर्मधुरया स्नेह[2]संयुक्तया गिरा ॥ [ कु[3]शलं चाव्ययं चैव सोपाध्यायपुरोहितम् ] ॥
जनकस्त्वां म[4]हाराजाऽऽपृच्छते सपुरस्सरम् ॥ ६ ॥
पृष्ट्वा कुशलम[5]व्यग्रं वैदेहो मिथिलाधिपः ॥ कौशिका[6]नुमते वाक्यं भवन्तमिदम[7]ब्रवीत् ॥ ७ ॥
पूर्वं प्रतिज्ञा वि[8]दिता वीर्यशुल्का ममात्मजा ॥ राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ८ ॥
सेयं मम सुता राजन्विश्वामित्रपुरस्स[9]रैः ॥ यदृच्छयाऽऽ[10]गतैर्वीरैर्निर्जिता तव पुत्रकैः ॥ ९ ॥
[11]तच्च राजन्धनुर्दिव्यं मध्ये भ[13]ग्नं महात्मना ॥ रामेण हि म[12]हाराज महत्यां जनसंसदि ॥ १० ॥
अस्मै देया मया सीता वीर्यशुल्का महात्मने ॥ प्रतिज्ञां क[14]र्तुमिच्छामि त[15]दनुज्ञातुमर्हसि ॥ ११ ॥
सोपाध्यायो महाराज पुरोहितपु[16]रस्सरः ॥ शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ॥ १२ ॥
प्रीतिं[17] च मम राजेन्द्र निर्वर्तयितुमर्हसि ॥ पुत्रयोरुभयोरेव[18] प्रीतिं त्वमपि लप्स्यसे ॥ १३ ॥
एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् ॥ विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥
[ [19]इत्युक्त्वा विरता दूता राजगौरवशङ्किताः ] ॥ १४ ॥
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ॥ वसिष्ठं वामदेवं च म[20]न्त्रिणोन्यांश्च सोब्रवीत् ॥ १५ ॥
गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः ॥ लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १६ ॥
दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ॥ संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति ॥ १७ ॥

थसौजन्येनविज्ञापनेनिर्भयाः ॥ ४ ॥ मैथिलइत्यादिश्लोकद्वयमेकान्वयं । मैथिलः मिथिलेश्वरः । पुरस्कृताग्निहोत्रसहितः साग्निहोत्रपुरस्कृतः । आहिताग्न्यादित्वान्निष्ठायाःपरनिपातः । पुरःसरन्तीतिपुरस्सराः भृत्याः । तत्सहितं । एवंभूतंत्वां । कुशलं क्षेमं । अव्ययं अनपायं । योगमितियावत् । आपृच्छते मद्वचनादितिशेषः । "आङिनुपृच्छ्योरुपसङ्ख्यानं" इतिआत्मनेपदं । अत्रद्वितीयजनकशब्दोविप्रकृष्टजनकशब्दाविस्मरणार्थः ॥ ५—६ ॥ कौशिकानुमते कौशिकानुमत्या ॥ ७ ॥ वीर्यशुल्केति ममप्रतिज्ञा भवद्भिर्विदिता । राजानश्चनिर्वीर्याः धनुरारोपणासमर्थाः । विमुखीकृताइत्यपि विदितमित्यन्वयः ॥ ८ ॥ सेयं उक्तरीत्या सर्वैःप्रार्थनीया । ममसुता त्वयासहसंबन्धार्हस्यमेपुत्री । स्वपुरेतदागमनप्रसक्तिंदर्शयति—विश्वामित्रपुरस्सरैरिति । यदृच्छया मद्भागधेयात् । पुत्रकैः पूजायांबहुवचनं । जामातृत्वाध्यवसायात् महाराजकुमारत्वाद्वापूजा । अल्पार्थेनकप्रत्ययेनबाल्यंद्योतितं ॥९॥ कथंनिर्जितेत्यत्राह—तच्चेति । तच्च ऐश्वरमपिनेदमैन्द्रजालिकमित्याह—महात्मनेति । नेयं पक्षपातोक्तिरित्याह—महत्यामिति ॥ १० ॥ प्रतिज्ञां प्रतिज्ञातंसीताप्रदानं ॥ ११—१२ ॥ प्रीतिं त्वद्दर्शनप्रीतिं सीताप्रदानप्रीतिंवा । पुत्रयोः पुत्रीचपुत्रश्चतयोः । एकशेषः । प्रीतिं तद्विषयप्रीतिं । तदुभयकल्याणदर्शनप्रीतिमितियावत् । मत्पुत्र्यांत्वत्पुत्रेचेत्यर्थः । यद्वा स्नुषाचपुत्रीत्येवगृह्यते । यद्वा लक्ष्मणायोर्मिलाप्रदानंसिद्धंकृत्वोच्यते—उभयोरिति ॥ १३—१५ ॥ गुप्तइत्यादि । विदेहेषु विदेहानांनिवासभूतेदेशे । "जनपदेलुप्" इतिलुप् । असाविति बुद्धिसंनिकर्षेणोच्यते ॥१६—१७॥

**शि०** जनकः जनानांकंसुखंयस्मात्सः प्रजासुखदातेत्यर्थः । **वि०** पुरस्क्रियन्तइतिपुरस्कृताःमन्त्र्यादयः अग्निहोत्रपदेनतत्साधनऋत्विजः तैस्सहितइत्यर्थः ॥ ५ ॥ **ति०** जामातृत्वबुद्ध्यामहाबलत्वेनेश्वरत्वबुद्ध्याचपूज्यत्वेनपुत्रकैरितिबहुवचनप्रयोगः ॥ ९ ॥ **ति०** तर्तुं पूरयितुं ॥ ११ ॥ **शि०** पुरोहितपुरस्कृतः पुरस्कृतपुरोहितः ॥ १२ ॥

**[ पा० ]** १ ज. अग्निहोत्रपुरस्कृतम्. ङ. झ. ञ. ट. साग्निहोत्रपुरस्कृतः. २ ङ. च. छ. झ. ञ. संरक्तया. ट. संसक्तया. ३ इदमर्धं ङ. च. छ. झ. ञ. दृश्यते. ४ ज. महातेजाः. घ. महाराजः. ५ ट. मव्यग्रो. ६ क. नुमतो. ७ ख. ज. माहच. ८ ख. विहिता. ९ ङ. च. छ. झ. ञ. पुरस्कृतैः. १० क. ख. घ—ट. गतैराजन्. ११ क. ख. घ—ट. तच्चरत्नंधनुर्दिव्यं. १२ ख. ग. ङ—ट. महाबाहो. ख. घ. महातेजो. १३ ज. ममातमजा. १४ क—ट. तर्तुमिच्छामि. १५ ख. मामनुज्ञातुमर्हसि. १६ क. ख. घ—ट. पुरस्कृतः. १७ क. घ—छ. झ. ञ. ट. प्रतिज्ञांममराजेन्द्र. १८ क. ख. प्रीतिंलप्स्यसेवीर्यनिर्जिताम्. घ. रेवप्रीतिंचमयिलप्स्यसे. ङ—ट. रेवप्रीतिंत्वमुपलप्स्यसे. १९ इदमर्धं ग. ज. दृश्यते. २० ङ. च. छ. झ. ञ. मन्त्रिणश्चैवमब्रवीत्.

यदि वो [1]रोचते वृत्तं जनकस्य महात्मनः ॥ पुरीं गच्छामहे शीघ्रं माभूत्कालस्य पर्ययः ॥ १८ ॥
मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ॥ सुप्रीतश्चाब्रवीद्राजा श्वो [2]यात्रेति स मन्त्रिणः ॥१९॥
[3]मन्त्रिणस्तां [4]नरेन्द्रस्य रात्रिं परमसत्कृताः ॥ [5]ऊषुस्ते मुदिताः सर्वे गुणैः सर्वैस्समन्विताः ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

## एकोनसप्ततितमः सर्गः ॥ ६९ ॥

सपरिजनेनदशरथेनसेनयावसिष्ठादिभिश्चसहमिथिलांप्रत्यागमनम् ॥ १ ॥ जनकेनप्रत्युद्गमनादिपूर्वकंतत्पूजनम् ॥ २ ॥ जनकदशरथाभ्यांमिथःसंभाषणम् ॥ ३ ॥ ततःसर्वैःस्वस्वावासेषुसुखेनरात्रियापनम् ॥ ४ ॥

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः ॥ राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥
अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् ॥ व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥
[6]चतुरङ्गं बलं चापि शीघ्रं निर्यातु सर्वशः ॥ ममाज्ञासमकालं [7]च यानयुग्यमनुत्तमम् ॥ ३ ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ [8]मार्कण्डेयः सुदीर्घायुर्ऋषिः कात्यायनस्तथा ॥ ४ ॥
एते द्विजाः [9]प्रयान्त्वग्रे स्यन्दनं योजयस्व मे ॥ यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम् ॥५॥
[ [10]इत्युक्त्वा स महातेजा राजा दशरथो रथम् ॥ आरुरोह यथा भानुर्भगवान्रघुनन्दनः ] ॥ ६ ॥
[11]वचनात्तु नरेन्द्रस्य [12]सा सेना चतुरङ्गिणी ॥ राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ॥ ७ ॥
गत्वा चतुरहं [13]मार्गं विदेहानभ्युपेयिवान् ॥ [14]राजा तु जनकः श्रीमाञ्छ्रुत्वा पूजामकल्पयत् ॥ ८ ॥
ततो राजानमासाद्य वृद्धं दशरथं नृपम् ॥ [15]जनको मुदितो राजा [16]हर्षं च परमं ययौ ॥
उवाच [17]च नरश्रेष्ठो नरश्रेष्ठं [18]मुदाऽन्वितः ॥ ९ ॥

---

यौनसंबन्धयोग्यमितिशेषः। पर्ययः अतिक्रमः॥ १८॥ श्वोयात्रेत्यब्रवीदिति तदर्थमुद्युङ्ध्वमितिभावः॥ १९॥ मन्त्रिणः जनकमन्त्रिणः। गुणैः सत्कारातिशयैः। तां-रात्रिं तस्यांरात्र्यामित्यर्थः ॥ २० ॥ इति श्रीगोविन्द-राजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने अष्टषष्टितमःसर्गः ॥ ६८ ॥

---

अथदशरथस्यमिथिलागमनमेकोनसप्ततितमे—त-
तोरात्र्यामित्यादि ॥ १ ॥ धनाध्यक्षाः कोशरक्षाधिकृताः। पुष्कलं श्रेष्ठं। "श्रेयान्श्रेष्ठःपुष्कलःस्यात्" इत्यमरः। सुविहिताः सुसंपादितकल्याणोचितकर्माणः ॥२॥ यानयुग्यमिति। यानं शिबिकान्दोलिकादि। युग्यं रथादि। सेनाङ्गत्वादेकवद्भावः ॥३—४॥ यथाकालात्ययः कालातिक्रमः नस्यात्तथाप्रयान्त्वितियोजना ॥५-७॥ चतुरहं चतुर्ष्वहस्सु। श्रुत्वा दशरथमागतंश्रुत्वा। पूजां उपधां ॥ ८ ॥ राजानमासाद्यमुदितः। विवाहःशीघ्र-

---

ति० एकश्चशब्दोहेतौद्वितीयएवार्थे ॥१९॥ ति० नरेन्द्रश्चेतिपाठे सचमुदितउवासेतिविपरिणामः ॥२०॥ इत्यष्टषष्टितमस्सर्गः ६८

ति० अनुत्तमानि श्रेष्ठानि। यानानि युग्यानिच यान्तु। वसिष्ठाद्यर्थमितिशेषः ॥ ३ ॥ ति० अग्रेद्विजप्रयाणं प्रयाणेकल्याणाय ॥५॥ शि० पूजां सत्कृतिसामग्रीं। अकल्पयत् समपादयत्। ति० दूतानांत्रिदिनगम्यत्वेपिमार्गस्यचतुरङ्गबलोपेतप्रयाणलाच्चतुर्दिनंवासोमध्ये ॥८॥ ति० राजानमासाद्यमुदितोहर्षंययौ। मोदस्यैवाधिकावस्थाहर्षइतिभेदः। शि० वृद्धं विलक्षणैश्वर्यवत्त्वादिनावृद्धिंप्राप्तं। राजानं परमानुरागविशिष्टं ॥ ९ ॥

[ पा० ] १ ख. रोचतेवृत्तिः. २ क. ङ. च. छ. झ. ञ. ट. यात्रेतिच. ३ क—ञ. मन्त्रिणस्तु. ४ क. ख. नरेन्द्रेण. ५ क. ख. घ—ट. ऊषुःप्रमुदिताः. ६ ख—च. झ. ञ. ट. चतुरङ्गबलंचापि. क. बलंसर्वं. ७ घ. समकालंलं. ८ ङ. झ. मार्कण्डेयस्तु. क. ख. च. छ. मार्कण्डेयश्च. ज. ट. मार्कण्डेयोपि. ९ घ. व्रजन्त्वग्रे. १० अयंश्लोकः क. ख. दृश्यते. ११ क—छ. झ. ञ. ट. वचनाच्चनरेशस्य. १२ ङ—ट. सेनाचचतुरङ्गिणी. १३ ङ. च. छ. झ. मार्गे. १४ क—ट. राजाच. १५ ङ—ट. मुदितोजनको. १६ ङ. च. छ. झ. ञ. ट. प्रहर्षपरमं. १७ ख. ङ. च. छ. झ. ञ. वचनंश्रेष्ठो. १८ क. ख. ग. ङ—ट. मुदान्वितम्.

स्वागतं ते महाराज दिष्ट्या प्राप्तोसि राघव ॥ पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ॥१०॥
दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः ॥ सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः ॥ ११ ॥
दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् ॥ राघवैः सहसंबन्धो[3] वीर्यश्रेष्ठैर्[4]महात्मभिः ॥१२॥
श्वः प्रभाते नरेन्द्रेन्द्र[5] निर्वर्तयितुमर्हसि[6] ॥ यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसंमतम्[7] ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः ॥ वाक्यं वाक्यविदां श्रेष्ठः[8] प्रत्युवाच महीपतिम् ॥ १४ ॥
प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ॥ यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् ॥ १५ ॥
धर्मिष्ठं[9] च यशस्यं च वचनं सत्यवादिनः ॥ श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ॥ १६ ॥
ततः सर्वे मुनिगणाः परस्पर[10]समागमे ॥ हर्षेण महता युक्तास्तां[11] निशामवसन्सुखम् ॥ १७ ॥
[ अथ[12] रामो महातेजा लक्ष्मणेन समं ययौ ॥ विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन् ] ॥१८॥
राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ॥ उवास[13] परमप्रीतो जनकेनाभिपूजितः ॥ १९ ॥
जनकोपि महातेजाः क्रियां[14] धर्मेण[15] तत्त्ववित् ॥ यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह ॥२०॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## सप्ततितमः सर्गः ॥ ७० ॥

परेद्युर्जनकेनस्वानुजन्मनःकुशध्वजस्यपरिजनैःसहदूतैरानयनम् ॥ १ ॥ जनकेनमन्त्रिमुखादाहूतेनदशरथेनविश्वामित्रादिभिःसहसभांप्रत्यागमनम् ॥ २ ॥ ततोवसिष्ठेनराजप्रार्थनयारामावधिदशरथवंशानुवर्णनम् ॥ ३ ॥

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः[16] ॥ उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १ ॥

---

भावीतिहर्षययौ ॥ ९ ॥ वीर्यनिर्जितां पुत्रयोर्वीर्येण-धनुर्भङ्गादिनासंभूतामित्यर्थः ॥ १० ॥ वसिष्ठस्यशत-क्रतुसाम्यंपूर्णधर्मत्वेन ॥ ११ ॥ विघ्नाः कन्याप्रदान-प्रतिबन्धकाः । पूजितत्वेहेतुमाह—राघवैरिति । यत-इत्युपस्कार्यं ॥ १२ ॥ इक्ष्वाकुप्रथमवंशत्वेन नरेन्द्रा-णामिन्द्रत्वं । यज्ञस्यान्तइति । त्रिचतुरदिनानन्तरभा-विनीतिशेषः । ऋषिसंमतं ब्राह्मंविवाहमित्यर्थः ॥१३॥ महीपतिं जनकं ॥ १४ ॥ कन्यागवादीनांप्रतिग्रहोदा-तृवशएव । यदादातादद्दाति तदाप्रतिगृह्यतेप्रतिग्रहीत्रे-तिवस्तुस्थितिः । एतत् युष्मदीयंवीर्यशुल्ककन्याप्रदान-मपि । पूर्वमेवश्रुतं अतःपरं कन्याप्रदस्त्वंयथावक्ष्यसि त-थावयंकरिष्यामः ॥ १५ ॥ विस्मयमिति । प्रतिग्रहो-दातृवशइत्यादिविनयोक्तेरितिभावः ॥ १६ ॥ परस्पर-समागमे संभूतेसतीतिशेषः ॥ १७—१८ ॥ निशा-म्य दृष्ट्वा । "शमोदर्शने" इतिमित्वनिषेधान्नह्रस्वः ॥ १९ ॥ यज्ञस्यक्रियां अवशिष्टक्रियां । सुताभ्यां पु-त्र्योः । क्रियां अङ्कुरार्पणादिकं ॥२०॥ इति श्रीगोवि-न्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीरा-ख्याने बालकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

अथजनकेनसंबन्धार्हत्वायेक्ष्वाकुसन्तानकीर्तनं-

---

**शि०** राघवैर्भवद्भिस्सहसंबन्धात् मेकुलंपूजितं भविष्यतीतिशेषः॥१२॥**ति०** संवर्तयितुंनिर्वर्तयितुं ॥१३॥ **ति०** एतत् वाक्यं। मयाश्रुतं । क्षत्रियतयाप्रतिग्रहधर्मस्याद्याप्यज्ञानमेव । सांप्रतमेवानुभवोभविष्यतीतिश्रुतमित्युक्तं ॥१५॥ **ति०** विस्मयं कन्यायावीर्येणशुल्केनजितत्वान्मदनुमत्यनपेक्षायामपिराज्ञोविनयेनताद्दशवचनमितिविस्मयः ॥ १६ ॥ इत्येकोनसप्ततितमस्सर्गः ॥ ६९ ॥

**ति०** अथब्राह्मसंबन्धसदृशेयौनसंबन्धे वध्वपेक्षितःपरस्परकुलाचारस्सगर्भ्यां—**ततइति** ॥ १ ॥

**[ पा० ]** १ ज. स्वागतंहि. ङ. च. छ. झ. ञ. स्वागतंतेनरश्रेष्ठ. २ ख. महाराज. ३ ट. संबन्धाद्वीर्यश्रेष्ठैः. क. ख. संबन्धाद्वीर्यश्लाघ्यैः. ४ घ—ञ. महाबलैः. ५ क. च. ञ. नरेन्द्रस्त्वं. ङ. च. छ. झ. नरेन्द्रत्वं. ख. घ. नरश्रेष्ठ. ६ ख. ग. च. छ. निवर्तयितु. ङ. झ. ञ. संवर्तयितु. ७ क. ख. ङ. च. छ. झ. ञ. मृषिसत्तमैः. घ. मृषिभिस्सह. ८ घ. ट. श्रेष्ठं. ९ क. ख. ङ—ट. तद्धर्मिष्ठयशस्यंच. १० घ. परंविस्मयमाययुः. ११ ङ. च. छ. झ. ञ. तांरात्रिं. १२ अयंश्लोकः ट. दृश्यते. १३ घ. ट. उवाचपरम. १४ क—ञ. क्रियाधर्मेण. १५ ख. धर्मवित्. १६ ख. नराधिपः.

भ्राता मम महातेजा [1]यवीयानतिधार्मिकः ॥ कुशध्वज इति ख्यातः पुरी[2]मध्यवसच्छुभाम् ॥ २ ॥
[3]वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् ॥ सांकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥ ३ ॥
तमहं द्रष्टुमिच्छामि यज्ञगोप्ता [4]स मे मतः ॥ प्रीतिं सोपि महातेजा इमां भोक्ता मया सह ॥ ४ ॥
[ [5]एवमुक्ते तु वचने शतानन्दस्य सन्निधौ ॥ आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ] ॥ ५ ॥
[6]शासनात्तु नरेन्द्रस्य प्रययुः शीघ्र[7]वाजिभिः ॥ [8]समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ६ ॥
[ [9]सांकाश्यान्ते [10]समागत्य ददृशुश्च कुशध्वजम् ॥ न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥
तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठै[11]र्महाबलैः ] ॥ ७ ॥
[12]आज्ञयाऽथ नरेन्द्रस्य आजगाम कुशध्वजः ॥ स ददर्श [13]महात्मानं जनकं धर्मवत्सलम् ॥ ८ ॥
सोभिवाद्य शतानन्दं [14]राजानं चापि धार्मिकम् ॥ [15]राजार्हं परमं दिव्यमासनं [16]चाध्यरोहत ॥ ९ ॥
उपविष्टावुभौ तौ तु [17]भ्रातरावतितेजसौ ॥ प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ॥ १० ॥
गच्छ मन्त्रिपते शीघ्रमै[18]क्ष्वाकममितप्रभम् ॥ आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् ॥ ११ ॥
[19]औपकार्यां स [20]गत्वा तु रघूणां कुलवर्धनम् ॥ ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् ॥ १२ ॥
अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ॥ स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ॥ १३ ॥
मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षि[21]गणस्तदा ॥ सबन्धुरगमत्तत्र जनको यत्र वर्तते ॥ १४ ॥
स [22]राजा मन्त्रिसहितः सोपाध्यायः सबान्धवः ॥ वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥ १५ ॥
विदितं[23] ते महाराज इक्ष्वाकुकुलदैवतम् ॥ वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ॥ १६ ॥
विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ॥ एष वक्ष्यति धर्मात्मा [24]वसिष्ठो मे यथाक्रमम् ॥ १७ ॥

सप्ततितमे—ततःप्रभातइत्यादि । कृतकर्मा समाप्तयज्ञादिक्रियः ॥ १ ॥ अत्रत्यविशेषणानांशतानन्दपरिज्ञातानामप्युपदेशः परंपरयादशरथादिश्रोत्रंप्रापयितुं । वार्याफलकपर्यन्तां दुर्गसंरक्षणार्थपरिखारूपेणावस्थितायां इक्षुमत्यां वारिणिआकीर्णाः निखाताः फलकाश्शूलानि येषुते वार्याफलकाः तादृशाःपर्यन्तप्रदेशायस्यास्तां । वार्यामलकपर्यन्तामितिपाठे वार्यामलकाआमलकविशेषाः तत्पर्यन्तां पुण्यसंकाशां पुण्यतुल्यां पुण्यवत्स्ववासिनांस्वतएवाभीष्टप्रदामित्यर्थः । पुष्पकंविमानमिवस्थितां सांकाश्यांपुरीं । इक्षुमतींनदीं पिबन् तज्जलंपिबन्नित्यर्थः । अध्यवसत् अधिवसति । "उपान्वध्याङ्वसः" इत्याधारस्यकर्मत्वं ॥ २ ॥ ३ ॥ यज्ञगोप्ता सांकाश्येस्थित्वायज्ञसामग्रीप्रेषणादिनेतिभावः । इमां विवाहकल्याणजां । भोक्तेतिलुट् ॥ ४—५ ॥ नरेन्द्रस्यशासनात् शतानन्दवचनद्वारकादित्यर्थः । विष्णुं उपेन्द्रं ॥ ६—८ ॥ अध्यरोहत पुरोहितराजानुज्ञयेत्यर्थः ॥९–११॥ औपकार्यांदशरथशिबिरनिवेशं । उपकार्याशब्दात्स्वार्थेष्यञ् ॥ १२—१५ ॥ विदितमिति "मतिबुद्धि—" इत्यादिनावर्तमानेक्तः । "क्तस्यचवर्तमाने" इतिषष्ठी । त्वयाविदितमित्यर्थः । दैवतं परमगुरुरित्यर्थः ॥ १६ ॥ मेवक्ष्यति कुलमितिशेषः । विश्वामित्रस्यकोपपरिहारायविश्वामित्राभ्यनुज्ञा-

[ पा० ] १ क. ख. घ—ट. वीर्यवानतिधार्मिकः. २ क. ख. च. मध्यावसच्छुभाम्. ३ क. ख. ग. वार्यामलकपर्यन्तां. घ. सहामलकपर्यन्तां. ४ च. छ. झ. ञ. समेततः. ५ अयंश्लोकः ग. ङ—ट. दृश्यते. ६ घ. शासनाच्च. ७ घ. शीघ्रवाजिनः. ८ क. तमानेतुं. ९ इदमर्धत्रयं ग. ङ—ट. दृश्यते. १० ग. ङ. च. छ. झ. ञ. ट. समागम्य. ११ ङ—ञ. महाजवैः. १२ क. ख. ङ—ट. आज्ञयातु. १३ क. ख. महातेजाः. १४ ङ. च. छ. झ. ञ. जनकंचातिधार्मिकम्. ख. ट. राजानमपिधार्मिकम्. १५ घ. आसनंपरमंदिव्यंराजार्हं. १६ ख. ङ—ञ. सोध्यरोहत. १७ क. ख. घ. ज. ट. वमितौजसौ. ङ. च. छ. झ. ञ. वमितद्युती. १८ क. ख. मिक्ष्वाकुममितौजसम्. १९ घ. ङ. औपकार्ये. २० ज. ट. गत्वाथ. २१ ङ. च. छ. झ. ट. गणस्तथा. २२ ङ. च. छ. झ. ञ. राजाचमन्त्रिसहितः. २३ च. विदितंतु. ग. विदितंतेमहातेजाः. २४ ख. घ. छ. ज. ञ. यथाधर्मंयथाक्रमम्.

[ [*]एवमुक्त्वा नरश्रेष्ठे राज्ञां मध्ये महात्मनाम् ] ॥
तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः ॥ उवाच वाक्यं वाक्यज्ञो[1] वैदेहं स[2]पुरोधसम् ॥ १८ ॥
अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ॥ तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः ॥१९॥
विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः[3] स्मृतः ॥ मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ २० ॥
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ इक्ष्वाकोस्तु[4] सुतः श्रीमान्कुक्षि[5]रित्येव विश्रुतः ॥२१॥
कुक्षेरथात्मजः श्रीमान्विकुक्षि[6]रुदपद्यत ॥ विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ २२ ॥
बाणस्य तु महातेजा अनरण्यः प्रतापवान् ॥ अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोः[7]स्सुतः ॥ २३ ॥
त्रिशङ्कोरभवत्पुत्रो धुन्धुमारो महायशाः ॥ [ धुन्धुमारान्[8]महातेजा युवनाश्वो महारथः[9] ] ॥
युवनाश्वसुतस्त्वासीन्[10]मान्धाता पृथिवीपतिः ॥ २४ ॥
मान्धातुस्तु[11] सुतः श्रीमान्सुसन्धिरुदपद्यत ॥ सुसन्धेरपि पुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित् ॥ २५ ॥
यशस्वी ध्रुवसन्धेस्तु भरतो नाम नामतः ॥ भरतात्तु महातेजा असितो नाम जातवान्[12] ॥ २६ ॥
यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ॥ हैहया[13]स्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥ २७ ॥
तांस्तु स प्रतियुध्यन्[14]वै युद्धे राजा प्रवासितः ॥ २८ ॥
हिमवन्तमुपागम्य भृगु[15]प्रस्रवणेऽवसत् ॥ असितोऽल्पबलो राजा[16] मन्त्रिभिः सहितस्तदा ॥ २९ ॥
द्वे चास्य भार्ये गर्भिण्यौ बभूवतु[17]रिति श्रुतम् ॥ एका गर्भविनाशाय[18] सपत्न्यै सगरं[19] ददौ ॥ ३० ॥

तद्इत्युक्तं । "दशपुरुषविख्यातात्" इतिशास्त्रेण यौनसंबन्धापेक्षितांवंशशुद्धिंवक्ष्यतीत्यर्थः ॥ १७—१८ ॥ अव्यक्तं प्रत्यक्षाद्यगोचरं वस्तु प्रभवः कारणं यस्य सोऽव्यक्तप्रभवः । अव्यक्तंकिंनाम वक्ष्यत्ययोध्याकाण्डे "आकाशप्रभवोब्रह्म" इति । अथकोयमाकाशोपि तमपिवक्ष्यत्युत्तरकाण्डे "संक्षिप्यहिपुरालोकान्माययास्वयमेवहि । महार्णवेशयानोप्सुमांत्वंपूर्वमजीजनः । पद्मेदिव्येर्कसङ्काशेनाभ्यामुत्पाद्यमामपि । प्राजापत्यंत्वयाकर्ममयिसर्वंनिवेशितं" इत्यादिना । शाश्वतः बहुकालस्थायी । नित्यः द्विपरार्धकालंविनाशरहितः । अव्ययः प्रवाहरूपेणप्रतिकल्पमवस्थायी अस्तीतिशेषः ॥ १९ ॥ वैवस्वतः विवस्वत्पुत्रः प्रजापतिः राजा । आसीदितिशेषः ॥ २०—२३ ॥ धुन्धुमारः युवनाश्वापरनामधेयः ॥ २४—२६ ॥ मध्येअसितवृत्तान्तकथनंसगरवैभवातिशयप्रकटनाय । प्रतिराजानः प्रतिपक्षाः । शत्रवः शातयितारः । प्रतिराजानेवतान्विशेषयति—हैहयाइत्यादि ॥२७॥ प्रतियुध्यन् अभिमुखतयायुद्धंकुर्वन् । प्रवासितः राज्याद्भ्रंशितः ॥ २८ ॥ भृगुप्रस्रवणे भृगुमहामुनिसांनिध्यवन्निर्झरोपान्तप्रदेशे । इदमेवपूर्वंभृगुतुन्दइत्युक्तं ॥ २९ ॥ सगरं गरं विषं

**शि०** अव्यक्तप्रभवः नव्यक्तःकैश्चिज्ज्ञातः प्रभवोजन्मकारणीभूतमात्रादिर्यस्यसस्वयंभूरित्यर्थः । किंच आत् वासुदेवात् व्यक्तंप्राकट्यंयस्यतदव्यक्तंकमलं तस्मात्प्रभवःप्राकट्यंयस्य अयोनिजइत्यर्थः । किंच अव्यक्तंप्रधानंप्रभवतिप्रकटितगुणवत्त्वेनप्रकटयतिसः प्रधानगुणक्षोभहेतुरित्यर्थः । "अव्यक्तंशंकरेविष्णावव्यक्तंमहदादिषु । आत्मन्यपिस्यादव्यक्तमस्फुटेत्वभिधेयवत्" इतिकोशः ॥ १९ ॥ **शि०** जायत अजायत । आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ २६ ॥ **ती०** हैहयादयःसोमवंश्याः । शत्रवः हिंसकाः

**[ पा० ]** * इदमर्धंकादिषुनक्वापिदृश्यते. १ क. वाक्यज्ञं. २ ग. घ. ट. सपुरोहितम्. ३ ज. ट. स्वतस्सुतः. ४ घ—ञ. इक्ष्वाकुश्च. ५ क. ख. ज. कुक्षिरेवेति. ६ रितिविश्रुतः. ७ क. ख. घ. ङ—ट. पृथोरपि. ८ इदमर्धं क—ट. दृश्यते. ९ महाबलः. १० ङ. च. छ. झ. ञ. सुतश्चासीत्. ज. सुतश्चापि. ग. सुतश्श्रीमान्. ११ ख. मान्धातोस्तु. ज. मान्धातस्य. १२ क. ख. घ—ञ. जायत. १३ क—घ. हेहयास्ताल. १४ ङ. च. छ. झ. ञ. तांश्चसप्रतियुध्यन्वै. ख. तैस्तुसंप्रतियुध्यद्भिर्युद्धे. ज. तांस्तुसंप्रेक्ष्ययुध्यन्सयुधिराजा. ट. युध्यन्हियुधि. १५ क. ख. ङ. च. ज—ट. भार्याभ्यांसहितोऽवसत्. १६ क. ङ. च. छ. झ. ञ. ट. कालधर्मसुपेयिवान्. घ. मन्त्रिभिश्चसुसन्धिभिः. घ. मन्त्रिभिस्सहितःपुरा. क. ख. ङ. ज. झ. ञ. सहितस्तदा. ट. सहितस्तथा. ग. च. सहितस्ततः. १७ ङ. झ. रितिश्रुतिः. १८ क. ङ—ञ. विनाशार्थं. १९ क. ग. घ. सागरंददौ. ख. तुगरं.

ततः शैलवरं[1] रम्यं बभूवाभिरतो मुनिः ॥ भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ॥ ३१ ॥
तत्रैका[2] तु महाभागा भार्गवं देववर्चसम् ॥ ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमात्मनः[3] ॥ ३२ ॥
तमृषिं साऽभ्युपागम्य[4] कालिन्दी चाभ्यवादयत् ॥ स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ॥ ३३ ॥
तव कुक्षौ महाभागे सुपुत्रः सुमहाबलः[5] ॥ महावीर्यो महातेजा अचिरात्संजनिष्यति ॥
गरेण सहितः श्रीमान्मा शुचः कमलेक्षणे ॥ ३४ ॥
[ एवमुक्ता[6] महाभागा असिते स्वर्गते सति ॥ निधाय चेतो नृपतौ विद्युल्लेखेव सुप्रभा ] ॥ ३५ ॥
च्यवनं[7] तु नमस्कृत्य राजपुत्री पतिव्रता ॥ पतिशोकातुरा[8] तस्मात्पुत्रं देवी व्यजायत ॥ ३६ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया[9] ॥ सह तेन गरेणैव जातः[10] स सगरोऽभवत् ॥ ३७ ॥
सगरस्यासमञ्जस्तु असमञ्जात्तथांऽशुमान्[11] ॥ दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥ ३८ ॥
भगीरथात्ककुत्स्थश्च[12] ककुत्स्थस्य[13] रघुस्सुतः ॥ ३९ ॥
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ॥ कल्माषपादो ह्यभवत्[14]तस्माज्जातश्च[15] शङ्खणः ॥ ४० ॥
सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ॥ शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ॥
मरोः प्रशुश्रुकस्त्वासीदंबरीषः[16] प्रशुश्रुकात् ॥ ४१ ॥
अंबरीषस्य पुत्रोऽभून्नहुषः[17] पृथिवीपतिः ॥ नहुषस्य ययातिश्च[18] नाभागस्तु[19] ययातिजः ॥ ४२ ॥
नाभागस्य[20] बभूवाज अजाद्दशरथोऽभवत् ॥ अस्माद्दशरथाज्जातौ[21] भ्रातरौ रामलक्ष्मणौ ॥ ४३ ॥
आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ॥ इक्ष्वाकुकुल[22]जातानां वीराणां सत्यवादिनाम् ॥ ४४ ॥

सत्सहितंभक्ष्यमित्यर्थः ॥ ३० ॥ अभिरतः प्रीतःसन् हिमवन्तमुपाश्रितोभूत् स्वदेशवासाभिमानेनप्रीतःसन् तद्वरप्रदानायसन्निहितोभूदित्यर्थः ॥ ३१—३२ ॥ कालिन्दीति सगरमुपयुक्तवत्यानाम । उपागम्य शरणंगत्वा। अभ्यवादयत् शुश्रूषतेस्म। सः पुत्रेप्सुं अप्रतिबन्धपुत्रेप्सुं । पुत्रजन्मनि पुत्रोत्पत्तिविषये ॥ ३३ ॥ गरेण सपत्नीप्रयुक्तेन । माशुचः गरप्रयोगनिमित्तंशोकंमाकुर्वित्यर्थः ॥ ३४—३५ ॥ पतिशोकेत्यनेन तदनन्तरमेवदैवात्पतिर्मृतइतिगम्यते । तस्मात् च्यवनानुग्रहात् ॥ ३६ ॥ अत्रयइत्यनुसन्धेयं। जातइत्यनन्तरंतेनेत्यनुसन्धेयं ॥३७—३९॥ पूर्वंप्रवृद्धाख्यः । ततो वसिष्ठशापात् पुरुषादकः राक्षसभूतः । ततःवसिष्ठंप्रतिशापायोद्धृतजलस्यस्वभार्यानुनयात् स्वपदप्रक्षेपेणकल्माषपादाख्यः ॥ ४०—४१ ॥ नहुषययातीचन्द्रवंश्याभ्यामन्यौ । अत्रपुराणेक्रमवैषम्यंकल्पभेदादितिज्ञेयं ॥४२–४३॥ आदिवंशविशुद्धानां आदितआरभ्यवंशेनविशुद्धानां। राज्ञामितिसंबन्धेषष्ठी । वरयइति वरणस्यपुरोहितकृत्यत्वादितिभावः। सदृशेइतिङी-

॥ २७ ॥ शि० आदीति आदयः सोमवंश्यापेक्षयाज्येष्ठाः वंशविशुद्धाः वंशोविशुद्धोयेषां तेएवतेइतिकर्मधारयः ॥ ४४ ॥ इतिसप्ततितमस्सर्गः ॥ ७० ॥

[ पा० ] १ क. ख. ङ. च. झ. ञ. ट. शैलवरेरम्ये. २ क—ट. तत्रचैकामहाभागा. ३ क. ख. घ—ञ. सुतमुत्तमम्. ४ क. ग. तत्रर्षिसाभ्युपागम्य. ५ क. समहाबलः. ६ अयंश्लोकः ग. ज. दृश्यते. ७ ङ. च. छ. झ. ञ. च्यवनंचनमस्कृत्य. ८ झ. पत्याविरहितातस्मात्. ङ. ज. पतिनारहितातस्मात्. घ. पत्युश्शोकातुरा. ९ ख. गर्भजिघांसया. १० ङ. च. छ. झ. संजातःसगरोऽभवत्. क. सजातस्सगरो. ११ क—ट. असमञ्जादथांशुमान्. १२ क. क. ककुत्स्थस्तु. १३ ङ—ट. ककुत्स्थाच्चरघुस्तथा. क. ककुत्स्थात्तुरघुस्तदा. घ. ककुत्स्थस्यरघुस्तदा. ख. रघुस्तस्मादजायत. १४ क. ख. ङ. च. छ. झ. ञ. प्यभवत्. १५ क—छ. झ. ञ. ट. जातस्तु. १६ घ. ज. प्रशुश्रुकश्चासीत्. १७ ङ. च. छ. झ. ञ. नहुषश्चमहीपतिः. १८ ग—छ. झ. ञ. ययातिस्तु. १९ क. ख. ग. नाभागश्च. २० ज. ट. नाभागात्तु. २१ ख. घ. ज. तस्माद्दशरथात्. २२ ख. वंशजातानां.

रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ॥ सदृशाभ्यां नरश्रेष्ठ सं[1]दृशे दातुमर्हसि ॥ ४५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्ततितमस्सर्गः ॥ ७० ॥

---

## एकसप्ततितमः सर्गः ॥ ७१ ॥

जनकेननिजवंशानुकीर्तनपूर्वकंरामलक्ष्मणाभ्यांसीतोर्मिलयोर्दानप्रतिज्ञानम् ॥ १ ॥

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ॥ श्रोतुमर्हसि भद्रं ते [2]कुलं नः परिकीर्तितम् ॥ १ ॥
प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः ॥ वक्तव्यं कुलजातेन तन्निबोध [3]महामुने ॥ २ ॥
राजा[4]ऽभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ॥ निमिः परमधर्मात्मा सर्वसत्ववतांवरः ॥ ३ ॥
तस्य पुत्रो मिथिर्नाम मिथिला[5] येन निर्मिता ॥ [6]प्रथमो जनको नाम जनकादप्युदावसुः ॥ ४ ॥
उ[7]दावसोस्तु धर्मात्मा [8]जातो वै नन्दिवर्धनः ॥ नन्दि[9]वर्धनपुत्रस्तु सुकेतुर्नाम नामतः ॥ ५ ॥
सुकेतोरपि धर्मात्मा देवरातो महाबलः ॥ देवरातस्य राजर्षेर्बृहद्र[10]थ इति स्मृतः ॥ ६ ॥
बृहद्रथस्य शूरोऽभू[11]न्महावीरः प्रतापवान् ॥ [12]महावीरस्य धृतिमान्सुधृतिः सत्यविक्रमः ॥ ७ ॥
सुधृतेरपि धर्मात्मा [13]दृष्टकेतुः सुधार्मिकः ॥ [14]दृष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः ॥ ८ ॥
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रति[15]न्धकः ॥ प्रन्तिधकस्य धर्मात्मा राजा कीर्तिरथः सुतः ॥ ९ ॥
पुत्रः कीर्तिर[16]थस्यापि देवमीढ इति स्मृतः ॥ देवमीढस्य वि[17]बुधो विबुधस्य महीध्रकः ॥ १० ॥
महीध्रकसुतो राजा कीर्तिरातो महाबलः ॥ कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥
महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत ॥ स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥
तस्य [18]पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः ॥ ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥
मां तु ज्येष्ठं पिता राज्ये सोभिषिच्य नराधिपः ॥ कुशध्वजं समावेश्य भारं मयि वनं गतः ॥१४॥
वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् ॥ भ्रातरं देवसंकाशं स्नेहात्पश्यन्कुशध्वजम् ॥ १५ ॥
कस्य चित्त्वथ कालस्य सांकाश्या[19]दगमत्पुरात् ॥ सुधन्वा वीर्यवान्राजा मिथिलामवरोधकः ॥ १६ ॥
स च मे प्रेषयामास शैवं [20]धनुरनुत्तमम् ॥ सीता कन्या च पद्माक्षी मह्यं वै दीयतामिति ॥ १७ ॥

---

बभावआर्षः ॥ ४४—४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्ततितमःसर्गः ॥ ७० ॥

---

एवंवसिष्ठेनवरवंशकीर्तनपूर्वकंवधूवरणेकृतेजनकः स्ववंशविशुद्धताज्ञापनपूर्वकंकन्याप्रदानंप्रतिजानीतेएकसप्ततितमे—एवंब्रुवाणमित्यादि ॥ १—२ ॥ सत्त्ववतां बलवतां ॥३॥ प्रथमइति। मिथिमारभ्यास्माकंजनकसंज्ञेतिभावः ॥४—६॥ सुधृतिरित्यन्वर्थसंज्ञाज्ञापनार्थं विशेषणद्वयं ॥७—१३॥ भारं भरणीयं। पोषणीयमितियावत् ॥ १४ ॥ धुरं राज्यभारं ॥ १५ ॥ कस्यचित्कालस्य कस्मिंश्चित्कालेगते। अवरोधकः अवरोद्धुमित्यर्थः। तुमुण्ण्वुलौक्रियायांक्रियार्थायामिति ण्वुल्

---

ति० अथ जनकः कन्यापितृत्वात् जामातृवर्गेप्रभुतायाअनौचित्येन स्ववंशंस्वयमेवाह—**एवमिति** ॥१॥ **शि०** प्रेषयामास

**[ पा० ]** १ सदृशोदातु. २ घ. कुलंनःकीर्तितंपरम्. ३ ङ. च. छ. झ. ञ. ट. महामते. ४ ट. राजासीत्रिषु. ५ क. ख. घ—छ. झ. ञ. ट. जनकोमिथिपुत्रकः. ज. निर्मितामिथिलायतः. मिथेस्तुजनकोनाम. ६ क. ख. ङ. च. छ. झ. ञ. प्रथमोजनकोराजा. घ. मिथिलोजनकोराजाजनकादप्युपावसुः. ७ घ. उपावसोस्तु. ८ ख. राजावैनन्दिवर्धनः. ९ क. ख. घ—ट. नन्दिवर्धसुतश्शूरः. १० क. ख. घ. ज. इतिश्रुतः. ११ ज. महावीर्यःप्रतापवान्. १२ ज. महावीर्यस्य. १३ क—ट. धृष्टकेतुः. १४ धृष्टकेतोस्तु. १५ क—छ. झ. ञ. ट. प्रतीन्धकः. ज. प्रतीन्धनः. १६ घ. कीर्तिरथस्याथ. ज. कीर्तिरथस्यासीत्. १७ ज. सुविधस्सुविधस्य. १८ क. ख. घ—ट. द्वयंराज्ञो. १९ ङ. च. झ. ञ. दागतःपुरात्. २० ज. शैवंचधनुरुत्तमम्.

तस्याऽप्रदानाद्ब्रह्मर्षे[1] युद्धमासीन्मया सह ॥ स हतोऽभिमुखो[2] राजा सुधन्वा तु मया रणे ॥ १८ ॥
निहत्य[3] तं मुनिश्रेष्ठ सुधन्वानं नराधिपम् ॥ सांकाश्ये[4] भ्रातरं वीरमभ्यषिञ्चं[5] [6]कुशध्वजम् ॥ १९ ॥
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने ॥ ददामि परमप्रीतो वध्वौ ते [7]मुनिपुङ्गव ॥ २० ॥
सीतां रामाय भद्रं ते ऊर्मिलां [8]लक्ष्मणाय च ॥ २१ ॥
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥ द्वितीयामूर्मिलां चैव [9]त्रिर्ददामि न संशयः ॥२२॥
[ [10]ददामि परमप्रीतो वध्वौ ते [11]रघुनन्दन ] ॥ रामलक्ष्मणयो [12]राजन्गोदानं कारयस्व ह ॥
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥ २३ ॥
मघा[13] ह्यद्य महाबाहो तृतीये दिवसे [14]विभो ॥ फल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु ॥
राम[15]लक्ष्मणयो राज[16]न्दानं कार्यं सुखोदयम् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

॥ १६—१७ ॥ तस्य सुधन्वनः । अप्रदानात् सीताधनुषोरप्रदानात् ॥ १८—१९ ॥ तेवध्वौददामि स्नुषात्वेनददामि । वसिष्ठेनवरणात्तेददामीत्युक्तं ॥ २० ॥ वध्वावित्युक्तंव्यवस्थयादर्शयति—सीतामित्यर्धेन ॥२१॥ उक्तमर्थंसनिमित्तमुपपादयति—वीर्येति । वीर्यशुल्कामित्येतदूर्मिलायाअपिविशेषणं । यद्यपिरामेणैवधनुर्भङ्गःकृतः तथापितादृशशक्तेर्लक्ष्मणेपिदर्शनात्तद्वीर्यमेव ऊर्मिलायाअपिशुल्कमित्यर्थः । ऊर्मिला जनकस्यौरसपुत्री । त्रिः त्रिवारं । त्रिभिःकरणैर्वा ॥ २२ ॥ गोदानंनाम विवाहपूर्वसमयनियतंकिंचित्कर्म । गावःकेशाः दोःपादमूलरोमाणिच यत्रखण्ड्यन्ते तदेतद्गोदानंनाम समावर्तनाख्यंकर्मेत्याहुः । वैवाहिकंपितृकार्यं नान्दीश्राद्धं ॥ २३ ॥ तृतीये भाविनि । फल्गुन्यां फल्गुन्याख्याके । उत्तरे उत्तरनक्षत्रे । वैवाहिकं विवाहप्रयोजनं । "तदस्यप्रयोजनं" इतिठक् । दानं गोभूतिलहिरण्यादिदानं । सुखोदयं सुखोदर्कं । वधूवरयोरतिशयावहमित्यर्थः । कार्यमिति सामान्योक्त्या मयापि कन्यार्थंक्रियतइतिसूचितं । कन्यादानेउत्तरफल्गुन्याः प्रशस्तत्वमुक्तंज्योतिषे "त्रीण्युत्तराण्यपितथार्कमघानुराधामूलान्त्यसोमकमलोद्भवभान्युडूनि" इति ॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

---

दूतद्वाराकथयामासेत्यर्थः ॥ १७ ॥ **ती०** तस्याप्रदानात् तस्य उभयस्य अप्रदानात् । **ति०** विमुखः युद्धमुखः ॥ १८ ॥ **ति०** त्रिर्ददामि उक्तमपिदार्ढ्यायेत्याशयः ॥ २२ ॥ **ति०** अद्यतृतीयदिवसे तवमिथिलाप्रवेशात्तृतीयदिवसे । यज्ञसमाप्तेस्तृतीयदिवसे वा । अद्य मघानक्षत्रं । फल्गुन्यां पूर्वफल्गुनीनक्षत्रे । उत्तरे श्रेष्ठे । अतएव "भगोयत्रप्रजापतिः" इत्यनेनाविरोधः । उत्तरफल्गुन्यास्त्वर्यमेतिबोध्यम् । वैवाहिकं विवाहं । विनयादित्वाठ्ठक् । "मघानक्षत्रंपितरोदेवताः फल्गुनीनक्षत्रमर्यमादेवता फल्गुनीनक्षत्रंभगोदेवता" इतितैत्तिरीयसंहितायाम् । "अर्यम्णःपूर्वेफल्गुनीभगस्योत्तरे" इतितद्ब्राह्मणेचोक्तत्वेनयथाश्रुतमेवसम्यगितितत्त्वम् । उत्तरेइतिपुंस्त्वमार्षं । यद्यप्युत्तराफल्गुनीसीतायाजन्मर्क्षं तथापितदृक्षेप्रथमचरणंविहायतज्जन्मसत्त्वेनतस्याःकन्याराशित्वात्तृतीयैकादशरूपभकूटशुद्धेस्तस्यनदोषः । भकूटशुद्धौतन्नदुष्टमितिज्योतिश्शास्त्रेप्रसिद्धम् । किंच पूर्वासुतस्याद्द्वादशश्चन्द्रइतितत्रविवाहोऽनुचितएव । एकनाडीदोषेणचरामसीतयोर्वियोगइतिध्येयम् । रामलक्ष्मणयोरर्थे तदभ्युदयाय । सुखोदयं सुखोदर्कं ॥ २४ ॥ इत्येकसप्ततितमस्सर्गः ॥ ७१ ॥

**[ पा० ]** १ ज. ट. तस्याप्रदानाद्भगवन्युद्ध. २ ङ. च. झ. ञ. विमुखो. ३ घ. निहत्यतुनरश्रेष्ठ. ४ च. ञ. सांकाश्याभ्रातरं. ५ क. घ—ट. शूरमभ्यषिञ्चं. ६ क. नराधिपम्. ७ ख. घ. ज. रघुनन्दन. ८ ङ. च. छ. झ. ञ. ट. लक्ष्मणायैव. ९ क. घ. ङ. च. झ. ञ. त्रिर्वदामि. १० इदमर्धं क. छ. झ. ञ. ट. दृश्यते. ११ ङ. च. छ. झ. ञ. ट. मुनिपुङ्गव. क. रघुपुङ्गव. १२ ख. रर्थे. १३ ज. मघाप्यद्य. १४ क. ग—छ. झ. प्रभो. ख. तथा. १५ ख—ञ. लक्ष्मणयोरर्थे. १६ ग. गोदानंचसुखोदयम्.

# द्विसप्ततितमः सर्गः ॥ ७२ ॥

वसिष्ठविश्वामित्राभ्यांजनकंप्रतिकुशध्वजकन्ययोर्भरतशत्रुघ्नार्थेवरणम् ॥ १ ॥ जनकेनसहर्षप्रशंसनमभ्यनुज्ञानेदशरथेन विवाहाङ्गभूतगोदानादिक्रियानिर्वर्तनम् ॥ २ ॥

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः ॥ उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १ ॥
अचिन्त्यान्यप्रमेयानि कुलानि नरपुङ्गव ॥ इक्ष्वाकूणां विदेहानां नैषां तुल्योस्ति कश्चन ॥ २ ॥
सदृशो धर्मसंबन्धः सदृशो रूपसंपदा ॥ रामलक्ष्मणयो राजन्सीता चोर्मिलया सह ॥ ३ ॥
वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ॥ ४ ॥
भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ॥ अस्य धर्मात्मनो राजन्रूपेणाप्रतिमं भुवि ॥
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥ ५ ॥
भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ॥ वरयामः सुते राजंस्तयोरर्थे महात्मनोः ॥ ६ ॥
पुत्रा दशरथस्येमे रूपयौवनशालिनः ॥ लोकपालोपमाः सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥
उभयोरपि राजेन्द्र संबन्धेनानुबध्यताम् ॥ इक्ष्वाकोः कुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ॥ जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुङ्गवौ ॥ ९ ॥
कुलं धन्यमिदं मन्ये येषां नो मुनिपुङ्गवौ ॥ सदृशं कुलसंबन्धं यदाज्ञापयथस्स्वयम् ॥ १० ॥
एवं भवतु भद्रं वः कुशध्वजसुते इमे ॥ पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥

अथविश्वामित्रेणभरतशत्रुघ्नार्थेकुशध्वजसुतावरणंगोदानकरणंचद्विसप्ततितमे—तमुक्तवन्तमित्यादि । नृपं जनकं ॥१॥ अचिन्त्यानि आश्चर्यभूतानि । अप्रमेयानि अपरिच्छेद्यमहिमानि । एषां इक्ष्वाकुविदेहानां । तुल्यः कश्चन नास्ति यतः अतःकारणादचिन्त्यत्वमप्रमेयत्वंचेतिभावः ॥२॥ सीता ऊर्मिलयासह रामलक्ष्मणयोर्दीयतेइतियत् अयंधर्मसंबन्धः धर्मेणसंबन्धः । यौनसंबन्धइतियावत् । सदृशः रूपसंपदाचसदृशः । यद्वा अयंकरिष्यमाणोधर्मसंबन्धः सदृशः उभयकुलसदृशः । रूपसंपदाचसदृशः तुल्यरूपयोर्विवाहइत्यर्थः । अत्रहेतुमाह—रामेति । सीताऊर्मिलयासहरामलक्ष्मणयोः यतःसदृशीत्यनुषङ्गः । यद्वा सीता ऊर्मिलयासहरामलक्ष्मणयोः चकाराद्रामलक्ष्मणौचसीतोर्मिलयोः रूपसंपदा सदृशः । शकारान्तेबहुवचनं । अतःसदृशोधर्मसंबन्धइत्यर्थः ॥ ३ ॥ अन्यद्वक्तव्यंकिंचिदस्ति तदपिश्रूयतामित्यर्थः ॥ ४—५ ॥ पत्न्यर्थमित्युक्तं कयोरित्याकाङ्क्षायां तदुपपादयन्नाह—भरतस्येति । भरतस्य शत्रुघ्नस्यचतयोरुभयोरर्थइत्यन्वयः ॥ ६—७ ॥ उभयोर्युवयोः संबन्धेनकुलद्वयमप्यनुबध्यतामित्यर्थः । भवतःकुलमित्यनुकर्षः । अव्यग्रं निर्दोषम् । अन्योन्यसंबन्धेनान्योन्यमुत्कर्षप्राप्नुयादित्यर्थः ॥ ८ ॥ वसिष्ठस्य मते वसिष्ठानुमतइत्यर्थः ॥ ९ ॥ यद्यस्मात् । मुनिपुङ्गवौयुवां येषांनःकुलसंबन्धं इक्ष्वाकुवंशेनयौनसंबन्धं । स्वयं शिष्यमुखं विना । आज्ञापयथः तस्मात्तेषां नः इदंकुलंधन्यं भाग्यशालीति मन्ये ॥ १० ॥ पत्न्यौ भजेतांपत्नीत्वेनभजेतां । सहितौ सदासहचरौ ॥११॥

**शि०** अचिन्त्यानि अतिशुद्धत्वेनविवाहार्थसंदेहानर्हाणि ॥ २ ॥ **ति०** उभयोर्भ्रात्रोस्संबन्धेनेक्ष्वाकुकुलंसंबध्यतां तत्रचसंबन्धे पुण्यकर्मणोभवतोऽव्यग्रंचित्तंभवत्विति शेषः । कथमीदृशेनमहाराजेनयुगपन्मयासंबन्धचतुष्टयंकार्यमितिव्यग्रतामास्त्वित्यर्थः ॥ ८ ॥ **वि०** मुनिपुङ्गवौभवन्तौयद्यस्मादाज्ञापयतः ॥ १० ॥

[ पा० ] १ क. घ. ज. रघुपुङ्गव. ख. च. छ. ञ. रघुनन्दन. २ क. ख. एषराजन्. ३ ख. ग. घ. ज. वरयेमसुते. क. वरयामसुते. च. छ. झ. ञ. ट. वरयेतेसुते. ४ ङ—ट. लोकपालसमाः. ५ ज. उभयोरेव. ६ क. संबन्धेनतु. ज. संबन्धेनानुबुध्यताम्. ७ क. ख. घ—ट. इक्ष्वाकुकुलमव्यग्रं. ग. इक्ष्वाकूणांकुलंचाग्र्यं. ८ क. ग. ङ. झ. येषांतौ. ९ ख. यथाऽऽज्ञापयथः. ञ. यदाज्ञापयतः. १० ख. भद्रंवां. ज. ट. भद्रंते. क. भद्रंनः.

एकाह्ना राजपुत्रीणां चतसॄणां महामुने ॥ पाणीन्गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२ ॥
उत्तरे दिवसे ब्रह्मन्फल्गुनीभ्यां मनीषिणः ॥ वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥ १३ ॥
एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः ॥ उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥१४॥
परो धर्मः कृतो मह्यं शिष्योस्मि भवतोः सदा ॥ १५ ॥

इमान्यासनमुख्यानि आसातां मुनिपुङ्गवौ ॥ यथा दशरथस्येयं तथाऽयोध्यापुरी मम ॥
प्रभुत्वे नास्ति सन्देहो यथार्हं कर्तुमर्हथ ॥ १६ ॥

तथा ब्रुवति वैदेहे जनके रघुनन्दनः ॥ राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७ ॥
युवामसङ्ख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ॥ ऋषयो राजसङ्घाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् ॥ श्राद्धकर्माणि सर्वाणि विधास्यामीति चाब्रवीत् ॥१९॥
तमापृष्ट्वा नरपतिं राजा दशरथस्तदा ॥ मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥
स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः ॥ प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥२१॥
गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः ॥ एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥

---

एकाह्नेत्यजभावआर्षः । सप्तम्यर्थेतृतीया । चतसृणामिति“छन्दस्युभयथा” इतिपक्षेदीर्घः ॥ १२ ॥ उत्तरे फल्गुनीभ्यांउपलक्षितयोर्दिवसयोःउत्तरस्मिन्दिवसे । उत्तरफल्गुन्यामित्यर्थः । यद्वाफल्गुनीभ्यामितिसप्तम्यर्थेचतुर्थी । फल्गुन्यामुत्तरे । फल्गुन्याख्येउत्तरनक्षत्रइत्यर्थः । प्रशस्ततायांहेतुः—भगइति । भगः प्रजापतिः । प्रजोत्पत्तिस्थानयोनिलिङ्गाधिष्ठाता देवता। ननु“एकस्मिंस्तुगृहेकुर्यादेकामेवशुभक्रियां । अनेकांयस्तुकुरुतेसनाशमधिगच्छति” इतिज्योतिश्शास्त्रे एकगृहेअनेकोत्सवनिषेधोदृश्यतइतिचेत् मतान्तरेएकगृहेभ्रातॄणामेकदोत्सवस्यविहितत्वात् । उक्तंहि दैवज्ञविलासे “भिन्नोदरोदयवतामुद्वाहेकल्पयेत्पृथग्वेदिं। एकगृहेजगुरार्या मण्टपमेकंपराशरेणोक्तं” इति। नन्वेवमपिलक्ष्मणशत्रुघ्नयोः कथमेकदाविवाहः “एकमातृप्रसूतानामेकस्मिन्नेववत्सरे । विवाहंमौञ्जिबन्धं चचूडाकर्मनकारयेत्” इतिनिषेधादितिचेत् सत्यं। एकस्मिन्दिनेतुकर्तव्यएव । उक्तंहिदैवज्ञविलासे“भ्रातृद्वयेस्वसृयुगेभ्रातृस्वसृयुगेतथा ॥ समानाश्चक्रियाः कुर्युर्मातृभेदेतथैवच । एकस्मिन्दिवसेत्वेकलग्नेभिन्नांशकेतयोः ॥ एकगर्भोदयवतोर्विवाहःशुभकृद्भवेत्”इति एकोदरयोरप्येकगृहेविवाहकरणवचनंद्रष्टव्यं ॥ १३ ॥ प्रत्युत्थाय आदरातिशयेनेतिभावः ॥ १४ ॥ परोधर्मः कन्याप्रदानरूपः ॥ १५ ॥ इमानीतिसार्धश्लोकएकान्वयः । मद्भ्रातुर्ममदशरथस्यच यान्यासनमुख्यानि सिंहासनानि तानि युवामासातां पुरुषव्यत्ययआर्षः । विनयायप्रथमपुरुषोवा।राज्यत्रयमपियुष्मदीयमित्यर्थः। ननु दशरथसिंहासनं कथंत्वयाशक्यंदातुं तत्राह—यथेति।इयं मिथिला यथादशरथस्येष्टविनियोगार्हा तथा अयोध्याच मम। तथाच युवयोःप्रभुत्वेसन्देहोनास्ति । अतो यथार्हं यथोचितं । प्रभुत्वंकर्तुमर्हथ । पूजायांबहुवचनं।वयंसर्वेभवदधीनाः । यूयमेवास्माकंत्रयाणांहितमुपदिश्य यथोचितंप्रकृतकार्यंकर्तुमर्हथेत्यर्थः ॥ १६ ॥ हृष्टइति । एवमेकवाक्यवादेनेतिशेषः ॥ १७—२० ॥ काल्यं कालेकर्तव्यं । गोदानं समावर्तनं ॥२१॥ तद-

---

**ति०** आसनमुख्यानि त्रयाणांत्रीणिसिंहासनानि । आस्यतामित्यार्षंपरिपालयेतामित्यर्थकं । आसनशब्देन दशरथजनककुशध्वजानांराज्यानिलक्ष्यन्ते ॥ १६ ॥ **ति०** क्षत्रियत्वेपिप्रतिग्रहीतृत्वाद्दातरिजनकेआशीःस्वस्तीत्यादि । **शि०** त्वंस्वस्तिप्राप्नुहिस्वसुतादानेन मङ्गलंप्रापय । अन्तर्भावितणिजर्थः ॥ १९ ॥ **ति०** एकैकशइत्यार्षं । **शि०** एकैकशइत्यत्र “उक्तार्थानां—” इतिन्यायाप्रवृत्तिस्तुद्वौब्राह्मणावित्यादाविव “द्विर्बद्धंसुबद्धंभवति” इतिस्वीकारात् आर्षइत्युक्तिस्तु तदविचारमूलिका ॥ २२ ॥

[ पा ] १ ङ. झ. भवतोस्तथा. २ ङ. च. छ. झ. ञ. आस्यतां. ट. आस्येतां. ख. ग. घ. ज. आसेतां. ३ ख. यथेष्टंकर्तुं. ४ ख. ङ. च. छ. झ. ञ. गमिष्यामः. ५ ङ. च. छ. झ. ञ. ट. विधिवत्. ६ क—ट. विधास्यइति. ७ घ. तौमुनीन्द्रौ. ८ ख. काल्यउत्थाय. ९ ङ. च. छ. झ. ञ. शतसहस्रंच. क. सहस्रंतु.

सुवर्णशृङ्गाः संपन्नाः सवत्साः कांस्यदोहनाः ॥ गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥
वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः ॥ ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥
स सुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा ॥ लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

## त्रिसप्ततितमः सर्गः ॥ ७३ ॥

जनकेनवैवाहिकवेषभूषितैरामादिभिःसहदशरथादीनांकल्याणमण्टपप्रवेशनम् ॥ १ ॥ वसिष्ठेनजनकप्रार्थनयाविश्वामित्रशतानन्दपुरस्कारेणवैवाहिकक्रियोपक्रमः ॥ २ ॥ श्रीरामादिभिरग्निसंनिधौजनककुशध्वजाभ्यांमन्त्रोदकदानपुरस्सरचोदनेनसीतादिपाणिग्रहणम् ॥ ३ ॥ तदाविवाहोत्सवेदेवगन्धर्वाप्सरोभिःसहर्षंपुष्पवर्षणगाननर्तनाद्याचरणम् ॥ ४ ॥

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् ॥ तस्मिंस्तु दिवसे शूरो युधाजित्समुपेयिवान् ॥ १ ॥
पुत्रः केकयराजस्य साक्षाद्भरतमातुलः ॥ दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २ ॥
केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् ॥ येषां कुशलकामोसि तेषां संप्रत्यनामयम् ॥ ३ ॥
स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः ॥ तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४ ॥
श्रुत्वा त्वहमयोध्यायां विवाहार्थं तवात्मजान् ॥ मिथिलामुपयातांस्तु त्वया सह महीपते ॥ ५ ॥
त्वरयाऽभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् ॥ [तस्य त्वं राजशार्दूल प्रीतिं कर्तुमिहार्हसि ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा मधुरं मधुराक्षरम् ] ॥ अथ राजा दशरथः प्रियातिथिमुपस्थितम् ॥
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ॥ ७ ॥
ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ॥ प्रभाते पुनरुत्थाय कृत्वा कर्माणि कर्मवित् ॥
ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ८ ॥

---

ङ्गदानान्याह—गवामित्यादि ॥२२॥ संपन्नाः क्षीरसंपन्नाः। कांस्यदोहनाः कांस्यमयदोहनपात्राः ॥ २३ ॥ सुबहु अन्यद्वित्तंच ॥ २४ ॥ सौम्यः सुप्रसन्नचित्तः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने द्विसप्ततितमःसर्गः ॥ ७२ ॥

अथसीताविवाहस्त्रिसप्ततितमे—यस्मिन्नित्यादि॥१॥ साक्षात्पदेनभिन्नोदरमातुलोप्यस्तीतिगम्यते ॥ २ ॥ केकयाधिपतिः स्वपिता। अनामयं कुशलं विद्यतइतिशेषः ॥ ३ ॥ स्वसुरपत्यंस्वस्रीयः ॥ ४—७ ॥ यज्ञवाटं यज्ञवाटसमीपं। अत्रयज्ञवाटशब्देनोत्सवशालोच्यते। पूर्वयज्ञस्यान्तइत्युक्तत्वेन यज्ञस्यसमाप्तत्वात्।

---

ति० ईदृश्योयागावः तासांगवांचत्वारिलक्षाणिददावित्युत्तरेणान्वयः ॥ २३ ॥ ति० गोदानं तदाख्यंकर्मविशेषं। "गोदानं चौलवत्कार्यंषोडशेऽब्देतदुच्यते। अङ्गोपवेशनंनास्तिश्मश्रूणांमुण्डनंभवेत्। स्नात्वाचवाग्यतस्तिष्ठन्नहश्शेषंनयेदथ। आदित्येऽस्तमितेवाचंविसृजेतान्तिकेगुरोः। अहंवरंददामीतिदद्याद्गोमिथुनंततः।" इत्याश्वलायनकारिकायां। इदंसमावर्तनपूर्वाङ्गम्। "वेदव्रतानिवापारंनीत्वाह्युभयमेववा। गुरवेतुवरंदत्त्वास्नायीततदनुज्ञया" इतियाज्ञवल्क्यात् ॥ २४ ॥ द्विसप्ततितमस्सर्गः ॥ ७२ ॥

शि० अहं नजहातिचित्तं तत्रैवसर्वदातिष्ठतीत्यर्थः। तंस्वसुस्सुतं। नञ्पूर्वकजहातेःकर्तरिक्तः। नहीयतेचित्तेननत्यज्यतेऽ-

[ पा ] १ ख. सुवर्णशृङ्गसंपन्नाः. झ. ञ. ट. सुवर्णशृङ्ग्यस्संपन्नाः. २ ख. घ. सुमहद्धि. ३ च. तैस्सुतैःकृत. ४ ख. घ. ङ. च. झ. ञ. ट. वृतस्सनृपति. क. वृतश्चनृपति. ५ ग. ङ. च. छ. झ. ञ. ट. वीरो. ६ क—घ. ज. त्वभ्युपेयिवान्. ७ छ. ज. कैकयराजस्य. ८ ङ. च. ज. विवाहार्थे. ९ ख. मुपयातान्स्म. १० इदमर्धद्वयं ख. दृश्यते. ११ ग. मुपागतम्. १२ ख. ग. पूजार्हतमपूजयत्. ग. पूजार्हसमपूजयत्. १३ ख. काल्यउत्थाय. १४ ख. कृतकर्मानराधिपः. ग. ङ. च. छ. झ. ञ. ट. कृत्वाकर्माणितत्ववित्.

युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः[1] ॥ भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ ९ ॥
वसिष्ठं[2] पुरतः कृत्वा महर्षीनपरानपि ॥ [ पितुः[3] समीपमाश्रित्य[4] तस्थौ भ्रातृभिरावृतः ] ॥ १० ॥
वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ॥ ११ ॥
राजा दशरथो राजन्कृतकौतुकमङ्गलैः ॥ पुत्रैर्नरवरश्रेष्ठ[5] दातारमभिकाङ्क्षते ॥ १२ ॥
दातृप्रतिग्रहीतृभ्यां सर्वार्थाः प्रभवन्ति[6] हि ॥ स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम्[7] ॥ १३ ॥
इत्युक्तः परमोदारो वसिष्ठेन महात्मना ॥ प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ॥ १४ ॥
कः स्थितः प्रतिहारो मे कस्याज्ञा[8] संप्रतीक्ष्यते ॥ स्वगृहे कोविचारोस्ति यथा राज्यमिदं तव ॥१५॥
कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ॥ मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः[9] ॥ १६ ॥
सज्जोऽहं[10] त्वत्प्रतीक्षोस्मि वेद्यामस्यां[11] प्रतिष्ठितः ॥ अविघ्नं[12] कुरुतां राजा किमर्थमवलंबते[13] ॥ १७ ॥
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ॥ प्रवेशयामास सुतान्सर्वानृषिगणानपि ॥ १८ ॥
[ विश्वामित्रो[14] महातेजा विदेहाधिपतेः करम् ॥ कुशध्वजस्य हस्तं च वसिष्ठो भगवानृषिः ॥
गृहीत्वा प्राविशच्छिष्यैः सहितौ द्विजपुङ्गवौ ॥ १९ ॥
अथ राजा दशरथः पुत्रैः स्त्रीभिश्च संवृतः ॥ सर्वानृषीन्पुरस्कृत्य प्रविवेश महाद्युतिः ॥ २० ॥
प्रवेश्यमानं राजानं वसिष्ठं गाधिनः सुतम् ॥ सर्वान्नृपवरान्विप्राञ्जनको धर्मवत्सलः ॥ २१ ॥
वस्त्रैराभरणैश्चैव गन्धपुष्पैश्च साक्षतैः ॥ पूजयामास विधिवद्यथायोग्यं यथाक्रमम् ] ॥ २२ ॥
ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ॥ कारयस्व ऋषे सर्वामृषिभिः सह[15] धार्मिक ॥
रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ॥ २३ ॥
[ त्वया[16] न विदितं किंचिन्नास्ति ब्रह्मविदांवर ॥ तस्मात्त्वमेव ब्रह्मर्षे अशेषं कर्तुमर्हसि ] ॥ २४ ॥
तथेत्युक्त्वा तु जनकं[17] वसिष्ठो भगवानृषिः ॥ विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥२५॥

---

उत्तरसर्गेदशरथानुयानोक्तेश्च ॥ ८ ॥ युक्ते विवाहानुरूपे । विजये विजयावहे । नतुविजयाख्ये । तस्यापराह्णिकत्वात् । मुहूर्तशब्दस्यघटिकाद्वयपरत्वे विजयःपूर्वाह्णएवभवति पुरतःकृत्वा उपागमदितिशेषः । कृतकौतुकमङ्गलः । कृतविवाहसूत्रबन्धनरूपमङ्गलाचारः "कौतुकंविषयाभोगेहस्तसूत्रे" इत्यमरः ॥ ९ ॥ —॥ ११ ॥ दातारमिति । त्वामितिशेषः ॥ १२ ॥ दातृप्रतिग्रहीतृभ्यामिति । योगइतिशेषः । सर्वार्थाः । दानप्रतिग्रहादयः । विवाहएववैवाह्यं श्रुत्वा । स्वधर्मं प्रतिज्ञारूपं ॥ १३—१४ ॥ प्रतिहारः द्वारपालः । किमर्थंद्रुतमागमनंपरिह्रियतइतिभावः । यथेति । त्वदीयंराज्यमिव मदीयमपिराज्यंतवैव । तथाच मद्गृहमात्रस्यस्वीयत्वेकोविचारइत्यर्थः ॥ १५ ॥ श्रुतकौतुकसर्वस्वाः अनुष्ठितविवाहोपयोगिसर्वमङ्गलाचाराः॥१६॥ अविघ्नं अविलंबं ।अवलंबते विलंबते ॥१७॥ श्रुत्वेति। वसिष्ठप्रेरितपुरुषमुखादित्यर्थः ॥ १८—२२ ॥ लोका रमन्तेऽस्मिन्निति लोकरामः तस्य ॥ २३—२४ ॥ प्रपा पानीयशालिका । अभिनवनारिकेलादिपत्र-

---

सावित्यर्थेतु कर्मणि को बोध्यः । अतएवपूर्वेणाहमित्यनेननपौनरुक्त्यम् ॥६॥ **ति०** स्वधर्मं प्रवेशाज्ञादानरूपं । प्रतिपद्यस्व । तावत् द्वार्येवतिष्ठामइतिभावः ॥१३॥ **ति०** सद्यः अस्मिन्काले ॥ १७ ॥ **ति०** अच्छिद्रकुंभैरितिपाठेस्फुटनादिदोषरहितैःस्वर्णकुंभैरिति-

**[ पा ]** १ घ. भूषितः. २ छ. वसिष्ठंतुपुरस्कृत्य. ङ. च. झ. ञ. पुरःकृत्वा. ३ इदमर्धं क. ख. ग. ज. दृश्यते. ४ क. मागम्य. ५ घ—ट. श्रेष्ठो. क. श्रेष्ठैः. ६ झ. ञ. ट. संभवन्तिहि. ७ क. वैवाहमुत्तमम्. ८ ङ. ज. झ. ञ. ट. कस्याज्ञां संप्रतीक्षते. ९ ज. दीप्तवह्नेरिवार्चिषः. ख. ङ. ट. दीप्तावह्नेरिवार्चिषा. क. दीप्तावह्नेर्यथार्चिषः. १० झ. ञ. ट. सद्योऽहं. ११ ज. मद्य. १२ ङ. च. झ. ञ. अविघ्नंक्रियतांसर्वं. छ. ज. अविघ्नंक्रियतांराजा. क. अविघ्नःक्रियतांराजा. घ. अविघ्नं क्रियतांब्रह्मन्. ख. अविघ्नंक्रियतांराजन्. १३ ङ. झ. ञ. ट. किमर्थंहिविलंबते. घ. किमर्थमवलंबसे. १४ एतच्छ्लोकचतुष्टयं ख. दृश्यते. १५ छ. सहधार्मिकः. क. सहधार्मिकैः. १६ अयंश्लोकः ख. दृश्यते. १७ क. नृपतिं.

प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ॥ अलंचकार तां वेदिं गंधपुष्पैः समन्ततः ॥ २६ ॥
सुवर्णपालिकाभिश्च छिद्रकुंभैश्च साङ्कुरैः ॥ अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ २७ ॥
शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः ॥ लाजपूर्णैश्च पात्रीभिरक्षतैरभिसंस्कृतैः ॥ २८ ॥
दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् ॥ अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ॥
जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः ॥ २९ ॥
ततः सीतां समानीय सर्वाभरणभूषिताम् ॥ [ पद्मां पद्मवियुक्तां वै केशवाङ्कच्युतामिव ॥
विद्युत्प्रभां विशालाक्षीं स्निग्धकुञ्चितमूर्धजाम् ॥ ३० ॥
हंसाङ्कितेन क्षौमेण किंचित्पीतेन संवृताम् ॥ वासितेनोत्तरीयेण सुरक्तेन सुसंवृताम् ]॥ ३१ ॥
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ॥ अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ ३२ ॥
इयं सीता मम सुता सहधर्मचरी तव ॥ प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ ३३ ॥

---

रचितमण्टपइत्यर्थः । सुवर्णपालिकाभिः साङ्कुराभिरितिलिङ्गविपरिणामेनानुकृष्यते। छिद्रकुंभैः करकैः । शङ्खपात्रैःशङ्खरूपपात्रैः । स्रुक्स्रुवौ आज्यहोमसाधनपात्रविशेषौ । अर्घ्याभिपूरितैः अर्घ्यार्थजलपूरितैः । लाजपूर्णैः पात्रैरित्यनुषज्यते । पात्रीभिः कार्यान्तरोपयुक्तपात्रान्तरैः । अभिसंस्कृतैः हरिद्रालेपनादिसंस्कारवद्भिः । अलञ्चकारेति पूर्वेणान्वयः ॥ २६—२८ ॥ समैः समपरिमाणैः । अत्र पाणिग्रहणात्पूर्वहोमआभ्युदयिकः ॥ २९-३२ ॥ अथसौन्दर्याभिजात्यादिना सीतायाःप्रतिग्रहार्हतांवदन्प्रतिग्रहमनुजानाति—इयमिति । इयं अपरिच्छेद्यसौन्दर्यसौकुमार्यलावण्यादिकंप्रत्यक्षेणनिर्दिशति । नकेवलंप्रत्यक्षंसौन्दर्यादिकं प्र-

---

कतकः । करकैरितितीर्थः ॥२७॥ **तनि०** इयं निरतिशयरूपवती। सीतेति जन्मपरिशुद्धिरुच्यते।ममसुतेत्यावासपरिशुद्धिः । तव सौन्दर्यवागुरयासर्वहृदयाकर्षकस्य । सहधर्मचरी नित्यंसहधर्मचारिणी । भविष्यतीतिकालविशेषविधानाभावात् । नित्यंसहधर्मचारिण्याःकिमिदंदानमितिनकोपःकार्यइतिप्रसादंयाचते—**भद्रंतइति** । मासोत्सवादिष्वर्चाविग्रहविवाहवदवतारानुगुणविवाहादिकंनविरुध्यतइतिहृदयम् । यद्वा मत्तोपिप्रेमातिशयस्तवापीतिदृष्टिदोषपरिहारार्थंरक्षांकरोति—**भद्रंतइति** । पाणिंगृह्णीष्वपाणिनेति तादृशावस्थानुभवेननयनसाफल्यंभजामइतिभावः।आचार्यास्तुप्रकारान्तरेणव्याचक्षते । इयं रूपौदार्यगुणैरहमेवगरीयानितिनतूष्णींस्थातव्यं । एनामपिपश्य । "तुल्यशीलवयोवृत्ता" इत्याद्युक्तलक्षणवत्त्वात्तवेयमर्हति । अतिशयान्तरमाह—**सीतेति** । आभिजात्यायोनिजत्वेअतिशयिते। इयंसीता। सुवर्णलताभूमावेवखलूत्पद्यते । हिरण्यवर्णाखल्वियं ममसुता "जनकानांकुलेकीर्तिमाहरिष्यतिमेसुता" इतिप्रसिद्धिविषया सहधर्मचरी त्वदाचरितधर्माणांप्रवर्तयित्री । प्रतीच्छ अत्यादरेणगृहाण । "नचसीतात्वयाहीना" इत्यादिवत् "नजीवेयंक्षणमपि" इत्येवंप्रकारेणच स्थातव्यं । एनामागतामपरिहारेणस्वीकुरु । पाणिंगृह्णीष्वपाणिना पाणिग्रहणेनाशिथिलकङ्कणांकुरु । भद्रंतइति गृहीतपाण्योरुभयोरपिमङ्गलाशासनंकरोति । पाणिना प्रणयापराधेपाणिनापादग्रहणंभविष्यति इदानींपाणिंगृह्णीष्व । केचिदेवंवर्णयन्ति । इयं त्वद्विश्लेषव्यतिरिक्तकालमात्रसत्तावती । पतिव्रतायाःस्त्रियाभर्तृविरहेसत्तानाश एवेतिप्रसिद्धंखलु । इयं "आर्तार्तेमुदितेहृष्टाप्रोषितेमलिनाकृशा । मृतेम्रियेतयानारीसास्त्रीज्ञेयापतिव्रता" इतिशास्त्रविषयभूतपतिव्रतास्त्रीभ्यउत्तमाखलु तद्विलक्षणाच । इयं त्वदात्मभूतात्वच्छरीरभूताच । सीतानिमित्तन्यूनतातवैवखलु स्वच्छायादोषश्छायावतएव खलु । सुता "मातरमङ्गनाः" इतिमातृगुणानुवृत्त्यापृथिवीगन्धसारभूतक्षमादिगुणवतीच । ममसुतेति नेकवलंराजकुमारीत्वेन भोगदानं किंतु हेमारविन्दन्यायेनाश्रितवैलक्षण्यानुगुण्येनविशेषतोभोगदानमिति । एनां एवंव्रतनियमैरुत्पन्नां । भद्रंते "भुङ्क्ष्वशेषमखिलंतव "इतिवत् व्रतनियमादिजन्यतायास्सफलत्वंतवैव । भोग्यवस्तुगुणपौष्कल्यंभोक्तुरेवातिशयितभोगाय । पाणिंगृह्णीष्वपाणिना सीता हस्तंप्रसार्यग्रहीतुंनजानाति त्वमेवगृह्णीष्व । पाणिंगृह्णीष्वपाणिनेति "बाहुच्छायामवष्टब्धायस्यलोकामहात्मनः" इत्यादि-

**[ पा० ]** १ घ. सभामध्येतु. ज. प्रपामध्येच. २ ग. जलकुंभैश्च. घ. झ. ञ. चित्रकुंभैश्च. ३ घ. पाद्यैरर्घ्यादिपूरितैः. ङ—ञ. रर्घ्यादिपूजितैः. क. ज. ट. रर्घ्याभिपूजितैः. ख. ग. घ. पात्रैरर्घ्यादिपूरितैः. ४ ग. स्तथापात्रैः. क. श्चपात्रौघैः. ख. श्चपात्रैश्च. ५ क. ख. घ. छ—ट. रपिसंस्कृतैः. ६ झ. अग्निमाधायतंवेद्यां. क. ङ. च. ज. ञ. मादायवेद्यांतु. ७ क. ग. घ. ज. ट. वसिष्ठऋषिसत्तमः. ख. ङ. च. ञ. वसिष्ठोमुनिसत्तमः. झ. मुनिपुङ्गवः. ८ एतत्पद्यद्वयं ख. दृश्यते. ९ क. ज. ञ. राघवाभिमुखंतदा. च. राघवाभिमुखींतदा. १० घ. वाक्यं. ११ ख. घ. नन्दिवर्धनम्.

पतिव्रता महाभागा छायेवानुगता सदा ॥ इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥ ३४ ॥
[ प्रक्षिप्ते सलिले भूमौ गगने चोत्थितास्स्वनाः ] ॥ साधुसाध्विति देवानामृषीणां वदतां तदा ॥
देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ॥ ३५ ॥
एवं दत्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ॥ अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ ३६ ॥
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ॥ प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ॥३७॥
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ॥ गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ॥ ३८ ॥
शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ॥ श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥ ३९ ॥

त्यक्षदृष्टमप्यनुमानेनबुभुत्समानस्यायोनिजत्वेनानुमेयंचेत्याह सीता । सीता लाङ्गलपद्धतिः । तज्जन्यतया तथाव्यपदेशः । इयंसीता यासिद्धाश्रमात्प्रभृति धनुर्भङ्गादिना कुतूहलगोचरतामासादिता सेयंसीता । यद्वा सीतादर्शनदशायां विद्युत्स्फुरणसमयइव कचिदप्यवयवविप्रतिपत्त्यभावेन ससंभ्रमंरामंप्रत्याह—इयंसीतेति । यद्वा "प्रासादेसापथिपथिचसापृष्ठतःसापुरः सा" इत्युक्तरीत्या अनवरतभावनाप्रकर्षेण सर्वत्र सीतायाःप्रतीयमानत्वादाह—इयंसीतेति । यद्वा यथारामआत्मानंमानुषंमन्यते एवंसीतापि । अतोराघवत्वेभवत्सीतेत्याह—इयंसीतेति । नकेवलंसौन्दर्यमस्मदपेक्षितं किंत्वाभिजात्यंचेत्यत्राह—ममसुतेति । आचारप्रधानजनककुलजातायाः किंवक्तव्यमाभिजात्यमिति भावः । यद्वा ममसुता "महतातपसारामं" इतिवत् तुभ्यंदातुंविरचितविविधव्रतोपवासादिकस्यममकन्येत्यर्थः । अस्त्वियंसुन्दरीभोगार्था धर्माचरणार्थंमन्ययाभवितव्यमितिमन्येतेत्यत्राह—सहधर्मचरीतवेति । भोगार्थेयमेव धर्माचरणार्थापीतिभावः । समानोधर्मः सहधर्मः तंचरतीतिसहधर्मचरी । "दोषोयद्यपितस्यस्यात्सतामेतदगर्हितं" इतिवक्तुस्त्वानुरूपेयं "नकश्चिन्नापराध्यति" इतिवक्ष्यतीतिभावः । एवंसौन्दर्याभिजात्यधर्माचरणशीलत्वादिमत्त्वेपि त्वदनुमत्यभावान्नैनांप्रतिगृह्णामीत्यत्राह—प्रतीच्छचैनामिति । प्रतीच्छ गृहाण । सीतायाः रामाविनाभूततया तस्याः प्रदानानर्हत्वात् ददामीत्यनुक्तिः । भद्रंते स्वतस्सिद्धायाः कस्त्वंदातुमिति रामः कुप्येदितिसान्त्वयति । यद्वा निरतिशयकन्यालक्षणशालिन्याअस्याःप्रतिग्रहे भवतःसर्वाणिमङ्गलानिभविष्यन्तीत्यर्थः । यद्वा अनुरूपवधूवरयोःसंयोगे दृष्टिदोषोभविष्यतीति मङ्गलमाशास्ते—भद्रंतइति । एवंमयानुज्ञाते गान्धर्वराक्षसाभ्यामुद्वहेदितिभीतः प्राह—पाणिंगृह्णीष्वेति । "यदिकामयेतस्त्रीरेवजनयेयमित्यङ्गुलीरेवगृह्णीयात्" इत्याद्युक्तकामव्यावृत्तये पाणिमित्युक्तं । प्रणयधारायांपादग्रहणमस्तु संप्रतिपाणिंगृह्णीष्वपाणिनेति साहित्यकृतशोभाविशेषदर्शनाभिलाषेणोक्तं । ब्राह्मणस्यैवपाणिग्रहणं क्षत्रियादेःशरादिग्रहणंविहितं अतः कथमिदंसंगच्छतइति नशङ्कनीयं । तस्यासवर्णविषयत्वात् । आहमनुः "पाणिग्रहणसंस्कारःसवर्णासुप्रदृश्यते ॥ असवर्णास्वयंज्ञेयोविधिरुद्वाहकर्मणि ॥ शरःक्षत्रिययाग्राह्यःप्रतोदोवैश्यकन्यया ॥ वासोदशाशूद्रयातुवर्णोत्कृष्टस्यवेदने" इति । अतःसर्ववर्णानामपिसवर्णासुपाणिग्रहोस्त्येव ॥ ३३ ॥ पतिव्रतेत्यादि भविष्यतीतिशेषः । प्राक्षिपत् रामहस्तइतिशेषः ॥३४॥ शुभनिमित्तमाह—साध्विति । वदतां वदत्सु । पुष्पवर्षः पुष्पवर्षश्च ॥३५—३६॥ पर्ययः विलंबइत्यर्थः । भिन्नमातृकत्वाद्भरतात्पूर्वंलक्ष्मणविवाहोनदुष्यति । "पितृव्यपुत्रेसापत्नेपरनारीसुतेषुवा ॥ विवाहदानयज्ञादौपरिवेदोनदूषणं" इति-

प्रसिद्धपराक्रमशालिहस्तेनहस्तंगृह्णीष्व । ती० तवभुजवीर्यनिर्जितातवाभिमुखंस्थिताइयंसीता ममसुतेत्याभिजात्यकथनं । सहधर्मचरीति यस्त्वयानुष्ठेयोधर्मस्सोनयासहकर्तव्यइत्यर्थः । एनांप्रतीच्छ अङ्गीकुरु । पाणिंगृह्णीष्वपाणिनेति "गृभ्णामितेसौभगत्वायहस्तं" इतिमन्त्रपूर्वकंपाणिंगृहाणेत्यर्थः ॥ ३३ ॥ छायेवानुगता नित्यसंबद्धा । भवत्वितिशेषः ॥ ३४ ॥ ति० मन्त्रोदकपुरस्कृतां

[ पा० ] १ ख. गतातव. २ क. ख. च. मन्त्रपूर्वंजलं. ३ इदमर्धं ख. दृश्यते. ४ ङ. तथा. ५ ज. ट. निर्घोषैः. ६ ख. वृष्टिश्चखाच्च्युता. क. वृष्टिर्महत्यभूत्. ७ क. ख. घ—ट. सुतांसीतां. ८ क. घ. ङ. ज. विपरिप्लुतः. ९ क. ऊर्मिलाचममात्मजा. १० घ. त्कालविपर्ययः. ११ क. ख. पाणिंगृह्णीष्वमाण्डव्याः. १२ क. ङ. च. झ. ञ. ट. अब्रवीन्मिथिलेश्वरः. घ. ह्यब्रवीज्जनकेश्वरः. १३ ङ. च. झ. कीर्तेर्महाबाहो. ख. महाभाग.

सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ॥ पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः ॥४०॥
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ॥ चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥ ४१ ॥
अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च ॥ ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः ॥
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ॥ ४२ ॥
[ काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु ] ॥ पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ॥
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥ ४३ ॥
ननृतुश्चाप्सरस्सङ्घा गन्धर्वाश्च जगुः कलम् ॥ विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ ४४ ॥
ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ॥ त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ४५ ॥
अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ॥ [ प्रीयमाणो दशरथः पुत्रान्पुत्रवतां वरः ] ॥
राजाप्यनुययौ पश्यन्सर्षिसङ्घः सबान्धवः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

स्मरणात् ॥ ३७—३९ ॥ पत्नीभिः सहिताइतिशेषः। अत्रोदकप्रदानमर्थसिद्धं । जनकेनानुज्ञामात्रंकृतं ज्येष्ठत्वात् उदकप्रक्षेपणंतु माण्डवीश्रुतकीर्त्योः कुशध्वजेनैव । तदाहयाज्ञवल्क्यः " पितापितामहोभ्रातासकुल्योजननीतथा ॥ कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः " इति ॥ ४०—४१ ॥ अत्रैकस्यांवेदिकायांएकस्मिन्नेवाग्नौवसिष्ठोजुहाव तेनैवमेकमग्निंसर्वेस्वस्वभार्यापाणीन् गृहीत्वा प्रदक्षिणीकृत्यचक्रुरित्युत्तरत्रान्वयः। राजानं जनकं । यथोक्तेन शास्त्रोक्तप्रकारेण । विधिपूर्वकं कल्पसूत्रपूर्वकं । विवाहं विवाहकर्म । तदा तस्मिन्काले । चक्रुः स्वसूत्रानुरोधेनप्रत्येकंपाणिग्रहणहोमंचक्रुरित्यर्थः । पूर्वंवसिष्ठेनहोमवचनमाभ्युदयिककर्मपरं । अग्निप्रतिष्ठापनपूर्वकंविवाहहोमोत्रोच्यते । पाणिग्रहणानन्तरमाग्निंब्राह्मणान् दातारंजनकंच प्रदक्षिणीकृत्य स्वकल्पोक्तविधानेन प्रत्येकमग्निंप्रतिष्ठाप्य विवाहहोमांश्चक्रुरित्यर्थः ॥ ४२ ॥ सीताप्रदानकालिकंशुभंनिमित्तमुक्तं। अथसर्वसाधारण्येनविवाहकर्मकालिकशुभनिमित्तानिदर्शयति—पुष्पवृष्टिरिति ॥ ४३ ॥ तत् पुष्पवृष्ट्यादिकं ॥ ४४ ॥ अथ लाजहोमपूर्वकंस्वस्वाग्निप्रदक्षिणत्रयंदर्शयति—ईदृशइति । ईदृशे पूर्वोक्तरूपे । तूर्याणां नृत्यगीतवाद्यानां । उद्घुष्टेन उद्घोषणेन । निनादिते नादेप्रतिध्वनिरूपेवर्तमाने । अग्निं स्वस्वाग्निं । त्रिःपरिक्रम्य ऊहुः विवाहंनिर्वर्तयामासुः ॥ ४५ ॥ राजा दशरथः । पश्यन् सभार्यान्पुत्रानित्यर्थः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

दानीयमन्त्रोदकाभ्यांपुरस्कृताम् ॥ ३६ ॥ ति० तूर्योद्घुष्टनिनादिते तूर्याणांयदुद्घुष्टंघोषस्तन्निनादितेकाले । त्रिरग्निमित्युपसंहारेण पुनर्वादः ॥ ४५ ॥ इतित्रिसप्ततितमस्सर्गः ॥ ७३ ॥

[पा०] १ घ. कालविपर्ययः. २ क—ट. प्रदक्षिणंकृत्वा. ३ ङ. च. ज. झ. ट. ऋषींश्चापिमहात्मानः. ग. घ. महाभागान्. ४ ङ. झ. ञ. सहभार्यारघूद्वहाः. क—घ. ज. ट. रघूत्तमाः. ५ ज. ट. यथोक्तेनचतच्चक्रुः. ६ इदमर्धं ख. ज. दृश्यते. ७ ट. तदद्भुतमिवाभवत्. ८ ङ. ज. झ. ञ. अथोपकार्यं. ९ क. ख. छ. ज. सदारारघुनन्दनाः. १० इदमर्धं ख. दृश्यते.

## चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

विश्वामित्रेणरामादीनामाशीर्वचनपूर्वकंजनकदशरथयोरापृच्छनेनस्वाश्रमगमनम् ॥ १ ॥ दशरथेनरामादिभिःसहजनकदत्तपारिबर्हपरिग्रहपूर्वकंतदापृच्छनेनायोध्यांप्रतिनिर्गमनम् ॥ २ ॥ मध्येमार्गमपशकुनदर्शनेनविषीदतोदशरथस्यप्रश्नेवसिष्ठेनतंप्रतिभयप्रसञ्जननिवेदनपूर्वकंतदुपशमननिवेदनम् ॥ ३ ॥ अत्रान्तरेवमान्तरात्प्रादुर्भवतिभगवतिभार्गवेदशरथेचानर्थाशङ्किनिवसिष्ठादिभिस्तदाश्वासनपूर्वकंसरभसमर्घ्यादिनारामाराधनम् ॥ ४ ॥

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ॥ आपृष्ट्वा तौ[1] च राजानौ जगामोत्तरपर्वतम् ॥
[ आशीर्भिः[2] पूरयित्वा[3] च कुमारांश्च[4] सराघवान् ] ॥ १ ॥
विश्वामित्रे गते[5] राजा वैदेहं मिथिलाधिपम् ॥ आपृष्ट्वाथ[6] जगामाशु राजा दशरथः पुरीम् ॥ २ ॥
[ गच्छन्तं[7] तं तु राजानमन्वगच्छन्नराधिपः[8] ] ॥ ३ ॥
अथ राजा विदेहानां ददौ कन्याधनं बहु ॥ ४ ॥
गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥ कंबलानां च मुख्यानां क्षौमकोट्यंबराणि[9] च ॥ ५ ॥
हस्त्यश्वरथपादातं दिव्यरूपं स्वलङ्कृतम् ॥ ददौ कन्यापिता[10] तासां दासीदासमनुत्तमम्[11] ॥ ६ ॥
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥ ददौ परमसंहृष्टः[12] कन्याधनमनुत्तमम्[13] ॥ ७ ॥
दत्वा बहुधनं[14] राजा समनुज्ञाप्य पार्थिवम्[15] ॥ प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः[16] ॥ ८ ॥
राजाप्ययोध्याधिपतिस्सहपुत्रैर्महात्मभिः[17] ॥ ऋषीन्सर्वान्पुरस्कृत्य जगाम सबलानुगः[18] ॥
[ वाहिनीं[19] महतीं कर्षन्कीर्तिमांश्च ययौ तदा ] ॥ ९ ॥
गच्छन्तं[20] तं नरव्याघ्रं सर्षिसङ्घं सराघवम् ॥ घोराः[21] स्म पक्षिणो वाचो व्याहरन्ति ततस्ततः[22] ॥
भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ १० ॥
तान्दृष्ट्वा राजशार्दूलो[23] वसिष्ठं[24] पर्यपृच्छत ॥ ११ ॥

---

अथायोध्याप्रस्थाने मध्येमार्गेजामदग्न्यागमनं चतुस्सप्ततितमे—अथरात्र्यामित्यादि। आपृष्ट्वा आपृच्छ्य। उत्तरपर्वतं स्वावासंहिमवन्तं ॥ १ ॥ आपृष्ट्वा जगामेति क्रियावृत्त्याराजपदावृत्तिः ॥२-४॥ कन्याधनमेवविवृणोति-गवामित्यादि। कंबलानामित्यत्रापि शतसहस्राणीत्यनुषज्यते। क्षौमकोट्यंबराणि क्षौमाश्चकोट्यंबराणिचेतिद्वन्द्वः। क्षौमानामपिबहुत्वमर्थसिद्धं। क्षौमरूपकोट्यंबराणि उत्कृष्टवस्त्राणीतिवा। हस्तीत्यादि सेनाङ्गत्वादेकवद्भावः। कन्यापिता जनकः। गवाश्वादित्वाद्दासीदासमित्येकवद्भावः ॥ ५—६ ॥ हिरण्यस्य रजतस्य शतमितिशेषः ॥ ७—८ ॥ सबलानुगः बलैश्चतुरङ्गैः अनुगैः किङ्करैश्चसहितः ॥ ९ ॥ नरव्याघ्रं प्रतीतिशेषः। घोराइत्यनेनाशुभसूचकत्वमुक्तं। पक्षिणः वायसादयः। प्रदक्षिणमितिशुभसूचनं।

---

शि० राजा अतिदीप्त्या उपलक्षितः। राजा दशरथः। अथजगाममंगलगमनंचकार ॥ २ ॥ ती० क्षौमान् पट्टवस्त्राणि। कोटीतिभिन्नंपदंसङ्ख्यावाचि। नपुंसकत्वमार्षं। कोटिक्षौमान् कोट्यंबराणीति कोटिशब्दस्योभयत्रान्वयः ॥ ५ ॥ ती० सुवर्णस्य शोभनवर्णस्य। अत्रषष्ठ्यन्तानांपूर्वपठितकोटिशब्देनान्वयः ॥ ७ ॥

[ पा० ] १ ट. तौहि. २ इदमर्धं ख. ग. च. दृश्यते. ३ ग. च. पूजयित्वा. ४ ख. कुमारांश्चैवराघवे. ५ ख. गते तस्मिन्वैदेहं. ६ ग. घ. ज. ट. आपृच्छ्याथ. क. ङ. च. छ. झ. ञ. आपृष्ट्वैव. ७ इदमर्धं ख. ज. दृश्यते. ८ क. ख. मिथिलाधिपः. ट. पृथिवीपतिः. ९ क. ङ. ज. झ. क्षौमान्कोट्यंबराणिच. च. छ. ञ. ददौकोट्यंबराणिच. १० ङ. ज. झ. ट. कन्याशतं. ११ ज. दासीदाससमन्वितम्. १२ ङ. च. छ. झ. ञ. राजासुसंहृष्टः. ग. परमसंतुष्टः. १३ ज. रत्नराशिमनुत्तमम्. १४ क. ङ—ट. बहुविधंराजा. १५ क. ख. राघवम्. १६ ज. मिथिलाधिपः. १७ ग. राजात्वयोध्याधिपतिः. १८ ङ. झ. सबलान्वितः. १९ इदमर्धं ख. दृश्यते. २० ङ. च. झ. ञ. गच्छन्तंतु. २१ ङ—ट. घोरास्तु. क. ख. घोराश्च. २२ ङ. च. छ. झ. ञ. समन्ततः. २३ क. ख. नरशार्दूलो. २४ घ. वसिष्ठंप्रत्यभाषत.

असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ॥ किमिदं हृदयोत्कंपि मनो मम विषीदति ॥१२॥
राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥ उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ॥ १३ ॥
उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥ मृगाः प्रशमयन्त्येते संतापस्त्यज्यतामयम् ॥ १४ ॥
तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥ कंपयन्पृथिवीं सर्वां पातयंश्च द्रुमाञ्शुभान् ॥ १५ ॥
तमसा संवृतः सूर्यः सर्वा न प्रबभुर्दिशः ॥ भस्मना चावृतं सर्वं संमूढमिव तद्बलम् ॥ १६ ॥
वसिष्ठश्चर्षयश्चान्ये राजा च ससुतस्तदा ॥ ससंज्ञा इव तत्रासन्सर्वमन्यद्विचेतनम् ॥ १७ ॥
तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ॥ ददर्श भीमसंकाशं जटामण्डलधारिणम् ॥ १८ ॥
भार्गवं जामदग्न्यं तं राजराजविमर्दिनम् ॥ कैलासमिव दुर्धर्षं कालाग्निमिव दुस्सहम् ॥ १९ ॥
ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥ स्कन्धे चासाद्य परशुं धनुर्विद्युद्गणोपमम् ॥
प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा शिवम् ॥ २० ॥
तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् ॥ [ यथा कृष्णगतिं घोरं युगान्ते प्रोद्यतं तथा ] ॥
वसिष्ठप्रमुखा विप्रा जपहोमपरायणाः ॥ २१ ॥
संगता मुनयः सर्वे संजजल्पुरथो मिथः ॥ कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २२ ॥
पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ॥ क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २३ ॥
एवमुक्त्वाऽर्घ्यमादाय भार्गवं भीमदर्शनम् ॥ ऋषयो रामरामेति वचो मधुरमब्रुवन् ॥ २४ ॥
प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान् ॥ रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २५ ॥
[ तस्मिंस्तु घोरे जमदग्निसूनुना त्वासादिते राममभिप्रकोपे ॥

अन्तरिक्षेअशुभसूचनं । भूमौशुभसूचनमित्यर्थस्यद्योतनार्थंभौमाइतिपदं ॥ १०—११ ॥ हृदयमुत्कंपयितुंशीलमस्येतिहृदयोत्कंपि । इदंकिंसुखोदर्कंदुःखोदर्कंवेतिमनोविषीदति । शुभाशुभसूचनदर्शनेनोभयत्रनिर्णयकारणाभावादितिभावः ॥ १२—१३ ॥ पक्षिमुखाच्च्युतं पक्षिमुखेनसूचितमित्यर्थः । प्रशमयन्ति प्रशमंसूचयन्तीत्यर्थः ॥ १४ ॥ संवदतां संवदत्सु ॥१५॥ भस्मनाचावृतंअभूदितिशेषः ॥ १६—१८ ॥ जामदग्न्यमिति अनन्तरापत्येपियञ् । गोत्रत्वारोपात् । जामदग्न्येयमितिपाठे "इतश्चानिञः" इति बह्वचूत्वेप्यार्षत्वाड्डक् ॥ १९ ॥ पृथग्जनैः पामरैः । विद्युद्गणोपममितितेजस्वितायांदृष्टान्तः । त्रिपुरघ्नमितितृन् । "अमनुष्यकर्तृकेच" इतिहन्तेष्टक्॥२०॥ होमोमानसः ॥ २१ ॥ कच्चिदिति मनसोविमर्शो ॥ २२ ॥ नोत्साद-

ति० दिवि खे भवंदिव्यं । पक्षिमुखाच्च्युतं वचनं । शि० दिव्यं स्वाप्नतुल्यं । पक्षिमुखाच्च्युतंवचनं । दिव्यमितिस्वप्नार्थकदिवुधातुप्रकृतिक ण्यत्प्रत्ययान्तं । संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः ॥ १४ ॥ शि० भीमसंकाशं भयंकरप्रकाशविशिष्टं ॥ १८ ॥ ति० जपहोमपरायणाः आसन्नितिशेषः । यद्यपिहोमोऽन्यधिकरणस्तदापथिचलनसमयेबाधितः तथापि "अपानेजुह्वतिप्राणं—" इत्यादिर्बोध्यइतिकेचित् ॥ २१ ॥ शि० अथोसंजजल्पुः मङ्गलहेतुकजल्पनंचक्रुः । यद्यपिपितृवधामर्षी क्षत्रियकृतपितृवधहेतुकामर्षविशिष्टः आसीदितिशेषः । तथापिक्षत्रं क्षत्रियवंशंनोत्सादयिष्यति । कच्चिच्छब्दोयद्यपीत्यर्थे ॥ २२ ॥ इतिचतुरसप्ततितमस्सर्गः ॥ ७४ ॥

[ पा० ] १ घ. ममचसीदति. २ क. दशरथस्यैव. ३ क. दिव्यपक्षि. ४ क. घ—ज. मुखाच्छ्रुतम्. ५ क. ख. ग. ङ—ञ. न्मेदिनींसर्वां. ६ क. ङ. च. छ. झ. ञ. ट. महाद्रुमान्. ७ ङ. छ. झ. ञ. ट. सर्वेनावेदिषुर्दिशः. ८ क—छ. झ. ञ. ट. ऋषयश्चान्ये. ९ क. ख. घ. च. छ. विसंज्ञाइव. ट. सशङ्काइव. १० ज. हिमसंकाशं. ११ क—ट. जामदग्नेयं. १२ ङ—ट. राजाराजविमर्दनम्. घ. राजवंशविमर्दनम्. ख. राजराजविमर्दनम्. १३ क—ञ. चासज्य. १४ ङ. झ. ञ. शरमुग्रंच. च. छ. शस्त्रमुग्रंच. १५ घ. त्रिपुरघ्नोयथाशिवः. ग. त्रिपुरघ्नोयथाहरः. १६ इदमर्धं ख. दृश्यते. १७ ख. घ. प्रमुखास्सर्वे. १८ घ. ङ. च. छ. झ. ञ. मधुरंवाक्यमब्रुवन्. क. ख. मधुरांवाचमब्रुवन्. ग. अब्रुवन्मधुरांगिरम्. १९ ख. प्रतिगृह्यच. २० अयंश्लोकः ख. दृश्यते.

दृढं नरेन्द्रस्य बलं महाबलं भयं प्रविष्टं च विषादितं च ] ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

परशुरामेणदशरथप्रार्थनानादरणेनैव तदात्मजंरामंप्रतिशैववैष्णवधनुर्द्वयपुरावृत्तादिनिवेदनपूर्वकंवीर्यपरीक्षणायस्वीय-वैष्णवधनुःप्रदानेन तदारोपणचोदना ॥ १ ॥

राम [1]दाशरथे राम वीर्यं ते श्रूयतेऽद्भुतम् ॥ धनुषो भेदनं चैव निखिलेन [2]मया श्रुतम् ॥ १ ॥
तदद्भुतमचिन्त्यं च [3]भेदनं धनुषस्त्वया ॥ तच्छ्रुत्वाऽहमनुप्राप्तो [4]धनुर्गृह्य परं शुभम् ॥ २ ॥
तदिदं घोरसङ्काशं जामदग्न्यं महद्धनुः ॥ पूरयस्व शरेणैव [5]स्वबलं दर्शयस्व च ॥ ३ ॥
तदहं ते बलं दृष्ट्वा [6]धनुषोस्य प्रपूरणे ॥ द्वन्द्वयुद्धं प्रदास्यामि [7]वीर्यश्लाघ्यस्य राघव ॥ ४ ॥
[ भीतो [8]यदि धनुस्त्यक्त्वा निर्जितोसीति वा वद ] ॥ तस्य तद्वचनं श्रुत्वा राजा [9]दशरथस्तदा ॥
विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥
[10]क्षत्ररोषात्प्रशान्तस्त्वं [11]ब्राह्मणश्च महायशाः ॥ बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६ ॥
भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् ॥ सहस्राक्षे प्रतिज्ञाय [12]शस्त्रं निक्षिप्तवानसि ॥ ७ ॥
स त्वं धर्मपरो भूत्वा कश्यपाय वसुंधराम् ॥ दत्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८ ॥
मम सर्वविनाशाय संप्राप्तस्त्वं महामुने ॥ [13]न चैकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥ ९ ॥
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् ॥ [14]अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥
[ [15]रोषात्प्रस्फुरमाणोष्ठो रामं परमधन्विनम् ] ॥ १० ॥

यिष्यतीत्यत्रहेतुमाह—पूर्वमिति ॥ २३—२६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

---

पूर्वमवतारप्रस्तावे जगत्पतित्वेनविष्णोःपरत्वमुक्तं "अहंवेद्मिमहात्मानं" इतिविश्वामित्रवचनेनपुरुषसूक्तं तत्र मानत्वेनसूचितं । कश्यपस्तुतौच "शरीरेतवपश्यामिजगत्सर्वमिदंप्रभो । त्वमनादिरनिर्देश्यस्त्वामहं शरणंगतः" इतिसर्वजगत्कारणत्वादिकमुक्तं। रुद्रस्य-च गङ्गाधारणधातुमोक्षणादिवृत्तान्तेन कर्मवश्यत्वेन प्राकृतशरीरवर्तित्वेनचापरत्वंसूचितं । संप्रत्यल्पशक्तिकत्वेन तस्यापरत्वमाहपञ्चसप्ततितमे—रामेत्यादि । रोषातिरेकेण रामेतिद्विःसंबोधनं । भेदनंचेतिचकारेण ताटकावधादि समुच्चीयते ॥ १ ॥ अचिन्त्यंच भवतीतिशेषः । तच्छ्रुत्वेत्यतःपूर्वमतइत्युपस्कार्यं ॥२॥ जमदग्नेरागतं जामदग्न्यं । आगतार्थेयञार्षः ॥ ३ ॥ तत् तदा ॥ ४—५ ॥ संप्रत्यस्थानेभयशङ्कितया दशरथो रामेप्रेमभराक्रान्तोरामवैभवं ताटकाताटकेयनिरसनादिनाजानन्नपि मङ्गलाशासनमाचरयति—क्षत्रेति ॥ ६ ॥ सहस्राक्षे तत्संनिधावित्यर्थः । निक्षिप्तवान् त्यक्तवानित्यर्थः ॥ ७ ॥ महेन्द्रकृतकेतनः महेन्द्रपर्वतेकृतनिवासः ॥ ८ ॥ सर्वविनाशायसंप्राप्तइत्येतदुपपादयति—नचेति ॥ ९—१० ॥

[ पा० ] १ क—ट. दाशरथेवीर. २ ज. मयाकृतम्. ३ ज. भेदेनधनुषश्चयत्. छ. ञ. भेदनंधनुषस्तदा. ङ च. झ. भेदनंधनुषस्तथा. ४ क. ङ—ञ. गृह्यापरंशुभम्. घ. गृह्यापरंशिवम्. ५ ञ. स्वंबलंदर्शयस्वच. घ. स्वबलंदर्शयस्वमे. ६ ङ. च. छ. झ. ञ. प्यस्यपूरणे. ७ क. ख. ङ—ट. वीर्यश्लाघ्यमहंतव. ग. घ. वीरश्लाघ्यमिदंतव. ८ इदमर्धं ख. दृश्यते. ९ क. ख. स्तथा. १० ज. क्षत्रकोपात्प्रशान्तश्च. ११ ट. स्त्वंमहातपाः. ङ—ञ. श्चमहातपाः. १२ ङ. च. छ. झ. ञ. शस्त्रंप्रक्षिप्तवानसि. १३ क. च. छ. नचैतस्मिन्हते. १४ च. छ. झ. ञ. अनादृत्यतु. १५ इदमर्धं ख. दृश्यते.

**इमे द्वे धनुषी [1]श्रेष्ठे दिव्ये लोका[2]भिविश्रुते ॥ [3]दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११ ॥**
**[ [4]करवीरसमे गन्धे विशाले विमले शुभे ] ॥ [5]अतिसृष्टं सुरैरेकं त्र्यंबकाय [6]युयुत्सवे ॥ १२ ॥**
**त्रिपुरघ्नं [7]नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ [ [8]इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः ] ॥ १३ ॥**
**तदिदं वैष्णवं राम धनुः [9]परमभास्वरम् ॥ समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् ॥ १४ ॥**
**[10]तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ॥ शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ॥१५॥**
**अभिप्रायं तु विज्ञाय देवतानां पितामहः ॥ विरोधं जनयामास [11]तयोः सत्यवतांवरः ॥ १६ ॥**
**विरोधे[12] च महद्युद्धमभवद्रोमहर्षणम् ॥ शितिकण्ठस्य विष्णोश्च [13]परस्परजिगीषिणोः ॥ १७ ॥**
**[14]तदा तु जृंभितं शैवं धनुर्भीमपराक्रमम् ॥ हुंकारेण महादेवः स्तंभितोथ त्रिलोचनः ॥ १८ ॥**
**देवैस्तदा समागम्य सर्षिसङ्घैः सचारणैः ॥ याचितौ प्रशमं तत्र जग्मतु[15]स्तौ सुरोत्तमौ ॥ १९ ॥**
**जृंभितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥ अधिकं मेनिरे विष्णुं देवाः सर्षि[16]गणास्तदा ॥ २० ॥**

लोकाभिविश्रुते लोकेसर्वतःप्रसिद्धे । बलवती इतिनपुंसकद्विवचनं। सुकृते प्रयत्नेननिर्मिते ॥११॥ अतिसृष्टं दत्तं । युयुत्सवे त्रिपुरवासिभिर्योद्धुमिच्छवे ॥ १२ ॥ यस्त्वयाभग्नं तत्र्यंबकायदत्तमितिपूर्वेणान्वयः ॥१३॥ समानसारं समानबलं ॥ १४ ॥ समानसारत्वेकिमिदानींपरीक्ष्यमित्याशङ्क्य रौद्रस्यधनुषोवैकल्यादितिवक्तुं प्रस्तावान्तरमुपक्षिपति—तदेत्यादि । तदा दुष्करत्रिपुरहननानन्तरकाले। बलाबलनिरीक्षया बलाबलनिरीक्षणेच्छया। कोऽनयोर्बलवानित्यपृच्छन्नित्यर्थः ॥१५॥ पूर्ववराहादिरूपेणभूम्युद्धरणादिकरणेन विष्णुरधिकइतिस्तुवतस्त्वत्तःश्रुतं अधुनाविष्णुमुपसर्जनीकृत्यत्रिपुरहननाद्रुद्रस्याधिकबलत्वंप्रतीयतइत्यभिप्रायमित्यर्थः । सत्यवतांवरइत्यनेनबहुशउपदेशेपिनैषांचित्तंसमाधत्ते अतःक्रिययैवबलतारतम्यंदर्शयिष्यामीत्यभिप्रेत्य विरोधंजनयामासेतिगम्यते । अहंधन्वीप्रधानः विष्णुस्तुममोपसर्जनइत्युक्तंरुद्रेणेतिविष्णुंप्रत्युक्त्वा शराग्रतयामयावस्थानान्मयैवत्रिपुरहननंकृतमितिविष्णुनोक्तमितिरुद्रंप्रत्युक्त्वाच विरोधजननमित्यवगम्यते ॥ १६—१७ ॥ जृंभितमित्यत्रापिहुंकारेणेत्यनुषज्यते । जृंभितं भग्नमितियावत् । हुंकारेण नत्वभिमन्त्रितबाणेन । महादेवः । महादेवशब्दोमहावृक्षसमाख्यायितइतिभावः । त्रिलोचनइत्यनेन तृतीयंलोचनमपिनिरर्थकंकृतमितिभावः ॥ १८ ॥ याचितौप्रशमंजग्मतुः । विष्णुःकिमनेनबालेन अनुकंप्यतामितियाचितस्तन्निग्रहान्निवृत्तः रुद्रस्तुस्वामितःपराजयोनास्माकंदोषायेतिसान्त्वितस्तत्तुल्यत्वाभिमानान्निवर्ततइत्यर्थः॥१९॥ अथ स्वाभिमतसिद्धिमाह—जृंभितमिति । तत् विष्ण्वधिष्ठानेनपूर्वंत्रिपुरघ्नं । जृंभितं विष्ण्वधिष्ठानाभावेनजृंभितं । दृष्ट्वा नत्वाप्तवाक्याच्छ्रुत्वा । शैवं शिवाभिमानमात्रविषयभूतं । विष्णुपराक्रमैः पूजायांबहुवचनं । हुंकारेणेतिपूर्वमुक्तेः । आधिक्यावबोधनंनपक्षपातमूलमित्याह—सर्षिगणाइति । अतीन्द्रियार्थद्रष्टा-

**तनि०** नकेवलंधनुषोर्जृंभणं किंतुतदाश्रयस्यापीत्याह—**हुङ्कारेणेति** । महादेवइतिविडंबनगर्भं । घृतकोशातकीशब्दवदनर्थकोमहादेवशब्दइत्यर्थः । **शि०** महादेवः स्तंभितः व्यापाररहितः आसीदितिशेषः । एतेनसत्त्वगुणस्यतदानींप्राबल्यंसूचितं । **वैद्यनाथी०** "रजस्सत्त्वंतमश्चैवकदाचिदभिभूयान्यतमद्भवति" इतिन्यायेनतयोर्युद्धकालेसत्त्वगुणप्राधान्याद्विष्णुनात्रिलोचनश्चस्तंभितः स्तंभितप्रायोऽभूत् ॥ १८ ॥ **ति०** विष्णुं अधिकं श्रेष्ठं । सेव्यत्वेनमेनिरे ज्ञातवन्तः । वस्तुतस्तु प्रकृतयुद्धेविष्णोराधिक्यदर्शनात्त्रिपुरवधेशिवस्याधिक्यदर्शनात्तयोस्साम्यग्रहणमितितात्पर्यं । **शि०** देवाःविष्णुमधिकंमेनिरे स्वीकृततत्सत्वगुणस्यतत्कालेआधिक्यंस्वीचक्रुरित्यर्थः । **वैद्यनाथीयं** परमार्थविद्भिः रुद्रोधिकोविष्णुर्न्यूनः विष्णुरधिकोरुद्रोन्यूनः इतिदुर्मतिर्दूरैत्याज्या । एकस्यैवपरमात्मनोगुणभेदमात्रनिबन्धनौरुद्रविष्णुशब्दौ भेदाभावात् । एवंचयोविष्णुस्सएवरुद्रःकदाचिल्लीलयान्यूनत्वेनाधिकत्वेनचभाति इति बोध्यम् ॥ २० ॥

**[ पा० ]** १ ट. दिव्येश्रेष्ठे. २ ख. ग. ङ—ट. भिपूजिते. ३ ट. दृढेबहुबले. ४ इदमर्धं ख. दृश्यते. ५ ङ. च. छ. झ. अनुसृष्टंसुरैरेकं. ६ क. ग. युयुत्सते. ७ घ. धनुश्श्रेष्ठं. ८ इदमर्धं क—ट. दृश्यते. ९ क. ख. घ—ट. परपुरञ्जयम्. १० घ. कदाचिद्देवताः. ११ च. छ. तयोस्सत्यपरीक्षया. १२ ङ—ट. विरोधेतु. १३ क—ङ. ज—ट. परस्परजयैषिणोः. १४ क. ख. ग. ट. तदातज्जृंभितं. १५ क. ख. स्तौसुरेश्वरौ. १६ ङ. झ. ञ. गणास्तथा.

[[1]पूजयित्वा ततो विष्णुमामन्त्र्य च पिनाकिनम् ॥ ब्रह्मेन्द्रादीन्पुरस्कृत्य नाकपृष्ठं ययुस्तदा] ॥२१॥
धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ॥ देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥ २२ ॥
[ [2]तद्धनुर्देवरातोपि शिरसा गृह्य पूजयत् ॥ भग्नं तन्मनुजश्रेष्ठ त्वया पैनाकमुत्तमम् ] ॥ २३ ॥
इदं च वैष्णवं राम [3]धनुः परपुरंजयम् ॥ ऋचीके भार्गवे प्रादाद्विष्णुः संन्यासमुत्तमम् ॥ २४ ॥
ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ॥ पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ॥ २५ ॥
[4]न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ॥ अर्जुनो [5]विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २६ ॥
वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ॥ [ [6]अमर्षो मे महानासीत्सर्वलोकभयप्रदः ॥
शाश्वतोऽग्निर्हुतो विप्रैर्यथा हुतमुखे प्रभुः ॥ २७ ॥
अशक्नुवान्स तं क्रोधं धनुर्गृह्य परं शुभम् ] ॥ [7]क्षत्रमुत्सादयन्रोषाज्जातंजातमनेकशः ॥ २८ ॥
पृथिवीं [8]चाखिलां प्राप्य कश्यपाय महात्मने ॥ [9]यज्ञस्यान्ते तदा राम दक्षिणां [10]पुण्यकर्मणे ॥ २९ ॥
दत्वा महेन्द्रनिलयस्तपोबलसमन्वितः ॥ [ [11]स्थितोस्मि तस्मिंस्तप्यन्वै सुसुखं सुरसेविते ॥ ३० ॥
अद्य तूत्तमवीर्येण त्वया राम महाबल ] ॥ [12]श्रुतवान्धनुषो भेदं ततोऽहं द्रुतमागतः ॥ ३१ ॥
[13]तदिदं वैष्णवं राम पितृपैतामहं महत् ॥ क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ ३२ ॥

---

रत्रऋषयः तेषांगणाः वैखानसवालखिल्यादयः । "भूयसांस्याद्बलीयस्त्वं" इतिन्यायेन तज्ज्ञानंनपक्षपातमूलं नवाभ्रान्तिमूलमितिभावः । एतेन "एकएवरुद्रो नद्वितीयायतस्थे" इत्यादिश्रुतिः "नकिरिन्द्रत्वदुत्तरः" इत्यादिवदितरापेक्षयाश्रेष्ठत्वाभिप्राया । "एकोहवैनारायणआसीत्" इत्यादिश्रुत्युक्तोनारायणापरपर्यायो विष्णुरेवपरंतत्वमित्यभिहितं । एतेन तमउद्रेकेणकदाचिद्रुद्रस्यपराजयोनदोषायेतिकेनचिदुक्तंप्रत्युक्तं । तमोऽभिभवस्यैवापरत्वनियामकत्वात् । इन्द्रजिता रामपराजयस्तु अदृश्यो न शब्दवेधेनवध्यइतिधर्मप्रवर्तनाय । धर्मसंस्थापनायहि तदवतारइत्युक्तं । अत्र तु स्वरूपतएवरुद्रस्यपराजयः । किंच रुद्रपराजयस्य तमःकृतत्वे देवानामधिकत्वबुद्धिर्नस्यादेव । अयंचधनुर्भङ्गो दक्षयज्ञान्तइतिबोध्यं । अन्यथा "दक्षयज्ञवधेपूर्वंधनुरायम्यवीर्यवान्" इत्यादिना दक्षयज्ञान्ते रुद्रोदेवानांधनुर्ददावित्युक्तंविरुध्येत । अत्रेदमेवधनुस्त्रिपुरघ्नमित्युक्तत्वादेतद्विरुद्धं मेरुधनुष्ट्वं पुराणान्तरोक्तमनादरणीयं । ननु पूर्वंदक्षयज्ञान्तेरुद्रोदेवेभ्योधनुर्दत्तवानित्युक्तं पुनश्चदेवरातायरुद्रोदत्तवानित्युक्तं विश्वामित्राश्रमे मुनिभिर्यज्ञेजनकायदेवाददुरित्युक्तं अनसूयासमीपेसीतया जनकाय वरुणेनदत्तमित्युक्तं । कथमिदंसंगच्छते । श्रूयतां । पूर्वंदेवास्त्रिपुरवधायविश्वकर्मणानिर्मितं धनूरुद्रायददुः । तद्दक्षयज्ञान्ते विरोधेविष्णुहुंकारेणजृंभितं देवैः प्रार्थितोरुद्रोदेवरातस्य हस्तेदत्तवान् । ततःप्रभृति न्यासभावेनमैथिलेषुवर्तमानं तत्स्वत्वेनदेवावरुणेनजनकायादापयन्नितिक्रमः । तेनदक्षयज्ञान्तेधनुर्दानवचनं देवैर्जनकस्ययज्ञफलत्वेनदानवचनं वरुणेनदत्तत्ववचनंच समञ्जसंभवति ॥ २०—२५ ॥ अर्जुनः कार्तवीर्यार्जुनः ॥ २६—२७ ॥ अनेकशः त्रिस्सप्तकृत्वः ॥ २८—३१ ॥ उत्तमं अशिथिलमित्यर्थः । पितृपैतामहं पितृपितामहक्रमायातं । उत्तरपदवृद्धिरार्षी । क्षत्रधर्ममिति ब्राह्मणवन्नश-

---

**ती०** प्राकृतां तामसीं । देहात्मबुद्धिमित्यर्थः ॥ २६ ॥ **ति०** उत्सादयं उत्सादितवान् । अडभावआर्षः ॥ २८ ॥ इति पञ्चसप्ततितमस्सर्गः ॥ ७५ ॥

[ **पा०** ] १ अयंश्लोकः ख. च. छ. दृश्यते. २ अयंश्लोकः ख. दृश्यते. ३ क. ख. च. धनुस्तेनसमप्रभम्. ज. धनुः परमभास्वरम्. ४ ग. न्यस्तशस्त्रेचपितरि. क. ख. न्यस्तशस्त्रेतु. ५ च. छ. विदधेतत्र. ६ इदमर्धत्रयं ख. दृश्यते. ७ क. ङ. ज. झ. ञ. क्षत्रमुत्सादयम्. ट. क्षत्रमुत्पाटयन्रोषात्. ८ ट. त्वखिलांप्राप्य. ख. चाखिलांप्रादां. ९ ङ. झ. यज्ञस्यान्तेऽददंराम. ख. स्यान्तेऽददां. ज. ददौराम. १० ज. पुण्यकर्मणाम्. ११ अयंश्लोकः ख. दृश्यते. १२ क—छ. झ. ञ. श्रुत्वातुधनुषोभेदं. ख. ग. श्रुत्वातुधनुषोभेदंविस्मितानांनभस्तले । भाषतांदेवसङ्घानांततोऽहंद्रुतमागतः. १३ च. छ. झ. ञ. तदेववैष्णवं.

योजयस्व धनुःश्रेष्ठे शरं परपुरंजयम् ॥ [1]यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि [2]ते ततः ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः ॥ ७६ ॥

रामेणपरशुरामंप्रतिस्वशरस्यलक्ष्यभेदननियमाभिधानेनलक्ष्यविकल्पपूर्वकंतत्प्रदर्शनचोदना ॥ १ ॥ रामेणभार्गवरामवचनात्तदीयलोकेषुशरविमोचनम् ॥ २ ॥ जामदग्न्येनसुरादिसमक्षंरामस्यसाक्षान्नारायणत्वावधारणोक्तिपूर्वकंमहेन्द्रमहीधरंप्रतिगमनम् ॥ ३ ॥

[3]श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा ॥ गौरवाद्यन्त्रित[4]कथः पितू राममथाब्रवीत् ॥ १ ॥
[5]श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव ॥ अनुरुध्यामहे ब्रह्मन्पितु[6]रानृण्यमास्थितः ॥ २ ॥
वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव ॥ अवजानासि मे[7] तेजः पश्य मेऽद्य पराक्रमम् ॥ ३ ॥
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य [8]शरासनम् ॥ [9]शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४ ॥
आरोप्य [10]संधनू रामः शरं सज्यं चकार ह ॥ जामदग्न्यं ततो रामं रामः [11]क्रुद्धोऽब्रवीद्वचः ॥ ५ ॥
ब्राह्मणोसीति [12]पूज्यो मे विश्वामित्रकृतेन च ॥ तस्माच्छक्तो [13]न ते राम मोक्तुं[14] प्राणहरं शरम् ॥ ६ ॥
इमां [15]पादगतिं राम तपो[16]बलसमार्जिताम् ॥ लोकान्[17]प्रतिमान्वा ते [18]हनिष्यामि यदिच्छसि ॥ ७ ॥

---

क्तइतिमाब्रूहीत्यर्थः ॥ ३२ ॥ यदिशक्नोषि तावतापि नत्वांमुञ्चामि अपितु ततः अनन्तरं द्वन्द्वयुद्धंदास्यामि । वीर्यपरीक्षणार्थमिदमितिभावः ॥ ३३ ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणेमणिमञ्जीराख्यानेबालकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

अथ जामदग्न्यगर्वनिर्वापणंषट्सप्ततितमे—श्रुत्वेत्यादि । पितुर्गौरवादिति पितुःसन्निधिगौरवादित्यर्थः । यन्त्रिता नियमिता कथा उच्चैःकथनं येन सतथा ॥१॥ पितुरानृण्यं पितृघातिक्षत्रवधेनपितृवैरशुद्धिंआस्थितः सन् यत्कर्म त्रिस्सप्तकृत्वःक्षत्रवधरूपं कृतवानसि तच्छ्रुतवानस्मि । तदनुरुन्ध्यामहे अनुरुन्ध्मः । अवश्यंशूरेणवैरशुद्धेःकर्तव्यत्वात् । कर्तरियगार्षः ॥२॥ वीर्यहीनं अतएवक्षत्रधर्मेणप्राप्तधनुर्ग्रहणयुद्धादावशक्तमिव मन्यमानो यन्मां अवजानासि क्षत्रधर्मपुरस्कृत्येत्यादिनाऽवमानंकृतवानसि तन्नानुरुंध्यामहे ।"अस्मदोद्वयोश्च" इतिचकारादेकस्मिन्बहुवचनं । अतः तेजः परपरिभवासहनं । पराक्रमम् स्वशक्त्यापराभिभवनंच पश्य ॥ ३—५ ॥ विश्वामित्रकृतेन विश्वामित्रकृतस्नेहेन । विश्वामित्रभगिन्यांसत्यवत्यामृचीकाज्जातोजमदग्निः तस्यपुत्रःपरशुरामइतिविश्वामित्रसंबन्धेनेत्यर्थः ॥ ६ ॥ ते तुभ्यं पादयोर्गतिं गमनं । लोकान् लोकप्राप्तिं । यदिच्छसि अनयोर्मध्येयदिच्छसितद्वदेत्यर्थः । यदी-

---

**ती०** अनुरुध्यामहे पितुरानृण्यंपुत्राणांकर्तव्यमिति भवत्कृतंक्षत्रविशसनंसहामहइत्यर्थः । क्षत्रियसाधारण्येनमदवज्ञांनसहामह इतिभावः ॥ २ ॥ **शि०** अशक्तं ब्राह्मणोद्देश्यकातिभाषणसंबन्धिसामर्थ्यरहितं ॥ ३ ॥ **ति०** धनुः चात्भार्गवनिष्ठांवैष्णवींशक्तिं। जग्राह । तदुक्तंपाद्मे "इत्युक्त्वादेविवैष्णव्याशक्त्यातद्गतयासह । जग्राहवैष्णवंचापंविनयेनंचलीलया" इति । अत्राप्यग्रेवक्ष्यति 'निर्वीर्योजामदग्न्योसौ" इति । लघुश्शीघ्रःपराक्रमोयस्यसः । **शि०** क्रुद्धः क्रुधंस्वाश्रितकोपंजहातिहापयतीतितथा । वरायुधं चापं । शरंचप्रतिसंगृह्य गृहीत्वा । धनुरारोप्यशरं सज्यं ज्यासंयुक्तं चकार ॥ ४ ॥

**[ पा० ]** १ ग. घ. झ. यदिशक्नोसि. २ ख. तेतदा. ३ ग. तच्छ्रुत्वाजामदग्न्यस्य. च. छ. झ. ञ. श्रुत्वातुजामदग्न्यस्य. ४ घ. कथोजामदग्न्यमथाब्रवीत्. ५ ज. ट. कृतवानसियत्कर्मश्रुतवानस्मिभार्गव. ६ क. ग. घ. च. छ. ज. रानृण्यमास्थितम्. ७ क. मांराम. ८ क—घ. च—ट. वरायुधम्. ९ झ. धनुश्चप्रतिजग्राह. क—घ. च. छ. ज. ञ. ट. शरंचप्रतिसंगृह्य. १० ज. तद्धनूरामः. ११ क. ख. च. छ. झ. ञ. क्रुद्धोऽब्रवीदिदम्. १२ क. ग. घ. मेपूज्यः. १३ घ. नमेराम. १४ ख. घ. मोक्ष्येप्राणहरं शरम्. १५ क—घ. च. छ. झ. ञ. ट. वालद्गतिंराम. १६ घ. च. ज. ञ. समार्जिताम्. झ. ट. समर्जितान्. १७ घ. नप्रतिमेयान्वा. क. ख. ग. च—ट. नप्रतिमान्वापि. १८ क. च. छ. झ. ञ. हनिष्यामीतिमेमतिः. ख. हरिष्यामियदिच्छसि.

न ह्ययं वैष्णवो दिव्यः शरः परपुरञ्जयः ॥ मोघः[1] पतति वीर्येण[2] बलदर्पविनाशनः ॥ ८ ॥
[ इति[3] ब्रुवति काकुत्स्थे भार्गवं प्रति रोषिते ॥ [4]शतक्रतुमुखा देवाः पुरस्कृत्य शतक्रतुम् ] ॥ ९ ॥
वरायुधधरं[5] रामं द्रष्टुं सर्षिगणाः सुराः ॥ पितामहं पुरस्कृत्य समेतास्तत्र[6] सङ्घशः ॥ १० ॥
गन्धर्वाप्सरसश्चैव सिद्धचारण[7]किंनराः ॥ यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ ११ ॥
जडीकृते तदा लोके रामे वरधनुर्धरे ॥ निर्वीर्यो जामदग्न्योसौ[8] रामो राममुदैक्षत ॥ १२ ॥
तेजोभिहतवीर्यत्वा[9]ज्जामदग्न्यो जडीकृतः ॥ रामं कमलपत्राक्षं मन्दं[10]मन्दमुवाच ह ॥ १३ ॥
[ [11]राम राम महाबाहो शृणु राम मयेरितम् ॥ राजसूये कृते पूर्वं यज्ञे दशरथात्मज ] ॥ १४ ॥
कश्यपाय मया दत्ता यदा[12] पूर्वं वसुन्धरा ॥ विषये मे न वस्तव्यमिति मां कश्यपोऽब्रवीत् ॥ १५ ॥
सोहं गुरुवचः कुर्वन्पृथिव्यां न वसे निशाम् ॥ [13]कृता प्रतिज्ञा काकुत्स्थ [14]कृता भूः कश्यपस्य हि ॥१६॥
तदिमां[15] त्वं गतिं वीर हन्तुं नार्हसि राघव ॥ मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १७ ॥
लोकास्त्वप्रतिमा राम[16] निर्जितास्[17]तपसा मया ॥ जहि ताञ्शरमुख्येन मा[18] भूत्कालस्य पर्ययः ॥१८॥
अक्षय्यं[19] मधुहन्तारं जानामि त्वां सुरोत्तमम्[20] ॥ धनुषोस्य परामर्शात्स्वस्ति[21] तेऽस्तु परंतप ॥ १९ ॥
एते सुरगणाः सर्वे निरीक्षन्ते समागताः ॥ त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ २० ॥
न चेयं मम[22] काकुत्स्थ व्रीडा भवितुमर्हति ॥ त्वया त्रैलोक्यनाथेन यदहं[23] विमुखीकृतः ॥ २१ ॥

---

च्छसीतिपाठोयुक्तः । उभयथाप्रतिबद्धःकचित्तिष्ठेन्न-लोकंपीडयेदितिरामस्यहृदयं ॥ ७ ॥ वीर्येण स्वशक्त्या । मोघोनपतति लक्ष्यमभित्वानतूष्णींपततीत्यर्थः ॥ ८—९ ॥ वरायुधेत्यादि । रामं तन्महदद्भुतंकर्मच द्रष्टुं समेताइत्यन्वयः ॥ १०—११ ॥ लोके जने । जडीकृते स्तब्धे । निर्वीर्यः निर्गतवैष्णवतेजाः । तथाचपुराणान्तरं "ततःपरशुरामस्यदेहान्निर्गत्यवैष्णवम् । पश्यतांसर्वदेवानांतेजोराममुपाविशत्" इति । उदैक्षत विस्मितइतिशेषः ॥ १२ ॥ उवाच प्रश्नोत्तरमितिशेषः ॥१३—१४॥ कश्यपायेत्यादि । यदाब्रवीत्तदाप्रभृति नवसइत्यन्वयः । गुरुवचः कश्यपवचः । कुर्वन् परिपालयन् । कुतइत्यत्राह—कृतेति । हिशब्दः प्रसिद्धौ । यतः सर्वप्रसिद्धतया भूः काश्यपस्य स्वत्वेनकृता त्वद्विषये न वत्स्यामीतिप्रतिज्ञाचकृता तस्मादित्यर्थः ॥१५—१६॥ गतिं गमनं ॥१७॥ लोकहननंनामलोकदानप्रतिबन्धः । मूर्तस्यवाअमूर्तस्यवाकार्यस्यप्रतिहननमेव रामशरस्यापेक्षितमितिभावः॥१८॥अक्षय्यं निर्विकारं मधुहन्तारं विरोधिनिरसनशीलं । अनेन "नब्रह्मानेशानः" इतिमहोपनिषदुपबृंहिता । परामर्शात् ग्रहणात् ॥१९—२०॥ इयं त्वयाविमुखीकृतिः ।

---

**ति०** तद्द्रष्टुंआगताइतिशेषः ॥ ११ ॥ **ति०** तपसा यज्ञादिरूपेण । निर्जिताः अर्जिताः । अत्रपुण्यार्जितलोकहननाभ्यनुज्ञयाऽस्यतत्वज्ञत्वंव्यज्ञ्यम् । रामस्यलोकदानप्रतिबन्धयोस्स्वातन्त्र्यदर्शनेनपरेशत्वबोधनंच । पाद्मेपि । "शतयज्ञकृतंपुण्यंतद्ब्रह्मायन्यवेदयत्" इति ॥ १८ ॥ **ति०** यतः "उतामृतत्वस्येशानः" इतिश्रुतिप्रसिद्धंब्रह्मैवत्वमित्याह—**अक्षय्यमिति** । अक्षय्यं अनाद्यन्तं केनापिपराजयंनेतुमशक्यंच ॥१९॥ **ति०** इयं त्वद्विषयेअशक्तिः । विमुखीकृतस्वशक्तेःस्वस्मिन्योजनेनाशक्तःकृतः । एतेन स्वस्य भगवदंशत्वं रामस्यचपूर्णभगवदवतारत्वं सूचितं । स्वातिरिक्तेनविमुखीकरणेहिव्रीडा नतुस्वात्मनामाययातथाकरणे इतिभावः ।

**[ पा० ]** १ घ. अमोघोप्रतिवीर्येण. २ ग. परदर्पविनाशनः. ३ इदमर्धं क. ख. दृश्यते. ४ इदमर्धं क. दृश्यते. ५ ज. धरंवीरं. ६ क. ख. च. छ. झ. ञ. ट. स्तत्रसर्वशः. ७ घ. चारणगुह्यकाः. ज. ट. किंनरचारणाः. ८ क. ख. जामदग्न्योथ. ९ च. छ. झ. ञ. तेजोभिर्गतवीर्यत्वात्. क. ख. ग. ट. तेजोभिर्हतवीर्यत्वात्. घ. ततोभिहतवीर्यश्च. १० ख. च. झ. मन्दमन्दमुवाचह. ११ अयंश्लोकः क. दृश्यते. १२ ज. ट. यथापूर्वंवसुंधरा. घ. महतीयंवसुंधरा. १३ क. ख. च. छ. झ. ञ. ट. तदाप्रभृतिकाकुत्स्थ. ग. इतिप्रतिज्ञाकाकुत्स्थ. ङ. ज. तथाप्रतिज्ञाकाकुत्स्थ. १४ क. च. छ. झ. ञ. ट. कृतामेकश्यपस्य. ख. ग. घ. कृतावैकश्यपस्यह. १५ च. छ. तदिमांमद्गतिंवीर. घ. यदिमांतांगतिंवीर. ञ. तामिमांमद्गतिंराम. झ. तामिमांमद्गतिंवीर. १६ क. वीर. १७ ट. तपसानिर्जितामया. १८ घ. ज. माभूत्कालविपर्ययः. १९ च. झ. ञ. अक्षय्यं. २० च. छ. झ. ञ. सुरेश्वरम्. २१ ज. मेऽस्तु. २२ ट. रामकाकुत्स्थ. २३ ज. यथाहं.

शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत ॥ शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ॥ रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २३ ॥
स हतान्दृश्य रामेण स्वाँल्लोकांस्तपसाऽऽर्जितान् ॥ जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥२४॥
ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा ॥ सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २५ ॥
रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च ॥ ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ॥ ७७ ॥

गतेजामदग्न्येरामेणतद्दत्तवैष्णवधनुषोवरुणहस्तेप्रदानम् ॥ १ ॥ भार्गवनिर्गमनश्रवणहृष्टेनदशरथेनसेनादीनामयोध्यांप्रतिगमनचोदना ॥ २ ॥ पौरैर्वादित्रघोषपुरस्सरंप्रत्युद्गम्यमानेनदशरथेनरामादिभिःसहायोध्याप्रवेशः ॥ ३ ॥ रामादिभिश्चतुर्भिःस्वस्वजायाभिःसहस्वस्वभवनेषुसुखविहरणम् ॥ ४ ॥ ततःकतिपयकालानन्तरंभरतमातुलेनयुधाजितादशरथानुमत्याभरतशत्रुघ्नयोःस्वपुरंप्रत्यानयनम् ॥ ५ ॥ श्रीरामेणपित्राज्ञयाप्रजापालनपूर्वकंश्रीसीतयासहस्वनगरेसुखविहरणम् ॥ ६ ॥

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ॥ वरुणायाप्रमेयाय ददौ हस्ते ससायकम् ॥ १ ॥
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ॥ पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ॥ अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ३ ॥
[ संदिशस्व महाराज सेनां त्वच्छासने स्थिताम् ॥ शासनं काङ्क्षते सेना चातकालिर्जलं यथा] ॥४॥
रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ॥ बाहुभ्यां संपरिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥ ५ ॥
गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ॥ पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ६ ॥
चोदयामास तां सेनां जगामाशु ततः पुरीम् ॥ ७ ॥

व्रीडा लज्जा ॥ २१ ॥ शरमोक्षे सति । अहं दृष्टशरलक्ष्यस्वार्जितलोकगतिः ॥ २२—२३ ॥ दृश्य दृष्ट्वा। लोकान् हतान् लोकप्राप्तिहेतुकर्माणि विफलीकृतानीत्यर्थः ॥२४—२५॥ आत्मगतिं स्वस्थानं ॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

अथस्वपुरंप्राप्यसीतयारामःसुखमुवासेत्याहसप्ततितमे—गतइत्यादि। रामे परशुरामे। वरुणाय न्यासत्वेनेतिशेषः। अप्रमेयाय अदृश्यायेत्यर्थः ॥ १ ॥ विह्वलं परवशं । अनेन परशुरामेणकृतांपरत्वसूचिकांस्तुतिं वरुणायधनुर्दानंच दशरथोनज्ञातवानितिगम्यते ॥ २ ॥ चतुरङ्गिणीति "प्रातिपदिकान्तनुम्" इत्यादिना णत्वं ॥ ३—४ ॥ रामस्येत्यादिश्लोकद्वयमेकान्वयं । रामस्यवचनंश्रुत्वा विह्वलतयाअस्पष्टंवचनंश्रुत्वा । गतोरामइतिश्रुत्वा क्रमेणपुनःस्पष्टंश्रुत्वेत्यर्थः ।

एतद्व्यवहारप्रयोजनंच दययादशरथादीन्प्रतिस्वरूपबोधनं रामस्यपूर्णतेजोवत्त्वसंपादनंचेतिभाति । वैष्णवतेजसोंशेनान्यत्रसत्त्वेरावणवधस्यदुष्करत्वात् । एतदर्थमेवरावणवधेच्छुदेवगन्धर्वादीनांद्रष्टुमागमनंपूर्वमुक्तं ॥ २१ ॥ **ति०** दाशरथिंप्रदक्षिणीकृत्य अन्तर्यामित्वेनज्ञानात्प्रदक्षिणकरणंच क्षत्रियत्वाच्चतस्यप्रणत्यकरणंकायेनेतिबोध्यं ॥ २६ ॥ इतिषट्सप्ततितमस्सर्गः ॥ ७६ ॥

**ति०** वरुणस्याप्रमेयत्वंभृगवेसाक्षाद्ब्रह्मविद्याप्रदत्वात् । इदंचतैत्तिरीयोपनिषदिस्पष्टं ॥ १ ॥ **शि०** पितरंचाभिवाद्य विकलं वीनांपक्षिणांकलंस्वस्वनीडगमनंयस्मिन् तं सायंकालं । दृष्ट्वाप्रोवाच ॥ २ ॥

[ पा० ] १ ख. ज. ञ. गमिष्येऽहं. २ ज. निहतान्दृश्य. ३ ज. ताँल्लोकांस्तपसा. ४ ख. श्चविदिश. ५ घ. देवास्सर्षिगणाः. ६ ज. ट. मुदान्विताः. झ. प्रपूजितः. ७ घ. च. छ. ञ. प्रशस्यह. ८ क—घच. झ. प्रदक्षिणीकृत्य. ९ क—छ. झ. ञ. ट. महायशाः. १० ङ. झ. ट. विकलंदृष्ट्वा. ११ अयंश्लोकः ख. ग. ज. दृश्यते. १२ ग. घ. ट. तद्वचश्श्रुत्वा. क. चवचश्श्रुत्वा. ख. तुवचः. १३ घ—छ. झ. ञ. मूर्ध्न्युपाघ्राय. १४ क. सुतानात्मान. ख. पुत्रांश्चात्मान.

पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ॥ सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ॥ ८ ॥
राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः[1] ॥ संपूर्णां प्राविशद्राजा जनौघैः समलङ्कृताम् ॥ ९ ॥
पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः[2] ॥ पुत्रैरनुगतः श्रीमाञ्[3]श्रीमद्भिश्च महायशाः ॥ १० ॥
प्रविवेश गृहं राजा हिमवत्सदृशं[4] पुनः ॥ ननन्द सजनो[5] राजा गृहे कामैः सुपूजितः ॥ ११ ॥
कौसल्या च सुमित्रा च कैकयी च सुमध्यमा ॥ वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ॥१२॥
[ [6]रामं च लक्ष्मणं चैव शत्रुघ्नं भरतं तथा ॥ आर्चयन्मङ्गलाशीर्भिर्मङ्गलैरभ्यपूजयन् ॥
उपाहारैश्च संहृष्टाः कुमारानभिपूज्य च ] ॥ १३ ॥
ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥ कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः[7] ॥ १४ ॥
मङ्गलालापनैश्चैव[8] शोभिताः क्षौमवाससः ॥ देवतायतनान्याशु सर्वास्ताः[9] प्रत्यपूजयन् ॥ १५ ॥
अभिवाद्याभिवाद्यांश्च[10] सर्वा राजसुतास्तदा[11] ॥ [ [12]स्वं स्वं गृहमथासाद्य[13] कुबेरभवनोपमम् ॥ १६ ॥
गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान् ] ॥ रेमिरे मुदिताः[14] सर्वा भर्तृभिः सहिता रहः ॥१७॥
कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ॥ कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥ १८ ॥
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥ [ [15]कालेकाले तु नीतिज्ञास्तोषयन्तो गुरुं गुणैः ] ॥१९॥
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ॥ [ [16]अभिवादयितुं प्राप्तं श्यामं कमललोचनम् ] ॥
अक्लिष्टकारिणं शूरं परसैन्यविमर्दनम् ॥ २० ॥
विनयं देहयोगेन संप्राप्तमिव संस्थितम् ॥ भरतं कैकयीपुत्रमब्रवीद्रघुनन्दनः[17] ॥ २१ ॥
अयं केकयराजस्य पुत्रो वसति पुत्रक ॥ त्वां नेतुमागतो वीर[18] युधाजिन्मातुलस्तव ॥ २२ ॥
[ *[19]प्रार्थितस्तेन धर्मज्ञ मिथिलायामहं तदा ॥ ऋषिमध्ये तु तस्य त्वं प्रीतिं कर्तुमिहार्हसि * ] ॥२३॥

हृष्टः पुलकितः ॥ ५—७ ॥ रम्यामितिपुनरुक्तिस्तत्तद्विशेषणकृतरमणीयत्वाभिप्रायेण पताका । ध्वजपटः। ध्वजःदण्डः । पताकान्विताध्वजाअस्यांसन्तीति पताकाध्वजिनीं । ह्रस्वदीर्घध्वजभेदइत्यप्याहुः । उद्घुष्टमितिभावेनिष्ठा । तूर्योद्घोषेणसंजातनिनादामित्यर्थः ॥ ८ ॥ राजप्रवेशेन सुमुखैः विकसन्मुखैः । मङ्गलं आशीर्वचनं वक्तुंशीलमेषामस्तीतिमङ्गलवादिभिः ॥ ९—१० ॥ जनःसम्बन्धिजनः। गृहेस्थितैरितिशेषः । काम्यन्तइतिकामाः विषयभोगपरिकराःतैः ॥ ११ ॥ वधूनां स्नुषाणां प्रतिग्रहे उपचारे स्वस्वान्तःपुरानयनेवा । "वधूर्जायास्नुषा" इत्यमरः । युक्ता आसक्ताः । आसन्नितिशेषः ॥ १२—१३ ॥ जगृहुः अन्तःपुरं प्रावेशयन् ॥ १४ ॥ मङ्गलालापनैः स्वस्तिवाचनैः । शोभिताः । मङ्गलालंभनैरितिपाठे आलंभनं चन्दनचर्चा । देवतायतनानि गृहदेवतानामर्चागृहाणि । प्रत्यपूजयन् गन्धपुष्पादिभिरपूजयन् । आयतनपूजामात्रे स्त्रीणामधिकारादितिभावः ॥ १५ ॥ सर्वाअभिवाद्य सर्वारेमिरइत्यन्वयः ॥ १६—१८ ॥ वर्तयन्ति अनुवर्तयन्तिस्म ॥ १९ ॥ कस्यचित्त्वथकालस्य कस्मिंश्चित्कालेगतेसति ॥ २०—२१ ॥ मातुलस्तवेति अतोगच्छेतिव्यञ्जनावृत्त्योक्तिः पुत्रविरहका-

ति० होमैः गृहप्रवेशनीयहोमैः ॥ १५ ॥

[पा०] १ च. छ. ज. ञ. ट. मैङ्गलपाणिभिः. २ ख. स्वपुरवासिभिः. ३ क. ख. शूरैः. ४ क. ख. घ—ट. त्सदृशंप्रियम्. ५ च. छ. झ. ञ. ट. स्वजनैराजा. ६ इदमर्धत्रयं क. ख. दृश्यते. ७ ङ. च. छ. झ. ञ. ट. नृपयोषितः. ८ क. मङ्गलाभरणाश्चैव. ख. मङ्गलाभरणैश्चैव घ. मङ्गलालेपनैश्चैव. ञ. मंगलालंभनैश्चैव. ज. मङ्गलारंभकैश्चैव. ङ. च. छ. झ. मङ्गलालापनैर्होमैः. ९ ख. यथार्हंप्रत्यपूजयन्. १० ख. भिवाद्यास्ताः. ११ घ. ट. स्तथा. १२ अयंश्लोकः ख. ग. ज. दृश्यते. १३ ख. गृहंसमासाद्य. १४ ख. मुग्धाः. १५ इदमर्धं ख. ग. दृश्यते. १६ इदमर्धत्रयं ख. दृश्यते. १७ ग. घ. ज. ट. द्रघुसत्तमः. ख. द्रघुनन्दनम्. १८ ङ. च. छ. झ. ञ. वीरो. १९ अयंश्लोकः ख. ग. ज. दृश्यते.

श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ॥ [अभिवाद्य गुरुं रामं परिष्वज्य च लक्ष्मणम्] ॥
गमनायाभिचक्राम शत्रुघ्नसहितस्तदा ॥ २४ ॥
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ॥ मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ॥ २५ ॥
[ युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ॥ स्वपुरं प्राविशद्वीरः पिता तस्य तुतोष ह ] ॥ २६ ॥
गते च भरते रामो लक्ष्मणश्च महाबलः ॥ पितरं देवसंकाशं पूजयामासतुस्तदा ॥ २७ ॥
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ॥ चकार रामो धर्मात्मा प्रियाणि च हितानि च ॥ २८ ॥
मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ॥ गुरूणां गुरुकार्याणि कालेकालेऽन्ववैक्षत ॥ २९ ॥
एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तदा ॥ रामस्य शीलवृत्तेन सर्वे विषयवासिनः ॥ ३० ॥
तेषामतियशा लोके रामः सत्यपराक्रमः ॥ स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ ३१ ॥
रामस्तु सीतया सार्धं विजहार बहूनृतून् ॥ मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः ॥ ३२ ॥
प्रिया तु सीता रामस्य दाराः पितृकृता इति ॥ गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोभ्यवर्धत ॥
[ हृदयं चैव जानाति प्रीतियोगि परस्परम् ] ॥ ३३ ॥

तर्यात् ॥ २२—२४ ॥ अक्लिष्टं कस्यापिदुःखरहितं यथाभवतितथा कर्तुंशीलमस्यस्येतितं ॥ २५—२८ ॥ परमयन्त्रितः परमं अत्यन्तं यन्त्रितः श्रुतिस्मृतिमर्यादानतिलङ्घी । गुरुकार्याणि गुरूचितशुश्रूषादिकार्याणि । अन्ववैक्षत परिपालयतिस्मेत्यर्थः ॥ २९ ॥ एवं एतादृशेन शीलवृत्तेन । नैगमाः वणिजः ॥ ३० ॥ नकेवलंशीलवृत्तेन किंतुसर्वैरपिगुणैरित्याशयेनाह—तेषामिति । तेषां ब्राह्मणादीनांमध्ये ॥ ३१ ॥ एवं धर्मपरतांरामस्योक्त्वा धर्माविरुद्धकामाभिरतिंदर्शयति—रामस्त्वित्यादिनाश्लोकचतुष्टयेन । रामस्तु । तुशब्देनपूर्वस्माद्वैलक्षण्यमुच्यते । पितृशुश्रूषणधर्मप्रवर्तनदेवताराधनादिकंहिपूर्वमुक्तं । सएवंकर्तासंप्रतिवात्स्यायनमभ्यस्यकामतन्त्रपरोभूत् । सीतया अयोनिजया । "सहयुक्तेऽप्रधाने" इतितृतीया । स्वाभाविकसौन्दर्यसमृद्ध्यैवावतीर्णापि भोगस्रोतस्यप्रधानाभूदिति रामस्यप्राचण्यातिशयःप्रदर्शितः । विजहार । परस्मैपदेनफलापर्यवसायितोच्यते । "स्वरितञितः कर्त्रभिप्रायेक्रियाफले" इतिविहाररूपक्रियाफलस्यकर्तृगामित्वेह्यात्मनेपदमेवभवेत् । तथाच चिरतरविहारोपिभोगोपोद्धातकेलितांनातिशेतइतिभावः । बहूनृतून् । अत्यन्तसंयोगेद्वितीया । तया भोगनैरन्तर्यंसूच्यते । बहूनृतूनित्युक्तं नतुवत्सरानिति । तेनतत्तदृतूचितभोगोपकरणैर्भोगान्सबुभुजइत्युक्तं । मनोस्यास्तीतिमनस्वी । भूमार्थेमत्वर्थीयः । तथाच संश्लेषदशायांसीतासंकल्पमप्यतिशय्य भोगस्रोतःप्रवर्तयितेत्यर्थः । नित्यंतद्गतः तस्यांगतः । "सप्तमी—" इतियोगविभागात्समासः । जातिगुणवदपृथक्सिद्धतयातदेकरसोभूदित्यर्थः । सर्वदातदासक्तचित्तोऽभूदितिभावः । तस्याहृदिनित्यंसमर्पितः सीतापिरामकृततत्तद्व्यापारेणवशीकृता तदायत्तचित्ताऽऽसीत् । नित्यं सुचिरंभोगेपि सद्यस्संगतेवनिरवधिकप्रेमभारभरिताऽभूदित्यर्थः ॥ ३२ ॥ नित्यंतद्गतइत्यत्रहेतुमाह—प्रियात्विति । तुरवधारणे । पितृकृतादाराइतिहेतोरेवरामस्यसीताप्रियासीत् । तर्हिसीतावैलक्षण्यमकिंचित्करं नेत्याह । गुणात् भर्तृशुश्रूषणादिगुणात् । रूपस्य देहस्य । गुणात् सौन्दर्यात् । अपिशब्दोऽनुक्तसमुच्चयार्थः । आभिजात्यादिभिश्च । प्री-

तेषांचतुर्णांपुत्राणांमध्येसत्यपराक्रमोरामएवातियशाः । भूतानांमध्येस्वयंभूरिवगुणवत्तरोबभूवेत्यन्वयः । शि० स्वयंभवति प्रादुर्भूततांप्राप्नोतीतिस्वयंभूः रामः । लोकेभूतानां प्रादुर्भावंप्राप्तानांमध्ये अतियशाः गुणवत्तरश्च बभूव । इवश्चार्थे ॥ ३१ ॥

[ पा० ] १ इदमर्धं क. ख. ग. दृश्यते. २ क. ज. ट. वीरो. ३ अयंश्लोकः क. ख. ङ. च. छ. झ. ञ. ट. दृश्यते. ४ क. घ. महारथः. ५ ङ. च. छ. झ. ञ. रामस्सर्वाणि. ६ ख. राज्ञापरमयन्त्रितः. क. रामःपरमयन्त्रितः ७ क. चकारह. ८ ख. राजादशरथः. ९ क. ग. घ. ङ. झ. ञ. ट. स्तथा. १० ग. ज. शीलवृत्ताभ्यां. ११ ङ. च. छ. झ. ञ. ट. रामश्च. १२ घ. ङ. झ. ञ. ट. तद्गतमनास्तस्याहृदि. क. च. छ. तद्गतमनानित्यंहृदि. ज. तद्गतस्त्वरया. १३ घ. द्रूपकृताच्चापि. १४ ङ. च. ञ. भूयोविवर्धते. ख. ग. ज. भूयोव्यवर्धत. झ. ट. भूयोऽभिवर्धते. ख. भूयोऽन्ववर्धत. १५ इदमर्धं क. दृश्यते.

तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ॥ अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥ ३४ ॥
तस्य भूयो विशेषेण मैथिली जनकात्मजा ॥ देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥ ३५ ॥
तया स राजर्षिसुतोभिरामया समेयिवानुत्तमराजकन्यया ॥
अतीव रामः शुशुभेऽतिकामया विभुः श्रिया विष्णुरिवामरेश्वरः ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ इति बालकाण्डः संपूर्णः ॥ १ ॥

तिर्भूयोऽभ्यवर्धत । रामस्यसीतायामित्यर्थसिद्धं । अतोबहूनृतून्विजहारेत्यन्वयः ॥ ३३ ॥ अथरामस्येवसीताया अपि रामेनिरन्तरानुरागं दर्शयन् तस्याहृदिनित्यंसमर्पितइत्युक्तंविवृणोति—तस्याश्चेति । तस्याभर्ता रामश्च। हृदये सीतायाहृदये। द्विगुणंयथाभवतितथापरिवर्तते । रामाद्विगुणाप्रीतिःसीतायारामेभूदित्यर्थः। यथारामस्यसीतायांप्रीतिः पितृकृतदारत्वकृता सौन्दर्यकृताच एवंरामेपिसीतायाः प्रीतिर्नोभयकृता किंतु भर्तृत्वमात्रकृता। वक्ष्यत्यनसूयांप्रतिसीता "यद्यप्येषभवेद्भर्ता ममार्येवृत्तवर्जितः। अद्वैधमुपचर्तव्यस्तथाप्येषमयाभवेत्" इत्यादि। अनेन गुणादित्युक्तरामविषयानुरागोविवृतः। एतादृशानुरागोरामेणकथंविज्ञायतइत्यत्राह—अन्तरिति । अन्तर्जातं सीताहृद्गतमपिहृदयगूढभावं । अनुरागमितियावत् । हृदा तर्केण अनुभावैरितियावत्। व्यक्तमाख्याति जानाति । चक्षिङःख्याञादेशःसार्वधातुकेप्यार्षः। तस्यदर्शनार्थत्वं चख्युरित्यादौसिद्धं। परकीयहृदयंकथंव्यक्तीभवतीत्यपेक्षायां तत्रैवसर्वदापरिवर्तमानत्वादित्युक्तं पूर्वार्धे ॥ ३४॥ रामवत्सीतापि रामहृदयंविशेषेणव्यक्तंवेत्तीत्याह—तस्येति । तस्य रामस्य हृदयं सीता भूयो विशेषेण । रामादतिरिक्तंजानातीत्यर्थः। रामो यादृशभोगमभिलषति तदिङ्गितेनज्ञात्वा स्वयंतदनुरूपा भवति । नतुतदतिरिक्तभोगमभिलषते । एवंरामोपीतिभावः । रामादप्यतिशयेनसीतायाःकान्तेङ्गितपरिज्ञानेहेतुचतुष्टयमाह—मैथिलीत्यादि । देशस्वभावाद्वंशस्वभावाच्च सूक्ष्मज्ञा। देवताभिःसमेति प्रागल्भ्यमुच्यते । रूपे विषये रूपिणी सर्वैर्दृश्यमानरूपवती श्रीरिवस्थिता । अनेन सहजबुद्धिविशेषोदर्शितः ॥३५॥ एवमनवधिकमन्योन्यानुरागमुपपाद्य तदनुरूपंभोगंदर्शयति—तयेति । राजर्षिसुतः महाराजसुतत्वेननिरवधिकभोगोपकरणवान् । उत्तमराजकन्यया ततोप्यधिकतदुपकरणवत्या। रामः रमयिता अभिरामया ततोप्यतिशयेनरमयित्र्या । सः अतिशयितकामः। अतिकामया रामादप्यधिककामयेत्यर्थः। तया सीतया। समेयिवान् सम्यगेयिवान् एकीभावेन संश्लिष्टः । स्वयंग्रहाश्लेषविषयीभूतःसन् । "लीनेवप्रतिबिंबितेवलिखितेवोत्कीर्णरूपेवच प्रत्युप्तेवचवज्रलेपघटितेवान्तर्निखातेवच । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया" इतिवत्। विभुः प्रत्यालिङ्गनादिसमर्थः । अमरेश्वरोविष्णुः आदिविष्णुः। श्रियेव मूर्तिभेदेनोपमानत्वं । अतीव अतिशयेन शुशुभेरेजे । तुल्यानुरागस्यातिशयितस्त्रीकामस्यभोगसमृद्धिहेतुत्वादितिभावः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मणिमञ्जीराख्याने बालकाण्डव्याख्याने सप्तसप्ततितमःसर्गः ॥ ७७ ॥

वेदे शास्त्रेषु वादेष्वनितरसुलभां कीर्तिमाटीकमानः काव्यालङ्कारनाट्यप्रभृतिषु पटुधीः कोपि टीकाविधाने ॥ शुद्धान्तःपद्मशुद्धान्तितमधुमथनः शुद्धसत्त्वैकमूर्तिर्गोविन्दार्यो विचार्यव्यतनुत विमलां बालकाण्डस्य टीकाम् ॥ इतिबालकाण्डव्याख्यानं संपूर्णं ॥

**तनि॰** राजर्षिसुतइति उत्तमराजकन्ययेतिचाभिजनवृत्तादितौल्यमुक्तं । अभिरामया सौन्दर्येणातिरमणीयया अतिकामया-अतिस्नेहया समेयिवान् अतिसंश्लेषेणाभेदंप्राप्तः । यद्वा अतिकामया अतिक्रान्तमन्मथया । तेनाप्राकृतविग्रहवत्तयादिव्यदंपतिभोगएवात्राभिव्यज्यते ॥ ३६ ॥ इतिसप्तसप्ततितमस्सर्गः ॥ ७७ ॥ **॥ बालकाण्डस्संपूर्णः ॥**

[ पा० ] १ ङ. च. झ. ञ. ट. अन्तर्गतमपि. २ ख. सदा. ३ क. तस्मिन्भूयो. ४ घ. ङ. च. झ. ञ. ट. सुतोभिकामया. क. सुतोनिकामया. ५ ङ. च. छ. ञ. ट. शुशुभेमुदान्वितो. ज. शुशुभेऽतिकान्तया.

# SRIMAD VĀLMIKI RĀMĀYANA

A CRITICAL EDITION

## With the commentary of Sri Govindarāja

AND

Extracts from many other commentaries and Readings.

---

AYODHYĀKĀṆDA 2.



EDITED AND PUBLISHED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilâs Book Depot, Kumbakonam.



B. R. Ghanekar for the proprietors,

'a-sagar" Press, 23, Kolbhat Lane,

BOMBAY.

---

1911.

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीयव्याख्यानसमलंकृतम् ।

तथा

तिलकप्रभृत्यनेकापूर्वव्याख्यानोद्धृतैः
गोविन्दराजीयानुक्तापूर्वविषयैश्च संवलितम् ।



## अयोध्याकाण्डम् २.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन नानादेशीयकोशानुसारेण

संशोध्य

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३२ साधारणनाम संवत्सरे ।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

## श्रीमद्गोविन्दराजीयव्याख्यासमलंकृतम् ।

## अयोध्याकाण्डम् २

श्रीरामचन्द्राय नमः ॥

### प्रथमः सर्गः ॥ १ ॥

सशत्रुघ्नेभरतेमातुलकुलंगतेदशरथेनरामेगुणबाहुल्यदर्शनेनतस्ययौवराज्याभिषेकचिकीर्षयातन्निश्चयार्थंनानादेशेभ्योराज्ञामानयनम् ॥ १ ॥ तैराजभिःसहदशरथस्यसभाप्रवेशः ॥ २ ॥

**गच्छता मातुलकुलं भरतेन तदाऽनघः ॥ शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥**

श्रीरामचन्द्रायनमः ॥ श्रावंश्रावंशठारेः शमदमवपुषः फुल्लवक्त्रारविन्दादालोच्यालोच्य वाचा प्रकृतिमधुरया प्रोच्य विद्वज्जनेभ्यः ॥ गोविन्दार्यः सुधीशःकुशिककुलमणिर्गूढगाढाशयाढ्यं सम्यक्साकेतकाण्डं सरसजनमुदे सादरं व्याकरोति ॥ प्रथमेकाण्डे "एतस्मिन्नन्तरेविष्णुः" इत्यादिना "यतोवाइमानि" इत्यादिश्रुतिप्रतिपादितंजगत्कारणत्वं "अहंवेद्मिमहात्मानं" इत्यादिनापुरुषसूक्तोक्तमहापुरुषत्वं "त्वमनादिरनिर्देश्यः" इत्यादिना अचिन्त्यवैभवत्वं इत्येवंसर्वस्मात्परत्वमुक्तं "अधिकंमेनिरेविष्णुं" इत्यादिनातदितरेषामपरत्वंच । संप्रतितस्यहेयप्रत्यनीककल्याणैकताननताप्रतिपाद्यतेद्वितीयकाण्डेन । अथवा पूर्वं वक्ष्यमाणधर्मानुष्ठानोपयोगितया रामायणपुरुषाणांमहाकुलप्रसूतत्वमहागुरुकृपालब्धधनुर्वेदरहस्यत्वतत्संवादभूतताटकाताटकेयादिनिरासहरधनुर्भङ्गवैष्णवचापपरिग्रहप्रभृतिगुणाः सहधर्मचारिणीयोगश्चसप्रपञ्चंदर्शिताः । अथ तदनुष्ठिताः पितृवचनपरिपालनादिसामान्यधर्माः भगवच्छेषत्वपारतन्त्र्यभागवताभिमाननिष्ठारूपविशेषधर्माश्च प्रतिपाद्यन्ते । पूर्वकाण्डेलक्ष्मीयोगोदर्शितः अत्रभूमियोगःप्रदर्शितइत्यपिब्रुवते । पूर्वंपरत्वमुक्तं अत्रसौलभ्यमित्यप्याहुः । पूर्वंलक्ष्मीविशिष्टंप्राप्यस्वरूपमुक्तं प्राप्तरूपजीवस्वरूपमत्रनिरूप्यते । तत्रप्रथममतिरहस्यतयाऽवश्यविज्ञातव्यां लघूपपादनां भागवताभिमाननिष्ठां शत्रुघ्नानुष्ठानमुखेनदर्शयति—गच्छतेति । गच्छता वर्तमाननिर्देशेनशत्रुघ्नगमनस्यभरतगमनेनैककालत्वावगमादसिवसनादिवत्तस्यतदेकपारतन्त्र्यंगम्यते । मातुलकुलं मातुलगृहं । द्वितीययाभरतोद्देश्यस्यैवशत्रुघ्नोद्देश्यत्वावबोधनाच्छेष्युद्देश्योद्देश्यकत्वरूपंपारतन्त्र्यमुच्यते । भगवत्पारतन्त्र्यरूपंभागवतत्वमाह—भरतेनेति । भरतइतिराज्यस्यभरणात्" इतिसहस्रानीकनिर्वहणा-

श्रीरामायनमः । **तनि०** भरतस्यमातुलकुलमुद्देश्यं शत्रुघ्नस्यतुभरतः युधाजित्खलुभरतमेवानेतुमागतः । गच्छतेतिवर्तमाननिर्देशेनभरतगमनकालेगन्तव्यमितिमनसिनस्थितं । नचदशरथेनरामेणवानुज्ञातइतिव्यज्यते । भरतेन रामेवनंगते लक्ष्मणेतदनुवर्तिनिदशरथेस्वर्गतेअनेनैवरामराज्यंभर्तव्यमितिभाविज्ञानवतोवसिष्ठाल्लब्धभरतनामधेयेन । तदा स्वस्यापिराजपुत्रत्वेननक्षत्रानुगुणमुहूर्तादिकेविचारणीयेपितन्मुहूर्तएवस्वस्यापिसुमुहूर्तइतिगतः । अनघः कामादिहेतुकव्यसनरहितः । शत्रुघ्नः अस्यामनुष्यत्वात् "अमनुष्यकर्तृकेच" इतिटक् । नीतः छायावत्स्वयंद्रव्यत्वेपिजातिगुणवत्पारतन्त्र्यंप्राप्तः । प्रीतिपुरस्कृतः ज्येष्ठानुवर्तित्वं नविधिप्रेरितत्वेन भवति । अपितु अयोध्यायांभरतकैङ्कर्यंबहुभिर्विभज्यगृह्यते तत्रचेदेकेनैवमयाभोक्तुंशक्यमितिभक्तिप्रेरितः ॥ **ती०** नीतः मातुलगृहवासजनितसौख्यादिकमनेनविनाऽसत्कल्पमितिधियानीतइतिभावः । **ति०** अनघः सोदरस्यलक्ष्मणस्यबलवद्रामाश्रयप्रयुक्तेर्ष्या-

स तत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृतः ॥ मातुलेनाश्वपतिना पुत्रस्नेहेन [१]लालितः ॥ २ ॥
तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः ॥ भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३ ॥
राजाऽपि तौ मह[२]तेजाः सस्मार प्रोषि[३]तौ सुतौ ॥ उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥ ४ ॥
सर्व एव तु तस्येष्टाश्चत्वारः [४]पुरुषर्षभाः ॥ स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५ ॥

त् । रामेवनंगतेतदनुसारिणिचलक्ष्मणेराजनिचत्रिदशसदनमुपसेदुषि केवलरामाज्ञयाप्राज्यराज्यभारनिर्वाहकरणेनेत्यर्थः । तदा तद्गमनकालएव । अनेनस्वानुकूलचन्द्रताराबलाद्यनपेक्षणोक्त्यापारतन्त्र्यमेवविशेषितं । अनघः अस्मिन्प्रकरणेअघशब्देनकेवलरामभक्तिरुच्यते । स्वशेषिभूतभरतोद्देश्यताकारेणहिशत्रुघ्नस्यरामभक्तिरुद्देश्या । अतएववक्ष्यति "नाहंस्वपिमिजागर्मितमेवार्यंविचिन्तयन्" इति । "जग्राहभरतोरश्मीन्शत्रुघ्नश्छत्रमाददे" इतिच । अनिष्टावहस्यपापशब्दवाच्यत्वात् । स्वशेषिभरतोद्देश्यत्वाकारंविनारामभक्तेरनिष्टावहत्वात्तस्याअघत्वं "नसुकृतंनदुष्कृतंसर्वेपाप्मानोतोनिवर्तन्ते" इतिश्रुतौ सुकृतस्य मुमुक्षोरनिष्टावहत्वेनपाप्मत्वव्यपदेशात् । शत्रुघ्नः शत्रून्लवणासुरादीन्हनिष्यत्ययमितिभाविप्रतिसन्धानेनशत्रुघ्न इतिवसिष्ठेनकृतनामधेयः । नित्यशत्रुघ्नः नित्यशत्रवोज्ञानेन्द्रियाणि । शरीरेनित्यंसंनिधायविषयान्तरप्रावण्यरूपविपरीतकार्यकारित्वात् । तान्हन्तीतिनित्यशत्रुघ्नः । इन्द्रियनिग्रहवानित्यर्थः । पुंसांदृष्टिचित्तापहारिण्यपिनमग्नेन्द्रियः । रामविषयभक्तिःस्वाधिकारविरुद्धेतितन्निवर्तनमस्यकार्यमेव । नीतइत्युक्तं नतुययाविति । तेनाचिद्वत्पारतन्त्र्यमुक्तं । प्रीतिपुरस्कृतः किंकरोमिज्येष्ठानुवर्तनंकनिष्ठेनकार्यमितिविधिपरतन्त्रोनगतः अपितुप्रीतिप्रेरितोऽगच्छदित्युक्तं । तेनचितोव्यावृत्तिरुक्ता । प्रीतिरेवह्यचेतनापेक्षयाचेतनस्यविशेषः । भगवत्पारतन्त्र्यंतुचेतनाचेतनसाधारणमेव । यद्यत्यन्तसारग्राहीपुरुषःस्यात्तदाशत्रुघ्नवद्भागवतपरतन्त्रतयावर्तितव्यमितिव्यञ्जितं । व्यञ्जनावृत्त्याभिमतार्थप्रदर्शनंह्युत्तमकाव्यकृत्यं ॥ १ ॥ रामभक्तोभरतःकथंतंविहायमातुलकुलेन्यवसदित्यपेक्षायां रामाभिमानविषयभूतशत्रुघ्नसहवासादित्याह— सइति । सः भरतः । तत्र मातुलगृहे । अश्वपतिना मातुलेन युधाजिता । सत्कारसत्कृतः जात्यश्वप्रदानादिना पूजितोपि । पुत्रस्नेहेन पुत्रविषयस्नेहतुल्यस्नेहेन । लालितः विशिष्टभोजनाच्छादनाभरणप्रदानादिभिरुपलालितोपिसन् । भ्रात्रा शत्रुघ्नेन । सह । न्यवसत् । भ्रातृस्नेहेनैवतत्रस्थितः । नतुमातुलोपलालनमात्रादितिभावः । यद्वा सः शत्रुघ्नः । भ्रात्रासहलालितइत्यन्वयः । " सहयुक्तेप्रधाने" इतितृतीया । अश्वपतिः स्वस्त्रीयादपिशत्रुघ्नमतिशयेनलालितवानित्यर्थः । अथवा भ्रात्रासहन्यवसत् रामेणसहन्यवसत् । सदारामचिन्तयातेनसहवर्तमानइवस्थितइत्यर्थः ॥ २ ॥ तत्र सर्वोपलालनभूयिष्ठेमातुलगृहे । निवसन्तावपि । कामतः काम्यमानसर्वाभिमतवस्तुभिः । तृतीयार्थेतसिः । तर्प्यमाणौच संतोष्यमाणावपि । वीरौ महोत्साहौ । तौ भ्रातरौ भरतशत्रुघ्नौ । वृद्धंनृपं जीर्णमहीपतिंदशरथं । स्मरतां अस्मरतां । अनित्यमागमशासनमित्यडभावः । दशरथो वृद्धोभून्नराज्यभरणेसम्यक्क्षमते अपीदानींरामंयुवराजंकारयेदिति अचिन्तयतामितिभावः ॥ ३ ॥ महातेजाः सत्पुत्रलाभकृतनिरवधिकतेजस्कः । राजा दशरथः । महेन्द्रवरुणोपमौ तद्वन्निरपायमैत्रीसंपन्नौ । प्रोषितौ देशान्तरगतौ । निरवधिकप्रीतिविषयभूतौ उभौ भरतशत्रुघ्नौ सुतौ सस्मार । सर्वसंपत्समृद्धस्यापिमेपुत्रद्वयासन्निधानमेवन्यूनतेत्यस्मरदितिभावः । उभावितिस्मृतिविषयेतारतम्याभावोक्तिः ॥ ४ ॥ रामलक्ष्मणसन्निधानेकथमितरपुत्रस्मरणमित्यत्राह— सर्वइति । तुशब्दउक्तशङ्काव्यावृत्त्यर्थः । चत्वारः चतुर्धावस्थिताः । पुरुषर्षभाः पुरुषोत्तमाः । सर्वे अविशेषेण । तस्य दशरथस्य । शरीराद्विनिर्वृत्ताः निष्पन्नाः । चत्वारोबाहवइव इष्टाः प्रियाएवासन् । अभूतोपमा । अयोगव्यवच्छेदार्थेएवकारः । लोकेकस्यचिच्चतुर्षुबाहुरहितः । वि० अनघः अहमपिदाशरथिःममभ्रात्रनुवर्तनंकिमित्येवंअघंनविद्यतेयस्यसः । शि० तदा पित्राज्ञाकाले ॥ १ ॥ ति० पुत्रस्नेहेन पुत्रादप्यधिकस्नेहेनेत्येके ॥ २ ॥ ती० तत्रापीतिअपिनास्थलसौख्यंद्योत्यते । वृद्धंस्मरतामित्यत्रशुश्रूषाकालोतीतइतिधर्मलोपभियापितरंस्मृतवन्ताविितितात्पर्यं ॥ ३ ॥ विनिर्वृत्ताः विनिर्गताः । अनेनराज्ञोविष्णुरूपकध्वनिः ॥ ५ ॥

[ पा० ] १ च. ज. पालितः. २ क. च. महावीरौ. ३ ग. घ. ज. प्रेषितौ. ४ घ. पुरुषोत्तमाः.

तेषामपि महातेजा रामो रतिकरः पितुः ॥ स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ ६ ॥
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ॥ अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७ ॥
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ यथा वरेण देवानामदितिर्वज्रपाणिना ॥ ८ ॥
स हि रूपोपपन्नश्च वीर्यवाननसूयकः ॥ भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९ ॥
स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ॥ उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १० ॥

षुसत्सुयथातस्यैकोपिनाप्रियोभवति एवंतेषुपुत्रेष्वेकोपिनानिष्टोभूदित्यर्थः । उपमानेस्वशरीरविनिर्वृत्तत्वोक्त्या एतेषुराज्ञःस्वशरीरविनिर्वृत्तत्वाभिमानमात्रमित्युक्तं ॥ ५ ॥ एवंचतुर्णांप्रियत्वाविशेषेपि रामेगुणातिरेककृतप्रीतिविशेषोस्तीत्याह—तेषामिति । तेषामितिनिर्धारणेषष्ठी । भूतानांप्राणिनांमध्ये स्वयंभूः ब्रह्मेव । तेषांपुत्राणांमध्ये गुणवत्तरः अतिशयेनगुणवान् । महातेजाः तादृग्गुणप्रकाशकनिरवधिकतेजस्कः । रामः पितूरतिकरोबभूव । निरतिशयप्रीतिः रतिः ॥६॥ कथमितरापेक्षयागुणवत्तरत्वमित्यपेक्षायांविष्णोः प्रधानावतारत्वादित्याह—सहीति । हीति "अजायमानो बहुधाविजायते" इतिश्रुतिप्रसिद्धिंद्योतयति । देवैः नह्यनन्यप्रयोजनैरर्थितः किंतुप्रयोजनान्तरपरैः । न केवलं प्रयोजनान्तरपरैः अपितु "ईश्वरोहमहंभोगी" इत्येवंदुरभिमानिभिः । मदोपिदीव्यतिधातोरर्थएव । नरकासुरवधेस्वकार्यनिष्पत्त्यनन्तरंपारिजातनिमित्तंकृष्णेनैवयोद्धुमुपक्रान्तैरित्यर्थः । उदीर्णस्य उद्भटस्य । "उदीर्णउद्भटः" इत्याद्यमरः । नैसर्गिकगर्वेणसर्वजगद्विनाशयतइत्यर्थः । वधस्यार्थत्वे हेतुरयं । रावणस्य यैर्वरोदत्तस्तानेवनिलयान्निष्कासयतइत्यर्थः । वधार्थिभिः एकस्यसंहारेणराज्यमखिलंसुखेन वर्तिष्यतइतिप्रपन्नैः । अर्थितः प्रार्थितः । नोपासितः । मानुषेलोके यत्रदेवाअपिमनुष्यगन्धमसहमानाश्छर्दनपूर्वकंकुत्सयन्तोयोजनादुपरिस्थित्वाहविरादददते तेपियस्यमनुष्यस्थानीयाः सोस्मिन्मानुषेलोकेजातः हन्तकिमिदंसौलभ्यमितिभावः । जज्ञे ननृसिंहादिवदाविर्भूतः । सजज्ञे रामोजज्ञे । लोकोहिद्दशमासान्गर्भेऽवस्थायजायते अयं तु "ततश्चद्वादशेमासे" इत्युक्तरीत्याततोप्यधिककालंगर्भेस्थित्वाजज्ञे । विष्णुःव्यापकंवस्तु । व्याप्यैकदेशस्यमत्पुत्रोयमित्यभिमान्यमभूत् । सनातनः नित्यवस्त्वेवमात्मानमन्यथाचकार ॥ ७ ॥ नकेवलंपितुरेवानन्दकरः मातुरपीत्याह—कौसल्येति । अमिततेजसा अपरिमितपराक्रमेण। तेन रामेण। पुत्रेण । कौसल्या देवानांवरेण वज्रपाणिना इन्द्रेण । अदितिर्यथा अदितिरिव । शुशुभे बभौ । तेन सन्तुष्टासीदित्यर्थः ॥ ८ ॥ गुणवत्तरइत्युक्तंप्रपञ्चयति—सहीत्यादीना । सः रामः । रूपोपपन्नः सौन्दर्ययुक्तः । चकारेण "रूपौदार्यगुणैः" इत्युक्तौदार्यादिकंसमुच्चीयते । वीर्यवान् मृगनाभिगन्धवत्स्वयमविकृतएव परेषांविकारकारी । अनसूयकः गुणेषुदोषाविष्करणमसूया अविद्यमानाऽसूयायस्यासावनसूयकः । भूमावनुपमःसूनुः भूमावेवतत्तुल्यःपुत्रः कौसल्यातिरिक्तायाः कस्याश्चिदपिनास्तीत्यर्थः । दिवित्वदितेर्वज्रपाणिरस्त्येवेतिभावः । गुणैराकारेङ्गितचेष्टाभिःदशरथोपमः । दीपादुत्पन्नप्रदीपवत् ॥ ९ ॥ अथदशरथादाधिक्यमाह—सइति । तुशब्देनदशरथाद्वैलक्षण्यमुच्यते । सः रामः । परुषं परुषवचनं । केनचिदुच्यमानोपि उत्तरं उत्तरवचनं । नप्रतिपद्यते नवदतीत्यर्थः । अपिशब्देन तद्वक्तृत्वप्रसक्तिरेवनास्तीतिगम्यते । उत्तराप्रतिपत्तौहेतुः—नित्यंप्रशान्तात्मेति । अक्रोधनस्वभावइत्यर्थः । नकेवलमुत्तराप्रतिपत्तिः किंतुतंपरुषवक्तारंप्रति मृदुपू-

**मुनिभाव०** भूतानां इन्द्रादीनां । स्वयंभूः ब्रह्मा । पितुःस्वपितुर्विष्णोः । ज्येष्ठपुत्रत्वाद्यथाप्रीतिकरः तथैवरतिकरः प्रियकरोबभूव । यद्वा रामःपितुःतेषांभ्रातॄणांचप्रीतिकरः स्वयंभूःपितुर्विष्णोश्चभूतानांचयथाप्रीतिकरस्तथैवेत्यर्थः । विष्णोर्ब्रह्मादिभूतजनकत्वं "यतोवाइमानिभूतानि—" इतिश्रुत्या "आत्मनःप्रथमंपुत्रंब्रह्माणमसृजद्विभुः । ततश्चराचरंविश्वंविष्णुर्विश्वजगन्मयः" इत्यानुशासनिकोक्तप्रक्रिययाच सिद्धमेव ॥ **ति०** वज्रपाणिनाप्रार्थितेनदेवानांवरेणवामनेनादितिरिवेत्यर्थइत्यन्ये । **शि०** वज्रपाणिना इन्द्रेण अदितिर्यथा अदितिरिव शुशुभे । इषुवत्सवितागच्छतीतिवदुपमानोपमेयभावः ॥ ८ ॥ **स०** दशः पक्षीविहंगमइतिहलायुधोक्तेःदशःपक्षीगरुडः सरथोयस्यसदशरथोनारायणःतस्यतुल्यः । "मत्स्यकूर्मवराहाद्यास्समाविष्णोरभेदतः ।

**[ पा० ]** १ ख. ग. यथाचदेवीदेवानां. ख. यथादेवेनदेवानां. ज. यथाचदिविदेवानां. २ ख. छ. सहिवीर्योपपन्नश्चरूपवान्. ३ घ. ङ. झ. ट. सचनित्यं. ख. सहिनित्यं. ४ घ. प्रभाषते.

कथंचिदुपकारेण कृतेनैकेन तुष्यति ॥ न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः ॥ कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥ १२ ॥
बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः ॥ वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ १३ ॥
न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः ॥ अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्जते ॥ १४ ॥

र्वैसान्त्वपूर्वंचभाषते ॥ १० ॥ अथास्यकृतज्ञत्वमाह—कथंचिदिति । कथंचित्कृतेन यथातथावापीत्युक्तरीत्याकृतेन । यद्वा यादृच्छिकप्रासङ्गिकतयाकृतेन । यद्वा प्रयोजनान्तरपरतयाकृतेन कथंचित्कृतेन अहृदयतयाकृतेन। कथंचित्कृतेन पत्रपुष्पाद्यन्यतमेनकृतेन यद्वा स्वस्मात्किंचित्फललाभायकृतेन । यद्वा "साङ्केत्यंपारिहास्यंवास्तोभंहेलनमेववा" इत्येवंकृतेन । उपकारेण अण्वपिमहत्त्वेनाभिमन्यमानस्यभगवतोभिप्रायेणोपकारेणेत्युक्तं। कृतेन कर्तुमीप्सितेन। "आशंसायांभूतवच्च" इतिक्तः । एकेन सकृत्कृतेन। तुष्यति सदाप्रीतिंप्राप्नोति । तोषफलस्यकदाचिदपिनक्षयइतिभावः । एवमुपकारेणतुष्यन्नपकारेणापिकिंकुप्यति नेत्याह—नस्मरतीति । अपकाराणां सम्यक्कृतापराधानां । शतमपि असङ्ख्येयमपि । "शतंसहस्रमयुतंसर्वमानन्त्यवाचकं" इत्युक्तेः । नस्मरति नचिन्तयति । कःपुनःकोपस्यावकाशइतिभावः । उभयत्रहेतुमाह—आत्मवत्तयेति । वशीकृतमनस्कतयेत्यर्थः । यद्वा आत्मवत्तया ज्ञानवत्तया । "उदाराःसर्वएवैते । नकश्चिन्नापराध्यति" इत्येवमध्यवसायवत्तयेत्यर्थः ॥ ११ ॥ अथास्य गुणवर्धकंसत्सङ्गमाह—शीलवृद्धैरिति । शीलं सदाचारः । सज्जनैरितित्रिष्वप्यनुषज्यते। शीलवृद्धैः सदाचारसंपन्नैःसज्जनैः कथयन्नास्त । तैःसहसूक्ष्मतराचारविशेषान्प्रतिपादयन्नास्तेत्यर्थः । ज्ञानवृद्धैः परिपक्वमोक्षविषयिभिः "मोक्षेधीर्ज्ञानं" इत्यमरः । तादृशैः सज्जनैः। कथयन्नास्त। तैर्वेदान्तरहस्यमुद्घाटयन्नास्तेत्यर्थः । वयोवृद्धैःसज्जनैःकथयन्नास्त क्रमागतसंप्रदायविशेषान्कथयन्नास्तेत्यर्थः । सज्जनैरितिसामान्योक्त्याग्राम्यकुलादितारतम्यंनतेनाहृतमित्युच्यते । तृतीययातेषामप्रधानत्वावगमात्स्वयमेवतेषामर्थविशेषंदर्शयतीतिसूचितं । नित्यमित्यनेननेदंकादाचित्कमित्युच्यते । विशेषणत्रयान्तचकारेण ज्ञानशीलवयोवृद्धैः शीलज्ञानवृद्धैः ज्ञानवयोवृद्धैः शीलवयोवृद्धैश्चेतिसमुच्चीयते । नेदंनित्याग्निहोत्रवत्क्वचित्समयइत्याह—अस्त्रेति । अस्त्राणां योग्यः अभ्यासः "योग्योगुणनिकाभ्यासः" इतिवैजयन्ती । तस्यान्तरेषु अवकाशेष्वपि । अपिशब्देनसमयान्तरेतत्कथनं किंपुनर्न्यायसिद्धमित्युक्तं। सत्संगतिंविनाक्षणमपिनतिष्ठतीत्यर्थः ॥ १२ ॥ परायत्तसकलव्यापारत्वमाह—बुद्धिमानिति । बुद्धिमान् प्रशस्तबुद्धिः । कथंसर्वेजनाः सुखंवसेयुरित्येवंसर्वदालोकसंरक्षणचिन्तापरइत्यर्थः । मधुराभाषी मधुरभाषणशीलः । यद्यद्वक्तितन्मधुरमेववदतीत्यर्थः। पूर्वभाषी अतिनीचंप्रत्यपिस्वयमेवपूर्वंभाषमाणइत्यर्थः । प्रियंवदःप्रियवाग्वचनशीलः "प्रियवशेवदःखच्" इतिताच्छील्ये खच् । "खित्यनव्ययस्य" इतिह्रस्वः "अरुर्द्विषदजन्तस्यमुम्" इतिमुमागमः। शत्रुविषयेपिप्रियवचनशीलः । वीर्यवान् आश्रितविरोधिनिरसनक्षमः । पूर्ववीर्यवानित्यविकृतत्वमुक्तमितिनपुनरुक्तिः । महतास्वेनवीर्येणनविस्मितः आश्रितसकलविरोधिनिरसनेकृतेपि "नातिस्वस्थमनाययौ" इत्युक्तरीत्याकिंकृतं मयेत्यपर्याप्तएवस्थितः । "गर्वः स्याद्विस्मयोमदः" इत्यमरः । वर्ततइतिशेषः ॥१३॥ सइतिशेषः । सः रामः । अनृतकथोनभवति। कथा प्रबन्धकल्पना । अनृता असत्या कथा यस्य सतथा । कल्पितेतिवृत्तकासत्काव्यालापवर्जितइत्यर्थः । वेत्तीतिविद्वान् । "विदेःशतुर्वसुः" अनृतकथाभावश्चनतदज्ञानात् । किंतु तद्वर्ज्यत्वज्ञानादित्यर्थः । वृद्धानां पूर्वोक्तत्रिविधवृद्धानां प्रतिपूजकः प्रत्युद्गम्यपूजकः । ब्राह्मणप्रतिपूजकइतिपाठे बालवृद्धसाधारण्येनब्राह्मणमात्रपूजापरः । " दशवर्षश्चब्राह्मणः शतवर्षश्चक्षत्रियः पितापुत्रौस्मृतौविद्धि" इत्यापस्तंबः । प्रजाभिः पण्डितपामराविशेषेणसर्वाभिः प्रजाभिः । अनुरक्तः अनुरागविषयीकृतः । तत्रहेतुमाह प्रजाश्चाप्यनुरञ्जते अनुरञ्जयतीत्यर्थः । अन्तर्भा-

ब्रह्माद्यास्त्वसमाःप्रोक्ताःप्रकृतिश्चसमाऽसमा" इतिवाराहे ॥ ९ ॥ ति० अनुरक्तः अनुरंजितः । अन्तर्भावितण्यर्थः । अनुरज्यते

[ पा० ] १ ङ. झ. कदाचिदुपकारेण. २ ज. शीलवृद्धैस्तपोवृद्धैर्ज्ञानवृद्धैश्च. क. ज्ञानवृद्धैर्वयोवृद्धैःशीलवृद्धैश्च. ख. ग. च. ज. शीलवृद्धैर्वयोवृद्धैर्ज्ञानवृद्धैश्च. ३ ग. नतुवीर्येण. ४ घ. ङ. झ. ट. प्यनुरज्यते.

सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ॥ दीनानुकंपी धर्मज्ञो नित्यं प्रग्रहवाञ्शुचिः ॥ १५ ॥
[1]कुलोचितमतिः क्षात्रं [2]धर्मं स्वं बहुमन्यते ॥ मन्यते [3]परया कीर्त्या महत्स्वर्गफलं ततः ॥ १६ ॥
[4]नाश्रेयसि रतो विद्वान्न विरुद्धकथारुचिः ॥ [5]उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ १७ ॥
अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ॥ लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८ ॥
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥ बहिश्चर इव प्राणो बभूव [6]गुणतः प्रियः ॥ १९ ॥
[7]सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ॥ [8]इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २० ॥

वितण्यन्तोयं । स्वयंपूर्वंप्रजारञ्जयित्वा ततस्ताभिरनुरक्तोभवतीत्यर्थः । चापयःसर्वत्रोक्तगुणसमुच्चयार्थाः ॥ १४ ॥ सानुक्रोशः सदयः । "कृपादयानुकम्पास्यादनुक्रोशः" इत्यमरः । दयाहिनामा परदुःखासहिष्णुत्वं । जितक्रोधः वशीकृतकोपः । नत्ववशेनक्रोधउत्पद्यतइत्यर्थः । ब्रह्म वेदः तद्विदन्तीतिब्राह्मणाः "तदधीतेतद्वेद" इत्यण् । प्रत्युद्गम्यपूजकः प्रतिपूजकः । ब्राह्मणानांप्रतिपूजकइति याजकादित्वात्षष्ठीसमासः । दीनानुकम्पी दीनेषुविशेषतोनुकम्पावान् । विशेषोनाम यत्तदीनोदृष्टः तत्रैवस्थित्वा दानमानादिकरणं । धर्मज्ञसामान्यविशेषधर्मज्ञः । प्रग्रहवान्नियमवान् । "अभयंसर्वभूतेभ्योददाम्येतद्व्रतंमम" इतिवक्ष्यति । शुचिः परस्वानाकाङ्क्षी । "योर्थेशुचिःसहिशुचिर्नमृद्वारिशुचिःशुचिः" इतिमनुस्मरणात् ॥ १५ ॥ कुलोचितमतिः इक्ष्वाकुवंशोचितदयादाक्षिण्यशरणागतसंरक्षणादिधर्मैकप्रवणबुद्धिः । स्वं क्षात्रंधर्मं । दुष्टनिग्रहपूर्वकंप्रजापरिपालनरूपं । बहुमन्यते गौरवेणजानाति । "श्रेयान्स्वधर्मः" इतिश्रवणात्परत्वापादकधर्मेभ्योपि जनित्वार्जितंक्षत्रधर्मंगौरवेणपश्यतीत्यर्थः । बहुमानेहेतुमाह—मन्यतइति । ततः क्षत्रधर्मात् । परयाकीर्त्या महत्स्वर्गफलंभवतीति मन्यते जानाति । स्ववर्णस्वाश्रमोचितधर्मःकीर्तिद्वारास्वर्गसाधनमितिज्ञात्वाक्षत्रधर्मं विशिष्यानुतिष्ठतीत्यर्थः ॥ १६ ॥ अश्रेयसि निष्फलेकर्मणि । नरतः नसक्तः । कादाचित्कलीलाकर्मनदुष्यतीतिभावः । द्यूतादिषुनसक्तइत्यर्थः । तत्रहेतुः विद्वानिति । नविरुद्धकथारुचिः धर्मविरुद्धग्राम्यालापादिषुरुचिरहितः । उत्तरोत्तरयुक्तौ लौकिकवैदिकविषयोत्तरोत्तरयुक्तिकक्ष्यायां । वाचस्पतिर्यथा बृहस्पतिरिव । वक्ता अप्रतिहतवाग्व्यवहारः ॥ १७ ॥ "युवास्यात्साधुयुवाध्यायकः आशिष्ठोदृढिष्ठोबलिष्ठः" इत्यादिश्रुत्यर्थोनेनप्रतिपाद्यते । अरोगः आधिव्याधिरहितः । अनेनआशिष्ठइत्युक्तमशनसामर्थ्यमाशीर्वादविषयत्वं चोक्तं । तरुणः युवा । वाग्मी प्रशस्तवाक् । अनेनयुवाध्यायकइत्युक्तमुक्तं । वपुष्मान् प्रशस्तशरीरः । अनेनबलिष्ठइत्युक्तंकायबलमुक्तं । देशकालवित् अध्ययनेदेशकालज्ञः । अनेनसाधुशब्दार्थोविवृतः । पुरुषसारज्ञः सकृद्दर्शनमात्रेणपुरुषहृदयसर्वस्वज्ञः । "सारोबलेस्थिरांशेच" इत्यमरः । लोके एकः अद्वितीयः साधुरितिविनिर्मितः निश्चितः । "अपकारिषु यःसाधुःससाधुरितिकीर्तितः" इत्युक्तसाधुविशेषत्वज्ञापनं ॥ १८ ॥ श्रेष्ठैः उत्कैरन्यैश्च । गुणैर्युक्तः पार्थिवात्मजः बहिश्चरःप्राणइव प्रजानां गुणतः गुणैः । प्रियोबभूव ॥ १९ ॥ केचिद्विद्यामात्रेणस्नाताः केचिद्व्रतमात्रेणस्नाताः रामस्तुविद्याव्रताभ्यांस्नातः "अधीत्यस्नायात्" इतिस्मृत्युक्तरीत्यासम्यग्वेदानधीत्यव्रतानिचकृत्वा कृतसमावर्तनइत्यर्थः । यथावत् तत्वतः । साङ्गवेदवित् साङ्गवेदार्थज्ञः । अनयापृथगुक्त्याअध्ययनमक्षरराशिग्रहणफलमित्यवगम्यते । इषवः अमन्त्रकाःशराः । अस्त्राणिसमन्त्रकाः । सेनाङ्गत्वादेकवद्भावः । इष्वस्त्रविषये । पितुः दशरथात् । श्रेष्ठः दशरथादवराः खल्वितरेधन्विनइतिभावः । भरताग्रजः । अस्मिन्नर्थेभरतेननिरूपणीयोरामः "महेष्वासेमहाप्राज्ञेभरते

अनुरञ्जयति । तेनपरस्परानुरागः ॥ १४ ॥ **ति०** प्रग्रहः दुष्टनिग्रहः इन्द्रियनिग्रहश्च । **शि०** सानुक्रः अनुक्रेण स्वीयपालनविषयकनिरन्तरयत्नेन सहितः । अशः स्वतनुप्रकाशद्वारासर्वत्रपूर्णः ॥ १५ ॥ अश्रेयसि अश्रेयस्करे निषिद्धकर्मणीत्यर्थः ॥ १७ ॥ **शि०** पुरुषसारात्महात्मनः जानातीतिपुरुषसारज्ञः ॥ १९ ॥ **ती०** प्राणत्वेननिरूपणात् प्रजानांरामभद्रादधिकमभिमतवस्तु-

**[ पा० ]** १ घ. कुलोचितमिदंक्षात्रंधर्मंस्वमितिमन्यते. २ ङ. च. झ. ञ. ढ. स्वधर्मंबहुमन्यते. ३ ट. परयाप्रीत्या. ४ ख. ग. ङ. छ. ज. झ. ट. नाश्रेयसिरतोयश्च. च. नाश्रेयसपरोनित्यं. क. नाश्रेयसिपरोनित्यं. घ. ज. नाश्रेयसिरतोनित्यं. ५ ङ. च. झ. उत्तरोत्तरयुक्तीनां. ६ ग. ज. गुणवत्तरः. ७ ङ. छ. झ. ञ. ट. सर्वविद्याव्रतस्नातो. ८ क. इष्वस्त्रेष्वपितुश्रेष्ठो.

**कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ॥ वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१ ॥**
**धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ॥ लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२ ॥**
**निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् ॥ अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३ ॥**
**दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः ॥ निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४ ॥**
**शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ॥ यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥ २५ ॥**
**सत्संग्रहप्रग्रहणे स्थानविन्निग्रहस्य च ॥ आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ॥ २६ ॥**
**श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ॥ अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७ ॥**

**स्वयमागते''** इतिरामस्यवचनात् ॥ २० ॥ अभिजनः मातृपितृवंशः । कल्याणः शोभनः अभिजनो येन सतथा । तत्रहेतुः—साधुरिति । निर्दोषइत्यर्थः । अदीनः क्षोभहेतुषुसत्स्वप्यक्षोभ्यान्तःकरणः । सत्यवाक् अतिकृच्छ्रेपिसत्यवचननिरतः । ऋजुः स्वाराध्यः । अभिविनीतः सुशिक्षितः ॥ २१ ॥ धर्मकामार्थतत्वज्ञः "नपूर्वाह्णमध्याह्नापराह्णानफलान्कुर्या" दिति स्मृत्युक्तरीत्या पूर्वाह्णादिषुकालेषुकर्तव्यधर्मार्थकामज्ञइत्यर्थः । स्मृतिमान् ज्ञातार्थविषयेविस्मरणरहितः । प्रतिभानवान् "प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः" इतिप्रोक्तलक्षणप्रतिभानयुक्तः । लौकिके लोकैकप्रमाणके । समयाचारे साङ्केतिकाचारे । " संकेतस्तुसमयः" इत्यमरः । कृतकल्पः कृतसंस्थापनः । विशारदः तदाचरणसमर्थः ॥ २२ ॥ निभृतः विनीतः । "वश्यःप्रणेयोनिभृतविनीतप्रश्रिताःसमाः" इत्यमरः । संवृताकारः हृदिस्थितकर्तव्यार्थव्यञ्जकेङ्गिताकारगोपनचतुरः । संवृतत्वं गूढत्वं । गुप्तमन्त्रः फलपर्यन्तमन्यैरविदितमन्त्रइत्यर्थः । सहायवान् प्रशस्तमन्त्रयुक्तः । अमोघक्रोधहर्षः फलपर्यवसायिकोपसन्तोषः । त्यागसंयमकालवित् । वस्तुत्यागतत्संग्रहणकालवित् ॥२३॥ दृढभक्तिः देवगुर्वादिषुनिश्चलभक्तिः । स्थिरप्रज्ञः भक्तिजन्याप्रकंप्यतत्वज्ञानः । अतएवनासद्ग्राही नासदर्थग्राही । असज्जनसंग्रहणरहितोवा । नदुर्वचाः नपरुषभाषी । निस्तन्द्रिः आलस्यरहितः । सर्वदाशास्त्रपरिशीलनपरइत्यर्थः । अतएवाप्रमत्तः शास्त्रार्थेष्वनवधानरहितः । स्वदोषपरदोषवित् । लोकेकश्चित्पश्यतिपरदोषं आत्मदोषंनपश्यति । अयंतुनतथा । परदोषवत्स्वदोषंचपश्यत्येव । वक्ष्यतिभरतंप्रति । " शिरसायाचतस्तस्यवचनंनकृतंमया " इति ॥२४॥ शास्त्रज्ञः साङ्गवेदातिरिक्तविद्यास्थानज्ञः । कृतं कृतान्तं सिद्धान्तं जानातीतिकृतज्ञः । अतः "कथंचिदुपकारेण कृतेनैकेनतुष्यति " इत्यनेननपुनरुक्तिः । पुरुषाणामन्तरं तारतम्यं तत्रकोविदःपण्डितः । पुरुषदर्शनमात्रेणायंसाधुरयमसाधुरिति तत्तत्स्वरूपविशेषज्ञइत्यर्थः । यः प्रसिद्धः । प्रग्रहः मित्रादिस्वीकारः । अनुग्रहः स्वीकृतपरिपालनं । तयोः यथान्यायं यथाशास्त्रं । विचक्षणः समर्थः । शास्त्रमर्यादामनतिक्रम्यमित्रस्वीकारादिकृदित्यर्थः । "सुप्सुपा" इतिसमासः ॥ २५ ॥ सतां संग्रहे स्वीकारे । प्रग्रहणे परिपालनेच । विचक्षणइतिशेषः । निग्रहस्य असन्निग्रहस्यच । स्थानवित् अवकाशवित् । " अवकाशेस्थितौस्थानं" इत्यमरः । आयकर्मणि न्यायप्राप्तधनार्जनकर्मणि । उपायज्ञः । पुष्पेभ्योमधुमधुकरइव अपीडनेनप्रजाभ्योधनमादातुं चतुरइत्यर्थः । संदृष्टव्ययकर्मवित् "कच्चिदायस्यचार्धेनचतुर्भागेनवापुनः । पादभागैस्त्रिभिर्वापिव्ययःसंचोद्यतेबुधैः" इत्यादिशास्त्रावगतव्ययकर्मज्ञः ॥२६॥ शास्त्रसमूहेषु वेदवेदाङ्गेषु । श्रैष्ठ्यंमहातात्पर्यज्ञत्वं । प्राप्तः । व्यामिश्रकेषु संस्कृतप्राकृतभाषात्मककाव्यनाटकालंकारादिषुच । श्रैष्ठ्यंप्राप्तइत्यनुषङ्गः । अर्थधर्मौसंगृह्य सुखतन्त्रः सुखपरतन्त्रः । अर्थधर्मसंग्रहणपूर्वकमेवसुखसेवी नतुकेवलकामपरतन्त्रइत्यर्थः । नचालसः ।

नास्तीतियोत्यते । **ति०** एवंश्रेष्ठगुणैर्युक्तत्वोपदेशेपिदार्ढ्यायसत्यलप्रलापनायचपुनरुपदिशति—**सत्विति** ॥२०॥ **ती०** कल्याणाभिजनः कल्याणानांजन्मभूमिः । **शि०** कल्याणाभिजनः कल्याणानिआश्रितानांमङ्गलानिअभिजनयत्युत्पादयतिसः ॥ २१ ॥ **ति०** गुप्तैर्मित्रैस्सहायवानितिपाठःप्रचुरः ॥ २३ ॥ **मुनिभाव०** प्रग्रहानुग्रहयोः प्रग्रहः शरणागतस्यप्रथमस्वीकारः । अनुग्रहोनामस्वीकृतस्यपरिपालनं । यद्वा प्रग्रहः करादीनांप्रग्रहणं । अनुग्रहः तस्मिन्सावशेषग्रहणम् ॥ २५ ॥ **ती०** सत्संग्रहस्सदाचारः

**[ पा० ]** १ ङ. झ. ट. सत्संग्रहानुग्रहणे. २ क. ख. घ. सदृष्टव्यय.

वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् ॥ आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥२८॥
धनुर्वेदविदांश्रेष्ठो लोकेऽतिरथसंमतः ॥ अभियाता प्रहर्ता च सेनानयविशारदः ॥
अप्रधृष्यश्च संग्रामे क्रुद्धैरपि सुरासुरैः ॥ २९ ॥
अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ॥ न चावमन्ता भूतानां न च कालवशानुगः ॥ ३० ॥
एवं श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥ संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ॥
बुद्ध्या बृहस्पतेस्तुल्यो वीर्येणापि शचीपतेः ॥ ३१ ॥
तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः ॥ गुणैर्विरुरुचे रामो दीप्तैः सूर्य इवांशुभिः ॥ ३२ ॥
तमेवं व्रतसंपन्नमप्रधृष्यपराक्रमम् ॥ लोकपालोपमं नाथमकामयत मेदिनी ॥ ३३ ॥

अर्थधर्मसंग्रहेनिरालस्यः ॥ २७ ॥ वैहारिकाणां विहारप्रयोजनानां । "तदस्यप्रयोजनं" इतिठक् । शिल्पानां गीतवादित्राणां चित्रकर्मादीनांच । विज्ञाता विशेषज्ञः । अर्थविभागवित् "धर्माययशसेऽर्थाय आत्मनेस्वजनायच ॥ पञ्चधाविभजन्वित्तमिहामुत्रच- शोभते" इत्युक्तविभागवित् । वारणवाजिनां गजानामश्वानांच । आरोहे आरोहणे । विनये आरुह्यशिक्षणेच । युक्तः समर्थः ॥ २८ ॥ धनुरित्यर्धाधिकः । धनुरादिस्वरूपप्रतिपादकोवेदोधनुर्वेदः । उपवेदत्वाद्धनुर्वेदस्यवेदत्वं । तद्विदांमध्येश्रेष्ठः । सममर्मधनुर्वेदविदित्यर्थः । लोके सर्वत्र । अतिरथानां अप्रतिहतरथगतीनां । संमतः पूजितः । "मतिबुद्धि" इत्यादिनाक्तः । "क्तेनचपूजायां" इतिसमासप्रतिषेधाभाव आर्षः । अभियाता शत्रुसमागमानन्तरंनप्रहर्तुमिच्छति किंतुस्वयमेवयत्रशत्रवस्तत्रगच्छति । तत्रापिनदुर्गप्रदेशावलंबनेनयाति किंत्वभियाता अभिमुखंयाता । प्रहर्ताचअभिगम्यनयोधैर्योधयति किंतुस्वयमेव नासीरेस्थित्वा प्रथमंप्रहरति । सेनानयविशारदः स्वयंप्रहरन्नपिनस्वसेनांछेदयति किंतुपरदुरवगाहचक्रव्यूहादिविभागेनसेनाप्रापणसमर्थः । अप्रधृष्यश्च प्रधर्षयितुमशक्यः सर्वथाविजयीत्यर्थः । संग्रामे । प्रणत्यातुजेतुंशक्यइत्यर्थः । नकेवलंमनुष्यैः सुरासुरैः परस्परविरोधंविहायमिलितैरपि । नचोपशान्तैः । क्रुद्धैः क्रोधपरवशैः ॥ २९ ॥ एवंकल्याणगुणपरिपूर्णत्वमुक्तं । अथहेयप्रत्यनीकत्वमाह—अनसूयइति । अनसूयः असूयारहितः । जितक्रोधः क्रोधपारवश्यरहितः । नदृप्तः नगर्विष्ठः । नचमत्सरी परसंपद्द्विषयेद्वेषरहितः । "मत्सरोन्यशुभद्वेषे"इत्यमरः । नच कालवशानुगः सत्वरजस्तमःप्रधानकालानुगुणसत्वरजस्तमोगुणोनभवति । केवलसत्वमूर्तिरित्यर्थः ॥३०॥ उक्तगुणोपसंहारपूर्वकंगुणान्तराण्याह—एवमिति। एवं उक्तप्रकारेण । पार्थिवात्मजः रामः । प्रजानांमध्ये श्रेष्ठैर्लोकोत्तरैर्गुणैर्युक्तः । त्रिषुलोकेषु संमतः पूजितः। क्षमागुणैः क्षमारूपगुणैः । बहुवचनंप्रकारभेदाभिप्रायेण । वसुधायाः भूमेः तुल्यइतिवक्ष्यमाणमनुषज्यते ॥३१॥ उपसंहरति—तथेति । तथा पूर्वोक्तरीत्या । सर्वप्रजाकान्तैः स्त्रीबालयुववृद्धानांप्रियैः प्रीतिसंजननैः। दृष्टान्तार्थमिदं। पितुरिवसर्वेषांप्रियैरित्यर्थः । एवंभूतैर्गुणैः रामः स्वतःसुन्दरः । स्वतोदीप्तः सूर्योंशुभिरिव । विरुरुचे बभौ ॥३२॥ एवंरामगुणान्प्रदर्श्य तत्कृतंभूम्युपलक्षितसकललोकप्रावण्यंदर्शयति—तमेवमिति । एवं गुणसंपन्नत्ववत् । व्रतसंपन्नं

तस्यप्रग्रहणेअनुष्ठानइत्यर्थः । **शि०** सतां महात्मनां संग्रहः स्वीकारः अनुग्रहणं तत्सेवनं तयोस्समाहारः ॥ २६ ॥ **ति०** सिद्धानामितिपाठेसिद्धाःदेवभेदाइतिकतकक्रुत् । **शि०** अजितक्रः अजितः पराभवितुमशक्यः क्रः कृतिर्यस्यसः । तत्रहेतुः अधः नधो धाता यस्यसः स्वसत्ताश्रितइत्यर्थः ॥ ३० ॥ **ती०** क्षमागुणैः क्षान्तिप्रधानैर्गुणैरितिमध्यमपदलोपिसमासः । **शि०** बृहस्पतेःशचीपतेश्चबुद्ध्या अतुल्यः तोलयितुमशक्यः । कर्मणियत् । संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः । नञर्थलाभस्तुवीर्येशब्दात्पूर्वमकारं छित्वा ॥ ३१ ॥ **तनि०** एवंवृत्तसंपन्नं सदाचारसंपन्नं । लोकपालउपेन्द्रः । तस्यस्थितिकर्तृत्वेनावतारात्सउपमायस्यतं । नाथत्वेनाकामयत । मेदिनीशब्देनमेदिनीस्थायिनोजनालक्ष्यन्ते "मञ्चाःक्रोशन्ति" इतिवदितिकेचित् । मेदिनी तदधिष्ठानदेवता अका-

**[ पा० ]** १ घ. विज्ञाताक्षविभागवित्. २ ख. रथसत्तमः. ३ ङ. झ. ट. नावज्ञेयश्चभूतानां. ४ क. घ. श्रेष्ठगुणैः. ५ ङ. च. छ. झ. ञ. ट. वीर्येचापि. ६ क. दीप्तैस्सूर्य. ७ क—ट. तमेवंवृत्तसंपन्नं. ८ क. ञ. अप्रमेयपराक्रमम्. ९ च. छ. ञ. लोकनाथोपमं. घ. लोकपालोपमंरामं.

एतैस्तु बहुभिर्युक्तं गुणैरनुपमैः सुतम् ॥ दृष्ट्वा दशरथो राजा चक्रे चिन्तां परंतपः ॥ ३४ ॥
अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ॥ प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ ३५ ॥
एषा ह्यस्य परा प्रीतिर्हृदि संपरिवर्तते ॥ कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३६ ॥
वृद्धिकामो हि लोकस्य सर्वभूतानुकंपनः ॥ मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३७ ॥
यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ ॥ महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३८ ॥
महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम् ॥ अनेन वयसा दृष्ट्वा यथा स्वर्गमवाप्नुयाम् ॥ ३९ ॥
इत्येतैर्विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः ॥ शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः ॥ ४० ॥
तं समीक्ष्य महाराजो युक्तं समुदितैः शुभैः ॥ निश्चित्य सचिवैः सार्धं युवराजममन्यत ॥ ४१ ॥
दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् ॥ संचचक्षे च मेधावी शरीरे चात्मनो जराम् ॥ ४२ ॥

आश्रितसंरक्षणरूपव्रतसंपन्नं । अप्रधृष्यपराक्रमं अकुण्ठपराक्रमं । सर्वेलोकपालाउपमायस्यतं रामं । मेदिनीनाथं अकामयत भूमेर्नाथत्वोचितोऽभूदित्यर्थः । अथवा एवं बालकाण्डोक्तरीत्या व्रतसंपन्नं । "रामस्तुसीतयासार्धं" इत्युक्तरीत्याक्रीडारससंपन्नं । अप्रधृष्यपराक्रमं विरोधिवर्गनिवर्त्यसात्म्यभोगप्रदं । लोकान्पालयतीतिलोकपालः । समस्तोपभोगसाधनसंपन्नइत्यर्थः । उप समीपे मा लक्ष्मीः सीतारूपा यस्यसः उपमः लोकपालश्चासावुपमश्चेति समासः । तं लक्ष्म्याभोगाननुभवन्तंरामं । मेदिन्यपिनाथमकामयत । स्वयंवरेणकण्ठेमालिकांदातुमैच्छदित्यर्थः ॥ ३३ ॥ नकेवलंलोकस्तंनाथमकामयत राजापीत्याह—एतैरिति । एतैः पूर्वोक्तैः । बहुभिः असङ्ख्येयैः । अनुपमैः लोकेकुत्राप्येतादृशगुणादर्शनादसदृशैः । गुणैर्युक्तंसुतंदृष्ट्वा राजा राज्यभरणश्रान्तः । परंतपः शत्रुसंहारव्यग्रः दशरथः । चिन्तां मनोरथं चक्रे ॥ ३४ ॥ तामेवचिन्तांस्पष्टयति—अथेत्यादिनास्वर्गमवाप्नुयामित्यन्तेन । अथ रामगुणदर्शनानन्तरं । चिरजीविनः वृद्धस्य । वयोवृद्धस्येतिज्ञानवृद्धव्यावृत्तिः । वृद्धत्वात्प्रीतिरित्युच्यते । एवं एवंप्रकारेणेत्यर्थः । मयिजीवतिरामः कथंराजास्यादित्येषाप्रीतिर्बभूव । अत्रकथमित्युक्तिः कैकेयीवरदानकृतविघ्नशङ्काप्रतिसंधानेन ॥ ३५ ॥ प्रीतेरौत्कट्यमाह—एषेति । अत्रान्तेइतिकरणंद्रष्टव्यं । द्रक्ष्यामि इत्येषा । परा निरतिशया । प्रीतिः । अस्य दशरथस्य । हृदिसंपरिवर्तते सम्यक् अविच्छिन्नंअनुवर्तते ॥ ३६ ॥ अथरामस्यराजत्वयोग्यतानुसन्धानं दशरथस्यदर्शयतिश्लोकत्रयेण—वृद्धिकामइत्यनेनापूर्वैश्वर्यप्रदत्वमुक्तं । सर्वभूतान्यनुकंपयतीतिसर्वभूतानुकंपनः । कर्तरिल्युट् । अनेनभ्रष्टैश्वर्यसाधकत्वमुक्तं । ममात्मजइतिशेषः । दानेसंतापहारित्वेचदृष्टान्तमाह—वृष्टिमान्पर्जन्यइवेति । लोकेविषये । मत्तःप्रियतरः अतिशयेनप्रीतिमान् । प्रीणातीतिप्रियः पचाद्यच् ॥ ३७ ॥ पूर्वंप्रियतरत्वमुक्तं अत्रतद्धेतुगुणवत्तरत्वमुच्यते—यमशक्रसमइति । प्रत्येकंसाम्यानर्हत्वाद्यमशक्रेत्युक्तं ॥ ३८ ॥ यथास्वर्गं स्वसदृशं स्वसुकृतानुरूपंस्वर्गमित्यर्थः । यद्वा यथास्वर्गं यथाभूतस्वर्गं । "यस्त्वयासहसस्वर्गः" इत्युक्तरामसौन्दर्यानुभवस्वर्गमित्यर्थः ॥ ३९ ॥ श्लोकद्वयमेकान्वयं । इति पूर्वोक्तरीत्या । विविधैस्तैस्तैः तत्तत्कार्यभेदेनप्रसिद्धैः । अन्यपार्थिवदुर्लभैः सामान्यराजदुर्लभैः । शिष्टैः उक्तव्यतिरिक्तसौशील्यादिभिः । अपरिमेयैः असङ्ख्येयैः । कतिपयगुणाःप्रदर्शिताः शिष्टास्त्वपरिमेयाइतिभावः । लोके लोकोत्तरैःलोकेकुत्राप्येवंलोकोत्तरगुणानसन्तीत्यर्थः । समुदितैः स्वाभाविकैः । शुभैः कल्याणतमैः । एतैर्गुणैर्युक्तं तं रामं समीक्ष्य । महाराजः दशरथः । सचिवैःसार्धंनिश्चित्य युवराजममन्यत अयंयुवराजोभवेदितिनिश्चितवानित्यर्थः ॥ ४०–४१ ॥ अथसद्योरामाभिषेककर्तव्यताहेतुं स्वविपत्तिसूचकं दुर्निमित्तमा-

मयत शिष्टपरिपालनदुष्टनिग्रहयोर्मेदिन्याएवहर्षहेतुत्वात् । तथोक्तं "भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः । आक्रान्ताभूरिभारेण ब्रह्माणंशरणंययौ" इति ॥ ३३ ॥ ति० यौवराज्यं तस्येतिशेषः ॥ ४१ ॥

[ पा० ] १ घ. संप्रतिवर्तते. २ ङ. झ. ट. भूतानुकंपकः. ३ क. च. छ. झ. ञ. ट. इत्येवंविविधैः. ४ घ—झ. ट. लोकेलोकोत्तमैर्गुणैः. क. लोकपालोपमैर्गुणैः. ५ ङ. छ. झ. ञ. ट. तंसमीक्ष्यतदाराजा. क. तंसमीक्ष्यमहातेजाः. ६ क—ट. गुणैः. ७ छ. झ—ठ. यौवराज्यममन्यत. ८ ङ. च. छ. झ. ञ. ट. संचचक्षेऽथ.

पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः ॥ लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ॥ ४३ ॥
आत्मनश्च प्रजानां च श्रेयसे च प्रियेण च ॥ प्राप्तकालेन धर्मात्मा भक्त्या त्वरितवान्नृपः ॥ ४४ ॥
नानानगरवास्तव्यान्पृथग्जानपदानपि ॥ समानिनाय मेदिन्याः प्रधानान्पृथिवीपतीन् ॥ ४५ ॥
न तु केकयराजानं जनकं वा नराधिपः ॥ त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४६ ॥
तान्वेश्मनानाभरणैर्यथार्हं प्रतिपूजितान् ॥ ददर्शालंकृतो राजा प्रजापतिरिव प्रजाः ॥ ४७ ॥
अथोपविष्टे नृपतौ तस्मिन्परबलार्दने ॥ ततः प्रविविशुः शेषा राजानो लोकसंमताः ॥ ४८ ॥
अथ राजवितीर्णेषु विविधेष्वासनेषु च ॥ राजानमेवाभिमुखा निषेदुर्नियता नृपाः ॥ ४९ ॥
स लब्धमानैर्विनयान्वितैर्नृपैः पुरालयैर्जानपदैश्च मानवैः ॥
उपोपविष्टैर्नृपतिर्वृतो बभौ सहस्रचक्षुर्भगवानिवामरैः ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे प्रथमः सर्गः ॥ १ ॥

---

त्मनोजरांचालोचितवानित्याह—दिवीति । दिव्यन्तरिक्षे भूमौचयान्युत्पातानितज्जंभयमित्यर्थः । तानिचोक्तानि ज्योतिःशास्त्रे । "स्वर्भानुकेतुनक्षत्रग्रहताराऽर्कचन्द्रजं । दिविचोत्पद्यतेयच्चतद्दिव्यमितिकीर्तितं ।वाय्वभ्रसंध्यादिग्दाहपरिवेषतमांसिच । खपुरंचेन्द्रचापंचतद्विद्यादन्तरिक्षजं । भूमावुत्पद्यतेयच्चस्थावरंवाथजङ्गमं।तदैकदेशिकंभौममुत्पातंपरिचक्षते" इति । भयावहानिघोराणिदिव्याद्युत्पातानीतिफलितार्थः । मेधावी सूक्ष्मदर्शी राजा । संचचक्षे दृष्टवान् । सचिवायोक्तवानितिवा । आत्मनः शरीरेजरांचसंचचक्षे । स्वभावआर्षः ॥ ४२ ॥ एवंरामाभिषेकेहेतुद्वयमुक्तं । सर्वलोकप्रियत्वंचहेतुमाह—पूर्णचन्द्राननस्येति । अथ उत्पातदर्शनानन्तरं । पूर्णचन्द्राननस्य तद्वत्सर्वसंतापहरस्य । महात्मनः महामतेः । रामस्य । लोकेविषये संप्रियत्वं । कीदृशं । आत्मनः स्वस्यशोकापनुदं उत्पातादिभयनिवर्तकं । सम्यक्प्रियत्वं । बुबुधे अनुसंदधावित्यर्थः ॥४३॥एवमनुसंधानप्रयोजनमाह—आत्मनइति । आत्मनःप्रजानांच श्रेयसे हितार्थाय । प्रियेणच प्रियायच । चतुर्थ्यर्थेतृतीया । धर्मात्मा धर्मशीलः । धर्मेणप्राणिसंरक्षकः । नृपः । प्राप्तकालेनोपलक्षितःसन् । भक्त्या प्रीत्या । त्वरितवान् प्राप्तकालत्वं स्वस्यवृद्धत्वं रामयौवनं वसन्तकालोवा ॥४४॥ नानानगरेषुवसन्तीतिनानानगरवास्तव्याः तान् । "वसेस्तव्यत्कर्तरिणिच्च"इति कर्तरितव्यत्प्रत्ययः । पृथग्जानपदान् जनपदान्तरस्थान् । मेदिन्याः भुवः । प्रधानान् नकेवलानवान्तरनृपतीनित्यर्थः । पृथक्समानिनायेतिवा ॥ ४५ ॥ श्रोष्यतइत्यनन्तरमितिकरणंद्रष्टव्यं । अनानयनेहेतुमाह—त्वरयेति । दूरवर्तित्वादितिभावः । केकयराजानमित्यत्र समासान्तविधेरनित्यत्वाट्टजभावः ॥४६॥ प्रथमंवेश्मनानाभरणैःप्रतिपूज्यपश्चात्तान्ददर्शेत्यर्थः ॥४७॥ दर्शनप्रकारमेवाह—अथेति । प्रविविशुः सभामितिशेषः। शेषाः केकयराजजनकभिन्नाः ॥ ४८॥ राजवितीर्णेषु राजदत्तेषु । नियताः नियतदेशाधिपत्याः अन्तरङ्गावा । पादाप्रसारणादिनियमयुक्तावा ॥४९॥ लब्धमानैःप्राप्तबहुमानैः । पुरालयैः नानानगरवासिभिः । उपोपविष्टैः राजवचनश्रवणादरेणमन्दंमन्दंसमीपंप्राप्तैः । नृपैः मानवैश्चवृतोनृपतिः । भगवान् माहात्म्यवान् । सहस्रचक्षुः इन्द्रइव बभौ ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

---

ति० पुरालयैः राजसेवार्थंसदाऽयोध्यास्थितैः ॥ ५० ॥ इतिप्रथमस्सर्गः ॥ १ ॥

[ पा० ] १ ख. घ. च. श्रेयसाच. २ च. ञ. प्राप्तकालेसधर्मात्मा. ङ. छ. झ. ट. प्राप्तेकालेस. ३ क. ङ. च. झ. ट. मेदिन्यां. ४ ख. ङ. छ. झ. ञ. ट. पृथिवीपतिः. ५ अयंश्लोकः क. ख. घ—छ. झ. ञ. ट. पुस्तकेषु तान्वेश्मेत्युत्तरश्लोकादनन्तरंदृश्यते. ६ क. घ. नराधिपं. ७ क. ख. घ—छ. ञ. ट. परपुरार्दने. ८ च. ञ. राज्ञावितीर्णेषु. ९ क. संयतान्नृपाः.

## द्वितीयः सर्गः ॥ २ ॥

दशरथेनसदस्यान्प्रतिस्वस्यजरासंभवाद्रामेराज्यभारस्थापनेनविश्रमेच्छानिवेदनेतैस्तदङ्गीकरणम् ॥ १ ॥ पुनस्तेनतदभिप्रायजिज्ञासयारामस्ययौवराज्याभिषेकाङ्गीकारकारणप्रश्नेतैस्तद्गुणानुवादपूर्वकमभिषेककरणप्रार्थना ॥ २ ॥

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ॥ हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १ ॥
दुन्दुभिस्वनकल्पेन गंभीरेणानुनादिना ॥ स्वरेण महता राजा जीमूत इव नादयन् ॥ २ ॥
राजलक्षणयुक्तेन कान्तेनानुपमेन च ॥ उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३ ॥
विदितं भवतामेतद्यथा मे राज्यमुत्तमम् ॥ पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ ४ ॥
सोहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः परिपालितम् ॥ श्रेयसा योक्तुकामोस्मि सुखार्हमखिलं जगत् ॥ ५ ॥
मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ॥ प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥
इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ॥ पाण्डुरस्यातपत्रस्य च्छायायां जरितं मया ॥ ७ ॥
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ॥ जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८ ॥
राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः ॥ परिश्रान्तोस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९ ॥

अथरामाभिषेकस्यसर्वसंमतत्वंदर्शयतिद्वितीये—ततइत्यादि । ततःराजादिनिवेशानन्तरं । परिषदं पौरजानपदसमूहं । आमन्त्र्य अभिमुखीकृत्य । हितं श्रेयस्करं । उद्धर्षणं उत्कृष्टहर्षजनकं । प्रथितं प्रकटार्थं । एवं वक्ष्यमाणरीत्या ॥ १ ॥ प्रथितमुवाचेत्युक्तंविशदयति—दुन्दुभिस्वनकल्पेनेति । दुन्दुभिस्वनकल्पेन भेरीस्वनसदृशेन । ईषदसमाप्तौकल्पप्प्रत्ययः । गंभीरेण गंभीरार्थेन । अनुनादिना दिशःप्रतिध्वनयता । स्वरेण महतास्वरेण नादयन् । जीमूतइव मेघइवस्थितः । राजा उवाच । पुनःस्वरःकीदृशः । राजलक्षणयुक्तेन प्रभावानुरूपेण । कान्तेन मृदुना । रसयुक्तेन माधुर्यवता ॥ २—३ ॥ स्वकृतराज्यपरिपालनस्यपूर्वकृतपालनादविशेषंसूचयन्नाह—विदितमिति । अन्तेइतिकरणंद्रष्टव्यं । उत्तमं विपुलं । मे एतद्राज्यं । ममपूर्वकैः पूर्वैः । राजेन्द्रैः रघुप्रभृतिभिः । सुतवत्परिपालितं अतिप्रेम्णासुरक्षितं । इत्येतद्भवतांविदितं । "क्तस्यचवर्तमाने" इतिषष्ठी । भवद्भिर्विदितमित्यर्थः ॥ ४ ॥ अस्तुततःकिमित्यत्राह—सोहमिति । सः तद्वंश्यः । अहं । इक्ष्वाकुभिः इक्ष्वाकुवंश्यैः । सर्वैर्नरेन्द्रैः परिपालितं अतएवसुखार्हं अखिलं जगत् राज्यं । श्रेयसा सुखेन । अधुनापि योक्तुकामयत्इति योक्तुकामः । अस्मि "तुंकाममनसोरपि" इतिमकारलोपः । योक्तुमिच्छामीत्यर्थः ॥ ५ ॥ ननुभवत्कृतंपालनमेवास्माकंश्रेयइत्यत्राह—मयापीति । पूर्वैः राजभिः । आचरितं क्षुण्णं । पन्थानं मर्यादां । अनुगच्छता अनुसरता । नित्यं अनिद्रेण जागरूकेण । मयापि प्रजाः यथाशक्त्यभिरक्षिताः । यथाशक्तीतिविनयोक्तिः ॥ ६ ॥ तर्हीदानीमपितथैवरक्ष्यतामित्यत्राह—इदमिति । कृत्स्नस्यलोकस्य जनस्य । हितं चरता कुर्वता । मया । इदं शरीरं । भवतांप्रत्यक्षंहीतिभावः । पाण्डुरस्यातपत्रस्य श्वेतस्यछत्रस्य । छायायांजरितं संजातजरंकृतं । जरापर्यन्तमेकच्छत्रतयापराक्रमनिधिर्भूत्वा मयानियमेन लोकहितमाचरितमित्यर्थः ॥ ७ ॥ तर्हिसंप्रतिकिंकर्तव्यमित्यत्राह—प्राप्येति । बहूनि वर्षसहस्राणि षष्टिवर्षसहस्रपरिमितानि । आयूंषि । प्राप्य जीवतः क्रमेण जीर्णस्यास्यशरीरस्य । विश्रान्तिं राज्यभाराद्विरतिं । अभिरोचये इच्छामि । एतेनययातिवद्विषयचापलेननराज्याद्विरम्यतइतिदर्शितं ॥ ८ ॥ इतःपरंराज्यवहनाशक्तौनिमित्तमाह—राजेति । राजप्रभावैः शौर्यादिभिः । जुष्टां सेवितुमर्हां । अजितेन्द्रियैः विषयपरैः ।

शि० हितं सर्वोपकारकं ॥ १ ॥ ति० अनिद्रेण स्वसुखनिरपेक्षेण ॥ ६ ॥

[ पा० ] १ घ. प्रश्रितंवचः. २ घ. ङ. झ. ट. दुन्दुभिस्वर. ३ घ. च. छ. झ. ञ. ट. त्प्रतिपालितम्. ४ घ. च. छ. झ. ञ. ट. प्रतिपालितम्. ५ घ—छ. झ. ञ. ट. योक्तुमिच्छामि. ६ क. मयाचाचरितं. ७ ग, ज मतन्द्रेण. ८ क, लोकस्यकृत्स्नस्य. ९ घ. विश्राममभिरोचये. १० च, छ, झ. ञ. ट, जुष्टांच.

सोऽहं विश्रममिच्छामि पुत्रं कृत्वा प्रजाहिते ॥ सन्निकृष्टानिमान्सर्वाननुमान्य द्विजर्षभान् ॥ १० ॥
अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः ॥ पुरंदरसमो वीर्ये रामः परपुरंजयः ॥ ११ ॥
तं चन्द्रमिव पुष्येण युक्तं धर्मभृतांवरम् ॥ यौवराज्ये नियोक्तास्मि प्रीतः पुरुषपुङ्गवम् ॥ १२ ॥
अनुरूपः स वै नाथो लक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३ ॥

दुर्वहां तादृशप्रभावरहितैर्वोढुमशक्यां । गुर्वीं बहुसाधननिर्वाह्यां । लोकस्य धर्मधुरं धर्मस्थापनरूपभारं । वहन्नहं परिश्रान्तोस्मि ॥ ९ ॥ विवक्षितमर्थंदर्शयति —सइति । सः एवंश्रान्तोऽहं । प्रजाहिते प्रजारक्षणविषये । पुत्रं कृत्वा नियम्य । सन्निकृष्टान् अन्तरङ्गभूतान् । इमान् सर्वान् द्विजर्षभान् ब्राह्मणश्रेष्ठान् । अनुमान्य कृतानुमतिकान्कृत्वा । मानयतेर्ण्यन्ताल्ल्यप् । विश्रमं श्रान्तिनिवृत्तिमिच्छामि ॥ १० ॥ कस्तेपुत्रो यौवराज्येनियोज्योऽभिमतस्तत्राह—अनुजातइति । वीर्येविषये पुरन्दरसमः इन्द्रतुल्यः । तौल्यमेवाह—परेषां शत्रूणां पुराणि जयति स्वाधीनीकरोतीति परपुरंजयः । असंज्ञायामपिजेःखजार्षः । रामः रामनामकः । ममज्येष्ठआत्मजः । सर्वैर्गुणैः शौर्यादिभिः । मामनुजातः । "अनुर्लक्षणे" इत्यनुःकर्मप्रवचनीयः । तद्योगान्मामितिद्वितीया । मद्गुणान्सर्वाननुप्राप्यजातइत्यर्थः । ननु "मत्तश्चगुणवत्तरः । अपरिमेयैश्चलोकेलोकोत्तरैर्गुणैः" इतिपूर्वमुक्तं कथमिदानीमनुजातोहिमांसर्वैर्गुणैरित्युच्यते पुरन्दरसमइतिच उच्यते "अन्यामध्यस्थचिन्ताहिविमर्दाभ्यधिकोदया" इतिन्यायेनपौरमुखेनरामस्य सर्वाभ्यधिकगुणतांवाचयितुमेवमुक्तमितिध्येयं । अतएववक्ष्यति– "बहवोनृपकल्याणगुणाःपुत्रस्यसन्तिते" इति ॥ ११ ॥ तं स्वगुणतुल्यगुणं । धर्मभृतां धार्मिकाणां । वरं पुरुषपुङ्गवं पुष्येणनक्षत्रेणयुक्तं चन्द्रमिवस्थितं तद्वदत्युज्ज्वलं । यद्वा पुष्यनक्षत्रेभिषेककरणात्पुष्येणचन्द्रमिवेत्युक्तं । यौवराज्येनियोक्तास्मि । यद्वा चन्द्रमिवस्थितं तं श्वःपुष्येण यौवराज्येनियोक्तास्मीत्यर्थः ॥ १२ ॥ दशरथवचनंवाल्मीकिस्तत्वज्ञतयाश्लाघते—अनुरूपइति । सः रामः । अनुरूपः अनुगुणः । नाथः लोकस्येतिशेषः । अनुरूपत्वेहेतुः—लक्ष्मीवानिति । अपरिच्छिन्नतेजस्कइत्यर्थः । तत्रापिहेतुः—लक्ष्मणाग्रजइति । लक्ष्मणोलक्ष्मिवर्धनः" इत्युक्तं । यद्वा अनुरूपत्वेहेतुः—लक्ष्मणाग्रजइति । लक्ष्मणइवसर्वत्रस्वाश्रितेप्रेमशालीत्यर्थः । अथवा अनुरूपइत्यादि नित्यानपायिन्यालक्ष्म्याविशिष्टः परिजनपर्यन्तोरामः सर्वस्यनिरुपाधिकःशेषी । दशरथस्तुराज्यपालनोपाधिकशेषी । वैइतिश्रुत्यादिप्रसिद्धिंद्योतयति । "दासभूताःस्वतःसर्वेह्यात्मानःपरमात्मनः" इत्याद्युक्तेः । तस्यनिरुपाधिकशेषित्वेनिमित्तमाह—त्रैलोक्यमिति । त्रयोलोकाएवत्रैलोक्यं । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । त्रैलोक्यमपि येननाथेन नाथवत्तरं अतिशयेननाथवत् । रामस्यरक्षकत्वावलोकने कियन्मात्रंत्रैलोक्यमितिभातीत्यर्थः । अथवा अनेनश्लोकेनरामस्यपरत्वमुच्यते । सः रामः । अनुरूपोनाथः सहजशेषीजगतः । अन्येतुकर्मानुगुणतयौपाधिकाः । अनुकूलंरूपंयस्यसोनुरूपः । "समःसमविभक्ताङ्गः, चन्द्रकान्ताननं" इत्याद्युक्तनिरुपमसौन्दर्यशालिदिव्यमङ्गलविग्रहइत्यर्थः । अनुकूलंस्वरूपंयस्यासावनुरूपः । शतगुणितोत्तरक्रमेणनिरतिशयदशाशिरस्कतयाऽभ्यस्यमानानन्दरूपइत्यर्थः । "आनन्दोब्रह्म" तिह्युक्तं । अनुगतंरूपंयस्यासावनुरूपः सर्वव्यापीत्यर्थः । अनुरूपः अनुप्रविष्टचराचरादिकशरीरः । सर्वशरीरीत्यर्थः । अनुरूपः अनुस्यूतरूपः । परव्यूहविभवान्तर्याम्यर्चावताररूपेणनानावतारशालीत्यर्थः । अनुरूपः ओः रुद्रस्य रूपं शरीरं तद्विलक्षणशरीरः । "वपुर्विरूपाक्षमलक्ष्यजन्मतादिगंबरत्वेननिवेदितंवसु" इत्याद्युक्तरूपविलक्षणरूपः । पुण्डरीकाक्षत्वादियुक्तः । उस्वरूपभिन्नइतित्रिमूर्तिसाम्यंचनिरस्यते । वीनां पक्षिणां नाथो विनाथः हंसः । तत्संबन्धीवैनाथः । अण्यादित्वृद्धिः । हंसवाहनःचतुर्मुखः । तत्सहितः सवैनाथः । नाभिपद्मस्थलस्थितचतुर्मुखइत्यर्थः । वैनाथो गरुडवाहनोवा । नाथत्वेहेतुः—लक्ष्मीवानिति । नित्ययोगेमतुप् ।

ती० अनुज्ञाप्येतिपाठेअनुज्ञांकारयित्वेत्यर्थः ॥ १० ॥

[ पा० ] १ क. ङ. झ. ञ. ट. विश्राममिच्छामि. २ क. रामंकृत्वा. ३ क. ङ. च. छ. झ. ञ. ट. र्गुणैश्श्रेष्ठो. ४ घ. ज. राज्येनयोक्तास्मि. ५ ङ. छ. झ. प्रातःपुरुषपुङ्गवम्. ६ क. ख. ग. ङ—ट. सवोनाथो. घ. सवोराजा.

अनेन श्रेयसा सद्यः संयोज्यैवमिमां महीम् ॥ गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४ ॥
यदीदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ॥ भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥१५॥
यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ॥ अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥१६॥
इति ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम् ॥ वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७ ॥
स्निग्धोऽनुनादी संजज्ञे तत्र हर्षसमीरितः ॥ जनौघोद्घुष्टसंनादो विमानं कंपयन्निव ॥ १८ ॥
तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः ॥ ब्राह्मणा जनमुख्याश्च पौरजानपदैः सह ॥ १९ ॥
समेत्य मन्त्रयित्वा तु समतांगतबुद्धयः ॥ ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २० ॥

"ह्रीश्चतेलक्ष्मीश्चपत्न्यौ। अप्रमेयंहितत्तेजोयस्यसाजनकात्मजा । वेदान्तास्तत्वचिन्तांमुरभिदुरसियत्पादचिह्नैस्तरन्ति" । पत्नीविशिष्टत्ववत् परिजनविशिष्टत्वमाह—लक्ष्मणाग्रजइति । लक्ष्मणशब्दः कैङ्कर्यपरमात्रोपलक्षणार्थः । अग्रजइतितन्निरूप्यत्वोक्त्या आश्रितपारतत्र्यमुक्तं। ननुकथमयमनुरूपोनाथः ब्रह्मरुद्रादयोपिहिसन्तिनाथा इत्यत्राह—त्रैलोक्यमपीति । कृतकमकृतकंकृतकाकृतकमित्युक्तंसमस्तंजगदित्यर्थः । येननाथेननाथवदित्यनेनेन्द्रादिव्यावृत्तिः । तरपाब्रह्मरुद्रादिव्यावृत्तिः । तन्नाथत्वस्यैतन्मूलत्वात् । "युगकोटिसहस्राणिविष्णुमाराध्यपद्मभूः । पुनस्त्रैलोक्यधातृत्वंप्राप्तवानितिशुश्रुम । महादेवःसर्वमेधेमहात्माहुत्वात्मानंदेवदेवोबभूव" इत्यादिस्मृतयस्तत्रमानं । त्रैलोक्यंनाथवत्तरंरक्ष्यापेक्षयारक्षकत्वराधिकेत्यर्थः ॥ १३ ॥ इमां मयाचिरकालधृतां महीं । तस्मिन् ज्येष्ठे । सुते निवेश्य महीपालभारंनिक्षिप्येत्यर्थः । अनेन तन्निवेशरूपेण । श्रेयसाच महीमेवंसद्यःसंयोज्य । गतक्लेशः गतराज्यभरणक्लेशः । भविष्यामि । रामाभिषेकस्यद्वेफले मह्याःश्रेयो ममविश्रान्तिश्चेतिभावः ॥ १४ ॥ इदं रामाभिषेकरूपंकार्यं । मे राज्यभरणश्रान्तस्यवृद्धस्यमम यद्यनुरूपार्थं उचितप्रयोजनकंचेत् । मयावासाधुसुमन्त्रितंयदि । सम्यक्विचार्यारब्धंचेदित्यर्थः । तदाभवन्तः मे मह्यं । अनुमन्यन्तां अनुमतिंकुर्वन्तु । इदंमेअनुकूलार्थंचेत्कथंवान्यत्करवाणि ॥ १५॥ यत्तेप्रियंतत्क्रियतामित्यत्राह—यद्यपीति । एषारामाभिषेकविषया प्रीतिर्यद्यप्यस्ति तथाप्यन्यद्धितमस्तिचेच्चिन्त्यतां । ननुकस्त्वत्तोधिकदर्शीत्यत्राह—अन्येति । मध्यस्थानां रागद्वेषरहितानां । चिन्ता विचारः । अन्या अन्यादृशी । स्वमात्रचिन्तातोविलक्षणा। तदेव वैलक्षण्यमाह—विमर्दाभ्यधिकोदयेति । विमर्देन पूर्वापरपक्षसंघर्षणेनहेतुना। अभ्यधिकोदया अधिकार्थप्रादुर्भावाहि ॥१६॥ इति पूर्वोक्तप्रकारेण । ब्रुवन्तं नृपं दशरथं । नृपाः परिषद्गताराजानः । वृष्टिमन्तं वर्षुकं । महामेघं नर्दन्तः केकांकुर्वन्तः । बर्हिणइव मयूराइव । मुदिताः सन्तः प्रत्यनन्दन् प्राशंसन् ॥ १७ ॥ तत्र सभायां । स्निग्धः स्नेहाभिव्यञ्जकः । अनुनादी प्रतिध्वनिकारी । जनौघोद्घुष्टः जनसमूहोत्पादितः । सन्नादः समीचीनशब्दः । विमानं तदास्थानमण्टपविमानं । कंपयन्निव संजज्ञे । नकेवलंराजानएव सर्वेपिजनास्तच्छ्रुत्वासंतुष्टाइत्यर्थः ॥ १८ ॥ तस्येत्यादिश्लोकद्वयमेकान्वयं । ब्राह्मणाः वसिष्ठाद्याः । जनमुख्याः राजानश्च । पौरैर्नागरिकैः जानपदैश्च । समेत्य संयुज्य । मन्त्रयित्वा युक्तायुक्तंविचार्य । धर्मार्थविदुषः स्वस्य वार्धकेयुवराजस्थापनंधर्मः प्रजानामर्थसाधनंचेति जानतः । तस्य दशरथस्य । भावं वचनमूलतात्पर्यं । सर्वशः सर्वप्रकारेण । देशकालेङ्गितादिभिः । आज्ञाय आसमन्ताज्ज्ञात्वा । समतां साम्यं गताः बुद्धयो येषां ते तथोक्ताः । ऐकमत्यंप्राप्ताःसन्तःमनसाच ज्ञात्वा

ति० मेदिनींकंपयन्निव । अनुनादः सामन्तकृतहर्षजवाक्यप्रतिध्वनिः संजज्ञे । सभायामितिशेषः । जनौघानामुद्घुष्टेनशब्देनसन्संभवन्नादःप्रतिध्वनिः । पृथिवींकंपयन्निवसंजज्ञे । बहिरितिशेषः ॥ १८ ॥

[ पा० ] १ ङ. च. छ. झ. ट. संयोक्ष्येऽहमिमां. क. ञ. संयोज्यचमहीमिमाम्. ख. संयोज्याहमिमांमहीम्. ग. घ. ज. संयोज्यैवंमहीमिमाम्. २ क—ट. यदिदं. ३ घ. भवन्तोप्यनुमन्यन्तां. ४ ख. यद्येषाममच. ५ क—छ. झ. ट. चिन्तातु. ६ घ. नृपात्मजम्. ७ घ. च. यथामेघं. ८ ख. ग. नृत्यन्तइव. ९ क. घ—छ. झ. ञ. ट. स्निग्धोनुनादः. ग. स्निग्धोविनादः. १० ङ. च. छ. झ. ञ. ट. ततोहर्षे. ११ ङ. झ. मेदिनींकंपयन्निव. १२ ख. साज्ञायतत्वतः. १३ क—ञ. बलमुख्याश्च. १४ छ. ट. समेत्यतेमन्त्रयित्वा. ङ. झ. तेमन्त्रयितुं. १५ क. ग. ज्ञात्वा. १६ ख. दशरथंवचः.

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव ॥ स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१ ॥
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ॥ गजेन महताऽऽयान्तं रामं छत्रावृताननम् ॥ २२ ॥

प्रत्येकंस्वस्वहृदयेननिश्चित्य । वृद्धंनृपं वक्ष्यमाणवचनार्हं दशरथं ऊचुः ॥ १९–२० ॥ वृद्धंनृपमितिकविना सूचितमर्थंदर्शयन्ति—अनेकेति । हेपार्थिव त्वं अनेकवर्षसाहस्रः सहस्राण्येवसाहस्राणि। स्वार्थेअण् । अनेकानिवर्षसाहस्राणियस्य सतथा। वृद्धोसीतिविशेषणमहिम्नाअतिवृद्धोसीतिगम्यते । सः तादृशवृद्धत्वं । पार्थिवं पृथिवीशासनार्हं । युवराजानं युवराजं । समासान्तस्यानित्यत्वान्न " राजाहस्सखिभ्यः " इतिटच् । अभिषिञ्चस्व।यथारामोयुवराजोभवतितथाऽभिषिञ्चेत्यर्थः ॥ २१ ॥ ननुरक्षकेमयिविद्यमाने किमर्थंरामाभिषेकोऽपेक्ष्यतइत्याशङ्कायां नहिवयं रक्षणार्थंतमपेक्षामहे किंतुसौन्दर्यविशेषानुभवार्थमित्याहुः—इच्छामइति । इच्छामइति बहुवचनेन सर्वेषामिच्छावैषम्याभावउक्तः। महाबाहुमिति"आयताश्चसुवृत्ताश्च"इत्युक्तरीत्या सहजबाहुसौन्दर्यं तत्कालाङ्कुशाकर्षणादिव्यापारविशेषश्चोच्यते। इच्छामः अभिषेकपट्टबन्धादियुक्ततयास्थितं द्रष्टुमिच्छामः । इच्छामात्रमस्माकं कार्यनिर्वहणं भवदधीनं । इच्छामः अस्माकमिच्छावर्तते " श्रेयांसिबहुविघ्नानि " इति एवंविधश्रेयोस्माभिर्लभ्यतेकिं। इच्छामः अभिषेकःसिध्यतुवानवा इच्छा निष्प्रतिबन्धा । सुन्दरवस्तुदर्शनेइच्छाप्रवर्ततेखलु । इच्छामः सर्वप्रकारेणरक्षकत्वाद्वाचाप्रार्थयितुमशक्तामनसाइच्छामः । भवदभिप्रायज्ञानेनइदानीमिच्छामइतिवदामः । केषांचिदस्तिनकेषांचिदितिन किंतुसर्वेइच्छामः । हि सर्वलोकप्रसिद्धंखलु । " जनौघोद्घुष्टसंनादोविमानंकंपयन्निव " इतिसर्वजनकोलाहलेनतवगृहंविश्लिष्टबन्धंखलु । अकामयतमेदिनी त्वयिनिर्वाहकेसत्येवभूमिःस्वयंवरंकृतवतीखलु । त्वयिकरग्रहं कुर्वतिरामकामनानयुक्तेतिध्वन्यते । कामुकीनांनमर्यादाखलु । लोकपालोपमं विष्णुसदृशं । अतएववृतवतीभूमिः । मेदिनी मधुकैटभवसाविस्रगन्धेनोपहता " सर्वगन्धः " इति । रामसौगन्ध्येनवासयितुमकामयत । कर्पूरचन्दनादिकमिवस्वशेषकोटीकृतवती । नाथं सौगन्ध्यासौगन्ध्ययोः स्वस्यैवशेषिणोभोग्यतयातद्विप्रवासनानिवर्तनेनस्वशेषरक्षकं। महाबाहुं बाहुबलस्यालक्ष्याखल्वियं। " शक्तस्त्रैलोक्यमप्येकः " इति। नकेवलंकोसलराज्यं लङ्काराज्यमपिरक्षितुंशक्तिरस्ति । महाबाहुं आयताश्चइति " आजानुबाहुश्च " इतिचमहापुरुषलक्षणदर्शनेननज्ञायतेकिं । विभूतिद्वयनिर्वाहकबाहुःखलु । महाबाहुं "बाहुच्छायामवष्टभ्य"इति छायास्वद्रक्षणे नपर्याप्ताकिं। " ररक्षधर्मेणबलेनचैव" इतिधर्मबलमप्यस्तीत्याहुः—रघुवीरं "दीनान्दानेनराघवः " इतिप्रसिद्धःखलु। " आनृशंस्यंपरोधर्मः " इतिपरेषामप्युपदेशपर्यन्तंखलुरक्षणं । रघुवीरं रघ्वपेक्षयास्यैवधर्मिष्ठताज्ञायतेखलु। रघुंप्रतिक्षुधार्तस्यमरणेतवपापंनभवतीत्युक्तेतूष्णींस्थितवान् । अयंतु " अप्यहंजीवितंजह्यां " इतिखलूक्तवान् । महाबलं मनोबलयुक्तं। " नहिप्रतिज्ञांसंश्रुत्य, नत्यजेयं, एतद्व्रतंमम " इतिवक्ष्यति । गजेन महतायान्तं गजेनत्वयादत्तकिरीटपट्टबन्धादियुक्तःशत्रुंजयेनागच्छतिचेत्तदाज्ञायते । गजेननरथादिना " मत्तमातङ्गगामिनं " इतितद्गमनोपमानगतिमता। महता अत्युन्नतेन। सर्वशक्तिमता। आयान्तं महावीथीमध्येप्रतिगृहाङ्गणमायान्तं। "एकः स्वादुनभुञ्जीत" इतिपुत्रकलत्रादिभिः सहानुभवरसमास्वादयामः । रामं सौन्दर्यगुणैः सकलमनोरञ्जकं। छत्रावृताननं दृष्टिदोषपरिहारायान्तरङ्गेणछत्रेणावृतमुखं दृश्यादृश्यैकदेशतयासाकल्येनमुखदर्शनाभिलाषमुत्पादयन्तं । अन्तरङ्गसुहृद्भिर्वातातपपरिम्लानताशङ्कयाभूचक्रच्छत्रेणाच्छादितमुखपङ्कजं । छत्रावृताननं। " एकच्छत्रांमहींभुङ्क्ते " इतिलक्षणशास्त्रकथितसमवृत्तविशालोत्तमाङ्गत्वव्यञ्जकेन निरङ्कुशप्रशासनवशीकृतनिखिलभूपालवलयतानिरूपकेणछत्रेणपाण्डुरेण परभागभावमापन्नेन नितरांप्रकाशितेन्दीवरसदृशमुखं । विशदीकृतमुक्तं । रघुवीरमितिगजस्कन्धावस्थानसूचितोवीर्यविशेषउच्यते । महाबलं मत्तमातङ्गमपितृणीकृत्यगमनसमर्थं । महागजेनशत्रुंजयेनाया-

शि० रामंयुवराजानं अभिषिञ्चस्व युवराजत्वेनाभिषेकंकारयेत्यर्थः। संज्ञापूर्वकविधेरनित्यत्वात्परस्मैपदाभावः । स्वेतिभिन्नपदं। आत्मीयेत्यर्थः । स्वश्चासौपार्थिवश्चेतिकर्मधारयोवा ॥ २१ ॥

[ पा० ] १ ग. घ. ज. धार्मिकम्. क. ख. च. छ. झ. ञ. पार्थिव. २ क. छत्रकृताननम्.

इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् ॥ अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३ ॥
श्रुत्वैव वचनं यन्मे राघवं पतिमिच्छथ ॥ राजानः संशयोऽयं मे किमिदं ब्रूत तत्वतः ॥ २४ ॥
कथं नु मयि धर्मेण पृथिवीमनुशासति ॥ भवन्तो द्रष्टुमिच्छन्ति युवराजं ममात्मजम् ॥ २५ ॥
ते तमूचुर्महात्मानं पौरजानपदैः सह ॥ बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २६ ॥
गुणान्गुणवतो देव देवकल्पस्य धीमतः ॥ प्रियानानन्दनान्कृत्स्नान्प्रवक्ष्यामोद्य ताञ्शृणु ॥ २७ ॥
दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः ॥ इक्ष्वाकुभ्योपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ॥ २८ ॥

न्तंगच्छन्तमित्यनुभवसाक्षिकःसुषमाविशेषःसूच्यते । रामं स्वसौन्दर्येणगजमलंकुर्वाणमिवस्थितं । छत्रावृताननं वदनप्रभामण्डलेनेवछत्रावरणेनजनितसौन्दर्यं । एतैरभिषेकानन्तरभाविभिर्विशेषणैरभिषेकःकर्तव्यइति व्यञ्जनावृत्त्याप्रार्थ्यते ॥ २२ ॥ इति पूर्वोक्तप्रकारेण । तद्वचनं तेषांपौरादीनांवचनं । श्रुत्वा । तद्वचनभङ्ग्यैव तेषांमनःप्रियं मनस्संतोषं । जानन्नप्यजानन्निवजिज्ञासुः तन्मुखेनैवज्ञातुमिच्छुः । इदं वक्ष्यमाणं । वचनमब्रवीत् ॥ २३ ॥ हेराजानः मेवचनंश्रुत्वैव नतुपूर्वापरंपर्यालोच्य । राघवं रामं । पतिं राजानं । इच्छथेतियत् । अयं मेसंशयः संशयहेतुः । विधेयापेक्षयापुँल्लिङ्गता । संशयप्रकारमाह—किमिदमिति । इदं राघवाभिषेकप्रार्थनं । किं किंनिमित्तकं । इति तत्वतोब्रूत अत्रनिमित्तंयाथातथ्येन कथयतेत्यर्थः ॥ २४ ॥ पुनःसंशयं विशिनष्टि—कथमिति । मयिधर्मेणपृथिवीमनुशासति भवन्तोममात्मजं अतिमुग्धंयुवराजं द्रष्टुंकथमिच्छन्ति । मयिचिरंस्वसुखनिरभिलाषतयाराज्यपरिपालनजागरूके तिष्ठतिममापत्यं पतिमभिलषथ कोवामेपराधइतिभावः ॥ २५ ॥ नतेकश्चिदपराधः किंतुतवपुत्रस्यगुणानामपराधइत्याहुः—तइति । ते राजानः । पौरजानपदैःसह पण्डितपामराविशेषेणसर्वैऐकमत्यंप्राप्येत्यर्थः । महात्मानं महाबुद्धिं तं गुणग्राहिणंदशरथं ऊचुः । हेनृपेतिसंबोधनेनतारतम्यज्ञतोक्ता । तेपुत्रस्य बहवःकल्याणागुणास्सन्ति तवतुनृपरिपालनमेकोगुणइतिभावः । रामप्रशंसयातस्यासूयामाभूदिति तेपुत्रस्येत्युक्तं । तदतिशयस्सर्वोपित्वत्संबन्धकृतइतिभावः । गुणाइतिबहुवचनेनैवबहुत्वेसिद्धेऽपिबहवइत्युक्त्याअसङ्ख्येयगुणत्वमुक्तं । पुत्रस्यगुणाइत्यनेनजन्मसिद्धत्वोक्त्यागुणानांस्वाभाविकत्वमुक्तं । कल्याणाः अखिलहेयप्रत्यनीकाः । आश्रयसंबन्धेनशुभीभूतावा "गुणाःसत्यज्ञानप्रभृतयउततत्वद्गततयाशुभीभूयंयाताः" इत्यभियुक्तोक्तेः । अत्र "स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणः" इतियामुनाचार्यवचनमनुसन्धेयं ॥ २६ ॥ केतेगुणाइत्याकाङ्क्षायांतान्वक्तुंप्रतिजानीते—गुणानिति । हेदेव हेराजन् । गुणवतः प्रशस्तबहुगुणकस्य । देवकल्पस्य देवतुल्यस्य । धीमतः रामस्य । प्रियान् इष्टान् । आनन्दनान् प्रीतिजनकान् । तान् प्रसिद्धान् । कृत्स्नान् गुणान् । अद्य प्राप्तकाले । शृणु प्रवक्ष्यामः । गुणवतोगुणानित्यनेनगुणानामनारोपितत्वेनस्वाभाविकत्वमुक्तं । देवकल्पस्येत्यनेनगुणानांसंभावितत्वं । धीमतइत्यनेनगुणानांमध्येज्ञानस्यप्राधान्यमुक्तं । ब्राह्मणाआगतावसिष्ठोप्यागतइत्यत्रवसिष्ठस्येव । प्रियानित्यनेनकल्याणत्वं आनन्दनानित्यनेननिरतिशयत्वं कृत्स्नानित्यनेनासंख्येयत्वंच विवक्षितं । एतावत्पर्यन्तंकिमर्थंनोक्तमित्यपेक्षायांभवत्प्रश्नकालएवास्मदुक्तेरवसरइत्यद्येत्यनेनसूचयन्ति । प्रवक्ष्यामइतिप्रवचनोक्त्या भगवद्गुणोपदेशेधिकारितारतम्यंनास्ति अजानताजानद्भ्यः श्रोतव्यमेवेतिसूचितं । शृण्वित्यनेनरामगुणश्रवणेनिरतिशयानन्दमग्नोभविष्यसि । कथंचिन्मनःसंस्तभ्यश्रोतव्यमित्युक्तं ॥ २७ ॥ दिव्यैः अमानुषैः । गुणैः शौर्यवीर्यादिभिः । शक्रसमः इन्द्रसमः । सत्यपराक्रमः अमोघविक्रमः । इक्ष्वाकुभ्यः इक्ष्वाकुवंश्येभ्यः । सर्वेभ्योतिरिक्तः समधिकः । "अतिरिक्तःसमधिकः" इत्यमरः । शौर्यादिभिरितिशेषः । राज्ञोमनःप्रीणनायसंबोधयन्ति—

**तनि०** उपक्रान्तकार्यंसम्यग्जातं राजलोकएवत्वरतइत्यतिहृष्टः तंहर्षंगोपयन् तैरेववाचयितव्यमितिमनसिकृत्वाह—**कथमिति** ॥ २५ ॥

[ **पा०** ] १ क. ज. तेषांराजा. २ ङ. च. छ. झ. ट. तदिदंब्रूत. ३ ङ. छ. झ. ट. महाबलम्. ४ ङ. छ. झ. ट. महात्मानः. ५ च. छ. झ. ञ. ट. कल्याणगुणाः. ६ ङ. झ. ट. सन्तिसुतस्यते. ७ ज. नानन्ददान्. ख. नानन्दजननान्.

रामः सत्पुरुषो लोके सत्यधर्मपरायणः ॥ साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९ ॥
प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः ॥ बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥३०॥
धर्मज्ञः सत्यसन्धश्च शीलवाननसूयकः ॥ क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥३१॥
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः ॥ ३२ ॥
प्रियवादी च भूतानां सत्यवादी च राघवः ॥ बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ॥ ३३ ॥

विशांपतइति । विशां प्रजानां पते ॥२८॥ लोकेराम-एवसत्पुरुषः रिपूणामपिवत्सलइत्यर्थः । सत्यधर्मावेवपरायणं परमागतिर्यस्यसः सत्यधर्मपरायणः । सत्यधर्मैकनिरतइत्यर्थः । किंच धर्मः श्रिया तत्फलभूतयासंपदासह । रामात् साक्षात् अव्यवधानेन विनिर्वृत्तः निष्पन्नः । धर्मार्थयोरितरनिरपेक्षतयानिर्वाहकइत्यर्थः ॥ २९ ॥ रामनिष्ठगुणसमुदायस्यैकत्रासंभवादेकैकगुणयोगेनचन्द्रादीन्दृष्टान्तयन्ति— प्रजेति । प्रजासुखत्वे प्रजानांसुखकरत्वे । चन्द्रस्य तुल्यः । क्षमागुणविषये वसुधायाः भूमेः तुल्यः । बुद्ध्या बुद्ध्यसाधारणधर्मेण बृहस्पतेस्तुल्यः । वीर्येविषये शचीपतेः साक्षात् तुल्यः । "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः ॥ ३० ॥ धर्मं सामान्यविशेषरूपमशेषं जानातीतिधर्मज्ञः । सत्याअमोघा सन्धाप्रतिज्ञा यस्यासौसत्यसन्धः । "सन्धाप्रतिज्ञामर्यादा" इत्यमरः । शीलवान् शीलंहिनाम महतोमन्दैः सहनैरन्ध्येणसंश्लेषः तद्वान् । अनसूयकः गुणेषुदोषाविष्करणमसूया तद्रहितः । बहुव्रीहौकप् । क्षान्तः क्षमावान् । क्षमाऽत्राश्रितापराधसहिष्णुत्वं । क्षमेरूदित्त्वात्पक्षेनेट् । नकेवलंसहिष्णुरपराधिषु सान्त्वयिता कुपितान्दुःखितांश्चप्रतिसान्त्ववादी । श्लक्ष्णः प्रियंवदः । "समौश्लक्ष्णप्रियंवदौ" इत्यमरः। कृतज्ञः स्वल्पमपिसकृत्कृतमुपकारंबहुतयाजानन्नित्यर्थः । विजितेन्द्रियः विषयचापलरहितः ॥ ३१ ॥ मृदुत्वं समाश्रितजनविश्लेषभीरुत्वं । चित्तस्थैर्यनाम अतिसङ्कटेप्यङ्गीकृतविषयपरित्यागराहित्यं । सदा भव्यः कुशलः आश्रिताधीनोवा ॥ ३२ ॥ प्रियवादी "सत्यं ब्रूयात्प्रियंब्रूयान्नब्रूयात्सत्यमप्रियं" इत्युक्तरीत्याप्रियवादित्वेपिसत्यवादीत्यर्थः । प्रियवादीच चकारोऽवधारणार्थः। प्रियवाद्येव नतुसत्यमप्यप्रियंवदतीत्यर्थः। "नब्रूयात्सत्यमप्रियं" इतिस्मरणात् । भूतानां भवनमात्रोपाधिकानांसर्वेषांजनानां । सत्यवादी "सत्यंब्रूयात्" इतिविहितसत्यवचनः । चकारेणप्रियमप्यसत्यंनवदतीत्यवधार्यते । यद्वा सत्यमितिपरलोकहितमुच्यते "सत्येनलोकाञ्जयति" इतिप्रयोगानुसारात् । प्रियवचनस्यनिषिद्धसाधारणत्वाद्दृष्टविरोधिप्रियंनवदतीत्यर्थः । राघवः रघुराक्षससंवादादिषु प्रियसत्यवचनंप्रसिद्धमितिकुलागतोधर्मइत्यर्थः। एतादृशज्ञानवत्त्वंपुस्तकनिरीक्षणादिना पण्डितंमन्यतयावा नभवतीत्याह—बहुश्रुतानामिति । बहुभ्यआचार्येभ्योबहुभिःशास्त्रैर्बहुधाबहुप्रकारेण श्रुतं येषामस्तीतितेषां । वृद्धानां शीलवयोवृद्धानां । ब्राह्मणानां उक्तलक्षणेषुक्षत्रियेषुसत्स्वपिब्राह्मणानेवज्ञानार्थमुपास्तइत्यर्थः। प्रियवादी ग्रीष्मघर्मसंतप्तस्थलेप्रवर्षीवलाहकइवसुशीतलंवचनंवक्तीत्यर्थः। किमीदृशवचनंदिव्यान्तःपुरस्य मातापित्रादीनां वसिष्ठादीनांवा नेत्याह— भूतानां सत्तायोगिसकलपदार्थानांच प्रियवादी । किंसर्वत्रप्रियमेववदति नेत्याह—सत्यवादी भूतहितादृष्टार्थवचनइत्यर्थः । प्रियहितवादीतिभावः । किमिदं विरुद्धद्वयमघटितघटनासामर्थ्यादित्यपेक्षायां नतथा किंतु कुलप्रभावादित्याह—राघवइति । एवंविधगुणः किंसगर्वोवर्तते नेत्याह—बह्विति । संभावितगुणैरतृप्तस्सन्पुनरप्यतिशयायज्ञानिनांप्राङ्गणंगत्वातिष्ठतीत्यर्थः। यत्किंचिच्छ्रवणमात्रेणतृप्तानांज्ञानादिवृद्धानां "सर्वतःसारमादद्यात्पुष्पेभ्यइवषट्पदः" इत्युक्तरीत्या बहुभ्यःसारग्रहणंकृतवानित्यर्थः । ब्राह्मणानां "साविद्यायाविमुक्तये" इत्युक्तब्रह्मविद्यानिष्ठानां। नतु "विद्यान्याशिल्पनैपुणम्" इत्युक्तान्यविद्यानिष्ठानाम् । उपासिता तद्गृहंगत्वाऽनुवर्तयिता । नतुस्वगृहेतानानी-

ती० अनसूयकः नविद्यतेअसूयाअन्यविषयिणीयस्यसः । उत्तरत्र नविद्यतेअसूयास्वविषयिणी अन्यकृतायस्यसतथोक्तइतिनपुनरुक्तिः ॥ ३१ ॥ शि० बहुश्रुतादित्रयाणां उपासिता सत्कारकारी ॥ ३३ ॥

[ पा० ] १ क. सत्यधर्मपराक्रमः. ङ. छ. झ. ट. सत्यस्सत्यपरायणः.

**तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्धते ॥ देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ॥ ३४ ॥**
**सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ॥ गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः ॥ ३५ ॥**
**कल्याणाभिजनः साधुरदीनात्मा [1]महामतिः ॥ द्विजैरभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः ॥ ३६ ॥**
**[2]यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा ॥ गत्वा सौमित्रिसहितो [3]नाविजित्य निवर्तते ॥ ३७ ॥**
**संग्रामात्पुनरागम्य कुञ्जरेण रथेन वा ॥ पौरान्स्वजनवन्नित्यं कुशलं परिपृच्छति ॥ ३८ ॥**
**पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥ निखिलेना[4]नुपूर्व्याच्च पिता पुत्रानिवौरसान् ॥ ३९ ॥**
**शुश्रूषन्ते च वः शिष्याः [5]कच्चित्कर्मसु दंशिताः ॥ इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते ॥४०॥**
**व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥ उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ४१ ॥**
**सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ॥ स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ॥ ४२ ॥**
**सम्यग्योक्ता श्रेयसां च [6]न विगृह्यकथारुचिः ॥ उत्तरो[7]त्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ ४३ ॥**

यश्रोता ॥३३॥ वृद्धोपासनसिद्धान्गुणानाह—तेनेति । तेन समृद्धोपासनेन । कीर्तिः औदार्यादिगुणनिमित्ताप्रथा । यशः पराक्रमादिनिबन्धनाप्रथा । यद्वा कीर्तिः प्रथा । यशः तत्कारणबलादानादिकं । तेजः पराभिभवनसामर्थ्यं ॥ ३४ ॥ विद्याव्रतस्नातः "वेदमधीत्यस्नायात्" इतिस्मृतिप्रक्रिययानिखिलवेदाध्ययनव्रताचरणानन्तरभाविस्नानकर्मयुक्तः । सम्यक् गुरुकुलवासाद्यङ्गसहिततयासाङ्गवेदवित् । "शिक्षाव्याकरणंछन्दोनिरुक्तंज्यौतिषंतथा । कल्पश्चेतिव्याहृतानिवेदाङ्गानिमनीषिभिः" इत्युक्ताङ्गसहितवेदार्थज्ञः । यथावत् यथासंप्रदायं । गान्धर्वेच संगीतशास्त्रेपि । सामगानोपयुक्तत्वादितिभावः ॥ ३५ ॥ कल्याणाभिजनः परिशुद्धोभयवंशः । साधुः स्वयंपरिशुद्धः । अदीनात्मा क्षोभहेतुष्वप्यक्षोभ्यान्तःकरणः । धर्मार्थनैपुणैः धर्मार्थप्रतिपादनकुशलैः । स्वार्थेऽण्प्रत्ययः । श्रेष्ठैः अभिजनविद्यावृत्तयुक्तैः । अभिविनीतः सर्वतः सुशिक्षितः ॥ ३६ ॥ ग्रामार्थइत्यत्र ग्रामेत्यविभक्तिकनिर्देशः । ग्रामस्यनगरस्यवार्थे प्रयोजनेनिमित्ते । नाविजित्य निवर्ततइत्यभिधानात् रामस्यसुबाहुमारीचविषयेजेतृत्ववदन्यत्रापिशत्रुविषयेजेतृत्वमभूदित्यवगम्यते ॥३७—३८॥ कुशलप्रश्नप्रकारमाह—पुत्रेष्विति । प्रेष्यः भृत्यः । निखिलेन कार्त्स्न्येन । आनुपूर्व्यात् प्रधानक्रमेण । पृच्छतीत्यनुषज्यते ॥३९॥ दंशिताः सन्नद्धाः "सन्नद्धोवर्मितःसज्जोदंशितः" इत्यमरः ॥ ४० ॥ सत्पुरुषसंभावितगुणानभिधायरामस्यसाधारणगुणानाह—व्यसनेष्विति । मनुष्याणां दिव्यान्तःपुरस्थितमातृप्रभृतीनांनभवति किंतुमनुष्याणां आढ्यदरिद्रद्विजादितारतम्यानादरेणमनुष्यजात्याक्रान्तानां । व्यसनेषु अल्पानल्पविचारमन्तरेणव्यसनपदार्थेषु । भृशं व्यसनवतोयादृशंतादृशंन किंतुपङ्कमग्नगजइवस्वमाहात्म्यानुगुणंयावत्सत्ताकंच दुःखितोभवति । नतुदिनक्रमेणविस्मरति । इदंदुःखंमत्परिपालनवैगुण्येनखल्वागतमितिनितरांदुःखितोभवति । "ह्रीरेषातुममातुला" इतिवक्ष्यति । उत्सवेषु पुत्रजननादिषु । सर्वेषु पुत्रीजननाद्यनादरविरहेणद्वारिचूतकिसलयमालाबन्धनमुपधीकृत्यप्रवृत्तेष्वित्यर्थः । पितेव पुत्रादीनांपुत्राद्युत्सवेषुयःपितुःपरितोषोजायते सद्विविधः । पामराणामर्थलाभलौकिकसहायनिमित्तः पण्डितानांस्वोत्तारकत्वनिमित्तश्च । एवमुभयविधपरितोषोरामस्याप्यस्ति "प्रनृत्यन्तिपितामहाः । यद्येकोपिगयांव्रजेत्" इतिवत् । "मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये । बहुजन्मसहस्रान्तेदिष्टथायस्तुप्रपद्यते" इतिप्रत्याशासंभवात् । अत्रपरिशब्दोवीप्सायांवर्तते । अत्रापिभृशमित्यनुवर्तते ॥ ४१ ॥ सत्यवादी अतिसङ्कटावस्थायामपिसत्यवचनशीलः । सर्वात्मनाधर्मश्रितः अतिदुर्घटदशायामपिधर्मंनत्यजतीत्यर्थः ॥४२॥ श्रेयसांसम्यग्योक्ता संपादकः । नविगृह्यकथारुचिः "नविगृह्यकथांकुर्यात्" इतिनिषिद्धयोर्जल्पवितण्डयो-

**ति॰** देवासुरमनुष्याणामितिनिर्धारणेषष्ठी ॥ ३४ ॥ **ति॰** नविगृह्यकथारुचिः विग्रहोवृथाकलहस्तंकुलाजलपवितण्डादिकथा-

**[ पा॰ ]** १ क. महाद्युतिः. २ घ. यदाभजति. ३ ख. नोऽविजित्य. ४ ङ. झ. ञ. ट. नुपूर्व्याच. ५ क. ङ. च. ञ. ट. कच्चिद्धर्मेषुदंशिताः. झ. ठ. कच्चिद्धर्मसु. ज. क्वचित्कर्मसु. ६ ख. नविरुद्धकथारुचिः. झ. नविगर्ह्यकथा. ७ ख. युक्तीनां.

सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ।। रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ।। ४४ ।।
प्रजापालन[1]तत्वज्ञो नरागो[2]पहतेन्द्रियः ।। शक्तस्त्रैलोक्य[3]मप्येको भोक्तुं किंनु महीमिमाम् ।। ४५ ।।
नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ।। [4]हन्त्येव नियमा[5]द्वध्यानवध्ये न च कुप्यति ।। ४६ ।।
युनक्त्यर्थैः प्रहृष्टश्च [6]तमसौ यत्र तुष्यति ।। ४७ ।।
[7]शान्तैः सर्वप्रजाकान्तैः प्रीतिसंजननैर्नृणाम् ।। [8]गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ।। ४८ ।।
तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् ।। लोकपालोपमं नाथमकामयत मेदिनी ।। ४९ ।।
वत्सः श्रेयसि जातस्ते दिष्ट्याऽसौ [9]तव राघव ।। दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव काश्यपः ।।५०।।
बलमारोग्यमायुश्च रामस्य विदितात्मनः ।। देवासुरमनुष्येषु [10]सगन्धर्वोरगेषु च ।। ५१ ।।
[11]आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा ।। [12]आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ।।५२ ।।
स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः ।। सर्वान्देवान्नमस्यन्ति रामस्यार्थे [13]यशस्विनः ।।५३ ।।

र्निवृत्तरागः । निवृत्तरागत्वंकिमवकृत्वान्नेत्याह—उत्तरेति ।। ४३ ।। उक्तकल्याणगुणानुरूपाकारसौभाग्यमाह—सुभ्रूरिति । शूरस्यभावःशौर्यं । तच्चमरणनिर्भयत्वं । "शूरोमरणनिर्भयात्" इतिवचनात् । वीर्यं स्वयमविकृतःसन्परान्विविधमीरयतिविद्रावयतीतिवीरः तस्यभावोवीर्यं । दुष्प्रवेशचक्रव्यूहादिविशिष्टसैन्ययुक्तान्देवासुरानपियेनोत्साहेनाक्रमति सपराक्रमः ।। ४४ ।। "रामोराज्यमुपासित्वा" इत्युक्तरीत्याप्रजापालनतत्वज्ञः । नरागोपहतेन्द्रियः । इन्द्रियचापलरहितइति नसमासः । भोक्तुं पालयितुं ।।४५।। नियमात् नियमेन । वध्यान् शास्त्रतोवध्यान् । हन्त्येव । अवध्ये शास्त्रतोऽवध्येविषये ।। ४६ ।। यत्र यस्मिन्पुरुषे । तुष्यति । तं तुष्टोसौ । अर्थैः अभिलषितपदार्थैः । युनक्ति योजयति ।। ४७ ।। शान्तैः शमप्रधानैः । सर्वप्रजानां कान्तैः काम्यमानैः । सर्वजनभोग्यैरित्यर्थः । अतएव प्रीतिसंजननैः । दान्तइतिपाठे यमनियमादिरूपतपःक्लेशसहः । "तपःक्लेशसहोदान्तः" इत्यमरः । दीप्तः ग्रीष्मादिकालिकः ।। ४८ ।। मेदिनी मेदिनीस्थजनता ।। ४९ ।। तव दिष्ट्या भाग्येन । श्रेयसि श्रेयोनिमित्तं । वत्सः पुत्रोजातः । पुत्रगुणैर्युक्तः पुन्नाम्नोनरकात्त्रायतइतिव्युत्पत्तिसिद्धपितृतारकगुणैर्युक्तः । मारीचः मरीचेःपुत्रः । काश्यपः कश्यपगोत्रः ।। ५० ।। श्लोकद्वयमेकान्वयं । देवासुरमनुष्येषुसर्वोजनः राष्ट्रे इतरराष्ट्रे । पुरवरे इतरपुरवरेच । वर्तमानोजनः । आभ्यन्तरः अन्तःपुरचारीजनः । पौरजानपदः स्वपुरस्वजनपदस्थोजनश्च । विदितात्मनः प्रसिद्धशीलस्य । रामस्य बलादिकमाशंसते प्रार्थयते । मनुष्यशब्दोत्रदेवादिसाहचर्यादृषिवचनः ।।५१—५२।। स्त्रियः अतिगंभीरतयास्वहृदयंव्यक्तमनाविष्कुर्वन्त्यः । वृद्धाः करणपाटवरहिताः । अत्यलसतयासर्वत्रानादरंकुर्वन्त्यः । तरुण्यः यौवनमदान्धतया विवेकशून्याः । सायंप्रातरित्युपलक्षणं । त्रिसन्ध्यमित्यर्थः । तेनमङ्गलाशासनकालनियमोक्तिः । समाहिताः सावधानाः । अनेनरामगुणगृहीततयास्वारसिकप्रेमकत्वेनसमनस्कत्वमुक्तं । सर्वान्देवानिति प्रेमकलुषिततयान्यूनाधिकविभागमन्तरेणलौकिकवैदिकविभागमन्तरेणच नमस्यन्तीति रामरक्ष्यानेवदेवान्रामरक्षकान्मन्यन्तइतिप्रेमान्ध्यकाष्ठादर्शिता । रामस्यार्थे रामस्यबलारोग्यादिप्रयोजनसिद्ध्यैवस्वप्रयोजनंनान्तरीयकमितितस्यैवप्रयोजनमुद्दिश्य । यशस्विनः देवतान्तरनमस्कारस्यरामप्रयोजनपर्यवसितत्वात् रामप्रेमपारवश्येनकृतत्वाच्च स्वरूपविरुद्धदेवतान्तरभजन-

रुचिर्यथाप्राकृतस्तथानेत्यर्थः ।। ४३ ।। **ति०** असौतेवत्सःदिष्ट्या अस्मद्भाग्येन । श्रेयसि प्रजारक्षणरूपेसमर्थोजातः । किंच असौ राघवः । तवदिष्ट्या भाग्येन मरीचिप्रजापतेःपुत्रःकश्यपइवपुत्रगुणैर्युक्तोजातइत्यर्थः ।। ५० ।। इतिद्वितीयस्सर्गः ।। २ ।।

**[ पा० ]** १ क—ट. पालनसंयुक्तो. २ क. ख. झ. ट. पहितेन्द्रियः. ३ क—ट. मप्येषः. ४ क. घ—छ. झ. ञ. ट. हन्त्येष. ५ ख. द्वध्यमवध्ये. ङ. च. छ. झ. ञ. ट. द्वध्यानवध्येषुनकुप्यति. ग. द्वध्यंयदेषखलुकुप्यति. ख. यस्यैषखलुकुप्यति. क. मवध्येचनकुप्यति. ६ ख. मनसायत्रतुष्यति. ७ ङ. च. छ. ट. दान्तैः. ८ ख. गुणैर्विराजते. ९ झ. तवराघवः. १० क. गन्धर्वेषूरगेषुच. ११ क. ख. आशंसन्तेजनास्सर्वे. १२ क—घ. च. छ. ज. अभ्यन्तरश्च. १३ च. झ. ञ. ट. मनस्विनः.

तेषामायाचितं देव त्वत्प्रसादात्समृध्यताम् ॥ ५४ ॥
राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् ॥ पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥ ५५ ॥
तं देवदेवोपममात्मजं ते सर्वस्य लोकस्य हिते निविष्टम् ॥
हिताय नः क्षिप्रमुदारजुष्टं मुदाऽभिषेक्तुं वरद त्वमर्हसि ॥ ५६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ॥ ३ ॥

दशरथेनवसिष्ठंप्रतिरामस्ययौवराज्याभिषेकसंभारसंभरणनिवेदनेतेनसुमन्त्रादीन्प्रतितन्निदेशकरणम् ॥ १ ॥ ततोदशरथेन स्वाज्ञयासुमन्त्रानीतंरामंप्रतियौवराज्याभिषेकनिश्चयनिवेदनपूर्वकंहितोपदेशः ॥ २ ॥ रामसुहृद्भिःकौसल्यांप्रतिपुत्रस्ययौवराज्यप्राप्तिरूपप्रियवृत्तान्तनिवेदनम् ॥ ३ ॥ रामेणहितोपदेशग्रहणानन्तरं दशरथाभिवादनपूर्वकं स्वगृहगमनम् ॥ ४ ॥

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः ॥ प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं[2] वचः ॥ १ ॥
अहोस्मि परमप्रीतः प्रभावश्चातुलो[3] मम ॥ यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ २ ॥
इति प्रत्यर्च्य[4] तान्राजा ब्राह्मणानिदमब्रवीत् ॥ वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥ ३ ॥
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ॥ यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४ ॥
राज्ञस्तूपरते वाक्ये जनघोषो महानभूत् ॥ शनैस्तस्मिन्प्रशान्ते[5] च जनघोषे जनाधिपः[6] ॥
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् ॥ ५ ॥

रूपमयशोनास्तीत्यर्थः ॥ ५३ ॥ आयाचितं रामाभिषेकरूपाभिमतार्थप्रार्थनं । समृद्ध्यतां सफलंभवतु ॥ ५४ ॥ इन्दीवरश्याममिति समुदायशोभोक्ता । सर्वशत्रुनिबर्हणमिति स्वसौन्दर्यातिशयदर्शनमग्नचित्तत्वरूपकामादिशत्रुनिबर्हणमित्यर्थः । पश्यामः द्रक्ष्यामः । "वर्तमानसामीप्येवर्तमानवद्वा" इतिभविष्यदर्थेलट् ॥ ५५ ॥ देवेतिसंबुद्धिः । देवदेवः विष्णुः तत्सदृशमितिवा । निविष्टं दत्तावधानमित्यर्थः । उदारजुष्टं औदार्ययुक्तं । भावप्रधानोनिर्देशः । उदारैर्जुष्टंसेवितमितिवा ॥ ५६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने द्वितीयःसर्गः ॥ २ ॥

एवं निश्चिताभिषेकस्यसंभारसंभरणप्रवृत्तिस्तृतीये । प्रगृहीतानि प्रकर्षेणगृहीतानि । शिरसिबद्धानीत्यर्थः । अञ्जलिरूपाणिपद्मानि अञ्जलिपद्मानि । अञ्जलीनांपद्ममुकुलाकारत्वादत्रत्यपद्मशब्दःपद्ममुकुलपरः । प्रतिगृह्य वीक्षणवचनप्रत्यञ्जलिभिर्यथायोगमञ्जलीनांप्रतिग्रहः ॥ १ ॥ अहोस्मीतिसन्धिरार्षः ॥ २ ॥ राजा दशरथः । इति पूर्वोक्तरीत्या । तान् प्रार्थनापरान् । ब्राह्मणान् । अभ्यर्च्य मधुरवचनैःसंमान्य । तेषामेवोपशृण्वतां तेषुउपशृण्वत्सुसत्स्वेव । वसिष्ठंवामदेवंचेदमब्रवीत् ॥ ३ ॥ अभिषेकविषयनिरतिशयादरेणतदुचितकालंप्रशंसति—चैत्रइति । चैत्रः यथेतरेभ्यःप्रधानभूतोरामःतथामासान्तरेभ्योयंमासः । श्रीमान् यथासर्वसुखावहत्वाद्रामःसर्वेषांराजा तथासर्वसुखकरत्वादसौसर्वमासानांराजा । अयंमासः अभिषेकमनोरथसमयएवसन्निहितः । अयंमासः अवतारहेतुरेवाभिषेकहेतुः । पुण्यः रमणीयः पुण्यवर्धनोवा । पुष्पितकाननः अस्मत्प्रयत्नालंकृतनगरवैलक्षण्येनस्वयमेवालंकृतवनः । यद्वा रामस्यकनककिरीटधारणसमये स्वयंकुसुममुकुटधारीवनप्रदेशोजातः॥४॥ वसिष्ठशब्दोवामदेवस्याप्युपलक्षणपरः । वसिष्ठंवामदेवमितिद्वयोःप्रस्तुतत्वात् । एवंव्यादिश्यविप्रौताविव्युपरिवक्ष्यमाणत्वाच्च । प्राधान्याद्वसिष्ठस्योपादानं । जनघोषः चिरप्रार्थितरामाभिषेकविषयोस्मन्मनोरथः

[ पा० ] १ ङ. छ. झ. तेषांतयाचितं. २ ख. प्रियमिदं. ३ ख. श्चातुलोमहान्. ४ झ. इतिप्रत्यर्चितान्. ५ ख. ग. प्रशान्तेतु. ६ क. च. ञ. नराधिपः.

अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ॥ तदद्य [1]भगवन्सर्वमाज्ञापयितुमर्हसि ॥ ६ ॥
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ॥ आदिदेशाग्रतो राज्ञः स्थितान्युक्तान्कृताञ्जलीन् ॥७॥
सुवर्णादीनि रत्नानि बलीन्सर्वौषधीरपि ॥ [3]शुक्लमाल्यांश्च लाजांश्च पृथक्च मधुसर्पिषी ॥ ८ ॥
अहतानि च वासांसि रथं सर्वायुधान्यपि ॥ [4]चतुरङ्गबलं चैव गजं च शुभलक्षणम् ॥ ९ ॥
चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डुरम् ॥ शतं च शातकुंभानां कुंभानामग्निवर्चसाम् ॥ १० ॥
हिरण्य[6]शृङ्गमृषभं समग्रं व्याघ्रचर्म च ॥ उपस्थापयत प्रातर[7]ग्न्यगारं महीपतेः ॥ ११ ॥
यच्चान्यत्किंचिदेष्टव्यं तत्सर्वमुपकल्प्यताम् ॥ १२ ॥
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ॥ चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३ ॥
प्रशस्तमन्नं गुणवद्दधि क्षीरोपसेचनम् ॥ द्विजानां [10]शतसाहस्रे यत्प्रकाममलं भवेत् ॥ १४ ॥
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ॥ घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः ॥१५॥
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ॥ ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ॥
[11]आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ॥ १६ ॥
सर्वे च [12]तालावचरा गणिकाश्च स्वलंकृताः ॥ कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः ॥ १७ ॥
देवायतनचैत्येषु [13]सान्नभक्षाः सदक्षिणाः ॥ उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्पृथक् ॥ १८ ॥

फलितइत्येवंरूपः ॥ ५ ॥ सपरिच्छदं सोपकरणं ॥ ६ ॥ युक्तान् राजकार्यनियुक्तान् सुमन्त्रादीनधिकारिणइतियावत् ॥ ७ ॥ बलीन् उपहारान् । "करोपहारयोःपुंसिबलिः" इत्यमरः । ओषधयः व्रीहिमुद्गादयः । शुक्लमाल्यांश्चेतिलिङ्गव्यत्ययआर्षः । पृथक् पृथक्पात्रगृहीते। मधुसर्पिषी क्षौद्रघृते ॥८॥ अहतानि "ईषद्धौतंनवंश्वेतंसदशंयन्नधारितं। अहतंतद्विजानीयाद्दैवेपित्र्येचकर्मणि" इत्युक्तजलप्रक्षालनादिगुणयुक्तानि ॥९॥ चामरव्यजने चामररूपव्यजने । शातकुंभानां सौवर्णानां ॥ १० ॥ हिरण्यशृङ्गं हिरण्यालंकृतशृङ्गं। समग्रं संपूर्णावयवं । उपस्थापयत प्रापयत। अग्न्यगारं अग्निहोत्रगृहं ॥११॥ अन्यत् गन्धपुष्पादिकं। एष्टव्यं अपेक्षणीयं ॥ १२ ॥ अन्तःपुरस्य राजगृहस्य । सर्वस्यनगरस्यद्वाराणि सर्वाणिनगरद्वाराणीत्यर्थः । घ्राणहारिभिः घ्राणद्वारापुरुषाकर्षकैः ॥१३॥ सहस्रमेवसाहस्रं । शतसाहस्रशब्दोपरिमितवचनः । विषयसप्तमी । अलं पर्याप्तं । "अलंभूषणपर्याप्तिशक्तिवारणवाचकं" इत्यमरः । शतसाहस्रविषयेप्रकामं अत्यर्थं । पर्याप्तं प्राशस्त्यादिगुणविशिष्टं । यदन्नंभवेत्तत्संपाद्यतामित्यर्थः ॥ १४ ॥ द्विजमुख्यानां द्विजमुख्येभ्यः । सत्कृत्यदीयतां तदन्नमितिशेषः । पुष्कलाः संपूर्णाः ॥ १५ ॥ सूर्येअभ्युदितमात्रे सूर्योदयानन्तरमेव । श्वः परेद्युः । स्वस्तिवाचनंभविता । तदर्थंब्राह्मणाश्चनिमन्त्र्यन्तां आहूयन्तां । आसनानि तेषामितिशेषः। आबध्यन्तां प्रतिगृहमितिशेषः ॥१६॥ तालैरवचरन्तिजीवन्तीतितालावचराः नर्तकादयः । कक्ष्यांद्वितीयामिति । अन्तःकक्ष्यायामभिषेकप्रवृत्तेस्तत्रचब्राह्मणैर्वस्तव्यत्वादितिभावः ॥ १७ ॥ देवायतनचैत्येषु देवगृहेषु चतुष्पथेषुचेत्यर्थः । अन्नभक्षैःसहवर्तन्तइतिसान्नभक्षाः । अन्नमोदकहस्ताइतियावत् । माल्यप्रदानयोग्याः माल्ययोग्याः । मध्यमपदलोपिसमासः माल्यार्थसाधनानि । पृथक्पृथगिति । देवा-

**ति०** अहतानि सदशानि तदानीमेवतन्तुवाययन्त्रादुद्धृतानि ॥ ९ ॥ **ति०** शतसाहस्रं शतसाहस्रंप्रति ॥ १४ ॥ **ती०** चैत्येषु रथ्यावृक्षेषुच । **ति०** माल्ययोग्याः मालामर्हतीतिमाल्यमर्चनंतद्योग्याःगन्धपुष्पादयः । देवायतनचैत्ययोःपृथक्पृथगुपस्थापयि-

**[ पा० ]** १ ख. ग. ज. भगवान्सर्वं. २ ङ. छ. झ. ट. मुनिसत्तमः. ३ क. ख. ङ—ट. शुक्लमाल्यानि. ४ क. ग. ञ. चतुरङ्गबलंचैव. ५ ङ. छ. झ. ट. व्यजनेचोभे. घ. व्यजनेचैव. ६ क. च. छ. ज. ञ. शृङ्गंवृषभं. ७ ङ. च. छ. झ. रम्यगारे. ट. रम्यागारे. क. घ. ज. ञ. रम्यागारं. ८ इदमर्धं ङ. छ. झ. पुस्तकेषु उपस्थापयतेत्यर्धात्पूर्वंदृश्यते. ९ क. मन्नंघृतवत्. घ. ज. विधिवत्. १० क. ख. ङ. च. छ. झ. ञ. ट. शतसाहस्रं. ११ घ. आविध्यन्तां. १२ ख. तालवचनाः. घ. तालचतुराः. ङ. च. छ. झ. ञ. तालापचराः. १३ घ. ङ. झ. ञ. सान्नभक्ष्याः.

दीर्घासिबद्धा योधाश्च संनद्धा मृष्टवाससः ॥ महाराजाङ्कणं सर्वे प्रविशन्तु महोदयम् ॥ १९ ॥
एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र सुनिष्ठितौ ॥ चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च ॥ २० ॥
कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ॥ यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ ॥ २१ ॥
ततः सुमन्त्रं द्युतिमान्राजा वचनमब्रवीत् ॥ रामः कृतात्मा भवता शीघ्रमानीयतामिति ॥ २२ ॥
स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ॥ रामं तत्रानयांचक्रे रथेन रथिनां वरम् ॥ २३ ॥
अथ तत्र समासीनास्तदा दशरथं नृप ॥ प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः ॥२४॥
म्लेच्छाचार्याश्च ये चान्ये वनशैलान्तवासिनः ॥ उपासांचक्रिरे सर्वे तं देवा इव वासवम् ॥२५॥
तेषां मध्ये स राजर्षिर्मरुतामिव वासवः ॥ प्रासादस्थो रथगतं ददर्शायान्तमात्मजम् ॥ २६ ॥
गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् ॥ दीर्घबाहुं महासत्वं मत्तमातङ्गगामिनम् ॥ २७ ॥
चन्द्रकान्ताननं राममतीव प्रियदर्शनम् ॥ रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ॥ २८ ॥

---

यतनचैत्ययोरितिशेषः । ब्राह्मणैर्देवताःपूजनीयाइत्यर्थः ॥ १८ ॥ दीर्घासिबद्धाः बद्धदीर्घासयः । "प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभवतः" इतिनिष्ठायाःपरनिपातः । महानुदयोरामाभिषेकरूपाभ्युदयोयस्मिन्तं महोदयं ॥ १९ ॥ विप्रौ वसिष्ठवामदेवौ । क्रियाः पुरोहितकर्तव्याः । तत्र राजगृहे । व्यादिश्य आज्ञाप्य । यच्छेषं दासीपरिजनाद्यानयनं तदपि पार्थिवाय राज्ञे । निवेद्य चक्रतुः ॥ २० ॥ अथ जगत्पतिं राजानं । अभिगम्य यथोक्तवचनं उक्तवचनमनतिक्रम्य । कृतमिति प्रीतौ हर्षयुक्तौ । प्रीतिर्मनोगतोहर्षः । मानसप्रीतिजन्यरोमाञ्चादिशरीरविकारोहर्षः । तद्युक्तौ । पूर्वश्लोकेनिवेद्येत्यनेनशेषसंपादनविषयनिवेदनमुक्तं अब्रूतामितिपूर्वोक्तसकलसिद्धिविषयमितिनपुनरुक्तिः ॥ २१ ॥ कृतात्मा सुशिक्षितबुद्धिः । शीघ्रागमनहेतुरयं । "आत्माजीवेधृतौबुद्धौ" इत्यमरः ॥ २२—२३ ॥ अथ सुमन्त्रनिर्गमनानन्तरं । तत्र प्रासादे । समासीनाः सम्यगुपविष्टाः । प्राच्याइत्यादौ "द्युप्राक्" इत्यादिनायदादयः शैषिकाभवार्थाः । म्लेच्छाचार्याः म्लेच्छप्रभवः । अन्तशब्दःप्रदेशवाची । प्राच्येत्यादिनाशैलान्तवासिनइत्यन्तेन मूलभृत्यश्रेणिसुहृद्द्विषदाटविकमितिषड्विधबलोपास्यत्वं सार्वभौमचिह्नमुक्तं ॥ २४—२६ ॥ गन्धर्वराजप्रतिमं भोगस्रोतःप्रावण्यवेषसौन्दर्येषु गन्धर्वराजौपम्यं । न केवलंभोगधारारसिकत्वेन वीररसानभिज्ञत्वमित्याह—लोकेविख्यातपौरुषं । पौरुषोपयुक्तसंहननवत्त्वमाह—दीर्घबाहुमिति । नकेवलंशिरीषपुष्पसुकुमारबाहुत्वेनान्तस्साररहित्यमित्याह—महासत्वमिति । तदनुगुणगतिविशेषमाह—मत्तमातङ्गगामिनमिति । सगर्वसलीलगमनंमदालसगमनंवाविवक्षितं ॥२७॥ चन्द्रकान्ताननं चन्द्राननमित्युक्तेप्याह्लादकत्वादिसिद्धेर्निरतिशयाह्लादकत्वंद्योतयितुंकान्तशब्दः । चन्द्रात्कान्ताननमितिविग्रहः । अनेनावयवशोभावत्त्वमुक्तं । रामं विग्रहगुणैःस्वरूपगुणैश्चरमयन्तं । समुदायशोभावत्त्वमाह—अतीवप्रियदर्शनमिति । निरन्तरदर्शनेपि प्रतिक्षणंनवनवीभूतदर्शनं । रूपौदार्यगुणैः रूपं विग्रहः । औदार्यं अनुभवितृभ्योनुभवदानं । "यआत्मदाबलदा" इतिश्रुतेः । गुण्यतेसदानुसन्धीयतइति गुणः । "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इतिनिघण्टुः । तेनसदानुसन्धीयमानंसौशील्यमुच्यते । अहोमहानयमस्मादृशेषुक्षुद्रेष्वप्यतिसंश्लेषेणवर्ततइतिसर्वदानुसन्धीयमानत्वात् । पुंसामिति कठिनचित्तानामपि किमुतस्त्रीणामितिभावः । यद्वा पुंशब्देनस्त्रीपुंससाधारणमात्रमुच्यते । "पुमानेकोव्यवस्थितः" इति श्रीविष्णुपुराणेप्रयोगात् । तेनसुरनर-

---

तव्याः ॥ १८ ॥ **ति०** दीर्घाअसयोयेषांतेबद्धगोधाचर्माणश्चेतिद्वन्द्वः ॥ १९ ॥ **ति०** कृतात्मा धर्मेषुकृतबुद्धिः ॥ २२ ॥ **ति०** गन्धर्वराजप्रतिमत्वं सौन्दर्यवत्त्वेनसुस्वरत्वेनच ॥ २७ ॥

**[ पा० ]** १ झ. दीर्घासिबद्धगोधाश्च. २ ङ. झ. राजाङ्कणंशूराः. ३ ङ. झ. विप्रौतु. ४ क. ख. ङ. च. छ. झ. ञ. विनिष्ठितौ. ५ ख. यथोक्तवचनं. ६ ख. ग. हर्षयुक्तं. ७ झ. ट. द्विजोत्तमौ. ८ क. च. राममामन्त्र्याश्चक्रे. ९ ङ. झ. सहासीनाः. १० क—छ. झ. ञ. म्लेच्छाश्चार्याश्च. ११ ङ. छ. झ. ट. देवावासवंयथा. १२ ङ. छ. झ. ट. दशरथो. क. च. ञ. रथस्थंतं.

घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः ॥ न[1] ततर्प समायान्तं पश्यमानो नराधिपः ॥ २९ ॥
अवतार्य सुमन्त्र[2]स्तं राघवं स्यन्द[3]नोत्तमात् ॥ पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ॥३०॥
स तं कैलासशृङ्गाभं प्रासादं नरपुङ्गव[4]ः ॥ आरुरोह नृपं द्रष्टुं सह[5] सूतेन राघवः ॥ ३१ ॥
स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके ॥ नाम स्वं श्रावयन्रामो ववन्दे चरणौ पितुः ॥ ३२ ॥
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ॥ गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् ॥ ३३ ॥
तस्मै[6] चाभ्युदितं सम्यङ्मणिकाञ्चनभूषितम् ॥ दिदेश राजा रुचिरं रामाय परमासनम् ॥ ३४ ॥
तदा[7]सनवरं प्राप्य व्यदीपयत राघवः ॥ स्वयैव[8] प्रभया मेरुमुदये विमलो रविः ॥ ३५ ॥
तेन विभ्राजता तत्र सा सभा[9]ऽभिव्यरोचत ॥ विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना ॥ ३६ ॥
तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम् ॥ अलंकृतमिवात्मानमादर्शतलसंस्थितम् ॥ ३७ ॥
स तं सस्मित[10]माभाष्य पुत्रं पुत्रवतां वरः ॥ उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः ॥ ३८ ॥
जेष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः ॥ उत्पन्नस्त्वं गुण[11]श्रेष्ठो मम रामात्मजः प्रियः ॥३९॥
यतस्त्व[12]या प्रजाश्चेमाः स्व[13]गुणैरनुरञ्जिताः ॥ तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ॥ ४० ॥

---

तिर्यगादिभेदभिन्नानांस्त्रीपुंनपुंसकभेदभिन्नानांसर्वेषां दृष्टिचित्तापहारउक्तः । वक्ष्यतिरामविरहेस्थावरजङ्गमवस्तुमात्रंपरिम्लानमिति । यद्वा पुंसामपिरामंपश्यतांस्त्रीभूत्वाऽहममुमनुभवेयमित्यभिलाषोभवति । यथाहुः "पाञ्चाल्याःपद्मपत्राक्ष्याःस्नायन्त्याजघनंघनं । याःस्त्रियोदृष्टवत्यस्ताःपुंभावंमनसाययुः" इति ॥ २८ ॥ पश्यमानइतिनिर्निमेषदर्शनमुक्तं । नततर्पेति प्रतिक्षणमनुभवेपिनवनवप्रेमास्पदतयानतृप्तिरभूदित्यर्थः ॥ २९ ॥ अवतार्येति अवतारणंहस्तप्रदानादिना ॥ ३०—३१ ॥ अभिप्रेत्य प्राप्य । प्रणतः "दण्डवत्प्रणमेद्भूमावुपेत्यगुरुमन्वहं" इत्युक्तप्रक्रिययादण्डवत्प्रणतइत्यर्थः । स्वंनामश्रावयन् । "शर्मेतिब्राह्मणस्योक्तं वर्मेतिक्षत्रियस्यच" इतिवचनाद्रामवर्माहमस्मिभोइति श्रावयन्नित्यर्थः ॥ ३२ ॥ अञ्जलौगृह्य अञ्जलिंप्रगृह्य । "सक्थिनिकर्णेवागृहीत्वा" इतिमहाभाष्यकारवचनात् अञ्जलावितिकर्मणिसप्तमी ॥ ३३ ॥ अभ्युदितं उन्नतं ॥ ३४ ॥ आसनवरंप्राप्य तदासनंस्वयैवप्रभया व्यदीपयत् । विमलोरविरुदयमेरुंप्राप्येव । सूर्यस्यप्रधानमेरुप्राप्तेःसाक्षादभावादत्रमेरुशब्देनास्ताद्रिसमीपवर्तीसावर्णिमेरुरुच्यते । उदयश्चोत्तरवर्षस्थितसिद्धपुरवासिजनापेक्षया इयमुदयास्तमयव्यवस्थासूर्यसिद्धान्तेआर्यभट्टेचप्रसिद्धा । "भूवृत्तपादेपूर्वस्यांयवकोटीतिविश्रुता । भद्राश्ववर्षेनगरीस्वर्णप्राकारतोरणा ॥ याम्यायांभारतेवर्षेलङ्कातद्वन्महापुरी । पश्चिमेकेतुमालाख्येरोमकेतिचकीर्तिता ॥ उदक्सिद्धपुरीनामकुरुवर्षेप्रतिष्ठिता।उदयोयोलङ्कायांसोस्तमयःसवितुरेवसिद्धपुरे। मध्याह्नेयवकोट्यांरोमकविषयेऽर्धरात्रंस्यात् ॥ भारतादिषुवर्षेषुतद्वदेवपरिभ्रमन् । मध्योदयार्धरात्रांस्तुकालान्कुर्यात्प्रदक्षिणं" इति ॥ ३५ ॥ विभ्राजता प्रकाशमानेन । विमलग्रहनक्षत्रेतिदृष्टान्तबलेनदशरथवसिष्ठादिभिरीषत्प्रकाशितत्वमवगम्यते ॥ ३६ ॥ पश्यमानः पश्यन् । आदर्शतलसंस्थितमित्यनेनरामस्यमुखनासिकाचरणादिसर्वावयवेनपितृसरूपत्वमावेदितं ॥ ३७ ॥ सस्मितमितिक्रियाविशेषणं । आभाष्य रामेतिसंबोध्य ॥ ३८ ॥ रामस्यैवराज्याभिषेकार्हतामभिव्यञ्जयन्नाह—ज्येष्ठायामिति । आत्मजस्सुतः औरसस्सुतः ॥ ३९ ॥ पुष्ययोगेनेति "प्रकृत्यादिभ्यउपसङ्ख्यानं" इतितृतीया । पुष्येणचन्द्रमसोयोगःपुष्य-

---

ति० तेन सहेतिशेषः ॥ ३१ ॥ स० मेरुमेवं मेरुमिव । "ववायथातथैवैवंसाम्ये" इत्यमरः ॥ ३५ ॥ ति० सभापि नकेव-

[ पा० ] १ घ. नततर्ष. २ ङ. छ. झ. ञ. ट. सुमन्त्रस्तु. ३ क. च. स्यन्दनात्तदा. ४ ङ. छ. झ. रघुनन्दनः. ख. रघुपुङ्गवः. ५ ङ. छ. झ. ट. सहसातेनराघवः. ६ च—ट. चाभ्युद्यतं. क. च. चाभ्युदितंसौम्यं. ख. चाभ्युदितंरम्यं. ग. घ. चाभ्युदितंदिव्यं. ७ ङ. छ. झ. तथासनवरं. ८ ट. स्वयैवंप्रभया. ९ झ. सभापि. १० ङ. छ. झ. ट. सुस्थितमाभाष्य. ११ ख. ङ. छ. झ. ट. गुणज्येष्ठो. घ. ज. गुणैश्श्रेष्ठः. १२ ख—ङ. छ—ट. त्वयायतःप्रजा. क. च. त्वयायथा. १३ क. च. ञ. स्वगुणेनाभिरञ्जिताः. ख. स्वगुणैरभिरञ्जिताः.

कामतस्त्वं प्रकृत्यैव विनीतो गुणवानसि ॥ गुणवत्यपि तु स्नेहात्पुत्र वक्ष्यामि ते हितम् ॥ ४१ ॥
भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ॥ कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च ॥४२॥
परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा ॥ अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय ॥ ४३ ॥
कोष्ठागारायुधागारैः कृत्वा सन्निचयान्बहून् ॥ तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ॥ ४४ ॥
तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृतमिवामराः ॥ तस्मात्त्वमपि चात्मानं नियम्यैवं समाचर ॥४५॥
तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ॥ त्वरिताः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन् ॥ ४६ ॥
सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ॥ व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥४७॥
अथाभिवाद्य राजानं रथमारुह्य राघवः ॥ ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४८ ॥

ते चापि पौरा नृपतेर्वचस्तच्छ्रुत्वा तदा लाभमिवेष्टमाशु ॥
नरेन्द्रमामन्त्र्य गृहाणि गत्वा देवान्समानर्चुरभिप्रहृष्टाः ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

योगः । तदुपलक्षितकालइत्यर्थः । पुष्यनक्षत्रयुक्तेदिवसइत्यर्थः ॥ ४० ॥ कामतः प्रकामं । गुणवति त्वयीतिशेषः । यद्यपिभवान्सर्वगुणसंपन्नः तथापिपुत्रस्नेहाद्भवतेकिंचिदुपदिशामीत्यर्थः ॥ ४१ ॥ भूयोविनयं सातिशयविनयं । कामक्रोधसमुत्थानिव्यसनानि "स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थसंदूषणंचेतिराज्ञांव्यसनसप्तकं" इत्युक्तानिव्यसनानि । अर्थसंदूषणं पित्रादिसञ्चितार्थस्यनाशनं । यद्वा "मृगयाऽक्षोदिवास्वापःपरिवादःस्त्रियोमदः । तौर्यत्रिकंवृथाध्वाचकामजोदशकोगुणः" इत्येतानिकामजानि । "पैशुन्यं साहसंद्रोहईर्ष्यासूयार्थदूषणं । वाग्दण्डयोश्चपारुष्यं क्रोधजोपिगुणोष्टकः" इत्युक्तानिक्रोधजानिचव्यसनानि ॥ ४२ ॥ अप्रत्यक्षयावृत्त्या तक्षप्रभृतिकर्मान्तिकानां परोक्षोभूत्वाऽधिकृतमुखेनयत्कार्याणिसंविधत्तेसापरोक्षवृत्तिः । अव्यवधानेनामात्यादीन्ययावृत्त्यानुगृह्णातिसाप्रत्यक्षवृत्तिः । ताभ्यांवर्तमानस्सन् अमात्यप्रभृतीःसर्वाःप्रकृतीश्चानुरञ्जयेतिसंबन्धः । यद्वा परोक्षया चारमुखतःपरोक्षानुभवसिद्धया । वृत्त्या स्वपरराष्ट्रवृत्तान्तविचारेण । सह्वर्तमानोभव । तथा प्रत्यक्षया नित्यंयथाकालमास्थानमास्थाय स्वानुभवसिद्धयथोक्तवृत्तान्तविचारोभव । अमात्यप्रभृतीःसर्वाःप्रकृतीः अमात्यसेनानीपुररक्षिणः पौरजानपदाःसर्वप्रजाश्च अनुरञ्जय ॥ ४३ ॥ श्लोकद्वयमेकान्वयं । कोष्ठागाराणि अयुतनियुतादिसङ्ख्यधान्यराशिग्राहीणिकोष्ठरूपतयानिर्मितान्यगाराणि । आयुधागाराणि समग्रनिजबलापेक्षिताष्टादशविधायुधप्रतिष्ठागाराणि । तैःसह सन्निचयान् निचीयन्तेएष्वितिनिचयाः नवरत्नहेमरजतवस्त्राभरणादिसंपूर्णास्तत्तत्कोशाः । तान् तुष्टानुरक्तप्रकृतिरिति उक्तनिचयबलादितिशेषः । मित्राणि सामन्ताः । आत्मानं मनः ॥ ४४—४५ ॥ तत् रामाभिषेकप्रस्तावनं ॥ ४६ ॥ प्रियाख्येभ्यः प्रियं रामाभिषेकमाचक्षतइतिप्रियाख्याः । "चक्षिङःख्याञ्" इति ख्याञादेशः ॥ ४७—४८ ॥ आनर्चुः रामाभिषेकविघ्नवारणाय ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डे तृतीयःसर्गः ॥ ३ ॥

---

लमासनमेव ॥ ३६ ॥ ति० इष्टाः स्वस्य अनुरक्ताः स्वस्मिन् प्रकृतयःप्रजाः यस्य । तस्यमित्राण्यमृतंलब्ध्वाअमराइवतंलब्ध्वा नन्दन्ति ॥ ४४ ॥ इतितृतीयस्सर्गः ॥ ३ ॥

[ पा० ] १ ङ. झ. निर्णीतोगुणवानिति. २ घ. कामक्रोधसमृद्धानि. ३ ङ. झ. त्यजस्वव्यसनानिच. ४ ङ. छ. झ. ट. प्रजाश्चैवानुरञ्जय. ५ क. ङ. च. छ. झ. ञ. ट. इष्टानुरक्त. घ. तुष्टोनुरक्त. ६ क. ङ. च. छ. झ. ञ. ट. त्पुत्रत्वमात्मानं. ७ छ. प्रियकांक्षिणः. ८ ङ. छ. झ. ट. शीघ्रमागत्य. ९ क. च. ञ. साहिरण्यानि. १० घ. द्युतिमान्वेश्म. ११ घ. छ. परिपूजितः. १२ च. ञ. मिवेष्टमात्मनः. १३ क—घ. च. ञ. रतिप्रहृष्टाः.

## चतुर्थः सर्गः ॥ ४ ॥

दशरथेनरात्रौदुस्स्वप्नदर्शनादभिषेकविघ्नशङ्कयापुनाराममानाय्य तंप्रतिभरतागमनात्पूर्वमेवाभिषेककालनिवेदनपूर्वकंसीतयासहरात्रावुपवासादिव्रताचरणचोदना ॥ १ ॥ दशरथाभ्यनुज्ञातेनरामेणकौसल्यान्तःपुरंप्रविश्यतदाशीर्वादस्वीकरणपूर्वकंतत्रपूर्वमागतयासीतयासहस्वावासगमनम् ॥ २ ॥

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ॥ मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः [1]संनिश्चयम् ॥ १ ॥
श्व एव पुण्यो भविता [2]श्वोऽभिषेच्यस्तु मे सुतः ॥ रामो [3]राजीवताम्राक्षो [4]यौवराज्य इति प्रभुः ॥२॥
अथान्तर्गृहमाविश्य राजा दशरथस्तदा ॥ सूतमामन्त्रयामास रामं पुनरिहानय ॥ ३ ॥
[5]प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ ॥ रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४ ॥
द्वास्स्थैरावेदितं तस्य रामायागमनं पुनः ॥ श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५ ॥
प्रवेश्य चैनं [6]त्वरितं रामो वचनमब्रवीत् ॥ यदा[7]गमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६ ॥
तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति ॥ श्रुत्वा [8]प्रमाणमत्र त्वं गमनाये[9]तराय वा ॥ ७ ॥
इति सूतवचः श्रुत्वा [10]रामोऽथ त्वरयाऽन्वितः ॥ प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८ ॥
तं[11] श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ॥ प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९ ॥
प्रविशन्नेव च श्रीमान्राघवो भवनं पितुः ॥ ददर्श पितरं दूरात्प्रणिपत्य कृताञ्जलिः ॥ १० ॥
[12]प्रणमन्तं स[13]मुत्थाप्य [14]तं परिष्वज्य भूमिपः ॥ प्रदि[15]श्य चास्मै रुचिरमा[16]सनं पुनरब्रवीत् ॥ ११ ॥
राम वृद्धोस्मि दीर्घायुर्भुक्ता भोगा [17]मयेप्सिताः ॥ अन्नवद्भिः क्रतुशतै[18]स्तथेष्टं भूरिदक्षिणैः ॥ १२ ॥

एवंपूर्वविचारितमपिराममाहूयोक्तमपिरामाभिषेकं पुनर्मन्त्रिभिःकालविशेषनिर्णयपूर्वकंराममाहूयसविशेषमुपदिशतिचतुर्थे—गतेष्वित्यादिना । श्लोकद्वयमेकान्वयं । अभिषेच्यइतिनिश्चयंचक्रइतिसंबन्धः ॥१—२॥ अन्तर्गृहमाविश्येत्यनेनमन्त्रिणामपिविसर्जनंसिद्धं । आमन्त्रयामास नियोजयामासेत्यर्थः । आनयेत्यत्रइतिकरणंद्रष्टव्यं ॥ ३ ॥ आनयितुं आनेतुमित्यर्थः । इडार्षः ॥ ४ ॥ तस्य सुमन्त्रस्य । पुनरागमनं रामाय द्वास्स्थैरावेदितं । रामश्चापि प्राप्तंआगतं । सुमन्त्रंश्रुत्वैवशङ्कान्वितोभवत् । किमभिषेकविघ्नःकश्चिदासीतुतान्यः कश्चिदुपप्लवोऽभूदितिशङ्का ॥ ५ ॥ भूयः पुनः । तेयदागमनकृत्यंतद्ब्रूहीतिसंबन्धः ॥ ६ ॥ सूतः श्रुत्वा रामवाक्यमितिशेषः । ततः रामवाक्यश्रवणानन्तरं । राममुवाच । कथमिति । हेराम राजात्वांद्रष्टुमिच्छति । अत्र दशरथसमीपे । गमनाय इतराय अगमनायच । त्वंप्रमाणं कर्ताशीघ्रं गच्छेत्यर्थः । इतरशब्दस्यसर्वनामकार्याभावआर्षः ॥ ७—९ ॥ राघवः पितुर्भवनंप्रविशन्नेवदूरात्प्रणिपत्यकृताञ्जलिःसन् । पितरंददर्श । दूरात्प्रणिपातोविनयातिशयात् ॥ १० ॥ समीपेपुनःप्रणमन्तमित्यर्थः ॥ ११ ॥ वृद्धोस्मीत्यनन्त-

ति० पूर्वागमनापेक्षया पूर्वानयनापेक्षयाच्चपुनस्त्वम् ॥ ४ ॥ ति० शङ्कान्वितः राज्ञआपच्छङ्कान्वितः ॥ ५ ॥ वि० इतराय अगमनायच । शि० इतराय इतायप्राप्तायजनाय रो दानंतस्मैच प्रमाणं निश्चयं कुर्वितिशेषः ॥ ७ ॥ वि० प्रियं स्वप्रियं ॥ ९ ॥ ति० दूरात्प्रणिपातः किंवदिष्यतीतिभीत्या ॥ १० ॥ ति० प्रदिश्य हस्तेनदर्शयित्वा । चाद्वचसाप्युक्त्वा । अस्मै रामाय चात्सुमन्त्राय । रामंच रामंतु ॥ ११ ॥

[ पा० ] १ ख. ङ. सुनिश्चयं. घ. सुनिश्चितम्. २ क. ग. ञ. श्वोऽभिषिच्येत. ख. घ. श्वोऽमिषिञ्चन्तुमेसुतम्. ३ ङ. छ. झ. ट. राजीवपत्राक्षो. ४ ङ. छ. झ. ट. युवराजइतिप्रभुः. ५ क. ग—छ. झ. ञ. ट. प्रतिगृह्यतु. ६ ङ. छ. झ. ट. त्वरितो. ७ क. च. ञ. गमनकार्यंते. ८ क. ङ. च. छ. झ. ञ. ट. प्रमाणंतत्रत्वं. ९ ङ. ञ. ट. येतरायच. ख. येतरायवै. १० ङ. छ. झ. ट. रामोपि. ११ घ. च. तच्छ्रुत्वा. १२ क. च. प्रणमन्तंपरिष्वज्यसमनुज्ञाप्यभूमिपः. १३ ङ. झ. ट. तमुत्थाप्य. १४ ख. ग. ङ. छ. झ. ञ. ट. संपरिष्वज्य. १५ ङ. झ. ट. प्रदिश्यचासनंचास्मै. १६ ङ. छ. झ. ट. रामंच पुनरब्रवीत्. १७ क. ङ. च. छ. झ. ञ. ट. यथेप्सिताः. १८ क. ख. घ—छ. झ. ञ. ट. यथेष्टंभूरिदक्षिणैः.

जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि ॥ दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥ १३ ॥
अनुभूतानि चेष्टानि मया वीरसुखान्यपि ॥ देवर्षिपितृविप्राणामनृणोस्मि तथाऽऽत्मनः ॥ १४ ॥
न किंचिन्मम कर्तव्यं तवान्यत्राभिषेचनात् ॥ अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ॥ १५ ॥
अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् ॥ अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥ १६ ॥
अपि चाद्याशुभान्राम स्वप्ने पश्यामि दारुणान् ॥ सनिर्घाता दिवोल्का च पततीह महास्वना ॥ १७ ॥
अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः ॥ आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८ ॥
प्रायेण हि निमित्तानामीदृशानां समुद्भवे ॥ राजा हि मृत्युमाप्नोति घोरां वाऽऽपदमृच्छति ॥ १९ ॥
तद्यावदेव मे चेतो न विमुञ्चति राघव ॥ तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २० ॥
अद्य चन्द्रोऽभ्युपगतः पुष्यात्पूर्वं पुनर्वसू ॥ श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१ ॥
ततः पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम् ॥ श्वस्त्वाऽहमभिषेक्ष्यामि यौवराज्ये परंतप ॥ २२ ॥

रंदीर्घायुरितिवृद्धत्वविवरणं । यद्वा ज्ञानवृद्धत्वव्यावृत्तये—दीर्घायुरिति । "विधिहीनमसृष्टान्नंमन्त्रहीनमदक्षिणं ॥ श्रद्धाविरहितंयज्ञंतामसंपरिचक्षते" इत्यन्नादिहीनस्ययज्ञस्यनिन्दनादन्नवद्भिरित्यादिविशेषणं । क्रतुशतैः ज्योतिष्टोमाद्यश्वमेधपर्यन्तयागभेदैः । इष्टं यजनंकृतं ॥ १२ ॥ इष्टमपत्यं अभिमतमपत्यं । इष्टंदत्तं अभिमतंवस्तुदत्तं ॥ १३ ॥ देवर्षीति देवानामनृणःक्रतुशतैः। ऋषीणामनृणोऽध्ययनेन । पितृणामनृणोऽपत्योत्पादनेन । विप्राणामनृणोदत्तेन । आत्मनोनृणःसुखानुभवेन । यद्यपिब्रह्मचर्यादिऋणत्रयंश्रुतिसिद्धं "जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायते । ब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यः" इति । तथापिऋणपञ्चकमितिमतान्तरं । यद्वा ऋणत्रयव्यपदेशः प्राधान्यादितरयोरुपलक्षणत्वाद्वा । ननुदेवादीनांपञ्चानांकथमुत्तमर्णत्वं । अत्राहुः देवानामिन्द्रियाधिष्ठातॄणां जितेन्द्रियताकारकत्वेनोपकारकत्वात् ऋषीणांवागुपकारकत्वात् पितॄणांतनूपकारकत्वात् विप्राणांकर्माधीनसर्वसंस्कारसाधनेनाघनाशकत्वात् आत्मनःशरीरेन्द्रियसंघातरूपस्यज्ञानप्रकाशहेतुत्वेनोपकारकत्वाच्च तदप्रत्युपकारःपुरुषस्यऋणमेव । अन्यत्रचोक्तं "अनिषिद्धसुखत्यागीपशुरेवनसंशयः" इति ॥ १४—१६ ॥ अशुभान् अशुभसूचकान् । दारुणान् भयंकरान् । नीलवर्णस्त्रीपरिष्वङ्गादीन् । उल्का निर्गतज्वाला । निर्घातः अमेघाशनिः ॥ १७ ॥ नक्षत्रं जन्मनक्षत्रं । अवष्टब्धं आक्रान्तं । अत्रेतिकरणंद्रष्टव्यं । दैवज्ञाः ज्यौतिषिकाः । "सांवत्सरोज्यौतिषिकोदैवज्ञगणकावपि" इत्यमरः । सूर्याङ्गारकराहुभिर्ग्रहैरवष्टब्धमित्यावेदयन्तीतिसंबन्धः ॥ १८ ॥ दुर्निमित्तफलमाह—प्रायेणेति । ऋच्छति ऋच्छतिवेत्यर्थः ॥ १९ ॥ चेतः त्वामभिषेक्ष्यामीतिबुद्धिः । नविमुञ्चति मामितिशेषः । कुतोबुद्धिविमोचनप्रसक्तिरित्यत्राह—चलाहीति । मात्रन्तरादिप्रार्थनादिभिरितिभावः ॥ २० ॥ पुष्ययोगं पुष्येणचन्द्रस्ययोगं । नियतं अभिषेकनियतं । प्रशस्तमित्यर्थः । दैवचिन्तकाः ग्रहचारज्ञाः । वक्ष्यन्ते वदन्ति ॥ २१ ॥ अभिषिञ्चस्व अभिषिक्तोभव । त्वरयतीवे-

**ति०** ऋष्यृणेविप्रर्णस्य देवर्णेजीवर्णस्यान्तर्भावंकृत्वा "ऋणानित्रीण्यपाकृत्य—"इतिस्मृतिवादः ॥ १४ ॥ **ति०** यद्ब्रूयांतन्मे वचःकर्तुमर्हसि । अविलंबेनेतिशेषः ॥ १५ ॥ **ति०** दिवोल्काः दिवःउल्काः । सन्धिरार्षः । दिवादिवसेइत्यन्ये । उल्काःज्वालाः पतन्ति ॥१७॥ **ति०** नियतं शुद्धगणितनिश्चितं ॥२१॥ **शि०** अभिषिञ्चस्व राममितिशेषः । इतिमनोमममानसंत्वरयति ॥२२॥

**[ पा० ]** १ क. च. ञ. नुपमोभुवि. २ क. ख. च. ञ. सुखानिच. छ. सुखानितु. ३ घ. ततोयत्त्वामहं. ४ क. च. ञ. न्स्वप्नात्रामपश्यामि. ङ. छ. झ. ट. स्वप्नान्पश्यामिराघव. ५ क. घ. च. महोल्काश्च. ख. ग. महोल्काच. ङ. छ. झ. ञ. ट. दिवोल्काश्च. ६ घ. ङ. छ. झ. ञ. ट. पतन्तिहि. च. पतिताश्चमहास्वनाः. क. पतिताहिमहास्वनाः. ख. पतितेहमहास्वना. ७ ङ. छ. झ. ट. दारुणग्रहैः. ८ ख. ग. ङ. छ. झ. ञ. ट. प्रायेणच. ९ क. च. ञ. राजामृत्युमवाप्नोति. १० ङ. च. छ. झ. ट. चापदमृच्छति. ११ ङ. च. छ. झ. ञ. ट. नविमुह्यतिराघव. १२ ङ. छ. झ. ट. अद्यचन्द्रोभ्युपगमत्. १३ घ. ङ. च. झ. ञ. पुनर्वसुम्. १४ क. वक्ष्यतेदैवचिन्तकः. १५ ख. ङ. छ. झ. ट. तत्रपुष्ये.

तस्मात्[1]त्वयाऽद्यप्रभृति निशेयं नियतात्मना ॥ सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३ ॥
सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः ॥ भवन्ति बहुविघ्नानि [2]कार्याण्येवंविधानि हि ॥ २४ ॥
विप्रोषितश्च भरतो यावदेव पुरादितः ॥ तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५ ॥
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः ॥ जेष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६ ॥
[3]किंतु चित्तं मनुष्याणामनित्यमिति [4]मे मतिः ॥ [5]सतां तु धर्मनित्यानां [6]कृतशोभि च राघव ॥ २७ ॥
इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने ॥ व्रजेति रामः पितर[7]मभिवाद्याभ्ययाद्गृहम् ॥ २८ ॥
प्रविश्य चात्मनो वेश्म [8]राज्ञोद्दिष्टेऽभिषेचने ॥ [9]तत्क्षणेन च [10]निर्गम्य मातुरन्तःपुरं ययौ ॥ २९ ॥
तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् ॥ वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३० ॥
प्रागेव चागता तत्र सुमित्रा [11]लक्ष्मणस्तदा ॥ सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१ ॥
[12]तस्मिन्काले हि कौसल्या तस्थावामीलितेक्षणा ॥ सुमित्रयाऽन्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२ ॥
श्रुत्वा [13]पुष्येण पुत्रस्य [14]यौवराज्याभिषेचनम् ॥ प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३ ॥

तीवशब्दएवकारार्थः ॥ २२ ॥ अद्यप्रभृति एतदहरारभ्य । निशा उपवस्तव्या । "वसेरश्यर्थस्यप्रतिषेधो वक्तव्यः" इतिभोजननिवृत्त्यर्थस्यवसेरकर्मकत्वादत्रसकर्मकत्वमार्षं । निशायामुपवस्तव्यमित्यर्थः । दर्भप्रस्तरोदर्भास्तरणं॥२३॥एवंविधानि अभिषेकादिमहाश्रेयोरूपाणि॥२४॥ केकयराजायराज्यशुल्कंदत्वाकैकेयीविवाहंकृतवान् तंवृत्तान्तंहृदिकृत्वाह—विप्रोषितइति । अयंवृत्तान्तःसप्तोत्तरशततमेसर्गे । "पुराभ्रातःपितानः समातरंतेसमुद्वहन् । मातामहेसमाश्रौषीद्राज्यशुल्कमनुत्तमं" इतिस्पष्टीभविष्यति । प्राप्तकालइत्यत्रेतिकरणंद्रष्टव्यं ॥ २५ ॥ वृत्ते आचारे ॥ २६ ॥ अत्यन्तधर्मिष्ठानामपिचेतश्चञ्चलत्वात् मित्रभेदादिनाऽन्यथाभवतीत्याह—किंत्विति । किंतु तथापीत्यर्थः । यद्यपि "कामंखलुसतांवृत्ते" इत्याद्युक्तगुणविशिष्टतयासनशङ्कास्पदीभूतः तथापि मनुष्याणां मनुष्यत्वसाधारण्येनशङ्कितं चित्तं अनित्यं चञ्चलमितिमेमतिः ममनिश्चयइत्यर्थः । सामान्यप्रयुक्तदोषोविशेषेनसंक्रमतइत्याह—सतांत्विति । तुशब्दःपक्षव्यावृत्त्यर्थः । धर्मनित्यानां धर्मैकनिरतानां । कृतशोभि कृतेनपरस्परोपकारेणशोभते नतुभेदंप्राप्नोति । राघव रघुवंशोत्पन्नस्त्वंस्ववंशप्रभावंनजानासिकिं । अन्येत्वेवंव्याचक्षते । धर्मनित्यानां धर्मनिरतानां । चित्तं कृतशोभि कृतेनपरकृतमित्रभेदादिनाशोभितुंशीलमस्यास्तीतिकृतशोभीति । अपरेत्वाहुः । सतांचित्तं कृतेनकार्येणशोभते नतुकरिष्यमाणेन । कृतं कार्यमनुमोदतेनतुकरिष्यमाणमितिभावइति ॥ २७ ॥ अभिषेचनेविषये इत्युक्तः सरामः व्रजेत्यनुज्ञातइतिसंबन्धः ॥ २८ ॥ राज्ञोद्दिष्टेऽभिषेचनइतिनिमित्तसप्तमी । राज्ञोद्दिष्टमभिषेकंकथयितुमित्यर्थः ॥ २९ ॥ प्रवणां स्वासाधारणदेवतासक्तचित्तां । क्षौमवासिनीं व्रतोपयुक्तक्षौमवस्त्रधरां । वाग्यतां यतवाचं । मौनवतीमित्यर्थः । श्रियं संपदं । आयाचतीं प्रार्थयन्तीं । रामायेतिशेषः ॥ ३० ॥ प्राक् रामागमनात्पूर्वमेव । सुमित्रा प्रियंरामाभिषेचनंश्रुत्वा आगता । लक्ष्मणश्च तदा सुमित्रागमनकाले आगतः । सीतातुपरतन्त्रत्वात्स्वयंनागता । किंतुदासीभिरानायिता ॥ ३१ ॥ तस्मिन् रामागमनकाले । पुत्रस्यपुष्ये-

**ति०** राज्ञाआदिष्टे आज्ञप्तेअभिषेचने । सीतायैतदपेक्षितराजोपदिष्टसभार्योपवासानुष्ठाननिवेदनायस्वगृहंप्रविश्य तत्रसीतामदृष्ट्वा तत्क्षणादेवमातुरन्तःपुरंययौ ॥ २९ ॥ **स०** पुरुषं पूर्णषड्गुणं । जनार्दनं जनंजननमर्दयतीतिवा नजायतेजनःअर्दयतिसंसारमित्यर्दनः जनश्चासावर्दनश्चेतिवा तं ॥ ३३ ॥

[ **पा०** ] १ ख. ग. ज. त्वयाद्यव्रतिना. २ घ. ण्येवंविधानिच. ३ ख—छ. झ. ञ. ट. किंनुचित्तं. ४ झ. ट. मेमनः. ५ क—छ. झ. ञ. ट. सतांच. ६ क. च. ञ. कृतशोभिहि. ७ ङ. च. छ. झ. ट. मभिभाष्याभ्यया. ८ ख. ङ. छ. झ. ट. राज्ञादिष्टे. ९ ङ. छ. झ. ट. तत्क्षणादेव. ख. तस्मिन्क्षणेस. क. च. ञ. तत्क्षणेनस. १० क. ङ. च. छ. झ. ञ. ट. निष्क्रम्य. ११ ग. घ. ङ. छ. ज. झ. ट. लक्ष्मणस्तथा. १२ क. च. ञ. न्कालेतु. ङ. च. झ. ट. न्कालेऽपि. ख. न्कालेव. १३ ङ. छ. झ. ट. पुष्येच. ख. पुण्येन. १४ ख. घ. ङ. ज. झ. ट. राज्येऽभिषेचनम्.

[1]तथा सन्नियमामेवं[2] सोभिगम्याभिवाद्य च ॥ उवाच वचनं रामो हर्षयंस्तामिदं[3] तदा ॥ ३४ ॥
अम्ब पित्रा नियुक्तोस्मि प्रजापालनकर्मणि ॥ भविता [4]श्वोऽभिषेको मे यथा मे शासनं पितुः ॥३५॥
सीतयाऽप्युपवस्तव्या [5]रजनीयं मया सह ॥ [6]एवमृत्विगुपाध्यायैः [7]सह मामुक्तवान्पिता ॥ ३६ ॥
यानियान्यत्र [8]योग्यानि श्वो भाविन्यभिषेचने ॥ तानि मे [9]मङ्गलान्यद्य [10]वैदेह्याश्चैव कारय ॥ ३७ ॥
एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकाङ्क्षितम् ॥ [11]हर्षबाष्पकलं वाक्यमिदं राममभाषत ॥ ३८ ॥
वत्स राम चिरं जीव हतास्ते परिपन्थिनः ॥ ज्ञातीन्मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९ ॥
कल्याणे [12]बर्ते नक्षत्रे [13]मयि जातोसि पुत्रक ॥ येन त्वया दशरथो गुणैराराधितः पिता ॥ ४० ॥
अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे ॥ येयमिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥ ४१ ॥
इत्येवमुक्तो [14]मात्रेदं रामो भ्रातरमब्रवीत् ॥ प्राञ्जलिं [15]प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥ ४२ ॥
लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुंधराम् ॥ द्वितीयं मेन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥४३॥
सौमित्रे भुंक्ष्व [16]भोगांस्त्वमिष्टान्राज्यफलानि च ॥ [17]जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥४४॥
इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ॥ अभ्यनुज्ञाप्य सीतां च [18]जगाम स्वं निवेशनम् ॥४५॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

णयौवराज्याभिषेचनंश्रुत्वा सुमित्रादिभिरन्वास्यमाना प्राणायामेन प्राणायामपूर्वकं । पुरुषं पुरुषसूक्तप्रतिपाद्यपुरुषशब्दवाच्यं । जनार्दनं नारायणं । ध्यायमाना ध्यायन्ती । आमीलितेक्षणा तस्थौ ॥३२—३३॥ तथा पूर्वोक्तरीत्या। सन्नियमां समीचीननियमां ॥३४॥ मेपितुःशासनंयथातथाऽभिषेकःश्वोभवितेतिसंबन्धः ॥ ३५ ॥ सीतयामयापि सह तुल्यतया । इयंरजनी एतद्दिनरात्रिः । उपवस्तव्या । अस्यांरजन्यामुपवस्तव्यमित्यर्थः। किंत्वयैवोच्यतेनेत्याह—एवमिति ॥३६॥ मङ्गलानि मङ्गलकर्माणि ॥३७॥ हर्षबाष्पकलं हर्षबाष्पेणकलमव्यक्तमधुरं । वाक्यं ईषद्वाक्यं ॥ ३८ ॥ हताः भवन्त्वितिशेषः । ज्ञातीन् बन्धून् ॥ ३९ ॥ कल्याणे अतिशोभने । नक्षत्र मयिजातोसि । बतेतिसंतोषे । "खेदानुकंपासंतोषविस्मयामन्त्रणेबत" इत्यमरः । मयेतिपाठे मयाहेतुनेत्यर्थः । येन येनकारणेन ॥ ४० ॥ पुष्करेक्षणे पुण्डरीकाक्षे । पुरुषे नारायणेविषये । मेक्षान्तं व्रतोपवासादिक्लेशसहनं । अमोघं सफलं । साफल्येहेतुमाह—येयमिति । सासंश्रयिष्यतीतिशेषः ॥ ४१ ॥ स्मयन्निव समन्दस्मितइत्यर्थः । सतोषातिशयेनाब्रवीदितिभावः ॥ ४२ ॥ द्वितीयमन्तरात्मानं द्वितीयंप्राणं ॥ ४३ ॥ भोगान् भोग्यपदार्थान् । इष्टान् अभिमतान् । राज्यफलानि अनर्घ्यरत्नवस्त्राभरणादीनि ॥ ४४ ॥ सीतांचाभ्यनुज्ञाप्य मातृभ्यामितिशेषः ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने चतुर्थःसर्गः ॥ ४ ॥

---

**शि०** एवमुपाध्यायैरुक्तंवचःसपितामामुक्तवान् ॥ ३६ ॥ **ति०** कल्याणेनक्षत्रे शुभयुक्तेकाले । मयाजातः जनितः ॥ ४० ॥ **ति०** यद्वाराज्यफलानि धर्मार्थौ । तौचप्राप्नुहि ॥ ४४ ॥ इतिचतुर्थस्सर्गः ॥ ४ ॥

**[ पा० ]** १ ज. तदासनियमां. क—छ. झ. तथासनियमां. २ ख. ग. ज. मेवंसोभिगम्य. ३ ङ. झ. ट. स्तामिदंवरं. ग. घ. ज. स्तामनिन्दिताम्. ४ क. च. ञ. श्वोऽभिषेकोऽयं. ५ ख. रजनीचमया. ६ ङ. झ. ट. एवमुक्तमुपाध्यायैः. ७ ङ. छ. झ. ट. सहिमामुक्तवान्. ८ घ. योज्यानि. ९ ख. मङ्गलान्यत्र. १० ख. ग. घ. ज. वैदेह्याश्चापि. ११ ङ. छ. झ. ञ. ट. बाष्पाकुलं. १२ घ. कल्याणेऽदितिनक्षत्रे. १३ ख—च. झ. ट. मयाजातोसि. १४ ङ. छ. झ. ट. मात्रातु. १५ ङ. ट. प्राक्समासीनं. १६ घ. भोग्यांस्त्वं. १७ ङ. झ. ट. जीवितंचापि. १८ ङ. छ. झ. ट. ययौस्वंचनिवेशनम्.

# पञ्चमः सर्गः ॥ ५ ॥

वसिष्ठेनदशरथचोदनयारामनिवेशनंप्राप्यसीतयासहमन्त्रवद्व्रताचरणनिवेदनपूर्वकं पुनर्दशरथसमीपगमनम् ॥ १ ॥ वसिष्ठाभ्यनुज्ञातेनृपेणसभाजनविसर्जनपूर्वकंस्वान्तःपुरप्रवेशः ॥ २ ॥

संदिश्य रामं नृपतिः श्वो भाविन्यभिषेचने ॥ पुरोहितं समाहूय वसिष्ठं [1]चेदमब्रवीत् ॥ १ ॥
गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन ॥ [2]श्रीयशोराज्यलाभाय वध्वा सह [3]यतव्रतम् ॥ २ ॥
तथेति च स राजानमुक्त्वा वेदविदां वरः ॥ स्वयं वसिष्ठो भगवान्ययौ रामनिवेशनम् ॥ ३ ॥
उपवा[4]सयितुं रामं मन्त्रवन्[5]मन्त्रकोविदः ॥ ब्राह्मं रथवरं युक्तमास्थाय [6]सुदृढव्रतः ॥ ४ ॥
स [7]रामभवनं प्राप्य पाण्डुराभ्रघनप्रभम् ॥ तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥ ५ ॥
तमा[8]र्गतमृषिं रामस्त्वरन्निव [9]ससंभ्रमः ॥ मानयिष्यन्स मानार्हं निश्चक्राम निवेशनात् ॥ ६ ॥
अभ्येत्य [10]त्वरमाणश्च रथाभ्याशं मनीषिणः ॥ ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥ ७ ॥
स चैनं प्रश्रितं दृष्ट्वा संभाष्याभिप्रसाद्य च ॥ [11]प्रियार्हं हर्षयन्राममित्युवाच पुरोहितः ॥ ८ ॥
प्रसन्नस्ते पिता राम [12]यौवराज्यमवाप्स्यसि ॥ उपवासं भवानद्य करोतु सह सीतया ॥ ९ ॥
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः ॥ पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १० ॥
इत्युक्त्वा स तदा राममुपवासं [13]यतव्रतम् ॥ [14]मन्त्रवत्कारयामास वैदेह्या [15]सहितं मुनिः ॥ ११ ॥
ततो यथावद्रामेण स राज्ञो गुरुरर्चितः ॥ अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२ ॥
सुहृद्भिस्तत्र रामोपि [16]सहासीनः प्रियंवदैः ॥ सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥ १३ ॥
[17]हृष्टनारीनरयुतं रामवेश्म [18]तदा बभौ ॥ यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४ ॥
स राजभवनप्रख्यात्तस्माद्रामनिवेशनात् ॥ [19]निर्गत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५ ॥

अथोपवासस्यपुरोहितसंकल्पमन्त्रादिसाध्यत्वात्पुरोहितंसंदिशतिपञ्चमे। संदिश्य व्रतोपवासादिकंकुर्वित्यनुज्ञाप्य ॥१॥ काकुत्स्थमुपवासंकारय "हृक्रोरन्यतरस्यां" इतिविकल्पेनकाकुत्स्थशब्दस्यकर्मसंज्ञा ॥२–३॥ ब्राह्मं ब्राह्मणवहनयोग्यं। युक्तं वाजिभिर्युक्तं। आस्थाय ययावितिपूर्वेणसंबन्धः ॥ ४ ॥ पाण्डुराभ्रघनप्रभं पाण्डुराभ्रमूर्तसदृशप्रभं । "घनोमेघेमूर्तिगुणेत्रिषुमूर्तेनिरन्तरे" इत्यमरः ॥ ५॥ त्वरन्निव इवशब्दोवाक्यालंकारे। मानयिष्यन् माननाद्धेतोः । "लक्षणहेत्वोःक्रियायाः" इतिहेत्वर्थेशतृप्रत्ययः ॥ ६ ॥ रथाभ्याशं रथसमीपं ॥ ७ ॥ प्रश्रितं विनीतं । "विनीतप्रश्रितौसमौ" इत्यमरः । संभाष्य कुशलप्रश्नंकृत्वा । सभाज्येतिपाठेकुशलप्रश्नाधीनप्रीतिंजनयित्वेत्यर्थः। सभाजप्रीतिसेवनयोरित्यस्माद्धातोरार्षोल्यप्। प्रियार्हं प्रियकथनार्हं ॥८—११॥ काकुत्स्थमभ्यनुज्ञाप्य अनुयान्तंराममंनिवर्तस्वेत्युक्त्वा । ययौ निर्ययौ ॥ १२—१५ ॥

**ती०** पाण्डुराभ्रघनप्रभं पाण्डुराभ्रस्येवघनासान्द्राप्रभायस्यतत् ॥ ५ ॥ **ति०** त्वरन्निव त्वरन्नेव ॥ ६ ॥ **ति०** राजभवनं मूलराजभवनं । प्रख्यं सदृशं ॥ १५ ॥

**[ पा० ]** १ क. मिदमब्रवीत्. २ ङ. छ. झ. ञ. ट. श्रेयसेराज्य. ३ ङ. छ. झ. यतव्रत. ४ ङ. छ. झ. ट. यितुंवीरं. ५ ङ. छ. झ. ट. मन्त्रविन्मन्त्रकोविदम्. ज. मन्त्रयन्मन्त्रपारगः. ख. ग. घ. मन्त्रवन्मन्त्रपारगः. क. च. ञ. काकुत्स्थंमन्त्रकोविदम्. ६ ङ. छ. ग. ज. झ. ट. ठ. सुधृतव्रतः. ७ क. च. ञ. भवनंगत्वा. ८ ख. समागतमृषिं. ९ ङ. छ. झ. ञ. ट. ससंभ्रमम्. १० ख. ग. ङ. छ. झ. ट. त्वरमाणोथ. ११ क. प्रियार्हो. १२ ङ. छ. झ. ट. यत्त्वंराज्य. १३ ख. घ. छ. झ. यतव्रतः. १४ क. ङ. च. ञ. मन्त्रवित्कारयामास. १५ ङ. छ. झ. सहितंशुचिः. १६ क. च. सुखासीनः. १७ क. च. ञ. प्रहृष्टनरनारीकं. १८ क. बभौतदा. १९ क. ग. घ. च. ज. ञ. निस्सृत्य ददृशे.

[1]बृन्दबृन्दैरयोध्यायां राजमार्गाः समन्ततः ॥ बभूवु[2]रभिसंबाधाः कुतूहल[3]जनैर्वृताः ॥ १६ ॥
[4]जनबृन्दोर्मिसंघर्षहर्ष[5]स्वनवतस्तदा ॥ बभूव राजमार्गस्य सागरस्येव निस्वनः ॥ १७ ॥
सिक्तसंमृष्ट[6]रथ्या हि [7]तदहर्वनमालिनी ॥ आसीद[8]योध्या नगरी समुच्छ्रितगृहध्वजा[9] ॥ १८ ॥
[10]तदा ह्ययोध्यानिलयः सस्त्रीबालाबलो[11] जनः ॥ रामाभिषेक[12]माकाङ्क्षन्नाकाङ्क्षदुदयं रवेः ॥ १९ ॥
प्रजालङ्कारभूतं च [13]जनस्यानन्दवर्धनम् ॥ उत्सुकोऽभूज्जनो द्रष्टुं [14]तमयोध्यामहोत्सवम् ॥ २० ॥
[15]एवं तं जनसंबाधं राजमार्गं पुरोहितः ॥ व्यूहन्निव जनौघं तं शनै राजकुलं ययौ ॥ २१ ॥
[16]शुभ्राभ्रशिखरप्रख्यं प्रासाद[17]मधिरुह्य सः ॥ समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२ ॥
[18]तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः ॥ [19]पप्रच्छ स च तस्मै तत्कृतमित्य[20]भ्यवेदयत् ॥ २३ ॥
तेन[21] चैव तदा तुल्यं सहासीनाः सभासदः ॥ आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥२४॥
गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् ॥ विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५ ॥

[22]तदग्र्यरूपं प्रमदागणाकुलं महेन्द्रवेश्मप्रतिमं निवेशनम् ॥
विदीपयंश्चारु विवेश पार्थिवः शशीव तारागणसंकुलं नभः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

बृन्दानुबद्धानिबृन्दानियेषांतेबृन्दबृन्दाः । तैः । कुतूहलजनैर्वृताराजमार्गा अभिसंबाधाः निबिडाः । बभूवुरितियोजना । बृन्दबृन्दमितिपाठे बृन्दंबृन्दंयथाभवतितथास्थितैरितिशेषः ॥ १६ ॥ जनबृन्दान्येवऊर्मयः तेषां संघर्षः अन्योन्यघटनं । हर्षः आनन्दोद्रेकः ताभ्यांजनितःस्वनोस्यास्तीतिस्वनवान् तस्य ।एतेन सागरोपमासमर्थिता ॥१७॥ तदहः तस्मिन्नहनि । वनमालिनी अलङ्कारार्थविरचितक्रमुककदल्यादिवनपङ्क्तियुक्तेतियावत् ॥१८॥ सस्त्रीबालाबलः अबलाःबलरहिताः वृद्धाइतियावत् । रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षदुदयंरवेरिति रामाभिषेकार्थंउदयमाकाङ्क्षदित्यर्थः । श्वोरामाभिषेकइतिवार्ता यदासमजनि तदाप्रभृति रामाभिषेकादरातिशयेन आहारनिद्रादिव्यापारान्विहाय परदिवससूर्योदयमाकाङ्क्षदितिभावः ॥ १९ ॥ प्रजालङ्कारभूतं प्रजालङ्करणहेतुभूतं प्रजालङ्कारप्रचुरमितिवा ॥ २० ॥ राजमार्गे पश्यन्निितिशेषः। तंजनौघंव्यूहन्निव रामाभिषेकजनितानन्दनिर्भरंजनौघं तत्रतत्रसमूहीकुर्वन्निव । शनैः राजकुलं राजगृहं ययौ ॥२१—२२॥ नृपोदशरथः । राजासनं स्वाधिष्ठितंसिंहासनं। हित्वा प्रत्युत्थायेत्यर्थः । पप्रच्छ किंरामस्योपवासःकारितइतीतिशेषः । सः वसिष्ठः। तस्मै दशरथाय । तत् उपवासकरणं ॥ २३ ॥ तदा दशरथसमुत्थानकाले । तुल्यं युगपत् ॥ २४—२५ ॥ विदीपयन् तेजोविशेषेणद्योतयन् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डे पञ्चमःसर्गः ॥ ५ ॥

---

**ति॰** सस्त्रीबालाकुलः स्त्रीबालैस्सहितश्चासावाकुलःसंतोषात्संभ्रान्तचित्तः । आकाङ्क्षन् अभूदितिशेषः ॥ १९ ॥ इतिपञ्चमस्सर्गः ॥ ५ ॥

**[ पा॰ ]** १ ख. ग. बृन्दंबृन्दमयोध्यायां. २ ट. रतिसंबाधाः. ३ क. कुतूहलिजनैर्वृताः. ४ ख. जनसंघोर्मि. ५ क. च. स्वनवतस्स्वनः. झ. स्वनवृतस्तदा. ६ क. च. ञ. रथ्याच. ७ ङ. छ. झ. ट. तथाचवनमालिनी. ८ ङ. छ. झ. ट. दयोध्यातदहः. ९ क. बृहद्ध्वजा. १० छ. तदाह्ययोध्या. ११ ङ. च. छ. झ. ट. बालाकुलोजनः. १२ क. ग. घ. ङ. छ. झ. ञ. ट. माकाङ्क्षन्नुदयं. १३ ख. जनस्यानन्दिवर्धनम्. १४ ञ. मयोध्यायां. १५ झ. एवंतज्जनसंबाधं. १६ क. घ—छ. झ. ञ. ट. सिताभ्रशिखरप्रख्यं. ख. श्वेताद्रिशिखरप्रख्यं. १७ ङ. छ. झ. ट. मधिरुह्यच. १८ ख. समागतंमुनिंप्रेक्ष्य. १९ ङ. छ. झ. ञ. ट. पप्रच्छस्वमतंतस्मै. २० क. च. ञ. त्यभ्यचोदयत्. २१ ख. ग. तेनचैवसहासीनास्तदातुल्यं. २२ क. ग—ञ. तदग्र्यवेषप्रमदाजनाकुलं.

## षष्ठः सर्गः ॥ ६ ॥

श्रीरामेणवसिष्ठनियोगात्स्नानादिनियमेनसीतयासहश्रीनारायणोपासनादिपूर्वकं नियमेनकुशसंस्तरेशयनम् ॥ १ ॥ तथा निशावसानेप्रबोधितेनसन्ध्योपासनादिपूर्वकं ब्राह्मणैःपुण्याहवाचनम् ॥ २ ॥ पौरैःपुरालङ्करणादिपूर्वकं दशरथप्रशंसनम् ॥ ३ ॥ रामाभिषेकदिदृक्षयासमागतैर्नानाजानपदजनैर्नगरपरिपूरणम् ॥ ४ ॥

गते पुरोहिते रामः स्नातो नियतमानसः ॥ सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ १ ॥
प्रगृह्य शिरसा पात्रीं[1] हविषो विधिवत्तदा[2] ॥ महते दैवतायाज्यं जुहाव ज्वलितेऽनले[3] ॥ २ ॥
शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् ॥ ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३ ॥
वाग्यतः सह वैदेह्या भूत्वा नियतमानसः ॥ श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४ ॥
एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः[4] ॥ अलङ्कारविधिं[5] कृत्स्नं कारयामास वेश्मनः ॥ ५ ॥
तत्र[6] शृण्वन्सुखा वाचः सूतमागधवन्दिनाम् ॥ पूर्वां सन्ध्यामुपासीनो[7] जजाप यतमानसः[8] ॥ ६ ॥

अथरामस्याभिषेकसन्नाहंदर्शयतिषष्ठे—पुरोहितेगतइत्यसन्निधानकृतराजसगुणनिमित्तकनास्तिक्यव्यावृत्तिः । स्नातइतिकायशुद्धिः । नियतमानसइति मनश्शुद्धिः । सहपत्न्येतिश्रीरङ्गविग्रहानुभवसागरतरणस्यसहायोक्तिः "पत्युर्नोयज्ञसंयोगे" इतिदीक्षानियमस्यपत्नीसहायत्वोक्तिश्च । तृतीययाआराधनकाले सीतायाउपकरणसमर्पणपरताव्यज्यते । विशालाक्ष्येतिरामविग्रहानुभवादपिश्रीरङ्गविग्रहस्यनिरतिशयप्रियास्पदत्वेननिर्निमेषानुभवउक्तः । विशालाक्ष्या नारायणमिति सीतानेत्रवागुरानाकृष्टतयासीतायाअप्राधान्यं । नारायणस्यस्वाभीप्सिततमत्वेनप्राधान्यंचोक्तं । अत्र नारायणइतिश्रीरङ्गनायकउच्यते । उत्तरत्रतस्यैवविभीषणायदानोक्तेः ॥ १ ॥ शिरसापात्रींप्रगृह्येति "उपरिहिदेवेभ्योधारयति" इतिश्रुतिरूपबृंहिता । महतेदैवताय निरतिशयमहिमवतेदैवताय । "तंदेवतानांपरमंचदैवतं" इतिश्रुतेर्नारायणायेत्यर्थः । नारायणमुपागमदित्युपक्रमात् । ध्यायन्नारायणंदेवमित्युत्तरत्रोक्तेश्च । तेनमहतेदैवतायेतिमहादेववाचित्वभ्रान्तिर्निरस्ता । नचव्यस्तस्यविभिन्नविभक्त्यन्तस्यैकपदत्वमेकावाशक्तिरस्ति । महादेवशब्दस्याखण्डस्यशिवेशक्तावपिखण्डपदद्वयस्य प्रस्तुतपरदेवतावरुद्धस्याप्रस्तुतान्यदेवतावाचकत्वकल्पनमन्धतामिस्रनिपातकदुरितादृष्टंविनानशक्यते ॥ २ ॥ आत्मनः प्रियमाशास्य श्रीरङ्गार्पितहविश्शेषं स्वस्यात्यन्तप्रियत्वेनानुसन्धाय नारायणंश्रीरङ्गनायकंध्यायन् कुशसंस्तरे कुशमयेशयनीये ।"शयनीयेसप्ततन्तौसंस्तरःपरिकीर्तितः" इतिनिघण्टुः ॥ ३ ॥ वैदेह्यासहेतिउभयोरप्येकशय्यायांजितेन्द्रियत्वंध्वनितं। श्रीमति "विमानंप्रणवाकारं" इत्याद्युक्तवेदत्रयसारभूतप्रणवाकारे । "ऋचःसामानियजूंषि । साहिश्रीरमृतासतां" इतिश्रुतेः। विष्णोरायतने श्रीरङ्गधाम्नि। शिश्ये शयनंकृतवान् । नरवरात्मजः । स्वस्यसाक्षाद्भगवदवतारत्वेपि श्रीरङ्गविग्रहार्चोपसर्जनभावःस्वावतारानुमतक्षत्रियधर्मानुगुणः॥ ४॥ अलङ्कारविधिं अलङ्कारविधानं। "विधिर्विधानेदैवेपि" इत्यमरः ॥ ५ ॥ सूताः सूतकुलोत्पन्नाः पुण्यश्लोकदेवताकीर्तकाः । मागधाः मगधदेशोत्पन्नाःवंशावलिकीर्तकाः। वन्दिनः स्तुतिपाठकाः । सन्ध्यां सन्ध्याधिदेवतां सूर्यं । उपासीनः ध्यायन् । नियतमानसः

तनि० अत्रविशेष्यानुपादानाद्विशालाक्षीशब्दस्यलक्ष्म्यांरूढिप्रायत्वंव्यज्यते । अतएव "ऋतेमायांविशालाक्षींतवपूर्वपरिग्रहं" इत्यत्रविशालाक्षीशब्देनलक्ष्मीरूपविशेष्यंव्यज्यते । अत्रनारायणइतिश्रीरङ्गनायकउच्यते । उपागमदित्यत्र अगमदित्यनेनभगवन्मन्दिरप्राप्तिकथनादुपशब्देननिवेदनपर्यन्तभगवदाराधनंव्यज्यते । शेषंगोविन्दराजीयवत् ॥ १ ॥ शि० शिरसा तदुपलक्षितनमस्कारेण । नमस्कारपूर्वकंहविःपात्रंगृहीत्वेत्यर्थः ॥ २ ॥ ति० आत्मनःप्रियं राज्याभिषेकाविघ्नरूपं वस्तुतोरावणवधफलक-

[ पा० ] १ क. पात्रं. २ ख. ङ. छ. झ. विधिवत्ततः. ३ छ. झ. ज्वलितानले. ४ क. च. ट. रात्र्यांप्रतिबोध्यसः. घ. रात्र्यांप्रतिविबोध्य. च. ञ. प्रतिविबुध्यवै. ५ ङ. छ. झ. ट. विधिंसम्यक्. ६ च. ञ. ट. ततश्शृण्वन्. ७ घ. संध्यांसमासीनो. ८ झ. ञ. सुसमाहितः.

तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् ॥ विमलक्षौमसंवीतो वाचयामास [1]च द्विजान् ॥ ७ ॥
तेषां पुण्याह[2]घोषोथ गंभीरमधुर[3]स्तदा ॥ अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥ ८ ॥
कृतोपवासं तु तदा वैदेह्या सह राघवम् ॥ अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः ॥ ९ ॥
ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ॥ प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं [4]पुरीम् ॥ १० ॥
[5]सिताभ्रशिखराभेषु देवतायतनेषु च ॥ चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११ ॥
नानापण्यसमृद्धेषु वणिजामापणेषु च ॥ कुटुंबिनां समृद्धेषु श्रीमत्सु भवनेषु च ॥ १२ ॥
सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ॥ ध्वजाः [6]समुच्छ्रिताश्चित्राः पताका[7]श्चाभवंस्तदा ॥ १३ ॥
[8]नटनर्तकसङ्घानां गायकानां च गायताम् ॥ मनःकर्णसुखा वाचः [9]शुश्रुवुश्च ततस्ततः ॥ १४ ॥
[10]रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः ॥ रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥ १५ ॥
बाला अपि क्रीडमाना गृहद्वारेषु [11]सङ्घशः ॥ [12]रामाभिषेकसंयुक्ता[13]श्चक्रुरेवं मिथः कथाः ॥ १६ ॥
कृतपुष्पोपहारश्च धूपगन्धाधिवासितः ॥ राजमार्गः कृतः श्रीमान्पौरै रामाभिषेचने ॥ १७ ॥

नियतमनस्कः अनन्यचित्तइतियावत् । जजाप गायत्रीमितिशेषः ॥ ६ ॥ सन्ध्योपासनानन्तरं मधुसूदनं सूर्यान्तर्वर्तिनंनारायणं तुष्टाव मित्रस्येत्यादिनेतिशेषः । शिरसाप्रणतः दण्डवत्प्रणतः । विमलक्षौमसंवीतइत्यनेन नूतनवस्त्रपरिवृत्त्या प्रातर्गौणस्नानमुक्तं । वाचयामास स्वस्तिवाचनंकारयामासेत्यर्थः ॥ ७ ॥ तूर्यघोषानुनादितः तूर्यघोषानुबन्धिनादयुक्तः ॥ ८ ॥ प्रमुदितः संतुष्टः अभूत् ॥ ९ ॥ पुरींशोभयितुंचक्रे पुरशोभोत्पादनार्थं संमार्जनालेपनवितानमालिकाबन्धनकर्मादिकमकरोदित्यर्थः ॥१०॥ चैत्येषु बौद्धालयेषु । अट्टालकेषु प्राकारोपरियुद्धार्थपरिकल्पितचतुस्स्तंभमण्डपेष्वितियावत् ॥ ११—१२ ॥ आलक्षितेषु आसमन्ताल्लक्षितेषु । समुन्नतत्वाद्दूरादप्यक्षिगोचरेष्वित्यर्थः । ध्वजाः सचिह्नाः । पताकाः चिह्नरहिताः । समुच्छ्रिताः बद्धाः ॥१३॥ नटाः नाटकाः अभिनयकर्तारः । नर्तकाः केवलाङ्गहारकृतः । मनःकर्णसुखाः "संश्रवे मधुरंवाक्यं" इत्युक्तरीत्याश्रवणमात्रेणसुखकराः पश्चान्मनसश्चाह्लादकाइत्यर्थः । शुश्रुवुः जनाइतिशेषः ॥ १४ ॥ मिथः अन्योन्यं । "मिथोन्योन्यं" इत्यमरः । चत्वरेषु अङ्गणेषु । गृहेषुस्त्रीभिः बहिरङ्गणेषुजनैश्चकथाश्चक्रुरितिरामभक्तावकृत्रिमत्वमुक्तं ॥१५—१६॥ कृत-

वनगमनरूपं आशास्य संकल्प्येत्यर्थः ॥ ३ ॥ **शि०** सूताः पौराणिकाः ॥६॥ **शि०** सरामःद्विजानुतुष्टाव । मधुसूदनं मधुसूदनशब्दं । वाचयामासच द्विजैरुच्चारयामासेत्यर्थः । मधुसूदनशब्दार्थस्तु मधौचैत्रे सूःप्रादुर्भावोयस्यसः । उद्यतेस्वस्वकल्याणार्थंसर्वैरुच्यतइतिउत् । अनितिब्रह्मादीनपिपालयतीतिअनः । त्रयाणांकर्मधारयः । एतेनस्वनामोच्चारणविषयकप्रीत्यतिशयोरघुनाथस्यसूचितः । दूरान्वयीदमितितुनभ्रमितव्यम् । पाठक्रमादर्थक्रमस्यबलीयस्त्वादाकाङ्क्षितत्वाच्चेतिदिक् ॥ ७ ॥ **शि०** तदा मधुसूदनशब्दोच्चारणकाले । तेषां द्विजानां । तूर्यघोषानुनादितः तूर्यघोषानुनादविशिष्टः । पुण्याहघोषोत्थगंभीरमधुरः पुण्यंपवित्रत्वंनजहातीतिपुण्याहः । सार्वकालिकपवित्रतासंपादकधर्मविशिष्टइत्यर्थः । सएवघोषः मधुसूदनशब्दशब्दःतेनोत्थःसंजातःगंभीरमधुरःगंभीरेणगांभीर्येणसहितः मधुरोमाधुर्यं गांभीर्यमाधुर्येइत्यर्थः । अयोध्यांपूरयामास । गंभीरमधुरशब्दौभावप्रधानौ ॥ ८ ॥ **शि०** चक्रे प्रयत्नमितिशेषः । शोभायुतामित्याचार्यपाठः ॥ १० ॥ **शि०** चैत्येषु चैत्यंचैतन्यंअस्तियेषु । अर्शआद्यजन्तः । इदंदेवतायतनादिविशेषणम् । एतेनरामधाम्नश्चैतन्यंव्यक्तं । तत्रप्रमाणं "यत्रगुल्मलतावृक्षानित्यशोभान्तिचिन्मयाः" इत्यादि । चैत्येषुबौद्धालयेष्वितिगोविन्दाचार्यव्याख्यानंतु "ननास्तिकोनानृतकः—"इत्यादिनाबालकाण्डोक्तेनविरोधात्त्यक्तमितिदिक् ॥ ११ ॥ **ति०** ततः तत्रायोध्यायां ॥ १४ ॥ **ति०** रामाभिषवः रामाभिषेकः ॥ १६ ॥

**[ पा० ]** १ क. ङ. च. छ. झ. ञ. ट. सद्विजान्. २ ञ. ट. घोषोत्थ. ३ झ. गभीरमधुरस्तदा. ङ. छ. झ. ट. मधुरस्तथा. ४ क. च. ञ. पुरम्. ५ च. ञ. शुभ्राभ्रशिखराभेषु. ६ क. ख. ङ. च. छ. झ. ञ. ट. समुच्छ्रितास्साधु. ७ ङ. छ. झ. श्चाभवंस्तथा. ८ घ. नर्तकीनटसङ्घानां. ९ ङ. छ. झ. ट. शुश्रावजनताततः. १० क. ख. ग. ङ. ञ. रामाभिषवयुक्ताश्च. च. छ. ज. ठ. रामाभिषवसंयुक्ताः. ११ क. ख. ञ. ट. सर्वशः. १२ क. ख. ङ. च. झ. रामाभिषवसंयुक्ताः. १३ क—ङ. झ. ञ. चक्रुरेवंकथामिथः. छ. कथाश्चक्रुर्मिथोजनाः.

प्रकाशकरणार्थं च निशागमनशङ्कया ॥ दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ॥ १८ ॥
अलंकारं पुरस्यैवं कृत्वा तत्पुरवासिनः ॥ आकाङ्क्षमाणा रामस्य यौवराज्याभिषेचनम् ॥ १९ ॥
समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च ॥ कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम् ॥ २० ॥
अहो महात्मा राजाऽयमिक्ष्वाकुकुलनन्दनः ॥ ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥२१॥
सर्वे ह्यनुगृहीताः स्म यन्नो रामो महीपतिः ॥ चिराय भविता गोप्ता दृष्टलोकपरावरः ॥ २२ ॥
अनुद्धतमना विद्वान्धर्मात्मा भ्रातृवत्सलः ॥ यथा च भ्रातृषु स्निग्धस्तथाऽस्मास्वपि राघवः ॥२३॥
चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः ॥ यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥ २४ ॥
एवंविधं कथयतां पौराणां शुश्रुवुस्तदा ॥ दिग्भ्योपि श्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः ॥ २५ ॥
ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम् ॥ रामस्य पूरयामासुः पुरीं जानपदा जनाः ॥२६॥
जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निस्वनः ॥ पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः ॥ २७ ॥

ततस्तदिन्द्रक्षयसन्निभं पुरं दिदृक्षुभिर्जानपदैरुपागतैः ॥
समन्ततः सस्वनमाकुलं बभौ समुद्रयादोभिरिवार्णवोदकम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

पुष्पोपहारः कृतपुष्पबलिः ॥ १७ ॥ प्रकाशकरणार्थं वितानक्रमुककदल्यादिसमग्रताजनिततिमिरतिरोहितवस्तुप्रकाशनार्थं । यद्वा निशागमनशङ्कयाप्रकाशकरणार्थं । दीपवृक्षान् वृक्षाकारदीपस्तंभान् । अभिषेकानन्तरंगजस्कन्धाधिरूढतयाभिषेकालंकारप्रदर्शनार्थंनिर्गमनात्पूर्वंयदिकार्यवशान्निशास्यात्तदारामालंकारप्रदर्शनार्थंदीपवृक्षान् । अनुरथ्यासु रथ्यासुरथ्यासु । विभक्तेर्लुगभावआर्षः । निशागमनशङ्कयारामस्यप्रकाशकरणार्थंअनुरथ्यासुसर्वशः सर्वप्रकारान् । दीपवृक्षान्चक्रुश्च । तथाशब्दश्चार्थः ॥१८॥ अलङ्कारमित्यादिश्लोकद्वयम् ॥ १९—२० ॥ प्रशंसामेवाह—अहोइत्यादि ॥ २१ ॥ सर्वेप्यनुगृहीताःस्म देवेनेतिशेषः । नः अस्मान् । गोप्ता भवितेतिसंबन्धः । दृष्टलोकपरावरः दृष्टेयेललोकेपरावरेउत्कृष्टापकृष्टवस्तुनीयेनसतथोक्तः ॥ २२—२४ ॥ श्रुतवृत्तान्ताः श्रुतरामाभिषेकवार्ताः अतएवदिग्भ्यःप्राप्ताः जानपदाजनाः एवंविधं कथयतांपौराणांशुश्रुवुः । एवंविधंवाक्यजातमित्यर्थसिद्धं ॥ २५ ॥ पूर्वदिनेसकलजनसन्निधौ रामाभिषेकस्यप्रतिश्रुतत्वाद्रामस्यपुरीमितिनिर्दिष्टवानृषिः ॥२६॥ विसर्पद्भिः नानादेशेभ्यआगच्छद्भिः । उत्पादितइति शेषः । उदीर्णवेगस्य उज्जृंभितवेगस्य ॥ २७ ॥ इन्द्रक्षयः इन्द्रगृहं । "निवेशःशरणंक्षयः" इत्यमरः । अयोध्यापुरस्यामरावतीसादृश्येवक्तव्ये तत्सारभूतेन्द्रभवनदृष्टान्तीकरणादयोध्याया अतिरमणीयताद्योत्यते । जानपदैःसमन्ततः आकुलमितिसंबन्धः । समुद्रयादोभिः समुद्रान्तर्वर्तितिमितिमिङ्गिलादिजन्तुभिः । "यादांसिजलजन्तवः" इत्यमरः । कर्णावतंसादिपदवदविश्लेषप्रदर्शनायसमुद्रशब्दः । यद्वा समुद्रयादोभिः स-

---

ति० अनुरथ्यासु रथ्यापार्श्वयोः ॥ १८ ॥ स० आकाङ्क्षमाणाः इच्छन्तः । काङ्क्षिधातोश्चानश् । तेनकाङ्क्षिधातोःपरस्मैपदित्वेनकथमात्मनेपदित्वमितिशङ्कानवकाशः ॥ १९ ॥ ति० दृष्टलोकपरावरः भावप्रधानोनिर्देशः । यथावदवगततज्जनप्राशस्त्याप्राशस्त्यः । शि० दृष्टाःलोकाभुवनानिपरावराःउत्तमाधमाःयेनसः । स० दृष्टोज्ञातोलोकोयेनसदृष्टलोकः पराःलोकोत्तमत्वेनप्रसिद्धाब्रह्मादयःअवरायस्मादितिपरावरः । दृष्टलोकश्चासौपरावरश्चेतिवा । परोऽवरश्चलोकोदृष्टोयेनेतिवा । "कडाराःकर्मधारये" इति परनिपातः ॥ २२ ॥ ति० उपाहितैः उपागतैरित्यर्थः । हिगतौइत्यस्यरूपं । स० "भूमिविद्युत्सरिल्लतावनिताभिधानानि" इति लिङ्गानुशासनसूत्रे सरिद्वाचिनांशब्दानांस्त्रीत्वमभिधाय "यादोनपुंसकं यादश्शब्दस्सरिद्वाचकोपिक्लीबस्स्यात्" इति यादश्शब्दस्यनदीवाचकत्वोक्तेः समुद्रयादोभिः समुद्रसंगतनदीभिरिवेतिवा ॥ २८ ॥ इतिषष्ठस्सर्गः ॥ ६ ॥

[ पा० ] १ क—झ. प्रकाशीकरणार्थंच. २ घ. स्तत्रआशशंसुर्जनाशिवम्. ३ क. च. ञ. कुलवर्धनः. ४ ङ. छ. झ. ट. वृद्धंस्वमात्मानं. ५ ङ. झ. शुश्रुवुःपरे. छ. पुरे. ६ क. ग. ङ. च. झ. ञ. ट. दिग्भ्योविश्रुत. ७ ङ. छ. भ. रुपाहितैः.

## सप्तमः सर्गः ॥ ७ ॥

अपराह्णेप्रासादोपरिसंचरन्त्याकुब्जयामन्थराभिधयाकैकेयीप्रियदास्याऽयोध्यामहोत्सवस्यकौसल्ययाब्राह्मणेभ्योहर्षेणधनादिवितरणस्यचदर्शनेनरामस्यधात्रींप्रतितत्कारणप्रश्नः ॥ १ ॥ धात्र्यारामाभिषेकस्यतत्कारणत्वंबोधितयातयासरभसंकैकेयीमेत्यतांप्रतिदशरथगर्हणपूर्वकं रामाभिषेकनिवेदनेनतद्विघातनचोदना ॥ २ ॥ कैकेय्यातांप्रतिरामाभिषेकस्यस्वाभीष्टत्वनिवेदनेनपारितोषिकतयाकिंचिदाभरणवितरणम् ॥ ३ ॥

ज्ञातिदासी यतो जाता कैकेय्यास्तु[1] सहोषिता ॥ प्रासादं चन्द्रसंकाशमारुरोह यदृच्छया ॥ १ ॥
सिक्तराजपथां[2] रम्यां प्रकीर्णकुसुमोत्कराम्[3] ॥ अयोध्यां मन्थरा तस्मात्प्रासादादन्ववैक्षत ॥ २ ॥
पताकाभिर्वरार्हाभिर्ध्वजैश्च समलंकृताम् ॥ वृतां[4] छन्दपथैश्चापि शिरःस्नातजनैर्वृताम् ॥ ३ ॥

मुद्रगामिनीभिर्नदीभिः "यादोनपुंसकं" इति यादश्शब्दस्यनदीवाचकत्वेपिनपुंसकत्वंपाणिनीयलिङ्गानुशासनोक्तं । उदकशब्देनसत्त्वनत्वमुक्तं ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने षष्ठःसर्गः ॥ ६ ॥

——

अथरावणवधकाङ्क्षिभिर्देवैराविष्टमन्थरावाक्याद्रामाभिषेकविघ्नःप्रतिपाद्यते । पूर्वसर्गे गतेपुरोहितइत्यादिना तूर्यघोषानुनादितइत्यन्तेन पूर्वदिवसेअभिषेकाङ्गभूतव्रतोपवासादिकमाचरतोरामस्यवृत्तान्तमभिधाय कृतोपवासंतुतदेत्यारभ्य सर्गपर्यन्तेन रामाभिषेकश्रवणजनितानन्दनिर्भराणांपौराणांजानपदानांच जनानां रामाभिषेकदिवसप्राक्तनवृत्तान्तमभिधाय वाचःक्रमवर्तित्वादृषिः पूर्वदिवसप्रवृत्तकैकेयीवृत्तान्तंवक्तुमुपक्रमते —ज्ञातिदासीत्यादिना। कैकेय्याःज्ञातिदासी कैकेयीबन्धुदासी । " सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः-समाः" इत्यमरः । यतोजाता यत्रकुत्रचिज्जाता । अविज्ञातदेशमातापितृकेत्यर्थः । अतःकैकेय्याज्ञातिदासीत्वमपि स्वोदरप्रपूरणार्थंकृतमित्यवगन्तव्यं । सहोषिता सहावस्थिता । मन्थरायाःकैकेय्यासहावस्थानमपिहास्यहेतुभूतकुब्जात्वनिबन्धनं । यदृच्छया स्वैरितया । "यदृच्छास्वैरिता" इत्यमरः । यद्वा यतोजाता यतःकुतश्चिज्जाता । तादृशीनामयोध्यायां जननासंभवात् । यद्वा तन्नामजातिनिरूपणायोग्यतयातथानिर्देशः । आचार्यास्तुदेवैरेवंस्वकार्यार्थंकैकेयींभेदयितुंप्रेषितेतिदेवरहस्यस्यगोप्यतयातथानिर्देशइत्याहुः ॥ १ ॥ प्रासादादन्ववैक्षत पूर्वश्लोकेआरोहणस्योक्तत्वात्प्रासादादित्यस्यान्ववैक्षतेत्यनेनसंबन्धः । "अधिकरणेचोपसङ्ख्यानं" इत्यधिकरणेल्यब्लोपेपञ्चमी । प्रासादेस्थित्वाप्रैक्षतेत्यर्थः ॥ २ ॥ वरार्हाभिः श्रेष्ठाभिरित्यर्थः । छन्दपथैर्वृतां स्वच्छन्दगमनयोग्योपवीथीभिरावृतां । शिरस्स्नातैःशिरसास्ना-

ति० ज्ञातिदासीयतोनित्यमितिपाठे यतःकैकेय्याज्ञातेर्मातृकुलस्यदासी यतश्चकैकेय्यानित्यंसहोषिता अतोजनकोलाहलंश्रुत्वाकैकेय्यैतदर्थंनिवेदयितुं यदृच्छया स्वयमेव नत्वन्यप्रेरणया प्रासादमारुरोहेत्यन्वयः । इदंतुयुक्तं । "मन्थरानामकार्यार्थमप्सराप्रेषितासुरैः । दासीकाचनकैकेय्यैदत्ताकेकयभूभृता" इतिपाद्मोक्तेः। कार्यार्थं रावणवधरूपकार्यार्थं । दासीस्वयमागत्यकैकयराजस्यजातेतिशेषः । शि० अजाता आय विष्णवे तेनसहोद्वाहार्थमित्यर्थः । जायतेकुशध्वजभार्यायांप्रादुर्भवतीत्यजा । प्रतिज्ञातरावणवधवेदवत्यपरावस्थाकमाण्डवीत्यर्थः । तयासहअततिसततंगच्छतीत्यजातामन्थरेत्यर्थः । यतः कैकेय्याज्ञातिदासी ज्ञातिर्ज्ञानंतद्युक्तादासी अतिज्ञानवत्यनुचरी । अजातेत्यनेनवेदवत्यभिप्रायाभिज्ञत्वंतद्धिताचरणकर्तृत्वंचमन्थरायाव्यक्तम् ॥ १ ॥ ती० पताकाभिः सूक्ष्मध्वजैः । ध्वजैः स्थूलध्वजैः । छन्नपथैः पूरितनिम्नोन्नतप्रदेशैः । कृतां अलंकृतां । ति० वरार्हाभिः श्रेष्ठयोग्याभिः राजयोग्याभिरितियावत् । एतदुत्तरं "कृतांछन्नपथैश्चापिस्वच्छन्दकपथैर्वृताम्" इत्यर्धंपठन्ति । स्वच्छन्दकपथैः उत्सवादिषुजनभूयस्त्वेनप्रवेशनिर्गमार्थंप्राकारादिभङ्गेनकृतैर्मार्गैः । शिरस्स्नातैः कृताभ्यङ्गस्नानैः । शि० वरार्हाभिः वराःसर्वश्रेष्ठाःअतएवअर्हाः अयोध्यायोग्याः । कर्मधारयः। किंचवरोऽर्हःपूजायासां । किंच वरैस्सर्वश्रेष्ठैर्ब्रह्मादिभिरर्हाः प्रशंसिताइत्यर्थः। एतेन तत्पताकानांप्राकृतविलक्षणत्वंसूचितं । शिरस्स्नातजनैः मूर्धाभिषिक्तैराजभिरित्यर्थः । किंच शिरसिस्नातंविधिनाऽभिषेकोयेषां । किंच छन्दःस्वाधीनःपथो-

[पा०] १ ङ. छ. झ. कैकेय्यातु. २ क. ख. ग. च. झ. ञ. पथांकृत्स्नां. ३ क. ख. ङ. छ. झ. ञ. कमलोत्पलाम्. च. कमलोत्कराम्. ४ ग. वृत्तांस्वच्छन्दपथगैः. ख. वृतांजानपदैश्चापि. घ. कृतांछन्नपथैश्चापि. ङ. च. छ. ञ. कृतांछन्नपथैश्चापि स्वच्छन्दकपथैर्वृताम् । सिक्तांचन्दनतोयैश्चशिरस्स्नातजनैर्युताम्. । झ. समलंकृतां । सिक्तांचन्दनतोयैश्चशिरस्स्नातजनैर्युताम्.

माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम् ॥ शुक्लदेवगृहद्वारां सर्व[1]वादित्रनिस्वनाम् ॥ ४ ॥
संप्रहृष्टजनाकीर्णां ब्रह्मघोषा[2]भिनादिताम् ॥ प्रहृष्टवरहस्त्यश्वां सं[3]प्रणर्दितगोवृषाम् ॥ ५ ॥
[4]प्रहृष्टमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् ॥ अयोध्यां मन्थरा दृष्ट्वा [5]परं विस्मयमागता ॥ ६ ॥
[6]प्रहर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् ॥ अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥ ७ ॥
उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती ॥ राममाता धनं किं नु जनेभ्यः संप्रयच्छति ॥ ८ ॥
[7]अतिमात्रप्रहर्षोऽयं किं [8]जनस्य च शंस मे ॥ कारयिष्यति किं[9]वापि संप्रहृष्टो महीपतिः ॥ ९ ॥
[10]विदीर्यमाणा हर्षेण [11]धात्री तु परया मुदा ॥ आचचक्षेथ कुब्जायै भूयसीं राघवश्रियम् ॥ १० ॥
श्वः पुष्येण जितक्रोधं यौ[12]वराज्येन राघवम् ॥ राजा दशरथो राम[13]मभिषेचयिताऽनघम् ॥ ११ ॥
धात्र्या[14]स्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता ॥ कैलासशि[15]खराकारात्प्रासादादवरोहत ॥ १२ ॥
सा दह्यमाना [16]कोपेन मन्थरा पापदर्शिनी ॥ [17]शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥ १३ ॥
उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्तते ॥ उपप्लुतमघौघेन किं[18]मात्मानं न बुध्यसे ॥ १४ ॥
अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे ॥ चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५ ॥

---

तैः ॥ ३ ॥ रामोपायनार्थंमाल्यमोदकहस्तैः । शुक्लदेवगृहद्वारामिति । शुक्लानिसुधाधवलितानिदेवगृहद्वाराणियस्यां ॥४॥ ब्रह्मघोषाभिनादितां ब्रह्मघोषैः वेदपारायणघोषैः अभिनादितां ।"वेदस्तत्त्वंतपोब्रह्म" इत्यमरः। रामाभिषेकस्यतिरश्चामप्यानन्दावहत्वात् "प्रहृष्टवरहस्त्यश्वांसंप्रणर्दितगोवृषां" इत्युक्तं । गोवृषाः गोपुङ्गवाः ॥ ५ ॥ प्रहृष्टमुदितैः प्रहृष्टाः सञ्जातरोमाञ्चादिगात्रविकाराः । मुदिताः मानससंतोषयुक्ताः । तैः । उच्छ्रितेत्यत्रप्रकृतोत्सवकृतध्वजसंबन्धउच्यते । ध्वजैश्चसमलंकृतामित्यत्रनित्यबद्धध्वजत्वमुक्तं ॥ ६ ॥ धात्रीं उपमातरं । " धात्री स्यादुपमाता " इत्यमरः । प्रहर्षोत्फुल्लनयनामित्यादिविशेषणादियंरामोपमाता ॥ ७ ॥ अर्थपरासती अर्थपरासत्यपि । उत्तमेनहर्षेणाभिसंयुक्ताधनंप्रयच्छति किं । यद्वा अर्थपरा उत्तरोत्तरार्थाभिवृद्ध्यैधनंप्रयच्छति । नामग्रहणस्यासह्यत्वाद्राममातेत्युक्तिः ॥ ८ ॥ जनस्यायमत्यन्तप्रहर्षश्च किं किमर्थं । किंनिमित्तंवामहीपतिः किंकर्म कारयिष्यति ॥ ९ ॥ हर्षेणविदीर्यमाणा अन्तर्गतहर्षौत्कट्यादेहपोषमुखविकासादिनाबहिःप्रसरणाद्विदीर्यमाणेवोपलक्षिता । परयामुदाआचचक्षे स्वनिर्भरानन्दसन्दोहपरिवाहस्यपात्रभूताकाचिल्लब्धेतिपरमानन्दयुक्तासती प्रतिकूलायैतस्यै अकथनीयमप्यकथयदितिभावः । राघवेश्रियं राघवेन्यस्यमानांराज्यलक्ष्मीं ॥१०॥ पुष्येणयुक्ते श्वः उत्तरदिने । जितक्रोधमनघमित्यभिषेकोपयुक्तगुणजातोपलक्षणं । यौवराज्येनाभिषेचयिता यौवराज्यार्थमभिषेचयितेत्यर्थः॥११॥ अवरोहत अवारुहत् ॥ १२—१३ ॥ उपप्लुतं उपहतं । अघौघेन अघं दुःखं । " अंहोदुःखव्यसनेष्वघं " इति । " ओघोवृन्देंभसांरये " इतिचामरः ॥ १४ ॥ वस्तुतःराज्ञोनिष्टे सुभगाकारे आपाततःसौभाग्यवतीवभासमाने । असुभगाकारइतिवाछेदः । सौभाग्येनहेतुना विकत्थसे ममैवसौभाग्यमस्तीत्यात्मानंश्लाघसे । इयमुक्तिः पूर्व-

---

गमनंयेषांतेपरमहंसास्तैरित्यर्थः ॥ ३ ॥ **ति०** धात्रींरामस्येतिशेषः ॥ ७ ॥ **शि०** राघवे राघवनिमित्तं । भूयसीं अत्यधिकां । श्रियं राज्याभिषेकसामग्रीमित्यर्थः ॥ १० ॥ **ती०** अनघं भ्रातृषुवैषम्यरूपदोषरहितं । **शि०** अनघं स्वाश्रिताघनिवर्तकं ॥ ११ ॥ **शि०** पापदर्शिनी पापंराक्षसकृतोपद्रवंपश्यतितच्छीला ॥ १३ ॥

[ **पा०** ] १ क. ख. ङ. झ. ञ. वादित्रनादिताम्. २ ङ. छ. झ. ट. घोषोपनादिताम्. क. घोषविनादिताम्. घ. ज. घोषानुनादिताम्. ३ ख. ग. प्रणादितगोवृषाम्. ४ ङ. झ. ट. हृष्टप्रमुदितैः. ख. हृष्टैःप्रमुदितैः. ५ घ. परमंविस्मयंगता. ६ क. ग—ट. साहर्षोत्पुल्ल. ख. सहर्षोत्फुल्ल. ७ क—घ. ज. ञ. अतिमात्रंप्रहर्षोयं. ङ. छ. ट. अतिमात्रप्रहर्षःकिं. झ. अतिमात्रंप्रहर्षःकिं. ८ ङ. छ. ट. झ. जनस्यास्यच. ९ घ. किंचापि. १० क. घ. छ. ञ. उदीर्यमाणा. ११ क—ग. च. ञ. धात्रीपरमया. १२ ङ. छ. झ. राज्येनचानघं. १३ ङ. झ. मभिषेक्ताहिराघवम्. घ. अभिषेचयतेऽनघम्. १४ क. च. ञ. स्तद्वचनं. १५ च. शिखरोत्तुङ्गात्. १६ ङ. छ. झ. ट. क्रोधेन. १७ झ. ट. शयानामेव. १८ ङ. छ. झ. ट. नात्मानमवबुध्यसे.

एवमुक्ता तु कैकेयी [1]रुष्टया परुषं वचः ॥ कुब्जया पापदर्शिन्या विषादमगमत्परम् ॥ १६ ॥
कैकेयी त्वब्रवीत्कुब्जां कच्चि[2]त्क्षेमं न मन्थरे ॥ विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥
[[3]मन्थरे तद्ब्रवीह्यद्य कुतस्ते भयमागतम् ] ॥ १७ ॥
मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् ॥ उवाच [4]क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥१८॥
सा विषण्णतरा भूत्वा कुब्जा [5]तस्या हितैषिणी ॥ विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥१९॥
[6]अक्षय्यं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् ॥ रामं दशरथो राजा यौवराज्येऽभि[7]षेक्ष्यति ॥ २० ॥
[8]साऽस्म्यगाधे भये मग्ना दुःखशोकसमन्विता ॥ दह्यमा[9]नाऽनलेनेव त्वद्धितार्थमिहागता ॥ २१ ॥
तव दुःखेन कैकेयि मम [10]दुःखं महद्भवेत् ॥ त्वद्वृद्धौ मम वृद्धिश्च [11]भवेदत्र न संशयः ॥ २२ ॥
नराधिपकुले जाता महिषी त्वं महीपतेः ॥ उग्रत्वं राजधर्माणां कथं देवि न बुध्यसे ॥ २३ ॥
धर्मवादी शठो भर्ता श्लक्ष्णवादी च दारुणः ॥ शुद्धभावेन जानीषे [12]तेनैवमतिसन्धिता ॥ २४ ॥
[13]उपस्थितं प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम् ॥ अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ॥ २५ ॥
[14]अपवाह्य स दुष्टात्मा भरतं तव बन्धुषु ॥ [15]काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६ ॥
शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया ॥ आशीविष [16]इवाङ्केन बाले परि[17]हृतस्त्वया ॥ २७ ॥

कालिकात्मश्लाघापरेत्यवगन्तव्या । इदानींमत्सौभाग्यस्यकाहानिरित्यत्राह—चलंहीति । उष्णंगच्छतीत्युष्णगः ग्रीष्मकालः । तस्मिन् । नद्याःस्रोतइव चलं क्षीणमित्यर्थः ॥ १५ ॥ परुषंवचउक्ता । “ अप्रधानेदुहादीनां ” इत्यप्रधानेकर्मकारकेनिष्ठा ॥ १६ ॥ कच्चित्क्षेमं मह्यमितिशेषः ॥ १७ ॥ क्रोधसंयुक्ता रामाभिषेकाविचारणादितिभावः ॥१८॥ विषादयन्तीभेदयन्तीतिशतृद्वयंहेत्वर्थे । राज्यश्रियोज्ञातिगामित्वानिष्टप्रकाशनेनविषादहेतवे सामान्यतःपुत्रत्वप्रयुक्तरामविषयस्नेहभेदनहेतवेचेत्यर्थः ॥ १९ ॥ अक्षय्यं अशक्यप्रतीकारं । त्वद्विनाशनं त्वद्विनाशः । भावेल्युट् ॥ २० ॥ दुःखशोकसमन्विता अनभिमतरामाभिषेकश्रवणजनितव्यसनजंदुःखं । अभिमतभरताभिषेकराहित्यजःशोकः । ताभ्यांसमन्विता ॥ २१ ॥ ननु ममदुःखादिहेतौसतिकुतस्तेदुःखप्रसक्तिरित्यत्राह—तवेति ॥ २२ ॥ ननुरामाभिषेकमात्रंकथंमेदुःखहेतुरित्यत्राह—नराधिपेति । उग्रत्वं क्रौर्यं ॥ २३ ॥ ननुमत्प्रियःकथमनिष्टंकरिष्यतीत्यत्राह—धर्मवादीति । धर्मवादीवभासमानः । वस्तुतःशठः गूढविप्रियकृत् । श्लक्ष्णवादी कण्ठादुपरिप्रियवचनशीलः । दारुणः क्रूरकर्मकारी । एवंभूतमेनंशुद्धस्वभावेनोपलक्षितंजानीषे । तथानमन्तव्यं । यतस्तेनैवं अतिसन्धिता वञ्चिता ॥ २४ ॥ शठत्वमेवाह—उपस्थितमिति । उपस्थितं तत्कालोचिततयाभाषितं । अनर्थकं त्वदर्थनाशनं । त्वयिसान्त्वं अनुसरणं । प्रयुञ्जानः कौसल्यामर्थेन योजयिष्यति ॥ २५ ॥ अतिसन्धानप्रकारमाह—अपवाह्येति । अपवाह्य उद्वास्य । कालमर्हतीतिकाल्यं अर्हार्थेयत् । श्वःप्रातरित्यर्थः ॥२६॥ हेबाले मुग्धे

**ति०** विषण्णतराभूत्वा तदाकारेवभूत्वा अप्सरस्त्वेनसर्वज्ञत्वाद्वास्तवविषादाभावात् ॥ १९ ॥ **ति०** ननुदास्यास्तवकुतोभयमित्यतआह—**तवेति** ॥ २२ ॥ **ती०** धर्मवादीवाङ्मात्रेणधार्मिकः । शुद्धभावेइतिसंबोधनं । हेशुद्धहृदये ॥ २४ ॥ **ती०** उपस्थितः त्वत्समीपेस्थितः ॥ २५ ॥ **ति०** काल्ये अन्यत्रोपसंक्रमणकालार्हे । कौल्येइतिपाठः । कुलक्रमागतइत्यर्थेआर्षः ॥ २६ ॥ **ती०** परिहृतइतिपाठे बालेअपरिहृतइतिच्छेदः । वस्तुतस्तुत्याज्यएवेतिभावः ॥ २७ ॥ इतिसप्तमस्सर्गः ॥ ७ ॥

**[ पा० ]** १ घ. दुष्टयां. २ क. ख. ज. ट. त्क्षेमंनुमन्थरे. ३ इदमर्धं ख. दृश्यते. ४ क. च. ञ. क्रोधसंरब्धा. ५ झ. तस्यांहितैषिणी. ६ ञ. अक्षयंहिमहद्देवि. ख. ग. ङ. छ. झ. ट. अक्षयंसुमहद्देवि. घ. ज. अक्षेमंसुमहद्देवि. क. अक्षेमंहिमहेवि. ७ क. अभिषेक्ष्यते. ८ घ. सास्म्यभागेभये. ९ ख. नानलेनैव. १० क. च. ञ. दुःखंभवेन्महत्. ११ क. ञ. भवेदेवनसंशयः. ङ. ट. भवेदिहनसंशयः. छ. ज. भवेदत्रनसंशयः. १२ ज. मभिवञ्चिता. १३ क. ख. ङ. च. छ. झ. ञ. ट. उपस्थितःप्रयुञ्जानः. १४ ग. घ. ङ. छ. झ. ट. अपवाह्यतु. ख. अपवाह्यसु. १५ क. ख. च. काल्यं. छ. कौल्ये. १६ घ. ङ. झ. इवांगेन. १७ ङ. च. छ. ज. झ. ञ. परिधृतस्त्वया.

यथा हि कुर्या[1]त्सर्पो वा शत्रुर्वा प्रत्युपेक्षितः ॥ राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८ ॥
पापेनानृतसान्त्वेन बाले नि[2]त्यसुखोचिते ॥ रामं [3]स्थापयता राज्ये सानुबन्धा हृता ह्यसि ॥ २९ ॥
[4]सा प्राप्तकालं कैकेयि क्षिप्रं कुरु हितं तव ॥ त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३० ॥
मन्थराया वचः श्रुत्वा [5]शयाना सा शुभानना ॥ उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शारदी ॥ ३१ ॥
अतीव [6]सा तु संहृष्टा कैकेयी विस्मयान्विता ॥ [7]एकमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२ ॥
[8]दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा ॥ कैकेयी [9]मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥ ३३ ॥
[10]इदं तु मन्थरे मह्य[11]माख्यासि परमं प्रियम् ॥ एतन्मे प्रिय[12]माख्यातुः किं[13] वा भूयः करोमि ते ॥ ३४ ॥
रामे वा भरते वाऽहं विशेषं नोपलक्षये ॥ तस्मात्तुष्टाऽस्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५ ॥
न मे परं किंचिदि[14]तस्त्वया पुनः प्रियं प्रियार्हे सुवचं [15]वचः परम् ॥
[16]तथा ह्यवोचस्त्वमतः प्रियोत्तरं [17]परं वरं ते [18]प्रददामि तं [19]वृणु ॥ ३६ ॥
[ [20]इति ब्रुवन्त्याः कैकेय्याः श्रुत्वा सानन्दमुत्तरम् ॥ वाण्या तु प्रेरिता सा तु कैकेयीमिदमब्रवीत् ॥ ३७ ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

आगाम्यनर्थानभिज्ञेइतियावत् । पतिप्रवादेन पतिव्यपदेशेन । शत्रुः छन्नहृदयःशात्रवःपतिः । त्वया ऋजुप्रकृतिकया । मात्रेव सर्पशिशुंपोषयित्र्येव । हितकाम्यया हितप्रापणेच्छया । आशीविषइव छन्नविषःसर्पइव । अङ्केन उत्सङ्गेन परिहृतः परिधृतइत्यर्थः । यद्वा अङ्केनपरिहृतः अङ्कान्नपरिहृतः । किंत्वङ्कएवधृत्वोपलालितः । यथासर्पपोषयित्रीबाला सर्पस्यान्तर्विषमज्ञात्वा केवलंहितकाम्ययाङ्केसर्पमुपलालयति तथा त्वमपि बाला भर्तुःकुटिलहृदयमजानती विश्वस्य तमङ्के उपलालयसीत्यर्थः । यथाङ्कोपलालितआशीविषः कदाचिद्धितपरामपिपोषयित्रींदशेत् एवं तेभर्तापि विश्वस्तांत्वामर्थहीनांकारयेत् । अतस्स आशीविषइव नानुसरणीयस्त्वयेतिभावः ॥ २७ ॥ एवंगम्यमर्थंविशदयति—यथेति ॥ २८ ॥ सानुबन्धा पुत्रमित्रादिपरिकरसहिता ॥ २९ ॥ विस्मयदर्शने आश्चर्यावहज्ञानयुक्ते तत्तत्कालोचितकर्तव्यनिरूपणचतुरइत्यर्थः । यद्वा अनेन हितकरणहेतुदशरथवशीकरणसाधनसौन्दर्यं सूच्यते ॥ ३० ॥ एवं देवावेशवशाद्विपरीतवाक्ययामन्थरयोक्तापिकैकेयी महाकुलप्रसूततया सत्प्रकृतिस्सती रामाभिषेकंस्वहितंमन्यमानाह—मन्थरायाइति ॥ ३१—३३ ॥ एतत्प्रियमाख्यातुः आख्यात्र्याः । तेकिंवाकरोमीतिसंबन्धः । एतन्मेप्रियमाख्यातमितिपाठे आख्यातंएतत्प्रियमुद्दिश्य तेभूयः किंवाकरोमीतिसंबन्धः ॥ ३४ ॥ ननुसपत्नीपुत्रेकथं तवैतादृशीप्रीतिरित्यत्राह—रामइति ॥ ३५ ॥ हेप्रियार्हे प्रियदानार्हे । मे इतःपरं रामाभिषेककथनादन्यत्किंचित् । प्रियं अभिमतं । परंवचस्त्वयापुनर्नसुवचं वक्तुंनशक्यं । हि यस्मात्कारणात् । त्वंतथा सर्वप्रियेभ्योधिकं । प्रियं रामाभिषेकरूपं । अवोचः उक्तवती । अतः प्रियोत्तरं प्रीतिविषयेषु श्रेष्ठं "पर्युदीच्यश्रेष्ठेष्वप्युत्तरः" इत्यमरः । परं अन्यं । वरं वरणीयं वस्तुविशेषं । ते तुभ्यं । प्रददामि । तंवृणु वृणीष्वेतियोजना ॥ ३६—३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने सप्तमःसर्गः ॥ ७ ॥

---

[ पा० ] १ ङ. छ. झ. च्छत्रुर्वासर्पोवा. ज. त्सर्पोहि. २ ङ. च. ज. झ. ञ. नित्यंसुखोचिते. ङ. छ. झ. सुखोचिता. ३ क—घ. च. ज. ञ. स्थापयिताराज्ये. ४ ट. साप्राप्तकाला. क. ख. संप्राप्तकालं. ५ क. ङ. च. छ. झ. ञ. ट. शयनात्सा शुभानना. ६ घ. ङ. छ. ज. झ. सातुसंतुष्टा. ७ ङ. छ. झ. दिव्यमाभरणं. ८ ग. दत्वाचाभरणं. ९ क. ख. ग. ङ. ज. झ. मन्थरांहृष्टा. १० क. घ. च. ज. ञ. इदंहिमन्थरे. ११ ङ. छ. झ. ट. माख्यानंपरमंप्रियम्. १२ ङ. छ. ज. झ. प्रियमाख्यातं. च. ञ. प्रियमाख्यातुं. ख. प्रियमाख्यात्र्याः. १३ क. च. ञ. भूयःकिंवा. १४ ङ. छ. झ. ञ. दितोवरंपुनः. १५ ङ. छ. झ. ट. वचोऽमृतम्. १६ घ. कथाह्यवोचः. १७ झ. ट. वरंपरंते. १८ क. ख. ग. ज. प्रददानि. १९ ख. संवृणु. २० अयंश्लोकः ज. दृश्यते.

# अष्टमः सर्गः ॥ ८ ॥

रामाभिषेकस्य भरतानर्थहेतुत्वमावेदयन्तींमन्थरांप्रतिकैकेय्यारामगुणप्रशंसनपूर्वकं तदभिषेकस्य स्वाभीष्टत्वप्रतिपादनम् ॥ १ ॥ पुनर्मन्थरयाकैकेयींप्रति बहुधाहेतूपन्यासपूर्वकं रामाभिषेकस्यानर्थहेतुत्वसमर्थनेनतद्विघातचोदना ॥ २ ॥

मन्थरा त्वभ्यसूयैनामुत्सृज्या[1]भरणं च तत् ॥ उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १ ॥
हर्षं कि[2]मिदमस्थाने कृतवत्यसि [3]बालिशे ॥ शोकसागर[4]मध्यस्थमात्मानं नावबुध्यसे ॥ २ ॥
मनसा [5]प्रहसामि त्वां देवि दुःखार्दिता सती ॥ यच्छोचितव्ये हृष्टाऽसि [6]प्राप्येदं व्यसनं महत् ॥ ३ ॥
शोचामि दुर्मतित्वं ते का हि [7]प्राज्ञा प्रहर्षयेत् ॥ अरेः सपत्नीपुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४ ॥
भरतादेव रामस्य राज्यसाधारणाद्भयम् ॥ तद्विचिन्त्य विषण्णास्मि भयं भीताद्धि जायते ॥ ५ ॥
लक्ष्मणो हि [8]महेष्वासो रामं सर्वात्मना [9]गतः ॥ शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६ ॥
प्रत्यासन्नक्रमेणापि [10]भरतस्यैव भामिनि ॥ राज्यक्रमो [11]विप्रकृष्टस्तयो[12]स्तावत्कनीयसोः ॥ ७ ॥
विदुषः [13]क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः ॥ भयात्प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८ ॥

अथकुमतिजनसंसर्गवशेन महतामपिकदाचिच्चित्तचलनंस्यादित्यमुमर्थंद्योतयन्नाह—मन्थरेत्यादि । अभ्यसूय असूयांकृत्वा । एनांप्रतीतिशेषः । कोपदुःखसमन्विता हितंनशृणोतीतिकोपः । आगमिष्यत्यनर्थइतिदुःखं ॥ १ ॥ हेबालिशे अज्ञे । अस्थाने अनुचितकाले । हर्षंकृतवत्यसि । किमिदं । अत्रकारणंनजानामि । अस्थानकृतत्वमाह—शोकेति ॥ २ ॥ इदं रामाभिषेकरूपं । महद्व्यसनं । प्राप्य तेनैवहेतुनाशोचितव्येविषयेहृष्टासीतियत् अतोहंदुःखार्दितासती त्वांमनसा प्रहसामि । यथोन्मत्तप्रमुदर्शने ॥३॥ एवं बालिशत्वमन्वयमुखेनदर्शयित्वा व्यतिरेकमुखेनापि दर्शयति—शोचामीति । ते दुर्मतित्वं दुष्टबुद्धित्वं शोचामि । मतेर्दुष्टत्वमनर्थविषयप्रीतिजनकत्वं । मृत्योरिव सपत्नीपुत्रस्यारेरागतांवृद्धिं काहिप्राज्ञा कावाप्रशस्तबुद्धिः । प्रहर्षयेत् प्रहर्षसाधनंकुर्यात् । "तत्करोति" इति णिच् । हर्षइतिकरणेघञ्प्रत्ययः । लालयेदितिवार्थः ॥ ४ ॥ उक्तांव्यसनमहत्तांदर्शयति—भरतादिति । राज्यंसाधारणंयस्य तस्माद्भरतादेव रामस्ययद्भयं तद्विचिन्त्य विषण्णास्मि । रामस्यभयमस्तु भरतस्यकिमित्यतआह—भयमिति । योयस्माद्भीतः सतस्यभयमवश्यमुत्पादयति व्याघ्रसर्पादिविषये तथादर्शनादिति भावः ॥ ५ ॥ यद्यपि लक्ष्मणशत्रुघ्नयोरपिराज्यंसाधारणं तथापि तयोःपरतन्त्रत्वान्नभयप्रसक्तिरित्याह—लक्ष्मणइति । सर्वात्मना सर्वप्रकारेण मनोवाक्कायैरित्यर्थः । अतोरामस्य नलक्ष्मणाद्भयमितिभावः । शत्रुघ्नस्यभरतपरतन्त्रत्वेन नततःपृथग्भयमित्यर्थः ॥ ६ ॥ भरतादेवेत्यत्र हेत्वन्तरमाह—प्रत्यासन्नेति । प्रत्यासन्नेन सन्निकृष्टेन क्रमेण पुनर्वसुपुष्यनक्षत्रजननक्रमेण । भरतस्यैव राज्यंप्राप्तमितिशेषः । कनीयसोः कनिष्ठयोः । राज्यक्रमः राज्यप्राप्तिक्रमस्तु । विप्रकृष्टः व्यवहितः । सत्यपिपारतन्त्र्ये राज्यविषयेसर्वेषामभिलाषस्तुल्यः । यथाभरतस्येतिशङ्कायां प्रथमंरामस्यराज्यंप्राप्तं ततोभरतस्य ततोलक्ष्मणशत्रुघ्नयोः । तथाच प्रथमोद्वितीयंजिघांसति । अतोरामाद्भयंभरतस्यैवेति भावः ॥ ७ ॥ एवं राज्यक्रमोभरतस्यसन्निहितोस्तु तथापि रामेप्रथमप्राप्तिमतिविद्यमाने का भरतस्यराज्यशङ्केत्यत्राह—विदुषइति । विदुषः स्वतएवविवेकशालिनः । विशिष्यक्षत्रचारित्रे राजनीतौ प्राज्ञस्य प्राप्तकारिणः अविलंबेनकालोचितकर्तव्यार्थकारिणः । रामस्य भयात् भाव्यनर्थकरणभयात् । तवात्मजं उक्त-

[ पा० ] १ घ. ङ. छ. झ. ट. भरणंहितत्. २ ङ. छ. झ. ट. किमर्थमस्थाने. ३ घ. भामिनि. ४ ख. ग. च. ज. मध्यस्थानात्मानमव. ङ. छ. ट. मध्यस्थंनात्मानमव. ५ घ. झ. प्रसहामित्वां. ६ ङ. छ. झ. ट. प्राप्यत्वंव्यसनं. घ. प्राप्तेदं व्यसनं. ७ ङ. प्रज्ञा. ८ ङ. छ. झ. ट. महाबाहूरामं. ९ घ. श्रितः. १० छ. क. भरतस्येह, ११ ङ. छ. झ. ट. विसृष्टस्तुतयो. ख. ज. विकृष्टस्तु. १२ क—ट. स्तावद्यवीयसोः. १३ ट. क्षत्रचारित्रं.

सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ॥ यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥९॥
प्राप्तां सुमहतीं प्रीतिं प्रतीतां तां हतद्विषम् ॥ उपस्थास्यसि कौसल्यां दासीवत्त्वं कृताञ्जलिः ॥ १० ॥
एवंचेत्त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि ॥ पुत्रश्च तव रामस्य प्रेष्यभावं गमिष्यति ॥ ११ ॥
हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः ॥ अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥ १२ ॥
तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः ॥ रामस्यैव गुणान्देवी कैकेयी प्रशशंस ह ॥ १३ ॥

वैदुष्यादिरहितं चिन्तयन्तीप्रवेपे । षष्ठीचात्र संबन्धसामान्ये ॥ ८ ॥ कैकेय्याईर्ष्योत्पादनार्थं कौसल्यासौभाग्यंदर्शयति—सुभगेत्यादिना । सुभगा भाग्यशीला । यौवराज्येनेतिहेतौतृतीया ॥ ९ ॥ रामतोभरतस्येवकौसल्यातोस्याअनर्थंदर्शयति—प्राप्तामिति । रामाभिषेकेण सुमहतींश्रियंप्राप्तां । प्रतीतां ख्यातां । "प्रतीतेप्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः । हतद्विषं अधरीकृतसपत्नीकां । तां कौसल्यां । उपस्थास्यसि सेविष्यसे ॥ १० ॥ नकेवलंतवैकस्यादास्यं किंतुत्वदनुबन्धिजनस्यापीत्याह—एवमिति । तवदास्यंप्राप्तंचेदित्यर्थः ॥ ११ ॥ राममहिष्याएकत्वेपि रामस्यपरमाःस्त्रियइतिबहुवचननिर्देशःपरिचारिकाभिप्रायेण । भरतक्षये भरतस्यदारिद्र्यरूपक्षयेसति । नन्वत्रस्त्रीशब्दोभार्यापरएव । स्नुषास्तेभरतक्षयेइतिस्नुषाशब्दसाहचर्यात् । अतएव सुन्दरकाण्डेसीतयोच्यते "पितुर्निदेशंनियमेनकृत्वावनान्निवृत्तश्चरितव्रतश्च । स्त्रीभिश्चमन्येविपुलेक्षणाभिस्त्वंरंस्यसेवीतभयःकृतार्थः" इति । युद्धकाण्डेचदर्भशयनवर्णने "भुजैःपरमनारीणामभिमृष्टमनेकधा" इत्युक्तं । नहिभुजैर्भुजाभिमर्शोभार्याभ्योऽन्यत्रसंभवति । उत्तरकाण्डेचाश्वमेधोपक्रमे "मातरश्चैवसर्वामे कुमाराःस्त्रीगणानिच । अग्रतोभरतंकृत्वागच्छन्त्वग्रे समाधिना" इतिदर्शितं । अत्रस्त्रीगणकुमारव्यपदेशो विनासीतातिरिक्तभार्यासद्भावंनसंभवति । किंचश्रुतार्थापत्तिरपिरामस्यसीतातिरिक्तधर्मदारसद्भावेप्रमाणं । नह्यपत्नीकस्ययज्ञानुष्ठानंसंभवति भोगदारान्तरासंभवेनरामस्यैकदारव्रतत्वंभृगुशापपालनंच । सीताप्रतिकृतिकरणंतुसीतास्नेहबहुमानार्थं । अत्रोच्यते । रामस्यैकदारव्रतत्वंसर्वसिद्धं । तत्त्वपत्न्यन्तरसंभवे नसंगच्छते । नचयज्ञकरणानुपपत्तिः । सीताप्रतिकृतिकरणेनतदुपपत्तेः । अतएवोत्तरकाण्डेवक्ष्यति "काञ्चनींममपत्नींचदीक्षार्हांयज्ञकर्मणि । अग्रतोभरतःकृत्वागच्छत्वग्रेमहामतिः" इतिसीताप्रतिकृतेर्दीक्षार्हत्वं पत्नीत्वंच । पुनश्चोत्तरत्र "नसीतायाःपरांभार्यांवव्रेसरघुनन्दनः । यज्ञेयज्ञेचपत्न्यर्थंकाञ्चनीजानकीभवत्" इति । नहिवचनविरोधेन्यायःप्रवर्तते । अनेनवचनेनप्रत्यक्षश्रुत्यविरुद्धेनविदूरभार्योऽननुकूलभार्यश्चभार्याप्रतिकृतिंकृत्वाश्रौतस्मार्तकर्माणिकुर्यादितिविधिरुन्नीयते । स्मृतिश्चतथाविधापठ्यते । यथाहेमाद्रौ "दूरभार्योननुकूलभार्यश्चदर्भपिञ्जूलैर्भार्याप्रतिनिधिंविधायपार्वणंकुर्यात्" इति । पत्नीकर्तव्यानिकर्माण्यध्वर्युर्यजमानोवाकुर्यात् । यथातस्यामसमर्थायां पत्नीविनाशाभावान्नाग्नेर्विनाशः । यत्तुयेनकेनचिदुक्तं सीताप्रतिकृतिकरणंसीतास्नेहबहुमानार्थमिति तत्तुच्छं । संत्यक्तभार्यायांस्नेहबहुमानकरणस्यावद्यावहत्वात् । "मातरश्चैवसर्वामेकुमाराःस्त्रीगणानिच" इत्यत्र मेमातरः भरतादीनांकुमाराःस्त्रियश्चेत्यर्थः । दारान्तरसंभवेपि तेषांधर्मार्थत्वेनप्रजार्थत्वाभावेन रामस्यकुमाराभावात्तत्सहचरितस्त्रीगणाश्च भरतादीनामेवेतिसुव्यक्तं । एवंच रामस्यपरमाःस्त्रियःपरमनारीणां स्त्रीभिश्चमन्ये इत्यादिषु भोगप्रसंजनेनधर्मदारपरत्वासंभवात् साधारणादिपरिग्रहशङ्कानवकाशाच्चान्यपरत्वमवसेयं । परमाःस्त्रियइतिपरिचारिकान्तर्भावेन । स्त्रीभिश्चमन्यइति स्वविनाशेरुयन्तरसंभावनया । परमनारीणामित्यस्य कविवचनत्वेन श्रीभूम्याद्यभिमर्शविषयत्वाच्चेतिदिक् ॥ १२ ॥ रामस्यैवंविधगुणत्वेहित्वदुक्तादोषाःस्युस्तदेवनास्तीतिमूलेकुठारंनिदधातीत्याह—तामिति । अप्रीतामितिपदच्छेदः । क्षोभहेतौनितरांविद्यमानेप्यक्षोभ्यमनस्कत्वाद्देवीतिता-

तीॱ भरतक्षये भरतगृहे । तिॱ भरतक्षये भरतप्रभावनाशे । शिॱ स्त्रियइतिबहुलमादरार्थे । किंचस्त्रीशब्दस्त्रीत्वजातिवि-

[ पाॱ ] १ क. ङ. झ. ट. सुभगाकिल. २ क. छ. झ. ञ. वसुमतींप्रीतिं. च. वसुमतींप्रीतां. ट. वसुमतीप्रीतिं. ३ ङ. छ. झ. ट. प्रतीतांहृतविद्विषम्. ४ क—ट. एवंचत्वं. ५ घ. ङ. छ. झ. ट. प्रेष्यत्वंहि. ६ घ. प्रशशंससा.

धर्मज्ञो [1]गुरुभिर्दान्तः कृतज्ञः [2]सत्यवाक्छुचिः ॥ रामो [3]राज्ञः सुतो ज्येष्ठो यौव[4]राज्यमतोर्हति ॥१४॥
[5]भ्रातॄन्भृत्यांश्च दीर्घायुः [6]पितृवत्पालयिष्यति ॥ सं[7]तप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥१५॥
भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् ॥ पितृपैतामहं राज्यमवाप्ता पुरुषर्षभः ॥ १६ ॥
सा त्वमभ्युदये प्राप्ते [9]वर्तमाने च मन्थरे ॥ भविष्यति च कल्याणे [10]किमर्थं परितप्यसे ॥ १७ ॥
[11]यथा मे भरतो मान्यस्तथा भूयोपि राघवः ॥ कौसल्यातोतिरिक्तं च सो[12]नुशुश्रूषते हि माम् ॥१८॥
[13]राज्यं यदि हि रामस्य भरतस्यापि [14]तत्तथा ॥ मन्यते हि यथात्मानं तथा [15]भ्रातॄंस्तु राघवः ॥ १९ ॥
[16]कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता ॥ दीर्घ[17]मुष्णं विनिश्वस्य कैकेयीमिदमब्रवीत् ॥ २० ॥
अनर्थदर्शिनी मौ[18]र्ख्यान्नात्मानमवबुध्यसे ॥ शोकव्यसनविस्तीर्णे [19]मज्जन्ती दुःखसागरे ॥ २१ ॥
भविता राघवो राजा [20]राघवस्यानु यः सुतः ॥ राजवंशात्तु कैकेयि[21] भरतः परिहास्यते ॥ २२ ॥

मृषिः श्लाघते ॥ १३ ॥ मन्थरोक्तराज्यसाधारण्यंनिवर्तयति—धर्मज्ञइति । दान्तः दमितः । "दान्तस्तुदमिते" इत्यमरः । शिक्षितइत्यर्थः । कृतज्ञः सत्पुत्रसमाचारज्ञइत्यर्थः ॥ १४ ॥ अथ भरतानर्थशङ्कांपरिहरति—भ्रातॄनिति ॥१५॥ राज्यंचभरतस्यक्रमाद्भविष्यतीत्याह—भरतइति । वर्षशतात्परं रामराज्यात्परमित्यर्थः । दशवर्षसहस्राणिरामोराज्यंपालयिष्यतीति कैकेयीनजानाति । अतोलोकरीत्यावदतीतिज्ञेयं । अवाप्तेतिलुट् । स्वानन्तरं भरतस्यराज्यलाभायसंप्रति तस्मैयौवराज्यंदास्यतीत्यर्थः ॥ १६ ॥ प्राप्ते उचिते । अभ्युदये रामाभिषेकरूपे । शोभने वर्तमाने प्रत्यासन्नेसति । कल्याणे भरताभिषेकरूपे भविष्यतिच किमर्थंपरितप्यसइतिसंबन्धः ॥ १७ ॥ एवं पुत्रानर्थशङ्कांपरिहृत्य स्वानर्थशङ्कांपरिहरति—यथेति । मान्यः बहुमान्यः । भूयः भृशं । अत्रहेतुमाह—कौसल्यात इति । अतिरिक्तं अभ्यधिकंयथाभवतितथा ॥ १८ ॥ माभूद्वर्षशतात्परंभरतस्यराज्यलाभः तथापि राज्यलाभसौख्यमस्तीत्याह—राज्यमित्यादिना ॥१९—२०॥ अनर्थदर्शिनी अनर्थस्यैवार्थत्वेनदर्शनशीलेत्यर्थः । यद्वा अर्थादर्शिनी प्रयोजनानभिज्ञेत्यर्थः । मौर्ख्यात् अविमृश्यकारित्वात् । शोकव्यसनविस्तीर्णे विलापहेतुःशोकः । व्यसनंविपत् । "व्यसनंविपदिभ्रंशे" इत्यमरः । यद्वा शोकः इष्टवियोगजंदुःखं । भरतस्य राज्यभ्रंशेनवनप्रापणजंदुःखमितियावत् । विपत् स्वस्यसुखाद्भ्रंशः । दुःखसागरे सपत्नीसेवारूपे । मज्जन्तीतथाभूतमात्मानंनावबुध्यसे ॥ २१ ॥ वर्षशता-

शिष्टपरः । नतुपाणिगृहीतीपरः । तेनबहुत्वंयुक्तमेव ॥ १२ ॥ **ति॰** पितृवद्भ्रातॄनविभागेनपालयतोरामस्य वर्षशतात्परमपि यदा राज्यविभागेच्छा तदा भरतोराज्यमवाप्स्यति । ध्रुवापिशब्दाभ्यां लक्ष्मणशत्रुघ्नयोरपि राज्यप्राप्तिर्ध्रुवेतिसूचितम् । **शि॰** ननुभरतस्यराज्यानधिकारित्वेपिभ्रातृत्वात्किंचित्तेनापिप्राप्तव्यमतस्तदागमनेसतिरामाभिषेकेणभवितव्यं अन्यथाकिंचिदपिनप्राप्स्यतीत्यतआह—**भरतइति**। वर्षशतात् बहुखण्डैर्व्याप्तं । पितृपैतामहंराज्यं । नरर्षभोरामोऽवाप्स्यति । भरतस्तु ध्रुवं अचलं । रामस्यपरं तृप्तिं । अवाप्स्यति । एतेनरामप्रीतेर्दुर्लभत्वंव्यञ्जितम् । किंच रामस्यराज्यंभरतएवप्राप्स्यति रामाभिषेकानन्तरंपालनाधिकारंरामोभरतायैवदातेत्यर्थः । एतेनभरतोरामस्यातिप्रीतिविषयइतिध्वनितम् । यद्वा अप्राप्यवस्तुप्राप्त्यर्थंयत्नोनकर्तव्यइतिभरतराज्यप्राप्त्यर्थंनयतितव्यमितिबोधयन्तीआह—**भरतइति** । रामस्ययोग्यंपितृपैतामहंराज्यंनरर्षभोभरतःवर्षशतात्परमपि । अवाप्स्यति अनवाप्स्यति । भागुरिमतेनवाकारलोपः । वर्षशतात्परं अग्रे । भरतः प्राप्स्यतीत्यर्थस्तुनयुक्तः सर्वप्रमाणाविषयत्वेनासंभवादितिदिक् ॥ १६ ॥

**[ पा॰ ]** १ ङ. छ. झ. ट. गुणवान्दान्तः. २ घ. ङ. छ. झ. ट. सत्यवाञ्छुचिः. ३ क. ङ. छ. झ. ट. राजसुतो. ४ क. च. ञ. राज्यंततोर्हति. ५ क. च. ञ. नमात्यान्दीर्घायुः. छ. न्पुत्रांश्च. ६ ख. पुत्रवत्पालयिष्यति. ७ ख. संतप्यसि. ८ ङ. छ. झ. ट. मवाप्स्यतिनरर्षभः. ९ ङ. छ. झ. दह्यमानेवमन्थरे. १० ङ. छ. झ. ट. किमिदंपरि. ११ ङ. छ. झ. ट. यथावैभरतो. १२ ग. घ. ज. सतुशुश्रूषते. ङ. छ. झ. ममशुश्रूषतेबहु. १३ क. राज्यंचयदि. ग. च. छ. ञ. राज्यंयदिह. १४ ङ. छ. झ. ट. तत्तदा. १५ क. ख. ग. ज. ञ. भ्रातॄंश्च. १६ ख. ग. घ. ज. कैकेयीवचनं. १७ च. ञ. दीर्घमुष्णंच. १८ क. च. ञ. मौर्ख्यादात्मानंनाव. १९ च. ञ. ट. मज्जन्तं. २० क.—च. ज. झ. ञ. राघवस्यच. २१ क. ङ. ज. झ. ञ. भरतःकैकेयि.

**न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि ॥ स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥२३॥**
**तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः ॥ स्थापयन्त्यनवद्याङ्गि गुणवत्स्वि[1]तरेष्वपि ॥ २४ ॥**
**असावत्यन्तनि[2]र्भग्नस्तव पुत्रो भविष्यति ॥ अनाथवत्सुखेभ्यश्च राजवंशाच्च वत्सले ॥ २५ ॥**
**साऽहं त्व[3]दर्थे संप्राप्ता त्वं तु मां नावबुध्यसे ॥ स[4]पत्निवृद्धौ या मे त्वं प्रदेयं दा[5]तुमिच्छसि ॥२६॥**
**ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम् ॥ देशान्तरं[6] वा नयिता लोकान्तरमथापि वा ॥ २७ ॥**
**बा[7]ल एव हि मातुल्यं भरतो नायितस्त्वया ॥ सन्निकर्षाच्च सौहार्दं जायते स्था[8]वरेष्वपि ॥ २८ ॥**
**[9]भरतस्याप्यनुवशः शत्रुघ्नोपि स[10]मागतः ॥ ल[11]क्ष्मणो हि यथा रामं त[12]थासौ भरतं गतः ॥ २९ ॥**
**श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो व[13]नजीविभिः ॥ सन्निकर्षादिषीकाभिर्मोचितः परमाद्भयात् ॥ ३० ॥**
**गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः ॥ अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥३१॥**

त्परमित्युक्तभरतराज्यप्राप्तिंनिराकरोति—भवितेति । राघवस्यानु राघवानन्तरं । तस्ययःसुतःसराजाभविष्यति । परिहास्यते निर्वास्यते । गत्यर्थाद्भसेर्णिजन्तात्कर्मणिलट् ॥ २२ ॥ उक्तेर्थेहेतुमाह—नहीति । भामिनि कोपने । “ कोपनासैवभामिनी” इत्यमरः । अनयःनीतिविरोधः ॥ २३ ॥ राज्यतन्त्राणि राज्यपरिपालनादिव्यापारान् । “तन्त्रंस्वराष्ट्रव्यापारे” इति वैजयन्ती ॥ २४ ॥ एवंराज्यभ्रंशमुक्त्वाराज्यालाभेपिराज्यसुखंभरतस्यास्तीतिकैकेय्योक्तंपरिहरति—असाविति । अत्यन्तनिर्भग्नः सुतरांप्रच्यावितः । वत्सले पुत्रवत्सले ॥ २५ ॥ ज्येष्ठेवर्तमानेभरतस्यराज्ययोग्यताभावात्किंकुर्मइत्यत्राह—सेति । त्वदर्थे त्वत्पुत्रराज्यभ्रंशपरिहारकथनार्थमित्यर्थः । सपत्निवृद्धाविति “ङ्यापोः—” इतिह्रस्वः । यात्वंसपत्निवृद्धौ प्रदेयं पारितोषिकं । दातुमिच्छसि सात्वं नावबुध्यसइत्यन्वयः ॥ २६ ॥ असावत्यन्तनिर्भग्नइत्युक्तंविवृणोति—ध्रुवमित्यादिना ॥ २७ ॥ रामकर्तृकंभाव्यनिष्टंप्रदर्श्य कैकेयीकृतमप्यनर्थंदर्शयति—बालइति । मातुल्यं मातुलसंबन्धिगृहमित्यर्थः । नायितोहि प्रापितःखलु । अनेनकाहानिरित्याशङ्क्यहानिमेवदर्शयति—सन्निकर्षादिति । स्थावरेष्वपि वृक्षगुल्मादिस्थावरेष्वपि । सन्निकर्षाच्च अत्यन्तसमीपावस्थानाच्च सौहार्दंजायते अन्योन्यसंश्लेषरूपःसुहृद्भावोजायते । राज्ञोरामभरतादिषुकिमुत तादृशसन्निकर्षस्त्वयाविघटितइतिभावः ॥ २८ ॥ भरतस्यासन्निधानेपि शत्रुघ्नसन्निधानेभरतेप्रीतिःस्यात्तदपिनास्तीत्याह—भरतस्यापीति । अनुवशः विधेयः । समं भरतेनसह । अनुवशत्वमुपपादयति—लक्ष्मणोहीति । हि यस्मात् रामंलक्ष्मणइवासौ शत्रुघ्नः भरतंगतः आश्रितः ॥ २९ ॥ स्थावरेष्वपीत्युक्तमुपपादयति—श्रूयतेहीति । वनजीविभिः वनोद्भूतकाष्ठजीविभिः । छेत्तव्यः प्राप्तच्छेदनकालः । कश्चित्द्रुमः तस्माच्छेदनरूपात् परमाद्भयात् । इषीकाभिः इषीकाकण्टकबहुलगुल्मैः । सन्निकर्षात् परितःपरिवारणरूपात् । मोचितइतिश्रूयतेहि जनपरंपरयेतिशेषः । स्वस्यनित्यान्तःपुरवर्तित्वेन तत्साक्षात्काराभा-

**ती०** अनयः राज्यशैथिल्यरूपः । **शि०** रामराज्यकालेभरतोपिकस्यचिद्देशस्यराजाभवितेत्याशानकर्तव्येतिसूचयितुमाह—**नहीति । स०** भामिनि तेजस्विनि ॥ २३ ॥ **ती०** राज्यतन्त्राणि राज्याङ्गानिहस्त्यश्वादीनि ॥ २४ ॥ **वि०** वत्सले सर्वत्र दयाशीले ॥ २५ ॥ **वि०** अर्हसि अर्हैवाचरसि । इच्छसीत्यर्थः ॥ २६ ॥ **ति०** नाययिता लुट् । लोकान्तरमिति हनिष्यतीतियावत् ॥ २७ ॥ **शि०** शत्रुघ्नस्यापिदुःखमेवभवितेतिबोधयन्तीआह—**भरतानुगतइति** । सःशत्रुघ्नोपि भरतानुगतः भरतानुसारीसन् तत्समं रामकर्तृकद्रोहविषयत्वेनभरतसाम्यं गतःप्राप्तः । समशब्दोभावप्रधानः ॥ २९ ॥ लक्ष्मणसाहाय्यात् भरतकर्तृकापकृतिप्रसक्तिः रामेनभवितेतिबोधयितुमन्यसंनिकर्षादन्यस्यानर्थनिवृत्तिर्लोकेदृष्टेत्याह—**श्रूयतइति** ॥ ३० ॥

**[ पा० ]** १ क. च. ञ. त्स्वितरेषुच. २ ख. घ. ज. वत्यन्तनिर्भिन्नः. ३ ख. घ. त्वदर्थं. ४ घ. सपत्निवृद्धिकामेत्वं. ५ घ.—छ. ञ. ट. दातुमर्हसि. ६ क. ख. ग. ङ. च. छ. झ. ट. देशान्तरंनाययिता. घ. लोकान्तरंनाययिता. ७ ङ. झ. बालएवतु. ८ झ. स्थावरेष्विव. ९ ख. भरतस्याप्यनुमतः. क. च. ञ. भरतस्याप्यनुवशात्. झ. भरतानुवशात्सोपिशत्रुघ्नस्तत्समंगतः. ट. भरतानुमतस्सोपि. १० ग. समाहितः. ११ ग. घ. ज. लक्ष्मणस्तु. १२ ङ. झ. तथायंभरतंगतः. १३ ङ. छ. झ. वनजीवनैः.

तस्मान्न लक्ष्मणे रामः पापं किंचित्करिष्यति ॥ रामस्तु भरते पापं कुर्या[1]दिति न संशयः ॥ ३२ ॥
तस्मा[2]द्राजगृहादेव वनं [3]गच्छतु ते सुतः ॥ [4]एतद्धि रोचते मह्यं भृशं चापि हितं तव ॥ ३३ ॥
एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति ॥ यदि चेद्भरतो धर्मात्पित्र्यं राज्यमवाप्स्यति ॥ ३४ ॥
स ते सुखोचितो बालो रामस्य सहजो रिपुः ॥ समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५ ॥
अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् ॥ प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६ ॥
दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ॥ राममाता सपत्नी ते कथं वैरं न [5]यातयेत् ॥ ३७ ॥

[6]यदा हि रामः पृथिवीम[7]वाप्स्यति प्रभूतरत्नाकर[8]शैलपत्तनाम् ॥
तदा गमिष्यस्यशुभं पराभवं सहैव दीना भरतेन भामिनि ॥ ३८ ॥
यदा हि रामः पृथिवीमवाप्स्यति ध्रुवं प्रनष्टो भरतो भविष्यति ॥
अतो हि संचिन्तय राज्यमात्मजे परस्य [9]चैवाद्य विवासकारणम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ॥ ९ ॥

मन्थरादुर्बोधनदुर्विकृतहृदयया कैकेय्या तां प्रति रामप्रवासनभरताभिषेचनप्रतिज्ञानपूर्वकं तदुपायकथनचोदना ॥ १ ॥ मन्थरया कैकेयीं प्रति देवासुरसमरवृत्तवृत्तान्तनिवेदनेन दशरथकृतवरद्वयदानप्रतिज्ञानस्मारणपूर्वकं तं प्रति रामविवासनभरताभिषेकयोर्वरत्वेन वरणचोदना ॥ २ ॥ कैकेय्या मन्थराप्रशंसनपूर्वकमाभरणाद्यवमोचनेन क्रोधागारे क्षितौ शयनम् ॥ ३ ॥

एवमुक्ता तु कैकेयी कोपे[10]न ज्वलितानना ॥ दीर्घ[11]मुष्णं विनिश्वस्य मन्थरामिदमब्रवीत् ॥ १ ॥
अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् ॥ यौव[12]राज्ये च भरतं क्षि[13]प्रमेवाभिषेचये ॥ २ ॥

---

वात् श्रूयतइत्युक्तिः ॥ ३०—३१ ॥ पापं वधं ॥ ३२ ॥ तस्मात् पापकरणाद्धेतोः । राजगृहात् केकयराजगृहात् । नत्विहागत्यमर्तव्यमितिभावः ॥ ३३ ॥ धर्मात् पित्रनुमतिरूपात् । भरतोराज्यंयद्यवाप्स्यति एवंचेत्तेज्ञातिपक्षस्य बन्धुवर्गस्य श्रेयश्चापिभविष्यति ॥ ३४ ॥ राज्यानवाप्तावनिष्टमाह—सइति । सहजो रिपुः सपत्नीपुत्रत्वात्सहजःशत्रुः । तेसबालः भरतः रामस्यवशेकथंजीविष्यति ॥ ३५ ॥ एवमनर्थपौष्कल्येतत्परिहारायकर्तव्यमाह—अभिद्रुतमिति । प्रच्छाद्यमानं अभिभूयमानं ॥ ३६ ॥ कथंवैरंनयातयेत् । वैरयातनंवैरशुद्धिः तांत्वयिदास्यापादनेनसंपादयेदित्यर्थः ॥ ३७ ॥ उपसंहरति—यदेत्यादिना ॥ ३८ ॥ कैकेय्यनर्थमुक्त्वाभरतानर्थमाह—यदाहीति । राज्यं राज्यकारणं । परस्य रामस्य ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने अष्टमःसर्गः ॥ ८ ॥

---

अथरामगुणज्ञापिकैकेयी कार्यपरैर्देवैःक्षुब्धहृदया-

---

**सत्य०** राजगृहात् तन्नामकान्मातुलपुरात् । यद्वा ल्यब्लोपनिमित्तापञ्चमी । अस्मद्गृहाशांपरित्यज्येत्यर्थः ॥ ३३ ॥ **ति०** नयापयेत् नकुर्यादित्यर्थः । नपातयेदितिपाठेप्ययमेवार्थः ॥ ३७ ॥ **ति०** परस्य रामस्य चात्लक्ष्मणसीतयोर्विवासकारणंचचिन्तय ॥ ३९ ॥ इत्यष्टमस्सर्गः ॥ ८ ॥

**शि०** उष्णंयथास्यात्तथादीर्घंविनिश्वस्य मन्थरयाकोपेनैवएवमुक्ता ज्वलितानना प्रकाशितवदना प्रसन्नवदनेत्यर्थः । कैकेयीमन्थरामिदमब्रवीत् । प्रसन्नवदनेत्यनेन रामोऽवश्यंदेवकार्यार्थंप्रवत्स्यतीतितदनुकूलमेवेयंप्रार्थयतइतिहेतुःसूचितः । तेनब्रह्मादि-

**[ पा० ]** १ ञ. छ. ट. कुर्यादेव. २ क. ख. च. ञ. द्राजगृहाद्देवि. ३ क. ख. ङ. च. छ. ञ. गच्छतुराघवः. ४ ज. एतद्विरोचते. ख. एतच्चरोचते. ५ ङ. झ. ट. यापयेत्. क. ख. कारयेत्. ६ ङ. यदाच. ७ छ. झ. मवाप्स्यते. ८ ङ. छ. झ. शैलसंयुताम्. ९ ख. ग. घ. च. ज. ञ. ट. चाद्यैवविवास. छ. ज. चैवास्यविवास. १० क—ञ. क्रोधेन. ११ क. च. ञ. मुष्णंचनिश्वस्य. १२ क. ख. ङ. च. छ. झ. ञ. राज्येनभरतं. १३ ङ. छ. झ. क्षिप्रमद्याभिषेच्चये. ख. मद्याभिषेच्चयेत्.

इदं त्विदानीं संपश्य केनोपायेन मन्थरे ॥ भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥ ३ ॥
एवमुक्ता तया देव्या मन्थरा पापदर्शिनी ॥ रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४ ॥
हन्तेदानीं प्रवक्ष्यामि कैकेयि श्रूयतां च मे ॥ यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥५॥
किं न स्मरसि कैकेयि स्मरन्ती वा निगूहसे ॥ यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥ ६ ॥
मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि॥श्रूयतामभिधास्यामि श्रुत्वा चापि विमृश्यताम्॥७॥
श्रुत्वेदं वचनं तस्या मन्थरायास्तु कैकयी ॥ किंचिदुत्थाय शयनात्स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥
कथय त्वं ममोपायं केनोपायेन मन्थरे ॥ भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥ ९ ॥
एवमुक्ता तया देव्या मन्थरा पापदर्शिनी ॥ रामार्थमुपहिंसन्ती कुब्जा वचनमब्रवीत् ॥ १० ॥
तव दैवासुरे युद्धे सह राजर्षिभिः पतिः ॥ अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११ ॥
दिशमास्थाय वै देवि दक्षिणां दण्डकान्प्रति ॥ वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥१२॥
स शंबर इति ख्यातः शतमायो महासुरः ॥ ददौ शक्रस्य संग्रामं देवसङ्घैरनिर्जितः ॥ १३ ॥
तस्मिन्महति संग्रामे पुरुषान्क्षतविक्षतान् ॥ रात्रौ प्रसुप्तान्घ्नन्तिस्म तरसाऽसाद्य राक्षसाः ॥ १४ ॥

सतीमन्थरावचनमनुमोदितवतीत्याह—एवमित्यादि । कोपेन दास्यप्राप्तिश्रवणजकोपेन ॥ १–२ ॥ मन्थराया अतिकुशलबुद्धियोगंदृष्ट्वा तामेवोपायंपृच्छति—इदमिति। इदं प्रस्तुतकार्योपयोगिसाधनं। संपश्य संचिन्तय ॥ ३ ॥ रामार्थं रामाभिषेकरूपप्रयोजनं ॥ ४ ॥ हन्तशब्दोहर्षेवर्तते । स्वाभिमतरामविवासनपूर्वकभरताभिषेकोपायप्रश्ननिबन्धनोत्रहर्षः । वरस्मरणहेतुकोवा । मे मत्तः। केवलंराज्यं कृत्स्नंराज्यं । "निर्णीतेकेवलमितित्रिलिङ्गंत्वेककृत्स्नयोः" इत्यमरः ॥ ५ ॥ हेकैकेयि त्वं उच्यमानं त्वयाबहुशःकथ्यमानं। आत्मार्थं आत्मप्रयोजनं। मत्तः श्रोतुमिच्छसीतियत् अतस्तन्नस्मरसिकिं। स्मरन्तीवानिगूहसेकिमितियोजना॥६॥ छन्दः अभिलाषः । "छन्दःपद्येभिलाषेच" इत्यमरः ॥ ७ ॥ किंचिदुत्थानमादरातिशयात् । उत्थानहेतुर्नशय्यादोषइत्याशयेनाह—स्वास्तीर्णादिति ॥ ८॥ कथयत्वंममोपायमित्यस्यविवरणं—केनेत्यादि ॥ ९–१० ॥ वरंस्मारयितुंपूर्वकथामाह । तवेत्यादिश्लोकद्वयमेकान्वयं । हेकैकेयि दैवासुरे देवासुरसंबन्धिनियुद्धे तवपतिः देवराजस्य साह्यकृत् साहाय्यकृत्सन् राजर्षिभिः स्वाश्रितैःसह त्वांचोपादाय दण्डकान्प्रति दक्षिणांदिशं आस्थाय प्राप्य। यत्र तिमिध्वजोवर्तते तद्वैजयन्ताख्यं पुरमगच्छदितिसंबन्धः ॥ ११—१२ ॥ कस्तिमिध्वजः सकीदृशः सकमपराधंकृतवानित्यत्राह—सइति । देवसङ्घैःअनिर्जितः देवसङ्घान्पराभूय शक्राययुद्धंददावित्यर्थः ॥ १३ ॥ क्षताः बाणशूलादिभिः संजातव्रणाः । विक्षताः खड्गपरशुपट्टसादिभिर्विविधंप्रहृताः । तान् रात्रौप्रसुप्तान् घ्नन्तिस्मेत्यभिधानात् पुरुषाणांक्षतविक्षतत्वं दिवायुद्धकृतमित्यवगम्यते । राक्षसाः अ-

प्रार्थनयादेवकार्यार्थेरामप्रादुर्भूतिरितिकैकेय्यास्मृतमितिध्वनितम् । तुशब्दएवार्थे ॥ १ ॥ वि० संप्रपश्य आलोचयेत्यर्थः । तदुपायापरिज्ञानेपि मे मत्तः श्रूयतां ॥ ५ ॥ ती० महोपायं अमोघोपायं ॥ ८ ॥ ति० अपास्य आस्तरणादाकृष्य । शि० राक्षसाः राक्षसकर्मवत्त्वेनतत्त्वंप्राप्ताः । असुरसाहाय्यार्थमागताराक्षसजातयोवा ॥ १४ ॥

[ पा० ] १ ङ. छ. झ. पायेनसाधये. २ क. ख. ङ. च. छ. झ. ञ. ट. मुक्तातुसादेव्या. ३ ख. छ. हिंसन्तीं. ४ ग. ङ. छ. झ. ञ. प्रपश्यत्वं. ५ झ. ट. श्रूयतांवचः. ६ ग. यथामे. ख. यथाहि. ७ ज. र्थंमतस्त्वंश्रोतु. ८ क. श्रोतुंज्ञात्वाविलासिनि. ९ ङ. छ. झ. ञ. ट. श्रुत्वाचैतद्विधीयताम्. १० ङ. छ. झ. ञ. श्रुत्वैवंवचनं. ११ ङ.—झ. ट. कथयस्वममोपायं. छ. कथयत्वंमहोपायं. १२ क. ख. ङ. च. छ. झ. ञ. ट. तदादेव्या. १३ च. ञ. कुब्जावाक्यमथाब्रवीत्. ङ. छ. झ. ट. कैकेयीमिदमब्रवीत्. १४ ङ. झ. ञ. पुरादेवासुरेयुद्धे. क. ख. घ. ज. तवदेवासुरे. १५ छ. झ. आगच्छत्त्वा. १६ ख. ङ. छ. झ. ट. मास्थायकैकेयि. १७ ङ. च. झ. ञ. रनिन्दितः. १८ ङ. छ. झ. ञ. ट. तरसापास्य. च. तरसाद्रेऽत्र.

तत्राकरोन्महद्युद्धं राजा दशरथस्तदा ॥ असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५ ॥
अपवाह्य त्वया देवि संग्रामान्नष्टचेतनः ॥ तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६ ॥
तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने ॥ १७ ॥
स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरौ ॥ गृह्णीयामिति तत्तेन तथेत्युक्तं महात्मना ॥ १८ ॥
अनभिज्ञा ह्यहं देवि त्वयैव कथिता पुरा ॥ कथैषा तव तु स्नेहान्मनसा धार्यते मया ॥ १९ ॥
रामाभिषेकसंभारान्निगृह्य च निवर्तय ॥ तौ वरौ याच भर्तारं भरतस्याभिषेचनम् ॥
प्रव्राजनं तु रामस्य त्वं वर्षाणि चतुर्दश ॥ २० ॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ॥ प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥ २१ ॥
क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते ॥ शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ॥ २२ ॥
मा स्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः ॥ रुदन्ती चापि तं दृष्ट्वा जगत्यां शोकलालसा ॥ २३ ॥
दयिता त्वं सदा भर्तुरत्र मे नास्ति संशयः ॥ त्वत्कृते स महाराजो विशेदपि हुताशनम् ॥ २४ ॥
न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् ॥ तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ॥ २५ ॥
न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः ॥ मन्दस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ॥ २६ ॥
मणिमुक्तं सुवर्णानि रत्नानि विविधानि च ॥ दद्याद्दशरथो राजा मा स्म तेषु मनः कृथाः ॥ २७ ॥
यौ तौ दैवासुरे युद्धे वरौ दशरथोऽददात् ॥ तौ स्मारय महाभागे सोर्थो मां त्वामतिक्रमेत् ॥ २८ ॥

सुराः ॥१४॥ तत्र प्रसुप्तप्रदेशे । तदा रात्रौ ॥ १५ ॥ हेदेवि नष्टचेतनः मूर्च्छितः तेपतिः त्वया सारथ्यंकुर्वाणयासंग्रामात् अपवाह्य अन्यत्रनीत्वा रक्षितः शीतोपचारैराप्यायितः। तत्र यत्रापवाहितस्तस्मिन्स्थले । शस्त्रैर्विक्षतः पुनर्युद्धेशस्त्रैःविक्षतःसन् त्वयारक्षितः। ततोपवाह्यरक्षितइतियोजना ॥ १६ ॥ तुष्टेनेत्यर्धमेकंवाक्यं । द्विधारक्षणात् द्वौवरौदत्तावितिभावः ॥ १७ ॥ इच्छेयमित्यर्थेलिङ् । तेन दशरथेन । तत् वरं तथा इच्छयाददानीत्युक्तं ॥ १८ ॥ कथमिदंत्वयाज्ञातमित्यत्राह—अनभिज्ञेति ॥ १९॥ रामाभिषेकेइत्यादिसार्धश्लोकएकान्वयः । निगृह्य बलात्कृत्य । भर्तारमितिशेषः । रामप्रव्राजनभरताभिषेचनरूपौ तौवरौ याचस्व ॥ २० ॥ चतुर्दशसङ्ख्याकिमर्थेत्यत्राह—चतुर्दशेति । प्रजाभावगतस्नेहः प्रजानां भावंअभिप्रायं गतःप्राप्तः स्नेहोयस्यसतथोक्तः । स्थिरः अप्रकंप्यः ॥ २१ ॥ एवमुपायमुपदिश्यउपायप्रवर्तनप्रकारमाह—क्रोधेति । प्रणयकलहादिनाक्रुद्धाःस्त्रियोयत्रवसन्तितत्क्रोधागारं। अनन्तर्हितायां अनास्तृतायां ॥२२॥ तंदृष्ट्वा रुदन्ती शोकलालसाचसती एनंमाप्रत्युदीक्षेथाः माचैनमभिभाषथाइत्यन्वयः। जगत्यां भूमौ । शयानेतिशेषः ॥ २३ ॥ एवंकरणेझटितिकार्यसिद्धिर्भविष्यतीत्याह—दयितेति । अत्र दयितत्वविषये । त्वत्कृते त्वत्प्रीतिनिमित्तं ॥ २४—२५ ॥ मन्दस्वभावे अलसस्वभावे । सौभाग्यबलं सौन्दर्यबलं ॥ २६ ॥ वरदानव्यतिरिक्तंमण्यादिकंचनस्वीकुर्वित्याह—मणीति । मणयःरत्नानिमुक्ताश्चेत्येकवद्भावः । मणिमुक्तं । रत्नानि श्रेष्ठवस्तूनि। "रत्नंस्वजातिश्रेष्ठेपि" इत्यमरः ॥ २७ ॥ यौतावितियत्तच्छब्दप्रयोगःप्रसिद्ध्यतिशयद्योतनार्थः। तौस्मारय दातव्यत्वेनेतिशेषः । सोर्थः रामविवासनभरताभिषेकरूपार्थः। मातिक्रमेत् सर्वथासिध्यत्येवे-

[ पा० ] १ क. ख. च. ञ. दत्तौतु. २ ङ. छ. झ. ट. यदिच्छेयं. ३ क. ख. ङ. ज. झ. ट. तदावरम्. ४ ङ. छ. झ. ट. गृह्णीयांतुतदाभर्तस्तथेत्युक्तं. क. ग. गृह्णीयामितितत्वेन. घ. गृहीष्यामीतितत्वेन. ५ ख. अनभिज्ञास्म्यहं. ६ ग. छ. ज. झ. कथितंपुरा. ७ ट. मनसैवावधार्यते. ८ क. ख. घ—ट. विनिवर्तय. ९ छ. झ. तौचयाचस्व. ङ. वरौयाचस्व. १० क—ङ. ज. झ. ट. प्रव्राजनंच. ११ ङ. छ. झ. वर्षाणिचचतुर्दश. १२ ट. तायांवै. १३ ङ. छ. झ. ट. रुदन्तीपार्थिवं. ग. रुदन्तीचाथतं. १४ ग. ङ—ट. त्वत्कृतेच. १५ ङ. च. छ. झ. ञ. ट. राजातु. १६ ज. नव्यतिक्रमितुं. १७ ङ. च. छ. ञ. ट. मणिरत्नंसुवर्णंच. क. मणिमुक्तंसुवर्णंच. ग. घ. ज. झ. मणिमुक्तासुवर्णानि. ख. मणिमुक्तासुवर्णंच. १८ ग. ज. ट. यौतेदेवासुरे. १९ ङ. छ. झ. ञ. रथोददौ. च. रथोऽददत्. २० झ. नत्वाक्रमेदिति. ङ. मातिक्रमेदिति. घ. मात्वामभिक्रमेत्.

यदा तु ते वरं दद्यात्स्वयमुत्थाप्य राघवः ॥ व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ॥ २९ ॥
रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च ॥ भरतः क्रियतां राजा पृथिव्याः पार्थिवर्षभः ॥ ३० ॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ॥ रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१ ॥
रामप्रव्राजनं चैव देवि याचस्व तं वरम् ॥ एवं सिध्यन्ति पुत्रस्य सर्वार्थास्तव भामिनि ॥ ३२ ॥
एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति ॥ भरतश्च हतामित्रस्तव राजा भविष्यति ॥ ३३ ॥
येन कालेन रामश्च वनात्प्रत्यागमिष्यति ॥ तेन कालेन पुत्रस्ते कृतमूलो भविष्यति ॥
संगृहीतमनुष्यश्च सुहृद्भिः सार्धमात्मवान् ॥ ३४ ॥
प्राप्तकालं तु ते मन्ये राजानं वीतसाध्वसा ॥ रामाभिषेकसंभारान्निगृह्यविनिवर्तय ॥ ३५ ॥
अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ॥ हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् ॥ ३६ ॥
सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ कैकेयी विस्मयं प्राप्ता परं परमदर्शना ॥ ३७ ॥
कुब्जे त्वां नाभिजानामि श्रेष्ठां श्रेष्ठाभिधायिनीम् ॥ पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये ॥ ३८ ॥
त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ॥ नाहं समवबुध्येयं कुब्जे राज्ञश्चिकीर्षितम् ॥ ३९ ॥
सन्ति दुःसंस्थिताः कुब्जा वक्राः परमपापिकाः ॥ त्वं पद्ममिव वातेन संनता प्रियदर्शना ॥ ४० ॥

त्यर्थः । राज्ञःसत्यप्रतिज्ञत्वादितिभावः ॥२८॥ राघवः दशरथः । व्यवस्थाप्य सत्येस्थापयित्वा ॥२९—३०॥ रूढः प्रसिद्धः अभिवृद्धोवा । कृतमूलः स्ववशीकृतमूलबलइत्यर्थः । शेषं चतुर्दशवर्षव्यतिरिक्तंपुरुषायुषशेषं ॥ ३१ ॥ रामप्रव्राजनंचेतिचकारेण भरताभिषेकः समुच्चीयते ॥ ३२ ॥ रामोरामइत्यत्र अरामइतिपदच्छेदः । अरामोभविष्यति इदानीमेवप्रकृतिस्नेहपात्रंनभविष्यतीत्यर्थः । यद्वा रामोभविष्यति एकएवभविष्यतीत्यर्थः ॥ ३३ ॥ कृतमूलः रूढमूलः । कृतमूलइत्यस्यैवविवरणं संगृहीतेत्यर्धंसंगृहीतमनुष्यश्चेत्यत्र भविष्यतीत्यनुषज्यते । संगृहीताः अनुरञ्जिताः मनुष्याः पौरजानपदाः येन सतथोक्तः । तत्रहेतुः—आत्मवानिति ॥ ३४ ॥ प्राप्तकालं अभिमतप्रार्थनोचितकालं । वीतसाध्वसा विगतभया । अमुंकालं प्राप्तकालंमन्ये । तेनविनिवर्तयेतिसंबन्धः ॥ ३५ ॥ अनर्थं विरुद्धार्थं । अर्थरूपेण अनुकूलार्थरूपेण ग्राहिता बोधिता । तथैवप्रतीता ज्ञातवती । अतएवहृष्टा ॥ ३६ ॥ सेति । प्रतीतेत्यस्योपपादनमेतत् । किशोरी बडवा । उत्पथं अमार्गं । परमदर्शना पुरेतिशेषः ॥ ३७ ॥ नाभिजानामीति । एतावत्कालमितिशेषः । पृथिव्यांयावत्यःकुब्जाःसन्ति तासांसर्वासांमध्ये त्वमुत्तमा बुद्धिनिश्चये विषये । अनेन कुब्जानांप्रायेण बुद्धितैक्ष्ण्यमस्तीतिद्योतितम् ॥ ३८ ॥ समवबुध्येयमिति शकिलिङ् ॥ ३९ ॥ दुस्संस्थिताः दुस्सन्निवे-

**ती०** रमयत्यानन्दयतीतिरामः । मुनीनामितिशेषः ॥ ३३ ॥ **ति०** नसमवबुद्ध्येयं त्वत्कृतबोधनाभावेइतिशेषः । चिकीर्षितं रामाभिषेकायभरतस्यविवासनादि । कैकेय्याएवंमतिकारणंक्वचित्पठ्यते । "नहितद्बुधेपापंशापदोषेणमोहिता । केकयेषुहिसाबाल्येब्राह्मणंरूक्षरूपिणम् । असूयितवतीबालातेनशप्तामहात्मना । यस्मादसूयसेविप्रंत्वंरूपमदगर्विता । तस्मादसूयांत्वमपिलोकेप्राप्स्यसिकुत्सिताम् । इतिशापसमाच्छन्नामन्थरावशमागता" इति । असूयां असूयाविषयताम् ॥ ३९ ॥ **ति०** अथकुब्जांकुब्जान्तरवैलक्षण्येनस्तौति—**सन्तीत्यादि** । त्वद्व्यतिरिक्ताइतिशेषः । दुस्संस्थिताः दुस्संस्थावयवसंनिवेशाः । अतएवपरमपापिकाः परमपापदर्शनाः । **शि०** अवक्राः कौटिल्यरहिताः । किंच । अवे प्रजापालने क्रः कृतिर्येषां । अतएवपरं केवलं । अपापिकाः नपापि कर्मयेषांतेऽपि । मन्त्रिणइति शेषः । दुस्संस्थिताः अविज्ञाताभिप्रायाः सन्ति । एतेनराज्ञो-

[ पा० ] १ ङ. रामप्रव्राजनंदूरं. छ. झ. रामप्रव्रजनंदूरं. २ च. ञ. राज्यं. ३ क. ङ. च. छ. झ. पृथिव्यां. ४ ख. तेवरम्. ५ क—छ. झ. ञ. ट. एवंसेत्स्यन्तिपुत्रस्य. ज. एवंलप्स्यन्तिपुत्रस्य. ६ ङ. च. छ. झ. ञ. ट. कामिनि. ७ छ. झ. अन्तर्बहिश्चपुत्रस्ते. ८ ङ. छ. झ. ट. साकमात्मवान्. ९ झ. प्राप्तकालंनुमन्येऽहं. ङ. ट. प्राप्तकालंतुमन्ये. घ. प्राप्तकालं तुतंमन्ये. १० क—छ. झ. ञ. ट. संकल्पान्निगृह्य. ११ ङ. छ. झ. ट. प्राप्य. १२ ख. ज. कुब्जेत्वांनावजानामि. ङ. छ. झ. प्रज्ञांतेनावजानामिश्रेष्ठेश्रेष्ठाभिधायिनि. १३ ङ. छ. झ. ट. दुस्संस्थिताःकुब्जे. १४ ग. घ. ज. परमदारुणाः.

उरस्तेऽभिनिविष्टं वै यावत्स्कन्धात्समुन्नतम् ॥ अधस्ताच्चोदरं शातं सुनाभमिव लज्जितम् ॥४१॥
परिपूर्णं तु जघनं सुपीनौ च पयोधरौ ॥ विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे ॥ ४२ ॥
जघनं तव निर्घुष्टं रशनादामशोभितम् ॥ जङ्घे भृशमुपन्यस्ते पादौ चाप्यायतावुभौ ॥ ४३ ॥
त्वमायताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनी ॥ अग्रतो मम गच्छन्ती राजहंसीव राजसे ॥ ४४ ॥
आसन्याश्शंबरे मायाः सहस्रमसुराधिपे ॥ सर्वास्त्वयि निविष्टास्ता भूयश्चान्याः सहस्रशः ॥ ४५ ॥
तवेदं स्थगु यद्दीर्घं रथघोणमिवायतम् ॥ मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते ॥ ४६ ॥
अत्र ते प्रतिमोक्ष्यामि मालां कुब्जे हिरण्मयीम् ॥ अभिषिक्ते च भरते राघवे च वनं गते ॥ ४७ ॥
जात्येन च सुवर्णेन सुनिष्टप्तेन मन्थरे ॥ लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु ॥ ४८ ॥
मुखे च तिलकं चित्रं जातरूपमयं शुभम् ॥ कारयिष्यामि ते कुब्जे शुभान्याभरणानि च ॥ ४९ ॥
परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५० ॥
चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना ॥ गमिष्यसि गतिं मुख्यां गर्वयन्ती द्विषज्जनम् ॥ ५१ ॥
तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः ॥ पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥५२॥
इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् ॥ शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३ ॥

---

ज्ञाः ॥ ४० ॥ तेउरः अभिनिविष्टं अभिनिवेशवत्सत् स्कन्धाभ्यांस्पर्धमानंसत् । यावत्स्कन्धात् स्कन्धपर्यन्तं । समुन्नतमित्युत्प्रेक्षा । अधस्तात् उरसोधस्तात् । स्थितं सुनाभं शोभननाभि । योगविभागादच् । उदरं उरसः सजातीयस्यउन्नतिंदृष्ट्वालज्जितमिव शातं कृशं ॥४१॥ परिपूर्णं पृथुलं ॥ ४२ ॥ उपन्यस्ते संश्लिष्टे । सुसन्निवेशेवा । आयतौ दीर्घौ ॥ ४३ ॥ सक्थिभ्यां ऊरुभ्यां । "सक्थिक्लीबेपुमानूरुः" इत्यमरः । उपलक्षणेतृतीया ॥ ४४ ॥ अन्याः लौकिक्योमायाः ॥ ४५ ॥ स्थगु उरोनिस्सृतोन्नतविकृतावयवविशेषः । रथघोणं नासिकाकाररथावयवविशेषः । "स्मृतिर्व्यतीतविषयामतिरागामिगोचरा । बुद्धिस्तात्कालिकीज्ञेयाप्रज्ञात्रैकालिकीमता" इत्युक्तविषयविभागेन मतेर्बाहुल्यं । क्षत्रविद्याः राजनीतयः । मायाः विचित्रकुत्सितशक्तयः । अत्र स्थगुनि ॥ ४६—४७ ॥ उत्तमस्वर्णजातौभवंजात्यं । दिगादित्वाद्यत् । सुनिष्टप्तेन सुद्रुतेन । सुवर्णेनलेपयिष्यामि सुवर्णकञ्चुकेनालंकरिष्यामीत्यर्थः । यद्वा चन्दनसंघृष्टसुवर्णेनसहलेपयिष्यामीत्यर्थः । प्रतीता संतुष्टा ॥ ४८ ॥ जातरूपमयं सुवर्णमयं । चित्रं नानारत्नखचिततयानानावर्णं । तिलकं तिलकाकारंभूषणं ॥ ४९—५० ॥ आह्वयमानेन स्पर्धमानेन । "स्पर्धायामाङः" इत्यात्मनेपदं । मुखेनहेतुना अप्रतिमानना अप्रतिद्वन्द्वमुखी । द्विषज्जनं मत्सपत्नीजनंप्रति । गर्वयन्ती गर्वंकुर्वन्ती । गर्वशब्दात् "तत्करोति" इतिण्यन्ताच्छत्रादि । स्वार्थेणिजित्येके । मुख्यां तृणीकृतसर्वजनां । गतिं पादन्यासविशेषं । गमि-

---

मन्त्र्यधीनत्वंव्यक्तं । तेनास्मिन्विषयेराज्ञोनापराधइतिसूचितम् । तेनलब्धोधनमन्तराइदंमज्ज्ञानविषयीभूतंनस्यादितिव्यञ्जितं । तेनत्वत्सदृशीमत्प्रियाऽन्यानास्तीतिबोधितम् ॥ ४० ॥ **ति०** अधस्ताच्चैवसंशातमितिपाठे सुनाभशब्देनोदरमुच्यते । **ति०** यावत्संस्थानमुन्नतमितिपाठे स्तनावधिसमस्थानरूपसर्वसाधारणसंस्थानंयावत्समुन्नतं । एतेनस्थगुमत्कुब्जत्वंप्रतिपादितम् ॥ ४१ ॥ **ति०** निर्मृष्टं रोमादिकश्मलहीनं । निर्घुष्टमितिपाठे रशनास्थक्षुद्रघण्टाभिश्शब्दायमानं ॥ ४३ ॥ **कत०** सक्थिनी पृष्ठफलके ॥ ४४ ॥

**[ पा० ]** १ क. त्स्कन्धंसमुन्नतं. २ घ. ङ. ज—ट. दरंशान्तं. ३ क—घ. च. ञ. परिपूर्णंच. घ. ङ. छ. ज. ट. प्रतिपूर्णंच. ४ क—ङ. छ. ज. झ. ट. निर्मृष्टं. ५ ङ. च. छ. झ. ञ. ट. दामभूषितम्. ६ ङ. छ. झ. ञ. ट. चव्यायतावुभौ. ७ घ. पादाभ्यां. ८ ङ. छ. झ. ट. राजसेऽतीवशोभने. ९ ङ. छ. झ. ट. हृदयेतेनिविष्टास्ताः. १० क. भूयसस्ताः. ११ इदमर्धं क. च. पुस्तकयोः मतयःक्षत्रविद्याश्चेत्यर्धात्परंदृश्यते. १२ छ. वसन्तिहि. १३ ख. ङ. च. छ. झ. ञ. ट. तेऽहंप्रमोक्ष्यामि. १४ क—ट. सुनिष्टप्तेनसुन्दरि. १५ ख. ङ. छ. झ. ट. गर्वयन्तीद्विषज्जने. च. ञ. गर्हयन्तीद्विषज्जने. क. घ. गर्हयन्तीद्विषज्जनम्. १६ क. च. ञ. प्रशस्यमानासाकुब्जा.

गतोदके सेतुबन्धो न कल्याणि विधीयते ॥ उत्तिष्ठ कुरु [1]कल्याणि राजानमनुदर्शय ॥ ५४ ॥
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ॥ क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५ ॥
अनेकशतसाहस्रं मुक्ताहारं वराङ्गना ॥ अवमुच्य [2]वराहाणि शुभान्याभरणानि च ॥ ५६ ॥
[3]ततो हेमोपमा तत्र कुब्जावाक्यवशं गता ॥ संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७ ॥
[4]इह वा मां मृतां कुब्जे नृपायावेदयिष्यसि ॥ [5]वनं तु राघवे प्राप्ते भरतः [6]प्राप्स्यति क्षितिम् ॥ ५८ ॥
न सुवर्णेन मे ह्यर्थो [7]न रत्नैर्न च भूषणैः ॥ एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५९ ॥

अथो पुनस्तां महिषीं महीक्षितो वचोभिरत्यर्थमहापराक्रमैः ॥
उवाच कुब्जा भरतस्य मातरं हितं वचो राममुपेत्य चाहितम् ॥ ६० ॥
प्रपत्स्यते राज्यमिदं हि राघवो यदि ध्रुवं त्वं ससुता च तप्स्यसे ॥
[8]अतो हि कल्याणि यतस्व तत्तथा यथा सुतस्ते भरतोऽभिषेक्ष्यते ॥ ६१ ॥
[9]तथाऽतिविद्धा [10]महिषी तु कुब्जया [11]समाहता वागिषुभिर्मुहुर्मुहुः ॥
निधाय हस्तौ हृदयेऽतिविस्मिता शशंस कुब्जां [12]कुपिता पुनःपुनः ॥ ६२ ॥
यमस्य वा मां विषयं गतामितो [13]निशाम्य कुब्जे प्रतिवेदयिष्यसि ॥
वनं गते वा सुचिराय राघवे समृद्धकामो भरतो भविष्यति ॥ ६३ ॥
अहं हि नैवास्तरणानि न स्रजो [14]न चन्दनं नाञ्जनपानभोजनम् ॥
न किंचिदिच्छामि न चेह जीवितं न चेदितो गच्छति राघवो वनम् ॥ ६४ ॥
अथैतदुक्त्वा वचनं सुदारुणं निधाय सर्वाभरणानि भामिनी ॥
[15]असंवृतामास्तरणेन मेदिनीं तदाऽधिशिश्ये पतितेव किन्नरी ॥ ६५ ॥

---

ष्यसि करिष्यसि । ओदनपाकंपचतीतिवन्निर्देशः ॥ ५१—५३ ॥ हेकल्याणि कुरु मदुक्तप्रकारमिति शेषः । राजानमनुदर्शय क्रोधागारमितिशेषः । यद्वा अनुदर्शय प्रतीक्षस्वेत्यर्थः ॥ ५४ ॥ तथाप्रोत्साहितेत्यादिश्लोकत्रयमेकान्वयं । अनेकशतसाहस्रं बहुमूल्यमितियावत् । "शतमानाविंशतिक" इत्यादिना-क्रीतार्थेऽण् ॥ ५५—५७ ॥ नृपाय मदुपेक्षकाय ॥ ५८—५९ ॥ कैकेयीनिश्चयंद्रढयति—अथोइति । राममुपेत्य राममुद्दिश्य ॥ ६०—६१ ॥ अतिविद्धा अतिदुःखिता । निधायहस्तौहृदयइतिविस्मयाभिनयः । अतिविस्मिता अतिस्निग्धः कथंमदनिष्टंकरिष्यतीति । कुपिता रामाभिषेकप्रवर्तकंभर्तारमुद्दिश्यकुपितेत्यर्थः ॥ ६२—६३ ॥ इतोगच्छतीतिवर्तमानसामीप्येलट् ॥ ६४ ॥ मेदिनीमधिशिश्ये । " अधिशीङ्स्थासांक-

---

**शि०** कल्याणं । सज्जनानामित्यर्थः ॥ ५४ ॥ **शि०** सौभाग्यमदगर्विता । सौभाग्यस्य अहोभाग्यमस्माकंयस्यादेवसंतापहारकाःरामादयःपुत्राइतिख्यातिशयभाग्यवत्तायाः मदेनगर्विता । किंच । सौभाग्यैः शोभनभाग्यवद्भिर्मन्यतेऽतिश्रेष्ठत्वेनज्ञायतेऽसावितिसौभाग्यमत् सैवागर्वितेतिकर्मधारयः ॥ ५५ ॥ **ति०** निशाम्य दृष्ट्वा । प्रतिवेदयिष्यसि दशरथायेतिशेषः ॥ ६३ ॥ **ति०** पुण्यक्षयाद्भूमौपतिताकिन्नरीव ॥ ६५ ॥ इतिनवमस्सर्गः ॥ ९ ॥

**[ पा० ]** १ ग. ङ. छ. झ. ञ. ट. कुरुकल्याणं. २ ख. घ. महार्हाणि. ३ ङ. च. झ. ञ. ट. तदाहेमोपमा. ४ घ. इहमांचमृतांकुब्जे. ५ ख. ग. घ. वनंवाराघवे. ६ ङ. झ. ट. प्राप्स्यतेक्षितिम्. ७ क. नचरत्नैर्नभोजनैः. ख. ग. घ. च. छ. झ. ञ. ट. नरत्नंनचभोजनैः. ८ ग. ङ. छ. झ. ञ. ट. ततोहिकल्याणि. ९ घ. तदातिवृद्धा. ज. यथातिविद्धा. १० ङ. छ. झ. ञ. महिषीतिकुब्जया. ११ ग. घ. ङ. ज. समाहिता. १२ क. रुषिता. ख. कुपितां. १३ ख. घ—छ. झ. ञ. ट. निशम्यकुब्जे. १४ घ. विलेपनंनाञ्जनपान. १५ झ. ठ. असंस्कृतामास्तरणेन.

उदीर्णसंरंभतमोवृतानना तथाऽवमुक्तोत्तममाल्यभूषणा ॥
नरेन्द्रपत्नी विमला बभूव सा तमोवृता द्यौरिव मग्नतारका ॥ ६६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः ॥ १० ॥

सुमन्त्रादीन्प्रतिरामाभिषेकसामग्रीसज्जीकरणनियोजमपूर्वकं प्रियाख्यानायकैकेयीगृहमुपगतवता दशरथेनतत्रतदद्दर्शनजविषादात्प्रतिहारींप्रतिप्रश्नः ॥ १ ॥ तयाकैकेय्याःक्रोधागारेशयनंनिवेदितेनतेन तांप्रत्युपलालनपूर्वकंप्रियवचनैःसमाश्वासनम् ॥ २ ॥

विदर्शिता यदा देवी कुब्जया पापया भृशम् ॥ तदा शेते स्म सा भूमौ दिग्धविद्धेव किन्नरी ॥१॥
निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी ॥ मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥ २ ॥
सा दीना निश्चयं कृत्वा मन्थरावाक्यमोहिता ॥ नागकन्येव निश्वस्य दीर्घमुष्णं च भामिनी ॥
मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् ॥ ३ ॥
सा सुहृच्चार्थकामा च तं निशम्य सुनिश्चयम् ॥ बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा ॥ ४ ॥
अथ साऽमर्षिता देवी सम्यक्कृत्वा विनिश्चयम् ॥ संविवेशाबला भूमौ निवेश्य भ्रुकुटीं मुखे ॥ ५ ॥
ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे ॥ ६ ॥
तथा तान्यपविद्धानि माल्यान्याभरणानि च ॥ अशोभयन्त वसुधां नक्षत्राणि यथा नभः ॥ ७ ॥
क्रोधागारे निपतिता सा बभौ मलिनांबरा ॥ एकवेणीं दृढं बध्वा गतसत्वेव किन्नरी ॥ ८ ॥

---

मे" इतिसप्तम्यर्थेद्वितीया ॥६५॥ उदीर्णःउत्कटःसंरंभः कोपःसएवतमः तेनवृतानना । विमला पूर्वविमला । तमोवृता नीलाभ्रयुक्ततमोवृता । मग्नतारका अस्तमिततारका ॥ ६६ ॥ इति श्रीगोविन्दराजविरचितेश्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

---

अथपूर्वोक्तकैकेयीक्रोधमविचाल्यत्वसूचनायानुवदन्राज्ञः कैकेयीदर्शनानुनयौदर्शयति—विदर्शितेति । विदर्शिता विपरीतंबोधिता । दिग्धविद्धा विषलिप्तबाणेनप्रहृता " विषाक्तेदिग्धलिप्तकौ " इत्यमरः ॥ १ ॥ सा कैकेयी । कृत्यं कर्तव्यं । पूर्वोक्तरीत्यामनसानिश्चित्य । सर्वंत्वदुक्तंसम्यगितिमन्थरायैआचचक्षे इतिसंबन्धः ॥ २ ॥ सादीनेत्यर्धत्रयमेकंवाक्यं । दीना अत्रस्वोद्योगःफलिष्यतिनवेतिशङ्कयादीना । मार्गं उपायं। एतदर्धत्रयंनिश्चित्येतिपूर्वश्लोकात्पूर्वमेवनिवेशनीयं । अर्थसङ्गतिस्वारस्यात् ॥ ३ ॥ तंनिश्चयं " इहवामांमृतां " इत्यादिनापूर्वसर्गान्तोक्तनिश्चयं । निशम्य श्रुत्वा । सिद्धिं निश्चयफलं । प्राप्येवप्रीता ॥४॥ पुनःसंवेशनाभिधानंरोषसूचकभ्रुकुटीकरणमाल्यभूषणापवेधादिविशेषप्रदर्शनार्थं । भ्रुकुटीं क्रोधजनिताकारविशेषं ॥ ५ ॥ पूर्वंत्यक्तभूषणादीनामौदासीन्येनभूमौविक्षेपंदर्शयति—ततइति । यान्यपविद्धानि तानिभूमिंप्रपेदिरे नतुमञ्जूषिकां । क्रोधातिशयसूचनायभूमावुत्सर्जनं ॥ ६ ॥ व्याकीर्णत्वद्योतनायतानिवर्णयति—तयेत्यादिना ॥ ७ ॥ गतसत्वा क्षीणबला। विगतासुरितिवार्थः। " द्रव्यासुव्यवसायेषुसत्वमस्त्रीतुजन्तुषु " इत्यमरः ॥ ८ ॥

---

**वि०** किन्नरी कामरूपप्रधानोजातिविशेषः । **स०** यद्वा पापया निकृतिनाम्न्याअसुर्या । "अनर्हायास्त्वयाऽऽज्ञप्ताकैकेय्याअपिसद्गतिः । सूत्वातुभरतंनैषागच्छेतनिरयानिति । तथापिसायदावेशाच्चकारत्वय्यशोभनम् । निकृतिर्नामसाक्षिप्तामयातमसिशाश्वते" इतितात्पर्यनिर्णये नवमेआचार्योक्तेः ॥ १ ॥ **ति०** निधिमितिपाठे धनंप्राप्येवपरमप्रीताबभूव । वस्तुतोयद्देव-

[ **पा०** ] १ ञ. विमनाबभूवसा. २ क—ट. सारुषिता. ३ घ. सुनिश्चयम्. ४ ग. घ. ञ. तत्रसर्वाणिमाल्यानि. ५ ग. घ. च—ट. चपतिता. ६ ख. ङ—ट. एकवेणींदृढां.

आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥ उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ॥ ९ ॥
अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ॥ प्रियार्हां[1] प्रियमाख्यातुं विवेशान्तःपुरं वशी ॥ १० ॥
स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ पाण्डुराभ्र[2]मिवाकाशं राहुयुक्तं निशाकरः ॥ ११ ॥
शुक[3]बर्हिणसंघुष्टं क्रौञ्चहंसरुतायुतम् ॥ वादित्ररवसंघुष्टं कुब्जा[4]वामनिकायुतम् ॥ १२ ॥
लतागृहैश्चित्रगृहैश्चंपकाशोकशोभितैः ॥ दान्तराजतसौवर्णवेदिकाभिः समायुतम्[5] ॥ १३ ॥
नित्यपुष्पफलैर्वृक्षैर्वापीभिश्चोप[6]शोभितम् ॥ दान्तराजतसौवर्णैः संवृतं परमासनैः ॥ १४ ॥
विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि ॥ उपपन्नं महार्हैश्च भूषितै[7]स्त्रिदिवोपमम् ॥ १५ ॥
[ विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ ][8]
तत्प्रविश्य[9] महाराजः स्वमन्तःपुरमृद्धिमत् ॥ न ददर्श प्रियां[10] राजा कैकेयीं शयनोत्तमे ॥ १६ ॥
स कामबलसंयुक्तो रत्यर्थं[11] मनुजाधिपः ॥ अपश्यन्दयितां भार्यां पप्रच्छ विषसाद च ॥ १७ ॥
न हि तस्य पुरा देवी तां वेलामत्यवर्तत ॥ न च राजा गृहं शून्यं प्रविवेश कदाचन ॥ १८ ॥
ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ॥ यथापुरम[12]विज्ञाय स्वार्थलिप्सुमपण्डिताम् ॥ १९ ॥
प्रतिहारी त्वथोवाच संत्रस्ता[13] सुकृताञ्जलिः ॥ देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता ॥ २० ॥
प्रतिहार्या वचः श्रुत्वा राजा परमदुर्मनाः ॥ विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः ॥ २१ ॥

---

आज्ञाप्य सुमन्त्रादीन्नियम्य । अभिषेचनं अभिषेचनसाधनंप्रति । उपस्थानं आस्थानं। सदइत्यर्थः। अनुज्ञाप्य अनुज्ञांकारयित्वा। यद्वा पञ्चमसर्गे "गुरुणात्वभ्यनुज्ञातः" तइत्युक्तत्वाद्वसिष्ठएवोपस्थानशब्देनोच्यते ॥ ९ ॥ रामाभिषेकः अद्यवै इदानीमेव । प्रसिद्धइतिजज्ञिवान् । इतःपूर्वंकैकेय्याःश्रोतुमवकाशोनास्तीतिज्ञातवानित्यर्थः । सर्वमस्यवशेवर्ततइतिवशी स्वतन्त्रः । अतःस्वयमेवप्रियार्हांकैकेयींप्रतिप्रियमाख्यातुमन्तःपुरंविवेश ॥ १० ॥ स्वबाधककैकेयीयुक्तत्वाद्राहुयुक्तमित्युक्तं ॥ ११ ॥ अथदशरथस्यकैकेयीवचनकर्तव्यत्वाय रामाभिषेकविघ्नमियंकरिष्यतीतिबुद्ध्यनुत्पादायच रतिभावोद्दीपनान्यन्तःपुरेदर्शयति—शुकेत्यादि । वादित्ररवसंघुष्टं वीणादिचतुर्विधवाद्यरवानुनादितं । " ततंवीणादिकंवाद्यमानद्धंमुरजादिकं । वंशादिकंतुसुषिरंकांस्यतालादिकंघनं ॥ चतुर्विधमिदंवाद्यंवादित्रातोद्यनामकं " इत्यमरः । कुब्जादीनांप्रियानुकूल्यहेतुत्वाद्रतिवृद्धिहेतुत्वं ॥ १२ ॥ लतागृहैः चित्रगृहैश्चोपलक्षितं । दान्ताः दन्तनिर्मिताः ॥ १३ ॥ नित्यपुष्पफलैरिति । दोहदविशेषादितिज्ञेयं ॥१४॥ भक्ष्यैः अपूपादिभिः । भूषितैः स्त्रीजनैरितिशेषः । अतएवत्रिदिवोपमं ॥ १५—१६ ॥ कामबलसंयुक्तः उद्दीपनदर्शनादुचितकालत्वाच्चेतिभावः । अतएवरत्यर्थंपप्रच्छ क्वगतासीत्येवं। प्रत्युत्तराभावाद्विषसादच॥१७॥ विषादहेतुमाह—नहीति । तांवेलां रतिवेलां ॥ १८ ॥ कैकेयीं स्वार्थलिप्सुं स्वप्रयोजनपरां । अविज्ञाय यथापुरं यथापूर्वं। पर्यपृच्छत प्रतिहारीमितिशेषः । पूर्वमदर्शनकालेयथापृच्छति तथाऽपृच्छदित्यर्थः॥१९–२०॥ भूयःअतिशयेन । अदर्शनविषादादपिक्रोधागारप्रवेशश्रवणादतिशयेनविषसाद । लुलितव्याकुलेन्द्रियः लुलितानिघूर्णितानिव्याकुलानिस्वस्वविषयग्रहणासमर्था-

---

कार्यार्थंस्वयंभूलोकमागतादासीचजातातद्विषयांसिद्धिंप्राप्येत्यर्थः । रामगमनस्यसंभावनामात्रविषयत्वादिवेति ॥ ४ ॥ **ति०** वशी स्वस्त्रीव्यतिरिक्तविषये ॥ १० ॥ **ति०** ह्रस्वाः वामनिकाः । कुब्जाभिर्वामनिकाभिश्चयुतं । सुरूपदासीनांसापत्न्यसंभावनयाअन्तःपुरेअवासात् ॥ १२ ॥ **ति०** कामबलसंयुक्तः कामबलं तदुद्रेकस्तत्संयुक्तः । अतएवरत्यर्थी । **शि०** कामबलेन अभिषेक-

**[ पा० ]** १ घ. प्रियायैप्रियमाख्यातुं. क. प्रियमाख्यामः. २ ख. घ. ज. मिवाकाशे. ३ ङ. च. छ. झ. ञ. शुकबर्हिसमायुक्तं. क. ख. बर्हिणसंयुक्तं. ४ च. कुब्जवामनिकायुतम्. ५ घ. समावृतम्. ६ ङ. च. छ. झ. ञ. रुपशोभितम्. ७ क. ग. घ—ञ. भूषणैस्त्रिदिवोपमम्. ८ इदमर्धं ज. दृश्यते. ९ ङ. छ. झ. सम्प्रविश्य. १० ङ. छ. झ. स्त्रियंराजा. ११ ङ. च. झ. ञ. रत्यर्थीमनुजाधिपः. १२ च. ज. यथापूर्वमविज्ञाय. १३ ङ. छ. झ. संत्रस्तातु.

तत्र तां पतितां भूमौ शयानामतथोचिताम् ॥ प्रतप्त इव दुःखेन सोपश्यज्जगतीपतिः ॥ २२ ॥
स वृद्धस्तरुणीं भार्यां प्राणेभ्योपि गरीयसीम् ॥ अपापः पापसंकल्पां ददर्श धरणीतले ॥ २३ ॥
लतामिव विनिष्कृत्तां पतितां देवतामिव ॥ किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा ॥ २४ ॥
[1]मायामिव परिभ्रष्टां हरिणीमिव संयताम् ॥ करेणुमिव दिग्धेन विद्धां मृगयुना वने ॥ २५ ॥
महागज इवारण्ये स्नेहात्[2]परिममर्श ताम् ॥ २६ ॥

[3]परिमृश्य च पाणिभ्यामभिसंत्रस्तचेतनः ॥ कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७ ॥
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ॥ देवि [4]केनाभिशप्ताऽसि [5]केन वाऽसि विमानिता ॥२८॥
[6]यदिदं मम दुःखाय शेषे कल्याणि पांसुषु ॥ २९ ॥

भूमौ शेषे किमर्थं त्वं [7]मयि कल्याणचेतसि ॥ भूतोपहतचित्तेव मम चित्तप्रमाथिनी ॥ ३० ॥
सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः ॥ सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि ॥३१॥
[8]कस्य वा ते प्रियं कार्यं केन वा विप्रियं कृतम् ॥ कः प्रियं लभतामद्य को वा सुमहदप्रियम् ॥३२॥
[9]मा रोदीर्मा च कार्षीस्त्वं देवि संपरिशो[10]षणम् ॥ अवध्यो वध्यतां को वा को [11]वा वध्यो विमुच्यताम् ३३
दरिद्रः को [12]भवत्वाढ्यो द्रव्य[13]वान्वाऽप्यकिंचनः ॥ अहं चैव मदीयाश्च सर्वे तव वशानुगाः ॥ ३४ ॥
न ते किंचिदभिप्रायं व्याहन्तुमहमुत्सहे ॥ आत्मनो जीवितेनापि ब्रूहि [14]यन्मनसेच्छसि ॥ ३५ ॥

निइन्द्रियाणियस्यसतथोक्तः ॥ २१ ॥ अतथोचितां भूमिशयनानर्हां ॥ २२ ॥ रामाभिषेकसंरंभेसपत्नीमातुःक्रोधस्तन्निमित्तइतिकुतोराजानज्ञातवानित्यत्राह—सइति । अकुटिलत्वात्व्यामोहाच्चनज्ञातवानितिभावः ॥ २३ ॥ तद्दर्शनस्यदुस्सहत्वमाह—लतामिवेति । पतितां भूगतां । निर्धूतां । धू[illegible]ने । व्याकुलितामितियावत् । च्युतां दिवइतिशेषः ॥ २४ ॥ वामीमिवपरिभ्रष्टामित्यपिपाठः । वामीं बडबां "वाम्यश्वाबडबा" इत्यमरः । संयतां वागुरयाबद्धां । दिग्धेन विषलिप्तबाणेन । "विषाक्तेदिग्धलिप्तकौ" इत्यमरः । मृगयुना व्याधेन । सम्यग्भूगतत्वाश्चर्यावहत्वदयनीयत्वदर्शनीयत्वविलुलितवर्णत्वनिश्चेष्टत्वसंतापावहत्वानि क्रमाल्लताद्यौपम्येनलभ्यन्ते ॥ २५ ॥ अभिसंत्रस्तचेतनः अभितःसम्यक् त्रस्ताचेतना बुद्धिर्यस्य । किमर्थेच्छुः उतरोगग्रस्ता उतक्रुद्धेतित्रासः । कमलपत्राक्षीमितिकामित्वद्योतनं ॥ २६—२७ ॥ आत्मनि त्वयि । मयिवा । अभिशप्ता परुषिता ॥ २८ ॥ पांसुषुशेषइतियत्इदंममदुःखायेतिसंबन्धः ॥ २९ ॥ भूतोपहतचित्तेव पिशाचग्रस्तचित्तेव ॥ ३० ॥ रोगपक्षंपरिहरति—सन्तीत्यादि । अभितुष्टाः दानमानादिभिः ॥ ३१ ॥ क्रोधपक्षेपरिहारमाह—कस्यवेति । कस्येति तृतीयार्थेषष्ठी । केनवातेप्रियंकृतमित्यर्थः । प्रियाप्रियकारिणोःफलमाह—कःप्रियमिति ॥ ३२ ॥ मारोदीः रोदनंमाकार्षीः । संपरिशोषणं कायक्लेशं ॥ ३३ ॥ अर्थेच्छापक्षंपरिहरति—अहमिति ॥ ३४ ॥ ममजीवनेनापिहेतुना त्वत्प्रियं व्याहन्तुंनोत्सहे त्वत्प्रियार्थे

विषयकातीच्छया संयुक्तः । अतएवरत्यर्थी राज्ञीप्रीतिप्रयोजनः ॥ १७ ॥ **शि०** पापसंकल्पां पापाय पापिराक्षसविनाशाय संकल्पोयस्यास्तां ॥ २३ ॥ **स०** महागजइति करेणुमित्यनुषज्यते ॥ २६ ॥ **ति०** मारौत्सीः । आत्मनोऽभिप्रायंरुद्धंगुसंमाकार्षीरित्यर्थः ॥ ३३ ॥

**[ पा० ]** १ ख. मालामिवपरिभ्रष्टां. २ ग. ङ. छ. झ. त्परमदुःखितां. ३ छ. झ. परिमृज्यच. ४ क. ग. ङ—झ. केनाभियुक्तासि. ५ ञ. केनवास्यवमानिता. ६ छ. यदीदं. क. यदीह. ७ ग. ज. मयिकल्याणिजीवति. ८ छ. झ. कस्यवापिप्रियंकार्यं. ख. कस्यवाविप्रियंकार्यं. ९ क. ङ. च. छ. झ. मारौत्सीर्माचकर्षीस्त्वं. १० ख. देविमेपरिशोषणं. ११ ख. ग. ङ. च. छ. झ. ञ. ट. वध्यःकोवाविमुच्यताम्. क. वध्यःकोत्रविमुच्यताम्. १२ क. ग. ङ. च. छ. झ. ञ. ट. कोभवेदाढ्यः. १३ क. ञ. न्कोप्यकिंचनः. १४ ङ. छ. झ. ट. यन्मनसिस्थितम्. च. ञ. यन्मनसीच्छसि.

बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि ॥ करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ ३६ ॥
यावदावर्तते चक्रं [1]तावती मे वसुंधरा ॥ ३७ ॥
[2]प्राचीनाः सिंधुसौवीराः सौराष्ट्रा दक्षिणापथाः ॥ [3]वङ्गाङ्गमगधा [4]मत्स्याः समृद्धाः काशिकोसलाः ॥३८॥
तत्र जातं बहुद्रव्यं [5]धनधान्यमजाविकम् ॥ [6]ततो वृणीष्व कैकेयि यद्यत्त्वं मनसेच्छसि ॥ ३९ ॥
किमायासेन ते भीरु उत्तिष्ठोत्तिष्ठ शोभने ॥ तत्त्वं मे ब्रूहि कैकेयि [7]यतस्ते भयमागतम् ॥
[8]तत्ते व्यपनयिष्यामि नीहारमिव [9]रश्मिवान् ॥ ४० ॥
तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ॥ परिपीडयितुं भूयो भर्तारमुपचक्रमे ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ॥ ११ ॥

कैकेय्या स्वाभीष्टकरणप्रतिज्ञाने तन्निवेदनंनिवेदितेनदशरथेनतांप्रति तत्करणप्रतिज्ञानम् ॥१॥ कैकेय्यादशरथप्रतिज्ञाने देवादीनांसाक्षीकरणपूर्वकंतंप्रति देवासुरयुद्धेस्वस्मैवरदानप्रतिज्ञानुस्मारणेनरामप्रवासनभरताभिषेचनयोर्वरत्वेनवरणम् ॥२॥

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् ॥ उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १ ॥
नास्मि विप्रकृता देव [10]केनचिन्नावमानिता ॥ अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥ २ ॥
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि ॥ अथ [11]तं व्याहरिष्यामि [12]यदभिप्रार्थितं मया ॥ ३ ॥
तामुवाच [13]महातेजाः कैकेयीमी[14]षदुत्स्मितः ॥ कामी हस्तेन संगृह्य मूर्धजेषु [15]शुचिस्मिताम् ॥ ४ ॥

---

जीवितमपिपरित्यजामीत्यर्थः ॥३५॥ आत्मनिबलं त्वयि विद्यमानंवाल्लभ्यंबलं ॥ ३६ ॥ चक्रं सूर्यस्यरथचक्रं आज्ञावा ॥ ३७ ॥ प्राचीनाइत्यादि प्राचीनादिदेशाः । येसन्तीतिशेषः ॥ ३८ ॥ तत्र तेषुदेशेषु । धनधान्यं यदस्तीतिशेषः । ततः तत्र ॥३९॥ आयासेन भूशयनायासेन । तत् भयनिमित्तं । रश्मिवान् सूर्यः ॥४०॥ परिपीडयितुं प्रतिज्ञाकरणेननिर्बन्धयितुं ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणेपीतांबराख्याने अयोध्याकाण्डव्याख्याने दशमःसर्गः १०

---

अथ "व्यवस्थाप्यमहाराजंत्वमिमंवृणुयावरं" इति मन्थरयोपदिष्टमनुतिष्ठतीत्याह—तमित्यादिना ॥ १ ॥ विप्रकृता रोगग्रस्ता । नार्थकामास्मीत्यपिद्रष्टव्यं । निग्रहानुग्रहपक्षंमनसिकृत्वाह—अभिप्रायस्त्विति । अभिप्रायः अभिप्रेतोर्थः । अस्तीतिशेषः । त्वयाकृतं त्वयाप्रतिश्रुतं । तमिच्छामीतिसंबन्धः ॥ २ ॥ प्रतिज्ञांप्रतिजानीष्व शपथंकुर्वित्यर्थः ॥ ३ ॥ ईषदुत्स्मितः भवदाज्ञाकारिणिमयिकिंशपथेनेतिकिंचिदुद्गतस्मितः । यद्वा अभिप्रेतकरणमीषत्करमित्युत्स्मितः । यद्वा शङ्कितरोगाद्यभावात् । हस्तेनमूर्धजेषुसंगृह्येति शिरोऽङ्के

---

**शि०** आत्मनि तवात्मभूतेमयि ॥ ३६ ॥ **ती०** चक्रं भूचक्रं ॥ ३७ ॥ **शि०** भूयोत्यन्तं । तथोक्ता अतएवसमाश्वस्ता अतएववक्तुकामा साकैकेयी तदप्रियं देवद्विषंराक्षसमित्यर्थः । परिपीडयितुं हिंसयितुं । भर्तारं वक्तुमितिशेषः । उपचक्रमे ॥ ४१ ॥ इतिदशमस्सर्गः ॥ १० ॥

**शि०** मन्मथशरैः मदं संसारदैन्यं मथन्ति निवर्तयन्तीति मन्मथाः वसिष्ठादयः तेषांशरैः शत्रुनिवर्तकशरसदृशाविद्यानिवर्तकवचनैः । विद्धं व्याप्तं । अतएवकामवेगवशानुगं कामवेगोवशोयेषां तेअनुगाअनुचरायस्यतं । पृथिवीपालं दशरथम् । दारुणं दारुणवस्तुस्वीकारकं । वचउवाच । श्लेपनार्थकमदधातुप्रकृतिकभावक्विबन्तंमदिति । शरशब्दआचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ १ ॥

**[ पा० ]** १ छ. तावच्चैववसुंधरा. २ ङ. छ. झ. ट. द्राविडास्सिंधुसौवीराः. ३ क. मागधाः. ४ ञ. मात्स्याः. ५ च. छ. धनंधान्य. ६ क. च. ञ. तत्तद्वृणीष्व. ७ क. यतस्त्वांभय. ८ ग. ज. तत्तद्व्यपनयिष्यामि. ९ ज. भास्करः. १० ख. ङ. केनचिन्नविमानिता. ११ ङ. झ. ट. तेव्याहरिष्यामि. १२ ख. यदभिप्रार्थितंमम. ङ. छ. झ. ट. यथाभिप्रार्थितं. १३ ख. ग. ङ—ट. महाराजः. १४ छ. झ. ट. मीषदुत्स्मयः. १५ ङ. छ. झ. भुविस्थिताम्.

अवलिप्ते न जानासि त्वत्तः प्रि[1]यतमा मम ॥ मनुजो मनुज[2]व्याघ्राद्रामादन्यो न विद्यते ॥ ५ ॥
तेनाजय्येन मुख्येन राघवेण महात्मना ॥ शपे ते जीव[3]नार्हेण ब्रूहि [4]यन्मनसेच्छसि ॥ ६ ॥
यं मुहूर्तमपश्यंस्तु न जीवेय[5]महं ध्रुवम् ॥ तेन रामेण [6]कैकेयि शपे ते वचनक्रियाम् ॥ ७ ॥
आत्मना वा[7]ऽऽत्मजैश्चान्यैर्वृणे यं मनुजर्षभम् ॥ तेन रामेण [8]कैकेयि शपे ते वचनक्रियाम् ॥ ८ ॥
भद्रे हृदयमप्येतदनुमृश्योद्धरस्व मे ॥ एतत्समीक्ष्य कैकेयि ब्रूहि यत्साधु मन्यसे ॥ ९ ॥
बलमात्मनि [10]पश्यन्ती न [11]मां शङ्कितुमर्हसि ॥ करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ १० ॥
सा तदर्थमना देवी तमभिप्रायमागतम् ॥ निर्मा[12]ध्यस्थ्याच्च हर्षाच्च बभाषे [13]दुस्सहं वचः ॥ ११ ॥
तेन वाक्येन संहृष्टा [14]तमभिप्रायमागतम् ॥ व्याजहार महाघोरमभ्यागतमिवान्तकम् ॥ १२ ॥
यथा क्रमेण [15]शपसि वरं मम ददासि च ॥ तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः [16]साग्निपुरोगमाः ॥ १३ ॥

---

कृत्वेतिभावः । स्वाभिमुखीकरणायवेणीमवलंब्येतिवार्थः ॥ ४ ॥ अवलिप्ते सौभाग्यगर्विते । मम त्वत्तः प्रियतमा स्त्रीणांमध्येत्वत्तःप्रियतमानास्ति । रामादन्यो मनुजःप्रियतमोनविद्यतेइतिजानासीतिसंबन्धः ॥५॥ जीवनार्हेण जीवनादपिपूज्येन ॥ ६ ॥ अस्यैवविवरणं —यमिति । तेवचनक्रियां तववचनकरणंप्रतीतिशेषः ॥ ७ ॥ आत्मना स्वदेहेन । आत्मजैः भरतादिभिः । अन्यैश्च प्रियबन्धुभिश्च । मूल्यभूतैरेतैर्यरामंवृणे सर्वान्परित्यज्यापिराममेवपरिगृह्णामीतिभावः ॥ ८ ॥ हेभद्रे मेहृदयं एतत् एतादृशं । अनुमृश्य शपथवचनानुसारित्वेननिर्धार्य । उद्धरस्व उज्जीवय । एतत् वाङ्मनसयोरैकरूप्यं । समीक्ष्य सम्यगालोच्य । यत्साधु इष्टं । मन्यसे । तद्ब्रूहि । त्वदभीष्टकरणमेवमज्जीवनं अन्यथा नजीवामीत्यर्थः ॥ ९ ॥ आत्मनिबलं त्वयिविद्यमानं दृष्टिचित्तापहारिसौभाग्यबलं॥१०॥ तदर्थमनाः मन्थरोपदिष्टरामविवासनपूर्वकभरताभिषेकरूपार्थमनाः । अभिप्रायमागतं स्वाभिमतशपथंप्राप्तं । निर्माध्यस्थ्यात् निर्गतमध्यस्थभावात् । पक्षपातादित्यर्थः ॥ ११ ॥ उक्तमर्थंसविशेषमाह—तेनेति । तेनवाक्येन शपथपूर्वकंत्वदभिमतंकरिष्यामीत्युक्तदशरथवचनेन ॥ १२ ॥ दशरथवाक्यंदृढीकर्तुंनरस्यधर्माधर्मसाक्षिभूतादेवताः श्रावयति—यथाक्रमेणेति । क्रमेण प्रियपुत्रसुकृतक्रमेण ।

---

**ति०** प्रियतरोमम स्त्रीणांमध्येत्वत्तः पुंसांमध्येरामादन्यइतियोज्यम् । यद्वारामादन्यस्त्वत्तोधिकः प्रियतरोनेत्यर्थः । रामेऽस्याद्वेषमजानतएवमुक्तिः । रामंएवत्वत्तोऽधिकःप्रियइत्याशयः । **शि०** त्वत्तःप्रियतमाऽन्यास्त्रीन रामादन्योमनुजः पुरुषः प्रियतमोन । इतिप्रियतमाशब्दोलिङ्गविपरिणामेनोत्तरत्रापिसंबध्यते । अन्यशब्दश्चतद्विपरिणामेनपूर्वत्रसंबध्यते ॥ ५ ॥ **ति०** तेनेति । त्वत्तोपिप्रियतरेणेत्यर्थः । अतएवमुख्येन ॥ ६ ॥ **ती०** बभाषे भाषितुमालोचनंकृतवती । **शि०** तदर्थमनाः तेषांदेवानामर्थे मनोयस्यास्सा । तं रामस्त्वयासेव्यइत्याकारकं । अभिप्रायं आगतं निवेदितवन्तंराजानं । निर्माध्यस्थ्यात् नितरांमाध्यस्थ्यस्यमध्यस्थधर्मस्य अत्प्राप्तिर्यस्मिन् तत् । दुर्वचं अन्यैर्वक्तुमशक्यं । वचोबभाषे । आगतमित्यत्रान्तर्भावितणिजर्थः । कर्तरि निष्ठा ॥ ११ ॥ **ती०** व्याजहार व्याहर्तुंनिश्चितवती । **शि०** तद्वचनप्रभाववर्णयन्नाह—**तेनेति** । आत्मनः स्त्रीस्वभावस्य । व्या आच्छादकेन अतिचातुर्यविशिष्टेनेत्यर्थः । तेनवाक्येन अभ्यागतं स्वप्रतापेनसर्वत्रपूर्णं । अभिप्रायं गूढाभिप्रायविशिष्टं । अन्तकं देवानांबन्धकं । तं रावणं । जहार जघानेव । कैकेयीवचनश्रवणमात्रेणरक्षसांसंतापोजातइतितात्पर्यं । अतएव बभाषेइत्यनेननपौनरुक्त्यं । संवरणार्थकवेञ्धातुप्रकृतिककर्तृक्विबन्तप्रकृतिकतृतीयान्तं—**व्येति** ॥ १२ ॥

**[ पा० ]** १ ख. ङ. छ. झ. ञ. प्रियतरोमम. च. प्रियतमोमम. २ छ. द्रामादन्यन्नविद्यते. ३ ख. जीवितार्हेण. ४ ङ. छ. झ. यन्मनसेप्सितम्. ५ झ. जीवेतमहं. ६ ट. वैदेवि. ७ क. च. छ. झ. ञ. ट. चात्मजैश्चान्यैः. ८ ञ. ट. वैदेवि. ९ ट. द्धरस्वमाम्. १० क. ग. ज. जानन्ती. ११ ङ. च. छ. झ. ञ. नविशङ्कितुमर्हसि. ट. नमांशङ्कितुमर्हसि. १२ क. निर्मध्यस्थात्प्रहर्षाच्च. च. ज. ञ. निर्माध्यस्थ्यात्प्रहर्षाच्च. ग. निर्मध्यस्थाच्चहर्षाच्च. १३ क. ख. ग. ङ.—ट. दुर्वचं वचः. १४ क. ख. ग. ङ—ञ. तमभिप्रायमात्मनः. १५ ङ. छ. झ. ट. शपसे. १६ क. ख. ङ. च. छ. झ. ञ. ट. स्सेन्द्रपुरोगमाः.

चन्द्रादित्यौ नभश्चैव ग्रहा रात्र्यहनी दिशः ॥ जगच्च पृथिवी[१] चैव सगन्धर्वा[२] सराक्षसा ॥ १४ ॥
निशाचराणि भूतानि गृहेषु गृहदेवताः ॥ यानि चान्यानि भूतानि जानीयु[३]र्भाषितं तव ॥ १५ ॥
सत्यसन्धो महातेजा धर्मज्ञः सुसमाहितः[४] ॥ वरं मम ददात्येष तन्मे[५] शृण्वन्तु देवताः[६] ॥ १६ ॥
इति देवी महेष्वासं परिगृह्याभिशस्य च ॥ ततः परमुवाचेदं वरदं काममोहितम् ॥ १७ ॥
स्मर राजन्पुरावृत्तं तस्मिन्दे[७]वासुरे रणे ॥ [८]तत्र चाच्यावयच्छत्रुस्तव जीवितमन्तरा ॥ १८ ॥
तत्र चापि मया देव यत्त्वं समभिरक्षितः ॥ जाग्रत्या यतमानायास्ततो मे प्राददा[९] वरौ ॥ १९ ॥
[१०]तौ तु दत्तौ वरौ देव [११]निक्षेपौ मृगयाम्यहम् ॥ [१२]तवैव पृथिवीपाल सकाशे सत्यसङ्गर[१३] ॥ २० ॥
तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् ॥ [१४]अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ २१ ॥
वाङ्मात्रेण तदा राजा कैकेय्या[१५] स्ववशे कृतः ॥ [१६]प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥ २२ ॥
ततः परमुवाचेदं वरदं काममोहितम् ॥ [१७]वरौ यौ मे त्वया देव तदा दत्तौ महीपते ॥ २३ ॥
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ॥ २४ ॥
[१८]अभिषेकसमारंभो राघवस्योपकल्पितः ॥ अनेनैवाभिषेकेण भरतो मेऽभिषे[१९]च्यताम् ॥ २५ ॥
यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया ॥ तदा दे[२०]वासुरे युद्धे तस्य कालोऽयमागतः ॥ २६ ॥
नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥ चीरा[२१]जिनजटाधारी रामो भवतु तापसः ॥ २७ ॥

---

यथाशपसि वरंददासिच तथातच्छृण्वन्त्वितिसंबन्धः ॥ १३ ॥ ग्रहाः नवग्रहाः । जगत् लोकः । "लोको विष्टपंभुवनंजगत्" इत्यमरः । लोकश्चात्रस्वर्गएव ॥ १४—१६ ॥ परिगृह्य धर्मपाशेनसंयम्य । अभिशस्य सर्वादेवताःसाक्षित्वेनशृण्वन्त्वित्युद्धुष्य ॥१७॥ पूर्ववृत्तमेवाह—तत्रेति । तत्र रात्रियुद्धे । अन्तरा मध्ये । तवजीवितं अच्यावयत् अचालयत् । शस्त्रप्रहारादिनामूर्च्छांप्रापितवानित्यर्थः ॥ १८ ॥ यतमानायाः सारथ्येयत्नंकुर्वाणायाः ॥ १९ ॥ हेपृथिवीपाल तवसकाशेएव निक्षेपौ निक्षेपत्वेनस्थापितौ । तौतुवरौ तावेववरौ । मृगयामि अन्वेषयामि । इच्छामीत्यर्थः ॥ २० ॥ वरमितिजात्येकवचनं ॥ २१ ॥ वाङ्मात्रेण पूर्वदत्तवरस्मारकवचनमात्रेण । कैकेय्या स्ववशे कृतः राजा वाङ्मात्रेण मृगशब्दानुकारिणालुब्धककथितेन । आत्मनोविनाशाय पाशंमृगइव वागुरांमृगइव धर्मपाशं प्रचस्कन्द गतवान् । स्कन्दिर्गतिशोषणयोरितिधातुः । वरप्रदानमङ्गीचकारेत्यर्थः । यद्वा वागुरांप्राप्तोमृगइवप्रचस्कन्द । शोषणंप्राप्तइत्यर्थः ॥ २२—२३ ॥ तौवरौवक्ष्यामि तौवरौविभज्यप्रदातुंप्रकारंवक्ष्यामीत्यर्थः ॥ २४ ॥ अभिषेकसमारंभः अभिषेकसामग्री । यइतिशेषः । अभिषेकेण अभिषेकसामग्र्या ॥ २५—२६ ॥ चीरं वल्कलं ॥ २७ ॥

---

**शि०** सर्वेदैवताः देवतानामिमेनियन्तारोदैवताः ब्रह्मादयः । शृण्वन्तु । अतएवनपौनरुक्त्यम् ॥ १६ ॥ **ति०** अच्यावयत्प्रच्युतवीर्यमकरोत् । अडभावआर्षः ॥ १७ ॥ जाग्रत्या मयायत्यतस्त्वंरक्षितः ततःस्वजीवनाययातमानायाममभवान्वरौ प्रददौ ॥ १९ ॥ इत्येकादशस्सर्गः ॥ ११ ॥

**[ पा० ]** १ ख. ग. ङ—ट. पृथिवीचेयं. २ क. ख. छ.—ट. सगन्धर्वास्सराक्षसाः. ३ च. भाषितंचतत्. ४ ङ. छ. झ. ट. सत्यवाक्छुचिः. ५ क. तंचशृण्वन्तु. ६ ङ. झ. ञ. ट. दैवताः. ७ क. ख. ग. ङ. छ—ट. देवासुरेरणे. ८ ङ. झ. ञ. ट. तत्रत्वांच्यावयच्छत्रु. ९ क. ग–ङ. छ—ट. प्रददौवरौ. १० ङ. च. छ. झ. ञ. ट. तौदत्तौच वरौदेव. ख. ज. तौतुदत्तवरौ. ११ क. ख. ग. निक्षेपं. ज. निक्षिप्तौ. १२ ज. तदेव. १३ ङ.—छ. झ. ट. रघुनन्दन. १४ क. अद्यैवतु. १५ ख. कैकेय्याश्च. छ. झ. कैकेय्यास्ववशेकृतः. ट. स्ववशीकृतः. १६ ग. ज. प्रविवेशविनाशाय. १७ ङ. छ. झ. ट. वरौदेयौत्वयादेव. क. ख. च. ज. ञ. वरौमेयौ. १८ क. ग. ज. योऽभिषेकसमारंभो. १९ क. ख. ग. ङ. छ—ठ. मेऽभिषिच्यताम्. २० क. ख. ङ. झ. ञ. ट. देवासुरे. २१ ङ. च. छ. झ. ञ. ट. चीराजिनधरोधीरो.

भरतो भजतामद्य यौवराज्यमकण्टकम् ॥ एष मे परमः कामो दत्तमेव वरं वृणे ॥ २८ ॥
अद्य चैव हि पश्येयं प्रयान्तं राघवं वनम् ॥ २९ ॥
स राजराजो भव सत्यसङ्गरः कुलं च शीलं च हि रक्ष जन्म च ॥
परत्रवासे हि वदन्त्यनुत्तमं तपोधनाः सत्यवचो हितं नृणाम् ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकादशः सर्गः॥ ११ ॥

---

## द्वादशः सर्गः ॥ १२ ॥

दशरथेनकैकयींप्रतिरामगुणप्रशंसनेन तस्यवनप्रवासनकारणदोषाभावप्रतिपादनपूर्वकंसानुनयंवरयाञ्चापरित्यागप्रार्थना ॥ १ ॥ कैकेय्याशैब्यादिदृष्टान्तप्रदर्शनपूर्वकंहठाद्वरद्वयनिर्वर्तननिर्बन्धेदशरथेनपरुषोक्तिभिस्तद्गर्हणपूर्वकंपुनःप्रसादनायपादप्रणिपातप्रयतनम् ॥ २ ॥

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ॥ चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥ १ ॥
किंनु मे यदि वा स्वप्नश्चित्तमोहोपि वा मम ॥ अनुभूतोपसर्गो वा मनसो वाऽप्युपद्रवः ॥
इति संचिन्त्य तद्राजा नाभ्यगच्छत्तदा सुखम् ॥ २ ॥
प्रतिलभ्य चिरात्संज्ञां कैकेयीवाक्यताडितः ॥ व्यथितो विक्लबश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः ॥ ३ ॥
असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन् ॥ मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः ॥ ४ ॥
अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः ॥ मोहमापेदिवान्भूयः शोकोपहतचेतनः ॥ ५ ॥
चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः ॥ कैकेयीमब्रवीत्क्रुद्धः प्रदहन्निव चक्षुषा ॥ ६ ॥
नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ॥ किं कृतं तव रामेण पापे पापं मयाऽपि वा ॥ ७ ॥

---

विलंबव्यावृत्त्यर्थमाह—भरतइत्यादिना । दत्तमेव न तुनूतनंकिंचिदर्थये ॥ २८—२९ ॥ सत्यस्यावश्यकर्तव्यत्वमाह—सइति । राजराजः सत्वं सत्यसङ्गरः सत्यप्रतिज्ञः। भव । तेन सत्यसङ्गरत्वेनकुलादित्रयंरक्ष। सत्यस्यरक्षकत्वमुपपादयति—परत्रेति । नृणांहितंसत्यवचः। परत्रवासे स्वर्गलोकादिवासे । अनुत्तमं अत्यन्तोत्तमसाधनं । वदन्ति ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने एकादशस्सर्गः ॥ ११ ॥

---

अथसत्यपाशबद्धस्यराज्ञःशोकंवर्णयति—ततइति । प्रतताप मुमूर्छेतियावत् ॥ १ ॥ चिन्तांविवृणोति—किंन्विति । किंन्वितिसामान्याकारेणचिन्ता । स्वदुःखावहस्यरामाभिषेकविघ्नस्यसत्स्वभावयाकैकेय्याकथनासंभवादिदंपारमार्थिकंनभवति स्वप्नोयदिवा । अथवेदानींनिद्रायाअसंभवाच्चित्तमोहः भ्रमोवा । इदानीं भ्रमकारणाभावादनुभूतोपसर्गोवा । जन्मान्तरानुभूतानामर्थानांउपसर्गःभावनावा । स्मरणमितियावत् । जन्मान्तरेप्येवंविधावस्थायाअसंभावितत्वादाह । मनसउपद्रवोवा । रोगजविकारोवा । उन्मादइतियावत् । प्रततापचेत्येतदनुवदति—इतीति ॥ २ ॥ प्रतिलभ्येत्यादिश्लोकत्रयमेकान्वयं । व्यथितः दुःखितः । विक्लबः विह्वलः “ विक्लबोविह्वलः ” इत्यमरः ॥ ३ ॥ मण्डले अहितुण्डिकयन्त्रमण्डले ॥ ४—६ ॥ किंपापं

---

शि० दारुणं रामवियोगप्रारब्धमङ्गलकार्याभावोभयबोधकत्वेनश्रवणानर्हं । कैकेय्यावचश्श्रुत्वा चिन्तां अभिसमापेदे प्राप । अतएवप्रतताप । संतापकवचनश्रावकत्वेनकैकेय्याःपातिव्रत्यभङ्गइतितुनभ्रमितव्यम् । रावणादिवधद्वाराएतद्यशःप्रख्यापनहेतुभूतत्वेनास्यनिंबाद्यौषधतुल्यत्वेनादोषात् ॥ १ ॥

[ पा० ] १ क. ग. च. ट. दत्तमेववरं. २ ङ. छ. झ. ञ. ट. राघवंवने. ३ क. ख. मपिसमापेदे. ४ ङ. छ. झ. ञ. ट. मेऽयंदिवास्वप्नः. ५ क. च. ञ. मानसोवा. ६ क. ख. ग. ङ—ट. नाध्यगच्छत्तदा. ७ क. ख. ङ. च. छ. झ. ञ. ट. ततस्संज्ञां. ८ ङ. छ. झ. ट. वाक्यतापितः. ख. वाक्यपीडितः. ९ ङ. छ. झ. ट. निर्दहन्निवतेजसा.

[1]यदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ [2]तस्यैव त्वमनर्थाय किंनिमित्तमिहोद्यता ॥ ८ ॥
त्वं मयात्मवि[3]नाशार्थं भवनं [4]स्वं प्रवेशिता ॥ अविज्ञानान्नृपसुता व्याली तीक्ष्ण[5]विषा यथा ॥ ९ ॥
जीव[6]लोको यथा सर्वो रामस्याह गुणस्तवम् ॥ अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् ॥ १० ॥
कौसल्यां[7] वा सुमित्रां वा त्यजेयमपि वा श्रियम् ॥ [8]जीवितं वाऽऽत्मनो रामं न त्वेव पितृवत्सलम् ॥ ११ ॥
परा भवति मे प्रीतिर्दृष्ट्वा तनयमग्रजम् ॥ अपश्यतस्तु मे रामं नष्टा[9] भवति चेतना ॥ १२ ॥
तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना ॥ न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् ॥ १३ ॥
तदलं त्यज्यतामेष निश्चयः पापनिश्चये ॥ अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे ॥ १४ ॥
[10]किमिदं चिन्तितं पापे त्वया परमदारुणम् ॥ १५ ॥
अथ जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये ॥ अस्तु यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥ १६ ॥
स मे ज्येष्ठः[11] सुतः श्रीमान्धर्मज्येष्ठ इतीव मे ॥ तत्त्वया प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७ ॥
तच्छ्रुत्वा शोकसंतप्ता संतापयसि मां भृशम् ॥ आविष्टाऽसि [12]गृहं शून्यं सा त्वं परवशं गता ॥ १८ ॥
इक्ष्वाकूणां कुले देवि संप्राप्तस्सुमहानयम् ॥ अनयो नयसंपन्ने यत्र ते विकृता मतिः ॥ १९ ॥
न हि किंचिदयुक्तं वा विप्रियं वा पुरा मम ॥ अकरोस्त्वं विशालाक्षि तेन न श्रद्द[13]धाम्यहम् ॥ २० ॥

---

कृतमित्यन्वयः । पापं अपराधः ॥ ७ ॥ वृत्तिं शुश्रूषां । तस्यैव तदैवेत्यपिबोध्यं । तस्यैव नतुतत्पुत्रादेः । तदैव नतुकालान्तरे शुश्रूषाभावदशायां ॥ ८ ॥ नृपसुतेत्यत्रेतिकरणंद्रष्टव्यं ॥ ९—१३ ॥ एषनिश्चयः रामविवासननिश्चयः। अपितेचरणाविति । अपिःप्रश्नार्थकः ॥ १४—१५ ॥ अथेत्यादिश्लोकत्रयमेकान्वयं । अथेतिप्रश्ने । त्वंभरतस्यप्रियाप्रियेविषयेमांजिज्ञाससे ज्ञातुमिच्छसि । तदिदानीमपिभरतोभिषिच्यतामिति यत्तदस्तु तद्वक्तुमुचितं । त्वयापूर्वंराघवंप्रति समेज्येष्ठः सुतइत्यादियद्व्याहृतं तत् प्रियवादिन्यात्वया सेवार्थं ममनोरञ्जनार्थं रामकृतशुश्रूषार्थंवा कथितंभवेत् । रामविवासनोक्तिस्तेनविरुद्धेत्यर्थः । परीक्षार्थमपिभरतोऽभिषिच्यतामित्येववक्तुमुचितं । नतुरामोविवास्यतामित्येतत् । पूर्वापरविरोधादितिभावः । रामविवासनोक्तिश्चभरतेप्रीतिपरीक्षार्थमेवास्त्वित्यतआह—तदिति । तत् रामाभिषेचनं । श्रुत्वा शोकसंतप्तासती मां भृशं अतिनिर्बन्धेन । संतापयसि । किंचपरवशं परबोधनवशंगतासती। शून्यंगृहं क्रोधागारं । आविष्टासि प्रविष्टासि । इदंसर्वंपरीक्षार्थत्वे न संगच्छतइतिभावः । शून्यैर्ग्रहैरितिपाठे शून्यैर्ग्रहैराविष्टा पिशाचादिभिराविष्टेत्यर्थः ॥ १६—१८ ॥ कुलानर्थकरंचेदंवचनमित्याह—इक्ष्वाकूणामिति । नयसंपन्ने एतावत्कालंनीतिशालिनि । यत्र इक्ष्वाकुकुलमध्ये । तेमतिरेवमिदानींविकृता विपरीताजाता । तत्रकुले । अयं संनिहितः। सुमहाननयः अनर्थः। संप्राप्तः। सत्प्रकृतेर्विपरीतबुद्धिःकुलस्यानर्थहेतुरितिभावः ॥ १९ ॥ पूर्वापरपर्यालोचनयात्वद्वचनंनश्रद्धेयंचेत्याह—नहीति । अयुक्तं अहितमितियावत् । नश्रद्दधामि इदमहितंवि-

---

**ति०** चेतनं चैतन्यं । **स०** चेतनं स्मृतिः ॥१२ ॥ **ति०** तेचरणाविति । धर्मशास्त्रतोत्यनुचितमपिकामशास्त्रमर्यादयात्वत्प्रीत्यर्थमितिशेषः ॥ १४ ॥ **ति०** एवंविधचिन्तापिमहाकुलजायांत्वयिअसंभावितैव । किंतर्हीदंतत्राह । शून्येगृहे भूतादिभिराविष्टासि । तत्तुल्येनवाक्येन खिदावेशितदुष्टमतिरसि । अतःपरवशंगताएवंवदसीत्यर्थः । **ती०** शून्यं अगोचरं । ग्रहं भूतपिशाचादिकं । आविष्टा प्राप्तासि । शून्येइतिपाठे शून्ये विवेकशून्ये ॥ १९ ॥

**[ पा० ]** १ क. ख. ग. च. ज. झ. ञ. सदाते. २ ङ. छ—ट. तस्यैवं. ३ ङ. छ. ज. झ. ट. विनाशाय. ४ ङ. च. छ. झ. ट. स्वंनिवेशिता. क. ख. संप्रवेशिता. ञ. संनिवेशिता. ५ ख. विषाइव. ६ ङ. छ. झ. ञ. ट. जीवलोकोयदासर्वो. क. जीवलोकोसदासर्वो. ख. जीवलोकायदासर्वेरामस्याहुर्गुणस्तवम्. ७ झ. ञ. ट. कौसल्यांचसुमित्रांच. ८ ङ. छ. झ. ञ. जीवितंचात्मना. च. ट. जीवितंचात्मनो. ९ क. ख. ग. ङ. च. छ. झ. ञ. ट. नष्टंभवतिचेतनम्. १० ङ. छ. झ. किमर्थंचिन्तितं. ट. किमर्थंचिन्त्यते. ११ छ. झ. ञ. ट. ज्येष्ठसुतः. १२ ख. ग. ङ. छ. झ. ञ. ट. गृहेशून्ये. छ. महंशून्यं. १३ ङ. छ. झ. ट. श्रद्दधामिते.

ननु[1] ते राघवस्तुल्यो भरतेन महात्मना ॥ बहुशो[2] हि सुबाले त्वं कथाः कथयसे मम ॥ २१ ॥
तस्य धर्मात्मनो देवि वने[3] वासं यशस्विनः ॥ कथं रोचयसे भीरु नव वर्षाणि पञ्च च ॥ २२ ॥
अत्यन्त[4]सुकुमारस्य तस्य धर्मे धृता[5]त्मनः ॥ कथं रोचयसे वासमरण्ये भृशदारुणे ॥ २३ ॥
रोचयस्यभिरामस्य रामस्य शुभ[6]लोचने ॥ तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥ २४ ॥
रामो[7] हि भरताद्भूयस्तव शुश्रूषते सदा ॥ विशेषं त्वयि तस्मात्तु भरतस्य न[8] लक्षये ॥ २५ ॥
शुश्रूषां गौरवं चैव प्रमाणं वचनक्रियाम् ॥ कस्ते[9] भूयस्तरं कुर्यादन्यत्र मनुज[10]र्षभात् ॥ २६ ॥
बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् ॥ परिवादोपवादो वा राघवे नोपपद्यते ॥ २७ ॥
सान्त्वयन्सर्वभूतानि रामः शुद्धेन चेतसा ॥ गृह्णाति मनुजव्याघ्रः प्रियैर्वि[11]षयवासिनः ॥ २८ ॥
स[12]त्येन लोकाञ्जयति दीना[13]न्दानेन राघवः ॥ गुरूञ्शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ २९ ॥
सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम् ॥ विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३० ॥
तस्मिन्नार्जवसंपन्ने देवि देवोपमे कथम् ॥ पापमाशंससे रामे महर्षिसमतेजसि ॥ ३१ ॥

प्रियकरणमितिशेषः ॥२०॥ त्वत्प्रीतिविरुद्धंचेदंवचनमित्याह—नन्वित्यादि । ते राघवः भरतेन तुल्योननुतुल्यः खलु । अत्रत्वद्वचनमेवप्रमाणमित्याह—बहुशइति । बहुशइत्यनेनाहृदयत्वव्यावृत्तिः । सुबालेइत्यकुटिलत्वव्यावृत्तिः ॥ २१ ॥ धर्मात्मनइत्यनेनवनवासहेतुभूताकृत्यराहित्यमुक्तं । भीरुइति । तवचधर्मभीरुत्वंकगतमितिभावः ॥ २२ ॥ रामसौकुमार्यानुचितंचेदमित्याह—अत्यन्तेति ॥ २३ ॥ शुश्रूषादर्शनेनापिरामो नविवासनार्हइत्याह—रोचयसीति । तवशुश्रूषमाणस्येत्यत्र "नलोकाव्यय—" इत्यादिनानिषिद्धाऽपिषष्ठ्यार्षीबोध्या ॥ २४ ॥ शुश्रूषमाणस्येत्येतदुपपादयति—रामोहीति ॥ २५ ॥ नकेवलं शुश्रूषैवैवंवचनकारणं अपितु प्रमाणादिकमपीत्याह—शुश्रूषामिति । गौरवं प्रतिपत्तिः । प्रमाणं पूजा । वचनक्रिया उक्तकरणं ॥ २६ ॥ परिवादादिकमपिरामविवासकारणं नास्तीत्याह—बहूनामिति । स्त्रीसहस्राणामुपजीविनां चसंबन्धीपरिवादोनोपपद्यते । बहूनामितिविशेषणेन तन्मध्येएकयाएकेनवास्त्रीपुरुषाविशेषेणपरिवादस्तत्संबन्धीपरिभवविषयवादः अपवादःनिन्दावा राघवेनोपपद्यते नदृश्यते ॥ २७ ॥ अविवासननिमित्तभूतान्भूयोगुणान्दर्शयति—सान्त्वयन्नित्यादि । अनेनवाङ्मनःकायैर्जनरञ्जकत्वमुक्तं । प्रियैः अभीष्टप्रदानैः । गृह्णाति संगृह्णाति ॥२८॥ सत्येन भूतहितेन । लोकान् स्वर्गादिवैकुंठपर्यन्तान् । जयति स्वाधीनान्करोति । दीनान् दरिद्रान् । दानेन धनप्रदानेन । जयति वशीकरोति । गुरून्शुश्रूषयाजयति स्वहितोपदेशप्रवणान्करोति । शात्रवान् शत्रून् धनुषा धनुःप्रदर्शनमात्रेण । नतु बाणप्रयोगेण । युधि युद्धे । नतुकपटवृत्त्या । जयति निरस्यतीत्यर्थः । वीरइतिसर्वत्रसंबध्यते । दयावीरस्त्यागवीरोविद्यावीरःपराक्रमवीरइत्येवं । चोलमहीपतिःकदाचित्सन्निहितंमध्यमवीथिभट्टारकंप्रति " आत्मानंमानुषंमन्ये " इतिवदन्रामः कथंजटायुषोमोक्षंदत्तवानितिपप्रच्छ । सोपि " सत्येनलोकाञ्जयति " इत्युक्तया महतींबहुमतिमवाप्तवानित्यैतिह्यमत्रज्ञेयं ॥२९॥ सत्यादीनिचनकादाचित्कानीत्याह—सत्यमिति । तपःप्रभृतिगुणषट्कंपूर्वश्लोकेऽर्थसिद्धमनूद्यते । दानं परलोकप्रयोजनं । तपः शास्त्रविहितभोजनानिवृत्त्यादिरूपः । त्यागः ऐहिकप्रयोजनःप्रीत्यर्थः । मित्रता सर्वसुहृत्त्वं । शौचं स्नानजन्यशुद्धिः । आर्जवं परचित्तानुवर्तित्वं । विद्या तत्त्वज्ञानं । गुरुशुश्रूषा गुरोःशुश्रूषा पादसंवाहनादिपरिचर्या ॥ ३० ॥ आर्जवसंपन्नइति दानादिसंपत्तेरप्युपलक्षणं । पापं विवासनरूपं । आ-

ति० कृतात्मनः शिक्षितमनस्कस्य ॥ २३ ॥ शि० समूलिकाकीर्तिःपरिवादः । निर्मूलिकाकीर्तिरपवादः ॥ २७ ॥

[ पा० ] १ ग. ज. ननुमेराघव. २ क. ग. ङ. छ—ट. बहुशोहिस्म. क. ञ. बहुशोहिस्मबाल्येत्वं. ३ क. वनवासं. ४ क. ञ. अत्यर्थसुकुमारस्य. ५ ङ. छ. झ. ट. कृतात्मनः. ख. रतात्मनः. ६ ख. शुभदर्शने. ज. प्रियदर्शने. ७ क. ख. रामोपि. ८ छ. नलक्ष्यते. ९ ङ. छ. झ. ट. कस्तुभूयस्तरं. क. ख. ग. च. ज. भूयस्तरां. १० ङ. छ. झ. ट. पुरुषर्षभात्. ११ ख. प्रियेविषयवासिनः. १२ ङ. छ. झ. सत्येन. १३ ङ. छ. झ. ट. द्विजान्दानेन.

न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः ॥ स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम् ॥३२॥
क्षमा यस्मिन्दमस्त्यागः सत्यं धर्मः कृतज्ञता ॥ अप्यहिंसा च भूतानां तमृते का गतिर्मम ॥३३॥
मम वृद्धस्य कैकेयि गतान्तस्य तपस्विनः ॥ दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ३४ ॥
पृथिव्यां सागरान्तायां यत्किंचिदधिगम्यते ॥ तत्सर्वं तव दास्यामि मा च त्वां मन्युराविशेत् ॥३५॥
अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते ॥ शरणं भव रामस्य माऽधर्मो मामिह स्पृशेत् ॥३६॥
इति दुःखाभिसंतप्तं विलपन्तमचेतनम् ॥ घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७ ॥
पारं शोकार्णवस्याशु प्रार्थयन्तं पुनःपुनः ॥ प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥ ३८ ॥
यदि दत्वा वरौ राजन्पुनः प्रत्यनुतप्यसे ॥ धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि ॥ ३९ ॥
यदा समेता बहवस्त्वया राजर्षयः सह ॥ कथयिष्यन्ति धर्मज्ञास्तत्र किं प्रतिवक्ष्यसि ॥ ४० ॥
यस्याः प्रसादे जीवामि या च मामभ्यपालयत् ॥ तस्याः कृतं मया मिथ्या कैकेय्या इति वक्ष्यसि ॥४१॥
किल्बिषत्वं नरेन्द्राणां करिष्यसि नराधिप ॥ यो दत्वा वरमद्यैव पुनरन्यानि भाषसे ॥ ४२ ॥

शंससे प्रार्थयसि ॥ ३१ ॥ लोकस्य जनमात्रस्य । प्रियवादिनः प्रियवदनशीलस्य । किमुतास्माकमिति भावः । रामस्यसंबन्धि अप्रियं विवासनविषयंवाक्यं । नस्मरामि स्मर्तुमपिनशक्नोमीत्यर्थः । सः तदस्मर्ता अहं । त्वत्कृते परुषोक्तिमत्स्त्रीकृते । रामं सर्वस्वरमयितारं । प्रियं रमयितृत्वाभावेपिपुत्रत्वेनप्रियंप्रति । कथमप्रियंवक्ष्यामि ॥ ३२ ॥ यस्मिन्क्षमादयोवर्तन्ते तमृतेममकागतिः कोवारक्षकः । तादृशंरक्षकंकथंत्यक्ष्यामीतिभावः ॥ ३३ ॥ गतान्तस्य गतः प्राप्तः अन्तश्चरमकालोयेन तस्य । वृद्धत्वेपिप्राप्तचरमकालस्येत्यर्थः । तपस्विनः शोचनीयावस्थस्य । लालप्यमानस्य पुनःपुनः कथनशीलस्य । मम मयीत्यर्थः । संबन्धसामान्येषष्ठी ॥ ३४ ॥ सागरान्तायामित्यनेनकृत्स्नायामितिलभ्यते । यत्किंचिद्धनं अधिगम्यते लभ्यते । तत्सर्वं तव तुभ्यं । दास्यामि । मन्युः रामविषयक्रोधः ॥ ३५ ॥ कुर्मि करोमि । अञ्जलिपूर्वकंपादवन्दनंकरोमीत्यर्थः । शरणं रक्षितृ । अधर्मः प्रतिज्ञाभङ्गरूपः । रामाभिषेकमनुजानीहीत्यर्थः ॥ ३६ ॥ इतीत्यादिश्लोकद्वयमेकान्वयं । अचेतनं मूर्च्छितं । घूर्णमानं इतस्ततोविवर्तमानं । शोकेन भाविरामविरहस्मरणदुःखेन । समभिप्लुतं सम्यगभिव्याप्तं ॥ ३७ ॥ पारं अन्तं । रामाभिषेकमितियावत् । अथ कृत्स्नं । इतिवचोविशेषणं "आरंभप्रश्नकार्त्स्न्येष्वथोअथ" इत्यमरः । रौद्रा भयंकरविकारा । रामाभिषेकनिवर्तनविषयेयद्यद्वक्तव्यंतत्सर्वमुवाचेत्यर्थः ॥ ३८ ॥ धार्मिकत्वं स्वीयमितिशेषः ॥ ३९ ॥ कथयिष्यन्ति उपकारिण्याः कैकेय्याःकिंप्रत्युपकृतमितिकदाचिद्धर्मप्रसङ्गेवक्ष्यन्ति । तत्र तदा । किंप्रतिवक्ष्यसि कीदृशंप्रत्युत्तरंदास्यसि ॥ ४० ॥ प्रसादेसतिजीवामि । प्रसादेनजीवामीत्यर्थः । प्रसादमेवाह—याचेति । याचमांमूर्च्छितत्वदशायांरणादन्यत्रापनीयाभ्यपालयत् शिशिरोपचारादिनारक्षेत्यर्थः । तस्याः मया मिथ्या असत्यं । कृतमितिवक्ष्यसि किमितिकाकुः । तस्मादद्यप्रतिज्ञां निर्वहेतिभावः ॥ ४१ ॥ किल्बिषत्वं अपयशोरूपमालिन्यं । नरेन्द्राणामित्यनेनसजातीयेष्वेकेन कृतमपयशः सर्वानपिस्पृशति सर्वेराजानएवंविधाइति ।

ति० मृत्युं मन्मृत्युसंपादकानिष्टाभिनिवेशं ॥ ३५ ॥ ति० प्रलपन्तं प्रार्थयन्तं ॥ ३७ ॥ ति० नरेन्द्राणां स्ववंश्यानां । किल्बिषं अयशोरूपंमालिन्यंकरिष्यसि ॥ ४२ ॥

[ पा० ] १ ङ. छ. झ. ट. यस्मिंस्तपस्त्यागः. २ क. ख. ग. छ. ज. ञ. अविहिंसाच. ३ ङ.—ट. माचत्वंमृत्युमाविश. ग. त्वांमृत्युराविशेत्. ख. त्वंमृत्युमाविशेः. ४ ज. विलपन्तंपुनःपुनः. ग. ज. विलपन्तमचेतसम्. ग. ङ. झ. ट. प्रलपन्तं पुनःपुनः. ५ ख. राजर्षयस्तदा. ६ क. कथयिष्यसिधर्मज्ञ. ग. ङ. च. छ. झ. ञ. ट. कथयिष्यन्तिधर्मज्ञ. ७ क. ख. ग. च. ज. ञ. ट. प्रयत्नेजीवामि. छ. प्रसादाज्जीवामि. ८ क. ख. ग. च. झ. ञ. ट. तस्याःकृता. ९ छ. वक्ष्यते.

शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ ॥ अलर्कश्चक्षुषी दत्वा जगाम गतिमुत्तमाम् ॥ ४३ ॥
सागरः समयं कृत्वा न वेलामतिवर्तते ॥ समयं माऽनृतं कार्षीः पूर्वं वृत्तमनुस्मरन् ॥ ४४ ॥
स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च ॥ सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते ॥ ४५ ॥
भवत्वधर्मो धर्मो वा सत्यं वा यदि वाऽनृतम् ॥ यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥४६॥
अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ॥ पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७ ॥
एकाहमपि पश्येयं यद्यहं राममातरम् ॥ अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥ ४८ ॥
भरतेनात्मना चाहं शपे ते मनुजाधिप ॥ यथा नान्येन तुष्येयमृते रामविवासनात् ॥ ४९ ॥
एतावदुक्त्वा वचनं कैकेयी विरराम ह ॥ विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५० ॥
श्रुत्वा च राजा कैकेय्या वृत्तं परमशोभनम् ॥ रामस्य च वने वासमैश्वर्यं भरतस्य च ॥ ५१ ॥
नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः ॥ प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥ ५२ ॥
तां हि वज्रसमां वाचमाकर्ण्य हृदयाप्रियाम् ॥ दुःखशोकमयीं घोरां राजा न सुखितोऽभवत् ॥ ५३ ॥
स देव्या व्यवसायं च घोरं च शपथं कृतम् ॥ ध्यात्वा रामेति निश्वस्य च्छिन्नस्तरुरिवापतत् ॥५४॥
नष्टचित्तो यथोन्मत्तो विपरीतो यथाऽतुरः ॥ हृततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५ ॥

अन्यानि वरदानविरुद्धानि ॥ ४२ ॥ दुष्करस्यापि प्रतिज्ञातस्यकर्तव्यत्वंपूर्वचक्रवर्त्यनुष्ठानेनदर्शयति—शैब्यइति । शैब्योराजा । श्येनकपोतीये श्येनकपोतयोर्विरोधेप्राप्ते । पक्षिणे श्येनाय । स्वमांसं कपोतमांसप्रतिनिधित्वेनददौ । इत्थंकिलपौराणिकीगाथा । इन्द्राग्नीश्येनकपोतौभूत्वाशैब्यौदार्यपरीक्षितुंभक्षकभक्ष्यभावमापन्नौशैब्यसमीपमागतौ । तत्रकपोतोऽभयार्थी शैब्याङ्कमाविवेश । तस्मैचसोऽभयंददौ । ततःश्येनेन मद्भक्षणंदैवविहितंत्यजेत्युक्ते नाहंत्यजेयं अपितुतत्प्रतिनिधिमांसमेवददामीत्युक्ते तर्हित्वन्मांसमेवमेप्रयच्छ नान्यदित्युक्ते स्वमांसमपिसर्वंदत्तवानिति । अलर्कश्च राजर्षिर्ब्राह्मणायान्धायवरंप्रतिश्रुत्यतेनराजचक्षुषास्वचक्षुःप्रतिसंधानेऽर्थिते स्वचक्षुषीदत्वाउत्तमांगतिंजगाम ॥ ४३ ॥ किंच सागरः समुद्रो देवैःप्रार्थितोवेलानतिलङ्घनाय तत्तेभ्यःप्रतिश्रुत्याद्यापिवेलांनातिवर्तते । तस्मात्त्वमपिपूर्वंशैब्यादिवृत्तान्तमनुस्मरन्समयं प्रतिज्ञां । अनृतं मिथ्याभूतं । माकार्षीः ॥४४ ॥ एवं न्यायमुक्त्वातदनुमोदमानंप्रत्याह—सत्वमिति ॥४५॥ स्वसिद्धान्तमाह—भवत्विति । मदुक्तोरामविवासनपूर्वकोभरताभिषेको धर्मोवाऽधर्मोवाभवतु "रामंप्रव्राजयारण्यं" इत्यादिमदुक्तंवचनं सत्यं समीचीनंवा । अनृतं असमीचीनंवाभवतु । त्वयायन्मह्यंसंश्रुतं शपथपूर्वकंदास्यामीतिप्रतिज्ञातं । तस्य व्यतिक्रमः अन्यथाभावः । नास्तीतियोजना ॥ ४६ ॥ व्यतिक्रमेकिं करिष्यसीत्यत्राह—अहमिति ॥ ४७ ॥ कौसल्यातोप्यधिकंभोगंतवदास्यामीत्यत्रतत्प्राधान्यंनसहइत्याह—एकाहमिति । अञ्जलिंप्रतिगृह्णंतीं राजमातृत्वेनसर्वेषामितिशेषः । श्रेयः तदातदपेक्षयेतिशेषः ॥४८—५०॥ वनवासैश्वर्यरूपंवृत्तंवरमितिसंबन्धः ॥ ५१ ॥ प्रैक्षतानिमिषइतिनिरन्तरचिन्तावशात्क्रोधाद्वानिर्निमेषप्रेक्षणम् ॥५२॥ दुःखशोकमयीमिति । अनुचितभरताभिषेकाद्दुःखं । रामविवासनाच्छोकः॥५३॥ शपथंकृतं स्वेनेतिशेषः। निश्वस्येति अशक्यप्रतीकारत्वादितिभावः ॥५४॥ नष्टचित्तः कलुषितहृदयः। उन्मत्तः उन्मादी ।

ति० अशोभनंपरंरामवनवासभरतैश्वर्यविषयंवाक्यंश्रुत्वेत्यन्वयः । शि० वनेवासं वनवासबोधकमित्यर्थः । भरतस्यैश्वर्यं ऐश्वर्यसंबन्धीत्यर्थः । अशोभनं अभिषेकनिवृत्तिहेतुत्वेनशोभारहितंकैकेय्यावाक्यंश्रुत्वा परमन्यत्किंचिन्नाभ्यभाषत । भाषणरहितत्वेपिकिमकरोदित्यतआह । अनिमिषस्सन्प्रैक्षत अपश्यत् । श्लोकद्वयमेकान्वयि ॥ ५१—५२॥

[ पा० ] १ क. ख. ग. ज. सत्यंधर्मं. २ छ. नक्रियांसमुपाददे. ३ क. त्मनावाऽहं. ४ ग. ज. शपेयंमनुजाधिप. ५ ट. रामविवासनम्. ६ ख. ङ. च. छ. झ. श्रुत्वातुराजा. ७ क. ङ. छ. झ. ञ. ट. वाक्यंपरमशोभनम्. ख. वृत्तंपरमदारुणम्. ८ क. ङ. च. छ. झ. ञ. ट. मयींश्रुत्वा. ९ ग. ह्यपनीतोयथाऽऽतुरः.

दी[1]नया तु गिरा राजा इति होवाच कैकयीम् ॥ ५६ ॥
अनर्थमि[2]ममर्थाभं केन [3]त्वमुपदर्शिता ॥ भूतोपहतचित्तेव [4]ब्रुवन्ती मां न लज्जसे ॥ ५७ ॥
शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा ॥ बालायास्[5]त्त्विदानीं ते लक्षये विपरीतवत् ॥ ५८ ॥
कुतो वा ते भयं जातं या त्वमेवंविधं वरम् ॥ राष्ट्रे भरतमासीनं वृणीषे राघवं वने ॥ ५९ ॥
विरमैतेन भावेन त्वमेतेन[6]ानृतेन वा ॥ यदि भर्तुः प्रियं कार्यं लोकस्य भरतस्य च ॥ ६० ॥
नृशंसे पापसंकल्पे क्षुद्रे दुष्कृतकारिणि ॥ किंनु दुःखमलीकं वा मयि रामे च पश्यसि ॥ ६१ ॥
न कथंचिदृते रामाद्भरतो राज्यमावसेत् ॥ रामादपि हि तं मन्ये धर्मतो बलवत्तरम् ॥ ६२ ॥
क[7]थं द्रक्ष्यामि रामस्य वनं गच्छेति भाषिते ॥ [8]मुखवर्णं वि[9]वर्णं तं यथैवेन्दुमुपप्लुतम् ॥ ६३ ॥
तां हि मे सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् ॥ कथं द्रक्ष्याम्यपावृत्तां परैरिव हतां चमूम् ॥ ६४ ॥
किं मां वक्ष्यन्ति राजानो नानादिग्भ्यः समागताः ॥ बालो बतायमैक्ष्वाकश्चिरं राज्यमकारयत् ६५
य[10]दा तु बहवो वृद्धा गुणवन्तो बहुश्रुताः ॥ परि[11]प्रक्ष्यन्ति काकुत्स्थं [12]वक्ष्यामि किमहं तदा ॥ ६६ ॥
कैकेय्या क्लिश्यमानेन [13]पुत्रः प्रव्राजितो मया ॥ यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ६७ ॥

विपरीतः सन्निपातादिनाविपरीतप्रकृतिः । आतुरः व्याधितः। "व्याधितोपटुरातुरः" इत्यमरः। हृततेजाः मन्त्रापहृतवीर्यः ॥ ५५—५६ ॥ उपदर्शिता बोधिता ॥ ५७ ॥ शीलव्यसनं सद्वृत्तभ्रंशं । "व्यसनं विपदि भ्रंशे" इत्यमरः। नाभिजानामि किंतुशीलमेवाभिजानामि। तत्रहेतुमाह—बालायाइति । इदानीं प्रौढतायां । तत् शीलं। विपरीतवत् विपरीतत्ववत्। भावप्रधानोनिर्देशः । स्वार्थेवतिर्वा ॥ ५८ ॥ कुतइति कुतोनिमित्तात्। एवंविधमित्यस्यैवविवरणं राष्ट्रइति। वनेराघवमिति आसीनमित्यनुषङ्गः ॥५९॥ एतेनभावेन भरताभिषेकरूपेण । विरम माप्रवर्तिष्ठाः । अनृतेन अनृतपदवाच्येन । एतेनवा रामविवासनरूपेणभावेनवा । विरमेतिसंबन्धः ॥ ६० ॥ नृशंसे निर्दये । तत्रहेतुः—पापसंकल्पइति । रामविवासनरूपपापसंकल्पे । तत्रापिहेतुः क्षुद्रइति । अल्पमतिके । तत्रापिहेतुः—दुष्कृतकारिणीति । जन्मान्तरेपापकारिणीत्यर्थः । दुःखं दुःखनिमित्तं । अलीकं अप्रियं । " अलीकंत्वप्रियेऽनृते " इत्यमरः ॥ ६१—६२ ॥ वनंगच्छेतिमया भाषितेसति । विवर्णं विपरीतवर्णत्वमापादितं । रामस्यमुखवर्णं उपप्लुतं राहुग्रस्तमिव कथंद्रक्ष्यामीतिसंबन्धः ॥ ६३ ॥ तां बुद्धिस्थां । सुकृतां मन्त्रिभिः सहसुष्ठुनिश्चितां । अथसुहृद्भिस्सहनिश्चितांबुद्धिं अपावृत्तां अधरोत्तरीकृतां । कथंद्रक्ष्यामि अनुभविष्यामि ॥ ६४ ॥ बतेतिखेदे । ऐक्ष्वाकः रामः । राज्यमकारयत् किमकरोत् । इतिमांकिंवक्ष्यन्तीतिसंबन्धः । यद्वा बालः अज्ञः । दशरथः । घुणक्षतलिपिन्यायेनदैवाच्चिरंराज्यमकरोदितिमांवक्ष्यन्ति—किमिति ॥ ६५ ॥ यदा श्वः प्रातः वृद्धाः काकुत्स्थंप्रक्ष्यन्ति कगतोरामःकुतोनाभिषिक्तइतिप्रक्ष्यन्ति । तदाहं किं वक्ष्यामिप्रत्युत्तरं ॥ ६६ ॥ कैकेयीवरप्रदाननिमित्तं

**ति०** एतेननिर्धूतपातिव्रत्यलक्षणेनभावेनोपलक्षिता । किंच एतेन अशक्यवरद्वारकेण । अनृतेन ममानृततासंपादकेनकर्मणा । उपलक्षितात्वमेवंवराद्विरम । **स०** अनृतेन कृतनामहरिविरुद्धेन । भावेन अभिप्रायेण ॥ ६० ॥ **ती०** रामादृते रामंविना । भरतःकथंचिदपिराज्यंनावसेत् नाक्रामेत् । अनेनयथाभागशश्शत्रुर्णामेवराज्यमनुमन्यस्वेत्युक्तं ॥ ६२ ॥ **स०** वनंगच्छेतिमयाभाषितेउक्तेसत्यपि । त्वंकथंवक्ष्यसि। तस्यत्वदतिप्रियत्वादितिभावः । उपप्लुतमिन्दुंयथा तमिव विवर्णंमुखवर्णं आदर्शादौकथंद्रक्ष्यामीतिसंबन्धः । **शि०** रामस्य रामं । कथंवक्ष्यसि । कर्मणःसंबन्धसामान्यत्वेनविवक्षणाद्रामस्येतिषष्ठी ॥ ६३ ॥

**[ पा० ]** १ ङ. छ. झ. ञ. दीनयाऽऽतुरयावाचा. २ ज. मिदमर्थाभं. ३ ङ. छ—ट. मुपदेशिता. ४ क. भ्रुवन्तीत्वं. ५ ख. स्तदिदानींते. ६ ङ. च. छ. झ. ट. नानृतेनच. ७ ङ. छ. झ. ट. कथंवक्ष्यसि. ८ क. ग. मुखेवर्णं. ९ ङ. छ. झ. ट. विवर्णंतु. १० ङ. झ. यदाहिबहवो. ११ घ. ङ. परिपृच्छन्ति. १२ ङ. छ. झ. वक्ष्यामीहकथंतदा. घ. वक्ष्यामिकिमिदंतदा. १३ क—ङ. ञ. रामःप्रव्राजितो.

किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते ॥ किं चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् ॥६८॥
यदा यदा हि कौसल्या दासीवच्च सखीव च ॥ भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति ॥ ६९ ॥
सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ॥ न मया सत्कृता देवी सत्कारार्हा कृते तव ॥ ७० ॥
इदानीं तत्तपति मां यन्मया सुकृतं त्वयि ॥ अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् ॥ ७१ ॥
विप्रकारं च रामस्य संप्रयाणं वनस्य च ॥ सुमित्रा प्रेक्ष्य वै भीता कथं मे विश्वसिष्यति ॥ ७२ ॥
कृपणं बत वैदेही श्रोष्यति द्वयमप्रियम् ॥ मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् ॥ ७३ ॥
वैदेही बत मे प्राणाञ्शोचन्ती क्षपयिष्यति ॥ हीना हिमवतः पार्श्वे किंनरेणेव किंनरी ॥ ७४ ॥
न हि राममहं दृष्ट्वा प्रविशन्तं महावने ॥ चिरं जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् ॥ ७५ ॥
सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ न हि प्रव्राजिते रामे देवि जीवितुमुत्सहे ॥ ७६ ॥
सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् ॥ रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥ ७७ ॥
अनृतैर्बहु मां सान्त्वैः सान्त्वयन्ती स्म भाषसे ॥ गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः ॥७८॥
अनार्य इति मामार्याः पुत्र विक्रायिकं ध्रुवम् ॥ धिक्करिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥७९॥
अहो दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव ॥ दुःखमेवंविधं प्राप्तं पुराकृतमिवाशुभम् ॥ ८० ॥

प्रव्राजितइत्युच्यतामित्यत्राह—कैकेय्येति । कैकेय्या क्लिश्यमानेन पूर्वदत्तौवरौभरताभिषेकरामविवासनरूपेणदातव्याविव्युक्तवत्याकैकेय्यापीड्यमानेन । मया प्रव्राजितइत्येतत्सत्यंयदिब्रवीमि तदा तत् राममभिषेक्ष्यामीतिवचनं । असत्यंभविष्यति । तद्बाधोनसंभवति । पूर्वप्रवृत्तत्वादितिभावः ॥ ६७ ॥ किंमांवक्ष्यति मत्पुत्रेणतेकिमपराद्धमित्येवंवक्ष्यतीतिभावः । किंप्रतिवक्ष्यामि नकिमपीत्यर्थः ॥ ६८ ॥ यदेत्यादिश्लोकद्वयमेकान्वयं । यदायदाउपतिष्ठति तत्तदुचितकृत्येनोपास्ते । तदातदासत्कारार्हा तवकृते नसत्कृता तवविप्रियंभविष्यतीतिसानसत्कृतेत्यर्थः । परिचर्याकाले दासीवत्परिचरति । नमहिषीत्वंपुरस्करोति । द्यूतक्रीडादिसमये सखीवव्यवहरति । धर्मानुष्ठानसमयेभार्यावत् भार्यायायथावर्तितव्यं तथावर्तते । नतुमहिषीत्वाभिमानेन जोषमास्तइत्यर्थः । भार्यान्तरविवाहसमये भगिनीवत् सोदरीव । उपलालयति । शरीरपोषणादिदशायांमातृवद्धितपरातिष्ठतीतिभावः ॥ ६९—७० ॥ इदानीं त्वद्दौर्जन्यदर्शनकाले । त्वयि विषये । मयायत्सुकृतं सुष्ठूपचरितं । तत् अपथ्यव्यञ्जनोपेतं दध्याद्युपस्कृतमन्नं आतुरं व्याधितमिव । मांतपति तापयति । अन्तर्भावितण्यर्थोयं । त्वय्युपचाराकरणेसंप्रतिममताप एवनभवेत् । एतादृशवाल्लभ्याभावादितिभावः ॥७१॥ विप्रकारं विपरीतप्रकारं । अभिषेकतिरस्कारमित्यर्थः । वनस्येतिकर्मणिषष्ठी । भीता मत्पुत्रस्यविप्रकारःकिमुतेतिभीता । मे मां ॥ ७२ ॥ श्रोष्यतीतियत् तत्कृपणं कष्टं । बतेतियोजना ॥७३—७६॥ पूर्वसतीत्वेनज्ञातांत्वामिदानीमनेनव्यापारेण असतींसतीं असतीत्वेन स्थितां । व्यवस्यामि । कथमिव रूपिणीं दृष्टिप्रियां । विषसंयुक्तांमदिरां मद्यविशेषं । पीत्वा नरः पानानन्तरंतामसतीं दुष्टामध्यवस्यति । तथा कार्यकालेत्वामसतीमध्यवस्यामीत्यर्थः ॥ ७७ ॥ अनृतैःसान्त्वैरिष्टवचनैर्मांसान्त्वयन्तीसतीभाषसेस्म । अतःगीतशब्देन मृगवशीकरणहेतुगानशब्देन । संरुध्य मृगं लुब्धः व्याधइव मामवधीः ॥ ७८ ॥ पुत्रविक्रायिकंपुत्रमूल्येनस्त्रीसुखक्रेतारं । मां आर्याः सन्तः । अयमनार्यः पुत्रविक्रयपापकृत् । इतिधिक्करिष्यन्ति ॥ ७९ ॥ एता-

ती० मे मदर्थं । उपलक्षणमेतत् । रामार्थंशोचन्तीप्राणान्क्षपयिष्यतीत्यर्थः । बतेतिखेदे । शि० क्षपयिष्यति क्षीणाभविष्यति । तत्रदृष्टान्तः किंनरेणस्वश्वशुरेणहीनाकिंनरीव । यदिचतत्रपत्युर्वियोगःप्रसिद्धस्तदावियोगांशेक्षीणत्वांशेचदृष्टान्तोबोध्यः ॥ ७४ ॥ ति० विकरिष्यन्ति निन्दयिष्यन्ति ॥ ७९ ॥ ति० दुःखंकष्टं । कृच्छ्रं कष्टं । अहोकष्टमहोकष्टमितियावत् ॥ ८० ॥

[ पा० ] १ ङ. च. झ. ञ. ट. यदायदाच. २ ङ. झ. दासीवच. ख. ञ. दासीवच्चोपतिष्ठते. ३ क. बतमत्प्राणान्. ४ क—ञ. प्रवसन्तं. ५ क. च. ञ. रामेप्रव्राजितेदेविनाहंजीवितु. ६ क—झ. ट. बैतमां. ७ क. च. ज. ञ. सान्त्वयन्तीव. ८ क. ङ. च—झ. ट. विकरिष्यन्ति. घ. कथयिष्यन्ति. ९ क. च. ममममहत्कृच्छ्रं. ख. कृच्छ्रमिदंदुःखं.

चिरं खलु [1]मया पापे त्वं पापेनाभिरक्षिता ॥ अज्ञानादुपसंपन्ना रज्जुरुद्बन्धिनी यथा ॥ ८१ ॥
[2]रममाणस्त्वया सार्धं मृत्युं त्वां नाभिलक्षये ॥ बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८२ ॥
मया ह्यपितृकः पुत्रः स महात्मा दुरात्मना ॥ तं तु मां जीवलोकोयं नूनमाक्रोष्टुमर्हति ॥ ८३ ॥
बालिशो बत कामात्मा राजा दशरथो भृशम् ॥ स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥८४॥
[3]व्रतैश्च ब्रह्मचर्यैश्च गुरुभिश्चोपकर्शितः ॥ भोगकाले महत्कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८५ ॥
नालं द्वितीयं वचनं पुत्रो मां प्रति भाषितुम् ॥ स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८६ ॥
य[4]दि मे राघवः कुर्याद्वनं गच्छेति चोदितः ॥ प्रतिकूलं प्रियं मे स्यान्न तु वत्सः करिष्यति ॥८७॥
[5]शुद्धभावो हि भावं मे न तु ज्ञास्यति राघवः ॥ स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८८ ॥
राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम् ॥ मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८९ ॥
मृते मयि गते रामे वनं मनुजपुङ्गवे ॥ [6]इष्टे मम जने शेषे किं पापं प्रतिपत्स्यसे ॥ ९० ॥
[7]कौसल्यां मां च रामं च पुत्रौ च यदि हास्यति ॥ दुःखान्यसहती देवी मामे[8]वानुमरिष्यति ॥९१॥
कौसल्यां च सुमित्रां च मां च पुत्रैस्त्रिभिः सह ॥ प्रक्षिप्य नरके सा त्वं कैकेयि सुखिता भव ॥९२॥

दृशदुःखस्याननुभूतत्वाद्विषादातिशयेनविस्मयते—अहोइति । कृच्छ्रं कष्टं । "स्यात्कष्टंकृच्छ्रं" इत्यमरः । एतादृशदुःखकृच्छ्रेकदाचिदपिमयानप्राप्तेइत्यर्थः । किंचयस्मिन्वरप्रदानविषयेतववाचःक्षमे एवंविधंदुःखं पुराकृतंअशुभमिवाशुभफलमिवप्राप्तं ॥ ८० ॥ सौख्यार्थकृतंत्वद्रक्षणंस्वनाशायपरिणतमितिखिद्यति—चिरमित्यादिना ॥ ८१ ॥ नाभिलक्षये किंत्वस्पृशमितियोजना ॥ ८२ ॥ अपितृकः पितृकृतरक्षणादिरहित इत्यर्थः । आसीदितिशेषः । तं तथाविधं मां आक्रोष्टुं आक्रोशंकर्तुं ॥ ८३ ॥ आक्रोशप्रकारमाह—बालिश इति । बालिशः मूर्खः । " मूर्खवैधेयबालिशाः " इत्यमरः ॥ ८४ ॥ व्रतैः काण्डव्रतैः । ब्रह्मचर्यैः मधुमांसवर्जनादिब्रह्मचारिधर्मैः । गुरुभिः गुरुकृतशिक्षादिभिः । भोगकाले गार्हस्थ्यावस्थायां ॥ ८५ ॥ सःपुत्रः वनंप्रव्रजेत्युक्तःसन् द्वितीयंवचनं परिहारवचनं । मांप्रतिभाषितुंनालं । किंतुबाढमित्येववक्ष्यति । बाढमित्यङ्गीकारोक्तिः ॥ ८६ ॥ मे मया । वनंगच्छेतिचोदितोरामः प्रतिकूलं वनंप्रत्यगमनं । यदिकुर्यात्तदामेप्रियंस्यात् । वत्सस्तुतन्नकरिष्यति ॥ ८७ ॥ शुद्धभावः शुद्धहृदयः । मेभावं हृदयं । नज्ञास्यति । मांशुद्धतया जानन्ममवचनहृदयं नज्ञास्यतीतिभावः । अतो बाढमित्येववक्ष्यतीतिसंबन्धः ॥ ८८ ॥ सर्वलोकस्य सर्वजनस्य । " लोकस्तुभुवनेजने " इत्यमरः । धिक्कृतं धिक्करणं । अक्षमणीयं क्षन्तुमशक्यं । किंतुमृत्युर्मां यमक्षयं यमगृहं । नयिष्यति ॥ ८९ ॥ शेषे कौसल्यादौ । किंपापं कमन्यायं । प्रतिपत्स्यसे चिन्तयिष्यसि ॥ ९० ॥ पुत्रौ लक्ष्मणशत्रुघ्नौ । देवी सुमित्रा ॥९१॥ अत्रनरकशब्दे-

**शि०** गुरुभिः बहुभिः । ब्रह्मचर्यैः ब्रह्मणोवेदस्यचर्याबोधनंयेषुतैःवेदबोधितैरेवेत्यर्थः । व्रतैः नियमितभोजनादिभिःचकारद्वयमेवार्थकं ॥ ८५ ॥ **शि०** मां मृत्युः मृतेःउःकालःपरमात्मा यमक्षयं यमस्यकालस्यक्षयःअभावोयस्मिंस्तंसाकेतलोकं नयिष्यति नेष्यति प्रापयिष्यति । "उगौरीपतिरुःकालस्सेतुरब्धिःपरायणम्" इतिमात्रिकाः । अतएवनचकालवशानुगइत्यनेननविरोधः । स्मृतौकालशब्दःप्राकृतकालपरः । **ति०** अक्षमणीयं दुस्सहवृत्तं अतएवसर्वलोकस्यधिकृतं ॥ ८९ ॥ कौसल्यामांरामंचहास्यति ताभ्यांहीनाभविष्यति । चात्सुमित्रा । यदिपुत्रौच । चाद्रामंमांच । एतैर्यदिहीनाभविष्यति तदादुःखान्यसहती देवी कौसल्या सुमित्राच मामेवानुमरिष्यति । लक्ष्मणस्यरामेणसहनियतंगमनात् शत्रुघ्नस्यभरतानुयायित्वेपि अतीवत्वदनुरञ्जनं कुर्वतोरामस्यैवतस्यापित्वयाक्रूरतयानिराकरणात्पुत्रौहास्यतीत्युक्तं । तेनतस्याःक्रौर्यातिशयोव्यङ्ग्यः । राज्ञःशोकातिशयवत्त्वाद्विसंष्टुलवाक्यप्रयोगोनदोषाय ॥ ९१ ॥

[पा०] १ क. च. महापापे. २ अस्मिन्श्लोके पूर्वोत्तरार्धयोः ख. ङ. च. छ. झ. ञ. ट. पाठेषु व्युत्क्रमोदृश्यते. ३ ङ. छ. झ. वेदैश्चब्रह्म. ४ क. तथैवराघवः. ५ अयंश्लोकः ग. ङ. छ. झ. ट. पुस्तकेषुनदृश्यते. घ. शुद्धस्वभावोभावंमे. ६ क. इष्टोममजनः शेषःकिंपापंप्रतिपत्स्यते. ७ ङ.—ट. कौसल्यामांच. ख. सुमित्रामांच. ८ ङ. छ. झ. ट. वानुगमिष्यति. घ. वानुकरिष्यति.

मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः ॥ इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि ॥ ९३ ॥
प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् ॥ मा स्म मे भरतः कार्षीत्प्रेतकृत्यं गतायुषः ॥ ९४ ॥
[1]हन्तानार्ये ममामित्रे सकामा भव कैकयि ॥ मृते मयि गते रामे वनं [2]पुरुषपुङ्गवे ॥ ९५ ॥
सेदानीं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ९६ ॥
त्वं राज[3]पुत्रीवादेन [4]न्यवसो मम वेश्मनि ॥ अकीर्तिश्चातुला लोके ध्रुवः परिभवश्च मे ॥
सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ९७ ॥
कथं रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः ॥ पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति ॥ ९८ ॥
यस्य [5]त्वाहारसमये सूदाः कुण्डलधारिणः ॥ [6]अहंपूर्वाः पचन्ति स्म [7]प्रशस्तं पानभोजनम् ॥ ९९ ॥
[8]स कथं नु कषायाणि तिक्तानि कटुकानि च ॥ भक्षयन्वन्यमाहारं सुतो मे वर्तयिष्यति ॥१००॥
महार्ह[9]वस्त्रसंवीतो भूत्वा चिर[10]सुखोषितः ॥ [11]काषायपरिधानस्तु कथं [12]भूमौ निवत्स्यति ॥ १०१ ॥
[13]कस्यैतद्दारुणं [14]वाक्यमेवंविधमचिन्तितम् ॥ रामस्यारण्यगमनं भरतस्याभिषेचनम् ॥ १०२ ॥
धिगस्तु योषितो नाम शठाः [15]स्वार्थपरास्सदा ॥ न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥१०३॥

अनर्थभावेऽर्थपरे नृशंसे [16]ममानुतापाय निविष्टभावे ॥
किमप्रियं पश्यसि मन्निमित्तं हितानुकारिण्यथवापि रामे ॥ १०४ ॥
परित्यजेयुः [17]पितरो हि पुत्रान्भार्याः पतींश्चापि [18]कृतानुरागाः ॥
कृत्स्नं हि सर्वं कुपितं जगत्स्याद्दृष्ट्वैव रामं व्यसने निमग्नम् ॥ १०५ ॥
अहं पुनर्देव कुमाररूपमलंकृतं [19]तं सुतमाव्रजन्तम् ॥
नन्दामि [20]पश्यन्नपि दर्शनेन भवामि [21]दृष्ट्वा च पुनर्युवेव ॥ १०६ ॥

---

नदुःखंलक्ष्यते ॥ ९२ ॥ आकुलं क्षुभितं । पालयिष्यसि ॥ ९३—९६ ॥ त्वमित्याद्यर्धत्रयमेकान्वयं । अकीर्त्यादित्रयरूपा त्वं राजपुत्रीवादेन राजपुत्रीव्यपदेशेन । ममवेश्मनिन्यवसः । परिभवः महाजनसमक्षंधिक्कारः । अवज्ञा क्षुद्रत्वेनप्रतिपत्तिः ॥ ९७—९८ ॥ सूदाः पाचकाः । अहंपूर्वाः अहमहमिकावन्तः । प्रशस्तं "आयुःसत्वबलारोग्यसुखप्रीतिविवर्धनाः । रस्याःस्निग्धाःस्थिराहृद्याआहाराःसात्विकप्रियाः" इत्युक्तप्रकारेणश्रेष्ठं ॥ ९९ ॥ कषायादित्रयरूपं वन्यमाहारंभक्षयन् कथंनुवर्तयिष्यति केनप्रकारेणजीविष्यति ॥१००॥ महार्हेण अतिश्लाघ्येन वस्त्रेण संवीतः संवृतः । चिरसुखोषितः चिरकालंसुखास्तरणोषितः । काषायपरिधानः कषायेण रक्तं काषायं । काषायं परिधानं वस्त्रं यस्य सतथोक्तः ॥१०१॥ रामस्यारण्यगमनं भरतस्याभिषेचनमित्येवंविधमेतद्वाक्यं कस्य । केनोपदिष्टमित्यर्थः । यद्वाकस्य सह्यमितिशेषः ॥१०२॥ शठाः गूढविप्रियकारिण्यः । कौसल्यादिषुतदसंभवादाह—नब्रवीमीति ॥ १०३ ॥ मन्निमित्तं मत्कारणकं । रामे रामनिमित्तकंवा ॥ १०४ ॥ कृत्स्नंजगत् । गच्छतीतिव्युत्पत्त्याजगच्छब्देनजीववर्गउच्यते । सर्वशब्देनस्थावरजातमुच्यते । कुपितं त्वांप्रतीतिशेषः ॥१०५॥ अहंपुनः अहंतु । मत्स्वभावोलौकिकेभ्योभिन्नः देव-

---

**ति०** राजपुत्रि दैवेन दुरदृष्टेन ॥ ९७ ॥ **शि०** चिरसुखोचितः सार्वकालिकानन्दयोग्यः ॥ १०१ ॥ **ति०** स्वस्यरामंविनाजी-

**[ पा० ]** १ इदमर्धं छ. झ. ट. पाठेषुनदृश्यते. हन्तानार्ये. मृतेमयिगते. इत्यर्धयोः ङ. पुस्तकेपौर्वापर्यंदृश्यते. २ ख. मनुजपुङ्गवे. ३ ङ. झ. ट. पुत्रीदैवेन. घ. पुत्रीव्याजेन. ४ घ. न्यवसीर्मम. ज. न्यवसेर्मम. ५ क. ङ. च. छ. झ. ञ. ट. न्वाहारसमये. ६ ग. घ. अहंपूर्वं. ७ ङ. छ. ज. झ. ट. प्रसन्नाःपानभोजनम्. ८ क. च. सकथंतु. ९ ङ. छ. झ. वस्त्रसंबद्धो. ट. वस्त्रैस्संवीतो. १० क. ख. घ—छ. झ. ञ. सुखोचितः. ११ ग. ङ. छ. कषाय. १२ ङ. छ. झ. ट. रामोभविष्यति. १३ क. छ. झ. ट. कस्येदंदारुणं. १४ ङ. छ. झ. ट. मेवंविधमपीरितम्. १५ ङ. च. छ. झ. ञ. ट. स्वार्थपरायणाः. १६ ङ. छ. झ. ट. तापायनिवेशितासि. १७ ङ. छ. झ. ञ. ट. पितरोपि. १८ क. कृतानुरागान्. १९ ख. मत्सुतमाव्रजन्तम्, २० ङ. च. छ. झ. ञ. ट. पश्यन्निवदर्शनेन. २१ ख. ङ. च. छ. ञ. ट. दृष्ट्वैवपुनः. क. दृष्ट्वापि.

विं[1]नापि सूर्येण भवेत्प्रवृत्तिरवर्षता वज्रधरेण वाऽपि ॥
रामं तु गच्छन्तमितः समीक्ष्य जीवेन्न कश्चित्त्विति चेतना मे ॥ १०७ ॥
विनाशकामामहितामभित्रामावासयं मृत्युमिवात्मनस्त्वाम् ॥
चिरं बताङ्केन धृ[2]तासि सर्पी महाविषा तेन हतोस्मि मोहात् ॥ १०८ ॥
मया च रामेण च[3] लक्ष्मणेन प्रशास्तु हीनो भ[4]रतस्त्वया सह ॥
पुरं च राष्ट्रं च निहत्य बान्धवान्ममाहितानां च भ[5]वाभिहर्षिणी ॥ १०९ ॥
नृशंसवृत्ते व्यसनप्रहारिणि प्रसह्य वाक्यं यदिहाद्य भाषसे ॥
न नाम [6]ते केन मुखात्पतँ[7]न्त्यधो विशीर्यमाणा दशनाः सहस्रधा ॥ ११० ॥
न किंचिदाहाहितमप्रियं वचो न वेत्ति रामः परुषाणि भाषितुम् ॥
कथं नु रा[8]मे ह्यभिरामवादिनि ब्रवीषि दोषान्गुणनित्यसंमते ॥ १११ ॥
प्रताम्य[9] वा प्रज्वल वा प्रणश्य वा स[10]हस्रशो वा स्फुटिता महीं व्रज ॥
न ते करिष्यामि वचः सुदारुणं म[11]माहितं के[12]कयराजपांसनि ॥ ११२ ॥
क्षुरोपमां नित्यमसत्प्रियंवदां प्रदुष्टभावां स्वकुलोपघातिनीम् ॥

कुमाररूपं निसर्गसुन्दरं। अलंकृतं अलंकारैरतिशयितशोभं। चन्द्रकान्ताननमित्यस्यहृदिविपरिवर्तमानत्वात्तमित्युक्तं। सुतंसौन्दर्याद्यभावेपिसुतत्वप्रयुक्तप्रेमास्पदं। आव्रजन्तं मत्तमातङ्गगामिनमित्युक्तरीत्यागमनकालिकसंभ्रमविशेषशालिनं। दर्शनेन मानसज्ञानेन। पश्यन्नपिनन्दामि। दृष्ट्वापुनःसाक्षात्कृत्यतु। युवेवभवामि युववद्धृष्टपुष्टाङ्गोभवामि ॥ १०६ ॥ प्रवृत्तिः संचारः। चेतना बुद्धिः। वज्रधरपक्षेप्रवृत्तिशब्देन जीवनविषयप्रवृत्तिरुच्यते ॥ १०७ ॥ मोहात् आवासयं गृहइतिशेषः। सर्पी सर्पजातिः। जातिलक्षणो ङीष्। त्वंमोहादङ्केनधृतासि। तेनाङ्कधारणेन ॥१०८॥ सलक्ष्मणेनरामेणमयाचहीनोभरतस्त्वयासहपुरंराष्ट्रं बान्धवांश्चनिहत्य प्रशास्तु पुरादिहननरूपंप्रशासनंकरोतु। ममाहितानां शत्रूणांच। अभिहर्षिणीभवेतिसंबन्धः ॥ १०९ ॥ नृशंसवृत्ते क्रूरव्यापारे। व्यसनप्रहारिणि क्षतेप्रहारन्यायेनविपदिप्रहरणशीले। रामविरहासहनं विपत् तत्रप्रहारः पुनःपुनश्चोदनं। त्वंइहदेशे। अद्य अस्मिन्काले। प्रसह्य पतिस्वातन्त्र्यंतिरस्कृत्य। यद्वाक्यं भाषसे तत्रतेमुखात् दशनाःसहस्रधाविशीर्णाःसन्तः केननामहेतुना नपतन्तीतिसंबन्धः ॥ ११० ॥ रामः अहितमप्रियंच किंचिद्वचोनाह। परुषाणिभाषितुंनवेत्ति। ज्ञानपूर्वकत्वाद्भाषणस्यकुतस्तत्प्रसक्तिरितिभावः। नकेवलंपरुषावेदनं प्रत्युताभिरामवादिनि सर्वप्रियभाषिणि। गुणैर्नित्यं संमतेरामे। कथंनु दोषान् प्रव्राजनहेतून् ब्रवीषि ॥१११॥ प्रताम्य ग्लानिंभज। ताम्यतेर्लोण्मध्यमपुरुषैकवचनं। प्रज्वल कुपिताभव। प्रणश्य नष्टाभव। सहस्रशः स्फुटितासतीमहींव्रजवा। भूगोःपतवेत्यर्थः। केकयराजानांपांसनि दूषणि ॥ ११२ ॥ क्षुरोपमां तद्वत्क्रूरां। असत्प्रियंवदां मिथ्याप्रियवादिनीं। प्रदुष्टभावां प्रकर्षेणदुष्टहृदयां। अमनोरमामिति

वनव्यतिरेकं दर्शयिष्यंस्तदन्वयेस्वजीवनान्वयंदर्शयति—**अहमिति** । आव्रजन्तं मत्समीपेआगच्छन्तं। श्रुत्वेतिशेषः। दर्शनेनचक्षुषापश्यन्निवनन्दामि। **स०** देवकुमाररूपं देवस्यहरेः कुमारोमारस्तस्यरूपमिवरूपंयस्यासौतथोक्तः ॥ १०६ ॥ **ति०** रामंतुविनानकस्यापिजीवनमितिमेमतिः। अन्तर्यामिणं विनाकस्यापिव्यवहारस्यासिद्धेः। एवंचस्वाजीवनं कैमुतिकन्यायसिद्धमितिभावः ॥ १०७ ॥ **वि०** मम अहितानां शत्रूणां। अभिभाषणशीलाभव। वार्ताकरणयोग्यबान्धवाभावादितिभावः ॥ १०९ ॥ **शि०** प्रसह्य अनादृत्ययत्इहास्मिन्समयेभाषसे तेनभाषणेन ॥ ११० ॥

[**पा०**] १ क. ङ. च. छ. झ. ञ. ट. विनाहि. २ क. च. ञ. धृताहिसर्पी. ख. ज. धृतासि. ३ क. ङ. च. छ. झ. ञ. ट. सलक्ष्मणेन. ४ क. ख. भरतस्सहत्वया. ५ च. छ. झ. ञ. भवाभिभाषिणी. ६ छ. झ. ट. तेतेन. ७ ग. ज. त्पतत्यधोविशीर्यमाणारसना. ८ छ. रामेत्वभिराम. ख. रामेप्यभिराम. घ. रामेऽभ्यभिराम. ९ ङ. प्रतप्यवा. ख. छ. प्रताप्य. १० क. सहस्रधावा. ११ ङ. छ. झ. समाहितं. १२ ङ. छ. झ. पांसने. ख. ज. ट. पांसिनि.

न जीवितुं त्वां विषहेऽमनोरमां दिधक्षमाणां हृदयं सबन्धनम् ॥ ११३ ॥
न जीवितं मेऽस्ति कुतः पुनः सुखं विनाऽऽत्मजेनात्मवतः कुतो रतिः ॥
ममाहितं देवि न कर्तुमर्हसि स्पृशामि पादावपि ते प्रसीद मे ॥ ११४ ॥
स भूमिपालो विलपन्ननाथवत्स्त्रिया गृहीतो हृदयेऽतिमात्रया ॥
पपात देव्याश्चरणौ प्रसारितावुभावसंस्पृश्य यथाऽऽतुरस्तथा ॥ ११५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ॥ १३ ॥

कैकेय्यापुनर्वरदाननिर्बन्धेदशरथेनसकरुणमात्मपरिशोचनपूर्वकंबहुधातद्गर्हणम् ॥ १ ॥ तथासूर्येऽस्तंगते आप्रभातं दुःखेनविलापपूर्वकं कैकेयींप्रतिसानुनयं रामायराज्यदानयाचनम् ॥ २ ॥ कैकेय्याहठाद्दशरथप्रार्थनानङ्गीकारे तेनपुनर्मूर्च्छया क्षितौनिपतनम् ॥ ३ ॥ ततःप्रबुद्धेनतेनप्रभातेवैतालिकैःक्रियमाणमङ्गलवाद्यवादनपूर्वकस्वप्रबोधननिवारणम् ॥ ४ ॥

अतदर्हं महाराजं शयानमतथोचितम् ॥ ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ॥ १ ॥
अनर्थरूपाऽसिद्धार्था ह्यभीता भयदर्शिनी ॥ पुनराकारयामास तमेव वरमङ्गना ॥ २ ॥
त्वं कत्थसे महाराज सत्यवादी दृढव्रतः ॥ मम चेमं वरं कस्माद्विधारयितुमिच्छसि ॥ ३ ॥
एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा ॥ प्रत्युवाच ततः क्रुद्धो मुहूर्तं विह्वलन्निव ॥ ४ ॥

पदच्छेदः । सबन्धनं समूलं । प्राणरूपमूलसहितं "प्राणबन्धनंहिसौम्यमनः" इतिश्रुतेः । सदिन्धनमिति पाठेहृदयमेवसदिन्धनं । दिधक्षमाणां दग्धुमिच्छन्तीं । त्वांजीवितुं जीवयितुं । नविषहे नोत्सहे ॥ ११३ ॥ रतिः त्वद्विषयेतिशेषः । यदेवमतआह—ममाहितमिति । आत्मवतः जीवतइत्यर्थः ॥ ११४ ॥ अतिमात्रया अमर्यादया । स्त्रियाहृदयेगृहीतः तदधीनहृदयइत्यर्थः । भूमिपालोपितांनिग्रहीतुमसमर्थइत्यर्थः । अनाथवद्विलपन् त्वांजीवयितुंनोत्सहेतेपादौस्पृशामिप्रसीदेत्यनवस्थितवचनानिभाषमाणः । प्रसारितावित्यनेनानादरउक्तः । असंस्पृश्येत्यनेनपिस्पृक्षायामेवमूर्च्छाजातेतिगम्यते ॥ ११५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने द्वादशःसर्गः ॥ १२ ॥

"नतेकरिष्यामिवचः" इत्युक्त्वाऽपिधर्मपाशबद्धतयापश्चात्तप्तः पुनस्तांसान्त्वयति त्रयोदशे—अतदर्हमित्यादि । श्लोकद्वयमेकान्वयं । अतदर्हं तादृशदुःखानर्हं । अतथोचितं अधश्शयनानुचितं । अनर्थरूपा पापरूपा । असिद्धार्था अनिष्पन्नप्रयोजना । अभीता लोकापवादभीतिरहिता । भयदर्शिनी दशरथस्येति शेषः। यद्वा अभयदर्शिनी दशरथस्यभयमपश्यतीत्यर्थः। तमेववरं पूर्वदत्तमेववरमुद्दिश्य । महाराजं आकारयामास संबोधयामास । यद्वा दातव्यत्वेनग्राहयामासेत्यर्थः । वस्तुतस्त्वेकवचनस्वारस्यात् वरं श्रेष्ठं दशरथं । स्वाभिमतकथनायाह्वयामासेत्यर्थः ॥ १—२ ॥ विधारयितुं ऋणत्वेनधारयितुं । च्यावयितुंवा । विशेषेणधारयितुमादातुमितिवार्थः ॥ ३ ॥ विह्वलन्मूर्च्छन्

स० प्रसारितौ प्रणामंकुर्यादित्यन्यत्रप्रसारितौ ॥ ११५ ॥ इतिद्वादशस्सर्गः ॥ १२ ॥

ति० अतदर्हं स्त्रीप्रणामानर्हं ॥ १ ॥ ती० भयदर्शिनीतिच्छेदे रामाद्भरतस्यभयदर्शिनी । शि० सिद्धार्था साधितदेवप्रयोजना । अभीता वास्तवयशोरूपपत्यर्थसाधकत्वरूपधर्मविशिष्टत्वेनधर्मच्युतिभीतिरहिता । किंच अभीता वास्तवयशोरूपपत्यर्थप्रापिका । इणोरूपं ॥ २ ॥ शि० कथ्यसे जनैरितिशेषः ॥ ३ ॥

[पा०] १ घ. नजीवतींत्वां. २ ङ. छ. झ. नात्मवतां. क—घ. च. ज. ञ. नात्मवता. ३ ख. ङ. छ. झ. ट. वसंप्राप्य. ४ ख. पापदर्शिनी. ५ क—घ. च, ट, कथ्यसे. ६ ख. ङ. च. छ. झ. ट. चेदं. ज. चैवं. ७ क. छ. विलपन्निव.

मृते मयि गते रामे वनं मनुजपुङ्गवे ॥ हन्तानार्ये ममामित्रे सकामा सुखिनी[1] भव ॥ ५ ॥
स्वर्गेपि खलु रामस्य कुशलं दैवतैरहम् ॥ प्रत्यादेशादभिहितं धारयिष्ये कथं[2] बत ॥ ६ ॥
कैकेय्याः प्रियकामेन रामः प्रव्राजितो मया[3] ॥ यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ७ ॥
अपुत्रेण मया पुत्रः श्रमेण महता महान् ॥ रामो लब्धो महाबाहुः[5] स कथं त्यज्यते मया ॥ ८ ॥
शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः ॥ कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९ ॥
कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम् ॥ अभिराममहं रामं प्रेषयिष्यामि[6] दण्डकान् ॥ १० ॥
सुखानामुचितस्यैव दुःखैरनुचितस्य च ॥ दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११ ॥
यदि दुःखमकृत्वा[7]ऽद्य मम संक्रमणं भवेत् ॥ अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥ १२ ॥
नृशंसे पापसंकल्पे रामं सत्यपराक्रमम् ॥ किं विप्रियेण कैकेयि प्रियं योजयसे मम ॥ १३ ॥
अकीर्तिरतुला लोके ध्रुवः[8] परिभवश्च मे ॥ १४ ॥
तथा विलपतस्तस्य परिभ्रमितचेतसः ॥ अस्तमभ्यागमत्[9]सूर्यो रजनी चाभ्यवर्तत ॥ १५ ॥
साऽत्रियामा तथाऽऽर्तस्य[10] चन्द्रमण्डलमण्डिता ॥ राज्ञो विलपमानस्य न व्यभासत शर्वरी ॥ १६ ॥
तथैवोष्णं[11] विनिश्वस्य वृद्धो दशरथो नृपः ॥ विललापार्तवद्दुःखं गगनासक्तलोचनः ॥ १७ ॥
न प्रभातं त्वयेच्छामि[12] निशे नक्षत्रभूषणे[13] ॥ क्रियतां मे दया भद्रे मयाऽयं[14] रचितोऽञ्जलिः ॥ १८ ॥
अथवा गम्यतां शीघ्रं नाहमिच्छामि निर्घृणाम् ॥ नृशंसां कैकयीं द्रष्टुं यत्कृते व्यसनं महत् ॥ १९ ॥
एवमुक्त्वा ततो राजा[15] कैकेयीं संयताञ्जलिः ॥ प्रसादयामास पुनः कैकेयीं चेदमब्रवीत् ॥ २० ॥

॥ ४—५ ॥ रामस्यकुशलंप्रति दैवतैःप्रत्यादेशादभिहितं धिक्कारपूर्वमभिहितंवाक्यं । कथंधारयिष्ये सहिष्ये । मूढस्त्रीहेतोःकथंगुणवत्पुत्रंत्यक्तवानसीत्यभिहितंश्रुत्वाकथमात्मानंधारयिष्ये । तथाचरामप्रवासनेइह परत्रचममसौख्यंनास्तीत्यर्थः ॥ ६ ॥ ननुसत्यप्रतिज्ञत्वनिर्वाहार्थंरामःप्रव्राजितइतिवक्तव्यमित्यत्राह—कैकेय्याइति । मयेत्यनन्तरमितिकरणंद्रष्टव्यं । तदसत्यं भविष्यति । "श्वस्त्वाहमभिषेक्ष्यामियौवराज्येपरंतप" इतिरामोद्देशेनोक्तंवाक्यमसत्यंभविष्यतीत्यर्थः ॥ ७ ॥ अपरित्यागेहेत्वन्तराणिदर्शयति—अपुत्रेणेत्यादि ॥ ८—१० ॥ दुःखैरिति षष्ठ्यर्थेतृतीया ॥ ११ ॥ अदुःखार्हस्यरामस्यदुःखमकृत्वाममसंक्रमणंयदिभवेत् । ततः तदा । सुखमवाप्नुयां । संक्रमणं तृणजलूकान्यायेनदेहाद्देहान्तरप्राप्तिः । पञ्चत्वमिति यावत् ॥ १२ ॥ ममप्रियंरामं विप्रियेण अनभिमतदण्डकारण्यगमनेन । किं किमर्थं योजयसे ॥ १३ ॥ अकीर्तिरित्यर्धं । भविष्यतीतिशेषः ॥ १४ ॥ तस्य विलपतः तस्मिन्विलपतिसतीत्यर्थः ॥ १५ ॥ अत्रियामा यामत्रयवत्त्वंविहायातिदीर्घेत्यर्थः ॥ १६ ॥ आर्तवत् महारोगादिनापीडितइव । दुःखंविललाप । शृण्वतांयथादुःखंभवतितथाविललापेत्यर्थः ॥ १७ ॥ प्रभातं प्रभातत्वं । भावेनिष्ठा । अत्रप्रकरणेभर्त्सनप्रसादनाभ्यांपुनःपुनःक्रियमाणाभ्यांधर्ममपित्यक्तुंनशक्नोमिनपुत्रमपीतिगम्यते ॥ १८ ॥ निर्घृणां निर्दयां ।

**ति०** स्थापयिष्यामि प्रस्थापयिष्यामि ॥ १० ॥ **ति०** मरणेवराप्रदानजन्यदोषोपिन । जीवतोहिसाप्रतिज्ञेतिभावः ॥ १२ ॥ अकीर्तिः । स्त्रीजितइत्यकीर्तिः । जन्मसंपादितांकीर्तिं परिभविष्यतीत्यर्थः ॥ १४ ॥ **स०** त्रयोयामायस्यास्सात्रियामा । आद्यन्तयोरर्धयामयोश्चेष्टाकालत्वेनदिनप्रायत्वात् । यद्वात्रीन्धर्मादीन्यापयतिनिरवकाशीकरोतिकामप्रधानत्वात् । अन्तर्भावितण्यर्थाद्यातेः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्" इतिमन् ॥ १६ ॥ **ति०** तवेतिपाठेत्वत्संबन्धिप्रातःकालं ॥ १८ ॥ **ति०** राज-

[ पा० ] १ ख. च. ञ. सुखिता. २ च. कथंचन. ङ. कथंचनु. ३ क—ट. वनम्. ४ क. इति. ५ ङ. छ. झ. ट. महातेजाः. ६ ङ. छ. झ. ट. स्थापयिष्यामि. ७ ङ.—ट. मकृत्वातु. ८ ङ. छ. झ. ट. ध्रुवंपरिभविष्यति. ९ क. च. मभ्यागतस्सूर्यो. १० ग. ङ. छ. झ. ट. तदार्तस्य. घ. तदातस्य. ११ ङ. छ. झ. सदैवोष्णं. ख. अथैवोष्णं. १२ क. च. ञ. ट. तवेच्छामि. १३ ङ. च. छ. झ. ञ. ट. भूषिते. १४ क. ख. रचितोऽयंमयाञ्जलिः. क. ङ. छ. झ. ट. मम. १५ ङ. च. छ. झ. ट. राजधर्मवित्.

[1]साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः ॥ प्रसादः क्रियतां [2]देवि भद्रे राज्ञो विशेषतः ॥ २१ ॥
शून्ये न खलु सुश्रोणि मयेदं [3]समुदाहृतम् ॥ कुरु साधु प्रसादं मे बाले सहृदया ह्यसि ॥ २२ ॥
प्रसीद देवि [4]रामो मे त्वद्दत्तं राज्यमव्ययम् ॥ लभतामसितापाङ्गे यशः [5]परमवाप्नुहि ॥ २३ ॥
मम रामस्य लोकस्य गुरूणां भरतस्य च ॥ प्रियमे[6]तद्गुरुश्रोणि कुरु चारुमुखेक्षणे ॥ २४ ॥
विशुद्धभावस्य हि[7] दुष्टभावा [8]ताम्रेक्षणस्याश्रुकलस्य राज्ञः ॥
श्रुत्वा विचित्रं करुणं विलापं भर्तुर्नृशंसा न चकार वाक्यम् ॥ २५ ॥
ततः स राजा [9]पुनरेव मूर्च्छितः प्रि[10]यामदुष्टां प्रतिकूलभाषिणीम् ॥
समीक्ष्य पुत्रस्य विवासनं प्रति क्षितौ विसंज्ञो निपपात दुःखितः ॥ २६ ॥
इतीव राज्ञो व्यथितस्य सा निशा जगाम घोरं श्वसतो मनस्विनः ॥
विबोध्यमानः प्रतिबोधनं तदा निवारयामास स राजसत्तमः ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ॥ १४ ॥

प्रभातेकैकेय्यादशरथंप्रति सदृष्टान्तप्रदर्शनंसत्यवचनप्रशंसनेनस्वाभिमताकरणेस्वप्राणविमोक्षणप्रतिज्ञानपूर्वकंसद्योरामप्रवासनचोदना ॥ १ ॥ ततोदशरथेनकैकेयींप्रतिसगर्हणंवरदानसूचनपूर्वकंस्वस्यरामदिदृक्षानिवेदनम् ॥ २ ॥ वसिष्ठेनस्नानाद्याह्निकनिर्वर्तनपूर्वकंदशरथदिदृक्षयाकैकेय्यन्तःपुरंप्रत्यागमनम् ॥ ३ ॥ पूर्वमेवान्तःपुरद्वारमुपगतवतासुमन्त्रेणवसिष्ठवचनाद्दशरथसमीपमेत्यतदभिष्टवनपूर्वकंरामाभिषेचनप्रार्थना ॥ ४ ॥ तथास्वकृतस्तवनसंदीपितशोकस्यराज्ञःकरुणवचनश्रवणात्किंचित्पश्चादपाक्रमणम् ॥ ५ ॥ तथाकैकेयीचोदनयारामानयनायान्तःपुराद्बहिर्निर्गमनम् ॥ ६ ॥

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि ॥ विवे[11]ष्टमानमु[12]द्वीक्ष्य सै[13]क्ष्वाकमिदमब्रवीत् ॥ १ ॥
पापं [14]कृत्वैव किमिदं मम संश्रुत्य संश्रवम् ॥ शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि ॥ २ ॥

---

प्रत्युत नृशंसां क्रूरां ॥ १९—२० ॥ त्वद्गतस्य त्वदेकशरणस्येत्यर्थः । गतायुषः अल्पावशेषमतीतायुषइत्यर्थः ॥ २१ ॥ शून्ये निर्जनेप्रदेशे । इदं रामाभिषेचनं । नसमुदाहृतंखलु किंतुसर्वजनसन्निधौसमुदाहृतमित्यर्थः । यद्वा शून्येन दीनेनमयेत्यर्थः ॥ २२—२४ ॥ ताम्रेक्षणस्य दुःखातिशयेनेतिशेषः। अश्रुकलस्य अश्रुपूर्णस्य । कलिःकामधेनुः । विचित्रं प्रसादनभर्त्सनसहितत्वात् ॥ २५—२६ ॥ प्रतिबोधनं शङ्खपटहवीणादिकंप्रतिबोधनसाधनं । यद्वा वैतालिकैःक्रियमाणंप्रतिबोधनं ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने त्रयोदशःसर्गः ॥ १३ ॥

---

अथरामविवासननिर्धारणंदर्शयतिचतुर्दशे—पुत्रेत्यादि ॥ १ ॥ संश्रवं दास्यामीतिप्रतिज्ञां। संश्रुत्य कृत्वेत्यर्थः । पाकंपचतीतिवन्निर्देशः । पापं प्रतिज्ञाताकरणरूपंपापं कृत्वैव क्षितितले सन्नः अवसन्नःसन् । शेषे किमिदं । स्थित्यां मर्यादायां सत्यपरिपालनरूपा-

---

धर्मवित् सामादिविज्ञाता ॥२०॥ **ती०** प्राक्नित्यंप्रियां । अदुष्टां पतिव्रतां । तत्कालेदैवात्प्रतिकूलभाषिणींतांसमीक्ष्य पुत्रस्यविवासनंप्रतिक्रियमाणंतद्वरंचसमीक्ष्य पर्यालोच्य कर्तव्यमूढोमूर्च्छितःक्षितौविसंज्ञःपपातेत्यर्थः ॥ २६ ॥ इतित्रयोदशःसर्गः ॥ १३ ॥

**स०** मदर्थं राजाम्रियतेचेन्म्रियतांप्रवयाः आरब्धकार्यंतुनत्याज्यमितिनिर्णीयाह—**पुत्रेत्यादि**। विचेष्टमानं विशब्दोत्र विप्रियमित्यादाविवनञर्थे । अचेष्टमानम् ॥१॥ **शि०** संश्रवंदास्यामीतिपूर्वप्रतिज्ञाविषयीभूतंवरद्वयमित्यर्थः । संश्रुत्यतद्दास्यामीतीदानीं-

[पा०] १ घ. साधुवृद्धस्य. २ ङ. च. छ. झ. ट. भद्रेदेवि. ग. घ. देविममराज्ञो. ख. भद्रेराज्ञे. ३ ङ. छ. झ. समुपाहृतम्. ४ क. च. छ. ञ. रामोपि. ५ ङ. च छ. ञ. ट. मवाप्स्यसि. ६ ग. घ. मेतदुरुश्रोणि. ख. मेतत्तुसुश्रोणि. ७ घ. सुदुष्ट. ८ ङ. छ. झ. ट. दीनस्यताम्राश्रुकलस्य. घ. ताम्राश्रुमुखस्य. ९ ख. भयमोहमूर्च्छितः. १० क. ग—छ. झ. ञ. ट. मतुष्टां. ११ झ—ठ. विचेष्टमान. १२ ङ. च. छ. झ. ञ. ट. मुत्प्रेक्ष्य. १३ घ. ङ. छ. झ. ञ. ट. ऐक्ष्वाक. १४ क. ख. ग. ङ—ट. कृत्वेव.

आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ॥ सत्यमा[1]श्रित्य हि मया [2]त्वं च धर्मप्रचोदितः ॥ ३ ॥
संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः ॥ प्रदाय पक्षिणे [3]राजञ्जगाम गतिमुत्तमाम् ॥ ४ ॥
तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे ॥ [4]याचमाने स्वके नेत्रे [5]उद्धृत्याविमना ददौ ॥ ५ ॥
सरितां तु पतिः स्वल्पां मर्यादां [6]सत्यमन्वितः ॥ सत्यानुरोधात्समये [7]वेलां स्वां नातिवर्तते ॥ ६ ॥
सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ॥ सत्यमेवाक्षया वेदाः [8]सत्येनैवाप्यते परम् ॥ ७ ॥
सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः ॥ स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम ॥ ८ ॥
[9]धर्मस्येहाभिकामार्थं मम चैवाभिचोदनात् ॥ प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥ ९ ॥
समयं च [10]ममाद्येमं [11]यदि त्वं न करिष्यसि ॥ अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १० ॥
एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया ॥ नाशकत्पाशमुन्मोक्तुं बलिरिन्द्रकृतं यथा ॥ ११ ॥
उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत् ॥ स धुर्यो वै परिस्पन्द[12]न्युगचक्रान्तरं यथा ॥ १२ ॥
[13]विह्वलाभ्यां च नेत्राभ्यामपश्यन्निव भूमिपः ॥ कृच्छ्राद्धैर्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३ ॥
यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः ॥ [14]तं त्यजामि स्वजं चैव[15] तव पुत्रं सह त्वया ॥ १४ ॥
प्रयाता रजनी देवि सूर्यस्योदयनं प्रति ॥ [16]अभिषेकं गुरुजनस्त्वरयिष्यति मां ध्रुवम् ॥ १५ ॥

---

यां । " मर्यादाधारणास्थितिः " इत्यमरः । स्थातुमर्हसि ॥ २ ॥ इदमेवयुक्तमितिदर्शयति—आहुरित्यादिना । सत्यरूपंधर्ममाश्रित्यहिमयाप्रचोदितः ॥ ३ ॥ प्राणसङ्कटेकथंसत्यंपालनीयमित्यत्राह—संश्रुत्येत्यादिना ॥ ४ ॥ याचमानेब्राह्मणे अविमनाः सुप्रसन्नमनाः सन् । नेत्रेददौ तस्माइतिशेषः ॥ ५ ॥ सरितांपतिः समुद्रः । मर्यादांसत्यमन्वितः वेलांनातिवर्ततइतिमर्यादारूपंसत्यंप्राप्तःसन् । सत्यानुरोधात् स्वकृतसत्यानुवर्तनात् । समये संकल्पितकाले । स्वांवेलां स्वल्पामपि नातिवर्ततइतिसंबन्धः॥६॥ सत्यमेवएकपदंब्रह्म एकं मुख्यं । "एके मुख्यान्यकेवलाः" इत्यमरः । पद्यतइतिपदं परमप्राप्यं ब्रह्मेत्यर्थः । यद्वा एकंपदंप्रणवरूपंवाचकंयस्य तत्तथा " ओमित्येकाक्षरंब्रह्म " इतिस्मृतेः । सत्येधर्मःप्रतिष्ठितः सत्यमेवधर्मस्यपराकाष्ठेत्यर्थः । अक्षयावेदाश्चसत्यमेव प्राधान्येनप्रतिपादयन्तीत्यर्थः । परं प्रयोजनं । सत्येनैवाप्यते ॥ ७ ॥ अत्रादौतस्मादित्युपस्कार्यं । धृता स्थिरा । वरदः सर्वेषांसर्ववरप्रदः ॥ ८ ॥ अभिकामार्थं प्रीत्यर्थं । धर्माभिवृद्ध्यर्थमितियावत् । मम प्रियायाइतिशेषः । समनस्कत्वज्ञापनायत्रिरित्युक्तं ॥ ९ ॥ समयं रामविवासनं । परित्यक्ता उपेक्षिता ॥ १० ॥ एवं त्रिर्ब्रवीमीत्येवं । पाशं सत्यपाशं । उन्मोक्तुं मोचयितुं । बलिः महाबलिः । इन्द्रकृतं इन्द्रद्वारोपेन्द्रकृतं । पाशं पदत्रयदानप्रतिज्ञारूपं पदत्रयादानान्निगलंवा ॥ ११ ॥ सः राजा । युगचक्रयोरन्तरंपरिस्पन्दन् गच्छन् । धुर्योयथा अनड्वानिव । उद्भ्रान्तहृदयोविवर्णवदनश्चाभवत् ॥ १२ ॥ विह्वलाभ्यांक्षुब्धाभ्यां । अपश्यन्निव अन्धइव स्थितः भूमिपः । कृच्छ्रात् लब्धेन धैर्येण संस्तभ्य दुःखातिशयजनितक्षोभंनिरुद्ध्येत्यर्थः ॥ १३ ॥ हेपापे अग्नौ अग्निसमीपे । सामीप्येसप्तमी । मन्त्रकृतः मन्त्रसंस्कृतः । यः पाणिर्मयाधृतःतंत्यजामि तत्प्रयुक्तव्यवहारंत्यजामीत्यर्थः । अतएव स्वजं स्वस्माज्जातमपि । तवपुत्रं त्वयासहत्यजामि ॥ १४ ॥ उदयनंप्रति उदयंप्रतिलभ्य त्वरयि-

---

प्रतिज्ञायइदंदानंपापंअनिष्टमिवकृत्वामत्वेत्यर्थः ॥ २ ॥ **शि०** विकलाभ्यां दर्शनकलारहिताभ्यां ॥ १३ ॥

**[ पा० ]** १ ङ. छ. झ. माश्रित्यच. २ ङ. छ. झ. ट. त्वंधर्मप्रतिचोदितः. क. ख. ग. च. ज. ञ. त्वंचधर्मप्रचोदितः. ३ क. ख. ग. ङ. च. छ. झ. ञ. ट. राजा. ४ क. घ. च. याच्यमानः. ५ क. ग. घ. ज. उद्धृत्यसुमना. ६ ख. सत्यसंमितः. ७ ग. घ. छ. स्वांवेलां. ८ क. ख. ग. च—ट. सत्येनावाप्यते. ९ ख. ङ. च. छ. झ. ञ. ट. धर्मस्यैवाभि. ग. घ. ज. धर्मस्यहित. क. सधर्मस्याभि. १० क. ख. ङ—झ. ट. ममार्येमं. ११ घ. ज. यदिनत्वं. १२ क. ग. घ. ज. चक्रान्तरंगतः. ङ. चक्रान्तरेयथा. १३ ङ. झ. ट. विकलाभ्यां. छ. विकृताभ्यां. १४ ख. घ. ङ. छ. झ. ट. संत्यजामि. १५ घ. ज. वापि. १६ ङ. छ. झ. ट. अभिषेकायहिजनः.

रामाभिषेकसंभारैस्तदर्थमुपकल्पितैः ॥ रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६ ॥
[1]त्वया सपुत्रया नैव कर्तव्या सलिलक्रिया ॥ व्याहन्तास्यशुभाचारे यदि रामाभिषेचनम् ॥ १७ ॥
[2]न च शक्नोम्यहं द्रष्टुं दृष्ट्वा पूर्वं तथासु[3]खम् ॥ हतहर्षं नि[4]रानन्दं पु[5]नर्जनमवाङ्मुखम् ॥ १८ ॥
तां त[6]था ब्रुवतस्तस्य भूमिपस्य महात्मनः ॥ प्रभाता शर्वरी पुण्या चन्द्रन[7]क्षत्रशालिनी ॥ १९ ॥
ततः पापसमाचारा कैकेयी पार्थिवं पुनः ॥ उवाच परुषं वाक्यं वाक्यज्ञा रो[8]षमूर्च्छिता ॥ २० ॥
किमिदं भाषसे रा[9]जन्वाक्यं गररुजोपमम् ॥ आनाययितुमक्लिष्टं पु[10]त्रं राममिहार्हसि ॥ २१ ॥
स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम् ॥ निस्सपत्नां च मां कृत्वा कृतकृत्यो भविष्यसि ॥ २२ ॥
स नु[11]न्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः ॥ राजा प्रचोदितोऽभीक्ष्णं [12]कैकेयीमिदमब्रवीत् ॥ २३ ॥
धर्मबन्धेन बद्धोस्मि नष्टा च मम चेतना ॥ [13]ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ॥ २४ ॥
ततः प्रभातां रजनीमुदिते च दिवाकरे ॥ पुण्ये नक्षत्रयोगे च मुहूर्ते च स[14]माहिते ॥ २५ ॥
वसिष्ठो गुणसंपन्नः शिष्यैः परिवृतस्तदा[15] ॥ उपगृह्याशु संभारान्प्रविवेश पुरोत्तमम् ॥ २६ ॥
सिक्तसंमार्जितपथां पताकोत्तमभूषिताम् ॥ विचि[16]त्रकुसुमाकीर्णां नानास्रग्भिर्वि[17]राजिताम् ॥ २७ ॥
संहृष्टमनुजोपेतां समृद्धविपणापणाम् ॥ महो[18]त्सवसमाकीर्णां राघवार्थे समुत्सुकाम् ॥ २८ ॥
चन्दनागरुधूपैश्च सर्वतः परिधूपिताम् ॥ तां पुरीं समतिक्रम्य पुरंदरपुरोपमाम् ॥ २९ ॥
ददर्शान्तःपुरं[19] श्रेष्ठं नानाद्विजगणायुतम् ॥ पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम् ॥
य[20]ज्ञविद्भिः सुसंपूर्णं स[21]दस्यैः परमद्विजैः ॥ ३० ॥

ष्यतीतिसंबन्धः ॥ १५ ॥ तदर्थं रामाभिषेकार्थं । उपकल्पितैः रामाभिषेकसंभारैः रामाभिषेकसामग्रीभिः सहगुरुजनस्त्वरयिष्यतीतिपूर्वेणसंबन्धः । यद्वा अभिषेकसामग्र्येवसलिलक्रियासामग्रीभवत्वित्यर्थः ॥१६॥ व्याहन्तासीति लुण्मध्यमपुरुषैकवचनं ॥१७॥ तथासुखं तादृशसुखयुक्तं । जनंदृष्ट्वा पुनः हतहर्षं हतहर्षविकारं । निरानन्दं अतएवावाङ्मुखं जनंद्रष्टुंनशक्नोमि ॥ १८ ॥ तस्यब्रुवतः तस्मिनब्रुवतीत्यर्थः । पुण्येत्युक्तिः अनन्तरं रामदर्शनसंभवात् ॥१९॥ रोषमूर्च्छिता क्रोधेनव्याप्ता ॥ २० ॥ गररुजोपमं विषजनितव्याधिसदृशं । अङ्गरुजोपममितिपाठेसर्वाङ्गव्याप्तमहाव्याधिसदृशमित्यर्थः। अङ्गेतिसंबोधनंवा। अक्लिष्टं अक्लेशंयथाभवतितथा । आनाययितुमितिसंबन्धः ॥ २१—२२ ॥ नुन्नः व्यथितः । प्रतोदेन तोत्रेण । अभीक्ष्णं पुनःपुनः । "पुनःपुनश्शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः ॥ २३ ॥ धर्मबन्धेन धर्मपाशेन बद्धोस्मीत्यनेनरामविवासनंमनागनुज्ञातं । द्रष्टुमिच्छामि गमनात्पूर्वमितिशेषः ॥ २४ ॥ ततइत्यादिपरमद्विजैरित्यन्तमेकंवाक्यं । प्रभातांरजनीं प्रभातायांरजन्यां । समाहिते सन्निहितेसति ॥ २५ ॥ प्रविवेशपुरोत्तममित्यनेनवसिष्ठोनगरबाह्यसरय्वांस्नानाद्यनुष्ठानंकृत्वा पुरींप्रविष्टवानित्यवगम्यते ॥२६—२७॥ समृद्धविप-

क्रोधातिशयेनोक्तमेवार्थंपुनराह—**सपुत्रयेति** ॥ १७ ॥ **ति०** तथामुखं तादृशमुखवन्तं । ऊर्ध्वविकसितमुखं ॥ १८ ॥ **ति०** कृतकृत्यः कृतशौचादिकृत्यः । "कृत्ये" इत्यावश्यकेकृत्यप्रत्ययः ॥ २२ ॥ **ति०** यष्टिमद्भिरितिब्राह्मणविशेषणम् । "धारयेद्वैणवींयष्टिं" इतिस्नातकधर्मप्रकरणोक्तेः । यद्वा यष्टिमद्भिरित्यस्य तद्धरैराजसेवकैरित्यर्थः ॥ ३० ॥

[ **पा०** ] १ क. ख. ग. ङ. च. छ. झ. ञ. ट. सपुत्रयात्वया. २ च. ज. नचशक्तोस्म्यहं. क. छ. झ. ञ. ट. नशक्तोद्यास्म्यहं. ख. अशक्तोस्म्यशुभं. ३ घ. झ. मुखम्. ४ झ. तथानन्दं. ५ ख. पुनर्दीन. ६ ज. कथां. ७ घ. ङ. च. छ. झ. ञ. ट. मालिनी. ८ ग. घ. ज. क्रोध. ९ ख. ग. घ. वाक्यमङ्गरुजोपमम्. क. मेऽङ्गरुजोपमम्. १० क. रामंपुत्र. ११ ख. ङ. च. छ. झ. ञ. ट. तुन्नइव. १२ ङ. छ. झ. ट. कैकेय्यावाक्यं. १३ ख. ज्येष्ठपुत्रं. १४ क.—ट. समागते. १५ ङ. छ. झ. ट. स्तथा. १६ च. कुसुमोत्कीर्णां. क. कुसुमास्तीर्णां. १७ क. ख. च. छ. भूषिताम्. १८ ङ. छ. झ. ट. समायुक्तां. १९ ख. पुरश्रेष्ठं. ङ. च. छ. ट. पुरंश्रीमन्नाना. झ. ञ. पुरंश्रीमान्नानाध्वज. २० ङ. छ. झ. ट. यष्टिमद्भिः. २१ ङ. झ. ट. सदश्वैः परमार्चितैः. च. ञ. सदस्यैःपरमार्चितैः,

तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् ॥ वसिष्ठः परमप्रीतः [1]परमर्षिर्विवेश च ॥ ३१ ॥
स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ॥ द्वारे तु [2]राजसिंहस्य सचिवं प्रियदर्शनम् ॥ ३२ ॥
तमुवाच महातेजाः सूतपुत्रं विशारदम् ॥ वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ३३ ॥
इमे गङ्गोदकघटाः [3]सागरेभ्यश्च काञ्चनाः ॥ औदुंबरं भद्रपीठमभिषेकार्थ[4]माहृतम् ॥ ३४ ॥
सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ॥ क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥३५॥
अष्टौ च [5]कन्या रुचिरा मत्तश्च वरवारणः ॥ चतुरश्वो रथः श्रीमान्निस्त्रिंशो धनुरुत्तमम् ॥ ३६ ॥
वाहनं नरसंयुक्तं छत्रं च शशिसन्निभम् ॥ [6]श्वेते च वालव्यजने [7]भृङ्गारश्च हिरण्मयः ॥ ३७ ॥
हेमदामपिनद्धश्च ककुद्मान्पाण्डुरो वृषः ॥ केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः ॥ ३८ ॥
सिंहासनं व्याघ्रतनुः [8]समिद्धश्च हुताशनः ॥ [9]सर्ववादित्रसङ्घाश्च [10]वेश्याश्चालङ्कृताः स्त्रियः ॥ ३९ ॥
आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ॥ पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह ॥ ४० ॥
एते चान्ये च बहवः प्रीयमाणाः प्रियंवदाः ॥ अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः ॥ ४१ ॥
त्वरयस्व महाराजं यथा समुदितेऽहनि ॥ [11]पुण्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ॥ ४२ ॥
इति तस्य वचः श्रुत्वा सूतपुत्रो [12]महात्मनः ॥ स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥ ४३ ॥
तं तु पूर्वोदितं वृद्धं द्वारस्था [13]राजसंमतम् ॥ न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥ ४४ ॥
स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् ॥ वाग्भिः परम[14]तुष्टाभिरभिष्टोतुं प्रचक्रमे ॥ ४५ ॥
ततः सूतो [15]यथाकालं पार्थिवस्य निवेशने ॥ सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम् ॥ ४६ ॥
यथा नन्दति तेजस्वी सागरो भास्करोदये ॥ प्रीतः प्रीतेन मनसा तथाऽऽ[16]नन्दघनः स्वतः ॥४७॥

णापणां समृद्धाःविपणाःविक्रय्याःयेषांतेसमृद्धविपणाः आपणाःनिषद्याःयस्यांतां। समुत्सुकां समुत्सुकजनां ॥ २८—३० ॥ तंजनं पौरादिजनं । व्यतिचक्रामेत्यनेनान्तःपुरद्वारवेदिकांप्राप्तइतिगम्यते। विवेश वेदिकायामितिशेषः ॥ ३१ ॥ विनिष्क्रान्तं स्वगृहादिति शेषः । द्वारे अन्तःपुरद्वारे । प्रियदर्शनमित्यनेनाभिषेकार्थमात्मानमलङ्कृत्यागतइत्युक्तं ॥ ३२ ॥ क्षिप्रमाचक्ष्वेति वसिष्ठःप्रोवाचेतिसंबन्धः॥ ३३ ॥ काञ्चनाः काञ्चनमयाः। गङ्गोदकघटाः गङ्गोदकपूर्णघटाः। अत्र आहृतमित्येतद्वचनव्यत्ययेनसंबध्यते। इमेइतिच्छेदमपि। सागरेभ्यआहृताइमेउदकघटाइत्यध्याहारेणयोज्यं ॥ ३४ ॥ क्षौद्रं मधु ॥ ३५ ॥ चतुरश्वोरथःश्रीमान्निस्त्रिंशोधनुरुत्तममित्यत्र तु इतिगायत्र्याश्चतुर्थाक्षरं । निस्त्रिंशः खड्गः ॥३६॥ भृङ्गारः कनकालुका ॥३७॥ केसरी प्रशस्तकेसरः।हरिश्रेष्ठः अश्वोत्तमः॥३८–३९॥ व्याघ्रतनुः व्याघ्रचर्मेत्यर्थः । नैगमाः वणिजः । "नैगमोवाणिजोवणिक्" इत्यमरः ॥४०—४१॥ समुदिते सम्यग्व्यक्ते ॥ ४२—४३ ॥ पूर्वोदितं अयंसर्वदा अनिवार्यइति राज्ञापूर्वमुक्तं ॥ ४४ ॥ अजज्ञिवान् अज्ञातवान् ॥ ४५ ॥ यथाकालं प्रातःकालार्हे ॥४६॥ भास्करोदयेपिसमुद्रवृद्धिरस्त्येव । यद्वा भासःकरोती-

ति० भृङ्गारः कनकालुका । दत्तूरकुसुमसदृशहिरण्मयपात्रं ॥ ३७ ॥ ती० नैगमाः श्रेणीमुख्याः अध्यापकावा ॥ ४० ॥ ती० भास्करोदये भासःकरोतीतिव्युत्पत्त्याभास्करः पूर्णचन्द्रः तस्योदये । प्रीतेन प्रतिफलितचन्द्रतेजसाप्रीतेन ।

[ पा० ] १ ङ. च. झ. ञ. परमर्षिभिरावृतः. क. ङ. ज. परमर्षिर्विवेशह. २ क—छ. झ. ञ. ट. मनुजसिंहस्य. ३ घ. समुद्रेभ्यश्च. ४ ख. छ. मागतम्. ५ ख. रुचिराःकन्याः. ६ छ. श्वेतंचवालव्यजनं. ७ ङ. च. छ. झ. ञ. भृङ्गारंचहिरण्मयम्. ट. शृङ्गारंचहिरण्मयम्. ८ ङ. च. छ. झ. ञ. ट. समिधश्च. ९ ङ. च. छ. झ. ञ. ट. सर्वे. १० क. ख. वैश्याश्चा. ११ ङ. च. छ. झ. ञ. ट. पुष्ये. १२ झ. ट. महाबलः. १३ ख. ङ—ट. राजसंमताः. १४ ख. ग. घ. ज. सान्त्वाभिः. घ. हृद्याभिः. १५ ङ. छ. झ. ट. यथापूर्वं. १६ क—ट. नन्दयनस्स्वतः ग. घ. ज. नन्दयनस्सदा. ख. ङ. छ. झ. ञ. ट. नन्दयनस्ततः. क. च. नन्दयनस्तथा.

इन्द्रमस्यां तु वेलायामभितुष्टाव मातलिः ॥ सो[1]ऽजयद्दानवान्सर्वांस्तथा त्वां बोधयाम्यहम् ॥ ४८ ॥
वेदाः [2]सहाङ्गविद्याश्च यथा [3]ह्यात्मभुवं विभुम् ॥ ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥४९॥
आदि[4]त्यः सह चन्द्रेण यथा भूतधरां शुभाम् ॥ बोध[5]यत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ॥५०॥
उ[6]त्तिष्ठाशु महाराज कृतकौतुकमङ्गलः ॥ विराजमानो वपुषा मेरोरिव दिवाकरः ॥ ५१ ॥
सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि ॥ वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥ ५२ ॥
गता भगवती रा[7]त्रिः कृतं कृत्यमिदं तव ॥ बु[8]ध्यस्व नृपशार्दूल कु[9]रु कार्यमनन्तरम् ॥ ५३ ॥
उ[10]दतिष्ठत रामस्य समग्रमभिषेचनम् ॥ पौ[11]रजानपदैश्चापि नैगमैश्च कृ[12]ताञ्जलिः ॥ ५४ ॥
स्व[13]यं वसिष्ठो भगवान्ब्राह्मणैः सह तिष्ठति ॥ क्षिप्रमाज्ञाप्यतां राजन्राघवस्याभिषेचनम् ॥ ५५ ॥
यथा ह्य[14]पालाः पशवो यथा सेना ह्य[15]नायका ॥ यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् ॥५६॥
एवं हि भ[16]वता राष्ट्रं यत्र राजा न दृ[17]श्यते ॥ ५७ ॥
इति[18] तस्य वचः श्रुत्वा सान्त्वपूर्वमि[19]वार्थवत् ॥ अ[20]भ्यकीर्यत शोकेन भूय एव महीपतिः ॥ ५८ ॥
त[21]तः स राजा तं सूतं सन्नहर्षः सुतं प्रति ॥ शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः ॥
वाक्यैस्तु खलु मर्माणि म[22]म भूयो निकृन्तसि ॥ ५९ ॥

---

तिव्युत्पत्त्याभास्करश्चन्द्रः ॥ ४७—४८ ॥ सहाङ्गविद्याः अङ्गभूतशिक्षादिविद्यासहिताः । ब्रह्माणंबोधयन्ति सृष्ट्युपयोगितत्तदर्थबोधंजनयन्ति । तथाहमनुः "नामरूपंचभूतानांकृत्यानांचप्रपञ्चनं । वेदशब्देभ्यएवादौदेवादीनांचकारसः" इति ॥ ४९ ॥ भूतधरां सर्वप्राणिधरां । पृथिवींबोधयति । विशेषणद्वारापृथ्वीबोधनं । अद्यबोधयामीत्यन्वयः ॥ ५० ॥ कृतकौतुकमङ्गलः कृतंकौतुकहेतुभूतंमङ्गलाचरणंयेनसतथोक्तः । सर्वानन्दोत्पादनायकृतदेहालङ्कारइत्यर्थः । यद्वा कौतुकं उत्सवः कृतोत्सवार्थमङ्गलानुष्ठानइत्यर्थः । मेरोर्दिवाकरइव दिवाकरस्यप्रधानमेरोरुत्थानं मेरुसंबद्धरथाक्षद्वारेतिज्ञेयं ॥ ५१—५२ ॥ सर्वानन्दकररामाभिषेकमहोत्सवोपयुक्तत्वाद्रात्रिर्भगवतीति स्तूयते ॥ ५३॥ उदतिष्ठतेति । "उदोनूर्ध्वकर्मणि" इत्यात्मनेपदं । उपस्थितमित्यर्थः । अभिषेचनं अभिषेकसाधनं । उपतिष्ठतीतिपाठान्तरम् ॥ ५४—५७ ॥ सान्त्वपूर्वं सामपूर्वं । "सामसान्त्वं" इत्यमरः । अर्थवदितिनिर्देशः प्रातःकालप्रबोधस्यसर्वविजयहेतुत्वात् ॥ ५८ ॥ सुतंप्रतिसन्नहर्षः नष्टहर्षः । भूयोनिकृन्तसि कैकेयीवाक्यकृत्तानिमर्माणिभूयोप्यनुचितकालस्तुतिभिर्निकृन्तसीत्यर्थः । अत्रइतिशब्दोध्याहार्यः

---

मनसा प्रीतःसागरोयथानन्दतितथाआनन्दघनः आनन्दपूर्णस्सन्स्वतोनन्द नन्दय । प्रजाइतिशेषः । तथानन्दघनइत्यत्र नन्दआनन्दघनइतितन्त्रेणपदच्छेदः । **ति०** भास्करोदये तत्काले प्रत्यूर्मिप्रतिफलितरवितेजसातेजस्वीसागरोयथास्नातुकामान्नन्दतिनन्दयतितथानोस्मान्प्रीतेनतुष्टेनमनसाप्रीतः अस्मद्विषयकप्रीत्याश्रयस्सन् नन्दय । यत्तु भास्करश्चन्द्रइति तत्प्रसिद्धिविरुद्धम् । **शि०** अभास्करइतिच्छेदः । भास्करसदृशइत्यर्थः । सचन्द्रएवेतिकेचित् ॥ ४७ ॥ **ति०** यथाचन्द्रसहितोरविःउदयास्तमयाभ्यां पृथिवीं तत्स्थंजनंबोधयतितद्वच्च ॥ ५० ॥ **ति०** नैगमोवणिग्वर्गः ॥ ५४ ॥

[ **पा०** ] १ ख. योऽजयत्. २ क. ख. घ—ट. सहाङ्गाः. ग. साङ्गाश्च. ३ च. चात्मभुवं. ङ. स्वात्मभुवं. ख. ह्यात्मभवं. क. ख. ग. ङ. च. छ. झ. ञ. ट. भुवंप्रभुम्. ४ क. च. आदित्याः. ५ च. बोधयन्त्यत्र. क. बोधयन्त्यद्य. ६ च. उत्तिष्ठत्वं. ङ. छ. झ. ञ. उत्तिष्ठसुमहा. ७ ख. ग. घ. च. ज. ञ. रात्रिरहश्शिवमुपस्थितम्. ८ ख. ग. घ—च. ज. ञ. ट. प्रतिबुध्यस्वराजर्षे. ९ च. ञ. कृत्यंमहदुपस्थितम्. ज. कृत्यंकृतमिदंतव. ख. ग. घ. ट. कृतंकृत्यमिदंतव. १० क. ख. घ. च. ज. उपतिष्ठति. ११ ङ. छ. झ. जानपदाश्चापिनैगमाश्च. ट. जानपदश्चापिनैगमश्च. घ. जानपदैश्चैव. १२ क. च. ञ. कृतात्मभिः. १३ क. ख. ङ. च. छ. झ. ञ. ट. अयं. १४ ख. ह्यगोपाः. १५ क. ग. च. छ. ट. ह्यनायकाः. घ. ह्यपालका. १६ घ. भवता. १७ ख. विद्यते. १८ ङ. छ. झ. ट. एवं. १९ च. मिहार्थवत्. २० ग. अभ्युदीर्यत. २१ ङ. छ. झ. ञ. ट. ततस्तु. २२ घ. ममभूयोनिकृन्तसे. क. ख. भूयएवनिकृन्तसि.

सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् ॥ प्रगृहीताञ्जलिः किंचित्तस्माद्देशादपाक्रमत् ॥ ६० ॥
यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ॥ तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ६१ ॥
सुमन्त्र राजा रजनीं [1]रामहर्षसमुत्सुकः ॥ प्रजागरपरिश्रान्तो [2]निद्राया वशमेयिवान् ॥ ६२ ॥
तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् ॥ राममानय भद्रं ते नात्र कार्या विचारणा ॥ ६३ ॥
[[3]अश्रुत्वा राजवचनं कथं गच्छामि भामिनि ॥ तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥
सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम्] ॥ ६४ ॥
स मन्यमानः कल्याणं हृदयेन ननन्द च ॥ निर्जगाम च [4]संप्रीत्या त्वरितो राजशासनात् ॥ ६५ ॥
सुमन्त्रश्चिन्तयामास [5]त्वरितं चोदितस्तया ॥ व्यक्तं [6]रामाभिषेकार्थमि[7]हायास्यति [8]धर्मवित् ॥ ६६ ॥
इति [9]सूतो मतिं कृत्वा हर्षेण महता वृतः ॥ निर्जगाम [10]महाबाहू राघवस्य दिदृक्षया ॥ ६७ ॥
सागरह्रदसङ्काशात्सुमन्त्रोन्तःपुराच्छुभात् ॥ निष्क्रम्य [11]जनसंबाधं ददर्श द्वारमग्रतः ॥ ६८ ॥
ततः पुरस्तात्सहसा [12]विनिर्गतो [13]महीपतीन्द्वारगतो विलोकयन् ॥
ददर्श पौरान्विविधान्महाधना[14]नुपस्थितान्द्वारमुपेत्य [15]विष्ठितान् ॥ ६९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

॥ ५९ ॥ करुणं दीनवाक्यं ॥ ६० ॥ मन्त्रज्ञा राजनीत्यनुसारेणस्वकार्योचितविचारज्ञेत्यर्थः ॥ ६१ ॥ रजनीमितिअत्यन्तसंयोगेद्वितीया । प्रजागरो निद्राक्षयः ॥ ६२ ॥ विचारणेत्यनन्तरमितिशब्दोऽध्याहर्तव्यः । इतिप्रत्युवाचेत्यन्वयः ॥ ६३—६४ ॥ राजशासनादित्युक्तिः राजसंमतमितिबुद्ध्या ॥ ६५— ६७ ॥ सागरह्रदः समुद्रान्तर्गतह्रदः । पुरान्तर्वर्त्यन्तःपुरत्वात्समुद्रस्थह्रदौपम्यं । जनसंबाधं जनैर्निबिडं ॥ ६८ ॥ पुरस्तात् अग्रे । महीपतीन्विलोकयन् पश्चात्पौरान्ददर्श । महाधनान् उपहारपाणीन् । उपस्थितान् उपस्थानं सदः कुर्वतः ॥ ६९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने चतुर्दशःसर्गः ॥ १४ ॥

---

**ति॰** कल्याणंमन्यमानःकदाचिद्रामंदृष्ट्वातस्मिन्प्रीतिंकरिष्यतीतिमन्यमानः । यद्वाअस्मिन्नवसरेरामदर्शनमेवकल्याणंमन्यमानः । मृतिसमयत्वात् । यद्वादेवानामृषीणांचकल्याणंमन्यमानः । अतएवहृदयेनननन्दनतुबहिस्तच्चिह्नमितिभावः ॥ ६५ ॥ **ति॰** निर्गमनकालेपुनस्त्वरितमानयेतितयाकैकेय्याप्रेरितश्चिन्तयामास । किमित्येषाभूयस्त्वरयतीतिचिन्ता । व्यक्तंरामाभिषेकार्थमेवैषात्वरयति । इहधर्मराट् दशरथः । आयस्यति आयासवान्भवति । प्रयासबाहुल्येनप्रायोबहिर्नागमिष्यतीतिमतिंकृत्वेत्यन्वयः । **शि॰** धर्मराट् दशरथः । इह अभिषेकशालायां । व्यक्तंयथास्यात्तथाआयास्यति इतिमतिंकृत्वा ॥६६॥ **ति॰** महीपतेर्द्वारगतान् अधिकारिणः । विलोकयन् ॥ ६९ ॥ इतिचतुर्दशस्सर्गः ॥ १४ ॥

[ **पा॰** ] १ घ. कामहर्ष. २ ङ. छ. झ. ट. निद्रावशमुपागतः. क—घ. च. ज. ञ. निद्रायावशमागतः. ३ इदमर्धत्रयं ङ. च. छ. झ. ञ. ट. दृश्यते. ४ क. ङ. छ. झ. ञ. ट. सप्रीत्या. ५ क. ख. ग. घ. त्वरितश्चोदितः. ६ ङ. छ. झ. ट. रामाभिषेकार्थे. क. ख. घ. ज. रामोभिषेकार्थे. ७ ट. मिहायस्यति. ८ ङ. छ. झ. ट. धर्मराट्. क. ख. च. ञ. धर्मभाक्. ९ ङ. छ. झ. ट. पुनः. १० ङ. छ. झ. ञ. ट. महातेजाः. ज. महावेगात्. ११ क. ज. संबाधां. १२ क. ख. ङ. च. छ. झ. ञ. ट. विनिस्सृतो. १३ क. महीभृतो. क. घ. ङ. छ. झ. ञ. ट. महीपतेर्द्वारगतान्. ख. महीपतिद्वारगतान्. १४ क. घ. च. ज. ञ. न्महाजनान्. १५ ख. झ. निष्ठितान्.

## पञ्चदशः सर्गः ॥ १५ ॥

रामानयनायान्तःपुरान्निर्गच्छतासुमन्त्रेणाभिषेचनिकसामग्रीसज्जीकरणपूर्वकंराजागमनप्रतीक्षणेनद्वारितिष्ठतांब्राह्मणादीनामुपायनपाणीनांमहीपतीनांचावलोकनेनपुनरन्तःपुरप्रवेशेनस्तुतिपूर्वकंराज्ञितन्निवेदनम् ॥ १ ॥ तथापुनर्दशरथचोदनयारामानयनायतदन्तःपुरप्रवेशनम् ॥ २ ॥

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः ॥ उपतस्थुरुपस्थानं सहराजपुरोहिताः ॥ १ ॥
अमात्या बलमुख्याश्च मुख्या ये[1] निगमस्य च ॥ राघवस्याभिषेकार्थे[2] प्रीयमाणास्तु[3] सङ्गताः ॥ २ ॥
उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि ॥ लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते ॥
अभिषेकाय रामस्य द्विजेन्द्रै[4]रुपकल्पितम् ॥ ३ ॥
काञ्चना जलकुंभाश्च भद्रपीठं स्वलंकृतम् ॥ रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा ॥ ४ ॥
गङ्गायमुनयोः पुण्यात्सङ्गमादाहृतं जलम् ॥ याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च ॥५॥
प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्यग्वाहा[5]स्समाहिताः ॥ ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः ॥ ६ ॥
[[6]अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः] ॥ स[7]लाजाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ॥
पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा ॥ ७ ॥
क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः ॥
[ली[8]लावत्यः सुभ्रुवश्च लोलनेत्राश्च सर्वशः] ॥ ८ ॥
चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् ॥ सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् ॥ ९ ॥
चन्द्रमण्डलसंकाशमातपत्रं च पाण्डुरम् ॥ सज्जं द्युतिकरं श्रीमदभिषेकं[10]पुरस्कृतम् ॥ १० ॥
पाण्डुरश्च वृषः सज्जः [11]पाण्डुरोश्वश्च संस्थितः[12] ॥ प्रसृतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते ॥ ११ ॥

अथरामाभिषेकसामग्रीसन्निधानमाहपञ्चदशे । उष्य उषित्वा । उपस्थानं सदः ॥ १ ॥ निगमस्य पुरस्य । "निगमोनिश्चयेवेदेपुरेपथिवणिक्पथे" इतिवैजयन्ती ॥ २ ॥ उपकल्पितं अभिषेकार्थद्रव्यजातमिति शेषः ॥३॥ उपकल्पितमेवप्रपञ्चयति—काञ्चनाइत्यादि । अत्रभान्तीत्यनुषज्यते ॥ ४ ॥ आहृतं वर्ततइति शेषः । याश्चान्यास्सरितइत्यत्रताभ्यश्चेत्यनुकृष्याहृतमितिपूर्वेणसंबन्धः । येचह्रदाःकूपाः यानिसरांसि अत्रतुतेभ्यइत्यध्याहारः । आहृतंजलमितिपूर्वेणसंबन्धः ॥ ५ ॥ प्राग्वाहाः पूर्वाभिमुखप्रवाहाः । गोदावरीकावेर्यादयः । ऊर्ध्ववाहाः ऊर्ध्वोद्गतप्रवाहाः । नैमिषारण्यस्थब्रह्मावर्तरुद्रावर्तादिसरोविशेषाः । ऊर्ध्ववाहाः प्रत्यग्वाहाः इत्यप्याहुः । ऊर्ध्वाद्वहन्तीत्यूर्ध्ववाहाःनिर्झराइतिकेचित् । तिर्यग्वाहाः दक्षिणोत्तराभिमुखप्रवाहाः । गण्डकीशोणभद्रादयः ॥ ६ ॥ क्षीरिभिः अश्वत्थोदुंबरादिभिः । पूर्वंजलकुंभमात्रमुक्तं अत्रतद्विशेषइतिनपुनरुक्तिः ॥ ७ ॥ क्षौद्रं मधु । सुमनसः कुसुमानि । शुभाचाराः अञ्जनस्रगलङ्करणादिमङ्गलवेषयुक्ताः ॥ ८ ॥ चन्द्रांशुविकचप्रख्यं विकचचन्द्रांशुसदृशं । विकचत्वंविस्तृतत्वं । यद्वा चन्द्रांशवइवविकचाविस्तृताप्रख्याकान्तिर्यस्यतत्तथा । काञ्चनं काञ्चनदण्डं । सज्जं गन्धपुष्पादिभिरलङ्कृतं ॥ ९ ॥ अभिषेकपुरस्कृतं अभिषेकायपुरस्कृतं ॥१०॥ प्रसृतः प्रकर्षेणस्रवन्मदः । औपवाह्यः राजवाह्यः ।

**ति०**उपस्थानं राजद्वारं । अधिकरणेल्युट् ॥ १ ॥ **ति०** निगमः वणिक्समूहः ॥ २ ॥ **ति०** रामस्यजन्म जन्मनिस्थितेजन्मकालस्थेकर्कटलग्नेचप्राप्ते ॥ ३ ॥ अभिषेकाय अभिषेकार्थं । उपकरणं उपकल्पितं सिद्धमित्यर्थः । जलकुंभाःआनीताः । अलङ्कृतंभद्रपीठंस्थापितं ॥४॥ **ति०** क्षीरिणः।क्षीरपूर्णाः।क्षीरमत्रजलं।ङीबभावआर्षः । **स०** नदाइत्यध्याहृत्यलिङ्गानुपपत्तिंकेचित्परि-

**[पा०]** १ घ. च. छ. येचान्ये. २ घ. अभिषेकार्थं. ३ क. ङ. छ. झ. ञ. ट. स्सुसंगताः. ४ क. द्विजैश्चपरि. ५ ङ. छ. झ. ञ. ट. तिर्यग्वाहाश्चक्षीरिणः. ६ इदमर्धं झ. दृश्यते. ७ ङ. छ. ज. झ. ञ. ट. सजलाः. ८ इदमर्धं ग. घ. च. ज. दृश्यते. ९ ङ. च. छ. झ. ट. पाण्डुरं. १० ङ. च. छ. झ. ञ. ट. पुरस्सरम्. ११ च. छ. झ. ञ. ट. पाण्डुराश्वश्च. १२ क. ग. घ. ज. सुस्थितः.

अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः ॥ वादित्राणि च सर्वाणि वन्दिनश्च तथाऽपरे ॥ १२ ॥
इक्ष्वाकूणां यथा राज्ये संभ्रियेताभिषेचनम् ॥ तथाजातीयमादाय राजपुत्राभिषेचनम् ॥ १३ ॥
ते राजवचनात्तत्र समवेता महीपतिम् ॥ अपश्यन्तोऽब्रुवन्को नु [1]राज्ञो नः प्रतिवेदयेत् ॥ १४ ॥
न पश्यामश्च राजानमुदितश्च दिवाकरः ॥ यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः ॥ १५ ॥
इति तेषु ब्रुवाणेषु [2]सार्वभौमान्महीपतीन् ॥ अब्रवी[3]त्तानिदं सर्वान्सुमन्त्रो राजसत्कृतः ॥ १६ ॥
रामं राज्ञो [4]नियोगेन त्वरया प्रस्थितो[5]ऽस्म्यहम् ॥ पूज्या [6]राज्ञो भवन्तस्तु [7]रामस्य च विशेषतः ॥ १७ ॥
अयं पृच्छामि वचनात्सुखमायुष्मतामहम् ॥ [8]राज्ञः संप्रतिबुद्धस्य [9]यच्चागमनकारणम् ॥ १८ ॥
इत्युक्त्वाऽन्तःपुरद्वारमाजगाम पुराणवित् ॥ सदाऽसक्तं च [10]तं वेश्म सुमन्त्रः प्रविवेश ह ॥ १९ ॥
तुष्टावास्य तदा वंशं [11]प्रविश्य स विशांपतेः ॥ शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ॥ २० ॥
सोऽत्यासाद्य [12]तु तद्वेश्म तिरस्करणिमन्तरा ॥ आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघवम् ॥ २१ ॥
सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि ॥ वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥ २२ ॥
[ [13]यथा साङ्गाश्च वेदा वै ब्रह्माणं बोधयन्ति ते ॥ तथा त्वां धीर बोधयामि ह्युत्तिष्ठ पुरुषर्षभ ] ॥ २३ ॥
गता भगवती [14]रात्रिः कृतं कृत्यमिदं तव ॥ बुध्यस्व [15]नृपशार्दूल कुरु कार्यमनन्तरम् ॥ २४ ॥
ब्राह्मणा बलमुख्याश्च [16]नैगमाश्चागता नृप ॥ दर्शनं [17]प्रतिकाङ्क्षन्ते प्रतिबुध्यस्व राघव ॥ २५ ॥
[18]स्तुवन्तं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् ॥ प्रतिबुध्य [19]ततो राजा इदं वचनमब्रवीत् ॥ २६ ॥

---

"राजवाह्यस्त्वौपवाह्यः" इत्यमरः ॥ ११ ॥ माङ्गल्याः मङ्गलार्हाः । वादित्राणि वीणादिचतुर्विधवाद्यानि ॥ १२ ॥ इक्ष्वाकूणांराज्येअभिषेचनमुद्दिश्य यथासंभ्रियेत वस्तुजातमितिशेषः । तथाजातीयं अनर्घरत्नादिवस्तुजातं । आदाय । ते महीपतयः । राजवचनात् राजपुत्राभिषेचनमुद्दिश्य । तत्र राजभवनद्वारे । समवेताः महीपतिमपश्यन्तः राज्ञः कोनु नः प्रतिवेदयेदित्यब्रुवन्नितियोजना ॥ १३—१४ ॥ सज्जः संपन्नसाधनइत्यर्थः ॥ १५—१६ ॥ रामंप्रस्थितः आनेतुमितिशेषः । यस्मात्पूज्यास्तस्मात् । आयुष्मतांयुष्माकंवचनात् राज्ञःसुखंपृच्छामि । यच्चागमनकारणं दर्शनायानागमनहेतुः तं च । अयमविलंबेनपृच्छामि ॥ १७—१८ ॥ पुराणवित् सामन्तराजानुवर्तनरूपपुरातनवृत्तान्तज्ञः । सदाऽसक्तं सर्वदाअनिवारितं ॥ १९ ॥ शयनीयं शयनयोग्यंगृहम् ॥ २० ॥ अत्यासाद्य अतिशयेनप्राप्य । अतिसमीपंप्राप्येत्यर्थः । तिरस्करणिमन्तरा यवनिकामात्रंव्यवधानंकृत्वेत्यर्थः । राघवं दशरथं । पुनःस्तोत्रकरणंसूतस्यविज्ञापनार्थं पूर्वस्तुतेःकुलधर्मत्वात् ॥ २१—२५ ॥ प्रतिबुध्य

---

हरन्ति । ति० अभिषेकपुरस्सरं अभिषेकसामग्रीमुख्यं । ती० अभिषेकपुरस्कृतं प्रक्षालितं ॥ १० ॥ ति० यद्यपिप्रस्थितःतथापि भवन्तोराज्ञोरामस्यचपूज्याइतिकृत्वाऽऽयुष्मतांयुष्माकंवचनात् सर्वेराजानोब्राह्मणादयश्चमहाराजं सुखं सुखशयनंपृच्छन्तीतिविज्ञापयामि । जाग्रतोपिबहिरनागमनकारणंकिमितिचपृच्छन्तीतिविज्ञापयामि ॥ १७–१८ ॥ स० विशां प्रजानां । पतेः पत्युः । ननु-कथं पतेरिति । "पतिस्समासएव" इतिसमासेघिसंज्ञाविधानादितिचेन्न । पतिरित्याख्यातःपतिः । णौटिलोपे "अचइः" इत्यौणादिकइः । अयंपतिशब्दः " पतिस्समासएव " इत्यत्रनगृह्यते । लाक्षणिकत्वात् ॥ २० ॥ ति० तिरस्करणिंअन्तरा कृत्वेतिशेषः ॥ २१ ॥ ति० निगमोवाणिज्यंतत्संबन्धिनोनैगमाः ॥ २५ ॥ ति० प्रतिबुध्य जवनिकान्तर्हितमपिसुमन्त्रंध्वनिनाज्ञात्वा ॥ २६ ॥

[ पा० ] १ क. ख. ग. राज्ञे. २ ङ. छ. झ. ट. सर्वांस्तांश्च. ३ क. ख. ग. ङ. छ. झ. ञ. ट. वाक्यं. ४ घ. राज्ञोनु. ५ च. छ. ज. झ. ञ. ट. ह्यहम्. ६ छ. राज्ञा. घ. भवन्तोराज्ञस्तु. च. झ. ञ. ट. भवन्तश्च. ७ ख. घ. ङ. झ. ट. रामस्यतु. ८ घ. राज्ञस्सुसंप्रबुद्धस्य. ९ ङ. छ. झ. चानागमन. १० ज. तद्द्वारं. ११ क. ख. च. ञ. सुमन्त्रस्स. १२ क. कृतंवेश्म. १३ अयंश्लोकः क. च. ञ. दृश्यते. १४ क. ख. ग. ङ—ट. रात्रिरहश्शिवमुपस्थितम्. घ. रहश्शिवमुपागतम्. १५ क. ग. च. छ. ञ. नरशार्दूल. ङ. झ. ट. राजशार्दूल. १६ ङ. छ. झ. ट. श्चागतास्त्विह. ख. च. ञ. श्चागतानृपाः. १७ क. ख. ग. ङ. च. छ. झ. ञ. ट. तेऽभिकाङ्क्षन्ते. १८ क. तंस्तुवन्तं. छ. स्तुवन्तंच. घ. संस्तुवन्तं. १९ क. ख. तदा.

राममानय सूतेति यदस्म्य[1]भिहितोऽनया ॥ किमिदं कारणं येन ममाज्ञा प्रति[2]हन्यते ॥ २७ ॥
न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ॥ इति राजा दशरथः सूतं तत्रान्वशात्पुनः ॥ २८ ॥
स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ॥ निर्जगाम [3]नृपावासान्मन्यमानः प्रियं महत् ॥ २९ ॥
[4]प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् ॥ हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् ॥ ३० ॥
स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः ॥ अभिषेचनसंयुक्ताः सर्वलोकस्य हृष्टवत् ॥ ३१ ॥
ततो ददर्श रुचिरं कैलासशि[5]खरप्रभम् ॥ [6]रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् ॥ ३२ ॥
महाकवाट[7]विहितं वितर्दिशतशोभितम् ॥ काञ्चनप्रतिमैकाग्रं मणिवि[8]द्रुमतोरणम् ॥ ३३ ॥
शारदाभ्रघनप्रख्यं दी[9]प्तमेरु[10]गुहोपमम् ॥ मणिभिर्वर[11]माल्यानां सुमहद्भिरलंकृतम् ॥ ३४ ॥
मुक्तामणिभिराकीर्णं [12]चन्दनागरुधूपितम् ॥ गन्धान्मनोज्ञान्वि[13]सृजद्दार्दुरं शिखरं यथा ॥ ३५ ॥
सारसैश्च मयूरैश्च विनदद्भिर्विराजितम् ॥ सुकृतेहामृगाकीर्णं [14]सुकीर्णं भक्तिभिस्तथा ॥ ३६ ॥
मनश्चक्षुश्च भूताना[15]माददत्तिग्मतेजसा ॥ चन्द्रभास्करसंकाशं कुबेरभवनोपमम् ॥ ३७ ॥
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ॥ मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह ॥ ३८ ॥
उपस्थितैः समाकीर्णं [16]जनैरञ्जलिकारिभिः ॥ उपादाय समाक्रान्तैस्तथा जानपदैर्जनैः ॥ ३९ ॥

---

ज्ञात्वेत्यर्थः ॥ २६—२७ ॥ कैकेय्युक्तं निद्रापरवशस्यराज्ञोनुमतंनवेतिनसंशयितव्यमित्याह—नचेत्यादिना ॥ २८—२९ ॥ हृष्टः रोमाञ्चाञ्चितगात्रः । प्रमुदितः संजातमानसानन्दः ॥ ३० ॥ रामाधिकरणाः राममधिकृत्यप्रवृत्ताः । हृष्टवत् स्वार्थेवतिः ॥ ३१—३२ ॥ महाकवाटविहितं निर्मितमहाकवाटं । वितर्दिशतशोभितं वेदिकाशतशोभितं । "स्याद्वितर्दिस्तु वेदिका" इत्यमरः । काञ्चनप्रतिमैकाग्रं काञ्चनप्रतिमाभिःएकाग्रंनिरन्तरं । यद्वा काञ्चनप्रतिमाभिःएकानिमुख्यानिअग्राणिशिखराग्राणि यस्मिन् तत्तथोक्तं । मणिविद्रुमतोरणं मणिविद्रुमप्रचुरबहिर्द्वारयुक्तं । "तोरणोस्त्रीबहिर्द्वारं" इत्यमरः ॥ ३३ ॥ शारदाभ्रघनप्रख्यं शारदाभ्रमूर्तिसदृशं । "घनोमेघेमूर्तिगुणेत्रिषुमूर्तेनिरन्तरे" इत्यमरः ॥ ३४ ॥ दार्दुरं मलयसंनिकृष्टश्चन्दनोत्पत्तिस्थानभूतोगिरिर्दर्दुरः तत्संबन्धिदार्दुरं ॥ ३५ ॥ सुकृतेहामृगाकीर्णं द्वारभित्तिस्तंभादिषुसुष्ठु रचितैःईहामृगैः वृकैः आकीर्णं । "कोकस्त्वीहामृगो वृकः" इत्यमरः । भक्तिभिःसुकीर्णं सुष्ठुरचितं॥३६॥ तिग्मतेजसा तीव्रतेजसा । "तिग्मंतीव्रंखरं" इत्यमरः । अतिशयिततेजसेत्यर्थः ॥ ३७ ॥ रामवेश्मददर्शहेतिपुनर्वचनस्यसामान्योक्तस्यविशेषणविशेषकथनार्थत्वान्नपुनरुक्तिः । भगवतोवाल्मीकेरियंहिशैली ॥ ३८ ॥ उपादाय उपायनानीतिशेषः । समाक्रान्तैः

---

**ति०** अनयेतिपाठे अनयेत्युपलक्षणं । मयाचेत्यर्थः । अतएवममाज्ञेतिसंगच्छते । पूर्वराज्ञास्वयमप्युक्तेः । कतकादयस्तु कैकेय्याज्ञैव "अप्रतिषिद्धमनुमतं" इतिन्यायेनममाज्ञा । ननुनिद्रापरवशत्वेनराज्ञोऽनुमतंनवेतिमेसंदेहस्तत्राह—**नचेति** । इतिव्याचक्षते। तेषां इतिराजेतिश्लोकेपुनःपदासंगतिस्स्पष्टैव। पूर्वसर्गान्तेअश्रुत्वाराजवचनमित्यादिननन्दचेत्यन्तश्लोकद्वयस्यसर्वपुस्तकेष्वनुपलंभाच्चतद्व्याख्यानमसंगतमितिध्येयं । **शि०** अनया मद्वाण्या । अभिहितः आज्ञापितोसि । येनकारणेनप्रतिवाह्यते निवर्त्यते । तदिदं किंकारणं । **वि०** " अप्रतिषिद्धमनुमितं " इतिन्यायेनतदाज्ञायाएवमदाज्ञात्वात्सेयंममाज्ञाप्रतिहन्यते नानुष्ठीयते । तत्र कैकेयीनियमितकार्ये । पुनरितिवाक्यालंकारे ॥ २८ ॥ **ति०** शारदाभ्रघनप्रख्यं शारदाभ्रवत्घनप्रख्यंनिबिडप्रभं ॥ ३४ ॥ **ती०** भक्तिभिः वर्धकीनांसूक्ष्मचित्रशिल्पैः । सूत्कीर्णं सुष्ठुउत्निबिडंकीर्णंव्याप्तं ॥ ३६ ॥

**[ पा० ]** १ क—घ. च. ज. झ. ञ. स्म्यभिहितोमया. २ छ. झ. ट. प्रतिवाह्यते. ३ घ. नृपागारात्. ४ च. प्रसन्नो. ५ क. च. ङ. छ. झ. ञ. ट. सदृशप्रभम्. ख. शिखरोपमम्. ६ ख. राजवेश्म. ७ ख—छ. झ. ञ. ट. पिहितं. क. सहितं. ८ ख. विद्रुमभूषितम्. ९ क. ख. ग. ङ—ट. दीप्तमेरु. १० ङ. च. छ. झ. ञ. ट. गुहासमम्. ११ घ. माल्यैश्च. १२ ङ. च. छ. झ. ञ. ट. भूषितम्. १३ च. ञ. न्विदधद्दार्दुरं. १४ ग. ङ. च. छ. झ. ञ. ट. सूत्कीर्णं. घ. संकीर्णंभक्तिभिर्यथा. ख. ग. भित्तिभिस्तथा. १५ ख. आददन्निजयाश्रिया. १६ ख. नरै.

रामाभिषेकसुमुखैरुन्मुखैः समलंकृतम् ॥ महामेघसमप्रख्यमुदग्रं सुविभूषितम् ॥ ४० ॥
नानारत्नसमाकीर्णं कुब्जकैरातकावृतम् ॥ ४१ ॥

स वाजियुक्तेन रथेन सारथिर्नराकुलं राजकुलं विलोकयन् ॥
वरूथिना रामगृहाभिपातिना पुरस्य सर्वस्य मनांसि रञ्जयत् ॥ ४२ ॥
ततः समासाद्य महाधनं महत्प्रहृष्टरोमा स बभूव सारथिः ॥
मृगैर्मयूरैश्च समाकुलोल्बणं गृहं वरार्हस्य शचीपतेरिव ॥ ४३ ॥
स तत्र कैलासनिभाः स्वलंकृताः प्रविश्य कक्ष्यास्त्रिदशालयोपमाः ॥
प्रियान्वरान्राममते स्थितान्बहूनपोह्य शुद्धान्तमुपस्थितो रथी ॥ ४४ ॥
स तत्र शुश्राव च हर्षयुक्ता रामाभिषेकार्थकृता जनानाम् ॥
नरेन्द्रसूनोरभिमङ्गलार्थास्सर्वस्य लोकस्य गिरः प्रहृष्टः ॥ ४५ ॥
महेन्द्रसद्मप्रतिमं तु वेश्म रामस्य रम्यं मृगपक्षिजुष्टम् ॥
ददर्श मेरोरिव शृङ्गमुच्चं विभ्राजमानं प्रभया सुमन्त्रः ॥ ४६ ॥
उपस्थितैरञ्जलिकारकैश्च सोपायनैर्जानपदैश्च मर्त्यैः ॥
कोट्या परार्धैश्च विमुक्तयानैः समाकुलं द्वारपथं ददर्श ॥ ४७ ॥
ततो महामेघमहीधराभं प्रभिन्नमत्यङ्कुशमप्रसह्यम् ॥
रामोपवाह्यं रुचिरं ददर्श शत्रुंजयं नागमुदग्रकायम् ॥ ४८ ॥
स्वलंकृतान्साश्वरथान्सकुञ्जरानमात्यमुख्याञ्शतशश्च वल्लभान् ॥

समागतैः ॥ ३९ ॥ उन्मुखैः उत्सुकैः । उदग्रं उन्नतं ॥४०॥ कुब्जकैरातकावृतं किरातानांस्वल्पशरीरकाणां समूहःकैरातकं । "पृश्निरल्पशरीरःस्यात्किरातःसच कथ्यते" इतिहलायुधः । उपस्थितैःसमाकीर्णमित्यादिकमपिरामवेश्मेत्यनेनसंबध्यते ॥४१॥ वरूथिना रथगुप्तिमता । "रथगुप्तिर्वरूथोना" इत्यमरः । पुरस्य पुरस्थजनस्य । रञ्जयत् अरञ्जयत् ॥ ४२ ॥ समाकुलोल्बणं इतस्ततःसमाकुलैर्जनैरुल्बणं अतिशयेनोल्बणंवा । वरार्हस्य श्रेष्ठवस्त्वर्हस्य । रामस्येतिशेषः ॥ ४३ ॥ अपोह्य अतिक्रम्य । शुद्धान्तं अन्तःपुरं ॥४४॥ रामाभिषेकार्थकृताः रामाभिषेकार्थप्रयुक्ताइत्यर्थः । अभिमङ्गलार्थाः अभितोमङ्गलप्रतिपादनप्रयोजनाः ॥ ४५ ॥ वेश्म रामावासभूतंगृहराजं ॥ ४६ ॥ कोट्या कोटिसङ्ख्यया । परार्धैः परार्धसङ्ख्ययाच । सङ्ख्येयैः । सर्वान्तसङ्ख्यापरार्धः ॥ ४७ ॥ प्रभिन्नं मत्तं । "प्रभिन्नोगर्जितोमत्तः" इत्यमरः ॥ ४८ ॥ वल्लभान् राज-

**ती०** रञ्जयन् समासददित्यध्याहार्यं । ततःसमासाद्येत्युत्तरश्लोकेऽनुवादात् । **ति०** राजकुलं राजमार्गं । विराजयन् शोभयन् ॥ ४२ ॥ **शि०** वरार्हस्य वराणांसर्वश्रेष्ठानांब्रह्मादीनामित्यर्थः । अर्हस्तत्कर्तृकपूजायस्मिंस्तस्यरामस्य ॥ ४३ ॥ **ती०** रामाभिषेकार्थकृतां रामाभिषेकप्रयोजनंकर्मकुर्वन्तीतिरामाभिषेकार्थकृतः तेषांगिरःशुश्रावेतियोजना ॥ ४५ ॥ **ति०** शत्रुंजयं तद्गुणकं तन्नामानंच ॥ ४८ ॥ इतिपञ्चदशस्सर्गः ॥ १५ ॥

[ **पा०** ] १ ङ. च. छ. झ. ञ. ट. सुविराजितम्. २ ङ. च. छ. झ. ञ. ट. कुब्जकैरपिचावृतम्. क. ख. कुब्जवामनिकावृतम्. ३ ङ. छ. झ. ट. समाकुलम्. ४ ग. घ. ज. राजपथं. क. ख. ङ. च. छ. झ. ञ. ट. राजकुलंविराजयन्. ५ ङ. छ. झ. ट. राजगृहाभि. ६ घ. जनस्य. ७ छ. रञ्जयन्. क—ट. हर्षयन्. ८ ख. महान्प्रहृष्ट. ९ ङ. छ. झ. ञ. ट. न्वरान्राम. १० च. छ. झ. ञ. ट. न्व्यपोह्य. घ. ज. नुपेत्य. ११ ग. च. ञ. ट. युक्तो. १२ ग. ङ. छ. झ. ञ. ट. कृतां. १३ क. रपिमङ्गलार्थाः. घ. रभिमन्त्रितार्थाः. छ. रधिमङ्गलार्थाः. १४ घ. ससर्वलोकस्यगिरःप्रहृष्टाः. १५ क. वेश्म. १६ क. च. ञ. मुच्चैर्विभ्राज. ख. मुच्छ्रितं. १७ ङ. च. छ. झ. ञ. ट. कारिभिश्च. १८ क. ङ. च. छ. झ. ञ. ट. पदैर्जनैश्च. ख. पदैश्चमानवैः. १९ ङ. छ. झ. कुलंद्वारपदं. क. ग. ज. कुलद्वारपथं. ख. द्वारपथंददर्शह. २० ङ. च. छ. झ. ञ. ट. मुख्यांश्चददर्श.

व्यपोह्य सूतः सहितान्समन्ततः समृद्धमन्तःपुरमाविवेश ॥ ४९ ॥
तदद्रिकूटाचलमेघसन्निभं महाविमानोत्तमवेश्मसङ्घवत् ॥
अवार्यमाणः प्रविवेश सारथिः प्रभूतरत्नं मकरो यथाऽर्णवम् ॥ ५० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ॥ १६ ॥

सुमन्त्रेणरामसमीपमेत्यतदानयनायस्वस्यदशरथनियोगनिवेदनम् ॥ १ ॥ श्रीरामेणकनकरथाधिरोहिणाछत्रचामरपाणिलक्ष्मणसंसेव्यमानेनकरितुरगादिभिःपरिवार्यमाणेनपौरनारीनरनिकरकृतस्वस्तुतिवचनश्राविणाचसतादशरथावलोकनायराजमार्गेनिर्गमनम् ॥ २ ॥

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् ॥ प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ १ ॥
प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ॥ अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २ ॥
तत्र काषायिणो वृद्धान्वेत्रपाणीन्स्वलंकृतान् ॥ ददर्श विष्ठितान्द्वारि स्त्र्यध्यक्षान्सुसमाहितान् ॥ ३ ॥
ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः ॥ सहसोत्पतिताः सर्वे स्वासनेभ्यः ससंभ्रमाः ॥ ४ ॥
तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः ॥ क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥ ५ ॥
ते राममुपसंगम्य भर्तुः प्रियचिकीर्षवः ॥ सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ६ ॥
प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः ॥ तत्रैवानाययामास राघवप्रियकाम्यया ॥ ७ ॥

प्रियान् ॥ ४९ ॥ अद्रिकूटाचलमेघसन्निभं अद्रिशिखरेणनिश्चलमेघेनचसदृशं । महाविमानोत्तमवेश्मसङ्घवत् महाविमानसहितोत्तमवेश्मसमूहयुक्तं । "विमानोस्त्रीदेवयानेसप्तभूमौचसद्मनि" इतिनिघण्टुः ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने पञ्चदशस्सर्गः ॥ १५ ॥

---

एवंसुमन्त्रस्यरामोपस्थानमुक्त्वारामस्यदशरथोपस्थानमाहषोडशे—सतदित्यादि ॥ १–२ ॥ काषायिणः काषायवस्त्रधारिणः । रामप्रीत्यर्थमलङ्कारकञ्चुकालङ्कृतानित्यर्थः । वृद्धान् पञ्चनवतिवयस्कान् । तेखल्वन्तःपुरेस्थाप्याभवन्ति । वेत्रपाणीन् यथारामोधनुर्धृत्वालोकंरक्षयतितथातेपिवेत्राणिधृत्वारामंरक्षन्तीतिभावः । स्वलङ्कृतान् रामश्चक्रवर्तिगृहेकृतमज्जनोभुक्त्वायदापुनर्दिव्यान्तःपुरमुपयातितदाचक्रवर्तिवदन्तरङ्गतयाच तमुत्सङ्गेनिवेश्यपरिष्वज्यमूर्ध्न्याघ्रायविसर्जयन्ति तेन कुङ्कुमपङ्कैः कस्तूरिकादिदिव्याङ्गरागैश्चालङ्कृतान्स्वलङ्कृतान्रामसीतालङ्कारेभ्योप्ययमलङ्कारोतिशयितइति भावः ॥ ३—४ ॥ प्रकर्षेणदक्षिणः प्रदक्षिणः । सेवानिपुणइत्यर्थः । "दक्षिणेसरलोदारौ" इत्यमरः । तिष्ठतीत्यत्रइतिकरणंद्रष्टव्यं । तिष्ठतीत्याख्यातेत्यन्वयः ॥ ५—६ ॥ प्रतिवेदितं द्वारस्थैर्निवेदितं । पितुःअभ्यन्तरं अन्तरङ्गं । तत्रैव यत्रसीतयासहस्थितःतत्रैवे-

---

**तनि०** । जनाकुलं अभिषेकंद्रष्टुमागतपौरजानपदादिजनसंकुलं । अन्तःपुरद्वारंसमतीत्य । द्वारस्यातिभोग्यतयाक्लेशेनविश्लेषोव्यज्यते । **सत्य०** पुराणवित् पुराणांअणःगतिः गत्यर्थादणतेःभावेअकारप्रत्ययः । तंवेत्तीतिपुराणवित् । अनेनराजभवनकौशलं सूच्यते ॥ १ ॥ **ती०** प्रासकार्मुकबिभ्रद्भिरिति प्रासकार्मुकेत्यत्र "सुपांसुलुक्—"इतिद्वितीयायाल्लुक् । यद्वा प्रासकार्मुकंबिभ्रतीतिप्रासकार्मुकबिभ्रतःतैः । द्विर्वचनमार्षं । **शि०** प्राप्तानिप्रकटीभूतानिकार्मुकाणिधनूंषिबिभ्रतिधारयन्तितैः । कर्मणस्संबन्धसामान्यत्वेनविवक्षणात्षष्ठी । ततः "षष्ठी"इतिविधिनासमासः ॥ २ ॥ **शि०** प्रदक्षिणः मन्त्रादिकर्मस्वतिनिपुणः ॥ ५ ॥ **स०** सभार्याय भार्यासहितायसभासुआर्यायवा सभानांसकान्तीनांअर्यायस्वामिनेवा ॥ ६ ॥ **ति०** प्रियकाम्यया पितुरितिशेषः ॥ ७ ॥

[ **पा०** ] १ ग. घ. च. झ. ञ. ट. माविवेशह. २ ङ. छ. झ. ट. ततोद्रि. क. घ. तदात्रिकूटाचल. ३ ग. ङ. छ. झ. ट. विमानोपम. ४ ख. प्रविभक्तां. ५ ख. माजगाम. ६ च. छ. ट. प्राप्तकार्मुक. ७ झ. ट. स्वानुरक्तै. ८ ङ. झ. ञ. ट. ह्यासनेभ्यः. ९ घ. ज. सुसंभ्रमाः. १० क. च. ञ. ट. सभार्यायच. ११ घ. ज. मभ्यागतं. १२ क—ट. राघवःप्रिय.

तं वैश्रवणसंकाशमुपविष्टं स्वलंकृतम् ॥ ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८ ॥
वराहरुधिराभेण शुचिना च सुगन्धिना ॥ अनुलिप्तं परार्ध्येन चन्दनेन परंतपम् ॥ ९ ॥
स्थि[1]तया पार्श्वतश्चापि वालव्यजनहस्तया ॥ उपेतं सी[2]तया भूयश्चित्रया शशिनं यथा ॥ १० ॥
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ॥ ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥ ११ ॥
प्रा[3]ञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने ॥ राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२ ॥

त्यर्थः । राघवप्रियकाम्यया राघवस्यदशरथस्याप्रियेच्छया । रामइत्यध्याहारः ॥७॥ वैश्रवणसंकाशं तद्वदनवदधिकैश्वर्यसंपन्नं । यथावैश्रवणोदाता "कामेश्वरोवैश्रवणोददातु " इतिश्रुतेः । तथापरिसरवर्तिनांस्वसौन्दर्यानुभवसर्वस्वंददातीत्यर्थः । उपविष्टं "सहपत्न्या विशालाक्ष्यानारायणमुपागमत् " इत्युक्तरीत्याभगवद्ध्यानपरतयाऽवस्थितं । स्वलङ्कृतं ध्यानानुकूलाञ्जलियुक्तं । दिव्यमालालङ्कृतंवा । तंसूतोददर्श । उत्कर्षकाष्ठाभूमिभूतंरामंनिकर्षसीमाभूमिभूतोददर्श कोयं भाग्यातिशयइतिभावः । पर्यङ्के तादृशैश्वर्यसामग्र्यनुरूपापूर्वसंस्थानप्रतिमाविशेषविशिष्टपर्यङ्के । अतएव ह्युत्तरत्र " पर्यङ्कमग्र्यास्तरणंनानारत्नविभूषितं । तमपीच्छतिवैदेहीप्रतिष्ठापयितुंत्वयि" इतिसुयज्ञेतत् स्थापयिष्यति । सौवर्णेउपर्युपविष्टसदृशे । काञ्चनगिरिःकालमेघमिवरामंभासयतीत्यर्थः । सोत्तरच्छदे पुष्पहाससुकुमाररामदेहानुगुणमृदुतरास्तरणयुक्ते । पर्यङ्कविद्योक्तरीत्यामुक्तानुभाव्यदिव्यवेषमहोसूतोन्वभूदितिसौशील्यातिशयोक्तिः ॥ ८ ॥ "स्रक्चन्दनवनिताः" इत्युक्तभोग्यवस्तुष्वादौदिव्यमाल्ययोगमुक्त्वा दिव्यचन्दनयोगंदर्शयति—वराहरुधिराभेणेति। वराहरुधिरमतिरक्तवर्णमिति प्रसिद्धं तत्सदृशेन कुङ्कुममिश्रतयेतिभावः । सीताकरकमलानुलिप्ततयातत्कान्तिमिश्रत्वमुच्यते। शुचिनासीताकरस्पर्शपूतेन । तत्करस्पर्शकृतशैत्यविशेषंसमुच्चिनोतिचशब्दः । सुगन्धिना "सर्वगन्धः" इत्यस्याश्रियोप्यविशेषात्तत्करस्पर्शजनितनिरवधिकगन्धेन परार्ध्येन कान्तानुलिप्ततयाश्रेष्ठेन । चन्दनेन अनुलिप्तं पश्चाल्लिप्तं । अनेनसीताङ्गरागकरणानन्तरत्वंगम्यते । परंतपं एतादृशसौन्दर्यानुभवविरोधिनिवर्तकं ॥ ९ ॥ अथाप्राकृतवनितायोगंदर्शयति—स्थितयेति । चापीतिनिपातौ पूर्वोक्तसमुच्चये । पार्श्वतःस्थितया चन्दनानुलिप्तगात्रंकान्तंकृत्वा वालव्यजनं हस्तेकृत्वा पार्श्वेस्थितया । सीतया भूयः उपेतं विनयेनपार्श्वतश्चामरमुपवीज्य पुनस्तात्कालिकसुषमाविशेषबलात्कारेणगाढमाश्लिष्टं । भूयइत्यत्रविराजमानमितिशेषइत्यप्याहुः । तदानीन्तनातिशयंदृष्टान्तमुखेनस्पष्टीकरोति—चित्रयेति । चैत्रपौर्णमास्यांचित्राख्यतारकयोपेतंउदितंशशिनमिवस्थितं । चित्रयेत्यनेनतत्कृतातिशयउक्तः । उपेतमित्यनेनरक्तवर्णत्वं शशिनमित्यनेनसीतालिङ्गनोन्मृष्टचन्दनवक्षस्कत्वमुक्तं । एवंभूतंददर्शेतिदृष्टिसाफल्यमुक्तं ॥ १० ॥ शिरसोवाचश्चसाफल्यमाह—तमिति । ववन्दइतिशिरसःसाफल्यमुक्तं । वन्दीतिवाक्साफल्यं । वरदं स्वानुभवरूपवरप्रदं । विनीतवत् विनीतो यथासाष्टाङ्गंवन्दते तथेत्यर्थः ॥११ ॥ विहारशयनासनइतिद्वन्द्वैकवद्भावः ।

शि० वराहरुधिराभेण वरमतिश्रेष्ठं नजहातिप्रयत्नमन्तराअनुलेपनकर्तॄन्नत्यजतीत्यहम् रुधिराअरुणाआभायस्यतत् त्रयाणां कर्मधारयः । तेन ॥ ९ ॥ ती० स्थितयेत्यत्रभूयश्शब्दप्रयोक्तुरयमभिप्रायः । यःकेवलएवसकललोकहृदयानिहरति सः सीतयासहितःकिंपुनरिति । ति० भूयः वारंवारंददर्शेत्यन्वयः । तथाभूतस्यदर्शनेतृप्त्यभावात् ॥ १० ॥ तनि० । आदित्यमित्येकत्वमविवक्षितं । दिविसूर्यसहस्रेतिवाक्यान्तरानुरोधात् । यद्वा आदित्यमिवेत्युक्तेविवक्षितसिद्धावपितपन्तमादित्यमिवेत्युक्त्यायुगपदुदितरविसहस्रसमुदिततेजःपुञ्जमिवतपन्तमितिलभ्यते । तेनाभूतोपमाव्यज्यते । स्वतेजसेति स्वाभाविकासाधारणतेजसा नत्वन्यकृतेनान्यसाधारणेनचेत्यर्थः । तपन्तमादित्यमिवतेजसोपपन्नमितिसंबन्धः । इन्दीवरश्याममितिस्वभावतश्श्यामवर्णस्यादित्यवर्णत्वोक्त्याप्रदीपेवर्त्यन्तरस्थितनीलव्यक्तिवत्परितःप्रसृतशुक्लभास्वरतेजःपुञ्जवत्त्वविग्रहकान्त्योर्व्यवस्थितिर्द्योत्यते । तंवैश्रवणेत्यारभ्य स्वतेजसेत्यन्तेन ध्येयशुभाश्रयाकारविशेषोव्यज्यते । शि० स्वतेजसा स्वनित्यप्रकाशेन उपपन्नं युक्तं । अतएवादित्यमपितपन्तं प्रकाशयन्तं तं रामं विनीतवत् विनीतंविनयवचनं वनति रचयतिउच्चारयतीत्यर्थः । सवन्दीसुमन्त्रोववन्दे ॥ ११ ॥ शि० विहारशयनासने विहारशयनायआसनंतस्मिन् । स्थितमितिशेषः।राज्ञएकान्तविहारशयनासनेषुराजसत्कृतःसुमन्त्रःराज्ञएकान्तविहारादिष्व-

[ पा० ] १ घ. सीतया. २ घ. स्थितया. ३ ङ. च. छ. झ. ञ. ट. सुमुखंदृष्ट्वा.

कौसल्या सुप्रजा राम पिता त्वां द्रष्टुमिच्छति ॥ महिष्या सह कैकेय्या गम्यतां तत्र मा चिरम् ॥ १३ ॥
एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः ॥ ततः संमानयामास सीतामिदमुवाच ह ॥ १४ ॥
देवि देवश्च देवी च समागम्य मदन्तरे ॥ मन्त्रयेते ध्रुवं किंचिदभिषेचनसंहितम् ॥ १५ ॥
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा ॥ संचोदयति राजानं मदर्थं मदिरेक्षणे ॥ १६ ॥
सा प्रहृष्टा महाराजं हितकामाऽनुवर्तिनी ॥ जननी चार्थकामा मे केकयाधिपतेः सुता ॥ १७ ॥
दिष्ट्या खलु महाराजो महिष्या प्रियया सह ॥ सुमन्त्रं प्राहिणोद्दूतमर्थकामकरं मम ॥ १८ ॥
यादृशी परिषत्तत्र तादृशो दूत आगतः ॥ ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १९ ॥
हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् ॥ सह त्वं परिवारेण सुखमास्स्व रमस्व च ॥ २० ॥
पतिसंमानिता सीता भर्तारमसितेक्षणा ॥ आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ २१ ॥

---

विहारः गतिः ॥ १२ ॥ सुप्रजाः त्वयेतिशेषः । यद्वा कौसल्यायाः सुप्रजः सुपुत्र । असिच्प्रत्ययान्तः ॥ १३ ॥ संमानयामास सूतमितिशेषः ॥ १४ ॥ मदन्तरे मदर्थे । "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यमरः । अभिषेचनसंहितंअभिषेचनसंबन्धि । मदर्थं किंचिन्मन्त्रयेते विचारयतः ॥ १५ ॥ महिष्यासहेत्युक्त्योन्नेयमर्थंदर्शयति—लक्षयित्वेति । सुदक्षिणा सुकुशला । अतएवराज्ञोभिप्रायंलक्षयित्वा वृद्धत्वाद्धरतागमनपर्यन्तंनविलंबःकार्यइतिराजाशयंज्ञात्वा । मत्प्रियकामासती राजानंप्रति । मदर्थं मदभिषेकं । संचोदयति । एतदानुकूल्यंत्वत्सौभाग्यफलमित्याह—मदिरेक्षणइति ॥ १६ ॥ संदिग्धोक्तिजनितांसीताशङ्कांवारयति—सेति । प्रहृष्टा मयीतिशेषः । हितकामा लोकस्येतिशेषः । महाराजं भर्तारं । अनुवर्तिनी मे अर्थकामा भवतीतिशेषः ॥ १७—१८ ॥ तत्र अन्तःपुरे । यादृशीपरिषत् परिसरवर्तीजनः । तादृशः तत्तुल्यःदूतः ॥१९॥ हन्तेतिहर्षे । परिवारेण परिचारिकासङ्घेन । रमस्व वृत्तकीर्तनेनरताभव ॥२०॥ अथसीता रामस्यसौन्दर्यालंकृतिविशेषानालोक्यकिंवाभविष्यतीतिकलुषितहृदया तस्मैमङ्गलमाशासानाऽनुव्रजति—पतिसंमानितेति । पतिसंमानिता पत्यास्वकण्ठादुन्मुच्यआमुक्तमुक्तामालिकेत्यर्थः । पादपल्लवस्पर्शपूर्वकंसान्त्वितेतिभट्टारकाः । तदर्हत्वज्ञापनायतद्वैलक्षण्यंदर्शयति—सीतेति । सीता लाङ्गलपद्धतिः । तज्जत्वात्सीता । अयोनिजाभावेनस्वस्माद्विलक्षणायांतस्यांतादृशीप्रीतिरुचितैवेतिभावः । असितेक्षणा रामेणमालायांदत्तायामियमपिलोचनाभ्यांकुवलयमालांदत्तवती । भर्तारमाद्वारमनुवव्राज ।

---

पित्समीपवर्तीत्यर्थः ॥ १२ ॥ **शि०** येनभवताकौसल्यासुप्रजाः शोभनपुत्रा तंत्वां । येनभवतेतिशेषः ॥ १३ ॥ **शि०** ततः तं द्वितीयान्तात्तसिः । सूतं । संमानयामास त्वदुक्तंमयास्वीकृतमितिकथयामासेत्यर्थः । सीतांचेदमुवाच । हश्चार्थे ॥ १४ ॥ **ति०** अत्रअभिषेचनसंहितं तत्संबद्धं अभिषेकद्वारकमितियावत् । किंचित् वनगमनरूपंतद्विरुद्धं । संप्रत्येवास्माभिश्चिन्त्यमानंमन्त्रयेतेइत्यप्यर्थोगर्भितोज्ञेयः ॥ १५ ॥ **ति०** लक्षयित्वेत्यादिभिरष्टभिश्श्लोकैरर्थान्तरमपिगर्भितम् । तथाहि । **[ अर्थान्तरं ]** अभिप्रायं ममरावणवधरूपं । अन्तर्यामिप्रेरणयालक्षयित्वा । अनेनमत्प्रेरणयैवतस्याएवंप्रवृत्तिरितिसूचितं । ममदेवानांजगतश्चप्रियकामा राज्ञश्चान्तकालेनिरन्तरंमद्ध्यानसंपादनेनप्रियकामा । अतएवसुदक्षिणा समर्था । राज्ञआपाततोविपरीतत्वेपिजगतःप्रियत्वेनराज्ञोपिपर्यन्तसुखदत्वेनतद्वाक्यंकथनेसमर्था । अतएवप्रहृष्टा ममहितकामा । तदर्थमवतारग्रहणाद्धितंकाम्यंच तदनुवर्तनशीला । अतएवमेऽर्थकामामदवतारप्रयोजनसिद्धिकामा । महाराजं राजानं । मदर्थं मदवतारप्रयोजनरावणवधफलकवनगमनार्थं । त्वरयतीत्यर्थः ॥ १६ ॥ **शि०** किंच साप्रहृष्टा आप्रहृष्टाभिःअतिहर्षविशिष्टाभिःसखीभिःसहिता । **सत्य०** प्रयोजनकामेतिप्रयोक्तव्ये यदर्थकामेतिपुनःपुनराह । तेनमन्निवृत्तिकामेत्यर्थोरामस्यसंमतः साप्रहृष्टेत्यत्रअप्रहृष्टेतिपदभङ्गश्चसंमतइतिज्ञायते ॥ १७ ॥ **ति०** **[ अर्थान्तरं ]** अर्थकामकरं मत्कामविषयार्थकरंयथाभवतितथाप्राहिणोत् ॥ १८ ॥ **ती०** तत्र अन्तःपुरे । यादृशी मदर्थैकप्रयोजनापरिषत् । तादृशःमदर्थैकप्रयोजनः । अभिषेक्ष्यति मत्कर्मकाभिषेकानुकूलव्यापारंकरोतीत्यर्थः । अभिषेक्ष्यतीत्यत्रलृङ्पात्तभविष्यत्कालस्याविवक्षा । **ति०** **[अर्थान्तरं]** तादृशः हृष्टोद्विग्नचित्तः । एतदीयेनैवहृष्टोद्विग्नचित्तत्वेनतत्परिषदस्तत्त्वानुमानं । यौवराज्ये देवर्षिपरिपालनफलके ॥ १९ ॥ **ति०** **[ अर्थान्तरं ]** मङ्गलान्यभिदध्युषी प्रस्थानमङ्गलान्यभिध्यायन्ती । **सत्य०**

**[ पा० ]** १ क. ख. ग. घ. ज. देव. २ ङ. छ. झ. महिष्यापिहि. ३ ख. ज. ततस्तं. ४ ख. ग. ज. संयुतम्. ५ ङ. च. छ. झ. मदर्थमसितेक्षणा. ६ ग. च. कामपरं. ७ क. ज. मङ्गल्यान्यभि.

राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम् ॥ कर्तुमर्हति ते राजा वासवस्येव लोककृत् ॥ २२ ॥
दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम् ॥ कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥ २३ ॥
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः ॥ वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥ २४ ॥
अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः ॥ निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ २५ ॥
पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः ॥ लक्ष्मणं द्वारि सोपश्यत्प्रह्वाञ्जलिपुटं स्थितम् ॥ २६ ॥
अथ मध्यमकक्ष्यायां समागम्य सुहृज्जनैः ॥ स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च ॥ २७ ॥
ततः पावकसंकाशमारुरोह रथोत्तमम् ॥ वैयाघ्रं पुरुषव्याघ्रो राजतं राजनन्दनः ॥ २८ ॥
मेघनादमसंबाधं मणिहेमविभूषितम् ॥ मुष्णन्तमिव चक्षूंषि प्रभया सूर्यवर्चसम् ॥ २९ ॥
करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः ॥ हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् ॥

आलानमनवरतंहृदयेबिभ्रतोरामस्यविरहासहतयास्वगमनयोग्यदेशपर्यन्तमनुजगाम । मङ्गलान्यभिदध्युषी अभिध्यायन्ती । किमस्यसौन्दर्यस्यहानिर्भविष्यतीति कलुषितहृदयामङ्गलाशासनपूर्वकमनुवव्राज ॥ २१ ॥ मङ्गलाभिध्यानमेवदर्शयति—राज्यमिति । द्विजातिभिः ब्राह्मणैः । जुष्टं सेवितं । राजसूयाभिषेचनं राजसूययागेयोभिषेकः "अथाभिषिच्यते" इत्युच्यमानः तदर्हं । अनेनमहाराज्यवत्त्वंगम्यते । कर्तुं दातुं । लोककृत् ब्रह्मा ॥ २२ ॥ दीक्षितं सकृष्णाजिनं । नवनीताभ्यक्तंयजमानवेषंद्रष्टुमिच्छामीत्याह व्रतसंपन्नम् । ऋषिणोपवस्तव्यमित्युक्तेममसौकुमार्यानुगुणमेवमुक्तमितिमत्वाचतुर्गुणमुपवासंकरोतिश्रद्धया । तदाह संपन्नमिति । वराजिनधरं वस्त्रधारणादप्यजिनधारणस्योत्कर्षउच्यते । शुचिं कामपिस्त्रियंमास्पृश धर्मपत्नीत्वेनसीतास्पर्शे न दोषः इतिमुनिनोक्तेऽपिशङ्कया सीतावस्त्रदशास्पर्शेपिस्नानंकरोति । कुरङ्गशृङ्गपाणिंच एकवस्त्रधरोधन्वीत्येतदपेक्षयाकण्डूयनार्थं कृष्णविषाणकृतशोभातिशयउच्यते । पश्यन्तीत्वांभजाम्यहं भाविफलापेक्षायांकृतायामन्तरालिकफलमर्थसिद्धमेव । अतोभिषेकान्तरायविरहोनप्रार्थितः । यथासावित्री भर्तारं दर्शयित्वाऽनेनाहमनेकपुत्रास्यामित्यर्थितवती तेनसिद्धंभर्तुःपूर्णायुःप्रार्थनं तद्वत् । पश्यन्तीति हेतौशतृप्रत्ययः । दर्शनार्थमित्यर्थः । दर्शनार्थंहिभगवन्तंभजन्ते । अतइयमपितथैवाह ॥ २३ ॥ उत्तरांदिशमित्यनन्तरं इतिमङ्गलान्यभिदध्युषीतियोज्यं । भर्तृविषयत्वेननवाचोक्तवतीतिभावः ॥ २४ ॥ कृतकौतुकमङ्गलः अनुष्ठिताभिषेकार्थमङ्गलः ॥ २५ ॥ द्वारि प्रथमद्वारि । प्रह्वाञ्जलिपुटं अञ्जलिपुटोस्यास्तीत्यञ्जलिपुटः । मत्वर्थीयोच्प्रत्ययः । प्रह्वश्चासावञ्जलिपुटश्चेतिकर्मधारयः । तं ॥ २६ ॥ अथेत्यादिश्लोकद्वयं । अर्थिनः रामदर्शनार्थिनः । अभिषेकार्थिनोवा । वैयाघ्रं व्याघ्रचर्मपरिवृतं । "द्वैपवैयाघ्रादञ्" इत्यञ् । राजतं रजतविकारं । राजन्तमितिचपाठः ॥ २७–२८ ॥ मेघस्येवनादोयस्यसमेघनादस्तं । असंबाधं संबाधरहितं । उचितविस्तारमित्यर्थः ॥ २९ ॥ करेणुशि-

अभिदध्युषीत्यार्षं ॥ २१ ॥ **ति० [ अर्थान्तरं ]** तदेवाह—**राज्यमिति** । द्विजातिभिः आश्रमस्थैर्ऋषिभिः जुष्टं । राज्यं वनेराज्यं । तथाराजसूयाभिषेचनं सर्वतोबलवान्सर्वपीडकोराजासूयतेकण्ड्यतेयत्रतादृशकर्मण्यभिषेकंकर्तुमर्हति ॥ २२ ॥ **ति० [अर्थान्तरं]** तदेवमनसाभिलषति—**दीक्षितमित्यादि** । तत्रराजसूयेदीक्षितत्वादिधर्मकंत्वांपश्यन्तीअहंत्वांभजिष्येइत्यर्थः । अनेनाहमपित्वयासहवनंयास्यामीतिसूचितं । अत्रराजसूयाभिषेचनंकर्तुमर्हतीत्यनेनसंकल्पेनदीक्षितमित्यादिसंकल्पेनमदुक्तार्थगर्भितत्वमेषांश्लोकानांसूचितं । अन्यथासत्यसंकल्पायाभगवत्याअग्रेकदापिरामेणराजसूयाननुष्ठानादीदृशसंकल्पविषयार्थासिद्ध्यातत्त्वं भज्येत । वक्तृश्रोत्रोस्सीतारामयोर्वैशिष्ट्याच्चेदृशार्थावगतिर्बोध्या ॥ २३ ॥ **ति०** प्रह्वाञ्जलिपुटं प्रह्वत्वसूचकाञ्जलिपुटवन्तं ॥ २६ ॥ **ति०** राजितं शोभावन्तं ॥ २८ ॥ **ति०** मेरुवर्चसमित्यनेनरथस्यसौवर्णत्वंध्वन्यते ॥ २९ ॥ **ति०** करेणुशिशवःकलभाः । अनेनहृष्टपुष्टोन्नतमहाबलवत्त्वंसूचितं । इन्द्रः परमैश्वर्यवान् सहस्राक्षइव । नानाविधदेहवर्त्याभरणस्थरत्नसमूहैःरामस्यसहस्राक्षत्वं

**[ पा० ]** १ घ. श्वोत्तरां. २ छ. ट. पुटस्थितम्. ३ च. समागच्छन्सु. क—ङ. छ—ट. समागच्छत्सु. ४ ख. सर्वार्थिजनान्दृष्ट्वा. ५ क—घ. राजन्तं. ङ. छ. झ. राजितं. घ. राजन्तंराजसत्तमः. ६ ट. मणिस्तोम. ७ ङ. छ. झ. ट. मेरुवर्चसम्. ख. ग. घ. ज. हेमवर्चसम्.

प्रययौ तूर्णमास्थाय राघवो ज्वलितः श्रिया ॥ ३० ॥
स पर्जन्य इवाकाशे स्वनवानभि[१]नादयन् ॥ निकेतान्निर्ययौ श्रीमान्म[२]हेन्द्रादिव चन्द्रमाः ॥ ३१ ॥
छत्र[३]चामरपाणिस्तु लक्ष्मणो राघवानुजः ॥ जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः ॥ ३२ ॥
ततो हलहलाशब्दस्तुमुलः समजायत ॥ तस्य निष्क्रममाणस्य जनौघस्य समन्ततः ॥ ३३ ॥
ततो हयवरा मुख्या नागाश्च गिरिसन्निभाः ॥ अनुजग्मु[४]स्तदा रामं शतशोथ सहस्रशः ॥ ३४ ॥
अग्रतश्चास्य सन्नद्धाश्चन्दनागरु[५]रूषिताः ॥ खड्गचापधराः शूरा जग्मुराशंसवो जनाः ॥ ३५ ॥
ततो वादित्रश[६]ब्दास्तु स्तुति[७]शब्दास्तु वन्दिनाम् ॥ सिंहनादाश्च शूराणां [८]तदा शुश्रुविरे पथि ॥३६॥
हर्म्यवातायनस्थाभिर्भूषिताभिस्समन्ततः ॥ कीर्यमाणः सु[९]पुष्पौघैर्ययौ स्त्रीभि[१०]रिंरदमः ॥ ३७ ॥
रामं सर्वानवद्याङ्ग्यो रामपिप्री[११]षया ततः ॥ वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे ॥ ३८ ॥
नूनं नन्दति ते माता कौसल्या मातृनन्दन ॥ पश्यन्ती सिद्धयात्रं त्वां पित्र्यं [१२]राज्यमवस्थितम् ॥३९॥
सर्वसीमन्तिनीभ्यश्च [१३]सीतां सीमन्तिनीं वराम् ॥ अमन्यन्त हि ता नार्यो रामस्य हृदयप्रियाम् ॥४०॥
तया सुचरितं देव्या पुरा नूनं महत्तपः ॥ रोहिणीव शशाङ्केन रामसंयो[१४]गमाप या ॥ ४१ ॥
इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः ॥ शुश्राव राजमार्गस्थः प्रिया वाच उदाहृताः ॥ ४२ ॥

स राघवस्तत्र कथा[१५]प्रपञ्चाञ्शुश्राव लोकस्य समागतस्य ॥
आत्माधिकारा विविधाश्च [१६]वाचः प्रहृष्टरूपस्य [१७]पुरो जनस्य ॥ ४३ ॥

शुकल्पैः कलभसदृशैः ॥ ३० ॥ आकाशेस्वनवान् नादवान् । पर्जन्यइव मेघइव । "पर्जन्यौरसदब्देन्द्रौ" इत्यमरः । अभिनादयन् रथेनदिशइतिशेषः । महेन्द्रशब्दउदयाद्रिपरः ॥ ३१ ॥ छत्रचामरपाणिरिति । एकहस्तेनछत्रंअपरहस्तेनचामरंचधारयन्नित्यर्थः । जुगोपभ्रातपादिभ्यइतिभावः ॥ ३२ ॥ हलहलाशब्दः कलकलाशब्दः । तस्यनिष्क्रममाणस्य तस्मिन्निष्क्रममाणेसति । जनौघस्यहलहलाशब्दइत्यन्वयः ॥ ३३ ॥ हयनागशब्दौतदारूढपरौ ॥ ३४ ॥ रूषिताः लिप्ताः । आशंसवः रामश्रेयआशंसमानाः ॥ ३५ ॥ ततः तत्रवीथ्यां । तदा निर्गमनकाले ॥ ३६ ॥ हर्म्यवातायनस्थाभिः प्रासादगवाक्षस्थाभिः ॥ ३७ ॥ रामपिप्रीषया रामप्रीणनेच्छया । ववन्दिरे तुष्टुवुः । वदिअभिवादनस्तुत्योरितिधातुः ॥ ३८ ॥ स्तुतिप्रकारमेवाह—नूनमित्यादि । नन्दतीत्यत्रेतिकरणंद्रष्टव्यं । तस्यववन्दिरइतिपूर्वेणसंबन्धः । सिद्धयात्रं सफलगमनं । अतएवपित्र्यंराज्यं अवस्थितं अधिष्ठितं ॥ ३९ ॥ उत्तरश्लोकार्थहेतुत्वेनाह—सर्वेति । हि यस्मात्कारणात् । एवं तस्मात् तयासुचरितमित्युक्तरीत्याप्रमदाभिरुदीरिताइतियोजना ॥ ४०—४२ ॥ कथाप्रपञ्चान् लौकिककथाविस्तारान् । आत्माधिकाराः आत्मानमधिकृत्यप्रवृत्ताः ।

बोध्यं ॥ ३० ॥ ति० चित्रचामरेति चित्रदण्डयुक्तचामरेत्यर्थः । चन्द्रचामरेतिपाठेचन्द्रवच्छ्वेतचामरेत्यर्थः ॥ ३१ ॥ शि० निष्क्रममाणस्यजनौघस्यहलहलाशब्दःसमजायत ॥ ३३ ॥ शि० आशंसवःवंशादिप्रशंसकाः । ति० आशंसवः भद्रमितिशेषः ॥ ३५ ॥ शि० शुश्रुविरे जनैरितिशेषः ॥ ३६ ॥ ति० उपस्थितं प्राप्तवन्तं ॥ ३९ ॥ ति० सीता सीमन्तिनीषु वरा श्रेष्ठाइत्यमन्यन्तेत्यन्वयः । शि० हिताः तत्रप्राप्ताः । नार्यः रामस्यहृदयप्रियांसीमन्तिनींसीतां सर्वसीमन्तिनीभ्योवरांअमन्यन्त अकथयन्तेत्यर्थः ॥ ४० ॥ शि० प्रासादशृङ्गशब्दःक्षितेरप्युपलक्षकः । अतएवोपक्रमेणनवैरूप्यं ॥ ४२ ॥

[ पा० ] १ क. नन्दयन्. २ क—ञ. ट. महाभ्रादिव. ३ ख. ङ. च. झ. ञ. ट. चित्र. छ. चन्द्र. ४ झ. ट. जग्मुस्तथा. ५ च—झ. ट. भूषिताः. ६ क. ग—छ. झ. ञ. ट. शब्दाश्च. ७ क. ख. ग—छ. झ. ञ. ट. शब्दाश्च. ८ ङ. च. छ. झ. ञ. ट. ततः. ज. तथा. ९ क. सपुष्पौघैः. १० ख. स्त्रीभिस्समन्ततः. ११ ख. प्रियचिकीर्षया. १२ ङ. च. छ. झ. ञ. ट. मुपस्थितम्. १३ झ. सीतासीमन्तिनीवरा. १४ क. च. ञ. ट. मापसा. १५ छ. झ. ट. तदाप्रलापान्. क—घ. च. ज. ञ. कथाप्रलापान्. १६ ग. वाचाः. १७ क. ग. घ. ङ—ञ. पुरे.

एष श्रियं गच्छति राघवोद्य राजप्रसादाद्विपुलां गमिष्यन् ॥
एते वयं सर्वसमृद्धकामा येषामयं नो भविता प्रशास्ता ॥ ४४ ॥
लाभो जनस्यास्य यदेष सर्वं प्रपत्स्यते राष्ट्रमिदं चिराय ॥
न ह्यप्रियं किंचन जातु कश्चित्पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥ ४५ ॥
स घोषवद्भिश्च हयैर्मतङ्गजैः पुरस्सरैः स्वस्तिकसूतमागधैः ॥
महीयमानः प्रवरैश्च वादकैरभिष्टुतो वैश्रवणो यथा ययौ ॥ ४६ ॥
करेणुमातङ्गरथाश्वसंकुलं महाजनौघप्रतिपूर्णचत्वरम् ॥
प्रभूतरत्नं बहुपण्यसंचयं ददर्श रामो रुचिरं महापथम् ॥ ४७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ॥ १७ ॥

रथमास्थितेनरामेणनगररामणीयकतामवलोकयतासुहृदामाशिषस्तुतीश्चसमुपशृण्वतासकलजनमनोनयनापकर्षिणाचसता दशरथसदनमेत्यपरिजननिवर्तनपूर्वकंनृपसमीपगमनम् ॥ १ ॥

स रामो रथमास्थाय संप्रहृष्टसुहृज्जनः ॥ पताकाध्वजसंपन्नं महार्हागरुधूपितम् ॥
अपश्यन्नगरं श्रीमान्नानाजनसमाकुलम् ॥ १ ॥
स गृहैरभ्रसंकाशैः पाण्डुरैरुपशोभितम् ॥ राजमार्गं ययौ रामो मध्येनागरुधूपितम् ॥ २ ॥

---

पुरः पुरस्य । संबन्धिनोजनस्य ॥ ४३ ॥ श्रियंगमिष्यन्गच्छति श्रियंप्राप्तुंगच्छति ॥ ४४ ॥ अस्यजनस्यायमेवलाभः यदेषसर्वंराष्ट्रंप्रपत्स्यते । अस्मिन्मनुजाधिपेसति कश्चित् जातु कदाचित् । किंचनाप्यप्रियं प्रियाभावं । दुःखं अनिष्टंच । नपश्येत् ॥ ४५ ॥ स्वस्तिकसूतमागधैः स्वस्तिकाः जयजयेतिमङ्गलंप्रयुञ्जानाः । बन्दिनइत्यर्थः । सूताः ब्राह्मण्यांक्षत्रियाज्जाताः । सारथ्येस्तुतिकर्मणिचनियुक्ताः । "ब्राह्मण्यांक्षत्रियात्सूतः" इत्यमरः । मागधाः क्षत्रियायां वैश्याज्जाताः । राज्ञांप्रबोधनकर्मणिनियुक्ताः "मागधःक्षत्रियाविशोः" इत्यमरः ॥ ४६ ॥ रामोमहापथंददर्शेत्यन्वयः ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने षोडशःसर्गः ॥ १६ ॥

---

अथरामस्यराजसमीपगमनंसप्तदशे—सरामइत्यादि । पताकाध्वजसंपन्नं पताकाः अनामाङ्किताः । तदङ्कितानि ध्वजानि ॥ १ ॥ मध्येन वीथीमध्येन । प्रकृ-

---

**शि०** सूताः पौराणिकाः । मागधाः वंशप्रशंसकाः ॥ ४६ ॥ इतिषोडशस्सर्गः ॥ १६ ॥

**ती०** पताकाध्वजसंपन्नं । पताकाभिः नामाङ्किताभिः । ध्वजैः गरुडादिचिह्नितैः । **सत्य०** संप्रहृष्टसुहृज्जनः संप्रहृष्टाः सम्यक्प्रहर्षिताः । अन्तर्णीतण्यर्थोयंप्रहृष्टशब्दः । सुहृदःशोभनमनस्काःजनायेनेतिवा । रामस्सइत्यनुक्त्वाउक्त्वाचसराम-इतिसदासदारएवरघूदारइतिभावमाविश्चकारकविरितिज्ञेयम् । पताकाध्वजसंपन्नं पताकासौभाग्यंतस्याःध्वजाःतत्सूचकाःकेतवः । "पताकावैजयन्त्यांस्यात्सौभाग्येनाटकाङ्कयोः" इतिमेदिनी । "ध्वजःपताकाकेतुश्च" इतिधनञ्जयः । पताकाःअनामाङ्किताः तदङ्कितानिध्वजानि तैर्गरुडादिचिह्नैः इत्युभयव्याकरणेनिर्मूलभावादालोचनीये । श्रीमान् रामः । नानाजनसमाकुलं नाना नानाविधाः अजनाः जनं जन्म नविद्यतेजननंयेषांतेअजनाः तदुपलक्षितजरामरणादिरहिताःमुक्तास्तैस्समाकुलंनगरंयथेत्युत्तरादाकृष्यते । प्रादुर्भावार्थाज्जनेः "हलश्च" इति घञि "जनिवध्योश्च" इतिवृद्धिनिषेधेजनेतिरूपं । जनंजननंअर्दयतीतिजनार्दनइतिगीताभाष्योक्तेः । तथाचमुक्तस्थानंस्वधामेवरामोनगरमिदंददर्शेतिदृष्टान्तदार्ष्टान्तिकतयावायोजनाद्रष्टव्या । सम-

[ **पा०** ] १ क. भविताद्य. २ ख. ङ. च. छ. झ. ञ. ट. हयैःसनागैः. क. ग. घ. ज. हयैश्चनागैः. ३ ख. ङ. च. झ. ट. वादिकैः. ४ ङ—झ. ट. जनौघैःपरिपूर्ण. ५ क. ङ. ज. पुण्य. ६ ङ. च. छ. झ. ञ. ट. विमलम्. ७ ग. घ. ज. संप्रहृष्टः. ८ ख. संपूर्ण. ९ ङ. छ. झ. ट. समन्वितम्.

चन्दनानां च मुख्यानामगरूणां च संचयैः ॥ उत्तमानां च गन्धानां क्षौमकौशांबरस्य च ॥ ३ ॥
अविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि ॥ शोभमानमसंबाधैस्तं राजपथमुत्तमम् ॥ ४ ॥
संवृतं विविधैः पण्यैर्भक्ष्यैरुच्चावचैरपि ॥ ददर्श तं राजपथं दिवि देवपथं यथा ॥ ५ ॥
दध्यक्षतहविर्लाजैर्धूपैरगरुचन्दनैः ॥ नानामाल्योपगन्धैश्च सदाऽभ्यर्चितचत्वरम् ॥ ६ ॥
आशीर्वादान्बहूञ्शृण्वन्सुहृद्भिः समुदीरितान् ॥ यथार्हं चापि संपूज्य सर्वानेव नरान्ययौ ॥ ७ ॥
पितामहैराचरितं तथैव प्रपितामहैः ॥ अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय ॥ ८ ॥
यथा स्म लालिताः पित्रा यथा पूर्वैः पितामहैः ॥ ततः सुखतरं रामे वत्स्यामस्सति राजनि ॥ ९ ॥
अलमद्य हि भुक्तेन परमार्थैरलं च नः ॥ यथा पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ १० ॥
ततो हि नः प्रियतरं नान्यत्किंचिद्भविष्यति ॥ यथाऽभिषेको रामस्य राज्येनामिततेजसः ॥ ११ ॥

त्यादित्वात्तृतीया ॥२॥ कीदृशंराजमार्गंययावित्याकाङ्क्षायामाह—चन्दनानामित्यादिना । क्षौमकौशांबरस्य क्षौमं दुकूलं । "क्षौमंदुकूलं" इत्यमरः । कौशांबरं कौशेयं ॥३ ॥ अविद्धाभिः अकृतरन्ध्राभिः । नूतनाभिरितियावत् । स्फाटिकैः स्फटिकैः स्वार्थेअण्प्रत्ययः ॥४॥ तंराजपथं सकलभाग्ययुक्तं राजमार्गमित्यर्थः । यद्वा प्रथमस्यराजपथपदस्यददर्शेत्यनेनसंबन्धः । द्वितीयस्यवक्ष्यमाणेनययावित्यनेनसंबन्धः ॥ ५ ॥ अभ्यर्चितचत्वरं प्रतिपूजिताङ्गणं । "अङ्गणंचत्वराजिरे" इत्यमरः ॥ ६ ॥ यथार्हं । वीक्षणभ्रूक्षेपवचनाञ्जलिप्रणामादिभिरित्यर्थः ॥७॥ अद्याभिषिक्तस्त्वं पितामहाद्यैराचरितं तं प्रसिद्धं । मार्गं मर्यादांअनुपालय ॥ ८ ॥ रामेराजनिसति सर्वेवयं। ततः पूर्वस्मात् । सुखतरंयथाभवतितथावत्स्यामः ॥ ९ ॥ भुक्तेन भोजनेन । परमार्थैः परमपुरुषार्थसाधनभूतैः । जपहोमध्यानादिभिरित्यर्थः । राज्येप्रतिष्ठितं अभिषिक्तं । पुनःस्वगृहायनिर्यान्तं। यथा यथावत् । पश्याम। प्रार्थनायांलोट् ॥ १० ॥ राज्येनाभिषेकः राज्यायाभि-

न्त्रितमितिपाठेतुसष्ठोर्थः । नानाजनाश्चतेसमनवोमन्त्रजपपराःतैरितंप्राप्तं । विशेषणविशेष्यत्वस्यकामचारित्वान्नपौर्वापर्यप्रयुक्तानुपपत्तिः ॥ १ ॥ **ति०** क्षौमं अतसीजं । कौशंपट्टवस्त्रं ॥ ३ ॥ **ति०** आविद्धाभिः कृतच्छिद्राभिः ॥ ४ ॥ **सत्य०** समुदीरितानित्यत्रसमुदित्यपिपदविभागः । एतेननित्यमुदोरामस्यसुहृदीरिताशीर्वादश्रवणंतदनुजिघृक्षयेत्युक्तंभवति । **स०** पितृपितृभिः पितामहैः । तत्पितृभिः प्रपितामहैः । पिता महैरितिच्छेदोवा । पितेतिप्रथमातृतीयार्थे । यःपितातेनेतिशेषोवा । पित्रादशरथेन । महैरुत्सवैरित्यस्ययथावितिपूर्वेणान्वयः । एतेनोत्तरत्रपित्रेत्यनुवादायोगइतिनिरस्तं ॥ ८ ॥ **सत्य०** पितामहैः पितामहादिभिः । "फणांचसप्तानां" इत्यत्रेवबहुवचनमाद्यर्थे । यथापित्रालालिताःयथाचपितामहादिभिः तथात्वयालालितास्सन्तोवत्स्यामइतिलालनंत्रितयसाधारणं । ततस्सुखतरमितिविशेषोक्तेः "शैलाइवोन्नतास्सन्तःकिंतुप्रकृतिकोमलाः" इतिवद्यतिरेकालंकारः ॥ ९ ॥ **विष०** रामं प्रतिष्ठितं अभिषिक्तं राजमार्गेनिर्यान्तं । **सत्य०** भुक्तेन भावेक्तः भोजनेन अलं । परमाअर्थायेभ्यस्तैःपरमार्थैः इतरविषयैरलं । "अलंभूषणपर्याप्तिवारणेचनिरर्थके" इतिविश्वः । भोजनादिनिरर्थकमितिभावः । एतेन "नमस्स्वस्ति—"इत्यनेनचतुर्थ्याभाव्यत्वात्कथंतृतीयेतिशङ्कानवकाशः । तत्रपर्याप्त्यर्थालंशब्दयोगएवचतुर्थ्याःकाशिकादावुक्तेरितिभावः । तत्प्राप्यफलस्यतादृशरामदर्शनेनसिद्धेःपरमार्थैःपरमाःप्रमाणानिवेदान्ताइतियावत् । विचारितैस्तदर्थैरलमितिवार्थः । **ति०** यद्यन्तर्भावेणविपरीतसंभावनासूचनम् । **ती०** पश्यामयथा साक्षात्कुर्मोयदि एतत्सुखलाभोयदि तदा भुक्तेन ऐहिकविषयेणतज्जन्यसुखेनच । तथापरमार्थैः परमैःश्रेष्ठैःअर्थैःस्वर्गादिभिः तज्जन्यसुखैश्च नः अस्माकं अलंमास्तां ॥ १० ॥ **ती०** राज्येन राज्यप्राप्तिहेतुना । अभिषेकोयथा अभिषेकइतियत् । ततः अभिषेकजन्यभूमानन्दब्रह्मसाक्षात्कारजन्यसुखात् । **सत्य०** प्रियतरमित्येतल्लिङ्गव्यत्यासेनाभिषेकपदेनाप्यन्वेति । यथाभिषेकःप्रियतरः तथान्यत्प्रियतरंनास्तीत्यर्थः । प्रियतरमितिनपुंसकनिर्देशस्तुअभिषेकेतरसामान्यस्यप्रियतरत्वनिषेधार्थः। राज्येनेतितृतीयाहेतौ । राज्ये नामिततेजसइतिच्छेदोवा । नामितानिप्रह्वीकृतानि

**[ पा० ]** १ क. घ. ङ. झ. ञ. ट. आविद्धाभिश्च. २ ख. स्फाटिकैरुत्तमैरपि. ३ क. ख. ग. ङ—ट. मसंबाधं. ४ ङ. छ. झ. ञ. ट. पुष्पैः. क. पुण्यैः. ५ ङ. च. छ. झ. ट. देवपतिर्यथा. ६ ख. तदभ्यर्चित. ख. छ. ट. तदाभ्यर्चित. घ. समभ्यर्चित. ७ ङ. छ. झ. ट. बहुभिः. ८ ङ. छ. झ. ट. पोषिताः. ९ क. ख. ङ. च. छ. झ. ञ. ट. सर्वैः. १० क—ट. सर्वेरामेवत्स्यामराजनि. ११ क. ख. च. भुक्तेनैः. १२ ग. ज. यथापश्येम. घ. यदापश्येम. ङ. छ. झ. ट. यदिपश्याम. १३ ग. घ. ज. राजानं. १४ क. ख. ग. घ. ज. अतो. १५ घ. यदाभिषेको.

**एताश्चान्याश्च सुहृदामुदासीनः कथाः शुभाः ॥ आत्मसंपूजनीः शृण्वन्ययौ रामो महापथम् ॥१२॥**
**न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् ॥ नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे ॥१३॥**
**यश्च रामं न पश्येत्तु यं च रामो न पश्यति ॥ निन्दितः स वसेल्लोके स्वात्माऽप्येनं विगर्हते ॥१४॥**

षेकः । सयथाप्रियतरस्तथाततोऽन्यत्प्रियतरंकिंचिन्नास्ति ॥ ११ ॥ उदासीनः स्तुतिश्रवणेननिर्विकारः । आत्मसंपूजनीः आत्मसंपूजाजननीः । मनोहर्षजननीर्वा । महापथं राजमार्गं ॥ १२ ॥ कश्चिदपिनरः मनश्चक्षुषीवा तस्मात् अपाक्रष्टुं निवर्तयितुं । नशक्नोति । किमुतनारीजनइतिभावः । अतिक्रान्ते दूरगतेपि किमुतसन्निहितइत्याशयः ॥ १३ ॥ चकारोभिन्नक्रमः । रामंच दर्शनकालएवपरिपूर्णामृतसरसिमज्जयन्तमपि । यस्तु अतिशयितवैलक्षण्यसंपन्नोपि । नपश्येत् स्तुतिसल्लापसत्काराद्यभावेप्यचेतनविलक्षणाकारेणचक्षुर्विषयंनकरोति । अतएव यंरामोपिनपश्यति नरस्याभिमुख्येहिभगवान्कटाक्षयति । सः राममदृष्ट्वा तत्कटाक्षाविषयः । निन्दितोवसेत् यावत्कालंनिन्दितःस्यात् । लोकेनिन्दितःस्यात्तंनिन्दितुमनर्हःकोपि जनोनास्तीतिभावः । लोकेविषयप्रवणःकश्चित्सत्यामपिलोकगर्हायांस्वयंसंतुष्टोभवति नतथेत्याह—स्वात्माप्येनंविगर्हतइति । स्वान्तःकरणमप्येनंविशेषेणगर्हते

तेजांसिपराक्रमायस्यसः नामिततेजाः । नान्यत्किंचिदित्यस्मान्नेत्यनुवर्तते । सनभवतीतिननामिततेजाः अमिततेजास्तस्य । राज्यइतिसप्तमीनिमित्तार्थे । "निमित्तात्कर्मयोगे" इतिस्मरणात् । यद्वा आमितंसम्यक्परिमितंतेजोयस्यसतथा सनभवतीतिनामिततेजाः तस्य । नसमासोसावितिनञुद् । "तेजोधाम्निपराक्रमे" इत्यमरः ॥११॥ **सत्य०** उदासीनइत्यनेनसाक्षाल्लक्ष्मीस्तुत्यस्येदंकियदितिसूचितंभवति । पूर्वमाशीर्वादानित्युक्त्या इतरेषामाशीर्वादरूपाअपिवाचोभगवतिसेवारूपाइतिध्वनयति आत्मसंपूजनीरित्यनेन । यद्वा नात्मपदेनरामग्रहः किंतुस्तावकग्रहः । आत्मनःसुहृदःसंपूजयन्तीत्यात्मसंपूजिन्यस्ताः । ततश्चभगवत्स्तवनमात्मनांस्वेषांसंपूजनरूपमेवभवतीत्युक्तंभवति । यथोक्तंभागवते । "यद्यज्जनोभगवतेविदधीतमानंतच्चात्मनेप्रतिमुखस्ययथामुखश्रीः" इति ॥ १२ ॥ **ती०** राघवेअतिक्रान्तेपि दृष्टिपथमतीतेपि । सकलजनमनोनयनसंमोहनाकारानुभवजनितेनवासनाबलेनपुरतःपरिदृश्यमानादिवस्थितात् तस्मान्नरोत्तमात् ॥ १३ ॥ **ती०** यश्च रामं स्वदेशस्थं नपश्येत् यंच स्वदेशस्थं अतएवरामोपिनपश्यति । सोसावपरोक्षरामब्रह्मानुभवादृष्टहीनः इहामुत्रचलोकेसर्वैर्निन्दितोवसेत् । अप्रयासतोभगवदपरोक्षकृतिमात्रेणमुक्तिसंपादनादृष्टाभावान्नास्यकदापिसंसारोत्तारइत्यर्थः । अतएवास्यात्मा अन्तर्यामीभगवानपि एनंविगर्हते । पापिष्ठोयंमुक्तिमपिसाक्षात्कृत्यनजन्मोद्धृतवानितिवार्थः । **शि०** योजनः राममेवनपश्येत् स्वस्वामित्वेननजानाति रामोवा यंनपश्यति अयंमामेवस्वस्वामित्वेनजानातीति नजानाति ससर्वलोकेषुनिन्दितः । अतः एनं रामानुरागरहितं । **सत्य०** जनमनोनयनरञ्जनेरामेइत्थंभावआवश्यकइतितददृष्टजननिन्दामुखेनद्रढयति—**यइति** । योजनः रामंनपश्येत् नावलोकयेत् । मनोनयनस्यप्रसक्तत्वान्नध्यायेद्वा । "पश्यार्थैश्चानालोचने" इतिज्ञानसामान्येपिदृशेःप्रयोगात् । रामोपियंजनंनपश्यति एतमुद्धरिष्यइतिनध्यायति । सजनस्सर्वलोकेषुनिन्दितोभवति । नकेवलमेतावत् । अपितुस्वमनोपिएनंधिगितिविगर्हते । लोकनिन्दालक्षणकिंचित्कार्यविधातुमुपात्तस्यजनस्यपुनस्स्वात्मकर्तृकगर्हणरूपवैवक्षिककार्यान्तरंविधातुमुपादानरूपान्वादेशे "द्वितीयाटौस्वेनः" इत्येनादेशः । दृशिरत्रभक्तिपूर्वकदर्शनार्थकः । रामोनपश्यतीत्यत्रापि दृशिःप्रसादपूर्वकदर्शनार्थइतिबोध्यम् । अन्यथासर्वदासर्वज्ञस्यरामस्ययंचरामोनपश्यतीत्युक्तिरयुक्तास्यात् । कुतोरामदर्शनस्यलोकोत्तरत्वंलोकेइत्यतश्श्रृङ्गग्राहिकयादर्शयति—**यइति** । ई अं न पश्यतीतिच्छेदः । योरामः । चोहेत्वर्थे । यस्मान्नपश्यति । पश्यतीतिपश्योजीवः तद्वदाचरतीतिपश्यति । सनेतिनपश्यति । तं अं भगवदात्मकंरामं । ई लक्ष्मीः नपश्येत् साकल्येननजानीयात् । एनं एतादृशंरामं । यश्चात्माजनः विगर्हते निन्दति । ससर्वेषुलोकेषु सु सुष्ठु । निन्दितः । यमित्यत्रईअमितिस्थितेयणादेशेयमितिभवति । "लक्ष्मीरीकारउच्यते" । "अकारोवासुदेवस्स्यात्" इत्युभयत्रानेकार्थध्वनिमञ्जरी । "यदापश्यःपश्यतेरुक्मवर्णं" इतिश्रुतिव्याख्यानावसरेपश्यतीतिपश्योजीवइतिटीकोक्तेः । "पाघ्रा—"इतिशः । यस्माद्दाशरथिर्ज्ञानादिदाननिदानंमानवादीनांतस्मात्तस्मिन्मनोनयनसमासञ्जनंसज्जनानांयुक्तमितिवावक्ति—**यइति** । चरामं चराणांचेतनानांरमातामरसभवभवादीनांआसम्यक् मासंपत्प्रतिपत्तिर्वायेन सचरामोरामः तंनपश्येद्यः सकिमपिनपश्यति । अतिमूढइतियावत् । तत्स्वरूपमावर्तितेनतेनैवनिरूपयति **चरामइति** । चरेषुअमः दरिद्रःअज्ञानीच । अतएवसर्वलोकविनिन्दितः । तत्संबन्धिनोवातंस्तुवन्तीत्यतउक्तं **स्वात्मेति** । स्वकीयआत्मा देही । स्वकीयस्सर्वोपिजनइतियावत् । अपि स्वत्वेस्तवननिमित्तेसत्यपि । इदमकार्यं अयमनार्यः स्तेनइति

[ पा० ] १ ङ. च. छ. झ. ञ. ट. शुभाःकथाः, २ घ. सभवेल्लोके. ङ. च. छ. झ. ञ. ट. ठ. सर्वेलोकेषु.

**सर्वेषां हि स धर्मात्मा वर्णानां कुरुते दयाम् ॥ चतुर्णां हि वयस्थानां तेन ते तमनुव्रताः ॥ १५ ॥**
**चतुष्पथान्देवपथांश्चैत्यान्यायतनानि च ॥ प्रदक्षिणं परिहरञ्जगाम नृपतेः सुतः ॥ १६ ॥**
**स राजकुलमासाद्य मेघसङ्घोपमैः शुभैः ॥ प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः ॥ १७ ॥**
**आवारयद्भिर्गगनं विमानैरिव पाण्डुरैः ॥ वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ॥ १८ ॥**

रमादर्शनाल्लोकगर्हयाचेतिभावः ॥ १४ ॥ सः रामः चतुर्णांवर्णानां सर्वेषामपिजनानां । सप्तम्यर्थेषष्ठी । वयःस्थानंप्रमाणंयस्यास्तां वयोनुरूपां दयां । हि यस्मात्कारणात् । कुरुते तेनकारणेन ते तमनुव्रताइत्यन्वयः । वयस्थानांवृद्धानामितिवा । सर्वविशेषणं ॥ १५ ॥ चतुष्पथान् शृङ्गाटकानि । देवपथान् देवालयान् । चैत्यानि चैत्यवृक्षस्थानानि । आयतनानि सभादीनिच । परिहरन् अप्रदक्षिणंपरिहरन् । प्रदक्षिणंयथाभवतितथाजगामेतिसंबन्धः ॥ १६ ॥ राजकुलं राजगृहं । "कुलंगृहेपि" इत्यमरः ॥ १७ ॥ वर्धमानगृहैः वर्धमानलक्षणाधिष्ठानसमेतगृहैः ॥१८॥

मतिपूर्वकंगर्हयतीतिभावः । तुः सर्वत्रार्थेप्रमाणप्रसिद्धिद्योतकः ॥ १४ ॥ **तीर्थी०** वयस्स्थानां बाल्यादिवयस्स्थानां । अज्ञानामपिदयांमुक्तिपर्यन्तानुग्रहंकुरुतइतिवार्थः । **ति०** चतुर्णांहि चतुर्णामपि । **शि०** चतुर्णांवर्णानां । सर्वेषां वर्णातिरिक्तानांच । **सत्य०** श्रीरामदयोदयस्यतत्तदानुरूप्यंनिरूपयति—**सर्वेषुसहीति** । सर्वेषु देवदानवादिषु । हि यस्मात् । स रामः । धर्मात्मा धर्मबुद्धिः । धारकत्वादादानादिकर्तृत्वाद्वा धर्मात्मा । तेनतेजनास्तमनुव्रताः । "धारकत्वाद्धर्मोभगवान् । पृथिवीधर्ममूर्धनि । आततत्वाच्चमातृत्वात्" इत्यादेः । परबुद्धेरप्रत्यक्षत्वात्कथमेतज्ज्ञायतइत्यतश्शृङ्गग्राहिकयाऽनुग्राह्यान्ग्राहयति—**वर्णानामित्यादिना** । चतुर्णांवर्णानां ब्राह्मणादीनां । तत्रापिवयस्स्थानां । उपरीतिशेषः । सप्तम्यर्थेषष्ठीवा । यथासंभवंदयांकुरुते । हीत्येतदर्थस्यसर्वानुभवसिद्धतामाह—**वयस्स्थानामिति** । दयाविशेषणंवा । वयसा गरुडेन । उपलक्षणयाशेषग्रहः । ताभ्यांस्थानंययासावयस्स्थानातां । मार्गभूतगरुडशेषाभ्यांप्राप्यमुक्तिस्थानप्रापिकादयेतिभावः । यद्वा वयस्स्थोतिवृद्धत्वाद्ब्रह्मा । अनोवायुः । हिनोतिवयस्स्थानावितिहिवयस्स्थाना दया । हिगतौवृद्धौचेतिधातुव्याख्यानात् । सर्वेषामितिपाठेनकेवलंचतुर्णांवर्णानां अपितुसर्वेषामित्यर्थः । कुरुतइत्यावर्तितंसप्तम्यन्तं । कुत्सितशब्दकर्तृकप्यादावित्यर्थः । उक्तंचभागवतेपञ्चमस्कन्धे । "नजन्मनूनंमहतोनसौभगंनवाङ्नबुद्धिर्नाकृतिस्तोषहेतुः । तैर्यद्विसृष्टानपिनोवनौकसश्चकारसख्येबतलक्ष्मणाग्रजः । सुरोसुरोवाथनरोथवानरस्सर्वात्मनायस्सुकृतज्ञमुत्तमम् । भजेतरामंमनुजाकृतिंहरिंयउत्तराननयत्कोसलान्दिवम्" इति । केवलंधर्मात्माचेत्नक्षत्रधर्मारामइत्यतोनेत्यप्यनेनाह—**सर्वेषुसहिधर्मात्मेति** । सर्वेषामरीणामिषवश्शरास्तान्सोढुंशीलमस्यास्तीतिसर्वेषुसही सचासौधर्मात्माचेत्यर्थः । "सुप्यजातौ—" इतिणिनिप्रत्ययेसाहीतिभवितव्यं कथंसहीतिचेत्संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः । यद्वा "घञर्थेकविधानं"इतिकेसहमस्यास्तीतीनिनवृद्धेःप्रसक्तिरितिबोध्यम् । नन्वेवंतूष्णीमसहिष्णोःशरसहनंनमहत्त्वावहमित्यतोवाह—**सर्वेषुसहिधर्मात्मेति** । सर्वस्यशर्वस्यइषवःक्षेप्तुंयस्मिन्तत्सर्वेषु धनुः तस्य सं वारणं निवारणं ह्यापयतीतिसर्वेषुसाहीततःकर्मधारयः । हिंसार्थाद्गत्यर्थाद्वाषर्वेः "धात्वादेष्षस्सः" इतिसत्वेबस्यवत्वेसर्वइतिभवति । "सर्वोह्येषरुद्रः । सर्वस्तुशर्वोभगवाञ्शंभुःकालञ्जनश्शिवः" इतिश्रुतिभानुदीक्षितोदाहृतनामनिधाने । "सःकोपेवारणे" इतिविश्वः । धनुर्मनस्कोवा ॥ १५ ॥ **ती०** प्रदक्षिणंयथातथापरिहरन् अतिक्रामन् । **सत्य०** देवपथान् देवालयमार्गान् । चैत्यानि यज्ञस्थानानि । अश्वत्थादिमूलबद्धवेदिकावा । आयतनानि देवालयान् । चिञ्चयनेइत्यस्मात् "चित्याग्निचित्येच" इतिनिपातनात्क्यचि "ह्रस्वस्य—"इतितुकिपूर्वसूत्रादग्नावित्यनुवर्तनादग्निवाचकचित्यशब्दनिष्पत्तिः । तस्माच्च "तस्येदं" इत्यणिचैत्यमितिभवति । तेननपुनरुक्तिः । यद्वा चैत्यानिवसिष्ठादिगुर्वन्तर्गतभगवद्रूपाणि । यथोक्तंसप्तमाध्यायगीताभाष्योदाहृतस्य "आचार्यचैत्यवपुषास्वगतिंव्यनक्षीत्"इत्येकादशस्कन्धश्लोकस्यव्याख्यायां "चैत्यंचित्तस्थं" इतिप्रमेयदीपिकायाम् । प्रदक्षिणंपरिहरन् पूर्वोक्तचतुष्पथादीन्प्रदक्षिणंयथाभवतितथादक्षिणभागेसंत्यजन् । नृपतेस्सुतइत्येकंवापदं । "षष्ठ्याआक्रोशे" इत्यलुक् । अनेनजगत्पितूरामस्यदशरथसुतत्वायाचुक्रोशकविरितिद्योत्यते ॥ १६ ॥ **सत्य०** विविधान्वीन्पक्षिणःदधतइतिविविधानि तैः । "विःपक्षिपरमात्मनोः"इतिविश्वः ॥ १७ ॥ **ति०** वर्धमानगृहैः क्रीडागृहैः । **सत्य०** यद्वा वर्धमानगृहैः दक्षिणद्वाररहितैः । उक्तंचैतन्मत्स्यपुराणेवास्तुप्रस्तावेषडुत्तरद्विशततमाध्याये "पश्चिमद्वारहीनंतुनन्द्यावर्तंप्रचक्षते । दक्षिणद्वारहीनंतुवर्धमानमुदाहृतं" इति । रत्नजालपरिष्कृतैः रत्नानांजालंसमूहस्तेन । यद्वा रत्नात्मकानिजालानिगवाक्षास्तैःपरिष्कृतैः । "जालंगवाक्षआनाये" इति विश्वः ॥ १८ ॥

[ पा० ] १ च. ञ. ट. सर्वेषांसहि. ङ. छ. झ. सर्वेषुसहि. २ ख. ङ. च. छ. झ. ञ. श्चैत्यांश्चायतनानि. ख. चैत्यानायतनानि.

तत्पृथिव्यां गृहवरं महेन्द्रभवनोपमम् ॥ राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ॥ १९ ॥
स कक्ष्या धन्विभिर्गुप्तास्तिस्रोतिक्रम्य वाजिभिः ॥ पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ॥ २० ॥
स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः ॥ संनिवर्त्य जनं सर्वं शुद्धान्तं पुनरभ्यगात् ॥ २१ ॥
ततः प्रविष्टे पितुरन्तिकं तदा जनः स सर्वो मुदितो नृपात्मजे ॥
प्रतीक्षते तस्य पुनर्विनिर्गमं यथोदयं चन्द्रमसः सरित्पतिः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः ॥ १८ ॥

रामेणकैकेयीदशरथयोश्चरणप्रणामसमनन्तरंकरुणवचनादिनासामान्याकारेणपितुःशोकमनुमायविशेषरूपेणतज्जिज्ञासया कैकेयींप्रतिसंभावनार्हहेतुविकल्पपूर्वकंप्रश्नः ॥ १ ॥ कैकेय्यारामंप्रतितेनपित्रभिमतार्थकरणप्रतिज्ञापनपूर्वकंतद्विवासनभरताभिषेचनविषयकवरदाननिवेदनेनतद्वियोगस्यशोकहेतुत्वकथनम् ॥ २ ॥

स ददर्शासने रामो निषण्णं पितरं शुभे ॥ [10]कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ १ ॥
स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ॥ ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥ २ ॥
रामे[11]त्युक्त्वा च वचनं बाष्पपर्याकुलेक्षणः ॥ शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३ ॥
तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ॥ रामोपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ४ ॥
इन्द्रियैरप्रहृष्टैस्तं शोक[12]संतापकर्शितम् ॥ निश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५ ॥
ऊर्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम् ॥ उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥ ६ ॥

---

पृथिव्यांगृहवरं पृथिव्यामद्वितीयमित्यर्थः । पितुर्वेश्म पितृवासस्थानं ॥१९॥ वाजिभिः रथयुक्तैर्वाजिभिः । पदातिः पादचारी ॥ २० ॥ शुद्धान्तं अन्तःपुरं ॥ २१—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने सप्तदशस्सर्गः ॥ १७ ॥

आसने पर्यङ्के । "मूर्च्छितोन्यपतत्तस्मिन्पर्यङ्के हेमभूषिते" इत्युत्तरत्रवक्ष्यमाणत्वात् । मुखेनेत्युपलक्षणेतृतीया ॥ १—२ ॥ नाभिभाषितुं रामेत्यस्मादधिकमित्यर्थः ॥ ३ ॥ अपूर्वम् अदृष्टपूर्वं । रामोपीत्यपिशब्देनदुःखसहस्रसद्भावेप्यक्षुभितोरामोदशरथविषादस्यस्वहेतुकत्वमाशङ्क्यभयमापन्नइत्यवगन्तव्यम् ॥ ४ ॥ इन्द्रियैरित्यादिश्लोकद्वयेदृष्ट्वाभयमापन्नइत्येतदनुकृष्य

---

**सत्य०** महेन्द्रसदनस्योपमायेनतन्महेन्द्रसदनोपमं । अनेनगृहवरमित्युचितार्थमित्युक्तंभवति ॥ १९ ॥ **सत्य०** पदातिः पद्गस्सन् । अतिक्रम्येत्यन्वेति ॥ २० ॥ इतिसप्तदशस्सर्गः ॥ १७ ॥

**शि०** विषण्णं संभावितपुत्रवियोगजनितदुःखाक्रान्तं । अतएवदीनंआसनेददर्श । **सत्य०** यद्वासहितमित्येततमुखेनेत्यनेनाप्यन्वेति ॥ १ ॥ **ति०** सुसमाहितः तस्याअतिस्वेष्टकरत्वेनजगद्धितकरत्वेनचतस्यांप्रसन्नचित्तः । **सत्य०** वस्तुतस्सर्वोत्तमस्यलोकशिक्षार्थंविनयप्रदर्शनमितिवतिनाध्वनयाञ्चकारकविरितिज्ञेयम् ॥ २ ॥ **सत्य०** पूर्वश्लोकात्नाइत्यनुवर्तते । नापुरुषःपन्नगंपदास्पृष्ट्वायथाभयंप्राप्नोतितथारामोपिदुःखितत्वेनादृष्टपूर्वंनरपतिरूपंदृष्ट्वाभयमापन्नइत्यर्थः । "भीषास्मात्" इत्यादेस्सर्वभीषकस्यरामस्यभयं अपिनागर्हयामासकविरितिज्ञेयं । अपूर्वमित्येतद्भयपदेनाप्यन्वेति । अपूर्वंभयंअभयमित्यर्थः । सदाअभयमापन्नइतियतः

[ **पा०** ] १ क. ख. ग. ङ. च. छ. ज. ञ. ट. सदनोपमम्. २ ट. सर्वास्स. ३ क. च. ञ. नरवरात्मजः. ४ क. संनियम्य. ५ क. ख. ग. ङ. च. छ. झ. ञ. ट. शुद्धान्तःपुरमभ्यगात्. च. झ. ञ. मत्यगात्. ङ. ट. मन्वगात्. छ. माविशत्. ६ च. छ. झ. ञ. ट. तस्मिन्. ७ क. पितुरन्तिके. ८ ङ. च. छ. झ. ञ. ट. पुनस्स. क. पुनश्च. ९ क. ख. ङ. च. विषण्णं. १० ङ. च. छ. झ. ञ. ट. कैकेय्या. ११ क. च. ञ. त्युवाच. ङ. छ. झ. ट. त्युक्त्वातु. १२ क. क्लेश.

अचिन्त्यकल्पं हि[1] पितुस्तं शोकमुपधारयन् ॥ बभूव संरब्धतरः समुद्र इव पर्वणि ॥ ७ ॥
चिन्तयामास च[2] तदा रामः पितृहिते रतः ॥ किंस्विदद्यैव[3] नृपतिर्न मां प्रत्यभिनन्दति ॥ ८ ॥
अन्यदा मां पिता दृष्ट्वा कुपितोपि प्रसीदति ॥ तस्य मामद्य संप्रेक्ष्य किमायासः[4] प्रवर्तते ॥ ९ ॥
स दीन इव शोकार्तो विषण्णवदनद्युतिः ॥ कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥ १० ॥
कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता ॥ कुपितस्तन्ममाचक्ष्व त्वं[5] चैवैनं प्रसादय ॥ ११ ॥
अप्रसन्नमनाः किंनु सदा मां प्रति वत्सलः ॥ विवर्ण[6]वदनो दीनो न हि मामभि[7]भाषते ॥ १२ ॥
शारीरो मानसो वाऽपि कच्चिदेनं न बाधते ॥ संतापो वाऽभितापो वा दुर्लभं हि सदा सुखम् ॥१३॥
कच्चिन्न किंचिद्भरते[8] कुमारे प्रियदर्शने[9] ॥ शत्रुघ्ने वा महासत्वे मातॄणां वा ममाशुभम् ॥ १४ ॥
अतोषयन्महाराजमकुर्वन्वापितुर्वचः ॥ मुहूर्तमपि नेच्छेयं जीवितुं[10] कुपिते नृपे ॥ १५ ॥
यतोमूलं नरः पश्येत्प्रादुर्भावमिहात्मनः ॥ कथं तस्मिन्न वर्तेत प्रत्यक्षे सति[11] दैवते ॥ १६ ॥

संबध्यते । उपप्लुतं राहुग्रस्तम् । उत्क्रान्तानृतमृषिंयथा ऋषिमिवस्थितं । निस्तेजस्कमित्यर्थः ॥ ५—६ ॥ अचिन्त्यकल्पम् असंभावितमित्यर्थः । उपधारयन् विचारयन् । संरब्धतरः संभ्रान्ततरः ॥ ७ ॥ किंस्वित् किंवा ॥ ८ ॥ अद्यैवेत्येवकारव्यवच्छेद्यमाह—अन्यदेति । आयासः चित्तक्लेशः । इतिचिन्तयामासेत्यन्वयः ॥ ९—१० ॥ नापराद्धं अपराधोनकृतः । अज्ञानात् प्रमादात् ॥ ११—१२ ॥ शारीरःसंतापोव्याधिः । मानसोभितापआधिः । दुर्लभंहीति पुण्यपापारब्धत्वान्मानुषशरीरस्येतिभावः ॥ १३ ॥ मातॄणामितिनिर्धारणेषष्ठी । कच्चिदितिप्रश्ने । किंचिदशुभंनकच्चिदितिसंबन्धः ॥ १४—१५ ॥ इह जगति । नरः आत्मनः देहस्य । प्रादुर्भावम् उत्पत्तिम् । यतोमूलं यत्कारणकं । पश्येत् प्रत्यक्षेदैवते सति सिद्धे । तस्मि-

अतःभयमापन्नइत्यपिगर्हितमित्यर्थः ॥ ४ ॥ **ती०** अवधारयन् चिन्तयन् । आत्मीयत्वेनस्वीकुर्वन्नितिवा । **शि०** उपधारयन् निश्चिन्वन् । **सत्य०** शोचयतीतिशोकश्शोकहेतुः । तज्जनितसंतापेनकर्शितं । निश्वसन्तमित्यत्रविशेषणत्वेनप्रसक्तनिश्वासाः बुद्ध्याविवेकेनाभेदसंबन्धेनोर्मिपदार्थेनान्वीयन्ते । ऊर्मिमालिनं शिखादित्वादिनिप्रत्ययान्तंपदं । तथाचश्वासोल्लोलकल्लोलैस्सहितं । अतएवक्षुभ्यन्तं चलन्तं । उत्क्रमनृतंयेनसउत्क्रान्तानृतःतमिवविद्यमानं । ऋषिमित्यनेनअनृतोक्तेर्महापापकरत्वमितिमत्वन्तस्यध्वनयति । अचिन्त्यःकल्पः राज्ञःकदाचिदप्येतादृशशोकादिकंभवतिवेत्यादिकोयस्यसोचिन्त्यकल्पस्तं ॥ ७ ॥ **ती०** अन्यदा पूर्वकाले । परोक्षेमांप्रतिकुपितोपिदृष्ट्वाप्रसीदति । **सत्य०** कुपितः अन्यस्माइतिशेषः। परोक्षमद्यंकुपितोपीतिव्याख्यातु परोक्षापरोक्षप्रीतिमात्रपात्रत्वाद्रामस्येत्युपेक्ष्या । मांसंप्रेक्ष्यस्थितस्य ॥ ९ ॥ **वि०** दीनइव विषण्णवदनद्युतिरिवसरामः । शोकार्तइववचनमब्रवीदितिसंबन्धः । **सत्य०** विषण्णवदनानांद्युतिर्यस्मात्सविषण्णवदनद्युतिः । तेषांद्युतिरिवद्युतिरितिवार्थः । इवेनदैन्यादिकंदेवदेवेसर्वथानास्तीतिद्योतयतिकविः । अभिवाद्यैवेत्यनेनराजमर्यादाद्योत्यते ॥ १० ॥ **वि०** नापराद्धं काकुः । अज्ञानात्प्रमादात् । प्रसादय मत्कृतापराधशान्त्यैइतिशेषः ॥ ११ ॥ **शि०** दुर्लभंप्राकृतैर्दुष्प्रापं । सदासुखंनित्यसुखविशिष्टं । एनंपितरंकच्चिन्नबाधते ॥ १३ ॥ **सत्य०** कुमारेप्रियदर्शनेमहासत्वेइतिपूर्वोत्तरार्धोक्तविशेषणान्युभयत्रान्वीयन्ते । मातॄणां विषयसप्तमीयं । भवदादीनांमममातॄणांविषयेअशुभंनकिंचित्पश्यतिकच्चिदित्यन्वयः । मम मत्कर्तृकमशुभंनपश्यतिकच्चिदित्यन्वयोवा । मातॄणामितिनिर्धारणेषष्ठीति व्याख्यातुपृथक्करणकारणीभूतजातिगुणक्रियासंज्ञानांपृथक्करणीयवाचकस्यचाभावादत्युपेक्ष्या ॥ १४ ॥ **ती०** नृपेकुपितेसतिकिमुवक्तव्यमित्यर्थः । **शि०** अतोषयन् तुष्टमकुर्वन् ॥१५॥ **शि०** मूलंप्रवृत्तिहेतुभूतं । आत्मनःस्वस्यप्रादुर्भावंप्राकट्यं । यतःयस्मात् पश्येत्जानातितस्मिन्प्रत्यक्षेदैवतेसतिकथंनवर्तेत । तदानुकूल्येनेतिशेषः । एतेनयतोमूलंयन्मूलमित्यर्थेआर्षमेतदितिभट्टाद्युक्तिश्चिन्त्या । **सत्य०** एकयोक्त्याजगत्सवितुस्तत्पितुश्चस्वभावमावेदयतिकविः—**यतोमूलमित्यादिना** । नरः पुमान् । आत्मनः स्वस्य । प्रादुर्भावं जन्म । "जन्मप्राकाश्ययोःप्रादुः" इति "प्रादुर्भूतस्सुतस्तस्य" इतिचलिङ्गभट्टीये । यतःपितुस्सकाशात्पश्येत् । तथामूलंचस्वप्रादुर्भावापादकंतपआदिअन्यत्रजन्मापादकंकर्मादिपश्येत् । पूर्वश्लोकाद्वाशब्दश्चार्थस्सन्ननुवर्तते । हेसतिकैकेयि तस्मिन्पित्राख्येप्रत्यक्षदैवतेकथंनवर्तेत नप्रवर्तेत । कुशलप्रश्नादिकंकथंनकुर्यादितियावत् । योनरोदशरथादिः । यतोमूलमित्यत्रमयूरव्यंसकादि-

**[ पा० ]** १ ङ. छ. झ. नृपतेस्तंशोकमवधारयन्. २ क. ख. च. ञ. चततो. ङ. छ. झ. ट. चतुरो. ३ ख. दित्येव. ग. घ. ज. दद्यैष. ४ ख. माश्वासः. ५ ङ. छ. झ. त्वमेवैनं. ६ क. ख. ङ. च. छ. झ. ञ. ट. विषण्ण. ७ ख. ङ. च. छ. ञ. ट. मांप्रति. ८ घ. भरतेकिंचित्. ९ घ. शुभदर्शने. १० घ. ट. जीवितं. ११ घ. ज. दैवतेसति.

कच्चित्ते परुषं किंचिदभिमानात्पिता मम ॥ उक्तो भवत्या कोपेन यैत्रास्य लुलितं मनः ॥ १७॥
एतदाचक्ष्व मे देवि तत्वेन परिपृच्छतः ॥ किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ १८ ॥
एवमुक्ता तु कैकेयी राघवेण महात्मना ॥ उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ १९ ॥
न राजा कुपितो राम व्यसनं नास्य किंचन ॥ किंचिन्मनोगतं त्वस्य त्वद्भयान्नाभिभाषते ॥२०॥
प्रियं त्वामप्रियं वक्तुं वाणी नास्योपवर्तते ॥ तदवश्यं त्वया कार्यं यदनेनाश्रुतं मम ॥ २१ ॥
एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च ॥ स पश्चात्तप्यते राजा यथाऽन्यः प्राकृतस्तथा ॥ २२ ॥
अतिसृज्य ददानीति वरं मम विशांपतिः ॥ स निरर्थं गतजले सेतुं बन्धितुमिच्छति ॥ २३ ॥
धर्ममूलमिदं राम विदितं च सतामपि ॥ तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ॥ २४ ॥
यदि तद्वक्ष्यते राजा शुभं वा यदि वाऽशुभम् ॥ करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥२५॥

---

न् पितरि । कथंनवर्तेत तद्वशेएववर्तेतेत्यर्थः ॥ १६ ॥ तेअभिमानात् तववाल्लभ्यात् । कोपेनवा ममपिता भवत्याकिंचित्परुषमुक्तःकच्चित् । यत्र येन । अस्यमनः लुलितं कलुषितम् ॥ १७॥ किंनिमित्तमित्याद्याचक्ष्वेतिपूर्वोक्तस्यसर्वस्यसंग्रहः ॥ १८ ॥ एवं इति । धृष्टं प्रत्यक्षतोरामानिष्टवचनविषयवैक्लव्यरहितम् ॥ १९—२० ॥ त्वद्भयादित्यस्यविवरणं—प्रियमिति । आश्रुतं प्रतिज्ञातम् ॥ २१ ॥ तत्किमित्यपेक्षायांसामान्यतोदर्शयति—एषइत्यादिना ॥ २२ ॥ अतिसृज्य प्रतिज्ञाय । गतजलेसेतुंबन्धितुमिच्छतीति । दानस्यपूर्वमेवकृतत्वादिदानींतत्परिहारव्यापारोव्यर्थइतिभावः ॥ २३ ॥ इदं जगत् । धर्ममूलं । इदंच सतांविदितं सद्भिर्विदितं "क्तस्यचवर्तमाने" इतिषष्ठी। तत् तस्मात् । सत्यं सत्यरूपधर्मं । राजा त्वत्कृते त्वत्प्रयोजनाय । मयिकुपितःसन्यथानत्यजेत् तथाकुर्वित्यर्थः ॥ २४ ॥ तर्हितद्विशेषतोवक्तव्यमित्यत्राह—यदीति । शुभमशुभंवातत्प्रतिज्ञातं राजायद्वक्ष्यतितत्त्वंकरिष्यसियदि तदाराज्ञोविवक्षितमहमेवाख्यास्यामीत्यर्थः ॥ २५ ॥

---

स्समासः अकुतोभयइत्यादिवत् । ततश्च योऽहंमूलंयस्यसयन्मूलस्तंप्रादुर्भावंआत्मनस्स्वस्यजानीयात् । तस्मिन्दशरथविषयेतस्मिन्सतिप्रत्यक्षेमयिदैवतेकुशलप्रश्नादिःकथंनानुवर्तेत ॥१६॥ **सत्य०** ते त्वद्विषये । ममपिता परुषं निष्ठुरं । कोपेन किंचिदुक्तवानितिशेषः । भवत्यावाअभिमानात् कनीयसीजायेत्यभिमानात् । किंचित्परुषंयथाभवतितथाउक्तः । येनास्यराज्ञोमनोलुलितं । अवक्तव्यंमयोक्तमितिमाननीयंमांप्रतिमानिन्येवमुक्तवतीत्युभयथाचलितमित्यर्थः । ते त्वया । येन त्वदुरुक्त्याकारणेन । भवत्याइतिषष्ठी। उपरीतिशेषः । तइतिषष्ठ्येव । भवत्याउक्तःतेउपरिरोषेणेतिवान्वयः । यद्वा विनाशेषंषष्ठ्यर्थसंबन्धत्वेनोपरीत्यर्थलाभः । एवमन्वयकरणेनदुःखितत्वादधिकपदोक्तिरितिकेनचिदुक्तंनिरस्तंज्ञातव्यं ॥ १७ ॥ **सत्य०** किंनिमित्तमितिप्रथमान्तं । केननिमित्तेनेत्यर्थः । "निमित्तकारणहेतुषु—"इतिकात्यायनस्मृतेः । किंनिमित्तंविकारोभूत्तन्ममाचक्ष्वेत्यन्वयः । सदैवंविधस्यकुतोयंप्रश्नइत्यंतोनेत्यप्यनेनाह—**अपूर्वोयमिति** । अकारःपूर्वोयस्यसतथा । तादृशोविकारोयस्मिन्मनुजाधिपेतस्मिन्नित्यन्वयः ॥ १८ ॥ **शि०** सुनिर्लज्जा यशःप्रख्यापनरूपपत्युपकारार्थंत्यक्तव्रीडा । कैकयी । आत्महितं जीवानामुपकारकं । अधृष्टं प्रागल्भ्यरहितं । इदंवचउवाच ॥ १९ ॥ **सत्य०** त्वद्भयात् त्वदितिभिन्नंपदं । "भीत्रार्थाना" मित्यपादानपञ्चमी ॥ २० ॥ **ति०** श्रुतं प्रतिज्ञातं ॥ २१ ॥ **सत्य०** मह्यमितिद्वितीयान्तंचतुर्थ्यन्तंच । तत्रद्वितीयान्तंवरशब्देनान्वेति । पूज्यमितितदर्थः । चतुर्थ्यन्तंदानक्रियान्वेति । प्राकृतः अज्ञः । लोकेयथातथेत्यर्थः। दृष्टान्ततयाप्रकृतःप्राकृतोननियामकेष्वन्यतमइत्याह—**अन्यइति** । अनतेर्यत् । चेष्ट्यइत्यर्थः । नच "ऋहलोर्ण्यत्" इतिण्यतिमाह्यमितिभवेदितिच्यम् । णित्वप्रयुक्तवृद्ध्यभावः संज्ञापूर्वकविधेरनित्यत्वस्य "शतचक्रं योह्यः"इत्येतद्व्याख्यावसरेतत्वसुबोधिन्यामुक्तेर्नानुपपन्नः । तप्यते "कण्ड्वादिभ्योयक्" इतिकर्तरियक् । संतप्तइत्यर्थः । यद्वा भावेयक् । राजेति राजतेःक्विपितृतीयान्तं । सइत्यस्यप्राकृतइत्यनेनान्वयः ॥ २२ ॥ **शि०** यदि यदा । अशुभं निंबौषधादिवत्प्रातिभासिकाशुभत्वविशिष्टं । **सत्य०** वक्ष्यते वक्ष्यति । "ब्रुवोवचिः" इतिवच्यादेशस्यस्थानिवद्भावेनञित्वात् "स्वरितञितः—" इत्युभयपदित्वाद्वक्ष्यतेवक्ष्यतीतिचयुक्तं । यद्वा राजेतितृतीयान्तं । यद्राजावक्ष्यतेशुभमशुभंवाभवतुतत्करिष्यसिपुनः करिष्यस्येवचे-

**[ पा० ]** १ घ. कच्चित्तु. २ ङ. छ. झ. रोषेण. ३ ङ. च. छ. झ. ञ. येनास्य. क. यत्रासीत्. ४ क. घ. ट. च. ञ. तस्य. ५ न्नतुभाषते. ङ. छ. झ. ट. न्नानुभाषते. ६ ङ. झ. नास्यप्रवर्तते. ७ घ—छ. झ. ञ. नश्रुतं. ८ घ. ङ. ञ. ददामीति. ९ क. स्त्वत्कृतेऽनघ. च. स्त्वत्कृतेनच. १० ङ. छ. पुनस्सर्वं. घ. ततःपूर्वं. ट. तदासर्वं.

यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते ।। ततोऽहमभिधास्यामि न ह्येष त्वयि वक्ष्यति ।। २६।।
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।। उवाच व्यथितो रामस्तां देवीं नृपसन्निधौ ।। २७ ।।
अहो धिङ्नार्हसे देवि वक्तुं मामीदृशं वचः ।। अहं हि वचनाद्राज्ञः पतेयमपि पावके ।।
भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे[1] ।। २८ ।।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ।। २९ ।।
तद्ब्रूहि वचनं देवि राज्ञो[2] यदभिकाङ्क्षितम् ।। करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ।। ३० ।।
तमार्जवसमायुक्तमनार्या[3] सत्यवादिनम् ।। उवाच रामं कैकेयी वचनं भृशदारुणम् ।। ३१ ।।
पुरा दैवासुरे[4] युद्धे पित्रा ते मम राघव ।। रक्षितेन वरौ दत्तौ सशल्येन महारणे[5] ।। ३२ ।।
तत्र मे याचितो राजा भरतस्याभिषेचनम् ।। गमनं दण्डकारण्ये तव चाद्यैव राघव ।। ३३ ।।
यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि[6] ।। आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ।। ३४ ।।

राजैवकुतोनवदतीत्यत्राह—यदीति । नविपत्स्यतेयदि विफलंनभविष्यतिचेदित्यर्थः ।। २६ ।। व्यथितः गुरुवचनंकरिष्यतिनवेतिसंदेहस्यविषयोस्मीतिसंतप्त-इत्यर्थः ।। २७ ।। व्यथामेवाह—अहोइत्यादिना ।। २८ ।। गुरुत्वपितृत्वनृपत्वहितपरत्वानिवचनकरणहेतवः । करिष्येतदित्यनुकर्षः ।। २९ ।। यत्कार्यमभिकाङ्क्षितंतद्वचनं तद्विषयवचनंब्रूहि । तत्कार्यंकरिष्ये । प्रतिजानेच प्रतिज्ञांकरोमिच । रामोद्विर्नाभि भाषते विनाप्रतिज्ञयारामोद्विरुक्तिंनकरोतीत्यर्थः ।। ३०—३२ ।। तत्र वरप्रदाननिमित्तं ।।३३—३४।।

त्तर्हीदंसर्वमाख्यास्यामीत्यन्वयः । "पुनरप्रथमेप्रश्नेव्यावृत्ताववधारणे" इत्यभिधानात् ।। २५ ।। **ती०** राज्ञा राजानुमत्या ।।२६।। **सत्य०** देवींदेवीमिव । "देवीकृताभिषेकायां" इत्यमरः । भरतसंपत्संपादनेच्छयादशरथदाशरथ्युभयजिगीषावतीमितिवा ।।२७।। **सत्य०** ईदृशं याः रमाया दृक्यस्मिन्मयितंमांईदृशंपूर्वोक्तंवचःवक्तुंनार्हसे अतस्त्वयैवमुक्तंमांधिक् । साक्षान्मङ्गलदेवतापिरमानित्यंमांकामयतेतादृशस्यममकिमल्पराज्येनेतिरामभावमाविश्चकारकविरितिज्ञेयम् । नार्हसे नार्हसि । "चन्द्रादयस्तुमन्यन्तेसर्वस्मादुभयंपदं" इत्युक्तेरात्मनेपदत्वं ।। २८ ।। **शि०** गुरुणा वसिष्ठेन । **सत्य०** नपितृत्वंहिरण्यकशिप्वादिवदित्याह—**हितेनेति** । तदपिनोग्रसेनादिवदित्याह—**नृपेणेति** । तदपिनधृतराष्ट्रवदित्याह—**गुरुणेति** ।।२९।। **ति०** रामोद्विरिति । यदुक्तंतदुक्तमेव । तद्विरुद्धंनपुनर्वदतीत्यर्थः । तत्तदभावविषयतयाद्विरावृत्तंभाषणंनकरोतीतियावत् । **सत्य०** रामइतिपरोक्षोक्त्यास्वस्ययथार्थवादित्वंसार्वजनीनमितिसूचयति ।। ३० ।। **शि०** अनार्या सर्वश्रेष्ठा ।। ३१ ।। **सत्य०** देवासुरे मत्वर्थीयाच्प्रत्ययान्तोयं । कर्तृत्वसंबन्धेनदेवासुरविशिष्टेयुद्धइत्यर्थः । महारणेदेवासुरयुद्धान्तर्गतदेवसहायार्थंगतस्वकर्तृकेमहारणेइत्यर्थः । तेननपौनरुक्त्यम् । मम । संबन्धसामान्येषष्ठी । सचप्रकृतेकर्तृत्वरूपः । मयारक्षितेन । सशल्येन शङ्कुसहितेन । नतावन्मात्रेण सशल्येन बाणसहितेनेत्यर्थः । क्षत्रियाणांशरादिधारणेनोदीरणंशपथज्ञापकमितिभावः । "शल्यश्शङ्कौशरेवंशकुञ्जिकायांचतोमरे" इतिविश्वः ।। ३२ ।। **ती०** तत्र द्वयोर्वरयोर्मध्ये । एकेनभरतस्याभिषेचनम् अन्येनतवदण्डकारण्यगमनम् । **शि०** तत्र देवासुरसंग्रामसमये । प्राप्तौवरौराजाअद्यैवमयायाचितः । **सत्य०** मयाभरतस्याभिषेचनंतवाद्यैवदण्डकारण्येगमनंचाद्यैवराजायाचितः । गौर्दुह्यतेपयइतिवत्प्रधानकर्मत्वाद्राज्ञस्तद्वाचकात्प्रथमा । "गौणेकर्मणिदुह्यादेः" इतिवचनात् । कैकेय्यास्सत्स्वभावमप्यनयोक्त्यानिरूपयति—**दण्डकारण्य इति** । हेआद्य । हेदण्डक अखिलशिक्षक । त्वं अरेणसहितोण्यः अरण्यस्तस्मिन्सुधासमुद्रद्वये याचितः या रमया आचितः सम्यक्संबद्धः । नित्यावियोगीतियावत् । अततेर्डप्रत्ययेअइतिभवति । अस्य विष्णोस्स्त्री ई । "पुंयोगादाख्याया" मितिङीष् । "अकारो वासुदेवस्स्याल्लक्ष्मीरीकारउच्यते" इत्यभिधानात् । ईआचितइतिस्थितेयणादेशेयाचितइतिभवति । तस्यतवेतिपूर्ववत्सर्वम् ।।३३।। **शि०** शृणु श्रवणपूर्वकाचरणंकुरु । **सत्य०** सत्यप्रतिज्ञंकर्तुमिच्छसीत्यनेनतस्यसामर्थ्याभावान्मत्कार्यंतवहस्तेविन्यस्तमितिध्वनयति । पितरंसत्यप्रतिज्ञंकर्तुमर्हसीत्यनेनैवरामप्रतिज्ञायास्सत्यत्वलाभेपि "द्विर्बद्धंसुबद्धं" इतिमहाभाष्योक्तेःपुनर्वचनंदार्ढ्यायेत्युक्तं भवति । स्वपुत्रस्याभिलषितंनरश्रेष्ठत्वंपारवश्येनरामेप्रयुक्तं । यथोक्तंकर्णामृते "सौमित्रेकधनुर्धनुर्धनुरितिव्यग्रागिरःपातुवः" इति । श्रीभागवतेपञ्चमेद्वितीयेपूर्वचित्तिंप्रतिआग्नीध्रवचनं "कात्वंचिकीर्षसिचकिंमुनिवर्यशैले" इत्यादि । तत्तात्पर्येच "परिहासप्रलापादि-

**[ पा० ]** १ ङ. छ. झ. चार्णवे. २ ख. ग. राज्ञा. ३ क. सातमार्जवसंयुक्तं. ख. तमार्जवे. ४ क—घ. च. छ. झ. अ. ट. देवासुरे. ५ ट. मयारणे. ६ क. ख. मर्हसि.

सन्निदेशे पितुस्तिष्ठ यथाऽनेन प्रतिश्रुतम् ॥ त्वयाऽरण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ ३५ ॥
भरतस्त्वभिषिच्येत यदेतदभिषेचनम् ॥ त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ॥ ३६ ॥
सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः ॥ अभिषेकमिमं त्यक्त्वा जटाजिनधरो वस ॥ ३७ ॥
भरतः कोसलपुरे प्रशास्तु वसुधामिमाम् ॥ नानारत्नसमाकीर्णां सवाजिरथकुञ्जराम् ॥ ३८ ॥
एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः ॥ शोकसंक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९ ॥
एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन ॥ सत्येन महता राम तारयस्व नरेश्वरम् ॥ ४० ॥

इतीव तस्यां परुषं वदन्त्यां न चैव रामः प्रविवेश शोकम् ॥
प्रविव्यथे चापि महानुभावो राजा तु पुत्रव्यसनाभितप्तः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

सन्निदेशे नियमने ॥ ३५ ॥ यदेतदभिषेचनम् अभिषेकसाधनं। त्वदर्थेविहितं तेनसर्वेणराज्ञाभरतोभिषिच्येतेतियोजना ॥ ३६—३८ ॥ एतेन वरद्वयप्रदाननिमित्तेन ॥ ३९—४० ॥ इवशब्देनअन्यान्यपिपरुषाणिबहून्युक्तानीतिगम्यते । शोकं मुखवैवर्ण्यादिबाह्यविकारम् । प्रविव्यथेचापि रामविकारादर्शनेनाप्यधिकंविव्यथइत्यर्थः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

---

ष्वनर्थावाग्भवेत्क्वचित्''इत्यादि। पूर्ववत्स्वभावानुगुण्यंचज्ञेयम् ॥ ३४॥ **सत्य०** सन्निदेशेआज्ञायां। कैकेय्याराजमर्यादयाद्वादशचतुर्विंशत्यादिवर्षपर्यन्तमरण्यंप्रवेष्टव्यमितिवक्तव्येनववर्षाणिपञ्चचेतिचतुर्दशवर्षोक्तिस्तुरावणस्यायुषांचतुर्दशवर्षाणामेवावशिष्टत्वात् । द्वादशेत्युक्तौतद्धननादिकमकृत्वैवागन्तव्यमितिभवति । अधिकोक्तौतुजोषंवस्तव्यमितिभवति । अतश्चतुर्दशेतिदेवोवादयामासेतिज्ञातव्यम् ॥३५॥ **सत्य०** अभिषेकशब्दस्यघञन्तत्वेपितद्विशेषणस्येदंशब्दस्यनपुंसकत्वमुपपद्यते ।तद्विशेष्यपदार्थस्याभिषेचनस्यनपुंसकत्वात् । यथोक्तं ''संबन्धमनुवर्तिष्यते'' इतिमहाभाष्यव्याख्यानावसरेकैयटेन ''संबध्यतइतिसंबन्धं । कर्मणिघञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशइति । उपपादितंचैतन्निपुणतरं ''यथार्थज्ञानजनकायथार्थायुक्तयः'' इत्यनुव्याख्यानसुधाव्याकरणावसरे ''उच्यतेअनियतलिङ्गानांविशेषणपदानांविशेष्यपदलिङ्गत्वमेवेतिनसर्वत्रनियमः। ''अहमेवेदंसर्वोस्मि''।''अजानतामहिमानंतवेद''मित्यादौव्यभिचारात् । सर्वमहिमशब्दयोःपुंलिङ्गत्वेपितद्विशेषणयोरिदंशब्दयोर्नपुंसकत्वात् । किंतुक्वचिल्लिङ्गानामर्थधर्मत्वमितिपक्षे विशेष्यपदप्रतिपाद्यार्थलिङ्गत्वमस्ति''इत्यादिना । ''नन्वेवंचेत्सर्वत्रातिप्रसङ्गइतिचेन्न । अभियुक्तप्रयोगेसतिनिमित्तानुसरणंनतुनिमित्तमस्तीतिप्रयोगः''इत्यादिनातत्रैवयादुपत्येस्पष्टमुक्तेः। अभियुक्ताग्रेसरश्चभगवान्वाल्मीकिरिति। निरूपितवन्तश्चैवमेव ''देवममीवचातनं'' इत्येतद्व्याख्यानभूतायाः ''अमीवादुःखतश्च्यावयति'' इतिटीकायाःव्याख्यानावसरेव्याख्यातारः । यद्वाइदमित्यस्यारण्यमित्यनेनान्वयः । इममितिपाठेतुनानुपपत्तिः ॥ ३७ ॥ **शि०** एतेन संभावितत्वद्वियोगजनितेन ॥ ३९ ॥ **सत्य०** तारयस्व ''णिचश्च'' इत्यात्मनेपदं । स्वनरोत्तममितिपदच्छेदे यदिसत्यप्रतिज्ञंत्वंपितरमात्मानंचेत्युभाभ्यांप्रतिज्ञातत्वावगमात् अत्रापिनिगमनकाले स्वेनआत्मनासहितश्चासौनरेश्वरश्चेत्युत्तरपदलोपिसमासेस्वनरोत्तममितिवादोनुगुणोभवति । ततश्चस्वंनरोत्तमंचतारयेत्यर्थः । उत्तरश्लोकादिवेत्याकृष्यते । लोकःयेनसंक्लिष्टवदनःनिरीक्षितुंनशक्नोति सयमात्माधर्मराजःकुरुनरेन्द्रस्यधृतराष्ट्रस्यवचनमिव ॥४०॥ **शि०** परुषंपरुषत्वेनप्रतीयमानं । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तम् । **ति०** राजाच राजातु । **सत्य०** चशब्दइवार्थे । यथाराजापुत्रव्यसनाभितप्तः तथारामोनेतिव्यतिरेकदृष्टान्तः । अभितप्तइत्यनेनरामस्यपुत्रत्वं पुन्नामनरकत्रायकत्वंलोकसाधारणंनभवति अपितुसंसारतारकत्वमस्येतिलोकोत्तरसंतापंसूचयति ॥ ४१ ॥ इत्यष्टादशस्सर्गः ॥ १८ ॥

[ पा० ] १ ट. यदनेन. क—घ. च. ज. ञ. यथातेन. २ ख. त्वयारण्ये. ३ क. ग. घ. ङ. च. छ. झ. ञ. ट. भरतश्चाभि. ४ ख. त्वदर्थेपिहितं. ५ ङ. झ. मिदं. ६ ङ. च. छ. झ. ञ. जटाचीरधरोभव. ज. जटाजिनधरोभव. ख. जटाजिनधरोवसेः. ७ ङ. छ. झ. ट. कोसलपतेः. च. ञ. कौसलपुरे. ८ ङ. छ. झ. संकुलाम्. ९ घ. तेनत्वांहि. १० ङ. छ. झ. ञ. शोकैः. ११ ङ. छ. तस्याःपरुषंवदन्त्याः. १२ ख. कोपम्. १३ ङ. च. छ. झ. ञ. ट. राजाच. ख. ग. घ. ज. राजास.

## एकोनविंशः सर्गः ॥ १९ ॥

**रामेणकैकेयींप्रतिसीताकौसल्यासमाश्वासनावधिविलंबक्षमापनेनवनगमनप्रतिज्ञानपूर्वकंबाष्पाक्षेणलक्ष्मणेनसहकौसल्यागृहंप्रतिगमनम् ॥ १ ॥**

तदप्रियममित्रघ्नो वचनं मरणोपमम् ॥ श्रुत्वा न विव्यथे रामः [1]कैकेयीं चेदमब्रवीत् ॥ १ ॥
[2]एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः ॥ [3]जटाजिनधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २ ॥
इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः ॥ नाभिनन्दति दुर्धर्षो [4]यथापुरमरिंदमः ॥ ३ ॥
मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रतः ॥ यास्यामि भव [5]सुप्रीता वनं चीरजटाधरः ॥ ४ ॥
हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च ॥ नियुज्यमानो विस्रब्धः किं न[6] कुर्यामहं प्रियम् ॥ ५ ॥
अलीकं [7]मानसं त्वेकं हृदयं [8]दहतीव मे ॥ स्वयं [9]यन्नाह मां राजा भरतस्याभिषेचनम् ॥ ६ ॥
अहं हि सीतां राज्यं च प्राणानिष्टान्धनानि च ॥ हृष्टो भ्रात्रे स्वयं दद्यां [10]भरतायाप्रचोदितः ॥७॥
किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः ॥ तव च प्रियकामार्थं प्रति[11]ज्ञामनुपालयन् ॥ ८ ॥
[12]तदाश्वासय [13]ह्रीमं त्वं [14]किंन्विदं यन्महीपतिः ॥ वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ ९ ॥

---

मरणोपममितिलोकदृष्ट्या ॥ १ ॥ इतः अस्मान्नगरात् ॥ २ ॥ यद्यप्येतेनकारुण्येनसमाप्लुतइत्यनभिनंदनेहेतुरुक्तः तथापिमत्स्वभावंजानन्किमर्थंनाभिनन्दतीत्याहेतिबोध्यम् । यथापुरं यथापूर्वं ॥ ३ ॥ मन्युः दैन्यम् । " मन्युर्दैन्येक्रतौक्रुधि " इत्यमरः । ब्रूमि ब्रवीमि ॥ ४ ॥ हितेन हितपरेण । गुरुणेत्यनेनरामस्यतस्मान्मन्त्रविशेषस्वीकारोस्तीतिगम्यते । कृतज्ञेन स्वकृतवरप्रदानाभिज्ञेन ॥ ५ ॥ अलीकम् अप्रियं । मानसं मनसिवर्तमानं ॥ ६ ॥ तवाप्रीतिर्भविष्यतीति नोक्तवानित्याशङ्क्याह—अहंहीति । सीतां धनुर्भङ्गकालइतिभावः ॥ ७ ॥ पित्राप्रचोदितस्तवप्रियकामार्थं प्रतिज्ञामनुपालयंश्चदद्यामितिकिंपुनः ॥८॥ इमं राजा-

---

**ति०** अथाभिषेकवनवासयोःसमचित्ततयाधीरोदात्तमहापुरुषत्वंरामस्याह—**तदिति । शि०** अप्रियं पितुरितिशेषः । अत एवमरणोपमम् । **सत्य०** अमित्रघ्नइत्यनेनस्वस्यमध्यायातान्तरायनिवारकत्वेपिस्वसंकल्पानुसार्यैतत्कैकेयीवचनमितिमानयामास मातरमितिसूचयति ॥ १ ॥ **शि०** इतः भवत्याअभिप्रेतत्वात् ॥ २ ॥ **शि०** अभिनन्दति अभिनन्दयति वचनाद्यैरितिशेषः । अन्तर्भावितणिजर्थः । **सत्य०** दुर्धर्षः । आर्षःखलु । अतो "भाषायांशासियुधिदृशिधृषि—"इत्यादिनावार्तिकेननयुच् ॥ ३ ॥ **सत्य०** मन्युर्नचत्वयाकार्योमह्यमितिशेषः । ब्रूमीतीडभावादिरार्षः ॥ ४ ॥ **ति०** कृतज्ञेन त्वत्कृतस्वापत्त्राणज्ञेन ॥ ५ ॥ **ति०** अलीकं दुःखम् । **सत्य०** राजा भरतस्याभिषेचनंमांप्रतिस्वयंनाहेत्येतत् मानसं मनस्संबन्धि यदलीकमप्रियं तन्मेहृदयंमनोदहतीवेत्यन्वयः । यद्वा हेवमे अवमे यद्यपिअवद्यावमाधमार्वरेफाःकुत्सितइतिधातोरवतेरमप्रत्ययेऽवमइतिभवति । तथाप्यपूर्वकान्माधातोरौणादिकेप्रत्ययेअपगतावगतिकत्वेनप्रयोजकेनप्रयोज्यंनीचत्वंलक्ष्यतइतिनानुपपत्तिः । "वष्टिभागुरिरल्लोपं" इतिस्मरणात् । नीचेकैकेयि राजा स्वयंयस्मादेतन्नाह तस्मात्तव मानसं मनसिविद्यमानं जनानामलीकमप्रियंभरतस्याभिषेचनंत्वद्धृदयंदहति । इ विस्मये । आश्चर्यमित्यर्थः ॥ ६ ॥ **ति०** प्रचोदितः त्वयापीतिशेषः । **सत्य०** इष्टानित्येतद्यथायोग्यंविपरिणतंसत्सीतामित्यादिनान्वेति । हृष्टस्सन्स्वयमेवदद्यात् । तत्रापिमनुजेन्द्रेणस्वयंसाक्षात्पित्राप्रचोदितस्सन्दद्यामितितुकिंपुनर्वाच्यमित्यन्वयः । एतेन त्वदपत्यंमदपत्यंपुरेतित्वदर्थितसमर्थनंममापिसंमतमितिध्वन्यते । द्वितीयंप्रचोदितइत्येतत्तृतीयार्थकेनतवेत्यनेनान्वेति । तेनप्रचोदितशब्दयोर्न पौनरुक्त्यं । तवचप्रियकामार्थमित्यनेन तवप्रियोयःकामःकामावतारोयोभरतस्तदर्थमित्यप्यर्थस्सूचितोभवति । शुभरतोभरतइति मतिमतश्श्रीमतोरामस्यसीतांदद्यामित्युक्तिर्नलौकिकरीतिविरुद्धाभवतीतिहृष्टइतिकवयताकविनाऽसूचीतिनानौचिती आलोचनीया भगवतीतिमन्तव्यम् ॥ ७—८ ॥ **सत्य०** ह्रीमन्तं अवाच्यमिदंकिमितिवच्मीतिलज्जायुक्तं । वसुधासक्तनयनइत्यनेनत्वमेवमत्पुत्रसङ्गोन्मूलनस्यमूलमितिक्षमामीक्षतेक्षमानाथइतिध्वनयांचकार ॥ ९ ॥

**[ पा० ]** १ ग. घ. झ. कैकेयीमिद. २ घ. एवमुक्तो. ३ क. ख. ङ. च. छ. झ. ञ. ट. चीरधरो. ४ घ—ट. पूर्वमरिंदमः. ५ घ. संप्रीता. ६ ग. ज. किंनु. ७ ख. मानसेप्येकं. ८ ङ. छ. झ. ट. दहतेमम. ९ ख. नाहमहाराजः. १० ङ. च. छ. झ. ञ. भरतायप्रचोदितः. ११ क. पालय. १२ ङ. झ. ट. तथा. १३ क. भीतं. क. ग. घ. ज. कामं. ङ. च. छ. झ. ञ. ट. ह्रीमन्तं. १४ घ—छ. झ. ञ. किंस्विदं.

गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः ॥ भरतं मातुलकुलादद्यैव नृपशासनात् ॥ १० ॥
दण्डकारण्य[1]मेषोऽहमितो गच्छामि सत्वरः ॥ अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ११ ॥
सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी ॥ प्रस्थानं [2]श्रद्दधाना हि त्वरयामास राघवम् ॥ १२ ॥
एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः ॥ भरतं [3]मातुलकुलादुपावर्तयितुं नराः ॥ १३ ॥
तव त्वहं क्षमं मन्ये नोत्सुकस्य विलंबनम् ॥ राम तस्मादितः शीघ्रं वनं त्वं गन्तुमर्हसि ॥ १४ ॥
व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते ॥ नैतत्किंचिन्नरश्रेष्ठ मन्युरेषोपनीयताम् ॥ १५ ॥
यावत्त्वं न वनं यातः [4]पुरादस्मादभित्वरन् ॥ पिता तावन्न ते राम स्नास्यते [5]भोक्ष्यतेऽपि वा ॥ १६ ॥
धिक्कष्टमिति निश्वस्य राजा शोकपरिप्लुतः ॥ मूर्च्छितो न्यपतत्तस्मिन्पर्यङ्के हेमभूषिते ॥ १७ ॥
रामोप्युत्थाप्य राजानं कैकेय्याऽभिप्रचोदितः ॥ [6]कशयेवाहतो वाजी वनं गन्तुं कृतत्वरः ॥ १८ ॥
तदप्रियमनार्याया वचनं दारुणोदयम् ॥ श्रुत्वा गतव्यथो रामः कैकेयीं [7]वाक्यमब्रवीत् ॥ १९ ॥
नाहमर्थपरो देवि लोकमावस्तुमुत्सहे ॥ विद्धि मामृषिभिस्तुल्यं [8]केवलं धर्ममास्थितम् ॥ २० ॥
[9]यदत्रभवतः किंचिच्छक्यं कर्तुं प्रियं मया ॥ प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥ २१ ॥

नं । त्वमाश्वासय । अश्रूणि मुञ्चतीतियत् इदंकिंनु निर्हेतुकमित्यर्थः ॥ ९—१० ॥ पितुर्वाक्यमविचार्य वनंगच्छेतिपित्रानोक्तमितिविचारमकृत्वेत्यर्थः । समाः संवत्सरान् ॥ ११—१३ ॥ अयं यावद्भरतागमनंविलंबिष्यतेचेन्महाननयःस्याद्भरतस्यज्येष्ठभ्रातृभक्तत्वादितिमत्वाह—तवत्विति । उत्सुकस्य भरताभिषेकदर्शनोत्सुकस्य । गमनोत्सुकस्यवा ॥ १४ ॥ नृपोव्रीडान्वितःसन्स्वयंनाभिभाषतइतियत् एतत् नकिंचित्विचारानर्हंव्रीडांविनाकारणान्तराभावात् । मन्युः स्वयंनाभिभाषतइत्याग्रहः दैन्यंवा ॥१५—१६॥ धिगिति उक्तासत्यवचनंश्रुत्वेतिभावः ॥ १७ ॥ कृतत्वरः अभूदितिशेषः ॥ १८—१९ ॥ लोकमावस्तुम् लोकेवस्तुम् । "उपान्वध्याङ्वसः" इतिकर्मत्वं । धर्मं आस्थितं आश्रितं । अनेनराज्यायभरतागमनंप्रतीक्षतेरामइतिकैकेयीशङ्कावारिता ॥ २० ॥ अत्रभवतः पूज्यस्यपितुः । कृतमेवेति विद्धीतिशेषः ॥ २१ ॥

**सत्य०** कुलात् गृहात् । मातुलकुलात् नविद्यतेतुलायस्यतन्मातुलं अतुलंतच्चतत्कुलंचेतितस्मादित्यनेनासदृशकुलवासीभरतो नतवानुकूलोभवतीत्यर्थस्सूचितोभवति ॥१०॥ **विष०** स्वयंनाभिभाषतइतियत् एतत् अनभिभाषणं । नकिंचित् नान्यकारणकं । त्वदविलंबगमनाभावएवास्यकारणं । अतएषमन्युः राज्ञोदैन्यं । त्वदविलंबगमनेनापनीयतां त्वयेतिशेषः ॥ १५ ॥ **ति०** इतोपि युक्तोविलंबइत्याह—**यावदिति** । मयादरिद्राधमर्णत्वेनतथाशपथैःप्रतिबन्धादितिभावः ॥१६॥ **शि०** कशया कस्यस्वर्गवासिनः शंमङ्गलंययातयाकैकेय्या । अभिप्रचोदितः प्रेरितः । हतः स्वाश्रितारिहननकर्ता । रामः राजानमुत्थाप्य अवाजी वाज्युपलक्षितयानरहितस्सन्नेव । वनंगन्तुंकृतत्वरः आसीदितिशेषः । हतइत्यत्रकर्माविवक्षयाऽकर्मकत्वेनकर्तरिनिष्ठा । इवएवार्थे ॥१८॥ **शि०** दारुणोदयं दारुणानांराक्षसानां उत्उत्कर्षेण अयःप्रक्षेपःयस्मिंस्तत् । राक्षसप्रक्षेपणबोधकमित्यर्थः। अतएवतदप्रियं तेषांराक्षसानां नप्रियंयस्मिंस्तत् । अनार्यायास्सर्वश्रेष्ठायाःकनिष्ठायावाकैकेय्याः । उदयमित्यत्रासनार्थकाद्दीत्यत्रप्रश्लिष्टाद्दीधातोरच् । **सत्य०** अप्रियं इतरेषां ॥ १९ ॥ **ति०** विमलंधर्ममास्थितं तत्वज्ञानरूपंधर्ममाश्रितं । **सत्य०** ऋषिभिर्ब्रह्मादिभिस्तुल्यं बिंबत्वेनसदृशमित्यर्थः । गत्यर्थस्यऋषधातोर्ज्ञानार्थत्वात्ज्ञानितमत्वाद्ब्रह्मादीनां । विमलं निर्दुष्टं आस्थितं सम्यक्स्थितं धर्मं धर्मराजमिव । एतेन "एतत्कुरुनरेन्द्रस्य" इतिकैकेय्युक्तस्यधृतराष्ट्रवचनाद्वनंगन्तुमुद्यतंधर्मराजमिवमामपिविद्धीत्यनेनोत्तरयामासरामइतिसूचयति । यद्वा नाहमर्थपरः । हि यस्मात् वित् सर्वज्ञः । मद्वचनंनमृषेत्याह—**मामृषिभिस्तुल्यमिति** । मानविद्यतेमृषामिथ्यात्वंयेषुतानिमामृषाणि भाषणानि तानिसंतियेषांतेतथातैर्मामृषिभिर्बलिमान्धात्रादिभिः । "सुप्सुपा" इतिमामृषापदयोस्समासः । नपुंसकत्वेनह्रस्वत्वेअतइन् । तैस्तुल्यंमांविद्धीत्यावर्तितेनान्वयः । अहन्तादिसंगतश्चेत्तथाकुर्यांनाहंतथेत्याह—**नेति** । अहमर्थपरः अहंकारी । यद्वा अर्थपरः अर्थेषणावान्नेत्यर्थः । नापुमान् । अहमर्थपरः अहमर्थः अहंकारनिवृत्तिस्तत्परइतिवा । "अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यभिधानात् ॥ २० ॥ **सत्य०** अत्रभवतः पूज्यस्यपितुः । यद्वा भवतो भवत्याः । सोत्सेकप्रवृत्ति-

**[ पा० ]** १ घ. मेवाहं. ङ. छ. झ. ट. मेषोहंगच्छाम्येवहिसत्वरः. २ ङ. छ. झ. श्रद्दधानासा. ३ ङ. छ. झ. ट. दिहावर्तयितुं. ४ ङ. च. छ. झ. ञ. ट. तस्मादतित्वरन्. घ. तस्मादभित्वरन्. ५ ज. भोक्ष्यतेऽपिहि. ६ ग. ङ. छ. झ. ञ. ट. कशयेवहतो. ७ ख. चेद. ८ ङ. छ. झ. ट. विमलं. ९ ङ. च. छ. झ. ञ. ट. यत्तत्र.

**न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम् ॥ यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२ ॥**
**अनुक्तोऽप्यत्रभवता भवत्या वचनादहम् ॥ वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३ ॥**
**न नूनं मयि कैकेयि किंचिदाशंससे गुणम् ॥ यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४ ॥**
**यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ॥ ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ २५ ॥**
**भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ॥ तथा भवत्या कर्तव्यं स हि धर्मस्सनातनः ॥ २६ ॥**

---

शुश्रूषा पादसंवाहनादिः । वचनक्रिया वचनकरणम् ॥ २२—२३ ॥ गुणं आर्जवौदार्यादिगुणं । नाशंससे नजानीषइत्यर्थः । ईश्वरतरा अत्यन्तनियन्त्री ॥ २४ ॥ अद्यैवगन्तव्यमित्युक्तं तत्रयत्किंचिद्विलंबंयाचते—यावदिति । मातरंयावदापृच्छेसीतांचानुनयामि तावदनुज्ञांकुर्वितिशेषः । ततः तदनन्तरम् । अद्यैवदिने दण्डकानांमहद्वनं दण्डोनामेक्ष्वाकुसुतस्तस्यराष्ट्रंशुक्रशापात्पांसुवर्षेणविनाशितंसदरण्यमभूत् । तद्राष्ट्रंतन्नाम्नादण्डकमित्युच्यते । "संज्ञायांकन्" इतिकन्प्रत्ययः । प्रदेशभेदाद्बहुवचनम् ॥ २५ ॥ धर्मःसना-

---

मत्त्वेन "पुँल्लिङ्गेनोच्यतेस्त्रीचपुंवच्छक्तिमतीक्वचित्" इत्युक्तेश्चस्त्रियाअपिपुँल्लिङ्गशब्दवाच्यता ॥ २१ ॥ **सत्य०** यथापितरि विषयसप्तमी । शुश्रूषा सेवा । "वरिवस्यातुशुश्रूषा" इत्यमरः । केवलरूढोयंसेवायां । "शुश्रूषाशूद्रस्य" इत्यापस्तंबसूत्रव्याख्यानावसरेहरदत्तेनतथोक्तेः । यथाचतस्यपितुर्वचनक्रियातदुक्तानुष्ठानं । यद्वा तस्यभवतः पूर्वोक्तरीत्याकैकेय्याः । एवमर्थाङ्गीकारेपूर्वोत्तरानुगुण्यंभवति । व्यतिरेकमुखेनापीममेवार्थंस्पष्टमाचष्टे—**नहीति** । अधर्मचरणमितिपदच्छेदः । पितरि पितृविषये । नहिशुश्रूषा असेवा । तस्यावचनक्रिया । अतः आभ्यामन्यन्महत्तरंअधर्मचरणं "नक्वचिद्विष्णुवैभवं" इतिवत्किंचिदितिनिपातसमुदायआक्षेपार्थः । तथाचकिंचित् नकिमपीत्यर्थः । सर्वोत्तमस्यजगत्प्रसवितुर्मेमनधर्मादिनाक्लृप्तं । तथापिलोकमनुकुर्वतइदमुचितमित्यप्याह—**नह्यतइति** । महत्तरं ब्रह्माद्युत्तमाधिकारिवर्गं । किंचित् यवसावसानंचजगत् । नह्यतः । णिजर्थोयं । बन्धयतः । तस्यमेपितृशुश्रूषातस्यवचनक्रियेतिधर्मचरणंवा लोकधर्मचरणमिवेत्यर्थः । "वाविकल्पोपमानयोः" इत्यभिधानात् । पितरियावचनक्रियासापिममसकाशादेव ॥ २२ ॥ **सत्य०** अत्रभवतापूज्येनपित्रानुक्तोपिभवत्यावचनाद्वनेवत्स्यामीत्यन्वयः । पत्तनजनानुगमनेवनमपि भवनतुल्यंइत्यतआह—**विजनइति** । त्वदभिलषितमद्वनवासोपिरक्षोविक्षोभपूर्वकंसज्जनावनहेतुरित्याह—**विजनइति** । विविरुद्धं जनंजन्मययोस्तेविजनेरक्षसीरावणकुंभकर्णरूपे तेवत्स्यामि हनिष्ये । वधहिंसायामित्यस्माल्लृटिस्यप्रत्यये "खरिचे"तिचर्त्वे "अतो दीर्घोयञी"तिदीर्घेवत्स्यामीतिरूपं । "वत्सावत्स्यामिवोरिपुं" इतिसंग्रहरामायणप्रयोगात् । इडभावआर्षः । वधधातुस्तुकौमुद्यां भावकर्मप्रक्रियायां "वधहिंसायांहलन्तः" इति "वधिःप्रकृत्यन्तरः" इतिकाशिकाप्रतीकंप्रकाश्य "वधहिंसायामितिभूवादौपाठात्" इतिसप्तमाध्यायतृतीयपादीय "जनिवध्योश्च" इतिसूत्रव्याख्यापदमञ्जर्युक्तेःप्रसिद्धोस्तीतिनतदन्वेषणप्रयासः ॥ २३ ॥ **ती०** यत् ममेश्वरतरासतीत्वद्वचनकारिणंमांभरतोऽभिषेक्तव्यइत्यनियुज्य राजानं अवोचः अयाचिष्ठाः । अतोमयिगुणं आर्जवलक्षणं । किंचिदपिनाशंससे नविचारयसीत्यर्थः । **सत्य०** हेकैकेयि अगुणं गुणेतरत् दोषादिकं । नूनं निश्चयेन । मयिआशंससे । धातूनामनेकार्थत्वाज्जानासीत्यर्थः । किंचिद्गुणादिकंनाशंससे । कथमेतज्ज्ञायतइत्यतआह—**यदिति** । यद्यस्माद्राजानं "सन्निदेशेपितुस्तिष्ठ" इत्यादिना विपिनयापनाज्ञापकंनृपमवोचः उक्तवत्यसि । त्वंतदधीनएवेतितथोक्तवत्यहमित्यतआह—**ममेति** । इतरराजतरुण्यईश्वर्यः । त्वंतु ममेश्वरतरा । ईशधातोर्वरच्चिटाप् । "तसिलादिष्वाकृत्वसुचः" इतिसूत्रव्याख्यानावसरेपरिगणनंकर्तव्यमित्युक्त्वा दर्शनीयतरेतिपुंवद्भावोदर्शितः । यदाकिंचिद्गुणंनाशंससे । क्वचिद्गुणशब्दोनपुंसकोप्यस्ति । "नगुणानिनियुञ्जते" इतिप्रयोगात् । किंचिदित्यव्ययत्वपक्षेनायव्ययावितिभावः । कथमेतज्ज्ञायतइत्यतआह—**यदिति** । यद्राजानमवोचः वरंदेहीत्यवदः ॥ २४ ॥ **सत्य०** यावन्मातरंकौसल्यांआपृच्छे । "आङ्नुिप्रच्छयोरुपसंख्यानं" इतिवार्तिकादात्मनेपदत्वं । ईषत्पृच्छामि । सीतांचानुनयामि सान्त्वयामि । चोनुक्तसमुच्चायकः । प्रष्टव्यान्सर्वान्पृच्छामीत्यर्थः । तावत् इयन्मात्रंमदपराधंक्षमस्वेतिशेषः । यद्वा यासती ततस्तांकौसल्यांतां अनुनयामि सान्त्वयामि । तथा सीतांचानुनयामि काननंनेष्यामि । तावन्मातरंत्वां आपृच्छे अवकाशमितिशेषः । एवमर्थएवदेवाङ्गत्वशङ्कानवकाशः । अथवा हेमातः सीतांअमासहअनुनयामि । शिष्टंपूर्ववत् । सरय्वादिनद्युत्तरणार्थंकिंचित्पाथेयंननाथतेनाथइति कथयति—**मातरमिति** । आङ्पूर्वात्तॄप्लवनतरणयोरित्यस्मात् "पुंसिसंज्ञायां—" इतिघप्रत्ययेरपरेगुणे आतरन्त्यनेनेत्यातरस्तरपण्यं । उत्तरणार्थंदीयमानंद्रव्यं मापृच्छे नपृच्छामीत्यर्थः । माशब्दोऽयं ॥ २५ ॥ **सत्य०** पितुरितिकर्मणिषष्ठी । शुश्रूषेत् सेवेत । शुश्रूषेदित्येतदन्तर्गतायाशुश्रूषासहिसनातनोधर्मइतिविधेयापेक्षयापुँल्लिङ्गता । सनातनः चिरंतनैरनुष्ठितःपुरातनोधर्मः । सहिनां सहनवतां धर्मइतिवा । अयंधर्मश्श्रुतिसिद्धइत्यप्याह—**सनातनइति** । नादेनशब्देनश्रुतिरूपेणसहवर्ततइतिसनादः। सनादएवसना-

[ **पा०** ] १ क. ह्यत्र. २ क, घ. मम. ३ ङ. ट. मुख्यानाशंससेगुणान्.

[1]स रामस्य वचः श्रुत्वा [2]भृशं दुःखहतः पिता ॥ शोकादशक्नु[3]वन्बाष्पं प्ररुरोद महास्वनम् ॥ २७ ॥
वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तदा ॥ कैकेय्याश्चाप्यनार्याया [4]निष्पपात महाद्युतिः ॥ २८ ॥
स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् ॥ निष्क्रम्यान्तःपुरात्तस्मात्स्वं ददर्श सुहृज्जनम् ॥ २९ ॥
तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह ॥ लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्धनः ॥ ३० ॥
आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ॥ शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥ ३१ ॥
न चास्य महतीं लक्ष्मीं राज्यनाशोपकर्षति ॥ लोककान्तस्य [5]कान्तत्वाच्छीतरश्मेरिव [6]क्षपा ॥ ३२ ॥
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ॥ सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ३३ ॥
प्रतिषिध्य शुभं छत्रं व्यजने च स्वलङ्कृते ॥ विसर्जयित्वा स्वजनं रथं पौरांस्तथा जनान् ॥ ३४ ॥
धारयन्मनसा दुःखमिन्द्रियाणि निगृह्य च ॥ प्रविवेशात्मवान्वेश्म मातुरप्रियशंसिवान् ॥ ३५ ॥

---

तनइत्यत्रधर्मापेक्षयापुँल्लिङ्गत्वम् ॥ २६ ॥ बाष्पमशक्नुवन् निरोद्धुमितिशेषः ॥ २७ ॥ निष्पपात निर्जगाम ॥ २८—३० ॥ आभिषेचनिकं अभिषेकप्रयोजनकं । भाण्डं उपकरणजातं । प्रदक्षिणकरणं "प्रशस्तमाङ्गल्यदेवतायतनचतुष्पथादीन्प्रदक्षिणमावर्तयेत् " इत्यादिधर्मशास्त्रोल्लङ्घनभयात् । नतुतदासक्त्या । दृष्टिंतत्राविचालयन् स्वयंतत्रनिरपेक्षइत्यर्थः । सापेक्षः भरतस्यानेनाभिषेकोस्त्वितिप्रार्थनासहितः । शनैर्जगाम तत्रदेवतासान्निध्यसंभवादितिभावः ॥ ३१ ॥ लक्ष्मीं मुखविकासं । राज्यनाशः राज्यभ्रंशः ॥ ३२ ॥ रामस्यमुखवैवर्ण्यादिशरीरविकाराभावमभिधायमानसविकाराभावमप्याह—नवनमिति । सर्वलोकातिगस्य तुल्यमानावमानस्य । परमयोगीश्वरस्येत्यर्थः ॥ ३३ ॥ व्यजने वालव्यजने ॥ ३४ ॥ रामस्यपरदुःखासहिष्णुत्वादुःख-

---

तनः । निर्वचनत्वादिकारस्यतनादेशः ॥ २६ ॥ **शि०** अनार्यायाः कनिष्ठायाः । **सत्य०** निष्पपात चरणयोरितिशेषः ॥ २८ ॥ **ति०**कैकेयीप्रदक्षिणं सम्यगाचरितंमदिष्टंत्वयेत्यत्यन्तसंतोषाच्छिष्टाचाराच्चेतिबोध्यं । **सत्य०** अन्तःपुरादितिप्रथमान्तं । "राजापौत्रायणश्शोकात्" "कामाच्चनानुमान—" इत्यादिवत् । अततेःकर्तरिक्विप् । तस्मादन्तःपुरात्निष्क्रम्य ॥ २९॥ **ति०** बाष्पपरिपूर्णाक्षः समीपस्थित्याऽवगतवृत्तान्तत्वात् । **शि०** अक्रुद्धः रामाभिप्रायज्ञत्वेनक्रोधरहितः । लक्ष्मणः । परं सर्वरक्षकं । तंराममनुजगाम । **सत्य०** सुमित्रायाःसुमित्राणांचआनन्दंवर्धयतीतिसुमित्रानन्दवर्धनः । भ्रातरमनातुरोराममनुजगामेतिमित्राणिजहर्षिरइतिभावः ॥३० ॥ **ती०** सापेक्षः अपगताईक्षाअपेक्षातयासहितःसापेक्षः निरपेक्षइत्यर्थः । अतएवतत्रआभिषेचनिकभाण्डेदृष्टिमविचालयन् अप्रवर्तयन् । जगामेतिसंबन्धः । यद्वा सापेक्षः अपेक्षाअधोवीक्षणं तद्युक्तस्सापेक्षः । **सत्य०** सापेक्षः रक्षोविक्षोभार्थंपूर्वमेववनगमनापेक्षावानित्यर्थः । दृष्टिंतत्राविचालयन् अनन्यथाकुर्वन् । अवक्रीकुर्वन्नितियावत् । अतएव कंपनेचलिरितिमित्वे णौ "मितांह्रस्वः" इतिह्रस्वेचचलयन्नितिभवेदितिशङ्कानवकाशः । अथवा "वाचित्तविरागे"इतिवाग्रहणानुवृत्तेःमित्संज्ञायामपिह्रस्वविकल्पः । अतः "चालयन्पृथिवींसर्वां" इत्यादिप्रयोगास्साधवः" इतिशरदेवोक्तेःकंपनार्थस्यचलेरपिदीर्घस्संभवति । यद्वा सापेक्षः नविद्यतेपः पालकोयेषांतेअपाःतेषुईक्षा तदवनेच्छेतियावत् । तयासहितस्सापेक्षः । नीरक्षकसद्रक्षणापेक्षोरामः ॥ ३१ ॥ **सत्य०** कविःपारवश्येनश्रीरामस्वरूपंनिरूपयति—**नचास्येति** । महतींलक्ष्मीं शोभांसंपदंवा नापकर्षति । कुतः तत्राप्याह—**अपकर्षतीति** । यस्माद्रामःअपकर्षःअनुत्कृष्टजनःअस्वतन्त्रःसइवाचरतिनत्वस्वतन्त्रः । स्वतन्त्रइतियावत् । एतेन चन्द्रपक्षेकान्तत्वादितिहेतूक्तिःरामचन्द्रपक्षेतदनुक्तिरितिन्यूनतेतिदोषोनावकाशंलभतइतिभावः । यद्वा यःमहतींलक्ष्मींस्वभार्यांसंपदंवाअपकर्षति यत्रगच्छतितत्रनेष्यति तस्यराज्यनाशोनेत्यर्थः । यथोक्तंसंग्रहरामायणे "यत्रयातिरघुसंततिकेतुस्तत्रसंपदतुलानविपत्तिः" इत्यादि । यस्मादयं राज्यनाशः नविद्यतेआशायस्यस नाशः । निष्कामइतियावत् । राज्येनाशःराज्यनाशः । नञोबुद्ध्याविवेकेनान्वयः । अथवाव्यधिकरणोबहुव्रीहिः । लोककान्तस्यलोकमनोहरस्यकान्तत्वान्मनोहरत्वात्शीतरश्मेश्चन्द्रमसःक्षयइवयथाक्षयोलक्ष्मींनापकर्षति । यद्वालोककान्तस्यजनमनोहरस्यरामस्यकान्तत्वाद्धेतोः राज्यनाशःलक्ष्मींनापकर्षति यथाशीतरश्मेःक्षयः नतथेतिव्यतिरेकदृष्टान्तः ॥ ३२ ॥ **सत्य०** सर्वलोकातिगस्य मुक्तस्य । चित्तविक्रिया मनोविकारः । यथानलक्ष्यतेतथेतियोजना । नवनंगंतुकामस्य नवनंदेवैर्नृदेवैश्चक्रियमाणंस्तवनं । वसुरिववसुः । "वसुर्धनाधिपे" इतिविश्वाद्युक्तेः । धनाधिपमिवविद्यमानंदशरथं । वसुंधनमुद्दिश्यरावणादिहननेनपुष्पकमपहर्तुंधरांचत्यजतःसर्वलोकातिगस्येवचित्तविक्रियालक्ष्यते ॥ ३३ ॥ **ति०** दुःखमित्यस्यकैकेय्यालोकापवाद-

[ **पा०** ] १ ङ. छ. झ. ट. रामस्तु. २ ङ. छ. च. झ. भृशंदुःखगतः. क. ख. ङ. ञ. ट. भृशुदुःखगतः. ग. ज. भृशदुःखहतः. ३ ङ. च. छ. झ. ट. वन्वक्तुं. ४ ग. घ. ज. निश्चक्राम. ५ क—घ. कान्तत्वंशीत. ६ ङ. छ—ट. क्षयः.

सर्वो [1]ह्यभिजनः श्रीमाञ्श्री[2]मतः सत्यवादिनः ॥ नालक्षयत रामस्य कि[3]ञ्चिदाकारमानने ॥ ३६ ॥
उचितं च महाबाहुर्न जहौ हर्ष[4]मात्मनः ॥ शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥ ३७ ॥
वाचा मधुरया रामः सर्वं संमानयञ्जनम् ॥ मातुः समीपं धीरा[5]त्मा प्रविवेश महायशाः ॥ ३८ ॥
तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः ॥ सौमित्रिरनुवव्राज धारयन्दुःखमात्मजम् ॥ ३९ ॥
प्रविश्य वेश्मातिभृशं [6]मुदाऽन्वितं समीक्ष्य तां चार्थविपत्तिमागताम् ॥
न चैव रामोत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्तिशङ्कया ॥ ४० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

शब्देनसुहृज्जनदुःखदर्शनजंदुःखमुच्यते। अप्रियशंसिवान् अप्रियमभिधातुकामः । क्वसुः समासाभ्यासलोपआर्षः ॥ ३५ ॥ आकारं विकृताकारं । श्रीमान् रामाभिषेकार्थकृतालङ्कारः ॥ ३६ ॥ उचितं योग्यं । सहजमित्यर्थः ॥ ३७ ॥ एतादृशदुर्दशायामपिरमयितृत्वरूपंरामशब्दार्थंप्रकटयति—वाचेति ॥ ३८ ॥ गुणैः सुखदुःखादिभिः । समतांप्राप्तः समानसुखदुःखइत्यर्थः ॥ ३९ ॥ अर्थविपत्तिं अर्थनाशं । सुहृज्जनस्य आत्मविपत्तिशङ्कया प्राणनाशशङ्कया विक्रियांनजगाम स्वविक्रियास्फुरणेसुहृज्जनोनश्येदितिशङ्कयास्वविक्रियांराज्यनाशजांनादर्शयदित्यर्थः ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

---

जमित्यर्थइतिकश्चित् । **सत्य०** अदुःखमितिच्छेदः । अन्यथा "नचैवरामःप्रविवेशशोकं" इतिपूर्वग्रन्थस्य "नजहौहर्षमात्मवान्" इत्युत्तरग्रन्थस्यचास्वारस्यापत्तेः । इन्द्रियाणिनिगृह्येत्यस्यस्थितायाइत्यध्याहृतेनतस्यचमातुरित्यनेनान्वयः । यथोक्तंसंग्रहरामायणे "वैष्णवव्रतनिष्ठांतां—"इत्यादि । अनेनसदासर्वस्वतन्त्रस्यरामस्याधुनिकेन्द्रियनिग्रहस्योदाहरणममनोहरंस्यात् । आत्मवान् मनस्वी । धैर्यवान्प्रयत्नवान्वा । कौसल्यासान्त्वनयत्नवान् ॥ ३५ ॥ **ती०** अभिजनः अभितोवर्तमानजनः । **सत्य०** अभिजनः स्वकुलजनः । "कुलेप्यभिजनःख्याते" इतिविश्वः । कार्यतोप्यनार्यासंतर्जनेनार्जयामासराज्यमित्यतोवाह—**सत्यवादिनइति** । नवादीअवादी । सतीत्यवादीसत्यवादी । सतीमवादीवा । तस्य । किंचिदाकारमितिनपुंसकत्वंतुअभिषेकमित्यादिवज्ज्ञेयम् ॥३६॥ **सत्य०** समीपमितिक्रियाविशेषणं । वेश्मेत्यस्यानुकर्षआकर्षोवा । यद्वा मातुस्समीपंमानयन् गन्तुंलक्षयन् । प्रविवेशमहायशाइत्येकंपदं । प्रकृष्टश्चासौविश्चतस्मिन्वेशउपवेशोयस्यसतथा । सचासौमहायशाश्च । अनेनस्यन्दनादिनिन्दनमुचितमच्युतस्येति ज्ञाप्यते ॥ ३८ ॥ **सत्य०** समतांप्राप्तः सुखदुःखादिभिस्समलंगतः । सौमित्रिः गुणैः शुभधर्मैः । तं रामंअनुवव्राज । तदेव विशदयति—**धारयन्निति** । यः गुणैः सत्वादिभिः । आत्मजं ब्रह्माणंउप । लक्षणयासर्वेसुपर्वग्रहः । दुःखं दुःखंसुखंचेत्यर्थः । "दुर्दुःखमितिसंप्रोक्तंसुखंखमितिचोच्यते" इतिगीतातात्पर्योदाहृताभिधानात् । "दुरशोभनदुःखयोः" इतिविश्वः । धारयन्समतांप्राप्तः तं सौमित्रिःगुणैरप्रधानैःसमतांप्राप्तइतितमनुवव्राजेत्यर्थः । "गुणोमौर्व्यामप्रधाने" इत्यारभ्य "सत्वाद्यावृत्तिरज्जुषु" इत्यभिधानात् । यथाविपुलविक्रमोवृषभःगुणैःबह्वयवकरज्ज्वावक्रगतिंविहायसमतांप्राप्तोभवतितथेत्यर्थः ॥ ३९ ॥ **ति०** लोकदृष्ट्याअर्थविपत्तिं अर्थभ्रंशं वीक्ष्यापिरामोविक्रियांनजगाम । किंतुसुहृज्जनस्य कौसल्यादशरथादिरूपस्य आत्मनांप्राणानां विपत्तिशङ्कया चिन्तांजगामेतिशेषः । **शि०** मुदाहर्षेणोपलक्षितोरामः । युतं सकलसंपत्तिविशिष्टं । वेश्म कौसल्यागृहं प्रविश्य । अर्थविपत्तिं अर्थस्यपरमपुरुषार्थस्य रामसंयोगस्येत्यर्थः । विपत्तिं अभावं । आगतां प्राप्तामिव तां कौसल्यां । अतिभृशं अत्यन्तं । समीक्ष्यच अत्र अस्मिन्दर्शनेपि । विक्रियां चित्तविकाराभासं नजगाम । तत्रहेतुः आत्मविपत्तिशङ्कया आत्मनांशरीरसदृशानां मात्रादीनामित्यर्थः । विपत्तिशङ्कयादुःखसंभावनया । एवशब्दइवार्थे चोप्यर्थे । **सत्य०** अतिभृशंमुत्यस्यास्सातथातयासहितं । अर्थविपत्तिं राज्याद्यर्थस्यविपत्तिं । विशरणंविनाशनमितियावत् । सुहृज्जनस्य लक्ष्मणादेः । आत्मविपत्तिशङ्कया स्वप्रयुक्तापत्तिशङ्कया । नचविक्रियांचिन्तांजगामेत्यर्थः । जनस्य दण्डकारण्यवासिजनस्य आत्मनास्वतएवअपराधंविनैवआगतायाविपत्तिः विरुद्धभूताखरादिसेनातच्छङ्कया सुहृत् शोभनमनस्कस्सन् । जगामेत्येष्यन्न्यायेनोक्तिः । यद्वा सुहृज्जनस्य ऋष्यादेरिति ॥ ४० ॥ इत्येकोनविंशस्सर्गः ॥ १९ ॥

**[ पा० ]** १ ङ. छ. झ. ट. प्यभिजनः. क. ग. ह्यपिजनः. २ घ. धीमतः. ३ ङ. च. छ. झ. ञ. ट. कंचिदाकार. ४ क. ख. ङ. च. छ. झ. ञ. ट. मात्मवान्. ५ क. ख. ङ—ट. धर्मात्मा. ६ ख. ङ. च. छ. झ. ञ. ट. मुदायुतं. क. मुदान्वितः.

# विंशः सर्गः ॥ २० ॥

रामे कैकेयीगृहान्निर्गच्छति अन्तःपुरस्त्रीभी रामगुणानुवर्णनपूर्वकं करुणं परिदेवनम् ॥ १ ॥ कौसल्यया स्वचरणप्रणामिने रामायपरिष्वङ्गादिपूर्वकमाशीर्वचनम् ॥ २ ॥ तथा रामेण स्वस्य वनगमनं निवेदितया तया शोकाद्भूमौ निपतनम् ॥ ३ ॥ तथा रामाग्रे बहुधा स्वदुःखोद्घाटनपूर्वकं चिरं सकरुणं परिदेवनम् ॥ ४ ॥

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ ॥ आर्तशब्दो महाञ्जज्ञे स्त्रीणामन्तःपुरे तदा ॥ १ ॥
कृत्येष्वचोदितः पित्रा सर्वस्यान्तःपुरस्य च ॥ गतिर्यः शरणं चापि स रामोऽद्य प्रवत्स्यति ॥ २ ॥
कौसल्यायां यथा युक्तो जनन्यां वर्तते सदा ॥ तथैव वर्ततेऽस्मासु जन्मप्रभृति राघवः ॥ ३ ॥
न क्रुध्यत्यभिशप्तोपि क्रोधनीयानि वर्जयन् ॥ क्रुद्धान्प्रसादयन्सर्वान्स इतोऽद्य प्रवत्स्यति ॥ ४ ॥
अबुद्धिर्बत नो राजा जीवलोकं चरत्ययम् ॥ यो गतिं सर्वलोकानां परित्यजति राघवम् ॥ ५ ॥

आर्तशब्दः आर्तानां यादृशः शब्दस्तादृश इत्यर्थः ॥ १ ॥ अन्तःपुरस्य कृत्येषु कर्तव्येषु विषये । गतिः कर्तृत्वेन प्राप्यः । शरणं रक्षिता । "शरणं गृहरक्षित्रोः" इत्यमरः ॥ २ ॥ युक्तः सावधानः । वर्तते शुश्रूषते ॥ ३ ॥ यः अभिशप्तोपि परुषमुक्तोपि । नक्रुध्यति । क्रोधनीयानि क्रोधहेतुकर्माणि वर्जयन् । क्रुद्धान् केवलमाग्रहेण कुपितान् । प्रसादयंश्च वर्तते सः इतः अस्माद्देशात् प्रवत्स्यति । हन्तेति शेषः ॥ ४ ॥ यः सर्वभूतानां गतिं राघवं परित्यजति सनो राजा अबुद्धिः सन् लोकान् चरति भक्षयति । नाशयतीत्यर्थः ।

**शि०** अनिष्क्रामति प्रविशति सति ॥ १ ॥ **स०** सरामइत्यनेन सतीसीतापि पतिमनुगमिष्यतीति भावमाविश्चकार कविरिति ज्ञेयम् । यद्वा नायंमानवो रामः अपितु दानवसूदन इत्यप्याह—**कृत्येष्विति** । पित्रा चतुर्मुखेन । ब्रह्मणापि यः कृत्येष्वचोदितः । पितामहस्यापि ब्रह्मणः पितृत्वमप्यविरुद्धं । "पितरमस्य मूर्धन्" इत्यादिप्रयोगात् । "तथा पितामहाद्याश्च पितरो नाम कीर्तिताः" इत्येतस्य भाष्योक्तेश्च । कृत्येष्वचोदितः सर्वस्वतन्त्र इति यावत् । पित्रा ब्रह्मणा सह । अन्तःपुरस्य देहान्तर्गततत्त्वाभिमानिवर्गस्य । गतिश्शरणं च । सोप्यद्य प्रवत्स्यतीति तदिच्छैव नियामिकेति भावः । कृत्येषु विद्वेषिषु इषून् अञ्चयतीति कृत्येष्वक् तेन कृत्येष्वचा पित्रा दशरथेन अन्तःपुरजनस्य गतिश्शरणमिति ह्यस्तन एव उदित उक्तः रामः अद्य प्रवत्स्यतीत्यर्थः । "कृत्यं विद्वेषिकार्ययोः" इति विश्वः । "कृत्यं विद्विषि कार्ये च" इति रभसः ॥ २ ॥ **सत्य०** युक्तश्शोभनः । "युक्तं शोभनं" इति कर्मनिर्णयटीकोक्तेः । उपायसंपन्नो वा । यतो यस्माद्रामात् जन्मप्रभृति सृष्ट्याद्यष्टकं । अस्मासु अस्मदुपलक्षितसर्वप्रजासु । यथा वर्तते तथा कौसल्यायां जनन्यामपि वर्तते इति साऽपि न जननी । तथापि तां जननीत्वेन व्यतनोद्राम इति तत्तपोवैपुल्यं रामस्य करुणाकरता च ध्वन्यते ॥ ३ ॥ **सत्य०** कैकेय्यै क्रुद्धान्प्रसादयन् प्रवत्स्यतीत्यनध्याहारेण वा योजना ॥ ४ ॥ **सत्य०** अयं राजा दशरथः अकुशल इति नरपतितरुण्य इतरास्समीरयन्ति । अबुद्धिरिति ॥ नः अस्माकं । यो राजा दशरथः सर्वभूतानां गतिं राघवं परित्यजति ततोऽबुद्धिस्सन् जीवलोकं चरति । जीवोस्यास्तीति जीवः सचासौ लोकश्चेति जीवलोकः तं जनं चेतनमात्रं मूर्खमिति यावत् । चरति गच्छति अनुसरतीति यावत् । यद्वा यो राघवं परित्यजति । रलयोरभेदात् राघवं लाघवं मनोहरत्वं संपरित्यजतीत्यर्थः । "लघुरगुरौ च मनोज्ञे निस्सारे वाच्यवत्" इति मेदिनी । सदद्दृष्टं चेदिष्टसिद्धिस्स्यादित्यतो वाह—**यइति** । यो राघवं परित्यजति सः अयं शुभावहं परित्यजति । अतो नायमित्यधिकं ॥ अथवा योगतिमित्येकं पदं । योगेन स्वभावसिद्धयोगेन तिः आनन्दो यस्य स योगतिः । "आनन्दं तीति वैवदेत्" इति भागवततात्पर्योक्तेः । प्रसादयन्नित्यनुवर्तते । रत्ययं रतेः अयो दैवं रत्ययो मन्मथः । रतिं अयत इति वा रत्ययस्तं । योगेनैव कैकेय्यास्संबन्धेनैव तिरानन्दो येन तं रत्ययं मन्मथं प्रसादयन्नेव राघवं परित्यजति अतोऽबुद्धिर्बत । फलितमप्यभिलपति—**राजेति** । राजा चरत्ययं चरति अयो यस्मिन्कर्मणि तद्यथा भवति तथा चरत्ययं गतदैवं । "एहीडादयोऽन्यपदार्थे" इत्यनेन चरत्ययमित्यत्र तिङ्सुपांसमासः । अजीवलोकं न विद्यते जीवो यस्मिन् सो जीवः सचासौ लोकश्च तं स्वशरीरं चरति आचरति । यद्वा यो रामः ईबलः वबयोरभेदात् । रलयोरभेदात् याः लक्ष्म्याः वरः ईवरः । याः वलं यस्मादिति वा आजिर्गन्ता सचासौ ईबलश्च आजीबलः । यद्वा आज्यां युद्धे बलं यस्यासौ आजीबलः यः तं परित्यजति सो कं दुःखमेव चरतीत्यर्थः । यद्वा राजा जीवलः राज्ञे राजनि वा चन्द्राय चन्द्रे वा । "राजा शशाङ्के क्षत्रिये नृपे" इत्यमरः । आजीबलं आज्यां बलं यस्य सः राजा जीबलो राहुः । सः अकं शिरोरहितं यथा भवति तथा चरति येन तं रामं परित्यजति सो बुद्धिर्बत । "अजयतिभ्यां च" इति णि आजिः । "कृदिकारात्—" इति ङीष् । "आजिर्भवेत्तथाजीच" इति द्विरूपकोशः । "अयश्शुभावहो विधिः" इत्यमरश्च । आजीवत्यनेनेति आजीवः

[ पा० ] १ ङ. च. झ. ञ. ट. गतिश्चशरणंचासीत्. २ ञ. सुतोऽद्य. ३ क—ट. भूतानां.

**इति सर्वा महिष्यस्ता विवत्सा इव धेनवः ॥ [1]पतिमाचुक्रुशुश्चैव [2]सस्वरं चापि चुक्रुशुः ॥ ६ ॥**
**स हि चान्तःपुरे घोरमार्तशब्दं महीपतिः ॥ पुत्रशोकाभिसंतप्तः श्रुत्वा व्यालीयतासने ॥ ७ ॥**
**रामस्तु भृश[3]मायस्तो निश्वसन्निव कुञ्जरः ॥ जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥ ८ ॥**
**सोपश्यत्पुरुषं तत्र वृद्धं परमपूजितम् ॥ उपविष्टं गृहद्वारि तिष्ठतश्चापरान्बहून् ॥ ९ ॥**
**दृष्ट्वैव तु तदा रामं ते सर्वे [4]सहसोत्थिताः ॥ [5]जयेन जयतां श्रेष्ठं वर्धयन्ति स्म राघवम् ॥ १० ॥**
**प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्श सः ॥ ब्राह्मणान्वेदसंपन्नान्वृद्धान्राज्ञाऽभिसत्कृतान् ॥ ११ ॥**
**प्रणम्य रामस्[6]तान्वृद्धांस्तृतीयायां ददर्श सः ॥ स्त्रियो [7]वृद्धाश्च बालाश्च द्वाररक्षणतत्पराः ॥ १२ ॥**
**वर्धयित्वा प्रहृष्टास्ताः प्रविश्य च [8]गृहं स्त्रियः ॥ न्यवेदयन्त [9]त्वरिता राममातुः प्रियं तदा ॥ १३ ॥**
**कौसल्याऽपि तदा देवी रात्रिं स्थित्वा समाहिता ॥ प्रभाते [10]त्वकरोत्पूजां विष्णोः पुत्रहितैषिणी ॥ १४ ॥**
**सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा ॥ अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला ॥ १५ ॥**
**प्रवि[11]श्य च तदा रामो मातुरन्तःपुरं शुभम् ॥ ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥ १६ ॥**
**देवकार्यनिमित्तं च तत्रापश्यत्समुद्यतम् ॥ १७ ॥**

---

चरगतिभक्षणयोरितिधातुः ॥ ५ ॥ आचुक्रुशुः निन्दन्तिस्म । चुक्रुशुः रुरुदुः ॥ ६ ॥ व्यालीयत लज्जादुःखभरेणशय्यायांविलीनोभूदित्यर्थः ॥७॥ भृशमायस्तः " व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः " इत्युक्तगुणवत्तयाऽन्तःपुरार्तस्वनश्रवणेनातिशयेनसंजातदुःखः । निश्वसन्निवकुञ्जरः परदुःखस्यापरिहार्यतांमत्वागुप्तदुःखःसन्कुञ्जरइवनिश्वसन्नित्यर्थः । वशी स्वायत्तीकृतेन्द्रियः ॥८॥ पुरुषं द्वारपालाध्यक्षम् ॥९॥ जयेन विजयस्वेतिजयाशिषा ॥ १०—१२ ॥ वर्धयित्वा जयाशिषेतिशेषः ॥ १३ ॥ रात्रिं रात्रौ । " कालाध्वनोरत्यन्तसंयोगे " इति द्वितीया । समाहिता नियमयुक्ता ॥ १४ ॥ जुहोति हावयति । अतएवहावयन्तीमितिवक्ष्यति । ब्राह्मणैरितिशेषः ॥ १५—१६ ॥ देवकार्यनिमित्तमिति द्रव्यजातमि-

---

वृत्तिःतस्मिन्लंभयंयस्यासावाजीवलःसोकंयथाभवतितथा । पूर्ववदुर्वेरितं । अजीवःशवःतद्वल्लाकान्तिर्यस्यसोजीवलः । शवकान्तिमानित्यर्थः । "आजीवोजीविकावार्ता" इत्यमरः । "कंशिरःकंसुखं" इतिरत्नमाला । "दीप्तौ ला लं भयेचप्रकीर्तितं" इतिविश्वः ॥ ५ ॥ **सत्य०** महिष्यइवमहिष्यः । अतः "कृताभिषेकामहिषी" इत्यमरोक्तिर्नविरुणद्धि । यद्वा महिष्यः सर्वाअपिनृपनार्यः "महिषीनृपयोषिति" इतिहेमचन्द्रः । यद्वा महिषी कैकेयी अस्तानिरस्तायाभिस्तामहिष्यस्ताः । आहिताग्न्यादित्वात्परनिपातः । यद्वा महिष्याकैकेय्याअस्ताःमहिष्यस्ताः । विवत्साः विवासिततर्णकाः ॥ ६ ॥ **ति०** आयत्तइतिपाठे आयत्तःपराधीनोयःकुञ्जरःसयथानिश्वसितितद्वदित्यर्थः । **सत्य०** सर्वदाहितेनसहितःवशीस्वतन्त्रःरामः । यइत्यध्याहारः । यःभृशमायस्तःनिश्वसन्कुञ्जरइव तेनभ्रात्रासहितः । एवमन्वयकरणएव "नचैवरामोत्रजगामविक्रियां" इतिपूर्वोक्तंवशीत्याद्यनुमानंचसंगच्छते ॥ ८ ॥ **सत्य०** उपवेशनेवृद्धत्वंशस्त्रपाणिभिःपरमपूजितत्वंचहेतुः ॥ ९ ॥ **सत्य०** जयेनजयशब्देन । अथवाहेइनजयेतितिङन्तंवा । **शि०** पुत्रहितैषिणीकौसल्या विष्णोः सूर्यस्य पूजामकरोत् । रामस्यसूर्यमण्डलमध्यस्थत्वेनस्वकुलमूलपुरुषत्वेनचातिस्नेहात्तत्पूजायांप्रवृत्तिरितिसूचितम् ॥ १४ ॥ **सत्य०** जुहोतिस्मस्वयमेवाजुहोत् । ननुस्त्रीणांवेदाधिकाराभावात्कथंजुहोतीत्युक्तमितिचेन्न । दशरथस्य वैवस्वतमनुत्वेनतत्पत्न्याःकौसल्यायामानवीत्वेनोत्तमस्त्रीत्वाद्वेदाधिकारसंभवात् । "आहुरप्युत्तमस्त्रीणामधिकारंतु वैदिके" इत्यादिस्मृतेः । तदुक्तंवामने । "भविष्यदन्तरेभूत्वामनुर्वैवस्वतोभवान् । तववंशेभवाम्यङ्गरामोदाशरथिस्स्वयम् । पुनर्दशरथोभूत्वात्वमेवासिपितामम । मद्दत्तपिण्डदानेनमुक्तिस्तेभविताध्रुवं" इति ॥ १५ ॥ **शिरो०** हावयन्तीं ब्राह्मणैरितिशेषः । एतदनुरोधेनपूर्वत्रजुहोतीत्यस्यहावयतीत्यर्थः । अत्रैवस्वार्थेणिज्वा । **सत्य०** नकेवलंस्वयंजुहोति अपितुब्राह्मणैरपीत्याह—

**[ पा० ]** १ क. ङ. च. छ. झ. ञ. ट. माचुक्रुशुश्चापि. २ क. ङ. च. छ. झ. ञ. सस्वनं. घ. ज. सुस्वरं. ३ घ. च. मायत्तो. ४ ङ. च. छ. झ. ञ. ट. समुपस्थिताः. ५ ग. घ. च. ञ. जयेति. ६ ग. घ. स्तान्विप्रान्. ७ क. घ. ङ. च. छ. झ. ञ. ट. बालांश्चवृद्धांश्च. ८ क. गृहंततः. घ. गृहांस्त्रियः. ९ ङ. छ. झ. ट. त्वरितं. १० ङ. छ. झ. ट. चाकरोत्. ११ ङ. च. छ. झ. ञ. ट. प्रविश्यतु.

**द[1]ध्यक्षतं घृतं चैव मोदकान्हविष[2]स्तथा ॥ लाजान्माल्यानि शुक्लानि पायसं कृसरं तथा ॥**
**समिधः पूर्णकुंभांश्च ददर्श रघुनन्दनः ॥ १८ ॥**
**तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् ॥ तर्पयन्तीं ददर्शाद्भिर्देवतां दे[3]ववर्णिनीम् ॥ १९ ॥**
**सा[4] चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् ॥ अभिचक्राम संहृष्टा किशोरं बडबा यथा ॥ २० ॥**
**स मातर[5]मभिक्रान्तामुपसंगृह्य राघवः ॥ [[6]पर्यष्वजत धर्मात्मा मात्रा चैव परंतपः ॥ ]**
**प[7]रिष्वक्तश्च बाहुभ्या[8]मुपाघ्रातश्च मूर्धनि ॥ २१ ॥**
**तमुवाच दुराधर्षं राघवं सुतमात्मनः ॥ कौसल्या पुत्रवात्सल्यादिदं प्रियहितं वचः ॥ २२ ॥**
**वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् ॥ प्राप्नुह्यायुश्च कीर्तिं च धर्मं चोप[9]हितं कुले ॥ २३ ॥**
**सत्यप्रतिज्ञं पितरं राजानं पश्य राघव ॥ अद्यैव हि [10]त्वां धर्मात्मा यौवराज्येऽभिषेक्ष्यति ॥ २४ ॥**
**दत्तमासनमालभ्य भोजनेन निमन्त्रितः ॥ मातरं राघवः किंचि[11]द्व्रीडात्प्राञ्जलिरब्रवीत् ॥ २५ ॥**

तिशेषः ॥१७॥ हविषः हवींषि । कृसरं तिलौदनं । दध्यक्षतमित्यारभ्यवाक्यान्तरम् । अतोनक्रियाद्वयविरोधः । पूर्वंदेवकार्यनिमित्तमितिद्रव्याणिसामान्येनोक्तानि अथविशेषेणेतिविवेकः ॥ १८ ॥ तर्पयन्तीं प्रीणयन्तीम् ॥ १९ ॥ अभिचक्राम अभिमुखंजगाम । किशोरं अश्वबालकं । बडबा अश्वस्त्री ॥२०॥ उपसंगृह्य अभिवाद्य । स्थितइतिशेषः ॥२१—२३॥ सत्यप्रतिज्ञमिति अभिषेक्ष्यतीत्यत्रहेतुः । इदानीमप्यभिषेकोनारब्धइति नाशङ्कनीयमितिभावः । पश्यजानीहि ॥२४॥ दत्तमित्यादिश्लोकद्वयमेकान्वयं । सराघवो भोजनेननिमन्त्रितःसन् दत्तमासनं आलभ्य स्पृष्ट्वा । दण्डकारण्यंप्रस्थितोऽहम् । आप्रष्टुं गमनंनिमन्त्रयितुम् । उपचक्रमे उद्योगमकार्षमितिमातरमब्रवीदितिसंबन्धः । यद्वा भोजनेननिमन्त्रितः भोजनार्थंनिमन्त्रितः । भोजनार्थंदत्तमासनमालभ्यतिष्ठन् । दत्तासनेउपवेशनाभावेपिस्पर्शमात्रंकार्यमित्यागमात् । किञ्चिद्व्रीडात् एवंब्रुवन्त्यै मात्रेकथंमयाप्रस्थानंकथनीयमितिलज्जया अब्रवीत् । किमर्थमासनमुपलभ्यनोपविष्टवानित्यत्राह—सइति ।

**हावयन्तीति** । जुहोतीतिपूर्वमुक्तेस्स्वार्थेवाणिच् ॥ १६ ॥ **सत्य०** हविषइतिषष्ठीद्वितीयार्थे । लिङ्गव्यत्ययोवा । "सुप्तिङुपग्रहलिङ्गनराणां" इत्युक्तेः । अथवा हविषो मोदकान् हविस्संबन्धिमोदकानित्यर्थः । संबन्धश्च "राहोश्शिरः" इत्यादिवत्तादात्म्यरूपः ॥ १८ ॥ **शि०** वरवर्णिनीं उत्तमवर्णविशिष्टां । गौराङ्गीमित्यर्थः ॥ १९ ॥ **सत्य०** दुराधर्षमित्यनेनअनिवर्त्यवनवासमनस्कत्वंद्योतयति । आत्मनस्सुतं स्वपुत्रं । पुत्रवात्सल्यात् पुन्नामनरकात्त्राणकर्तेतिवात्सल्यात् । इदंप्रियहितं अयंप्रियोयेषांतेइदंप्रियाःतेभ्यो हितं । प्रियायदशरथायहितंयस्मात्सप्रियहितः । तं राघवंप्रति इदं वक्ष्यमाणं । वस्तुतस्तु आत्मनस्सुतं जगदादानादिकर्तुःपद्मनाभस्यप्रादुर्भूतंरूपं । पुत्रवात्सल्यंपुत्रइतिवात्सल्यंतस्मादित्यर्थः । एतेनात्मनस्सुतमित्यनेनैवस्वस्तनंधयतायांवात्सल्यस्य सिद्धायांपुनरत्रपुत्रेत्यधिकमितिशङ्कानवकाशः ॥ २२ ॥ **वि०** कुलेउचितं कुलस्योचितमितियावत् । **शि०** आयुःआयुस्तुल्यमायुः । आयुश्शब्दस्स्वसदृशेलाक्षणिकः । मुख्यस्येहासंभवात् । कीर्तिधर्मयोरप्येषैवगतिः । एकचकारस्यइवार्थकत्वेतुमुख्यत्वेपिन क्षतिः । **सत्य०** वृद्धानांधर्मशीलानामित्यनेनमार्कण्डेयादीनांसंग्रहः । राजर्षीणां बल्यादीनां । उचित्तंचउचिताचउचितश्चउचितमितिनपुंसकशेषः । "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यां" इत्युक्तेः । कुलेइतिसप्तमीषष्ठ्यर्थे । यद्वा कुले अस्मत्कुलेवावृद्धानांराजर्षीणांआयुरादिकंप्राप्नुहीत्यन्वयः ॥ २३ ॥ **ति०** राजानंपश्य गत्वेतिशेषः । कौसल्यायाराजगृहगमनादिव्यापारापरिज्ञानादेवमुक्तिः । **सत्य०** यःअद्यैवत्वामभिषेक्ष्यतितंसत्यप्रतिज्ञंपश्य । ऋतयथार्थादिपदमगृह्णानोगृह्णानश्चसत्येतिइममर्थमसूचयत्सूचितचेताः । प्रतिज्ञायतइतिप्रतिज्ञःप्रतिज्ञातोर्थः यौवराज्येतवाभिषेकरूपः । सनविद्यतेयस्यसतथा । सत्यभार्यया अप्रतिज्ञः जायाप्रयोज्यप्रतिज्ञातार्थोच्छित्तिमानिति । यौवराज्येअभिषेक्ष्यतित्वामवज्ञायसेकंकरिष्यति । अन्यामभिषेक्ष्यतीतितात्पर्यं । निपातानामनेकार्थत्वादभिरवज्ञानेवर्तते । यथोक्तंकाठके "अभिप्रेयसः" इत्येतद्व्याख्यानावसरे । धात्वर्थेसेकेअभ्यर्थावज्ञानस्यान्वितत्वान्नषत्वानुपपत्तिशङ्का ॥ २४ ॥ **ति०** प्रसाद्याञ्जलिरितिपाठेप्रकर्षेणसन्नाञ्जलिर्विशीर्णाञ्जलिरित्यर्थइतिकश्चित् । मातुःप्रसादनयोग्याञ्ज-

**[पा०]** १ क. ख. घ—ट. दध्यक्षतघृतं. २ ख. ग. त्वदा. ३ क. ङ. च. छ. झ. ञ. ट. वरवर्णिनीम्. ४ घ. सुचिरस्य. ५ ङ. झ. ट. मुपक्रान्तां. ६ इदमर्धं क. ख. च. दृश्यते. ७ क. परिष्वक्तस्स. ख. परिष्वक्तःस्व. ८ ङ. च. छ. झ. ञ. ट. मवघ्रातश्च. ९ क. ख. च. छ. झ. ञ. ट. चाप्युचितं. १० ङ. च. छ. झ. ञ. ट. त्वांसधर्मात्मा. क. ख. त्वांहिधर्मात्मा. ११ छ. झ. ञ. ट. त्प्रसार्याञ्जलिमब्रवीत्. ङ. प्रसाद्याञ्जलिमब्रवीत्.

स स्वभावविनीतश्च गौरवाच्च [1]तदा नतः ॥ प्रस्थितो दण्डकारण्यमाप्रष्टुमुपचक्रमे ॥ २६ ॥
देवि नूनं न जानीषे [2]महद्भयमुपस्थितम् ॥ [3]इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥ २७ ॥
गमिष्ये दण्डकारण्यं किमनेनासनेन मे ॥ विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥ २८ ॥
चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ॥ [4]मधुमूलफलैर्जीवन्हित्वा मुनिवदामिषम् ॥ २९ ॥
भरताय महाराजो यौवराज्यं प्रयच्छति ॥ मां पु[5]नर्दण्डकारण्ये विवासयति तापसम् ॥ ३० ॥
स [6]षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने ॥ आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ॥३१॥
सा निकृत्तेव सालस्य यष्टिः परशुना वने ॥ पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२ ॥
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ॥ रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥
उपावृत्योत्थितां दीनां बडबामिव वाहिताम् ॥ पांसुकुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ ३४ ॥
सा राघवमुपासीनम[7]सुखार्ता सुखोचिता ॥ उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ ३५ ॥
यदि पुत्र न जायेथा मम शोकाय राघव ॥ न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६ ॥

गौरवात् मातरिबहुमानात् । प्रस्थितः प्रस्थातुमुद्यतः । आप्रष्टुम् अनुज्ञांकारयितुं । उपचक्रमे उपक्रान्तवान् ॥ २५—२६ ॥ अब्रवीदित्युक्तमाह—देवीत्यादि । भयं तवेतिशेषः । इदं वक्ष्यमाणंवचनं । दुःखाय तथापिवक्ष्यामीत्यर्थः ॥ २७ ॥ इदंशब्दार्थमाह—गमिष्यइति । अनेन रत्नमयेन । विष्टरेत्यादि । विष्टरोनाम पञ्चविंशतिदर्भनिर्मितस्तापसासनविशेषः । “ पञ्चाशद्भिर्भवेद्ब्रह्मातदर्धेनतुविष्टरः ” इतिस्मृतेः ॥ २८ ॥ मुनिवत् वत्स्यामीतिसंबन्धः । अत्रामिषशब्देनसूदैः संस्कृतंमांसमुच्यते। केवलमांसस्वीकारस्योत्तरत्रवक्ष्यमाणत्वात् “ इदंमेध्यमिदंस्वादुनिष्टप्तमिदमग्निना ” इति ॥ २९ ॥ कुतएवमित्यत्राह—भरतायेति ॥३०॥ सइति । सोहमित्यर्थः । लघुत्वप्रदर्शनाय षट् चाष्टौचेत्युक्तं । चतुर्दशेत्युक्तेहिगौरवंगम्यते । वन्यानि वनसंबन्धीनि । वानप्रस्थयोग्यकर्माणीतियावत् । आसेवमानः आचरन् । वर्तयन् जीवनंकुर्वन् ॥ ३१ ॥ सा पुत्रोक्तंश्रुतवती । सालस्य वृक्षस्य । “ अनोकहः कुटःसालः ” इत्यमरः । परशुनेतिहठाच्छेदनज्ञापनाय । नगरेतथाछेदनाभावाद्वनइत्युक्तम् ॥ ३२ ॥ गतचेतसं मूर्च्छिताम् ॥३३॥ उपावृत्योत्थितां श्रमनिवृत्त्यर्थंभुविवेष्टनंकृत्वोत्थितां । वाहितां भारवहनंप्रापिताम् ॥ ३४ ॥ असुखार्ता दुःखार्ता ॥ ३५ ॥ हेपुत्र त्वं यदिनजायेथा अतः अजननात् । भूयः अतिशयितं । दुःखं इष्टपुत्रविश्लेषजं । नपश्येयं । अप्रजाः वन्ध्या

लिरित्यर्थउचितः । **सत्य०** भो जनेन जनानांपतेइतिमात्रानिमन्त्रितः भोजनार्थमाज्ञप्तः । अनेन निमन्त्रणशब्दस्यैवावश्यकभोजननियोगे “विधिनिमन्त्रण-” इतिसूत्रीयकौमुद्यादिनाशक्तत्वावगमात्पुनर्भोजनेनेतिपदमधिकमितिशङ्कानवकाशः ॥ २५ ॥ **सत्य०** महत् भयंइतिव्यस्तंपदं । यद्वामहतांभयमितितत्पुरुषः । महतामित्येतद्विशदयति—**तवचेत्यादि** । **शि०** हेदेवि उपस्थितं प्राप्तं । महद्भयं राक्षसहेतुकदण्डकारण्यस्थर्षिमहाभीतिं । त्वंजानीषे । अतोदण्डकारण्यमहंगमिष्ये । अतः इदं मत्कर्तृकदण्डकारण्यगमनं । तव वैदेह्याः लक्ष्मणस्यचदुःखायनभवत्वितिशेषः । श्लोकद्वयमेकान्वयं ॥ २७ ॥ **सत्य०** नकेवलंमांप्रत्युपस्थितः किंतु मां रमारूपांसीतांप्रत्यप्युत्थितः । अहंविष्टरासनयोग्यः । नकेवलमहंअपितुयःमामुपस्थितःअयं अहिकालः अहीनांकंसुखं आसमन्ताल्लातिददातीत्यहिकालः । लाआदानइतिपठितस्यापिदानार्थकतासंभवति । द्वावपिदानेइतिचन्द्रइतिकौमुद्युक्तेः । अयमहिकालोलक्ष्मणोपिविष्टरासनयोग्यः ॥ २८ ॥ **शि०** विजने विशिष्टजनसहिते । आमिषंराजभोग्यंवस्तु । “आमिषंपुंनपुंसकम् । भोग्यवस्तुनिसंभोगे” इतिमेदिनी । **सत्य०** आमिषं संभोगंराज्यलोभंवासुन्दररूपंवा । “आमिषंपललेलोभेसंभोगोत्कोचयोरपि” इतिविश्वः ॥ २९ ॥ **सत्य०** यद्वा वन्यानि वनभवानि ऋष्यादिकुलानि । फलैरासेवमानःस्वयंचैतैर्वर्तयन् । **शि०** वन्यानि वल्कलानिदधानः ॥ ३१ ॥ **सत्य०** नक्षत्ररूपिणीदिवश्च्युतादेवतेवेत्यर्थः । पूर्वंकीदृशीत्यतआह । हसेनहासेनसहितासहसा । “स्वनहसोर्वा” इत्यप्प्रत्ययः ॥ ३२ ॥ **सत्य०** ममशोकायनजायेथाइत्यत्रचतुर्थ्यर्थोद्देश्यत्वस्यनजायेथाइत्यत्रधात्वर्थेजन्मन्यन्वयः । तथाचमच्छोकोद्देश्यकंयज्जन्मतच्छून्यश्चेदभवइत्यर्थः । यद्वा हेशोकाय शोकस्यअयःअपगमःयस्मात्सतथातस्यसंबुद्धिः ॥ ३६ ॥

[ **पा०** ] १ ङ. छ. ज. झ. ट. तथाऽऽनतः. २ ख. महाभय. ३ ख. इतस्तवच. छ. इदंतवतु. ४ ङ. छ. ज. झ. ट. कन्दमूल. ५ क. ङ. च. छ. झ. ञ. ट. दण्डकारण्यं. ६ च. षडष्टौ. ७ घ. मदुःखार्हा.

एक एव हि वन्ध्यायाः शोको भवति मानसः ॥ अप्रजाऽस्मीति संतापो न ह्यन्यः पुत्र विद्यते ॥३७॥
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ॥ अपि पुत्रे तु पश्येयमिति राम स्थितं मया ॥ ३८ ॥
सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ॥ अहं श्रोष्ये सपत्नीनामवराणां वरा सती ॥ ३९ ॥
अतो दुःखतरं किं नु प्रमदानां भविष्यति ॥ मम शोको विलापश्च यादृशोऽयमनन्तकः ॥ ४० ॥
त्वयि संनिहितेऽप्येवमहमासं निराकृता ॥ किं पुनः प्रोषिते तात ध्रुवं मरणमेव मे ॥ ४१ ॥
अत्यन्तं निगृहीताऽस्मि भर्तुर्नित्यमतन्त्रिता ॥ परिवारेण कैकेय्याः समा वाऽप्यथवाऽवरा ॥ ४२ ॥
यो हि मां सेवते कश्चिदथवाऽप्यनुवर्तते ॥ कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ ४३ ॥
नित्यक्रोधतया तस्याः कथं नु खरवादि तत् ॥ कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥४४॥
दश सप्त च वर्षाणि तव जातस्य राघव ॥ आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥ ४५ ॥

॥ ३६ ॥ इदमेवोपपादयति—एकइति । अन्यः विश्लेषजः । भूलुण्ठनादिःकायिकश्च । अप्रजास्मीत्यसिजभावआर्षः ॥ ३७ ॥ पतिपौरुषेसत्यपि कल्याणं ज्येष्ठपत्नीत्वोचितग्रामाभरणाद्यैश्वर्यरूपं शुभं । सुखं वा भर्तृसंमाननादिजनितसौख्यंवा । अपिपुत्रइति अपिःसंभावनायां । पुत्रेसतितद्बलात्पश्येयमिति मयास्थितमित्यर्थः ॥ ३८ ॥ भूतदुःखमुक्त्वाभविष्यद्दुःखमाह—सेति । साएवंसुखमलभमाना । बहूनीत्युक्तेः पूर्वमपिस्वल्पानिसन्तीतिगम्यते । अमनोज्ञानि परुषाणि । परुषाणीत्युक्तेमनोज्ञमिश्रत्वमपिप्रतीयेत । वाक्यानि नतुसूचकपदानि । हृदयच्छिदां भर्तृहृदयवैकल्यकारिणीनां । अवराणां स्वेनैवतथावक्तुमुचितानां सपत्नीनां नतुस्वाधीनानां । वरासती स्वस्याप्यवरत्वे नकिञ्चिद्दुःखमितिभावः । क्रोधेनसपत्नीनामितिबहुवचनोक्तिः । तत्रहठात्स्वगृहंमागच्छेत्युक्तिः, कोपेन भर्तृसकाशान्निर्याहीत्युक्तिः, अपुत्रायाःकिमुत्सवेनेत्युक्तिः इत्येवमादीनिसपत्नीवाक्यानिबोध्यानि ॥ ३९ ॥ अतः सपत्नीवाक्यश्रवणजाद्दुःखात् । प्रमदानांकिंनुदुःखतरं । तस्मान्ममशोकोविलापश्चयादृशः इयत्तयावक्तुमशक्यः । अनन्तकः दुष्पारः ॥ ४० ॥ उक्तंदुःखंनिदर्शयति—त्वयीति । बलवतित्वयिसंनिहितेपि एवं भवदनुभूतप्रकारेण । निराकृता । त्वयिप्रोषितेकिंपुनः । अतोमे मरणंध्रुवमितियोजना ॥ ४१ ॥ भर्तुः भर्त्रा । निगृहीताअहं अतन्त्रिता अप्रधानीकृतास्मि । "तन्त्रंप्रधानेसिद्धान्ते" इतिनिघण्टुः । अतःकैकेय्याःपरिवारेण दासीजनेन । समाकृतास्मि । अथवाविचार्यमाणे अवरा न्यूना कृतास्मि ॥ ४२ ॥ दुःखान्तरमाह—यइति । त्वयिप्रोषितेयःस्वजनोमां सेवते परिचरति । अनुवर्तते प्रियोक्तिंकरोति । सोपिकैकेय्याःपुत्रं भरतमन्वीक्ष्य तद्भयादित्यर्थः । नाभिभाषते नाभिभाषेत ॥ ४३ ॥ खरवादि परुषवचनशीलं । तत् पूर्वानुभूतं । दुर्गता अगतिका ॥ ४४ ॥ तवजातस्य त्वयिजातेसति । दशसप्तचवर्षाणि दुःखपरिक्षयंप्रकाङ्क्षन्त्या तव यौवराज्येनेतिभावः । मयासुखमासितानि आस्थिता-

ती० पुत्रेपिपश्येयं । रामास्थितं । अथापि पुत्रेपिचोत्पन्ने पुत्रनिबन्धनंतदुभयंपतिकर्तृकंपश्येयमिति मयाआस्थितमित्यर्थः । शि० त्वच्चिकीर्षितस्यसिद्धिर्भवितैवेत्याह—नेति । हेराम पतिपौरुषे पतिकर्तृकदिग्विजयादावित्यर्थः । यत्कल्याणं श्रोतॄणांकल्याणसंपादकं । सुखंनदृष्टपूर्वं नानुभूतमित्यर्थः । तदपिकल्याणंसुखंपुत्रेत्वयि वनस्थेसत्यपीतिशेषः । विपश्येयं अनुभवितास्मीत्यर्थः । इतिमया स्थितं निश्चितं । एतेन त्वत्कर्तृकविजयेअस्माकंसंशयोनास्तीतिसूचितम् ॥ ३८ ॥ सत्य० ममयादृशःशोकःअनन्तकस्तथाविलापश्चानन्तकः दुष्पारः । अथवा प्रमदानां प्रकृष्टमदवतां । यादृशःशोकोनन्तकःतादृशोऽयं । अतः एतस्मान्निमित्तात् । दुःखतरं दुःखतारकं । किंनुभविष्यति नकिमपीत्यर्थः । तरतेः "ऋदोरप्" इत्यप्प्रत्ययः ॥ ४० ॥ ति० "समावाप्यधरावरा" इतिपाठे वरा श्रेष्ठाप्यधरा निकृष्टा कृतास्मीत्यर्थः ॥ ४२ ॥ ति० खरवादिनं लुगभावआर्षः । खरवादि परुषवदनशीलं । सत्य० कैकेय्यावदनं खरवादिनं निष्ठुरभाषिणंभरतंच । यद्वा खरवादि नं इतिच्छेदः । तत्रखरवादीत्येतद्वदनविशेषणं ।

[ पा० ] १ क. अदृष्टपूर्वं. २ ङ. छ. ज. झ. ट. विपश्येयं. ३ घ—ञ. रामास्थितं. क. ख. ग. रामासितं. ४ ख. सुबहू. ५ ङ. च. छ. झ. ञ. ट. परा. ६ ङ. छ. झ. ट. मेवहि. ग. मेवच. ७ क—ट. मसंमता. ८ ङ. छ. झ. ट. दपिवा. ९ ख. स्वजनो. १० क. ङ. छ. झ. ञ. ट. खरवादिनं. च. खैरवादिनम्. ११ ङ. च. छ. झ. ञ. ट. जातस्यतव. १२ ङ. छ. झ. ञ. ट. अतीतानि. १३ ख. मम.

तदक्षयं महद्दुःखं नोत्सहे सहितुं चिरम् ॥ विप्रकारं सपत्नीनामेवं जीर्णापि राघव ॥ ४६ ॥
अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम् ॥ कृपणा वर्तयिष्यामि कथं कृपणजीविकाम् ॥ ४७ ॥
उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः ॥ दुःखसंवर्धितो मोघं त्वं हि दुर्गतया मया ॥ ४८ ॥
स्थिरं तु हृदयं मन्ये ममेदं यन्न दीर्यते ॥ प्रावृषीव महानद्याः स्पृष्टं कूलं नवांभसा ॥ ४९ ॥

ममैव नूनं मरणं न विद्यते न चावकाशोस्ति यमक्षये मम ॥
यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥ ५० ॥
स्थिरं हि नूनं हृदयं ममायसं न भिद्यते यद्भुवि नावदीर्यते ॥
अनेन दुःखेन च देहमर्पितं ध्रुवं ह्यकाले मरणं न विद्यते ॥ ५१ ॥
इदं तु दुःखं यदनर्थकानि मे व्रतानि दानानि च संयमाश्च हि ॥
तपश्च तप्तं यदपत्यकारणात्सुनिष्फलं बीजमिवोप्तमूषरे ॥ ५२ ॥
यदि ह्यकाले मरणं स्वयेच्छया लभेत कश्चिद्गुरुदुःखकर्शितः ॥
गताऽहमद्यैव परेतसंसदं विना त्वया धेनुरिवात्मजेन वै ॥ ५३ ॥
अथापि किं जीवितमद्य मे वृथा त्वया विना चन्द्रनिभाननप्रभ ॥
अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवानुकाङ्क्षया ॥ ५४ ॥

---

नि । ननु " ऊनषोडशवर्षोमेरामोराजीवलोचनः " इतिविश्वामित्रंप्रतिदशरथवचनात् विवाहानन्तरम् " उषित्वाद्वादशसमाइक्ष्वाकूणांनिवेशने " इत्युपरि सीतयावक्ष्यमाणत्वाच्चरामस्याष्टाविंशतिवर्षाणिवर्तन्ते तत्कथंदशसप्तचवर्षाणीत्युच्यतेइतिचेत् नैषदोषः । अत्रजातस्येत्युक्तिःद्वितीयजन्मापेक्षया " गर्भैकादशेषु राजन्यं " इतिबहुवचनेगर्भनवममारभ्यक्षत्रियस्योपनयनकालत्वोक्तेः । वयसापञ्चविंशकइतिसीतावचनाद्वचनान्तरविरोधपरिहारादिकंबालकाण्डएवकृतम् " ऊनषोडशवर्षोमे " इत्यत्र ॥ ४५ ॥ सहितुं सोढुं । चिरंनोत्सहे । जीर्णापि सपत्नीदुर्वाक्यश्रवणदुःखेनजीर्णापि । विप्रकारं अपकाररूपं । दुःखमित्यन्वयः ॥ ४६ ॥ कृपणजीविकां दीनजीवनं । वर्तयिष्यामि करिष्यामीत्यर्थः। "आजीवोजीविकावार्तावृत्तिर्वर्तनजीवने " इत्यमरः ॥ ४७ ॥ योगैः देवताध्यानैः । परिश्रमैः व्रतैः । मोघं निष्फलंयथाभवतितथा दुर्गतया भाग्यरहितयेतियावत् ॥ ४८—५० ॥ अनेनदुःखेनअर्पितं आहतं । ममहृदयंनभिद्यतेइतियत् अतः स्थिरंहि नाशरहितमेव । देहंचनावदीर्यतइतियत् अतः आयसं अयोनिर्मितं । नूनं । तथाहि अकाले अविहितकाले।मरणं न विद्यते । ध्रुवं॥५१॥इदं वक्ष्यमाणं दुःखं तु पूर्वदुःखेभ्योविलक्षणं। तदेवाह—यदिति।यस्मान्मेअपत्यकारणात्कृतानिव्रतानि दानानि संयमाः ध्यानानि च । अनर्थकानिजातानि । "सामान्येनपुंसकं" इतिनपुंसकत्वम् । तप्तंतपश्चऊषरेउप्तंबीजमिवसुनिष्फलमासीत् । इदंतुदुःखमित्यन्वयः ॥५२॥ "ध्रुवंह्यकालेमरणं नविद्यते" इत्येतत्सकार्यं दर्शयति—यदिहीति । यदिलभेत तदाहं परेतसंसदं यमसभां । गतास्यामित्यन्वयः ॥ ५३ ॥ अथापि अकालमरणाभावेपि । किंजीवितं कुत्सितजीवितं । वृथा सुदुर्बला अधीरेतियावत् ।

---

नं नियामकं राजानमितियावत् । "नेतानश्वनियमाकः" इत्यनेकार्थध्वनिपदमञ्जरी ॥ ४४ ॥ **ती०** जीर्णापि सापत्न्यकथायोग्यवयोबलक्षयंप्राप्तापि । सपत्नीनांविप्रकारं निराकरणंच ॥ ४६ ॥ **शि०** दुःखंसंवर्धितः दुःखंयथातथा ॥ ४८ ॥ **ती०** नभिद्यते नद्विधाभवति । नावदीर्यते नशकलीभवति ॥ ५१ ॥ **सत्य०** चन्द्रनिभाननप्रभा नितरांभा निभा चन्द्रस्यनिभेवआननप्रभायस्यसतथोक्तः ॥ ५४ ॥ इतिविंशस्सर्गः ॥ २० ॥

[ पा० ] १ ङ. छ. झ. ट. चिरात्. २ ङ. छ. झ. ट. जीविका. ३ घ. दुःखंप्रवर्तते. ट. दुःखंसंवर्धितो. ४ ख. शतधा. ५ ख. ग. घ. ज. क्षयेऽपिवा. ६ छ. ज. झ. ट. नोविदीर्यते. ङ. दीर्यतेद्विधा. ७ ग. घ. ज. इदंहि. ८ क. च. ङ. संयमाश्च. ९ ङ. च. छ. झ. ञ. ट. काम्यया. १० ङ. च. छ. झ. ञ. ट. यदृच्छया. ११ घ. च. तथापि. १२ क. ख. ङ. च. छ. झ. ञ. ट. मिवाभिकाङ्क्षया.

भृशमसुखममर्षिता [1]तदा बहु विललाप समीक्ष्य राघवम् ॥
व्यसनमुपनिशाम्य सा महत्सुतमिव बद्धमवेक्ष्य किंनरी ॥ ५५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे विंशः सर्गः ॥ २० ॥

---

## एकविंशः सर्गः ॥ २१ ॥

लक्ष्मणेनरामविवासनश्रवणदुःखितांकौसल्यांप्रतिदशरथगर्हणेनकैकेयीवचनाद्वनगमनस्यस्वानभिमतत्वनिवेदनपूर्वकंरामस्यवनगमनेस्वस्यापितदनुगमननिवेदनम् ॥ १ ॥ कौसल्ययाकैकेयीवचनस्याधर्म्यत्वकथनेनस्वेनवनगमनानङ्गीकारंनिवेदितेनरामेणसदृष्टान्तंपितृवचनपरिपालनस्यधर्म्यत्वनिरूपणेनकौसल्यालक्ष्मणयोःसमाश्वासनपूर्वकंमातरंप्रतिवनगमनाङ्गीकारप्रार्थना ॥ २ ॥

[2]तथा तु विलपन्तीं तां कौसल्यां राममातरम् ॥ उवाच [3]लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १ ॥
न रोचते ममाप्येतदार्ये यद्राघवो वनम् ॥ त्यक्त्वा [4]राज्यश्रियं गच्छेत्स्त्रिया वाक्यवशं गतः ॥ २ ॥
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः ॥ नृपः [5]किमिव न ब्रूयाच्चोद्यमानः समन्मथः ॥ ३ ॥
नास्यापराधं पश्यामि नापि दोषं तथाविधम् ॥ येन [6]निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥
[[7]अहं हनिष्ये पितरं वृद्धं कामवशं गतम् ॥ स्त्रिया युक्तं च निर्लज्जं धर्मायुक्तं नृपं यथा] ॥ ५ ॥
न तं पश्याम्यहं लोके परोक्षमपि यो नरः ॥ स्वमित्रोपि निरस्तोपि योस्य दोषमुदाहरेत् ॥ ६ ॥
[8]देवकल्पमृजुं दान्तं [9]रिपूणामपि वत्सलम् ॥ अवेक्षमाणः को धर्मं [10]त्यजेत्पुत्रमकारणात् ॥ ७ ॥

---

अनुकाङ्क्षया वात्सल्येन ॥५४॥ असुखं दुःखम्। अमर्षिता सोढुमशक्ता। व्यसनं रामविश्लेषभवंव्यसनम्। उपनिशाम्य आलोच्य ॥ ५५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्यानेविंशः सर्गः ॥ २० ॥

---

एवमुपक्रान्तस्यपितृवचनपरिपालनस्यस्थैर्यमस्मिन्सर्गेप्रतिपाद्यते—तथेति। तत्कालसदृशं कौसल्यादुःखकालोचितम्। एतेनवक्ष्यमाणलक्ष्मणवचनंकेवलं कौसल्याशोकशान्त्यर्थं नतुसहृदयमितिगम्यते ॥ १ ॥ ममापि मह्यमपि। स्त्रियाः कैकेय्याः ॥ २ ॥ ननुनाहंकैकेयीवचनाद्गच्छामि किंतुराजवचनादित्याशङ्क्याह—विपरीतइति। विपरीतः विपरीतवयोधर्मा। तत्र हेतुर्वृद्धत्वंविषयप्रधर्षितत्वंच। विषयाः शब्दादयः। ननुपरिशुद्धंप्रतिशब्दादिविषयाःकिंकुर्युरित्यत्राह—समन्मथइति। चोद्यमानः कैकेय्येतिशेषः। इवशब्दोवाक्यालङ्कारे ॥ ३ ॥ ननुरामदोषादेवास्तुविवासनंतत्राह—नास्येति। अपराधं राजद्रोहं। दोषं महापातकादिकं। तथाविधं निर्वासनयोग्यम् ॥४—५॥ दोषाभावेकिंप्रमाणमित्याशङ्क्यनतावच्छब्दइत्याह—नेति। स्वमित्रोपि सुतरांशत्रुरपि। निरस्तोपि केनचिदपराधेनतिरस्कृतोपि। नरःअसुरश्चेद्वदेत्। परोक्षमपि प्रत्यक्षेकाकथेतिभावः। दोषं यंकंचिदपि। उदाहरेत् वदेत्। तंलोकेकुत्रापिनपश्यामि ॥ ६ ॥ नाप्यनुमानंप्रत्यक्षंचेत्याह—देवकल्पमिति। देवकल्पं। "ईषदसमाप्तौ" इत्यादिनाकल्पप्प्रत्ययः। देवसमानं नित्यशुद्धमितियावत्। ऋजुं करणत्रयार्जवयुक्तं प्रजाच्छन्दानुवर्तिनंवा। दान्तं दमितं। गुरुभिःशिक्षितमित्यर्थः। निगृहीतेन्द्रियंवा। रिपूणां कैकेय्यादीनामपि वत्सलं। धर्मं धर्मस्वरूपं। पुत्रं कारणेसत्यपित्यागानर्हसंबन्धम्। अवेक्षमाणः पश्यन्। यद्वा धर्ममवेक्षमाणः धार्मिकः। अकारणात् दोषंविनापि त्यजेत् ॥ ७ ॥

---

**सत्य०** अदीनमितिच्छेदः ॥ १ ॥ **रामानुजीयं**। नास्येति। एतच्छ्लोकानन्तरंनतमितिश्लोकः ॥४॥ **ती०** मातृणां कैके.

**[ पा० ]** १ च. छ. झ. ञ. ट. यदा. २ ञ. तदा. ३ ठ. लक्ष्मणोऽदीनं. ४ ख. ग. राजश्रियं. ५ च. किमिति. ६ ख. निर्यास्यते. ७ अयंश्लोकः क. दृश्यते. क. अद्यवृद्धंहनिष्यामिदुर्गंकामवशंगतम्. स्त्रियायुक्तंसुनिर्लज्जंडंभयुक्तंनृपंतथा. ८ ज. देवकल्पंसमं. ९ च. छ. ज. मातॄणामपि. १० क. ख. त्पुत्रमकारणम्.

तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ॥ पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ८ ॥
यावदेव न जानाति कश्चिदर्थमिमं नरः ॥ तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ९ ॥
मया पार्श्वे सधनुषा तव गुप्तस्य राघव ॥ कः [1]समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ १० ॥
निर्[2]मनुष्यामिमां [3]सर्वामयोध्यां [4]मनुजर्षभ ॥ करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ ११ ॥
भरतस्याथ पक्ष्यो वा यो वाऽस्य हितमिच्छति ॥ सर्वा[5]नेतान्वधिष्यामि मृदुर्हि परिभूयते ॥ १२ ॥
प्रोत्साहितोऽयं कैकेय्या [6]स दुष्टो यदि नः पिता ॥ अमित्रभूतो निस्सङ्गं [7]वध्यतां वध्यतामपि ॥१३॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥ उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १४ ॥
बलमेष किमाश्रित्य हेतुं वा [8]पुरुषर्षभ ॥ दातुमिच्छति कैकेय्यै राज्यं [9]स्थितमिदं तव ॥ १५ ॥
त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् ॥ [10]कोऽस्य शक्तिः श्रियं दातुं भरताया[11]रिशासन ॥ १६ ॥
अनुरक्तोस्मि भावेन भ्रातरं देवि तत्वतः ॥ सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १७ ॥
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ॥ प्रविष्टं तत्र मां देवि त्वं [12]पूर्वमेवधारय ॥ १८ ॥
हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ॥ [13]देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १९ ॥
[ [14]हनिष्ये पितरं वृद्धं कैके[15]य्यासक्तमानसम् ॥ कृपणं [16]च स्थितं बाल्ये वृद्धभावेन गर्हि[17]तम् ] ॥ २० ॥
एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ॥ उवाच रामं कौसल्या [18]रुदन्ती शोकलालसा ॥ २१ ॥
भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ॥ यदत्रानन्तरं [19]कार्यं कुरुष्व यदि रोचते ॥ २२ ॥
[20]न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ॥ विहाय शोकसंतप्ता गन्तुमर्हसि मामितः ॥२३॥

बाल्यं बालभावं। कामपारवश्यमित्यर्थः। राजवृत्तं राजनीतिम् ॥ ८ ॥ शास्यतइतिशासनं राज्यं। आत्मस्थंकुरु स्वाधीनंकुर्वित्यर्थः ॥ ९ ॥ तवाधिकंकर्तुं तवपौरुषादधिकंपौरुषंकर्तुमित्यर्थः ॥ १० ॥ विप्रिये प्रातिकूल्ये ॥ ११ ॥ पक्ष्यः सहायभूतोवर्गः ॥१२॥ अमित्रभूतोयदि शत्रुपक्षसहायभूतश्चेदित्यर्थः ॥१३॥ स्वोक्तार्थेधर्मशास्त्रंप्रमाणयति—गुरोरिति। अवलिप्तस्य गर्वितस्य। उत्पथम् अमर्यादाम् ॥ १४ ॥ बलं राजत्वप्रयुक्तबलं हेतुं वरदानरूपहेतुंवा ॥१५—१६॥ अनुरक्तइति। दत्तेन दानेन। इष्टेन देवार्चनादिना ॥ १७—२१ ॥ श्रुतं वाक्यजातमितिशेषः। परमधार्मिकराममातृत्वाच्चापलंविहाययदिरोचतेइत्युक्तवती ॥ २२ ॥ पितृवचनपरिपालकस्यरामस्यलक्ष्मणवचनमसह्यमितिज्ञात्वाह—नचेत्यादिना ॥ २३ ॥

य्यादीनामपिविषये ॥ ७ ॥ **शि०** बाल्यं स्वदत्तकैकेयीवराच्छादनं। बाल्यमितिसंवरणार्थकबलधातुप्रकृतिकण्यदन्तं ॥ ८ ॥ **ति०** कुरुशोभनमितिपाठे राज्यफलकमभिषेकं ॥ ९ ॥ **वि०** अधिकं त्वदाज्ञोल्लङ्घनपूर्वकमभिषेकविघ्नं ॥ १० ॥ **ति०** संतुष्टः तस्यांसंतुष्टः। **सत्य०** निस्सङ्गं निस्स्नेहंयथाभवतितथा ॥ १३ ॥ **सत्य०** एषराजा कैकेय्यैतवोपस्थितंकृत्स्नंराज्यंदातुमिच्छति किल। तत् किंबलमाश्रित्य कैकेय्याःस्वस्यवा। अथवा अतीतानागतज्ञत्वंलक्ष्मणस्यकविरवगमयति—**बलमित्यादिना**। हेपुरुषोत्तम एषराजाकैकेय्यैयद्दातुमिच्छतितत्तवैवोपस्थितम् ॥ १५ ॥ **शि०** अनुत्तमं निषिद्धं ॥ १६ ॥ **सत्य०** देवि भवतीपश्यतु। राघवश्चपश्यतु। देवीतिदीर्घे देवीकैकेयी। राघवो दशरथः ॥ १९ ॥ **सत्य०** वृद्धमपिबाल्ये मौर्ख्ये स्थितं। अतएवगर्हितं। वृद्धभावेन स्त्र्युद्रिक्तयाभक्त्या। भावोभक्तिरितिप्रोक्तइतितात्पर्योक्तेः। हनिष्यामि। पदव्यत्ययेननममत्वद्भक्त्येकशरणस्यजनकहननहेतुकोव्यत्ययइतिकविर्भावमाविष्करोति। कृपणः कदर्यः ॥२०॥ **शि०** तत्त्वंयाथार्थ्यविशिष्टं। अनन्तरंकापव्यरहितं ॥२२॥ **ति०** गुरुवचनंकथंवानकार्यमित्याशङ्क्य नैतद्गुरुवचनं किंतुसपत्न्यैवोक्तमित्याह—**नचेति** ॥ २३ ॥

**[ पा० ]** १ ख. ग. घ. ज. समर्थोप्रियं. २ घ. निर्मानुष्यां. ३ ग. घ. ज. कृत्स्नां. ४ क. पुरुषर्षभ. ५ ङ. च. छ. झ. ञ. ट. सर्वांस्तांश्चवधि. ६ घ. ङ. छ—ट. संतुष्टो. ७ झ. बध्यतांबध्यतामपि. ८ क. ख. घ—ट. पुरुषोत्तम. ९ झ. ठ. उपस्थितं. १० ट. कास्यशक्तिःप्रियं. ज. कस्यशक्तिःश्रियं. ११ क. कर्शन. १२ क. ग. घ. ज. मुपधारय. १३ ठ. देवि. १४ इदंपद्यं झ. ठ. दृश्यते. १५ घ. कैकेय्यां. १६ क. घ. च. ज. चास्थितं. १७ च. मोहितम्. १८ घ—छ. झ. ञ. रुदती. १९ ङ—ट. तत्त्वं. २० ग. एतत्तुवचनं.

धर्मज्ञ [1]यदि [2]धर्मिष्ठो धर्मं चरितुमिच्छसि ॥ शुश्रूष मामिहस्थस्त्वं चर धर्म[3]मनुत्तमम् ॥ २४ ॥
शुश्रूषुर्जननीं [4]पुत्रः स्वगृहे नियतो वसन् ॥ परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २५ ॥
[5]यथैव राजा पूज्यस्ते गौरवेण तथा [6]ह्यहम् ॥ त्वां नाहम[7]नुजानामि न गन्तव्य[8]मितो वनम् ॥ २६ ॥
त्वद्वियोगान्न मे कार्यं जीवितेन [9]सुखेन वा ॥ त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २७ ॥
यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् ॥ अहं प्रायमिहासिष्ये [10]न हि शक्ष्यामि जीवितुम् ॥२८॥
ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् ॥ ब्रह्महत्यामिवाधर्मात्समुद्रः सरितांपतिः ॥ २९ ॥
विलपन्तीं [11]तदा दीनां कौसल्यां जननीं ततः ॥ उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥३०॥
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ॥ प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥३१॥
ऋषिणा [12]च पितुर्वाक्यं कुर्वता [13]व्रतचारिणा ॥ गौर्हता जानता धर्मं [14]कण्डुनाऽपि विपश्चिता ॥ ३२ ॥

एभ्योमातागरीयसीतिवचनंहृदिनिधायाह—शुश्रूषमामिति॥२४॥ कश्यपपुत्रेष्वेकः स्वगृहेमातृशुश्रूषारूपमहातपसात्रिदिवंप्राप्तवानितिगम्यते ॥२५॥ नानुजानामि अनुज्ञांनकरोमि ॥ २६—२७ ॥ प्रायं प्रायोपवेशनम् । अनशनदीक्षामितियावत् ॥२८॥ निरयशब्देनदुःखंलक्ष्यते । अधर्मात् पिप्पलादविषयेकृतादपकारात् । ब्रह्महत्यामिव ब्राह्मणनिमित्तकाहिंसाब्रह्महत्येतिव्युत्पत्त्यापिप्पलादोत्पादितकृत्ययासमुद्रस्यप्राप्तंदुःखंब्रह्महत्येत्युच्यते । पिप्पलादेनकृत्योत्पादनंच “ पिप्पलादसमुत्पन्नेकृत्येलोकभयंकरि । पाषाणंतेमयादत्तमाहारार्थंप्रकल्पितं ” इतिप्रसिद्धम् ॥ साक्षात्समुद्रकर्तृकब्रह्महत्यायाअश्रवणादेवंव्याख्यातम् । यद्वा शुश्रूषुरित्यत्रकाश्यपःपूर्वजन्मनिमातृशुश्रूषांकृत्वा तत्फलत्वेनदिवंगत्वाप्रजापतित्वंचगतवानितिपुराणकथा । उत्तरत्रसमुद्रः किलमातृदुःखजननरूपाधर्माद्ब्रह्महत्यां ब्रह्महत्याप्राप्यनरकविशेषान्प्राप्तवानितिपौराणिकीकथा ॥ २९—३० ॥ शक्तिः उत्साहः । पितृवचनस्य त्वद्वचनापेक्षयाप्राथमिकत्वादितिभावः ॥ ३१ ॥ मद्विपत्तिकरंकथंकरिष्यसीत्यत्राह—ऋषिणेत्यादिना

**सत्य०** काश्यपोगरुडः । मातुरमृतदानेनत्रिदिवंगतः । कर्मविशेषात्प्रतिबद्धंस्वर्गंसाधयामासतपसेतिकथा भारतोक्तानुसंधेया । **शि०** प्रव्राजननिवर्तनंमयानोचितमित्याह—**यथेति** । गौरवेण गुरुत्वेन । यथाअहंपूज्येत्यर्थः तथा राजापूज्यः । अतः इतोवनंत्वयानगन्तव्यमितिनानुजानामि । आज्ञापयामीत्यर्थः । एतेन पत्यनुकूलाचरणशीलात्वं तस्यास्सूचितं । **सत्य०** यथाराजापूज्यो राज्ञो गौरवेण सहस्रगुणाधिक्येनतथाऽहमपिपूज्या । “पितुस्सहस्रंमातातुगौरवेणातिरिच्यते” इतिस्मृतेः । एवमर्थकरणेनयथैवेत्युभयोःपूज्यत्वाविशेषात्किंराजाज्ञांविहायत्वदाज्ञाकरणेविनिगमकमितिशङ्कानवकाशः ॥ २६ ॥ **सत्य०** त्वद्वियोगान्निमित्तात्जीवितेनकिंकार्यं नकिमपीत्यर्थः । इन्द्रियापाटवंचेत्किंजीवितेनेत्यतस्सुखेनेति । शोभनेन्द्रियवतेत्यर्थः । तृणानांभक्षणं श्रेयइत्यनेनत्वदवियोगेनपशुत्वमपिममेष्टमितिध्वन्यते । हेराम मातरिमयिएवंवदन्त्यांभवनंविहायवनंगच्छामीत्येतत्तववचनंनयुक्तमितिसंबोधयति—**असहममेति** । ममसहितःसहममः सनभवतीत्यसहममः । वेत्युक्तेर्न सहस्य सभावः । अकार्यंजीवितेन नित्यजीवनेन । अकार्यंसुखेन नित्यसुखेन । त्वद्वियोगात् तवविशिष्टयोगस्त्वद्वियोगः तस्माद्धेतोः त्वयासहममश्रेयः । मेत्वयाअसहनेत्यर्थः । मातुर्ममैतच्छ्रेयोभवतीतिनचित्रमितिदृष्टान्तमुखेनाचष्टे—**तृणानामपीति** । तृणानांतृणजीवानां । भक्षणं भस्यस्वयोग्यमुक्तिस्थानस्य क्षणउत्सवोयस्मिंस्तच्छ्रेयोभवति किमु ममेत्यर्थः । “ भस्स्वभूमिश्च ” इतिमेदिनी । “ कालविशेषोत्सवयोःक्षणः ” इत्यमरः ॥ २७ ॥ **ति०** चोहेतौ ॥ २८ ॥ **स०** कदाचिज्जनन्यैदुद्रोहसमुद्रः । तज्जनिताधर्मात्पिप्पलादनिर्मिताभिचारिकक्रियायाःप्रतिमन्त्रणेननिवारणलक्षणहननाद्ब्रह्महत्यासमुद्रेणसंपादिता । तयाचानुबभूवदुःखमितिपौराणिककथा । “ कर्मणामनसावाचा सर्वावस्थासुसर्वदा । अक्लेशजननंप्रोक्तमहिंसात्विहयोगिभिः ” इतिचतुर्थस्कन्धतात्पर्योक्तिः । अत्रप्रतिमन्त्रणेनपिप्पलादक्लेशजननाद्ब्रह्महत्यासमुद्रंप्राप्ता ॥ २९ ॥ **शि०** पितुर्वाक्यमित्यनेनकैकेय्युक्तंराजसंमतमेवेतिरामनिश्चयोव्यक्तः ॥ ३१ ॥ **ति०** किंचपितुर्वाक्येनगोमातृवधोपिपूर्वैर्महात्मभिःकृतः मयातुदुःखमात्रंमातुःसंपाद्यतइतिनकिंचिदेतदित्याह—**ऋषिणेति** । अधर्मंजानतापि.

[पा०] १ झ. ट. इति. २ क. ङ. च. झ. ञ. धर्मिष्ठ. ३ ख. मनुसरन्. ४ ङ. छ. ज. झ. ट. पुत्र. ५ ङ. तथैव. ६ ग. घ. ज. स्म्यहम्. ७ ङ. छ. झ. ट. साहंनानुजानामि. ८ ख. मतो. ९ ङ. झ. ट. सुखेनच. १० ङ. च. झ. ञ. ट. नच. ११ क—ङ. छ—ट. तथा. १२ क. ऋषिणापि. १३ ङ. छ. झ. ट. वनचारिणा. १४ ख. ङ. च. छ. ञ. ट. कण्डुनाच.

अस्माकं[1] च कुले पूर्वं सगरस्याज्ञया पितुः ॥ खनद्भिः सागरैर्भूमिमवाप्तः[2] सुमहान्वधः ॥ ३३ ॥
जामदग्न्येन रामेण रेणुका जननी स्वयम् ॥ कृत्ता परशुनाऽरण्ये पितुर्वचनकारिणा[3] ॥ ३४ ॥
एतैरन्यैश्च[4] बहुभिर्देवि[5] देवसमैः कृतम् ॥ पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ॥ ३५ ॥
न खल्वेतन्मयैकेन क्रियते पितृशासनम् ॥ एतैरपि कृतं देवि ये मया तव[6] कीर्तिताः ॥ ३६ ॥
नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ॥ पूर्वैरयमभिप्रेतो[7] गतो मार्गोऽनुगम्यते ॥ ३७ ॥
तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा ॥ पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३८ ॥
तामेवमुक्त्वा जननीं लक्ष्मणं[8] पुनरब्रवीत् ॥ वाक्यं वाक्यविदां श्रेष्ठः[9] श्रेष्ठः सर्वधनुष्मताम् ॥३९॥
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् ॥ विक्रमं चैव सत्त्वं च तेजश्च[10] सुदुरासदम् ॥ ४० ॥
मम मातुर्महद्दुःखम[11]तुलं शुभलक्षण ॥ अभिप्राय[12]मभिज्ञाय सत्यस्य च शमस्य च ॥ ४१ ॥
धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ॥ धर्मसंश्रितमेतच्च[13] पितुर्वचनमुत्तमम् ॥ ४२ ॥
संश्रुत्य[14] च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ॥ न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ४३ ॥
सोहं न शक्ष्यामि पितुर्[15]नियोगमतिवर्तितुम् ॥ पितुर्हि[16] वचनाद्वीर कैकेय्याऽहं प्रचोदितः ॥ ४४ ॥
तदेनां[17] विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ॥ धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४५ ॥

॥ ३२—३४ ॥ अक्लीबम् अकातरम् । अक्लिष्टमिति यावत् ॥ ३५—३६ ॥ अपूर्वं अभिनवं । अभिप्रेतः अङ्गीकृतइत्यर्थः । सर्वसंमतइतिवार्थः । तेनचन्द्रकृततारागमनादिव्यावृत्तिः । ननु " दृष्टोधर्मव्यतिक्रमः साहसंचपूर्वेषां " इतिमातृवधादिकंसाहसत्वेननिन्दितमितिचेन्न । साहसस्यपितृनियुक्तव्यतिरिक्तविषयत्वात् । व्याख्यातृभिस्तदुदाहरणमज्ञानविजृंभितं । "पितुःशतगुणंमातागौरवेणातिरिच्यते"इतितुशुश्रूषामात्रे नतुवचनकरणे । पितुरेवनियन्तृत्वात् । अतएव " माताभस्त्रापितुःपुत्रोयस्माज्जातःसएवसः " इतिवचनेनाप्यविरोधः ॥ ३७ ॥ तत् तस्मात्कारणात् । भुवि कार्यं कर्तव्यम् । एतत् पितृवचनं मयात्वन्यथा नक्रियतइतिसंबन्धः । हियस्मात् पितृवचनंकुर्वन्कश्चिन्नहीयतेनाम । नामेतिप्रसिद्धौ ॥ ३८ ॥ पुनः अनन्तरमित्यर्थः ॥ ३९—४० ॥ सत्यस्य धर्मस्य । अभिप्रायं रहस्यं । अविज्ञायममम

ातुः अतुलंमहद्दुःखं जायतइतिशेषः । धर्मरहस्यंजानन्नपित्वंकिमर्थमेवंवदसीतिभावः ॥४१॥ धर्मतत्वमाह—धर्मोहीति । लोके पुरुषार्थेषु धर्मः परमः प्राथमिकः प्रधानभूतः । ततः किमित्यत्राह—धर्मेसत्यंप्रतिष्ठितमिति । धर्मैकपर्यवसायि सत्यमित्यर्थः । उत्तमं मातृवचनापेक्षयाउत्कृष्टं । एतत् पितृवचनंच । धर्मसंश्रितं धर्मैकफलकं ॥ ४२ ॥ एवंसत्यवचनंपितृवचनकरणंचद्वयमपिधर्मनिमित्तमित्युक्तं तत्रसत्यस्यकर्तव्यत्वमाह—संश्रुत्येति । धर्ममाश्रित्यतिष्ठता धर्मरूपफलमिच्छता ॥४३॥ पितृवचनकरणस्यकर्तव्यत्वमाह—सोहमिति । प्रतिज्ञातवानहमित्यर्थः । नियोगं आज्ञां । पितृवचनत्वाभावंपरिहरति—पितुर्हीति । पितृवचनकरणं सत्यंचएकैकमेवधर्ममूलंकार्यं किंपुनर्मिलितमितिभावः ॥ ४४ ॥ एवंसत्यरहस्यमुक्त्वाशमस्यतत्वमाह—तदिति । अनार्यां दुष्टां पितरमपिहत्वाराज्यंकुर्यामित्येवंरूपां । क्षत्रधर्माश्रितां केवलशूरधर्माश्रितां । रौद्रशाठ्यसहितक्षत्रधर्माश्रिता-

ऋषिणापिमन्त्रद्रष्ट्रापिपितृवाक्यतोगौर्हता । तस्मात्पितृवाक्याकरणेमहानधर्मइतिसूचितं । **स०** पितुर्वाक्यंधर्मंजानता । अथवा गोहननंअधर्मंजानता ॥ ३२ ॥ **ती०** अवाप्तःसुमहान्वधइत्यनेनप्राणानपिपरित्यज्यपितृवाक्यंपरिपालनीयंकिमुतकियत्कालवनवासमात्रेणेत्याशयःसूचितः । **स०** यद्वातुरिवार्थः । सगरस्यगरपायिनोवधइव । तेनसगरस्येत्यधिकमितिशङ्कानवकाशः ॥३३॥ **स०** कश्चित् ना पुरुषः । अमहीयते नपूज्यतइतिन अपितुमहीयतएवेत्यर्थोवा ॥ ३८ ॥ **शि०** अपिनासत्यसंश्रितं । **ति०** अत्रो-

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. अस्माकंतु. २ च. ञ. भूमिंसंप्राप्तः. ३ ख. ङ. छ. झ. ट. वैचनकारणात्. ४ घ. बहुविधै. ५ क. दैव. ६ ङ—ट. परिकीर्तिताः. क. कीर्तितास्तव. ७ च. मभिप्रेत्य. ८ ख. चेदमब्रवीत्. ९ क. ञ. श्रेष्ठं. १० क. च. ञ. तेजश्चैव. ११ ज. दुःखंलदुःखं. क. दुःखमशुभं. १२ ङ. छ. झ. ट. प्रायंनविज्ञाय. १३ ङ. छ. झ. ञ. ट. मप्येतत्पितु. १४ घ. ज. सुसंश्रित्य. १५ ङ. च. ज—ट. पुनः. १६ ट. तुवचनाद्वीर. १७ क—ञ. तदेतां.

तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ॥ उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ॥४६॥
अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ॥ शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥४७॥
तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहं पुरीम् ॥ ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४८ ॥
शोकः संधार्यतां मातर्हृदये साधु मा शुचः ॥ वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४९॥
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ॥ पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ५० ॥
अम्ब संहृत्य सम्भारान्दुःखं हृदि निगृह्य च ॥ वनवासकृता बुद्धिर्मम धर्म्याऽनुवर्त्यताम् ॥ ५१ ॥

एतद्वचस्तस्य निशम्य माता सुधर्म्यमव्यग्रमविक्लबं च ॥
मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच ॥ ५२ ॥
यथैव ते पुत्र पिता तथाऽहं गुरुः स्वधर्मेण सुहृत्तया च ॥
न त्वाऽनुजानामि न मां विहाय सुदुःखितामर्हसि गन्तुमेवम् ॥ ५३ ॥
किं जीवितेनेह विना त्वया मे लोकेन वा किं स्वधयाऽमृतेन ॥
श्रेयो मुहूर्तं तव संनिधानं ममेह कृत्स्नादपि जीवलोकात् ॥ ५४ ॥
नरैरिवोल्काभिरपोह्यमानो महागजोऽध्वानमनुप्रविष्टः ॥
भूयः प्रजज्वाल विलापमेनं निशम्य रामः करुणं जनन्याः ॥ ५५ ॥

मितिवार्थः । क्षत्रधर्मस्यतथात्वंप्रतिपादितंमहाभारते राजधर्मे "क्षत्रधर्मोमहारौद्रःशठकृत्यइतिस्मृतः" इति । तादृशींमतिंविसृज किन्तुधर्ममध्याश्रय । मातैक्ष्ण्यं इतःपरमपिक्रौर्यमाश्रय । मद्बुद्धिः ममबुद्धिः । अनुगम्यतां अनुवर्त्यतां । लोकायतवत्केवलनीतिर्नाश्रयणीया किंतुधर्ममाश्रितानीतिरित्यर्थः । अस्मिन्हि शास्त्रेधर्मस्थापनमुच्यते स्थापनंचधर्ममन्तरेणकेवलनीतिरेवार्थसाधनमितिलोकायतमतनिरासेनप्रवर्तनं तेन तत्रतत्रलक्ष्मणमुखेनलोकायतेप्रवर्तिते उपन्यस्ते तन्निरासेनरामेणधर्मःस्थाप्यतइतिरहस्यम् ॥ ४५—४७ ॥ किंतेमद्वचनंनकर्तव्यमित्याशङ्क्यप्रथमप्रवृत्तपितृवचनकरणानन्तरंक्रियतइत्याह—तीर्णप्रतिज्ञइति । ययातिः स्वर्गाद्भ्रष्टःपुनःस्वर्गंगतइतिमहाभारतेप्रसिद्धम् ॥४८—४९ ॥ नकेवलंममैवायंभारःकिंतुयुष्माकमपीत्याह—त्वयेत्यादिश्लोकेन ॥ ५० ॥ संभारान् पूजाद्रव्याणि ॥ ५१ ॥ अव्यग्रंअनाकुलं । "व्यग्रोव्यासक्तआकुलः" इत्यमरः । अविक्लबं अविह्वलं । दृढनिश्चयप्रतिपादकमित्यर्थः । मृतेव मूर्च्छितेतियावत् ॥ ५२ ॥ सुहृत्तया स्नेहेन । एवंसुदुःखितामितिसंबन्धः ॥ ५३ ॥ ननूक्तं राजनियोगस्त्वयाप्यनुवर्तनीयइतितत्राह—किमिति । लोकेन परलोकेन । स्वधया पितृलोकप्राप्तिसिद्ध्या । किंप्रयोजनमित्यर्थः । अमृतेन स्वर्गलोकप्राप्तिसिद्धेनामृतेन । किंप्रयोजनं । कृत्स्नादपि जीवलोकात् आनन्दहेतुभूतमहर्लोकाद्युपरितनलोकान्तवर्तिजीववर्गात् । संनिहितादितिशेषः ॥ ५४ ॥ एवंमातृकारुण्येपिधर्मएवस्थिरोभूदित्याह—नरैरिति । नरैर्गजग्राहिभिः । उल्काभिः साधनैः । अपोह्यमानः निवार्यमाणोपि । अध्वानं मार्गं । अनुप्रविष्टोमहागजइव मात्रादिवाक्येनवार्यमाणोपिधर्ममनुप्रविष्टोरामः भूयःप्रजज्वालसंरब्धोऽभूत् । स्वमार्गएवस्थितोभूदित्यर्थः ।

त्तममित्यस्यत्रैलोक्यसुखदत्वेनोत्तममितिव्यङ्ग्यम् ॥ ४२ ॥ **शि०** हेमातः शोकः शोकविशिष्टः । पितेतिशेषः । संधार्यतां बोध्यतामित्यर्थः । ननुशोकाक्रान्तयामया कथंतस्यप्रबोधइत्यतआह । माशुचः शोकंत्यजेत्यर्थः । तत्रहेतुः एष्यामि आगन्तास्मि । अतएवमाशुचइत्यनेननपौनरुक्त्यम् ॥ ४९ ॥ **स०** अथवा संहृतेर्मरणस्यअसंभारान् राज्ञस्त्वचमरणाभावप्रयोजकान्संगृह्येत्यर्थः ॥५१॥ **ति०** स्वधर्मेण पालनादिरूपमातृधर्मेण । **स०** मत्तोकंलतसकाशेसंस्थाप्यगच्छामीतिनवदेतिवदति अपुत्रअधुनाऽजातपोतेति । अतोनपुत्रपदातिरेकः ॥ ५३ ॥ **ती०** सुधयेतिपाठे देवभोग्येनवस्तुनाच । अमृतेन अपुनर्भवेनच । **ति०** अमृतेन अमृतत्व-

[ **पा०** ] १ ग. घ. ज. गमिष्येऽहमितो. २ ख. पुरम्. ३ क. यथादिवम्. ४ ट. अवसंहृत्य. ५ ख. दुःखमाशु. ६ च. गम्यताम्. ७ ङ. छ. झ. ट. पुत्रगन्तुं. ८ ख. ग. सुधया. ९ ङ. छ. झ. ञ. ट. ममैव. १० घ—ट. ध्वान्तमभि. ११ ङ. छ. झ. ट. मेवं. क—घ. च. ज. ञ. मेतं.

स मातरं चैव विसंज्ञकल्पामार्तं च सौमित्रिमभिप्रतप्तम् ॥
धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम् ॥ ५६ ॥
अहं हि ते लक्ष्मण नित्यमेव जानामि भक्तिं च पराक्रमं च ॥
मम त्वभिप्रायमसंनिरीक्ष्य मात्रा [1]सहाभ्यर्दसि [2]मां सुदुःखम् ॥ ५७ ॥
धर्मार्थकामाः [3]किल तात [4]लोके समीक्षिता धर्मफलोदयेषु ॥
[5]ते तत्र सर्वे स्युरसंशयं मे भार्येव वश्याऽभिमता [6]सुपुत्रा ॥ ५८ ॥
यस्मिंस्तु सर्वे स्युरसंनिविष्टा धर्मो यतः स्यात्तदुपक्रमेत ॥
द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता [7]खल्वपि न प्रशस्ता ॥ ५९ ॥
गुरुश्च राजा च पिता च [8]वृद्धः [9]क्रोधात्प्रहर्षाद्यदिवाऽपि कामात् ॥
यद्व्यादिशेत्कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥ ६० ॥
[10]स वै न शक्नोमि पितुः प्रतिज्ञामि[11]मामकर्तुं सकलां यथावत् ॥

अत्रनरैरित्युपमानगतबहुवचनेनपुनःसौमित्रिणापितथैवोक्तमितिगम्यते । अतएवमातरंसौमित्रिंचेतिवक्ष्यते ॥५५॥ तत्र तस्मिन्धर्मसङ्कटे । अतिकृच्छ्रावस्थायां एतादृशधर्मैकनिष्णातपुरुषान्तरस्याभावात् सएवार्हतीति वाल्मीकिस्स्तौति ॥५६॥ अभ्यर्दसि व्यथयसि ॥५७॥ "धर्मोहिपरमोलोके" इत्यादिनापूर्वसंग्रहेणोक्तंप्रपञ्चयति—धर्मेति । तातेतिसान्त्वसंबोधने । किलेति प्रसिद्धौ । लोकइतिमोक्षव्यावृत्तिः । धर्मफलोदयेषु धर्मस्यफलभूतानांसौख्यानामुदयेषुप्राप्तिषु । समीक्षिताः उपायत्वेननिश्चिताः । येधर्मार्थकामाः ते सर्वे तत्र धर्मेस्युः । धर्मएवानुष्ठितेसौख्यातिशयप्रदानस्वभावाः सर्वेपुरुषार्थाः सिध्यन्तीतिभावः । अत्रार्थे मे असंशयं संशयोनास्ति । अर्थाभावेऽव्ययीभावः । उक्तार्थे दृष्टान्तमाह—भार्येत्यादि । यथाभार्या वश्या अनुकूलासतीधर्मंजनयति, अभिमता प्रिया कामं, सुपुत्रासती अर्थं । सुलक्षणसुलग्नप्रभवपुत्रेजातेहिपितुरर्थाः सिध्यन्तीति तथासर्वपुरुषार्थानांधर्मएवनिदानं । तथाहि । धर्मोहिधर्महेतुरर्थहेतुःकाम्यमानस्रक्चन्दनवनितादिहेतुश्च । अतोधर्मएवसमाश्रयणीयइतिभावः । यद्वा लोकेधर्मादयःफलसाधनत्वेनसमीक्षिताः शास्त्रादिभिरवगताः तेसर्वे तत्र फलोदयेषु स्युः समर्थाः स्युः । मेअसंशयं मयानिश्चितमित्यर्थः । यथाउक्तगुणविशिष्टाभार्याफलसाधनंतथेति । अस्मिन्पक्षेअध्याहारादिक्लेशोनास्ति । उत्तरश्लोकानुरूप्यंच ॥ ५८ ॥ एवंधर्मादीनांफलसाधनत्वंनिर्णीतं तेष्वविशेषादन्यतमस्याश्रयणीयत्वेप्राप्तेआह—यस्मिन्निति । यस्मिन्कर्मणि आश्रीयमाणे सर्वे अर्थादयस्त्रयः । असंनिविष्टाः नप्रविशन्ति । नसंभवन्तीतियावत् । किंतुयतोधर्मः यस्माद्धर्मएवस्यात्तदारभेत । अथवायस्मिन्कर्मणिसर्वे धर्मार्थकामाः असंनिविष्टाःस्युःअविद्यमानाभवेयुः । तत्कर्मनोपक्रमेत । यतः यस्मात्कर्मणः । धर्मःस्यात् तदुपक्रमेत । प्रथमयोजनायामर्थकामयोःसंनिवेशेको दोषइत्यत्राह—द्वेष्यइति । तस्मादर्थकामौपरित्यज्यकेवलधर्मपरोभवेदित्यर्थः ॥ ५९ ॥ यतोधर्मएवकर्तव्योऽतआह—गुरुरिति । गुरुः धनुर्वेदनीतिशास्त्राद्युपदेशात् । यदिवेत्येकनिपातो वार्थे । अपिचेतिवत् । धर्मं सत्यप्रतिज्ञत्वरूपमवेक्ष्य तत्परिपालनायेत्यर्थः । यत्कार्यंव्यादिशेत् नियुञ्जीत । तत्कर्मअनृशंसवृत्तिः कोनकुर्यात् । योनकरोतिसकेवलंनृशंसइतिभावः ॥ ६० ॥ सोहं अनृशंसोहं । पितुःप्रतिज्ञां वरदानसाधनेनतत्वज्ञानेनापि । **शि०** स्वधया स्वधादिशब्दवत्यानिखिलक्रिययेत्यर्थः ॥ ५४ ॥ **शि०** विसंज्ञकल्पां विसंज्ञःसंज्ञाराहित्यं कल्पयतिकरोतिसातां । तच्चेष्टादर्शनमात्रेणान्याअपिविसंज्ञाभवन्तीत्यर्थः ॥ ५६ ॥ **ति०** एवंसुतरांदुःखं मा माकुर्वित्यर्थः ॥५७॥ **ति०** इमांसकलांसंपूर्णांनकर्तुंनशक्नोमि ॥ ६१ ॥

[ **पा०** ] १ क. सहह्यर्दसि. घ. समभ्यर्दसि. २ क. छ. झ. ञ. ट. मासुदुःखम्. ज. मांसुदुःखितं. ३ क—ट. खलु. ४ ङ. छ. झ. ट. जीवलोके. ५ क. ख. ङ. च. छ. झ. ञ. ट. येतत्र. ६ ख. घ—ट. सपुत्रा. ७ ङ. छ. झ. ट. खल्वति. ८ छ. झ. ट. वृथवापि. ९ घ. मोहात्. १० ङ. छ. झ. ट. नते. ११ ङ. च. छ. झ. ञ. ट. मिमांनकर्तुं.

स ह्यावयोस्तात गुरुर्नियोगे देव्याश्च भर्ता स गतिः[1] स धर्मः ॥ ६१ ॥
तस्मिन्पुनर्जीवति धर्मराजे विशेषतः स्वे पथि वर्तमाने ॥
देवी मया सार्धमितोपगच्छेत्[2] कथंस्विदन्या विधवेव नारी ॥ ६२ ॥
सा माऽनुमन्यस्व वनं व्रजन्तं कुरुष्व[3] नः स्वस्त्ययनानि देवि ॥
यथा समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥ ६३ ॥
यशो ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम् ॥
अदीर्घकाले[4] न तु देवि जीविते वृणेऽवरामद्य महीमधर्मतः ॥ ६४ ॥
प्रसादयन्नरवृषभः स्वमातरं[5] पराक्रमाज्जिगमिषुरेव दण्डकान् ॥
अथानुजं भृशमनुशास्य दर्शनं चकार तां हृदि जननीं प्रदक्षिणम् ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

हेतुकभरताभिषेकमद्विवासनरूपांप्रतिज्ञां । अकर्तुंनशक्नोमि । अवश्यंकुर्यामित्यर्थः। तत्रहेतुमाह—सहीति । आवयोः ममभरतस्यचेत्यर्थः । नियोगे गुरुः प्रभुरित्यर्थः । देव्याः कौसल्यायाः । तथाचदेव्यापितद्वचनंनातिक्रमणीयमितिभावः । धर्मः अलौकिकश्रेयस्साधनम् ॥ ६१ ॥ देव्याश्चेत्यस्याशयमुद्धाटयति—तस्मिन्निति । धर्मराजे धर्मप्रवर्तके । विशेषतः पूर्वराजापेक्षयाविशिष्य । स्वेपथि स्वासाधारणेपथि । धर्ममार्गे । वर्तमाने स्वमर्यादानतिलङ्घिनीत्यर्थः । तस्मिन् गतिभूतेभर्तरिजीवति देवी कृताभिषेकामहिषी । सहधर्मचारिणीतियावत् । मया पुत्रेणसह । अन्येव याकाचित्स्त्रीव । कथंस्वित् कथंवा । वनमपगच्छेत् अभर्तृकायाएवपुत्रेणसहवनगमनमुचितमितिभावः ॥६२॥ सा जीवद्भर्तृकात्वं । मा मां । अनुमन्यस्व अनुजानीहि । इतःपूर्ववनगमनंप्रतिसीताभिप्रायस्यापरिज्ञातत्वात् "दीप्तमग्निमरण्यंवायदिरामःप्रवेक्ष्यति । प्रविष्टं तत्रमांदेवित्वंपूर्वमुपधारय" इत्युक्तयालक्ष्मणाभिप्रायस्यज्ञातत्वाच्च नइत्येतदावयोरित्यस्मिन्नर्थेवर्तते । "अस्मदोद्वयोश्च" इतिद्विवचनेबहुवचनादेशादेवंव्याख्यातम् । एवंचसति "अनुज्ञातश्चभवतापूर्वमेवयदस्म्यहं" इतिवक्ष्यमाणलक्ष्मणवचनंचोपपद्यते । स्वस्त्ययनानि शोभनप्राप्तिप्रार्थनानि । समाप्ते चतुर्दशवर्षाचरणीयेव्रतेसमाप्ते । यथापुनरागच्छेयंतथास्वस्त्ययनानिकुरुष्व । पुनरागमनेनिदर्शनमाह—यथेति । स्वर्गाच्च्युतोययातिः यथासत्येन सत्यवचनेन । अष्टकादिदौहित्रोक्तसत्यवचनेन। पुनःस्वर्गमगच्छत्तथेत्यर्थः । तथोक्तंमहाभारते "आतिष्ठस्वरथंराजन्विक्रमस्वविहायसम् । वयमप्यत्रयास्यामोयत्रलोकोभविष्यति" इत्यादिना ॥ ६३ ॥ केवलराज्यकारणात् धर्मविरहितराज्यहेतोः । महोदयं महाफलं । यशः पृष्ठतःकर्तुं उपेक्षितुं । अहंनालं नसमर्थोस्मि । किंच अदीर्घकाले चञ्चले । जीविते प्राणधारणे । निमित्तसप्तमीयं । तद्विद्वच्चञ्चलजीवितनिमित्तम् । अवरां तुच्छप्रयोजनभूतां । महींअधर्मतोनवृणे नस्वीकरोमि ॥ ६४ ॥ पराक्रमात् "रामतस्मादितःशीघ्रंवनंगन्तुंत्वमर्हसि" इत्युक्तकैकेयीप्रेरणात् । अनुजं । दर्शनं स्वमतं । अनुशास्य प्रदर्श्येत्यर्थः । शासिर्द्विकर्मकः । हृदिप्रदक्षिणं चकार प्रदक्षिणंकर्तुंसंकल्पितवानित्यर्थः । लोकप्रसिद्धास्त्रयःपुरुषार्थाः । तेषुसर्वमूलत्वादितरयोःसापायत्वाच्चधर्मएवाश्रयणीयइतिस्थापितंभवति ॥ ६५॥ इति

---

**सत्य०** नः त्रयाणां ॥ ६३ ॥ **शि०** पराक्रमात् परेषांमुनिशत्रूणां आक्रमःविध्वंसनं तस्माद्धेतोः । दण्डकान्जिगमिषुःसरामः मातरंअनुजंच दर्शनं धर्मविषयकज्ञानं । अनुशास्य जननींप्रदक्षिणं हृदि हृदये। चकार । प्रत्यक्षप्रदक्षिणस्यवियोगज्ञापकत्वात्तन्नकृतमितितात्पर्यं । **सत्य०** पराक्रमात् ल्यब्लोपनित्तापञ्चमी। शौर्यमाश्रित्य । दर्शनं धर्मरहस्यं । हृदि ध्यायन्प्रदक्षिणंचकार । यद्वा पराक्रमात् परस्याःशत्रुभूतायाःसपत्न्याः अक्रमात् ज्येष्ठेसत्यपिकनिष्ठस्यराज्यदापनप्रयत्नरूपात् ॥ ६५ ॥ इत्येकविंशःसर्गः ॥ २१ ॥

**[ पा० ]** १ ङ. झ. ट. गतिश्च. २ ङ. छ. झ. ट. मितोभिगच्छेत्. क. ख. च. ञ. मितोनुगच्छेत्. ३ घ. ज. कुरुष्वमे. ख. कुरुष्वच. ४ ख. कालस्यनजीवितस्य. ५ क. ग—ञ. समातरं. ख. स्समाहितः.

# द्वाविंशः सर्गः ॥ २२ ॥

श्रीरामेणकैकेय्यांक्रुद्धंलक्ष्मणंप्रतिस्वप्रव्राजनेदैवस्यैवकारणत्वनिरूपणेनतस्याहेतुत्वनिरसनपूर्वकंतस्यकोपोपशमनम् ॥ १ ॥

अथ तं व्यथया दीनं सविशेषममर्षितम् ॥ [1]श्वसन्तमिव नागेन्द्रं रोष[2]विस्फारितेक्षणम् ॥ १ ॥
आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम् ॥ उवाचेदं स धैर्येण धारयन्सत्वमात्मवान् ॥ २ ॥
निगृह्य रोषं शोकं च धैर्य[3]माश्रित्य केवलम् ॥ अवमानं नि[4]रस्येमं गृहीत्वा हर्षमुत्तमम् ॥ ३ ॥
उपक्लृप्तं हि[5] यत्किञ्चिदभिषेकार्थ[6]मद्य मे ॥ सर्वं वि[7]सर्जय क्षिप्रं कुरु कार्यं नि[8]रत्ययम् ॥ ४ ॥
[9]सौमित्रे यो[10]ऽभिषेकार्थे मम संभारसंभ्रमः ॥ अभिषेकनिवृत्त्यर्थे सोस्तु संभारसंभ्रमः ॥ ५ ॥
यस्या [11]मदभिषेकार्थे मानसं परि[12]तप्यते ॥ माता मे [13]सा यथा न स्यात्सविशङ्का तथा कुरु ॥ ६ ॥
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे ॥ मनसि प्रतिसंजातं सौमित्रेऽह[14]मुपेक्षितुम् ॥ ७ ॥
[15]न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन ॥ मातॄणां वा पितुर्वाऽहं कृतमल्पं च विप्रियम् ॥ ८ ॥
सत्यस्सत्याभिसन्धश्च नित्यं सत्यपराक्रमः ॥ परलोकभयाद्भीतो निर्भयोस्तु पिता मम ॥ ९ ॥

श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

---

अथराम:सौमित्रेःकैकेयीविषयंरोषमुपशमयति । अथेत्यादिश्लोकद्वयमेकंवाक्यम् । सविशेषं अन्तरङ्गजनापेक्षयासातिशयम् । अमर्षितं प्राप्तासहनं । रोषविस्फारितेक्षणं क्रोधविस्तारितनयनम् । आसाद्य अभिमुखीकृत्य । सुहृत्त्वादिविशेषणंकोपेप्यनुपेक्षणीयत्वाय । सत्वं सर्वविषयकंस्वंबलं । धैर्येण धारयन् अप्रकटयन् । आत्मवान् प्रशस्तमनाः । वश्यमनस्कइत्यर्थः ॥ १—२ ॥ निगृह्येत्युपक्लृप्तमितिचश्लोकद्वयमेकान्वयम् । रोषं पित्रादिविषयं । शोकं मद्विषयं । रोषशोकयोर्निग्रहेहेतुमाह—धैर्यमाश्रित्येति । केवलमितिधैर्यनैरन्तर्यमुच्यते । अवमानम् आरब्धाभिषेकत्यागपूर्वकवनगमनं । निरस्य निजदौर्बल्यकृतत्वाभावान्निवार्य । उत्तमंहर्षं सत्यपरिपालनेनपितरंतारयिष्याम इतिबुद्धिजन्यं । मेऽभिषेकार्थमुपक्लृप्तं सम्पादितं । यत्किञ्चिदलङ्कारादिकं तत्सर्वंविसर्जय । निरत्ययं निरपायं । सत्यपरिपालनोपयुक्तं । कार्यं वल्कलधारणादिकं । कुरु ॥३—४॥ संभारसंभ्रमः संभारसंपादनविषयउत्साहः । अभिषेकनिवृत्त्यर्थे अभिषेकनिवृत्तिरूपवनवासार्थे । ससंभारसंभ्रमोस्तु वनवासोचितसाधनसंपादनविषयोभवत्वित्यर्थः ॥५॥ मदभिषेकार्थे मदभिषेकप्रयोजनविषये । माता कैकेयी । सविशङ्कालक्ष्मणेनसंमन्त्र्यराज्यंपुनःकिंरामोग्रहीष्यतीतिशङ्कावती ॥ ६ ॥ तस्याः कैकेय्याः । शङ्कामयं शङ्कारूपं । स्वार्थेमयट् । प्राचुर्येवा ॥७॥ मातॄणांपितुर्वाविषये कदाचनकृतं बुद्धिपूर्वमपिविप्रियंनस्मरामि । अबुद्धं अबुद्धिपूर्वकमपि । विप्रियंनस्मरामि ॥ ८ ॥ सत्यः सत्यवचनः । सत्या-

---

**ती०** सत्वं चित्ताविकृतिं ॥ २ ॥ **सत्य०** निरव्ययं नितरामव्ययं ॥ ४ ॥ **ती०** मदभिषेकार्थे मदभिषेकनिवृत्तिनिमित्तं । मानसंपरितप्यते सामेमाताकौसल्यायथासविशङ्कानस्यात्तथाकुरु । पितृवाक्यपरिपालनस्यरामकर्तव्यस्यअल्पकालसाध्यत्वात्तद्विषयेत्वयानविषत्तव्यमित्युपदेशेनेत्यर्थः ॥ ६ ॥ **स०** तस्याःकौसल्यायाः । मनसिप्रतिसंजातंशङ्कामयं जीवन्पुनरागमिष्यतिनवेतिशङ्कात्मकं । दुःखं उदीक्षितुं उपेक्षितुं ॥ ७॥ **ति०** समारब्धंचविप्रियमितिपाठे नारब्धवानस्मीत्यर्थः ॥ ८ ॥ **सत्य०** परलोकभयाद्भीतः परलोकभयंआतयतिप्रापयतीतिपरलोकभयात् पापं तस्माद्भीतः ॥ ९ ॥

[ **पा०** ] १ छ. झ. ञ. ट. सरोषमिव. २ क. क्रोध. ३ ङ. छ. झ. ट. धैर्यमाक्रम्य. क. धर्ममाश्रित्य. ४ छ. झ. ट. निरस्यैनं. ङ. निरस्यैवं. ख. निरस्यैव. ५ ङ. च. छ. झ. ञ. ट. यदेतन्मेअभि. क. तुयत्किंचित्. ६ ङ. छ. झ. ञ. ट. मुत्तमम्. ७ ङ. च. छ. झ. ञ. ट. निवर्तय. ८ ङ. छ. झ. ट. निरव्ययम्. ९ सौमित्रे. उपक्लृप्तंहि इति ५ ४ श्लोकयोःपौर्वापर्यं ख. ङ. पुस्तकयोर्दृश्यते. १० ख. ङ. योभिषेकार्थः. ११ क. ख. मदभिषेकार्थे. १२ झ. तप्यति. १३ क—ट. नस्सा. १४ ङ. च. ञ. मुदीक्षितुम्. १५ ज. सबुद्धिपूर्वंनाबुद्धि.

तस्यापि हि भवेदस्मिन्कर्मण्यप्रतिसंहृते ॥ सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ १० ॥
अभिषेकविधानं[1] तु तस्मात्संहृत्य लक्ष्मण ॥ अन्वगेवाहमिच्छामि वनं गन्तुमितः पुनः[2] ॥ ११ ॥
मम[3] प्रव्राजनादद्य कृतकृत्या नृपात्मजा ॥ सुतं भरतमव्यग्रमभिषेचयिता[4] ततः ॥ १२ ॥
मयि चीराजिनधरे जटामण्डलधारिणि ॥ गतेऽरण्यं च कैकेय्या भविष्यति मनस्सुखम् ॥ १३ ॥
बुद्धिः प्रणीता[5] येनेयं मनश्च[6] सुसमाहितम् ॥ तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि माचिरम् ॥ १४ ॥
कृतान्तस्त्वेव[7] सौमित्रे द्रष्टव्यो मत्प्रवासने[8] ॥ राज्यस्य च वितीर्णस्य पुनरेव निवर्तने[9] ॥ १५ ॥
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने[10] ॥ यदि[11] भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥१६॥
जानासि हि यथा सौम्य न मातृषु ममान्तरम् ॥ भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥१७॥

भिसन्धः सत्यप्रतिज्ञः । सत्यपराक्रमः अमोघपराक्रमः । परलोकभयात् परलोकसंबन्धिभयहेतोः । परलोकहानेरितियावत् । निर्भयोस्तु प्रतिष्ठितसत्यत्वादितिभावः ॥९॥ तस्य दशरथस्यापि । अस्मिन्नभिषेककर्मणि अप्रतिसंहृते अनिवर्तितेसति । सत्यंनेति ममवरदानविषयसत्यंनेति । मनस्तापोभवेत् । तस्यतापः मांतपेत् तापयेदित्यर्थः ॥ १० ॥ अन्वक् अनुपदमेव । "अन्वगन्वक्षमनुगेनुपदं" इत्यमरः । इतः अस्मान्नगरात् ॥ ११ ॥ अभिषेचयिता लुट् ॥१२–१३॥ येनमया इयंबुद्धिः वनवासबुद्धिः । प्रणीता शिक्षिता । मनश्चसुसमाहितं स्थिरीकृतं । तंमां संक्लेष्टुं क्लेशयितुं । नार्हामि । अतःप्रव्रजिष्यामि । माचिरं मास्तुविलम्बः ॥ १४ ॥ पूर्वसर्गेधर्मोस्तीत्युक्तं अधुनाप्रसङ्गाद्धर्मातिरिक्तंदैवंकिंचिदस्तिफलप्रदमितिदर्शयन् अस्मत्प्रवासे नकैकेयीनिमित्तं अतः साननिन्दितव्येत्याह—कृतान्त इत्यादिना । कृतान्तः दैवं । "कृतान्तोयमसिद्धान्तदैवाकुशलकर्मसु" इतिनिघण्टुः । दैवंचप्राक्तनादृष्टमित्येके । ईश्वरएवेत्याचार्याः । द्रष्टव्यः कारणत्वेनेतिशेषः । वितीर्णस्य दत्तस्य ॥ १५ ॥ कृतान्तएवेत्येवकारव्यवच्छेद्यमाह—कैकेय्याइति । दैवः देवीसंबन्धी कैकेयीसंबन्धी । अयंभावः अयमभिप्रायः । कृतान्तविहितोयदिनभवेत् तदाममपीडनेकैकेय्याः प्रतिपत्तिः बुद्धिः । कथंस्यात् । पीडनमितिलक्ष्मणबुद्ध्या ॥१६॥ हेसौम्य मातृषु मे अन्तरं भेदः । "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इतिनिघण्टुः । यथा-नभूतपूर्वंतथाजानासि । तस्याअपि कैकेय्याअपि ।

**ती०** येनमन्थरादिजनेनइयंबुद्धिः अभिषेकत्यागाध्यवसायः । प्रणीता प्रवर्तिता । तस्मिन्मनश्चसुसमाहितं स्थिरीकृतं । तंजनमपिसंक्लेष्टुं क्लेशयितुं । नार्हामि नशक्नोमि । किंपुनः पितरौ । अतः प्रव्रजिष्यामीत्यर्थः । यद्वा येनपित्राइयंबुद्धिःप्रणीता अयंअभिषेकत्यागाध्यवसायःप्रवृत्तः । पितुरनुग्रहादेवतदीयसत्यपरिपालनार्थमभिषेकत्यागलक्षणाध्यवसायःप्रवृत्तइतिभावः । मनश्चसुसमाहितं यस्यशिक्षोपदेशाभ्यांमनसःसौगुण्यंसंजातमित्यर्थः । तंतथाविधंपितरं । संक्लेष्टुं सत्यपाशेनसंक्लेशयितुं । नार्हामिशीघ्रंप्रव्रजिष्यामि । **ति०** कैकेय्याअत्रनापराधः अन्यप्रेरितत्वात् । तर्हिसएवदण्ड्यस्तत्राह—**बुद्धिरिति** । येनेश्वरेणविधात्राइयंबुद्धिः कैकेय्याःप्रणीता मन्थराद्वारादत्ता । मनश्चतद्बुद्धिविषयेऽर्थेसुसमाहितं स्थिरीकृतं । तंसंक्लेष्टुं मत्कृतमन्यथाजातमितिक्लेशयितुं नार्हामि । तस्यमदधिकारित्वान्मद्रूपत्वाद्वेतिगूढआशयः । मत्संकल्पकृतमेवतदितिगूढंव्यङ्ग्यं । अशक्यत्वादित्यापाततोर्थः । अतोवनंप्रव्रजिष्यामि । चिरं विलंबोमा मास्त्वित्यर्थः । **शि०**-येनमद्विजयकालेन । बुद्धिः विजयविषयकनिश्चयः । प्रणिहिता संपादिता । अनु पश्चात् । मनः कैकेयीसंकल्पः । समाहितं प्रापितं । कारितमित्यर्थः । तंकालंसंक्लेष्टुं अतिवर्तितुमित्यर्थः ॥ १४ ॥ **ति०** तत्प्रेरयितारमाह—**कृतान्तइत्यादि** । मद्विवासने मद्विवासनप्रेरणायां । एवमभिषेकनिवर्तनप्रेरणायांकृतान्तः दैवमेव । इन्द्रादीनांदुःखनिवर्तकादृष्टमेवेतिगूढं । मत्प्रजानांमत्कृतपरिपालनलाभाभावजनकमदृष्टमितिस्फुटं । यत्तुरामस्यप्राकृतं दुरदृष्टंदैवमितितन्न । भगवतस्तस्याभावात् । **स०** इवशब्दश्चावधारणे ॥ १५ ॥ **रामानु०** कृतान्तविहितः कृतःअन्तोयेनेति व्युत्पत्त्याकृतान्तशब्देनकालउच्यते । तेनविहितः कालचोदितइत्यर्थः । दैवः देवसंबन्धी । **सत्य०** नान्यद्दैवात्समर्थयेइत्युपसंहारादत्रापिकृतान्तशब्दस्तदर्थः ॥ १६ ॥

**[ पा० ]** १ ख. विधानंतत्. २ च. छ. झ. ञ. ट. पुरः. ३ ख. वन. ४ ख. ङ. च. छ. झ. ञ. ट. मभिषेचयतो. ५ ङ. ट. प्रणिहितायेन. ६ ङ. छ. ट. मनश्चानु. ७ ङ. झ. एव. ज. श्चैव. ८ च. झ. ञ. मद्विवासने. ९ घ. विवर्तने. १० ङ. छ. झ. ट. वेदने. ११ ङ. छ. झ. ट. यदितस्यानभावोऽयं. घ. यदिभावोनचैवायं.

सोभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ॥ उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात्समर्थये ॥ १८ ॥
कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा ॥ ब्रूयात्सा प्राकृतेव स्त्री मत्पीडां भर्तृसंनिधौ ॥ १९ ॥
यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते ॥ व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ २० ॥
कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् ॥ यस्य न ग्रहणं किञ्चित्कर्मणोऽन्यत्र दृश्यते ॥ २१ ॥
सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ॥ यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २२ ॥
ऋषयोप्युग्रतपसो दैवेनाभिप्रपीडिताः ॥ उत्सृज्य नियमांस्तीव्रान्भ्रश्यन्ते काममन्युभिः ॥ २३ ॥
असंकल्पितमेवेह यदकस्मात्प्रवर्तते ॥ निवर्त्यारंभमारब्धं ननु दैवस्य कर्म तत् ॥ २४ ॥
एतया तत्वया बुद्ध्या संस्तभ्यात्मानमात्मना ॥ व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५ ॥
तस्मादपरितापः संस्त्वमप्यनुविधाय माम् ॥ प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥ २६ ॥

---

मयिवा सुते भरतेवा। विशेषोयथानभूतपूर्वः तथाजानासिहि ॥ १७ ॥ सोहं एवमनुभूततद्वात्सल्योहं। वाक्यैरितिहेतौतृतीया । दैवादन्यत् बुद्धिभेदकारणं नसमर्थये ननिश्चिनोमि ॥ १८ ॥ प्रकृतिः साधुस्वभावः । "प्रकृतिःपञ्चभूतेषुस्वभावेमूलकारणे" इतिनिघण्टुः । प्रकृतिसंपन्ना साधुस्वभावसंपन्ना । राजपुत्री महाकुलप्रसूता । तथागुणा पूर्वानुभूतदयादिसद्गुणा । सा कैकेयी । प्राकृतेवस्त्री दुष्प्रकृतिकादुष्कुलागुणलेशशून्याक्षुद्रास्त्रीव । भर्तृसन्निधौ नतुयस्यकस्यचित्संनिधौ । नतुदूत्यादिमुखेन। मत्पीडां ममनिरवधिकस्नेहपात्रस्यपीडां। नत्वप्रियमात्रं। कथंब्रूयात् व्यक्तं वदेत्। नतुसूचयेत्। तस्माद्दैवमेवात्रकारणमिति॥१९॥ यदचिन्त्यं अचिन्त्यप्रभावंदैवं । तदेवसर्वेष्वपि भूतेषु नहन्यते सर्वत्राप्यप्रतिहतफलप्रदानस्वभावंवर्तते । व्यक्तं अत्रसंशयोनास्ति । अतएवहिमयितस्यांच विपर्ययः वैपरीत्यं । मयिहस्तगतराज्यभ्रंशरूपः तस्यांपूर्वस्थितवात्सल्यापगमरूपः । पतितः प्राप्तः ॥ २० ॥ एवंप्रबलमपिदैवंपौरुषेणनिवर्त्यतामित्यत्राह —कइति । क्रियतइतिकर्म कार्यं । फलरूपकार्यतोन्यत्र यस्य ग्रहणं ज्ञानसाधनं । नदृश्यते कार्यैकानुमेयंयस्यस्वरूपमित्यर्थः । तेनफलात्पूर्वमज्ञायमानेनदैवेन कः पुमान्योद्धुमुत्सहते कस्तंनिवारयितुंसमर्थइत्यर्थः ॥ २१ ॥ ननुकर्मणोन्यत्रेत्युक्तंकिंतत्कर्मतत्राह—सुखदुःखेइति । अत्रभयशब्देनशान्तिरुच्यते । भवाभवौ उत्पत्तिविनाशौ । यच्चकिञ्चित्तथाभूतं अचिन्त्यकारणकंलोकेदृश्यते । तत्सर्वंदैवस्यकर्मकार्यंननुहीत्यर्थः ॥ २२ ॥ दैवप्राबल्यमेवद्रढयति—ऋषयइति । ऋषयः विश्वामित्रादयः । नियमान् व्रतोपवासादीन् । काममन्युभिरिति व्यक्तिबहुत्वाद्बहुवचनं । भ्रश्यन्ते ऋषित्वादितिशेषः ॥ २३ ॥ यच्चकिञ्चित्तथाभूतमित्येतद्विशदयति—असंकल्पितमिति । इह अस्मिँल्लोके । आरब्धं उपक्रान्तं। आरंभं कार्यं । निवर्त्य असंकल्पितं अचिन्तितमेव। यत् कार्यं। अकस्मात् झटिति। प्रवर्तते तद्दैवस्यकर्म॥२४॥ उपदेशफलमाह—एतयेत्यादिश्लोकद्वयेन। तत्वया अबाधितया। एतया बुद्ध्या। आत्मानं अन्तःकरणं। आत्मना स्वयमेव । उपदेशंविनेत्यर्थः । संस्तभ्य निश्चलीकृत्य। स्थितस्यमे अभिषेके व्याहतेपि परितापोनविद्यते ॥२५॥ तस्मात् तत्वस्यैवंरूपत्वात् ।

---

**सत्य०** मत्पीड्यं अहंपीड्योयेनतन्मत्पीड्यं । वचइतिशेषः ॥ १९॥ **शि०** यस्य दैवस्य ग्रहणं बोधकं । कर्मणः फलभोगात् । अन्यत्नदृश्यते । तेनदैवेनसहयोद्धुंकश्चित्पुमान्नोत्सहते । नञआवृत्त्याउभयत्रान्वयः ॥ २१ ॥ **ति०** भवाभवौ बन्धमोक्षौ । एषांमध्येयस्ययत्तथाभूतं अचिन्त्यकारणकंकिंचित्कार्यं । तत्नु निश्चयेन । दैवस्यकर्मफलं । **सत्य०** भवाभवौ मङ्गलामङ्गले ॥ २२ ॥ **ति०** आरंभैः यत्नैः । आरब्धं उपक्रान्तंकार्यं ॥ २४ ॥ **ति०** तत्वया यथार्थया । बुद्ध्या बुद्धियोगेन । आत्मना अन्तःकरणस्थेन । आत्मानं अन्तःकरणं । संस्तभ्य यदितिष्ठसीतिशेषः । तदामेअभिषेकेव्याहतेपितव । परितापोनविद्यते नभवति । **सत्य०** तत्वया स्वरूपभूतया । "तत्वंवाद्यप्रभेदेस्यात्स्वरूपे" इतिविश्वः । स्त्रीलिङ्गतार्षी ॥ २५ ॥ **ति०** तस्मादिति । अनेनगूढंलक्ष्मणस्यापिवनगमनंसूचितं ॥ २६ ॥

**[ पा० ]** १ क—घ. च. ज. ञ. स्तुप्राकृतेव. २ झ. ट. ठ. मत्पीड्यं. ३ ट. कश्चिद्दैवेन. ४ झ. ञ. नुग्रहणं. ५ झ. ञ. ट. त्कर्मणोन्यत्र. ६ घ. ङ. छ. झ. ट. यस्य. ७ ङ. छ. झ. ट. नाभिप्रचोदिताः. च. नाधिप्रपीडिताः. ८ ख. ग. ङ. ज. ट. गृह्यन्ते. ९ ङ. छ. ज. झ. ट. रब्धमारंभैः. ख. रब्धमारंभं. १० क. ज. दपरितप्यस्व.

एभिरेव घटैः सर्वैरभिषेचनसंभृतैः ॥ मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ॥ २७ ॥
अथवा किं ममैतेन राजद्रव्यम[1]तेन तु ॥ उद्धृतं मे स्वयं तोयं [2]व्रतादेशं करिष्यति ॥ २८ ॥
मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये ॥ राज्यं वा वनवासो वा वनवासो महोदयः ॥ २९ ॥
न लक्ष्मणास्मिन्खलु क[3]र्मविघ्ने माता यवीयस्य[4]तिशङ्कनीया ॥
दैवाभिपन्ना हि[5] वदत्यनिष्टं जानासि [6]दैवं च तथाप्रभावम् ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

## त्रयोविंशः सर्गः ॥ २३ ॥

श्रीरामवचनश्रवणादत्यन्तंकुपितेनलक्ष्मणेनपितृवचनस्याधर्म्यत्वनिरूपणेनतस्योपेक्षणीयत्वकथनपूर्वकंदैवपौरुषयोर्मध्ये पौरुषस्यैवप्राबल्यप्रतिपादनम् ॥ १ ॥ तथाश्रीरामंप्रतिस्वपौरुषख्यापनेनाभिषेकविघ्नकारिणांनिवारणेननिर्विघ्नंयौवराज्याभिषेकनिर्वर्तननिवेदनम् ॥ २ ॥ श्रीरामेणलक्ष्मणंप्रतिपरिसान्त्वनपूर्वकंपितृवचनस्यावश्यकर्तव्यत्वबोधनम् ॥ ३ ॥

इति ब्रुवति रामे तु लक्ष्मणो[7]ऽधःशिरा मुहुः ॥ श्रुत्वा[8] मध्यं [9]जगामेव [10]मनसा दुःखहर्षयोः ॥ १ ॥

---

अनुविधाय अनुसृत्य । आभिषेचनिकीं अभिषेकप्रयोजनिकांक्रियां अलङ्करणादि । प्रतिसंहारय निवर्तय ॥२६॥ तापस्ये तापसयोग्येकर्मणीत्यर्थः । अभिषेचनसंभृतैः अभिषेचनायसंपादितैः ॥ २७ ॥ घटस्थजलैः तापस्यव्रतस्नानेक्रियमाणेपिराज्यलिप्सयास्नानंकृतवानितिकैकेय्याःशङ्कामाभूदितिस्नानंनिषेधति—अथवेति । राजद्रव्यमतेन राजद्रव्यत्वेनसंमतेन । राज्यद्रव्यमयेनेतिपाठेराज्यार्थमङ्गलद्रव्यप्रचुरेणेत्यर्थः । व्रतादेशं व्रतनियमं ॥२८॥ राज्यंवावनवासोवा उभावपितुल्यौ । विचार्यमाणेवनवासएवमहोदयः महाफलः । राज्यव्यापारक्लेशाभावादपूर्वदर्शनसौख्याच्चेतिभावः ॥ २९ ॥ महताप्रबन्धेनोक्तंसंग्रहेणदर्शयति—नेति । यवीयसी कनिष्ठा । कानिष्ठ्यंमहिषीत्रयापेक्षया । नतेम्बामध्यमेत्यत्रमध्यमात्वंसर्वराजपत्न्यपेक्षया । दैवाभिपन्ना दैवाविष्टा । तथाप्रभावं तादृशप्रभावयुक्तं । अप्रतिहतप्रभावमित्यर्थः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने द्वाविंशःसर्गः ॥ २२ ॥

---

पूर्वंदैवस्यप्रबलत्वेनराज्यविपर्यये नसंतापःकार्यः धर्मस्यसर्वश्रेयःसाधनत्वात्तन्मूलभूतेपितृवचनकरणसत्येअवश्यंकर्तव्ये मातृवचनंचपश्चात्तनत्वात्पश्चात्पालनीयमित्येतावत्सयुक्तिकमुपपादितं।तत्रपौरुषमेवबलंबलीयः दैवबलंतुदुर्बलानुसरणीयं धर्मश्चार्थकामविरोधेनकर्तव्यइतिपूर्वपक्षंपूर्वसंग्रहेणलक्ष्मणवाक्येनोक्तं पुनस्तन्मुखेनप्रपञ्चयन्संग्रहेणसिद्धान्तंचदर्शयति—इतीत्यादिना । रामेमुहुर्ब्रुवतिसति लक्ष्मणःस्वानभ्युपगमसूचनायाधःशिराःसन् श्रुत्वा दुःखहर्षयोर्मध्यं धर्मे-

---

**ती०** वनवासोमहोदयः । प्रजानांकृत्याकृत्यचिन्ताद्याक्षेपराहित्येनसततंतपःप्रवृत्तिसाधनत्वात् विशिष्यपितृवाक्यपरिपालनप्रयोजनवत्वाच्चमहाभ्युदयसाधनं ॥ २९ ॥ **ति०** हेलक्ष्मण अस्मिन्राज्यविघ्ने । दैवाभिपन्ना दैवविजयादृष्टप्रेरिता । यवीयसी कनिष्ठा । ममभाता कैकेयी नाभिशङ्कितव्या किमाचरितमनयेतिशङ्कितुमनर्हा । पितापिनशङ्कितव्यः । शङ्कितव्येतिलिङ्गविपरिणामेनेहाप्यन्वेति । त्वत्कर्तृकशङ्कितव्यत्वाभावेहेतुः तथाप्रभावंमदुक्तप्रभावविशिष्टंदैवंत्वंजानासि ॥ ३० ॥ इतिद्वाविंशःसर्गः ॥ २२ ॥

**शि०** अवाक्छिराः अधोमुखः । लक्ष्मणः । आशु शीघ्रं । ध्यात्वा रामोक्तितात्पर्यंविचार्य । दैन्यहर्षयोः पितृकृताभिषेकप्रतिज्ञाभङ्गेनदैन्यंरामेप्सितराक्षसवधादिसांनिध्येनहर्षः । तयोर्मध्यमिवसहसाजगाम । इवेनतटस्थजनबोधनायैवमाचरणमितिध्वन्यते । तेनतस्यलोकापवादभीरुत्वंव्यक्तं । एतेनास्यापिरामेप्सितमेवेप्सितमितिसूचितं । **ति०** लक्ष्मणस्यशेषावतारत्वेनतमोगुणप्रधानता ज्येष्ठस्यविवेकवाक्यश्रवणेनसत्वोदयश्चेतिभावः । अधश्शिरस्त्वेनोक्तार्थस्याधाङ्गीकारध्वननम् । इवेनतमसःस्वाभाविकत्वात्तस्य-

**[ पा० ]** १ क. ग. च—ट. मयेनतु. २ ग. छ. व्रतोद्देशं. ३ ङ. च. छ. झ. ञ. राज्यविघ्ने. ४ ङ. झ. ट. स्वभिशङ्कितव्या. क. च. ज. ञ. स्वतिशंकितव्या. ख. स्वविशङ्कितव्या. ५ ङ. छ. झ. ट. नपिताकथंचिज्जानासि. ६ च. छ. झ. ञ. ट. दैवंहि. ७ ङ. छ. झ. ट. णोऽवाक्छिराइव. च. ञ. ऽधश्शिरास्तदा. ८ च—ट. ध्यात्वा. ९ ङ. छ. झ. ट. जगामाशु. १० ङ. छ. झ. ट. सहसा.

**तदा तु बद्ध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः ॥ निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २ ॥**
**तस्य दुष्प्रतिवीक्षं तद्भ्रुकुटीसहितं तदा ॥ बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥**
**अग्रहस्तं विधुन्वंस्तु हस्तिहस्तमिवात्मनः ॥ तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥**
**अग्राक्ष्णा वीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् ॥ ४ ॥**
**अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् ॥ धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ॥ ५ ॥**
**कथं ह्येतदसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ॥ यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ ॥ ६ ॥**
**किंनाम कृपणं दैवमशक्तमभिशंससि ॥ पापयोस्ते कथं नाम तयोः शङ्का न विद्यते ॥ ७ ॥**

स्थिरोभूदितिहर्षे राज्यंत्यक्ष्यतीतिदुःखंच । मनसाजगाम नतुवाचाप्रतिपादितवान् । इवशब्देनास्थिरत्वमुच्यते । उत्तरक्षणेमाध्यस्थ्यत्यागस्यवक्ष्यमाणत्वात् ॥ १ ॥ तुशब्देनपूर्वावस्थातोविलक्षणावस्थासूच्यते । भ्रुवोर्मध्ये ललाटे । ललाटे भ्रुकुटींकृत्वेत्यर्थः । बिलस्थः पेटिकाबिलस्थः । नतुवल्मीकस्थः तदानींरोषासंभवात् ॥ २ ॥ दुष्प्रतिवीक्षं अभिमुखतयादुर्निरीक्षं । तस्य मुखं ॥ ३ ॥ क्रोधविकारंदर्शयति—अग्रहस्तमित्यादि । सार्धश्लोकः । अग्रंहस्तस्यअग्रहस्तः । एकदेशसमासः पूर्वापरादिव्यतिरिक्तस्थलेपिकचिदस्ति । अग्रंचासौहस्तश्चअग्रहस्तः । हस्तशब्दोहस्तावयवेउपचर्यतइतिवामनः । शरीरे उरसि । अधइत्यर्थः । यद्वा शिरोधरां शरीरेतिर्यगूर्ध्वे । चकारादधश्चपातयित्वा क्रोधातिशयेनविविधंशिरोविधूननंकृत्वेत्यर्थः । अग्राक्ष्णा कटाक्षेण । तिर्यग्वीक्षमाणःसन्नब्रवीत् ॥ ४ ॥ धर्मदोषप्रसङ्गेन पितृवचनपरिपालनरूपधर्महानिप्रसक्त्या । लोकस्य अनतिशङ्कया अतिशङ्कापरिहाराय । मयाऽननुष्ठितेलोकोधर्मंत्यजतीतिशङ्कापरिहारायचेत्यर्थः । एवंविधकार्यद्वयार्थयस्यप्रसिद्धस्य ते जातोयंसुमहान् संभ्रमः वनगमनत्वरा । अस्थाने अनवकाशे अयुक्तइत्यर्थः । "अवकाशेस्थितौस्थानं"इत्यमरः ॥ ५ ॥ तथात्वमेवोपपादयति—कथमित्यादिना । हेशौण्डीर समर्थ । दैवमपिनिराकर्तुंक्षमेत्यर्थः । क्षत्रियर्षभ क्षत्रियश्रेष्ठ । त्वंअशौण्डीरं अशूरं तत् दैवं । यथासमर्थंवदसि एवमसंभ्रान्तस्त्वद्विधःकथंवक्तुमर्हति नकथमपि । अशूरःसंभ्रान्तःक्षत्रबन्धुरेवासमर्थंदैवमनुसर्तुमर्हतीत्यर्थः । अस्थानइत्यादिश्लोकद्वयस्यैवंवार्थः । धर्महानिप्रसक्त्या लोकस्यानतिशङ्कया आनतिः पूजा तद्विषयेशङ्कया लोकोमामधर्मिष्ठइतिनपूजयेदितिशङ्केत्यर्थः । यस्यतेअयुक्तःसुमहान्संभ्रमोभ्रान्तिःजातः । धर्महानिर्लोकानत्यभावोवा सर्वातिशायिनस्तेकिंकरिष्यतीतिभावः । भ्रमसद्भावंव्यतिरेकमुखेनद्रढयति—कथमिति ॥ ६ ॥ दैवालम्बनस्यभ्रमत्वमुपपादयति—किमिति । कृपणं "बुद्धिपौरुषहीनानांजीविकेतिबृहस्पतिः" इत्युक्तरीत्यादुर्बलैकपरिग्राह्यतयाशोच्यं । अशक्तं शक्तिहीनं । पौरुषंतिरस्कृत्यकार्यकरणाक्षमंदैवंकिन्नामअभिशंससि अभिष्टौषि । अशक्तत्वादेवनकार्यानुमेयोदैवसद्भावः । असद्भावादेवतदवलंबनंते भ्रमइत्यर्थः । एवंदैवकृतस्यानतिलङ्घनीयत्वंपरिहृतं पितृवाक्यपरिपालनरूपधर्मदोषप्रसङ्गंपरिहरति—पापयोरिति । पापयोः कैकेयीदशरथयोर्विषये । तेशङ्का पापित्वशङ्का । कथंनामनविद्यते पापिनौतौत्वयिपापं कर्तुमिच्छतः अतस्तद्वचनाकरणे नधर्महानिरितिभावः

स्थिरताध्वन्यते ॥ १ ॥ **शि०** भ्रुकुटी भ्रुवौ । बध्वा भ्रुवोर्मध्येनिशश्वास भ्रूमध्याच्छ्वासोऽगच्छदित्यर्थः । तत्रदृष्टान्तः बिलस्थः बिलेनिरुद्धइत्यर्थः । रोषितःसर्पइव । **स०** रोषितः अन्येनकोपंप्रापितः । सर्पनिदर्शनेनशेषात्मकताविशेषंकविरवगमयामासेत्यवसेयं । ॥ २ ॥ **शि०** हस्तीहस्तं शुण्डादण्डमिव । अग्रहस्तं दक्षिणकरमित्यर्थः । शिरः धरां पृथिवीं । पातयित्वा अत्यधोमुखीभूयेत्यर्थः । **ति०** अग्रहस्तं हस्ताग्रं । रामेणक्षमापनायगृहीतमित्यर्थः ॥ ४ ॥ **स०** लोकस्यानतिशङ्कया रामःपितृवचनंनाकरोदितिलोकशङ्कमाभूदितिबुद्ध्या । अस्थाने अविषये वनवासादौ । यस्संभ्रमोजातः अयंधर्मदोषप्रसंगेन तद्विरोधप्रसक्त्या । अस्थाने अयुक्तइत्यावृत्तेनान्वयः ॥ ५ ॥ **ती०** कृपणं दीनं । स्वापेक्षितार्थकरणेपुरुषान्तरंप्रार्थयमानमित्यर्थः । अशक्तं स्वयंपुरतस्स्थित्वायत्किंचित्कर्तुमसमर्थं ॥ **शि०** शौण्डीरः प्रारब्धादिनिरसनसमर्थः । क्षत्रियर्षभस्त्वं अशौण्डीरं त्वद्विषयकसामर्थ्यहीनं । अतएवकृपणंदैवं अशक्तं सामर्थ्यहीनंयथाभवतितथा किंयथावदभिशंससि । एतेनदेवादृष्टवशात्तवाभिषेक-

**[ पा० ]** १ ङ. छ. झ. ट. तथा. २ ग. कृत्वा. ३ क. ख. ङ. च. छ. झ. ञ. ट. हस्ती. ४ घ. वीक्षमाणस्तं. ५ ज. भ्रान्तत्व. ६ ङ. छ. झ. ञ. ट. ह्येव. ७ ग—ट. शौण्डीरःक्षत्रियर्षभः. क. शौण्डीरंक्षत्रियर्षभः.

सन्ति धर्मोपधाः श्लक्ष्णा धर्मात्मन्किं न बुध्यसे ॥ तयोः सुचरितं स्वार्थं शाठ्यात्परिजिहीर्षतोः ॥८॥
यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव ॥ तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ॥ ९ ॥
लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् ॥ नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि ॥ १० ॥
येनेयमागता द्वैधं तव बुद्धिर्महामते ॥ स हि धर्मो मम द्वेष्यः प्रसङ्गाद्यस्य मुह्यसि ॥ ११ ॥
कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः ॥ करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ॥ १२ ॥
यद्ययं किल्बिषाद्भेदः कृतोप्येवं न गृह्यते ॥ जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः ॥
[तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः ] ॥ १३ ॥
मनसाऽपि कथं कामं कुर्यास्त्वं कामवृत्तयोः ॥ तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ॥१४॥
यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् ॥ तथाप्युपेक्षणीयं ते न मे तदपि रोचते ॥ १५ ॥

॥ ७ ॥ ननुधर्मिष्ठयोस्तयोःकथंपापित्वशङ्केत्यत्राह—सन्तीति । धर्मःउपधाव्याजोयेषांते धर्मोपधाः।श्लक्ष्णाः धर्माचरणकञ्चुकेनस्वदोषपिधानचतुराः । सन्ति लोकइतिशेषः । हेधर्मात्मन् धर्मैकप्रवणस्वभाव । शाठ्यात् गूढविप्रियकारित्वात् । स्वार्थं अभिषेकरूपमस्मत्प्रयोजनं । परिजीहीर्षतोः परिहर्तुमिच्छतोः । तयोः कैकयीदशरथयोः । सुचरितं सुष्ठुमन्त्रितं । किंनबुध्यसे ॥ ८ ॥ विपर्ययेऽनिष्टंप्रसञ्जयति—यदीति । हेराघव । प्रागेव अभिषेकात्पूर्वमेव । एवं उक्तप्रकारेण । तयोः कैकेयीदशरथयोः । व्यवसितं निश्चयः । यदि नस्यात् तदा प्रकृतः पूर्वमेवप्रसक्तः । सवरश्च प्रागेव दत्तःस्यात् । किंचेतिचार्थः अयंभावः । भरतायावश्यंराज्यंदेयं रामस्यज्येष्ठत्वेनतद्विषयोभिषेकआरभ्यते तदानींत्वयावरद्वयंप्रष्टव्यं तद्व्याजेनरामोविवास्यते भरतोभिषिच्यतइतिकैकेयीदशरथाभ्यांसङ्केतितम् । अन्यथासावरद्वयंकिमेतावत्पर्यन्तंनयाचेत अयाचितमपितत् नीतिज्ञोराजावाकुतोनपूर्वमेवपरिहरेदिति ॥ ९ ॥ अस्तुतथाततःकिमित्यत्राह—लोकेति । लोकविद्विष्टं ज्येष्ठंपरित्यज्यकनिष्ठस्याभिषेचनात् । लोकविद्वेषविषयमित्यारम्भक्रियाविशेषणं । मे तत्र असहनविषये । क्षन्तुमर्हसि ॥ १० ॥ यथाकथञ्चित्पितृवचनंकर्तव्यमेवेतिमन्वानंरामंप्रत्याह—येनेति । इयंते बुद्धिः येन पितृवचनपरिपालनरूपधर्मेण । द्वैधं भेदं । आगता प्राप्ता । नाभिषिच्येवनंप्रवेक्ष्यामीति। यस्य प्रसङ्गात् प्रस्तावात् । मुह्यसि अकरणेप्रत्यवायःस्यादितिमोहंप्राप्नोषि । सधर्मोममद्वेष्यः ॥ ११ ॥ मोहंविशदयति—कथमिति। कर्मणा पौरुषकर्मणा। शक्तः प्रतीकारसमर्थइत्यर्थः । त्वं कैकेयीवशवर्तित्वादेवाधर्मिष्ठंविगर्हितंचवाक्यं कथं केनप्रकारेण । मोहंविनाकरिष्यसि ॥ १२ ॥ त्वन्मोहादेवमेदुःखमित्याह—यदीति । अयंभेदः अभिषेकविघातात्माविपर्यासः । किल्बिषात् मृषावरकल्पनात् । कृतोपि एवं किल्बिषकल्पितइति । यदिनगृह्यते तत्र अग्रहणनिमित्ते । मेदुःखंजायते । धर्मसङ्गश्च एतादृशधर्मसङ्गश्च । विगर्हितः ॥ १३ ॥ तस्मान्मनसापितन्नकर्तव्यमित्याह—मनसेत्यादिना ॥ १४ ॥ ममविवासनंदैवकृतं नतुकैकेयीकृतमिति पूर्वंरामोक्तमनूद्यपरिहरति—यद्यपीत्यादिना । तयोः पित्रोः । प्रतिपत्तिः अभिषेकविघटनविषयाबुद्धिः । दैवीचापि दैवकृतैवेति । तेमतंयद्यपि तथापि ते त्वया। तत् उपेक्षणीयं । तदपि दैवमपि । ममनरोचते ॥१५॥

निवृत्तिर्नयुक्तेतिसूचितम् ॥ ७ ॥ **ति०** धर्मःउपधाछलंतत्रासक्ताः प्रतारणार्थंधर्मानुष्ठातारइतियावत् । स्वार्थं स्वकार्यसिद्ध्यर्थं । सुचरितंत्वां शाठ्यात् मृषाकल्पितधर्मव्यवहारात् । परिजिहीर्षतोः त्यक्तुमिच्छतोस्तयोःकृत्यंकिंनावबुध्यसइत्यन्वयः ॥ ८ ॥ **ति०** मे अपराधमितिशेषः । त्वद्विषयेप्रतिवचनदानरूपंममापराधंक्षन्तुमर्हसि ॥ १० ॥ **ति०** त्वां त्वांविना । तत्कृतेकर्मणिदैवकृतत्वबुद्धिं त्वांविनाअन्यःकामवृत्तयोःअहितयोर्नित्यंपितृनामकशत्र्वोः कामं मनोरथं । मनसापिकथंकुर्यात् । अनुष्ठानंतुदूरतइतिभावः ॥१४॥

[ पा० ] १ ङ. छ. झ. ट. धर्मोपधासक्ताः. २ ङ. च. छ. झ. ञ. ट. येनैव. ३ ग. घ. ज. द्वैतं. ४ ङ. च. छ. झ. ञ. ट. सोपि. ५ ङ. च. छ. झ. ञ. ट. यत्प्रसङ्गाद्धि. ६ ङ. छ. झ. ञ. ट. यद्यं. ७ इदमर्धं क. ङ—ट. दृश्यते. ८ ङ. छ. झ. ञ. ट. कुर्यास्त्वां. ९ ख. ग. ज. मेता.

विक्लबो वीर्यहीनो यः स दैवमनुवर्तते ॥ वीराः संभावितात्मानो न दैवं पर्युपासते ॥ १६ ॥
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् ॥ न दैवेन विपन्नार्थः पुरुषः सोवसीदति ॥ १७ ॥
द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च ॥ दैवमानुषयोरद्य [1]व्यक्ता व्यक्तिर्भविष्यति ॥ १८ ॥
अद्य [2]मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः ॥ [3]यद्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ १९ ॥
अत्यङ्कुशमिवोद्दामं गजं मद[4]बलोद्धतम् ॥ प्रधावितमहं दैवं पौरुषेण निवर्तये ॥ २० ॥
लोकपालास्समस्तास्ते नाद्य रामाभिषेचनम् ॥ न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता॥२१॥
यैर्विवासस्तवारण्ये मिथो राजन्समर्थितः ॥ अरण्ये ते विवत्स्यन्ति चतुर्दश[5]समास्तथा ॥ २२ ॥
अहं तदाशां [6]छेत्स्यामि पितुस्तस्याश्च या तव ॥ अभिषेकविघातेन पुत्रराज्याय वर्तते ॥ २३ ॥
मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा ॥ प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ॥ २४ ॥
ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम् ॥ आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ॥ २५ ॥
पूर्वराजर्षिवृत्त्या हि वनवासो [7]विधीयते ॥ प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ॥ २६ ॥
[8]स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया ॥ नैवमिच्छसि धर्मात्म[9]न्राज्यं राम त्वमात्मनि ॥ २७ ॥
[10]प्रतिजाने च ते वीर माभूवं वीरलोकभाक् ॥ राज्यं च तव रक्षेयमहं वेलेव सागरम् ॥ २८ ॥

उपेक्षणीयतायांहेतुमाह—विक्लबइति । विक्लबः कातरः । वीर्यहीनइत्यस्यप्रतियोगितयोक्तं वीराइति । विक्लबइत्यस्यप्रतियोगितयोक्तं संभावितात्मानइति । संभावितः सम्यक्प्रापितः दृढइतियावत् । आत्मामनो येषांतेतथा । धीराइत्यर्थः । नोपासते नाश्रयन्ति ॥ १६ ॥ कुतोनाश्रयन्तीत्यपेक्षायांपौरुषवतोदैवेनप्रयोजनहान्यभावादित्याह—दैवमिति । पुरुषकारेण पुरुषबलेन । दैवंबाधितुं अतिक्रम्यवर्तितुं । यःसमर्थः स दैवेनविपन्नार्थः विहतप्रयोजनःसन् नावसीदति नक्लिश्यति ॥ १७ ॥ पुरुषकारापेक्षयादैवस्यदुर्बलत्वे प्रत्यक्षंप्रमाणयति—द्रक्ष्यन्तीति । पौरुषं सामर्थ्यं । व्यक्तिः प्रबलदुर्बलविवेकः । व्यक्ता स्फुटा । भविष्यति ॥ १८ ॥ तदेवस्पष्टमाह—अद्येति । यद्दैवात् यस्माद्दैवात् । आहतं विघ्नितं । तेराज्याभिषेचनंदृष्टं तद्दैवं मत्पौरुषहतंद्रक्ष्यन्ति ॥ १९ ॥ अत्यङ्कुशं अतिक्रान्ताङ्कुशव्यापारं । उद्दामं छिन्ननिगलं । मदबलोद्धतं मदबलाभ्यांगर्विष्ठं । प्रधावितं दुर्निवारं । स्वच्छन्दगमनं । गजमिव दुर्निवारत्वेनत्वदभिमतंदैवंपौरुषेण निवर्तये ॥ २० ॥ ते प्रसिद्धाः । हेरामतेतवाभिषेचनमितिवा । नविहन्युः नविहन्तुंशक्ताः । कृत्स्नाः अन्यूनाः ॥ २१ ॥ राजत्वंसिद्धवत्कृत्याह—राजन्निति । मिथः रहसि । "मिथोऽन्योन्यरहस्ययोः" इतिवैजयन्ती । तथा त्वांप्रत्युक्तप्रकारेण ॥ २२ ॥ तत् तस्मात् । यातवाभिषेकविघातेनद्वारेणपुत्रराज्यायवर्तते प्रवर्तते । तस्याः पितुश्च आशां अतितृष्णाम् । "आशादिगतितृष्णयोः" इतिवैजयन्ती ॥ २३ ॥ मद्बलेनविरुद्धायजनाय ममोग्रंपौरुषं दुःखाययथाप्रभविष्यति तथादैवबलंनस्यात् सुखायनभवेत् ॥ २४ ॥ नकदाचिदपि भरतस्यराज्यप्राप्तिरस्तीत्याह—ऊर्ध्वमिति । ऊर्ध्वमित्यस्यविवरणं वर्षसहस्रान्तइति । प्रजापाल्यं प्रजापालनं । स्वार्थेयत्प्रत्ययः । ऊर्ध्ववर्षसहस्रान्ते त्वयि वनंगतेसति वानप्रस्थाश्रमस्थेसति । अनन्तरंप्रजापाल्यं आर्यस्यतेपुत्राःकरिष्यन्ति ॥ २५ ॥ मदुक्तएववनवासःपूर्वसंमतइत्याह—पूर्वेति । पुत्रेषु प्रजाः पुत्रवत्परिपालने परिपालननिमित्तं । निक्षिप्य पूर्वराजर्षिवृत्त्या तदाचारेण । वनवासोविधीयते ॥ २६ ॥ सचेदित्यादिश्लोकद्वयमेकान्वयं । हेराम स त्वं राजनि दशरथे । एवं अनेकाग्रे चलचित्ते अव्यवस्थितचित्तेसति । राज्यविभ्रमशङ्कया राज्यस्यविविधचलनशङ्कया । आत्मनिराज्यंनेच्छसिचेदहंतवराज्यंचरक्षेयं । कथ-

ति० तदाशां तामाशाम् ॥ २३ ॥ सत्य० राज्यविभ्रमशङ्कया राजानुवृत्त्याराज्यग्रहणेतद्भ्रंशोभूयादितिशङ्कया ॥ २७ ॥

[ पा० ] १ ख. व्यक्त. २ झ. मेपौरुष. ३ ङ—छ. झ. ञ. ट. यैर्दैवा. ४ ङ. च. छ. झ. ञ. जलोद्धतम्. ५ ख. ग. घ. ज. तथासमाः. ६ ङ. च. छ. झ. ञ. ट. धक्ष्यामि. ७ ङ. छ. झ. ट. ऽभिधीयते. ८ घ. नचेद्राज. ९ ख. राज्यकामत्व. १० क. घ. प्रतिजानामि.

मङ्गलैरभिषिञ्चस्व तत्र त्वं व्याप्तृतो भव ॥ अहमेको महीपालानलं [1]वारयितुं बलात् ॥ २९ ॥
न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे ॥ [2]नासिराबन्धनार्थाय न शराः स्तंभहेतवः ॥
अमित्र[3]दमनार्थं मे सर्वमेतच्चतुष्टयम् ॥ ३० ॥
न चाहं [4]कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम ॥ असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ॥
प्रगृहीतेन वै[5] शत्रुं वज्रिणं वा न कल्पये ॥ ३१ ॥
खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे ॥ हस्त्यश्वन[6]रहस्तोरुशिरोभिर्भविता मही ॥ ३२ ॥
खड्गधाराहता मेऽद्य दीप्यमाना [7]इवाद्रयः ॥ पतिष्यन्ति [8]द्विपा भूमौ मेघा इव सविद्युतः ॥ ३३ ॥
बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने ॥ कथं पुरुषमानी स्यात्पुरुषाणां मयि स्थिते ॥ ३४ ॥
बहुभिश्चैकमत्यस्यन्नेकेन च बहूञ्जनान् ॥ विनियोक्ष्याम्यहं बाणा[9]न्नृवाजिगजमर्मसु ॥ ३५ ॥
अद्य मेऽस्त्र[10]प्रभावस्य प्रभावः [11]प्रभविष्यति ॥ राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं [12]च तव प्रभो ॥ ३६ ॥
अद्य चन्दनसारस्य केयूरामोक्षणस्य च ॥ वसूनां च विमोक्षस्य सुहृदां पालनस्य च ॥ ३७ ॥
अनुरूपाविमौ बाहू राम कर्म करिष्यतः ॥ अभिषेचनविघ्नस्य कर्तॄणां ते [13]निवारणे ॥ ३८ ॥

मिव । वेलासागरमिव । नोचेद्वीरलोकभाक् माभूवम् । ते तुभ्यं । प्रतिजानेच ॥ २७—२८ ॥ मङ्गलैः मङ्गलद्रव्ययुक्तैर्जलैः । अभिषिञ्चस्व आत्मानंवसिष्ठादिभिरितिशेषः । तत्र अभिषेककर्मणि । व्याप्तृतोभव व्यासक्तचित्तोभवेत्यर्थः । अलं पर्याप्तः । वारयितुं निवारयितुम् ॥ २९ ॥ नशोभार्थावित्यादिसार्धश्लोकमेकंवाक्यं—नेति । आबन्धनार्थाय आपाततोवीरभूषणतयाकट्यांबन्धनरूपप्रयोजनायेत्यर्थः । स्तंभहेतवः केवलंलक्ष्यभूतस्तंभहेतवः । तूण्यांस्थापनहेतवइतिवा ॥ ३० ॥ नचाहमित्यादिसार्धश्लोकः । यः मम अत्यर्थंशत्रुः शातयिता । मतः स्यात् परीक्षकैरितिशेषः । तमहंनकामये तस्यस्थितिं न सहइत्यर्थः । किंत्वसिनावज्रिणमपिशत्रुंनकल्पये न स्थापयामि । हन्मीत्यर्थः । तीक्ष्णधारेण तीक्ष्णाग्रेण । विद्युच्चलितवर्चसा विद्युदिवचलितंनिर्गतंवर्चःस्फुलिङ्गरूपंयस्यतेन ॥ ३१ ॥ खड्गकृतमर्दनेनचूर्णीकृतैर्गहना काननमिवनिरन्तरा । अतएवदुश्चरा संचारायोग्याच । भविता भविष्यति ॥ ३२ ॥ मेखड्गधारयाखड्गकोट्याहताः अतएवसविस्फुलिङ्गत्वात् दीप्यमानाः ज्वलिताः । अद्रयइव सविद्युतोमेघाइवच स्थिताः । द्विपाः शत्रुगजाः । भूमौपतिष्यन्ति ॥ ३३ ॥ गोधा ज्याघातवारणं । "गोधातलंज्याघातवारणे" इत्यमरः । गोधारूपाङ्गुलिरक्षककवचवतिमयिस्थितेसति पुरुषाणांमध्येकश्चित् कथं पुरुषमानी शूरमानी । स्यात् । सर्वेस्त्रीप्रायाभविष्यन्तीत्यर्थः ॥ ३४ ॥ अहंबहुभिर्बाणैरेकंशूरंअत्यस्यन् प्रकर्षेणक्षिपन् । "प्रकर्षेलङ्घनेप्यति" इत्यमरः । एकेनबाणेनबहून्क्षुद्रान् अत्यस्यन् अनेनप्रकारेणनृवाजिगजानां मर्मसु मर्मस्थलेषु । बाणान्विनियोक्ष्यामि विसर्जयिष्यामि । अतःकथमेकोबहून्हनिष्यतीतिनचिन्तनीयमितिभावः ॥ ३५ ॥ अस्त्रप्रभावस्य अस्त्रमाहात्म्यस्य । प्रभावः प्रतापः । "प्रतापमाहात्म्ययोःप्रभावःस्यात्" इतिवैजयन्ती ॥३६॥ अद्येत्यादिश्लोकद्वयमेकंवाक्यं । चन्दनसारस्य चन्दनपङ्कस्य । केयूरामोक्षणस्य अङ्गदधारणस्य । "केयूरमङ्गदं" इत्यमरः । वसूनां धनानां । विमोक्षस्य त्यागस्य । सुहृदांपालनस्य शत्रुभ्योरक्षणस्यच । अनुरू-

ति० आबन्धनार्थाय काष्ठानांपरस्परंबन्धनहेतुच्छिद्रादिकरणाय । शि० शराः बाणाः । स्तंभहेतवः समूहीभूयस्तंभनिर्मापकान ॥ ३० ॥ सत्य० हस्त्यश्वरथिहस्तोरुशिरोभिः प्राण्यङ्गत्वेप्येकवद्भावाभावआर्षः । यद्वा हस्त्यश्वरथिनांहस्तोर्वितिद्वन्द्वैकवद्भावः । तेनसहितानिचतानिशिरांसिचेत्युत्तरपदलोपीसमासः ॥ ३२ ॥ ति० हताः विच्छिन्नाः । अग्नयइवदीप्यमानाः । रक्तधारया । अतएवसविद्युतोमेघाइव ॥ ३३ ॥ शि० हेराम अभिषेचनविघ्नस्यकर्तॄणांनिवारणे कर्म व्यापारं । करिष्यतोमेबाहूचन्दनसारस्य

[ पा० ] १ ख. ग. धारयितुं. २ घ. नासिर्वा. ३ क. च. ञ. मथनार्थंमे. ङ. छ. झ. ट. मथनार्थाय. ४ घ. ज. कामयेत्यन्तं. ५ ट. कंशत्रुं. ६ छ. झ. ट. रथिहस्तोरु. ७ ङ. ज. झ. ट. इवाग्नयः. ८ ङ—ट. द्विषो. ९ ख. त्रथवाजीभ. १० घ. प्रतापस्य. ११ ख. प्रतरिष्यति. १२ क. ख. ग. ज. तवच. १३ ख. विमोक्षणे.

ब्रवीहि कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशःसुहृज्जनैः ॥
यथा तवेयं वसुधा वशे[1] भवेत्तथैव मां शाधि तवास्मि किङ्करः ॥ ३९ ॥
विमृज्य[2] बाष्पं परिसान्त्व्य[3] चासकृत्स लक्ष्मणं राघववंशवर्धनः[4] ॥
उवाच पित्र्ये[5] वचने व्यवस्थितं[7] निबोध मामेवं[6] हि सौम्य सत्पथे ॥ ४० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

## चतुर्विंशः सर्गः ॥ २४ ॥

कौसल्ययापितृवाक्यपरिपालनेदृढमनस्कंरामंप्रतितद्विरहस्यदुस्सहत्वप्रतिपादनेनस्वस्याप्यनुगमननिवेदनम् ॥ १ ॥ तथा रामेणभर्तृशुश्रूषणप्रशंसनेनतस्यस्त्रीभिरवश्यकर्तव्यत्वंबोधितयातयासदुःखंरामप्रव्राजनाङ्गीकारः ॥ २ ॥

तं समीक्ष्य त्ववहितं पितुर्निर्देशपालने[8] ॥ कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥
अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ॥ मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् ॥ २ ॥
यस्य भृत्याश्च दासाश्च[9] मृष्टान्यन्नानि भुञ्जते ॥ कथं स भोक्ष्यते नाथो[10] वने मूलफलान्ययम् ॥ ३ ॥
क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् ॥ गुणवान्दयितो राज्ञा[11] राघवो[12] यद्विवास्यते ॥ ४ ॥
नूनं तु बलवाँल्लोके कृतान्तः सर्वमादिशन्[13] ॥ लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥

---

पौ राजपुत्रत्वेनयोग्यावपिइमौबाहू हेराम तत्सर्वंविहाय तेअभिषेचनविघ्नस्यकर्तॄणांनिवारणेविषये कर्मकरिष्यतः ॥ ३७—३८ ॥ त्वदाज्ञात्वेकाऽवश्यंभाविनीत्याह—ब्रवीहीति । ब्रवीहि ब्रूहि । वियुज्यतां मयावियोज्यतां ॥ ३९ ॥ एवंविस्तरेणपूर्वपक्षमुपन्यस्तवन्तंलक्ष्मणंमतिपूर्वंविस्तृतंसिद्धान्तंसंग्रहेणाह—विमृज्येति । बाष्पं रामासंमतिजं । राघववंशवर्धनः रघोःसंबन्धीराघवःराघवश्चासौवंशश्चेतिविशेषणसमासः । सत्पथे पित्र्ये वचने व्यवस्थितं निश्चलं । मां निबोध जानीहि । सर्वथाहंपितृवचनंनत्यजामीत्यर्थः । "जीवतोर्वाक्यकरणात्प्रत्यब्दंभूरिभोजनात् । गयायांपिण्डदानाच्चत्रिभिःपुत्रस्यपुत्रता" इतिस्मरणादितिभावः ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

अथधर्म्यस्यरामनिश्चयस्यानुमोदनं कौसल्याकरोति—तंसमीक्ष्येत्यादिना । तं रामं । समीक्ष्य निश्चित्य । अवहितं सावधानं । निर्देशो नियोगः ॥ १ ॥ उञ्छोनाम दैवात्प्रकीर्णानांव्रीह्यादिधान्यानामङ्गुल्याएकैकशोग्रहणं । कणिशग्रहणंतुशिलमेव । इदंफलमूलाद्याहरणंलक्षयति । वर्तयेत् जीवेत् ॥ २ ॥ भृत्याः भटाः । दासाः दास्यकराः । मृष्टानि श्लाघ्यानि ॥ ३ ॥ विवास्यतइतियत् एतत् कःश्रद्दधेत् । गुणवत्पुत्रविवासनस्यासंभावितत्वात् । श्रद्धेयत्वेवाकस्यभयंनभवेत् ममाप्येवं विवासनंभविष्यतीति ॥ ४ ॥ सर्वं सुखदुःखादिकं

---

केयूरामोक्षणस्य वसूनांविमोक्षस्य सुहृदांपालनस्यच । अनुरूपौ योग्यौ । भविष्यतइतिशेषः । एतेन रामसेवाकरणमन्तरा सर्वंकर्मनिरर्थकमितिसूचितम् ॥ ३७—३८ ॥ **कत०** विसृज्येतिपाठेअन्तर्भावितण्यर्थतयाविसर्जयित्वा । चक्षुषीपरिमृज्येति यावत् ॥ ४० ॥ इतित्रयोविंशस्सर्गः ॥ २३ ॥

**ति०** धर्मिष्ठं रामं । **ती०** मङ्गलभङ्गभीत्यासंरुद्धबाष्पा ॥ १ ॥ **ति०** वर्तयेत् भवानितिशेषः ॥ २ ॥ **ती०** एतच्छ्रुत्वाराजानंकश्श्रद्दधेत् श्रद्दध्यात् । **ति०** सत्यमितिवाज्ञात्वाकस्यस्वपित्रादिभ्योभयंनभवेत् ॥ **शि०** कः श्रद्दधेत् समीचीनंमन्येत ।

**[ पा० ]** १ ख. ङ. च. झ. ञ. ट. वशा. २ ख—ङ. विसृज्य. ३ क. परिमृज्यचक्षुषी. ४ क. वर्धनम्. ५ ङ छ. ज. झ. ञ. पित्रोः. ६ ङ. छ—ट. मेषहिसौम्यसत्पथः. ख. ग. मेवहिसौम्यसत्पथम्. ७ ङ. छ. झ. ट. व्यवसितं. ८ क. पितृनिर्देश. ९ ङ. छ. दाराश्च. १० ङ. च. छ. झ. ञ. ट. रामो. ११ क. ख. घ. च—ञ. राज्ञो. १२ ङ. झ. ट. काकुत्स्थो. १३ क. च. मादिशेत्.

अयं तु मामात्मभवस्तवादर्शनमारुतः ॥ वि[1]लापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥
चिन्ताबाष्पमहाधूमस्तवा[2]दर्शनचित्तजः ॥ कर्शयित्वा भृ[3]शं पुत्र निश्वासायाससंभवः ॥ ७॥
त्वया विहीनामिह मां शोकाग्निरतुलो महान् ॥ प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८ ॥
[4]कथं हि धेनुः स्वं वत्सं [5]गच्छन्तं नानुगच्छति ॥ अहं त्वाऽनुगमिष्यामि [6]पुत्र यत्र गमिष्यसि ॥९॥
[7]तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः ॥ श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥१०॥
[8]कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते ॥ भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥ ११ ॥
भर्तुः [9]किल परित्यागो नृशंसः केवलं स्त्रियाः ॥ स भवत्या न कर्तव्यो मनसाऽपि विगर्हितः ॥१२॥
यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ॥ शुश्रूषा क्रियतां ताव[10]त्स हि धर्मस्सनातनः ॥१३॥
एवमुक्ता तु [11]रामेण कौसल्या शुभदर्शना ॥ तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४ ॥
एवमुक्तस्तु वचनं रामो धर्मभृतांवरः ॥ भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥
मया चैव भवत्या च कर्तव्यं वचनं पितुः ॥ राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥
[12]इमानि तु महारण्ये विहृत्य नव पञ्च च ॥ वर्षाणि परम[13]प्रीतः स्थास्यामि वचने तव ॥ १७ ॥
एवमुक्ता प्रियं पुत्रं बाष्पपूर्णानना तदा ॥ [14]उवाच परमार्ता तु कौसल्या [15]पुत्रवत्सला ॥ १८ ॥

आदिशन् प्रदिशन् । कृतान्तः दैवं । यत्र दैवेनिमित्ते ॥ ५ ॥ अयंत्वित्यादिश्लोकत्रयमेकंवाक्यम् । अत्रविश्लेषजनितशोकस्याग्निसमाधिरुच्यते । आत्मभवः देहजः । अदर्शनमारुतः शोकाग्नेरदर्शनजत्वात्तस्यमारुतत्वनिरूपणं । विलापदुःखंप्रलापजंदुःखं तदेवसमिधायस्य । तस्यतद्वर्धकत्वात् । "आपंचैवहलन्तानां" इतिसमिच्छब्दाट्टाप् । रुदिताश्रूणि रोदनजाश्रूणितान्येवहुताक्षिप्ताआहुतिर्यस्य । चिन्ताबाष्पः चिन्तोष्मा सएवमहाधूमोयस्य । तवादर्शनेनहेतुनाचित्तजइतिहेतुमात्रोक्तिः । आगमनचित्तजइतिपाठान्तरं । निश्वास एवायासः पुरुषप्रयत्नः । समिदादिजन्याग्नेःपुरुषप्रयत्नजत्वात्तथानिरूपणं । त्वया जलस्थानीयेन । विहीनां मां शोकएवाग्निः शोकाग्निः वैतानिकाग्निः । कर्शयित्वा शुष्कीकृत्य । हिमात्यये शिशिरर्तौ । कक्षं गुल्मं । चित्रभानुः वन्योग्निरिव । मां प्रधक्ष्यति भस्मीकरिष्यति ॥ ६—८ ॥ उत्तरार्धादौतथेत्युपस्कार्यं ॥ ९ ॥ तथानिगदितमितिस्ववाचोप्यविषयत्वंदर्शयतिमुनिः ॥ १० ॥ नवर्तयिष्यति नजीविष्यतीत्यर्थः ॥ ११ ॥ नृशंसः नृशंसत्वं । सिध्यतीतिशेषः । मनसापिनकर्तव्यः नचिन्तनीयइत्यर्थः ॥ १२ ॥ सः शुश्रूषा । धर्मापेक्षयापुँल्लिङ्गत्वम् ॥१३॥ शुभदर्शना धर्म्यबुद्धिरित्यर्थः ॥ १४ ॥ दाढ्यार्थंपुनराहेत्याह—एवमित्यादिना ॥ १५ ॥ मयेति । उत्तरार्धादौसइत्युपस्कार्यं ॥ १६ ॥ प्राथमिकपितृवचनपरिपालनानन्तरंतवव-

भयं रामगमनेकथमत्रत्यानांजीवनमितिकस्यायोध्याजनस्यभीतिर्नभवेत् ॥ ४ ॥ सत्य० मामात्मभवस्तवेत्येकंपदं । मा रमा माया आत्मभवोब्रह्माताभ्यांस्तवोयस्यासौतथोक्तः ॥ ६ ॥ शि० आगमनचिन्तजः कथमयमागमिष्यतीतिचिन्तनजनितः । त्वयाविहीनां मां मां राज्यलक्ष्मींच । प्रधक्ष्यति । अतएवमांमामित्यनयोर्नपौनरुक्त्यम् । चिन्तजइतिबाहुलकाद्ध्रस्वइतिभट्टाः । अदर्शनचिन्तज इतिपाठेपिअदर्शनजातचिन्ताजनितइत्यर्थः । परेतु अदर्शनस्यमारुतत्वेननिरूपणात्सचिन्त्यइत्याहुरितिभट्टाः । वस्तुतस्त्वेवंपाठे आदर्शनेतिच्छेदः । आदर्शनंनित्यदर्शनंकदास्यादितिचिन्ताजनितइत्यर्थः । सत्य० तवागमनेचिन्तायस्यतत्आगमनचिन्तंमनः तस्माज्जायतइतितथा । विश्वासायासयोस्संभवोयस्मात्सतथा ॥ ७—८ ॥ शि० कथंशब्दोयथार्थकः । क्वचित्तथैवपाठइतिभट्टाः । त्वा त्वां । नानुगच्छतीतिपाठेतुकथमोनयथार्थकत्वं । तत्रोत्तरार्धादौतस्मादितिपूरणीयम् ॥ ९ ॥ ती० यथानिगदितं येनप्रकारेणनिगदितं ॥ १० ॥ शि० अक्लिष्टकारिणं क्लेशकारिप्रतियोगिकभेदविशिष्टम् ॥ १४ ॥

[ पा० ] १ ग. घ. ज. विवास. २ ङ. छ. झ. ञ. ट. गमनचिन्तजः. ३ ख. ङ. छ. झ. ट. ऽधिकं. ४ ङ. छ. झ. ञ. ट. यथाहि. ५ ङ. छ. झ. ञ. ट. गच्छन्तमनु. ६ ङ. च. छ. झ. ञ. ट. यत्रवत्स. क. ख. ग. घ. ज. यत्रपुत्र. ७ क. च. छ. झ. ञ. ट. यथा. ८ च. मास्थिते. ९ क. ग. घ. ङ. छ. ज. झ. ट. पुनः. १० च. सच. ११ क. कौसल्यारामेण. १२ क. इदानीं. १३ ङ. छ. झ. ञ. ट. प्रीत्या. १४ ग. घ. ज. दुःखान्यसहमानासाकौसल्याराममब्रवीत्. १५ ङ. च. छ. झ. ञ. ट. सुतवत्सला. ख. पुत्रलालसा.

आसां राम सपत्नीनां वस्तुं[1] मध्ये न मे क्षमम् ॥ नय मामपि काकुत्स्थ वनं वन्यां मृगीमिव[2] ॥
यदि ते गमने बुद्धिः कृता पितुरपेक्षया ॥ १९ ॥
तां तथा रुदतीं रामो रुदन्वचनमब्रवीत् ॥ २० ॥
जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च ॥ भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २१ ॥
न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ॥ भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ॥
भवतीमनुवर्तेत स हि धर्मरतः सदा ॥ २२ ॥
यथा मयि[3] तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ॥ श्रमं नावाप्नुयात्किञ्चिदप्रमत्ता तथा कुरु ॥ २३ ॥
दारुणश्चाप्ययं[4] शोको यथैनं न विनाशयेत् ॥ राज्ञो वृद्धस्य सततं हितं चर समाहिता ॥ २४ ॥
व्रतोपवासनिरता या नारी परमोत्तमा ॥ भर्तारं नानुवर्तेत सा[5] तु पापगतिर्भवेत् ॥ २५ ॥
भर्तुः[6]शुश्रूषया नारी लभते स्वर्गमुत्तमम्[7] ॥ अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ॥ २६ ॥
शुश्रूषामेव कुर्वीत[8] भर्तुः प्रियहिते रता ॥ एष धर्मः पुरा[9] दृष्टो लोके[10] वेदे श्रुतः स्मृतः ॥ २७ ॥
अग्निकार्येषु च सदा सुमनोभिश्च[11] देवताः ॥ पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः[12] ॥ २८ ॥

---

च्चनंकरिष्यामीत्याह—इमानीति । इमानीत्यल्पत्वज्ञापनाय । विहृत्येत्यनेनक्लेशराहित्यमुक्तं ॥ १७—१८ ॥ एवमनुमतरामवनगमनस्वनगरवर्तनापिपुनःसपत्नीस्मरणादनुगमनमर्थयते—आसामिति । वन्यांमृगीमिव यथावन्यामृगीवनेसंतुष्टावर्तते तथाहमपिवर्ते नभवन्तंक्लेशयिष्यामीतिभावः । पितुरपेक्षया पितुरिच्छया ॥ १९ ॥ रुदन् “ व्यसनेषुमनुष्याणांभृशंभवति दुःखितः ” इत्युक्तगुणविशिष्टोपिरामोमातृव्यसनंदृष्ट्वापितृवचनपरिपालनरूपधर्मविघ्नभयाद्धैर्येणस्थितवान् । इदानींवनगमनानुमतिंलब्ध्वास्वस्नेहप्रदर्शनेनमातृव्यसनंनिवर्तयितुंरुदितवानित्यवगम्यते ॥२०–२१॥ राज्ञा सनाथाइतिशेषः । राज्ञासनाथावयंनह्यनाथाइत्यर्थः । सपत्नीमध्यवासदोषंपरिहरति—भरतश्चापीति ॥ २२—२३ ॥ हितंचरेत्यत्रतथेतिशेषः ॥ २४ ॥ पतिशुश्रूषणमेव पत्न्याःपरमोधर्मइत्यन्वयव्यतिरेकाभ्यांश्लोकद्वयेनदर्शयति—व्रतेति । पापस्यगतिःफलमिवफलंयस्याःसातथा ॥ २५ ॥ निर्नमस्कारापि भर्तृभिन्नद्विजादिविषयनमस्काररहितापि ॥ २६ ॥ उपसंहरति—शुश्रूषामिति । लोके पुरादृष्टः पुरातनलोकाचारसिद्धइत्यर्थः । वेदेश्रुतः वेदावगतइत्यर्थः । स्मृतः स्मृत्यवगतश्चेत्यर्थः ॥ २७ ॥ तूष्णीमवस्थानेएनांदुःखमाक्रमिष्यतीतिधियादुःखविच्छेदनार्थकालक्षेपसाधनंविधत्ते—अग्नीति । अग्निकार्येषु शान्तिकपौष्टिकहोमेषु । सुमनोभिश्चेत्यत्रचकारेणचन्दनतांबू-

---

**स०** नयमां नविद्यतेयमःअन्तकोयस्यास्सातां । मृत्युरद्यायातश्चेदुत्तमंनायातइत्यावृत्त्यावान्वयः ॥ १९ ॥ **ति०** स्वयमरुदन्वचोऽब्रवीत् । रोदनेकातर्यप्रकटनेनमातुःपुनरप्यनुगमनप्रत्याशाप्रसंगात् ॥ **शि०** अरुदन् रोदननिवृत्तिंकुर्वन्सन्नित्यर्थः ॥२०॥ **सत्य०** जीवन्त्याहिस्त्रियाभर्ताप्रभुरितिलौकिकसामान्यन्यायोक्तिः । प्रकृतेनिगमयति—**भवत्याइति** । राजाभवत्याःप्रभुः । भगवन्सर्वेश्वरस्यतवराजाकथंप्रभुरित्यतआह—**प्रभवतीति** । प्रभुवदाचरतीत्यर्थः । अतोनराजप्रभुप्रभवतिपदानांपौनरुक्त्यमिति ध्येयम् ॥ २१ ॥ **शि०** लोकनाथेन सकलजननियन्त्रा । राज्ञावयंभरतश्च । अपिनाभवत्यादयः अनाथान । एतेनराजकर्तृकगमननियोगाभावाद्दुष्करापिस्थितिःकर्तव्यैवेतिध्वनितम् ॥ २२ ॥ **ति०** तत्रमानमाह । एषभर्तृसेवारूपोधर्मस्त्रियानित्यइति । **शि०** एषधर्मोवेदेलोकेचनित्यःश्रुतः । अतएवस्मृतः समयेस्मृतिविषयीभूतोजातः । **सत्य०** वेदेश्रुतःप्रसिद्धः लोकेजनविषयेस्मृतःस्मृतिसिद्धः । यद्वावेदईइतिच्छेदः । एषधर्मइतिलोकेअहंवेद ई लक्ष्मीर्वेद । नकेवलमावां अपितु श्रुतः श्रुतिसिद्धः । स्मृतश्चेत्यर्थः ॥ २७ ॥

**[ पा० ]** १ क. च. ञ. मध्येवस्तुं. २ ग. ज. मृगींयथा ३ क. ख. तुमयि. ४ ज. श्चाव्ययः. ५ क. ङ. च. छ. झ. ञ. ट. साच. ६ क. ख. भर्तृशुश्रूषया. ७ क. च. ञ. गतिमुत्तमाम्. ८ क. कुर्वन्ती. ९ ङ. छ. ज. झ. ट. स्त्रियानित्यो. १० ङ. च. छ. झ. ञ. ट. वेदेलोके. ११ घ. सुमनोभिस्तु. १२ ख. ङ. घ. झ. ट. सत्कृताः.

एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ॥ नियता नियताहारा भर्तृशुश्रूषणे रता ॥ २९ ॥
प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ॥ यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् ॥ ३० ॥
एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा[2] ॥ कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् ॥ ३१ ॥
गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ॥ विनिवर्तयितुं वीर नूनं कालो दुरत्ययः ॥ ३२ ॥
गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो ॥ पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ॥३३॥
प्रत्यागते महाभागे कृतार्थे चरितव्रते ॥ पितुरानृण्यतां प्राप्ते [3]त्वयि लप्स्ये परं सुखम् ॥ ३४ ॥
कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि ॥ [4]यस्त्वां संचोदयति मे वच [5]आच्छिद्य राघव ॥ ३५ ॥
गच्छेदानीं [6]महाबाहो क्षेमेण पुनरागतः ॥ नन्दयिष्यसि मां पुत्र साम्ना [7]वाक्येन चारुणा ॥ ३६ ॥
अपीदानीं स कालः स्याद्वनात्प्रत्यागतं पुनः ॥ [8]यत्त्वां पुत्रक पश्येयं जटावल्कलधारिणम् ॥ ३७ ॥
[9]तथा हि रामं वनवासनिश्चितं [10]समीक्ष्य देवी परमेण चेतसा ॥
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययना[11]भिकाङ्क्षिणी ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

## पञ्चविंशः सर्गः ॥ २५ ॥

कौसल्ययासविस्तरंकृतमङ्गलाशासनेनरामेणमातुश्चरणाभिवादनपूर्वकंसीतावलोकनायस्वावासंप्रतिगमनम् ॥ १ ॥

[12]साऽपनीय तमायासमुपस्पृश्य जलं [13]शुचिः ॥ चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १ ॥

---

लादीनिसमुच्चीयन्ते । अग्निकार्येषुक्रियमाणेषुसुमनः-प्रभृतिभिर्देवताब्राह्मणाश्चपूज्याइत्यर्थः ॥ २८ ॥ नियता स्नानादिनियमयुक्ता । नियताहारा मधुमांसादिवर्जनेनशुद्धाहारा ॥ २९ ॥ प्राप्स्यसइति भर्तृजीवनपुत्रागमनयोःसतोरेवहिपरमकामप्राप्तिसंभवइतिभावः ॥ ३०—३१ ॥ सुकृतां सुदृढामित्यर्थः ॥ ३२ ॥ गतक्लमा गतक्लेशा ॥ ३३ ॥ महाभागे महाभागधेये । आनृण्यतां अनृणतां । स्वार्थेष्यञ् ॥ ३४ ॥ आच्छिद्य छित्त्वा । अन्यथाकृत्वेत्यर्थः ॥ ३५ ॥ साम्ना सान्त्वरूपेण ॥ ३६ ॥ क्षणमात्रमप्यदर्शनासहिष्णुत्वात्प्रत्यागमनकालइदानीमेवसंभवेदितिप्रार्थयते—अपीति । यत् येनचतुर्दशवर्षान्तेनकालेन । वनात्प्रत्यागतंत्वांपुनःपश्येयं सकालइदानीमेवापिस्यात् । अपिशब्दःसंभावनायां । "अपिःसंभावनाप्रश्नगर्हाशङ्कासमुच्चये" इतिवैजयन्ती । यत् यत्रेतिवार्थः ॥ ३७ ॥ वनवासनिश्चितं निश्चितवनवासं । परमेणचेतसा आदरेणेति यावत् । स्वस्त्ययनं मङ्गलंअभिकाङ्क्षितुंशीलमस्याअस्तीतितथा ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

---

तान्येवस्वस्त्ययनानिदर्शयति—सेत्यादि । आयासं क्लेशं । अपनीय त्यक्त्वा । जलमुपस्पृश्य आचम्येत्यर्थः । "उपस्पर्शस्त्वाचमनं" इत्यमरः । रोदनस्याशुचिता-

---

**ति०** यदीति । अनेनदशरथमरणस्यसंनिहितत्वंसूचितम् ॥ ३० ॥ **शि०** महाभागे महाभां राज्यलक्ष्मीं आगच्छतिप्राप्नोति तस्मिंस्त्वयि ॥ ३४ ॥ **ति०** आविध्य आच्छिद्य । त्वांसंचोदयति वनायेतिशेषः । इतियत्अतः ॥ ३५ ॥ **ति०** साम्नाश्लक्ष्णेनेतिपाठान्तरम् ॥ ३६ ॥ **शि०** परमेण सूक्ष्मेण । चेतसा विचारेण । ददर्श ॥ ३८ ॥ इतिचतुर्विंशस्सर्गः ॥ २४ ॥

**सत्य०** या मा रमा सा मनस्विन्यपि यस्यमङ्गलानि मङ्ग्यतेगम्यतेआभ्यामितिमङ्गौपादौतौलान्तिस्वीकुर्वन्तिविषयीकुर्वन्ती-

[ **पा०** ] १ ङ. छ. झ. ट. पर्यागतेक्षणा. २ क. ख. च. छ. ञ. पूर्णायतेक्षणा. ३ झ. ट. ठ. स्वपिष्येपरमं. ४ ङ. च. छ. झ. ञ. यत्त्वां. ५ ङ. छ. झ. आविध्य. ६ ज. महाभाग. ७ ख—ट. श्लक्ष्णेन. क. श्लक्ष्णेनचेतसा. ८ क. ख. घ. च. ञ. येनत्वांपुत्र. ९ क. ङ. छ. ट. तदाहि. १० ङ. छ. झ. ट. ददर्श. ११ घ. नातिकाङ्क्षिणी. १२ झ. ञ. ट. साविनीय. १३ ग. ङ. च. ज. झ. ञ. ट. शुचि.

न [1]शक्यसे वारयितुं गच्छेदानीं रघूत्तम ॥ शीघ्रं च विनिवर्तस्व वर्तस्व च सतां [2]क्रमे ॥ २ ॥
यं पालयसि धर्मं त्वं [3]धृत्या च नियमेन च ॥ [4]स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥ ३ ॥
येभ्यः प्रणमसे पुत्र [5]चैत्येष्वायतनेषु च ॥ ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ॥ तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥५॥
पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा ॥ सत्येन च महाबाहो चिरं जीवाभिरक्षितः ॥ ६ ॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च ॥ स्थण्डिलानि [6]विचित्राणि शैला वृक्षाः [7]क्षुपा ह्रदाः ॥
[8]पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ॥ ७ ॥
स्वस्ति साध्याश्च विश्वे च मरुतश्च [9]महर्षयः ॥ स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥८॥
लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ॥ [10]ऋतवश्चैव पक्षाश्च मासास्संवत्सराः क्षपाः ॥ ९ ॥
दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ॥ [11]स्मृतिर्धृतिश्च धर्मश्च [12]पातु त्वां पुत्र सर्वतः ॥ १० ॥

---

हेतुत्वाद्देवताप्रार्थनस्य शुचिनाकर्तव्यत्वादुपस्पर्शनमुक्तं।अतएवशुचिरित्युच्यते। मङ्गलानि मङ्गलाशासनानि ॥ १ ॥ शीघ्रं विनिवर्तस्व चतुर्दशवर्षान्तइतिशेषः । सतांक्रमे अभिषेचने ॥ २ ॥ पालयसि अप्रच्युतमनुतिष्ठसि । धृत्या प्रीत्या । नियमेन समग्रतया । स वै प्रसिद्धोधर्मः । राघवशार्दूल रघुकुलश्रेष्ठ । अभिरक्षतु अभितोरक्षतु । पुनर्धर्मपदप्रयोगात्सएवरक्षत्वित्युच्यते ॥ ३ ॥ चैत्येषु चतुष्पथेषु । आयतनेषु देवतागृहेषु । ते देवाइतिसिद्धम् ॥ ४ ॥ समुदितं श्रेष्ठं ॥ ५—६ ॥ समिदित्यादिसार्धश्लोकएकान्वयः । वन्याःसमित्कुशादयः ।प्रमादकृतप्रत्यवायसहिष्णवःसन्तोवनेचरन्तंभवन्तंरक्षन्त्वितिवाक्यार्थः । पवित्राणि दर्भग्रन्थयः । वेद्यः अग्निधिष्ण्यानि । स्थण्डिलानि देवपूजास्थलानि । तेषामलङ्कारभेदात्संस्थानभेदाच्चवैचित्र्यं । वृक्षग्रहणंलतादेरप्युपलक्षणं । क्षुपाः ह्रस्वशाखाशिफायुक्तावृक्षविशेषाः । "ह्रस्वशाखाशिफःक्षुपः" इत्यमरः । वृक्षविशेषणंवा । ह्रस्वशाखावृक्षेष्वेव प्रायशोदेवतास्संनिदधतइत्यैतिह्यात् । पतङ्गाः पक्षिणः ॥ ७ ॥ स्वस्तीत्यादि कुर्वन्त्वित्यनुषङ्गः । स्वस्तिधातेत्यादौकरोत्वित्यध्याहारः । साध्याः देवताविशेषाः । विश्वे विश्वेदेवाः। मरुतः वायवः। धातृविधातृशब्दौदेवताविशेषवाचकौ । पूषादिशब्दाः द्वादशसङ्ख्याकादित्यावान्तरभेदवाचकाः ॥ ८—९ ॥ मुहूर्तः दिनस्य त्रिंशोभागः । स्मृतिः ध्यानं । धृतिः ऐकाग्र्यं । निष्पन्नयोगइतियावत् । धर्मः श्रुतिस्मृत्युदितः । यंपालयसीत्यत्रपितृवाक्यपरिपालनजएवोक्तइतिनपुनरुक्तिः

---

तितानि पादसंवाहनादीनि । चकार करिष्यतिच । शुचिजलंभूत्वाप्रलयेतस्य अतारामस्य अतःप्राप्तःआरामोवनंयेनासौतथोक्तस्तस्य । अनिवर्त्यवनवासबुद्धित्वेनरामस्यप्राप्तेत्युक्तिः । इयंमनस्विनीकौसल्यामङ्गलानिस्वस्त्ययनानिचकारेतितु जलं जडं अङ्गं । उपस्पृश्यविषयीकृत्येत्यर्थः । "श्रीर्यत्ररूपिण्युरुगायपादयोः" इत्यादेः ॥ १ ॥ **शि०** वारयितुं गमनमितिशेषः । सतां महात्मनां । क्रमे मार्गे । प्रतिज्ञापालने ॥ २ ॥ **ति०** देवेष्वायतनेषु देवालयेषु । **शि०** देवेषु कान्तिमत्सु । आयतनेषु गृहेषु येभ्यःप्रणमसे ते देवाः । महर्षिभिःसह सहितं त्वांवनेऽभिरक्षन्तु । महर्षिभिस्सहदेवाअभिरक्षन्त्वित्यन्वयोवा ॥ ४ ॥ **सत्य०** गुणैःसमुदितं महोदयंप्राप्तं ॥ ५ ॥ **ति०** मातृशुश्रूषयेति । मातात्रकैकेयी । **सत्य०** पितृशुश्रूषया "पितामात्रा" इत्येकशेषेणमातृपितृशुश्रूषया । मातृशुश्रूषया ज्ञानिशुश्रूषया ॥ ६ ॥ **वि०** समिदादिपदेनतदधिष्ठात्र्योदेवताउपलक्ष्यन्ते ॥ ७ ॥ **ती०** धाता आधारकर्मप्रधानोभगवान्विराड्विष्णुः । विधाता स्रष्टा । सएवसर्गविधायकः प्रजापत्यात्मा । पूषाभगोर्यमेतिरेवत्यादिनक्षत्राधिदेवताः । **सत्य०** विधाता सृष्टिकर्ता । धाता अब्जयोनिः । पूषा सूर्यः । भगः ऐश्वर्यादिः । अर्य सर्वस्वामिन् राम । मा प्रमाणं ॥ ८ ॥ **सत्य०** मेत्युक्तंविवृणोति—**श्रुतिश्चेति** ॥ १० ॥

**[ पा० ]** १ ङ. छ—ट. शक्यते. २ घ. पथि. ३ ङ. छ. झ. ट. प्रीत्या. ४ ख. सुव्रताचरितःसाधुः. ५ देवेष्वा. ६ ङ. च. छ. झ. ञ. ट. चविप्राणां. ग. घ. ज. चचित्राणि. ७ च. ञ. ह्रदाःक्षुपाः. ८ घ. पतगाः. ९ ग—ट. महर्षिभिः. १० ङ. च. छ. झ. ञ. ट. ऋतवःषट्चतेसर्वे. ११ ङ. च. छ. झ. ञ. ठ. श्रुतिःस्मृतिश्च. १२ ख. घ. ङ. पान्तुलां.

स्कन्दश्च भगवान्देवः सोमश्च सबृहस्पतिः ॥ सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ ११ ॥
येचापि सर्वतः सिद्धाः दिशश्च सदिगीश्वराः ॥ स्तुता मया वने तस्मिन्पान्तु त्वां पुत्र नित्यशः ॥१२॥
शैलाः सर्वे समुद्राश्च राजा वरुण एव च ॥ द्यौरन्तरिक्षं पृथिवी नद्यः सर्वास्तथैव च ॥ १३ ॥
नक्षत्राणि च सर्वाणि ग्रहाश्च सहदेवताः ॥ अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् ॥१४॥
ऋतवश्चैव षट् पुण्या मासाः संवत्सरास्तथा ॥ कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥ १५॥
महावने विचरतो मुनिवेषस्य धीमतः ॥ तवादित्याश्च दैत्याश्च भवन्तु सुखदास्सदा ॥ १६ ॥
राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम् ॥ क्रव्यादानां च सर्वेषां मा भूत्पुत्रक ते भयम् ॥१७॥
प्लवगा वृश्चिका दंशा मशकाश्चैव कानने ॥ सरीसृपाश्च कीटाश्च मा भूवन्गहने तव ॥ १८ ॥
महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ॥ महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ॥१९॥
नृमांसभोजना रौद्रा ये चान्ये सत्त्वजातयः ॥ मा च त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह ॥२०
आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः ॥ सर्वसंपत्तये राम स्वस्तिमान्गच्छ पुत्रक ॥ २१॥
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनःपुनः ॥ सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥२२॥
गुरुः सोमश्च सूर्यश्च धनदोथ यमस्तथा ॥ पान्तु त्वामर्चिता राम दण्डकारण्यवासिनम् ॥ २३ ॥

॥ १० ॥ स्कन्दः सनत्कुमारः । "तंस्कन्दइत्याचक्षते" इतिदहरविद्यायांतथाभिधानात् । कुमारोवा ॥ ११ ॥ सर्वतःसिद्धाः प्रसिद्धाः ॥ १२ ॥ शैलाः कुलपर्वताः । समुद्रसन्निधानात् । राजा कुबेरः ॥ १३ ॥ ग्रहाः कुजादयः । सहदेवताः तदभिमानिदेवतासहिताः । अहोरात्रे तदभिमानिदेवते । अतोनपुनरुक्तिः ॥१४॥ ऋतुमासादिशब्दास्तदधिदेवतापराः । केचिदाहुः । अस्मिन्प्रकरणेप्रायशःपुनरुक्तयःपुत्ररक्षणविषयप्रेमपारवश्यकृताइति । शर्म सुखं । "शर्मशातसुखानिच" इत्यमरः ॥ १५ ॥ आदित्याः देवाः ॥ १६ ॥ राक्षसानामिति राक्षसादिसंबन्धिभयं । संबन्धसामान्येषष्ठी । तेभ्योभयमित्यर्थः ॥ १७ ॥ प्लवगाः वानराः । दंशाः वनमक्षिकाः । " दंशस्तुवनमक्षिका " इत्यमरः । सरीसृपाः गिरिसर्पाः । गहने वने । माभूवन् हिंसकामाभूवन्नित्यर्थः ॥ १८ ॥ ऋक्षाः भल्लूकाः । नतेद्रुह्यन्तु । "क्रुधद्रुह–" इत्यादिनाचतुर्थी ॥ १९ ॥ सत्वजातयः सत्वस्यजातिर्जन्मयेषुतेसत्वजातयः । क्रूरजन्तवइत्यर्थः ॥ २० ॥ आगम्यन्तइत्यागमाः मार्गाः । सर्वसंपत्तये वन्यफलमूलादिसंपत्तये ॥ २१ ॥ आन्तरिक्षेभ्यः अन्तरिक्षचारिभ्यः । पार्थिवेभ्यः पृथिवीवर्तिभ्यः सकाशात् । परिपन्थिनः शत्रवः ॥ २२ ॥ गुरुरित्यादि पृथक्पृथक्मिलिताश्चरक्षन्त्वित्यर्थइति

शि० सोमः उमासहितः । देवो महादेवः ॥ ११ ॥ सत्य० तस्मिन्वने कानने । अकारप्रश्लेषेण अवने रक्षणविषये । मयास्तुताइत्यनेनान्वयः । नित्यशः सदामोदः यः तंत्वांपान्तु ॥ १२ ॥ सत्य० षड्तवश्चान्यइत्यनेनविध्वादिमानसंबन्धिभ्योन्येग्राह्याः । देवादिमानेनयेऋतवोमासास्संवत्सराःकलाःकाष्ठाश्चेत्यन्वयः । एवंचेन्नपुनरुक्तिः अन्यपदस्यारस्यंचेतिज्ञेयम् ॥ १५ ॥ सत्य० क्रव्यादानां कृतविकृतपक्कमांसभुजां । यथोक्तंकाशिकायां "कृतविकृतपक्वशब्दस्यक्रव्यादेशः" इति । शब्दार्णवेपि "क्रव्यादः कृतपक्वमांसभुगुच्यते" इति ॥ १७ ॥ ति० सर्वजातियाः सर्वजातीयाः ॥ २० ॥ शि० आगमाः आगमनानुकूलव्यापाराः । शिवाः मङ्गलविशिष्टाः । विजयपूर्वकाइत्यर्थः । सन्तु । पराक्रमाः सिद्ध्यन्तु सफलाभवन्तु ॥ २१ ॥ सत्य० आन्तरिक्षेभ्यः अशन्यादिभ्यः । पार्थिवेभ्यः भूकंपादिभ्यः । मयाअर्चिताइतिहेतोःतेपरिपन्थिनः । शुक्राद्यास्ते त्वांपान्तु इतिवा ॥ २२ ॥

[ पा० ] १ ञ. सोमश्चेन्द्रो. क. च. सोमश्चन्द्रो. २ क. ख. ङ—ट. तेचापि. ग. घ. येचापि. ३ घ. सर्वशः. ४ ङ. च. छ. झ. ञ. ट. वायुश्चसचराचरः. ५ इदमर्धं दशमश्लोके तेसदा. इत्यतःपरं च. ञ. पुस्तकयोर्दृश्यते. ६ ग. घ. ङ. ज—ट. सहदैवतैः. क. च. छ. ग्रहदेवताः. ७ ख. अहोरात्रं. ८ छ. झ. ट. श्चापिषड्चान्ये. ९ ख. श्चैवतथाकाष्ठाः. १० घ. सदा. ११ क—घ. ज. महावनानि. ङ. छ. झ. महावनेपि. १२ ङ. च. छ. ञ. तथादित्याश्च. झ. तथादेवाश्च. १३ क. च. ञ. दैत्यानां. १४ ग. वने. १५ ख. दुष्यन्तु. १६ झ. सर्वजातियाः. १७ क. घ. ङ. छ—ट. संपत्तयो. १८ घ. ज. येचैव. १९ क. ख. घ. ङ. च. छ. झ. ञ. ट. शुक्रः. ग. ज. शक्रः. २० ग. घ. ज. माश्रितम्.

अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षि[१]मुखाच्च्युताः ॥ उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ॥ २४ ॥
सर्वलोकप्रभुर्ब्रह्मा [२]भूतभर्ता तथर्षयः ॥ ये च शेषाः सुरा[३]स्ते त्वां रक्षन्तु वनवा[४]सिनम् ॥ २५ ॥
इति माल्यैः सुरगणान्गन्धैश्चापि यशस्विनी ॥ स्तुतिभिश्चा[५]नुकूलाभिरानर्चायतलोचना ॥ २६ ॥
ज्वलनं [६]समुपादाय ब्राह्मणेन महात्मना ॥ हावयामास [७]विधिना राममङ्गलकारणात् ॥ २७ ॥
घृतं श्वेतानि माल्यानि [८]समिधः श्वेतसर्षपान् ॥ उपसंपादयामास कौसल्या परमाङ्गना ॥ २८ ॥
उपाध्यायः स विधिना हुत्वा शान्तिमनामयम् ॥ हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥ २९ ॥
मधुदध्यक्षतघृतैः स्वस्ति [९]वाच्य द्विजांस्ततः ॥ वाचयामास रामस्य वने स्वस्त्ययन[१०]क्रियाः ॥ ३० ॥
ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ॥ दक्षिणां प्रददौ [११]काम्यां राघवं चेदमब्रवीत् ॥ ३१ ॥
यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ॥ वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ३२ ॥
यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा ॥ अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ३३ ॥
अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् ॥ अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ३४ ॥
[१२]त्रीन्विक्रमान्प्रक्रमतो वि[१३]ष्णोरमिततेजसः ॥ यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ ३५ ॥
[१४]ऋतवः सागरा द्वीपा वेदा लोका दिश[१५]श्च ते ॥ मङ्गलानि महाबाहो दिशन्तु [१६]शुभमङ्गलाः ॥ ३६ ॥
इति पुत्रस्य शे[१७]षांश्च कृत्वा शिरसि भामिनी ॥ गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३७ ॥
ओष[१८]धीं चापि सिद्धार्थां विशल्यकरणीं शुभाम् ॥ चकार रक्षां कौसल्या मन्त्रैरभिजजाप च ॥ ३८ ॥

---

नपुनरुक्तिः ॥ २३ ॥ ऋषिमुखाच्च्युताः निर्गताः । त्वयागृहीताश्चेतिशेषः ॥ २४ ॥ भूतभर्ता नारायणः ॥ २५ ॥ इतीत्यत्रमत्वेतिशेषः ॥ २६—२७ ॥ उपसंपादयामास होमायेतिशेषः ॥ २८ ॥ शान्तिं सर्वोपद्रवशान्तिं अनामयं आरोग्यं च । उद्दिश्येतिशेषः । हुतहव्यावशेषेण हुतहविःशेषेण । बाह्यं होमस्थानाद्बहिर्भवं ॥ २९ ॥ मध्वादिद्रव्यदक्षिणाभिर्दत्ताभिर्द्विजान् स्वस्तिवाच्य पुण्याहं वाचयित्वेत्यर्थः । स्वस्त्ययनक्रियाः स्वस्त्ययनक्रियाप्रतिपादकमन्त्रानित्यर्थः ॥ ३० ॥ काम्यां अभीष्टां ॥ ३१ ॥ वृत्रनाशे वृत्रनाशनिमित्ते ॥ ३२—३४ ॥ विक्रमान् पादविक्षेपान् ॥ ३५ ॥ शुभमङ्गलाः मङ्गलानामपिमङ्गलाः । मङ्गलद्रव्याणामप्यतिशयदायकाइत्यर्थः ॥ ३६ ॥ शेषान् अक्षतानि । गन्धैश्च समालभ्य विलिप्य । "समालंभोविलेपनं" इत्यमरः । सिद्धार्थां दृष्टफलां । विशल्यकरणींच अन्तर्गतशल्यनिर्गमनकारिणींच । ओषधीं मूलिकां । मन्त्रैरभिमन्त्र्य रक्षांचकार । रक्षाहेतुत्वेनहस्तेबबन्धेत्यर्थः । पुनर्जजापच ॥ ३७—३८ ॥

**शि०** उपस्पर्शनकाले अस्पृश्यस्पर्शनसमये । अग्न्यादयः ऋषिमुखच्च्युताः महात्मोपदिष्टाः मन्त्राश्चत्वांपान्तु ॥ २४ ॥ **ति०** भूतकर्तृ ब्रह्म जगत्कारणं ब्रह्मेत्यर्थः ॥ २५ ॥ **सत्य०** सर्षपान् श्वेतसर्षपान् ॥ २८ ॥ **ति०** बाह्यंबलिं होमस्थानाद्बहिर्भूतंलोकपालादिबलिं ॥ २९ ॥ **ति०** स्वस्तिवाच्यं स्वस्तिवाचनमुद्दिश्य । मध्वादिभिरुपलक्षितान्द्विजान्कृत्वा ॥ ३० ॥ **शि०** यत् यादृशं मङ्गलंविजयइत्यर्थः । वृत्रनाशे वृत्रासुरवधसमये । सर्वदेवनमस्कृते सहस्राक्षे इन्द्रे । समभवत् । तादृशंमङ्गलंतेभवतु ॥ ३२ ॥ **सत्य०** शेषाः निजनिर्माल्यानि । "प्रसादनिजनिर्माल्यवनेशेषाचकीर्तिता" इतिविश्वः ॥ ३७ ॥ **शि०** सुसिद्धार्थां सुसिद्धःपरीक्षितः अर्थोयस्यास्तां । रिपुबाणभेदनकर्त्रीत्यन्वर्थसंज्ञावतीमित्यर्थः । विशल्यकरणीं ओषधिं ॥ ३८ ॥

[ **पा०** ] १ ङ. छ. झ. ट. मुख्यच्च्युताः. २ ङ. छ. झ. भूतकर्तृ. ञ. ट. भूतकर्ता. ३ ख. ङ. च. छ. झ. ञ. ट. स्तेतु. ४ घ. माश्रितम्. ५ क. ख. ग. घ—ट. श्चानुरूपाभिः. ६ क—घ. ज. समुपाधाय. ७ ज. विधिवत्. ८ छ. झ. ट. ठ. समिधश्चैव. ९ च. झ. ञ. वाच्यं. १० क—घ. च—ट. क्रियाम्. ११ ग. घ. ज. रम्यां. १२ क—घ. च—ट. त्रिविक्रमान्. १३ च. छ. झ. ञ. ट. रतुल. १४ झ. ट. ऋषयः. १५ ज. झ. श्वताः. १६ क. ख. च. छ. झ. ञ. ट. शुभमङ्गलम्. ग. ज. तवकानने. १७ छ. झ. शेषाश्च, १८ च, झ. ञ. ट. औषधींचसुसिद्धार्थां. क. ओषधीश्चापिसिद्धार्थाः. ग. औषधं चापिसिद्धार्थं.

उवाचातिप्रहृष्टेव सा दुःखवशवर्तिनी ॥ वाङ्मात्रेण न भावेन वाचाऽसंसज्जमानया ॥ ३९ ॥
आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ॥ अवदत्पुत्र सिद्धार्थो गच्छ राम यथासुखम् ॥४०॥
अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ॥ पश्यामि त्वां सुखं वत्स सुस्थितं राजवर्त्मनि ॥ ४१ ॥
*प्रनष्टदुःखसङ्कल्पा हर्षविद्योतितानना ॥ द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥ ४२ ॥
भद्रासनगतं राम वनवासादिहागतम् ॥ द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः ॥ ४३ ॥
मङ्गलैरुपसंपन्नो वनवासादिहागतः ॥ वध्वा मम च नित्यं त्वं कामान्संवर्ध याहि भो ॥ ४४ ॥
मयाऽर्चिता देवगणाः शिवादयो महर्षयो भूतमहासुरोरगाः ॥
अभिप्रयातस्य वनं चिराय ते हितानि काङ्क्षन्तु दिशश्च राघव ॥ ४५ ॥
इतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि ॥
प्रदक्षिणं चैव चकार राघवं पुनः पुनश्चापि निपीड्य सस्वजे ॥ ४६ ॥
तथा तु देव्या स कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ॥
जगाम सीतानिलयं महायशास्स राघवः प्रज्वलितः स्वया श्रिया ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

अतिप्रहृष्टेव दुःखवशवर्तिन्यपिपुत्रमुखोल्लासार्थमतिसंतुष्टेवभावयन्तीत्यर्थः ।असंसज्जमानया स्खलन्त्येत्यर्थः ॥३९॥ केनप्रकारेणोवाचेत्यत्राह—आनम्येति ।आनम्य आनमय्य । सिद्धार्थः सिद्धप्रयोजनः । गच्छेत्यत्रेतिकरणंद्रष्टव्यम् ॥ ४० ॥ सर्वसिद्धार्थं सिद्धसर्वप्रयोजनं । पश्यामि द्रक्ष्यामि ॥ ४१ ॥ प्रनष्टदुःखसङ्कल्पा सङ्कल्पःमानसंकर्म । वनेरामस्यकिंभविष्यतीतिचिन्तात्मकइत्यर्थः ॥ ४२—४३ ॥ वध्वाः स्नुषायाःसीतायाः । कामान् काम्यमानवस्त्राभरणादीनि ॥४४–४५॥ तदाकौसल्योक्तस्यवाचामगोचरत्वादाह—इतीवेत्यादि । इतीव एवंविधमित्यर्थः । प्रदक्षिणं अनुकूलं । रक्षामितियावत् ॥ ४६ ॥ निपीड्य निपीडनपूर्वकमभिवाद्येत्यर्थः । स्वया स्वतःसिद्धया ॥ ४७ ॥
इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

ति० उवाचापि मन्त्रानितिशेषः । जपोत्तरंस्पष्टमपिमन्त्रानुच्चारयामासेत्यर्थः । एतच्चतन्मन्त्रार्थानुसंधानेनरामस्यहृत्प्रसादार्थं । संसज्जमानया आन्तरखेदगद्गदया ॥ ३९ ॥ ती० मङ्गलैः राजोचितवस्त्राभरणादिभिः । संवर्ध संवर्धय । शि० संवर्ध अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वात्परस्मैपदम् ॥ ४४ ॥ ती० रक्षार्थमेवपुत्रस्यप्रदक्षिणम् ॥ ४६ ॥ ति० तयाश्रिया मातृकृतमङ्गलजशोभया ॥ ४७ ॥ इतिपञ्चविंशस्सर्गः ॥ २५ ॥

[ पा० ] १ क—घ. ज. उवाचाभि. च. छ. झ. ञ. ट. उवाचापि. २ छ. झ. ट. मिष्टार्थो. ३ ख. त्वांकदा. क. त्वामहं. ४ छ. झ. ट. संधितं. ५ ञ. च. वर्त्मसु. *४२ ४३ एतच्छ्लोकद्वयं झ. ट. ठ. पुस्तकेषुनदृश्यते. ६ क. ख. च. ञ. भद्रंभद्रासनगतं. ७ घ. च. त्वांमुहुःपुत्र. क. त्वामहंवत्स. ख. ग. ज. त्वामहंपुत्र. ८ ख. रभिसंपन्नो. ९ घ. च. झ. ञ. ट. वध्वाश्चमम. च. तथाचमम. ग. वध्वाचमम. १० क. च. यप्रभो. ग. घ. यामिभो. ख. यस्वभो. झ. ट. याहिभोः. ११ च. झ. ञ. ट. भूतगणाःसुरोरगाः. १२ ग. घ. हितानिकुर्वन्तु. ज. हितायकुर्वन्तु. क. च. हितायकाङ्क्षन्तु. १३ च. छ. झ. ञ. ट. अतीव. १४ च. छ. झ. ञ. चापि. १५ छ. झ. ञ. ट. निरीक्ष्य. १६ च. छ. ञ. ट. तथाहि. ज. तथास. घ. यथाच. क. ग. तथाच. झ. तयाहि. १७ क. ख. ग. च—ट. देव्याच. घ. देव्यासु. १८ च. स्तथाश्रिया. छ. झ. ञ. ट. स्तयाश्रिया. क. ख. श्रियास्वया.

## षड्विंशः सर्गः ॥ २६ ॥

श्रीरामस्ययौवराज्याभिषेकविघ्नमजानन्त्यासीतयाहर्षेणदेवताराधनपूर्वकंतदागमनप्रतीक्षणम् ॥१॥ तथाऽभिषेकविघ्नसंजातलज्जयामुखावनमनेनगृहंप्रविष्टस्यरामस्यमुखवैवर्ण्यंपश्यन्त्यातयारामंप्रतिसविलापंतत्कारणप्रश्नः ॥२॥ श्रीरामेणजानकींप्रतिस्वमुखवैवर्ण्यस्यकारणनिवेदनेनस्ववनवासस्यावधिनिवेदनपूर्वकंतावत्कालंदशरथादिसेवाया भरतानुवर्तनस्यचविधानम् ॥३॥

अभिवाद्य च कौसल्यां रामः संप्रस्थितो वनम् ॥ कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥
विराजयन्राजसुतो राजमार्गं नरैर्वृतम् ॥ हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २ ॥
वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी ॥ तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥
देवकार्यं स्वयं कृत्वा कृतज्ञा हृष्टचेतना ॥ अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते ॥ ४ ॥
प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् ॥ प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ॥ ५ ॥
अथ सीता समुत्पत्य वेपमाना च तं पतिम् ॥ अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६ ॥
तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् ॥ तं शोकं राघवः सोढुं ततो विवृततां गतः ॥७॥
विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ॥ आह दुःखाभिसंतप्ता किमिदानीमिदं प्रभो ॥ ८ ॥
अद्य बार्हस्पतः श्रीमान्युक्तः पुष्यो नु राघव ॥ प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९॥

एवंमातरमनुमान्यसीतामनुमानयितुंनिर्गच्छति । अभिवाद्येत्यादिश्लोकद्वयमेकंवाक्यम् । वनंसंप्रस्थितः वनंगन्तुंप्रवृत्तः । धर्मिष्ठे अतिशयितधर्मे ॥ १ ॥ आममन्थेव विलोडयामासेत्यर्थः । गुणवत्तया पूर्वभाषीप्रियवादीचेत्याद्युक्तगुणविशिष्टतया ॥ २ ॥ तत्सर्वं अभिषेकविघातादिकं । तपस्विनी रामाभिषेकार्थव्रतोपवासादिनियमविशिष्टा । यौवराज्याभिषेचनं वर्ततइतिशेषः ॥ ३ ॥ देवकार्यं देवपूजां । कृतज्ञा अभिषिक्तभर्तृविषयेपट्टमहिषीभिःगन्धपुष्पादिनाकृतपादार्चनादिसमाचारज्ञेत्यर्थः । हृष्टचेतना हृष्टमनस्का । राजधर्माणामभिज्ञा अभिषिक्तराजासाधारणलक्षणानिश्वेतच्छत्रचामरपुरस्कृतभद्रासनादीनिज्ञातवती । प्रतीक्षतेस्म उक्तलक्षणविशिष्टोभर्ताकदासमागमिष्यतीत्यपेक्षयास्थितवतीत्यर्थः ॥ ४ ॥ ह्रिया गृहालङ्कारजनहर्षजया ॥ ५ ॥ समुत्पत्य स्वासनादुत्थाय । वेपमाना भर्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात्कंपमानेत्यर्थः ॥ ६ ॥ ततः सोढुमशक्तत्वादेव । विवृततां व्यक्तदुःखतां । एतावत्पर्यन्तंशोकलेशहीनस्यरामस्येदानींशोकाविर्भावः सीतायाभाविदुःखस्मरणेनेतिबोध्यम् ॥ ७ ॥ प्रस्विन्नं हस्तगतराज्यस्यान्यगामित्वं स्ववनप्रव्राजनंचकथमस्यैनिवेदयिष्यामीतिशोकेनप्रस्वेदः । अमर्षणं संजातदुःखंनियन्तुमशक्तं । इदानीं हर्षकाले । इदं दौस्थ्यम् ॥८॥ बार्हस्पतः बृहस्पतिर्दैवत्यः । उक्तःअभिषेकार्हत्वेनविहितः । युक्तइतिपाठेअभिषेकार्हः । श्रीमान् कर्मारब्धवतांश्रीकरः । पुष्यः पुष्यनक्षत्रं । अद्येति ब्राह्मणैः प्रोच्यतेनु प्रोच्यतेख-

सत्य० धर्मिष्ठे पितृवचनपरिपालनरूपे ॥ १ ॥ शि० तपस्विनी सर्वविषयकनित्यज्ञानविशिष्टा । वैदेही तत्सर्वं सवृत्तगमनं शुश्राव । तत् वनगमनमेव । तस्याहृदि आसीदितिशेषः । अतएवराज्याभिषेचनंहृदिनासीत् ॥ ३ ॥ शि० कृतज्ञा देवादिप्रार्थनावेदित्री ॥ ४ ॥ ति० ह्रिया सीतायैकथमिदमन्याय्यंस्वमातापितृकृतंकथयामीतिलज्जया । सत्य० ह्रिया अभिषेकार्थसन्नद्धस्यारण्यंप्रत्युद्युक्तत्वाल्लज्जयेत्यर्थः । शि० ह्रिया पित्राद्याज्ञापनमन्तराइमांकथंसहनेष्यामीतिलज्जया । अवाङ्मुखः नवाक् वचनंयस्मिंस्तत्मुखंयस्यसरामः ॥५॥ ती० विवृततां व्यक्तदुःखतां । गतः प्राप्तइत्यर्थः । मयिवनंगतेसति अदुःखार्हासीतादुःखेनकथंकालंनयिष्यतीतिधिया संजातदुःखोऽभूदित्यर्थः । "व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः" इत्युक्तेः । ति० यद्वा सरामोविवृताभिप्रायंगतः । शुद्धमुक्तस्वभावोपिमायाख्यप्रकृत्यवतारसीतासांनिध्यादुद्बुद्धविक्षेपशक्तिरिवजातइत्यर्थः । अनेनहिनाट्येन प्रियायाअग्रेनकिंचित्पुंसोगोप्यमितिलोकव्यवहारोदर्शितः । सत्य० सःशोकः विवृततांव्यक्ततांगतः ॥ ७ ॥ ती० युक्तः चन्द्रेणेतिशेषः । सत्य०

[ पा० ] १ क—घ. च. ञ. वाद्यतु. २ घ. राज्येऽभि. ३ क—घ. च—ट. स्वसा. ४ झ. पुत्रीप्रतीक्षती. क. पुत्रं प्रतीक्षती. ५ क. ग. घ. च—ट. स्ववेश्म. ६ क. घ. ज. बार्हस्पत्यः. ७ क. छ. झ. ञ. न्युक्तःपुष्येण.

न ते शतशलाकेन जलफेननिभेन च ॥ आवृतं वदनं वल्गु [1]छत्रेणापि विराजते ॥ १० ॥
व्यजनाभ्यां च मुख्याभ्यां शतपत्र[2]निभेक्षणम् ॥ चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥११॥
वाग्मिनो बन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ ॥ स्तुवन्तो [3]नात्र दृश्यन्ते मङ्गलैः सूतमागधाः ॥ १२ ॥
न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः ॥ मूर्ध्नि [4]मूर्धाभिषिक्तस्य [5]दधति स विधानतः ॥ १३॥
न [6]त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च [7]भूषिताः ॥ अनुव्रजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४ ॥
चतुर्भिर्वेगसंपन्नैर्हयैः काञ्चन[8]भूषितैः ॥ मुख्यः [9]पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥
न हस्ती चाग्रतः [10]श्रीमांस्तव लक्षणपूजितः ॥ प्रयाणे लक्ष्यते वीर कृष्णमेघगिरिप्रभः ॥ १६ ॥
न च काञ्चनचित्रं ते पश्यामि प्रिय[11]दर्शन ॥ भद्रासनं पुरस्कृत्य [12]यान्तं वीर[13]पुरस्कृतम् ॥ १७ ॥
अभिषेको [14]यथा सज्जः किमि[15]दानीमिदं तव ॥ अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ॥ सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९ ॥
कुले महति संभूते धर्मज्ञे धर्मचारिणि ॥ शृणु जानकि येनेदं क्रमे[16]णाभ्यागतं मम ॥ २० ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा[17] दशरथेन च[18] ॥ कैकेय्यै [19]मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१ ॥
तयाऽद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते ॥ [20]प्रचोदितः ससमयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥

त्वित्यर्थः । अन्वितिच्छित्त्वाअनुप्रोच्यतइतिवासंबन्धः ॥ ९ ॥ शतंशलाकायस्यतेन । स्थलस्थत्वेनमालिन्यं व्यावर्तयितुंजलपदं । वल्गु सुन्दरं । आवृतंसन्नविराजतइतिसंबन्धः ॥ १० ॥ व्यजनाभ्यां वालव्यजनाभ्यां । शतपत्रं पद्मम् ॥११॥ वन्दिनः स्तुतिपाठकाः । " वन्दिनःस्तुतिपाठकाः " इत्यमरः । मङ्गलैः मङ्गलवचनैः । सूताः पुरावृत्तकथाशंसिनः । मागधाः वंशशंसकाः ॥ १२ ॥ क्षौद्रं मधु । मूर्ध्निनदधतिस्म नाभिषिञ्चन्तिस्मेत्यर्थः ॥ १३ ॥ प्रकृतयः अमात्यादयः । श्रेणीमुख्याः वीथीप्रधानाः ॥ १४ ॥ पुष्यरथः उत्सवायकल्पितोरथइत्यर्थः । "असौपुष्यरथश्चक्रयानंनसमराययत् " इत्यमरः । सहिराज्ञामग्रतो नीयतेकेवलंसंभ्रमाय ॥ १५ ॥ कृष्णमेघगिरिप्रभः कृष्णमेघयुक्तगिरिप्रभः । उभयोरुपमानत्वेवैषम्यापत्तिः ॥ १६ ॥ वीरपुरस्कृतंभद्रासनंपुरस्कृत्य तेयातं गमनं । नपश्यामीत्यन्वयः ॥ १७ ॥ यथाअभिषेकः सज्जः सन्नद्धः । इदानींतथैवेत्यर्थः । तवापूर्वोमुखवर्णोदृश्यते । प्रहर्षश्चनलक्ष्यते । किमिदमितिसंबन्धः ॥१८॥ विलपन्तीं विविधंलपन्तीं । तत्रभवान्पूज्यः । "तत्रभवानत्रभवानितिशब्दोवैप्रयुज्यतेपूज्ये" इतिहलायुधः । प्रव्राजयतीत्यनन्तरमितीतिशेषः ॥१९॥ महतोप्रियस्यश्रवणेसीतायाःकिंभविष्यतीतिभयात्चित्तदार्ढ्यार्थंविविधगुणकीर्तनेनसंबोधयति—कुलइत्यादि। इदं प्रव्राजनं । येनक्रमेण येनमार्गेण ॥ २०—२१ ॥ अद्यनृपोद्यतेममाभिषेकेसज्जेसति प्रचोदितः पूर्वदत्तं वरद्वयंदेहीतिप्रकर्षेणप्रेरितः। ससमयः त्वदपेक्षितंकरि-

युक्तः शोभनइत्यनुप्रोच्यते ॥ ९ ॥ **शि०** मुख्याभ्यां चक्रवर्त्यसाधारणाभ्यां ॥ ११ ॥ **स०** मूर्धाभिषिक्तस्य शिरस्स्नातस्य । राज्याभिषेकस्याद्याप्यभावादितिबोध्यम् ॥ १३ ॥ **ति०** श्रेणीमुख्याः परिषन्मुख्याः । सर्वत्रतत्कृतइतिशेषः ॥ १४ ॥ **ति०** पुष्परथः प्रचुरपुष्पभूषितरथविशेषः ॥ १५ ॥ **ती०** कृष्णमेघप्रभोगिरिप्रभश्च ॥ १६ ॥ **ति०** भद्रासनंपुरस्कृत्ययान्तं ते पुरस्सरं अग्रगंसेवकं । नपश्यामि ॥ १७ ॥ **ती०** यदा यस्मात् ॥ १८ ॥ **शि०** विलपन्तीं विविधंपृच्छन्तीं ॥ १९ ॥ **शि०** वरेमहत्त्वंलनिवार्यत्वेन ॥ २१ ॥ **ति०** ससमयः प्राचीनोवरसंकेतः । प्रचोदितः प्रवर्तितः ॥ २२ ॥

[ **पा०** ] १ क. ख. घ. छ. झ. ञ. च्छत्रेणाभि. २ ग. च. ज. निभेक्षण. ३ क. ग. च. ट. नाद्य. ४ क. ख. घ. मूर्धावसिक्तस्य. ५ क. ख. ग. च. छ. झ. ञ. ट. ददति. ६ ख. ग. घ. त्वा. ७ ख. भूषितम्. ८ क—घ. च. छ. झ. ञ. ट. भूषणैः. ९ झ. ट. ठ. पुष्यरथः. १० च. छ. झ. ञ. ट. श्रीमान्सर्वे. ११ च. छ. प्रियदर्शनम्. १२ क. ख. च. ज—ट. यान्तं. १३ ख. घ. च—झ. ट. पुरस्सरम्. १४ क. ग. घ. च—ट. यदा. १५ ख. मिदानीमयं. क. मिदानीं तवानघ. १६ ट. क्रमेणाद्य. च. झ. ञ. क्रमेणाद्या. १७ ठ. स्वयं. १८ च. छ. झ. ञ. ट. वै. घ. ज. मे. १९ ठ. ममपित्रातु. ख. ग. घ. ज. प्रीतमनसा. २० घ. प्रबोधितः.

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ॥ पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३ ॥
सोहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ॥ भरतस्य समीपे तु[1] नाहं कथ्यः कदाचन ॥ २४॥
ऋद्धियुक्ता[2] हि पुरुषा न सहन्ते परस्तवम् ॥ तस्मान्न ते गुणाः कथ्या[3] भरतस्याग्रतो मम ॥ २५ ॥
नापि[4] त्वं तेन भर्तव्या विशेषेण कदाचन ॥ अनुकूलतया शक्यं समीपे त्वस्य[5] वर्तितुम् ॥ २६ ॥
तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् ॥ स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २७ ॥
अहं चापि प्रतिज्ञां[6] तां गुरोः समनुपालयन् ॥ वनमद्यैव यास्यामि स्थिरा[7] भव मनस्विनी ॥ २८ ॥
याते च मयि कल्याणि वनं मुनिनिषेवितम् ॥ व्रतोपवासपरया[8] भवितव्यं त्वयाऽनघे ॥ २९ ॥
काल्यमुत्थाय[9] देवानां कृत्वा पूजां यथाविधि ॥ वन्दितव्यो दशरथः पिता मम नरेश्वरः[10] ॥ ३० ॥
माता[11] च मम कौसल्या वृद्धा संतापकर्शिता ॥ धर्ममेवाग्रतः कृत्वा त्वत्तः संमानमर्हति ॥ ३१ ॥
वन्दितव्याश्च[12] ते नित्यं याः[13] शेषा मम मातरः ॥ स्नेहप्रणयसंभोगैः समा हि मम मातरः ॥ ३२ ॥
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ॥ त्वया[14] भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥

---

ष्यामीतिकृतशपथइत्यर्थः । " समयाःशपथाचारकालसिद्धान्तसंविदः " इत्यमरः । धर्मेणप्रतिनिर्जितः कर्तृभूतधर्मेणस्वायत्तीकृतइत्यर्थः ॥ २२ ॥ ततःकिमित्यत्राह—चतुर्दशेति । मया पितृचोदितेनेत्यर्थः ॥२३॥ सीताहृदयंज्ञातुंबुद्ध्युपदेशेनप्रणयरोषमुत्पादयन्नाह—भरतस्येति । त्वयानकथ्यः नश्लाघनीयः । त्वत्प्रणामागमनदशायामितिशेषः ॥ २४—२५ ॥ तेन भरतेन । विशेषेणनभर्तव्या बन्धुसाधारण्येनभरणीयेत्यर्थः । अशनादिभरणंलक्ष्मणशत्रुघ्नभार्याभ्यांविशेषेणनकाङ्क्षणीयमितिभावः । अनुकूलतया स्वजनसाधारणतया । शक्यं योग्यम् ॥ २६ ॥ तदनुकूलाचरणंकिमर्थमित्यतआह—तस्माइति । नृपतिना दशरथेन ॥ २७ ॥ गुरोः दशरथस्य । स्थिराभव मयिस्थिरानुरागाभवेत्यर्थः । तत्रहेतुर्मनस्विनीति । दृढमनस्केत्यर्थः ॥ २८—२९ ॥ काल्यं अहर्मुखे । "प्रत्यूषोहर्मुखं काल्यं" इत्यमरः ॥ ३० ॥ धर्ममेवाग्रतःकृत्वा स्थितायाइतिशेषः ॥ ३१ ॥ स्नेहः प्रीतिः । प्रणयः सौहृदं । "प्रणयःस्यात्परिचयेयाच्ञायांसौहृदेपिच" इतिवैजयन्ती । भोगः पालनं । "भोगोराज्येधने सौख्येपालनाभ्यवहारयोः" इतिवैजयन्ती । मयि स्नेहादित्रयमविशेषेणकुर्वन्ति । अतस्तास्तुल्यतयावन्द्याइतिभावः ॥ ३२ ॥ भ्रातृपुत्रसमौ भ्रात्रापुत्रेण

---

**ति०** यौवराज्येनियोजितः । मयेतिशेषः । ज्येष्ठानुज्ञांविनातस्यतल्लाभासंभवात् । **शि०** यौवराज्ये यौवराज्यसदृशेपालने इत्यर्थः ॥ २३ ॥ **शि०** तेन मत्प्रव्रजनेनहेतुना । भरतस्यसमीपेकदाचनसमयेअहंकथ्यः श्लाघनीयः । मद्गुणवर्णनंकर्तव्यमित्यर्थः । तेनमद्वियोगजनितातिदुःखं भरतस्यनभविष्यतीतिसूचितम् । तेनरामगुणानांसर्वतापशामकत्वंव्याञ्जितम् ॥ २४ ॥ **शि०** ननुप्राप्ताधिकारत्वाद्भरतोपिप्रशंसनीयइत्यतआह—**ऋद्धीति** । ममऋद्धियुक्ताः मत्प्रसादप्राप्तैश्वर्याःपुरुषाः । परस्तवं स्वकीयातिस्तुतिं । नसहन्ते । तस्माद्धेतोर्भरतस्यगुणाअग्रतः भरतसमीपे । नकथ्याः नश्लाघनीयाः ॥ २५ ॥ **ति०** "अहंतेनानुवक्तव्योविशेषेणकदाचन" इतिप्राचीनःपाठःकतकेनदर्शितः । अहं अस्मत्स्वरूपं । ते त्वया । विशेषेण विशिष्य । कदाचन कदापि । नानुवक्तव्यः सखीभिर्वार्ताप्रसङ्गेइतिशेषः । भरतस्याग्रतइत्यनुकर्षः । तत्रहेतुः—**अनुकूलयतेति** । मत्स्वरूपवर्णनंचतस्यप्रतिकूलमितिभावः । नापित्वंतेनभर्तव्याविशेषेणकदाचन इत्याधुनिकपाठस्तुनतथाचमत्कारी । विशेषेणनभर्तव्या । किंतुबन्धुसाधारण्येनेत्यर्थेनुकूलतयेत्युत्तरार्धस्यतथोपयोगाभावात् ॥ २६ ॥ **ती०** काल्यं सर्वस्मिन्नप्युषसि ॥ ३० ॥ **वि०** माताचेति । वन्दितव्येतिशेषः । यतोगुरुजनवन्दनंकुलवधूनांधर्मएवेतिपुरस्कृत्यत्वत्तस्संमानमर्हतीतिसंबन्धः ॥ ३१ ॥ **सत्य०** मात्रेतिशेषः । वाक्यभेदान्नपुनरुक्तिः ॥ ३२ ॥

**[ पा० ]** १ क. ग. घ. ज. झ. ञ. ट. ते. २ घ. बुद्धियुक्तापि. ज. बुद्धियुक्ताहि. ३ क. श्लाघ्याः. ४ छ. झ. ट. अहंतेनानुवक्तव्यो. ५ ख. ग. घ. च—ञ. तस्य. ६ छ. प्रतिज्ञांच. ७ क. ख. च. छ. झ. ञ. स्थिरीभवमनस्विनि. ८ क—घ. ज. रतया. ९ छ—ट. कल्यं. १० च. छ. झ. ञ. जनेश्वरः. ११ ममामाताच. १२ क. च. ञ. स्त्वयानित्यं. ख. श्चयेनित्यं. ट. श्चतानित्यं. १३ ख. शेषाश्च. १४ क. ग. घ. च. ज. ञ. उभौभरत. ख. प्रियेभरत.

विप्रियं न[1] च कर्तव्यं भरतस्य कदाचन ॥ स हि राजा प्रभुश्चैव[2] देशस्य च कुलस्य च ॥ ३४ ॥
आराधिता हि शीलेन प्रयत्नैश्चोप[3]सेविताः ॥ राजानः संप्रसीदन्ति प्रकुप्यन्ति[4] विपर्यये ॥ ३५ ॥
[ स्पृ[5]शन्निव गजो हन्ति जिघ्रन्निव भुजंगमः ॥ स्मयन्निव नृपो हन्ति मानयन्निव दुर्जनः ] ॥३६ ॥
औरसा[6]नपि पुत्रान्हि त्यजन्त्यहितकारिणः ॥ समर्थान्[7]संप्रगृह्णन्ति जनानपि न[8]राधिपाः ॥ ३७ ॥
सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी ॥ भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३८ ॥
अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि ॥
यथा व्यलीकं कुरुषे न कस्य चित्तथा त्वया कार्यमिदं वचो मम ॥ ३९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः ॥ २७ ॥

श्रीरामेणायोध्यायामेववासंबोधितयासीतयातंप्रतिप्रणयकोपेनतद्वचनस्यजनापहास्यत्वकथनम् ॥ १ ॥ तथादशरथेन-रामस्यवनवासनिदेशेनैवस्वस्यापिनिदेशंनिरूपयन्त्यातयारामंप्रतितद्विरहस्यदुस्सहत्वप्रतिपादनेनवनंप्रतिस्वस्यापिसहनयन-प्रार्थना ॥ २ ॥

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ॥ प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥
किमिदं भाषसे[9] राम वाक्यं लघुतया ध्रुवम् ॥ त्वया यदपहास्यं मे श्रुत्वा नरव[10]रात्मज ॥ २ ॥
[ वीरा[11]णां राजपुत्राणां शस्त्रास्त्रविदुषां नृप ॥ अनर्हमयशस्यं च न श्रोतव्यं त्वये[12]रितम् ] ॥ ३ ॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ॥ स्वानि पुण्यानि भुञ्जानाः स्वंस्वं भाग्यमुपासते ॥४॥

चसमौ । प्राणैः प्राणेभ्यः ॥३३॥ राजत्वेप्यप्रभुत्वम-नियन्तृत्वंकस्यचित्संभवतीतितद्व्यावृत्त्यर्थंप्रभुरित्युक्तं । देशपतेरकुलपतित्वदर्शनादाह—देशस्यचकुलस्यचेति ॥ ३४ ॥ शीलेन अकुटिलवृत्त्या । प्रयत्नैः आलस्य-त्यागादिभिः । विपर्यये शीलाद्यभावे ॥ ३५—३६ ॥ जनान् अबन्धून् ॥ ३७॥ सत्यव्रतं अमोघव्रतं ॥३८॥ व्यलीकं अप्रियं । कस्यचिदपिजनस्ययथाव्यलीकं नकुरुषे तथात्वयावर्तितव्यम् । इदंममवचश्चकार्यम् । अत्रैवस्थातव्यमितिममवचश्चकार्यमिति । यद्वा यथाक-स्यचिदपिव्यलीकंनकुरुषे तथाइदमपिममवचस्त्वया कार्यमित्यर्थः ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायाणभूषणे पीतांबराख्याने अयोध्याकाण्ड-व्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

एवंरामायणपुरुषेषुरामकर्तव्यंसामान्यधर्मानुष्ठा-नंदर्शितम् । अथसीतानुष्ठेयंपातिव्रत्यधर्मंसंक्षेपेणोपक्षि-पति—एवमुक्तेत्यादि । अप्रियवादिन्यपिप्रियार्हा प्रिय-भाषणार्हा । तदुपरिप्रियवादिनी । तथाप्येवमुक्ता अ-प्रियमुक्ता । प्रणयादेव सौहृदादेव । नतुवैरात् । सं-क्रुद्धा ॥ १ ॥ हेराम त्वया लघुतया ध्रुवं निश्चितम् । अत्यन्तनिःसारमित्यर्थः । "ध्रुवोभभेदेक्लीबंतुनिश्चि-तेशाश्वतेत्रिषु" इत्यमरः । लघुत्वमेवाह—यदिति । यद्वाक्यंश्रुत्वा मे स्त्रियाअपि । अपहास्यंभवति तद्वा-क्यंभाषसे । किमिदं अयमपूर्वप्रकारः इतःपूर्वनदृष्ट-चरः । नरवरात्मजेत्यनेनास्यासंभावितत्वमुच्यते । त्वामिहस्थाप्यवनंगमिष्यामीत्येतद्वचनमेतावत्पर्यन्तम-नुसृतायाःप्रणयधारायाःपन्थानंनारोहतीतिभावः ॥२—३॥ कथंममवाक्यस्यपरिहासास्पदत्वमित्यत्राह—

ति० यथाकस्यचिन्मद्वचसोव्यलीकं व्यलीकत्वं । अनृतत्वंनकुरुषेतथेदमपिमेवचःकार्यं अनुष्ठेयमित्यर्थः । वचसोऽनृतत्वकरणं चाननुष्ठानेभवति । शि० वनेमहत्त्वंत्वद्गमनायोग्यत्वेन ॥ ३९ ॥ इतिषड्विंशस्सर्गः ॥ २६ ॥

शि० अध्रुवं अनिश्चितं । स० हेराम इदंकिंभाषसे । तन्मयिलघुतया लाघवनिमित्तेन । नत्वद्गौरवेण । ध्रुवं निश्चयः । कुतः

[ पा० ] १ च. छ. झ. ञ. ट. चन. २ च. छ. झ. ञ. ट. चवैदेहि. ३ ख. घ. श्चापि. ४ ग. घ. ज. कुप्यन्तिच. ५ अयं श्लोकः च. ज. ञ. दृश्यते. ६ छ. झ. औरस्यानपि. ७ च. ञ. न्प्रति. ८ क. ख. ग. जनाधिपाः. ९ ग. ज. भाष्यते, १० क. ग. च. छ. ट. वरोत्तम. ११ अयंश्लोकः च—ट. दृश्यते. १२ ज. त्वयोदितम्.

भर्तुर्भाग्यं तु भार्यैका प्राप्नोति पुरुषर्षभ ॥ अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥
न पिता नात्मजो नात्मा न माता न सखीजनः ॥ इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥६॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ॥ अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ७ ॥
ईर्ष्यारोषौ बहिष्कृत्य भुक्तशेषमिवोदकम् ॥ नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥ ८ ॥
प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ॥ सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ९ ॥

आर्यपुत्रेति । भर्तारंप्रतिभार्यायाःसंबोधनं आर्यपुत्रेति । भर्तृसंबन्धिपित्रादयः स्वानिपुण्यानि स्वकृतपुण्यफलानि । एतत् पापफलस्याप्युपलक्षणं । भुञ्जानाः अनुभवन्तः । स्वंस्वं स्वस्यैव फलप्रदं । भाग्यं शुभाशुभं कर्म । उपासते आचरन्ति । "भाग्यंकर्मशुभाशुभं" इत्यमरः ॥४॥ पूर्वोक्ताःसर्वेस्वकीयकर्मफलान्यनुभवन्ति भर्तुरर्धशरीरभूताभार्याभर्तृकृतभाग्यफलमेवानुभवतीत्याह—भर्तुरिति । भार्यैका भार्यैव तु । भर्तुर्भाग्यंप्राप्नोति । सहाधिकृतत्वात् । यस्मादेवंतस्मादेवाहमपिवनेवस्तव्यमित्यादिष्टैवत्वदादेष्टृभिः । आवयोःसहधर्मचारित्वात्त्वदादेशेनैवममाप्यादेशःसिद्धइतिभावः ॥ ५ ॥ एवंभर्तृसमानभाग्यत्वंस्वगमनहेतुरुक्तः तदेकगतिकत्वमपिगमनहेतुरित्याह—नेति । प्रेत्य परलोकइत्यर्थः ॥ ६ ॥ फलितार्थमाह—यदीति । अग्रतोगमनेहेतुमाह मृद्नन्ती मर्दयन्ती । मृदूकुर्वन्तीत्यर्थः । कुशरूपकण्टकान् ॥ ७ ॥ परातिशयाक्षमाईर्ष्या त्वदनुवर्तनेनचरितार्थेयंभविष्यतीत्येवंरूपा । अत्रैवसुखमास्वेतिमयोक्तापिस्वयमनुगमिष्यामीतिब्रूतइतिरोषः । तौभुक्तशेषं शास्त्रनिषिद्धतयोक्तमुदकमिव बहिष्कृत्य निःशेषंनिरस्य । विस्रब्धः निःशङ्कःसन् । मांनय । वीरेत्यनेनस्त्रियमेकाकीकान्तारंकथंनयेयमितिशङ्कानकर्तव्येत्युक्तं । पापंमयिनविद्यते भवद्वियोगेजीवनहेतुपापंनविद्यतइत्यर्थः । पापान्तरस्यात्रप्रसक्त्यभावात् ॥ ८ ॥ प्रासादवासंविहाय किमर्थंवनवासंगच्छसीत्यत्राह—प्रासादाग्रैरिति । पञ्चम्यर्थेतृतीया । प्रासादाग्रैः सार्वभौमवासप्रासादाग्रेभ्यः । विमानैर्वा स्वर्लोकादिस्थितविमानाग्रेभ्यो वा । वैहायसगतेन अणिमाद्यष्टैश्वर्यसिद्धिसंपन्नोचि-

हेनरवरोत्तम यद्वाक्यंत्वयैवश्रुत्वाऽपहास्यंकिमन्यैरित्यन्वयः ॥ २ ॥ **ती०** अहमपिवनेवस्तव्यमित्यादिष्टैव तवव्रनगमनादेशादेव "अर्धोवाएषआत्मनोयत्पत्नी" इत्युक्तप्रक्रियया त्वदर्धशरीरभूतायाममाप्यादेशइत्यर्थः ॥ ५ ॥ **स०** यद्वा इह लोके । नारीणां नविद्यन्तेअरयोयेषांतेनारयः तेषांसाधूनां त्वंनकेवलंपिता अपितुआत्मजः । नकेवलमात्मजः किंतुआत्मा स्वामीचेत्यन्वयः । यथोक्तं "मातारामः" इत्यादि ॥६॥ **स०** "पीतशेषंनचपिबेत्" इत्यादेर्यथापीतोच्छिष्टंजलादिबहिष्कार्यं तथेर्ष्यारोषौबहिष्कृत्यमांनयेत्यर्थः । यत्तुभुक्तभोगयात्वयाकिंप्रयोजनमित्यवतार्य यथादुष्प्रापपानीयकान्तारयायिनापीतशेषंकमण्डलुनिष्ठमुदकमवश्यंनेयमेवतथाऽहमप्यवश्यंनेयैवेतितीर्थादिप्रलपनं तत्त्वस्मदुदाहृतप्रमाणपर्यालोचनया पीतशेषकमण्डलूदकस्येवदार्ष्टान्तिकीभूतसीतायाअपि दोषित्वप्राप्त्याऽस्यार्थस्य पापंमयिनविद्यतइतिचरमचरणोक्तार्थविरुद्धत्वात् दुष्प्रापपानीयकान्तारयायिनउच्छिष्टोदकानयनेदुर्घटजीवनत्ववत् स्वरमणस्यरामस्यापिरामामन्तराऽऽरामगमनेतथात्वप्राप्तेश्चाल्पमतिजल्पनमितिकल्पयामः ॥ ८ ॥ **ती०** नित्यसंबन्धित्वादपिनाहंपरित्याज्येत्याह—**प्रासादाग्रैरिति** । प्रासादाग्रेस्थितिमताविमानैर्यानवतायोगबलात्केवलंवैहायसगतेन मत्वर्थीयाजन्तः । वैहायसगतिमता । तथासर्वावस्थांगतेनापिभर्त्राभर्तृपादच्छायेवभर्त्रासहस्त्रीसर्वावस्थागताभवतीतिविशिष्यतेविधीयते । **ति०** अतोपिमेवनगमनमेवोचितमित्याह । प्रासादाग्रे स्थितापेक्षयेतिशेषः । विमानैर्वावैहायसगतेनवा आकाशगमनेनोपलक्षिताणिमाद्यष्टसिद्ध्यपेक्षयेतिशेषः । सर्वावस्थागताभर्तुः । अपीतिशेषः । "विष्णोरभक्तिकावस्थासर्वावस्थेतिगीयते" इत्यभिधानात् । तांगतस्यअतएवआईषद्भर्तुः । भर्तुरित्यन्तमेकंपदं । अथवापृथक्पदेश्रुत्युक्तधर्माननुष्ठानरूपांतांगतापीतियोजना । सकलभर्तृधर्मरहितस्यापिपत्युःपादच्छायापादसेवनमेवेतरधर्मापेक्षयास्त्रियाविशिष्यतेऽधिकंभवति । श्रुतिस्मृत्योस्सर्वपरित्यागेनभर्तृसेवायाएव स्त्रीणांनित्यत्वबोधनादितिभावः । **सत्य०** प्रासादाग्रैरित्याद्यासहयोगेतृतीया । वृद्धोयूनेतिनिर्देशात् । तथाचतैस्सहितस्यभर्तुर्या पादच्छायासर्वावस्थागता तस्यास्सकाशाद्विशिष्यते भार्येतिशेषः । अगृह्णानस्सर्वाङ्गच्छायांगृह्णानश्चपादच्छायांभार्यायाःपतिपादैकसेवारतत्वंद्योतयति । वैहायसगतेनेतिभावेक्तः । यद्वाछायेत्यस्याऽऽवृत्तिः । तथाचभर्तुःपादच्छायाअविशिष्यतेभार्या । पादच्छायायथाइदानींनेतव्याइदानींननेतव्येतिनविशिष्यतेतथाभार्यापिच्छायाप्रतिबिंबभूतेतिअविशिष्यते । "छायाप्रतिबिंबार्कयोषितोः ।

[ **पा०** ] १ क. ख. घ. च. झ. ञ. ट. नार्येका. छ. नारीवै. २ छ. मादिष्टा. ३ झ. ट. वात्मा. ४ छ. झ. ट. ईर्ष्यारोषं. ५ क. ग. घ. ज. परित्यज्य. ६ च. ञ. पीत, ७ झ. प्रासादाग्रे.

अनुशिष्टाऽस्मि मात्रा च पित्रा च विविधाश्रयम् ॥ नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥१०॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ॥ नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥ ११ ॥
सुखं वने निवत्स्यामि यथैव भवने पितुः ॥ अचिन्तयन्ती त्रीँल्लोकांश्चिन्तयन्ती पतिव्रतम् ॥ १२ ॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ॥ सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥ १३ ॥
त्वं हि कर्तुं वने शक्तो राम संपरिपालनम् ॥ अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥ १४ ॥
सह त्वया गमिष्यामि वनमद्य न संशयः ॥ नाहं शक्या महाभाग निवर्तयितुमुद्यता ॥ १५ ॥
फलमूलाशना नित्यं भविष्यामि न संशयः ॥ न ते दुःखं करिष्यामि निवसन्ती सह त्वया ॥ १६ ॥
[ अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि ] ॥ इच्छामि सरितः शैलान्पल्वलानि वनानि च ॥
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥ १७ ॥
हंसकारण्डवाकीर्णाः पद्मिनीः साधुपुष्पिताः ॥ इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण सङ्गता ॥ १८ ॥
अभिषेकं करिष्यामि तासु नित्यं यतव्रता ॥ सह त्वया विशालाक्ष रंस्ये परमनन्दिनी ॥ १९ ॥
एवं वर्षसहस्राणां शतं वाऽहं त्वया सह ॥ व्यतिक्रमं न वेत्स्यामि स्वर्गोपि न हि मे मतः ॥ २०॥

तविहायस्संबन्धिगमनाद्वा । सर्वावस्थागता दुरवस्थापन्नापीत्यर्थः । यद्वा सर्वावस्थासुगता अनुगतास्थायिनी । स्वरूपप्राप्तेतियावत् । पादच्छाया पादसेवा । विशिष्यते अतिरिच्यते ॥ ९ ॥ उपदेशानुसारादपि मयानुगन्तव्यमित्याह—अनुशिष्टेति । यथामयाभर्तृविषयेवर्तितव्यं तथामात्रापित्राच विविधाश्रयं विविधप्रकारं । अनुशिष्टास्मि । संप्रति इदानीं । नवक्तव्यास्मि नशिक्षणीयास्मीतियावत् ॥ १० ॥ उपदेशफलमाह—अहमित्यादि । दुर्गत्वादिविशेषणविशिष्टमपीत्यर्थः ॥ ११ ॥ दुःखावहेयंप्रवृत्तिरित्यत्राह—सुखमिति । त्रीन्लोकान्अचिन्तयन्ती त्रैलोक्यैश्वर्यमप्यगणयन्तीत्यर्थः । पतिव्रतं पतिविषयंव्रतं । पतिशुश्रूषणमित्यर्थः ॥ १२ ॥ नियता नियमयुक्ता ब्रह्मचारिणी नियतेन्द्रियेत्यर्थः । कामभोगवर्जितावा । रंस्ये अपूर्वदर्शनेनसन्तुष्टाभविष्यामीत्यर्थः । मधुगन्धिषु पुष्परसगन्धिषु । "मद्येपुष्परसेमधु" इतिवैजयन्ती ॥ १३—१४ ॥ उद्यता वनगमनोद्युक्ता ॥ १५ ॥ दुःखं अशनपानाभ्यर्थनरूपम् ॥ १६–१७ ॥ कारण्डवाः जलकुक्कुटाः । "मद्गुःकारण्डवःप्लवः" इत्यमरः ॥ १८—१९ ॥ व्यतिक्रमं व्यतिक्रान्तं ।

वाविकल्पोपमानयोः" इतिचविश्वः ॥ ९ ॥ **रामानु०** मात्रापित्राच विविधाश्रयं विविधैर्वर्णैराश्रमिभिश्चआश्रीयतइतिविविधाश्रयं । श्रेयस्साधनत्वेनसर्वैरनुष्ठेयं । आचारमितियावत् । अनुशिष्टास्मि सुशिक्षितास्मि । तस्माद्यथामयावर्तितव्यं आचरितव्यं । तथासंप्रतिनवक्तव्यास्मि पूर्वमेवसर्वंविदितवत्यस्मीत्यर्थः । **सत्य०** मया रमया यथावर्तितव्यंतथामात्रापित्राप्यनुशिष्टास्मि । संप्रति इदानीं विविधाश्रयं भरतादिनानाश्रयमुद्दिश्य नवक्तव्या त्वयेतिशेषः ॥ १० ॥ **सत्य०** दुर्गंदुःखेनगन्तुंयोग्यं । गन्तुमशक्यंवा । "दुस्स्यात्कष्टनिषेधयोः" इत्यभिधानात् । नानामृगगणाकीर्णं शार्दूलादिविविधमृगमण्डितं । शार्दूलगणसेवितं तन्नामकराक्षससंबन्धिगणसेवितं । "शार्दूलोराक्षसान्तरे" इतिविश्वः । **शि०** पुरुषवर्जितं भृत्यादिरहितंयथास्यात्तथा । गमिष्यामि ॥११॥ **स०** वनेषु जलेषुकाननेषुच । मधोःपुष्परसस्यअम्लानपुष्पस्येतियावत् । गन्धएष्वस्तीतिमधुगन्धीनिवनानितेषु । एतेन "गन्धस्येदुत्पूतिसुसुरभिभ्यः । अल्पाख्यायां" इतिसूत्राविषयत्वात्कथमिकारइतिशङ्कानवकाशः ॥ १३ ॥ **शि०** अन्यस्य स्वनिरूपितस्त्रीत्वादिधर्मरहितस्य ॥ **सत्य०** हेराम त्वमन्यस्यापिपरिपालनंकर्तुंवनेशक्तः।हेमानदराम ममपरिपालनेशक्तइतिकिमुवक्तव्यं । अतोत्रैववस्तव्यमिति मा नद ब्रूहिइत्यावृत्तेनान्वयः । माऽयं ॥ १४ ॥ **ति०** ननिवर्तयितुंशक्या न्यायप्राप्तानुगमनत्वात् । त्वच्छक्तिरूपत्वादितिगूढोभिप्रायः ॥१५॥ **स०** सर्वत्रेत्येतदव्ययम् । संबुद्ध्यन्तपक्षेसर्वत्रायतइतिवासर्वस्मात्रायतइतिवाव्युत्पत्तिः । तथाद्येत्रायतेः "आतोनुपसर्गेकः" इतिकः । द्वितीयेतु "सुपिस्थः" इत्यत्रयोगविभागात्कः ॥ १७ ॥ **स०** पादादित्वेपि

[ **पा०** ] १ क. च. छ. झ. ञ. ट. गण. २ घ. जनस्यैव. ३ छ. झ. ञ. ट. साहं. क. ख साहि. ४ झ. ट. त्वयासदा. घ. च. ज. ञ. त्वयासह. ५ इदमर्धं च. छ. झ. ञ. ट. दृश्यते. ६ झ. परतः. ७ घ. च. छ. झ. ञ. ट. सरांसिच. ८ छ. ट. त्वाहंनित्यमनुव्रता. च. झ. तासुनित्यमनुव्रता. ९ च—झ. ट. सहस्राणि. १० ग. च. छ. झ. ञ. ट. वापि. ११ ख. स्वर्गेपिनहिमेमतिः. ग. घ. च. ट स्वर्गोपिहिनमे.

स्वर्गेऽपि च विना वासो भविता यदि राघव ॥ त्वया मम नरव्याघ्र नाहं तमपि रोचये ॥ २१ ॥
अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणैर्युतम् ॥
वने निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य संयता ॥ २२ ॥
अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ॥
नयस्व मां साधु कुरुष्व याचनां न ते मयाऽतो गुरुता भविष्यति ॥ २३ ॥
तथा ब्रुवाणामपि धर्मवत्सलो न च स्म सीतां नृवरो निनीषति ॥
उवाच चैनां बहु संनिवर्तने वने निवासस्य च दुःखितां प्रति ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ॥ २८ ॥

श्रीरामेणसीतांप्रतिवनस्यबहुदोषयुक्तत्वात्तद्वासस्यदुष्करत्वप्रतिपादनेनतदनुगमनानङ्गीकरणम् ॥ १ ॥

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ॥ न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥
सान्त्वयित्वा पुनस्तां तु बाष्पदूषितलोचनाम् ॥ निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥
सीते महाकुलीनाऽसि धर्मे च निरता सदा ॥ इहाचर स्वधर्मं त्वं मा यथा मनसः सुखम् ॥ ३ ॥

वर्षसहस्राणांशतमपिनवत्स्यामिक्षणमिवनेष्यामि । किंपुनश्चतुर्दशसमाइतिभावः । स्वर्गोपिनहिमेमतः त्वयाविनेतिशेषः ॥ २० ॥ एतदेवविवृणोति—स्वर्गेपिचेति ॥ २१ ॥ मृगैःआयुतम् आसमन्ताद्युक्तम् । मृगैःअयुतं नामिश्रितं । मिश्रितमित्यर्थः । "युमिश्रणामिश्रणयोः" इतिधातुः । अत्रेदमवधेयं । वने मारीचोमृगोभविष्यति तत्प्रसङ्गेनावयोर्वियोगःस्यात् तत्रकोवापुनर्घटकः कथंत्वंतुमयाविनास्थातुंशक्तासीतिचिन्तयन्तंरामंप्रतिसीतासूचयति—वानरवारणैरित्यादि । तथाहि मृगोमारीचः । वानरवारणैःवानरश्रेष्ठैः सुग्रीवादिभिः । पुनर्वनग्रहणात्वनेपि अशोकवनेपि वत्स्यामि । पुनस्तवैवपादावुपसंगृह्य संयता नियताभविष्यामीति ॥ २२ ॥ अन्वयव्यतिरेकाभ्यां स्वानुरक्तेत्युच्यते । अतएव त्वयावियुक्तां मरणायनिश्चितां त्वयावियुक्तत्वेमरणायनिश्चितामित्यर्थः । मांनयस्व । परमार्थस्तुरावणगृहीतामपित्वय्येवासक्तचित्ताम् । अथवेण्युद्ग्रथनेनमरणायनिश्चितां । हनुमत्प्रेषणादिकमुखेननयस्व । याचनां देवकृतरावणवधाभ्यर्थनम् । साधुकुरुष्व । मयाकृतात् अतः अनुगमनात् । ते गुरुता भारः । नभविष्यति क्लेशोनभविष्यतीत्यर्थः ॥ २३ ॥ धर्मवत्सलः कान्ताक्लेशासहिष्णुः । निनीषति नेतुमिच्छति । बह्विति क्रियाविशेषणम् । संनिवर्तने संनिवर्तननिमित्तम् ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने सप्तविंशःसर्गः ॥ २७ ॥

---

वनेनिवासस्यचदुःखितामित्युक्तंविवृणोति—सएवमित्यादिना ॥ १—२ ॥ मायथामनसःसुखं मनसो-

त्वेतिनैरङ्कुश्यादुक्तिः ॥ १९ ॥ **शि०** अविना सर्वरक्षकेण । त्वयाविना । **स०** विना परमात्मरूपिणा । नाहंरोचये । अव्ययं चैतत् । तेनरोचयइत्युपपन्नम् ॥ २१ ॥ **शि०** प्रथमार्धेअन्त्यपादेवर्णैकन्यूनताऽपूर्वेच्छन्दोद्योतनाय । यद्यपिवारणैर्युतमितिभूषणटीकाङ्कितपुस्तकेषुदृश्यतेतथापितत्पाठस्यटीकाऽस्पृष्टत्वादेवमुक्तम् ॥ २२ ॥ **ति०** निवर्तने निवर्तनरूपप्रयोजननिमित्तं । वनवासस्यदुःखतां दुखजनकतांप्रति । सत् संभवत् । बहुहेतुजातमुवाचेत्यर्थः ॥ २४ ॥ इतिसप्तविंशस्सर्गः ॥ २७ ॥

**स०** बाष्पदूषितलोचनां बाष्पक्लिन्नकज्जलादियुक्तलोचनं ॥ २ ॥ **ती०** स्वधर्मं स्ववाक्यपरिग्रहप्रयोजनंस्वकुलधर्मं । इहैव

[ **पा०** ] १ च—झ. ट. विनानर. २ क. च—ट. तदपि. ३ च—ट. वारणैश्च. ४ ख. घ. ज. वनेपि. ५ ग. च. झ. ञ. ट. संमता. क. सर्वदा. ६ छ. झ. ट. नातोमयाते. ७ छ. झ. ट. वत्सलां. ८ घ. सीतां. ९ ख. छ. दुःखतां. १० क. एवंब्रुवन्तींसीतांतु. ११ छ. झ. ट. ठ. धर्मज्ञां. १२ क. ख. च. छ. झ. ञ. ट. ततस्तां. १३ क. च. ञ. निवर्तनार्थं. १४ छ. झ. ट. यथामे. ग. घ. च. ज. माकृथामनसोसुखम्.

सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाऽबले ॥ वने दोषा हि बहवो [1]वदतस्तान्निबोध मे ॥४॥
सीते विमुच्यतामेषा वनवासकृता मतिः ॥ [2]बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥
हितबुद्ध्या खलु वचो [3]मयैतदभिधीयते ॥ सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥
गिरिनिर्झरसंभूता गिरि[4]कन्दरवासिनाम् ॥ सिंहानां निनदा [5]दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥
क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये [6]महामृगाः ॥ [7]दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनम् ॥ ८ ॥
सग्रहाः सरितश्चैव [8]पङ्कवत्यश्च दुस्तराः ॥ मत्तैरपि गजै[9]र्नित्यमतो दुःखतरं वनम् ॥ ९ ॥
लताकण्टकसंकीर्णाः कृकवाकू[10]पनादिताः ॥ निरपाश्च [11]सु[12]दुर्गाश्च मार्गा दुःखमतो वनम् ॥ १० ॥
सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले ॥ रात्रिषु श्रमखि[13]न्नेन [14]तस्माद्दुःखतरं वनम् ॥ ११ ॥
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ॥ फलैर्[15]वृक्षावपतितैः सीते [16]दुःखमतो वनम् ॥ १२ ॥
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ॥ जटाभारश्च कर्तव्यो वल्कलांबर[17]धारिणा ॥ १३ ॥
देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् ॥ प्राप्तानामतिथीनां च नित्यशः प्रति[18]पूजनम् ॥ १४ ॥

---

यथासुखं भवतितथामाचरेत्यर्थः ॥ ३—४ ॥ बहुदोषं अहिकण्टकादियुक्तत्वात् कान्तारं महारण्यं । "महारण्येदुर्गपथेकान्तारंपुंनपुंसकं" इत्यमरः ॥ ५ ॥ हितबुद्ध्या नतुत्वद्धरणक्लेशेन ॥ ६ ॥ महावनेविद्यमानान्दोषानाह—गिरिनिर्झरेत्यादि । गिरिनिर्झरसंभूताः गिरिनिर्झरेषुप्रवृद्धाः । श्रोतुं दुःखाः दुःखकराः । अतोवनंदुःखं दुःखकरम् ॥ ७ ॥ शून्ये निर्मानुषप्रदेशे । विस्रब्धाः निःशङ्काः सन्तः । क्रीडमानाः क्रीडन्तः । अतएवमत्ताः महामृगाः सिंहशार्दूलादयः । अस्मान्दृष्ट्वाअपूर्वदर्शनात्समभिवर्तन्ते हन्तुमभिमुखमागच्छेयुः ॥ ८ ॥ सग्राहाः सनक्राः पङ्कवत्यः बहुपङ्काः । मत्तैर्गजैरुपलक्षिताश्च । अतएवदुस्तराःसरितःसन्ति । अतोदुःखतरं पूर्वोक्तदुःखसंमेलनादतिशयेनदुःखवत् ॥ ९ ॥ यत्र ननिर्झरादयस्तेनैवमार्गेणगमिष्यामइत्यत्राह—लताइति । लताःपदाकर्षिण्यः । कण्टकाः पादवेधकाः । कृकवाकवो वनकुक्कटाः । तैरुपनादिताः । तन्नादयुक्ता इत्यर्थः । तन्नादाअप्यश्रुतपूर्वत्वाद्भयावहाएव । निरपाः निर्गतजलाः। "ऋक्पूरब्धूः" इत्यादिनासमासान्तोप्रत्ययः ॥ १० ॥ भूतले नतुपर्यङ्के । तत्रापिपर्णशय्यासु नतुमृदुतूलास्तरणेषु । तत्रापिस्वयंभग्नासु जीर्णतयास्वयमेवपतितासु । रात्रिषु नत्वहस्सु । श्रमखिन्नेन फलमूलाद्याहरणश्रमदुःखितेन । वनवासिनासुप्यते । अतोस्माभिरपितथास्वपितव्यमितिभावः ॥ ११ ॥ अहोरात्रं सायंप्रातश्च । वृक्षावपतितैः वृक्षात्स्वयंपतितैः फलैः । नियतात्मना नियतमनस्केन । इतरानभिलाषिणेत्यर्थः । वनवासिना संतोषः भोजनतृप्तिः । कर्तव्यः ॥ १२ ॥ यथाप्राणेन यथा-

---

स्थित्वायथामनसस्सुखंभवति । स्वशक्त्यनुसारेणेत्यर्थः । मा मामुद्दिश्यआचर ॥ ३ ॥ **सत्य०** वसतइतिपुंल्लिङ्गनिर्देशेनपुरुषस्यैव यदादुःखबाहुल्यंतदाकिमुस्त्रियाइतिसूचयति ॥ ४ ॥ **ति०** सीतेइतिकलत्रनामग्रहणमपिदुःखाकुलचित्तत्वनाटनेननदोषाय । **स०** कान्तायाअरंअरमणं असुखमितियावत् । यस्मिंस्तत्कान्तारमितिवनमभिधीयते । कुतः हियस्मात्बहुदोषंः बहुव्रीहिः । कान्तारंदुस्साध्यमार्गमित्यर्थः । " कान्तारंवर्त्मदुर्गमम् " इत्यमरः ॥ ५ ॥ **शि०** गिरिनिर्दरिवासिनां गिरिदरीनिवसनशीलानांसिंहानां निनदाः दुःखाः दुःखप्रदाः । अतोवनंश्रोतुं प्रवृत्तजनस्येति दुःखं भवतीतिचशेषः ॥ ७ ॥ **ती०** गजैरपिदुस्तरास्सरितइतियोजना । **ति०** गजैरित्यस्ययुक्तमितिशेषः ॥ ९ ॥ **ति०** कृकवाकुर्वनकुक्कुटः । सरटइत्यन्ये । **सत्य०** कृकवाकुर्नीलकण्ठः । "कृकवाकुर्मयूरेच " इतिविश्वः ॥ १० ॥ **शि०** वनं अतः वनपर्यटनशीलस्य । दुःखम् ॥ ११ ॥ **सत्य०** यथाप्राणेन यथाबलम् ।

[ **पा०** ] १ झ. ट. ठ. वसतः. २ ख. दोषंतु. ३ क. मयावैदेहिकथ्यते. ४ ख. च. निर्झर. क. झ. ञ. ट. निर्दर. ५ ख. घोराः. ६ क. ख. ग. घ. च. ञ. तथा. ७ घ. धृष्टाः. ८ क—घ. च. ज. ञ. ट. पङ्कवत्यःसु. छ. झ. पङ्कवत्यस्तु. ९ क. ग. र्नित्यंसीतेदुःखमतो. ज. र्नित्यमतोदुःखतरंनुकिम्. १० क. ख. विनादिताः. ज. पवादिताः. ११ छ—ट. सुदुःखाश्च. १२ ज. दुर्गं. १३ घ. दुःखेन. १४ क. ग. छ. झ. ट. तस्माद्दुःखमतो. घ. सीतेदुःखमतो. १५ घ. वृक्षात्प्र. ज. वृक्षप्र. १६ ग. ज. दुःखतरं. १७ छ. झ. ट. धारणम्. १८ ग. घ. परिपूजनम्.

कार्यस्त्रिरभिषेकश्च कालेकाले च नित्यशः ॥ [1]चरता नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥
उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ॥ आर्षेण विधिना वेद्यां [2]बाले दुःखमतो वनम् ॥ १६ ॥
यथालब्धेन [3]संतोषः कर्तव्यस्तेन मैथिलि ॥ [4]यताहारैर्वनचरैर्नि[5]त्यं दुःखमतो वनम् ॥ १७ ॥
अतीव [6]वातास्तिमिरं बुभुक्षा [7]चात्र नित्यशः ॥ भयानि च महान्त्यत्र [8]ततो दुःखतरं वनम् ॥ १८ ॥
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ॥ चरन्ति [9]पृथिवीं [10]दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥
नदीनिलयनाः [11]सर्पा नदीकुटिलगामिनः ॥ तिष्ठन्त्यावृत्य [12]पन्थानं ततो दुःखतरं वनम् ॥ २० ॥
[13]पतङ्गा वृश्चिकाः कीटा दंशाश्च [14]मशकैः सह ॥ बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥ २१ ॥
द्रुमाः कण्टकिनश्चैव [15]कुशकाशाश्च भामिनि ॥ वने व्याकुल[16]शाखाग्रास्तेन दुःख[17]तरं वनम् ॥ २२ ॥
कायक्लेशाश्च बहवो भयानि विविधानि च ॥ अरण्यवासे वसतो दुःखमेव [18]ततो वनम् ॥ २३ ॥
क्रोध[19]लोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ॥ न भेतव्यं च भेतव्ये [20]नित्यं दुःखमतो वनम् ॥ २४ ॥
तदलं ते वनं गत्वा [21]क्षेमं न हि वनं तव ॥ [22]विमृशन्निह पश्यामि बहुदोष[23]तरं वनम् ॥ २५ ॥

वनं तु नेतुं न कृता मति[24]स्तदा बभूव रामेण [25]यदा महात्मना ॥
न तस्य सीता वचनं [26]चकार तत्ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

शक्त्या ॥ १३—१४ ॥ त्रिरभिषेकश्चनैककालइत्याह—कालेकालइति । प्रातर्मध्याह्नसायाह्नेष्वित्यर्थः । एतच्चनकतिपयदिनेषु किंतुप्रतिदिनमित्याह—नित्यश इति ॥ १५ ॥ उपहारोबलिः । "उपहारोबलिर्मतः" इतिहलायुधः । आर्षेण ऋषिप्रोक्तेन । विधिना कल्पेन ॥१६॥ यथालब्धेन यावल्लब्धेन । तेन फलादिनाआहारेण । संतोषः तृप्तिः।यताहारैः नियताहारैः ॥१७॥ अत्र वने । वाताश्चातीव बहुलाः । तिमिरंच रात्रिष्वतीवास्ति । बुभुक्षाचातीवभवति । भयानि पूर्वोक्तानि ॥ १८ ॥ सरीसृपाः गिरिसर्पाः । बहुरूपाः पृथुशरीराः ॥ १९ ॥ नदीकुटिलगामिनः नदीवत्कुटिलगामिनः ॥ २० ॥ पतङ्गाः शलभाः । दंशाः वनमक्षिकाः । "दंशस्तुवनमक्षिका" इत्यमरः ॥ २१ ॥ कुशकाशयोःशाखाःकुशकाशपर्णान्येव ॥ २२ ॥ कायक्लेशाः व्रतोपवासादयः । अरण्यवासे अरण्यरूपवासस्थाने ॥ २३ ॥ भेतव्ये भयहेतुविषये प्रागुक्तसर्पादौ । नभेतव्यं भयंनकार्यम् ॥ २४ ॥ वनंगत्वाऽलमिति "अलंखल्वोः" इतिनिषेधार्थालमुपपदेक्त्वा । नगन्तव्यमित्यर्थः ॥ २५ ॥ रामेणवनंनेतुंमतिर्यदानकृताबभूव तदा सीता तस्यवचनं नचकार नाङ्गीचकार । इदंउत्तरसर्गेवक्ष्यमाणम् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्यानेऽष्टाविंशः सर्गः ॥ २८ ॥

---

"तृतीयासप्तम्योर्बहुलं" इत्युक्तेर्नाम्भावः ॥ १३ ॥ **ति०** चरतां कालक्षेपंकुर्वतां ॥ १५ ॥ **ती०** आर्षेणविधिना वानप्रस्थोचितविधानेन । आर्षोविधिरुञ्छादिवृत्तिः । वेद्यामित्यनेनतत्करणदुःखंध्वनितम् ॥१६॥ **ति०** यथाहारैः यथालब्धाहारैः ॥१७॥ **ति०** अबलेइत्यनेनतन्निवारणासामर्थ्यंध्वनितम् ॥ २१ ॥ **ती०** व्याकुलशाखाः व्याकुलाग्राश्चेतिक्रमात्द्रुमकुशविशेषणम् ॥२२ ॥ **ति०** तान्दोषानिहस्थोपिपश्यामीव । अतोबहुदोषकरंवनं इतिब्रवीमीतिशेषः ॥ २५ ॥ इत्यष्टाविंशःसर्गः ॥ २८ ॥

**[ पा० ]** १ क. च. छ. झ. ञ. ट. चरतां. २ च. छ. झ. ञ. ट. सीते. ३ ख. ग. च—ट. कर्तव्यःसंतोष. ग. घ. ज. कर्तव्यःसंतोषस्तत्र. ४ छ. ज. झ. यथाहारै. घ. यदाहारै. ५ च—झ. ट. सीते. ६ छ. झ. ञ. ट. वातः. ७ छ. झ. ट. चास्ति. ८ छ. झ. अतो. ९ छ. झ. ट. पथिते. १० च. सर्पास्ततो. क. ख. दर्पादतो. ११ घ. सर्वे. १२ ख—ट. पंथानमतो. १३ घ. पतङ्गवृश्चिकाः. १४ घ. पतगैः. १५ घ. च—झ. ट. कुशाः. १६ च. शाखाद्याः. १७ च. छ. झ. ञ. ट. मतो. १८ क—घ. च—ट. सदा. १९ ग. घ. क्रोधमोहौ. २० च. छ. झ. ञ. ट. दुःखंनित्य. ख. घ. नित्यंदुःखतरं. २१ च. छ. झ. क्षेमं. २२ ज. झ. ट. विमृशन्निव. २३ घ. ज. दोषमतो. च. झ. ञ. ट. दोषकरं. २४ छ. झ. ट. यदा. ग. यथा. ज. स्तथा. २५ छ. झ. ट. तदा. च. ज. यथा. क. महात्मनायदा. २६ क. च. ज. ञ. चकारसा. झ. चकारतं.

# एकोनत्रिंशः सर्गः ॥ २९ ॥

ईषदश्रुमुख्यासीतयारामंप्रतितदुक्तवनदोषाणांगुणत्वनिरूपणपूर्वकंस्वस्यपितृगृहवासकालेसामुद्रिकलक्षणविज्ञोद्विजेभ्यः कस्याश्चिद्भिक्षिण्याश्चसकाशाद्भाविवनवासश्रवणस्य तेनसहस्वस्यवनवासोत्कण्ठायाश्चनिवेदनम् ॥ १ ॥ तथाश्रीरामविरहमसहमानयातयावनवासंप्रतिबहुविधंप्रार्थितेनापितेनतदनङ्गीकारेणैवतस्याःपरिसान्त्वनम् ॥ २ ॥

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता ॥ प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥
ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति ॥ गुणानित्येव तां[1]न्विद्धि तव स्नेहपुर[2]स्कृतान् ॥ २ ॥
मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा ॥ पक्षिणः [3]सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥
अदृष्टपूर्वरूपत्वात्सर्वे ते तव राघव ॥ रूपं दृष्ट्वा[4]ऽपसर्पेयु[5]र्भये सर्वे हि बिभ्यति ॥ ४ ॥
त्वया च सह गन्तव्यं मया गुरुजनाज्ञया ॥ त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितम् ॥ ५ ॥
[6]न च मां त्वत्समीप[7]स्थामपि शक्नोति राघव ॥ सुराणामीश्वरः [8]शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥
पति[9]हीना तु या नारी [10]न सा शक्ष्यति जीवितुम् ॥ काममेवंविधं राम त्वया मम विदर्शि[11]तम् ॥ ७ ॥

पूर्वसर्गान्तेइदमित्युक्तावपिपुनरिदमित्युक्तिर्विशेषणविशेषाभिधानार्था । प्रसक्ताश्रुमुखी ईषदश्रुमुखीत्यर्थः ॥ १ ॥ वस्तव्यतां वासित्वं । तान् दोषान् तवस्नेहपुरस्कृतान्गुणानित्येवविद्धि प्रेयसात्वयासहवर्तमानायाःमम कोकिलालापचन्दनमलयमारुतवत्सुखकरान्जानीहीत्यर्थः । अमुमर्थमुपरितनसर्गेकुशकाशेत्यादिश्लोकैर्विवरिष्यति ॥ २ ॥ शरभाः अष्टपादमृगाः । सृमराः गवयाः । भये भयहेतौ । अस्मान्दृष्ट्वा अभिमुखमायास्यन्तीत्युक्तवान्रामः । इयंत्वपसर्पेयुरितितत्परिजहार ॥ ३—४ ॥ गुरुजनाज्ञया पित्रोराज्ञया । त्वयाचसहमयागन्तव्यम् "अर्धोवाएषआत्मनोयत्पत्नी" इतिश्रुत्युक्तप्रक्रिययाजायापत्योरेकात्मत्वात्त्वद्विषयादेशएवमद्विषयादेशइत्यर्थः । त्वद्वियोगेनहेतुना । मे मया ॥ ५ ॥ अपिशब्दोभिन्नक्रमः । सुराणामीश्वरोपीत्यर्थः ॥ ६ ॥ यानारीपतिहीना पतिवियुक्ता । साजीवितुंनशक्ष्यतीत्येवंविधंत्वयाममकामं अत्यर्थं । विदर्शितं उपदिष्टं ।

शि० प्रसक्ता पतिविषयकात्यनुरागविशिष्टा ॥ १ ॥ शि० येदोषास्त्वयाकीर्तिताः तान्गुणानेवविद्धि । इति यतः । तवस्नेहपुरस्कृता त्वद्विषयकस्नेहमात्रदर्शनशीला । अहमस्मीतिशेषः । स० येदोषाइतीतिशब्दान्वयः । यथाश्रुतान्वयेतु इतिनानिपातेन कर्मणोनभिहितत्वरूपनिमित्ताभावाद्द्वितीयानस्यात् स्याच्चप्रथमा । तथाचमाघः "क्रमादमुंनारदइत्यबोधिसः" इति । अवस्तव्यतामितिच्छेदः । वस्तव्यंवासः भावेतव्यप्रत्ययः । नविद्यतेवस्तव्यंयेषांतेअवस्तव्याः तेषांभावस्तत्तातांप्रति अवनवासमुद्दिश्येत्यर्थः । एतेन नतत्वआधिक्यशङ्कानवकाशः । गुणान्विद्धि मांप्रतीतिशेषः । यतोऽहंतवस्नेहपुरस्कृता ॥ २ ॥ स० शरभादीनांपूर्वमभाषितत्वेपि भयजनकमात्रस्यकथनीयतयारामाभिप्रेतत्वेन कण्ठतोनुक्तानुवादोनदोषाय ॥ ३ ॥ स० अपसर्पेयुः पलायनपराभवेयुः । कुतः यस्मात् तव त्वत्तः । सर्वेबिभ्यति । "भीषास्मात्" इत्यादेः ॥ ४ ॥ ती० गुरुजनाज्ञया "इयंसीताममसुतासहधर्मचरीतव । छायेवानुगतासदा" इत्येवंरूपयागुरुजनस्याज्ञया ॥ ५ ॥ स० अयीतिसंबोधनं ॥ ६ ॥ शि० पतिहीना पतिवियोगविशिष्टानारी जीवितुंनशक्ष्यति । अतःहेराम एवंविधं त्वद्वियोगेपिस्थितिकारकं । ममकामं इच्छाविषयीभूतं वस्तु ननिदर्शितं । नकारउभयान्वयी । किंच एवंविधं सहगमननिवारकवचनं मम कामं कस्यसुखस्यअमोगमनंयस्मात्दुःखदमित्यर्थः । निदर्शितं कथितम् । किंच एवंविधं उक्तप्रकारकं । ममकामं मदिच्छाविषयीभूतंवस्तु । त्वयैवनिदर्शितं कौसल्याप्रार्थनासमयेउक्तम् । ति० केचित्तु एवंविधंवनवासदुःखंकामंत्वयाममदर्शितंयद्यपि तथापितादृशवने पतिहीना प्रबलभर्तृहीना । नजीवितुंशक्ष्यति नतुमादृशी प्रबलभर्तृकेतिअहंवनंयास्याम्येवेतिभावइत्याहुः । स० हेराम एवंविधंत्वयानिदर्शितं भरतमाश्रित्यवर्तस्वेत्यादि तत् कामं स्वेच्छानुसारेणैवोक्तं । कुतः पतिहीनायानारीसाजीवितुंनहिशक्ष्यतीति । यद्वा काममेवंविधंजातंभरतत्वेनजातंआश्रयेतियदुक्तं तत् अम-

[ पा० ] १ ख. तान्मन्ये. २ छ. झ. ट. पुस्स्कृता. ३ क. च. छ. झ. ञ. ट. चमराः. ४ क. ख. घ. च. ञ. प्रसर्पेयुः. ५ छ. ट. तवसर्वेहि. क. भयात्सर्वे. ६ ग. घ. छ—ट. नहि. ७ क. ग. घ. च. ट. मपिशक्नोपि. ठ. मयिशक्नोपि. ख. मपिशक्नोहि. ८ क—घ. च—ञ. शक्तः. ९ क. ख. हीनाच. १० क. च. ज. ञ. सान. ११ झ. ट. निदर्शितम्.

[1]अथ चापि महाप्राज्ञ ब्राह्मणानां मया श्रुतम् ॥ पुरा पितृगृहे [2]सत्यं वस्तव्यं किल मे वने ॥ ८ ॥
[3]लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाऽहं वचनं [4]पुरा ॥ वन[5]वासकृतोत्साहा नित्यमेव महाबल ॥ ९ ॥
आदेशो वनवासस्य प्राप्तव्यस्स मया किल ॥ सा त्वया सह [6]तत्राहं यास्यामि प्रिय नान्यथा ॥१०॥
कृतादेशा भविष्यामि गमिष्यामि [7]सह त्वया ॥ कालश्चायं समुत्पन्नः सत्यवाग्भवतु द्विजः ॥ ११ ॥
वनवासे हि जानामि दुःखानि [8]बहुधा किल ॥ प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२ ॥
कन्यया च पितुर्गेहे वनवासः श्रुतो मया ॥ भिक्षिण्याः [9]साधुवृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥
प्रसादितश्च वै पूर्वं [10]त्वं वै बहुविधं प्रभो ॥ गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४ ॥
कृतक्षणाऽहं भद्रं ते गमनं प्रति राघव ॥ वनवासस्य [11]शूरस्य [12]चर्या हि मम रोचते ॥ १५ ॥
शुद्धात्मन्[13]प्रेमभावाद्धि भविष्यामि [14]विकल्मषा ॥ भर्तारमनुगच्छन्ती भर्ता हि [15]मम दैवतम् ॥ १६ ॥
प्रेत्यभावेऽपि कल्याणः संगमो मे [16]सह त्वया ॥ १७ ॥
[[17]पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥ पुत्रा रक्षन्ति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति] ॥ १८ ॥

॥ ७ ॥ अथचापि अपिचेत्यर्थः । हेमहाप्राज्ञ पुरापितृगृहेवसन्त्यामया ब्राह्मणानां ब्राह्मणेभ्यः । ज्योतिर्विद्भ्यः । मे मया । वनेवस्तव्यं किलेतिसत्यंवचनंमया श्रुतं ॥ ८ ॥ लक्षणिभ्यः सामुद्रिकलक्षणज्ञेभ्यः । लक्षणज्ञानमस्त्येषामितिइनिः ॥ ९ ॥ सः ब्राह्मणोक्तः । वनवासस्यादेशः आदिष्टोवनवासइत्यर्थः । मयाप्राप्तव्यःकिल । ललाटलिखितस्यापरित्याज्यत्वादितिभावः । सा एवमादिष्टा । अहंत्वयासहयास्यामि । नान्यथा केवलंस्वेच्छयानयास्यामीत्यर्थः ॥१०॥ फलितमाह—कृतादेशेत्यादि । अयंकालःवनवासकालः । द्विजः लक्षणवादी । जातावेकवचनम् ॥ ११ ॥ वनवासेदुःखानिजानामि । तानि अकृतात्मभिः अशिक्षितमनस्कैः । प्राप्यन्ते नतुमादृशैर्जनैरितिभावः ॥ १२ ॥ कन्ययेत्यादिश्लोकद्वयमेकान्वयम् । भिक्षिण्याः तापस्याः । व्रीह्यादित्वादिनिः । वनवासःश्रुतः भावीतिश्रुतः । इहगृहेत्वयासहवनवासस्यगमनं लीलार्थं जाह्नवीतीरतपोवनादिगमनं काङ्क्षितंहि । त्वंच बहुविधं प्रसादितोवै प्रसादितएवेतिसंबन्धः ॥ १३—१४ ॥ कृतक्षणा कृतोत्सवा । "निर्व्यापारस्थितौकालविशेषोत्सवयोःक्षणः" इत्यमरः । वनवासस्य वनेवासो यस्यइतिवनवासःतस्य । शूरस्यतवचर्या परिचर्या । मम मह्यं रोचते ॥ १५ ॥ शुद्धात्मन् ईर्ष्यादिरहित । प्रेमभावात् प्रेमस्वभावात् । हिःप्रसिद्धौ । भर्तारंत्वामनुगच्छन्ती विकल्मषा विगतकल्मषा । भविष्यामि । नन्वत्रैवस्थित्वाकुलदेवतामाराध्यविशुद्धाभवेत्यत्राह—भर्ताहिममदैवतमिति ॥ १६ ॥ प्रेत्यभावेपि परलोके-

मनिदर्शितं ममतारहितेननिदर्शितं ॥ ७ ॥ **स०** ब्राह्मणानामितिकर्तरिषष्ठी । हेमे रमे अवने निमित्तसप्तमी रक्षणार्थं । पुरा विवाहात्पूर्वं । पितृगृहेवस्तव्यं अनन्तरंपतिनिकटेवनेवस्तव्यमिति सत्यंविप्रैश्श्रुतम् ॥ ८ ॥ **स०** तवरमारमणत्वान्ममचरमालान्त्यक्तुंयोग्याऽहमित्यप्याह । वनवासेषु कमलेषु कृतोत्साहेति ॥९॥ **ति०** अत्रद्विजपदेनरावणोपि । तेन यच्छ्वेतद्वीपेतेनोक्तंलक्ष्मीनिमित्तंत्वत्तोमेवधोस्त्विति तत्सत्यंभवत्वित्यपिगूढंसूचितम् । **स०** द्विजेत्येकवचनेन पूर्वप्रकृतब्राह्मणानामैकमत्यंद्योतयति ॥११॥ **ति०** अत्रत्यमिहेत्युत्तरश्लोकान्वयि । **स०** भिक्षिणी अपभ्रष्टभाषयाकोरवञ्जी । साधुवृत्तायाइत्यनेन नप्रतारणार्थंतदुक्तिरिति सूचयति । इहमातुः एतज्जन्मनिजनन्याः । इहेत्यस्यास्मिन्गृहइति तथा अत्रत्यमिहेतिउत्तरश्लोकान्वयीतिचव्याकरणंचिन्त्यं । अस्मिन्गृहइतीदंशब्दबोध्यरामगृहस्यतदानींतदीयत्वाभावात् । उत्तरश्लोकान्वयित्वस्यचागतिकगतित्वादिति ॥ १३ ॥ **ति०** मे मया । बहुतिथं बहुवारं ॥ १४ ॥ **ती०** कृतक्षणा प्राप्तावसरा । प्रतीक्षितकालेत्यर्थः ॥ १५ ॥ **स०** प्रेष्यभावात् दूत्यात् । **ति०** प्रेमभावात् भर्तारमनुगच्छन्ती विकल्मषाभविष्यामीत्यन्वयः । त्वयाविनाऽत्रस्थितौहिलोकःकल्मषंसंभावयिष्यतीतिभावः ॥ १६ ॥

[ **पा०** ] १ च. छ. झ. ञ. ट. अथापिच. ख. अथवापि. २ क. नित्यं. ३ ख. ग. घ. लाक्षणिभ्यः. च. ञ. लाक्षण्येभ्यो. ४ क. घ. च—ट. गृहे. ५ क. वासे. ६ छ. झ. ट. भर्त्राहं. ७ घ. झ. ट. त्वयासह. ८ घ. विविधानिच. ९ छ. झ. ट. शमवृत्तायाः. १० छ. झ. ट. त्वंमेबहुतिथं. ११ घ. वीराय. १२ च. छ. झ. ञ. ट. ममचर्याहि. १३ ख. प्रेष्यभावाद्धि. घ. प्रेमभावाद्वै. १४ घ. विकिल्बिषा. १५ छ. झ. पर. १६ छ. झ. ट. सदा. १७ इदंपद्यं क. दृश्यते.

श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ॥ इह लोके च पितृभिर्या स्त्री यस्य महामते ॥
अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १९ ॥
एवमस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रताम् ॥ नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ २० ॥
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ॥ नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ॥२१॥
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि ॥ विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ २२ ॥
एवं बहुविधं तं सा याचते गमनं प्रति ॥ नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २३ ॥
एवमुक्ता तु सा चिन्तां मैथिली समुपागता ॥ स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २४ ॥
चिन्तयन्तीं तथा तां तु निवर्तयितुमात्मवान् ॥ ताम्रोष्ठीं स तदा सीतां काकुत्स्थो बह्वसान्त्वयत् ॥२५॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

## त्रिंशः सर्गः ॥ ३० ॥

श्रीरामेणपरिसान्त्व्यमानयासीतयातंप्रतिप्रणयकोपात्तस्यवनेस्वरक्षणसामर्थ्याभावसूचकगर्हणोक्तिः ॥ १ ॥ तथास्वस्यवनवासाचरणेनदुःखाभावंप्रतिपाद्यस्वपरित्यागेनवनगमनेविषपानादिनाप्राणवियोजननिवेदनपूर्वकंविलपन्तींतांप्रतिश्रीरामेणदुःखात्तदनुगमनाङ्गीकारेणब्राह्मणादिभ्योरत्नाभरणादिवितरणचोदना ॥ २ ॥

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ॥ वनवासंनिमित्ताय भर्तारमिदमब्रवीत् ॥ १ ॥
सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् ॥ प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥

---

पि । त्वयासहसंगमःकल्याणः शोभनः ॥१७—१८॥ अत्रप्रमाणमाह—श्रुतिर्हीत्यादिसार्धश्लोकेन । पितृभिरितिबहुवचनंपितामहाद्यपेक्षया । श्रुतिमेवाह—इहेति । महामतइत्यनेननत्वांबोधयामीतिसूच्यते । स्वधर्मेण स्वस्ववर्णोक्तब्राह्मादिविवाहविधिना ॥ १९ ॥ एवं पूर्वोक्तश्रुतिरूपप्रबलप्रमाणसद्भावेपीत्यर्थः । अस्मात् नगरात् । नेतुमित्यनेनान्वयः । यद्वा अस्मात् अद्भिर्दानाद्धेतोः ॥ २० ॥ सुखदुःखयोःसमां प्राप्तयोः सुखदुःखयोरेकरूपां । समानसुखदुःखिनीं त्वत्समानसुखदुःखां ॥ २१ ॥ आस्थास्ये स्वीकरिष्ये ॥२२॥ याचते अयाचत । विजनं बन्धुजनरहितं ॥ २३ ॥ गां भुवं ॥ २४ ॥ ताम्रोष्ठीमित्यनेनसान्त्वादिनाथातुमशक्यत्वमुच्यते ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने एकोनत्रिंशःसर्गः ॥ २९ ॥

---

जनकात्मजेतिविशेषणंस्वकुलोचिताचारदार्ढ्याय । वनवासनिमित्ताय वनवासएवनिमित्तंप्रयोजनंतस्मै ॥ १ ॥ उत्तमसंविग्ना उत्तममत्यन्तंकंपमाना । विपुलवक्षसं शूरमितियावत् । शूरमपिकथंचिक्षेपेत्यत्राह—प्रणयादित्यादि । प्रणयात् स्नेहात् । अभिमानात् मदीयोयमित्यभिमानात् । कोपाद्वा । प्रणयकोपादि-

---

ती० स्वधर्मेण पतिव्रताधर्मेणवर्तमाना । शि० प्राकृतस्त्रीणामपिपातिव्रत्यधर्मस्वीकारेनित्यःपतिसंगमोभवतीत्याह—इहेति । प्रेत्यभावे नित्यलोके । स० सा जन्मान्तरेतस्यपत्नीभवतीतिशेषः । नियतपत्नीविषयमेतदितिज्ञेयम् । स्वस्वत्वापरित्यागायस्येतिषष्ठी ॥ १९ ॥ शि० नानुमेने अनुमतिंनचकार । तेन प्रणयकोपसूचकवचश्शुश्रूषाव्यक्ता । स० सा अयाचत ई इतिच्छेदः । ई लक्ष्मीः सीता ॥ २३ ॥ ति० स्नापयन्तीवेत्युक्त्या तस्याअपिवास्तवदुःखाभावोध्वनितः । रामवाक्यस्यनाट्यतयाज्ञानात् ॥ २४ ॥ इत्येकोनत्रिंशस्सर्गः ॥ २९ ॥

स० वनवासनिमित्तार्थं वनवासएवनिमित्तंयस्यरावणहननादेस्सवनवासनिमित्तःसएवार्थोयस्यतंरामं ॥ १ ॥ ति० अभिमानः अत्यन्तमिष्टत्वेनरहसिकोपप्रीत्यादिप्रयुक्तसकलवचनार्हइत्येवंरूपः । परिचिक्षेप सोपहासवचनमुक्तवती । शि० प्रणयात् प्रकर्षे-

[ पा० ] १ छ. झ. ट. महाबल. २ क. च. केनैव. ३ च. चाहमास्थास्ये. घ. चाहंप्रवेक्ष्ये. ४ च. सातं. ५ घ. ययाचे. ६ क. ग. घ. च. ज. ञ. कुचावुष्णै. ७ झ. ञ. ट. तदा. ८ क. ग. घ. छ—ट. क्रोधाविष्टांतुवैदेहीं. ख. क्रोधाविष्टांतुताम्रोष्ठीं. ९ घ. छ. झ. ट. बहुसान्त्व. १० छ. झ—ठ. निमित्तार्थं. ११ घ. सामुहूर्तमसंविग्ना.

**किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः ॥ राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥**
**अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति ॥ तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥**

तिसंपिण्डितोर्थः । परिचिक्षेप निनिन्द ॥ २ ॥ मां त्यक्त्वावनंगतंत्वांयदिमेपिताश्रृणुयात्तदात्वांरुयेवकाचित्पुरुषवेषंधृत्वामत्कन्यामुपयेमे इतिमन्येतेत्यर्थः । हेराम सौन्दर्यमात्रेणपरभ्रामक । वैदेहः विदेहवंश्यः । " कर्मणैवहिसंसिद्धिमास्थिताजनकादयः " इतिकर्मप्रधानतयाकदाचिदपिपत्नीविरहमसहमानइत्यर्थः । मिथिलाधिपः जनपदस्यसम्यग्रक्षकः । मेपिता त्वा मामेकांरक्षितुमशक्त्यामांपत्नींत्यक्त्वागतंत्वां। प्राप्य ज्ञात्वा। गत्यर्थोज्ञानार्थः । स्त्रियं अन्तःस्त्रीस्वभावं । पुरुषविग्रहं बहिःपुरुषवेषं । जामातरंअमन्यतकिं मन्यतेकिं । अवश्यमित्थंमन्येतेत्यर्थः । स्त्रियं पुरुषविग्रहमितिपुरुषत्वेपिमोहिनीरूपभ्रमकत्त्वं पूर्वकृतं सूचयतीतिप्राहुः ॥ ३ ॥ बतेतिखेदे । अयं लोकः तपतिदिवाकरइवरामेपरंतेजोस्तीतिअज्ञानात् यद्वक्ष्यति वदति । तदनृतं । कुतः । नास्ति अनुपलभ्यमाणत्वात्तादृशंतेजोनास्त्येवेत्यर्थः । यद्वा अयंलोको यद्वक्ष्यति यद्वदति । रामेपरंतेजोस्तीत्यर्थसिद्धं । तत् अज्ञानात् । अतोनृतंबत । तपतिदिवाकरइवरामेपरं तेजोनास्ति । व्यतिरेकदृष्टान्तः । यद्यस्तिदिवाकरइवउपलभ्येतइतिभावः । यद्वा अज्ञानात् रामस्वरूपाज्ञानात् । लोकोयंयद्वदतितदनृतं । किंवदतीत्यत्राह —तेजइति । रामइवतपतिदिवाकरेपरंतेजोनास्तीति

णनयःरामकर्तृकस्वकर्मकनयनंतस्माद्धेतोः । परिचिक्षेप विलक्षणवचनमुच्चारयामास ॥ २ ॥ **ती०** हेराम त्वा त्वां । पुरुषविग्रहं आकारमात्रेणपुरुषं । स्त्रियमेवसंतंजामातरंप्राप्य किममन्यत तत्वंनज्ञातवानित्यर्थः । यदिजानाति तर्हिमांतुभ्यंनप्रयच्छेदित्याक्षेपशेषः । यद्वा "सएववासुदेवोऽयंसाक्षात्पुरुषउच्यते । स्त्रीप्रायमेतत्तत्सर्वंजगद्ब्रह्मपुरस्सरम्" इतिविष्णुपुराणोक्तेःवैदेहोमेपितात्वां जामातरंप्राप्य लोकेत्वद्व्यतिरिक्तंपुरुषविग्रहं पुरुषाकृतिसर्वमपि । स्त्रियममन्यतकिं किमर्थममन्यत । एतादृशकातरंत्वांतथामन्वानो भ्रान्तइत्यर्थः । यद्वा किंत्विति रामज अमातरं प्राप्यस्त्रियंपुरुषविग्रहं इतिपदच्छेदः। हेरामज रमयितुंजात अवतीर्णेति। हेपुरुष क्रीडार्थमवतीर्णपरमपुरुषेत्यर्थः । अमातरंस्त्रियं मातृव्यतिरिक्तांसपत्नीमातरंकैकेयीं। प्राप्य उद्दिश्य। वैदेहोमेपिता । विग्रहं कलहं । अमन्यतकिं नामन्यतैव । कैकेय्यासहैतादृशकलहआयास्यतीतिनज्ञातवानित्यर्थः। तथापिनमांविहायत्वयावनंगन्तव्यमितिभावः । यद्वा रामजामातरमित्येकंपदं । पुरुषविग्रहं पुरुषान्भक्तान्विशेषेणगृह्णाति स्ववशीकरोतीतितथा रामजामातरं । "रमन्तेयोगिनोनन्ते" इतिश्रुतेःआनन्दरूपजामातरं । त्वांप्राप्यवैदेहोमेपिता स्त्रियं स्वस्त्रियं । स्त्रियमित्युपलक्षणं । पुत्रमित्रकलत्रादिकमामुष्मिकंच । सत्यममन्यतकिं किंतुसर्वंतुच्छमितिज्ञात्वापरमानन्दपूर्णोऽभूत् । एतादृशसर्वानन्दकरस्त्वंमांकथंव्यथयसीतिभावः । **शि०** पुरुषविग्रहं पुरुषाकृतिं । स्त्रियं स्त्र्यन्तराकाङ्क्षारहितत्वेनस्त्रीसदृशं। त्वां वैदेहः विदेहकुलोद्भवोमेपिता जामातरंकिममन्यत जामातृत्वेनत्वयिनिश्चयमकरोत् । एवंज्ञानेतुभ्यनंदद्यादितितात्पर्यम् । यद्वा यस्त्वयाप्रापिसवैदेहः विदेहकुलोत्पन्नोमेपिता । पुरुषविग्रहं पुरुषत्वस्यविशेषेणग्रहोज्ञानंयस्मिन्परमपुरुषमित्यर्थः । तंजामातरंत्वां अस्त्रियं स्त्रीरहितं। किं कथं अमन्यत । एतेनतवस्त्र्यन्तरमस्तीत्यनुमीयते । तेनतदर्थमेवतेवनगमनमितिव्यञ्जितम् । किंच अस्त्रियं अस्त्रिणानिखिलास्त्रज्ञेनविश्वामित्रेणसहयातिगच्छतितं विश्वामित्रसहचारिणमित्यर्थः । जामातरंत्वां पुरुषविग्रहं विशेषपुरुषं । किंकथंअमन्यत तवेदृग्वचनश्रवणेनविशेषपुरुषत्वंनप्रतीयतइति तात्पर्यम् । तेनपितुर्भ्रमस्सूचितः । **स०** वैदेहो जनकः । त्वांजामातरंप्राप्य कीदृशंस्त्रियं क्रिययापुरुषाकारंएतादृशंत्वांकिममन्यत तवस्वरूपंनज्ञातवान् । यदिजानीयात्तर्हिनतुभ्यंप्रयच्छेदित्यर्थः । अथवा जगतोमातेतिस्त्रियं पितेतिपुरुषविग्रहं "एषस्त्रीएषपुरुष" इतिश्रुतिमनेनकटाक्षयत्यन्तरङ्गतस्सीतेतिज्ञेयम् । तादृशंत्वांप्राप्यत्वत्स्वरूपं इत्थमितिनामन्यतकिं नज्ञातवान् ॥ ३ ॥ **ति०** यदि मांविहायभवान्वनगमनभारं वक्ष्यति प्राप्स्यति । वहप्रापणेऽस्यरूपं । तदा यदिदंलोकोवदतिरामेयत्तेजस्तत्तपतिदिवाकरेनास्तीवेति तदज्ञानादिवगदितमनृतंभविष्यतीतिशेषः । बतेतिखेदे । खेदातिशयव्यञ्जकतयाचन्यूनपदत्वादिनदोषः । **शि०** नकेवलंमत्पितुरेवभ्रमः एवंत्वद्वचनश्रवणेसर्वेषांभ्रान्तिःप्रकटीभविष्यतीतिबोधयन्त्याह—**अनृतमिति** । यदिमांननेष्यसीतिशेषः । तदादिवाकरेसूर्यइवतपतित्वयि अज्ञानात् त्वन्निश्चितमनयनाभावहेतुविषयकज्ञानाभावाद्धेतोः रामेपरंतेजोनास्तीति अनृतं मिथ्या। अयंलोकोजनः वक्ष्यति वदिता। तेनतद्वचनश्रवणेममखेदोभवितेतिसूचितं । अद्यतनत्वस्याविवक्षा । **स०** तपति तापयितरि । दिवाकरे सूर्यइव । रामेतेजइतिनास्ति लोकोऽज्ञानाद्यद्यस्तीतिवक्ष्यति तदनृतंबतेत्यन्वयः । यद्वा त्वमपिनजनकमनोरञ्जनीति "यादृशोयक्षस्तादृशोबलिः" इतिन्यायेनदानंमह्यमितिनवदेत्यप्याह । दिवाकरे तद्विषये । तपती तत्पुत्रीवाऽहंतत्प्रीतिमतीति । तपतिदिवाकरेकियत्तेजः अन्याधीनंचतावत्तथारामेऽस्तीतिन । किंतुततःपरमधिकंस्वतन्त्रंच । शिष्टंस्पष्टं । "तमेवभान्तमनुभातिसर्वं" इत्यादेः ॥ ४ ॥

[ **पा०** ] १ क. रामं. २ छ. झ—ठ. यदि. च. दभि.

किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ॥ यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५॥
द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रताम् ॥ सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥ ६ ॥
न त्वहं मनसाऽप्यन्यं द्रष्टास्मि त्वदृतेऽनघ ॥ त्वया राघव गच्छेयं यथाऽन्या कुलपांसनी ॥ ७ ॥
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ॥ शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥ ८ ॥
यस्य पथ्यं च रामात्थ यस्य चार्थेऽवरुध्यसे ॥ त्वं तस्य भव वश्यश्च [3]विधेयश्च सदाऽनघ ॥ ९ ॥
स मामनादाय वनं न त्वं प्रस्थातुमर्हसि ॥ तपो वा यदि वाऽरण्यं स्वर्गो वा [6]मे सह त्वया ॥ १०॥
न च मे भविता तत्र कश्चित्पथि परिश्रमः ॥ पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११ ॥
कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ॥ तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥

यद्वदतितदनृतमितिपूर्वेणान्वयः ॥ ४ ॥ किंहिकृत्वा किमकार्यंकृत्वा । विषण्णः "अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीत्" इत्युक्तावश्यभरणीयविषयेविषादप्राप्तिर्नयुक्तेतिभावः । ते कालाग्निसदृशक्रोधस्यतव । यत् यस्मात्कारणात् । मांपरित्यक्तुकामोसि तादृशंकारणंनास्तीत्यर्थः । यद्वा किंहिकृत्वा किंमनसिकृत्वा । किंविचार्येत्यर्थः । यद्यस्मात् विषादात्भयाच्चमांपरित्यक्तुकामोसि ॥ ५—६ ॥ हेराघव अन्याकुलपांसनीयथा कुलपांसनीव । अहंत्वदृतेअन्यंमनसापिनद्रष्टास्मि नद्रक्ष्याम्येव । अतस्त्वयागच्छेयमितियोजना ॥ ७ ॥ दृढपातिव्रत्यप्रदर्शनेपिवनगमनासंमतिंज्ञात्वा क्रुध्यति—स्वयमिति । कौमारीं कुमारावस्थायामेवपरिणतां । शैलूषइव जायाजीवइव । "शैलालिनस्तु शैलूषाजायाजीवाःकृशाश्विनः" इत्यमरः । परेभ्यः स्वयंदातुमिच्छसि ॥ ८ ॥ मातरंशुश्रूषस्वेतियदुक्तं तत्रपरिहारमाह—यस्येति । यस्यमातृजनस्य पथ्यं हितं आत्थ । यस्यचार्थेअवरुध्यसे मांनिवारयसे । तस्य जनस्य त्वमेववश्यः अनुकूलः । विधेयः प्रेष्यश्च । भव । अहंतुत्वामनुयास्यामीत्यर्थः । यद्वा यस्यमद्रूपजनस्य पथ्यंचात्थ एतावत्पर्यन्तंयस्यचार्थेअवरुध्यसे क्लिश्यसि । तस्यजनस्यत्वंवश्योविधेयश्चभव । त्वमेवमद्वचनंशृण्वित्यर्थः । अथवा यस्यभरतस्य पथ्यमात्थ यस्यचार्थे यस्याभिषेकरूपप्रयोजननिमित्ते । अवरुध्यसे निगृहीतोसि । तस्यवश्यः इच्छानुसारी । विधेयश्च प्रेष्यश्च । भवेतिसंबन्धः ॥९॥ वश्योविधेयश्चत्वं तपोवा तपश्चरणंवा । अरण्यं अरण्यवासोवा । स्वर्गोवा स्वर्गगमनंवा । त्वयासहभवत्वितिशेषः ॥१०॥ पथितवपृष्ठतोगच्छन्त्यामे विहारशयनेष्विव विहारः परिक्रमः उद्यानसंचारइतियावत् । "विहारस्तुपरिक्रमः" इत्यमरः ॥ ११ ॥ त्वयासहगच्छन्त्याममं तूलाजिनसमस्पर्शाः तूलं तूलपिण्डः । अजिनं कन्द्ल्याद्यजिनं "कदलीकन्दलीचीनचमूरुप्रियकाअपि । समूरुश्चेतिहरिणाअमीअजिनयोनयः" इत्यभिधाना-

**स०** सत्यवन्नामानंपतिंसावित्रीनामिकाविवाहात्प्राक्नारदेनअल्पायुस्सइतिबोधितापियतोमनसातंसंकल्पितवतीअतोनाहंतंत्यक्ष्यामीत्युक्त्वातमेवसत्यवन्तमुद्वाह्य एकवत्सरानन्तरंवनेमृतंयमेननीयमानंपतिमनुगम्ययमात्तंमोचयित्वाजीवितंतंपुनर्बाहुभ्यांगृहीत्वास्वाश्रममागतवतीतिभारतवनपर्वोक्ताकथाज्ञेया ॥६॥ **ती०** यद्वा भरतायरामकर्तृकराज्यदानमसहमानाह । हेराम भार्यां भर्तुर्योग्यां । कुतःसतीं अनश्वरां । कुतः चिरमध्युषितां पितृपितामहाद्यागतां । कौमारीं कुमारावस्थेनत्वयाप्राप्यां यौवराज्यरूपामित्यर्थः । मां राज्यलक्ष्मीं । शैलूषइववेषधारीसन् परेभ्योभरतादिभ्योदातुमिच्छसि । इदंतवनोचितमितिभावः ॥ ८ ॥ **स०** यस्यभरतस्य पथ्यंचरां तदनुवर्तिनीं । आत्थ संप्रत्येवकथितवानसि । यस्यचार्थे प्रयोजनविषये । अवरुध्यसे निगृहीतोसि । तस्यभरतस्य भवोरुद्धः वश्यःअधीनोयस्यसःभववश्यस्त्वं विधेयोनियोज्योभव । पथ्यंचरामित्यत्रमुमागमइवङीबभावश्चार्षः । एतेन वश्यविधेयशब्दयोःपौनरुक्त्यंपरिहृतंभवति ॥९॥ **स०** अनादाय आङाल्वाप्रत्ययान्तेनसमासेल्यपिअनन्तरंनञासमासः । तेन "समासेऽनञ्पूर्वेक्त्वोल्यप्" इतिनिषेधस्यनावकाशः ॥ १० ॥ **ति०** विहारशयनेषुसुप्तायाइवारण्येगच्छन्त्यानमेपरिश्रमइतियोजना । **स०** पूर्वमग्रतस्तेगमिष्यामीत्युक्तरेत्रपुनःपृष्ठतस्तवगच्छन्त्याइत्युक्तेश्चकदाचित्पुरतःकदाचित्पृष्ठतश्चगमनमनुचरस्वभावइतिज्ञायते । तत्राग्रतइत्युक्ति-

[ **पा०** ] १ छ. झ. ट. ठ. वीरं. २ च. छ. झ. ञ. ट. त्वन्यं. ३ च. नियोज्यश्च. ४ छ. झ. ट. प्रस्थितुं. ५ च. राज्यं. ६ च—ठ. स्यात्त्वयासह. क. ख. घ. स्यात्सहत्वया. ७ ख. शयनेष्वपि. ८ क. सहमम.

महावातसं[1]मुद्भूतं यन्मा[2]मपकरिष्यति ॥ रजो रमण [3]तन्मन्ये परार्ध्यमिव चन्दनम् ॥ १३ ॥
शाद्वलेषु [4]यथा शिश्ये वनान्ते वनगोचर ॥ [5]कुथास्तरणतल्पेषु किं स्यात्सुखतरं [6]ततः ॥ १४ ॥
[7]पत्रं मूलं फलं [8]यत्त्वमल्पं वा यदि वा बहु ॥ [9]दास्यसि स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥ १५ ॥
न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः ॥ आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥
न च तत्र [10]गतः किञ्चिद्द्रष्टुमर्हसि विप्रियम् ॥ [11]मत्कृते न च ते शोको न भविष्यामि [12]दुर्भरा ॥ १७ ॥
यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ॥ इति जानन्परां प्रीतिं गच्छ राम मया सह ॥ १८ ॥
अथ मामेवमव्यग्रां वनं नैव न[13]यिष्यसि ॥ विषमद्यैव पास्यामि [14]माविशं द्विषतां वशम् ॥ १९ ॥
पश्चादपि हि दुःखेन मम नैवास्ति जीवितम् ॥ उज्झितायास्त्वया नाथ [15]तदैव मरणं [16]वरम् ॥ २० ॥
[17]इमं हि सहितुं शोकं मुहूर्तमपि नोत्सहे ॥ किंपुनर्दश वर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥

त् । भवन्तीतिशेषः ॥ १२ ॥ परार्ध्यं श्रेष्ठं । चन्दनं वासितं । चन्दनचूर्णमित्यर्थः ॥ १३ ॥ शाद्वलेषु बालतृणवत्प्रदेशेषु । शिश्ये त्वयासहेतिशेषः । कुथाश्चित्रकंबलाः । आस्तरणानि कौसुंभोत्तरच्छदाः । तैर्युक्तेषुतल्पेषु ॥ १४—१५ ॥ मातुरित्यादौ "अधीगर्थदयेशां" इतिषष्ठी । आर्तवानि तत्तदृतुसमुत्पन्नानि ॥ १६ ॥ तत्र वने । गतस्त्वंमत्कृते मन्निमित्तं । किञ्चिद्विप्रियं दुःखं । द्रष्टुंनार्हसि । तेशोकश्चनभवेत् । अतोदुर्भरा दुःखेनभर्तव्या । नभविष्यामि ॥ १७ ॥ किंबहुनोक्तेननिश्चितमेकंसङ्क्षेपतःशृण्वित्याह—यइति। त्वयासहयोवासः सःस्वर्गः मेस्वर्गसमः । त्वयाविना योवासः सःनिरयः नरकोपमः । त्वत्संश्लेषविश्लेषादन्येनमेसुखदुःखेस्तइतिभावः । इति एवं । परां विश्लेषासहां । प्रीतिं जानन् पूर्वमपिबहुशोऽनुभवन् । मयासहगच्छ ॥ १८ ॥ अथेति प्रश्ने । एवं उक्तप्रकारेण । अव्यग्रां वनगमनविषयभीतिरहितां । अद्यैव त्वत्सन्निधावेव । द्विषतां भरतादीनां । वशं माविशं नप्राप्नुयां । विरहोवाद्विषन्तः ॥ १९ ॥ पश्चादपि त्वद्गमनानन्तरमपि । उज्झितायाः त्यक्तायाः । तदैव त्वत्सन्निधानकालएव ॥ २० ॥ विषकृतदुर्मरणाद्दुः-

र्गमनलौल्यात् अत्रपृष्ठतइत्युक्तिर्विहितत्वादितिवाबोध्यम् । अपरिचितेपथियोषितोऽग्रगमनायोग्यत्वात् ॥ ११ ॥ **स०** अवकिरिष्यति कृविक्षेपेइत्यतोलृट् विक्षेप्स्यति । प्राप्नोतीतियावत् ॥१३॥ **स०** शिश्येउत्तमपुरुषैकवचनमेतत् । वनगोचरा वनानिप्रलयजलानिचगावःवेदरूपशब्दाश्चवनगावःतासुचरश्चरणंअभिमानितयागमनंयस्यास्सावनगोचराअहं यदा वनान्ते वनमध्ये शाद्वलेषुशिश्यइत्यन्वयः । वनान्तर्वणगोचरेतिपाठे "प्रनिरन्तश्शर—" इत्यादिनाणत्वं । वनं महावनं । अन्तर्वणं तन्मध्यवर्ति । ततः शाद्वलशयनात् ॥ १४ ॥ **ति०** स्वयमाहृत्यदास्यसइत्यनेन स्वस्यतदाहरणप्रयुक्तश्रमाभावस्सूचितः । **स०** स्वयं साक्षात् दास्यसि किंकरीअसि । इति पत्राद्याहृत्ययदिदास्यसि मे मह्यं । तन्मेऽमृतरसोपममित्यावृत्तेनान्वयः ॥ १५ ॥ **स०** आर्तवानि "समयस्तदस्यप्राप्तं" इत्यधिकारे "ऋतोरण्" इत्यण् । प्राप्तवसन्ताद्यृतुकानि ॥ १६ ॥ **ति०** ततः उक्तहेतोः ॥ १७ ॥ **स०** यस्त्वयेत्यत्रत्ययुष्मच्छब्दस्यतत्कालीनसंबोध्यरामत्वविशिष्टेशक्तिः । रामत्वस्यैवशक्यतावच्छेदकत्वं । तत्कालीनसंबोध्यत्वस्यचशक्यतावच्छेदकतावच्छेदकत्वं । विशेषणत्वंचततत्पदजन्यबोधविषयत्वं । उपलक्षणत्वंचततत्पदजन्यबोधविषयत्वेनशक्त्यविषयत्वं । एवंमयेत्यस्मच्छब्दस्यतत्कालीनस्वतन्त्रोच्चारयितृसीतात्वविशिष्टेवस्तुनिशक्तिः । उक्तरीत्यासीतात्वादेरेवविशेषणादित्वाच्छक्यतावच्छेदकत्वादिबोध्यम् । तथाच इदानींसीतासंबोध्यरामेणसहवासइतियत् सस्वर्गः । विनातुयोवासः सनिरयइतिजानन् राम इदानींस्वतन्त्रोच्चारयित्र्यासीतयासहप्रीतिंहर्षंगच्छप्राप्नुहीत्युपलक्षणार्थघटितश्लोकार्थः । स्वतन्त्रेतिविशेषणान्नमयेत्यस्माद्वाल्मीकेर्बोधः । अनयैव दिशा "मादृशोनपरःपापी" "दासोहमितिमांमत्वा" इत्यादयस्समाधातव्याः ॥ १८ ॥ **शि०** द्विषतां त्वद्वियोगहेतुकसर्ववस्तुविषयकप्रीत्यभावविशिष्टानांभवन्मात्रादीनां । अवशं अप्रीतिहेतुककान्त्यभावं । मागमं नप्राप्स्यामि द्रष्टुंनशक्ष्यामीत्यर्थः । एतेन दुःखादर्शित्वंगुणःसीतायाव्यक्तः ॥ १९ ॥ **ती०** तदैव त्वद्विप्रयोगकालएव ॥ २० ॥ **ति०** विगृह्यकथनेन वनवासकालसंख्या-

[ **पा०** ] १ च. छ. झ. ञ. समुद्धूतं. २ ख. घ. छ—ठ. मवकरिष्यसि. ३ क. तन्मंस्ये. ४ च. छ. झ—ठ. यदा. क. ख. यदासिष्ये. ५ च. ञ. कुशास्तरण. छ. कुशास्तरणयुक्तेषु. झ. ट. कुथास्तरणयुक्तेषु. ६ ख. मम. ७ ञ. पत्रमूलफलं. ८ छ. पुष्पमल्पं. झ. ट. यत्तुअल्पं. ज. यद्यदल्पं. ९ ख. च. छ. झ. ञ. ट. दास्यसे. १० च. छ. झ—ठ. ततः. ११ ज. त्वत्कृतेनचमे. १२ ज. दुर्धरा. छ. दुर्मनाः. १३ क. ख. च. छ. झ. ञ. ट. नयिष्यसे. १४ ख. मागमंद्विषतां. छ. ज. झ. ट. मावशंद्विषतांगमम्. १५ क. च. ज. तथैव. १६ ख. ध्रुवम्. १७ क. ख. इमंतु.

इति सा शोकसंतप्ता विलप्य करुणं बहु ॥ चुक्रोश [1]पतिमायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२ ॥
सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना ॥ [2]चिरंसंनियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥
तस्याः स्फटिकसङ्काशं वारि संतापसंभवम् ॥ नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥
[3]तच्चैवामलचन्द्राभं मुखमायतलोचनम् ॥ पर्यशुष्यत बाष्पेण जलोद्धृतमिवांबुजम् ॥ २५ ॥
[4]तां परिष्वज्य बाहुभ्यां [5]विसंज्ञामिव दुःखिताम् ॥ उवाच वचनं [6]रामः परिविश्वासयं[7]स्तदा ॥ २६ ॥
न देवि तव दुःखेन स्वर्गमप्यभिरोचये ॥ न हि मेऽस्ति भयं किंचित्स्वयंभोरिव सर्वतः ॥ २७ ॥
तव सर्वमभिप्रायमविज्ञाय शुभानने ॥ वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥
यत्सृष्टाऽसि मया सार्धं वनवासाय मैथिलि ॥ [8]न विहातुं मया शक्या [9]कीर्तिरात्मवता यथा ॥२९॥
धर्मस्तु गजनासोरु सद्भि[10]राचरितः पुरा ॥ तं [11]चाहमनुवर्तेऽद्य यथा सूर्यं सुवर्चला ॥ ३० ॥
न [12]खल्वेहं न गच्छेयं वनं जनकनन्दिनि ॥ वचनं तन्नयति मां पितुः सत्योपबृंहितम् ॥ ३१ ॥

खेनमरणंज्यायइत्याशङ्क्याह—इममिति । आदौदशवर्षाणि मध्येत्रीणिवर्षाणि अन्तेएकवर्षंच तुल्यतयाभातिविरहिण्याइत्यावेदयितुंविभज्योक्तिः ॥ २१ ॥ आयस्ता आयासंप्राप्ता । प्रशिथिलगात्रीत्यर्थः । सस्वरं सतारध्वनीत्यर्थः ॥ २२ ॥ विद्धा ताडिता । वाक्यैः पूर्वरामोक्तैः । दिग्धैः विषलिप्तैर्बाणैः । चिरसंनियतं वार्ताप्रसङ्गेनचिरात्संनिरुद्धं । अरणिरित्यत्रापिविद्धेत्यनुषञ्जनीयं ॥ २३ ॥ स्फटिकसङ्काशमित्यनेनविकज्जलतावगमाच्चिरविगलितधारत्वमवगम्यते । उदकं मकरन्दरूपं । तद्धयुष्णं निर्मलंच ॥२४॥ अमलसङ्काशमितिपाठे अमलतयाप्रकाशमानं। बाष्पेण संतापसंभवेनोष्णेन। अंबुजपक्षेऊष्मणेत्यर्थः । "बाष्पऊष्मा" इत्यमरः ॥ २५ ॥ विसंज्ञामित्यनेन मूर्च्छाभावःसूच्यते । परिविश्वासयन् सम्यग्विश्वासयन् ॥ २६ ॥ तवदुःखेनहेतुनाप्राप्यंस्वर्गमपिनरोचये । त्वयिदुःखितायांस्वर्गमपिनेच्छामीत्यर्थः । स्वयंभोः नारायणस्य । नतुचतुर्मुखस्य । तस्यमधुकैटभादिभ्योभयसंभवात् । आर्षोङुप्रत्ययः । सर्वतः सर्वजन्तुभ्यः ॥ २७ ॥ तवविरहदुःखासहिष्णुरपि निर्भयोपि शक्तिमानपि तवान्तराभिप्रायानभिज्ञानादेतावत्पर्यन्तं त्वांवनंनेतुंनेच्छामीतिभावः ॥ २८ ॥ सृष्टा दैवेनेतिशेषः । आत्मवता शीलवता । अतिकृच्छ्रावस्थायामप्यक्षुभितमनस्केनवा । यच्छब्दयोगात्तदितिपूरणीयम् ॥ २९ ॥ इदंपत्न्यासहवनगमनंरागप्राप्तंनभवति अपितुशिष्टाचारसिद्धमित्याह—धर्मइति । धर्मः वानप्रस्थधर्मः । सद्भिः सपत्नीकैराजर्षिभिः । यथासूर्यंसुवर्चलेतिभिन्नलिङ्गयोरप्यौपम्यमार्षं । यथासूर्यंसुवर्चलादेवी तद्वन्मामनुवर्तस्वेतिवार्थः ॥ ३० ॥ सत्योपबृंहितंपितुर्वचनं मांवनंनयतिखलुं तत् तस्मात्कारणात् । अहंनगच्छेयमितिन अद्यैवगच्छेयमेवेत्यर्थः ॥३१॥

याअतिदुस्तरत्वंध्वनयति ॥ २१ ॥ **स०** पङ्कजाभ्यां सद्यस्सरसउत्कृत्ताभ्यां ॥ २४ ॥ **ति०** सितापौर्णमासीतत्संबन्धीअमलो राह्वाद्यनुपरक्तःयश्चन्द्रस्तत्सदृशं । जलोद्धृतं जलमुद्धृतंयस्मात् । आहिताग्न्यादिः । **शि०** सितेशुक्लपक्षे अमलःअन्धकारनिवर्तकः यश्चन्द्रःपूर्णिमाचन्द्रइत्यर्थः । तत्सदृशं । पर्यशुष्यतेव । इवउभयान्वयी । **स०** सिता श्वेतशर्करा । "सितास्याच्छ्वेतशर्करा" इत्यभिधानात् ॥ २५ ॥ **ती०** स्वयंभोरिवसर्वतः सर्वेषांआयुर्भाग्यंचलिखितुंपरिमार्ष्टुंचकर्तुर्ब्रह्मणोयथाकुतश्चिदपिभयंनास्तितद्वदित्यर्थः । **स०** स्वयंभोः ब्रह्मणः । आर्षोयंङुः । सर्वतः सर्वशब्दोरुद्रवाचकः । उपलक्षणयासर्वसुपर्वग्रहः । रुद्रादिभ्योब्रह्मणोयथाभयंनास्तितथा ममसर्वतोपिभयंनास्तीत्यर्थः ॥ २७ ॥ **ति०** आत्मवता आत्मज्ञेन । यथा प्रीतिः दया । हातुमशक्या ॥२९॥ **स०** तत् पितृवचनं । मां नयति । नखलु नैर्वृक्षैःखंसुखंखानिइन्द्रियाणिवालुनातिछिनत्तीतितत्तथावनं । नगच्छेयंस्वयं । किंतु । यद्वा खलुनिषेधार्थे । तथाचवनं नगच्छेयंनखलु नगच्छेयमेवेत्यर्थः । "नकारस्त्वागतेबन्धौस्तुतौवृक्षेच" इति "खलुनिषेधने" "खमिन्द्रियेसुखे"

[ **पा०** ] १ क. घ. ज. भृशमायस्तापति. २ घ. ज. संनिहितं. ३ छ. झ—ठ. तत्सितामल. ४ ख. परिष्वज्यच. ५ ख. मसंज्ञामिव. ६ क. वीरः. ७ ज. स्तथा. ८ ज. माविहातुं. ९ क. घ. च. छ. झ—ठ. प्रीतिरात्म. १० ख. चरितोहिसः. ११ छ. वाहमनु. च. झ—ठ. चाहमनुवर्तिष्ये. १२ च. खल्वहंतु.

एष धर्मस्तु सुश्रोणि पितुर्मातुश्च वश्यता ॥ अतश्च तं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥ ३२ ॥
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ॥ स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥
यत्रैयं तत्रयो लोकाः पवित्रं तत्समं भुवि ॥ नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥ ३४ ॥
न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः ॥ तथा बलकराः सीते यथा सेवा पितुर्हिता ॥ ३५ ॥
स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च ॥ गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥३६॥
देवगन्धर्वगोलोकान्ब्रह्मलोकांस्तथा नराः ॥ प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥
स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ॥ तथा वर्तितुमिच्छामि स हि धर्मस्सनातनः ॥३८॥
मम सन्ना मतिस्सीते त्वां नेतुं दण्डकावनम् ॥ वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥३९
सा हि सृष्टाऽनवद्याङ्गि वनाय मदिरेक्षणे ॥ अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४० ॥

पितुर्मातुश्चवश्यतेत्येषएवधर्मः । वश्यता विधेयता । अहं पितृवचनपरिपालनोद्युक्तोहं । तंव्यतिक्रम्य मातापितृविधेयत्वरूपधर्मंव्यतिक्रम्य जीवितुंनोत्सहइतिसंबन्धः ॥ ३२ ॥ माभूत्पितृवचनकरणं दैवमाराध्यास्माभिरत्रैवस्थातव्यमित्यत्राह—अस्वाधीनमिति । अस्वाधीनं आराधकानधीनं । स्वतन्त्रमितियावत् । यद्वा अस्वाधीनंप्रत्यक्षतयाअनाज्ञापयत् । स्वाधीनं प्रत्यक्षतयानियोजयन्तं । गुरुं गुरुंचेत्यर्थः । प्रकारैःआराधनप्रकारैः ॥ ३३ ॥ यत् गुर्वादित्रयं तत् त्रयोलोकाः । लोकत्रयमपितदाराधनसाध्यमित्यर्थः । भुवि तत्समंपवित्रमन्यन्नास्ति "गगनंगगनाकारं" इतिवत्स्वस्यस्वेनौपम्यसंभवात्तद्व्यावृत्त्यर्थमन्यपदं । तेनकारणेन । इदं गुर्वादित्रयं । अभिराध्यते ॥ ३४ ॥ पितृवाक्यस्यसत्यादिवैलक्षण्यमाह—नसत्यमिति । हिता हितकरी । पितुःसेवायथाबलकरी तथासत्यादयो नबलकराः नपरलोकबलकराः । नपारत्रिकाभ्युदयसाधकाइत्यर्थः ॥ ३५ ॥ स्वर्गादीनि गुरुवृत्त्यनुरोधेन सिध्यन्तीतिशेषः । गुरूणां मात्रादीनां । वृत्तिः शुश्रूषणं । तदनुरोधेन तदनुवर्तनेन । "अनुरोधोनुवर्तनं" इत्यमरः ।व्यतिरेकेणाप्याह—नकिञ्चिदिति॥३६॥ क्रमेणब्रह्मलोकंप्राप्नुवन्तीतिभावः । नराइतिसर्ववर्णसाधारण्योक्तिः । महात्मानः दृढमनस्काः । मातेति । तच्छुश्रूषणैकरताइत्यर्थः ॥ ३७ ॥ मा मां सः स्वतन्त्रः । वर्तितुं अनुष्ठातुं । सः वर्तनम् । धर्मापेक्षयापुंस्त्वम् ॥ ३८ ॥ सन्ना त्वद्भावापरिज्ञानात्क्षीणा । सात्वं मयासहवसिष्यामीतिमामनुयातुंसुनिश्चिता । तेनइदा-

इतिचविश्वः । एवमर्थकरणेवचनं"तन्नयतिमांपितुः" इत्याद्युचितार्थंभवतीतिज्ञेयम् ॥३१॥ **स०** एकत्राहमव्ययं । अहङ्कारेणेत्यर्थः ॥३२॥ **शि०** यत्र मात्राद्याराधने त्रयं धर्मार्थकामाः ।अस्तीतिशेषः । अतएवत्रयःऊर्ध्वाधोमध्यवर्तिनःलोकाःजनाःयत्रवर्तन्तइति शेषः । अतस्तत्समंपवित्रंअन्यन्नास्ति । तेनहेतुना इदं पितृवचनं । अभिराध्यते परिपाल्यते । अर्थशब्देनपरमपुरुषार्थभूतमोक्षस्यापिग्रहणान्नव्याख्यानेन्यूनता । अतएवत्रयमित्युक्तिस्सानुकूला । **स०** यत्रत्रयं पित्रादित्रयं । तत्र त्रयोलोकाः भूर्भुवस्स्वराख्याः वैकुण्ठादयोवा सन्ति । तत्समं पवित्रं पवेर्महाभयात्त्रायतइतिवापवित्रं । शुभःअपाङ्गःमन्मथः यस्याःपुत्रत्वेनतथा । तस्यास्संबुद्धिःहेशुभापाङ्गे । "पविर्वज्रंमहाभयं" इत्यभिधानम् ॥ ३४ ॥ **स०** पूर्वंत्रयाणांग्रहणेपिअत्रपितुरेवग्रहणं तद्वचनस्यसुकार्यहेतुत्वेनतस्यप्राधान्याभिप्रायेण ॥ ३५ ॥ **स०** देवगन्धर्वाः .साक्षाद्देवप्रेष्याः । गोलोकश्चन्द्रलोकः । नाकलोकोवा मातृलोकोवा । "स्वर्गेमातरिगौः" इतिरत्नमाला । "गौर्नाकेवृषभेचन्द्रे" इतिविश्वः । "सयदिपितृलोककामोभवति" इतिश्रुतेः ॥ ३७ ॥ **स०** सत्याकैकेय्याअधर्मपथेस्थितइतिवा ॥ ३८ ॥ **ती०** त्वद्भावापरिज्ञानात्त्वांवनंनेतुंपूर्वंममममतिः सन्ना क्षीणा । यतोवनेवसिष्यामीतिमामनुयातुंमतिः त्वन्मतिस्सुनिश्चिता । अतः पूर्वसन्नामेमतिरिदानींत्वांवनंनेतुमुद्युक्तेतिशेषः । **शि०** सन्ना प्राप्ता । **स०** यतस्त्वंअनुयातुंसुनिश्चिता अतस्त्वांनेतुंममया अमतिः सा सन्ना विशीर्णा ॥ ३९ ॥ **ति०** सात्वं हि यतोऽधुना वनाय वनगमनाय ।

[ **पा०** ] १ ख. घ. च—ट. धर्मश्च. २ छ—ठ. आज्ञांचाहं. क. ञ. आज्ञामहं. ख. घ. च. अतश्चाहं. ३ अस्मिञ्श्लोकेपूर्वोत्तरार्धयोः क—घ. ज. पुस्तकेषुपौर्वापर्यंदृश्यते. ४ छ. झ. ञ. ट. यत्रत्रयंत्रयो. क—घ. यत्रत्रयंतत्र. ज. यत्रतत्रत्रयो. ५ छ. झ—ठ. यज्ञोवाप्याप्तदक्षिणः. क. ञ. यज्ञावाप्याप्तदक्षिणाः. ख. घ. यज्ञावावाप्तदक्षिणाः. ६ च. छ. झ. ञ. ट. मैता. ७ क. पुत्राविद्याः. ८ ख. घ. ज. सुखानिवा. ९ क. च. लोकांश्च. १० छ. झ. ट. परान्. ११ क. च. छ. ज. ञ. मांपिता. १२ च. छ. झ. ञ. ट. नेतुंत्वां. १३ ख. प्रपत्स्यामीति. १४ घ. छ. झ—ठ. दिष्टा. च. हृष्टा.

सर्वथा सदृशं सीते मम स्वस्य कुलस्य च ॥ व्यवसाय[1]मतिक्रान्ता कान्ते [2]त्वमतिशोभनम् ॥ ४१ ॥
आरभस्व [3]शुभश्रोणि वनवासक्षमाः क्रियाः ॥ नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ॥ ४२ ॥
ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् ॥ देहि चाशंसमानेभ्यः संत्वरस्व च मा चिरम् ॥ ४३ ॥
भूषणानि महार्हाणि वरवस्त्राणि यानि च ॥ रमणीयाश्च ये केचि[4]त्क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥
शयनीयानि [5]यानानि मम चान्यानि [6]यानि च ॥ देहि स्व[7]भृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५ ॥
[8]अनुकूलं तु सा भर्तुर्ज्ञात्वा गमनमात्मनः ॥ [9]क्षिप्रं प्रमुदिता देवी [10]दातुमेवोपचक्रमे ॥ ४६ ॥
*ततः प्रहृष्टा प्रति[11]पूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम् ॥
धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥ ४७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रिंशस्सर्गः ॥ ३० ॥

---

## एकत्रिंशः सर्गः ॥ ३१ ॥

लक्ष्मणेनश्रीरामंप्रतिवनवासार्थंस्वस्यापिसहनयनप्रार्थना ॥ १ ॥ श्रीरामेणलक्ष्मणंप्रतिकौसल्यादिपालनविधानपूर्वकंस्वानुगमननिषेधः ॥ २ ॥ पुनर्लक्ष्मणेनरामंप्रतिकौसल्यासुमित्रयोःकैमुत्येनात्मभरणसामर्थ्यप्रतिपादनेनवनेफलाहरणादिनातत्सेवननिवेदनम् ॥ ३ ॥ लक्ष्मणवचनश्रवणतुष्टेनरामेणतस्यस्वानुगमनाङ्गीकारेणतंप्रत्यायुधाहरणचोदनपूर्वकंधनादिवितरणेच्छयासुयज्ञानयनचोदना ॥ ४ ॥

एवं श्रुत्वा [12]तु संवादं लक्ष्मणः पूर्वमागतः ॥ बाष्पपर्याकुलमुखः शोकं सोढु[13]मशक्नुवन् ॥ १ ॥
स भ्रातुश्चरणौ [14]गाढं [15]निपीड्य रघुनन्दनः ॥ सीता[16]मुवाचातियशा राघवं च महाव्रतम् ॥ २ ॥

---

नींज्ञातासीतिभावः ॥३९॥ सृष्टा दैवेनेतिशेषः ॥४०॥ व्यवसायं भर्त्रनुसरणाध्यवसायं । अतिक्रान्ता प्रकर्षेणप्राप्ता । "प्रकर्षेलङ्घनेप्यति" इत्यमरः ॥ ४१ ॥ वनवासक्षमाः वनवासहिताः । "क्षमंशक्तेहितेत्रिषु" इत्यमरः । क्रियाः दानादिक्रियाः ॥ ४२ ॥ आशंसमानेभ्यः अर्थयमानेभ्यः ॥ ४३ ॥ क्रीडार्थाश्चाप्युपस्कराः । जातरूपमयकृत्रिमपुत्रिकालीलापाकभाजनादिविचित्रोपकरणानि ॥ ४४ ॥ ब्राह्मणानामनन्तरंस्वभृत्यवर्गस्यदेहीतिसंबन्धः ॥ ४५ ॥ अनुकूलं संमतं ॥ ४६ ॥ प्रतिपूर्णमानसा निश्चिन्तेत्यर्थः । अवेक्ष्य आलोच्य । धर्मभृतां धर्मभृद्भ्यः । मनस्विनी निश्चितमनस्का ॥४७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणेपीतांबराख्यानेअयोध्याकाण्डव्याख्यानेत्रिंशःसर्गः ॥ ३० ॥

---

एवंरामेणसीतागमनेऽङ्गीकृतेलक्ष्मणस्यानुगमनप्रार्थनमुपक्षिपति—एवमित्यादिना । श्लोकद्वयमेकंवाक्यं। एवंसंवादं पूर्वोक्तंसीतारामयोःसंवादं । पूर्वमागतः कौसल्यागृहाद्रामेणसहपूर्वमेवागतः । शोकं अर्धशरीरभूतायाःसीतायाअपिवनानुगमनं कृच्छ्रादप्यङ्गीकृतं म-

---

दिष्टा मयाअनुज्ञाता । अतोमामनुगच्छस्व । सहधर्मचरीभवेत्यनेन वनवाससाध्यस्यस्वधर्मस्यरक्षोवधजस्यत्वयाविनाऽसंभवइतिसूचितम् । **स०** मदिरेक्षणा चञ्चलेक्षणा । "मदिरामद्यभेदेस्याच्चञ्चलेत्रिषुचस्मृता" इतिचन्द्रालोकव्याख्योदाहृताभिधानात् ॥४०॥ **ति०** प्रीत्यतिशयात्संबोधनद्वयम् । **स०** व्यवसायं निश्चयं । अनुक्रान्ता प्राप्तेतियत् तदतिशोभनम् ॥ ४१ ॥ **ति०** रत्नानि उत्तमवस्तूनि ॥ ४३ ॥ **शि०** ब्राह्मणानां ब्राह्मणसंप्रदानकदानानां । अनन्तरम् ॥ ४५ ॥ इतित्रिंशस्सर्गः ॥ ३० ॥

**शि०** अशक्नुवन्सन् आसेतिशेषः ॥ १ ॥ **ति०** अतियशां उत्कृष्टकीर्तिमतींसीतां । **स०** अतियशां अतिशयितज्ञानसुखरूपि-

**[ पा० ]** १ क. च. छ. झ—ठ. मनुक्रान्ता. ख. मनुप्राप्ता. २ ज. त्वमनु. ख. घ. त्वमभि. ३ ख. चसुश्रोणि. क. च. ञ. गुरुश्रोणि. ४ ख. त्क्रियार्थाश्चा. ५ क. च. चान्यानि. ६ घ. च. ञ. तानि. ७ क. बन्धुवर्गस्य. घ. बन्धुवर्गेभ्यो. ख. ट. भृत्यवर्गेभ्यो. ८ ख. अनुकूलहि. ९ ख. क्षिप्रप्रमुदिता. १० छ. झ. ट. मेवप्रचक्रमे. * अयंश्लोकः तिलकादिटीकाङ्कितकोशेषुनदृश्यते. ११ ख. घ. परिपूर्ण. १२ ख. झ. ट. ससंवादं. ज. सुसंवादं. १३ क. अशक्नुवान्. १४ ज. गन्तुं. १५ ट. निष्पीड्य. १६ छ. झ. ञ. चातियशां.

यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् ॥ अहं त्वाऽनुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३ ॥
मया समेतोऽरण्यानि बहूनि विचरिष्यसि ॥ पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥
न देवलोकाक्रमणं नामरत्वमहं वृणे ॥ ऐश्वर्यं वाऽपि लोकानां कामये न त्वया विना ॥ ५ ॥
एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः ॥ रामेण बहुभिस्सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥
अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम् ॥ किमिदानीं पुनरिदं क्रियते मे निवारणम् ॥ ७ ॥
यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः ॥ एतदिच्छामि विज्ञातुं संशयो हि ममानघ ॥ ८ ॥
ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः ॥ स्थितं प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९ ॥

मकथंतत्संभविष्यतीतिविचारजंशोकं । स्वानुवृत्तिरूपप्रयोजनायसीतापुरुषकारेणरामेशरणागतिंविधत्ते—सभ्रातुरिति । सः रामानुवृत्तिरूपप्रयोजनायउपायान्तरशून्यः । भ्रातुरित्यवर्जनीयसंबन्धकथनाच्छरण्यत्वमुक्तं । चरणौनिपीड्येतिशरणागत्युक्तिः । गाढमित्यश्लथत्वोक्त्यामहाविश्वासउक्तः । रघुनन्दनः लक्ष्मणः । अतियशाः आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनवान् । आदौसीतांपुरुषकारत्वेनपरिगृह्योवाच । पश्चात्तत्पुरुषकारेण महाव्रतं " नत्यजेयंकथंचन । एतद्व्रतंमम" इत्युक्तगुरुतरव्रतयुक्तं । राघवं रघुराक्षससंवादादिप्रसिद्धकुलधर्मंशरणागतरक्षणंच । उवाच शरणागतेःसर्वफलप्रदत्वेनस्वाभिमतफलंविज्ञापयामास । निपीड्येत्यन्तेनद्वयस्यपूर्वखण्डोक्तशरणागतिरनूदिता । राघवमुवाचेत्यनेनोत्तरखण्डोक्तफलप्रार्थनोक्ता । सीतामुवाचेत्युभयत्रपुरुषकारपरिग्रहोक्तिः ॥ १—२ ॥ कैङ्कर्यप्रार्थनमेवाह—यदीति । यदीत्यनेनरामस्यवनगमनंस्वानभिमतमित्युक्तम् । कैङ्कर्यसाधनमाह—धनुर्धरइति । धनुर्धरत्वेहेतुमाह—मृगेति । अहंत्वा अनु पश्चात्।अग्रेचवनंगमिष्यामि तवाग्रेपश्चाद्वा यत्रदुष्टमृगशङ्कातत्रसावधानोगमिष्यामीत्यर्थः । अतएवमयासमेतइतिवक्ष्यति ॥ ३ ॥ मया धनुर्धरेणमया । त्वदीयंधनुर्वहतेतिवार्थः । बहूनीत्यनेनसर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यप्रार्थनंकृतं ॥ ४ ॥ अनन्योपायत्ववदनन्यप्रयोजनत्वमाह—नेति । देवलोकाक्रमणं"देवानांपूरयोध्या"इत्युक्तपरमपदप्राप्तिंत्वयाविनानवृणे त्वत्कैङ्कर्यविनाकृतंमोक्षमपिनवाञ्छामीत्यर्थः । अमरत्वं "जरामरणमोक्षाय" इत्युक्तकैवल्याख्यंमोक्षमपिनवृणे । लोकानामैश्वर्यं त्रिलोकाधिपतित्वं । ब्रह्मत्वमितियावत् । मोक्षमप्यकामयमानोऽहंकथंकैवल्यादिकंकामयेयेतिभावः । यद्वा अवरोहक्रमेणत्रैलोक्यैश्वर्यादिकमपिनकामयइति । अतोनतत्प्रकर्षदोषः । देवलोकगमनंदेवत्वमिन्द्रत्वंवानकामयइतिवाक्यार्थस्तुच्छः ॥ ५—६ ॥ अनुज्ञातश्च अनुज्ञातएव । "उपक्लृप्तंचयत्किञ्चिदभिषेकार्थमद्यमे । सर्वंविसर्जयक्षिप्रं कुरुकार्यनिरत्ययं " इतिवचनात् । अन्यत्रच " तस्मादपरितापःसंस्त्वमप्यनुविधायमाम् । प्रतिसंहारयक्षिप्रमाभिषेचनिकीःक्रियाः"इति । अपरत्रच "भ्रातृपुत्रसमौचापिद्रष्टव्यौचविशेषतः । त्वयाभरतशत्रुघ्नौ प्राणैःप्रियतरौमम" इतिभरतशत्रुघ्नयोरेवानुसरणीयत्वोक्तेश्चानुज्ञासिद्धा ॥ ७ ॥ यदर्थमिति अनुज्ञातत्वेपिप्रतिषेधात्किमद्यमयाऽपराद्धमितिसंशयः ॥ ८ ॥ अग्रतः स्थितं । प्राग्गामिनं प्रागेवगन्तुमुद्युक्तं । वीरं प्राग्गमनोचितवीर्यवन्तं । याचमानं गमनाज्ञांयाचमानं । कृताञ्जलिं याच्ञाव्यञ्जकाञ्जलियुक्तं ॥ ९ ॥

र्णी । "यंज्ञानंसमुदाहृतं" "शंसुखानिच" इतिनानार्थध्वनिपदमञ्जर्यमरौ । अतियशाइतिपाठे लक्ष्मणविशेषणं । सीतामुवाचेत्यनेन वासुदेवप्रसाधनंमुख्यतोरमेति तांप्रति पूर्ववचनंयुक्तमितिसूचयति ॥ २ ॥ स० अनुगमिष्यामि सहगमिष्यामि नतुपश्चादागमिष्यामीत्यर्थः । अग्रेधनुर्धरइत्यग्रेतनग्रन्थविरोधात् ॥ ३ ॥ स० संघुष्टानि संघृष्टानि निबिडानीतियावत् । "घुषिरविशब्दने" इतिनेट् । यद्वा शब्दितानीत्यर्थः । इडभावआर्षः ॥ ४ ॥ पूर्वं अवतरणसमयेइत्यप्यर्थः । शि० अनुज्ञातः आनुमानिकगमनकर्मकाज्ञाविषयीभूतः । अनुमानप्रकारस्तु "त्वयाभरतशत्रुघ्नौप्राणैःप्रियतरौमम" इतिसीतांप्रतिभवदुक्तेः अहं सहगमनविषयक-

[ पा० ] १ च. छ. झ. ञ. ट. रम्याणि. २ ख. च. छ. झ. ञ. ट. चापि. ३ च. ज्ञातोस्मि. छ. झ. ट. ज्ञातस्तु. ४ ख. यदास्म्यहम्. ५ च. छ. झ. ञ. ट. पुनरपि. ६ ग. छ. झ. ट. धीरं.

स्निग्धो धर्मरतो वीरः सततं सत्पथे स्थितः ॥ प्रियः प्राणसमो वश्यो भ्राता चासि सखा च मे॥१०॥
मयाऽद्य सह सौमित्रे त्वयि गच्छति तद्वनम्॥ को भरिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥ ११॥
अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव ॥ स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥
सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता ॥ दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३॥
न स्मरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम् ॥ भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः॥१४॥
तामार्यां स्वयमेवेह राजानुग्रहणेन वा ॥ सौमित्रे भर कौसल्यामुक्तमर्थमिमं चर ॥ १५ ॥
एवं मम च ते भक्तिर्भविष्यति सुदर्शिता ॥ धर्मज्ञ गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥
एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन ॥ अस्माभिर्विप्रहीणाया मातुर्नो न भवेत्सुखम् ॥ १७ ॥
एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा ॥ प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम्॥१८॥
तवैव तेजसा वीर भरतः पूजयिष्यति ॥ कौसल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९ ॥
[यदि दुष्टो न रक्षेत भरतो राज्यमुत्तमम् ॥ प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः ॥ २० ॥
तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः ॥ तत्पक्ष्यानपि तान्सर्वांस्त्रैलोक्यमपि किंनु सा] ॥ २१॥
कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् ॥ यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीवनम् ॥ २२ ॥
तदात्मभरणे चैव मम मातुस्तथैव च ॥ पर्याप्ता मद्विधानां च भरणाय यशस्विनी ॥ २३ ॥
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ॥ कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २४ ॥

---

स्निग्धइत्यादिविशेषणानिस्वकार्यकरणार्हतानुगुणानि ॥ १० ॥ प्रतिषेधनिमित्तमाह—मयेति । कौसल्यादिभरणार्थमेवत्वंवारितोसि । पूर्वानुज्ञातुतात्कालिकपरिहारायेतिभावः ॥ ११॥ राजैवभरिष्यतीत्यत्राह—अभिवर्षतीति । कामपाशपर्यस्तः पराभिलाषरूपपाशेनसंयतइत्यर्थः ॥ १२ ॥ तर्हिभरतोभरिष्यतीत्यपेक्षायांसोपिकैकेयीपरवशोनभरिष्यतीत्याशयेनाह—साहीत्यादि ॥१३—१४॥ मयावाकथंभर्तुंशक्यमित्यतआह—तामिति । राजानुग्रहणेनराजानुमत्यातदभावेस्वयमेववाभरेत्यर्थः । अस्योत्तरंमावदेत्याह—उक्तमर्थमिमंचरेति ॥ १५ ॥ त्वत्कैङ्कर्यपरस्यमेकिमनेनेत्यतआह—एवमिति । एवं एवंचसतीत्यर्थः । मम मयीत्यर्थः । गुरुपूजा मातृशुश्रूषणं ॥ १६ ॥ अस्माभिः आवाभ्यांसीतयाचेत्यर्थः । नः नौ "अस्मदोद्वयोश्च" इतिद्विवचनस्यबहुवचनम् ॥ १७ ॥ वाक्यज्ञोवाक्यकोविदमिति । "उत्तरोत्तरयुक्तौचवक्ता वाचस्पतिर्यथा" इत्युक्तवक्तृत्वविशिष्टंराममपिप्रतिवचनरचनाचातुर्येणतोषयितुंसमर्थइत्यर्थः ॥ १८ ॥ पूर्वरामोक्तानुपपत्तिपरिहरति—तवैवेत्यादिना ॥१९—२३ ॥ एवंरामोक्तंपरिहृत्यप्रस्तुतंस्वाभिमतंकैंकर्यप्रप-

---

रामाज्ञाविषयः मद्विषयकानुशासनान्तराभावात् नित्यसहचारिराजवर्गवदिति ॥ ७ ॥ **स०** इतरेषामवश्यः ममतुविधेयःकिङ्करः । स्निग्धः स्नेहयुक्तः ॥ १० ॥ **शि०** भजिष्यति सेविष्यते । भरिष्यतीतिपाठान्तरमितिभट्टाः ॥११॥ **शि०** कामपाशपर्यस्तः कामेनस्वेच्छयायःपःपालनंतस्ययःअशोव्याप्तिस्तस्मात्पर्यस्तोनिवृत्तः । आस्तइतिशेषः ॥ १२ ॥ **शि०** उक्तं मयावर्णितं । अमुमर्थे इहस्थितौप्रयोजनं । चर जानीहि । गत्यर्थानांज्ञानार्थकत्वप्रसिद्धेःप्रकृतेचरोज्ञानमर्थः ॥ १५ ॥ **ति०** नः अस्माकं ॥ १७ ॥ **ती०** तवैवतेजसाअप्रमेयबलवैभवरामजनन्यरक्षणेममहाननर्थोभवेदितिमत्वाभरतःसम्यक्पूजयिष्यतीति ॥ १९ ॥ **ति०** दुस्स्थोदुर्मार्गस्थः ॥ २० ॥ **ति०** किंतुसेत्युत्तरश्लोकान्वयि । **वि०** किंनुसेत्युत्तरश्लोकान्वयि ॥ २१ ॥ **वि०** कौसल्यासहस्रंमद्विधानपिबिभृयात् सास्वात्मानंबिभृयादितिकिमुवक्तव्यम् । **ति०** किंचस्वात्मभरणेकौसल्यायाःकस्याप्यपेक्षानेत्याह—**किंतुसा कौसल्ये-**

**[ पा० ]** १ झ. ट. धीरः. २ छ. झ. ट. विधेयश्च. ख. घ. च. ज. ञ. भ्राताचापि. ३ ख. मयात्र. ४ छ. झ. ट. भजिष्यति. क. ख. हिरक्षति. ५ ञ. कामवश. ६ क. कैकेय्या. ७ छ. झ. ट. ममुं. ८ क. घ. च. छ. झ. ञ. ट. मयिच. ख. चमयि. ९ छ. झ. ट. नास्ति. १० इदंश्लोकद्वयं क. च—ट. दृश्यते. ११ छ. झ. ञ. ट. दुस्स्थो. १२ ज. हर्षेण. १३ छ. झ. ट. किंतु. १४ च. छ. झ. ञ. ट. सहस्रंमद्विधानपि. १५ च. छ. झ. ञ. ट. मुपजीविनाम्. १६ ज. भरणेनैव. ख. चैवं. १७ क. च. छ. झ. ञ. ट. मनस्विनी. १८ क. घ. च. ञ. प्रकल्प्यते.

धनुरादाय सशरं खनित्रपिटकाधरः ॥ अग्रतस्ते गमिष्यामि पन्थानमनुदर्शयन् ॥ २५ ॥
आहरिष्यामि ते नित्यं मूलानि च फलानि च ॥ वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनाम् ॥२६
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ॥ अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७ ॥
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ॥ व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥ २८ ॥
ये च राज्ञो ददौ दिव्ये महात्मा वरुणस्स्वयम् ॥ जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९ ॥
अभेद्ये कवचे दिव्ये तूणी चाक्षयसायकौ ॥ आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥

श्चयति—कुरुष्वेत्यादि । मां शेषभूतं । अनुचरं शेषत्वानुगुणकैङ्कर्ययुक्तं । कुरुष्व । तत्करणमपितवैवप्रयोजनमित्यात्मनेपदाल्लभ्यते । इह अनुचरत्वकरणे । वैधर्म्यं सेव्यसेवकधर्मराहित्यं । नास्ति । तवसेव्यधर्मः पर्याप्तःस्वामित्वात् । ममसेवकधर्मश्चपूर्णःस्वाभाविकशेषत्वात् । यद्वा वैधर्म्यं वैपरीत्यसाधकं । नविद्यते । त्वदुक्तहेतोरन्यथासिद्धेरुक्तत्वादित्याशयः । अनुचरकरणस्यकिंप्रयोजनमित्यपेक्षायामाह—तवेति । तवार्थः स्वायासंविनाफलमूलाद्याहरणं । प्रकल्पते सिध्यति । अहंचकृतार्थः लब्धत्वत्कैङ्कर्यफलोभविष्यामि । यद्वा मां स्वाभाविकशेषभूतंमां । अनुचरं स्वरूपानुरूपशेषवृत्तियुक्तंकुरुष्व । इह अस्मिञ्जनेमयि । वैधर्म्यं शेषत्वविपर्यासः । नास्ति । अनेनशेषत्वस्यस्वाभाविकत्वंतज्ज्ञानवतःफलंकैङ्कर्यंचेत्युक्तं । कैङ्कर्याकरणेतवकाहानिरित्यत्राह—कृतार्थोहंभविष्यामीति । अकिञ्चित्कुर्वतःशेषत्वानुपपत्तेरितिभावः । तच्चप्राप्यंकैङ्कर्यंनिष्कृष्यदर्शयति—तवचेति । चोवधारणे । तवैवार्थः । नतुमम । परार्थकैङ्कर्यस्यैवपुरुषार्थत्वादितिभावः । शेषत्वाध्यवसाय उपायः अस्वार्थशेषिकैङ्कर्यमेव फलमित्युपायोपेयनिष्कर्षोनेनकृतइतिरहस्यं । वैधर्म्यं नेहविद्यतइत्युक्तिर्ज्येष्ठभ्रातुःपितृसमत्वात् । आवयोः श्रेयश्चास्तीत्याह—कृतार्थइतीतिकेचिद्व्याचक्षते॥२४॥ स्वकृतार्थत्वंप्रपञ्चयति—धनुरिति । धनुराद्यादानं हिंस्रनिवारणाय । खनित्रं मूलकन्दखननसाधनं कुद्दालादि । पिटका अल्पार्थेकप्रत्ययः । फलमूलाद्याहरणयोग्याल्पकण्डोलः । "कण्डोलपिटकौ" इत्यमरः ॥ २५ ॥ एवंमार्गेसंभावितंकैङ्कर्यमुक्त्वास्थानेसंभावितमाह—आहरिष्यामीति । अन्यानि शाकप्रियालबीजक्षौद्रादीनि । स्वाहाराणि सुखेनाहर्तुंभोक्तुंयोग्यानि ॥ २६ ॥ एवंसर्वदेशकर्तव्यकैङ्कर्याण्युक्तानि कैङ्कर्यस्यविशिष्टविषयस्यैवरस्यत्वाद्विशिष्टविषयत्वमाह—भवांस्त्विति । जाग्रतःस्वपतश्चतइत्यनेनसर्वकालसर्वावस्थोचितकैङ्कर्यमुक्तं । सर्वंकरिष्यामीत्यनेनसर्वविधकैङ्कर्यमुक्तं । तथाचदेवीविशिष्टस्यशेषिणःसर्वदेशसर्वकालसर्वावस्थासुसर्वविधमपिकैङ्कर्यंशेषभूतेनकर्तव्यमितिदर्शितम् ॥ २७ ॥ अनेनानुगमनाज्ञाव्यञ्जिता ॥ २८ ॥ जनकस्यराज्ञोयज्ञेमहात्मावरुणः स्वयमेवमह्यंयद्धनुरादिकंददौ आचार्यसद्मनि आचार्यस्यगृहे । पूजार्थंनिहितंतदेतत्सर्वमायुधमादाय सः आपृष्टसुहृज्जनः त्वं क्षिप्रमाव्रजेत्यन्वयः । अत्रधनुरादिषु सर्वत्रद्विवचनादावयोर्ददावितिसिद्धं । बालकाण्डेऽनुक्तोप्ययंवृत्तान्तोनुवादात्सिद्धः । यथासुन्दरकाण्डेऽभिहितंमणिबन्धनं "मणिरत्नमिदंदत्तंवैदेह्याःश्वशुरेणमे । वधूकालेतथाबद्धमधिकंमूर्ध्निशोभते" इति । यथाचायोध्याकाण्डेऽनभिहितोपिवायसवृत्तान्तःसुन्दरकाण्डेऽनूद्यते "सपित्राचपरित्यक्तःसुरैश्चसमहर्षिभिः । त्रींल्लोकान्संपरिक्रम्यतमेवशरणंगतः" इति । आचार्योवसिष्ठः । इक्ष्वाकुगुरुमागम्येत्युत्तरत्रानुवादात् ।

त्यादि । उपजीविनां उपजीविभिः । सहस्रंग्रामाणांप्राप्तंवर्तते ॥ २२ ॥ स० सुमित्रात्राणार्थमपिनस्थातव्यंमयेत्याह—ममेति । मद्विधानाञ्चभरणाय मथ्नन्तिपरानितिमथःअसन्तः ते नभवन्तीत्यमथः तेचतेविधानेश्चाःपूज्याश्चतेषांभरणाय पोषणाय । पर्याप्ता । सर्वभूतदयापरपूज्यसज्जनपालयित्रीयंनसौवमात्ररक्षणपरेतिभावः । एतेनसहस्रंमद्विधानित्यनेननपुनरुक्तिः ॥ २३ ॥ ति० पिटका फलमूलाद्याहरणयोग्यावंशपेटी ॥ २५ ॥ ति० स्वाहार्याणि होमयोग्यानिहविर्भूतानि ॥ २६ ॥ शि० जाग्रतःस्वपतश्चेत्यनेन स्वस्यनिद्रावशीकरणसामर्थ्यंसूचितम् । स० चोप्यर्थे । स्वपतोपिजाग्रतइत्यर्थः । एतेन कथमस्वप्नपतेस्स्वापइति शङ्कानिरस्ता ॥ २७ ॥ ति० व्रज अनुव्रज । आपृच्छस्व सुहृज्जनानामाज्ञांगृहाण ॥ २८ ॥

[ पा० ] १ क. ख. च. छ. झ. ञ. ट. सगुणं. २ छ. झ. ट. पन्थानंतव. ३ छ. झ. ट. चतथान्यानि. ४ छ. झ. स्वाहार्याणि. ५ ख. घ. राज्ञोऽददाद्दिव्ये. ६ क. ख. च. ज. ञ. अभेद्यकवचे. ७ छ. झ. ट. विमलाभौद्वौ.

सत्कृत्य निहितं सर्वमे[1]तदाचार्य[2]सद्मनि ॥ स[3] त्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ ३१ ॥
स सुहृज्जनमामन्त्र्य[4] वनवासाय निश्चितः ॥ इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३२ ॥
तद्दिव्यं राजशार्दूल[5]सत्कृतं माल्यभूषितम् ॥ रामाय दर्शयामास सौमित्रिस्सर्वमायुधम् ॥ ३३ ॥
तमुवाचात्मवान्रामः प्रीत्या लक्ष्मणमागतम् ॥ काले त्वमागतः सौम्य काङ्क्षिते मम लक्ष्मण ॥३४॥
अहं प्रदातुमिच्छामि यदिदं मामकं धनम् ॥ ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परंतप ॥ ३५ ॥
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ॥ तेषामपि च मे भूयः सर्वेषां[6] चोपजीविनाम् ॥ ३६ ॥
वसिष्ठपुत्रं तु सुयज्ञमार्यं त्वमानयाशु प्रवरं द्विजानाम् ॥
अ[7]भिप्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान्द्विजातीन् ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ॥ ३२ ॥

लक्ष्मणानीतेनसुयज्ञेनसीतारामाभ्यांवितीर्णरत्नाभरणादिप्रतिग्रहपूर्वकंताभ्यांलक्ष्मणायचमङ्गलाशंसनम् ॥ १ ॥ लक्ष्मणेनश्रीरामचोदनयातन्निर्दिष्टेभ्योऽगस्त्यपुत्रादिभ्यःकौशेयाभरणगवादीनांवितरणम् ॥ २ ॥ त्रिजटाभिधेनद्विजेनस्वभार्याचोदनयारामसमीपमेत्यधनयाचनम् ॥ ३ ॥ श्रीरामेणत्रिजटंप्रतितद्धस्तदण्डप्रक्षेपावधिविद्यमानानांगवांवितरणप्रतिज्ञानेतेन दण्डप्रक्षेपेणगोधनप्रतिग्रहपूर्वकंस्वाश्रमगमनम् ॥ ४ ॥

ततः शासनमा[8]ज्ञाय भ्रातुः शु[9]भतरं प्रियम् ॥ गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥
तं वि[10]प्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् ॥ सखेऽ[11]भ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥२॥
ततः सन्ध्यामु[12]पास्याशु गत्वा सौमित्रिणा सह ॥ जु[13]ष्टं तत्प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥३॥
तमागतं वेदविदं प्राञ्जलिः सीतया सह ॥ सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥ ४ ॥

---

नहीक्ष्वाकुकुलगुरुर्वसिष्ठादन्योस्ति ॥ २९—३३ ॥ प्रीत्योवाचेत्यन्वयः ॥ ३४ ॥ काङ्क्षितत्वमेवाह—अहमित्यादिना ॥ ३५ ॥ यच्छब्दोर्थसिद्धः । इह नगरे । गुरुषुभक्त्यायेदृढंवसन्ति नित्यंगुरुशुश्रूषणंकुर्वन्तीत्यर्थः । तेषामपिमेसर्वेषांउपजीविनांच । भूयः अतिशयेन । नित्यदेयादधिकतया । दातुमिच्छामि । तानानयेतिशेषः ॥ ३६ ॥ वसिष्ठपुत्रं आर्यं द्विजानां प्रवरं सुयज्ञं अन्यानपिशिष्टानानय । सुयज्ञं तांश्चाभ्यर्च्याभिप्रयास्यामीत्यर्थः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्यानेएकत्रिंशःसर्गः ॥ ३१ ॥

---

एवंनिश्चितसीतालक्ष्मणानुयात्रस्यरामस्ययात्रादानं प्रस्तूयतेद्वात्रिंशे—ततइत्यादि । आज्ञाय अङ्गीकृत्य । शुभतरं ब्राह्मणोपकारत्वात् । प्रियं आत्मनोनुगमनाङ्गीकारफलत्वात् ॥ १ ॥ अग्न्यगारस्थं अग्निहोत्रशालास्थं । दुष्करकारिणः दुष्करकर्मकारिणः । वेश्माभ्यागच्छकृत्यंचपश्येत्यर्थः ॥ २ ॥ सन्ध्योपासनं माध्याह्निकं । अथवा सन्ध्यानियताग्निहोत्रं । अग्न्यगारस्थमित्यु-

---

**स०** आगम्य गत्वा ॥ ३२ ॥ **ति०** राजशार्दूलः क्षत्रियश्रेष्ठः ॥ ३३ ॥ **ती०** वसिष्ठपुत्रंसुयज्ञमानयेत्यनेन मूलप्रभोर्दशरथस्यवसिष्ठपौरोहित्यं तत्पुत्रस्यतत्पुत्रइतिन्यायेन स्वाचार्यस्यसुयज्ञस्यविशिष्यानयननियोगः ॥ ३७ ॥ एकत्रिंशस्सर्गः ॥ ३१ ॥

**ती०** दुष्करकारिणः प्राप्तराज्यत्यागपूर्वकवनगमनरूपदुष्करकारिणः ॥ २ ॥ **ति०** अङ्गदं बाहुमूलधार्यभूषणं । केयूरं तद-

**[ पा० ]** १ ख. एतदार्यस्य. २ घ. वेश्मनि. ३ छ. झ. ट. सर्वमायुध. ४ घ. ज. मामन्त्र्य. ५ क. घ. ज. ञ. रघुशार्दूलः. छ. झ. ट. राजशार्दूलः. ६ ख. सर्वेषामुप. ७ छ. झ. अपि. ८ ज. मास्थाय. ख. मादाय. ९ ख. घ. ज. शुभकरं. च. छ. झ. ञ. ट. प्रियकरंहितम्. क. प्रियतरंशुभम्. १० क. ट. मभ्यागारस्थं. ११ क. ज. ह्यागच्छ. १२ झ. ट. सुपास्थाय. ख. च. छ. ञ. मुपास्याथ. १३ छ. झ. ऋद्धंसंप्रा. ट. जुष्टंसप्रा.

जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः ॥ सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥
अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् ॥ सुयज्ञं स तदोवाच रामः सीताप्रचोदितः ॥ ६ ॥
हारं च हेमसूत्रं च भार्यायै सौम्य हारय ॥ रशनां [1]चाधुना सीता दातुमिच्छति ते [2]सखे ॥ ७ ॥
[3]अङ्गदानि विचित्राणि केयूराणि शुभानि च ॥ प्रयच्छति [4]सखे तुभ्यं भार्यायै गच्छती वनम् ॥८॥
पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् ॥ तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९ ॥
नागः शत्रुञ्जयो नाम मातुलो यं ददौ मम ॥ तं ते [5]गजसहस्रेण ददामि [6]द्विजपुङ्गव ॥ १० ॥
इत्युक्तः [7]स हि रामेण सुयज्ञः प्रतिगृह्य तत् ॥ रामलक्ष्मणसीतानां प्रयुयोजाशिषः [8]शुभाः ॥ ११ ॥
अथ भ्रातरम[9]व्यग्रं [10]प्रियं रामः प्रियं[11]वदः ॥ सौमित्रिं तमुवाचेदं ब्रह्मेव [12]त्रिदशेश्वरम् ॥ १२ ॥
[13]आगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ ॥ अर्चयाहूय सौमित्रे रत्नैः सस्यमिवांबुभिः ॥ १३ ॥
तर्पयस्व महाबाहो गो[14]सहस्रैश्च मानद ॥ [15]सुवर्णै रजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥
कौसल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति ॥ आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥
तस्य यानं च दासीश्च सौमित्रे संप्रदापय ॥ कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६ ॥
[16]सूतश्चित्ररथश्चार्यः सचिवः सुचिरोषितः ॥ तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥
पशुकाभिश्च सर्वाभिर्गवां दशशतेन च ॥ १७ ॥

---

क्तेः ॥ ३ ॥ अर्चितं हुतं ॥ ४ ॥ जातरूपमयैः स्वर्णमयैः । अङ्गदैः कूर्परोपरिधार्यैर्बाहुभूषणैः । सहेमसूत्रैर्मणिभिः हेमसूत्रप्रोतैर्वैडूर्यपद्मरागमुक्तादिमणिभिः । "रत्नंमणिर्द्वयोरश्मजातौमुक्तादिकेपिच" इत्यमरः । केयूरैः भुजशिरोव्यापिफणाकारशिखरयुक्तबाहुभूषणैः । अथवा अङ्गदकेयूरयोःस्थूलत्वसूक्ष्मत्वाभ्यांभेदः । वलयैः कटकैः । " कटकंवलयोस्त्रियां " इत्यमरः । रत्नैः भूषणप्रकरणाद्भूषणश्रेष्ठैरित्यर्थः । " रत्नंस्वजातिश्रेष्ठेपि " इत्यमरः ॥ ५—६ ॥ हेमसूत्रं हेममयंकण्ठसूत्रं । रशनांचते भार्यायैसीतादातुमिच्छति तत्सर्वंहारय दापयेत्यर्थः ॥ ७ ॥ भार्यायै भार्याधारणार्थं । तुभ्यं प्रतिग्रहीत्रे । प्रयच्छति । गच्छतीत्यत्रनुमभावआर्षः ॥ ८ ॥ त्वयि प्रतिष्ठापयितुं तुभ्यंदातुमित्यर्थः ॥ ९ ॥ मातुलोददावितिदशरथीयशत्रुञ्जयव्यावृत्तिः ॥ १० ॥ प्रतिगृह्येत्यनेनन्यासभूतत्वंव्यावर्त्यते ॥ ११ ॥ त्रिदशेश्वरं इन्द्रं ॥ १२ ॥ आगस्त्यं अगस्त्यपुत्रं । कौशिकं विश्वामित्रपुत्रं । रत्नैः श्रेष्ठवस्तुभिः ॥ १३ ॥ रत्नैरर्चनंविवृणोति—तर्पयस्वेति ॥ १४ ॥ कौसल्यामित्यादिश्लोकद्वयमेकान्वयम् । तैत्तिरीयाणां तित्तिरिसंबन्धिशाखाध्येतॄणां । आचार्यः अध्यापयिता । अभिरूपः बुधः । " प्राप्तरूपसुरूपाभिरूपाबुधमनोज्ञयोः" इतिविश्वः । कौशेयानि कृमिकोशोत्थानि । "कौशेयंकृमिकोशोत्थं" इत्यमरः । यावत् यावत्पर्यन्तं । तुष्यति । तावत्संप्रदापयेतिसंबन्धः ॥ १५—१६ ॥ सूतइत्यादिसार्धश्लोकएकान्वयः । सूतः सुमन्त्रतुल्यःकश्चिच्चित्ररथना-

---

धोभागस्थं ॥४॥ **स०** अङ्गगतिंइतस्ततश्चलनमितियावत् । ददतिकर्णयोरित्यङ्गदानीतिकुण्डलविशेषणम् ॥५॥ **स०** यतः वनंगच्छति ई रमात्मिकासीता अतःप्रयच्छतीतिवा ॥८॥ **वि०** निष्कसहस्रेण निष्कसहस्रदक्षिणया ॥ १० ॥ **स०** रामलक्ष्मणसीतानामित्यत्रलक्ष्मणव्यवधानेनमहर्ष्याशिषाविलंबफलकत्वंद्योतयति ॥ ११ ॥ **ति०** ब्रह्मात्रिदशेश्वरमिव । नियोक्तृनियोज्ययोः परापरप्रभुत्वेदृष्टान्तः ॥ १२ ॥ **ति०** कौशिकोविश्वामित्रः । **स०** अंबुदइतिशेषः ॥ १३ ॥ **स०** यावदित्यव्ययं । यावता ॥ १६ ॥ **शि०** यदिचचित्रोरथोयस्यसइतियौगिकार्थमात्रविवक्षा तदा सूतशब्देनसुमन्त्रएवग्राह्यः । पशुकाभिः प्रशस्ताःपशवः पशुकास्ताभिः यज्ञयोग्याभिरित्यर्थः । सर्वाभिः अजादिव्यक्तिभिः ॥ १७ ॥

**[ पा० ]** १ च. झ. ञ. ट. चाथसा. २ छ. झ. ञ. सखी. ३ च. छ. झ. ञ. ट. अङ्गदानिच. ४ छ. झ. सखी. ५ क. च—ट. निष्क. ६ घ. च. सत्तम. ७ च. छ. झ. ञ. ट. सतु. क. घ. सह. ८ क. घ. च—ट. शिवाः. ९ ख. मग्रस्थं. १० झ. प्रियरामः. ११ च. छ. ञ. ट. प्रियंवदम्. १२ क. त्रिदशेश्वरः. १३ छ. ज. झ. ञ. अगस्त्यं. १४ गोसहस्रेणराघव. घ. ज. गोभिर्वस्त्रैश्च. १५ क. ख. च—ट. सुवर्णरजतैश्चैव. १६ क. रथाचार्यः.

ये [1]चेमे कठकालापा बहवो दण्डमाणवाः ॥ नि[2]त्यस्वाध्यायशीलत्वान्नान्यत्कुर्वन्ति किंचन ॥१८॥
अलसाः स्वादु[3]कामाश्च महतां चापि संमताः ॥ तेषामशीतियानानि रत्नपूर्णानि दापय ॥ १९ ॥
शालिवाहसहस्रं च द्वे [4]शते भद्रकांस्तथा ॥ व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु ॥ २० ॥
मे[5]खलीनां महासङ्घः कौसल्यां समुपस्थितः ॥ तेषां सहस्रं सौमित्रे प्रत्येकं संप्रदापय ॥ २१ ॥
अंबा य[6]था च सा नन्देत्कौसल्या मम दक्षिणाम् ॥ त[7]था द्विजातींस्तान्सर्वांल्लक्ष्मणार्चय सर्वशः ॥ २२ ॥
ततः स[8] पुरुषव्याघ्रस्तद्धनं लक्ष्मणः स्वयम् ॥ यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा ॥ २३ ॥
अथाब्रवीद्बा[9]ष्पकलांस्तिष्ठतश्चोपजीविनः ॥ सं[10]प्रदाय बहु द्रव्यमेकैकस्योप[11]जीवनम् ॥ २४ ॥
लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ॥ अशून्यं कार्यमेकैकं यावदागमनं मम ॥ २५ ॥
इत्युक्त्वा दुःखितं सर्वं जनं त[12]मुपजीविनम् ॥ उवाचेदं धनाध्यक्षं धनमानीय[13]तामिति ॥ २६ ॥
ततोस्य धनमाजह्रुः स[14]र्वमेवोपजीविनः ॥ स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ॥ २७ ॥
ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ॥ द्विजेभ्यो बालवृद्धेभ्यः [15]कृपणेभ्यो ह्यदापयत् ॥ २८ ॥

मा । सुचिरोषितः चिरकालमस्मद्गृहेस्थितः । पशुकाभिः अल्पार्थेकन्प्रत्ययः । अजादिभिरित्यर्थः ॥ १७ ॥ येचेत्याद्युपाकुर्वित्यन्तमेकंवाक्यं । कठेनप्रोक्तमधीयते कठाः । कठशब्दात्प्रोक्तार्थेवैशंपायनान्तेवासित्वाण्णिनिः । तस्य "कठचरकात्" इतिलुक् । ततः "तदधीतेतद्वेद" इत्यण् । तस्य "प्रोक्ताल्लुक्" इतिलुक् । कलापिनाप्रोक्तमधीयतेकालापाः । कलापिशब्दात्प्रोक्तार्थे "कलापिनोण्" इत्यण् । "सब्रह्मचारिपीठसर्पि" इत्यादिनाटिलोपः । ततः "तदधीते" इत्याद्यण् । तस्यप्रोक्ताल्लुक् । कठप्रोक्तशाखाध्यायिनःकलापिप्रोक्तशाखाध्यायिनश्चेत्यर्थः । कठाश्चकालापाश्चकठकालापाः । "दण्डप्रधानामाणवाःदण्डमाणवाः" इतिकाशिकायां । सदापलाशदण्डधारिणोब्रह्मचारिण इत्यर्थः । किञ्चन आहारार्थयत्नादिकं । नकेवलंनित्यस्वाध्यायशीलत्वात्किञ्चिन्नकुर्वन्ति किंत्वालस्याच्चेत्याशयेनाह—अलसाइति । गोसहस्रप्रदानहेतुत्वेनाह—स्वादुकामाश्चेति । रसवत्पदार्थकाङ्क्षिणइत्यर्थः । महतां चापिसंमताः अतीवसाध्वाचाराइत्यर्थः । रत्नपूर्णानि रत्नालङ्कारपूर्णानि । अशीतियानानीत्युक्तयादण्डमाणवाश्चाशीतिसङ्ख्याकाइतिगम्यते । रत्नवाहानुष्ट्रानिति वा । शालिवाहसहस्रं शालिधान्यवाहकबलीवर्दसहस्रं । भद्रकान् अल्पार्थेकन्प्रत्ययः । कर्षणयोग्याननडुहइत्यर्थः । धान्यविशेषानित्यपरे । व्यञ्जनार्थं क्षीरदधिघृतार्थं । उपाकुरु ददस्वेत्यर्थः ॥ १८—२० ॥ मेखलीनामिति मेखला मौञ्जी । तद्वतांब्रह्मचारिणामित्यर्थः । आर्षोदीर्घः । सहस्रं गोसहस्रं । प्रकृतत्वात्तासां ॥ २१ ॥ ममांबेत्यन्वयः । दक्षिणां पूर्वोक्तदानाङ्गभूतां । सर्वशः वस्त्रधान्यादिसर्वप्रकारैः ॥ २२ ॥ यथोक्तं रामोक्तमनतिक्रम्य । अददाद्धनदोयथेति । धनदस्यदातृत्वं "धनदेनसमस्त्यागे" इतिबालरामायणएवोक्तं । ब्राह्मणेन्द्राणामितिचतुर्थ्यर्थेषष्ठी ॥ २३ ॥ बाष्पंकलन्तिमुञ्चन्तीतिबाष्पकलाः तान् । उपजीवनं प्रतिएकैकस्योपजीविनोबहुद्रव्यंसंप्रदायाब्रवीत् ॥ २४ ॥ अशून्यंकार्यम् । यथापूर्वंभवद्भिरुपविश्यरक्षणीयमित्यर्थः । एकैकं पृथक्पृथक् ॥ २५ ॥ धनाध्यक्षं कोशगृहाधिकृतं ॥ २६ ॥ अस्य रामस्य ॥ २७ ॥ बालवृद्धेभ्यः बालेभ्योवृद्धेभ्यश्चेत्यर्थः ॥ २८ ॥

ती० मेखलाः मेखलिनः ब्रह्मचर्यव्रतिनः । अर्शआदित्वादच् ॥ २१ ॥ ती० प्रथमान्तपाठे दक्षिणा समर्था ॥ २२ ॥ ती० बाष्पगलान् बाष्पगद्गदान् ॥ २४ ॥ शि० एकैकं संस्थाप्येतिशेषः । अशून्यं शून्यंनकार्यं । असूर्यंपश्याराजदाराइतिवत्समासः । स० एकैकं पर्यायेणनियोज्येतिशेषः ॥ २५ ॥ शि० ममधनाध्यक्षं कोशाधीशात् धनमानीयताम् । "अकथितंच"

[ पा० ] १ च. छ. झ. चमे. क. ख. ज. चेमेकाठ. २ ख. घ. नित्यं. ३ घ. शीलाश्च. ४ क. च. ञ. भद्रकान्संप्रदापय. ५ च. छ. ज. मेखलानां. ६ ख. च. छ. झ. ञ. ट. यथानोनन्देच्च. क. यदानौनन्देच्च. ७ च. यथा. क. ख. ग. घ. ज. यथाद्विजातीन्सर्वांस्तान्. ८ च. छ. झ. ञ. पुरुषशार्दूलः. ९ क. ख. छ. झ. ञ. द्बाष्पगलान्. १० झ. ट. सप्रदाय. ११ ख. ग. घ. जीविनः. क. जीविनाम्. १२ क. मनुजीविनम्. १३ छ. झ. ट. तांमम. १४ च. झ. ञ. ट. सर्वएवोप. १५ ख. दरिद्रेभ्यो.

तत्रासीत्पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ॥ [1]उञ्छवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥ २९ ॥
तं वृद्धं तरुणी भार्या बालानादाय दारकान् ॥ अब्रवीद्ब्राह्मणं वाक्यं [2]दारिद्र्येणाभिपीडिता ॥३०॥
अपास्य फालं कुद्दालं कुरुष्व वचनं मम ॥ रामं दर्शय धर्मज्ञं यदि किञ्चिद[3]वाप्स्यसि ॥ ३१ ॥
[4]स भार्यावचनं श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् ॥ स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ॥३२॥
[5]भृग्वङ्गिरसमं दीप्त्या त्रिजटं जनसंसदि ॥ आ पञ्चमायाः कक्ष्यायाः [6]नैनं कश्चिदवारयत् ॥ ३३ ॥
स [7]राजपुत्रमासाद्य त्रिजटो वाक्यमब्रवीत् ॥ निर्धनो बहुपुत्रोस्मि राजपुत्र [8]महायशः ॥
[9]उञ्छवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति ॥ ३४ ॥
तमुवाच ततो रामः परिहास[10]समन्वितम् ॥ ३५ ॥
गवां सहस्र[11]मप्येकं [12]न तु विश्राणितं मया ॥ परिक्षिपसि दण्डेन याव[13]त्तावदवाप्स्यसि ॥ ३६ ॥
स शाटीं [14]त्वरितः कट्यां संभ्रान्तः परिवेष्ट्य ताम् ॥ आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगि[15]तः ॥३७॥

---

तत्र तस्मिन्काले देशेवा । पिङ्गलः पिङ्गलवर्णइतिदारिद्र्यलक्षणोक्तिः । पिङ्गलकेशोवा । गार्ग्यः गर्गमुनिवंश्यः । उञ्छवृत्तिः उञ्छेनएकैकशोधान्यग्रहणेनवृत्तिर्जीवनंयस्यतथा । क्षतवृत्तिरितिपाठेक्षतेनखननेनजीवनंयस्येत्यर्थः । खननलब्धकन्दमूलादिजीवनइत्यर्थः । फालकुद्दाललाङ्गली फल्यतेअनेनेति फालोद्वैधीकरणसाधनंकुठारशङ्कुलादिकं । कुद्दालः खननसाधनं । खनित्रमितियावत् । लाङ्गलं हलाकारः फलाकर्षणसाधनभूतोदण्डविशेषः । तद्वान् । एवं वनवासीकश्चिद्दरिद्रोगृहस्थोदैवात्तत्रनगरेतदानींसङ्गतोऽभूदितिभावः ॥ २९ ॥ दारकान् पुत्रकान् ॥ ३० ॥ कुद्दालमितिलाङ्गलस्याप्युपलक्षणं । दर्शयेति । भार्यापुत्रसहितमात्मानमित्यर्थः । "गतिबुद्धि" इत्यादिनाद्विकर्मकत्वम् । यदिदर्शयसितदाकिञ्चिदवाप्स्यसीत्यर्थः । किञ्चिदितिस्वभाग्यहान्यपेक्षयोक्तम् ॥ ३१ ॥ दुश्छदां अतिजीर्णत्वादाच्छादयितुमशक्यां । रामदर्शनार्थमाच्छादनयत्नः । यत्र यन्मार्गाश्रितवीथ्यां ॥ ३२ ॥ अङ्गिरेत्यत्रअकारान्तत्वमार्षम् ॥ ३३ ॥ प्रत्यवेक्षस्व कटाक्षयेत्यर्थः ॥ ३४ ॥ परिहाससमन्वितं लीलास्मितसमन्वितं । बहुकुटुम्बिनोदरिद्रस्यास्य कियतीधनाशेतिजिज्ञासयासस्मितइत्यर्थः ॥ ३५ ॥ अनेकगोसहस्राणांमध्येएकमपिसहस्रंनविश्राणितमित्यर्थः । यद्वा असङ्ख्यातानांगवांमध्ये एकमपिसहस्रं मयानविश्राणितं नदत्तं । तुभ्यमितिशेषः । अपितुदण्डेनयावत्परिक्षिपसि गवाकीर्णंयावन्तंदेशंपरिक्षिपसि । तावदवाप्स्यसि तावद्देशस्थंगोजातमवाप्स्यसीत्यर्थः । एकंगोसहस्रमात्रंनदत्तं अन्यत्सर्वंदत्तमितिनार्थः । "बहुसाहस्रे" इत्यादिवक्ष्यमाणेनविरोधात् । अपिशब्दास्वारस्याच्च ॥ ३६ ॥ कट्यांपरिवेष्टनंबलोत्तम्भनाय । आविध्य भ्रामयित्वा । सर्वप्राणेन सर्वशक्त्या । "श-

---

इतिकर्मत्वं ॥ २६ ॥ **शि०** क्षतेन पिपीलिकारहितदेशखननेनवृत्तिर्जीविकायस्य । किंच क्षता त्यक्ता वृत्तिः प्रतिग्रहादिजीविकायेन । उञ्छवृत्तिरितियावत् । पिङ्गलः व्रतोपवासादिनापीतवर्णः । नित्यमित्यनेनग्रामगमनव्युदासः । **स०** क्षतवृत्तिः भूखननेनजीवनवान् । उञ्छवृत्तिरितिपाठोनस्वरसः । फालकुद्दालेत्यादेरवक्तव्यत्वात् ॥ २९ ॥ **ति०** स्त्रीणांभर्ताहिदेवता इतिपाठे यद्यपिदेवतात्वादाज्ञानर्हस्तथापिप्रीत्यामद्वचनंकुरुष्वेत्यर्थः ॥ ३० ॥ **स०** ममयदिरामंदर्शयसि तर्हिकिंचिदवाप्स्यसेइत्यन्वयः । अनेन त्रिजटस्यभार्यासाहित्येनरामंप्रतिगमनंद्योत्यते । अतएव "ततस्सभार्यस्त्रिजटः" इत्युक्तिस्संगच्छते । यद्वा दर्शय स्वात्मानमितिशेषः । आगामिबाधकंतुतत्रैवपरिहियते ॥ ३१ ॥ **स०** दुश्छदां दुःखेनच्छादयितुंयोग्यां ॥ ३२ ॥ **स०** आपञ्चमायाः आसमन्तात्पञ्चमाश्चतुराःपरिचितापरिचित विवेकिनःयस्यांकक्ष्यायांसातथातस्याः । एतेन चतुरपुरुषवत्त्वंकक्ष्यायाद्योत्यते । यद्वा क्लीबभावआर्षः । "पञ्चमश्चतुरेहृद्ये" इतिविश्वः । कश्चिद्द्वारपः ॥ ३३ ॥ **ति०** अस्त्येकंइतिपाठे तावदेवशिष्टमस्तीत्यर्थः ॥ ३५ ॥

**[ पा० ]** १ क. ख. ग. च—ट. क्षतवृत्तिः. २ छ. झ. ट. स्त्रीणांभर्ताहिदेवता. ३ क. ख. च. छ. झ. ञ. ट. दवाप्स्यसे. ४ क—घ. च. ज. ञ. भार्यायावचनं. छ. झ. ट. सभार्यायावचः. ५ झ. ञ. ट. ठ. भृग्वङ्गिरस्समं. ६ घ. झ. नैतं. छ. ट. नच. ७ छ. झ. ट. राममासाद्यतदा. ८ झ. ट. महाबल. ९ क. च. छ. झ. ञ. ट. क्षतवृत्तिः. १० ग. ज. समन्वितः. ११ ग. मयैकं. १२ छ. झ. ट. नच. १३ च. छ. झ. ञ ट. दवाप्स्यसे. १४ छ. झ. ट. परितः. १५ छ. झ. ञ. ट. वेगतः

स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्युतः ॥ गोव्रजे बहुसाहस्रे [1]पपातोक्षणसन्निधौ ॥ ३८ ॥
तं परिष्वज्य धर्मात्मा [2]आ तस्मात्सरयूतटात् ॥ आनयामास [3]ता गोपैस्[4]त्रिजटायाश्रमं प्रति ॥ ३९ ॥
उवाच च [5]ततो रामस्तं गार्ग्यमभि[6]सान्त्वयन् ॥ मन्युर्न खलु कर्तव्यः परि[7]हासो ह्ययं मम ॥ ४० ॥
इदं हि तेजस्तव यद्दुरत्ययं तदेव जिज्ञासितुमिच्छता मया ॥
इमं भवानर्थमभिप्रचोदितो वृणीष्व किं चेदपरं [8]व्यवस्यति ॥ ४१ ॥
ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा धनं हि [9]यद्यन्मम विप्रकारणात् ॥
भवत्सु सम्यक्प्रति[10]पादनेन तन्मयाऽऽर्जितं प्रीतियशस्करं भवेत् ॥ ४२ ॥
ततः सभार्यस्त्रिजटो महामुनिर्गवामनीकं प्रतिगृह्य मोदितः ॥
यशोबलप्रीतिसुखो[11]पबृंहणीस्तदाऽऽशिषः प्रत्यवदन्महात्मनः ॥ ४३ ॥
स चापि रामः [12]प्रतिपूर्णमानसो [13]महद्धनं धर्मबलैरुपार्जितम् ॥
नियोजयामास सुहृज्जने चिराद्यथार्हसंमानवचःप्रचोदितः ॥ ४४ ॥
द्विजः सुहृद्भृत्यजनोथवा [14]तदा दरिद्रभिक्षाचरणश्च योऽ[15]भवत् ॥

क्तिःपराक्रमःप्राणः ” इत्यमरः ॥ ३७ ॥ उक्षणसन्निधौ उक्षसन्निधौ “ वष्टिभागुरिः ” इत्यादिरीत्या अकारान्तत्वं ॥ ३८ ॥ आतस्मादित्यत्राभिविधिवाचकस्याङःसरयूतटादित्यनेनसंबन्धः । आनयामास नाययामासेत्यर्थः ॥ ३९ ॥ अयं दण्डक्षेपणप्रचोदना । परिहासः विनोदार्थइत्यर्थः ॥ ४० ॥ परिहासमेवविवृणोति—इदमिति । तेजः बलं । दुरत्ययं निरतिशयमित्यर्थः । जिज्ञासितुं ज्ञातुमित्यर्थः । यद्वा जिज्ञासितुं मीमांसितुं । “ मानेर्जिज्ञासायां ” इति मीमांसार्थेजिज्ञासाशब्दप्रयोगात् । इममर्थं दण्डप्रक्षेपणरूपं । अपरंकिंचिद्व्यवस्यति अभिलषतिचेत् तद्वृणीष्व ॥ ४१ ॥ इदंचपूर्ववन्नपरिहासरूपमित्याह—ब्रवीमीति । यन्त्रणा निरोधइत्यर्थः । ममयद्यद्धनमस्तितत्सर्वं विप्रकारणात् विप्रार्थमेवार्जितं । भवत्सु भवादृशेषुविप्रेषु । सम्यक् करणत्रयपूर्वकं । प्रदानेनममप्रीतियशस्करंभवेत् ॥ ४२ ॥ मोदितइत्यनेनगोभ्योन्यन्नापेक्षितवानित्यवगम्यते । उपबृंहणीः वर्धनीः । तदा गमनकाले । महात्मनः रामस्य ॥ ४३ ॥ धर्मबलैः धर्मप्रयुक्तपराक्रमैः । नियोजयामास प्रतिपादयामास । सुहृज्जनेविषये यथार्हसंमानवचःप्रचोदितः आहिताग्न्यादित्वान्निष्ठायाःपरनिपातः । तत्तदौचित्येनाभिहितसंमानवाक्यइत्यर्थः ॥ ४४ ॥ द्विजः ब्राह्मणः । सुहृत् द्विजत्वाभावेपिसुहृत् । द्विजत्वसुहृत्त्वाभावेपि भृत्यजनः । तथात्वाभावेपिदरिद्रभिक्षाचरणः भिक्षां चरतीतिभिक्षाचरणः “ कृत्यल्युटोबहुलं ” इतिकर्तरिल्युट् । कर्मधारयसमासः । तत्र तेषुमध्ये । कश्चि-

**शि०** उक्षाणेत्यार्षम् । किंच उक्ष्णांवृषाणांअणाःशब्दाःतैस्संनिधीयतेस्वसमीपंप्राप्यतेअसौ तादृशेगोव्रजेपपातेत्यर्थः । भागुरिमतेनेदमितिभूषणोक्तिस्तुदुर्ग्रहा । एतादृशनिपातनस्याजादिगणेअदृष्टत्वात् । स्वार्थिकाद्यणादिकल्पनाप्येतन्मार्गिकैव । **स०** उक्षाणसंनिधौ । आर्षोऽयमानङ् । उक्ष्णांचेत्यपिपाठः ॥ ३८ ॥ **ती०** त्रिजटाय त्रिजटस्य । **ति०** आतस्मात्सरयूतटात् सरय्वाःपरपारमभिव्याप्य यागावःस्थिताः ताआनयामास । त्रिजटस्याश्रमंप्रतिनाययामासचेतिशेषः । **शि०** तंब्राह्मणं आवाप्य प्राप्य परिष्वज्य । **स०** आतस्मात्सरयूतटात् तदभिव्याप्येत्यर्थः । “वाक्येतुसाविवक्षामपेक्षते” इत्युक्तेस्समासाभावः । आनयामास प्रापयामास । ताः दण्डसंगृहीतावृषभपर्यन्तंस्थिताः ॥ ३९ ॥ **स०** यन्त्रणा संकोचः ॥ ४२ ॥ **स०** सभार्यः भार्यासहितः । यद्वा आशिषःप्रत्यवदत् । ततःगेहगमनानन्तरं सभार्योमोदितः हृष्टोभूदित्यन्वयः । अतस्सभार्यइतिनानुपपन्नम् ॥ ४३ ॥ **शि०** प्रतिपूर्णपौरुषः प्रतिपूर्णःनित्यंसंभृतःपौरुषःपुरुषार्थोयस्मिन्सः ॥ ४४ ॥ इतिद्वात्रिंशस्सर्गः ॥ ३२ ॥

**[ पा० ]** १ क—घ. छ. ज. झ. ट. पपातोक्षाण. च. ञ. पपातोक्ष्णांच. २ छ. आव्याप्य. झ. ट. आवाप्य. ३ ख. च. छ. झ. ञ. ट. तागावः. ४ क. घ. च—ट. त्रिजटस्याश्रमं. ५ च. छ. झ. ञ. ट. तदा. ६ क. हर्षयन्. ७ च. हासस्त्वयं. ८ क. छ. ज. झ. ट. व्यवस्यसि. ९ क. यदन्यन्मम. १० पादनेनमयार्जितं. च. पादनेनमयार्जितंधनंप्रीति. ११ ख. च—झ. बृंहिणीः. १२ क. ख. च. ञ. परिपूर्णपौरुषो. ग. घ. छ. ज. झ. ट. प्रतिपूर्णपौरुषो. १३ च. छ. झ. ञ. ट. महाधनं. १४ छ. यदा. १५ क. ख. च. छ. झ. ञ. ट. योभवेत्.

न तत्र कश्चिन्न बभूव तर्पितो यथार्हसंमाननदानसंभ्रमैः ॥ ४५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

श्रीरामेणब्राह्मणेभ्योधनादिवितरणानन्तरंसीतालक्ष्मणाभ्यांसहदशरथदिदृक्षयातद्गृहंप्रतिगमनम् ॥ १ ॥ तथापथिस्वेषां दर्शनेनशोकाकुलितमानसानांजनानांबहुविधसंभाषणश्रवणेनाप्यविकृतमनसातेनदशरथगृहंप्रविश्यतत्रस्थंसुमन्त्रंप्रतिपित्रे स्वागमननिवेदनचोदना ॥ २ ॥

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ॥ जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १ ॥
ततो गृहीते दुष्प्रेक्षे त्वशोभेतां तदायुधे ॥ मालादामभिराबद्धे सीतया समलङ्कृते ॥ २ ॥
ततः प्रासादहर्म्याणि विमानशिखराणि च ॥ अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३ ॥
न हि रथ्याः स्म शक्यन्ते गन्तुं बहुजनाकुलाः ॥ आरुह्य तस्मात्प्रासादान्दीनाः पश्यन्ति राघवम् ॥ ४ ॥
पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः ॥ ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५ ॥
यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ॥ तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः ॥ ६ ॥
ऐश्वर्यस्य रसज्ञः सन्कामिनां चैव कामदः ॥ नेच्छत्येवानृतं कर्तुं पितरं धर्मगौरवात् ॥ ७ ॥
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ॥ तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥

दपि यथार्हसंमाननदानसंभ्रमैः संभ्रमस्त्वरा। "आरम्भःसंभ्रमस्त्वरा" इत्यमरः। नतर्पितोनबभूव त्वरयाक्रियमाणैरपिसंमानदानैःसर्वेपितर्पिताबभूवुरित्यर्थः ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने द्वात्रिंशःसर्गः ॥ ३२ ॥

पूर्वंपित्रानुज्ञातोपिसीतालक्ष्मणयोरनुज्ञापनायपुना रामोदशरथसमीपंगच्छति—दत्त्वेत्यादि ॥ १ ॥ तदायुधे तयोरायुधे। धनुषीइतियावत्। खड्गादीनामप्युपलक्षणमेतत्। मालादामभिः मालानिचयैरित्यर्थः। अलङ्कृते चन्दनादिभिरलङ्कृते ॥ २ ॥ प्रासादहर्म्याणि प्रासादोदेवतानांभूभुजांचावासः। हर्म्याणिधनिनांमन्दिराणि। "हर्म्यादिर्धनिनांवासःप्रासादोदेवभूभुजां" इत्यमरः। विमानशिखराणि विमानंसप्तभूमिसहितं सद्म। "विमानोस्त्रीदेवयानेसप्तभूमौचसद्मनि" इति वैजयन्ती। उदासीनः निरुत्सुकः। निर्विण्णइतियावत् ॥ ३ ॥ तस्मात् रथ्यागमनस्याशक्यत्वात्। प्रासादानितिपाठः। प्रासादादितिपाठेल्यब्लोपेपञ्चमीक्लिष्टा ॥ ४ ॥ दीनत्वेहेतुमाह—पदातिमित्यादिना ॥ ५ ॥ एकं मुख्यं ॥ ६ ॥ रसज्ञः सङ्ग्रहसुखज्ञः। कामिनां अर्थकाङ्क्षिणां। कामदः अभीष्टधनप्रदः। अनृतं अनृतवचनं। कर्तुं। धर्मगौरवात् पितृशुश्रूषणवचनकरणविधेयत्वादिरूपधर्मविषयकबहुमानात्

शि० वैदेह्या विदेहतनयया सीतयासहराघवौपितरंद्रष्टुंजग्मतुः। स० क्रियाद्वयेसीतासाहित्यंकथयितुमुभयत्रोक्तिः ॥ १ ॥ ति० प्रेष्याभ्यां रामलक्ष्मणभृत्याभ्यां। स० मुख्यत्वादायुधेइतिद्विवचनम्। सीतयेत्युभयत्रान्वेति ॥ २ ॥ ति० उदासीनः अरक्षितृत्वेननिरुत्सुकः। प्रासादः त्रिभूमिकंसद्म। स० श्रीमानप्युदासीनइत्यनेनरामस्यप्रेयस्त्वंद्योत्यते ॥ ३ ॥ ति० यतःसुखेनगन्तुंनशक्यन्ते तस्मात्प्रासादमारुह्य प्रासादात् तत्रप्रासादेसंस्थाय। स० प्रासादादितिपञ्चमीद्वितीयार्थे। प्रासादमारुह्य तस्मात् आरूढप्रासादात्। प्रासादान्तरमारुह्यपश्यन्तीत्यावृत्तेनान्वयः। अनेनात्यादरोद्योत्यते ॥ ४ ॥ ति० कामानां प्रजेप्सितपदार्थानां। महान् व्ययेप्यूनतारहितः। आकरः सर्वदादातेत्यर्थः ॥ ७ ॥ शि० आकाशगैर्भूतैः वाय्वादिभिः। स० आकाशगैर्भूतैः

[ पा० ] १ क—ट. प्रेष्याभ्यामशो. २ क. ग. घ. च—ट. रासक्ते. ३ ख. ज. शृङ्गाणि. ४ ख. प्यलोकयत्. ५ छ. झ. ट. रथ्याःसु. ख. रथ्यास्तु. च. ञ. रथ्यासु. ६ झ. ञ. ट. ठ. त्प्रासादात्. ७ छ. झ. ट. ठ. पदातिंसानुजंदृष्ट्वाससीतंचजनास्तदा. ८ घ. ज. दृष्ट्वारामंजनास्तथा. क. ख. ग. रामंदृष्ट्वाजनास्तदा. ९ झ. बहुजनाः. १० ख. तमेतं. ग. घ. तमेकः. ११ क. ऐश्वरस्यरसज्ञः. ख. ऐश्वर्यस्यबलज्ञः. १२ छ. झ. ट. ठ. कामानांचाकरोमहान्. च. ञ. कामानांचैव. १३ ख. ग. वर्कुं. १४ च—झ. ट. वचनं.

अङ्गरागोचितां सीतां रक्तचन्दन[1]सेविनीम् ॥ वर्षमुष्णं च शीतं च [2]नेष्यन्त्याशु [3]विवर्णताम् ॥ ९ ॥
अद्य नूनं दशरथः सत्वमाविश्य भाषते ॥ न हि राजा प्रियं पुत्रं विवासयितु[4]मिच्छति ॥ १० ॥
निर्गुणस्यापि पुत्रस्य कथं स्या[5]द्विप्रवासनम् ॥ किंपुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११ ॥
आनृशंस्यमनुक्रोशः [6]श्रुतं शीलं दमः शमः ॥ राघवं शोभयन्त्येते षड्गुणाः [7]पुरुषर्षभम् ॥ १२ ॥
तस्मात्तस्योपघातेन प्रजाः परमपीडिताः ॥ औदकानीव सत्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३ ॥
पीडया पीडितं सर्वं जगदस्य [8]जगत्पतेः ॥ मूलस्येवोपघातेन [9]वृक्षः पुष्पफलोपगः ॥ १४ ॥
मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः ॥ पुष्पं फलं च पत्रं च [10]शाखाश्चास्येतरे जनाः ॥ १५ ॥
ते [11]लक्ष्मण इव क्षिप्रं [12]सपत्न्यः सहबान्धवाः ॥ गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६ ॥
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ॥ [13]एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १७ ॥
[14]समुद्धृतनिधानानि परिध्वस्ताजिराणि च ॥ उपात्तधनधान्यानि [15]हृतसाराणि सर्वशः ॥ १८ ॥
रजसाऽ[16]भ्यवकीर्णानि परित्यक्तानि दैवतैः ॥ [17]मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ १९ ॥
अपेतोदकधूमानि हीनसंमार्जनानि च ॥ प्रनष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २० ॥

॥ ७—९॥ सत्वं जन्तुं । "सत्वमस्त्रीतुजन्तुषु" इत्यमरः । पिशाचमितियावत् । आविश्य प्राप्य ॥ १० ॥ वृत्तेनकेवलं चरित्रमात्रेण "वृत्तंपद्येचरित्रे" इत्यमरः । वृत्तेनकेवलमित्युक्तिर्दानमानादौविद्यमानेपि चरित्रप्राधान्यात् ॥ ११ ॥ आनृशंस्यं अहिंसकत्वं । अनुक्रोशोदया "कृपादयानुकंपास्यादनुक्रोशः" इत्यमरः । दमः इन्द्रियनिग्रहः । शमः चित्तप्रशान्तिः । "शमश्चित्तप्रशान्तिःस्याद्दमइन्द्रियनिग्रहः" इतिनिर्वचनात् ॥ १२ ॥ तस्मात् षाड्गुण्ययुक्तत्वात् । तस्य रामस्य । उपघातेन हिंसनेन । औदकानि उदकजीवनानि । शैषिकोण् ॥ १३ ॥ अस्यजगत्पतेःरामस्यपीडया विवासनरूपया । पुष्पफलैरुपगमोयस्यसपुष्पफलोपगोवृक्षइव "अन्येष्वपिदृश्यते" इतिडप्रत्ययः ॥ १४ ॥ मनुष्याणां प्राणिनामुपलक्षणमेतत् । धर्मएवसारोयस्यसःधर्मसारः ॥ १५ ॥ तेवयं सपत्न्यः सपत्नीकाः । समासान्तविधेरनित्यत्वेन "नद्यृतश्च" इतिकबभावः । येनमार्गेणगच्छतितेनेतिशेषः ॥१६॥ उद्यानानि राजार्होद्यानसदृशक्रीडावनानि । एकदुःखसुखाः समानसुखदुःखाः ॥ १७ ॥ समुद्धृतनिधानानि सम्यगुद्धृतनिक्षेपाणि । परिध्वस्ताजिराणि भग्नाङ्गणानि । "अङ्गणंचत्वराजिरे" इत्यमरः । उपात्तधनधान्यानि । अत्रधनशब्देनगवादिकंनिक्षिप्तभूषणनिष्कादिकंचोच्यते । साराणि शय्यासनादीनि ॥ १८ ॥ दैवतैः गृहदैवतैः । उद्बिलैः उद्भिन्नबिलैः ॥ १९ ॥ उदकं उदकसेचनं । हीनसंमार्जनानि संमार्जनहीनानि

सूर्यादिसत्वैः ॥ ८ ॥ **शि०** वर्षादित्रयं विवर्णतां वर्णान्तराक्रान्ततां । नेष्यति प्रापयिष्यति । **स०** उचितोङ्गरागोदेहरक्तिमायस्यास्सातथा । आहितादित्वात्परनिपातः । नेष्यति प्रापयति ॥ ९ ॥ **शि०** सत्वं महात्मनांधर्मं सत्यप्रतिज्ञत्वमित्यर्थः । आविश्य आश्रित्य । भाषते वनगमनंवक्ति । अन्यथा विवासयितुंनार्हति । हिरन्यथार्थे । एतेन सत्वंपिशाचमित्यर्थंवर्णयन्तोभट्टादयश्चिन्त्याः । तदर्थेसंकेताभावादसंभवाच्च । **स०** सत्वं साधुगुणं । आविश्य आलंब्य । भाषते नवनंगच्छेतिरामंप्रतीतिशेषः । कुतइत्यतआह—**नहीति** । यद्वा सत्वं कैकेय्यादिरूपपिशाचं । आविश्यालंब्य भाषते वनंगच्छेति नप्रकृतितः । कुतइत्यतआह—**नहीति** । "सत्वंगुणेपिशाचादौ" इतिविश्वः ॥ १० ॥ **ती०** श्रुतं अनुष्ठानपर्यवसायिशास्त्राध्ययनं । **शि०** श्रुतं विज्ञापनाश्रवणं । दमः यथाऽपराधंदण्डः । **स०** अनुक्रोशः अनिमित्तकपरदुःखप्रहाणेच्छा । एतेषड्गुणाः । एतेगुणाःतथाऐश्वर्यादिषड्गुणाश्चेतिवा ॥ १२ ॥ **शि०** पुष्पफलोपगः पुष्पफलानिप्राप्तः ॥ १४ ॥

[ **पा०** ] १ ख. सेवितां. २ क. ख. घ. छ—ठ. नेष्यत्याशु. ३ ग. घ. विवर्णिताम्. ४ क. ख. ग. छ. झ—ठ. मर्हति- ५ छ. झ. ट. द्विनिवासनम्. ६ क. दमःशीलंश्रुतंशमः. ७ क—घ. ज. पुरुषोत्तमम्. ८ घ. ज. महीपतेः. ९ क. च. वृक्षाः पुष्पफलोपगाः. घ. वृक्षःपुष्पफलागमः. १० घ. स्तस्येतरे. क. ख. स्त्वस्येतरे. ११ ख. तं. १२ ठ. सपत्नीकाःसबान्धवाः. १३ क. समदुःख. १४ ख. समुद्धृत. १५ छ. दत्तसाराणि. क. हृतभाराणि. १६ क. व्यवकीर्णानि. १७ क. ख. घ. मूषिकैः.

[1]दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ॥ असत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१ ॥
वनं नगरमेवास्तु येन[2] गच्छति राघवः ॥ अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम् ॥ २२ ॥
बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः ॥ [3]त्यजन्त्यस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥२३॥
[4]असत्त्यक्तं [5]प्रपद्यन्तां सेव्यमानं त्यजन्तु च ॥ २४ ॥
तृणमांसफला[6]दानां [7]देशं व्यालमृगद्विजम् ॥ प्रपद्यतां हि कैकेयी [8]सपुत्रा सहबान्धवैः ॥
राघवेण [9]वने सर्वे सहवत्स्याम निर्वृताः ॥ २५ ॥
इत्येवं विविधा वाचो नानाजनसमीरिताः ॥ शुश्राव [10]रामः श्रुत्वा च न विचक्रे[11]ऽस्य मानसम् ॥२६॥
स तु वेश्म पितु[12]र्दूरात्कैलासशि[13]खरप्रभम् ॥ अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः ॥ २७ ॥
विनीत[14]वीरपुरुषं प्रविश्य तु नृपालयम् ॥ ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८ ॥

प्रतीक्षमाणोपि[15] जनं तदाऽऽर्तमनार्तरूपः प्रहसन्निवाथ ॥
जगाम रामः पितरं दिदृक्षुः पितु[16]र्निदेशं विधिवच्चिकीर्षुः ॥ २९ ॥
तत्पूर्वमैक्ष्वाकसुतो महात्मा रामो [17]गमिष्यन्वनमार्तरूपम् ॥
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् ॥ ३० ॥

---

॥ २० ॥ दुष्कालेन क्षामक्षोभयुक्तकालेन । भाजनं भाण्डादि ॥ २१ ॥ येन वनेनहेतुना ॥ २२ ॥ दंष्ट्रिणः सर्पाद्याः । अस्मद्भयात् अस्मत्प्रयुक्तभयहेतोः ॥ २३ ॥ अस्माभिस्त्यक्तं पुरं । सेव्यमानं वनमित्यर्थसिद्धम् । अत्रकर्तारःपूर्वोक्तदंष्ट्र्यादयः ॥ २४ ॥ तृणमांसफलादानां तृणादाः हरिणादयः । मांसादाः व्याघ्रादयः । फलादाः वायसादयः । व्यालमृगद्विजं व्यालाः क्रूराः मृगद्विजाःयस्मिंस्तादृशंदेशं । इदमेवनगरंतादृशं भविष्यतीतिभावः । निर्वृताः सुखिताः ॥२५॥ श्रुत्वा अवस्थितस्येतिशेषः । नविचक्रे नविकारंप्राप ॥२६—२८ ॥ निदेशं नियोगं ॥ २९ ॥ तत्पूर्वं तत्प्रथमं । महात्मा महाधैर्यः । प्रतिहारणार्थं स्वागमननिवेदना-

---

**स०** वनमपिनगरमस्तु भवतु । कुतः येनकारणेनराघवोगच्छतीत्यन्वयः ॥ २२ ॥ **स०** अस्मत्भयंयस्यमृगस्य तस्माद्भीताः । अस्मान्दृष्ट्वाकस्मिंश्चिन्मृगेधावतिसतितंदृष्ट्वासर्वेबिभ्यतीतिभावः ॥ २३ ॥ **ती०** अस्मद्युक्तं पुरमितिशेषः । सेव्यमानं अस्माभिराश्रियमाणं । वनमितिशेषः ॥ २४ ॥ **ति०** तृणमांसफलानामादानंयस्मात्तं । व्यालमृगद्विजं तद्वन्तं । अर्शआद्यच् । **ती०** तृणमांसफलादानान्पशुव्यालमृगद्विजान्इतिपाठे तृणमांसफलानामादानं येभ्योवनदेशेभ्यः तेतथा । पशुव्यालमृगद्विजान् पश्वादयश्च येषुतेतथोक्ताः ॥ २५ ॥ **शि०** मातुः कैकेय्याः । वेश्म गृहं । अभिचक्राम जगाम । पितुस्तत्रैवस्थितत्वादितिभावः ॥ २७ ॥ **ति०** आर्तं खिन्नं । अभिजनं देशंतत्स्थजनमितियावत् ॥ २९॥ **वि०** तत्पूर्वं सः स्वाकारणार्थागमनकालः पूर्वोयस्यार्तरूपत्ववतः तादृशंतदारभ्यार्तरूपंसुमन्त्रंप्रेक्ष्य । व्यतिष्ठत द्वार्येवेतिशेषः । **स०** इक्ष्वाकोर्गोत्रापत्यमैक्ष्वाकोदशरथः । "दाण्डिनायन" इत्यादिनानिपातनादकारान्तत्वं । तत्सुतोरामः । व्यतिष्ठत "समवप्रविभ्यःस्थः" इत्यात्मनेपदत्वं । प्रतिहारणार्थं स्वागमवृत्तान्तप्रापणार्थं । हृञ् हरणे हरणंप्रापणमितिकौमुद्युक्तेः ॥ ३० ॥

[ **पा०** ] १ ख. ग. दुष्कालेनैव. २ क. वनंगच्छतिराघवे. ग. वनं. ३ क. ख. ग. च. छ. झ. ञ. ट. त्यजन्त्यस्मत्. ४ छ. अस्मद्युक्तं. ५ क. ख. च. छ. झ. ञ. ट. प्रपद्यन्तु. ६ च. छ. झ. ञ. फलादानं. ७ क. देशान्व्यालमृगद्विजान्. ख. देशान्व्यालमृगद्विपान्. ८ ट. सपुत्राःसह. ९ च. छ. झ. ञ. ट. वयंसर्वेवनेवत्स्याम. ख. घ. ज. वनेसर्वेवयंवत्स्याम. १० च. छ. झ. ञ. ट. राघवःश्रुत्वा. ११ घ. स्वमाननम्. ख. चमानसम्. ठ. स्वमानसम्. १२ छ. ज. झ. ट. ठ. पुनर्मातुः. ख. घ. पुनर्दूरात्. १३ ख. शिखरोपमम्. क. सदृशप्रभम्. १४ ख. ग. घ. धीर. १५ ख. ऽथजनं. ग. घ. ज. हिजनं. क. च. छ. झ—ठ. ऽभिजनं. १६ च. निवेशं. घ. नियोगं. १७ च—ठ. गमिष्यन्नृप.

पितुर्निदेशेन तु धर्मवत्सलो वनप्रवेशे कृतबुद्धिनिश्चयः ॥
स राघवः प्रेक्ष्य सुमन्त्रमब्रवीन्निवेदय स्वागमनं नृपाय मे ॥ ३१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥३३॥

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

सुमन्त्रेणश्रीरामागमनंनिवेदितेनदशरथेनतंप्रतिस्वदारानयनपूर्वकंरामाद्यानयनचोदना ॥ १ ॥ दशरथेरामदर्शनमात्रेणमूर्च्छयाभुविनिपतिततत्रत्यानांस्त्रीणांविलापः ॥२॥श्री रामेदशरथंप्रतिसीतालक्ष्मणयोःस्वानुगमनाभ्यनुज्ञांप्रार्थयमानेतेनतंप्रतिस्वनिग्रहपूर्वकंराज्यस्वीकारचोदना ॥ ३ ॥ रामेणदशरथंप्रतिराज्यादिषुस्वस्याभिलाषाभावनिवेदनपूर्वकंपितृवचनस्यावश्यकर्तव्यत्वबोधनेनपरिसान्त्वनं ॥४॥ दशरथेनपुनःपुत्रशोकेनमूर्च्छामुपागतेकैकेयीवर्जंसर्वाभिःस्त्रीभिःसुमन्त्रेणचमूर्च्छाधिगमः॥५॥

ततः कमलपत्राक्षः श्यामो निरुदरो[1] महान् ॥ उवाच रामस्तं सूतं पितुराख्याहि मामिति ॥ १ ॥
स रामप्रेषितः क्षिप्रं सन्तापकलुषेन्द्रियः[2] ॥ प्रविश्य नृपतिं सूतो निश्वसन्तं ददर्श ह ॥ २ ॥
उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् ॥ तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥ ३ ॥
आलोक्य[3] तु महाप्राज्ञः परमाकुलचेतसम्[4] ॥ राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत्[5] ॥ ४ ॥
तं वर्धयित्वा राजानं सूतः[6] पूर्वं जयाशिषा ॥ भयविक्लबया वाचा मन्दया श्लक्ष्णमब्रवीत्[7] ॥ ५ ॥
अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः ॥ ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम् ॥ ६ ॥
स त्वा[8] पश्यतु भद्रं ते रामः सत्यपराक्रमः ॥ सर्वान्सुहृद आपृच्छ्य त्वामिदानीं[9] दिदृक्षते ॥ ७ ॥
गमिष्यति[10] महारण्यं तं पश्य जगतीपते ॥ वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥ ८ ॥
स सत्यवादी[11] धर्मात्मा गांभीर्यात्सागरोपमः ॥ आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥९॥
सुमन्त्रानय मे दारान्ये केचिदिह मामकाः ॥ दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि धार्मिकम्[12] ॥ १० ॥

र्थे ॥ ३० ॥ अस्यान्तेइतिकरणंद्रष्टव्यम् ॥ ३१ ॥ इति श्रीगोविन्दराजविरचितेश्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने त्रयस्त्रिंशःसर्गः॥३३॥

पूर्वसर्गान्तोक्तमर्थंवक्ष्यमाणसंघटनार्थंसङ्ग्रहेणदर्शयति—ततइति । विशेषणैर्निर्विकारत्वंसूच्यते । निरुदरः तनुमध्यइत्यर्थः ॥ १—२ ॥ उपरक्तं राहुग्रस्तं । विशेषणान्तरकथनार्थंपुनरपश्यदित्युक्तिः ॥ ३—४॥ भयविक्लबया भयेनकातरया । दुःखितोयंकिंवदेदिति भयम् । अतएवमन्दया ॥ ५ ॥ सर्वं गृहोपकरणादिकं ॥ ६—८ ॥ निष्पङ्कः निर्लेपः ॥ ९—१० ॥

**स०** कृतबुद्धेःशिक्षितबुद्धेःनिश्चयइवनिश्चयोयस्यसतथा ॥ ३१ ॥ इतित्रयस्त्रिंशस्सर्गः ॥ ३३ ॥

**स०** निरुदरः अल्पोदरः "तनुत्वेप्यखिलंभरं" इत्युक्तेः । निस्सन्देहइतिवा । "उदरंसंशयःप्रोक्तःपरिनिष्ठातुनिश्चयः" इत्यभिधानात् । पूर्वमागमनमामन्त्रयस्वेत्युक्तम् । इदानींतुमामाख्याहीत्युक्तेर्भेदः । यद्वा मां सीतामागतामाख्याहीत्यर्थः । उपलक्षणया लक्ष्मणंच ॥ १ ॥ **शि०** निस्तोयं शैवालाद्याच्छादनहेतुनातोयरहितत्वेनप्रतीयमानं । तटाकमिवापश्यत् । अतएवपूर्वोपमानाभ्यांनवैरूप्यम् । एतदुपमालङ्कारेणराज्ञोवास्तवदुःखाभावस्सूचितः । तेनाप्रकटसाकेतेरामसंयोगोभवितेतिराजनिश्चयस्सूचितः ॥ ३ ॥ **ती०** भयविक्लबया रामोवनप्रयाणोद्युक्तइतिराज्ञेकथंनिवेदयिष्यामीतिभयेनविक्लबाकातरतायस्यास्सातथोक्तातया । अश्लक्ष्णमितिच्छेदः ॥ ५ ॥ **ति०** सर्वंधनंदत्वेत्यनेनसर्वथातिष्ठासाऽभावोध्वन्यते । **स०** उपजीविनामितिषष्ठ्यातेषामदानपात्रतांद्योतयति ॥ ६ ॥ **ति०** निष्पङ्कः निष्पापः ॥ ९ ॥ **स०** हेसुमन्त्र सु शोभनोमन्त्रोगुप्तभाषणंयस्यसतथातत्संबुद्धिः । अनेनाप्तत्वंद्यो-

[ **पा०** ] १ ङ. छ. झ. ट. निरुपमो. २ ङ. च. छ. झ. ञ. ट. कलुषेन्द्रियं. ३ क. ङ. छ. झ. ट. आबोध्यच. ग. ज. आबोध्यतं. च. ञ. आलोक्यतं. ४ घ. ङ. छ. झ. ट. चेतनं. ५ घ. ङ. छ. झ. ट. रब्रवीत्. ६ क—च. ज—ट. पूर्वसूतो. ७ ङ. छ. झ. ट. श्लक्ष्णयाब्र. ८ ङ. च. छ. झ. ञ. ट. त्वां. ९ च. छ. झ. ञ. ट. त्वांही. १० ख. ग. गमिष्यन्तं. ११ ङ. छ. झ. ट. सत्यवाक्यो. १२ क. ख. घ—ट. राघवं.

सोन्तःपुरमतीत्यैव[1] स्त्रियस्ता वाक्यमब्रवीत् ॥ आर्या[2] ह्वयति वो राजाऽगम्यतां तत्र मा चिरम् ॥११॥
एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया ॥ प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥ १२ ॥
अर्धसप्तशतास्तास्तु[3] प्रमदास्ताम्रलोचनाः ॥ कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३ ॥
आगतेषु च दारेषु समवेक्ष्य महीपतिः ॥ उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥ १४ ॥
स[4] सूतो राममादाय लक्ष्मणं मैथिलीं[5] तदा ॥ जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १५ ॥
स राजा पुत्रमायान्तं दृष्ट्वा[6] दूरात्कृताञ्जलिम् ॥ उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः ॥ १६ ॥
सोभिदुद्राव[7] वेगेन रामं दृष्ट्वा विशांपतिः ॥ तमसंप्राप्य दुःखार्तः पपात भुवि मूर्च्छितः ॥ १७ ॥
तं रामोऽभ्यपतत्क्षिप्रं लक्ष्मणश्च महारथः[8] ॥ विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा[9] ॥ १८ ॥
स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि ॥ हाहा रामेति सहसा भूषणध्वनिर्मूर्च्छितः[10] ॥ १९ ॥
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ॥ पर्यङ्के[11] सीतया सार्धं रुदन्तः[12] समवेशयन् ॥ २० ॥
अथ रामो मुहूर्तेन[13] लब्धसंज्ञं महीपतिम् ॥ उवाच प्राञ्जलिर्भूत्वा[14] शोकार्णवपरिप्लुतम् ॥ २१ ॥
आपृच्छे त्वां महाराज सर्वेषामीश्वरोसि नः ॥ प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥२२॥
लक्ष्मणं चानुजानीहि सीता चान्वेति[15] मां वनम् ॥ कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥२३॥
अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद ॥ लक्ष्मणं मां च सीतां च प्रजापतिरिव[16] प्रजाः ॥ २४ ॥
प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः ॥ उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥ २५ ॥

ह्वयति आह्वयति ॥ ११—१२॥ अर्धसप्तशताः अर्धसप्तशतस्येतिविग्रहः "अर्धंनपुंसकं"इतिसमासः। ताम्रलोचनाः सदारामविवासननिमित्तरोदनादितिभावः ॥१३—१५॥ उत्पपात उदतिष्ठत् ॥१६॥ अभिदुद्राव अभिमुखमाजगाम ॥१७॥ अभ्यपतत् उत्थापनार्थमितिभावः। इवशब्दएवकारार्थः ॥१८॥ भूषणध्वनिभिः मूर्च्छितः व्याप्तः ॥ १९ ॥ रामलक्ष्मणौ सीतयासार्धं तंबाहुभ्यांपरिष्वज्य पर्यङ्केसमवेशयन्नित्यर्थः ॥ २० ॥ मुहूर्तस्येतिपाठेमुहूर्तेनेत्यर्थः ॥ २१ ॥ कुशलेन चक्षुषेतिशेषः। हेतौतृतीयावा ॥ २२ ॥ सीता चेति। तामप्यनुजानीहीतिभावः। तौनिवर्तयेत्याशङ्क्याह—कारणैरिति। कारणैः दुःखादिकारणैः। तथ्यैः परमार्थैः। नचेच्छतः अननुगमनमितिशेषः ॥ २३ ॥ लक्ष्मणंसीतांमांचसर्वान्नः अनुजानीहीत्यन्वयः। "त्यदादीनिसर्वैर्नित्यं" इत्येकशेषः ॥ २४ ॥ वनवासायजगतीपतेःस्वस्यानुज्ञांप्रतीक्षमाणमित्यन्वयः

तयति। मेदारान् कौसल्यां। राममातृत्वेनमुख्यत्वात्संघतउत्कृष्योक्तिः। येचमामकादाराःतदतिरिक्ताःतानानयेतियोजना। पक्षद्वयेपिन मेइत्यधिकं। द्वितीयेपक्षेकौसल्यांपरिवार्येत्युत्तरग्रन्थानुकूल्यंचेतिज्ञेयम् ॥ १० ॥ **ति०** वोयुष्माकंराजा अवैधव्यदत्वात्। नतुप्रजानां तासांदुःखदत्वात् ॥ ११ ॥ **शि०** अर्धशतशब्दएकदेशसमासप्रकृतिकःअर्शआद्यजन्तः। **स०** अर्धसप्तशतानांयासुताः ॥ १३ ॥ **ति०** आरात् दूरतः। उत्पपात आलिङ्गनार्थं। **स०** आचारात् ल्यब्लोपनिमित्तापञ्चमी। शिष्टाचारमाश्रित्य। कृताञ्जलिं उत्पपात पुप्लुवे ॥ १६ ॥ **ति०** तं आलिलिङ्क्षितं ॥ १७ ॥ **ति०** भूषणध्वनिमिश्रितः उरश्शिरस्ताडनादिनाचञ्चलतरभ्रश्यद्भूषणध्वनिमिलितः। **स०** स्त्रीसहस्रनिनादः स्त्रीणांदाराणांतथाइतरासांदासीनांच। पूर्वंसार्धशतत्वोक्तेरत्रसहस्रेत्युक्तौतद्विरोधइत्यनेननिरस्तंवेदितव्यम् ॥ १९ ॥ **ती०** तावुभौरामलक्ष्मणौसीतयासार्धंतंपरिष्वज्यउत्थापितवन्तौ। तेत्रयस्समवेशयन्नित्यध्याहारेणयोजना ॥ २० ॥ **वि०** मुहूर्तात् मुहूर्तेन। **ति०** मुहूर्तस्य संबन्धसामान्येषष्ठी। मुहूर्तेन। **स०** मुहूर्तस्य उपरीतिशेषः ॥ २१ ॥ **शि०** कुशलेनपश्य कुशलफलकावलोकनंकुरु। फलस्यहेतुत्वेन विवक्षणात्तृतीया ॥ २२ ॥ **ति०** अव्यग्रं लेशतो-

[ **पा०** ] १ ग. घ. ज. अतीत्याशु. २ क. ख. ग. ङ—ट. आर्यो. ३ ख. ङ. छ. झ. ट. शतास्तत्र. ४ घ. ज. सुमन्त्रो. छ. सततो. ५ ख. चापिमैथिलीं. ग. ङ. छ—ट. मैथिलींतथा. ६ ङ. झ. ट. दृष्ट्वाचारात्. ७ क. च. अभि. ८ छ. महायशाः. ९ ङ. छ. ज. झ. ट. तथा. १० ङ. छ. झ. ट. मिश्रितः. ११ घ. ज. सीतयासहपर्यङ्के. १२ क. ङ. छ. ञ. रुदन्तं. १३ ख. ङ. छ. ज. झ. ट. ठ. मुहूर्तस्य. क. ञ. मुहूर्तात्तं. १४ ट. वाक्यं. ङ. छ. झ. बाष्प. १५ क. घ—ञ. चान्वेतु १६ ख—ङ. छ—ट. रिवात्मजान्.

अहं राघव कैकेय्या वरदानेन मोहितः ॥ अयोध्यायास्त्वमेवाद्य भव राजा निगृह्य माम् ॥ २६ ॥
एवमुक्तो नृपतिना रामो धर्मभृतां वरः ॥ प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः ॥ २७ ॥
भवान्वर्षसहस्राय पृथिव्या नृपते पतिः ॥ अहं त्वरण्ये वत्स्यामि न मे कार्यं त्वयाऽनृतम् ॥ २८ ॥
नव पञ्च च वर्षाणि वनवासे विहृत्य ते ॥ पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ॥ २९ ॥
रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयतः ॥ कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत् ॥ ३० ॥
श्रेयसे वृद्धये तात पुनरागमनाय च ॥ गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम् ॥ ३१ ॥
न हि सत्यात्मनस्तात धर्माभिमनसस्तव ॥ विनिवर्तयितुं बुद्धिः शक्यते रघुनन्दन ॥ ३२ ॥
अद्य त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा ॥ एकाहदर्शनेनापि साधु तावच्चराम्यहम् ॥ ३३ ॥
मातरं मां च संपश्यन्वसेमामद्य शर्वरीम् ॥ तर्पितः सर्वकामैस्त्वं श्वः काले साधयिष्यसि ॥ ३४ ॥
दुष्करं क्रियते पुत्र सर्वथा राघव त्वया ॥ मत्प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनम् ॥ ३५ ॥

॥ २५ ॥ मोहितः वञ्चितइत्यर्थः ॥ २६—२७ ॥ वर्षसहस्राय अनेकवर्षाणीत्यर्थः । मे मह्यं । अनृतं अनृतवचनं ॥२८॥ प्रतिज्ञान्ते प्रतिज्ञावसाने ॥२९॥ मिथः रहसि । कैकेय्या चोद्यमानः अद्यैवप्रस्थापयेतिप्रेर्यमाणः ॥ ३० ॥ श्रेयसे पारलौकिकफलाय । वृद्धये ऐहिकफलाय । गच्छस्व गच्छ । अरिष्टं शुभं । "अरिष्टे तु शुभाशुभे" इत्यमरः । अकुतोभयं कुतश्चिदपिजन्तोर्भयरहितं ॥ ३१ ॥ सत्यात्मनः सत्यस्वभावस्य । " आत्मादेहेधृतौजीवेस्वभावे " इतिवैजयन्ती । धर्माभिमनसः धर्माभिनिविष्टमनसः ॥ ३२ ॥ अद्य अस्मिन्दिने । इदानीं आसन्नामित्यर्थः । साधुः सुखं । चरामि वसामि ॥ ३३ ॥ साधयिष्यसि गमिष्यसि । काले प्रातःकाले ॥ ३४ ॥ मत्प्रियार्थं ममपरलोकप्रियार्थमित्यर्थः । अन्यथाऽत्तरश्लोकविरोधात् ।

पिविषादरहितं ॥ २५ ॥ **ती०** मे मया । त्वं आनृतः ईषदनृतयुक्तोपिनकार्यः । **वि०** भवान् वर्षसहस्रायुःपृथिव्याःपतिर्भवतु । अतःपरमप्यनेककालंराजाभवेत्यर्थः । **स०** हेनृपते पृथिव्याःपतिर्भवान् वर्षसहस्रायुः बहुसहस्रवर्षपर्यन्तंजीवितवान् । एतेन बहुकालंराज्यकर्तारंत्वांनिगृह्यराज्यकरणंनमह्यंरोचतइति भवान्वर्षसहस्रायुःपृथिव्याःपतिर्भवत्वितिव्याख्यानं रामस्यकदाप्यनृतभाषित्वाभावादुत्तरश्लोकव्याख्यानवदुपेक्ष्यमित्यपिसूचितम् । **शि०** हेनृपते वर्षसहस्रायपृथिव्याः वर्षसहस्राणां बहुखण्डानां अयः प्राप्तिर्यस्यांसाचसापृथिवीतिकर्मधारयः । तस्याः । यतोभवानेवपतिः अतःराज्यस्यकाङ्क्षिता आकाङ्क्षामेनास्ति ॥ २८ ॥ **शि०** प्रतिज्ञान्ते अवध्यवसाने तेपादौपुनर्ग्रहीष्यामि । पुनरित्यनेन प्रतिज्ञामध्यएवतवपादावेकवारंग्रहीष्यामीतिसूचितम् । नचावध्यन्ते राज्ञःप्रकटस्थित्यभावेनतत्पादग्रहणासंभवाद्रामस्यमृषासंसर्गित्वापत्तिरितिवाच्यम् । मातापित्रोरभेदाध्यवसायान्मातृपादग्रहणस्यसंभवात्तस्यचपितृपादग्रहणानतिरेकान्मृषासंसर्गित्वस्यासंभवात् । किंच पदयोश्चरणयोरिमौ पादौ पादुकापदार्थौ ग्रहीष्यामि नमस्करिष्यामीत्यर्थः । पादमितिपाठेतु पदमेवपादं त्वद्दत्तंराजोचितस्थानंत्राणंचेत्यर्थः । ग्रहीष्यामि स्वीकरिष्यामि । तथाचमेदिनी "पदंशब्देचवाक्येच—स्थानत्राणयोः" इति । **स०** प्रतिज्ञान्ते चतुर्दशवर्षानन्तरं । स्वर्गादागत्यस्थितस्यतेपादौग्रहीष्यामीत्यभिप्रायः । यथोक्तमत्रैवोत्तरत्रयुद्धकाण्डे "महादेववचःश्रुत्वाराघवःसहलक्ष्मणः । विमानशिखरस्थस्यप्रणाममकरोत्पितुः" इति । विहृत्येत्यनेन राक्षसहननादिकंममविहारइतिसूचयति ॥ २९ ॥ **शि०** सत्यपाशेन सत्यस्ययः पः पालनंतस्ययःअशोव्याप्तिःपरिपूर्णता तेनसंयुतः । चोद्यमानः वनायाज्ञापयेतिरामेणप्रार्थ्यमानः । कैकेय्यासहराजातंराममब्रवीत् । मिथएवार्थकम् ॥ ३० ॥ **शि०** तात हेप्रिय । हेस्व ममआत्मप्रभृते । श्रेयसे अवलोकनकर्तॄणांकल्याणाय । वृद्धये केषांचिद्राज्यादिप्राप्तये । अकुतोभयं सर्वहेतुकभयाभावविशिष्टं । अरिष्टं अतिशयेनशत्रूणांनिवर्तकं । पन्थानं गच्छ । **स०** श्रेयसे सतां । वृद्धये वैरिच्छेदाय । स्वारिष्टं स्वानामरिष्टं क्षेमंयथाभवतितथा गच्छ ॥३१॥ **शि०** एकाहं एकदिनं । इदानीं रजनीं एकरात्रिं । दर्शनेन तवावलोकनेनापि । सर्वथा सर्वप्रकारेण । साधु अतिशोभनं । चरामि प्राप्नोमि ॥ ३३ ॥ **शि०** मत्प्रियार्थमित्युक्त्याप्रतिभासितंवियोगप्रियत्वंस्वस्मिन्निवारयन्नाह—**नचेति**

[ **पा०** ] १ क. ख. ङ—ट. अयोध्यायां. २ ख. ट. कोविदं. ३ च. ञ. ठ. सहस्रायुः. ४ ङ. छ. ज. झ. ट. राज्यस्य काङ्क्षिता. ग. च. कार्यस्त्वयानृतः. ५ ख. ग. ङ—झ. ट. संयुतः. ६ ग. च. ज. श्रेयसो. ७ ख. च. मव्यग्रं. ८ ङ. च. छ. झ. ट. संनिवर्तयितुं. ९ ङ. च. छ. झ. ट. एकाहं. १० ग—ट. काल्ये. ११ ङ. छ. झ. प्रिय. १२ ङ. छ. झ. त्वयाहि मत्प्रियार्थंतुवनमेवमुपाश्रितं. १३ घ. यातोसि.

न चैतन्मे प्रियं पुत्र शपे सत्येन राघव ॥ छन्नया चलितस्त्वसि स्त्रिया छन्नाग्निकल्पया ॥ ३६ ॥
वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमिच्छसि ॥ अनया वृत्तसादिन्या कैकेय्याऽभिप्रचोदितः ॥३७॥
न चैतदाश्चर्यतमं यस्त्वं ज्येष्ठः सुतो मम ॥ अपानृतकथं पुत्र पितरं कर्तुमिच्छसि ॥ ३८ ॥
अथ रामस्तथा श्रुत्वा पितुरार्तस्य भाषितम् ॥ लक्ष्मणेन सह भ्रात्रा दीनो वचनमब्रवीत् ॥ ३९ ॥
प्राप्स्यामि यानद्य गुणान्को मे श्वस्तान्प्रदास्यति ॥ अपक्रमणमेवातः सर्वकामैरहं वृणे ॥ ४० ॥
इयं सराष्ट्रा सजना धनधान्यसमाकुला ॥ मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१ ॥
वनवासकृता बुद्धिर्न च मेऽद्य चलिष्यति ॥ ४२ ॥
[11]यस्तुष्टेन वरो दत्तः कैकेय्यै वरद त्वया ॥ दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव ॥ ४३ ॥
अहं निदेशं भवतो यथोक्तमनुपालयन् ॥ चतुर्दश समा वत्स्ये वने वनचरैः सह ॥ ४४ ॥
मा विमर्शो वसुमती भरताय प्रदीयताम् ॥ न हि[12] मे काङ्क्षितं राज्यं सुखमात्मनि वा प्रियम् ॥
यथा निदेशं कर्तुं वै तवैव रघुनन्दन ॥ ४५ ॥
अपगच्छतु ते दुःखं मा भूर्बाष्पपरिप्लुतः ॥ न हि क्षुभ्यति दुर्धर्षः समुद्रः सरितां पतिः ॥ ४६ ॥
नैवाहं राज्यमिच्छामि न सुखं नच मैथिलीम्[13] ॥ नैव सर्वानिमान्कामान्न स्वर्गं नैवं[14] जीवितम् ॥४७॥
त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ ॥ प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४८ ॥

प्रियान् अभिमतवर्गान् ॥ ३५ ॥ छन्नया गूढाभिप्रायया । चलितः स्वाधीनत्वाच्चलनंप्राप्तः । पाठान्तरे तुवञ्चितइत्यर्थः । छन्नाग्निकल्पया भस्मच्छन्नाङ्गारतुल्यया ॥ ३६ ॥ यावञ्चना सामान्येनप्रतिश्रुतयोर्वरयोर्भरताभिषेचनत्वद्विवासनरूपविशेषपर्यवसायित्वरूपा । मे मया । लब्धा । तामपिवञ्चनां वृत्तसादिन्या कुलोचिताचारनाशिन्या । अनयाप्रचोदितस्त्वं निस्तर्तुमिच्छसि समापयितुमिच्छसि । अंहोतेगुणइतिभावः ॥ ३७ ॥ अपानृतकथं अपगतासत्यवचनं ॥ ३८ ॥ भाषितं एकाहदर्शनेनापीत्याद्युक्तं । दीनः एकाहमपिपितृदर्शनसौख्यंनलब्धमितिदीनः ॥ ३९ ॥ तर्पितःसर्वकामैरित्यस्योत्तरमाह—प्राप्स्यामीति । गुणान् गुणविशिष्टाभिमतपदार्थान् । सर्वकामैरपक्रमणमेववृणे । सर्वकामप्रतिनिधित्वेनापक्रमणमेववरयइत्यर्थः ॥४०॥ विसृष्टा त्यक्ता ॥४१॥ वनवासेत्यर्धमेकंवाक्यं ॥४२॥ अत्रसइत्यध्याहार्यं । निखिलेन सर्वात्मना । अतस्त्वंसत्यः सत्यवचनः भव ॥४३॥ निदेशं शासनं । "निदेशःशासनं"इत्यमरः । वनचरैः तपस्विभिः ॥ ४४ ॥ भवराजानिगृह्यमामित्यस्योत्तरमाह—मेति । माविमर्शः विचारोमाभूत् । आत्मनि मनसि । सुखं प्रियंवाउद्दिश्यराज्यंनकाङ्क्षितं । अपितु तवनिदेशं तवाज्ञां । यथाकर्तुमेव यथावत्कर्तुमेवेत्यर्थः ॥४५–४७॥ अहं त्वां सत्यं सत्ययुक्तमिच्छामि । अनृतं अनृतयुक्तं नेच्छामि । तवप्रत्यक्षं प्रत्यक्षदैवभूतस्यतवसन्नि-

॥ ३४ ॥ शि० अदीनः सर्वकालंदीनत्वाभावविशिष्टः ॥ ३९ ॥ ति० यद्वा अद्यप्रयाणेसतियान्गुणान् प्रतिज्ञापालनजधर्मरूपान्प्राप्स्यामि श्वोगमनेकस्तान्दास्यतिप्रत्युताधर्मएव ॥ ४० ॥ शि० क्षुभ्यति मर्यादांत्यजति ॥ ४६ ॥ स० अहंराज्यं अहङ्कारतत्वाभिमानिरुद्रराज्यं । कैलासाधिपत्यमितियावत् । "महतश्चतुर्मुखात्" इतिवदभिमान्यभिमन्यमानयोरैक्यव्यपदेशः । सुखं वरुणलोकं । "सुखंपुर्याप्रचेतसः" इतिविश्वः । मेदिनीं भूलोकं । कामान् काम्यान्धनादीन् ॥ ४७ ॥ स० सत्यं सत्यभाषिणं । त्वां

[ पा० ] १ क. कर्म. २ ख. चलितस्त्वद्य. घ. छुरितस्त्वसि. ज. चलितश्चासि. ३ ङ. छ—ट. भस्माग्नि. ४ घ. वध्वामे. ५ ख. तांच. ६ क. मर्हसि. ७ ख. अनयाऽप्रियवादिन्या. ज. जनन्यावृत्तसादिन्या. ८ घ. तर्तुं. ९ ङ. च. छ. झ. ञ. ट. त्वदा. १० क—घ. ज. निसृष्टा. ११ ङ. छ. झ. ट. यस्तुयुद्धे. १२ ज. हितं. १३ ङ. छ. झ. ट. मेदिनीं. १४ ङ. झ. नचजीवितुं. च. छ. ज. ञ. ट. नचजीवितं.

न च शक्यं मया तात स्थातुं क्षणमपि प्रभो ॥ न[1] शोकं धारयस्[2]वैनं न[3] हि मेऽस्ति विपर्ययः ॥४९॥
अर्थितो ह्यसि कैकेय्या वनं गच्छेति राघव ॥ मया चोक्तं व्रजामीति तत्सत्यमनुपालये ॥ ५० ॥
मा चो[4]त्कण्ठां कृथा देव वने रंस्यामहे वयम् ॥ प्रशान्तहरिणाकीर्णे नानाश[5]कुननादिते ॥ ५१ ॥
पिता हि दैवतं तात देवतानामपि स्मृतम् ॥ तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२ ॥
चतुर्दशसु वर्षेषु गतेषु न[6]रसत्तम ॥ पुनर्द्रक्ष्यसि मां प्राप्तं संतापोऽयं विमुच्यताम् ॥ ५३ ॥
येन[7] संस्तंभनीयोऽयं सर्वो बाष्पगलो जनः ॥ स त्वं पुरुषशार्दूल किमर्थं विक्रियां गतः ॥ ५४ ॥

पुरं च राष्ट्रं च मही च[8] केवला मया विसृष्टा भरताय दीयताम् ॥
अहं निदेशं भवतोऽनुपालयन्वनं गमिष्यामि चिराय सेवितुम् ॥ ५५ ॥
मया नि[9]सृष्टां[10] भरतो महीमिमां सशैल[11]षण्डां स[12]पुरां सकाननाम् ॥
शि[13]वां सुसीमाम[14]नुशास्तु केवलं त्वया यदुक्तं नृपते तथाऽस्तु तत् ॥ ५६ ॥
न मे तथा पार्थिव [15]धीयते मनो महत्सु कामेषु न चात्मनः प्रिये ॥
यथा निदेशे तव शिष्टसंमते व्यपैतु दुःखं तव मत्कृतेऽनघ ॥ ५७ ॥
तदद्य नैवानघ राज्यमव्ययं न सर्वका[16]मान्न सुखं न मैथिलीम् ॥
न [17]जीवितं त्वामनृतेन योजयन्वृणीय सत्यं व्रतमस्तु ते तथा ॥ ५८ ॥

धौ । सत्येनसुकृतेनच ते तुभ्यं । शपइत्यन्वयः । "श्लाघह्नुङ्स्था—" इत्यादिनाचतुर्थी ॥ ४८ ॥ स्थातुं इहनगरइतिशेषः । विपर्ययः संकल्पितवनगमनोद्योगनिवृत्तिः ॥ ४९ ॥ नकेवलंत्वदाज्ञापरिपालनार्थमेवगच्छामि किंतुमत्प्रतिज्ञापरिपालनार्थमपीत्याह—अर्थितइति ॥ ५० ॥ उत्कण्ठां उत्कलिकां । "उत्कण्ठोत्कलिकेसमे" इत्यमरः । शोकातुरतया स्मरणमितियावत् ॥ ५१ ॥ देवतानामपिदैवतमितिस्मृतं किमुतमनुष्याणामितिभावः । दैवतमित्येव पितापरमदैवतमिति मत्वेत्यर्थः ॥ ५२—५३ ॥ संस्तम्भनीयः निवृत्तबाष्पःकरणीयः ॥ ५४ ॥ सद्यःशोकनिवृत्तयेपुनःपुनराह—पुरंचेत्यादि । मयानिसृष्टंपुरंचदीयतां मयानिसृष्टं राज्यंचदीयतामिति प्रत्येकमन्वयः । सेवितुं नपुनरप्यैवागन्तुं ॥ ५५ ॥ शिवामित्यनेनराज्यस्यदुर्भरत्वात्त्यजामीतिगम्यते । इदंचस्वेच्छयानकरोमि किंतु त्वदनुज्ञयैवेत्याह—त्वयायदिति ॥ ५६ ॥ धीयते स्थाप्यते ॥ ५७ ॥ त्वामनृतेनयोजयन्सन् राज्यादिकं नवृणीय तवव्रतंयथासत्यंतथास्त्वित्यन्वयः ॥ ५८ ॥

नानृतं अननृतभाषिणं । कर्तुमिच्छामि ॥ ४८ ॥ **शि०** शोकंधारयस्व निवर्तय । अनवस्थानात्मकधृङोरूपम् । **वि०** धारयस्व सहस्व ॥ ४९ ॥ **शि०** दैवतं देवता । तस्माद्धेतोःदैवतं देवतादेवतासंबन्ध्येवेति इदं पितुर्वचः । **स०** तववचइतिवक्तव्येपितृवचइत्युक्तिस्तुजगत्सवितुर्ममत्वंपितेत्युपहासएवेतिसूचयितुम् ॥ ५२ ॥ **स०** प्राप्तं लङ्कायां । **शि०** प्राप्तं अयोध्यावासिभिस्संगतं । मांत्वंद्रक्ष्यसि । एतेन तस्यसर्वलोकेषुकामचारत्वंसूचितम् ॥ ५३ ॥ **ति०** सीमासु स्थितइतिशेषः । मयाविनातेनात्रपुरेस्थातुमशक्यत्वादितिभावः । केवलमनुशास्तु रक्षणमात्रंकरोतु । नतुराजत्वाभिमानोराज्यसुखंवातस्येतिध्वनितम् । अनेनराज्ञोऽजीवनं भरतस्यनन्दिग्रामवासश्चध्वनितः । शिवासुसीमासुरममाणइत्यापाततोर्थः ॥ ५६ ॥ **स०** महत्सु महात्मसुविषये । यथामनोदीयते तथा कामेषुविषयेषु राज्यादिषु । नदीयते । यथाच आत्मनः तवममच प्रियेनिदेशेआज्ञायां । मनोदीयते नतथाकामेष्वित्यन्वयः । व्यपैतु गच्छतु ॥ ५७ ॥ **स०** वृणीय वृङोलिङुत्तमपुरुषः । **ति०** त्वामनृतेनयोजयन् राज्यादिकं चिन्तितं मद्विषयकचिन्तावन्तं । त्वामपि नवृणीय नवरिष्यामीतिमेसत्यंव्रतं । अत्रचिन्तितंत्वामित्यनेन चिन्तयातवमरणेपिमयानस्थेयम् । मरणादपिपरलोकनाश-

[ पा० ] १ क—च. झ. ञ. सशोकं. २ क. ख. घ. ङ. च. झ. ञ. ट. स्वेमं. ३ क. नच. ४ ङ. ज. झ. ट. चोत्कण्ठाकृता. ५ क—ङ. ज. झ. शकुनि. ६ झ. नृपसत्तम. घ. भरतर्षभ. ७ ङ. च. ज. झ. ट. एवं. ८ ख. ग. घ. ज. सकानना. ९ क. ख. ग. ज. निसृष्टा. १० क. घ—छ. झ. ञ. ट. विसृष्टां. ११ ङ. च. छ. झ. ञ. ट. खण्डां. १२ ङ. च. झ. ट. पुरोपकाननां. १३ ङ. छ. झ. ट. शिवासुसीमास्वनु. १४ ख. मभिशास्तु. १५ ग. ङ. च. छ. झ. ञ. दीयते. १६ क. ख. घ. ङ. च. ज—ट. कामान्वसुधां. १७ ङ. झ. ट. चिन्तितं.

फलानि मूलानि च भक्षयन्वने गिरींश्च पश्यन्सरितः सरांसि च ॥
वनं प्रविश्यैव विचित्रपादपं सुखी भविष्यामि तवास्तु निर्वृतिः ॥ ५९ ॥
एवं स राजा व्यसनाभिपन्नः [1]शोकेन दुःखेन च [2]ताम्यमानः ॥
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो [3]मोहं गतो नैव [4]चिचेष्ट किंचित् ॥ ६० ॥
[5]देव्यस्ततः संरुरुदुः समेतास्तां वर्जयित्वा नरदेवपत्नीम् ॥
रुदन्सुमन्त्रोपि जगाम मूर्च्छां हाहाकृतं तत्र बभूव सर्वम् ॥ ६१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

सुमन्त्रेणसकोपाटोपंकैकेयीमनःक्षोभायतन्मातृदुर्वृत्तकथनपूर्वकमुपालंभेनपुनःसानुनयंपरिसान्त्वनेनचप्रयतनेपितन्मनसिक्षोभाद्यनुदयः ॥ १ ॥

ततो निर्धूय सहसा शिरो निश्वस्य चासकृत् ॥ [6]पाणिं पाणौ विनिष्पिष्य दन्तान्[7]कटकटाप्य च ॥१॥
लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत् ॥ कोपाभिभूतः सहसा संतापमशुभं गतः ॥ २ ॥
मनः समीक्षमाणश्च सूतो दश[8]रथस्य सः ॥ कंपयन्निव कैकेय्या हृदयं वाक्छरैः शितैः ॥ ३ ॥
वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव [9]चाशुगैः ॥ कैकेय्याः सर्व[10]मर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥
यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम् ॥ भर्ता सर्वस्य जगतः स्थावरस्य चरस्य च ॥
न [11]ह्यकार्यतमं किंचित्तव देवीह विद्यते ॥ ५ ॥

ममदुःखंभविष्यतीतित्वयानक्लेष्टव्यमित्याह—फलानीति । निर्वृतिः सुखं ॥५९॥ एवं उक्तवन्तमितिशेषः । त्वग्दाहोत्पादकः शोकः । दुःखं अन्तर्व्यथोत्पादकं । नचिचेष्ट नचेष्टतेस्म ॥ ६० ॥ तां “ रामतस्मादितः शीघ्रंवनंगन्तुंत्वमर्हसि ” इत्याद्युक्तक्रौर्ययुक्तांकैकेयीं । हाहाकृतं हाहाशब्दस्यकृतंकरणंयस्मिंस्तत्तथा । सर्वं परिचारकादिजनजातं ॥ ६१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने चतुस्त्रिंशःसर्गः ॥ ३४ ॥

सुमन्त्रस्यकैकेयीविषयकोपानुभावंदर्शयति—ततइत्यादि । कटकटाप्य कटकटाशब्दयुक्तान्कृत्वा । कटकटाशब्दात् “तत्करोति—”इतिण्यन्ताल्ल्यप् ॥ १ ॥ कोपसंरक्ते कृत्वेतिशेषः । वर्णं देहकांतिं । पूर्वोचितं पूर्वाभ्यस्तं । स्वाभाविकमित्यर्थः । जहत् त्यजन् । कोपरक्ताङ्गइत्यर्थः । अशुभं तीव्रमित्यर्थः ॥ २॥ मनःसमीक्षमाणः कैकेयीविषयस्नेहरहितंजानन्नित्यर्थः । सूतः सारथिः ॥ ३ ॥ आशुगैरिव बाणैरिव स्थितैः । वाक्यवज्रैः वाक्सारैः । मर्माणि मर्मतुल्यान्दोषान् । निर्भिन्दन् प्रकाशयन् ॥ ४ ॥ यस्यास्तव ।

कानृतत्वस्यातिकष्टत्वंसूचितम् । तेनतवमरणे नमेदुःखंनापिपापं यथातवानृतत्वकरणेइतिसूचितम् ॥ ५८ ॥ **शि०** व्यसनाभिपन्नः व्यसनं रामकर्मकाभिषेकत्यागः अभिपन्नंप्रापितंयेनसः । किंच व्यसनं राजवृत्तान्तत्यागं अभिपन्नःप्राप्तः । शोकेनदुःखेनतत्कार्येणचपीड्यमानः । अतएव विनष्टसंज्ञः कार्याकार्यविवेकरहितः । **स०** व्यसनाभिपन्नः वेः परमात्मनः असनं निरसनं अभिपन्नः प्राप्तः । रामंवनेप्रेषितवानितियावत् । दुःखेन आन्तरेण । तापेन बहिष्ठेनज्वरादिना । विनष्टसंज्ञः अव्यक्तापत्यभगवद्बुद्धिः । भूमिंगतःलौकिकंकिंचिन्नविवेद ॥ ६० ॥ **शि०** तां मुख्यां । नरदेवपत्नीं कौसल्यां वर्जयित्वारुरुदुः । अनेन तस्यास्तात्कालिकशोकाभावस्सूचितः । तेन रामोपदेशस्याघटितघटनापटीयस्त्वंव्यक्तम् । **स०** रुदञ्जगामेत्यत्र लड्भूतार्थे । “धातुसंबन्धेप्रत्ययाः” इतिस्मरणात् । वसन्ददर्शेतिवत् । सर्वं चेतनजातं । हाहाकृतं भावेक्तः । हाहेतिकृतंकरणंयस्यतत्तथा ॥ ६१ ॥ इतिचतुस्त्रिंशस्सर्गः ॥३४॥

**शि०** कैकेय्याः हृदयं । हृत् हृदयं अयते अन्यविषयंप्रापयतितत् । मन्थरामित्यर्थः । सामान्येनपुंसकं । कंपयन्निव ॥ ३ ॥

**[ पा० ]** १ ङ. च. झ. ञ. ट. तापेन. २ ख. ताड्यमानः. ङ. च. झ. ञ. ट. पीड्यमानः. ३ च. छ. ञ. भूमिं. ४ क. ख. च. छ. ञ. ठ. विवेद. ५ ङ. च. छ. झ. ञ. ट. देव्यःसमस्ताः. ६ ज. घ. पाणौपाणिं. ७ ङ. छ. ञ. ट. कटकटाय्य. ८ ङ. झ. ट. रथस्यच. ९ ङ. छ. ज. झ. ट. चाशुभैः. १० च. ज. कर्माणि. ११ ख. ह्यकार्यमतः.

पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥ ६ ॥
यन्महेन्द्रमिवाजय्यं दुष्प्रकंप्यमिवाचलम् ॥ महोदधिमिवाक्षोभ्यं संतापयसि कर्मभिः ॥ ७ ॥
माऽवमंस्था दशरथं भर्तारं वरदं पतिम् ॥ भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ॥ ८ ॥
यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये ॥ इक्ष्वाकुकुलनाथेऽस्मिंस्तल्लोपयितुमिच्छसि ॥ ९ ॥
राजा भवतु ते पुत्रो भरतः शास्तु मेदिनीम् ॥ वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥१०॥
न हि ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति ॥ तादृशं त्वममर्यादमद्य कर्म चिकीर्षसि ॥ ११ ॥
[अयोध्यावासिनः पौरा ये च जानपदा जनाः ॥ नूनं सर्वे गमिष्यामो मार्गं रामनिषेवितम् ॥ १२ ॥
त्यक्ताया बान्धवैस्सर्वैर्ब्राह्मणैस्साधुभिस्सदा ॥ का प्रीती राज्यलाभेन तव देवि भविष्यति ॥
तादृशं त्वममर्यादं कर्म कर्तुं चिकीर्षसि ॥ १३ ॥]
आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम् ॥ आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥१४॥
महाब्रह्मर्षिजुष्टा वा ज्वलन्तो भीमदर्शनाः ॥ धिग्वाग्दण्डा न हिंसन्ति रामप्रव्राजने स्थिताम्॥१५
आम्रं छित्त्वा कुठारेण निंबं परिचरेत्तु यः ॥ यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १६ ॥

ययात्वयेत्यर्थः । तवेत्यत्रतस्याइत्युपस्कार्यम् ॥ ५ ॥ अन्ततः पर्यवसानगत्या । पतिहननद्वारासर्वेषांविनाशनादितिभावः ॥ ६ ॥ तत्रैवयुक्त्यन्तरमाह—यदिति ॥७॥ भर्तुरिच्छाहि भर्तुरिच्छानुसरणमेव। पुत्रकोट्या इतिपञ्चमी । पुत्रानुसरणंत्यक्त्वापिभर्तुरिच्छाऽनुसर्तव्येतिभावः ॥ ८ ॥ यथावयः वयःक्रममनतिक्रम्य । ज्येष्ठानुक्रमेणेत्यर्थः। प्राप्नुवन्ति पुत्राइतिशेषः। इक्ष्वाकुकुलनाथे वर्तमानइतिशेषः । तत् पूर्वोक्तराजधर्मद्वयम् ॥ ९ ॥ शास्तु शास्तुच ॥ १० ॥ विषये देशे । "नीवृज्जनपदोदेशविषयौ" इत्यमरः । ब्राह्मणइति सत्पुरुषमात्रोपलक्षणं । तत्रहेतुमाह—तादृशमिति । तादृशं ब्राह्मणनिर्गमनार्हम् । अमर्यादं ज्येष्ठाभिषेकादिमर्यादाशून्यम् ॥ ११—१३ ॥ ईदृशं अमर्यादं । वृत्तं आचारम् । आचरन्त्यायस्यास्ते मेदिनीनविवृता नविदीर्णा। तस्यास्ते इदमविदारणं आश्चर्यमिवपश्यामि ॥ १४ ॥ महाब्रह्मर्षिभिः वसिष्ठादिभिः । जुष्टाः प्रयुक्ताः । ज्वलन्तः तीव्राः । धिग्वाग्दण्डाः धिगित्येवंरूपाःवाग्दण्डाः । रामप्रव्राजने स्थितां स्थिरबुद्धिं । त्वांनहिंसन्ति । वाशब्दएवकारार्थः। "वास्याद्विकल्पोपमयोरेवार्थेचसमुच्चये" इतिविश्वः ॥ १५ ॥ अथ कैकेयीदशरथावन्यापदेशेननिन्दति—आम्रमिति । आम्रंमधुरफलदं कुठारेणसद्यःबुद्धिपूर्वकंछित्त्वा निंबं कटुफलकं यःपरिचरेत् आलवालादिकरणेनसंरक्षेत् । यश्चेत्यपिसएवोच्यते । एनं निंबं । पयसा क्षीरेण ।

**स०** हे देवि मदवति । **ति०** पतिघ्नीमिति रामगमनेराजमरणस्यावश्यकत्वादितिभावः ॥ ६ ॥ **शि०** ननुभर्तूराज्ये स्थितत्वात्किमर्थंपुत्राभिषेकयत्नइत्यतआह—**यथेति** । नृपक्षये यथावयः वृद्धावस्थातिरिक्तावस्थामनतिक्रम्यैव राज्यासनेस्थितः । इक्ष्वाकुकुलराजाइतिशेषः । राज्यानिप्राप्नुवन्तिपालयन्तीत्यर्थः । एतेन वृद्धावस्थायांतपःकुर्वन्तीतिसूचितम् । अस्मिन् दशरथे । तं तपश्चरणधर्मं । लोपयितुं ध्वंसितुमिच्छसि । एतेनेदंनयुक्तमितिव्यञ्जितम् । **स०** इक्ष्वाकुकुलनाथे अस्मिन्दशरथे जीवतिसति तं संप्रदायं । लोपयितुमिच्छसीत्यन्वयः । यद्वा इक्ष्वाकुकुलस्यनाथनमुपतापनंययासातथातस्यास्संबुद्धिः । अस्मिन् पुत्रचतुष्टये। यथावयः प्राप्नुवन्ति ॥९॥ **शि०** अन्येपिगन्तारइतिबोधयन्नाह—**नेति** । तादृशं प्रारब्धाभिषेकत्याजनपूर्वकप्रव्राजनं । कर्मकरिष्यसिचेत्तर्हिते विषये देशे । कश्चिद्ब्राह्मणः विज्ञाता वस्तुं नार्हति नार्हिष्यति । "वर्तमानसामीप्ये—" इतिभविष्यतिलट् । चश्चेदर्थे । **ति०** करिष्यसीत्यनेनाद्यापि रामंनिवर्तयेतिसूचयति ॥ ११ ॥ **ति०** यस्यास्तेईदृशंघोरंवृत्तमस्ति तयात्वयातदाचरन्त्याहेतुभूतया पृथिवी यन्नविदृता नविदीर्णा। तदाश्चर्यमिवपश्यामि। **शि०** ईदृशंते वृत्तं वृत्तान्तं । आचरन्त्याः आचरयन्त्याः । यस्यामन्थरायाः मेदिनी पृथ्वी । सद्यो नविदृता नविदीर्णा । तस्यास्तेजः आश्चर्यमिवपश्यामि । तेजइत्यध्याहृतम् ॥ १४ ॥ **शि०** रामप्रव्राजनेस्थितां परमहेतुभूतांमन्थरामित्यर्थः । यतोनहिंसन्ति अतोधिक् । प्रत्यासत्तिन्यायेनवाग्दण्डानेवेत्यर्थः ॥ १५ ॥

[ **पा०** ] १ ग. ज. परमं. ख. भरतंप्रति. २ घ. ङ. छ. ज. झ. ट. नच. ३ कुण्डलान्तर्गतंश्लोकद्वयं क. ख. ङ. च. झ. पाठेषुदृश्यते. ४ ख. गमिष्यन्ति. ५ ख. स्तथा. ६ ङ. झ. ञ. ट. विदृता. ७ ख. ङ. च. झ. ञ. ट. सृष्टावा. ८ ङ. झ. ट. कः. ९ च. ञ. यएनं.

अभिजातं[1] हि ते मन्ये यथा मातुस्[2]तथैव च ॥ न[3] हि निंबात्स्रवेत्क्षौद्रं लोके निगदितं वचः ॥१७॥
तव मातुरसद्ग्राहं विद्मः पूर्वं यथा श्रुतम् ॥ १८ ॥
पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमम् ॥ सर्वभूतरुतं तस्मात्संजज्ञे वसुधाधिपः ॥
तेन तिर्यग्गतानां च भूतानां विदितं वचः ॥ १९ ॥
ततो जृंभस्य शयने विरुताद्भूरिवर्चसः ॥ पितुस्ते विदितो भावः स तत्र बहुधाऽहसत् ॥ २० ॥
तत्र[4] ते जननी क्रुद्धा मृत्युपाशमभीप्सती ॥ हासं ते नृपते सौम्य जिज्ञासामीति चाब्रवीत् ॥२१॥
नृपश्चोवाच तां देवीं [5]देवि शंसामि ते यदि ॥ ततो मे मरणं स[6]द्यो भविष्यति न संशयः ॥ २२ ॥
माता ते पितरं देवि त[7]तः केकयमब्रवीत् ॥ शंस मे जीव वा मा वा न [8]मामपहसिष्यसि ॥ २३ ॥
प्रियया च तथोक्तः स[9]न्केकयः पृथिवीपतिः ॥ तस्मै तं वरदायार्थं कथयामास तत्वतः ॥ २४ ॥
ततः स वरदः साधू राजानं प्रत्यभाषत ॥ [य[10]दि त्वं शंससे राजन्मरणं ते ध्रुवं भवेत् ॥]
म्रियतां ध्वंसतां [11]वेयं मा [12]कुथास्त्वं महीपते ॥ २५ ॥
[13]स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः ॥ मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २६ ॥
तथा त्वमपि राजानं दुर्जनाचरिते पथि ॥ [14]असद्ग्राहमिमं मोहात्कुरुषे पापदर्शिनि ॥ २७ ॥

---

सिञ्चेत् । अस्य आम्रंछित्त्वानिंबंपयसासिञ्चतः । सइतिशेषः । सः निम्बः । मधुरः मधुरफलदः । नैवभवेत् । अनेन सुगुणंरामंवरव्याजेनविवास्यकैकेयीचित्तानुसरणंनयुक्तमित्युक्तं । तेनच सर्वथाकैकेयीकटुरेवेत्युक्तं ॥ १६ ॥ अभिजातं अभिजननं । स्वभावइतियावत् । तेमातुर्यादृशीतादृशी तवापिप्रकृतिरित्यर्थः । कारणानुसारिकार्यसंभवेलौकिकवाक्यंनिदर्शयति—नहीति । क्षौद्रं मधु । स्रवेदित्यत्रेतिकरणंबोध्यं ॥ १७ ॥ कैकेय्याःपतिघ्नीत्वस्वभावोमातृसंबन्धप्रयुक्तइतिप्रस्तावंकृत्वातन्मातुर्वृत्तान्तंवक्तुमुपक्रमते—तवेत्यादिना । असद्ग्राहं असदर्थाभिनिवेशं । पूर्वंयथा येनप्रकारेण । श्रुतंतथाविद्मः ॥ १८ ॥ कश्चित् योगीगन्धर्वइतिश्रुतम् । तस्मात् वरदानात् । रुतं शब्दं । "तिरश्चांवाशितंरुतं" इत्यमरः । संजज्ञे सम्यक्ज्ञानवान् । तेन सर्वभूतरुतज्ञेनराज्ञा । तिर्यग्गतानां तिर्यग्गमनानाम् ॥ १९ ॥ जृंभस्य पिपीलिकाविशेषस्य । शयने शयनसमीपे । पर्यङ्काधःप्रदेशइत्यर्थः । भूरिवर्चसइतिपितुर्विशेषणम् । वरलाभेनाधिकतेजसइत्यर्थः । जृंभविशेषणंवा तदा सुवर्णवर्चसइत्यर्थः । "स्वर्णेपिभूरि—" इत्यमरः । सः पिता । तत्र रुतेविषये । बहुधा द्वित्रिः । अहसत् ॥ २० ॥ तत्र हासविषये । क्रुद्धा मांपरिहसतीतिक्रुद्धा । हेनृपते तेहासं हासनिमित्तं । जिज्ञासामि ज्ञातुमिच्छामि ॥ २१—२२ ॥ जीववामावेत्यनेनकैकेयीमातुःपतिघ्नीत्वमुक्तम् ॥ २३ ॥ वरदाय तत्वतः कथयामास । अत्यन्तसंकटेपिविमृश्यकारीसन्वरदायकथयामासेत्यर्थः ॥ २४ ॥ ध्वंसतां स्वाधिकारात्प्रच्युतास्यात् ॥ २५—२६ ॥ उक्तमर्थंप्रकृतेनिगमयति—तथेति । दुर्जनाचरितेपथि स्थितेतिशेषः । असद्ग्रा-

**वि०** तेमातुराभिजात्यं प्रशस्तपितृमातृजन्मोचितव्यवहारवत्त्वंयथा तथैव ते तव । आभिजात्यमपिहिमन्येइतिव्यङ्ग्योक्तिः ॥ १७ ॥ **स०** वचः विदितं विदितार्थं । अभूत् ॥ १९ ॥ **शि०** जृंभस्य पक्षिविशेषस्य । अहसत् । एतेन तदभिप्रायस्यहास्यरसोत्पादकत्वंव्यक्तम् ॥ २० ॥ **शि०** मृत्युपाशं मृत्युकारणीभूतगलबन्धनयोग्यरज्जुविशेषं । **स०** मृत्युपाशमभीप्सती । पत्युरितिशेषः ॥ २१ ॥ **ति०** हासं तत्कारणं ॥ २२ ॥ **स०** म्रियतां विषपानादिना । ध्वंसतां शस्त्रादिना । माकृथाः एतदुक्तमितिशेषः ॥ २५ ॥ इतिपञ्चत्रिंशस्सर्गः ॥ ३५ ॥

**[ पा० ]** १ ख. घ. ङ. झ. ञ. ट. आभिजात्यं. २ ञ. स्तथैवते. ३ क. ननिंबात्स्रवते. ४ ख. घ. ततस्ते. ५ ख. ङ. छ. झ. हासं. ६ ख. देवि. ७ ङ. छ. झ. पुनः. ८ ङ. झ. मांत्वंप्रहसिष्यसि. ९ क—ञ. सकेकयः. १० इदमर्धं ख. दृश्यते. ११ ग. च. छ. ञ. चेयं. १२ ग. घ. ङ. छ. ज. झ. शंसीस्त्वं. १३ ङ. च. एतच्छ्रुत्वा. ग. तच्छ्रुत्वावचनंतस्य. १४ क. असद्ग्राह्यं.

सत्यश्चाद्य[1] प्रवादोऽयं लौकिकः प्रतिभाति मा[2] ॥ पितॄन्समनुजायन्ते[3] नरा मातरमङ्गनाः ॥ २८ ॥
[4]नैवं भव गृहाणेदं यदाह वसुधाधिपः ॥ भर्तुरिच्छामुपास्येह जनस्यास्य गतिर्भव ॥ २९ ॥
मा त्वं प्रोत्साहिता[5] पापैर्देवराजसमप्रभम् ॥ भर्तारं लोक[6]भर्तारमसद्धर्ममुपादधाः ॥ ३० ॥
न हि मिथ्या प्रतिज्ञातं करिष्यति तवानघः ॥ श्रीमान्दशरथो राजा देवि राजीवलोचनः ॥ ३१ ॥
ज्येष्ठो वदान्यः कर्मण्यः [7]स्वधर्मपरिरक्षिता ॥ रक्षिता जीवलोकस्य [8]बली रामोऽभिषिच्यताम् ॥३२॥
परिवादो हि ते देवि महाँल्लोके चरिष्यति ॥ यदि रामो वनं याति विहाय पितरं नृपम् ॥ ३३ ॥
[9]स राज्यं राघवः पातु भव त्वं विगतज्वरा ॥ न हि ते राघवादन्यः क्षमः पुरवरे [10]वसेत् ॥ ३४ ॥
रामे हि यौवराज्यस्थे राजा दशरथो वनम् ॥ प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् ॥ ३५ ॥
इति [11]सान्त्वैश्च तीक्ष्णैश्च [12]कैकेयीं राजसंसदि ॥ [13]सुमन्त्रः क्षोभयामास भूय एव कृताञ्जलिः ॥३६॥
[14]नैवं सा क्षुभ्यते देवी न च स्म परिदूयते ॥ न चास्या मुखवर्णस्य [15]विक्रिया लक्ष्यते तदा ॥३७॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

हं असदर्थाभिनिवेशम् ॥ २७ ॥ सत्यइति मा मां । प्रतिभातीत्यन्वयः । "अभितःपरितः—" इत्यादिना प्रतियोगेद्वितीया । पितॄन्समनुजायन्ते अत्रेतिकरणं द्रष्टव्यं । पितृसमानलक्षणाजायन्तइत्यर्थः । अङ्गनाः पुत्र्यः ॥ २८ ॥ नैवंभवेतिपाठः । नेयाभवेतिपाठे नेया नेतुंयोग्या विधेयाभवेत्यर्थः । वसुधाधिपोयदाह "श्वएवपुष्योभविताश्वोऽभिषिच्येतमेसुतः" इतियद्वचनमाह । इदंगृहाण । अस्यजनस्य पौरजानपदस्य । गतिः शरणं । इतिसान्त्वोक्तिः ॥ २९ ॥ असद्धर्मं कनिष्ठाभिषेकपूर्वकज्येष्ठविवासनरूपं । मोपादधाः माग्राहय ॥३०॥एवंक्रियमाणेममवरस्यकागतिरित्याशङ्क्य प्रकारान्तरेणगतिर्भविष्यतीत्याह—नहीति । प्रतिज्ञातं प्रतिश्रुतं । वरद्वयं । तन्मिथ्यानकरिष्यति राज्यादप्यधिकमूल्यरत्नभूषणसंमानादिभिस्सफलंकरिष्यतीत्यर्थः ॥ ३१ ॥ रामस्यराज्याभिषेकार्हतासाधनगुणानाह— ज्येष्ठइति । कर्मण्यः कर्मणिसाधुः । सदाचारपरइत्यर्थः । वदान्यः उदारः । स्वधर्मपरिरक्षिता स्वधर्मस्य दुष्टनिग्रहपूर्वकशिष्टपरिपालनरूपक्षत्रियधर्मस्य परिरक्षिता । बलीरामोभिषिच्यतां त्वयेतिशेषः । अभिषेकानुमतिःक्रियतामित्यर्थः ॥ ३२ ॥ परिवादः अपवादः । दोषवादइत्यर्थः ॥ ३३ ॥ तेपुरवरे हि यस्मात्कारणात् क्षमोराघवादन्योनवसेत् अतःसराघवोराज्यंपात्वितिसंबन्धः । यद्वा राघवादन्यःपुरवरेराजतयावसन्भरतः ते नक्षमः नयुक्तः । कनिष्ठस्त्वयाराज्येस्थापयितुंनयुक्तइत्यर्थः । हिते हितकरणे । नक्षम इतिवा ॥ ३४ ॥ पूर्ववृत्तं इक्ष्वाकुकुलक्रमागतवृत्तं ॥ ३५—३६ ॥ मुखवर्णस्य उग्रमुखवर्णस्य ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

[ पा० ] १ ङ. च. छ. झ. ञ. श्चात्र. २ ङ—ञ. मां. ३ ख. वर्तन्ते. ४ क. ख. च. ञ. नेया. ५ ख. प्रोत्सादितापापे. ६ घ. च. ञ. कर्तारं. ७ ख. घ. ङ. च. झ. ञ. स्वधर्मस्यापि. क. ग. ज. स्वधर्मस्याभि. छ. स्वधर्मस्यास्य. ८ च. देवि. ९ ङ. च. छ. झ. ञ. ट. स्वराज्यं. १० ङ. छ. झ. ट. वसन्. ११ ख. तीक्ष्णैश्चसान्त्वैश्च. १२ ख. कैकयींजनसंसदि. १३ ङ. च. छ. झ. ञ. ट. भूयःसंक्षोभयामाससुमन्त्रस्तु. १४ ख. नच. १५ क. ख. ग. ङ—ञ. लक्ष्यतेविक्रिया.

## षट्त्रिंशः सर्गः ॥ ३६ ॥

दशरथेनसुमन्त्रंप्रतिसेनाधनधान्यकोशादिसंपदांरामंप्रत्यनुयापनचोदनेकैकेय्याअसमञ्जदृष्टान्तीकरणेनसंपद्राहित्येनैव ज्येष्ठस्यापिरामस्यवनंप्रतियापनोक्तिः ॥ १ ॥ सिद्धार्थनाम्नासचिवप्रधानेनासमञ्जदुश्चरितोपन्यासेनरामेतद्वैषम्योपपादनपूर्वकं कैकेयींप्रतिरामाभिषेकविघातनोपरमप्रार्थना ॥ २ ॥ राज्ञाकैकेयींप्रतिसिद्धार्थोक्ताकरणेस्वस्यापिरामानुगमनोक्तिः ॥ ३ ॥

ततस्सुमन्त्रमैक्ष्वाकः पीडितोत्र प्रतिज्ञया ॥ सबाष्पमतिनिश्वस्य [1]जगादेदं [2]पुनःपुनः ॥ १ ॥
सूत रत्नसुसंपूर्णा [3]चतुर्विधबला चमूः ॥ राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २ ॥
रूपाजीवाश्च [4]वादिन्यो वणिजश्च महाधनाः ॥ शोभयन्तु कुमारस्य [5]वाहिनीं सुप्रसारिताः ॥ ३ ॥
ये चैनमुपजीवन्ति रमते यैश्च वीर्यतः ॥ तेषां [6]बहुविधं दत्त्वा तानप्यत्र नियोजय ॥ ४ ॥
आयुधानि च मुख्यानि नागराः [7]शकटानि च ॥ अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्य[8]गोचराः ॥५॥
निघ्नन्मृगान्कुञ्जरांश्च पिबंश्चारण्यकं मधु ॥ नदीश्च विविधाः पश्यन्न [9]राज्यस्य स्मरिष्यति ॥ ६ ॥
धान्यकोशश्च यः कश्चिद्धनकोशश्च मामकः ॥ तौ राममनुगच्छेतां वसन्तं [10]निर्जने वने ॥ ७ ॥
यजन्पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः ॥ ऋषिभि[11]श्च समागम्य प्रवत्स्यति सुखं वने ॥ ८ ॥
भरतश्च महाबाहुरयोध्यां पालयिष्यति ॥ सर्व[12]कामैः सह श्रीमान्रामः संसाध्यतामिति ॥ ९ ॥
[13]एवं ब्रुवति काकुत्स्थे [14]कैकेय्या भयमागतम् ॥ मुखं [15]चाप्यगमच्छोषं स्वरश्चापि [16]न्यरुध्यत ॥१०॥
सा वि[17]षण्णा च संत्रस्ता मुखेन परिशुष्यता ॥ राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत् ॥ ११ ॥
राज्यं [18]गतजनं साधो पीतमण्डां सुरामिव ॥ निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२ ॥

ततः कैकेयीसंमत्यभावानन्तरं । अत्र वरदानविषये ॥ १ ॥ अनुयात्रार्थं प्रतिविधीयतां प्रेष्यताम् ॥ २ ॥ रूपाजीवाः वेश्याः । "वारस्त्रीगणिकावेश्यारूपाजीवा" इत्यमरः । वादिन्यः परचित्ताकर्षणचतुरवचनाः । सुप्रसारिताः शिबिरदेशेपण्यपदार्थप्रसारणंकुर्वन्तः ॥ ३ ॥ एनं रामं । बहुविधं सुवर्णरत्नवस्त्रादिकं । अत्र वाहिन्यां ॥ ४ ॥ आयुधानि आयुधधराः । नागराः नगरजाःश्रेष्ठिनः । शकटानि तैलघृतादिप्रापकाणि । व्याधाः वनेमार्गदर्शिनः ॥ ५ ॥ राज्यस्येति "अधीगर्थदयेशांकर्मणि" इतिषष्ठी ॥ ६ ॥ कोशोवासस्थानम् । अनुगच्छेतां गोण्युष्ट्रादिमुखेनेति शेषः ॥ ७ ॥ विसृजत् ददिदितियावत् । दक्षिणाः यज्ञदक्षिणाः ॥ ८ ॥ अयोध्यांपालयिष्यतीतिसोपालम्भोक्तिः । सर्वकामैःसह संसाध्यतां प्रस्थाप्यतां । इतिशब्दोनियोगसमाप्तिवाचकः ॥९—१०॥ मुखेनेत्युपलक्षणेतृतीया ॥ ११ ॥ पीतमण्डां "मण्डंदधिभवं मस्तु" इतिमण्डशब्दोयथादधिसारवाचकस्तद्वदत्रापि मण्डशब्देनसुरासारउच्यते । साधोइतिसहासोक्तिः ।

**शि०** चतुर्विधबला चतुर्विधानि रथादिचतुष्टयप्रकाराणि बलानि वीर्याणि यस्यांसा चमूः ॥२॥ **स०** नादिन्यः सुस्वराः ॥३॥ **ति०** अरण्येकोविदाः अरण्यमर्मज्ञाः ॥ ५ ॥ **शि०** हननयोग्यानपिमृगादीन् निघ्नन् निवर्तयन् । प्रसिद्धश्चनिपूर्वकहनोनिवर्तनार्थकत्वं "शिष्टंनिघ्नन्तिकंपितं" इत्यादिनावेदभाष्ये। तत्रवधोनार्थः शब्दानामनित्यत्वापत्तेः। मतान्तरेपिशब्दानांप्राणसंबन्धाभावेनप्राणवियोगानुकूलव्यापारार्थस्यात्रासंभवात् ॥ ६ ॥ **स०** रामः संसाध्यतां प्रस्थाप्यतामितिजगादेतिसर्गादिश्लोकेनान्वयः ॥९॥ **शि०** भयं क्षुद्रराक्षसवधफलकनिखिलपरिवारगमनहेतुकलोकापवादभीतिं ॥ १० ॥ **शि०** हेसाधो प्रव्राजनसाधक । गतजनं गताः जनाः पित्रादयोयस्मात्तत् । निरास्वाद्यतमं आस्वाद्यतमपित्रासंमाननादिसुखरहितं राज्यं नाभिपत्स्यते । तत्रदृष्टान्तः पीतमण्डां पीतसारांसुरां । जनाइव । किंच पीतःमण्डोदधिसारोयस्यास्तां । सुरां सुदत्तांदधिव्यक्तिमिव । एतेनभरतोपिसहैवगन्ते-

**[पा०]** १ क. जगादैनं. च. जगादेवं. २ ग. घ. छ. झ. ञ. पुनर्वचः. ३ घ. चतुरङ्गबला. ४ क. ख. घ. ज. शालिन्यः, ठ. नादिन्यः. ५ ख. ङ. छ. झ. वाहिनीः. ६ क. ख. ञ. बहुधनं. ७ ख. घ. शाकटानि. ८ क. ख. ङ. च. छ. झ. ञ. ट. कोविदाः. ९ ङ. च. छ. झ. ञ. ट. राज्यंसंस्मरिष्यति. १० ख. घ. विजने. ११ च. ञ. श्चाभिसंगम्य. ङ. छ. झ. ट. श्चापिसगम्यं. १२ ख. घ—छ. झ. ञ. ट. कामैःपुनः. ज. कामफलः. १३ ङ. च. ञ. इति. १४ च. ञ. कैकेयीभयमागता. १५ ख. घ. च. छ. ञ. चास्यागमच्छोषं. १६ क. ङ. च. छ. झ. ञ. ट. व्यरुध्यत. १७ क. विवर्णा. १८ ङ. छ. झ. गतधनं.

कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम् ॥ राजा दशरथो वाक्यमुवाचायतलोचनाम् ॥ १३ ॥
वहन्तं किं तुदसि मां नियुज्य धुरि माहिते ॥ अनार्ये कृत्यमारब्धं किं न पूर्वमुपारुधः ॥ १४ ॥
तस्यैतत्क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना ॥ कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५ ॥
तवैव वंशे सगरो ज्येष्ठपुत्रमुपारुधत् ॥ असमञ्ज इति ख्यातं तथाऽयं गन्तुमर्हति ॥ १६ ॥
एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् ॥ व्रीडितश्च जनस्सर्वः सा च तं नावबुध्यत ॥ १७ ॥
तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः ॥ शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥
असमञ्जो गृहीत्वा तु क्रीडितः पथि दारकान् ॥ सरय्वाः प्रक्षिपन्नप्सु रमते तेन दुर्मतिः ॥ १९ ॥
तं दृष्ट्वा नागरास्सर्वे क्रुद्धा राजानमब्रुवन् ॥ असमञ्जं वृणीष्वैकमस्मान्वा राष्ट्रवर्धन ॥ २० ॥
तानुवाच ततो राजा किंनिमित्तमिदं भयम् ॥ ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥२१॥
क्रीडतस्त्वेष नः पुत्रान्बालानुद्भ्रान्तचेतनः ॥ सरय्वां प्रक्षिपन्मौर्ख्यादतुलां प्रीतिमश्नुते ॥ २२ ॥
स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः ॥ तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३ ॥
तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदम् ॥ यावज्जीवं विवास्योऽयमिति स्वानन्वशात्पिता ॥२४॥
सफालपिटकं गृह्य गिरिदुर्गाण्यलोलयत् ॥ दिशस्सर्वास्त्वनुचरन्स यथा पापकर्मकृत् ॥ २५ ॥

निरास्वाद्यतमं निर्गतभोग्यवस्तुयुक्तं ॥ १२ ॥ आयतलोचनामितिदैन्योक्तिमूलसौन्दर्योक्तिः ॥ १३ ॥ हे अहिते अहितकारिणि । धुरि वरदानहेतुकभरताभिषेचनरामविवासनरूपदुर्वहभारे । नियुज्य तथावहन्तंमांवत्सतरमिव किं तुदसि व्यथयसि । त्वदाज्ञप्तरामविवासनकारिणंकिमर्थंपुनरपिपीडयसीत्यर्थः । किमधुनापीड्यते पूर्वमेवभवतादत्तंखल्वित्यत्राह—अनार्येइति । हेअनार्ये आरब्धंकृत्यं सेनाप्रेषणादिकं । पूर्वं वरप्रार्थनाकाले । किमर्थं नोपारुधः नोपरुद्धवती । नप्रार्थितवतीतियावत् । वरयाचनाकालेऽनुद्घाटितत्वात्सेनाप्रेषणादिकंननिर्वर्तितव्यमितिभावः ॥ १४ ॥ द्विगुणंक्रुद्धा प्रकारान्तरेणमदभिमतंविघटयतीतिबहुतरंक्रुद्धेत्यर्थः ॥१५॥ यद्यपिपूर्वमिदंनवृत्तं तथाप्यर्थसिद्धमित्याशयेनाह—तवैवेति । उपारुधदितिनिष्कासनमेवोच्यते । गन्तुमर्हतीतिनिर्देशात् । तथायमिति निधनएवेत्यर्थः ॥ १६ ॥ प्रतिज्ञातातिरिक्तेपिचापलवर्तीनिन्दति—धिगिति । सा कैकेयी । तंव्रीडितंजनं । नावबुध्यत नाजीगणत् ॥ १७ ॥ महामात्रः प्रधानः । शुचिः अकुटिलः ॥ १८ ॥ दारकान् बालकान् । तेन प्रक्षेपेण । सशब्दबुद्बुदजननेनहृसन्रमतइत्यर्थः ॥ १९ ॥ वृणीष्व अत्रनगरेस्थापय ॥ २० ॥ भयमित्यनन्तरमितिकरणंद्रष्टव्यं । प्रकृतयः प्रजाः ॥ २१ ॥ उद्भ्रान्तचेतनः भ्रान्तबुद्धिः ॥ २२—२३ ॥ अन्वशात् अनुशिष्टवान् ॥ २४ ॥ फालं कन्दमूलादिखनित्रसूचितं । तेनभवदादिरहितेनैवरामेणगन्तव्यमितिव्यञ्जितम् ।

स० पीतंमण्डंयस्यास्सापीतमण्डा । सुरा चषकं । पानसाधनपात्रस्थंमण्डंपीतंचेत् यथारिक्तंतत्पात्रंनगृह्णन्तिएवमितिभावः । 'चषकेऽपिसुराक्वचित्' इतिविश्वः ॥ १२ ॥ ती० आरब्धंकिंकृत्यंनोपारुधः सर्वमुपरुद्धवत्येव । पूर्वमभिषेककृत्यं इदानीमानुयात्रिकप्रदानमारब्धंतदप्युपारुधइत्यर्थः । स० हेमाहिते नहितंयस्यास्सा तथातस्यास्संबुद्धिःमाहिते कैकेयि । इदानींयत्कृत्यमारब्धं सर्वसंपद्युक्ततयारामप्रस्थापननिरोधनरूपं तत्पूर्वमेव किं कुतः । नोपारुधः धातूनामनेकार्थत्वान्नयाचितवत्यसि । कृत्यं सवैभवरामप्रवासनरूपं यदिदानीमारब्धं तत्पूर्वंकिंनोपारुधः नप्रतिबद्धंकृतवतीतिभावः ॥ १४ ॥ ति० जनः कैकेयीसेवकजनः । सर्वस्वामिन्याअसंबद्धप्रलापात् । नावबुध्यत क्रोधवशादितिभावः । स० व्रीडितः एतद्बुद्धिनिवर्तनेसामर्थ्याभावाल्लज्जायुक्तः । जनः प्रकृतिजनः । सा कैकेयी । तं धिक्कारं । राज्यलोभान्नावबुध्यत ॥ १७ ॥ शि० तत्र राज्ञस्तूष्णींभावेनस्थितौसत्यां ॥ १८ ॥ ति० सरय्वामप्सुप्रक्षिपन्रमतेतेनकारणेनदुर्मतिस्सः । नताहशोयमितिभावः ॥ १९ ॥ स० असमञ्जसमेकंवृणीष्व अस्मांस्त्यजेतियावत् । अस्मान्वावृणीष्व तमेकंत्यजेत्यब्रुवन् ॥२०॥ शि० क्रीडतः अतएवोद्भ्रान्तचेतसः अनवस्थितचित्तान् ॥ २२ ॥ शि० यथापापकर्मकृदित्युपमालंकारेणासमञ्जस्यपापकर्मकर्तृत्वाभावस्सूचितः । तेन स्वविषयक-

[ पा० ] १ क. नियोज्य. २ ख. वाहिते. ३ ख. ङ. च. ज. ञ. ज्येष्ठंपुत्रं. ४ ग. नावबुध्यति. क. ख. नावबुध्यते. ५ घ. महामात्यः. ६ क. ख. क्रीडतोदारकान्पथि. ७ क—ट. चेतसः. ८ क. ख. पातयन्. ९ घ. ज. तेषां. १० ङ. झ. ट. तान्. ११ ग. घ. ज. दुर्गाणिलोलयन्. ख. च. छ. झ. ञ. ट. दुर्गाण्यलोकयत्. ङ. दुर्गाणिलोकयन्.

ई[1]त्येनमत्यजद्राजा सगरो वै सुधार्मिकः ॥ रामः किमकरोत्पापं येनैवमुपरुध्यते ॥ २६ ॥
न हि कंचन पश्यामो राघवस्यागुणं वयम् ॥ दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषम् ॥ २७ ॥
अथवा देवि दो[2]षं त्वं कंचित्पश्यसि राघवे ॥ तमद्य ब्रूहि तत्वेन [3]ततो रामो वि[4]वास्यताम् ॥ २८ ॥
अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च ॥ [5]निर्दहेदपि शक्रस्य द्युतिं धर्म[6]निरोधनात् ॥ २९ ॥
तदलं देवि रामस्य श्रिया विहतया त्वया ॥ लोकतोपि हि ते रक्ष्यः परिवादश्शुभानने ॥ ३० ॥
श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरस्व[7]नः ॥ शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१ ॥

एतद्वचो नेच्छसि [8]पापवृत्ते हितं न [9]जानासि [10]ममात्मनो वा ॥
आस्थाय मार्गं कृपणं कुचेष्टा चेष्टा हि ते साधुपथादपेता ॥ ३२ ॥
अनुव्रजिष्याम्यहमद्य रामं राज्यं परित्यज्य [11]सुखं धनं च ॥
[12]सहैव राज्ञा भरतेन च त्वं यथासुखं भुङ्क्ष्व चिराय राज्यम् ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षड्त्रिंशः सर्गः ॥ ३६ ॥

---

नसाधनं । पिटका तद्धारणपात्रं । एकवद्भावः । गृह्य गृहीत्वा । अलोलयत् कन्दमूलाद्यर्थमखनदित्यर्थः । यथापापकृत्तथाचरन्नलोलयदित्यन्वयः ॥ २५ ॥ उपरुध्यते विवास्यते ॥२६॥ निरयः निरयहेतुभूतोदोषः ॥२७—२९॥ विहतयाश्रियाअलं अभिषेकविघातंमा कुर्वित्यर्थः । रक्ष्यः परिहरणीयः । परिवादः निन्दा ॥३०॥ श्रान्ततरः हीनतरः ॥ ३१ ॥ एतद्वचः सिद्धार्थवचः । कृपणं कुत्सितमित्यर्थः । "कदर्येकृपणक्षुद्र" इत्यमरः । कुचेष्टेत्येतदुपपादयति—चेष्टाहीति ॥ ३२—३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

---

पित्रतिप्रीतिनिरसनार्थंजलेबालप्रक्षेपइतिसूचितम् । तेनतस्यविज्ञानिश्रेष्ठत्वंव्यक्तम् । **ति०** यथापापकर्मंकृत् यथोक्तपापकर्मंकृत् । फालसहितंपिटकंफालपिटकं । "सर्वादिशस्त्वनुचरन्नतिष्ठत्पापकर्मंकृत्" इतिपाठान्तरं । **स०** ननुनवमभागवते "एवंवृत्तः परित्यक्तःपित्रास्नेहमपोह्यवै । योगैश्वर्येणतान्बालान्दर्शयित्वाततोययौ । अयोध्यावासिनस्सर्वेबालकान्पुनरागतान् । दृष्ट्वाविसिस्मिरेराजन्राजाचाप्यन्वतप्यत" इत्यसमञ्जस्यनिर्दुष्टत्वोक्तेःकथमत्रपापकर्मंकृदित्युच्यतइतिचेन्न । पुत्रप्रदर्शनात्प्राक्तस्यदुष्टत्वप्रतीतेस्तावन्मात्रेणेहपापकृदित्युक्तेः । उत्तरकथानुक्तिर्नदोषाय ॥ २५ ॥ **शि०** पापं पापाभासं ॥ २६ ॥ **स०** शशाङ्कस्येतिव्यतिरेकदृष्टान्तः । **शि०** अगुणं गुणविरोधिदोषकर्मेत्यर्थः । शशाङ्कस्य द्वितीयाचन्द्रस्य ॥ २७ ॥ **शि०** तत्वेनत्वंपश्यसिचेद्ब्रूहि ॥ २८ ॥ **स०** शक्रश्चेद्यद्येतादृशंत्यजेत्तर्हितादृशादुष्टसंत्यागस्तद्द्युतिमपिदहेदितिभावः ॥२९॥ **स०** ते त्वया । परिवादोपवादः । अरक्ष्यः परिहरणीयः । रलयोरभेदाल्लक्ष्यइतिवा ॥३०॥ **स०** यतस्त्वंकुचेष्टा कृपणंमार्गमास्थायहितंनजानासि अतस्साधुपथादपेता इयंचेष्टा तवाहितेभवति । **शि०** पापरूपे राक्षसे । कृपणं दुःखदं । मार्गमास्थाय निश्चित्य । एतद्वचः सिद्धार्थवचनं । मम आत्मनः रामस्यहितंनैवजानासि अतएवनेच्छसि । अतस्ते कुचेष्टा कुत्सितव्यापारत्वेनप्रतीयमाना । चेष्टा व्यापारः । असाधुपथात् अपेता त्यक्ता । शिष्टसंमतएवायंपन्थाइत्यर्थः । कुचेष्टाशब्दआचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ ३२ ॥ **ति०** सर्वे अयोध्यावासिनो जनाः । राज्ञा भरतेनच । चस्त्वर्थे । **शि०** इदानींस्वस्यरामवियोगासहिष्णुत्वंबोधयन्नाह—**अन्विति** । राज्यादिकंपरित्यज्य अद्य अस्मिन्दिने । राममनुव्रजिष्यामि । सर्वे मन्त्रिणः । त्वंच चिराय बहुकालंप्रभूतंराज्यं सुखंयथास्यात्तथा भुङ्क्ष्व पालय । "भुजोऽनवने" इत्यस्याप्रवृत्तिस्तु संज्ञापूर्वकविधेरनित्यत्वात् । एतेन भरतंक्षिप्रमानयेतिसूचितम् ॥ ३३ ॥ इतिषट्त्रिंशस्सर्गः ॥ ३६ ॥

**[ पा० ]** १ घ. ज. इत्येवं. २ ङ. झ. ट. त्वंकंचिद्दोषंपश्यसि. क. ख. घ. च. त्वंकिंचिद्दोषं. ३ ङ. च. छ. झ. ञ. ट. तदा. ४ ङ. च. छ. झ. ञ. ट. विवास्यते. ५ निर्दहेदपीत्यर्धात्पूर्वं क. च. पुस्तकयोः "अप्राप्तस्यविवासोयंवनेषुसुयशस्विनः" इत्यर्धमधिकंदृश्यते. ६ च. विरोधनात्. ङ. छ. झ. ञ. ट. विरोधवान्. ७ क—च. ज—ट. स्वरः. ८ ङ. च. छ. झ. ञ. ट. पापरूपे. ९ क. जानासि. १० झ. ञ. ममात्मनोऽथवा. ११ ग. घ. ज. धनंसुखं. १२ ङ. च. झ. ट. सर्वेच.

# सप्तत्रिंशः सर्गः ॥ ३७ ॥

रामेणदशरथंप्रतिस्वस्यनिस्सङ्गत्वोत्कीर्तनेनानुयात्रिकादिप्रतिषेधनपूर्वकंपरिचारकान्प्रतिचीराद्यानयनचोदना ॥ १ ॥ रामलक्ष्मणाभ्यांपूर्ववस्त्रविसर्जनपूर्वकंकैकेयीदत्तचीरपरिधानम् ॥ २ ॥ सीतायांचीरपरिधानाकौशलेनखिद्यमानायांरामेण स्वयंतस्याःकौशेयोपरिपरिबन्धनम् ॥ ३ ॥ वसिष्ठेनसहेतूपन्यासंसीतायाश्चीरधारणप्रतिषेधनेपितयाभर्तृसाधर्म्यकामयाततो भावादनिवर्तनम् ॥ ४ ॥

महामात्रवचः श्रुत्वा रामो दशरथं तदा ॥ अभ्यभाषत वाक्यं तु विनयज्ञो विनीतवत् ॥ १ ॥
त्यक्तभोगस्य मे राजन्वने वन्येन जीवतः ॥ किं कार्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २ ॥
यो हि दत्त्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः ॥ रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३ ॥
तथा मम सतां श्रेष्ठ किं ध्वजिन्या जगत्पते ॥ सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ४ ॥
खनित्रपिटके चोभे समानयत गच्छत ॥ चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५ ॥
अथ चीराणि कैकेयी स्वयमाहृत्य राघवम् ॥ उवाच परिधत्स्वेति जनौघे निरपत्रपा ॥ ६ ॥
स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते ॥ सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ॥ ७ ॥
लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे ॥ तापसाच्छादने चैव जग्राह पितुरग्रतः ॥ ८ ॥
अथात्मपरिधानार्थं सीता कौशेयवासिनी ॥ समीक्ष्य चीरं संत्रस्ता पृषती वागुरामिव ॥ ९ ॥
सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः ॥ कैकेयीकुशचीरे ते जानकी शुभलक्षणा ॥ १० ॥
अश्रुसंपूर्णनेत्रा च धर्मज्ञा धर्मदर्शिनी ॥ गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् ॥ ११ ॥

महामात्रवचः सिद्धार्थवचः । विनीतवत् विनीत इव । अभ्यभाषत सविनयमाहेत्यर्थः ॥ १ ॥ अनुयात्रेण अनुगतबलेन । भोगत्यागेपिसङ्गोवर्ततेलौकिकानांसोपिनास्तीत्याह—त्यक्तसङ्गस्यसर्वतइति ॥ २ ॥ कक्ष्यायां इभबन्धनरज्जौ । "कक्ष्याप्रकोष्ठेहर्म्यादेः काञ्च्यांमध्येभबन्धने" इत्यमरः ॥ ३ ॥ ध्वजिन्या सेनया । सर्वाणि त्वयामह्यंदातुमुद्युक्तानि । अनुजानामि प्रददामि । भरतायेतिशेषः । सर्वाणि कार्याणि सम्यग्जानामीतिवार्थः । चीराणि वल्कलवस्त्राणि । आनयन्तु परिचारकाइतिशेषः ॥ ४ ॥ खनित्रपिटके खनित्रं अवदारणं । पिटकं अल्पार्थेकन्प्रत्ययः । फलमूलाद्याहरणयोग्याल्पकण्डोलः । "कण्डोलपिटौ" इत्यमरः । वासं वसतः । वासंकुर्वतइत्यर्थः ॥ ५—६ ॥ सः रामः । कैकेय्याः सकाशात् । मुनिवस्त्राणिपरिगृह्य तेषुद्वेचीरे उत्तरीयान्तरीयरूपे । सूक्ष्मवस्त्रमवक्षिप्य । अवस्त ह आदीधरदित्यर्थः ॥ ७—८ ॥ संत्रस्ता अभवदितिशेषः । पृषती मृगी । वागुरां मृगबन्धनीं । "वागुरामृगबन्धनी" इत्यमरः ॥ ९ ॥ व्यपत्रपमाणा विशेषेणलज्जमाना । कैकेयीकुशचीरे कैकेयीसंबन्धिनीकुशचीरे ॥ १० ॥ धर्मज्ञा पातिव्रत्यधर्मज्ञा । धर्मदर्शिनी स्वानुष्ठानेनपातिव्रत्यधर्मप्रदर्शिनी बध्नन्तीतीदमब्रवीदितिसंबन्धः ॥ ११ ॥

**शि०** अमात्यराज्ञोर्वचनश्रवणानन्तरकालिकंरामवृत्तमाह—**महेति** । महामात्रवचः महान्अमात्रःअमात्योयस्यसतस्यवचोवचनं । किंच महामात्रस्यवचोयस्मिंस्तत् उभयवचनमित्यर्थः । श्रुत्वा विनयज्ञोरामः विनीतवत् विशेषनीतिविशिष्टंवाक्यमभाषत । **स०** विनीतवदित्यनेन सर्वोत्तमस्येदंविनयप्रदर्शनंलोकशिक्षार्थमितिसूचयति ॥ १ ॥ **स०** अनुयात्रेण यापनोपायेन । "यात्रातुयापनोपाये" इतिविश्वः । त्यक्तसङ्गस्य त्यक्तःदत्तःसङ्गोयेनसतथा । सर्वतइति चतुर्थ्यन्तात्तसिः ॥ २ ॥ **ति०** एतत्पर्यन्तं मन्थराप्रेरितंसिद्धंकलाब्राह्मणशापप्राप्तलोकासूयाविषयत्वसंपादकंकर्मकैकेय्यारभते—**अथेति** । सचशापोऽध्यात्मरामायणेस्पष्टः । **शि०** निरपत्रपा निर्निरन्तरंअपः पालनाभावोयेषुतान्त्रपतेधिक्कारादिनालज्जयतिसा । किंच निर्गतःअपःपालनाभावोयेषांते निरन्तरंपालनकर्तारइत्यर्थः । तांस्त्रपतेलज्जयतिसा विलक्षणपालनकर्त्रीत्यर्थः । कैकेयी जनौघे जनसमूहे । पश्यतिसति ॥ ६ ॥ **स०** रामदत्तयोश्चीरयोर्द्विलाच्चीरेइतिद्विवचनं । अतोनपूर्वोत्तरंबहुवचनानुपपत्तिः ॥ ७ ॥ **स०** तापसैवसाच्छादनेइतिवा ॥ ८ ॥

[ **पा०** ] १ ध. महामात्यवचः. २ क—घ. ज. ञ. अन्वभाषत. ३ क. च. ममानयतु. ख. ममानयत. ४ क. ख. ग. गच्छतः. ५ ख. वस्त्रंपरिक्षिप्य. ६ क—ट. संप्रेक्ष्य. ७ क. ख. घ—ट. कैकेय्याः. ८ ख. सुशुभेक्षणा. घ. चशुभेक्षणा.

कथं नु चीरं बध्नन्ति मुनयो वनवासिनः ॥ इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२ ॥
कृत्वा कण्ठे[1] च सा चीरमेकमादाय पाणिना ॥ तस्थौ ह्यकुशला तत्र[2] व्रीडिता जनकात्मजा ॥ १३॥
तस्यास्तत्क्षिप्रमागम्य[3] रामो धर्मभृतां वरः ॥ चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ १४ ॥
रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् ॥ अन्तःपुरगता[4] नार्यो मुमुचुर्वारि नेत्रजम् ॥ १५ ॥
ऊचुश्च परमायस्ता[5] रामं ज्वलिततेजसम् ॥ वत्स नैवं[6] नियुक्तेयं वनवासे मनस्विनी ॥ १६ ॥
पितुर्वाक्यानुरोधेन गतस्य विजनं वनम् ॥ तावद्दर्शनमस्यां[7] नः सफलं भवतु प्रभो ॥ १७ ॥
लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक ॥ नेयमर्हति कल्याणी वस्तुं तापसवद्वने ॥ १८ ॥
कुरु नो याचनां पुत्र[8] सीता तिष्ठतु भामिनी ॥ धर्मनित्यस्स्वयं स्थातुं न हीदानीं त्वमिच्छसि ॥१९॥
तासामेवंविधा वाचः शृण्वन्दशरथात्मजः ॥ बबन्धैव तदा[9] चीरं सीतया तुल्यशीलया ॥ २० ॥
चीरे गृहीते तु तया समीक्ष्य[10] नृपतेर्गुरुः ॥ निवार्य सीतां कैकेयीं वसिष्ठो वाक्यमब्रवीत् ॥ २१ ॥
अतिप्रवृत्ते[11] दुर्मेधे कैकेयि कुलपांसनि ॥ वञ्चयित्वा च राजानं[12] न[13] प्रमाणेऽवतिष्ठसे ॥ २२ ॥
न गन्तव्यं वनं[14] देव्या सीतया शीलवर्जिते ॥ अनुष्ठास्यति[15] रामस्य सीता प्रकृतमासनम् ॥ २३ ॥
आत्मा हि दाराः सर्वेषां दारसंग्रहवर्तिनाम् ॥ आत्मेयमिति रामस्य पालयिष्यति मेदिनीम् ॥ २४॥
अथ यास्यति वैदेही वनं रामेण संगता ॥ वयमप्यनुयास्यामः[16] पुरं चेदं गमिष्यति ॥ २५ ॥
अन्तपालाश्च[17] यास्यन्ति सदारो[18] यत्र राघवः ॥ सहोपजीव्यं राष्ट्रं च पुरं च सपरिच्छदम् ॥ २६ ॥

---

मुमोह स्तब्धाबभूवेत्यर्थः ॥ १२ ॥ तदेवविवृणोति—कृत्वेति ॥१३—१५॥ एवं त्वमिव। इयं सीता। वनवासे न नियुक्तेति पित्रेतियावत् ॥ १६ ॥ तावत् तवागमनपर्यन्तं । पितुर्वाक्यानुरोधेनविजनंवनंगतस्य तवदर्शनं अस्यांसफलंभवतु त्वामिवैनांद्रक्ष्यामइतिभावः ॥ १७—१८ ॥ सीतयेति षष्ठ्यर्थेतृतीया । बबन्धैवेति कैकेय्यनुज्ञाभावादितिभावः ॥ २०—२१ ॥ अतिप्रवृत्ते अतिक्रम्यप्रवर्तमाने । प्रमाणे मर्यादायां "प्रमाणंहेतुमर्यादाशास्त्रेयत्ताप्रमातृषु" इत्यमरः॥२२॥ प्रकृतं प्रस्तुतं । आसनं सिंहासनं । अनुष्ठास्यति अधिष्ठास्यति ॥ २३ ॥ दारसंग्रहवर्तिनां गृहस्थानां । आत्मेयमिति । "अर्धोवाएषआत्मनोयत्पत्नी" इति श्रुतेरितिभावः ॥२४—२५॥ अन्तपालाः राष्ट्रान्तपरिपालकाः। दण्डनायकाः सहोपजीव्यं जीवाजीवरू-

---

**शि०** एकं कण्ठे कण्ठप्रदेशे स्कन्धइत्यर्थः । एकंपाणिनाऽऽदायतस्थौ । एकमित्युभयान्वयि ॥ १३ ॥ **ति०** कौशेयस्योपरीति । तस्याःकौशेयत्यागप्रसक्त्यभावात् ॥ १४ ॥ **स०** अन्तःपुरचराः पुमांसः नार्यश्च ॥ १५ ॥ **स०** आयस्ताः क्लेशिताः । "आयस्तःक्लेशित"इतिविश्वः । नियुक्ता कैकेय्या । **ति०** परमायत्ताः परमखिन्नाः । "यत्तःखेदोपस्करयोः" इत्यभिधानं । ॥ १६ ॥ **वि०** विजनंवनंगतस्ययावदागमनं तावदस्यादर्शनंनोस्तु । तेनच नोजीवनंसफलंभवतु ॥ १७ ॥ **स०** सहायेन सहायभूतेनलक्ष्मणेन सह अयेन शुभावहादृष्टेन। गच्छेतिवा । स्वपुत्रक पुत्रोनभवतीत्यपुत्रः सुष्ठुअपुत्रःस्वपुत्रः तत्त्वेनाज्ञातःस्वपुत्रकः। "अज्ञातेक" इत्युक्तेः। स्वपुत्रश्चासौकश्चेतिवा । कोविष्णुः । गमनानुमतिसूचकपदव्यत्यासोपेतंगच्छस्वेत्येकंवापदम् ॥ १८ ॥ **वि०** तुल्यशीलयाअनङ्गीकृतनगरस्थित्यासीतयाप्रेरितस्सन्चीरंबबन्धेत्यन्वयः ॥ २० ॥ **ती०** सप्रमाणेव सद्वृत्तेव । **ति०** अतिप्रवृत्ते मर्यादातिक्रमेणप्रवृत्ते । यावद्दूरस्तावत्प्रमाणे नावतिष्ठसि । कुतः अस्यावनगमनस्यत्वयाऽवृतत्वादितिभावः । सप्रमाणेवेतिपाठस्तद्व्याख्यानंचनप्रकृतोपयोगीतिचिन्त्यम् ॥ २२ ॥ **ति०** ननुस्त्रियाःकथंराज्याधिष्ठानमतआह—**आत्माहीति** । अनेन स्त्रीपुरुषोपाध्योःपरस्परावयवमेलनंसूचितं । अतएवलोकेपिसर्वतस्तयोःपरस्परप्रियत्वंदृश्यते ॥ २४ ॥ **ति०** अन्तपालाः शुद्धान्त-

[ पा० ] १ क. ख. घ. ङ. छ. झ. ञ. ट. कण्ठेस्स. ग. ज. स्कन्धेस्स. २ क. ख. सीता. ३ ङ. छ. झ. मागत्य. ४ ङ. च. छ. झ—ठ. चरानार्यो. ५ ङ. झ. ञ. ट. परमायत्ताः. ६ क. ङ. छ. झ. ञ. मैवं. ७ क. तवदर्शनमस्यानः. ग—ट. तावद्दर्शनमस्यानः. ८ च. ञ. राम. ९ ङ. छ. झ. ट. तथा. १० झ. सबाष्पो. ११ ख. अतिवृत्तेसुनिर्मेधे. १२ क. ख. घ—ट. तुराजानं. १३ घ. सप्रमाणेवतिष्ठसि. ङ. छ. झ. ट. नप्रमाणेवतिष्ठसि. १४ ख. ङ. वने. १५ ख. अधिष्ठास्यति. १६ क. ङ. च. छ. झ. ञ. वयमत्रानु. १७ घ. ङ. अन्तःपालाश्च. १८ घ. ज. सदाराः.

भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः ॥ वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह ॥ त्वमेका शाधि दुर्वृत्ता प्रजानामहिते स्थिता ॥ २८ ॥
न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः ॥ तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥
न ह्यदत्तां महीं पित्रा भरतः शास्तुमर्हति ॥ त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥
यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि ॥ पितृवंशचरित्रज्ञः सोन्यथा न करिष्यति ॥ ३१ ॥
तत्त्वया पुत्रगर्धिन्या पुत्रस्य कृतमप्रियम् ॥ लोके हि न स विद्येत यो न राममनुव्रतः ॥ ३२ ॥
द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् ॥ गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३ ॥

अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम् ॥
न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥
एकस्य रामस्य वने निवासस्त्वया वृतः केकयराजपुत्रि ॥
विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५ ॥
यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री ॥
वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसंप्रदाने ॥ ३६ ॥
तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे ॥
नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

पधनसहितं । सपरिच्छदं दासदासीशकटादिपरिकरयुक्तम् ॥ २६—२९ ॥ अदत्तां प्रीतिपूर्वकमदत्ताम् ॥ ३०—३१ ॥ पुत्रगर्धिन्या पुत्रविषयस्नेहयुक्तया ॥ ३२ ॥ पादपांश्चतदुन्मुखानिति वृक्षाणांतदुन्मुखत्वं नाम रामविषयस्नेहासक्तत्वं । तथोपरिष्टात्स्पष्टीभविष्यति । "अपिवृक्षाःपरिम्लानाःसपुष्पाङ्कुरकोरकाः" इति ॥ ३३ ॥ एवंवसिष्ठोभाव्यर्थमुक्त्वाप्रकृतमाह—अथेत्यादि । व्यपनीय निरस्य । प्रविधीयत इतीतिवक्तव्ये प्रविधीयतेतिसन्धिरार्षः ॥ ३४ ॥ न प्रविधीयतइत्येतदुपपादयति—एकस्येति । प्रतिकर्मनित्या अलंकारनियता नित्यमलंकरणयोग्येत्यर्थः ॥३५॥ विधानैः भृङ्गाराद्युपकरणैः ॥ ३६ ॥ प्रतिकारकामा प्रतिकारंसदृशकरणंकामयमाना भर्तृसदृशतयावनवासकरणमिच्छन्तीत्यर्थः। विनिवृत्तभावा चीरपरिधानाद्विनिवृत्तभावा । नबभूवेति ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तत्रिंशःसर्गः ॥ ३७ ॥

---

रक्षकाः ॥ २६ ॥ **ति०** भरतश्चपूर्वजमनुवत्स्यति । दशरथजातस्यतत्स्वभावतायाऔचित्यादितिभावः ॥ २७ ॥ **ति०** पादपैस्सहेत्यनेन अटवीभूतामितिद्योत्यते ॥ २८ ॥ **ति०** यदीति "पितॄन्समनुजायन्तेनराः" इतिन्यायादित्याशयः । यदीत्यसन्देहेसंदिग्धवचनं । "वेदाश्चेत्प्रमाणं" इतिवत् ॥ ३० ॥ **ति०** पितृवंशचरित्रं ज्येष्ठेविद्यमानेकनिष्ठस्यराज्यानर्हत्वरूपं तज्ज्ञः ॥ ३१ ॥ **शि०** प्रतिकर्मरामसंबन्धिनीसर्वक्रिया तत्रनित्यानित्यसंबन्धवती । रामक्रियानिर्वाहिकेत्यर्थः । **स०** रामंविनाइयंनस्थास्यतीत्यप्याह—**विभूषितेति** । विभौपरमात्मनिउषितातद्वक्षस्स्थलाश्रिता ॥ ३५ ॥ **स०** कारः आकारः । नपरिच्छेदकार्येवेत्यनुव्याख्या व्याख्यासुधायांतथाव्याख्यानात् । कारस्य रामाकारस्य प्रति प्रतिकारं । चीरधारणादिनारामाकारसादृश्यंकारयतीतितथा ॥ ३७ ॥ इतिसप्तत्रिंशःसर्गः ॥ ३७ ॥

**[ पा० ]** १ क. घ. छ. मनुयास्यति. २ क. निर्वृत्ता. ३ च. ञ. रता. ४ ङ. च. झ. ट. मिच्छति. ५ ख. अथवा. ६ ङ. छ. झ. ञ. ट. लोकेनहिस. ग. घ. च. ज. लोकेहिसन. ७ छ. योरामंनानुवर्तते. ८ ङ. छ. द्रक्ष्यसेद्यैव. ९ क. ट. देहिदेहि. १० घ. च. ट. एतस्य. ११ घ. पुरो. १२ ख. प्रियकारकामा.

## अष्टत्रिंशः सर्गः ॥ ३८ ॥

सीतयाचीरधारणेसर्वैर्दुःखादाक्रोशनम् ॥ १ ॥ तदुद्दीपितदुःखेनराज्ञाकैकेय्युपालंभः ॥ २ ॥ गमनोद्यतेनरामेणदशरथंप्रतिसादरंकौसल्यारक्षणप्रार्थना ॥ ३ ॥

तस्यां चीरं वसानायां नाथवत्यामनाथवत् ॥ प्रचुक्रोश जनः सर्वो धिक्त्वां दशरथं त्विति ॥ १ ॥
तेन तत्र प्रणादेन दुःखितः स महीपतिः ॥ चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ॥ २ ॥
स निःश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् ॥ कैकेयि कुशचीरेण न सीता गन्तुमर्हति ॥ ३ ॥
सुकुमारी च बाला च सततं च सुखोचिता ॥ नेयं वनस्य योग्येति सत्यमाह गुरुर्मम ॥ ४ ॥

इयं हि कस्यापकरोति किंचित्तपस्विनी राजवरस्य कन्या ॥
या चीरमासाद्य जनस्य मध्ये स्थिता विसंज्ञा श्रमणीव काचित् ॥ ५ ॥
चीराण्यपास्याज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्वा ॥
यथासुखं गच्छतु राजपुत्री वनं समग्रा सह सर्वरत्नैः ॥ ६ ॥
अजीवनार्हेण मया नृशंसा कृता प्रतिज्ञा नियमेन तावत् ॥
त्वया हि बाल्यात्प्रतिपन्नमेतत्तन्मां दहेद्वेणुमिवात्मपुष्पम् ॥ ७ ॥

रामेण यदि ते पापे किंचित्कृतमशोभनम् ॥ अपकारः क इह ते वैदेह्या दर्शितोथ मे ॥ ८ ॥
मृगीवोत्फुल्लनयना मृदुशीला तपस्विनी ॥ अपकारं कमिह ते करोति जनकात्मजा ॥ ९ ॥
ननु पर्याप्तमेतत्ते पापे रामविवासनम् ॥ किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः ॥ १० ॥
प्रतिज्ञातं मया तावत्त्वयोक्तं देवि शृण्वता ॥ रामं यदभिषेकाय त्वमिहागतमब्रवीः ॥ ११ ॥

---

त्वांधिगिति दशरथंचुक्रोशेत्यर्थः ॥१॥ श्रद्धां आदरं ॥ २— ४ ॥ तपस्विनी पातिव्रत्यतपोयुक्ता । विसंज्ञा मुग्धा । श्रमणीव तपस्विनीव । श्रमु तपसिखेदे चेतिधातुः ॥ ५ ॥ अपास्यात् त्यजतु । इयंप्रतिज्ञा सीतायाश्चीरधारणपूर्वकवनगमनरूपप्रतिज्ञा । मम मया । तृतीयार्थेषष्ठी । समग्रा वस्त्रालङ्कारसंपूर्णा । सर्वरत्नैः सर्वश्रेष्ठवस्तुभिः ॥ ६ ॥ अजीवनार्हेण जीवनानर्हेण आसन्नमरणेनेतियावत् । मया नृशंसा क्रूरा । प्रतिज्ञा त्वत्प्रार्थितंकरिष्यामीतिशपथपूर्विकाप्रतिज्ञा । तावत् प्रथमं । कृता । त्वयाहिदत्तवरद्वयया बाल्यात् बालिशत्वात् । एतत् प्रतिज्ञानं । नियमेन भरताभिषेकरामविवासनरूपविषयव्यवस्थया । प्रतिपन्नं निश्चितं । तत् मत्कृतप्रतिज्ञानं । आत्मपुष्पंवेणुमिव मांदहेदितियोजना ॥ ७ ॥ कोपेरामापराधमभ्युपेत्याह— रामेणेति । अशोभनं अपराधः । इह विवासे । दर्शितः संपादितइतियावत् ॥ ८ ॥ मृगीवोत्फुल्लनयनेत्यनेन मौग्ध्यमुक्तं। मृदुशीलेत्यनेन अपराधभीरुत्वमुक्तम् ॥ ९ ॥ पर्याप्तं यावदात्मभाविनरकानुभवायालम् ॥ १०॥ अभिषेकाय इहागतंरामंत्वंयदब्रवीः "सप्तसप्तचवर्षाणिदण्डकारण्यमाश्रितः । अभिषेकमिमं

---

**ति०** तद्वरानन्तर्गतायामीदृशमनिष्टव्यवहारमनिवारयंस्तूष्णींतिष्ठतीतिजनाक्रोशः । **शि०** त्वां सर्वसंमतिविलक्षणसंमतिदातृत्वेनसर्वतोभिन्नांमन्थरां । धिक् इतिसर्वोजनः दशरथं अनाथवत्प्रचुक्रोश कथयामास । अथमन्यपर्यायोऽदन्तस्त्वशब्दः ॥ १ ॥ **ति०** वनस्य वनगमनयोग्यचीरस्य ॥ ४ ॥ **शि०** किंचित् अनिष्टमितिशेषः । **ति०** कस्यापिकिंचित्करोति काकुः । अपितुनेत्यर्थः ॥ ५ ॥ **स०** समग्रा रामार्धाङ्गत्वाद्रामेणसहवनगमनेसमग्रत्वंसेत्स्यति ॥६॥ **ति०** नृशंसा अतिक्रूरा । प्रतिज्ञा रामवनवासविषया । नियमेन शपथपूर्वं । सातावत्कृता । यदेतद्धियतोधिकं सीताचीरग्रहणंत्वया प्रतिपन्नं आरब्धं । तत् बाल्यात् अज्ञानादेव । नात्रते सामर्थ्यं । तस्माद्वेणुमात्मपुष्पमिव त्वत्कृतातिप्रवृत्तिस्त्वां मादहेत् मानाशयतु । यद्वा एषा तवप्रवृत्तिः तववैधव्यप्राप्तये मा मां दहेत् नाशयेत् ॥ ७ ॥ **ती०** भूयोप्यधिकं ते त्वया । कृतैः अनुष्ठीयमानैः । कृपणैः अनिर्वाच्यदुःखप्रदैः । एभिः सीताप्रव्राजना-

**[ पा० ]** १ ङ. छ. ज. झ. ट. कस्यापि. २ ङ—ट. पुत्री. ३ ङ. छ. झ. ट. जाता. ४ क. नृशंसे. ५ झ. ञ. तन्मा. ६ ग. ङ—ट. दर्शितोऽधमे. ७ क. ग. ङ—ट. मनस्विनी. घ. यशस्विनी. ८ ख. ङ. छ—ञ. कमिव. ग. घ. च. किमिव. ९ ङ. छ. झ. ट. मेवंते. ख. ग. घ. ज. मेकंते.

तत्त्वेतत्समतिक्रम्य निरयं गन्तुमिच्छसि ॥ मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् ॥ १२ ॥
इतीव राजा विलपन्महात्मा शोकस्य नान्तं स ददर्श किंचित् ॥
भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसने निमग्नः ॥ १३ ॥
एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम् ॥ अवाक्छिरसमासीनमिदं वचनमब्रवीत् ॥ १४ ॥
इयं धार्मिक कौसल्या मम माता यशस्विनी ॥ वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते ॥१५॥
मया विहीनां वरद प्रपन्नां शोकसागरम् ॥ अदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि ॥ १६ ॥
पुत्रशोकं यथा नर्च्छेत्त्वया पूज्येन पूजिता ॥ मां हि संचिन्तयन्तीयमपि जीवेत्तपस्विनी ॥ १७ ॥
इमां महेन्द्रोपम जातगर्धिनीं तथा विधातुं जननीं ममार्हसि ॥
यथा वनस्थे मयि शोककर्शिता न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डेऽष्टत्रिंशः सर्गः ॥ ३८ ॥

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

दशरथाज्ञयासुमन्त्रेणरामस्यवनयापनायरथानयनम् ॥ १ ॥ सीतयाराजाज्ञयाधनाध्यक्षोपनीताभरणैःस्वगात्रालंकरणम् ॥ २ ॥ कौसल्ययासीतांप्रतिसत्यसतीलक्षणनिरूपणपूर्वकंश्रीरामेराज्यप्रच्युतिनिमित्तकावमानाकरणोपदेशेतयातांप्रतिस्वस्य पातिव्रत्यधर्मज्ञानप्रकाशनपूर्वकंतदुक्तानुष्ठानोक्तिः ॥ ३ ॥ रामेणकौसल्यासमाश्वासनपूर्वकमितरमातृःप्रतिपाक्षिकापराधक्षमापनेताभिर्दुःखादुच्चैरुत्क्रोशनम् ॥ ४ ॥

रामस्य तु वचः श्रुत्वा मुनिवेषधरं च तम् ॥ समीक्ष्य सह भार्याभी राजा विगतचेतनः ॥ १ ॥
नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवम् ॥ न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २ ॥
स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः ॥ विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३ ॥

त्यक्त्वाजटाचीरधरोवस" इतियदब्रवीः । त्वयोक्तंतच्छृण्वतामया तावत् रामविवासनमात्रमेवप्रतिज्ञातं नतुसीताप्रव्राजनमितिभावः ॥ ११ ॥ मयाप्रतिज्ञातमतिक्रम्य निरयं नरकं । गन्तुमिच्छसि । कुतः हि यस्मात् । यात्वं मैथिलीमपिचीरवासिनीमीक्षसे वाञ्छसि ॥ १२—१३ ॥ संप्रस्थितः गन्तुमुद्यतः ॥१४—१५ ॥ प्रपन्नां प्राप्तां । भूयः अतिशयेन । संमन्तुं संमानयितुं । ज्येष्ठपत्नीत्वेनपूर्वमेवसंमानिता अद्यविशेषेणमद्याच्ञ्ययेतिभावः ॥ १६ ॥ पुत्रशोकंयथानर्च्छेत्तथासंमन्तुमर्हसीतिपूर्वेणसंबन्धः । यद्वा उत्तरेणैवान्वयः । मांसंचिन्तयन्तीयंतपस्विनी अपिजीवेत् यदिजीवेत्तदात्वयापूजितासती पुत्रशोकंयथानर्च्छेन्नगच्छेत्तथाकुर्वित्यर्थः । नमच्छोकाद्यथानश्येत्त्वयापूज्येनपूजिता । मांहिसंचिन्तयन्तीयंत्वयिजीवेत्तपस्विनीत्यपिपाठः । पूर्वार्धस्यपूर्वेणान्वयः । त्वयिविषयेजीवेत् मांचिन्तयन्त्यपित्वदुपलालनेनजीवेदित्यर्थः । यद्वा मांसंचिन्तयन्ती मच्छोकाद्यथाननश्येत्तथात्वयापूजिता त्वयिजीवेदित्येकंवाक्यम् ॥ १७ ॥ जातगर्धिनीं पुत्रदर्शनकाङ्क्षिणीमित्यर्थः । न्यस्य त्यक्त्वा ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टत्रिंशः सर्गः ॥ ३८ ॥

विगतचेतनः अभूदितिशेषः ॥ १—३ ॥

दिरूपैःपातकैः किंकिमनुभविष्यसिवा नजानामीतिशेषः ॥ १० ॥ ति० ईक्षसे वाञ्छसि । "सऐक्षतबहुस्यांप्रजायेय" इत्यादाविच्छार्थेऽप्यीक्षतेर्दर्शनात् ॥ १२ ॥ ति० संप्रस्थितः एवंवादात्तयासहगमनेकृतानुमतिकत्वात्तयागन्तुंप्रवृत्तः ॥ १४ ॥ ति० नच गर्हते त्वदाज्ञयामयिवनंगच्छत्यपीतिशेषः । सत्यरक्षणंधर्मइतिज्ञात्वेतिभावः ॥ १५ ॥ स० संमन्तुं समाधानंकर्तुं ॥ १६ ॥ ति० जातगर्धिनींजातःमद्दर्शनविषयोगर्धःअभिलाषःयस्यास्तां । स० जातगर्धिनीं पुत्रभूतंमांसंनिधानेवस्तुमाकाङ्क्षन्तीं ॥ १८ ॥ इत्यष्टत्रिंशस्सर्गः ॥ ३८ ॥

[ पा० ] १ ख. महसि. २ ग. ञ. व्यसनेनमग्नः. ३ ख. सप्रस्थितो. ४ क. च. नत्वांदेवविगर्हते. ङ. नतुत्वां. ५ क. संचिन्तयन्तीया. ६ ख. सरामस्य. ७ च. सुतं. घ. यतः. ८ ख. तेन. घ. नैव. ९ क. दुःखितस्तु.

मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ॥ प्राणिनो हिंसिता वाऽपि [1]तस्मादिदमुपस्थितम् ॥४॥
न त्वेवानागते काले देहाच्च्यवति जीवितम् ॥ कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५ ॥
[2]योऽहं पावकसंकाशं पश्यामि पुरतः स्थितम् ॥ विहाय वसने सूक्ष्मे तापसा[3]च्छादमात्मजम् ॥ ६॥
[4]एकस्याः खलु कैकेय्याः कृतेऽयं [5]क्लिश्यते जनः ॥ स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमाम् ॥७
एवमुक्त्वा तु वचनं बाष्पेण [6]पिहितेन्द्रियः ॥ रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक [7]ह ॥८॥
संज्ञां तु प्रतिलभ्यैव मुहूर्तात्स महीपतिः ॥ नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९ ॥
औपवाह्यं रथं [8]युक्त्वा त्वमायाहि हयोत्तमैः ॥ प्रापयैनं महाभागमितो [9]जनपदात्परम् ॥ १० ॥
[10]एवं मन्ये गुणवतां गुणानां फलमुच्यते ॥ [11]पित्रा मात्रा च यत्साधुर्वीरो निर्वास्यते वनम् ॥ ११ ॥
राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः ॥ योजयित्वाऽऽययौ तत्र रथमश्वैरलंकृतम् ॥ १२ ॥
[12]तं रथं राजपुत्राय सूतः कनकभूषितम् ॥ आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३ ॥
राजा सत्वरमाहूय व्यापृतं वित्तसंचये ॥ उवाच [13]देशकालज्ञं [14]निश्चितं सर्वतः [15]शुचिम् ॥ १४ ॥
वासांसि च [16]महार्हाणि भूषणानि [17]वराणि च ॥ [18]वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥ १५॥
नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः ॥ प्रायच्छत्सर्वमाहृत्य सीतायै [19]सममेव तत् ॥ १६ ॥
सा सुजाता सुजातानि वैदेही प्रस्थिता वनम् ॥ भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥
[20]व्यराजयत वैदेही वेश्म तत्सुविभूषिता ॥ उद्यतोंऽशुमतः काले खं प्रभेव विवस्वतः ॥ १८ ॥
तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् ॥ अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९ ॥
असत्यः सर्वलोकेऽस्मिन्सततं सत्कृताः प्रियैः ॥ भर्तारं नानुमन्यन्ते विनिपात[21]गतं स्त्रियः ॥२० ॥

विवत्साः धेनवइतिशेषः । उपस्थितमित्यत्रेतिकरणंद्रष्टव्यं । इतिमन्यइत्यन्वयः ॥४॥ काले देहारम्भककर्मविनाशकाले ॥ ५—६ ॥ निकृतिः शाठ्यं । "कुसृतिर्निकृतिःशाठ्यं" इत्यमरः । निकृतिंसंश्रित्यस्वार्थेप्रयतमानायाइत्यन्वयः ॥ ७—८ ॥ नेत्राभ्यामित्युपलक्षणे तृतीया ॥ ९ ॥ औपवाह्यं उपवहनमात्रयोग्यं । युद्धानर्हमित्यर्थः । राजयोग्यमितिवार्थः । युक्त्वा योजयित्वा ॥१०॥ गुणवतां पुंसांसंबन्धिगुणानां फलंयदुच्यते तत् एवं एवंविधं । मन्ये अननुरूपंमन्ये । एवंशब्दार्थमाह—पित्रेति । यस्मात्साधुर्वीरः पित्रामात्राच वनंप्रतिनिर्वास्यते । अतो गुणा नार्जनीयाएवेतिभावः ॥ ११ ॥ शीघ्रविक्रमः शीघ्रपदविक्षेपः । योजयित्वाय्ययावित्यत्र आययावितिपदच्छेदः ॥१२—१३ ॥ वित्तसंचये कोशगृहे । व्यापृतं अध्यक्षत्वेनव्यापृतं धनाध्यक्षमित्यर्थः । निश्चितं यावदवस्थिततत्तद्वस्तुविषयनिश्चितज्ञानवन्तं। शुचिं बाह्यान्तरशुद्धियुक्तं ॥ १४ ॥ वर्षाण्येतानि संख्याय गणयित्वा । चतुर्दशवर्षपर्याप्तान्यानयेत्यर्थः ॥१५॥ प्रायच्छत् कोशाध्यक्षइतिशेषः । समं युगपत् । तत्सर्वमित्यन्वयः ॥ १६ ॥ सुजाता सुजन्मा। अयोनिजेतियावत्। "समःसमविभक्ताङ्गः" इतिवत्सामुद्रिकोक्तलक्षणवत्तयाउत्पन्नानि ॥ १७ ॥ अंशुमतः प्रशस्तकिरणस्य ॥ १८ ॥ श्वश्रूः कौसल्या। कृपणं क्षुद्रं । अनाचरन्तीं अकुर्वतीं ॥ १९ ॥ असत्यः कुलटाः।विनिपातगतं स्वस्थानात्प्रच्युतिं प्राप्तमित्यर्थः।

**स०** विवत्साः विगतपुत्राः ॥ ४ ॥ **ति०** आच्छाद्यतेअनेनेत्याच्छादः । तापसानामाच्छादोयस्यतं ॥ ६ ॥ **ति०** साधुर्वीरो रामःपित्रामात्राचवनंनिर्वास्यतेयत् अतोगुणवतांपुंसांगुणानांफलं एवंनिर्वासनरूपमुच्यते । शास्त्रेणेतिमन्येइतिदुःखातिशयादुक्तिः । उत्प्रेक्षालङ्कारः ॥११॥ **ति०** आचचक्षे रथउपस्थितइत्युक्तवान् ॥१३॥ **ति०** सर्वतश्शुचिः इहामुत्रानृणः ॥१४॥ **ति०** एतानि

[ पा० ] १ ङ. छ. झ. ट. तन्मामिदं. २ घ. सोहं. ज. योयं. ३ ङ. च. ञ. आच्छादनात्मजं. ४ ख. एतस्याः. ५ ङ. छ. ट. खिद्यते. ६ झ. विहतेन्द्रियः. ग. ज. पिहितेक्षणः. ७ छ. झ. ट. सः. ८ च. ञ. योज्य. ९ घ. जनपदाद्बहिः. १० घ. पापं. ११ ज. मात्रापित्रा. १२ तंरथमितिश्लोकेपूर्वोत्तरार्धयोःपौर्वापर्यं छ. पुस्तकेदृश्यते. १३ क—ङ. छ. ज. झ. ट. देशकालज्ञो. १४ घ. निष्ठितं. १५ ङ. च. छ. झ. शुचिः. १६ ग. ङ. च. छ. झ. ञ. ट. वरार्हाणि. १७ छ. झ. महान्तिच. १८ ख. वर्षाणितानि. १९ क. ङ. छ. ज. झ. ट. क्षिप्रमेव. क. सर्वमेव. २० घ. व्यराजयच्च. २१ घ. गताः.

एष स्वभावो नारीणामनुभूय पुरा सुखम् ॥ अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१ ॥
असत्यशीला विकृता *दुर्ग्राह्यहृदयाः सदा ॥ [1]युवत्यः पापसंकल्पाः क्षणमात्राद्विरागिणः [2] ॥ २२ ॥
न कुलं न कृतं [3]विद्यां न दत्तं नापि संग्रहम् ॥ स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥२३॥
[4]साध्वीनां हि [5]स्थितानां तु [6]शीले सत्ये श्रुते [7]शमे ॥ स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥२४॥
स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो मम ॥ तव [8]दैवतमस्त्वेष [9]निर्धनः सधनोपि वा ॥ २५ ॥
विज्ञाय वचनं सीता [10]तस्या धर्मार्थसंहितम् ॥ [11]कृताञ्जलिरुवाचेदं श्वश्रूमभिमुखे [12]स्थिताम् ॥ २६ ॥
करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् ॥ अभिज्ञाऽस्मि यथा भर्तुर्वर्तितव्यं श्रुतं च मे ॥ २७ ॥
न मामसज्जनेना[13]र्या समानयितुमर्हति[14] ॥ धर्माद्विचलितुं [15]नाहमलं चन्द्रादिव प्रभा ॥ २८ ॥
नातन्त्री [16]वाद्यते वीणा नाचक्रो [17]वर्तते रथः ॥ नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥२९॥
मितं ददाति हि पिता मितं [18]माता मितं सुतः ॥ अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥३०॥

नानुमन्यन्ते नगणयन्ति ॥ २० ॥ दुष्यन्ति विकृता भवन्तीत्यर्थः । प्रजहति "अदभ्यस्तात्" इत्यदादेशः ॥ २१ ॥ विरागिणः विरागिण्यः । ङीबभावआर्षः ॥ २२ ॥ कुलं आभिजात्यं । कृतं उपकारं । दत्तं संमानपूर्वकवस्त्राभरणादिदानं । संग्रहं अग्निसाक्षिकपाणिग्रहणं । अनित्यहृदयाः चञ्चलहृदयाः । असतीनां भर्तुःकुलादिकंनसंतोषाय किंतुधनमेवेतिभावः । एवं कैकेयी व्याजेननिन्दिता ॥२३ ॥ स्थूणानिखननन्यायेनपातिव्रत्यदृढीकरणार्थमसतीनां स्वभावमुक्त्वा सतीनांस्वभावमाह—साध्वीनामिति । शीले कुलोचितचरित्रे । श्रुते गुरुजनकृतोपदेशे । शमे शान्तौच। स्थितानांसाध्वीनां पतिव्रतानांस्त्रीणां। परमंपवित्रं परमंपावनं। पतिरेकः पतिरेव। विशिष्यते उत्कृष्टोभवति ॥२४—२५॥ धर्मार्थसंहितं धर्मरूपप्रयोजनसहितं । अभिमुखे अग्रइत्यर्थः ॥ २६ ॥ भर्तुः भर्तरिविषये । वर्तितव्यं शुश्रूषितव्यं । मे मया । श्रुतंच । मातापितृभ्यामितिशेषः ॥ २७ ॥ समानयितुं समानांकर्तुं । नालं अक्षमेत्यर्थः ॥ २८ ॥ तन्त्री वीणासिरा । शतात्मजा पुत्रशतवती ॥२९॥ मितं अल्पं ऐहिकमात्रमित्यर्थः ।

वर्षाणि चतुर्दशवर्षाणि । एतेन एतावानेववनवासोनाधिकइतिपुनर्दार्ढ्यायध्वनितम् ॥ १५॥ **ति०** असत्यशीलाः असत्यवचनशीलाः । विकृताः विकृतोपेताक्ष्यादिव्यापाराः । दुर्गाः दुष्टाभिसरणादिगतिशीलाः । अहृदयाः स्वभर्तरिविरसाः । असत्यः कुलटाः । पापेपरपुरुषप्रसङ्गादौसंकल्पःमनोव्यापारःयासां । क्षणमात्रविरागिणः क्षणमात्रविरागिण्यः । अल्पनिमित्ततः क्षणमात्रेणत्यक्तानुरागाः । अविश्वसनीयस्नेहाइतियावत् । ताः असत्यइतिविधेयं । **शि०** विकृताः दर्शनमात्रेणविकारोत्पादिकाः । दुर्गाः दुरवगाह्याभिप्रायाः । पापसंकल्पाः पापेषुपरपुरुषप्रसङ्गादिषुसंकल्पोयासांताः । अतएवक्षणमात्रविरागिणः पुरुषान्तरलावण्यमवलोक्यततोपितूर्णंविरक्तचित्ताः । असत्यः स्त्रियोभवन्तीतिशेषः । **स०** विकृताः भ्रूविक्षेपादिविकारवत्यः । क्षणमात्रविरागिणः क्षणमात्रे स्नेहरहितपुरुषस्यदुर्ग्राह्यहृदयाः । यद्वा क्षणमात्रविरागिणः तद्वद्विद्यमानाः । अन्तरेणापिवर्तितदर्थोऽवगम्यते । यथोक्तं "बहुगणवतुडतिसंख्या" इतिसूत्रव्याख्यानावसरेमहाभाष्ये "सतर्हिवतिनिर्देशःकर्तव्यः नकर्तव्यः । नह्यन्तरेणवतिमतिदेशोगम्यते । अन्तरेणवतिमतिदेशोगम्यते । तद्यथा । एषब्रह्मदत्तःअब्रह्मदत्तंब्रह्मदत्तइत्याह । तेनमन्यामहेब्रह्मदत्तवदयंभवति" इति ॥ २२ ॥ **स०** स्त्रीणांहृदयं कर्तृ । तथाचस्त्रीणांमनः कुलादिकंनगृह्णाति । इष्टसाधनत्वेनेतिशेषः । संग्रहइतिपाठेपूर्वार्धोक्तानिपदानिप्रथमान्तानि । हृदयंकर्म । तथाचकुलंस्त्रीणांहृदयंनगृह्णातीत्यादिपृथगन्वयः । पूर्वोत्तरसाहचर्याद्विद्ययापिनञन्वेति ॥ २३ ॥ **स०** सः रामः । पुत्रः मम ॥ २५ ॥ **ति०** विद्यते वादनसमर्थेति गमनसमर्थइतिचशेषः ॥ २९ ॥

[ पा० ] * झ. दुर्गाअहृदयाः. १ छ. झ. ञ. ट. असत्यः. २ ख. ङ. छ. झ. ट. मात्रविरागिणः. ३ ख. ङ. च. झ. ञ. विद्यानदत्तंनापिसंग्रहः. ४ क. ख. ङ. झ. ञ. ट. साध्वीनांतु. च. साध्वीनांसु. ५ घ. स्थितानांहि. ६ ज. सत्येशीले. ७ ङ. छ. झ. ञ. ट. स्थिते. क. ग. ज. दमे. ८ ङ. च. छ. झ. ञ. देवसमस्त्वेष. ग. ज. दैवतमेवैष. घ. दैवतमित्येष. ९ घ. सधनोनिर्धनोपि. १० घ. श्रुत्वा. ११ छ. झ. कृत्वाञ्जलिमुवाचेदं. १२ क. ग. घ. झ. स्थिता. १३ क. च. जनेनार्ये. १४ क. ज. मर्हसि. १५ क. घ. नालमहं. १६ ङ. छ. झ. ञ. ट. विद्यते. १७ ङ. च. छ. झ. ञ. ट. विद्यते. १८ ङ. च. छ. झ. ञ. ट. भ्राता.

साऽहमेवंगता श्रेष्ठा[1] श्रुतधर्मपरावरा[2] ॥ आर्ये किमवमन्ये[3]ऽहं स्त्रीणां[4] भर्ता हि दैवतम् ॥ ३१ ॥
सीताया वचनं श्रुत्वा कौसल्या हृदयंगमम् ॥ शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजम्[5] ॥ ३२ ॥
तां प्राञ्जलिरभिक्रम्य[6] मातृमध्येऽतिसत्कृताम् ॥ रामः परमधर्मात्मा[7] मातरं वाक्यमब्रवीत् ॥ ३३ ॥
अम्ब मा दुःखिता भूस्त्वं[8] पश्य त्वं पितरं मम ॥ क्षयो[9] हि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४ ॥
सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च ॥ सां[10] समग्रमिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥ ३५ ॥
एतावदभिनीतार्थमुक्त्वा स जननीं वचः ॥ त्रयश्शतशतार्धाश्च[11] ददर्शावेक्ष्य मातरः ॥ ३६ ॥
तांश्चापि[12] स तथैवार्ता मातृर्दशरथात्मजः ॥ धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७ ॥
संवासात्परुषं किंचिदज्ञानाद्वा[13]ऽपि यत्कृतम् ॥ तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥ ३८ ॥
वचनं राघवस्यैतद्धर्मयुक्तं[14] समाहितम् ॥ शुश्रुवुस्ताः स्त्रियः सर्वाः शोकोपहतचेतसः ॥ ३९ ॥
जज्ञेऽथ तासां संनादः क्रौञ्चीनामिव निस्वनः ॥ मानवेन्द्रस्य भार्याणामेवं वदति राघवे ॥ ४० ॥
मुरजपणवमेघघोषवद्दशरथवेश्म बभूव यत्पुरा ॥
विलपितपरिदेवनाकुलं व्यसनगतं तदभूत्सुदुःखितम् ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

अमितस्य ऐहिकामुष्मिकफलस्य ॥ ३० ॥ एवंगता एवंविधपातिव्रत्यधर्मप्राप्ता । श्रेष्ठाश्रुतधर्मपरावरा श्रेष्ठाभ्योमात्रादिपतिव्रताभ्यःसम्यक्श्रुतसामान्यविशेषरूपधर्मोत्कर्षा । किमवमन्ये भर्तारमितिसिद्धं ॥ ३१ ॥ शुद्धसत्त्वा सत्त्वगुणाढ्या । दुःखहर्षजं रामारण्यगमनप्रयुक्तंदुःखं । दृढपातिव्रत्ययुक्तसीतावचःश्रवणजो हर्षः ॥ ३२ ॥ अभिक्रम्य प्रदक्षिणीकृत्य ॥ ३३ ॥ वनवासस्य वनवासकालस्य ॥ ३४ ॥ सुप्तायाः एकस्यांरात्रौसंप्राप्तस्वापायाइवेत्यर्थः । समग्रं निर्वर्तितपितृवचनं संपूर्णमनोरथंवा ॥ ३५ ॥ अभिनीतार्थं क्रोडीकृतसर्वार्थमित्यर्थः । त्रयश्शतशतार्धाश्च त्रयश्शतं त्रिशतं त्रेस्त्रयसादेशः । शतार्धं पञ्चाशत् त्रयश्शतशतार्धप्रमाणंयासांतास्तथोक्ताः । मातरः मातॄः । द्वितीयार्थेप्रथमा । अवेक्ष्य वक्तव्यमालोच्य । ददर्शेति संबन्धः ॥ ३६ ॥ तथैवार्ताः कौसल्येवदुःखिताः ॥ ३७ ॥ संवासात् एकत्रसहवासाच्चिरपरिचयादित्यर्थः । समनुजानीत क्षान्तमित्यनुज्ञांकुरुतेत्यर्थः । आमन्त्रयामि आपृच्छामि ॥ ३८ ॥ समाहितं समीचीनार्थयुक्तमित्यर्थः ॥ ३९—४० ॥ मुरजपणवाएवमेघास्तेषांघोषास्तद्वत् । यद्वा मुरजादिसहपाठात् मेघोपिवाद्यविशेषः । मुरजश्चपणवश्चमेघश्चमुरजपणवमेघं "द्वन्द्वश्चप्राणितूर्यसेनाङ्गानां" इत्येकवद्भावः । त-

---

**स०** एवंगता इत्थंज्ञानवती भर्तैवदैवतमितिज्ञानवतीतियावत् । भावेक्तः । गत्यर्थानांज्ञानार्थत्वात् एवंगतंज्ञानंयस्यास्सातथा । श्रेष्ठा सत्कुलप्रसूता । श्रुतौधर्माणांपरावरौययासा । श्रेष्ठेइतिक्वचित्पाठः । तदाकौसल्यासंबोधनं ॥ ३१ ॥ मातृमध्ये सार्धत्रिशतमातृमध्ये ॥ ३३ ॥ **स०** अंब इतःपरं दुःखिताभूत्वा राजानंमापश्येः । कुतः वनवासस्यसकाशात् तस्यक्षयोपिक्षिप्रंभविष्यतियतो तद्इत्यप्यर्थः ॥ ३४ ॥ **स०** समग्रंसीतासहितं । **शि०** समग्रं समीचीनःअग्रःअग्रगन्तासंदेशहरइत्यर्थः । यस्यतं ॥ ३५ ॥ **स०** त्रयश्शतानिशतार्धंचसंख्यापरिमाणंयासांतास्तथा । त्रेस्त्रयसादेशआर्षः । तथाऽर्धशब्दस्यपरनिपातश्च । अवेन कान्त्या ईक्ष्याः ताश्चतामातरश्चेतिकर्मधारयः । **ति०** एवंभूताः या मातरस्सन्ति ताः अवेक्ष्य विविच्य । ददर्शेत्यर्थः ॥ ३६ ॥ **स०** दशरथवेश्मसुदुःखितमभूत् । ग्रामोगतआगतइतिवदुपचारः । **शि०** विलपितपरिदेवनाकुलं विलपितैःकोस्मात्रक्षितेत्यादिवाक्यैः यत्परिदेवनंतेनाकुलंव्याप्तं । बभूव । अतएव व्यसनगतं विविधकर्मैकचित्तचालनप्रापकं । अतएवसुदुःखितं अतिदुःखप्रदं । भूत् । श्रोतॄणामितिशेषः ॥ ४१ ॥ इत्येकोनचत्वारिंशस्सर्गः ॥ ३९ ॥

**[ पा० ]** १ क. ह्येषा. २ घ. परायणा. ३ ख. घ. ङ. ज—ट. मन्येयं. ४ ख. ग. ङ. छ. झ. ट. स्त्रियाभर्ता. ५ ख. दुःखहर्षयोः. ६ क. ख. रभिप्रेत्य. ङ. छ. झ. ट. रभिप्रेक्ष्य. ७ क—घ. ज. धर्मज्ञो. ८ क. ख. घ. ङ. च. ञ. भूत्वापश्यत्वं. छ. झ. ट. भूत्वापश्येस्त्वं. ९ ख. घ—छ. झ. ञ. ट. क्षयोपि. १० क. सासमक्षमिह. ङ. झ. ञ. ट. समग्रमिहसंप्राप्तं. ११ क. ग. ङ—ट. शतार्धाहि. १२ घ. तांश्चैव. १३ ङ. च. झ. ञ. ट. दज्ञानादपि. १४ घ. राघवस्यैवतत्वयुक्तं.

## चत्वारिंशः सर्गः ॥ ४० ॥

रामलक्ष्मणाभ्यांसीतयाचदशरथायप्रणामप्रदक्षिणकरणम् ॥ १ ॥ रामेणसीतयासहकौसल्यापादाभिवादनम् ॥ २ ॥ लक्ष्मणेनकौसल्याभिवादनपूर्वकंसुमित्राचरणप्रणामः ॥ ३ ॥ सुमित्रयालक्ष्मणायहितोपदेशः ॥ ४ ॥ सीतारामलक्ष्मणेषु रथमधिरूढेषुसुमन्त्रेणरथाश्वचोदना ॥ ५ ॥ पौरैःसर्वैःकृच्छ्राद्रामरथमनुधावद्भिरपिरथस्यवेगवत्तयानैराश्यात्ततोनिवर्तनम् ॥ ६ ॥ कौसल्यादिभिःसहरामपथमनुधावतादशरथेनद्रुततरंधावद्रथानुधावनाशक्तयासयुक्तिकसचिवोक्त्याचमध्येपथमवस्थानम् ॥ ७ ॥

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ॥ उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १ ॥
तं चापि समनुज्ञाप्य धर्मज्ञः सीतया[1] सह ॥ राघवः शोकसंमूढो[2] जननीमभ्यवादयत् ॥ २ ॥
अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् ॥ अथ[3] मातुः सुमित्राया जग्राह चरणौ पुनः ॥३॥
तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् ॥ हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४ ॥
सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ॥ रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥ ५ ॥
व्यसनी वा समृद्धो[4] वा गतिरेष तवानघ ॥ एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६ ॥
इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् ॥ दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु[5] च ॥
[ ज्येष्ठस्याप्यनुवृत्तिश्च[6] राजवंशस्य लक्षणम् ॥ ७ ॥ ]

द्घोषवत् । विलपितपरिदेवनाकुलं विविधानिलपितानिरामगुणकैकेयीदुर्गुणप्रतिपादकवाक्यानियस्मिंस्तद्विलपितं परिदेवनं रोदनशब्दः तेनाकुलं । व्यसनगतं आपद्गतं । अतएवदुःखितमभूत् ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

उपसंगृह्य पादग्रहणपूर्वकंप्रणम्य । दीनाः वृद्धयोर्मातापित्रोःशुश्रूषानलब्धेतिदीनाः ॥ १—२ ॥ अन्वक्षं अनुपदं । "अन्वगन्वक्षमनुगेनुपदं" इत्यमरः ॥ ३ ॥ —४॥ सृष्टस्त्वं दैवेनेतिशेषः । भ्रातरिगच्छति देव्यासहपुष्पितवनदर्शनपारवश्येनगच्छतिसतीत्यर्थः । प्रमादं अनवधानं । माकार्षीः सावधानोभवेत्यर्थः । सृष्टइति यथाकौसल्यालोकरक्षणार्थंपुत्रंप्रासूत एवंमयासुहृज्जनेरामे स्वनुरक्तस्त्वंवनवासायसृष्टः वनेरामानुवर्तनायोत्पादितः । अतोरामेगच्छतिप्रमादंमाकार्षीः रामगमनसौन्दर्याकृष्टमनस्कतयारक्षणकर्मण्यनवहितोमाभूरित्यर्थः । यद्वा रामेवनंगच्छति त्वमत्रैवमातिष्ठेति भावः ॥ ५ ॥ रामगमनेगन्तव्यतायांनिमित्तमाह— व्यसनीति । गतिस्त्वेधर्मशास्त्रानुमतिंदर्शयति—एषइति ॥ ६ ॥ ज्येष्ठानुवर्तनादपिपरमधर्मकुलोचितंदर्श-

---

ति० दीनाःमातापित्रोश्शोकदर्शनाद्दीनाइव । शि० दीनाःराक्षसक्षयकारकाः । अन्तर्भावितणिजर्थोदीङ् । कर्माविवक्षयाकर्तरि निष्ठा । ति० समनुज्ञाप्य कृतानुमतिकंकृत्वा । शोकसंमूढः मातृदुःखदर्शनात्सइव । शि० शोकसंमूढः शोकःसंमूढोयेनसःशोकापहर्तेत्यर्थः । स० शोकसंमूढः शोकेनसंमोहयतिवैचित्यंप्रापयतिजनानितिवा । शोकयतीतिशोकः । संमूढइत्यत्राप्येवं । ततः कर्मधारयइतिवा ॥ २ ॥ स० भ्रातुः रामस्य । अन्वक्षंप्रत्यक्षं अनुपदंवा ॥३॥ तनि० सृष्टस्त्वं नैरपेक्ष्येणरामचरणासक्तःखलुभवान् । मयावक्तव्यंकिं । दास्यकरणेचक्षुश्श्रवास्त्वं वनवासायरामेणसहत्वयावनंगम्यतेचेत् मत्त उत्पत्तिप्रयोजनंलब्धं तत्सहायार्थं खलुमयोत्पादितः । स्वनुरक्तःसुहृज्जने सुहृज्जनमात्रेस्वनुरक्तस्त्वं ततस्सर्वोपजीव्येरामेअनुरक्तोभव । यद्वा सुहृज्जने रामे भवतस्तस्मिन्नतीवप्रीतिरस्तिखलु । इदानींगन्तव्यमितिमयावक्तव्यंकिं । तथापिनियमनीयंकिंचिदस्ति । रामेप्रमादंमाकर्षीः । कोयंप्रमादइत्यतआह । पुत्रभ्रातरिगच्छतीति । श्रीरामगमनविशेषेदृष्टिंदत्वारक्ष्यवस्तुभ्रंशंमाकुरु । ती० सुहृज्जनेअत्रत्यसुहृज्जनेस्वनुरक्तोपित्वं मयावनवासाय सृष्टःअनुमतः सत्वंगच्छेति । शि० सुहृज्जने सुहृदंसौहार्दंजनयत्युत्पादयतिसः तस्मिन् भ्रातरिरामे ॥ ५॥ शि०

[ पा ] १ क. ङ. च. छ. झ. ञ. ट. सहसीतया. २ ख. ग. ज. संतप्तो. ३ ङ. छ. झ. ञ. ट. अपि. ४ ख. समर्थोवा. ५ ङ. च. झ. ञ. ट. मृधेषुहि. ६ ज्येष्ठस्येत्यर्धं क. च. ञ. पुस्तकेष्वेवदृश्यते.

लक्ष्मणं त्वेवमुक्त्वा[1] सा संसिद्धं प्रिय[2]राघवम् ॥ सुमित्रा गच्छगच्छेति पुनः पुनरुवाच[3] तम् ॥८॥
[ [4]गम्यतामर्थलाभाय क्षेमाय विजयाय च ॥ शत्रुपक्षविनाशाय पुनः संदर्शनाय च ॥ ९ ॥ ]
[5]रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ॥ अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥ १० ॥

यति—इदमिति । मृधेषु युद्धेषु । तनुत्यागेनापिरामो रक्षणीयइतिभावः ॥ ७ ॥ संसिद्धं षिधुगत्यामित्यस्माद्धातोर्निष्ठायांरूपं । गमनोद्युक्तमित्यर्थः । गच्छगच्छेतिवीप्सयासुमित्रायाअपिरामानुवर्तनेमहानादरोद्योत्यते ॥ ८—९ ॥ वनवासेपितृमातृनगरस्मरणे मनश्चाञ्चल्यंभविष्यतीतिधियातत्रैवप्रतिनिधिंकल्पयति—राममिति । यथासुखंगच्छेत्यस्यइत्युवाचेतिपूर्वेणसंबन्धः । रामंदशरथंविद्धि पितरमवगच्छेत्यर्थः । जनकात्मजांमांविद्धि मातरंविद्धीत्यर्थः । अटवीमयोध्यां तद्वद्भोगस्थानंविद्धि । गच्छतातयथासुखं तदनुवर्तनमेवउचितंसुखमित्यर्थः । यद्वा रामंदशरथंविद्धि दशति मत्स्यकच्छपोरगादीन्दंष्ट्राव्यापारविषयान्करोतीतिदशःपक्षी दंशदशनइतिधातुः । दशनंदंष्ट्राव्यापारः पचाद्यच् । पृषोदरादित्वादनुनासिकलोपः । सगरुडः रथोयस्यतं विष्णुंविद्धीत्यर्थः । जनकात्मजां मां लक्ष्मीं विद्धि । अटवीमयोध्यां अपराजिताख्यांवैकुण्ठनगरीं

तनुत्यागः शत्रुतनुत्याजनं ॥ ७ ॥ **ति०** असावेवंस्वपुत्रंलक्ष्मणमुक्त्वा संसिद्धं वनंगन्तुंनिश्चितमनस्कं प्रियराघवंप्रियरूपं राघवं गच्छगच्छेतिपुनःपुनरुवाच । शकुनसंपत्तयइतिभावः । **स०** सुमित्रागच्छगच्छेत्यत्र सुमित्रा आगच्छगच्छेतिच्छेदः । तथाच प्रियराघवंआगच्छगच्छेतिपुनःपुनरुवाच । लोकेलोकाःस्वान्प्रतिगत्वाऽऽयास्यामीति गत्वाऽऽयाहीतिवावक्तारो नतु गच्छेत्येतन्मात्रवादिनइतिएवमुक्तिः । तत्रापि अननुमतंगमनमिति प्रस्तुतस्यापिगमनस्यपश्चादुक्तिः सकलकामितस्यआगमनस्यप्रथमतआगच्छेत्यनेनोक्तिरितिज्ञेयम् । **शि०** एवमनेनप्रकारेण उक्त्वा उपदिश्य संसिद्धं गमनानुकूलव्यापारवन्तं प्रियराघवं सर्वप्रीतिविषयीभूतरामं त्वंगच्छगच्छेति असौसुमित्रा तंलक्ष्मणं पुनःपुनरुवाच । संसिद्धमित्यत्रगत्यर्थकषिधोनिष्ठा ॥ ८ ॥ **ति०** तंलक्ष्मणंपुनरुवाचेत्यनुकर्षः । तद्वचनमाह—**राममिति** । **तनि०** रामंदशरथंविद्धि सोपाधिकपितरिदशरथे अतिस्नेहंविहाय निरुपाधिकपितरिरामेप्रीतिंकुर्वित्यर्थः । मांविद्धिजनकात्मजां सोपाधिकमातरंमांविहाय निरुपाधिकमातरिसीतायांभक्तिंकुर्वित्यर्थः । अयोध्यामटवींविद्धि सोपाधिकामयोध्यांविहाय रामनिवासत्वेननिरुपाधिकप्राप्यदेशेवनेप्रीतिंकुर्वित्यर्थः । यद्वा रामंदशरथसमंविद्धि ज्येष्ठभ्रातापितृसमइतिस्मरणात् । जनकात्मजांमातृसमांविद्धि । अटवींअयोध्यांतद्वद्भोग्यतमांविद्धि । अथवा रामं दशरथसदृशगुणंविद्धि "गुणैर्दशरथोपमः" इत्युक्तेः । मांविद्धिजनकात्मजां गुणवतींसीतां मामिवसेव्यांविद्धि । रमणीयवस्तुसंपन्नतया अटवीमयोध्यावद्भोग्यतमांविद्धि । रामं दशरथंविद्धि दशरथमिव स्त्रीपरवशंविद्धि । तच्च मृगानुसारित्वादिषु वक्ष्यते । मांविद्धिजनकात्मजां अहंयथाराममनुगच्छेतिवदामि एवमेववदिष्यति । तच्चतत्रैवस्पष्टं । अटवीमयोध्यांविद्धि अटवीमपिविहायान्यत्रगच्छेत् सर्वत्रसावधानोभवेतितात्पर्यम् । यद्वा रामंदशरथमिवातिशूरंविद्धि । देवासुरयुद्धेदशरथस्यशौर्यंप्रसिद्धं । अहं यथाभर्तृविजये अभिनन्दामि जनकात्मजाप्येवमभिनन्दिष्यति । तच्च "तंदृष्ट्वाशत्रुहन्तारं" इत्यत्रस्पष्टीभविष्यति । अयोध्यामटवींविद्धि व्याघ्रावासंगुल्ममिवाटवीमयोध्यामिवविद्धि । रामंदशरथंविद्धि दशरथोयथारामविश्लेषंनसहते तथारामोयुष्मद्विश्लेषंनसहते । मांविद्धिजनकात्मजां अहंयथाभवद्विश्लेषंनसहे तथासीताचभवद्विश्लेषंनसहते । अयोध्यामटवींविद्धि रामविश्लेषेणायोध्यायथा "अपभ्रष्टमनुष्याचे"त्याद्यवस्थांप्राप्ता तथाअटव्यपि "अपिवृक्षाःपरिम्लाना" इत्याद्यवस्थांप्राप्नोति । रामंदशरथंविद्धि दशरथोयथासम्राड्बभूव तथारामोपिसम्राड्भविष्यति । मांविद्धिजनकात्मजां अहंयथासम्राण्महिषी तथासीतापिभविष्यति । अयोध्यामटवींविद्धि अटवी अयोध्यावत्समृद्धपुष्पफलाभविष्यति । यद्वा रामं पदातिरितिमावमंस्थाः दशरथं पुष्पकादिबहुरथसंचारिणंविद्धि । दशरथाः दशसुदिशास्वप्रतिहतोरथोयस्येतिचविग्रहः । मांविद्धिजनकात्मजां देवासुरादियुद्धेषुदशरथेनसहयथाऽहंसंचरामि तथासीतारामेणसंचरिष्यति । अयोध्यामटवींविद्धि इदानीमटव्यांयथानित्यसंचारस्तथाऽयोध्यायांनित्यसंचारोभविष्यति । यद्वा दशरथंरामंविद्धि रामेयथापितृत्वबुद्धिपूर्तिस्तथादशरथेपिकुरु । "अहंतावन्महाराजेपितृत्वंनोपलक्षये । भ्राताभर्ताचबन्धुश्चपिताचममराघवः" इत्युक्तरीत्यादशरथेऽवज्ञामकृत्वा रामस्यदशरथेपितृत्वबुद्धिपूर्तिमनुसृत्य त्वयापितादृशबुद्धिःकार्या । मांविद्धिजनकात्मजांदशरथपाणिग्रहणकृतदोषंमनस्यकृत्वा रामसपत्नीमातृत्वप्रयुक्तबहुमानंवानुसृत्य मयिसीतायामिव मातृत्वबुद्धिपूर्तिःकार्या । अयोध्यामटवींविद्धि "वनंनगरमेवास्तुयेनगच्छतिराघवः" इत्युक्तरीत्या अयोध्याऽवमतिर्नकार्या । रामपादुकासनाथत्वेनायोध्याप्युद्देश्यत्वेनानुसंधेया । यद्वा रामंदशरथंपक्षिरथं गरुडरथमितियावत् । "दशःपक्षीविहङ्गमः" इतिनिघण्टुः । जनकात्मजां मां लक्ष्मींविद्धि सीतालक्ष्मीर्भगवान्विष्णुरितिवक्ष्यति । अटवीमयोध्यांविद्धि देवानांपुरं परमपदाख्यांविद्धि । "देवानांपूरयो-

[ **पा०** ] १ ङ. झ. ट. मुक्त्वासौ. २ ख. प्रति. ३ घ. रुवाचह. ४ अयंश्लोकः क. च. पुस्तकयोरेवदृश्यते. ५ रामंदशरथमितिश्लोकानन्तरंलक्ष्मणंत्वेवमितिश्लोकः क. च. ज. ञ. पुस्तकेषुदृश्यते.

[1]ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ॥ विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ ११ ॥
रथमारोह भद्रं ते राजपुत्र महायशः ॥ क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम [2]वक्ष्यसि ॥ १२ ॥
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया ॥ तान्युपक्रमितव्यानि यानि [3]देव्याऽसि [4]चोदितः ॥ १३ ॥
तं रथं सूर्यसंकाशं सीता हृष्टेन चेतसा ॥ आरुरोह वरारोहा कृत्वाऽलंकारमात्मनः ॥ १४ ॥
वनवासं हि संख्याय वासांस्याभरणानि च ॥ भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १५ ॥
[5]तथैवायुधजालानि भ्रातृभ्यां कवचानि च ॥ रथोपस्थे [6]प्रतिन्यस्य सचर्म कठिनं च [7]तत् ॥ १६ ॥
[8]अथो ज्वलनसंकाशं चामीकरविभूषितम् ॥ [9]तमारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १७ ॥

विद्धि । तद्वासस्थानमितिभावः । यद्वा रामंदशरथंच विद्धि उभयोस्तारतम्यंपश्येत्यर्थः । मांजनकात्मजांच विद्धि गुणतःआलोचय । मदपेक्षयासीतैवतवहितपरेतिभावः । अयोध्यां अटवींचविद्धि एतन्नगरापेक्षया वनमेवतवकैङ्कर्यैकान्तस्थानतयोत्कृष्टमित्यर्थः । यद्वा दशरथं रामं उपरतंविद्धि । मां जनकस्यपितुरात्मजांविद्धि । कैकेयीविवासिततयापितृगृहवर्तिनींविद्धीत्यर्थः । अयोध्यामटवींविद्धि निर्जनेयंभविष्यतीत्यर्थः । एवं तात्पर्यान्तराण्यूह्यानि ॥ १०—११ ॥ यत्र यस्मिन्प्रदेशविषये ॥ १२ ॥ चतुर्दशवर्षेष्वेकदिवसापनयनमपिमहाँल्लाभइतिधियात्वरयति—तान्युपक्रमितव्यानीति । देव्यासिचोदितः अद्यैवगच्छेतिकैकेय्याचोदितत्वादिर्थः ॥ १३ ॥ अलंकारंकृत्वा श्वशुरदत्तवस्त्राभरणादिभिरितिशेषः ॥ १४ ॥ एतच्छ्लोकानन्तरमथोज्वलनेतिश्लोकःपठितव्यः—अथोइति । ज्वलनसंकाशं आयुधपूर्णत्वादितिभावः ॥ १५ ॥ वनवासंहीतिश्लोकस्तथैवेतिश्लोकस्सीतातृतीयानितिश्लोकश्चैकंवाक्यं । श्वशुरोदशरथः । सीतायैयानिददौ तानिचरथोपस्थेप्रतिन्यस्य तथाभ्रातृभ्यांदत्तान्यायुधजालानि कवचानि सचर्म चर्मपिनद्धं अल्पकण्डोलं । कठिनंतत् खनित्रं च । रथमध्येप्रतिन्यस्य सीतातृतीयानारूढान्दृष्ट्वा अश्वानचोदयदितियोजना । धृष्टं सधैर्यं । संमतान् श्रेष्ठानित्यर्थः । यथान्यासमेववास्तु । तदा तंरथमितिश्लोको वनवासमितिश्लोकः तथैवेतिश्लोकश्चैकंवाक्यं ।

ध्या" इतिश्रुतेः । यद्वा रामंविद्धि दशरथंविद्धि सावकाशनिरवकाशयोःकोवानुवर्तनीयइतिसम्यङ्निश्चिन्वित्यर्थः । मांविद्धि जनकात्मजांविद्धि दासीपरिजनसहितातद्रहितयोःकावानुवर्तनीयेतिविचारय । अयोध्यांविद्धि अटवींविद्धि दृष्टफलादृष्टफलयोर्बुद्धिमताकिंवाऽपेक्षणीयम् । एवं बहुगुणलाभात्तात्कालिकदुःखानुसंधानंनकर्तव्यमित्याह । गच्छेति । रामोयेनयेनपथागच्छति तेनतेनपथा "कामरूप्यनुसंचरन्" इत्याद्युक्तरीत्याकैङ्कर्यंकर्तुंगच्छ । "एतत्सामगायन्नास्ते" इत्युक्तरीत्या परमपदइवैकत्रस्थितिंमाकुरु । राममनुसृत्यानुसृत्यकैङ्कर्यंकुरु । तात भगवत्कैङ्कर्यान्वयबहुमानबुद्ध्यातातेत्युक्तिः । तवमाताऽहंकैकेयीवापकीर्तिंयथा नगच्छामि तथामांतारय । "यथासुखमहंसर्वं करिष्यामि" इत्युक्तरीत्या कैङ्कर्यंसुखंकरलब्धम् । यद्वा रामस्ययथासुखंभवति तथा । वक्ष्यति "भावज्ञेनकृतज्ञेनधर्मज्ञेनचलक्ष्मण" इति । यद्वा अयोध्यायांयथासुखंतथावनेच "कामयेनत्वयाविना" इत्युक्तरामसंश्लेषसुखंखलुत्वयापेक्षितं । यथासुखंगच्छेत्यस्यइत्युवाचेतिपूर्वेणसंबन्धः । **स०** यद्वा दशसुइन्द्रियेषुरथोगमनंयस्यतं । दशभ्यइन्द्रियेभ्योरथोगतिर्विषयप्राप्तिरितियावत् । येनतं । रथगतौइतिधातोः । रामंदशरथंविद्धि दशरथस्यावस्थानाभावात्तत्स्थानेरामं जानीहीत्यभिप्रायः । मांजनकात्मजां तामिवारण्यवर्तिनींविद्धि । पत्यपत्यवियुक्तायाममभवनवासोपिवनवासतुल्यइतिभावः । दशरथं दशसुदिक्ष्वप्रतिहतगतिमद्वायुरूपंहनुमन्तं रामं तमिवरक्षकंविद्धि । हेजनक तात लक्ष्मण मां रमारूपिणींसीतां आत्मजां तामिवविद्धि फलजलाहरणादिनातांरक्षेतिभावः । आत्मजांस्वयंजातांसीतां एकान्तप्रदेशेपिमामिवविद्धीत्यप्यर्थः । गच्छतारामेण सह अत गच्छेतिवा । अतसातत्यगमनेइतिधातोः ॥ १० ॥ **ति०** क्षिप्रंप्रापयिष्यामि । नेहरजन्यांवस्तव्यमितिशेषः ॥ १२ ॥ **ती०** हृष्टेनइदानींपतिसेवालब्धेत्यानन्दयुक्तेनचेतसोपलक्षिता । **ति०** हृष्टेनचेतसेत्यनेन "अङ्गिरामनउत्साहं" इत्युक्तोमुख्यरशकुनोध्वनितः । **स०** हृष्टेनचेतसा रक्षोविक्षोभोभविष्यतीतिसंतोषः । **शि०** वरारोहः वरः अयोनिजत्वेनसर्वोत्कृष्टः आरोहःप्रादुर्भावोयस्यास्सा ॥ १४ ॥ **स०** ननु वसनं सासनं ययाऽकारि वितीर्यचीरंवीरस्य तस्याःकथंरथनयनंसंमतमितिचेन्न । तेवनेनवनगमनेमन्थरंगतिस्स्यात्स्याच्चान्तरायइतितदमन्थरतायैसमसमीरजवतुरगरथगतिमनुमेनेसेतिमन्तव्यम् । अतएव "नोत्सुकस्यविलं-

**[ पा० ]** १ ज. सूतः. २ ङ. च. छ. झ. ञ. ट. वक्ष्यसे. ३ ञ. देव्यात्वमसि. ४ ङ. छ. ज. झ. ट. प्रचोदितः. ५ ज. तथाचायुधजातानि. ग. ङ. झ. ट. तथैवायुधजातानि. ६ ग. ङ च. ज—ठ. प्रविन्यस्य. ७ घ. ङ. च. झ. ट. ठ. यत्. ८ ज. ट. अथ. अथोज्वलनेत्ययंश्लोकः क—ङ. ज. झ. ट. ठ. पुस्तकेष्वपि तथैवायुधेतिश्लोकात्परं सीतातृतीयानितिश्लोकात्पूर्वंदृश्यते. ९ क. च. तावारुरुहतुः.

सीतातृतीयानारूढान्दृष्ट्वा धृष्टमचोदयत् ॥ सुमन्त्रः संमतानश्वान्वायुवेगसमाञ्जवे ॥ १८ ॥
प्रतियाते महारण्यं चिररात्राय राघवे ॥ बभूव नगरे मूर्च्छा बलमूर्च्छा जनस्य च ॥ १९ ॥
तत्समाकुलसंभ्रान्तं मत्तसंकुपितद्विपम् ॥ हयशिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥ २० ॥
ततः सबालवृद्धा सा पुरी परमपीडिता ॥ राममेवाभिदुद्राव घर्मार्ता सलिलं यथा ॥ २१ ॥
पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः ॥ बाष्पपूर्णमुखाः सर्वे तमूचुर्भृशनिस्वनाः ॥ २२ ॥
संयच्छ वाजिनां रश्मीन्सूत याहि शनैःशनैः ॥ मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥२३॥
आयसं हृदयं नूनं राममातुरसंशयम् ॥ यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥ २४ ॥
कृतकृत्या हि वैदेही छायेवानुगता पतिम् ॥ न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥ २५ ॥
अहो लक्ष्मण सिद्धार्थः सततं प्रियवादिनम् ॥ भ्रातरं देवसंकाशं यस्त्वं परिचरिष्यसि ॥ २६ ॥
महत्येषा हि ते सिद्धिरेष चाभ्युदयो महान् ॥ एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २७ ॥
एवं वदन्तस्ते सोढुं न शेकुर्बाष्पमागतम् ॥ नरास्तमनुगच्छन्तः प्रियमिक्ष्वाकुनन्दनम् ॥ २८ ॥
अथ राजा वृतः स्त्रीभिर्दीनाभिर्दीनचेतनः ॥ निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन्गृहात् ॥ २९ ॥
शुश्रुवे चाग्रतः स्त्रीणां रुदन्तीनां महास्वनः ॥ यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ ३० ॥
पिता हि राजा काकुत्स्थः श्रीमान्सन्नस्तदाऽभवत् ॥ परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ॥ ३१ ॥
स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः ॥ सूतं संचोदयामास त्वरितं वाह्यतामिति ॥ ३२ ॥
रामो याहीति सूतं तं तिष्ठेति स जनस्तदा ॥ उभयं नाशकत्सूतः कर्तुमध्वनि चोदितः ॥ ३३ ॥
निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः ॥ पतितैरभ्यवहितं प्रशशाम महीरजः ॥ ३४ ॥

सीताऽऽत्मनोलंकारंकृत्वा यानिश्वशुरोददौ यानिभ्रातृभ्यामानीतानिआयुधजालानिकवचानि सचर्मकठिनंच तत्सर्वंरथोपस्थेप्रतिन्यस्यारुरोहेत्यन्वयः ॥ १६—१८ ॥ चिररात्राय चिरकालं । नगरेमूर्च्छाबभूव नगरस्थस्त्रीबालादिषुदुःखातिशयेनविसंज्ञताबभूवेत्यर्थः । बलमूर्च्छा अश्वगजादिमोहः । जनस्य उत्सवार्थमागतजनपदजनस्य ॥ १९ ॥ समाकुलं अन्तःकरणक्षोभयुक्तं । संभ्रान्तं बाह्येन्द्रियक्षोभयुक्तं । सर्वेन्द्रियक्षोभवत्पौरजनयुक्तमित्यर्थः । मत्तसंकुपितद्विपं व्यसनातिशयेनसंकुपितमत्तद्विपमित्यर्थः । हयशिञ्जितनिर्घोषं परितापातिशयेनततइतश्चलतांहयानांभूषणरवेणसंजातघोषमित्यर्थः । "भूषणानांतुशिञ्जितं" इत्यमरः । अतएवमहास्वनमासीत् ॥ २० ॥ परमपीडिता रामविरहदुःखेनेतिशेषः ॥ २१ ॥ लम्बमानाः रथैकदेशमाश्रित्येतिशेषः ॥२२—२३॥ देवगर्भप्रतिमे देवकुमारसदृशे ॥ २४ ॥ मेरुमर्कप्रभायथेति सूर्यस्यप्रादक्षिण्येनमेरुगमनमितिसर्वदातस्यमेरुसंबन्धोस्त्येव ॥ २५—३० ॥ सन्नः अवसन्नतेजाइत्यर्थः ॥ ३१ ॥ अचिन्त्यात्मा इयत्तयापरिच्छेत्तुमशक्यधैर्यइत्यर्थः ॥ ३२ ॥ याहितिष्ठेति उभयत्राचोदयदितिशेषः । उभयं यानंस्थानंच । अध्वनिरामजनाभ्यां चोदितःसन् कर्तुंनाशकत् ॥ ३३ ॥ अभ्यवहितं सिक्तं

बनं" इतितदुक्तिः ॥ १५ ॥ ति० संमतान् संमतसर्वलक्षणान् । स० संमतान् सम्यग्ज्ञातगुणकान् ॥ १८ ॥ ति० चिररात्रायेत्यव्ययम् । चिरकालावस्थित्यर्थमित्यर्थः । स० बलेनमूर्च्छा समुच्छ्रयोयस्यजनस्यसतथा । ततःकर्मधारयः । "मूर्च्छा-मोहनसमुच्छ्राययोः" इतिधातुव्याख्यानात् ॥ १९ ॥ स० घर्मार्तःआतपार्तः । "घर्मस्स्यादातपे" इतिविश्वः ॥ २१ ॥ ति० देवगर्भप्रतिमे स्कन्दतुल्ये । यद्वा देवगर्भो देवनिधिर्हिरण्यगर्भस्तत्प्रतिमे । स० वेदगर्भप्रतिमइतिपाठे हिरण्यगर्भसदृशइत्यर्थः ॥ २४ ॥ ति० करेणूनां तत्पालकवृद्धकरिणीनां ॥ ३० ॥ ति० अभ्यवहितं रथनेम्युद्धतम् ॥ ३४ ॥

[ पा० ] १ ङ. च. झ—ठ. रथमचोदयत्. २ च. ञ. संयतान्. ३ क—च. ज. झ. ञ. ठ. प्रयातेतु. ४ घ. संकुलित. ५ घ. झ. ट. ठ. घर्मार्तः. ६ घ. ज. भृशदुःखिताः. ७ क. ख. संयम्य. ८ ञ. दैवसंकाशं. ९ ङ. झ—ठ. बुद्धिः. १० च. बाष्पमूर्च्छितं. ११ ङ. झ. रुदतीनां. १२ क—घ. ज. पिताच. १३ क—ठ. स्तदाबभौ. १४ घ—छ. झ. ञ. ट. तंसूतं. १५ घ. झ. ट. ठ. तिष्ठेतिच. १६ घ. रभ्युपहितं. १७ ङ. छ. झ. ट. ठ. प्रणनाश.

रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् ॥ प्रयाणे राघवस्यासीत्पुरं परमपीडितम् ॥ ३५ ॥
सुस्राव नयनैः स्त्रीणामास्रमायाससंभवम् ॥ मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव ॥ ३६ ॥
दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरम् ॥ निपपातैव दुःखेन हतमूल इव द्रुमः ॥ ३७ ॥
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः ॥ नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३८ ॥
हा रामेति जनाः केचिद्राममातेति चापरे ॥ अन्तःपुरं समृद्धं च क्रोशन्तः पर्यदेवयन् ॥ ३९ ॥
अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् ॥ राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ४० ॥
स बद्ध इव पाशेन किशोरो मातरं यथा ॥ धर्मपाशेन संक्षिप्तः प्रकाशं नाभ्युदैक्षत ॥ ४१ ॥
पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ ॥ दृष्ट्वा संचोदयामास शीघ्रं याहीति सारथिम् ॥४२॥
न हि तत्पुरुषव्याघ्रो दुःखजं दर्शनं पितुः ॥ मातुश्च सहितुं शक्तस्तोत्रार्दित इव द्विपः ॥ ४३ ॥
प्रत्यगारमिवायान्ती वत्सला वत्सकारणात् ॥ बद्धवत्सा यथा धेनू राममाताऽभ्यधावत ॥ ४४ ॥
तथा रुदन्तीं कौसल्यां रथं तमनुधावतीम् ॥ क्रोशन्तीं रामरामेति हा सीते लक्ष्मणेति च ॥४५॥
रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम् ॥ असकृत्प्रैक्षत स तां नृत्यन्तीमिव मातरम् ॥ ४६ ॥
तिष्ठेति राजा चुक्रोश याहियाहीति राघवः ॥ सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥ ४७ ॥
नाश्रौषमिति राजानमुपालब्धोपि वक्ष्यसि ॥ चिरं दुःखस्य पापिष्ठमिति रामस्तमब्रवीत् ॥ ४८ ॥

॥ ३४ ॥ हाहाकृतं हाहाकारवत् । मत्वर्थीयलोपः । अचेतनं मूढं । राघवस्य दशरथस्य । पुरं पुरस्थजनाः ॥३५॥ नयनैः नयनेभ्यः । आयाससम्भवं खेदजनितं संक्षोभः उल्ललनं । सलिलं मकरन्दरूपं ॥ ३६ ॥ एकचित्तगतं एकचित्ततांगतं ॥ ३७ ॥ प्रेक्ष्य स्थितानामितिशेषः ॥ ३८ ॥ हारामेतिपरिदेवनप्रकारः । राममातेत्यत्रापिहेत्यनुषञ्जनीयं । सन्धिरार्षः । राममातरित्यर्थः । जनाः क्रोशन्तःसन्तः पर्यदेवयन् अरुदन् । समृद्धं अन्तःपुरं अन्तःपुरजनश्च । पर्यदेवयदितिविपरिणामेनानुषङ्गः ॥ ३९ ॥ अन्वीक्षमाणः आक्रोशानुसारेण पश्चात्सामान्यतईक्षमाणः ॥ ४० ॥ किशोरोश्वबालः । संक्षिप्तः बद्धइतियावत् । प्रकाशं नाभ्युदैक्षत अपाङ्गेनाभ्युदैक्षतेत्यर्थः ॥ ४१—४२ ॥ सहितुं सोढुं । तोत्रार्दितः वैणुकेनपीडितः । "तोत्रंवैणुकं" इत्यमरः ॥ ४३ ॥ बद्धवत्सा वत्सकारणात् आगारंप्रत्यायान्तीधेनुरिव वत्सलाराममाता अभ्यधावत । रथमितिशेषः ॥ ४४—४५ ॥ नृत्यन्तीमिवेति तद्वदितस्ततःपरिभ्रमन्तीमित्यर्थः ॥ ४६ ॥ सुमन्त्रस्य आत्मा मनः । चक्रयोरन्तरेव रथपूर्वपश्चाद्भागस्थितयोश्चक्रयोर्मध्यगतःपुरुषइव । बभूव । दशरथरामवचनाभ्यामतिसंकटंप्राप्तइत्यर्थः ॥ ४७ ॥ राजवचनातिक्रमणेमहान्दोषोभविष्यतीत्याशङ्कायामाह—नाश्रौषमिति । पुनरागमनानन्तरंराज्ञा किमर्थमद्वाक्ये नस्थितोसीतिनिन्दितोपि नाश्रौषंत्वद्वचनमितिवक्ष्यसि । किमर्थमेवमसत्यवचनंतत्राह—चिरमिति । दुःखस्य इदानीमनुभूयमानदुःखस्य । चिरं विलम्बः ।

**स०** राममातेत्यत्र हेराममा अत मागच्छ । माऽयं नमाङ् । **ति०** अन्तःपुरसमृद्धं अन्तःपुरसहितं । क्रोशन्तं उच्चैश्शब्देनरुदन्तंराजानंदृष्ट्वा केचिन्नरा हारामेति केचिद्धाराममातेतिपर्यदेवयन्शुशुचुः । उपलक्षणमेतत् । केचित्हाराजन्नित्यपि ॥ ३९ ॥ **स०** मातरंराजानंचेत्यन्वयः । तेनानुगतावित्युपपन्नं ॥४०॥ **स०** किशोरः अश्वःशावः बालकसामान्यंवा । इवशब्दस्यधर्मपाशेन संयुक्तइवेत्यन्वयः ॥ ४१ ॥ **ति०** वत्सकारणात्प्रत्यगारंवत्सावस्थितिमद्गृहमुद्दिश्यागच्छन्ती सवत्सा बद्धवत्साधेनुर्यथाधावति एवंराममाताऽधावत । सवत्सेत्याद्यधिककथनं कवेरपिशोकाविष्टत्वान्नदोषाय ॥ ४४ ॥

[ पा० ] १ च. परिक्लिन्नं. २ झ—ठ. कृत्तमूलः. ग. छिन्नमूलः. ३ ख. हालाहलाशब्दः. ४ ङ. च. झ—ठ. अन्तःपुरसमृद्धंचक्रोशन्तं. ५ ङ. झ. ट. ठ. संयुक्तः. ६ ग. ज. दुःखदं. ७ ङ. झ. ट. ठ. तोत्रैर्नुन्नः ८ ङ. छ. झ. ट. ठ. सवत्सा. ९ क—घ. च. ज. ञ. तदा. १० च. ञ. चात्मानं.

रामस्य स वचः कुर्वन्ननुज्ञाप्य च तं जनम् ॥ व्रजतोपि हयाञ्शीघ्रं चोदयामास सारथिः ॥ ४९ ॥
न्यवर्तत जनो राज्ञो रामं कृत्वा प्रदक्षिणम् ॥ मनसाऽप्यश्रुवेगैश्च न न्यवर्तत मानुषम् ॥ ५० ॥
यमिच्छेत्पुनरायान्तं नैनं दूरमनुव्रजेत् ॥ इत्यमात्या महाराजमूचुर्दशरथं वचः ॥ ५१ ॥

तेषां वचः सर्वगुणोपपन्नं प्रस्विन्नगात्रः प्रविषण्णरूपः ॥
निशम्य राजा कृपणः सभार्यो व्यवस्थितस्तं सुतमीक्षमाणः ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

सिंहावलोकनन्यायेनायोध्यातद्वासिनांरामप्रवासकालिकदुर्दशावर्णनम् ॥ १ ॥

तस्मिंस्तु पुरुषव्याघ्रे विनिर्याते कृताञ्जलौ ॥ आर्तशब्दोथ संजज्ञे स्त्रीणामन्तःपुरे महान् ॥ १ ॥
अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ॥ यो गतिः शरणं चासीत्स नाथः क्वनु गच्छति ॥ २ ॥
न क्रुध्यत्यभिशप्तोपि क्रोधनीयानि वर्जयन् ॥ क्रुद्धान्प्रसादयन्सर्वान्समदुःखः क्वचिद्गतः ॥ ३ ॥
कौसल्यायां महातेजा यथा मातरि वर्तते ॥ तथा यो वर्ततेऽस्मासु महात्मा क्वनु गच्छति ॥ ४ ॥
कैकेय्या क्लिश्यमानेन राज्ञा संचोदितो वनम् ॥ परित्राता जनस्यास्य जगतः क्वनु गच्छति ॥ ५ ॥

---

पापिष्ठं अतिदुःसहं ॥ ४८ ॥ तंजनं कौसल्यांपरिवेष्टयागतमवरोधजनं । अनुज्ञाप्य रामेणानुज्ञांप्रापय्येत्यर्थः ॥ ४९ ॥ राज्ञोजनः राजसंबन्ध्यवरोधजनः । मानुषं मानुषाणांसमूहः । समूहार्थेणूप्रत्ययः । मनसाअश्रुवेगैश्च निवृत्तावरोधजनस्य मनसाअश्रुवेगैश्चसहनन्यवर्ततेतिसंबन्धः ॥ ५० ॥ कालोचितकर्तव्यज्ञाःसचिवाःशास्त्रार्थकथनेनराजानंनिवर्तयन्ति—यमिच्छेदिति ॥ ५१ ॥ व्यवस्थितः स्थितवान् ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चत्वारिंशःसर्गः ॥ ४० ॥

---

कृताञ्जलौ मातृपरिवेष्टितंपितरमुद्दिश्यकृताञ्जलौ। अन्तःपुरेस्त्रीणां दशरथेनसमागतानामन्तःपुरवासिनीनांस्त्रीणां ॥ १ ॥ तपस्विनः शोच्यस्य । गम्यतइति गतिः प्राप्यइतियावत् । शरणं रक्षिता । " शरणंगृहरक्षित्रोः " इत्यमरः ॥ २ ॥ अभिशप्तः मिथ्याभिशंसनंप्रापितः । कचिदित्यस्यनक्रुध्यतीत्यनेनसंबन्धः

---

**स०** व्रजतः स्वतइतिशेषः ॥ ४९ ॥ **ति०** राज्ञोजनः राजसंबन्धीजनः अवरोधजनउपजीविजनश्च रामंमनसाप्रदक्षिणंकृत्वान्यवर्तत । देहमात्रेणेतिशेषः । रथस्य शीघ्रगत्वादितिभावः । आशुवेगेनमनसातुनन्यवर्तत । मानुषं इतरमनुष्यसमूहः । आशुवेगेनमनसापिनन्यवर्तत । अपिनादेहेन चनन्यवर्तत । मनसाप्यश्रुवेगैश्चेतिपाठे मनसोऽनिवृत्तेरश्रुवेगोज्ञापकः ॥ ५० ॥ इति चत्वारिंशस्सर्गः ॥ ४० ॥

**शि०** सिंहावलोकनन्यायेनरामनिष्क्रमणकालेजातंवृत्तंवर्णयन्नाह—**तस्मिन्निति** । **ति०** इदानींतत्प्रयाणनिमित्तस्सर्वप्रजाशोकउच्यते—**तस्मिन्निति** । निष्कामतिनगरान्निर्गच्छतिसति । **स०** निष्कामति अन्तःपुरादितिशेषः ॥ १ ॥ **स०** अभिशस्तः अवज्ञापूर्वकंशंसनंप्राप्तः । निपातानामनेकार्थत्वात् । यथोक्तंकाठकखण्डार्थे । "निपातानामनेकार्थत्वादभिरवज्ञायेत्यर्थकः" इति । क्रोधनीयानि जनेषुक्रोधप्रयोजकानि ॥ ३ ॥ **ति०** वनं गन्तुमितिशेषः । अस्यजनस्येत्युक्त्वाकिंविशिष्यकथनेन । सर्वस्यजगतःपरित्रातेतिभगवत्स्वरूपज्ञायाःकस्याश्चिद्वचः । **स०** अजनस्य मुक्तसमूहस्य । जगतः अमुक्तवर्गस्य ।

**[ पा० ]** १ झ. ठ. सरामस्यवचः. ग. ज. रामस्यवचनं. २ ख. श्रुत्वाअनु. ३ ङ. झ. ट. प्याशुवेगेन. ४ ङ. च. झ. ट. रायातं. ५ घ. ङ. झ. ट. गुणोपपन्नः. ६ ङ. च. छ. झ. ट. निष्कामति. घ. निर्यातेच. ७ क. ख. ग. ङ. च. ज. झ. ट. शब्दोहि. घ. शब्दोमहानासीत्. ८ क. घ. तदा. ९ घ. सइतोद्यप्रवत्स्यति. ग. ङ—झ. ट. समदुःखःक्वगच्छति. ख. समदुःखसुखश्चयः. १० ख. भृशं. ११ ख. ज. सइतः.

अहो निश्चेतनो राजा जीवलोकस्य [1]संप्रियम् ॥ धर्म्यं सत्यव्रतं रामं वनवासे प्रवत्स्यति ॥ ६ ॥
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः ॥ रुरुदुश्चैव दुःखार्ताः [2]सस्वरं च विचुक्रुशुः ॥ ७ ॥
स तमन्तःपुरे घोरमार्तशब्दं महीपतिः ॥ पुत्रशोकाभिसंतप्तः श्रुत्वा चासीत्सुदुःखितः ॥ ८ ॥
[3]नाग्निहोत्राण्यहूयन्त नापचन्गृहमेधिनः ॥ अकुर्वन्न प्रजाः कार्यं सूर्यश्चान्तरधीयत ॥ ९ ॥
व्यसृजन्[4]कवलान्नागा गावो वत्सान्नपाययन् ॥ [5]पुत्रं प्रथमजं [6]लब्ध्वा जननी नाभ्यनन्दत ॥ १० ॥
त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि ॥ दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः ॥ ११ ॥
नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः ॥ [7]विशाखास्तु [8]सधूमाश्च नभसि प्रचकाशिरे ॥ १२ ॥
कालिकानिलवेगेन महोद[9]धिरिवोत्थितः ॥ रामे वनं प्रव्रजिते नगरं [10]प्रचचाल तत् ॥ १३ ॥
दिशः पर्याकुलाः सर्वास्[11]तिमिरेणेव संवृताः ॥ न ग्रहो नापि नक्षत्रं प्रचकाशे न किंचन ॥ १४ ॥
अकस्मान्नागरः सर्वो जनो दैन्यमुपागमत् ॥ आहारे वा विहारे वा न कश्चिदकरोन्मनः ॥ १५ ॥

॥ ३—५ ॥ निश्चेतनः बुद्धिहीनः । प्रवत्स्यति प्रवासयति ॥ ६—८ ॥ नाहूयन्त अग्नीनामन्तर्धानाद्धोतृणांव्यसनाच्चेतिभावः । अन्तरधीयत निस्तेजस्कोभूदित्यर्थः ॥ ९ ॥ पाययन् अपाययन् । आगमशासनस्यानित्यत्वादडभावः ॥ १० ॥ त्रिशङ्कुः इक्ष्वाकुकुलकूटस्थः । लोहिताङ्गोङ्गारकः । बृहस्पतिबुधयोर्दारुणत्वं दारुणाङ्गारकसंयोगात् क्रूरस्थानगतत्वाद्वा । त्रिशङ्कोर्ग्रहत्वाभावेपिच्छत्रिणोगच्छन्तीतिवद्व्यपदेशः । त्रिशङ्कोः सोमप्राप्तिः ऋजुदेशत्वेनज्ञेया । ननु “ पूर्णेचतुर्दशेवर्षेपञ्चम्यांभरताग्रजः ” इतिवक्ष्यमाणरीत्या तत्रैवकदाचित्पुष्ययोगसम्भावनयाचपञ्चम्यामभिषेकइतिसिद्धं । तस्मिन्नेवचनिर्गतः । तथाचकर्कटकस्थेचन्द्रेकथंबुधसमागमः तस्यसूर्यसमीपवर्तित्वात् । उच्यते । प्राप्तिरत्र नैकराशिस्थितिः । किंतुकचित्प्राप्तिः कचिद्दृष्टिरितिनदोषः । वक्रगत्यासमागम इत्यप्याहुः ॥ ११ ॥ विशाखाः इक्ष्वाकुदेशनक्षत्रं । सधूमाइत्यनेन भाविराजविपत्सूच्यते ॥ १२ ॥ कालिकानिलवेगेन मेघजालयुक्तप्रभञ्जनवेगेन । “ मेघजालेचकालिका ” इत्यमरः । प्रचचाल व्यसनातिशयात्प्रकम्पितमभूत् ॥ १३ ॥ ग्रहः जात्येकवचनं । नवग्रहाइत्यर्थः । नक्षत्रं अश्विन्यादि । नकिंचित्प्रचकाशे सप्तर्षिध्रुवादिकंनप्रचकाशइत्यर्थः ॥१४॥ अकस्मात् रामप्रव्राजनव्यतिरिक्तबन्धुविश्लेषणादिका-

॥ ५ ॥ **ति०** संक्षयं आधारत्वेनगृहभूतं ॥ ६ ॥ **ति०** नाहूयन्त रामदुःखादितिशेषः । अन्तरधीयत रामव्यसनात्तद्द्रष्टृतयादिवसशेषेसत्यप्यन्तर्हितोऽभूत् । अकालेदुर्दिनमभूदितिभावः । नागाः गजाः । दुर्दिनाद्युत्पाताःराज्ञोरावणस्यचनाशसूचकाइतिबोध्यम् । **रामानु०** अत्रचकारोऽग्नीनामन्तर्धानंसमुच्चिनोति ॥ ९ ॥ **शि०** कंबलान् स्वपृष्ठाच्छादनविशेषान् ॥ ९ ॥ **तनि०** जननीनाभ्यनन्दतेति । “उत्सवेषुचसर्वेषुपितेवपरितुष्यति” इत्याद्युक्तरीत्या जननमारभ्यपितृवदङ्कमारोप्यलालयितरिवनंगच्छति किमनेनेतिव्यज्यते । प्रथमजमिति । गुणवान्ज्येष्ठोरामःकिलप्रव्राजितः अस्यकागतिरिति । लब्ध्वेति । षष्टिवर्षसहस्रपर्यन्तमपुत्रेणराज्ञाऽतिक्लेशेनसंपादितोप्येवंनिर्वासितः व्रतोपवासादिनियमेनबहुकालाल्लब्धोमत्पुत्रःकीदृशोभविष्यतीति ॥ १० ॥ **स०** त्रिषु द्वादशाष्टमजन्मस्थानेषु शङ्कुरिवशङ्कुः शनैश्चरः । “द्वादशाष्टमजन्मस्थाःशन्यर्काङ्गारकागुरुः” इत्यत्रप्रथमोद्दिष्टत्वादत्रापितथाशनेर्ग्रहणं । एतेन त्रिशङ्कोरग्रगत्वात्कथंसोमप्राप्तिरितिशङ्कानवकाशः ॥ ११ ॥ **ति०** विशाखाः विमार्गस्थाः । **ती०** विशाखाःइक्ष्वाकुकुलनक्षत्रं विशाखानक्षत्रादुत्पन्नसूर्यवंशजत्वादिक्ष्वाकोरित्याशयः । **स०** विशाखाः शान्त्यर्थंबलियाचकाः । “विशाखोयाचकेस्कन्दे”इति हैमः । प्रचकाशिरे ददृशिरे ॥ १२ ॥ **शि०** अत्रसत्वगुणवतांशोकः सार्वकालिकस्वसहायभूतदशरथादिशोकदर्शनजनितः । तमोगुणवतांतु निश्चितरावणादिविध्वंसजनितइतिविवेकः ॥१३॥ **स०** इदमुत्पातान्तरं । अतोनपौनरुक्त्यम् ॥ १४ ॥

**[पा०]** १ ङ. झ. ट. संक्षयं. २ क. ङ. ट. सुस्वरंचैव. ग. सस्वनंच. ३ झ. ट. ठ. नाग्निहोत्राण्यहूयन्तसूर्यश्चान्तरधीयत. ४ ट. कंबलान्नागाः. ५ पुत्रमित्यर्धं झ. ट. ठ. पुस्तकेषुनदृश्यते. ६ च. दृष्ट्वा. ७ क. ख. घ—छ. झ. ट. ठ. विशाखाश्च. ८ ख. ग. घ. विधूमाश्च. ९ क—घ. ज. रिवोद्धतः. १० च. प्रचचार. ११ क. तिमिरेणसमावृताः.

शोकपर्यायसंतप्तः सततं दीर्घमुच्छ्वसन् ॥ अयोध्यायां जनः सर्वः शुशोच जगतीपतिम् ॥ १६ ॥
बाष्पपर्याकुलमुखो राजमार्गगतो जनः ॥ न हृष्टो लक्ष्यते कश्चित्सर्वः शोकपरायणः ॥ १७ ॥
न वाति पवनः शीतो न शशी सौम्यदर्शनः ॥ न सूर्यस्तपते लोकं सर्वं पर्याकुलं जगत् ॥ १८ ॥
अनर्थिनः सुताः स्त्रीणां भर्तारो भ्रातरस्तथा ॥ सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन् ॥ १९ ॥
ये तु रामस्य सुहृदः सर्वे ते मूढचेतसः ॥ शोकभारेण चाक्रान्ताः शयनं न जहुस्तदा ॥ २० ॥
ततस्त्वयोध्या रहिता महात्मना पुरन्दरेणेव मही सपर्वता ॥
चचाल घोरं भयशोकपीडिता सनागयोधाश्वगणा ननाद च ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रामरथमार्गानुगतेनदशरथेनरथरजसोप्यदर्शनेखेदाद्भूमौनिपतनम् ॥ १ ॥ तदुत्थापनायकैकेयीकौसल्याभ्यांपार्श्वोपसर्पणेराज्ञाकैकेयींप्रतिसोपालंभंस्वस्पर्शनप्रतिषेधनम् ॥ २ ॥ कौसल्ययाराजानमुत्थाप्यतेनसहप्रतिनिवर्तनम् ॥ ३ ॥ राजाज्ञया भृत्यैस्तस्यकौसल्यागृहप्रवेशनम् ॥ ४ ॥ रामाद्यनुशोचनेनशयानस्यराज्ञःसमीपोपवेशिन्याकौसल्ययादुःखाद्विलापः ॥ ५ ॥

यावत्तु निर्यतस्तस्य रजोरूपमदृश्यत ॥ नैवेक्ष्वाकुवरस्तावत्संजहारात्मचक्षुषी ॥ १ ॥

---

रणंविनेत्यर्थः ॥ १५ ॥ शोकपर्यायसंतप्तः शोकपरम्परासंतप्तः ॥ १६—१८ ॥ सुताः स्त्रीणामनर्थिनः मातॄणांस्तन्यंनापेक्षन्तइत्यर्थः । भर्तारः स्त्रीणामनर्थिनः । भ्रातरःअनर्थिनः अन्योन्यमितिशेषः । सर्वे अनुरक्ताः सर्वे ॥ १९ ॥ शयनं मूर्च्छाशयनमित्यर्थः । येत्वित्यनेन पूर्वेभ्योवैलक्षण्यमुच्यते । चक्रवर्तीगतिमनुमेने श्रीकौसल्यामङ्गलाशासनमकरोत् तथानभवन्ति सुहृदः तेषामेकोपिनकिंचिदकार्षीत् । रामस्यसुहृदः पित्रोरपिगोप्यंरामोयेभ्यः प्रकाशयति तादृशाःसुशोभनहृदयाः सुहृदः आत्मानंत्यक्त्वाराममेवरक्षन्तइत्यर्थः । सर्वेतइति तेषुकश्चिदप्यन्यादृशोनास्तीतिभावः । यदिसुहृदस्तर्हिपादौसंगृह्यरामोनिवर्त्यतामित्यत्राह—मूढचेतसः प्रसन्नबुद्धिभिःकर्तव्यंकथंबुद्धिहीनाःकुर्वन्तीतिभावः । ज्ञानभ्रंशस्यहेतुमाह—शोकेति । पर्वतेनेवशोकभारेणाक्रान्ताःशयनंनजहुः पर्वताक्रान्ताः कथमुत्तिष्ठेयुरितिभावः । तदा पारवश्यकाले । नतु स्वयंस्वबुद्ध्याशयानाद्युत्तिष्ठन्ति ॥ २० ॥ पुरन्दरेणेवमहीतित्रैलोक्याधिपतित्वादुक्तं । यद्वा पुरन्दरेण गोत्रभिदाहेतुना पर्वतसहितामहीयथाचलति तद्रक्षकरामविश्लेषेणगजाश्वसहितायोध्या भयेनचचालेत्यर्थः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

निर्यतः निर्गच्छतः । तस्यरामस्यसंबन्धिरजोरूपं रजःस्वरूपं यावददृश्यत तावन्नसंजहार ननिवर्तित-

---

**स॰** जगतीपतिमुद्दिश्यचुकोपेतिपाठे साक्षाद्दशरथस्यकोपाविषयत्वान्नचतुर्थी ॥ १६ ॥ **ती॰** सुताः अनर्थिनः अनपेक्षिणोऽभवन् । मातापित्रोरितिशेषः । तथा स्त्रीणांभर्तारोऽनर्थिनोऽभवन् भ्रातरश्चानर्थिनोभवन् । भ्रातॄणामितिशेषः । अयमर्थः । वनंगच्छन्तंरामंदृष्ट्वा कौसल्या ननिवारितवतीतिकृत्वा मातरोनिष्प्रयोजनाइति सुता जननीरत्यजन् । रामोपिमातरंत्यक्त्वावनं गतइतिकृत्वा पुत्रेणनार्थइति मातरस्सुतानत्यजन् । भर्तारः पत्युपद्रवकारिणींकैकेयीमवेक्ष्य स्वभार्याअत्यजन् । भार्याअपि कौसल्यामुपेक्ष्य तत्पुत्रंवनंगमयन्तंराजानमवेक्ष्य स्वभर्तॄनत्यजन् । भ्रातरोपि भरतंरामराज्यापहारहेतुंमत्वा भ्रातॄनत्यजन् । एवं कनीयांसोपि ज्येष्ठानत्यजन्निति । ततस्सर्वेसर्वंपरित्यज्य रामएवसर्वेषांनोबन्धुःकिमन्यैरिति तमेवान्वचिन्तयन्अचिन्तयन् ॥१९॥ **स॰** शयनं अधश्शयनं नजहुः नत्यक्तवन्तः ॥ २० ॥ इत्येकचत्वारिंशस्सर्गः ॥ ४१ ॥

[ **पा॰** ] १ च. ट. ठ. चुकोप. ङ. झ. चुक्रोश. २ च. लोके. ३ घ. चेतनाः. ४ ङ. च. छ. झ. ट. नैवभेजिरे. ५ क. ग. घ. भारपीडिता. ङ. च. झ. ट. शोकदीपिता.

यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकम् ॥ तावद्व्यवर्धतेवाऽस्य धरण्यां पुत्रदर्शने ॥ २ ॥
न पश्यति रजोप्यस्य यदा रामस्य भूमिपः ॥ तदाऽऽर्तश्च विषण्णश्च पपात धरणीतले ॥ ३ ॥
तस्य दक्षिणमन्वागात्कौसल्या बाहुमङ्गना ॥ वामं चास्यान्वगात्पार्श्वं कैकेयी भरतप्रिया ॥ ४ ॥
तां नयेन च संपन्नो धर्मेण विनयेन च ॥ उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः ॥ ५ ॥
कैकेयि मा ममाङ्गानि स्प्राक्षीस्त्वं दुष्टचारिणी ॥ न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ॥ ६ ॥
ये च त्वामनुजीवन्ति नाहं तेषां न ते मम ॥ केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहम् ॥ ७ ॥
अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् ॥ अनुजानामि तत्सर्वमस्मिँल्लोके परत्र च ॥ ८ ॥
भरतश्चेत्प्रतीतः स्याद्राज्यं प्राप्येदमव्ययम् ॥ यन्मे स दद्यात्प्रीत्यर्थं मां मा तद्दत्तमागमत् ॥ ९ ॥
अथ रेणुसमुध्वस्तं तमुत्थाप्य नराधिपम् ॥ न्यवर्तत तदा देवी कौसल्या शोककर्शिता ॥ १० ॥
हत्वेव ब्राह्मणं कामात्स्पृष्ट्वाऽग्निमिव पाणिना ॥ अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य तापसम् ॥ ११ ॥
निवृत्त्यैव निवृत्त्यैव सीदतो रथवर्त्मसु ॥ राज्ञो नाति बभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२ ॥

वान् ॥ १ ॥ पश्यति रजोद्वारेणेतिशेषः । पुत्रदर्शने पुत्रदर्शननिमित्तं । धरण्यांरजोव्यवर्धत मन्निमित्तकेनपुत्रदर्शनेनराजाकंचित्कालमाप्यायितोभवेदितिमत्वेवरजोव्यवर्धतेत्यर्थः । अथवा अस्यदेहोव्यवर्धत पुत्रदर्शनायोत्थायस्थितइत्यर्थः ॥ २ ॥ आर्तः पीडितशरीरः । विषण्णः दुःखितः ॥३॥ बाहुमन्वागात् उद्धरणार्थमितिभावः । भरतप्रिया प्रियभरता । पार्श्वमित्यनेन कौसल्यावद्बाहुंनालम्बितवतीतिगम्यते ॥ ४ ॥ नयेन नीत्या । विनयेन सदाचारेण ॥ ५ ॥ नभार्या नचबान्धवी त्वमितिशेषः । नचबान्धवी पत्नीत्वसंबन्धोपिनास्तीत्यर्थः । अण्णन्तत्वान्ङीप् ॥ ६ ॥ नकेवलंत्वयिसंबन्धाभावः त्वत्संबन्धिष्वपिममसंबन्धोनास्तीत्याह—येचेति । नाहंतेषामिति प्रभुरितिशेषः । नतेमम शेषभूताइत्यर्थः ॥ ७ ॥ अग्निसाक्षिकमूढा कथंनभार्यास्यामित्यत्राह—अगृह्णामिति । पर्यणयं प्रदक्षिणमनयं । अनुजानामि परित्यजामीत्यर्थः । इह लोकेपरत्रच ऐहिकमामुष्मिकंचसर्वं त्वत्संबन्धेनागतं त्यजेयमित्यर्थः ॥ ८ ॥ प्रतीतः प्रमुदितइत्यर्थः । पित्रर्थंयदुदकादिकंदद्यात् तद्दत्तं मांमागमत् नोपतिष्ठेदित्यर्थः ॥ ९ ॥ न्यवर्तत तेनसहेतिशेषः ॥ १० ॥ तापसं तापसवेषधारिणं ॥ ११ ॥ ग्रस्तस्य राहुग्रस्त-

**ती०** दक्षिणंबाहुंउद्धृत्य गृहीत्वा कौसल्याअन्वगात् ॥ ४ ॥ **स०** केवलार्थपरां केवलस्वार्थपरां । यद्वा केवलोरामः जडदेहामिश्रितत्वात् । तस्यार्थोनिवृत्तिःतत्परां ॥ ७ ॥ **ती०** इहलोकेतत्सर्वमनुजानामित्यजामि । इतःपरंत्वयासहक्रीडादिव्यवहारंत्यजामीत्यर्थः । परलोकेत्यजामीति इतःपरंपरलोकार्थमग्निहोत्रादिकर्मत्यजामीत्यर्थः ॥ ८ ॥ **ति०** ननुममत्यागेपिमत्पुत्रादेःकथंत्यागः "येचत्वामनुजीवंति" इत्यादिनोक्तस्तत्राह—**भरतइति** । यदित्वयाप्रापितंराज्यंप्राप्य भरतःप्रतीतःतुष्टस्स्यात् तर्हि मेमरणानंतरं सभरतः पित्रर्थं पितृत्वप्रयुक्तश्राद्धार्थंयद्दद्यात् तत् तद्दत्तं मां मागमत् माप्राप्नोत्वित्यर्थः । अन्यथातुतंनत्यजामीत्यर्थः । **कतक०** अनुजानामीत्यादिसार्धश्लोकएकंवाक्यं । तत्पूर्वार्धेत्यजामीत्यस्यानुकर्षः । तत्तृतीयार्धे 'यन्मेसदद्यात्पित्रर्थंमामतद्दत्तमागमत्' इतिपाठः । सदद्यादितिचावर्तते । भरतस्त्वयाप्रापितंराज्यंप्राप्य प्रतीतः विवेकवान्सन्यत्प्राप्तंराज्यं तत्सपित्रर्थं पितुर्मम्प्रीतिसंपादनाययदिदद्यात् त्यजेत्' मांच अतद्दत्तं नकृतंतस्मैदत्तंदानंराज्यस्ययेनतादृशंमां प्रीत्या पूर्ववदागमत्प्राप्नुयाच्चेत् तदा यत्समेदद्यात् अस्मिँल्लोकेविहारशय्याभोजनादि परत्रचपरलोकेपिण्डदानादि तत्सर्वमनुजानामि अंगीकरोमि अन्यथा तंत्यजाम्येवेत्यर्थः । **स०** प्रतीतः अहमितिशेषः । अहंयदिप्रतीतः मृतस्त्स्यां तदाभरतःप्रतीतःहृष्टःसादरोवा । एतदव्ययंराज्यंप्राप्यपित्रर्थं यद्दद्यात् तन्मा मां मागतं नप्राप्नोतु । "प्रतीतःसादरेहृष्टे" इति "वाच्यवत्स्यात्प्रतीतंप्रोक्षितेपिच" इतिचविश्वः ॥९॥ **स०** न्यव-

[ **पा०** ] १ क. तावद्विवर्धतेपांसुः. २ च. छ. मुद्धृत्य. ज. मन्वायात्. ३ ङ. छ. ट. परं. ४ झ. ट. ट. सासुमध्यमा. ५ ङ. च. छ. झ. ट. ठ. मामकाङ्गानिमास्प्राक्षीःपापनिश्चये. ६ यन्मेसदद्यादित्यर्धानन्तरं "राज्यस्थोभरतोयन्मांतन्मांनाभ्युपगच्छतु" इत्यर्धमधिकंदृश्यते घ. पुस्तके. ७ ग. च—झ. ठ. सदद्यात्पित्रर्थं. घ. दद्यात्सपित्रर्थं. ८ ङ—झ. ट. समुत्थाप्य. ९ ङ. झ. ट. राघवं.

विललाप च[1] दुःखार्तः प्रियं पुत्रमनुस्मरन् ॥ नगरान्तमनुप्राप्तं बुद्ध्वा पुत्रमथाब्रवीत् ॥ १३ ॥
वाहनानां च मुख्यानां वहतां तं ममात्मजम् ॥ पदानि पथि दृश्यन्ते स महात्मा न दृश्यते ॥१४॥
यः सुखेषूपधानेषु[2] शेते चन्दनरूषितः ॥ वीज्यमानो महार्हा[3]भिः स्त्रीभिर्मम सुतोत्तमः[4] ॥ १५ ॥
स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः ॥ काष्ठं वा यदि वाऽश्मानमुपधाय शयिष्यते ॥ १६ ॥
उत्थास्यति च मेदिन्याः कृपणः पांसुकुण्ठितः ॥ विनिश्वसन्प्रस्रवणात्करेणूनामिवर्षभः ॥ १७ ॥
द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः ॥ राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥
सा नूनं जनकस्येष्टा सुता सुखसदोचिता ॥ कण्टकाक्र[5]मणाक्रान्ता वनमद्य गमिष्यति ॥ १९ ॥
अनभिज्ञा वनानां सा नूनं भयमुपैष्यति ॥ श्वापदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणम् ॥ २० ॥
सकामा भव कैकेयि विधवा राज्यमावस ॥ न हि तं पुरुषव्याघ्रं विना जीवितुमुत्सहे ॥ २१ ॥
इत्येवं विलपन्राजा जनौघेनाभिसंवृतः ॥ अपस्नात इवारिष्टं प्रविवेश पुरो[6]त्तमम् ॥ २२ ॥
शून्यचत्वरवेश्मान्तां संवृतापण[7]देवताम् ॥ क्लान्तदुर्बलदुःखार्तां नात्याकीर्णमहापथाम् ॥ २३ ॥
तामवेक्ष्य पुरीं सर्वां राममेवानुचिन्तयन् ॥ विलपन्प्राविशद्राजा गृहं सूर्य इवाम्बुदम् ॥ २४ ॥

स्य ॥ १२—१४ ॥ वीज्यमानः चामरव्यजनादिभिरितिशेषः। स्त्रीभिः परिचारिकाभिः ॥ १५—१६ ॥ प्रस्रवणात् निर्झरात्। तत्समीपादित्यर्थः। "उत्सःप्रस्रवणंवारिप्रवाहोनिर्झरोझरः" इत्यमरः ॥१७॥ अनाथवत् गच्छन्तमित्यन्वयः॥१८॥ सुखसदोचिता सुखस्यसदोचिता। कण्टकेष्वाक्रमणं पदविक्षेपः ॥१९॥ श्वापदानर्दितं श्वापदाः व्याघ्रादिहिंस्रपशवः तेषां आनर्दितं शब्दं ॥ २०—२१ ॥ अपस्नातः मृतस्नातः। "अपस्नातो मृतस्नातः" इत्यमरः। अरिष्टं अशुभं। "अरिष्टे तुशुभाशुभे" इत्यमरः। ननु राममनुगम्यपुनःपुरप्रवेशसमये अपस्नातोरिष्टमितिकथमश्लीलमुक्तं। सत्यं दशरथोहितदानीं नूनंभयमुपैष्यतीत्यादिनासीताविपत्तिशङ्कमानस्तद्द्वारारामविपत्तिंतन्मुखेनस्वस्यापिविनाशंशङ्कितवान्। अतएवसीताद्वारा रामविपत्तिशङ्कया सकामाभवकैकेयीत्युक्तवान्। स्वविनाशाभिप्रायेण विधवाराज्यमावसेत्युपदर्शितवांश्च। तेनापस्नातइवेत्युक्तिः राजबुद्ध्यनुसारादुचितैव ॥ २२ ॥ शून्यचत्वरवेश्मान्तां निर्जनचतुष्पथगृहद्वारां। संवृतापणदेवतां पिहितापणदेवतागृहद्वारां। क्लान्तदुर्बलदुःखार्तां चिन्तातिरेकेणक्लान्ता रामविरहेणनिःसत्वाः दुःखार्ताश्च जनाः यस्यां तथा। अनेनसंचारक्षमाः सर्वेराममनुगताइतिद्योत्यते। नात्याकीर्णमहापथां क्वचित्क्वचिद्दृश्यमानजनयुक्तमहापथामित्यर्थः। अवान्तरमार्गो-

र्तेत अन्तर्णीतण्यर्थः ॥ १० ॥ **ति०** आत्मानंनगरान्तं नगरसमीपंप्राप्तंबुद्ध्वा पुत्रंचाप्राप्तंबुद्ध्वा अब्रवीदितितकः। यद्वा पुत्रंनगरान्तं नगरबाह्यदेशंप्राप्तंमत्वेत्यर्थः। **स०** बुद्ध्वा तथाज्ञात्वा। तच्चिन्तनैकनिरतत्वात्तथाभ्रमोजातइतिभावः ॥ १३ ॥ **स०** राममागतंबुद्ध्वानदृश्यतइत्युक्त्या तद्विरहहेतुकोमोहइतिध्वन्यते ॥ १४ ॥ **ती०** अरिष्टंसूतिकागृहं तद्वत्कश्मलं। **शि०** उपसंहरन्नाह—**इतीति**। तपस्नातः अपगतंस्नातं स्नानंयस्य अकृतस्नानइत्यर्थः। किंच अपस्नातं अपस्नाः स्नानाभाव इत्यर्थः। भावेक्विप्। आंअततिप्राप्नोतीत्यपस्नानः। पचाद्यच्। किंच पानं पः। पानार्थकपाधातोर्घञर्थेकः। जलपानादिरित्यर्थः। तस्याभावोऽपः। अपेस्नातो निरतः अपस्नातः। स्नाधातोर्निरतार्थत्वंतु मन्त्रस्नातइत्यादौप्रसिद्धम्। तथाचाकृतभोजनादिरित्यर्थस्संपन्नः। किंच पानंपः। रक्षणार्थकपाधातोःकः। तस्याभावःअपः तत्रस्नातोनिरतःअपस्नातः। इतःप्रभृतिपृथिवीराज्यंनकरिष्यामीतिप्रतिज्ञातवानितिभावः। किंच नपीयेतेइत्यपौ अश्रुप्रस्वेदौ ताभ्यांस्नातः प्रस्वेदाश्रुक्लिन्नशरीरकइत्यर्थः। राजा अरिष्टं रामवियोगिनामतिहिंसकमिव पुरोत्तममयोध्यांप्रविवेश। "अपस्नातोमृतस्नातः" इतिकोशघटकीभूतापस्नातशब्दस्तु अपोपसर्गपूर्वकस्नातप्रकृतिकनिष्ठान्तइति नात्रतद्विषयता। एतेन अपस्नातोमृतस्नातइतिभट्टभूषणाद्युक्तिश्छिन्त्या। अमाङ्गलिकत्वेनतस्येहासंभवात् ॥ २२ ॥ **ती०** शून्याः संमार्जनरहिताः चत्वरंचतुष्पथंवेश्मनामन्ताःमध्यप्रदेशाश्चयस्यांतां। **ति०** संवृतापणवेदिकां

**[ पा० ]** १ च. झ. सदुःखार्तः. क. छ. सुदुःखार्तः. २ ङ. छ. ज. झ. ठ. सुखेनोपधानेषु. ३ च. महाबाहुः. ४ च. नरोत्तमः. ५ क. ग—झ. ठ. क्रमणक्लान्ता. ६ ङ. छ. झ. ठ. गृहोत्तमं. ७ ङ. छ. झ. ठ. वेदिकां.

महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगम् ॥ रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २५ ॥
अथ गद्गदशब्दस्तु विलपन्मनुजाधिपः ॥ उवाच मृदु मन्दार्थं वचनं दीनमस्वरम् ॥ २६ ॥
कौसल्याया गृहं शीघ्रं राममातुर्नयन्तु माम् ॥ न ह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ॥ २७ ॥
इति ब्रुवन्तं राजानमनयन्द्वारदर्शिनः ॥ कौसल्याया गृहं तत्र न्यवेशयत विनीतवत् ॥ २८ ॥
ततस्तस्य प्रविष्टस्य कौसल्याया निवेशनम् ॥ अधिरुह्यापि शयनं बभूव लुलितं मनः ॥ २९ ॥
पुत्रद्वयविहीनं च स्नुषयाऽपि विवर्जितम् ॥ अपश्यद्भवनं राजा नष्टचन्द्रमिवाम्बरम् ॥ ३० ॥
तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्यवान् ॥ उच्चैःस्वरेण चुक्रोश हा राघव जहासि माम् ॥ ३१ ॥
सुखिता बत तं कालं जीविष्यन्ति नरोत्तमाः ॥ परिष्वजन्तो ये रामं द्रक्ष्यन्ति पुनरागतम् ॥३२॥
अथ रात्र्यां प्रपन्नायां कालरात्र्यामिवात्मनः ॥ अर्धरात्रे दशरथः कौसल्यामिदमब्रवीत् ॥ ३३ ॥
रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते ॥ न त्वां पश्यामि कौसल्ये साधु मां पाणिना स्पृश ॥३४॥

स्तुकेवलंनिर्जनाइतिभावः ॥ २३—२४ ॥ कीदृशं प्राविशदित्यपेक्षायामाह—महाह्रदमिति । अक्ष्योभ्यं सोरगतया । प्राविशदित्यनुषङ्गः ॥२५॥ गद्गदःशब्दो यस्यसतथोक्तः । मृदु उपांशु । मन्दार्थं अल्पार्थं । शब्दप्रपञ्चवदित्यर्थः । अस्वरं कण्ठस्वररहितं ॥२६॥ नयन्तु द्वारदर्शिनइतिशेषः । अन्यत्र तद्व्यतिरिक्तस्त्रीगृहे ॥२७॥ द्वारदर्शिनः मार्गप्रदर्शकाः द्वारपालकाः । न्यवेशयत निवेशितः । विनीतवत् विनीतार्हं ॥ २८ ॥ लुलितं कलुषितमितियावत् ॥२९॥ नष्टचन्द्रं उपलक्षणमेतत् । चन्द्रनक्षत्रताराहीनमित्यर्थः ॥३०—३१॥ तंकालं तस्मिन्काले तावत्कालमितिवा ॥ ३२ ॥ कालरात्र्यां संहाररात्र्यां । प्रपन्नायां प्राप्तायां ॥ ३३ ॥ राममनुगतादृष्टिः समुद्रगृहीतंपुनः किंनिवर्तते । मे दृष्टिः षष्टिवर्षसहस्रंकृतोपवासादिकंनिवर्तते अद्यापि ननिवर्तते तद्दर्शनाभावेपितन्मातृत्वदर्शनंकर्तुमुचितेकालेपिननिवर्तते । नत्वापश्यामिकौसल्ये रामदर्शनं विनाकैकेयीमुखदर्शनपापनिवृत्तयेत्वन्मुखंद्रष्टुमुत्सुकोस्मि तदपिनलब्धं । साधुमांपाणिनास्पृश नित्यानुमेयानीन्द्रियाणिकार्यकल्प्यानि । रूपग्रहणाभावाच्चक्षुरिन्द्रियंगतमित्यवगतं । त्वगिन्द्रियमस्तिनवेतिसंप्रति जानीहि साधु कैकेय्याकृतसंकेतोरामंनिर्यापितवान् अद्यकिंचिदभिनयंकरोतीतिनमन्येथाः अयमज्ञानादेवंकृतवानितिसमनस्कतयास्पृश । यद्वा मांपाणिनास्पृश राममातृत्वात्तवपाणिस्पर्शनंरामस्पर्शनमितिभावः

संवृताआवृताःपण्यस्थापनवेदिकाःयस्यांतां ॥ २३ ॥ ती० सुपर्णेनहृतोरगमिति रिपूणांनिर्भयप्रवेशमात्रेदृष्टान्तः ॥ २५ ॥ ती० मृदु मन्दोच्चरितं । मन्दार्थं अबुद्धार्थं । स० अस्वरं श्राव्यस्वररहितं ॥ २६ ॥ ति० तत्र गृहे । तैर्विनीतवत्पर्यङ्केन्यवेशयत । राजेतिशेषः । यद्वा तन्निवेशनोत्तरं राजाविनीतवदधोमुखआसेतिशेषः ॥ २८ ॥ ती० हेकौसल्ये त्वांनपश्यामि अतस्त्वंमांपाणिनासाधुसम्यक्स्पृश । कुतः मेदृष्टिरद्यापिननिवर्तते । तत्कुतः राममनुगता । "रमन्तेयोगिनोऽनन्तेसत्यानन्दे चिदात्मनि । इतिरामपदेनासौपरंब्रह्माभिधीयते" इतिश्रुतेः । अतोऽद्यापिननिवर्ततइतिसंबन्धः । अयंभावः । चक्षुषोरामैकप्रवणत्वभाग्यलाभवत्सर्वेन्द्रियाणांतादृग्भाग्यंयदिलभ्येत तदानीं मदन्योधन्योनकोपीतिमनसिनिधाय सर्वेन्द्रियाणांतत्प्रार्थयन्नादौतावत्त्वचस्तदस्तिनास्तिवेतिनिश्चेतुं मांस्पृशेति कौसल्यांनियोजयतीति । शि० हेकौसल्ये त्वामहंनपश्यामि नद्रष्टुमिच्छामि । अतोमां पाणिना अस्पृश स्पर्शमाकुरु । दर्शनेच्छाऽभावेहेतुः अनुगता प्राप्ता । अइतिनिषेधार्थकमव्ययंप्रश्लिष्यते । स० त्वांनपश्यामि । तत्रहेतुमाह—राममिति । ननिवर्ततेअतोनपदार्थान्तरंदृश्यते । तनि० पञ्चेन्द्रियाणांप्रत्येकमनन्यार्हशेषत्वमुच्यते—राममिति । रामं गुणसागरं । ननिवर्तते समुद्रगृहीतंपुनरायातिकिम् । "समुद्रइवगांभीर्ये" "गुणानामाकरोमहान्"इतिसमुद्रस्थानत्वमुक्तं । यद्वा रामंमेऽनुगतादृष्टिः रामंरमयतांवरमितिचेतनाचेतनविभागानादरेण रमयितृत्वगुणस्सखलु । सर्वत्रचक्षुःखलुरूपग्राहकं अत्रतुरामेरूपंचक्षुर्ग्राहकं । अनुगतपदार्थदर्शनसमर्थंचक्षुरधुना संचारक्षमंजातं । "कामरूप्यनुसंचरन्" इत्या-

[ पा० ] १ च. झ. न्वसुधाधिपः. २ घ. ङ. निवेशने. ३ क. च. विहीनंतत्. ४ ख. ग. ङ—झ. ठ. स्नुषयाच. ५ ङ. च. छ. झ. ठ. प्राक्रोशद्धा. ६ क. हाहारामजहासि. ङ. च. झ. हारामविजहासि. ७ ङ. झ. नौ. ८ क. सुखिनःसततं. ख. सुखिताःसततं. ९ ग. ज. प्रवृत्तायां. १० रामंमेऽनुगतेतिश्लोकेपूर्वोत्तरार्धयोःपौर्वापर्यं क—झ. ठ. पुस्तकेषुदृश्यते. ११ ख. ङ—झ. त्वां. १२ क. ख. ङ. झ. मा.

**तं राममेवानुविचिन्तयन्तं समीक्ष्य देवी शयने नरेन्द्रम् ॥**
**उपोपविश्याधिकमार्तरूपा विनिश्वसन्ती विललाप कृच्छ्रम् ॥ ३५ ॥**
**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥**

## त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रात्रौकौसल्ययादशरथसमीपेरामादीन्प्रत्यनुशोचनम् ॥ १ ॥

**ततः समीक्ष्य शयने सन्नं शोकेन पार्थिवम् ॥ कौसल्या पुत्रशोकार्ता तमुवाच महीपतिम् ॥ १ ॥**
**राघवे नरशार्दूले विषमुप्त्वा विजिह्मताम् ॥ विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २ ॥**
**विवास्य रामं सुभगा लब्धकामा समाहिता ॥ त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥**

॥३४॥ उपोपविश्य शयनसमीपेऽपविश्येत्यर्थः ॥३५॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विचत्वारिंशः-सर्गः ॥ ४२ ॥

॥ १ ॥ विजिह्मतांविषं कौटिल्यरूपंविषं । राघवे उप्त्वा निक्षिप्य। निर्मुक्त्वा मुक्तकञ्चुकी । "निर्मुक्तोमुक्तकञ्चुकः" इत्यमरः। अनेनक्रौर्यातिशयउक्तः॥२—

द्युक्तचेतनकृत्यमचेतंनकरोति । देशविशेषेपरमपदेक्रियमाणमनुसंचरणं संसारचक्रेरामंप्रतिक्रियते । यद्वा दृष्टिः राममनुगता "चक्षुर्देवानामुतमर्त्यानां" इतिदेवमनुष्यादिदृष्टिभूतोरामः पुरतोगच्छति अहंतिष्ठामिवेत्यनुगता । दृष्टिः दृशिर्प्रेक्षणेइतिनिष्पन्ना । सारासारविवेकशालिनीविशेषग्रहणशक्तारामममनुगता । ममहितकारिणी स्वहितंनकरोतिकिं । अस्वतन्त्रामेदृष्टिः कथमेवंस्वातन्त्र्यं कृतवती । शेष्यतिशयाधानंखलूचितंशेषवस्तुनः । यद्वा मेदृष्टीराममनुगता ममचिरपरिचिता मांविहाय राममनुगतेत्यभिसारिकासमाधिः । यद्वा मेदृष्टिः कैकेयीमन्थरादिदृष्टिश्वेदेवंनकरोत्येव "नन्दामिपश्यन्नपिदर्शनेन" इत्येवंचिरपरिचयंसंपादितवानहं खलु । यद्वा मेदृष्टिः सर्वत्रविषयेषु चपलस्यमेदृष्टिः कथंचापलंनगच्छति । विहायगतामपिमेदृष्टिरित्यहमनुरक्तिंकरोमि मातरंविहायपतिमनुसृतायांकन्यायांममेयमित्यभिमानवत् । ममेन्द्रियंचेन्मामनुसृत्यतिष्ठेत् कथमन्थमनुसरेत् । स्वविषयानुसरणंनदोषइतिचेत्तत्राह। अद्यापिननिवर्तते अतिक्रान्तेपिराघवे इति स्वगोचरातिक्रमेपिननिवर्तते । कैकेयीमुखनिरीक्षणव्रीडयाकिम् । यद्वा "नचपुनरावर्तते" इत्युक्तापुनरावृत्तिंप्राप्ताकिं । अनिवर्तनेयुक्तिमाह—**नत्वापश्यामीति** । पुनरागताचेत्तवदर्शनं ममकथंनस्यात् । त्वांनपश्यामि स्वरेणपुरोऽवस्थितांनिर्दिशामि । "नचक्षुषापश्यति" इतिश्रुत्या तन्मुखदर्शनालाभेपि तन्मातुस्तवमुखं वापश्यमीत्यभिलषित तच्चनलब्धं । राममनुगतादृष्टिः नत्वांपश्यामि रामेनिमग्नादृष्टिरन्यंस्पृशतिकिं । चक्षुरिन्द्रियनाशेपि वागिन्द्रियेणप्राणिमीत्याशयेनाह—**कौसल्येति** । "एषमेजीवितस्यान्तोरामोयद्यभिषिच्यते" इतिव्यतिरेककाष्ठाभूतायाःकैकेय्याः "किंपुनःप्रोषितेतातध्रुवंमरणमेवमे" इत्यन्वयकाष्ठाभूताखलुत्वं । कौसल्ये "कौसल्यालोकभर्तारंसुषुवेयंमनस्विनी" इतिचिरकालप्रार्थनयालोकरक्षणार्थंसंपादनंकृतं तदिदानींतवदुःखायजातंखलु । यद्वा कौसल्येत्वांनपश्यामि अनर्थकरकैकेयींपश्यच्चक्षुस्तद्दुःखनिवारणायत्वांनपश्यतिकिं । रामविश्लेषासहनेनसीदन्त्याः दशरथविश्लेषोपिभविष्यतिवेतिभीत्यानिकटमागतामाह—**साध्विति** । ममकृत्स्नक्लेशनिवारणाय पाणिनामांसंमृज्याश्वासय । तवादर्शनेनचक्षुरिन्द्रियंगतमितिनिश्चिनोमि । तववाक्यश्रवणेनश्रोत्रेन्द्रियंतिष्ठतीतिजानामि । कौसल्येइत्युक्त्या वागिन्द्रियमपितिष्ठतीतिनिश्चिनोमि । गन्धग्रहणाभावेन राममूर्धोपाघ्राणायघ्राणेन्द्रियं गतमितिनिश्चिनोमि । महाविषयलाभेन तदितरविषयस्यातितुच्छत्वात्स्पर्शेन्द्रियं गतंवातिष्ठतिवेतिनिश्चेतव्यं । चोरस्यगृहंप्रविश्य कानिचिद्वस्तूनिगृहीत्वा गमनानन्तरं गृहपतिरंधकारे किंकिंगतमितितत्तद्वस्तुस्पृशन्पत्न्यादीन्पृच्छति तत्समाधिरत्रद्योत्यते । साधुस्पृश प्रकृतिसंबन्धकृतंकालुष्यमिदंस्थिरंनभवति । अतःअजुगुप्सनेनस्पृश । पाणिनास्पृश अग्निसाक्षिकंप्रीतिपूर्वकंयथास्पृष्टंतथास्पृश । रामसंस्पर्शान्वयव्यतिरेकाधीनान्वयव्यतिरेकजीवनंमां तत्प्रतिनिधितयातन्मातात्वंस्पृश । भगवत्स्पर्शालाभेतत्संबन्धिस्पर्शेनापिजीवितुंशक्यं "वाहिवातयतःकान्ता" इतिवत् । जन्मान्तरसुकृतवशेन श्रीरामे अतीव परत्वज्ञानमस्तुवा दशरथस्य कौसल्यायाश्च । कथमुभयोरामपरत्वानुसन्धानपूर्वकसंभाषणमित्युक्तौ ऋषिरेवदशरथादिवचनरीत्या पुनःपुनःपरत्वानुसंधानंकरोतीतिसंप्रदायः ॥ ३४ ॥ इतिद्विचत्वारिंशस्सर्गः ॥ ४२ ॥

**ति०** सन्नंखिन्नं । **स०** सन्नंशीर्णावयवं ॥ १ ॥ **ति०** अहिजिह्मगा सर्पवत्कुटिलगतिःकुटिलचरित्रा ॥ २ ॥

**[ पा० ]** १ ङ. छ. झ. विनिश्वसन्तं. २ च. झ. ट. विषमुक्त्वाहिजिह्मगा. ठ. विषमुक्त्वाहिजिह्मतां. क. विषमुक्त्वातु. च. ञ. विषंक्षिप्त्वाहि. ३ ग. ज. भूयोमां. ४ ग. वेश्मसु.

[1]अथ स नगरे रामश्चरन्भैक्षं गृहे वसेत् ॥ कामकारो वरं दातुमपि दासं ममात्मजम् ॥ ४ ॥
पातयित्वा तु कैकेय्या रामं [2]स्थानाद्यथेष्टतः ॥ [3]प्रदिष्टो रक्षसां भागः पर्वणीवाहिताग्निना ॥ ५ ॥
[4]गजराजगतिर्वीरो महाबाहुर्धनुर्धरः ॥ वनमाविशते नूनं सभार्यः सहलक्ष्मणः ॥ ६ ॥
वने त्वदृष्टदुःखानां [5]कैकेय्यानुमते त्वया ॥ त्यक्तानां वनवासाय [6]कान्ववस्था [7]भविष्यति ॥ ७ ॥
ते रत्नहीनास्तरुणाः फलकाले विवासिताः ॥ कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८ ॥
अपीदानीं स कालः स्यान्मम शोकक्षयः शिवः ॥ [8]सभार्यं यत्सह भ्रात्रा पश्येयमिह राघवम् ॥ ९ ॥
[9]सुस्वेवोपस्थितौ वीरौ [10]कदाऽयोध्यां गमिष्यतः ॥ यशस्विनी हृष्टजना सूच्छ्रितध्वजमालिनी ॥१०॥
कदा प्रेक्ष्य नरव्याघ्रावरण्यात्पुनरागतौ ॥ [11]नन्दिष्यति पुरी हृष्टा समुद्र इव पर्वणि ॥ ११ ॥
कदाऽयोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति ॥ पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥ १२ ॥
कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ ॥ लाजैरवकिरिष्यन्ति प्रविशन्तावरिन्दमौ ॥ १३ ॥
प्रविशन्तौ कदाऽयोध्यां द्रक्ष्यामि शुभकुण्डलौ ॥ उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव पर्वतौ ॥ १४ ॥
कदा सुमनसः कन्या द्विजातीनां फलानि च ॥ [12]प्रदिशन्त्यः पुरीं हृष्टाः [13]करिष्यन्ति प्रदक्षिणम् ॥१५॥
कदा परिणतो बुद्ध्या वयसा चामरप्रभः ॥ अभ्युपैष्यति [14]धर्मज्ञस्त्रिवर्ष इव [15]लालयन् ॥ १६ ॥

३॥अथापि भरतेराज्यदानस्यावश्यकत्वेपि। रामोनगरेभैक्षंचरन्सन्गृहेवसेत् वनेविवासनंकिमर्थं।राज्याभावेपिममात्मजं भरतस्यदासंदातुं कामकारः इच्छा। वरं वनवासाच्छ्रेष्ठतमः ॥ ४ ॥ रामंस्वस्थानात् यथेष्टतः स्वेच्छया अमर्यादया पातयित्वात्वया रामायप्रदेयोराज्यभागःकैकेय्याःप्रदिष्टः। कथमिव आहिताग्निनापर्वणिदेवेभ्योदेयः हविर्भागः पुरोडाशैकदेशः। रक्षसामिव सर्वथानुचितंत्वयाकृतमितिभावः ॥५–६॥ वनेअदृष्टदुःखानांअदृष्टवनदुःखानामित्यर्थः। कैकेय्यानुमते। कैकेय्याअनुमते। स्थितेनेतिशेषः। सवर्णदीर्घआर्षः। त्यक्तानां सीतारामलक्ष्मणानाम् ॥ ७ ॥ रत्नहीनाः श्रेष्ठवस्तुहीनाः। "रत्नंस्वजातिश्रेष्ठेपि" इत्यमरः। प्रवरशय्यासनादिहीनाइत्यर्थः। तरुणीच तरुणौचतरुणाः। "पुमान्स्त्रिया" इत्येकशेषः। फलकाले फलभोगकाले ॥ ८ ॥ सकालः वनात्प्रत्यागमनकालः। अपिः संभावनायां। इदानीं अद्यदिने। स्यात् स्यात्किमित्यर्थः। शोकक्षयः शोकक्षयकरः। यत् यस्मिन्काले ॥९॥ उपस्थितौ नगरसमीपमागतौ पुरी पौरजनः ॥ १०—१३ ॥ उदग्रायुधनिस्त्रिंशौ। आयुधशब्देनात्रधनुरुच्यते। निस्त्रिंशःखड्गः। "खड्गे तुनिस्त्रिंशः" इत्यमरः ॥१४॥ द्विजातीनां ब्राह्मणानां। कन्याः सुमनसः पुष्पाणिफलानिच। प्रदिशन्त्यःसत्यः पुरींकदाप्रदक्षिणंकरिष्यन्ति। अयमौत्तराणांमङ्गलाचारः ॥१५॥ बुद्ध्यापरिणतः ज्ञानवृद्धइत्यर्थः। वयसा

**स०** भिक्षाणां समूहोभैक्षं। भिक्षादिभ्योऽण्। चरन्अटन्यदिगृहेवसेत्तर्हिवरंउत्तमं। ममात्मजमपिदासंदातुं ममकामकारः अपेक्षिताचरणं। दासस्सन्नपियदिपुरेवसेद्रामस्तर्हितदेवममेष्टं। तद्वियोगशोकाभावादितिभावः। **ति०** एवंच एवंवरयाचनंममातित्रासनार्थमेवेतिव्यङ्ग्यं ॥ ४ ॥ **ती०** यद्वा पातयित्वेति। कैकेय्याकर्त्र्या रामःस्वस्थानात्राज्यात्पातयित्वाभ्रंशयित्वा रक्षसांभागस्सन् यथेष्टतः यथेच्छं प्रदिष्टः विनियुक्तः। प्रविद्धइतिपाठेक्षिप्तइत्यर्थः। अत्रदृष्टान्तमाह—**पर्वणीति**। पर्वणि दर्शपूर्णमासरूपपर्वणि। आहिताग्निना व्रीहिगततुषजालमितिशेषः। रक्षसांभागइवेति। पर्वण्याहिताग्निनाव्रीहिगततुषजालंयथारक्षोभागत्वेनप्रदिष्टं तथा कैकेय्यापि रामोराक्षसभागत्वेनविनियुक्तइतिभावः। अतएव दर्शपूर्णमासानुक्रमणिकायां रक्षोभ्यस्स्वाहा रक्षोभ्यइदंनममेत्युद्देश्यत्यागः ॥ ५ ॥ **ती०** कन्याद्विजातीनां कन्याश्चद्विजातयश्चेतिद्वन्द्वः। अत्रकन्यानांसुमनसःपुष्पाणि द्विजातीनांफलानीतिविवेकः। प्रदिशन्तःप्रगृह्णन्तः हृष्टाभूत्वा रामादयःपुरींप्रदक्षिणंकरिष्यन्ति। पौरजनोत्सवायेतिशेषः ॥ १५ ॥ **ति०** सुवर्षइवकालिकः

[ **पा०** ] १ ङ. झ—ठ. अथास्मिन्नगरे. २ ख. राज्यात्. ३ च. छ. झ—ठ. प्रविद्धो. ४ ङ. च. छ. झ—ठ. नागराज. ५ च. छ. झ. ञ. ठ. कैकेय्यनुमते. ६ छ. झ. ट. ठ. कान्यावस्था ७ ख. भविष्यते. ८ ङ. छ. झ. ठ. सहभार्यंसहभ्रात्रा. ख. भार्ययासहितंभ्रात्रा. ९ क—ट. श्रुलेष. १०क—ट. कदाऽयोध्याभविष्यति. ११ ङ. छ. झ. ट. ठ. भविष्यति. १२ ङ. च. झ. ञ. ट. प्रदिशन्तः. १३ घ. करिष्यन्त्यः. १४ ङ. च. छ. ञ. ट. धर्मात्मात्रिवर्षः. क. झ. धर्मात्मासुवर्षः. १५ ख. लालितः. क. च. ज. ञ. मांल्लन्.

निस्संशयं मया मन्ये पुरा वीर कदर्यया ॥ पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः ॥ १७ ॥
साहं गौरिव सिंहेन विवत्सा वत्सला कृता ॥ कैकेय्या पुरुषव्याघ्र बालवत्सेव गौर्बलात् ॥ १८ ॥
न हि तावद्गुणैर्जुष्टं सर्वशास्त्रविशारदम् ॥ एकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ॥ १९ ॥
न हि मे जीविते किंचित्सामर्थ्यमिह कल्प्यते ॥ अपश्यन्त्याः प्रियं पुत्रं महाबाहुं महाबलम् ॥ २० ॥
अयं हि मां दीपयते समुत्थितस्तनूजशोकप्रभवो हुताशनः ॥
महीमिमां रश्मिभिरुद्धतप्रभो यथा निदाघे भगवान्दिवाकरः ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

सुमित्रयाश्रीराममहिमप्रतिपादनपूर्वकंसमाश्वासनेनकौसल्यायाःशोकापनोदनम् ॥ १ ॥

विलपन्तीं तथा तां तु कौसल्यां प्रमदोत्तमाम् ॥ इदं धर्म्ये स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ॥ १ ॥
तवार्ये सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः ॥ किं ते विलपितेनैवं कृपणं रुदितेन वा ॥ २ ॥

---

चामरप्रभः पञ्चविंशतिवर्षइत्यर्थः । अमराहिसदापञ्चविंशतिवर्षाः । लालयन् लालनांजनयन् ॥ १६ ॥ कदर्यया क्षुद्रया । पातुकामेषु स्तन्यपानकामेषु । शातिताः वियोजिताइतियावत् ॥ १७ ॥ बालवत्सागौरिव वत्सलासाहं सिंहेनगौरिव कैकेय्याबलाद्विवत्सा कृतेतिसंबन्धः ॥ १८ ॥ तावद्गुणैर्जुष्टं यावन्तःकल्याणगुणाः सन्ति तावद्भिर्गुणैर्युक्तमित्यर्थः ॥ १९ ॥ कल्प्यते दैवेनेतिशेषः । कल्पतइतिपाठे विद्यतइत्यर्थः ॥ २० ॥ दीपयते संतापयति । उद्धतप्रभः उत्कटकिरणः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिचत्वारिंशःसर्गः ॥ ४३ ॥

---

इदं वक्ष्यमाणं ॥ १ ॥ सत्पुरुषाचरितं धर्ममाचर-

---

कालिकसुवृष्टिरिवजनान्लालयन् । त्रिवर्षइवलालयन्नितिपाठे मामितिशेषः । त्रिवर्षइवमाललन्नितिपाठे मा मांप्रति ललन् क्रीडांकुर्वन्नित्यर्थः । **स०** सुवर्षः शोभनोवर्षोयस्मिन्ससुवर्षःप्रावृट्कालः सइव । त्रिवर्षइतिपाठे त्रिषुकालेषुवर्षोवर्षणंयस्यसःमेघइत्यर्थः । **शि०** बुद्ध्यावयसाचअपरिणतःपरिणामरहितः सर्वकालमपरिणतज्ञानवयोविशिष्टइत्यर्थः । अतएवामरप्रभः अमरान्देवानपि प्रभातिप्रकाशयति सधर्मात्मारामः त्रिवर्षः त्रैवर्षिकइव लालयन् अस्माकंलालनाबुद्धिमुत्पादयन् कदाऽभ्युपैष्यति । अन्तर्भावितणिजर्थोभातिः ॥ १६ ॥ **ति०** वत्सला पुत्रवत्सला सिंहेनगौरिवत्वयाविवत्साकृता । उक्तपातकेनेतिशेषः । एवं कैकेय्या सिंह्याबालवत्सागौरिव बलाद्विवत्साकृता । **शि०** वत्सला पुत्रविषयकातिवात्सल्यविशिष्टाबालवत्सागौरिव याऽहं सा सिंहेनेव कैकेय्याकैकेयीदास्यामन्थरया बलात्हठात् विवत्सागौरिवकृता । **स०** साहंसिंहेन बलात् गौरिव कैकेय्याविवत्साकृतेति । गौरीव अप्रसूतस्त्रीव वन्ध्येवकृता । गौरिवेतिपाठे कैकेयीदशरथयोस्त्यागप्रयोजकत्वादृष्टान्तद्वयं । "गौरीस्यादप्रसूतास्त्री" इतिनानार्थध्वनिमञ्जर्यां ॥ १८ ॥ इतित्रिचत्वारिंशस्सर्गः ॥ ४३ ॥

**तनि०** सुमित्रामुखेनश्रीरामस्यपरत्वमभिव्यनक्ति—**विलपन्तीमित्यादि**। इदं वक्ष्यमाणं। जन्मान्तरसुकृतवशेन तारामन्दोदर्योरिव सुमित्रायाःपरत्वज्ञानमस्तीतिसंप्रदायः । वक्तृवैलक्षण्याच्चध्वनिभेदः । सचालङ्कारिकैरङ्गीकृतः । धर्मेस्थिता सिद्धधर्मेरामे लग्नचित्ता । यद्वा धर्मे जन्मान्तरसुकृते । धर्म्यं विशिष्टधर्मादनपेतं ॥ १ ॥ **तनि०** आर्ये महाभागे तवपुत्रः सः वेदान्तवेद्यः पुरुषोत्तमोनारायणः । तत्रहेतुमाह । सद्गुणैर्युक्तः अनितरसाधारणानवधिकातिशयासङ्ख्येयकल्याणगुणैर्युक्तः । "श्रीपतिःपुरुषोत्तमः" इतिनिघण्टुः । तच्छब्दस्यसंनिहितपुरुषोत्तमविशेषणत्वेनवेदान्तप्रसिद्धिद्योतकत्वात् । अतः पुत्रबुद्ध्यानशोच्यइत्याह—**किंतइति** । **ती०** कृपणंयथातथा रुदितेनवाकिं । अयुक्तमेवेत्यर्थः । अत्रहेतुः सद्गुणैर्युक्तः अतएवपुरुषोत्तमः । पुरुषोत्तमस्य नकुत्राप्यपायइतिभावः । **ति०** पुरुषोत्तमइत्यनेन तस्येश्वरत्वंव्यङ्ग्यं । एवंच सर्वव्यापकत्वेनात्रापिसंनिधानाद्विलापादि व्यर्थमिति

**[ पा० ]** १ ख. ज. छादिताः. २ ठ. गौरीव. ३ ख. ग. घ. च. छ. ज. कल्पते. ४ झ. ञ. लक्ष्मणंचमहा. ५ क. छ. झ. ट. दीपयतेद्यवह्निः. घ. दीपयतेसमुत्सुकः. ६ क. छ. झ. ट. महाहितः. ७ क. ख. घ. छ. ज. झ. रुत्तमप्रभो.

यस्त[1]वार्ये गतः पुत्रस्त्यक्त्वा राज्यं महाबलः ॥ साधु कुर्वन्महात्मानं पितरं सत्यवादिनम् ॥ ३ ॥
शिष्टैराचरिते सम्यक्छश्वत्प्रेत्य फलोदये ॥ रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदाचन ॥ ४ ॥
वर्तते चोत्तमां वृत्तिं लक्ष्मणोस्मिन्सदाऽनघः ॥ दयावान्सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५ ॥
अरण्यवासे यद्दुःखं [2]जानती वै सुखोचिता ॥ अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ॥ ६ ॥
कीर्तिभूतां [3]पताकां यो लोके भ्रमयति प्रभुः ॥ [4]धर्मसत्यव्रतधनः किं न प्राप्तस्तवात्मजः ॥ ७ ॥
व्यक्तं रामस्य विज्ञाय [5]शौचं माहात्म्यमुत्तमम् ॥ न गात्रमंशुभिः सूर्यः संतापयितुमर्हति ॥ ८ ॥
शिवः सर्वेषु [6]कालेषु काननेभ्यो विनिस्सृतः ॥ राघवं युक्तशीतोष्णः सेविष्यति सुखोऽनिलः ॥ ९ ॥
शयानमनघं रात्रौ [7]पितेवाभिपरिष्वजन् ॥ [8]रश्मिभिः संस्पृशञ्शीतै[9]श्चन्द्रमा ह्लादयिष्यति ॥ १० ॥

न्तंरामंप्रतिसन्तोषेकर्तव्ये किमर्थोविषादःकृतइति कौसल्यांसमाश्वासयति—तवेत्यादिना ॥ २ ॥ यइत्यादिश्लोकद्वयमेकंवाक्यं । प्रेत्यफलोदये आमुष्मिकफलकारणे । ननु पुरुषोत्तमश्चेत्कथंकर्मप्रावण्यंतत्राह—शिष्टैराचरितइति । अनेनलोकानुग्रहार्थत्वमुक्तं । प्रेत्यफलोदये दशरथस्यपरलोकहिते । लोकानुग्रहार्थत्वंप्रदर्शयति—श्रेष्ठइति । श्रेष्ठाचरणमितरानुग्राहकमितिभावः । " यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः " इतिगीतावचनात् । वक्ष्यतिच " कामवृत्तस्त्वयंलोकःकृत्स्नःसमुपवर्तते । यद्वृत्ताःसन्तिराजानस्तद्वृत्ताःसन्तिहिप्रजाः " इति॥३—४॥ पितृवचनपरिपालकेरामेशोकोनकार्यइत्युक्त्वालक्ष्मणसीतयोरपिस्वस्वधर्मनिष्ठत्वात्तद्विषयेपि शोकोनकार्यः अपितुप्राप्तलाभत्वात्संतोषएवकार्यइत्याह—वर्ततइत्यादिना । अत्रवइतिगायत्र्याःपञ्चमाक्षरं । वर्तते करोति । वृत्तिं शुश्रूषां । अस्मिन् रामे । तस्य लक्ष्मणस्य ॥५॥ अरण्यवासेयद्दुःखं तद्दुःखं जानतीवै जानन्त्येव । तवात्मजमनुगच्छति । " स्त्रीणांभर्ताहि दैवतं " इत्युक्तरीत्याऽनुगच्छतीत्यर्थः ॥ ६ ॥ कीर्तिभूतांपताकां कीर्तिरूपंध्वजं । भ्रामयति संचारयति । सर्वभूतविदितप्रख्यातिकइत्यर्थः । तवात्मजः । किंश्रेयः नप्राप्तः सर्वस्यापिश्रेयसोयोग्यइत्यर्थः । अतोनशोच्य इतिभावः ॥ ७ ॥ तदेतद्विशिनष्टि—व्यक्तमित्यादि । शौचं त्रिविधकरणशुचित्वं । माहात्म्यं सर्वोत्तमत्वं ॥ ८ ॥ सर्वेषुकालेषु वसन्तादिकालेषु । युक्तशीतोष्णः तत्तत्कालोचितद्रव्यसंस्पर्शनेनसम्पादितशीतोष्ण-

चव्यङ्ग्यं ॥ २ ॥ **तनि०** ननु पुरुषोत्तमश्चेत्कथंकर्मप्रावण्यं तत्राह—**शिष्टैराचरितइति** । अनेन लोकानुग्रहार्थत्वमुक्तं प्रेत्यफलोदये दशरथस्यपरलोकहिते लोकानुग्रहार्थत्वंप्रदर्शयति—**श्रेष्ठइति** । श्रेष्ठाचरणमितरानुग्राहकमितिभावः । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः" इतिगीतावचनात् । वक्ष्यतिच "कामवृत्तस्त्वयंलोकःकृत्स्नस्समुपवर्तते । यद्वृत्तास्सन्तिराजानस्तद्वृत्तास्संति हिप्रजा" इति ॥ **शि०** प्रेत्यफलोदये प्रेत्यानांलोकान्तरगतानामपि फलोदयःशुभफलप्राप्तिर्यस्मात्तस्मिन्धर्मेस्थितः ॥ ४ ॥ **तनि०** शेषस्वरूपानुगुणकैङ्कर्यनिष्ठतया लक्ष्मणोपिनशोच्यइत्याह । उत्तमां निरतिशयपुरुषार्थरूपां वृत्तिंकैङ्कर्यकाष्ठां वर्ततेअनुतिष्ठति । अनघः प्रमादरहितः । सर्वभूतेषुदयावान् समत्वबुद्ध्यासर्वत्रकृपामैत्र्यादियुक्तः । तस्यमहात्मनःमहानुभावस्यलाभःकैङ्कर्यमेवपुरुषार्थः ॥ ५ ॥ **तनि०** सहधर्मचारिणीचनशोच्येत्याह । वैदेही विदेहवंशोत्पन्ना । अनेनायोनिजत्वंव्यज्यते । "वैदेहस्तुविदेहतः" इतिपौराणिकोक्तिः ॥ ६ ॥ **तनि०** "तस्यनाममहद्यशः" इतिश्रुत्यर्थंव्यञ्जयति—**कीर्तीति** । दमः जितहृषीकत्वं । व्रतं आश्रितापरित्यागः ॥ ७ ॥ **तनि०** सर्वदेवानांतदाज्ञाकारित्वेनानुकूल्यमाह । रामस्यउत्तमंमाहात्म्यं निस्सीमाभ्यधिकमाहात्म्यं विज्ञायसंतापयितुंनार्हति । तत्संभावनैवनास्तीत्यर्थः । अनेन "भीषोदेतिसूर्यः" इतिश्रुत्यर्थउक्तः ॥ ८ ॥ **तनि०** "भीषास्माद्वातः पवते" इतिश्रुत्यर्थमभिव्यनक्ति । शिवइत्यनुद्वेगकारित्वेन मान्द्यमुक्तं । काननेभ्यइति सौरभ्यमुक्तं । विनिस्सृतइति शैत्यमुक्तं ॥ ९ ॥ **तनि०** परिष्वजन्पितेव चन्द्रमाःरश्मिभिस्संस्पृशन्ह्लादयिष्यतीत्यन्वयः । एतेन "एतस्यवाअक्षरस्यप्रशासनेसूर्याचन्द्रमसौविधृतौतिष्ठतः" इतिश्रुत्यर्थोव्यञ्जितः । **ती०** जगदाह्लादकरस्यापिभगवतःश्रीरामस्यस्वशक्त्यनुसारेणचन्द्रोप्याह्लादंकरिष्यतीत्या-

**[ पा० ]** १ घ. तवार्यो. २ झ. ट. ठ. जानन्त्येव. ङ. जानात्येव. च. ञ. जानन्तीवै. ३ क. पताकांवै. ४ ङ. छ. ज. झ. ट. धर्मःसत्यव्रतपरः. क. ख. ग. च. ञ. दमसत्यव्रतपरः. ग. तपस्सत्यव्रतधनः. ५ ग. ज. शौर्यमाहात्म्यं. ६ ख. लोकेषु. ७ ख. पितेवहि. क. ज. पितेवापि. ८ छ. झ. ठ. घर्मघ्नःसंस्पृशञ्शीतः. ङ. संस्पृशञ्शीतरश्मिश्च. ९ च. चन्द्रःप्रह्लादयिष्यति.

ददौ [1]चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसे ॥ दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ॥ ११ ॥
स शूरः पुरुषव्याघ्रः स्वबाहुबलमाश्रितः ॥ असंत्रस्तो[2]प्यरण्यस्थो वेश्मनीव [3]निवत्स्यति ॥ १२ ॥
यस्येषुपथमासाद्य विनाशं यान्ति शत्रवः ॥ कथं न पृथिवी तस्य शासने स्थातुमर्हति ॥ १३ ॥
या श्रीः शौर्यं च रामस्य या च कल्याण[4]सत्त्वता ॥ निवृत्तारण्यवासः [5]स क्षिप्रं राज्यमवाप्स्यति ॥१४
सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः ॥ [6]श्रियः श्रीश्च भवेदग्र्या [7]कीर्तिः कीर्त्याः क्षमाक्षमा ॥ १५

स्पर्शइत्यर्थः ॥ ९—१० ॥ तिमिध्वजः शम्बरः । "वैजयन्तमितिख्यातंपुरंयत्रतिमिध्वजः । सशंबरइतिख्यातःशतमायोमहासुरः" इत्युक्तत्वात् । तत्सुतंदानवेन्द्रं हतंदृष्ट्वा यस्मै रामाय । दिव्यास्त्राणिददौ । "यदाव्रजतिसंग्रामंग्रामार्थेनगरस्यवा । गत्वासौमित्रिसहितोनाविजित्यनिवर्तते" इत्यभिधानात् । कदाचिद्रामोदण्डकारण्यंगत्वावैजयन्तपुरंनिरुध्यदशरथविरोधिभूतंशंबरसुतंहतवान् । तेनप्रीतोब्रह्मारामायदिव्यास्त्राणिददावित्यवगम्यते ॥११॥ अरण्यस्थोपीत्यन्वयः ॥ १२ ॥ वनेरामस्यसौख्यंभवतु भरतस्यरूढमूलत्वाद्रामस्यराज्यंनसिध्यतीत्याशङ्क्याह—यस्येति ॥ १३ ॥ रामस्य याश्रीः सर्वलक्षणसंपन्नागात्रशोभा । यच्च शौर्यं शूरोजेतातस्यभावःशौर्यं । "शूरोवीरश्चविक्रान्तोजेता" इत्यमरः । याचकल्याणसत्त्वता प्रशस्तबलयुक्तता । एतैरसाधारणहेतुभिः सः रामः । क्षिप्रंराज्यमवाप्स्यतीतिसंबन्धः ॥ १४ ॥ सूर्यस्यापिसूर्योभवेत् सकलजगत्प्रकाशकस्यसूर्यस्यापिप्रकाशकोभवेत् । अग्नेरग्निः दाहकस्याप्यग्नेर्दाहकः । प्रभोःप्रभुः सर्वनियन्तुरपिनियन्ता । श्रियःश्रीः संपदोपिसंपत् । यद्वा कान्तेरपि कान्तिः कान्तेरप्यतिशयावहइत्यर्थः । क्षमाक्षमा क्ष-

शयेनाह—**शयानमिति** । **स०** पितेवमूलपुरुषसूर्यसमत्वात् ॥ १० ॥ **तनि०** चतुर्मुखकिंचित्कारमाह—**ददाविति** । **ति०** ब्रह्मा ब्राह्मणोविश्वामित्रः ब्रह्मेव सृष्टिकर्तावा । तिमिध्वजश्शंबरस्तत्सुतस्सुबाहुरित्यर्थः इतिकतककृतः । तीर्थस्तु कदाचिद्रामोवैजयन्तंनगरंनिरुध्य तत्रत्यतिमिध्वजाख्यशंबरपुत्रस्यदानवस्यपुत्रंहतवान् । तेनप्रीतोब्रह्मा रामायदिव्यास्त्राणिददावित्येतत् बलात्कल्पयति । कतकोक्तंतुनयुक्तं । ताटकावधोत्तरंसुबाहुवधात्प्रागेव विश्वामित्रेणास्त्रोपदेशस्यप्रागुक्तत्वात् सुबाहोर्मारीचभ्रातृत्वस्यपूर्वमुक्तत्वेनशंबरपुत्रत्वानौचित्याच्च । **स०** तिमिध्वीजोययोस्तौतिमिध्वजौ सुन्दोपसुन्दौ । तयोस्सुतं दानवेन्द्रंसुबाहुं हतंहतप्रायं । निश्चितेऽर्थेतथाप्रयोगदर्शनात् । यथोक्तं गीतायामेकादशाध्याये "मयैवैतेनिहताःपूर्वमेव मयाहतांस्त्वंजहिमाव्यथिष्ठाः" इति । दृष्ट्वा योगप्रभावेननिश्चित्य । यथोक्तंबालकाण्डे "अहंतेप्रतिजानामिहतौतौविद्धिराक्षसौ" "अहंवेद्मिमहात्मानंरामं सत्यपराक्रमं" इति । यस्मैमहौजसेरामाय ब्रह्मा ब्राह्मणोविश्वामित्रः । अल्पायासेनब्राह्मण्यंप्राप्तमिति तत्त्वेनकीर्तनं । दिव्यान्यस्त्राणिददौ सशूरइत्युत्तरेणान्वयः । महौजसइत्यनेनानुग्रहार्थंसऋषेरस्त्राण्यवापेतिसूचयति । दानवेन्द्रमित्यनेन सुबाहोर्दैत्यकुलोद्भवत्वंज्ञापयति । यथोक्तंबालकाण्डे । "अथकालोपमौयुद्धेसुतौसुन्दोपसुन्दयोः । यज्ञविघ्नकरौतौतेनैवदास्यामिपुत्रकं । तौतुराक्षसकन्यायांजातौदैत्यकुलोद्भवौ । मारीचश्चसुबाहुश्चवीर्यवन्तौसुशिक्षितौ" इति । कतकस्तु तिमिध्वजःशंबरासुरस्तत्सुतंहतंदृष्ट्वेतिव्याख्यातवान् । तीर्थपीतांबरौतु कदाचिद्रामोदण्डकारण्यंगत्वा वैजयन्तंपुरंनिरुध्य दशरथविरोधिभूतशंबरसुतंहतवान् तेनप्रीतोब्रह्मा रामायदिव्यान्यस्त्राणिददावितिकथांकल्पयतः । नागोजिभट्टस्तु ब्रह्मा ब्राह्मणः ब्रह्मेवसृष्टिकर्तावेत्येकपदंव्याचष्टे । तत्र प्रथमव्याख्याने उदाहृतरामायणवचनैरस्त्रदानानन्तरंसुबाहुहननप्रतीतेरत्रपुनर्दृष्ट्वेतिक्त्वाप्रत्ययेन पूर्वकालीनत्वोक्तिविरोधः । अस्मद्रीत्या कथंचित्तदभिप्रायेपि सुन्दोपसुन्दसुतस्यसुबाहोःशंबरपुत्रत्वकल्पने उदाहृतवचनविरोधः । द्वितीयेत्वश्रुतकल्पनादोषः । तृतीये कतकादीन्दूषयित्वा ब्रह्मपदंव्याख्यायविशिष्टानुपपत्त्यपरिहरणंदोषइतिभाति । **शि०** तिमिध्वजसुतं तिमिध्वजश्शंबरः तस्यसुतस्सुबाहुस्तं । हतमित्यत्र ह तं इतिच्छेदः । तं रणेदृष्ट्वाज्ञात्वा ब्रह्माविश्वामित्रः यस्मैरामाय दिव्यान्यस्त्राणि ह हर्षेणददौ सशूरइतिसंबन्धः । एतेन हतंदृष्ट्वेत्यर्थेऽसमञ्जसमुपलभ्य तीर्थकल्पितंक्लिष्टं । तादृशकल्पनायांप्रमाणाभावात् सुबाहोश्शंबरपुत्रत्वानौचित्यादितिभट्टोक्त्यानभ्रमितव्यं । मारीचपितुरेव शंबरेतिनामान्तरेबाधकाभावात् ॥ ११ ॥ **तनि०** यस्यरामस्य इषुपथंप्राप्य शत्रवोनाशंयान्ति तस्यशासने इयंपृथिवीस्थातुंकथंनार्हति अर्हत्येव । **ति०** तस्यशासने पृथिवी तत्स्थाःप्राणिनः कथंनशासने स्थास्यन्ति । अतस्तस्यकुतोपिनभयमितिभावः ॥ १३ ॥ **ति०** यादृशीच कल्याणसत्वतादृश्यते तयाज्ञायते निवृत्तवनवासःक्षिप्रमेवस्वंराज्यंप्राप्स्यतीति ॥ १४॥ **ति०** इदानींसाक्षादेवसर्वान्तर्यामित्वंरामस्यदर्शयति—**सूर्यस्यापीति** । सर्वस्यापिस्वस्वकार्यजनकत्वमेतदधीनमेवेतिभावः । **स०** सूर्यस्यसूर्यः प्रकाशकशक्तिदः । अग्नेरग्निः नेता प्रभोःप्रभुस्स्वामी । श्रियस्संपत्करः । कीर्त्याः

[ **पा०** ] १ ख. दिव्यानिचास्त्राणि. २ ङ. च. छ. झ. ञ. ट. ह्यरण्येऽसौ. ३ ङ. च. छ. झ. ञ. ट. निवत्स्यते. ४ क. सारता. ५ झ. ट. ठ. स्वंक्षिप्रं. घ. ज. सन्क्षिप्रं. ६ ङ. छ. झ. ट. श्रियाः. ७ ख. ग. ङ. च. छ. झ—ठ. कीर्त्याःकीर्तिः.

दैवतं [1]दैवतानां च भूतानां भूतसत्तमः ॥ तस्य के ह्यगुणा देवि [2]राष्ट्रे वाऽप्यथवा [3]पुरे ॥ १६ ॥
पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः ॥ क्षिप्रं तिसृभिरेताभिः सह रामोऽ[4]भिषेक्ष्यते ॥ १७ ॥
दुःखजं [5]विसृजन्त्यास्रं निष्क्रामन्तमुदीक्ष्य यम् ॥ अयोध्यायां [6]जनाः सर्वे शोकवेगसमाहताः ॥ १८ ॥
कुशचीरधरं [7]देवं गच्छन्तमपराजितम् ॥ सीतेवानुगता लक्ष्मीस्तस्य किंनाम दुर्लभम् ॥ १९ ॥
[8]धनुर्ग्रहवरो यस्य बाणखड्गास्त्रभृत्स्वयम् ॥ लक्ष्मणो व्रजति ह्यग्रे तस्य किंनाम दुर्लभम् ॥ २० ॥

माया अप्यतिशयोनेनेतिभावः ॥ १५ ॥ दैवतंदैवतानांच दैवतानामपिसकलकार्यनिर्वहणक्षमइत्यर्थः । भूतानांभूतसत्तमः उत्तमभूतमित्यर्थः । भूतत्वंसत्ता सर्वेषांसत्ता तत्सत्ताधीनेतिभावः । तस्यैवंभूतस्यसर्वगुणसंपन्नस्यदेशेवनेवापुरेवाकेअगुणाःनकोपीत्यर्थः । अगुणः प्रतिबन्धकीभूतइतियावत् ॥ १६ ॥ सहेत्यत्रसइतिपदच्छेदः । सरामः पृथिव्यावैदेह्याश्रियाविजयलक्ष्म्याच एताभिः तिसृभिःसहक्षिप्रमभिषेक्ष्यते हेतिसंबन्धः ॥ १७ ॥ अस्यश्लोकस्यपृथिव्यासहेतिपूर्वश्लोकस्थेन सरामोभिषेक्ष्यतइत्यनेनसंबन्धः ॥ १८ ॥ लक्ष्मीरिवस्थितासीताऽनुगतेत्यन्वयः । अनेन राज्यश्रीरन्यन्नपरिगृह्णातीतिद्योत्यते ॥ १९ ॥ धनुर्ग्रहवरः धनु-

कीर्तिःकीर्तित्वप्रदः । क्षमायाःक्षमा क्षमात्वप्रदः । देवतानांदैवतं उपास्यः । **तनि०** "तमेवभान्तमनुभातिसर्वं" इतिश्रुत्यर्थमुपपादयति । सूर्यस्य सकललोकप्रकाशकस्यापिप्रकाशकः सवितृमण्डलान्तर्वर्तीसन्स्फटिकमुकुरान्तस्स्थितदीपन्यायेनप्रकाशयतीतिपरमार्थः । अग्नेरग्निः अग्नेर्वस्तुपरिपाकदाहकत्वादिकं तत्संकल्पाधीनमित्यर्थः । "अहंवैश्वानरोभूत्वा" इत्यादिश्रवणात् प्रभोः प्रभुः ब्रह्मरुद्रादेःसृष्ट्यादिसामर्थ्यप्रदानेननिर्वाहकः । श्रियःश्रीः ब्रह्मादीनांयत्कटाक्षलेशायत्तमीश्वरत्वं नारायणस्यापियदपाङ्गभूयस्त्वनिबन्धनंपरब्रह्मत्वं तस्याअपि यदाश्रयणाच्छ्रीत्वंसिध्यतीति स्वस्मिन्नीश्वरत्वपूर्तिनिमित्तायालक्ष्म्याअपि स्वरूपनिर्वाहकइत्यर्थः । कीर्त्याःकीर्तिः "तस्यनाममहद्यश" इति यत्संबन्धान्महत्त्वमनितरसाधारणमितिकृत्वा कीर्त्याअपिकीर्त्यावहः । क्षमाक्षमा सर्वाधारभूतायाभूमेराधारइत्यर्थः । "यस्मिन्द्यौःपृथिवीचान्तरिक्षं" इत्यादिश्रुतेः । दैवतानांदैवतमित्यनेन "तंदैवतानांपरमंचदैवतं" इतिश्रुत्यर्थउक्तः । भूतानांभूतसत्तमः सत्तामात्रवतांसत्तानिर्वाहकः । एवं कल्याणगुणाकरत्वमभिव्यज्य हेयगुणविरोधित्वंव्यञ्जयति । "तस्यके" इति "राष्ट्रेवाप्यथवापुरे" इतिविभूतिद्वयसंबन्धेप्यजहत्स्वरूपत्वंव्यञ्जितं । दोषविरोधित्वं अपहतपाप्मेत्यादिश्रुतिप्रसिद्धमिति द्योतयितुं हिशब्दप्रयोगः । **शि०** रामस्यसर्वनियन्तृत्वंबोधयन्नाह—**सूर्यस्येति** । सूर्यस्य सर्वावभासकादित्यस्यापि सूर्यः अवभासकइत्यर्थः । ननु "तमेवभान्तमनुभातिसर्वं" इत्यादिश्रुत्या सूर्यावभासकत्वंब्रह्मणःप्रसिद्धमिति ब्रह्मकिमित्यत आह । अग्नेः सर्वाग्र्यस्यप्रकाशब्रह्मणोप्यग्निः प्रकाशकइत्यर्थः । अतएव प्रभोः सर्वनियन्तुर्ब्रह्मादित्रयस्यापि प्रभुर्नियन्ता । अग्निशब्दस्यब्रह्मपरत्वं "अग्र्यत्वादग्निनामासौ" इत्यादिना मध्वाचार्यैर्व्याख्यातं । अभिमतश्चायंसिद्धान्तोभूषणकृतामपि । अतएव प्रभोःसर्वनियन्तुरपिनियन्तेतितैर्व्याख्यातं । सर्वनियन्तृत्वंचविष्ण्वादीनामेवेतिभावः । किंच सूर्यस्य प्रकाशकारणस्यापि सूर्यः कारणमित्यर्थः । ननु सूर्यकारणत्वेनवह्निःप्रसिद्धइतिकिंसइत्यतआह । अग्नेरप्यग्निः कारणमित्यर्थः । ननु सर्वकारणत्वेनब्रह्मणः प्रसिद्धत्वादिति किंतदित्यतआह । प्रभोःसकलनियन्तुरपि प्रभुर्नियन्तेत्यर्थः । अग्र्या रामाग्रेगमनशीला क्षमाक्षमा क्षमायाःपृथिव्याइव क्षमाक्षान्तिर्यस्यास्सा । किंच क्षमायाःशान्तेरपि क्षमा शान्तिः अतिशान्तिविशिष्टेत्यर्थः । किंच क्षमयापृथिव्या क्षम्यते सह्यतेपाल्यतइत्यर्थः । सासीतातु श्रियःलक्ष्म्याः श्रीः स्वामिनीत्यर्थः । अतएव कीर्त्याः रामयशसःकीर्तिः कारणभूतेत्यर्थः । सूर्यस्य सर्वजगदवभासकस्यापि सूर्योऽवभासकः अग्नेः सर्वदाहकस्याप्यग्निर्दाहकइतिभूषणोक्तार्थस्तुनयुक्तः । दाहकत्वेनप्रकाशकत्वेनच द्वयोःप्रसिद्ध्याऽन्यतरोपादानस्यनिरर्थकत्वापत्तिः । नापि सूर्यस्यापिप्रकाशकोदाहकश्च अग्नेरपि प्रकाशकोदाहकश्चेत्यर्थोयुज्यते । पतत्प्रकर्षदोषवत्तापत्तेरितिदिक् । हि पूर्वोक्तहेतोः भूतसत्तमः भूतान्प्राणिनःसत्तमयतिसत्तममिच्छतियस्सीतारामः भूतानांपृथिव्याद्यधोदेशवासिनांदेवतानां ऊर्ध्वदेशवासिनांच दैवतं देवता पूज्यइत्यर्थः । तस्यसीतारामस्य अगुणाः नित्यगुणविरोधिनः अन्यथाकर्तारइत्यर्थः । देशेदण्डकादौ पुरेलङ्कादौवा केसन्ति नकेपीत्यर्थः ॥ १५—१६ ॥ **ति०** अभिषेक्ष्यते वसिष्ठादिभिरितिशेषः ॥१७॥ **स०** एवं जनानुरागविषयोरामः शीघ्रमभिषेक्ष्यतइतिपूर्वेणान्वयः । "जनानुरागप्रभवाश्चसंपद" इत्युक्तेः ॥१८॥ **ती०** तथापि तस्यवनेविषयसुखंनास्तीतिशोचन्तींप्रत्याह—**कुशचीरेति** । कुशचीरादिधरमपि देवं दीप्यमानं लक्ष्मीः राज्यलक्ष्मीःसीतेव सीतात्मना ॥ १९ ॥ **स०** लक्ष्मणस्य शग्र्यारूपत्वाद्राजश्रेष्ठरामपुरतोगमनमुचितमितिध्वन्यते ॥ २० ॥

**[ पा० ]** १ ङ. छ—ठ. देवतानां. २ ङ. छ. ट. देशेवा. क. ख. झ. वनेवा. ३ ङ. छ. ठ. वने. ४ ज. अभिषिच्यते. ५ क—छ. झ. ञ. ट. विसृजत्यश्रु. ६ क—छ. झ. ञ. ट. जनःसर्वःशोकवेगसमाहतः. ७ ख. ग. ङ. छ. ज. झ. ट. वीरं. घ. रामं. ८ ङ. ज. ञ. धनुर्धरवरो.

निवृत्तवनवासं तं द्रष्टासि पुनरागतम् ॥ जहि शोकं च मोहं च देवि सत्यं ब्रवीमि ते ॥ २१ ॥
शिरसा चरणावेतौ वन्दमानमनिन्दिते ॥ पुनर्द्रक्ष्यसि कल्याणि पुत्रं चन्द्रमिवोदितम् ॥ २२ ॥
पुनः प्रविष्टं दृष्ट्वा तमभिषिक्तं महाश्रियम् ॥ समुत्स्रक्ष्यसि नेत्राभ्यां क्षिप्रमानन्दजं पयः ॥ २३ ॥
मा शोको देवि दुःखं वा न रामे दृश्यतेऽशिवम् ॥ क्षिप्रं द्रक्ष्यसि पुत्रं तं ससीतं सहलक्ष्मणम् ॥२४॥
त्वयाऽशेषो जनश्चैव समाश्वास्यो यदाऽनघे ॥ किमिदानीमिमं देवि करोषि हृदि विक्लबम् ॥२५॥
नार्हा त्वं शोचितुं देवि यस्यास्ते राघवः सुतः ॥ न हि रामात्परो लोके विद्यते सत्पथे स्थितः॥२६॥
अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम् ॥ मुदाऽश्रु मोक्ष्यसे क्षिप्रं मेघलेखेव वार्षिकी ॥ २७ ॥
पुत्रस्ते वरदः क्षिप्रमयोध्यां पुनरागतः ॥ पाणिभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ॥ २८ ॥
अभिवाद्य नमस्यन्तं शूरं ससुहृदं सुतम् ॥ मुदाऽऽस्रैः प्रोक्ष्यसि पुनर्मेघराजिरिवाचलम् ॥ २९ ॥

आश्वासयन्ती विविधैश्च वाक्यैर्वाक्योपचारे कुशलाऽनवद्या ॥
रामस्य तां मातरमेवमुक्त्वा देवी सुमित्रा विरराम रामा ॥ ३० ॥
निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः ॥
सद्यः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

श्रीरामेणस्वानुगन्तृषुपौरेषुनगरंप्रतिनिवर्तनप्रार्थनेपिस्वविरहासहिष्णुतयापुनरनुव्रजत्सुसीतालक्ष्मणाभ्यांसहरथादवरुह्य पद्भ्यामेवगमनम् ॥ १ ॥ ब्राह्मणादिभिःपौरैःपुनर्नगरंप्रतिनिवर्तनायबहुधाप्रार्थनेपिपितृवचनपालनायवनंप्रत्येवगच्छतारामेणसायाह्नेसानुचरेणतमसातीरगमनम् ॥ २ ॥

[13]अनुरक्ता महात्मानं रामं सत्यपराक्रमम् ॥ अनुजग्मुः [14]प्रयान्तं तं वनवासाय मानवाः ॥ १ ॥
[15]निवर्तितेपि च बलात्[16]सुहृद्वर्गे च राजनि ॥ नैव ते संन्यवर्तन्त रामस्यानुगता रथम् ॥ २ ॥

धैरश्रेष्ठः ॥ २०—२१ ॥ एतौ परिदृश्यमानसर्वलक्षणसम्पन्नौ । उदितंचन्द्रं प्रतिपच्चन्द्रम् ॥ २२–२३ ॥ हेदेवि रामे अशिवंअशुभं नदृश्यते । अतः शोकः प्रलापादिः । दुःखं मनोव्यथावा । मा नकार्यमित्यर्थः ॥ २४ ॥ विक्लबम् भावप्रधानोनिर्देशः ॥ २५—२६ ॥ मेघलेखा मेघपङ्क्तिः ॥ २७—२८ ॥ अभिवाद्यनमस्यन्तं अभिवादनपूर्वकंप्रणमन्तं ॥२९॥ वाक्योपचारे वाक्यैरुपचारविषये ॥३०—३१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः॥४४॥

एवं सुमित्रयाकौसल्याश्वासनपर्यन्तंकथासंघटनं परिसमाप्य संप्रतिरामगमनवृत्तान्तंप्रस्तौति—अनुरक्ताइत्यादि ॥ १ ॥ सुहृद्वर्गे राजसुहृद्भूतावरोधवर्गे ।

ति० हेअनघे यस्मात्त्वयाशेषोऽयंजनस्त्वत्परिवाररूपत्वात्त्वयासमाश्वास्यः अतोदेवि त्वं हृदिविक्लबंदुःखं किंकरोषि । शि० यत् विक्लबं शोकंहृदिकरोषि तत्किं कुत्सितं नयुक्तमित्यर्थः ॥२५॥ शि० अभिवाद्य सुहृद्भिरभिवादनंकारयित्वा । ति० प्रोक्षसे उक्षसेचने वर्तमानसामीप्येलट् ॥२९॥ ति० वाक्योपचारे वाक्यरचनायां । रामा रमणीया । शि० रामा रामविषयकस्मृतिमती । रामाशब्दः अर्शआद्यजन्तः ॥ ३०॥ शि० निशम्यश्रुत्वा विद्यमानाया रामस्यमातुः ॥ ३१ ॥ इतिचतुश्चत्वारिंशस्सर्गः ॥ ४४ ॥
ति० वनवासायप्रयान्तमित्यन्वयः ॥ १ ॥ शि० सुहृद्धर्मेण अनुव्रजनेसुहृद्भिराचरणीयोधर्मस्तेन ''यमिच्छेत्पुनरायान्तंनैव

[ पा० ] १ क. वन्दमानंदिनेदिने. २ क. ख. ङ. च. छ. झ. ञ. ट. शीघ्रं. ३ घ. जलं. ४ ज. ऽशुभं. ५ क. ख. ग. ङ—ठ. त्वं. ६ क—छ. झ—ठ. जनश्चायं. ७ क—ठ. मिदं. ८ घ. रामाद्वरो. ९ ङ. च. झ. ठ. रेखेव. १० क. ख. घ—छ. झ. ट. ठ. कराभ्यां. ११ झ. प्रोक्षसेपुत्रं. १२ ख. राशि. १३ ग. अनुरक्तं. १४ ङ. छ. प्रयातं. १५ छ. झ. ट. ठ. निवर्तितेऽतीव. १६ ङ. छ. झ. ट. ठ. सुहृद्धर्मेण. क. घ. सुहृद्वर्गेपि.

अयोध्यानिलयानां हि पुरुषाणां महायशाः ॥ बभूव गुणसंपन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥
स याच्यमानः काकुत्स्थः स्वाभिः[1] प्रकृतिभिस्तदा ॥ कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत ॥ ४ ॥
अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव ॥ उवाच रामः स्नेहेन[2] ताः प्रजाः स्वाः प्रजा इव ॥ ५ ॥
या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनाम् ॥ मत्प्रियार्थं विशेषेण भरते सा निवेश्यताम्[3] ॥ ६ ॥
स हि कल्याणचारित्रः कैकेय्यानन्दवर्धनः[4] ॥ करिष्यति यथावद्वः प्रियाणि च हितानि च ॥७॥
ज्ञानवृद्धो वयोबालो मृदुर्वीर्यगुणान्वितः ॥ अनुरूपः स वो भर्ता भविष्यति भयापहः ॥ ८ ॥
स हि राजगुणैर्युक्तो युवराजः समीक्षितः ॥ अपि चापि मया शिष्टैः कार्यं वो भर्तृशासनम् ॥ ९ ॥
न च[5] तप्येद्यथा चासौ वनवासं गते मयि ॥ महाराजस्तथा कार्यो मम प्रियचिकीर्षया ॥ १० ॥
यथायथा दाशरथिर्धर्म[6] एव स्थितोऽभवत् ॥ तथातथा प्रकृतयो रामं पतिमकामयन्[7] ॥ ११ ॥
बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह ॥ चकर्षेव गुणैर्बद्ध्वा[8] जनं पुरनिवासिनम् ॥ १२ ॥
ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा ॥ वयःप्रकंपशिरसो दूरादूचुरिदं वचः ॥ १३ ॥
वहन्तो जवना रामं भोभो जात्यास्तुरङ्गमाः ॥ निवर्तध्वं न गन्तव्यं हिता भवत भर्तरि ॥ १४ ॥
कर्णवन्ति हि भूतानि विशेषेण तुरङ्गमाः ॥ यूयं तस्मान्निवर्तध्वं याचनां प्रतिवेदिताः ॥ १५ ॥
धर्मतः स विशुद्धात्मा वीरः शुभदृढव्रतः ॥ उपवाह्यस्तु वो[9] भर्ता नापवाह्यः पुराद्वनम् ॥ १६ ॥
एवमार्तप्रलापांस्तान्वृद्धान्प्रलपतो द्विजान् ॥ अवेक्ष्य सहसा रामो रथादवततार ह[10] ॥ १७ ॥

---

राजनिच सचिवसहितेराजनिच । ते पौरजनाः ॥ २—३ ॥ याच्यमानः निवर्तस्वनिवर्तस्वेतिप्राथ्र्यमानः । सत्यं सत्यप्रतिज्ञं ॥ ४ ॥ स्वाःप्रजाइव स्वान्यपत्यानीव ॥ ५ ॥ स्वेनपितृवचनपरिपालनस्यावश्यकर्तव्यत्वात्प्रजानुरागेणताभ्योहितमुपदिशति—याप्रीतिरित्यादिना ॥ ६—८ ॥ हि यस्मात्कारणात्। भरतो वः युष्माकं। युवराजः समीक्षितः राज्ञेतिशेषः । अतोमया शिष्टैः अवशिष्टैः लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि । भर्तृशासनंकार्यं । अपिचेतिवक्तव्यान्तरसमुच्चये ॥ ९ ॥ मयिवनंगतेसति असौमहाराजः यथा नसन्तप्येत् ममप्रियचिकीर्षया तथाकार्यः ॥ १० ॥ धर्मे पितृवचनपरिपालनरूपेधर्मे । तथातथाप्रकृतयो रामंपतिमकामयन् आदौराजाज्येष्ठंभवन्तमेव अस्मद्रक्षणार्थंयुवराजत्वेनकल्पितवान् । अयमर्थोभवतास्माभिश्चकर्तव्यइतिराममेवपुनःपुनःपतिमकामयन्तेत्यर्थः ॥ ११ ॥ सौमित्रिणासहेत्यनेन रामस्येवलक्ष्मणस्यापिगुणपौष्कल्यमस्तीतिद्योत्यते । गुणैरेव गुणैः पाशैरितिश्लिष्टरूपकं ॥ १२ ॥ त्रिविधमितिक्रियाविशेषणं । ओजसा तपोबलेन । वयसा प्रकम्पंचञ्चलं शिरोयेषांतेतथा ॥ १३—१४ ॥ याचनांप्रतिवेदिताः प्रार्थनांज्ञापिताः । अस्माभिरितिशेषः ॥ १५ ॥ उपवाह्यः पुरसमीपेवाह्यः ॥ १६ ॥ आर्तप्रलापान्प्रलपतः

---

दूरमनुव्रजेत्'' इत्याद्युक्तिरूपेणेत्यर्थः । राजनिनिवर्तितेसति ॥ २ ॥ **शि०** अयोध्यानिवासिनांभवतामपि या यादृशीप्रीतिः स्नेहः योबहुमानःअतिसत्कारश्च सासच मत्प्रियार्थं मन्निष्ठप्रीतिवृद्ध्यर्थं भरतेविधीयतांक्रियताम् ॥ ६ ॥ **ती०** प्रियाणि इहलोके सुखकराणि हितानि परलोकार्थमनुष्ठेयानि वर्णाश्रमाचारादीनि ॥ ७ ॥ **ती०** वयोबालोपि ज्ञानादिनावृद्धः । मृदुरपि वीर्यगुणान्वितः । **ति०** वीर्यगुणान्वितोपि मृदुः ॥८॥ **ती०** धर्ममेवास्थितोभवत् धर्ममेवपरिगृह्णाति ॥११॥ **ती०** रामस्यपरमकरुणामुत्पादयितुं तुरङ्गमान्प्रत्याहुः—**वहन्तइति** । वहन्तः रथेनप्रापयन्तः । हिताभवत भर्तारंवनं ननयतेतियावत् । ब्राह्मणयाच्ञामतिक्रम्य युष्मद्गमनं भर्तुरहितमितिभावः । **ति०** जात्याः उत्तमजातीयाः ॥ १४ ॥ **ती०** एवं प्रार्थितानांतेषांवेगगमनदुःखादाहुः । कर्णवन्तीति । विशेषेण यूयंकर्णवन्तइत्यनुकर्षः । तस्माद्भवद्भिर्वनं नगन्तव्यं । अपितु याचनामस्मदीयां प्रतिवेदिताः ज्ञातवन्तःनिवर्तध्वं ॥ १५ ॥

**[ पा० ]** १ ङ. छ. झ. ठ. ताभिः. २ ङ. च. छ. झ—ठ. सस्नेहं. ३ ङ. च. छ. झ. ञ. ठ. विधीयतां. ४ ख. नन्दिवर्धनः. ५ क. ङ. च. छ. झ—ठ. संतप्येत्. ख. सतप्येत्. ६ क. ख. ङ. च. ज. ञ. धर्ममेवास्थितो. क. ग. धर्मएवास्थितो. छ. झ. ट. ठ. धर्ममेवाश्रितो. ७ ख. ग. मकाङ्क्षयन्. ८ क—ठ. बद्धं. ९ क. भर्तानो. १० क. च. सः.

पद्भ्यामेव [1]जगामाथ ससीतः सहलक्ष्मणः ॥ संनिकृष्टपदन्यासो रामो वनपरायणः ॥ १८ ॥
[2]द्विजातींस्तु पदातींस्तान्रामश्चारित्रवत्सलः ॥ न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९ ॥
गच्छन्त[3]मेव तं दृष्ट्वा रामं संभ्रान्तचे[4]तसः ॥ ऊचुः परमसंतप्ता रामं वाक्यमिदं द्विजाः ॥ २० ॥
ब्राह्मण्यं [5]कृत्स्नमेतत्त्वां ब्रह्मण्यमनुगच्छति ॥ द्विजस्कन्धाधिरूढास्त्वामग्नयोऽप्यनुयान्त्यमी ॥ २१ ॥
वाजपेय[6]समुत्थानि छत्राण्येतानि पश्य नः ॥ पृष्ठतोनु[7]प्रयातानि मेघानिव जलात्यये ॥ २२ ॥
अनवाप्तातपत्रस्य रश्मिसंतापितस्य ते ॥ एभिश्छायां करिष्यामः स्वै[8]श्छत्रैर्वाजपेयिकैः ॥ २३ ॥
या हि नः सततं बुद्धिर्वेदमन्त्रानुसारिणी ॥ त्वत्कृते सा कृता वत्स वनवासानुसारिणी ॥ २४ ॥
हृदयेष्वे[9]व तिष्ठन्ति वेदा ये नः परं धनम् ॥ व[10]त्स्यन्त्यपि गृहेष्वेव दाराश्चारित्र[11]रक्षिताः ॥ २५ ॥
[12]न पुनर्निश्चयः कार्यस्त्वद्गतौ [13]सुकृता मतिः ॥ त्वयि धर्मव्यपेक्षे तु किं स्याद्ध[14]र्ममपेक्षितुम् ॥ २६ ॥
[15]याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः ॥ शिरोभिर्निभृताचार महीपतनपांसुलैः ॥ २७ ॥

आर्तवाक्यानिप्रयुञ्जानानित्यर्थः ॥ १७ ॥ सन्निकृष्टपदन्यासःपद्भ्यांजगामेति । ब्राह्मणवाक्यश्रवणानन्तरं रथगमनेदोषोभवतीति प्रतिनिवृत्त्यब्राह्मणाश्वासनेव्रतभङ्गोभवतीतिधियारथादवतीर्यतदागमनपर्यन्तंमन्दंमन्दंजगामेत्यर्थः ॥१८॥ रथादवतीर्यकिमर्थंपादगमनं कृतवानित्याशङ्क्याह—द्विजातीनिति । रथेनद्विजातीन्परिमोक्तुंनशशाक रथेनोपलक्षितःसन्सावरोधंदशरथमिवाञ्जल्यादिनाद्विजातीन्निवर्तयितुंनशशाकेत्यर्थः । घृणाचक्षुः दयार्द्रचक्षुरित्यर्थः ॥ १९ ॥ गच्छन्तमेव बहुशोनिवृत्तिहेतुप्रदर्शनेपिपितृवचनचिकीर्षयागच्छन्तमेवेत्यर्थः ॥ २० ॥ दुःखप्रलापादिनाप्यनिवृत्तंरामंसहवनगमनलक्षणं महाभारमारोप्यनिवर्तयितुमुद्युञ्जते—ब्राह्मण्यमित्यादिना । ब्राह्मण्यं ब्राह्मणसमूहः । "ब्राह्मणमाणववाडबाद्यत्" इतियत्प्रत्ययः । ब्रह्मसु ब्राह्मणेषु साधुःब्रह्मण्यः तं अग्नयः अरण्यारोपिताः । केवलानांद्विजस्कन्धाधिरूढत्वासंभवात् ॥ २१ ॥ वाजपेयसमुत्थानि वाजपेयानुष्ठानसंभृतानि । जलात्यये शरदि ॥ २२॥ वाजपेयिकैः वाजपेयप्राप्तैः । "यावज्जीवं नकश्चनप्रत्यवरोहेत् बृहस्पतिसवेनवा प्रत्यवरोहणीयेनयजेतश्वेतच्छत्रीभवतीतिविज्ञायते" इतिवाजपेययाजिनांश्वेतच्छत्रधारणविधानादितिभावः ॥२३॥ अस्माकंबुद्धिरेतावन्तंकालंनिश्चिन्ततयामन्त्रविषयाभूत् इदानींत्वत्कृतवनवासविषयाऽभूदितिरामेमहान्तं भारमारोपयन्ति—याहीत्यादिना ॥ २४ ॥ ब्राह्मणानां धनभूतंवेदंपरित्यज्यसहधर्मचारिदारसंरक्षणमप्यकृत्वाकथमस्माभिः सहगम्यतइत्याकाङ्क्षायामाह—हृदयेष्विति । नःपरंधनंउत्कृष्टधनभूतायेवेदास्तेहृदयेष्वेव तिष्ठन्ति । अनुच्चारणेतेषांनकापिहानिरितिभावः । चारित्रेणपातिव्रत्येनरक्षितादाराश्चगृहेष्वेवतिष्ठन्ति । चारित्राणामेवतद्रक्षकत्वान्नास्मद्रक्ष्यास्तइतिभावः ॥ २५ ॥ अद्यमत्प्रार्थनयानिवर्तध्वमित्यत्राह—नेति । त्वद्गतौ त्वन्निवर्तनरूपगतौ । मतिः सुकृता सुष्ठुकृता । निश्चयः वनगमननिश्चयः । पुनर्नकार्यः त्वयेतिशेषः । त्वयि धर्मव्यपेक्षे पितृवचनपरिपालनरूपधर्मसापेक्षेसति । अस्माभिः धर्ममपेक्षितुं पालयितुं किंनिमित्तं स्यात् । त्वयिवनंगतेस्माभिर्धर्मएवत्यक्तव्यइतिभावः । यद्वा त्वयितुधर्मपरायणे त्वयितुधर्मव्यपेक्षेसति ब्राह्मणप्रार्थनाकरणरूपधर्मनिरपेक्षेसति । किंभूतंधर्ममपेक्षितुंस्यात् नकिमपीत्यर्थः ॥ २६ ॥ ज्ञानवयस्तपोवृद्धाअपिद्विजाः विश्लेषासहिष्णुतयाप्रणामेनापिरामं निवर्तयितुमुद्युञ्जते—याचितइति । हेनिभृताचार निश्चलधर्मानुष्ठान । हंसशुक्लशिरोरुहैः पलितकेशैः । महीपतनपांसुलैः कृतसाष्टाङ्गप्रणामैः । नः अस्माकं । शिरोभिर्याचितोनिवर्तस्व । वृद्धब्राह्मणानांक्षत्रियकुति० यद्वा राज्ञोविष्णवंशत्वेन नतौ नदोषइत्याहुः ॥ २७ ॥

[पा०] १ ङ. छ. जनान्सर्वानुपातिष्ठत्सलक्ष्मणः. २ क. ख. घ. ङ. च. झ. ञ. ट. द्विजातीन्हि. ३ ख. मेवं. ४ घ—छ. झ. ञ. ट. मानसाः. ५ ग. ज. सर्वे. ६ क. समृद्धानि. ७ क—घ. ज. प्रयातान्हिहंसानिव. ८ ख. स्वच्छत्रैः. ९ क—घ. च. ज—ट. ष्ववतिष्ठन्ते. १० क. ख. घ. वसन्त्यपि. ११ क. रक्षकाः. १२ ङ. छ. झ. ञ. ट. पुनर्ननिश्चयः. १३ ख. सुकृतात्मभिः. १४ ङ. च. झ. ट. धर्मपथेस्थितं. १५ ख. याचितःसन्निवर्तस्व.

बहूनां वितता यज्ञा द्विजानां य इहागताः ॥ तेषां समाप्तिरायत्ता तव वत्स निवर्तने ॥ २८ ॥
भक्तिमन्ति हि भूतानि जङ्गमाऽजङ्गमानि च ॥ याचमानेषु राम त्वं भक्तिं भक्तेषु दर्शय ॥ २९ ॥
अनुगन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः ॥ उन्नता वायुवेगेन विक्रोशन्तीव पादपाः ॥ ३० ॥
निश्चेष्टाहारसंचारा वृक्षैकस्थानविष्ठिताः ॥ पक्षिणोपि प्रयाचन्ते सर्वभूतानुकम्पिनम् ॥ ३१ ॥
एवं विक्रोशतां तेषां द्विजातीनां निवर्तने ॥ ददृशे तमसा तत्र वारयन्तीव राघवम् ॥ ३२ ॥
ततः सुमन्त्रोपि रथाद्विमुच्य श्रान्तान्हयान्संपरिवर्त्य शीघ्रम् ॥
पीतोदकांस्तोयपरिप्लुताङ्गानचारयद्वै तमसाविदूरे ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः ॥४५॥

---

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रामेणलक्ष्मणंप्रत्ययोध्यास्थजनावस्थोत्प्रेक्षणपूर्वकंपितरौप्रत्यनुशोचनं ॥ १ ॥ लक्ष्मणसुमन्त्रपरिकल्पितपल्लवतल्पेप्रसुप्तेन रामेणनिशीथेप्रबुध्यनिद्रायमाणानुगतपौरजनवञ्चनायसुमन्त्रंप्रतिरथस्यायोध्याभिमुख्येननोदनपूर्वकंपुनःप्रतिनिवर्तनचोदना ॥ २ ॥ तथा यथोक्तकारिणासुमन्त्रेणप्रत्यानीतरथाधिरोहणेनसीतालक्ष्मणाभ्यांसहवनंप्रतिनिर्गमनम् ॥ ३ ॥

ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ॥ सीतामुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥
इयमद्य निशा पूर्वा सौमित्रे प्रहिता वनम् ॥ वनवासस्य भद्रं ते स नोत्कण्ठितुमर्हसि ॥ २ ॥

---

मारप्रणामःपरत्वबुद्ध्या ॥ २७ ॥ येद्विजाइहागतास्तेषां येयज्ञाः विततः विस्तृताः संभृतसंभाराइतियावत् । तेषांयज्ञानां समाप्तिस्तवनिवर्तने आयत्ता त्वन्निवर्तनाधीनेत्यर्थः । एवं नक्रतंचेत्सर्वेयज्ञास्त्वयैवविघ्निताःस्युरितिभावः ॥ २८ ॥ नकेवलंवयमेव तिर्यक्स्थावराण्यपित्वन्निवृत्तिमपेक्षन्तइत्याह—भक्तिमन्तीति । भक्तिं स्नेहं । दर्शय सफलयेत्यर्थः ॥ २९ ॥ मूलैः पादस्थानीयैः । त्वामनुगन्तुमशक्ताः । उद्धतवेगिनः प्रतिहतवेगिनः । वायुवेगेनउन्नताः ऊर्ध्वबाहवइवस्थिताइतिभावः । पादपाःविक्रोशन्तीव क्रन्दन्तीव । वायुवेगोत्थशब्दैरितिभावः । उद्धतवेगिभिरित्यपिपाठः ॥ ३० ॥ चेष्टा चलनादिकं आहारः संचाराश्चयेभ्योनिर्गतास्तेतथोक्ताः । प्रयाचन्ते प्रार्थयन्ते । निवृत्तिमितिशेषः । एवंतिर्यक्स्थावराणामपिखेदो रामस्यसर्वशरीरित्वात् शरीरिणोवैपरीत्येहिशरीरव्यथादृष्टा ॥ ३१ ॥ निवर्तनेविषये । यद्वा द्विजातीनामितिसंबन्धसामान्येषष्ठी । द्विजातिभिः प्रार्थ्यमानरामनिवर्तनइत्यर्थः ॥ ३२ ॥ संपरिवर्त्य अध्वश्रमनिवृत्त्यर्थंपरिवेष्टनंकारयित्वा अचारयत्भक्षितयवसानकरोत् ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

सीतामुद्वीक्ष्यलक्ष्मणंप्रतिकथनं वक्ष्यमाणस्यानुत्कण्ठाकारणस्यसीताविषयेपितुल्यत्वज्ञापनाय ॥ १ ॥ वनवासस्यपूर्वा प्रथमा । अद्येयंनिशा इदानीमुपस्थि-

---

पादपाः वायुवेगेन वायुवेगजशाखाचलनशब्दैर्विक्रोशन्तीव । त्वन्निवर्तनायेतिशेषः ॥ ३० ॥ इतिपञ्चचत्वारिंशस्सर्गः ॥ ४५ ॥

**ती०** वनवासस्य वनवाससंबन्धिनीनांनिशानांमध्यइत्यर्थः । पूर्वा प्रथमा अद्यइयंनिशाइदानीमुपस्थितारात्रिः वनंप्रहिता वनेप्राप्ता । वनवासदिनेष्वेकोदिवसोगतप्रायइत्यर्थः । अतस्सत्वंउत्कण्ठितुंगृहसौख्यादिवाञ्छांकर्तुंनार्हसि । **शि०** अवनंवनवासविरोधिवस्तु उत्कण्ठितुंस्मर्तुंनार्हसि । तेभद्रंकल्याणमेवसर्वत्रेतिशेषः । **ति०** हेसौमित्रे वनवासस्य वनवाससंबन्धिनिशानांमध्ये अद्यप्रवृत्तेयं निशा वनं वनवासंप्रति पूर्वाप्रहिताप्राप्ता । वनवासकालस्यैतन्निशामारभ्यगणनीयत्वात् । **स०** वनवासस्यपूर्वानिशा प्राथमिकी रात्रिरियंप्रहिताप्राप्ता अतइयंसीता अवनंरक्षणंअर्हतीतिशेषः । उत्कण्ठितुं गृहादिचिन्तांकर्तुं । यद्वा अद्येयंपूर्वानिशा अद्यच

**[ पा० ]** १ ङ. छ. झ. ञ. ट. भक्तिमन्तीह. २ ख. घ—छ. झ. ञ. ट. तेषुत्वं. क. ज. भूतेषु. ३ क. ख. ग. उद्धतवेदिभिः. ४ छ. झ. ञ. ट. निश्चिताः. क. घ. निष्ठिताः. ग. रक्षिताः. ५ ख. घ. ङ. झ. ट. कंपनं. ६ क. प्रस्थिता. ७ ङ. ज. झ. ट. नचोत्कण्ठितुं.

पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः ॥ यथानिलयमायद्भिर्निलीनानि मृगद्विजैः ॥ ३ ॥
अद्यायोध्या तु नगरी राजधानी पितुर्मम ॥ सस्त्रीपुंसागतानस्माञ्शोचिष्यति न संशयः ॥ ४ ॥
अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः ॥ त्वां च मां च नरव्याघ्र शत्रुघ्न[1]भरतौ तथा ॥ ५ ॥
पितरं चानुशोचामि मातरं च यशस्विनीम् ॥ अपि [2]वाऽन्धौ भवेतां [3]तु रुदन्तौ तावभीक्ष्णशः ॥६॥
भरतः खलु धर्मात्मा पितरं मातरं च मे ॥ [4]धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥
भरतस्यानृशंसत्वं वि[5]चिन्त्याहं पुनः पुनः ॥ नानुशोचामि पितरं मातरं [6]चापि लक्ष्मण ॥ ८ ॥
त्वया कार्यं नरव्याघ्र मामनुव्रजता कृतम् ॥ अन्वेष्टव्या हि [7]वैदेह्या [8]रक्षणार्थे सहायता ॥ ९ ॥
अद्भिरे[9]वं तु सौमित्रे [10]वत्स्याम्यद्य निशामिमाम् ॥ एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥१०॥
एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः ॥ अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥
सोऽश्वान्सुमन्त्रः संयम्य सूर्येऽस्तं समुपागते ॥ प्रभूतयवसान्कृत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥
उपास्य तु शिवां संध्यां दृष्ट्वा रात्रि[10]मुपस्थिताम् ॥ रामस्य शयनं चक्रे सूतः सौमित्रिणा सह ॥१३॥
[11]तां शय्यां तमसातीरे वीक्ष्य वृक्ष[12]दलैः कृताम् ॥ रामः सौमित्रिणा सार्धं सभार्यः संविवेश ह ॥१४॥
सभार्यं सं[13]प्रसुप्तं तं [14]भ्रातरं वीक्ष्य लक्ष्मणः ॥ कथयामास सूताय रामस्य विविधान्गुणान् ॥ १५ ॥
[15]जाग्रतो ह्येव तां रात्रिं सौमित्रेरुदितो रविः ॥ सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६ ॥

तारात्रिः । प्रहिता गतप्राया । अतःस त्वंउत्कण्ठितुं नार्हसि । सीतामुद्वीक्ष्यसौमित्रिमब्रवीदित्यस्यैवंवाभिप्रायः । अतिसुकुमारीसीताकथंपद्भ्यामेववनंगच्छेदितिनोत्कण्ठितुमर्हसीति ॥ २ ॥ शून्यानि निष्प्रभाणि। यथानिलयं यथास्थानंआयद्भिरागच्छद्भिः । मृगद्विजैर्निलीनानि व्याप्तानि तात्कालिकतच्छब्दैःरुदन्तीव । निष्प्रभत्वेनरोदनोत्प्रेक्षा ॥ ३ ॥ वनरोदनोत्प्रेक्षयाउद्बुद्धसंस्कारोनगरवृत्तान्तंस्मरति—अद्येति । स्त्रीपुंसेति। "अचतुरविचतुरसुचतुरस्त्रीपुंस" इत्यादिनानिपातनादकारान्तत्वं ॥ ४ ॥ शोचनहेतुमाह—अनुरक्ता इति । गुणैर्हेतुभिः राजानंप्रत्यनुरक्ताहि राजानमित्युपादानमौद्धत्यपरिहाराय ॥ ५ ॥ रुदन्ताविति सन्ततरोदनवशेनान्धौस्यातामित्यर्थः ॥ ६ ॥ एवमपिकाचित्प्रत्याशास्तीत्याह—भरतइति ॥ ७—८ ॥ त्वया चोदितमेवकृतमित्याह—त्वयेति । कार्यं अवश्यकर्तव्यं । तत्रहेतुः—अन्वेष्टव्येति ॥९॥ अद्भिरेववत्स्यामि अपएवाहारीकृत्यवत्स्यामि । वनवासोपक्रमदिवसत्वादस्यपुण्यक्षेत्रत्वाच्चोपवासः । एतद्धिरोचते नान्यत् । अनुरक्तजनदुःखस्मरणादितिभावः ॥ १०—११ ॥ प्रभूतयवसान् पर्याप्ततृणान् । " यवसंतृणमर्जुनं " इत्यमरः । प्रत्यनन्तरः प्रतिगतमनन्तरकृत्यंयेनसतथोक्तः अवगतानन्तरकार्यइत्यर्थः । संनिहितइत्यर्थइत्येके ॥ १२ ॥ उपासनं नमस्कारः । सूतजातेरपिनमस्कारमात्रंसंभवति ॥ १३ ॥ वृक्षदलैः सौमित्रिणासार्धं सूतेनकृतांवीक्ष्येत्यन्वयः ॥१४—१५॥ तांरात्रिमिति अत्यन्तसंयोगेद्वितीया । सर्वांरात्रिंजाग्रतःसूतस्य सूताय रामस्यगुणान् कालक्षेपार्थंब्रुवतःसौमित्रेः सौमित्रौब्रुवतिसति । रविरुदितः उदितुमारब्धः ।

प्रहितायाःप्राप्तायाःसीतायाअवनंभद्रंयतः तेन इह रक्षणविषये उत्कण्ठितुं उत्साहंकर्तुं ॥ २ ॥ **ति०** यथायोगंस्वस्वनिलयमायद्भिः मृगद्विजैः निलीनानि सशब्दमन्तर्लीनतयाव्याप्तानि अतएव शून्यान्यरण्यानि रुदन्तीव अस्मान्दृष्ट्वाखिन्नानीववर्तन्ते पश्य ॥३॥ **ति०** नौ अस्मदर्थे अस्मन्निमित्तं । अन्धौनभवेतां अपितुभवेतामेव । अतःशोचामितौ ॥ ६ ॥ **स०** अद्भिरेवेति । अनेन स्वपितुरल्पजीवित्वात्तदुद्देशेनतीर्थोपवासःकृतइतिध्वन्यते॥१०॥**ति०** शयनं शयनस्थलं शर्करापांसूत्क्षेपणादिनाचक्रइत्यन्वयः ॥ १३ ॥

**[ पा० ]** १ घ. भरतावपि. २ ख. चान्धौ. ग—ट. नान्धौ. ३ ङ. च. झ. ञ. ट. नौ. ४ क. धर्मकामार्थ. ५ क—ङ. छ—ञ. संचिन्त्याहं. ६ च. छ. झ. चमहाभुज. ७ च. छ. झ. ञ. ट. रक्षणार्थं. ८ क. ख. घ. ङ. च. झ. ञ. ट. रेवहि. ९ क. च. घ. ञ. वत्स्याम्यत्र. छ. वत्स्याम्यथ. १० ख. ङ. छ. झ. ट. मुपागतां. ११ ज. शय्यांतां. १२ ङ. छ. झ. ट. दलैर्वृतां. १३ च. तंसंप्रसुप्तं. ङ. चं. छ. झ. ञ. ट. संप्रसुप्तंतु. १४ ग. घ. च. भ्रातरंप्रेक्ष्य. ङ. छ. झ. ट. श्रान्तंसंप्रेक्ष्य. १५ छ. झ. ट. जाग्रतोरेव. क. ख. च. ञ. जाग्रतोरेवसारात्रिस्तयोःसौमित्रिसूतयोः । जगामतमसातीरेरामस्यब्रुवतोर्गुणान्.

गोकुलाकुलतीरायास्तमसाया विदूरतः ॥ अवसत्तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १७ ॥
उत्थाय तु महातेजाः प्रकृतीस्ता निशाम्य च ॥ अब्रवीद्भ्रातरं रामो लक्ष्मणं पुण्यलक्षणम् ॥ १८ ॥
अस्मद्व्यपेक्षान्सौमित्रे निरपेक्षान्गृहेष्वपि ॥ वृक्षमूलेषु संसुप्तान्पश्य लक्ष्मण सांप्रतम् ॥ १९ ॥
यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्तने ॥ अपि प्राणानसिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥ २० ॥
यावदेव तु संसुप्तास्तावदेव वयं लघु ॥ रथमारुह्य गच्छाम पन्थानमकुतोभयम् ॥ २१ ॥
अतो भूयोपि नेदानीमिक्ष्वाकुपुरवासिनः ॥ स्वपेयुरनुरक्ता मां वृक्षमूलानि संश्रिताः ॥ २२ ॥
पौरा ह्यात्मकृताद्दुःखाद्विप्रमोक्ष्या नृपात्मजैः ॥ न ते खल्वात्मना योज्या दुःखेन पुरवासिनः ॥ २३ ॥
अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितम् ॥ रोचते मे तथा प्राज्ञ क्षिप्रमारुह्यतामिति ॥ २४ ॥
अथ रामोऽब्रवीच्छ्रीमान्सुमन्त्रं युज्यतां रथः ॥ गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ॥ २५ ॥
सूतस्ततः संत्वरितः स्यन्दनं तैर्हयोत्तमैः ॥ योजयित्वाऽथ रामाय प्राञ्जलिः प्रत्यवेदयत् ॥ २६ ॥
अयं युक्तो महाबाहो रथस्ते रथिनांवर ॥ तमारोह सुभद्रं ते ससीतः सहलक्ष्मणः ॥ २७ ॥
तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः ॥ शीघ्रगामाकुलावर्तां तमसामतरन्नदीम् ॥ २८ ॥
स संतीर्य महाबाहुः श्रीमाञ्शिवमकण्टकम् ॥ प्रापद्यत महामार्गमभयं भयदर्शिनाम् ॥ २९ ॥
मोहनार्थं तु पौराणां सूतं रामोऽब्रवीद्वचः ॥ उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥ ३० ॥
मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः ॥ यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ ३१ ॥

उषःकालोभूदित्यर्थः । यद्वा उदयपर्यन्तंगमनकाले- पिशुणानब्रवीदितिभावः ॥ १६ ॥ पूर्वकथाशेषंप्रस्तौति—गोकुलेति । विदूरतः अदूरतः । प्रकृतिभिः पौरश्रेणिभिः । "राज्याङ्गानिप्रकृतयःपौराणांश्रेणयोपिच" इत्यमरः ॥ १७ ॥ निशाम्य दृष्ट्वा ॥ १८ ॥ अस्मद्व्यपेक्षान् अस्मास्वेवविशेषेणापेक्षावतः ॥ १९ ॥ पौराः अस्मन्निवर्तने यथा येनप्रकारेण नियमंकुर्वन्ति । तेनप्रकारेणप्राणानपि असिष्यन्ति त्यक्ष्यन्ति । निश्चयंतु निवर्तननिश्चयंतु नत्यक्ष्यन्तीतिसंबन्धः ॥ २० ॥ यावदेव यावत्येवकाले । तावदेव तावत्येवकाले । लघु क्षिप्रं । रथमारुह्यगच्छाम । "लघुक्षिप्रमरंद्रुतं" इत्यमरः ॥ २१ ॥ इक्ष्वाकुपुरवासिनः मामनुरक्ताः इदानीमिव भूयः पुनः वृक्षमूलानि संश्रिताः नस्वपेयुः । अतोरथमारुह्य गच्छामेतिपूर्वेणसंबन्धः ॥ २२ ॥ आत्मकृतात् स्वकृतात् । आत्मना स्वेन ॥ २३—२६ ॥ युक्तः सज्जः ॥ २७ ॥ सपरिच्छदः धनुःकवचादिसहितः । आकुलावर्तां आवर्ताकुलां ॥ २८ ॥ महामार्गंप्रापद्यत जलस्थितरथादवतीर्य पद्भ्यामेवमहामार्गंप्रापदित्यर्थः । भयदर्शिनां श्वापदादीनां । अभयं तत्संबन्धिभयरहितमित्यर्थः ॥ २९ ॥ मोहनं वञ्चनं । ननुसदयस्यरामस्यस्वविरहासहिष्णूनांस्वस्मिन्निरतिशयप्रेमभाजांवञ्चनमनुचितं । उच्यते । नेदंवञ्चनं व्रणचिकित्सान्यायेननागरिकाणामुन्मस्तकानन्देनसत्तानभवेदितिसुसात्म्यानुभवप्रदानार्थं वनवासव्याजेनविश्लेषस्यसंक-

शि० तात्कालिकस्वकर्तव्यमाह—**यावदिति** । यावत् यावत्कालं वयं लघुसंसुप्तास्तावत्कालं द्वित्रघटिकयेत्यर्थः । रथमारुह्य अकुतोभयं सर्वतोभयरहितंपन्थानंगच्छाम । एतेन तमसादक्षिणतटादारभ्य किंचिद्दूरंप्रशस्तोमार्गोनास्तीतिव्यक्तं ॥ २१ ॥ शि० ननु पुरवासिनांकागतिरित्यतआह—**अतइति** । स्वप हेस्वकीयरक्षक लक्ष्मण अतःमध्येसुमार्गाभावाद्धेतोः भूयः अधिकं मामनुरक्ताअपि इक्ष्वाकुपुरवासिनः इदानींमांन ईयुःनागच्छेयुः । इदानीमित्यनेन भरतेनसहागन्तारइतिसूचितम् ॥ २२ ॥ ति० प्रभो समर्थ ॥ २५ ॥ इतिषट्चत्वारिंशस्सर्गः ॥ ४६ ॥

[ पा० ] १ ङ. ज. झ. ट. उत्थायच. २ ख—ङ. छ. झ. ट. निर्व्यपेक्षान्. ३ क. ख. च. ष्विमान्. ४ छ. झ. संसक्तान्. ५ ग. नियतिं. ज. नियतं. ६ ख. ङ. छ. झ. ट. प्राणान्यसिष्यन्ति. घ. प्राणान्नरक्षन्ति. ७ ख. तद्यावदेव. ८ क—ट. गच्छामः. ९ क. ग—छ. झ. ट. मूलेषु. १० क. ख. ग. ङ. च. छ. झ. ञ. ढ. ननु. ११ क. घ. महाप्राज्ञ. १२ ङ. च. छ. झ. ञ. ट. त्सूतंशीघ्रंसंयुज्यतां. क. ख. द्धीमान्. १३ छ. मतः. १४ क. ख. घ—छ. झ. ञ. ट. तुरामस्य. १५ ङ. च. छ. झ. ञ. ट. त्वरयारोहभद्रं. क—घ. ज. त्वमारोहस्वभद्रं. १६ ङ. छ. झ. ट. मारुह्य.

[1]रामस्य वचनं श्रुत्वा तथा [2]चक्रे स सारथिः ॥ प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२ ॥
तौ संप्रयुक्तं तु रथं समास्थितौ [3]तदा ससीतौ रघुवंशवर्धनौ ॥
प्रचोदयामास ततस्तुरङ्गमान्स सारथिर्येन पथा तपोवनम् ॥ ३३ ॥
ततः समास्थाय रथं महारथः ससारथिर्दाशरथिर्वनं ययौ ॥
उदङ्मुखं तं तु रथं चकार स प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षट्चत्वारिंशः सर्गः ॥४६॥

---

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

प्रभातेप्रबुद्धैःपौरैरामादर्शनेनात्मोपालंभनपूर्वकंपरिशोचनम् ॥ १ ॥ ततोरथपथानुयायिभिस्तैर्मार्गविच्छेदेसशोकमयोध्याप्रवेशः ॥ २ ॥

प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना ॥ शोकोपहतनिश्चेष्टा बभूवु[4]र्हतचेतसः ॥ १ ॥
शोकजाश्रुपरिद्यूना वीक्षमाणास्ततस्ततः ॥ आलोकमपि रामस्य न पश्यन्ति [5]स्म दुःखिताः ॥ २ ॥
ते [6]विषादार्तवदना रहितास्तेन धीमता ॥ कृपणाः करुणा वाचो वदन्ति स्म [7]मनस्विनः ॥ ३ ॥
धिगस्तु खलु निद्रां तां ययाऽप[8]हृतचेतसः ॥ नाद्य पश्यामहे रामं पृथूरस्कं महाभुजम् ॥ ४ ॥
कथं [9]नाम महाबाहुः स तथाऽवितथक्रियः ॥ भक्तं [10]जनं परित्यज्य प्रवासं [11]राघवो गतः ॥ ५ ॥

---

लिपततयाहितव्यापारत्वेनवञ्चनत्वासंभवात् । यदि रामस्यतथासंकल्पोनभवेत्तर्हिकथंनिःशेषसर्वजननिद्राकरणं सुमन्त्रलक्ष्मणवत्तेष्वेकस्यापिनिर्निद्रत्वापत्तेः । मोहनमेवाह—उदङ्मुखइत्यादि । पौराणांमोहनार्थमुदङ्मुखः प्रयाहि अयोध्यांप्रतिरामोनिवृत्तइतिपौराणांभ्रान्तिमुत्पादयितुमुदङ्मुखोयाहीत्यर्थः । स्वस्यरथेनोदङ्मुखंगत्वामार्गान्तरेणवनगमनस्यकर्तुंशक्यत्वेपि अयोध्याभिमुखगमनेव्रतभङ्गःस्यादितिधियासुमन्त्रमभिमुखोयाहीत्युक्तवान् । तथाकुर्वितिपौराणांमोहनार्थंसूतमब्रवीदितिसंबन्धः ॥ ३०—३१ ॥ प्रत्यागम्येति मार्गान्तरेणप्रत्यागम्येत्यर्थः ॥ ३२ ॥ संप्रयुक्तं सम्यगानीतंरथंसमास्थितौ अभूतामिति शेषः । येनपथातपोवनंप्राप्यते तेनप्रचोदयामास ॥ ३३ ॥ सः सुमन्त्रः । प्रयाणमाङ्गल्यनिमित्तदर्शनात् प्रयाणानुकूलमङ्गलसूचकनिमित्तदर्शनाद्धेतोः । रथमुदङ्मुखंचकार निमित्तस्वीकारार्थमुदङ्मुखंचकारेत्यर्थः । ततः निमित्तस्वीकारानन्तरं । रथमास्थायवनंययाविति संबन्धः । प्रयाणेदक्षिणपादोद्धारवत् उदङ्मखगमनंमङ्गलायेतिभावः ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

अथपौरवृत्तान्तंदर्शयति—प्रभातायामित्यादि । शोकोपहतनिश्चेष्टाः शोकोपहतत्वान्निश्चेष्टाः । हतचेतसः मूढाः ॥ १ ॥ शोकजाश्रुभिः परिद्यूनाःपरिक्लान्ताः । आलोकमपिरामस्य रामसंबन्ध्यालोकमपि आलोक्यतइत्यालोकःतमालोकसाधनंरथरेण्वादिकमपीत्यर्थः ॥ २ ॥ विषादार्तवदनाः दुःखेनम्लानमुखाः । कृपणाः दीनवेषाः । करुणावाचः दीनवचांसि । वदन्तिस्म अन्योन्यमितिशेषः ॥३—४॥ अवितथक्रियःअमोघा-

---

**शि०** कृपणाः कर्तव्यविवेकरहिताः ॥ ३ ॥ **ति०** ययानिद्रया “निद्रांभगवतींविष्णोः” इत्यादिना मार्कण्डेयेन तस्याभगवन्मायारूपत्वाभिधानात्तदावरणादेवच विषयाविष्टानांभगवददर्शनंप्रसिद्धं श्रुतिसिरस्सु । पश्यामहइतितङार्षः । हेइतिसंबोधनं.

**[ पा० ]** १ क. ख. घ—छ. झ. ञ. ट. रामस्यतुवचः. २ क. ङ. च. छ. ञ. ट. चक्रेच. ३ क. ततः. ख. ज. तथा. ४ ग. घ. ज. गतचेतसः. ५ क. सुदुःखिताः. ६ क. ख. विषण्णार्त. ७ ङ. च. छ. झ. ञ. ट. मनीषिणः. ८ ङ. च. हृतचेतनाः. ञ. हतचेतनाः. झ. ट. हतचेतसः. ९ ङ—ट. रामो. १० क. ख. ङ. च. छ. झ. ञ. ट. जनमभि. ११ ङ. घ. झ. ट. तापसो.

यो नः सदा पालयति पिता पुत्रानिवौरसान् ॥ कथं रघूणां स [1]श्रेष्ठस्त्यक्त्वा नो [2]विपिनं गतः ॥६॥
इहैव निधनं यामो महाप्रस्थानमेव वा ॥ रामेण [3]रहितानां हि किमर्थं [4]जीवितं हि नः ॥ ७ ॥
सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च ॥ तैःप्रज्वाल्य चितां सर्वे प्रविशामोथ [5]पावकम् ॥८॥
किं वक्ष्यामो महाबाहुरनसूयः प्रियंवदः ॥ नीतः स राघवोस्माभिरिति वक्तुं [6]कथं क्षमम् ॥ ९ ॥
सा नूनं नगरी दीना दृष्ट्वाऽस्मान्राघवं विना ॥ भविष्यति निरानन्दा सस्त्रीबालवयोधिका ॥१०॥
निर्यातास्तेन वीरेण सह नित्यं [7]जितात्मना ॥ विहीनास्तेन च पुनः कथं [8]पश्याम तां पुरीम् ॥११॥
इतीव बहुधा वाचो [9]बाहुमुद्यम्य ते जनाः ॥ विलपन्ति स्म दुःखार्ता विवत्सा [10]इव धेनवः ॥ १२ ॥
ततो मार्गानुसारेण गत्वा [11]किञ्चित्क्षणं पुनः ॥ मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥
[12]रथस्य मार्गनाशेन न्यवर्तन्त मनस्विनः ॥ [13]किमिदं किं करिष्यामो दैवेनोपहता इति ॥ १४ ॥
[14]ततो यथागतेनैव मार्गेण क्लान्त[15]चेतसः ॥ अयोध्यामगमन्सर्वे पुरीं व्यथितसज्जनाम् ॥ १५ ॥
आलोक्य नगरीं तां च क्षयव्याकुलमानसाः ॥ [16]अवर्तयन्त तेऽश्रूणि नयनैः शोक[17]पीडितैः ॥१६॥
एषा रामेण [18]नगरी रहिता नातिशोभते ॥ आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥ १७ ॥
[19]चन्द्रहीनमिवाकाशं तोयहीनमिवार्णवम् ॥ अपश्यन्[20]निहतानन्दं नगरं ते विचेतसः ॥ १८ ॥

ते तानि वेश्मानि महाधनानि दुःखेन दुःखोपहता विशन्तः ॥
नैव प्रजज्ञुः स्वजनं [21]जनं वा निरीक्षमाणाः प्रविनष्टहर्षाः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

नुवृत्तिः ॥५—६॥ इहैवनिधनं प्रायोपवेशनेनमरणं । महाप्रस्थानं मरणदीक्षापूर्वकमुत्तराभिमुखगमनं । हिःप्रसिद्धौ ॥ ७ ॥ प्रविशामोथेति अथवेत्यर्थः ॥८॥ किंवक्ष्यामइति । नकिमपिवक्तुंशक्यमित्यर्थः । तदेव विवृणोति—महाबाहुरित्यादिना । नीतः वनमिति शेषः ॥ ९—१२ ॥ मार्गानुसारेण किंचित् किंचिद्दूरं । मार्गनाशात् रथमार्गादर्शनात् । तच्चवीरुत्तृणपटलपिहितप्रदेशेरथचारणादितिज्ञेयम् । समभिप्लुताः व्याप्ताइत्यर्थः ॥ १३ ॥ दैवेनोपहताइति प्रलपन्तइतिशेषः ॥ १४—१५ ॥ आलोक्येत्यादिश्लोकद्वयमेकंवाक्यं । अन्तइतिकरणंबोध्यम् । क्षयव्याकुलमानसाः संमार्जनलेपनादिक्षयेणव्यथितमनस्काः । अवर्तयन्त अमुञ्चन् ॥ १६—१८ ॥ दुःखेन सहितं स्वजनं जनंवा पौरजनंवा । नप्रजज्ञुः नाज्ञासिषुः

वापरस्परं ॥ ४ ॥ **ती०** नीतः प्रापितः वनमितिशेषः । अस्यायमर्थः । रामवृत्तान्तंपृच्छन्तंजनंप्रति अस्माभिःराघवोवनंनीतइति वक्तुंकथंक्षमं । अन्यद्वा किंवक्ष्यामइति ॥ ९ ॥ **ति०** अग्रेभवाअग्र्याः पुरोगामिन्यः ताश्चतागाश्चेत्यर्थः । यद्वा अग्र्यामुख्याः पुष्टत्वदुग्धवत्त्वादिगुणाःगावइवेत्यर्थः । गाइत्यार्षं । **स०** अग्रगाः पुरागन्त्र्यः ॥ १२ ॥ **वि०** व्यथिताःसज्जनायस्यांतां । सत्पदेनकैकेय्याव्यावृत्तिः ॥ १५ ॥ **ति०** क्षयो हर्षक्षयस्तेनव्याकुलमानसाः । यद्वा क्षयंगृहंप्रति व्याकुलं गन्तव्यंनवेत्येवंरूपं मानसंयेषांतादृशाः । **स०** क्षयेगृहे व्याकुलमानसाः । क्षयोव्याकुलोयस्मिन्ग्रामे तस्मिन्मनोयेषांतइतिवा । **शि०** क्षयेण रामप्रतियोगिकसंयोगाभावेन व्याकुलमानसाः ॥ १६ ॥ **स०** गरुडेनह्रदादुद्धृतपन्नगा आपगा नदी यथानशोभतेतद्वत् । तस्यतद्भूषणत्वात् । यद्वा व्यतिरेकदृष्टान्तः । यमुनादौतथादृष्टेः ॥ १७ ॥ **स०** चन्द्रहीनमित्याद्यभूतोपमालङ्कारः ॥ १८ ॥ इतिसप्तचत्वारिंशस्सर्गः ॥ ४७ ॥

**[ पा० ]** १ ग. घ. च. ज. ज्येष्ठः. २ ख. ग. घ. ज. विजनंगतः. ३ ङ. छ. झ. ट. रहितानांनो. ४ घ. जीवितेननः. ङ. छ. झ. ञ. ट. जीवितंहितं. ५ ङ. छ. झ. ट. वावयं. ६ ज. क्षमंकथं. ७ ङ. च. छ. झ. ञ. ट. महात्मना. ८ क. ग. ङ—ट. द्रक्ष्याम. ९ ज. ञ. बाहूनुद्यम्य. १० ङ. छ. झ. ट. इवाग्र्यगाः. ११ ङ. च. छ. झ. ञ. ट. किंचित्ततःक्षणं. १२ ङ. छ. झ. ञ. ट. रथमार्गानुसारेण. १३ ख. किमिदानीं. १४ ग. घ. ङ. छ. झ. ट. तदा. १५ ज. चेतनाः. १६ घ. अवर्तन्तततोऽश्रूणि. ख. छ. झ. ञ. ट. आवर्तयन्तते. १७ क. ख. ज. पीडिताः. १८ ख. घ. ज. रहितानगरी. १९ छ. ग्रहहीनं. २० घ. न्विगतानन्दं. २१ ख. छ. झ. परंवा. ट. पुरंवा.

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

राममार्गोपरिज्ञानात्प्रत्यावृत्तैर्भर्त्रादिभी रामवृत्तान्तं निवेदिताभिः पौरस्त्रीभिः रामगुणानुवर्णनकैकेय्युपालंभपूर्वकं बहुधापरिदेवनम् ॥ १ ॥

तेषामेवं विषण्णानां पीडितानामतीव च ॥ बाष्पविप्लुतनेत्राणां सशोकानां मुमूर्षया ॥ १ ॥
[1]अनुगम्य निवृत्तानां रामं नगरवासिनाम् ॥ उद्गतानीव सत्वानि बभूवुरमनस्विनाम् ॥ २ ॥
स्वंस्वं निलय[2]मागम्य पुत्रदारैः [3]समावृताः ॥ अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ॥ ३ ॥
न चाहृष्यन्न चामोदन्वणिजो न प्रसारयन् ॥ न चाशोभन्त [4]पुण्यानि नापचन्गृहमेधिनः ॥ ४ ॥
नष्टं दृष्ट्वा नाभ्यनन्दन्विपुलं वा धनागमम् ॥ पुत्रं प्रथमजं लब्ध्वा जननी [5]नाभ्यनन्दत ॥ ५ ॥
गृहेगृहे रुदन्त्यश्च भर्तारं गृहमागतम् ॥ व्यगर्हयन्त दुःखार्ता वाग्भिस्तोत्रैरिव द्विपान् ॥ ६ ॥
किंनु तेषां गृहैः कार्यं किं दारैः किं धनेन वा ॥ पुत्रै[6]र्वा किं सुखैर्वाऽपि ये न पश्यन्ति राघवम् ॥७॥
एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया ॥ योऽनुगच्छति काकुत्स्थं रामं परिचरन्वने ॥ ८ ॥
आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च ॥ येषु [7]स्नास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥९॥
[8]शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकाननाः ॥ आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ १०॥
काननं वाऽपि शैलं वा यं [9]रामोऽभिगमिष्यति ॥ प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥११
विचित्रकुसुमापीडा बहुमञ्जरिधारिणः ॥ राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२ ॥
अकाले [10]चापि [11]मुख्यानि पुष्पाणि च फलानि च ॥ दर्शयिष्यन्त्यनुक्रोशाद्गिरयो राममागतम् ॥१३॥

---

॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तचत्वारिंशःसर्गः ॥ ४७ ॥

---

मुमूर्षया मर्तुमिच्छयोपलक्षितानां ॥ १ ॥ सत्वानि प्राणाः । "द्रव्यासुव्यवसायेषुसत्वं" इत्यमरः । उद्गतानीवबभूवुः मुमूर्छुरित्यर्थः । अमनस्विनां धैर्यहीनानां ॥ २—३ ॥ नचाहृष्यन् सुहृद्दर्शनेनापिहर्षंनप्रापुः । नचामोदन् । अपूर्ववस्तुलाभेपिमोदंनप्रापुः । प्रसारयन् प्रासारयन् । पण्यानीतिशेषः । पुण्यानि पुण्यफलभूतपुत्रकलत्रादीनि । नापचन्निति । गृहमेधिनः गृहस्थाः । तेषांपचिक्रियासंबन्धस्त्वर्धशरीरभूतपत्नीद्वारा ॥ ४ ॥ नष्टं चिरकालनष्टं रत्नादिकं । धनागमं निध्यादिलाभं ॥ ५ ॥ रुदन्त्यःसर्वाःस्त्रियः भर्तारं स्वस्वभर्तारं । व्यगर्हयन्त । किमर्थंभवद्भिरागतमित्येवंनिन्दन्तिस्म । तोत्रैः अङ्कुशैः । गर्हांविशदयति—किंन्वित्यादिश्लोकेन । इतिव्यगर्हयन्तेत्यन्वयः ॥ ६—७ ॥ सीतया सहरामं सीतासहितंराममित्यर्थः ॥ ८—९ ॥ रम्यकाननाः तत्रतत्ररम्यवृक्षराजियुक्ताः । महानूपाः रम्यकच्छप्रदेशाः । "जलप्रायमनूपंस्यात्पुंसिकच्छः" इत्यमरः ॥ १० ॥ नैनंशक्ष्यन्त्यनर्चितुं अर्चितुंशक्ष्यन्त्येवेत्यर्थः ॥ ११ ॥ विचित्रकुसुमापीडाः विचित्रपुष्पशेखराः । मञ्जरीत्यत्रछान्दसोह्रस्वः । दर्शयिष्यन्ति आत्मानमितिशेषः । नगाः वृक्षाः ॥ १२ ॥ दर्शयिष्यन्ति वृक्षलतादिद्वारेतिभावः ।

---

**स०** आमोदन्नितिपदव्यत्यासेन रामपदव्यत्यासेनायंखेदइतिद्योतयति ॥ ४ ॥ **स०** गृहमागतंरामंविहायेतिशेषः । **ति०** व्यगर्हयन्त राघवमप्रतिनिवर्त्यकिमर्थंयूयमागताइत्येवंवाग्रूपैःतोत्रैरङ्कुशैः ॥ ६ ॥ **स०** आपगाःनद्यः । कीदृश्यः पद्मिन्यःसर्पवत्यः ।

[ **पा०** ] १ ङ. छ. झ. ञ. ट. अभिगम्य. २ ख. मागत्य. ३ क. समागताः. ४ क. ख. ङ—ट. पण्यानि. ५ ग. ङ. छ. झ. ट. नाप्यनन्दत. ६ ङ. छ. झ. ट. वापि. ७ ङ. च. झ. ञ. ट. यास्यति. क. ख. घ. पास्यति. ८ क. लोभयिष्यन्ति. ९ ज. ङ. च. छ. झ. ट. रामोनु. १० क. ऽपिच. ञ. वापि. ११ ख. तरवःपुष्पाणि. ज. पुष्पाणिमुख्यानि.

प्रस्रविष्यन्ति तोयानि विमलानि महीधराः ॥ विदर्शयन्तो विविधान्भूयश्चित्रांश्च निर्झरान् ॥
पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम् ॥ १४ ॥
यत्र रामो भयं नात्र नास्ति तत्र पराभवः ॥ स हि शूरो महाबाहुः पुत्रो दशरथस्य च ॥ १५ ॥
पुरा भवति नो दूरादनुगच्छाम राघवम् ॥ १६ ॥
पादच्छाया सुखा भर्तुस्तादृशस्य महात्मनः ॥ स हि नाथो जनस्यास्य स गतिः स परायणम् ॥१७॥
वयं परिचरिष्यामः सीतां यूयं तु राघवम् ॥ इति पौरस्त्रियो भर्तृन्दुःखार्तास्तत्तदब्रुवन् ॥ १८ ॥
युष्माकं राघवोऽरण्ये योगक्षेमं विधास्यति ॥ सीता नारीजनस्यास्य योगक्षेमं करिष्यति ॥ १९ ॥
को न्वनेनाप्रतीतेन सोत्कण्ठितजनेन च ॥ संप्रीयेतामनोज्ञेन वासेन हृतचेतसा ॥ २० ॥
कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत् ॥ न हि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥२१॥
यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात् ॥ कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥ २२ ॥
कैकेय्या न वयं राज्ये भृतका निवसेमहि ॥ जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥ २३ ॥
या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा ॥ कस्तां प्राप्य सुखं जीवेदधर्म्यां दुष्टचारिणीम् ॥२४॥
उपद्रुतमिदं सर्वमनालम्बमनायकम् ॥ कैकेय्या हि कृते सर्वं विनाशमुपयास्यति ॥ २५ ॥
न हि प्रव्रजिते रामे जीविष्यति महीपतिः ॥ मृते दशरथे व्यक्तं विलोपस्तदनन्तरम् ॥ २६ ॥

अनुक्रोशात् आदरादित्यर्थः ॥ १३—१४ ॥ यत्रदेशे रामोवर्तते तत्रभयं नास्ति । तत्र पराभवोपिनास्ति ॥ १५ ॥ दूरात् पुराभवति भविष्यति । ततःपूर्वमेवानुगच्छामइत्यर्थः । "यावत्पुरानिपातयोर्लट्" इतिलट् ॥ १६ ॥ पादच्छायेति पादसेवालक्ष्यते । सुखा सुखसाधनभूता । गम्यतइतिगतिः प्राप्यः । परायणं परमयनं सर्वप्रकारेणाधारभूतइत्यर्थः ॥ १७—१९ ॥ अप्रतीतेन अप्रशस्तेन सतामयोग्येनेति यावत् । उत्कण्ठयाशोकस्मरणेनसहितः सोत्कण्ठः कृतःसोत्कण्ठःसोत्कण्ठितः तादृशो जनोयस्यतेन । अमनोज्ञेन उद्वेगकारिणा । हृतचेतसा चित्तनाशकेन । अनेनवासेन नगरेणेत्यर्थः । कोनुजनःसंप्रीयेत नकोपीत्यर्थः । तस्मादयंवासस्त्याज्यइतिभावः ॥ २० ॥ अधर्म्यं धर्मादपेतमित्यर्थः । अनाथवत् नाथशून्यं भाविप्रतिसन्धानेनेदमुक्तं । कुतइति पुत्रधनकृतपुरुषार्थस्यजीवितमूलत्वादित्यर्थः ॥ २१ ॥ पुत्रोरामः । परिहरेत् विपद्ध्यइतिशेषः । रक्षेदितियावत् ॥ २२ ॥ जीवन्त्याःकैकेय्याःराज्ये भृतकाः भृतिभुजः । "भृतकोभृतिभुक्" इत्यमरः । कैकेयीजीवनपर्यन्तंनतस्याराज्येनिवसेमहीतिजीवन्तीशब्दस्यभावः ॥ २३—॥ २४ ॥ कैकेय्याःकृते कैकेयीनिमित्तं ॥ २५ ॥ विनाशप्रकारमुपपादयन्ति—नहीति । विलापो विनाशः

"पद्मंस्यात्पन्नगे" इतिविश्वः ॥ ९ ॥ **ती०** योगक्षेमं अप्राप्तप्राप्तिर्योगः प्राप्तस्यरक्षणंक्षेमं ॥ १९ ॥ **ती०** कंपरिहरेत् त्यागात्परिहरेत् । सर्वानपिपरित्यजेदित्यर्थः । भर्तृपुत्रत्यागकारिण्यास्तस्याइतरत्यागःकियानितिभावः । **शि०** ययाहेतुभूतयामन्थरया ऐश्वर्यकारणात् अहमतीवराज्ञोप्रियेति स्वप्रभूतिहेतोः पुत्रोरामः भर्तादशरथश्च त्यक्तौ त्याजितौ सा कैकेयी कुलस्य पांसनी मलभूतामन्थरा अन्यं कं परिहरेत् त्यजेत् नत्याजयेदित्यर्थः । **स०** कंअपरिहरेत् सर्वंपरिहरेदेव । अमानोनाइत्यादिना निषेधार्थकोकारः ॥ २२ ॥ **स०** भृतकाः भ्रियन्तइतिभृतकाः भृत्याइतियावत् । तथासन्तःननिवसेम । हीति अस्यार्थस्यातिदृढत्वंसूचयति । तेन नपदव्यत्यासदोषः ॥२३॥ **शि०** उपद्रुतं नानोपद्रवसहितं । अतएव अनालंभं पश्चालंभोपलक्षितयागरहितं ॥२५॥ **ति०** विलो-

**[ पा० ]** १ ग. तत्रनास्ति. २ ग. दशरथस्यहि. ३ ङ. छ. झ. ट. सुखंभर्तुः. क. ख. च. ञ. सुखोदर्कातादृ. ४ ङ. च. छ. झ. ञ. ट. यूयंच. ५ ख. घ. स्तास्तदाब्रुवन्. ६ ङ. छ. ट. त्यक्तौवैश्वर्य. ७ झ. घ—छ. झ. ञ. ट. भृतकाहि. ख. भृतकामा. ८ ङ. छ. झ. ञ. ट. मनालंभं. ९ ख. ङ. च. छ. झ. ञ. ट. कैकेय्यास्तु. १० क. ग. ज. कृत्स्नं. ११ ख. घ. प्रव्राजिते. १२ क. छ. ङ. छ—ट. विलोपः.

ते विषं पिबतालोड्य क्षीण[1]पुण्याः सुदुर्गताः ॥ [2]राघवं वाऽनुगच्छध्वमश्रुतिं [3]वाऽपि गच्छत ॥२७॥
मिथ्या प्रव्राजितो रामः [4]सभार्यः सहलक्ष्मणः ॥ भरते [5]संनिसृष्टाः स्मः सौनिके पशवो यथा ॥२८॥
पूर्णचन्द्राननः श्यामो गूढजत्रुररिन्दमः ॥ आजानुबाहुः पद्माक्षो रामो लक्ष्मणपूर्वजः ॥ २९ ॥
[6]पूर्वाभिभाषी [7]मधुरः सत्यवादी महाबलः ॥ [8]सौम्यश्च सर्वलोकस्य चन्द्रवत्प्रियदर्शनः ॥ ३० ॥
नूनं पुरुषशार्दूलो मत्तमातङ्गविक्रमः ॥ शोभयिष्यत्यरण्यानि विचरन्स [9]महारथः ॥ ३१ ॥
तास्तथा विलपन्त्यस्तु नगरे [10]नागरस्त्रियः ॥ चुक्रुशुर्दुः[11]खसंतप्ता मृत्योरिव [12]भयागमे ॥ ३२ ॥
इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवम् ॥ जगामास्तं दिनकरो रजनी चाभ्यवर्तत ॥ ३३ ॥
नष्टज्वल[13]नसंपाता [14]प्रशान्ताध्यायसत्कथा ॥ [15]तिमिरेणाभिलिप्तेव [16]सा तदा नगरी बभौ ॥ ३४ ॥
उपशान्तवणिक्पण्या नष्टहर्षा निराश्रया ॥ अयोध्या नगरी चासीन्नष्टतारमिवांबरम् ॥ ३५ ॥
[17]तथा स्त्रियो रामनिमित्तमातुरा यथा सुते भ्रातरि वा विवासिते ॥
विलप्य दीना रुरुदुर्विचेतसः [18]सुतैर्हि [19]तासामधिको हि सोभवत् ॥ ३६ ॥
प्रशान्तगीतोत्सवनृत्त[20]वादना [21]व्यपास्तहर्षा पिहितापणोदया ॥

॥ २६ ॥ ते यूयं आलोड्य असुमर्थमालोच्य । सुदुर्गताः सुदरिद्राः रामरूपधनहीनाइत्यर्थः । अश्रुतिं यत्रगतेनामापिनश्रूयते तं देशमित्यर्थः ॥२७॥ पितृवचननिर्देशेनकैकेयीप्रियचिकीर्षयाचक्रियमाणेप्रव्रजनेकोदोष इत्यत्राह—मिथ्याप्रव्राजितइति । मिथ्याप्रव्राजितः कपटेनप्रव्राजितः । सन्निसृष्टाः निक्षिप्ताःराज्ञेतिशेषः । सौनिके पशुमारके ॥ २८ ॥ विश्लेषासहिष्णुतयारामस्त्वकार्यंकृतवानित्यभिधायतद्गुणकीर्तनेनाप्यायनंकुर्वन्ति—पूर्णेत्यादिना । गूढजत्रुः गूढे निमग्नेजत्रुणीअंससंधी यस्यसतथोक्तः । “स्कन्धोभुजशिरोंसोस्त्रीसंधीतस्यैवजत्रुणी” इत्यमरः ॥ २९ ॥ पूर्वाभिभाषी स्वसौहार्दभव्यत्वप्रदर्शनायसर्वत्रपूर्वभाषणशीलः ॥ ३०—३१ ॥ मृत्योर्भयागमे मरणसमये ॥ ३२ ॥ विलपन्तीनां विलपन्तीषु सतीष्वित्यर्थः । राघवमुद्दिश्येतिशेषः ॥ ३३ ॥ नष्टज्वलनसंपाता नष्टाग्निप्रणयना । प्रशान्ताध्यायसत्कथा अध्यायोवेदः सत्कथापुराणादिः निवृत्तवेदाध्ययनपुराणपाठेत्यर्थः ॥ ३४ ॥ उपशान्तवणिक्पण्या उपशान्तानिवणिजां पण्यानियस्यांसा पण्यकल्पनाशून्येत्यर्थः ॥ ३५ ॥ सुतैः सुतेभ्यः । पञ्चम्यर्थेतृतीया । भ्रातृभ्यश्चेत्यपि द्रष्टव्यं ॥ ३६ ॥ पिहितापणोदया पिहितः आपणोदयः आपणस्थवस्तुसमृद्धिर्यस्याःसातथोक्ता । आपणोपःनाशः ॥ २६ ॥ **ति०** तेयूयंपुरुषाः । सस्त्रीकाइतिशेषः । आलोड्य पेषयित्वा । अश्रुतिंवापि यस्मिन्देशेकैकेय्या नामश्रवणमपिनभवति तादृशंदूरदेशंवा गच्छतेत्यर्थः ॥ २७ ॥ **ति०** सौनिके सूना पशुवधस्थानं तत्रभवे हिंसके तत्समीपे । **शि०** रामः मिथ्या वृथा प्रव्राजितः । ननु राजनियोगे भवदुक्त्याकिमित्यतआहुः । भरते कैकेय्यतिप्रियत्वेनभरतसदृशेमन्थरायां तदाज्ञायामित्यर्थः । वयंसंनिबद्धास्स्मः । भरतशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । सामान्ये नपुंसकम् ॥ २८ ॥ **ती०** विलपन्तीनां प्रलपन्तीषुसतीषु दिनकरोस्तंजगाम । सूर्यास्तमयानन्तरं रजनीचाभ्यवर्ततेति । अनेन पौरस्त्रीदुःखासहिष्णुतयाऽस्तमयानन्तरमस्तमयात्पूर्वंच भानोःपूर्वगत्यपेक्षयाऽतिवेगेनगमनंद्योत्यते ॥ ३३ ॥ **ति०** नष्टज्वलनसंतापा नष्टः होमाद्यर्थोपि ज्वलनसंतापो ज्वलनसंगमोयस्यां ॥ ३४ ॥ **स०** सुतैः बहुवचनमाद्यर्थे ॥ ३६ ॥ **ति०** संक्षपितोदकः क्षीणोदकः । संक्षुभितोदकइतिपाठे क्षैण्यात्संक्षुभितोदकइत्यर्थः । **स०** संक्षुभितोदकः प्रलये ॥ ३७ ॥ इत्यष्टचत्वारिंशस्सर्गः ॥ ४८ ॥

[ **पा०** ] १ क. पुण्याःस्थदुःखिताः. घ. पुण्याश्चदुःखिताः. च. ज. झ. ञ. पुण्याःसुदुःखिताः. ख. पुण्याश्चदुर्गताः. ङ. छ. ट. पुण्याःस्मदुःखिताः. २ च. राघवंचानु. ३ ङ. ज. चापि. ४ ख. सहभार्यःसलक्ष्मणः. ग. ज. ससीतः. ५ क. ख. ग. ज. ञ. संनिविष्टाः. ङ. छ. झ. ट. संनिबद्धाः. च. संनिविष्टास्ते. घ. संनिकृष्टाः. ६ क. पूर्वभाषीच. ७ ख. मधुरं. ८ घ. सौम्यःसर्वस्य लोकस्य. ९ क. ख. महाबलः. १० क. ख. च. ज. नागराः. ११ क—घ. ज. भृशसंतप्ताः. १२ क. ख. समागमे. १३ ज—ट. संतापा. १४ ग. घ. च. ज. शान्ताध्ययनसत्कथा. ख. प्रशान्तायतसत्कथा. १५ क. ख. ग. च. ज—ट. तिमिरेणानु. घ. तिमिरौघविलिप्तेव. १६ च. ज. झ. ञ. तदासा. १७ ङ. छ. झ. तदा. १८ ख. सुताद्धि. १९ ङ. छ. झ. ट. मधिकोपि २० ख. घ. वादिता. क. च. वादिनी. ग. वाद्यका. ज. वाद्या. २१ ङ. च. झ. ञ. ट. विभ्रष्ट. ख. व्यपेत.

तदा[1] ह्ययोध्या नगरी बभूव सा महार्णवः संक्षिपितोदको[2] यथा ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टचत्वारिंशः सर्गः ॥४८॥

---

## एकोनपञ्चाशः सर्गः ॥ ४९ ॥

रात्रिशेषेणबहुदूरंगतवतारामेणप्रभातेसंध्योपासनम् ॥ १ ॥ तथाप्रतिपथंस्वविषयकतत्तद्ग्रामजनवचनश्रवणेनगोमत्यादि-नदीतरणपूर्वकं सुमन्त्रंप्रत्यभिमतार्थमुदीरयतासतापुरतोगमनं ॥ २ ॥

रामोपि रात्रिशेषेण तेनैव महदन्तरम् ॥ जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥
तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा[3] ॥ उपास्य[4] स शिवां सन्ध्यां विषयान्तं[5] व्यगाहत ॥ २ ॥
ग्रामान्विकृष्टसीमान्तान्पुष्पितानि वनानि च ॥ पश्यन्न[6]तिययौ शीघ्रं शनैरिव[7] हयोत्तमैः ॥
शृण्वन्वाचो मनुष्याणां ग्रामसंवासवासिनाम् ॥ ३ ॥
[ विगर्हितां[8] हि कैकेयीं क्रूरां क्रूरेण कर्मणा ॥] राजानं धिग्दशरथं कामस्य वशमास्थितम्[9] ॥ ४ ॥
हा नृशंसाऽद्य कैकेयी पापा पापानुबन्धिनी ॥ तीक्ष्णा संभिन्नमर्यादा तीक्ष्णकर्मणि[10] वर्तते ॥ ५ ॥
या पुत्रमीदृशं राज्ञः प्रवासयति[11] धार्मिकम् ॥ वनवासे महाप्राज्ञं सानुक्रोशं[12] जितेन्द्रियम् ॥ ६ ॥
कथं नाम महाभागा सीता जनकनन्दिनी ॥ सदा सुखेष्वभिरता दुःखान्यनुभविष्यति ॥ ७ ॥
अहो दशरथो राजा निस्स्नेहः स्वसुतं प्रियम्[13] ॥ प्रजानामनघं रामं परित्यक्तुमिहेच्छति ॥ ८ ॥
एता वाचो मनुष्याणां ग्रामसंवासवासिनाम् ॥ शृण्वन्नतिययौ वीरः कोसलान्कोसलेश्वरः ॥ ९ ॥
ततो वेदश्रुतिं नाम शिववारिवहां[14] नदीम् ॥ उत्तीर्याभिमुखः प्रायादगस्त्याध्युषितां दिशम् ॥ १० ॥
गत्वा[15] तु सुचिरं कालं ततः शिवजलां[16] नदीम् ॥ गोमतीं गोयुतानूपाम्[17]तरत्सागरंगमाम् ॥ ११ ॥

---

दयस्यपिहितत्वमापणाविधानात् । संक्षपितोदकः संशोषितोदकइत्यर्थः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्यानेऽष्टचत्वारिंशःसर्गः ॥ ४८ ॥

---

अथरामवृत्तान्तंप्रस्तौति—रामोपीति । तेनैवरात्रिशेषेण येन रात्रिशेषेणपौरान्विहायगतस्तेनैव । महदन्तरं महावकाशं महद्दूरमितियावत् ॥ १ ॥ गच्छतः गच्छतिसति । व्यपायात् निरगात् । विषयान्तं उत्तरकोसलदक्षिणावधिं ॥ २ ॥ विकृष्टसीमान्तान् विशेषेणकृष्टसीमान्तान् बीजावापार्थसज्जीकृतक्षेत्रानित्यर्थः । शनैरिवययौ उत्तमाश्वानांगतिचातुर्यात्पुष्पितवनरामणीयकदर्शनपारवश्याच्चातिशीघ्रमपिगमनंशनैरिवजानन् ययावित्यर्थः । ग्रामसंवासवासिनां ग्रामाःमहाग्रामाः संवासाःअल्पग्रामाः तेषुवासिनांशृण्वन्नतिययावितिपूर्वेणसंबन्धः ॥ ३ ॥ वाचएवप्रपञ्चयति—राजानमित्यादि ॥ ४ ॥ पापा पापस्वभावा । पापानुबन्धिनी नैरन्तर्येणपापकारिणीत्यर्थः । तीक्ष्णा क्रूरा ॥ ५ ॥ वनवासे वनवासनिमित्तं प्रवासयतीत्यन्वयः ॥ ६—८ ॥ अतिययौ अतिक्रम्यययौ ॥ ९ ॥ अगस्त्याध्युषितांदिशं दक्षिणां दिशं ॥ १० ॥ गोयुतानूपां गोयुक्तकच्छप्रदेशां ।

---

**कतकः** शरैरिवेतिपाठः । शरसदृशवेगवद्भिरश्वोत्तमैरित्यर्थः ॥ ३ ॥ **ति०** पापा पापकर्मारब्धशरीरा ॥ ५ ॥ **शि०** प्रजानामनघं अघनिवर्तकंरामं ॥ ८ ॥

**[ पा० ]** १ क. ख. ग. च. ज. ञ. तथा. २ क—घ. च. ज. संक्षुभितो. ३ घ. शुभा. ४ क. ङ—ट. उपास्यतु. ५ छ. झ. ट. विषयानत्यगाहत. ६ घ. पश्यन्निव. ज. पश्यन्नपि. ख. पश्यन्नभि. ७ ङ. छ. ज. ट. शरैरिव. ८ इदमर्धं क. च. ञ. पुस्तकेषुदृश्यते. ९ क—घ. ज. मागतं. १० घ. ज. तीक्ष्णे. क. क्षुद्रकर्मणि. ११ क. प्रस्थापयति. १२ क. ग. ज. क्रोशमतन्द्रितं. १३ ङ. च. छ. झ. ञ. ट. प्रति. १४ क. घ. शीततोय. १५ क. सगला. १६ ङ. छ. झ. ञ. ट. शीतवहां. क. घ. ज. शीतजलां. १७ घ. युतांरामोह्यतरत्.

गोमतीं चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः ॥ मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम् ॥ १२ ॥
स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा ॥ स्फीतां राष्ट्रावृतां रामो वैदेहीमन्वदर्शयत् ॥ १३ ॥
सूत इत्येव चाभाष्य सारथिं तमभीक्ष्णशः ॥ हंसमत्तस्वरः श्रीमानुवाच पुरुषर्षभः ॥ १४ ॥
कदाऽहं पुनरागम्य सरय्वाः पुष्पिते वने ॥ मृगयां पर्यटिष्यामि मात्रा पित्रा च संगतः ॥ १५ ॥
राजर्षीणां हि लोकेऽस्मिन्नत्यर्थं मृगया वने ॥ काले वृतां तां मनुजैर्धन्विनामभिकाङ्क्षिताम् ॥ १६ ॥
नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने ॥ रतिर्ह्येषाऽतुला लोके राजर्षिगणसंमता ॥ १७ ॥
स तमध्वानमैक्ष्वाकः सूतं मधुरया गिरा ॥ तंतमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ॥ ५० ॥

रामेणायोध्याभिमुखीभूयतत्समापृच्छनम् ॥ १ ॥ तथामध्येमार्गंस्वावलोकककजानपदजनानांसमाश्वासनेनप्रतिनिवर्तनपूर्वंककोसलानतिक्रान्तवतागङ्गादर्शनम् ॥ २ ॥ वाल्मीकिनागङ्गावर्णनम् ॥ ३ ॥ रामेणलक्ष्मणसुमन्त्रानुमत्या गङ्गासमीपगतेङ्गुदीतरुमूलमेत्यरथादवतरणम् ॥ ४ ॥ तथातत्रस्वागमनश्रवणेनस्वावलोकनार्थमागच्छन्तंगुहनामानंनिषादराजंप्रति लक्ष्मणेनसहाभिगमनम् ॥ ५ ॥ पश्चिमसन्ध्योपासनपूर्वकंजलमात्राभ्यवहारेणरात्रौभुविशयानेरामेगुहसुमन्त्रलक्ष्मणैःपरस्परसंभाषणेनजागरणम् ॥ ६ ॥

विशालान्कोसलान्रम्यान्यात्वा लक्ष्मणपूर्वजः ॥ अयोध्यामभिमुखो धीमान्प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥

सागरंगमामिति । "गमेःसुप्युपसंख्यानं" इतिखचिमुम् ॥ ११—१२ ॥ महीं कोसलदेशं । राष्ट्रावृतां अवान्तरजनपदावृतां । यद्यपि "इक्ष्वाकूणामियंभूमिःसशैलवनकानना" इति भूमिमात्रमिक्ष्वाकोरेव तथापितस्यजन्मभूरियं इतरजनपदस्थाः करदाइतिबोध्यम् ॥ १३ ॥ सूतइतीत्यत्रगुणाभावोवाक्यसन्धेरनित्यत्वात् । हंसमत्तस्वरः हंसस्येवमत्तःकलःस्वरोयस्यसतथा ॥ १४ ॥ भाविपितृवियोगसूचकमौत्कण्ठ्यमाह—कदेति । पर्यटिष्यामि चरिष्यामि ॥ १५ ॥ ननु "स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थस्यदूषणंचेतिराज्ञांव्यसनसप्तकं" इतिनिन्दितामृगयाकथंकाङ्क्ष्यतइत्याशङ्क्य हिंस्रमृगनिवृत्त्यर्थाकादाचित्का नगर्हिता किंतु निरन्तरैव । यथाराजसूये "तस्याःसभायामध्येअधिदेवनमुद्धत्यावोक्ष्याक्षान्तंनिर्वपेत्" इतिविहितंद्यूतमित्याह— राजर्षीणामिति । हि यस्मात्कारणात् । राजर्षीणांवनेमृगयारत्यर्थमस्तीतिशेषः । काले श्राद्धादिकाले । मनुजैः सदाचारपरैः । वृतां स्वीकृतां । धन्विनामभिकाङ्क्षितां चललक्ष्यवेधनार्थंधन्विभिरभिकाङ्क्षितां । तांमृगयां नात्यर्थमभिकाङ्क्षामि किंचित्काङ्क्षामीत्यर्थः । रतिः क्रीडा ॥ १६—१७ ॥ ऐक्ष्वाकः । दाण्डिनायनेत्यादिनानिपातनात्साधुः । सरामः सूतंप्रति तंतमर्थं राजगुणादिरूपं । अभिप्रेत्य हृदयेकृत्वा । मधुरयागिरा वाक्यमुदीरयन्सन् । अध्वानंययौ । अमुमर्थमुत्तरत्रदशरथंप्रतिसूतोव्यक्तीकरिष्यति ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

कोसलान्यात्वा अन्तपर्यन्तदक्षिणकोसलान्यात्वे-

---

ति० राजर्षीणांहीतिश्लोकःपुनरुक्तार्थकइव कतकासंमतश्चेतिबोध्यं ॥ १६ ॥ इत्येकोनपञ्चाशस्सर्गः ॥ ४९ ॥

[ पा० ] १ क. ख. च. ञ. रुतामतरत्स्यन्दिकां. २ छ. झ. राष्ट्रवृतां. ३ क. ख. च. ञ. माभाष्य. ४ घ. सादरं. ५ घ. मत्तहंस. ६ ङ. च. छ. झ. ञ. ट. पुरुषोत्तमः. ७ घ. छ—ट. कृतां. ८ अयंश्लोकः ङ. छ. झ. ट. पुस्तकेषुराजर्षीणांहीति श्लोकात्पूर्वंदृश्यते. ९ ङ. त्गला. १० ङ. च. छ. झ. ट. मुन्मुखो.

आपृच्छे त्वां पुरि श्रेष्ठे काकुत्स्थपरिपालिते ॥ दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥२॥
निवृत्तवनवासस्त्वामनृणो जगतीपतेः ॥ पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह संगतः ॥ ३ ॥
ततो [1]रुधिरताम्राक्षो भुजमुद्यम्य दक्षिणम् ॥ अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥ ४ ॥
अनुक्रोशो दया चैव यथार्हं मयि वः कृतः ॥ [2]चिरं दुःखस्य पापीयो गम्यतामर्थसिद्धये ॥ ५ ॥
तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् ॥ विलपन्तो नरा घोरं [3]व्यतिष्ठन्त क्वचित्क्वचित् ॥६॥
तथा विलपतां तेषामतृप्तानां च राघवः ॥ अचक्षुर्विषयं [4]प्रायाद्यथाऽर्कः क्षणदामुखे ॥ ७ ॥
ततो धान्यधनोपेतान्दानशील[5]जनाञ्शिवान् ॥ अकुतश्चिद्भयान्रम्यांश्चैत्ययूपसमावृतान् ॥ ८ ॥
उद्यानाम्रवणोपेतान्संपन्नसलिलाशयान् ॥ तुष्टपुष्टजनाकीर्णान्गो[6]कुलाकुलसेवितान् ॥ ९ ॥
[7]लक्षणीयान्नरेन्द्राणां ब्रह्मघोषाभिनादितान् ॥ रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत ॥ १० ॥
मध्येन मुदितं स्फीतं रम्योद्यानसमाकुलम् ॥ राज्यं भोग्यं नरेन्द्राणां ययौ धृतिमतांवरः ॥ ११ ॥

त्यर्थः ॥ १ ॥ निर्गमनावसरे शिष्टाचारप्राप्तस्यपुरदेवतानमस्कारस्य कार्यसंकटेनाकृतत्वादिदानीमयोध्याराज्यसीमान्तेस्थित्वा आरब्धस्य चतुर्दशवर्षावधिकव्रतस्य निर्विघ्नपरिसमाप्त्यर्थं पुरदेवतानमस्कारपूर्वकमभ्यनुज्ञांप्रार्थयते—आपृच्छइत्यादिना । यानीति तान्यप्यापृच्छइत्यर्थसिद्धं ॥ २—३ ॥ भुजोद्यमनं रथवेगेनदूरगमनात् । अश्रुपूर्णमुखत्वं तदश्रुदर्शनात् । जनं दर्शनार्थमागतं ॥ ४ ॥ अनुक्रोशः आदरः । दया अनुकम्पा । यथार्हं स्वामित्वानुगुणं । वः युष्माभिः । कृतः कृताचेत्यपिद्रष्टव्यं । दुःखस्य अनुभूयमानस्यदुःखस्य । चिरं चिरकालविशिष्टत्वं । पापीयः अशोभनं । मद्दर्शनेभवतांदुःखमभिवर्धते अतोगम्यतां । अर्थसिद्धये गृहकृत्यादिकरणाय ॥५॥ व्यतिष्ठन्त रामदर्शनाशयाशीघ्रंनजग्मुरित्यर्थः ॥ ६ ॥ विलपतामित्यनादरेषष्ठी । अचक्षुर्विषयं चक्षुर्विषयत्वाभावं । क्षणदामुखे निशामुखे ॥ ७ ॥ दुस्त्यजामपिराज्यश्रियंतृणीकृत्यगतवान्राम इतिद्योतयितुमृषिःकोसलानभिवर्णयति—ततइत्यादिना । धनधान्ययोःप्रयोजनमाह—दानेति । चैत्ययूपसमावृतान् चैत्यानि देवतायतनानि । यूपाःसर्वतोमुखादियागप्रख्यापकाः यूपाकारत्वेनस्थापिताःस्तम्भाः ॥ ८ ॥ उद्यानानि पुष्पवाटिकाः । संपन्नाः संपूर्णाः । गोकुलैराकुलंनिबिडंयथाभवतितथासेवितान् ॥ ९ ॥ नरेन्द्राणांलक्षणीयान् एकैकशोनगरसदृशत्वेनलक्षयितुंयोग्यान् कोसलान् कोसलदेशस्थग्रामान् ॥ १० ॥ मध्येन मार्गेण भोग्यस्यापिराज्यस्यत्यागमृषिर्विस्मयते—धृतिमतांवर

**शि०** आपृच्छे कथयामि ॥ २ ॥ तद्वचनमेवाह—**निवृत्तेति** । त्वांपुनर्द्रक्ष्यामि । एतेन भवत्यापिपित्रादिसमीपेगन्तव्यमितिसूचितं । तेन केनचिद्रूपेण सापि सहैवागतेतिव्यक्तं । तेन तस्याःकामचारगमनंव्यञ्जितं ॥ ३ ॥ **ती०** अश्रुपूर्णमुखोदीनइत्यस्यायंभावः "व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः" इत्युक्तेः दुःखितजनान्दृष्ट्वातेषांदुःखनिवारणाय स्वयमप्यश्रुपूर्णमुखोऽभूदिति । **शि०** ततः अयोध्याऽऽज्ञापनानन्तरं । रुचिरताम्रे स्वाभाविकस्वच्छारुणे अक्षिणीनेत्रेयस्यसः । अश्रुपर्णे आनन्दजलव्याप्ते

[1]तत्र त्रिपथगां दिव्यां [2]शिवतोयामशैवलाम् ॥ ददर्श राघवो गङ्गां [3]पुण्यामृषिनिषेविताम् ॥ १२ ॥
आश्रमैरविदूरस्थैः [4]श्रीमद्भिः समलङ्कृताम् ॥ कालेऽप्सरोभिर्हृष्टाभिः सेविताम्भोहृदां शिवाम् ॥ १३ ॥
देवदानवगन्धर्वैः किंनरैरुपशोभिताम् ॥ [5]नानागन्धर्वपत्नीभिः सेवितां सततं [6]शिवाम् ॥ १४ ॥
देवाक्रीडाशताकीर्णां देवोद्यान[7]शतायुताम् ॥ देवार्थमाकाश[8]गमां विख्यातां देवपद्मिनीम् ॥ १५ ॥
[9]जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम् ॥ क्वचिद्वेणीकृतजलां क्वचिदावर्तशोभिताम् ॥ १६ ॥
क्वचित्स्तिमितगम्भीरां क्वचिद्वेग[10]जलाकुलाम् ॥ क्वचिद्गम्भीरनिर्घोषां क्वचिद्भैरवनिस्वनाम् ॥ १७ ॥
देवसंघाप्लुतजलां निर्मलोत्पल[11]शोभिताम् ॥ क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम् ॥ १८ ॥
हंससारससंघुष्टां चक्रवाको[12]पकूजिताम् ॥ सदा [13]मत्तैश्च विहगैर[14]भिसन्नादितान्तराम् ॥
क्वचित्तीररुहैर्वृक्षै[15]र्मालाभिरुपशोभिताम् ॥ १९ ॥
क्वचित्फुल्लोत्पलच्छन्नां क्वचित्पद्मवनाकुलाम् ॥ क्वचित्कुमुदषण्डैश्च [16]कुड्मलैरुपशोभिताम् ॥ २० ॥
नानापुष्परजोध्वस्तां समदामिव च क्वचित् ॥ व्यपेतमलसंघातां मणिनिर्मलदर्शनाम् ॥ २१ ॥
दिशागजैर्वनगजैर्मत्तैश्च वरवारणैः ॥ [17]देवोपवाह्यैश्च मुहुः सन्नादितवनान्तराम् ॥ २२ ॥

---

इति ॥ ११ ॥ तत्र कोसलाद्दक्षिणदेशे । त्रिभिःपथिभिर्गच्छतीतित्रिपथगा तां स्वर्गमर्त्यपाताललोकगामिनीमित्यर्थः । शिवतोयां अच्छतोयां ॥ १२ ॥ श्रीमद्भिः धर्मसमृद्धिमद्भिः । काले क्रीडाकाले उचितकालेवा । सेवितानिप्राप्तानिअम्भांसियेषांतादृशाह्रदाःयस्यांसातां । शिवां क्रीडार्थसेवनेपिपावनां ॥ १३ ॥ नानागन्धर्वपत्नीभिः गन्धर्वाणांनानात्वं देवगन्धर्वमनुष्यगन्धर्वभेदात् । सेवितां । शिवामिति पूर्ववत् । सेवितृभेदेप्येकरूपपावनत्वकथनान्नानर्थक्यं ॥ १४ ॥ देवाक्रीडाः देवार्हक्रीडापर्वताः । देवोद्यानानि देवार्होद्यानानि । देवार्थमाकाशगमां देवपूजनार्थमाकाशंप्राप्तां । देवपद्मिनीं देवार्हाम्भोजयुक्तामित्यर्थः ॥ १५ ॥ गङ्गांस्त्रीत्वेनरूपयति—जलाघातेत्यादिना । जलाघातः शिलासुजलपतनं तेनतच्छब्दोलक्ष्यते । सएवाट्टहासः सघोषहासः । तेनोग्रां । फेनमेवनिर्मलहासःतद्वतीं । वेणीकृतजलां निम्नोन्नतशिलापतनेनवेण्याकारतयाकृतजलां ॥ १६ ॥ क्वचिदगाधस्थले स्तिमितगम्भीरां निश्चलगम्भीरं गम्भीरनिर्घोषोमृदङ्गादेरिव । भैरवोनिस्वनोऽशन्यादेरिव ॥ १७ ॥ आभोगपुलिनां परिपूर्णतायुक्तपुलिनां विशालसैकतामित्यर्थः । "आभोगःपरिपूर्णता" इत्यमरः । निर्मलवालुकां निर्मलसिकतां ॥ १८ ॥ सारसोहंसविशेषः । विहगैः हंसादिभिन्नैःपक्षिविशेषैः ॥ १९ ॥ क्वचित् फुल्लोत्पलच्छन्नामितिपूर्वमुत्पलशोभोक्ता अत्र तच्छन्नत्वमितिविशेषः । कुड्मलैः कह्लारादिकुड्मलैः ॥ २० ॥ नानापुष्परजोभिः ध्वस्तां वर्णान्तरंप्राप्तामित्यर्थः । एवंरक्तवर्णत्वात् समदामिवस्थितां । व्यपेतमलसंघातां अतएवमणिनिर्मलदर्शनां वैडूर्यमणिवन्निर्मलदर्शनां ॥ २१ ॥ वरवारणैः राजगजैः । देवो-

---

तयासेवितान् । **शि०** गवांकुलैः गवादिभिः । गवामकुलैः गवयमहिष्यादिभिः । सेवितान् ॥ ९ ॥ **शि०** शिवां शिवसंबन्धिनीं ॥ १३ ॥ नागपत्नीभिर्गन्धर्वपत्नीभिश्चसेवितां । सततंशिवामित्यनेन महानिशायामपितस्यांस्नानाद्यधिकारस्सूचितः । तदुक्तंभारते "भुक्त्वावायदिवाऽभुक्त्वारात्रौवायदिवादिवा । नकालनियमःकश्चिद्गङ्गांप्राप्यसरिद्वराम्" इति । **शि०** शिवां शिवप्रापिकां ॥ १४ ॥ **शि०** नदीं सर्वनदीमनोरथपूरिकां सर्वनदीस्वामिनीमित्यर्थः । देवार्थं क्रीडार्थं आकाशगमां शिलासंघट्टोत्थितजलकणिकाद्वारा आकाशगमनकर्त्रीं ॥ १५ ॥ **शि०** अनिन्दितां स्वजननिन्दानिवर्तिकां ॥ १९ ॥ **शि०** क्वचित् प्रयागादौ समदां

[ **पा०** ] १ ग. घ. ज. ततः. २ घ—छ. झ. ञ. ट. शीत. ३ ग. ङ. च. छ. झ. ञ. ट. रम्यां. ४ घ. महद्भिः. ५ क. ख. घ—ट. नागगन्धर्व. ६ घ. शुभां. ७ क. ख. घ—छ. झ. ञ. ट. युतांनदीं. ८ घ. झ. गतां. ९ क. ख. जलघात. १० ग. घ. च. छ. झ. ञ. ट. समाकुलां. ११ क. ग—ट. संकुलां. १२ ङ. च. छ. झ. ञ. ट. शोभितां. क. सेवितां. १३ क. ग. घ. मदैश्च. १४ ङ. च. झ. ट. रभिपन्नामनिन्दितां. १५ ग. ङ. च. झ. ञ. ट. मालाभिरिव. ज. लताभिरुप. १६ ख. कुड्मलैश्चोप. १७ ङ. च. झ. ट. देवराजोपवाह्यैश्च.

प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः ॥ [1]फलैः पुष्पैः किसलयैर्वृतां गुल्मैर्द्विजैस्तथा ॥ २३ ॥
[2]शिंशुमारैश्च नक्रैश्च भुजङ्गैश्च निषेवि[3]ताम् ॥ विष्णुपादच्युतां दिव्यामपापां पापनाशिनीम् ॥ २४ ॥
[4]तां शङ्करजटाजूटाद्भ्रष्टां सागरतेजसा ॥ समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् ॥
आससाद महाबाहुः शृङ्गबेरपुरं प्रति ॥ २५ ॥
तामूर्मिकलिलावर्तामन्ववेक्ष्य महारथः ॥ सुमन्त्रमब्रवीत्सूतमिहैवाद्य वसामहे ॥ २६ ॥
अविदूरादयं नद्या बहुपुष्पप्रवालवान् ॥ सुमहानिङ्गुदीवृक्षो वसामोत्रैव सारथे ॥ २७ ॥
[5]द्रक्ष्यामः सरितां श्रेष्ठां संमान्यसलिलां शि[6]वाम् ॥ देवदानवगन्धर्व[7]मृगमानुष[8]पक्षिणाम् ॥ २८ ॥
लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवम् ॥ उक्त्वा तमिङ्गुदीवृक्षं त[9]दोपययतुर्हयैः ॥ २९ ॥
रामोऽभियाय तं र[10]म्यं वृक्षमिक्ष्वाकुनन्दनः ॥ रथा[11]दवातरत्तस्मात्सभार्यः सहलक्ष्मणः ॥ ३० ॥
सुमन्त्रो[12]ऽप्यवतीर्यास्मान्मोचयित्वा हयोत्तमान् ॥ वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः ॥ ३१ ॥
तत्र राजा गुहो नाम रामस्यात्मसमः सखा ॥ निषादजात्यो बलवान्स्थपतिश्चेति विश्रुतः ॥ ३२ ॥

पवाह्यैः देवानांवाहनभूतैः ॥ २२ ॥ फलैःपुष्पैःकिसलयैरेवभूषणोत्तमैरितिव्यस्तरूपकं यद्वा । फलपुष्पादिभिर्वृतां अतएव भूषितांप्रमदामिवस्थितामितिवार्थः । द्विजैः पक्षिभिः ॥ २३ ॥ शिंशुमारैः नक्रविशेषैः । यद्वा शिंशुमारैः जलकपिभिः । " शिंशुमारस्त्वम्बुकपिः " इतिवैजयन्ती । अत्रविष्णुपादच्युतामित्युक्त्या बालकाण्डेहिमवत्प्रभवत्वंतत्रप्रादुर्भावमात्रेणेति ज्ञेयं ॥ २४ ॥ सारसक्रौञ्चनादितां सरोनिवासोयेषांते सारसाःपक्षिविशेषाः । " सोस्यनिवासः " इत्यण् । अतोहंससारससंघुष्टामित्यनेननपौनरुक्त्यं।शृङ्गबेरपुरं प्रति गङ्गामाससाद शृङ्गबेरपुरंप्रतिगच्छन्गङ्गामाससादेत्यर्थः । यद्वा शृङ्गबेरपुरंप्रति शृङ्गबेरपुरसमीपे गङ्गामाससादेत्यर्थः ॥ २५ ॥ ऊर्मिकलिलावर्तां ऊर्मिमिश्रावर्तां ॥ २६ ॥ अविदूरात् समीपे । इङ्गुदीवृक्षः तापसतरुः ॥ २७ ॥ संमान्येत्यस्यदेवेत्यादिनासंबन्धः ॥ २८ ॥ बाढमित्यङ्गीकारे ॥ २९ ॥ अभियाय प्राप्य ॥ ३०—३१ ॥ तत्र देशे राजा तद्देशाधिपतिः । आत्मसमः प्राणसमः । निषादजात्यः निषादजातौभवः । दिगादित्वाद्यत् । बलवान् चतुरङ्गबलवान् । स्थपतिः निषादाधिपतिः । " स्थपतिः पुनः । स्थापत्येधिपतौतक्ष्णि" इतिवैजयन्ती । ननु "हीनप्रेष्यंहीनसख्यंहीनगेहनिवेषणं " इत्युपपातकपरिगणितंहीनजातिसख्यं महाकुलप्रसूतस्यरामस्यकथमुपपद्यतइतिचेत् सत्यं " निषादस्थपतिंयाजयेत् " इतिनिषादाधिपतेर्यज्ञसंबन्धश्रवणादत्यन्तानुचितंनभवतीत्यनुमन्तव्यं । वस्तुतस्तु " नशूद्राभगवद्भक्ताविप्राभागवताःस्मृताः । सर्ववर्णेषुतेशूद्रायेह्यभक्ताजनार्दने " इत्युक्तरीत्यारामभक्तोयमत्युत्तमएव । गुहस्यभगवत्प्रियत्वं " गुहे-

स्वेच्छयोत्पथगत्यादिभिर्मदसहितामिव । **ति०** व्यपेतंजलसंघातामितिपाठे तीरे क्रूरप्रवाहरहितामित्यर्थः ॥ २१ ॥ **ति०** विष्णुपादस्पर्शेन ब्रह्मलोकाद्ब्रह्माण्डबाह्यजलदेशाच्च च्युतां। अपापां कर्मनाशादिवत्केनापिप्रकारेणपापजनकत्वाभाववतीमितिकतकः । तन्न । पापजनकत्वसंभावनायाएवाभावात् । वस्तुतोपापां पापवज्जन्तुरहितां । तत्रहेतुः पापनाशिनीं दर्शनमात्रेणतादृशीं ॥ २४ ॥ **वि०** सागरतेजसा भगीरथतपसा ॥ २५ ॥ **वि०** देवादीनांसंमान्यंसलिलंयस्यास्तां । अनेन गङ्गाजलंप्रवाहादन्यत्रानीतमपि सकलपापक्षयसमर्थमितिध्वनितं ॥२८॥ **शि०** अवतरत् अवातरत्। आगमशास्त्रस्यानित्यत्वादड्विरहः ॥३०॥ **ति०** यद्यपीदृशसख्यं "हीनप्रेष्यंहीनसख्यं" इत्यादिनोपपातकेषुगणितं तथापि तद्विप्रविषयं। राज्ञामाटविकबलेनप्रयोजनवत्त्वात् षड्विधबलसंग्रहस्यराजधर्मत्वाच्च तत्सख्यमेवेतिदिक्। अत्रेदंबोध्यं। निषादगुहविषये "रामस्यात्मसमस्सखा"इत्येवंवदतावाल्मीकिना रामसमत्वरामसमानख्यातित्वोक्त्या भगवद्भक्तत्वेन निषादत्वेपिपूर्वकृतश्रवणादिमत्त्वेन तस्यतत्वज्ञत्वंसूचितं । **शि०** ननु परमधर्मज्ञोरामः हीनजातिनिषादेनसहसख्यंकथंकृतवानितितु नभ्रमितव्यं । निषादानां भगवदवतारभूतपृथुराजजनकब्राह्मणमथितवेनशरीरोद्भवत्वेन

**[ पा० ]** १ क—छ. झ. ञ. ट. फलपुष्पैः. २ शिंशुमारैश्चेतिश्लोकेपूर्वोत्तरार्धयोःपौर्वापर्यं ङ. च. छ. झ. ञ. ट. पुस्तकेषुदृश्यते. ३ ङ. च. छ. झ. ट. समन्वितां. ४ क. ङ. च. छ. झ. ञ. ट. शंकरस्यजटा. ख. तांशंकरशिरोभ्रष्टांहृष्टां. ५ ङ. च. झ. ट. प्रेक्षामि. ख. ग. घ. ज. द्रक्ष्यामि. ६ घ. शुभां. ७ ङ. च. छ. झ. ट. पन्नग. ८ क. राक्षसैः. ९ क. च. छ. ञ. तथोपाययतुः. १० क. वृक्षंरम्यं. ११ क. घ—छ. झ. ञ. ट. दवतरत्. १२ ङ. च. छ. झ. ञ. ट. प्यवतीर्याथ.

स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ॥ वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभि[1]श्चाप्युपागतः ॥ ३३ ॥
ततो निषादाधिपतिं दृष्ट्वा [2]दूरादुपस्थितम् ॥ सह सौमित्रिणा रामः समागच्छद्गुहेन सः ॥ ३४ ॥
तमार्तः संपरिष्वज्य गुहो राघवमब्रवीत् ॥ यथाऽयोध्या [3]तथेयं ते राम किं करवाणि ते ॥ ३५ ॥
ईदृशं हि महाबाहो कः प्राप्स्यत्यतिथिं प्रियम् ॥ ३६ ॥
ततो गुणवदन्नाद्यमुपादाय पृथग्विधम् ॥ अर्घ्यं [4]चोपानयत्क्षिप्रं वाक्यं [5]चेदमुवाच ह ॥ ३७ ॥
स्वागतं ते महाबाहो तवेयमखिला मही ॥ वयं प्रेष्या [6]भवान्भर्ता साधु राज्यं प्रशाधि नः ॥३८॥
भक्ष्यं भोज्यं च [7]पेयं च लेह्यं [8]चेदमुपस्थितम् ॥ [9]शयनानि च मुख्यानि वाजिनां खादनं च ते ॥३९॥
गुहमेवं [10]ब्रुवाणं तु राघवः प्रत्युवाच ह ॥ [11]अर्चिताश्चैव हृष्टाश्च भवता [12]सर्वथा वयम् ॥
पद्भ्यामभिगमाच्चैव स्नेहसंदर्शनेन च ॥ ४० ॥
भुजाभ्यां साधु [13]पीनाभ्यां पीडयन्वाक्यमब्रवीत् ॥ ४१ ॥
दिष्ट्या त्वां गुह पश्यामि ह्यरोगं सह बान्धवैः ॥ [14]अपि ते कुशलं [15]राष्ट्रे मित्रेषु च [16]धनेषु च ॥४२॥
[17]यत्त्विदं भवता किंचित्प्रीत्या समुपकल्पितम् ॥ सर्वं तदनुजानामि नहि वर्ते प्रतिग्रहे ॥ ४३ ॥
कुशचीराजिनधरं फलमूलाशिनं च माम् ॥ विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ॥ ४४ ॥
अश्वानां खादनेनाहमर्थी नान्येन केनचित् ॥ एतावताऽत्र भवता भविष्यामि सुपूजितः ॥ ४५ ॥

---

नसहितोरामोलक्ष्मणेनचसीतया " इतिदर्शितम् ॥ ३२—३३ ॥ दूरादुपस्थितंदृष्ट्वा समागच्छदित्यनेन प्रत्युत्थानाभिगमनोक्तिः । लक्ष्मणेनसहसमागच्छत् लक्ष्मणवत्तस्मिन्भ्रातृत्वबुद्धिमकरोदित्यर्थः । समित्येकीभावे ॥ ३४ ॥ आर्तःधृतवल्कलदर्शनेनसंतप्तः । अनेनरामस्यपूर्वमेवमृगयाव्यापारादिनासख्यमस्तीति गम्यं । इयं अस्मत्पुरी ॥ ३५—३६ ॥ आद्यशब्देन पेयादिकमुच्यते । पृथग्विधं मांसादिभेदेनबहुविधं ॥ ३७ ॥ इयंमही अटवीराज्यं ॥ ३८ ॥ भक्ष्यं खाद्यंव्यञ्जनादि । भोज्यं अन्नं । पेयं पानकादि । लेह्यं रसायनादि । खादनं घासः ॥ ३९ ॥ अर्चितत्वेपिकेचिन्नतन्मात्रेणतुष्यन्ति नतथावयमित्याह— हृष्टाश्चेति । स्नेहसंदर्शनेन राज्यंप्रशाधीतिवाक्यकृतेनस्नेहप्रदर्शनेन ॥ ४० ॥ साधुपीडयन् सम्यगालिङ्गन् पीनाभ्यामित्यनेन सुखहेतुत्वमुच्यते॥४१—४२॥ अनुजानामि ममसर्वंसम्यक्कृतमित्यनुजानामि । प्रतिग्रहेनवर्ते प्रतिग्रहधर्मंनाश्रितवानस्मीतिभावः ॥ ४३ ॥ राज्यान्नाद्यपरिग्रहेहेतुंदर्शयति—कुशचीराजिनधरमिति । कुशं पवित्रमेखलादिरूपं । चीरं वल्कलं । अजिनं कृष्णाजिनं । धर्मेप्रणिहितं पितृवाक्यपरिपालनादिधर्मेसावधानं । वनंगोचरःसञ्चारविषयोयस्यतं ॥ ४४ ॥ अश्वानांखादनेन ग्रासेन । अर्थी प्रयोजनवान् अश्वघासएवप्रयोजनमित्यर्थः । अत्र अस्मि-

---

क्षत्रियत्वात् । अतएव निषादस्थपत्यधिकरणे "निषादस्थपतिंयाजयेत्" इतिश्रुत्या निषादस्थपतीनांयाजनाधिकारस्संगच्छते । प्रपञ्चितंचैतन्निषादस्थपत्यधिकरणे मीमांसकैः । अतएव रामभोजनार्थंनिषादकर्तृकौदनानयनं नविरुध्यते । धर्मशास्त्रे हीनप्रकरणेनिषादपरिगणनंतु निषादविलोमजातानामिति नविरोधः । तत्रनिषादत्वव्यवहारस्तु भाक्तइतिदिक् ॥ ३२ ॥ **ति०** इदं अस्मत्पुरं ॥ ३५ ॥ **ति०** वनेषुचेति तस्याटविकत्वाद्वनकुशलप्रश्नः ॥ ४२ ॥ **ति०** धर्मेप्रणिहितं पित्राज्ञापालनलक्षणेधर्मेसावधानं । अत्र तद्दत्तस्याग्रहेअप्रतिग्रहीतृत्वरूपक्षत्रधर्मोपन्यासेन अन्नभोजनायोग्यत्वे व्रतस्थत्वरूपहेतूपन्यासेनच तदन्नस्यभोजनयोग्यत्वंसूचयता तस्यतत्वज्ञत्वंसूचितं । अन्यथा निषादत्वेनाभोज्यान्नतया तमेवहेतुमुपन्यसेत् सवा कथंपक्वान्नमाहरेत् । एतेन तत्वज्ञस्सर्वोपिभो-

**[ पा० ]** १ ख. ग. श्चाभ्युपागतः. घ. श्चाप्युपाश्रितः. २ ङ. दूरमुपस्थितं. क. ख. घ. ज. दूरादवस्थितं. ३ ख—च. ञ—ट. तथेदं. ४ ङ. च. छ. झ. ञ. ट. चोपानयच्छीघ्रं. क. चोपाहरत्क्षिप्रं. ५ ख. चैनं. ६ घ. भवान्कर्ता. ७ क. ख. लेह्यंचपेयं. ८ क. ख. ङ. च. झ. ञ. ट. चैतदुपस्थितं. घ. चोष्यमुपस्थितं. ९ घ. खादनानि. १० क. ख. ब्रुवाणंतं. ११ क. अर्चिताःसुप्रहृष्टाश्च. ख. अर्चिताश्चप्रहृष्टाश्च. १२ ङ. च. छ. झ. ञ. ट. सर्वदा. १३ ख. घ. ङ. झ. ञ. ट. वृत्ताभ्यां. १४ ग. ज. अथ. १५ घ. राज्ये. १६ झ. ट. वनेषु. १७ ज. यद्विधं. घ. यदेतद्भवता.

एते हि दयिता राज्ञः पितुर्दशरथस्य मे ॥ एतैः सुविहितैरश्वैर्भविष्याम्यहमार्चितः ॥ ४६ ॥
अश्वानां प्रतिपानं च खादनं चैव सोन्वशात् ॥ गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ॥ ४७ ॥
ततश्चीरोत्तरासङ्गः संध्यामन्वास्य पश्चिमाम् ॥ जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥ ४८ ॥
तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः ॥ सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ॥४९॥
गुहोपि सह सूतेन सौमित्रिमनुभाषयन् ॥ अन्वजाग्रत्ततो राममप्रमत्तो धनुर्धरः ॥ ५० ॥
तथा शयानस्य ततोस्य धीमतो यशस्विनो दाशरथेर्महात्मनः ॥
अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीयाय चिरेण शर्वरी ॥ ५१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

## एकपञ्चाशः सर्गः ॥ ५१ ॥

गुहेनलक्ष्मणंप्रतिरघुवरपरिरक्षणायस्वस्यसज्जीभवननिवेदनपूर्वकंशय्यायांशयनप्रार्थना ॥ १ ॥ लक्ष्मणेनतंप्रतिश्रीरामानुभावप्रशंसनादिपूर्वकंतदनर्हावस्थादर्शनेनस्वस्यसुखानभिलाषनिवेदनम् ॥ २ ॥ तथापित्रादिदुरवस्थासंभावनापूर्वकं तान्प्रतिपरिशोचनेनगुहेनसहदुःखाज्जागरेणैवरात्रियापनम् ॥ ३ ॥

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम् ॥ गुहः संतापसंतप्तो राघवं वाक्यमब्रवीत् ॥ १ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ॥ प्रत्याश्वसिहि साध्वस्यां राजपुत्र यथासुखम् ॥ २ ॥
उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः ॥ गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम् ॥३॥
न हि रामात्प्रियतरो ममास्ति भुवि कश्चन ॥ ब्रवीम्येतदहं सत्यं सत्येनैव च ते शपे ॥ ४ ॥

---

न्समये ॥४५॥ सुविहितैः पोषितैः ॥४६॥ स गुहः । तत्रैव तदानीमेव । पुरुषान् स्वभृत्यान्प्रति । अश्वानां खादनं प्रतिपानं क्षीरादिकंच त्वरितंदीयतामित्यन्वशात् ॥४७॥ उत्तरासङ्गः उत्तरीयं । अन्वास्य उपास्य । अनेनस्नानमाक्षिप्यते । भोज्यं आहारं ॥ ४८ ॥ शय्याकालेपादप्रक्षालनं राजोपचाराद्वा स्वशेषवृत्त्यनुरूपत्वाद्वा यद्वा । प्रक्षालनं रामकर्तृकतदाचमनस्याप्युपलक्षणं । प्रक्षाल्याचम्य शयानस्य शयानेसतीत्यर्थः । भावलक्षणेषष्ठी । ततः तस्माच्छयनप्रदेशात् । अभ्येत्य गुहाभिमुखमेत्य । वृक्षमेवोपाश्रितस्तस्थौ । ॥ ४९ ॥ सौमित्रिमनुभाषयन् रामगुणान्प्रस्तुत्यसौमित्रिंवाचयन्नित्यर्थः । अन्वजाग्रत् जाग्रतंसौमित्रिमन्वजाग्रत् । किमर्थंराममुद्दिश्य रामंसंरक्षितुमित्यर्थः । धनुर्धरइत्यनेन लक्ष्मणेप्यतिशङ्कागुहस्यद्योत्यते ॥ ५०—५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चाशःसर्गः ॥ ५० ॥

---

अदम्भेन अकृत्रिमेण । अर्थाय रक्षणाय । संतापसंतप्तः रामदुर्दशादर्शनसंतापेनसंतप्तः । राघवं लक्ष्मणं ॥ १ ॥ प्रत्याश्वसिहि विश्रान्तोभवेतियावत् ॥ २ ॥ अयंजनः वनचारित्वेनक्लेशसहोजनः ॥ ३—

---

ज्यान्नएवेतिध्वनितं ॥ ४४ ॥ **ति०** जात्याश्वानां राजौपवाह्यानां घासदानानन्तरं यत्पाय्यतेक्षीरादि तत्प्रतिपानं । यच्च घृतशर्करादियुतयवचूर्णादि खाद्यते तत्खादनं ॥ ४७ ॥ **स०** जलमेवेत्यनेन तीर्थनिमित्तोपवासोयमितिसूचयति । साक्षाद्ब्रह्मसांनिध्यलाभे जीवत्पितृकाणामपिपुराणादावुपवासस्योक्तेः । यद्वा रामस्यसर्वज्ञत्वेन सत्वरविनश्यत्पितृज्ञानादुपवासइतिसूचयति ॥ ४८ ॥ **स०** शयानस्य शेतुकामस्येतिफलितोर्थः ॥ ४९ ॥ **ति०** सुचिरेणशर्वरीति निद्रागमनाच्चिरत्वप्रतिभासस्तस्यां ॥ ५१ ॥ इतिपञ्चाशस्सर्गः ॥ ५० ॥

**ति०** एवंरामेशयानेतद्रक्षार्थंजाग्रल्लक्ष्मणगुहसंवादः तस्मिन्नित्यादि । अदंभेन अकृत्रिमानुरागेण । **स०** अदंभेनक्षतस्पस्थित्या ।

**[ पा० ]** १ क. सुसुखितैः. २ घ. ङ. तत्रचीरो. ३ ङ. छ. ज. झ. ट. ततोयशस्विनोमनस्विनो. ४ ङ. छ. झ. ट. व्यतीतासुचिरेण. ५ च. ञ. सुखेन. ६ ग. ज. संयुक्तो. ७ क. ख. शुभा. ८ क. ख. ग. ङ—ट. स्प्रियतमो. ९ ङ. छ. झ. ञ. ममास्ते. १० ङ. च. छ. झ. ञ. ट. ब्रवीम्येवचते.

अस्य प्रसादादाशंसे लोकेऽस्मिन्सुमहद्यशः ॥ धर्मावाप्तिं च विपुलाम[1]र्थावाप्तिं च [2]केवलाम् ॥ ५ ॥
सोऽहं [3]प्रियतमं रामं शयानं सह सीतया ॥ रक्षिष्यामि धनुष्पाणिः [4]सर्वतो ज्ञातिभिः सह ॥ ६ ॥
न [5]हि मेऽविदितं किंचिद्वनेऽस्मिंश्चरतः सदा ॥ चतुरङ्गं ह्यपि बलं सुमहत्[6]प्रसहेमहि ॥ ७ ॥
[7]लक्ष्मणस्तं तदोवाच रक्ष्यमाणा[8]स्त्वयाऽनघ ॥ नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ॥ ८ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया ॥ शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥९॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि ॥ तं पश्य [9]सुखसंविष्टं तृणेषु सह सीतया ॥ १० ॥
यो मन्त्रतपसा लब्धो विविधैश्च [10]परिश्रमैः ॥ एको [11]दशरथस्येष्टः पुत्रः सदृशलक्षणः ॥ ११ ॥
अस्मिन्[12]प्रव्राजिते राजा न चिरं वर्तयिष्यति ॥ विधवा मेदिनी नूनं [13]क्षिप्रमेव भविष्यति ॥ १२ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ॥ निर्घोषोपरतं [14]चातो मन्ये [15]राजनिवेशनम् ॥ १३ ॥
कौसल्या चैव राजा च तथैव जननी मम ॥ [16]नाशंसे यदि जीवन्ति सर्वे ते [17]शर्वरीमिमाम् ॥१४॥
जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ॥ तद्दुःखं [18]यत्तु कौसल्या वीरसूर्विनशिष्यति ॥ १५ ॥
अनुरक्तजनाकीर्णा [19]सुखालोकप्रियावहा ॥ राजव्यसन[20]संसृष्टा [21]सा पुरी विनशिष्यति ॥ १६ ॥
कथं पुत्रं महात्मानं [22]ज्येष्ठं प्रियमपश्यतः ॥ शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः ॥ १७ ॥
विनष्टे नृपतौ पश्चात्कौसल्या विनशिष्यति ॥ अनन्तरं च माताऽपि मम नाशमुपैष्यति ॥ १८ ॥

॥ ४ ॥ आशंसे प्रार्थये । केवलामर्थावाप्तिं अर्थावाप्तिमेवेत्यर्थः । केचित्तुकेवलमितिपठित्वा केवलंप्रसादादितियोजयन्ति ॥ ५ ॥ सर्वतः सर्वदिक्षु ॥ ६ ॥ अविदितमितिपदच्छेदः । किंचित्विरोध्यागमनस्थानं। बलं परकीयं । प्रसहेमहीत्येतदात्मनिबहुवचनंजात्यपेक्षया ॥ ७—८ ॥ भीत्यभावेकिमर्थंजागरणमित्याह—कथमिति । निद्रानलभ्यतइतिभावः । जीवितं आश्वासनं । निद्रैवनलभ्यते जीवितसुखानांकाकथेति भावः ॥ ९ ॥ प्रसहितुमिति । "तीषसह—" इत्यादिनापाक्षिकइट् । संविष्टं शयानं ॥ १० ॥ मन्त्रतपसा मन्त्रयुक्ततपसा मन्त्रतपोभ्यामित्यर्थः । परिश्रमैः यज्ञादिभिः । एकः मुख्यः । "एकेमुख्यान्यकेवलाः" इत्यमरः । सदृशलक्षणः स्वसदृशलक्षणः ॥ ११ ॥ वर्तयिष्यति जीविष्यति । विधवा पतिरहिता ॥१२॥ उपरताः भविष्यन्तीतिशेषः । अतएवनिर्घोषोपरतं उपरतनिर्घोषंभविष्यतीतिमन्ये ॥ १३ ॥ सर्वेजीवन्ति जीविष्यन्तीतिनाशंसे । यदिजीवन्ति इमांशर्वरीमेव ॥ १४ ॥ शत्रुघ्नस्यान्ववेक्षया शत्रुघ्नस्नेहेनेत्यर्थः । पुनःपुनर्दर्शनेनवा । वीरंपुत्रंसूतइतितथा कौसल्या विनशिष्यतीतियद्दुःखंतद्दुःसहमित्यर्थः ॥ १५ ॥ राजव्यसनसंसृष्टा राजमरणनिमित्तव्यसनसंयुक्तेत्यर्थः

"दंभखुकैतवेतल्पे" इतिविश्वः । **शि०** सन्तापसंतप्तः लक्ष्मणदुःखदर्शनजनितसंतापवान् गुहः ॥ १ ॥ **ति०** संतरेमहि युद्धेनजयेम ॥ ७ ॥ **स०** श्लोकद्वयमेकवाक्यं । हेतत आज्ञयाव्याप्तगुह अत्रारण्येभीतास्संतः वयंत्वयानरक्ष्यमाणाइतिन किंतु धर्ममेवानुपश्यतामयानिद्रालब्धुंकथंशक्या । यद्वा त्वयानरक्ष्यमाणाः यतोरामेणरक्ष्यमाणाः तस्मान्नात्रभीताः । **ति०** ततोवाच ततउवाचेतिच्छेदः । आर्षस्सन्धिः ॥ ८ ॥ **ती०** मन्त्रोगायत्र्यादिः । तपःकृच्छ्रादि । पराक्रमैः परेषांमहतां आक्रमैःआगमैः आशीर्भिरित्यर्थः ॥ ११ ॥ **स०** उपरताः यदेतिशेषः ॥ १३ ॥ **शि०** कौसल्यादयः इमांशर्वरींरात्रिं यदिजीवन्ति अतिमूर्छांनप्राप्नुवन्तीत्यर्थः । तदाऽहं आशंसे तद्धैर्यप्रशंसांकरिष्यामीत्यर्थः ॥ १४ ॥ **ति०** यदि यत् ॥ १५ ॥ **स०** पुत्रं पुन्नामनरकात्त्रातारं ज्येष्ठपुत्रं प्रथमापत्यं । यद्वा पुत्रं सुतं ज्येष्ठपुत्रं पुत्रेषुज्येष्ठोज्येष्ठपुत्रःतं ॥ १७ ॥ **शि०** नृपतौविनष्टे लोकान्तरगमन-

**[ पा० ]** १ ग. च—ट. मर्थकामौचपुष्कलौ. ख. मर्थकामौचकेवलौ. २ पुष्कलां. ३ क—ट. प्रियसखं. ४ ङ. छ. झ. ञ. ट. सर्वथा. ५ ख. ग. ङ—ट. नमेस्त्यविदितं. ६ ङ. छ. ज. झ. ट. त्संतरेमहि. ७ ङ. छ. झ—ठ. लक्ष्मणस्तुततोवाच. ८ ठ. स्त्वयानच. ९ ङ. छ. झ. ञ. ट. सुखसंसुप्तं. ज. गुहसंविष्टं. १० ग. ङ—ट. पराक्रमै. ११ ङ.—ट. दशरथस्यैष. १२ ख. ग. ङ—झ. ट. न्प्रव्रजिते. १३ घ. क्षिप्रमेषा. १४ क. ख. घ—ट. तात. १५ ख. ग. ङ. छ. ट. रामनिवेशनं. १६ ट. आशंसे. १७ क. रजनीमिमां. १८ क. ङ—ट. यदि. १९ ज. सुखलोक. २० ख. संतप्ता. २१ क. पुरीसा. २२ क. ङ. छ. झ—ठ. ज्येष्ठपुत्रं. ग. च. ज. ज्येष्ठंसन्तं.

अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् ॥ राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १९ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन्काले॒ऽप्युपस्थिते ॥ प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ २० ॥
रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ॥ हर्म्यप्रासादसंपन्नां गणिकावरशोभिताम् ॥ २१ ॥
रथाश्वगजसंबाधां तूर्यनादविनादिताम् ॥ सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २२ ॥
आरामोद्यानसंपन्नां समाजोत्सवशालिनीम् ॥ सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २३ ॥
अपि जीवेद्दशरथो वनवासात्पुनर्वयम् ॥ प्रत्यागम्य महात्मानमपि पश्येम सुव्रतम् ॥ २४ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् ॥ निवृत्तवनवासेऽस्मिन्नयोध्यां प्रविशेमहि ॥ २५ ॥
परिदेवयमानस्य दुःखार्तस्य महात्मनः ॥ तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २६ ॥
तथाहि सत्यं ब्रुवति प्रजाहिते नरेन्द्रपुत्रे गुरुसौहृदाद्गुहः ॥
मुमोच बाष्पं व्यसनाभिपीडितो ज्वरातुरो नाग इव व्यथातुरः ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

॥ १६—१८ ॥ मेपिताराज्येराममनिक्षिप्य अतएवमनोरथमनवाप्यविनशिष्यतीतियत् तस्मात् अतिक्रान्तमतिक्रान्तं सर्वप्रयोजनमतीत्यगतमित्यर्थः । अथवा अतिक्रान्तमतिक्रान्तंमनोरथमनवाप्य पुनःपुनर्वर्धमानंमनोरथमनवाप्य रामोजातःवर्धिष्यते उद्वाहं करिष्यतिराज्यंप्राप्स्यतीत्येवमभिवृद्धंमनोरथमित्यर्थः । मनोरथातिक्रान्तिमेवाह—राज्येराममनिक्षिप्येति ॥ १९ ॥ तस्मिन्काले मरणकाले उपस्थिते प्रेतकार्येष्वप्युपस्थितेषु । वृत्तं अतीतं मृतमितियावत् । "वृत्तं पद्येचरित्रेत्रिष्वतीतेदृढनिस्तले" इत्यमरः । भूमिपं पितरं । सिद्धार्थाः कृतार्थाः संस्करिष्यन्ति । वयंत्वकृतार्थाइतिभावः ॥ २० ॥ रम्यचत्वरसंस्थानां रमणीयाङ्गणसंस्थानां । सुविभक्तमहापथां गृहपङ्क्तिभिः सम्यग्विभक्तराजमार्गां । हर्म्यप्रासादसंपन्नां हर्म्यैर्धनिनांवासैः प्रासादैर्देवभूभुजांवासैश्चसंपूर्णां । "हर्म्यादिर्धनिनांवासःप्रासादोदेवभूभुजाम्" इत्यमरः । रथाश्वगजसंबाधां संबाधां निबिडां । नादितां संजातनादां । सर्वकल्याणसंपूर्णां सर्वैःपुत्रजन्मोत्सवप्रभृतिभिःसंपन्नां । आरामोद्यानसंपन्नां आरामाःउद्यानानिच उपवनानिराज्ञःक्रीडार्हवनानिच । समाजोत्सवशालिनीं समाजैः संघैःक्रियमाणउत्सवः समाजोत्सवः देवोत्सवइत्यर्थः ॥ २१—२३ ॥ अपिःसंभावनायां ॥ २४ ॥ सत्यप्रतिज्ञेन पित्रेतिशेषः । अस्मिन् रामे । प्रविशेमहीत्याशंसायांलिङ् ॥ २५ ॥ परिदेवयमानस्येत्यादौसंबन्धसामान्येषष्ठी । एवमितिशेषः ॥ २६॥ सत्यं वास्तवं । नरेन्द्रपुत्रे लक्ष्मणे । गुरुसौ-

प्रयुक्तादृश्यत्वंप्राप्तेसति ॥ १८ ॥ **शि०** ननुयथाविश्वामित्रसहगमनसमयेरामदर्शनाभावप्रयुक्तराजकर्तृकलोकान्तरगमनाभावस्तथाद्यापिभविष्यतीत्यतआह—**अतिक्रान्तमिति** । राज्येरामं अनिक्षिप्य अप्रापय्य प्रारंभविषयीभूताभिषेकमदृष्ट्वेत्यर्थः । अतएवातिक्रान्तं सर्वतउत्कृष्टमित्यर्थः । मनोरथं अनवाप्य मेपिता विनशिष्यति विनङ्क्ष्यति लोकान्तरंगमिष्यतीत्यर्थः । एतेन इदानींगमनेह्रीर्हेतुर्भविष्यतीतिध्वनितम् । **स०** अतिक्रान्तमतिक्रान्तमिति विलपन्नितिशेषः । पुनरागतंरामंराज्ये अनिक्षिप्यविनशिष्यति ॥ १९ ॥ **ति०** तस्मिन्काले मरणकालेउपस्थिते । येवृत्तंपितरं सर्वप्रेतकार्येषुसंस्करिष्यन्ति तेसिद्धार्थाः भाग्यवन्तः प्राप्तराज्याश्च । भरतादयइतिशेषः । क्रोधात्तन्नामाग्रहणं । **स०** ये भरतशत्रुघ्नौइतरपत्नीपुत्राः । राघवं दशरथंसंस्करिष्यन्ति तएवसिद्धार्थाः । **शि०** तस्मिन् लोकान्तरप्रयाणयोग्ये । कालेउपस्थितेसति । सर्वेषुप्रेतकार्येषु प्रयाणसमयोचितकर्तव्येषु राघवं दशरथं । येसंस्करिष्यन्ति मङ्गलपाठादिकंकरिष्यन्ति तेसिद्धार्थाः । एतेन भरतोपितस्मिन्कालेतंप्राप्स्यतिनवेतिसंशयस्सूचितः ॥ २२ ॥ **स०** सत्यप्रतिज्ञेन रामेण । वयं भरतादिभिस्साहित्यविवक्षणाद्बहुवचनं ॥ २५ ॥ **ति०** गुरौरामेसौहृदादित्युभयान्वयि ॥ २७ ॥ इत्येकपञ्चाशस्सर्गः ॥ ५१ ॥

[ **पा०** ] १ ज. कालेभ्युपस्थिते. ग. ङ. च. छ. झ. ञ. ट. कालेह्युपस्थिते. २ ख. ङ. च. छ. झ. ञ. ट. राघवं. ३ घ. रम्यप्रासादसंपूर्णां. ४ क. ख. घ—छ. झ. ञ. ट. पश्याम. ५ क. अथ. ६ ङ. छ—ट. कुशलिनो. ७ ख. ङ—ट. निवृत्ते. ८ ग. तथातु. ९ ङ. च. छ. झ. ञ. ट. सूनौ. १० घ. इवातुरस्तदा. ज. इवव्यथान्वितः.

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

ससीतालक्ष्मणेरामेस्वाज्ञयागुहसमानायितनौकारोहणायसज्जीभूतेतंप्रतिगुहेनस्वकर्तव्यचोदनाप्रार्थना ॥ १ ॥ रामेणसुमन्त्रंप्रत्ययोध्यायांराजानुवर्तनादिचोदना ॥ २ ॥ सुमन्त्रेणरामंप्रतिबहुधास्वस्यापिवनेसहवासाभ्यनुज्ञानप्रार्थना ॥ ३ ॥ रामेणसुमन्त्रंप्रतिराजादिषुनिवेदनपूर्वकंसहेतूपन्यासमयोध्यांप्रतिगमनचोदना ॥ ४ ॥ तथास्वाज्ञयागुहोपहृतवटक्षीरेणसलक्ष्मणस्यात्मनोजटानिर्माणपूर्वकंसीतालक्ष्मणाभ्यांसहनावारोहणम् ॥ ५ ॥ नौकास्थयासीतयामध्येगङ्गंगङ्गाप्रार्थना ॥ ६ ॥ रामेणसीतालक्ष्मणाभ्यांसहनौकातोऽवतीर्यगङ्गादक्षिणतीरेसायाह्नेकस्यचित्तरोर्मूलदेशगमनम् ॥ ७ ॥

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ॥ उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ १ ॥
भास्करोदयकालोऽयं गता भगवती निशा ॥ असौ सुकृष्णो विहगः कोकिलस्तात कूजति ॥ २ ॥
बर्हिणानां च निर्घोषः श्रूयते नदतां वने ॥ तराम जाह्नवीं सौम्य शीघ्रगां सागरङ्गमाम् ॥
[ गच्छामः सन्ध्युपासार्थं त्वरयस्व महारथ ] ॥ ३ ॥
विज्ञाय रामस्य वचः सौमित्रिर्मित्रनन्दनः ॥ गुहमामन्त्र्य सूतं च सोतिष्ठद्भ्रातुरग्रतः ॥ ४ ॥
स तु रामस्य वचनं निशम्य प्रतिगृह्य च ॥ स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत् ॥ ५ ॥
अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम् ॥ सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥ ६ ॥
तं निशम्य गुहादेशं गुहामात्यगणो महान् ॥ उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् ॥ ७ ॥
ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत् ॥ उपस्थितेयं नौर्देव भूयः किं करवाणि ते ॥ ८ ॥

---

हृदात् गुरुषु पित्रादिषु सौहृदात् स्नेहात् । ज्वरातुरो नागोगजइव व्यथातुरोगुहइत्यन्वयः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

---

पृथुवक्षाइत्युत्साहातिरेकोक्तिः । महायशाइति धर्मव्यतिक्रमाभावःसूचितः । सौमित्रिमिति "रामंदशरथंविद्धि" इत्यादिनोक्तार्थानुष्ठायित्वंसूचितं । शुभलक्षणमित्यनेनस्वभक्तिरुक्ता ॥ १ ॥ भास्करशब्दोयं तत्संबन्ध्यरुणवाची । गता गतप्राया । भगवतीकामवर्धिनी । "भगःश्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः । सुकृष्णोविहगः भरद्वाजः । कोकिलः । कोकिलश्चेत्यर्थः ॥ २ ॥ वनेनदतामिति नगरस्थक्रीडामयूरव्यावृत्तगम्भीरध्वनिरुक्ता । शीघ्रगामिति नावंविनादुस्तरत्वोक्तिः । सागरङ्गमामिति महत्त्वोक्तिः ॥ ३ ॥ वचोविज्ञाय नदीतरणसाधनंशीघ्रमानेतव्यमित्येवंरूपंवचनतात्पर्यंज्ञात्वा । गुहंसूतंचामन्त्र्य युवाभ्यामपिरामवचनतात्पर्यंज्ञातंकिमितिसंबोध्य भ्रातुरग्रतोतिष्ठत् ॥ ४ ॥ प्रतिगृह्य शिरोनतिपूर्वकंतथैवकरिष्यामीत्यङ्गीकृत्य ॥ ५ ॥ अस्य रामस्य । वाहनसंयुक्तां वाह्यतेनीयतेनेनेतिवाहनमरित्रादि तेनसंयुक्तां । कर्णग्राहवतीं कर्णमरित्रंगृह्णातीतिकर्णग्राहःकर्णधारः तद्वतीं । "कर्णश्रोत्रमरित्रंच" इतिनिघण्टुः । सुप्रतारां सुष्ठुतारयितुंसमर्थां । दृढां सुश्लिष्टसन्धिबन्धां । तीर्थे अवतारमार्गे । उपाहरेत्येकवचनं सचिवगणाभि-

---

स० भगवती पूज्या भैर्नक्षत्रैर्गच्छतीतिभगश्चन्द्रस्तद्वतीवा । सुकृष्णः अत्यन्तंनीलः । विहगः काकः । कोकिलस्तत्पालितः । प्रातःकालेकाकशब्दस्यैवप्रसिद्धत्वात् । प्रातर्निन्द्यत्वान्नतन्नामजग्राह । पुरतस्संपाद्यापराधत्वेनवा तदग्रहणम् ॥ २ ॥ शि० विज्ञाय विशेषेणज्ञात्वा तरणार्थंनावमाकांक्षतइतिबुद्ध्वेत्यर्थः । गुहंसूतंच आमन्त्र्य शीघ्रंनौरानेया शीघ्रंतरणकामोरामइत्युक्त्वेत्यर्थः ॥ ४ ॥ ति० सचिवानाहूय तन्मध्येकंचित्प्रत्यब्रवीत् । स० अनेककर्मसुकौशलविवक्षयासचिवानितिबहुवचनं । अतोनावमुपाहरेत्येकवचनं गुहामात्योमहानितिच नविरुध्यते ॥ ५ ॥ ति० अस्यवाहनसंयुक्ता अस्यजलंनिरस्यनावंतीरंप्रापयतीत्यस्यवाहनं अरित्रं । मयूरव्यंसकादित्वात्समासः ॥ ६ ॥ ती० उपोह्य समीपंप्रापय्येत्यर्थः ॥ ७ ॥

[पा०] १ ङ. च. छ. झ. ञ. ट. कालोसौ. २ ग. घ. ज. असौतु. ३ ङ. बर्हिणांतात. क. ख. बर्हिणांचापि. ४ इदमर्धं क. ख. दृश्यते. ५ क. ग. घ. ज. समादेशं. ६ छ. झ. ट. गुहामात्योगतो.

तवामरसुतप्रख्य तत्तु[1] सागरगां नदीम् ॥ नौरियं पुरुषव्याघ्र तां[2] त्वमारोह सुव्रत ॥ ९ ॥
अथोवाच महातेजा रामो गुहमिदं वचः ॥ कृतका[3]मोस्मि भवता शीघ्रमारोप्यतामिति ॥ १० ॥
ततः कलापान्संनह्य खड्गौ बद्ध्वा च धन्विनौ ॥ जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥ ११ ॥
[4]राममेवं तु धर्मज्ञमु[5]पगम्य विनीतवत् ॥ किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ १२ ॥

ततोऽब्रवीद्दाशरथिः सुमन्त्रं स्पृशन्करेणोत्तम दक्षिणेन ॥
सुमन्त्र शीघ्रं पुनरेव याहि राज्ञः सकाशे भव चाप्रमत्तः ॥ १३ ॥

निवर्तस्वेत्युवाचैनमेतावद्धि कृतं मम ॥ [6]रथं विहाय पद्भ्यां तु गमिष्यामो महावनम् ॥ १४ ॥
आत्मानं त्वभ्यनुज्ञातमवेक्ष्यार्तः स सारथिः ॥ सुमन्त्रः पुरुषव्याघ्रमैक्ष्वाकमिदमब्रवीत् ॥ १५ ॥
नातिक्रान्तमिदं लोके पुरुषेणेह केन चित् ॥ तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ १६ ॥
न मन्ये [7]ब्रह्मचर्येऽस्ति स्वधीते वा फलोदयः ॥ मार्दवार्जवयोर्वाऽपि [8]त्वां चेद्व्यसनमागतम् ॥ १७ ॥
[9]सह राघव वैदेह्या भ्रात्रा चैवं[10] वने वसन् ॥ त्वं गतिं प्राप्स्यसे वीर त्रींल्लोकांस्तु जयन्निव ॥ १८ ॥
वयं खलु हता राम[11] [12]ये त्वयाऽप्युपवञ्चिताः ॥ कैकेय्या वशमेष्यामः पापाया दुःखभागिनः ॥ १९ ॥

प्रायेण ॥ ६—८ ॥ नौरियमिति उपस्थितेतिशेषः ॥ ९ ॥ आरोप्यतामिति खनित्रपिटकवैदेहीवस्त्राभरणादिकमितिशेषः ॥ १० ॥ तौराघवौ संनह्य कवचौधृत्वा । कलापान् तूणीरान् खड्गौचबद्ध्वा धन्विनौ जनाःयेनमार्गेणगङ्गांप्राप्नुवन्ति तेनमार्गेणजग्मतुः ॥ ११ ॥ धर्मज्ञं भृत्यधर्मज्ञं । विनीतवत् सविनयमितिक्रियाविशेषणं ॥ १२ ॥ उत्तमेतिसंबोधनं ॥ १३ ॥ याहीतिसामान्येनोक्तं सोपपत्तिकमाह—निवर्तस्वेति । मम एतावत्कृतंहि गङ्गातीरपर्यन्तंरथेनप्रापणंकृतंहि । हीतिराजाज्ञाद्योतनं । अतःपरंयानंविहायपद्भ्यामेवमहावनंगमिष्यामः । अतस्त्वंनिवर्तस्वेत्येवमुवाच ॥ १४ ॥ अवेक्ष्य बुद्ध्वा । आर्तः अनुगमनेऽभ्यनुज्ञा नकृतेति दुःखितः ॥ १५ ॥ तवसभ्रातृभार्यस्य वने प्राकृतवत् क्षुद्रस्येव योयंवासः तदिदंलोकेकेनचिदपिपुरुषेणनातिक्रान्तं नाङ्गीकृतं । सर्वासंमतोयंतववनेवासइत्यर्थः । किंपुनर्ममेतिभावः ॥ १६ ॥ त्वां ब्रह्मचर्यस्वाध्यायमार्दवार्जवयुक्तंत्वां व्यसनमागतंचेत् ब्रह्मचर्ये अधःशयनादिलक्षणे अध्ययनकालकृते । स्वधीते स्वाध्यायाध्ययने । मार्दवे दयालुत्वइतियावत् । आर्जवे अकौटिल्ये च । फलोदयः फलसिद्धिर्नास्तीतिमन्ये । यदि ब्रह्मचर्यादिकंफलदंस्यात् तत्त्वयिदृश्येत । नदृश्यते प्रत्युत वनवासएवदृष्टः । अतोनतत्फलदमितिमन्येइति भावः । खेदातिशयादेवमुक्तं ॥ १७ ॥ त्रींल्लोकाञ्जयन्निव विष्णुरिवेत्यर्थः । गम्यतइतिगतिः कीर्तिः तांप्राप्स्यसे अतुलांकीर्तिंप्राप्स्यसइत्यर्थः । सुमन्त्रःपुरवासिष्वात्मानमन्तर्भाव्यवदति—वयमिति । वयं त्वामनुगतावयं । त्वयाप्युपवञ्चिताःखलु रात्रौनिद्रासमये अविदितगमनेनउपवञ्चिताएव । अपिशब्दादभिषेकविघटनेनकैकेय्यापिवञ्चिताइतिद्योत्यते । उपवञ्चिताः समीपेवञ्चिताः । वनंप्रापय्यमानाइवत्यक्ताइतिवार्थः ।

**ती०** ततःकलापानित्यादिश्लोकद्वयमेकंवाक्यं । तौराघवौसंनह्य कवचौधृत्वा । कलापान् तूणीरान् । खड्गौचबध्वा येन यस्मात्कारणात् । रथनिरपेक्षौगङ्गांजग्मतुः । तस्माद्राममुपगम्य सूतःप्राञ्जलिरब्रवीदितियोजना ॥ ११–१२ ॥ **ति०** उत्तमश्चासौदक्षिणश्चतेन स्पर्शादिव्यापारेउत्तमेन स्पर्शमात्रेणसकलदुःखहारकत्वाद्दक्षिणेन ईदृशेनकरेण दक्षिणकरेण ॥ १३ ॥ **ति०** तदादौलोकदृष्ट्याशोकापनुदंवचनमाह—**नातीति** । सभ्रातृभार्यस्यतव प्राकृतवत्क्षुद्रवत् । वनेवासोयेनदैवेनकृतस्तदिदंदैवं इहलोकेकेनापिअतिक्रान्तं लङ्घितंन लंघितुमशक्यमित्यर्थः । अतोहृदयेमाशुचइत्यर्थः । यद्वा ते वनवासोजातइतियदिदं इहलोके अयोध्यास्थलोकमध्ये केनापिपुरुषेण न हृद्यत्यन्तंक्रान्तंस्वीकृतं सर्वासंमतमेव । अतोस्मदादीन्दोषेणमागृह्णीयाइतितातपर्यम् ॥ १६ ॥ **ती०** रात्रौकेचननिद्रासमयेअविदितगमनेन अहंतुबलान्निवर्तनेन । एवंसर्वैवयंवञ्चिताः त्यक्ताः । **शि०** हेराम त्वयासहवयं कैकेय्या कैकेयीदास्या

[ **पा०** ] १ ङ. छ. झ. ट. सागरगामिनीं. २ ङ. छ. झ. ञ. ट. शीघ्रमारोह. ३ घ. कार्योस्मि. ४ ख. ग. घ. च. ज. राममेवतु. ५ ङ. छ. झ. ट. मुपागत्य. ख. च. ञ. मुपागम्य. ६ क—घ. ज. मानं. ७ ख. ङ. च. छ. झ. ञ. ट. ब्रह्मचर्येवा. ८ ख. त्वांचव्यसन. ९ घ. ङ. छ. ट. सदा. १० ज. चापि. ११ ग. ज. नाथ. १२ घ. ङ. च. झ. ञ. ट. यत्त्वया.

इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तदा ॥ दृष्ट्वा दूरगतं[1] रामं दुःखार्तो रुरुदे चिरम् ॥ २० ॥
ततस्तु[2] विगते बाष्पे सूतं स्पृष्टोदकं शुचिम् ॥ रामस्तु मधुरं वाक्यं पुनःपुनरुवाच तम् ॥ २१ ॥
इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ॥ यथा दशरथो राजा मां न शोचेत्तथा कुरु ॥ २२ ॥
शोकोपहतचेताश्च[3] वृद्धश्च जगतीपतिः ॥ कामभारावसन्नश्च तस्मादेतद्ब्रवीमि ते ॥ २३ ॥
यद्यदाज्ञापयेत्किञ्चित्स[4] महात्मा महीपतिः ॥ कैकेय्याः प्रियकामार्थं[5] कार्यं तदविकाङ्क्षया ॥ २४ ॥
एतदर्थं हि राज्यानि प्रशासति नरेश्वराः[6] ॥ यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ॥ २५ ॥
यद्यथा[7] स[8] महाराजो नालीकमधिगच्छति ॥ न च ताम्यति दुःखेन[9] सुमन्त्र कुरु तत्तथा ॥ २६ ॥
अदृष्टदुःखं राजानं[10] वृद्धमार्यं जितेन्द्रियम् ॥ ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २७ ॥
नैवाहमनुशोचामि[11] लक्ष्मणो न च[12] मैथिली ॥ अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति[13] च ॥ २८ ॥
चतुर्दशसु वर्षेषु निवृत्तेषु पुनःपुनः ॥ लक्ष्मणं मां च सीतां च द्रक्ष्यसि[14] क्षिप्रमागतान् ॥ २९ ॥
एवमुक्त्वा तु राजानं मातरं च सुमन्त्र मे ॥ अन्याश्च देवीः सहिताः कैकेयीं च पुनःपुनः ॥ ३० ॥
आरोग्यं ब्रूहि कौसल्यामथ पादाभिवन्दनम् ॥ सीताया मम चार्यस्य[15] वचनाल्लक्ष्मणस्य च ॥ ३१ ॥
ब्रूयाश्च[16] हि महाराजं भरतं क्षिप्रमानय ॥ आगतश्चापि भरतः स्थाप्यो नृपमते[17] पदे ॥ ३२ ॥

अतएवपापायाःकैकेय्यावशंदुःखभागिनःसन्तः एष्यामः अतोवयंहताइत्यन्वयः ॥ १८—२० ॥ रोदनस्याशुचिताहेतुत्वात् स्पृष्टोदकं आचान्तं अतएवशुचिं ॥ २१—२३ ॥ गुरवःस्वामिनश्चननियम्याः अपितु सर्वप्रकारेणानुवर्तनीयाइत्याशयेनाह—यद्यदिति । विकाङ्क्षाअनादरःतदभावेन आदरेणेत्यर्थः ॥ २४ ॥ एतच्छब्दार्थमाह—यदेषामिति । प्रशासतीति अभ्यस्तत्वाददादेशः । सर्वकृत्येषु कामात्क्रोधाद्वा प्रवृत्तेष्वित्यर्थः ॥ २५ ॥ अलीकं अप्रियं । "अलीकंत्वप्रियेऽनृते" इत्यमरः ॥ २६ ॥ ममहेतोः मदर्थं ममप्रतिनिधित्वेनेत्यर्थः ॥ २७ ॥ स्वविश्लेषजनितदुःखेन राजा ननिर्वहेदितिभिया तदाश्वासकानिवाक्यन्याह—नैवाहमिति । लक्ष्मणोनचमैथिलीत्यत्र शोचतीतिविपरिणामः कर्तव्यः । वत्स्यामहेत्यत्र आर्षःसन्धिः ॥ २८ ॥ पुनःपुनर्द्रक्ष्यसि । "नित्यवीप्सयोः" इतिद्विवचनं । आदरातिशयेनसदाद्रक्ष्यसीत्यर्थः ॥ २९ ॥ राजानं मेमातरं अन्याःदेवीः सहिताः कौसल्ययासहवर्तमानाः । कैकेयींचपुनःपुनरेवमुक्त्वा अथकौसल्यामारोग्यंपादाभिवन्दनंच ब्रूहीत्यन्वयः । आर्यस्य शास्त्रोदितज्येष्ठानुवर्तनरूपपरमधर्मवेदित्वाल्लक्ष्मणस्यार्यत्वोक्तिः । कौसल्यांप्रत्येवपादाभिवन्दनकथनमन्यत्रनिषेधात् । "आचार्यवदाचार्यदारेवृत्तिःपादसंवाहनवर्जं" इतिनिषेधस्यसपत्नीमातृष्वपितुल्यत्वात् ॥ ३०—३१ ॥ नृपमते राज्ञामभिमते । पदे यौवराज्यइत्यर्थः । अभिषिच्य स्थितमितिशेषः । नाभिभविष्यतीत्यत्रेतिकरणंद्रष्टव्यं । अस्यब्रूयाइत्यने-

मन्थरया वञ्चिताः । अकालिकवरयाचनप्रेरणयाप्रलंभिताः । अतएव दुःखभागिनोवयं पापायामन्थरायाःवशमेष्यामः ॥ १९ ॥ **ती०** आत्मसमं भृत्यस्यस्वस्योचितमितिक्रियाविशेषणं । आत्मसमंप्राणसममितिरामपरंवा । दृष्ट्वा निश्चित्येत्यर्थः । **ति०** आत्मसमं अतिबुद्धिमन्मन्त्रियोग्यं ॥ २० ॥ **ति०** सुहृदं व्यसनापनोदकं ॥ २२ ॥ **ती०** कामभारावसन्नः कामवेगेनपीडितः । यस्मात्तस्मात् एतद्वक्ष्यमाणंब्रवीमीतियोजना ॥ २३ ॥ **ती०** पुनःपुनः पुनरागतानस्मान् पुनस्त्वंद्रक्ष्यसीतिद्वयोःपुनश्शब्दयोस्संबन्धः ॥ २९ ॥ **शि०** सहिताः हितत्वयुक्ताः । अन्याश्चदेवीःराज्ञीः ॥ ३० ॥ **ती०** आर्यस्य विदुषोलक्ष्मणस्य । **ति०** सर्वान्प्रत्यार्यस्य ज्येष्ठस्यमम ॥ ३१ ॥ **ती०** स्वविश्लेषजदुःखनिवृत्तयेसुमन्त्रेस्वातन्त्र्यमारोप्याह—**महाराजमित्यादिश्लोकद्वयेन** ।

**[ पा० ]** १ क. ख. छ. वनगतं. क. च. दूरंगतं. २ क. ततस्त्वपगते. ३ घ. चेतास्तु. ४ ङ. छ. झ. ञ. ट. यद्यथा ज्ञापयेत्. ५ ग. ज. कामार्थे. ६ ङ. छ. झ. ञ. ट. नराधिपाः. ७ क. ख. घ. तद्यथा. ८ ञ. सुमहाराजो. ९ ङ. छ. झ. ञ. ट. शोकेन. १० ग. ज. राजानमार्यंवृद्धं. ११ ङ. च. छ. झ. ञ. ट. नचाहं. १२ ङ. छ. झ. ञ. ट. शोचति. १३ क—ङ. छ—ट. वत्स्यामहेतिवा. १४ ङ. छ. झ. ट. द्रक्ष्यसेशीघ्रमागतान्. १५ च. भार्याया. घ. चाप्यस्य. १६ ङ. च. छ. झ. ञ. ट. ब्रूयाश्चापि. १७ ख. नरपतेःपदे.

भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च ॥ अस्मत्संतापजं दुःखं न त्वामभिभविष्यति ॥ ३३ ॥
भरतश्चापि वक्तव्यो यथा राजनि वर्तसे ॥ तथा मातृषु वर्तेथाः सर्वास्वेवाविशेषतः ॥ ३४ ॥
यथा च तव कैकेयी सुमित्रा[1] च विशेषतः ॥ तथैव देवी कौसल्या मम[2] माता विशेषतः ॥ ३५ ॥
तातस्य प्रियकामेन यौवराज्यमवेक्षता[3] ॥ लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ॥ ३६ ॥
निवर्त्यमानो रामेण सुमन्त्रः शोककर्शितः[4] ॥ तत्सर्वं वचनं श्रुत्वा स्नेहात्काकुत्स्थमब्रवीत् ॥ ३७ ॥
यदहं नोपचारेण ब्रूयां[5] स्नेहादविक्लवः[6] ॥ भक्तिमानिति तत्तावद्वाक्यं त्वं क्षन्तुमर्हसि ॥ ३८ ॥
कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् ॥ तव तावद्वियोगेन[7] पुत्रशोकाकुलामिव[8] ॥ ३९ ॥
सराममपि तावन्मे रथं दृष्ट्वा तदा जनः ॥ विना रामं रथं दृष्ट्वा विदीर्येतापि सा पुरी ॥ ४० ॥
दैन्यं हि नगरी[9] गच्छेद्दृष्ट्वा शून्यमिमं रथम् ॥ सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥ ४१ ॥
दूरेऽपि[10] निवसन्तं त्वां मानसेनाग्रतः स्थितम् ॥ चिन्तयन्त्योऽद्य[11] नूनं[12] त्वां निराहाराः कृताः प्रजाः ॥ ४२ ॥
दृष्टं तद्धि[13] त्वया राम यादृशं त्वत्प्रवासने ॥ प्रजानां संकुलं वृत्तं त्वच्छोकक्लान्तचेतसाम्[14] ॥ ४३ ॥
आर्तनादो[15] हि यः पौरैर्मुक्तस्त्वद्विप्रवासने[16] ॥ सरथं[17] मां निशाम्यैव[18] कुर्युः शतगुणं ततः[19] ॥ ४४ ॥

नसंबन्धः ॥ ३२—३४ ॥ भरतइत्यादिश्लोकेनोक्तमर्थंविवृणोति—यथेति । सुमित्रोक्तिःशत्रुघ्नपक्षपातात् ॥ ३५ ॥ अवेक्षता अङ्गीकुर्वता । त्वयेतिशेषः । नित्यदा सर्वदा । छान्दसो दाप्रत्ययः । इतिभरतश्चापिवक्तव्यइतिपूर्वेणान्वयः ॥ ३६—३७ ॥ अहमविक्लबः धृष्टःसन् यद्वाक्यंब्रूयां तन्नोपचारेण किंतुस्नेहात् । तद्वाक्यंत्वं तावत् साकल्येन क्षन्तुमर्हसीतिसंबन्धः । [ तवस्नेहादविक्लबोनिर्भयः यद्वचःउपचारेणनब्रूयां । सेवाधर्मंविहायब्रूयां तद्वाक्यंभक्तिमानितिहेतोःक्षन्तुमर्हसि] ॥ ३८ ॥ तवतावद्वियोगेनेतिपाठः । तवतातेतिपाठे तात । स्वामिन्नित्यर्थः । वृद्धत्वाद्वत्सेतिसंबोधनंवा । पुत्रवियोगजः शोकः पुत्रशोकः तेनाकुलामिवस्थितांपुरीमित्यन्वयः ॥ ३९ ॥ पूर्वंसरामंरथंदृष्ट्वा इदानींरामंविनास्थितंरथंदृष्ट्वा जनः सापुर्यपि विदीर्येत दुःखेनभिद्येत । पुरीशब्दोत्रजनव्यतिरिक्तपश्वादिपरः ॥ ४० ॥ आहवे हतवीरं हतवीरंदृष्ट्वा स्वसैन्यमिव सूतावशेषं शून्यं रामरहितंरथंदृष्ट्वा नगरी दैन्यंगच्छेत् ॥ ४१ ॥ प्रजाः अयोध्यावासिन्यः । दूरेनिवसन्तमपित्वां मानसेनाग्रतःस्थितंत्वांचिन्तयन्त्यः भावनाप्रकर्षेणपुरतःस्थितमिवपश्यन्त्यः निराहाराःकृताः आहारेप्यादरंनकुर्वन्तीत्यर्थः ॥ ४२ ॥ अत्रार्थेपूर्वानुभवंप्रमाणयति—दृष्टमिति । त्वत्प्रवासने प्रजानां यादृशंसंकुलंवृत्तं संक्षोभोजातः तादृशंत्वयादृष्टंहि ॥ ४३ ॥ ततः प्रवासकालिकनादादित्यर्थः

महाराजं । त्वत्पूज्यं नृपमते दशरथानुमते । भरतमभिषिच्य अभिषेचयसिचेत् । तर्हीदंदुःखंत्वांनाभिभविष्यतीतिसंबन्धः ॥३२॥ **ति०** अविशेषतः शत्रुघ्नसंबन्धात्कैकेय्यविशेषतः कैकेय्यविशेषेत्यर्थः । एवंममभातापिकैकेय्यविशेषाद्द्रष्टव्येत्यर्थः ॥ ३५ ॥ **ती०** तातस्यप्रियकामेन यौवराज्यमवेक्षता अङ्गीकुर्वता । उभयोरिहपरयोःसुखमेधितुंशक्यं जनानामितिशेषः । यद्वा यौवराज्यमवेक्षतात्वया उभयोर्लोकयोः तातस्य दशरथस्य । सुखमेधितुं संवर्धयितुंशक्यमितिसंबन्धः ॥३६॥ **ति०** उपचारः स्वामिभृत्योचितःसत्कारः । तेननब्रूयाः ब्रूयां । छान्दसमेतत् । अपितुस्नेहादविक्लबंवाक्यंब्रवीमि तद्वाक्यंभक्तिमानितिज्ञात्वाक्षन्तुमर्हसीतिसंबन्धः ॥३८॥ **शि०** दूरेनिवसन्तंत्वां दूरेनिवसन्तीं त्वां सर्वतोविलक्षणांसीतांच । मानसेन मनोव्यापारेण । अग्रतःस्थितं स्थितांच चिन्तयन्त्यःप्रजाः अद्य त्वद्रहितरथगमनसमये । निराहाराःकृताः त्वदागमनाभावंश्रुत्वाआहारादिकंनकरिष्यन्तीत्यर्थः । निवसन्त-

[ **पा०** ] १ ख. सुमित्रावाविशेषतः. क. ङ. छ. झ. ट. सुमित्राचाविशेषतः. २ ग. ज. तवमान्या. ३ क. घ. ञ. मपेक्षता. ४ ङ. च. छ. झ. ञ. ट. प्रतिबोधितः. ५ ङ. च. छ. झ. ञ. ट. ब्रूयाः. ६ ङ. झ. ट. दविक्लबं. ७ क—ट. तातवियोगेन. ८ ङ. च. छ. झ. ञ. ट. शोकातुरामिव. ९ क. घ. ङ. ञ. नगरं. १० घ. दूरेविनिवसन्तं. ११ ङ. चिन्तयन्त्योथ. १२ क. ख. च. ञ. नूनंहि. ग. नूनंतु. १३ ङ. तद्वै. १४ ग. ज. त्वच्छोकाक्रान्त. १५ ङ. छ. ज. नादोपि. १६ ङ. च. छ. झ. ञ. ट. रुन्मुक्तस्त्वत्प्रवासने. १७ क. ग. घ. च. ज. रथस्थं. १८ ख. घ—ज. ञ. ट. निशम्य. १९ घ. जनाः.

अहं किंचापि वक्ष्यामि देवीं तव सुतो मया ॥ नीतोसौ मातुलकुलं संतापं मा कृथा इति ॥ ४५ ॥
असत्यमपि नैवाहं ब्रूयां वचनमीदृशम् ॥ कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४६ ॥
मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः ॥ कथं रथं त्वया हीनं प्रवक्ष्यन्ति हयोत्तमाः ॥ ४७ ॥
तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ ॥ वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४८ ॥
यदि मे याचमानस्य त्यागमेव करिष्यसि ॥ सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९ ॥
भविष्यन्ति वने यानि तपोविघ्नकराणि ते ॥ रथेन प्रतिबाधिष्ये तानि सत्वानि राघव ॥ ५० ॥
त्वत्कृते न मयाऽवाप्तं रथचर्याकृतं सुखम् ॥ आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥ ५१ ॥
प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः ॥ प्रीत्याऽभिहितमिच्छामि भव मे प्रत्यनन्तरः ॥ ५२ ॥
इमे चापि हया वीर यदि ते वनवासिनः ॥ परिचर्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिम् ॥ ५३ ॥
तव शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन् ॥ अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहम् ॥ ५४ ॥
न हि शक्या प्रवेष्टुं सा मयाऽयोध्या त्वया विना ॥ राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ॥ ५५ ॥
वनवासे क्षयं प्राप्ते ममैष हि मनोरथः ॥ यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥ ५६ ॥

॥ ४४ ॥ यदिप्रियंब्रूयांतदसत्यंभवति यदिचसत्यंब्रूयां तदप्रियंभवति अतःकौसल्यांप्रतिकिमपिवक्तुंनशक्यमित्यभिप्रायेणाह—अहमित्यादिना । देवीमहंकिंवावक्ष्यामि नकिमपिवक्तुंशक्नोमीत्यर्थः । तदेवोपपादयति—तवेत्यादिना । तवासौसुतोमयामातुलकुलंनीतः तस्मात्संतापंमाकृथाइतीदृशमसत्यवचनमप्यहंनैवब्रूयां असत्यवचनप्रतिषेधादितिभावः । सत्यमेववदेत्यत्राह—कथमिति । अप्रियमिदं वनप्रापणरूपंसत्यंवचनंकथंब्रूयां देव्याहानिप्रसङ्गादितिभावः ॥ ४५—४६ ॥ त्वद्बन्धुजनाः त्वद्वंश्याः । यद्वा त्वं त्वद्बन्धुभूतसीतालक्ष्मणरूपजनौचत्वद्बन्धुजनाः तद्वाहिनः प्रवक्ष्यन्ति वोढारोभविष्यन्ति । वहेर्लृटिरूपं ॥ ४७—४८ ॥ त्यक्तमात्रः तत्क्षणएवत्यक्तः ॥ ४९ ॥ रथेनसाधनेन प्रतिबाधिष्ये अहमेवरथीभूत्वानिवर्तयिष्यामीत्यर्थः । तानिसत्त्वानीतिपाठः । सर्वाणीतिपाठे सत्त्वानीति शेषः ॥ ५० ॥ त्वत्कृते त्वन्निमित्तं । रथचर्याकृतंसुखंमयानावाप्तं राज्याभिषिक्तत्वद्रथचर्याकृतसुखंमया भाग्यहीनेननलब्धं । तथापि त्वत्कृतेन त्वत्साहाय्यकरणेन । वनवासकृतमपिसुखं आशंसे इच्छामि । राज्ये रथचर्याकृतसुखाभावेपि वनेसारथित्वेनपरिचर्याकरणकृतंवापिसुखंममभवत्वितिभावः । यद्वा त्वत्कृतेन त्वयाकृतेनानुग्रहेणेत्यर्थः । रथचर्याकृतं रथप्रेरणकृतं सुखंमयाअवाप्तं । एवंत्वत्कृतेनानुग्रहेणवनवासकृतंसुखमप्यहमाशंसइति ॥ ५१ ॥ प्रत्यनन्तरः समीपवर्ती । मेप्रत्यनन्तरोभवेतिप्रीत्याअभिहितमिच्छामि । त्वत्कर्तृकमभिधानमिच्छामीत्यर्थः । क्रियतामितिमांवदेतिवत् ॥ ५२ ॥ परमांगतिं स्वामिशुश्रूषणादितिभावः ॥ ५३ ॥ मूर्ध्नेत्यस्यसोपचारमितिफलितार्थः । सर्वथा सर्वप्रकारेण ॥ ५४ ॥ महेन्द्रस्यराजधानी स्वर्गः ॥ ५५ ॥ वनवासेक्षयंप्राप्ते वनवासेसमाप्तेसतीत्यर्थः ।

मित्यस्यस्थितमित्यस्यचलिङ्गविपरिणामेनान्यत्राप्यन्वयः । एकस्त्वाशब्दःसर्वादिपठितादन्तप्रकृतिकटाबन्तः ॥ ४२ ॥ ति० कथंप्रवाह्यन्ति नकथमपिवहन्ति । अतोरथनयनंदुश्शकमितिभावः ॥ ४७ ॥ ती० त्वयाकृतानुग्रहेण रथचर्याकृतं रथप्रेरणकृतंसुखमवाप्तं । वनवासकृतंसुखमाशंसे । अस्यायंभावः । त्वमस्मिन्कुलेऽवतरिष्यसीतिज्ञात्वैवमन्त्रिप्रधानोप्यहंत्वद्रथचर्यासेवाभाग्यंममभविष्यतीतिनिन्द्यमपिसूतकृत्यंमयाङ्गीकृतं । तेनभाग्यवशात्त्वत्सेवासुखंप्राप्तमेव । इतःपरं वनवासकृतंसुखं वनवासेपित्वत्सेवाकृतंसुखं आशंसे प्रार्थयइति ॥ ५१ ॥ ति० देवलोकंवेत्यनेन त्वद्भक्तानांभक्त्यन्तरायभूतदेवलोकप्राप्तिरपिहेयैवेतिसूचितं । शि० देवलोकं

[ पा० ] १ क. ख. किंचाद्य. २ क. संतापस्त्यज्यतामिति. ३ ङ. झ. ञ. ट. प्रवाह्यन्ति. ४ क. ख. त्वामृते. ५ ज. योधिष्ये. ६ क. ख. घ—छ. झ. ञ. ट. सर्वाणि. ७ ख. त्वत्कृतेहि. च. त्वत्कृतेतु. ८ ग. घ. ङ. छ—ट. मयाप्राप्तं. ९ ख. ग. ङ. च. छ. झ. ञ. ठ. इमेपिच. १० घ. नव्रजाम्यहं. ११ ग. प्रवेष्टुंशक्या. १२ ग. ज. कारिणा. १३ क. ममैवहि. १४ क—घ. वहेयंत्वां.

चतुर्दश हि वर्षाणि सहितस्य त्वया वने ॥ [1]क्षणभूतानि यास्यन्ति [2]शतसंख्यान्यतोऽन्यथा ॥ ५७ ॥
[3]भृत्यवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि ॥ भक्तं भृत्यं स्थितं स्थित्यां [4]त्वं न मां हातुमर्हसि ॥ ५८ ॥
एवं बहुविधं दीनं याचमानं पुनःपुनः ॥ रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५९ ॥
जानामि परमां [5]भक्तिं मयि ते भर्तृवत्सल ॥ शृणु [6]चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ६० ॥
[7]नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ॥ कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ॥ ६१ ॥
[8]परितुष्टा हि सा देवी वनवासं गते मयि ॥ राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् ॥ ६२ ॥
एष मे प्रथमः [9]कल्पो यदम्बा मे यवीयसी ॥ भरतारक्षितं [10]स्फीतं पुत्रराज्य[11]मवाप्नुयात् ॥ ६३ ॥
मम प्रियार्थं राज्ञश्च [12]सरथस्त्वं पुरीं व्रज ॥ [13]संदिष्टश्चासि यानर्थांस्तांस्तान्ब्रूयास्तथातथा ॥ ६४ ॥
इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनःपुनः ॥ गुहं वचन[14]मक्लीबो रामो हेतुमदब्रवीत् ॥ ६५ ॥
नेदानीं गुह [15]योग्योऽयं वासो मे सजने वने ॥ [16]अवश्यं ह्याश्रमे वासः कर्तव्यस्तद्गतो विधिः ॥ ६६ ॥
सोहं गृहीत्वा नियमं तपस्विजनभूषणम् ॥ हितकामः पितुर्भूयः सीताया लक्ष्मणस्य च ॥
[17]जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ॥ ६७ ॥

---

वहेयमितियत् अयंमेमनोरथइतिसंबन्धः ॥ ५६ ॥ त्वयासहितस्येति ममेतिशेषः । क्षणभूतानि क्षणतुल्यानि । अतोन्यथा त्वद्विरहइत्यर्थः । शतसंख्यानि भवेयुरितिशेषः । शतगुणितानिभविष्यन्तीतिभावः ॥ ५७ ॥ हेभृत्यवत्सल भक्तं भृत्यं अतएवस्थित्यांमर्यादायांस्थितं अस्खलितमर्यादं । अतएव भर्तृपुत्रगते स्वामिपुत्रेणत्वयागते पथि वनगमने । तिष्ठन्तं निश्चितत्वदनुगमनंमां त्वंहातुंनार्हसि ॥ ५८—६० ॥ नगरीमित्यादिश्लोकत्रयमेकान्वयं । रामोवनंगतइति कैकेयी प्रत्ययं विश्वासंगच्छेत् धार्मिकंराजानंमिथ्यावादीतिनातिशङ्केत । भरतारक्षितं भरतेनआसमन्तात् रक्षितंपुत्रराज्यं अवाप्नुयादितिचयत् एषः मेप्रथमः कल्पः कर्तव्येषुप्रयोजनेषुमुख्यः । "मुख्यःस्यात्प्रथमःकल्पः" इत्यमरः ॥ ६१—६३ ॥ यानर्थान् संदिष्टोसि तानर्थान्दशरथादीनुद्दिश्य तथातथाब्रूयाइतिसंबन्धः ॥ ६४ ॥ हेतुमत् युक्तिमत् ॥ ६५ ॥ नेदानीमित्यनेनइहवस्तव्यमितिगुहप्रार्थनंद्योतितं । मेसजने सजनप्रदेशे । अयंवासोनयोग्यः । तद्गतोविधिः आश्रमवासगतः तद्विषयइत्यर्थः । विधिः पितृनियमनं ॥ ६६ ॥ सोहं । "सप्तसप्तचवर्षाणिदण्ड-

---

देवलोकगमनंच । प्रजहामि त्यजामि । एतेन यथेच्छंदेवलोकमप्ययंगच्छतीतिव्यञ्जितं ॥ ५४ ॥ **स०** दीनमिति क्रियाविशेषणं । अनुकंपशब्दोकारान्तोप्यस्ति । "भक्तानुकंपादतिशुद्धसंविद्गात्रे" इत्यत्रतथोक्तेः । एवंच "अतइनिठनौ" इत्यनेनभृत्यानुकंपीति साधुः । शिखादेराकृतिगणत्वेन तत्स्थत्वाद्वाऽऽर्षत्वाद्वासाधुरित्यप्याहुः । भृत्यानुकंपस्त्विवतिपाठेतुनकश्चिद्दोषः ॥ ५९ ॥ **ति०** अतिशङ्का अन्यथाशङ्का तांनकुर्यात् । **स०** विपरीते त्वद्गमनाभावेमयिवनवासंगतेपि । नेति नगतइतितुष्टिहीनासाकैकेयी धार्मिकंराजानंमिथ्यावादीति अतिशङ्केत । अतस्त्वयागन्तव्यमितिभावः । यद्वा विपरीते सुमन्त्रस्यतत्रस्थित्यपेक्षयाविपरीते अयोध्यांप्रतिगमने । तुष्टिहीनेति वस्तुस्थितिकथनं । मयिवनवासंगतेसतिधार्मिकंराजानंमिथ्यावादीतिनातिशङ्केतेतियथास्थानमेवनञोऽन्वयः ॥ ६२ ॥ **शि०** वृत्तं प्रशस्तवृत्तिमत् । **स०** एषः राजविषयेशङ्काभावरूपः । प्रथमःकल्पः त्वद्गमनेप्रथमंप्रयोजनं । प्रयोजनान्तरंचाह—**यदिति** । मेयवीयसीअंबा भरतेनआरक्षितं सम्यग्रक्षितं पुत्रराज्यं अवाप्स्यते प्राप्नोति । भरतागमनस्यापित्वद्गमनाधीनत्वादितिभावः ॥ ६३ ॥ **शि०** अक्लीबं क्लीबतानिवर्तकं ॥ ६५ ॥ **शि०** सजने स्वकीयजनसहिते । आश्रमे स्वकीयजनागम्यवनपर्णशालादौ । **स०** तद्गतः आश्रमवासायोग्यः । विधिः जटाजूटबन्धादिश्चकर्तव्यः ॥ ६६ ॥ **ती०** सीताया लक्ष्मणस्यचहितकामोऽहं पितुर्भूयः अतिशयेनहितकामस्सन् । वन्याहाराधश्शयनादिनियमंगृहीत्वा जटाःकृत्वागमिष्यामि । **ति०**

[ **पा०** ] १ घ. यास्यन्तिक्षणभूतानि. २ क. ख. ग. च. ज. ञ. शतशस्तुततो. ३ ग. घ. ज. भक्तवत्सल. ४ च. छ. झ. ञ. ट. नमांत्वं. ङ. नमांहातुंत्वं. ५ ङ. छ. झ. ट. भक्तिमहंते. ६ ङ. वापि. ७ क. नगरं. ८ ङ. छ. झ. ठ. विपरीते तुष्टिहीना. ख. परितुष्टातु. ञ. यदितुष्टाहि. ९ क. घ. कामो. १० ङ. छ. झ. ट. वृत्तं. ११ ङ. छ. झ. ट. मवाप्स्यते. १२ ङ. छ. झ. ञ. ट. सुमन्त्रत्वं. १३ क. ग—छ. झ. ञ. ट. संदिष्टश्चापि. १४ घ. छ. ट. मक्लीबं. १५ क. योग्योमेवासोयं. १६ ङ छ. झ. अवश्यमाश्रमे. १७ ख. ग. घ. च. ञ. जटांकृत्वा.

तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् ॥ लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः ॥ ६८ ॥
दीर्घबाहुर्नरव्याघ्रो जटिलत्वमधारयत् ॥ ६९ ॥
तौ तदा चीरवसनौ जटामण्डलधारिणौ ॥ अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ७० ॥
ततो वैखानसं मार्गमास्थितः सहलक्ष्मणः ॥ व्रतमादिष्टवान्रामः सहायं गुहमब्रवीत् ॥ ७१ ॥
अप्रमत्तो बले कोशे दुर्गे जनपदे तथा ॥ भवेथा गुह राज्यं हि दुरारक्षतमं मतम् ॥ ७२ ॥
ततस्तं समनुज्ञाय गुहमिक्ष्वाकुनन्दनः ॥ जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ॥ ७३ ॥
स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः ॥ तितीर्षुः शीघ्रगां गङ्गामिदं लक्ष्मणमब्रवीत् ॥ ७४ ॥
आरोह त्वं नरव्याघ्र स्थितां नावमिमां शनैः ॥ सीतां चारोपयान्वक्षं परिगृह्य मनस्विनीम् ॥७५॥

---

कारण्यमाश्रितः । अभिषेकमिमंत्यक्त्वाजटाजिनधरो- वस '' इतिकैकेय्यानियुक्तोहं । तपस्विजनभूषणं तपस्विजनातिशयावहं । नियमं अधःशयनादिकं । गृहीत्वा अङ्गीकृत्य । पितुःसीतायालक्ष्मणस्यच भूयो हितकामः अतिशयेनपरलोकसाधनपुण्यकामःसन् जटाः कृत्वागमिष्यामि तदर्थंन्यग्रोधक्षीरमानय । जटाकरणस्यसीतालक्ष्मणयोःप्रियत्वाभावेपिहितत्वम- स्त्येव तयोरपितेनधर्मातिशयात् । रामजटाकरणे हिसहधर्मचारिण्याःसीतायाअपिधर्मःसिद्धः । लक्ष्म- णस्यचतदनुरोधेनजटाकरणाद्धर्मः । यद्वा हितकामः नतुप्रियकामइत्यर्थः ॥ ६७ ॥ लक्ष्मणस्यचेति । तेना- पिभ्रातृवदवस्थानस्यसंकल्पितत्वादितिभावः । अकरो- दितिलक्ष्मणेप्रयोज्यकर्तृत्वंबोध्यं ॥ ६८ ॥ ऋषिःखिद्य- ति—दीर्घबाहुरिति । जटिलत्वं जटावत्त्वं । तुन्दादि- त्वादिलच् ॥ ६९ ॥ तस्यामप्यवस्थायांदर्शनीयतमत्व- माह—तावित्यादिश्लोकेन ॥ ७० ॥ विखननामा ब्रह्मनखोत्पन्नःकश्चिन्मुनिः । "येनखास्तेवैखानसाः । येवालास्तेवालखिल्याः" इत्युक्तेः । सिंहादिशब्दव- द्वर्णविपर्ययः । तेनप्रोक्तंवैखानसं प्रोक्तार्थेअण् । मार्गं धर्ममित्यर्थः । वानप्रस्थधर्ममितियावत् । आस्थितः आश्रितः । व्रतं ब्रह्मचर्यादिनियमं । आदिष्टवान् अ- ङ्गीकृतवान् । नन्वत्र सर्वोवानप्रस्थधर्मोऽङ्गीकृतः उत यःकश्चित् । नाद्यः । तस्यपुनर्गार्हस्थ्यग्रहणायोगात् । आरूढपतितोहिसइत्युत्तराश्रमप्राप्तस्यपुनःपूर्वाश्रमाव- रोहोहिनिन्दितः । नद्वितीयः । गृहस्थस्यवनस्थासाधा- रणजटाधारणादिकरणेशाखारण्डवदाश्रमरण्डताप- त्तेः । मैवं । पितृनियोगकृतसांकल्पिकनियमविशेषस्य युधिष्ठिरादिसंन्यासधर्मवदविरुद्धत्वात् । उक्तंहिमनुना "सम्यक्संकल्पजःकामोधर्ममूलमिदंस्मृतं" इति । स- हायं गङ्गावतरणसहायं । सखायमितिचपाठः ॥७१॥ बले चतुरङ्गबले । कोशे अर्थौघे । "कोशोस्त्रीकुड्मले खड्गपिधानेर्थौघदिव्ययोः" इत्यमरः । दुरारक्षं दुःखे- नआसमन्तात्रक्षितुंशक्यं [ दुःखेनआरक्षारक्षणंयस्य तद्दुरारक्षं । अतिशयेनदुरारक्षंदुरारक्षतमं । भवेथा इत्यार्षमात्मनेपदम् ] ॥७२ ॥ अव्यग्रः अव्यासक्तः । "व्यग्रोव्यासक्तआकुलः" इत्यमरः ॥ ७३—७४ ॥ स्थितामिमांनावंपरिगृह्यसीतां शनैरारोपय । अन्वक्षं अनुपदं । त्वंचारोहेतिसंबन्धः । यद्वा त्वंप्रथममारोह अन्वक्षंमनस्विनींसीतांपरिगृह्य कराग्रयोर्गृहीत्वा आरोपयेत्युपचारोक्तिः । मनस्विनीमितिनिन्दायांम-

---

सोहंनियमंगृहीत्वा सीतायालक्ष्मणस्यचानुमत्या जटाःकृत्वागमिष्यामि । यत्तु सीतायाहितकामइति तन्न । जटाधारणेनसीताहिता- प्रसिद्धेः । अनुमतिस्त्वपेक्षितैव । अन्यथासंन्यासबुद्ध्यापरमदुःखापत्तेः । **स०** सीतायालक्ष्मणस्यपितुश्चहितकामः । यद्यपिपितुरि- त्यादौचतुर्थ्याभवितव्यं । तथाप्यभिहितहितस्यहितत्वेनाभिप्रेणनाभावात् षष्ठ्युपपत्तिः । अतएव यत्तुसीतायाहितकामइतितन्न जटाधारणेनसीताहिताप्रसिद्धेरितिव्याख्यानान्तरंदूषयतानागोजिभट्टेन सीतायाअनुमत्येतियदध्याहृत्यव्याख्यातंतत्परास्तं । अस्म- दुक्तरीत्यासीताहिताप्रसिद्धेर्भूषणत्वात् । जटाधारणंदशरथहितमितिमत्वा सीताहिताप्रसिद्धेरितिवकुलोकोत्तरप्रज्ञत्वात् ॥ ६७ ॥ **ति०** वैखानसंमार्गं वानप्रस्थाश्रमधर्मं । आस्थितः प्राप्तुंकृतबुद्धिःसन् व्रतं वानप्रस्थव्रतं । आदिष्टवान् । अत्रगङ्गारूपतीर्थप्राप्तौ अग्रेप्रयागरूपतीर्थप्राप्तौ तदग्रेपितृमरणश्रवणेपियन्मुण्डनाकरणंरामलक्ष्मणयोः तेनानेनपरकृतिरूपार्थवादेनक्षत्रियाणांतीर्थादिषु-

**[ पा० ]** १ ङ. छ. झ ट. चीरसंपन्नौ. २ च. ञ. मास्थाय. ३ क. ख. ग. ज. सखायं. ४ ङ. च. ज. राज्यंते. ५ ग. ततस्तु. ६ ङ. च. छ. झ. ञ. ट. समनुज्ञाप्य. ७ ग. घ. च. ज. झ. सहभार्यःसलक्ष्मणः. ८ ङ. च. छ. झ. ट. वचनं.

स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन् ॥ आरोप्य मैथिलीं पूर्वमारुरोहात्मवांस्ततः ॥ ७६ ॥
अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ॥ ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ॥ ७७ ॥
राघवोपि महातेजा नावमारुह्य तां[1] ततः ॥ ब्रह्मवत्[2]क्षत्रवच्चैव जजाप हितमात्मनः ॥ ७८ ॥
आचम्य च यथाशास्त्रं नदीं तां सह सीतया ॥ [3]प्रणमत्प्रीतिसंहृष्टो [4]लक्ष्मणश्चामितप्रभः ॥ ७९ ॥
अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् ॥ आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ८० ॥
ततस्तै[5]श्चोदिता सा नौः कर्णधारसमाहिता ॥ शुभस्फ्यवेगाभिहता [6]शीघ्रं सलिलम[7]त्यगात् ॥ ८१ ॥
मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता ॥ वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥ ८२ ॥
पुत्रो दशरथस्यायं महाराजस्य धीमतः ॥ निदेशं [8]पारयित्वेमं गङ्गे त्वदभिरक्षितः ॥ ८३ ॥
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ॥ भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥ ८४ ॥
ततस्त्वां देवि सुभगे क्षेमेण पुनरागता ॥ यक्ष्ये [9]प्रमुदिता गङ्गे सर्व[10]कामसमृद्धिनी ॥ ८५ ॥
त्वं हि त्रि[11]पथगा देवि ब्रह्मलोकं [12]समीक्षसे ॥ भार्या चोदधिराजस्य लोकेऽस्मिन्संप्रदृश्यसे ॥ ८६ ॥
[13]सा त्वां देवि नमस्यामि प्रशंसामि च शोभने ॥ प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥ ८७ ॥

तुप् । भीरुमितियावत् । पूर्वारोहणेऽसौबिभीयादिति भावः ॥ ७५ ॥ लक्ष्मणस्तुनिपुणतयाप्रथमंसीतामारोप्यपश्चात्स्वयमारूढइत्याह—स भ्रातुरिति । अप्रतिकूलयन् यथातथावाप्यारोहणशासनमनुतिष्ठन् । आत्मवान् रामाशयज्ञइत्यर्थः । पूर्वमनस्विनीमित्युक्तं इदानीमात्मवानित्युक्तं उभाभ्यामारोपणेदोषशङ्काराहित्यंचोक्तम् ॥ ७६ ॥ ज्ञातीन् बन्धून् । अचोदयत् नौःपारंनीयतामित्यचोदयत् ॥ ७७ ॥ ब्रह्मवत्क्षत्रवदित्यर्हार्थेवतिप्रत्ययः । ब्राह्मणार्हंक्षत्रियार्हं आत्मनोहितं जजाप दैवींनावमित्यादिब्रह्मक्षत्रसाधारणमन्त्रंजजापेत्यर्थः । यद्वा ब्रह्मक्षत्रशब्दयुक्तंमन्त्रंजजापेत्यर्थः । सचमन्त्रः सुत्रामाणमित्यादिः । तत्रह्यरिष्टनेमिः पृतनाजिदितिब्रह्मक्षत्रशब्दौश्रुतौ ॥ ७८ ॥ पूर्वोक्तंनावारोहणंविवृण्वन्नाह—आचम्येत्यादिना ॥७९—८०॥ कर्णधारसमाहिता समाहितकर्णधारा । शुभस्फ्यवेगाभिहता शुभानांस्फ्यानामरित्राणां वेगेनाभिहताप्रणुन्ना ॥८१—८२॥ निदेशं चतुर्दशवर्षावधिकवनवासविषयनियोगं । पारयित्वा निर्विघ्नं परिसमाप्य । उष्यउषित्वा । प्रत्यागमिष्यति यदेतिशेषः । ततः तदा । सुभगे सुकीर्ते । "भगःश्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः । क्षेमेण कुशलेनसह । यक्ष्ये पूजयिष्यामि । सर्वकामसमृद्धिनीति व्रीह्यादित्वादिनिः ॥८३—८५॥ ब्रह्मलोकंसमीक्षसे ब्रह्मकमण्डलवांद्रवीभूतधर्मरूपतयास्थित्वाब्रह्मप्रक्षालितविष्णुपादोद्भवत्वादितिभावः । अतएव विष्णुपादोद्भवामितिपूर्वमुक्तं ॥ ८६ ॥ प्रशंसामि स्तौमि । शिवेन क्षेमेण । पेशलं रम्यं । तवप्रि-

मुण्डननिषेधंप्रतीमइत्यलम् ॥ ७१ ॥ **ती॰** जजाप "सुत्रामाणमृचानावमारुहेदपउत्तरेत्" इतिक्षत्रियाधिकारेणस्मरणात् "दैवीं नावं" इत्यादिब्रह्मक्षत्रसाधारणंमन्त्रंजजापेत्यर्थः । **शि॰** ब्रह्मवत् वेदप्रवर्तकः महातेजाराघवः क्षत्रवत् क्षत्रियकुलविहितंयथाभवतितथा । आत्मनोहितं स्वप्रापकंमन्त्रविशेषंजजाप । एतेन तन्मन्त्रोच्चारणेरामस्यप्रीत्यतिशयोध्वनितः ॥ ७८ ॥ **ति॰** गङ्गाया महादेवतात्वात्स्त्रीदेवतात्वाच्चसीताप्रार्थितवतीत्याह—**मध्यमिति** । **शि॰** अनिन्दिता आश्रितानांनिन्दितत्वनिवर्तिका ॥ ८२ ॥ **ति॰** पालयतु पारयतु समापयत्वितियावत् । रलयोःसमानश्रुतित्वात् ॥ ८३ ॥ **ति॰** सर्वकामसमृद्धिनी सर्वकामसमृद्धं सर्वकामपूरणमस्याअस्ति दातव्यत्वेनेत्यर्थः ॥८५॥ **ति॰** संमक्षसे व्याप्नोषि । अक्षूव्याप्तौसंघातेच । **स॰** त्रिपथगेत्रीन्पथान्गच्छतीतित्रिपथगा । "वाटःपथश्चमार्गश्च" इतित्रिकाण्डशेषामरः । यद्वा त्रयाणां पथांसमाहारस्त्रिपथं भूर्भुवस्स्वराख्यं तेनगच्छतीतितथा तस्यास्संबुद्धिः । ब्रह्मलोकं सत्यलोकं ॥ ८६ ॥

[ **पा॰** ] १ ज. तदा. २ घ. त्क्षत्रवच्चापि. ३ क. ख. च. ज. ञ. प्रणमत्प्रीतिसंहृष्टो. ङ. झ. ट. प्रणमत्प्रीतिसंतुष्टो. घ. प्रणमत्प्रीतिसंयुक्तो. ४ ख. ङ. छ. झ. ट. लक्ष्मणश्चमहारथः. ५ ङ. छ. झ. ट. श्चालितानौका. च. ज. ञ. श्चोदितानौका. ६ च. ञ. गंगासलिलं. ७ क. अत्ययात्. ८ च. पालयित्वैव. ङ. छ. झ. ञ. ट. पालयत्वेनं. ज. पारयित्वैनं. क. ख. पारयत्वेष. ग. पारयत्वेनं. ९ च. प्रमुदिते. १० च. ज. कामप्रदायिनि. क—घ. कामप्रसाधिनि. ११ ङ. च. छ. झ. ञ. ट. त्रिपथगे १२ झ. समक्षसे. १३ क. तत्त्वां.

गवां शतसहस्रं च वस्त्राण्यन्नं च पेशलम् ॥ ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८८ ॥
सुराघटसहस्रेण मांसभूतौदनेन च ॥ यक्ष्ये त्वां प्रयता देवि पुरीं पुनरुपागता ॥ ८९ ॥
यानि त्वत्तीरवासीनि दैवतानि वसन्ति च ॥ तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९० ॥
पुनरेव महाबाहुर्मया भ्रात्रा च सङ्गतः ॥ अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे ॥ ९१ ॥
तथा संभाषमाणा सा सीता गङ्गामनिन्दिता ॥ दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ॥ प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ॥ ९३ ॥
अथाब्रवीन्महाबाहुः सुमित्रानन्दवर्धनम् ॥ भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४ ॥
अवश्यं रक्षणं कार्यमदृष्टे विजने वने ॥ अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु ॥ ९५ ॥
पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन् ॥ अन्योन्यस्येह नो रक्षा कर्तव्या पुरुषर्षभ ॥ ९६ ॥
न हि तावदतिक्रान्ता सुकरा काचन क्रिया ॥ अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ॥ ९७ ॥
प्रनष्टजनसंबाधं क्षेत्रारामविवर्जितम् ॥ विषमं च प्रपातं च वनं ह्यद्य प्रवेक्ष्यति ॥ ९८ ॥
श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणोऽग्रतः ॥ अनन्तरं च सीताया राघवो रघुनन्दनः ॥ ९९ ॥

गतं तु गङ्गापरपारमाशु रामं सुमन्त्रः प्रततं निरीक्ष्य ॥
अध्वप्रकर्षाद्विनिवृत्तदृष्टिर्मुमोच बाष्पं व्यथितस्तपस्वी ॥ १०० ॥

---

यच्चिकीर्षया ब्राह्मणमुखेनहिदेवतानांग्रहणमितिभावः ॥ ८७—८८ ॥ मांसभूतौदनेन मांसरूपान्नेनेतियावत् ॥८९॥ तीर्थानि मणिकर्णिकादीनि ।आयतनानि काश्यादीनि ॥ ९०—९३ ॥ भवेति सावधानइति शेषः । अदृष्टे अदृष्टपूर्वे । नः आवयोः । "अस्मदोद्वयोश्च" इतिबहुवचनं । तावच्छब्दःसाकल्यार्थकः । अन्योन्यस्यसाकल्येनरक्षाकर्तव्येतिसंबन्धः । यत्नस्यावश्यकर्तव्यत्वेयुक्तिमाह—नहीति । अतिक्रान्ता अतिक्रान्तकाला । काचनक्रिया नसुकराहि पुनःसंधातुंन शक्याहीत्यर्थः । तस्मात्काले सावधानतयास्माभिः स्थातव्यमितिभावः । संबाधः संमर्दः । क्षेत्रं शाल्यादिवृद्धिस्थलं । विषमं निम्नोन्नतप्रदेशयुक्तं । प्रपतन्त्यस्मिन्नितिप्रपातः गर्तः । हियस्मादद्यप्रवेक्ष्यति तस्मादुःखंवेत्स्यतीतिसंबन्धः । इतिसुमित्रानन्दवर्धनमब्रवीदित्यन्वयः ॥ ९४—९९ ॥ गतं गङ्गापरपारं गङ्गाया अपरंपारं प्रततंनिरीक्ष्य अविच्छिन्नंनिरीक्ष्येत्यर्थः । तपस्वी संतापयुक्तः । तपसंतापइतिधातुः । प्रतपन्निति पाठे तापवानित्यर्थः । तपस्वी शोचनीयः । अध्व-

**शि०** ब्राह्मणेभ्यः त्वत्तीरवर्तिविप्रेभ्यः ॥८८॥ **शि०** सुराघटसहस्रेण सुरेषुदेवेषुनघटन्तेनसन्तीत्यर्थः । तेषांसहस्रेण सहस्रसंख्याकसुरदुर्लभपदार्थेनेत्यर्थः । मांसभूतौदनेन मानास्तिअंसोराजभागोयस्यां साचसाभूःपृथ्वीच उतंवस्त्रंचओदनंचएतेषांसमाहारः तेनचत्वांयक्ष्ये । अतःप्रीयतां । दन्त्योपधोप्यंसशब्दोभागवाचीकोशेप्रसिद्धः ॥८९॥ **ति०** दक्षिणाभर्तुरनुकूला ॥ ९२ ॥ **स०** संरक्षणार्थाय तद्रूपप्रयोजनाय । **शि०** सजने परजनसहिते ॥ ९४ ॥ **ति०** अग्रतइति एवंचकार्यवशाल्लघोरप्यग्रतोगमनमदोषायेतिध्वनितं । मार्गएवलघोरग्रतोगमनमदोषायेत्यन्ये । एवंरूप्यविश्वसनीयेतिध्वनितं ॥ ९५ ॥ **ति०** नोस्माकं । सीतयापि पातिव्रत्यमहिम्नाइतररक्षणं । **स०** सीतयापि सेवयारक्षाकर्तव्या ॥ ९६ ॥ **ति०** कुतएवमतियत्नोतआह—**नहीति** । असुकरा दुष्करा । काचन कापिक्रिया अतिक्रान्तान । किंत्वितःप्रभृतिदुष्करक्रियारंभइतिभावः । यद्वा काचनक्रिया अपायलक्षणाअतिक्रान्ता अस्मानतिक्रम्यप्राप्ताचेत्ततोरक्षा सुकरानहि । प्रहृतंप्रहृतमेवेतिन्यायादित्यर्थः । **शि०** ययावैदेह्या असुकरा अतिप्रयत्नसाध्या । काचनक्रिया नातिक्रान्ता नकृतेत्यर्थः । सावैदेही अद्य गमनसमये वनवासस्यवनवाससंबन्धिदुःखं वनगमनजनितखेदं वेत्स्यति अयंखेदोनिवार्यइतितात्पर्यम् ॥ ९७ ॥

**[पा०]** १ क. ख. ग. ज. शतसहस्राणि. २ क. च. शोभनं. ३ घ. भाण्डसहस्रेण. ४ क. ङ. छ. झ. ञ. ट. प्रीयतां. ५ ख. घ. रिहागता. ६ ङ. झ. ट. दैवतानिचसन्तिहि. ७ क. ग. घ. ञ. वसन्तिहि. ख. महान्तिच. ८ घ. तीरंहि. ९ घ. ततो. १० क. ख. नन्दिवर्धनं. ११ क. सीतायाविजनेवने. १२ ङ. छ. झ. ट. कार्यमद्भिर्धैर्विजने. १३ ङ. च. छ. झ. ञ. ट. पृष्ठतोनु. १४ ङ. च. छ. झ. ञ. ट. सीतांत्वांचानु. १५ क. ख. घ. ङ. छ. झ. ञ. ट. अन्योन्यस्यहि. ग. अन्योन्यस्यचनौ. १६ घ. क.चिदति. १७ ख. क्षेत्रग्राम. १८ ङ. च. ज. झ. ञ. वनमद्य. ट. वनमद्यगमिष्यति. १९ ङ. च. छ. झ. ञ. ट. सततं.

स लोकपालप्रतिमप्रभाववांस्तीर्त्वा महात्मा वरदो महानदीम् ॥
ततः समृद्धाञ्शुभसस्यमालिनः क्रमेण वत्सान्मुदितानुपागमत् ॥ १०१ ॥
तौ तत्र हत्वा चतुरो महामृगान्वराहमृश्यं पृषतं महारुरुम् ॥
आदाय मेध्यं त्वरितं बुभुक्षितौ वासाय काले ययतुर्वनस्पतिम् ॥ १०२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रामेणरात्रौतरुमूलेलक्ष्मणंप्रतिदशरथाद्युपालंभगर्भितबहुविधवचनोक्तिपूर्वकंकैकेयीतःकौसल्याद्युपद्रवनिरसनायपुनरयोध्यांप्रतिनिवर्तनोक्तिः ॥ १ ॥ लक्ष्मणेनरामंप्रतिस्वस्यपरित्यागेसीताद्दष्टान्तेनस्वजीवनाभावनिर्धारणोक्तौरामेणतस्यस्वेनसह संततवनवासाङ्गीकरणम् ॥ २ ॥

स तं वृक्षं समासाद्य संध्यामन्वास्य पश्चिमाम् ॥ रामो रमयतांश्रेष्ठ इति होवाच लक्ष्मणम् ॥ १ ॥
अद्येयं प्रथमा रात्रिर्याता जनपदाद्बहिः ॥ या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि ॥ २ ॥
जागर्तव्यमतन्द्रिभ्यामद्यप्रभृति रात्रिषु ॥ योगक्षेमं हि सीताया वर्तते लक्ष्मणावयोः ॥ ३ ॥
रात्रिं कथंचिदेवेमां सौमित्रे वर्तयामहे ॥ उपावर्तामहे भूमावास्तीर्य स्वयमार्जितैः ॥ ४ ॥
स तु संविश्य मेदिन्यां महार्हशयनोचितः ॥ इमाः सौमित्रये रामो व्याजहार कथाः शुभाः ॥५॥

---

प्रकर्षात् मार्गविप्रकर्षात् । विनिवृत्तदृष्टिः विनिवृत्तदृष्टिव्यापारः ॥ १०० ॥ वत्सान् वत्सदेशान् । मत्स्यानितिपाठोलेखकप्रमादकृतः । इत्थंहिदेशव्यवस्थादृश्यते । गङ्गायमुनयोर्मध्येप्रयागप्रदेशोवत्सदेशः । ततः पश्चिमभागेपाञ्चालः । यमुनादक्षिणतीरेशूरसेनदेशः । तस्मात्पश्चिमतोमत्स्यदेशइति । सलोकपालप्रतिमप्रभाववानितिपाठः । अन्यथावृत्तभङ्गःस्यात् ॥ १०१ ॥ चातुर्विध्यमेवाह—वराहमित्यादि । ऋश्यादयोहरिणभेदाः । ऋश्यंपृषतंमहारुरुंच आदाय स्वीकृत्येत्यर्थः । मेध्यमितिऋश्यादिसर्वविशेषणं । काले सायंकाले । त्वरितत्वोक्तिः सायंकालत्वात् बुभुक्षितत्वाच्च । द्विवचनेनसीतांकुत्रचिद्वनस्पतिमूलेनिक्षिप्यमृगग्रहणार्थंगत्वापुनरागतावितिगम्यते ॥१०२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

अत्रमृगमांसादनमस्तमयात्प्रागर्थसिद्धं । अन्वास्य उपास्य ॥१॥ याता प्राप्ता । अद्येत्यस्यनोत्कण्ठितुमर्हसीत्यनेनान्वयः । उत्कण्ठा दुःखस्मरणं । तांप्रतीतिशेषः ॥ २ ॥ योगक्षेमं पालनमितियावत् । आवयोर्वर्तते अस्मदधीनमित्यर्थः ॥ ३ ॥ कथंचिदेवेमामिति प्राथमिकत्वादितिभावः । इमां शय्यासंपादनात्पूर्वमेवप्राप्तां । स्वयमार्जितैः तृणपर्णैरितिशेषः । उपावर्तामहे शयिष्यामहे । वर्तमानसामीप्येवर्तमानवद्भावः ॥ ४ ॥ संविश्य शयनंसंकल्प्योषित्वा । शयनस्य

---

**शि०** तत्र वत्सदेशे वराहादींश्चतुरोमहामृगान्हत्वा खेलनार्थंसंताडय । बुभुक्षितौतौरामलक्ष्मणौ मेध्यं व्रतिभिर्भोक्तव्यंफलादिकमित्यर्थः । आदाय गृहीत्वा । वनस्पतिं वृक्षसमीपंययतुः ॥ १०२ ॥ इतिद्विपञ्चाशस्सर्गः ॥ ५२ ॥

**ति०** आजनपदादितिच्छेदः । आइतियातेत्यनेनसंबध्यते । रात्रिः आयाता प्राप्ता । **स०** याता आयाता । उपसर्गाणांधातुलीनार्थबोधकत्वस्य "गम्यतेअवगम्यते चरणाभिधानात् विचरणाभिधानात्" इत्यादौदर्शनात् । तांरात्रिं । "कालाध्वनोरत्यन्तसंयोगेद्वितीया" इतिद्वितीया । उत्कण्ठितुं गृहदारादिस्मरणेनचित्तंव्याकुलीकर्तुंनार्हसि ॥ २ ॥ **ति०** नविद्येतेतन्द्रीययोस्ताभ्यां ।

**[ पा० ]** १ क. ख. घ—ट. प्रभावस्तीर्त्वा. २ क. समृद्धांजलसस्यमालिनीं. ग. समृद्धांशुभसस्यमालिनीं. ३ क. ख. ङ. च. छ. झ. ञ. ट. क्षणेन. ४ झ. मर्हति. ५ च. मतन्द्राभ्यां. ६ ग. ङ. छ. ज. झ. ट. योगक्षेमोहि. ङ. च. ञ. योगक्षेमोहि. ७ ख. च. ज. झ. ट. वर्तेते. ८ ङ. छ. झ. ट. अपवर्तामहे. घ. उपवर्तामहे. ९ ङ. च. छ. झ. ञ. ट. स्वयमर्जितैः.

ध्रुवमद्य महाराजो दुःखं स्वपिति लक्ष्मण ॥ कृतकामा[1] तु कैकेयी तुष्टा भवितुमर्हति ॥ ६ ॥
सा[2] हि देवी महाराजं कैकेयी राज्यकारणात् ॥ अपि न च्यावयेत्प्राणान्दृष्ट्वा भरतमागतम् ॥ ७ ॥
अनाथश्च[3] हि वृद्धश्च मया चैव विनाकृतः ॥ किं करिष्यति कामात्मा [4]कैकेयीवशमागतः ॥ ८ ॥
इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् ॥ काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥ ९ ॥
को ह्यविद्वानपि पुमान्प्रमदायाः कृते त्यजेत् ॥ छन्दानुवर्तिनं पुत्रं [5]ततो मामिव लक्ष्मण ॥ १० ॥
सुखी बत सभार्यश्च भरतः केकयीसुतः ॥ मुदितान्कोसलानेको यो भोक्ष्यत्यधिराजवत् ॥ ११ ॥
स हि [6]सर्वस्य राज्यस्य [7]सुखमेकं भविष्यति ॥ [8]ताते च वयसाऽतीते मयि चारण्यमा[9]स्थिते ॥ १२ ॥
अर्थधर्मौ परित्यज्य यः काममनुवर्तते ॥ एवमापद्यते [10]क्षिप्रं राजा दशरथो यथा ॥ १३ ॥
मन्ये दशरथान्ताय मम प्र[11]व्राजनाय च ॥ कैकेयी सौम्य [12]संप्राप्ता राज्याय भ[13]रतस्य च ॥ १४ ॥

सर्गान्तेवक्ष्यमाणत्वात् । कथाः वार्ताः ॥ ५ ॥ कृतकामा फलितेच्छा ॥ ६ ॥ राज्यकारणात् राज्यस्थैर्यकारणात् । ननु "नतेम्बामध्यमातातगर्हितव्याकथंचन । तामेवेक्ष्वाकुनाथस्यभरतस्यकथांकुरु" इतिवदतोरामस्यसर्वपुरुषार्थनिस्पृहस्य कथमेवंविधाःकैकेयीनिन्दाप्रधानाः स्वालाभगर्भा उक्तयोयुज्यन्ते । उच्यते । "अयोध्यामितएवत्वंकाल्येप्रविशलक्ष्मण" इतिवक्ष्यति अतस्तन्मतमनुवर्तितुमेवमुक्तमितिज्ञेयम् ॥ ७—८ ॥ व्यसनं मदीयं । मतिविभ्रमं अर्थधर्मौ विहाय कामैकसेवित्वं । [ व्यसनं मदीयं । अनेन धर्मस्याप्राधान्यमुक्तं । मतिविभ्रमं अतिनिस्पृहत्वं । अनेनार्थाप्राधान्यमुक्तं ] ॥ ९ ॥ कामस्यगरीयस्त्वमुपपादयति—कइति । छन्दानुवर्तिनं स्वेच्छानुवर्तिनं ॥ १०—११ ॥ सुखमेकं अद्वितीयं प्रधानभूतइत्यर्थः ॥ १२ ॥ प्रसङ्गात्केवलंकामंनिन्दति—अर्थधर्माविति । दशरथोयथा व्यसनीतिशेषः ॥ १३ ॥ संप्रा-

इडभावोह्रस्वत्वंचार्षं । क्वचित्तुअतन्द्राभ्यामित्येवपाठः । **शि०** अतन्द्रिभ्यां तन्द्रारहिताभ्यां । योगक्षेमौआवयोरधीनावितिशेषः वर्तेते । तत्रयोगः अलभ्यस्यवन्यफलादेर्लाभः । क्षेमःलब्धस्यस्वमर्यादारूपवस्तुनःपरिपालनम् ॥ ३ ॥ **शि०** कृतकामा प्राप्तस्वाभीष्टवरापिकैकेयी किंतुष्टाभवितुमर्हति नेत्यर्थः । तुःकिमर्थे ॥ ६ ॥ **शि०** प्राणान् प्राणसदृशास्मद्रक्षक हेलक्ष्मण आगतंभरतंन दृष्ट्वा भरतकर्तृकागमनमदृष्ट्वेत्यर्थः । किंच अनआगतमागमनंयस्यतं भरतंदृष्ट्वा ज्ञात्वा भरतोनागतइतिविचार्येत्यर्थः । आगतमित्यत्र निषेधार्थकमकारंप्रश्लिष्येमावर्थौ । राज्यकारणात् राज्यकरणहेतुकभरतानयनार्थं । महाराजंतुनच्यावयेत्नप्रेषयेत् । अस्मद्वियोगदुःखितत्वादितितात्पर्यं । तेनसुमन्त्रमेवप्रेषयितेतिव्यञ्जितम् । **ती०** नच्यावयेदपि नच्यावयेत्किमितिसंबन्धः । **ति०** नच्यावयेत् अपितुच्यावयेदित्यर्थः ॥ ७ ॥ **शि०** अनाथः सर्वनियन्तृत्वेननाथान्तररहितः । चक्रवर्तीत्यर्थः । वृद्धः ज्ञानवयोभ्यामधिकः अतएव वशं अतिकान्तिं । आगतः नित्यंप्राप्तोपिमहाराजः कैकेय्या मन्थरया मयाविनाकृतः । अतएवकामात्मा कामःअभिषेकविषयिणीच्छाआत्मनिमनस्येवयस्यसः । दुःखीसन्नित्यर्थः । किंकरिष्यति । एतेनतत्कृत्यंविचारणीयमितिध्वनितम् ॥ ८ ॥ **शि०** कामे अभिषेकविषयकोत्कटेच्छायांसत्यां मतिविभ्रमं मतिविभ्रमकारकं इदं वियोगजं व्यसनं दुःखं । आलोक्य अनुभूय विद्यमानस्यापिराज्ञः अर्थधर्माभ्यां गरीयान् गरीयस्त्वंअस्ति । अर्थधर्मयोर्नैवत्यागइत्यर्थः । इतिमेमतिर्निश्चयः । तेन तस्यधैर्यातिशयवत्त्वंमर्यादापालकत्वंचध्वनितं ॥ ९ ॥ **शि०** तस्यधैर्यातिशयवत्त्वंप्रकाशयन्नाह—**कइति** । तातोदशरथोमामिव अविद्वान् अरसज्ञोपिकःपुमान् कृते परोपकाराय छन्दानुवर्तिनं आज्ञाकारिणंपुत्रं प्रमदायाः अतिहर्षहेतुभूतायाःपुर्याः । त्यजेत् पृथक्कुर्यात् नकोपीत्यर्थः । कृतेइत्यत्रविनापिप्रत्ययमित्युपपदलोपः ॥ १० ॥ **शि०** इदानींभरतस्यापिदुःखातिशयोभवितेतिबोधयन्नाह—**सुखीति** । एकः मयारहितः । सभार्यः कैकेयीसुतोयोभरतःसः सुखीसन् अधिराजवत् कोसलान् बतकिंभोक्ष्यति पालयिता नेत्यर्थः ॥ ११ ॥ **ति०** एकं मुख्यं सुखं अनुभवितेतिशेषः । ईदृशोभविष्यति "सुखमेक" इतिवापाठः । एकएवराजाभविष्यतीत्यर्थइतितीर्थः ॥ १२ ॥ **ति०** योभरतःकाममनुवर्तते सयथाराजादशरथोविपदमापन्नएवंविपदमापद्यते प्राप्नोतीत्यर्थः । अन्येतु राजादशरथोयथाराजत्वमापन्नस्तथा भरतोराजत्वमापद्यतइत्यर्थइत्याहुः ॥ १३ ॥ **शि०** इदानींकैकेय्यांदुःखातिशयोस्तीतिबोधयन्नाह—**मन्यइति** । ममप्रव्राजनाय प्रव्राजनंनिर्वर्तयितुं । दशरथान्ताय दशरथसिद्धान्तंनिर्वर्तयितुं भरतस्यराज्याय स्वनियु-

**[पा०]** १ ख. ग. घ. छ. ज. कामाहि. २ ख. सातु. ३ क. अनाथश्चैव. ४ क. ख. ग. ङ—ट. कैकेय्यावश. ५ क—घ. च. ज—ट. तातो. ६ क. ग—छ. झ. ञ. ट. राज्यस्यसर्वस्य. ७ च. सुखमेको. ग. घ. ङ. झ. ट. सुखमेकं. ८ ङ. च. झ. ञ. ट. तातेतु. ९ क. ङ—ट. माश्रिते. १० घ. लोको. ११ ख. प्रव्रजनायच. १२ ट. संतप्ता. १३ क. ख. भरतस्यतु.

अपीदानीं न कैकेयी सौभाग्यमदमोहिता ॥ कौसल्यां च सुमित्रां च संप्रबाधेत मत्कृते ॥ १५ ॥
मा स्म मत्कारणाद्देवी सुमित्रा दुःखमावसेत् ॥ अयोध्यामित एव त्वं काल्ये प्रविश लक्ष्मण ॥१६॥
अहमेको गमिष्यामि सीतया सह दण्डकान् ॥ अनाथाया हि नाथस्त्वं कौसल्याया भविष्यसि ॥ १७ ॥
क्षुद्रकर्मा हि कैकेयी द्वेष्यमन्याय्यमाचरेत् ॥ परिदद्या हि धर्मज्ञे भरते मम मातरम् ॥ १८ ॥
नूनं जात्यन्तरे कस्मिन्स्त्रियः पुत्रैर्वियोजिताः ॥ जनन्या मम सौमित्रे तस्मादेतदुपस्थितम् ॥ १९ ॥
मया हि चिरपुष्टेन दुःखसंवर्धितेन च ॥ विप्रायुज्यत कौसल्या फलकाले धिगस्तु माम् ॥ २० ॥
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकम् ॥२१॥
मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण शारिका ॥ यस्यास्तच्छ्रूयते वाक्यं शुक पादमरेर्दंश ॥ २२ ॥

प्रेत्यत्रेतिकरणंबोध्यं ॥ १४ ॥ कैकेयीनसंप्रबाधेतइत्यत्रकाकुः । मत्कृते मत्संबन्धादित्यर्थः ॥ १५ ॥ इत एव समीपप्रदेशादेव ॥ १६ ॥ नाथः रक्षकः ॥ १७ ॥ क्षुद्रकर्मेति "डाबुभाभ्याम्–" इतिडाप् । द्वेष्यं द्वेषार्हस्वकृतद्वेषोचितमित्यर्थः । अन्याय्यं अवमानमित्यर्थः । द्वेषादितिचपाठः । परिदद्याः परिदानं नाम रक्ष्यतयाप्रदानं ॥ १८ ॥ कस्मिंश्चिज्जात्यन्तरे कस्मिंश्चिज्जन्मनि । एतत् पुत्रवियोजनं ॥ १९ ॥ फलकाले पुत्रोत्पत्तिफलस्यमातृशुश्रूषणस्यकाले ॥ २०—२१ ॥ अम्बयावर्धिततिर्यग्जन्तुकृतप्रीतिमात्रमपिनमयाकृतमित्याह—मन्यइति । हेलक्ष्मण सा पूर्वमावाभ्यामनुभूताशारिका । मत्तः मदपेक्षया प्रीतिविशिष्टेतिमन्ये प्रीत्याधिकेतिमन्ये । मदपेक्षयाअधिकांप्रीतिंकौसल्यायाजनयतीत्यर्थः । यद्वा मदपेक्षयाकौसल्यायामधिकप्रीतियुक्तेत्यर्थः । उभयत्रहेतुमाह—यस्याइति । यस्याः शारिकायाः । हेशुक अरेः अरिभूतस्य बिडालस्य । पादं दश खण्डयइति । तत् अनुभूतसदृशं प्रीतिसंजननंवाक्यंश्रूयते अम्बयेतिशेषः । लोकेहिकाचित्पोषिताशारिकासमीपवर्तिनंशुकंप्रतिबिडालं दशदशेतिकूजन्तीदृश्यते । यद्वा अरेः कौसल्याशत्रोःपादंदशेतिवाक्यंश्रूयते । पोषितत्वाविशेषेपि शारिकावदरिनिवर्तनवाचमप्यनुक्तवतोमम जन्मधिगित्यर्थः । अत्रप्रकरणबलेन भगवद्भजनादप्याचार्यसमाश्रयणस्यसुकरोपायत्वंदर्शितंभवति । "नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनन्त्युरुकालेनदर्शनादेवसाधवः" इत्युक्तेः । तथाहि शारिकेत्यनेनज्ञानकर्मरूपपक्षद्वयवानाचार्योलक्ष्यते । स्त्रीलिङ्गेन स्त्रीप्रायमितरत्सर्वमित्युक्तंभगवत्पारतन्त्र्यमुच्यते । आचार्योभगवदपेक्षयामोक्षानन्दजननेऽधिकसुकरोपायइत्यर्थः । "पशुर्मनुष्यःपक्षीवायेचवैष्णवसंश्रयाः ॥ तेनैवतेप्रयास्यन्तितद्विष्णोःपरमंपदं" इतिवचनात् । कोयमाचार्यइत्यतआह—यस्याइति । यस्याइतिपञ्चमी । यस्मात् तत् गुरुपरम्परयाप्राप्तंवाक्यंरहस्यमन्त्ररूपं श्रूयते । कीदृशंवाक्यमित्यत्राह—शुकेति । हेशुक शुकसमानवर्णभगवन् । अरेः विरोधिभूतस्यसंसारस्य । पादं आधारं संसारबीजभूताहंकारममकारावि-

त्वलमूलकभरतसंबन्धिराज्यपालनाय विद्यमानाकैकेयी संतप्ता अस्मद्वियोगजदुःखाक्रान्तास्तीतिमन्ये । अतएव मत्कृते हर्षध्वंसेसति सौभाग्यमदमोहिता अहमतीवपतिप्रियेतिसौभाग्यविषयकोयोमदो हर्षः तेनअमोहितासाकैकेयी कौसल्यादीन् अ न प्रबाधेत । श्लोकद्वयमेकान्वयि ॥ १४—१५ ॥ **ति०** माता तवेतिशेषः । काले प्रातःकाले । उत्थायेत्यर्थः ॥ १६ ॥ **ति०** हेधर्मज्ञ तेममचमातरं सुमित्रांकौसल्यांचोद्दिश्य गरं विषं हि तु दद्यात् । **शि०** कैकेयीतद्दासीमन्थरा ॥ १८ ॥ **शि०** जात्यन्तरे मनुवंशातिरिक्तक्षत्रियजातौ ॥ १९ ॥ **शि०** चिरपुष्टेन चिरंपोषितेन मयाविप्रायुज्यत । अतः मां वियोगसंपत्तिंधिक् । **ति०** फलकाले सुखानुभवकाले ॥ २० ॥ **ति०** हेलक्ष्मण अंबयापालिताकृतवचनशिक्षाचशारिका मत्तोऽबायांप्रीतिविशिष्टा अधिकप्रीतियुक्ता इतिमन्ये । यद्यस्मात् तस्याश्शारिकायास्सकाशादेवंशत्रुनिग्रहविषयं "शुकपादमरेर्दंश" इतिवाक्यंश्रूयते । कौसल्ययेतिशेषः । अस्मत्तस्तु तदपिनेतिभावः । अत्रेदंवाक्यं अरेर्बिडालस्यपादंहेशुकदशेत्यर्थकतयालोकप्रसिद्धं । अरेः कौसल्या-

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. अपीदानींतु. २ ग—ट. साप्रबाधेत. ३ क. ग. ङ. च. छ. झ. ञ. ट. मातास्मत्कारणात्. ४ घ. माविशेत्. ५ क. ख. ग. ङ—ट. काले. ६ घ. क्षुद्रधर्मांहि. ७ ध—छ. झ. ञ. ट. द्वेषादन्यायं. ८ ङ. च. छ. झ. ट. परिदद्याद्धिधर्मज्ञगरंते. क. परिदद्यादपिगरंराज्ञीते. घ. परिदद्याद्धिधर्मज्ञोभरतो. ९ घ—छ. झ. ञ. ट. तातस्त्रियः. १० ङ. झ. ट. तदद्यैतदुप. क. ग. घ. च. ज. ञ. तामप्येतदुप. ख. यस्मादेतदुप. ११ ख. अनर्थकं. १२ ङ. छ. झ. ट. यत्तस्याःश्रूयते. ख. यस्यास्तु.

[1]शोचन्त्या अल्पभाग्याया न किंचिदुपकुर्वता ॥ पुत्रेण किमपुत्राया मया कार्यमरिंदम ॥ २३ ॥
अल्पभाग्या हि मे माता कौसल्या रहिता मया ॥ शेते परमदुःखार्ता पतिता शोकसागरे ॥ २४ ॥
एको ह्यहमयोध्यां च पृथिवीं चापि लक्ष्मण ॥ तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणम् ॥ २५ ॥
अधर्मभयभीतश्च परलोकस्य चानघ ॥ तेन लक्ष्मण नाद्याहमात्मानमभिषेचये ॥ २६ ॥
एतदन्यच्च करुणं विलप्य विजने [2]वने ॥ अश्रुपूर्णमुखो [3]रामो निशि तूष्णीमुपाविशत् ॥ २७ ॥
[4]विलप्योपरतं रामं गतार्चिषमिवानलम् ॥ समुद्रमिव निर्वेगमाश्वासयत लक्ष्मणः ॥ २८ ॥
ध्रुवमद्य पुरी [5]राजन्नयोध्याऽऽयुधिनांवर ॥ निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ २९ ॥
नैतदौपयिकं राम यदिदं परितप्यसे ॥ विषादयसि सीतां च मां चैव पुरुषर्षभ ॥ ३० ॥
[6]न च सीता त्वया हीना न चाहमपि राघव ॥ मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥३१॥

त्यर्थः । "अनात्मन्यात्मबुद्धिर्याअस्वेस्वमितियामतिः । अविद्यातरुसंभूतिबीजमेतद्विधास्थितं" इत्युक्तेः । दश निवर्तयेत्यर्थः । एवंरूपंवाक्यंयत्सकाशात् श्रूयते समस्तःश्रेष्ठइतिसंबन्धः । प्रकरणेनाप्ययमर्थोभिव्यज्यते । तथाहि अयोध्यापुरपर्यायाद्वैकुण्ठान्निर्गत्यविरजांतीर्त्वासंसारकाननंप्रविश्य "द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति" इति वेदान्तोक्तप्रक्रियया शरीराख्यमेकंवृक्षंजीवेनसहास्थाय "ऋतंपिबन्तौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्धे" इत्युक्तरीत्याकर्मफलंभोजयन् स्वानुभवालाभक्लिष्टसूरिजनोत्कण्ठयावर्तमानः संसारिषुस्वागमनप्रयोजनालाभेनचरमोपायनिष्ठामेवपरमोपायं निश्चिकायेत्युच्यते ॥ २२ ॥ अल्पभाग्यायाः अतएवअपुत्रायाः पुत्रकृतप्रयोजनरहितायाः । अतएवशोचन्त्याः अम्बायाः किंचिदपिनोपकुर्वतामयापुत्रेण किंकार्यं किंप्रयोजनं ॥ २३ ॥ नकेवलंप्रयोजनालाभःप्रत्युतदुःखितैवेत्याह—अल्पभाग्येत्यादिश्लोकेन ॥ २४ ॥ तर्हिमातृदुःखनिवारणायराज्यमाक्रम्यतामित्यत्राह—एकइत्यादिश्लोकद्वयेन । तरेयं तरितुंशक्नुयां । आक्रमितुंशक्नुयामित्यर्थः । तर्हिकिमर्थंतथानकृतमित्यतआह—ननुवीर्यमकारणमिति । धर्महानिकरेकृत्येवीर्यसाधकत्वेननावलम्बनीयंखल्वित्यर्थः ॥ २५ ॥ वीर्यस्यानवलम्बनेहेतुमाह—अधर्मेति । अधर्मभयभीतः अधर्मादुत्पन्नंभयंलोकापवादः तस्माद्भीतः । परलोकस्य नाशाद्भीतइतिशेषः । अहमितिचशेषः । तेन अधर्मपरलोकभीतत्वेनहेतुना ॥ २६ ॥ एतत्पूर्वोक्तमर्थजातं अन्यदित्यनेन तादात्विकविलापस्यवाचामगोचरत्वमुक्तं । विजनेवनइतिशोकहेतुत्वोक्तिः । उपाविशत् अतिष्ठदित्यर्थः ॥ २७ ॥ विलप्योपरतमित्यनेन मध्येसमाश्वासानर्हत्वोक्तिः ॥ २८ ॥ आयुधिनां आयुधवतां वर शूरेत्यर्थः । निष्प्रभा भवेदितिशेषः ॥ २९ ॥ परितप्यसइतियदिदमस्ति एतत् परिदेवनं । नौपयिकं नयुक्तं । "युक्तमौपयिकं" इत्यमरः । "उपायाद्ध्रस्वश्च" इतिठक् आकारस्यह्रस्वश्च । अयुक्तत्वमेवाह—विषादयसीति । पुरुषर्षभेत्यनेन पुरुषधौरेयस्यतवनैतद्युक्तं अनेनविलापोनयुक्तइत्यर्थः॥३०॥ "अयोध्यामितएवत्वंकाल्येप्रविशलक्ष्मण" इतियदुक्तंतत्रोत्तरमाह—नचसीतेति । त्वयाहीनासीताच नजीवतीत्यर्थः । त्वद्विहीनोहमपिनच चएवकारार्थः ।

शत्रोः । पादंदशेत्यर्थकतयारामेणयोजितमितिवक्रोक्तिरलङ्कारः ॥ २२ ॥ **शि०** अयोध्यां नित्यंप्राप्तइतिशेषः । पृथिवीं निखिलपृथिवीशत्रून् । चकारेण लोकान्तरशत्रूनपि ॥ २५ ॥ **शि०** अधर्मभयभीतः संग्रामादन्यत्र रिपूणामपिवधःअधर्मइतिभयेनभीतः परलोकस्य दूरशत्रुजनस्यहन्तानास्मीतिशेषः । **स०** मया पितुराज्ञायाअकरणेसर्वेप्येवमेवकुर्युः ततश्चतेषामधर्मोभवेत् अतःअधर्मभयभीतश्च लोकस्याधर्मप्राप्तिभयाद्भीतोऽहं । परलोकस्य परकीयजनस्यसकाशात्भीतइतिबुद्ध्या विवेकेनान्वयः । रामःपितुराज्ञांनाकार्षीदितिलोकापवादभीतश्चेत्यर्थः ॥२६॥ **ती०** अश्रुपूर्णमुखइत्यस्यायंभावः । श्रीरामस्यपरमकरुणाशालित्वेन स्वानुरक्तजनदुःखासहिष्णुत्वादश्रुपूर्णमुखत्वं नतुवस्तुतः "व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः" इत्युक्तेरिति । **स०** विलप्य लोकविडंबनार्थं विलापंकृत्वा । तदानीमपिनिशाचरसंचाराद्विडंबोयुक्तः ॥ २७ ॥ **ति०** जीवावइत्यस्यावृत्त्यानद्वयान्वयः । जीवनाभावस्यसर्व-

[ **पा०** ] १ क. ङ—ट. शोचन्त्याश्चाल्प. ख. शोचन्त्याह्यल्प. २ ख—च. झ. ञ. ट. बहु. ३ ङ. च. छ. झ. ञ. ट. दीनो. ४ क. घ—छ. झ. ञ. ट. विलापोपरतं. ५ ख. ग. घ. छ—ट. रामअयोध्या. ६ ख. नहि.

न हि तातं न शत्रुघ्नं न सुमित्रां परंतप ॥ द्रष्टुमिच्छेयमद्याहं स्वर्गं वाऽपि त्वया विना ॥ ३२ ॥
ततस्तत्र सुखासीनौ नातिदूरे निरीक्ष्य ताम् ॥ न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥३३॥
स लक्ष्मणस्योत्तमपुष्कलं वचो निशम्य चैवं वनवासमादरात् ॥
समाः समस्ता विदधे परंतपः प्रपद्य धर्मं सुचिराय राघवः ॥ ३४ ॥
ततस्तु तस्मिन्विजने वने तदा महाबलौ राघववंशवर्धनौ ॥
न तौ भयं संभ्रममभ्युपेयतुर्यथैव सिंहौ गिरिसानुगोचरौ ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

प्रभातेसीतालक्ष्मणाभ्यांसहप्रस्थितेनरामेणसायाह्नेगङ्गायमुनासंगमदेशसंनिहितभरद्वाजाश्रमंप्रतिगमनम् ॥ १ ॥ भरद्वाजेनश्रीरामंप्रत्यर्चनपूर्वकंचित्रकूटगुणानुवर्णनेनतस्यवासार्हस्थानत्वकथनम् ॥ २ ॥ विचित्रकथाकथनपूर्वकंस्वाश्रमेरात्रिंयापितवन्तंरामंप्रतिप्रभातेभरद्वाजेनचित्रकूटगमनाभ्यनुज्ञानम् ॥ ३ ॥

ते तु तस्मिन्महावृक्ष उषित्वा रजनीं शिवाम् ॥ विमलेऽभ्युदिते सूर्ये तस्माद्देशात्प्रतस्थिरे ॥ १ ॥
यत्र भागीरथीं गङ्गां यमुनाऽभिप्रवर्तते ॥ जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनम् ॥ २ ॥

---

अहमपिनजीवाम्येवेत्यर्थः । दृष्टान्तार्थंसीताग्रहणं । यद्वा " सीतासमक्षंकाकुत्स्थमिदंवचनमब्रवीत् " इतिसीतापुरुषकारेणशरणागतिकरणात् स्वस्यशरणागतिफलाभावेपुरुषकारभूतसीतायाअपिनेतिभावः । अपिजीवावः यदिजीवावः । तदा जलादुद्धृतौमत्स्याविव । मुहूर्तं स्वल्पकालं जीवावः । यथाजलोद्धृतौमत्स्यौयावज्जलसंसर्गंजीवित्वातद्विलयेविनश्यतः तथा आवामपित्वद्वचनहृदयज्ञानपर्यन्तमितिभावः । तथावक्ष्यतिसुन्दरकाण्डे " नचास्यमातानपितानचान्यः स्नेहाद्विशिष्टोस्तिमयासमोवा । तावद्ध्यहंदूतजिजीविषेयंयावत्प्रवृत्तिंशृणुयांप्रियस्य " इति ॥ ३१ ॥ अथनोत्कण्ठितुमर्हसीत्युक्तस्योत्तरमाह—नहितातमित्यादिश्लोकेन ॥ ३२ ॥ ततः लक्ष्मणवचनानन्तरं । तत्र पूर्वाश्रितवृक्षमूलेभुक्तिस्थाने । सुखासीनौ सुखोपविष्टौ सुखासीनाचसुखासीनश्चसुखासीनौ । सर्वत्र " पुमान्स्त्रिया " इत्येकशेषः । सीतारामौन्यग्रोधे न्यग्रोधमूले । सुकृतां लक्ष्मणेनसुष्ठुकृतां शय्यांनिरीक्ष्य तांभेजातेइतिसंबन्धः ॥ ३३ ॥ उत्तमंचततपुष्कलंचउत्तमपुष्कलं अतीवभ्रातृस्नेहपुरस्कृतत्वादुत्तमं वक्तव्यस्यसर्वस्योक्तेःपुष्कलंपूर्णार्थं लक्ष्मणस्यवचः आदरान्निशम्य चिरायधर्मं वानप्रस्थधर्मं अधश्शयनादिकंप्रतिपद्य । समस्ताःसमाः वनवासं अत्यन्तसंयोगेद्वितीया । विदधे लक्ष्मणेनसविधातुमैच्छदित्यर्थः । अन्यथाभूतार्थासंभवः । कविनाप्यादौतथावक्तुमयुक्तं । लक्ष्मणस्यसमस्ताःसमाःप्रतिअनुमतिंविदधइति केचिदाहुः ॥ ३४ ॥ भयं व्याघ्रादिभ्यः । संभ्रमं व्याकुलत्वं । भयहेतुशङ्कया इतस्ततोनिरीक्षणमितियावत् ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

महावृक्षे महावृक्षमूले । सामीप्येसप्तमी । विमलेऽभ्युदिते । स्पष्टमुदितइत्यर्थः ॥ १ ॥ यत्रेत्यादिश्लोकद्वयमेकान्वयं । भूमिभागान् वनप्रदेशान् । देशान् वत्सदेशावान्तरदेशान् । एतदेवनानात्वमाह—तत्रतत्रेति । यशस्विनइत्यनेनतत्तद्देशीयैरर्चितत्वमुक्तं

---

थासत्यत्वप्रतिपादनायद्विरुक्तिः ॥३१॥ ति० नञ्त्रयस्य इच्छेयमितिपदावृत्त्याऽन्वयः ॥३२॥ स० धर्मं स्वशुश्रूषणरूपं । प्रपद्यांगीकृत्य। समस्तास्समाः चतुर्दशवर्षाणि। वनवासंप्रतिविदधे लक्ष्मणंसंमतमकरोदित्यर्थः ॥ ३४ ॥ इतित्रिपञ्चाशस्सर्गः ॥ ५३ ॥

[ पा० ] १ घ. मिच्छामिचाद्याहं. २ च. छ. झ. ञ. ट. चापि. ३ झ. समासीनौ. ४ ख. समीक्ष्य. ५ ख. रामो. ६ ङ. च. छ. झ. ञ. ट. महाबलौमहावने. ७ ख. ग. ट. भागीरथीगङ्गायमुनामभिवर्तते. ८ क. यमुनाहि.

ते भूमिभागान्विविधान्देशांश्चापि मनोरमान् ॥ अदृष्टपूर्वान्पश्यन्तस्तत्रतत्र यशस्विनः ॥ ३ ॥
यथाक्षेमेण गच्छन्स पश्यंश्च विविधान्द्रुमान् ॥ निवृत्तमात्रे दिवसे रामः सौमित्रिमब्रवीत् ॥ ४ ॥
प्रयागमभितः पश्य सौमित्रे धूममुन्नतम् ॥ अग्नेर्भगवतः केतुं मन्ये संनिहितो मुनिः ॥ ५ ॥
नूनं प्राप्ताः स्म संभेदं गङ्गायमुनयोर्वयम् ॥ तथाहि श्रूयते शब्दो वारिणो वारिघट्टितः ॥ ६ ॥
दारूणि परिभिन्नानि वनजैरुपजीविभिः ॥ भरद्वाजाश्रमे चैते दृश्यन्ते विविधा द्रुमाः ॥ ७ ॥
धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे ॥ गङ्गायमुनयोः संधौ प्रापतुर्निलयं मुनेः ॥ ८ ॥
रामस्त्वाश्रममासाद्य त्रासयन्मृगपक्षिणः ॥ गत्वा मुहूर्तमध्वानं भरद्वाजमुपागमत् ॥ ९ ॥
ततस्त्वाश्रममासाद्य मुनेर्दर्शनकाङ्क्षिणौ ॥ सीतयाऽनुगतौ वीरौ दूरादेवावतस्थतुः ॥ १० ॥
स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतम् ॥ संशितव्रतमेकाग्रं तपसा लब्धचक्षुषम् ॥ ११ ॥
हुताग्निहोत्रं दृष्ट्वैव महाभागं कृताञ्जलिः ॥ रामः सौमित्रिणा सार्धं सीतया चाभ्यवादयत् ॥१२॥
न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः ॥ पुत्रौ दशरथस्यावां भगवन्रामलक्ष्मणौ ॥ १३ ॥
भार्या ममेयं वैदेही कल्याणी जनकात्मजा ॥ मां चानुयाता विजनं तपोवनमनिन्दिता ॥ १४ ॥

॥ २—३ ॥ यथाक्षेमेण क्षेमानतिक्रमेण । "यथाऽसादृश्ये" इति पदार्थानतिवृत्तावव्ययीभावः । "तृतीयासप्तम्योर्बहुलं" इत्यलुक् । क्षेमहेत्ववधानमनतिक्रम्येत्यर्थः । निवृत्तमात्रे अर्धमण्डलकालइत्यर्थः ॥ ४ ॥ प्रयागमभितः प्रयागस्याभितः । "अभितःपरितः—" इत्यादिनाद्वितीया । केतुं ध्वजीभूतं धूममितिसंबन्धः । अतः संनिहितोमुनिरितिमन्ये ॥ ५ ॥ संभेदं संगमं । "संभेदःसिन्धुसंगमः" इत्यमरः । वारिघट्टितोवारिणःशब्दः । वारिजनितो वारिशब्दः । वारिणोरन्योन्यघट्टनजःशब्दइत्यर्थः ॥ ६ ॥ वनजैरुपजीविभिः वनोत्पन्नैःफलमूलकाष्ठाद्युपजीविभिः । दारूणीत्यत्रापि दृश्यन्तइत्यनुषज्यते ॥ ७ ॥ लम्बमाने अस्तगिरौलम्बमानइवदृश्यमाने । संधौ संगमेवर्तमानं निलयं आश्रमं तत्समीपप्रदेशंप्रापतुः ॥ ८ ॥ त्रासयन् अपूर्वदर्शनेनत्रासंजनयन् । मुहूर्तं मुहूर्तगम्यं । भरद्वाजं भरद्वाजसमीपं ॥ ९ ॥ दूरादेवावतस्थतुः सायंतनसमयत्वादग्निहोत्रावसानं प्रतीक्षमाणाववतस्थतुरित्यर्थः ॥ १० ॥ सप्रविश्येत्यादिश्लोकद्वयं । प्रविश्य दैवान्निर्गतशिष्यमुखेनेतिशेषः । संशितव्रतं तीक्ष्णव्रतं । एकाग्रं एकप्रधानं । ध्यानपरमितियावत् । तपसा तपोवैभवेन । लब्धचक्षुषं लब्धज्ञानं अतीतानागतवर्तमानयावदर्थगोचरज्ञानयुक्तमित्यर्थः । दृष्ट्वैव दर्शनोत्तरकालमेवेत्यर्थः ॥ ११—१२ ॥ न्यवेदयतेत्यादिश्लोकद्वयमेकान्वयं ।

ति० यथा यथासुखं जनानुमानशङ्काभावात्क्षेमेणोपविश्योत्थायचशनैःशनैःस्वेच्छानुरोधेन संपश्यन् समपश्यन् ॥ ४ ॥ स० तस्मादत्रमुनिरेकस्संनिहितइतिमन्ये ॥ ५ ॥ ति० वारिणोः गङ्गायमुनाजलयोः । वारिघर्षः विजातीयवारिसंबन्धः । स० यद्वा वारिणोःशब्दः श्रूयते तत्रदृष्टान्तः—अरिघर्षजइति । अर्योःचक्रयोः अर्योर्वैरिणोःसंघर्षजः शब्दोवा शब्दइव । "वाविकल्पोपमानयोः" इत्यभिधानात् ॥ ६ ॥ ति० येषांदारूणिभिन्नानितेद्रुमादृश्यन्तइत्यन्वयः । स० वनजैःकन्दमूलादिभिः उपजीविभिर्वनस्थैः । दारूणिपरिभिन्नानियेषांतेविविधाद्रुमाःछिन्नादृश्यन्ते ॥ ७ ॥ ति० धन्विनांविततावितिपाठे तेषांमध्येविततौमुख्यावितियावत् ॥ ८ ॥ शि० मृगपक्षिणः दुष्टान्मृगान्पक्षिणश्च त्रासयन् । स० त्रासयन् धनुर्धरत्वादितिभावः । ति० भरद्वाजं तदाश्रमं ॥ ९ ॥ ति० दूरादेवावतस्थतुः कार्यवशनिर्गतशिष्यद्वाराविज्ञापनपूर्वकानुमतिलाभार्थमितिभावः ॥ १० ॥ ति० प्रविश्य उटजमितिशेषः ॥ ११ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. मनोहरान्. २ क. ग. घ. च. ज. क्रमेण. ३ ङ. छ. झ. ञ. ट. संपश्यन्पुष्पितान्विविधान्. घ. संगच्छन्पश्यंश्च. ज. गच्छन्सन्पश्यंश्च. च. पश्यंश्चपुष्पितान्विविधान्. ४ झ. निर्वृत्तमात्रे. ५ ङ. च. छ. झ. ट. मुत्तमं. घ. मुद्गतं. ६ ख. तथापि. ७ ङ. छ. झ. ट. वारिणोर्वारिवर्षजः. ८ क. घ. च. ञ. घट्टजः. ग. ज. घट्टनात्. ९ ख. दारूणिचविभिन्नानि. १० ङ. छ. झ. ट. छिन्नाश्चाप्याश्रमेचैते. ११ क. घ. सुधन्विनौसुखं. च. धन्विनांविततौ. १२ क. यमुनयोर्मध्ये. १३ क. तत्रत्वाश्रम. १४ ख. मुनिदर्शन. १५ क. घ. च. संप्रविश्य. १६ घ. युतं. १७ ख. घ—छ. झ. ञ. ट. महाभागः. १८ क. ग. ङ. च. छ. झ. ञ. ट. कल्याणीवैदेही.

पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः ॥ अय[1]मन्वगमद्भ्राता वनमेव दृढव्रतः ॥ १५ ॥
पित्रा नियुक्ता भगवन्प्रवेक्ष्यामस्तपोवनम् ॥ धर्म[2]मेवं चरिष्यामस्तत्र मूलफलाशनाः ॥ १६ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ॥ उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥ १७ ॥
नानाविधानन्नरसान्वन्यमूलफलाश्रयान् ॥ तेभ्यो ददौ तप्ततपा वासं [3]चैवाभ्यकल्पयत् ॥ १८ ॥
मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः ॥ राममागतमभ्यर्च्य [4]स्वागतेनाह तं मुनिः ॥ १९ ॥
प्रतिगृह्य च तामर्चामुपविष्टं स राघवम् ॥ भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ २० ॥
चिरस्य खलु काकुत्स्थ [5]पश्यामि त्वामिहागतम् ॥ श्रुतं तव मया [6]चेदं विवासनमकारणम् ॥ २१ ॥
अवकाशो विविक्तोऽयं महानद्योः समागमे ॥ पुण्यश्च रमणीयश्च वसत्विह भवान्सुखम् ॥ २२ ॥
एवमुक्तस्तु वचनं भरद्वाजेन राघवः ॥ प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २३ ॥
भगवन्नित आसन्नः पौरजानपदो जनः ॥ सुदर्शमिह मां प्रेक्ष्य मन्येऽहमिममाश्रमम् ॥ २४ ॥

---

सीतालक्ष्मणयोःसर्वात्मनापरतन्त्रत्वादात्मानमित्यनेन तयोरपिग्रहणं । कल्याणी पतिव्रतेत्यर्थः । अनुयातेति न्यवेदयतेतिसंबन्धः ॥ १३—१४ ॥ धर्मं पितृवचनपरिपालनरूपं ॥ १६ ॥ गां मधुपर्काङ्गभूतमहोक्षं । तथाचस्मृतिः "गोमधुपर्कार्होवेदाध्याय्याचार्यऋत्विक्स्नातकोराजावाधर्मयुक्तः" इति । अर्घ्यं पूजाविधेरङ्गं ॥ १७ ॥ अन्नरसान् अदनीयरसान् रसप्रधानान्पदार्थविशेषानित्यर्थः । वन्यमूलफलाश्रयान् वन्यमूलफलप्रकृतिकान् ॥ १८ ॥ मृगपक्षिभिरासीनोमुनिभिश्चेत्यनेन मुनिवैभवात्तिर्यञ्चोपिमुनिनिर्विशेषंसंजातविश्वासाःसेवन्तइतिगम्यते । स्वागतेनाह स्वागतमाहेत्यर्थः । यद्वा मृगपक्षिभिः सहेतिशेषः । स्वागतेनाभ्यर्च्येतिसंबन्धः ॥ १९ ॥ मुनिराहेत्येतद्विवृणोति—प्रतिगृह्येति ॥ २० ॥ चिरस्य चिरं ॥ २१—२३ ॥ इतः एतदाश्रमापेक्षया । इह आश्रमे सुदर्शं सुखेनद्रष्टुंशक्यं । प्रेक्ष्य ज्ञात्वा । वैदेहीं मांचप्रेक्षकोजनः इममाश्रममागमिष्यतीत्यहंमन्ये । अनेनकारणेनइहवासंनरोचयइत्यन्वयः । मांप्रेक्ष्यकइत्यत्र "अकेनोर्भविष्यदाधमर्ण्ययोः" इतिषष्ठीप्रतिषेधः । एकान्ते पौरजनाविदिते । पश्य चिन्तय

---

**ति०** धर्ममेव वानप्रस्थधर्ममेव । **शि०** नियुक्ताः साक्षात्परंपरयाचाज्ञप्ताः ॥ १६ ॥ **शि०** अर्घ्यं अर्घहितमुदकं तदुपलक्षितनिखिलपूजनसामग्रीं ॥ १७ ॥ **शि०** अन्नरसान् अदनीयरसान् । अन्नशब्दस्यौदनार्थकत्वंतुनात्रसंभवति । "धर्ममेवाचरिष्यामस्तत्रमूलफलाशनाः" इत्यनेनतन्निषेधस्यबोधितत्वात् ॥ १८ ॥ **ती०** मृगपक्षिभिस्सहाभ्यर्च्येत्यस्यायंभावः । मुनिप्रभावात्तिर्यञ्चोपिराममीश्वरंमत्वामुनिनिर्विशेषास्सन्तःसेवन्तइति । **ति०** आगतमागतं तेजोविशेषान्मर्यादारक्षणायमध्येमध्येस्थित्वानिकटं प्राप्तं रामं मृगपक्षिभिर्मुनिभिश्चसहस्वागतेनाभ्यर्च्य मुनिभिस्सहमुनीरामंसमन्ततआसीनोऽभवदितियोजना । मृगपक्षिणामर्चाच प्रदक्षिणगमनादिरूपावर्णिता ॥ १९ ॥ **ती०** चिरस्य चिरकालस्य । इहाश्रमेत्वांपश्यामि । अयंभावः । चक्षुराद्यगोचरंत्वामेवमनसि सततमनुसंदधानोऽहं चिरकालस्यइहममपुरतः चक्षुषापश्यामीत्याश्चर्यं । अतोममभाग्यंकिंवर्ण्यतइति लौकिकदृष्टिमनुसृत्याह—**श्रुतमिति** । **ति०** चिरस्य चिरकालस्य । इहाश्रमआगतंत्वांपश्यामि । अनेन पूर्वमपिकदाचिदागमनंध्वनितं । पूर्वरामावतारकालिकमागमनंमनसिनिधायवैषोक्तिः । **शि०** हेकाकुत्स्थ तव उपागतं समीपागमनं । चिरस्यबहुकालतः पश्यामि कदाऽऽगन्तेति सर्वदैवालोचयामीत्यर्थः । तत्रहेतुः अकारणं स्वेच्छातिरिक्तकारणरहितं । तवविवासनंश्रुतं वाल्मीकिमुखादवगतं ॥ २१ ॥ **शि०** विविक्तः दुर्जनसंसर्गरहितः ॥२२॥ **ती०** भगवन्नित्यादिश्लोकत्रयस्यवास्तवार्थस्तु । भगवन् सर्वज्ञ । रावणवधार्थंगूढतयाऽवतीर्णं मांयद्येवंप्रकटीकरोषि तदा सर्वोपिजनः मांसुदर्शं सुष्ठुद्रष्टुं योग्यंसुदर्शं विष्णुंच । "दृश्यतेत्वग्र्यया" इतिश्रुतेः । वैदेहींमांच लक्ष्मींच ज्ञात्वा प्रेक्षकः दिदृक्षुस्सन् इहागमिष्यति । तेनैवंविधप्रकटवासंप्रकटावस्थानंनरोचये । अतोयत्रपरमानन्दैकतानेमयिवैदेहीरमते । "योमृग्यतेहस्तगृहीतपद्मयाश्रियेतरैरङ्गविमृग्यमाणया" इत्यादिरीत्यासर्वैराश्रयणीयापिलक्ष्मीः अनवरतानुभवेप्यपर्याप्तानुभवेव नित्यानुरक्ताभवति । तं आश्रयतइत्याश्रमंजगत् तस्य स्थानमाधारभूतं सर्वोत्तमं स्वरूपगुणवैभवैर्ब्रह्मरुद्रादिभ्यःश्रेष्ठतमंमां ममातिप्रियस्त्वमेवैकान्तेपश्य गुह्याद्गुह्यतमंमत्स्वरूपंनप्रकटयेतिरहस्योपदेशः । **शि०** अजनः कर्माधीनजन्मरहितः नित्यसुखादिरित्यर्थः ॥२४॥

**[ पा० ]** १ ख. ग. च. ज. मन्वागमत्. २ क. ङ—ट. मेवाचरिष्यामः. ३ क. चैवान्वकल्पयत्. ४ च. छ. झ. ञ. ट. स्वागतेनागतं. ग. घ. ज. स्वागतेनातिथिं. ५ ङ. छ. झ. ट. पश्याम्यहमुपा. ६ च. चैवं. ङ. छ. झ. ञ. ट. चैव.

आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः ॥ अनेन कारणेनाहमिह वासं न रोचये ॥ २५ ॥
एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम् ॥ [1]रमेत यत्र वैदेही सुखार्हा जनकात्मजा ॥ २६ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः ॥ [2]राघवस्य ततो वाक्यमर्थग्राहकमब्रवीत् ॥ २७ ॥
दशक्रोश इतस्तात गिरिर्[3]यस्मिन्निवत्स्यसि ॥ महर्षिसेवितः पुण्यः [4]सर्वतः सुखदर्शनः ॥ २८ ॥
गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः ॥ चित्रकूट इति ख्यातो गन्धमादनसंनिभः ॥ २९ ॥
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते ॥ कल्याणानि समाधत्ते न [5]पापे कुरुते मनः ॥ ३० ॥
[6]ऋषयस्तत्र बहवो विहृत्य शरदां शतम् ॥ तपसा दिवमारूढाः कपालशिरसा सह ॥ ३१ ॥
प्रविविक्तमहं मन्ये [7]तं वासं भवतः सुखम् ॥ इह वा वनवासाय वस राम मया सह ॥ ३२ ॥
स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् ॥ सभार्यं सह च भ्रात्रा प्रतिजग्राह [8]धर्मवित् ॥ ३३ ॥
तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः ॥ प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४ ॥
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ॥ भरद्वाजाश्रमे [9]रम्ये तां रात्रिमवसत्सुखम् ॥३५॥
प्रभातायां [10]रजन्यां तु भरद्वाजमुपागमत् ॥ उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३६ ॥
शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे ॥ उषिताः [11]स्मेह वसतिमनुजानातु नो भवान् ॥ ३७ ॥

॥ २४—२६ ॥ अर्थग्राहकं अर्थबोधकंयथाभवति तथा । यद्वा अर्थग्राहकं बह्वर्थवत् अब्रवीत् ॥ २७ ॥ यस्मिन् गिरौनिवत्स्यसि सगिरिरितोदशक्रोशः दशक्रोशावस्थितइत्यर्थः । गन्धमादनसंनिभः गन्धमादनपर्वतसंनिभः । अतीतानागतवर्तमानज्ञोमहर्षिः "गोलांगूलानुचरितोवानरर्क्षनिषेवितः" इतिकेवलत्रिवर्गाभिधानेन एतत्सजातीयाएवरामस्यसहायाअपिभविष्यन्तीतिसूचितवानितिगम्यते ॥ २८—२९ ॥ नरः यावतादूरेणचित्रकूटस्यशृङ्गाण्यवेक्षते तावता कल्याणानि पुण्यकर्माणि । समाधत्ते प्राप्नोति । यद्वा समाधत्ते आचरति । पापेमनोनकुरुते तत्रवसन्किमुतेतिभावः । यद्वा यावता कालेन ॥ ३० ॥ तत्र चित्रकूटे । शरदांशतं तपसाविहृत्य क्रीडन्तइवमहत्तपः परिसमाप्येत्यर्थः । कपालशिरसासहदिवमारूढाः तपश्चरणेननिरन्तरकपालासनेनप्रक्षीणत्वक्छिरोरुहतया कपालावशिष्टशिरसासहदिवमारूढाइत्यर्थः । कपालशिरसेत्येतच्छरीरोपलक्षणं । सशरीराःस्वर्गंगता इत्यर्थः । यद्वा कपालशिराइतिकस्यचिदृषेः संज्ञा । कपालशिरसा कपालरूपशिरोयुक्तेनेत्यध्याहृतशरीरपदविशेषणमित्येके । कपालमात्रावशिष्टंशिरोयस्मिन्नितितपोविशेषणमित्येके ॥ ३१ ॥ प्रविविक्तं प्रकर्षेणविजनं ॥ ३२ ॥ सर्वकामैःप्रतिजग्राह अतिथियोग्यसत्कारैर्वशीकृतवानित्यर्थः । [ प्रतिजग्राहउपचचार ] ॥ ३३ ॥ प्रपन्ना प्राप्ता ॥३४—३६॥ वसति-

**ति०** यत्र यस्मिन्नाश्रमस्थाने । तादृशमेकान्तेवर्तमानं पश्य ज्ञात्वानिर्दिशेत्यर्थः । अत्रभगवन्नित्यादिश्लोकत्रयंतीर्थेन मत्स्वरूपंन प्रकटयेत्यन्तेनव्याख्यातं तदयुक्तं । मुनिनारामस्वरूपप्रकटनस्यसर्ववेद्यंयथाभवतितथाप्राक्क्वाप्यकरणात्अक्षरमर्यादयापितादृशार्थालाभाच्च । पौरजानपदोजनइतिपदास्वारस्याच्चेतिसुधियोविभावयन्तु । **शि०** आश्रमं आसमन्तात् अश्रमंश्रमनिवर्तकंस्थानं । यत्रवैदेही रमते रमेत ॥ २६ ॥ **ति०** राघवस्यार्थग्राहकं तदुक्तप्रयोजनप्रतिपादकं तत् वक्ष्यमाणंअब्रवीत् ॥ २७ ॥ **शि०** दशक्रोशे त्रिंशत्क्रोशपरिच्छिन्नदेशसंनिधौ । महर्षिसेवितः पर्वतः अवान्तरपर्वतविशिष्टः । गिरिः पर्वतोस्ति । दशशब्दस्यैकशेषेणायमर्थोलब्धः । दशक्रोशपरिमितइतिपर्वतविशेषणेतुनैकशेषकल्पना ॥ २८ ॥ **कतक०** केचित्तु कपालशिरसेतिशरीरोपलक्षणं सशरीरास्स्वर्गंगताइत्याहुः । तन्न । धर्मपुत्रादीनामपिकियद्दूरमेवधर्मवैभवदर्शनायैतच्छरीरेणगमनं ततस्तन्निरासपूर्वकमेवस्वर्गगमनश्रवणात् । **शि०** कपालशिरसा त्वद्दर्शनफलकनित्यस्थितिमिच्छिवेनसह शरदांशतंविहृत्य दिवं प्रमोदविशेषमारूढाः प्राप्ताः । एतेन शिवस्यरामानुरागिश्रेष्ठत्वंव्यञ्जितं ॥ ३१ ॥ **ति०** इहवेति शिष्टाचारमात्रं । **स०** इतोयाहीत्यस्यानुचितत्वादाह—**इहवेति** ॥ ३२ ॥ **ति०** इहाश्रमेशर्वरीमुषिताःस्मः । अहअथेत्यर्थे ॥ ३७ ॥ इतिचतुष्पञ्चाशस्सर्गः ॥ ५४ ॥

[ **पा०** ] १ क—घ. च—ट. रमते. २ ङ. च. छ. झ. ञ. ट. राघवस्यतुतद्वाक्यं. ३ क. ख. ग. ज. यंत्रनिवत्स्यति. ४ ग. ङ. छ. झ. ञ. ट. पर्वतःशुभदर्शनः. ५ ङ. छ. झ. ट. मोहे. ६ ख. मुनयस्तत्र. ७ क. च. निवासं. ८ ङ. च. झ. ट. हर्षयन्. ९ घ. ट. पुण्ये. १० ङ. च. छ. झ. ञ. ट. तुशर्वर्यां. ११ ङ. छ. झ. ट. स्मोह.

रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ॥ मधुमूलफलोपेतं चित्रकूटं [1]व्रजेति ह ॥
वासमौपयिकं मन्ये [2]तव राम महाबल ॥ ३८ ॥
[3]नानानगगणोपेतः किंनरोरगसेवितः ॥ मयूरनादाभिरुतो [4]गजराजनिषेवितः ॥ ३९ ॥
गम्यतां भवता शैलश्चित्रकूटः [5]स विश्रुतः ॥ पुण्यश्च रमणीयश्च [6]बहुमूलफलायुतः ॥ ४० ॥
तत्र कुञ्जरयूथानि मृगयूथानि [7]चाभितः ॥ विचरन्ति [8]वनान्तेऽस्मिंस्तानि द्रक्ष्यसि राघव ॥ ४१ ॥
सरित्प्रस्रवणप्रस्थान्[9]दरीकन्दरनिर्दरान् ॥ चरतः सीतया सार्धं नन्दिष्यति मनस्तव ॥ ४२ ॥
[10]प्रहृष्टकोयष्टिककोकिलस्वनै[11]र्विनादितं तं वसुधाधरं शिवम् ॥
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः सुरम्यमासाद्य समा[12]वसाश्रमम् ॥ ४३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

भरद्वाजेनप्रभातेस्वाश्रमाच्चित्रकूटंप्रतिप्रस्थितयोरामलक्ष्मणयोर्मार्गोपदेशः ॥ १ ॥ रामलक्ष्मणाभ्यांकाष्ठादिभिःस्वनिर्मितप्लवेनसीतयासहयमुनातरणम् ॥ २ ॥ मध्येमार्गेलक्ष्मणेनरामाज्ञयासीताभिमतफलपुष्पाद्यानयनम् ॥ ३ ॥ रामलक्ष्मणाभ्यांसीतयासहसायाह्नेयमुनातीरेस्वोचितावासस्थानगमनम् ॥ ४ ॥

उषित्वा रजनीं तत्र राजपुत्रावरिंदमौ ॥ महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १ ॥
तेषां [13]चैव स्वस्त्ययनं महर्षिः स चकार ह ॥ [14]प्रस्थितांश्चैव तान्प्रेक्ष्य पिता [15]पुत्रानिवान्वगात् ॥२॥
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ॥ भरद्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३ ॥
गङ्गायमुनयोः सन्धि[16]मासाद्य मनुजर्षभौ ॥ कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४ ॥

मनुजानातु पूर्वोक्तांवसतिंप्रतिगन्तुमनुज्ञांकरोत्वित्यर्थः ॥ ३७ ॥ व्रजेत्यब्रवीदित्यन्वयः । हेति पादपूरणे हर्षेवा । वासमिति तत्रेतिशेषः । औपयिकं युक्तं । "युक्तमौपयिकं" इत्यमरः ॥ ३८ ॥ नानानगगणोपेतः नानावृक्षनिचयोपेतः ॥ ३९—४१ ॥ सरित्प्रस्रवणप्रस्थानिति । सरितोनद्यः प्रस्रवणानितनुतरजलप्रवाहाः प्रस्थाः सानवस्तान् । दरीकन्दरनिर्दरान् दर्यःपाषाणसंश्लेषस्थानानि कन्दराः गुहाः निर्दराःविदीर्णपाषाणसंधयः तान् ॥ ४२ ॥ कोयष्टिकाः टिट्टिभकाः । "कोयष्टिकष्टिट्टिभकः" इत्यमरः ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

॥१॥ तेषां प्रस्थातुमुद्युक्तानां । अन्वगादितिपाठः । अन्वशादितिपाठे अनुशिष्टवान् मार्गोपदेशमकरोदित्यर्थः ॥ २ ॥ तदेवविवृणोति—ततइति ॥ ३ ॥ प्रथमं गङ्गायमुनयोः संधिमासाद्य पश्चात् पश्चान्मुखाश्रितां गङ्गाजलवेगाभिहत्याकिंचित्पश्चान्मुखप्रवाहंप्राप्तां कालिन्दींनदीं अनुगच्छेतां अनुसृत्यगच्छेतां । पश्चिमाभिमुखौभूत्वागच्छेतां । भवन्तावितिशेषः । [ अभिगच्छेतां अभिमुखंगच्छेतां कालिन्द्याअ-

कतक० पश्चान्मुखाश्रितां संगमात्पश्चिमप्रदेशएवाश्रितस्वप्रयुक्तव्यवहारां संगमपूर्वभागेतुगङ्गायाएवव्यवहारइतिभावः । अन्येतु पश्चान्मुखयागङ्गयाश्रितांकालिन्दीमनुगच्छेतामित्यर्थः । अतएवाग्रे कालिन्दीमासाद्येत्युक्तिरित्याहुः । स० आदाय

[ पा० ] १ क. च. गिरिंव्रज. २ ङ. तंचराम. ३ घ. नानामर. ४ ज. गजवाजि. ५ ख. ज. सुविश्रुतः. ६ छ. कन्दमूल. ७ ङ. च. छ. झ. ञ. ट. चैवहि. ८ ख—ट. वनान्तेषुतानि. ९ ङ. च. न्गुहाकन्दरनिर्झरान्. घ. गिरिकन्दर. १० ङ. च. झ. ञ. कोयष्टिभ. ११ ङ. छ. झ. ट. विनोदयन्तंचसुखंपरं. च. ञ. विनोदयन्तंवसुधाधरं. १२ झ. ट. वसाश्रयं. १३ ङ. च. छ. झ. ञ. ट. स्वस्त्ययनंचैव. १४ ख. ङ. छ. झ. ञ. ट. प्रस्थितान्प्रेक्ष्यतांश्चैव. १५ ग. घ. ज. पुत्रानिवान्वशात्. ङ. च. छ. झ. ञ. ट. पुत्रानिवौरसान्. १६ ङ. छ. झ. ट. मादायमनुजर्षभ.

अथासाद्य तु कालिन्दीं शीघ्रस्रोतसमापगाम् ॥ तस्यास्तीर्थं प्रचरितं पुराणं प्रेक्ष्य राघवौ ॥
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् ॥ ५ ॥
ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ॥ विवृद्धं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् ॥
तस्मै सीताऽञ्जलिं कृत्वा प्रयुञ्जीताशिषः शिवाः ॥ ६ ॥
समासाद्य तु तं वृक्षं वसेद्वाऽतिक्रमेत वा ॥ ७ ॥
क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननम् ॥ पलाशबदरीमिश्रं रम्यं वंशैश्च यामुनैः ॥ ८ ॥
स पन्थाश्चित्रकूटस्य गतः सुबहुशो मया ॥ रम्यो मार्दवयुक्तश्च वनदावैर्विवर्जितः ॥ ९ ॥
इति पन्थानमावेद्य महर्षिः संन्यवर्तत ॥ अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः ॥ १० ॥
उपावृत्ते मुनौ तस्मिन्रामो लक्ष्मणमब्रवीत् ॥ कृतपुण्याः स्म सौमित्रे मुनिर्यन्नोऽनुकम्पते ॥ ११ ॥
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ॥ सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ॥ १२ ॥
अथासाद्य तु कालिन्दीं शीघ्रस्रोतोवहां नदीम् ॥ चिन्तामापेदिरे सर्वे नदीजलतितीर्षवः ॥ १३ ॥

भिमुखीभूयगच्छेतामित्यर्थः ] ॥ ४ ॥ शीघ्रस्रोतसमित्यनेन गङ्गाजलवेगप्रतिहतिस्तिमितजलव्यतिरिक्तप्रदेशउच्यते । तीर्थं अवतरणप्रदेशं । प्रचरितं गमनागमनाभ्यामतिक्षुण्णमित्यर्थः । आंशुमतीं अंशुमतः सूर्यस्यापत्यभूतां ॥ ५ ॥ ततः तरणानन्तरं । न्यग्रोधं तीरस्थं । हरितच्छदं श्यामलपत्रं अतएव श्यामं श्यामनामकं । वृक्षैःसहविवृद्धं यद्वा वृक्षैःश्यामं वृक्षसहितत्वाद्विशेषेणश्यामलं । वृक्षैरित्युपलक्षणेतृतीया । आशिषः मनोरथान् । प्रयुञ्जीत प्रार्थयेत् ॥६॥ वसेद्वातिक्रमेतवा सीतेतिशेषः । श्रान्ताचेत् किंचित्कालंवसेत् । नोचेदतिक्रमेतेत्यर्थः ॥ ७ ॥ ततः दक्षिणतटस्थन्यग्रोधात् । यामुनैः यमुनासंबन्धिभिः यमुनातीरजैरित्यर्थः ॥ ८ ॥ सः काननं । पथिशब्दापेक्षयापुँल्लिङ्गत्वं । मार्दवयुक्तः सूक्ष्मसिकतावत्त्वात् । वनदावैः वनाग्निभिः । "दवदावौवनारण्यवह्नी" इत्यमरः । तथाप्यत्रदावशब्दोऽग्निमात्रपरः । "विशिष्टवाचकानां" इतिन्यायात् ॥ ९ ॥ अभिवाद्येत्यर्धेनमहर्षिविशेषयति । तथैवगमिष्यामइत्युक्त्वा अभिवाद्य त्वमाश्रमंगच्छेतिरामेणविनिवर्तितोमहर्षिः न्यवर्ततेतिसंबन्धः ॥ १०—११ ॥ मन्त्रयित्वा पूर्वोक्त-

आरभ्य पश्चान्मुखाश्रितां । शि० अत्रद्विवचनंतुसीतारामानतिरेकबुद्ध्या ॥ ४ ॥ ति० अथशुद्धांकालिन्दीं प्रतिस्रोतोयथाभवति तथासमागतां विपरीतप्रवाहां आसाद्य तस्यास्तीर्थं अवतरणप्रदेशं । प्रचरितं बहुजनगमनागमनाभ्यामदिक्षुण्णंदृष्ट्वा । शि० प्रतिस्रोतस्समागतां प्रवाहमार्गलब्धानेकतीर्थसंगमवतींकालिंदीमासाद्य तीर्थं पवित्रकारकं । तस्याःकालिन्द्याःप्रचरितं विलक्षणप्रचलनं प्रकामंयथास्यात्तथाप्रेक्ष्य ॥ ५ ॥ स० आशिषः अस्माकंपुनरागमनंभवत्विति प्रयुञ्जीत । सिद्धसेवितत्वात्स्त्रियास्तत्रगमनाभावात्प्रार्थनेदोषोनास्तीतिभावः ॥ ७ ॥ शि० नीलंकाननंवनंप्रेक्ष्य मयाबहुशोगतस्य बहुवारंमत्कर्तृकगमनविशिष्टस्यचित्रकूटस्ययःरम्योरमणीयःसः प्रसिद्धःपन्थाःमार्गः त्वयाप्राप्स्यतेइतिशेषः ॥ ८—९ ॥ स० सीतांअग्रतः लक्ष्मणस्तुप्रान्तेकृतवान् । रामस्तुअग्रतःपुरस्तात्कृतवान् । मिलित्वाउभावपिसीतामग्रतःकृत्वेतियुक्तं । "अग्रंप्रान्तेपुरस्ताच्चप्रधानेप्रथमोर्ध्वयोः" इतिविश्वः । एतेन यथाश्रुतार्थग्रहणे रामलक्ष्मणयोरपिपुरस्तात्सीतागच्छतीत्युक्तमासीत् । एवंच "अग्रतोगच्छसौमित्रेसीतात्वामनुगच्छतु । पृष्ठतोऽनुगमिष्यामिसीतांत्वांचानुपालयन्" इत्यादिविरोधइतिपरास्तं । उक्तरीत्याऽग्रशब्दस्योभयार्थकत्वेनविरोधाभावात् ॥ १२ ॥ शि० चिन्तां कालिन्दीतरणोद्देश्यकभरद्वाजोक्तिविषयकस्मृतिं ॥ १३ ॥

[ पा० ] १ ङ. छ. ज. झ. ट. प्रतिस्रोतःसमागतां. २ घ. सुचरितं. च. ज. प्रचलितं. ३ ङ. च. छ. झ. ञ. ट. प्रकामं. ४ क. ग. ज—ट. राघव. ५ क. प्रवृद्धं. ङ. घ. छ. झ. ञ. ट. परीतं. ६ झ. प्रयुञ्जीताशिषांक्रियां. ङ. ट. प्रयुञ्जीताशिषःक्रियां. ७ ख—च. ज—ट. समासाद्यच. ८ ख. वसेचाति. ९ ङ. च. छ. झ. ञ. ट. प्रेक्ष्यच. १० झ. सल्लकीबदरी. ११ क—झ. ट. राम. १२ ङ. छ. झ. वन्यैश्च. १३ ङ. छ. झ. ट. गतस्य. च. ञ. यातःसु. १४ क. ख. ग. ङ. च. छ. झ. ञ. ट. दावैश्चविवर्जितः. १५ ङ. च. छ. झ. ञ. ट. मादिश्य. १६ क. अपावृत्ते. १७ ङ. छ. झ. ट. भद्रंते. १८ ङ. छ. झ. ट. स्रोतस्विनीं. १९ च. छ. झ. ञ. ट. सद्यो.

तौ काष्ठ[1]संघाटमथो [2]चक्रतुस्सुमहाप्लवम् ॥ [3]शुष्कैर्वंशैः [4]समास्तीर्णमुशीरैश्च समावृतम् ॥ १४ ॥
ततो [5]वेतसशाखाश्च [6]जम्बूशाखाश्च वीर्यवान् ॥ चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनम् ॥१५॥
तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् ॥ [7]ईषत्संलज्जमानां ता[8]मध्यारोपयत प्लवम् ॥ १६ ॥
पार्श्वे [9]च तत्र वैदेह्या वसने भूषणानि च ॥ प्लवे कठिनकाजं च रामश्चक्रे [10]सहायुधैः ॥ १७ ॥
आरोप्य [11]प्रथमं सीतां संघाटं परिगृह्य तौ ॥ ततः प्रतेरतुर्यत्तौ [12]वीरौ दशरथात्मजौ ॥ १८ ॥
कालिन्दीमध्यमायाता सीता त्वेनामवन्दत ॥ स्वस्ति देवि तरामि त्वां [13]पारयेन्मे पतिर्व्रतम् ॥१९॥
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ॥ स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् ॥ २० ॥
कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः ॥ तीरमेवाभिसंप्राप्ता दक्षिणं [14]वरवर्णिनी ॥ २१ ॥
ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् ॥ तीरजैर्बहुभिर्वृक्षैः संतेरुर्यमुनां नदीम् ॥ २२ ॥
ते [15]तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ॥ श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् ॥२३॥
न्यग्रोधं [16]तमुपागम्य वैदेही वाक्य[17]मब्रवीत् ॥ नमस्तेऽस्तु महावृक्ष पारयेन्मे [18]पतिर्व्रतम् ॥ २४ ॥
कौसल्यां चैव [19]पश्येयं सुमित्रां च यशस्विनीम् ॥ इति सीताऽञ्जलिं कृत्वा [20]पर्यगच्छद्वनस्पतिम् ॥२५॥
अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् ॥ दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् ॥२६॥
सीतामादाय गच्छ त्वमग्रतो [21]भरताग्रज ॥ [22]पृष्ठतोऽहं गमिष्यामि सायुधो द्विपदांवर ॥ २७ ॥
यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा ॥ तत्तत्[23]प्रदद्या वैदेह्या यत्रास्या रमते मनः ॥ २८ ॥
गच्छतोऽस्तु तयोर्मध्ये बभूव जनकात्मजा ॥ मातङ्गयोर्मध्यगता शुभा नागवधूरिव ॥ २९ ॥

रीत्याकृतार्थतामनुसंधाय ॥ १२—१३ ॥ काष्ठसंघाटः काष्ठनिचयः । उशीरैः वीरणतृणमूलैः । " मूलेस्योशीरमस्त्रियां " इत्यमरः ॥ १४—१५ ॥ अचिन्त्यां अचिन्त्यसौन्दर्यां । कान्तकरग्रहादावश्यकत्वाच्चेषल्लज्जावतीं ॥ १६ ॥ तत्रैव वैदेह्याःपार्श्वे । कठिनकाजं कठिनकं कन्दमूलखननसाधनमायसाग्रंदारु । आजं अजचर्मपिनद्धंपिटकं । द्वन्द्वैकवद्भावः । चक्रे स्थापितवानित्यर्थः ॥ १७ ॥ संघाटं प्लवं । यत्तौ प्लवचालनेयतमानौ ॥ १८ ॥ मेपतिः व्रतं वनवाससंकल्पं । पारयेत् समापयेत् । त्वामुद्दिश्य गोसहस्रेण गोसहस्रप्रदानेन सुराघटशतेनचनैवेद्येन । स्वस्तियथाभवतितथा प्रत्यागतेसति गोसहस्रप्रदानेनसुराघटशतेनचत्वांयक्ष्यइत्यादि याचमाना तीरं प्राप्तेत्यन्वयः ॥ १९—२१ ॥ वृक्षैरित्युपलक्षणेतृतीया ॥२२ ॥ यमुनावनात् यमुनातीरवनात् ॥ २३—२४ ॥ पर्यगच्छत् प्रदक्षिणंचकार ॥ २५ ॥ अवलोक्य सीतायाः श्रान्त्यश्रान्तीपरीक्ष्येत्यर्थः । आयाचन्तीं मनोरथान्प्रार्थयन्तीं ॥ २६ ॥ भरताग्रजेतिबहुव्रीहिः । अग्रतोगच्छेत्यनेन सीतायाःपुरतोगच्छेत्युक्तं ॥ २७ ॥ अग्रतोगमनफलमाह—यद्यत्फलमित्यादिश्लोकेन ॥ २८

स० आसनं प्लवेउपवेशनार्थं ॥ १५ ॥ स० स्वस्ति सुखंयथाभवतितथा ॥ २० ॥ स० हेभरतानुज बहुव्रीहिः । त्वंसीतामादाय स्वपृष्ठतःकृत्वा । अग्रतः तस्याःपुरस्तात् ॥ २७ ॥

[ पा० ] १ क. घ. च. संघात. २ ग. घ. ज. चक्रतुस्तु. ३ ङ. छ. झ. ट. शुष्कैर्वन्यैः. ख. शुष्कवंशैः. ४ क. ख. ङ. च. छ. झ. ञ. ट. समाकीर्णं. ५ क. ख. ङ. च. छ. झ. ञ. ट. वैतस. ६ ङ. च. छ. झ. ट. जंबु. ७ क. ग. छ. झ. ञ. ट. त्वसलज्जमानां. ८ क. मध्यारोहयत. ९ ख—ट. तत्रच. क. तत्रैव. १० ङ. छ. झ. ट. समाहितः. ११ क. ख. ग. ङ—ट. सीतांप्रथमं. १२ ङ. छ. झ. ट. प्रीतौ. १३ ख. तारयेन्मे. १४ क. जनकात्मजा. च. छ. वरदर्शिनी. १५ ङ. छ. झ. ठ. तेतुतं. १६ ङ. छ. झ. ट. समुपागम्य. ख. तमुपास्थाय. क. तंसमास्थाय. १७ क. च. ञ. त्विदमब्रवीत्. ङ. छ. झ. ट. चाभ्यवन्दत. १८ क. व्रतंपतिः. १९ क. ख. ङ. च. छ. पश्यामः. झ. ञ. ट. पश्येम. २० ग. घ. प्रत्यगच्छद्वनस्पतिं. ङ. छ. झ. ट. पर्यगच्छन्मनस्विनी. २१ ङ—ट. भरतानुज. २२ ङ. पृष्ठतोगन्तुमिच्छामि. च. छ. झ. पृष्ठतोऽनु. २३ ङ. च. छ. झ. ञ. ट. त्प्रयच्छवैदेह्याः. ख. घ. प्रदद्याद्वैदेह्याः.

एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ॥ [१]अदृष्टपूर्वां पश्यन्ती रामं पप्रच्छ साऽबला ॥३०॥
रमणीयान्बहुविधान्पादपान्[२]कुसुमोत्कटान् ॥ सीतावचनसंरब्ध आनयामास लक्ष्मणः ॥ ३१ ॥
विचित्रवालुकजलां हंससारसनादिताम् ॥ रेमे जनकराजस्य [३]तदा प्रेक्ष्य सुता नदीम् ॥ ३२ ॥
क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ॥ बहून्मेध्यान्मृगान्हत्वा चेरतुर्यमुनावने ॥ ३३ ॥
विहृत्य ते बर्हिणपूगनादिते शुभे वने [४]वानरवारणायुते ॥
समं नदीवप्रमुपेत्य [५]संमतं निवासमाजग्मुरदीनदर्शनाः ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

प्रभातेसीतालक्ष्मणाभ्यांसहप्रस्थितेनरामेणमार्गेसीतांप्रतिवनरामणीयकादिप्रदर्शनपूर्वकंचित्रकूटमेत्यतत्रवाल्मीक्याश्रमाभिगमनम् ॥ १ ॥ रामेणवाल्मीक्यभ्यनुज्ञयालक्ष्मणेनपर्णशालानिर्मापणम् ॥ २ ॥ तथादेवतायजनादिपूर्वकंसीतालक्ष्मणाभ्यांसहसुमुहूर्तेपर्णशालाप्रवेशः ॥ ३ ॥

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् ॥ प्रबोधयामास शनैर्लक्ष्मणं [६]रघुनन्दनः ॥ १ ॥
सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनम् ॥ संप्रतिष्ठामहे कालः प्रस्थानस्य परंतप ॥ २ ॥
[७]स सुप्तः समये भ्रात्रा लक्ष्मणः प्रतिबोधितः ॥ जहौ निद्रां च [८]तन्द्रीं च प्रसक्तं च [९]पथि श्रमम् ॥३॥
तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् ॥ पन्थानम्[१०]ऋषिणाऽऽदिष्टं चित्रकूटस्य तं ययुः ॥४॥
ततः संप्रस्थितः काले रामः सौमित्रिणा सह ॥ सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५ ॥
आदीप्तानिव वैदेहि सर्वतः [११]पुष्पितान्नगान् ॥ स्वैः पुष्पैः किंशुकान्पश्य मालिनः शिशिरात्यये॥६॥

---

—२९ ॥ पप्रच्छ कैषासंज्ञेतिपृष्टवतीत्यर्थः ॥ ३० ॥ पादपानित्येनन स्तबकविशिष्टाः पादपावयवाउच्यन्ते। सीतावचनसंरब्धः सीतावचनेनत्वरितः ॥ ३१ ॥ नदीं यमुनां । सुदूरंतत्तीरेगमनात्तद्दर्शनं ॥ ३२ ॥ मेध्यान् शुचीन् भक्ष्यानितियावत् । चेरतुः भक्षितवन्तौ । चर गतिभक्षणयोः ॥ ३३ ॥ पूगः समूहः । समं अनिम्नोन्नतं । नदीवप्रं नदीतीरं । संमतं निवासं सीताभिमतंवासस्थानं ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥५५॥

---

अनन्तरं स्वप्रबोधानन्तरं । अवसुप्तं ईषत्सुप्तमित्यर्थः ॥ १ ॥ वन्यानां शुकपिकशारिकादीनां । वल्गु सुन्दरं । कालः प्राप्तइतिशेषः ॥ २ ॥ समये प्रबोधनसमये । तन्द्रीं जाड्यं । जहौ तदाप्रभृतीतिशेषः । पथिश्रमं तत्कृतोपचारमित्यर्थः ॥ ३ ॥ नद्याः कालिन्द्याः । स्पृष्ट्वेत्युपलक्षणंप्रातःकालिकस्नानादिकृत्यानां । तंपन्थानं पलाशवनरूपं ॥ ४—५ ॥ आदी-

---

**स०** अदृष्टरूपामितिविपरिणतंसत्पादपंगुल्ममित्याभ्यामन्वेति । एकैकमितिवत् ॥ ३० ॥ **स०** प्रश्नस्त्वपेक्षामूलइतिमत्वा सीतावचने संरब्धः आदरवान् लक्ष्मणः कुसुमोत्करान् पुष्पस्तोमविशिष्टान् । पादपान् तदग्रभागान् । उपलक्षणमेतत् । गुल्मादीनानयामास । तत्तन्नामकथितवानानिन्येच ॥३१॥ **स०** चेरतुर्भुक्तवन्तौ । परिवेषणकर्त्र्यास्सीतायारामोच्छिष्टभोक्तृत्वेननिमित्तेनतदग्रहणाद्द्विवचनोपपत्तिः ॥३३॥ **स०** वारणवानराणामयुतानियस्मिन्नितिव्यधिकरणोबहुव्रीहिः । यद्वा वारणवानरैः आसमन्ताद्युते । नदीवप्रं यमुनातीरं । "तटेवप्रः" इतिरत्नमाला । उपेत्यतत्रनिवासं आजग्मुश्चक्रुः ॥ ३४ ॥ इतिपञ्चपञ्चाशस्सर्गः ॥ ५५ ॥

**ति०** अथावसुप्तं स्वप्रबोधानन्तरमपीषत्सुप्तं । एतेन चतुर्दशवर्षपर्यन्तंलक्ष्मणःस्वापहीनोऽनाहारश्चेतिलोकप्रवादोपास्तः । **शि०** अनन्तरं दूररहितंयथास्यात्तथा । **स०** अनन्तरंस्वप्रबोधानन्तरंअवसुप्तं निद्रामुद्रितलोचनत्वेनतिष्ठन्तं ॥१॥ **ती०** मालिनः

**[ पा० ]** १ ङ. छ. झ. ञ. ट. अदृष्टरूपां. २ ङ. छ—ट. न्कुसुमोत्करान्. ३ क—ट. सुताप्रेक्ष्यतदा. ४ ग. ङ. च. छ. झ. ञ. ट. वारणवानरायुते. ५ ङ. छ. झ. ञ. ट. सत्वरं. ६ ङ. छ. झ. ट. रघुपुङ्गवः. ७ ङ. छ. झ. ट. प्रसुप्तस्तुततो भ्रात्रासमये. ८ ङ. छ. झ. ञ. ट. तन्द्रां. ९ ख. ङ. च. छ. झ. ञ. ट. परिश्रमं. १० ङ. छ. झ. ट. मृषिभिर्जुष्टं. क. ख. ग. च. ज. ञ मृषिणोद्दिष्टं. घ. मृषिणाजुष्टं. ११ पुष्पितान्द्रुमान्.

पश्य भल्लातकान्फुल्लान्नरैरनुपसेवितान् ॥ फलपत्रैरवनतान्नूनं शक्ष्यामि जीवितुम् ॥ ७ ॥
पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण ॥ मधूनि मधुकारीभिः संभृतानि नगेनगे ॥ ८ ॥
एष क्रोशति नत्यूहस्तं शिखी प्रतिकूजति ॥ रमणीये वनोद्देशे पुष्पसंस्तरसंकटे ॥ ९ ॥
मातङ्गयूथानुसृतं पक्षिसंघानुनादितम् ॥ चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १० ॥
समभूमितले रम्ये द्रुमैर्बहुभिरावृते ॥ पुण्ये रंस्यामहे तात चित्रकूटस्य कानने ॥ ११ ॥
ततस्तौ पादचारेण गच्छन्तौ सह सीतया ॥ रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ १२ ॥
तं तु पर्वतमासाद्य नानापक्षिगणायुतम् ॥ बहुमूलफलं रम्यं संपन्नं सरसोदकम् ॥ १३ ॥
मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः ॥ बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥ १४ ॥
मुनयश्च महात्मानो वसन्त्यस्मिञ्शिलोच्चये ॥ अयं वासो भवेत्तावदत्र सौम्य रमेमहि ॥ १५ ॥
इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः ॥ अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥ १६ ॥
तान्महर्षिः प्रमुदितः पूजयामास धर्मवित् ॥ आस्यतामिति चोवाच स्वागतं तु निवेद्य च ॥ १७ ॥
[राघवं प्रीतिसंयुक्त इदं वचनमब्रवीत् ॥ ज्ञातं मया रघुश्रेष्ठ त्वदागमनकारणम् ॥
अत्र वासमृषीणां च सकाशे रोचय प्रभो ॥ १८ ॥
इति तेन समाज्ञप्तः प्रीयमाणो महारथः ॥ तथेति प्रतिजग्राह ऋषिणोक्तं कृताञ्जलिः] ॥ १९ ॥
ततोऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः ॥ संनिवेद्य यथान्यायमात्मानमृषये प्रभुः ॥ २० ॥
लक्ष्मणानय दारूणि दृढानि च वराणि च ॥ कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः ॥ २१ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान्द्रुमान् ॥ आजहार ततश्चक्रे पर्णशालामरिंदमः ॥ २२ ॥

---

प्तानिव आसमन्ताज्ज्वलतइव । नगान् वृक्षान् । स्वैः पुष्पैः मालिनः मालावतइवस्थितान् । शिशिरात्यये वसन्तसमये ॥ ६ ॥ भल्लातकान् वीरवृक्षान् । फुल्लान् फुल्लपुष्पान् । अनुपसेवितान् दुर्गमत्वादिति भावः । जीवितुंशक्ष्यामि एवमादिजीवनसाधनस्य विद्यमानत्वादितिभावः ॥ ७ ॥ द्रोणप्रमाणानि द्रोणं आढकद्वयंतत्प्रमाणानि तत्प्रमाणमधुपूरितानि । मधूनिकुर्वन्तीतिमधुकार्यः कर्मण्यण् ङीप् । ताभिः मधुमक्षिकाभिरितियावत् । संभृतानि निर्मितानि । नगेनगे वृक्षेवृक्षे लम्बमानानिमधूनि मधुपटलानि पश्य ॥८॥ नत्यूहः दात्यूहः । वनोद्देशे वनप्रदेशे । पुष्पसंस्तरसंकटे पुष्पमयास्तरणेननिबिडे ॥ ९ ॥ मातङ्गयूथानुसृतं गजकुलैर्व्याप्तं । प्रवृद्धशिखरं उन्नतशिखरं ॥ १०—१२ ॥ तंत्वित्यारभ्यअभिवादयन्नित्यन्तमेकं वाक्यं । सरसोदकं स्वादूदकं । स्वाजीवः शोभनःआजीवोजीविकायस्मिन्सतथोक्तः । शिलोच्चये पर्वते । इति इतिनिश्चित्य । आश्रमं वाल्मीकीयं । अभिवादयन् अभ्यवादयन् । तदानींचित्रकूटेवाल्मीकेर्वासः भरतागमनानन्तरमृषिनिर्गमनकथनात्ततःप्रभृतितमसातीरइतिज्ञेयम् । अतोनबालकाण्डकथाविरोधः ॥ १३—१९ ॥ ततइत्यादिश्लोकद्वयमेकंवाक्यं । यथान्यायं यथाक्रमं । आत्मानमृषयेसंनिवेद्य अमुकस्य पुत्रोहं अयं मद्भ्राता इयंमद्भार्या एतादृशकार्यार्थमागता वयमित्येवमुक्त्वा वराणि जम्बूप्रभृतीनि गृहनिर्माणार्हाणि । तिन्त्रिणीमधूकादेस्त्याज्यत्वात् । आनय आवसथंकुरुष्वेति लक्ष्मणमब्रवीदिति संबन्धः ॥ २०—२२ ॥

---

श्रेणीभूतान् ॥ ६ ॥ **शि०** शक्ष्याम शक्ष्यामः ॥ ७ ॥ **ति०** चित्रकूटेस्थितएववाल्मीकिः रामराज्यप्राप्तिसमयेतमसातीरंगतइतिनविरोधइतिप्राञ्चः । प्राचेतसादयंवाल्मीकिरन्यएवेतितत्त्वं ॥ १६ ॥ **शि०** वराणि निषिद्धच्छायकविभीतकादिभिन्नत्वेनोत्कृष्टा-

[ **पा०** ] १ क. ख. ङ—ट. निबिलवान्. २ ङ. च. छ. झ. ट. फलपुष्पैरव. ३ घ—ट. शक्ष्याम. ४ ख. च. ञ. रंस्यावहे. ५ क. ख. ग. ङ—ट. संपन्नसरसोदकं. ६ क. फलायुतः. ७ ङ. छ. झ. ट. भवेत्तातवयमत्रवसेमहि. ख. भवेत्तावद्वयमत्रवसेमहि. ८ ग. घ. ज. महामतिः. ९ ग. घ. स्वागतंच. ङ. झ. ञ. ट. स्वागतंतं. १० कुण्डलान्तर्गतमर्धपञ्चकं. क. ख. पुस्तकयोर्दृश्यते. ११ संयुक्तं.

तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् ॥ शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥ २३ ॥
ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् ॥ कर्तव्यं वास्तुशमनं सौमित्रे चिरजीविभिः ॥ २४ ॥
मृगं हत्वाऽऽनय क्षिप्रं लक्ष्मणेह शुभेक्षण ॥ कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर[1] ॥ २५ ॥
भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा ॥ चकार स यथोक्तं च तं रामः पुनरब्रवीत्[2] ॥ २६ ॥
ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् ॥ त्वर सौम्य मुहूर्तोऽयं ध्रुवश्च दिवसोप्ययम्[3] ॥ २७ ॥
स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् ॥ अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २८ ॥
तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम् ॥ लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ॥ २९ ॥
अयं कृष्णः समाप्ताङ्गः[4] शृतः कृष्णमृगो यथा[5] ॥ [6]देवतां देवसंकाश यजस्व कुशलो ह्यसि ॥ ३० ॥
रामः स्नात्वा तु नियतो गुणवाञ्जप्यकोविदः[7] ॥ संग्रहेणाकरोत्सर्वान्मन्त्रान्सत्रावसानिकान् ॥ ३१ ॥
इष्ट्वा देवगणान्सर्वान्विवेशावसथं[8] शुचिः ॥ बभूव च मनोह्लादो रामस्यामिततेजसः ॥ ३२ ॥

निष्ठितां निश्चलां वातादिनाचालयितुमशक्यां भित्तिसहितां परिनिष्पन्नां । बद्धकटां कुड्यार्थेकल्पितास्तरणां बद्धबाह्यावरणांवा । कटेवर्षावरणयोरितिधातुः । सुदर्शनां शोभनदर्शनां । शुश्रूषमाणं परिचर्यांकुर्वन्तं । एकाग्रं इतःपरंकिंवाआज्ञापयिष्यतीतिसावधानं॥२३॥ ऐणेयं एणसंबन्धि एणाड्ढञार्षः । शालां शालाधिष्ठात्रीस्तत्तद्दिग्वासिनीर्देवताः । तास्तु शय्यादेशेकामलिङ्गेनदेहल्यामन्तरिक्षलिङ्गेनेत्यादिनगरखण्डप्रतिपाद्याः । तादृशयागार्थंपूर्वं वास्तुशमनं वास्तुशान्तिः गृहप्रवेशार्हकर्म कर्तव्यं गृहदेशेवर्तमानभूतपिशाचादीनांशमनंकर्तव्यमित्यर्थः । कर्तव्यंचिरजीविभिरित्यनेन अकरणेआयुःक्षयोदर्शितः । तदुक्तंब्रह्माण्डपुराणे । "नचव्याधिभयंतस्यनचबन्धुजनक्षयः । जीवेद्वर्षशतंस्वर्गकल्पमेवंवसेन्नरः" इति ॥ २४ ॥ कथं कर्तव्यमित्यपेक्षायामाह—कर्तव्यइति । शास्त्रदृष्टः शास्त्रेषुनिर्णीतः । विधिः प्रकारः कर्तव्यः । धर्मं तदनुकूलधर्मशास्त्रं । अनुस्मर अवधेहीत्यर्थः ॥ २५—२६ ॥ श्रपयस्व पच । अयंमुहूर्तः ध्रुवः स्थिरः । अयंशोभनतिथिनक्षत्रयुक्तोदिवसोवासरश्च ध्रुवः स्थिर इत्यर्थः । [ अयंसौम्यमुहूर्तः शुभमुहूर्तः । अयंदिवसश्च ध्रुवः यजमानस्थैर्यकारी ] ॥ २७ ॥ समिद्धे सम्यग्दीप्ते । जातवेदसि अग्नौ । चिक्षेप पपाचेत्यर्थः ॥ २८ ॥ निष्टप्तं सोष्णं । छिन्नशोणितं ॥ २९ ॥ कृष्णः कृष्णमृगः । समाप्ताङ्गः परिपूर्णावयवः । शृतः पक्वः । कृष्णमृगो यथा पूर्णावयवत्वात् पाकतःश्यामत्वाच्च पूर्वावस्थइवदृश्यतइत्यर्थः । कुशलोसि यजनेसमर्थोसि ॥ ३० ॥ गुणवान् प्रायत्यादिगुणवान् । जप्यकोविदः जप्यमन्त्रेषुसमर्थः । संग्रहेण संक्षेपेण । सत्रावसानिकान् सत्रंवास्तुयागः यैर्मन्त्रैरवसीयतेपरिसमाप्यतेतेसत्रावसानाः सत्रावसानाएवसत्रावसानिकाः । विनयादेराकृतिगणत्वात्स्वार्थेठक् । छान्दसोवृद्ध्यभावः । अकरोत् यावतावास्तुशान्तिकर्मसमाप्यते तावन्मन्त्रान् जजापेत्यर्थः । मन्त्रजपपूर्वकं कर्माण्यकरोदित्यर्थः ॥ ३१ ॥ देवगणान् वास्तुदेव-

नि ॥ २१ ॥ **ति०** बद्धकटां बद्धकवाटां । छान्दसोवर्णलोपः । यद्वा बद्धच्छदिषं । बद्धःकटःवर्षावारकोयस्यामित्यर्थात् ॥ २३ ॥ **ती०** वास्तुशब्देन गृहाधिष्ठितशिखिपर्जन्यप्रभृतिपञ्चचत्वारिंशद्देवताउच्यंते । तासांशमनंहोमनैवेद्यबलिभिःपूजनं ॥ २४ ॥ बोधायनेनोक्तांयज्ञार्थपशुवधदोषशङ्कांनिवर्तयति—**कर्तव्यइति** । शास्त्रदृष्टः शास्त्रचोदितः । विधिःकर्तव्यएव । तंधर्ममेवानुस्मर । नात्रहिंसादिदोषप्रसङ्गः । यज्ञविनियुक्तपशूनामुत्तमलोकभागित्वेनवधस्यतेषामनुग्रहत्वाच्च । "नवाउवेतन्म्रियसेनरिष्यसिदेवाँ इदेषिपथिभिस्सुगेभिः । यत्रयन्तिसुकृतोनापिदुष्कृतस्तत्रत्वादेवस्सवितादधातु" इतिहिश्रूयते । तस्माद्यज्ञेवधोऽवधइतिचस्मर्यते ॥ २५ ॥ **शि०** त्वर अत्रविलंबंनकुर्वित्यर्थः । तत्रहेतुःअयंमुहूर्तोध्रुवः ध्रुवसंज्ञकः । निश्चयेनकार्यसाधकइत्यर्थः । ननुपुनरयमागमिष्यतिकिंत्वरयेत्यतआह । अयं विधिः । दिवसः दिवससंबन्धी । रात्रौनकर्तव्यइत्यर्थः ॥ २७ ॥ **ति०** सर्वः सर्वकर्मार्हः । **स०** समस्ताङ्गः शिरआदिसर्वावयवोपेतः । सर्वः हिंसितः । अर्बषर्बहिंसायामितिधातोः "धात्वादेः षस्सः" इतिषस्यसत्वेवब-

**[ पा० ]** १ क. ख. ग. च. ज. मनुस्मरन्. २ ङ. झ. चकारचयथोक्तंहि. क—घ. च. झ. ज. ञ. ट. चकारचयथोक्तंस. ३ क—ट. दिवसोह्ययं. ४ ङ. छ. झ. ट. सर्वःसमस्ताङ्गः. ५ ङ. छ. झ. ट. मया. ६ ग. ङ. छ. ज. झ. ट. देवतादेव. ७ ङ. झ. ट. गुणवाञ्जप. ८ क. ग. घ. च. ज. विवेशवसतिं.

वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च ॥ वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥ ३३ ॥
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि ॥ पापसंशमनं रामश्चकार बलिमुत्तमम् ॥ ३४ ॥
वेदिस्थलविधानानि चैत्यान्यायतनानि च ॥ आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥ ३५ ॥
वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि ॥ अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमित्कुशैः ॥ ३६ ॥
तौ तर्पयित्वा भूतानि राघवौ सह सीतया ॥ तदा विविशतुः शालां सुशुभां शुभलक्षणौ ॥ ३७ ॥

तां वृक्षपर्णच्छदनां मनोज्ञां यथाप्रदेशं सुकृतां निवाताम् ॥
वासाय सर्वे विविशुः समेताः सभां यथा देवगणाः सुधर्माम् ॥ ३८ ॥
अनेकनानामृगपक्षिसंकुले विचित्रपुष्पस्तबकैर्द्रुमैर्युते ॥
वनोत्तमे व्यालमृगानुनादिते तदा विजह्रुः सुसुखं जितेन्द्रियाः ॥ ३९ ॥
सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् ॥
ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

ताः । ह्लादस्तुष्टिः ॥ ३२ ॥ वैश्वदेवबलिं वैश्वदेवबलिहरणे । रौद्रं रुद्रदेवताकं । वैष्णवं विष्णुदेवताकंच यागं । वास्तुसंशमनीयानि गृहारिष्टशामकानि । मङ्गलानि मङ्गलकराणिपुण्याहवाचनशान्तिजपादीनि । स्नात्वेति पुनःस्नानकरणं "ततःसर्वौषधीस्नानं यजमानस्यकारयेत्" इतिस्मरणादित्याहुः । वस्तुतस्तु रौद्रयागकरणात्पुनःस्नानं । रौद्रकर्मकरणे अपउपस्पृश्येतिविधानादितिज्ञेयम् । पापसंशमनं पापशब्देन पापप्रधानानिदिवाचरनक्तंचराणिक्रूरभूतान्युच्यन्ते । तेषांसंशमनं । यद्वा पापसंशमनं पञ्चसूनागृहस्थस्येत्याद्युक्तरीत्यासूनारूपपापशमनं । वैश्वदेवबलिमित्यत्रभूतबलिमात्रोक्तिः । अत्रतद्व्यतिरिक्तःपित्रादिविषयः । यद्वा पूर्ववैश्वदेवरूपबलिमित्यर्थः । अत्रसर्वभूतबलिः । यद्वा पूर्वोक्तस्यसर्वस्योपसंहारः ॥३३—३४॥ वेदिस्थलविधानानि बलिहरणादिवेदिस्थलसंस्थानानि । "वेदिःपरिष्कृताभूमिः" इत्यमरः । चैत्यानि गन्धर्वाद्यावासस्थानानि । आयतनानि विष्ण्वाद्यावासस्थलानि । [चैत्यानि देवतास्थानानि । आयतनानि अभ्यगाराणि । अनुरूपाणि आश्रमस्यानुरूपाणिसूक्ष्माणीत्यर्थः । स्थापयामास मन्त्रतस्तत्तद्देवतानांतत्रतत्रावस्थानंकल्पितवानित्यर्थः ] ॥ ३५—३७ ॥ वृक्षपर्णच्छदनां वृक्षपर्णरूपाच्छादनपटलयुक्तां यथाप्रदेशं शास्त्रोक्तप्रदेशमनतिक्रम्य । आग्नेय्यांपाकशालेत्यादि शास्त्रं । सुधर्मां देवसभां "स्यात्सुधर्मादेवसभे"त्यमरः ॥ ३८ ॥ पुष्पस्तबकपदं कर्णावतंसादिपदवन्निर्वाह्यं । व्यालाः सर्पाः गजावा । जितेन्द्रियाइत्यनेन विहारोग्राम्यभिन्नजलक्रीडापुष्पापचयादिरितिसूच्यते ॥ ३९ ॥ तां प्रसिद्धां । सुतीर्थां शोभनजलावतरणप्रदेशां । हृष्टः पुलकितः पुरविप्रवासात् जनितमितिशेषः ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्पञ्चाशःसर्गः ॥ ५६ ॥

---

योरभेदात्सर्वइतिरूपं ॥ ३० ॥ **ती०** वास्तुसंशमनीयानि वास्तुदोषसंशमनार्थानिगर्भन्यासादीनि ॥ ३३ ॥ **ति०** पापसंशमनं पापशमनसाधनं बलिं वैश्वदेवबलिमित्युपसंहारेणवादः ॥ ३४ ॥ **ती०** चैत्यं गणपत्यायतनं ॥ ३५ ॥ इतिषट्पञ्चाशस्सर्गः ॥ ५६ ॥

**[ पा० ]** १ ख. विमानानि. २ क. मूलैःफलैर्माल्यैः. ३ क. ख. च. ञ. समिद्गणैः. ४ ञ. सुकृतानिवासतां. ५ क च. नानाविध. ६ च. ञ. स्तबकद्रुमैः. ७ क. ख. च. ज. झ. रामो. ८ ख. विप्रवासनात्.

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

गुहचारै रामस्यचित्रकूटगमनादिकं निवेदितेन सुमन्त्रेण गुहसमापृच्छनपूर्वकं सायाह्ने अयोध्याप्रवेशः ॥ १ ॥ तथा त्वानुद्रवत्पौरेषुरामवृत्तान्तनिवेदनपूर्वकमन्तःपुरमेत्यदशरथे रामवृत्तान्तनिवेदनम् ॥ २ ॥ तच्छ्रवणेनकौसल्यादशरथयोर्मूर्च्छयापतितयोःसतोःसर्वैर्दुःखात्परिदेवनम् ॥ ३ ॥

कथयित्वा सुदुःखार्तस्सुमन्त्रेण चिरं सह ॥ रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १ ॥
भरद्वाजाभिगमनं प्रयागे च सहासनम् ॥ आगिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् ॥ २ ॥
अनुज्ञातः सुमन्त्रोथ योजयित्वा हयोत्तमान् ॥ अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३ ॥
स वनानि सुगन्धीनि सरितश्च सरांसि च ॥ पश्यन्नतिययौ शीघ्रं ग्रामाणि नगराणि च ॥ ४ ॥
ततः सायाह्नसमये तृतीयेऽहनि सारथिः ॥ अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥ ५ ॥
स शून्यामिव निश्शब्दां दृष्ट्वा परमदुर्मनाः ॥ सुमन्त्रश्चिन्तयामास शोकवेगसमाहतः ॥ ६ ॥
कच्चिन्न सगजा साश्वा सजना सजनाधिपा ॥ रामसंतापदुःखेन दग्धा शोकाग्निना पुरी ॥ ७ ॥
इति चिन्तापरः सूतो वाजिभिः शीघ्रपातिभिः ॥ नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८ ॥
सुमन्त्रमभियान्तं तं शतशोथ सहस्रशः ॥ क्व राम इति पृच्छन्तः सूतमभ्यद्रवन्नराः ॥ ९ ॥
तेषां शशंस गङ्गायामहमापृच्छ्य राघवम् ॥ अनुज्ञातो निवृत्तोस्मि धार्मिकेण महात्मना ॥ १० ॥
ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा जनाः ॥ अहो धिगिति निश्वस्य हा रामेति च चुक्रुशुः ॥ ११ ॥
शुश्राव च वचस्तेषां बृन्दंबृन्दं च तिष्ठताम् ॥ हताः स खलु ये नेह पश्याम इति राघवम् ॥ १२ ॥

एवंरामस्यचित्रकूटगमनपर्यन्तवृत्तान्तमभिधाय गुहसुमन्त्रादिवृत्तान्तमृषिःप्रस्तौति—कथयित्वेति । गुहो रामेदक्षिणकूलस्थेसति सुदुःखार्तःसन् सुमन्त्रेण सह चिरंकथयित्वा यावद्रामोक्षिपथमतिक्रामति तावत्पर्यन्तंतत्रैवस्थित्वारामगुणान्कथयित्वेत्यर्थः । स्वगृहंजगाम तेनसहस्वगृहंजगामेत्यर्थः ॥ १ ॥ तेषां रामादीनां भरद्वाजाभिगमनं भरद्वाजसेवनं प्रयागे भरद्वाजेनसहासनं आगिरेश्चित्रकूटपर्यन्तंगमनंच तत्रस्थैः शृङ्गिबेरपुरस्थैश्चारैः अभिलक्षितं निवेदितं सुमन्त्रेणसम्यग्विदितमित्यर्थः । गङ्गोत्तरणदिवसनिशा वनस्पतिमूले द्वितीयाभरद्वाजाश्रमे तृतीयायमुनातीरे चतुर्थेऽहनिचित्रकूटगमनं पञ्चमेपुनरागम्यचारैर्निवेदनं ॥ २ ॥ अथ रामवृत्तान्तश्रवणानन्तरं । अनुज्ञातः गुहेनेतिशेषः । गाढदुर्मनाः अत्यन्तदुर्मनाः ॥ ३ ॥ ग्रामाणि ग्रामान् ॥ ४ ॥ ततः ग्रामनगरातिक्रमणानन्तरं । तृतीयेऽहनि शृङ्गिबेरपुरान्निर्गमापेक्षयातृतीयदिवसे । यद्वा अहनितृतीयेसायाह्नसमये अह्नःतृतीयकालभूतेसायाह्नकाले अयोध्यांसमनुप्राप्य निरानन्दां तांददर्श ॥ ५—७ ॥ त्वरितःप्रविवेश नगरंजनसंचारशून्यंनिश्शब्दंवर्तते राजाकामवस्थांप्राप्तइतिज्ञातुंत्वरितःप्रविष्टवानित्यर्थः ॥ ८—९ ॥ गङ्गायां गङ्गातीरे । निवृत्तोस्मीतितेषांशशंसेति संबन्धः ॥ १० ॥ ते रामादयः ॥ ११ ॥ बृन्दंबृन्दंचतिष्ठतां संघशस्तिष्ठतां । हताइति येवयं इह अस्मिन्नर्थे राघवंनपश्यामः इति अस्माद्धेतोः । तेहताःस्मेतिसंबन्धः । दानादिषु अन्तरा मध्येनायकमणिवद्वर्तमानंरामं पुनःजातुकदा-

ति० गङ्गोत्तरणतृतीयदिवसेभरद्वाजाश्रमात्प्रतिनिवृत्तदूतमुखात्तावत्पर्यन्तंतद्वृत्तंज्ञात्वातद्दिनएवशृङ्गबेरपुरात्सुमन्त्रस्यप्रतिनिवृत्तिरितिबोध्यं । अतएव "रामस्यनिर्गमदिनाद्दिनेषष्ठेऽर्धरात्रके । हाहालक्ष्मणहासीतेहारामेतिमृतोनृपः" इतिपाद्मंसंगच्छते । दिनद्वयेन शृङ्गबेरपुरेरामागमनं । तद्द्वितीयदिनेगङ्गोत्तरणं । तदादिदिनत्रयंसुमन्त्रस्यतत्रस्थितिः । तत्रतृतीयदिवसेमध्याह्नेप्रयागतआगतचारेभ्यो रामवृत्तान्तंलब्ध्वाततःप्रस्थायमध्येऽवस्थानं । ततष्षष्ठेऽपराह्णेऽयोध्याप्रवेशःसुमन्त्रस्य । तदर्धरात्रेराज्ञोमरणं ॥ २ ॥ ति० यत्तः

[पा०] १ ङ.छ.झ.ट. कथयित्वातु. २ ख. तीरस्थे. ३ क. सहवासनं. ङ.झ.ट. चसभाजनं. ४ क. रुपलक्षितं. ५ ङ.झ.ट. पश्यन्यत्तो. ६ ङ. छ. झ. ट. द्वितीयेहनि. ७ ख. शोकेन. ८ ङ. च. छ. झ. ञ. ट. यायिभिः. ९ ङ. च. छ. झ. मभिधावन्तः. ख. ग. मभिधावन्तं. ट. मभियान्तंतु. १० ख. ङ. छ. ज. झ. ट. नराः. ११ ङ. च. छ. झ. ट. विचुक्रुशुः.

दानयज्ञविवाहेषु समाजेषु महत्सु च ॥ न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥
किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् ॥ इति रामेण नगरं पितृवत्परिपालितम् ॥ १४ ॥
वातायनगतानां च स्त्रीणामन्वन्तरापणम् ॥ रामशोकाभितप्तानां शुश्राव परिदेवनम् ॥ १५ ॥
स राजमार्गमध्येन सुमन्त्रः पिहिताननः ॥ यत्र राजा दशरथस्तदेवोपययौ गृहम् ॥ १६ ॥
सोवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च ॥ कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्याथ समागतम् ॥ हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १८ ॥
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ॥ अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्ततराः स्त्रियः ॥ १९ ॥
ततो दशरथस्त्रीणां प्रासादेभ्यस्ततस्ततः ॥ रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २० ॥
सह रामेण निर्यातो विना राममिहागतः ॥ सूतः किं नाम कौसल्यां शोचन्तीं प्रतिवक्ष्यति ॥ २१ ॥
यथा च मन्ये दुर्जीवमेवं न सुकरं ध्रुवम् ॥ आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति ॥ २२ ॥
सत्यरूपं तु तद्वाक्यं राज्ञः स्त्रीणां निशामयन् ॥ प्रदीप्तइव शोकेन विवेश सहसा गृहम् ॥ २३ ॥
स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् ॥ पुत्रशोकपरिद्यूनमपश्यत्पाण्डुरे गृहे ॥ २४ ॥

चिदपिनद्रक्ष्यामः किमितिकाकुः । येनकेनापिदाने क्रियमाणे रामःस्वयंतत्रगत्वातिष्ठति किमर्थं देशेकालेपात्रेचदापयितुं । यज्ञेपिगच्छति किमर्थं न्यायार्जितधनैःकारयितुं तत्तत्कर्मसंदेहविच्छेदविस्मृतज्ञापनादिकंकर्तुंच । विवाहेच मध्येगच्छति किमर्थं उभयवर्गसंघटनायासंमतानामभिमतद्रविणप्रदानाय अस्खलितंकर्मणामनुष्ठापनायच । समाजेषुमहत्सु अन्यत्रापिमहासदस्सु दीर्घसत्रेष्वपीत्यर्थः । यत्रकुत्राप्यदृष्टकार्येष्वितिवा । अत्रसर्वत्रहेतुः—धार्मिकमिति । किमिति अस्यजनस्य किंसमर्थं किंक्षेमंकरंवस्तु किंप्रियंकिंसुखावहमिति रामेण तत्तदभिमतवस्तुप्रदात्रारामेण पित्रेवनगरंपरिपालितं । नगरशब्देननगरस्थजनालक्ष्यन्ते । इतिवचःशुश्रावेतिपूर्वेणसंबन्धः ॥ १२—१४ ॥ अन्वन्तरापणंशुश्राव उभयपार्श्वस्थानामापणानांमध्येमध्येशुश्रावेत्यर्थः । विभक्त्यर्थेऽव्ययीभावः ॥ १५ ॥ पिहिताननः जनदर्शनाक्षमतया ॥ १६ ॥ राजनिर्गमाभावेन महाजनसंकुलत्वं ॥ १७ ॥ हर्म्यैः धनिनांवासैः । विमानैः सप्तभूमिगृहैः । "विमानोस्त्रीदेवयानेसप्तभूमिगृहेपिच" इतिवैजयन्ती । प्रासादैः महाराजार्हगृहविशेषैः । उपलक्षिताःनार्यः समागतं रामेणविनासमागतंसुमन्त्रमवेक्ष्य हाहाकारकृताः कृतहाहाकाराः बभूवुरितिशेषः ॥ १८ ॥ अव्यक्तं अस्पष्टमिति क्रियाविशेषणं ॥ १९—२० ॥ सहरामेणेत्यादिश्लोकत्रयमेकंवाक्यं । यत्रेति विभक्तिप्रतिरूपकोनिपातः प्रथमार्थेवर्तते। यथा "कइत्थावेद यत्रसः" इत्यत्र यथा येनप्रकारेण । अस्मज्जीवितं दुर्जीवं दुःखेनजीवनार्हं मन्ये । एवमेवकौसल्या पुत्रे निर्यातेसति । आच्छिद्य प्रसह्य । जीवतियत्र जीवतीतियत् तत् नसुकरं दुःसंपादं ध्रुवंमन्यइत्येकैकव्यक्त्यपेक्षयाएकवचनं विभक्तिप्रतिरूपकमव्ययंवा । निशामयन् निशमयन् दीर्घश्छान्दसः। शृण्वन्नित्यर्थः ॥ २१—२३ ॥ परिद्यूनं क्षीणं "दिवोऽविजिगीषा-

सावधानः ॥ ४ ॥ **विषम०** समाधिषु समाजेषु ॥ १३ ॥ **ती०** अनु अनन्तरं ॥ १५ ॥ **ती०** प्रासादेभ्यइति सुमन्त्रस्य राजवेश्मप्रविष्टत्वेनततोऽवतीर्णानामितिशेषः । मन्दंजल्पितमिति राजसांनिध्यान्मन्दत्वं । **शि०** मन्दंशुश्राव । एतेनेन्द्रियपाटवराहित्यंसूचितं । तेनरामवियोगदुःखस्यातिशयवत्त्वंव्यञ्जितम् ॥ २० ॥ **ति०** यत्र यतः । पुत्रे रामे । आच्छिद्य न्यायप्राप्तमभिषेकमाच्छिद्य त्यक्त्वा निर्यातेसत्यपि कौसल्याजीवति । **शि०** आच्छिद्य राज्यंत्यक्त्वेत्यर्थः । पुत्रेनिर्याते यत्र यस्मिन्नुपायेसति । कौसल्याजीवति तंध्रुवं निश्चितं । सुकरमुपायंनमन्ये । ननुकौसल्यायानित्यत्वान्मरणाभावेनजीवनंसिद्धमेवेत्यतआहुः । एवंचेत् दुर्जीवं यावद्रामागमनंदुःखेनजीवनं । यथा यथावन्मन्ये । चशब्दश्चेदर्थे । **स०** यथातस्याः एवंममापिजीवनं नसुकरंध्रुवंमन्ये ॥ २२ ॥ **ति०** सत्यरूपं परमार्थरूपं तत्स्त्रीणांवाक्यंनिशामयञ्शोकेनप्रदीप्तइवसत्राजगृहंविवेश । अत्रश्लोकद्वयेतीर्थकतकादि.

**[ पा० ]** १ ञ. समाधिषु. २ ख. ङ. छ. झ. ट. पित्रेवपरि. ३ ख. घ—छ. झ. ट. राममेवाभि. ४ ग. घ. परिदेवितं. झ. परिदेवनां. ५ घ. रथात्तूर्णं. ६ ख. ग. ज. सप्तापि. ७ घ. सरामेणविनिर्यातो. ८ ङ. च. छ. झ. ञ. ट. क्रोशन्तीं. ९ क. प्रसह्य. १० क. ख. ग. ङ—ट. राजस्त्रीणां. ११ क. ख. ङ. च. छ. झ. ञ. ट. राजानं.

अभिगम्य तमासीनं नरेन्द्रमभिवाद्य च ॥ सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५ ॥
स तूष्णीमेव तच्छ्रुत्वा राजा विभ्रान्तचेतनः ॥ मूर्च्छितो न्यपतद्भूमौ रामशोकाभिपीडितः ॥२६॥
ततोऽन्तःपुरमाविद्धं मूर्च्छिते पृथिवीपतौ ॥ उद्धृत्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७ ॥
सुमित्रया तु सहिता कौसल्या पतितं पतिम् ॥ उत्थापयामास तदा वचनं चेदमब्रवीत् ॥ २८ ॥
इमं तस्य महाभाग दूतं दुष्करकारिणः ॥ वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २९ ॥
अद्येममनयं कृत्वा व्यपत्रपसि राघव ॥ उत्तिष्ठ सुकृतं तेऽस्तु शोके न स्यात्सहायता ॥ ३० ॥
देव यस्या भयाद्रामं नानुपृच्छसि सारथिम् ॥ नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम् ॥३१॥
सा तथोक्त्वा महाराजं कौसल्या शोकलालसा ॥ धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥३२॥
एवं विलपतीं दृष्ट्वा कौसल्यां पतितां भुवि ॥ पतिं चावेक्ष्य ताः सर्वाः सुस्वरं रुरुदुः स्त्रियः॥३३॥
ततस्तमन्तःपुरनादमुत्थितं समीक्ष्य वृद्धास्तरुणाश्च मानवाः ॥
स्त्रियश्च सर्वा रुरुदुः समन्ततः पुरं तदाऽऽसीत्पुनरेव संकुलम् ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

दशरथेनसुमन्त्रंप्रतिरामाद्यनर्हवनसंचरणाद्यनुशोचनपूर्वकं तत्तद्वचनप्रकारकथनचोदना ॥ १ ॥ सुमन्त्रेणतंप्रतिरामलक्ष्मण-वचनप्रकारस्यसीतावस्थाप्रकारस्यचनिवेदनम् ॥ २ ॥

प्रत्याश्वस्तो यदा राजा मोहात्प्रत्यागतः पुनः ॥ अथाजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १ ॥
अथ सूतो महाराजं कृताञ्जलिरुपस्थितः ॥ राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २ ॥

---

यां'' इतिनिष्ठानत्वं । पाण्डुरइतिविशेषणाद्राजलक्ष्मीर्नास्तीत्युच्यते ॥ २४—२५ ॥ तूष्णींभावेहेतुः—विभ्रान्तचेतनइति ॥ २६ ॥ आविद्धं शोकेनाभिहतं । अभूदितिशेषः । मूर्च्छितेआविद्धमासीत् पतितेबाहू उद्धृत्यचुक्रोशेतिविशेषः ॥ २७—२८ ॥ दूतं संदेशहरं । दुष्करकारिणः दुष्करकार्यकारिणः ॥ २९ ॥ इममनयं पुत्रविवासनं । सुकृतं शोभनं । शोकेविषये सहायतानस्यात् शोकानुवर्तनंमाकुथाइत्यर्थः ॥ ३० ॥ व्यसनानुशयकृततूष्णींभावेहेत्वन्तरंकल्पयति—देवेति । कैकेयी सेतिशेषः । विस्रब्धं सविश्वासं निःशङ्कमितियावत् ॥ ३१ ॥ बाष्पेणविप्लुतं विलुप्तं सगद्गदं यथाभवतितथाभाषिणी ॥ ३२ ॥ एवमिति पतितमितिशेषः ॥ ३३ ॥ समीक्ष्य श्रुत्वा । पुनरेवसंकुलं रामगमनकालइवव्याकुलमासीत् ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

प्रत्यागतः सूतस्याभिमुखागतः ॥ १ ॥ अथेत्यादिश्लोकद्वयमेकंवाक्यं । नवग्रहं सद्योगृहीतं । अस्वस्थं

व्याख्या नात्यन्तंसमञ्जसेत्युपेक्षिता ॥ २३ ॥ स० मूर्च्छिते सर्वोच्छ्रितेरामे अपृथिवीपतौसति क्षितौनृपतौपतितेचसतीतिवा ॥ २७ ॥ ति० किंच एवंशोके त्वयाक्रियमाणे तवसहायता सहायसमूहःपरिजनःसर्वोपि । नस्यात् । त्वच्छोकेनसर्वोपिनश्येदित्यर्थः । शि० हेराघव इमं स्वपुत्रप्रव्राजनं । अनयं नीतिविरुद्धमिवकृत्वा । व्यपत्रपसिकिं । नैतद्युक्तमित्यर्थः । अतउत्तिष्ठ । तेसुकृतं सत्यपरिपालनं अस्तु सदैवतिष्ठत्वित्यर्थः ॥ ३० ॥ इतिसप्तपञ्चाशस्सर्गः ॥ ५७ ॥

ति० प्रत्याश्वस्तः कृतोपचारः । मोहात् मोहंपरित्यज्य । प्रत्यागतस्मृतिः प्रत्यागतसंज्ञः । प्रत्यागतःपुनरितिपाठेप्ययमेवार्थः ।

[ पा० ] १ ङ. छ. झ. ट. विह्वतमानसः. ख. ञ. विभ्रान्तमानसः. २ च. ञ. उत्क्षिप्य. घ. ङ. छ. झ. ट. उच्छ्रित्य. ३ ख. ङ. च. छ. झ. ञ. ट. विलपन्तींतथा. ४ ङ. च. छ. झ. ञ. ठ. समन्ताद्रुरुदुः. क. ग. घ. सस्वरं. ५ घ. तदानींपुनः. ६ क. ख. विह्वलं. ७ ङ. छ. झ. ञ. ट. त्वप्रत्यागतस्मृतिः. ८ ङ. छ. झ. ट. तदाजुहाव. घ. आजुहावाथ. ९ ग. राजासूतं. १० ङ. छ. झ. ट. तदा.

वृद्धं परमसंतप्तं नवग्रहमिव द्विपम् ॥ विनिश्वसन्तं ध्यायन्तमस्वस्थमिव कुञ्जरम् ॥ ३ ॥
राजा तु रजसा धूतं ध्वस्ताङ्गं समुपस्थितम् ॥ अश्रुपूर्णमुखं दीनमुवाच परमार्तवत् ॥ ४ ॥
कनु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः ॥ सोत्यन्तसुखितः सूत किमशिष्यति राघवः ॥ ५ ॥
दुःखस्यानुचितो दुःखं सुमन्त्र शयनोचितः ॥ भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ६ ॥
यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः ॥ स वत्स्यति कथं रामो विजनं वनमाश्रितः ॥ ७ ॥
व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् ॥ कथं कुमारौ वैदेह्या सार्धं वनमुपस्थितौ ॥ ८ ॥
सुकुमार्या तपस्विन्या सुमन्त्र सह सीतया ॥ राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ९ ॥
सिद्धार्थः खलु सूत त्वं येन दृष्टौ ममात्मजौ ॥ वनान्तं प्रविशन्तौ तावश्विनाविव मन्दरम् ॥ १० ॥
किमुवाच वचो रामः किमुवाच च लक्ष्मणः ॥ सुमन्त्र वनमासाद्य किमुवाच च मैथिली ॥ ११ ॥
आसितं शयितं भुक्तं सूत रामस्य कीर्तय ॥ जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२ ॥
इति सूतो नरेन्द्रेण चोदितः सज्जमानया ॥ उवाच वाचा राजानं स बाष्पपरिरब्धया ॥ १३ ॥
अब्रवीन्मां महाराज धर्ममेवानुपालयन् ॥ अञ्जलिं राघवः कृत्वा शिरसाऽभिप्रणम्य च ॥ १४ ॥
सूत मद्वचनात्तस्य तातस्य विदितात्मनः ॥ शिरसा वन्दनीयस्य वन्द्यौ पादौ महात्मनः ॥ १५ ॥
सर्वमन्तःपुरं वाच्यं सूत मद्वचनात्त्वया ॥ आरोग्यमविशेषेण यथार्हं चाभिवादनम् ॥ १६ ॥
माता च मम कौसल्या कुशलं चाभिवादनम् ॥ अप्रमादं च वक्तव्या ब्रूयाश्चैनामिदं वचः ॥ १७ ॥
धर्मनित्या यथाकालमग्न्यगारपरा भव ॥ देवि देवस्य पादौ च देववत्परिपालय ॥ १८ ॥
अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु ॥ अनु राजानमार्यां च कैकेयीमम्ब कारय ॥ १९ ॥

व्याधिग्रस्तं ॥ २—३ ॥ रजसाध्वस्ताङ्गंधूसरिताङ्गं । धूतं कम्पितं । परमार्तवत् परमार्तइवदीनइत्यर्थः ॥ ४ ॥ पूर्वसर्गेयथोक्तमित्युक्तंविवरीतुंप्रश्नमवतारयति—कनुवत्स्यतीत्यादिना ॥ ५ ॥ दुःखमित्येतत्क्रियाविशेषणं । शयनोचितः महार्हशयनोचितः ॥ ६—७ ॥ व्यालैः अजगरादिभिः । मृगैः सिंहव्याघ्रादिदुष्टमृगैः । उपस्थितौ उपाश्रितौ । आसितमित्यादौभावेनिष्ठा ॥ ८—११ ॥ आसितं आसनं शयितं शयनं भुक्तं भोजनंच कीर्तय । एतेन रामसंबन्ध्यासनादिकीर्तनेन अहंसाधुषुययातिरिवजीविष्यामि ययातिः सत्सुपतेयमितीन्द्रं प्रार्थ्यस्वर्गाद्भ्रष्टःसाधुसमागमंप्राप्य यथा निवृत्तदुःखोभूत् तद्वदहमपि निवृत्तदुःखोभविष्यामीत्यर्थः ॥ १२ ॥ बाष्पपरिरब्धया कण्ठगतबाष्परुद्धयेत्यर्थः । अतएव सज्जमानया स्खलन्त्या । षस्जगतावितिधातुः धातोरनेकार्थत्वादत्रस्खलनार्थकः ॥ १३ ॥ ॥ १४ ॥ वन्द्यौ वन्दनीयौ ॥ १५ ॥ अन्तःपुरं आरोग्यमभिवादनंचवाच्यं । ब्रूञोद्विकर्मकत्वादप्रधानकर्मण्यन्तःपुरेप्रथमा । कृताभिहितत्वात् । एवमुत्तरश्लोकेपि ॥ १६ ॥ अप्रमादं धर्मेभर्तरिच । इदं वक्ष्यमाणं ॥ १७—१८ ॥ अभिमानं गर्वं "गर्वोभिमानो-

ती० मोहात् मूर्च्छायाः । प्रत्याश्वस्तः उपचारैरुद्बोधितः । राजायोरामसकाशात्प्रत्यागतः तंसूतं रामवृत्तान्तकारणात् रामवृत्तान्तंप्रष्टुं ॥ १ ॥ स० अस्वस्थं स्वसमूहविकलमिवेतिवा ॥ ३ ॥ ति० परमार्तवत् परमार्तार्हे । स० परमार्तवत् स्वार्थेवतिः । वचइतिशेषः ॥ ४ ॥ स० वत्स्यति वसति । अशिष्यति भुङ्क्ते । वनवासस्यचिरकालत्वाल्लृट्प्रयोगः ॥ ५ ॥ स० पदातयश्चरथाश्चपदातिरथं । सेनाङ्गत्वाद्द्वन्द्वैकवद्भावः । तेनसहिताश्चतेकुञ्जराश्चेतितथा ॥ ७ ॥ ति० मन्दरस्यकार्ष्ण्यमात्राद्घनसादृश्यं । स० मन्दरस्यनानाविधौषधनिधित्वात् भिषजोर्नासत्ययोस्तद्गमनंयथाप्रयोजनपर्यवसायि तथेत्यर्थः ॥१०॥ स० साधुषुमध्येययातिर्यथाशुक्रशापप्राप्तजरयाजीवितवान् तथाऽहमपि वलीपलितकार्कश्यविशिष्टोपिरामवार्ताश्रवणेनजीविष्यामीत्यर्थः ॥१२॥ स० वाचेत्येतद्देहलीदीपन्यायेनोभयत्रसंबध्यते । नरेन्द्रेण शुचासज्जमानया स्खलन्त्या । वाचाचोदितः ससूतः ॥ १३ ॥ ती० अनुराजानं

[ पा० ] १ ङ. च. ज. झ. ट. सूतं. २ ख. ग. नित्यं. ३ घ. सुखार्हं. ग. महार्हं. ४ ङ. छ. झ. ट. मुपाश्रितौ. ५ क. ङ. च. वनंतत्. ६ ज. सुन्दरौ. ७ ङ. च. छ. झ. ञ. ट. परिबद्धया. ८ ङ. च. छ. ञ. देवस्य. ९ क. पुनःपुनः. १० ङ. छ. झ. ट. यथार्हमभि.

कुमारे भरते वृत्तिर्वर्तितव्या च राजवत् ॥ अर्थ[1]ज्येष्ठा हि राजानो राजधर्ममनुस्मर ॥ २० ॥
भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च ॥ सर्वास्वेव यथान्यायं वृत्तिं वर्तस्व मातृषु ॥ २१ ॥
वक्तव्यश्च महाबाहुरिक्ष्वाकुकुलनन्दनः ॥ पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥ २२ ॥
अतिक्रान्तवया राजा मा स्मैनं [2]व्यवरोरुधः ॥ कुमारराज्ये जीवे[3] त्वं तस्यैवाज्ञा[4]प्रवर्तनात् ॥ २३ ॥
[5]अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्तयन् ॥ मातेव मम माता ते द्रष्टव्या [6]पुत्रगर्धिनी ॥ २४ ॥
इत्येवं मां [7]महाराज ब्रुवन्नेव महायशाः ॥ रामो राजीवता[8]म्राक्षो भृश[9]मश्रूण्यवर्तयत् ॥ २५ ॥
लक्ष्मणस्तु सुसंक्रुद्धो निश्वसन्वाक्यमब्रवीत् ॥ केनायमपराधेन राजपुत्रो विवासितः ॥ २६ ॥
राज्ञा तु खलु कैकेय्या [10]लघु त्वाश्रित्य शासनम् ॥ कृतं कार्यमकार्यं वा वयं येनाभिपीडिताः ॥२७॥
यदि प्रव्राजितो रामो लोभकारणकारितम् ॥ वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २८ ॥

हंकारः" इत्यमरः । कुलाभिमानमित्यर्थः । मानः चित्तसमुन्नतिः ज्येष्ठपत्नीत्वनिबन्धनांचित्तसमुन्नतिमित्यर्थः । अनुराजानमार्यांचकारय अनुकारयेत्यर्थः । "व्यवहिताश्च" इतिव्यवहितप्रयोगः । अन्वितितुल्यार्थे । "पश्चात्सादृश्ययोरनु" इत्यमरः । राजानं कैकेयींच तुल्यमनुवर्तस्वेत्यर्थः ॥ १९ ॥ राजवत् राज्ञीव । वृत्तिर्वर्तितव्या उपचारःकर्तव्यइत्यर्थः । अर्थज्येष्ठाः अर्थेनैवज्येष्ठाः नतुवयसेत्यर्थः ॥ २० ॥ भरतःकुशलंवाच्यः त्वयेतिशेषः । वाच्योमद्वचनेनच मयोक्तमित्यपिवाच्यइत्यर्थः । यद्वा भरतोमद्वचनेनकुशलंवाच्यः सर्वास्वेवमातृषुयथान्यायं यथाक्रमं । वृत्तिं वर्तस्व वृत्तिंकुरु शुश्रूषस्वेत्यर्थः । इतिवाच्यश्चेतिद्वितीयवाच्यपदान्वयः ॥ २१ ॥ राज्यस्थं प्रधानराज्यस्थं । माव्यवरोरुधः अवरुद्धंमाकार्षीः । अतिक्रान्तवयस्कत्वादितितत्रहेतुः । कुमारराज्ये यौवराज्ये । जीव भोगान्भुङ्क्ष्वेत्यर्थः । इतिचवक्तव्यइत्यन्वयः ॥ २२—२३ ॥ अश्रूणिवर्तयन् करिष्यमाणमातृविषयपीडास्मरणादितिहृदयं । स्वस्यमातृविषयशुश्रूषायाअलाभाद्वा अश्रुवर्तनं । ममातास्वमातेवत्वयाद्रष्टव्या इतिभरतमुद्दिश्य मांब्रुवन्नेव भृशमश्रूण्यवर्तयत् । शोकजनितरक्तिमानमाह—राजीवताम्राक्षइति । अनन्तरमश्रुमोचनं ततोवक्तव्यस्यानुचितत्वात् अमुमाशयमुत्तरत्रसीतापहरणानन्तरमुद्धाटयिष्यति "सुप्तप्रमत्तकुपितानांवचनैर्भावज्ञानंद्रष्टव्यं" इतिन्यायेन ॥ २४—२५ ॥ तुशब्देन रामवन्नसर्वथाहृदयंजुगोपेत्युक्तं ॥ २६ ॥ येनविवासनेनवयमभिपीडिताः तद्विवासनं अकार्यंतु अकार्यमेव । राज्ञातुकैकेय्याःलघु शासनमाश्रित्य कार्यंवा कार्यमिव कृतंखलु । यद्वा राज्ञाखलु लघु तुच्छं । कैकेय्याः शासनमाश्रित्याकार्यमेवकार्यंकृतं । येनकार्येणवयमभिपीडिताः ॥ २७ ॥ प्रतिज्ञातार्थप्रदानस्यकथमकार्यत्वंतत्राह—यदीति । रामःप्रव्राजितो यदि प्रव्राजितइतियत् । एतत् लोभ-

राज्ञःपश्चात् । कैकेयीं आर्यां श्लाघ्यांकारय । **ति०** अभिमानः प्रधानमहिषीत्वप्रयुक्तोऽहंकारः । मानः तत्प्रयुक्त इतरतिरस्कारकश्चित्तविकारः । मातृष्वित्यस्य मदीयास्वितिशेषः । अनुगतोराजायस्यास्तांकैकेयीं आर्यां श्लाघ्यांकारय । धारयेति पाठेप्ययमेवार्थः ॥ १९ ॥ **ति०** भरतेचराजवद्वृत्तिःकार्या । तत्रहेतुः अज्येष्ठाअपिराजानः हि निश्चयेन । पूज्याइतियावत् । राजधर्ममनुस्मर । अर्थज्येष्ठाहीतिपाठे अर्थेनराज्यरूपार्थेनज्येष्ठाः । हियतः अतःपूज्याइतिशेषः । इतिराजधर्ममनुस्मरेति । कतककृत्तु राजानमनु राज्ञःपश्चात् आर्यांकैकेयीमभिवादयेत्यर्थः । कैकेयीमभिवादयेतिपाठः । कुमारेचेत्यादिप्राग्वत् कैकेय्यावरबलेनाधिकत्वाद्भरतस्यचराजदत्तार्थवत्त्वेनज्येष्ठत्वात्तयोरभिवादनमंबायायुक्तं । तद्वैमुख्यनिवृत्तयेचराजधर्ममनुस्मरेत्याह ॥ २० ॥ **शि०** यौवराज्यस्थः युवराजसदृशस्त्वं राज्यस्थंपितरं अनुपालय निषेवस्व ॥ २२ ॥ **शि०** तस्य राज्ञः । आज्ञाप्रवर्तनादेवयौवराज्येऽधिकृतस्त्वं जीवस्व निर्वाहंकुरु । **ति०** जीवस्व तोषंकुरु ॥ २३ ॥ **कतक०** अब्रवीदित्यादिश्लोकद्वयंप्रक्षिप्तं ॥ २४ ॥ **शि०** भृशमश्रूण्यवर्तयदिव । तच्छ्रवणमात्रेणैवाश्रुपूर्णेममनेत्रेअभवतामित्यर्थः । **ती०** अवर्तत व्यसृजत् ॥ २५ ॥ **ति०** कैकेय्यालघुशासनंआश्रुत्यप्रतिज्ञायकृतं । यद्वा तद्विवासनंकृतं कार्यंकर्तुंयोग्यंवाभवतु अकार्यं अकर्तुंयोग्यंवाभावतु । अस्माकंतुपीडासर्वथैवेत्यर्थः ॥ २७ ॥ **ती०** एतत्प्रव्राजनं लोभकारणकारितंवा अन्यायेनपरद्रव्यापहरणेच्छालोभः सएवकारणंहेतुस्तेनकारितं ।

**[ पा० ]** १ झ. अप्यज्येष्ठाहि. २ ङ. छ. ज. झ. ट. व्यपरोरुधः. क. त्वमुपारुधः. ३ ङ. झ. झ. ट. जीवस्व. ४ च. प्रवर्तितां. ५ क. ख. अवदच्चापि. ६ क. ख. पुत्रशोकिनी. ७ ङ. छ. झ. ञ. ट. महाबाहुः. ८ ङ. छ. झ. ट. पत्राक्षो. ९ च. ञ. मश्रूण्यवर्तत. १० ग. ङ. छ. ज. झ. ट. लघुचाश्रुत्य. क. सत्यमाश्रुत्य.

इदं तावद्यथाकाममीश्वरस्य कृते[1] कृतम् ॥ रामस्य तु परित्यागे न हेतुमुपलक्षये ॥ २९ ॥
असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् ॥ जनयिष्यति संक्रोशं राघवस्य विवासनम् ॥ ३० ॥
अहं तावन्महाराजे पितृत्वं नोपलक्षये ॥ भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥ ३१ ॥
सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते रतम्[2] ॥ सर्वलोकोऽनुरज्येत कथं[3] त्वाऽनेन कर्मणा ॥ ३२ ॥
सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम् ॥ सर्वलोकं[4] विरुद्ध्येमं[5] कथं राजा भविष्यसि[6] ॥ ३३ ॥

कारणकारितं वरदाननिमित्तंवा कैकेय्याःप्रतिश्रुतवरदाननिमित्तंवा । सर्वथादुष्कृतंकृतं वरदानसमयेवरद्वयस्यभरताभिषेकरामनिष्कासनरूपेणविनियोगाभावात् । यदिशब्दस्वारस्यानुरोधेनेत्थंवायोजनीयं । लोभकारणकारितमितिक्रियाविशेषणं । रामः लोभकारणकारितंवावरदाननिमित्तंवापि यदिप्रव्राजितः तथापि सर्वथादुष्कृतं अकार्यंराज्ञाकृतं । नराज्यंदास्यामीतिप्रतिज्ञातुंशक्यत्वात् ज्येष्ठपुत्रविवासनस्यानुचितत्वाच्चेतिभावः । "नत्वेकपुत्रंदद्यान्नत्वेवज्येष्ठपुत्रं" इतिहिस्मर्यते । लोभकारणकारितइतिपाठेरामविशेषणं । लोभरूपकारणेनप्रेरितइत्यर्थः ॥ २८ ॥ रामस्यपरित्यागेहेतुंनोपलक्षये किंतु ईश्वरस्यकृते स्वतन्त्रव्यापारे स्थितेनराज्ञेतिशेषः । इदं रामप्रव्राजनंयथाकामंतावत् यथेच्छमेवकृतं । यद्वा इदं रामविवासनं ईश्वरस्यकृते ईश्वरप्रयोजनाय । यथाकामंकृतं केवलमीश्वरप्रेरणेनशास्त्रमनवेक्ष्य कृतमित्यर्थः । हि यस्माद्रामस्यपरित्यागेहेतुंनोपलक्षये परित्यागहेतुदोषसद्भावे हिपुत्रविवासनंशास्त्रीयंस्यात् । अयंचोपसंहारश्लोकः ॥ २९ ॥ यथेष्टकरणंचेत्कथमनुतप्तवान्राजेत्यत्राह— असमीक्ष्येति । विरुद्धं अतएव असमीक्ष्यानालोच्य बुद्धिलाघवात् समारब्धं कृतं । राघवस्यविवासनं संक्रोशं दुःखं । जनयिष्यति जनयति । अतोराज्ञोनुतापइतिभावः ॥ ३० ॥ पिताकथंनिन्द्यइत्यत्राह—अहमिति । "गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः । उत्पथंप्रतिपन्नस्यपरित्यागोविधीयते" इतिवचनादितिभावः । भ्राताराघवएव ममपिता "ज्येष्ठोभ्रातापितृसमः" इत्युक्तेः । तस्यपितृत्वाभावेपिभर्तृत्वमस्त्येवेत्याशङ्क्याह—भर्ताचेति । स्वामीत्यर्थः । किंबहुना बन्धुः सर्वविधोपिराघवएव । एतेन परमैकान्तिभिःप्राकृतपित्रादयःपरित्याज्याः भगवानेवनिरुपाधिकःपिता भर्ता बन्धुश्चेत्युक्तंभवति ॥३१॥ कथंमुख्यंपितरंविहायगौणमनुवर्तसेतत्राह—सर्वलोकप्रियमिति । अनेनकर्मणा प्रियपुत्रप्रव्राजनरूपक्रूरकर्मणा । सर्वलोकहितेरतं सर्वलोकप्रियं रामंत्यक्त्वा अनेन कर्मणोपलक्षितं सर्वलोकाहितेरतंसर्वलोकाप्रियमित्यर्थः । त्वात्वांप्रति । सर्वलोकःकथमनुरज्येत कश्चिद्भरततुल्योनुरज्यतां नतुसर्वोपीतिभावः । सर्वलोकनिरुपाधिकबन्धुंत्यक्त्वा सोपाधिकबन्धुंत्वांकथमाश्रयेयमितिहृदयम् ॥३२॥ अनेनेत्युक्तंप्रपञ्चयति—सर्वप्रजाभिराममिति । कथंराजाभविष्यसीत्येवंराजानंब्रूहीत्यब्रवीदितिपूर्वेणान्वयः । सुमन्त्रप्रेषणवेलायांलक्ष्मणादिवाक्याश्रवणेप्यत्रसिद्धवदनुवादसामर्थ्यात्तदानीमेवमुक्तमित्यवगन्तव्यम् ॥३३॥

लोभहेतुनाकैकेयीराज्ञाऽकारयद्वा । **ति०** सर्वथादुष्कृतंकृतं अनुचितंकृतं । एतद्व्यतिरिक्तंवरयेतिसुवचत्वात् । वरदानकालेविशिष्यनियोगाभावाच्च । पतित्वेनभार्याशिक्षणेसमग्राधिकाराच्च । **शि०** यत् राज्ञारामःप्रव्राजितः तत् लोभकारणकारितं लोभकारणेन राजातीवसत्यवक्ता पुत्रश्चैतस्यातीवाज्ञाकारीतियशोभिकाङ्क्षारूपहेतुनाकारितं कृतं । वरदाननिमित्तंवाकृतं सर्वथा इ इदानीं दुष्कृतं नकर्तव्यमित्यर्थः । इ इतीदानीमर्थे । "दशैतेराजमातङ्गास्तस्यैवामीतुरङ्गमाः" इत्यादाविवाप्रधानीभूतमपिप्रव्राजनं यत्तच्छब्दाभ्यां परामृश्यते । अतएवनपुंसकत्वं ॥ २८ ॥ **ती०** इदंतावत् अस्मत्पीडनं । ईश्वरस्यकृतौ देवप्रेरणायांसत्यां । यथाकामं यथेच्छं । कृतंभवतु । तथाप्येतावताऽनपराधिनोरामस्यपरित्यागेहेतुभूतमपराधंनोपलक्षये । दैवप्रेरितोपिकेनचिद्दोषेणहेतुनापरित्यजति । सदोषोस्मिन्नास्तीत्यर्थः ॥ २९ ॥ **ति०** वस्तुतस्तु केवलमायिकत्वाल्लक्ष्मणादिशरीराणांतेषामेवमुक्तौनदोषइतिबोध्यं ॥ ३१ ॥ **ति०** सर्वलोकप्रियंरामंत्यक्त्वास्थितेत्वयि प्राक्सर्वलोकहितेरते संप्रतिसर्वलोकहिते अरतेवा । अनेन क्रूरेणकर्मणा सर्वलोकःकथमनुरज्येत । सर्वलोकहितेरतमितिपाठेरामविशेषणं सर्वलोकप्रियत्वेहेतुतयेतिबोध्यम् ॥ ३२ ॥ **शि०** रामंविनापितुरपितत्रस्थितिर्दुर्लभेतिबोधयन्नाह—**सर्वेति** । सर्वलोकविरोधेन विरुद्धभाषणेनेत्यर्थः । राजा दशरथः । कथंभविष्यति स्थास्यति नस्थास्यतीत्यर्थः

[ **पा०** ] १ च. कृतौ. २ झ. रते. ३ ङ. छ. झ. ट. कथंचानेन. च. कथंत्वेतेन. ४ ङ. छ. झ. ट. सर्वलोकविरोधेन. ५ ख. विरुध्यैतं. ६ ङ. छ. ज. झ. ट. भविष्यति.

[1]जानकी तु महाराज निश्वसन्ती मनस्विनी ॥ भूतोपहतचित्तेव विष्ठिता [2]विस्मिता स्थिता ॥ ३४ ॥
अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ॥ तेन दुःखेन रुदती नैव मां किञ्चिदब्रवीत् ॥ ३५ ॥
उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता ॥ मुमोच सहसा बाष्पं मां [3]प्रयान्तमुदीक्ष्य सा ॥ ३६ ॥
तथैव रामोऽश्रुमुखः कृताञ्जलिः [4]स्थितोऽभवल्लक्ष्मणबाहुपालितः ॥
तथैव सीता रुदती तपस्विनी निरीक्षते राजरथं तथैव माम् ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः ॥ ५९ ॥

सुमन्त्रेणदशरथचोदनयातंप्रतिपुनारामस्यवनगमनप्रकारकथनम् ॥ १ ॥ तथाऽयोध्यांप्रतिनिवृत्तिसमयेमध्येमार्गेस्वावगत-स्थावरजङ्गमप्राण्यवस्थाप्रकारकथनम् ॥ २ ॥ तथाताद‍ृशायोध्याद्यवस्थाप्रकारनिरूपणम् ॥ ३ ॥ दशरथेनसुमन्त्रसमीपे रामशोकाद्बहुधाप्रलापनम् ॥ ४ ॥

[ [5]इति ब्रुवन्तं [6]तं सूतं सुमन्त्रं मन्त्रिसत्तमम् ॥ [7]ब्रूह्यशेषं पुनरिति राजा वचनमब्रवीत् ॥ १ ॥
तस्य तद्वचनं श्रुत्वा सुमन्त्रो [8]बाष्पविक्लवः ॥ कथयामास भूयोपि रामसंदेशविस्तरम् ॥ २ ॥
[9]जटाः कृत्वा महाराज चीरवल्कलधारिणौ ॥ गङ्गामुत्तीर्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥ ३ ॥
अग्रतो लक्ष्मणो यातः पालयन्रघुनन्दनम् ॥ अनन्तरं च सीताऽथ राघवो रघुनन्दनः ॥
तांस्तथा गच्छतो दृष्ट्वा निवृत्तोस्म्यवशस्तदा ] ॥ ४ ॥
मम त्वश्वा [10]निवृत्तस्य न प्रावर्तन्त वर्त्मनि ॥ उष्णमश्रु [11]प्रमुञ्चन्तो रामे संप्रस्थिते वनम् ॥ ५ ॥

---

तुशब्देनलक्ष्मणाद्वैषम्यमुच्यते । लक्ष्मणोरामशोकविकारमालक्ष्य हृदयनिहितंवचसोद्घाटितवान् सीतातुन तथेति । मयोच्यमानंसीताशोकानुभावमाकर्ण्यक्षुब्धहृदयेनत्वयानभवितव्यमितिद्योतयितुं महाराजेतिसंबोधनं । हृदयस्थशोकातिरेकेणनिश्वसन्ती मनस्विनी गम्भीरमनस्का । भूतोपहतचित्तेव विष्ठिता स्तिमिता । विस्मिता विस्मितेवोत्फुल्लनयना स्थिता ॥३४॥ अदृष्टपूर्वव्यसना अननुभूतपूर्वव्यसना । तत्रहेतुः—राजपुत्रीति । यशस्विनीति तदानीमप्यनुदितकैकेयीनिन्दात्वेनकीर्तिमती । तेनदुःखेन भर्तृदुःखदर्शनजदुःखेन । रुदती रोदनानुभाववतीसती मांकिंचिदपि नैवाब्रवीत् केनचित्संभाषणस्याप्यसह्यत्वात् ॥३५॥ततोभर्तारमश्रुमुखमुद्वीक्षमाणासती परिशुष्यतामुखेनउपलक्षिता मां प्रयान्तमुद्वीक्ष्य सहसाबाष्पंमुमोच रथेगतेकथंपद्भ्यामेवक्रूरंकान्तारंचरिष्यतिरामइति हृदयंधारयितुमशक्ता अश्रूणिमुमोचेत्यर्थः ॥३६—३७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टपञ्चाशःसर्गः ॥५८॥

---

ममवर्त्मनि मत्संबन्धिनिमार्गे । नप्रावर्तन्त नववि-

---

**ति०** कथंराजाभविष्यति पितेतिशेषः ॥ ३३ ॥ **ति०** विस्मृता विस्मृतसर्वप्रयोजनेवस्थिता ॥ ३४ ॥ **ति०** अब्रवीत् उक्तमितिशेषः ॥ ३७ ॥ इत्यष्टपञ्चाशस्सर्गः ॥ ५८ ॥

**ती०** मम मयानियमिते मार्गेअश्वानप्रावर्तन्त नन्यवर्तन्त । अयंभावः । शतधृतिभवशतमखमुखविबुधदुर्लभाश्रीरामसेवा अस्माभिर्भाग्यवशाल्लब्धा । सानिर्दयेनदैवेनविघटिता इतःपरंकिंकरिष्यामः । अस्माकंव्यर्थंजीवनं किमर्थमित्यत्यन्तदुःखेनाश्रुविमुञ्चन्तः मय्यतिकठिनहृदयेप्रतिनिवृत्तेप्यश्वा न न्यवर्तन्त तथापिमयाकथंचिन्निवर्तिताइति । **स०** वर्त्मनि मार्गे । नप्रावर्तन्त उत्प-

**[ पा० ]** १ ग. ज. जानकीच. २ ङ. झ. ट. विस्मृता. ३ ङ. च. छ. प्रयान्तमुपवीक्ष्य. ४ घ—छ. झ. ञ. ट. स्थितो. ब्रवील्लक्ष्मण. ख. ग. ततोभवत्. ५ कुण्डलान्तर्गताश्चत्वारःश्लोकाः क. ख. च. ज. पुस्तकेष्वेवदृश्यन्ते. ६ क. ख. च. ज. संदेशं. ७ ज. ब्रूहिशेषं. ८ क. च. ज. वाक्यविक्लवः. ख. वाक्यकोविदः. ९ ज. जटां. १० च. ञ. विवृत्तेपि. ११ क. ख. ङ. झ. ञ. ट. विमुञ्चन्तो.

उभाभ्यां राजपुत्राभ्यामथ कृत्वाऽहमञ्जलिम् ॥ प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ॥ ६ ॥
गुहेन सार्धं तत्रैव स्थितोस्मि दिवसान्बहून् ॥ आशया यदि मां रामः पुनः शब्दापयेदिति ॥ ७ ॥
विषये ते महाराज रामव्यसनकर्शिताः ॥ अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ ८ ॥
उपतप्तोदका नद्यः पल्वलानि सरांसि च ॥ परिशुष्कपलाशानि वनान्युपवनानि च ॥ ९ ॥
न च सर्पन्ति सत्त्वानि व्याला न प्रचरन्ति च ॥ रामशोकाभिभूतं तन्निष्कूजमभवद्वनम् ॥ १० ॥
लीनपुष्करपत्राश्च नरेन्द्र कलुषोदकाः ॥ संतप्तपद्माः पद्मिन्यो लीनमीनविहंगमाः ॥ ११ ॥
जलजानि च पुष्पाणि माल्यानि स्थलजानि च ॥ नाद्य भान्त्यल्पगन्धीनि फलानि च यथापुरम् ॥ १२ ॥
अत्रोद्यानानि शून्यानि प्रलीनविहगानि च ॥ न चाभिरामानारामान्पश्यामि मनुजर्षभ ॥ १३ ॥
प्रविशन्तमयोध्यां मां न कश्चिदभिनन्दति ॥ नरा राममपश्यन्तो निश्वसन्ति मुहुर्मुहुः ॥ १४ ॥

योगक्षेशादितिभावः ॥ ५ ॥ राजपुत्राभ्यामितिचतुर्थी । तद्दुःखं तादृशंदुःखं ॥ ६ ॥ गुहेनसार्धं तत्स्नेहितजनसंदर्शनमपिक्लेशापहमितिभावः । तत्रैव नतुवर्त्मनि । दिवसानितिबहुवचनेन कपिञ्जलाधिकरणन्यायेनत्रित्वसिद्धिरित्येके । वस्तुतस्तु वनस्पतिमूलेएकदिनं भरद्वाजाश्रमेद्वितीयं यमुनातीरेतृतीयं चतुर्थेचित्रकूटप्रवेशः पञ्चमेगुहचारैस्तत्सर्वंनिवेदितं षष्ठेसूतनिर्गमः । यद्वा द्वितीयदिनेभरद्वाजाश्रमेरामस्यचित्रकूटगमनव्यवसायात्तृतीयदिनेचारैर्निवेदनं चतुर्थेसूतनिर्गमः अतः त्रीन्दिवसान्गङ्गाकूलेस्थितोस्मीत्यर्थः । बहूनितिविशेषणात् रामवियोगेनएकैकस्यदिवसस्यकल्पवत्प्रतिभानमितिदर्शितं । पुनः शब्दापयेत् पुनराह्वयेत् । वनचरमुखेनेतिहृदयं । शब्दशब्दाण्णौतत्कृतापुगन्तोप्ययमस्ति अतोज्ञापयतीत्यादिवत्सिद्धम् ॥ ७ ॥ अथ रामस्यसर्वान्तर्यामितादात्म्यंसूचयितुं सर्वेषांरामविरहक्लेशंवर्णयति । यद्वा कैकेयीप्रियार्थमविचारेणसहसा कृतंकार्यंसर्वक्षोभनिमित्तमभूदित्याह—विषयइत्यादि । विषये देशे । "देशविषयौतूपवर्तनं" इत्यमरः । अपिशब्देनलतादयःसमुच्चीयन्ते । व्याध्यादिनाएकदेशग्लानिंव्यावर्तयितुं—सपुष्पेत्यादि । सपुष्पाङ्कुरकोरकाः पुष्पाणिअभिनवविकसितानि । अङ्कुराःशाखासु नवपल्लवोद्भेदाः । कोरकाः कलिकाः "कलिकाकोरकः पुमान्" इत्यमरः । तैःसहितावृक्षाअपि परिम्लानाः कठिनकोमलविभागमन्तरेणापिसर्वमेकदैवपरिम्लानमभूदित्यर्थः ॥ ८ ॥ अकालत्वेनोपतप्तत्वव्युदासायोदकपदं । तेनातपकार्योपतापव्यावृत्तिः । पल्वलानिसरांसिच । पल्वलानीतिदृष्टान्तार्थं । एवंवनानीत्यपि । अनेनाल्पाधिकविभागमन्तरेणपरितप्तत्वंद्योत्यते । उपतप्तोदकाइतिपदंलिङ्गविपरिणामेनपल्वलादौयोजनीयं । वनानि संततजलसेकमन्तरेणप्रवृद्धानि कठिनाकाराणि । उपवनानि जलसेकेनप्रवृद्धान्यतिकोमलानि । परिशुष्कपलाशानि एकरूपेणशुष्कपत्राणि । "पत्रंपलाशं" इत्यमरः ॥ ९ ॥ नसर्पन्ति नगच्छन्ति किन्तु स्तब्धतयातिष्ठन्ति । सत्वानि जन्तवः । व्यालाः हिंस्रपशवः सर्वदासंचारस्वभावा गजावा । नप्रचरन्ति आहारार्थमपिनसंचरन्तीत्यर्थः । गमनवच्छब्दोपिनास्तीत्याह—निष्कूजमिति । निष्कूजं निश्शब्दं ॥ १० ॥ लीनपुष्करपत्राः ग्लान्यतिशयेनजलान्तर्विलीनपद्मपत्राः । लीनाः संचाररहिताः । विहंगमाः जलकाकादयः ॥ ११ ॥ माल्यानि पुष्पाणि । "माल्यंपुष्पेपुष्पदाम्नि" इतिवैजयन्ती । यथापुरं यथापूर्वं । अल्पगन्धीनीतिमत्वर्थीयइनिः । स्वभावस्यदुस्त्यजत्वादल्पत्वं । फलानि रसालपनसादीनि ॥ १२ ॥ उद्यानानि आक्रीडाः । "पुमानाक्रीडउद्यानं" इत्यमरः । शून्यानि निर्जनानि । प्रलीनाः नीडेषुमूर्च्छिताः विहगाः शुकपिकशारिकादयः येषुतानितथोक्तानि । आरामान् कृत्रिमवनानि । "आरामस्स्यादुपवनंकृत्रिमंवनमेवयत्" इत्यमरः । नचाभिरामान् किन्तुनिश्श्रीकान्प-

थेनजग्मुरित्यर्थः । वनंप्रतिसंप्रस्थिते ॥ ५ ॥ ति० बहून् रामस्यगङ्गोत्तरणादिदिनत्रयं । यद्यपि भरद्वाजाश्रमाच्चारप्रतिनिवृत्ति-

[ पा० ] १ ख. कृत्वामहाञ्जलिं. २ क. मभिधारयन्. घ. मुपधारयन्. ३ ङ. झ. ट. महाव्यसन. ४ क. भूतानि. ५ ङ. च. झ. ञ. ट. तन्निष्कूजमिवतद्वनं. ६ ङ. झ. ञ. ट. नद्यश्च. ७ ङ. झ. ट. नाति. ८ घ. ङ. ज. पुरा. ९ ख. पुरोद्यानानि. १० क. ङ. च. ञ. मयोध्यायां.

देव राजरथं दृष्ट्वा विना राममिहागतम् ॥ दुःखादश्रुमुखः सर्वो राजमार्गगतो जनः ॥ १५ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्य रथमागतम् ॥ हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १६ ॥
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ॥ अन्योन्यमभिवीक्षन्ते व्यक्तमार्ततराः स्त्रियः ॥ १७ ॥
नामित्राणां न मित्राणामुदासीनजनस्य च ॥ अहमार्ततया किंचिद्विशेषमुपलक्षये ॥ १८ ॥
अप्रहृष्टमनुष्या च दीननागतुरङ्गमा ॥ आर्तस्वरपरिम्लाना विनिश्श्वसितनिस्स्वना ॥ १९ ॥
निरानन्दा महाराज रामप्रव्राजनातुरा ॥ कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मा ॥ २० ॥
सूतस्य वचनं श्रुत्वा वाचा परमदीनया ॥ बाष्पोपहतया राजा तं सूतमिदमब्रवीत् ॥ २१ ॥
कैकेय्या विनियुक्तेन पापाभिजनभावया ॥ मया न मन्त्रकुशलैर्वृद्धैः सह समार्थितम् ॥ २२ ॥
न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा च नैगमैः ॥ मयाऽयमर्थः संमोहात्स्त्रीहेतोः सहसा कृतः ॥ २३ ॥

श्यामीत्यर्थः ॥ १३—१४ ॥ देवराजरथमित्यत्र देवेतिसंबोधनं ॥ १५ ॥ हर्म्यैरित्यादिश्लोकद्वयमेकान्वयं। हाहाकारकृताः कृतहाहाकाराः। आयतैरित्यश्रुवेगातिशयोक्त्यर्थः। निरञ्जनत्वंद्योतयितुंविमलैरित्युक्तं। अभिवीक्षन्तेऽव्यक्तमित्यत्र अव्यक्तमितिपदच्छेदः ॥ १६—१७ ॥ उदासीनेत्यत्रापिनञनुषज्यते। अमित्राणां तवेतिशेषः। रामस्यामित्रप्रसङ्गाभावात्। यद्वा पौरजनस्यामित्राणांपौरजनस्यमित्राणांचउदासीनजनस्य उदासीनजनापेक्षयाआर्ततयाहेतुनाविशेषं नोपलक्षये। कुत्रचित्पुरुषेमित्राणिचनस्वकार्याणि कुर्वन्ति नापिशत्रवोपीतिभावः ॥ १८ ॥ अप्रहृष्टमनुष्येत्यादिश्लोकद्वयमेकान्वयं। विनिश्श्वसितनिस्स्वना दीर्घनिश्श्वासस्वनयुक्ता यद्वा विनिश्श्वसितस्येवनिस्वनोयस्याःसा व्याधिविशेषोपरुद्धानिश्श्वासजनवदविरतहाहाकारयुक्तेत्यर्थः। सन्निहितत्वेनकौसल्यांदृष्टान्तीकरोति। पुत्रहीना पुत्रवियुक्ता। एतावताप्रबन्धेन रामस्यसर्वात्मकता ऋषिणानुसंहितेतिप्रबन्धगतवस्तुध्वनिः ॥ १९—२१ ॥ सुमन्त्रे पृष्टस्योत्तरमभिधाय ततोधिकंराज्यपुरुषक्षोभादिकंकथयतिसति तन्ममाकृत्यकरणद्योतनार्थमितिबुद्ध्याङ्गीकारेणोत्तरमाह—कैकेय्येति। विनियुक्तेन "प्रतिज्ञांप्रतिजानीष्वयदित्वंकर्तुमिच्छसि। अथतद्व्याहरिष्यामियदभिप्रार्थितंमया" इत्युक्तक्रमेणविशेषेणनियोगंप्रापितेनेत्यर्थः। पापाभिजनभावया पापविषयजन्मभूम्यभिप्राययुक्तया। यद्वा पापोयोभिजनभावःकुलक्रमागतोऽभिप्रायः स यस्यास्तया। "कुलेप्यभिजनोजन्मभूमौ" इत्यमरः। शंसमेजीववामावानमामुपहसिष्यसि" इत्युक्तवत्यामात्रातुल्यस्वभावयेत्यर्थः। नसमर्थितं नविचारितं ॥ २२ ॥ निगमः पुरं। "पुरंवणिक्पथोवेदोनिगमः" इत्यमरः। तत्रभवानैगमाःतैः। अत्रापिनेत्यनुषज्यते। अयमर्थः रामप्रवासनरूपार्थः। सुहृद्भिर्मन्त्रयित्वान कृतः अमात्यैश्चमन्त्रयित्वानकृतः नैगमैश्चमन्त्रयित्वान

मत्तृतीयदिवसएवसुमन्त्रप्रस्थानं तथापि तद्दिनेऽल्पावशिष्टदिनपर्यन्तंस्थित्याबहूनित्युक्तं ॥ ७ ॥ **ति०** अव्यक्तमितिच्छेदः। रामप्रवासजनितपीडयार्ताःपरस्परंसम्यङ्क्षन्तइत्यर्थः। **स०** अव्यक्तं अश्रुपूर्णत्वादितिभावः ॥ १७ ॥ **शि०** नकारत्रयेणक्रियाप्यावर्त्यते। तेनोपलक्षणेस्वप्रमादाभावःसूचितः ॥ १८ ॥ **शि०** पापाभिजनभावया पापाःक्रूरकर्मविषयकसंमतिदानजनितपापविशिष्टायेअभिजनाः अभितस्समीपेविद्यमानाजनामन्थरादयः तैस्सह भावोनित्यस्थितिर्यस्यास्तया। कैकेय्याविनियुक्तेन प्रार्थितेन मया यद्यपि मन्त्रकुशलैर्वृद्धैस्सुहृद्भिः सनैगमैः शास्त्रसंपन्नैरमात्यैश्च सहमन्त्रयित्वा नसमर्थितं नकृतं। रामप्रव्राजनमितिशेषः। तथापि अयं रामप्रव्राजनरूपोऽर्थः। संमोहात् अविवेकात् स्त्रीहेतोःसहसा नकृतः नकृतः। नञ्द्वयोपादानंदार्ढ्यबोधनाय। विवेकादेवकृतइत्यर्थः। वाशब्दोयद्यपीत्यर्थे। श्लोकद्वयमेकान्वयि ॥ २२ ॥ **स०** नैगमैः वेदविचारकुशलैस्सहवर्तन्तइतिसनैगमास्तैः। यद्वा सनैगमैः सनगरस्थैः। "नैगमस्स्यादुपनिषद्वणिजोर्नागरेपिच" इतिविश्वः। सुहृद्भिर्न सुहृद्भिरिव। "नञभावेनिषेधेचस्वरूपार्थेप्यतिक्रमे। ईषदर्थेचसादृश्येतद्विरुद्धतदन्ययोरितिविश्वः। एवंच तैरिवामात्यैर्नचमन्त्रयित्वेत्यर्थः। नसुहृद्भिः शत्रुभिरपि अयमर्थस्सहसाअकृतः। मयातुकृतइतिनसमाससमंगीकृत्येत्थंवाव्याख्येयं। **ती०** नैगमैः वेदशास्त्रविद्भिः।

**[पा०]** १ ख. ङ. झ. ट. दूरादश्रुमुखः. २ झ. राजमार्गे. ख. राममार्गे. ३ ख. वीक्ष्यन्त्योव्यक्त. ४ ख—च. ज—ट. द्विशेषं नोपलक्षये. ५ ङ. ज—ट. भातिमे. ६ क. च. ञ. राजा. ७ क. च. ञ. दीनवत्. ८ ङ. झ. ट. सूतमिदंवचनं. क. ञ. ञ. वाचार्तंसूत. ९ ग. घ. कैकेय्याभि. १० क. सूत. ११ च. ञ. सुमन्त्रितं. १२ ङ. ज. झ. ट. सनैगमैः. क—घ. ञ. ननैगमैः.

भवितव्यतया नूनमिदं वा व्यसनं महत् ॥ कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया ॥ २४ ॥
सूत यद्यस्ति ते किंचिन्मया तु सुकृतं कृतम् ॥ त्वं प्रापयाशु मां रामं प्राणाः संत्वरयन्ति माम् ॥२५॥
यद्यद्यापि ममैवाज्ञा निवर्तयतु राघवम् ॥ न शक्ष्यामि विना रामं मुहूर्तमपि जीवितुम् ॥ २६ ॥
अथवाऽपि महाबाहुर्गतो दूरं भविष्यति ॥ मामेव रथमारोप्य शीघ्रं रामाय दर्शय ॥ २७ ॥
वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः ॥ यदि जीवामि साध्वेनं पश्येयं सीतया सह ॥ २८ ॥
लोहिताक्षं महाबाहुमामुक्तमणिकुण्डलम् ॥ रामं यदि न पश्येयं गमिष्यामि यमक्षयम् ॥ २९ ॥
अतो नु किं दुःखतरं योऽहमिक्ष्वाकुनन्दनम् ॥ इमामवस्थामापन्नो नेह पश्यामि राघवम् ॥ ३० ॥
हा राम रामानुज हा हा वैदेहि तपस्विनि ॥ न मां जानीत दुःखेन म्रियमाणमनाथवत् ॥ ३१ ॥
स तेन राजा दुःखेन भृशमर्पितचेतनः ॥ अवगाढः सुदुष्पारं शोकसागरमब्रवीत् ॥ ३२ ॥
रामशोकमहाभोगः सीताविरहपारगः ॥ श्वसितोर्मिमहावर्तो बाष्पफेनजलाविलः ॥ ३३ ॥
बाहुविक्षेपमीनौघो विक्रन्दितमहास्वनः ॥ प्रकीर्णकेशशैवालः कैकेयी बडबामुखः ॥ ३४ ॥
ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः ॥ वरवेलो नृशंसाया रामप्रव्राजनायतः ॥ ३५ ॥
यस्मिन्बत निमग्नोऽहं कौसल्ये राघवं विना ॥ दुस्तरो जीवता देवि मयाऽयं शोकसागरः ॥ ३६ ॥

---

कृतः किन्तु स्त्रीहेतोःसंमोहात्सहसाकृतः ॥ २३ ॥ अथवा इदंव्यसनं यदृच्छया दृष्टहेतुंविना । भवितव्यतयापापेनप्राप्तमितिसंबन्धः ॥ २४ ॥ ते तुभ्यं । सुकृतं उपकारः । संत्वरयन्ति निर्जिगमिषन्तीत्यर्थः ॥ २५ ॥ अद्यापि अस्यांविपद्यपि । ममैवाज्ञायदिप्रवर्तते । तदाराघवंनिवर्तय । तुशब्दोऽवधारणे ॥ २६—२७ ॥ वृत्तदंष्ट्रः कुन्दकुड्मलाकारदंष्ट्रः । यदिपश्येयंजीवामीतिसंबन्धः ॥ २८ ॥ आमुक्तमणिकुण्डलं धृतरत्नकुण्डलं ॥ २९ ॥ नपश्यामीतियत् अतः अदर्शनात् । दुःखतरंकिंनु किमपिदुःखतरंनास्तीत्यर्थः ॥ ३०—३१ ॥ दुःखेन तत्प्रायःपिण्डस्थानीयेन । अर्पितचेतनः व्याप्तचित्तः । अवगाढः प्रविष्टः ॥ ३२ ॥ अनुभूयमानस्वशोकस्यापरिमेयत्वात्तं सागरत्वेनरूपयति—रामशोकमहाभोगइत्यादिना । रामशोकएवमहानाभोगोवैपुल्यंयस्यसतथा । सीताविरहरूपंपारंगच्छतीतितथा ॥ ३३—३४ ॥ अश्रुवेगस्य प्रभवोमूलहेतुः । सागरोहिवर्षस्यनिदानं । महाग्रहः महाग्राहः । अनेनकुब्जावाक्यमेवरामप्रवासनमूलमितिराज्ञाज्ञातमित्यवगम्यते । नृशंसायाः कैकेय्याः वरएव वेला जलवृद्धिर्यस्य । रामप्रव्राजनमेवायतमायामोदैर्घ्यंयस्यसतथा ॥ ३५ ॥ सागरत्वरूपणप्रयोजनमाह—यस्मिन्नित्यादिश्लोकेन ॥ ३६ ॥

ति० नञोऽनेकधाप्रयोगः शोकेनचित्तवैक्लव्यात् । सहसा झटित्यविचारेणैव ॥२३॥ शि० विवेककरणेहेतुंवदन्नाह—भवितव्यतयेति। यत् यस्मात् राक्षसकुलात् अस्य मद्बुद्धिस्थस्य ऋषिसमूहस्य । महद्व्यसनं दुःखं तस्यकुलस्यविनाशाय भवितव्यतया उपलक्षितया । ऋच्छया वनगत्या । इदंदुःखंप्राप्तं ॥ २४ ॥ ति० मदाज्ञयाभवान्गत्वाराघवंनिवर्तयतु । ननुभरतायत्वयाराज्यस्यदत्तत्वात्त्वदाज्ञयामयाकथंगन्तव्यंतत्राह । अद्यापिममैवाज्ञा यावद्भरतागमनमितिभावः ॥ २६ ॥ ती० लक्ष्मणपूर्वजःक्व असावहंमुमूर्षः क्वेत्यनुकर्षः । मुमूर्षोर्ममरामदर्शनंदुर्लभमित्यर्थः । जीवामि जीवेयमित्यर्थः । ति० जीवामीति तत्समीपगमनपर्यन्तमपिजीवनेसंदेह इतिभावः ॥ २८ ॥ शि० आमुक्तानिपरित्यक्तानिमणिकुण्डलानियेनतं । यमक्षयं यमस्यकालस्यक्षयःअभावोयस्मिंस्तंसाकेतलोकं गमिष्यामि ॥ २९ ॥ ति० अतोन्वित्यतरशब्दार्थमाह—इमामिति । एवमत्यन्तसंनिहितमरणकालेउत्तमलोकदस्वस्मरणाभ्यासंसंपादनायभगवताऽऽत्मवियोगःपितुस्संपादितइतितत्त्वम् ॥ ३० ॥ कतक० वरएववेलामर्यादायस्य । यतोरामप्रव्राजना समुद्रात्कालकूटमिवजाता ॥ ३५ ॥ इत्येकोनषष्टितमस्सर्गः ॥ ५९ ॥

[ पा० ] १ क—च. ज—ट. न्मयापि. २ क. यदन्यापि. ३ ग. घ. नहिशक्ष्ये. ४ क. सहसीतया. ५ च. ञ. बाहुं सुमुक्त. ६ क. ख. च. ञ. ट. पश्यामि. ७ ख. सोहं. ८ क.—ङ. ज.— ट. वेगः. ९ ङ. झ. ञ. ट. बाष्पवेग. १० ङ. च. झ. ञ. ट. मीनोसौ. ११ क. च. ञ. बडबानलः. १२ ख. तस्मिन्बत.

अशोभनं योऽहमिहाद्य राघवं दिदृक्षमाणो न लभे सलक्ष्मणम् ॥
इतीव राजा विलपन्महायशाः पपात तूर्णं शयने स मूर्च्छितः ॥ ३७ ॥
इति विलपति पार्थिवे प्रनष्टे करुणतरं द्विगुणं च रामहेतोः ॥
वचनमनुनिशम्य तस्य देवी भयमगमत्पुनरेव राममाता ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

रामशोकात्क्षितौपरिलुठन्तींकौसल्यांप्रतिसुमन्त्रेणसहेतूपन्यासंरामस्यदुःखाभावोपपादनपूर्वकंसमाश्वासनम् ॥ १ ॥ सुमन्त्रेणकौसल्यांप्रतिसीतासुखावस्थानिरूपणेनतस्याअपरिशोच्यत्वकथनेपितस्यारामादिपरिशोचनेनसमाक्रन्दनान्नोपरमः ॥ २ ॥

ततो भूतोपसृष्टेव वेपमाना पुनःपुनः ॥ धरण्यां गतसत्वेव कौसल्या सूतमब्रवीत् ॥ १ ॥
नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः ॥ तान्विना क्षणमप्यत्र जीवितुं नोत्सहे ह्यहम् ॥२॥
निवर्तय रथं शीघ्रं दण्डकान्नय मामपि ॥ अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ॥ ३ ॥
बाष्पवेगोपहतया स वाचा सज्जमानया ॥ इदमाश्वासयन्देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥
त्यज शोकं च मोहं च संभ्रमं दुःखजं तथा ॥ व्यवधूय च संतापं वने वत्स्यति राघवः ॥ ५ ॥
लक्ष्मणश्चापि रामस्य पादौ परिचरन्वने ॥ आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६ ॥
विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव ॥ विस्रम्भं लभतेऽभीता रामे संन्यस्तमानसा ॥ ७ ॥
नास्या दैन्यं कृतं किंचित्सुसूक्ष्ममपि लक्ष्यते ॥ उचितेव प्रवासानां वैदेही प्रतिभाति मा ॥ ८ ॥
नगरोपवनं गत्वा यथा स्म रमते पुरा ॥ तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९ ॥
बालेव रमते सीताऽबालचन्द्रनिभानना ॥ रामा रामे ह्यधीनात्मा विजनेऽपि वने सती ॥ १० ॥

---

नलभइतियत् इदमशोभनमित्यन्वयः । कविनापिवक्तुमशक्यत्वादिवेत्युक्तम् ॥ ३७ ॥ इति उक्तप्रकारेण। रामहेतोः करुणतरंयथातथा द्विगुणंविलपति पार्थिवे प्रणष्टे मूर्च्छितेसति । देवीपुनरेवभयमगमत् पूर्वरामस्यकिंभविष्यतीति इदानींभर्तुरपिकिंभविष्यतीतिभयमगमदित्यर्थः ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

भूतोपसृष्टेव धरण्यांवेपमाना भूतगृहीतेव भूमौपतिला विवर्तमानेत्यर्थः।गतसत्वेव गतप्राणेव। "द्रव्यासुव्यवसायेषुसत्वमस्त्रीतुजन्तुषु" इत्यमरः ॥१—२॥ अथतान्नानुगच्छामि तान्नानुगच्छामिचेत् ॥३॥ सज्जमानया विक्लबया ॥ ४ ॥ मोहं रामस्यकिंभविष्यतीत्यज्ञानं । संभ्रमं व्याकुलत्वं । संतापं शोकजनितदेहसंतापं रामोदुःखितोभविष्यतीतिसंतापमित्यर्थः । यस्माद्राघवःसंतापंव्यवधूयवत्स्यति तस्माच्छोकादिकं त्यजेत्यन्वयः ॥५॥ परलोकमाराधयति परलोकंसाधयति । राधसाधसंसिद्धावितिधातुः ॥६॥ लभते भीतेत्यत्रअभीतेतिपदच्छेदः । विस्रम्भं प्रणयं । "विस्रम्भःप्रणयेपिच" इत्यमरः ॥ ७ ॥ कृतं वनवासकृतं । किंचिदित्यस्यविवरणं सुसूक्ष्ममिति । प्रवासानामुचितेव प्रवासानांयोग्येव अभ्यस्तवनवासप्रयासेवेत्यर्थः ॥ ८—९ ॥ क्रीडैकरसत्वाद्बालादृष्टान्तः

---

शि० संतापं प्रातिभासिकमात्रादिवियोगजनितदुःखं ॥ ५ ॥ शि० परलोकं परःसर्वोत्कृष्टःयोलोकोजनस्तंपरमपुरुषमित्यर्थः । किंच परःसर्वोत्कृष्टःलोक्यतेदृश्यतेअसौसतं । किंच परःसर्वोत्कृष्टःलोकोयस्यतंसाकेताधीशमित्यर्थः ॥ ६ ॥ ति० बालेवेति दुःखापरिज्ञानेनोपमा । तस्यादेहाद्यभिमानाभावान्नाधिजंदुःखमितिभावः । स० रामा योषित् । आरामे आरामइव ॥ १० ॥

[ पा० ] १ ङ. च. झ. ञ. ट. क्षणमप्यद्य. २ ञ. वसति. ३ च. ञ. वनेऽभीता. ४ च. ञ. लभतेसीता. ५ क. ङ. च. छ. झ. ञ. ट. विन्यस्त. ६ क. ख. लक्षये. ७ ङ. च. छ. झ. ट. भातिमे.

**तद्गतं हृदयं ह्यस्यास्तदधीनं च जीवितम् ॥ अयोध्यापि भवेत्तस्या रामहीना तथा वनम् ॥ ११ ॥**
**पथि पृच्छति वैदेही ग्रामांश्च नगराणि च ॥ गतिं दृष्ट्वा नदीनां च पादपान्विविधानपि ॥ १२ ॥**
**रामं वा लक्ष्मणं वाऽपि पृष्ट्वा जानाति जानकी ॥ अयोध्याक्रोशमात्रे तु विहारमिव संश्रिता ॥ १३ ॥**
**इदमेव स्मराम्यस्याः सहसैवोपजल्पितम् ॥ कैकेयीसंश्रितं वाक्यं नेदानीं प्रतिभाति मा ॥ १४ ॥**
**ध्वंसयित्वा तु तद्वाक्यं प्रमादात्पर्युपस्थितम् ॥ ह्लादनं वचनं सूतो देव्या मधुरमब्रवीत् ॥ १५ ॥**

दुःखापरिज्ञानेवाबालादृष्टान्तः । अबालचन्द्रनिभाननेतिच्छेदः । रामे अधीनात्मा आसक्तचित्तेत्यर्थः । यद्वा रामारामे रामरूपारामे ॥ १० ॥ यद्यस्मात्कारणात् अस्याः सीतायाः । हृदयं तद्गतं रामगतं । जीवितंचतदधीनं । तस्माद्वनंरामसहितं अयोध्याभवेत् रामहीनाअयोध्यापि तथा वनंभवेदित्यर्थः ॥११॥ पथीत्यादिनासीतायाउल्लासउच्यते । दृष्ट्वेतिसर्वत्रान्वेति । रामंलक्ष्मणंवापृच्छति पृष्ट्वाजानातिचअयोध्यायाःक्रोशमात्रे विहारं क्रीडांसंश्रितेवस्थिता । यद्वाविहरन्त्यस्मिन्निति विहारःतं । अधिकरणेघञ् । उद्यानमित्यर्थः ॥ १२—१३ ॥ अयोध्यानिर्गमकालिकंकैकेयीविषयकंसीतायाःपरुषंवचनंकौसल्यायाःप्रियमिति वक्तुमुपक्रम्य तस्यवृद्धयोर्जीवननिराशाहेतुत्वंमत्वा नोचितमिदंवक्तुमित्यस्मरणव्याजेनोपारमतेत्याह— इदमेवेत्यादि । अस्याः सीतायाःसंबन्धि । इदमेवस्मरामि प्रस्तुतवृत्तान्तमेवस्मरामि । कैकेयीसंश्रितं कैकेयीमुद्दिश्यप्रवृत्तं । सहसा उपजल्पितं हठात्सीतयोक्तंवाक्यं । इदानीं मा मांप्रति नभातीति । सूतः प्रमादात् इदंगोपनीयमित्यवधानाभावात् । पर्युपस्थितं सीतावचनत्वेनवक्तुमुपक्रान्तं तद्वाक्यं ध्वंसयित्वा प्रच्याव्य । देव्याः ह्लादनं आह्लादनकरं उपक्रान्तवाक्यवद्देव्यास्संतापाहेतुभूतं मधुरंवचनमब्रवीदितिपदयोजना । सहसा त्वरया । उपजल्पितं अक्रमेणोक्तमित्यस्मरणहेतूपदर्शनं । कैकेयीसंश्रितमित्युपक्रान्तांशः इदं स्मरामीतिपुनःस्मरेतिचोदनावकाशाप्रदानं । इदानींभवद्दुःखदर्शनसमयेमामांप्रतिनभातीतिध्वंसनप्रकारः । ध्वंसनहेतुंकविरनुवदति—ध्वंसयित्वातुतद्वाक्यंप्रमादात्पर्युपस्थितमिति । ह्लादनमित्यनेनोपस्थितवचनस्य तापहेतुत्वंद्योत्यते । ननुकैकेयीनिन्दारूपत्वेऽपिदेव्यास्तापकारणमवश्यंगोपनीयं कीदृशंतद्वाक्यंस्यात्किंचिदिदमित्युक्तौ तत्रकिंप्रमाणंस्यात् । उच्यते । अवधेहि । एवंविधंहिकार्यवशाद्गुप्तंकुत्रचित्कविर्निर्विवृणोतिचेत् । सर्वज्ञोपितत्कथमिदमित्यभिदध्यात् । अत्रेमंचप्रमादादुपस्थितंध्वंसितंवृद्धयोःसंतापकरं कैकेयीविषयकंवृत्तान्तंकविरुत्तरत्रव्यक्तीकरिष्यति । युद्धकाण्डेसीतामधिकृत्य "विजगर्हेत्रकैकेयींक्रोशन्तीकुररीयथा" इत्युक्त्वा कैकेयीविषयकंसीतावचनमेवाह "सकामाभवकैकेयिहतोयंकुलनन्दनः" इति । इदंसीताहृदयं । कैकेय्याराज्यलाभेनैवाभीष्टसिद्धेः । रामविवासनाभ्यर्थनस्येदमाकूतं । रामविवासनेहि तद्वियोगं क्षणमपिसोढुमक्षमासीताप्येनमनुगच्छेत् साचलोकोत्तरसुन्दरी केनाप्यपह्रियेत तस्यांचहृतायां रामःस्वत एवनश्येत् ततोमेराज्यंसुप्रतिष्ठितंस्यात् अन्यथालब्धेनापिराज्येननकिञ्चित्प्रयोजनं यतोरामगुणपरवशः सर्वोपिजनस्तद्विधेयःस्यात् । तस्माद्रामोपिविनाशाय विवासनीयइति । इदमेवसीतोक्तं रामोप्यारण्यकाण्डे "सुप्तप्रमत्तकुपितानांवचनैर्भावज्ञानंदृष्टं" इतिन्यायेनवक्ष्यति "कच्चित्सकामाकैकेयीसुखितासा भविष्यति । यानतुष्यतिराज्येनपुत्रार्थेदीर्घदर्शिनी"॥ अन्यत्रच "यदभिप्रेतमस्मासुप्रियंवरवृतंचयत् । कैकेय्यास्तत्सुसंवृत्तंक्षिप्रमद्यैवलक्ष्मण" इति ॥ इममेवार्थंपूर्वसर्गान्तेसूचितवान् "जानकीतुमहाराज निश्वसन्तीतपस्विनी । भूतोपहतचित्तेवविष्ठिताविस्मितास्थिता ॥ अदृष्टपूर्वव्यसनाराजपुत्रीयशस्विनी । तेनदुःखेनरुदतीनैवमांकिञ्चिदब्रवीत् ॥ उद्वीक्षमाणा भर्तारंमुखेनपरिशुष्यता । मुमोचसहसाबाष्पंमांप्रयान्तमुदीक्ष्यसा" इति ॥ अत्ररोदनमवचनं परिशुष्यतामुखेनभर्तृवीक्षणं पुनःसुमन्त्रवीक्षणं बाष्पमोचनं चकुर्वन्त्यापूर्वोक्तार्थस्मरणं ततएवस्तब्धता भर्तृमुखवीक्षणेनवक्तुमनर्हत्वज्ञानं बाष्पमोचनेनसूतवीक्षणेनच श्वश्रूंप्रत्यकथनीयत्वद्योतनं चेतिव्यज्यते । तत्रसीतयोक्तंप्रामादिकमितिजुगोप अत्रतुस्वस्यैवप्रमादोत्थंव्याजे-

[पा०] १ ङ. च. छ. झ. ञ. ट. अयोध्याहि. २ ङ. च. छ. ञ. ट. भवेदस्या. ३ ङ. च. झ. ञ. ट. परिपृच्छति. ४ ङ—झ. दृष्ट्वा. ५ क. ख. मैथिली. ६ क. मात्रेहि. ७ ङ. च. छ. झ. ञ. ट. जल्पं. ८ क. ख. घ.—ट. भातिमां.

**अध्वना वातवेगेन संभ्रमेणातपेन च ॥ न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा ॥ १६ ॥**
**सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् ॥ वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७ ॥**
**अलक्तरसरक्ताभावलक्तरसवर्जितौ ॥ अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८ ॥**
**नूपुरोद्घुष्टहेलेव खेलं गच्छति भामिनी ॥ इदानीमपि वैदेही तद्रागान्न्यस्तभूषणा ॥ १९ ॥**
**गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता ॥ नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥२०॥**
**न शोच्यास्ते न चात्मानः शोच्यो नापि जनाधिपः ॥ इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥२१**
**विधूय शोकं परिहृष्टमानसा महर्षियाते पथि सुव्यवस्थिताः ॥**
**वने रता वन्यफलाशनाः पितुः शुभां प्रतिज्ञां परिपालयन्ति ते ॥ २२ ॥**
**तथापि सूतेन सुयुक्तवादिना निवार्यमाणा सुतशोककर्शिता ॥**
**न चैव देवी विरराम कूजितात्प्रियेति पुत्रेति च राघवेति च ॥ २३ ॥**
**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षष्टितमः सर्गः ॥ ६० ॥**

---

नपरिहृतवान् ॥ १४—१५ ॥ अध्वना अध्वगमनेन । संभ्रमेण व्याघ्रादिदर्शनजन्यव्याकुलत्वेन । नविगच्छति नविकरोति ॥ १६ ॥ शतपत्रस्य पद्मस्य । पूर्णचन्द्रोपमप्रभं पूर्णचन्द्रसदृशप्रभं । वदान्यायाः वल्गुवाचः । "वदान्योवल्गुवागपि" इत्यमरः । नविकम्पते नविचलति स्वाभाविकप्रभांनजहातीत्यर्थः ॥ १७ ॥ अद्यापि वनगमनेपि ॥ १८ ॥ तद्रागात् भूषणविषयस्नेहात् । न्यस्तभूषणा चरणाद्यवयवेष्वर्पितभूषणा । वैदेही नूपुरोद्घुष्टहेलेव नूपुरोत्पन्नस्वनानुकारिलीलायुक्तेव । खेलं सलीलंगच्छति । सीतायाः सर्वदासाभरणत्वं "मन्येसाभरणासुप्तासीतास्मिञ्शयनोत्तमे" इत्युत्तरत्रभरतवचनादवगम्यते । यद्वा तद्रागात् रामेणसहगमनकौतुकात् । न्यस्तभूषणा उत्सृष्टनूपुरापि नूपुरोत्कृष्टहेलेव नूपुरसंचितविलासेव ॥ १९ ॥ गजं दर्शनमात्रेणभीषणमहाकायं । वीक्ष्य नतुश्रुत्वा । सिंहं तमपितृणायमत्वा व्याघ्रंवा जन्तुमात्रहिंसकतयासिंहादप्यतिक्रूरं । सिंहदर्शनादपिव्याघ्रदर्शनमतिक्रूरमितिनपतत्प्रकर्षः । वनमाश्रिता विनापिसिंहादीन्स्वतएवभयंकरंप्रदेशमवगाहमानापि । नाहारयति नारोपयति । आहारयतेरारोपार्थकत्वाद्भयभावनामात्रमपिनकरोतीत्यर्थः । नाहारयतीसंत्रासं स्त्रीत्वप्रयुक्तस्वाभाविकभीतिरपिनिर्गता । तत्रहेतुमाह—बाहूरामस्यसंश्रिता । परिघान्तर्गताः किंबिभ्यतीतिभावः ॥ २० ॥ ते रामादयः । आत्मानः वयं । इदंचरितं पितृवचनपरिपालनरूपंचरित्रं । शाश्वतं आचन्द्रार्कं ॥ २१ ॥ महर्षियाते महर्षिभिःप्राप्ते ॥ २२ ॥ तथापीत्युक्तंविवृणोति—सूतेनेत्यादिना सुयुक्तवादिनासूतेन तथानिवार्यमाणापि सुतशोककर्शितत्वात् देवीप्रियेत्यादिकूजितान्नविरराम ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

**ति०** स्वभावरक्ततयापद्मकोशसमप्रभौ नतुमार्गगतिप्रयुक्तकाठिन्यभाजौ ॥ १८ ॥ **ती०** नूपुरोद्घुष्टहेला हेला विलासः । खेलं कान्तं । तद्रागात् गमनाभिनिवेशात् । गमनाभिनिवेशस्यविरोधीनिभूषणान्यधारयन्त्यपिभूषणसमृद्धविलासेव खेलंगच्छतीत्यर्थः । **स०** या खे आकाशे । अलंगच्छति हंसी सेवेयंभामिनी नूपुरोत्कृष्टलीला । तद्रागेण रामस्नेहेनअन्यस्तभूषणाअत्यक्तरामप्रियालङ्कारवती ॥ १९ ॥ **ति०** ते तवात्माप्यतएवनशोच्यः । नराजापि । तेषांसुखश्रवणेनतस्यापिजीवनसंभवात् । इतोपिनशोच्यांशइत्याह—**इदंहीत्यादि** । प्राप्तमपिराज्यंमहाबलोपिपरित्यज्यपितृवचनमपालयदित्येवमादिरामचरितं । स्वार्थमुद्दिश्यभर्तारमपिपरित्यज्यातिघोरंकृतवतीकैकेयीत्यादिइदंरामचरितंशाश्वतंप्रतिष्ठास्यतीत्यनेन तन्नामवदेवास्यसुस्थिरत्वंवदतातस्येश्वरत्वं ध्वनितं । नह्यन्यचरित्रंशाश्वतंप्रतिष्ठांलभते ॥ २१ ॥ इतिषष्टितमस्सर्गः ॥ ६० ॥

**[ पा० ]** १ क. ख. घ. नहिगच्छति. २ घ. चन्द्रनिभप्रभं. ख. चन्द्रोपमद्युति. ३ ख. प्रकंपते. ४ ग. घ. ज. वलक्तकविवर्जितौ. ५ ग. ङ.—ट. नूपुरोत्कृष्ट. ६ ङ. छ. झ. ट. ठ. लीलेव. ७ ठ. तद्रागान्यस्त. ८ ख. घ. वापिवरानना. क. वावनमागता. ९ क.—ट. चात्मार्ते. १० घ. निर्धूय. ११ ग. वनेचराः. १२ ङ. च. झ. ञ. ट. प्रतिपालयन्ति.

# एकषष्टितमः सर्गः ॥ ६१ ॥

पतिव्रतावरिष्ठयापिकौसल्ययापुत्रशोकासहिष्णुतयारामादीनांदुरवस्थासंभावनेनतान्प्रतिपरिशोचनपूर्वकंदशरथोपालंभः १

वनं गते धर्मपरे रामे रमयतांवरे ॥ कौसल्या रुदती स्वार्ता भर्तारमिदमब्रवीत् ॥ १ ॥
यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः ॥ सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २ ॥
कथं नरवरश्रेष्ठ पुत्रौ तौ सह सीतया ॥ दुःखितौ सुखसंवृद्धौ वने दुःखं सहिष्यतः ॥ ३ ॥
सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता ॥ कथमुष्णं च शीतं च मैथिली प्रसहिष्यते ॥ ४ ॥
भुक्त्वाऽशनं विशालाक्षी सूपदंशान्वितं शुभम् ॥ वन्यं नैवारमाहारं कथं सीतोपभोक्ष्यते ॥ ५ ॥
गीतवादित्रनिर्घोषं श्रुत्वा शुभमनिन्दिता ॥ कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनम् ॥ ६ ॥
महेन्द्रध्वजसंकाशः क्व नु शेते महाभुजः ॥ भुजं परिघसंकाशमुपधाय महाबलः ॥ ७ ॥
पद्मवर्णं सुकेशान्तं पद्मनिःश्वासमुत्तमम् ॥ कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८ ॥
वज्रसारमयं नूनं हृदयं मे न संशयः ॥ अपश्यन्त्या न तं यद्वै फलतीदं सहस्रधा ॥ ९ ॥
यैस्त्वयाऽकरुणं कर्म व्यपोह्य मम बान्धवाः ॥ निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥१०॥
यदि पञ्चदशे वर्षे राघवः पुनरेष्यति ॥ जह्याद्राज्यं च कोशं च भरतेनोपभुज्यते ॥ ११ ॥

स्वार्ता सुतरामार्ता ॥ १ ॥ राघवः दशरथः । सानुक्रोशः वदान्यश्च प्रियवादीचेति तेमहद्यशःत्रिषु लोकेषुप्रथितं यद्यपि तथापि अतिशयिताऽपयशस्करं कृत्यंकृतमितिवाक्यशेषः । तथापि दुःखितौ मार्गेदुःखितौ । तौ वनेकथंदुःखंसहिष्यतइतिवक्ष्यमाणेनान्वयोवा । यद्वा वार्धकेनानाव्रतोपवासादिमहाप्रयासलब्धंज्येष्ठमपिपुत्रमभिषेककालेत्यक्त्वापि प्रतिज्ञांनिरूढवानिति तेमहद्यशस्त्रिषुलोकेषुयद्यपिप्रथितंभवति । राघवश्चवदान्यतयादययाप्रियवचनशीलतयामह्यंवाचापूर्वदत्तंराज्यंनत्यजामीतिवक्तुमक्षमतयाचराज्यंदत्तवान् अतस्तस्यापिमहद्यशइतियुवयोरिदंयुक्तमस्तु । तथापि तौकथंदुःखंसहिष्यतइतियोजना ॥ २—३ ॥ तरुणी आरब्धयौवना । श्यामा यौवनमध्यस्था । एतत्पदद्वयोपादानेनेषन्न्यूनयौवनमध्यंप्राप्तेत्यवगम्यते । [ श्यामातरुणी यौवनमध्यस्थातरुणी नतुयौवनारम्भस्थातरुणीत्यर्थः ] ॥ ४ ॥ सूपदंशान्वितं शोभनव्यञ्जनसहितं । नैवारं नीवारसंबन्धिनम् ॥ ५ ॥ क्रव्यादाः मांसभक्षकाः ॥ ६ ॥ महेन्द्रध्वजसंकाश इति महेन्द्रध्वजोनाम इन्द्रधनुः । कदाचित् ध्वजाकारेणपरमाभ्युदयनिमित्ततयाप्रतिभातीत्याहुः ॥ ७ ॥ पद्मवर्णं पद्मपत्रवर्णं । पद्मनिश्वासं पद्मगन्धिनिश्वासं ॥ ८ ॥ नफलति नस्फुटति । ञिफलाविशरणइति धातुः ॥ ९ ॥ त्वयानिरस्ताः ममबान्धवाः रामादयः व्यपोह्य नगरंत्यक्त्वा वनेपरिधावन्तीतियत् एतत् अकरुणंकर्म करुणाराहित्येनकृतंकर्मेत्यर्थः ॥१०॥ चतुर्दशवर्षानन्तरंरामोराज्यंप्राप्स्यतीत्याशङ्क्यपरिहरति—यदीति । पञ्चदशेवर्षेराघवोयदिपुनरेष्यति तथापि राज्यंकोशं जह्यात् त्यजेत् । कुतः यस्मात्कारणात् भरतेनोपभुज्यते भरतेनोपभुक्ततयातेनपुनर्दत्तमपिराज्यंरामस्त्यजेदित्यर्थः । भरतोनोपलक्ष्यतइतिपाठान्तरं । राज्यंकोशंचभरतोजह्यात् इदं तुनोपलक्ष्यते यद्रामः पुनर्भरतदत्तंराज्यं प्रतिगृह्णीयादिति । यद्वा यदिराघवः

ति० परमपतिव्रतापिकौसल्यादुःखातिशयात्पूर्वंजानंत्यपितेताश्रयव्यवहारवल्लोकाश्रयेणराजानमुपालभते—**वनमिति** । आर्ता खिन्ना । स्वार्तेतिपाठेसुतरामार्ता । रुदतीवेतिपाठे इवएवार्थे । यद्वा उक्तार्थध्वननायैवशब्दः ॥ १ ॥ ति० अथापिहेनरवरश्रेष्ठ सीतयासह तौपुत्रौ कथंत्यक्तवानितिशेषः । अथताञ्शोचति—**दुःखितावित्यादि** ॥ ३ ॥ शि० पद्मवर्णं पद्मवद्वर्ण्यतेकविभिः

[ पा० ] १ ङ. च. छ. झ. ञ. ट. धर्मरते. २ ङ. झ. चार्ता. ३ च. ञ. नरवरश्रेष्ठौ. ४ घ. सहसंवृद्धौ. ५ घ. ङ. झ. ट. कथं. ६ ख. वैदेही. ७ ङ. छ. झ. ञ. ट. विसहिष्यते. क. घ. च. विसहिष्यति. ८ क. ख. च. भोक्ष्यति. ९ ङ. च. झ. ञ. ट. शुभसमन्विता. १० क. ख. च. ञ. सहानुजः. ११ क. ख. च. ञ. सारमिदं. १२ ङ. देव. १३ च. ञ. फलतीह. घ. दलतीदं. १४ ख. यस्त्वयादारुणं. १५ ग.—छ. झ. ञ. ट. भरतोनोपलक्ष्यते. क. भरतेनोपभोक्ष्यते.

भोजयन्ति किल श्राद्धे केचित्स्वानेव बान्धवान् ॥ ततः पश्चात्समीक्षन्ते कृतकार्या द्विजर्षभान् ॥१२॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः ॥ न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३ ॥
ब्राह्मणेष्वपि तृप्तेषु पश्चाद्भोक्तुं द्विजर्षभाः ॥ नाभ्युपैतुमलं प्राज्ञाः शृङ्गच्छेदमिवर्षभाः ॥ १४ ॥
एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशां पते ॥ भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमंस्यते ॥ १५ ॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति ॥ एवमेव नरव्याघ्रः परलीढं न मन्यते ॥ १६ ॥
हविराज्यं पुरोडाशः कुशा यूपाश्च खादिराः ॥ नैतानि यातयामानि कुर्वन्ति पुनरध्वरे ॥ १७ ॥
तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव ॥ नाभिमन्तुमलं रामो नष्टसोममिवाध्वरम् ॥ १८ ॥
[न चेमां धर्षणां रामः संगच्छेदत्यमर्षणः ॥ दारयेन्मन्दरमपि स हि क्रुद्धः शितैः शरैः ॥
त्वां तु नोत्सहते हन्तुं महात्मा पितृगौरवात् ॥ १९ ॥

पुनरेष्यति तदा भरतःराज्यंकोशंचजह्यादितिनोपलक्ष्यते । करस्थराज्यत्यागस्यासंभावितत्वादित्यर्थः । भरतोयदिभोक्ष्यतइतिचपाठः ॥ ११ ॥ भरतेनोपभुक्ततयापुनर्दत्तमपिराज्यंरामोनभोक्ष्यतइत्यत्रदृष्टान्तमाह—भोजयन्तीत्यादिना । किलेतिवार्तायां । लोके केचिद्ब्राह्मणाः विद्यागुणवयोभ्यधिकेषु विप्रेषुविद्यमानेषुदक्षिणाविशेषप्रापणलोभेनस्वानेवबान्धवान् श्राद्धेभोजयन्ति । ततःपश्चात् तदनन्तरं कृतकार्याः कृतश्राद्धकार्याःसन्तः श्राद्धावसाने द्विजर्षभान् पूर्वभुक्तविप्रापेक्षयाविद्यावृत्तवयोभिःश्रेष्ठान् । समीक्षन्ते इष्टपङ्क्तौभोजयितुमिच्छन्ति । तत्र तदानीं । येगुणवन्तः वृत्तवन्तः । विद्वांसः विद्यावन्तः सुरोपमाः देववत्पूज्यतमाःवृद्धाः द्विजातयः ते पश्चादिष्टपङ्क्तौसुधामपि अमृततुल्यान्नमपि । नाभिमन्यन्ते नाद्रियन्ते । ननुकुतोनाद्रियन्तेब्राह्मणशेषभोजनेशूद्रशेषवन्निषेधाभावादित्यत्राह—ब्राह्मणेष्वित्यादिना । तृप्तेष्वपि ब्राह्मणेषु पूर्वभुक्तानांब्राह्मणत्वेपीत्यर्थः । प्राज्ञाःद्विजर्षभाः ऋषभाःशृङ्गच्छेदमिव निजावमानहेतुंपश्चाद्भोक्तुमिच्छां अभ्युपैतुं नालं नक्षमन्तइत्यर्थः।यद्वा शृङ्गमग्रं शृङ्गच्छेदोयस्य तच्छृङ्गच्छेदं छिन्नाग्रंतृणं । यथा वृषभा वृषभान्तरजग्धाग्रंतृणं भोक्तुं नालं तद्वदित्यर्थः । शृङ्गच्छेदमिति वृषभभक्षिताग्रतृणनामेत्यप्याहुः ॥ १२—१४ ॥ उक्तमर्थंदार्ष्टान्तिकेयोजयति—एवमित्यादिना । एवं पूर्वोक्तद्विजर्षभवत् । कनीयसा कनिष्ठेन । विशांपते हेप्रजानाथ । वरिष्ठः गुणैः श्रेष्ठः । किमर्थंनावमंस्यते कस्मैप्रयोजनायनतिरस्करिष्यति सर्वात्मनातिरस्करिष्यत्येवेत्यर्थः ॥ १५ ॥ परेण अन्येन वृकगोमाय्वादिना । आहृतं भक्षितशेषत्वेनानीतं । परलीढं परेणास्वादितं परभुक्तशेषमितियावत् । नमन्यते नबहुमन्यते ॥ १६ ॥ हविः चरुप्रमुखं । पुरोडाशाः पिष्टादिविकाराः । खादिराइत्येतत् पालाशादीनामुपलक्षणं । यातयामानि परिभुक्तानि यागेविनियुक्तानीतियावत् । "जीर्णं चपरिभुक्तंचयातयाममिदंद्वयं" इत्यमरः । अध्वरे यागान्तरे । पुनर्नकुर्वन्ति नविनियुञ्जते । "मन्त्राः कृष्णाजिनंदर्भाः" इत्याद्ययातयामत्वबोधकवचनेषु दर्भादिशब्दाःकुशादिव्यतिरिक्तपराः ॥ १७ ॥ आत्तं उपभुक्तपूर्वं । हृतसारां गृहीतसारांशां । अभिमन्तुं

र्गीयतेतत् ॥ ८ ॥ **ती०** स्वधामपीतिपाठे स्वधां श्राद्धं । **शि०** ननुशूद्रशेषभोजनस्यनिषिद्धत्वेपिब्राह्मणशेषभोजनस्यनिषेधाभावात्कुतोनस्वीकुर्वन्तीत्यतआह—**ब्राह्मणेष्विति** । ब्राह्मणेष्वपिवृत्तेषु पूर्वभुक्तेषुसत्सु । द्विजोत्तमाः भुक्तशेषं अन्नं । अभ्युपैतुं स्वीकर्तुं । नालं नसमर्थाः । एतेननिष्कारणकपश्चाद्भोजनेअत्याज्यमानभङ्गस्स्यादितिहेतुस्सूचितः । मानस्यात्याज्यत्वेदृष्टान्तः । ऋषभाः वृषभाः । आत्मनःशृङ्गच्छेदमिव । शृङ्गच्छेदेहि तेषांमानभङ्गइतिप्रसिद्धं । यद्वा भुक्तशेषं भुक्तशेषभोजनं । शृङ्गच्छेदमिवमानध्वंसकत्वेनप्रभुत्वविघातकमेवेतिहेतोः ऋषभाः जात्यादिनाश्रेष्ठाः । प्राज्ञा द्विजोत्तमाः । अभ्युपेतुं अङ्गीकर्तुं । नालं नसमर्थाः । "शृङ्गंप्रभुत्वेशिखरेचिह्नेक्रीडांबुयन्त्रके" इतिमेदिनी ॥ १४ ॥ **ति०** यद्यपि "मन्त्राःकृष्णाजिनंदर्भाः" इतिस्मृत्याकुशानांयातयामत्वदोषोनेत्युक्तं । तथापितज्जीर्णत्वरूपयातयामत्वदोषाभावपरं नतुविनियुक्तविनियोगपरं । "ब्रह्मयज्ञेषुयेदर्भाविनियुक्तानतेऽन्यतः"

[ **पा०** ] १ घ. समीहन्ते. २ ङ. झ. ट. द्विजोत्तमान्. ३ ङ. झ. ञ. ट. वृत्तेषुभुक्तशेषंद्विजोत्तमाः. ख. भुक्तेषु. ४ घ. ज.—ट. नावमन्यते. ५ ग. घ. एवमेतन्नर. ६ ज. ट. परालीढं. ७ क.—घ. मंस्यते. ८ घ. हविराज्यपुरोडाशाः. ९ कुण्डलान्तर्गतंश्लोकद्वयंबहुषुकोशेषुनदृश्यते.

ससोमार्कग्रहगणं नभस्ताराविचित्रितम् ॥ पातयेद्यो दिवं क्रुद्धः स त्वां न व्यतिवर्तते ॥
प्रक्षोभयेद्धारयेद्वा महीं शैलशताचिताम् ॥ २० ॥ ]
नैवंविधमसत्कारं राघवो मर्षयिष्यति ॥ बलवानिव शार्दूलो वालधेरवमर्शनम् ॥ २१ ॥
नैतस्य सहिता लोका भयं कुर्युर्महामृधे ॥ अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ २२ ॥
नन्वसौ काञ्चनैर्बाणैर्महावीर्यो महाभुजः ॥ युगान्त इव भूतानि सागरानपि निर्दहेत् ॥ २३ ॥
स तादृशः सिंहबलो वृषभाक्षो नरर्षभः ॥ स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥ २४ ॥
द्विजातिचरितो धर्मः शास्त्रदृष्टः सनातनः ॥ यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २५ ॥
गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः ॥ तृतीया ज्ञातयो राजंश्चतुर्थी नेह विद्यते ॥ २६ ॥
तत्र त्वं चैव मे नास्ति रामश्च वनमाश्रितः ॥ न वनं गन्तुमिच्छामि सर्वथा निहता त्वया ॥२७॥
हतं त्वया राज्यमिदं सराष्ट्रं हतस्तथाऽऽत्मा सह मन्त्रिभिश्च ॥
हता सपुत्राऽस्मि हताश्च पौराः सुतश्च भार्या च तव प्रहृष्टौ ॥ २८ ॥

अभिलषितुं । नष्टसोममिवाध्वरमिति अन्येनसोमपाने कृतेसत्ररूपमध्वरं तदक्षमतायांयथान्योनाभिलषति तद्वदित्यर्थः ॥ १८—२० ॥ वालधेः पुच्छस्य । अवमर्शनं अवमत्यस्पर्शनं ॥ २१ ॥ ननुवयंकिंकुर्मः पौरुषधर्मबलाभ्यांहीनःस्वयमेवगतइत्यत्राह—नैतस्येति । सहिताः मिलिताः । लोकाः चतुर्दशभुवनस्थाः सुरासुरादयः । महामृधे महायुद्धे । एतस्य रामस्य । भयं नकुर्युः भयं कर्तुंनशक्नुयुरित्यर्थः । किन्तुअधर्मं अधर्ममार्गस्थं । लोकं जनं । धर्मेणयोजयेत् "चातुर्वर्ण्यं च लोकेस्मिन्स्वेस्वेधर्मेनियोक्ष्यति" इत्युक्तोरामःस्वयमधर्मंकथंकुर्यादित्यर्थः ॥२२॥ युगान्तः युगान्तकालः । भूतानि पञ्चमहाभूतानि ॥ २३ ॥ तादृशः अवाङ्मनसगोचरपराक्रमयुक्तः । जलजेन मत्स्येन । मत्स्यो ह्यात्मजानेवभक्षयतीतिप्रसिद्धं ॥ २४ ॥ इयताप्रबन्धेनोक्तमुपसंहरति—द्विजातिचरितइति । धर्मनिरते पुत्रे त्वयाविवासिते सति द्विजातिचरितः शिष्टत्रैवर्णिकाचरितः । शास्त्रदृष्टःसनातनोधर्मः ते यदि अस्तिकिमित्यर्थेव्ययमिदं ॥ २५ ॥ एवंराजकृतानीत्यास्वहानिमाह—गतिरित्यादि । एका मुख्या प्रथमेत्यर्थः । द्वितीया भर्त्रभावेगतिरित्यर्थः । ज्ञातयः पित्रादयः । तृतीया भर्तृपुत्राभावेगतिरित्यर्थः । चतुर्थी स्वातन्त्र्यरूपा । तथाचस्मृतिः " पितारक्षतिकौमारेभर्तारक्षतियौवने । वार्धके तनयोरक्षेन्नस्त्रीस्वातन्त्र्यमर्हति " इति ॥ २६ ॥ तत्र तासुगतिषु । त्वंभर्तानभवसि सपत्नीपरतन्त्रत्वात् । मेज्ञातिरपिनास्ति दूरस्थत्वादितिभावः । नवनंगन्तुमिच्छामि सभर्तृकत्वात् । निहता असमीतिशेषः ॥२७॥ नकेवलमहमेकाहताअन्येपीत्याह—हतमिति । राज्यं कोसलराज्यं । राष्ट्राणि अन्यानित्वन्मित्रपालितानि । सुतः भरतः तत्रैवतवसुताभिमानात् । भार्या कैकेयी

इत्यनेन विनियुक्तविनियोगनिषेधस्यन्यायेनसर्वत्रलाभादित्याहुः ॥ १७ ॥ ति० यद्वा तुरप्यर्थे । अधर्मं अधर्मप्रवृत्तमपि । लोकं दण्डादिनायोधर्मेणयोजयेत् सकथंस्वयमधर्मंकुर्यादित्यर्थः ॥ २२ ॥ शि० सः रामः । पित्रा त्वया स्वयमेवहतः । ऐश्वर्यशोभायास्त्याजितः । तत्रदृष्टान्तः । जलजेन कमलेन । आत्मजः आत्मनःस्वस्यजोजनिर्यस्मात्सःजलपदार्थोयथा । यथा स्वशोभासंपादकजलशोभांस्वातिप्रसक्त्याजलजंनिवारयति तथा स्वस्वातन्त्र्येणस्वशोभाजनकीभूतपुत्रशोभांभवान्निवारितवानित्यर्थः । "जोनामृत्युञ्जयेजन्यां" इतिमेदिनी ॥ २४ ॥ ती० यद्वा नकारोत्राध्याहर्तव्यः । तेधर्मनिरतइत्यत्र अधर्मनिरतइतिच्छेदः । शास्त्रदृष्टोद्विजातिचरितः राजर्षिभिराचरितःसनातनोधर्मः तेपुत्रेयदिनस्यात् तर्ह्यधर्मनिरतेतस्मिन् त्वयाविवासितेतद्युक्तंभवेत् । नचैवमितिभावः ॥ २५ ॥ रामानु० । तत्र गतित्वेनपरिगणितेषु । त्वंमेनास्ति । अस्तीतिविभक्तिप्रतिरूपकमव्ययं । मेनासीतिपाठस्सम्यक् ॥ २७ ॥ इत्येकषष्टितमस्सर्गः ॥ ६१ ॥

[ पा० ] १ क. ख. घ.—ट. रभिमर्शनं. २ ङ. झ. ञ. ट. शास्त्रेदृष्टः. ३ छ. पुरातनैः. ङ. झ. ञ. ट. सनातनैः. ४ घ. ङ. च. झ. ञ. ट. नैव. ५ ङ. झ. त्वंममनैवासि. ञ. त्वंचैवमेनासि. ६ छ. झ. ट. वनमाहितः. ७ झ. ट. सर्वथाहाहता. ङ. सर्वतोहाहता. ग. सर्वथापिहता. ख. घ. च. ञ. सर्वथाहिहता. क. ज. सर्वथाभिहता. ८ ग. ङ. च. झ. ञ. ट. राष्ट्रमिदं सराज्यं. ९ ङ. झ. ट. हताःस्मसर्वाःसह.

इमां गिरं दारुणशब्दसंश्रितां निशम्य राजाऽपि मुमोह दुःखितः ॥
ततः स शोकं प्रविवेश पार्थिवः स्वदुष्कृतं चापि पुनस्तदा स्मरन् ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ॥ ६२ ॥

कौसल्यापरुषभाषणश्रवणेन मृतिसमयेसुतविप्रयोगप्रयोजकमुनिकुमारहननरूपस्वदुष्कृतानुस्मरणेनच परिशोचतादशरथेनसाञ्जलिबन्धंकौसल्यांप्रतिप्रसादनम् ॥ १ ॥ पतिप्रसादनेनविषीदन्त्याकौसल्ययासप्रणामंप्रसादितेनराज्ञारात्रौनिद्रावशाधिगमः ॥ २ ॥

एवं तु क्रुद्धया राजा राममात्रा सशोकया ॥ श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १ ॥
चिन्तयित्वा स च नृपो मुमोह व्याकुलेन्द्रियः ॥ अथ दीर्घेण कालेन संज्ञामाप परंतपः ॥ २ ॥
स संज्ञामुपलभ्यैव दीर्घमुष्णं च निश्वसन् ॥ कौसल्यां पार्श्वतो दृष्ट्वा पुनश्चिन्तामुपागमत् ॥ ३ ॥
तस्य चिन्तयमानस्य प्रत्यभात्कर्म दुष्कृतम् ॥ यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ॥ ४ ॥
अमनास्तेन शोकेन रामशोकेन च प्रभुः ॥ द्वाभ्यामपि महाराजः शोकाभ्यामन्वतप्यत ॥ ५ ॥
दह्यमानः स शोकाभ्यां कौसल्यामाह भूपतिः ॥ वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥६॥
प्रसादये त्वां कौसल्ये रचितोऽयं मयाऽञ्जलिः॥ वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥७॥
भर्ता तु खलु नारीणां गुणवान्निर्गुणोपि वा ॥ धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ॥ ८ ॥
सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा ॥ नार्हसे विप्रियं वक्तुं दुःखिताऽपि सुदुःखितम् ॥ ९ ॥
तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम्॥ कौसल्या व्यसृजद्बाष्पं प्रणालीव नवोदकम् ॥१०॥

तद्वचनकरणात् ॥ २८ ॥ —इमामिति । प्रविवेश तत्रमग्नइत्यर्थः । दुष्कृतंस्मरन् एतादृशदुःखस्यनिदानभूतं किंकर्मपूर्वंकृतमितिस्मरन्नित्यर्थः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

चिन्तयामास अनयासत्यमेवकथितं मयाचान्यैरकृतपूर्वंमहदकृत्यंकृतं किमतःपरंकरोमीतिचिन्तयामासेत्यर्थः ॥१—२॥ पुनश्चिन्तामुपागमत् "अत्युत्कटैः पुण्यपापैरिहैवफलमश्नुते" इतिन्यायेनप्रियपुत्रविश्लेषजंमहद्दुःखमनुभवामि एतद्धेतुभूतंकिंकर्मकृतमिति पुनश्चिन्तांप्राप्तवानित्यर्थः ॥ ३ ॥ दुष्कृतंकर्म मुनिकुमारवधरूपंकर्म । प्रत्यभात् प्रतीतमभूत् । शब्दवेधिना शब्देनलक्ष्येणवेद्धुंशीलमस्यास्तीतिशब्दवेधी राजाबाणोवा ॥ ४ ॥ अमनाः अस्वस्थचित्तः क्षुभितान्तःकरणइत्यर्थः । तेन मुनिकुमारवधजनितेन॥५॥ अवाङ्मुखःअवनतमुखः । स्वकृतकौसल्याविषयाप्रियजन्ययालज्जयाभीत्याचेतिभावः ॥ ६ ॥ परेष्वपि प्रतिकूलेष्वपि ॥ ७—८ ॥ दृष्टलोकपरावरा दृष्टौलोकेजनेपरावरौ उत्कर्षापकर्षौययासातथोक्ता । सुदुःखितं मांप्रतीतिशेषः ॥ ९ ॥ प्रणाली प्रासादादिषु दार्वादिनिर्मितजलनिर्गममार्गः । "द्वयोःप्रणालीपयसःपदव्यां" इत्यमरः । नवोदकं वर्षजलं ॥ १० ॥

ति० शब्दमेवलक्ष्यदेशस्थंप्राप्यविध्यतीतिशब्दवेधी ॥ ४ ॥ ति० अपकृष्टाअपिभर्तारमेवंनवदन्तीतिभावः ॥ ९ ॥

[ पा० ] १ ङ. झ. ञ. ट. संहितां. २ ङ. झ. ट. रामेति. ३ च. ट. पुनस्तथास्मरन्. ग. ङ. ज. झ. ञ. पुनस्तथाऽस्मरत्. ४ क. ङ. च. झ. ञ. ट. मोहव्याकुलितेन्द्रियः. ५ क. घ. अतिदीर्घेण. ६ च. संज्ञांप्राप. ७ ङ. च. झ. ञ. ट. पुनश्चिन्तां. ८ घ. मुपाविशत्. ९ ङ. च. झ. ञ. ट. मभितप्यते. १० क. ख. ग. ङ. च. ज.—ट. दह्यमानस्तु. ११ ङ. छ. झ. ट. दुःखितः. क. ख. ग. च. ञ. भूमिपः. १२ क. भर्ताहि. १३ क. प्रासृजत्.

सा मूर्ध्नि बध्वा रुदती राज्ञः पद्ममिवाञ्जलिम् ॥ संभ्रमादब्रवीत्त्रस्ता त्वरमाणाक्षरं वचः ॥ ११ ॥
प्रसीद शिरसा याचे भूमौ निपतिताऽस्मि ते ॥ याचितास्मि हता देव हन्तव्याऽहं न हि त्वया ॥ १२ ॥
नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता ॥ उभयोर्लोकयोर्वीर पत्या या संप्रसाद्यते ॥ १३ ॥
जानामि धर्मं धर्मज्ञ त्वां जाने सत्यवादिनम् ॥ पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ॥१४॥
शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ॥ शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥१५॥
शक्य आपतितः सोढुं प्रहारो रिपुहस्ततः ॥ सोढुमापतितः शोकः सुसूक्ष्मोपि न शक्यते ॥ १६ ॥
[धर्मज्ञाः श्रुतिमन्तोऽपि च्छिन्नधर्मार्थसंशयाः ॥ यतयो वीर मुह्यन्ति शोकसंमूढचेतसः] ॥ १७ ॥
वनवासाय रामस्य पञ्चरात्रोऽद्य गण्यते ॥ यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १८ ॥

राज्ञः अञ्जलिं पद्ममिवमूर्ध्निबध्वा पाणिभ्यांगृहीत्वा मूर्ध्निबध्वेत्यर्थः । त्रस्ता धर्माद्भीता ॥ ११ ॥ भूमौनिपतितास्मि प्रणतास्मीत्यर्थः । कुतः यतः तेयाचिता त्वयायाचिताऽहं हतास्मि। अतः त्वयाहंहन्तव्या नहि संहर्तव्यानहि । एतदपराधशान्तयेममप्रहारएवत्वया कर्तव्योनसंहारोदास्याइवेत्यर्थः ॥ १२ ॥ श्लाघनीयेन स्वयंप्रसाद्येन। पत्या लोके या संप्रसाद्यते सास्त्री उभयोर्लोकयोर्नभवति । ऐहिकामुष्मिकसुखभागिनीनभवतीत्यर्थः ॥ १३ ॥ किमपि अविचारितं अनुचितंच । तत् क्षन्तव्यमितिशेषः ॥ १४—१५ ॥ आपतितः हठात्प्राप्तः ॥ १६—१७ ॥ शोकस्यनूतनत्वादशक्यत्वमाह—वनवासायेति । वनवासाय वनेवासंकर्तुं । प्रस्थितस्यरामस्य पञ्चरात्रोद्यगण्यते वनेपञ्चरात्रो वासोगण्यते । अत्रकेचित् प्रथमायांरात्रौतमसातीरे द्वितीयरात्रौजाह्नवीतीरे तृतीयरात्रौगङ्गादक्षिणकूलस्थे वनस्पतौ चतुर्थरात्रौप्रयागे पञ्चमरात्रौयमुनातीरे । ततः सुमन्त्रः षष्ठदिवसेरामश्चित्रकूटंगमिष्यतीतिवृत्तान्तंज्ञात्वा तदहस्सायाह्नसमयेअयोध्यांप्राप्तवान् । ततोत्रपञ्चरात्रगणनमुपपद्यतइत्यूचिरे । अन्येत्वाहुः । गङ्गातरणपर्यन्तंवनवासत्वाभावात् ततःपरंवनस्पतिभरद्वाजाश्रमयमुनातीरचित्रकूटेषुचतस्रोरात्रयः । चतुर्थ्यांसुमन्त्रस्यनिर्गमः पञ्चम्यामिदंवचनमिति । एवंसत्यद्यपदस्वारस्यमिति । ननुसप्तपञ्चाशेसर्गे "भरद्वाजाभिगमनं प्रयागेचसहासनम् । आगिरेर्गमनंतेषांतत्रस्थैरभिलक्षितम् ॥ अनुज्ञातःसुमन्त्रोथयोजयित्वाहयोत्तमान्" । इत्याद्यनन्तरं "ततःसायाह्नसमयेतृतीयेहनिसारथिः । अयोध्यांसमनुप्राप्यनिरानन्दांददर्शह" इत्युक्त्वा अयोध्यानिर्गमदिवसमारभ्यषष्ठेहनिकिलरामस्यचित्रकूटप्रवेशः अथचारेभ्यः सप्तमेअष्टमेवा सूतस्य तद्वृत्तान्तश्रवणं ततस्तृतीयेहनिसूतस्यायोध्याप्रवेशः तत्कथंपञ्चरात्रयइतिपरिगण्यते । उच्यते । तृतीयेहनीत्यत्रअह्नस्तृतीयभागइत्यर्थः । आगिरेर्गमनमित्यत्रगमनोद्योगमित्यर्थः । तथाच "गुहेनसार्धंतत्रैवस्थितोस्मिदिवसान्बहून् । आशयायदिमांरामःपुनःशब्दापयेदिति" इत्यत्र बहूनित्युक्त्वादिनत्रयंशृङ्गिबेरपुरेसूतस्यवासः चतुर्थेदिने ऋजुमार्गेणदिवारात्रमागतचारमुखात् रामस्यचित्रकूटप्रवेशोद्योगंनिशम्य तद्दिवससायंकालेवेगेनायोध्याप्रवेशः । तस्मिन्दिनेकौसल्याह—पञ्चरात्रोद्यगण्यत

ति० त्रस्ता अहमपिकैकेयीवत्पतिशोककारिवचनादिकंप्राप्तवतीतिभीता ॥११॥ ति० हेदेव त्वयायाचिता अनुनीताऽहंहतास्मि । ईश्वरेप्सितवैपरीत्यस्यान्याय्यत्वात् । अतस्त्वयाक्षंतव्या न किंतुदासीवत्प्रहर्तव्येत्यर्थः ॥ १२ ॥ शि० धर्मं "पतिःपरुषवन्नवक्तव्यः" इत्यादिरीतिं जानामि । तुस्तथाप्यर्थे ॥ १४ ॥ ति० पञ्चरात्रइत्यस्य गतइतिशेषः । तत्रप्रथमातमसातीरे द्वितीयागुहपुरे तृतीयागङ्गातीरे चतुर्थीप्रयागे पञ्चमीयमुनातीरे षष्ठीचित्रकूटे तद्दिनेसुमन्त्रस्यायोध्याप्राप्तिः । अतएवाग्रेषष्ठीतिदशरथोक्तिः । अथवा आद्यदिनेसंपूर्णदिनंस्वनिकटेस्थितत्वेनस्वदेशेतमसातीरएवस्थितत्वेनतद्दिनमगणय्यकौसल्ययाऽद्यपञ्चरात्रोगण्यतइत्युक्तं । राजातु तमपिगृहीत्वाषष्ठीतिवक्ष्यति । यत्तु कतकेननिर्गमनात्सप्तरात्रःसुमन्त्रागमनदिनइत्युक्तं तदज्ञानात् । गङ्गोत्तरणदिनात्तृतीयेऽहनिचारप्रतिनिवृत्त्युत्तरंसायाह्नेतद्दिनएवसुमन्त्रप्रस्थानस्यवक्तुंशक्यत्वात् । "रामस्यनिर्गमदिनाद्दिनेषष्ठे" इतिपूर्वलिखितपाठ-

[ पा० ] १ ख. प्रसादं. २ घ.—ञ. क्षन्तव्या. ३ ख. ङ. झ. ञ. ट. र्लोकयोर्लोके. ४ घ. धर्मज्ञं. ५ ख.—च. ज.—ट. शक्यमापतितः. ६ ख. च. झ. ट. पञ्चरात्रोत्र. ७ कं. मतः.

तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते ॥ नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १९ ॥
एवं हि कथयन्त्यास्तु कौसल्यायाः शुभं वचः ॥ मन्दरश्मिरभूत्सूर्यो रजनी चाभ्यवर्तत ॥ २० ॥
तथा प्रसादितो वाक्यैर्देव्या कौसल्यया नृपः ॥ शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

अर्धरात्रेप्रतिबुद्धेनदशरथेन स्वस्यपुत्रशोकान्मरणप्रयोजकस्वदुष्कृतानुस्मरणेन कौसल्यांप्रतितन्निवेदनोपक्रमः ॥ १ ॥ युवराजत्वावस्थायांमृगयार्थमटवींपर्यटतादशरथेनापररात्रेजलपूरणायकुंभमंभसिनिमज्जयतिकस्मिंश्चिदृषिकुमारे जलपूरणशब्दे गजगर्जितभ्रान्त्यास्वस्यशब्दवेधित्वाभिमानेनशरविमोचनम् ॥ २ ॥ बाणाभिघातार्तेनऋषिकुमारेण वृद्धतरस्वमातृपित्रनुशोचनेनपरिदेवनम् ॥ ३ ॥ ततस्सविषादमानुषभाषणनिर्विण्णेनराज्ञातत्समीपोपसर्पणम् ॥ ४ ॥ ऋषिकुमारेण दशरथेस्ववृत्तान्तंनिवेद्यपितरौप्रतिस्वावस्थानिवेदनचोदनपूर्वकं स्वचोदनयातेनस्वशरीराच्छरोद्धरणेप्राणविमोक्षणम् ॥ ५ ॥

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ॥ अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥
रामलक्ष्मणयोश्चैवं विवासाद्वासवोपमम् ॥ आविवेशोपसर्गस्तं तमः सूर्यमिवासुरम् ॥ २ ॥
सभार्ये निर्गते रामे कौसल्यां कोसलेश्वरः ॥ विवक्षुरसितापाङ्गीं स्मृत्वा दुष्कृतमात्मनः ॥ ३ ॥
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् ॥ अर्धरात्रे दशरथः संस्मरन्दुष्कृतं कृतम् ॥ ४ ॥
स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मनः ॥ कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५ ॥
यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् ॥ तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ६ ॥
गुरुलाघवमर्थानामारम्भे कर्मणां फलम् ॥ दोषं वा यो न जानाति स बाल इति होच्यते ॥ ७ ॥

---

इति। अतोनकिंचिदनुपपन्नं ॥१८॥ नदीवेगेन समुद्रवृद्धिरितिलोकवादः ॥ १९ ॥ कथयन्त्याः कथयन्त्यामित्यर्थः। शुभंवचः। अतिदुःखितावस्थायामपिपत्यनुनयपरत्वाद्वचसःशुभत्वं ॥२०—२१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विषष्टितमःसर्गः ॥ ६२ ॥

---

रामलक्ष्मणयोर्विवासात् उपसर्गः महोपद्रवःपुत्रशोकरूपः । आसुरं असुरसंबन्धि । तमः राहुः ॥२॥ विवक्षुः अभूदितिशेषः । असितापाङ्गामित्यनेन निवृत्तक्रोधत्वमुक्तं ॥ ३ ॥ रजनीमिति सप्तम्यर्थेद्वितीया। षष्ठींरजनींप्राप्येतिशेषोवा । संस्मरन् स्थितइतिशेषः ॥ ४—५ ॥ स्मृतमात्मदुष्कृतंवक्तुंतदनुकूलांलोकस्थितिंदर्शयति—यदिति । कल्याणीतिसान्त्वोक्तिः । लोकेपुरुषःशुभंवाअशुभंवायदाचरति परस्यकर्मजं परशुभाशुभप्रापकपुण्यापुण्यात्मककर्मजं । तदेव शुभं वाअशुभंवाफलं आत्मनोपिलभते । तथाचऋषेःपुत्रवियोगकरणेनममापिपुत्रवियोगःप्राप्तइतिभावः ॥ ६ ॥ अन्यामपिलोकस्थितिमाह—गुरुलाघवमिति । कर्मणामारम्भे आरम्भसमये । अर्थानां फलानां । गुरु-

---

विरोधाच्च ॥ १८ ॥ **ति०** नदीनांवेगेनसमुद्रसलिलमिवेत्युत्प्रेक्षामात्रं नतुतस्यतेनवृद्धिरित्याहुः । परेतु महत्समुद्रसलिलं वेगेन चन्द्रोदयवृद्धिवेगेन । नदीनांहृदि तटद्वयान्तरे यथावर्धतइत्यर्थः । समुद्रगामिनदीनांचन्द्रोदयकालिकसमुद्रवृद्ध्यावृद्धेःकियद्दूरमप्युपलंभादित्याहुः । **स०** समुद्रसलिलं समुद्रद्वारिविद्यमानं । यथोक्तंगीताभाष्ये । "अस्तिचेषत्समुद्रेपिद्वारि" इत्यादि ॥ १९ ॥ इतिद्विषष्टितमस्सर्गः ॥ ६२ ॥

**ति०** आसुरंतमः असुरस्यराहोस्संबन्धितमःआवरणशक्तिःयथासूर्यमावृणोतितद्वत् ॥ २ ॥ **ति०** तदेवलभतेतल्लभतएवेतिच ॥ ६ ॥ **ति०** अर्थानांऐहिकानांकर्मणांपारलौकिकानांआरंभे फलंप्रति यो गुरुलाघवंगौरवंलाघवंच । दोषंवा दोषंगुणंवानजानाति केनचिदल्पेनहत्यादिनामहदनिष्टंकेनचिन्महतापियागादिनाल्पफलं । तथेदंकर्मअल्पदोषंबहुगुणं इदंचबहुदोषमल्पगुणं

**[पा०]** १ घ. तदा. क. ख. ङ. च. झ. ञ. ट. अथप्रह्लादितो. २ ज. मभ्यवर्तत. ३ ख. श्चैवं. ४ ङ. झ. ट. आपेदेउपसर्गस्तं. ५ क. ख. च. झ. ञ. सभार्येहिगते. ६ ङ. च. ज—ट. रसितापाङ्गीं. ७ ख. ङ. च. झ. ञ ट. सोस्मरद्दुष्कृतं. ८ क. सुखं.

कश्चिदाम्रवणं छित्वा पलाशांश्च निषिञ्चति ॥ पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ८ ॥
अविज्ञाय फलं यो हि कर्मत्वेवानुधावति ॥ स शोचेत्फलवेलायां यथा किंशुकसेचकः ॥ ९ ॥
सोहमाम्रवणं छित्त्वा पलाशांश्च न्यषेचयम् ॥ रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥१०॥
लब्धशब्देन कौसल्ये कुमारेण धनुष्मता ॥ कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ ११ ॥
तदिदं मेऽनुसंप्राप्तं देवि दुःखं स्वयं कृतम् ॥ [१]संमोहादिह [२]बालेन यथा स्याद्भक्षितं विषम् ॥ १२ ॥
[३]यथाऽन्यः पुरुषः कश्चित्पलाशैर्मोहितो भवेत् ॥ एवं [४]ममाप्यविज्ञातं शब्दवेध्यमयं [५]फलम् ॥ १३ ॥
देव्यनूढा [६]त्वमभवो युवराजो भवाम्यहम् ॥ ततः प्रावृडनुप्राप्ता [७]मदकामविवर्धनी ॥ १४ ॥
[८]उपास्य हि रसान्भौमांस्तप्त्वा च जगदंशुभिः ॥ परेताचरितां भीमां रविरा[९]विशते दिशम् ॥ १५ ॥

लाघवं गुरुत्वंलघुत्वंच । फलंदोषंवा फलंफलहानिं वा । यद्वा सुखरूपतांदुःखरूपतांवा योनजानाति सः बालः अज्ञइत्युच्यते । अल्पफलकंबहुकर्म निष्फलंचकर्मारभमाणोबुद्धिहीनः बहुफलकमल्पंकर्मसफलं कर्मचारभमाणःसुबुद्धिरित्यर्थः । तथाचात्मविनोदरूपाल्पफलं पुत्रवियोगरूपमहाफलहानिकरंमृगयाकर्म-कुर्वन्नहमज्ञएवास्मीतिभावः ॥ ७ ॥ फलतारतम्यविचारमन्तरेणकर्मणिप्रवृत्तस्योक्तंबालिशत्वंदृष्टान्तमुखेनविवृणोति—कश्चिदिति । लोकेकश्चित्पुरुषः पुष्पंदृष्ट्वाफलेगृध्नुः साभिलाषःसन् अधिकवर्णमहापुष्पवत्वात्तदनुगुणमहाफलंभविष्यतीतिसाभिलाषइत्यर्थः । आम्रवणं चूतवनं अल्पनिर्वर्णपुष्पकं । छित्वा पलाशोपरोधपरिहारार्थंछित्वा । पलाशांश्च किंशुकानेव । निषिञ्चति जलसेचनादिनापोषयति । सः फलागमे फलप्राप्तिकालेसति । अनुपभोग्यफलदर्शनात् शोचति ॥ ८ ॥ दृष्टान्तोक्तंदार्ष्टान्तिकेदर्शयति—अविज्ञायेति । भाविफलमविज्ञाय कर्मत्वेवानुधावति कर्मैवानुसरति तदनुकूलहिंसांतुनपश्यतीत्यर्थः ॥ ९ ॥ एवंसदृष्टान्तमुक्तस्यप्रकृतोपयोगंदर्शयति—सोहमिति । आम्रवणच्छेदनपूर्वकपलाशसेचकतुल्योहमित्यर्थः । आम्रवणंछित्त्वेत्यनेन अभिषेकविघातपूर्वकरामविवासनंलक्ष्यते । पलाशांश्चन्यषेचयमित्यनेन कैकेयीप्रियकरणंलक्ष्यते ॥ १० ॥ एतद्दुःखानुभवस्यनिदानंवक्तुमुपक्रमते—लब्धशब्देनेति । कुमारःशब्दवेधीतिलब्धशब्देन प्राप्तख्यातिनामया इदं वक्ष्यमाणं पापं मुनिकुमारवधरूपंकर्मकृतमितिसंबन्धः । यद्वा लब्धशब्देन लब्धगजतुल्यमुनिपुत्रशब्देनमया शब्दवेधीकुमारइत्यभिमानेन इदं वक्ष्यमाणं । मुनिकुमारवधरूपंपापंकृतं ॥ ११ ॥ शुभंवाअशुभंवापुरुषकृतं कर्मलोकान्तरेजन्मान्तरेवाफलायभवेत् मत्कृतकर्मणस्तत्युत्कटत्वादिहैवतत्फलंप्राप्तमित्याह—तदिदमिति । इह लोके । बालेनसंमोहाद्भक्षितंविषं यथादुःखरूपं स्यात्तथैवस्वयंकृतं तदिदंदुष्कृतं मेदुःखरूपं अनुसंप्राप्तं जातमित्यर्थः ॥ १२ ॥ उक्तमर्थंसंग्रहेणदर्शयन्नुपसंहरति—यथान्यइत्यादिना । अन्यः प्राकृतःकश्चित् । पलाशैः पलाशपुष्पैः "फलेलुक्" यथामोहितोभवेत् यादृशंपुष्पंतादृशंफलंभविष्यतीतिमोहंप्राप्तोभवेत् । एवंममापि मयापि । शब्दोवेध्योलक्ष्यंयस्यसशब्दवेध्यः शरः शब्दवेध्यमयं शब्दवेध्यविकारभूतं तद्धेतुकमित्यर्थः । फलमविज्ञातं शब्दवेधित्वख्यातिमात्रमेवजानतामयाभाव्यनर्थफलंनविज्ञातमित्यर्थः ॥ १३ ॥ एतादृशशब्दवेधनंकदाप्राप्तमित्याकाङ्क्षायामाह—देवीत्यादिना । अनूढा अकृतविवाहा । युवत्वेसतिराजा युवराजः भवामि अभवं । प्रावृट् वर्षाकालः ॥१४॥ उपास्य गृहीत्वा । रसान् जलानि । जगत् भूमिं । परेताचरितां प्रेताचरिताम् । अतएवभीमां दिशं दक्षिणा-

इत्येवंनजानाति सबालइत्युच्यते नस्तनंधयः । स० गुरु गौरवं । अर्थानांपुरुषार्थसाधकानांकर्मणामारंभे फलंप्रति साधनेषुगौरवंलाघवंच तथादोषं वाशब्दाद्गुणसंग्रहः । अर्थानांसाधनानामितिवा ॥ ७ ॥ ति० फलागमेरामकृतस्वोत्तरक्रिययालभ्यपारलौकिकफलप्राप्तिसमयेवा ॥१०॥ ति० कुमारःअजकुमारः । शब्दवेधीतिलब्धःशब्दोयेनतादृशेनमया शब्दवेधीत्येवंलब्धकीर्तिनेति यावत् । कुमारेण जीवत्पितृकेण ॥ ११ ॥ ति० प्रावृषंवर्णयति—अपास्येति । भौमात्रसान् अपास्य निरस्य शोषयित्वेतिया-

[ पा० ] १ घ. सन्नेहादिव. २ ख. ङ. ज. बाल्येन. ३ ख. तद्यथापुरुषः. ४ क. घ. ङ. च. झ. ञ. ट. मया. ५ घ. ङ. च. झ. ञ. ट. मिदंफलं. ६ क. त्वयोध्यायां. ७ ङ. च. झ. ञ. ट. ममकामविवर्धिनी. ८ ङ. झ. ट. अपास्यहि. ख. उपास्यच. ९ घ. ङ. च. झ. ञ. ट. रावरते.

उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः ॥ ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १६ ॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः ॥ वृष्टिवातावधूताग्रान्पादपानभिपेदिरे ॥ १७ ॥
पतितेनाम्भसा च्छन्नः पतमानेन चासकृत् ॥ आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ १८ ॥
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि ॥ सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजङ्गवत् ॥ १९ ॥
[आकुलारुणतोयानि स्रोतांसि विमलान्यपि ॥ उन्मार्गजलवाहीनि बभूवुर्जलदागमे] ॥ २० ॥
तस्मिन्नतिसुखे काले धनुष्मानिषुमान्रथी ॥ व्यायामकृतसङ्कल्पः सरयूमन्वगां नदीम् ॥ २१ ॥
निपाने महिषं रात्रौ गजं वाऽभ्यागतं नदीम् ॥ अन्यं वा श्वापदं कञ्चिज्जिघांसुरजितेन्द्रियः॥२२॥
[तस्मिंस्तत्राहमेकान्ते रात्रौ विवृतकार्मुकः ॥ तत्राहं संवृतं वन्यं हतवांस्तीरमागतम् ॥
अन्यं चापि मृगं हिंस्रं शब्दं श्रुत्वाऽभ्युपागतम् ॥ २३ ॥ ]
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ॥ अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २४ ॥
ततोहं शरमुद्धृत्य दीप्तमाशीविषोपमम् ॥ शब्दं प्रति गजप्रेप्सुरभिलक्ष्य त्वपातयम् ॥ २५ ॥
अमुञ्चं निशितं बाणमहमाशीविषोपमम् ॥ तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ॥
हाहेति पततस्तोये बाणाभिहतमर्मणः ॥ २६ ॥
तस्मिन्निपतिते बाणे वागभूत्तत्र मानुषी ॥ कथमस्मद्विधे शस्त्रं निपतेत्तु तपस्विनि ॥ २७ ॥
प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः ॥ इषुणाऽभिहतः केन कस्य वां किं कृतं मया ॥ २८ ॥

मित्यर्थः । आविशते आविशतेस्म ॥ १५ ॥ स्निग्धाः शीतलाः । भेकाः मण्डूकाः । सारङ्गाः हरिणाश्चातकावा ॥१६ ॥ क्लिन्नपक्षोत्तराः सिक्तपक्षोपरिभागाः । अतएव स्नाताइवस्थिताः । वृष्टिवातावधूताग्रान् वृष्टिवाताभ्यांकम्पिताग्रानपिपादपान् । कृच्छ्रात् क्लिन्नपक्षत्वेनयत्नात् । अभिपेदिरे आरूढाः ॥ १७ ॥ पतितेन पतमानेन च निरन्तरेणेत्यर्थः । अम्भसा वर्षजलेन । छन्नः मत्तसारङ्गः मत्तगजः । " सारङ्गोहरिणेभृङ्गे चातकेशबलेगजे " इतिनिघण्टुः । अचलोगिरिः अचलोनिश्चलः निस्तरङ्गः । तोयराशिः समुद्रइवाबभौ । अचलपदस्यावृत्त्या एकस्यगिरिपदस्यविशेष्यत्वं अन्यस्य तोयराशिविशेषणत्वमितिध्येयम् ॥ १८ ॥ गिरिधातुभ्योहेतुभ्यः विमलान्यपिस्रोतांसि पाण्डुरारुणवर्णानि पाण्डुरधातुसंयोगात्पाण्डुरवर्णानि अरुणधातुसंयोगादरुणवर्णानि । सभस्मानि दावानलभस्मसहितानि । भुजङ्गवत् नानावर्णयुक्तसर्पाइव कुटिलानि सुस्रुवुः ॥१९—२० ॥ तस्मिन्नित्यादिश्लोकद्वयमेकंवाक्यं । व्यायामकृतसंकल्पः मृगयाविहारेकृतसंकल्पइत्यर्थः । निपीयतेअस्मिन्नितिनिपानं नद्यवतारस्थलं तस्मिन् । श्वापदं व्याघ्रादिदुष्टमृगं ॥ २१—२३ ॥ पूर्यतइति शत्रन्तत्वमार्षं ॥ २४ ॥ गजप्रेप्सुः गजरूपवेध्यंप्राप्तुमिच्छुः हननेच्छुरित्यर्थः । शब्दंप्रति शब्दंलक्ष्यंकृत्वा । अभिलक्ष्य शब्दकर्तृभूतोगजएतावन्मात्रेतिष्ठतीतिलक्षीकृत्येत्यर्थः शरमपातयमितिसंबन्धः ॥ २५ ॥ यत्रबाणममुञ्चं तत्र वनौकसः वनं ओकःस्थानंयस्य तस्य तपस्विनइतियावत् । व्यक्तावाक् प्रादुरासीदितिसंबन्धः ॥ २६ ॥ विशिष्यवागुदितेत्याह—तस्मिन्नित्यादि । अस्मद्विधे अजातशत्रौ ॥ २७ ॥ प्रविविक्तां प्रकर्षेणनिर्जनां । रात्रौ अपररात्रौ । उदकमाहारयतीत्युदाहारः ।

वत् आविशतइतिपाठान्तरं । उपास्येतिपाठेपिसेवित्वेत्यर्थद्वाराशोषयित्वेत्यत्रैवपर्यवसानंबोध्यं ॥ १५ ॥ स० कृच्छ्रात् कृच्छ्रव्रतमुद्दिश्यस्नाताइवविद्यमानाः ॥ १७ ॥ शि० अजितेन्द्रियः नजितानिमृगयाविहारादनिवर्तितानिइन्द्रियाणियेनसः । महि प्रशंसनीये । निपाने नदीजलपानोचितनदीप्रदेशे । अभ्यागतं प्राप्तं षं उपद्रवकारकं । गजं मृगं हिंसार्थमन्वेषणकर्तारं । अन्यद्वाकिंचिच्छ्वापदं व्याघ्रादिकं जिघांसुरहं सरयूंनदीमन्वगाम् । श्लोकद्वयमेकान्वयि । "उपसर्गेपरीक्षेचषकारःपरिकीर्तितः" इत्येकाक्षरः

[ पा० ] १ क. पतितेनांबुना. २ कुण्डलान्तर्गतःश्लोकःबहुषुकोशेषुनदृश्यते. ३ क. ख. धनुष्मान्कवचीरथी. ४ ङ. झ. ट. मृगं. ५ कुण्डलान्तर्गतमिदमर्धत्रयंबहुषुकोशेषुनदृश्यते. ६ ख—च. ज—ट. रभिलक्ष्यमपातयं. ७ ङ. च. बाणाद्यथित. घ. बाणापीडित. ८ ङ. च. झ. ञ. ट. भूमौ. ९ ङ. च. झ. ञ. निपतेच्च. १० ग—च. ज—ट. वापकृतं.

ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ॥ कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ २९ ॥
जटाभारधरस्यैव वल्कलाजिनवाससः ॥ को वधेन ममार्थी स्यात्किं वाऽस्यापकृतं मया ॥ ३० ॥
एवं निष्फलमारब्धं केवलानर्थसंहितम् ॥ न [1]कश्चित्साधु मन्येत यथैव गुरुतल्पगम् ॥ ३१ ॥
[2]नाहं तथाऽनुशोचामि जीवितक्षयमात्मनः ॥ मातरं पितरं चोभावनुशोचामि मद्वधे ॥ ३२ ॥
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ॥ मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ ३३ ॥
वृद्धौ च मातापितरावहं चैकेषुणा हतः ॥ केन स्म निहताः सर्वे सुबालेनाकृतात्मना ॥ ३४ ॥
तां गिरं [3]करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ॥ कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥ ३५ ॥
तस्याहं करुणं श्रुत्वा [4]निशि लालपतो बहु ॥ संभ्रान्तः शोकवेगेन भृशमासं विचेतनः ॥ ३६ ॥
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ॥ अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥ ३७ ॥
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ॥ पांसुशोणितदिग्धाङ्गं शयानं [5]शल्यपीडितम् ॥ ३८ ॥
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थ[6]चेतसम् ॥ [7]इत्युवाच [8]ततः क्रूरं दिधक्षन्निव तेजसा ॥ ३९ ॥
किं तवापकृतं राजन्वने निवसता मया ॥ जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ ४० ॥
एकेन खलु बाणेन मर्मण्यभिहते मयि ॥ द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ ४१ ॥
तौ [9]कथं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ॥ [10]चिरमाशाकृतां [11]तृष्णां [12]कष्टां संधारयिष्यतः ॥ ४२ ॥

"मन्थौदन–" इत्यादिना उदकशब्दस्योदादेशः । यद्यपिहारशब्देपरेउदादेशोविहितः तथाप्येकदेशविकृतमनन्यवद्भवतीतिदीर्घः छान्दसोवा । किंकृतं किमनिष्टंकृतं ॥ २८ ॥ न्यस्तदण्डस्य उपरतवाङ्मनःकायसंबन्धिपरहिंसस्य । "दण्डोस्त्रीशासनेराज्ञांहिंसायांदमसैन्ययोः" इतिविश्वः ॥ २९ ॥ अर्थी प्रयोजनवान् ॥ ३० ॥ गुरुतल्पगं गुरुदारगं । "तल्पंशय्याट्टदारेषु" इत्यमरः ॥ ३१—३३ ॥ हतइत्येतन्मातापितरावित्यत्र वचनविपरिणामेनयोजनीयं । सर्वेनिहताइत्युक्तिर्मातापितृजीवनहेतुभूतस्यस्वस्यवधात् । अकृतात्मना अनिश्चितबुद्धिना । इतिवागभूदितिपूर्वेणान्वयः ॥ ३४ ॥ सशरंचापमित्यनेन शरेमुक्तेपि हस्तलाघवाच्छरान्तरंधनुषिसंहितवानित्यवगम्यते । करुणांगिरंश्रुत्वा करुणाजनकं वचःश्रुत्वा । स्थितस्येतिशेषः ॥ ३५ ॥ लालपतइति यङ्लुगन्ताच्छतृप्रत्ययः । प्रलपतइत्यर्थः । विलपनमित्यर्थसिद्धं ॥ ३६ ॥ दीनसत्वः दीनहृदयः । सुदुर्मनाः अत्यन्तदुःखितमनाः ॥ ३७ ॥ प्रविद्धकलशोदकं पर्यस्तकलशोदकमित्यर्थः । नतुध्वस्तकलशोदकमिति । "ततस्तंघटमादायपूर्णपरमवारिणा" इतिवक्ष्यमाणविरोधात् । पांसुशोणितदिग्धाङ्गं पांसुविशिष्टशोणितेनलिप्ताङ्गं । शल्यपीडितं शराग्रपीडितं ॥ ३८ ॥ त्रस्तं भीतं । अतएवास्वस्थचेतसं व्याकुलचित्तं ॥ ३९ ॥ जिहीर्षुः आहर्तुमिच्छुः । गुर्वर्थं मातापितृनिमित्तं ॥ ४०—४१ ॥ आशाकृतां पुत्रोमेजलमाहरिष्यतीत्याशासहितां । तृष्णां पिपासां

॥ ३२ ॥ ति० मम वधेन कःपुमानर्थी । मनुष्यमांसेन नकस्यापिप्रयोजनमितिव्यर्थएवमद्वधइतिभावः । शि० जटाभारधरस्य द्रव्यादिभाररहितस्येत्यर्थः । ममवधेन कोऽर्थी धनादिमान्स्यात् । नन्वपकारिवधएवार्थइत्यतआह—कस्यमयाऽपकृतं नकस्यापीत्यर्थः ॥ ३० ॥ शि० क्वचित् कस्मिंश्चिल्लोके गुरुतल्पगमिवसाधुनमन्येत एतेन साधुकृतमितिकश्चिदपिनवदिष्यतीत्यर्थः ॥ ३१ ॥ शि० मद्वधेसति मातरंपितरमुभौयथानुशोचामि तथा आत्मनः स्वस्य इमं प्राप्तं जीवितक्षयं नानुशोचामि ॥ ३२ ॥ ति० एकेनेषुणावृद्धौहतौ अहंचहतः । मद्वधेन तयोर्वधस्यसिद्धत्वादित्याशयः ॥ ३४ ॥

[ पा० ] १ ङ. झ. ञ. ट. क्वचित्साधु. घ. किंचित्साधु. २ क—च. ज—ट. नेमं. ३ क. घ—ङ. झ. करुणं. ४ ङ. च. झ. ञ. ट. ऋषेर्विलपतोनिशि. ख. बहुलालपतोनिशि. ५ ङ. झ. शल्यवेधितं. क. शरपीडितं. ६ ख. घ. ङ. च. झ. ञ. ट. चेतनं. ७ क. ग. ङ. च. प्रत्युवाच. ८ क. ख. ग. ङ. च. झ. ञ. ट. वचः. ९ क—च. ज—ट. नूनं. १० घ. ङ. च. झ. ञ. ट. चिरमाशां. ११ घ. ङ. च. झ. ञ. ट. कष्टांतृष्णां. १२ क. कथं.

न नूनं तपसो वाऽस्ति फलयोगः श्रुतस्य वा ॥ पिता यन्मां न [1]जानाति शयानं पतितं भुवि ॥४३॥
जानन्नपि च किं कुर्या[2]दशक्तिरपरिक्रमः ॥ भिद्यमानं[3]मिवाशक्तस्त्रातुमन्यो नगो नगम् ॥ ४४ ॥
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ॥ न त्वामनुदहेत्क्रुद्धो [4]वनं वह्निरिवैधितः ॥ ४५ ॥
इयमेकपदी राजन्यतो मे पितुराश्रमः ॥ तं प्रसादय गत्वा त्वं न त्वां [5]स कुपितः शपेत् ॥ ४६ ॥
विशल्यं कुरु मां राजन्मर्म मे निशितः शरः ॥ रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ ४७ ॥
सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ॥ इति मामविशच्चिन्ता तस्य शल्यापकर्षणे ॥ ४८॥
[6]दुःखितस्य च दीनस्य मम शोकातुरस्य च ॥ लक्षयामास [7]हृदये चिन्तां मुनिसुतस्तदा ॥ ४९ ॥
ताम्यमानः स मां कृच्छ्रादुवाच [8]परमार्तवत् ॥ सीदमानो विवृत्ताङ्गो वेष्टमानो गतः क्षयम् ॥५०॥
संस्तभ्य शोकं धैर्येण स्थिरचित्तो [9]भवाम्यहम् ॥ ब्रह्महत्याकृतं [10]पापं हृदयादपनीयताम् ॥ ५१ ॥
न द्विजातिरहं राजन्माभूत्ते मनसो व्यथा ॥ शूद्रायामस्मि वैश्येन जातो [11]जनपदाधिप ॥ ५२ ॥
[12]इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ॥ विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥ ५३ ॥
तस्य [13]त्वानम्यमानस्य तं बाणमहमुद्धरम् ॥ स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ॥ ५४ ॥
जलार्द्रगात्रं तु विलप्य [14]कृच्छ्रान्मर्मव्रणं संततमुच्छ्वसन्तम् ॥
ततः सरय्वां तमहं शयानं [15]समीक्ष्य [16]भद्रेऽस्मि भृशं विषण्णः ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

कष्टां दुःसहां ॥ ४२ ॥ तपसःश्रुतस्यवेत्यत्र मामकस्येतिविशेषणंदेयं ॥ ४३ ॥ अपरिक्रमः असंचारः पङ्गुरितियावत् । भिद्यमानं वातादिनेतिशेषः ॥ ४४ ॥ राघवेतिसंबोधनात् सरयूतीरेबहुशोमृगयापर्यटनेन पूर्वमेवदशरथंज्ञातवानित्यवगम्यते । नत्वामनुदहेदिति अन्यथादहेदितिभावः ॥ ४५ ॥ एकपदी एकपदन्यासमात्रयुक्तासरणिरित्यर्थः । "वर्तन्येकपदी" इत्यमरः । यतः यत्रैकपद्यां ॥ ४६ ॥ मर्म रुणद्धि पीडयतीत्यर्थः । मृदु सिकतामयं । सोत्सेधं औन्नत्यवत् । अम्बुरयः नदीवेगः ॥ ४७—४८ ॥ दुःखितस्य महदकृत्यंप्राप्तमितिदुःखितस्य । शोकातुरस्य ब्रह्महत्याभविष्यतीतिभिया शोकेनपीडितस्य ॥ ४९ ॥ क्षयंगतः नाशंप्राप्तुमुपक्रान्तः ॥ ५० ॥ संस्तभ्येत्यादिश्लोकद्वयस्य इतिमामुवाचेत्यनेनान्वयः । स्थिरचित्तोभवाम्यहमित्यत्र स्थिरचित्तोभवानघेतिचपाठः । शूद्रायांवैश्येनजातः करणइत्यर्थः । "शूद्राविशोस्तुकरणः" इत्यमरः ॥५१—५२॥ विघूर्णतः कदाचिदतीव वेपमानस्येत्यर्थः । विचेष्टस्य कदाचिदितिशेषः । वेपमानस्य कदाचिदीषत्कम्पमानस्येत्यर्थः । आनम्यमानस्य व्यथयासंकुचिताङ्गस्येत्यर्थः । नानद्यमानस्येतिपाठे अतिशयेननदतइत्यर्थः । उद्धरं उदहरं । अडभावोऽनित्यत्वात् ॥ ५३—५४ ॥ जलार्द्रगात्रमिति । अयं श्लोकःप्रथमदृष्टानुवादः । मर्मणि प्राणस्थाने व्रणःयस्यतं । सरय्वां सरयूतीरे । विषण्णोस्मि विषण्णो-

---

**ति०** तपसःश्रुतस्यचेत्यत्र मामकस्यपित्र्यस्यचेतिशेषः ॥ ४३ ॥ **ति०** परमार्थवित् परमार्थःशास्त्रतत्वं । परमार्तवदितिपाठेपरमार्तःसन्नित्यर्थः ॥५०॥ **ति०** धैर्येणशोकंसंस्तभ्याहंस्थिरचित्तोभवामि ममचित्तेमोहोनास्तीत्यर्थः । अतोयद्वदामितच्छृण्वित्यर्थः । शोकंब्रह्महत्याप्तिजं संस्तभ्य त्यक्त्वा । तापं भयं । अर्धर्चादिस्तापशब्दः ॥ ५१ ॥ **ति०** आताम्यमानस्य ताम्यतः । व्यथयासंकुचिताङ्गस्येतियावत् ॥ ५३ ॥ इतित्रिषष्टितमस्सर्गः ॥ ६३ ॥

**[ पा० ]** १ ङ. च. झ. ञ. ट. जानीते. २ ङ. च. झ. ञ. ट. दशक्तश्चापरि. ३ ङ. ट. मिवाशक्तिस्त्रातुं. ४ ङ. झ. ट. वनमग्निरिवैधितः. च. ञ. वनमग्निरिवोद्धतः. ५ ग. ङ. झ. ट. संकुपितः. ६ क. दुःखितस्यापि. ७ च. झ. ञ. ट. सऋषिश्चिन्तां. ८ च. ज. झ. ट. परमार्थवित्. ९ क. ग. घ. भवानघ. १० झ. तापं. ११ च. झ. ञ. ट. नरवराधिप. १२ क. इत्येवं. १३ क—घ. च. झ. ञ. ट. त्वाताम्यमानस्य. १४ ख. घ. झ. ञ. ट. कृच्छ्रंमर्म. १५ क. ग. संवीक्ष्य. १६ घ. ङ. च. ज—ट. भद्रेसुभृशं.

# चतुषष्टितमः सर्गः ॥ ६४ ॥

दशरथेन ऋषिदंपतिसमीपमेत्यतयोःस्वेनतत्पुत्रमारणप्रकारनिवेदनम् ॥ १ ॥ तथा तच्चोदनयातयोस्तत्पुत्रसमीपप्रापणम् ॥ २ ॥ ताभ्यांसुतशरीरेनिपत्यचिरंसकरुणरोदनपूर्वकंतस्मैउदकदानम् ॥ ३ ॥ दिव्यदेहधारिणातेन पित्राश्वासनपूर्वकंस्वर्गगमनम् ॥ ४ ॥ ताभ्यांदशरथंप्रति पुत्रशोकेनमरणप्रापकशापदानपूर्वकंशरीरविसर्जनेनस्वर्गगमनम् ॥ ५ ॥ दशरथेनकौसल्यांप्रति स्वस्यशापप्राप्तिप्रकारनिरूपणपूर्वकमपररात्रेश्रीरामानुस्मरणादिनाप्राणविमोक्षणम् ॥ ६ ॥

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ॥ विलपन्नेव धर्मात्मा [1]कौसल्यां पुनरब्रवीत् ॥ १ ॥
तदज्ञानान्महत्पापं [2]कृत्वाऽहं सङ्कुलेन्द्रियः ॥ एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २ ॥
ततस्तं घटमादाय पूर्णं परमवारिणा ॥ आश्रमं तमहं प्राप्य यथाख्यातपथं गतः ॥ ३ ॥
तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ ॥ अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥
तन्निमित्ताभिरासीनौ कथाभि[3]रपरिक्रमौ ॥ तामाशां मत्कृते हीना[4]वुदासीनावनाथवत् ॥ ५ ॥
शोकोपह[5]तचित्तश्च भयसंत्रस्तचेतनः ॥ तच्चाश्रमपदं गत्वा भूयः शोकमहं गतः ॥ ६ ॥
[6]पदशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत ॥ किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ॥ ७ ॥
यन्निमित्तमिदं [7]तात सलिले क्रीडितं त्वया ॥ उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ८ ॥
यद्व्यलीकं कृतं पुत्र मात्रा ते यदि वा मया ॥ न तन्मनसि कर्तव्यं त्वया तात तपस्विना ॥ ९ ॥
[8]त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम् ॥ समासक्तास्त्वयि प्राणाः किं[9]त्वं नो नाभिभाषसे १०

---

भवं ॥ ५५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिषष्टितमःसर्गः ॥ ६३ ॥

---

विलपन्नेव मध्येस्वपुत्रंविलपन्नेव ॥ १ ॥ संकुलेन्द्रियः व्याकुलेन्द्रियः । सुकृतं सुष्ठुकृतं मुनिकुमारवचनमितिशेषः । इत्यचिन्तयमित्युपस्कार्यं । यद्वा अस्यवधज्ञापनाज्ञापनयोःकिंशुभोदर्कंभवेदित्यचिन्तयमित्यर्थः ॥ २ ॥ ततः मुनिकुमारोक्तज्ञापनमेवश्रेयस्करमितिनिश्चयानन्तरं । यथाख्यातपथंप्राप्य आश्रमंगतइतिसंबन्धः ॥ ३ ॥ परितोनयतिसंचारयतीतिपरिणायकः तद्रहितौ । तन्निमित्ताभिः पुत्रविषयाभिः । कथाभिः उपलक्षितौ । अपरिक्रमौ पङ्गुभूतौ । मत्कृते मन्निमित्तं । तामाशां हीनौ जलानयनाशारहितौ पुत्रविषयाशारहितौवा । उदासीनौ प्रयत्नशून्यौ । तस्यपितरावपश्यमितिसंबन्धः ॥ ४—५ ॥ पुत्रवधेनपूर्वमेवशोकोपहतचित्तः भूयःशोकंगतः तद्दर्शनादतिशयितशोकंगतः ॥ ६ ॥ पदशब्दं चरणविन्यासजशब्दं । चिरायसि विलम्बसे । "तत्करोति—" इतिणिच् ॥ ७ ॥ यन्निमित्तं किंनिमित्तमित्यर्थः । यद्वा यन्निमित्तंत्वयासलिलेक्रीडितं इदंब्रूहीतिशेषः । यन्नदत्तमितिपाठे इदानींपानीयंनदत्तमितियत् तस्मात्त्वयासलिलेक्रीडितमित्यन्वयः । उत्कण्ठिता शोकस्मरणवत्यभूत् ॥ ८ ॥ व्यलीकं अप्रियं । अलीकमितिपाठे अलीकमपराधः । "अलीकमपराधः" इति हलायुधः ॥ ९ ॥ नः अस्मान् इतिमुनिर्वाक्यमभाष-

---

**ति०** तन्निमित्ताभिः पुत्रनिमित्ताभिः । कथाभिर्हेतुभिः अपरिश्रमावासीनौ पुत्रोजलमानेष्यतीत्येवंरूपांतामाशामुपासीनौ सेवमानौ । मत्कृते मत्कृतदुष्कर्मनिमित्तं । तामाशांप्रति हीनावपितांसेवमानावपश्यमितिपूर्वेणान्वयः । उदासीनावितिपाठे अनाथवदुदासीनौदुःखिताविव । **शि०** मत्कृते मत्कर्तृकपुत्रवधेसति । हीनौ पुत्ररहितौ । अनाथवत् नाथलाभाववानिवाहमपश्यं । **वि०** अपरिक्रमौ संचाराक्षमौ ॥ ५ ॥ **शि०** भयेन वधजनितदोषेणसंत्रस्तंचेतनंयस्यसःअहं तत् अश्रमं श्रमनिवर्तकं पदं स्थानं गत्वा भूयः तद्दुःखदर्शनेनअधिकंशोकं गतःप्राप्तः । आसमितिशेषः । **स०** भयमस्यास्तिजनकतासंबन्धेनेति भयं भयवत्

**[ पा० ]** १ च. झ. ञ. ट. कौसल्यामिदमब्रवीत्. २ च. झ. ञ. कृत्वासंकुलितेन्द्रियः. ग. घ. ज. कृत्वाहंव्याकुलेन्द्रियः. ३ क. ज. झ. ट. रपरिश्रमौ. ४ झ. वुपासीनौ. ५ क. ग. च. ज. चित्तस्तु. ६ ज. पादशब्दं. ७ ख. तावत्सलिले. ८ क. घ. च. गतिस्त्वमगतीनां. ९ क—घ. ज. किंचिन्नो. च. झ. ञ. ट. कथंत्वं.

मुनिमव्यक्तया वाचा [1]तमहं सज्जमानया ॥ हीनव्यञ्जनया प्रेक्ष्य [2]भीतो भीत इवाब्रवम् ॥ ११ ॥
मनसः कर्मचेष्टाभिरभिसंस्तभ्य वाग्बलम् ॥ आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२ ॥
क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः ॥ सज्जनावमतं [3]दुःखमिदं प्राप्तं स्वकर्मजम् ॥ १३ ॥
भगवंश्चापहस्तोऽहं सरयूतीरमागतः ॥ जिघांसुः श्वापदं कंचिन्निपाने [4]चागतं गजम् ॥ १४ ॥
[5]तत्र श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः ॥ द्विपोऽयमिति [6]मत्वाऽयं बाणेनाभिहतो मया ॥१५॥
गत्वा [7]नद्यास्ततस्तीरमपश्यमिषुणा हृदि ॥ विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १६ ॥
भगवञ्शब्दमालक्ष्य मया गजजिघांसुना ॥ विसृष्टोऽम्भसि [8]नाराचस्तेन ते निहतः सुतः ॥ १७ ॥
ततस्तस्यैव वचनादुपेत्य परितप्यतः ॥ स मया सहसा बाण उद्धृतो [9]मर्मतस्तदा ॥ १८ ॥
स चोद्धृतेन बाणेन [10]तत्रैव स्वर्गमास्थितः ॥ [11]भवन्तौ पितरौ [12]शोचन्नन्धाविति विलप्य च ॥ १९ ॥
अज्ञानाद्भवतः पुत्रः सहसाऽभिहतो मया ॥ [13]शेषमेवंगते यत्स्यात्तत्प्रसीदतु मे मुनिः ॥ २० ॥
स तच्छ्रुत्वा वचः क्रूरं [14]मयोक्तमघशंसिना ॥ नाशकत्तीव्रमा[15]यासमकर्तुं [16]भगवानृषिः ॥ २१ ॥
सबाष्प[17]पूर्णवदनो निःश्वसञ्शोक[18]कर्शितः ॥ मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २२ ॥
यद्येतदशुभं कर्म [19]न त्वं मे कथयेः स्वयम् ॥ फलेन्मूर्धा स ते राजन्सद्यः शतसहस्रधा ॥ २३ ॥

तेत्यन्वयः ॥ १० ॥ सज्जमानया स्खलन्त्या । हीनव्यञ्जनया अस्पष्टाक्षरया । "व्यञ्जनंश्मश्रुनिष्ठानचिह्नेष्ववयवेक्ष्वरे" इतिवैजयन्ती । अव्यक्तयावाचाअब्रवमितिसंबन्धः । भीतोपिसन्भीतः भीतोभीतः अत्यन्तभीतइत्यर्थः । [ भीतोऽपिसन्नभीतइवाब्रवम् ] इवशब्दो वाक्यालंकारे ॥ ११ ॥ उक्तमेवविशदंदर्शयति—मनसइति । मनसः कर्म ऊहापोहात्मकं चेष्टाः इन्द्रियनियमनरूपव्यापाराः ताभिर्वाग्बलं अभिसंस्तभ्य स्खलितांवाचंबलाद्दृढीकृत्येत्यर्थः । तस्मैभयमाचचक्षइतिसंबन्धः । यद्वा वाग्बलमभिसंस्तभ्य लज्जाभीतिप्रभृतिभिः मन्दवचनोभूत्वेत्यर्थः । आचचक्षे इतिलिडुत्तमपुरुषैकवचनं ॥ १२ ॥ महात्मनः तवेतिशेषः । सज्जनावमतं सज्जनावमतिविषयभूतं सत्पुरुषगर्हितमित्यर्थः ॥ १३ ॥ निपाने जलावतारे । आगतंगजं श्वापदं हिंस्रशार्दूलादिकंच । जिघांसुः चापहस्तोहं सरयूतीरमागतः ॥ १४ ॥ पूर्यतः पूर्यमाणस्य । अयं शब्दहेतुःपदार्थः द्विपइतिमत्वाऽयं तवसुतः मया अभिहतः ॥ १५—१८ ॥ उद्धृतेनबाणेनहेतुना अन्धौपितरौ मातापितराविति भवन्तावेवशोचन् विलप्यचस्वर्गमास्थितः ॥ १९ ॥ एवंगते एवंप्राप्तेसति । यच्छेषंकर्तव्यंस्यात् शापानुग्रहादिकं तत्प्रति मे मयि । प्रसीदतु शापोवाऽनुग्रहोवायःकर्तव्यस्तंकरोत्वित्यर्थः ॥ २० ॥ अघशंसिना दुःखशंसिना । आयासं व्यसनं । अकर्तुंनाशकत् कृतवानेवेत्यर्थः ॥ २१—२२ ॥ स्मेतिवाक्यालंकारे । फलेत् विशीर्येत् । ञिफलाविशरणइतिधातुः । मच्छा-

तत्साधनंतेनत्रस्तंचेतनंयस्यसः । भयसंग्रस्तचेतनइतिपाठेतु नक्लेशः । भूयः बाहुल्येन ॥ ६ ॥ **ति०** सज्जनावमतं सज्जनगर्हितं । प्राप्तं मयाभवताचेतिशेषः ॥ १३ ॥ **ति०** अयंद्विपइतिमत्वाअहंस्थितः । ततोमयासबाणेनहतः ॥ १५ ॥ **ति०** गतप्राणं गतकल्पप्राणं ॥ १६ ॥ **ति०** तस्यैव त्वत्पुत्रस्यैव । वचनाद्बाणउद्धृतइत्यन्वयः ॥ १८ ॥ युष्मद्रक्षकेपुत्रे एवंगतेसतिशेषंकर्तव्यंयत्स्यात्तत्तत्रमह्यंभगवान्प्रसीदतु तदुद्दिश्यमामाज्ञापयत्वित्यन्वयः । युष्मद्रक्षणमपिमयाकर्तुंशक्यमितिभावः । **शि०** शेषं शिष्यतेप्रलयेपिनविध्वस्यतेसः नित्यलोकस्तं । गते प्राप्तेसति यत्कर्तव्यंस्यात् तद्यथाभवतितथामुनिर्भवान्प्रसीदतु अनुग्रहंनिग्रहंवाकुर्वित्यर्थः । **ती०** एवंगते प्रमादादेवंप्राप्तेसति शेषं अनन्तरंकर्तव्यंयत्स्यात् तत्प्रसीदतु तदुद्दिश्याज्ञापयत्वित्यर्थः ॥ २० ॥ **ति०** एवम-

[ **पा०** ] १ ख. तदाहं. २ च. झ. ञ. ट. भीतचित्तइवा. ३ क. दुःखंमयाप्राप्तं. ४ ख. ग. घ. ज. झ. ट. वागतं. ५ ख. ग. घ. च. ज—ट. ततश्श्रुतो. ६ ख. ग. च. ञ. मत्वाहि. झ. ट. मत्वाहं. ७ झ. ट. तस्यास्ततः. ८ क. स्तेनतेऽभिहतः. ख. ग. च. स्तेनतेनिहतः. ९ ग. मर्मणस्तदा. १० च. छ. झ. ञ. ट. सहसा. ११ ग. छ—ट. भगवन्तावुभौ. १२ ख. ग. च. ज. ञ. ट. शोचन्वृद्धाविति. १३ घ. शेषमेवगतो. ग. शेषमेवंगतो. १४ ङ. झ. ट. मयातदघशंसिना. १५ ङ. च. झ. ट. मायासंसकर्तुं. ख. मायासंसधर्तुं. १६ क. ख. भगवान्मुनिः. १७ क. ख. पूर्णनयनो. १८ ङ. च. छ. झ. ञ. ट. मूर्च्छितः. १९ ग. नमेस. क. छ. झ. ञ. ट. नस्समे.

क्षत्रियेण वधो राजन्वानप्रस्थे विशेषतः ॥ ज्ञानपूर्वं कृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥ २४ ॥
सप्तधा तु फलेन्मूर्धा मुनौ तपसि तिष्ठति ॥ ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मवादिनि ॥ २५ ॥
अज्ञानाद्धि कृतं यस्मादिदं तेनैव जीवसि ॥ अपि ह्यद्य कुलं न स्याद्राघवाणां कुतो भवान् ॥२६॥
नय नौ नृप तं देशमिति मां चाभ्यभाषत ॥ अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम् ॥ २७ ॥
रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम् ॥ शयानं भुवि निःसंज्ञं धर्मराजवशं गतम् ॥ २८ ॥
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ ॥ अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥ २९ ॥
तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ ॥ निपेततुः शरीरेऽस्य पिता चास्येदमब्रवीत् ॥ ३० ॥
नाभिवादयसे माऽद्य न च मामभिभाषसे ॥ किंनु शेषे च भूमौ त्वं वत्स किं कुपितो ह्यसि ॥३१॥
न त्वहं ते प्रियः पुत्र मातरं पश्य धार्मिक ॥ किंनु नालिङ्गसे पुत्र सुकुमार वचो वद ॥ ३२ ॥
कस्य वाऽपररात्रेऽहं श्रोष्यामि हृदयङ्गमम् ॥ अधीयानस्य मधुरं शास्त्रं वाऽन्यद्विशेषतः ॥ ३३ ॥
को मां सन्ध्यामुपास्यैव स्नात्वा हुतहुताशनः ॥ श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥३४॥
कन्दमूलफलं हृत्वा को मां प्रियमिवातिथिम् ॥ भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३५ ॥

पेनेतिशेषः ॥ २३ ॥ क्षत्रियेण पालकेन । वानप्रस्थे अज्ञानतःकृतोवधः वज्रिणं इन्द्रमपिस्थानात् च्यावयेत् । ज्ञानपूर्वकृतः ज्ञानकृतस्तु । विशेषतच्यावयेत् । अविलंम्बोविशेषः ॥ २४ ॥ सप्तधेत्युपलक्षणं बहुधेत्यर्थः । ब्रह्मवादिनि परमात्मज्ञे । ब्रह्मचारिणीतिपाठे चरतेर्गत्यर्थत्वात् "सर्वेगत्यर्थाज्ञानार्थाः" इतिन्यायेन ब्रह्म तत्वं चरितुंज्ञातुं शीलमस्यास्तीति ब्रह्मचारीतस्मिन् । "ज्ञानेतत्वेतपोध्यात्मवेदेषुब्रह्म चोच्यते" इतिनिघण्टुः ॥ २५ ॥ यस्मात्कारणात् इदं दुष्कृतमज्ञानात्कृतं तेनत्वंजीवसि । अपिच अद्य ज्ञानपूर्वकत्वेवधस्य राघवाणांकुलंनस्यात् भवान् कुतःस्यात् जीवेत् । इतिमामुवाचेत्यन्वयः ॥ २६ ॥ नयेत्यादिश्लोकद्वयमेकंवाक्यं । धर्मराजवशंगतंपुत्रंद्रष्टुमिच्छावः । अतः नौतंदेशंनयेतिमामभ्यभाषतेति संबन्धः ॥ २७—२८ ॥ अहंतौनीत्वा अहंतमस्पर्शयमितिसंबन्धेनाहंशब्दद्वयावैयर्थ्यं ॥ २९—३१ ॥ अहंतेप्रियः नतुचेत् मातरंपश्येत्यन्वयः ॥ ३२ ॥ हृदयंगमं मनोहरस्वरं । अधीयानस्य पठतः । अन्यद्वा इतिहासपुराणादिकंवा ॥ ३३ ॥ संध्यामुपास्य नमस्कारपूर्वकंतात्रिकंसंध्यावन्दनंकृत्वेत्यर्थः । हुतहुताशनः कृतहोमः । ननुवैश्याच्छूद्रायांजातोहिकरणस्तस्यकथंहोमाधिकारइति । मैवं । "नमस्कारेणमन्त्रेणपञ्चयज्ञान्समापयेत्" इतिचतुर्थवर्णस्यापिपञ्चमहायज्ञाधिकारः स्मर्यते । ततोप्यधिकस्यकरणस्यस्वोचितमन्त्रैर्होमाधिकारस्यकैमुत्यन्यायसिद्धत्वात् । श्लाघयिष्यति उपचरिष्यतीत्यर्थः ॥ ३४ ॥ कन्दं जलो-

ज्ञानकृतत्वबोधनाच्छेषायुःपर्यन्तंरक्षणस्यापिकर्तव्यताबोधनाच्चमांदैवान्नभस्मसादकरोदित्याह—**सइति** । तीव्रमायासं भस्मीभावफलकशापदानं ॥ २१ ॥ **ति०** विशेषतः अन्धत्वानाथत्वादेः ज्ञानपूर्वकृतोयद्ययंवधस्स्यात् तदा तच्छ्रावणजोमत्कोपः वज्रिणमपिस्थानाच्च्यावयेत् ॥ २४॥ **ति०** स्वापेक्षायातपोन्यूनत्वात् **सप्तधेति** । ब्रह्मवादिनि ब्रह्मवादिसमे ॥२५॥ **स०** द्रष्टुं स्प्रष्टुं । अतएवाग्रे अस्पर्शयमहमित्युक्तं ॥ २७ ॥ **शि०** धर्मराजवशं गतं धर्मराजात् उत्तमधर्माचरणात् । वशं कान्तिविशेषं । गतं प्राप्तं ॥ २८ ॥ **शि०** अथ तदाज्ञापनानन्तरं । एकएवाहंनीत्वा अहं सर्वकालंधर्मत्यागाभाववन्तं । अतएव आर्यया भा दीप्त्या सह सहितंतंमुनिंपुत्रं भृशदुःखितौतौमातापितरौ अस्पर्शयं स्पर्शमकारयं । अहमित्यत्र नञ्पूर्वकहाधातोःकर्तरिकः ॥ २९ ॥ **कतक०** नन्वहमितिपाठः । अप्रियइतिच्छेदः ॥ ३२ ॥ **ति०** श्लाघयिष्यति श्लाघनमुद्वर्तनंतत्पूर्वकंस्नापयिष्यति । "नाप्सुश्लाघमानस्स्नायात्" इतिब्रह्मचारिप्रकरणस्थापस्तंबस्मृतौतथाव्याख्यानात् ॥ ३४ ॥ **ति०** कर्मणिसाधुंकर्मण्यमित्यतिथिविशेषणं । भोजयिष्यति

[ **पा०** ] १ ङ. झ. ट. भवेन्मूर्धा. २ घ. च. ञ. ब्रह्मचारिणि. ३ ङ. अज्ञानादिकृतं. ४ ङ. छ. झ. तेतेनजीवसे. च. ञ. ट. तेतेनजीवसि. ५ झ. ञ. अपिह्यकुशलं. छ. अपित्वद्यकुलं. ६ ग. नस्यादिक्ष्वाकूणां. ७ च. ञ. मामभ्यभाषत. ८ छ. प्रादर्शयमहं. ९ ख. ङ. च. ज. ट. चैनमुवाचह. छ. लिदमुवाचह. १० ख. ङ—ट. किंच. ११ ग—च. ज—ट. शेषेतु. क. ख. शेषेद्य. १२ झ. नन्वहं. १३ ङ. छ. झ. ञ. ट. धार्मिकीं. १४ ख. ङ. च. छ. झ. ञ. ट. किंच. १५ ज. अपिवा. १६ क. सततं. १७ क. साधयिष्यति. १८ ख. त्युपासीनं. १९ घ. कथंमूल. २० ङ. दत्वा. २१ ङ. च. झ. ञ. ट. योमां.

इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् ॥ कथं वत्स भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३६ ॥
तिष्ठ मां मागमः पुत्र यमस्य सदनं प्रति ॥ श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३७ ॥
उभावपि च शोकार्तावनाथौ कृपणौ वने ॥ क्षिप्रमेव गमिष्यावस्त्वया ऽहीनौ यमक्षयम् ॥ ३८ ॥
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् ॥ क्षमतां धर्मराजो मे बिभृयात्पितरावयम् ॥ ३९ ॥
दातुमर्हति धर्मात्मा लोकपालो महायशाः ॥ ईदृशस्य ममाक्षय्यामेकामभयदक्षिणाम् ॥ ४० ॥
अपापोसि यदा पुत्र निहतः पापकर्मणा ॥ तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनाम् ॥ ४१ ॥
यान्ति शूरा गतिं यां च संग्रामेष्वनिवर्तिनः ॥ हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥ ४२ ॥
यां गतिं सगरः शैब्यो दिलीपो जनमेजयः ॥ नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ॥ ४३ ॥
या गतिः सर्वसाधूनां स्वाध्यायात्तपसा च या ॥ या भूमिदस्याहिताग्नेरेकपत्नीव्रतस्य च ॥ ४४ ॥
गोसहस्रप्रदातॄणां या या गुरुभृतामपि ॥ देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ॥ ४५ ॥

द्भवानांपद्मादीनां । मूलं स्थलोद्भवानाम् । अकर्मण्यं कर्मानुष्ठानाक्षमं । अप्रग्रहं नीवारादिसंग्रहरहितं । अनायकं अनाथं । रक्षकरहितं यष्टिंगृहीत्वामार्गदर्शकरहितमितिवार्थः ॥ ३५—३६ ॥ तिष्ठमां मांप्रति तिष्ठ । मागमः मागच्छ । समेधितः सहितइत्यर्थः ॥ ३७—३८ ॥ वैवस्वतं यमं । धर्मराजःक्षमतां मत्पुत्रस्यस्वपरिसरागमनविलम्बंसहतां । मे मत्संबन्धी । अयं पुत्रः । पितरौबिभृयादितिभारतींप्रवक्ष्यामीतिसंबन्धः ॥ ३९—४० ॥ राज्ञास्वहस्तकृतंहननंपूर्वकृतस्यपापस्यप्रायश्चित्तत्वेनप्राप्तमितिमत्वावदति —अपापइति । पापकर्मणा राज्ञायदानिहतः तदैवापापोसि । तेन अपापत्वेनहेतुना । सत्येन ममसत्येन । शस्त्रयोधिनां येलोकास्तान् आशुगच्छेति योजना । नन्वस्यतपस्विनोब्रह्मलोकप्राप्तिरेववक्तव्या शस्त्रहननमात्रेणशस्त्रयोधिनांलोकंप्राप्यत्वेनवदति एतत्कथमुपपद्यते । उच्यते । “ द्वाविमौपुरुषौलोकेसूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्चरणेचाभिमुखोहतः ” इति शस्त्रयोधिनामुत्कृष्टलोकप्राप्तिश्रवणान्नदोषः ॥ ४१—४३ ॥ एकपत्नीव्रतस्येति इदंचव्रतमनुकूलायांपुत्रिण्यांपत्न्यांबोध्यं ॥ ४४ ॥ या येति एकस्ययच्छब्दस्य पूर्वेणान्वयः । गुरुभृतां गुरुशुश्रूषाकारिणां । देहन्यासकृतां महाप्रस्थानादिनेति

कर्मण्यमित्येवचपाठः । अप्रग्रहं यष्टिग्रहणपूर्वकमार्गप्रदर्शकरहितं । अतएव । अनायकं स्नानादिकर्मप्रवर्तकहीनमित्यर्थःकतकः । **शि०** योभोजयिष्यति सकः नकोपीत्यर्थः ॥ ३५ ॥ **ति०** मामेत्याबाधेद्विर्वचनं । **स०** मामा गमः क्लेशाधिक्याद्विरुक्तिः ॥ ३७ ॥ **ति०** यमक्षयं यमगृहं ॥ ३८ ॥ **ति०** यमगृहगमनेस्वप्रयोजनमाह—**ततइति** । धर्मराजोमेक्षमतां पुत्रवियोगजनकंपूर्वकृतापराधं । अयंमेपुत्रः पितरौ आवां । बिभृयात् पालयतु ॥ ३९ ॥ **ति०** ननुत्वयायाचितेपिकथमेतल्लभ्यतेऽतआह—दातुमिति । लोकपालः ईदृशस्य अनाथस्य । अभयदक्षिणां पुत्रदानेन । तदभावेमहाभयप्राप्तेरितिभावः । **कतक०** यतोऽयंमेपुत्रःपितरौबिभृयात् अतोस्यधर्मराजोभवान्क्षमतां शस्त्रघातजन्यदुर्मरणजनकंपापंक्षमतां । एवंमयाप्रार्थितोदुर्मरणजांदुर्गतिंदूरीकृत्य त्वांस्वर्गं नयिष्यति । ईदृशस्यतपस्विनोमम एकां पुत्रतारणरूपामभयदक्षिणांलोकपालत्वाद्दातुमर्हतीत्यर्थः ॥ ४० ॥ **ति०** अथमृतस्यपुनर्लाभमशक्यंमत्वाविश्वामित्रइवत्रिशङ्कुंस्वमहिम्नासुतंस्वर्गंप्रापयति—**अपापोसीत्यादिना** । हेपुत्र पापेनकर्मणा शस्त्रवधलक्षणेन निहतोयथायद्यपित्वमसि । तथापि तेनमदीयेनसत्येनापापोभूत्वाऽस्त्रयोधिनांलोकान्गच्छ । **शि०** ननुप्रार्थितोपिदुर्लभंमत्वायदि नदास्यतितर्हिकामद्गतिरित्यतआह—**अपापइति** । हेपुत्र पापकर्मणा केनचित्पूर्वादृष्टेनहेतुनानिहतोपित्वं यथा यथावत् अपापः पापरहितोसि । अवशिष्टकिंचित्सूक्ष्मपापफलस्यापिभुक्तत्वान्नेदानींतवपापसंभावनास्तीतितात्पर्यं । तेनहेतुना सत्येन सर्वधर्ममूलभूतसत्यरूपधर्मेणोपलक्षितस्त्वंअस्त्रयोधिनांयेलोकास्तान्गच्छ । एतेनाकालमृत्युभीतिस्त्वयानकार्येतिसूचितं । तेनब्रह्मवेत्तॄणामकालमरणादिकमकिञ्चित्करमितिसूचितं ॥ ४१ ॥ **शि०** इदानींतवकामचारगतिर्भवितेतिबोधयन्नाह—**येति** ॥ ४४ ॥ **स०** देहन्यासकृतां स्वधर्मकरणेनितांतशक्तिह्रासेहुताशनादौदेहात्ययस्यधर्मत्वादितिभावः । **शि०** देहन्यासकृतः प्रयागादौबुद्धिपूर्वंतनुत्यागक-

[ **पा०** ] १ क. ख. ङ. च. छ. झ. ञ. ट. पुत्र. २ क. ख. ङ—ट. मामागमः. ३ ख. उभावपिहि. ४ क. त्वयासह. ५ ग. घ. ज. अपापस्त्वं. ६ ख. ग. घ. च—ट. यथा. ७ ङ. झ. ट. लोकास्तत्र. ८ ङ. छ. झ. ट. यांहिशूरागतिंयान्ति. च. ञ. यांहिशूरागतिंप्राप्ताः. ९ ख. ष्वनिवर्तिनां. १० ङ. पश्चिमां. ११ घ. ङ. च. ञ. ट. भूतानां. १२ ख. ङ. झ. ञ. ट. स्वाध्यायात्तपसश्च. ग. स्वाध्यायतपसा. १३ ख. ग. ङ—ट. भूमिदस्याहिताग्नेश्च. १४ ङ—ट. गुरुसेवाभृतामपि.

न हि [1]त्वस्मिन्कुले जातो गच्छत्यकुशलां गतिम् ॥ स तु यास्यति येन त्वं निहतो मम [2]बान्धवः ॥४६॥
एवं स कृपणं तत्र पर्यदेवयतासकृत् ॥ [3]ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४७ ॥
[4]स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः ॥ स्वर्गमध्या[5]रुहत्क्षिप्रं शक्रेण सह धर्मवित् ॥ ४८ ॥
आबभाषे च तौ वृद्धौ [6]सह शक्रेण तापसः ॥ [7]आश्वास्य च [8]मुहूर्तं तु [9]पितरौ वाक्यमब्रवीत् ॥ ४९ ॥
स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात् ॥ भवन्तावपि च क्षिप्रं मम मूलं[10]मुपैष्यतः ॥ ५० ॥
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता ॥ आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५१ ॥
स [11]कृत्वा तूदकं तूर्णं तापसः सह भार्यया ॥ मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ५२ ॥
अद्यैव जहि मां राजन्मरणे नास्ति मे व्यथा ॥ [12]यच्छरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ५३ ॥
[[13]कथं तेषां कुले जातः क्षत्रियाणां महात्मनाम् ॥ सर्ववेदविदर्थज्ञो धर्मे न कुरुते मनः ॥
स्त्रीनिमित्तं न ते वैरं क्षेत्रजं वाक्यजं न ते] ॥ ५४ ॥
[14]त्वया तु यदविज्ञानान्निहतो मे [15]सुतः शुचिः ॥ तेन [16]त्वामभि[17]शप्स्यामि सुदुःखमतिदारुणम् ॥५५॥
पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतम् ॥ एवं त्वं पुत्रशोकेन राजन्कालं [18]करिष्यसि ॥ ५६ ॥

शेषः यद्वा। परलोकप्राप्तिसंकल्पपूर्वकंगङ्गायमुनासंगमादौजलेऽग्नौवातनुंत्यजतामित्यर्थः ॥ ४५ ॥ अस्मिन्कुले तपोनिष्ठानामस्माकंकुले । जातः अकुशलां अशुभां । गतिंनगच्छेत् । अपितु मम बान्धवः पुत्रः त्वं येननिहतः सएवाकुशलांगतिंयास्यति ॥४६॥ उदकं संस्कारपूर्वोदकक्रियाः ॥ ४७ ॥ शक्रेणसहस्वर्गमध्यारुहदित्यनेन मुनिपुत्रंस्वर्गंनेतुंशक्रःसमागतइति गम्यते ॥ ४८ ॥ संग्रहेणोक्तंस्वर्गारोहणंविवृणोति—आबभाषइति । तापसःशक्रेणसहतौवृद्धौआबभाषे । आभाषणेपिवृद्धयोरश्रवणात्पुनराहेत्याह—आश्वास्य चेति ॥ ४९ ॥ मूलं समीपं । " आद्येशिफायांनक्षत्रेमूलंकुञ्जसमीपयोः " इतिनिघण्टुः ॥ ५० ॥ वपुष्मता प्रशस्ताकारेण । प्रशंसायांमतुप् ॥ ५१—५२ ॥ जहि प्राणान्मोचय । " हन्तेर्जः " इतिजादेशः । कथंमारणंदुःखाकरत्वादित्यत्राह—मरणेनास्तिमेव्यथेति । व्यथाभावहेतुमाह—यदिति । अतोपिकिंव्यथास्तीतिभावः ॥ ५३—५४ ॥ अभिशप्स्यामि नतुभस्मीकरोमीतिभावः । सुदुःखमतिदारुणमिति क्रियाविशेषणं ॥ ५५ ॥ यद्यस्मात्कारणात् मम एतत् मरणपर्यवसायि । पुत्रव्यसनजंदुःखं अभूदितिशेषः । एवंपुत्रशोकेनकालंकरिष्यसि मृत्युंप्राप्स्यसीत्यर्थः । " कालोमृत्यौचसमये " इति

तारः । एतेन यामिच्छसितांगच्छेतिसूचितम् ॥ ४५ ॥ **शि०** अस्मिन् तपस्विकुले जातःकश्चिदपिजनः येनहेतुना अकुशलांगतिंनगच्छति तेनैवहेतुना ममबान्धवः निहतस्सभवान् अकुशलांगातिंनैवयास्यति । एतेनब्रह्मवित्तपस्विकुलस्यदोषास्पर्शित्वंसूचितं । तेनतत्कुलस्यब्रह्मवेत्तृत्वंव्यक्तम् ॥ ४६ ॥ **ति०** आरुह्य पुनश्शक्रेणसहागत्याबभाषेइत्यन्वयः । अस्यैवप्रपञ्चः—**आश्वस्येत्यादि** । अत्रवक्तुश्शोकग्रस्ततयाऽऽबभाषे अब्रवीदितिपौनरुक्त्यंनदोषाय । **शि०** शक्रेणसहतापसःतौमुहूर्तमाबभाषे आश्वासयामासेत्यर्थः । आश्वास्यपितरमिदमब्रवीत् । चशब्देन मातरंचाश्वास्य ॥ ४९ ॥ **ति०** भवतोरिति । अनेन मातापितृसेवा धर्मान्तराभावेपिसैवेन्द्रसालोक्यदेतिध्वनितं ॥ ५० ॥ **शि०** येनहेतुनामेबालःत्वयानिहतः तेनैवहेतुनात्वां अतिदारुणं असह्यं सुदुःखंशप्स्येबोधयामि । लृड्ुपात्तभविष्यत्त्वस्याविवक्षा। शपोबोधनार्थकत्वंतु "नीवींप्रतिप्रणिहितेतुकरेप्रियेणसख्यश्शपामियदिकिंचिदपिस्मरामि" इत्यादिनामनोरमादौस्पष्टम् ॥ ५५ ॥ कालं पुत्रसंयोगजनितसुखसमयं । करिष्यसि त्यक्ष्यसि । विक्षेपणार्थककृधातोर्लृट् ॥ ५६ ॥

[ **पा०** ] १ क. ख. त्वस्मत्कुले. २ च. बान्धव. ३ ङ. छ. झ. ट. तथोक्त्वा. घ. सतस्मै. ४ छ. सच. ख. ततो. ५ च. मभ्यारुहत्क्षिप्रं. घ. मध्यारुहच्छीघ्रं. ६ ख. ङ. च. झ. ञ. ट. शक्रेणसह. ७ ङ. झ. आश्वस्य. ८ क. ख. च. ञ. मुहूर्तंतौ. ९ ङ. झ. ट. पितरं. १० ख. घ. ङ. झ. ञ. मुपैष्यथः. ११ क. ख. छ. झ. ञ. ट. कृत्वाथोदकं. ङ. कृत्वाप्युदकं. १२ क. ख. ङ. च. झ. ञ. ट. यःशरेण. १३ इदमर्धत्रयं क. पाठेदृश्यते. १४ ङ. च. छ. झ. ञ. ट. त्वयापिचयदज्ञानात्. ख. त्वयाद्यतुयदज्ञानात्. १५ ङ. च. छ. झ. ञ. ट. सबालकः. १६ घ. त्वाहंच. ज. त्वामपि. १७ च. छ. झ. ञ. ट. शप्स्येहं. १८ घ. ग. गमिष्यसि.

अज्ञानात्तु हतो यस्मात्क्षत्रियेण त्वया मुनिः ॥ तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप ॥५७॥
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति ॥ जीवितान्तकरो घोरो दातारमिव दक्षिणा ॥ ५८ ॥
एवं शापं मयि न्यस्य विलप्य करुणं बहु ॥ चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५९ ॥
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् ॥ तदा बाल्यात्कृतं देवि शब्दवेध्यनुकर्षिणा ॥ ६० ॥
तस्यायं कर्मणो देवि विपाकः समुपस्थितः ॥ अपथ्यैः सह संभुक्तो व्याधिमन्नरसो यथा ॥ ६१ ॥
तस्मान्मामागतं भद्रे तस्योदारस्य तद्वचः ॥ यदहं पुत्रशोकेन संत्यक्ष्याम्यद्य जीवितम् ॥ ६२ ॥
चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये साधु मा स्पृश ॥ इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिपः ॥६३॥
एतन्मे सदृशं देवि यन्मया राघवे कृतम् ॥ सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥ ६४ ॥

वैजयन्ती ॥ ५६ ॥ ब्रह्महत्या बहुपातकमित्यर्थः । अन्यथा वैश्याच्छूद्रायांजातस्यकरणाख्यसंकरजातित्वेन ब्रह्महत्याप्रसक्त्यभावात् ॥ ५७ ॥ एतादृशः पुत्रशोकरूपः । भावः स्वभावः । दातारमिवदक्षिणा यथाविप्रायदक्षिणादत्तादातारंस्वसदृशफलं प्रापयतितथेत्यर्थः । पुत्रशोकातिशयेन इहजन्मन्येवफलमनुभविष्यसीतिधियाक्षिप्रमित्युक्तवान् । दक्षिणाशब्देनदक्षिणाहेतुकंसुकृतंलक्ष्यते ॥ ५८ ॥ देहमित्येकवचनेन चितारोहणकालेदेहयोर्गाढबद्धत्वंलक्ष्यते ॥ ५९ ॥ शब्दवेध्यनुकर्षिणा शब्दवेधिनंबाणंप्रयुञ्जानेन । यद्वा शब्दवेधिनंबाणंमुक्त्वा पुनस्तच्छरीरप्रोतशल्यमनुकृष्टवतेत्यर्थः । चिन्तयानेन मरणपर्यवसायीपुत्रशोकःप्राप्तःअस्यकिंनिदानमितिचिन्तयानेन । एतत्पापंस्मृतं मुनिकुमारवधरूपंपापंस्मृतिविषयमभूदित्यर्थः ॥ ६० ॥ अपथ्यैः व्याधिविवर्धकैःव्यञ्जनैः । सहसंभुक्तः अन्नरसः व्याधिमुल्बणयन्निति शेषः । समुपस्थितोभवति बाधकत्वेनप्राप्तोभवति । अपथ्यैःसहसंभुक्तेव्याधिरन्नरसेयथेतिचपाठः ॥ ६१ ॥ उदारस्य शापप्रदातुरुदारत्वोक्तिरपुत्रस्यपुत्रसंपादनपरत्वात् । यद्वा उदारस्य महतः । "उदारोदातृमहतोः" इत्यमरः । वचोमामागतं शापरूपवचनार्थो मांप्राप्तइत्यर्थः ॥ ६२ ॥ मा मां ॥ ६३ ॥ "इत्युक्त्वासरुदंस्त्रस्तोभार्यामाहचभूमिपः" इत्यर्धानन्तरं "एतन्मेसदृशंदेवियन्मयाराघवेकृतम् । सदृशंतत्तुत-

**शि०** ब्रह्महत्या ब्रह्महत्यासदृशकरणवधजनितपापंत्वांनाविशति । ब्रह्महत्याशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । अतएवब्राह्मणजातिनिषेधकैतत्पुत्रोक्त्यानविरोधः । यदिचेहब्रह्मशब्देनब्रह्मज्ञान्युच्यते तदाशङ्कोत्तरयोर्निर्दलत्वंबोध्यम् ॥ ५७ ॥ **ति०** यथा तत्तद्वस्तुदक्षिणांदातारं । यथासादक्षिणाऽन्यतःप्राप्ताभवतितद्वत् । **शि०** दोषस्पर्शित्वाभावेपिपरमात्मेच्छाननिवार्येतिबोधयन्नाह—**त्वामिति** । जीवितान्तकरः पालनविघातकः अतएवघोरः । एतादृशः मत्खेदसदृशखेदस्य । भावः सत्ता दक्षिणां सर्वस्वादिरूपां दातारंत्वामपि आगमिष्यति । इवोहेतौ । यदिमकाररहितःपाठस्तदा दक्षः अतिसामर्थ्यमस्त्यस्येतिदक्षी तेन दक्षिणा परमात्मेच्छारूपकालेनहेतुनाआगमिष्यतीत्यर्थः ॥ ५८ ॥ **शि०** एवं अनेनप्रकारेण । मयिशापं भविष्यत्कालिकवस्तुबोधनं । न्यस्य उक्त्वेत्यर्थः ॥ ५९ ॥ **स०** मयास्वयमेवस्मृतं नतुपरोद्बोधनेन । शब्दवेधीचासौबाणानुकर्षीचेतितथोक्तः तेन । **ति०** तीर्थस्तु शब्दवेध्यानुशिक्षिणेतिपाठं शब्देनवेद्धुंयोग्यंशब्दवेध्यंमदनुशिक्षितुंशीलंयस्यतेनेत्यर्थंचाह । तदसमञ्जसमिति स्पष्टमेव । **शि०** यत् आबाल्यात् ईषदज्ञानात् पापंकृतं तच्चिन्तयानेन चिन्तयमानेन शब्दवेध्यनुकर्षिणा शब्दवेधिनाबाणेन अनुकर्षति प्राणानपहरति तच्छीलेनमयातदेतन्मुनिवचनंस्मृतं ॥ ६० ॥ **शि०** परमात्मेच्छायत्तस्वदुःखस्यकर्मफलत्वेनोत्प्रेक्ष्याह—**तस्येति** । तस्य मुनिदुःखदानरूपस्य कर्मणः अयंविपाकः फलं समुपस्थितः प्राप्तः । नन्वज्ञानाज्जातस्यकर्मणःकथंफलप्राप्तिरित्यतआह । अपथ्यैः अपक्वहरितालादिभिस्सहअन्नरसेभुक्ते अज्ञानतोपिभक्षितेसतिव्याधिर्यथा ॥ ६१ ॥ **शि०** जीवितं प्रजापालनं इहलोकेस्थितिमित्यर्थः । संत्यजिष्यामि । अतस्त्वांनपश्यामि अतएवत्वमपिमास्पृश मामितिशेषः । मेतिपाठः अतएवमा मामितिभूषणेव्याख्यातं ॥ ६२ ॥ **ति०** राघवेयन्मयाकृतंविवासनरूपं तन्मेवृत्तस्यसदृशंन । अनेनरामेण यन्मयिकृतं राज्यं

**[ पा० ]** १ ग. मेवं. ख. घ. ञ. ट. मेवागमिष्यति. २ ङ. ज—ट. दक्षिणां. ३ क. ख. ङ. च. ज—ट. संभुक्ते व्याधिरन्नरसे. ४ ख. ट. तस्मान्ममागतं. ५ यदहंपुत्रशोकेनेत्यर्धमारभ्यद्रक्ष्यन्तिनहिमानवाइत्यन्तानांदशानामर्धानांपौर्वापर्यं. क—ट. पुस्तकेषु. इत्युक्त्वा. यदहं. चक्षुर्भ्यां. यमक्षयं. यदिमां. धनंवा. नतन्मे. सदृशंतत्तुदुर्वृत्तमपि. कथ्यप्रव्राज्यमानोवा. एवं क्रमेणदृश्यते. ञ. यद्येवं. ६ ङ. च. छ. झ. ञ. ट. संत्यजिष्यामि. ७ क. च. छ. ञ. ट. त्वंहिमास्पृश. ङ. त्वंहिसंस्पृश. ख. झ. त्वंहिमांस्पृश. घ. ज. साधुमांस्पृश. ८ ङ. झ. ट. माहतुभूमिपः. घ. ज. माहचभूपतिः. ९ क. ख. घ—ट. नतन्मे.

दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः ॥ कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः ॥ ६५ ॥
यदि मां संस्पृशेद्रामः सकृदद्य लभेत वा ॥ [धनं वा यौवराज्यं वा जीवेयमिति मे मतिः] ॥
यमक्षयमनुप्राप्ता द्रक्ष्यन्ति न हि मानवाः ॥ ६६ ॥
चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ॥ दूता वैवस्वतस्यैते कौसल्ये त्वरयन्ति माम् ॥ ६७ ॥
अतस्तु किं दुःखतरं यदहं जीवितक्षये ॥ न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् ॥ ६८ ॥
तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः ॥ उच्छोषयति मे प्राणान्वारि स्तोकमिवातपः ॥ ६९ ॥
न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम् ॥ मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ॥ ७० ॥
पद्मपत्रेक्षणं सुभ्रु सुदंष्ट्रं चारुनासिकम् ॥ धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं मुखम् ॥ ७१ ॥
सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च ॥ सुगन्धि मम नाथस्य धन्या द्रक्ष्यन्ति तन्मुखम् ॥ ७२ ॥
निवृत्तवनवासं तमयोध्यां पुनरागतम् ॥ द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा ॥ ७३ ॥
कौसल्ये चित्तमोहेन हृदयं सीदतीव मे ॥ वेदये न च संयुक्ताञ्शब्दस्पर्शरसानहम् ॥ ७४ ॥
चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ॥ क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा ॥ ७५ ॥
अयमात्मभवः शोको मामनाथमचेतनम् ॥ संसादयति वेगेन यथा कूलं नदीरयः ॥ ७६ ॥
हा राघव महाबाहो हा ममायासनाशन ॥ हा पितृप्रिय मे नाथ हाऽद्य क्वासि गतः सुत ॥ ७७ ॥

स्यैवयदनेनकृतंमयि " इतिक्रमः ॥ ६४ ॥ एतदर्थद्वयंक्रमेणोपपादयति—दुर्वृत्तमित्यर्धद्वयेन ॥ ६५ ॥ रामः सकृदप्यद्यमांसंस्पृशेत् लभेतवा चक्षुर्विषयतांप्राप्नुयाद्वा । तदा जीवेयमितिगम्यमानत्वात्तदुक्तिः । किमर्थमेवमर्थनंकरोषीत्यत्राह—यमेति । यमक्षयं यमगृहमनुप्राप्ताःमानवाः बान्धवान्नद्रक्ष्यन्तिहीत्यर्थः । तस्माज्जीवनकालएवदर्शनमपेक्ष्यत इतिभावः ॥ ६६—६८ ॥ अप्रतिकर्मणः प्रतिक्रियारहितस्य । स्तोकं अल्पं । " स्तोकाल्पक्षुल्लकाः " इत्यमरः ॥ ६९ ॥ मनुष्याः जरायुक्तान भवन्ति किंतु देवाः नित्ययौवनाः । " अहंपुनर्देवकुमाररूपमलंकृतंतंसुतमाव्रजन्तम् । नन्दामिपश्यन्नपिदर्शनेनभवामिदृष्ट्वाचपुनर्युवेव " इतिहिपूर्वमुक्तवान् । चारुशुभकुण्डलं तन्मुखसंयोगात्कुण्डलमतीवशोभांप्राप्तमित्युच्यते ॥ ७०—७२ ॥ मार्गगतं शुक्रंयथा मौढ्यंविहायस्वस्थानगतंशुक्रमिव ॥ ७३ ॥ चित्तमोहेन चित्तस्यमोहोदुःखातिशयप्राप्तामूर्छा तयेत्यर्थः । " मूर्छातुकश्मलंमोहः " इत्यमरः । हृदयं मनसोधिष्ठानं । सीदतीव विशीर्यतीव । संयुक्तान् इन्द्रियसंयुक्तान् । नवेदये नजाने ॥ ७४ ॥ हृदयविशरणेनशब्दाद्यज्ञानेहेतुमाह—चित्तनाशादिति । संसक्ताः दीपाविनाभूताः । यथास्नेहनाशकृतदीपनाशाद्रश्मिनाशः एवंशरीरशैथिल्यकृतचित्तनाशादिन्द्रियनाशइतिसूचितं ॥ ७५—७६ ॥ आयासनाशन

त्यक्त्वामद्वचःपरिपालनरूपं तत्तस्यैवसदृशं । अनन्वयोत्रालङ्कारः । मत्सदृशोऽन्यायकृत् रामसदृशउचितकर्ताचकोपिनास्तीत्यर्थः ॥ ६४ ॥ **शि०** ननुकुतोनमांपश्यसीत्यतआह—**यमक्षयमिति** । यमस्यकालगतेःक्षयःविध्वंसोयस्मिंस्तं कालागम्यसाकेतलोकमित्यर्थः । **ति०** अन्वारभेत किंचिद्द्वारावास्पृशेत् । यदिवाधनंकोशंयौवराज्यंवालभेततदाजीवेयं ॥ ६६ ॥ **शि०** चक्षुषेति मयिविद्यमानास्मृतिःरामभिन्नविषयकस्मरणंविलुप्यते स्मृत्यन्तराभावेहेतुमाह—**दूताइति** । स्वतस्य स्वःस्वकीयश्चासौसःरामः तस्य । किंच सु शोभनःअतःगुणद्वारासर्वत्रव्याप्तिर्यस्यतस्यरामस्य एते प्रसिद्धा गुणाः दूताव दूताइव । त्वरयन्ति रामसंनिधिंद्रुतं प्राप्तुमुत्साहयन्तीत्यर्थः । वैनिश्चितमेतत् ॥ ६७ ॥ **कतक०** शुक्रंमार्गगतंयथेतिपाठः । हस्तात्पञ्जराद्वाऽन्यदेशगतं । पुनश्च मार्गे यथास्थानं गतं प्राप्तं शुकं क्रीडाशुकमिवेत्यर्थः । **स०** शुकमितिपाठे शुकं पञ्जरादुत्पत्यपुनरागतं । अवधूतत्वेनाशक्यदर्शनंकदाचिद्दृष्टपुण्यविशेषेणमार्गगतंव्यासपुत्रमितिवार्थः ॥ ७३ ॥ **ति०** संरक्ताः भस्मतांप्राप्ताः । यथादीपस्यरश्मयोविपद्यन्तेतथेन्द्रिया-

**[ पा० ]** १ क. ख. ग. ङ. च. झ. ज. ट. सकृदन्वारभेत. घ. सकृदप्यालभेत. २ ग. घ. ज. प्रेक्षन्ते. ३ घ. च. ञ. ततस्तु. ४ ङ. च. झ. ञ. ट. वैप्राणान्. ५ ङ. च. छ. झ. ञ. ट. ताराधिपसमं. ६ ङ. छ. झ. ञ. ट. रामस्य. ७ ङ. झ. ट. येमुखं. ८ ख. ज. शुकं. ९ ङ. च. झ. ञ. ट. वेन्द्रियाणिहि. १० ङ. च. ज—ट. संरक्ताः. ११ क. ख. मचेतसं. १२ घ. तीरं. १३ क. ग.—च. ज.—ट. हाममासि. ख. हाहाक्वासि.

हा कौसल्ये न[1]शिष्यामि हा सुमित्रे तपस्विनि ॥ हा नृशंसे ममामित्रे कैकेयि कुलपांसनि ॥ ७८ ॥
इति रा[2]मस्य मातुश्च सुमित्रायाश्च सन्निधौ ॥ राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥ ७९ ॥
य[3]दा तु दीनं कथयन्नराधिपः प्रियस्य पुत्रस्य विवासनातुरः ॥
गतेऽर्धरात्रे भृशदुःखपीडितस्तदा जहौ प्राणमुदारदर्शनः ॥ ८० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

प्रभातेवन्दिप्रमुखानांसवाद्यघोषमुद्धोषणेपिराज्ञोऽप्रबोधेसमीपवर्तिनीभिःस्त्रीभिरुपायेनतस्यजीवितापगमनिर्धारणेनशोकादुत्क्रोशनम् ॥ १ ॥ ततःप्रबुद्धाभ्यांकौसल्यासुमित्राभ्यामन्याभिश्चस्त्रीभिःशोकादुच्चैःपरिदेवनम् ॥ २ ॥

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि ॥ वन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥ १ ॥
सूताः परमसंस्कारा मङ्गला[4]श्चोत्तमश्रुताः ॥ गा[5]यकाः स्तु[6]तिशीलाश्च नि[7]गदन्तः पृथक्पृथक् ॥ २ ॥
राजानं स्तुवतां ते[8]षामुदात्ताभिहिताशिषाम् ॥ प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्य[9]वर्तत ॥ ३ ॥
ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः ॥ अपदानान्युदाहृत्य पाणि[10]वादानवादयन् ॥ ४ ॥
तेन शब्देन विहगाः प्रति[11]बुद्धा विसस्वनुः ॥ [12]शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥ ५ ॥
व्याहृताः पुण्यशब्दाश्च वी[13]णानां चापि निःस्वनाः ॥ आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ॥ ६ ॥

---

दुःखनाशन ॥ ७७—८० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

अथेत्यादिश्लोकद्वयमेकंवाक्यं । रात्र्यां रात्रिशेषे । परमसंस्काराः व्याकरणाद्युत्तमसंस्कारयुक्ताः । श्रेष्ठालंकारयुक्तावा । वन्दिनइतिपूर्वमुक्तत्वात्सूताः वंशावलिकीर्तकाः । मङ्गलाः मङ्गलपाठकाः । उत्तमंश्रुतं गान्धर्वशास्त्रश्रवणंयेषांते उत्तमश्रुताः । एतद्विशेषणद्वयंगायकमात्रविशेषणं । अन्यत्सर्वविशेषणं । सर्वत्रपर्युपातिष्ठन्नितिक्रियापदं ॥ १—२ ॥ उदात्ताभिहिताशिषां उदात्तेनउच्चैःस्वरेण अभिहिताःप्रयुक्ताःआशिषोयैस्तेषां । प्रासादाभोगविस्तीर्णः प्रासादेषुआभोगः परिपूर्णता तयाविस्तीर्णः । "आभोगःपरिपूर्णता" इत्यमरः ॥ ३ ॥ स्तुवतां स्तुवत्सुसत्सु । पाणिवादकाः तालगत्याविविधंपाणिभ्यांवादयन्तीतिपाणिवादकाः । अपदानानि वृत्तान्यद्भुतकर्माणि । पाणिवादानवादयन् पाणिवादानकुर्वन्नित्यर्थः ॥ ४ ॥ शाखास्थाः गृहारामवृक्षशाखासुवर्तमानाः । राजकुलगोचराः राजगृहेदृश्यमानाः । विहगाः शुकादयः ॥ ५ ॥ व्याहृताः ब्राह्मणैरुक्ताः । पुण्यशब्दाः पुण्यपुरुषक्षेत्रतीर्थकीर्तनादिरूपाः । पूरयामासुरिति विपरिणामेनयोजनीयं । गाथानां दशरथविषयप्रबन्धविशेषाणां संबन्धि आशीर्गेयं आशीर्वादरूपगानं ॥ ६ ॥

---

णीत्यर्थः ॥ ७५ ॥ **शि०** हेतिअनृशंसे क्रूरचेष्टारहिते । अतएव आमित्रे अतिप्रिये कुलपांसनि कुलाधिपप्रकाशिकेकैकेयि ॥ ७८ ॥ **शि०** जीवितान्तं पालनाभावं अप्रकटसाकेतलोकमित्यर्थः ॥ ७९ ॥ **शि०** प्राणं पालनंजहौ अप्रकटसाकेतंप्रापेत्यर्थः ॥ ८० ॥ इतिचतुष्षष्टितमस्सर्गः ॥ ६४ ॥

**ति०** मागधाः वंशावलीकीर्तकाः । **शि०** मङ्गलाः गणपत्यादिस्तवपाठकाश्च । मागधाश्चेतिपाठान्तरं । राजवंशपरंपरावक्ता-

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. नपश्यामि. क—घ. ज. विनश्यामि. २ क. ख. ङ. च. झ. ञ. ट. मातुश्चरामस्य. ३ ग. ङ. च. झ. ट. तथातुदीनः. क. ख. घ. ज. तथातुदीनं. ४ क. ख. ङ. झ. ञ. मागधाश्चोत्तमश्रुताः. ज. मागधाश्चोत्तमाशिषः. ग. घ. मङ्गलाश्चोत्तमाशिषः. ५ ग. गायनाः. ६ ङ. झ. ट. श्रुतिशीलाश्च. ७ च. ज. ञ. निनदन्तः. ८ च. तत्रउत्तमाभिहिताशिषां. ज. तेषामुदाराभिहिताशिषां. ९ क ह्यवर्धत. ख. ग. ज. व्यवर्धत. १० घ. ङ. च. झ. ट. वादान्यवादयन्. ११ ङ. ज. झ. ट. बुद्धाश्चसस्वनुः. च. ञ. बुद्धाश्चसस्वनाः. क. बुद्धाविसस्वनुः. १२ क. शारिकाः. १३ क. वीणानांचैव.

ततः शुचिसमाचाराः पर्युपस्थानकोविदाः ॥ स्त्री[1]वर्षधरभूयिष्ठा उपतस्[2]थुर्यथापुरम् ॥ ७ ॥
हरिचन्द[3]नसंपृक्तमुदकं काञ्चनैर्घटैः ॥ आनिन्युः स्नानशिक्षाज्ञा यथाकालं यथाविधि ॥ ८ ॥
मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् ॥ [4]उपनिन्युस्तथाऽप्यन्याः कुमारीबहुलाः स्त्रियः ॥९॥
सर्वलक्षणसंपन्नं सर्वं विधिवदर्चितम् ॥ सर्वं सुगुणलक्ष्मीव[5]त्तद्बभूवाभिहारिकम् ॥ १० ॥
[6]तत्तु सूर्योदयं यावत्सर्वं परिसमुत्सुकम् ॥ तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितम् ॥ ११ ॥
अथ याः कोसलेन्द्रस्य शयनं प्रत्यनन्तराः ॥ ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२॥
[7]तथाप्युचितवृत्तास्ता विनयेन नयेन च ॥ न ह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ॥ १३ ॥
ताः स्त्रियः स्वप्नशीलज्ञाश्चे[8]ष्टासंचलनादिषु ॥ ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ॥
प्रतिस्रोतस्तृणाग्राणां सदृशं सं[9]चकाशिरे ॥ १४ ॥
अथ [10]संवेपमानानां स्त्रीणां दृष्ट्वा च पार्थिवम् ॥ यत्तदाशङ्कितं पापं [11]तस्य जज्ञे विनिश्चयः ॥ १५॥

पर्युपस्थानकोविदाः कालोचितपरिचर्याविचक्षणाः । स्त्रीवर्षधरभूयिष्ठाः अन्तःपुराध्यक्षस्त्रीभिः वर्षधरैःषण्ढैश्चसमृद्धाः परिचारकाइतिशेषः ॥ ७ ॥ हरिचन्दनसंपृक्तं हरिचन्दनसंमिश्रं । स्नानशिक्षाज्ञाः स्नानप्रकारज्ञाः । यथाविधि यथानियमं ॥ ८ ॥ मङ्गलालम्भनीयानि मङ्गलरूपानुलेपनानितैलोद्वर्तनादीनि । स्पर्शनीयानिगवादीनीत्येके । प्राशनीयानि दन्तधावनानन्तरंगण्डूषत्वेनप्राशनीयानि । संपिष्टतिलनारिकेलजीरकादिद्रव्याणि औषधविशेषानितिवार्थः । गङ्गादितीर्थोदकानीतिवार्थः । अनुदिनमखिलदुरितहरणायाखिलकर्मणामधिकारापादनायचप्राशनीयानि कुलाराधनभूतश्रीरङ्गनाथचरणारविन्दसमर्पिततीर्थोदकतुलस्यादीनीतिवार्थः । तीर्थोदकभाजनावरणपेटिकादेरेवपरिचारकैरानयनंज्ञेयं । उपस्करान् दर्पणवस्त्राभरणकुसुमादीनि । कुमारीबहुलाः कुमारीप्रायाः । स्त्रियइतिद्वितीया । वारयोषितइतियावत् ॥ ९ ॥ आभिहारिकं राज्ञेप्रातर्यदाहर्तव्यं मङ्गलार्थमानेतव्यं । तत्सर्वं सर्वलक्षणसंपन्नत्वादिधर्मविशिष्टंबभूव । सुगुणंचतत्लक्ष्मीवच्चेतिसमासः ॥ १० ॥ तत् पूर्वोक्तं परिजनजातं । सूर्योदयंयावत् सूर्योदयात्पूर्वमेव । परिसमुत्सुकं राजसेवासमुत्सुकं । अनुपसंप्राप्तं अनागतंराजानंप्रति । किंस्विदित्युपशङ्कितंसत् तस्थौ । राजानागतः तस्यकिंवास्यादितिशङ्कासंयुक्तंतस्थावित्यर्थः ॥११॥ याः कौसल्यादिव्यतिरिक्ताः । शयनंप्रत्यनन्तराः शयनसन्निकृष्टाइत्यर्थः । प्रत्यबोधयन् प्रबोधनोचितसविनयमृदुवाक्यैःप्राबोधयन्नित्यर्थः ॥१२॥ तथापि बोधयित्वापि । उचितवृत्ताः स्पर्शनादिव्यापारोचिताः । विनयेन प्रश्रयेण । नयेन युक्त्याच । अस्यशयनं शयनस्थानं । स्पृष्ट्वा किंचिदपि निद्रालक्षणं उच्छ्वासादिकं । नलेभिरे नज्ञातवत्यः ॥ १३ ॥ एतदेवोपपादयति—ताइति । स्वप्नशीलज्ञाः स्वापस्वभावज्ञाः । ताः पूर्वोक्ताःस्त्रियः । चेष्टासंचलनादिषु चेष्टा हस्तपादादिचलनं संचलनं हृदयादिस्पन्दनं आदिशब्देननिश्वासादिकंगृह्यते । तेषुकिंचिन्नोपलेभिरेइत्यनुषङ्गेणसंबन्धः । वेपथुना कम्पेन परीताःव्याप्ताः। ताः स्त्रियः । राज्ञःप्राणेषुशङ्किताःसत्यः प्रतिस्रोतस्तृणाग्राणां नदीप्रवाहाभिमुखवेतसादितृणाग्राणां । सदृशं तुल्यंयथातथा । संचकाशिरे संचकम्पिरइत्यर्थः ॥ १४ ॥ यत्पापं मरणरूपमाशङ्कितं तस्यनि-

रइतितदर्थः । अस्मिन्पक्षे सूतशब्दःपौराणिकार्थकः ॥ २ ॥ **ति०** स्नानशिक्षाज्ञाः अरुणोदयात्पूर्वमेवोषसिस्नानार्थंजलाद्यानेतव्यमितिशिक्षाज्ञाः ॥ ८ ॥ **शि०** स्पृष्ट्वा अत्रास्तिनास्तिवेतिशङ्कानिवृत्त्यर्थंसंस्पृश्य । किंचित् राजनित्यधार्यवस्त्रादिकमपिनोपलेभिरे शय्यायांनप्रापुः । एतेन सवस्त्राभरणशरीरसहितस्साकेतलोकंजगामेतिसूचितं ॥ १३ ॥ **ति०** संचलनाडिषु हृदयकरमूलनाडिषु । चेष्टांनोपलेभिरे । ततोवेपथुयुक्ताराज्ञःप्राणेषुशङ्किताआसन् ॥ १४ ॥ **ति०** संदेहमानानां संदिहानानां । **शि०** तस्यनिश्चयः

**[ पा० ]** १ क—ङ. ज—ट. वर्षवर. २ ङ. च. ज—ट. यथापुरा. ३ क. ख. ङ. संयुक्तं. ४ ङ. च. झ. ञ. ट. उपानिन्युस्तथापुण्याः. ५ ङ. छ. झ. ट. त्तदभूदाभि. ६ ङ. छ. झ. ट. ततः. ७ ङ. छ. झ. ट. अथाप्युचित. ८ ङ. झ. ञ. चेष्टांसंचलनाडिषु. ९ क. संचकंपिरे. १० ङ. च. छ. झ. ञ. ट. संदेहमानानां. ११ ङ. छ. ट. तदा.

कौसल्या च सुमित्रा च पुत्रशोकपराजिते ॥ प्रसुप्ते न प्रबुध्येते यथाकालसमन्विते ॥ १६ ॥
नि[1]ष्प्रभा च विवर्णा च सन्ना शोकेन संनता ॥ न व्यराजत कौसल्या तारेव तिमिरावृता ॥१७॥
कौसल्याऽनन्तरं राज्ञः सुमित्रा तदनन्तरम् ॥ न स्म विभ्राजते देवी शोकाश्रुलुलितानना ॥ १८॥
ते च दृष्ट्वा त[2]था सुप्ते उभे देव्यौ च तं नृपम् ॥ सु[3]प्तमेवोद्गतप्राणमन्तःपुरम[4]दृश्यत ॥ १९ ॥
ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः ॥ करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥ २० ॥
तासामाक्रन्दशब्देन सहसोद्गतचेतने ॥ कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥ २१ ॥
कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पा[5]र्थिवम् ॥ हा ना[6]थेति परिक्रुश्य पेततुर्धरणीतले ॥२२॥
सा कोसलेन्द्रदुहिता वेष्टमाना महीतले ॥ न ब[7]भ्राज रजोध्वस्ता तारेव [8]गगनाच्च्युता ॥ २३ ॥
नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि ॥ अपश्यंस्ताः स्त्रियः सर्वा हतां नागवधूमिव ॥ २४ ॥
ततः सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः ॥ रुदन्त्यः शोकसंतप्ता निपेतुर्गतचेतनाः ॥ २५ ॥
ताभिः स बलवान्नादः क्रोशन्तीभिरनुद्रुतः ॥ येन स्थि[9]रीकृतं भूयस्तद्गृहं समनादयत् ॥ २६ ॥
[10]तत्समुत्रस्तसंभ्रान्तं पर्युत्सुकजनाकुलम् ॥ सर्वतस्[11]तुमुलाक्रन्दं परितापार्तबान्धवम् ॥ २७ ॥
सद्यो निपतितानन्दं दीनवि[12]क्लबदर्शनम् ॥ बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥ २८ ॥
अतीतमाज्ञाय तु पार्थिवर्षभं यशस्विनं सं[13]परिवार्य पत्नयः ॥

श्रेयस्तदाजज्ञइतिसंबन्धः ॥ १५ ॥ पुत्रशोकेनपराजिते आक्रान्ते अतएव यथाकालसमन्विते मृतेइव प्रसुप्ते नप्रबुध्येते ॥ १६ ॥ निष्प्रभा निश्श्रीका । विवर्णा पूर्ववर्णाद्विपरीतवर्णा । शोकेन सन्ना कृशा । संनता कार्श्येननम्रा । तिमिरावृता उत्पातकालोत्थधूमस्तिमिरं तेनावृता । तारेव तारकेव । नव्यराजत ॥ १७ ॥ प्रथमंराजानविभ्राजतेस्म राज्ञोऽनन्तरंकौसल्या शोकाश्रुलुलिताननासती नविभ्राजतेस्म । तदनन्तरंदेवीतथाविधासुमित्रा नविभ्राजतेस्म । मृताद्दशरथात् जीवन्त्योःकौसल्यासुमित्रयोर्विशेषोनासीदित्यर्थः ॥ १८ ॥ सुप्तेतेउभेदेव्यौचदृष्ट्वा सुप्तमेव सन्तमुद्गतप्राणंतंनृपंच । अन्तःपुरं अन्तःपुरजनः । अदृश्यत अपश्यत् ॥ १९—२० ॥ सहसोद्गतचेतने सहसोत्पन्नप्रबोधे ॥ २१—२३ ॥ शान्तगुणे शान्तदेहोष्णस्पन्दनादिगुणे ॥ २४—२५ ॥ सनादः कौसल्याप्रभृतीनांनादः । क्रोशन्तीभिस्ताभिः पश्चात्प्रविष्टकैकेयीप्रभृतिभिः अनुद्रुतः अनुसृतोभूत् । येनानन्तरक्रोशानुद्रुतेनपूर्वनादेनस्थिरीकृतंव्याप्तं तत्सर्वंगृहंसमनादयत् महान्तंप्रतिध्वनिमजनयदित्यर्थः ॥ २६ ॥ पर्युत्सुकजनाकुलं पूर्वंपर्युत्सुकजनाकुलंसद्म नरदेवस्यदिष्टान्तमीयुषः नरदेवेमरणंप्राप्तेसति । समुत्रस्तसंभ्रान्तं समुत्रस्तं उद्विग्नं संभ्रान्तं अनवस्थितंच । इत्येवमादिविशेषणयुक्तंबभूवेतिसंबन्धः ॥२७—२८॥ आज्ञाय सम्यक्ज्ञात्वा । पत्नयः पत्न्यः । बाहूप्रगृह्य

तदातस्मिन्कालेजज्ञे ॥ १५ ॥ **ती०** यद्वा अन्तःपुरस्यकर्तृत्वंकर्मत्वंच । तथाचायमर्थः । अन्तःपुरं स्वमात्मानंउद्गतप्राणं अदृश्यत अपश्यत् कर्तरियक् ॥ १९ ॥ **ति०** हाभर्तेति हाभर्तरितीत्यर्थः । **स०** हाभर्तेति । शोकाभिभूतत्वात्संबोधनाप्रयोगः ॥ २२ ॥ **ति०** अयोध्याजनपदवाचीकोशलशब्दस्तालव्यमध्यः । कौसल्यापितृदेशवाचीतुदन्त्यमध्यः ॥ २३ ॥ **ती०** अनुद्रुतः अभिसंवर्धितः । **ति०** येनानुद्रवणेनस्फीतीकृतोवर्धितःसनादः भूयोऽधिकंतद्गेहंसमनादयत् व्याप्तवान् ॥२६॥ **ति०** पर्युत्सुकजनाकुलं अपूर्ववृत्तान्तज्ञानायपर्युत्सुकजननिबिडं ॥ २७ ॥ **ति०** अनाथवत् अनाथार्हं । **स०** अनाथवत् स्वार्थेवतिः । अथवा जगद्रक्षकेरामेसति अनाथत्वाभावात्तथोक्तिः ॥ २९ ॥ इतिपञ्चषष्टितमस्सर्गः ॥ ६५ ॥

[ **पा०** ] १ ङ. छ. झ. ट. निष्प्रभासा. २ ङ. च. छ. झ. ञ. ट. तदा. ३ ख. सर्वमेव. ४ ख. मतप्यत. घ. ममन्यत. ५ क. तंनृपं. ६ क. ङ—ट. भर्तेति. ७ ङ. झ. ञ. ट. भ्राजते. ८ ख. ङ. झ. ट. गगनच्युता. ९ क—च. ज. झ. ट. स्फीतीकृतो. १० ङ. च. झ. ञ. ट. तत्परित्रस्त. ११ क. ख. च. ज. स्तुमुलाक्रान्तं. १२ ङ. ज—ट. दीनं. १३ ख. ङ. झ. ञ. ट. तंपरिवार्य.

भृशं रुदन्त्यः करुणं सुदुःखिताः प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ॥ ६६ ॥

कौसल्ययादशरथशिरसःस्वाङ्कसमारोपणेनकैकेयीगर्हणपूर्वकंरामादीन्प्रतिपरिशोचनम् ॥ १ ॥ अमात्यादिभिर्दशरथमालिङ्गथविलपन्त्याःकौसल्यायाअपसारणेनराजशरीरस्यतैलद्रोण्यांनिक्षेपपूर्वकंसायाह्नेशोकात्स्वस्वभवनगमनम् ॥ २ ॥

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम् ॥ हतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ॥ १ ॥
कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता ॥ उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २ ॥
सकामा भव कैकेयि भुङ्क्ष्व राज्यमकण्टकम् ॥ त्यक्त्वा राजानमेकाग्रा नृशंसे दुष्टचारिणि ॥ ३ ॥
विहाय मां गतो रामो भर्ता च स्वर्गतो मम ॥ विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४ ॥
भर्तारं तं परित्यज्य का स्त्री दैवतमात्मनः ॥ इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५ ॥
न लुब्धो बुध्यते दोषान्किंपाकमिव भक्षयन् ॥ कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥६॥
अनियोगे नियुक्तेन राज्ञा रामं विवासितम् ॥ सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७ ॥
स मामनाथां विधवां नाद्य जानाति धार्मिकः ॥ रामः कमलपत्राक्षो जीवनाशमितो गतः ॥ ८ ॥
विदेहराजस्य सुता तथा सीता तपस्विनी ॥ दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९ ॥

बाहूगृहीत्वेत्यर्थः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

॥१॥ राज्ञःशिरउपगृह्य अङ्केकृत्वेत्यर्थः ॥ २—३ ॥ विपथे दुर्मार्गे । सार्थहीना सहायभूतपथिकसंघरहितेत्यर्थः ॥ ४ ॥ त्यक्तधर्मणः त्यक्तधर्मायाः । "धर्मादनिच्केवलात्" इत्यनिच् ॥ ५ ॥ लुब्धः अर्थलिप्सुः । किम्पाकं कुत्सितपाकं । विषमिश्रपाकमित्यर्थः । किम्पाकोनाम काकमर्दनामकविषफलविशेषइतिकेचित् । कुब्जानिमित्तं कुब्जाहेतोः । "निमित्तपर्यायप्रयोगेसर्वासांप्रायदर्शनम्" इतिहेतौप्रथमा ॥ ६ ॥ अनियोगे वरप्रदानसमये वरस्यविशेषनिर्देशाभावेसति । नियुक्तेन इदानींभरताभिषेकरूपेरामविवासनरूपेचकैकेय्यानियुक्तेन । अनुचितनियोगेनियुक्तेनेतिवार्थः । जनकोवैदेहः ॥ ७ ॥ इतः अत्रदेशे । राज्ञा जीवनाशंगतः प्राप्तः । सरामः अनाथां पुत्रविरहेण रक्षकान्तररहितां । विधवांमांनजानाति ॥ ८ ॥ तपस्विनी शोचनीया । दुःखमितिक्रियाविशेषणं ।

स० अंबुहीनं अगस्त्यपानकाले ॥ १ ॥ ति० एकाग्रा पुत्रराज्यैकाग्रचित्ता ॥ २ ॥ ति० आत्मनोदैवतंभर्तारंपरित्यज्य त्यक्तधर्मणः त्यक्तःस्त्रीधर्मोययातादृश्याःकैकेय्याअन्यत्र अन्या । पुत्रराज्येकाजीवितुमिच्छेत् । परिष्वज्येतिपाठे भर्तारंपरिष्वज्य तेनसहभोगान्भुक्त्वा तंकालान्तरेपरित्यज्येतिशेषः ॥५॥ ति० किंपाकः निंबः । कतकस्तु किंपाकः विषभेदः तंकोपादिनाभक्षयन्नात्महत्यादोषंनबुध्यते तद्वदित्यर्थइत्याह । तत्रलुब्धइतिनात्यन्तंसमञ्जसं । धनलोभादिनापरस्यविषभक्षणंकारयन्यथाहत्यादोषंनबुध्यतेइतिवक्तुमुचितं । यत्कैकेय्याराघवाणांकुलंहतं तत्कुब्जानिमित्तं प्रेरकतया । स० लुब्धः वंचितः किंपाकं धत्तूरादिफलं । भक्षयन्यथानबुध्यते तथाराजादोषान्नबुध्यतइतिकेचित् । किंपाकः पलाशोवा । तद्भक्षणेक्षणेनोदरशूलेतिभिषजः । "किंपाकोमहाकालपलाशयोः" इतिमेदिनी ॥६॥ ति० जीवन्नेवनाशंअदर्शनंगतः । जीवनाशमितोगतइतिपाठे राज्ञोजीवनाशोयथाभवतितथा गतइत्यर्थः । शि० जीवन्नाशं जीवतां सफलजन्मनामृषीणांनाशोविध्वंसोयस्मिन्देशे तंदेशंइतोगतः । ती० यद्वा जीवनाशमितिपाठे जीवनाशं राज्ञइतिशेषः । मांविधवांचरामोनजानातीतिसंबंधः ॥ ८ ॥ ति० चारुतपस्विनी भर्तृसेवनादित्याशयः ॥ ९ ॥

[ पा० ] १ ग. ङ. च. छ. झ. ञ. ट. भूमिपं. २ क. ङ. छ. झ. ट. भर्तारंतु. च. ञ. भर्तारंच. ३ घ. विनियोगेननियुक्तेन. ख. नियोगेननियुक्तेन. ४ छ. झ. ट. जीवन्नाशं. ५ च. ञ. दीना. ङ. छ. झ. ट. चारु.

[1]नदतां भीम[2]घोषाणां निशासु मृगपक्षिणाम् ॥ [3]निशम्य नूनं संत्रस्ता राघवं संश्रयिष्यति ॥ १० ॥
वृद्धश्चैवाऽल्पपुत्रश्च वैदेहीमनुचिन्तयन् ॥ सोपि शोकस[4]माविष्टो [5]ननु त्यक्ष्यति जीवितम् ॥ ११ ॥
साऽहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता ॥ इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥ १२ ॥
तां ततः संपरिष्वज्य विलपन्तीं तपस्विनीम् ॥ [6]व्यपनीय सुदुःखार्तां कौसल्यां व्यावहारिकाः ॥१३॥
तैल[7]द्रोण्यामथामात्याः संवेश्य जगतीपतिम् ॥ राज्ञः [8]सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम् ॥१४॥
न तु सं[9]कलनं राज्ञो विना पुत्रेण मन्त्रिणः ॥ सर्वज्ञाः कर्तुमीषुस्ते ततो रक्षन्ति भूमिपम् ॥ १५ ॥
तैलद्रोण्यां [10]तु सचिवैः शायितं तं नराधिपम् ॥ हा मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः [11]पर्यदेवयन् ॥१६॥
[12]बाहूनुद्यम्य कृपणा नेत्रप्रस्रवणैर्मुखैः ॥ रुदन्त्यः शोकसंतप्ताः [13]कृपणं पर्यदेवयन् ॥ १७ ॥
हा महाराज रामेण सततं प्रियवादिना ॥ [14]विहीनाः सत्यसंधेन किमर्थं वि[15]जहासि नः ॥ १८ ॥
कैकेय्या [16]दुष्टभावाया राघवेण [17]वियोजिताः ॥ कथं [18]पतिघ्न्या वत्स्यामः समीपे विधवा वयम् ॥१९॥
स हि नाथः [19]सदाऽस्माकं तव च प्रभुरात्मवान् ॥ वनं रामो गतः श्रीमान्विहाय नृपतिश्रियम् ॥२०
त्वया तेन च वीरेण विना व्यसनमोहिताः ॥ कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः ॥२१॥
[20]यया तु राजा रामश्च लक्ष्मणश्च महाबलः ॥ सीतया सह संत्यक्ताः सा कमन्यं न हास्यति ॥२२॥
ता बाष्पेण च संवीताः शोकेन विपुलेन च ॥ [21]व्यवेष्टन्त निरानन्दा राघवस्य [22]वरस्त्रियः ॥ २३ ॥
निशा [23]चन्द्रविहीनेव स्त्रीव भर्तृविवर्जिता ॥ पुरी नाराजतायोध्या हीना[24] राज्ञा महात्मना ॥ २४ ॥
बाष्पपर्याकुलजना हाहाभूतकुलाङ्गना ॥ शून्यचत्वरवेश्मान्ता न बभ्राज यथापुरम् ॥ २५ ॥

पर्युद्विजिष्यति भयंप्राप्स्यतीत्यर्थः ॥ ९ ॥ नदतां नदत्सु । निशम्य नादमित्यर्थसिद्धं ॥ १० ॥ अल्पपुत्रः दुहितृमात्रपुत्रः । सोपि जनकोपि ॥ ११ ॥ दिष्टान्तं मरणं । पतिव्रता । "आर्तार्तेमुदितेहृष्टाप्रोषितेमलिनाकृशा । मृतेम्रियेतयापत्यौसास्त्रीज्ञेयापतिव्रता" इत्युक्तपातिव्रत्यविशिष्टा ॥ १२ ॥ व्यावहारिकाः व्यवहारेबाह्याभ्यन्तरसकलराजकृत्येनियुक्ताः । "तत्रनियुक्तः" इतिठक् । अमात्याइत्यर्थः । कौसल्यां भर्त्रालिङ्गनाद्व्यपनीय विमोच्य अन्यतोपनीयेत्यर्थः । तैलद्रोण्यां तैलपूरितकटाहे । जगतीपतिं भूपतिं । संनिवेश्य राज्ञोऽनन्तरकर्तव्यानिसर्वाणिकर्माणि दुःखापनोदनादीनिचक्रुः । अपनिन्युरितिपाठे व्यावहारिकाः व्यवहारविदोलौकिकाः अपनिन्युरित्येकंवाक्यं । तैलद्रोण्यामित्यारभ्यवाक्यान्तरं । आदिष्टाः राजकृत्येष्वादिष्टाःअमात्याः । कर्माणि प्रजाशासनादीनिचक्रुः ॥ १३—१४ ॥ संस्कारंकुतोनचक्रुरित्यत्राह—नत्विति । सर्वज्ञाः सर्वधर्मज्ञाः । अतोनधर्मलोपइतिभावः । अनेनगम्यतेतैलमिश्रत्वे शवस्यपर्युषितत्वदोषोनास्तीति । संकलनं संस्कारं ॥ १५ ॥ तैलद्रोण्यांशायितंनृपंज्ञात्वा । तत्रनिवेशकालेराजदर्शनाभावात् । हामृतोयमिति भूयोपिपर्यवारयन्नित्यर्थः ॥ १६ ॥ नेत्राणांप्रस्रवणंवारिप्रवाहोयेषुतथा ॥ १७—२० ॥ विदूषिताः राज्यगर्वात्तिरस्कृताः ॥२१—२४॥ शून्यचत्वरेति संमार्जनानु-

ति० निशम्यमाना नादमितिशेषः ॥ १० ॥ ती० व्यावहारिकाः अन्तःपुराध्यक्षस्त्रियः ॥ १३ ॥ ती० आदिष्टाः आज्ञप्ताः । वसिष्ठादिभिरितिशेषः । शि० राज्ञोमान्याः राजसत्कृताजनाः ॥ १४ ॥ ति० तवप्रभुः तवजीवनस्यप्रभुः ॥ २० ॥

[पा०] १ ञ. नर्दतां. २ क. घोराणां. ३ क. घ. च. ञ. निशम्यनादं. ङ. छ. झ. ट. निशम्यमाना. ४ क. समायुक्तो. ५ च—ट. नूनं. ६ क—ट. व्यपनिन्युः. ७ ङ. च. झ. ञ. ट. द्रोण्यांतदामात्याः. ट. द्रोण्यांतदामान्याः. ८ ग. घ. सर्वाण्यविक्लिष्टंचक्रुः. क. सर्वाण्यथाश्लिष्टाश्चक्रुः. ९ ङ. छ—ट. संकालनं. १० ङ. छ. झ. ट. शायितंतंसचिवैस्तु. ११ ग. घ. पर्यवारयन्. १२ क. ङ. च. छ. झ. ञ. ट. बाहूनुच्छ्रित्य. ग. बाहूनुद्धृत्य. १३ क. ख. करुणं. १४ ग. ज. विहीनः. १५ क. प्रजहासिनः. १६ ख. दुष्टभावेन. १७ च. झ. ञ. विवर्जिताः. १८ ङ. च. छ. झ. ञ. ट. सपत्न्या. १९ ङ. च. छ. झ. ञ. ट. सचास्माकं. २० ङ. छ. झ. ट. ययाच. २१ ख. घ. ङ. च. ज—ट. व्यचेष्टन्त. २२ क. ख. वराःस्त्रियः. २३ ख—च. ज—ट. नक्षत्रहीनेव. २४ क. विना.

गते तु शोकात्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च ॥
निवृत्तचारः सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता ॥ २६ ॥
ऋते तु पुत्राद्दहनं महीपतेर्न रोचयन्ते सुहृदः समागताः ॥
इतीव तस्मिञ्शयने न्यवेशयन्विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २७ ॥
गतप्रभा द्यौरिव भास्करं विना व्यपेतनक्षत्रगणेव शर्वरी ॥
पुरी बभासे रहिता महात्मना न चास्रकण्ठाऽऽकुलमार्गचत्वरा ॥ २८ ॥
नराश्च नार्यश्च समेत्य संघशो विगर्हमाणा भरतस्य मातरम् ॥
तदा नगर्यां नरदेवसंक्षये बभूवुरार्ता न च शर्म लेभिरे ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

परेद्युःप्रभातेसभामागतैर्मार्कण्डेयप्रभृतिभिर्वसिष्ठंप्रतिराज्ञःसदसद्भावाभ्यांजनपदादेर्गुणदोषसंभवकथनपूर्वकंराजपुत्रेषु कस्यचिद्राज्येऽभिषेचनप्रार्थना ॥ १ ॥

आक्रन्दितनिरानन्दा सास्रकण्ठजनाकुला ॥ अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥ १ ॥
व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः ॥ समेत्य राजकर्तारः सभामीयुर्द्विजातयः ॥ २ ॥
मार्कण्डेयोथ मौद्गल्यो वामदेवश्च काश्यपः ॥ कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥ ३ ॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् ॥ वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥ ४ ॥
अतीता शर्वरी दुःखं या नो वर्षशतोपमा ॥ अस्मिन्पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ५ ॥

---

लेपनबल्यादिशून्यचत्वरादियुक्तेतियावत् । यथापुरं यथापूर्वं ॥ २५ ॥ शोकात् पुत्रशोकात् । निवृत्तचारः निवृत्तकिरणप्रचारः । गतइति अस्तमितिशेषः । प्रवृत्तचारा प्रवृत्ततमःप्रचारा ॥ २६ ॥ समागताः सुहृदः बान्धवाः । पुत्राहृतेमहीपतेर्दहनंनरोचयन्ते । अनेनातिबलपराक्रमयुक्तसत्पुत्रसद्भावेप्यस्मिन्काले दैववशादेकोप्यसन्निहितः तूष्णीमवस्थानमयुक्तं । अतोयेनकेनापिप्रकारेणसंस्कारःकर्तव्यइतिकैश्चिद्यत्नःकृतइतिगम्यते । तस्मिञ्शयने पूर्वोक्ततैलद्रोण्यां ॥ २७ ॥ व्यपेतनक्षत्रगणा चन्द्रादिसकलतेजोहीना । रामादिसकलराजरहितस्योपमा । आस्रकण्ठैः कण्ठस्तंभितबाष्पैः । आकुलानिमार्गचत्वराणियस्याःसातथोक्ता ॥ २८—२९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

अथाराजकदोषवर्णनं—आक्रन्दितनिरानन्देति । आक्रन्दितेनहेतुनानिरानन्दा अवतता दीर्घा दुःखवशादतिदीर्घभूतेत्यर्थः ॥ १ ॥ राजकर्तारः राजाभिषेककार्यकर्तारः ॥ २—४ ॥ अस्मिन्पार्थिवे पुत्रशोकेनपञ्चत्वमापन्नेसति याशर्वरी नः अस्माकं । वर्षशतोपमा आसीत् । साशर्वरी दुःखंयथातथा अतीता

---

स० निवृत्तचारः नितरांवृत्तःप्रवृत्तःचारःअपसर्पणंयस्यसतथा । निवृत्तगतिरितिवा । "चारःप्रवालकृक्षेस्याद्गतौबन्धापसर्पयोः" इतिविश्वः ॥ २६ ॥ ति० सुहृदोवसिष्ठाद्याः । पर्युषितदाहनिषेधवचनानितु विप्रविषयाणीतिनविरोधः ॥ २७ ॥ ति० आकण्ठं धारारूपेणप्रवहद्भिरस्रैरुपलक्षिताःकण्ठायेषांतैराकुलाःमार्गाश्चत्वराश्चयस्यांसा । शि० पुरीबभासे नबभासइत्यर्थः । मगधेष्विवोशीनरेषुभवाइत्यादाविवनञर्थलाभः ॥ २८ ॥ इतिषट्षष्टितमस्सर्गः ॥ ६६ ॥

स० सास्रकण्ठजनैराविला आकुला । अवतता दुःखाद्भूयसीवविद्यमाना ॥ १ ॥

[पा०] १ घ. प्रवृत्ततारा. २ ङ. झ. ट. नीरोचयंस्ते. ३ क. ख. निरीक्ष्यराजानमतीतदर्शनं. ४ झ. ट. कण्ठास्र. ५ घ. ज. रार्ताश्चनशर्म. ६ ङ. छ. ज. झ. ट. आक्रन्दिता. ७ ङ. छ. ट. ठ. जनाविला. ८ क. वामदेवोथ. ९ झ. कश्यपः. १० क. दुःखा.

स्वर्गतश्च महाराजो रामश्चारण्यमाश्रितः ॥ लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ६ ॥
उभौ भरतशत्रुघ्नौ कैकयेषु परंतपौ ॥ पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ७ ॥
इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् ॥ अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥ ८ ॥
नाराजके जनपदे विद्युन्माली महास्वनः ॥ अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ९ ॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ॥ नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १० ॥
नाराजके धनं चास्ति नास्ति भार्याऽप्यराजके ॥ इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ ११ ॥
नाराजके जनपदे कारयन्ति सभां नराः ॥ उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १२ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ॥ सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १३ ॥
नाराजके जनपदे महायज्ञेषु यज्वनः ॥ ब्राह्मणा वसुसंपन्ना विसृजन्त्याप्तदक्षिणाः ॥ १४ ॥
नाराजके जनपदे प्रभूतनटनर्तकाः ॥ उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५ ॥

॥ ५—६ ॥ राजगृहे राजगृहनामनिपुरे । वर्तेतेइतिशेषः ॥ ७ ॥ इक्ष्वाकूणामितिनिर्धारणेषष्ठी । रामादीनांचतुर्णांमध्येइत्यर्थः । अद्यैवराजाविधानेदोषः—अराजकंहीति ॥ ८ ॥ अराजकत्वस्यविनाशहेतुत्वंप्रपञ्चयति—नाराजकइत्यादिना । विद्युन्मालीत्यादिविशेषणैर्महावर्षोदुर्लभइतिभावः । दिव्येनेत्यनेन शिलावर्षस्तुभविष्यतीतिभावः ॥ ९ ॥ बीजमुष्टिः नप्रकीर्यते फललाभनिश्चयाभावादितिभावः । भार्या वशेनवर्तते व्यभिचारेशिक्षकाभावादितिभावः ॥१०॥ धनंनास्ति चोरभयादितिभावः । भार्यानास्ति बन्धुनिग्रहादितिभावः । इदं वक्ष्यमाणं । अन्यत् पूर्वोक्तभयादन्यत् । अत्याहितं महाभीतिरस्ति । “अत्याहितंमहाभीतिः” इत्यमरः । तदेवाह—कुतइति । सत्यं क्रयविक्रयादिलक्षणं ॥ ११ ॥ सभांनकारयन्ति मनस्स्वास्थ्याभावात् । उद्यानानिनकारयन्ति छेदनभयात् । पुण्यगृहाणि देवतायतनादीनि नकारयन्ति दुर्गनिर्माणभयादितिभावः ॥ १२ ॥ ब्रह्म वेदः तदध्येतारोब्राह्मणाः । “तदधीतेतद्वेद” इत्यण् । सत्राणि महायज्ञान् यत्रसर्वेयजमानाःसर्वेऋत्विजः । नान्वासते नानुतिष्ठन्ति । विघ्नभयात् ॥ १३ ॥ यज्वनः यज्वानः । वसुसंपन्नाअपि धनसंपन्नाअपि । आप्तदक्षिणाः भूरिदक्षिणाः । नविसृजन्ति नदिशन्ति । आढ्यत्वव्यञ्जनेनदण्डभयादितिभावः ॥ १४ ॥ नटाः नाट्याभिनयसमर्थाः । नर्तकाः नर्तनमात्रसमर्थाः । प्रभूताः बहुलाः नटनर्तकायेषुतेतथोक्ताः । उत्सवाः देवतोत्सवाः । समाजाः तीर्थयात्राः ।

**स०** पृथग्वाचं भरतानयनाद्युपयुक्तां । **ति०** केकयेषु तदाख्यदेशेषु । अवान्तरदेशापेक्षयाबहुवचनमितिकतकः । वस्तुतोऽङ्गाइत्यादिवद्बहुवचनान्तएवजनपदवाचीत्यन्ये । **स०** राजगृहे लुप्तोपमा । दशरथगृहइव ॥ ७ ॥ **शि०** इहअस्यामयोध्यायां इक्ष्वाकूणांमध्येकश्चिद्राजा रक्षकत्वेनराजसदृशः । **ति०** विपक्षेबाधकमाह—**अराजकंहीति** । हि यतः । अराजकंनोराष्ट्रं विनाशमवाप्नुयात् । अतः कश्चिद्राजाविधीयतां । **कतक०** “राजकंसद्भिराष्ट्रंनोनाशंनावाप्नुयायथा” इतिपाठः । नः अस्माकं राष्ट्रं राजकं राजयुतंसत् । नाशंनाप्नुयायथा तथाकश्चिद्राजाविधीयतामित्यन्वयः । हिर्वाक्यालङ्कारे ॥ ८ ॥ **स०** विद्युन्माली व्रीह्यायन्तर्गतशिखादिलादिनिः ॥ ९ ॥ **शि०** बीजमुष्टिः बीजयुक्तकर्षकबद्धकरः । नप्रकीर्यते नमुच्यते । किंचमुष्टेर्बीजंबीजमुष्टिः । राजदन्तादित्वान्मुष्टेःपरत्वं । नप्रकीर्यते नोप्यते । भार्याच पत्युरितिशेषः । **ति०** बीजमुष्टिर्नप्रकीर्यते बीजानामारोपो नक्रियते फलकालेलुण्टाकशङ्कया ॥ १० ॥ **स०** भार्यानास्ति विटाद्युपद्रवादितिभावः । **ती०** अराजकेसति अमार्गवर्तिनांन कुत्रापिभयशङ्केतिभावः ॥ ११ ॥ **ती०** पुण्यगृहाणिपुण्यसंपादकानि सत्रगृहाणीतियावत् । मठादीनिवा । **ति०** सभांनकारयन्ति न्यायविचारायेतिशेषः ॥ १२ ॥ **शि०** आप्तदक्षिणाः आप्ताःविधिप्राप्ताःशास्त्रोक्ताइत्यर्थः । दक्षिणाः । कर्मधारयः । **वि०** वसुसंपूर्णाः बहुधनाः । आप्तदक्षिणाः शास्त्रेणयथाप्राप्तदक्षिणाः । यज्वनः ऋत्विजःप्रति नविसृजन्ति नदिशन्ति । आढ्यत्वव्यञ्जनेन दण्डभयादितिभावः ॥ १४ ॥

[ पा० ] १ ङ. च. झ. ञ. ट. स्वर्गस्थश्च. २ क. ञ. अनायकं. ३ ग. घ. ज. नोराज्यं. च. ञ. राष्ट्रंनो. ४ ग. ङ. च. छ. झ. ञ. ट. विनाशंसमवाप्नुयात्. ५ ख. घ. ङ. छ—ट. अराजकेधनंनास्ति. ६ ग. घ. ज. सौख्यमराजके. ७ च. ञ. सत्राण्युपासते. ८ क—ट. संपूर्णा. ९ ङ. च. छ. झ. ञ. प्रहृष्टनट. १० घ. दुष्प्रवर्धनाः.

नाराजके जनपदे सिद्धार्था व्यवहारिणः ॥ कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६ ॥
नाराजके जनपदे उद्यानानि समागताः ॥ सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १७ ॥
नाराजके जनपदे वाहनैः शीघ्रगामिभिः ॥ नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥१८॥
नाराजके जनपदे धनवन्तः सुरक्षिताः ॥ शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १९ ॥
नाराजके जनपदे बद्धघण्टा विषाणिनः ॥ अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ २० ॥
नाराजके जनपदे शरान्संततमस्यताम् ॥ श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ २१ ॥
नाराजके जनपदे वणिजो दूरगामिनः ॥ गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ २२ ॥
नाराजके जनपदे चरत्येकचरो वशी ॥ भावयन्नात्मनात्मानं यत्र सायंगृहो मुनिः ॥ २३ ॥
नाराजके जनपदे योगक्षेमं प्रवर्तते ॥ न चाप्यराजके सेना शत्रून्विषहते युधि ॥ २४ ॥
नाराजके जनपदे हृष्टैः परमवाजिभिः ॥ नराः संयान्ति सहसा रथैश्च परिमण्डिताः ॥ २५ ॥
नाराजके जनपदे नराः शास्त्रविशारदाः ॥ संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु च ॥ २६ ॥
नाराजके जनपदे माल्यमोदकदक्षिणाः ॥ देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २७ ॥

एतदुभयाभावेराष्ट्रहानिरित्यभिप्रायेणाह—राष्ट्रवर्धनाइति ॥ १५ ॥ व्यवहारिणः कमप्यर्थमुद्दिश्यान्योन्यंविवदमानाः । सिद्धार्थाः लब्धप्रयोजनाः । नभवन्ति निरूपणनियमनकर्तुरभावादुत्कोचप्रायत्वाच्चेतिभावः । यद्वा व्यवहारिणः क्रयविक्रयरूपेणव्यापारेणजीवन्तः । कथाशीलाः इतिहासपुराणादिकथावदनशीलाः । कथाप्रियैः कथासुतत्परैःश्रोतृभिः । कथाभिःहेतुभिः नानुरज्यन्ते अनुरक्तानक्रियन्ते । श्रोतृणांस्वास्थ्याभावादितिभावः । यद्वा कथाशीलाः वावदूकाः कथाभिः वादजल्पवितण्डाभिः । कथाप्रियैः सामाजिकैःसह । नानुरज्यन्ते नतुष्यन्ति । तत्पारितोषिकादिप्रदराजाभावात् ॥ १६ ॥ समागताः संघीभूताः । नयान्ति पुष्पापचयाद्यर्थंसखीभिःसहनयान्ति । चोरभयादितिभावः ॥ १७ ॥ शीघ्रगामिभिर्वाहनैः रथैरित्यर्थः । ननिर्यान्ति परिभवशङ्कयेतिभावः ॥ १८ ॥ विवृतद्वारानशेरते किन्तुबद्धकपाटाएव ॥ १९ ॥ विषाणिनः प्रशस्तदन्ताः । षष्टिहायनाः षष्टिवर्षाः ॥२०॥ अस्यतां क्षिपतां । उपासने अभ्यासे । "स्यादुपासनमभ्यासः" इत्यमरः । तलनिर्घोषः ज्याकरतलनिर्घोषः ॥ २१ ॥ क्षेमं क्षेमावहं । बहुपण्यैःसमाचिताःसमृद्धाः । यद्वा पण्यानांक्रय्यद्रव्याणां समाचिताःदशभाराः । "आचितोदशभारःस्यात्" इत्यमरः । बह्वःपण्यसमाचिताःयेषांतेतथोक्ताः ॥ २२ ॥ एकोऽसहायश्चरतीत्येकचरः । वशी जितेन्द्रियः । आत्मना अन्तःकरणेन । आत्मानं परमात्मानं । भावयन् चिन्तयन् । यत्रसायंगृहः यस्मिन्प्रदेशेसायंकालोभवति तत्रगृहंनिवासोयस्यतथासन्नचरति । अन्नप्रदात्रभावादितिभावः ॥ २३ ॥ योगक्षेमं । अलब्धलाभोयोगः लब्धस्यपरिपालनंक्षेमः योगश्चक्षेमश्चयोगक्षेमं । द्वन्द्वैकवद्भावः । विषहते जयति ॥२४॥ परिमण्डिताः भूषिताः ॥२५॥ संवदन्तः व्याकुर्वन्तः । वनेषु मुनीनामावासभूतवनेषु ॥ २६ ॥ कल्प्यन्ते

शि० असिद्धार्थाः अनिष्पन्नप्रयोजनास्सन्तः ॥ १६ ॥ स० कृषिगोरक्षयोस्समाहारःकृषिगोरक्षंतेनजीवन्तीतितथा ॥ १९ ॥ ती० एकचरः यतिः । "अष्टौमासएकाकीयतिश्चरेत्" इतिश्रुतेः ॥२३॥ शि० योगक्षेमः योगेनसहितःक्षेमः नप्रवर्तते ॥ २४ ॥ ति० परिमण्डितैरितिपाठान्तरं ॥ २५ ॥ ति० संवदन्तोपतिष्ठन्ते संवदन्तःउपतिष्ठन्ते । सन्धिस्त्वार्षः । शि० संवदन्तः स्वस्वगृहीतपक्षस्थापनपूर्वकंपरपक्षंनिराकुर्वन्तःसन्तः । नवशिष्यन्ते नशोभिष्यन्ते ॥ २६ ॥

[ पा० ] १ ख. व्यावहारिकाः. २ ङ. च. छ. झ. ञ. ट. रभिरज्यन्ते. ख. रनुरज्यन्तः. ३ ङ. झ. ञ. तूद्यानानि. ४ १८—१९ तमयोरनयोःश्लोकयोः पौर्वापर्यं झ. पाठेदृश्यते. ५ ख. चरन्ति. ६ ग. घ. ज. षाष्टिहायनाः. ७ क. ख. ग. ङ. च. झ. ञ. न्संततं. ८ ग. दूरमध्वानं. ९ ख. ङ. छ. झ. ट. योगक्षेमः. १० क. प्रचक्षते. ११ क. ख. ङ. च. छ. झ. ञ. ट. प्रतिमण्डिताः. १२ ख. ङ. च. ज. झ. ञ. संवदन्तोपतिष्ठन्ते. ट. संवदन्तोवशिष्यन्ते.

नाराजके जनपदे चन्दनागरुरूषिता: ॥ राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥ २८ ॥
यथा ह्यनुदका नद्यो यथा वाऽप्यतृणं वनम् ॥ अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ २९ ॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ॥ तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥३०॥
नाराजके जनपदे स्वकं भवति कस्य चित् ॥ मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ ३१ ॥
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ॥ तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥३२
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ॥ तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ ३३ ॥
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ॥ राजा माता पिता चैव राजा हितकरो नृणाम् ॥३४॥
यमो वैश्रवणः शक्रो वरुणश्च महाबलः ॥ विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥ ३५ ॥
अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ॥ राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ ३६ ॥
जीवत्यपि महाराजे तवैव वचनं वयम् ॥ नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ ३७ ॥
स नः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राज्यमरण्यभूतम् ॥

संपाद्यन्ते ॥ २७ ॥ रूषिताः लिप्ताः ॥ २८ ॥ तथाराष्ट्रमिति नशोभतइतिशेषः ॥ २९ ॥ ध्वजोरथस्येत्यादिदृष्टान्तार्थवचः । प्रज्ञानं ज्ञापकं । ज्ञानं लिङ्गं । ध्वजः प्रकाशकः । इतः अस्माल्लोकात्प्रेत्य देवत्वंगतइत्यर्थः ॥ ३०—३१ ॥ संभिन्नमर्यादाः उल्लङ्घितस्वस्वजातिवर्णाश्रममर्यादाः । अतएवपूर्वं राजदण्डनिपीडिताः ये नास्तिकास्ते इदानीं छिन्नसंशयाः राजदण्डशङ्कारहिताःसन्तः । भावाय सद्भावाय प्रभावायवा । कल्पन्ते समस्तदैष्टिकपीडासमर्थाभवन्तीत्यर्थः ॥ ३२ ॥ दृष्टिःशरीरस्ययथाप्रवर्तते हितसाधकत्वेनाहितनिवारकत्वेनचसदैवप्रवर्तते । सत्यधर्मयोःप्रभवः कारणं । राजापिराष्ट्रस्यतथाप्रवर्तेत इत्यर्थः ॥ ३३ ॥ कुलवतां क्षेत्रबीजशुद्धिमतां । कुलं कुलाचारप्रवर्तकः ॥ ३४ ॥ नरेन्द्रेण महतावृत्तेन सर्वप्रकाररक्षणरूपचरित्रेण । विशेष्यन्ते अधःक्रियन्ते । यकिगुणश्छान्दसः । यमस्यदण्डनमात्रं कुबेरस्यधनदत्वमेव इन्द्रस्यपालनमेव । वरुणस्यसदाचारनियमनमेव । एतद्गुणचतुष्टययुक्तत्वान्नरेन्द्रेणयमादयोव्यावर्त्यन्तइत्यर्थः । यद्वा यतोमहतावृत्तेनयुक्तः ततोहेतोः एकैकदिग्वर्तिप्रजारक्षकयमादिभ्यः । विशेष्यते अतिशीयते ॥ ३५ ॥ साध्वसाधुनी लोके विभजन् व्यवस्थापयन् राजानस्याच्चेत् । इदं अराजकत्वं । अहोतमइवस्यात् । यतःकिंचन कर्तव्याकर्तव्यंनप्रज्ञायेत । यद्वा साध्वसाधुनीविभजन्राजा लोकेनभवेच्चेत् इदं जगत् । किंचिदपि । नप्रज्ञायेत नप्रतीयेत । किंतु तमइवस्यात् सूर्याभावइवतमोरूपमेवस्यात् ॥ ३६ ॥ महाराजेजीवत्यपि वयंतववचनं नातिक्रमामहे । इदानींकिमुतेतिभावः ॥ ३७ ॥ हेद्विजवर्य वसिष्ठ । सः त्वं । नः अस्माकं । वृत्तं अराजकत्वप्रमुषितंसर्वकृत्यं । समीक्ष्य नृपंविनाराज्य-

**स०** वसन्तइवेति । वसन्तादिभागग्रहेऽन्वयः । वसन्तान्तिमग्रहणेव्यतिरेकः । "वसन्तेसर्वसस्यानांजायतेपत्रशातनम् ।" वसन्तकालेयतस्सरागास्तरवः" इत्युभयत्रमानात् ॥ २८ ॥ **स०** प्रज्ञायतेऽनेनेतिप्रज्ञानं ज्ञापकं । ध्वजः अस्मत्स्वरूपप्रकाशकः । देवत्वं कर्मजदेवत्वं ॥ ३० ॥ **ति०** स्वकं जीवनमित्यर्थः । **स०** स्वकं स्वकीयं ॥ ३१ ॥ **ती०** एवमराजकेदोषानभिधायसराजकेगुणानाह—**येत्विति** । संभिन्नमर्यादाःत्यक्तमर्यादाः । छिन्नसंशयाःकृत्याकृत्यविचारशून्याः । राजदण्डनिपीडिताःभावाय साधुत्वायकल्पन्तेयोग्याभवन्ति । नृपेसतीतिशेषः ॥ ३२ ॥ **शि०** किंच महतावृत्तेनयुक्तेननरेन्द्रेणैव यमादयोविशिष्यन्ते ऐश्वर्यविशिष्टाभवन्तीत्यर्थः । एतेन महतांराज्ञांधर्मत्यागेदेवानांह्रासएवेतिसूचितम् ॥३५॥ **ति०** सूर्याभावे तमइवतमसीव । नकिंचन कर्तव्याकर्तव्येप्रज्ञायेत प्रतीयेत । तमइतिप्रथमा सप्तम्यर्थे । अकारान्ततमशब्दस्यतमेइतिसप्तम्यन्तंवा । "तमस्यपितमंतथा" इतिद्विरूपकोशात् ॥ ३६ ॥ **ति०** राजनिजीवत्यपितववचनंवयंनातिक्रमाम । अतइदानीमपित्वमेवगतिरितिवसिष्ठंप्रतिसर्वेषामुक्तिः ॥ ३७ ॥ इतिसप्तषष्टितमस्सर्गः ॥ ६७ ॥

**[ पा० ]** १ च. ञ. भूषिताः. २ ङ. च. छ. झ. ञ. ट. जना. ३ च. ञ. येतु. ख. येच. ४ ग. न्साध्वसाध्विति. ५ घ. प्रत्येव. ६ क. ख. सागराः. ७ ख. ङ. च. छ. झ. ञ. ट. राष्ट्रं.

कुमारमिक्ष्वाकुसुतं [1]वदान्यं त्वमेव राजानमि[2]हाभिषिञ्च ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

वसिष्ठेनमार्कण्डेयाद्यनुमत्याभरतशत्रुघ्नानयनायदूतानांप्रेषणम् ॥ १ ॥ दूतानांमार्गगमनप्रकारनिरूपणम् ॥ २ ॥ दूतैराश्वौकेकयनगरप्रवेशः ॥ ३ ॥

ते[3]षां हि वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह ॥ मित्रामा[4]त्यगणान्सर्वान्ब्राह्मणांस्तानिदं वचः ॥ १ ॥
यदसौ मातुलकुले पु[5]रे राजगृहे सुखी ॥ भरतो वसति भ्रात्रा शत्रुघ्नेन [6]समन्वितः ॥ २ ॥
त[7]च्छीघ्रं जवना दूता गच्छन्तु [8]त्वरितैर्हयैः ॥ आनेतुं भ्रातरौ वीरौ किं [9]समीक्षामहे वयम् ॥ ३ ॥
गच्छन्त्विति ततः सर्वे वसिष्ठं वाक्यमब्रुवन् ॥ [10]तेषां तद्वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥४॥
एहि सि[11]द्धार्थ विजय जयन्ताशोकनन्दन ॥ श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५ ॥
पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः ॥ त्यक्तशोकैरिदं वाच्यः शासनाद्भरतो मम ॥ ६ ॥
[12]पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ॥ त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ७ ॥
मा चास्मै [13]प्रोषितं रामं मा चास्मै पितरं मृतम् ॥ भवन्तः शंसिषुर्गत्वा रा[14]घवाणामिमं क्षयम् ॥८॥

---

मरण्यभूतंस्यादित्यपिसमीक्ष्य इक्ष्वाकुसुतं दशरथतनयं । अभिषिञ्चेतियोजना ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तषष्टितमःसर्गः ॥ ६७ ॥

---

मित्रामात्यगणान् मित्रभूतामात्यगणान्सुमन्त्रादीन् । ब्राह्मणान् मार्कण्डेयादीन् ॥ १ ॥ राजगृहे राजगृहाख्येपुरे । यद्यस्मात्वसति तत्तस्मात् । जवनाः वेगवन्तः । दूता गच्छन्त्वितिसंबन्धः । किंसमीक्षामहे किंविचारयामः । राज्ञैवभरतायराज्यस्यदत्तत्वादिति भावः ॥ २—३ ॥ तथैवामात्याअनुजानन्तिगच्छन्त्विति ॥ ४ ॥ सिद्धार्थविजयजयन्ताशोकाख्यामन्त्रिसमाननामानोदूताः नतुमन्त्रिणः । मन्त्रिव्यतिरिक्तनन्दनशब्दसहपाठात् । "पुरोहितस्त्वांकुशलंप्राहसर्वेचमन्त्रिणः" इत्युपरिवक्ष्यमाणत्वाच्च । इतिकर्तव्यं कार्यकलापं ॥ ५ ॥ त्यक्तशोकैः भवद्भिरितिशेषः । इदं वक्ष्यमाणंवचनं । ममशासनात् भरतोवाच्यः ॥ ६ ॥ मन्त्रिणः प्राहुरितिविपरिणामः । अत्ययः कालातिपातः तंप्राप्तमात्ययिकं । " विनयादिभ्यष्ठक् " इतिठक् । तादृशंकृत्यमस्ति अतस्त्वरमाणोनिर्याहीतिवाच्यइत्यनुकर्षः । यद्वा अत्ययःकृच्छ्रं तत्रभवमात्ययिकं । " अत्ययोतिक्रमेकृच्छ्रे " इत्यमरः । कृत्यं । अस्तीतिशेषः ॥ ७ ॥ माशंसिषुरित्यन्वयः । राघवाणां क्षयं अपचयं तेजःक्षयमित्यर्थः । "निल-

---

ति० यद्यस्माद्राज्ञाकैकेयीवचनाद्दत्तराज्योभरतोमातुलकुलेवसति ॥ २ ॥ शि० शीघ्रंयथास्यात्तथाजवनाः शीघ्रगमनकर्तारो दूताः भ्रातरावानेतुंहयैस्त्वरितंगच्छन्तु । अतःपरंउत्कृष्टंवयंकिंसमीक्षामहे अतःपरमुत्कृष्टंनास्त्येवेतितात्पर्यम् ॥ ३ ॥ शि० सिद्धार्थादयोमन्त्रिनामानोदूताः नतुमन्त्रिणः नन्दनसाहचर्यादित्येके । यदिचसिद्धार्थादिसाहचर्येणनन्दनोपिमन्त्रीतिव्याख्यायते तदानन्दनइतिकस्यचिन्मन्त्रिणोनामान्तरमितिबोध्यम् । मन्त्रिभिर्दूतकर्मकथंक्रियतइतितुनभ्रमितव्यम् । अतिनिपुणानांसर्वकर्मस्वधिकारात् ॥ ५ ॥ ति० अत्ययं असह्यकालातिक्रमं तदेवात्ययिकं । अतिक्रमेएतीत्यव्ययं । कालातिक्रमेएतिनश्यतीतिवाच्योर्थः । विनयादित्वाट्ठक् । तादृशंकृत्यमस्ति । स० त्वया आत्ययिकं अतिक्रमणयोग्यंकृत्यमस्ति । त्वदागमनैकाधीनप्रयोजनमस्तीतियावत् ॥ ७ ॥ ति० इतः स्त्रीरूपान्मूलात् क्षयंमाशंसिषुः माकथयन्तु । स० शंसिषुरिति "माङिलुङ्" इतिलुङ् सर्वलकारापवादः ।

[ पा० ] १ ङ. च. छ. झ. ञ. ट. तथान्यं. २ ङ. छ. ज. झ. ट. मिहाभिषेचय. ३ क. ख. ग. ङ. च. छ. झ. ञ. ट. तेषांतद्वचनं. ४ ग. घ. ङ. च. ज. ञ. ट. जनान्. ५ ङ. छ. ज. झ. दत्तराज्यःपरंसुखी. ६ ङ. छ. झ. ट. मुदान्वितः. ७ क. च. ञ. तौशीघ्रं. ८ ग. ङ. छ. झ. ट. त्वरितंहयैः. ९ ट. समीक्ष्यामहेपरं. १० क. ग. च. ञ. तेषांतुवचनं. ११ क. घ. च. ञ. नाशन. १२ ग. पुरोहितस्त्वा. १३ ख. प्रेषितं. १४ ङ. झ. ञ. ट. राघवाणामितः.

कौशेयानि च वस्त्राणि भूषणानि वराणि च ॥ क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥ ९ ॥
दत्तपथ्यशना दूता जग्मुः स्वंस्वं निवेशनम् ॥ केकयांस्ते गमिष्यन्तो हयानारुह्य संमतान् ॥ १० ॥
ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् ॥ वसिष्ठेनाभ्यनुज्ञाता दूताः संत्वरिता ययुः ॥ ११ ॥
न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति ॥ निषेवमाणास्ते जग्मुर्नदीं मध्येन मालिनीम् ॥ १२ ॥
ते हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः ॥ पाञ्चालदेशमासाद्य मध्येन कुरुजाङ्गलम् ॥ १३ ॥
सरांसि च सुपूर्णानि नदीश्च विमलोदकाः ॥ निरीक्षमाणास्ते जग्मुर्दूताः कार्यवशाद्द्रुतम् ॥ १४ ॥
ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम् ॥ उपातिजग्मुर्वेगेन शरदण्डां जनाकुलाम् ॥ १५ ॥
निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम् ॥ अभिगम्याभिवाद्यं तं कुलिङ्गां प्राविशन्पुरीम् ॥ १६ ॥
अभिकालं ततः प्राप्य ते बोधिभवनाच्च्युताम् ॥ पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीम् ॥ १७ ॥
अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान्वेदपारगान् ॥ ययुर्मध्येन बाह्लीकान्सुदामानं च पर्वतम् ॥ १८ ॥

---

यापचयौक्षयौ " इत्यमरः ॥ ८ ॥ कौशेयानि पट्टवस्त्रविशेषान् । राज्ञः केकयराजस्य ॥ ९ ॥ दत्तपथ्यशनाः दत्तमार्गाशनहेतुभूतद्रव्याइत्यर्थः । स्वनिवेशगमनं स्त्रीप्रभृतीनांस्वप्रयाणंकथयितुं । संमतान् जवनत्वेनाध्वश्रमसहत्वेनचसंमतान् ॥ १० ॥ प्रास्थानिकं प्रस्थानप्रयोजनकं । अनन्तरंकार्यशेषं पाथेयादिकंचकृत्वा । पुनर्वसिष्ठेनाभ्यनुज्ञानं स्वविलम्बस्याल्पत्वंद्योतयितुं ॥ ११ ॥ अपरतालस्य अपरतालोनामगिरिः तस्य । न्यन्तेन नितरामन्तेन चरमप्रदेशेनेत्यर्थः । " अन्तोजघन्यंचरमं " इत्यमरः । प्रलम्बस्य प्रलम्बाख्यगिरेः । उत्तरंप्रति उत्तरभागमुद्दिश्य । तयोर्मध्येनमालिनींनदींनिषेवमाणाजग्मुः अपरतालःपुरस्ताद्दक्षिणोत्तरायतः प्रलम्बःपश्चाद्भागे दक्षिणोत्तरायतःपूर्वापरायतश्चेतिपर्वतसंनिवेशः । प्रथममयोध्यायाःपश्चिमाभिमुखंनिर्गच्छन्तः । तयोर्मध्येनउदङ्मुखाःकियन्तमध्वानंमालिनीतीरमार्गेणगत्वा ततःप्रलम्बस्योत्तरभागेनपश्चिमाभिमुखाजग्मुरित्यर्थः ॥ १२ ॥ तेहस्तिनपुरइत्यादिश्लोकद्वयमेकंवाक्यं । हस्तिनपुरे हस्तिनपुरसमीपे । गङ्गांतीर्त्वाप्रत्यङ्मुखाःसन्तः जग्मुः । तेदूताः मध्येनकुरुजाङ्गलं कुरुजाङ्गलस्यमध्यमार्गेण । " एनपाद्वितीया " इतिद्वितीया । कुरुदेशैकदेशोजाङ्गलः हस्तिनपुरस्य कुरुदेशस्थत्वात्तदन्तर्गतजाङ्गलाख्यदेशमध्येनपाञ्चालदेशमासाद्य तत्रदेशे सरःप्रभृतीन्निरीक्षमाणाजग्मुः ॥ १३—१४ ॥ शरदण्डां शरदण्डाख्यांनदीं । उपातिजग्मुः उपगम्यातीत्य जग्मुः ॥ १५ ॥ निकूलवृक्षं शरदण्डायाः पश्चिमकूलस्थंपुण्यवृक्षं । दिव्यं देवाधिष्ठानवत् । सत्यमुपयाचनं प्रार्थनं यस्मादित्यन्वर्थनाम सत्योपयाचनमिति अर्थितार्थप्रदमित्यर्थः । अभिवाद्यं सर्वनमस्कार्यं । अभिगम्य प्रदक्षिणीकृत्य । कुलिङ्गांपुरींप्राविशन् ॥ १६ ॥ अभिकालं तदाख्यग्रामं । कुलिङ्गासाहचर्यात् बोधिभवनात् तदाख्यात्पर्वतात् नदीमूलत्वोक्तेः । पितृपैतामहीं दशरथवंश्यानुभूतां । तत्तीरप्रदेशग्रामाइक्ष्वाकूणामितिभावः ॥ १७ ॥ अञ्जलिपानान् अञ्जलिप्रमाणजलमात्राहारान् । ब्राह्मणान् इक्षुमतीतीरवासिनः । मध्येनबाह्लीकान् बाह्लीकदेशानांमध्येन । "एनपाद्वितीया" । सुदामानं सुदामाख्यं ॥ १८ ॥

---

अतएवाडभावः । इतःकैकेयीनिमित्तंक्षयं अनर्थं । राघवाणांक्षयं विलापं । "विलापापचयौक्षयौ" इतिनिघण्टुः ॥ ८ ॥ ति० अपरतालस्य तदाख्यदेशस्य । न्यन्तेन पश्चिमभागेन ॥ १२ ॥ ति० अभिकालतेजोभिभवनौ ग्रामौ । ततोयोधिवनच्युताइति पाठान्तरं । स० पितृपैतामहीं पितृपितामहजुष्टां । मध्यवृद्धिरार्षेयी ॥ १७ ॥ ति० अञ्जलिनापिबन्तितादृशान्वेदपारगान्ब्राह्मणान्दृष्ट्वेत्यनेन बाह्लीकदेशस्यात्यनाचारत्वंसूचितं । यत्रवेदपारगाब्राह्मणाअपीदृशाः काकथाऽन्येषामिति । तथाचभारतेकर्णपर्वणि

[ पा० ] १ छ. झ. ट. दूताःसंत्वरितं. क. दूतास्तेत्वरिता. २ ग. निरीक्षमाणाजग्मुस्ते. ३ ख. ग. ङ. च. झ. ट. हास्तिनपुरे. ४ ख. ङ. छ. झ. ट. चसुफुल्लानि. च. ञ. विपुलान्येव. क. चविफुल्लानि. ५ क. ख. ग. ङ. च. छ. झ. ञ. ट. निरीक्षमाणाजग्मुस्ते. ६ च. ञ. अतीत्यजग्मुः. ७ च. छ. झ. ञ. ट. जलाकुलां. ८ ग. घ. ज. अभिवाद्याभिवाद्यं. ९ घ. ङ. च. झ—ठ. तेजोभिभवनाच्च्युताः.

विष्णोः पदं प्रेक्षमाणा विपाशां चापि शाल्मलीम् ॥ नदीर्वापीस्तटाकानि पल्वलानि सरांसि च ॥ १९ ॥
पश्यन्तो विविधांश्चापि सिंहव्याघ्रमृगद्विपान् ॥ ययुः पथाऽतिमहता शासनं भर्तुरीप्सवः ॥ २० ॥
ते श्रान्तवाहना दूता विकृष्टेन पथा ततः ॥ गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा ॥ २१ ॥
भर्तुः प्रियार्थं कुलरक्षणार्थं भर्तुश्च वंशस्य परिग्रहार्थम् ॥
अहेडमानास्त्वरया स्म दूता रात्र्यां तु ते तत्पुरमेव याताः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

## एकोनसप्ततितमः सर्गः ॥ ६९ ॥

रात्रौदुस्स्वप्नदर्शनेनविमनायमानभरतमनोविनोदनायसुहृद्भिर्नानोपायप्रयोगेप्यप्रहृष्यतितास्मिंस्तंप्रतिप्रियसुहृदातत्कारणप्रश्नः ॥ १ ॥ भरतेनतंप्रतिस्वानुभूतदुस्स्वप्नप्रकारनिरूपणपूर्वकंस्वप्नदर्शनस्यस्ववैमनस्यकारणत्वनिवेदनम् ॥ २ ॥

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ॥ भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १ ॥
व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् ॥ पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २ ॥
तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः ॥ आयासं हि विनेष्यन्तः सभायां चक्रिरे कथाः ॥ ३ ॥
वादयन्ति तथा शान्तिं लासयन्त्यपि चापरे ॥ नाटकान्यपरे स्माहुर्हास्यानि विविधानि च ॥ ४ ॥

---

विष्णोःपदं विष्णोःपदाङ्कितंस्थानं। इदंचस्थानंसुदामाख्यपर्वतवर्ति सान्निध्यात्। विपाशां सुदामपर्यन्तनदीं। शाल्मलीं तत्तीरवर्तिशाल्मलीवृक्षं। अत्रमार्गविशेषवर्णनं पुण्यभूमित्वेननराणांसेवनीयत्वद्योतनार्थं ॥ १९—२० ॥ विकृष्टेन विप्रकृष्टेन अतिदूरेणेत्यर्थः। गिरिव्रजमितिकेकयपुरस्यनामान्तरं। शीघ्रशब्दसान्निध्येन अञ्जसाशब्देनमानसत्वरोच्यते। अञ्जसा आर्जवेनेतिवार्थः ॥ २१ ॥ भर्तुः दशरथस्य। प्रियार्थं शीघ्रानीतभरतकृतौर्ध्वदैहिकादिनादशरथस्यपरलोकप्राप्तिहेतुत्वात्। कुलरक्षणार्थं सनाथीकरणेनकुलजातानांसंरक्षणार्थं। भर्तुर्वंशस्य इक्ष्वाकुवंशस्य। परिग्रहार्थं प्रतिष्ठार्थं। यद्वा भर्तुर्वंशोभरतादिःतस्यपरिग्रहार्थंप्रतिष्ठार्थं। पित्रौर्ध्वदैहिककर्मनिर्वर्तनेनसज्जनपरिग्रहार्थंवा। अहेडमानाः। हेडृअनादरइत्यस्माद्धातोःशानच्। अनादरमकुर्वाणाः सादराइतियावत्। अतएवत्वरयायुक्ताः दूताःरात्र्यामेव अस्तमयानन्तरमपिकियत्कालंगत्वा रात्र्यामेवतत्पुरंयाताः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

यामेव यस्यामेव। सप्तम्यर्थेद्वितीयाछान्दसी। तां तस्यां। अयं वक्ष्यमाणः ॥ १ ॥ व्युष्टां प्रभातायांसत्यामित्यर्थः। प्रभातस्वप्नःसद्यःफलदइतिद्योतयितुमिदमुक्तं ॥ २ ॥ वयस्याः सुहृदः। आयासं मनःखेदं ॥ ३ ॥ शान्तिं भरतस्यदुःखशान्तिमुद्दिश्य। वाद-

---

"बाह्लीकानामतेदेशानतत्रदिवसंवसेत्" इतिपरे ॥ १८ ॥ **ति०** "सप्तरात्रेणगत्वावैदूतास्तेश्रान्तवाहनाः" इतिक्वचित्पाठोदृश्यते ॥ २१ ॥ **ति०** भर्तुः नियोक्तुर्वसिष्ठस्य। प्रियार्थं शीघ्रगमनेनप्रीतिसंपादनार्थं अत्रकतकोक्तसंख्यारीत्याषट्श्लोकास्त्रुटिताः ॥ २२ ॥ इत्यष्टषष्टितमस्सर्गः ॥ ६८ ॥

**शि०** व्युष्टांव्यतीतप्रायां प्रातरित्यर्थः ॥ २ ॥ **ति०** विनयिष्यन्तः अपनेष्यन्तः ॥ ३ ॥ **ति०** अपरेलासयन्ति नर्तयन्ति वेश्याः। शान्तिंलोलयन्तीतिपाठः। तस्यशान्तिं तूष्णीमवस्थानं। लोलयन्ति चालयन्ति। श्लोकाद्यर्थप्रश्नव्याजेनेत्यर्थः ॥ ४ ॥

**[ पा० ]** १ क. विशालांचविशल्मलीं. घ. विशालांचापिशल्मलीं. २ ङ. झ. ञ. ट. सिंहान्व्याघ्रान्मृगान्द्विपान्. ३ क. ग. च. ज. ञ. पथासता. घ. पथातदा. ख. ङ. छ. झ. ट. सतापथा. ४ ङ. छ. झ. ट. तमाज्ञाय. ५ क. ङ. छ. झ. ट. विनयिष्यन्तः. ख. च. विनशिष्यन्तः. ६ घ. तथावाद्यान्. ग. ज. तथाचान्ये. ङ. च. छ. झ. ञ. ट. तदाशान्तिं. ७ क. च. लासयन्त्यपरेतथा. ञ. लोलयन्त्यपरेतथा. ८ झ. स्माहुः. ख. चाहुः.

स तैर्महात्मा भरतः सखिभिः [1]प्रियवादिभिः ॥ गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५ ॥
तमब्रवीत्प्रियसखो भरतं सखिभि[2]र्वृतम् ॥ सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥ ६ ॥
एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह ॥ शृणु त्वं यन्निमित्तं मे दैन्यमेत[3]दुपागतम् ॥ ७ ॥
स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् ॥ पतन्तमद्रिशिखरात्कलुषे [4]गोमयह्रदे ॥ ८ ॥
प्लवमानश्च मे दृष्टः स [5]तस्मिन्गोमयह्रदे ॥ पिबन्नञ्जलिना तैलं [6]हसन्नपि मुहुर्मुहुः ॥ ९ ॥
ततस्तिलौदनं भुक्त्वा पुनःपुन[7]रधःशिराः ॥ तैलेनाभ्यक्तसर्वाङ्गस्तैल[8]मेवावगाहत ॥ १० ॥
स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि ॥ उपरुद्धां च जगतीं [9]तमसेव समावृताम् ॥ ११ ॥
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् ॥ सहसा चापि [10]संशान्तं ज्वलितं जातवेदसम् ॥ १२ ॥
अवतीर्णां च पृथिवीं शुष्कांश्च विविधान्द्रुमान् ॥ अहं पश्यामि विध्वस्तान्[11]सधूमांश्चापि पर्वतान् ॥१३॥
पीठे कार्ष्णायसे [12]चैनं निषण्णं कृष्णवाससम् ॥ [13]प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥१४॥
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः ॥ रथेन खरयुक्तेन प्रयातो [14]दक्षिणामुखः ॥ १५ ॥
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ॥ प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६ ॥
एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम् ॥ अहं रामोऽथवा राजा लक्ष्मणो वा मरिष्यति ॥ १७ ॥
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि ॥ अचिरात्तस्य [15]धूमाग्रं चितायां संप्रदृश्यते ॥ १८ ॥
एतन्निमित्तं दीनोऽहं [16]तन्न वः प्रतिपूजये ॥ शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः ॥ १९ ॥
न पश्यामि भयस्थानं भयं चैवोपधारये ॥ भ्रष्टश्च स्वरयोगो मे च्छाया [17]चोपहता मम ॥ २० ॥
[18]जुगुप्सन्निव चात्मानं न च पश्यामि कारणम् ॥ २१ ॥

---

यन्ति वीणादिकमितिशेषः। लासयन्ति लास्यंकुर्वन्ति। लास्यं सुकुमारनृत्तं। नाटकानि संस्कृतप्राकृतपैशाचमागधादिमिश्रगद्यपद्यरूपाणि। हास्यानि हासजनकवाक्यानि ॥ ४ ॥ गोष्ठीहास्यानि गोष्ठीसभा सभ्यहास्यानीत्यर्थः ॥ ५ ॥ प्रियसखःअन्तरङ्गसुहृत्। "राजाहस्सखिभ्यष्टच्" इतिटच् ॥ ६—८ ॥ प्लवमानः मण्डूकवत् ॥ ९ ॥ तिलमिश्रओदनः तिलौदनः ॥ १० ॥ तमसासमावृतामिव उपरुद्धां तिरोहितां। औपवाह्यस्य राजवाह्यस्य। "औपवाह्योराजवाह्यः" इतिहलायुधः। नागस्य गजस्य। जातवेदसा अग्निना। अवतीर्णां अधःपतितां। पश्यामीति सर्वत्रान्वयः। वर्तमानसामीप्येवर्तमानवत्प्रयोगः ॥ ११—१३ ॥ कृष्णाश्चपिङ्गलाश्चकृष्णपिङ्गलाः ॥ १४—१६ ॥ उक्तस्वप्रदर्शनफलमाह—एवमित्यादिना। इमांरात्रिं अस्यांरात्रौ। अहंमरिष्यामीतिविपरिणामःकार्यः ॥ १७ ॥ धूमाग्रं धूमशिखा ॥ १८ ॥ एतन्निमित्तं उक्तस्वप्रदर्शनहेतुना ॥ १९ ॥ भयस्थानं भयकारणं। अथच भयमुपधारये अवशतोबिभेमि। छाया कान्तिः। "छायात्वनातपेकान्तौ" इतिवैजयन्ती ॥ २० ॥ जुगुप्सन्निव अस्मी-

---

**ति०** प्रियसखः सखिमात्रस्यप्रियत्वाविवादाद्रूयोगतिर्ज्ञेया अत्यन्तप्रियइति। नानुमोदसे गानादिनेतिशेषः ॥ ६ ॥ **ति०** अन्वगाहतेत्यन्तःप्रथमस्स्वप्नः ॥ १० ॥ **ति०** तमसासमावृतामेवोपरुद्धां तिरोहितां। यद्वा असुररक्षोभिरुपरुद्धां ॥ ११ ॥ **ति०** एतत् उक्तं। निमित्तं स्वप्नरूपं। दृष्ट्वेतिशेषः। वचोयुष्माकंनप्रतिपूजये। **कतक०** नप्रतिपेप्रियेइतिपाठे युष्माकंवचःप्रतिनभृशं प्रीतोभवामीत्यर्थः। यङन्ताल्लट् ॥ १९ ॥ **ति०** आत्मानंजुगुप्सइव किमर्थंममजन्मेत्यादिरूपेण ॥ २१ ॥

[ **पा०** ] १ ङ. छ. झ. ट. प्रियबोधिभिः. २ ख. ग. ज. संहृष्टं. ३ ख. दुपस्थितं. ४ ख. ग. ङ. च. ज—ट. गोमयेहृदे. ५ क. ख. ग. ङ—ट. गोमयेहृदे. ६ क. ख. ङ. च. छ. झ. ञ. ट. हसन्निव. ७ क. रवाक्छिराः. ८ ङ. छ. झ. ट. मेवान्वगाहत. ख. घ. ज. मेवावगाहते. ९ झ. तमसैव. १० क. ङ. च. छ. झ. ञ. संशान्ताज्ज्वलिताजातवेदसः. ख. संशुष्कांज्ज्वलितांजातवेदसा. ११ ग. च. छ. झ. ञ. ट. न्सधूमांश्चैव. १२ घ. ङ. छ. ज. झ. ट. चैव. १३ क. ङ—ट. प्रहरन्ति. ग. प्रवहन्ति. १४ ख. दक्षिणांदिशं. १५ झ. ट. धूम्राग्रं. १६ घ—छ. झ. ञ. ट. नवचः. क. नचवः. १७ झ. ञ. ट. चापगता. १८ ग. झ. जुगुप्सइव. ज. जुगुप्सयेव.

[1]इमां हि दुःस्वप्नगतिं [2]निशाम्य तामनेकरूपामवितर्कितां पुरा ॥
भयं महत्तद्धृदयान्न याति मे विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## सप्ततितमः सर्गः ॥ ७० ॥

भरतेनसुहृत्सुस्वप्नदर्शननिवेदनसमयसमागतैर्दूतैस्तंप्रतिसप्रणामंवसिष्ठनियोगनिवेदनम् ॥ १ ॥ स्वानुयोगाद्दूतैःसर्वेषां-कुशलंनिवेदितेनभरतेनमातामहादिसमापृच्छनपूर्वकमयोध्यांप्रतिकेकयनगरान्निर्गमनम् ॥ २ ॥

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ॥ प्रविश्यासह्य[3]परिघं रम्यं राजगृहं [4]पुरम् ॥ १ ॥
[5]समागम्य तु [6]राज्ञा च राजपुत्रेण चार्चिताः ॥ राज्ञः पादौ [7]गृहीत्वा तु तमूचुर्भरतं वचः ॥ २ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ॥ त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३ ॥
इमानि च [8]महार्हाणि वस्त्राण्याभरणानि च ॥ प्रतिगृह्य विशालाक्ष [9]मातुलस्य च दापय ॥ ४ ॥
[10]अत्र विंशतिकोट्यस्तु नृपतेर्मातुलस्य ते ॥ दशकोट्यस्तु संपूर्णास्तथैव च नृपात्मज ॥ ५ ॥
[11]प्रतिगृह्य तु तत्सर्वं स्वनुरक्तः सुहृज्जने ॥ दूतानुवाच भरतः कामैः संप्रति[12]पूज्य तान् ॥ ६ ॥
[13]कच्चित्सुकुशली राजा पिता दशरथो मम ॥ [14]कच्चिच्चारोगता रामे लक्ष्मणे च महात्मनि ॥ ७ ॥
आर्या च धर्मनिरता धर्मज्ञा [15]धर्मदर्शिनी ॥ अरोगा [16]चापि कौसल्या माता रामस्य धीमतः ॥ ८ ॥

---

तिशेषः । कारणं जुगुप्साकारणं ॥ २१ ॥ तामिमां दुःस्वप्नगतिं दुःस्वप्नभेदं । अवितर्कितां पूर्वमविचारितांअमोघामितिभावः । पूर्वचिन्ताकृतत्वेहिवैफल्यं । अचिन्त्यदर्शनं असंभाव्यदर्शनं । अत्रसर्गे " अथस्वप्नेपुरुषंकृष्णंकृष्णदन्तंपश्यतिखरैर्वराहैः " इत्यादिश्रुतिरुपबृंहिता । स्वप्नश्चपूर्वचिन्तापुरस्कृतोनफलति प्रत्यूषेचफलतिसद्यः । यामविलम्बात्फलविलम्बः । फलंच द्रष्टुः दृष्टस्यतत्संबन्धिनोवाभविष्यतीत्यादिकमुक्तं ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

असह्यपरिघं परैरप्रधृष्यपरिघं । राज्ञा केकयराजेन । राजपुत्रेण युधाजिता । अर्चिताः आनीतोपायननिरीक्षणेनसंमानिताः । राज्ञः भरतस्य । भरतस्यपरमप्रकृतत्वात्तमितिनिर्देशः ॥ १—२ ॥ आत्ययिकं दुष्करं । अत्ययः कृच्छ्रं । " अत्ययोतिक्रमेकृच्छ्रेमरणेदण्डदोषयोः " इतिवैजयन्ती । त्वयाकृत्यं कर्तव्यं । अतोनिर्याहीत्यन्वयः ॥ ३ ॥ विशालाक्षेति विभूषणावलोकनजनितविस्मयोत्फुल्लाक्षत्वमाह । मातुलस्यचदापयेतिसमुच्चयात् प्रथमंमातामहस्यदापय अथमातुलस्यदापयेत्यर्थः ॥ ४ ॥ अत्र वस्त्राभरणादिमहार्हवस्तुजाते । नृपतेः विंशतिकोट्यः विंशतिकोटिमूल्यानिवस्त्राभरणादीनि । मातुलस्यदशकोट्यः दशकोटिमूल्यानि । संपूर्णाः अन्यूना इत्युभयविशेषणं । तथैव तदहमेव । अन्यथा राजतुल्यतयाराजपुत्रदानेतस्यबहुमानएवनभवतीतिभावः ॥ ५ ॥ सुहृज्जने मातुलादौ । स्वनुरक्तः प्रदाप्येतिशेषः । कामैः अभीष्टान्नपानादिभिः ॥ ६ ॥ अरोगता आरोग्यं । आरोग्यतेति पाठेस्वार्थेष्यञ् ॥७॥ आर्या ज्येष्ठमातृत्वे-

---

ति० दुस्स्वप्नगतिंनिशम्यहि दुस्स्वप्नं स्मृत्वाहि स्मृत्वैव ॥ २२ ॥ इत्येकोनसप्ततितमस्सर्गः ॥ ६९ ॥

ति० राज्ञः केकयराजस्यैवेत्यन्ये ॥ २ ॥ ति० आत्ययिकं कालातिक्रमासहं ॥ ३ ॥

[पा०] १ ङ. झ. ट. इमांच. २ ग. ङ. छ. झ. ट. निशम्यहिलनेक. ३ ङ. छ. झ. ट. परिखं. ४ घ. शुभं. ५ घ. ख. घ—छ. झ. ञ. ट. समागम्यच. ६ ङ. च. छ. झ. ञ. ट. राज्ञाते. ७ ख. ङ. च. झ. ञ. ट. गृहीत्वाच. ८ क. वरार्हाणि. ९ घ. मातुलस्यप्रदापय. ज. मातुलस्यैवदापय. १० क. अद्य. ११ क. प्रतिगृह्यच. घ. परिगृह्यतु. १२ क. ग—ट. संप्रतिपूज्यतान्. ख. संप्रतिपूज्यच. १३ ख. घ—छ. झ. ट. कच्चित्सकुशली. १४ ङ. छ. झ. ट. कच्चिदारोग्यता. १५ ङ. झ. ट. धर्मवादिनी. १६ क. वापि.

कच्चित्सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य[1] या ॥ शत्रुघ्नस्य[2] च वीरस्य[3] साऽरोगा चापि[4] मध्यमा ॥९॥
आत्मकामा सदा[5] चण्डी क्रोधना प्राज्ञमानिनी ॥ अरोगा चापि[6] मे माता कैकेयी किमुवाच ह ॥१०॥
एवमुक्तास्तु ते दूता भरतेन महात्मना ॥ ऊचुः सं[7]प्रश्रयं वाक्यमि[8]दं तं भरतं तदा ॥ ११ ॥
कुशलास्ते नरव्याघ्र येषां कुशलमिच्छसि ॥ श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥ १२ ॥
भरतश्चापि तान्दूतानेवमुक्तोऽभ्यभाषत ॥ आपृच्छेऽहं महाराजं दूताः संत्वरयन्ति माम् ॥ १३ ॥
एवमुक्त्वा तु तान्दूतान्भरतः पार्थिवात्मजः ॥ दूतैः संचोदितो वाक्यं मातामहमुवाच ह ॥ १४ ॥
राजन्पितुर्गमिष्यामि सकाशं दूतचोदितः ॥ पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि ॥ १५ ॥
भरतेनैवमुक्तस्तु नृपो मातामहस्तदा ॥ तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम् ॥ १६ ॥
गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया ॥ मातरं कुशलं ब्रूयाः पितरं च परंतप ॥ १७ ॥
पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः ॥ तौ च तात महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥१८॥
तस्मै हस्त्युत्तमांश्चित्रान्कम्बलानजिनानि च ॥ [9]अभिसत्कृत्य कैकेयो भरताय धनं ददौ ॥ १९ ॥
रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च ॥ सत्कृत्य कैकयीपुत्रं केकयो धनमादिशत् ॥ २० ॥

नपूज्या । धर्मनिरता धर्मानुष्ठानपरा धर्मज्ञा ज्ञात्वानुष्ठानमितिन्यायेनानुष्ठानमूलज्ञानयुक्ता । धर्ममेवजनेषुपश्यतीतिधर्मदर्शिनी गुणग्राहिणी नतुदोषदर्शिनीत्यर्थः । अप्यरोगेत्यन्वयः । अपिःप्रश्ने । धीमतइत्यनेनपुत्रकृतातिशयउच्यते ॥ ८ ॥ सेति धर्मज्ञत्वस्मरणाभिनयः । मध्यमेत्यनेन “ नतेम्बामध्यमातात ” इत्यत्रकैकेय्यामध्यमात्वमितरस्त्र्यपेक्षया ॥ ९ ॥ आत्मानंकामयतइतिआत्मकामा स्वप्रयोजनपरेत्यर्थः । प्रज्ञैवप्राज्ञा प्राज्ञामात्मानंमन्यतइतिप्राज्ञमानिनी । “ मनः ” इतिणिनिः । “ क्यङ्मानिनोश्च ” इति पुंवद्भावः । चण्डी उग्रा । क्रोधना क्रोधवती । मेमाता अप्यरोगा । कैकेयीकिमुवाच स्वबन्धुविषयेकिमुवाचेत्यर्थः । दुःस्वप्नदर्शनदूतागमनाभ्यां । कैकेय्या किञ्चित्कृतंभवेदित्यूहितवान्भरतइतिसूचयति—आत्मकामेत्यादिभिः ॥ १० ॥ महात्मना महाबुद्धिना । एतेनायोध्यावृत्तान्तोनेनज्ञातइतिसूचितं । सप्रश्रयं सविनयं । अनेनसर्वात्मनाअयोध्यावृत्तान्तगोपनंसूच्यते । तदेत्यनेन किंचिद्विलम्बोक्तौभरतोऽन्यथामन्येतेति झटित्युत्तरमुक्तमित्युच्यते ॥ ११ ॥ कुशलाइतिसामान्योक्तिः प्रत्येकोक्त्यासंदेहानुत्पादाय । श्रीः लक्ष्मीः । पद्मा पद्महस्ता । अर्शआद्यच् । राज्यश्रीरितिहार्दोभावः । अमङ्गल्यव्यावृत्तिर्भरतप्रत्याय्या ॥ १२ ॥ एवमुक्तोभरतः दूता मांसंत्वरयन्तीतिमहाराजमापृच्छ इतितान्दूतानभ्यभाषतेतियोजना ॥१३॥ दूतैःसंचोदितोभरतः तान्दूतानेवमुक्त्वा मातामहंवाक्यमुवाच ॥ १४ ॥ मे मां । यदास्मरिष्यसि यदा आगन्तव्यमितिस्मरिष्यसि । तदैष्यामि आगन्तव्यमितिभवत्स्मरणंयदाजानामि तदाआगमिष्यामीत्यर्थः । मेइत्यत्र “अधीगर्थदयेशां—” इतिषष्ठी ॥१५—१८॥ अस्यादौ इत्युक्त्वेत्युपस्कार्यं । तस्मै भरताय । अभिसत्कृत्यददौ श्लाघापूर्वंददावित्यर्थः ॥ १९ ॥ निष्काः वक्षोभूषणानि । “ निष्कोस्त्रीहेम्निदीनारेसाष्टेकर्षेशतेपले । वक्षोविभूषणेकर्षे ” इतिवैजयन्ती । धनं उक्तरूपं । आदिशत् आदायगच्छतेतिभृत्याना-

ति० मातुस्स्वभावानुवादपूर्वंतस्याआरोग्यंपृच्छति—**आत्मकामेति** । **शि०** सदा नित्यं । आत्मकामा आत्मनांजीवानांकं सुखंअमतिप्रापयतिसा । अतएवचण्डी । क्रोधना । चण्ड्यांहिंसिकायांक्रोधनंकोपोयस्यास्सा । “चण्डीकात्यायनीदेव्यांहिंस्रकोपनयोषितोः” इतिमेदिनी । प्राज्ञमानिनी प्राज्ञान्तलज्ज्ञान्मानयतिपूजयतितच्छीला । अरोगा नित्यंरोगरहिता ॥ १० ॥ **ती०** श्रीस्त्वांवृणुतइतिलक्ष्मीवरणोक्तिरमङ्गलव्यावृत्त्यर्थानतुराज्यश्रीप्राप्तिपरा । राजमरणादिकंनवक्तव्यमितिवसिष्ठेनोक्तत्वात् ॥ १२ ॥ **ती०** रुक्मनिष्काणि वक्षोभूषणानि कण्ठभूषणानिवा ॥ २० ॥

[ **पा०** ] १ ख. लक्ष्मणस्यसा. घ. लक्ष्मणस्यच. २ क. च. ञ. शत्रुघ्नस्यापि. ३ ङ. छ. झ. ट. वीरस्यअरोगा. ग. घ. धीरस्यसारोगा. ४ ख. चारुमध्यमा. ५ च. सुचण्डीच. ६ क. ग. च. ञ. कैकेयीमातामे. ७ क. ख. ङ—ट. संप्रश्रितं. ८ क. मिदंच. ९ ङ. छ. झ. ञ. ट. सत्कृत्यकेकयोराजाभरतायददौधनम्. ख. सत्कृत्यराजाकैकेयोभरतायददौधनं.

[1]तथाऽमात्यानभिप्रेतान्विश्वास्यांश्च गुणान्वितान् ॥ ददावश्वपतिः [2]क्षिप्रं [3]भरतायानुयायिनः ॥२१॥
ऐरावतानैन्द्रशिरान्नागान्वै प्रियदर्शनान् ॥ खराञ्शीघ्रान्सुसंयुक्तान्मातुलोऽस्मै [4]धनं ददौ ॥ २२ ॥
[5]अन्तःपुरेऽतिसंवृद्धान्व्याघ्रवीर्य[6]बलान्वितान् ॥ दं[7]ष्ट्रायुधान्महाकायाञ्शुनश्चोपायनं ददौ ॥ २३ ॥
स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत ॥ भरतः केकयीपुत्रो गमनत्वरया तदा ॥ २४ ॥
बभूव ह्यस्य हृदये चिन्ता सुमहती तदा ॥ त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५ ॥
स [8]स्ववेश्म व्यतिक्रम्य नरना[9]गाश्वसंवृतम् ॥ प्रपेदे सुमहच्छ्रीमान्राजमार्ग[10]मनुत्तमम् ॥ २६ ॥
अभ्यतीत्य ततोऽपश्यदन्तःपुरमुदारधीः ॥ ततस्तद्भरतः श्रीमानाविवेशानिवारितः ॥ २७ ॥
[11]स मातामहमापृच्छ्य मातुलं च युधाजितम् ॥ रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८ ॥
रथान्मण्डलचक्रांश्च योजयित्वा [12]परश्शतम् ॥ उष्ट्रगोश्वखरैर्भृत्या भरतं यान्तमन्वयुः ॥ २९ ॥

बलेन गुप्तो भरतो महात्मा सहार्यकस्यात्मसमैरमात्यैः ॥
आदाय शत्रुघ्नमपेतशत्रुर्गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

ज्ञापयामास ॥ २० ॥ अमा सह प्राणांस्त्यजन्तीत्यमात्याः तान् । अभिप्रेतान् सहायभूतानित्यर्थः । विश्वास्यान् विश्वसनीयान् । अश्वपतिः केकयः ॥२१॥ मातामहकृतसत्कारप्रकारमुक्त्वामातुलकृतसत्कारप्रकारमाह—ऐरावतानित्यादिना । ऐरावतान् इरावतपर्वतभवान्। ऐन्द्रशिरान् इन्द्रशिराख्यपर्वतभवान्। शीघ्रान् वेगवतः। सुसंयुक्तान् परिचितान्॥२२॥ अन्तःपुरइति मातुलइत्यनुषज्यते ॥ २३—२५ ॥ स्ववेश्मव्यतिक्रम्येत्यनेन स्ववेश्मप्रवेशोर्थसिद्धः। तथा च राज्ञामातुलेनच स्वगृहएवकृतसत्कारोमातामह्यादिदर्शनार्थमन्तःपुरं गतवानितिबोध्यं । अथवा भरतस्यदुःस्वप्नदर्शनदुःखदूतागमनवृत्तान्तश्रवणेनकेकयमातुलौस्वगृहमेवागतावितिद्रष्टव्यं । सुमहच्छ्रीमान् सुमहाश्रीमान् ॥ २६ ॥ अभ्यतीत्येति । राजमार्गमितिशेषः ॥ २७ ॥ मातामहं स्वेनैवसहान्तःपुरमागतं । मातुलंच तथाभूतं ॥ २८ ॥ मण्डलचक्रान् वर्तुलचक्रयुक्तान् । परःशतं शतात्परान् । "पङ्क्तिविंशति—" इत्यादिसूत्रेनिपातनाद्देकवचनं । रथान्उष्ट्रादिभिःसंयोज्य भृत्याः यान्तंभरतमन्वयुः ॥ २९ ॥ महात्मा महाधैर्योभरतः । आर्यकस्य मातामहस्य । बलेनगुप्तः आत्मसमैः स्वप्रभावसदृशैः । अमात्यैःसहशत्रुघ्नमादाय अपेतशत्रुः निष्कण्टकःसन् । इन्द्रलोकात् सिद्धो देवजातिरिवगृहाद्ययौ ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

---

**शि०** अमात्यान् स्वमन्त्रिणः ॥ २१ ॥ **ती०** ऐरावतान् ऐरावतकुलोद्भवान् ॥ २२ ॥ **शि०** व्याघ्रवीर्यबलोपमान् व्याघ्रवीर्यबलाभ्यामुपमायेषांतान् । **स०** व्याघ्रवीर्यस्यबलेनोपमायेषांतेतथा ॥ २३ ॥ **शि०** मण्डलचक्रान् मण्डलानिमण्डलाकारसंपादकानिचक्राणियेषांतान् । परं भिन्नं । शतंरथान् उष्ट्रादिभिर्योजयित्वाभरतमन्वयुः । **कतक०** मण्डलाकारतयारथप्रवर्तनसाधकंचक्रंमण्डलचक्रं चतुर्दिक्चक्रमध्यस्थं तद्येषांतान् । काञ्च्यादौचतथेदानींप्रसिद्धं ॥ २९ ॥ **ति०** सभार्यकस्यात्मसमैरितिपाठान्तरं । भार्यासहितइत्यर्थः ॥ ३० ॥ इतिसप्ततितमस्सर्गः ॥ ७० ॥

**[ पा० ]** १ घ. ङ. छ. ज. झ. ट. तदा. २ क. ख. ग. ङ. च. छ. झ. ञ. ट. शीघ्रं. ३ क. च. ञ. भरतायानुजीविनः. ४ ग. ददौधनं. ५ अन्तःपुरेतिसंवृद्धानितिश्लोकः तस्मैहस्त्युत्तमानितिश्लोकात्परं रुक्मनिष्केतिश्लोकात्पूर्वं ङ. छ. झ. ट. पुस्तकेषुदृश्यते. ६ ङ. छ. झ. ट. ठ. बलोपमान्. ७ क. ङ. छ. झ. ट. दंष्ट्रायुक्तान्. ८ क. ङ. झ. ञ. स्ववेश्माभ्यतिक्रम्य. ख. ग. स्ववेश्मह्यतिक्रम्य. ९ क. ख. ङ. च. छ. झ. ञ. ट. नागाश्वसंकुलं. घ. नागाभिसंकुलं. १० क. ख. ग. ङ—ट. मनुत्तमं. ११ घ. स्वमातामहं. १२ ङ. छ. झ. ट. परंशतं.

# एकसप्ततितमः सर्गः ॥ ७१ ॥

केकयपुरादागच्छतोभरतस्यमार्गागमनप्रकारनिरूपणम् ॥ १ ॥ प्रस्थानदिनादष्टमेह्निप्रातरयोध्यामागतवताभरतेनसारथिंप्रतितस्याःशोभावैपरीत्यनिरूपणपूर्वकमप्रहर्षेणैवदशरथगृहप्रवेशः ॥ २ ॥

स प्राङ्मुखो राजगृहादभिनिर्याय राघवः ॥ ततः सुदामां द्युतिमान्संतीर्यावेक्ष्य तां नदीम् ॥ १ ॥
ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीम् ॥ शतद्रूमतरच्छ्रीमान्नदीमिक्ष्वाकुनन्दनः ॥ २ ॥
ऐलाधाने नदीं तीर्त्वा प्राप्य चापरपर्पटान् ॥ शिलामाकुर्वतीं तीर्त्वा आग्नेयं शल्यकर्तनम् ॥ ३ ॥
सत्यसंधः शुचिः श्रीमान्प्रेक्षमाणः शिलावहाम् ॥ अत्ययात्स महाशैलान्वनं चैत्ररथं प्रति ॥ ४ ॥
सरस्वतीं च गङ्गां च युग्मेन प्रत्यपद्यत ॥ उत्तरं वीरमत्स्यानां भारुण्डं प्राविशद्वनम् ॥ ५ ॥
वेगिनीं च कुलिङ्गाख्यां ह्लादिनीं पर्वतावृताम् ॥ यमुनां प्राप्य संतीर्णो बलमाश्वासयत्तदा ॥ ६ ॥
शीतीकृत्य तु गात्राणि क्लान्तानाश्वास्य वाजिनः ॥ तत्र स्नात्वा च पीत्वा च प्रायादादाय चोदकम् ॥७॥

अत्रदूताः ऋजुदुर्गमार्गेणत्वरितं गिरिव्रजमागताः । भरतस्तु चतुरङ्गबलयुक्ततयावक्रमपिमहामार्गमाश्रित्यययौ । अतोनदीपर्वतादिभेदकीर्तनमितिबोध्यं । सुदामां सुदामाख्यां । नदीं अवेक्ष्य तांसंतीर्य दूरे पारंपरतीरंयस्यास्तांदूरपारां विशालामित्यर्थः । ह्लादिनीं ह्लादिन्याख्यांनदीं । संतीर्य शतद्रूं शतद्र्वाख्यां । प्रत्यक्स्रोतस्तरङ्गिणीं पश्चिमाभिमुखप्रवाहतरङ्गयुक्तांचनदीमतरत् ॥१—२॥ एलानामेलकानां आधानमुत्पत्तिस्थानं तद्वत्त्वादेलाधानाख्येनगरे नदीं पूर्वोक्तांशतद्रूं । तीर्त्वेत्यनुवादः । अपरपर्पटान् पर्पटानामदूरभवोग्रामःपर्पटाः । पर्पटा ओषधिविशेषाः । "अदूरभवश्च" इतिप्राप्तस्याणः "वरणादिभ्यश्च" इतिलुप् । लुपि युक्तवद्व्यक्तिवचनता । पूर्वपर्पटाअपरपर्पटाश्चेतिग्रामद्वयमस्ति । तत्रापरपर्पटान् विश्रान्त्यर्थंप्राप्य । शिलामाकुर्वतीं शिलामासमन्तात्कुर्वतीं शिलाकर्षणस्वभावां अतएवशिलावहामित्यन्वर्थसंज्ञांनदीं तीर्त्वा तस्याआग्नेय्यांदिशिभवमाग्नेयं शल्यंहृदयशल्यं दुःखं कर्तयतिछेदयतीति शल्यकर्तनंनामनगरं । प्रेक्षमाणः सन् अत्ययात् सत्यसंधःशुचिरित्याभ्यां तत्रत्यजनेभ्यईतिवारणं [ भीतिवारणं ] प्रतिज्ञाय तथैवकृतवानित्युच्यते । चैत्ररथं चैत्ररथतुल्यत्वात्तदाख्यंवनं प्रति उद्दिश्य । महाशैलानत्ययात् तद्दर्शनकुतूहलेन महापर्वतानत्यगादित्यर्थः ॥ ३—४ ॥ सरस्वतीं तदाख्यांनदीं । गङ्गां गङ्गाख्यांकांचिन्नदींपश्चिमसमुद्रगामिनीं गङ्गास्रोतोभेदंवा । युग्मेन संगमेन । प्रत्यपद्यत ययौ । यद्वा युग्मेन द्वन्द्वतयापार्श्वद्वयेप्रवहन्तीमिति शेषः । वीरमत्स्यानां वीरमत्स्याख्यदेशानां । उत्तरं भारुण्डं भारुण्डाख्यंवनं । प्राविशत् ॥ ५ ॥ वेगिनीं वेगयुक्तां । ह्लादिनीं संतोषकारिणीं । पर्वतैरावृतां कुलिङ्गाख्यांनदीं यमुनांप्राप्य । संतीर्णः यमुनासमीपे सन्तीर्णइत्यर्थः । अन्यत्रातिवेगत्वादन्यत्रपर्वतावृतत्वाच्चेतिभावः । आतपखिन्नंबलं मध्याह्नेआश्वासयत् ॥६॥ आश्वासनप्रकारमाह—शीतीकृत्येति । तत्र कुलिङ्गायमुनासंभेदे । दूरगमनेनक्लान्तान् वाजिनःकंचित्कालं

ति० एलधाने तदाख्यग्रामे । नदीं तद्ग्रामवर्तिनीं । अपरपर्वताः जनपदविशेषाः । अपरपर्यटानितिपाटान्तरं । शिलामाकुर्वतीं शिलाकर्षणस्वभावामित्यर्थइतितीर्थः । स्वमध्यपतितंवस्तुशिलारूपंकुर्वतीमित्यर्थः । तरणंच तद्वर्तिशिलाप्रायकाष्ठनौकयेत्यन्ये । आग्नेयंशल्यकर्तनमिति ग्रामद्वयं तन्मध्येशिलावहानदीतितीर्थः । कतक० शिलां तदाख्यनदीं आकुर्वतीनामकंनद्यन्तरं । आग्नेयं आग्नेयदिग्गतं । शल्यकर्षणं तदोषध्युपेतंदेशं । तत्रचशिलावहानदी ॥ ३ ॥ रामानु० गङ्गां "सुचक्षुश्चैवसीताचसिन्धुश्चैवमहानदी । तिस्रस्त्वेतादिशंजग्मुःप्रतीचींचशुभोदकाः" इतिबालकाण्डोक्तप्रकारेणगङ्गाशब्देनगङ्गाभेदस्सिन्धुरुच्यते । यमुनातरणानन्तरंभागीरथीतरणस्यवक्ष्यमाणत्वात् । युग्मेन संगमेन प्रतिपद्य वीरमत्स्यानामुत्तरप्रदेशान्भारुण्डवनंचप्राविशदितिसंबन्धः । उत्तरंवीरमत्स्यानामितिपाठे उत्तरमित्येतद्भारुण्डवनस्यविशेषणम् ॥ ५ ॥ स० उदकमादाय परिचारकमुखेन । मध्येमार्गंजलाभा-

[ पा० ] १ क. ख. ग. ङ—ट. वीर्यवान्. २ घ. उपधाने. ङ. घ. झ. ञ. ट. ऐलधाने. क. ग. च. एलधाने. ३ ङ. झ. पर्वतान्. ४ ख. चाग्नेयं. क. घ. ट. ह्याग्नेयं. ५ ङ. छ. झ. ट. कर्षणं. ६ ङ. छ. झ. ट. अभ्यगात्. ७ क. ग. ङ. च. छ. झ. ञ. ट. प्रतिपद्यच. ८ ग. ङ. झ. उत्तरान्वीर. ख. उत्तरानपि. ९ ख. ङ. च. छ. झ. ञ. ट. कृत्वातु. क. ज. कृत्यच. १० ग. ततः.

राजपुत्रो महारण्यमनभीक्ष्णोपसेवितम् ॥ भद्रो भद्रेण यानेन मारुतः खमिवात्ययात् ॥ ८ ॥
भागीरथीं दुष्प्रतरामंशुधाने महानदीम् ॥ उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे ॥ ९ ॥
स गङ्गां प्राग्वटे तीर्त्वा समायात्कुटिकोष्ठिकाम् ॥ सबलस्तां स तीर्त्वाऽथ समायाद्धर्मवर्धनम् ॥१०॥
तोरणं दक्षिणार्धेन जम्बूप्रस्थमुपागमत् ॥ वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११ ॥
तत्र रम्ये वने वासं कृत्वाऽसौ प्राङ्मुखो ययौ ॥ उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः ॥१२॥
सालांस्तु प्रियकान्प्राप्य शीघ्रानास्थाय वाजिनः ॥ अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥१३
वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तानिकां नदीम् ॥ अन्या नदीश्च विविधाः पार्वतीयैस्तुरङ्गमैः ॥१४॥
हस्तिपृष्ठकमासाद्य कुटिकामत्यवर्तत ॥ ततार च नरव्याघ्रो लौहित्ये स कपीवतीम् ॥ १५ ॥
एकसाले स्थाणुमतीं विनते गोमतीं नदीम् ॥ [अपायाद्राघवस्तूर्णं तीर्त्वा शोणां महानदीम्] ॥१६॥
कलिङ्गनगरे चापि प्राप्य सालवनं तदा ॥ भरतः क्षिप्रमागच्छत्सुपरिश्रान्तवाहनः ॥ १७ ॥

छायास्वाश्वास्य तेषांगात्राणि शीतीकृत्य आर्द्रपृष्ठानिकृत्वा स्वयंस्नात्वा उदकंचपीत्वा उत्तरत्रगन्तव्यदेशस्य निर्जलदेशत्वात्तत्रपानार्थमुदकमादायच प्रायात् ॥७॥ राजपुत्रत्वेन भद्रः मङ्गलाचारयुक्तः।अनभीक्ष्णोपसेवितं अत्यन्तंजनैरनुपसेवितं महारण्यत्वादप्रहतमित्यर्थः। महारण्यं दुर्गमंवनं । भद्रेण भद्रगजरूपेणयानेन । अरण्यसंचारनिपुणोभद्रजातीयः । मारुतःखमिवात्ययात् अतिवेगेनातिक्रान्तवान् । भूमौहिमारुतःपर्वतादिनामन्दीभवति ॥ ८ ॥ अंशुधानेनगरे दुष्प्रतरां भागीरथीं विश्रुते तरणस्थलत्वेनप्रसिद्धे । प्राग्वटेपुरे उपायात् आगच्छत् तत्तरणार्थमितिशेषः ॥ ९ ॥ सबलः सः भरतः । प्राग्वटे तत्समीपे । गङ्गांतीर्त्वा कुटिकोष्ठिकांनदीं समायात् । सः तांतीर्त्वा धर्मवर्धनंग्रामं समायात् प्राप ॥ १० ॥ तोरणंदक्षिणार्धेन तोरणग्रामस्यदक्षिणभागेन । जम्बूप्रस्थंग्रामं उपागमत् । ततोवरूथाख्यंग्रामंययौ ॥ ११ ॥ तत्र तत्समीपे । रम्येवने वासं रात्रिवासंकृत्वा प्रभातेप्राङ्मुखःसन् उज्जिहानायाःनगर्याः उद्यानंययौ । यत्र उद्याने । प्रियकाः बन्धूकाः कदम्बावा सन्ति ॥ १२ ॥ सालान् वृक्षान् । "अनोकहःकुटःसालः" इत्यमरः । पूर्वोक्तवनस्थान्प्रियकवृक्षान् प्राप्य शीघ्रान्वाजिनः आस्थायरथेबध्वा । वाहिनीमनुज्ञाप्यत्वरितोययौ । उज्जिहानायाः परं स्वदेशत्वान्निर्भयंमन्दमागम्यतामितिसेनामनुज्ञाप्य स्वयंत्वरितोययौ ॥१३॥ सर्वतीर्थेग्रामे वासं एकरात्रिवासं कृत्वा । उत्तानिकां उन्नतजलत्वेनतदाख्यां । अन्याःनदीः स्वल्पजलाः । पार्वतीयैः पर्वतदेशोत्पन्नैः । तुरंगमैः रथाश्वैः तीर्त्वेत्यनुषङ्गः । हस्तिपृष्ठवदुन्नतत्वात् हस्तिपृष्ठकाख्यंग्राममासाद्य कुटिकांनदीमत्यवर्तत हस्तिपृष्ठकसमीपेकुटिकामतरदित्यर्थः । लौहित्ये लोहितमृत्त्वाल्लौहित्यनाम्निनगरे । कपीवतीं बहुकपिमत्त्वात्तन्नाम्नीं नदीं । "अन्येषामामपिदृश्यते" इतिदीर्घः ॥ १४—१५ ॥ एकसाले एकसालादूरभवत्वादेकसालाख्येग्रामे स्थाणुमतीं संततजलप्रवाहेणस्थाणुभूतवृक्षत्वात् स्थाणुमतींनामनदीं । निम्नप्रदेशत्वात् विनताख्येनगरे । बहुजलवत्त्वेनगोमत्याख्यांनदींच ततार । भरतः सुपरिश्रान्तवाहनःसन् कलिङ्गनगरसमीपस्थंसालवनं सर्जेकवनं।प्राप्य विश्रमार्थंगत्वा। ततस्तदाखल्पकालएवाग-

वेनवा तीर्थतयावा ॥ ७ ॥ ति० भद्रेण प्रशस्तेनरथेन ॥ ८ ॥ ति० अंशुधाने ग्रामे । महानदींगङ्गां दुष्प्रतरांज्ञात्वा प्राग्वटे पुरेआगत्य तत्रतांतीर्त्वा कुटिकोष्ठिकामायात् । तांतीर्त्वा धर्मवर्धनंग्राममगात् । ती० अंशुधाने अंशुधानाख्यदेशे । प्राग्वटेपुरेभागीरथीमुपायात् प्राप्तवान् । अपश्यदितिवापाठः ॥ ९—१० ॥ ति० सालांस्तुप्रियकानितिपाठेसालशब्दोवृक्षपर्यायः । सतांस्त्विति पाठेसभरतइत्यर्थः ॥ १३ ॥ शि० पार्वतीयशब्दस्स्वार्थाणन्तः ॥ १४ ॥ ती० हस्तिपृष्ठकमासाद्य गजपृष्ठमारुह्यकुटिकामत्यवर्तत । अनेन शनैरागन्तव्यमितिसेनायाअनुज्ञादत्ता । तथाप्यनुजीविनःकेचनजनास्सगजास्समागताइत्यवगम्यते । कतक०

[ पा० ] १ ट. मिवाभ्यगात्. ङ. झ. मिवात्यगात्. २ क. ख. ङ. च. छ. झ. ञ. ट. दुष्प्रतरांसोंऽशुधाने. ३ घ. अपश्यद्राघवः. ४ क. ख. कोष्ठगां. घ. तोष्ठ्रकां. ५ ङ. छ. झ. ट. समगाद्धर्म. ६ च. झ. ञ. ट. प्रस्थंसमागमत्. ७ ख. ङ. छ. झ. ट. सतांस्तु. ८ ङ. छ. झ. चोत्तरगां. ख. प्रोत्तानिकां. ९ घ. ज. लोहितेस. क. ख. ग. झ. ञ. ट. लोहित्येस. ङ. छ. लौहित्येच. १० इदमर्धं. ख. पुस्तकेदृश्यते. ११ ज. कालवनं. ङ. मालवनं. १२ क. घ. थ. तथा.

वनं च समतीत्याशु शर्वर्यामरुणोदये ॥ अयोध्यां मनुना राज्ञा निर्मितां संददर्श ह ॥ १८ ॥
तां पुरीं पुरुषव्याघ्रस्सप्तरात्रोषितः पथि ॥ अयोध्यामग्रतो दृष्ट्वा सारथिं वाक्यमब्रवीत् ॥ १९ ॥
एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ॥ अयोध्या दृश्यते दूरात्सारथे पाण्डुमृत्तिका ॥२०॥
यज्वभिर्गुणसंपन्नैर्ब्राह्मणैर्वेदपारगैः ॥ भूयिष्ठमृद्धैराकीर्णा राजर्षिपरिपालिता ॥ २१ ॥
अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान् ॥ समन्तान्नरनारीणां तमद्य न शृणोम्यहम् ॥ २२ ॥
उद्यानानि हि सायाह्ने क्रीडित्वोपरतैर्नरैः ॥ समन्ताद्विप्रधावद्भिः प्रकाशन्ते ममान्यदा ॥
तान्यद्यानुरुदन्तीव परित्यक्तानि कामिभिः ॥ २३ ॥
अरण्यभूतेव पुरी सारथे प्रतिभाति मे ॥ न ह्यत्र यानैर्दृश्यन्ते न गजैर्न च वाजिभिः ॥
निर्यान्तो वाऽभियान्तो वा नरमुख्या यथापुरम् ॥ २४ ॥
उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च ॥ जनानां रतिसंयोगेष्वत्यन्तगुणवन्ति च ॥ २५ ॥
तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः ॥ स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः ॥ २६ ॥
नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणाम् ॥ संरक्तां मधुरां वाणीं कलं व्याहरतां बहु ॥ २७॥

च्छत् ॥ १६—१७ ॥ सालवनंच शर्वर्यामाशुसमतीत्य अरुणोदयेऽयोध्यांसंददर्श ॥ १८ ॥ पथिसप्तरात्रोषितः अष्टमदिवसे त्वरातिशयेनरात्रावपिगत्वा अरुणोदयसमयेअयोध्यांददर्श । दृष्ट्वासारथिमब्रवीच्च ॥१९॥ एषेत्यादिश्लोकद्वयमेकान्वयं । पाण्डुमृत्तिका गोमयानुलेपनाद्याचरणाभावाच्छ्वेतमृत्तिका । एषाऽयोध्या नातिप्रतीतामेदृश्यते नातिसंतुष्टाद्दृश्यते । "सुप्सुपा" इतिसमासः । "प्रतीतोहृषितेख्यातेज्ञातेप्रत्ययितेबुधे" इतिवैजयन्ती । यज्वभिः विधिनेष्टवद्भिः । गुणसंपन्नैः शमदमादिगुणसमृद्धैः । भूयिष्ठं भृशं । ऋद्धैः धनिकैः ॥ २०—२१ ॥ श्रूयतइति वर्तमाननिर्देशस्स्मृतौवर्तमानवद्भानात् । नरविशिष्टानार्योनरनार्यस्तासां ॥ २२ ॥ उद्यानानीतिसार्धश्लोकमेकंवाक्यं । उद्यानानिसायाह्ने गतेत्वितिशेषः । रात्रौक्रीडित्वाउपरतैः प्रातर्विप्रधावद्भिः गृहंप्रतिगच्छद्भिः । नरैः अन्यदा पूर्वं । प्रकाशन्ते अद्यत्वाहृतानीति ॥ २३ ॥ प्रकारान्तरमस्याह—अरण्येति यानैः शिबिकादिभिः । निर्यान्तः नगरान्निर्गच्छन्तः । अभियान्तः प्रविशन्तः ॥ २४ ॥ मत्तानि फलपल्लवमकरन्दास्वादेनमत्तशुककोकिलभ्रमरादियुक्तत्वान्मत्तानि । प्रमुदितानि आलवालकरणदोहदसेचनादिनाकन्दलितानि । रतिसंयोगेषु रत्यर्थसंयोगेषु । अत्यन्तगुणवन्ति विविधकुसुमलतागृहदीर्घिकाक्रीडापर्वतादिगुणयुक्तानि । अद्यत्वाहृतानीति द्रुमैरुपलक्षितानि पश्यामीत्यन्वयः ॥ २५—२६ ॥ अद्यापि सूर्योदयेपि । मत्तानां स्वस्वाभीष्टफलभोजनेनमत्तानां । अतएव संरक्तां रागयुक्तां । मधुरां रमणीयां । वाणीं कलंयथाभवतितथाव्याहरतां मृगपक्षिणां क्रीडामृगशुकशारिकाप्रभृतीनां । शब्दोनश्रूयते

हस्तिपृष्ठकमितिएकसालेइतिचश्लोकद्वयंप्रक्षिप्तम् ॥ १५ ॥ **ती०** पाण्डुमृत्तिका सुधाधवलितसौधनिचयत्वादयोध्यायाःपाण्डुमृत्तिकावत्त्वं । **स०** अदूरादितिच्छेदः ॥ २० ॥ **स०** श्रूयतेपुरा अश्रूयतअशृणवमित्यर्थः । "पुरिलुङ्चास्मे" इतिभूतानद्यतने विभाषालुङ् । चाल्लडतीतेऽर्थे ॥ २२ ॥ **ति०** अनु मांलक्षीकृत्य रुदन्तीव । ममान्यथा महारण्यानीवप्रकाशन्ते । **स०** अन्यथाप्रकाशनमेवदर्शयति—**तानीति** । कामिभिःपरित्यक्तानीतिहेतोः रुदन्तीवप्रकाशन्तइत्यन्वयः ॥ २३ ॥ **ति०** मत्तप्रमुदितानि मत्तप्रमुदितभृङ्गकोकिलादिमन्ति तादृशस्त्रीपुरुषवन्तिच । **स०** मत्ताश्चते प्रकर्षेणमुत्येषांते । तैरितानि युक्तानि ॥ २५ ॥ **ती०** स्रस्तपर्णैःअतएवविक्रोशद्भिरिवद्रुमैरुपलक्षितानि । **स०** विक्रोशद्भिरिवद्रुमैस्सह उद्यानानिपश्यामीत्यन्वयः । यद्वा द्रुमैः एतानि आ सम्यक् इतानियुक्तानि ॥ २६ ॥ **स०** संरक्तां नानारागसहितां मधुरांवाणींव्याहरतांपक्षिणां कलंव्याहर-

**[ पा० ]** १ क. ग. ङ—ट. सददर्श. २ क. च. रथेसारथिमब्रवीत्. ख. ङ. छ. झ. ञ. ट. सारथिंचेदमब्रवीत्. ३ क. घ. ज. वृद्धैराकीर्णा. ४ ख. ङ. छ. झ. ञ. ट. वरपालिता. ५ क—घ. ज. उद्यानानिच. ६ क. ख. घ—ट. ममान्यथा. ७ ङ. च. छ. झ. ञ. ट. भातिमां. क. ख. भातिमा. ८ ङ. झ. ञ. ट. पुरा. ९ घ. प्रमुदितानिवा. १० ग. ष्वत्यन्तं. ११ ङ. झ. ट. संरक्तां. च. ञ. सुरक्तां. ख. अत्यर्थंमधुरां. १२ क. च. ञ. मुहुः.

[1]चन्दनागरु[2]संपृक्तो धूप[3]संमूर्च्छितोऽतुलः ॥ प्रवाति पवनः श्रीमान्किंनु नाद्य यथा[4]पुरम् ॥ २८ ॥
भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः ॥ किमद्य शब्दो विरतः सदाऽदीनगतिः पुरा ॥ २९ ॥
अनिष्टानि च पापानि पश्यामि विविधानि च ॥ निमित्तान्यमनोज्ञानि तेन सीदति मे मनः ॥३०
[5]सर्वथा कुशलं सूत दुर्लभं मम बन्धुषु ॥ तथा ह्यसति संमोहे हृदयं [6]सीदतीव मे ॥ ३१ ॥
विषण्णः श्रान्तहृदयस्त्रस्तः [7]स लुलितेन्द्रियः ॥ भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् ॥ ३२ ॥
द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ॥ द्वास्स्थैरुत्थाय [8]विजयं पृष्टस्तैः सहितो ययौ ॥ ३३ ॥
[9]स त्वनेकाग्रहृदयो द्वास्स्थं प्रत्यर्च्य तं जनम् ॥ सूतमश्वपतेः [10]क्लान्तमब्रवीत्तत्र राघवः ॥ ३४ ॥
किमहं त्वरया नीतः [11]कारणेन विनाऽनघ ॥ [12]अशुभाशङ्कि हृदयं शीलं च पततीव मे ॥ ३५ ॥
श्रुता नो यादृशाः पूर्वं नृपतीनां विनाशने ॥ आकारांस्तानहं सर्वानिह पश्यामि सारथे ॥ ३६ ॥
संमार्जनविहीनानि परुषाण्युपलक्षये ॥ असंयतकवाटानि श्रीविहीनानि सर्वशः ॥ ३७ ॥
बलिकर्मविहीनानि धूपसंमोदनेन च ॥ अनाशितकुटुम्बानि प्रभाहीनजनानि च ॥
अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् ॥ ३८ ॥
अपेतमाल्य[13]शोभान्यप्यसंमृष्टाजिराणि च ॥ देवागाराणि शून्यानि न [14]चाभान्ति यथा[15]पुरम् ॥ ३९ ॥
देवतार्चाः [16]प्रविद्धाश्च [17]यज्ञगोष्ठ्यस्तथाविधाः ॥ माल्यापणेषु राजन्ते नाद्य [18]पण्यानि वा तथा ॥४०॥

॥ २७ ॥ चन्दनागरुसंपृक्तः चन्दनागरुगन्धसंपृक्तः । धूपसंमूर्छितः धूपव्याप्तः । श्रीमान् रमणीयः ॥ २८ ॥ कोणसंघट्टितः भेरीमृदङ्गवीणावादनसाधनभूतदण्डहस्ततलाङ्गुल्याद्याहतिजनितः । सदाअदीनगतिरितिपदच्छेदः । पुरा अदीनगतिःशब्दः अद्यपुनःकिमर्थं विरतः उपरतः ॥ २९ ॥ अनिष्टानि अनिष्टसूचकानि । पापानि क्रूराणि । "पापंस्यात्क्रूरपाप्मनोः" इतिवैजयन्ती । अमनोज्ञानि दर्शनमात्रेणदुःखकराणि । निमित्तानि अशुभसूचकानि शिवावाशितादीनि ॥ ३० ॥ संमोहे संमोहकारणे ॥ ३१ ॥ विषण्णः दुःखितः । श्रान्तहृदयः कलुषितमनस्कः । लुलितेन्द्रियः क्षुभितबाह्येन्द्रियः ॥ ३२ ॥ वैजयन्तेन वैजयन्ताख्येन । द्वारेण नगरपश्चिमद्वारेण । अत्रेऽइतिगायत्र्यक्षरं । पञ्चसहस्राणिश्लोकानांगतानि ॥ ३३ ॥ अनेकाग्रहृदयः व्याकुलमनाः । प्रत्यर्च्य सोपचारंनिवर्त्य ॥ ३४ ॥ कारणेनविना आह्वानकारणोक्तिंविना । त्वरयानीतः द्रुतंवसिष्ठेनानीतः । अनघेतिचिन्तासमर्थतोक्तिः ॥ ३५ ॥ नः अस्माभिः । आकारान् वक्ष्यमाणान् तान् तादृशान् । इह नगरे ॥३६॥ आकारानेवदर्शयति—संमार्जनविहीनानीत्यादिना । संमार्जनविहीनानि कानिचित्कुटुम्बिभवनानीतिशेषः ॥ ३७ ॥ धूपसंमोदनेन धूमपरिमलेन । विहीनानीत्यनुकर्षः । अनाशितकुटुम्बानि अभोजितकुटुम्बानि । ण्यन्तप्रयोगः । भोजयितॄणामपिदुःखाक्रान्ततयापाकयत्नाभावात् ॥ ३८ ॥ अपेतामाल्यशोभा द्वारिबद्धपुष्पदामशोभा येभ्यस्तानि । शून्यानि पूजकपरिचारकादिरहितानि ॥ ३९ ॥ देवतार्चाः देवपूजाः । प्रविद्धाः लुप्ताः । "अर्चापूजाप्रतिमयोः" इतिवैजयन्ती । यज्ञगोष्ठ्यः यज्ञसभाः । तथाविधाः प्रविद्धाइत्यर्थः ।

तांमृगाणामितिबुद्ध्याविवेकेनान्वयः ॥ २७ ॥ **ति०** पापानि क्रूराणि काकादयः ॥ ३० ॥ **ती०** वैजयन्तेनेत्युक्तिरिन्द्रप्रासादसदृशत्वेननिर्मितत्वात् । यद्वा विजयप्रदविन्यासविशेषवत्त्वेन । यद्वा वैजयन्ती पताकाऽस्यास्तीतिवैजयन्तं । अर्शआद्यच् ॥ ३२ ॥

[ पा० ] १ ङ. झ. चन्दनागुरु. २ क. ङ. ज. झ. संपृक्तधूप. घ. संपृक्तधूम. ३ क. ङ. ज. झ. संमूर्च्छितोऽमलः. ४ ङ. छ—ट. पुरा. ५ ज. सर्ववा. ६ क. च. ञ. ट. मेऽवसीदति. ख. मेविषीदति. ७ क. ग. च—ट. संलुलितेन्द्रियः. घ. ङ. संकुलितेन्द्रियः. ८ क. च. ञ. विजयमुक्तस्तैः. ९ च. ट. सचानेकाग्र. १० ग. श्रान्तं. ११ क. ख. कारणानि. १२ घ. अशुभाशंसि. १३ क. ग—ट. शोभानिअसंमृष्टा. ख. शोभानिह्यसंमृष्टा. १४ क. च. छ. ज. ञ. ट. नचभान्ति. ख. ग. ङ. झ. नभान्तीह. १५ ख. ग. ङ. छ—ट. पुरा. १६ ज. प्रतिष्ठाश्च. ख. प्रसिद्धाश्च. ग. प्रवृद्धाश्च. १७ छ. झ. यज्ञगोष्ठास्तथैवच. ट. यज्ञगोष्ठास्तथाविधाः. १८ च. ञ. ट. पण्यानिवै.

दृश्यन्ते वणिजोऽप्यद्य न यथापूर्वमत्र वै ॥ ध्यानसंविग्नहृदया नष्टव्यापारयन्त्रिताः ॥
देवायतनचैत्येषु दीनाः पक्षिगणास्तथा ॥ ४१ ॥
मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् ॥ सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे ॥ ४२ ॥
इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः ॥ तान्यरिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ॥ ४३ ॥
तां शून्यशृङ्गाटकवेश्मरथ्यां रजोरुणद्वारकपाटयन्त्राम् ॥
दृष्ट्वा पुरीमिन्द्रपुरप्रकाशां दुःखेन संपूर्णतरो बभूव ॥ ४४ ॥
बहूनि पश्यन्मनसोऽप्रियाणि यान्यन्यदा नास्य पुरे बभूवुः ॥
अवाक्छिरा दीनमना नहृष्टः पितुर्महात्मा प्रविवेश वेश्म ॥ ४५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

## द्विसप्ततितमः सर्गः ॥ ७२ ॥

पितृगृहंगतवताभरतेनतत्रतददर्शनात्कैकेयीगृहमेत्यतदभिवादनपूर्वकंतदीयप्रश्नोत्तरत्वेनमातामहादिकुशलमभिधायतां प्रतिदशरथस्थितिप्रश्नः ॥ १ ॥ कैकेय्याभरतंप्रतिराज्ञोलोकान्तरगतेः तद्धेतुतयारामप्रवासनस्य तत्कारणत्वेनस्वीयवरयाचनायाश्चनिवेदनपूर्वकंतत्समाश्वासनेनपितृसंस्करणपूर्वकंराज्येऽभिषेकचोदना ॥ २ ॥

अपश्यंस्तु ततस्तत्र पितरं पितुरालये ॥ जगाम भरतो द्रष्टुं मातरं मातुरालये ॥ १ ॥
अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् ॥ उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम् ॥ २ ॥
स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितम् ॥ भरतः प्रतिजग्राह जनन्याश्चरणौ शुभौ ॥ ३ ॥
सा तं मूर्धन्युपाघ्राय परिष्वज्य यशस्विनम् ॥ अङ्के भरतमारोप्य प्रष्टुं समुपचक्रमे ॥ ४ ॥
अद्य ते कतिचिद्रात्र्यश्च्युतस्यार्यकवेश्मनः ॥ अपि नाध्वश्रमः शीघ्रं रथेनापततस्तव ॥ ५ ॥
आर्यकस्ते सुकुशली युधाजिन्मातुलस्तव ॥ प्रवासाच्च सुखं पुत्र सर्वं मे वक्तुमर्हसि ॥ ६ ॥

---

पण्यानि क्रयपुष्पाणि ॥४०॥ ध्यानसंविग्नहृदयाः ध्यानासक्तहृदयाः । नष्टव्यापारयन्त्रिताः नष्टक्रयविक्रयादिव्यापाराः । यन्त्रिताः निरुद्धाश्च । यन्त्रिसंकोचइतिधातुः ॥४१॥ स्त्रीपुंसेति निपातनात् समासान्तोच्प्रत्ययः । समुदायसमुदायिनोर्भेदविवक्षयाजनविशेषणत्वं ॥ ४२ ॥ तान्यरिष्टानिप्रेक्ष्य तंसूतमित्येवमुक्त्वेत्यन्वयः ॥ ४३ ॥ शून्याःजनरहिताः शृङ्गाटकवेश्मरथ्याः चतुष्पथगृहवीथयोयस्यां । रजोरुणद्वारकपाटयन्त्रां रजोभिःअरुणानिमलिनानि द्वारस्थकपाटानां यन्त्राणि दारुबन्धादीनियस्यां । संमार्जनाद्यभावादितिभावः ॥४४॥ अन्यदा पूर्वकाले । अस्य भरतस्य । यानिअप्रियाणिनबभूवुः तानि मनसोप्रियाणिपश्यन्सन् अवाक्शिराः अवनतशिराः । नहृष्टः अहृष्टः महात्मा महाधैर्यः ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

---

कतिचिदितिप्रश्ने पृथङ्निपातोवा । च्युतस्य निर्गतस्य । आर्यकः मातामहः । अपिःप्रश्ने ॥ ५ ॥ आर्यकःसुकुशली किमितिशेषः । प्रवासात्

**शि०** तदेवभङ्ग्यन्तरेणबोधयन्नाह—**बभूवेति** । अन्यदा अन्यस्मिन्कालेयानिअप्रियाणि अस्यपुरेनबभूवुः तानिपश्यन्महात्मा भरतः नहृष्टःहर्षाभावविशिष्टोबभूव । पितुर्वेश्मप्रविवेशच । **ति०** अन्यदा राजजीवने ॥ ४५ ॥ इत्येकसप्ततितमस्सर्गः ॥ ७१ ॥
**स०** स्वगृहं स्वमातृगृहं ॥ ३ ॥ **स०** कतिचित् कियत्यः । **शि०** कतिरात्र्यः व्यतीताइतिशेषः ॥ ५ ॥

[ **पा०** ] १ ख. च. ञ. ट. वणिजोप्यत्र. २ ख. च. ज. ञ. ट. मद्यवै. ३ ङ. झ. ट. पक्षिमृगास्तथा. घ. ज. पक्षिमृगाः स्थिताः. ४ क—छ. झ. ञ. ट. तान्यनिष्टानि. ५ क. छ. झ. ञ. ट. मिन्द्रपुरी. ६ ङ. छ. झ. ट. ठ. बभूव. ७ ज. यान्यन्यथा. ८ ख. नात्र. ९ छ. झ. ट. प्रेक्ष्यजग्राह. १० ख. ङ. च. छ. झ. ञ. ट. तंमूर्ध्निसमुपाघ्राय. क. सामूर्धनिसमाघ्राय.

एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः ॥ [1]आचष्ट भरतः सर्वं मात्रे राजीवलोचनः ॥ ७ ॥
अद्य मे सप्तमी रात्रिश्च्युतस्यार्यकवेश्मनः ॥ अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥ ८ ॥
यन्मे धनं च रत्नं च ददौ राजा परंतपः ॥ परिश्रान्तं पथ्यभवत्ततोऽहं पूर्वमागतः ॥ ९ ॥
राजवाक्यहरैर्दूतैस्त्वर्यमाणोऽहमागतः ॥ यदहं प्रष्टुमिच्छामि तदम्बा [2]वक्तुमर्हति ॥ १० ॥
शून्योऽयं शयनीयस्ते पर्यङ्को हेमभूषितः ॥ न चायमिक्ष्वाकुजनः प्रहृष्टः प्रति[3]भाति मा ॥ ११ ॥
राजा भवति भूयिष्ठमिहाम्बाया निवेशने ॥ तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ॥ १२ ॥
[4]पितुर्ग्रहीष्ये [5]चरणौ तं ममाख्याहि पृच्छतः ॥ आहोस्वि[6]दम्ब ज्येष्ठायाः कौसल्याया निवेशने ॥१३॥
तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम् ॥ अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥ १४ ॥
या गतिः सर्वभूतानां तां गतिं ते पिता गतः ॥ राजा महात्मा तेजस्वी यायजूकः सतां[7]गतिः॥१५॥
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवाञ्शुचिः ॥ पपात सहसा भूमौ पितृशोकबलार्दितः ॥ १६ ॥
हा हतोस्मीति [8]कृपणां दीनां वाचमुदीरयन् ॥ निपपात [9]महाबाहुर्बाहू विक्षिप्य वीर्यवान् ॥ १७ ॥
ततः शोकेन [10]संवीतः पितुर्मरणदुःखितः ॥ विललाप महातेजा भ्रान्ताकुलितचेतनः ॥ १८ ॥
एतत्सुरुचिरं भाति पितुर्मे शयनं पुरा ॥ शशिनेवामलं रात्रौ गगनं तोयदात्यये ॥ १९ ॥
तदिदं न विभात्यद्य विहीनं तेन धीमता ॥ व्योमेव शशिना हीन[11]मप्शुष्क इव सागरः ॥ २० ॥
[12]बाष्पमुत्सृज्य कण्ठेन [13]स्वार्तः परमपीडितः ॥ प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतांवरः ॥ २१ ॥
तमार्तं देवसंकाशं समीक्ष्य पतितं भुवि ॥ निकृत्तमिव सालस्य स्कन्धं परशुना वने ॥ २२ ॥
[14]मत्तमातङ्गसंकाशं चन्द्रार्कसदृशं [15]भुवः ॥ उत्थापयित्वा शोकार्तं वचनं चेदमब्रवीत् ॥ २३ ॥

इतोनिर्गमादारभ्य अपिसुखमित्यनुषक्तापिनाऽन्वयः । एतत्सर्वमेवक्तुमर्हसीतियोजना ॥ ६—७ ॥ अद्यरात्रिः अस्मादह्नः पूर्वरात्रिः । सप्तमी । अतः "सप्तरात्रोषितः पथि" इत्यनेन नविरोधः ॥ ८ ॥ राजा मातामहः । धनं प्रागुक्ताश्वादि । यद्ददौ तत् परिश्रान्तं परिश्रान्तवाहनं । अतएवपथ्यभवत् ॥ ९—१० ॥ शून्यः पितृशून्यः । शयनीयः शयनार्हः । इक्ष्वाकुजनः दशरथजनः ॥ ११ ॥ भवतीत्यत्रेतिकरणंद्रष्टव्यं । भूयिष्ठं प्राचुर्येण ॥ १२ ॥ कौसल्यायानिवेशने भवतिकिमित्यनुषञ्जनीयं ॥१३॥ अजानन्तं राजवृत्तान्तमजानन्तं । प्रियवत् प्रियमिव । प्रजानन्ती अप्रियमुवाचेत्यन्वयः । तत्रहेतुः—राज्यलोभेनमोहितेति ॥ १४ ॥ अस्यदुःखमनुत्पादयन्तीमृदूक्त्यामरणमाह —येति । यायजूकः इज्याशीलः । "इज्याशीलोयायजूकः" इतिहलायुधः ॥ १५—१७ ॥ शोकेनसंवीतः शोकेनावृतः । मरणदुःखितः मरणश्रवणेनसंजातदुःखः । भ्रान्ताअनवस्थिता आकुलिताखिन्नाचेतना यस्यसः भ्रान्ताकुलितचेतनः ॥ १८ ॥ विलापमेवाह —एतदित्यादिना ॥ १९ ॥ अपूशुष्कःशुष्कापः । आहिताग्न्यादित्वान्निष्ठायाःपरनिपातः । उच्छुष्कइति पाठान्तरं ॥२०॥ कण्ठेन कण्ठस्वरेण । स्वार्तः सुतरामार्तः । अभवदितिशेषः । परमपीडितः मानसव्य-

**शि०** सप्तमी सप्तम्याः ईः गमनंव्यतीतत्वमित्यर्थः । यस्यास्सा अष्टमीत्यर्थः । अतएव सप्तरात्रोषितःपथीतिपूर्वोक्तेननविरोधः ॥ ८ ॥ **शि०** मेमह्यंयद्धनंरत्नंचराजाददौतेनतद्वारेणपरिश्रान्तं वाहनजातमितिशेषः ॥ ९ ॥ **शि०** अंबा त्वं वक्तुमर्हसि । **स०** अंब आवक्तुमर्हसीतिच्छेदः ॥ १० ॥ **ति०** अंबाज्येष्ठायाः अंबानांमध्येयाज्येष्ठा तस्याः । निवेशने तिष्ठतीतिशेषः ॥ १३ ॥ **स०** यागतिः देहान्तरेणप्राप्यंस्थानं ॥ १५ ॥ **स०** पुराभाति अभात् । तोयदात्यये शरत्काले ॥ १९ ॥ **ति०** अपूशुष्कमिवसागरंइतिपाठे सागरस्वरूपमित्यर्थः । **स०** शुष्कापइतिपाठे समासान्तोकारप्रत्ययः ॥ २० ॥ **स०** मत्तमातङ्गसंकाशं धूलिप्र-

**[ पा० ]** १ ग. च. छ. ञ. ट. आचष्टे. २ ट. ठ. वक्तुमर्हसि. ३ क. ङ. च. छ. झ. ञ. ट. भातिमे. च. भातिमां. ४ अस्मिञ्श्लोकेपूर्वोत्तरार्धयोःपौर्वापर्यं क. पाठेदृश्यते. ५ क. ङ. च. छ. झ. ञ. ट. पादौच. ६ ङ. च. छ. झ. ञ. ट. दंबाज्येष्ठायाः. ७ ग. घ. ज. पतिः. ८ ङ. झ. ट. कृपणं. ९ क. महाबाहुर्भुवि. १० घ. संविग्नः. ११ क—घ. मुच्छुष्कइव. १२ ग. भरतोबाष्पमुत्सृज्य. १३ ङ. छ. झ. स्वात्मनापरिपीडितः. १४ क, ख, घ—छ. झ. ट. मातामातङ्ग. १५ ङ, छ, झ, ट. सुतं.

उत्तिष्ठोत्तिष्ठ किं शेषे राजन्[1]नत्र महायशः ॥ [2]त्वद्विधा न हि शोचन्ति सन्तः सदसि संमताः ॥२४॥
दानयज्ञाधिकारा हि शीलश्रुति[3]वचोनुगा ॥ बुद्धिस्ते बुद्धिसंपन्न प्रभेवार्कस्य [4]मन्दिरे ॥ २५ ॥
स रुदित्वा चिरं कालं भूमौ वि[5]परिवृत्य च ॥ जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥
अभिषेक्ष्यति [6]रामं नु [7]राजा यज्ञं नु यक्ष्यते ॥ इत्यहं कृतसंकल्पो हृष्टो यात्रा[8]मयासिषम् ॥ २७ ॥
तदिदं ह्यन्यथा [9]भूतं व्यवदीर्णं मनो मम ॥ पितरं यो न पश्यामि नित्यं प्रियहिते रतम् ॥ २८ ॥
अम्ब केनात्यगाद्राजा व्याधिना मय्यनागते ॥ धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥२९॥
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् ॥ [10]उपजिघ्रेद्धि मां मूर्ध्नि तातः सं[11]नम्य सत्वरम् ॥३०॥
क्व स पाणिः सुखस्पर्शस्तातस्याक्लिष्टकर्मणः ॥ [12]येन मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ॥३१॥
यो मे [13]भ्राता पिता बन्धुर्यस्य दासोस्मि धी[14]मतः ॥ तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥३२॥
पिता हि भवति [15]ज्येष्ठो धर्ममार्यस्य जानतः ॥ तस्य पादौ गृहीष्यामि स हीदानीं गतिर्मम ॥३३॥
[16]धर्मविद्धर्मनित्यश्च [17]सत्यसन्धो दृढव्रतः ॥ [18]आर्यः किमब्रवीद्राजा पिता मे सत्यविक्रमः ॥ ३४ ॥
[ [19]गुरुरेकः प्रजानां तु पिता मे सत्यविक्रमः ] ॥ पश्चिमं साधु संदेशमिच्छामि श्रोतुमात्मनः ॥
इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ॥ ३५ ॥
रामेति राजा विलपन्हा सीते लक्ष्मणेति च ॥ स महात्मा परं लोकं गतो [20]गतिमतां वरः ॥ ३६ ॥

---

थायुक्तः ॥ २१—२३ ॥ राजन्निति भरतशोकनिवर्तनार्थमित्युक्तवती । सदसिसंमताः सभ्याइत्यर्थः ॥ २४ ॥ दानयज्ञौअधिक्रियेतेअनयेतिदानयज्ञाधिकारा । तत्रहेतुःशीलेति । शीलंसद्वृत्तं श्रुतिवचोवेदवाक्यं तेअनुगच्छतीतितदनुगा तदनुसारिणी बुद्धिः अध्यवसायः । अर्कस्यप्रभामन्दिरइव सूर्यप्रभायथा स्वस्थानेनिश्चलाभवतितथातेबुद्धिर्निश्चलाभातीत्यर्थः । मन्दरइतिपाठे अर्कस्यप्रभामन्दरइवेत्युक्तिरत्युन्नतमन्दरपर्वतेअर्कप्रभायाःपर्वतान्तरापेक्षयाचिरकालावस्थानात् । [ मन्दरइतिपाठे मन्दरशिखरेस्थितस्यार्कस्यप्रभेवाधिकप्रकाशवतीत्यर्थः । उत्तरायणेहिमन्दरगतस्यसूर्यस्यप्रभाऽधिकंप्रकाशतइतिप्रसिद्धम् ] ॥ २५—२६ ॥ यज्ञंयक्ष्यतइति यज्ञंकरिष्यतइत्यर्थः । यात्रामयासिषं यात्रामकार्षमित्यर्थः ॥ २७ ॥ व्यवदीर्णं भिन्नं ॥ २८—३० ॥ परिमार्जति परिमार्ष्टि । मां आगतमितिशेषः । क्वसपाणिः गतइतिशेषः ॥ ३१—३४ ॥ आत्मनःसंदेशं मद्विषयसंदेशं ॥ ३५ ॥ एवं पृष्टवन्तंभरतंप्रतित्वांराजा न स्मृतवान् किंतुराममेवस्मरन्स्वर्गमगादितिपितृविषयस्नेहनिवर्त-

---

क्षेपेणगजसदृशं । चन्द्रार्कसदृशं रामपक्षाणांचन्द्रसदृशं अन्येषांतापकत्वेनसूर्यसदृशमितिविवेकः ॥ २३ ॥ **स०** स्वमनोविवक्षया राजन्नित्युक्तिः ॥ २४ ॥ **ति०** श्रुतिःश्रुतं । तपः चान्द्रायणादि । शीलश्रुतिमनोनुगेतिपाठे तदुभयपरिशीलनविषयंयन्मनः संकल्पात्मकं तदनुगाबुद्धिः अध्यवसायात्मिका । अर्कस्यमन्दिरे अर्कमण्डले । तदेवहि तस्यगृहं । **स०** अर्कप्रभायथामन्दिरे समुद्रे सर्वदाव्याप्ता तथातवबुद्धिरपि लौकिकालौकिकविषयेव्याप्तेत्यर्थः । यद्वा मन्दिरे गृहे । अर्कस्य स्फटिकस्य । प्रभायथा तथातवबुद्धिरपिस्वच्छा । "अर्कोर्कपर्णेस्फटिके" "मन्दिरंनगरेऽगारेमन्दिरोमकरालये" इतिविश्वः ॥ २५ ॥ **ति०** अयाचिषमितिपाठे मातामहमितिशेषः ॥ २७ ॥ **शि०** मांप्राप्तंतातोराजानजानाति । नूनं निश्चितमेतत् । अन्यथामांसंनाम्यमूर्ध्निउपजिघ्रेत् । तुरन्यथार्थे ॥ ३० ॥ **शि०** गुरुरिति । तुयतः मेपिताप्रजानामेकोमुख्यः । गुरुः उपदेष्टा । अतः आत्मनः मत्संबन्धिनं । पश्चिमं अन्तिमं । संदेशं तदुपदिष्टंश्रोतुमिच्छामि । एतेनसंदेशंवदेतिसूचितं ॥ ३५ ॥ **ति०** विलपन्परलोकंगतः नतुकिंचिदपिसंदेशम-

[ **पा०** ] १ क. ख. ग. ङ. च. छ. ञ. राजपुत्र. २ क. त्वद्विधाहिन. ३ क. घ—ट. तपोनुगा. ४ घ. मण्डले. ५ ङ. छ. झ. ट. परिविवृत्य. ६ क. ख. ङ—ट. रामंतु. ७ च. रामोयज्ञेन. ख. राजायने. ८ छ. ट. अयाचिषं. ९ घ. भूतमवदीर्णं. १० ङ. छ. झ. ट. जिघ्रेत्तु. ११ ग. ङ. छ. झ. ञ. ट. संनाम्य. १२ ङ. छ. झ. ट. योहिमां. १३ ज. त्राता. १४ ङ. छ. झ. ट. संमतः. १५ क. श्रेष्ठो. १६ ङ. छ. झ. ट. धर्मविद्धर्मशीलश्च. १७ क. ख. ङ. च. छ. झ. ञ. ट. महाभागो. १८ क. ख. ग. ङ. च. छ. झ. ञ. ट. आर्ये. १९ इदमर्धं. ट. पुस्तकेदृश्यते. २० झ. मतिमतां.

[1]ईमां तु पश्चिमां वाचं व्याजहार पिता तव ॥ [2]कालधर्मपरिक्षिप्तः पाशैरिव महागजः ॥ ३७ ॥
[3]सिद्धार्थास्ते नरा राममागतं सी[4]तया सह ॥ लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम् ॥ ३८ ॥
तच्छ्रुत्वा वि[5]षसादैव द्वितीयाप्रियशंसनात् ॥ विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम् ॥ ३९ ॥
क्व चेदानीं स धर्मात्मा कौसल्यानन्दवर्धनः ॥ लक्ष्मणेन सह भ्रात्रा सीतया च [6]समं गतः ॥४०॥
तथा पृष्टा [7]यथातत्त्वमाख्यातुमुपचक्रमे ॥ [8]माताऽस्य युगपद्वाक्यं विप्रियं [9]प्रियशङ्कया ॥ ४१ ॥
स हि राजसुतः पुत्र चीरवासा महावनम् ॥ दण्डकान्सह वैदेह्या लक्ष्मणानुचरो गतः ॥ ४२ ॥
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया ॥ स्वस्य वंशस्य माहात्म्यात्प्रष्टुं समुपचक्रमे ॥ ४३ ॥
कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्य चित् ॥ कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥४४॥
कच्चिन्न [10]परदारान्वा राजपुत्रोऽभिमन्यते ॥ [11]कस्मात्स दण्डकारण्ये [12]भ्रूणहेव विवासितः ॥ ४५ ॥
अथास्य चपला माता तत्स्वकर्म यथातथम् ॥ तेनैव स्त्रीस्वभावेन [13]व्याहर्तुमुपचक्रमे ॥ ४६ ॥
एवमुक्ता तु कैकेयी भरतेन महात्मना ॥ उवाच वचनं हृष्टा [14]मूढा पण्डितमानिनी ॥ ४७ ॥
न ब्राह्मणधनं किञ्चिद्धृतं रामेण कस्य चित् ॥ कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥
न रामः [15]परदारांश्च चक्षुर्भ्यामपि पश्यति ॥ ४८ ॥

नाभिप्रायेणोत्तरमाह—रामेत्यादिना ॥ ३६ ॥ इमामित्यादिश्लोकद्वयमेकान्वयं । सिद्धार्थाः कृतार्थाः । पुनरागतंद्रक्ष्यन्तीति इमांवाचंव्याजहारेतिसंबन्धः ॥ ३७—३८ ॥ द्वितीयाप्रियशंसनात् राजमरणापेक्षयारामस्यदेशान्तरगमनरूपाप्रियस्यद्वितीयत्वं ॥ ३९—४० ॥ यथातथमितिसम्यक्पाठः । यथाचायमितिपाठे अयं वृत्तान्तः यथा तथाऽऽख्यातुमित्यन्वयः । विप्रियं रामविवासनप्रतिपादकं । प्रियशङ्कया एतच्छ्रवणेनभरतस्यंप्रियंभविष्यतीतिवितर्केण । "शङ्कावितर्कभययोः" इतिवैजयन्ती । युगपत् राजमरणकथनसमकालमेव । यद्वा युगपदाख्यातुमुपचक्रमइत्युपक्रमस्यवक्ष्यमाणपरत्वात् । "याचितस्तेपिताराज्यंरामस्यचविवासनं" इति वक्ष्यमाणवाक्यार्थाभिप्रायेणयौगपद्यं ॥ ४१ ॥ दण्डकान्महावनमिति वेदाःप्रमाणमितिवन्निर्देशः ॥ ४२ ॥ चारित्रशङ्कया चारित्रंकिमभूदितिशङ्कया । वंशस्यमाहात्म्यात् असदाचारवैमुख्यपूर्वकसदाचारनिरतत्वंवंशस्यमाहात्म्यं ॥ ४३ ॥ ब्राह्मणधनमित्यत्राविभक्तिकोनिर्देशः । कस्यचिद्ब्राह्मणस्येत्यर्थः । यद्वा कस्यचित् कस्माच्चिद्धेतोरित्यर्थः ॥ ४४ ॥ भ्रूणः श्रुताध्ययनसंपन्नः । "अनूचानोगुणैर्युक्तोव्रतस्वाध्यायवाञ्छुचिः । भ्रूणइत्युच्यतेसद्भिस्त्वेषयोविजितेन्द्रियः" इतिस्मृतेः ॥४५॥ यथातथं यथावृत्तं । निपातनात्साधुः । स्त्रीस्वभावेन चापलेनेत्यर्थः । व्याहर्तुमुपचक्रमे वक्तुंव्यवसितवतीत्यर्थः । अथास्येतिश्लोकोमुनेःखेदाभिनयः एवमितिश्लोकःक्रमिकइतिकेचित् ॥ ४६ ॥ एवमिति । अयंश्लोकः पूर्वानुवादार्थः ॥ ४७ ॥ रामःपरदारान् चक्षुर्भ्यामपिनपश्यति एवंसति नस्पृशतीत्यत्रकिंवक्तव्यमिति

वोचदित्यर्थः ॥ ३६ ॥ **ति०** क्वचेदानीं गतइतिशेषः । समागतः मिलितः ॥ ४० ॥ **ति०** प्रियशंसया प्रियशङ्कया। **शि०** तथा तेनप्रकारेण । पृष्टाऽस्यभरतस्यमाता कैकेयी । प्रियशंसया प्रियबोधनशीलयावाचा । विप्रियं अप्रियत्वेनप्रतिभासमानं । वाक्यं राज्ञोरामादीनांचगमनसूचकवचनं । युगपत् एककालावच्छेदेन । यथान्यायं न्यायमनतिक्रम्य व्याख्यातुं वक्तुमुपचक्रमे । प्रियशङ्कयेतिपाठेतु इदंगमनद्वयं प्रियमप्रियंवेतिसंशयेनोपलक्षितेतिकैकेयीविशेषणम् ॥ ४१ ॥ **ति०** कस्यचित् हेतोरितिशेषः । कस्यचित् अन्यस्यापि धनमितिशेषः । **स०** यद्वारामेणब्राह्मणधनंकिंचिद्वा हृतमितिकस्यापिपुंसः चित् ज्ञानंनेत्यन्वयः ॥४४॥ **ति०**

[ पा० ] १ ङ. छ. झ. ट. इतीमां. २ झ. कालधर्मं. ३ क. ङ. छ. झ. ञ. ट. सिद्धार्थास्तु. ४ ख. ङ. छ. झ. ट. सहसीतया. ५ ङ. च. छ. झ. ञ. ट. विषसादैवं. ६ ख. ग. ङ—ट. समागतः. ७ ङ. छ. झ. ट. यथान्यायं. ८ च. मातास्यतुमहद्वाक्यं. ख. ग. घ. ज. मातास्यसुमहद्वाक्यं. ९ ङ. छ. झ. ट. प्रियशंसया. १० क. च. परदारान्हि. ११ क. च. ज. ञ. कस्माच्च. १२ ङ. छ. झ. ट. भ्रातारामो. १३ ४६—४७ तमश्लोकयोःपौर्वापर्यं क. च. पाठयोर्दृश्यते. १४ ख. ग. ङ. झ. ट. वृथापण्डित. १५ क. ख. परदारान्स. ङ. छ. झ. ट. परदारान्स.

मया तु पुत्र श्रुत्वैव रामस्यैवाभिषेचनम् ॥ याचितस्ते पिता राज्यं रामस्य च विवासनम् ॥ ४९ ॥
स स्ववृत्तिं समास्थाय पिता ते तत्तथाऽकरोत् ॥ रामश्च सहसौमित्रिः प्रेषितः सीतया सह ॥५०॥
तमपश्यन्प्रियं पुत्रं महीपालो महायशाः ॥ पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥ ५१ ॥
त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यताम् ॥ त्वत्कृते हि मया सर्वमिदमेवंविधं कृतम् ॥ ५२ ॥
मा शोकं मा च सन्तापं धैर्यमाश्रय पुत्रक ॥ त्वदधीना हि नगरी राज्यं चैतदनामयम् ॥ ५३ ॥
तत्पुत्र शीघ्रं विधिना विधिज्ञैर्वसिष्ठमुख्यैः सहितो द्विजेन्द्रैः ॥
संकाल्य राजानमदीनसत्त्वमात्मानमुर्व्यामभिषेचयस्व ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ॥ ७३ ॥

भरतेनबहुधाकैकेयीगर्हणपूर्वकंतांप्रतिवनाद्रामस्यायोध्यांप्रत्यानयनेनराज्येऽभिषेचनपूर्वकंस्वस्यतस्मिन्दासीभवनप्रतिज्ञानम् ॥ १ ॥

[ कैकेय्याप्येवमुक्तस्तु भरतो राघवानुजः ॥ कर्णौ कराभ्यां प्रच्छाद्य पपात धरणीतले ॥ १ ॥]
श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ ॥ भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥ २ ॥
किंनु कार्यं हतस्येह मम राज्येन शोचतः ॥ विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ ३ ॥
दुःखे मे दुःखमकरोर्व्रणे क्षारमिवादधाः ॥ राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ ४ ॥
कुलस्य त्वमभावाय कालरात्रिरिवागता ॥ अङ्गारमुपगूह्य स पिता मे नावबुद्धवान् ॥ ५ ॥

---

भावः ॥ ४८ ॥ तेराज्यंरामस्यविवासनंचपितायाचितः पूर्वदत्तवरद्वयविषयत्वेनयाचितइत्यर्थः ॥ ४९॥ स्ववृत्तिं स्वप्रतिज्ञारूपांवृत्तिं ॥ ५० ॥ पुत्रशोकपरिद्यूनः पुत्रशोकेनपरिद्यूनः तप्तः । विलपन्नित्यर्थोवा । “ दिवोविजिगीषायां ” इतिनिष्ठानत्वं ॥ ५१ ॥ धर्मज्ञ राजनीतिज्ञ ॥ ५२ ॥ अनामयं निरुपद्रवं ॥ ५३ ॥ संकाल्य संस्कृत्य ॥ ५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥७२॥

---

वृत्तं अतीतं मृतमितियावत् ॥ २ ॥ कार्यं प्रयोजनं । हतस्य भाग्यहीनस्य ॥ ३ ॥ दुःखेदुःखकरणात् व्रणक्षाराधानसादृश्यं ॥ ४ ॥ कालरात्रिः प्रलयकालोत्थितसर्वसंहारशक्तिः । उपगूह्य आलिङ्ग्य

---

भ्रूणहेवविवासितइतिपाठे सर्वशाखाध्यायीभ्रूणइतितीर्थः। भ्रूणः गर्भइत्यन्ये ॥४५॥ **ति०** स्त्रीस्वभावेन धर्माधर्महिताहितोचितानुचितविवेकशून्यतारूपेण । **शि०** स्त्रीस्वभावेन स्त्रीषुसुतरामभावोयस्यतेन अतिधैर्येणेत्यर्थः । **रामानु०** भ्रूणहेवविवासितइतिश्लोकानन्तरं एवमुक्तेतिश्लोकश्चेत्सुसंगतंभवति । मध्येअथास्येतिश्लोकोवर्तते । स्थितस्यगतिश्चिन्तनीयेतिन्यायेनास्यव्याख्याक्रियते । व्याहर्तुमुपचक्रमे वक्तुंव्यवसितवतीत्यर्थः । **शि०** पञ्चत्वं पञ्चभ्यःपञ्चसंख्याकभूतनिर्मितेभ्यः त्वं अन्यं साकेतमित्यर्थः ॥ ५१ ॥

**ति०** धर्मज्ञ रामवत्पित्राज्ञापालनरूपधर्मज्ञ । **शि०** ननुकिमर्थमेवंकृतमित्यतआह—त्वत्कृते त्वत्तः अन्यस्य देवादेः कृते कार्यार्थं ॥ ५२ ॥ **शि०** अदीनसत्त्वं नदीनंक्षीणंसत्वंयेनतं । राजानं राजत्वं संकल्प्य वसिष्ठाद्युपदेशपूर्वकंगृहीत्वा । आत्मानं स्वबुद्धिं अभिषेचयस्व राजानीतौज्ञापय निवेशयेत्यर्थः । राजशब्दोभावप्रधानः ॥ ५४ ॥ इतिद्विसप्ततितमस्सर्गः ॥ ७२ ॥

**ति०** पितुः वृत्तं अत्ययः । **शि०** पितुः वृत्तं वृत्तान्तं ॥ २ ॥ **ति०** क्षारं खरमूत्रसहितचूर्णं । **स०** दुःखे पितृदुःखे दुःखं रामविवासनजं । व्रणे छिन्नप्रदेशे । औदधं उदधिभवं । क्षारं लवणरसं ॥४॥ **स०** कालरात्रिरिव संहारकालिकरात्रिरिव ।

[ **पा०** ] १ घ. मयापि. २ घ. श्रुत्वातु. ३ ङ. छ. झ. ञ. ट. रामस्येहा. ख. राज्ञारामाभि. ४ ङ. तेनतथा. ५ ख. ङ. छ. झ. ट. रामस्तु. ६ क. ग. घ. प्रोषितः. ७ क. ख. ग. ङ. च. छ. झ. ञ. ट. सहसीतया. ८ ख. पञ्चत्वंसमुपेयिवान्. ९ च. ञ. मुनीन्द्रैः. १० ङ. ज. ट. संकल्प्य. ख. संस्कार्य. ११ अयंश्लोकः ख. पुस्तकेदृश्यते. १२ क. ग. च. ञ. श्रुत्वाचपितरं. ङ. छ. झ. ट. श्रुत्वाचसपितुर्वृत्तं. १३ ख. भरतःशोकसंतप्तः. १४ छ. ट. किंतु. १५ ङ. झ. ट. मिवाददाः. ठ. मिवौदधं.

मृत्युमापादितो राजा त्वया मे पापदर्शिनि ॥ सुखं परिहृतं मोहात्कुलेऽस्मिन्कुलपांसिनि ॥ ६ ॥
त्वां प्राप्य हि पिता मेऽद्य सत्यसंधो [1]महायशाः ॥ तीव्रदुःखाभिसंतप्तो [2]वृत्तो दशरथो नृपः ॥७॥
विनाशितो महाराजः पिता मे धर्मवत्सलः ॥ कस्मात्प्रव्राजितो रामः कस्मादेव वनं गतः ॥ ८ ॥
कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते ॥ दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ९ ॥
[3]ननु त्वार्योपि धर्मात्मा त्वयि [4]वृत्तिमनुत्तमाम् ॥ वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥ १० ॥
[5]तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ॥ त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥११॥
तस्याः पुत्रं [6]कृतात्मानं चीरवल्कलवाससम् ॥ प्रस्थाप्य वनवासाय कथं पापे न शोच[7]सि ॥ १२ ॥
अपापद[8]र्शनं शूरं [9]कृतात्मानं यशस्विनम् ॥ प्रव्राज्य चीरवसनं किंनु पश्यसि कारणम् ॥ १३ ॥
लुब्धाया विदितो मन्ये न तेऽहं राघवं [10]प्रति ॥ तथा ह्यनर्थो राज्यार्थं त्वयाऽऽनीतो महानयम् १४
अहं हि पुरुषव्याघ्रावपश्यन्रामलक्ष्मणौ ॥ केन शक्तिप्रभावेन राज्यं रक्षितुमुत्सहे ॥ १५ ॥
तं हि नित्यं महाराजो बलवन्तं [11]महाबलः ॥ [12]अपाश्रितोऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ १६ ॥
सोहं कथमिमं भारं महाधुर्य[13]समुद्धृतम् ॥ दम्यो धुरमिवासाद्य [14]वहेयं केन चौजसा ॥ १७ ॥
अथवा मेऽभवेच्छक्तिर्योगैर्बुद्धिबलेन वा ॥ सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीम् ॥ १८ ॥

॥ ५—७ ॥ महाराजःकस्माद्विनाशितः रामःकस्मात्प्रव्राजितइतिसंबन्धः । त्वयासर्वंनिष्फलमेवकृतमितिभावः ॥ ८ ॥ यदिजीवेतां तदादुष्करंजीवेतामिति संबन्धः ॥ ९ ॥ आर्यः ज्येष्ठः । वृत्तिं शुश्रूषां । वर्तते करोतीत्यर्थः । मातरिवर्तते मातरिशुश्रूषते ॥ १० ॥ दीर्घदर्शिनी दूरकालभाव्यनर्थदर्शिनी । "दूरानर्थस्यसंदर्शीदीर्घदृष्टिःप्रकीर्तितः" इति ॥ ११ ॥ तस्याः तादृशधर्मयुक्तायाः ॥ १२ ॥ किंनुपश्यसिकारणं । किंफलंपश्यसीत्यर्थः । फलंहिप्रयोजकतयाकारणं । नकिमपीत्यर्थः ॥ १३ ॥ अहंराघवंप्रति यथा यादृशप्रकारयुक्तः तथा लुब्धायास्ते लुब्धयात्वया । नविदित इतिमन्ये । अविदितत्वेहेतुमाह—तथाहीति । राज्यार्थं ममराज्यार्थं । महानयमनर्थस्त्वया आनीतोहि आनीतःखलु संपादितःखलु ॥ १४ ॥ राघवंप्रत्यहंयादृशइत्युक्तंविवृणोति—अहमिति । अपश्यन्हि अपश्यन्नेव । "हिहेतावधारणे" इत्यमरः। केनशक्तिप्रभावेन शक्त्यतिशयेन । भ्रातृसंपत्तिरेवममशक्त्यतिशयइतिभावः ॥ १५ ॥ नकेवलंममैवरामापेक्षापितुरपीत्याह—तमिति । मेरुर्मेरुवनंयथा मेरुजनितमेरुवनस्यतद्रक्षकत्वं परैराक्रमितुमशक्यत्वसंपादनेन ॥ १६ ॥ केनशक्तिप्रभावेनेत्युक्तमर्थंसदृष्टान्तमाह—सइति । अहं बालः इमं प्रबुद्धपितृधृतं । भारं राज्यभारं । महाधुर्यो महाबलीवर्दः धुरंवहतीति धुर्यः "धुरोयड्ढकौ" इतियत्प्रत्ययः । तेनसमुद्धृतं धुरं भारं । पुंस्त्वमार्षं । दम्यः तरुणवत्सइव । "तर्णकः स्मर्यतेवत्सोदम्योवत्सतरश्चसः" इति हलायुधः । "दम्यवत्सतरौसमौ" इत्यमरश्च । केनौजसा केनावष्टम्भेन । "ओजोवष्टम्भबलयोः" इतिवैजयन्ती । कथं केनप्रकारेण वहेयं ॥ १७ ॥ योगैः सामदानाद्युपायैः । "योगःसन्नहनोपायध्यानसंगतियुक्तिषु" इत्यमरः । बुद्धिबलेन ग्रहणधारणाद्यष्टाङ्गयुक्तबुद्धिबलेनवा । मेशक्तिर्भवेत् । राजपुत्रत्वेनसंभावितत्वात् ।

अङ्गारं अग्निं नावबुद्धवान् धक्ष्यतीतिनज्ञातवान् ॥ ५ ॥ **शि०** वृद्धः ज्ञानवयोभ्यामधिकः । मेपिता त्वांप्राप्य अद्य अस्मिन्समये । तीव्रदुःखाभिसंतप्तः रामवियोगजनितदुःखाक्रान्तः । अभवदितिशेषः ॥ ७ ॥ **ति०** सवाकस्माद्वनंगतः । निष्प्रयोजनमेवेत्यर्थः ॥ ९ ॥ **शि०** अपापदर्शिनं पापंस्वाश्रितजनापराधंपश्यति तच्छीलस्तद्भिन्नस्तं स्वाश्रितापराधविषयकज्ञानाभाववन्तमित्यर्थः । **स०** अपापदर्शनं पुण्यप्रापकज्ञानविषयं । कारणं प्रव्राजने ॥ १३ ॥ **स०** मेरुजनितवनस्ययथापरप्रवृत्तिनिरोधकत्वेन

**[ पा० ]** १ क. छ. महातपाः. २ ख. ट. वृद्धो. ३ ङ. छ. झ. ट. नन्वार्योपिच. ४ क. वृत्तमनुत्तमं. घ. वृत्तिमनुव्रतां. ५ ञ. तव. ६ घ. ङ. छ. झ. ट. महात्मानं. ७ ङ. झ. शोचसे. ८ घ—छ. झ. ञ. ट. दर्शिनं. ९ ख. महात्मानं. १० क. ङ. च. झ. ञ. यथा. ११ छ. झ. ट. महौजसं. १२ ङ. छ. झ. ट. उपाश्रितो. १३ ख. ग. ङ. छ—ट. समुद्यतं. १४ च. छ. झ. ट. सहेयं.

न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् ॥ यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा॥१९॥
उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनि ॥ साधुचारित्रविभ्रष्टे पूर्वेषां नो विगर्हिता ॥ २० ॥
अस्मिन्कुले हि पूर्वेषां[1] ज्येष्ठो राज्येऽभिषिच्यते[2] ॥ अपरे भ्रातरस्तस्मिन्प्रवर्तन्ते समाहिताः ॥ २१ ॥
न हि मन्ये नृशंसे त्वं राजधर्ममवेक्षसे ॥ गतिं वा न[3] विजानासि राजवृत्तस्य[4] शाश्वतीम् ॥ २२ ॥
सततं राजवृत्ते[5] हि ज्येष्ठो राज्येऽभिषिच्यते[6] ॥ राज्ञामेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥ २३ ॥
तेषां धर्मैकरक्षाणां कुलचारित्र[7]शोभिनाम्[8] ॥ अत्र[9] चारित्रशौण्डीर्यं[10] त्वां प्राप्य विनिवर्तितम् ॥२४॥
तवापि सु[11]महाभागा जनेन्द्राः कुलपूर्वगाः ॥ बुद्धेर्मोहः[12] कथमयं संभूतस्त्वयि गर्हितः ॥ २५ ॥
न तु कामं करिष्यामि तवाहं[13] पापनिश्चये ॥ त्वया[14] व्यसनमारब्धं जीवितान्तकरं मम ॥ २६ ॥
एष त्विदानीमेवाहमप्रियार्थं[15] तवानघम्[16] ॥ निवर्तयिष्यामि वनाद्भ्रातरं स्वजनप्रियम् ॥ २७ ॥

तथापि पुत्रगर्धिनीं पुत्रप्रयोजनाभिलाषवतीं । त्वांसकामांनकरिष्यामि गर्हिताभिलाषत्वादितिभावः ॥१८॥ रामस्यत्वयिमातृवत् मातरीव । सदा अवेक्षा भक्तिपूर्वकेक्षणं । यदिनस्यात्तदानींपापनिश्चयांत्वांत्यक्तुंमे विकाङ्क्षा काङ्क्षाराहित्यं । नजायेत काङ्क्षाजायेतैव । रामस्यत्वयिमातृवत्प्रतिपत्तिसद्भावात् । त्वांत्यक्तुंनेच्छामीत्यर्थः ॥ १९ ॥ नःपूर्वेषां पूर्वैः । विगर्हिता इयंबुद्धिः ज्येष्ठेविद्यमानेकनिष्ठस्यराज्यप्रार्थनाविषया बुद्धिः । तवकथमुत्पन्ना ॥ २० ॥ पूर्वेषामितिनिर्धारणेषष्ठी । अपरे कनिष्ठाभ्रातरः । तस्मिन्समाहिताः प्रवर्तन्ते पितृवत्तच्चित्तानुवर्तनेसावधानाजीवन्तीत्यर्थः । तथाहमनुः " ज्येष्ठएवतुगृह्णीयात्पित्र्यंधनमशेषतः । शेषास्तमनुजीवेयुर्यथैवपितरंतथा " इति ॥ २१ ॥ राजधर्मं राज्ञांविहितंधर्मं । नावेक्षसे नाद्रियसे । अथवा राजवृत्तस्य राजसमाचारस्य । गतिं प्रकारंवा । नजानासीतिमन्ये ॥ २२ ॥ नकेवलमस्माकमेवायं धर्मः किंतुसर्वेषामपीत्याह—सततमिति । राजवृत्ते विचार्यमाणइतिशेषः । एतद्राज्ञांसर्वेषांसमं । इक्ष्वाकूणांतु तत् ज्येष्ठाभिषेचनं । विशेषतःस्यात् । अस्खलिताचारत्वादितिभावः ॥ २३ ॥ धर्मेण एकारक्षायेषांतेतथा । कुलचारित्रशोभिनां कुलक्रमागतचरित्रशोभिनां । "चरित्रंचरितंशीलंचारित्रंचसमंमतं" इतिहलायुधः । चारित्रशौण्डीर्यं चरित्रगर्वितत्वं चरित्रजनितसमुन्नतत्वमितियावत् । त्वांप्राप्यविनिवर्तितं त्वत्संबन्धान्निवृत्तमित्यर्थः ॥२४॥ स्वकुलचारित्रक्रममभिधायमातृकुलाचारक्रममप्याह—तवेति । जनेन्द्राः राजानः । कुलपूर्वगाः कुलपूर्वाः कुलज्येष्ठाः तान्गच्छन्तीतिकुलपूर्वगाः । ज्येष्ठाभिषेचनशीलाइत्यर्थः । सुमहाभागाः सुचरित्राः ॥ २५ ॥ फलितमाह—नत्वित्यादिना ॥ २६ ॥ नकेवलमिष्टाकरणं अनिष्टमपितव

मेवाश्रयत्वं तथारामोपि परोपद्रवनिवारकत्वेनाश्रयइत्यर्थः ॥ १६ ॥ ति० "त्यजेदेकंकुलस्यार्थे" इतिन्यायेनतवविवासनमेवसांप्रतं तथापिरामस्यत्वयिमातृवद्व्यवहारात्तन्नकर्तुंशक्यमित्याह—**नेति** ॥ १९ ॥ ति० अस्मदीयेकुलेसर्वेषांज्येष्ठोऽभिषिच्यते नत्वापेक्षिकज्येष्ठः ॥ २१ ॥ ति० राजवृत्तस्य राजधर्मस्य । शाश्वतीं अव्यभिचरितां । गतिं फलमपिनजानासीतिमन्ये ॥ २२ ॥ ति० राज्ञांसर्वेमितिपाठे सर्वमित्यत्रच्छान्दसीषष्ठ्यर्थेद्वितीया । सर्वेषामित्यर्थः ॥ २३ ॥ ति० धर्मेणएकेनरक्षारक्षणंयेषां तेषां धर्मैकरक्षाणां । धर्ममेकंरक्षन्तितेषांवा । ती० कुलचारित्रयोगिनां कुलशीलयुक्तानां ॥ २४ ॥ ति० तथात्वय्यपिमहाकुलप्रसूतायामेवंविधबुद्धिकारणंनपश्यामीत्याह—**तवापीति** । हेसुमहाभागे तदुपपादकंविशेषणं—**जनेन्द्रकुलपूर्वकेइति** । जनेन्द्रःकैकेयकुलकूटस्थः पूर्वकःकारणंयस्यास्तथाभूते । अतोमहाकुलप्रसूतायास्तवगार्हितोयंबुद्धिमोहस्त्वयिकथंसंभूतइत्यन्वयः ॥ २५ ॥ स० एषोहं । अनघेइतिच्चिराभ्यासात् असमयेप्यमनस्कतयोक्तिर्वा । "रक्षोहागमलघ्वसन्देहाः" इतिवत् अघाभावोऽनघं तस्मिन् पापाभावे । पुण्यार्थमितियावत् । इतिवार्थःप्रशंसासमयौचित्याज्ज्ञेयः । सुमहाभागेइत्यादिसंबोधनादेः "तांतथागर्हयित्वातु" इत्यादिपुरोवादस्यचशाबल्यमेतत्कल्पकमितिमन्तव्यम् ॥ २७ ॥ इतित्रिसप्ततितमस्सर्गः ॥ ७३ ॥

[ पा० ] १ ङ. छ. झ. ञ. ट. सर्वेषां. २ ग. घ. राजाभिषिच्यते. ३ क. ञ. नाभिजानासि. ४ ग. राज्यवृत्तस्य. ५ ङ. छ. झ. ञ. ट. राजपुत्रेषु. ६ ङ. च. छ. झ. ञ. ट. राजाभिषिच्यते. ७ घ. कुलेचारित्र. ८ ग. ज. योगिनां. ९ क. ख. ग. ङ. छ. झ. ट. अद्य. १० झ. शौटीर्यं. ११ छ. झ. ट. सुमहाभागेजनेन्द्रकुलपूर्वके. १२ क. ख. ग. ङ. छ. झ. ञ. ट. बुद्धिमोहः, १३ घ. त्वयाहं. १४ ख. छ. झ. ञ. ट. यया. क. ङ. यथा. १५ क. च. मेवाहंविप्रियार्थं. १६ ठ. तवानघे.

निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ॥ दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २८ ॥
इत्येवमुक्त्वा भरतो महात्मा प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ॥
शोकातुरश्चापि ननाद भूयः सिंहो यथा पर्वतगह्वरस्थः ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

भरतेनपुनःपुनःकैकेयीदुश्चेष्टितानुस्मरणेनसमभिवृद्धरोषतयापुनर्विशेषतस्तद्गर्हणम् ॥ १ ॥ तथाकौसल्यायाःपुत्रशोकासहिष्णुत्वेकामधेनुचरित्रंदृष्टान्तीकृत्यरामस्यवनात्प्रतिनिवर्तनेनराज्येऽभिषेचनपूर्वकंस्वेनतत्प्रतिज्ञातवनवासपूरणोक्तिः ॥ २ ॥ तथा शोकातिरेकान्मोहाधिगमेनभुविनिपतनम् ॥ ३ ॥

तां तथा गर्हयित्वा तु मातरं भरतस्तदा ॥ रोषेण महताऽऽविष्टः पुनरेवाब्रवीद्वचः ॥ १ ॥
राज्याद्भ्रंशस्व कैकेयि नृशंसे दुष्टचारिणि ॥ परित्यक्ता च धर्मेण मा मृतं रुदती भव ॥ २ ॥
किंनु तेऽदूषयद्राजा रामो वा भृशधार्मिकः ॥ ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३ ॥
भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ॥ कैकेयि नरकं गच्छ मा च भर्तुः सलोकताम् ॥ ४ ॥
यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा ॥ सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ५ ॥
त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः ॥ अयशो जीवलोके च त्वयाऽहं प्रतिपादितः ॥ ६ ॥
मातृरूपे ममामित्रे नृशंसे राज्यकामुके ॥ न तेऽहमभिभाष्योस्मि दुर्वृत्ते पतिघातिनि ॥ ७ ॥

करोमीत्याह—एषइति । एषइत्यविलम्बोक्तिः । तव मव्याजेनराज्यंभोक्तुकामायाः ॥ २७ ॥ नकेवलंनिवर्तनं दासश्चतस्यस्यामित्याह—निवर्तयित्वेति । दासभूतः छत्रचामरादिधारणेनकिंकरवृत्तिर्भविष्यामि । इदंचनत्वयिकोपात् किंतुस्वरूपेणेत्याशयेनाह—सुस्थितेनेति । सुप्रतिष्ठितेनान्तःकरणेनेत्यर्थः ॥ २८ ॥ तुदन् व्यथयन् । पर्वतगह्वरस्थः पर्वतगुहास्थः । गुहास्थत्वेसंतोषातिशयात्सिंहस्यनादातिशयइत्यभिप्रायेणविशेषणमिदं ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

एवंसामान्यतोमृदुतयानिन्दित्वापुनस्तदपराधस्मरणेनप्रवृद्धरोषः क्रूरंनिन्दति—तामित्यादिना । तथा मृदुतया ॥ १ ॥ भ्रंशस्व भ्रष्टाभव । त्वन्मातृवत्त्वमपिवनंप्रविशेत्यर्थः । मामृतंरुदतीभव प्राणहानिकरकार्यकरणान्मांमृतंमत्वारोदनंकुर्वित्यर्थः । यद्वा मृतं भर्तारमुद्दिश्यरुदतीचमाभव पतिभार्याभावस्यगतत्वादितिभावः ॥ २ ॥ तेकिंन्वदूषयत् तवसंबन्धिकिंनु गुणचारित्रादिकमदूषयत् । तुल्यं युगपत् ॥ ३ ॥ भ्रूणहत्यां भ्रूणहत्यातुल्यपापं । सलोकतां समानलोकत्वं ॥ ४ ॥ घोरेणकर्मणा घोरेणव्यवसायेन । ईदृशं रामविवासनभर्तृमरणरूपं । यत्पापंकृतं तेनसर्वलोकप्रियंरामंत्यक्त्वास्थितस्यममापिभयमापादितं । त्वत्कृतंपापंममापिभयमजनयत् नतुराज्यमितिभावः ॥ ५ ॥ अयशः मातृमुखेनज्येष्ठंविवास्यराजानंनाशितवानित्येवंविधं । प्रतिपादितः प्रापितः ॥ ६ ॥ राज्यकामुकइति अमैथुनेच्छातोनङीपू । नतेहमभिभाष्यइति

**स०** हित्वा हापयित्वा । **ति०** कर्मणोघोरत्वंच सामान्यविषयवरद्वयस्येदृशविशेषविषयत्वकरणं भयं कैकेयीपुत्रोऽयंतद्वदेवदुष्टस्वभावइतिलोककलङ्करूपं । यद्वा त्वद्दोषतोरामोमांत्यक्ष्यतीतिभयं । यद्वा महापातकयुतायास्तवसंसर्गेणपञ्चमहापातकित्वरूपभयं ॥ ५ ॥ **ती०** जीवलोकेचेतिचकारः परलोकसमुच्चयपरः । प्रतिपादितः प्रापितइत्यर्थः ॥ ६ ॥

[ **पा०** ] १ ग. ङ. च. छ. झ. ञ. ट. शोकार्दितश्चापि. २ ख. ङ. छ. ज. झ. ट. मन्दरकन्दरस्थः. ३ झ. ञ. भरतः स्थितां. ४ क. च. ञ. त्यक्ताहि. ख. ङ. छ. झ. ट. त्यक्तासि. ५ क. ग. ध. मांमृतं. ६ ङ. छ. झ. ठ. द्रामोराजावा. ७ क. च. ब्रह्महत्यां. ८ घ. मधिप्राप्ता. ९ ङ. छ. झ. ट. तातसलोकतां. १० ङ. चेदृशं.

कौसल्या च सुमित्रा च याश्चान्या मम मातरः ॥ दुःखेन महताऽऽविष्टास्त्वां प्राप्य कुलदूषिणीम् ॥८॥
न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः ॥ राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ९ ॥
यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः ॥ वनं प्रस्थापितो दुःखात्पिता च त्रिदिवं गतः ॥१०॥
यत्प्रधानासि तत्पापं मयि पित्रा विनाकृते ॥ भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ११ ॥
कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये ॥ कृत्वा कं प्राप्स्यसे त्वद्य लोकं निरयगामिनि ॥ १२ ॥
किं नावबुध्यसे क्रूरे नियतं बन्धुसंश्रयम् ॥ ज्येष्ठं पितृसमं रामं कौसल्यायात्मसंभवम् ॥ १३ ॥
अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चापि जायते ॥ तस्मात्प्रियतमो मातुः प्रियत्वान्न तु बान्धवः ॥ १४ ॥
अन्यदा किल धर्मज्ञा सुरभिः सुरसंमता ॥ वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ १५ ॥

" कृत्यानांकर्तरिवा " इतिषष्ठी । मत्संभाषणंत्वया नकर्तव्यमित्यर्थः ॥ ७ ॥ याश्चान्याइत्यत्र ताइत्यध्याहारः ॥ ८ ॥ नत्वमश्वपतेःकन्या तत्कुलोचितकन्यानभवसीत्यर्थः । धर्मराजस्य धर्मप्रधानराजस्य । तत्र केकयराजे । उक्तेर्थेहेतुमाह—यदित्यादिना ॥ ९—१० ॥ यत्प्रधानंयस्याःसायत्प्रधाना यत्पापकर्मप्रधानासित्वं तत्पापं तत्कर्मजनितंपापं । पित्राविनाकृते भ्रातृभ्यांपरित्यक्तेमयि संक्रान्तमिति शेषः । संक्रान्तकार्यविशेषणद्वयेनदर्शितं । अप्रियेइतिसंबुद्धिः ॥ ११ ॥ वियुक्तां गुणवत्पुत्रवियुक्तां । कृत्वानिरयगामिनि त्वंकंलोकंप्राप्स्यसे निरयंविनाकं लोकंप्राप्स्यसइत्यर्थः । कंलोकं कं नरकं । निरयगामिनीतिसिद्धवत्कारात् । किमितिक्षेपोक्त्यापूर्वसृष्टाअपर्याप्ताइत्युच्यते । विशेषणद्वयंसंबोधनं ॥ १२ ॥ बन्धुसंश्रयं बन्धूनामाश्रयभूतं । कौसल्यायाआत्मसंभवमित्यत्र कौसल्यायात्मसंभवमित्यार्षःसंधिः । यद्वा पृषोदरादित्वेनआकारलोपः गूढोत्मानप्रकाशतइतिवत् । तेनसम्यक्संधिः । नियतंकिंनावबुध्यसे प्राकृतवद्बन्धुविघातकमवगतासीतिभावः ॥ १३ ॥ औरसपुत्रविश्लेषोमातुरसह्यइतिदर्शयितुं " अङ्गादङ्गात् " इतिश्रुत्यर्थंहृदिनिधायाह—अङ्गेति । अङ्गानि मुखकण्ठवक्षःकुक्षिहस्तपादाः प्रत्यङ्गानि नेत्रनासाङ्गुल्यादीनि तज्जः तत्तेजोजः । " अङ्गादङ्गात्संभवसिहृदयादधिजायसे । आत्मावैपुत्रनामासि " इतिश्रुतावपिवीप्सयाऽङ्गप्रत्यङ्गग्रहः । अङ्गप्रत्यङ्गजत्वंच सर्वाङ्गतेजःसंभूतत्वं । " यदेतद्रेतस्तदेतत्सर्वेभ्योङ्गेभ्यस्तेजःसंभूतं " इतिश्रुतेः । स्त्रियास्तुशोणितमेवरेतः । हृदयात् हृदयपुण्डरीकात् । प्रत्यगात्मस्थानाच्चजायते । तस्मात्पुत्रोमातुःप्रियतमोभवति । बान्धवोभ्रात्रादिः नप्रियतमः किन्तुप्रियएव । एवमतिशयप्रियत्वात्पुत्रस्यतद्वियोगादिदुःखंदुःसहमितिभावः । सुरभिर्बन्धुमात्रेदुःखितवती किंपुनःपुत्रेकौसल्येतिसूचयति—नतुबान्धवइति ॥ १४ ॥ पुत्रशोकोमातुर्दुःसहइत्यत्रेतिहासंप्रमाणयति—अन्यदेत्यादिना । अन्यदा पूर्वकाले ।

**स०** पितुः ममतवापि ॥ ९ ॥ **स०** गतः गमितः ॥ १० ॥ **स०** निरयगामिनीतिसंबोध्य कंलोकंप्राप्स्यसइत्युक्त्या त्वत्पापस्यनरकोपिनालमितिसूचयति ॥ १२ ॥ **स०** नियतं नियमेन । कौसल्यायाः अयः शुभावहः दैवं तेनात्मसंभवोयस्यतं । यद्वा तस्याआयोलाभोयस्मात्पत्युस्सतथा तस्यात्मसंभवंपुत्रं । **शि०** कौसल्यायाः यातिप्राप्नोति प्रादुर्भवतीत्यर्थः । सचासावात्मसंभवः आत्मनास्वमनसैवसंभवोयस्यतं । अतएवसन्धौनार्षत्वकल्पना ॥ १३ ॥ **ति०** यदेवं तस्मान्मातुरौरसःपुत्रःप्रियतरः । बान्धवाः पितृमात्रादयः प्रियाएव नतुप्रियतराः । एवंचौरसवियोगदुःखमतिदुस्सहमितिभावः । प्रियत्वान्नतुबान्धवइतिपाठंमत्वा तीर्थेनेत्थं व्याख्यातं प्रियत्वादेवनबान्धवः बन्धुभूतदत्तपुत्रादिवन्नभवतीति । तत्रनार्थसामञ्जस्यमितिकतकसंमतपाठएवज्यायान् । **शि०** अङ्ग हेमातः । हृदयात् मनसः । प्राप्य प्रत्यङ्गजः अङ्गमङ्गंप्रतिप्रत्यङ्गं तस्मात् मुखनेत्रवक्षउदरपाणिपादादितेजोभ्यःजायते साकारतांप्राप्नोति सः । अभिजायते उत्पद्यते।तस्माद्धेतोः पुत्रऔरसः मातुःप्रियतरः । इतरेबान्धवास्तुप्रियाएव । एवेनप्रियतरत्वव्यवच्छेदः । नचवास्तवोदरादिसंबन्धशून्यजन्मवतोरामस्यवास्तवोदरादिसंबन्धवल्लौकिकपुत्रदृष्टान्तेन रामस्यकौसल्यातिप्रियत्वंकथंसाधितमितिवाच्यम् । कौसल्यायास्तादृशाभिनिवेशाङ्गीकारेणादोषात् ॥ १४ ॥ **ति०** किलेत्यैतिह्ये धर्मज्ञाःपुराविदोवृद्धाएवंवदन्तिकिलेत्यर्थः ॥ १५ ॥

[ पा० ] १ ग. सत्यपराक्रमः. २ ङ. छ. झ. ट. वीरःपितापि. ३ घ. यत्प्रधारयसेतोषं. ४ ङ. छ. झ. ट. ह्यद्य. ५ ख. बुद्धिसंश्रयं. ६ ङ. छ. झ. ट. हृदयाच्चाभि. ग. हृदयादपि. ७ क. ख. ग. च. ञ. प्रियतरो. ङ. प्रियतरोरामःप्रियाएवतुबान्धवाः. छ. ज. झ. ट. प्रियतरोमातुःप्रियाएवतुबान्धवाः. ८ ख. ग. एकदा. ९ घ. लभमानौ. १० घ. विगतचेतनौ.

[1]तावर्धदिवसे श्रान्तौ [2]पुत्रौ दृष्ट्वा महीतले ॥ रुरोद पुत्रशोकेन बाष्प[3]पर्याकुलेक्षणा ॥ १६ ॥
अधस्ताद्व्रजतस्तस्याः सुरराज्ञो महात्मनः ॥ बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १७ ॥
[4]इन्द्रोप्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् ॥ सुरभिं मन्यते दृष्ट्वा भूयसीं [5]तां सुरेश्वरः ॥ १८ ॥
[6]निरीक्षमाणः शक्रस्तां ददर्श सुरभिं स्थिताम् ॥ [7]आकाशे विष्ठितां दीनां रुदन्तीं भृशदुःखिताम् ॥ १९ ॥
तां दृष्ट्वा शोक[8]संतप्तां वज्रपाणिर्यशस्विनीम् ॥ इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ २० ॥
भयं [9]कच्चिन्न चास्मासु कुतश्चिद्विद्यते महत् ॥ कुतोनिमित्तः शोकस्ते ब्रूहि [10]सर्वहितैषिणि ॥ २१ ॥
एवमुक्ता तु [11]सुरभिः सुरराजेन धीमता ॥ प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदम् ॥ २२ ॥
शान्तं पापं न वः किंचित्कुतश्चिदमराधिप ॥ अहं तु [12]मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २३ ॥
[13]एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ ॥ [14]अर्द्यमानौ बलीवर्दौ कर्षकेण [15]सुराधिप ॥ २४ ॥
मम [16]कायात्प्रसूतौ हि दुःखितौ [17]भारपीडितौ ॥ [18]यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥ २५ ॥
यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् ॥ तान्दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् ॥ २६ ॥

किलेत्यैतिह्ये । तथावदन्तिकिलेत्यर्थः । धर्मज्ञा कर्षणकालधर्मज्ञा । सुरभिः कामधेनुः । सुरसंमता देवपूजिता । वहमानौ हलमितिशेषः । विगतचेतसौ मूर्छितावित्यर्थः । पुत्रौ साक्षात्पुत्रौ । किंचिन्निमित्तवशाद्भूमिंगतौ । यद्वा पुत्रौ स्ववंश्यत्वेनपुत्रव्यपदेश्यौ ॥ १५ ॥ अर्धदिवसे दिवसस्यार्धे मध्याह्नइत्यर्थः । अर्धदिवसमितिपाठे "कालाध्वनोरत्यन्तसंयोगे" इतिद्वितीया । सर्वथाएकदेशिसमासः । मध्याह्नपर्यन्तमित्यर्थः ॥ १६ ॥ सुरराज्ञः सुरराजस्य । समासान्तविधेरनित्यत्वाट्टजभावः ॥ १७ ॥ इन्द्रोपि स्वगात्रे पुण्यगन्धिनं रम्यगन्धं । अश्रुनिपातं अश्रुपातं । दृष्ट्वा तांसुरभिं भूयसीं श्रेष्ठां । अमन्यत ॥ १८ ॥ निरीक्षमाणः उपरिनिरीक्षमाणः ॥ १९—॥२०॥ अस्मासु सुरेषुमध्ये । कुतश्चिदपिभूतात् महद्भयंनविद्यतेकच्चित् । प्रायशस्त्वदश्रुमोचनस्यभयसूचकत्वादितिभावः । कुतोनिमित्तइत्यत्र आद्यादित्वात् प्रथमान्तविहिततसि तस्यकुतश्शब्दस्य निमित्तशब्देनसमानाधिकरणेनबहुव्रीहिः । किंनिमित्तकइत्यर्थः । यद्वा । सार्वविभक्तिकस्तसिरित्यनुशासनादत्रप्रथमार्थेतसिप्रत्ययः ॥ २१—२२ ॥ शान्तंपापं प्रतिहतममङ्गलमित्यादिकमनुचितंप्रसङ्गश्रवणदोषनिवर्तकवचनविशेषः । वः युष्माकंमध्ये । कुतश्चिदपिपुरुषात्किंचिद्भयंनास्ति किंतु मग्नौ दुःखमग्नौ । विषमेसंकटेस्थितौ स्वपुत्रौप्रतिशोचामि ॥ २३ ॥ एतौदृष्ट्वेतिश्लोकस्यपूर्वश्लोकस्योत्तरार्धेनान्वयः ॥ २४ ॥ पुत्रंविशेषयति —ममेति । यौदृष्ट्वाअहंपरितप्ये तौ ममकायात्प्रसूतौ । प्रसूतत्वंपरम्परया तस्मात्पुत्रसमःप्रियोनास्तीतियोजना ॥ २५ ॥ कविराह—यस्याइति । मन्यते अमन्य-

**ती०** पुत्रौ स्ववंश्यत्वेनपुत्रत्वेनव्यपदेशः । **ति०** अर्धदिवसं दिवसस्यार्धं । व्याप्य वहनेनश्रान्तौ । पुत्रौस्वाङ्गजौ कुतोपिहेतोर्भुवंगतौ । वक्ष्यतिच ममकायात्प्रसूताविति ॥ १६ ॥ **स०** पुण्यगन्धिनं अश्रुनिपातंदृष्ट्वा आघ्राय इह लोके । भूयसीं उत्तमांमन्यते अमन्यत । तदपेक्षयासौरभ्यमन्यत्रनास्तीतिज्ञातवानितिभावः ॥१८॥ **ति०** किंचिदपिभयंकुतोपिहेतोर्युष्माकंनास्ति शान्तंपापमित्यादिकं अनुचितश्रवणजदोषनिवर्तकोवचनविशेषोयुष्मद्दुःखजनकंपापंशान्तमित्यर्थकः । **स०** वः युष्माकं शान्तं सुखनाशकं किंचित्पापं कुतश्चिदपिनास्ति । **शि०** पापं पापाचरणशीलंरक्षोजातं । शान्तं कालवशेनशान्तिंप्राप्तं । अतःकुतश्चिदपि वः युष्माकंदेवानां । किंचिद्भयंनास्ति ॥ २३ ॥ **स०** ममकायात्प्रसूतावित्यनेन कामधेनुपुत्रयोरेवकेनचिन्निमित्तेनभुविजन्मेतिज्ञायते । अन्यथा तद्वंशभवबलीवर्दानांसर्वत्रविद्यमानत्वेनकयोश्चिद्विषयेशोकायोगेनासांगत्यापत्तेः ॥ २५ ॥ **स०** व्याप्तं परंपरया । सुतात् औरसात्

[ **पा०** ] १ क. ख. घ—छ. झ. ञ. ट. तावर्धदिवसं. २ क—ट. दृष्ट्वापुत्रौ. ३ ङ. छ. झ. पर्याकुलेक्षणं. ४ अयंश्लोकः क. ख. ङ. छ. झ. ट. ञ. पुस्तकेतु. यस्याःपुत्रसहस्रैस्त्वितिश्लोकात्परं. सदाऽप्रतिमवृत्तायाइतिश्लोकात्पूर्वंदृश्यते. ख. ङ. छ. झ. ञ. ट. इन्द्राद्यश्रु. ५ ङ. छ. झ. ञ. ट. तामिहेश्वरः. घ. च. तामिवेश्वरः. ६ क. ख. ङ. च. छ. झ. ञ. ट. निरीक्षमाणस्तांशक्रो. ७ ट. आकाशेऽधिष्ठितां. ८ ट. संतप्तो. ९ क. घ. ङ. च. ज. ञ. किंचिन्न. ङ. क्वचिन्न. १० क. ग. ट. सर्वं. ११ घ. सादेवी. १२ क. ख. च. ञ. किल. १३ क. ख. ग. च. ततो. १४ क—ट. वध्यमानौ. १५ ङ. छ. झ. ट. दुरात्मना. १६ ख. ग. गात्रात्. १७ क. च. परिपीडितौ. १८ घ. यद्दृष्ट्वा.

सदाऽप्रतिमवृत्ताया लोकधारणकाम्यया ॥ श्रीमत्या गुणनित्यायाः स्वभावपरिवेषया ॥ २७ ॥
यस्याः पुत्रसहस्राणि साऽपि शोचति कामधुक् ॥ किं पुनर्या विना रामं कौसल्या वर्तयिष्यति ॥२८॥
एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता ॥ तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥२९॥
अहं ह्यपचितिं भ्रातुः पितुश्च सकलामिमाम् ॥ वर्धनं यशसश्चापि करिष्यामि न संशयः ॥ ३० ॥
आनाययित्वा तनयं कौसल्याया महाबलम् ॥ स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम् ॥ ३१ ॥
न ह्यहं पापसंकल्पे पापे पापं त्वया कृतम् ॥ शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः ॥ ३२ ॥
सा त्वमग्निं प्रविश वा स्वयं वा दण्डकान्विश ॥ रज्जुं बधान वा कण्ठे न हि तेऽन्यत्परायणम् ॥३३॥
अहमप्यवनिं प्राप्ते रामे सत्यपराक्रमे ॥ कृतकृत्यो भविष्यामि विप्रवासितकल्मषः ॥ ३४ ॥
इति नाग इवारण्ये तोमराङ्कुशचोदितः ॥ पपात भुवि संक्रुद्धो निःश्वसन्निव पन्नगः ॥ ३५ ॥
संरक्तनेत्रः शिथिलाम्बरस्तथा विधूतसर्वाभरणः परंतपः ॥
बभूव भूमौ पतितो नृपात्मजः शचीपतेः केतुरिवोत्सवक्षये ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

---

त ॥ २६ ॥ भरतवचनं सदेत्यादिश्लोकद्वयमेकंवाक्यं । अप्रतिमं निस्तुलं वृत्तंचरित्रं यस्यास्तस्याः । श्रीमत्याः समृद्धिमत्याः । गुणनित्यायाः नित्यगुणायाः । यस्याः सुरभेः स्वभावपरिवेषया स्वभावेनस्त्रीपुंस्वभावेन मैथुनेन परिवेषआवृत्तिर्यस्यास्तादृश्याः । लोकधारणकाम्यया लोकधारणेच्छया पुत्रसहस्राणिसन्ति सन्तानपरम्परया बहवः पुत्राःसन्तीत्यर्थः । सापिकामधुक् कामधेनुः । यथेष्टसृष्टिक्षमा शोचति अशोचत् । या राममेकंविनावर्तयिष्यति साहिशोचतीतिकिंपुनः ॥ २७—२८ ॥ विवत्सा पुत्रविरहिता । तस्मात् विवत्सात्वकरणात् । लप्स्यसे तत्फलत्वेन ॥ २९ ॥ अपचितिं पूजां । "पूजानमस्यापचितिः" इत्यमरः । भ्रातुरपचितिं राज्यप्रदानरूपां । पितुरिमांसकलामपचितिं और्ध्वदैहिकात्मिकां ॥ ३० ॥ भ्रातुरपचितिमाह—आनाययित्वेत्यादिना ॥ ३१ ॥ पापं रामविवासनरूपं । धारयितुं सोढुं । अश्रुकण्ठैः गद्गदकण्ठैः ॥ ३२ ॥ अस्यपापस्यमरणान्तिकप्रायश्चित्तंविनानिवर्तकान्तरंनास्तीत्यभिप्रायेणाह—सेति । सा बुद्धिपूर्वकमहापापकारिणी । कण्ठेरज्जुंबधान बद्ध्वाम्रियस्वेत्यर्थः । परायणं गतिः ॥३३॥ विप्रवासितकल्मषः अपनीतकिल्बिषः ॥३४॥ इतिसंक्रुद्धः पन्नगइवनिःश्वसन् आरण्ये अरण्यगर्ते । तोमराङ्कुशचोदितः तोमरैरङ्कुशैश्चविद्धोनागइव भुविपपात भरतइतिशेषः ॥ ३५ ॥ शचीपतेःकेतुः इन्द्रध्वजः । उत्सवक्षये उत्सवान्ते ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुस्सप्ततितमः सर्गः ॥ ७४ ॥

---

॥ २६ ॥ **ती०** स्वभावपरिवेषयेतिषष्ठ्यर्थेतृतीया । लोकधारणकाम्यया लोकसंरक्षणेच्छया । स्वभावपरिवेषया स्वभावःशीलं । परिवेषः पर्यावरणं । स्वभावपरिवेषायाः शीलपर्यावरणायाः । शीलपरिपूर्णायाइत्यर्थः । **ति०** गुणमुख्यायाः सत्यरूपमुख्यगुणवत्याः । लोकधारणकाम्यया प्रवृत्तायाइतिशेषः । **स०** समं सर्वप्राणिषुसेवानुरूपंनतुविषमं । अप्रतिमं असदृशंवृत्तंचारित्रंयस्यास्सा तस्याः । गुणमुख्यायाः गुणैःसर्वापेक्षितदातृत्वादिरूपैःमुख्यायाः । **शि०** स्वभावपरिचेष्टया स्वाभाविकस्वपुत्रव्यापारदर्शनेनहेतुना ॥ २७ ॥ **ति०** अथयशोवर्धनंभ्रातृपूजांचाह—**आनाय्येत्यादि** । महाबाहुं रामं । वनंप्रवेक्ष्यामि तद्व्रतसमाप्तयेतत्प्रतिनिधितयेतिभावः ॥ ३१ ॥ **ति०** कण्ठेरज्जुंबध्वेत्यस्यम्रियस्वेतिशेषः ॥ ३३ ॥ **स०** अवनिं अयोध्याराज्यं ॥ ३४ ॥ **ती०** आरण्योनागइतिवापाठः । **स०** अरण्यइत्यनेन गजानांनूतनग्रहणंध्वन्यते ॥ ३५ ॥ इतिचतुस्सप्ततितमस्सर्गः ॥ ७४ ॥

[ **पा०** ] १ ङ. छ. झ. ट. ठ. समाप्रतिम. २ ङ. छ. झ. ञ. ट. गुणमुख्यायाः. च. गुणयुक्तायाः. ३ ङ. छ. झ. ट. परिचेष्टया. क. च. परिवेष्टया. ४ च. ञ. विनशिष्यति. ५ ख. विवत्सेवत्वया. क. घ. च. विवत्सायत्त्वया. ६ ङ. छ. झ. ट. त्वपचितिं. ७ ख. ट. वर्धिनीं. ८ ङ. छ. झ. ट. आनाय्यचमहाबाहुंकोसलेन्द्रंमहाबलं. ९ क. ख. ग. च. ञ. महाद्युतिं. १० क. ङ. च. छ. झ. ञ. ट. विशदण्डकान्. ११ क. ङ. छ—ट. बध्वाथवा. १२ क. ङ—ट. प्यवनीं. १३ क—घ. स्तदा.

# पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

भरतेनमन्त्रिमध्येरामविवासनादिवृत्तान्तस्यैवस्वेनाज्ञाततयातत्रस्वानुमत्यभावनिवेदनपूर्वकंशत्रुघ्नेनसहकौसल्यासमीपगमनम् ॥ १ ॥ तथास्वस्मिन्दोषबुद्ध्यापरुषभाषिणींकौसल्यांप्रतिनानाशपथकरणपूर्वकंरामप्रवासनेस्वस्यानुमत्यभावदृढीकरणम् ॥ २ ॥ पश्चादृजुभावेनकौसल्ययाभरतस्यस्वाङ्कारोपणेनपरिष्वङ्गपूर्वकंदुःखाद्रोदनम् ॥ ३ ॥ भरतेनसशोकंविलापादिनारात्रियापनम् ॥ ४ ॥

दीर्घकालात्समुत्थाय संज्ञां [1]लब्ध्वा च वीर्यवान् ॥ नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरम् ॥ सोमात्यमध्ये भरतो जननीमभ्यकुत्सयत् ॥ १ ॥
राज्यं न कामये जातु मन्त्रये नापि मातरम् ॥ अभिषेकं न जानामि योऽभू[2]द्राज्ञा समीक्षितः ॥ विप्रकृष्टे ह्यहं देशे शत्रुघ्न[3]सहितोऽवसम् ॥ २ ॥
वनवासं न जानामि रामस्याहं महात्मनः ॥ [4]विवासनं वा सौमित्रेः सीतायाश्च यथाऽभवत् ॥ ३ ॥
तथैव क्रोशतस्तस्य भरतस्य महात्मनः ॥ कौसल्या शब्दमाज्ञाय [5]सुमित्रामिदमब्रवीत् ॥ ४ ॥
आगतः [6]क्रूरकार्यायाः कैकेय्या भरतः सुतः ॥ तमहं द्रष्टुमिच्छामि भरतं [7]दीर्घदर्शिनम् ॥ ५ ॥
एवमुक्त्वा [8]सुमित्रां सा [9]विवर्णा मलिना कृशा ॥ प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥ ६ ॥
स तु [10]रामानुजश्चापि शत्रुघ्नसहित[11]स्तदा ॥ प्रतस्थे भरतो [12]यत्र कौसल्याया निवेशनम् ॥ ७ ॥
ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ ॥ पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम् ॥ रुदन्तौ [13]रुदतीं दुःखात्समेत्यार्यां [14]मनस्विनीम् ॥ ८ ॥
भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥ ९ ॥
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम् ॥ संप्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा ॥ १० ॥
प्रस्थाप्य चीरवसनं पुत्रं मे [15]वनवासिनम् ॥ कैकेयी कं गुणं तत्र पश्यति [16]क्रूरदर्शिनी ॥ ११ ॥

दीनां प्रतिहतेच्छत्वात् । अमात्यमध्ये सुमन्त्रादिमध्ये । अनेनभरतागमनंश्रुत्वा सुमन्त्रादयः इतःपूर्वमागताइतिगम्यते । अभ्यकुत्सयत् मन्त्रिणांज्ञापनाय पुनरप्यनिन्ददित्यर्थः ॥ १ ॥ कैकेय्याकृतंस्वेष्टंनेतिमन्त्रिभ्योज्ञापयति—राज्यमिति । जातु कदाचिदपि । एतत् नकामये नमन्त्रयेइत्युभयत्रापिसंबध्यते । मन्त्रये राज्यार्थमितिशेषः । मन्त्रणं विचारः । नजानामि मदनुज्ञापूर्वकोयंनभवतीत्यर्थः । योमदर्थोभिषेकः राज्ञासमीक्षितश्चिन्तितः अभूत् तमभिषेकंनजानामि । अज्ञानेहेतुमाह—विप्रकृष्टइति ॥ २ ॥ विवासनंवेत्यत्र नजानामीत्यनुकर्षः ॥ ३—४ ॥ दीर्घदर्शिनमित्यनेन रामनिर्गमनंभरतोनसंमन्यत इतिकौसल्याहृदयमितिसूचितम् ॥ ५ ॥ भरतोयत्रस्थितः तत्रप्रतस्थे ॥ ६ ॥ यत्रकौसल्यायानिवेशनंस्थितं तत्रप्रतस्थे ॥ ७ ॥ आर्यां ज्येष्ठांमातरं ॥ ८—९ ॥ कथंराज्यंप्राप्तंतत्राह—संप्राप्तमिति । क्रूरेण रामविवासनपूर्वकेण । कर्मणा वराभ्यर्थनेन ॥ १० ॥ तत्र प्रस्थापने । कंगुणं अतिशयंपश्यति नकमपिगुणं । रामप्रस्थापनं

ति० दीर्घदर्शिनं ऐहिकामुष्मिककर्मणःकालान्तरभाविफलज्ञानक्षमबुद्धिमन्तं ॥ ५ ॥ ति० चापिभ्यांसुमन्त्रादयः । येनमार्गेण निवेशनंप्राप्यतइतिशेषः ॥ ७ ॥ ति० समेत्य आलिङ्ग्य । तादृशसमयेप्यालिङ्गनकरणयोग्यंविशेषणं—**मनस्विनीति** ॥ १० ॥ ति० त्वमपिमेपुत्रइतितवराज्यदाने नकिमपिमेदुःखं । अपितुचीरवसनंवनचारिणं चीरवसनत्वादिवनचारिवेषंमेपुत्रंरामं

[ पा० ] १ ख. ङ. छ. झ. ञ. ट. लब्धास. २ ग. द्राजसमीक्षितः. च. ञ. द्राज्ञासमीहितः. ३ ङ. छ. झ. ट. सहितोऽभवं. घ. सहितोवसन्. ४ क. च. ज. ञ. वनवासंच. ख—ङ. छ. झ. ट. विवासनंच. ५ क. ख. ग. ङ. च. छ. झ. ञ. ट. सुमित्रांचेदं. ६ ञ. क्रूरकर्मायाः. घ. क्रूरमाज्ञाय. ७ ख. च. दीर्घदर्शनं. ८ ङ. छ. झ. ट. सुमित्रांतां. क. सुमित्रांवा. ९ ङ. छ. झ. ट. विवर्णवदना. च. ञ. विवर्णामलिनांबरा. १० ख. ङ. छ. झ. ट. राजात्मजश्चापि. ११ क. घ. स्ततः. १२ ङ. छ. झ. ञ. ट. येन. १३ क. ख. ङ. च. छ. झ. ञ. ट. रुदतीदुःखात्समेत्यार्यामनस्विनी. १४ घ. यशस्विनीं. १५ क. ख. ग. च. ञ. वनचारिणं. १६ च. ञ. क्रूरदर्शना.

क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति ॥ हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥ १२ ॥
अथ वा स्वयमेवाहं सुमित्रानुचरा सुखम् ॥ अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये [1]यत्र राघवः ॥ १३ ॥
कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि ॥ यत्रासौ [2]पुरुषव्याघ्रः पुत्रो मे तप्यते तपः ॥ १४ ॥
इदं हि तव विस्तीर्णं धनधान्यसमाचितम् ॥ हस्त्यश्वरथसंपूर्णं राज्यं निर्यातितं [3]तया ॥ १५ ॥
इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः ॥ विव्यथे [4]भरतस्तीव्रं व्रणे तुद्येव सूचिना ॥ १६ ॥
पपात चरणौ तस्यास्तदा संभ्रान्तचेतनः ॥ विलप्य बहुधाऽसंज्ञो लब्धसंज्ञ[5]स्ततः स्थितः ॥ १७ ॥
एवं विलपमानां तां [6]भरतः प्राञ्जलिस्तदा ॥ कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥ १८ ॥
आर्ये कस्मादजानन्तं गर्हसे मामकिल्बिषम् ॥ [7]विपुलां च मम प्रीतिं [8]स्थिरां जानासि राघवे ॥ १९ ॥
[9]कृता शास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन ॥ सत्यसंधः सतांश्रेष्ठो यस्यार्योऽनुमते गतः ॥ २० ॥
[10]प्रेष्यं पापीयसां यातु सूर्यं च प्रति मेहतु ॥ हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २१ ॥

---

विनापिराज्यलाभसंभवात् ॥ ११ ॥ कैकेयीमामपि प्रस्थापयितुमर्हति सर्वस्यराज्यस्यतदायत्तत्वादितिभावः । हिरण्यनाभः हिरण्यवत्स्पृहणीयनाभियुक्तः । नाभिग्रहणंशरीरस्योपलक्षणं ॥ १२ ॥ कैकेयीकृतपापानुबन्धिनस्तवराजसंस्काराधिकारोनास्तीतिध्वनयन्न्याह—अथवेति । अग्निहोत्रं राजाग्निहोत्रं । अग्निहोत्रस्यज्येष्ठभार्याधीनत्वात् दशरथेनभरतसंस्कारप्रतिषेधाच्चेतिभावः । एतेन राजशरीरप्रापणमप्यर्थसिद्धं ॥ १३ ॥ तपस्तप्यते तपःकरोतीत्यर्थः । " तपस्तपःकर्मकस्यैव " इति कर्मवद्भावादात्मनेपदं ॥ १४ ॥ तवप्रस्थापनेममकाशक्तिस्तत्राह—इदमिति । धनधान्यसमाचितं धनधान्यसंपूर्णं । तया कैकेय्या । निर्यातितं दापितं । " निर्यातनंवैरशुद्धौदानेन्यासार्पणेमतं " इतिविश्वः ॥ १५ ॥ संभर्त्सितः परपक्षबुद्ध्याभाषितः । व्रणेसूचिनातुद्येव व्यथयित्वेव । पूर्वमेवभ्रातृपितृवियोगखिन्नोपिकौसल्यावाक्यश्रवणखिन्नइत्यर्थः ॥ १६ ॥ चरणौ प्रतीति शेषः । बहुधासंज्ञइत्यत्र असंज्ञइतिपदच्छेदः ॥ १७ ॥ एवंविलपमानां पूर्वोक्तप्रकारेणविलपन्तीं ॥ १८ ॥ अजानन्तं अभिषेकादिकमिति शेषः ॥ १९ ॥ कौसल्ययास्वस्मिन्नारोपितं दोषंपरिहर्तुंशपथवाक्यान्याह—तेत्यादिना । आर्यः रामः । यस्यानुमते संमतौसत्यांगतः तस्यशास्त्रानुगाकृताबुद्धिः गुरुणाविधिनिषेधबोधकशास्त्रानुसारित्वेनसुशिक्षिता बुद्धिः । कदाचनमाभूदितिसंबन्धः । यद्यहमार्यप्रवासनेअनुमन्तास्मि तर्हि श्रुतिस्मृतिज्ञानात्प्रच्युतोभूयासमित्यर्थः । एवमुत्तरत्रापिसामान्यनिर्देशोभरतविषयतयायोजनीयः । " निर्विशेषंनसामान्यं " इतिन्यायात् । अत्रशपथव्याजेनधर्मविशेषाश्चशिक्ष्यन्तेमुनिनेतिबोध्यं । अत्रच सत्पुरुषविषयापराधेशास्त्रज्ञानभ्रंशोभवतीतिसूचितम् ॥ २० ॥ प्रेष्यं प्रेष्यभावं ।

---

त्वदागमनादपिपूर्वंशीघ्रंवनंप्रतिप्रस्थाप्य राजानंमारितवतीकैकेयी । तत्र तादृशप्रस्थापने कंगुणंपश्यतीतिनजाने । इतिदुःखमिति शेषः । स्थितेतुरामे सएवपितृवाक्यात्त्वामेवाभिषिच्यरक्षेत् । अतोव्यर्थोऽयंतत्प्रयासइतिभावः ॥ ११ ॥ **ति०** हिरण्यनाभः हिरण्यवर्णनाभियुक्तः । इदमसाधारणंरामलक्षणं ॥ १२ ॥ **ति०** अग्निहोत्रमिति राजदेहस्याप्युपलक्षणं । कैकेयीवर्त्मगमने भरतोमेप्रेतकार्यंनकुर्यादितिराज्ञानिषेधादितिभावः ॥ १३ ॥ **ति०** अथवातवातत्पक्षत्वेराजसंस्कारादिकृत्लापश्चान्मांतत्रनयेत्याह **—कामंवेति** ॥ १४ ॥ **ति०** व्रणे प्राचीने । सूचिना सूच्या । प्रतुद्येवसंभार्त्सितः कैकेयीपक्षत्वधियागर्हितः । विव्यथे पितृभ्रातृवियोगखिन्नेनाश्वासनार्थमागतस्थलेपिखेदहेतुवचनश्रवणादितिभावः ॥ १६ ॥ **ति०** अजानन्तं अत्रत्यवृत्तान्तमितिशेषः । राघवे तद्विषये । मम हृदिपूर्वंस्थितां विपुलांप्रीतिं जानास्येव । इदानींतु ततोधिका पितृबुद्धेरपितत्रैवोपसंहारात् ॥ १९ ॥ **ति०** कृतशास्त्रानुगा गुरुशिक्षितश्रुतिस्मृतिमार्गगा बुद्धिर्माभूत् । इतोधिकानर्थाभावादयंपरमश्शपथः ॥ २० ॥ **ति०** प्रैष्यं प्रेष्यत्वंप्रति

**[ पा० ]** १ ङ. छ. झ. येन. २ झ. पुरुषव्याघ्रस्तप्यतेमेसुतस्ततः. च. ञ. पुरुषव्याघ्रस्तप्यतेमेतपस्सुतः. ट. पुरुषव्याघ्रस्तप्यतेमेसुतस्तपः. ङ. छ. पुरुषव्याघ्रस्तप्स्यतेमेसुतस्तपः. क. पुरुषव्याघ्रस्तप्स्यतेमेतपस्सुतः. ३ ग. ङ. च. छ. ट. तथा. ४ क. च. छ. ज. ट. भरतोतीव. ५ क. ख. ङ. च. छ. झ. ञ. ट. स्तदाभवत्. ६ क. च. ञ. प्राञ्जलिर्भरतःस्थितः. घ. ङ. झ. ट. प्राञ्जलिर्भरतस्तदा. ७ क. च. ञ. विपुलांतु, ८ छ, झ. ट. स्थितां. ९ ङ, च. छ. झ. ञ. ट. कृतशास्त्रानुगा. १० क. ख, ग. ङ, छ—ट. प्रैष्यं,

कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम् ॥ [१]अधर्मो योस्य सोस्यास्तु यस्यार्योऽनुमते गतः ॥ २२ ॥
परिपालयमानस्य राज्ञो भूतानि पुत्रवत् ॥ [२]ततस्तं द्रुह्यतां पापं यस्यार्योऽनुमते गतः ॥ २३ ॥
बलिषड्भागमुद्धृत्य [३]नृपस्यारक्षतः प्रजाः ॥ अधर्मो योस्य सोस्यास्तु यस्यार्योऽनुमते गतः ॥ २४ ॥
संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् ॥ [४]तां विप्रलपतां पापं यस्यार्योऽनुमते गतः ॥ २५ ॥
हस्त्यश्वरथसंबाधे युद्धे शस्त्रसमाकुले ॥ मा स्म कार्षीत्सतां धर्मं यस्यार्योऽनुमते गतः ॥ २६ ॥
[५]उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ॥ स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥ २७ ॥
मा च तं व्यूढबाह्वंसं [६]चन्द्रार्कसमतेजसम् ॥ द्राक्षीद्राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ २८ ॥
पायसं कृसरं छागं वृथा सोश्नातु [७]निर्घृणः ॥ गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ २९ ॥
[८]गाश्च स्पृशतु पादेन गुरून्[९]परिवदेत्स्वयम् ॥ मित्रे द्रुह्येत [१०]सोत्यन्तं यस्यार्योऽनुमते गतः ॥ ३० ॥
विश्वासात्कथितं किञ्चित्परिवादं मिथः क्वचित् ॥ विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ३१ ॥
[११]अकर्ता ह्यकृतज्ञश्च [१२]त्यक्तात्मा निरपत्रपः ॥ लोके भवतु [१३]विद्वेष्यो यस्यार्योऽनुमते गतः ॥ ३२ ॥

पापीयसां अतिशयेनपापिनां । हीनजातीनांप्रेष्यत्वं हिपापहेतुः । सूर्यंप्रति मेहतु मूत्रपुरीषोत्सर्गंकरोतु सूर्याभिमुखेनमेहनेयत्पापंतत्प्राप्नोत्वित्यर्थः । अनेन सूर्यंप्रतिमेहनंनकर्तव्यमितिसिद्धं । गांपादेनहन्तु पादेनगोहननपापंप्राप्नोतु । पादेनगोहननंदोषः । सुप्तामित्यनेनस्वहननप्रवृत्तगोहननंनदोषायेत्युक्तं ॥ २१ ॥ योभर्ताभृत्यंमहत्कर्मकारयित्वा । "हृक्रोरन्यतरस्यां" इतिद्विकर्मकत्वं । अनर्थकं तंप्रयोजनशून्यंकरोतीति शेषः । अस्यभर्तुः यःअधर्मः सोस्तु ॥ २२ ॥ परिपालयमानस्यराज्ञः राज्ञिपरिपालयतिसति । तंप्रतिद्रुह्यतांपापं । ततः तस्य ॥ २३ ॥ बलिषड्भागं बलिः करः "बलिःपूजापहारेचदैत्यभेदकरेपिच" इतिवैजयन्ती । षष्ठोभागः षड्भागः बलिश्चासौषड्भागश्चेतिविशेषणसमासः । उद्धृत्य आदाय ॥ २४ ॥ सत्रे यागे । तपस्विभ्यः व्रतोपवासशीलेभ्य ऋत्विग्भ्यः । यज्ञदक्षिणांसंश्रुत्य प्रतिज्ञाय । तांदक्षिणां । विप्रलपतां विरुद्धोक्त्याअपलपतां ॥ २५ ॥ सतां शूराणां । धर्मं अपरावर्तनं । मास्मकार्षीत् परावर्तमानस्ययत्पापंतदस्त्वित्यर्थः ॥ २६ ॥ धीमतागुरुणा यत्नेनोपदिष्टं सुसूक्ष्मार्थं परलोकसाधकरहस्यार्थयुक्तं । शास्त्रं वेदान्तादिविशिष्टार्थं । नाशयतु विस्मरतु ॥ २७ ॥ व्यूढबाह्वंसं व्यूढौसंहतौमांसलौबाहूअंसौचयस्यतं । "व्यूढौविन्यस्तसंहतौ" इत्यमरः । राज्यस्थं प्राप्तराज्यं । आसीनं सिंहासनेआसीनं । तं रामं । माद्राक्षीत् तादृशरामदर्शनभाग्यरहितोभवत्वित्यर्थः ॥ २८ ॥ कृसरं तिलौदनं । छागं अजं । मांसमात्रोपलक्षणमेतत् । वृथाऽश्नातु देवतापित्रतिथिनिवेदनमन्तरेणभुङ्क्तामित्यर्थः । अवजानातु प्रत्युत्थानाभिवादनादिकंनकरोत्वित्यर्थः ॥ २९ ॥ गाः पादेनस्पृशतु हन्तुपादेनेत्यत्रहननमुक्तं । इहतुपादस्पर्शोपिपापहेतुरित्युच्यते । परिवदेत् अपवदेत् । मित्रे द्रुह्येत मित्रायद्रुह्यत्वित्यर्थः ॥ ३० ॥ परिवादं अपवादं । "अपवादोपक्रोशनिर्वादावर्णपरिवादाः" इतिहलायुधः । मिथः रहस्ये । "मिथोन्योन्यरहस्ययोः" इतिवैजयन्ती । विश्वासाद्रहःकथितस्यपरिवादस्यक्वचिदन्यत्रप्रकटीकरणंपातकमितिभावः ॥ ३१ ॥ अकर्ता

॥ २१ ॥ **ति०** ततः तस्मै । आद्यादित्वाच्चतुर्थ्यर्थेतसिः । तस्यास्त्वितिशेषः ॥ २३ ॥ **ति०** माद्राक्षीत् तादृशरामदर्शनभाग्यरहितोभवतु ज्येष्ठानुवर्तनरहितोभवत्वित्यर्थः । तावत्पर्यन्तंजीवनंमाभूदितिवा ॥ २८ ॥ **शि०** छागं छंनिर्मलत्वं अगं नगच्छतियस्यतंतांबूलादिमित्यर्थः । किंच छः निर्मलश्चासावगोवृक्षःतं तदवयवीभूततुलसीपत्रकमलपद्मादिकमित्यर्थः । वृथा परमात्मसमर्पणमन्तरा । सुनिर्घृणः शास्त्रत्यागहेतुकभविष्यद्दण्डाश्रयीभूतस्वविषयकदयारहितः । अश्नातु ॥ २९ ॥ **ति०** गवामिति अङ्गमितिशेषः ॥ ३० ॥ **ती०** त्यक्तात्मा उद्बन्धनादिनात्यक्तदेहः । **ति०** त्यक्तः सज्जनैः ॥ ३२ ॥

[ **पा०** ] १ क. च. अधर्मस्तस्य. २ ख. घ. ङ. छ. ज. झ. ट. ततस्तु. ३ ग. ङ. छ. झ. ट. नृपस्यारक्षितुः. ४ ङ. छ. झ. ञ. ट. तांचापलपतां. ५ ङ. उपदिष्टंतु. ६ ङ. छ. झ. ट. चन्द्रभास्करतेजसं. ७ ग. नित्यशः. ८ ङ. छ. झ. ञ. ट. गवां. ९ घ. छ. झ. ट. न्परिवदेतच. ग. च. ञ. परिवदेचसः. १० ङ. च. छ. झ. ञ. ट. सोत्यर्थं. ११ क. ग. ङ. च. झ. ञ. ट. अकर्ताचाकृतज्ञश्च. १२ ङ. छ. झ. ट. त्यक्तश्च. १३ घ. ङ. छ—ञ. विद्विष्टो.

पुत्रदारैश्च भृत्यैश्च स्वगृहे परिवारितः ॥ स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥ ३३ ॥
अप्राप्य सदृशान्दारानपत्यः प्रमीयताम् ॥ अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥ ३४ ॥
माऽऽत्मनः संततिं द्राक्षीत्स्वेषु दारेषु दुःखितः ॥ आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥ ३५ ॥
राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते ॥ भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ३६ ॥
लाक्षया मधुमांसेन लोहेन च विषेण च ॥ सदैव बिभृयाद्भृत्यान्यस्यार्योऽनुमते गतः ॥ ३७ ॥
संग्रामे समुपोढे स्म शत्रुपक्षभयंकरे ॥ पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥ ३८ ॥
कपालपाणिः पृथिवीमटतां चीरसंवृतः ॥ भिक्षमाणो यथोन्मत्तो यस्यार्योऽनुमते गतः ॥ ३९ ॥
पाने प्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः ॥ कामक्रोधाभिभूतस्तु यस्यार्योऽनुमते गतः ॥ ४० ॥
मा स्म धर्मे मनो भूयादधर्मं सुनिषेवताम् ॥ अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥ ४१ ॥
संचितान्यस्य वित्तानि विविधानि सहस्रशः ॥ दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः ॥ ४२ ॥
उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते ॥ तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥ ४३ ॥
यदग्निदायके पापं यत्पापं गुरुतल्पगे ॥ मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ४४ ॥
देवतानां पितॄणां च मातापित्रोस्तथैव च ॥ मा स्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः ॥४५॥
सतां लोकात्सतां कीर्त्याः संजुष्टात्कर्मणस्तथा ॥ भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ ४६ ॥

प्रत्युपकारस्याकर्ता । अथाप्यकृतज्ञः आभ्यामेकं पापमुक्तं । त्यक्तात्मा सद्भिःपरिहृतः । अथापिनिरपत्रपः निर्लज्जः । अकृतप्रायश्चित्तइतियावत् । इदमेकंपापं ॥ ३२ ॥ मृष्टमश्नातु इतरेषुकदन्नभुक्षु स्वयंमृष्टंसमीचीनमन्नं अश्नातु ॥ ३३ ॥ सदृशान् समानकुलान् । धर्म्यांक्रियां अग्निहोत्रादिकंच अप्राप्य अनपत्यःसन्प्रमीयतां ॥ ३४ ॥ अप्राप्येत्यादिविवरणं—मात्मनइति । अनेनऋणापाकरणंविनाब्रह्मचर्यादेवसंन्यासःप्रतिषिध्यते । अविरक्तविषयमिदमितिचेन्न ब्रह्मचर्यादेवप्रव्रजेदित्यादेर्दाराालाभविषयत्वात् । तत्रैवहि इतरथेत्यनेनायमर्थोदर्शितः ॥ ३५ ॥ राजस्त्रीत्यत्रापि यस्यार्योनुमतेगतइत्यनुषञ्जनीयं ॥ ३६ ॥ भृत्यान् भरणीयान् । लाक्षादिविक्रयलब्धद्रव्येणबिभृयात् रक्षेदित्यर्थः । "लाक्षालवणमांसानिवर्जनीयानिविक्रये" इतिस्मृतेः । अप्यकार्यशतं कृत्वेत्यस्यापवादोयं ॥ ३७ ॥ समुपोढे निकटे । "उपोढोनिकटोढयोः" इतिवैजयन्ती ॥ ३८ ॥ अटतां चरतु । चीरं मलिनं जीर्णवस्त्रं । अनेनशैवमतप्रवेशोनिन्द्यते ॥ ३९—४० ॥ अपात्रवर्षी अपात्रेबहुदायी ॥ ४१ ॥ दस्युभिः तस्करैः ॥ ४२ ॥ उभे इति उभयोःसंध्ययोः ॥ ४३ ॥ गुरुतल्पगे गुरुदारगे ॥ ४४ ॥ देवानांशुश्रूषा अग्निहोत्रादिकर्म संभृतैराज्यचरुपशुपुरोडाशादिभिःप्रीणनं । पितॄणांतु उपरागादिषुमातापितृमरणतिथ्यादिषुचपूर्वोक्तैरन्यैश्चतिलादिभिराराधनं । पितृशुश्रूषयैवमृतमातापितृशुश्रूषाग्रहणसंभवात् मातापित्रोरित्यत्रजीवतोरितिविवक्षितं ॥ ४५ ॥ सतांकीर्त्यात् सद्भिःक्रियमाणश्लाघनात् ।

ति० समुपोढे प्राप्ते ॥ ३८ ॥ ति० कपालेति ब्रह्महाभवत्वितिशेषः । तादृशीनिषिद्धाचरणाप्रव्रज्याभवत्वितिवाभावः । स० कपालपाणिः स्फुटितघटशकलपाणिः ॥ ३९ ॥ ति० दस्युभिर्विप्रलुप्यन्तां त्यागभोगविहीनानिभवन्त्वितिभावः ॥ ४२ ॥ ति० उभेसन्ध्ये व्याप्येतिशेषः ॥ ४३ ॥ स० पितॄणां व्यवहितानां ॥ ४५ ॥

[ पा० ] १ झ. पुत्रैर्दासैश्च. क. ग. ङ. छ. ञ. ट. पुत्रैर्दारैश्च. २ क. क्रियाधर्मं. ३ ग. नित्यशः. ४ ङ. छ. त्यागेन. ५ घ. ङ. यस्यार्योऽनुमतेगतः. [ अस्मिन्पाठेतत्पापंप्रतिपद्यतामित्यध्याहृत्ययोजनाकार्या ]. ६ झ. ट. समुपोढेच. क. च. ञ. समुपोढेतु. ७ क. च. ञ. शत्रुपक्षे. ८ झ. मद्यप्रसक्तो. क. ङ. च. छ. ञ. ट. मद्येप्रसक्तो. ९ क. ङ. छ. झ. ञ. ट. भूतश्च १० ङ. च. झ. ञ. ट. मास्य. ११ ग. मतिर्भूयात्. १२ क. ग. ङ. च. छ. झ. ञ. ट. सनिषेवतां. १३ ग. संचितानितु. १४ घ. दाहके. १५ घ. यस्यार्योनुमतेगतः. [अस्मिन्पाठेतत्पापंप्रतिपद्यतामित्यध्याहृत्ययोजनाकार्या ]. १६ क—छ. झ. ञ. ट. कीर्त्यास्संजुष्टात्.

अपास्य मातृशुश्रूषामनर्थे सोवतिष्ठताम् ॥ दीर्घबाहुर्महावक्षा यस्यार्योऽनुमते गतः ॥ ४७ ॥
[1]बहुपुत्रो दरिद्रश्च ज्वररोगसमन्वितः ॥ [2]स भूयात्सततं क्लेशी यस्यार्योऽनुमते गतः ॥ ४८ ॥
आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम् ॥ अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः ॥ ४९ ॥
मायया रमतां नित्यं [3]परुषः पिशुनोशुचिः ॥ राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥ ५० ॥
ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम् ॥ [4]अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ५१ ॥
[5]धर्मदारान्परित्यज्य परदारान्निषेवताम् ॥ [6]त्यक्तधर्मरतिर्मूढो यस्यार्योऽनुमते गतः ॥ ५२ ॥
विप्रलुप्तप्रजातस्य दुष्कृतं ब्राह्मणस्य यत् ॥ [7]तदेव प्रतिपद्येत यस्यार्योऽनुमते गतः ॥ ५३ ॥
पानीयदूषके पापं तथैव विषदायके ॥ यत्तदेकः स लभतां यस्यार्योऽनुमते गतः ॥ ५४ ॥
ब्राह्मणायोद्यतां पूजां [8]विहन्तु कलुषेन्द्रियः ॥ बालवत्सां च गां दोग्धु यस्यार्योऽनुमते गतः ॥५५॥
तृष्णार्तं सति पानीये विप्रलम्भेन [9]योजयेत् ॥ [10]लभेत तस्य यत्पापं यस्यार्योऽनुमते गतः ॥ ५६ ॥
भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः ॥ [11]तस्य पापेन युज्येत यस्यार्योऽनुमते गतः ॥ ५७ ॥
विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ॥ एवमाश्वासयन्नेव [12]दुःखार्तो निपपात ह ॥ ५८ ॥
[13]तथा तु शपथैः [14]कष्टैः शपमानम[15]चेतनम् ॥ भरतं शोक[16]संतप्तं कौसल्या वाक्यमब्रवीत् ॥ ५९ ॥

संजुष्टात् सत्सेवितात् ॥ ४६ ॥ पुनर्मातृशुश्रूषाग्रहणं तत्त्यागेप्रत्यवायभूयस्तयातन्नित्यतयाच । मातृशुश्रूषाहि नित्या यतस्तस्यांपतितायामपिशुश्रूषांविदधतिस्मृतयः । अनर्थे अधर्मे ॥ ४७ ॥ बहुपुत्रस्यापिधनिनोदुःखाभावात् अपुत्रस्यदारिद्र्येपिभरणीयाल्पतयाक्लेशाल्पतेतिचविशेषणद्वयं ॥ ४८ ॥ आशंसमानानां स्तुवतां । ऊर्ध्वचक्षुषां उन्नतासनस्थदातृमुखनिरीक्षकाणां । अर्थिनां आशांवितथांकुर्यात् ॥ ४९ ॥ मायया वञ्चनया । रमतां सक्तोभवतु ॥ ५० ॥ ऋतुकालानुरोधिनीं ऋतुस्नानदिवसेस्वसंनिहितां ॥ ५१ ॥ निषेवतां भजतां ॥ ५२ ॥ विप्रलुप्तप्रजातस्य नष्टापत्यस्य संततिहीनस्येत्यर्थः । तदेवदुष्कृतंप्रतिपद्येत ॥ ५३ ॥ पानीयदूषकेविषदायकेचयत्पापं तत् द्वयं एकोलभतामित्यर्थः ॥ ५४ ॥ बालवत्सां अनिर्दशां ॥ ५५ ॥ पानीयेसति गृहेविद्यमानेसति । विप्रलम्भेन वञ्चनया । योयोजयेत् नददातीत्यर्थः । तस्ययत्पापंतल्लभेत ॥ ५६ ॥ विवदमानेषु वादिप्रतिवादिषुविवादंकुर्वत्सु । भक्त्या एकस्मिन्स्नेहेन जयोपायमाश्रित्य । पश्यतः ब्रुवतस्तस्यपापे-

स० अनर्थे भार्यासेवादौ ॥ ४७ ॥ ती० यद्वा विप्रलुप्ताविवर्जिता प्रजाता प्रसूता जातापत्याजाया येनतस्य ॥ ५३ ॥ ती० बालवत्सां अनिर्दशामित्यर्थः । "सन्धिस्सनिर्दशावत्सागोपयःपरिवर्जयेत्" इतिस्मृतेः ॥ ५५ ॥ ति० योजयन् अप्रयच्छन्नितियावत् ॥ ५६ ॥ ती० पश्यतः तूष्णींभवतः जयोपायंज्ञात्वापिपक्षपातेनतूष्णींभवतइत्यर्थः । तस्यपापेनयुज्येतेति संबन्धः । अस्मिञ्शपथप्रकरणेश्लोकानांपूर्वोत्तरव्यत्यासःपुनरुक्तिश्चदृश्यते तच्छपथविषयत्वान्नदोषः । ति० भक्त्या शिवविष्ण्वादिदेवताभक्त्या । मार्गे तत्तदुपोद्बलकशैववैष्णवादिशास्त्रमाश्रित्य अयमुत्कृष्टःअयंनेतिविवदमानेषुयत्पापं यच्चतयोर्विवादंपश्यतः शृण्वतःपापं तेनयुज्येतेत्यर्थः । तस्यपापेनेतिपाठे तेषांयत्पापं तेन यस्यानुमतेगतस्तस्ययोगःसंबन्धोभूयादित्यर्थः । भावेचयुज्येतेतिप्रयोगः । "अयंपरस्त्वयंनेतिसंरक्षाभिनिवेशिनः । यातुधानाभवन्त्येवपिशाचाश्चनसंशयः" इतिशिवपुराणोक्तेः । "योब्रह्मविष्णुरुद्राणांभेदंयुक्तिनिवेशतः । साधयेदुदरव्याधियुक्तोभवतिमानवः" इतिकर्मविपाकशास्त्रोक्तेश्च । कतक० द्वयोस्साम्यस्थापनपूर्वकंतेषांकलहशमनमकुर्वतःकलहप्रियस्ययत्पापंतेनयुज्येतेत्यर्थः । स० भक्त्या मार्गविभागेन । विवदमानेषुसत्सु स्वयंतुमार्गे

[ पा० ] १ ङ. छ. झ. ञ. ट. बहुभृत्यो. २ ङ. छ. झ. ट. समायात्सततंक्लेशं. ३ ख. ङ. झ. ञ. पुरुषः. क. च. पिशुनः पुरुषो. ४ ग. अतिवर्तेदधर्मात्मा. ५ धर्मदारान्परित्यज्येति. पानीयदूषकइतिचश्लोकद्वयं झ. ट. पाठयोः ब्राह्मणायोद्यतामितिश्लोकात्परं तृष्णार्तमितिश्लोकात्पूर्वंदृश्यते. ६ ख. परित्यक्तस्वधर्मोसौ. ७ क. ङ. च. छ. झ. ञ. ट. तदेतत्प्रति. ८ ख. विहन्यात्कलुषेन्द्रियः. ९ क. च. छ. झ. ट. योजयन्. १० क. ख. ध. च—ट. यत्पापंलभतेतत्स्यात्. ग. ङ. यत्पापंलभतेतस्य. ११ झ. तेन. १२ झ. दुःखार्तोनु. १३ ङ. छ. झ. ट. तदार्तं. १४ ज. क्लिष्टैः. १५ ङ. च. ञ. चेतसं. १६ क. च. ञ. संतप्ता.

मम दुःखमिदं पुत्र भूयः समुपजायते ॥ शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥ ६० ॥
दिष्ट्या न चलितो धर्मादात्मा ते [1]सहलक्ष्मणः ॥ वत्स [2]सत्यप्रतिज्ञो मे सतां लो[3]कानवाप्स्यसि ॥ ६१ ॥
इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् ॥ परिष्वज्य [4]महाबाहुं रुरोद भृशदुःखिता ॥ ६२ ॥
एवं विलपमानस्य दुःखार्तस्य [4]महात्मनः ॥ मोहाच्च शोक[6]संरोधाद्बभूव लुलितं मनः ॥ ६३ ॥
लालप्यमानस्य विचेतनस्य प्रणष्टबुद्धेः पतितस्य भूमौ ॥
मुहुर्मुहुर्निश्वसतश्च [7]घर्मे सा तस्य शोकेन जगाम रात्रिः ॥ ६४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः ॥ ७६ ॥

भरतेनवसिष्ठचोदनयातैलद्रोण्याःसमुद्धृतदशरथशरीरस्यसराजवैभवंशिबिकारोपणेनपितृवनप्रापणपूर्वकंयथाविधिसंस्करणम् ॥ १ ॥ तथाकौसल्यादिभिःसहसरय्वांदशरथायोदकदानपूर्वकमयोध्याप्रवेशः ॥ २ ॥

तमेवं शोकसंतप्तं भरतं कैकयीसुतम् ॥ उवाच वदतांश्रेष्ठो वसिष्ठः श्रेष्ठवागृषिः ॥ १ ॥
अलं शोकेन भद्रं ते राजपुत्र [8]महायशः ॥ प्राप्तकालं नरपतेः कुरु सं[9]यानमुत्तमम् ॥ २ ॥
[10]वसिष्ठस्य वचः श्रुत्वा भरतो [11]धारणां गतः ॥ प्रेत[12]कार्याणि सर्वाणि कारयामास धर्मवित् ॥ ३ ॥
[13]उद्धृतं तैल[14]संरोधात्स तु भूमौ निवेशि[15]तम् ॥ आपीतवर्णवदनं प्रसुप्तमिव [16]भूपतिम् ॥ ४ ॥

---

नयुज्येतेतिसंबन्धः ॥ ५७—५९ ॥ उपरुणत्सि पीडयसीत्यर्थः । यद्वा प्राणानुपरुणत्सि रामवियोगेनमेनिर्गच्छतःप्राणान्स्थापयसि । शपथकरणेनममाश्वासोजातइत्यर्थः ॥ ६० ॥ दिष्ट्या भाग्येन । आत्मा अन्तःकरणं । धर्मात् ज्येष्ठानुवर्तनधर्मात् । मे मह्यं । सहलक्ष्मणः सत्यप्रतिज्ञोसि लक्ष्मणवत्सत्यप्रतिज्ञोसीत्यर्थः । अतः सतांलोकानवाप्स्यसि ॥ ६१—६२ ॥ एवंविलपमानस्य पूर्वोक्तशपथरूपेणविलपतः । शोकसंरोधात् शोककृतसंरोधात् ॥ ६३ ॥ लालप्यमानस्य भृशंप्रलपतः । विचेतनस्य मूर्छितस्य । प्रनष्टबुद्धेः क्षुभितान्तःकरणस्य । घर्मे उष्णंयथाभवतितथा निश्वसतः ॥ ६४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

कैकयीसुतमित्यत्र "केकयमित्त्रयुप्रलयानांयादेरियः" इतिविहितस्येयादेशस्याभावः ॥ १ ॥ संयानं सम्यग्यानं स्वर्गप्रापकक्रियाजातमित्यर्थः ॥ २ ॥ धारणांगतः धैर्यप्राप्तः । "मर्यादाधारणास्थितिः" इत्यमरः । स्वस्थान्तःकरणइत्यर्थः । कारयामासेति संक्षेपोक्तिः ॥ ३ ॥ उद्धृतमित्यादिश्लोकद्वयमेकान्वयं। ततःस पुत्रः तैलसंरोधात् तैलद्रोण्याः । उद्धृतं तत-

---

यथावस्थितमाश्रित्यपश्यतः उदासीनतयास्थितस्य ॥ ५७ ॥ **ति०** लक्षणैः शुभलक्षणैस्सहितः सहलक्षणःते आत्मेत्यर्थः । हेवत्स यदि सत्यप्रतिज्ञोभविष्यसि तदा सतांलोकानवाप्स्यसि कैकेय्यप्रेकृतांरायानयनप्रतिज्ञांसत्यांकुर्वितिव्यङ्ग्यं । **शि०** सतां रामादीनां लोकान् कृपादृष्टिपथान् ॥ ६१ ॥ इतिपञ्चसप्ततितमस्सर्गः ॥ ७५ ॥

**ति०** वसिष्ठः भरतागमनंश्रुत्वाऽऽगतइतिशेषः । **स०** श्रेष्ठवाक् अतएववदतांश्रेष्ठः ॥ १ ॥ **ति०** संयानं प्रेतनिर्हारं । **स०** संयानं देहसंस्कारं ॥ २ ॥ **स०** धरणीमितिपाठेसाष्टाङ्गंननामेत्यर्थः । तदैवतेनदृष्टत्वादितिभावः । कारयामास अकरोत् । **ति०**

[ **पा०** ] १ ख. ग. शुभलक्षण. छ—ट. सहलक्षणः. २ छ. झ. ञ. ट. सत्यप्रतिज्ञोहि. घ. च. सत्यप्रतिज्ञोसि. ३ ख. घ. ङ. च. छ. लोकमवाप्स्यसि. ४ ङ. महात्मानं. ५ च. पुनःपुनः. ६ छ. झ. ट. संरंभात्. ७ ङ. झ. ट. दीर्घे. ८ ग. घ. ज. महायशाः. ९ ज. संस्कार. १० ख. ग. वसिष्ठवचनं. ११ क. ग. ङ. च. झ. ञ. ट. धरणींगतः. १२ क. ख. ग. ङ. च. झ. ट. कृत्यानि. १३ ङ. छ. झ. ट. उद्धृत्य. १४ ङ. छ. झ. ट. संसेकात्. क. ख. ग. च. ञ. संक्लेदात्. १५ ग. च. ञ. निवेश्यतं. १६ क. घ. ङ—ट. भूमिपं.

संवेश्य[1] शयने चाग्र्ये नानारत्नपरिष्कृते[2] ॥ ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५ ॥
किं ते व्यवसितं राजन्प्रोषिते मय्यनागते ॥ विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलम् ॥ ६ ॥
क यास्यसि[3] महाराज हित्वेमं दुःखितं जनम् ॥ हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७ ॥
योगक्षेमं[4] तु ते राजन्कोऽस्मिन्कल्पयिता पुरे ॥ त्वयि प्रयाते स्वस्तात रामे च वनमाश्रिते ॥ ८ ॥
विधवा पृथिवी राजंस्त्वया हीना न राजते ॥ हीनचन्द्रेव रजनी नगरी प्रतिभाति मा[5] ॥ ९ ॥
एवं विलपमानं तं भरतं दीनमानसम् ॥ अब्रवीद्वचनं भूयो वसिष्ठस्तु महामुनिः[6] ॥ १० ॥
प्रेतकार्याणि यान्यस्य कर्तव्यानि विशांपतेः[7] ॥ तान्यव्यग्रं[8] महाबाहो क्रियन्तामविचारितम् ॥ ११ ॥
तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत् ॥ ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः ॥ १२ ॥
ये त्वग्नयो नरेन्द्रस्य[9] चाग्न्यगाराद्बहिष्कृताः ॥ ऋत्विग्भिर्याजकैश्चैव आह्रियन्त[10] यथाविधि ॥ १३ ॥
शिबिकायामथारोप्य राजानं गतचेतसम्[11] ॥ बाष्पकण्ठा विमनसस्तमूहुः[12] परिचारकाः ॥ १४ ॥
हिरण्यं च सुवर्णं च वासांसि विविधानि च ॥ प्रकिरन्तो जना मार्गं[13] नृपतेरग्रतो ययुः ॥ १५ ॥
चन्दनागरुनिर्यासान्सरलं पद्मकं तथा ॥ देवदारूणि चाहृत्य क्षेपयन्ति[14] तथा परे ॥ १६ ॥
गन्धानुच्चावचांश्चान्यांस्तत्र गत्वा[15]ऽथ भूमिपम् ॥ ततः[16] संवेशयामासुश्चितामध्ये तमृत्विजः ॥ १७ ॥

स्तैलापमार्जनायभूमौनिवेशितंचिरंतैलेस्थापनादापीतवर्णवदनं अवयवशैथिल्याभावात्प्रसुप्तमिवस्थितं दशरथंःभूपतिं । उक्तविशेषणेशयने संवेश्य शाययित्वा । सुदुःखितःसन् विललाप ॥ ४—५ ॥ किंतेव्यवसितं त्वयाकिमद्यव्यवसितं । स्वर्गगमनायेतिशेषः ॥ ६—७ ॥ तेपुरे अयोध्यायां । कःजनः योगक्षेमं स्वकीयपुरयोगक्षेमं । कल्पयिता करिष्यति । स्वः स्वर्गं ॥ ८—१० ॥ विशांपतेः प्रजानांपत्युः ॥११॥ ऋत्विक्पुरोहिताचार्यान् ऋत्विजोयज्ञकर्मणिवृताः । पुरोहिताः पुरोहितपरत्वेनशान्तिकपौष्टिकादिक्रियाप्रवर्तकाः । आचार्याः वसिष्ठवामदेवादयः । “ त्रय्यां चधर्मकृत्येचशान्तिकर्मणिपौष्टिके । अध्वरेयश्चकुशलःसस्याद्राजपुरोहितः ॥ उपनीयवदेद्वेदमाचार्यः सउदाहृतः ” इतिलक्षणं ॥ १२ ॥ अग्न्यगारात् अग्निगृहात् । बहिष्कृताः अन्तःशववत्त्वाद्बहिःप्रतिष्ठापिताः । अग्नयोगार्हपत्यादयः । याजकैः उपद्रष्टृभिः । ऋत्विग्भिश्च आह्रियन्त आनीयन्त ॥ १३—१४ ॥ हिरण्यंच सुवर्णंच रजतंच सुवर्णंच तत्कृतपुष्पाणीत्यर्थः ॥ १५ ॥ चन्दनागरुनिर्यासान् निर्यासोगुग्गुलुः । “ गुग्गुलुःकालनिर्यासौ ” इति निघण्टुः । चन्दनागरुजनितधूपद्रव्याणीतियावत् । सरलं धूपसरलं । पद्मकं सुरभिकाष्ठविशेषं । क्षेपयन्ति पुरतःपार्श्वतश्चध्रियमाणसौवर्णराजताङ्गारधानीषु धूपार्थमितिशेषः । चन्दनादीनिगन्धान्तानि चिताकाष्ठद्रव्याणीत्येवतुयुक्तं । तदाक्षेपयन्ति दहनार्थंचितामकुर्वन्नित्यर्थः ॥ १६ ॥ तत्रगत्वाथभूमिपमित्युत्तरशेषः । अथ चिताकल्पनानन्तरं । तत्र चितासमीपेगत्वा तंभूमिपं चितामध्ये ततः शिबिकायाः उद्धृ-

कारयामास तत्करणार्थमन्त्रिणःप्रेरयामासेत्यर्थः ॥ ३ ॥ **स०** ते तवसंबन्धिनं त्वन्निर्वाह्यमितियावत् । अस्मिन्पुरे । योगसहितं क्षेमं योगक्षेमं ॥ ८ ॥ **शि०** अस्य साकेतंप्राप्तस्य । प्रेतकार्याणि परलोकगमनविहितकर्माणिकर्तव्यानि तानि अव्यग्रंयथास्यात्तथा अविचारितं सशरीरंलोकान्तरंगतस्यप्रेतकार्याणिकर्तव्यानिनवेतिसंशयरहितंयथास्यात्तथाक्रियन्तां । एतेनसशरीरगतपुरुषस्यवस्त्रादिषुतच्छरीरबुद्धिःकर्तव्येतिसूचितं । तेनकर्मणामवश्यकर्तव्यताव्यञ्जिता । तेनवसिष्ठस्यमर्यादापालकत्वंव्यक्तं ॥ ११ ॥ **स०** क्षेपयन्ति तत्प्रक्षेपस्तुशवदुर्गन्धप्रतीतिनिरासार्थं ॥ १६ ॥

[ **पा०** ] १ क. निवेश्यशयनैकाग्र्ये. २ छ. परिच्छदे. ३ ङ. झ. यास्यसे. ग. यास्यथ. ४ क. ङ. च. छ. झ. ञ. योगक्षेमंतुतेऽव्यग्रं. ज. योगक्षेमयिताराजन्. ५ च. मे. ङ. छ. ज. झ. ञ. ट. मां. ६ क. च. ञ. महानृषिः. ७ ङ. विशांपते. ८ क. ग. च. ञ. तान्यद्यतु. ९ ख. घ. झ. ञ. स्यअभ्यगारात्. क. ग. च. छ. ज. स्यह्यभ्यागारात्. ट. स्यअभ्यागारात्. १० क. ग. ङ. च—ट. तेहूयन्ते ख. घ. तेह्रियन्ते. ११ घ. ङ. छ. झ. ट. चेतनं. १२ झ. स्तमूचुः. १३ ख. ग. ङ. झ. ञ. ट. मार्गे. १४ घ. ज. ट. चितांचकुस्तथा. १५ क—घ. दत्वाथ. १६ ङ. झ. ट. तत्र.

तथा हुताशनं दत्त्वा जेपुस्तस्य तमृत्विजः ॥ जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८ ॥
शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः ॥ नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तदा ॥ १९ ॥
प्रसव्यं चापि तं चक्रुर्ऋत्विजोऽग्निचितं नृपम् ॥ स्त्रियश्च शोकसंतप्ताः कौसल्याप्रमुखास्तदा ॥२०॥
क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे ॥ आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१ ॥
ततो रुदन्त्यो विवशा विलप्य च पुनःपुनः ॥ यानेभ्यः सरयूतीरमवतेरुर्वराङ्गनाः ॥ २२ ॥

कृत्वोदकं ते भरतेन सार्धं नृपाङ्गना मन्त्रिपुरोहिताश्च ॥
पुरं प्रविश्याश्रुपरीतनेत्रा भूमौ दशाहं व्यनयन्त दुःखम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## सप्तसप्ततितमः सर्गः ॥ ७७ ॥

भरतेनशत्रुघ्नेनसहद्वादशेऽहनिसकलश्राद्धनिर्वर्तनेनतदङ्गतयाब्राह्मणेभ्योधनरत्नादिनानावस्तुप्रदानम् ॥ १ ॥ त्रयोदशेऽहन्यस्थिसंचयनार्थंचितामूलंगतेनभरतेनविलापपूर्वकंमोहाद्धरण्यांनिपतनम् ॥ २ ॥ भुविनिपतितेनशत्रुघ्नेनापिबहुधापरिदेवनम् ॥ ३ ॥ ततोवसिष्ठसुमन्त्राभ्यांसमाश्वासितौतौप्रतिअमात्यैरस्थिसंचयनादिक्रियासुसंत्वरणम् ॥ ४ ॥

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः ॥ द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥ १ ॥

---

त्येतिशेषः । संवेशयामासुः शाययामासुः ॥ १७ ॥ हुताशनंदत्त्वा भरतेनदापयित्वा । जेपुः पैतृमेधिकमन्त्रविशेषानितिशेषः । तस्य परमगत्यर्थमितिशेषः । तमितिहुताशनविशेषणं । हुतं प्रेताग्निमित्यर्थः । ते उद्गातृप्रभृतयः ऋत्विजः ॥ १८ ॥ यानैः अश्वादिभिः । वृद्धैः परिचारकैः ॥ १९ ॥ अग्निचितं अग्निचयनंकृतवन्तं । तंनृपं ऋत्विजःस्त्रियश्च प्रसव्यं सव्यापसव्यंप्रदक्षिणमप्रदक्षिणंच चक्रुः । [ प्रसव्यं अप्रदक्षिणं इदंप्रदक्षिणस्याप्युपलक्षणं ] । भरतश्चेत्यर्थसिद्धं । इदंचाग्निवानात्पूर्वंशिबिकास्थेप्रेते क्रमस्याविवक्षितत्वादत्रोक्तं । देशविशेषाचारोऽयंवा ॥ २०—२२ ॥ ताश्चतेच ते । "पुमांस्त्रिया" इत्येकशेषः । दशाहं । "कालाध्वनोरत्यन्तसंयोगे" इतिद्वितीया । भूमौशयानाइतिशेषः । "कियल्लब्धाशनाभूमौस्वपेयुस्तेपृथक्पृथक्" इत्याशौचिनांपृथक्शयनंहिविहितं । दुःखमाशौचं व्यनयन्त अगमयन् । ननु षोडशाहेन [ द्वादशाहेन ] भूपालाइतिक्षत्रियस्य [ द्वादशाहा ] षोडशाहाशौचसद्भावात्कथंदशाहमित्युच्यतइतिचेत् । सत्यं । "क्षत्रियस्तुदशाहेनस्वकर्मनिरतःशुचिः" इत्यादिविशेषशास्त्रानुसारेणोक्तमितिनदोषः । अत्रस्त्रीणांप्रेतप्रदक्षिणमुदकदानंचसूत्रान्तरोक्तंज्ञेयं । तथाचितास्थस्यप्रदक्षिणंच । अतएवाहबोधायनः "प्रदक्षिणमपिबान्धवाः कुर्वन्ति एवंमार्गेपिचितामारोप्यचितायामेवेत्येके" इति । अत्रप्रेतेनसहाग्न्यानयनं चितारोपणं समन्त्रकमग्निदानं प्रदक्षिणीकरणमुदकदानं दशाहमाशौचेन भूमौ शयनमित्येतावन्मात्रं देशकुलसूत्रभेदेनऔर्ध्वदैहिकविशेषउक्तइतिवा प्रधानोक्तिःसर्वग्रहणार्थमितिवा ज्ञेयम् ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

दशाहे अतिगते अतीते । एकादशाहइत्यर्थः । कृतशौचः कृतशौचापादकपुण्याहवाचननवश्राद्धादिकइत्यर्थः । द्वादशेहनि श्राद्धकर्माणि षोडशमासिकानिसपिण्डीकरणान्तानीत्यर्थः । अकारयत् अकरोदित्यर्थः ।

---

**ति०** अग्निचितं अश्वमेधान्तयज्ञकर्तारं ॥ २० ॥ **शि०** विवशाः कान्तिरहिताः ॥ २२ ॥ इतिषट्सप्ततितमस्सर्गः ॥ ७६ ॥

**ती०** द्वादशेऽहनिश्राद्धकर्माण्यकारयत् एकादशेऽहनिकर्तव्यश्राद्धकरणपूर्वकंद्वादशेऽहनिश्राद्धकर्माण्यकरोदित्यर्थः । **शि०** गतेव्यतीतेसति एकादशेऽहनीत्यर्थः । कृतशौचः कृतंशौचंस्वशुद्धिहेतुभूतैकादशाहविहितंकर्मयेनसभरतः । **स०** कृतशौचः एकादशेऽ

**[ पा० ]** १ घ—ट. तदा. २ क. ख. घ—ञ. हुत्वा. ३ ङ. जेपुस्तेतस्यऋत्विजः. झ. ञ. ट. जेपुस्तस्यतदृत्विजः. ख. ज. जेपुस्तस्यतदर्त्विजः. ४ ङ—ट. स्तथा. ५ ङ. छ. झ. ट. नृपाङ्गनाः. ६ ख. व्यचरन्त.

ब्राह्मणेभ्यो ददौ रत्नं धनमन्नं च पुष्कलम् ॥ वासांसि च महार्हाणि रत्नानि विविधानि च ॥ २ ॥
बास्तिकं बहुशुक्लं च गाश्चापि शतशस्तदा ॥ दासीदासं च यानं च वेश्मानि सुमहान्ति च ॥
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम् ॥ ३ ॥
ततः प्रभातसमये दिवसेथ त्रयोदशे ॥ विललाप महाबाहुर्भरतः शोकमूर्च्छितः ॥
शब्दापिहितकण्ठस्तु शोधनार्थमुपागतः ॥ ४ ॥
चितामूले पितुर्वाक्यमिदमाह सुदुःखितः ॥ ५ ॥
तात यस्मिन्निसृष्टोऽहं त्वया भ्रातरि राघवे ॥ तस्मिन्वनं प्रव्रजिते शून्ये त्यक्तोस्म्यहं त्वया ॥ ६ ॥
यस्या गतिरनाथायाः पुत्रः प्रव्राजितो वनम् ॥ तामम्बां तात कौसल्यां त्यक्त्वा त्वं क्व गतो नृप ॥७॥
दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम् ॥ पितुः शरीरनिर्वाणं निष्टनन्विषसाद सः ॥ ८ ॥
स तु दृष्ट्वा रुदन्दीनः पपात धरणीतले ॥ उत्थाप्यमानः शक्रस्य यन्त्रध्वज इव च्युतः ॥ ९ ॥
अभिपेतुस्ततः सर्वे तस्यामात्याः शुचिव्रतम् ॥ अन्तकाले निपतितं ययातिमृषयो यथा ॥ १० ॥
शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतम् ॥ विसंज्ञो न्यपतद्भूमौ भूमिपालमनुस्मरन् ॥ ११ ॥

स्वार्थेणिच् ॥ १—२ ॥ बस्तानांछागानांसमूहोबास्तिकं छान्दसष्ठक् । "अजाछागीशुभच्छागबस्तच्छागलकाअजे" इत्यमरः । बहुशुक्लमितिछागविशेषणं रजतंवा । पितृप्रियत्वात् । "शुक्लोयोगान्तरेश्वेतेशुक्लेचरजतेतथा" इतिविश्वः । दासीदासं गवाश्वप्रभृतित्वादेकवद्भावः । ऊर्ध्वदेहादूर्ध्वदेहः तत्रभवमौर्ध्वदैहिकं । "ऊर्ध्वदेहाच्चेतिवक्तव्यं" इतिठक् ॥ ३ ॥ शब्दापिहितकण्ठः रोदनध्वनिनाव्याप्तकण्ठः । शोधनार्थं स्थलशोधनार्थं । "दहनदेशमुदकुम्भैःस्रवोक्षति" इतिसूत्रात् अस्थिसंचयनार्थमित्यर्थः । सावशेषास्थिनिचयइतिवक्ष्यमाणत्वात् त्रयोदशेप्यस्थिसंचयनंसूत्रान्तरेदृश्यते । यथाहबोधायनः "द्वितीयेह्नि युग्मदिवसेष्वर्धमासान्मासानृतून्संवत्सरंवासंचयनंकुर्यात्" इति ॥ ४ ॥ चितामूलइत्यर्धं ॥ ५ ॥ निसृष्टः दत्तः । प्रव्रजिते प्रव्राजिते । छान्दसोह्रस्वः ॥ ६—७ ॥ भस्मारुणं भस्मयुक्तमरुणंच । अरुणत्वमतिदग्धत्वात् । पितुः शरीरनिर्वाणं शरीरंनिर्वाप्यतेविनाश्यते अस्मिन्निितिशरीरनिर्वाणं । अधिकरणेल्युट् । "निर्वाणोनिर्वृतेमोक्षेविनाशेगजमज्जने" इतिवैजयन्ती । निष्टनन् नितरास्तनन् । "अभिनिसस्तनःशब्दसंज्ञायां" इतिषत्वं । [ भस्मारुणं भस्मनाअरुणं अव्यक्तरागं । दग्धास्थिस्थानमण्डलं दग्धानामस्थ्नांयानिस्थानानिविविन्यासविशेषाः तेषांमण्डलं समूहं दृष्ट्वा । अस्थिमण्डलंदृष्ट्वेत्यर्थसिद्धं । पितुः शरीरनिर्वाणं शरीरविनाशं प्रति । निष्टनन् नितरांरोदनशब्दंकुर्वन् ] विषसाद दुःखितोऽभूत् ॥ ८ ॥ उत्थाप्यमानः रज्जुभिरुत्थाप्यमानः । च्युतः स्रस्तः । शक्रस्य यन्त्रबद्धोध्वजोयन्त्रध्वजः रज्जुयुक्तोध्वजइव पपात । यथा यन्त्रपतनाद्ध्वजपतनं एवंराजपतनाद्भरतपतनमितिभावः ॥ ९ ॥ अमात्याः ज्ञातयः । शुचिव्रतं । अन्तकाले पुण्यक्षयकाले । निपतितंययातिं ऋषयः दौहित्रभूताइव अभिपेतुः ॥ १० ॥ भरतपतनावधिशत्रुघ्नस्यधैर्यस्थितं तत्पतनानन्तरंतुभूमिपालमनुस्मरन्न्यपतत् ॥ ११ ॥

ह्निकर्तव्यप्रेतत्वमोचकश्राद्धंकृत्वेत्यर्थः ॥ १ ॥ **कतक०** दशाहाभ्यन्तरेऽस्थिसंचयनंकृत्वासकलश्राद्धानन्तरंत्रयोदशेऽहनिचिताभस्मोद्धारपूर्वकंस्थलशुद्धिःकर्तव्येतिक्षत्रियधर्मइतिवाल्मीक्युक्तेर्ज्ञायते ॥ ४ ॥ **कतक०** शक्रयन्त्रध्वजस्याकाशस्थस्यभूमौपातायोगात्

[ **पा०** ] १ ङ. च. छ. झ. ट. धनंरत्नंददावन्नं. २ घ. ज. ह्वास्तिकं. ३ ङ. छ. झ. ट. बहुशस्तदा. ४ छ. झ. दासीदासांश्चयानानि. ङ. दासीदासांश्चयानानि. ५ क—छ. झ. ञ. देहिकं. ६ ख—ङ. छ. झ. दिवसेच. ७ क. घ. च. ञ. कर्शितः. ८ क. घ. ङ. च. ज—ट. कण्ठश्च. ९ क. मिहागतः. १० ग. पुत्रेप्रव्राजिते. ११ ख. ग. घ. ज. शरीरं. १२ छ. झ. ञ. ट. विषसादह. क. निषसादसः. ङ. च. निषसादह. १३ च. सतं. १४ क. रुदन्नार्तः. १५ ङ. छ. झ. ट. इवोच्छ्रितः. १६ छ. सद्यः. १७ ङ. छ. झ. ट. निश्चितो.

उन्मत्त इव निश्चेता विललाप सुदुःखितः ॥ स्मृत्वा पितुर्गुणाङ्गानि तानितानि [1]तदातदा ॥१२॥
मन्थराप्रभवस्तीव्रः कैकेयीग्राहसङ्कुलः ॥ [2]वरदानमयोऽक्षोभ्यो मज्जयच्छोकसागरः ॥ १३ ॥
सुकुमारं च बालं च सततं लालितं त्वया ॥ क तात भरतं हित्वा विलपन्तं गतो भवान् ॥ १४ ॥
ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च ॥ [3]प्रवारयसि नः सर्वांस्तन्नः कोऽ[4]न्यः करिष्यति ॥ १५ ॥
अवदारणका[5]ले तु पृथिवी [6]नावदीर्यते ॥ [7]या विहीना त्वया राज्ञा धर्मज्ञेन महात्मना ॥ १६ ॥
पितरि स्वर्गमापन्ने रामे [8]चारण्यमाश्रिते ॥ किं मे जीवितसामर्थ्ये प्रवेक्ष्यामि हुताशनम् ॥ १७ ॥
हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम् ॥ अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम् ॥१८॥
तयोर्विलपितं श्रुत्वा व्यसनं [9][10]चान्ववेक्ष्य तत् ॥ भृशम[11]र्ततरा भूयः सर्व एवानुगामिनः ॥ १९ ॥
ततो विषण्णौ वि[12]श्रान्तौ शत्रुघ्नभरतावुभौ ॥ [13]धरण्यां संव्यचेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २० ॥
ततः प्रकृतिमान्वैद्यः पितुरेषां पुरोहितः ॥ वसिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह ॥ २१ ॥
त्रयोदशोयं दिवसः पितुर्वृत्तस्य ते विभो ॥ सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥ २२ ॥
त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः ॥ तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥ २३ ॥

गुणाङ्गानि गुणानङ्गानिचेत्यर्थः । तदातदा तानितानि तत्तत्कालोचिताभिमतप्रदानोपलालनकराणिगुणाङ्गानि ॥ १२ ॥ मन्थरेतिसगरव्यावृत्तिः । तीव्रः अगाधइतियावत् । अमज्जयत् अस्मानितिशेषः ॥ १३—१४ ॥ प्रवारयसि एष्वाभरणादिषुकिंतवेष्टंगृहाणेति प्रकर्षेणस्वयंग्राहयासि तत्प्रवारणं ॥ १५ ॥ यापृथिवी धर्मज्ञेनत्वयाविहीना नावदीर्यते नभिद्यते । स्वयमितिशेषः । सा अवदारणकालेतु प्रलयकालेपि । नावदीर्यते नावदीर्येतेत्यर्थः । अवदारणकाले त्वद्विहीनतयाअवदारणस्यप्राप्तकाले । अवदारणकालत्वेहेतुः—त्वयाविहीनेति । धर्मज्ञेनमहात्मना त्वयाराज्ञा एतादृशगुणाढ्येनत्वयेत्यर्थः । विहीनाया सापृथ्वी अवदारणकालेनावदीर्यतइत्यन्वयः ॥ १६ ॥ जीवितसामर्थ्ये जीवनशक्तिः ॥ १७—१८ ॥ आर्ततराः आसन्नितिशेषः ॥ १९ ॥ विश्रान्तौ विशेषेणश्रान्तौ । व्यचेष्टेतां व्यलुण्ठेतां ॥ २० ॥ प्रकृतिमान् प्रशस्तस्वभावः । " प्रकृतिःपञ्चभूतेषुस्वभावेमूलकारणे " इतिवैजयन्ती । वैद्यः विद्यां तत्त्वज्ञानहेतुभूतांवेदान्तविद्यांवेदेतिवैद्यः । वेदान्तविद्याधिगतपरावरतत्त्वयाथात्म्यविज्ञानः सर्वज्ञइतियावत् । " तदधीतेतद्वेद " इत्यण् । " सर्वज्ञभिषजौवैद्यौ " इत्यमरः । एषामितिबहुवचननिर्देशोबुद्धिस्थरामाद्यपेक्षया । पितुः दशरथस्य ॥ २१ ॥ वृत्तस्य संस्कृतस्य । त्रयोदशोयं दिवसः सावशेषास्थिनिचये अस्थिसंचयनाख्येकर्मण्यवशिष्टइत्यर्थः । दशाहमध्येशास्त्रविहितंप्रधानावयवास्थिसंचयनंकृतं त्रयोदशेदिवसेतद्देशीयशिष्टाचारप्राप्तस्थलशोधनमात्रंकृतमिति नस्मृतिविरोधइत्यप्याहुः । स्मृतिश्चास्माभिर्दर्शितैव ॥ २२ ॥ अशनायापिपासे शोकमोहौ जरामृत्यू इत्युक्तानित्रीणिद्वन्द्वानि । भूतेषु जन्तुषु । अविशेषतःप्रवृत्तानि । तेषुचापरिहार्येषुप्राप्तेषु त्वमेवंभवितुंनार्हसि अज्ञवन्मोहेनप्रलपितुं नार्हसि

गृहाद्यलङ्कारार्थध्वजयन्त्ररूपेणध्वजसदृशरूपेणनिर्मितइत्यर्थः । उत्पाततःपतितेनतेनोपमेत्यन्ये ॥ ९ ॥ **ति०** गुणाङ्गानि उपलालनगुणस्याङ्गभूतानिविचित्रवस्त्राभरणादिदानादिकर्माणि । **स०** गुणान् प्रज्ञासौजन्यादीन् । अङ्गानि स्वलालनाश्रयाङ्कहस्तमुखादीनि । तानि तेतानिचतानि ॥ १२ ॥ **ति०** मरदानमयत्वादक्षोभ्यः ॥ १३ ॥ **ति०** प्रवारयति एषुकिंतेऽपेक्षितंगृहाणेतिप्रकर्षेणास्वंदिष्टवरणंकारयतिभवान् । तदद्यनःकःकरिष्यति त्वयिगतेइतिशेषः ॥ १५ ॥ **स०** प्रकृतिमान् प्रकृतिजनसहितः ॥ २१ ॥ **ती०** त्रीणिद्वन्द्वानि जन्ममरणे सुखदुःखे लाभालाभौ । एवंभवितुं शोचितुं । **कतक०** त्रीणिद्वन्द्वानि अस्तिजायते वर्धतेअपक्षीयते विपरिणमतेविनश्यतीत्येवंरूपाणि ॥ २३ ॥ इतिसप्तसप्ततितमस्सर्गः ॥ ७७ ॥

**[ पा० ]** १ घ. तथातथा. २ क. च. हृद. ३ झ. ट. प्रवारयति. ख. प्रचारयति. ४ क—च. झ. ञ. ट. कोद्य. ५ ख. कालेषु. ६ ङ. तुविदीर्यते. ७ ङ. च. झ. ञ. ट. विहीनाया. ८ क. च. ञ. रामेणच. ९ क. च. ञ. चवनं. १० ङ. छ. झ. ट. चाप्यवेक्ष्य. ११ घ. मार्तस्वरा. १२ ग—ढ. श्रान्तौच. क. शोचन्तौ. १३ ङ. छ. झ. ट. धरायांस्म. च. ञ. धरायां समवेष्टेतां. क. ख. घ. धरायांसंव्यवेष्टेतां.

सुमन्त्रश्चापि शत्रुघ्नमुत्थाप्याभिप्रसाद्य च ॥ श्रावयामास तत्त्वज्ञः सर्वभूतभवाभवौ ॥ २४ ॥
उत्थितौ च नरव्याघ्रौ प्रकाशेते यशस्विनौ ॥ वर्षातपपरिक्लिन्नौ पृथगिन्द्रध्वजाविव ॥ २५ ॥
अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ ॥ अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## अष्टसप्ततितमः सर्गः ॥ ७८ ॥

शत्रुघ्नेनरामसमीपयात्रांविचारयन्तंभरतंप्रतिलक्ष्मणेनपितृनिग्रहपूर्वकंरामप्रवासाप्रतिषेधनस्यानौचित्यकथनम् ॥ १ ॥ तंप्रतिद्वास्स्थैर्यदृच्छयागृहप्राग्द्वारमागतायाःकुब्जायाग्रहणेनतस्याएवसर्वानर्थनिदानत्वकथनम् ॥ २ ॥ शत्रुघ्नेनसखीमध्यगतायाःकुब्जायाःकेशग्रहणेनकैकेयीभर्त्सनपूर्वकंधरण्यांपरिकर्षणेकैकेय्याभरतंप्रतितन्मोचनयाचना ॥ ३ ॥ शत्रुघ्नेनसयुक्तिकभरतवचनात्कुब्जायामोचनम् ॥ ४ ॥

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः ॥ भरतं शोकसंतप्तमिदं वचनमब्रवीत् ॥ १ ॥
गतिर्यः सर्वभूतानां दुःखे किं पुनरात्मनः ॥ स रामः सत्त्वसंपन्नः स्त्रिया प्रव्राजितो वनम् ॥ २ ॥
बलवान्वीर्यसंपन्नो लक्ष्मणो नाम योप्यसौ ॥ किं न मोचयते रामं कृत्वा स पितृनिग्रहम् ॥ ३ ॥
पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ ॥ उत्पथं यः समारूढो नार्या राजा वशं गतः ॥ ४ ॥
इति संभाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे ॥ प्राग्द्वारेऽभूत्तदा कुब्जा सर्वाभरणभूषिता ॥ ५ ॥
लिप्ता चन्दनसारेण राजवस्त्राणि बिभ्रती ॥ विविधं विविधैस्तैस्तैर्भूषणैश्च विभूषिता ॥ ६ ॥

---

॥ २३ ॥ सर्वभूतभवाभवौ सर्वभूतोत्पत्तिविनाशौ ॥२४—२५॥ परिमृद्नन्तौ मार्जयन्तौ । तनयौ राजपुत्रौ । अपराःक्रियाः अस्थिसंचयनादिकाः । प्रतीतिशेषः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

अथ अपरक्रियांनिर्वर्त्यगृहंप्रतिगमनानन्तरं । यात्रां रामसमीपगमनं । समीहन्तं समीहमानं यात्रोद्युक्तमित्यर्थः ॥ १ ॥ सर्वभूतानां प्राणिमात्रस्य । दुःखेसतियोगतिः सआत्मनोदुःखेसतिगतिरिति किंपुनः किंवक्तव्यं । एवंदुःखनिस्तारक्षमोरामः सत्वसंपन्नोपि बलसंपन्नोपि । स्त्रिया अत्यन्ताबलया । वनं प्रव्राजितः । इदमत्यन्तचित्रमितिभावः ॥ २ ॥ पितृपरतन्त्रोरामः किंकरोत्वित्यत्राह—बलवानित्यादिना । नामेतिकुत्सने । " नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने " इतिवैजयन्ती । लक्ष्मणोनामयोपीत्यनादरोक्तिः । असौ पितृनिग्रहंकृत्वापि रामंवनवासात् किंनमोचयतेस्म किंनमोचितवान् । इदमप्यपरमाश्चर्यमितिभावः ॥ ३ ॥ पितृनिग्रहेदोषःस्यादित्याशङ्कां परिहरति—पूर्वमित्यादिना । योराजा नार्यावशंगतः उत्पथंसमारूढः अपथंप्राप्तः सः नयानयौ नीत्यनीती । समवेक्ष्य सम्यग्विचार्य । पूर्वमेव अन्यायप्रवृत्तिसमापनात्पूर्वमेव । निग्राह्यइतियोजना ॥ ४ ॥ कुब्जाप्राग्द्वारेऽभूत् स्वाभिलषितोभरताभिषेकः कदाभविष्यतीतिअवसरंप्रतीक्षमाणा भरतशत्रुघ्नाधिष्ठितराजगृहस्यप्राग्द्वारेदैवादागताभूत् ॥५॥ चन्दनसारेण चन्दनपङ्केन । राजवस्त्राणिराजार्हवस्त्राणिकैकेयीदत्तानि । कञ्चुकान्तरीयोत्तरीयादिभेदाद्बहुवचनं । तैस्तैरिति तत्तदवयवोचितत्वमुच्यते । एकैकाभरणेरत्नखचितत्वादिवैविध्यमाह—विविधैरिति । विविधमितिक्रियाविशेषणं । तेनभूषणसंस्थानविशेषउच्यते ॥ ६ ॥

---

ति० समीहन्तं समीहमानं विचारयन्तमित्यर्थः ॥ १ ॥ ति० दुःखे दुःखजनकसंकटेप्राप्ते । यस्सर्वभूतानांगतिः स्मरणमात्रेणसर्वदुःखनाशकः आत्मनःस्वस्यावयोश्चगतिरितिकिंवक्तव्यं । अनेनातिसंकटेभगवत्स्मरणमेवदुःखनाशेसमर्थंनान्यदितिसूचितम् ।

[ पा० ] १ क. ख. ग. ङ. च. छ. ट. भवाभवं. घ. भवोद्भवं. २ क. ख. ग. ङ. च. छ. झ. ट. तौ. ३ क. ङ. च. छ. झ. ञ. ट. म्लानौ. ४ क—ट. कृत्वापि. ५ ङ. राजानार्या. ६ क. ञ. इतिस्म. ७ च, ञ. चापिभूषिता.

मेखलादामभिश्चित्रैरन्यैश्च शुभ[1]भूषणैः ॥ बभासे बहुभिर्बद्धा रज्जु[2]बद्धेव वानरी ॥ ७ ॥
तां समीक्ष्य तदा द्वास्स्थां[3] सुभृशं पापकारिणीम् ॥ गृहीत्वा[4]ऽकरुणां कुब्जां शत्रुघ्नाय न्यवेदयत्[5] ॥ ८ ॥
यस्याः कृते वने रामो न्यस्तदेहश्च वः पिता ॥ सेयं पापा नृशंसा च तस्याः कुरु यथामति ॥ ९ ॥
शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः ॥ अन्तःपुरचरान्सर्वानित्युवाच धृत[6]व्रतः ॥ १० ॥
तीव्रमुत्पादितं दुःखं भ्रातॄणां मे तथा[7] पितुः ॥ यथा[8] सेयं नृशंसस्य[9] कर्मणः फलमश्नुताम् ॥ ११ ॥
एवमुक्त्वा[10] तु तेनाशु सखीजनसमावृता ॥ गृहीता बलवत्कुब्जा सा तद्गृहमनादयत् ॥ १२ ॥
ततः सुभृशसंतप्त[11]स्तस्याः सर्वः[12] सखीजनः ॥ क्रुद्धमाज्ञाय शत्रुघ्नं विपलायत सर्वशः[13] ॥ १३ ॥
आमन्त्रयत[14] कृत्स्नश्च तस्याः सर्वः सखीजनः ॥ यथायं[15] समुपक्रान्तो निःशेषान्नः[16] करिष्यति ॥ १४ ॥
सानुक्रोशां वदान्यां च धर्मज्ञां च यशस्विनीम् ॥ कौसल्यां शरणं याम सा हि नोऽस्तु[17] ध्रुवा गतिः ॥ १५
स च रोषेण ताम्राक्षः[18] शत्रुघ्नः शत्रुतापनः[19] ॥ विचकर्ष[20] तदा कुब्जां क्रोशन्तीं धरणीतले[21] ॥ १६ ॥
तस्या[22] ह्याकृष्यमाणाया मन्थरायास्ततस्ततः ॥ चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७ ॥
तेन भाण्डेन संस्तीर्णं[23] श्रीमद्राजनिवेशनम् ॥ अशोभत तदा भूयः शारदं गगनं यथा ॥ १८ ॥
स बली बलवत्क्रोधाद्गृहीत्वा पुरुषर्षभः[24] ॥ कैकेयीमभिनिर्भर्त्स्य[25] बभाषे परुषं वचः ॥ १९ ॥
तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता ॥ शत्रुघ्नभयसंत्रस्ता पुत्रं शरणमागता ॥ २० ॥

---

भूषणशब्दोपि मेखलादामभिन्नपरः । गोबलीवर्दन्यायात् । अन्यैः मेखलाप्रदेशधारणीयैः । बद्धेतिविशेषणात् भूषणानिबन्धनस्थानीयानिनतुशोभाकराणीत्युक्तं ॥ ७ ॥ अकरुणां निर्दयां ॥ ८ ॥ वने अभूदितिशेषः । कुरु शिक्षणमितिशेषः ॥ ९—१२ ॥ विपलायतेति "उपसर्गस्यायतौ" इतिरेफस्यलत्वं॥१३॥ आमन्त्रयत अन्योन्यमाह्वयत् । तस्याःसर्वःसखीजनः कृत्स्नः तदितरःसर्वोपिजनः । यथा येनप्रकारेण । अयं शत्रुघ्नः । उपक्रान्तः यथा नः निःशेषान्करिष्यति । जनापेक्षयापुंस्त्वं । वदान्यां वल्गुवाचं । "वदान्योवल्गुवागपि" इतिवैजयन्ती । कौसल्यांशरणंयाम सानोध्रुवागतिरस्त्वित्यन्योन्यमाह्वयदित्यन्वयः ॥ १४—१६ ॥ भाण्डं भूषणं । "वणिङ्मूलधनेपात्रेभाण्डं भूषाश्वभूषयोः" इतिवैजयन्ती । पृथिव्यां तद्व्यशीर्यत विशीर्णमासीत् । [ पृथिव्यांतद्विशीर्यते विशीर्णमासीत् ] ॥ १७ ॥ शारदं प्रसन्ननक्षत्रमित्यर्थः ॥१८॥ बलवत्क्रोधात् अतीवक्रोधात् । कैकेयीमभिनिर्भर्त्स्येत्यनेनमन्थरामोचनार्थंतदाकैकेयीसमागतेत्यवगम्यते ॥ १९ ॥ शत्रुघ्नभयसंत्रस्तापुत्रंशरणमागतेत्यनेन भर्त्सनानन्तरंतांप्रहर्तुमप्युद्युक्तवानितिसूच्यते ॥२०॥

---

**शि०** सरामः नित्यविहारसहितोरामः ॥ २ ॥ **ति०** रज्जुभिरित्यत्रगुरुलघुप्रयुक्तश्छन्दोभङ्ग आर्षः ॥ ७ ॥ **स०** यथाकरिष्यति सम्यक्करिष्यति । "निवृत्तिमार्गःकथितआदौभगवतायथा" इतिश्रीमद्भागवतेसम्यगित्यर्थेयथाशब्दप्रयोगात् । यतइत्यर्थेवाऽयंनिपातः ॥ १४ ॥ **ति०** पृथिवीतले पातयित्वेतिशेषः ॥ १६ ॥ **ति०** कैकेयीमभिनिर्भर्त्स्य निर्भर्त्सनमत्रहस्तेनदूरीकरणं ॥ १९ ॥ **ति०** पुत्रंशरणमागता । कुब्जामोचनार्थमितिशेषः ॥ २० ॥

[ **पा०** ] १ ख. ङ. छ. झ. वर. क. बहु. २ झ. ट. रज्जभिरिववानरी. ३ क. ख. ङ. च. छ. झ. ञ. द्वास्स्थोभृशंपापस्य कारिणीं. घ. द्वास्स्थांसभृशं. ग. द्वास्स्थांसुदृढ. ४ क. ख. घ—ट. त्वाऽकरुणं. ५ झ. न्यवेदयत्. ६ घ. ज. ट. द्रुतंवचः. ७ क. घ. यथा. ८ ख—ङ. झ. ञ. यथा. ९ ङ. नृशंसास्य. १० क. मुक्ताच. ११ क. च. ञ. संत्रस्तः. १२ क. ख. च. सर्वसखीजनः. १३ ख. ग. सर्वतः. १४ ख. ग. च. छ. झ. ञ. ट. अमन्त्रयत. १५ यथायंसमुपक्रान्तः. क्रुद्धमाज्ञायशत्रुघ्नं. आमन्त्रयतकृत्स्नश्च इति ङ. पाठानुपूर्वी. १६ क—छ. झ—ट. निःशेषं. १७ ङ. छ. ञ. ट. नोस्ति. १८ ङ. छ. झ. ट. संवीतः. १९ ङ. छ. झ. ट. शासनः. २० ङ. छ. झ. ट. संचकर्ष. २१ ख. ङ. च. झ. ञ. ट. पृथिवी. २२ क. ङ. च. छ. झ. ञ. ट. तस्यांह्याकृष्यमाणायांमन्थरायामितस्ततः. च. ञ. तस्यांतु. २३ ख. ग. घ. च. ञ. संकीर्णं. छ. झ. ट. विस्तीर्णं. ङ. निस्तीर्णं. २४ ङ. पुरुषोत्तमः. २५ ख. मपि.

तां[1] प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत् ॥ अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१ ॥
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम् ॥ यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ॥२२॥
इमामपि हतां कुब्जां यदि जानाति राघवः ॥ त्वां च मां च[2] हि धर्मात्मा नाभिभाषिष्यते ध्रुवम् ॥२३॥
भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः ॥ न्यवर्तत ततो[3] रोषात्तां मुमोच च मन्थराम्[4] ॥ २४ ॥
सा पादमूले कैकेय्या मन्थरा निपपात ह ॥ निश्वसन्ती सुदुःखार्ता कृपणं[5] विललाप च[6] ॥ २५ ॥
शत्रुघ्नविक्षेपविमूढसंज्ञां समीक्ष्य कुब्जां भरतस्य माता ॥
शनैः समाश्वासयदार्तरूपां क्रौञ्चीं विलग्नामिव[7] वीक्षमाणाम् ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

---

## एकोनाशीतितमः सर्गः ॥ ७९ ॥

चतुर्दशेदिवसेमन्त्रिप्रमुखैर्भरतंप्रतिराज्यस्वीकारप्रार्थना ॥ १ ॥ भरतेनतान्प्रतितत्प्रतिषेधनपूर्वकमभिषेकार्थमयोध्यांप्रति रामानयनायचतुरङ्गबलसाहित्येनवनगमनार्थंमार्गनिर्माणायनानाशिल्पिनियोजनचोदना ॥ २ ॥

ततः प्रभात[8]समये दिवसे[9] च चतुर्दशे ॥ समेत्य राजकर्तारो[10] भरतं वाक्यमब्रुवन् ॥ १ ॥
गतो दशरथः स्वर्गं यो नो गुरुतरो[11] गुरुः ॥ रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥ २ ॥
त्वमद्य भव नो राजा राजपुत्र महायशः[12] ॥ सङ्गत्या नापराध्नोति राज्यमेतदनायकम् ॥ ३ ॥
आभिषेचनिकं सर्वमिदमादाय राघव ॥ प्रतीक्षते त्वां स्वजनः श्रेणयश्च नृपात्मज[13] ॥ ४ ॥
राज्यं गृहाण भरत पितृपैतामहं ध्रुवम्[14] ॥ अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ ॥ ५ ॥

---

क्षम्यतामित्यब्रवीदित्यन्वयः ॥ २१ ॥ नासूयेत् नगर्हेत ॥ २२ ॥ माभून्मातृहत्या सर्वकुहनामूलभूतेयमेवकुब्जाहन्यतामित्यत्राह—इमामित्यादिना । नाभिभाषिष्यते इत्यब्रवीदितिअनुकृष्टेनपूर्वेणसंबन्धः ॥ २३—२५ ॥ शत्रुघ्नविक्षेपविमूढसंज्ञामिति । विक्षेपोभ्रामणं तेनविमूढसंज्ञां अन्यथाभूतमतिं । विलग्नां वागुरालग्नामितिभावः । विविग्नामितिपाठे कम्पवतीमित्यर्थः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टसप्ततितमः सर्गः ॥ ७८ ॥

---

त्रयोदशदिवसपर्यन्तमपरक्रियाव्यापृतत्वाच्चतुर्दश इत्युक्तं । समेत्य एकीभूय ॥ १ ॥ गुरुतरोगुरुः परमगुरुरित्यर्थः ॥ २ ॥ " राजानंप्रथमंविन्देत्ततोभार्यांततोधनं " इति मातापित्रादेरपिराज्ञएवान्तरङ्गरक्षकत्वोपदेशात् अनायकमपि एतद्राज्यं सङ्गत्या दैवयोगेन । नापराध्नोति राज्यस्थजनजातमन्योन्यंन द्रुह्यतीत्यर्थः ॥ ३ ॥ प्रकृत्याभिमुख्यमप्यस्तीत्याह—आभिषेचनिकमिति । आभिषेचनिकं अभिषेकप्रयोजनं पदार्थजातं । स्वजनः अमात्यादिः । श्रेणयः नैगमाः । प्रतीक्षन्तइतिविपरिणामः ॥ ४—५ ॥ भा-

---

ति० जानाति ज्ञास्यते । नाभिभाषिष्यते स्त्रीघातिनावितिमत्वेतिभावः ॥ २३ ॥ इत्यष्टसप्ततितमस्सर्गः ॥ ७८ ॥
ती० राजकर्तारः राजाभिषेककर्तारः । स० राजानंकर्तारः राजकर्तारः मन्त्रिणः ॥ १ ॥ ति० रक्षासाधनत्वाद्राजागुरुः तत्राप्ययंगुरुतरः । ज्येष्ठं राज्यार्हं ॥ २ ॥ ती० संगत्या सामन्तामात्यादीनामैकमत्येन । ति० यतएतद्राज्यमनायकंततोराजा भव । ननुज्येष्ठेविद्यमानेकथमहंराजातत्राह—संगत्या ज्येष्ठस्यवनवासंप्रतिपितुराज्ञासंगत्या तवचराज्यंप्रतितदाज्ञासंगत्या राज्यंकुर्वन्नपिभवान्नापराध्नोति धर्मविरोधज्येष्ठविरोधलोकविरोधान्नप्राप्नोति । पित्राज्ञायाउभाभ्यामपिपालनीयत्वादितिबहवः ॥ ३ ॥

[ पा० ] १ ख. ङ. छ. झ. ट. तंप्रेक्ष्य. २ क. ख. ग. ङ. छ. झ. ञ. ट. चैव. ३ क. ग. च. तदारोषात्. छ. झ. ट. ततोदोषात्. ४ ङ. छ. झ. ट. मूर्च्छितां. ५ क. करुणं. ६ क—ट. ह. ७ ख. विविग्नामिव. ८ क. प्रभाते. ९ क. ङ. छ—ट. दिवसेऽथ. १० ङ. च. राज्य. ११ घ. राजागुरुस्तव. ग. गुरुतरोमहान्. १२ ग. घ. महायशाः. ख. महाबल. १३ क. च. महाबल. १४ क. ख. ग. महत्.

[ एवमुक्तः शुभं वाक्यं द्युतिमान्सत्यवाक्छुचिः ॥ ][1] आभिषेचनिकं भाण्डं कृत्वा सर्वं[2] प्रदक्षिणम् ॥
भरतस्तं[3] जनं सर्वं प्रत्युवाच धृतव्रतः[4] ॥ ६ ॥
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ॥ नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥ ७ ॥
रामः पूर्वो हि नोभ्राता[5] भविष्यति महीपतिः ॥ अहं त्वरण्ये वत्स्यामि वर्षाणि[6] नव पञ्च च ॥ ८ ॥
युज्यतां महती सेना चतुरङ्गमहाबला ॥ आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९ ॥
आभिषेचनिकं चैव सर्वमेतदुपस्कृतम् ॥ पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १० ॥
तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतम् ॥ आनेष्यामि[7] तु वै रामं हव्यवाहमिवाध्वरात् ॥ ११ ॥
न सकामां करिष्यामि स्वामिमां[8] मातृगन्धिनीम्[9] ॥ वने वत्स्याम्यहं दुर्गे रामो[10] राजा भविष्यति ॥ १२ ॥
क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च ॥ रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥ १३ ॥
एवं संभाषमाणं तं रामहेतोर्नृपात्मजम् ॥ प्रत्युवाच जनः सर्वः श्रीमद्वाक्यमनुत्तमम् ॥ १४ ॥
एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् ॥ यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥ १५ ॥
अनुत्तमं तद्वचनं नृपात्मजप्रभाषितं संश्रवणे निशम्य च ॥
प्रहर्षजास्तं प्रति बाष्पबिन्दवो निपेतुरार्याननने‍त्रसंभवाः[11] ॥ १६ ॥

---

ण्डं उपकरणं ॥ ६ ॥ राजता राजत्वं ॥ ७ ॥ वत्स्यामि रामप्रतिनिधित्वेनेतिशेषः ॥ ८ ॥ आनयिष्यामीत्यत्र इडार्षः ॥ ९ ॥ उपस्कृतं संस्कृतं उपकरणमितिवार्थः । रामहेतोः रामाभिषेकार्थं ॥ १० ॥ पुरस्कृतं पूजितं । "पुरस्कृतःपूजितेरात्यभियुक्तेग्रतःकृते" इतिवैजयन्ती । यद्वा पुरस्कृतं स्वजनदर्शनेनाभिमुखीकृतमित्यर्थः । अध्वरात् यागशालायाः । हव्यवाहं त्रेताग्निं ॥ ११ ॥ मातृगन्धिनीं केवलमातृव्यपदेशां लेशमात्रमातृभावामितिवा । "गन्धोलेशेमहीगुणे" इतिवैजयन्ती ॥ १२ ॥ क्रियतामिति तत्समीपगमनायेतिशेषः । विषमाणि निम्नोन्नतस्थलानि समानिक्रियन्तां । पथिदुर्गविचारकाः मार्गेदुर्गस्थलशोधकाः । यद्वा दुर्गाभिज्ञाः रक्षिणः ॥ १३ ॥ रामहेतोः अनुत्तमंश्रीमद्वाक्यं एवंसंभाषमाणंप्रत्युवाचेतिसंबन्धः ॥ १४ ॥ पद्मा पद्मालया श्रीः ते उपतिष्ठतां त्वत्समीपेअनपायिनीतिष्ठत्वित्यर्थः । नृपसुते नृपसुताय । सएवसुतः ज्येष्ठत्वात् । "इतरेकामजाः स्मृताः" इतिवचनादितिभावः ॥ १५ ॥ संश्रवणे रामानयनप्रतिज्ञाविषये । "आगूसंगरसंधाःप्रतिश्रवः संश्रवःप्रतिज्ञाच" इतिहलायुधः । निशम्य स्थिता-

---

**कतक०** पुत्रगृद्धिनीमितिपाङ्कःपाठः । पुत्रगार्धिनीमित्यर्थः । **स०** मातृगर्धिनीं मातृयोग्यमानापेक्षावर्ती ॥ १२ ॥ **स०** दुर्गविचारकाः गन्तुमशक्यमार्गःक्वर्ततइतिविचारकाः । **ति०** पथिविद्यमानेषुदुर्गेषु विशेषेणजनांश्चारयन्तीतिपथिदुर्गविचारकाः । पथिदुर्गविशारदाइतिपाठे तत्रविद्यमानदुर्गेचोरादिभीत्यागन्तुमशक्यप्रदेशेरक्षणविशारदाइत्यर्थः ॥ १३ ॥ **शि०** पद्मा कमलकरा श्रीः लक्ष्मीः । उपतिष्ठतां स्तौतु । वयंनस्त्ववनेसमर्थाइत्यर्थः । एतेनेदमेवकर्तव्यमितिसूचितम् ॥ १५ ॥ **ति०** तद्वचनंनिशम्य स्थितानांजनानांप्रति भरतमुद्दिश्यप्रहर्षजाः आर्याननने‍त्रसंभवाः हर्षयुक्तमुखस्थनेत्रजबिन्दवोनिपेतुरितितीर्थः । अत्राननपदमधिकं । कतकस्तु नृपात्मजःप्रभाषितमितिसविसर्गपाठः । नृपात्मजःजनैःप्रभाषितं अनुत्तमंतद्वचनंआशीर्वचनं संश्रवणेसम्यक्छ्रवणविषयेप्राप्तंनिशम्यहृष्टोऽभूदितिशेषः । अथतंप्रति तंजनंलक्षीकृत्य । कर्मप्रवचनीयत्वाद्द्वितीया । आर्यस्यपूज्यस्यभरतस्यआर्यंपूज्यंयदाननं । जनाशीर्वादश्रवणजसंतोषेणपूज्यत्वंमुखस्य । तद्वर्तिनेत्रसंभवाः अतएवहर्षजाबिन्दवोनिपेतुः । अनुक्तभरतसौमुख्यकथनं चास्यश्लोकस्यप्रयोजनमित्याह—अत्रकतकपाठस्तद्व्याख्याचज्यायसी । **शि०** आर्याननने‍त्रसंभवाः आर्याणांउत्तमानांअननंजीवनं येभ्यः यद्धेतुकानन्दानुमानेनान्येपिसज्जनास्सानन्दाभवन्तीत्यर्थः । तेचतेनेत्रसंभवाः । **स०** नविद्यतेउत्तमंयस्मात्तदनुत्तमं । संश्रवणे श्रवणीयेरामानयनविषये तद्वचनंनिशम्य ॥ १६ ॥

**[ पा० ]** १ क. च. इदमर्धमधिकं. २ ग. चापि. ३ एतदर्धस्यप्रतिनिधितया क. ख. पाठयोः. भरतःस्वजनंसर्वं सरोषमभिवीक्ष्यच । क्षणंपिधायकर्णौसप्रत्युवाचधृतव्रतः. इत्यर्धद्वयंदृश्यते. रूक्षमेवाभिवीक्ष्यचेति ख. पाठः. ४ ग. च. ज. ञ. दृढव्रतः. ५ ख. मेभ्राता. ६ ङ. छ. ट. नववर्षाणि. ७ ख. ग. ङ. च. छ. छ. ञ. ट. आनयिष्यामि. ८ ङ. मातरं. ९ ङ. छ. ज. झ. पुत्रगृद्धिनीं. १० ङ. राजारामो. ११ ख. ग. रुर्व्यांजननेत्र.

ऊचुस्ते वचनमिदं निशम्य हृष्टाः सामात्याः सपरिषदो वियातशोकाः ॥
पन्थानं नरवर भक्तिमाञ्जनश्च व्यादिष्टास्तव वचनाच्च शिल्पिवर्गः ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## अशीतितमः सर्गः ॥ ८० ॥

भरतामात्यचोदनयाशिल्पिभिरागङ्गातटं शिबिरादिमण्डितचित्रतरसुगममार्गनिर्माणम् ॥ १ ॥

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः ॥ स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा ॥ १ ॥
कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः ॥ तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २ ॥
कूपकाराः सुधाकारा वंशकर्मकृतस्तथा ॥ समर्था ये च द्रष्टारः पुरतस्ते प्रतस्थिरे ॥ ३ ॥
स तु हर्षात्तमुद्देशं जनौघो विपुलः प्रयान् ॥ अशोभत महावेगः समुद्र इव पर्वणि ॥ ४ ॥
ते स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः ॥ करणैर्विविधोपेतैः पुरस्तात्संप्रतस्थिरे ॥ ५ ॥

---

नामितिशेषः । आर्याननेत्रसंभवाइत्यत्र आर्येत्यविभक्तिकनिर्देशः । आर्याणामितियावत् ॥ १६ ॥ हेनरवर तववचनात् शिल्पिवर्गः भक्तिमान् जनः रक्षकश्च पन्थानंप्रति व्यादिष्टाः आज्ञप्ताः । इतीदमूचुरितिसंबन्धः ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

भूमिप्रदेशज्ञाः निम्नोन्नतादिप्रदेशज्ञाः । यद्वा नानादेशविदः । सूत्रकर्मविशारदाः सूत्रकर्मणि निर्जलप्रदेशेष्वगाधवापीकूपादिजलोद्धारसूत्रकर्मणि विशारदाः समर्थाः । यद्वा सूत्रैःकर्म सूत्रकर्म तत्रविशारदाःसमर्थाः तन्तुवायाइत्यर्थः । स्वकर्माभिरताः मार्गरक्षणादिस्वकर्मसावधानाः । खनकाः खननोपजीविनःसुरङ्गादिकृतइत्यर्थः । यन्त्रकाः महाकुल्यादितरणायकाष्ठादिनाउपयन्त्रप्रवर्तकाः वागुरिकावा । कर्मान्तिकाः कर्मणिअन्तोऽवसानमेषामस्तीतिकर्मान्तिकाः परिकल्पितकर्मकारिणः भृतिजीविनइतियावत् । स्थपतयः कारवः । "स्थपतिःकारुभेदेपि" इत्यमरः । पुरुषाः अध्यक्षराजपुरुषाः । यन्त्रकोविदाः क्षेपणीयादियन्त्रकरणसमर्थाः । वर्धकयः तक्षाणः । "तक्षातुवर्धकिः" इत्यमरः । मार्गिणः मार्गसमीकरणसमर्थाः । वृक्षतक्षकाः मार्गनिरोधकवृक्षच्छेदकाः । कूपकाराः कूपनिर्माणसमर्थाः । सुधाकाराः प्रासादस्थलक्षित्यादिलेपनकराः । वंशकर्मकृतः वंशैःकटपिटकशूर्पादिकर्मकराः । समर्थाः कार्यान्तरेषुसमर्थाः । द्रष्टारः पूर्वानुभूतमार्गाः मार्गप्रदर्शकाइतियावत् ॥ १—३ ॥ हर्षात् कर्मकरणस्यदुःखात्मकत्वेपिजनौघस्यहृष्टत्वंरामदर्शनकुतूहलात् । तमुद्देशंप्रयान् रामाधिष्ठितप्रदेशमुद्दिश्यगच्छन् ॥ ४ ॥ ते मार्गशोधकाः । स्ववारं समास्थाय स्वस्वशोध्यमार्गशोधनेअन्योन्यपर्यायकरणंप्राप्य । "निवहावसरौवारौ" इत्यमरः । विविधोपेतैःविविधाःनानाप्रकाराः तानुपेतैः नानाविधैरित्यर्थः । करणैः खनित्रपिटककुठारादिभिःसह । पुर-

---

**स०** विधूतकोशाः कंपितखड्गाः ॥ १८ ॥ इत्येकोनाशीतितमस्सर्गः ॥ ७९ ॥

**ती०** सूत्रकर्मविशारदाः शिबिरादिनिर्माणेसूत्रग्रहणकुशलाः । **ति०** भूमिप्रदेशज्ञाः अन्तस्सजलनिर्जलादिभूमिप्रदेशज्ञाः ॥ **कतक०** निर्जलेष्वगाधवापीकूपादिनिर्माणंसूत्रकर्म । **स०** सूत्रकर्णविशारदाः सूत्रंश्वलासमानमार्गकारिणः ॥ १ ॥ **ति०** सूपकाराः सूदाः । **स०** द्रष्टारः सेनावतारस्थलद्रष्टारः ॥ ३ ॥ **स०** पर्वणि पौर्णमास्यां ॥ ४ ॥

[ **पा०** ] १ ख. ग. परिषदश्ववीतशोकाः. क. घ. च. ज. ञ. परिषदोपियातशोकाः. २ ख—ङ. छ. झ. ट. व्यादिष्टस्तव. ३ क. च. वर्याः. ४ ङ—ट. सूप. ५ च. छ. झ. ट. चर्म. क. कर्मकराः. ६ ग. कर्तारः. ७ ङ. छ. झ. पुरतश्च. ८ ग. घ. विपुलं. ९ ख. ग. ङ. छ. झ. ट. सागरस्येव. क. समुद्रस्येव. घ. संगरस्येवकर्मणि. १० ख. तेस्वकारं. ग. तेस्वभावं. ज. तेस्वपादं.

लता वल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च ॥ जनास्ते[1] चक्रिरे मार्गं छिन्दन्तो विविधान्द्रुमान् ॥ ६ ॥
अवृक्षेषु च देशेषु केचिद्वृक्षानरोपयन् ॥ केचित्कुठारैष्टङ्कैश्च दात्रैश्छिन्दन्क्वचित्क्वचित् ॥ ७ ॥
अपरे वीरणस्तम्बान्बलिनो बलवत्तराः ॥ विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८ ॥
अपरेऽपूरयन्कूपान्पांसुभिः[2] श्वभ्रमायतम् ॥ निम्नभागांस्ततः[3] केचित्समांश्चक्रुः समन्ततः[4] ॥ ९ ॥
बबन्धुर्बन्धनीयांश्च क्षोद्यान्संचुक्षुदुस्तदा[5] ॥ बिभिदुर्भेदनीयांश्च तांस्तान्देशान्नरास्तदा[6] ॥ १० ॥
अचिरेणैव[7] कालेन परिवाहान्बहूदकान् ॥ चक्रुर्बहुविधाकारान्सागरप्रतिमान्बहून् ॥ ११ ॥
निर्जलेषु च देशेषु खानयामासुरुत्तमान् ॥ उदपानान्बहुविधान्वेदिकापरिमण्डितान् ॥ १२ ॥
ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः ॥ मत्तोद्घुष्टद्विजगणः पताकाभिरलंकृतः ॥ १३ ॥
चन्दनोदकसंसिक्तो[8] नानाकुसुमभूषितः ॥ बह्वशोभत सेनायाः पन्थाः सुरपथोपमः[9] ॥ १४ ॥
आज्ञाप्याथ यथाज्ञप्ति युक्तास्तेऽधिकृता नराः ॥ रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५ ॥
यो निवेशस्त्वभिप्रेतो भरतस्य महात्मनः ॥ भूयस्तं शोभयामासुर्भूषाभिर्भूषणोपमम्[10] ॥ १६ ॥
नक्षत्रेषु प्रशस्तेषु मुहूर्तेषु[11] च तद्विदः ॥ निवेशान्स्थापयामासुर्भरतस्य महात्मनः ॥ १७ ॥

स्तात्संप्रतस्थिरे ॥ ५ ॥ लताः मार्गावरणीभूताःशाखाः । "समेशाखालते" इत्यमरः । वल्लीः वीरुधः । गुल्मान् कक्षान् । स्थाणून् शङ्कून् । "स्थाणुरस्त्रीध्रुवः शङ्कुः" इत्यमरः ॥ ६ ॥ टङ्कैः पाषाणभेदनादिसाधनैः । "टङ्कःपाषाणदारणः" इत्यमरः । दात्रैः लवित्रैः । "दात्रंलवित्रं" इत्यमरः । छिन्दन् अच्छिन्दन् ॥ ७ ॥ वीरणस्तम्बान् वीरणतृणकाण्डान् । विधमन्तिस्म अदहन् । ध्मा शब्दाग्निवक्रसंयोगयोरित्यस्माद्धातोर्धमादेशः । बलिनः रूढमूलान् छेत्तुमशक्यानित्यर्थः । दुर्गाणि गन्तुमशक्यानि निम्नोन्नतस्थलानीत्यर्थः । स्थलानि समानिचक्रुरितिशेषः ॥ ८ ॥ कूपान् मार्गस्थान् । आयतंश्वभ्रं अवटंच। पांसुभिरपूरयन् निम्नभागांश्चपांसुभिःसमांश्चक्रुः । प्रपूर्येतिशेषः । यद्वा पूर्वश्लोके दुर्गाणि तृणलतादिच्छन्नानिस्थलानिच विधमन्तिस्मेतियोजना । अतोनपुनरुक्तिः ॥ ९ ॥ बन्धनीयान् जलप्रदेशान् । बबन्धुः सेनासंतरणार्थं सेतुभिर्बबन्धुः । क्षोद्यान् क्षोदार्हान् शर्कराभूयिष्ठप्रदेशान् । संचुक्षुदुः चूर्णयामासुः । भेदनीयान् कच्छादिबहुजलप्रदेशान् । जलनिर्गमनार्थंबिभिदुः॥१० परिवाहान् अल्पप्रवाहान् जलोच्छ्वासान् । बन्धनेनबहूदकांश्चक्रुः । यद्वा परिवाहान् दूरस्थतटाकप्रवर्तितान् । बहुविधाकारान् सोपानावताराद्यनेकप्रकारानित्यर्थः ॥११॥ उदपानान् कूपान् । "पुंस्येवान्धुःप्रहिः कूपउदपानंतुपुंसिवा" इत्यमरः । बहुविधान् नरगजतुरगादिपानयोग्यसरोवाप्यादिभेदेनबहुविधान् । वेदिकापरिमण्डितान् जलपानकालेविश्रान्त्यर्थंतीरेवेदिकालंकृतान् ॥ १२ ॥ ससुधेत्यादिश्लोकद्वयमेकान्वयं । सुधालिप्तकुट्टिमतलोपेतः "कुट्टिमोस्त्रीनिबद्धाभूः" इत्यमरः । प्रपुष्पितमहीरुहः जलसेचनेनेति शेषः । चन्दनोदकसंसिक्तः विश्रान्तिप्रदेशेषुचन्दनयुक्तवारिसिक्तः । नानाकुसुमभूषितः प्रकीर्णनानापुष्पशोभितः ॥ १३—१४ ॥ अथ मार्गकरणानन्तरं । अधिकृताः मार्गशिबिरादिकरणेनियुक्ताः युक्ताः परस्परंयुक्ताः । बहुस्वादुफलेषु रमणीयेषुदेशेषु भरतस्ययो निवेशः यादृशाकारविशिष्टोनिवेशोभिप्रेतः अभिमतः तं तादृशसंनिवेशं । यथाज्ञप्ति यथामति । आज्ञाप्य कर्तुं नियम्य । भूषणोपमं भूषणभूतं स्वतोलंकृतमितियावत् । निवेशं भूषाभिः वितानकनककलशध्वजादिभिः । भूयोपि शोभयामासुः भूषयामासुः ॥ १५—१६ ॥ तद्विदः वास्तुशास्त्रज्ञाः । निवेशान् शिबिराणि ॥१७॥

**ति०** अरोपयन् छायार्थमितिशेषः ॥ ७ ॥ **स०** ससुधाकुट्टिमतलः तत्रतत्रविश्रमार्थंसुधानिबद्धभूप्रदेशसहितः । सुधानाम चूर्णगुडसंमर्दनजन्यकर्दमविशेषः ॥ १३ ॥ **ति०** निवेशः शिबिरं । भूषणोपमं मार्गस्यालङ्कारसदृशं । अतिरमणीयमितियावत्

**[ पा० ]** १ ग. घ. जनयाश्चक्रिरे. २ छ. पांसुभिर्धूलिशर्करैः. ३ ङ. झ. ट. भागांस्तथैवाशु. क. ख. ग. च. भागांस्तथाकेचित्. ४ क. ख. ग. च. ततस्ततः. ५ ग. ङ. झ. स्तथा. ६ च. ञ. देशांस्ततस्ततः. ख. देशांस्तथापरे. ७ ङ. छ. झ. अचिरेणतु. ८ ख. संक्लिन्नो. ९ क. ख. ग. च. ञ. स्वर्गपथोपमः. १० ख. त्रिदिवोपमं. ११ ग. घ. ङ. सुमुहूर्तेषु.

बहुपांसुचयाश्चापि परिखापरिवारिताः ॥ तत्रेन्द्रकीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८ ॥
प्रासादमालाविततांः सौधप्राकारसंवृताः ॥ पताकाशोभिताः सर्वे सुनिर्मितमहापथाः ॥ १९ ॥
विसर्पद्भिरिवाकाशे विटङ्काग्रविमानकैः ॥ समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २० ॥
[ क्वचिद्वर्षनिवेशार्थं मठा वेदिविभूषिताः ॥ क्वचिदापणपण्यानि पथि कृत्वाऽर्थराशयः ॥
दर्शयांचक्रुरत्यर्थं जनाः केचित्पुरे यथा ॥ २१ ॥ ]
जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् ॥ शीतलामलपानीयां महामीनसमाकुलाम् ॥ २२ ॥
सचन्द्रतारागणमण्डितं यथा नभः क्षपायाममलं विराजते ॥
नरेन्द्रमार्गः स तथा व्यराजत क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अशीतितमः सर्गः ॥ ८० ॥

## एकाशीतितमः सर्गः ॥ ८१ ॥

रात्रिशेषेसूतमागधादिभिःसतूर्यघोषंभरतस्तवनारंभेतेनतन्निवर्तनपूर्वकंशत्रुघ्नंप्रतिसशोकोक्तिः ॥ १ ॥ राजसभांप्रविश्य वसिष्ठेनभरताद्यानयनायदूतान्प्रतिचोदना ॥ २ ॥ भरतेनामात्यादिभिःशत्रुघ्नेनचसहवसिष्ठाद्यधिष्ठितसभाप्रवेशः ॥ ३ ॥

ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः ॥ तुष्टुवुर्वाग्विशेषज्ञाः स्तवैर्मङ्गलसंहितैः ॥ १ ॥

बह्वित्यादिश्लोकत्रयमेकंवाक्यं । तत्र मार्गे । बहुपांसुचयाः पांसुशब्देनात्रसूक्ष्मसिकताउच्यन्ते । बह्वः पांसुचयायेषुतेतथोक्ताः । परिखापरिवारिताः खेयैर्वृताः इन्द्रकीलप्रतिमाः इन्द्रकीलपर्वतसदृशाः । प्रतोलीवरशोभिताः प्रतोली वीथिः । " रथ्याप्रतोलीविशिखा " इत्यमरः । प्रासादमालावितताः प्रासादादेवगृहाणि । " प्रासादोदेवभूभुजां" इत्यमरः । सौधप्राकारसंवृताः सौधाःराजगृहाणि । यद्वा सौधाः सुधाधवलिताः "तेनरक्तंरागात्" इत्यण् । समुच्छ्रितैः उन्नतैः । अतएव आकाशेविसर्पद्भिरिवस्थितैः विटङ्काग्रविमानकैः विटङ्कयुक्ताग्रविमानैः । " कपोतपालिकायांतुविटङ्कंपुंनपुंसकं " इत्यमरः । विमानानि सप्तभूमिकाःप्रासादाः तैर्बभुः । शक्रपुरोपमाः अमरावतीसदृशाः ॥ १८—२१ ॥ समासाद्य अवधीकृत्य तत्पर्यन्तमित्यर्थः । निवेशावभुरितिपूर्वेणान्वयः उत्तरेणवा । गङ्गाविशेषणैस्ततःपरंनिवेशकरणाशक्यत्वंद्योत्यते ॥ २२ ॥ सचन्द्रतारागणमण्डितमिति । सचन्द्रोयस्तारागणः तेनमण्डितं ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अशीतितमःसर्गः ॥ ८० ॥

---

नान्दीमुखीं रामानयनाभ्युदयप्रारम्भयुक्तां । यद्वा भरताभिषेकायवसिष्ठेनकृतनान्दीमुखाभ्युदययुक्तां । यद्वा शोकविगमायकृताभ्युदयामित्यर्थः । रात्रिं रात्रौ

॥ १६ ॥ ति० बहुपांसुचयाइत्यनेनशर्करादिराहित्यंसूचितं । इन्द्रनीलमणिनिर्मिताःप्रतिमाःचित्रप्रतिमायेषुनिवेशेषु ॥ १८ ॥ ति० वितर्दिभिरिव विधिधिष्ण्यैरिवस्थितैरुपलक्षिताःविसर्पद्भिरिवाकाशेइतिपाठान्तरं । तदाऽऽर्ध्वमूर्ध्वंगच्छद्भिरिवेत्यर्थःकथंचियोज्यः ॥२०॥ ति० जाह्नवींसमासाद्य अभिव्याप्यप्रवर्तितोनरेन्द्रमार्गोव्यराजतेत्यन्वयः ॥२२—२३॥ इत्यशीतितमस्सर्गः ॥८०॥

स० नान्दीमुखीं रामानयनोपयुक्तमङ्गलरात्रिंप्रथमामित्यर्थः । अल्पावशिष्टामितिशेषः । नोचेत् "कालाध्वनोः—"इतिद्वितीयानस्यादितिज्ञेयं । ति० सविशेषज्ञाः राजनिराजपुत्रेचापेक्षितविशेषस्तवंजानन्तितादृशाः । मङ्गलसंस्तवैः मङ्गलप्रतिपादकैः । शि० नान्दीमुखीं नान्द्याःरामागमनविषयकोद्योगजनितानन्दस्यमुखंप्रारंभोयस्यांतांरात्रिं । ज्ञात्वेतिशेषः । वाग्विशेषज्ञाःस्तवैः तुष्टुवुः । नान्दीमुखींज्ञात्वेत्यनेन रामनिर्गमनानन्तरमेतद्रात्रेःपूर्वं सूतादिभिर्नस्तुतमितिध्वनितं । "नन्दिरानन्दनेद्यूते" इतिविश्वः । अत्रदीर्घःस्वार्थिकाणन्तात्ङीपिबोध्यः । किंचनन्दःनन्दत्वमेवनान्दः सोऽस्त्यस्येतिनान्दीतस्यइयाःव्याप्तेर्मुखमारंभोयस्यांतामित्यर्थः

[ पा० ] १ क—ङ. छ. झ. ट. नीलप्रतिमाः. २ ङ—झ. ट. संयुक्ताः. क—घ. संसक्ताः. ३ क. च. ञ. सुम्यक्सुनिर्मित. ४ क. ङ. छ. झ. वितर्दिभिः. ५ क. ज. पुस्तकयोरिदमर्धत्रयंदृश्यते. ६ ग. घ. शीतलामृत. ७ घ. महाजन. ८ ङ. छ. ज. झ. ट. तदा. ९ क. ग. च. विराजते. १० क. च. झ. ञ. सविशेषज्ञाः. ११ ङ. झ. ट. संस्तवैः.

सुवर्णकोणाभिहतः प्राणदद्यामदुन्दुभिः ॥ दध्मुः शङ्खांश्च शतशो [1]नादांश्चोच्चावचस्वरान् ॥ २ ॥
स तूर्यघोषः सुमहान्दिवमापूरयन्निव ॥ भरतं शोकसंतप्तं भूयः शोकै[2]ररन्धयत् ॥ ३ ॥
ततः प्रबुद्धो भरतस्तं घोषं संनिवर्त्य च ॥ नाहं राजेति [3]चाप्युक्त्वा शत्रुघ्नमिदमब्रवीत् ॥ ४ ॥
पश्य शत्रुघ्न कैकेय्या लोकस्यापकृतं महत् ॥ विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५ ॥
तस्यैषा धर्मराजस्य धर्ममूला महात्मनः ॥ परिभ्रमति राजश्रीर्नौरि[4]वाकर्णिका जले ॥ ६ ॥
यो हि नः सुमहान्नाथः सोपि प्रव्राजितो वनम् ॥ अनया धर्ममुत्सृज्य मात्रा मे राघवः स्वयम् ॥ ७ ॥
इत्येवं भरतं प्रेक्ष्य विलपन्तं[5] विचेतनम् ॥ कृ[6]पणं रुरुदुः सर्वाः स[7]स्वरं योषितस्तदा ॥ ८ ॥
तथा तस्मिन्विलपति वसिष्ठो राजधर्मवित् ॥ सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९ ॥
शातकुम्भमयीं [8]रम्यां [9]मणिरत्नसमाकुलाम् ॥ सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १० ॥
स काञ्चनमयं पीठं [10]सुखास्तरणसंवृतम् ॥ [11]अध्यास्त सर्ववेद[12]ज्ञो [13]दूताननु[14]शशास च ॥ ११ ॥
[15]ब्राह्मणान्क्षत्रियान्वैश्यानमात्यान्गणवल्लभान् ॥ क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥ १२ ॥
स राजभृ[16]त्यं शत्रुघ्नं भरतं च यशस्विनम् ॥ युधाजितं सुमन्त्रं च ये च तत्र हिता जनाः ॥ १३ ॥
ततो हलहलाशब्दः[17] सुमहान्समपद्यत ॥ रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ॥ १४ ॥
ततो भरतमायान्तं शतक्रतुमिवामराः ॥ प्रत्यनन्दन्प्रकृतयो यथा दशरथं तथा ॥ १५ ॥

---

अपररात्रइत्यर्थः । यद्वा रात्रिं प्राप्येतिशेषः । मङ्गलसंहितैः मङ्गलशब्दसहितैः ॥ १ ॥ सुवर्णकोणाभिहत इति कोणोवादनदण्डः । यामावसानसूचकोदुन्दुभिः यामदुन्दुभिः । प्राणदत् नदतिस्म । नाद्यन्तेएभिरितिनादाःकाहल्यादयः तान् । उच्चावचस्वरान् निम्नोन्नतस्वरान् मन्द्रमध्यमताररूपेणनानास्वरानित्यर्थः ॥२॥ अरंध्रयत् व्यदारयत् । अरन्धयदितिपाठे अपचत् अतपदित्यर्थः ॥ ३—४ ॥ कैकेय्याहेतुभूतया जायमानं लोकस्य सूतमागधादेः । अपकृतं अनुचितंकर्म पश्य । यद्वा लोकस्य जनस्य । कैकेय्या महद्यथाभवतितथाऽपकृतं । तदेवाह—विसृज्येत्यादि ॥ ५ ॥ राजश्रीः प्रधानेराजनिवर्तमानेज्येष्ठपुत्रस्ययुवराजत्वेन प्राप्तेत्येवमविच्छिन्नाराज्यलक्ष्मीः । अकर्णिकाः कर्णोरित्रं । "कर्णःश्रोत्रमरित्रंच" इतिभुवनः । सोस्यास्तीति कर्णी सएवकर्णिकः कर्णधारकइतियावत् । रद्रहिता ॥ ६—९ ॥ शातकुम्भमयीं स्वर्णमयीं । मणिरत्नसमाकुलां मणिश्रेष्ठसमावृतां । "रत्नंस्वजातिश्रेष्ठेपि" इत्यरः । यद्वा मणयोमुक्ताः । "मणिर्द्वयोरश्मजातौमुक्तादिकेपिच" इत्यमरः । रत्नानि पद्मरागादीनि । अत्रसभामितिविशेष्यं । सगणः सशिष्यगणः ॥ १०—११ ॥ गणवल्लभान् गणाध्यक्षान् । आत्ययिकं अत्ययःकृच्छ्रंतत्रभवमात्ययिकं यत्नसाध्यमित्यर्थः ॥ १२ ॥ सराजभृत्यं राजान्तरङ्गभृत्यसहितं । युधाजिदितिविजयाख्यमन्त्रिणोनामान्तरं सुमन्त्रशब्दसाहचर्यात् । येच तत्र

---

॥ १ ॥ **ति०** शोकैः शोकोत्पादनैः । अरन्धयत् हिनस्तिस्म । रधपाकहिंसनयोः ॥ ३ ॥ **शि०** हेशत्रुघ्न कैकेय्यास्संबन्धिनो लोकस्यजनस्य मन्थरायाइत्यर्थः । एतेनकैकेय्यानापराधइतिसूचितं । तेनतत्स्वभावस्यातिसरलत्वंव्यञ्जितम् ॥ ५ ॥ **कतक०** अकण्टका कण्टकोनाविकस्तद्रहितेत्यर्थः ॥ ६ ॥ स्वस्त्यास्तरणसंवृतं सुखकरमृद्वास्तरणावृतं । स्वस्तिकाकारमण्डलवदास्तरणसंवृतमितिवा ॥ ११ ॥ **स०** आत्ययिकं शीघ्रमनुष्ठेयं । वर्ततइतिशेषः ॥ १२ ॥ **ति०** सराजपुत्रं राजपुत्रैरितरैस्सहितंशत्रुघ्नं ॥ १३ ॥ **ति०** हलहलेतिशब्दानुकरणं । **शि०** समुपपद्यत समुपापद्यत ॥ १४ ॥ **ति०** ह्रदइवसभा । ह्रदोत्रसामुद्रः । भिन्नलिङ्गत्वेपिसहृदयोद्वेगाभावाच्चन्द्रइवमुखमितिवन्नदुष्टोपमा । तिमिरनेकयोजनायामविस्तारोमत्स्यः । नागा जलगजास्सर्पाश्च । मणयोमुक्ताद्याः ।

**[ पा० ]** १ घ. च. ज. झ. ट. वाद्यांश्चो. २ छ. झ. ञ. ररन्धयत्. च. रवर्धयत्. क. रजृम्भयत्. ३ ङ. छ. झ. ट. चोक्त्वातं. ४ ट. रिवाकण्टका. ५ ग. च. झ. ञ. विलपन्तमचेतनं. ङ. विलपन्तमनेकधा. ६ ङ. छ. झ. ट. कृपणाः. ७ क. ज. झ. सुस्वरं. ८ क. ञ. दिव्यां. ९ ङ. छ. झ. ट. मणिहेम. १० ङ. छ. झ. ट. स्वस्त्यास्तरण. क. ख. ग. च. ञ. पराध्यास्तरणावृतं. ११ क. ख. च. अध्यास्ते. १२ ख. ग. घ. धर्मज्ञो. १३ क. ख. च. छ. झ. ञ. योधात्. १४ क. च. ञ. शशासह. १५ घ. ब्राह्मणान्वेदविदुषःक्षत्रियान्गणवल्लभान्. १६ झ. पुत्रं. १७ क. घ. ज. झ. ञ. शब्दोमहान्समुदपद्यत. ख. ग. छ. ज. ट. शब्दोमहान्संमुपपद्यत.

ह्रद इव तिमिनागसंवृतः स्तिमितजलो मणिशङ्खशर्करः ॥
दशरथसुतशोभिता सभा सदशरथेव बभौ यथा पुरा ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

## द्व्यशीतितमः सर्गः ॥ ८२ ॥

वसिष्ठेनसभायांप्रकृतिमध्येभरतंप्रतिराज्यस्यपितृभ्रातृदत्तत्वरूपहेतूक्तिपूर्वकंतत्स्वीकारोक्तिः ॥ १ ॥ भरतेनवसिष्ठंप्रति साधिक्षेपोक्तिपूर्वकमरण्यमेत्यरामानयनायथावच्छक्तिप्रयतनप्रतिज्ञानम् ॥ २ ॥ सुमन्त्रेणभरतचोदनयारामसमीपयात्रार्थंपौरसेनादिसंनाहनपूर्वकंभरतायरथानयनम् ॥ ३ ॥

तामार्यगणसंपूर्णां भरतः प्रग्रहां सभाम् ॥ ददर्श बुद्धिसंपन्नः पूर्णचन्द्रो निशामिव ॥ १ ॥
आसनानि यथान्यायमार्याणां विशतां तदा ॥ वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २ ॥
सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तदा ॥ अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३ ॥
राज्ञस्तु प्रकृतीः सर्वाः समग्राः प्रेक्ष्य धर्मवित् ॥ इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४ ॥
तात राजा दशरथः स्वर्गतो धर्ममाचरन् ॥ धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५ ॥
रामस्तथा सत्यधृतिः सतां धर्ममनुस्मरन् ॥ नाजहात्पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ६ ॥
पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् ॥ तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ७ ॥
उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः ॥ कोट्याऽपरान्ताः सामुद्रा रत्नान्यभिहरन्तु ते ॥८॥

भरते । हिताः हितपराःजनाः तानप्यानयतेतिपूर्वेणसंबन्धः ॥ १३—१५ ॥ शर्कराशब्देनात्रस्थूलवालुकाउच्यन्ते । ह्रदश्च समुद्रसमीपस्थः तिमिशङ्खादिसाहचर्यात् । अत्रस्तिमितजलेनवसिष्ठस्य तिमिनागाभ्यां भरतशत्रुघ्नयोः मण्यादिभिरमात्यादीनां चसाम्यं ॥ १६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

---

प्रग्रहां नियमवतीं । यद्वा शुक्रबृहस्पत्यादिप्रकृष्टग्रहयुक्तां । तदा निशाविशेषणमिदं ॥ १ ॥ आसनानिविशतां आसनेषूपविशतामित्यर्थः ॥ २ ॥ घनापाये वर्षापगमे शरदीतियावत् । भरताभिषेकायसर्वेअलंकृताः समागताइतिभावः ॥ ३ ॥ प्रेक्ष्य संवादार्थमवलोक्य ॥ ४ ॥ तात वत्स । धर्मं सत्यपरिपालनरूपं । तव तुभ्यं ॥ ५ ॥ तथा पितृवत् । सत्येधृतिः प्रीतिर्यस्यसः सत्यधृतिः । धृङ्प्रीतावितिधातोःस्त्रियांक्तिन्प्रत्ययः। सतां पितृनिदेशवर्तिनां। धर्मं पितृवचनपरिपालनरूपं । "जीवतोर्वाक्यकरणात्प्रत्यब्दंभूरिभोजनात् । गयायांपिण्डदानाच्चत्रिभिःपुत्रस्यपुत्रता " इतिवचनात् ॥ ६ ॥ अभिषेचय आत्मानमितिशेषः ॥ ७ ॥ उदीच्याइति । प्राच्याइत्यपिसिद्धं । केवलाः

शर्कराःसुवर्णखनिमृत्तिकाः । सभायांजलस्थानेसभातेजः । एतदेवध्वनयतास्तिमितजलइत्युक्तं । चित्रस्थतिमिनागसंवृतत्वंमणयश्चस्तंभादिषुविद्यन्तएव । शङ्खाश्चित्रेषुसुवर्णशर्करास्थानेकुट्टिमादौस्वर्णलेपः । प्रकारान्तरेणजलादिवर्णनेतुकवेर्न्यूनतादोषः । ममतु विभक्तिपरिणामेनैषामेवसभायामप्यन्वयान्नदोषः । एतेनवसिष्ठोजलं तिमिनागौभरतशत्रुघ्नौ मण्यादयोऽमात्यपौरजानपदाइतिकतकोक्तमपास्तम् । दशरथसुतशोभितासभा पुरासदशरथासभेवबभावितियोजना । पितृसमानाकारत्वात्पुत्रस्येदानीमपिसदशरथेवेत्युत्प्रेक्षा । पुरायथेत्यंशेउपमेतितयोरत्रसंसृष्टिः ॥ १६ ॥ इत्येकाशीतितमस्सर्गः ॥ ८१ ॥

**स०** आर्याणांज्ञानवयोवृद्धानांयेगुणास्तैस्संपूर्णां । ग्रामोगतइतिवदत्रापितत्स्थानांग्रहः । **ति०** प्रग्रहां प्रकृष्टैर्वसिष्ठादिभिर्ग्रहःपरिग्रहोऽधिष्ठानंयस्यांसा । निशापक्षेप्रकृष्टगुर्वादिग्रहवतीम् ॥ १ ॥ **ति०** संप्रेक्ष्यच चात्कृतानुमतिकांश्चकृत्वा ॥ ४ ॥ **ती०** कोट्याप-

[ **पा०** ] १ घ. शङ्खशुक्तिशर्करः. २ ङ. ज. झ. बभूवसापुरा. ३ ठ. गुणसंपूर्णां. ४ ज. संपूर्णः. ५ ङ. झ. ट. पूर्णचन्द्रां. ग. ज. पूर्णचन्द्रंनिशामिव. ६ ज. तथा. ७ ङ. ज. झ. ट. तथा. ८ ङ. झ. ट. ससंप्रेक्ष्यच. ९ ज. सदा. १० ङ. झ. ट. सत्यवृत्तिः. ११ ग. ङ. ज. कोटयःपरान्ताः. १२ ङ. झ. ट. न्युपहरन्तु.

तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ॥ जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ॥ ९ ॥
स बाष्पकलया वाचा कलहंसस्वरो युवा ॥ विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ १० ॥
चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः ॥ धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११ ॥
कथं दशरथाज्जातो भवेद्राज्यापहारकः ॥ राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥ १२ ॥
ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ॥ लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १३ ॥
अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि ॥ इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १४ ॥
यद्धि मात्रा कृतं पापं नाहं तदपि रोचये ॥ इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १५ ॥
राममेवानुगच्छामि राजा स द्विपदांवरः ॥ त्रयाणामपि लोकानां राज्यमर्हति राघवः ॥ १६ ॥

सिंहासनादिरहिताइत्यपरान्तादिविशेषणं । अपरान्तदेशवासिनोयवनाः कोट्या कोटिसंख्ययाउपलक्षितानिरत्नानि। सामुद्राः समुद्रद्वीपवासिनः ॥ ८ ॥ धर्मज्ञःकुलक्रमागतज्येष्ठाभिषेचनरूपधर्मज्ञः । धर्मकाङ्क्षया ज्येष्ठानुवर्तनरूपधर्मलिप्सया । रामं मनसाजगाम सस्मारेत्यर्थः ॥ ९ ॥ बाष्पकलया अधर्मस्मरणात् रामस्मरणाद्वा बाष्पेणाव्यक्तया । कलहंसस्वरइत्यनेन अभिनिवेशविशेषोद्योत्यते। युवेत्यनेन भोगकालेपिभोगोपकरणजिहासाचित्रमितिऋषिःस्तौति । सभामध्ये जगर्हे नियमातिक्रमंरहसिबोधयेदितिनियमोपिभग्नः अतिक्रूरमधर्मंनियुक्तवानितिदुःखपारवश्यात् रहस्सदोविभागविस्मरणेन गर्हितवान् । पुरोहितंजगर्हे सम्यक्त्वयास्मत्कुलस्यभाविहितमवेक्षितमितिनिनिन्द । सभामध्ये बहवःसमेत्य ममैकस्यपारतन्त्र्यंकिमपजिहीर्षन्ति सभामध्ये किमवनेपिमद्धनंमुष्णन्ति ॥ १० ॥ चरितब्रह्मचर्यस्य अनुष्ठितगुरुकुलवासस्य । विद्यास्नातस्य "वेदमधीत्यस्नायात्" इतिस्मृतिप्रक्रिययानिखिलवेदाध्ययनानन्तरभाविस्नानकर्मयुक्तस्य । धीमतः तदर्थज्ञस्य । धर्मेप्रयतमानस्य तदर्थानुष्ठानवतः । मद्विधः शास्त्रवश्योमादृशः ॥ ११ ॥ मद्विध इत्येतद्विवृणोति—कथमित्यादिना । रामविरहोत्तरक्षणेमृतस्यकुक्षौजातोहं कथंतत्त्यक्तंराज्यंपरिगृह्णीयां । मत्स्वरूपपर्यालोचनयापिनाहंराज्यार्हइत्याह—राज्यंचेति । शेषवस्तुष्वेकमेकस्यकिमीष्टे प्रत्युतराज्यंवाकिमितिमांनेष्टे राज्यंचाहंचरामस्य राज्यमपिरामसंबन्धि अहमपिचरामसंबन्धी उभयमपिरामशेषमित्यर्थः । धर्मंवक्तुमिहार्हसि लोकेस्वपित्रादिकंनिगृह्यस्वयंराज्यस्यकर्तारःसन्ति तदेतव्यक्तावपिभवतीतिमामंस्थाः । इह मद्विषये । मत्प्रकृतिंज्ञात्वाधर्मंवक्तुमर्हसि । धर्मं पाल्यत्वपालकत्वरूपंवक्तुमर्हसि । रामशेषत्वाविशेषे एकंशेषंकथमपरंरक्षेत् तथासतिराज्यमेवमांकिमितिनरक्षेदितिभावः । ननुरत्नपेटिकयोर्द्वयोःशेषत्वाविशेषेपिएकंरक्ष्यमपरंरक्षकंचदृष्टंतद्वदस्त्वितिचेन्न । तत्रहि पेटिका कुञ्चिकादिव्यापारेणस्वामिनारक्षकत्वेनविनियुक्ता नाहमेवंरामेणविनियुक्तः । यथा स्वैकधार्यमपिरत्नमवसरेपेटिकास्थंकरोति तद्वत्स्वेनैवपाल्यमपि राज्यमस्माभिर्यावच्छक्तिप्रसादितोपि अनवसरतयारामोयदामदधीनंकुर्यात्तदा तदाहितशक्तिकस्तत्परतन्त्रः पेटिकावत् यावत्तदागमनं रक्षेयं । अतस्तन्निवर्तनप्रयत्नएवसर्वथाकार्यः । प्रथमतोवरनिर्बन्धादिकृताराज्यस्यास्मदीयत्वबुद्धिः रामसमक्षंगत्वापरिहरणीयेति भावः ॥ १२ ॥ वक्तव्यंधर्ममाह—ज्येष्ठइत्यादिना । दिलीपनहुषशब्दौ चन्द्रसूर्यवंशश्रेष्ठराजोपलक्षणार्थौ ॥ १३ ॥ इक्ष्वाकूणांलोके तत्संबन्धिनिजने ॥ १४ ॥ यद्धीति अनेनाप्राप्तभाषणश्रवणपापस्यप्रायश्चित्तमनुष्ठितं ॥ १५ ॥ द्वौपादौयेषांतेद्विपादः । "संख्यासुपूर्वस्य" इतिलोपःसमासान्तः । अतः "पादःपत्" इतिभस्थलेपदादेशः । तेषां पुरुषाणामित्यर्थः ॥ १६ ॥

रान्ताइत्यत्रपरान्ताइतिच्छेदः । कोट्याउपलक्षिताःपरान्ताः प्राचीदिगन्तवासिनः । **ति०** सामुद्राः पोतवणिजः ॥ ८ ॥ **ति०** जगर्हे सर्वज्ञोपि कथमेवमनुचितेमांप्रवर्तयतीत्युक्तवानित्यर्थः । **स०** जगर्हे मद्धितकरस्त्वंकथंमामनर्थेनियोजयसीत्युक्तवानित्यर्थः

[ **पा०** ] १ य. नहुषोयथा. २ ङ. ट. यदि. ३ ख. ग. तदभि. ४ घ. मेवाभि. ५ क—ट. सराजा. ६ क. ङ—ट. राघवोराज्यमर्हति.

तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः ॥ हर्षान्मुमुचुरश्रूणि रामे निहितचेतसः ॥ १७ ॥
यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनात् ॥ वने तत्रैव वत्स्यामि यथाऽऽर्यो लक्ष्मणस्तथा ॥१८॥
सर्वोपायं तु वर्तिष्ये विनिवर्तयितुं बलात् ॥ समक्षमार्यमिश्राणां साधूनां गुणवर्तिनाम् ॥ १९ ॥
विष्टिकर्मान्तिकाः सर्वे मार्गशोधकरक्षकाः ॥ प्रस्थापिता मया पूर्वं यात्राऽपि मम रोचते ॥ २० ॥
एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः ॥ समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदम् ॥ २१ ॥
तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात् ॥ यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥ २२ ॥
एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना ॥ हृष्टस्तदादिशत्सर्वं यथासंदिष्टमिष्टवत् ॥ २३ ॥
ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षा बलस्य च ॥ श्रुत्वा यात्रां समाज्ञप्तां राघवस्य निवर्तने ॥ २४ ॥
ततो योधाङ्गनाः सर्वा भर्तॄन्सर्वान्गृहेगृहे ॥ यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः ॥ २५ ॥
ते हयैर्गोरथैः शीघ्रैः स्यन्दनैश्च महाजवैः ॥ सह योधैर्बलाध्यक्षा बलं सर्वमचोदयन् ॥ २६ ॥
सज्जं तु तद्बलं दृष्ट्वा भरतो गुरुसंनिधौ ॥ रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ २७ ॥
भरतस्य तु तस्याज्ञां प्रतिगृह्य च हर्षितः ॥ रथं गृहीत्वा प्रययौ युक्तं परमवाजिभिः ॥ २८ ॥
स राघवः सत्यधृतिः प्रतापवान्ब्रुवन्सुयुक्तं दृढसत्यविक्रमः ॥
गुरुं महारण्यगतं यशस्विनं प्रसादयिष्यन्भरतोऽब्रवीत्तदा ॥ २९ ॥

मध्येकविवाक्यं—तद्वाक्यमिति । सभासुसीदन्तीति सभासदः सभ्याः ॥ १७ ॥ कनिष्ठेलक्ष्मणेआर्यशब्दप्रयोगोज्येष्ठानुवर्तनरूपधर्मनिरतत्वात् । यथार्योलक्ष्मणस्तथा अहंलक्ष्मणश्चेत्यर्थः ॥ १८ ॥ सर्वोपायंवर्तिष्ये सर्वोपायमितिक्रियाविशेषणं सर्वोपायैर्यत्नंकरिष्यइत्यर्थः । आर्यमिश्राणां सदस्यानां । “आर्यमिश्राः पारिषदाःसदस्याःसामवायिकाः ” इतिसज्जनः । भवद्भिरागन्तव्यमित्यर्थादुक्तंभवति ॥ १९ ॥ विष्टिकर्मान्तिकाइति । विष्टयो भृतिमन्तरेणजनपदेभ्यःसमानीताः कर्मकराः । कर्मान्तिकाः कर्मान्तेभृतिग्रहीतारः । मार्गशोधकरक्षकाइतिविष्टयादिविशेषणं । प्रस्थापितामयापूर्वमित्यभिधानात् वसिष्ठःशिबिरकरणनियोगमजानन्नभिषेकप्रस्तावंकृतवानित्यवगम्यते ॥ २०—२२ ॥ इष्टवत् इष्टार्हं इष्टानुरूपमितियावत् ॥ २३ ॥ ताःप्रकृतयः पौरश्रेणयः । “राज्याङ्गानि प्रकृतयःपौराणांश्रेणयोपिच ” इत्यमरः । बलाध्यक्षाः सेनापतयश्च । राघवस्यनिवर्तने निवर्तननिमित्तं । समाज्ञप्तां बलस्यसैन्यस्ययात्रांश्रुत्वा प्रहृष्टाः आसन्निति शेषः ॥ २४ ॥ यात्रागमनं यात्रायाआगमनंसिद्धिं यात्रारूपगमनमितिवा ॥ २५ ॥ गोरथैः वृषभयुक्तरथैः शकटैरित्यर्थः । बलंसर्वमित्यवयवावयविनोर्भेदनिर्देशः ॥ २६ ॥ सज्जं संनद्धं गुरुसंनिधावित्यनुज्ञाकरणार्थमुक्तं ॥ २७—२८ ॥ उक्तमर्थंपुनःसंग्रहेणदर्शयति—सइत्यादिना । सत्यधृतिः अप्रच्युतधैर्यः । सुयुक्तंब्रुवन् गुरुंप्रसादयिष्यन् । उचितवचनेनरामं

॥ १० ॥ स० आर्यः अग्रजः ॥ १८ ॥ स० विष्टयः वेतनंविनाभुक्तिमात्रदानेनकर्मकर्तारः ॥ २० ॥ स० यात्रागमनं यात्रार्थं रामस्यपुरींप्रत्यागमनरूपयात्रायैगमनं यात्रया रामप्रयाणेननिमित्तेनगमनंवा । यात्रायैश्रीरामदेवार्चनोत्सवायगमनंवा । “यात्रातुयापनोपायेगतौदेवार्चनोत्सवे” इतिविश्वः । हर्षिताः राममानयन्तीतिधिया ॥ २५ ॥ स० योषिद्भिस्सहवर्तन्तइतितथातेचतेबलाध्यक्षाश्च ॥ २६ ॥

[ पा० ] १ ख. ग. तदाविस्मितमानसाः. २ ख. ग. सर्वोपायैर्यतिष्येतं. क. ञ. सर्वोपायंच. ३ क. ख. ग. च. ञ. वनात. ४ ङ. छ. झ. ट. दक्षकाः. ग. तक्षकाः. ५ ख. ङ—ट. यात्राच. ६ ङ. मन्त्रिकोविदं. ७ घ. प्रदिष्टस्सोदिशत्सर्वं. ग. प्रदिष्टस्सोदिशत्सर्वान्. ८ घ. प्रहृष्टास्ताः. ९ घ. बलस्यवा. १० ङ. ट. ततोऽयोध्याङ्गनाः. ११ ज. मास्थाय. १२ ङ. छ. झ. ञ. ट. शीघ्रं. १३ क. ख. ङ—ट. श्रमनोजवैः. ग. श्शकटैस्तथा. १४ ङ. झ. सहयोषिद्बला. १५ ग. सज्जं. १६ घ. तदाचाज्ञां. १७ ख. ङ. छ. झ. ट. परिगृह्य. १८ क—ग. ङ—ट. गृहीत्वोपययौ. १९ क. ग. ङ. सयुक्तं.

तूर्णं स[1]मुत्थाय सुमन्त्र गच्छ बलस्य योगाय ब[2]लप्रधानान् ॥
आ[3]नेतुमिच्छामि हि तं वनस्थं प्रसाद्य रामं जगतो हिताय ॥ ३० ॥
स सूतपुत्रो भरतेन सम्यगाज्ञापितः संपरिपूर्णकामः ॥
शशास सर्वान्प्रकृतिप्रधानान्बलस्य मुख्यांश्च सुहृज्जनं च ॥ ३१ ॥
ततः समुत्थाय कुलेकुले ते राजन्यवैश्या वृषलाश्च विप्राः ॥
अ[5]यूयुजन्नुष्ट्रर[6]थान्खरांश्च नागान्हयांश्चैव कुलप्रसूतान् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

## त्र्यशीतितमः सर्गः ॥ ८३ ॥

प्रभातेभरतेनामात्यपौरपुरोहितशिल्पिसेनादिसाहित्येननगरान्निर्गत्यदूराध्वातिलंघनेनगुहाधिष्ठितशृङ्गिबेरपुरेगङ्गातीरगमनम् ॥ १ ॥ तथापित्रेउदकदानायपरिजनविश्रान्तयेचतत्रैवसेनादिसंनिवेशनम् ॥ २ ॥

ततः समुत्थितः काल्यमास्थाय स्यन्दनोत्तमम् ॥ प्रययौ भरतः शीघ्रं रामदर्शनकाङ्क्षया[7] ॥ १ ॥
अग्रतः प्रययुस्तस्य सर्वे मन्त्रि[8]पुरोधसः ॥ अधिरुह्य हयैर्युक्तान्रथान्सूर्यरथोपमान् ॥ २ ॥
नवनागसहस्राणि कल्पितानि यथाविधि ॥ अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनम् ॥ ३ ॥
षष्टीरथसहस्राणि धन्विनो विविधायुधाः ॥ अन्वयुर्भरतं यान्तं राजपुत्रं[9] यशस्विनम् ॥ ४ ॥
शतं सहस्राण्यश्वानां समारूढानि राघवम् ॥ अन्वयुर्भरतं यान्तं सत्यसन्धं जितेन्द्रियम् ॥ ५ ॥
कैकेयी च सुमित्रा च कौसल्या च यशस्विनी ॥ रामानयनसं[10]हृष्टा ययुर्यानेन भास्वता ॥ ६ ॥
प्रयाताश्चार्यसंघाता रामं द्रष्टुं सलक्ष्मणम् ॥ तस्यैव च क[11]थाश्चित्राः कुर्वाणा हृ[12]ष्टमानसाः ॥ ७ ॥
मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम् ॥ कदा द्रक्ष्यामहे रामं जगतः शोकनाशनम् ॥ ८ ॥

---

प्रीणयिष्यन्नित्यर्थः ॥ २९ ॥ बलस्ययोगाय बलस्य सन्नहनाय बलस्यसंगतयेवा । " योगःसन्नहनोपायध्यानसंगतियुक्तिषु " इत्यमरः । बलप्रधानान् गच्छ प्रधानशब्दःपुँल्लिङ्गोप्यस्ति ॥ ३०—३१ ॥ वृषलाः शूद्राः । कुलेकुले गृहेगृहे । " कुलंजनपदेगृहे " इत्यमरः । अयूयुजन् सज्जानकुर्वन् । कुलप्रसूतान् उत्तमानित्यर्थः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

काल्यं अहर्मुखं " प्रत्यूषोहर्मुखंकाल्यं " इत्यमरः । प्राप्येतिशेषः ॥ १—२ ॥ यथाविधिकल्पितानि भरतनियोगमनतिक्रम्यकल्पितानि । नवनागसहस्राणीत्यनेन पुरस्थगजेषुनवनागसहस्रमात्रंप्रयाणेकल्पितमित्यवगम्यते ॥ ३ ॥ धन्विनोविविधायुधाश्चेत्यनेन योधाउक्ताः ॥ ४ ॥ समारूढानि सादिभिरितिशेषः ॥ ५ ॥ अग्रतोगमनंपश्चात्तापातिशयात् । यानेनेत्येकवचनं प्रत्येकापेक्षया ॥ ६ ॥ आर्यसंघाताः त्रैवर्णिकसंघाः । तस्यैवकथाः तत्संबन्धिवार्ताः ॥७॥ ताएवाह—मेघेत्यादिना । मेघश्यामं दूरस्थितत्वेपि

---

**ति०** संपरिपूर्णकामः । तस्यापितैरामदर्शनेउत्कटेच्छत्वात् ॥ ३१ ॥ इतिद्व्यशीतितमस्सर्गः ॥ ८२ ॥

**ति०** कैकेयीच स्वकृतेःपुत्रंप्रत्यहिततयाजातत्वान्मयाकिंकृतमितिखिन्ना पुनःप्रकृतिमापन्नाहर्षेणययौ । अतएवमध्यमत्वेप्यादौ तदुल्लेखः । यानेनेत्येकवचनंप्रत्येकापेक्षया सौहार्दादेकयानेनैवतिसृणांगमनंवा । **स०** संतुष्टाइतिच्छत्रिन्यायेनोक्तिः । कैकेय्यास्संदेशेनवातथोक्तिः ॥ ६ ॥ **शि०** आर्यसंघाताः आर्याणांवसिष्ठादीनांसंघाताःसमूहाः । प्रयाताः अभवन्नितिशेषः ॥ ७ ॥

[ **पा०** ] १ च. छ. झ. ञ. ट. त्वमुत्थाय. २ क. ख. बलेप्रधानान्. ३ ख. आज्ञातु. ४ क. ग. नगरेच. ५ क. ग. घ. च. आयूयुजन्. ६ क. च. ञ. खरान्रथांश्च. ७ झ. ट. काम्यया. ८ ख. ग. ङ. च. छ. झ. ञ. ट. पुरोहिताः. ९ ग. ङ. छ. झ. ट. राजपुत्रंयशस्विनं. १० ङ. छ. ट. संतुष्टा. ११ घ. कथाःश्रुत्वा. १२ च. ञ. हृष्टचेतसः.

दृष्ट एव हि नः शोकमपनेष्यति राघवः ॥ तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः ॥ ९ ॥
इत्येवं कथयन्तस्ते संप्रहृष्टाः कथाः शुभाः ॥ [1]परिष्वजानाश्चान्योन्यं ययुर्नाग[2]रिका जनाः ॥ १० ॥
ये च तत्रापरे सर्वे सं[3]मता ये च नैगमाः ॥ रामं प्रति[4]ययुर्हृष्टाः सर्वाः प्रकृतय[5]स्तथा ॥ ११ ॥
[6]मणिकाराश्च ये केचित्कुम्भकाराश्च शोभनाः ॥ सूत्रकर्मकृतश्चैव ये च शस्त्रोपजीविनः ॥ १२ ॥
मायूरकाः क्राकचिका रो[7]चका वेधकास्त[8]था ॥ द[9]न्तकाराः सुधाकारास्तथा गन्धोपजीविनः ॥ १३ ॥
सुवर्णकाराः प्रख्यातास्तथा कम्बलधा[10]वकाः ॥ [11]स्नापकोच्छादका वैद्या धूपकाः शौण्डिकास्तथा १४
रजकास्तु[12]न्नवायाश्च ग्रामघोषमहत्तराः ॥ शैलूषाश्च सह स्त्रीभिर्य[13]युः कैवर्तकास्तथा ॥ १५ ॥
समाहिता वेदविदो ब्राह्मणा [14]वृत्तसंमताः ॥ गोरथैर्भरतं यान्तमनुजग्मुः सहस्रशः ॥ १६ ॥

त्यक्तुमशक्यंसौन्दर्यमुच्यते । घर्माभितप्ताः पर्जन्यमितिवत् । मेघश्यामं दर्शनमात्रेणसर्वसंतापहरं । महाबाहुं "आयताश्चसुवृत्ताश्च" इतिह्युक्तं । महाबाहुं तादृशसौन्दर्यानुभवदानविषयौदार्ययुक्तं । महाबाहुं तादृशसौन्दर्यभोगप्रदानसमर्थं । "राममिन्दीवरश्यामंसर्वशत्रुनिबर्हणं" इतिवत् । स्थिरसत्त्वं स्थिरव्यवसायं । "द्रव्यासुव्यवसायेषुसत्त्वमस्त्रीतुजन्तुषु" इत्यमरः । स्थिरचित्तमितिचपाठः । आश्रितप्रातिकूल्येनाप्यविकृतमनस्कं । दृढव्रतं अन्तरङ्गैरप्यप्रकम्प्याश्रितरक्षणदीक्षं । कदाद्रक्ष्यामहे रामं तन्मुखावलोकनमात्रंलभ्यतेचेत्कैकेयीवचनजनितताषाःसर्वेपिनिवर्तेरन् । जगतःशोकनाशनं । तस्मिन्सर्वलोकशोकनिवर्तकेसतिकथंवयंशोकाकुलाःस्याम । तदीयसर्वलोकशोकनिवर्तकत्वस्यअस्मच्छोकस्यचकःसंबन्धः । माशुचइत्युक्तवतोप्यस्यातिशयउक्तः ॥ ८ ॥ दृष्टएवरामः सन्निहितश्चेत्समन्दस्मितोमाभूत् कटाक्षपूर्वकंकिंचित्प्रियवचनंचमावोचत् । अस्माभिश्चनयत्नःकार्यः किन्तुदूरेदर्शनमात्रेणास्मच्छोकाःसर्वेविनश्येयुः । तमइत्यादि यथोद्यन् आदित्योदूरस्थितोपिसकललोकान्धकारं निवर्तयति ॥ ९ ॥ परिष्वजानाः परिष्वजमानाः । नगरेचरन्तीतिनागरिकाः "चरति" इतिठक् ॥१०॥ तत्र नगरे । येरामस्यसंमताः येचनैगमाः वणिजः । तेसर्वे सर्वाःप्रकृतयः पौरश्रेणयश्च । रामंप्रतिययुः ॥ ११ ॥ ताःप्रपञ्चयति—मणीत्यादिना । अत्रयच्छब्दरहितस्थलेसोनुषञ्जनीयः । मणिकाराः पद्मरागादिमणिसंस्कारकाः । कुम्भकाराः कुलालाः । शोभनाः स्वकार्यदक्षाइतियावत् । सूत्रकर्मकृतः तन्तुवायादयः । शस्त्रोपजीविनः शस्त्रकारकाः । मायूरकाः मयूरपिच्छैश्छत्रव्यजनादिकारिणः । क्राकचिकाः क्रकचैःकरपत्रैश्चन्दनादिदारुदलनकारिणः । "क्रकचोस्त्रीकरपत्रं" इत्यमरः । रोचकाः दन्तकुड्यवेदिकादिषुकान्त्युत्पादकाः । वेधकाः दारुरत्नादिरन्ध्रकारिणः । दन्तकाराः दन्तैःपुत्रिकापीठशिबिकादिकारकाः । सुधाकाराः प्रासादतलकुड्यादिषुसुधालेपनकर्मकराः । गन्धोपजीविनः चन्दनकस्तूरीकर्पूरकुङ्कुमादिगन्धद्रव्यविक्रयजीविनः । सुवर्णकाराः प्रसिद्धाः । कम्बलधावकाः कम्बलशोधकाः । स्नापकोच्छादकाः स्नापकाः तैलाभ्यङ्गादिस्नानकारिणः । उच्छादकाः अङ्गमर्दकाः । "उच्छादनंसमुल्लेखोद्वाहनोद्वर्तनेषुच" इतिविश्वः । धूपकाः गृहादिषुधूपवासकाः । शौण्डिका मद्यकराः "शुण्डाकरिकरेमद्ये" इतिवैजयन्ती । रजकाः निर्णेजकाः । "निर्णेजकःस्याद्रजकः" इत्यमरः । तुन्नवायाः सौचिकाः । "तुन्नवायस्तुसौचिकः" इत्यमरः । ग्रामघोषमहत्तराः ग्राममहत्तराः घोषमहत्तराश्च । महत्तराः प्रधानभूताः । "घोष आभीरपल्लीस्यात्" इत्यमरः । शैलूषाः भूमिकाधा-

**ति०** तत्र नगरे । संमताः प्रसिद्धाः ॥ ११ ॥ मायूरकाः लीलामयूरग्राहिणः । इदमुपलक्षणंशुकादिकग्राहिणां । **कतक०** रोचकाःकाचकुप्यादिकर्तारः ॥१३॥ **ति०** स्नापकाः उष्णोदकस्नापकाः । उष्णोदकाः अङ्गमर्दकाः । "उष्णोदकंसमुल्लेखोद्वाहनोद्वर्तनेषुच" इतिकोशः ॥ १४ ॥ कैवर्तकारवाइतिपाठे कारवाःकर्माराः ॥ १५ ॥ **शि०** समाहिताः रामावेशितचित्ताः ॥ १६ ॥

**[ पा० ]** १ क. ज. परिष्वजन्तश्चा. २ क. ग. ङ. च. छ. झ. ञ. ट. कास्तदा. ३ ग. समेता. घ. समस्ता. ४ क. च. ञ. ययुःसर्वाहृष्टाः. ५ क—घ. च. ञ. स्तदा. ङ. छ. झ. ट. श्शुभाः. ६ ङ. छ. झ. ट. मणिकाराविशेषज्ञाः. ७ ङ. च. छ. झ. ट. वेधकारोचकाः. ८ क. स्तदा. ९ ङ. छ. सूपकाराः. छ. झ. ट. सुधाकारायेच. १० क. च. धारकाः. ङ. छ. झ. ञ. ट. कारकाः. ११ ङ. छ. झ. ट. स्नापकोष्णोदका. १२ ङ. छ. स्तन्तुवायाश्च. १३ ख—ट. यान्ति. १४ ङ. व्रतसंमताः.

सुवेषाः शुद्धवसनास्ताम्रमृष्टानुलेपनाः ॥ सर्वे ते विविधैर्यानैः शनैर्भरतमन्वयुः ॥ १७ ॥
प्रहृष्टमुदिता सेना साऽन्वयात्कैकयीसुतम् ॥ भ्रातुरानयने यान्तं भरतं भ्रातृवत्सलम् ॥ १८ ॥
ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः ॥ समासेदुस्ततो गङ्गां शृङ्गिबेरपुरं प्रति ॥ १९ ॥
यत्र रामसखो वीरो गुहो ज्ञातिगणैर्वृतः ॥ निवसत्यप्रमादेन देशं तं परिपालयन् ॥ २० ॥
उपेत्य तीरं गङ्गायाश्चक्रवाकैरलंकृतम् ॥ व्यवातिष्ठत सा सेना भरतस्यानुयायिनी ॥ २१ ॥
निरीक्ष्यानुगतां सेनां तां च गङ्गां शिवोदकाम् ॥ भरतः सचिवान्सर्वानब्रवीद्वाक्यकोविदः ॥ २२ ॥
निवेशयत मे सैन्यमभिप्रायेण सर्वतः ॥ विश्रान्ताः प्रतरिष्यामः श्व इदानीमिमां नदीम् ॥ २३ ॥
दातुं च तावदिच्छामि स्वर्गतस्य महीपतेः ॥ और्ध्वदेहनिमित्तार्थमवतीर्योदकं नदीम् ॥ २४ ॥
तस्यैवं ब्रुवतोऽमात्यास्तथेत्युक्त्वा समाहिताः ॥ न्यवेशयंस्तांश्छन्देन स्वेनस्वेन पृथक्पृथक् ॥ २५ ॥
निवेश्य गङ्गामनु तां महानदीं चमूं विधानैः परिबर्हशोभिनीम् ॥
उवास रामस्य तदा महात्मनो विचिन्तयानो भरतो निवर्तनम् ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

रिणः स्त्रीजीविनोवा । अतएव सहस्त्रीभिरित्युक्तं । " शैलालिनस्तुशैलूषाजायाजीवाः " इत्यमरः । कैवर्ताः धीवराः । " कैवर्तेदाशधीवरौ " इत्यमरः । तेसर्वेययुरित्यन्वयः । समाहिताः योगिनः । गोरथैः वृषभयुक्तरथैः शकटैरितियावत् ॥ १२—१६ ॥ ताम्रमृष्टानुलेपनाः रक्तवर्णसंपूर्णाङ्गरागाः ॥ १७ ॥ प्रहर्षः कायिकोरोमाञ्चादिः । प्रमोदोमानसोहर्षः । आनयने आनयननिमित्तं ॥ १८ ॥ शृङ्गिबेरपुरंप्रति दूरमध्वानंगत्वा गङ्गांसमासेदुरितिसंबन्धः । यद्वा शृङ्गिबेरपुरंप्रतीति लक्षणेकर्मप्रवचनीयः । शृङ्गिबेरपुरइत्यर्थः ॥ १९ ॥ अप्रमादेन सावधानतया । रामविरोध्यागमनवारणपरइत्यर्थः । तत्रदेशे । विद्यमानं शृङ्गिबेरपुरंप्रतीतिपूर्वेणान्वयः ॥ २० ॥ व्यवातिष्ठत व्यवस्थिताभूत् ॥ २१—२२ ॥ अभिप्रायेण तत्तदिच्छया । इदानींविश्रान्ताः श्वोनदींप्रतरिष्यामइति संबन्धः ॥ २३ ॥ और्ध्वदेहनिमित्तार्थं ऊर्ध्वदेहभवसुखप्रयोजनायेत्यर्थः । नदीमवतीर्य पितुरौर्ध्वदेहनिमित्तार्थमुदकंदातुमिच्छामीत्यन्वयः ॥ २४ ॥ छन्देन इच्छया । " छन्दःश्रुतीच्छापद्येषु " इतिवैजयन्ती ॥ २५ ॥ गङ्गामनुनिवेश्य गङ्गामनुसृत्यनिवेश्य गङ्गाकूलानुसारेणनिवेश्येतियावत् । विधानैः तत्तज्जातिव्यवस्थाकल्पनादिभिः । परिबर्हशोभिनीं परिबर्हो यात्रोपयुक्तपटवेश्माद्युपकरणं । " तथोपकरणंप्रोक्तं परिबर्हःपरिच्छदः " इतिहलायुधः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

**ति०** और्ध्वदेहनिमित्तार्थं एतच्छरीरपातोत्तरकालिकदेहभवसुखप्रयोजनायेत्यर्थः । यद्वा एतद्देहपातादूर्ध्वजातदेहोनिमित्तंयस्य परलोकस्य सऊर्ध्वदेहनिमित्तःपरलोकः । स्वार्थिकोऽण् । तदर्थमित्यर्थः । मध्येमिलितनद्यन्तरेएवमनुक्त्यागङ्गायास्तर्पणेनपितृस्वर्गप्राप्तिकरत्वंसूचितम् ॥ २४ ॥ **ति०** विचिन्तमानः चिन्तयमानइत्यर्थः ॥ २६ ॥ इतित्र्यशीतितमस्सर्गः ॥ ८३ ॥

[ **पा०** ] १ ङ. झ. ञ. ट. लेपिनः. २ ङ. छ. झ. ट. विमलैर्यानैः. ३ ङ. छ. झ. ञ. ट. निरीक्ष्यानुस्थितां. ४ क. च. ञ. तांगङ्गांच. ५ ग. सर्वं. ६ ग. घ. सर्वेशः. ७ क. ख. घ. च. ञ. इदानींमहानदीं. ङ. छ. झ. ट. इमांसागरङ्गमां. ग. इदानींतुतांनदीं. ८ ङ. छ. झ. ञ. ट. विचिन्तमानो.

# चतुरशीतितमः सर्गः ॥ ८४ ॥

सेनावलोकनेनभरतेदोषशङ्किनागुहेनसानुगस्यतस्यगङ्गातरणप्रतिरोधनायदाशानांनौकारक्षणादिनिदेशपूर्वकंभरतभावजिज्ञासयाऽपायनोपहरणेनतत्समीपगमनम् ॥ १ ॥ तथातंप्रतिस्वोपाहृतफलमूलादिनास्वीयैःसहश्रमापनोदनेनरात्रियापनपूर्वकं परेद्युःपुरतःप्रस्थानप्रार्थना ॥ २ ॥

ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम् ॥ निषादराजो दृष्ट्वैव ज्ञातीन्सं[1]त्वरितोऽब्रवीत् ॥१॥
महतीऽयमितः सेना सागराभा प्रदृश्यते ॥ नास्यान्तम[2]धिगच्छामि मनसाऽपि विचिन्तयन् ॥२॥
यथा[3] तु खलु दुर्बुद्धिर्भरतः स्वयमागतः ॥ स एष हि महाकायः कोविदारध्वजो र[4]थे ॥ ३ ॥
बन्धयिष्यति वा दा[5]शानथवाऽस्मान्वधिष्यति ॥ अ[6]थ दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥४॥
सं[7]प[8]न्नां श्रियमन्विच्छंस्तस्य रा[9]ज्ञः सुदुर्लभाम् ॥ भरतः कैकयीपुत्रो हन्तुं स[10]मधिगच्छति ॥ ५ ॥
भर्ता चैव सखा चैव रामो दाशरथिर्मम ॥ तस्यार्थकामाः संनद्धा ग[11]ङ्गानूपे प्रतिष्ठत ॥ ६ ॥
तिष्ठन्तु [12]सर्वे दाशाश्च गङ्गामन्वाश्रिता नदीम् ॥ बलयुक्ता नदीरक्षा मांसमूलफलाशनाः ॥ ७ ॥
नावां शतानां पञ्चानां कैवर्तानां शतंशतम् ॥ सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८ ॥
[13]यदा तुष्टस्तु भरतो रामस्येह भविष्यति ॥ [14]सेयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥ ९ ॥

गङ्गामन्वाश्रितां प्राप्तां अतएव निविष्टां कृतनिवेशां । ध्वजिनीं सेनांदृष्ट्वा । संत्वरितः ससंभ्रमः ॥१॥ इतः इहशृङ्गिबेरपुरे अस्य । सेनारूपवस्तुनः । चिन्तयन्नपि मनसापिनास्यान्तमधिगच्छामीतिसंबन्धः ॥२॥ सः इक्ष्वाकुकुलक्रमागतः । कोविदारध्वजः रथेदृश्यते हियस्मात् अतोभरतःस्वयमागतः । यथातुखलु ध्रुवमित्यर्थः । कोविदारध्वजः दुर्बुद्धिरित्यनेन भरतोरामद्रोहाकाङ्क्षयाआगच्छतीतिशङ्कितवानितिगम्यते ॥३॥ तदेवस्थापयिष्यति—बन्धयिष्यतीत्यादिना । दाशानस्मान् बन्धयिष्यति । अथवावधिष्यति हनिष्यति । हनोलृटिवधादेशआर्षः । अथ अथवा । दाशरथिं ज्ञातिभूतमितिभावः । विवासितं दुर्बलमित्यर्थः । संपन्नां अप्रच्युतां । रामागमनेहिश्रीःप्रच्युतास्यात् । कैकयीपुत्रइति दुष्प्रकृतित्वेहेतुः । तस्यराज्ञः राजत्वार्हस्यरामस्य । सुदुर्लभां ॥ ४—५ ॥ किमतोभवदित्यत्राह —भर्तेति । अर्थकामाः अर्थेच्छवः । यूयमितिशेषः । अनूपे तीरे ॥ ६ ॥ सर्वेदाशाश्च गङ्गामन्वाश्रिताःसन्तः बलयुक्ताः सेनायुक्ताः । नदीरक्षाःनदीतरणमार्गरक्षन्तः । मांसमूलफलाशनाः नावारोपितमांसाद्यशनाःतिष्ठन्तु ॥ ७ ॥ पञ्चानांशतानांनावांएकैकस्यानावः कैवर्तानांशतंशतंतिष्ठतु शतंशतंकैवर्तास्तिष्ठन्त्वित्यर्थः ॥ ८ ॥ रामस्यतुष्टः रामविषयेतुष्टः । यदादुष्टइतिपाठे अदुष्ट-

**ति०** यदातुखलु यस्माद्धेतोः दुर्बुद्धिर्भरतःस्वयमागतः ततोमहतीसेनाप्रदृश्यतेइत्यन्वयः । रामपीडार्थंप्रवृत्तइत्याशयेनदुर्बुद्धितावादः । भरतागमनचिह्नमाह—**सइति** । महाकायः महाप्रमाणः इक्ष्वाकुकुलचिह्नभूतःकोविदारध्वजोरथेदृश्यतेअतोभरतएवायमितिभावः ॥ ३ ॥ **ति०** नन्वायातुभरतःकिमस्माकमतआह—**बन्धयिष्यतीति** । स्वामात्यैरितिशेषः । वधिष्यतीतिवा । अनु ततःपश्चाद्रामंवधिष्यति । इतिमन्येइतिशेषः ॥ ४ ॥ **ति०** ननुरामवधेऽस्यकिंफलमतआह—**संपन्नमिति** । संपूर्णामित्यर्थः । सार्वकालिकीमितियावत् । तस्यराज्ञः रामस्य । सुदुर्लभां तस्मिञ्जीवतिदुष्प्रापां । अतोरामंहन्तुंसमधिगच्छति बुद्धिंप्राप्नोति ॥ ५ ॥ **ति०** नन्वेवं तव कामीतिरत्राह—**भर्तेत्यादि** । एवंचतत्पक्षत्वादस्माकंभीतिरितिभावः । अस्माभिश्चसखित्वादेवरामेष्टंकर्तव्यं । अतोनास्माभिरेतेगङ्गांतारयितव्याः । अतोयूयंतस्य रामस्य अर्थकामाः प्रयोजनेच्छवः । संनद्धाःअत्रगङ्गानूपेमत्संनिधौतिष्ठत ॥ ६ ॥ **ति०** सर्वे मामकादाशास्तु गङ्गांनदीमेवान्वाश्रिताः नदीरक्षाः नदीतरणमार्गविघ्नवन्तः । मांसमूलफलाशनाः एतद्वीप्सातीरेआगन्तुमशक्यतयानावारोपितमांसाद्यशनाः । बलवन्तस्संतस्तिष्ठन्तु ॥ ७ ॥ **ति०** एवंस्थितैरपियुद्धेत्वरानकार्ये-

**[ पा० ]** १ ङ. छ. झ. ट. सपरितो. २ ङ. च. छ. झ. ञ. ट. मवगच्छामि. घ. मपगच्छामि. ख. मुपगच्छामि. ३ ङ. छ. झ. ट. यदातु. ४ ङ. रथी. ५ ङ. छ. झ. ट. पाशैरथवा. ग. नागानथवा. घ. न्हनिष्यति. ६ क. ङ. च. छ. झ. ञ. ट. अनु. ख. ग. अहो. ७ च. संपूर्णां. ८ क. च. ज. ञ. श्रियमिच्छन्सतस्य. ९ ग. राज्ञोति. १० ग. ट. समुप. ११ च. गङ्गानूपेषुतिष्ठत. क. घ. ङ. छ—ट. गङ्गानूपेऽत्र. ख. घ. गङ्गाकूलेऽत्र. १२ क. ङ. च. झ. ञ. ट. सर्वेदाशाश्च. १३ क. ङ. छ. झ. ट. यदि. १४ ङ. च. छ. झ. ञ. ट. इयं.

इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च ॥ अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १० ॥
[1]तमायान्तं तु संप्रेक्ष्य सूतपुत्रः प्रतापवान् ॥ भरतायाचचक्षेऽथ [2]विनयज्ञो विनीतवत् ॥ ११ ॥
एष ज्ञातिसहस्रेण स्थपतिः परिवारितः ॥ कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ॥ १२ ॥
तस्मात्पश्यतु काकुत्स्थ त्वां निषादाधिपो गुहः ॥ असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥१३॥
एतत्तु वचनं श्रुत्वा सुमन्त्राद्भरतः शुभम् ॥ उवाच वचनं [3]शीघ्रं गुहः पश्यतु मामिति ॥ १४ ॥
[4]लब्ध्वाऽभ्यनुज्ञां संहृष्टो ज्ञातिभिः परिवारितः ॥ आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥ १५ ॥
निष्कुट[5]श्चैव देशोऽयं वञ्चिताश्चापि ते वयम् ॥ [6]निवेदयामस्ते [7]सर्वे स्वके [8]दासकुले वस ॥ १६ ॥
अस्ति [9]मूलं फलं [10]चैवं निषादैः [11]समुपाहृतम् ॥ [12]आर्द्रं च मांसं शुष्कं च वन्यं चोच्चावचं [13]महत् ॥ १७
आशंसे स्वाशिता सेना [14]वत्स्यतीमां विभावरीम् ॥ अर्चितो विविधैः कामैः श्वः ससैन्यो [15]गमिष्यसि ॥ १८
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

---

## पञ्चाशीतितमः सर्गः ॥ ८५ ॥

भरतेनगुहंप्रतिसश्लाघंभरद्वाजाश्रममार्गप्रश्नः ॥ १ ॥ गुहेनतंप्रतिमार्गप्रदर्शनायदाशैःसहस्वस्यतदनुगमनोक्तिपूर्वकं रामविषयेतदभिप्रायप्रकारप्रश्नः ॥ २ ॥ गुहेनरामविषयेनिजाशयप्रकाशनपूर्वकमासायंपुनःपुनःशोचन्तंभरतंप्रतिसमाश्वासनम् ३

एवमुक्तस्तु भरतो निषादाधिपतिं गुहम् ॥ प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितम् ॥ १ ॥

---

इतिपदच्छेदः । स्वस्तिमतीति अन्यथाहन्तव्येतिभावः ॥ ९ ॥ उपायनं कौशेयादि । मांसं मृगाणां ॥ १०—॥ ११ ॥ स्थपतिः प्रभुः । दण्डकारण्येकुशलः तत्रसंचरणसमर्थइत्यर्थः । विजानीते तंदेशमित्यर्थः ॥ १२—१४ ॥ प्रह्वः कृतप्रणामः ॥ १५ ॥ अयंदेशः मदधिष्ठितवनप्रदेशः । तेनिष्कुटः गृहारामभूतः । "गृहारामस्तुनिष्कुटः" इत्यमरः । त्वद्भोगयोग्यइतियावत् । वयंचवञ्चिताः अत्रगमनानिवेदनेनवञ्चिताइत्यर्थः । निवेदनेहिप्रत्युद्गमनादिकंकर्तुंशक्यमिति भावः । सर्वेवयंते त्वदीयाइत्यर्थः । अतः स्वकेदासकुले दासगृहेवसेतिनिवेदयामः विज्ञापयामः । पूर्वं गङ्गामासाद्येतिगङ्गापर्यन्तमार्गकरणेपि अद्यमनुष्यप्रेरणाभावात्त्वदागमनंनज्ञातवानस्मीतिगुहेनोच्यते ॥ १६ ॥ वन्यं नीवारश्यामाकप्रियङ्ग्वादिधान्यं । आशंसे प्रार्थयामि । स्वाशिता सुष्ठुभोजिता ॥ १७—॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥

---

हेत्वर्थसंहितं उपपत्तिप्रयोजनाभ्यांयुक्तं ॥ १ ॥

---

त्याह—**यदीति** । **शि०** ननुनावोपिदूरदेशंनेतव्याइत्यतआह—**यदीति** । अद्यतरिष्यति । तेननावोदूरं ननेतव्याइतिव्यञ्जितं ॥ ९ ॥ **शि०** तत्रमत्स्यः दैन्यनिवर्तकवायुमानोषधिविशेषः । तथाहि मदः दैन्यस्य सो नाशःतद्वान् अः वायुर्यस्यसः । "अःकृष्णश्शंकरोब्रह्माशक्रस्सोमोऽनिलोऽनलः" इतिमात्रिका । मांसं राजभोग्यवस्तुविशेषः । अस्यतत्वमनुपदमेववक्ष्यते । मधु पुष्परसः ॥ १० ॥ **शि०** मांसं राजभोग्यवस्तुविशेषश्चास्ति । एतत्स्वीकुर्वित्यर्थः । "मांसंस्यादामिषेक्लीबं" इतिमेदिनीकोशेनमांसशब्दस्यामिषार्थकत्वमवगतं । आमिषशब्दस्यभोग्यवस्तुपरत्वंतु "भोग्यवस्तुनिसंभोगेप्युत्कोचेपललेपिच" इतितत्कोशादेवबोध्यम् ॥ १७ ॥ इतिचतुरशीतितमस्सर्गः ॥ ८४ ॥

**स०** हेत्वर्थसंहितं हेतुर्लिङ्गवचनं तदर्थसहितमित्यर्थः ॥ १ ॥

**[ पा० ]** १ क. समायान्तं. २ ङ. छ. झ. ट. समयज्ञो. ३ ग. श्रीमान्गुहः. ४ ज. लब्ध्वाह्यनुज्ञां. ङ. छ. झ. ट. लब्ध्वानुज्ञांसंप्रहृष्टो. च. ञ. लब्ध्वानुज्ञांसंप्रविष्टो. ५ ग. श्चापि. घ. श्चहि. ६ क. ङ. च. छ. झ. ञ. ट. निवेदयामते. ७ क. ग. ङ. च. छ. झ. ञ. ट. सर्वं. ८ ङ. छ. ज. झ. दाशहृदे. ९ क. ख. ङ. च. छ. झ. ञ. ट. मूलफलं. १० ङ. छ. झ. ट. चैतन्निषादैः. ११ ङ. छ. झ. ट. स्वयमर्जितं. च. ञ. समुपार्जितं. १२ घ. छ. झ. आर्द्रंशुष्कंयथामांसं. च. ञ. आर्द्रंमांसंचसंशुष्कं. ङ. ट. आर्द्रंशुष्कंतथामांसं. क. आर्द्रंमांसंचसंशुष्कं. १३ ङ. छ. झ. ट. तथा. १४ च. ञ. ट. वसत्वेनां. झ. वत्स्यत्येनां. ख. वत्स्यतीह. १५ घ. ङ. छ. गमिष्यति.

ऊर्जितः खलु ते कामः कृतो मम गुरोः सखे ॥ यो मे त्वमीदृशीं से[1]नामेकोऽभ्यर्चितुमिच्छसि ॥२॥
[2]इत्युक्त्वा तु महातेजा गुहं वचनमु[3]त्तमम् ॥ अब्रवीद्भरतः श्रीमा[4]न्निषादाधिपतिं पुनः ॥ ३ ॥
कतरेण गमिष्यामि भरद्वाजाश्रमं [5]गुह ॥ गहनोऽयं भृशं देशो गङ्गानूपो दुरत्ययः ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ॥ अब्रवीत्प्राञ्जलि[6]र्वाक्यं गुहो गहनगोचरः ॥ ५ ॥
दाशास्त्वा[7]ऽनुगमिष्यन्ति [8]धन्विनः सुसमाहिताः ॥ अहं [9]त्वाऽनुगमिष्यामि राजपुत्र [10]महायशः ॥६॥
कच्चिन्नदुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ॥ इयं ते महती सेना शङ्कां जनयतीव मे ॥ ७ ॥
तमेवमभिभाषन्तमाकाश इव निर्मलः ॥ भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥ ८ ॥
मा भूत्स कालो यत्कष्टं न मां शङ्कि[11]तुमर्हसि ॥ राघवः स हि मे भ्राता ज्येष्ठः पितृ[12]समो मतः ॥९॥
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ॥ बुद्धिरन्या न ते [13]कार्या गुह सत्यं ब्रवीमि ते ॥१०॥
स तु संहृष्टव[14]दनः श्रुत्वा भरतभाषितम् ॥ पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः ॥ ११ ॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि जग[15]तीतले ॥ अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥ १२ ॥
शाश्वती खलु ते कीर्तिर्लोकाननुचरिष्यति ॥ यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥ १३ ॥
एवं संभाषमाणस्य गुहस्य भरतं तदा ॥ बभौ नष्टप्रभः सूर्यो रजनी चाभ्यवर्तत ॥ १४ ॥
संनिवेश्य स तां सेनां गुहेन [16]परितोषितः ॥ शत्रुघ्नेन [17]सह श्रीमाञ्शयनं [18]पुनरागतम् ॥ १५ ॥

स्वस्यरामविषयभक्तिंद्योतयितुं ममगुरोःसखेइत्युक्तं । यस्त्वमेकए[सा]दृशीमपरिच्छिन्नांसेनामभ्यर्चितुमिच्छसि तस्यते—र्जितः अभिवृद्धः कामः अर्चनामनोरथः कृतःखलु [श्रा]एव । तवादरणेनैववयमर्चिताइतिभावः ॥ २ ॥ म[हा]तेजाइतिगाम्भीर्यद्योतनं । उत्तममित्यनेनार्चनोद्योगमात्रेणतृप्तत्वकथनादवाप्तसमस्तकामत्वमुक्तं । श्रीमानिति तात्कालिकहर्षः ॥ ३ ॥ कतरेण केनमार्गेण । भृशंगहनः अत्यन्तदुष्प्रवेशः । अनूपोदेशः जलप्रायोदेशः । "जलप्रायमनूपंस्यात्" इत्यमरः ॥ ४ ॥ गहनंकाननं गोचरःसंचारप्रदेशोयस्यसः गहनगोचरः । "गहनंकाननंवनं" इत्यमरः ॥ ५ ॥ अहमनुगमिष्यामि अतोनमार्गविषयविचारःकर्तव्यइतिभावः ॥ ६ ॥ नदुष्टः अदुष्टः । "सुप्सुपा" इतिसमासः । रामस्य रामविषये अदुष्टोव्रजसिकच्चित् दुष्टोन व्रजसिकच्चिदितिवासंबन्धः । अक्लिष्टकर्मणइत्यनेन निरपायत्वमुक्तं । शङ्काप्रसक्तौहेतुमाह—इयमिति । अनुकूलोव्रजसिचेत् सेनाव्यर्थेतिभावः । इवशब्दः शङ्कायाईषत्त्वंद्योतयति ॥ ७ ॥ आकाशइवनिर्मलइत्यनेन तच्छङ्कितदोषस्यतत्रप्रसक्तिरेवनास्तीत्युच्यते । आकाशेहिपङ्कानुलेपेसतत्रनप्रसज्जति किंतुस्वहस्तएव मलिनोभवति । श्लक्ष्णया स्वस्मिन्दोषालेपेप्यक्रोधया ॥ ८ ॥ यत् यस्मिन्काले कष्टं त्वयाआशङ्कितं कष्टंजायते सकालोमाभूत् । कलिकालेहिताद्दशप्रसङ्गः अतो मांशङ्कितुंनार्हसि । तत्रहेतुः—राघवइत्यादि । नतेकार्या त्वयानकार्या ॥ ९—१० ॥ संहृष्टवदनः प्रसन्नवदनइत्यर्थः । हर्षितः संजातहर्षः ॥ ११—१२ ॥ कृच्छ्रगतं व्यसनगतं । प्रत्यानयितुं प्रत्यानेतुं । इडार्षः ॥ १३ ॥ संभाषमाणस्य संभाषमाणेसति । नष्टप्रभः अदृष्टप्रभः ॥ १४ ॥ शयनंपुनरागमदिति अत्रपुनःशब्देनगुहागमनात्पूर्वंश्रान्तःशयनेस्थितइतिगम्यते ।

**ति०** कामः कामनाविषयोमत्सत्कारः । ममकृतएवखलु । तवश्रद्धयैवसर्वंकृतमित्यर्थः ॥ २ ॥ **ति०** पन्थानंदर्शयन् गन्तव्यपथिसंमुखंहस्तंकुर्वन्पुनःपुनरब्रवीदित्यन्वयः ॥ ३ ॥ **ति०** आकाशइवेत्युपमयात्रैकालिकमलसंबन्धाभावोदर्शितः ॥ ८ ॥ **ति०** मे मयि । नतेकार्येतिपाठान्तरम् ॥ १० ॥ **ति०** गुहेनपरिरक्षितइतिपाठे परिहृतचोरबाधइत्यर्थः ॥ १५ ॥

[ **पा०** ] १ ङ. झ. ट. मभ्यर्चयितुं. २ ङ. छ. झ. ट. इत्युक्त्वास. ३ ख. झ. मर्थवत्. ४ न्पन्थानंदर्शयन्पुनः. ५ ङ. छ. झ. ट. पथा. ६ ङ. छ. झ. ट. भूला. ७ ङ. छ. झ. ञ. ट. स्त्वनु. ८ ङ. छ. झ. ट. देशज्ञाः. ९ ग. ङ. छ. झ. ट. चानु. १० ङ. छ. झ. ञ. ट. महाबल. ११ ज. मर्हति. १२ क. ङ. च. छ. ञ. ट. समोमम. ख. समःसखे. १३ ङ. छ. झ. ट. मेकार्या. १४ ग. हृदयः. १५ घ. जगतीपते. १६ क. परिरक्षितः. घ. परिपालितां. ख. परिभाषितः. १७ ख. ङ. च. छ. झ. ञ. ट. सम्. १८ क. च. ञ. समुपागमत्.

रामचिन्तामयः शोको भरतस्य महात्मनः ॥ उपस्थितो ह्यनर्हस्य धर्मप्रेक्षस्य तादृशः ॥ १६ ॥
अन्तर्दाहेन दहनः सन्तापयति राघवम् ॥ वनदाहाभिसन्तप्तं गूढोऽग्निरिव पादपम् ॥ १७ ॥
प्रसृतः सर्वगात्रेभ्यः स्वेदं शोकाग्निसंभवम् ॥ यथा सूर्यांशुसंतप्तो हिमवान्प्रसृतो हिमम् ॥ १८ ॥
ध्याननिर्दरशैलेन विनिश्वसितधातुना ॥ दैन्यपादपसङ्घेन शोकायासाधिशृङ्गिणा ॥ १९ ॥
प्रमोहानन्तसत्त्वेन संतापौषधिवेणुना ॥ आक्रान्तो दुःखशैलेन महता कैकयीसुतः ॥ २० ॥
विनिःश्वसन्वै भृशदुर्मनास्ततः प्रमूढसंज्ञः परमापदं गतः ॥
शमं न लेभे हृदयज्वरार्दितो नरर्षभोऽयूथगतो यथर्षभः ॥ २१ ॥
गुहेन सार्धं भरतः समागतो महानुभावः सजनः समाहितः ॥
सुदुर्मनास्तं भरतं तदा पुनर्गुहः समाश्वासयदग्रजं प्रति ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

समुपागमदितिवापाठः । पुनःपरितोषितइतिवासंबन्धः वाक्यालंकारोवा ॥ १५ ॥ अनर्हस्य गर्भैश्वर्येणशोकानर्हस्य । महात्मन महाधीरस्यापि । धर्मप्रेक्षस्य शोकमूलपापशून्यस्य । तादृशः अवाङ्मनसगोचरः । भ्रातृभक्तस्येतिभरतविशेषणंवा ॥ १६ ॥ दहनः शोकाग्निः । अन्तर्दाहेन चिन्ताग्निना । तप्तंराघवं भरतं । संतापयति सम्यक्कल्पयतिस्म । वनदाहाभिसंतप्तं वनदाहेनपर्यन्तवनाग्नेरूष्मणासंतप्तंशुष्कं । पादपं गूढोग्निरिव कोटराग्निरिव । अन्तरारभ्यबहिरदहत् । अन्तस्थोप्यात्मादह्यते अदाह्यत्वंकेवलाग्नेर्हि ॥ १७ ॥ शोकाग्निसंभवंस्वेदंप्रसृतः भरतइतिशेषः । स्वेदःशोकाग्निसंभवइतिपाठस्तु नदृष्टान्तानुरूपः । स्वेदंप्रसृतः हिमंप्रसृत इत्यत्रगत्यर्थत्वात् कर्तरिक्तः ॥ १८ ॥ भरतस्यदुःखं शैलत्वेनरूपयति—ध्यानेत्यादिना । ध्याननिर्दरशैलेन दरोगर्तः तस्मान्निर्गतंनिर्दरं शिलानांसमूहःशैलं रामविषयध्यानमेवनिर्दरशैलंयस्मिन् तेन । ध्यानस्यनिरन्तरत्वेनदरीविदीर्णशिलापङ्क्तिसाम्यं । विविधंनिश्वसितंविनिश्वसितं तदेवधातुर्यस्मिन् । विविधत्वसाम्यात् । दैन्यं करणानांस्वस्वविषयप्रवृत्तिवैमुख्यं तस्यपादपसाम्यमबोधरूपतया । शोकायासाधिशृङ्गिणा शोकादय एव शृङ्गिणः कृष्णसारादयोयस्मिन् तेन । यद्वा शोकायासाधिभिः शृङ्गिणा शृङ्गवता । दृढत्वसाम्यात् । प्रमोहानन्तसत्वेन प्रमोहाएव अनन्तानिसत्वानिजन्तवोयस्मिन् तेन । "द्रव्यासुव्यवसायेषुसत्वमस्त्रीतुजन्तुषु" इत्यमरः । प्राणभयशङ्काकरत्वात् । संतापौषधिवेणुना संतापाएवओषधयोवेणवश्चयस्मिन् तेन । ओषधिवेणुसाम्यंदुष्प्रवेशत्वात् । आक्रान्तः अभूदिति शेषः । महता अतिगुरुणा । मज्जतेति मज्जता अवयवेषुप्रविशता ॥ १९—२० ॥ निःश्वसन् चिन्तातिरेकेणश्वासंकुर्वन् । भृशदुर्मनाः अत्यन्तकलुषहृदयः । प्रमूढानष्टासंज्ञायस्यसः प्रमूढसंज्ञः । अतएव परमापदं मरणायार्थसंपत्तिरूपांमूर्छां गतः । शमं ज्वरशान्तिं । अयूथगतः यूथाद्भ्रष्टइत्यर्थः । यूथहृतइतिपाठे हृतयूथइत्यर्थः ॥ २१ ॥ अथगुहःसमागतइत्याह—गुहेनेति । सजनः सपरिवारः । समाहितः एकाग्रचित्तः । भरतः गुहेनसार्धं सह समागतःसंगतः । अथगुहः सुदुर्मनाः भरतक्लेशदर्शनेनभरतादपिभृशंदुर्मनाःसन् । भरतं अग्रजंप्रति अग्रजंलक्षीकृत्य । समाश्वासयत् ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चाशीतितमः सर्गः ॥ ८५ ॥

**शि॰** वनदाहाग्निनावनदाहकवह्निनासंतप्तंसंपादपं गूढः कोटरादौकेनचित्प्रक्षिप्तः । अत्रवनदाहकाग्निस्थानापन्नोदशरथशोकोबोध्यः ॥ १७ ॥ **ति॰** रामविषयकध्यानान्येव निर्दरशैलाःविदारणरहितशिलासमूहायस्मिन् । निश्शेषतोदीर्णशिलासमूहायस्मिन्नितिवा । विनिश्वसितमेवगैरिकादिधातुर्यस्मिन् । श्वाससंपर्केणभूषणानामन्यवर्णजननात् ॥ १९ ॥ **ति॰** मज्जता मग्नंकुर्वता सकरणग्राममात्मानमधोनयता ॥ २० ॥ इतिपञ्चाशीतितमस्सर्गः ॥ ८५ ॥

**[ पा॰ ]** १ क. ङ. च. छ. झ. ञ. ट. दाहाग्नि. घ. दाहादि. २ घ. ज. गुहाग्निरिव. ३ छ. ट. प्रस्रुतः. ग. घ. प्रसूतः. ४ क. ङ. ज. स्वेदःशोकाग्निसंभवः. ५ ङ. च. छ. झ. ञ. ट. सूर्याग्नि. ६ च. छ. ञ. ट. प्रस्रुतो. ७ क. ख. च—ञ. मज्जता. ८ ग. दुःखितस्ततः. ९ ख. ग—छ. ञ. ट. नरर्षभोयूथहतो. १० छ. झ. ट. पुनश्शनैः.

## षडशीतितमः सर्गः ॥ ८६ ॥

गुहेनभरतंप्रतिनिशिरामनिद्रासमयेजागरितेनसौमित्रिणासहस्वस्यपूर्वंप्रवृत्तस्यसंवादस्यानुवादः ॥ १ ॥ तथातंप्रतिरामलक्ष्मणयोःप्रभातेजटाधारणपूर्वकंगङ्गातरणेनभरद्वाजाश्रमगमनस्यनिवेदनम् ॥ २ ॥

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः ॥ भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १ ॥
तं जाग्रतं गुणैर्युक्तं शरचापासिधारिणम् ॥ भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रवम् ॥ २ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ॥ प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन ॥ ३ ॥
उचितोऽयं जनः सर्वो दुःखानां त्वं सुखोचितः ॥ धर्मात्मंस्तस्य गुप्त्यर्थं जागरिष्यामहे वयम् ॥४॥
न हि रामात्प्रियतरो ममास्ति भुवि कश्चन ॥ मोत्सुको भूर्ब्रवीम्येतदप्यसत्यं तवाग्रतः ॥ ५ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन्सुमहद्यशः ॥ धर्मावाप्तिं च विपुलामर्थावाप्तिं च केवलाम् ॥ ६ ॥
सोहं प्रियसखं रामं शयानं सह सीतया ॥ रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिः सह ॥ ७ ॥
न हि मेऽविदितं किंचिद्वनेऽस्मिंश्चरतः सदा ॥ चतुरङ्गं ह्यपि बलं प्रसहेम वयं युधि ॥ ८ ॥
एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना ॥ अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ ९ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया॥ शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥१०॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि ॥ तं पश्य गुह संविष्टं तृणेषु सह सीतया ॥ ११ ॥
महता तपसा लब्धो विविधैश्च परिश्रमैः ॥ एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ १२ ॥

अथ आश्वासनानन्तरं । सद्भावं ज्येष्ठानुवर्तनरूपंसमीचीनस्वभावं । आचचक्षइत्यादि भगवद्विषयोपदेशेनूतनपुरातनविभागोनास्ति देशिकावक्तारःसादराः श्रोतारइत्याह । आङीषदर्थे । स्ववागिन्द्रियविषयमेवावदत् नतुकात्स्न्र्येन । अथ भरतस्वभावज्ञानानन्तरं । सद्भावं बाल्यात्प्रभृतिसुस्निग्धइतिसत्ताव्याप्तंस्वभावं । लक्ष्मणस्यमहात्मनः । पयोधिंपाणिनापरिच्छेत्तुमुद्युक्तः भरतायाप्रमेयायएतादृशस्योपदेष्टेतिनास्ति । गुहोगहनगोचरः वन्यवृक्षादितारतम्यमात्रज्ञः । एतादृशस्वभावमविज्ञातवान् । यद्वा रामविरहेणकुत्रचित्कुञ्जेस्थितः तद्देशीयागमनेसमुत्थायनिर्गतः ॥ १ ॥ भरतस्यरामविषयस्नेहमभिवर्धयितुंलक्ष्मणस्यज्येष्ठानुवर्तनरूपंपूर्ववृत्तान्तमाह—तंजाग्रतमित्यादिना । भ्रातृगुप्त्यर्थं अत्यन्तंजाग्रतं शरचापासिधारिणं एकहस्तेशरयुक्तचापं अपरहस्तेअसिंचदधानमित्यर्थः । गुणैः भ्रातृभक्त्यादिगुणैः युक्तं ॥ २—३ ॥ तस्य रामस्य ॥ ४ ॥ मोत्सुकोभूः अस्यांरात्रौरामरक्षणौत्सुक्यंमाकृथाइत्यर्थः । एतद्रक्षणंप्रति तवाग्रतः असत्यंब्रवीम्यपि ब्रवीमिकिं नब्रवीम्येवेत्यर्थः ॥ ५॥ स्वस्यैहिकमामुष्मिकंचफलंरामायत्तमित्याह—अस्येत्यादिना । धर्मावाप्तिं आमुष्मिकफलसाधनसिद्धिं । केवलां न्यायप्राप्तामितियावत् ॥ ६—७ ॥ मेविदितमित्यत्र अविदितमितिपदच्छेदः ॥ ८—११ ॥ तपसा अनशनेन । परिश्रमैः यज्ञादिभिरित्यर्थः । एकः मुख्यः । "एकेमुख्यान्यकेवलाः"

शि० गुणैः सेवानुकूलधर्मैः ॥ २ ॥ शि० इयमित्यारभ्य परिदेवयमानस्येत्येतत्पर्यन्तंश्लोकानव्याख्यायन्ते। एकपञ्चाशत्तमेसर्गेगुहलक्ष्मणसंवादेप्रायएतदानुपूर्वीकत्वेनैवपठितत्वादितितद्व्याख्यानेनैवैषांव्याख्यानंबोध्यं ॥ ३ ॥ तनि० केवलां प्रतिबन्धरहितां। धर्मावाप्तिं फलाभिसन्धिरहितांमोक्षपर्यन्तां । अर्थावाप्तिं स्वर्गादिपुरुषार्थप्राप्तिं । अस्मिँल्लोकेसुमहद्यशः ऐहिकपुरुषार्थं महाभागवतत्वप्रयुक्तप्रसिद्धिंवा । अस्य रामस्यप्रसादात्। आशंसे प्रार्थये॥ ६ ॥ स० अनुनीताः सदुक्तिभिर्निरुत्तरतयाकृताः ॥ ९ ॥ स० सदृशलक्षणः दशरथेविद्यमानास्सर्वेगुणाःरामेवर्तन्तइत्येतावतासादृश्यं । पितृगौरवादेवमुक्तिः । एतादृशएकएवलब्धः ॥ १२ ॥

[ पा० ] १ ङ—झ. ट. वरचापेषु. २ ख. ग. शुभा. ३ ख. धर्मात्मंस्तव. घ. ज. धर्मार्थंतव. ४ क. ब्रवीम्येतदहंसत्यं सत्येनैवचतेशपे. ५ ज. ट. दप्यसत्यं. ६ ज. तस्य. ७ क. ख. ङ. च. छ. झ. ञ. ट. मर्थकामौचकेवलं. ८ ग. पुष्कलां. ९ ङ. स्वभावविहितं. १२ छ. झ. ञ. ट. जीवितानि. वा. ङ. जीवनानि. १३ ख. च. सुखानिच. १४ क. ञ. दशरथस्येष्टः.

अस्मिन्[1]प्रव्राजिते राजा न चिरं वर्तयिष्यति ॥ विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ॥ नि[2]र्घोषोपरतं नूनमद्य राजनिवेशनम् ॥ १४ ॥
कौसल्या चैव राजा च तथैव जननी मम ॥ नाशंसे यदि [3]जीवेयुः सर्वे ते श[4]र्वरीमिमाम् ॥ १५ ॥
जीवेद[5]पि च मे माता शत्रुघ्नस्यान्ववेक्षया ॥ दुःखिता या तु कौसल्या वीरसूर्विनशिष्यति ॥ १६ ॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् ॥ राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन्काले ह्युपस्थिते ॥ प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ १८ ॥
रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ॥ हर्म्यप्रासादसंपन्नां सर्वरत्नविभूषिताम् ॥ १९ ॥
गजाश्वरथसंबाधां तूर्यनादविनादिताम् ॥ सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २० ॥
आरामोद्यान[6]संपूर्णां समाजोत्सवशालिनीम् ॥ सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् ॥ निवृत्ते समये ह्य[7]स्मिन्सुखिताः प्रविशेमहि ॥ २२ ॥
परिदेवयमानस्य त[8]स्यैवं सुमहात्मनः ॥ तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २३ ॥
प्रभाते विमले सूर्ये कारयित्वा जटा उभौ ॥ अ[9]स्मिन्भागीरथीतीरे सुखं संतारितौ मया ॥ २४ ॥
जटाधरौ तौ द्रुमचीरवाससौ [10]महाबलौ कुञ्जरयूथपोपमौ ॥
[11]वरेषुचापासिधरौ परंतपौ [12]व्यवेक्षमाणौ सह सीतया गतौ ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

---

इत्यमरः ॥ १२ ॥ प्रव्राजनकालिकदशरथदशांस्मरन्नाह—अस्मिन्निति । वर्तयिष्यति जीविष्यति ॥१३॥ सुमहानादंविनद्य कृत्वेत्यर्थः । अद्य स्त्रियःउपरताइति मन्येइत्युपस्कार्यं । निवेशनं निवेशनंच ॥१४॥ सर्वेते जीवेयुरितिनाशंसे यदिजीवेयुरिमांशर्वरीमेवेतिसंबन्धः ॥ १५ ॥ शत्रुघ्नस्यान्ववेक्षया शत्रुघ्नसंबन्ध्यवेक्षणेच्छया । वीरसूः कौसल्या दुःखितेतियत् अतोविनशिष्यति । दुःखितायात्वितिपाठःसमीचीनः । तत्पक्षे यादुःखितावीरसूःकौसल्या सातु विनशिष्यत्येवेत्यर्थः ॥ १६ ॥ अतिक्रान्तमतिक्रान्तं सर्वप्रयोजनमतीत्येत्यर्थः ॥ १७ ॥ वृत्तं अतीतं मृतमितियावत् ॥ १८ ॥ हर्म्यप्रासादसंपन्नां हर्म्याणिधनिनांगृहाणि प्रासादाः देवानांराज्ञांचगृहाणि तैःसंपन्नां समृद्धां । सर्वरत्नविभूषितां सर्वैःश्रेष्ठवस्तुभिरलंकृतां । तूर्यनादविनादितां तूर्यस्यनृत्यगीतादिकस्यनादेनविनादितां हर्म्यादिषुकृतप्रतिध्वनिमित्यर्थः । सर्वकल्याणैः सर्वमङ्गलैः संपूर्णां सर्वोत्सवैःसंपूर्णांवा । आरामोद्यानसंपूर्णां आरामाः उपवनानि उद्यानानिराज्ञामसाधारणवनानि तैःसमृद्धां । समाजोत्सवशालिनीं उत्सवसमूहशालिनीं ॥ १९—२१ ॥ सत्यप्रतिज्ञेन तीर्णवनवासप्रतिज्ञेनरामेण । प्रविशेमहि पुरीमितिशेषः ॥ २२ ॥ तिष्ठतोराजपुत्रस्य राजपुत्रसंबन्धिनी शर्वरीअत्यवर्तत निरन्तरपरिदेवनेनरात्रिंयापितवानित्यर्थः ॥२३—२४ ॥ व्यवेक्षमाणौ सर्वतोदत्तावधानौ ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

---

**स०** तस्मिन्स्वर्गतेइतिद्वितीयार्धेपूरणीयं ॥ १३ ॥ **स०** समाजोनामसवणिजांमेलनं तद्रूपोयोऽयमुत्सवस्तेनशालतइतितथा । तां ॥ २१ ॥ **स०** व्यपेक्षमाणौ वन्यंविनाकस्मिन्नपिवस्तुनिअपेक्षारहितौ ॥ २५ ॥ इतिषडशीतितमस्सर्गः ॥ ८६ ॥

**[ पा० ]** १ ख. ग. छ. ज. प्रव्रजिते. २ ख. ङ. छ. झ. ट. निर्घोषोविरतोनूनमद्यराजनिवेशने. घ. निर्घोषोपरतंतात मन्येरामनिवेशनं. ३ क. ख. ङ. च. छ. झ. ञ. ट. तेसर्वेजीवेयुः. ४ ग. घ. ज. रजनीं. ५ क. दपिहि. ६ क. ग. ङ. च. ञ. संपन्नां. ७ ग. तस्मिन्. ८ छ. झ. ट. तस्यैवंहि. ग. ज. तस्यैवहि. ९ ग. तस्मिन्. १० ग. महारथौ. ११ ङ. च. छ. झ. ञ. वरेषुधीचापधरौ. १२ ग—ट. व्यपेक्षमाणौ.

## सप्ताशीतितमः सर्गः ॥ ८७ ॥

भरतेनगुहमुखाद्रामलक्ष्मणयोर्जटाधारणश्रवणाच्छोकेनमोहाद्भूमौनिपतनम् ॥ १ ॥ तथास्वशोकस्यरामादिविपन्मूलकत्वशङ्किनींकौसल्यांप्रतितत्त्वनिवेदनेनसमाश्वासनपूर्वकंगुहंप्रतिरामादिभोजनशयनादिवृत्तान्तनिवेदनचोदना ॥ २ ॥ गुहेनतंप्रति सभार्यस्यरामस्यलक्ष्मणकल्पितकुशमयशयनीयशयनादिनिवेदनपूर्वकंतद्रक्षणायलक्ष्मणेनसहस्वस्यजागरणादिनिवेदनम् ॥ ३ ॥

गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियम् ॥ ध्यानं जगाम तत्रैव यत्र तच्छ्रुतमप्रियम् ॥ १ ॥
सुकुमारो महासत्त्वः सिंहस्कन्धो महाभुजः ॥ पुण्डरीकविशालाक्षस्तरुणः प्रियदर्शनः ॥ २ ॥
प्रत्याश्वस्य मुहूर्तं तु कालं परमदुर्मनाः ॥ पपात सहसा तोत्रैर्हृतिविद्ध इव द्विपः ॥ ३ ॥
[भरतं मूर्च्छितं दृष्ट्वा विवर्णवदनो गुहः ॥ बभूव व्यथितस्तत्र भूमिकंपे यथा द्रुमः] ॥ ४ ॥
तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरस्थितः ॥ परिष्वज्य रुरोदोच्चैर्विसंज्ञः शोककर्शितः ॥ ५ ॥
ततः सर्वाः समापेतुर्मातरो भरतस्य ताः ॥ उपवासकृशा दीना भर्तुर्व्यसनकर्शिताः ॥ ६ ॥
ताश्च तं पतितं भूमौ रुदन्त्यः पर्यवारयन् ॥ कौसल्या त्वनुसृत्यैनं दुर्मनाः परिषस्वजे ॥ ७ ॥
वत्सला स्वं यथा वत्समुपगूह्य तपस्विनी ॥ परिपप्रच्छ भरतं रुदन्ती शोकलालसा ॥ ८ ॥
पुत्रव्याधिर्न ते कच्चिच्छरीरं परिबाधते ॥ अद्य राजकुलस्यास्य त्वदधीनं च जीवितम् ॥ ९ ॥
त्वां दृष्ट्वा पुत्र जीवामि रामे सभ्रातृके गते ॥ वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः ॥ १० ॥
कच्चिन्नु लक्ष्मणे पुत्र श्रुतं ते किञ्चिदप्रियम् ॥ पुत्रे वा ह्येकपुत्रायाः सहभार्ये वनंगते ॥ ११ ॥
स मुहूर्तं समाश्वस्य रुदन्नेव महायशाः ॥ कौसल्यां परिसान्त्व्येदं गुहं वचनमब्रवीत् ॥ १२ ॥
भ्राता मे क्वावसद्रात्रौ क्व सीता क्व च लक्ष्मणः ॥ अस्वपच्छयने कस्मिन्किं भुक्त्वा गुह शंस मे ॥ १३ ॥
सोब्रवीद्भरतं हृष्टो निषादाधिपतिर्गुहः ॥ यद्विधं प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥ १४ ॥

यत्रतत्रैव यत्रक्षणे अप्रियंश्रुतंतत्रैवेत्यर्थः । यद्वा यत्रविषये अप्रियंश्रुतं तत्रैवध्यानंजगाम स्वाभिलषितकार्यसंकटंजातमितिचिन्तापारवश्यंप्राप्तइत्यर्थः ॥१॥ सुकुमारइत्यादिश्लोकद्वयमेकान्वयं । प्रत्याश्वस्य मुहूर्तकालंपरमदुर्मनाः सन् सहसापपात । ससादेतिवापाठः । सुकुमारइत्यादिना तदवस्थानर्हत्वमुच्यते ॥ २—४ ॥ अनन्तरस्थितः निरन्तरंसमीपे स्थितः ॥ ५—६ ॥ अनुसृत्य समीपंप्राप्य ॥ ७ ॥ उपगूह्य परिष्वज्य ॥ ८ ॥ नहिभरतस्यव्याधिश्चातुर्थिकः अपितुरामविरहएव । रामविरहः तेशरीरंबाधते कच्चिदित्यर्थः । अद्येति रामोवनंगतः चक्रवर्तीतुसंस्थितः अतस्त्वमेवेदानीमस्माकंरक्षकइतिनार्थः । किंतु रामोभवतोमुखवैवर्ण्यंदृष्ट्वानपुनरनागतोभवेत् अवश्यमागमिष्यतीत्येतदवेक्ष्यवयंजीवामः । भवान्नास्तीतिश्रुतंचेत् कइमांदिशमवलोकयेत् ॥ ९—१० ॥ लक्ष्मणेविषये ते त्वया । एकपुत्रायाः ममेतिशेषः ॥ ११ ॥ परिसान्त्व्य त्वच्छङ्कितं किमपिनभवेदिति वदन् परिसान्त्व्येत्यर्थः ॥ १२—१३ ॥ गुहः हृष्टः रामवृत्तान्तकीर्तनस्यावकाशोलब्धइतिसंजातहर्षःसन् । रामे यद्विधं यादृशमुपचारादिकं । प्रतिपेदे अकरोदिति

**शि०** तपस्विनी अतिविचारशीला ॥ ८ ॥ **स०** वृत्ते सद्वृत्ते । राज्ञिगते ॥ १० ॥ **ति०** भ्रममूर्च्छादेःकारणान्तरंपृच्छति—**कच्चिदिति** । अप्रियं प्राणात्ययरूपं ॥ ११ ॥ **ति०** मुहूर्तविसंज्ञःसन्पश्चात्समाश्वस्येत्यर्थः । परिसान्त्व्य त्वच्छङ्कितंकिमपिनास्ति किंतुतयोर्जटाधारणश्रवणजदुःखेनमूर्च्छितोस्मीत्युक्त्वा ॥ १२ ॥ **स०** अस्वपदिति । लक्ष्मणंविनाबोध्यं ॥ १३ ॥ **शि०** प्रियहिते

**[ पा० ]** १ ग. महाद्युतिः. २ क. ङ. झ. ट. ससाद. ३ क—च. ज—ट. हृदिविद्ध. ४ ङ. छ. ज. झ. ट. अयंश्लोकोधिकः. ५ क. नान्तरस्थितः. ६ घ. समासेदुः. ७ क. ख. ग. ङ. च. छ. झ. भर्तृव्यसन. ८ ख. मुपगृह्य. ९ क. च. ञ. मनस्विनी. १० क. झ. रुदती. ११ ङ. च. छ. झ. ञ. ट. प्रतिबाधते. १२ क. ख. ङ. च. छ. झ. ञ. ट. अस्यराजकुलस्याद्य. १३ क—च. ज. झ. ट. हि. १४ प्रव्राजिते. १५ घ—ट. कच्चिन्न. १६ क. ग. च. ञ. वाप्येक. १७ क—घ. समुहूर्तात्. १८ क. ख. घ. ङ—ट. द्रात्रिं.

अन्नमुच्चावचं [1]भक्षाः [2]फलानि विविधानि च ॥ रामायाभ्यवहारार्थं [3]बहु चोपहृतं मया ॥ १५ ॥
तत्सर्वं [4]प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः ॥ [5]न तु तत्प्रत्यगृह्णात्स क्षत्रधर्ममनुस्मरन् ॥ १६ ॥
न ह्यस्माभिः प्रतिग्राह्यं सखे [6]देयं तु सर्वदा ॥ इति तेन वयं [7]राजन्ननुनीता महात्मना ॥ १७ ॥
लक्ष्मणेन [8]समानीतं पीत्वा[9] वारि महायशाः ॥ [10]औपवास्यं [11]तदाऽकार्षीद्राघवः सह सीतया ॥ १८ ॥
[12]ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत्तदा ॥ वाग्यतास्ते त्रयः [13]सन्ध्यां समुपासत संहिताः ॥ १९ ॥
सौमित्रिस्तु ततः पश्चादकरोत्[14]स्वास्तरं शुभम् ॥ स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ २० ॥

यावत् । तदब्रवीत् चकारेणरामकृतंसमुच्चीयते ॥१४॥ उच्चावचं नानाविधमित्यर्थः । भक्षाः भक्षणीयान्यपूपादीनि । अभ्यवहारार्थं भोजनार्थं । बहुचेति अन्यच्चबहु चोष्यलेह्यादिकमुपाहृतं ॥ १५ ॥ रामः तन्नप्रत्यगृह्णात् किन्तु तत्सर्वंप्रत्यनुज्ञासीत् प्रत्यन्वज्ञासीत् पुनर्नीयतामित्यनुज्ञातवान् । क्षत्रधर्मं दानमेवक्षत्रधर्मः नत्वादानमिति । अत्रहीनजातिपरिग्रहत्वात्तत्प्रत्याख्यानं ऋषिभ्यस्तुस्वीकरिष्यतीत्याहुः ॥ १६ ॥ प्रत्यनुज्ञानेहेतुमाह—नेत्यादिना । इत्यनुनीतावयमित्यनेन स्वाङ्घ्रिभक्ताग्रेसरगुहसमर्पितफलादेर्भक्तिपूतत्वेन शबरीविदुरादिन्यायेन परमभागवततयास्वीकार्यत्वेपि स्वप्रियतमपितृमातृप्रमुखबहुजनविश्लेषदुःखप्राग्भारानुभवजनितवैमनस्येन पुण्यनदीतीरे उपवासचिकीर्षयाच गुहसमर्पितंनप्रतिजग्राहरामइतिच गुहेनापिविदितमितिगम्यते ॥ १७ ॥ औपवास्यं उपवासं । स्वार्थेष्यञ् ॥ १८ ॥ जलशेषेण रामपीतजलशेषेण । अकरोत् पानमितिशेषः । वाग्यताः नियतवाचः । सीतायाअपिसंध्यायांध्यानजपादिकमस्त्येव । संहिताः समाहिताः । ननुपूर्वंपुरोवादे "ततश्रीरोत्तरासङ्गः संध्यामन्वास्यपश्चिमात् । जलमेवाददेभोज्यंलक्ष्मणेनाहृतंस्वयं" इत्युक्तं । कथमत्रानुवादे प्रथमंजलादानंपश्चात्संध्योपासनंचोच्यते । सत्यं । तथैवक्रमः इहतु गुहानीतान्नानङ्गीकारे किंभुक्तवान्रामइत्याकाङ्क्षायां लक्ष्मणेनयद्वार्यानीतंतत्पीतमितिप्रसङ्गसंगत्या जलपानंप्रथममुक्त्वा अथसंध्योपासनमुक्तमितिनदोषः ॥ १९ ॥ ततःपश्चात् वारिपानानन्तरं । स्वयंबर्हींषि कुशान् । "बर्हिर्नाग्नौननाकुशे" इति वैजयन्ती । क्षिप्रमानीय राघवकारणात् राघवनिमित्तं । शुभं पवित्रं । स्वास्तरं सुष्ठुआस्तीर्णं शयनमि-

प्रियःस्वविषयकप्रीतिमान् । हितःस्वप्रीतिविषयीभूतः । सएवसइतिकर्मधारयः । **ति०** हृष्टः लक्ष्मणवद्भरतस्यापिपूर्णभ्रातृभक्तिदर्शनेनतुष्टः ॥ १४ ॥ **स०** प्रत्यनुज्ञासीत् दृष्टयास्वीकृत्यमह्यंदत्तवान् । क्षत्रधर्मं वन्येनैववनवासंकरिष्यइतिप्रतिज्ञापालनरूपमप्रतिग्रहरूपंवा । प्रथमपक्षे उत्तरश्लोकेस्वाभिप्रेतंनिगूह्यप्रकारान्तरेणरामेणपरिहारःकृतइतिध्येयम् । अतएवानुनीताइत्यत्रासन्धिः । **शि०** क्षत्रधर्मं क्षतः यमदूतकर्तृकहिंसनात् त्रायतेस्वसंसर्गिजनंरक्षतीतिक्षत्रं भागीरथीतीरं तत्रयोधर्मः अन्यदीयवस्तुग्रहणान्निवृत्तिस्तं । किंचक्षत्राणां उपदेशद्वारासंसारदुःखाद्रक्षकाणांमनुप्रभृतीनामुक्तोयोधर्मःभागीरथीतीरेअन्यदीयवस्तुग्रहणान्निवृत्तिस्तमनुस्मरन्बोधयन्सन् । क्षत्रधर्मश्चप्रतिग्रहरूपमितिभट्टाद्युक्तिस्तुचिन्त्या । शबर्यादिफलानामग्रहणापत्तेः । भरद्वाजाश्रमस्यतुतदानीमपिप्रवाहादूरवर्तित्वान्नतदीयवस्तुनोनिषेधविषयतेतिदिक् ॥ १६ ॥ **ति०** नहीति । नन्वेवंभरद्वाजादिदत्ताङ्गीकारःकथमितिचेन्न । मधुपर्कादिनाराजपूजायाब्राह्मणंप्रतिविधानेनतद्दत्ताङ्गीकारस्यस्वाभ्युदयफलकत्वेनचतस्ययुक्तत्वात् । गुहस्यनिषादत्वेनराजपूजानधिकारात् । अस्वदेश्यत्वेनकरग्रहणायोग्यत्वाच्चतदीयानङ्गीकारइतिनदोषः । यद्यपिगुहस्यतत्वज्ञत्वेनास्त्येवभगवत्पूजाधिकारः तथापि व्रतस्थत्वात्तदभोजनमितितत्वम् ॥ १७ ॥ **ती०** औपवास्यं उपवासं । औपवस्तमितिपाठेप्ययमेवार्थः । **शि०** उपवासं तीर्थविधिप्रयुक्तभोजनाभावमेवाकार्षीत् ॥ १८ ॥ **ति०** त्रयः सुमन्त्रेण । संहिताः समाहितचित्ताः । **स०** त्रयः सीतारामलक्ष्मणाः । सन्ध्यां सन्धौक्रियमाणां । उत्तमस्त्रीत्वाद्वा नानुपपत्तिः । अतएवसंहिताइत्युपपद्यते ॥ १९ ॥

[ पा० ] १ घ. भक्ष्यं. २ ङ. छ. ट. फलमूलानिचैवहि. ३ घ. ङ. छ. ज. झ. ट. बहुशोपहृतं. ४ क. च. ञ. प्रत्यनुज्ञाप्य. ५ क. ख. ग. च. छ. झ. ञ. ठ. नहि. ६ च. ञ. देयंहि. ७ ङ. छ. झ. ट. सर्वेअनुनीता. ८ ग. ङ. च. छ. झ. ञ. ट. सदानीतं. ९ ङ. छ. झ. ट. पीतंवारिमहात्मना. १० ट. उपवासं. ११ क. तथा. १२ क. ख. ग. च. ञ. ततस्तज्जल. ङ. ततस्तुपीत. १३ ङ. छ. झ. ञ. संध्यांसमुपासन्त. क. सन्ध्यामुपासतसमाहिताः. १४ क. दास्तरं.

तस्मिन्समाविशद्रामः स्वास्तरे सह सीतया ॥ प्रक्षाल्य च तयोः पादावपचक्राम लक्ष्मणः ॥ २१ ॥
एतत्तदिङ्गुदीमूलमिदमेव च तत्तृणम् ॥ यस्मिन्रामश्च सीता च रात्रिं तां शयितावुभौ ॥ २२ ॥
नियम्य पृष्ठे तु तलाङ्गुलित्रवाञ्शरैः सुपूर्णाविषुधी परंतपः ॥
महद्धनुः सज्यमुपोह्य लक्ष्मणो निशामतिष्ठत्परितोस्य केवलम् ॥ २३ ॥
ततस्त्वहं चोत्तमबाणचापधृत्स्थितोऽभवं तत्र स यत्र लक्ष्मणः ॥
अतन्द्रिभिर्ज्ञातिभिरात्तकार्मुकैर्महेन्द्रकल्पं परिपालयंस्तदा ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

## अष्टाशीतितमः सर्गः ॥ ८८ ॥

भरतेनकौसल्यादीन्प्रतिकुशमयरामशय्याप्रदर्शनपूर्वकंतदीयवैभवानुस्मरणेनतंप्रतिपरिशोचनम् ॥ १ ॥ तथाऽऽत्मोपालंभनलक्ष्मणादिप्रशंसनपूर्वकंतत्कालमारभ्यजटाधारणादिनारामस्यप्रतिनिधितयावनवासप्रतिज्ञानम् ॥ २ ॥ तथारामस्यायोध्यांप्रतिप्रतिनिवर्तनायबहुधाप्रयतनेपितेनतदनभ्युपगमेतेनैवसहवनवासप्रतिज्ञानम् ॥ ३ ॥

तच्छ्रुत्वा निपुणं सर्वं भरतः सह मन्त्रिभिः ॥ इङ्गुदीमूलमागम्य रामशय्यामवेक्ष्य ताम् ॥ १ ॥
अब्रवीज्जननीः सर्वा इह तेन महात्मना ॥ शर्वरी शयिता भूमाविदमस्य विमर्दितम् ॥ २ ॥

---

तियावत् । अकरोत् कृतवान् ॥ २० ॥ पादौप्रक्षाल्य गङ्गातीरगमनकृतपङ्कशोधनंकृत्वेत्यर्थः । इदंच रामस्यस्वहस्ताभ्यां सीतायास्तूदकप्रदानेनेतिबोध्यं । अपचक्राम शयनकालेसमीपवर्तनस्यानुचितत्वाद्दूरेस्थितः ॥ २१ ॥ शयितौ । "गत्यर्थाकर्मकश्लिषशीङ्—" इत्यादिना कर्तरिनिष्ठा ॥ २२ ॥ पृष्ठे पश्चाद्भागे इषुधी तूणीरद्वयं । नियम्य बध्वा । शूराणांसव्यापसव्यप्रयोगार्थमिषुधिद्वयधारणमस्ति । तलाङ्गुलित्रवान् । "तलंज्याघातवारणं" इत्यमरः । उपोह्य धृत्वा । अस्यपरितोतिष्ठत् सर्वतोरक्षणार्थंप्रदक्षिणंचचारेत्यर्थः । निशां निशायां । अत्यन्तसंयोगेद्वितीया । केवलमित्यनेनशयननिद्राराहित्यंलक्ष्मणस्योच्यते ॥ २३ ॥ अहंचोत्तमबाणचापधृत् एकोभ्रातानगराद्वनानिनिरगमयत् अयमपरःसुषुप्तिदशायांकिमपिकुर्यादितिशङ्कयासज्जायुधःसन् यत्रयत्रसलक्ष्मणःस्थितः तत्रतत्रस्थितोभवं प्रतिपदंतमनुसृतवानभवमित्यर्थः । अतन्द्रिभिर्ज्ञातिभिरात्तकार्मुकैः । ममपरिकराश्च अयंवनचरोनिषादजातीयः रामेकिञ्चित्करिष्यतिचेत् एनंच प्रहरामइतिसावधाना मांप्रतिपदमन्वसरन्नित्यर्थः । एवमस्थानेभयशङ्किभिःकृतं वस्तुतः सनकेनचित्परिभाव्यइत्याह—महेन्द्रकल्पमिति ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

तदित्यादिश्लोकद्वयमेकंवाक्यं । निपुणं सावधानमित्यर्थः । तेन रामेण । इहभूमौ शर्वरीशयिता शर्वर्यांशयनंकृतं । निष्ठायाअधिकरणत्वस्याभिहितत्वाच्छर्वरीशब्दात्प्रथमा इदमेषामासितमितिवत् । इदमस्यविमर्दितमित्यत्राप्यधिकरणेनिष्ठा । "क्तस्यचवर्तमाने" इतिकर्तरिषष्ठी । अस्मिन्नेतत्कर्तृकंविमर्दन-

---

**स०** तलेचअङ्गुलयश्चतलाङ्गुलि तत्त्रायतीतितलाङ्गुलित्रं ततोमतुप् ॥ २३ ॥ **ति०** परिपालयं पर्यपालयं ॥ २४ ॥ इतिसप्ताशीतितमस्सर्गः ॥ ८७ ॥

इदमस्यविमर्दितं अङ्गानामितिशेषः ॥ २ ॥

[ **पा०** ] १ क. ख. ततःपादान्व्यपाक्रामत्सलक्ष्मणः. घ. च. ज. ञ. ततःपादानपाक्रामत्स. छ. झ. ट. तयोःपादौव्यपाक्रामत्स. २ ङ. छ. झ. ट. अस्मिन्. ३ घ. त्परितोस्यकेवलां. ज. त्परितोस्यकेवलं. ख. ग. परितोस्यकेवलां. ४ क—घ. चापबाणधृत्. ङ. छ. झ. ट. बाणचापभृत्. ५ ङ. झ. ट. अतन्द्रितैः. ६ क. ङ. च. छ. झ. ञ. परिपालयंतदा. ७ ख. भरतस्सर्वंनिपुणं. ८ क. मवैक्षत. ९ ङ. छ. झ. ट. तस्यमहात्मनः. १० ङ. विमर्दनं.

महाभागकुलीनेन [1]महाभागेन धीमता ॥ जातो [2]दशरथेनोर्व्यां न रामः स्वप्नुमर्हति ॥ ३ ॥
अजिनोत्तरसंस्तीर्णे वरास्तरणसञ्चये ॥ शयित्वा पुरुषव्याघ्रः कथं [3]शेते महीतले ॥ ४ ॥
प्रासादाग्रविमानेषु वलभीषु च सर्वदा ॥ [4]हैमराजतभौमेषु वरास्तरणशालिषु ॥ ५ ॥
पुष्पसंचयचित्रेषु चन्दनागरुगन्धिषु ॥ पाण्डुराभ्रप्रकाशेषु शुकसङ्घरुतेषु च ॥ ६ ॥
प्रासादवरवर्येषु शीत[6]वत्सु सुगन्धिषु ॥ उषित्वा मेरु[7]कल्पेषु कृतकाञ्चनभित्तिषु ॥ ७ ॥
गीतवादित्रनिर्घोषैर्वराभरणनिःस्वनैः ॥ मृदङ्गवरशब्दैश्च सततं [8]प्रतिबोधितः ॥ ८ ॥
वन्दिभिर्वन्दितः काले बहुभिः सूतमागधैः ॥ गाथाभिरनुरूपाभिः स्तुतिभिश्च परंतपः ॥ ९ ॥
अश्रद्धेयमिदं लोके न सत्यं प्रतिभाति [9]मा ॥ मुह्यते खलु मे भावः स्वप्नोऽयमिति [10]मे मतिः ॥१०॥
न नूनं दैवतं किञ्चित्कालेन बलवत्तरम् ॥ यत्र दाशरथी रामो भूमावे[11]वं शयीत सः ॥ ११ ॥
विदे[12]हराजस्य सुता सीता[13] च प्रियदर्शना ॥ दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ १२ ॥

मित्यर्थः ॥ १—२ ॥ महाभागेन महानुभावेनदशरथेनेति पञ्चम्यर्थेतृतीया ॥ ३ ॥ अजिनोत्तरसंस्तीर्णे अजिनरूपोत्तरच्छदेनसंस्तीर्णे । अजिनशब्देन “ कदलीकन्दलीचीनश्चमूरुप्रियकावपि । समूरुश्चेतिहरिणाअमीअजिनयोनयः ” इत्युक्तकदल्याद्यजिनं विवक्षितं । वरास्तरणसंचये वराणिअमूल्यानिआस्तरणानियेषुपर्यङ्केषुतेषांसंचयेसमूहे । पर्यङ्कानांबहुत्वं शीतोष्णादिकालोचितान्तर्गृहशिरोगृहादिबाहुल्यात् । यद्वा मार्दवातिशयायानेकास्तरणत्वं । अतिमृदुत्वादजिनस्योपर्यास्तरणत्वं ॥ ४ ॥ प्रासादाग्रविमानेषु विमानतुल्यप्रासादशिखरेषु । वलभीषु कूटागारेषु । “ कूटागारेतुवलभी”इतिवैजयन्ती । हैमराजतभौमेषु हैमानिराजतानिभौमानिभूतलानियेषुतेषु । वरास्तरणशालिषु चित्रकम्बलादिशालिषु । पुष्पसंचयचित्रेषु चित्रपुष्पसमूहेषु । चन्दनागरुगन्धिषु चन्दनागरुधूपगन्धिषु । पाण्डुराभ्रप्रकाशेषु तद्वद्धवलेषु । शुकसंघरुतेषु शुकसमूहनादवत्सु । अर्शआदित्वादच्मत्वर्थीयः । प्रासादवरवर्येषुप्रासादवराणामुत्तमेषु । शीतवत्सु शैत्यवत्सु । “शीतंगुणे” इत्यमरः । सुगन्धिषु घनसारादिभिरितिशेषः । उषित्वा शयित्वेत्यर्थः । उपरिप्रतिबोधोक्तेः । मेरुतुल्यत्वेहेतुः—कृतकाञ्चनभित्तिष्विति । गीतवादित्रनिर्घोषैः गीतैस्तदनुगुणवीणादिरावैः । वराभरणनिस्वनैः परिचारिकापाणिचरणनूपुरकङ्कणाद्याभरणशिञ्जितैः । मृदङ्गवरशब्दैः मर्दलविशेषध्वनिभिश्च सततंप्रतिबोधितः । अथ प्रबोधनानन्तरं । काले प्रातःकाले । वन्दिभिः कर्तृभिः सूतमागधैश्च । गाथाभिः गद्यविशेषैः । [ पद्यविशेषैः ] स्तुतिभिः स्तोत्रप्रबन्धैश्च । वन्दितः स्तुतः । वदिअभिवादनस्तुत्योरितिधातुः । परंतपः अन्यराजशिक्षणपरोरामः । कथंभूमौकेवलायांशेते कथंश्वापदरवैःप्रतिबोध्यते कथमेकाकीतिष्ठतीतिचोपस्कार्यं । गम्यमानत्वादप्रयोगः “ यश्चनिम्बंपरशुनायश्चैनंमधुसर्पिषा । यश्चैनंगन्धमाल्याभ्यांसर्वस्यकटुरेवसः ” इत्यादिवत् ॥ ५—९ ॥ इदं रामस्यतृणशय्याशयनादिकं । अश्रद्धेयं लोकेपश्यामि । लोकृदर्शनइतिधातुः । तत्रहेतुमाह—नसत्यमिति । किंचमेभावः हृदयं । मुह्यतेखलु मुह्यतिकिमु । रामस्यभूमिशयनश्रवणादिकंभ्रमोवेत्यर्थः । अथवाअयं पूर्वोक्तश्रवणं । स्वप्नापेक्षयापुँल्लिङ्गत्वं । स्वप्नइतिमेमतिः मतं सिद्धान्तइत्यर्थः । कथमन्यथासर्वमिदमसंभाव्यं संभाव्यतइतिभावः ॥ १० ॥ कालेन कालात् । दैवतंबलवत्तरंन नूनं कालएवबलीयानित्यर्थः । यत्र यस्मात् । दाशरथिः दशरथपुत्रोपि । भूमावेवशयीत तस्मादित्यर्थः ॥ ११ ॥ प्रियदर्शना अतदर्हेत्यर्थः । दयिता रामस्यप्राणेभ्योपिप्रेयसी । शयिता शयितव-

[ पा० ] १ ङ. छ. झ. ट. महाराज. २ ग. दशरथादुर्व्यां. ३ ग. शेतेतुराघवः. ४ ग. हेमराजतवर्णेषु. ख—च. हैमराजतभौमेषु. ५ ज. रम्येषु. ६ क. ग. च. ञ. गीतवत्सु. ७ च. मेघकल्पेषु. ८ ख. ग. संप्रबोधितः. ९ च. छ. ञ. मां. ख. मे. १० क. मन्मतं. ११ क. ङ. च. छ. झ. ञ. ठ. वेवमशेत. १२ ङ. छ. झ. ट. यस्मिन्विदेहराजस्यसुताच. १३ ग. सीतापिप्रियदर्शना.

इयं शय्या मम भ्रातुरिदं[1] हि परिवर्तितम् ॥ स्थण्डिले कठिने सर्वं[2] गात्रैर्विमृदितं तृणम् ॥ १३ ॥
मन्ये साभरणा सुप्ता सीताऽस्मिञ्शयनोत्तमे[3] ॥ [4]तत्र तत्र हि दृश्यन्ते सक्ताः[5] कनकबिन्दवः ॥ १४ ॥
उत्तरीयमिहासक्तं सुव्यक्तं सीतया तदा[6] ॥ तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः[7] ॥ १५ ॥
मन्ये भर्तुः सुखा शय्या येन बाला तपस्विनी ॥ सुकुमारी सती दुःखं न विजानाति मैथिली ॥ १६ ॥
हा हन्तास्मि[8] नृशंसोहं[9] यत्सभार्यः[10] कृते मम ॥ ईदृशीं राघवः शय्यामधिशेते ह्यनाथवत् ॥ १७ ॥
सार्वभौमकुले जातः सर्वलोकस्य[11] संमतः ॥ सर्वलोकप्रियस्त्यक्त्वा[12] राज्यं सुखमनुत्तमम्[13] ॥ १८ ॥
कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः ॥ सुखभागी न दुःखार्हः शयितो भुवि राघवः ॥ १९ ॥
धन्यः खलु महाभागो[14] लक्ष्मणः शुभलक्षणः ॥ भ्रातरं विषमे काले यो राममनुवर्तते ॥ २० ॥
सिद्धार्था खलु वैदेही पतिं याऽनुगता वनम् ॥ वयं संशयिताः सर्वे हीनास्तेन महात्मना ॥ २१ ॥
अकर्णधारा पृथिवी शून्येव प्रतिभाति मा[15] ॥ गते दशरथे स्वर्गं रामे चारण्यमाश्रिते ॥ २२ ॥
न च प्रार्थयते कश्चिन्मनसाऽपि वसुन्धराम् ॥ वनेऽपि[16] वसतस्तस्य बाहुवीर्याभिरक्षिताम् ॥ २३ ॥
शून्यसंवरणारक्षामयन्त्रितहयद्विपाम् ॥ अपावृत[17]पुरद्वारां[18] राजधानीमरक्षिताम् ॥ २४ ॥
अप्रहृष्टबलां न्यूनां[19] विषमस्थामनावृताम् ॥ शत्रवो नाभिमन्यन्ते[20] भक्षान्विषकृतानिव[21] ॥ २५ ॥

ती । कर्तरिक्तः । हन्तेतिशेषः ॥ १२ ॥ परिवर्तितं परिवर्तनं स्वापकालेश्रमातिशयादितस्ततःशरीरपरिवर्तनपरं । परिवर्तनज्ञापकमाह—स्थण्डिलइति । स्थण्डिले भूतले । कठिनस्थलत्वात् गात्रैःविमृदितं क्षुण्णं । तृणं इदमित्यनुषङ्गः ॥ १३ ॥ साभरणासुप्ता मार्गश्रमादाभरणमनुन्मुच्यसुप्तवती । शयनोत्तमे भर्तृशय्यात्वादितरतल्पेभ्यःश्रेष्ठतमे । साभरणासुप्तेत्यत्रसूचकमाह—तत्रतत्रेति । तत्रतत्र तृणेषुसक्ताः कनकबिन्दवः जाम्बूनदाभरणनिर्गलिताःसूक्ष्मरेणवः ॥ १४ ॥ इह कुशाग्रेषु आसक्तं इदमासञ्जनंसुव्यक्तं सीतया सीतायाः ॥ १५ ॥ याकापिभर्तुः शय्यापतिव्रतायाःसुखेतिमन्ये । यतःसुकुमारीमैथिली सती पतिव्रता । अस्मिन्नपिशयनेशयितादुःखंनजानाति ॥ १६ ॥ हाहन्तेत्येकनिपातः खेदार्थः । अहंनृशंसोस्मि निर्दयोस्मि । ममकृते मन्निमित्तं । कृतेइत्यव्ययं ॥ १७॥ जन्मना शक्तिमत्तया प्रजारञ्जकत्वेन शरीरलक्षणेनच राज्यार्होरामः कथमेतादृशींदुर्दशांप्राप्तइतिखिद्यति—सार्वभौमकुलेजातइत्यादिनाश्लोकद्वयेन ॥ १८—१९ ॥ विषमेकाले संकटेकाले ॥ २० ॥ पतिमनु पतिमनुसृत्य । वनंगतेतिसंबन्धः । संशयिताः अस्मत्सेवांरामोङ्गीकरिष्यतिनवेतिसंशयिताः ॥ २१ ॥ अकर्णधारा प्रधानपुरुषरहितेतियावत् । अतएव शून्येवप्रतिभाति ॥ २२ ॥ अनायकत्वेकथं राज्यंनिरुपद्रवंतत्राह—नचेति । कश्चित् सामन्तः । नप्रार्थयते आक्रमितुंनेच्छति ॥ २३ ॥ रामवीर्यविनारक्षकान्तरशून्यत्वमाह—शून्यसंवरणेत्यादि । शून्यसंवरणारक्षां अविद्यमानप्राकाररक्षकां । यद्वा शून्यसंवरणःगुप्तिरहितः आरक्षः गुल्मस्थानंयस्याः सातथा । अयन्त्रिताः रक्षकाणांरामपारवश्येनतैरबद्धाः हयद्विपाःयस्यास्तां । अपावृतानि अपिहितानि पुरद्वाराणियस्यास्तां । अप्रहृष्टबलत्वमरक्षितत्वेहेतुः । न्यूनां साधनविहीनां । विषमस्थां दुर्दशापन्नां । अना-

**चि०** सर्वगात्रंतृणैर्विमृदितं क्षुण्णमितिसंबन्धः ॥ १३ ॥ **ती०** सीतया धृतमितिशेषः । यद्वाषष्ठ्यर्थेतृतीया ॥ १५ ॥ **ति०** ममकृते कैकेयीप्रवृत्तेस्स्वानुमतिराहित्येपिस्वमुद्दिश्यजातत्वादितिभावः ॥१७॥ **स०** अनावृतां सर्वतःपुररक्षकैरहितां । एतादृशी-

[ **पा०** ] १ ङ. झ. ट. रिदमावर्तितंशुभं. २ क. च. ञ. गात्रंविमृदितंतृणैः. ३ क. ख. च. ज. ञ. शयनेतदा. ङ. छ. झ. ट. शयनेशुभा. ग. शयनेशुभे. ४ ख. तत्रतत्रच. ५ क. सिक्ताः. ६ च. तया. ७ ज. कनकतन्तवः. ८ क—ञ. हतोस्मि. ९ ङ. छ. झ. ट. नृशंसोस्मि. १० घ. यःपितुःसदृशोमम. ११ क—ट. लोकसुखावहः. १२ ङ. छ. झ. ट. सर्वप्रियकरस्त्यक्त्वा. ख. च. ञ. सर्वलोकप्रियंत्यक्त्वा. १३ क. ख. ङ—ट. प्रियं. १४ च. ञ. महाबाहुः. १५ ङ. च. छ. झ. ञ. ट. मे. १६ ङ. छ. झ. ट. वनेनिवसतः. १७ क. ङ. च. छ. झ. ञ. ट. अनावृत. १८ ग. गृहद्वारां. १९ च. झ. शून्यां. २० घ. नानुमन्यन्ते. २१ क. घ. च—ट. भक्ष्यान्.

अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा ॥ फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २६ ॥
[2]तस्यार्थमुत्तरं कालं निवत्स्यामि सुखं वने ॥ [3]तं प्रतिश्रवमामुच्य नास्य मिथ्या भविष्यति ॥२७॥
वसन्तं भ्रातुरर्थाय शत्रुघ्नो माऽनुवत्स्यति ॥ लक्ष्मणेन सह त्वार्यो ह्ययोध्यां पालयिष्यति ॥ २८ ॥
अभिषेक्ष्यन्ति काकुत्स्थमयोध्यायां द्विजातयः ॥ अपि मे देवताः कुर्युरिमं सत्यं मनोरथम् ॥ २९ ॥
प्रसाद्यमानः शिरसा मया स्वयं बहुप्रकारं यदि नाभिपत्स्यते ॥
ततोऽनुवत्स्यामि चिराय राघवं वने वसन्नार्हति मामुपेक्षितुम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

## एकोननवतितमः सर्गः ॥ ८९ ॥

प्रभातेभरतमुपागतवतागुहेनदाशान्प्रतिनौकानयनचोदना ॥ १ ॥ दाशैर्भरतादीनांनौकादिसाधनैर्गङ्गातारणम् ॥ २ ॥ भरतेनप्रयागवनेसेनानिवेशनपूर्वकंभरद्वाजदिदृक्षयावसिष्ठादिसाहित्येनतदाश्रमंप्रतिप्रस्थानम् ॥ ३ ॥

[9]व्युष्य रात्रिं तु तत्रैव गङ्गा[10]कूले स राघवः ॥ [11]भरतः काल्यमुत्थाय शत्रुघ्नमिदमब्रवीत् ॥ १ ॥
[12]शत्रुघ्नोत्तिष्ठ किं शेषे निषादाधिपतिं गुहम् ॥ शीघ्रमानय भद्रं ते तारयिष्यति वाहिनीम् ॥ २ ॥
जागर्मि नाहं स्वपिमि [13]तमेवार्यं विचिन्तयन् ॥ इत्येवमब्रवी[14]द्भ्रात्रा शत्रुघ्नोपि प्रचोदितः ॥ ३ ॥

वृतां बाह्यरक्षकरहितां । नाभिमन्यन्ते अभिभवितुंन स्मरन्ति । भक्ष्यान् अपूपादीन् ।विषैः विषमिश्रैःकृतान् ॥२४—२५॥ उक्तसर्वानर्थस्यआत्ममूलकतयातत्प्रायश्चित्तमाह—अद्येत्यादि । श्लोकद्वयमेकान्वयं । तंप्रतिश्रवं तांप्रतिज्ञां । आमुच्य स्वस्मिन्नासज्य । तस्यार्थे रामार्थमित्यर्थः । उत्तरंकालं चतुर्दशवर्षात्मकेकालेरामानुष्ठितव्यतिरिक्तोत्तरकालं वनेवत्स्यामि मिथ्यान भविष्यति प्रतिज्ञेतिशेषः ॥ २६—२८ ॥ देवताः इमंमनोरथंसत्यंकुर्युरपि । संभावनायामपिशब्दः ॥ २९ ॥ शिरसाप्रणामपूर्वकंस्वयं नतुमन्त्रिमुखेन । नाभिपत्स्यते नाङ्गीकरिष्यति । प्रसादमितिशेषः । ततस्तदा । वनेवसन् राघवमनुवत्स्यामि तदनुचरोभवामि । अनुचरणंवाकथमङ्गीकरिष्यतीत्यत्राह—नार्हतिमामुपेक्षितुमिति । मां भ्रातरंशिष्यंदासमित्यर्थः ॥३०॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

व्युष्य उषित्वा । रात्रिं रात्रौ । तत्रैव यत्ररामोशयिष्टतत्रैव । काल्यं प्रत्यूषः । "प्रत्यूषोहर्मुखंकाल्यम्" इत्यमरः । तस्मिन्नित्यर्थः ॥ १ ॥ शत्रुघ्नभद्रंतइति सान्त्वोक्तिः । वाहिनीं गङ्गां । अस्मानित्यर्थसिद्धं ॥ २ ॥ नाहंस्वपिमिजागर्मीति भ्रात्राप्रचोदितः शत्रुघ्नोपि तमेवार्यं यस्त्वयाचिन्त्यतेतमेवार्यंविचिन्तयन्सन् । अहमपिजागर्मि नस्वपिमि इत्येवमब्रवीत् । तथैवेतिपाठे यथात्वं तथैवाहमार्यंविचिन्तयन्नित्यर्थः । चरमपर्वनिष्ठस्यप्रथमपर्वाभिनिवेशस्तत्प्रीत्यर्थतयेति व्यञ्जितं । "तदवस्थंतुभरतंशत्रुघ्नोऽनन्तरस्थितः"

मपिविषकृतान्मरणशङ्कयायथानाभिमन्यन्ते तथारामभियानेच्छन्तीत्यर्थः । **शि०** विषमस्थां विषमाणांअनवस्थितचित्तानांस्थः स्थितिर्यस्यां । शत्रवोनाभिमन्यन्ते तेनरामस्यप्रतापातिशयस्सूचितः ॥ २५ ॥ **ति०** तस्यव्रतसंकल्पंस्वयंगृहीत्वातत्परिपालनार्थं उत्तरंकालं चतुर्दशवर्षपर्यन्तं । अहंवनेवत्स्यामि । **शि०** तस्यरामस्यप्रतिनिधिरहं ॥ २७ ॥ इत्यष्टाशीतितमस्सर्गः ॥ ८८ ॥

**शि०** शत्रुघ्न त्वंकिंशेषे उत्तिष्ठेत्यर्थः । तत्प्रयोजनमाह उत्थायगुहंशीघ्रमानय ॥ २ ॥

[ **पा०** ] १ च. तृणेषुच. २ ङ. छ. झ. ञ. ट. तस्याहमुत्तरं. ग. तदर्थमुत्तरं. ३ ङ. छ. झ. ट. तत्प्रतिश्रुतमार्यस्यनैवमिथ्या. ४ ग. नहि. ५ ङ. छ. झ. ट. सहायोध्यामार्योमे. ६ ग. द्विजोत्तमाः. ७ क. ख. ग. च—ट. नप्रपत्स्यते. ङ. नप्रपत्स्यति. ८ ङ. छ. ट. वनेचिरंनार्हति. झ. वनेचरंनार्हति. ९ ख. उषित्वातत्ररात्रिंतु. ग. उषित्वातत्रतांरात्रिं. १० ज. तीरे. ११ ङ. छ. झ. ज. ञ. ट. काल्यमुत्थायशत्रुघ्नमिदंवचनमब्रवीत्. च. भरतःकल्यं. १२ ङ. छ. झ. ट. शत्रुघ्नोत्थाय. १३ क—ट. तथैवार्यं. १४ ख. ग. ङ. च. ज—ट. भ्राताशत्रुघ्नोविप्रचोदितः.

इति संवदतोरेवमन्योन्यं नरसिंहयोः ॥ [1]आगम्य प्राञ्जलिः काले गुहो [2]भरतमब्रवीत् ॥ ४ ॥
कच्चित्सुखं नदीतीरेऽवात्सीः काकुत्स्थ शर्वरीम् ॥ [3]कच्चित्ते सहसैन्यस्य [4]तावत्सर्वमनामयम् ॥ ५ ॥
गुहस्य [5]तत्तु वचनं श्रुत्वा स्नेहादुदीरितम् ॥ रामस्यानुवशो वाक्यं भरतोपीदमब्रवीत् ॥ ६ ॥
सुखा नः शर्वरी [6]राजन्पूजिताश्चापि ते वयम् ॥ गङ्गां तु नौभिर्बह्वीभिर्दाशाः संतारयन्तु नः ॥ ७ ॥
ततो गुहः [7]संत्वरितं श्रुत्वा भरतशासनम् ॥ प्रतिप्रविश्य [8]नगरं तं [9]ज्ञातिजनमब्रवीत् ॥ ८ ॥
उत्तिष्ठत प्रबुध्यध्वं भद्रम[10]स्तु च वः सदा ॥ नावः [11]समनुकर्षध्वं तारयिष्याम वाहिनीम् ॥ ९ ॥
ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् ॥ पञ्च नावां [12]शतान्याशु समानिन्युः [13]समन्ततः ॥ १० ॥
अन्याः स्वस्तिकविज्ञेया महाघण्टा[14]धरा वराः ॥ शोभमानाः [15]पताकाभिर्युक्तवाताः [16]सुसंहताः ॥ ११ ॥
ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम् ॥ सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ॥
तामारुरोह भरतः शत्रुघ्नश्च [17]महाबलः ॥ १२ ॥
कौसल्या च सुमित्रा च याश्चान्या राजयोषितः ॥ पुरोहितश्च तत्पूर्वं गुरवो ब्राह्मणाश्च ये ॥
अनन्तरं राजदारास्तथैव शकटापणाः ॥ १३ ॥
आवासमादीपयतां [18]तीर्थं चाप्यवगाहताम् ॥ भाण्डानि चाददानानां [19]घोषस्त्रिदिवमस्पृशत् ॥ १४ ॥

इतिहिपूर्वमप्युक्तं ॥ ३ ॥ संवदतोःसतोः काले गमनोचितकाले ॥ ४ ॥ शर्वरींतावत् शर्वर्यासाकल्येन । "यावत्तावच्चसाकल्ये" इत्यमरः । सहसैन्यस्यते सेनासहितस्यतव । सर्वमुपकरणं अनामयं निरुपद्रवं ॥ ५ ॥ रामस्यानुवशः रामायत्तः ॥ ६ ॥ सुखा सुखावहा जातेतिशेषः । राजन्नितिरामभक्ततया स्तौति । ते त्वया ॥ ७ ॥ प्रतिप्रविश्य पुनःप्रविश्य ॥ ८ ॥ प्रबुध्यध्वं उत्तिष्ठतेतिक्रमः । तारयिष्यामेत्यत्रविसर्गलोपआर्षः । तारयिष्यामीतिचपाठः ॥ ९ ॥ नावांपञ्चशतानीत्यन्वयः । समन्ततः सर्वावतारेभ्यः ॥ १० ॥ अन्याः क्षुद्राभ्यःपञ्चशतनौभ्यःअन्याः । स्वस्तिकविज्ञेयाः स्वस्तिकःसर्वतोभद्रइत्युक्तस्वस्तिकाख्यरचनाविशेषविशिष्टतयानिर्मितत्वात्स्वस्तिकाइति विज्ञेयाः । ताश्चनौद्वयसंघटनेनसंपद्यन्ते । चतुर्षुकोणेषुमहाघण्टाधराः वराः राजार्हतयाश्रेष्ठाः । शोभमानाः कनकरूषिततयाशोभमानाः । युक्तवाताः फलककुड्यकरणेन मध्येमध्येगवाक्षनिर्माणेनच महावातनिवारणादुचितवाताः । सुसंहताः राजारोहणस्थानत्वेनायसकीलादिभिर्दृढसंधिबन्धाः । अत्रापिनावआनिन्युरित्यनुकृष्यते ॥ ११ ॥ ततः तासु स्वस्तिकविज्ञेयादिषुमध्ये। पाण्डुकम्बलेनसंवृतां आच्छन्नतलप्रदेशां। सनन्दिघोषां हर्षजनककिङ्किण्यादिघोषयुक्तां। कल्याणीं शोभनां ॥ १२ ॥ भरतशत्रुघ्नव्यतिरिक्तानामन्यासुनौष्वारोहणक्रममाह—कौसल्येत्यादिना । राजयोषितः आगताइतिशेषः । तत्पूर्वं तासांपूर्वं । पुरोहितोगुरवोब्राह्मणाश्चयेआगतास्तेआरुरुहुः । अनन्तरंराजदाराःकौसल्यादयः आरुरुहुः । तथैवशकटापणाः शकटाश्चापणस्थपदार्थाश्चारुरुहुः । एतदारोहणंकर्तृद्वारा ॥ १३ ॥ आवासं सेनानिवेशं । आदीपयतां अग्निनाज्वलयतां । राजभटाहिनिर्गमनकालेश्रीस-

स० काले स्मरणकाले ॥ ४ ॥ ती० युक्तवाहाः पर्याप्तकर्णधारयुक्ताः । ति० पताकिन्यः बह्वरित्रवत्यः । अरित्रंनावाकर्षणदण्डः ॥ ११ ॥ ति० सनन्दिघोषां उपरिप्रतिष्ठितमङ्गलवादित्रघोषसहितां ॥ १२ ॥ शि० आदीपयतां वस्तुनिरीक्षणार्थं महादीपादिनाप्रकाशंकुर्वतां ॥ १४ ॥

[ पा० ] १ क. च. ज. आगत्य. २ ङ. छ. झ. ट. वचन. ३ क. ख. घ—ट. कच्चिच्च. ४ ख. ग. घ. तवसर्वं. ङ. छ. ज. झ. ट. तवनित्यं. ५ घ. ज. ट. वचनंतत्तु. ६ ङ. छ. झ. ट. धीमन्. ७ ख. घ. च. ज—ट. संत्वरितः. ८ ग. नगरीं. ९ ज. ज्ञातिमिदं. क. च. झ. ञ. ज्ञातिगणं. घ. तान्ज्ञातीनिदं. १० क. ख. ङ. च. झ. ञ. ट. मस्तुहि. ११ ङ. छ. झ. ट. समुपकर्षध्वं. १२ क. ङ. छ. झ. ञ. ट. शतान्येव. १३ ङ. समाहिताः. १४ ङ. च. छ. झ. ञ. ट. धराधराः. ग. कृतारवाः. १५ क. ग. ट. पताकिन्योयुक्ता. ख. ङ. च. छ. झ. ञ. पताकिन्योयुक्तवाहाः. १६ ग. सुसंयताः. घ. सुसंगताः. १७ क. ग. घ. च. ञ. महायशाः. १८ ज. तीर्थंवा. १९ ङ. छ. झ. ट. घोषस्तुदिवं.

पताकिन्यस्तु ता नावः स्वयं दाशै[1]रधिष्ठिताः ॥ वहन्त्यो जनमारूढं तदा संपेतुराशुगाः ॥ १५ ॥
नारीणामभिपूर्णास्तु काश्चि[2]त्काश्चिच्च वाजिनाम् ॥ कौ[3]श्चिदत्र वहन्ति स्म यानयुग्यं महाधनम् ॥ १६ ॥
ताः[4] स्म गत्वा परं तीरमवरोप्य च तं जनम् ॥ निवृत्ताः काण्डचित्राणि[5] क्रियन्ते दाशबन्धुभिः ॥१७॥
सवैजयन्तास्तु[6] गजा गजारोह[7]प्रचोदिताः ॥ तरन्तः[8] स्म प्रकाशन्ते सध्वजा इव पर्वताः ॥ १८ ॥
नावश्चारुरुहु[9]श्चान्ये[10] प्लवैस्तेरुस्तथा परे ॥ अन्ये कुम्भघटैस्तेरुरन्ये तेरुश्च बाहुभिः ॥ १९ ॥
सा पुण्या[11] ध्वजिनी गङ्गा[12] दाशैः सन्तारिता स्वयम् ॥ मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥ २० ॥
आश्वासयित्वा च चमूं महात्मा निवेशयित्वा च यथोपजोषम् ॥

मागमार्थमावासंदहन्तीतिप्रसिद्धिः । तीर्थं अवतरणप्रदेशं । अवगाहतां नावारोहणार्थमहमहमिकयाआगच्छतामित्यर्थः । स्नानंकुर्वतामितिवा । भाण्डानि उपकरणानि । आददानानां मदीयमिदंमदीयमिदमिति त्वरयास्वीकुर्वतांजनानां । घोषस्त्रिदिवमस्पृशत् महान्घोषोजातइत्यर्थः ॥ १४ ॥ पताकिन्यः वाय्वाकर्षणायकृतपताकाः स्वयंसंपेतुः आशुगत्वेनदाशाधिष्ठानमात्रेणानायासेनजग्मुरित्यर्थः ॥ १५ ॥ संप्रतिता नावःकीदृग्विधाइत्यपेक्षायामाह—नारीणामित्यादि । नारीणामभिपूर्णाः नारीभिरभिपूर्णाः । वाजिनामभिपूर्णाः आरोहणार्हवाजिभिरभिपूर्णाः । दध्नःपूर्णइतिमहाभाष्यकारवचनप्रामाण्यात् पूर्णशब्दयोगे "पूरणगुण—" इत्यादिनाषष्ठी तृतीयार्थेषष्ठीवा । यानयुग्यं यानानिरथशकटादीनि युग्यानिअश्वतरबलीवर्दादीनि । "सर्वोद्वन्द्वोविभाषयैकवद्भवति" इत्येकवद्भावः । महाधनं बहुमूल्यं । "बहुमूल्यंमहाधनं" इत्यमरः ॥ १६ ॥ काण्डचित्राणि काण्डे वारिणि चित्राणिचित्रगमनानि । क्रियन्ते अक्रियन्त । "काण्डोस्त्रीदण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । दाशबन्धुभिः दाशाभासैः दाशस्यगुहस्यबन्धुभिरितिवा । भाराभावकृतलाघवातिशयेननिवर्तनकालिकदाशलीलोच्यते ॥ १७ ॥ सवैजयन्ताः सपताकाः सगृहावा । राजानोहिगजोपरिगृहाणिनिर्मायगच्छन्ति । तरन्तः प्लवन्तः । तॄ प्लवनतरणयोः । सध्वजाः सगमनाः । ध्वज गतौ । जंगमपर्वताइवप्रकाशन्तेइत्यर्थः ॥ १८ ॥ नावः क्षुद्रनावः । प्लवैः तृणकाष्ठनिर्मितैः । कुम्भघटैः कुम्भरूपघटैः सूक्ष्मवदनाघटाःकुम्भाः तेहितरणसाधनानि नघटमात्रं । बाहुभिः केवलबाहुभिः ॥ १९ ॥ पुण्या गङ्गास्नानादिनापूता । ध्वजिनी सेना । स्वयं नतुपरप्रेरणेन । मैत्रेमुहूर्ते दिवसस्यपञ्चदशभागेषुघटिकाद्वयात्मकेतृतीयेमुहूर्ते । "द्वेतुनाड्यौमुहूर्तोस्त्री" इतिवैजयन्ती । मुहूर्तसंख्योक्ताबृहस्पतिना "रौद्रः सार्पस्तथामैत्रःपैत्रोवासवएवच । आप्योवैश्वस्तथाब्राह्मप्राजेशैन्द्रास्तथैवच ॥ ऐन्द्राग्नोनैर्ऋतश्चैववारुणार्यमणोभगी । एतेह्निक्रमशोज्ञेयामुहूर्तादशपञ्चच" इति । [ तस्यमैत्रनामत्वंविन्ध्यमाधवीयेप्रोक्तं यथा "आर्द्रोरगमित्रमघावसुजलविश्वाभिजिद्विरिञ्चेन्द्राः । ऐन्द्राग्नमूलवरुणार्यमभगयुक्तादिवामुहूर्ताःस्युः" इति ]।मैत्रेमुहूर्तेतारितासतीप्रयागवनंययावित्यन्वयः । घटिकाषट्क एवगङ्गातरणमितिभावः । यद्वा मैत्रेप्रयागवनंययावित्यन्वयः । तत्रातिथ्येननिरवधिकभोगलाभात् मुहूर्तविशेषोक्तिः ॥ २० ॥ आश्वासयित्वा सान्त्वयित्वा । यथोपजोषं यथासुखं । "तूष्णीमर्थेसुखेजोषं" इतिवैजयन्ती । ऋषिप्रवर्यं ऋषिश्रेष्ठं [ आश्वासयित्वेति ।

**ती०** दाशबन्धुभिः दाशश्रेष्ठैः ॥ १७ ॥ **ती०** कुंभाः अधिकप्रमाणाः । घटाः न्यूनप्रमाणाः । **स०** कुंभघटैः कुंभानांघटासमूहोयेषुमञ्चादिषुतेतथातैः । षण्डादिशब्दानांवृक्षसमूहवाचकत्वंयथातद्वद्घटाशब्दस्यकरिसमूहवाचिनइतरसमूहवाचकत्वेपिनक्षतिः । यद्वा अन्ये कुंभैःकलशैः घटैःकरिशिरोभिश्चतेरुः । "घटस्समाधिभेदेभशिरःकुंटकटेषुच" इतिविश्वः । कुंभस्स्यादित्यारभ्यद्विपाङ्गेचेतितत्रैवोक्तेर्विपरीतंवा ॥ १९ ॥ **शि०** पुण्या नित्यंवसिष्ठादिसंसर्गेणपूता । मैत्रेमुहूर्तेप्रयागवनंप्रययौ । एतेन मुहूर्तद्वयेनगङ्गासंतरणमितिसूचितं ॥२०॥ **ति०** आश्वासयित्वा विश्राम्य । निवेशयित्वा प्रयागवनेस्थापयित्वा । **ती०** बृहस्पतिरुचथ्यभार्यायांम-

**[ पा० ]** १ ख. स्वस्वदाशैः. २ क. ग. ङ. छ—ट. त्काश्चित्तु. ३ क. ख. ग. ङ. च. छ. झ. ञ. ट. काश्चित्तत्र. ४ ख. ङ. च. छ. झ. ञ. ट. तास्तु. ५ घ. काण्डचित्राश्च. ६ ग. वैजयन्ताश्च. ७ क. ग. ङ.—ट. गजारोहैःप्रचोदिताः. ८ क. ङ. च. ञ. ट. तरन्तिस्म. ख. ग. घ. तरन्तश्च. ९ क. ग. च. नावस्त्वारुरुहुश्चान्ये. १० ख. ङ. छ. झ. ट. स्त्वन्ये. ११ ख. ग. पुण्यां. १२ ख. ग. घ. च. ज. झ. ट. गङ्गां.

द्रष्टुं भरद्वाजमृषिप्रवर्यमृत्विग्वृतः सन्भरतः प्रतस्थे ॥ २१ ॥
स ब्राह्मणस्याश्रममभ्युपेत्य महात्मनो देवपुरोहितस्य ॥
ददर्श रम्योटजवृक्षषण्डं महद्वनं विप्रवरस्य रम्यम् ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ॥ ९० ॥

भरतेनाश्रमात्क्रोशमात्रदेशेसेनादिनिवेशनपूर्वकंवसिष्ठेनसहपादचारेणैवभरद्वाजसमीपगमनम् ॥ १ ॥ तथावसिष्ठभरद्वाजयोःपरस्परसत्कारसमनन्तरंभरद्वाजपादाभिवादनम् ॥ २ ॥ भरद्वाजेनभरतंप्रतिकुशलप्रश्नपूर्वकंरामविषयेतद्भावप्रकारप्रश्नः ॥ ३ ॥ तथाप्रश्नेनपरिखिद्यताभरतेनऋषिंप्रतिस्वागमनस्यायोध्यांप्रतिनिवर्तनार्थकत्वकथनपूर्वकंरामनिवासस्थानप्रश्नः ॥ ४ ॥ तेनहृष्टेनमहर्षिणातंप्रतिचित्रकूटेरामनिवासनिवेदनपूर्वकंस्वाश्रमएवरात्रियापनेनप्रभातेरामसमीपगमनचोदना ॥ ५ ॥

भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः ॥ बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥

महात्मा महामतिः स्वयंखिन्नोपिअखिन्नइवपराश्वासनपरः । भरतः राज्यभरणदक्षः । "भरतइतिराज्यस्य भरणात्" इति सहस्रानीकवचनात् । चमूं महाजनं । अविशेषेणाश्वासयित्वा महानायासोवोजातइतिप्रियोक्तिभिःसान्त्वयित्वा । यथोपजोषं यथासुखं । निवेशयित्वा यत्रप्रदेशेतेषांसुखंभवतितत्रप्रदेशेतान्निवेशयित्वा । प्रवर्षं प्रकृष्टवर्षं बहुवयस्कमितियावत् । "भरद्वाजोह्त्रिभिरायुर्भिर्ब्रह्मचर्यमुवासतंहजीर्णिंस्थविरंशयानं" इतिश्रुतेः । एतेनवयोवृद्धत्वमुक्तं । ज्ञानवृद्धत्वमाह—ऋषिमिति । ऋषदर्शनेइतिधातुः । भरद्वाजं "बृहतोभरद्वाजः" इतिश्रुतिप्रसिद्धं ] द्रष्टुं दर्शनपूर्वकमभिवन्दितुं । तादृशस्यऋषेर्विनीतवेषदर्शनीयत्वेन ऋत्विग्भिर्वसिष्ठादिभिः वृतःसन् प्रतस्थे पद्भ्यामेवजगाम ॥ २१ ॥ ब्राह्मणस्य ब्रह्मवेदःतदधीतेब्राह्मणः । "तदधीतेतद्वेद" इत्यण्प्रत्ययः । अधीतबहुवेदस्येत्यर्थः । "भरद्वाजोह्त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास" इत्यादिनाकाठकेतथाभिधानात् । महात्मनो महाज्ञानस्य । देवपुरोहितस्य बृहस्पतिपुत्रत्वेनदेवपुरोहितत्वं । "आत्मावैपुत्रनामासि" इतिन्यायात् । भरद्वाजोममताख्यायामुचथ्यभार्यायांबृहस्पतेर्जातइतिभागवतेप्रसिद्धम् । आश्रममभ्युपेत्य आश्रममुद्दिश्यगत्वा । प्रथमंतस्यमहद्वनंददर्श । ब्राह्मणस्य ब्रह्म परमात्मानं वेत्तीतिब्राह्मणः । "तदधीतेतद्वेद" इत्यण्प्रत्ययः । उत्तरसर्गरीत्यासमाधिबलेनसमस्तवस्त्वाह्वानक्षमस्येत्यर्थः । यद्वा "ब्रह्मबृहस्पतिः" इतिश्रुत्या ब्रह्मणोबृहस्पतेरपत्यंब्राह्मणःतस्य । महात्मनः महास्वभावस्य अचिन्त्यशक्तेरित्यर्थः । देवपुरोहितस्य देवपुरोहितपुत्रत्वात् । "आत्मावैपुत्रनामासि" इतिश्रुतेः । विप्रवरस्य निरवधिकवेदाध्ययनसंपन्नस्य । "जन्मनाजायतेशूद्रःकर्मणाजायतेद्विजः । वेदाभ्यासेनविप्रत्वंब्रह्मजानातिब्राह्मणः" इत्यादिस्मृतेः । श्रुतिश्चास्यनिरवधिकवेदाध्ययनसंपत्तिंदर्शयति "भरद्वाजयत्तेचतुर्थमायुर्दद्यांकिमेनेनकुर्याइति ब्रह्मचर्यमेवैनेनचरेयमितिहोवाच" इत्यादिना । आश्रममभ्युपेत्य प्राप्य । रम्योटजवृक्षषण्डं रमणीयपर्णशालाप्रान्तवर्तिवृक्षसमूहयुक्तं । रम्यं स्वतएवमनोज्ञप्रदेशं । महत् स्वसेनानिवेशक्षमं वनंददर्श ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

भरद्वाजाश्रममित्यादिश्लोकद्वयमेकान्वयं । क्रोशादेव क्रोशात्पूर्वमेव क्रोशमात्रव्यवहितदेशइत्यर्थः ।

मतायांपुत्रमुत्पादयामास । भर्तुर्भियापुत्रंपरित्यक्तुकामांतांदेवाऊचुः । उचथ्यस्यक्षेत्रजत्वेनबृहस्पतेरौरसत्वेनभरद्वाजममुंभरेतितस्माद्भरद्वाजइति ॥ २१ ॥ इत्येकोननवतितमस्सर्गः ॥ ८९ ॥

**स०** क्रोशात् ल्यब्लोपनिमित्तापञ्चमी । क्रोशंविहाय तत्रजनमस्थाप्यजगाम । **शि०**क्रोशात् भरद्वाजाश्रमंगत्वाज्ञात्वादृष्ट्वेत्यर्थः ॥१॥

**[ पा० ]** १ ङ. च. मृषिप्रवीरं. घ. मुनिप्रवर्यं. ख. मृर्षिप्रवर्यं. २ ङ. च. छ. झ. ञ. ट. मृत्विक्सदस्यैः. ३ ङ. छ. झ. ट. वृक्षदेशं. च. ञ. वृक्षखण्डं. ४ क. प्रीतिकरंसुरम्यं. ५ ङ. छ. झ. ट. गत्वा. ६ ङ. छ. झ. ट. जनं. ग. तद्बलंतुसमास्थाप्य.

पद्भ्यामेव हि धर्मज्ञो न्यस्तशस्त्रपरिच्छदः ॥ वसानो वाससी क्षौमे [1]पुरोधाय पुरोधसम् ॥ २ ॥
तत[2]ः संदर्शने तस्य [3]भरद्वाजस्य राघवः ॥ मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥ ३ ॥
वसिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः ॥ संचचालासनात्तूर्णं शिष्यानर्घ्यमिति ब्रुवन् ॥ ४ ॥
समागम्य वसिष्ठेन भरतेनाभिवादितः ॥ अबुध्यत महातेजाः सुतं दशरथस्य तम् ॥ ५ ॥
ताभ्यामर्घ्यं च पाद्यं च दत्त्वा पश्चात्फलानि च ॥ आनुपूर्व्याच्च धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६ ॥
अयोध्यायां बले कोशे मित्रेष्वपि च [4]मन्त्रिषु ॥ जानन्दशरथं वृत्तं न राजानमुदाहरत् ॥ ७ ॥
वसिष्ठो भरतश्चैनं पप्रच्छतुरनामयम् ॥ शरीरेऽग्निषु [5]वृक्षेषु [6]शिष्येषु मृगपक्षिषु ॥ ८ ॥
[7]तथेति तत्प्रतिज्ञाय [8]भरद्वाजो [9]महातपाः ॥ भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥ ९ ॥
किमिहागमने कार्यं तव राज्यं प्रशासतः ॥ एतदाचक्ष्व मे[10] सर्वं न हि मे शुध्यते मनः ॥ १० ॥
सुषुवे यममित्रघ्नं कौसल्या [11]नन्दवर्धनम् ॥ भ्रात्रा सह सभार्यो यश्चिरं प्रव्राजितो वनम् ॥ ११ ॥
नियुक्तः [12]स्त्रीनियुक्तेन पित्रा योसौ महायशाः ॥ वनवासी भवेतीह समाः किल चतुर्दश ॥ १२ ॥
कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि ॥ अकण्टकं भोक्तुमना राज्यं [13]तस्यानुजस्य [14]च ॥ १३ ॥
एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ॥ पर्यश्रुनयनो दुःखाद्वाचा संसज्जमानया ॥ १४ ॥
हतोस्मि यदि मामेवं [15]भगवानपि मन्यते ॥ मत्तो न दोषमाशङ्के [16]नैवं माम[17]नुशाधि हि ॥ १५ ॥

न्यस्तशस्त्रपरिच्छदः परिच्छदः आभरणादिकं भृङ्गाराद्युपकरणजातंच । वसानोवाससीक्षौमे भरद्वाजसेवार्थमुष्णीषकञ्चुकादिकमपहायपरिधानमुत्तरीयंचधृत्वागतइत्यर्थः । ननुपूर्वंजटाचीराणिधारयन्नित्युक्तं जटिलंचीरवसनमितिचवक्ष्यति कथमत्रक्षौमवासस्त्वमुच्यते । नैषदोषः । पूर्वंप्रतिज्ञामात्रंकृतंभरद्वाजाश्रमात्परंजटाधारणमिति । पुरोधाय पुरस्कृत्य ॥ १—२ ॥ संदर्शने दूराद्दर्शने । राघवः रघुवंशवृत्ताभिज्ञः । अनुपुरोहितं पुरोहितस्यपश्चात् । अनोःपश्चादर्थेव्ययीभावः ॥ ३ ॥ संचचाल उदतिष्ठत् । अर्घ्यं आनयतेतिशेषः ॥ ४ ॥ समागम्येति सवयस्कत्वान्नमस्काराभावः । अबुध्यतेति वसिष्ठसाहचर्यादितिभावः ॥ ५ ॥ आनुपूर्व्यात् प्रधानक्रमात् । धर्मज्ञः पूजाक्रमधर्मज्ञः । कुले गृहे ॥ ६ ॥ वृत्तं अतीतं मृतमितियावत् । नोदाहरत् तत्प्रसङ्गमेवनकृतवान् ॥ ७ ॥ तपोधनानांशरीराग्न्यादेस्तपस्साधनत्वात् मृगपक्ष्यादीनामाश्रमवासित्वेनशिष्यवत्प्रीतिविषयत्वाच्च तद्विषयःप्रश्नःकृतइत्याह—वसिष्ठइत्यादिना ॥ ८ ॥ तथेतितत्प्रतिज्ञाय सर्वत्रतत्पृष्टमनामयमङ्गीकृत्य । राघवस्नेहबन्धनात् राघवविषयस्नेहानुबन्धनात् नतु भरतेदोषदर्शनात् ॥ ९ ॥ नशुध्यते शुद्धिंनप्राप्नोति । नविश्वसितीतियावत् ॥ १० ॥ सुषुवइत्यादिश्लोकत्रयमेकान्वयं । नन्दवर्धनं आनन्दवर्धनं । चिरंप्रव्राजितः चिरकालमुद्दिश्यप्रव्राजितः । यःएतादृशः तस्य रामस्य राज्यमकण्टकंभोक्तुमनाः अपापस्यतस्यानुजस्यचपापंकर्तुंनेच्छसिकच्चिदितिसंबन्धः ॥ ११—१३ ॥ पर्यश्रुनयनः परिस्रुताश्रुनयनः । संसज्जमानया स्खलन्त्या ॥ १४ ॥ हतोस्मि व्यर्थज-

**स०** क्षौमे चीरे ॥ २ ॥ **ति०** संदर्शनेआश्रमप्रवेशानन्तरमृषिदर्शनावसरे । **शि०** संदर्शने संदर्शनार्थं ॥ ३ ॥ **शि०** वसिष्ठेनसमागम्य परस्परंनमस्कारपूर्वकमालिङ्ग्य ॥५॥ **शि०** प्रव्राजितः साक्षात्परंपरयावायुष्माभिरितिशेषः । एतेनभवत्स्वकार्यकर्मकारित्वंप्रतीयतइतिसूचितं ॥ ११ ॥ **शि०** अपापस्य पापनिवर्तकस्यरामस्य । **स०** रामहननेराज्यमकण्टकंभवतीतिअकण्टकंभोक्तुमनाः । तस्य रामस्यानुजस्यलक्ष्मणस्यच । पापं वधरूपं ॥ १३ ॥ हतोस्मि हतप्रायोस्मि ॥ १५ ॥

[ पा० ] १ क.—च. ज.—ट. पुरोधायपुरोहितं. छ. पुरोहितपुरस्सरं. २ ख. तत्र. ३ क. च. ञ. महर्षेःसहि. ४ घ. बन्धुषु. ५ ग. झ. शिष्येषुवृक्षेषु. ६ क. ख. ङ. च. ञ. ट. मृगेष्वपिचपक्षिषु. ७ ज. तथैवतंप्रतिज्ञाय. ख. घ. तथैवेति. क. च. ञ. तथेतिच. ङ. छ. झ. ट. तथेतितु. ग. सतथेति. ८ घ. ट. भारद्वाजो. ९ ख. घ.—झ. ट. महायशाः. १० झ. ट. सर्वंमे. ११ ख. ग. नन्दिवर्धनं. १२ ङ. च. छ. झ. ञ. ट. स्त्रीनिमित्तेन. १३ ख. घ. तस्याग्रजस्य. १४ क. ग. च. ञ. वै. १५ ङ. छ. ट. भगवानभि. १६ क. ख. च. छ. झ. ञ. ट. मैवं. १७ ख. ज. मनुशास्ति.

न चैतदिष्टं माता मे यदवोचन्मदन्तरे ॥ नाहमेतेन तुष्टश्च न तद्वचनमाददे ॥ १६ ॥
अहं तु तं नरव्याघ्रमुपयातः प्रसादकः ॥ प्रतिनेतुमयोध्यां च पादौ तस्याभिवन्दितुम् ॥ १७ ॥
त्वं मामेवं गतं मत्वा प्रसादं कर्तुमर्हसि ॥ शंस मे भगवन्रामः क्व संप्रति महीपतिः ॥ १८ ॥
वसिष्ठादिभिर्ऋत्विग्भिर्याचितो भगवांस्ततः ॥ उवाच तं भरद्वाजः प्रसादाद्भरतं वचः ॥ १९ ॥
त्वय्येतत्पुरुषव्याघ्र युक्तं राघववंशजे ॥ गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥ २० ॥
जाने चैतन्मनस्स्थं ते दृढीकरणमस्त्विति ॥ अपृच्छं त्वां तथाऽत्यर्थं कीर्तिं समभिवर्धयन् ॥ २१ ॥
जाने च रामं धर्मज्ञं ससीतं सहलक्ष्मणम् ॥ असौ वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२ ॥
श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः ॥ एतं मे कुरु सुप्राज्ञ कामं कामार्थकोविद ॥ २३ ॥

ततस्तथेत्येवमुदारदर्शनः प्रतीतरूपो भरतोऽब्रवीद्वचः ॥
चकार बुद्धिं च तदा तदाश्रमे निशानिवासाय नराधिपात्मजः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे नवतितमः सर्गः ॥ ९० ॥

---

न्मास्मि । भगवानपि भूतभविष्यद्वर्तमानज्ञोपीत्यर्थः । मत्तः मत्सकाशात् । मयिदोषंनाशङ्के नोत्प्रेक्षे । मत्कृतोदोषोनास्तीतिसंदेहोपिमेनास्तीत्यर्थः । अभावादितिभावः । अतोमामेवंनानुशाधि एवंकर्णारुन्तुदंवक्तुनार्हसि ॥ १५ ॥ मातृकृतंत्वत्कृतमेवेत्याशङ्क्याह—नेति । मदन्तरे मदसंनिधौ । नाददे नाङ्गीकृतवानस्मि ॥ १६ ॥ प्रसादकः प्रसादयितुं । "तुमुन्ण्वुलौक्रियायांक्रियार्थायां" इतिण्वुल् ॥ १७ ॥ एवंगतं एवंबुद्ध्याप्राप्तं । महीपतिः वर्ततइतिशेषः ॥१८॥ याचितः भरतायप्रसन्नोभवेतिप्रार्थितः । प्रसादादुवाच प्रसादंप्राप्योवाच । ल्यब्लोपेपञ्चमी ॥ १९ ॥ गुरुवृत्तिः ज्येष्ठानुवर्तनं । दमः इन्द्रियनिग्रहः । राज्यालोलत्वमितियावत् । साधूनांचानुयायिता सच्चित्तानुवर्तनं । इत्येतत्त्रयंत्वयियुक्तमित्यन्वयः ॥ २० ॥ जाने योगप्रभावेनेतिशेषः । दृढीकरणमस्त्वित्यपृच्छं । स्थूणानिखननन्यायेनदृढीकर्तुमपृच्छमित्यर्थः । कीर्तिं रामविषयसौभ्रात्रजनितां । समभिवर्धयन् । "लक्षणहेत्वोःक्रियायाः" इतिहेत्वर्थेशतृप्रत्ययः ॥ २१ ॥ रामंजाने देशविशेषेस्थितंरामंजानइत्यर्थः ॥ २२ ॥ कामंअभीष्टं । कामार्थकोविद· काङ्क्षितार्थप्रदानदक्षेत्यर्थः ॥ २३ ॥ प्रतीतरूपः प्रसिद्धकीर्तिः । "रूपंयशस्याभिरूप्येवर्णेचैवनिरूपणे" इतिनिघण्टुः । यद्वा प्रतीतरूपः प्रकर्षेणहृष्टः । प्रशंसायांरूपप् । चकारबुद्धिंचेति नह्युक्तिरन्याबुद्धिरन्येतिभावः ॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने नवतितमः सर्गः ॥ ९० ॥

---

**ती०** मदन्तरे मयाविना । **ति०** मदन्तरे मद्विषये । यत्तुमयाविनेत्यर्थइति तन्न । अन्तरेणेत्यव्ययस्यैवतदर्थत्वात् । ममत्ववसरवाचीअन्तरशब्दइतिनदोषः । **शि०** मदन्तरे ममअन्तरःदूरगमनंयस्मिन्काले तस्मिन् ॥ १६ ॥ **ति०** दृढीकरणमन्यथाभावान्निवृत्तिः । बहूनामग्रेउक्तोह्यर्थोनान्यथाकर्तुंशक्यते । मुख्यप्रयोजनमाह—कीर्तिंसमभिवर्धयन् । असर्वज्ञजनंप्रतीतिशेषः । हेतौशता । कीर्त्यभिवृद्धिहेतवेऽपृच्छमित्यर्थः ॥ २१ ॥ **स०** कामार्थे कामितार्थे तद्दानइतियावत् । कोविद । यद्वा सुप्राज्ञेत्युपसर्गद्वयेनधर्मविषयकज्ञानवत्त्वस्योक्तत्वादत्रकामार्थयोःकोविदेत्यर्थः ॥ २३ ॥ **शि०** उदारदर्शनः उदारंभरद्वाजौदार्यंपश्यतिसः । प्रतीतरूपः प्रतीतंबोधितंरूपंरामानुयायित्वरूपस्वरूपंयेनसभरतः ॥ २४ ॥ इतिनवतितमस्सर्गः ॥ ९० ॥

**[ पा० ]** १ ख. ङ. छ. ज. झ. ट. चास्याभि. ग. चप्रतिवन्दितुं. २ ङ. च. छ. झ. ञ. ट. तं. ३ ग. गतिं. ४ ङ. छ. ट. भगवान्. ५ ख. घ. ज. वसत्यसौ. ६ क. घ. ज. साधूनामनु. ७ क.—घ. च. छ. ज. ट. आपृच्छं. ८ क.—घ. च.—झ. ट. तवात्यर्थं. ९ ङ. छ. झ. ट. अयं. १० ञ. एनं. ११ ङ. छ. ट. महाश्रमेतदा. क.—घ. ज. तदामहाश्रमे. झ. तदाश्रमेतदा.

## एकनवतितमः सर्गः ॥ ९१ ॥

ससैन्यपरिवाराय भरताय तपोमहिम्ना भरद्वाजकृतात्यद्भुतातिथ्यकरणप्रकारवर्णनम् ॥ १ ॥

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा ॥ भरतं कैकयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥ १ ॥
अब्रवीद्भरतस्त्वेनं नन्विदं भवता कृतम् ॥ पाद्यमर्घ्यं तथाऽऽतिथ्यं वने यदुपपद्यते ॥ २ ॥
अथोवाच भरद्वाजो भरतं प्रहसन्निव ॥ जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येनकेनचित् ॥ ३ ॥
सेनायास्तु तवैतस्याः कर्तुमिच्छामि भोजनम् ॥ मम प्रीतिर्यथारूपा त्वमर्हो मनुजाधिप ॥ ४ ॥
किमर्थं चापि निक्षिप्य दूरे बलमिहागतः ॥ कस्मान्नेहोपयातोसि सबलः पुरुषर्षभ ॥ ५ ॥
भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम् ॥ ससैन्यो नोपयातोसि भगवन्भगवद्भयात् ॥ ६ ॥
राज्ञा च भगवन्नित्यं राजपुत्रेण वा सदा ॥ यत्नतः परिहर्तव्या विषयेषु तपस्विनः ॥ ७ ॥
वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः ॥ प्रच्छाद्य भगवन्भूमिं महतीमनुयान्ति माम् ॥ ८ ॥
ते वृक्षानुदकं भूमिमाश्रमेषूटजांस्तथा ॥ न हिंस्युरिति तेनाहमेक एव समागतः ॥ ९ ॥
आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा ॥ ततस्तु चक्रे भरतः सेनायाः समुपागमम् ॥ १० ॥
अग्निशालां प्रविश्याथ पीत्वाऽपः परिमृज्य च ॥ आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत् ॥ ११ ॥
आह्वये विश्वकर्माणमहं त्वष्टारमेव च ॥ आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १२ ॥

तत्रैवाश्रमेनिवासाय कृतबुद्धिं निश्चितबुद्धिंभरतं समुनिःआतिथ्येन भोजनपर्यन्तातिथिसत्काराय न्यमन्त्रयत् प्रार्थयामास ॥ १ ॥ वनेयत्फलमूलादिकं । उपपद्यते लभ्यते । तेनतापसाहारेणातिथ्यंकृतंननु एतावन्मात्रेणतुष्टोस्मीतिभावः ॥२॥ प्रहसन्निव प्रहासावेदकानुभावयुक्तेत्यर्थः । मुनिरितःपरंकिंकरिष्यतीतिभरताशयज्ञानेनहासः । त्वांप्रीतिसंयुक्तं मद्विषये संतुष्टंजाने । अतएवकेनचिदुपचारेणतुष्येः तुष्टोभवेः ॥ ३ ॥ भुज्यतइतिभोजनमन्नं । अत्रादौतथापीत्युपस्कार्यं । तथापिममप्रीतिर्यथारूपा यादृशप्रकारा तथात्वमर्हः त्वंतथाप्रीतोभवितुमर्हइत्यर्थः । तथानुमन्तुमर्हसीत्यर्थोवा ॥ ४ ॥ उक्तमेवार्थंव्यतिरेकमुखेनाप्याह—कस्मादित्यादिना ॥ ५ ॥ भगवद्भयात् भवान्कुप्येदितिभयात् ॥ ६ ॥ विषयेषुतपस्विनः स्वकीयदेशेषुवर्तमानाऋषयः । यत्नतःपरिहर्तव्याः ससैन्येनतत्समीपंनगन्तव्यमित्यर्थः ॥ ७ ॥ कोपनिमित्तमाह—वाजिमुख्याइत्यादिना । उटजान् पर्णशालाः॥८—९॥ ततः सेनानिवेशस्थलात् । इतः इह । समुपागमं समानयनं ॥ १० ॥ अग्निशालाप्रवेशःपावनत्वार्थः । देवतासन्निधानस्थलत्वात् । अपःपीत्वा त्रिरितिशेषः । "त्रिराचामेत्" इतिश्रुतेः । परिमृज्य आस्यंद्विरितिशेषः । "द्विःपरिमृज्य" इतिश्रुतेः । चकारेण "सकृदुपस्पृश्यशिरश्चक्षुषीनासिकेश्रोत्रेहृदयमारभ्य " इत्युक्तसंग्रहः । अनेनसर्वकर्माङ्गमाचमनमितिदर्शितं । क्रियाहेतोः करणनिमित्तं ॥ ११ ॥ आह्वानमन्त्रमाह—आह्वयइत्यादिना । आह्वयइत्यात्मनेपदमार्षं । विश्वकर्मा सर्वशिल्पकर्ता । त्वष्टातु तक्षणेनगृहादिनिर्माता । यद्वा त्वष्टारमेवचेत्यवधारणेनासुरविश्वकर्मामयोव्या-

**ति०** आतिथ्येन विशिष्टभोजनोपेतातिथिसत्काररूपहेतुना । फलमपिहेतुः ॥ १ ॥ **ति०** वनवासित्वेनदरिद्रत्वादेतदधिकातिथ्यकरणेऽसामर्थ्यमन्यतइत्याशयेन—**प्रहसन्निवेति** ॥ ३ ॥ **ति०** भगवद्भयात् भगवदाश्रमपीडाप्रसङ्गभयादित्यर्थः ॥ ६ ॥ **स०** तवराजत्वंकथमितिमुनिश्शङ्केतेतिमत्वाऽऽह—**राजपुत्रेणवेति** । **शि०** हेभगवन् तपस्विनोविषयेषु तत्समीपवर्तिदेशेषु

[ पा० ] १ च. तुष्यत्वं. २ ङ. झ. ट. तवैवास्याः. ३ क. तथार्हो. ४ क.—ट. मनुजर्षभ. ५ ख. चविनिक्षिप्य. ६ क. दूरेचबलमागतः. ७ ग. च. प्राञ्जलिस्तु. ८ ङ. छ. झ. ट. नसैन्येनोप. ९ क. ख. ङ. च. छ. झ. ञ. ट. राज्ञाहि. ग. राज्ञातु. १० ङ. च. छ. झ. ट. तथा. ख. ग. सता. ११ च. विषयेतु. १२ क. महतींभूमिंभगवन्ननुयान्ति. १३ क. ख. ङ. च. छ. झ. ञ. ट. एवागतस्ततः. १४ ङ. छ. झ. ट. तथानु. क. ख. घ. च. ञ. तथातु. ग. तथास. १५ घ. प्रविश्याद्य. १६ ख. ग. आतिथ्यसत्क्रिया. १७ च. तच्च.

आह्वये लोकपालांस्त्रीन्देवाञ्शक्रमुखांस्तथा ॥ आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १३
प्राक्स्रोतसश्च या नद्यः प्रत्यक्स्रोतस एव च ॥ पृथिव्यामन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ १४ ॥
अन्याः स्रवन्तु मैरेयं सुरामन्याः सुनिष्ठिताम् ॥ अपराश्चोदकं शीतमिक्षुकाण्डरसोपमम् ॥ १५ ॥
आह्वये देवगन्धर्वान्विश्वावसुहहाहुहून् ॥ तथैवाप्सरसो देवीर्गन्धर्वीश्चापि सर्वशः ॥ १६ ॥
घृताचीमथ विश्वाचीं मिश्रकेशीमलम्बुसाम् ॥ नागदन्तां च हेमां च हिमामद्रिकृतस्थलाम् ॥१७॥
शक्रं याश्चोपतिष्ठन्ति ब्रह्माणं याश्च योषितः ॥ सर्वास्तुम्बुरुणा सार्धमाह्वये सपरिच्छदाः ॥ १८ ॥
वनं कुरुषु यद्दिव्यं वासोभूषणपत्रवत् ॥ दिव्यनारीफलं शश्वत्तत्कौबेरमिहैतु च ॥ १९ ॥
इह मे भगवान्सोमो विधत्तामन्नमुत्तमम् ॥ भक्ष्यं भोज्यं च चोष्यं च लेह्यं च विविधं बहु ॥२०॥
विचित्राणि च माल्यानि पादपप्रच्युतानि च ॥ सुरादीनि च पेयानि मांसानि विविधानि च ॥२१

वर्त्यते । तत्र आतिथ्यनिमित्तं संविधीयतां गृहादिसंविधानंक्रियतां ॥ १२ ॥ वक्ष्यमाणान्नपानादिरक्षणायलोकपालानाह्वयति—आह्वयइति । शक्रमुखान् इन्द्रप्रधानान् । शक्रस्यपृथङ्निर्देशात् । त्रींल्लोकपालान् यमवरुणकुबेरान् । देवानित्यग्न्यादयउच्यन्ते । संविधीयतां पालनंक्रियतां ॥ १३ ॥ सर्वानदीर्द्वेधाविभज्याह्वयति—प्राक्स्रोतसइति । सह युगपत् ॥ १४ ॥ तासांकर्तव्यमाह—अन्याइति । अन्याःकाश्चन मैरेयं मिरादेशेभवंखर्जूरादिहेतुकंमद्यविशेषं। सुरां "गौडीपैष्टीचमाध्वीचविज्ञेयात्रिविधासुरा" इत्युक्तांत्रिविधां सुरां । सुनिष्ठितां सुनिष्पादितां । इक्षुकाण्डरसोपमं काण्डोवर्गः ॥ १५ ॥ गानार्थमाह्वयति—आह्वयइति । देवगन्धर्वान् मनुष्यगन्धर्वभिन्नान् । हहाहुहूनितिच्छान्दसोह्रस्वः । अप्सरसांद्वैविध्यमाह—देवीर्गन्धर्वीरिति । देवीः देवजातीः । गन्धर्वीः गन्धर्वजातीः । अतएव "एतेवैगन्धर्वाप्सरसांगृहाः" इति श्रौतप्रयोगः ॥ १६ ॥ आवश्यकत्वेनप्रधानाप्सरसोविशिष्याह्वयति—घृताचीमित्यादिना । घृतवदञ्च्यतेपूज्यतइतिघृताची । विश्वैःसमस्तैःअञ्च्यतइतिविश्वाची । मिश्रकेशीं निरन्तरकेशीं श्रेष्ठकेशींवा । बुसेभ्योलमलंबुसां बुसाबुधाः देवाः वर्णविपर्ययः । नागानांदन्ताइवशुभ्राःदन्ताः यस्यास्तांनागदन्तां । हेमां हेमवर्णां । पुनश्चहेमामितिपाठे पूर्वोक्तहेमापेक्षयाअस्याव्यावृत्तिमाह—अद्रिकृतस्थलामिति । अद्रौमहेन्द्रेमयेनकृतनिवासां स्वयंप्रभाबिलस्थामित्यर्थः । हिमामितिपाठे हिमवच्छीतलाङ्गीं । यद्वा हिममस्यास्तीतिहिमा । अद्रिकृतस्थलाचान्या । एवमेतान्यन्वर्थनामानि ॥ १७ ॥ शक्रंयाउपतिष्ठन्ति रम्भोर्वशीमेनकादयः । ब्रह्माणं चतुर्मुखं । तल्लोकेप्यप्सरसः सन्ति । "तंपञ्चशतान्यप्सरसांप्रतिधावन्ति" इतिश्रुतेः । इदंचमतान्तरमनुसृत्योक्तं । तुम्बुरुणा तासांगानशिक्षकेण । सपरिच्छदाः नृत्यगीताद्युपकरणसहिताः सालंकारावा ॥ १८ ॥ भोगोपकरणान्याहूयभोगस्थानान्याह्वयति—वनमिति । वनं चैत्ररथाख्यं । तच्चोत्तरकुरुदेशेवर्तते । दिव्यं देवार्हं । वासोभूषणान्येवपत्राण्यस्मिन्सन्तीतिवासोभूषणपत्रवत् । शश्वत् सर्वदा । दिव्यनार्यएवफलानियस्मिंस्तत्तथा एवंभूतंयत्कौबेरमस्ति तत् इहवने एतु आगच्छतु । उत्तरदिक्पालत्वेनकुबेराधिष्ठितत्वात्कौबेरमित्युक्तं । इयंचकुबेरंप्रत्येवोक्तिः । नदीनामिववनस्याह्वानं तदधिष्ठातृदेवताद्वारा ॥ १९ ॥ एवंकुबेरंप्रत्युक्त्वाऽन्नपतिंचन्द्रंप्रत्याह—इहेति । मे मन्निमित्तं । भगवान् माहात्म्यवान् । सोमः ओषधीनामधिपतिश्चन्द्रः उत्तममन्नं विधत्तां संपादयतु । अन्नंचतुर्विधत्वेनविशेषयति—भक्ष्यमित्यादि । भक्ष्यं खाद्यमपूपादि । भोज्यं ओदनादि । चोष्यं शुष्कादि । लेह्यं रसायनादि । विविधं एकैकमनेकविधं । तदपिबहु अनल्पं ॥ २० ॥ पादपप्रच्युतानि नवानीतिभावः ॥ २१ ॥

राज्ञातत्पुत्रेणवायत्नतःपरिहर्तव्याः त्यक्तव्याः । उपद्रवाइतिशेषः । एतेनोपद्रवभीतेरेवसैन्यंनात्रानीतमितिसूचितम् ॥७॥ ति० ताःस-

[ पा० ] १ ख. ङ. छ. झ. ट. श. क्रपुरोगमान्. घ. न्नग्निमुखांस्तथा. २ ङ. छ. झ. ट. तिर्यक्स्रोतसः. ३ झ. समायान्त्वद्य. ४ ख. ग. ज. ञ. सुनिष्ठिताः. ५ घ. खण्ड. ६ ख. ग. वाप्सरसस्सर्वागंधर्वीः. ङ. छ. झ. वाप्सरसोदेवगन्धर्वैश्चापि. ७ ग. घृताचीमपि. ८ क. ख. ग. ङ. छ. झ. ट. नागदत्तां. ९ छ. झ. ट. सोमामद्रिकृतस्थलीं. ख. ग. हिमाद्रींच. च. ज. ञ. भीमामद्रि. १० क. ङ. च. छ. झ. ञ. ट. भामिनीः. ११ क. ख. ङ.—ञ. मिहैवतु. ग. मिहैतिच. १२ ग. पेयंच.

एवं समाधिना युक्तस्तेजसाऽप्रतिमेन च ॥ शीक्षास्वरसमायुक्तं तपसा[1] चाब्रवीन्मुनिः ॥ २२ ॥
मनसा[2] ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ॥ आजग्मुस्तानि सर्वाणि दैवतानि पृथक्पृथक् ॥ २३ ॥
मलयं दर्दुरं[3] चैव ततः स्वेदनुदोऽनिलः ॥ उपस्पृश्य[4] ववौ युक्त्या[5] सुप्रियात्मा सुखः[6] शिवः ॥ २४ ॥
ततो[7]ऽभ्यवर्तन्त घना दिव्याः कुसुमवृष्टयः ॥ दिव्य[8]दुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५ ॥
प्रववुश्चोत्तमा वाता ननृतुश्चाप्सरोगणाः ॥ प्रजगु[9]र्देवगन्धर्वा वीणाः प्रमुमुचुः स्वरान् ॥ २६ ॥
स शब्दो द्यां च भूमिं च प्राणिनां श्रवणानि च ॥ विवेशोच्चा[10]रितः श्लक्ष्णः समो लयगुणान्वितः ॥ २७ ॥
तस्मि[11]न्नुपरते शब्दे दिव्ये श्रोत्र[12]सुखे नृणाम् ॥ ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥ २८ ॥
बभूव[13] हि समा भूमिः समन्तात्पञ्चयोजना[14] ॥ शाद्वलैर्बहुभिश्छन्ना नीलवैडूर्यसन्निभैः ॥ २९ ॥
तस्मिन्बिल्वाः[15] कपित्थाश्च पनसा बीजपूरकाः ॥ आमलक्यो[16] बभूवुश्च चूताश्च फल[17]भूषणाः ॥ ३० ॥

एवमाह्वानेशक्तिविशेषंदर्शयति—एवमित्यादिना । समाधिना योगेन तपसा ज्ञानेन । यद्वा अनशनादिकायक्लेशरूपेण । अतएव तेजसा अनागमेदण्डनसामर्थ्येनचयुक्तःमुनिः शीक्षास्वरसमायुक्तं शीक्ष्यन्तेउपदिश्यन्तेवर्णस्वरादयोनयेतिशीक्षा छान्दसोदीर्घः । शीक्षाप्रतिपाद्यस्वरयुक्तमितिक्रियाविशेषणं । "दुष्टःशब्दःस्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह।सवाग्वज्रोयजमानंहिनस्तियथेन्द्रशत्रुःस्वरतोपराधात्" इतिस्वरापराधस्यप्रत्यवायहेतुत्वश्रवणात् । एवं आह्वयेविश्वकर्माणमित्यारभ्योक्तरीत्या । अब्रवीत् आह्वानमन्त्रानजपदित्यर्थः ॥ २२ ॥ मनसा अनन्यपरेणेत्यर्थः । ध्यायतः निरन्तरंचिन्तयतः । प्राङ्मुखस्येत्यदृष्टविशेषार्थं । कृताञ्जलेरितिआह्वानमुद्रोक्ता । तानि पूर्वोक्तानि दैवतानि विश्वकर्मादीनि । मुनिदृष्टिविषयत्वायपृथक्पथक्आजग्मुः ॥ २३ ॥ मलयश्चन्दनालयः दर्दुरस्तत्समीपस्थश्चन्दनोत्पत्तिस्थानभूतो गिरिः तदुभयंचोपस्पृश्य सुप्रियात्मा सुप्रियस्वभावः सुगन्धइत्यर्थः । अतएव सुखः सुखकरः । शिवः शीतलः । युक्त्या अङ्गस्पर्शेन । स्वेदनुदःस्वेदनिवर्तकः । "इगुपध—" इत्यादिनाकप्रत्ययः । अनिलः वायुः । ततः गिरिद्वयाद्ववौ । इन्द्राद्याह्वानेनवाय्वाद्याह्वानमर्थसिद्धं ॥ २४ ॥ घनाः निरन्तराः । "घनं निरन्तरंसान्द्रं" इत्यमरः । पुष्पवृष्टयोभ्यवर्तन्त आसन्नित्यर्थः ॥ २५ ॥ प्रववुश्चोत्तमावाताइतिपूर्वोक्तस्यैवाविच्छेदउच्यते । वीणाःप्रमुमुचुःस्वरान् वीणाशब्देनवीणावन्तोलक्ष्यन्ते । तदेकपरत्वव्यञ्जनायस्वरान्मुमुचुः उत्पादयामासुः । असिश्छिनत्तीतिवत्करणेकर्तृत्वोपचारोवा ॥ २६ ॥ सशब्दःद्यांचभूमिंच अधिवसतामितिशेषः । प्राणिनांश्रवणानि श्रोत्राणि विवेश । सशब्दःकीदृशः उच्चारितः वीणादिभिरुत्पादितः । श्लक्ष्णः कोमलः । समः निषादादिषुकुत्रचित् औत्कट्यरहितः मन्द्रमध्यमतारश्रुतिसाम्ययुक्तोवा । लयगुणान्वितः लयोनामनृत्तगीतवाद्यानामेककालविरामः सएवगुणस्तेनान्वितः ॥ २७ ॥ तस्मिन्निति । अनेनगन्धर्वाप्सरसामागमनमात्रंसूचितं । विधानं निर्माणं । तच्चप्रपञ्चयिष्यति—चतुःशालानीत्यादिना ॥ २८ ॥ देवताकृत्यमाह—बभूवेति । शाद्वलैः बालतृणवत्प्रदेशैः । छन्ना व्याप्ता । नीलवैडूर्यसन्निभैः इन्द्रनीलवैडूर्याभ्यांतुल्यैः ॥ २९ ॥ तस्मिन् भूप्रदेशे । बीजपूरकाः मातुलुङ्गकाः । फलान्येवभूषणानियेषांते फलभूषणाइति सर्ववृक्षविशेषणं । आमलक्योबभूवुर्भामिनीःआह्वयेइतिसंबन्धः । **कतक०** ब्राह्मणमितिपाठेबृहस्पतिंयाउपतिष्ठन्तीत्यनुकर्षः ॥ १८ ॥ **स०** घनाः मेघाः । कुसुमवृष्टयः कुसुमवृष्टीः । भरद्वाजतपःप्रभावेणजलवर्षणशीलानामपिपुष्पाभिवर्षित्वंद्रष्टव्यं । यद्वा मेघपुष्पशब्दस्यजलवाचकत्वात्तत्पर्यायेणजलस्यग्रहणमितिद्रष्टव्यम् ॥२५॥ **शि०** उत्तमाः अनुकूलाः वाताः प्रीत्यतिशयेनविविधजनव्यजनसंभूतपवनाः । प्रववुः चेलुः ।

**[ पा० ]** १ ङ छ. झ. ट. सुव्रतश्चा. २ क. च. तपसा. ३ ज. दुर्दुरं. ४ छ. स्पृश्यायथौ. ५ घ. युक्तः. ६ ख. ङ. च. छ. झ. ञ. ट. सुखं. ७ घ. ङ. झ. ट. ततोऽभ्यवर्षन्त. ख. ततोह्यवर्तन्त. ८ ख. ङ. च. छ. झ. ञ. ट. देवदुन्दुभि. क. ग. देवदुन्दुभिनिर्घोषो. ९ ग. जगुश्चदेव. १० ङ. छ. झ. ट. शोच्चावचः. क. ग. च. ञ. शोच्चरितः. ११ ङ. छ. झ. ट. तस्मिन्नेवंगते. १२ क. ङ—ट. श्रोत्रसुखे. ख. श्रोतुंसुखे. १३ ङ. बभूवतु. १४ ङ. च. छ. झ. ञ. ट. योजनं. १५ च. ञ. न्कपित्थाबिल्वाश्च. १६ क. च. ञ. आमलक्योथजंबूश्चबभूवुः. १७ ङ. छ. झ. ट. भूषिताः.

उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् ॥ आजगाम नदी दिव्या [2]तीरजैर्बहुभिर्वृता ॥ ३१ ॥
चतुःशालानि शुभ्राणि शालाश्च गजवाजिनाम् ॥ हर्म्यप्रासाद[3]संबाधास्तोरणानि शुभानि च ॥ ३२ ॥
सितमेघनिभं [4]चापि राजवेश्म सुतोरणम् ॥ दि[5]व्यमाल्यकृताकारं दिव्यगन्धसमुक्षितम् ॥ ३३ ॥
चतुरश्रमसंबाधं शयनासनयानवत् ॥ दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत् ॥
उपकल्पितसर्वान्नं धौतनिर्मलभाजनम् ॥ ३४ ॥
[6]क्लृप्तसर्वासनं श्रीमत्स्वास्तीर्णशयनोत्तमम् ॥ प्रविवेश महाबाहुरनुज्ञातो महर्षिणा ॥
वेश्म तद्रत्नसंपूर्णं भरतः केकयीसुतः ॥ ३५ ॥
अनुजग्मुश्च तं [7]सर्वे मन्त्रिणः सपुरोहिताः ॥ बभूवुश्च मुदा युक्ता [8]दृष्ट्वा तं वेश्मसंविधिम् ॥ ३६ ॥
तत्र राजासनं दिव्यं व्यजनं छत्रमेव च ॥ भरतो मन्त्रिभिः सार्धमभ्यवर्तत राजवत् ॥ ३७ ॥
आसनं पूजयामास रामायाभिप्रणम्य च ॥ वालव्यजनमादाय न्यषीदत्सचिवासने ॥ ३८ ॥
आनुपूर्व्यान्निषेदुश्च सर्वे मन्त्रिपुरोहिताः ॥ ततः सेनापतिः पश्चात्प्रशास्ता च निषे[9]दतुः ॥ ३९ ॥
ततस्तत्र मुहूर्तेन नद्यः पायसकर्दमाः॥ उपातिष्ठन्त भरतं भरद्वाजस्य [10]शासनात् ॥ ४० ॥
[11]तासामुभयतःकूलं पाण्डुमृत्तिकलेपनाः ॥ रम्याश्चावसथा दिव्या [12]ब्रह्मणस्तु प्रसादजाः ॥ ४१ ॥

रितिपाठः ॥ ३० ॥ वनं आहूतंकौबेरवनं । दिव्योपभोगवत् दिव्योपभोगार्हं । नदीतिजात्यैकवचनं । तीरजैः वृक्षैरितिशेषः ॥ ३१ ॥ चतुःशालानि संजवनानि । "चतुःशालंसंजवनं" इतिहलायुधः । आजग्मुरितिविपरिणामः । तोरणानि बन्धनमालाः । "बन्धीबन्धनमालातुतोरणंपरिकीर्तितं" इतिहलायुधः । वन्दनमालेतिपाठान्तरं ॥ ३२ ॥ सितमेघेत्यारभ्य धौतनिर्मलभाजनमित्यन्तमेकंवाक्यं । आजगामेति क्रियाद्रष्टव्या । सितमेघनिभं सुधालेपनधवलत्वात् । दिव्यमाल्यकृताकारं दिव्यमालाभिःकृतालंकारं । दिव्यगन्धैर्दिव्यचन्दनैः समुक्षितं सिक्तं । चतुरश्रं चतुष्कोणं । असंबाधं विशालं । शयनासनयानवत् यानं शिबिकादि । रसैः शर्करादिभिः । दिव्यभोजनवस्त्रवत् दिव्यभोजनानिसूक्ष्मशाल्यन्नादीनि दिव्यवस्त्राणिसूक्ष्मवस्त्राणि । उपकल्पितानि सर्वान्नानि नानाविधापूपादीनियस्मिंस्तत् । धौतनिर्मलभाजनं धौतत्वेननिर्मलानिभाजनानियस्मिन् तत्तथा ॥ ३३ —३४ ॥ क्लृप्तसर्वासनमित्यत्रस्नानभोजनाद्यासनान्युच्यन्ते । शयनासनेत्यत्रराजासनंतत्साहचर्याच्छयनंचमहाशयनं । स्वास्तीर्णशयनोत्तममित्यत्रनिद्रार्थशयनं । तत्रभरतस्यप्रवेशमाह—प्रविवेशेति । महाबाहुरित्यनेनतदर्हत्वमुच्यते । केकयीसुतइत्यनेन केकयीदत्तराज्येप्यनादरः किमत्रआदरंकरिष्यतीति द्योत्यते । महर्षिणा भरद्वाजेन ॥ ३५ ॥ वेश्मसंविधिं वेश्मसंविधानं ॥ ३६ ॥ राजासनं राजार्हासनं । अभ्यवर्ततअभितोवर्तिष्ट प्रदक्षिणंकृतवानितियावत् । राजवत् राजतुल्यं राममिवेत्यर्थः ॥ ३७ ॥ आसनं पूजयामासेत्यत्र राजवदित्यनुकर्षः । रामाय आसनोपरिस्थितत्वेनभाविताय । वालव्यजनमादाय स्वशेषत्वानुगुणतयेतिभावः । सचिवासने सचिवार्थक्लृप्ते आसने सिंहासनाधःप्रदेशस्थइत्यर्थः ॥ ३८ ॥ सेनापतिः दण्डनायकः । प्रशास्ता शिबिरनियन्ता ॥ ३९ ॥ मुहूर्तेन अल्पकालेन ॥ ४० ॥ उभयतःकूलं उभयोःकूलयोरित्यर्थः । पाण्डुमृत्तिकलेपनाः

अतएवपूर्वेणनपौनरुक्त्यम् ॥ २६ ॥ ती० राजवत् राजार्हं । राजार्हमासनादिकंसर्वंप्रदक्षिणंचकारेत्यर्थः ॥ ३७ ॥ ति० अत्रेदंबोध्यं । भरतेनवाचोक्तमपिराज्यानभिलाषंलोकानश्रद्दध्युः । अतःक्रिययापिसर्वलोकप्रत्यायनायमहर्षिणातपोव्ययेनापीदृशमातिथ्यकरणम् । किंच पुष्पादिभिःपूजेवेयमपिक्रियाविष्णोरंशभूतभरततुष्ट्यइतितत्करणं । किंचभरतंप्रति लंदुष्टबुद्ध्याऽऽगतोसिकि-

[ पा० ] १ क. ग. ङ. च. छ. झ. ञ. ट. सौम्या. २ क. ज. कूलजैः. ग. घ. कूलजैरुपशोभिता. ३ छ. झ. ञ. ट. संयुक्ततोरणानि. ङ. संयुक्ताः. ख. ग. च. संघाताः. ४ ख. ग. चारु. ५ ख. घ.—ट. शुक्लमाल्य. ग. शुक्लमाला. ६ छ. कृतसर्वासनं. ७ ग. छ. झ. ट. तेसर्वे. ८ क. ख. घ. च. ज. झ. ञ. तंदृष्ट्वा. ९ ङ. छ. झ. ट. न्यषीदत. १० क. च. ञ. तेजसा. ११ ङ. छ. झ. ट. आसां. १२ क. ख. ग. ङ.—ट. ब्राह्मणस्य.

तेनैव च मुहूर्तेन दिव्याभरणभूषिताः ॥ आगुर्विंशतिसाहस्रा ब्रह्मणा प्रहिताः स्त्रियः ॥ ४२ ॥
सुवर्णमणि[1]मुक्तेन प्रवालेन च[2] शोभिताः ॥ आगुर्विंशतिसाहस्राः कुबेर[3]प्रहिताः स्त्रियः ॥ ४३ ॥
याभिर्गृहीतः पुरुषः सोन्माद इव लक्ष्[4]यते ॥ आगुर्विंशतिसाहस्रा नन्दनादप्सरोगणाः ॥ ४४ ॥
नारदस्तुम्बुरु[5]र्गोपः प्रवराः सूर्यवर्चसः ॥ एते गन्धर्वराजानो भरतस्याग्रतो जगुः ॥ ४५ ॥
अलम्बुसा मिश्रकेशी [6]पुण्डरीकाऽथ वामना ॥ [7]उपानृत्यंस्तु [8]भरतं भरद्वाजस्य शासनात् ॥ ४६ ॥
यानि माल्यानि देवेषु यानि चैत्ररथे वने ॥ प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा ॥ ४७ ॥
बिल्वा [9]मार्दङ्गिका आसञ्शम्याग्राहा विभीतकाः ॥ अश्वत्था नर्तकाश्चासन्भरद्वाजस्य [10]शासनात् ४८
ततः सरलतालाश्च [11]तिलका नक्तमालकाः ॥ प्रहृष्टास्तत्र संपेतुः कुब्जा भूत्वाऽथ वामनाः ॥ ४९ ॥
शिंशुपामलकी[12]जम्ब्वो याश्चान्याः [13]काननेषु ताः ॥ [14]मालती मल्लिकाजातिर्याश्चान्याः कानने लताः॥५०
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमे[15]ऽवदन् ॥ [16]सुराः सुरापाः पिबत पायसं च बुभुक्षिताः ॥
मांसानि च सुमेध्यानि भक्ष्यन्तां यावदिच्छथ ॥ ५१ ॥

---

सुधानुलिप्ताइत्यर्थः । " ङ्यापोः " इतिह्रस्वः । ब्रह्मणः भरद्वाजस्य। उपातिष्ठन्तेत्येतदनुषज्यते ॥४१॥ आगुः आजग्मुः । सहस्रमेवसाहस्रं । ब्रह्मणा चतुर्मुखेन । स्त्रियः अप्सरसः ॥ ४२ ॥ सुवर्णमणिमुक्तेन सुवर्णानिसुवर्णमयाभरणानिमणयोरत्नानिमुक्ताश्चसुवर्णमणिमुक्तंतेन । " जातिरप्राणिनां " इति एकवद्भावः ॥ ४३ ॥ गृहीतः आलिङ्गितः । याभिः यैरित्यर्थः । एतदर्धस्यपूर्वेणवान्वयः । कुबेरप्रहिताः गन्धर्वाप्सरसः । तथाहिश्रुतिः " गन्धर्वाप्सरसोवा एतमुन्मादयन्ति । यउन्माद्यति " इति । याभिर्गृहीताःपुरुषाःसोन्मादाइतिहोच्यतइतिचपाठः । तदा उच्यते श्रुत्येतिशेषः । हेतिप्रसिद्धौ ॥ ४४ ॥ नारदोब्रह्मपुत्रादन्यः । तुम्बुरुसाहचर्यात् । सहिपर्वतसहचरः । आह्वानसमयेतुम्बुरुणेत्यस्योपलक्षणार्थत्वात् । गन्धर्वराजानइतिटजभावआर्षः ॥४५॥ भरतमुपानृत्यन् भरतमुद्दिश्याधिकमनृत्यन् । "उपोधिकेच" इति कर्मप्रवचनीयसंज्ञा । अत्रभरद्वाजस्यशासनादुपानृत्यन्नित्यनेन भरतस्यरामेवृत्तिविशेषमातिथ्यव्याजेनपरीक्षितवानृषिरितिगम्यते ॥४६॥ एवंभरतस्यरामशेषतयैवावस्थानंनतुभोगलौल्येनेत्युक्त्वासेनाभोगंप्रपञ्चयति—यानीत्यादिना । देवेषु देवोद्यानेषु नन्दनादिष्वित्यर्थः । चैत्ररथस्यपूर्वकुरुदेशस्थत्वेनोक्तेरिदंचैत्ररथंतद्बोध्यं । प्रयागे प्रयागस्थितभरद्वाजाश्रमवनवृक्षेष्वित्यर्थः । तेजसा प्रभावेन ॥ ४७ ॥ आहूतानांभरतशेषत्वेनविनियोगात्सैनिकानांनर्तकादीनिदर्शयति—बिल्वाइति । बिल्वाः बिल्ववृक्षाः । मार्दङ्गिकाः मृदङ्गवादकाः । "तदस्यशिल्पम्" इतिठक् । आसन् तद्रूपास्तत्कार्यकारिणोभवन्नित्यर्थः । विभीतकाः कलिवृक्षाः । शम्याग्राहाः तालग्राहकाआसन् । " शम्या यज्ञायुधेतालेमशकेचक्रियान्तरे " इतिवैजयन्ती । भरतेचोक्तं " वह्नितालशम्यातालक्रिया " इति ॥४८॥ सरलाः देवदारुविशेषाः । तालाः प्रसिद्धाः । तिलकाः क्षुरकनामकावृक्षाः । नक्तमालकाः करञ्जनाख्यावृक्षाः । कुब्जाः स्थगुमन्तः । वामनाः ह्रस्वाः । संपेतुः संपन्नाः ॥ ४९ ॥ अथस्त्रीलिङ्गवृक्षाणांस्त्रीभावपरिग्रहमाह—शिंशुपेत्यादि । सार्धश्लोकद्वयमेकान्वयं । शिंशुपादयःप्रमदाविग्रहंकृत्वा यावदिच्छथ तावद्भक्ष्यन्तामित्यवदन्नितिसंबन्धः । सुरापाः हेसुरापानप्रवृत्ताः । इमाःसुराःपिबत । हेबुभुक्षिताः पायसपानेच्छवः । इदंपायसंभक्ष्यतामितिवचनविपरिणामेनानुमितिप्रश्ने तस्यर्षेरसर्वज्ञत्वासामर्थ्यादिशङ्कावारणायस्वसामर्थ्यदर्शनं । अपिच भगवदेकचित्तानांस्वर्गसुखमिहापिभवतीतिभगवद्राम-

---

[ पा० ] १ क. च. युक्तेन. २ च. ञ. विभूषिताः. क. चभूषिताः. ३ ख. सहिताः. ४ ख. चोद्यते. ५ ङ. गोप्ताप्रभया. झ. ञ. ट. गोपःप्रभया. ६ च. ञ. पुण्डरीकाच. ७ ङ. छ. झ. ञ. ट. उपानृत्यन्त. ८ ङ. तास्सर्वाभरद्वाजस्य. ९ क. च. ञ. मार्दङ्गिकाश्चासन्. १० क. ङ. च. छ. झ. ञ. ट. तेजसा. ११ ङ. छ. झ. ट. तिलकाःसतमालकाः च. तिलकानागमल्लिकाः. क. तिलकानागमालिकाः. १२ क. ङ. छ. झ. ट. जंबूर्याश्चा. १३ क. ख. घ. ङ. च. ज.—ट. काननेलताः. १४ घ. मल्लिकामालती. १५ क. घ.—ट.ऽवसन्. १६ ङ. च. झ. ञ. ट. सुरां.

[1]उच्छाद्य स्नापयन्ति स्म नदीतीरेषु वल्गुषु ॥ [2]अप्येकमेकं पुरुषं प्रमदाः सप्त चाष्ट च ॥ ५२ ॥
[3]संवाहन्त्यः समापेतुर्नार्यो [4]रुचिरलोचनाः ॥ परिमृज्य [5]तथान्योन्यं पाययन्ति वराङ्गनाः ॥ ५३ ॥
हयान्गजान्खरानुष्ट्रांस्तथैव सुरभेः सुतान् ॥ [6]अभोजयन्वाहनपास्तेषां भोज्यं यथाविधि ॥ ५४ ॥
इक्षूंश्च मधुलाजांश्च भोजयन्ति स्म वाहनान् ॥ इक्ष्वाकुवरयोधानां चोदयन्तो महाबलाः ॥ ५५ ॥
नाश्वबन्धोश्वमाजानान्न गजं कुञ्जरग्रहः ॥ मत्तप्रमत्तमुदिता [7]चमूः सा तत्र संबभौ ॥ ५६ ॥
तर्पिताः [8]सर्वकामैस्ते रक्तचन्दनरूषिताः ॥ अप्सरोगणसंयुक्ताः सैन्या [9]वाचमुदैरयन् ॥ ५७ ॥
नैवायोध्यां गमिष्यामो [10]न गमिष्याम दण्डकान् ॥ कुशलं [11]भरतस्यास्तु रामस्यास्तु तथा सुखम् ॥५८॥
इति पादातयोधाश्च हस्त्यश्वारोहबन्धकाः ॥ अनाथास्तं विधिं लब्ध्वा [12]वाचमेतामुदैरयन् ॥ ५९ ॥
संप्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः ॥ भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥ ६० ॥
[13]नृत्यन्ति स्म हसन्ति स्म गायन्ति स्म च सैनिकाः ॥ समन्तात्[14]परिधावन्ति माल्योपेताः सहस्रशः ॥६१॥
ततो भुक्तवतां तेषां तदन्नममृतोपमम् ॥ दिव्यानुद्वीक्ष्य भक्ष्यांस्तानभवद्भक्षणे मतिः ॥ ६२ ॥

षज्यते । सुमेध्यानि परिशुद्धानि ॥ ५०—५१ ॥ उच्छाद्य उद्वर्तनंकृत्वा । "उद्वर्तनोच्छादनेद्वे" इत्यमरः । तैलादिनाशरीरमर्दनंकृत्वेत्यर्थः । वल्गुषु रम्येषु । एकमेकमिति । "एकंबहुव्रीहिवत्" इति बहुव्रीहिवद्भावाभावआर्षः । संवाहन्त्यः संवाहयन्त्यः पादसंवाहनंकुर्वन्त्यः । परिमृज्य जलार्द्रमङ्गंवस्त्रादिनापरिमृज्य अलंकृत्येतिवार्थः । अन्योन्यं रहसि पाययन्ति सुराइतिशेषः ॥ ५२—५३ ॥ वाहनपाः ऋषिप्रभावसिद्धावाहनपाः वाहनरक्षकाः । तेषां हयादीनां । यथाविधि यथायोग्यं । भोज्यं तत्तद्वाहनानुगुणंभोज्यमित्यर्थः । हयादीन् अभोजयन् ण्यन्तत्वाद्विकर्मकत्वं । सुरभेःसुतान् वृषभान् ॥ ५४ ॥ महाबलाः ऋषिप्रभावसिद्धवाहनपाः । इक्ष्वाकुवरयोधानांवाहनान् वाहनानि । इक्षून् मधुलाजान् मधुमिश्रलाजान् । "भक्ष्येणमिश्रीकरणं" इति समासः । चोदयन्तः भक्षणार्थंप्रेरयन्तःसन्तः भोजयन्तिस्म ॥ ५५ ॥ अश्वंबध्नातीत्यश्वबन्धः अश्वग्राहकः । नाजानात् नज्ञातवान् । तत्रहेतुमाह—मत्तेति । मदकरद्रव्यसेवयामत्ताः प्रमत्ताः मधुपानादिनाकार्याकार्यविवेकशून्याः मुदिताः स्रक्चन्दनादिभोगातिशयेनहृष्टाः । तत्र तदा ॥ ५६ ॥ अप्सरोगणाः वनलताभूताः नत्वाहूताः तासांभरतवेश्मप्रवेशकथनात् । सैन्याः सेनायांसमवेताः । उदैरयन् उक्तवन्तः ॥ ५७ ॥ उदीरणप्रकारमाह—नेत्यादिना । नगमिष्यामइत्यत्रविसर्गलोपश्छान्दसः । भरतस्यकुशलमस्तु भरतोयथातथावातिष्ठत्वित्यर्थः । एवंरामस्येत्यत्रापि । पादाभ्यामतन्तीतिपादाताः अतसातत्यगमनइतिधातुः । तेचतेयोधाश्चपादातयोधाः । चकाराद्रथिकसमुच्चयः । हस्त्यश्वानामारोहाःसादिनः हस्त्यादिबन्धकाःतद्भृत्याः । तंविधिं सत्कारंलब्ध्वा अनाथाः स्वामिरहिताः स्वतन्त्राइतियावत् । नैवायोध्यामित्येतांवाचमुदैरयन्नितिसंबन्धः ॥ ५८—५९ ॥ विनेदुः जगर्जुः ॥ ६०—६१ ॥ तदन्नं पूर्वोक्तभक्ष्यादिचतुर्विधान्नं । भक्षणे पुनर्भक्षणे । मतिरभवत्

प्रीतिमाहात्म्यंप्रदर्शयितुंतद्दर्शनेनचतेषांतत्राधिकांप्रीतिमुत्पादयितुंतथाकरणंमुनेरितिदिक् ॥ ३८ ॥ **शि०** सर्वकामैः सर्वेषांकामाः मनोरथाःयैषुतैर्भक्ष्यादिभिः । तर्पिताः । **ति०** उदीरयन् उदैरयन् ॥ ५७ ॥ **स०** पदातीनांसमाहारःपादातंतद्रूपायोधाः । **ति०** अनाथाः अपरतन्त्राइवेत्यर्थइतिकतकः । अयाचकाइत्यर्थइत्यन्ये । वक्तृणामतिहर्षयुक्ततयाकवेरपिवर्णनीयमयीभावात्पुन-

[ पा० ] १ ङ. छ. झ. ट. उच्छोद्य. २ ङ. अथैकमेकं. च. ट. अप्येकमेकपुरुषं. ३ ख. संवाहयन्तःसंपेतुः. ४ क. ङ. च. छ. झ. ञ. ट. विपुललोचनाः. ५ घ. ङ. छ. झ. ट. तदा. ग. यथान्यायं. ६ ग. अभोजयंस्तदारोहाः. ७ ङ. झ. ट. साचमूस्तत्र. ८ ङ. च. झ. ञ. ट. कामैश्च. क. ख. घ. कामैस्तैः. ९ क. ख. ग. ङ. च. झ. ञ. ट. मुदीरयन्. १० ख. ग. नचगच्छाम. ११ ङ. भरतस्यास्य. १२ क.—ट. मुदीरयन्. १३ क. घ.—छ. झ. ञ. ट. नृत्यन्तश्चहसन्तश्चगायन्तश्चैव. १४ च. छ. झ. धावन्तो.

प्रेष्याश्चेट्यश्च वध्वश्च बलस्थाश्च सहस्रशः ॥ बभूवुस्ते भृशं दृप्ताः सर्वे चाहतवाससः ॥ ६३ ॥
कुञ्जराश्च खरोष्ट्राश्च गोश्वाश्च मृगपक्षिणः ॥ बभूवुः सुभृतास्तत्र नान्यो ह्यन्यमकल्पयत् ॥ ६४ ॥
नाशुक्लवासास्तत्रासीत्क्षुधितो मलिनोपि वा ॥ रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६५ ॥
आजैश्चापि च वाराहैर्निष्ठानवरसंचयैः ॥ फलनिर्व्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः ॥ ६६ ॥
पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य चाभितः ॥ ददृशुर्विस्मितास्तत्र नरा लौहीः सहस्रशः ॥ ६७ ॥
बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः ॥ ताश्च कामदुघा गावो द्रुमाश्चासन्मधुस्रुतः ॥ ६८ ॥
वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः ॥ प्रतप्तपिठरैश्चापि मार्गमायूरकौक्कुटैः ॥ ६९ ॥
पात्रीणां च सहस्राणि स्थालीनां नियुतानि च ॥ न्यर्बुदानि च पात्राणि शातकुम्भमयानि च ॥ ७० ॥
स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णाः सुसंस्कृताः ॥ यौवनस्थस्य गौरस्य कपित्थस्य सुगन्धिनः ॥ ७१ ॥

भक्ष्यसौष्ठवादितिभावः ॥ ६२ ॥ प्रेष्याः परिचारकाः । चेट्योदास्यः । वध्वोयोधाङ्गनाः । बलेसेनायांतिष्ठन्तीतिबलस्थाः । सर्वविशेषणमेतत् । अहतवाससः नूतनवस्त्राः । यद्वा आहतवाससः निर्णिक्तवाससः ॥ ६३ ॥ खरसहितोष्ट्राः खरोष्ट्राः मृगपक्षिणः क्रीडार्थसैनिकैरानीताः । सुभृताः सुतृप्ताः सुपुष्टावा । तत्र सेनायां । अन्यः अन्यंनाकल्पयत् ऋषिकृतव्यतिरिक्तंअन्नादिकंनाकरोदित्यर्थः ॥ ६४—६५ ॥ आजैरित्यादिश्लोकद्वयमेकान्वयं । आजैः अजमांसैः । वाराहैः वराहमांसैः । निष्ठानवरसंचयैः व्यञ्जनश्रेष्ठसमूहैः । " निष्ठानंव्यञ्जनंस्मृतं " इतिहलायुधः । फलनिर्व्यूहसंसिद्धैः सम्यङ्निष्पन्नफलयुक्तशर्करादिकाथरसैः । " द्वार्यापीडेकाथरसेनिर्व्यूहोनागदन्तके " इतिवैजयन्ती । सूपैः मुद्गाढकीचणकादिसूपैः । गन्धरसान्वितैः पाकभेदोत्थगन्धरसयुक्तैः । पुष्पध्वजवतीः अलंकारार्थपरिकल्पितपुष्पशिल्पवतीः । शुक्लस्यान्नस्यपूर्णाः शुक्लेनान्नेनचपूर्णाः । लौहीः लोहमयपात्रीः । सर्वलोहेषुप्रधानत्वात्सुवर्णमत्रलोहशब्देनोच्यते ॥ ६६—६७ ॥ पायसान्येवकर्दमानियेषुतेतथोक्ताः ताः गावः पूर्वमेव वनचर्यःकामदुघाः यावदभीष्टक्षीरपूरकाः आसन् । " दुहःकब्घश्च " मधुस्रुतः मधुस्राविणः । पाठान्तरं मधुश्च्युतः मधुस्राविणः ॥ ६८ ॥ अत्रासन्नित्यनुषज्यते । प्रतप्तपिठरैः प्रतप्तपिठरसंस्कृतैः । " संस्कृतंभक्षाः " इत्यण् तस्यलुक् । पिठराः कुण्डानि । " उखास्थालीचरुः कुम्भीपिठरःकुण्डमुच्यते " इतिहलायुधः । मार्गमायूरकौक्कुटैः मृगमयूरकुक्कुटमांसैः ॥ ६९ ॥ पात्रीणामित्यारभ्यसंचयाइत्यन्तमेकंवाक्यं । पात्रीणां अन्नधानकुम्भीनां । स्थालीनां व्यञ्जनपात्राणां । नियुतानि लक्षाणि । न्यर्बुदानि दशकोट्यः । पात्राणि भोजनपात्राणि अमत्राणीतियावत् । दधिपूर्णाइतिस्थाल्यादित्रयविशेषणं । स्थाल्यः पिठराः । कुम्भ्यः क्षुद्रकुम्भाः । करम्भ्यः विशालास्यगुरुस्थाल्यः । करम्भ्यः कर्कर्यइत्याहुः । सुसंस्कृताः दधिसंस्कारकशुण्ठ्यादियुक्ताः । यौवनस्थस्य नातिनूतनस्य नातिपुराणस्येत्यर्थः । मथनानन्तरंयामान्तरितस्येत्यर्थः । कपित्थस्य कपित्थपरिमलयुक्ततक्रस्येत्यर्थः । " तक्रंकपित्थंमथितं " इतिवैजयन्ती । गौरस्य शुभ्रस्य । रसालस्य तक्रविशेषस्य । " अपक्वतक्रंसव्योषंचतुर्जातंगुडार्द्रकम् । सजीरकंरसालंस्यान्मज्जिकाशिखरिण्यपि " इतिवैजयन्ती । सव्योषं शुण्ठीपिप्पलीमरिचियुक्तं

रुक्तिर्नदोषाय । **शि०** उदीरयन् उदेरयन् ॥ ५९ ॥ **स०** गोऽश्वाः "विभाषावृक्ष—" इत्यादिनापशुद्वन्द्वस्थलेएकवद्भावस्यविकल्पितत्वादयमपिसाधुः । "गवाश्वप्रभृतीनिच—" इत्यस्यायंनविषयः । तथापाठे रूपमेषांविवक्षितं नतुपूर्वोत्तरपदनिर्देशमात्रेतात्पर्यं । तेनपूर्वरूपपक्षेगोऽश्वंगोऽश्वाइतीतिशब्देन्दुशेखरोक्तेः । एवंपूर्वत्रापि । सुभृताः पूर्णोदराः । नार्यः अन्यं ऋष्यकल्पितपदार्थं । नाकल्पयँन् नाभुञ्जन् । क्वचिन्नान्योह्यन्यमकल्पयदित्यपिपाठः । तदा अन्यः भरतसेनान्तर्गतोदेशान्तरात्तत्रागतःपुरुषः । अन्यमित्युक्तार्थे **ति०** अतः मुनिदत्तात् । अन्यपदार्थं नाकल्पयन् नाभुञ्जन्नित्यर्थः ॥ ६४ ॥ **ति०** निषादादिबलतृप्त्यर्थंप्रतापमात्रेणसंस्कार्याःप्रतप्तास्तथा पिठरःकपालंतेषुसंस्कृताः पक्वाः तैः ॥ ६९ ॥ **शि०** गौरस्य केसरादिसंसर्गात्पीतवर्णस्य ॥ ७१ ॥

[ **पा०** ] १ ख. ङ.—ट. श्चापिसर्वशः. २ ङ. छ. झ. ट. प्रीताः. क. ख. ग. च. ञ. तृप्ताः. ३ ख. गावश्च. ४ ङ. बभूवुस्तेभृशंतत्र. ५ ङ. छ. झ. ट. नातोह्यन्यमकल्पयन्. ठ. नार्योह्यन्यमकल्पयन्. ६ घ. च. ज. धूपैः ७ घ. चोच्छ्रिताः. ८ च.—ट. न्मधुश्च्युतः. क—ङ. न्मधुच्युतः. ९ ङ. छ. झ. ञ. ट. पैठरैश्चापि.

ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे ॥ बभूवुः पायसस्यान्ये शर्करायाश्च सञ्चयाः ॥ ७२ ॥
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च ॥ ददृशुर्भाजनस्थानि तीर्थेषु सरितां नराः ॥ ७३ ॥
शुक्लानंशुमतश्चापि दन्तधावनसञ्चयान् ॥ शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥ ७४ ॥
दर्पणान्परिमृष्टांश्च वाससां चापि सञ्चयान् ॥ पादुकोपानहां चैव युग्मानि च सहस्रशः ॥ ७५ ॥
आञ्जनीः कङ्कतान्कूर्चाञ्शस्त्राणि च धनूंषि च ॥ मर्मत्राणानि चित्राणि शयनान्यासनानि च ॥७६॥
प्रतिपानह्रदान्पूर्णान्खरोष्ट्रगजवाजिनाम् ॥ अवगाह्यसुतीर्थांश्च ह्रदान्सोत्पलपुष्करान् ॥ ७७ ॥
आकाशवर्णप्रतिमान्स्वच्छतोयान्सुखप्लवान् ॥ नीलवैडूर्यवर्णांश्च मृदून्यवससञ्चयान् ॥ ७८ ॥
निर्वापार्थान्पशूनां ते ददृशुस्तत्र सर्वशः ॥ ७९ ॥
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम् ॥ दृष्ट्वाऽऽतिथ्यं कृतं तादृग्भरतस्य महर्षिणा ॥ ८० ॥
इत्येवं रममाणानां देवानामिव नन्दने ॥ भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्तत ॥ ८१ ॥
प्रतिजग्मुश्च ता नद्यो गन्धर्वाश्च यथागतम् ॥ भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ८२ ॥
तथैव मत्ता मदिरोत्कटा नरास्तथैव दिव्यागुरुचन्दनोक्षिताः ॥

चतुर्जातगुडार्द्रकं चतुर्जातैः एलालवङ्गकक्कोलनागपुष्पैः गुडेनशर्करयाआर्द्रकेनचयुक्तं । कपित्थेनपूर्णाःअपरेह्रदाबभूवुःरसालेनपूर्णाअपरेह्रदाबभूवुः दध्नापूर्णाश्चापरेह्रदाः। अन्येपायसेनपूर्णाः। पायसस्यान्यइतिपाठः। सर्वत्रतृतीयार्थेषष्ठी। तद्व्यञ्जनार्थशर्करायाःसञ्चयाःराशयश्चबभूवुरित्यर्थः । शर्करायावसञ्चयाइतिचपाठः । शर्करामिश्रयवविकारापूपसञ्चयाइत्यर्थः॥७०—७२॥ कल्कान् आमलक्यादिकल्कान् । चूर्णकषायान् चूर्णानिमाषादिचूर्णानि कषायाःक्वथितानि । स्नान्त्येभिरितिस्नानानि तैलोष्णोदकादीनि । भाजनस्थानि कटाहादिमहापात्रस्थानि । तीर्थेषु अवतारेषु ॥ ७३ ॥ शुक्लान् निर्मलान् । अंशुमतः कूर्चवतः । दन्तधावनसञ्चयान् दन्तकाष्ठसमूहान्। स्नानानन्तरमलंकारोपकरणानिदर्शयति—शुक्लानिति। चन्दनकल्कान् चन्दनपङ्कान् । समुद्गेषु संपुटकेषु । "समुद्गकःसंपुटकः" इत्यमरः । अवतिष्ठतः वर्तमानान् ॥ ७४ ॥ परिमृष्टान् निर्मलीकृतान् । पादुकाः दारुनिर्मिताः। उपानह्श्चर्मनिर्मिताः । युग्मानि द्वन्द्वानि ॥ ७५ ॥ आञ्जनीः अञ्जनयुक्ताःकरण्डिकाः । कङ्कतान् केशमार्जनान् । "कङ्कतःकेशमार्जनं" इतिनिघण्टुः । कूर्चान् स्नानाद्युपयुक्तासनानि श्मश्रुप्रसाधकान्वा । शस्त्राणि योधैरलंकारार्थधार्याणि । मर्मत्राणानि कवचादीनि ॥ ७६ ॥ प्रतिपानह्रदान् ग्रासग्रहणानन्तरंभुक्तजीर्णार्थपानार्हह्रदान् । अवगाह्यसुतीर्थान् अवगाहनयोग्यावतारप्रदेशयुक्तान् । सोत्पलपुष्करान् उत्पलमिन्दीवरं पुष्करंपद्मं ॥ ७७ ॥ आकाशवर्णप्रतिमान् आकाशवन्निर्मलानित्यर्थः । सुखप्लवान् सुखेन प्लवः स्नानंयेषुतथोक्तान्। यवससञ्चयान् तृणसमूहान् । "यवसंतृणमर्जुनं" इत्यमरः ॥ ७८ ॥ पशूनांनिर्वापार्थान् पशुभ्योविश्राणनार्थान् ॥ ७९ ॥ स्वप्नकल्पत्वोक्तिरयत्नसिद्धत्वात् अपूर्वत्वात् आश्चर्यकरत्वाच्च । तादृक् वाचामभूमिं । भरतस्य भरताय ॥ ८०—८१ ॥ अनुज्ञाप्य अनुज्ञांकारयित्वा ॥८२॥ इदंचातिथ्यकरणमैन्द्रजालिकवन्नमिथ्येत्याह—तथैवे-

ति० पादुकोपानहं समाहारेटच्समासान्तः ॥ ७५ ॥ ति० आकाशेत्याद्यर्धपूर्वान्वयि । उपाधिविशेषान्नीलवर्णानित्यर्थः स० आकाशवर्णप्रतिमान् "आकाशोनीलिमोदेति" "भूतमप्यसितंदिव्यदृष्टिगोचरं" इत्याद्युक्तेर्नीलवर्णोपेतान् ॥ ७८ ॥ ति० निर्वापार्थं भक्षणार्थं ॥ ७९ ॥ ति० ताःसर्वाः अप्सरसः ॥ ८२ ॥ इत्येकनवतितमस्सर्गः ॥ ९१ ॥

[ पा० ] १ ख. ङ. च. ज. झ. ञ. पयसश्चान्ये. २ ङ. च. छ. झ. ट. शर्कराणांच. ३ ङ. झ. पादुकोपानहंचैव. क. घ. ज. पादुकोपानहांचापि. च. ञ. पादुकोपानहश्चापि. ४ क. घ. ङ. च. झ. ञ. ट. युग्मान्यत्र. ५ क. ख. ङ. च. छ. झ. ञ. ट. छत्राणिच. ग. शस्त्राणिविविधानिच. ६ ग. ज. तनुत्राणिच. ७ घ. रथवाजिनां. ८ क. ङ. च. ज. झ. ञ. सुखाप्लवान्. ९ ग. च. छ. झ. ञ. ट. निर्वापार्थपशूनां. १० घ. स्वर्गकल्पं. ११ ङ. छ. झ. ट. तावद्भरद्वाजमहर्षिणा. १२ क. ग. इत्येषां. ङ. च. इत्येव. १३ ङ. छ. झ. ट. तास्सर्वा.

तथैव दिव्या विविधाः स्रगुत्तमाः पृथक्प्रकीर्णा मनुजैः प्रमर्दिताः ॥ ८३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

## द्विनवतितमः सर्गः ॥ ९२ ॥

भरद्वाजेनप्रभातेसाञ्जलिबन्धंचित्रकूटमार्गंपृच्छन्तंभरतंप्रतितन्निवेदनम् ॥ १ ॥ कौसल्यादिषुतिसृषुभरद्वाजंवन्दमानासु भरतेनमुनिचोदनयातंप्रतितासांनामादिविशेषनिवेदनम् ॥ २ ॥ तथातेनमुनिसमापृच्छनपूर्वकं सेनासंनाहनेनपरिजनैःसह चित्रकूटंप्रतिप्रस्थानम् ॥ ३ ॥

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ॥ कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥ १ ॥
तमृषिः पुरुषव्याघ्रं प्राञ्जलिं प्रेक्ष्य चागतम् ॥ हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥
कच्चिदत्र सुखा रात्रिस्तवास्मद्विषये गता ॥ समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ॥ ३ ॥
तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च ॥ आश्रमादभिनिष्क्रान्तमृषिमुत्तमतेजसम् ॥ ४ ॥
सुखोषितोस्मि भगवन्समग्रबलवाहनः ॥ तर्पितः सर्वकामैश्च सामात्यो बलवत्त्वया ॥ ५ ॥
अपेतक्लमसन्तापाः सुभिक्षाः सुप्रतिश्रयाः ॥ अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः ॥ ६ ॥
आमन्त्रयेऽहं भगवन्कामं त्वामृषिसत्तम ॥ समीपं प्रस्थितं भ्रातुर्मैत्रेणेक्षस्व चक्षुषा ॥ ७ ॥
आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः ॥ आचक्ष्व कतमो मार्गः कियानिति च शंस मे ॥ ८ ॥

ति । मत्ताः दृप्ताः भोगैस्तृप्ताः । मदिरोत्कटाश्च मद्येनमत्ताश्च । " मत्तेशौण्डोत्कटक्षीबाः " इत्यमरः । तथैवअनुभवकालइवावार्तिषतेत्यर्थः । प्रमर्दिताः प्रकीर्णाश्च भोगवशादितिभावः । पृथक् पूर्वस्रग्भ्योविलक्षणाः ॥ ८३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

---

व्युष्य विशेषेणोषित्वा । सपरिच्छदः सपरिवारः " परिवारःपरिकरःपरिष्कन्दःपरिग्रहः । तथोपकरणंप्रोक्तंपरिबर्हःपरिच्छदः " इतिहलायुधः । कामात् रामप्राप्तीच्छया ॥ १—२ ॥ अस्मद्विषये अस्मदाश्रमे । रात्रिःसुखागताकच्चिदित्यन्वयः । आतिथ्येविषये समग्रः संपूर्णस्तृप्तइतियावत् । अनघेत्यनेनपूर्वंभरताशयपरीक्षणार्थमेवातिथ्यकरणमितिद्योतितं । रामविषयभक्त्यभावेभोगप्रवणःस्यादितिहृदयं ॥ ३ ॥ अभिनिष्क्रान्तमित्यनेन कौसल्यादिसर्वजनदर्शनार्थं भरतागमनकालएवबहिर्निर्गतवानृषिरितिव्यञ्जितं ॥ ४ ॥ बलवत्तर्पितः अतीवतर्पितः । " किमुतातीवबलवत्स्वातिसुष्ठुचनिर्भरे " इतिवैजयन्ती ॥ ५ ॥ अपेतेति । क्लमोग्लानिः संतापोदेहौष्ण्यं । अपिप्रेष्यानुपादाय प्रेष्यानप्यारभ्य सुभिक्षाः समृद्धान्नपानाः सुप्रतिश्रयाः शोभनस्थानाः शोभनगृहाइतियावत् । " स्थानेगोष्ठ्यांसत्रयागेप्रत्याहारेप्रतिश्रयः " इतिवैजयन्ती ॥ ६ ॥ कामं यथेष्टं । " कामंप्रकामंपर्याप्तंनिकामेष्टंयथेप्सितं " इत्यमरः । हेभगवन् त्वामामन्त्रये आपृच्छे । भ्रातुःसमीपंकामंप्रस्थितंमां त्वं मैत्रेण मित्रसंबन्धिना चक्षुषा ईक्षस्व ॥ ७ ॥ धर्मेणयोगजधर्मेणजानातीतिधर्मज्ञ योगप्रभावविदितसर्ववृत्तान्तेत्यर्थः । धार्मिकस्य पितृवचनपरिपालनरूपंधर्ममाच-

ति० ते जनः समग्रः सम्यक्तृप्तिकः । अभूदितिशेषः । अनेनहितपएवमहत्सर्वेष्टसाधनंनतुराज्यादीतिऋषिणाबोधितोभरतः ॥ ३ ॥ ति० जनसमूहस्यबहुलात्सर्वेषांस्वदर्शनेनकृतकृत्यत्वायाश्रमान्निष्क्रान्तं ॥ ४ ॥ ति० बलवान् सेनासहितः ॥ ५ ॥ स०

[ पा० ] १ ङ. छ. ट. पृथग्विकीर्णाः. २ ग. विमर्दिताः. ३ क. च. ञ. कृतातिथ्यं. ४ क. ख. ङ. च. छ. झ. ञ. प्रेक्ष्यप्राञ्जलिमागतं. ५ छ. झ. ट. दुपनिष्क्रान्तं. ६ ङ. च. छ. झ. ञ. बलवत्तर्पितश्चाहंबलवान्भगवंस्त्वया. ७ क. ग. घ. सुभक्षाः. ८ क. च. ञ. सर्वेपि. ग. सर्वेते. ९ घ. सुखोचिताः. १० क. ख. ग. च. ञ. आमन्त्रयेत्वां. ११ क. ख. ग. च. ञ. त्वमृषि. १२ क. कतरो.

इति पृष्टस्तु भरतं [1]भ्रातृदर्शनलालसम् ॥ प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥ ९ ॥
भरतार्धतृतीयेषु योजनेष्वजने वने ॥ [2]चित्रकूटो गिरिस्तत्र रम्यनिर्दरकाननः ॥ १० ॥
उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी ॥ पुष्पितद्रुम[3]संछन्ना रम्यपुष्पितकानना ॥ ११ ॥
अनन्तरं तत्सरित[4]श्चित्रकूटश्च पर्वतः ॥ तयोः [5]पर्णकुटी तात तत्र तौ वसतो ध्रुवम् ॥ १२ ॥
[6]दक्षिणेनैव मार्गेण [7]सव्यदक्षिणमेव वा ॥ गजवाजिरथा[8]कीर्णां वाहिनीं वाहिनीपते ॥
वाहयस्व [9]महाभाग ततो द्रक्ष्यसि राघवम् ॥ १३ ॥
[10]प्रमाणमिति तच्छ्रुत्वा राजराजस्य योषितः ॥ हित्वा यानानि यानार्हा ब्राह्मणं पर्यवारयन् ॥१४॥
वेपमाना कृशा दीना सहदेव्या सुमित्रया ॥ कौसल्या [11]तत्र जग्राह कराभ्यां चरणौ मुनेः ॥ १५ ॥
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ॥ कैकेयी [12]तस्य जग्राह चरणौ सव्यपत्रपा ॥ १६ ॥
तं प्रदक्षिणमागम्य भगवन्तं महामुनिम् ॥ अदूराद्भरतस्यैव तस्थौ दीनमनास्तदा ॥ १७ ॥

रतः । महात्मनः महाधैर्यस्य । तस्य रामस्याश्रममाचक्ष्व सचाश्रमः कियान् कियद्दूरतः । तस्यमार्गःकतमइतिपृच्छतेमे मह्यं शंसेतियोजना ॥ ८ ॥ महातपाः अतएवमहातेजाः सर्वज्ञानसमर्थइत्यर्थः । रामाश्रमप्रदेशाभिज्ञेषुगुहज्ञातिषुविद्यमानेषु मुनिंप्रतिप्रश्नस्तस्य पूजार्थं ॥ ९ ॥ अर्धतृतीयेष्विति अर्धतृतीयंयेषांतेष्वर्धतृतीयेषु सार्धयोजनद्वितयइत्यर्थः। अतीतेष्वितिशेषः। अजने मुनिव्यतिरिक्तग्राम्यजनरहिते वने तत्रप्रसिद्धोगिरिः वर्ततइतिशेषः ॥ १० ॥ तस्यगिरेरुत्तरंपार्श्वमासाद्य स्थितामन्दाकिनीनामकाचिन्नदी अस्तीतिशेषः । द्रुमाः काननभिन्नाः ॥ ११ ॥ तत्सरितोमन्दाकिन्याः अनन्तरं समीपे । चित्रकूटस्तिष्ठति नतु व्यवहितपार्श्वे । तयोः सरिद्गिर्योर्मध्ये । पर्णकुटी पर्णशाला कृता तत्रवसतः ध्रुवंयोगप्रभावेनजानामीत्यर्थः ॥ १२ ॥ अस्मादाश्रमात् दक्षिणेनमार्गेणकिंचिद्दूरंगत्वा ततःसव्यदक्षिणं नैर्ऋतदिग्भागोयथाभवतितथावाहिनींवाहयस्व किञ्चिद्दूरंदक्षिणएकोमार्गः ततःशाखामार्गेणनैर्ऋतदिग्भागगामिनागन्तव्यमिति भावः । कान्तारमार्गस्यसूक्ष्मत्वाद्यथायोग्यंमार्गस्यवामतोदक्षिणतश्चविरलप्रदेशेवाहिनाप्रापयस्वेत्यर्थइत्यप्याहुः ॥ १३ ॥ इति उक्तप्रकारेण । तत्प्रयाणं प्रस्थानं श्रुत्वा । राजराजस्य महाराजस्यदशरथस्य । योषितः कौसल्याद्याः । यानार्हाः यानत्यागानर्हाअपियानानित्यक्त्वा । ब्राह्मणं ब्रह्मविदंभरद्वाजं । पर्यवारयन् वन्दनायेतिशेषः ॥ १४ ॥ वेपमाना वार्धकाद्दृषिदर्शनाच्च । कृशा दीना । रामविरहादितिशेषः ॥ १५ ॥ असमृद्धेन अपूर्णेन फलापर्यवसायिनेतियावत् । कामेन मनोरथेन उपलक्षितेतिशेषः । लोकस्यगर्हिता लोकेनगर्हिता । सव्यपत्रपा सलज्जा । रामविवासनहेतुत्वात् ॥ १६ ॥ लज्जावशादेवकौसल्यादिभिःसह मुनेःपुरतः स्थातुमशक्ताप्रदक्षिणव्याजेनभरतंगतेत्याह—तमित्यादिना । दीनमनाः कैके-

अपेतक्लमसंतापाःविगतबाह्याभ्यन्तरसंतापाः ॥ ६ ॥ **ती०** अर्धतृतीयेषु अर्धयुक्ततृतीयेष्वित्यर्थः । सार्धयोजनद्वयेवा । **स०** अर्धतृतीयंयेषु प्रथमंद्वितीयंतृतीयंचेतित्रिषुयोजनेषु । दशक्रोशपरिमितोमार्गइतियावत् । रम्यंनिर्झरयुक्तंकाननंयस्मिन्सतथा **शि०** अर्धतृतीयेषुअर्धमेवतृतीयंयस्मिन् । सार्धद्वयमित्यर्थः । तस्यैकशेषेणकपिञ्जलाधिकरणन्यायेनसार्धसप्तेत्यर्थः । तेषुयोजनेषु । अजने दुर्जनरहिते ॥ १० ॥ **स०** आसाद्यप्राप्यतिष्ठतीत्यर्थः । पुष्पितद्रुमसंछन्ना पुष्पितद्रुमैःसम्यक्छन्ना । एतेवृक्षास्तीरजाइतिज्ञेयं । पुष्पितकाननेत्येतत्तुविप्रकृष्टतयेतिज्ञातव्यं ॥ ११ ॥ **ति०** तस्याअनन्तरंतत्परपार्श्वेचित्रकूटंपर्वतं तयोरामलक्ष्मणयोः पर्णकुटींचद्रक्ष्यसि ॥१२॥ **स०** हित्वा अनारुह्येत्यर्थः । यानार्हाःयानप्रवेशनयोग्याः ॥ १४ ॥ **शि०** सर्वलोकस्यगर्हिता रक्षकत्वेनस्वीकारकर्त्री । सव्यपत्रपा सव्यंकौसल्यावामभागंपातिसव्यपा । त्रपतइतित्रपा स्वस्यरामविवासनहेतुत्वस्मृत्याकिंचिल्लज्जावती ।

**[ पा० ]** १ ङ. छ. झ. ट. भ्रातुर्दर्शन. २ ख. ग. ङ. छ. झ. ञ. ट. चित्रकूटगिरिः. ३ ङ. संपन्ना. ४ ङ. छ. झ. श्चित्रकूटंचपर्वतं. ५ ङ. छ. झ. ट. पर्णकुटीं. ६ ङ. च. छ. झ. ञ. ट. दक्षिणेनर्च. ७ ख. च. ञ. सव्यंदक्षिणमेवच. क. छ. झ. ट. सव्यदक्षिणमेवच. ८ ङ. च. ञ. ट. समाकीर्णां. ९ ग. महाबाहो. १० क. ख. घ—ट. मितिचश्रुत्वा. ११ क. च. ञ. तस्य. १२ छ. झ. ट. तत्र.

ततः पप्रच्छ भरतं भरद्वाजो दृढव्रतः ॥ विशेषं ज्ञातुमिच्छामि मातॄणां तव राघव ॥ १८ ॥
एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ॥ उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः ॥ १९ ॥
यामिमां भगवन्दीनां शोकानशनकर्शिताम् ॥ पितुर्हि महिषीं देवीं देवतामिव पश्यसि ॥ २० ॥
एषा तं पुरुषव्याघ्रं सिंहविक्रान्तगामिनम् ॥ कौसल्या सुषुवे रामं धातारमदितिर्यथा ॥ २१ ॥
अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः ॥ [इयं सुमित्रा दुःखार्ता देवी राज्ञश्च मध्यमा ॥ ]
कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २२ ॥
एतस्यास्तु सुतौ देव्याः कुमारौ देववर्णिनौ ॥ उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २३ ॥
यस्याः कृते नरव्याघ्रौ जीवनाशमितो गतौ ॥ राजापुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २४ ॥
क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् ॥ ऐश्वर्यकामां कैकेयीमनार्यामार्यरूपिणीम् ॥ २५ ॥
ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम् ॥ यतोमूलं हि पश्यामि व्यसनं महदात्मनः ॥ २६ ॥
इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा ॥ स निशश्वास ताम्राक्षो नागः क्रुद्ध इव श्वसन् ॥२७॥
भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तथा ॥ प्रत्युवाच महाबुद्धिरिदं वचनमर्थवत् ॥ २८ ॥

यी ॥ १७ ॥ दृढव्रतइत्यनेन सर्वज्ञत्वंलक्ष्यते । सर्वज्ञोपिकैकेयीशिक्षार्थंपप्रच्छेत्यर्थः । विशेषं संज्ञासंज्ञिसंबन्धादिविशेषं इतिकरणमध्याहृत्य इतिपप्रच्छेत्यन्वयः ॥ १८॥ धार्मिकः सत्यवादीत्यर्थः । वचनकोविदः वचनेपण्डितः भरद्वाजवचनतात्पर्यज्ञइत्यर्थः । भरतमुखेनमातॄणांस्वभावविशेषप्रतिपादनंहिमुनेराशयः ॥ १९ ॥ शोकानशनकर्शितां शोकानशनाभ्यांकर्शितां । देवतामिव धर्मदेवतामिव । सिंहविक्रान्तगामिनं सिंहवद्विक्रान्तंविक्रमयुक्तंयथाभवतितथागामिनं गमनशीलं । धातारं विष्णुं । "एषधाताविधाताच" इतिवक्ष्यमाणत्वात् । सर्वगुणसंपन्ना राममाताएषाकौसल्येत्यर्थः ॥ २०—२१ ॥ वामभुजंश्लिष्टा कौसल्यायावेपमानाङ्गत्वात्तद्धारणार्थंतद्वामभुजमवधृत्यस्थितेत्यर्थः । दुर्मना: दुःखितमनाः । दुर्मनस्त्वेदृष्टान्तः—कर्णिकारस्येति । शीर्णपुष्पा म्लानपुष्पा ॥ २२ ॥ एतस्याइत्यत्र उक्तगुणसंपन्नयोर्लक्ष्मणशत्रुघ्नयोर्मातेयमितिबोध्यं । देववर्णिनौ अश्विनीदेवतुल्यौ ॥ २३ ॥ जीवनाशं राक्षसभूयिष्ठंदण्डकारण्यंप्रतिविवासनात् जीवस्यजीवनस्यनाशं । इतः इहवने । क्रुध्यतीतिक्रोधना कर्तरिल्युट् । अकृतप्रज्ञां अशिक्षितबुद्धिं । सुभगमानिनीं सुभगांसुन्दरीमात्मानंमन्यतइतिसुभगमानिनीतां । वस्तुतोऽनार्यां आर्यरूपिणीं । आर्यवद्भासमानां । यतोमूलं यत्कारणकं । आत्मनोमम ॥ २४—२६ ॥ बाष्पगद्गदया रामविवासनस्मरणजबाष्पेणगद्गदया स्खलन्त्या गिरा इत्युक्त्वा । नागः सर्पः ॥ २७ ॥ तथाब्रुवन्तमित्यन्वयः । महाबुद्धिः भाविज्ञः । अर्थवत् प्रयोजनवत् ॥ २८ ॥

सैवसेतिकर्मधारयः । कैकेयीच ॥ १६ ॥ शि० शोकानशनकर्शितां शोकहेतुकभोजनाभावहेतुककृशताविशिष्टां ॥ २० ॥ स० धातारं उपेन्द्रं ॥ २१ ॥ स० देववर्णिनौ देवानांवर्णोरूपमेतयोरस्तीतितथा । यद्वा देवानांवर्णोवर्णनास्तुतिरितियावत् । ययोस्तौ । कुमारौ षण्मुखसमौ । कुःकुत्सितोमारःसौन्दर्येणयाभ्यामितिवा । अतोनसुतावित्यतिरिक्तता ॥ २३ ॥ स० जीवनेपिनाशःजीवनाशः अदर्शनमितियावत् । तंगतौ । शि० जीवनाशं जीवस्यप्रजापालनस्यनाशंअभावं गतौ ॥ २४ ॥ शि० क्रोधेनामप्रसिद्धिर्यस्यास्साक्रोधनामामन्थरा । तस्यांकृतास्थापिताप्रज्ञाबुद्धिर्ययातां मन्थरानुकूलवर्तिनीमित्यर्थः । दृप्तां अहमतीवराजप्रियेतिगर्वविशिष्टां राजातिप्रीतिविषयीभूतामित्यर्थः । अतएवसुभगमानिनीं सुभगानांराज्ञःस्वशुभप्राप्तीच्छावतांकर्तॄणांमानःपूजाअस्ति अस्यास्तां । अतएवऐश्वर्यैःकामयतेशोभतेसातां । आर्यरूपिणीं प्रशस्तरूपविशिष्टां । तलवेत्तृसत्कृतिनिरतांवा । नृशंसां रामवियोगहेतुत्वेननृभिःकथ्यमानां । पापनिश्चयां पापेस्वहेतुकवियोगदुःखदानरूपापराधेनिश्चयोयस्यास्तां । यतोयस्याःअमूलंअकारणकं आत्मनोव्यसनं अनवस्थितिंपश्यामि तांअनार्यांकनिष्ठांएतांकैकेयींममातरंविद्धि । स० आर्यरूपिणीं आर्येस्ववस्तुनइवरूपंयस्यास्तां ।

[ पा० ] १ क. ख. घ. च. ञ. व्याघ्रविक्रान्त. २ क. ख. च. वामंभुजं. ३ इदमर्धं ङ. छ. ज. झ. ट. पुस्तकेषुदृश्यते. ४ घ. ततोमूलं. ५ ग. नृपशार्दूलो. ६ ग. बाष्पोपहतया. ७ ङ. छ. झ. विनिश्वस्य स. ८ क. ख. ग. च. ज. ञ. ट. क्रुद्धोनागइवासकृत. छ. झ. क्रुद्धोनागइव. ९ ख. ग. ङ. छ—ट. तदा. १० ङ. बुद्धिर्नृशंसांपापनिश्चयां.

न [1]दोषेणावगन्तव्या कैकेयी भरत त्वया ॥ रामप्रव्राजनं ह्येतत्सुखोदर्कं भविष्यति ॥ २९ ॥
देवानां दानवानां च ऋषीणां [2]भावितात्मनाम् ॥ हितमेव भविष्यद्धि रामप्रव्राजनादिह ॥ ३० ॥
अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् ॥ आमन्त्र्य भरतः सैन्यं [3]युज्यतामित्यचोदयत् ॥ ३१ ॥
ततो [4]वाजिरथान्युक्त्वा दिव्यान्[5]हेमपरिष्कृतान् ॥ अध्यारोहत्[6]प्रयाणार्थी बहून्बहुविधो जनः ॥ ३२ ॥
[7]गजकन्या गजाश्चैव हेमकक्ष्याः पताकिनः ॥ जीमूता इव घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३३ ॥
विविधान्यपि यानानि महान्ति च लघूनि च ॥ प्रययुः सुमहार्हाणि पादैरेव पदातयः ॥ ३४ ॥
अथ यानप्रवेकैस्तु कौसल्याप्रमुखाः स्त्रियः ॥ रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्तदा ॥ ३५ ॥
[8]चन्द्रार्कतरुणाभासां नियुक्तां शिबिकां शुभाम् ॥ आस्थाय प्रययौ श्रीमान्भरतः सपरिच्छदः ॥ ३६ ॥
सा प्रयाता महासेना गजवाजि[9]रथाकुला ॥ दक्षिणां दिशमावृत्य महामेघ इवोत्थितः ॥ ३७ ॥
वनानि तु व्यतिक्रम्य जुष्टानि मृगपक्षिभिः ॥ गङ्गायाः परवेलायां [10]गिरिष्वपि नदीषु च ॥ ३८ ॥

सा [11]संप्रहृष्टद्विजवाजियोधा [12]वित्रासयन्ती मृगपक्षि[13]सङ्घान् ॥
महद्वनं [14]तत्प्रतिगाहमाना रराज सेना भरतस्य तत्र ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

---

दोषेण दोषवत्तया नावगन्तव्या तस्याःदैवप्रेरितत्वादित्यभिप्रायः । तत्रहेतुमाह—रामेति । सुखोदर्कं सुखोत्तरं । अतीतानागतवर्तमानज्ञोमहर्षिर्भाविरावणवधादिकंहृदिनिधायदेवादीनांसुखोदर्कंभविष्यतीत्युक्तवान् ॥ २९—३० ॥ संसिद्धः लब्धाशीर्वादः । आमन्त्र्य आपृच्छ्य । युज्यतां गमनायसंनह्यतामिति स्वसैन्यमचोदयत् ॥ ३१ ॥ वाजिरथान् वाजिनोरथांश्च । युक्त्वा संनह्य । युक्तानितिपाठे सज्जीकृतान् । प्रयाणार्थी प्रयाणकाङ्क्षी ॥ ३२ ॥ गजकन्याः करेणवः । हेमकक्ष्याः हेममयबन्धनरज्जवः । सघोषाः घण्टाघोषयुक्ताः । पताकिनइत्यत्र “ पुमान्स्त्रिया ” इत्येकशेषः ॥ ३३ ॥ प्रययुरित्यत्रसादिनआरुह्येति शेषः । यद्वा यानानीतितत्स्थालक्ष्यन्ते । पदातयः पादैरेवययुः । यानैःसमंययुरितिभावः ॥ ३४ ॥ यानप्रवेकैः यानोत्तमैः । “ प्रवेकानुत्तमोत्तमाः ” इत्यमरः ॥ ३५ ॥ चन्द्रार्कतरुणाभासां तरुणचन्द्रार्ककान्तिं । नियुक्तां वसिष्ठादिभिराज्ञप्तां । सपरिच्छदः सपरिवारः ॥ ३६ ॥ सेत्यादिश्लोकद्वयमेकंवाक्यं । गङ्गायाः दक्षिणवाहिन्याः । परवेलायां पश्चिमभागे । स्थितेतिशेषः । महासेनावनानिव्यतिक्रम्य गिरिषुनदीषुचविश्रम्येतिशेषः । उत्थितोमेघइव दक्षिणांदिशमावृत्यप्रयातेतिसंबन्धः । यद्वा महासेनागिरिषुनदीषुचवनानिव्यतिक्रम्येतिवाऽन्वयः ॥ ३७—३८ ॥ तत्र तदेत्यर्थः ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने द्विनवतितमःसर्गः ॥ ९२ ॥

---

यामूलंयस्यव्यसनस्यतद्यतोमूलं ॥ २५—२६ ॥ ति० भविष्यदितिशत्रन्तं । जानीहीतिशेषः । एवंदेवादिकृतोऽयंमन्थराद्वाराकैकेय्याबुद्धिमोहइतिभावः । अतएवनैषादोषभागितिबोध्यं । देवादीनांसुखदत्वात् । स० दानवानां सतां ॥ ३० ॥ स० संसिद्धः संनद्धः ॥ ३१ ॥ ति० चन्द्रार्कतरुणाभासां तरुणचन्द्रार्कसदृशीं । क्वचिद्भागेस्फटिकादिनिर्मितां क्वचिद्भागेपद्मरागादिनिर्मितामितियावत् ॥ ३६ ॥ ती० गङ्गायाःपरवेलायां दक्षिणकूले निविष्टासासेना उत्थितोमेघइवदक्षिणांदिशमावृत्य गिरिष्वपिनदीषुवनानिव्यतिक्रम्यप्रयातेतिसंबन्धः ॥ ३८ ॥ इतिद्विनवतितमस्सर्गः ॥ ९२ ॥

[ पा० ] १ ख. ग. दोषेणहिमन्तव्या. २ घ. च. ञ. चमहात्मनां. ३ ङ. ट. मितिचाब्रवीत्. ४ ग. रथान्नागान्युक्तान्. ख. च. ज. रथान्युक्तान्दिव्यान्. ५ ङ. ट. भूषितान्. ६ ङ. च. छ. झ. ञ. ट. त्प्रयाणार्थं. ७ ख. ग. करिण्यश्च. ८ ग. घ. सचार्के. ९ च. छ. झ. ञ. ट. समाकुला. १० छ. झ. ट. गिरिष्वथनदीष्वपि. ११ क. ङ. ज. झ. ट. द्विपवाजियूथा. १२ च. विवासयन्ती. १३ क. च. ञ. यूथान्. १४ क—छ. झ. ञ. ट. त्प्रविगाहमाना.

## त्रिनवतितमः सर्गः ॥ ९३ ॥

सैन्यादिभिःसहचित्रकूटमागतवताभरतेनभरद्वाजोक्तलक्षणैस्तस्यचित्रकूटत्वनिर्धारणेनसैन्यान्प्रतिरामाश्रमान्वेषणचोदना ॥ १ ॥ रामावासंविचिन्वद्भिर्नातिदूरेधूमदर्शनमावेदितेनभरतेनतद्देशस्यरामावासत्वसंभावनयातत्रैवसेनास्थापनपूर्वकं वसिष्ठसुमन्त्रसाहित्येनतद्देशगमनाध्यवसायः ॥ २ ॥

तया महत्या यायिन्या ध्वजिन्या वनवासिनः ॥ अर्दिता यूथपा मत्ताः सयूथाः संप्रदुद्रुवुः ॥ १ ॥
ऋक्षाः पृषतसङ्घाश्च रुरवश्च समन्ततः ॥ दृश्यन्ते वनराजीषु गिरिष्वपि नदीषु च ॥ २ ॥
स संप्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः ॥ वृतो महत्या नादिन्या सेनया चतुरङ्गया ॥ ३ ॥
सागरौघनिभा सेना भरतस्य महात्मनः ॥ महीं संच्छादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४ ॥
तुरङ्गौघैरवतता वारणैश्च महाजवैः ॥ अनालक्ष्या चिरं कालं तस्मिन्काले बभूव भूः ॥ ५ ॥
स यात्वा दूरमध्वानं सुपरिश्रान्तवाहनः ॥ उवाच भरतः श्रीमान्वसिष्ठं मन्त्रिणां वरम् ॥ ६ ॥
यादृशं लक्ष्यते रूपं यथा चैव श्रुतं मया ॥ व्यक्तं प्राप्ताः स तं देशं भरद्वाजो यमब्रवीत् ॥ ७ ॥
अयं गिरिश्चित्रकूट इयं मन्दाकिनी नदी ॥ एतत्प्रकाशते दूरान्नीलमेघनिभं वनम् ॥ ८ ॥
गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति ॥ वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ९ ॥
मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु ॥ नीला इवातपापाये तोयं तोयधरा घनाः ॥ १० ॥
किंनराचरितं देशं पश्य शत्रुघ्न पर्वतम् ॥ मृगैः समन्तादाकीर्णं मकरैरिव सागरम् ॥ ११ ॥

यायिन्या गच्छन्त्या । अर्दिताः पीडिताः । यूथपाः गजादियूथनाथाः । " यूथनाथस्तुयूथपः " इत्यमरः ॥ १ ॥ पृषतसङ्घाः बिन्दुमन्मृगसङ्घाः । ऋक्षाः भल्लूकाः । रुरवोबिन्दुरहिताःस्थूलकायाः विकटशृङ्गा मृगाः । दृश्यन्ते अदृश्यन्त । वनराजीष्वित्यादिनाअपूर्वमनुष्यादिदर्शनेनस्तब्धेक्षणाःस्थिताइत्युच्यन्ते ॥ २ ॥ नादिन्या रथघोषहेषितबृंहितादिभिरितिशेषः ॥ ३ ॥ द्यां आकाशं ॥ ४ ॥ अवतता निरन्तरा । तस्मिन्काले गमनकाले । चिरकालमित्यनेनकदाचिल्लक्ष्यतइतिगम्यते ॥ ५ ॥ मन्त्रिणां मन्त्रविदां । यद्वा औचित्यान्मन्त्रशब्दःकार्यविचारेवर्तते ॥ ६ ॥ अस्य देशस्य यादृशंरूपंलक्ष्यते मन्दाकिनीचित्रकूटमध्यवर्तित्वरूपं मयाच यथा येनप्रकारेणश्रुतं भरद्वाजात् तथादृश्यतइतिशेषः ॥ ७ ॥ तदेवाह—अयमित्यादिना । अयं पुरोवर्तीगिरिश्चित्रकूटोभवति तथेयंमन्दाकिनीभवति । एतत् अनयोर्मध्यवर्तिवनं । नीलमेघनिभंप्रकाशते ॥ ८ ॥ अथतद्देशप्राप्तिंदर्शयति —गिरेःसानूनीति । सानूनि एतानीतिसिद्धं । अवमृद्यन्ते भज्यन्ते ॥ ९ ॥ अथरामनिवासत्वेनभोग्यताबुद्ध्यातद्वनंभ्रातरंप्रतिवर्णयति—मुञ्चन्तीत्यादि। एते बकुलाइत्यर्थः । आतपापाये घर्मान्ते वर्षाकाल इतियावत् । तोयधराइति नीलत्वेहेतुः ॥ १० ॥ किंनराचरितंदेशं किंनराचरितदेशरूपंपर्वतं ॥ ११ ॥

**ति०** वनवाटेषु वनमार्गेषु । "वाटःपथश्चपन्थाश्च" इतिशब्दरत्नमाला ॥ २ ॥ **ति०** सा मही ॥ ५ ॥ **स०** भरद्वाजोयंदेशं यादृशं यादृशलक्षणंविशिष्टंअब्रवीत् यथाचमयाश्रुतं तादृशलक्षणंतंदेशं व्यक्तंप्राप्तास्स्म । यतोस्यरूपंतथैवलक्ष्यते । स्मेत्यव्ययंवा आर्षोवाविसर्गलोपः ॥७॥ **स०** यंभरद्वाजोऽब्रवीदित्यस्यात्राप्यन्वयः । तथायांनदीमब्रवीत्सामन्दाकिनीनदीइयमेवेत्यन्वयः ॥८॥ **ति०** अवमृद्यन्ते पीड्यन्ते ॥ ९ ॥ **ति०** अतएवैते नगाः वृक्षाः गजानामाघातेनचलितशाखाः पर्वतसानुषुकुसुमानिमुञ्चन्ति

**[ पा० ]** १ ख. ग. गच्छन्त्या. २ ङ. छ. झ. ट. मुख्याश्च. ग. संघाता. ३ छ. झ. वनवाटेषु. ४ घ. च. ञ. यायिन्या. ५ ङ. च. छ. झ. ञ. ट. महाबलैः. ६ ङ. च. छ. झ. ञ. ट. सा. ७ क. ग. ङ. छ. झ. ञ. ट. गत्वा. ८ क. ङ. च. छ. झ. ञ. संपरि. ट. सपरि. ९ ङ. छ. झ. ट. वचनंश्रीमान्. १० घ. तादृशं. ११ ङ. छ. झ. ट. मयाश्रुतं. १२ क. ग. ङ—ञ. कूटस्तथा. १३ च. ट. कामगैः १४ क. ग. घ. च. ञ. चरितोद्देशं. १५ ख. ङ. छ. झ. ट. पर्वते. १६ क. ख. ग. ङ. छ. झ. ञ. ट. हयैः.

एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः ॥ वायु[1]प्रविद्धा शरदि मेघ[2]राजिरिवाम्बरे ॥ १२ ॥
कुर्वन्ति कुसुमापीडाञ्शिरस्सु [3]सुरभीनमी ॥ मेघप्रकाशैः फलकैर्दाक्षिणात्या [4]यथा नराः ॥ १३ ॥
निष्कूजमिव भूत्वेदं वनं घोरप्रदर्शनम् ॥ अयोध्येव [5]जनाकीर्णा सं[6]प्रति प्रतिभाति [7]मा ॥ १४ ॥
खुरै[8]रुदीरितो रेणु[9]र्दिवं प्रच्छाद्य तिष्ठति ॥ तं वहत्यनिलः शीघ्रं कुर्वन्निव मम प्रियम् ॥ १५ ॥
स्यन्दनांस्तुरगोपेतान्सूतमुख्यैरधिष्ठितान् ॥ एतान्संपततः शीघ्रं पश्य शत्रुघ्न कानने ॥ १६ ॥
एतान्वित्रासितान्पश्य बर्हिणः प्रियदर्शनान् ॥ [10]एतमाविशतः शीघ्रमधिवासं [11]पतत्रिणः ॥ १७ ॥
अतिमात्रमयं देशो मनोज्ञः प्रतिभाति [12]मा ॥ तापसानां निवासोऽयं व्यक्तं स्वर्ग[13]पथो यथा ॥ १८ ॥
मृगा मृगीभिः सहिता बहवः पृषता वने ॥ मनोज्ञरूपा [14]लक्ष्यन्ते कुसुमैरिव चित्रिताः ॥ १९ ॥
साधुसैन्याः प्रतिष्ठन्तां विचिन्वन्तु च [15]कानने ॥ यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ ॥ २० ॥
भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः ॥ वि[16]विशुस्तद्वनं शूरा [17]धूमं च ददृशुस्ततः ॥ २१ ॥
ते समालोक्य धूमाग्रमूचुर्भरतमागताः ॥ नामनुष्ये भवत्यग्निर्व्यक्तमत्रैव राघवौ ॥ २२ ॥

प्रचोदिताः सैनिकैरितिशेषः । प्रविद्धा प्रेरितेतियावत् ॥ १२ ॥ अमी भटाः । मेघप्रकाशैः फलकैः केशबन्धविशेषैः वनसंचारार्थकल्पितैरुपलक्षिताःसन्तः । दाक्षिणात्यानरायथा दाक्षिणात्यानराइव । शिरस्सु कुसुमापीडान् कुसुमशेखरान् कुर्वन्ति । " आपीडशेखरोत्तंसावतंसाःशिरसिस्रजः " इतिहलायुधः । दाक्षिणात्याहिकेशानुद्धृत्यबध्वाकुसुमापीडैरलंकुर्वन्ति ॥ १३ ॥ घोरप्रदर्शनं क्रूरदर्शनमिदंवनं पुरानिष्कूजमिवभूत्वा निर्जनंभूत्वेतियावत् । संप्रति जनाकीर्णा अयोध्या सौम्यनगरीव मा मांप्रतिभाति ॥ १४ ॥ हयादिखुरैरुदीरितः उत्थापितोरेणुर्दिवंप्रच्छाद्यतिष्ठति । वहति द्रुतमपनयति । कुर्वन्निवमम प्रियं रामाश्रमदर्शनप्रदानादितिभावः । अनेनावगम्यते रामाश्रमवर्णनंतदधिष्ठितत्वेनप्रीतिहेतुत्वादिति ॥ १५ ॥ वक्ष्यमाणत्रासहेतुत्वेनाह—स्यन्दनानिति । सूतमुख्यैः सारथिमुख्यैः । संपततः रामदर्शनकुतूहलेनसम्यग्गच्छतः ॥ १६ ॥ वित्रासितान् रथैरितिशेषः । बर्हिणः मयूरान् । एतं शैलं । पतत्रिणः प्रशस्तपक्षानिति बार्हिविशेषणं ॥ १७ ॥ अतिमात्रंमनोज्ञइतिसंबन्धः । अतएवस्वर्गपथोयथा स्वर्गप्रदेशइव । मा मांप्रतिभाति ॥ १८ ॥ पृषताः बिन्दुमृगाः ॥ १९ ॥ साधुसैन्याः उचिताःसैनिकाः । " साधुस्त्रिषूचितेसौम्येसज्जनेवार्धुषौपुमान् " इतिवैजयन्ती । प्रतिष्ठन्तां गच्छन्त्वित्यर्थः । दृश्येते दृश्येयातां । लकारव्यत्ययआर्षः ॥ २०—२१ ॥ धूमाग्रं धूमशिखां । अमनुष्ये मनुष्यरहितेदेशे । अग्निःधूमरेखाविशेषनिश्चितः नभवति । अत्र अत्रैव । वह्निमत्प्रदेशेराघवौस्तः । व्यक्तं ध्रुवं

॥ १० ॥ **स०** प्रचोदिताः प्रेरिताः त्रासिताइतियावत् ॥ १२ ॥ **ती०** दक्षिणदिग्भवानराः मेघप्रकाशैः ऋक्षादिंनीलचर्मपिनद्धतयानीलमेघतुल्यैःफलकैःसाधनभूतैः शिरस्सुकुसुमापीडान् कुसुमसमूहान् यथाकुर्वन्तिधारयन्ति तथैवामीवृक्षाः कुसुमापीडान् कुसुमस्तबकान् शिरस्सुधारयन्ति । दाक्षिणात्याहिफलकान्ऋक्षादिचर्मपिनद्धान्कृत्वातेषुपुष्पाणिविकीर्यशिरस्सुधारयन्तीतिप्रसिद्धिः । **कतक०** अमीवृक्षाः निबिडप्रत्यग्रपलाशभूयिष्ठतयामेघवदवभासमानैःफलकैर्महास्कन्धशाखाभिरुपलक्षिताः दाक्षिणात्याःदक्षिणदिग्भवाः शशिप्रभान्सुरभीन्कुसुमापीडान्स्तबकशेखरान्कुर्वन्ति । दाक्षिणात्याःशचिप्रभानितिपाठः ॥ १३ ॥ **ति०** इदंवनंपूर्वं निष्कूजं जनशब्दरहितं अतएवघोरदर्शनंभूत्वा । **स०** पूर्वमपिकतिपयजनसहितत्वान्निष्कूजमिवेत्युक्तिः ॥ १४ ॥ **ती०** दावं वनं प्रच्छाद्य । "दवदावौवनारण्यवह्नी" इत्यमरः ॥ १५ ॥ **स०** पृषतानांबिन्दुसहितत्वात्कुसुमैश्चित्रिताइवेत्युक्तिः ॥ १९ ॥ **ति०** साधु यथोचितं प्रतिष्ठन्तां गच्छन्तु । गमनफलं—**विचिन्वन्त्वित्यादि** ॥ २० ॥ **ति०** वनदाहाभावविशिष्टतयाप्रत्यक्षंदृश्य-

[ **पा०** ] १ ङ. छ. झ. ट. प्रविद्धाश्शरदि. २ ङ. छ. झ. ट. मेघजालाइवा. ख. घ. च. ञ. मेघराज्यइवा. ३ क. सुरभीनगाः. ४ ङ. च. छ. झ. ञ. ट. नरायथा. ग. नराइव. ५ ग. समाकीर्णा. ६ क. च. ञ. सांप्रतं. ७ ख. ङ. च. ज—ट. मे. ८ क. च. रुद्दीपितो. ९ च. रेणुर्दावं. १० छ. झ. ट. एवमापततःशैलं. क. ख. ग. एनमापततःशैलं. ११ क. ख. घ—झ. पतत्रिणां. १२ ङ. च. छ. झ. ञ. ट. मे. १३ ङ. छ. झ. ट. पथोऽनघ. ग. पथोपमः. १४ क. ग. घ. च. ञ. दृश्यन्ते. १५ क—ट. काननं. १६ ख. व्यचिन्वंस्तद्वनं. १७ क. ङ. च. ज. झ. ट. धूमाग्रं.

अथ नात्र नरव्याघ्रौ राजपुत्रौ परन्तपौ ॥ मन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः ॥ २३ ॥
तच्छ्रुत्वा भरतस्तेषां वचनं साधुसंमतम् ॥ सैन्यानुवाच सर्वांस्तानमित्रबलमर्दनः ॥ २४ ॥
यत्ता भवन्तस्तिष्ठन्तु नेतो गन्तव्यमग्रतः ॥ अहमेव गमिष्यामि सुमन्त्रो गुरुरेव च ॥ २५ ॥
एवमुक्तास्ततः सर्वे तत्र तस्थुः समन्ततः ॥ भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधात् ॥ २६ ॥
व्यवस्थिता या भरतेन सा चमूर्निरीक्षमाणाऽपि च धूममग्रतः ॥
बभूव हृष्टा नचिरेण जानती प्रियस्य रामस्य समागमं तदा ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

## चतुर्नवतितमः सर्गः ॥ ९४ ॥

रामेणसीतांप्रतितत्तद्विशेषप्रदर्शनपूर्वकंचित्रकूटवर्णनम् ॥ १ ॥

दीर्घकालोषितस्तस्मिन्गिरौ गिरिवनप्रियः ॥ वैदेह्या प्रियमाकाङ्क्षन्स्वं च चित्तं विलोभयन् ॥ १ ॥
अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् ॥ भार्याममरसङ्काशः शचीमिव पुरन्दरः ॥ २ ॥
न राज्याद्भ्रंशनं भद्रे न सुहृद्भिर्विनाभवः ॥ मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥ ३ ॥

॥ २२ ॥ अथ यदिनस्तइत्यर्थः । तपस्विनः सन्ति तेप्रष्टव्याइतिभावः ॥ २३ ॥ साधुसंमतं साधूनांन्यायविदांसंमतं । अमित्रबलमर्दनः अमोघशासनइतियावत् ॥ २४ ॥ यत्ताः निःशब्दाः । इतः अस्माद्देशात् । परं अग्रतः । भवद्भिर्नगन्तव्यं अहमेवराजसु मन्त्रिषुसुमन्त्रएव ऋत्विक्षुगुरुर्वसिष्ठएव । धृतिरितिपाठे सुमन्त्रएवोच्यते ॥ २५—२६ ॥ अग्रतोधूमंनिरीक्षमाणापिच अनेनरामदर्शनत्वरातिशयःसूच्यते । व्यवस्थिता भरतेनव्यवस्थापितेत्यर्थः । भरतेनहेतुनाव्यवस्थितावा। साचमूः प्रियस्यरामस्य नचिरेण अचिरेण। समागमंजानतीसती तदा व्यवस्थाकालेपिहृष्टाबभूव । जानकीप्रियस्येतिचपाठः ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥

एवमेतावत्पर्यन्तंभरतकथांप्रस्तुत्य रामस्यचित्रकूटप्रवेशानन्तरदिनेषुविहारतारतम्याभावात् भरतप्राप्तिदिनसंभूतविहारविशेषान्वर्णयति—दीर्घकालेत्यादिनासर्गद्वयेन । आदौश्लोकद्वयमेकान्वयं । अथ प्रातःकर्तव्यकर्मानुष्ठानानन्तरं । तस्मिन्गिरौ चिरपरिचयेपिवैलक्षण्यातिशयादपूर्ववद्भासमाने । दीर्घकालोषितः मासमात्रमुषितोपि गिरिवनप्रियः । "नवंनवंप्रीतिरहोकरोति" इत्युक्तरीत्या गिरिवनयोर्नवनवत्वापादकप्रीतिकः । वैदेह्याः प्रियेणसहैववनदर्शनकुतूहलायाः । प्रियं प्रीतिमाकाङ्क्षन् । तद्द्वारास्वचित्तंचविलोभयन् प्रीणयन् । अमरसंकाशः कुत्रापिनिर्भयइत्यर्थः । दाशरथिः रामः । चित्रमन्वर्थं चित्रकूटं। भार्यां सर्वात्मनाभरणीयांसीतां । शचींपुरन्दरइव अदर्शयत् । "गतिबुद्धि–"–इत्यादिना द्विकर्मकत्वं ॥ १—२ ॥ राज्यात् भक्तजनपूर्णात् । विनाभवो

मानेइतिशेषः । तस्मान्मनुष्यकारणकवह्न्यनुपपत्त्याऽत्रैवराघवावितिजानीमः ॥ २२ ॥ **ति०** राजभीत्यानिश्चयेनतथावक्तुमशक्नुवन्तःपक्षान्तरमाहुः—**अथेति** । **वि०** पक्षान्तरमाहुः—**अथवेति** । नरव्याघ्रौ अत्रयदिनस्तइतिशेषः ॥ २३ ॥ **ति०** धृतिरित्यशोकमन्त्रिणोनामान्तरं । **स०** सुमन्त्रोधृतिरित्येतौ ममपश्चादागच्छतामितिशेषः ॥ २५ ॥ **स०** समागममुद्दिश्यभरतेनस्थापिता । **वि०** याचमूर्भरतेनव्यवस्थिता व्यवस्थापिता सा वासाय अग्रतोभूमिंनिरीक्षमाणा नचिरेण शीघ्रं । जानकीप्रियस्यरामस्य समागमंनिरीक्षमाणा तदाहृष्टाबभूव ॥ २७ ॥ इतित्रिनवतितमस्सर्गः ॥ ९३ ॥

**शि०** दीर्घकालोषितः त्रीन्मासानुषितः ॥१॥ **तनि०** राज्यात् परमपदैश्वर्यात् भ्रंशनं तत्त्यागइत्यर्थः। "त्यक्त्वावैकुण्ठमुत्तमं"

[ **पा०** ] १ च. ञ. अथवातौ. २ क—ट. अन्ये. ३ च. ञ. वचनंतेषांभरतस्साधु. ४ ग. ज. सर्वान्स्तान्. ५ च. ञ. बलसूदनः. ६ क. ग. ङ. च. छ. झ. ट. धृतिरेव. ७ क. ख. ग. ङ. च. छ. झ. ञ. ट. सैन्यास्तत्र. ८ च. समादधौ. क. ख. ग. समादधे. ९ ङ. छ. झ. ञ. ट. भूमिमग्रतः. १० क. च. ञ. जानकीप्रियस्य. ११ क. अथदीर्घोषितः. १२ घ. ङ. छ. झ. ट. वरप्रियः. १३ घ. छ. झ. ट. राज्यभ्रंशनं.

पश्येममचलं भद्रे नानाद्विजगणायुतम् ॥ शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विभूषितम् ॥ ४ ॥
केचिद्रजतसङ्काशाः केचित्क्षतजसंनिभाः ॥ पीत[1]माञ्जिष्ठवर्णाश्च केचिन्मणिवरप्रभाः ॥ ५ ॥
पुष्पार्ककेत[2]काभाश्च केचिज्ज्योतीरसप्रभाः ॥ विराजन्तेऽचलेन्द्रस्य दे[3]शा धातुविभूषिताः ॥ ६ ॥
नानामृगग[4]णद्वीपितरक्ष्वृक्षगणैर्वृतः ॥ अदुष्टैर्भात्ययं शैलो बहुपक्षि[5]समायुतः ॥ ७ ॥
आम्रजम्ब्वसनैर्लोध्रैः प्रियालैः प[6]नसैर्धवैः ॥ अङ्कोलैर्भव्यतिनि[7]शैर्बिल्वतिन्दुकवेणुभिः ॥ ८ ॥
[8]काश्मर्यरिष्टवरु[9]णैर्मधूकैस्ति[10]लकैस्तथा ॥ बदर्यामलकैर्नीपैर्वेत्रधन्वनबीजकैः ॥ ९ ॥
पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः ॥ एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥ १० ॥
शैलप्रस्थेषु रम्येषु पश्येमां[11]त्रोमहर्षणान् ॥ किंनरान्द्वन्द्वशो भद्रे रममाणान्मनस्विनः ॥ ११ ॥
शाखावसक्तान्खड्गांश्च प्रवराण्यम्बराणि च ॥ पश्य विद्याधरस्त्रीणां क्रीडोद्देशान्मनोरमान् ॥ १२ ॥
जलप्रपातैरुद्भेदैर्निष्यन्दैश्च [12]क्वचित्क्वचित् ॥ स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥ १३ ॥
गुहासमीरणो गन्धान्नानापुष्प[13]भवान्[14]वहन् ॥ घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥ १४ ॥
[15]यदीह शरदोऽनेकास्त्वया सार्धमनिन्दिते ॥ लक्ष्मणेन च वत्स्यामि न मां शोकः [16]प्रधक्ष्यति ॥ १५ ॥

विनावस्थानं । अपृछान्दसः । दृष्ट्वा स्थितस्येतिशेषः । मनोनबाधते नदुःखाकरोतीत्यर्थः । अयोध्यावासिजनविरहजःखेदःसर्वोनिवृत्तइतिभावः ॥ ३ ॥ स्वचित्तविलोभनमुक्त्वामैथिलीप्रियकरणंदर्शयति—पश्येति । खं आकाशं । उद्विद्धैरिवस्थितैः विद्धोत्थितैरिव स्थितैः अभ्रंलिहैरितियावत् । कर्तरिनिष्ठा ॥ ४ ॥ धातुविभूषिताः नानाधात्वलंकृताः । अतएवाचलेन्द्रस्य चित्रकूटस्य । केचिद्देशाः रजतसंकाशाः अत्यन्तशुभ्राः । केचित् क्षतजसंकाशाः रुधिरसदृशवर्णाः । मणिवरप्रभाः इन्द्रनीलप्रभाः । पुष्पार्ककेतकाभाः पुष्पःपुष्परागः । अर्कःस्फटिकः । "अर्कःस्फटिकसूर्ययोः" इत्यमरः । केतकाभाः ईषत्पाण्डुराः । ज्योतीरसप्रभाः ज्योतींषितारा:ज्वालावा । "ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वराग्निषु" इतिवैजयन्ती । रसः पारदः । श्वेतवर्णावान्तरभेदाउच्यन्ते ॥५—६॥ द्वीपी महाव्याघ्रः । तरक्षुः क्षुद्रव्याघ्रः । अदुष्टैः । मुनिजनसंनिधानेन शान्ततयाहिंसादिदोषरहितैः ॥ ७ ॥ असनैः पीतसालैः । लोध्रैः तिरीटैः । प्रियालैः राजादनैः । अङ्कोलैः भव्यैः न्युब्जैः । तिनिशैः स्यन्दनैः । बिल्वैः तिन्दुकैः कालस्कन्धैः । वेणुभिः वंशैः । काश्मरीभिः मधुपर्णिकाख्यैर्वृक्षैः । अरिष्टैः निम्बैः । वरुणैः तिक्तशाकैः । मधूकैः गुडपुष्पैः । तिलकैः क्षुरकैः । बदरीभिः आमलकैः । नीपैः कदम्बैः । वेत्रैः धन्वनैः इन्द्रवृक्षैः । बीजकैः बीजप्रचुरफलैः दाडिमैः । पुष्पवद्भिरित्यादि सर्ववृक्षविशेषणं । पुष्यति वर्धयति ॥ ८—१० ॥ रोमहर्षणान दर्शनमात्रतः पुलककरान् । द्वन्द्वशः स्त्रीपुरुषौद्वौद्वावित्यर्थः । मनस्विनः अन्योन्यबद्धमनस्कान् ॥ ११ ॥ खड्गादीनि विद्याधराणामेव । विद्याधराः देवयोनिविशेषाः ॥ १२ ॥ जलप्रपातैः निर्झरैः । उद्भेदैः भुवमुद्भिद्य निर्गतैः स्रवद्भिरितिसर्वविशेषणं ॥ १३ ॥ घ्राणतर्पणमिति क्रियाविशेषणं ॥ १४ ॥ हे अनिन्दिते सर्वाङ्गसुन्दरि । इह वने । अनेकाःशरदः संवत्सरान् । त्वयालक्ष्मणेन कैङ्कर्यलक्ष्मीवताचसार्धं । यदिवत्स्यामि तदा मांशोकः नगरत्यागजंदुःखं । नप्रधक्ष्यति नपीडयिष्यतीत्यर्थः । अत्रयदीत्युक्त्याभाविविवासस्सू-

इतिवत् सुहृद्भिः वैनतेयप्रभृतिभिः । विनाभवः विनावस्थानं मेमनोनबाधते । रमणीयं लीलाविभूतिगतत्वेपिपरमव्योम्नोप्यतिरमणीयं । इमंगिरिं वक्ष्यमाणविशेषणयुक्तं ॥३॥ **ती०** माञ्जिष्ठवर्णाः चित्रवर्णाः ॥५॥ **ति०** खमिवोद्विद्धैः शीलितादिवत्कर्तरिनिष्ठा । खस्यवेधकैरित्यर्थः ॥ ४ ॥ **ति०** अदुष्टैः तपस्विवैभवाद्धिंसादिदोषरहितैः ॥ ७ ॥ **ति०** कामहर्षणान् देशानितिशेषः । तत्र

[ **पा०** ] १ ख. घ. पीतामांजिष्ठ. २ ख. कनकाभासाः. ३ ङ. सानुधातु. ४ ङ. छ. झ. ञ. ट. गणैर्द्वीपि. ५ क. ख. ग. ङ. च. छ. झ. ञ. ट. समाकुलः. ६ ङ. ट. पनसैरपि. ७ क. ख. ग. च. ञ. ट. तिमिशैः. ८ ख. ग. ङ. छ. झ. ट. काश्मर्यारिष्ट. ९ ख. ग. ङ. च. छ. झ. ट. वरणैः. १० ङ. ट. तिलकैरपि. ११ न्कामहर्षणान्. १२ घ. पृथक्पृथक्. १३ ग. भरान्. १४ ङ. छ. झ. ञ. ट. न्बहून्. १५ क. च. ञ. यद्यहं. १६ ग. झ. ट. प्रधर्षति.

बहुपुष्पफले रम्ये नानाद्विजगणायुते ॥ विचित्रशिखरे ह्यस्मिन्रतवानसि भामिनि ॥ १६ ॥
अनेन वनवासेन मया प्राप्तं फलद्वयम् ॥ पितुश्चानृणता धर्मे भरतस्य प्रियं तथा ॥ १७ ॥
वैदेहि रमसे कच्चिच्चित्रकूटे मया सह ॥ पश्यन्ती विविधान्भावान्मनोवाक्कायसंयतान् ॥ १८ ॥
इदमेवामृतं प्राहू राज्ञि राजर्षयः परे ॥ वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९ ॥
शिलाः शैलस्य शोभन्ते विशालाः शतशोऽभितः ॥ बहुला बहुलैर्वर्णैर्नीलपीतसितारुणैः ॥ २० ॥
निशि भान्त्यचलेन्द्रस्य हुताशनशिखा इव ॥ ओषध्यः स्वप्रभालक्ष्या भ्राजमानाः सहस्रशः ॥२१॥
केचित्क्षयनिभा देशाः केचिदुद्यानसन्निभाः ॥ केचिदेकशिला भान्ति पर्वतस्यास्य भामिनि ॥२२॥

च्यते ॥ १५ ॥ घ्राणरसनचक्षुस्त्वक्श्रोत्रप्रीतिकरेऽस्मिन्वने रतवानसि प्रीतियुक्तोसि । भामिनि विशेषतस्त्वत्सन्निधानादितिभावः ॥ १६ ॥ नकेवलंसुखस्यलाभः किन्तुपित्रानृण्यबन्धुहर्षावपीत्याह—अनेनेति । फलद्वयमेवाह—पितुरिति । धर्मेविषये पितुः अनृणता आनृण्यं तद्वाक्यकरणमित्यर्थः । भरतस्य प्रियंच भरतस्यभाविस्वकैङ्कर्यमितिभावः ॥ १७ ॥ एवंस्वप्रीतिमुक्त्वासीताप्रीतिंपृच्छति—वैदेहीत्यादिना । वैदेहि भोगोपोद्घातकेलीचुलकितभगवद्वैश्वरूप्यानुभावांत्वांजानासिकिं मया भोगस्रोतसित्वांप्रधानीकुर्वन्तंमांजानासि । [ मयाभोगस्रोतसित्वामप्रधानीकुर्वन्तंमांजानासिकिं चित्रकूटे भोगस्थानसौभाग्यमपिवाङ्मनसाविषयंजानासि ] । तटस्थोद्दीपनविभावानप्याह—पश्यन्तीति । मनोवाक्कायाः संयताः यैस्तान् स्ववशीकृतजनमनोवाक्कायानित्यर्थः । मनोवाक्कायसंयतेतिपाठे संनियमितकरणत्रयेत्यर्थः । विविधान् मलयानिलकोकिलालापभ्रमरझङ्कारपुष्पहासप्रभृतिभेदान् । भावान् विभावान् । पश्यन्ती रमसेकच्चित् । यद्वा भावान् किन्नरमृगादीनांचेष्टाः । "भावोलीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु" इतिवैजयन्ती ॥ १८ ॥ नकेवलमयंवनवासोभोगायआमुष्मिकसाधकश्चेत्याह—इदमिति । वनवासं वनवासरूपं इदं अमृतं अमृतवद्भोग्यंवस्तु । मेप्रपितामहाः मत्पितृवंश्याः । परे पूर्वे राजर्षयः । प्रेत्य प्रारब्धशरीरवियोगं प्राप्य । भवार्थाय संसारविनाशायेत्यर्थः । तमसेदीपोमशकार्थोधूमइत्यादिवन्निर्देशः । प्राहुः प्रोचुः । यद्वा इदमिति लिङ्गव्यत्ययआर्षः । इदं इमंवनवासं वानप्रस्थोचितनियमसहितंवनवासं । अमृतंप्राहुः मोक्षसाधनंप्राहुः । "अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते । अयाचितेचमोक्षेचधन्वन्तरिसुवर्णयोः" इतिवैजयन्ती । प्रेत्यभवार्थाय देवादिदेहान्तरपरिग्रहरूपप्रयोजनायचप्राहुः । रघुवंश्याःराजर्षयः वानप्रस्थोचितं वनवासंस्वर्गसाधनं । अपवर्गसाधनंचप्राहुरित्युक्तंभवति ॥ १९ ॥ विशालाः विपुलाः । बहुलैः उल्बणैः नीलादिभिर्वर्णैरुपलक्षिताः । बहुलाः बहुविधाः । शैलस्य चित्रकूटस्य । शिलाः शतशःअभितः शोभन्ते ॥२०॥ अचलेन्द्रस्य ओषध्यः महौषधयः । स्वप्रभालक्ष्याः प्रभालक्ष्यस्वस्वरूपाः । अतएवभ्राजमानाः भासमानाः । निशिसहस्रशोभान्ति ॥ २१ ॥ अस्यपर्वतस्य देशाःकेचित् क्षयनिभाः गृहसदृशाः । "धिष्ण्यंधाम

रममाणान् । **शि०** कामहर्षेणान् यथेच्छंहर्षविशिष्टान् किंनरान् । **स०** द्वन्द्वशः द्वन्द्वीभूय रममाणान् ॥ ११ ॥ **स०** आनृण्यता स्वार्थेष्यञ् । अनृणत्वं ॥ १७ ॥ **ति०** मनोवाक्कायसंमतान् तत्प्रियान् वर्णनेवाक्प्रियता । भावाः पदार्थाः । संयतेतिपाठे सम्यङ्नियमितकरणत्रयेत्यर्थः । संयताइतिबहुवचनान्तपाठे भावानित्यस्यविशेषणं । लिङ्गव्यत्ययआर्षइतितीर्थः । तत्रनकंचिद्युक्तमर्थंपश्यामः । **स०** भावान् पदार्थान् मनसावाचाकायेनचसम्यक्स्तुतान् ॥ १८ ॥ **ति०** वनवासंप्रेत्य एतच्छरीरत्यागोत्तरं । भवार्थाय भवश्शिवःहिरण्यगर्भः तल्लोकप्राप्तिरूपायार्थाय प्रयोजनायाऽऽहुरित्येके । **स०** इदमेव वनवासरूपं प्रेत्य मरणानन्तरं । अमृतं अमृतत्वं तत्साधनमितियावत् । मेप्रपितामहाः राजानः । भवार्थाय भवस्यसंसारस्यअर्थःनिवृत्तिःतस्मैचाहुः । **शि०** हेराज्ञि भवार्थाय लोककल्याणाय प्रवृत्ताइतिशेषः । परे उत्कृष्टाः राजर्षयोमेप्रपितामहाः मनुप्रभृतयः । प्रेत्य विचार्य । इदं सनियमं । वनवासं अमृतंप्राहुः । सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गतेतिनियमात्क्लीबता ॥ १९ ॥ **ति०** स्वप्रभालक्ष्म्या स्वकान्तिसंपदा ॥ २१ ॥ **ति०** एकशिलाः अनेकजनावस्थानक्षमैकशिलायुक्ताः ॥ २२ ॥

**[ पा० ]** १ ग. फलोपेते. २ ङ. छ. झ. ट. मम. ३ क. ङ. छ. झ. ञ. ट. श्चानृण्यता. घ. रानृण्यता. ४ ङ. छ. झ. ट. संमतान्. ५ ङ. प्रेत्यच. ६ क. ख. ग. ङ. च. झ—ठ. लक्ष्म्या. ७ घ. च. द्वेश्मनिभा.

भिन्त्वेव वसुधां भाति चित्रकूटः समुत्थितः ॥ चित्रकूटस्य कूटोसौ दृश्यते सर्वतः शुभः ॥ २३ ॥
कुष्ठपुंनागस्थगरभूर्जपत्रोत्तरच्छादान् ॥ कामिनां स्वास्तरान्पश्य कुशेशयदलायुतान् ॥ २४ ॥
मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः ॥ कामिभिर्वनिते पश्य फलानि विविधानि च ॥ २५ ॥
वस्वौकसारां नलिनीमत्येतीवोत्तरान्कुरून् ॥ पर्वतश्चित्रकूटोसौ बहुमूलफलोदकः ॥ २६ ॥
इमं तु कालं वनिते विजह्रिवांस्त्वया च सीते सह लक्ष्मणेन च ॥
रतिं प्रपत्स्ये कुलधर्मवर्धनीं सतां पथि स्वैर्नियमैः परैः स्थितः ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

## पञ्चनवतितमः सर्गः ॥ ९५ ॥

रामेणसीतांप्रतितत्तद्विशेषप्रदर्शनपूर्वकंमन्दाकिनीवर्णनम् ॥ १ ॥

अथ शैलाद्विनिष्क्रम्य मैथिलीं कोसलेश्वरः ॥ अदर्शयच्छुभजलां रम्यां मन्दाकिनीं नदीम् ॥ १ ॥
अब्रवीच्च वरारोहां चारुचन्द्रनिभाननाम् ॥ विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २ ॥
विचित्रपुलिनां रम्यां हंससारससेविताम् ॥ कमलैरुपसंपन्नां पश्य मन्दाकिनीं नदीम् ॥ ३ ॥

निकेतनंचसदनंवस्त्यंचवास्तुक्षयः ” इतिहलायुधः । बहुगुहावत्त्वादितिभावः । उद्यानसंनिभाः बहुलतावृक्षवत्त्वात् । एकशिलाः शिलाभेदरहिताः ॥२२—२३॥ कुष्ठं पारिभाव्यं । “ व्याधिःकुष्ठंपारिभाव्यंवाप्यंपाकलमुत्पलं ” इत्यमरः । पुन्नागपुष्पाणि स्थगराणि पुत्रकसंज्ञिकवृक्षविशेषपुष्पाणि । भूर्जपत्राणि भूर्जवृक्षत्वचः एतानिउत्तरच्छदाः उपर्यास्तरणानि येषां तान् । कुशेशयदलायुतान् पद्मदलव्याप्तान् । स्वास्तरान् शयनानीत्यर्थः ॥ २४ ॥ मृदिताः कृतमर्दनाः घ्राणादिभोगेनम्लानाइत्यर्थः । अपविद्धाः त्यक्ताः । फलानीत्यत्रापि मृदितान्यपविद्धानीतियोज्यं ॥ २५ ॥ वस्वौकसारा पूर्वदिगवस्थिताशक्रपुरी । “ वस्वौकसाराशक्रस्यपूर्वस्यांदिशिसंस्थिता ” इतिविष्णुपुराणवचनात् । यद्वा वस्वौकसारा कुबेरपुरी । “ पुरीवस्वौकसारास्याद्विमानंपुष्पकोस्त्रियां ” इतियादवः । नलिनीं मानससरसीं सौगन्धिकाख्यसरसींवा । अत्येतीव रमणीयतया अतिक्रामतीव ॥ २६ ॥ हेवनिते सीते । परैः श्रेष्ठैः । नियमैः सतां राजर्षीणांपथिस्थितःसन् इमंकालं चतुर्दशसमासंमितंकालं । त्वयालक्ष्मणेनच सह इह चित्रकूटे विजह्रिवान् विहृतवान् । विपूर्वाद्धरतेर्लिटः कसुरादेशः । पश्चात्कुलधर्मवर्धनीं कुलधर्मःप्रजापालनं तद्वर्धनीं । रतिं राज्यसुखं प्रपत्स्ये ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

एवंवनगिरिप्रदर्शनेनोपलाल्यनदीप्रदर्शनेनापिलालयति—अथेत्यादिना ॥ १ ॥ अब्रवीदिति । वचने हेतुः तत्सौन्दर्यमित्याशयेनोक्तं—वरारोहामित्यादि । वरारोहां आरुह्यतइतिआरोहोजघनं गुरुजघनामित्यर्थः । चारुचन्द्रनिभाननामित्यनेन रतिरमणनिदर्शितवनगिरिविलोकनकुतूहलविकसितवदनत्वमुक्तं । राजीवलोचनः विस्मयोत्फुल्लनयनइत्यर्थः ॥ २ ॥ पुलिनस्यविचित्रत्वं नवोलपालंकृतत्वात् । सारसाः हंस-

---

**ती०** कुष्ठं उत्पलं ॥ २३ ॥ **स०** वस्वौकसारा कुबेरपुरी । नलिनी इन्द्रपुरी । “वस्वौकसाराश्रीदस्यशक्रस्यनलिनीपुरी” इति हरिः । एवमेवविश्वः । उत्तरान्कुरून् । तन्नामकान् मेरोरुत्तरपार्श्वसमुद्रप्रान्तेविद्यमानान्देशविशेषान् । अतीत्य अतिक्रम्य शोभतइतिशेषः ॥ २६ ॥ **ती०** कुलधर्मवर्धनीं सत्यप्रतिपालनरूपधर्मवर्धनीं । अष्टाविंशतिःश्लोकाअत्रेतिकतकः ॥ २७ ॥ इतिचतुर्नवतितमस्सर्गः ॥ ९४ ॥

**शि०** वरारोहां वरः अद्भुतः आरोहः प्रादुर्भावः यस्यास्तां । **स०** चारुः षोडशकलः ॥ २ ॥

[ **पा०** ] १ क. च. ञ. भित्त्वैव. २ ङ. च. छ. झ. ञ. ट. कूटोयं. ३ क. ख. शिवः. ४ ङ. छ. झ. ञ. ट. स्थगरपुन्नाग. ५ ङ. च. छ. झ. ट. मतीत्यैवोत्तरान्. ६ क. ङ. च. छ. झ. ञ. ट. कुसुमैरुप. ७ ख. ग. संछन्नां.

नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः ॥ राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥
मृगयूथनिपीतानि कलुषाम्भांसि सांप्रतम् ॥ तीर्थानि रमणीयानि रतिं सञ्जनयन्ति मे ॥ ५ ॥
जटाजिनधराः काले वल्कलोत्तरवाससः ॥ ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये ॥ ६ ॥
आदित्यमुपतिष्ठन्ते नियमादूर्ध्वबाहवः ॥ एते परे विशालाक्षि मुनयः संशितव्रताः ॥ ७ ॥
मारुतोद्धूतशिखरैः प्रनृत्त इव पर्वतः ॥ पादपैः पत्रपुष्पाणि सृजद्भिरभितो नदीम् ॥ ८ ॥
क्वचिन्मणिनिकाशोदां क्वचित्पुलिनशालिनीम् ॥ क्वचित्सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥९॥
निर्धूतान्वायुना पश्य विततान्पुष्पसंचयान् ॥ पोप्लूयमानानपरान्पश्य त्वं जलमध्यगान् ॥ १० ॥
तांश्चातिवल्गुवचसो रथाङ्गाह्वयना द्विजाः ॥ अधिरोहन्ति कल्याणि विकूजन्तः शुभा गिरः ॥११॥
दर्शनं चित्रकूटस्य मन्दाकिन्याश्च शोभने ॥ अधिकं पुरवासाच्च मन्ये च तव दर्शनात् ॥ १२ ॥
विधूतकलुषैः सिद्धैस्तपोदमशमान्वितैः ॥ नित्यविक्षोभितजलां विगाहस्व मया सह ॥ १३ ॥

विशेषाः । अत्रवस्तुना पृथुजघनकलनूपुरसुन्दरकरपदवदनवतीभवतीवभातीत्यलंकारध्वनिः ॥ ३ ॥ राजराजस्य कुबेरस्य । नलिनीं सौगन्धिकसरसीं ॥ ४ ॥ मृगयूथनिपीतानि अतएवकलुषाणि कुङ्कुमरसाभानिअम्भांसियेषुतानि । तीर्थानि अवताराः । रतिं अवगाहनविषयां प्रीतिं ॥ ५ ॥ काले स्वनियमोचितकाले । अवगाहन्ते मज्जन्ति । प्रियेइत्यन्यत्र दृष्टिर्निवार्यते ॥ ६ ॥ उपतिष्ठन्ते । "उपान्मन्त्रकरणे" इत्यात्मनेपदं । नियमाद्धेतोः परे पूर्वोक्तमुनिभ्योऽन्ये । संशितव्रताः तीक्ष्णनियमाः ॥ ७ ॥ मारुतोद्धूतशिखरैः वायुकम्पितशाखैः । पुष्पाणिसृजद्भिः मुञ्चद्भिः । पादपैःप्रनृत्तइव नृत्यंकर्तुमुद्युक्तइव । आदिकर्मणिक्तः । लोकेहिनृत्तोद्युक्तः पुष्पाणि परिविकीर्यहस्तौचालयति तद्वदित्युत्प्रेक्षा ॥ ८ ॥ मणिनिकाशोदां मुक्तामणिनिभजलां । उदकस्योदभावआर्षः । क्वचित्तीरे सिद्धजनेनावगाहनोद्युक्तेनावकीर्णां । एतेन श्वेतवसना पृथुजघना कामुकावृतानारीद्योत्यते ॥९॥ वायुनानिर्धूतान् विततान् तीरेव्याप्तान् । पुष्पसंचयान्पश्य जलमध्यगान् पोप्लूयमानान् भृशंपुनःपुनर्वाप्लवमानान् अपरान् पुष्पसंचयांश्च त्वंपश्य । प्रियहृतार्धगलितवसनानारीवलक्ष्यतइतिव्यङ्ग्यम् ॥ १० ॥ वल्गुवचसः रत्यर्थाह्वानकालिकरम्यवचसः । शुभाः गिरः विकूजन्तः रतिकालिकस्वरान् कुर्वन्तः । रथाङ्गाह्वयनाः चक्राह्वयाः । द्विजाः चक्रवाकाः । तान् पुष्पसंचयान् । अधिरोहन्ति शयनमारोहन्तीत्यर्थः । अनेनचक्रवाकरतिर्दर्शिता ॥ ११ ॥ हेशोभने निर्मत्सरे । चित्रकूटस्यदर्शनं पुरवासाधिकं चित्रकूटवासःपुरवासादप्यधिकसुखावहः । एकान्तभोगस्थानत्वादितिभावः । मन्दाकिन्यादर्शनंतवदर्शनादप्यधिकसुखकरं उद्दीपनत्वादितिभावः ॥ १२ ॥ तपोदमशमान्वितैः अतएव विधूतकलुषैः निष्पापैः । सिद्धैः सिद्धसाधननिष्ठैः । नित्यविक्षोभितजलां सदातत्स्नानेनतत्पादरेणुधन्यांमन्दाकिनीं । मयासहविगाहस्व मामप्रधानीकृत्यजलक्रीडारसमनुभवेत्यर्थः । नित्यविक्षोभितजलामित्यनेन जलक्रीडोपकरणकुसुम्भादिसा-

**शि०** राजराजस्य कुबेरस्य । नलिनीं सौगन्धिकसरसीमिव दशरथस्यसरयूमिववा ॥ ४ ॥ **स०** प्रनृत्तइतिबहुव्रीहिः ॥ ८ ॥ **शि०** पुलिनशालिनीं पुलिनाश्रयां । अगाधजलवत्तयानीलजलत्वेनप्रतीयमानामित्यर्थः ॥ ९ ॥ **कतक०** पश्येहाचलमध्यमइति पाठः । अचलमध्यमे क्रुशखाच्चलनाशक्तमध्यवतीत्यर्थः ॥ १० ॥ **ति०** रथाङ्गाह्वयनाः चक्रवाकाः । रथाङ्गंचक्रंतद्वाचकश्शब्दो ह्वयनेनामनि येषामितिविग्रहः । अधिरोहन्ति पुलिनानीतिशेषः ॥ ११ ॥ **स०** तवदर्शनान्निमित्तात् चित्रकूटदर्शनं वक्ष्यमाणादधिकंशोभते । स्तुतिपरत्वाद्वा नदोषः ॥ १२ ॥ इतिपञ्चनवतितमस्सर्गः ॥ ९५ ॥

**[पा०]** १ ङ. सर्वशः. २ ख. मैथिलिप्रतिभान्तिमे. ३ ङ. च. छ. झ. ञ. ठ. पुष्पपत्राणि. ४ ङ. छ. झ. ट. तनुमध्यमे. ५ छ. झ. ट. पश्यैतद्वल्गु. क. च. ञ. पश्यैतान्वल्गु. ङ. पश्यतान्वल्गु. ख. ग. तांश्चापिवल्गु. ६ क. घ—छ. झ. ञ. ट. निष्कूजन्तः. ख. ग. निकूजन्तः. ७ क. ख. ङ. च. झ. ञ. ट. तवच. ८ ख. ङ. च. छ- झ. ञ. ट. कल्मषैः. ९ ट. समन्वितैः. १० क. च. नित्यं.

सखीवच्च विगाहस्व सीते मन्दाकिनीं नदीम् ॥ कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ॥ १४ ॥
त्वं पौरजनवद्व्यालानयोध्यामिव पर्वतम् ॥ मन्यस्व वनिते नित्यं सरयूवदिमां नदीम् ॥ १५ ॥
लक्ष्मणश्चापि धर्मात्मा मन्निदेशे व्यवस्थितः ॥ त्वं चानुकूला वैदेहि प्रीतिं जनयथो मम ॥ १६ ॥
उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः ॥ नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह ॥ १७ ॥
इमां हि रम्यां मृगयूथशालिनीं निपीततोयां गजसिंहवानरैः ॥
सुपुष्पितैः पुष्पधरैरलंकृतां न सोस्ति यः स्यादगतक्लमः सुखी ॥ १८ ॥
इतीव रामो बहु संगतं वचः प्रियासहायः सरितं प्रति ब्रुवन् ॥
चचार रम्यं नयनाञ्जनप्रभं स चित्रकूटं रघुवंशवर्धनः ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

## *प्रक्षिप्तः सर्गः ।

चित्रकूटोत्तरपादैकचनसुन्दरकन्दरेसीतयासहविहरमाणेनरामेणकदाचनस्वाङ्कशायिन्यास्सीतायामनश्शिलापङ्केनतिलकरचना ॥ १ ॥ तथाकेसरकुसुमैस्सीताकबरीपूरणादिनानाविहरणपूर्वकंपुनस्स्वाश्रमागमनं ॥२॥ रामचोदनेनसीतयालक्ष्मणानीतमृगमांसानांभूतेभ्योबलिप्रदानपूर्वकंताभ्यांदानं ॥ ३ ॥ रामचोदनेनसीतयाकाकेभ्यश्शिष्टमांसपरिरक्षणेकेनचित्काकेन तदीयहारान्तरसंचारेणतस्याःपीडाजननं ॥ ४ ॥ तदवलोकनकुपितेनरामेणतस्मिन्नैषीकास्त्रप्रयोगेतद्द्राविते नत्रैलोक्येक्वापि शरणमलभमानेनतेनपुनारामचरणयोःप्रणिपतनं ॥ ५ ॥ रामेणतदेकाक्षिशातनपूर्वकंतत्परिरक्षणं ॥ ६ ॥

रामस्तु नलिनीं रम्यां चित्रकूटं च पर्वतम् ॥ उत्तरे तु गिरेः पादे चित्रकूटस्य राघवः ॥
ददर्श कंदरं रम्यं शिलाधातुसमन्वितम् ॥ १ ॥

मन्नीदर्शिता ॥ १३ ॥ सख्यायथा सलिलमवगाहसे तथा मयासहविगाहस्व । कमलानिरक्ताब्जानि । पुष्कराणि सिताम्भोजानि । अवमज्जन्ती अवमज्जयन्ती स्तनजघनाघातजनिततरङ्गैरितिभावः । यद्वा तववदनकान्तिनिर्जिततयालज्जयाअवमज्जयन्तीवेत्युत्प्रेक्षा ॥ १४ ॥ त्वं व्यालान् वनचरजन्तून् । पौरजनवत्पश्य पौरजनप्रीतिंव्यालेषुकुर्वित्यर्थः । एवमुत्तरत्रापि । अतः पौरजनाद्यनवलोकनक्लेशोनकार्य इतिभावः ॥ १५ ॥ लक्ष्मणइति । सौभ्रात्रं अनुकूलभार्यत्वंचसौख्यरसायनमितिभावः ॥ १६ ॥ हेवैदेहि त्वयासहत्रिषवणं त्रिसंध्यं । उपस्पृशन् स्नानं कुर्वन् । मधुमूलफलाशनोहमयोध्यायैनस्पृहये राज्यायचनस्पृहये । " स्पृहेरीप्सितः " इति संप्रदानसंज्ञा ॥ १७ ॥ इमां मन्दाकिनीं । मृगयूथशालिनीं मृगयूथलोलितामितिचपाठः । गजसिंहवानरैः । आश्रममहिम्नाशान्तवैरैरित्यर्थः । निपीततोयामितिपापहरत्वमुक्तं । पुष्पधरैः वृक्षैः । अनेनोद्दीपनत्वमुक्तं । उपस्पृशन्नित्यनुषज्यते । यः अगतक्लमःसुखीनस्यात्सनास्ति सर्वोप्यत्रस्नात्वागतक्लमोभवतीत्यर्थः ॥ १८ ॥ प्रियासहायोरामः सरितंप्रति सरिद्विषये । संगतं प्रसक्तानुप्रसक्तं बहुवचोब्रुवन्सन् । नयनाञ्जनप्रभं नयनयोग्याञ्जनकान्तिं तद्वन्नीलमित्यर्थः । चित्रकूटं चचार चित्रकूटप्रान्ते चचारेत्यर्थः । एतेन पुनःपुरवासनिस्पृहत्वद्योतनायरामस्यवनवासनिर्भरत्वमुक्तं ॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

[ पा० ] १ क. ख. च. ञ. मन्दाकिनीमिमां. २ क. ख. ग. ङ. च. छ. झ. ञ. ट. लक्ष्मणश्चैव. ३ ङ. ट. स्पृहयेच. ख. स्पृहयामि. ४ क. घ. च. छ. ञ. ट. गजयूथलोलितां. ङ. झ. ट. गजयूथलोडितां. ख. ग. गजयूथशालिनीं. ५ ङ. छ. झ. ञ. ट. सुपुष्पितां. ६ ङ. च. छ. झ. ञ. ट. पुष्पभरैः. क. घ. पुष्पफलैः. ७ ख. ग. ङ. च. छ. झ. ञ. ट. स्यान्नगत.
* अयंप्रक्षिप्तःसर्गः ङ. झ. ञ. पुस्तकेषुदृश्यते.

सुखप्रसेकैस्तरुभिः पुष्पभारावलम्बिभिः ॥ संवृतं च रहस्यं च मत्तद्विजगणायुतम् ॥ २ ॥
तद्दृष्ट्वा सर्वभूतानां मनोदृष्टिहरं वनम् ॥ उवाच सीतां काकुत्स्थो वनदर्शनविस्मितः ॥ ३ ॥
वैदेहि रमते चक्षुस्तवास्मिन्गिरिकंदरे ॥ परिश्रमविघातार्थं साधु तावदिहास्यताम् ॥ ४ ॥
त्वदर्थमिह विन्यस्ता त्वियं श्लक्ष्णसमा शिला ॥ यस्याः पार्श्वे तरुः पुष्पैः प्रविष्ट इव केसरैः ॥ ५ ॥
राघवेणैवमुक्ता सा सीता प्रकृतिदक्षिणा ॥ उवाच प्रणयस्निग्धमिदं श्लक्ष्णतरं वचः ॥ ६ ॥
अवश्यकार्यं वचनं तव मे रघुनन्दन ॥ बहुशो भ्रमितश्चाद्य तव चैवं मनोरथः ॥ ७ ॥
एवमुक्त्वा वरारोहा शिलां तामुपसर्प ह ॥ सह भर्त्रानवद्याङ्गी रन्तुकामा मनस्विनी ॥ ८ ॥
तामेवं ब्रुवतीं सीतां रामो वचनमब्रवीत् ॥ रम्यं पश्यसि भूतार्थं वनं पुष्पितपादपम् ॥ ९ ॥
पश्य देवि गिरौ रम्ये रम्यपुष्पाङ्कितानिमान् ॥ गजदन्तक्षतान्वृक्षान्पश्य निर्यासवर्षिणः ॥
झिल्लिकाविरुतैर्दीर्घैं रुदतीव समन्ततः ॥ १० ॥
पुत्रप्रियोऽसौ शकुनिः पुत्रपुत्रेति भाषते ॥ मधुरां करुणां वाचं पुरेव जननी मम ॥ ११ ॥
विहगो भृङ्गराजोऽयं सालस्कन्धसमाश्रितः ॥ संगीतमिव कुर्वाणः कोकिलेनावकूजति ॥ १२ ॥
अयं वा बालकः शङ्के कोकिलानां विहंगमः ॥ सुखबद्धमसंबद्धं तथा ह्येष प्रभाषते ॥ १३ ॥
एषा कुसुमिता नूनं पुष्पभारानता लता ॥ दृश्यते मामिवात्यर्थं श्रमाद्देवि त्वमाश्रिता ॥ १४ ॥
एवमुक्ता प्रियस्याङ्के मैथिली प्रियभाषिणी ॥ भूयस्तरां त्वनिन्द्याङ्गी समारोहत भामिनी ॥ १५ ॥
अङ्के तु परिवर्तन्ती सीता सुरसुतोपमा ॥ हर्षयामास रामस्य मनो मनसिजार्पितम् ॥ १६ ॥
स निघृष्याङ्गुलिं रामो धौते मनःशिलोच्चये ॥ चकार तिलकं तस्या ललाटे रुचिरं तदा ॥ १७ ॥
बालार्कसमवर्णेन तेजसा गिरिधातुना ॥ चकासे विनिविष्टेन ससंध्येव निशा सिता ॥ १८ ॥
केसरस्य च पुष्पाणि करेणामृद्य राघवः ॥ अलकं पूरयामास मैथिल्याः प्रीतमानसः ॥ १९ ॥
अभिरम्य तदा तस्यां शिलायां रघुनन्दनः ॥ अन्वीयमानो वैदेह्या देशमन्यं जगाम ह ॥ २० ॥
विचरन्ती तदा सीता ददर्श हरियूथपम् ॥ वने बहुमृगाकीर्णे वित्रस्ता राममाश्लिषत् ॥ २१ ॥
रामस्तां परिरब्धाङ्गीं परिरभ्य महाभुजः ॥ सान्त्वयामास वामोरूमवभर्त्स्याथ वानरम् ॥ २२ ॥
मनःशिलायास्तिलकः सीतायाः सोऽथ वक्षसि ॥ समदृश्यत संक्रान्तो रामस्य विपुलौजसः ॥ २३ ॥
प्रजहास तदा सीता गते वानरपुंगवे ॥ दृष्ट्वा भर्तरि संक्रान्तमपाङ्गं समनःशिलम् ॥ २४ ॥
नातिदूरे त्वशोकानां प्रदीप्तमिव काननम् ॥ ददर्श पुष्पस्तबकैस्तर्जद्भिरिव वानरैः ॥ २५ ॥
वैदेही त्वब्रवीद्राममशोककुसुमार्थिनी ॥ वयं तदभिगच्छामो वनमिक्ष्वाकुनन्दन ॥ २६ ॥
तस्याः प्रिये स्थितो रामो देव्या दिव्यार्थरूपया ॥ सहितस्तदशोकानां विशोकः प्रययौ वनम् ॥ २७ ॥
तदशोकवनं रामः सभार्यो व्यचरत्तदा ॥ गिरिपुत्र्या पिनाकीव सह हैमवतं वनम् ॥ २८ ॥
तावन्योन्यमशोकस्य पुष्पैः पल्लवधारिभिः ॥ समलंचक्रतुरुभौ कामिनौ नीललोहितौ ॥ २९ ॥
आबद्धवनमालौ तौ कृतापीडावतंसकौ ॥ भार्यापती तावचलं शोभयांचक्रतुर्भृशम् ॥ ३० ॥
एवं स विविधान्देशान्दर्शयित्वा प्रियां प्रियः ॥ आजगामाश्रमपदं सुसंश्लिष्टमलङ्कृतम् ॥ ३१ ॥
प्रत्युज्जगाम तं भ्राता लक्ष्मणो गुरुवत्सलः ॥ दर्शयन्विविधं धर्मं सौमित्रिः सुकृतं तदा ॥ ३२ ॥
शुद्धबाणहतांस्तत्र मेध्यान्कृष्णमृगान्दश ॥ राशीकृताञ्शुष्यमाणानन्यान्कांश्चन कांश्चन ॥ ३३ ॥
तद्दृष्ट्वा कर्म सौमित्रेर्भ्राता प्रीतोऽभवत्तदा ॥ क्रियन्तां बलयश्चेति रामः सीतामथान्वशात् ॥ ३४ ॥
अग्रं प्रदाय भूतेभ्यः सीताथ वरवर्णिनी ॥ तयोरुपदद्भ्रात्रोर्मधु मांसं च तद्भृशम् ॥ ३५ ॥

तयोस्तुष्टिमथोत्पाद्य वीरयोः कृतशौचयोः ॥ विधिवज्जानकी पश्चाच्चक्रे सा प्राणधारणम् ॥ ३६ ॥
शिष्टं मांसं निकृष्टं यच्छोषणायावकल्पितम् ॥ तद्रामवचनात्सीता काकेभ्यः पर्यरक्षत ॥ ३७ ॥
तां ददर्श तदा भर्ता काकेनायासितां दृढम् ॥ यस्या हारान्तरचरः कामचारी विहंगमः ॥ ३८ ॥
काकेनारोध्यमानां तां सा मुमोह तदातुरम् ॥ सा चुकोपानवद्याङ्गी भर्तृप्रणयदर्पिता ॥ ३९ ॥
इतश्चेतश्च तां काको वारयन्तीं पुनः पुनः ॥ पक्षतुण्डनखाग्रैश्च कोपयामास कोपनाम् ॥ ४० ॥
तस्याः प्रस्फुरमाणौष्ठं भ्रुकुटीपुटसूचितम् ॥ मुखमालोक्य काकुत्स्थस्तं काकं प्रत्यषेधयत् ॥ ४१ ॥
स धृष्टमानो विगहो रामवाक्यमचिन्तयन् ॥ सीतामभिपपातैव ततश्चुक्रोध राघवः ॥ ४२ ॥
सोऽभिमन्त्र्य शरैषीकामैषीकास्त्रेण वीर्यवान् ॥ काकं तमभिसंधाय ससर्ज पुरुषर्षभः ॥ ४३ ॥
स तेनाभिद्रुतः काकस्त्रींल्लोकान्पर्यगात्ततः ॥ देवैर्दत्तवरः पक्षी हारान्तरचरो लघुः ॥ ४४ ॥
यत्र यत्रागमत्काकस्तत्र तत्र ददर्श ह ॥ इषीकां भूतसंकाशां स रामं पुनरागमत् ॥ ४५ ॥
स मूर्ध्ना न्यपतत्काको राघवस्य महात्मनः ॥ सीतायास्तत्र पश्यन्त्या मानुषीमैरयद्गिरम् ॥ ४६ ॥
प्रसादं कुरु मे राम प्राणैः सामग्र्यमस्तु मे ॥ अस्त्रस्यास्य प्रभावेण शरणं न लभे क्वचित् ॥ ४७ ॥
तं काकमब्रवीद्रामः पादयोः शिरसा गतम् ॥ सानुक्रोशतया धीमानिदं वचनमर्थवत् ॥ ४८ ॥
मया रोषपरीतेन सीताप्रियहितार्थिना ॥ अस्त्रमेतत्समाधाय त्वद्वधायाभिमन्त्रितम् ॥ ४९ ॥
यत्तु मे चरणौ मूर्ध्ना गतस्त्वं जीवितेप्सया ॥ अत्रास्त्यवेक्षा त्वयि मे रक्ष्यो हि शरणागतः ॥५०॥
अमोघं क्रियतामस्त्रमेकमङ्गं परित्यज ॥ किमङ्गं शातयतु ते शरैषीका ब्रवीहि मे ॥ ५१ ॥
एतावद्धि मया शक्यं तव कर्तुं प्रियं खग ॥ एकाङ्गहीनं ह्यस्त्रेण जीवितं मरणाद्वरम् ॥ ५२ ॥
एवमुक्तस्तु रामेण संप्रधार्य स वायसः ॥ अभ्यगच्छद्द्वयोरक्षणस्त्यागमेकस्य पण्डितः ॥ ५३ ॥
सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहम् ॥ एकनेत्रोऽपि जीवेऽहं त्वत्प्रसादान्नराधिप ॥ ५४ ॥
रामानुज्ञातमस्त्रं तत्काकस्य नयनेऽपतत् ॥ वैदेही विस्मिता तत्र काकस्य नयने हते ॥ ५५ ॥
निपत्य शिरसा काको जगामाशु यथेप्सितम् ॥ लक्ष्मणानुचरो रामश्चकारानन्तरक्रियाः ॥ ५६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे प्रक्षिप्तः सर्गः ॥

---

## षण्णवतितमः सर्गः ॥ ९६ ॥

सीतयासहचित्रकूटप्रस्थेविहरमाणेनरामेणभरतसेनाकोलाहलश्रवणेनतद्धूलीदर्शनेनचलक्ष्मणंप्रतितत्कारणावगमनचोदना ॥ १ ॥ तदर्थंवृक्षाग्रमारूढेनलक्ष्मणेननातिदूरेरथाग्रेकोविदारध्वजावलोकनात्सेनयासहभरतागमननिर्धारणेनतस्मिन्दोषशङ्कयारामंप्रतिस्वेनभरतहननोक्तिः ॥ २ ॥

तां तथा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम् ॥ निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥१॥
इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ॥ एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ २ ॥

एवंप्रासङ्गिकमुक्त्वाप्रकृतमनुसरति—तामित्यादिना । गिरिनिम्नगां गिरिनदीं । मांसेनछन्दयन् वशीकुर्वन् । " वशाभिप्राययोश्छन्दः " इतिवैजयन्ती ॥ १ ॥ वशीकरणप्रकारमाह—इदमित्यादिना । इदं मांसं मेध्यं शुद्धं निर्मलमितियावत् । स्वादु रसवत् । निष्टप्तं प्रतप्तं । इदंशब्देनस्वभुक्तशेषमितिगम्यते ।

शि० मांसेन तापसोपभोग्यफलादिना ॥ १ ॥

तथा तत्रासतस्तस्य भरतस्योपयायिनः ॥ सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभःस्पृशौ ॥ ३ ॥
एतस्मिन्नन्तरे त्रस्ताः शब्देन महता ततः ॥ अर्दिता यूथपा मत्ताः सयूथा दुद्रुवुर्दिशः ॥ ४ ॥
स तं सैन्यसमुद्भूतं शब्दं शुश्राव राघवः ॥ तांश्च विप्रद्रुतान्सर्वान्यूथपानन्ववैक्षत ॥ ५ ॥
तांश्च विद्रवतो दृष्ट्वा तं च श्रुत्वा च निःस्वनम् ॥ उवाच रामः सौमित्रिं लक्ष्मणं दीप्ततेजसम् ॥६॥
हन्त लक्ष्मण पश्येह सुमित्रा सुप्रजास्त्वया ॥ भीमस्तनितगम्भीरस्तुमुलः श्रूयते स्वनः ॥ ७ ॥
गजयूथानि वाऽरण्ये महिषा वा महावने ॥ वित्रासिता मृगाः सिंहैः सहसा प्रद्रुता दिशः ॥ ८ ॥
राजा वा राजमात्रो वा मृगयामटते वने ॥ अन्यद्वा श्वापदं किंचित्सौमित्रे ज्ञातुमर्हसि ॥ ९ ॥
सुदुश्चरो गिरिश्चायं पक्षिणामपि लक्ष्मण ॥ सर्वमेतद्यथातत्त्वमचिराज्ज्ञातुमर्हसि ॥ १० ॥
स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितम् ॥ प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमुदैक्षत ॥ ११ ॥
उदङ्मुखः प्रेक्षमाणो ददर्श महतीं चमूम् ॥ रथाश्वगजसंबाधां यत्तैर्युक्तां पदातिभिः ॥ १२ ॥
तामश्वगजसंपूर्णां रथध्वजविभूषिताम् ॥ शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥ १३ ॥
अग्निं संशमयत्वार्यः सीता च भजतां गुहाम् ॥ सज्यं कुरुष्व चापं च शरांश्च कवचं तथा ॥१४॥

एवमास्ते एवंब्रुवन्नास्तइत्यर्थः ॥ २ ॥ तथा उक्तरीत्या । तत्र गिरिप्रस्थे । तस्य आसतः तस्मिन्नासीने सति । सैन्यरेणुः शब्दःसैन्यशब्दश्चोभौ नभस्स्पृशौ सन्तौ प्रादुरास्तां ॥ ३ ॥ एतस्मिन्नन्तरे अस्मिन् शब्दश्रवणसमये । ततः तेन ॥ ४ ॥ सैन्यसमुद्भूतं सैन्योत्पादितं ॥ ५ ॥ दीप्ततेजसमित्यनेन वक्ष्यमाणावेक्षणक्षमत्वमुच्यते ॥ ६ ॥ हन्तेति व्यग्रतायामव्ययं वाक्यारम्भेवा । "वाक्यारम्भेनुकम्पायांहन्तहर्षविषादयोः" इतिवैजयन्ती । पश्य वृक्षमारुह्य प्रेक्षस्व । सुमित्रासुप्रजास्त्वया त्वयासुमित्रासत्पुत्रेति सान्त्वोक्तिः । भीमस्तनितगम्भीरः भयंकरमेघनिर्घोषवद्गम्भीरः । महीस्तनितगम्भीरइतिपाठे भूकम्पजनितशब्दवद्गम्भीरइत्यर्थः ॥ ७ ॥ मृगाइत्यत्रापि वाशब्दःसंबन्धनीयः ॥ ८ ॥ राजमात्रः राजतुल्यः । कश्चिन्मृगयामुद्दिश्यअटते आत्मनेपदमार्षं । श्वापदं व्याघ्रादिहिंस्रपशुः । नपुंसकत्वमार्षं । "व्याघ्रादयोवनचराः पशवःश्वापदामताः" इतिहलायुधः । अन्योवायःकश्चिच्छ्वापदः अटतइतिसंबन्धः ॥ ९ ॥ अयंगिरिः पक्षिणामपिसुदुश्चरोवर्तते पक्षिसञ्चारोपीदानींनास्तीत्यर्थः । सर्वमेतत् पूर्वोक्तकारणेष्वन्यतमं ज्ञातुमर्हसीत्यर्थः ॥ १० ॥ पुष्पितमित्यनेन विरलपत्रतयाऽनावारकत्वमुक्तं । सर्वादिशःप्रेक्षमाणः सामान्येनप्रेक्षमाणःसन् । पूर्वांदिशमुदैक्षत सविशेषमलोकयत् ॥ ११ ॥ तत्रहेतुदर्शनमाह—उदङ्मुखइत्यादिना । यत्तैः सन्नद्धैः ॥ १२ ॥ रथध्वजविभूषितां रथबद्धध्वजैरलंकृतां ॥ १३ ॥ अग्निंसंशमयतु अन्यथाधूमानुसारेणागच्छेत्सेनेतिभावः । सज्यं ज्ययामौर्व्यासहितंकुरुष्व शरांश्चकवचं तथा शरांश्चकवचंचगृहाणेतिशेषः । यद्वा कुरुष्वेत्यनुषङ्गः । करोतेःक्रियासामान्यवाचित्वादौचित्येनशरान् गृहाण कवचंधारये-

**स०** स्वयूथात् स्वयूथंविच्छिद्य । ल्यब्लोपनिमित्तापञ्चमी ॥ ४ ॥ **ति०** सनिस्स्वनमितिपाठे सइतिपदं ॥ ६ ॥ **वि०** भीमस्तनितगंभीरं भीमंभयंकरंयत्स्तनितंमेघशब्दः तद्वद्गंभीरंयथाभवतितथायोयंस्वनःश्रूयते अस्यकारणंपश्येतियोजना ॥७॥ **स०** सिंहैर्वित्रासितानिगजयूथानि तैश्चवित्रासिताःमहिषावा तैर्महिषैर्वित्रासितामृगाश्चसहसाप्रद्रुताः । तन्निमित्तंपश्येतिपूर्वेणान्वयः । वाशब्दौचार्थे ॥ ८ ॥ **शि०** कश्चिन्महान्प्रबलोयमागतइतिसूचयन्नाह—**सुदुश्चरइति** । पक्षिणां देशान्तरवर्तिखगानामपि अयंगिरिः सुदुश्चरः । किंच अयंगिरिः पक्षिणां सहाययुक्तानामपि सुदुश्चरः स्वतन्त्रतयाचरितुमशक्यः ॥ १० ॥ **स०** सर्वादिशः प्रेक्षमाणःद्रष्टुमारब्धोलक्ष्मणःपूर्वांदिशमवैक्षत ॥ ११ ॥ **ति०** सेनांशशंस सेनांश्रुतशब्दकारणमुक्तवान् ॥ १३ ॥ **शि०** अग्निं अग्न्याकारंसेनाक्रोधं ॥ १४ ॥

**[ पा० ]** १ घ. भरतस्यानु. २ छ. झ. ट. स्वयूथात्. ३ ङ. च. ञ. विद्रुतादिशः. ४ ख. द्रुतान्भीतान्. ५ क. ख. ग. ज. महीस्तनित. ६ ङ. च. झ. ञ. ट. गंभीरं. ७ ग. ङ. च. ज. ञ. ट. राजपुत्रो. ८ क. ख. घ. ङ. च. झ. ञ. ट. मवैक्षत. ९ ङ. च. छ. झ. ट. गजाश्वरथसंबाधां. १० ङ. छ. झ. ट. रथसंपूर्णां. ग. गणसंपूर्णां.

तं रामः पुरुषव्याघ्रो लक्ष्मणं प्रत्युवाच ह ॥ अङ्गावेक्षस्व सौमित्रे क[1]स्येमां मन्यसे चमूम् ॥ १५ ॥
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ॥ दिधक्षन्निव [2]तां सेनां रुषितः पावको यथा ॥ १६ ॥
संपन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् ॥ आवां हन्तुं समभ्येति कैके[3]य्या भरतः सुतः ॥ १७॥
एष वै सुमहाञ्श्रीमान्विटपी संप्रकाशते ॥ विराजत्[5]युद्गतस्कन्धः कोविदारध्वजो रथे ॥ १८ ॥
[ अ[6]सौ हि सुमहास्कन्धो विटपी च महाद्रुमः ॥ विराजते महासैन्ये कोविदारध्वजो रथे ] ॥१९॥
भजन्त्येते यथाकाममश्वानारुह्य शीघ्रगान् ॥ एते भ्राजन्ति संहृष्टा गजानारुह्य सादिनः ॥ २० ॥
गृहीतध[7]नुषौ चावां गिरिं वीर श्रयावहै ॥ अथवेहैव तिष्ठावः संनद्धावुद्यतायुधौ ॥ २१ ॥
अपि नौ वशमागच्छेत्कोविदारध्वजो रणे ॥ २२ ॥
अपि [8]द्रक्ष्यामि भरतं यत्कृते व्यसनं महत् ॥ त्वया राघव संप्राप्तं सीतया च मया तथा ॥ २३ ॥
यन्निमित्तं भवान्राज्याच्च्युतो राघव शाश्वतात् ॥ संप्राप्तोऽयमरिर्वीर भरतो वध्य ए[9]व मे ॥ २४ ॥
भरतस्य वधे दोषं [10]नाहं पश्यामि राघव ॥ [11]पूर्वापकारिणां त्यागे न ह्यधर्मो विधीयते ॥ २५ ॥
पूर्वापकारी भरतस्[12]त्यक्तधर्मश्च राघव ॥ एतस्मिन्निहते कृत्स्नामनुशाधि वसुन्धराम् ॥ २६ ॥
अद्य पुत्रं हतं सङ्ख्ये कैकेयी राज्यकामुका ॥ मया पश्येत्सुदुःखार्ता हस्ति[13]भग्नमिव द्रुमम् ॥ २७ ॥

---

त्यर्थः ॥ १४ ॥ तं एवंसमीक्ष्यवदन्तं । पुरुषव्याघ्रः समीक्ष्यकारीतिभावः । अङ्गेतिसंबोधने । अवेक्षस्व ध्वजचिह्नेनसम्यगालोकय । इमां त्वयादृष्टां । चमूं कस्येयमिति मन्यसे वदेतिशेषः ॥ १५ ॥ रुषितः कुपितः । कर्तरिक्तः । पावकोयथा वह्नितुल्यः ॥ १६ ॥ कैकेय्याः सुतः तत्सुतत्वेनक्रूरप्रकृतिः । भरतः अभिषेचनंप्राप्य कैकेयीवरानुरोधेनाभिषिक्तः तावताप्यतृप्तः । संपन्नं समृद्धं निष्कण्टकमितियावत् । राज्यमिच्छन्सन् त्वदंशभागिनौआवांहन्तुंसमभ्येति ॥ १७ ॥ भरतागमनेकिंचिह्नमित्यत्राह—एषइति । विटपी ध्वजचिह्नीभूतोवृक्षः प्रकाशते स्पष्टंदृश्यते । तमेवविशिनष्टि—विराजतीति । उद्गतस्कन्धः उन्नतस्कन्धः । उन्नतस्कन्धत्वं लिखितवृक्षद्वारा । कोविदारध्वजः कोविदारवृक्षयुक्तोध्वजः ॥ १८—१९ ॥ एते अश्वारोहाः । अश्वानारुह्यभजन्ति इमंदेशंप्राप्नुवन्तीत्यर्थः । सादिनः गजारोहाः ॥ २० ॥ गृहीतधनुषाविति । दुर्गेस्थित्वायुद्धार्थंगिरेःश्रयणं ॥ २१ ॥ अपिःकामप्रवेदने । नौ आवयोः ॥ २२ ॥ अपिद्रक्ष्यामीत्यारभ्य श्लोकः ॥ २३ ॥ यन्निमित्तं यस्माद्भरताद्धेतोः ॥२४॥ त्यागे वधे ॥ २५ ॥ अपकारश्चनप्रामादिकइत्याह—त्यक्तधर्मइति ॥ २६ ॥ संख्ये युद्धे । “ मृधमास्क-

---

**शि०** प्राप्य त्वामयोध्यांप्रापय्य । राज्यंसंपन्नं संपत्तिविशिष्टमिच्छन्अभिषेचनं भवतोऽभिषेचनंच इच्छन् आवां आसमन्तादिन्द्रियशोषकंभवद्वियोगजनितशोकमित्यर्थः । हन्तुं दूरीकर्तुं । समभ्येति । आवामित्यत्रशोषणार्थकओवैधातोरूपं ॥१७॥ **शि०** इदानीं भरतान्यत्वेस्वकर्तव्यंप्रार्थयन्नाह—**गृहीतेति** ॥ २० ॥ **शि०** विदारः सज्जनहृदयविदारकःध्वजोयस्यसः कः कस्यचित्संबन्धीत्यर्थः । रथः नौ आवयोः । वशमागच्छेत् । यत्कृते यत्प्रयत्नेकृतेसति व्यसनं रहस्यसंभाषणजनितदुःखंसंप्राप्तं । यन्निमित्तं यद्राक्षसवधकारणात् भवान्प्रच्युतः इहप्राप्तः । तंभरतं पृथ्वीभारविस्तारकं । किंच भीर्भयमस्त्यस्मिन्कर्मणि तत्ररतं सत्पुरुषेभ्योतिभयप्रदातारमित्यर्थः । राक्षसंद्रक्ष्याम द्रक्ष्यामः ॥ २२ ॥ **शि०** भरतः इहमद्गमनजनितभारात्यदिअरिः राक्षसादिःसंप्राप्तस्तर्हि सवध्यएव । ननुब्रह्मचर्येस्थितत्वात्कथमस्मत्कर्तृकोवधइत्यतआह—भरतस्य पृथ्वीभारविस्तारकस्यापराधिनोवधे अहंदोषंनपश्यामि ॥ २३ ॥ **शि०** पूर्वापकारिणमिति । एतस्यपूर्वापकारित्वंतुमुन्यादिवधादिकर्तृत्वेन । त्यागे वधाकरणे अधर्मः । एतेन राक्षससैन्यंचेन्निहन्तव्यमेवेतिसूचितं ॥ २४ ॥ **ति०** त्यागे वधे ॥ २५ ॥ **ती०** कलुषेण पापेन कैकेयीरूपकलु-

**[ पा० ]** १ घ. च. ञ. कस्यैतां. २ क. च. ञ. सेनांतां. ३ च. ञ. भरतःकैकयीसुतः. ४ क. च. विटपीवप्रकाशते. ख. ग. विटपीवमहाद्रुमः. ५ ङ. छ. झ. ट. त्युज्ज्वलस्कन्धः. ६ अयंश्लोकः घ. ज. पाठयोर्दृश्यते. ७ ख. ङ. च. छ. झ. ञ. ट. धनुषावावां. ८ ङ. ट. द्रक्ष्याम. ९ ङ. छ. झ. ट. एवहि. १० क. च. ञ. नहि. ११ ङ. छ. झ. ट. पूर्वापकारिणंहत्वानह्यधर्मेणयुज्यते. ग. पूर्वापराधिनांत्यागेनह्यधर्मोहिजायते. १२ ङ. छ. झ. ट. स्त्यागेधर्मश्च. १३ ङ. छ. झ. ट. भिन्नमिव.

कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवाम् ॥ कलुषेणाद्य महता मेदिनी परिमुच्यताम् ॥ २८ ॥
अद्येमं संयतं क्रोधमसत्कारं च मानद ॥ मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनम् ॥ २९ ॥
अद्यैतच्चित्रकूटस्य काननं निशितैः शरैः ॥ भिन्दञ्शत्रुशरीराणि करिष्ये शोणितोक्षितम् ॥ ३० ॥
शरैर्निर्भिन्नहृदयान्कुञ्जरांस्तुरगांस्तथा ॥ श्वापदाः परिकर्षन्तु नरांश्च निहतान्मया ॥ ३१ ॥
शराणां धनुषश्चाहमनृणोस्मि महामृधे ॥ ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

---

## सप्तनवतितमः सर्गः ॥ ९७ ॥

रामेणभरतेसंक्रुद्धंलक्ष्मणंप्रतिभरतभङ्गकरणेदोषोत्कीर्तनपूर्वकंप्रत्युततस्यशुद्धभावत्वोत्कीर्तनेनपरिसान्त्वनम् ॥ १ ॥ रामोक्त्याव्रीडितेनलक्ष्मणेनसङ्गान्तरेणतन्निगूहनपूर्वकंवृक्षादवरोहणेनरामपार्श्वसेवनम् ॥ २ ॥ भरतेनरामाश्रमानुपमर्दायदूरत एवचित्रकूटमभितःसैनास्थापनम् ॥ ३ ॥

सुसंरब्धं तु सौमित्रिं लक्ष्मणं क्रोधमूर्च्छितम् ॥ रामस्तु परिसान्त्व्याथ वचनं चेदमब्रवीत् ॥ १ ॥
किमत्र धनुषा कार्यमसिना वा सचर्मणा ॥ महेष्वासे महाप्राज्ञे भरते स्वयमागते ॥ २ ॥

---

न्दनंसंख्यं " इत्यमरः ॥ २७ ॥ वधिष्यामि हन्तेर्वधादेशआर्षः । सानुबन्धां मन्थराद्यनुबन्धसहितां । कलुषेण पापेन । " कलुषंवृजिनैनोघमंहोदुरितदुष्कृतं " इत्यमरः ॥ २८ ॥ संयतं स्तम्भितं । असत्कारं तिरस्कारं । मोक्ष्यामि तत्कार्यंकरिष्यामीत्यर्थः । शरव्याजेनमोक्ष्यामीतिबार्थः । कक्षेषु शुष्कगुल्मेषु । मानदेत्यनेन मानंमाच्छेत्सीरित्युच्यते ॥ २९ ॥ शत्रुशरीराणिभिन्दन् एतत्काननं शोणितोक्षितंकरिष्यइत्यन्वयः ॥ ३०—३१ ॥ अहं यतःपूर्वं तत्रतत्र युद्धे शराणांधनुषश्चविषये अनृणःऋणरहितः शत्रुकलेबराहारदानेनपरिहृतऋणः । स्वयंयुद्धेकाप्यपराजितः शत्रुजयैकशीलइत्यर्थः । अतः अस्मीत्यहमर्थेव्ययं । अस्मि अहं । महामृधे भाविन्यपियुद्धे । ससैन्यंभरतंहत्वा अनृणइत्यनुकर्षः । अनृणोभविष्यामीत्यन्वयः । वनवासात्पूर्वमपिशम्बरसुतजयादिप्रतिपादनात् तत्र लक्ष्मणस्यापिसहभावावश्यंभावाद्युद्धसंभवः । अस्मीतिक्रियापदंवा । तदा अभवमित्यर्थः । यतः अनृणोऽभवमित्यन्वयः । त्वयापिमद्वीर्यंज्ञातपूर्वमित्यर्थः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥

अथकुपितपरिसान्त्वनंसप्तनवतितमे—सुसंरब्धमित्यादि । पूर्वंसुसंरब्धं सुतरांप्रीतं । " संरम्भःप्रणयेपिच " इत्यमरः । अद्यतुतद्वैलक्षण्येन क्रोधमूर्च्छितं । यद्वा क्रोधमूर्च्छितत्वादेवसुसंरब्धं क्रोधकार्ययुद्धौन्मुख्ययुक्तं । तत्रहेतुः सपत्नीपुत्रत्वमित्याह—सौमित्रिमिति । यद्वा सुमित्रापुत्रत्वस्मारणपूर्वकमुक्तवानितिद्योत्यते । रामस्तु इदंवचनंरामादन्यैर्वक्तुमशक्यमितिभावः ॥ १ ॥ अत्र इदानींपरिदृष्टे महेष्वासे उचितविषयशरसन्धातरि । तत्रहेतुः—महाप्राज्ञइति । स्वयंपुरुषप्रेरणंविना आगतेभरतेविषये धनुरादिभिः

---

षेणेत्यर्थः । **स०** सानुबन्धां कुब्जादिपरिवारसहितां । बधेःप्रकृत्यन्तरस्येदंरूपं ॥ २७ ॥ **स०** असत्कारं अपमानं । मोक्ष्यामि मोचयामि प्रतिकरिष्यामीतियावत् ॥ २८ ॥ **स०** अनृणः ऋणशून्यः । तत्सार्थक्यमद्यभवतीत्याशयः । **ति०** भरतलक्ष्मणयोस्समतयारामोपकरणत्वाल्लक्ष्मणस्यभरतविषयेएवंवादः । रामस्यतूभयोरपिस्वोपकरणत्वान्नक्वापिक्रोधइतितत्त्वम् ॥ ३१ ॥ इतिषण्णवतितमस्सर्गः ॥ ९६ ॥

**शि०** भरतमवलोक्य सुसंरब्धं शत्रुभ्रमाद्युद्धोद्योगवन्तं ॥ १ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. अद्यैवचित्र. २ ङ. च. छ. झ. ञ. ट. छिन्दन्. ३ क. ङ. च. छ. झ. ञ. ट. मनृणोस्मिन्महावने. ४ ङ. छ. झ. ट. भरतं. ५ ग. रामश्च. ६ ङ. सुचर्मणा. ७ ङ. छ. झ. महाबलेमहोत्साहे. ट. महाबलो महोत्साहोभरतःस्वयमागतः.

पितुः सत्यं प्रतिश्रुत्य हत्वा भरत[1]मागतम् ॥ किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥ ३ ॥
यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ॥ नाहं तत्प्रति[2]गृह्णीयां भक्षान्विष[3]कृतानिव ॥ ४ ॥
धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ॥ इच्छामि भवतामर्थे [4]एतत्प्रतिशृणोमि ते ॥ ५ ॥
भ्रातॄणां [5]संग्रहार्थं च सुखार्थं चापि लक्ष्मण ॥ [6]राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ६ ॥
[7]नेयं मम मही सौम्य [8]दुर्लभा सागराम्बरा ॥ न हीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥ ७ ॥
यद्विना भरतं त्वां च शत्रुघ्नं [9]चापि [10]मानद ॥ भवेन्मम सुखं किञ्चिद्भस्म तत्कुरुतां शिखी ॥ ८ ॥
मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः ॥ मम [11]प्राणात्प्रियतरः कुलधर्ममनुस्मरन् ॥ ९ ॥
श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणम् ॥ जानक्या सहितं वीर त्वया च [12]पुरुषर्षभ ॥ १० ॥
स्नेहेनाक्रान्तहृदयः [13]शोकेनाकुलितेन्द्रियः ॥ द्रष्टुमभ्यागतो ह्येष भरतो नान्यथाऽऽगतः ॥ ११ ॥
अम्बां च [14]कैकयीं रुष्य [15]परुषं चाप्रियं वदन् ॥ प्रसाद्य पितरं श्रीमान्राज्यं मे दातुमागतः ॥ १२ ॥
प्राप्तकालं यदेषोस्मान्भरतो [16]द्रष्टुमिच्छति ॥ अस्मासु मनसाऽप्येष [17]नाप्रियं किञ्चिदाचरेत् ॥ १३ ॥
विप्रियं कृतपूर्वं ते भरतेन कदा नु किम् ॥ ईदृशं वा भयं तेऽद्य भरतं [18]योऽत्र शङ्कसे ॥ १४ ॥

किंकार्यं नकिमपीत्यर्थः । महाप्राज्ञोभरतोपियदिधनुर्गृहीत्वास्वयमागतः तदाकिमस्माकंयुद्धोद्योगेनेतिभावः ॥ २ ॥ तत्रयुक्तिमाह—पितुरिति । सापवादेन पित्रा भरतायदत्तंराज्यं रामस्तंहत्वागृहीतवानित्येवंरूपेणापवादेन युक्तं ॥ ३ ॥ युक्त्यन्तरमाह—यदिति । बान्धवादीनां क्षये नाशे लब्धंयद्धनं तन्नगृह्णीयां नेच्छेयमित्यर्थः । विषकृतान् विषमिश्रद्रव्यकृतान् । भक्षान् अपूपादीनिव ॥ ४ ॥ अर्थं पृथिवीभिन्नंरत्नादिकं । भवतां भ्रातॄणामर्थे भवन्निमित्तमित्यर्थः । एतत् उक्तरूपं । प्रतिशृणोमि नातिवर्तइत्यर्थः ॥ ५ ॥ संग्रहार्थं धनसञ्चयार्थं । सुखार्थं तत्सुखार्थं तत्तदभिमतवस्तुप्रदानेनतत्प्रीत्यर्थमित्यर्थः । अपिनातद्वृद्धिःसमुच्चीयते । राज्यमपिबहुच्छिद्रत्वेनापरिग्राह्यतयाममानिष्टमपि । आलभे स्पृशामि । स्पृष्ट्वाशपइत्यर्थः । सत्येनेति मदुक्तंयथासत्यंभवति तथाआयुधंस्पृशामीत्यर्थः ॥ ६ ॥ नेच्छेयं इमामितिशेषः ॥ ७ ॥ शिखी अग्निः । भरतादिसुखाननुगुणंयत्सुखं तदग्निर्भस्मीकुरुतां नतन्ममग्राह्यमित्यर्थः ॥ ८ ॥ एवंलक्ष्मणचित्तानुसारेणपरिहृत्यवस्तुतत्त्वमाह—मन्यइत्यादि श्लोकत्रयमेकान्वयं । द्रष्टुमभ्यागतोह्येषभरतोनान्यथागतइतिमन्येइत्यन्वयः । अयोध्यामागतःमातुलगृहादितिशेषः । भ्रातृवत्सलः भ्रातृषुवत्सलः स्नेही । कुलधर्मं ज्येष्ठस्यराज्यपरिपालनरूपं । स्नेहेन मद्विषयप्रीत्या । आक्रान्तहृदयः तत्परवशइत्यर्थः । शोकेन मद्विवासजनितदुःखेन । आकुलितेन्द्रियः व्याकुलहृदयः । अन्यथा मद्विरोधितया नागतः ॥ ९—११ ॥ रुष्य संरुष्य ॥१२॥ एषभरतः अस्मान् द्रष्टुमिच्छतीतियत् एतत् प्राप्तकालं कालोचितमित्यर्थः ॥ १३ ॥ ते तुभ्यं । भरतेन कदानु कदाचित् । विप्रियं कृतपूर्वंकिं । ईदृशंभयंवा त्वदुक्तसदृशंभयजनकवाक्यंवा कृतपूर्वंकिं उक्तपूर्वंकिं । यस्त्वमद्य अत्रार्थे अत्रस्थानेवा । भरतंशङ्कसइति

**शि०** आहवे राक्षससंग्रामार्थं । पितुःसत्यं वनवासबोधकवाक्यंप्रतिश्रुत्य सापवादेनराज्येन इदानींराज्यग्रहणेनहत्वा निवर्त्यंचभरतं किंकरिष्यामि । सापवादपुरुषस्यस्वजनादिप्राप्तिरपिदुःखदैवेतितात्पर्यं ॥ ३ ॥ **ति०** क्षये नाशे । कृतेइतिशेषः ॥ ४ ॥ **ति०** संग्रहार्थं सम्यक्पालनार्थं ॥ ५ ॥ **स०** यत् यदि । तत् तर्हि । मामितिशेषः ॥ ८ ॥ **शि०** अप्रियं रामप्रव्राजनं ममप्रीतिविरोधीतिवदन्सन् कैकेयीमंबांरुष्य प्रव्राजनहेतुत्वेनकिंचित्परुषमुक्त्वेत्यर्थः । अपितरं पितृरहितं मांप्रसादी प्रसादनशीलस्सन् । मेराज्यंदातुमागतः ॥ १२ ॥ **शि०** अभयं भयनिवर्तकं ॥ १४ ॥

**[ पा० ]** १ ङ. छ. झ. ट. माहवे. २ ख. गृह्णामि. ३ ख. च. ञ. कृतान्यथा. ४ ख. ह्येतत्. ५ ग. संग्रहार्थाय. ६ क. राज्यंचाप्यहं. ७ ग. एवं. ८ ग. सकला. ९ क. च. झ. ट. वापि. १० ग. राघव. ११ ग. झ. ट. प्राणैःप्रिय. १२ क—ट. पुरुषोत्तम. १३ च. ट. शोकव्याकुलितेन्द्रियः. १४ ख. ग. कैकयींरोषात्. ञ. रुष्यकैकेयीं. १५ क. ङ. छ. झ. ट. भरतश्चाप्रियं. १६ ङ. झ. ञ. ट. मर्हति. १७ ख—च. ज—ट. नाहितं. १८ ङ. झ. ञ. ट. यद्विशङ्कसे.

न हि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः ॥ अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥ १५ ॥
कथं नु पुत्राः पितरं हन्युः कस्यां चिदापदि ॥ भ्राता वा भ्रातरं हन्यात्सौमित्रे प्राणमात्मनः ॥ १६ ॥
यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे ॥ वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥ १७ ॥
[1]उच्यमानोपि भरतो मया लक्ष्मण [2]तत्त्वतः ॥ राज्यमस्मै प्रयच्छेति बाढमित्येव [3]वक्ष्यति ॥ १८ ॥
तथोक्तो धर्मशीलेन भ्रात्रा तस्य हिते रतः ॥ लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥१९॥
तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्युवाच ह ॥ त्वां मन्ये द्रष्टुमायातः पिता दशरथः स्वयम् ॥२०॥
व्रीडितं लक्ष्मणं दृष्ट्वा [4]राघवः प्रत्युवाच ह ॥ एष मन्ये महाबाहुरिहास्मान्द्रष्टुमागतः ॥ २१ ॥
अथवा नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ ॥ वनवासमनुध्याय गृहाय प्रतिनेष्यति ॥ २२ ॥
इमां [5]वाऽप्येष वैदेहीमत्यन्तसुखसेविनीम् ॥ पिता [6]मे राघवः श्रीमान्वनादादाय यास्यति ॥ २३ ॥
एतौ तौ संप्रकाशेते गोत्रवन्तौ [7]मनोरमौ ॥ वायुवेगसमौ [8]वीरं जवनौ तुरगोत्तमौ ॥ २४ ॥
स [9]एष सुमहाकायः कम्पते वाहिनीमुखे ॥ नागः शत्रुंजयो नाम वृद्धस्तातस्य धीमतः ॥ २५ ॥
न तु पश्यामि तच्छत्रं पाण्डुरं लोकसत्कृतम् ॥ पितुर्दिव्यं [10]महाबाहो संशयो [11]भवतीह मे ॥ २६ ॥

योजना ॥ १४ ॥ तइति " कृत्यानांकर्तरिवा " इतिषष्ठी । ते त्वया । भरतः निष्ठुरं अप्रियंचवचः नवाच्यः । भरतस्य अप्रिये अप्रियवचनेकृते उक्तेसति अहंहि अहमेवाप्रियमुक्तः स्यामितिसंबन्धः । स्वाश्रितविषयेकृतापचारः स्वस्मिन्नेवकृतइतिभगवदभिप्रायोऽनेनगम्यते ॥ १५ ॥ पूर्वंदशरथोवध्यतामित्युक्तं इदानींभरतोवध्यतइति इतउपरितूष्णीमवस्थानेकार्यहानिर्भविष्यतीतिभयात्तांरौद्रींबुद्धिंनियम्यनिवर्तयति —कथंन्वित्यादिना । प्राणं प्राणभूतं ॥ १६ ॥ यदि राज्यस्यहेतोः त्वं इमां भरतहिंसारूपां । वाचं प्रभाषसे तर्हिवक्ष्यामि भरतंदृष्ट्वाराज्यमस्मैप्रदीयतां । प्रदीयतामित्यनन्तरमितिकरणंद्रष्टव्यं ॥ १७ ॥ भरतः अस्मैराज्यंप्रयच्छेतिमयाउच्यमानोपि अहृदयमुक्तोपि । तत्त्वतः बाढमितिवक्ष्यत्येव । तथा दास्यामीतिवक्ष्यत्येवेत्यर्थः । एवकारेणतस्यपुनर्निवृत्त्यभावउच्यते ॥१८॥ तस्य रामस्य । हितेरतः नतुस्वार्थपरः । अतएवमङ्गलाशासनपरत्वादस्थानेभयशङ्कयातथोक्तवानिति गम्यते। गात्राणि अवयवान् । प्रविवेशेव लज्जातिशयेनात्यन्तसंकुचितगात्रोऽभूदित्यर्थः ॥ १९ ॥ व्रीडया प्रसङ्गान्तरंप्रस्तौति—त्वामिति । लोकेस्वोक्तिभङ्गेन व्रीडितःपुरुषःप्रस्तावान्तरंहिवदति। आयातइति मन्य इत्यन्वयः ॥ २० ॥ भावज्ञोरामोपि औचित्येनलक्ष्मणकृतप्रस्तावंव्रीडाशमनायप्रपञ्चयामासेत्याह—व्रीडितमिति । तदेवोच्यते—एषइत्यादिना ॥ २१ ॥ नाविति द्विवचनं प्राधान्यात् । मन्यमानःस्मरन् । वनवासं वनवासक्लेशं । अनुध्याय अनुचिन्त्य ॥२२॥ अत्यन्तेत्यनेन तन्मात्रनयनेहेतुरुक्तः ॥ २३ ॥ गोत्रवन्तौ प्रशस्तनामानौ । यद्वा प्रशस्तकुलप्रसूतौ । " गोत्रंनाम्निकुलेपिच " इतिवैजयन्ती । वायुवेगसमौ वेगेनवायुसमावित्यर्थः । तुरगोत्तमौ राजौपवाह्यौ ॥ २४ ॥ कम्पते कपिचलनइतिधातुः । मत्तगजस्वभावोयं । वृद्धः उन्नतः । धीमतः गजपरिपालनज्ञस्य । तातस्यनागः शत्रुंजयः । नतुमयासुयज्ञायदत्तोमातुलाल्लब्धशत्रुंजयइत्यर्थः ॥ २५ ॥ लोकसत्कृतं लोको-

**ति०** प्राणं प्राणसमंभ्रातरं ॥ १६ ॥ **ति०** एवमनुचितोक्तिलज्जापरिहारायोचितंवाक्यमाह—**तदिति** । भरतप्रसङ्गखुलदाशयपरिज्ञानायैवकेवलमुपन्यस्तइत्याशयः ॥ २० ॥ **शि०** वनवासं वनवासक्लेशं । अनुध्याय संचिन्त्य । गृहाय अथप्रतिनेष्यति माङ्गलिकानयनानुकूलव्यापारंकरिष्यति इत्यहंमन्ये ॥ २२ ॥ **ति०** गात्रवन्ताविति पाठे प्रशस्तशरीरौ ॥ २४ ॥ **ति०** पितुरागमनेचिह्नान्तरमाह—**सएषइति** । कंपते चलति आगच्छति ॥ २५ ॥ **ति०** इह छत्रविषये । **स०** आगतोनवेतिसंशयोभवतीत्यर्थः ॥ २६ ॥ **ति०** इतीव इत्येव ॥ २७ ॥ इतिसप्तनवतितमस्सर्गः ॥ ९७ ॥

**[ पा० ]** १ क—घ. च—ट. उच्यमानोहि. २ ङ. छ. झ. ट. तद्वचः. ३ ङ. छ. झ. ट. मंस्यते. ४ क. च. ञ. भावज्ञः. ५ ङ. च. छ. झ ट. चाप्येष. ख. ग. वाप्यथ. ६ ख. ग. दशरथः. ७ ख. ग. मनोहरौ. ८ ङ. छ. झ. ट. वीरौ. ख. ग. वेगे. ९ क. च. ञ. एषहि. १० क- ख. ग. ङ—ट. महाभाग. ११ ग. घ. भवतीव.

वृक्षाग्रादवरोह[1] त्वं कुरु लक्ष्मण मद्वचः ॥ इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ॥ २७ ॥
अवतीर्य तु सालाग्रात्तस्मात्स समितिंजयः ॥ लक्ष्मणः प्राञ्जलिर्भूत्वा तस्थौ रामस्य पार्श्वतः ॥२८॥
भरतेनापि[2] संदिष्टा संमर्दो न भवेदिति ॥ समन्तात्तस्य[3] शैलस्य सेना वासमकल्पयत् ॥ २९ ॥
अध्यर्धमिक्ष्वाकुचमूर्योजनं पर्वतस्य[4] सा ॥ पार्श्वे न्यविशदावृत्य गजवाजि[5]रथाकुला[6] ॥ ३० ॥
सा चित्रकूटे भरतेन[7] सेना धर्मं पुरस्कृत्य विधूय दर्पम् ॥
प्रसादनार्थं रघुनन्दनस्य विराजते[8] नीतिमता प्रणीता ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

## अष्टनवतितमः सर्गः ॥ ९८ ॥

भरतेनगुहशत्रुघ्नौप्रतिस्वस्वपरिवारैस्सहरामाश्रमान्वेषणनियोजनपूर्वकंस्वेनाप्यमात्यादिसाहित्येनतदन्वेषणोक्तिः ॥ १ ॥ तथास्वस्यरामावलोकनौत्कण्ठ्योद्घोषणं ॥ २ ॥ तथारामसांनिध्यात्सीतालक्ष्मणादीनांधन्यताप्रशंसनपूर्वकंपादचारेणवनप्रवेशः ॥ ३ ॥ तथारामाश्रमसंनिहितसालमूलमुपागतवतातेनसमीपेधूमदर्शनात्तस्यैवतदाश्रमत्वाध्यवसायेनसहर्षमाश्रमप्रवेशः ॥४॥

निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः ॥ अभिगन्तुं स काकुत्स्थमियेष गुरुवर्तकम्[9] ॥ १ ॥
निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् ॥ भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ २ ॥
क्षिप्रं[10] वनमिदं सौम्य नरसङ्घैः समन्ततः ॥ लुब्धैश्च सहितैरेभिस्त्वमन्वेषितुमर्हसि ॥ ३ ॥
गुहो ज्ञातिसहस्रेण शरचापासिधारिणा[11] ॥ समन्वेषतु काकुत्स्थाव[12]स्मिन्परिवृतः स्वयम् ॥ ४ ॥
अमात्यैः सह पौरैश्च गुरुभिश्च द्विजातिभिः ॥ वनं[13] सर्वं चरिष्यामि पद्भ्यां परिवृतः स्वयम् ॥ ५ ॥

---

त्तरमित्यर्थः । इह पितरिविषये । संशयोभवतीहमे इति राघवः प्रत्युवाचेतिपूर्वेणान्वयः ॥ २६ ॥ मद्वचः भरतविषयेशान्तोभवेतिमत्सूचितंवचः । प्रथममर्धमुत्तरार्धेनयोजनीयं ॥ २७ ॥ समितिंपरसैन्यंजयतीति समितिंजयः । "संज्ञायांभृतृवृजिधारिसहितपिदमः" इत्यत्रयोगविभागेनखच् । मुमागमश्च । सन्नद्धइतियावत् । पार्श्वतः भ्रातर्यस्थानेभयशङ्कयेतिभावः ॥ २८ ॥ संमर्दः रामाश्रमस्यपीडा नभवेदितिभरतेनसंदिष्टा आज्ञप्ता । सेना तस्यशैलस्यसमन्तात् नतुतदाश्रमसमीपे ॥ २९ ॥ अधिकमर्धंयस्मिंस्तत् अध्यर्धं योजनं सार्धयोजनमित्यर्थः । पर्वतस्यपार्श्वे आवृत्य न्यविशत् मण्डलाकारेणस्थिता ॥ ३० ॥ चित्रकूटे चित्रकूटसमीपे । नीतिमता सेनयोपरोधेरामस्यप्रसादोनस्यादितिनीतिज्ञेन । भरतेन धर्मंपुरस्कृत्य विनीतवेषेणराजाभिगन्तव्यइतिधर्ममनुसृत्य । दर्पंविधूय स्थितेन रघुनन्दनस्यप्रसादनार्थं प्रणीता आनीतासा सेना विराजते भातिस्म ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तनवतितमःसर्गः ॥९७॥

---

अथभरतस्यरामप्राप्तिरष्टनवतितमेसर्गे—निवेश्येत्यादि । गुरुवर्तकं गुरुवचनानुवर्तकं ॥ १—२ ॥ लुब्धैः व्याधैः ॥ ३—४ ॥ अमात्यैःसह पौरैःसह । गुरुभिः द्विजातिभिश्चपरिवृतः पद्भ्यांसर्ववनंचरिष्या-

---

ति० पादवतां चरप्राणिनांवरः । स० गुरुवत् पितृवद्वर्तयतीतिगुरुवर्तकः । "ज्येष्ठभ्रातापितुस्समः" इत्युक्तेः ॥ १ ॥ स०मात्रशब्देन भोजनादिकंव्यावर्तयति ॥ २ ॥ ति० पौरैस्सहवर्तमानैरमात्यैः द्विजातिभिस्सहवर्तमानैर्गुरुभिश्चपरिवृतः ॥ ५ ॥

[ पा० ] १ ग. च. ञ. वृक्षात्समवरोह. क. ख. च. पाठेषु अस्यश्लोकस्यपूर्वोत्तरार्धयोःपौर्वापर्यंदृश्यते. २ क. ख. ग. ङ. च. छ. झ. ञ. ट. भरतेनाथ. ३ ग. समन्तादस्य. ४ ङ. छ. झ. ट. पर्वतस्यह. ५ क. च. ञ. नरवाजिगजाकुला. ६ ङ. छ. झ. ट. नराकुला. ७ ङ. भरतस्य. ८ क. ङ. च. छ. झ. ञ. ट. विरोचते. ९ ख. ग. गुरुवर्तकः. १० ग. क्षिप्रमेववनं. ११ क. ख. ङ. च. झ. ञ. ट. पाणिना. १२ ङ. काकुत्स्थंवनेपरिवृतः. १३ क—ट. सहसर्वं.

यावन्न रामं द्रक्ष्यामि[1] लक्ष्मणं वा महाबलम् ॥ वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति ॥६॥
यावन्न चन्द्रसङ्काशं द्रक्ष्यामि[2] शुभमाननम् ॥ भ्रातुः पद्मपलाशाक्षं[3] न मे शान्तिर्भविष्यति ॥ ७ ॥
यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ ॥ शिरसा धारयिष्यामि[4] न मे शान्तिर्भविष्यति ॥८॥
यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः ॥ अभिषेक[5]जलक्लिन्नो न मे शान्तिर्भविष्यति ॥ ९ ॥
सिद्धार्थः[6] खलु सौमित्रिर्यश्चन्द्रविमलोपमम् ॥ मुखं पश्यति रामस्य राजीवाक्षं महाद्युति ॥ १० ॥
कृतकृत्या महाभागा वैदेही जनकात्मजा ॥ भर्तारं सागरान्तायाः पृथिव्या याऽनुगच्छति ॥११॥
सुभग[7]श्चित्रकूटोसौ गिरिराजो[8]पमो गिरिः ॥ यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने ॥ १२ ॥
कृतकार्यमिदं दुर्गं वनं व्यालनिषेवितम् ॥ यदध्यास्ते महातेजा[9] रामः शस्त्रभृतांवरः ॥ १३ ॥
एवमुक्त्वा महातेजा[10] भरतः पुरुषर्षभः ॥ पद्भ्यामेव महाबाहुः[11] प्रविवेश महद्वनम् ॥ १४ ॥
स तानि द्रुमजालानि जातानि गिरिसानुषु ॥ पुष्पिताग्राणि मध्येन जगाम वदतांवरः ॥ १५ ॥
स गिरेश्चित्रकूटस्य सालमा[12]साद्य पुष्पितम् ॥ रामाश्रमगतस्याग्नेर्ददर्श ध्वजमु[13]च्छ्रितम् ॥ १६ ॥

मीतिसंबन्धः ॥ ५ ॥ शान्तिः दुःखशान्तिः मङ्गलं वा । “ शान्तिः प्रशममङ्गले ” इतिवैजयन्ती ॥ ६—७ ॥ पार्थिवव्यञ्जनान्वितौ वज्रध्वजारविन्दाङ्कुशसुधाकलशादिमहाराजलक्षणयुक्तौ । चरणौ यावन्नशिरसाधारयिष्यामि तावत्पर्यन्तंमेशान्तिर्नभविष्यति । यदा रामःस्वयोग्यसिंहासनाधिराज्यमौलिं धृत्वा ममयोग्यंश्रीपादाख्यमौलिंददाति तदामेसकलदुःखशान्तिर्भविष्यतीतिभावः ॥ ८—९ ॥ चन्द्रविमलोपमं निर्मलचन्द्रसदृशं ॥ १० ॥ महाकुलप्रसूतावैदेही । महाभागा महाभाग्यवती । कृतकृत्या कृतार्थाच । तत्फलं तद्धेतुंचाह—भर्तारमिति । पृथिव्याभर्तारमित्यन्वयः ॥ ११ ॥ असौचित्रकूटः सुभगः भाग्यशालीगिरिराजोपमश्च । गिरिराजोपमः हिमवत्पर्वतसदृशः । नन्दने नन्दयतीतिनन्दनं चैत्ररथं । सुभगइत्यादि । सुभगः प्रदेशान्तरेभ्योतिरमणीयः । सुभगः सर्वेषामुद्देश्यतमः । अत्रहेतुं यस्मिन्नित्युत्तरार्धेवक्ष्यति । चित्रकूटः स्वभावतोपिरमणीयः । असौगिरिः अयोध्यांपरित्यज्यापिरामेण आदरणीयः । यद्वा गिरिराजोपमः गिरिराजोत्र श्रीनिवाससान्निध्यस्थानभूतोवेङ्कटाचलः । तत्रोभयत्रहेतुमाह—यस्मिन्निति । काकुत्स्थः अयोध्याधिपतिः । स्वदेशंविहाय अपरिचितेयस्मिन्वसति । तत्रानुरूपंदृष्टान्तमाह—कुबेरइति । चैत्ररथवासयोग्यः कुबेरः इन्द्रोद्याने नन्दनइव । यद्वा स्वगृहंविहायस्वगृहोद्यानेविहरमाणोवैश्रवणइववसतीत्यर्थः । “ इक्ष्वाकूणामियंभूमिः सशैलवनकानना ” इत्युक्तेश्चित्रकूटोपिरामविषयोहि नन्दनोपमानेनरामस्यचित्रकूटेभोग्यताप्रकर्षउच्यते । काकुत्स्थः ककुत्स्थकुलोद्भवः । यथास्वकुलमकृतार्थयत् तथा स्ववासस्थलमप्यकृतार्थयदितिभावः । यद्वा कुबेरइवनन्दने भूवाचकेनकुशब्देनजगदुपलक्ष्यते । बेरं शरीरं कुबेरो जगच्छरीरः परमात्मा नन्दनइव वैकुण्ठनन्दनवनइव ॥१२॥ कृतकार्यं कृतार्थं । दुर्गंदुष्प्रवेशं । व्यालनिषेवितं दुष्टसर्पाश्रितं । कृतकृत्यत्वेहेतुः—यदित्यादि । वनंदुर्गमितिस्थलस्वभावेनवासानर्हत्वमुक्तं । महातेजाइत्यादिना रामवैभवापेक्षयापिवासानर्हत्वमुच्यते ॥१३॥ महातेजाइत्यादिनापद्भ्यांगमनानर्हत्वमुच्यते ॥ १४ ॥ द्रुमजालानिमध्येनद्रुमजालानांमध्येनेत्यर्थः । मध्यशब्दस्यदिग्वाचित्वात् “एनपाद्वितीया”इति द्वितीया । वदतांवरइत्यनेन रामसन्निधौवक्तव्यविशेषंचिन्तयन्नेवजगामेत्युक्तं ॥ १५ ॥ अग्ने-

स० गिरिराजः मेरुः । शि० सुशुभः अत्यन्तंशुभकारकः ॥ १२ ॥ ती० कृतकार्यं कृतार्थं स्थावरत्वमोचकरामपादाग्ररजोग्रस्ततयाकृतार्थमित्यर्थः ॥ १३ ॥ स० अग्नेर्ध्वजं धूमं ददर्श स्पष्टंददर्श । पूर्वंचारमुखतइतिनपुनरुक्तिः—कतक० रामाश्रमग-

[ पा० ] १ क. च. ञ. पश्यामि. २ ख. ग. द्रक्ष्यामिचशुभाननं. ङ. छ. झ. ट. तद्द्रक्ष्यामिशुभाननं. ३ क. ङ. छ. ज. झ. ट. विशालाक्षं. ४ ङ. च. छ. झ. ञ. ट. प्रग्रहीष्यामि. ५ ङ. छ. झ. ट. अभिषिक्तोजल. ६ सिद्धार्थःखल्वितिश्लोकः. ङ. च. छ. झ. ञ. पुस्तकेषु यावन्नचरणावितिश्लोकात्पूर्वंदृश्यते. ७ ङ. छ. झ. ट. सुशुभश्चित्र. ङ. शुशुभेचित्र. ८ ङ. छ. झ. ट. राजसमो. ९ ङ. छ. झ. ट. महाराजो. १० क. ख. झ. ञ. ट. महाबाहुः. ११ क. घ.—ट. महातेजाः. १२ ङ. छ. झ. ट. मारुह्यसत्वरं. १३ घ. मुत्तमं.

तं दृष्ट्वा भरतः श्रीमान्मुमोह सहबान्धवः ॥ अत्र राम इति ज्ञात्वा गतः पारमिवाम्भसः ॥ १७ ॥
स चित्रकूटे तु गिरौ निशम्य रामाश्रमं पुण्यजनोपपन्नम् ॥
गुहेन सार्धं त्वरितो जगाम पुनर्निवेश्यैव चमूं महात्मा ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

## एकोनशततमः सर्गः ॥ ९९ ॥

भरतेनकौसल्याद्यानयनेवसिष्ठनियोजनपूर्वकंशत्रुघ्नंप्रतितत्तच्चिह्नप्रदर्शनेनरामपर्णशालासमीपगमनम् ॥ १ ॥ पर्णशालायांससीतालक्ष्मणंरामंदृष्टवताभरतेनतत्पादपतनेप्रयतमानेनापितदीयतापसवेषावलोकनसमुद्रिक्तशोकाकुलतयातत्पादानवाप्यैवभूमौपतनम् ॥ २ ॥ रामेणस्वाभिवादकयोर्भरतशत्रुघ्नयोस्सबाष्पमालिङ्गनम् ॥ ३ ॥ रामलक्ष्मणयोर्गुहसुमन्त्राभ्यांसह संगमः ॥ ४ ॥

निविष्टायां तु सेनायामुत्सुको भरतस्तदा ॥ जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥
ऋषिं वसिष्ठं संदिश्य मातॄर्मे शीघ्रमानय ॥ इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥
सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्वपद्यत ॥ रामदर्शनजस्तर्षो भरतस्येव तस्य च ॥ ३ ॥
गच्छन्नेवाथ भरत स्तापसालयसंस्थिताम् ॥ भ्रातुः पर्णकुटीं श्रीमानुटजं च ददर्श ह ॥ ४ ॥

ध्वजं धूमं । पूर्वंधूमाग्रदर्शनं अधुनासमीपत्वात्तन्मूलदर्शनमितिनपुनरुक्तिः ॥ १६ ॥ मुमोह मोहसदृशं पारवश्यंप्राप । मुमोदेतिचपाठः । अम्भसः समुद्रस्य पारंगतइव अभूदितिशेषः ॥ १७ ॥ निशम्य दृष्ट्वा । दीर्घाभावआर्षः । तत्समीपस्थजनेभ्यः श्रुत्वेतिवार्थः । अतएवपुण्यजनोपपन्नमित्युच्यते । गुहेनेति प्रधानजनोपलक्षणपरं । चमूंपुनर्निवेश्य अन्वेषणार्थमागतांचमूमपिस्थापयित्वा । महात्मा दृढाध्यवसायः ॥ १८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥

अथभरतस्यरामसंगमएकोनशततमे—निविष्टायामित्यादि । निविष्टायांसेनायां स्वयंतत्रक्षणंनिविष्टः सन् उत्सुकः साभिलाषः । शत्रुघ्नमनुदर्शयन् । अनुःकर्मप्रवचनीयः । शत्रुघ्नस्यरामाश्रमसामीप्यचिह्नानि प्रदर्शयन् जगाम ॥ १ ॥ मातॄर्मेशीघ्रमानयेति ऋषिं वसिष्ठंसंदिश्य जगामेत्यन्वयः । अनेन रामावासंनिश्चित्यपश्चादानेष्यामीतिधियामहासेनानिवेशेमातॄर्निवेशितवानितिगम्यते ॥ २ ॥ तत्पश्चाच्छत्रुघ्नः तत्पश्चात्सुमन्त्रश्चगतइत्याह—सुमन्त्रइति । सुमन्त्रोप्यदूरात् समीपे शत्रुघ्नमन्वपद्यत अन्वगच्छत् । तत्रहेतुमाह —रामेति । रामदर्शनजस्तर्षः रामदर्शनमुद्दिश्यजनितोभिलाषः । "कामोभिलाषस्तर्षश्च" इत्यमरः । तस्य शत्रुघ्नस्यच चकारात् सुमन्त्रस्यचास्तिहीत्यर्थः । सुमन्त्रस्यत्वरितगमनात् वसिष्ठएवमात्रानयनेनियुक्त इत्यावेदितं ॥ ३ ॥ तापसालयसंस्थितां तापसालयानांमध्येस्थितां तापसालयसमानसंस्थानामितिवार्थः । पर्णकुटीं अग्न्यगारभूतांपर्णशालां । उटजं दिदृक्षया समागतैस्तापसैः सहसुखावस्थानार्थमुपकल्पितांपर्णशालां । यद्वा भ्रातुःपर्णकुटीं सीतयासहशयनार्थंनिर्मितांपर्णशालां । श्रीमान् तादात्विकप्रीतिजनितकान्तिमान् । उटजं दिवावस्थानार्थंकल्पितंपर्णमण्डपं । यद्वा पर्णशालां महाशालां उटजं तन्मध्यवर्तिसदाव-

तस्यान्तेइतिपाठः तदाश्रमगतस्यसालस्यान्ते उपरिबद्धं उच्छ्रितंध्वजं कोविदारध्वजंदृष्ट्वेत्यर्थः । धूमदर्शनस्यपूर्वमेवजातत्वेनतस्यानिर्णायकत्वात् ॥ १६ ॥ इत्यष्टनवतितमस्सर्गः ॥ ९८ ॥

स० उटजं बहिर्लक्ष्मणनिवासस्थानं । ति० उटजं सभित्तिकवाटं दारुबद्धंगृहंसीतानिवेशार्थंकृतं ॥ ४ ॥

[ पा० ] १ क.—ङ. छ.—ट. मुमोद. २ क. ग. च. ञ. बान्धवैः. ३ ङ. छ. झ. ञ. ट. स्ततः. ४ ग. शत्रुघ्नसहितोविभुः. ङ. शत्रुघ्नंप्रतिदर्शयन्. ५ च. ञ. भ्रातृवत्सलः. ६ ख. ग. सुमन्त्रस्त्वथ. ७ ङ. छ. ट. मन्ववर्तत. ८ ख. ग. दर्शनजोहर्षो.

शालायास्त्वग्रतस्तस्या ददर्श भरतस्तदा ॥ काष्ठानि चावभग्नानि पुष्पाण्युपचितानि च ॥ ५ ॥
सलक्ष्मणस्य रामस्य ददर्शाश्रममीयुषः ॥ कृतं वृक्षेष्वभिज्ञानं कुशचीरैः क्वचित्क्वचित् ॥ ६ ॥
ददर्श च वने तस्मिन्महतः सञ्चयान्कृतान् ॥ मृगाणां महिषाणां च करीषैः शीतकारणात् ॥ ७ ॥
गच्छन्नेव महाबाहुर्द्युतिमान्भरतस्तदा ॥ शत्रुघ्नं चाब्रवीद्धृष्टस्तानमात्यांश्च सर्वशः ॥ ८ ॥
मन्ये प्राप्ताः स तं देशं भरद्वाजो यमब्रवीत् ॥ नातिदूरे हि मन्येहं नदीं मन्दाकिनीमितः ॥ ९ ॥
उच्चैर्बद्धानि चीराणि लक्ष्मणेन भवेदयम् ॥ अभिज्ञानकृतः पन्था विकाले गन्तुमिच्छता ॥ १० ॥
इदं चोदात्तदन्तानां कुञ्जराणां तरस्विनाम् ॥ शैलपार्श्वे परिक्रान्तमन्योन्यमभिगर्जताम् ॥ ११ ॥
यमेवाधातुमिच्छन्ति तापसाः सततं वने ॥ तस्यासौ दृश्यते धूमः संकुलः कृष्णवर्त्मनः ॥ १२ ॥

स्थानास्थानं । तथैववक्ष्यति " ददर्शमहतीं " इत्यादिना । ददर्श चिह्नैरुत्प्रेक्षितवान् ॥ ४ ॥ चिह्नान्येवाह—शालायाइत्यादिना । काष्ठानि रात्रौप्रकाशाय ज्वलनीयानि । पुष्पाणि पूजार्थानि ॥ ५ ॥ ईयुषः जलाशयादाश्रमंगच्छतोरामस्य । " उपेयिवाननाश्वाननूचानश्च" इत्यत्र नात्रोपसर्गस्तन्त्रं । अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येवेतिवृत्तिकृतोक्तत्वादनुपसर्गपूर्वादिणःक्वसुः । कुशादिभिः कृतं अभिज्ञानं चिह्नं । अन्योन्यस्यगमनागमनपरिज्ञानार्थंकृतंचिह्नंददर्श॥६॥ करीषैःकृतान्संचयानित्यन्वयः । शीतकारणात् शीतनिवारणार्थं ॥ ७ ॥ अमात्यान् सुमन्त्रं । बहुवचनं पूजार्थं । यद्वा अनेनैवावगम्यते अन्येप्यमात्याः सुमन्त्रेणसहागताइति ॥ ८ ॥ इतः अस्मात्प्रदेशात् । मन्दाकिनीं नातिदूरेमन्ये प्रत्यासन्नांमन्यइत्यर्थः । अतः यंदेशंभरद्वाजोऽब्रवीत् तंदेशंप्राप्ताःस्मेतिमन्ये । प्राप्ताःस्मेत्येववक्तव्ये मन्यइत्युक्त्या अयमर्थोवगम्यते कैकेय्याराजन्नित्याहूतस्यभाग्यहीनस्यमेनेयंतद्देशप्राप्तिर्भवितुमर्हति किन्तु भ्रमस्वप्रादिष्वन्यतमोयमिति ॥ ९ ॥ उच्चैर्बद्धानिचीराणि उन्नतप्रदेशेचीराणिबद्धानिदृश्यन्ते । तस्मादयंपन्थाः विकाले अकाले सायंकालादौ । गन्तुमिच्छता फलमूलजलादिसंग्रहणार्थं गन्तुमिच्छतालक्ष्मणेन अभिज्ञानकृतः कृताभिज्ञानो भवेत् । अतोऽनेनैवास्माभिर्गन्तव्यमितिभावः ॥१०॥ मार्गचिह्नकरणंगजपदमर्दनक्लिष्टत्वेनदुर्ज्ञानत्वादित्याशयेनाह—इदंचेति । उदात्तदन्तानां महादन्तानां । " महत्युदात्तउच्चोक्तौ " इतिवैजयन्ती । तरस्विनां वेगवतां । अन्योन्यमभिगर्जतां अन्योन्यंप्रतिगर्जतां । गजानां शैलपार्श्वेपरिक्रान्तमिदं परिक्रमणस्थानमिदं "क्तोधिकरणेच" इत्यधिकरणेक्तः । इदमेषामासितमित्यादिवत् । अस्मिन्मार्गेकुञ्जराःपरिक्रान्ताइत्यर्थः । अन्योन्यकोपातिशयेनवेगाद्दन्तादन्तिप्रहारंकुर्वतामाश्रमप्रवेशस्याशक्यत्वादाश्रमप्रान्तगमनमाश्रमप्रदेशंसूचयतीत्यर्थः ॥ ११ ॥ रामाश्रमस्यात्यन्तसन्निहितत्वज्ञापकंधूमबाहुल्यंदर्शयति—यमिति । तापसाः यमग्निमाधातुमिच्छन्ति सायंप्रातर्होमार्थंसर्वदारक्षितुमिच्छन्ति तस्यकृष्णवर्त्मनः संकुलोसौधूमोदृश्यते । पचनाग्नेर्होमाग्नेश्चव्यावृत्तंसंततस्थायिगार्हपत्याग्निंदर्शयितुंसंकुलशब्दः । अतिनिबिडइत्यर्थः । पचनेज्वालानां होमेचाङ्गाराणामपेक्षितत्वान्नतदाधूमनिबिडतासंभव इतिभावः । अनेनरामस्याग्न्याधानाभावाच्छ्रौताग्निरत्रनोच्यते किंतु धार्यःस्मार्ताग्निः । यदिहितस्यत्रेताग्निः स्यात्तदा । रामःकमलपत्राक्षःपुरोधसमथाब्रवीत् । अग्निहोत्रंव्रजत्वग्रेसर्पिर्ज्वलितपावकं" इतिचरमयात्रायामग्निहोत्रपुरस्कारश्रवणाद्वनयात्रायामपितथादृश्येत । अनुसरन्तोपिहिपौरवृद्धाःसाग्नयएवसमागताइत्युच्यन्ते । किंच " दीक्षितंव्रतसंपन्नंवराजिनधरंशुचिम् । कुरङ्गशृङ्गपाणिंचपश्यन्तीत्वांभजाम्यहं " इतिसीतामनोरथश्रवणाद्राज्याभिषेकात्पूर्वंनयज्ञोनुष्ठितइतिगम्यते । ततोऽयमग्निर्गृह्याग्निरेव । नचतस्याप्यानयनं नपूर्वमुक्तमितिवाच्यं तस्यात्मसमारोपणेनानेतुंशक्य-

**ति०** एयुषः आङ्पूर्वादिणःक्वसुः ॥ ६ ॥ **ति०** शीतकारणात् । चैत्रशुक्लदशम्यांप्रस्थानेनतत्रकालेवैशाखान्तमपररात्रेशीतस्य जायमानत्वात् । **शि०** तस्मिन् प्रत्यक्षीभूते । भवने पर्णशालासमीपे । **स०** करीषवत्करीषैः । " करीषंशुष्कगोमयं" इत्यभिधानात् ॥ ७ ॥ **स०** आधातुं उपासितुं ॥ १२ ॥

[ पा० ] १ ङ. स्तथा. २ ख. ङ. च. छ. झ. ञ. ट. ण्यपचितानि. ३ क. ग. च. लक्ष्मणस्यच. ४ ख. ग. छ.—ट. मेयुषः. ५ ङ. छ. झ. ट. भवने. ६ ङ. स्तथा. ७ ख. प्राप्तोस्मि. ८ ग. यथाब्रवीत्. ९ क. च. ञ. दूरेच. ग. दूरेतु.

अत्राहं पुरुषव्याघ्रं गुरुसंस्कारकारिणम् ॥ आर्यं द्रक्ष्यामि संहृष्टो महर्षिमिव राघवम् ॥ १३ ॥
अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः ॥ मन्दाकिनीमनुप्राप्तस्तं जनं चेदमब्रवीत् ॥ १४ ॥
जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः ॥ जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम् ॥१५॥
मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः ॥ सर्वान्कामान्परित्यज्य वने वसति राघवः ॥ १६ ॥
इति लोकसमाकृष्टः पादेष्वद्य प्रसादयन् ॥ रामस्य निपतिष्यामि सीताया लक्ष्मणस्य च ॥ १७ ॥
एवं स विलपंस्तस्मिन्वने दशरथात्मजः ॥ ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १८ ॥

त्वात् । नचआसमारोपणेपिसायंप्रातर्होमःकार्यः सतुनोक्तः । प्रत्युत तमसातीरेगङ्गाकूलेवृक्षमूलेभरद्वाजाश्रमेयमुनातटेचसंध्यावन्दनमेवोक्तं । अत्रचश्लोके तापसवनशब्दाभ्यांवनेतापसानांशीतनिवारणप्रकाशकरणकन्दमूलादिपचनसाधनतयासंग्राह्यएवाग्निरुच्यतइतिवक्तुंशक्यते । आधातुं संग्रहीतुमित्यर्थः । अतोऽयमग्निःपचनाद्यर्थएवनतुधार्यः स्मार्ताग्निरितिचेन्न । "प्रागुदक्प्रवणांवेदिंविशालांदीप्तपावकां" इतिवक्ष्यमाणविरोधात् । नह्यसंस्कृताग्नेर्वेदिसंबन्धःप्रसिद्धः । प्रागुदक्प्रवणत्वादिवेदिलक्षणंचोच्यमानंवेदिंतत्स्थमग्निंचसंस्कृताववगमयति । यद्येवं कथंतर्हिसायंप्रातर्होमावचनमितिचेन्नह्येकंस्वच्छन्दगामिनामुनिना असत्यामिच्छायामसतिचफलेपुनःपुनर्वक्तव्यं । वक्ष्यतितूपरिष्टात् सुतीक्ष्णाश्रमे "अथतेग्निसुरांश्चैववैदेहीरामलक्ष्मणौ । काल्यंविधिवदभ्यर्च्यतपस्विशरणेवने । उदयन्तंदिनकरंदृष्ट्वाविगतकल्मषाः । सुतीक्ष्णमभिगम्यैवमिदंवचनमब्रुवन्" इति । अत्रानुदितहोमपक्षेणोदयात्पूर्वमग्निकार्यवचनादग्निमित्येकवचनाच्च औपासनंसम्यगुक्तमिति एवमेवसर्वत्रद्रष्टव्यमिति। अत्रचाग्निकार्येरामस्यसाक्षात्प्रधानकर्तृत्वेनसीतायाःसहभावेनप्रणयनादिनाच लक्ष्मणस्यसमिदादिसंपादनरूपसहकारित्वेनचान्वयइतिज्ञेयं । तपस्विशरणेवनइत्यनेन अतिसङ्कटदेशेपियथावदनुष्ठानश्रद्धाविशेषउच्यते । अतश्चतुर्दशसुवनवाससंवत्सरेषुसीताहरणपर्यन्तंरामस्यचित्रकूटादिपञ्चवट्यन्तेषुप्रदेशेषु यत्रमाससंवत्सरादिवासेनचिरकालावस्थानं तत्रबहिःस्मार्तनित्याग्निधारणं अन्यत्रात्मनिसमिधिवासमारोप्यहोमकालेवरोप्यसायंप्रातरौपासनमितिदिक् । अस्मिञ्श्लोके चतापसा यमाधातुमिच्छन्तीत्यस्यार्थश्चवर्णितः । तेन चरामाश्रमचिह्नत्ववत्पावनत्वमप्युक्तंभवति ॥ १२ ॥ गुरुसंस्कारकारिणं गुरुसंस्कारःश्रेष्ठसंस्कारः मन्त्रोपदेशादिः तत्कारिणं ॥ १३ ॥ राघवः भरतः । तंजनं सहागतंशत्रुघ्नादिकम् ॥ १४ ॥ जगत्यां भूमौ । वीरासने दक्षिणजानूपरिन्यस्तवामपादतयावस्थाने । धिङ्मेजन्मसजीवितमिति मेजन्मप्राणनंचधिगित्यर्थः ॥ १५ ॥ मत्कृतेव्यसनंप्राप्तः कैकेय्याममराज्यप्रापणकृतेराज्यभ्रंशरूपव्यसनंप्राप्तः ॥ १६ ॥ इतिलोकसमाकृष्टः एवंप्रकारेणलोकैरपवादंप्रापितः । प्रसादयन् प्रसादनाद्धेतोः । लक्ष्मणस्यचेति तस्यकनिष्ठत्वेपि कार्यगौरवात्पादपतनं । यदिमयाप्रसाद्यमानेरामे लक्ष्मणःकैकेयीकृतापकारंमय्यारोप्यमाप्रसीदेतिरामं निरुन्ध्यात्तर्हिलक्ष्मणस्यापिपादयोर्निपत्यतमपिप्रसादयिष्यामि । यदिरामप्रसादनरूपंकार्यंकेवलंसुसाधितं भवेत् तदानींकनिष्ठपादपतनंदोषायेतिभरतहृदयं । [ सीतायाश्चपुनःपुनरितिपाठः । सीतायालक्ष्मणस्य चेतिपाठे रामभक्तत्वेनवयोनादृतमितिबोध्यं । "नपरीक्ष्यवयोवन्द्याः" इतिस्मरणात् ॥ १७ ॥ एवमित्यारभ्यगुहामिवेत्यन्तमेकंवाक्यं ॥ १८ ॥

**शि०** मत्कृते मत्प्रयत्ने मत्कर्तृकमातुलगृहप्राप्तौसत्यामित्यर्थः । एतेन मत्कर्तृकस्थितौतत्प्रव्राजनं नस्यादितिसूचितं । तेन चिरकालमन्यत्रस्थितिमत्त्वेनममैवापराधइतिध्वनितं ॥ १६ ॥ **शि०** रामंप्रसादयन्लक्ष्मणस्यसंनिधौतस्यरामस्यसीतायाश्चपादेषुपतिष्यामि । लक्ष्मणस्यसंनिधावित्यनेन मदतिप्रार्थनादर्शनेतस्मिन्नप्यार्द्रचित्तत्वंजनयिष्यतीतिव्यञ्जितम् ॥ **कतक०** स्वापराधप्रसादनायकनीयस्स्वपिप्रणामोलोकप्रसिद्धः । अन्यस्तु श्रद्धाजाड्यात् सीतायाश्चपुनःपुनरितिपाठंकल्पयति ॥ **स०** परमान्नदानकर्मणैवलक्ष्मणस्यज्येष्ठत्वस्यविवक्षितत्वाल्लक्ष्मणपादाभिवन्दनंयुक्तं ॥ १७ ॥

**[ पा० ]** १ क—ङ. छ. झ. ञ. ट. सत्कार. २ ङ. छ. झ. ट. संहृष्टं. ३ ज. नरेन्द्रो. ४ ख. ज. विजनं. ५ ग. जन्मच. ६ ङ. छ. झ. ञ. ट. रामंतस्यपतिष्यामि. ७ क. ग. घ. च. ज. सीतायाश्चपुनःपुनः. ८ ख. ग. विलपंस्तत्र.

सालतालाश्वकर्णानां पर्णैर्बहुभिरावृताम् ॥ विशालां मृदुभिस्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १९ ॥
शक्रायुधनिकाशैश्च कार्मुकैर्भारसाधनैः ॥ रुक्मपृष्ठैर्महासारैः शोभितां शत्रुबाधकैः ॥ २० ॥
अर्करश्मिप्रतीकाशैर्घोरैस्तूणीगतैः शरैः ॥ शोभितां दीप्तवदनैस्सर्पैर्भोगवतीमिव ॥ २१ ॥
महारजतवासोभ्यामसिभ्यां च विराजिताम् ॥ रुक्मबिन्दुविचित्राभ्यां चर्मभ्यां चापि शोभिताम् २२
गोधाङ्गुलित्रैरासक्तैश्चित्रैः काञ्चनभूषितैः ॥ अरिसङ्घैरनाधृष्यां मृगैः सिंहगुहामिव ॥ २३ ॥
प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम् ॥ ददर्श भरतस्तत्र पुण्यां रामनिवेशने ॥ २४ ॥
निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ॥ उटजे राममासीनं जटामण्डलधारिणम् ॥ २५ ॥
तं तु कृष्णाजिनधरं चीरवल्कलवाससम् ॥ ददर्श राममासीनमभितः पावकोपमम् ॥ २६ ॥
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम् ॥ पृथिव्याः सागरान्ताया भर्तारं धर्मचारिणम् ॥२७॥

---

सालोश्वकर्णादन्योवृक्षः । अश्वकर्णः सर्जतरुः । तालोमृदुपर्णःश्रीतालः ॥ १९ ॥ कार्मुकैरितिबहुवचनादभ्यासयोग्यंकार्मुकान्तरमस्तीतिगम्यते । भारसाधनैः गुर्ववयवैः । यद्वा अतिगुरुतररणकार्यसाधनभूतैः । यद्वा भारोधनुःपरिमाणविशेषः । यथोक्तंधनुर्वेदे ईशानसंहितायां । "भारंपलशतंविदुः । तेनभारेणचापानांप्रमाणमुपलभ्यते" इति । रुक्मपृष्ठैः कनकानुलिप्तपृष्ठप्रदेशैः । महासारैः महास्थिरांशैः । "सारो बलेस्थिरांशेच" इत्यमरः ॥ २० ॥ भोगवती सर्पनगरी ॥ २१ ॥ महारजतवासोभ्यां स्वर्णमयकोशाभ्यां । रुक्मबिन्दुविचित्राभ्यां शोभाविशेषायमध्येमध्येशिल्पिनिर्मितकनकबिन्दुविचित्राभ्यां [ पाठभेदः आत्मबिन्दुविचित्राभ्यां व्याघ्रचर्मकृतयास्वाभाविकनानावर्णबिन्दुविचित्राभ्यां । ] चर्मभ्यां खेटकाभ्यां । "खेटकंफलकंचर्म" इतिहलायुधः ॥ २२ ॥ गोधाङ्गुलित्रैः गोधा ज्याघातवारणं । अङ्गुलित्रमङ्गुलित्राणं । उपलक्षणेतृतीया । शोभितामित्यनुकर्षोवा । अनाधृष्यां अप्रधृष्यां ॥ २३ ॥ प्रागुदक्प्रवणां प्रागुदग्भागेक्रमनिम्नां । "प्रवणोदक्षिणेप्रह्वेक्रमनिम्नेचतुष्पथे" इतिवैजयन्ती । तत्र रामनिवेशने पूर्वोक्तपर्णशालायामित्यर्थः ॥ २४ ॥ निरीक्ष्येति जटामण्डलधारित्ववैलक्षण्येननिश्चयार्थं मुहूर्तंनिरीक्ष्यतेजोविशेषेणसामान्येनस्वगुरुंज्ञातवानित्यर्थः । अस्मिञ्श्लोकेउत्तरार्धेजटामण्डलधारिणमित्यत्रणकारोगायत्र्याःसप्तमाक्षरं । षट्सहस्राणिश्लोका गताः ॥ २५ ॥ विशेषतोदर्शनमाह—तंत्वित्यादिना । महार्हवसनोपेतस्येदानींततोवैलक्षण्यमाह—तंत्विति । तदेववैलक्षण्यंदर्शयति—कृष्णाजिनधरमिति । कृष्णाजिनधरं उत्तरीयतयाकृष्णाजिनधरं । अधराम्बरत्वेनचीरवल्कलवाससं । कृष्णाजिनधरंचीरवल्कलवाससं पूर्वस्माच्छोभाविशेषयुक्तं । रामं वल्कलादिधारणेप्यपरावर्तमानंरामणीयकमुच्यते । आसीनं किंचिदासनमास्थायात्मानंध्यायन्तं । अभितः पावकोपमं तादृशतपोविशेषेणसमंतात्तेजःपरिवृतं । *यद्वा । "नीलतोयदमध्यस्थाविद्युल्लेखेवभास्वरा" इत्युक्तरीत्या विद्युल्लेखामध्यवर्तिनीलतोयदमिवस्थितमित्यर्थः । यद्वा विरोधिनामनभिभवनीयमित्यर्थः । यद्वा उटजे राममासीनं । अयोध्यास्थितसमाजापेक्षया अल्पतरापीयंसभामहतीजाता कुतः अभितःपावकोपमं तत्सभायांसमीपस्थस्यभ्रातुरपिद्यत्रसमीपमागन्तुंनशक्यते । नहिज्वलत्यनलेकस्यापिसमीपमागन्तुंशक्यम् । यद्वा उटजेराममित्यत्र रामं श्यामं । अधोरामौसावित्राविरित्यत्रतथाप्रयोगात् । यद्वा पावकोपमं दुर्दर्शमित्यर्थः । अतएवपूर्वश्लोके निरीक्ष्यसमुहूर्तमित्युक्तं ॥२६—

---

स० महारजतवासोभ्यां कुसुंभवासोभ्यां ॥ २२ ॥ ति० प्रागुदक्प्रवणां ईशानभागेनिम्नां ॥ २६३ ॥ ती० विशेषणान्तराभिधानार्थं ददर्शेतिपुनर्वचनं । ति० अभितः समीपे ॥ २६ ॥

[ पा० ] १ क. ख. घ. ञ. वाधनैः. २ ङ. छ. झ. ञ. ट. स्तूणगतैः. ३ घ. चविराजितां. ४ ङ. छ. झ. ट. श्चित्रकांचन. ५ क. ख. कनक. ६ ख. तेजसं. ७ ख. ग. पुण्ये. ८ क. ञ. निकेतने. ९ ख. ङ. च. झ. ञ. ट. कृष्णाजिनधरंतंतु.

उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम् ॥ स्थण्डिले [1]दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥ २८ ॥
तं दृष्ट्वा भरतः श्रीमान्दुःख[2]शोकपरिप्लुतः ॥ अभ्यधावत धर्मात्मा भरतः कैकयीसुतः ॥ २९ ॥
[3]दृष्ट्वैव विललापार्तो बाष्पसंदिग्धया गिरा ॥ अशक्नुवन्[4]धारयितुं धैर्याद्वचनम[5]ब्रवीत् ॥ ३० ॥
यः संसदि प्रकृतिभिर्भवेद्युक्त उपासितुम् ॥ वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ ३१ ॥
वासोभिर्बहुसाहस्रैर्यो [6]महात्मा पुरोचितः ॥ [7]मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३२ ॥
[8]अधारयद्यो विविधाश्चित्राः सुमनस[9]स्तदा ॥ सोऽयं जटाभारमिमं [10]वहते राघवः कथम् ॥ ३३ ॥
यस्य [11]यज्ञैर्यथोद्दिष्टैर्युक्तो[12] धर्मस्य संचयः ॥ शरीरक्लेशसंभूतं स धर्मं परिमार्गते ॥ ३४ ॥
चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् ॥ मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते ॥ ३५ ॥
[13]मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः ॥ धिग्जीवितं नृशंसस्य मम [14]लोकविगर्हितम् ॥ ३६ ॥
इत्येवं विलपन्दीनः प्रस्विन्नमुखपङ्कजः ॥ पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३७ ॥
दुःखाभितप्तो भरतो राजपुत्रो महाबलः ॥ उक्त्वाऽर्येति [15]सकृद्दीनं पुनर्नोवाच किंचन ॥ ३८ ॥
[16]बाष्पापिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम् ॥ आर्येत्येवा[17]थ संक्रुश्य व्याहर्तुं [18]नाशकत्तदा ॥ ३९ ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ॥ [19]तावुभौ स समालिङ्ग्य [20]रामश्चाश्रूण्यवर्तयत् ॥ ४० ॥

ततः सुमन्त्रेण गुहेन [21]चैव [22]समीयतू राजसुतावरण्ये ॥
दिवाकरश्चैव निशाकरश्च यथाऽम्बरे शुक्रबृहस्पतिभ्याम् ॥ ४१ ॥

॥ २७ ॥ ब्रह्मापेक्षयास्यवैलक्षण्यमुच्यते—शाश्वतमिति । स्थण्डिले भूमौ ॥ २८ ॥ द्वितीयोभरतशब्द उत्तरश्लोकेनसंबध्यते ॥ २९ ॥ दृष्ट्वैव दर्शनमात्रेणेत्यर्थः । आर्तः खिन्नः । तामार्तिंधारयितुमशक्नुवन् बाष्पसंदिग्धया शोकोष्मणासंदिग्धवर्णया । गिरा- उपलक्षितः ॥ ३० ॥ संसदि सभायां । युक्तः अर्हः ॥ ३१ ॥ बहुसाहस्रैः बहुसहस्रमूल्यैः । उचितः अलं कर्तुमितिशेषः । षष्ठ्यर्थेतृतीयावा । मृगाजिने मृगचर्मणी । प्रवस्ते आच्छादयति ॥३२—३३॥ यथोद्दिष्टैः यथाविहितैः । यथादृष्टैरितिपाठे शास्त्रेष्वितिशेषः । युक्तः योग्यः ॥३४—३८॥ वक्तुमशक्यत्वेहेतुमाह—बाष्पापिहितकण्ठइत्यादिना । बाष्पापिहितकण्ठः बाष्पनिरुद्धकण्ठः ॥ ३९—४० ॥ राजसुतौ रामलक्ष्मणौ

**ति०** अभ्यधावत धावन्निवत्वरयाजगाम । अत्रभरतस्येवकवेरपिवर्णनीयमयीभावेनातिहर्षाविष्टत्वादत्रप्रकरणेद्विरुक्तिर्न दोषाय ॥ २९ ॥ **शि०** आर्तः सेवकादिरहितरामदर्शनजनितखेदंप्राप्तोभरतः । धैर्यात् वारयितुं खेदंनिवारयितुं अशक्नुवन् अतएववचनं व्यक्तवाचं । अब्रुवन्सन् बाष्पसंदिग्धया गद्गदाक्षरयेत्यर्थः । गिराविललाप । विलापप्रकारमाह—**यस्संसदीति** ॥ ३१ ॥ **ती०** मृगाजिनैरितिपाठे मृगाजिनैराच्छादनंकरोतीत्यर्थः । **ति०** धर्मं पितृवचनपरिपालनरूपं ॥ ३२ ॥ **स०** यस्ययज्ञैःयद्विषयकयज्ञैरन्येषांधर्मसंचयोयुक्तः सरामस्स्वशरीरक्लेशसंभूतंधर्मंपरिमार्गते ॥ ३४ ॥ **ति०** मलेन दण्डवत् त्रिषवणाप्लवमात्रान्मलस्थितिरङ्गे ॥ ३५ ॥ **ति०** पादावप्राप्येति दुःखातिशयवशात् ॥ ३७ ॥ **स०** वनौकसः ऋषयः ॥ ४२ ॥ इत्येकोनशततमस्सर्गः ॥ ९९ ॥

[ **पा०** ] १ ञ. चर्म. २ क. ख. ङ. च. छ. झ. ञ. ट. मोह. ३ ञ. ट. दृष्ट्वैवं. ४ क. झ. ञ. ट. न्वारयितुं. ५ क. झ. ञ. ट. मब्रुवन्. ६ ग. महार्थः. ७ ग. घ. मृगाजिनैः. ८ घ. ङ. छ. ज. झ. आधारयत्. ९ ग. छ.—ञ. स्सदा. क. स्तथा. ङ. ट. स्स्रजः. १० क. ख. ग. ङ. च. छ. झ. ञ. ट. सहते. ११ ग. यथामृष्टैः. क. ख. ङ. च. छ. झ. ञ. ट. यथादिष्टैः. ज. यथादृष्टैः. १२ घ. युक्तैर्धर्मस्य. १३ च. ट. यन्निमित्त. १४ ग. लोके. १५ ख. ग. सकृद्दीनः. १६ ङ. छ. झ. ट. बाष्पैःपिहित. ग. बाष्पोपहित. १७ क. ख. ङ. च. छ. झ. ञ. ट. वाभि. १८ ख. घ. ङ. छ.—ट. नाशकत्ततः. ग. नाशकत्पुनः. १९ ङ. च. छ. झ. ञ. ट. तावुभौच. क. ग. घ. तावुभौसु. २० ख.—छ. झ. ञ. ट. रामोप्यश्रूणि. २१ क. तेन. २२ ग. समेयतू.

तान्पार्थिवान्वारणयूथपाभान्समागतांस्तत्र महत्यरण्ये ॥
वनौकसस्तेऽपि समीक्ष्य सर्वेऽप्यश्रूण्यमुञ्चन्प्रविहाय हर्षम् ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

## शततमः सर्गः ॥ १०० ॥

रामेणभरतस्यस्वाङ्कारोपणेनपित्रादिकुशलप्रश्नपूर्वकंप्रश्नव्याजेनराजनीतिशिक्षणम् ॥ १ ॥

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि ॥ ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ॥ १ ॥
कथंचिदभिविज्ञाय विवर्णवदनं कृशम् ॥ भ्रातरं भरतं रामः परिजग्राह बाहुना ॥ २ ॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवः ॥ अङ्के भरतमारोप्य पर्यपृच्छत्समाहितः ॥ ३ ॥
क्व नु तेऽभूत्पिता तात यदरण्यं त्वमागतः ॥ न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ॥ ४ ॥

॥ ४१ ॥ तान् तादृशसुखयुक्तान् । समागतान् संगतान् ॥ ४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

दर्शनमात्रेणभरतोराज्यंपालयतीतिकृत्वाराज्यनीतिंपृच्छतिशततमे—यद्वा अथभगवान्रामः प्रश्नव्याजेनराज्यरक्षणनीतिप्रकारान्शिक्षयति पश्चाद्दशरथात्ययश्रवणभरतस्थण्डिलशयनादिव्यापारेणतदुपदेशावकाशाभावात्—जटिलमित्यादि । जटिलं समीचीनमालिकादृष्टाचेदियंभरतस्यकेशार्हेत्येवंदशरथोवदति सएवजटांबध्वातिष्ठतीतिरामोविस्मयते । चीरवसनं श्लाघ्यचीनाम्बरंदृष्टंचेद्बालस्यभरतस्यवसनार्हमिदमितिपितावदति सएवेदानींवल्कलधारीतिष्ठति । प्राञ्जलिं पितायाचनापूर्वकंदिशतिचेद्यः स्वीकरोति ससंप्रतिस्वाभिमतस्यस्वयमर्थीभवति । पतितं भुवि अङ्केभरतमारोप्येतिस्थितिर्नलब्धा । कुसुमशय्यापि कठिनीभवेदितिमत्वा उत्सङ्गेएवपित्राशायितः ससंप्रतिस्थलेपतितः । ददर्शरामोदुर्दर्शं दत्तांदृष्टिमनाकृष्य स्थितस्यरामस्यदर्शनायोग्यतयास्थितं । यद्वा दुर्दर्शं जटिलत्वादिवेषेणस्नेहितजनस्यदुष्प्रेक्षंदुर्दर्शं दुःखेनद्रष्टुंयोग्यं कृच्छ्रेणाप्यभिज्ञातुमयोग्यमितियावत् । युगान्तेभास्करंयथा नकेवलंरामस्य सर्वस्यापिजनस्यदुर्दर्शतयास्थितमितिभावः । यद्वा युगान्तेभास्करंयथा युगान्तेभुविपतितंभास्करमिवस्थितं अनेनपूर्ववन्महत्तरतेजोराहित्यं तादृशावस्थानर्हत्वंचव्यज्यते । [युगान्तेभुविपतितं भास्करंयथेत्यनेन महत्तरतेजोराशित्वं तादृशावस्थानर्हत्वंचोच्यते ] ननुगङ्गातीरे "अद्यप्रभृतिभूमौतुशयिष्येहंतृणेषुवा । फलमूलाशनोनित्यं जटाचीराणिधारयन् " इतिजटावल्कलधारणंप्रतिज्ञातं पुनर्नवतितमेभरद्वाजदर्शनसमये । "वसानो वाससीक्षौमे " इतिक्षौमवस्त्रंधृतवानित्युच्यते । अत्रतु जटिलंचीरवसनमितिसिद्धवदनूद्यते कथमेतत्संगच्छतइतिचेदत्राहुः । प्रतिज्ञायारात्रौकृतत्वादपरेद्युर्भरद्वाजदर्शनानन्तरं जटावल्कलेधृतवानित्यविरोधइति । अयंचपरिहारः पुरैवास्माभिःप्रतिपादितः ॥ १ ॥ कथंचिदभिविज्ञानलेहेतुद्वयं—विवर्णवदनं कृशमिति ॥ २—३ ॥ अतिदुःखितस्यभरतस्यदुःखमपनेतुंप्रश्नव्याजेनधर्मानुपदिशति—क्वन्वित्यादि । तेपिताक्वन्वभूदितिप्रश्नभङ्ग्या लोकान्तरंगतः किमितिसिद्ध्यति ।

स० जटिलमिति । ननु अद्यप्रभृतिभूमौतुशयिष्ये 'जटाचीराणिधारयन्' इतिगुहसंनिधौभरतेनजटाधारणेप्रतिज्ञामात्रंकृतं नतुतद्धारणं । "वसानोवाससीक्षौमे" इतिभरद्वाजावलोकनप्रकरणेतथोक्तेः तस्मात्कथमितिचेत्सत्यं । महार्षिपुरतस्ससैन्येन ऋषिचर्यानप्रदर्शनीयेतितत्पूर्वमधृत्वा अनन्तरं जटादिदर्शने रामकृपाभवेदितितद्धृतवानितिकात्रकथंता । भुविपतितमित्युभयत्रान्वेति । दुर्दर्शं द्रष्टुमयोग्यं ॥ १ ॥ ति० जीवतस्तस्य । सेवांहित्वेतिशेषः । नार्हसि । मदसंनिधौतवैव

[ पा० ] १ घ. ङ. छ. झ. ट. यूथपार्हान्. २ क. ङ. छ—ट. स्तेऽभि. ख. स्तेहि. ३ ख. ङ. च. छ. झ. ञ. ट. सर्वेलश्रूणि. ४ ट. भरतं. ५ ग. कथंचिदपि. ६ घ. ङ. च. ञ. ट. पाणिना. ७ क. ख. संपरिष्वज्य. ८ ग. बाहुना. क. ख. ङ. च. छ. झ. राघवं. ९ ङ. छ झ. ञ. ट. पर्यपृच्छतसादरं.

चिरस्य बत पश्यामि दूराद्भरतमागतम् ॥ दुष्प्रतीकमरण्येऽस्मिन्किं तात वनमागतः ॥ ५ ॥
[1]कच्चिद्धारयते तात राजा यत्त्वमिहागतः ॥ कच्चिन्न दीनः सहसा राजा लोकान्तरं गतः ॥ ६ ॥
कच्चित्सौम्य न ते राज्यं भ्रष्टं बालस्य शाश्वतम् ॥ ७ ॥
कच्चिच्छुश्रूषसे तात पितरं सत्यविक्रमम् ॥ ८ ॥
कच्चिद्दशरथो राजा [4]कुशली [5]सत्यसङ्गरः ॥ राजसूयाश्वमेधानामाहर्ता धर्मनिश्चयः ॥ ९ ॥
स कच्चिद्ब्राह्मणो विद्वान्धर्मनित्यो महाद्युतिः ॥ इक्ष्वाकूणामुपाध्यायो यथावत्तात पूज्यते ॥ १० ॥
[6]सा तात कच्चित्कौसल्या सुमित्रा च प्रजावती ॥ सुखिनी कच्चि[7]दार्या च देवी नन्दति कैकयी ॥ ११ ॥
कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ॥ अनसूयुरनुद्रष्टा [8]सत्कृतस्ते पुरोहितः ॥ १२ ॥
कच्चिदग्निषु ते युक्तो [9]विधिज्ञो मतिमानृजुः ॥ हुतं च होष्यमाणं च काले वेदयते सदा ॥ १३ ॥

तत्रहेतुः—यदिति । तदुपपादयति—नहीति । जीवतः जीवति । अनादरेषष्ठी । वनंनागन्तुमर्हसि शुश्रूषणपरत्वादितिभावः । यद्वा तस्यत्वद्विरहासहिष्णुत्वादिति । रामस्यप्रश्नान्तरसंबन्धदर्शनेनभरतो नोत्तरमुक्तवानितिबोध्यम् ॥ ४ ॥ बतेत्यद्भुते । "खेदानुकम्पासन्तोषविस्मयामन्त्रणेबत" इत्यमरः । दूरात् दूरावस्थितकेकयनगरात् । दुष्प्रतीकं वैवर्ण्यादिनादुर्ज्ञेयावयवं । "अङ्गंप्रतीकोवयवः" इत्यमरः । किं किमर्थं ॥ ५ ॥ अस्मिन्नरण्येतवकिंप्रयोजनं प्रयोजनंद्वेधासंभवति राजनिजीवतितदाज्ञयाममदर्शनं राजनिमृतेस्वबाल्येनबलवद्भिरपहृतराज्यत्वं वा । आद्यमाह—कच्चिदिति । धारयतइति प्राणानितिशेषः । यस्मात्त्वमिहागतः तस्माद्राजाप्राणान् धारयतेकच्चित् । राजाजीवतिचेत् त्वामत्रागच्छन्तंन सहेतेतिभावः । कच्चिन्नधरतइतिपाठान्तरं । तदा देहंधारयितुंनशक्नोतिकच्चिदित्यर्थः ॥ ६ ॥ द्वितीयंपक्षंप्रश्नद्वयेनदर्शयति—कच्चिदित्यादि । राज्यंभ्रष्टंनकच्चित् प्रजानुरागोविद्यतेकच्चिदित्यर्थः ॥ ७ ॥ कच्चिच्छुश्रूषसइति । पितृशुश्रूषानादरेणकिमागतोसीतिपक्षान्तरम् ॥ ८ ॥ अथराज्ञआरोग्यंपृच्छति—कच्चिद्दशरथइति । कुशली अनामयः । राज्ञोव्याधिपरिभूतत्वात् तत्कथनायकिमागतोसीतिपक्षान्तरं । सत्यसङ्गरः सत्यप्रतिज्ञः । सत्यप्रतिज्ञांप्रेक्ष्यपश्चात्तापेनकिमकुशलंप्राप्तइतिहार्दोभावः । आहर्ता संपादयिता कर्तेतियावत् । धर्मेनिश्चयोयस्यसधर्मनिश्चयः ॥ ९ ॥ सः प्रसिद्धः । ब्राह्मणः ब्रह्मवित् । "तदधीतेतद्वेद" इत्यण् । विद्वान् सर्वविद्यासुकुशलः । धर्मनित्यः ज्ञानानुगुणमनुष्ठातेत्यर्थः । महाद्युतिः तत्कृतब्रह्मवर्चसयुक्तः । इक्ष्वाकूणामुपाध्यायः कुलगुरुः वसिष्ठः यथावत् यथापूर्वं । तातवत्संपूज्यते बहुमन्यते ॥ १० ॥ सा पूर्वंदुःखिततया अनुभूता । कौसल्यासुखिनीकच्चित् । प्रजावती सुप्रजाः । सुमित्राचसुखिनीकच्चिदित्यन्वयः । आर्येतिस्वमातुरपिबहुमानोक्तिः । कैकेयी नन्दतिकच्चित् राज्यलाभेनेतिशेषः ॥ ११ ॥ विनयसंपन्नः निरहंकारः । कुलपुत्रः सत्कुलप्रसूतः । बहु श्रुतमवधारणंयस्यसतथा । अनसूयुः छान्दसउप्रत्ययः । अनुद्रष्टा वसिष्ठोपदिष्टानामुपद्रष्टा । तेपुरोहितइत्यनेन रामस्यसुयज्ञइवभरतस्यापि प्रातिस्विकः कश्चित्पुरोहितोस्तीतिगम्यते । सुयज्ञएवोच्यतइत्यप्याहुः । सत्कृतः पूजितःकच्चिदित्यन्वयः । अनेनपुरोहितःसदासत्कर्तव्यइतिशिक्षितं । एवमुत्तरत्रापियोजनीयम् ॥ १२ ॥ "पितृव्यपुत्रेसापत्ने

पितृशुश्रूषाया अवश्यकर्तव्यत्वादितिभावः ॥ ४ ॥ **ति०** दुष्प्रतीकमितिभरतविशेषणं वनविशेषणंच । आद्येकार्श्यवैवर्ण्यादिनादुर्ज्ञेयाकारं । वनमपिभीषणतया । तथा ईदृशंवनंकिमागतः किमागमनप्रयोजनमीदृशारण्यइत्यर्थः । अरण्यंगजाद्युपभोग्यं तद्वर्तिवनं आम्रादियुक्तं मनुष्यभोग्यमितिभेदः ॥ ५ ॥ **शि०** यत् यं । त्यक्त्वेतिशेषः । त्वमिहागतः सराजाधरते प्रजाःपाल्यत्वेनस्वीकरोतिकच्चित् । राजादीनःसन् लोकान्तरंनगतःकच्चित् ॥ ६ ॥ **शि०** सत्यसंगरः निष्कपटयोद्धा । **ति०** धर्मनिश्चितः धर्मेनिश्चितंनिश्चयोयस्यसः ॥ ९ ॥ **ति०** यद्वा वैद्यान् चिकित्साप्रवीणान्ब्राह्मणानित्यर्थः । "अपूतोह्येषोमेध्योयोऽभिषज्यति" इतिश्रुत्युक्तनिन्दातु

**[ पा० ]** १ क. ख. ग. ङ.—ट. कच्चिन्नुधरते. २ क. ख. ग. ङ. छ. झ. ञ. ट. पितुःसत्यपराक्रम. ३ घ. कुलीनः. ४ ग. विगतज्वरः. ५ ङ. छ. झ. ट. निश्चितः. ६ क—घ. च.—ट. तातकच्चिच्चकौसल्या. ७ क.—घ. ज. दार्यासा. ८ घ. संमतस्ते. ९ घ. दानज्ञो.

कच्चिद्देवान्पितॄन्मातॄर्गुरून्पितॄं[1]समानपि ॥ वृद्धांश्च तात[2] वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥ १४ ॥
इष्वस्त्रवरसंपन्नमर्थशास्त्रविशारदम् ॥ सुधन्वानमुपाध्यायं कच्चित्त्वं तात[3] मन्यसे ॥ १५ ॥
कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः ॥ कुलीनाश्चेङ्गितज्ञाश्च [4]कृतास्ते तात मन्त्रिणः ॥१६॥
मन्त्रो विजयमूलं हि राज्ञां भवति राघव ॥ सुसंवृतो [5]मन्त्रधरैरमात्यैः शास्त्रकोविदैः ॥ १७ ॥
कच्चिन्निद्रावशं नैषीः कच्चित्[6]काले प्रबुध्यसे ॥ कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम् ॥ १८ ॥
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ॥ कच्चित्ते मन्त्रि[7]तो मन्त्रो राष्ट्रं न परिधावति ॥ १९ ॥
कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम् ॥ क्षिप्रमारभसे [8]कर्तुं न दीर्घयसि राघव ॥ २० ॥
[9]कच्चित्ते सुकृतान्येव कृतरूपाणि वा पुनः ॥ विदुस्ते सर्वकार्याणि न कर्तव्यानि पार्थिवाः ॥ २१ ॥

परनारीसुतेषुच । विवाहदानयज्ञादौपरिवेदोनदूषणं" इतिस्मरणाद्वैमातुरेष्वधिवेदनदोषाभावाद्यज्ञोपिकृतइत्यारोप्यपृच्छति—कच्चिदग्निष्विति । अथवा अग्निषु अग्निकार्येषु । युक्तः सावधानः नियुक्तोवा । अग्निशुश्रूषणपरइत्यर्थः । विधिज्ञः अग्निहोत्राद्यश्वमेधान्तसकलयागविधिज्ञः । मतिमान् ऊहापोहादिकल्पनचतुरः । ऋजुः प्रत्यक्षपरोक्षयोरेकरूपानुष्ठानवान् एकरूपकरणत्रयइतिवार्थः । पुरोहितइतिशेषः । काले तत्तद्धोमकाले । वेदयते तुभ्यंज्ञापयतिकच्चित् ॥ १३ ॥ अभिमन्यसे बहुमन्यसे । देवेषुबहुमतिः यज्ञादिभिराराधनं । पितृषुमातृषुचवचनकरणशुश्रूषणे । भृत्यानितिपाठे तत्रबहुमतिः । दानं गुरुष्वनुवर्तनाभिमतकरणादि । पितृसमेषुज्ञातिष्वर्थदानं वृद्धादिषु नमस्कारादि । वृद्धाः ज्ञानशीलवयोभिः । विद्यायेषांसन्तीतिवैद्याः विद्वांसः तान् । ब्राह्मणान् ब्रह्मविदः । यद्वा वैद्यान् भिषजः । तेषांबहुमतिश्चधनादिनापरितोषणं । ब्राह्मणानितिजातिमात्रपरोवा । तदा विद्याशीलादिकमपरीक्ष्यब्राह्मणत्वमात्रेणयथायोग्यंबहुमानंविवक्षितम् ॥ १४ ॥ इष्वस्त्रवरसंपन्नमिति । इषवः अमन्त्रकाबाणाः । अस्त्राणि समन्त्रकाः । वरशब्दः प्रत्येकमभिसंबध्यते । अर्थशास्त्रं नीतिशास्त्रं । सुधन्वानं सुधन्वनामकं । उपाध्यायं धनुर्वेदाचार्यं । मन्यसे बहुमन्यसे ॥ १५ ॥ आत्मसमाः विश्वसनीयाइतियावत् । शूराः धीराइतियावत् । श्रुतवन्तः नीतिशास्त्रज्ञाः । "श्रुतंशास्त्रावधृतयोः" इत्यमरः । जितेन्द्रियाः परैरलोभनीयाइतियावत् । कुलीनाः प्रामाणिककुलोत्पन्नाः । ते त्वया ॥ १६ ॥ एतादृशमन्त्रिकरणेकिंकारणंतत्राह—मन्त्र इति । सुसंवृतः सुतरांगुप्तः । शास्त्रकोविदैः नीतिशास्त्रनिपुणैः । मन्त्रधरैरमात्यैः सुसंवृतोमन्त्रोहि विजयमूलंभवतीत्यन्वयः ॥ १७ ॥ अर्थनैपुणं अर्थविषयसामर्थ्यमितियावत् ॥ १८ ॥ एकोनमन्त्रयसेकच्चित् एकेनमन्त्रेक्रियमाणेतस्यकुत्रचिदभिनिवेशेनगुणागुणयोर्याथार्थ्यग्रहणंनसिद्ध्येदितिभावः। बहुभिःसहनमन्त्रयसेकच्चित् । बहुभिःसहमन्त्रणेपिप्रथमंतावदैकमत्यंनघटते मन्त्रभेदश्चभवेदितिभावः । राष्ट्रं जनपदं । नपरिधावति नव्याप्नोति । पूर्वंमन्त्रसंवरणमन्यहेतुतयोक्तं अत्रतुस्वतन्त्रतयोच्यतइतिनपुनरुक्तिः ॥ १९ ॥ लघुमूलं लघुसाधनं । महोदयं महाफलं । अर्थं कार्यं । विनिश्चित्यक्षिप्रमारभसेकच्चित् । नदीर्घयसि नविलम्बसेकच्चित् । एवमन्वयव्यतिरेकाभ्यामुक्तं । "क्षिप्रमक्रियमाणस्यकालःपिबतितत्फलं" इतिभावः ॥ २० ॥ पार्थिवाः सामंतनृपाः । ते सर्वकार्याणि मन्त्रितसर्वकार्याणि । सुकृतान्येव सुनिष्पन्नान्येवविदुः कच्चित् । कृतरूपाणि कृतप्रायाणिवा क्षिप्रमेवफलोन्मुखानीतियावत् । कर्तव्यानिनविदुः मन्त्रेणकर्तव्यतयानिश्चितानिकरणात्पूर्वंनविदुरित्यर्थः ॥ २१ ॥

शास्त्रानभिज्ञचिकित्साप्रवृत्तपरा । शास्त्राभिज्ञस्यभैषज्यंमहतेपुण्याय । तज्जीविकापरोवानिषेधइतिदिक् ॥ १४ ॥ **शि०** अस्त्रवरशब्देनैवेषूणांग्रहणेसिद्धे पुनरिषूपादानं तद्विषयकज्ञानवत्तायाअतिशयप्रतिपादनाय ॥ १५ ॥ **शि०** इङ्गितज्ञाः कथनमन्तराप्यभिप्रायविज्ञातारः ॥१६॥ **ति०** मन्त्रिधुरैः मन्त्रिश्रेष्ठैः ॥१७॥ **स०** बहुभिः नूतनैः ॥१९॥ **शि०** पार्थिवाः खण्डमण्डलेश्वराः ॥२१॥

[ **पा०** ] १ क.—ट. पितॄन्भृत्यान्. २ क. घ. तत्र. ३ च. ञ. नावमन्यसे. ४ ग. सत्कृतास्तात. ५ ङ. छ.—ट. मन्त्रिधुरैः. ६ छ. झ. ञ. त्कालेवबुध्यसे. ङ. त्कालेनबुध्यसे. क. ख. च. त्कालेवि. ७ ग. ञ. मन्त्रिते. ८ ङ. छ. झ. ट. कर्म. ९ ङ. छ. झ. ञ. ट. कच्चिन्नु. क. ग. कच्चित्तु.

**कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्तिताः॥ त्वया वा [1]तव वाऽमात्यैर्बुध्यते तात मन्त्रितम् ॥२२॥**
**कच्चित्[2]सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम् ॥ पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं महत् ॥२३॥**
**सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः ॥ अथवाऽप्ययुतान्येव [3]नास्ति तेषु सहायता ॥ २४ ॥**
**एकोप्यमात्यो मेधावी शूरो दक्षो विचक्षणः ॥ राजानं [4]राजमात्रं वा प्रापयेन्महतीं श्रियम् ॥ २५ ॥**
**कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ॥ [5]जघन्यास्तु जघन्येषु [6]भृत्याः कर्मसु योजिताः ॥२६॥**
**अमात्यानुपधातीतान्पितृपैतामहाञ्छुचीन् ॥ श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ २७ ॥**
**कच्चिन्नोग्रेण दण्डेन भृश[7]मुद्वेजितप्रजम् ॥ [8]राष्ट्रं तवानुजानन्ति मन्त्रिणः कैकयीसुत ॥ २८ ॥**
**कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा ॥ [9]उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ २९ ॥**

मन्त्रितंकार्यंत्वयावा तवामात्यैर्वाहेतुभिः तर्कैः ऊहैः । युक्त्यावा अनुमानेनवा । येचाप्यपरिकीर्तिताः अनुक्ताः इङ्गितादयः । तैर्वानबुध्यतेकच्चित् परैरितिशेषः । भवान् भवदीयामात्याश्च मन्त्रितार्थविषयपराभ्यूह्यस्थानानिसूक्ष्माण्यपिस्थगयन्तिकच्चिदित्यर्थः ॥ २२ ॥ मूर्खाणांसहस्रात् मूर्खसहस्रंपरित्यज्यापि । ल्यब्लोपेपञ्चमी । पण्डितं विमृश्यकारिणं । एकमिच्छसिकच्चित् । पण्डितपरिग्रहेहेतुमाह—पण्डितइति । अर्थकृच्छ्रेषु कार्यसंकटेषु । [ अर्थकृच्छ्रेषु अर्थसंकटेषु ] महन्निःश्रेयसं महदैश्वर्यं । प्रापयेदित्यर्थः [ महन्निःश्रेयसं । अव्यभिचारितफलसाधनोपायं ] कुर्यात् उपदिशेदित्यर्थः ॥ २३ ॥ एवमन्वयेनोपपाद्यव्यतिरेकमुखेनोपपादयति—सहस्राणीति । उपास्ते आश्रयति संगृह्णातीत्यर्थः । नास्तीत्यस्मात्पूर्वं तथापीत्युपस्कार्यं । सहायता मन्त्रोपायसहायत्वं ॥ २४ ॥ पण्डितशब्दार्थंविवृण्वन्नाह—एकइति । मेधास्यास्तीतिमेधावी । "अस्मायामेधास्रजोविनिः" इतिविनिः । झटितिपरोपन्यस्तार्थग्रहणपटुरित्यर्थः । शूरः स्थिरबुद्धिः । दक्षः विचारसमर्थः । विचक्षणः अभ्यस्तनीतिशास्त्रः ॥ २५ ॥ मुख्याःभृत्याः महत्सु मुख्येष्वेव । कार्येषु वचनपरिवेषणादिषु । कच्चिन्नियोजिताः नतुहीनेषुकार्येषु । मध्यमाः जात्यादिना मध्यमाभृत्याः मध्यमेष्वेवकार्येषु शय्यासनानयनादिषुनियोजिताः नतूत्तमाधमकार्येषु । जघन्याः जात्यादिहीना भृत्याः जघन्येष्वेवकार्येषु पादप्रक्षालनपादुकानयनपादसंवाहनादिषु । नियोजिताः नतूत्तममध्यमेषुकार्येषुयोजिताःकच्चित् । अन्यथामहद्वैशसंभवेदितिभावः ॥२६॥ भृत्येषूक्तंन्यायममात्येष्वतिदिशति—अमात्यानिति । उपधातीतान् स्वव्यतिरिक्तेष्वर्थाद्युपाधिरहितान् । यद्वा सुपरीक्षातीतान् । "उपधा सुपरीक्षास्यात्" इतिवैजयन्ती । श्लाघ्यवस्त्राभरणादिकंपुरुषमुखेनसंप्रेष्य अन्तःपुरप्रेषितंपरराजप्रेषितमितिप्रलोभ्य परीक्षांकुर्वन्तिराजानः तामतीतानित्यर्थः । पितृपैतामहान् कुलक्रमागतान् । शुचीन् करणत्रयशुद्धियुक्तान ॥ २७ ॥ तव उग्रेणदण्डेन उद्वेजितप्रजं पीडितप्रजायुक्तं । राष्ट्रं राज्यं । मन्त्रिणः नानुजानन्ति नानुमन्यन्तेकच्चित् । राजानं त्वामुग्रदण्डान्निवर्तयन्ति कच्चिदित्यर्थः ॥ २८ ॥ उग्रप्रतिग्रहीतारमित्युपमानोपमेययोःसाधारणविशेषणं । उग्रेणदण्डोपायेनादण्ड्येभ्योधनग्रहणंकुर्वन्तंत्वां उग्रप्रतिग्रहीतारं उग्रेण दुर्दानेनधनप्रतिग्रहीतारं । पतितं यष्टुकामंपतितं । याजकाऋत्विजइव । उग्रेणकर्मणा बलात्कारेण

**स०** युक्त्या सामान्यानुमानेन । तर्कैः अर्थापत्तिभिः । यद्वा तर्कैःदूषणानुमानैः । युक्त्या साधनानुमानेन ॥ २२ ॥ **ति०** सहस्रैः । युक्तैरपीतिशेषः । **स०** मूर्खाणांसहस्रैः एकं अन्यं पण्डितं । "एकेमुख्यान्यकेवलाः" इत्यमरः ॥ २३ ॥ **ति०** उपधा उत्कोचः तमतीतान् तदग्राहिणः । यद्वोपाधिप्रयुक्तसंश्रयरहितान् । **स०**उपधातीतान् उपाधिकृतभक्तिरहितान् सहजस्नेहवत इतियावत् ॥२७॥ **ति०** उद्वेजिताःप्रजाःमन्त्रिणश्च राष्ट्रे तव त्वां नावजानन्ति नावमन्यन्तेकच्चित् ॥ २८ ॥ **कतक०** याजकाः किंचित्पापानुसंधानेनपतितमिव त्वामयाज्योऽयमितिमत्वानावजानन्तिकिल । तत्रदृष्टान्तः—**उग्रेत्यादि** । स्त्रियःकुलस्त्रियः । उग्राख्यहीनजातीयस्त्रीप्रतिग्रहीतारं तांचकामयानं कामयमानं तस्यामलन्तासक्तंतथाऽवजानन्तीत्यर्थः ॥ परेतु उग्रप्रतिग्रहीतारं उग्रश्शिवः

[ **पा०** ] १ क. तवचा. २ ङ. छ. झ. ट. त्सहस्रैर्मूर्खाणां. ३ ग. तेषुनास्ति. ४ ग. ङ. छ.—ट. राजपुत्रं. ५ ख. ङ. च. छ. झ. ञ. ट. जघन्याश्च. ६ ख. ङ. छ. ज. झ. ट. भृत्यास्तेतात. ७ क. ग. ङ. च. छ. झ. ञ. ट. मुद्वेजिताःप्रजाः. ८ ङ. झ. ञ. ट. राष्ट्रेतवाव. घ. ज. राज्यंतवानु. ९ ङ. छ. झ. उग्राप्रति.

उपायकुशलं वैद्यं भृत्यसंदूषणे रतम् ॥ शूरमैश्वर्यकामं च यो न हन्ति स वध्यते ॥ ३० ॥
कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्छुचिः ॥ कुलीनश्चानुरक्तश्च दक्षः सेनापतिः कृतः ॥ ३१ ॥
बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः ॥ दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥३२॥
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ॥ संप्राप्तकालं दातव्यं ददासि न विलम्बसे ॥ ३३ ॥
कालातिक्रमणाच्चैव भक्तवेतनयोर्भृताः ॥ भर्तुः कुप्यन्ति दुष्यन्ति सोनर्थः सुमहान्स्मृतः ॥ ३४ ॥
कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ॥ कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति समाहिताः ॥ ३५ ॥
कच्चिज्जानपदो विद्वान्दक्षिणः प्रतिभानवान् ॥ यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥ ३६ ॥

प्रतिग्रहीतारं कामयानंपुरुषंस्त्रियइव । वचनाज्जानन्तिकच्चित् । प्रजाइतिशेषः । प्रजावमानहेतुभूतं न्यायातिक्रमेणोग्रकरग्रहणंत्वयिनास्तिकच्चिदितिभावः ॥ २९ ॥ उपायकुशलमिति । उपायेषु सामाद्युपायेषु । कुशलंनिपुणं । वैद्यं कणिकोक्तकुटिलनीतिविद्याविदं । [ चाणक्याद्युक्तकुटिलनीतिशास्त्रविदं ] भृत्यसंदूषणेरतं अन्तरङ्गभृत्यानांसंदूषणे असद्दोषोद्घाटनेनतद्विघटनेरतं । शूरं राजहिंसनेपिनिर्भयं । ऐश्वर्यकामं क्रमेणराजैश्वर्याक्रमणकामंच पुरुषंयोनहन्ति सराजा तेनैववध्यते राज्याद्भ्रष्टोभवतीत्यर्थः । एवंविधःपुरुषः त्वत्सन्निधौनवर्ततेकच्चिदित्यर्थः ॥ ३० ॥ संग्राह्यसेनापतिगुणानाह—कच्चिद्धृष्टइति । हृष्यतीति हृष्टः राजकृतसत्कारेणसन्तुष्टः। यद्वा धृष्टइतिच्छेदः । धृष्टः व्यवहारेषुप्रगल्भः । शूरः परनिग्रहपरः । मतिमान् तत्तत्समयानुगुणस्वपरसेनाव्यूहतद्भेदनसेनानयनादिचतुरबुद्धियुक्तः । धृतिमान् विपदिप्रशस्तधैर्यः । शुचिः बाह्याभ्यन्तरशुद्धियुक्तः । यद्वा शुचिः स्वामिनिसविश्वासः । कुलीनः सत्कुलप्रसूतः । अनुरक्तः स्वस्मिन्निरवधिकप्रीतिमान् । दक्षः कार्यकुशलः । एवंविधःसेनापतिःकृतःकच्चित् । तादृशंपूर्वसेनापतिं विहायातादृशमन्यंनपरिगृहीतवानसि कच्चिदित्यर्थः ॥ ३१ ॥ बलवन्तः अत्यन्तबलाः । ते प्रसिद्धाः । मुख्याः गणमुख्याः । युद्धविशारदाः युद्धेसमर्थाः । दृष्टं साक्षात्कृतं । अपदानंपूर्ववृत्तंपौरुषंयेषांतेतथोक्ताः । विक्रान्ताः शूराः । “ शूरोवीरश्चविक्रान्तः ” इत्यमरः । सत्कृत्यमानिताः पारितोषिकदानपूर्वकंश्लाघिताःकच्चित् ॥ ३२ ॥ बलस्य सैन्यस्य । संप्राप्तकालं कालप्राप्तं । दातव्यं तत्तत्कालेदेयं । भक्तं अन्नं वेतनं प्रतिमासंदेयांभृतिंच । यथोचितं तत्तत्कार्योचितं । ददासि नविलंबसेकच्चित् कालातिक्रमणंविनाददासिकच्चित् ॥ ३३ ॥ विलम्बेदोषमाह—कालातिक्रमणादिति । भृताः भृतिजीविनः भटाइतियावत् । भर्तुः कुप्यन्ति भर्तारंप्रतिकुप्यन्ति । दुष्यन्ति कोपेनविकृताभवन्ति । सविकारः सुमहाननर्थःस्मृतः अनर्थकरोभवेदित्यर्थः ॥ ३४ ॥ कुलपुत्राः क्षत्रियकुलप्रसूताः ज्ञातयइतिवा । प्रधानतः प्रधानाः । सार्वविभक्तिकस्तसिः ॥ ३५ ॥ जानपदः स्वजनपदभवः । परजनपदभवश्चेत्पक्षपातमाचरेत् । विद्वान् पराभिप्रायज्ञः । दक्षिणः समर्थः । प्रतिभानवान् प्रत्युत्पन्नमतिः परोक्तस्याविलम्बमुचितोत्तरज्ञइतियावत् । यथोक्तवादी उक्तमनतिक्रम्यसंदेशप्रतिसंदेशवदनशीलः कार्योपयोगितयाबहुमुखं व्याहरन्नपिस्वाम्युक्तमजहदेवव्यवहर्तेतियावत् । पण्डितः परिच्छेत्ता । “परिच्छेदोहिपाण्डित्यं” इत्युक्तेः ॥ ३६ ॥

तत्प्रतिग्रहीतारं अल्पपुंस्त्वं । तत्प्रतिग्रहीतुरीदृशषण्डतायाःकर्मविपाकशास्त्रेउक्तेरित्याहुः ॥२९॥ **ती०** वैद्यं विद्याविदं नीतिशास्त्रज्ञमितियावत् । शूरं मरणनिर्भयं । **कतक०** भृत्यसंदूषणेरतमितिपाठः । उपायकुशलंराज्ञस्सकाशादर्थग्रहणार्थं व्याधिवर्धनोपायकुशलं । वैद्यं भिषजं । स्वामिसंदूषणेरतं भृत्यं सेवकंच । राजानमपच्छिद्यतदैश्वर्यकामं शूरं सेवकरूपंप्रभुंच । योनहन्ति सराजातैरेव भिषजादिभिर्हन्यतेइत्यर्थः । **शि०** ऐश्वर्यकामं स्वातन्त्र्येणराजैश्वर्यभोगेच्छावन्तं । अतएवभृत्यसंदूषणे भृत्यचित्तचालकयत्ने । रतं उपायेषु रोगप्रवर्तननिवर्तनयत्नेषु । कुशलं निपुणं । शूरंवैद्यं भिषजं योनहन्ति सहन्यते तेनवैद्येनेतिशेषः ॥ ३० ॥ **ती०** भक्तं

**[ पा० ]** १ ङ. छ. झ. ट. हन्यते. २ क. ङ. च. छ. झ. ञ. ट. धृतिमान्मतिमान्. ग. मतिमान्द्युतिमान्. ३ ग. च. काले. ४ ग. कालस्यातिक्रमाच्चैव. ५ क. ङ. च. ञ. क्रमणेनैव. छ. झ. ट. क्रमणेह्येव. ६ ङ. छ. झ. ट. भर्तुरप्यतिकुप्यन्ति.

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ॥ त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ३७ ॥
कच्चिद्व्यपास्तानहितान्प्रतियातांश्च सर्वदा ॥ दुर्बलाननवज्ञाय वर्तसे रिपुसूदन ॥ ३८ ॥
कच्चिन्न लोकायतिकान्ब्राह्मणांस्तात सेवसे ॥ अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥ ३९ ॥

अन्येषु परपक्षेषु । अष्टादशतीर्थानि स्वपक्षेपञ्चदशतीर्थानिच । अविज्ञातैः परस्परमन्यैश्चाविज्ञातैः । विज्ञातत्वे तेषां सांकेतिकव्यवहारःप्रादुष्यात् । एकस्मिंस्तीर्थेत्रिभिस्त्रिभिःचारकैः वेषान्तरधारिभिश्चारैः । कृत्रिमार्थैकप्रत्ययः । वेत्सिकच्चित् एतानिन्यायतोऽन्यायतोवाप्रवर्तन्तइति जानासिकच्चिदित्यर्थः।तानीमान्यष्टादश नीतिशास्त्रोक्तानितीर्थानि मन्त्रिपुरोहितयुवराजसेनापतिदौवारिकान्तर्वंशिककारागाराधिकृतार्थसंचयकृत्कार्यनियोजकप्राड्विवाकसेनानायकनगराध्यक्षकर्मान्तिकसभ्यधर्माध्यक्षदण्डपालदुर्गपालराष्ट्रान्तपालाः । एष्वेवमन्त्रिपुरोहितयुवराजव्यतिरिक्तानि । स्वपक्षे पञ्चदशतीर्थानि मन्त्रिपुरोहितयुवराजसेनापतयःप्रसिद्धाः । दौवारिकः अन्तःपुरादिद्वाररक्षणाधिकृतजननिर्वाहकः । अन्तर्वंशिकः अन्तःपुरकार्यनिर्वाहकः । कारागारं अपराधिनांबन्धनगृहं तत्राधिकृतः कारागाराधिकृतः । अर्थसंचयकृत् धनाध्यक्षः । कार्यनियोजकः राजाज्ञायाःबहिःप्रचारकर्ता । प्राड्विवाकः व्यवहारप्रष्टा । तल्लक्षणमुक्तं "विवादेपृच्छतिप्रश्नंप्रतिप्रश्नंतथैवच । प्रियपूर्वंप्राग्वदतिप्राड्विवाकस्ततःस्मृतः" इति । सेनानायकः सेनायाःभृतिजीवनादिदानाध्यक्षः । नगराध्यक्षः रात्रौनगरशोधननगरद्वारप्राकारादिरक्षणसंविधानादिकर्ता । कर्मान्तिकः कार्यान्तेवेतनग्राहिणांसैनिकव्यतिरिक्तानां सर्वेषांराज्ञः सकाशात् एकधास्वयंवेतनंगृहीत्वाप्रत्येकंतद्योदापयति सः । सभ्यः प्रतिदिनंसभालंकरणराजमन्त्रिप्रभृतिसमुचितासनविधानसभ्यानयनासभ्यनिरोधनयथोचितनिवेशनसभानिःशब्दीकरणसभारक्षणादिविधायिजननिर्वाहकः । धर्माध्यक्षः दायभागादिविषयेविवादं कुर्वतांविवादपदविशोधनपूर्वकं यथाधर्मशास्त्रं विवादशमनकर्ता । दण्डपालः परस्वापहरणाद्यपराधकारिणां राजाज्ञाप्रकारेणकरशिरश्छेदादिविधायिजननियोजकः । दुर्गपालः गिरिजलवनादिदुर्गसंततरक्षकजननिर्वाहकः । राष्ट्रान्तपालः स्वराष्ट्रसीमान्तेसर्वासुदिक्षु परराजाक्रमणादिनिवारणायसदातद्रक्षणंकुर्वतांनिर्वाहकः । स्वकीयमन्त्रिपुरोहितयुवराजानपरीक्ष्याः तेषांसदास्वसमीपवर्तित्वेनतत्स्वभावस्यस्वेनैवज्ञातत्वात् । तथोक्तंनीतिशास्त्रे । "चारान्विचारयेत्तीर्थेष्वात्मनश्चपरस्यच । पाषण्डादीनविज्ञातानन्योन्यमितरैरपि । मन्त्रिणंयुवराजंचहित्वास्वेषुपुरोहितं" इति । स्वेषुमन्त्रिणंयुवराजं पुरोहितंचहित्वेत्यन्वयः । एषां तीर्थशब्दवाच्यत्वमुक्तं हलायुधे । "योनौजलावतारेचमन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रेतथापात्रेतीर्थंस्याद्दर्शनेष्वपि" इति ॥ ३७ ॥ व्यपास्तान् निष्कासितान् । प्रतियातान् पुनरागतान् । अहितान् शत्रून् दुर्बलाननवज्ञाय वर्तसेकच्चित् दुर्बलाइत्यवज्ञांकृत्वान वर्तसे कच्चिदितिभावः । प्रतियानमवष्टम्भमन्तरेणन संभवतीतिमत्वा तेषुसावधानतयास्थातव्यमितिभावः ॥ ३८ ॥ लोकायतिकान् लोकेष्वायतंविस्तृतंलोकायतंप्रत्यक्षप्रमाणं यद्वा लोकायतशब्दाभ्यांप्रत्यक्षमनुमानंचोच्यते लोक्यतेसाक्षात्क्रियतेनेनेतिलोकः प्रत्यक्षप्रमाणं । आ समन्ताद्व्याप्यधूमादिसमीपवर्तीवह्न्यादिर्यत्यतेगृह्यतेनेनेति आयतमनुमानं तदेषामस्तीतिलोकायतिकाः । "अतइनिठनौ" इतिठन्प्रत्ययः । नास्तिकाबौद्धचार्वाकादयः । तान् ब्राह्मणान् नसेवसेकच्चित् । असेवायांहेतुमाह—अनर्थेति । अर्थेषु तत्त्वार्थेषुकुशलाः यथावज्ज्ञानवन्तः तेनभवन्तीत्यनर्थकुशलाः । यद्वा अनर्थः धर्मानुष्ठानश्रद्धावैकल्यतन्मूलकसज्जनबहिष्कारनरकपतनादिः तत्रकुशलाः दु-

अन्नं । एतद्व्रीह्यादीनामप्युपलक्षणं ॥ ३३ ॥ स० अष्टादशानि मन्त्र्यादीनि । तदुक्तं "मन्त्रीपुरोहितश्चैवयुवराट्सैन्यनायकः । द्वारपोन्तःपुरचरोबन्धनागारनायकः । धनाध्यक्षोराज्ञआज्ञाज्ञापकोव्यवहारकृत् । धर्माधिकारीसभ्यश्चसेनावेतनदायकः । कर्मान्तेवेतनग्राहीनगराध्यक्षएवच । राष्ट्रान्तपालोदुष्टानांदण्डनाधिकृतस्तथा । जलादिदुर्गपालश्चतीर्थान्यष्टादशैवतु" इति ॥३७॥ ति० लोकायतिकान् चार्वाकमतानुसारिणः प्रत्यक्षमात्रप्रमाणकान् । अपरे लोकायतिकाः शुष्कतर्कवावदूकाः । ब्राह्मणत्वेपितदपरिग्रहेहेतुमाह—अनर्थेति ॥ शि० अनर्थकुशलाः अनर्थे सर्वार्थविघातके परमार्थबुद्धिनिवर्तने कुशलाः निपुणाः ।

[ पा० ] १ ङ. छ. झ. ञ. ट. चारणैः. २ ग. सर्वशः.

धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः ॥ बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥ ४० ॥
वीरैरध्युषितां पूर्वमस्माकं तात पूर्वकैः ॥ सत्यनामां दृढद्वारां हस्त्यश्वरथसंकुलाम् ॥ ४१ ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः स्वकर्मनिरतैः सदा ॥ जितेन्द्रियैर्महोत्साहैर्वृतामार्यैः सहस्रशः ॥ ४२ ॥
प्रासादैर्विविधाकारैर्वृतां वैद्यजनाकुलाम् ॥ कच्चित्समुदितां स्फीतामयोध्यां परिरक्षसि ॥ ४३ ॥
कच्चिच्चैत्यशतैर्जुष्टः सुनिविष्टजनाकुलः ॥ देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः ॥ ४४ ॥
प्रहृष्टनरनारीकः समाजोत्सवशोभितः ॥ सुकृष्टसीमा पशुमान्हिंसाभिः परिवर्जितः ॥ ४५ ॥
अदेवमातृको रम्यः श्वापदैः परिवर्जितः ॥ परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः ॥ ४६ ॥
विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः ॥ कच्चिज्जनपदः स्फीतः सुखं वसति राघव ॥ ४७ ॥

बोधनेनतत्संपादकाइत्यर्थः । बालाः तत्त्वज्ञानविरोध्यज्ञानयुक्ताः । अथचपण्डितमानिनः अपण्डितमात्मानंपण्डितंमन्वानाः । एतेअनर्थकुशलाहि ॥ ३९ ॥ अनर्थकुशलत्वमेवोपपादयति—धर्मशास्त्रेष्विति । दुर्बुधाः वेदमार्गविपरीतबुद्धयः । ते मुख्येषु तामसस्मृतिपुराणादिव्यावृत्तेषुसात्त्विकमहर्षिप्रणीतेषु सज्जनादरणीयेषु । धर्मशास्त्रेषु धर्मप्रमापकशास्त्रेषु विद्यमानेषु । तत्संप्रदायपरंपरयापठ्यमानेषुसत्सु । आन्वीक्षिकींबुद्धिंप्राप्य शुष्कतर्कविषयांबुद्धिमास्थाय । निरर्थं निष्प्रयोजनंप्रवदन्ति । " आर्षधर्मोपदेशंचवेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्तेसधर्मंवेदनेतरः" इतिस्मृतेः ॥ ४० ॥ वीरैरित्यादिश्लोकत्रयमेकंवाक्यं । अयोध्यां सत्यनामांपरिरक्षसिकच्चित् । सत्यनामां । " डाबुभाभ्यामन्यतरस्यां " इतिडाप् । अयोध्येतिनामसत्यंयथाभवतितथारक्षसि कच्चिदित्यर्थः । सत्यनामात्वमूलं—वीरैरध्युषितामित्यादि । तत्फलानिसत्यनामात्वादीनि । आर्यैः पूज्यैः । तत्रहेतवः—स्वकर्मनिरतत्वादयः । वैद्यजनाकुलां वैद्यजनाःविद्वज्जनाः तैरावृतां । सुमुदितां सुसंतुष्टजनामित्यर्थः । स्फीतां समृद्धां ॥ ४१—४३ ॥ कच्चिच्चैत्यशतैरित्यादिश्लोकचतुष्टयमेकंवाक्यं । चित्यशतैः चैत्यशतैरितिचपाठः । उभयत्रापि अश्वमेधान्तमहायज्ञचयनप्रदेशसमूहैरित्यर्थः । सुनिविष्टजनाकुलः सुप्रतिष्ठितजनव्याप्तः । सुप्रतिष्ठितत्वंच राजन्वत्त्वसुवृष्ट्यारोग्यादिदेशगुणाकृष्टचित्ततयादेशान्तरजिगमिषाराहित्येनतत्रैवासक्तत्वं । देवस्थानैः देवालयैः । प्रपाभिः पानीयशालाभिः । मार्गप्रवर्तिताभिरितिविशेषः । " प्रपापानीयशालिका " इत्यमरः । तटाकैः सस्यादिवृद्धिनिमित्तैर्महाजलाशयैः । समाजोत्सवशोभितः समाजैः धर्मनिर्णयार्थसभाभिः । यद्वा नदीतटाकादितीरवनेषुसमस्तवस्तुविक्रयसौकर्यायनिखिलजनविदिततयाकृतवारसंकेतः । कृतापणोवणिजांसमूहः समाजइत्युच्यते । यद्वा समाजयुक्तोत्सवशोभितः । सुकृष्टसीमा अकृष्टा ईषत्कृष्टाचभूमिर्नतत्रास्तीत्यर्थः । यद्वा सर्वदासुकृष्टप्रायसीमा अकृष्टपच्यभूमियुक्तइत्यर्थः । पशुमान् गवाजादिपशुसमृद्धः । हिंसाभिः ईतिभिःषड्भिः । " अतिवृष्टिरनावृष्टिर्मूषिकाःशलभाःखगाः । अत्यासन्नाश्चराजानःषडेताईतयःस्मृताः " इत्युक्ताभिःपरिवर्जितः । यद्वा परस्परहिंसारहितइत्यर्थः । अदेवमातृकः देवमातृकदेशरहितः वृष्ट्येकनिष्पाद्यसस्यकदेशरहितइत्यर्थः । सरयूतीरस्थत्वेनसर्वतोनदीमातृकइतियावत् । " नद्यम्बुजीवनोदेशोनदीमातृकउच्यते । वृष्टिनिष्पाद्यसस्यस्तुविज्ञेयोदेवमातृक " इतिहलायुधः । रम्यः आरामादिशोभितत्वेनरमणीयः । श्वापदैः व्याघ्रादिहिंस्रपशुभिः परिवर्जितः । भयैःसर्वैः भयहेतुभिश्चोरादिभिः सर्वैः । परित्यक्तःपरितस्त्यक्तः । तत्समीपदेशेपिचोरादिभयंनास्तीत्यर्थः । खनिभिः रत्नसुवर्णरजताद्याकरैः । " खनिःस्त्रियामाकरःस्यात् "

सन्तीतिशेषः ॥ ३९ ॥ **ति०** आन्वीक्षिकी तर्कविद्या । शुष्कतर्कविद्याजनितांबुद्धिमवलम्ब्यनिरर्थंनिष्प्रयोजनंवदन्ति । यथा आत्मनोज्ञानाश्रयत्वं ईशोजगन्निमित्तकारणं नित्यज्ञानादिगुणकश्चेत्यादिश्रुतिविरुद्धवादाभिप्रायमिदं ॥ ४० ॥ **शि०** वैद्यजनाकुलां वैद्यजनैः वैद्यानांजनकैः मुख्यभिषग्भिरित्यर्थः । आकुलां व्याप्तां । समुदितां सम्यगुदितंस्वकल्याणार्थमुच्चारणंयस्यास्तां । **ति०** समुदितां

**[ पा० ]** १ ख. ग. वाच्यमानेषु. २ ग. सैन्य. ३ क. ख. ङ. च. ज. झ. ट. त्समुदितां. ४ ङ. छ. ज. झ. ट. रक्षसे. ५ क.—ट. कच्चिच्चैत्य. ६ क. प्रभिन्ननर. ७ ख. सेवितः. ८ घ. शुचिमान्. ९ क. ख. ग. ङ. च. छ. झ. ञ. ट. न्हिंसाभिरभि.

कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः ॥ वार्तायां [1]संश्रितस्तात [2]लोको हि सुखमेधते ॥ ४८ ॥
तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् ॥ रक्ष्या हि राज्ञा धर्मेण सर्वे विषयवासिनः ॥ ४९ ॥
कच्चित्स्त्रियः [3]सान्त्वयसि कच्चि[4]त्ताश्च सुरक्षिताः ॥ कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ ५० ॥
कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः ॥ कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि ॥ ५१ ॥
कच्चिद्दर्शयसे नित्यं [5]मनुष्याणां विभूषितम् ॥ उत्थायोत्थाय पूर्वाह्णे राजपुत्र [6]महापथे ॥ ५२ ॥
कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया ॥ सर्वे वा पुनरुत्सृष्टा मध्यमेवात्र कारणम् ॥ ५३ ॥
[7]कच्चित्सर्वाणि दुर्गाणि धनधान्यायुधोदकैः ॥ यन्त्रैश्च [8]परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ५४ ॥
आयस्ते विपुलः कच्चित्कच्चिदल्पतरो व्ययः ॥ अपात्रेषु न ते कच्चित्कोशो गच्छति राघव ॥ ५५ ॥

इत्यमरः । पुनःकच्चिच्छब्देन प्रतिविशेषणंप्रश्नाइति गम्यते । "आद्यन्तयोःप्रयुक्तोयंकुतोनान्वेतिमध्यतः। प्रष्टव्यतायांतुल्यायांकेनार्धजरतीक्रमः । आदरातिशयोनेनश्रीमत्कोसलगोचरः । गम्यतेरघुनाथस्यमुक्तिर्येनापिपीलिकम् " ॥ ४४— ४७ ॥ कृषिगोरक्षजीविनः वैश्याः । दयिताःकच्चित् अर्थसंपादनद्वारा अभिमताः । वार्तायां क्रयविक्रयात्मकवाणिज्येसति । "वार्तावागिङ्गितोदन्तवाणिज्यादिषुवर्तत" इतिवैजयन्ती । संश्रितोलोकः त्वत्संश्रितोजनःसुखमेधतेहि ॥ ४८ ॥ गुप्तिपरीहारैः इष्टप्रापणानिष्टनिवारणैः । ते त्वया तेषांभरणं पोषणंकृतं कच्चित् । तस्यावर्जनीयत्वमाह—रक्ष्याहीति ॥ ४९ ॥ स्त्रियः स्वस्त्रियः । सान्त्वयसि तदनुकूलतया वर्तसे । सुरक्षिताः अन्यपुरुषसंभाषणादिभ्यइतिशेषः । आसां स्त्रीणां वचनमितिशेषः । नश्रद्दधासि आदरेणयथार्थबुद्ध्यानशृणोषीत्यर्थः । गुह्यंनभाषसे ताभ्यइतिशेषः । स्त्रीणामतिचञ्चलमतित्वेनरहस्यभेदप्रसङ्गादितिभावः ॥ ५० ॥ नागवनं गजोत्पत्तिस्थानभूतंवनं । तदरक्षणे परैर्गजग्रहणप्रसङ्गइतिभावः । धेनुकाः गजग्रहणसाधनभूताः करिण्यः । "करिणीधेनुकावशा"इत्यमरः । गणिकाश्वानां गणिकाः करिण्यः । "वेश्याकरिण्योर्गणिका" इतिवैजयन्ती । गणिकाश्चाश्वाश्चगणिकाश्वाः तेषांगणिकाश्वानां कुञ्जराणां च नतृप्यसिकच्चित् तत्संपादनविषयेतृप्तिंनप्राप्नोषिकच्चिदित्यर्थः । "पूरणगुण—" इत्यादिना समासप्रतिषेधेनसूचिताषष्ठी ॥ ५१ ॥ विभूषितं आत्मानमितिशेषः । महापथे सभायामितियावत् । प्रातःसभांस्थित्वा मनुष्याणां विभूषितमात्मानंदर्शयसेकच्चिदितिसंबन्धः । अन्यथा राजारोग्येतेषां शङ्कास्यादितिभावः ॥ ५२ ॥ कर्मान्ताः कर्मान्तिकाः कर्मकराइतियावत् । अविशङ्कया ते नप्रत्यक्षाःकच्चित् निर्भयतयात्वत्सन्निधिंप्राप्तानकच्चिदित्यर्थः । अथवा तेसर्वे पुनः उत्सृष्टानकच्चित दर्शनाप्रदानेनपरित्यक्तानकच्चिदित्यर्थः । अविशङ्कया प्रवेशे अवज्ञादिकंसंभवेत् दर्शनाभावेकार्यहानिःस्यात अतःअत्रकर्मान्तिकविषये मध्यमेवकारणं । अतिदर्शनादर्शनयोर्मध्यमरीत्याश्रयणमेवार्थसिद्धिकारणं । अतिदर्शनेद्दप्तानांतेषां स्वामिन्यनादरःस्यात् अत्यदर्शनेस्वकार्यविज्ञापनावसरालाभात्किमनेनेतिकोपःस्यात् राजकार्यहानिश्च । तस्माद्यथोचितसमयेदर्शनप्रदानमेवोचितमितिभावः ॥ ५३ ॥ दुर्गाणि औदकपार्वतवार्क्षैरिणधान्वनानि । धनधान्यायुधोदकैः यन्त्रैःशिल्पिभिर्धनुर्धरैश्च परिपूर्णानिकच्चित् । अत्रकामन्दकः "औदकंपार्वतंवार्क्षमैरिणंधान्वनंतथा । जलान्नायुधयन्त्राढ्यंवीरयोधैरधिष्ठितम् । गुप्तिप्रधानमाचार्यादुर्गं समनुमेनिरे" इति ॥ ५४ ॥ आयः धनागमः । कोशः सञ्चितधनं । अपात्रेषु नटविटगायकेषु । नग-

सिद्धां ॥ ४३ ॥ **ति०** प्रभिन्ननरनारीकइतिपाठेप्रभेदस्संतोषः ॥ ४५ ॥ **स०** कृषिगोरक्षजीविनः "ङ्यापोः संज्ञाच्छन्दसोर्बहुलं" इतिह्रस्वः । कृषिगोरक्षमितिसमाहारोवा । वस्तुतस्तु गौरक्ष्यमित्येवपाठः । गवांरक्षायेषांतेगोरक्षाः जनाः तेषांभावोगौरक्ष्यं । गोरक्षणमितियावत् । इतिपरः गीताभाष्यव्याख्यानेव्याचख्यौ ॥ ४८ ॥ **कतक०** गुप्तपरीहारैरितिपाठः । गुप्त्यर्थंनियुक्तैराजमनुष्यैः क्रियमाणतस्करायनर्थपरिहारैः । ते त्वया । भरणंकृतंकच्चित् ॥ ४९ ॥ **शि०** ते त्वया ॥ ५० ॥

**[ पा० ]** १ ङ. छ. झ. सांप्रतंतात. २ ग. ङ. छ. झ. ट. लोकोयं. ३ ङ. छ. झ. ट. सान्त्वयसे. ४ ख.—ङ. छ. ज. झ. ट. त्तास्ते. ५ घ.—झ. ट. मानुषाणां. ६ क. घ. च. ज. ञ. महारथ. ख. ग. महायशः. ७ ख. ङ. च. छ. झ. ञ ट. कच्चिद्दुर्गाणिसर्वाणि. ८ ख.—ट. प्रति.

देवतार्थे च पित्र्यर्थे ब्राह्मणाभ्यागतेषु च[1] ॥ योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥ ५६ ॥
कच्चिदार्यो[2] विशुद्धात्माऽऽक्षारितश्चोरकर्मणा[3] ॥ अपृष्टः[4] शास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥ ५७ ॥
गृहीतश्चैव पृष्टश्च[5] काले दृष्टः[6] सकारणः ॥ कच्चिन्न मुच्यते चोरो धनलोभान्नरर्षभ ॥ ५८ ॥
व्यसने[7] कच्चिदाढ्यस्य दुर्गतस्य[8] च राघव ॥ अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः ॥ ५९ ॥
यानि मिथ्याभिशस्तानां पतन्त्यस्त्राणि[9] राघव ॥ तानि पुत्रपशून्[10] घ्नन्ति प्रीत्यर्थमनुशासतः ॥ ६० ॥
कच्चिद्वृद्धांश्च बालांश्च वैद्यमुख्यांश्च[11] राघव ॥ दानेन मनसा वाचा त्रिभिरेतैर्[12]बुभूषसे ॥ ६१ ॥
कच्चिद्गुरूंश्च वृद्धांश्च तापसान्देवतातिथीन्[13] ॥ चैत्यांश्च[14] सर्वान्सिद्धार्थान्[15]ब्राह्मणांश्च नमस्यसि[16] ॥ ६२ ॥
कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः ॥ उभौ[17] वा प्रीतिलोभेन[18] कामेन च[19] न बाधसे ॥ ६३ ॥
कच्चिदर्थं च धर्मं च[20] कामं च जयतांवर ॥ विभज्य काले[21] कालज्ञ सर्वान्वरद[22] सेवसे ॥ ६४ ॥

च्छतिकच्चित् तेभ्योपरिमितंनदेयमितिभावः ॥५५॥ धनव्ययस्योचितविषयमाह—देवतार्थइत्यादिना ॥५६॥ विशुद्धात्मा विशुद्धस्वभावः । शुचिः करणत्रयशुद्धियुक्तः । आर्यः सज्जनः । यदृच्छया चोरकर्मणा । आक्षारितः अभिशस्तः "आक्षारितःक्षारितोभिशस्तः" इत्यमरः । शास्त्रकुशलैः अपृष्टः प्रश्नेनअशोधितःसन् लोभाद्धनलोभान्नबध्यतेकच्चित् ॥ ५७ ॥ पृष्टः प्रश्नैःशोधितः । कालेकालविशेषे दृष्टः सकारणः चौर्यलब्धद्रव्यवत्तयावादृष्टः । लोभात् मुषितंधनंतवदास्यामीतितद्दत्तधनलोभात् । नमुच्यतेकच्चित् ॥ ५८ ॥ आढ्यस्य दुर्गतस्य दरिद्रस्यच । व्यसने विवादरूपसङ्कटेप्राप्ते । अर्थं व्यवहारं । "अर्थःस्याद्विषयेमोक्षे शब्दवाच्येप्रयोजने । व्यवहारेधनेशास्त्रेवस्तुहेतुनिवृत्तिषु" इतिवैजयन्ती । विरागाः विगतधनरागाः । पश्यन्ति परीक्षन्तेकच्चित् ॥ ५९ ॥ मिथ्याभिशस्तानां राज्ञां अविचार्यप्रवर्तितमिथ्याभियोगानांप्रजानां यानि अस्त्राणि अश्रूणि पतन्ति तानि प्रीत्यर्थमनुशासतः राज्ये न्यायान्यायावविचार्यकेवलभोगार्थराज्यं कुर्वतइत्यर्थः ॥ ६० ॥ दानेन अभिमतवस्तुप्रदानेन । मनसास्नेहेन । वाचा सान्त्ववचनेन । एतैस्त्रिभिर्बुभूषसे प्राप्तुमिच्छसि वशीकर्तुमिच्छसिकच्चिदितियावत् । भूप्राप्तावात्मनेपदीतिगणपाठेपठितत्वादात्मनेपदी ॥ ६१ ॥ चैत्यान् देवतावासभूतचतुष्पथस्थमहावृक्षान् । सिद्धार्थान् निष्पन्नप्रयोजनान् यागादिनालब्धामुष्मिकप्रयोजनानितियावत् ॥ ६२ ॥ अर्थेनधर्मनबाधसेकच्चित् धर्मार्जनयोग्येपूर्वाह्णे अर्थार्जनंकृत्वाधर्मनबाधसेकच्चिदित्यर्थः । धर्मेणार्थनबाधसे अर्थार्जनयोग्येअपराह्णेधर्मार्जनंकृत्वाअर्थननाशयसिकच्चिदित्यर्थः । प्रीतिलोभेन सुखाभिलाषेण हेतुना । कामेन सायंकालविहितेनकामेन । उभौवानबाधसेकच्चित् । यद्वा अर्थेनहेतुनाधर्मंन बाधसेकच्चित् । धर्मंहित्वाअर्थंनगृह्णासीत्यर्थः । तथाधर्मेणहेतुना कुटुम्बनिर्वाहाद्यपेक्षितमर्थंनबाधसे । धर्मार्थावुभावपि प्रीतिलोभेन सुखेच्छया । कामेनचहेतुना नबाधसे । गणिकादिसक्तावुभयमपिहिनश्यति ॥६३॥ उक्तमर्थंसविशेषमाह—कच्चिदिति । अर्थंचधर्मंचका-

ति० आर्यः साधुः । शुद्धात्मापिसन् अपकर्मणा स्तेयागम्यागमनादिदोषेण । क्षारितः अभिशस्तः । शास्त्रकुशलैः धर्मशास्त्रकुशलैः ।अदृष्ट एव अनिर्णीतदोषएव । लोभात् धनलोभान् । शुचिरपि न वध्यते नदण्ड्यते कच्चित् ॥ ५७ ॥ ति० दुर्बलस्य दरिद्रस्यच व्यसनेविषादरूपसंकटे राजकीयैकनिवर्त्यप्राप्ते । तवामात्याः विरागास्सन्तः विगतधनरागास्सन्तः अर्थं तयोर्व्यवहारंपश्यन्तिकच्चित् ॥ ५९ ॥ शि० पादन्यासानीतिपाठान्तरं । तदा जायन्तइतिशेषः । आर्षनपुंसकत्वं ॥ शि० प्रीत्यर्थं एकत्रप्रीतिसंपादनार्थं ॥ ६० ॥ शि० चैत्याः अग्निचयनस्यस्थलानि ॥ ६२ ॥

[ पा० ] १ ख. घ. ब्राह्मणेष्वागतेषु. २ ङ. झ. ट. दार्योपि. ३ ङ. छ. झ. ट. श्चापकर्मणा. ४ घ. ङ. छ. ञ. ट. अदृष्टः. ५ क.—च. दृष्टश्च. ६ क. च. पृष्टः, ७ ग. व्यसनैः. ८ च. छ. झ. ट. दुर्बलस्य. ९ क. ख. घ. न्यासानि. च.—ञ. न्त्यश्रूणि. १० क. च. ज. पुत्रान्पशून्. ११ ख. ङ. छ. झ. ट. वैद्यान्मुख्यांश्च. १२ ग. त्रिभिरेव. १३ ग. ज. दैवतातिथीन्. १४ ग. वैद्यांश्च. १५ ग. सिद्धांश्च. १६ घ. श्चानुमन्यसे. ख. श्चनमस्यसे. १७ च. ञ. उभौच. १८ ग. योगेन. १९ क. ख. ग. ङ. च. छ. झ. ञ. ट. नविबाधसे. २० क. ङ. च. छ. झ. ञ. ट. कामंचधर्मंच. २१ ङ. कालेच. २२ ख. ग. च. ञ. ट. भरत.

कच्चित्ते ब्राह्मणाः शर्म सर्वशास्त्रार्थकोविदाः ॥ आशंसन्ते महाप्राज्ञ पौरजानपदैः सह ॥ ६५ ॥
नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ॥ अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥ ६६ ॥
एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् ॥ निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ ६७ ॥
मङ्गलस्याप्रयोगं च प्रत्युत्थानं च सर्वतः ॥ कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥ ६८ ॥
दश पञ्च चतुर्वर्गान्सप्तवर्गं च तत्त्वतः ॥ अष्टवर्गं च त्रिवर्गं विद्यास्तिस्रश्च राघव ॥ ६९ ॥

मंच सर्वान् कालेविभज्यसेवसे प्रातर्दानादिधर्मकालः तदनन्तरं आस्थान्यां राज्यविचारेणार्थकालः रात्रौकामकालइत्येवंविभज्यसेवसइत्यर्थः । जयतांवर तेषांकालांतरेप्रवृत्तिनिवर्तनसमर्थेत्यर्थः ॥ ६४ ॥ शर्म सुखं । आशंसन्ते प्रार्थयन्ते ॥६५॥ नास्तिपरलोकइतिमतिर्यस्यसनास्तिकः "अस्तिनास्तिदिष्टंमतिः" इतिठञ् । तस्यभावःनास्तिक्यं । अनृतं असत्यवचनं । क्रोधं मातापित्राचार्यब्राह्मणदुर्बलादिषुकृतापराधेष्वपितद्विषयकंक्रोधं । प्रमादं अनवधानत्वं । दीर्घसूत्रतां चिरक्रियत्वं । "दीर्घसूत्रश्चिरक्रियः" इत्यमरः । ज्ञानवतां सज्जनानां अदर्शनं दर्शनाकरणं । ज्ञानिनांदर्शनंहिनिखिलश्रेयोमूलम् । आलस्यं मदकरवस्तुसेवाजनितं कार्यापटुकरणकत्वमित्यर्थः। पञ्चवृत्तितां पञ्चेन्द्रियपरवशतां ॥ ६६ ॥ अर्थानामेकचिन्तनं राज्यकार्याणांमन्त्र्यनादरेणस्वयमेकएवस्थित्वापर्यालोचनं । अनर्थज्ञैः विपरीतार्थदर्शिभिः ॥ ६७ ॥ मङ्गलस्यप्रातर्दर्पणाद्यवलोकनस्य अप्रयोगं अननुष्ठानं । मङ्गलाद्यप्रयोगमितिपाठे अमङ्गलाचरणमित्यर्थः । सर्वतःप्रत्युत्थानं नीचस्यानीचस्याप्यागमनेप्रत्युत्थानमित्यर्थः । यद्वा सर्वदिगवस्थितशत्रूद्देशेनयुगपद्दण्डयात्रामितिवा । एतांश्चतुर्दशेत्यनेन अन्येषामपिबहूनांदोषाणांविद्यमानत्वंतेषुसर्वेषूक्तानामवश्यहेयत्वंचज्ञायते ॥ ६८ ॥ दशवर्गादिकान् बुद्ध्वा यथावदनुमन्यसेकच्चित् दशवर्गादिकान् त्याज्यत्वेनोपादेयत्वेनचज्ञात्वा यथावदनुतिष्ठसिकच्चिदितिवाक्यार्थः । पूर्वोक्तसंग्रहोयमुपदेशः । दशवर्गस्तावत् "मृगयाऽक्षोदिवास्वापःपरिवादःस्त्रियोमदः । तौर्यत्रिकंवृथाटयाचकामजोदशकोगुणः" इतिमनुनोक्तः । तौर्यत्रिकं नृत्यगीतवाद्यं । वृथाट्या वृथापर्यटनं । कामन्दकस्तु प्रकारान्तरेण "लोभक्रोधालस्यासत्यवचनत्वप्रमादभीरुत्वास्थिरत्वमौढ्यानयावमन्तृत्वानिदशवर्गः" इत्याशयेनाह । "लुब्धःक्रूरोलसोसत्यःप्रमादीभीरुरस्थिरः । मूढोनयोवमन्ताच सुखच्छेद्योरिपुर्मतः" इति । पञ्चवर्गः पञ्चदुर्गाणि । तथाहमनुः "औदकंपार्वतंवार्क्षमैरिणंधान्वनं तथा । शस्तंप्रशस्तमतिभिर्दुर्गंदुर्गोपचिन्तकैः" इति । यद्वा पञ्चवर्गः पञ्चविधवैराणि । अत्रापिकामन्दकः "सापत्नंवस्तुजंस्त्रीजंवाग्जातमपराधजम् । वैरप्रभेदनिपुणैर्वैरंपञ्चविधंस्मृतं" इति । चतुर्वर्गः सामदानभेददण्डाः । यथाकामन्दकीये "सामदानंचभेदश्चदण्डश्चेतिचतुर्विधं" इति । यद्वा चतुर्विधमित्राणिवा । यथाहकामंदकः "औरसंतंतुसंबन्धंतथा वंशक्रमागतम् । रक्षितंव्यसनेभ्यश्चमित्रंज्ञेयंचतुर्विधं" इति । यद्वा धनानांन्यायार्जनादिधर्मचतुष्टयंवा । तदपितत्रैवोक्तं । "न्यायेनार्जनमर्थस्यरक्षणंवर्धनंतथा । सत्पात्रेप्रतिपत्तिश्चराज्यवृत्तंचतुर्विधं" इति । सप्तवर्गः स्वाम्यमात्यादिः । यथोक्तं "स्वाम्यमात्यौचराष्ट्रंचदुर्गंकोशोबलंसुहृत् । परस्परोपकारीदंराज्यंसप्ताङ्गमुच्यते" इति । यद्वा स्वपक्षस्थजनावान्तरभेदसप्तकंवा । यथाह "निजोथमैत्रश्चसमाश्रितश्चसुबन्धुजः कार्यसमुद्भवश्च । भृत्योगृहीतोविविधोपचारैःपक्षंबुधाः सप्तविधंवदन्ति" इति । यद्वा प्रधानव्यूहाःसप्तवासप्तवर्गः । यथा "श्येनःसूचीचवज्रश्चशकटोमकरस्तथा । दण्डाख्यःपद्मनामाचव्यूहाःसप्तप्रधानतः" इति । अष्टवर्गमाहकामन्दकः "कृषिवाणिज्यदुर्गाणि

स० दीर्घसूत्रितां चिरकालकृतं दोषंराजादेर्यस्सूचयतितद्धर्मं । पञ्चवृत्तितां मनोबुद्ध्यहङ्कारचित्तचेतनारूपाणिपञ्चवृत्तानियस्य मनसस्तन्मनः पञ्चवृत्तं तदस्यास्तीतिपञ्चवृत्तीमनस्वी तस्यभावः पञ्चवृत्तितातां । गुर्वाद्याज्ञोल्लङ्घनेस्वच्छन्दवृत्तितामितियावत् । शि० क्रोधं ब्राह्मणसंप्रदानकं कोपानुचितान्यसंप्रदानकंवा यागादौसर्वसंप्रदानकंवाकोपं ॥ ६६ ॥ शि० मङ्गलानां माङ्गलिकशब्दानां आदौकार्यप्रारंभसमये अप्रयोगं । ति० मङ्गलाद्यप्रयोगं मङ्गलस्य आदौ प्रातःकाले अप्रयोगं अनुष्ठानं ॥ ६८ ॥

[ पा० ] १ ङ. छ. झ. ब्राह्मणः. २ ङ. छ. झ. कोविदः. ३ ङ. छ. झ. आशंसते. ४ ठ. सूत्रितां. ५ ग, अमाननं-चसाधूनां. ६ क. ग. च. छ. झ. ञ. ट. मङ्गलाद्यप्रयोगं. ज. मङ्गलान्यप्रयोगं. ७ ख. ग. ज. वर्गाश्च.

**इन्द्रियाणां जयं बुद्ध्वा षाड्गुण्यं दैवमानुषम् ॥ कृत्यं विंशतिवर्गं च तथा प्रकृतिमण्डलम् ॥ ७० ॥**
**यात्रादण्डविधानं च द्वियोनी सन्धिविग्रहौ ॥ कच्चिदेतान्महाप्राज्ञ यथावदनुमन्यसे ॥ ७१ ॥**

सेतुःकुञ्जरबन्धनम् । खन्याकरः करादानंशून्यानां चनिवेशनम् । अष्टवर्गमिमंसाधुस्वस्थवृत्तोनलोपयेत् " इति । यद्वा पैशुन्याद्यष्टकमष्टवर्गः । यथा "पैशुन्यंसाहसंद्रोहमीर्ष्यासूयार्थदूषणम् । वाग्दण्डयोश्चपारुष्यंक्रोधजोपिगुणोष्टकः " इति । ईर्ष्या क्षान्त्यभावः क्षान्तिविरोधीवाकश्चिद्गुणः अज्ञदुर्बलकृतापराधासहिष्णुत्वमितियावत् । असूयातु गुणेष्वपिदोषारोपः । वाक्पारुष्यंदण्डपारुष्यंचगुणद्वयम् । अथत्रिवर्गः धर्मार्थकामाः । यद्वा उत्साहप्रभुत्वमन्त्रशक्तयस्त्रिवर्गः । यद्वा परेषांक्षयस्थानवृद्धयः " क्षयस्थानंचवृद्धिश्चत्रिवर्गोनीतिवेदिनां " इत्यमरः । यद्वा अशक्यसमुद्यमादिकार्यव्यसनत्रयं । यथाहकामन्दकः "वस्तुष्वशक्येषु समुद्यमश्चशक्येषुमोहादसमुद्यमश्च । शक्येष्वकालेषुसमुद्यमश्चत्रिधैवकार्यव्यसनंवदन्ति " इति । तिस्रोविद्याः त्रयीवार्तादण्डनीतयः ।"आन्वीक्षिकीत्रयीवार्तादण्डनीतिश्च"इति विद्यायाश्चतुर्विधत्वेपिआन्वीक्षिक्यास्त्रय्यामन्तर्भावः । तथाहकामन्दकः " त्रयीवार्तादण्डनीतिरितिविद्याहिमानवाः । त्रय्याएवविशेषोयमियमान्वीक्षिकीमता " इति । त्रयी वेदः । वार्ता कृषिगोरक्षवाणिज्यं । दण्डनीतिर्नीतिशास्त्रं । इन्द्रियाणांजयं जयोपायं । षड्गुणाएवषाड्गुण्यं स्वार्थेष्यञ् । तेच संधिविग्रहयानासनद्वैधीभावसमाश्रयाः । दैवमानुषं देवमनुष्येभ्यआगतव्यसनमित्यर्थः । दैवंमानुषंचव्यसनं प्रत्येकंपञ्चविधं यथाहकामंदकीये " हुताशनोजलं व्याधिर्दुर्भिक्षंमरणंतथा । इतिपञ्चविधंदैवंमानुषंव्यसनंपरम् । आयुक्तकेभ्यश्चोरेभ्यःपरेभ्योराजवल्लभात् । पृथिवीपतिलोभाच्चव्यसनंपञ्चधाभवेत् " इति । आयुक्तकाः अधिकारिणः । कृत्यं अलब्धवेतनावमानितकोपितभीषितेषुशत्रुसंबन्धिष्वभिमतवस्तुप्रदानेनकर्तव्यंभेदनं । अत्राप्याहकामन्दकः " अलब्धवेतनोलुब्धोमानीचाप्यवमानितः । क्रुद्धश्चकोपितोऽकस्मात्तथाभीतश्चभीषितः । यथाभिलषितैःकामैर्भिन्द्यादेतांश्चतुर्विधान् " इति । असंधेयाः विग्राह्याः बालवृद्धादयोविंशतिविधाः । प्रतिपक्षनृपतयो विंशतिवर्गइत्युच्यते । यथाहकामन्दकीये " बालो वृद्धोदीर्घरोगीतथाज्ञातिबहिष्कृतः । भीरुकोभीरुजनकोलुब्धोलुब्धजनस्तथा । विरक्तप्रकृतिश्चैवविषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्चदेवब्राह्मणनिन्दकः । दैवोपहतकश्चैवदैवचिन्तकएवच । दुर्भिक्षव्यसनोपेतोबलव्यसनसंकुलः ।अदेशस्थोबहुरिपुर्युक्तोऽकालेनयश्चसः । सत्यधर्मव्यपेतश्चविंशतिःपुरुषाअमी । एतैः संधिंनकुर्वीतविगृह्णीयात्तुकेवलं " इति । ज्ञातिबहिष्कृतः बन्धुजनबहिष्कृतः । भीरवःजनाःमन्त्रिसेनापतियोधाःयस्यसः भीरुजनकः । एवमेवलुब्धजनइत्यत्रापि । लुब्धाः अत्यन्तधनाशापराः । दैवोपहतकः महर्षिशापाद्यभिहतः । दैवचिन्तकः दैवमेवसर्वंकुर्यादितिमत्वापुरुषव्यापारमकुर्वाणः । बलव्यसनं सेनाविलयः । अदेशस्थः प्रोषितः । अकालेनयुक्तः क्रूरग्रहदशाभागादियुक्तः । यद्वा विग्रहकारणभूतोराज्यापहारादिर्विंशतिवर्गः । अत्रचकामन्दकः " राज्यस्त्रीस्थानदेशानांज्ञातीनांचधनस्यच । अपहारोमदोमानःपीडावैषयिकीतथा । ज्ञानार्थशक्तिधर्माणांविघातोदैवमेवच । मित्रार्थयोश्चावमानस्तथाबन्धुविनाशनम् । भूतानुग्रहविच्छेदस्तथामण्डलदूषणम् । एकार्थाभिनिवेशित्वमितिविग्रहयोनयः " इति । अत्रापहारशब्दः पूर्वैःषड्भिःसंबध्यते । वैषयिकीपीडा विषयपारवश्यं । विघातशब्दोज्ञानादिभिश्चतुर्भिरन्वेति । दैवशब्देन देवाइन्द्रादयउच्यन्ते । तेषांविरोध्यपिविग्राह्यः । यथा दशरथस्य इन्द्रविरोधीशम्बरः । मित्रार्थयोरित्यत्र मित्रंमित्रार्थस्तदनुबन्धीचेत्यर्थः । यद्वा मित्रं मित्रस्वार्थःतद्धनं । अर्थस्यावमानोहरणमेव । भूतानुग्रहविच्छेदः लोकानुग्रहराहित्यं । मण्डलदूषणं मण्डलशब्देनस्वमन्त्रिसेनापतिसुहृदादिरुच्यते । तस्य दूषणं तद्विघटनं । एकार्थाभिनिवेशित्वं स्वाभिमतविषयाभिलाषित्वं । प्रकृतयश्चमण्डलंच प्रकृतिमण्डलं । प्रकृतयस्तावत्"अमात्यराष्ट्रदुर्गाणिकोशोदण्डश्चपञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः" इतिकामन्दकोक्ताः । मण्डलं द्वादशविधराजात्मकं । मध्यतोविजि-

**कतक०** राज्यस्त्रीस्थानदेशानांज्ञातिधनयोश्चयस्यापहारस्तेषट् । मदमानदेशपीडावन्तस्त्रयः । ज्ञानार्थशक्तिधर्माणांयेषां विघातस्तेचत्वारः । दैवचिन्तकः रिपुमित्रावमन्तारौ बन्धुविनाशनंयस्यलोकानुग्रहरहितःदूषितमण्डलः एकार्थाभिनिवेशित्वंयस्य एतेविग्राह्याएव ॥ ७० ॥

मन्त्रिभिस्त्वं यथोद्दिष्टैश्चतुर्भिस्त्रिभिरेव वा ॥ कच्चित्समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे मिथः ॥ ७२ ॥
कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः ॥ कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥७३॥

गीषुः तस्यशत्रुःमित्रंशत्रोर्मित्रंमित्रमित्रंशत्रुमित्रमित्रं चेतिपुरोवर्तिनःपञ्च । पार्ष्णिग्राहःआक्रन्दःपार्ष्णिग्राहासारः आक्रन्दासारश्चेतिपृष्ठभागस्थाश्चत्वारः । पार्श्वस्थोमध्यमः । तेषांबहिरवस्थितउदासीनश्चेति । तथाचकामन्दकः " संपन्नस्तुप्रकृतिभिर्महोत्साहःकृतश्रमः । जेतुमेषणशीलश्चविजिगीषुरितिस्मृतः । अरिर्मित्रमरेर्मित्रंमित्रमित्रमतःपरम् । तथारिमित्रमित्रंच विजिगीषोःपुरःसराः । पार्ष्णिग्राहस्ततःपश्चादाक्रन्दस्तदनन्तरः । आसारावनयोश्चैवविजिगीषोस्तुपृष्ठतः । अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तरः । अनुग्रहेसंहतयोर्व्यस्तयोर्निग्रहेप्रभुः । मण्डलाद्बहिरेतेषामुदासीनोबलाधिकः । अनुग्रहेसंहतानांव्यस्तानांच वधेप्रभुः " इति । अत्रशत्रुमित्रशब्दौ पुरस्ताद्व्यवहितानन्तरराष्ट्राधिपतिमेकव्यवहितानन्तरराष्ट्राधिपतिंचक्रमेणवदतः । पार्ष्णिग्राहाक्रन्दशब्दावपिपृष्ठतस्तादृशौक्रमेणवदतः । नतुप्रसिद्धशत्रुमित्रपरौ । " विषयानन्तरोराजाशत्रुर्मित्रमतःपरम् । उदासीनःपरतरःपार्ष्णिग्राहस्तुपृष्ठतः" इत्यमरः । आसारः सुहृद्बलं । "आसारःस्यान्मित्रबले" इतिरत्नमाला । मध्यमशब्देनच अरिविजिगीषोर्व्यस्तयोःसमस्तयोश्च निग्रहानुग्रहसमर्थः पार्श्वदेशस्थःकश्चिदुक्तेभ्योन्यो राजोच्यते । नतुमध्यवर्ती । उदासीनशब्देनच एतेषांसर्वेषामपिव्यस्तानांसमस्तानांचनिग्रहानुग्रहसमर्थःकश्चिद्विप्रकृष्टदेशस्थोराजोच्यते । यात्रादण्डविधानं यात्रा यानं दण्डस्यसैन्यस्यविधानं संविधानं व्यूहभेदविधानं । यद्वा दण्डःशत्रुनिरसनं तस्य विधानंप्रकारः । यात्राचदण्डविधानंचयात्रादण्डविधानं प्रकृतिमण्डलमित्यत्रात्रचैकवद्भावः । सेनाव्यूहभेदाःपूर्वमुक्ताः शत्रुनिरसनप्रकाराश्चस्फुटाःसुज्ञेया इति यात्राशब्दितंयानंप्रदर्श्यते । तच्चपञ्चविधं बलातिशयेनपार्ष्णिग्राहादिभिर्विगृह्यशत्रूद्देशेनयानं विगृह्ययानं । पार्ष्णिग्राहादिभिःसंधिंकृत्वाशत्रूद्देशेनयानं संधाययानं । सामन्तैःसमेत्ययानंसंभूययानं । अन्योद्देशेनयात्राप्रसङ्गमुत्पाद्य अन्यंप्रतियानंप्रसङ्गतोयानं । अन्यप्रसङ्गंकृत्वाबलवत्तयातमुपेक्ष्यतन्मित्रोद्देशेनयानमुपेक्ष्ययानमिति । यथाकामन्दकीये " विगृह्यसंधायतथासंभूयाथप्रसङ्गतः । उपेक्ष्य चेतिनिपुणैर्यानंपञ्चविधंस्मृतं " इति । द्वियोनीइति संधिविग्रहयानासनद्वैधीभावसमाश्रयाःषड्गुणाः पृथक्पथक् प्रतिपादिताः । इदानींद्वैगुण्यमतावलम्बनेन यानादीन्संधिविग्रहयोरन्तर्भाव्यवदति । यानासनेविग्रहस्यस्वरूपं द्वैधीभावसमाश्रयौसंधेरूपं । तत्रविजिगीषोररिंप्रतियात्रा यानं तयोर्मिथःप्रतिबद्धशक्त्योः कालप्रतीक्षयातूष्णीमवस्थानमासनं । दुर्बलस्यप्रबलयोर्द्विषतोर्वाचिकमात्मसमर्पणंद्वैधीभावः । तथाह " बलिनोर्द्विषतोर्मध्येवाचात्मानंसमर्पयन् । द्वैधीभावेनवर्तेतकाकाक्षिवदलक्षितः " इति । अरिणापीड्यमानस्यबलवदाश्रयणंसमाश्रयइतिविवेकः । तदुक्तं कामन्दकेन " यानासनेविग्रहस्यरूपंसद्भिरितिस्मृतम् । संधेश्चसंधिमार्गज्ञैर्द्वैधीभावसमाश्रयौ " इति । एतान् पूर्वोक्तन् । यथावदनुमन्यसे अनुतिष्ठसिकच्चिदित्यर्थः । उक्तदशवर्गादीनांतत्त्वंज्ञात्वाहेयान् जहासि ग्राह्यान्गृह्णासिकच्चिदितियावत् ॥ ६९—७१ ॥ यथोद्दिष्टैः शास्त्रोक्तमन्त्रिलक्षणलक्षितैः । यथोद्दिष्टमितिपाठे नीतिशास्त्रोक्तमन्त्रविचारमार्गमनतिक्रम्येत्यर्थः । बहुभिर्मन्त्रकरणेमन्त्रभिन्नत्वसंभवादेकमत्याभावाच्चचतुर्भिस्त्रिभिरेववेत्युक्तं । व्यस्तैस्तत्तन्मतंपरिज्ञायसमस्तैश्चतुर्भिस्त्रिभिर्वापरिगणितैर्मन्त्रिभिः । मिथः रहसि मन्त्रंमन्त्रयसेकच्चित् ॥ ७२ ॥ राज्ञामवश्यंसंपादनीयानर्थान्पृच्छति—कच्चित्तेसफलावेदाइति । तेवेदाः त्वदधीतावेदाः सफलाःकच्चित् अग्निहोत्राद्यनुष्ठानेनसफलीकृताःकच्चित् । क्रियन्तेसाध्यन्तइतिक्रियाः धनानि । धनानित्वत्संपादितानि दानभोगाभ्यांसफलीकृतानिकच्चित् । तेदाराः सफलाः कच्चित् रतिपुत्राभ्यांसफलाःकच्चित् । तेश्रुतं शास्त्रश्रवणं सफलंकच्चित् शीलवृत्ताभ्यांसफलंकच्चित् । तथाच

ति० क्रियाः राजकार्याणि तत्तदुद्देश्यफलयुक्तानि । स० क्रियाः औपासनादिरूपाः ॥ ७३ ॥

[ पा० ] १ ख. ङ. छ. झ. ट. यथोद्दिष्टंचतुर्भिः. २ क. च. ज. र्व्यस्तैर्वा. ३ ङ. छ. झ. ट. बुध.

कच्चिदेषैव ते बुद्धिर्यथोक्ता मम राघव ॥ आयुष्या च यशस्या च धर्मकामार्थसंहिता ॥ ७४ ॥
यां वृत्तिं वर्तते तातो यां च नः प्रपितामहाः॥ तां वृत्तिं वर्तसे कच्चिद्या च सत्पथगा शुभा ॥७५॥
कच्चित्स्वादुकृतं भोज्यमेको नाश्नासि राघव ॥ कच्चिदाशंसमानेभ्यो मित्रेभ्यः संप्रयच्छसि ॥७६ ॥
राजा तु धर्मेण हि पालयित्वा महामतिर्दण्डधरः प्रजानाम् ॥
अवाप्य कृत्स्नां वसुधां यथावदितश्च्युतः स्वर्गमुपैति विद्वान् ॥ ७७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे शततमः सर्गः ॥ १०० ॥

---

## एकोत्तरशततमः सर्गः ॥ १०१ ॥

भरतेनरामंप्रतिस्वकुलाचारानुसारणेनतदभिषेचनप्रार्थनपूर्वकंतच्छोकहेतुकत्वेनपितुःस्वर्गतिनिवेदनम् ॥ १ ॥

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ॥ किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ १ ॥

महाभारते "अग्निहोत्रफलावेदाः दत्तभुक्तफलंधनम् । रतिपुत्रफलादाराः शीलवृत्तफलंश्रुतं" इति ॥ ७३ ॥ आयुष्या यशस्या धर्मकामार्थसंहिता उक्ता एषाबुद्धिर्ममयथा तथैवतववर्ततेकच्चित् ॥७४॥ अथ उक्तानुक्तंसकलंसंग्रहेणदर्शयति—यामित्यादिना । वृत्तिमाचरन् वर्तते अवर्तिष्ट। यद्वा दशरथमरणस्याज्ञातत्वाद्वर्ततइत्युक्तिः । पितामहस्य अजस्य चिरंराज्यपरिपालनाभावात् प्रपितामहाः इत्युक्तं। प्रपितामहाः प्रपितामहप्रभृतयः। यथा "सप्तमीशौण्डैः" इत्यत्रशौण्डादिभिरितिवृत्तिकारः । अत्रअवर्तन्तेत्यध्याहार्यं । पित्राद्यननुष्ठितस्याननुष्ठानेप्राप्तेआह—याचसत्पथगाशुभेति । सत्पथगा सन्मार्गानुसारिणी । शुभा अनिन्दिता ॥ ७५ ॥ स्वादुकृतं मधुरतयासिद्धं । आशंसमानेभ्यः धनमितिशेषः ॥ ७६ ॥ एवमाचरतोराज्ञऐहिकामुष्मिकफले दर्शयति—राजात्वित्यादिना । तुशब्देन राजवैलक्षण्यमुच्यते।हिःप्रसिद्धौ। पालयित्वा महीमितिशेषः।महामतिःउक्तनीतिधर्मज्ञः । दण्डधरःयुक्तदण्डधरः। यथावत् पूर्वराजवत् । इतः अस्माल्लोकात् । च्युतः प्रारब्धकर्मावसाने मृतइत्यर्थः । विद्वान् शरीरभिन्नात्मज्ञानवान् ॥ ७७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्यानेशततमःसर्गः ॥ १०० ॥

---

रामस्यवचनंश्रुत्वाभरतःप्रत्युवाचहेत्यादिरयंसर्गएवात्रलेखनीयः । तंतुरामःसमाश्वास्यभ्रातरंगुरुवत्सलमित्यादिसर्गस्तु लेखकैःप्रमादाल्लिखितः । तस्योक्तप्रश्नोत्तरत्वाभावात् अत्रभरतोच्यमानपितृमरणश्रवणानन्तरंरामस्यदुःखितत्वाश्रवणात् । अत्रमहेश्वरतीर्थेनसर्गपौर्वापर्यवैपरीत्यमनालोच्यस्वदृष्टकोशमात्रप्रामाण्येन तंतुरामःसमाश्वास्येत्यादिकंसर्गमेवैकोत्तरशततमंमन्वानेन तत्सर्गव्याख्यानान्ते तत्रत्यार्थविरोधमालोच्यैवमाक्षेपपरिहारावुक्तौ। ननु"आर्यैतातःपरित्यज्यकृत्वाकर्मसुदुष्करम् । गतःस्वर्गंमहाबाहुःपुत्रशोकाभिपीडितः" इति "इमाःप्रकृतयः सर्वाविधवामातरश्चयाः । त्वत्सकाशमनुप्राप्ताः" इति चभरतेनोक्ते रामस्तदानीमशोचन् तदुल्लङ्घ्याभिषेकप्रत्याख्यानमेवकिमितिकृतवान् । नैषदोषः । तस्मिन्भरतवाक्यप्रबन्धेपितृमरणमानुषङ्गिकत्वेनोक्तं राज्यस्वीकरणमेवप्राधान्येनोक्तं अतोरामस्त्वेवंमन्यते। पितापुत्रशोकेनमृतकल्पोनपुनर्जीविष्यतीतिमृतइत्युच्य-

**ति०** इतश्च्युतः इतः एतद्देहलोकाभ्यां । **शि०** राजा सर्वत्रप्रकाशमानेनधर्मेणोपलक्षितः ॥७७॥ इतिशततमस्सर्गः॥१००॥
**ति०** अथभरतः पितृवृत्तान्तप्रश्नोत्तरमुक्त्वाकच्चित्प्रश्नोत्तरमाह—**रामस्येति** । धर्मात् राज्यायोग्यत्वेनराजधर्माद्राज्यात् । विहीनस्यत्वत्पृष्टराजधर्मोमेक्वोपयुक्तः अनुपनीतयागवत् । अतोऽनवसरदुस्स्थोमयि "कच्चिन्नुभरते" इत्यादिप्रश्नइतिभावः । **शि०** राजधर्मः राजधर्मोपदेशः । **तनि०** धर्मात् रामकैङ्कर्यरूपपरमैकान्तिधर्मात् स्वरूपनिरूपकशेषत्वधर्माद्वा । विहीनस्य राजधर्मः तद्विरोधिसामान्यधर्मः ॥ १ ॥

[ **पा०** ] १ च. ञ. देषाच. २ ङ. छ. झ. ञ. ट. महीपतिः. ३ रामस्यवचनंश्रुत्वेत्यादिरयंसर्गः झ. ञ. ठ. पुस्तकेषु १०२ समसर्गतयावर्तते ।

शाश्वतोऽयं सदा धर्मः स्थितोस्मासु नरर्षभ ॥ ज्येष्ठपुत्रे स्थिते राजन्न कनीयान्नृपो भवेत् ॥ २ ॥
स समृद्धां मया सार्धमयोध्यां गच्छ राघव ॥ अभिषेचय चात्मानं कुलस्यास्य भवाय नः ॥ ३ ॥
राजानं मानुषं प्राहुर्देवत्वे स मतो मम ॥ यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥ ४ ॥
केकयस्थे च मयि तु त्वयि चारण्यमाश्रिते ॥ दिवमार्यो गतो राजा यायजूकः सतां मतः ॥ ५ ॥
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे ॥ दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ॥ ६ ॥
उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ॥ अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥
प्रियेण खलु दत्तं हि पितृलोकेषु राघव ॥ अक्षय्यं भवतीत्याहुर्भवांश्चैव पितुः प्रियः ॥ ८ ॥
त्वामेव शोचंस्तव दर्शनेप्सुस्त्वय्येव सक्तामनिवर्त्य बुद्धिम् ॥
त्वया विहीनस्तव शोकरुग्णस्त्वां संस्मरन्नस्तमितः पिता ते ॥ ९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

ते मातरश्चविधवाकल्पाइति विधवाइत्युच्यन्ते।अनेनममाभिषेचनमेवप्राधान्येनोच्यतइति। अतोशोचन्नभिषेकप्रत्याख्यानंकृतवान् स्ववाक्ये पितृमरणानुवादस्त्वचायमेवार्थइति। अत्रायंपरिहारोनयुज्यते। यदिचपितामृतकल्पत्वेनमृतइत्युच्यतइतिरामोगृह्णीयात् तदा "व्यादिश्यचमहातेजादिवंदशरथोगतः" इतिनानुवदेत्। यस्तुस्वाशयंस्वयमेवैवमितिवदति तस्यान्येनगत्यन्तरेसतितद्विरुद्धाभिप्रायकल्पनंकथंकर्तुंशक्यं। अतोनेनैवानुवादेनरामेणपितामृतइत्येवगृहीतमितिभाति। किंच प्रकृतीनांमातॄणांचसमागमनात्पूर्वं "इमाः प्रकृतयःसर्वाविधवामातरश्चयाः। त्वत्सकाशमनुप्राप्ताःप्रसादंकर्तुमर्हसि" इत्यङ्गुल्यादिनिर्देशानुपपत्तेश्च। अतः तंतुरामःसमाश्वास्येत्यादिसर्गाः वसिष्ठं पुरतःकृत्वेतित्र्युत्तरशततमसर्गान्तरंचतुरुत्तरशततमसर्गत्वेनलेखनीयःपठनीयश्च। तथाचेत्सङ्गतःस्यात्। अतोत्ररामस्यवचनंश्रुत्वेत्ययंसर्गएवव्याख्यायते। धर्मात् त्वत्सेवारूपमुख्यधर्मात्। यद्वा धर्मात् त्वदुक्तराजधर्मानुष्ठानहेतुभूतराजभावात्। राजधर्मः त्वदुक्तनीतिस्थः ॥ १ ॥ कुतस्तेराजभावाभावइत्यत्राह—शाश्वतइति। अस्मासुअस्मत्पूर्वेषु ॥ २ ॥ भवाय भद्राय। "भवोभद्रेहरेप्राप्तौसत्तासंसारजन्मसु" इतिवैजयन्ती ॥ ३ ॥ नसर्वसुलभंराजत्वमित्याह—राजानमिति। प्राहुः प्राकृताजनाइतिशेषः। सः राजा। मम देवत्वेमतः देवत्वेनसंमतइत्यर्थः ॥ ४ ॥ एवंसन्निहितनीतिप्रश्नस्योत्तरमुक्त्वा प्राथमिकराजविषयप्रश्नस्योत्तरमाह—केकयस्थइति। यायजूकः इज्याशीलः। "इज्याशीलोयायजूकः" इत्यमरः ॥ ५ ॥ मन्निर्गमनानन्तरंकतिदिवसेषुराजादिवंगतइत्यत्राह—निष्क्रान्तमात्रइति ॥ ६—७ ॥ भवद्भ्यांदत्तेकिंमयापिदातव्यमित्यत्राह—प्रियेणेति ॥ ८ ॥ प्रियत्वमेवदर्शयति—त्वामेवेति। रुग्णः पीडितइतियावत् ॥ ९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोत्तरशततमःसर्गः ॥ १०१ ॥

**तनि०** अयं पूर्वोक्तः शाश्वतः नित्यसिद्धः अस्मासुसदास्थितः। शत्रुघ्नलक्ष्मणापेक्षयाबहुवचनं। नरर्षभ पुरुषोत्तम। **ति०** शाश्वतः कुलक्रमागतः। अस्मासु अस्मत्पूर्वेषु। यथेतिपाठे यथाशास्त्रं स्थितः प्रतिष्ठितः। **स०** राजा राज्ञा। **तनि०** येलोकाः राजानंमानुषंप्राहुः तएवयस्यतेधर्मार्थसहितंवृत्तममानुषंप्राहुः मनुष्यसंस्थानत्वेप्यतिमानुषशीलवृत्तवेषैरतिलङ्घितसर्वलोकसाम्यत्वेन देवत्वे नारायणत्वे। ममसंमतइत्यर्थः। **ती०** देवत्वप्रापकतपश्चरणंविहायममराज्याभिषेकेणकिमित्यतआह—**राजानमिति**। यद्यपिराजानंमानुषंप्राहुः तथापिममदेवत्वेसंमतः। कुतः यस्यवृत्तममानुषं दिव्यं देवत्वसंपादकमित्यर्थः। तपश्चरणेन क्लेशद्वारादेवत्वं राज्यपरिपालनेनभोगद्वारादेवत्वमितिभावः। **स०** राजानंलौकिकं मानुषंप्राहुः ममतु त्वंदेवत्वेसंमतः। तत्रहेतुः **यस्येति** ॥ ६३ ॥ **ति०** उक्तमपि राजमरणंरामेणविषयान्तरोत्तरदानादश्रुतमिवमत्वापुनरुक्तदेवाह—**केकयस्थइति** ॥ ५ ॥ **ति०** कृतोदकाविति कृतसपिण्डीकरणान्तसर्वकृत्यौ ॥ ७ ॥ इत्येकोत्तरशततमस्सर्गः ॥ १०१ ॥

**[ पा० ]** १ क. ङ. च. झ. ञ. ट. ज्येष्ठे. २ क. ञ. राज्ञांन. ङ. छ. झ. ट. ठ. राजान. ३ क. ङ. च. छ. झ. ञ. ट. कनीयान्भवेन्नृपः. ४ क. च. ञ. तुचमयि. ५ ग. मय्स्थिते. ६ ङ. झ. ट. धीमान्स्वर्गंगतो. ७ ग. मत्यगात्. ८ क.—ट. किल. ९ ख. ङ. छ.—ट. अक्षयं. १० ङ. छ. झ. ट. संस्मरन्नेवगतः.

## द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

पितुःस्वर्गतिश्रवणजशोकसंमूर्च्छितस्यरामस्यभरतादिभिःसलिलसेचनादिनामूर्च्छापनोदनम् ॥ १ ॥ रामेणपित्रनुशोचनेनबहुधापरिदेवनम् ॥ २ ॥ भरतादिभिःसमाश्वासितेनरामेणसीतासमाश्वासनपूर्वकंमन्दाकिनीमेत्यपित्रेजलदानपूर्वकंनिवापदानम् ॥ ३ ॥ ततःपर्णशालामेत्यरुदतांरामादीनांतुमुलशब्दश्रवणसंभ्रान्तैर्भरतसैनिकैस्तादृग्भ्रातृसमागमावलोकनायसरभसंतत्समीपगमनम् ॥ ४ ॥ रामेणतेषांयथार्हसंमाननम् ॥ ५ ॥

तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम् ॥ राघवो भरतेनोक्तां बभूव गतचेतनः ॥ १ ॥
तं तु वज्रमिवोत्सृष्टमाहवे दानवारिणा ॥ वाग्वज्रं भरतेनोक्तममनोज्ञं परंतपः ॥ २ ॥
प्रगृह्य बाहू रामो वै पुष्पिताग्रो यथा द्रुमः ॥ वने परशुना कृत्तस्तथा भुवि पपात ह ॥ ३ ॥
तथा निपतितं रामं जगत्यां जगतीपतिम् ॥ कूलघातपरिश्रान्तं प्रसुप्तमिव कुञ्जरम् ॥ ४ ॥
भ्रातरस्ते महेष्वासं सर्वतः शोककर्शितम् ॥ रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥
स तु संज्ञां पुनर्लब्ध्वा नेत्राभ्यामास्रमुत्सृजन् ॥ उपाक्रामत काकुत्स्थः कृपणं बहु भाषितुम् ॥ ६ ॥
स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम् ॥ उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ॥ ७ ॥
किं करिष्याम्ययोध्यायां ताते दिष्टां गतिं गते ॥ कस्तां राजवराद्धीनामयोध्यां पालयिष्यति ॥ ८ ॥
किंनु तस्य मया कार्यं दुर्जातेन महात्मनः ॥ यो मृतो मम शोकेन मया चापि न संस्कृतः ॥ ९ ॥
अहो भरत सिद्धार्थो येन राजा त्वयाऽनघ ॥ शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु सत्कृतः ॥ १० ॥
निष्प्रधानामनेकाग्रां नरेन्द्रेण विनाकृताम् ॥ निवृत्तवनवासोपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥

करुणां शोकावहां । यद्वा अकरुणां करुणारहितां क्रूरामितियावत् ॥ १ ॥ तंत्वित्यादिश्लोकद्वयमेकं वाक्यं । दानवारिणा इन्द्रेण । बाहूप्रगृह्य पाणिनापाणिंनिष्पीडय उद्धृत्यवा । वाग्वज्रमित्यस्यपूर्वश्लोकादनुषक्तेनश्रुत्वेत्यनेनान्वयः ॥ २—३ ॥ तथेत्यादिश्लोकद्वयं । कूलघातेन मदेनदन्तकण्डूयाचकृतेनकूलप्रहारेण परिश्रान्तं । अतएवप्रसुप्तंकुञ्जरमिवस्थितं मूर्च्छितमित्यर्थः । सलिलेन सर्वतःसिषिचुः सर्वगात्राणिमोहशान्तयेसिक्तवन्तः । यतःअमृतंवाआपस्तस्मादद्भिरेवतांतमभिषिञ्चन्तीतिश्रुतिरपिहिवदति ॥ ४—५ ॥ उपाक्रामत उपाक्रमत । दीर्घआर्षः ॥ ६—७ ॥ दिष्टां कालकल्पितां । "कालोदिष्टोप्यनेहापि" इत्यमरः । यद्वा दिष्टां दैवकल्पितां । "दैवंदिष्टंभागधेयं" इत्यमरः । राजवरात् तृतीयार्थेपञ्चमी । [पाठान्तरंकिंकरिष्यामीत्यस्यभावमुद्धाटयति— राजवरेति । राजवराधीनां तद्रक्षणाधीनामित्यर्थः ] ॥ ८ ॥ पितृमरणहेतुभूतत्वात्तत्संस्कारानुपयोगाच्चात्मानंविगर्हते— किंनुतस्येति ॥ ९ ॥ अनघ "पुत्रमन्त्येतुकर्मणि" इत्युक्तपितृसंस्काररूपभाग्यविघटकपापरहित । अहंहि तादृशपापवानितिभावः । येनकारणेनत्वयाशत्रुघ्नेनच सर्वेषुप्रेतकृत्येषुप्राप्तेषु राजासत्कृतः ॥ १० ॥ एकाग्रा अनाकुला । "अनाकुलेपिचैकाग्रः" इत्यमरः । सान भवतीत्यनेकाग्रा तां आकुलामितियावत् ॥ ११ ॥

शि० मरणसंहितां अन्यागम्यलोकान्तरगमनकर्तृत्वेनमरणसदृशगमनसंयुक्तां ॥ १ ॥ ति० बाहूप्रगृह्य अतिशिथिलौकृत्वा । भरतादिदर्शनेनहर्षात् पुष्पिताङ्गद्रुमसादृश्यं । स० कृत्तः छिन्नः ॥३॥ शि० दुर्जातेन दुःखेनपितृकर्तृकातियागादिनाजातंजनिर्यस्यतेन । मया महात्मनस्तस्यपितुः किंकार्यं । भूयः पिता ममशोकेन अमृतः लोकान्तरगमनकर्तृत्वेनमृतसदृशः सः मयानसंस्कृतः यात्राकालेमत्कर्तृकसंस्कारंनप्राप्तः ॥ ९॥ ति० सत्कृतः संस्कारकर्मणापूजितः ॥ १० ॥ ति० निष्प्रधानां प्रधानहीनां अतएव

[ पा० ] १ घ. संयुतां. २ क. ङ. च. छ. झ. ञ. ट. रामोबाहू. ३ ङ. झ. ट. पुष्पिताङ्गइव. ४ घ. स्तदाभूमौ. ५ क. ख. घ.—ट. हिपतितं. ग. विपतितं. ६ ग. च. ञ. कर्शिताः. ७ च. ज. ञ. सलिलेनतु. ८ छ.—ञ. मश्रुमुत्सृजन्. ९ क. ख. ग. च. ञ. उपाक्रमत. १० घ. जगतीपतिं. ११ क. च. ञ. धर्मज्ञं. १२ ग. तातेचत्रिदिवं. १३ ङ. दुर्जनेन. १४ ङ. छ. झ. ट. समयानच. १५ क. कार्येषु. १६ क. घ. च. ञ. संस्कृतः.

समाप्तवनवासं मामयोध्यायां परंतप ॥ कोनु शासिष्यति पुनस्ताते लोकान्तरं गते ॥ १२ ॥
पुरा प्रेक्ष्य सुवृत्तं मां पिता यान्याह सान्त्वयन् ॥ वाक्यानि तानि श्रोष्यामि कुतः कर्णसुखान्यहम् ॥१३॥
एवमुक्त्वा स भरतं भार्यामभ्येत्य राघवः ॥ उवाच शोकसन्तप्तः पूर्णचन्द्रनिभाननाम् ॥ १४ ॥
सीते मृतस्ते श्वशुरः पित्रा हीनोसि लक्ष्मण ॥ भरतो दुःखमाचष्टे स्वर्गतं पृथिवीपतिम् ॥ १५ ॥
ततो बहुगुणं तेषां बाष्पं नेत्रेष्वजायत ॥ तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ॥ १६ ॥
ततस्ते भ्रातरः सर्वे भृशमाश्वास्य राघवम् ॥ अब्रुवञ्जगतीभर्तुः क्रियतामुदकं पितुः ॥ १७ ॥
सा सीता श्वशुरं श्रुत्वा स्वर्गलोकगतं नृपम् ॥ नेत्राभ्यामश्रुपूर्णाभ्यामशकन्नेक्षितुं पतिम् ॥ १८ ॥
सान्त्वयित्वा तु तां रामो रुदन्तीं जनकात्मजाम् ॥ उवाच लक्ष्मणं तत्र दुःखितो दुःखितं वचः १९
आनयेङ्गुदिपिण्याकं चीरमाहर चोत्तरम् ॥ जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥ २० ॥
सीता पुरस्ताद्व्रजतु त्वमेनामभितो व्रज ॥ अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥ २१ ॥
ततो नित्यानुगस्तेषां विदितात्मा महामतिः ॥ मृदुर्दान्तश्च शान्तश्च रामे च दृढभक्तिमान् ॥२२॥
सुमन्त्रस्तैर्नृपसुतैः सार्धमाश्वास्य राघवम् ॥ अवातारयदालम्ब्य नदीं मन्दाकिनीं शिवाम् ॥ २३ ॥
ते सुतीर्थां ततः कृच्छ्रादुपागम्य यशस्विनः ॥ नदीं मन्दाकिनीं रम्यां सदापुष्पितकाननाम् ॥२४॥
शीघ्रस्रोतसमासाद्य तीर्थं शिवमकर्दमम् ॥ सिषिचुस्तूदकं राज्ञे तत्रैतत्ते भवत्विति ॥ २५ ॥

शासिष्यति कार्येषुनियोक्ष्यतीत्यर्थः ॥ १२ ॥ सुवृत्तं शोभनंनियोगाचरणरूपंवृत्तंयस्यतं । कुतः कस्मात्पुरुषात् ॥ १३ ॥ अभ्येत्य अभिमुखोभूत्वा ॥ १४ ॥ दुःखमित्येतत् क्रियाविशेषणं । इत्युवाचेतिपूर्वेणान्वयः ॥ १५—१६ ॥ क्रियतामित्यत्रेतिकरणंद्रष्टव्यं ॥ १७—१९ ॥ इङ्गुदिपिण्याकं तपस्विभोज्यंतापसतरुबीजपिण्याकं । अनिःसारिततैलंपिष्टाचूर्णीकृत्य पिण्डीकृतमिङ्गुदिबीजमेव पिण्याकत्वेनोपचर्यते । "इङ्गुदीतापसतरुः" इत्यमरः । चीरं वासउदकदानार्थं [ चीरं स्नानार्थपरिधानं ] उत्तरं उत्तरीयंच ॥ २० ॥ अभितः पश्चात् । "अभितःपरितः—" इत्यादिना एनामितिद्वितीया । सुदारुणा सुतरांदुःसहा । गतिः दुखिनांगतिः । एषाहि स्नानाद्यर्थेस्त्रीबालपुरःसराखल्वित्यर्थः । तथाचसूत्रं "सर्वेकंनिष्ठप्रथमाअनुपूर्वइतरेस्त्रियोग्रे" इति ॥ २१ ॥ नित्यानुगः कुलक्रमानुगतानुचरः । विदितात्मा ज्ञातात्मस्वरूपः ॥२२—२३ ॥ ते सीतालक्ष्मणरामाः । स्त्रियोप्युदकंदिशन्तीतिशास्त्रसिद्धं। शीघ्रस्रोतसं नदीमुपागम्य अकर्दमंतीर्थं अवतारप्रदेशमासाद्य । तत हेतात । ते तुभ्यं । एतद्भवत्वित्युच्चार्यउदकंसिषिचुः ददुरित्यर्थः । स्नानमर्थात्सिद्धं । सीतायाः स्नानमात्रेन्वयोवा । कृच्छ्रादित्यनेनतेषांदुःखातिशयात्स्खलितगमनमुच्यते । सुतीर्थामित्यनेनपुण्यतीर्थत्वमुक्तं । उपगम्येत्यनेन नदीतीरेपिकंचित्कालंरोदनाचारउक्तः । यशस्विनइत्यनेन शास्त्रानतिक्रमउक्तः । रम्यामित्यनेन दुःखशान्तिहेतुत्वमुक्तं । पुष्पितकाननामित्यनेन उदकदान-

अनेकाग्रां बहुनायकां । अत्रोभयत्रहेतुः **नरेन्द्रेणविनाकृतामिति** ॥ ११ ॥ **स०** यान्याह तानि तज्जातीयानि ॥ १३ ॥ **स०** भार्यां लक्ष्मणंचेत्यपिग्राह्यं ॥ १४ ॥ **ति०** स्वर्गतिरूपंदुःखं । **तनि०** तेश्वशुरः त्वय्यत्यन्तप्रीतियुक्तश्श्वशुरः । पित्राहीनोसिलक्ष्मणेत्यनेन त्वमेवपित्राहीनः नाहमितिगम्यते । "नसंवृत्तःपितामम" इतिवक्ष्यमाणत्वात् ॥ १५ ॥ **ति०** उत्तरं उत्तमं नवीनंचीरं । **स०** गमिष्यामि नदींप्रतीतिशेषः ॥ २० ॥ **शि०** कान्तः तेजस्वी ॥ २२ ॥ **ति०** तत ३ एतद्भवत्वित्युच्चार्य सिषिचुः ददुः । ततेत्येतत्पितुर्नामगोत्ररूपोपलक्षणं बोध्यं । संबोधनेप्लुतकरणादसंधिः । केचित्तुततेत्युक्त्यानामाद्युच्चारणस्यनप्रयो-

[ **पा०** ] १ ग. घ. ज. श्रोत्र. २ क. ख. ङ. च. झ. ञ. ट. मुक्त्वाथ. ३ ङ. च. छ. झ. ञ. ट. पितृहीनोसि. ४ ख. ङ. छ. झ. ञ. ट. स्वर्गतिंपृथिवीपतेः. ५ ख. एवं. ६ ङ. छ. झ. दुःखितं. ७ ङ. छ. झ. स्वर्गतंश्रुत्वाश्वशुरंतंमहानृपं. ८ क. ख. ग. ङ. च. छ. झ. ञ. ट. पूर्णाभ्यांनशशाकेक्षितुं. ९ ङ. छ. झ. ट. प्रियं. १० च. छ. झ. ट. रुदतीं. ११ क. दुःखितंदुःखितो. १२ क. ङ. छ. झ. ट. कान्तश्च. १३ क. ग. ङ. छ. झ. ट. उपगम्य. १४ ग. दीर्घस्रोतसं. १५ ग. शुचिं. १६ क. ग. श्चोदकं. १७ क. ग. ङ.—ट. तत ३ एतद्भवत्विति.

प्रगृह्य च महीपालो जलपूरितमञ्जलिम् ॥ दिशं याम्यामभिमुखो रुदन्वचनमब्रवीत् ॥ २६ ॥
एतत्ते राजशार्दूल विमलं तोयमक्षयम् ॥ पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥ २७ ॥
ततो मन्दाकिनीतीरात्प्रत्युत्तीर्य स राघवः ॥ पितुश्चकार तेजस्वी निर्वापं भ्रातृभिः सह ॥ २८ ॥
ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे ॥ न्यस्य रामः सुदुःखार्तो रुदन्वचनमब्रवीत् ॥ २९ ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् ॥ यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥
ततस्तेनैव मार्गेण प्रत्युत्तीर्य नदीतटात् ॥ आरुरोह नरव्याघ्रो रम्यसानुं महीधरम् ॥ ३१ ॥
ततः पर्णकुटीद्वारमासाद्य जगतीपतिः ॥ परिजग्राह बाहुभ्यामुभौ भरतलक्ष्मणौ ॥ ३२ ॥
तेषां तु रुदतां शब्दात्प्रतिश्रुत्कोऽभवद्गिरौ ॥ भ्रातॄणां सह वैदेह्या सिंहानामिव नर्दताम् ॥ ३३ ॥
महाबलानां रुदतां कुर्वतामुदकं पितुः ॥ विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥
अब्रुवंश्चापि रामेण भरतः सङ्गतो ध्रुवम् ॥ तेषामेव महाञ्छब्दः शोचतां पितरं मृतम् ॥ ३५ ॥
अथ वासान्परित्यज्य तं सर्वेऽभिमुखाः स्वनम् ॥ अप्येकमनसो जग्मुर्यथास्थानं प्रधाविताः ॥३६॥
हयैरन्ये गजैरन्ये रथैरन्ये स्वलङ्कृतैः ॥ सुकुमारास्तथैवान्ये पद्भिरेव नरा ययुः ॥ ३७ ॥
अचिरप्रोषितं रामं चिरविप्रोषितं यथा ॥ द्रष्टुकामो जनः सर्वो जगाम सहसाऽऽश्रमम् ॥ ३८ ॥
भ्रातॄणां त्वरितास्तत्र द्रष्टुकामाः समागमम् ॥ ययुर्बहुविधैर्यानैः खुरनेमिस्वनाकुलैः ॥ ३९ ॥

समाप्तिपर्यन्तमनातपत्वमुक्तं । शीघ्रस्रोतसमित्यनेन स्नानकालेस्रोतोभिमुखत्वमुक्तं । शिवं शुद्धं । अकर्दमंतीर्थमासाद्येत्यनेन तीरेसेचनमुक्तं ॥ २४—२५ ॥ दानप्रकारमाह—प्रगृह्येत्यादिना ॥ २६ ॥ दानमन्त्रमाह—एतदित्यादिना ॥ २७ ॥ भ्रातृभिःसह मन्दाकिनीतीरात्प्रत्युत्तीर्यपितुर्निवापं पिण्डप्रदानंचकार मन्दाकिनीतीरात्समुत्तीर्येत्युदकदानदेशात्किंचित्प्रदेशान्तरगमनवचनात् सपिण्डीकरणमेवकृतमित्यवगम्यते । दशाहात्यये उदकदानंविनापिण्डदानस्याचोदितत्वात् उदकसेचनवत्कनिष्ठेनलक्ष्मणेनपिण्डदानानुक्तेश्च ॥२८—३२ ॥ प्रतिश्रुत्कः प्रतिध्वनिः ॥ ३३ ॥ महाबलानामित्यादिश्लोकद्वयमेकंवाक्यं । त्रस्ताः किं भविष्यतीतिधियाऽउद्विग्नाः । उद्वेगानन्तरंनिश्चित्यवदन्तिस्मेत्याह—अब्रुवन्नित्यादिना । मृतंपितरंउद्दिश्येतिशेषः ॥ ३४—३५ ॥ स्वनमभिमुखाः स्वनोत्पत्तिदिगभिमुखाइत्यर्थः । यथास्थानं शब्दोत्पत्तिप्रदेशमनतिक्रम्यप्रधाविताः शीघ्रगतियुक्ताः ॥ ३६ ॥ सुकुमाराइति हयैरित्यादिभिरुक्तानांत्रयाणांविशेषणं । सुकुमारत्वाभावे दुःखितंरामंप्रतिपद्भ्यामेवगन्तव्यत्वात् ॥ ३७—३८ ॥ एषांयानैर्गमनं दर्शनत्वरया । ययुर्बहुविधैर्यानैरिति खुरनेमिसमाहतेतिचपाठः । ययुर्बहुविधैर्युक्तैरितिपाठे युक्तैः सज्जैः । यानैरिति

जनं अस्मादेवाचारादित्याहुः॥ स० हेतत तात । दूराद्धूतेचेतिप्लुतता ॥ २५ ॥ ति० एतदेवविवृणोति–**प्रगृह्येति** । याम्यां दक्षिणां । यत्त्वाधुनिकनिबन्धेषुसुमन्तुनाम्नालिखितंवचनं क्षत्रियाणामुदङ्मुखजलदानबोधकं तन्निर्मूलं । एतदाचारविरोधात् । निकृष्टक्षत्रियपरंवा । रुदन्नित्यनेन पित्रादिविषयेरोदने ननिषेधइतिसूचितं ॥ २६ ॥ ति० नचयदाकदाचित्पितुर्मरणश्रवणेपुत्रस्यदशाहाशौचतायास्स्मृतिषूक्तत्वेन कथंकृतक्रियस्यपितुः प्रथमदिनएवपिण्डदानमितिवाच्यं । तस्यास्स्मृतेः क्षत्रियेतरविषयत्वात्कलिविषयत्वाद्वा नदोषः ॥ २८ ॥ ति० ऐङ्गुदं इङ्गुदिबीजसंबन्धि । बदरैः बदरफलैः ॥ २९ ॥ ति० ननुराज्ञेकथंपिण्याकपिण्डदानंतत्राह **यदशनाइति** । यदशनाइत्यस्य तदशनाअस्मत्पितरइतिशेषः । तत्रसामान्येनार्थान्तरन्यासमाह—**यदन्नइति** । **स०** वयंयदशनाः । बहुव्रीहिः । तदिदंभुङ्क्ष्वच ॥३०॥ **स०** प्रतिशब्दःशब्दजन्यशब्दः ॥ ३३ ॥ **स०** त्रस्ताः किंनवीनाकाचिदापत्प्राप्तेतिभीताः ॥ ३४ ॥

[ पा० ] १ ङ. छ. झ. ट. प्रगृह्यतु. २ घ. पितृलोकं. ३ ख. गतस्यास्य. ४ ङ. छ. झ. ट. तीरंप्र. ५ ङ. छ. झ. ञ. ट. निर्वापं. ६ क. ग. ङ. छ. झ. ञ. ट. बदरैर्मिश्रं. ७ ङ. यदन्नंपुरुषोश्नाति. ८ ङ. छ. झ. ट. सरित्तटात्. ९ क. ख. ङ. च. छ. झ. ञ. ट. पाणिभ्यां. १० ङ. छ.—ट. ठ. त्प्रतिशब्दो. ११ ख. ग. ङ.—ट. सिंहानांनर्दतामिव. १२ क. च. ञ. तेषामेष. १३ ग. घ. ज. महाशब्दः. १४ ङ.—ट. वाहान्. १५ क. ख. ङ. च. छ. झ. ञ. ट. स्तेतु. १६ क. घ. ज, युक्तैः, १७ क, ग. ङ. च, छ. झ. ञ. ट. समाकुलैः.

सा भूमिर्बहुभिर्यानैः [1]खुरनेमिसमाहता ॥ मुमोच तुमुलं शब्दं द्यौरिवाभ्रसमागमे ॥ ४० ॥
तेन वित्रासिता नागाः करेणुपरिवारिताः ॥ आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः ॥ ४१ ॥
वराह[2]वृकसङ्घाश्च महिषाः [3]सर्पवानराः ॥ व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥ ४२ ॥
[4]रथाङ्गसाह्वा नत्यूहा हंसाः कारण्डवाः प्लवाः ॥ तथा पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः ॥४३॥
तेन शब्देन वित्रस्तैराकाशं [5]पक्षिभिर्वृतम् ॥ [6]मनुष्यैरावृता भूमिरुभयं प्रबभौ तदा ॥ ४४ ॥
ततस्तं पुरुषव्याघ्रं यशस्विनम[7]रिंदमम् ॥ आसीनं स्थण्डिले रामं ददर्श सहसा जनः ॥ ४५ ॥
विगर्हमाणः कैकेयीं सहितो मन्थरामपि ॥ अभिगम्य जनो रामं बाष्पपूर्णमुखोऽभवत् ॥ ४६ ॥
[8]तान्नरान्बाष्पपूर्णाक्षान्समीक्ष्याथ सुदुःखितान् ॥ पर्यष्वजत धर्मज्ञः पितृवन्मातृवच्च सः ॥ ४७ ॥
[9]स तत्र कांश्चित्परिषस्वजे नरान्नराश्च केचित्तु तमभ्यवादयन् ॥
चकार सर्वान्सवयस्यबान्धवान्यथार्हमासाद्य तदा नृपात्मजः ॥ ४८ ॥
[10]स तत्र तेषां रुदतां महात्मनां भुवं च खं चा[11]नुनिनादयन्स्वनः ॥
[12]गुहा गिरीणां च दिशश्च सन्ततं मृदङ्गघोष[13]प्रतिमः प्रशुश्रुवे ॥ ४९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

## त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

वसिष्ठेनकौसल्यादिभिःसहरामाश्रमंप्रतिप्रस्थानम् ॥ १ ॥ कौसल्ययामध्येमार्गंसपत्नीःप्रतिमन्दाकिनीतीरेदक्षिणाग्रदर्भेषु-दशरथायरामन्यस्तेङ्गुदिपिण्याकप्रदर्शनेनराजानंप्रतिसकरुणंपरिशोचनम् ॥ २ ॥ कौसल्यादिभिराश्रमेरामदर्शनम् ॥ ३ ॥ रामलक्ष्मणाभ्यांतत्पादाभिवादनम् ॥ ४ ॥ कौसल्ययास्वपादाभिवादिनींसीतामालिङ्ग्यतांप्रतिशोचनम् ॥ ५ ॥ रामेणवसिष्ठ-पादाभिवादनपूर्वकंतेनसहोपवेशनम् ॥ ६ ॥ भरतेनमन्त्रिप्रभृतिभिःसहतत्समीपेऽउपवेशनम् ॥ ७ ॥

वसिष्ठः पुरतः कृत्वा दारान्दशरथस्य च ॥ अभिचक्राम तं देशं रामदर्शन[14]तर्षितः ॥ १ ॥
राजप[15]त्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति ॥ ददृशुस्तत्र तत्तीर्थं रामलक्ष्मणसेवितम् ॥ २ ॥
कौसल्या बाष्पपूर्णेन मुखेन परिशुष्यता ॥ सुमित्रा[16]मब्रवीद्दीना याश्चान्या राजयोषितः ॥ ३ ॥

---

शेषः ॥ ३९—४० ॥ आवासयन्तः मदगन्धेनावासयन्तः । एतेन वनगजानामपिरामदर्शनहर्षोद्योत्यते ॥ ४१ ॥ गोकर्णः गोरिवकर्णौयस्यसगोकर्णः । महापृषतविशेषः ॥ ४२ ॥ नत्यूहाः जलरङ्कवः । " नत्यूहोजलरङ्कुःस्यात् " इतिहलायुधः । प्लवाः स्थूलबकविशेषाः ॥ ४३—४५ ॥ सहितः अन्योन्यसंगतः ॥ ४६—४७ ॥ चकार संमानमितिशेषः ॥ ४८—४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

अथमातृसमागमस्त्र्युत्तरशततमे । रामदर्शनतार्षितः

---

शि० अकल्मषं कल्मषनिवर्तकं ॥ ४५ ॥ शि० अत्रविगर्हणं शिखीनष्टइत्यादाविवविशेषणांशेपर्यवसन्नं । अतएवोत्तरत्ररामालिङ्गनंसंगच्छते ॥ ४६ ॥ ति० अनुविनादयन् प्रतिध्वनयन् ॥ ४९ ॥ इतिद्व्युत्तरशततमस्सर्गः ॥ १०२ ॥

[ पा० ] १ ङ. झ. ञ. ट. रथनेमि. २ क. ख. ङ. च. छ. झ. ञ. ट. मृगसिंहाश्च. ग. मृगसङ्घाश्च. ३ ङ. छ. झ. ञ. ट. सृमरास्तथा. ४ ङ. छ. झ. ट. रथाह्वहंसानत्यूहाःप्लवाःकारण्डवाःपरे. च. रथाङ्गकाःसदात्यूहाः. ञ. रथाङ्गाह्वाःसनत्यूहाः. ५ घ. पक्षिसंवृतं. ६ घ. मानुषैः. ७ क. ग. ङ. च. छ. झ. ञ. ट. मकल्मषं. ८ घ. तांस्तदाबाष्प. ९ ख. ततश्च. १० क. ख. ग. ङ. च. छ. झ. ञ. ट. ततस्स. ११ ख.—ट. विनादयन्. १२ च. ञ. महागिरीणां. १३ क. घ.—ट. प्रतिमोविशुश्रुवे. ख. ग. प्रतिमोपि. १४ ट. कर्शितः. क. ग. हर्षितः. १५ क. पत्न्यस्तु. १६ ख. ग. च. छ. झ. ञ. मब्रवीद्दीनां. ङ. मब्रवीदेनां.

इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणाम् ॥ वने प्राक्केवलं तीर्थं ये ते निर्विषयीकृताः ॥ ४ ॥
इतः सुमित्रे पुत्रस्ते सदा जलमतन्द्रितः ॥ स्वयं हरति सौमित्रिर्मम पुत्रस्य कारणात् ॥ ५ ॥
जघन्यमपि ते पुत्रः कृतवान्न तु गर्हितः ॥ भ्रातुर्यदर्थसहितं सर्वं तद्विहितं गुणैः ॥ ६ ॥
अद्यायमपि ते पुत्रः क्लेशानामतथोचितः ॥ नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ॥ ७ ॥
दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले ॥ पितुरिङ्गुदिपिण्याकं न्यस्तमायतलोचना ॥ ८ ॥
तं भूमौ पितुरार्तेन न्यस्तं रामेण वीक्ष्य सा ॥ उवाच देवी कौसल्या सर्वा दशरथस्त्रियः ॥ ९ ॥
इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः ॥ राघवेण पितुर्दत्तं पश्यतैतद्यथाविधि ॥ १० ॥
तस्य देवसमानस्य पार्थिवस्य महात्मनः ॥ नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनम् ॥ ११ ॥
चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो विभुः ॥ कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः ॥ १२ ॥
अतो दुःखतरं लोके न किंचित्प्रतिभाति मा ॥ यत्र रामः पितुर्दद्यादिङ्गुदीक्षोदमृद्धिमान् ॥ १३ ॥
रामेणेङ्गुदिपिण्याकं पितुर्दत्तं समीक्ष्य मे ॥ कथं दुःखेन हृदयं न स्फोटति सहस्रधा ॥ १४ ॥
श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति माँ ॥ यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ १५ ॥
एवमार्ता सपत्न्यस्ता जग्मुराश्वास्य तां तदा ॥ ददृशुश्चाश्रमे रामं स्वर्गच्युतमिवामरम् ॥ १६ ॥

---

रामदर्शनेसंजाताभिलाषः । " कामोभिलाषस्तर्षश्च " इत्यमरः ॥ १—३ ॥ ते प्रसिद्धा रामादयः । ये प्राक् निर्विषयीकृताः राज्यान्निष्कासिताः वने तेषां क्लिष्टमुपमर्दितं । इदंतीर्थं अवतरणं । केवलं निश्चितं । " केवलंनिश्चितेक्लीबेवाच्यवत्त्वेककृत्स्नयोः " इतिवैजयन्ती ॥४—५॥ जघन्यं हीनं जलाहरणादिकर्म कृतवानपि नगर्हितः । कुतइत्यत्राह—भ्रातुरिति । भ्रातुः ज्येष्ठभ्रातुः । अर्थसहितं प्रयोजनसहितं । यत्कर्म तत्सर्वं गुणैर्विहितं । " ज्येष्ठभ्रातापितृसमः " इतिवचनात्पितृशुश्रूषावद्गुणायकल्पतइत्यर्थः ॥ ६ ॥ क्लेशानामतथोचितः इदानींयादृशक्लेशानुभवस्तादृशक्लेशानामनुचितः । ते अयंपुत्रः नीचानर्थसमाचारं निकृष्टदुःखप्रचुरसमाचारसहितं । सज्जं उद्युक्तं । कर्म अद्यप्रमुञ्चत्वपि अपिशब्दःसंभावनायां । " अपिःसंभावनाप्रश्नगर्हाशङ्कासमुच्चये " इतिवैजयन्ती । भरतप्रार्थनयारामेणस्वराज्येस्वीकृते लक्ष्मणस्यनीचकर्मप्रमोचनंसंभवेदितिभावः ॥ ७ ॥ पितुरिति चतुर्थ्यर्थेषष्ठी ॥ ८—१० ॥ औपयिकं प्राप्तं । "युक्तंस्यादुचितंन्याय्यंप्राप्तमौपयिकंतथा" इतिहलायुधः ॥ ११—१२ ॥ राज्यैश्वर्ययोग्यतयाऋद्धिमानित्युक्तिः ॥ १३ स्फोटति स्फुटति ॥ १४ ॥ सत्या सत्यार्था । लौकिकी लोकविदिता लोकप्रसिद्धेतियावत् । देवताइतिश्रुतिः

---

ति० प्राक्कलनं बहुव्रीहिरयं । प्रथमपरिग्रहवत् । तीर्थं पुण्यतीर्थं । गङ्गायमुनापरपारभवमिदमेव । प्राक्केवलमितिपाठआधुनिककल्पितः । नापितत्रार्थसामञ्जस्यमितिकतकः । तत्रापिपाठे प्राक्परिगृहीतमितिशेषः । प्राक्परिगृहीतंतीर्थं जलानयनादिव्यवहारोपयोगीमार्गः । इदमेवेतिकेवलं निश्चितमित्यर्थोवक्तुंशक्यः । स० क्लिष्टं दुःखरोहं । प्राक्कलनं बहुदिनमारभ्यस्नानाद्यर्थपरिगृहीतं । तीर्थं अवतारप्रदेशः । इतिनिश्चयइतिशेषः ॥ ४ ॥ वक्ष्यमाणसौमित्रिपदव्याख्यानं**सुमित्रेपुत्रस्तइति** ॥ ५ ॥ **ति०** गुणैः ज्येष्ठत्वसौभ्रात्रधार्मिकत्वादिभिर्विशिष्टस्यभ्रातुर्यदर्थरहितं प्रयोजनरहितं तदेवगर्हितंभवति । **शि०** भ्रातुरर्थरहितंयत् तदेव सर्वं । गुणैः गुणवद्भिर्गर्हितं ॥ ६ ॥ **ति०** क्लेशानां अनुभूयमानानां । तथा यथानुभवमुचितोनेत्यतथोचितः । ते अयंपुत्रः नीचार्होयोऽनर्थः दुःखजनकः समाचारः अनुष्ठानंयस्मिंस्तत्तथा सज्जं प्रस्तुतं । यथोक्तकर्ममुञ्चतु रामस्यप्रत्यावर्तिष्यमाणत्वादितिभावः ॥ एकःशत्रुघ्नस्तुभरतसंगादेतत्कर्मनकरोत्येव अयमपिमुञ्चत्वित्यपेरर्थः ॥ ७ ॥ **ति०** स्त्रियः प्रतीतिशेषः ॥ ९ ॥ **ति०** औपयिकं उचितं ॥ ११ ॥ **ति०** चतुरन्तां चतुस्समुद्रावसानां ॥१२॥ **ति०** क्षोदं पिष्टं । **स०** यत्रयत् । अतः अस्मात् ॥१३॥

[ **पा०** ] १ ङ. छ. झ. ट. प्राक्कलनं. २ ङ. छ. झ. ट. रहितं. ३ ङ. छ. झ. ट. तन्नर्हितं. ४ ङ. अथायं. ५ घ. पुनर्दत्तं. ६ क. ङ. च. छ. झ. ञ. ट. भुवि. ७ घ. कामं. ख. कथमैङ्गुद. ८ ग. घ. भुङ्क्तेस. ९ ङ. छ. झ. ठ. मे. च. ञ. मां. १० ङ. छ. झ. ट. मे. च. ज. ञ. मां. ११ घ. ज. मार्ताः. १२ क. ञ. स्वर्गाच्युतं.

[1]सर्वभोगैः परित्यक्तं रामं संप्रेक्ष्य मातरः ॥ आर्ता मुमुचुरश्रूणि [2]सस्वरं शोककर्शिताः ॥ १७ ॥
तासां रामः समुत्थाय जग्राह [3]चरणाञ्शुभान् ॥ मातॄणां मनुजव्याघ्रः सर्वासां सत्यसङ्गरः ॥ १८ ॥
ताः पाणिभिः [4]सुखस्पर्शैर्मृद्व[5]ङ्गुलितलैः शुभैः ॥ प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः ॥ १९ ॥
सौमित्रिरपि ताः सर्वा मातॄः संप्रेक्ष्य [6]दुःखितः ॥ अभ्यवादयतासक्तं शनै रामादनन्तरम् ॥ २० ॥
यथा रामे तथा तस्मिन्सर्वा ववृतिरे स्त्रियः ॥ वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥ २१ ॥
सीताऽपि चरणांस्तासामुपसंगृह्य दुःखिता ॥ श्वश्रूणामश्रुपूर्णाक्षी [7]सा बभूवाग्रतः स्थिता ॥ २२ ॥
तां परिष्वज्य दुःखार्ता माता दुहितरं यथा ॥ वनवास[8]कर्शां दीनां कौसल्या वाक्यमब्रवीत् ॥ २३ ॥
विदेहराजस्य सुता स्नुषा दशरथस्य च ॥ रामपत्नी कथं दुःखं संप्राप्ता [9]निर्जने वने ॥ २४ ॥
पद्ममातपसंतप्तं परिक्लिष्टमिवोत्पलम् ॥ काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः ॥ २५ ॥
मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयम् ॥ भृशं मनसि वैदेहि व्यसनारणिसंभवः ॥ २६ ॥
ब्रुवन्त्यामेवमार्तायां जनन्यां भरताग्रजः ॥ पादावासाद्य जग्राह वसिष्ठस्य [10]च राघवः ॥ २७ ॥

पुरोहितस्याग्नि[11]समस्य वै तदा बृहस्पतेरिन्द्र [12]इवामराधिपः ॥
प्रगृह्य पादौ सुसमृद्धतेजसः सहैव तेनोपविवेश राघवः ॥ २८ ॥
ततो जघन्यं [13]सहितैः [14]समन्त्रिभिः पुरप्रधानैश्च [15]सहैव सैनिकैः ॥
जनेन धर्मज्ञतमेन धर्मवानुपोपविष्टो भरतस्तदाऽग्रजम् ॥ २९ ॥
उपोपविष्टस्तु [16]तथा स वीर्यवांस्तपस्विवेषेण समीक्ष्य राघवम् ॥
श्रिया ज्वलन्तं भरतः कृताञ्जलिर्यथा महेन्द्रः प्रयतः प्रजापतिम् ॥ ३० ॥
किमेष वाक्यं भरतोऽद्य राघवं प्रणम्य सत्कृत्य च साधु वक्ष्यति ॥
इतीव तस्यार्यजनस्य [17]तत्त्वतो बभूव कौतूहलमुत्तमं तदा ॥ ३१ ॥
स राघवः सत्यधृतिश्च लक्ष्मणो महानुभावो भरतश्च धार्मिकः ॥

---

सत्येत्यन्वयः ॥ १५—१८ ॥ रामस्यायतलोचना इतिपाठः ॥ १९ ॥ असक्तं अविरतं । "अविरतमनवरतंस्यादेकार्थमनारतमसक्तमपि" इतिहलायुधः ॥ २० ॥ ववृतिरे चक्रुरित्यर्थः ॥ २१—२४ ॥ तेमुखंप्रेक्ष्य स्थितामितिशेषः । मां मनसिस्थितःसन्निति शेषः । आश्रयं आश्रयभूतंकाष्ठादिकं ॥ २५—२८ ॥ ततोजघन्यं वसिष्ठरामोपवेशादनन्तरं । उपोपविष्टः । "प्रसमुपोदःपादपूरणे" इतिद्विर्वचनं ॥ २९ ॥ कृताञ्जलिः अभूदितिशेषः ॥ ३० ॥ इतीवेत्यत्र इवश-

---

**स०** सत्यसंगरः सत्याकैकेय्यासह नविद्यतेसंगरः कलहोयस्यसः । सत्यप्रतिज्ञइतिवा ॥ १८ ॥ **ति०** पृष्ठात् पृष्ठदेशात् । "पृष्ठंतुचरमंतनोः" इत्यमरः ॥ १९ ॥ **स०** आसक्तं आसक्तिपूर्वकं स्नेहपूर्वकमितियावत् ॥ २० ॥ **ति०** वनवासकृतांदीनां वनवासकृतदीनत्ववतीमितियावत् । **शि०** वनवासेकृतंप्रयत्नोयस्यास्तां अतएवदीनांक्षीणत्वेनप्रतीयमानां ॥ २३ ॥ **ति०** शोकाग्निः आश्रयं गृहमिव ॥ आशयमितिपाठेप्याशयोगृहमेव आशय्यतेऽत्रेतिव्युत्पत्तेः ॥ २६ ॥ **ति०** जघन्यं जघनभागं पृष्ठभागमाश्रितस्सन्नुपोपविष्टोबभूवेत्यन्वयः । **शि०** जघन्यं निम्नदेशमवलोक्य तत् आग्रजं अग्रजासनं । उपोपविष्टः ॥ २९ ॥

**[ पा० ]** १ ग. ङ. झ. ट. तंभोगैःसंपरित्यक्तं. छ. तंभोगैःपरिसंत्यक्तं. २ च. सुस्वरं. ३ ङ. च. छ. झ. ञ. ट चरणांबुजान्. ४ ग. घ. ज. शुभस्पर्शैः. ५ घ. ज. दलैः. ६ ख. ग. च. दुःखिताः. ७ घ.—छ. झ. ञ. ट. संबभूव. ८ ग. ङ. छ. झ. ट. कृतां. ९ ङ. छ. झ. ट. विजने. १० क. ङ. झ. ञ. ट. सराघवः. ११ क. ख. ग. ङ. च. झ. ञ. ट. समस्यतस्यवै. १२ ङ. इवामराग्रजः. १३ क. ख. सहतैः. १४ ङ. छ. झ. ट. स्वमन्त्रिभिः. १५ क. ख. ङ. च. झ. ञ. ट. तथैव. १६ ङ. छ. झ. ट. तदाति. क.—घ. च. ज. ञ. तदास. १७ च. ञ. सर्वतो.

वृताः सुहृद्भिश्च विरेजुरध्वरे यथा सदस्यैः सहितास्त्रयोऽग्नयः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

## चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

रामेणतापसवेषधारिणंभरतंप्रतिराज्यपरित्यागेनवनंप्रत्यागमननिमित्तप्रश्नः ॥ १ ॥ भरतेनरामंप्रतिकैकेयीगर्हणपूर्वकं सप्रणामंराज्यस्वीकारप्रार्थना ॥ २ ॥ रामेणभरतंप्रतिपितृवाक्यपरिपालनस्योभाभ्यामवश्यंकर्तव्यत्वसमर्थनपूर्वकंतत्रभागद्वय परिकल्पनेनस्वेनवनवासरूपस्वभागपरिग्रहणदृष्टान्तीकरणेनराज्यपरिपालनरूपतदीयभागपरिग्रहणचोदना ॥ ३ ॥

तं तु रामः समाज्ञाय भ्रातरं गुरुवत्सलम् ॥ लक्ष्मणेन सह भ्रात्रा प्रष्टुं समुपचक्रमे ॥ १ ॥
किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया ॥ यस्मात्त्वमागतो देशमिमं चीरजटाजिनी ॥ २ ॥
किंनिमित्तमिमं देशं कृष्णाजिनजटाधरः ॥ हित्वा राज्यं प्रविष्टस्त्वं तत्सर्वं वक्तुमर्हसि ॥ ३ ॥
इत्युक्तः कैकयीपुत्रः काकुत्स्थेन महात्मना ॥ प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥
आर्यं तातः परित्यज्य कृत्वा कर्म सुदुष्करम् ॥ गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ॥ ५ ॥
स्त्रिया नियुक्तः कैकेय्या मम मात्रा परन्तप ॥ चकार सुमहत्पापमिदमात्मयशोहरम् ॥ ६ ॥
सा राज्यफलमप्राप्य विधवा शोककर्शिता ॥ पतिष्यति महाघोरे निरये जननी मम ॥ ७ ॥
तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ॥ अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ॥ ८ ॥

---

ब्दोवाक्यालंकारे ॥ ३१—३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीतांबराख्याने अयोध्याकाण्डव्याख्याने त्र्युत्तरशततमःसर्गः॥१०३॥

अथरामभरतयोरुक्तिप्रत्युक्तीचतुरुत्तरशततमे—तंत्वित्यादिना । गुरुवत्सलं गुरौस्वस्मिन् भक्तं । समाज्ञाय ज्ञात्वा प्राप्तराज्यपरित्यागेनजटावल्कलधारणादिनाचस्वस्मिन्भक्तियुक्तंज्ञात्वेत्यर्थः । समाश्वास्येति पाठे प्रियवचनादिभिः सम्यगाश्वास्येत्यर्थः ॥ १ ॥ यस्मात्कारणात् त्वं चीरजटाजिनीसन् इमंदेशमागतः एतत् एतत्कारणंकिं । अहंत्वयाप्रव्याहृतंश्रोतुमिच्छेयं श्रोतुमिच्छामि नतुऊहेयेतिभावः ॥ २ ॥ एवमुक्तेपि शोकेनतूष्णींस्थितंपुनःपृच्छति—किंनिमित्तमित्यादिश्लोकद्वयेन । काकुत्स्थेन बलवत्प्रगृह्य गाढंपरिष्वज्य तत्सर्वंवक्तुमर्हसीतिभूयउक्तः कैकयीपुत्रः प्राञ्जलिर्वाक्यमब्रवीदित्यन्वयः ॥ ३—४ ॥ सुदुष्करंकर्मकृत्वा ज्येष्ठार्हराज्यंस्त्रीनियोगात्कनिष्ठसात्कृत्वेत्यर्थः । आर्यं त्वां परित्यज्य विवास्य ॥ ५ ॥ सुमहत्पापं सुपुत्रस्य वनेप्रव्राजनरूपं ॥ ६ ॥ सा एवंरूपपापप्रेरणकर्त्री ॥ ७ ॥ तस्य कैकेयीसंबन्धात्प्राप्तापवादस्येत्यर्थः ।

---

**ति०** त्रयोऽग्नयः शत्रुघ्नस्याप्राधान्येनपरिहरणात् ॥ **स०** लक्ष्मणशत्रुघ्नयोरेकोदरजत्वाच्छत्रुघ्नस्यपृथगनुक्तिः ॥ ३२ ॥ इतित्र्युत्तरशततमस्सर्गः ॥ १०३ ॥

**ति०** एवंकचित्प्रश्नानन्तरंस्वस्यराजत्वाभावंसूचयित्वातुतदुत्तरमप्रयच्छन्तंभरतंप्रतिरामेणागमनप्रयोजनप्रश्नः **तंत्विति** । समाज्ञाय कुशलप्रश्नव्याजेनसर्वधर्मान्ज्ञापयित्वा ॥ १ ॥ **ति०** पूर्वंपृष्टमेवार्थं कस्तुतेऽभूत्पितेत्येवंरूपंभङ्ग्यन्तरेणपुनःपृष्टंज्ञात्वातदुत्तरमाह—**आर्येति** । परित्यज्य अस्मान्सर्वानिमंचलोकमितिशेषः । आर्यंपरित्यज्येतिपाठे विवास्येत्यर्थः । **स०** पुत्रशोकाभिपीडितः पुत्रोवनंगतइतिशोकेनाभिपीडितः । **शि० हे** आर्य स्त्रिया मत्पत्न्या । प्रार्थितयेतिशेषः । ममभात्राकैकेय्या नियुक्तः प्रार्थितः । तातः सुदुष्करंकर्मकृत्वा त्वांप्रव्राज्येत्यर्थः । परित्यज्य प्रकटायोध्यामितिशेषः । स्वर्गं अप्रकटसाकेतंगतः । अतस्साकैकेयी इदंमहत्पापं चकार । स्त्रियाप्रार्थितयेत्यनेन मन्थरामाण्डव्योरतिप्रीतिस्सूचिता । तेनमाण्डवीकर्तृकमेवेदंसर्वमितिसूचितं । श्लोकद्वयमेकान्वयि ॥ ५ ॥ **ति०** सुमहदितिपाठे सेत्यध्याहारः ॥ ६ ॥ **शि०** नरके नरोच्चारितनिन्दाशब्दे । पतिष्यति अपतत् । लृडपात्तभविष्यत्त्वस्याविवक्षा ॥७॥ **ति०** एवंपितृमरणेश्रुतेतदुचितकृत्येकृतेततःपरंयद्वक्तव्यंतत्संक्षेपेणाधुनैवब्रूतेभरतः—**तस्यम-**

**[ पा० ]** १ क. ग. च. सुहृद्भिस्तु. २ ङ. छ. झ. ट. विरेजिरेऽध्वरे. ३ अयंसर्गः ङ. च. झ. ञ. ठ. पुस्तकेषु १०१ तमसर्गतयादृश्यते. ४ ग. घ. समाश्वास्य. ५ घ. च. ञ. भरतं. ६ ख. ग. जटाधरः. ज. जटाजिनः. ७ ख. ग. ङ. छ.—ट. यन्निमित्तं. ८ ग. छ. झ. ट. आर्यतातः. ९ ङ. ट. सामहत्. १० क. ग. च. छ. झ. ञ. ट. नरके. ११ ख. राज्येस्मिन्ममराघव.

इमाः प्रकृतयः सर्वा विधवा मातरश्च याः ॥ त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥ ९ ॥
तदानुपूर्व्या युक्तं च युक्तं चात्मनि मानद ॥ राज्यं प्राप्नुहि धर्मेण सकामान्सुहृदः कुरु ॥ १० ॥
भवत्वविधवा भूमिः समग्रा पतिना त्वया ॥ शशिना विमलेनेव शारदी रजनी यथा ॥ ११ ॥
एभिश्च सचिवैः सार्धं शिरसा याचितो मया ॥ भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥१२॥
तदिदं शाश्वतं पित्र्यं सर्वं प्रकृतिमण्डलम् ॥ पूजितं पुरुषव्याघ्र नातिक्रमितुमर्हसि ॥ १३ ॥
एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः ॥ रामस्य शिरसा पादौ जग्राह विधिवत्पुनः ॥ १४ ॥
तं मत्तमिव मातङ्गं निःश्वसन्तं पुनः पुनः ॥ भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ १५ ॥
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ॥ राज्यहेतोः कथं पापमाचरेत्त्वद्विधो जनः ॥ १६ ॥
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ॥ न चापि जननीं बाल्यात्त्वं विगर्हितुमर्हसि ॥ १७ ॥
कामकारो महाप्राज्ञ गुरूणां सर्वदाऽनघ ॥ उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १८ ॥
वयमस्य यथा लोके संख्याताः सौम्य साधुभिः ॥ भार्याः पुत्राश्च शिष्याश्च त्वमनुज्ञातुमर्हसि ॥१९॥
वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरम् ॥ राज्ये वाऽपि महाराजो मां वासयितुमीश्वरः ॥२०॥

राज्येन हेतुना ॥ ८—९ ॥ आनुपूर्व्यायुक्तं ज्येष्ठानुक्रमेणसंगतं । आत्मनियुक्तंच भरणसमर्थेत्वय्येवप्राप्तं ॥ १० ॥ पतिनेति नाभावआर्षः । रजनीयथा रजनीव । भूमिः शशिनेवत्वया अविधवाभवतु ॥ ११ ॥ एभिः ममैकस्यशोकाश्रुपातमसहमानः कथमेषामश्रूणिसहिष्य तइतिमत्वायुद्धायसंनद्धैरिवरथगजतुरगपदातिभिः सार्धमागतोस्मि । सचिवैः ममह्रियाचनमुपेक्ष्यं अस्मद्राज्यनिर्वाहकैःपूजनीयैःसचिवैर्याचितंतवानतिक्रमणीयंहि । याचितः ममाग्रतःस्थितिरेवालंतव कार्यकरणाय किंपुनर्याचनेपिकृते । शिरसायाचितः शिरसायाचतस्तस्यवचनंनकृतंमयेतिखलु तवहृदयमनुशेते । मया एतावत्पर्यन्तंत्वमेवमांयाचित्वाममनोरथंपूरितवानसि । भ्रातुः किमर्थयाचितव्यंतवानुजो नभवामिकिं । शिष्यस्य अनुजोभूत्वाभवतासहकिमंशभाक्तिष्ठामि मन्त्रसंबन्धोपित्वत्तःखलु । दासस्य शिष्योभूत्वाक्रयविक्रयार्होनभवामिकिं । अतःप्रसादं कर्तुमर्हसि उच्चैरमोघैः हेतुभिर्ममयाच्ञांसफलांकुरुष्व ॥ १२ ॥ एभिश्चसचिवैरित्यस्यविवक्षितंदर्शयति— तदिति । तत् पुरवर्तनदशायामसन्निहितं । इदं इदानींसन्निहितं । शाश्वतं सनातनं परम्पराप्राप्तमितियावत् । पूजितं पूजार्हं । प्रकृतीनांमन्त्रिप्रभृतीनांमण्डलं समूहं । नातिक्रमितुमर्हसि तद्वचनंनातिक्रमणीयमित्यर्थः ॥ १३ ॥ महाबाहुः प्रसारितबाहुरितियावत् । कैकयीसुतः मातुर्दोषादियमवस्थेतिभावः । पुनरिति पूर्वयाचितवान् ततःशरणागतिमकरोदित्यर्थः ॥ १४—१५ ॥ कुलीनः महाकुलप्रसूतः । सत्त्वसंपन्नः सत्त्वगुणसंपन्नः । पापं ज्येष्ठविषयप्रातिकूल्यरूपं ॥ १६ ॥ बाल्यात् अज्ञानादित्यर्थः ॥ १७ ॥ कामकारः स्वच्छन्दकरणं । उपपन्नेषु शिष्यदासादिषु ॥ १८ ॥ लोकेभार्यादयः साधुभिर्यथासंख्याताः नियाम्यत्वेनपरिगणिताः । वयमपि तथादशरथस्येति त्वंज्ञातुमर्हसि । अनुर्निरर्थकः ॥ १९ ॥ चीरंद्रुमवल्क-

इति । स० मे मयि ॥ ८ ॥ स० प्रकृतयः सप्तप्रधानपुरुषाः ॥ ९ ॥ ति० यतश्च त्वं आनुपूर्व्या ज्येष्ठत्वलक्षणया । युक्तः यतश्च आत्मनि त्वयि । अभिषेचनंयुक्तं । तस्माद्धर्मेणराज्यंप्राप्नुहि ॥ १० ॥ स० भूमिः अविधवा यथा सम्यक् भवतु । पतिनेत्यार्षः । लाक्षणिकोवापतिशब्दः । शारदी शरत्कालसंबन्धिनीरजनी । शशिनेव । यथेत्यस्यसम्यगित्यर्थकत्वंतु "निवृत्तिमार्गःकथितआदौभगवतायथा" इतियथेतिसुधोक्तेर्ज्ञेयं ॥ यद्वा शशिनोनिष्कलङ्कत्वरूपविमलत्वस्यकाप्यभावात्संपूर्णकलत्वेनविमलवद्विद्यमानेनशशिनारजनीयथातथेत्यर्थः ॥ ११ ॥ शि० यदित्वत्सदृशोनाचरेत्तर्हित्वंनाचरेरितिकिंवक्तव्यमितिकाव्यार्थापत्तिरलङ्कारो ध्वनितः । एतेनत्वयिराज्याकाङ्क्षानास्तीत्यस्माभिर्ज्ञातमितिसूचितं ॥ १६ ॥ ती० गुरूणां महतां । उपपन्नेषु युक्तेषु । संमतेष्वित्यर्थः । महान्तोप्यभिमतदारादिषुस्नेहंकुर्वन्तीतिभावः । ति० गुरूणां पित्रादीनां । कामकारः स्वच्छन्दाचरणमित्यर्थः । स्वेच्छा-

[ पा० ] १ ङ. ट. तथा. २ ङ. छ. झ. ञ. ट. युक्तश्च. ३ क. ङ. च. छ. झ. ट. सचिवमण्डलं. ४ क. ङ. च. छ. झ. ञ. ट. भरतःपुनः. ५ ङ. सत्यसंकल्पः. ६ क. ङ. च. छ. झ. ञ. माचरेन्मद्विधो. ७ क. तव. ८ ख. ग. ज. सर्वथा. ९ ख. भार्यापुत्रश्चशिष्यश्च. १० क.—ठ. त्वमपि. ११ ज. सौम्यवसनंचीरकृष्णा. १२ क. चापि. १३ ग. महाबाहो.

यावत्पितरि धर्मज्ञे गौरवं लोकसत्कृतम् ॥ तावद्धर्मभृतांश्रेष्ठ जनन्यामपि गौरवम् ॥ २१ ॥
एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ॥ मातापितृभ्यामुक्तोऽहं कथमन्यत्समाचरे ॥ २२ ॥
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ॥ वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २३ ॥
एवं कृत्वा महाराजो विभागं लोकसंनिधौ ॥ व्यादिश्य च महातेजा दिवं दशरथो गतः ॥ २४ ॥
स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ॥ पित्रा दत्तं यथा भागमुपभोक्तुं त्वमर्हसि ॥ २५ ॥
चतुर्दशसमाः सौम्य दण्डकारण्यमाश्रितः ॥ उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना ॥ २६ ॥
यदब्रवीन्मां नरलोकसत्कृतः पिता महात्मा विबुधाधिपोपमः ॥
तदेव मन्ये परमात्मनो हितं न सर्वलोकेश्वरभावमप्यहम् ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुरुत्तरशततमः सर्गः ॥१०४॥

---

## पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

भरतेनरामंप्रतिपित्रास्वस्मैराज्यदानेपिकैकेय्यनुमत्यास्वेनतस्मैराज्यदानोक्तिपूर्वकंतत्स्वीकारप्रार्थना ॥ १ ॥ रामेणस्ववनगमनस्यात्महेतुकत्वज्ञानेनदूयमानंभरतंप्रतिशास्त्रार्थोपन्यासेनसमाश्वासनपूर्वकंराज्यपालनचोदना ॥ २ ॥

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ॥ शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥ १ ॥

---

लंवसनमुत्तरीयंयस्यतं । कृष्णाजिनं अम्बरं अधराम्बरं यस्यतं । ईश्वरः नियन्ता ॥ २० ॥ पितरि यावत् यत्परिमाणकंगौरवं । जनन्यामपि तावत् तत्परिमाणकंगौरवं कर्तव्यमितिशेषः । यत्तच्छब्दाभ्यां "यत्तदेतेभ्यःपरिमाणेवतुप्" इतिवतुप् ॥ २१ ॥ फलितमाह—एताभ्यामिति । समाचरे समाचरामि कथं समाचराणीत्यर्थः ॥ २२—२४ ॥ पित्रादत्तंभागं यथा यथावत् । उपभोक्तुमित्यन्वयः ॥ २५—२६ ॥ परमात्मनोहितं आत्मनःपरंहितं ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

---

अथपुनर्भरतस्यकैकेयीनिर्बन्धकृतपितृनियोगपरिहारोचितवचनपूर्वकंप्रार्थनंरामस्यचतत्समाश्वासनंतत्त्वोपदेशेनेत्येतत्पञ्चोत्तरशततमे—ततःपुरुषसिंहाना-

---

वियोजनमितियावत् ॥ १८ ॥ स० एवंविभागं तद्बोधकवाक्यं ॥ २४ ॥ ति० यथाभागं पितृकल्पितचतुर्दशवर्षपर्यन्तं । अनेन तदनन्तरमहंभोक्ष्यामीतिसूचितं । मात्रापि चतुर्दशवर्षपर्यन्तंवनवासएववृतः नतुसर्वथामेराज्यत्यागः पित्रापि तावदेवानुमतमितिभावः ॥२५॥ ती० ननु "आर्यंतातःपरित्यज्यकृत्वाकर्मसुदुष्करम् । गतस्स्वर्गंमहाबाहुःपुत्रशोकाभिपीडितः" इति "इमाःप्रकृतयस्सर्वाविधवामातरश्चयाः । त्वत्सकाशमनुप्राप्ताः" इतिभरतेनोक्ते रामस्तदानीमशोचंस्तदुल्लंघ्याभिषेकप्रत्याख्यानमेवकिमितिकृतवान् । नैषदोषः तस्मिन्भरतवाक्यप्रबन्धेपितृमरणमानुषङ्गिकत्वेनोक्तं प्राधान्येनराज्यस्वीकरणमेवोच्यते । अतोरामस्तदेवंमन्यते पितापुत्रशोकेनमृतकल्पोनपुनर्जीविष्यतीतिमृतइत्युच्यते । मातरश्च विधवाकल्पाइतिविधवाइत्युच्यन्ते । अनेनममाभिषेकवचनमेवप्राधान्येनोच्यतइत्यशोचन्नभिषेकप्रत्याख्यानंकृतवान् । स्ववाक्येपिपितृमरणानुवादस्यचायमेवपरिहारः ॥ ति०पितामहात्मा ब्रह्मणातुल्यः । अव्ययं सर्वलोकेश्वरत्वं ब्रह्मत्वं पित्रननुमतमितिशेषः । नहितमित्यन्वयः । ननुपितृमरणश्रवणोत्तरंशोकमुल्लङ्घ्याभिषेकप्रत्याख्यानमेवकुतइतिचेच्छृणु । भरतस्याभिषेककरणप्रत्याशावारणायकैकेय्यालोकानांचान्यथासंभावनावारणायशोककालेपिधैर्यमवलंब्यतत्करणं शोककालेप्येवंधैर्यंकर्तव्यमितिलोकोपदेशायेतिममप्रतिभाति ॥ कतक० गतस्स्वर्गमितिभरतेनोक्ते पितृमरणोचितसर्वकार्यकरणेकृते भरतः "तस्यमे" इत्याद्युक्तवान् । कविस्तु संक्षेपेणादावुक्त्वाऽग्रेविस्तरेणवदतीतिप्रायःकवेस्स्वभावः ॥२७॥ इतिचतुरुत्तरशततमस्सर्गः ॥ १०४ ॥

शि०शोचतां रामानयनोपायंचिन्तयतामित्यर्थः ॥ १ ॥

[ पा० ] १ क. ख. ग. ङ. छ. झ. ञ. ट. धर्मज्ञ. २ क. ख. ङ. च. छ. झ. ञ. ट. सत्कृते. ३ ङ. च. छ. झ. ञ. ट. कृतां. ४ ङ. संमतं. ५ ख. ग. ङ. छ. झ. ट. एवमुक्त्वा. ६ ग. महाभागो. ७ क. च. ञ. महाभागोदिवं. ८ क. धर्मज्ञ. ९ ट. चयद्दत्तं. ग. तुतद्दत्तं. ख. तुमेदत्तं. १० घ. पित्राभागं. ११ ग. चिरमात्मनो. १२ ङ. झ. ट. मव्ययं.

रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ॥ मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥ २ ॥
तूष्णीं ते समुपासीना न कश्चित्किंचिदब्रवीत् ॥ भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ ३ ॥
सान्त्विता मामिका माता दत्तं राज्यमिदं मम ॥ तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ ४ ॥
महतेवाऽम्बुवेगेन भिन्नः[1] सेतुर्जलागमे ॥ दुरावारं त्वदन्येन राज्यखण्डमिदं महत् ॥ ५ ॥
गतिं खर इवाश्वस्य ताक्ष्यस्येव पतत्रिणः ॥ अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥ ६ ॥
सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते ॥ राम तेन[2] तु दुर्जीवं यः परानुपजीवति ॥ ७ ॥
यथा[3] तु रोपितो वृक्षः पुरुषेण विवर्धितः ॥ ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥ ८ ॥
स यथा[4] पुष्पितो भूत्वा फलानि न विदर्शयेत् ॥ स तां नानुभवेत्प्रीतिं यस्य हेतोः प्ररोपितः[5] ॥९॥

मित्यादि ॥ १ ॥ हुतं होमं ॥ २—३ ॥ दत्तमन्यथयितुमशक्तोहमितिरामोवदेदितिमत्वातस्यपरिहारानुगुणंवचनमाह—सान्त्वितेति । ममेयंमामिका शैषिकोण् । "तवकममकावेकवचने" इत्यण् । सन्नियोगेनास्मच्छब्दस्यममकादेशः आदिवृद्धिश्च । "प्रत्ययस्थात्—" इत्यत्रमामकनरकयोरुपसंख्यानात्ककारात्पूर्वस्याकारस्येकारः । मातृविरोधे नस्वीकुर्यादितिमत्वाह—सान्त्वितेति । दत्तस्यान्यथाकरणमनुचितमितिरामोवदेदितिपरिहरति—दत्तमिति । त्रयएवाधनाइतिन्यायेनदासस्यस्वंत्वदीयमिति ददामीत्यर्थः ॥ ४ ॥ त्वमेवराज्यंरक्षेत्याशङ्क्याह—महतेति । जलागमेति । जलागमे वर्षाकाले । दुरावारं आवरीतुमशक्यं । राज्यखण्डं नवखण्डेषुभरतखण्डाख्यं राज्यं कोसलराज्यखण्डंवा ॥ ५ ॥ राज्यस्यदुरावारत्वमुक्त्वास्वस्याशक्तिमाह—गतिमिति । खरेत्यविभक्तिकनिर्देशः खरस्येत्यर्थः । प्रकृतिभावआर्षः । पतत्रिणः पक्षिमात्रस्य । अश्वस्यगतिमनुगन्तुंखरस्ययथा नशक्तिः गरुडस्यगतिमनुगन्तुंकेवलपक्षिणोयथाचशक्तिर्नास्ति तथेत्यर्थः ॥ ६ ॥ तवशक्तिर्नास्तिचेदन्यः कश्चिद्राज्यंरक्षत्वित्यत्राह—सुजीवमिति । नित्यशः नित्यं ॥ ७ ॥ उचितंचत्वद्रक्षणमेवेत्याह—यथेत्यादिना । श्लोकत्रयमेकान्वयं । यथात्वितिनिपातसमुदायोय मुदाहरणोपक्रमद्योतनार्थः । केनचित्पुरुषेण रोपितः बीजावापेनोत्पादितः योवृक्षः पुत्रःसंवर्धितः । ह्रस्वकेन वामनेन । दुरारोहः क्रमेणरूढस्कन्धः । महाद्रुमोजातः सयथापुष्पितोभूत्वा फलानिनविदर्शयेत् सरोपयिता यस्यफलस्य हेतोः हेतुना । तंवृक्षंरोपितवान् तां फलविषयिणीं । प्रीतिं नानुभवेत् । विनयेनप्रत्येकंवक्तुमशक्तःसमुदायरूपेणदर्शयति । भर्तात्वमस्मान्भृत्यान् नशाधि यदि एषोपमेति एषा पूर्वोक्तमर्थजातमुपमा । उपमाशब्दापेक्षयास्त्रीलिङ्गत्वं । रोपयिता अभिवृद्धोवृक्षः पुष्पदर्शनंफलादर्शनंचोपमेत्यर्थः । तमर्थमुपमेयमर्थजातंवेत्तुमर्हसि भावज्ञानकुशलःखल्वसीत्यर्थः । रोपयितुर्दशरथउपमेयः । वर्धितमहावृक्षस्यभवान् पुष्पदर्शनस्याभिषेचनौन्मुख्यंफलाननुभवस्यभवतोराज्यापरिपालनमित्येतत्सर्वंत्वंजाना-

ति० मन्दाकिन्यांतत्तीरे । ति० द्वारमितिपाठे उटजद्वारमित्यर्थइतिकेचित् । तन्न उत्तरसर्गेमन्दाकिनीतीरेराममुवाचेत्युक्तेः । तस्माद्राममितिपाठेरामाधिष्ठितनदीमित्यर्थउचितः ॥ २ ॥ ति० माता कैकेयी प्रथमंराज्ञा राज्यदानेनसान्त्विता कृताश्वासा । अनन्तरं या ममेदंराज्यंदत्तं तद्राज्यमकण्टकं उक्तप्रकारेणपितृवचनस्यापिपरिपालनात्प्रत्यूहरहितं ॥४॥ ति० अश्वगतिमनुगंतुंखरोयथानशक्तः ताक्ष्यगत्यनुगमनेयथेतरपक्षिणोनशक्ताः तथातवगतिंत्वदीयांराज्यपालनशक्तिमनुगंतुंमेनशक्तिः इवशब्दोयथार्थे । निपातानामनेकार्थत्वात् । शि० तवगतिंसामर्थ्यमित्यर्थः ॥ ६ ॥ ति० यःपरैर्नित्यशउपजीव्यते तस्यसुजीवं शोभनंजीवनमित्यर्थः । भावघञन्तंक्लीबमपिक्वचित् । "घञजपाःपुंसि" इतितुप्रायिकमितिबोध्यं । तस्येत्यर्थेतेनेत्यार्षं । दुर्जीवं दुःखंजीवनं । तस्मात्तवराज्यकरणमेवोचितमिति भावः । स० यः परैरुपजीव्यते तस्यजीवं सुजीवं । दुर्जीवं । "ईषद्दुस्सुषु—" इत्यादिनाखल् । तादृशंदुर्जीवं ते तव नतु माभूत् ॥ ७ ॥ ती० लोकरक्षणार्थंदशरथेनोत्पाद्यवर्धितस्सकलसद्गुणसंपन्नस्त्वं यदिलोकरक्षणंनकुर्यास्तदातस्यलोकस्यदशरथस्यचत्वयानप्रयोजनमित्यस्योपदेशमुखेनफलादर्शनवृक्षौपम्यमाह—**यथात्वित्यादिश्लोकत्रयेण** ॥८॥ ति० प्रभावितः उत्पादितः । यत्र रक्षण-

[ पा० ] १ ङ. ज. भिन्नसेतुः. २ क. घ. च. ञ. तस्य. ३ ङ. यथात्वारोपितो. ४ क. ग. ङ. च. छ. झ. ञ. ट. यदा. ५ क. ग. घ. ज. झ. ञ. प्रभावितः. ख. सरोपितः.

एषोपमा महाबाहो तमर्थं वेत्तुमर्हसि ॥ यदि त्वमस्मान्वृषभो भर्ता भृत्यान्न शाधि हि ॥ १० ॥
श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ॥ प्रतपन्तमिवादित्यं राज्ये स्थितमरिंदमम् ॥ ११ ॥
त्वयाऽनुयाने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः ॥ अन्तःपुरगता नार्यो नन्दन्तु सुसमाहिताः ॥ १२ ॥
तस्य साध्वित्यमन्यन्त नागरा विविधा जनाः ॥ भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥ १३ ॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् ॥ रामः कृतात्मा भरतं समाश्वासयदात्मवान् ॥ १४ ॥
नात्मनः कामकारोस्ति पुरुषोऽयमनीश्वरः ॥ इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ १५ ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥ संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥१६॥
यथा फलानां पक्कानां नान्यत्र पतनाद्भयम् ॥ एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ १७ ॥
यथाऽगारं दृढस्थूणं जीर्णं भूत्वाऽवसीदति ॥ तथैव सीदन्ति नरा जरामृत्युवशंगताः ॥ १८ ॥

सीत्यर्थः । एतत्सर्वं महाबाहोइत्यनेनसूचितम् ॥ ८—१० ॥ श्रेणयः पौरश्रेणयः । अग्र्याः प्रधानाः ॥ ११—१३ ॥ दुःखितं स्वप्रार्थनानङ्गीकारेणदुःखितं । विलपन्तं ममहेतोरार्यविवासनंपितुर्मरणमित्यादि जातमितिप्रलपन्तं । कृतात्मा सुशिक्षितबुद्धिः धैर्यवान्वा ॥ १४ ॥ कैकेयीप्रेरितोराजाभवांश्चनमद्वनवासहेतुः किन्तुदैवमेवेतितत्त्वदृष्ट्याभरतंदुःखान्निवर्तयितुमुपक्रमते—नात्मनइत्यादि । आत्मनः पुरुषस्य । कामकारः ऐच्छिकव्यापारोनास्ति । यतोयंपुरुषः अनीश्वरः अस्वतन्त्रइत्यर्थः । इतश्च एतस्माद्देशाद्देशान्तरं । इतरतः अन्यद्देशाच्च एनंदेशं कृतान्तः स्वतन्त्रदैवमेव परिकर्षति आकर्षति । "दैवेकृतान्तःसिद्धान्तेयमाकुशलकर्मणोः" इतिवैजयन्ती । यथोक्तं भगवतागीताचार्येण "ईश्वरःसर्वभूतानांहृद्देशेऽर्जुनतिष्ठति। भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया" इति ॥ १५ ॥ अपरिहरणीयवस्तुस्वभावपर्यालोचनायांपितृमरणेनापिशोकस्यावकाशोनास्तीत्यमुमर्थमाह—सर्वइति । निचयाः धनसंचयाः सर्वेबहुशःसंपादिताअपि क्षयान्ताः क्षयपर्यवसायिनः । चोरेण कामेन राज्ञावा नश्यन्तीत्यर्थः । समुच्छ्रयाः अत्यन्तसमुन्नताअपि । पतनान्ताः अत्युन्नतपदस्थिता ब्रह्मेन्द्रादयोपि स्वस्वाधिकारसमाप्तिदशायांतत्पदभ्रंशपर्यवसायिनइतियावत् । संयोगाः पुत्रमित्रकलत्रादिसंबन्धाअपि । विप्रयोगान्ताः विरहपर्यवसायिनः । जीवितंच उत्कृष्टजीवनमपि । मरणान्तं अपरिहार्यमरणाधीनभङ्गशालीत्यर्थः । पितृमरणशोकेनैवमुच्यते भरतेनेत्यारोप्य तदपनोदनंकृतमस्मिञ्श्लोकेपादत्रयोक्तार्थत्रयंदृष्टान्तार्थं । तुरीयपादश्चदार्ष्टान्तिकंदशरथमरणमभिप्रैति । अतः अपरिहार्यकालकृतत्वात्पितृमरणमपिनशोचनीयमितिभावः ॥ १६ ॥ प्रथमश्लोके वनगमनंनमयास्वतन्त्रेणकृतमपित्वीश्वरकृतमित्युक्तं । द्वितीयश्लोकेदशरथमरणंचकालकृतमतस्तत्रापिनशोचनीयमित्युक्तं । अथद्वितीयश्लोकोक्तंसदृष्टान्तंप्रपञ्च-

काले । शि० यस्यहेतोः प्ररोपितः तस्याभावादितिशेषः ॥ ९ ॥ वृषभः सर्वश्रेष्ठः भर्ता त्वं अस्मान्भृत्यान्नशाधि तदा एषातवोपमा । तत्तस्माद्धेतोः तदर्थं राज्यरूपार्थं । वेत्तुं लब्धुं । अर्हसि "वृषभःश्रेष्ठवृषयोः" इतिमेदिनी ॥ १० ॥ स० श्रेणयः नानाजनसंघाः ॥ ११ ॥ ति० तस्यवचः साध्विति अनुमन्यन्तेतियोजना । अन्वमन्यन्तेत्यर्थः ॥ १३ ॥ शि० कृतात्मा कृतः आत्मा वनगमनायप्रयत्नोयेनसरामः ॥ १४ ॥ स० कृतान्तोदैवं । इतः एतल्लोकादेहाद्वा । इतरतः लोकान्तरादपि परिकर्षति कर्मफलमनुभावयति ॥ १५ ॥ शि० मुख्यंदुःखंमरणदुःखमितितस्यैवप्रतिक्रियाविचारणीयेतिबोधयन्नाह—यथेति । यथापक्कानांफलानां तालादिजन्यानांपतनादन्यत्र अन्यस्मिन्काले भयं काकादिपक्षिभक्षणभीतिर्नास्ति । तथा जातस्यनरस्य मरणात् मर्त्यलोकादन्यत्रभयंनास्ति । एतेन मर्त्यलोकादन्यत्रनयनेयत्नःकर्तव्यइतिसूचितम् । स० मरणादन्यत्र अन्यस्मान्नभयं ॥ १७ ॥

[ पा० ] १ ङ. छ. झ. ञ. ट. तदर्थं. २ क. ख. ङ.—ट. यत्र. ३ च. ञ. भृत्यान्भर्तॄन्. क. भृत्यान्भक्तान्न. ४ ग. छ. झ. ट. राज्यस्थित. ५ ङ. तातानु. छ. झ. तवानु. ६ च. ञ. चरा. ७ ङ. च. छ. झ. ञ. ट. साध्वनुमन्यन्त. ८ घ. वीक्ष्य. ९ ङ. छ. झ. ट. कामकारोहि. १० घ. मरणान्तंतु. ११ ग. ङ. छ. झ. ट. भूलोप. १२ क. ख. ङ. च. छ. झ. ञ. ट. तथाव.

अ[1]त्येति रजनी या तु सा न प्रतिनिवर्तते ॥ यात्येव यमुना पू[2]र्णा स[3]मुद्रमुदकाकुलम् ॥ १९ ॥
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ॥ आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ २० ॥
आत्मानमनुशोच त्वं किमन्यमनुशोचसि ॥ आ[4]युस्ते हीयते यस्य स्थि[5]तस्य च गतस्य च ॥ २१ ॥
सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ॥ गत्वा सु[6]दीर्घमध्वानं सह मृत्युर्निवर्तते ॥ २२ ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ॥ जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥२३॥
नन्दन्त्युदित आदित्ये नन्दन्त्यस्त[7]मिते रवौ ॥ आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥२४॥
हृष्यन्त्यृतुमुखं दृष्ट्वा नवंनवमिहागतम् ॥ ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ २५ ॥
यथा काष्ठं च काष्ठं च समेयातां महार्णवे ॥ समेत्य च व्यपेयातां कालमासाद्य कंचन ॥ २६ ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च ध[8]नानि च ॥ समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २७ ॥
नात्र कश्चिद्यथाभावं प्राणी स[9]मभिवर्तते ॥ तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ २८ ॥

यतियथेत्यादिना ॥ १७—१८ ॥ समुद्रस्योदकाकुलत्वविशेषणं यमुनायाःसर्वथाऽनिवर्त्यत्वाय ॥ १९ ॥ गच्छन्तीतिप्रथमाबहुवचनमहोरात्रविशेषणं । अंशवः सूर्यस्येतिशेषः ॥ २० ॥ शोकविषयंनिर्धारयति—आत्मानमिति । आयुस्ते यतोहीयते अतःपरलोकचिन्तामेवकुर्वित्यर्थः ॥ २१ ॥ मृत्युःसर्वथादुष्परिहरइत्याह—सहैवेति ॥ २२ ॥ कालान्तरेतथैवकरिष्यामीत्यत्राह—गात्रेष्वित्यादिना । तस्माद्बाल्यएवआत्मज्ञानाययतेतेत्युक्तंभवति। किंहिकृत्वा पूर्वोक्तोपद्रवपरिहारत्वेनकमुपायंकृत्वा आत्मानंप्रभुंकुर्यादित्यर्थः ॥२३॥ बाल्येपिपुरुषाणांविवेकोदुर्लभइत्याह—नन्दन्तीत्यादिना । आदित्येऽदितेनन्दन्ति अर्थार्जनकालोयमागतइति । रवौ अस्तमितेपिनन्दन्ति कामोपभोगकालोयमागतइति । आत्मनोजीवितक्षयंनावबुध्यन्ते सच्छिद्रघटेगृहीतंजलमिवप्रतिक्षणमायुःक्षीयतइतिनजानन्ति । जीवितकालएवपरलोकहितंकर्तुंनेच्छन्तीत्यर्थः ॥ २४ ॥ तत्तदृत्वागमंदृष्ट्वा नानाभोगहेतुरितिहृष्यन्ति । प्रत्युतऋत्वागमोऽनर्थहेतुरित्याह—ऋतूनां परिवर्तेनेति ॥ २५ ॥ श्लिष्टानांविश्लेषस्यावश्यंभावित्वात्तदपिनशोचनीयमित्यभिप्रायेणाह—यथाकाष्ठमितिश्लोकद्वयेन । विनाभवः वियोगः ॥२६—२७॥ अस्मिँल्लोकेकश्चिदपिप्राणी यथाभावंनसमभिवर्तते यथाभिलाषंबन्धुभिःसहनवर्तते । तेनकारणेन प्रेतस्य मृतस्यहेतोः । अनुशोचतः पुरुषस्य तस्मिन् मरणनिवारणे । सामर्थ्यंनास्ति । [ अस्मिन्बद्धलोकेकश्चिदपि ब्रह्मादिस्तम्बपर्यन्तेषुकोपिजन्तुः । यथाभावं यथाभिलाषं । अप्रतिहतसंकल्पतयेत्यर्थः । नसमभिवर्तते । कश्चिदित्यनेन मानुषाद्यपेक्ष्याचिरकालवर्तिनां शक्त्यतिशयभाजामपिब्रह्मादीनामधिकारावसाने मरणं दुर्निवारमेवेत्याशयः । तेन एवमप्रतिहतसंकल्पत्वाभा-

**रामानुजीयं** । समुद्रंलवणार्णवमितिपाठस्सम्यक् । **ति०** अतीतरजन्यप्रतिनिवृत्तौदृष्टान्तोयमुनायात्येव नप्रतिनिवर्ततइत्यर्थः । उदकार्णवमित्यत्रोदकपदमधिकं। **स०** समुद्रंयथाभवतितथा सचिह्नमितितदर्थः । उदकार्णवमितिदध्यादिसमुद्रव्यावृत्त्यर्थं ॥ १९ ॥ **ति०** गच्छन्तीतिशत्रन्तं । आशयेइतिपाठेजलाशयइत्यर्थः ॥ २० ॥ **ति०** आयुस्तु यस्य यस्यकस्यापीत्यर्थः । **ती०** आत्मानमनुशोच नश्वरफलसाधनेषुव्यापृतंत्वामेवानुशोचेत्यर्थः । **स०** आत्मानमनुशोच आयुर्गच्छतिश्रेयस्साधनंकिंमयाकार्यमितिचिन्तय । **शि०** स्थितस्य कदाचिदिहलोकेविद्यमानस्य । गतस्य कदाचिद्देवलोकंप्राप्तस्यचयस्यप्राकृतजनस्य आयुर्हीयते तमात्मानंशरीरिणं । अनुशोच तद्दुःखनिवर्तकयत्नंकुर्वित्यर्थः । अन्यं प्राकृतविलक्षणं मां । किं किमर्थमनुशोचसि ॥ २१ ॥ **ति०** **सहेति** । अन्तर्यामिणएवमृत्युरूपत्वात् । अतोपरिहार्यस्सइतिभावः ॥ २२ ॥ **स०** वलयः जराज्ञापकाङ्गशैथिल्यानि । **ति०** यद्वा किंकृत्वा कमुपायंकृत्वा । एतत्सर्वपरिहारेसमर्थोभवेदित्यर्थः । **शि०** वलयः जराकृताकारविशेषाः । किंकृत्वाप्रभावयेत् । एतेनास्मत्प्रयत्नमन्तरामृत्युनिवृत्तिर्नभवितेतिसूचित्तं ॥ २३ ॥ **ति०** आत्ममुखमितिपाठे स्वस्वाभिमुखमृतूनांपरिवर्तंदृष्ट्वा हृष्यन्तीत्यर्थः ॥ २५ ॥ **ति०** अत्र संसारे । कश्चिदपिप्राणी यथाभावं यथाप्राप्तंस्वभावंमृतिजनिलक्षणं । नसमतिवर्तते नलङ्घयति ।

**[ पा० ]** १ ङ. अतीता. २ ङ. छ. झ. ञ. ट. पूर्णं. ३ घ. ज. समुद्रंलवणार्णवं. क. ख. ग. ङ. च. छ. झ. ञ. ट. समुद्रमुदकार्णवं. ४ छ. झ. ट. आयुस्तु. ५ छ. झ. ट. स्थितस्याथ. ख. ग. स्थितस्यापि. ६ ख. सुदूरं ग. ञ. सदीर्घं. ७ छ. झ. ट. मितेऽहनि. क. च. ञ. मितेऽपिच. ८ क. ख. ङ. च. छ. झ. ञ. ट. वसूनि. ९ ङ. छ. झ. ट. समतिवर्तते.

यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ॥ अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥२९॥
एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः ॥ तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ ३० ॥
वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः ॥ आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥३१॥
धर्मात्मा स शुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ॥ धूतपापो गतः स्वर्गं पिता नः पृथिवीपतिः ॥३२॥
भृत्यानां भरणात्सम्यक्प्रजानां परिपालनात् ॥ अर्थादानाच्च धर्मेण पिता नस्त्रिदिवं गतः ॥ ३३ ॥
कर्मभिस्तु शुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः ॥ स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः ॥ ३४ ॥
इष्ट्वा बहुविधैर्यज्ञैर्भोगांश्चावाप्य पुष्कलान् ॥ उत्तमं चायुरासाद्य स्वर्गतः पृथिवीपतिः ॥ ३५ ॥
आयुरुत्तममासाद्य भोगानपि च राघवः ॥ स न शोच्यः पिता तातः स्वर्गतः सत्कृतः सताम् ॥ ३६ ॥
स जीर्णं मानुषं देहं परित्यज्य पिता हि नः ॥ दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥ ३७ ॥
तं तु नैवंविधः कश्चित्प्राज्ञः शोचितुमर्हति ॥ तद्विधो यद्विधश्चापि श्रुतवान्बुद्धिमत्तरः ॥ ३८ ॥
एते बहुविधाः शोका विलापरुदिते तथा ॥ वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३९ ॥

वेन । प्रेतस्य मृतस्यहेतोः । अनुशोचतःपुरुषस्य तस्मिन्मरणनिवारणेसामर्थ्यंनास्ति । अतः ब्रह्मादीनामप्यपरिहार्येशोकंविहायसर्वानर्थनिवृत्तयेप्रयतेतेति भावः ] ॥ २८ ॥ यथेत्यादिश्लोकद्वयं । गच्छन्तंसार्थं पथिकसमूहं । पथिस्थितःपुरुषोयथा अहमप्यागमिष्यामीतिब्रूयादनुगच्छतिच । एवं पूर्वैर्वंश्यैः गतः प्राप्तोमार्गः । पितृपैतामहः पितृपितामहसंबन्धी । तैरपिप्राप्तइतियावत् । ध्रुवः पुत्रादिभिरपिगन्तव्यत्वेन निश्चितः ॥ २९—३० ॥ उक्तमर्थमुपसंहरति—वयसइत्यादिना । "यस्यचभावेनभावलक्षणं" इतिसप्तम्यर्थेषष्ठी । वाशब्दइवार्थः । अनिवर्तिनिस्रोतसीव वयसिपतमाने अनिवर्तितयागच्छतिसति । आत्मा सुखे सुखहेतौधर्मे । नियोक्तव्यः परलोकहितचिन्तयेतिशेषः । यतः प्रजाः सुखभाजः धर्मसाध्यसुखासक्ताः स्मृताइतियोज्यं ॥ ३१ ॥ एवंलोकस्थितिः अस्मत्पितरंप्रतितु नशोकगन्धोपिकार्यइत्याशयेनाह—धर्मात्मेत्यादिना ॥ ३२ ॥ धर्मेण अर्थादानात् धर्मेणकरादिग्रहणात् ॥ ३३ ॥ इष्टैः जनानांस्वस्यचाभिमतैः । शुभैःकर्मभिः महापथेषुतटाकनिर्माणादिभिः ॥ ३४—३५ ॥ उत्तमं तत्पूर्वराजायुरपेक्षया अधिकतमं । आयुः भोगानपिचासाद्यस्वर्गतः सतांसत्कृतः सपिता नशोच्यइत्यन्वयः ॥ ३६ ॥ दैवीमृद्धिं देवसंबन्धिसंपदं दिव्यदेहादिलाभरूपामित्यर्थः ॥ ३७ ॥ एवंविधः प्राज्ञइति भरतगुणंप्रत्यक्षेणनिर्दिशति । एवंविधइत्युक्तमुद्धाटयति—तद्विधइति । श्रुतवान् बुद्धिमत्तरश्च यद्विधोसि तद्विधइत्यर्थः ॥ ३८ ॥ बहुविधाः दशरथमरणमद्विवासनादिभेदेनबहुप्रकाराः । विलापरुदिते प्रलापाश्रुमोचनेच । वर्जनीयेइतिविपरिणामेना-

तेनहेतुना प्रेतस्य संबन्धसामान्येषष्ठी । प्रेतमनुशोचतोस्य तस्मिन् स्वीयप्रेतभावनिवर्तने । सामर्थ्यंनास्ति ॥२८॥ **ति०** पैतृपितामहैः । वृद्धिरार्षी । पितृपैतामहैरित्यर्थः ॥ ३० ॥ **ती०** उत्तमं पापप्रसङ्गरहितं ॥ ३५ ॥ **ति०** श्रुतवान् अधीतात्मविद्यः । तद्विधोयद्विधश्चासीतिपाठे श्रुतवान्बुद्धिमत्तरश्चयद्विधोसि तद्विधोभवान्नशोचितुमर्हसीत्यर्थइतितीर्थः । ब्रह्मलोकंप्राप्तस्यात्यन्तंशोकोनुचितइति भावः । **शि०** तं प्राकृतविलक्षणसंपत्तिविशिष्टंराजानं । एवंविधःराजसदृशःकश्चित्प्राज्ञः । त्वद्विधोमद्विधश्च श्रुतवान् शास्त्रज्ञः । शोचितुंनार्हति ॥ ३८ ॥ इतिपञ्चोत्तरशततमस्सर्गः ॥ १०५ ॥

[ **पा०** ] १ झ. पैतृपितामहैः. ङ. छ. ज. ट. पितृपैतामहैः. २ घ. धर्मात्माथ. ङ. छ. ज. झ. ट. धर्मात्मासु. ३ क. च. ञ. सर्वैः. घ. कृत्स्नैः. ४ ञ. स्वर्गंदशरथःप्राप्तःपिता. धूतपापोगतइत्येतदारभ्य सनशोच्यःपितेत्येतत्पूर्वं विद्यमानान्यष्टावर्धानि झ. पुस्तकेनदृश्यन्ते. ट. पुस्तकेतु. भृत्यानांभरणादितिश्लोकवर्जंशिष्टानिषडर्धानि नदृश्यन्ते. तत्रापि. भृत्यानांभरणादितिश्लोकस्तु सनशोच्यःपितेत्यनन्तरं सजीर्णंमानुषमित्यर्धात्पूर्वंदृश्यते. ५ ख. ग. घ. ज. ञ. ट. अर्थदानाच्च. ६ क. ख. ग. च. ञ. कर्मभिस्सुशुभैः. ७ क. च. श्चापिसुपुष्कलान्. ८ आयुरुत्तममित्यर्धं ञ. पुस्तकेनदृश्यते. ९ क. ख. ग. ननः. च. ननु. छ. झ. ञ. नस. १० ग. छ. झ. जीर्णमानुषं. ११ ग. दैवींवृत्तिं. ख. च. दैवींसिद्धिं. ङ. दैवद्धिं. १२ ख. घ. त्वद्विधोमद्विधश्चासि. ग. ङ. च. ज.—ट. त्वद्विधोमद्विधश्चापि. १३ घ. विधादुःखा. १४ घ. ङ. छ. झ. ट. तदा.

स[1] स्वस्थो भव मा शो[2]चीर्यात्वा[3]चावस तां पुरीम् ।। तथा पि[4]त्रा नियुक्तोसि वशिना व[5]दतांवर ।।४०।।
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा ।। तत्रैवाहं करिष्यामि पितुरार्यस्य शासनम् ।। ४१ ।।
न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम ।। त[6]त्त्वयाऽपि सदा मा[7]न्यं स वै बन्धुः स नः पिता ।।४२
तद्वचः पितुरेवाहं संमतं धर्म[8]चारिणः ।। कर्मणा पालयिष्यामि वनवासेन राघव ।। ४३ ।।
धार्मिकेणानृशंसेन नरेण गु[9]रुवर्तिना ।। भवितव्यं नरव्याघ्र प[10]रलोकं जिगीषता ।। ४४ ।।
आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ ।। निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः ।। ४५ ।।
इत्येवमुक्त्वा वचनं महात्मा पितुर्निदेशप्रति[11]पालनार्थम् ।।
यवीयसं भ्रातरमर्थवच्च प्रभुर्मुहूर्ताद्विरराम रामः ।। ४६ ।।
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चोत्तरशततमः सर्गः ।।१०५।।

---

## षडुत्तरशततमः सर्गः ।। १०६ ।।

भरतेनरामंप्रतिसहेतूपन्यासंबहुधाराज्यस्वीकारप्रार्थनापूर्वकंतेनायोध्यांप्रत्यनागमनेस्वेनापितदगमनेप्रतिज्ञानम् ।। १ ।। रामेणपितृवचनपरिरक्षणदीक्षिततयाभरतप्रार्थनानङ्गीकारेपौरैःकौसल्यादिभिश्चरामंप्रतिप्रार्थना ।। २ ।।

एवमुक्त्वा तु वि[12]रते रामे वचनमर्थवत् ।। ततो मन्दाकिनीतीरे रामं प्रकृतिवत्सलम् ।।
उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः ।। १ ।।
को हि स्यादीदृशो लोके यादृशस्त्वम[13]रिन्दम ।। न त्वां प्रव्यथयेदुःखं प्रीतिर्वा न प्रहर्षयेत् ।। २ ।।
[14]संमतश्चासि वृद्धानां तांश्च पृच्छसि संशयान् ।। ३ ।।
यथा मृतस्तथा जीवन्यथाऽसति तथा सति ।। यस्यैष बुद्धिलाभः स्यात्परितप्येत केन सः ।। ४ ।।

---

न्वयः ।। ३९ ।। मद्विवासनंत्वयापिमान्यमित्याह—सस्वस्थइत्यादिना । यात्वा गत्वा । तांपुरीं आवस अधितिष्ठ ।। ४० ।। यत्र वनरूपेस्थाने ।।४१—४४।। स्वभावेनात्मानमनुतिष्ठ राजभावेनभवन्तंयोजयेत्यर्थः । निशाम्य दृष्ट्वा ज्ञात्वेतियावत् ।। ४५ ।। यवीयसं यवीयांसं ।। ४६ ।। इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ।। १०५ ।।

---

अथरामंप्रतिभरतस्यश्लाघ्यतरोचितोत्तरं षड्डशततमे । अस्मिन्सर्गेश्लोकव्यत्यासःसर्गभेदश्चदृश्यते तच्छुद्धयेक्रमेणव्याक्रियते—एवमुक्त्वात्विति। निरुत्तरमुक्तवन्तंरामंप्रतिमुखान्तरेणोत्तरस्योच्यमानत्वाच्चित्रमित्युक्तं ।। १—२ ।। वृद्धानां त्रैविद्यवृद्धानां । संमतः सर्वज्ञत्वेनसंमतः । तथापि तान्संशयान्पृच्छसीतिसंबन्धः ।। ३ ।। पितृवियोगादिजनितदुःखेनमयाकथितमितिहिभवतोक्तंममतादृशदुःखप्रसङ्ग एवनास्तीत्याह—यथामृतइति । मृतः पुरुषोयथाद्दे-

---

शि० चित्रं अनेकविधयुक्तिविशिष्टं ।। १ ।। ति० वृद्धानांसंमतोपि धर्मविषयेरामवदेववर्तितव्यमितिदृष्टान्तभूतोपिलोकमर्यादामनुसरंस्तान्वृद्धान्संशयान् संशयास्पदधर्मान्पृच्छसि । एवंच सर्वज्ञास्तकामत्वात्तवनदुःखमितिभावः ।। ३ ।। ति० यथामृतस्तथाजीवन् । अस्ययथाजीवंस्तथामृतइतिवाक्यशेषआर्थिकोयोज्यः । यथा मृतस्त्यक्तदेहआत्मादेहपुत्रादिभिरसंबन्धस्तथा जीवन्नपितैरसंबन्धः । नित्यशुचिसुखचिदात्मनोनित्याशुचिदुःखजडेनदेहेनतदीयैश्चासंबन्धात् । यथाच जीवन्स्वकर्मानुरूपंसंसरति

[ पा० ] १ ग. तत्स्वस्थो. ख. ज. सुखस्थो. २ क. ख. घ.—ट. शोकोयात्वा. ३ क. ख. ग. ज. ञ. चवस. ४ ख. पितृंनियुक्तोसि. ५ क. ददतां. ६ ख. ट. सत्वया. ७ ख.—ट. मान्यः. ८ च. छ. झ. ञ. ट. चारिणां. ९ ख. घ. गुणवर्तिना. १० क. ख. च. लोकजिगीषया. घ. लोकजिगीषुणा. ११ ख. पालनाय. १२ ङ. विरतोरामो. १३ ग. च. मरिंदमः. १४ ङ. छ.—ट. संमतश्चापि.

परावरज्ञो यश्च स्यात्तथा त्वं मनुजाधिप ॥ स एवं व्यसनं प्राप्य न विषीदितुमर्हति ॥ ५ ॥
अमरोपमसत्त्वस्त्वं महात्मा सत्यसङ्गरः ॥ सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चासि राघव ॥ ६ ॥
न त्वामेवं गुणैर्युक्तं प्रभवाभवकोविदम् ॥ अविषह्यतमं दुःखमासादयितुमर्हति ॥
[ एवमुक्त्वा तु भरतो रामं पुनरथाब्रवीत् ] ॥ ७ ॥
प्रोषिते मयि यत्पापं मात्रा मत्कारणात्कृतम् ॥ क्षुद्रया तदनिष्टं मे प्रसीदतु भवान्मम ॥ ८ ॥
धर्मबन्धेन बद्धोस्मि तेनेमां नेह मातरम् ॥ हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥ ९ ॥
कथं दशरथाज्जातः शुद्धाभिजनकर्मणः ॥ जानन्धर्ममधर्मिष्ठं कुर्यां कर्म जुगुप्सितम् ॥ १० ॥
गुरुः क्रियावान्वृद्धश्च राजा प्रेतः पितेति च ॥ तातं न परिगर्हेयं दैवतं चेति संसदि ॥ ११ ॥
को हि धर्मार्थयोर्हीनमीदृशं कर्म किल्बिषम् ॥ स्त्रियाः प्रियं चिकीर्षुः सन्कुर्याद्धर्मज्ञ धर्मवित् ॥१२॥

षविषयोनभवति जीवन्नपितथा । यथाअसतितथा सति अविद्यमानेवस्तुनियथारागोनास्ति विद्यमानेवस्तुन्यपितथा । इत्येषबुद्धिलाभोयस्य सकेनहेतुनापरितप्येत नकेनापीत्यर्थः । भवदुक्तप्रकारेणममदुःखलेशोपिनास्तीतिभावः ॥ ४ ॥ किमर्थतर्हिशोकमूलवचनंत्वयोक्तमित्याशङ्क्य भवद्व्यसनासहतयेत्याह—परावरज्ञइति । यः परावरज्ञः त्रिकालज्ञः आत्मानात्मज्ञोवा परमात्मजीवात्मस्वरूपज्ञोवा । सः एवंव्यसनं प्राप्यापिव्यथितुंनार्हति तथात्वमपीतिसंबन्धः । अथापितवराज्यभ्रंशवनवासरूपव्यसनंत्वद्विश्लेषंचाहंकथं सहेयेतिभावः ॥ ५ ॥ अमरोपमेतिपृथक्पदं । सत्त्वः सत्त्वगुणसंपन्नः । अर्शआद्यच् । स्वाश्रितानांसत्त्वगुणकार्यतत्त्वज्ञानप्रवर्तकत्वाद्वा सत्त्वइत्युच्यते । " सत्त्वस्यैषप्रवर्तकः " इतिहिश्रुतिः । महात्मा महाधैर्यः । अतएव सत्यसङ्गरः सत्यप्रतिज्ञः । सर्वज्ञइत्यादिभिः त्रिभिर्भूतवर्तमानभावियावद्वस्तुज्ञानवत्त्वमुक्तं ॥ ६ ॥ प्रभवाभवकोविदं उत्पत्तिविनाशज्ञमित्यर्थः । भूतानामितिशेषः । अविषह्यतममपि अस्मदादीनामितिशेषः । दुःखं राज्यभ्रंशवनवासादिहेतुकं । नासादयितुमर्हति नाभिभवितुमर्हति ॥ ७—८ ॥ धर्मबन्धेन धर्मपाशेन ॥ ९ ॥ जुगुप्सितं लोकगर्हितं ॥ १० ॥ क्रियावान् यज्ञादिक्रियावान् । संसदि सभायां ॥ ११ ॥ धर्मार्थयोर्हीनं

तथा मृतोपिस्वकर्मानुरूपंपरत्र । किंच यथाजीवन्सर्वैस्संबद्धस्तथा मृतोपि । सर्वात्मत्वादस्य । किंच यथाऽसति अविद्यमाने । नरागोजायते तथा सति विद्यमानेपि । रागोनयुक्तः । यथावा सति साधौ । द्वेषोनयुक्तस्तथाऽसति असाधावपि । द्वेषोनयुक्तः । किंच यथाऽसतिप्रपञ्चेऽनुरागस्तथा सति ब्रह्मणियुक्तः । किंच सति ब्रह्मणि । तन्निष्ठितस्ययथानबन्धोमुक्तिश्चभवति तथा लोकसंग्रहार्थमसन्निष्ठस्यापिनबन्धोमुक्तिश्चभवति । यस्य तादृशस्य । एषः उक्तार्थविषयकोबुद्धिलाभस्स्यात्सराजयोगी केनपरितप्येत नकेनापिहेतुनेत्यर्थः । **शि०** यथामृतः लोकान्तरंप्राप्तः । तथाजीवन् इहलोकेस्थितोपि यथा सति सत्पुरुषे । यथापराधदण्डः तथा असति असत्पुरुषेपि । यस्यैषबुद्धिलाभस्स्यात्सकेनहेतुनापरितप्येत नकेनापीत्यर्थः ॥ ४ ॥ **स०** व्यसनंव्यसनावस्थां प्राप्यापि विषीदितुं विषादंप्राप्तुं । नार्हति । तत्रदृष्टान्तो—**यथात्वमिति** । विषीदितुमित्यत्रसीदादेशइडागमश्चार्षः ॥ ५ ॥ **स०** अमरोपमसत्वः देवसमबलः । बुद्ध्यारोहार्थमेतत् । सर्वज्ञः सामान्यज्ञानवान् । सर्वदर्शी सर्वसाक्षी । बुद्धिमान् सर्वविषयकविशेषज्ञानवान् । मतुपाऽयमर्थोलभ्यते ॥ ६ ॥ **ति०** एवंचत्वामेवंविधं यद्यपिदुःखंनपीडयति तथापिमादृशंपीडयत्येवेति "स्वस्थोभवमाशोक" इत्यस्योत्तरमेतत्पर्यन्तं ॥ ७ ॥ **शि०** मात्रा मातृसदृशत्वेनमाननीययामन्थरया । अयंमातृशब्दआचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ ८ ॥ **शि०** धर्मबन्धेन स्त्रीनहन्तव्येतिवचनरूपबन्धनेन । **ति०** इमां सर्वान्तर्यामिणस्त्वद्द्वेषिणीं ॥ ९ ॥ **शि०** शुभाभिजनकर्मणः शुभेअभिजनकर्मणीयस्यतस्मात् । **ती०** अधर्मिष्ठं अधर्मप्रचुरत्वात् । कर्म राज्यापहरणरूपमित्यर्थः । **स०** कर्म मातृहननरूपं ॥ १० ॥ **शि०** वृद्धः ज्ञानवयोभ्यामधिकः । अतएव गुरुः पूजनीयइत्यर्थः ॥ ११ ॥ एवंगुरुत्वादिहेतुभिर्यद्यप्यहंनपरिगर्हे तथापि वस्तुतोगर्ह्यएवेत्याह—**कोहीति** । धर्मार्थयोर्हीनं ताभ्यांहीनं कामप्रधानं । **स०**

**[ पा० ]** १ ख. घ. च. छ. झ. ट. स्याद्यथा. २ ख. छ. ज. श्चापि. ३ ख. ज. प्रभावाभाव. ४ इदमर्धं क. ख. ग. च. पुस्तकेषुदृश्यते. ५ ङ. छ. झ. ट. शुभाभिजन. ६ ङ. छ. झ. ट. मधर्मंच. ७ ङ. ज. झ. स्त्रियः.

अन्तकाले[1] हि भूतानि मुह्यन्तीति पुराश्रुतिः ॥ राज्ञैवं कुर्वता लोके प्रत्यक्षं[2] सा श्रुतिः कृता ॥१३॥
साध्वर्थ[3]मभिसन्धाय क्रोधान्मोहाच्च साहसात् ॥ तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥ १४ ॥
पितुर्हि य[5]दतिक्रान्तं पुत्रो यः साधु मन्यते ॥ तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १५ ॥
तदपत्यं भवानस्तु मा[4] भवान्दुष्कृतं पितुः ॥ अभिपत्ता कृतं कर्म लोके धीरैर्वि[6]गर्हितम् ॥ १६ ॥
कैकेयीं मां च तातं च सुहृदो बान्धवांश्च नः ॥ पौरजानप[7]दान्सर्वांस्त्रा[8]तु सर्वमिदं भवान् ॥ १७ ॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम् ॥ ईदृशं व्याहतं कर्म न भवान्कर्तुमर्हति ॥ १८ ॥
एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम् ॥ येन शक्यं महाप्राज्ञ प्रजानां परिपालनम् ॥ १९ ॥
कश्च प्रत्यक्ष[9]मुत्सृज्य संशयस्थमलक्षणम् ॥ आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितम् ॥ २० ॥
अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि ॥ धर्मेण चतुरो वर्णान्पालयन्क्लेशमाप्नुहि ॥ २१ ॥
चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमम् ॥ प्राहु[10]र्धर्मज्ञ धर्मज्ञास्तं कथं त्यक्तु[11]मर्हसि ॥ २२ ॥

धर्मार्थाभ्यांहीनं कामप्रधानमितियावत् ॥ १२ ॥ अन्तकाले विनाशकाले । मुह्यन्ति मोहंप्राप्नुवन्ति विपरीतबुद्धिंप्राप्नुवन्तीतियावत् ।पुराश्रुतिः पुरातनीगाथेत्यर्थः ॥ १३ ॥ क्रोधात् विषमद्यैवपास्यामीत्युक्तकैकेयीक्रोधात् । मोहात् कैकेयीविषयमोहात् । साहसात् साहसकरणात् अविमृश्यकारित्वादितियावत् । तातस्य यदविक्रान्तं यद्धर्मातिक्रमणं । तत्साध्वर्थमभिसन्धाय समीचीनार्थंस्मृत्वा । भवान् प्रत्याहरतु निवर्तयतु॥१४॥ साधुमन्यते साधुकर्तुमन्यतइत्यर्थः । तदपत्यंमतं पितुरपतनहेतुत्वात्तदेवापत्यत्वेनसंमतं ॥ १५ ॥ तदपत्यंभवानस्तु तादृशमपत्यमस्तु माऽभिपत्ता प्राप्तुंनार्हतीत्यर्थः ॥ १६—१८ ॥ तापसधर्मावलम्बनंक्षत्रियाणामप्यस्तीत्याशङ्क्याह—एषहीत्यादिना ॥ १९ ॥ प्रत्यक्षं परिदृश्यमानत्यागभोगयुक्तं । धर्मं परलोकश्रेयःसाधनं प्रजापालनरूपंधर्मं । उत्सृज्य संशयस्थं अप्रत्यक्षं अङ्गलोपादिसंभावनयासंशयितफलसिद्धिकमित्यर्थः । अलक्षणं लक्षणरहितं । क्रियाशक्तिरपूर्ववेतिदुर्निरूपमित्यर्थः । आयतिस्थं कालान्तरभाविफलं । अनिश्चितं क्षत्रियेणप्रथममिदमनुष्ठेयमितिकेनापिप्रमाणेनानिश्चितं । तापसधर्मं कःक्षत्रियः चरेत् नकोपीत्यर्थः ॥२०॥ अथक्लेशजमेवत्वंधर्मंचरितुमिच्छसि तथापिचातुर्वर्ण्यपालनतत्तद्धर्मस्थापनादिक्लेशयुक्तत्वाद्राज्यपालनमेवाचरेत्याह—अथेति ॥ २१ ॥ सर्वाश्रमधर्मापेक्षयाश्रेष्ठतमोगार्हस्थ्यधर्मः कथंत्यज्यतइत्याह—चतुर्णामिति ॥

धर्मज्ञाः धर्मविदोयेन तस्यसंबुद्धिः । हेधर्मज्ञ कोहिधर्मविदितिवा ॥ १२ ॥ **ति०** प्रत्यक्षा सत्या ॥ १३ ॥ **ति०** तातस्ययदतिक्रान्तं । भावेनिष्ठा । ज्येष्ठाभिषेकलक्षणसाध्वर्थानुष्ठानं तत् साध्वर्थमभिसंधाय राजोक्तार्थेषुकतमस्यसाधुत्वमितिविचार्य प्रत्याहरतु निवर्तयतु । **शि०** अर्थमभिसंधाय अर्थबुद्धिंकृत्वा । तातस्ययदतिक्रान्तं अभिषेकातिक्रमणं तद्भवान्प्रत्याहरतु ॥ १४ ॥ **ति०** अतिक्रान्तं अतिक्रमस्तं । साधुमन्यते तद्वैपरीत्याचरणेनसाधुयथातथासंपादयति तदपत्यं । **स०** यःपुत्रःसाधुमन्यते तदेवापत्यं । विधेयापेक्षयातच्छब्दे नपुंसकता । अतोन्यथाचेत्पितृकृतातिक्रमणस्यसाधुत्वेनज्ञानाभावेविपरीतं अनपत्यमेवतदिति भावः । नञ्पूर्वात्पत्लृपतनेइत्यस्मात्करणेयत्प्रत्ययेरूपं । अपतनहेतुरपत्यमित्युक्तंभवति ॥ १५ ॥ **ति०** अतीति । यत् तत्कृतं दशरथकृतंकर्म तद्इति धर्ममतिक्रम्यप्रवृत्तं । अतएव लोकेधीरैर्विगर्हितं । अतस्तदनुमननमनुचितमिति । पितृवचसःपरिपाल्यत्वेऽयुक्तंधर्मवदभिषेकवचनमेवपरिपाल्येतिव्यङ्ग्यं । **स०** तदपत्यं अन्वर्थकापत्यशब्दवाच्यः । पितुर्दुष्कृतंभवान् नानुमन्यतामितिशेषः ॥ १६ ॥ **स०** सर्वांस्त्रातुंइदंसर्वमदुक्तं भवान् अनुमन्यतामितिशेषः ॥ १७ ॥ **ति०** ननुवानप्रस्थाश्रमःक्षत्रियस्याप्यस्ति तत्राह—**एषहीति** । येनाभिषेचनेनपालनं तद्रूपधर्मसंपादनं प्रथमः आद्योधर्मइत्यर्थः । एवंच सआश्रमोराज्यपरिपालनोत्तरं वार्धके उचितः नापिसमुख्योधर्मइतिभावः ॥ १९ ॥ **ति०** तस्यामुख्यत्वमेवदर्शयति—**कश्चेति** । प्रत्यक्षं प्रत्यक्षसुखसाधनं धर्मं प्रजापालनरूपमुत्सृज्य संशयस्थं अप्रत्यक्षत्वात् । कोहितद्वेद यद्यमुष्मिँल्लोके अस्तिवानवेतिश्रुत्याभिनीयमानसन्देहास्पदं । अलक्षणं असुखलक्षणं । आयतिस्थं उत्तरवयःप्राप्यं । अनिश्चितं अनित्यानुष्ठानं । नहिप्रजापालनवत्क्षत्रियस्यनित्यप्राप्तोऽयंधर्मः ।

[ **पा०** ] १ ख. कालेषु. २ क. ङ. च. छ. झ. ञ. ट. प्रत्यक्षा. ३ क.—ट. समति. ४ घ. भवान्मा. ५ ग. ङ. छ. झ. ञ. ट. अतियत्तत्कृतं. ६ ख. ग. वीर. ७ ख. पदानेतान्. ८ ख.—ठ. स्त्रातुं. ९ ङ. छ. झ. मुत्तमं. १० क.—ट. आहुः. ११ ङ. छ. झ. ट. मिंच्छसि. ख. मर्हतिं.

श्रुतेन बालः[1] स्थानेन जन्मना भवतो[2] ह्यहम् ॥ स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥२३॥
हीनबुद्धिगुणो बालो हीनः स्थानेन चाप्यहम् ॥ भवता च विनाभूतो न वर्तयितुमुत्सहे ॥ २४ ॥
इदं निखिलमग्र्यं[3] राज्यं[4] पित्र्यमकण्टकम् ॥ अनुशाधि स्वधर्मेण धर्मज्ञ सह बान्धवैः ॥ २५ ॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयः सह ॥ ऋत्विजः सवसिष्ठाश्च मन्त्रवन्मन्त्रकोविदाः[5] ॥ २६ ॥
अभिषिक्तस्त्वमस्माभिरयोध्यां पालने व्रज ॥ विजित्य तरसा लोकान्मरुद्भिरिव वासवः ॥ २७ ॥
ऋणानि त्रीण्यपाकुर्वन्दुर्हृदः साधु निर्दहन् ॥ सुहृदस्तर्पयन्कामैस्त्वमेवात्रानुशाधि माम् ॥ २८ ॥
अद्यार्य मुदिताः सन्तु सुहृदस्तेऽभिषेचने ॥ अद्य भीताः पलायन्तां[6] दुर्हृदस्ते दिशो दश ॥ २९ ॥
आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ ॥ अद्य तत्रभवन्तं च पितरं रक्ष किल्बिषात् ॥ ३० ॥
शिरसा त्वाऽभियाचेऽहं कुरुष्व करुणां मयि ॥ बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ ३१ ॥
अथैतत्[7]पृष्ठतः कृत्वा वनमेव भवानितः[8] ॥ गमिष्यति गमिष्यामि भवता सार्धमप्यहम् ॥ ३२ ॥

तथा हि रामो भरतेन ताम्यता प्रसाद्यमानः शिरसा महीपतिः ॥
न चैव चक्रे गमनाय सत्त्ववान्मतिं पितुस्तद्वचने व्यवस्थितः[9] ॥ ३३ ॥
तदद्भुतं स्थैर्यमवेक्ष्य राघवे समं जनो हर्षमवाप दुःखितः ॥
न यात्ययोध्यामिति दुःखितोऽभवत्स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः ॥ ३४ ॥

॥ २२ ॥ स्वशक्त्यापिभवतैवराज्यंपालयितव्यमित्याह—श्रुतेनेति । श्रुतेन विद्यया । स्थानेन पदेन प्राप्तिक्रमेणेतियावत् ॥ २३ ॥ कथमेवमुच्यतेबालत्वस्यमभापितुल्यत्वात् भवदपेक्षयाऽहंकियान्वृद्धइत्यतआह—हीनेति । हीनबुद्धिगुणः सद्गुणबुद्धिरहितः । वर्तयितुं स्थातुं । भवताविनातूष्णींस्थातुमपिनोत्सहे किंपुनाराज्यंकर्तुमितिभावः ॥ २४—२५ ॥ सह संभूय ॥ २६ ॥ विजित्य स्थितइतिशेषः । मरुद्भिः देवैः ॥ २७ ॥ रामंराज्याङ्गीकरणायप्रोत्साहयति—ऋणानीत्यादिना । दुर्हृदः शत्रून् ॥ २८—२९ ॥ आक्रोशं शापं । "शाप आक्रोशआक्षेपः" इतिहलायुधः । जनकर्तृकमितिशेषः । तत्रभवन्तं पूज्यं । तत्रभवानत्रभवानितिशब्दौवृद्धैः पूज्येप्रयुज्येते ॥ ३० ॥ मयि बान्धवेषुच करुणांकुर्वितिसंबन्धः । महेश्वरोविष्णुः । "यद्वेदादौस्वरःप्रोक्तोवेदान्तेच प्रतिष्ठितः । तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरः" इति पूर्वप्रकृतदहरविद्याकरणमन्त्रप्रणवप्रकृतिभूताकारवाच्योमहेश्वरइत्युक्तेः । दहरोपास्यश्चापहतपाप्मत्वादिगुणकः पुरुषोत्तमः । "सउत्तमःपुरुषः" इतितत्समानप्रकरणेछान्दोग्येश्रवणात् । अपहतपाप्मत्वंचरुद्रस्यनास्ति । "अनपहतपाप्मावाअहमस्मि" इतिरुद्रेणैवोक्तेः । भूतसंहाराधिकृतस्यरुद्रस्यभूतेषुकरुणाच गगनकुसुमतुल्या । अतः "सएकाकीनरमते नततोविजुगुप्सितः" इत्यादिश्रुतिस्मृत्यादिभिःसुप्रसिद्धापारकारुण्यवात्सल्यादिगुणगणः पुरुषोत्तमएवमहेश्वरइतिदिक् ॥ ३१—३२ ॥ गमनाय अयोध्यांप्रतीतिशेषः । तद्वचने तस्मिन्वचने ॥ ३३ ॥ समं युगपत् ...

निव्यत्वेतद्रहितदशरथादेःपापित्वप्रसङ्गः । तं क्षत्रबन्धुः क्षत्राणांबन्धुरितिसमासेनक्षत्रियकुलसंमतइत्यर्थः । निन्दायांबन्धुच्प्रत्ययान्तस्तु निन्द्यक्षत्रियादिवाचीतिकतकः । कश्चरेत् नकोपीत्यर्थः । अन्येतु क्षत्रबन्धुरपि निन्द्यक्षत्रियोपि राज्यानर्होपीदृशंधर्मंन चरेत् किंपुनर्वाच्यंराज्याधिकारीत्यर्थमाहुः ॥ २० ॥ **ति०** वर्तयितुं जीवितुमपि ॥ २४ ॥ **शि०** अग्र्यं पौर्वकालिकं ॥ २५ ॥ **ति०** ऋणानीति । "जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाञ्जायते" इतिश्रुतौब्राह्मणपदमुपलक्षणमितिभावः । अत्र अयोध्यायां । स्थित्वेतिशेषः ॥ २८ ॥ **ति०** दुष्प्रदाः दुःखप्रदाः ॥ २९ ॥ **ति०** आक्रोशं निन्दां ॥ ३०—३१ ॥ **शि०** महेश्वरः महादेवइव **ति०** पृष्ठतःकृत्वा तिरस्कृत्य । मत्प्रार्थनामितिशेषः । इतोपिवनमेव जनसंबाधभयेनास्माद्वनादपिवनान्तरमित्यर्थः ॥ ३२ ॥ इतिषडुत्तरशततमस्सर्गः ॥ १०६ ॥

**[ पा० ]** १ ख. बालोज्ञानेन. २ घ. भवतोप्यहं. ३ ट. मप्यग्र्यं. ४ ग. घ. पित्र्यंराज्यं. ५ ख. ङ. च. छ. झ. ञ. ट. मन्त्रविन्मन्त्र. ६ ङ. छ. ज. झ. ट. पलायन्तुदुष्प्रदाः. क. च. ञ. पलायन्तामरयस्ते. ७ क. ख. ग. ङ. च. छ. झ. ञ. ट. अथवापृष्ठतः. ज. अथैतत्पृष्ठतः. ८ ग. भवानिह. ९ क. ङ. च. ज.—ट. प्रतिष्ठितः.

तमृत्विजो नैगमयूथवल्लभास्तदा विसंज्ञाश्रुकलाश्च मातरः ॥
तथा ब्रुवाणं भरतं प्रतुष्टुवुः प्रणम्य रामं च ययाचिरे सह ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

## सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

दशरथेनस्वस्मैराज्यदानेकैकेय्यांतस्यकाममोहस्यहेतुतांमन्वानंभरतंप्रतिरामेणराज्यदानस्यकन्याशुल्कप्रत्युपकारोभयरूपत्वकथनेनराज्ञिदोषाभावोपपादनम् ॥ १ ॥ तथापुत्रशब्दनिर्वचनेनपितृत्तारणस्यपुत्रसाधारण्योक्तिपूर्वकंतंप्रतिराज्यरक्षणचोदना ॥ २ ॥

पुनरेवं ब्रुवाणं तं भरतं लक्ष्मणाग्रजः ॥ प्रत्युवाच ततः श्रीमाञ्ज्ञातिमध्येऽभिसत्कृतः ॥ १ ॥
उपपन्नमिदं वाक्यं यत्त्वमेवमभाषथाः ॥ जातः पुत्रो दशरथात्कैकेय्यां राजसत्तमात् ॥ २ ॥
पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् ॥ मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥ ३ ॥
दैवासुरे च संग्रामे जनन्यै तव पार्थिवः ॥ संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥
ततः सा संप्रतिश्राव्य तव माता यशस्विनी ॥ अयाचत नरश्रेष्ठं द्वौ वरौ वरवर्णिनी ॥ ५ ॥
तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा ॥ तौ च राजा तदा तस्यै नियुक्तः प्रददौ वरौ ॥ ६ ॥

पत् ॥ ३४ ॥ नैगमयूथवल्लभाः निगमःपुरंतत्रभवाः नैगमाः । "निगमोनिश्चयेवेदेपुरेपथिवणिक्पथ" इतिवैजयन्ती । यूथवल्लभाः गणमुख्याः । विसंज्ञाश्रुकलाः विगतसंज्ञाः अश्रुक्लिन्नाश्चेत्यर्थः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

अभिसत्कृतः भरतेनस्तोत्रादिनासम्यगभिपूजितः ॥ १—२ ॥ काममोहेनपित्राकृतमितिपितरंनिन्दन्तंभरतंप्रतिरामोमोहहेतुप्रसक्तिरेवनास्तीतिदुष्परिहरंहेत्वन्तरमाह—पुरेत्यादिना । राज्यशुल्कंसमाश्रौषीत् तवपुत्रिकायांयोजनिष्यतेतस्मैराज्यंदास्यामीतिप्रतिज्ञां कृतवान् ॥ ३ ॥ दैवासुरे देवासुरसंबन्धिनि । वरं वरद्वयं ॥ ४ ॥ तवमाता संप्रतिश्राव्य शपथंकारयित्वा । ततः द्वौवरौ अयाचतेतिसंबन्धः ॥ ५ ॥ याच्ञाप्रकारमाह—तवेत्यादिना । ननुकैकेयीस्वोद्वाहकालेकन्याशुल्कत्वेनभरतस्यप्राप्तंराज्यंवरविषयत्वेन कथमयाचत । उच्यते । बाल्यवृत्तान्तत्वाच्चिरकालान्तरितत्वाच्चसन्निहितंवरद्वयमेवयाचितवतीतिनदोषः । मध्येप्राप्तस्यापिवरद्वयस्य । "किंनस्मरसिकैकेयि" इतिमन्थरयास्मारितत्वाच्चिरकालवृत्तान्तस्यविस्मरणमुपपन्नमेव । ननुदशरथउद्वाहकालेकैकेयीपुत्रायप्रतिश्रुतंराज्यंरामायदातुंकथमुद्युक्तवात् । सत्यं । "उद्वाहकालेरतिसंप्रयोगेप्राणात्ययेसर्वधनापहारे । विप्रस्यचार्थेप्यनृतंवदेयुःपञ्चानृतान्याहुरपातकानि" इतिन्यायेनदोषाभावंहृदिनिधायतथाकृतवानितिनदोषः । केकयोपिरामगुणानुविद्धतयाराज्यंनदौहित्रायययाचित-

ति० उपपन्नं युक्तिमत् । तत्रहेतुः जातइत्यादि । स० यतोतइतिशेषः ॥ २ ॥ ति० ननु "स्त्रीषुनर्मविवाहेचवृत्त्यर्थेप्राणसंकटे । गोब्राह्मणार्थेहिंसायांनानृतंस्याज्जुगुप्सितं" इतिस्मृतेःकौसल्यायांविद्यमानायांकैकेयीविवाहस्यनर्मविवाहत्वात्तत्प्रतिज्ञाहानिर्नदोषायेत्यतआह—देवासुरेचेति । देवासुरे तत्संबन्धिनि । एवंचोपकारप्रत्युपकाररूपत्वादेतदनृतेमहान्दोषइतिभावः । वरं वरद्वयं । स० देवासुरइति । मत्वर्थीयाच्प्रत्ययान्तोऽयंशब्दः । देवसहिताअसुरायस्मिन्नित्युत्तरपदलोपीसमासोवा । शि० राजा अत्यनुरागवान् ॥ ४ ॥ ती० उमासंहितायांपार्वतींप्रतिशिववचनं । "पट्टाभिषेकसमयेभवेयंस्मारितोह्यहम् । त्वयावाऽन्येनभूपालतथाचेत्करवाण्यहम् । इत्थंप्रतिज्ञामकरोदाहिताग्न्यग्रणीर्नृपः" इतिकैकेयीविवाहसमयेकेकयदशरथसंकेतस्यविद्यमानत्वाद्दोषः ॥ ५ ॥ ति० तद्वरं तद्रूपवरं ॥ ६ ॥

[पा०] १ ख.—ट. स्तथा. २ ग. भरतंच. ३ क. ग. च. ञ. ब्रुवाणंतु. ४ च. ञ. भरताग्रजः. ५ क.—घ. च. ज. ञ. मध्येति. ङ. छ. झ. ट. मध्येसु. ६ घ. नःस. ७ क. नराधीशं. ग. नरव्याघ्रं. ८ ख.—ट. तच्च. ९ ग.—ट. तथा. १० क. ङ.—ञ. वरं.

तेन पित्राऽहमप्यत्र नियुक्तः पुरुषर्षभ ॥ चतुर्दश वने वासं वर्षाणि वरदानिकम् ॥ ७ ॥
सोहं वनमिदं प्राप्तो [1]निर्जनं लक्ष्मणान्वितः ॥ सीतया चाप्रति[2]द्वन्द्वः सत्यवादे स्थितः पितुः ॥ ८ ॥
भवानपि तथेत्येव पितरं सत्यवादिनम् ॥ [3]कर्तुमर्हति [4]राजेन्द्र क्षिप्रमेवाभिषेचनात् ॥ ९ ॥
ऋणान्मोचय राजानं मत्कृते भरत प्रभुम् ॥ पितरं [5]चापि धर्मज्ञं मातरं [6]चाभिनन्दय ॥ १० ॥
श्रूयते [7]हि पुरा तात श्रुतिर्गीता यशस्विना ॥ गयेन यजमानेन गयेष्वेव पितॄन्प्रति ॥ ११ ॥
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः [8]पितॄन्यत्पाति [9]वा सुतः ॥ १२ ॥
एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः ॥ तेषां वै [10]संमवेतानामपि कश्चिद्गयां व्रजेत् ॥ १३ ॥
एवं राजर्षयः सर्वे प्रतीता [11]राजनन्दन ॥ तस्मात्त्राहि नरश्रेष्ठ पितरं नरकात्प्रभो ॥ १४ ॥
अयोध्यां गच्छ भरत प्रकृती[12]रनुरञ्जय ॥ शत्रुघ्नसहितो वीर सह सर्वैर्द्विजातिभिः ॥ १५ ॥
प्रवेक्ष्ये दण्डकारण्यमहमप्यविलम्बयन् ॥ आभ्यां तु सहितो [13]राजन्वैदेह्या लक्ष्मणेन च ॥ १६ ॥

त्वं राजा [14]भरत भव स्वयं नराणां वन्यानामहमपि राजराण्मृगाणाम् ॥
गच्छ त्वं पुरवरमद्य संप्रहृष्टः संहृष्टस्त्वहमपि दण्डकान्प्रवेक्ष्ये ॥ १७ ॥
छायां ते दिनकरभाः [15]प्रबाधमानं वर्षत्रं भरत करोतु मूर्ध्नि शीताम् ॥
एतेषामहमपि [16]काननद्रुमाणां छायां तामतिशयिनीं [17]सुखी श्रयिष्ये ॥ १८ ॥

---

वान् । रामोपिसुमन्त्रादिभ्यइदंरहस्यंश्रुतवान् । अत एव हि तेश्शृण्वन्तोनुमान्यस्थितवन्तइतिद्रष्टव्यम् ॥६॥ तेन कैकेय्यैप्रतिश्रुतराज्येन । अत्रवने दण्डकारण्ये । वरदानिकं वरदाननिमित्तकं । वासंनियुक्तइतिसंबन्धः ॥ ७ ॥ अप्रतिद्वन्द्वः केनापिवारयितुमशक्यइतियावत् ॥ ८—९ ॥ ऋणान्मोचयराजानं स्वाभिषेचनेन कैकेय्याऋणाद्राजानंमोचयेत्यर्थः ॥ १० ॥ स्वोक्तार्थस्यावश्यकर्तव्यत्वेसंमतिमाह—श्रूयतइत्यादिना । गयेन गयाख्येन । गयेषु गयाख्येषुप्रदेशेषु ॥ ११ ॥ पुन्नाम्नोनरकात्त्रायतइतिपुत्रः । पितॄन्पाति तदुद्देशकृतेष्टापूर्तादिनास्वर्लोकंप्रापय्यरक्षतीत्यर्थः ॥१२॥ एष्टव्याः काङ्क्षितव्याः ॥ १३ ॥ एवं उक्तप्रकारेण । प्रतीताः निश्चितवन्तः ॥ १४—१६ ॥ मृगगणांराजराट् भवामिं मृगाणांरञ्जकः शिक्षकश्चभवामीत्यर्थः । अत्रमृगशब्देन तत्तुल्यामुनयोलक्ष्यन्ते । यद्वा भाविसुग्रीवरञ्जनवालिवधादीनांबीजन्यासोयं ॥ १७ ॥ वर्षत्रं छत्रं

---

**ति०** अत्र दण्डकाख्येवने । चतुर्दशवर्षाणिवरदानिकंवरदाननिमित्तकंवासं । नियुक्तः तंप्रतिप्रेरितइत्यर्थः । अत्रायमप्यर्थः । देवेभ्योमहत्तवरदाननिमित्तकं । अन्तर्यामिणातथाप्रेरणात् । अतएवात्रदण्डकारण्येएतत्प्रसंगेनैवतत्प्रयोजननिष्पत्तेरिति ॥ ७ ॥ **ति०** ननुवनेरक्षआदिभ्योनानादुःखसंभावनेत्यतः—**अप्रतिद्वन्द्वइति** । समाधिकबलशत्रुहीनः । सर्वेपिमत्तोहीनबलाएवेति नतद्भयावकाशइतिव्यङ्ग्योऽर्थः । आपाततस्तु अप्रतिद्वन्द्वः स्पर्धारहितइति । **शि०** अप्रतिद्वन्द्वः शीतोष्णादिबाधारहितोऽहंइदंवनंप्राप्तः **स०** अप्रतिद्वन्द्वः नियामकशून्यः ॥ ८ ॥ **ति०** अर्हसीत्यार्षं । अर्हतीतिपाठान्तरं । अतएवसंबोधनं—**राजेन्द्रेति** । **स०** अभिषेचनात् स्वस्येतिशेषः ॥ ९ ॥ **ति०** ऋणात् कैकेयीसंबन्ध्यृणात् । मत्कृते मत्प्रीत्यर्थं । त्राहीत्यार्षं । अभिनन्दय नतु निन्दय । तत्कृतस्यार्थस्यबहूपकारकत्वादितिव्यङ्ग्यं ॥ १० ॥ **ति०** पितॄन्प्रति पितृप्रीतिमुद्दिश्य ॥ ११ ॥ **ति०** पितॄन्पातीत्यर्थे पुत्रस्यपृषोदरादित्वात्साधुत्वं ॥ १२ ॥ **स०** समवेतानां मिलितानांमध्ये ॥ १३ ॥ **ति०** एवं पितृपरलोकसाधनं । **स०** नरकात् प्रतिश्रुतवराप्रदानकृतात् । **शि०** नरकात् जनापवादशब्दात् ॥ १४ ॥ **शि०** राजराट् राजराजोप्यहंमृगाणांराजाभवामीतिशेषः ॥ १७ ॥ **स०** दिनकरभाइतिद्वितीयान्तं । प्रबाधमानंसत् छायांकरोतु ॥ १८ ॥ इतिसप्तोत्तरशततमस्सर्गः ॥१०७॥

**[ पा० ]** १ च. विजनं. २ ग. द्वन्द्वस्तत्सवाक्ये. ३ ग.—च. ज. झ. मर्हसि. ४ ख. ज. ञ. ट. राजेन्द्रं. ५ ख. ङ. च. छ. झ. ञ. ट. त्राहिधर्मज्ञ. ६ क. ख. घ. ज. चापि. ७ ङ. छ. झ. ट. धीमता. ८ क. घ.—छ. झ. ञ. ट. पितॄन्यःपाति. ९ झ. ट. ठ. सर्वतः. १० च. ञ. समवेतानांयदि. ११ ङ. छ. झ. ट. रघुनन्दन. १२ ङ. झ. ट. रुपरञ्जय. १३ ङ. छ. झ. ट. वीरवैदेह्या. १४ क.—घ. च. ज. ञ. भवभरत. १५ ख. ग. घ. प्रबाधमानां. १६ ग. कानने. १७ ख. ग. ङ. छ. झ. ट. शनैः च. ञ. सुखं.

[1]शत्रुघ्नः कुशलमतिस्तु ते सहायः सौमित्रिर्मम विदितः प्रधानमित्रम् ॥
चत्वारस्तनयवरा वयं नरेन्द्रं सत्यस्थं भरत चराम मा वि[2]षादम् ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

## अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

रामेणभरतेनिरुत्तरीकृतेजाबालिनानास्तिकमताश्रयणेनरामंप्रतिराज्यस्वीकारचोदना ॥ १ ॥

आश्वासयन्तं भरतं जाबालिर्ब्राह्मणोत्तमः ॥ उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ १ ॥
साधु राघव मा भूत्ते बुद्धि[3]रेवं निरर्थिका ॥ प्राकृतस्य नरस्येव [4]ह्यार्यबुद्धेर्मनस्विनः ॥ २ ॥
कः कस्य पुरुषो बन्धुः कि[5]माप्यं कस्य केनचित् ॥ [6]यदेको जायते जन्तुरेक एव विनश्यति ॥ ३ ॥
तस्मान्माता पिता चेति राम स[7]ज्जेत यो नरः ॥ उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्य चित् ४
यथा ग्रामान्तरं गच्छन्नरः कश्चित्क्वचिद्वसेत् ॥ उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५ ॥
एवमेव मनुष्याणां पिता माता गृहं वसु ॥ आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ६ ॥
पित्र्यं राज्यं [10]परित्यज्य स[11] नार्हसि नरोत्तम ॥ आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ॥ ७ ॥
समृद्धायामयोध्यायामात्मानमभिषेचय ॥ एकवेणीधरा हि त्वां नगरी संप्रतीक्षते ॥ ८ ॥
राजभोगाननुभवन्महार्हान्पार्थिवात्मज ॥ विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥ ९ ॥
न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन ॥ अन्यो राजा [12]त्वमन्यः स तस्मात्कुरु [13]यदुच्यते ॥ १० ॥

---

सुखीभविष्यइतिपाठः ॥ १८ ॥ चराम करवामेत्यर्थः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

एवंरामेणोक्तेनिरुत्तरतयास्थितंभरतमालोक्यहितपरतयाजाबालिश्चार्वाकमतमाश्रित्योत्तरमाह अष्टोत्तरशततमे—आश्वासयन्तमित्यादिना । ब्राह्मणोत्तमइत्यनेनवक्ष्यमाणंनास्तिकवचनमहृदयमितिद्योत्यते । धर्मापेतंवैदिकधर्मापेतं ॥ १ ॥ बुद्धिःसाधुमाभूत्सम्यक्नृनिवर्त्यतामित्यर्थः ॥२॥ कस्यपुरुषस्य केनचित्साधनेन किमाप्यं नकिमपीत्यर्थः ॥ ३—४ ॥ आवासमात्रमिति मार्गस्थसत्रशालायांविश्रमार्थंक्षणंनिवासेपितद्विसृज्यगच्छतःपथिकस्यतच्चिन्तानानुवृत्तिवत्यावत्संश्लेषमेवमातापित्रादयोनुवर्तनीयाः विश्लेषेतत्स्मृतिरपिविफला किमुततत्प्रीत्यर्थकार्याचरणमितिभावः ॥५—६ ॥ रामाभिप्रायेणेदं परप्रतीत्यापरोबोधनीयइतिन्यायात् । कापथं कुत्सितमार्गं । दुःखं दुःखप्रदं । विषमं यौवनानुचितं । बहुकण्टकं अनेकोपप्लवसहितं । कापथमित्यनेनानुचितवानप्रस्थमार्गएवोच्यते ॥ ७ ॥ एकवेणीधरा व्रतपरायणेत्यर्थः । नगरी तदधिदेवता ॥ ८—९ ॥ यदुच्यते मयेतिशे-

---

**स०** धर्मापेतं धर्मविरुद्धं । चार्वाकमतावलंबनात् ॥ १ ॥ **ति०** साधु सम्यग्युक्तिमत् इदंवचइतिपूर्वान्वय्येतत् । इदंशब्दार्थो—**राघवेत्यादि** । प्राकृतस्य पामरस्य । एवंबुद्धिः पितृवचःपरिपालनीयमित्येवंरूपा । **शि०** प्राकृतस्येवेत्युक्त्या रामस्यप्राकृतविलक्षणत्वंसूचितं ॥ २ ॥ **स०** सज्जेत आसक्तोभवेत् ॥ ४ ॥ **ति०** कापथं वनमार्गं आस्तिकसेव्यंमार्गंच ॥ ७ ॥ **स०** यदुच्यते मया । **ति०** उक्तसंबन्धाभावमुपसंहरति—**नेति** । मिथ्यापितृवचनाभिनिवेशंमुक्त्वाराज्यंकुर्वितियदुच्यते तत्कुरु । अन्यः त्वज्जनकादन्यः । संप्रतिराजा । एवंचक्षणभङ्गवादेनान्यत्वंगूढाशयतयोक्तं । नन्वेवमपितत्संताननिविष्टतयाकश्चित्संबन्धो भवेत् अन्यथापितरंविनापिपुत्रोत्पत्तिस्स्यादितिचेन्न । तावतापिनिमित्तकारणत्वमेव नोपादानत्वं । तेन यूकालिक्षादेरिवतवापितेन

**[ पा० ]** १ ङ. छ. झ. ट. शत्रुघ्नस्त्वतुलमतिस्तु. २ ङ—ट. विषीद. ३ ग. रेषा. ४ ख. महाबुद्धेस्तपस्विनः. क. ग. ङ. छ. झ. ञ. ट. ह्यार्यबुद्धेस्तपस्विनः. ५ ख. किंकार्यं. ६ ङ. छ. झ. ट. एकोहि. ७ ग. घ. सज्जति. ८ घ. इति. ९ ङ. च. छ. झ. ञ. ट. द्विर्वसेत्. १० क. घ.—छ. झ. ञ. ट. सुमुत्सृज्य. ११ ख. नार्हसित्वं. १२ क. च. ञ. त्वमप्यन्यस्तस्मात्. ङ. छ. झ. ट. त्वमन्यस्तु. ख. ग. घ. ज. त्वमन्यश्च. १३ घ. यथोच्यते.

बीजमात्रं पिता जन्तोः[1] शुक्रं रुधिरमेव च ॥ संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ॥ ११ ॥
गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै ॥ प्रवृत्तिरेषा मर्त्यानां[2] त्वं तु मिथ्या विहन्यसे ॥ १२ ॥
अर्थधर्मपरा [3]येये तांस्ताञ्शोचामि नेतरान् ॥ ते हि दुःखमिह प्राप्य विनाशं प्रेत्य [4]भेजिरे ॥१३॥
अष्टकापितृदैवत्यमित्ययं प्रसृतो जनः ॥ अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १४ ॥
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ॥ दद्यात्[5]प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत् ॥ १५ ॥
दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ॥ यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ १६ ॥
स नास्ति परमि[6]त्येव कुरु बुद्धिं महामते ॥ प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १७ ॥

षः ॥ १० ॥ पिता जन्तोर्बीजमात्रं अल्पकारणं । प्रधानकारणंतु ऋतुमन्मात्रा संयुक्तंधृतं । शुक्रंरुधिरमेवच शुक्रशोणितमेवतत् शुक्रशोणितं पुरुषस्यजन्मकारणं ॥ ११ ॥ तेन नृपेण । यत्र येषुभूतेषुगन्तव्यं सनृपतिस्तत्रगतः पञ्चभूतेषुलयंप्राप्तइत्यर्थः । पञ्चभूतमयत्वान्नरपतिशरीरस्य तदतिरिक्तस्यात्मनोऽभावात् । मर्त्यानां मरणशीलानां । एषाप्रवृत्तिः अयंस्वभावइत्यर्थः । त्वंतुमिथ्याविहन्यसे मिथ्याभूतेनसंबन्धेनपीड्यसे ॥ १२ ॥ अर्थधर्मपराः प्रत्यक्षसौख्यं विहायकेवलार्थसंपादनपराः धर्मपराश्च । इतरान् केवलप्रत्यक्षसुखानुभवपरान् । अर्थधर्मपरविषयशोकहेतुमाह—तेहीति । प्रेत्यापिविनाशं दुःखंभेजिरइति संबन्धः ॥ १३ ॥ धर्मस्याफलत्वेस्थालीपुलाकन्यायेन किंचिदुदाहरणमाह—अष्टकापितृदैवत्यमिति । अयं जनः अष्टका अष्टकाश्राद्धं पितृदैवत्यं प्रतिसांवत्सरिकमितियत्कर्म । कर्तुमितिशेषः । प्रसृतः प्रवृत्तः । अत्र तत्सर्वमितिशेषः । अन्नस्य उपद्रवं क्षयं । पश्य तत्सर्वस्वभोज्यान्नस्यनिरर्थकक्षयहेतुं आलोचयेत्यर्थः । तत्र हेतुमाह—मृतोहिकिमशिष्यतीति ॥ १४ ॥ उक्तमेवार्थंतर्कमुखेनद्रढयति—यदीति । अन्येनभुक्तमन्नमन्यस्यदेहंगच्छतियदि तर्हि प्रवसतः श्राद्धंदद्यात् पथिगच्छन्तमुद्दिश्यभोजयेत् । तत् अन्यभुक्तमन्नंपथ्यशनं भवेत् पथिकस्यपाथेयंभवेत् नचैवंदृश्यते अतः श्राद्धादिकंमृतस्याशनंनभवतीतिभावः ॥ १५ ॥ एवमेकत्रवैदिककर्मणिफलव्यभिचारदर्शनात्सर्वत्रापिवैदिके न फलप्रसक्तिरित्याह—दानसंवननाइत्यादिना । दानसंवननाः दानायवशीकरणोपायाः । "संवननंकर्मणावशीकरणं" इतिहलायुधः । मेधाविभिः परद्रव्यग्रहणकुशलबुद्धिभिः । यजस्व देवताराधनंकुरुष्व । संत्यज अर्थैषणादीन्सम्यक्त्यज । अत्रेतिकरणंद्रष्टव्यं । यजस्वेत्यादिरूपाग्रन्थाः मेधाविभिः कृताइत्यन्वयः ॥१६॥ सः पितृवचनंपरिपालनीयमितिमन्यमानः त्वं परंपर-

कश्चित्संबन्धइत्याशयः ॥ १० ॥ **ति०** बीजमात्रं निमित्तकारणमात्रं । मात्रपदेनोपादानत्वव्यावृत्तिः । तर्ह्युपादानंकिंतत्राह—**ऋतुमन्मात्रेति** । ऋतुमत्यामात्रेत्यर्थेपुंवद्भावः । यत्तादृश्यामात्रागर्भेधृतंसंयुक्तंपरस्परमिलितंशुक्रंशोणितंच तदिहलोकेपुरुषस्य शरीरस्यजन्म उपादानकारणंभवतीत्यर्थः । एवंचशुक्रशोणितयोगादाकृष्टपञ्चभूतसमूहएवपुरुषश्चेतनः नतस्यकेनचित्संबन्धइत्याशयः ॥ ११ ॥ **ति०** विहन्यसे राज्यत्यागात्पुरुषार्थादितिशेषः ॥ १२ ॥ **ति०** नन्वर्थविघातेपिधर्मोमेभविष्यतीत्यत्राह—**अर्थेत्यादि** । अर्थे प्रत्यक्षसिद्धपुरुषार्थेप्राप्ते तंपरित्यज्ययेयेआस्तिकाःधर्मपराः ताञ्शोचामि । धर्मफलभोक्तुरभावादितिभावः । तदेवाह—**तेहीति** । प्रेत्य अन्तसमयंप्राप्य । विनाशंभेजिरे नत्वत्रोपार्जितधर्मस्यतत्रावस्थितिरस्ति । **स०** अर्थधर्मपराः अर्थशब्दोनिवृत्तिपरः । अर्थेन निवृत्त्या । प्राप्तराज्यपरित्यागेनेतियावत् । धर्मपराः । ते इहदुःखं प्रारब्धं । प्रेत्य मृत्वाविनाशं अदर्शनं । लेभिरे प्राप्तवन्तः । णशअदर्शनइतिधातोः ॥ १३ ॥ **स०** अशिष्यति भक्षयिष्यति ॥१४॥ **ति०** भोक्त्रभावेनदूषितमप्यर्थंयुक्त्यन्तरेणदूषयति—**यदीति** । प्रवसतामुद्दिश्यकृत्वाश्राद्धंदद्यात् । प्राप्तकालेलिङ् । तद्दानमेवोचितमित्यर्थः । नतुतत्पथ्यशनं । तस्मैदीयमानंपथ्यशनंपाथेयंभवेत् न्याय्यमितिशेषः । भारवहनेनदुःखदत्वादितिभावः । एतेनैवन्यायेनदेवार्थदानमपिव्यर्थमित्युपपादितं ॥ १५ ॥ **ति०** एवंवैदिकाचारंप्रदूष्यतत्प्रतिपादकागमाप्रामाण्यमाह—**दानेति** । यजस्वदेवपूजांकुरु । दीक्षस्व यागार्थं । तपः चान्द्रायणादि । संत्यज प्रव्रजेत्येवंपरावेदादयोग्रंथाः । मेधाविभिः वार्तादिनाजीवनेक्लेशंपश्यद्भिः पामरप्रतारणायानायासेनधनग्रहणायकृताः । अतोनतेप्रमाणमितिभावः ॥ १६ ॥ **ति०** परं ऐहिकात्परं परलोकप्रयोजनंकिंचिद्धर्माख्यं । नास्ती-

**[पा०]** १ च. जन्तोर्युक्तंतच्छुक्रशोणितं. ङ. छ. झ. ञ. जन्तोःशुक्रंशोणितमेव. ट. जन्तोःशुक्रशोणितमेव. २ ङ. च. छ. झ. ञ. ट. भूतानां. ३ प. च. ञ. येच. ४ ग. ङ. छ. झ. ट. लेभिरे. ५ ङ. छ. झ. ट. त्प्रवसतां. ६ ङ. च. छ. झ. ञ. ट. मित्येतत्कुरु-

स तांबुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् ॥ राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टोत्तरशततमः सर्गः ॥१०८॥

## नवोत्तरशततमः सर्गः ॥ १०९ ॥

रामेणनिपुणतरोपन्यासेनजाबालिदर्शितनास्तिकवादनिराकरणम् ॥ १ ॥ जाबालिनास्वेननास्तिकवादपरिग्रहेकारण निवेदनपूर्वकंश्रीरामप्रसादनम् ॥ २ ॥

जाबालेस्तु वचः श्रुत्वा रामः सत्यात्मनां वरः ॥ उवाच परया भक्त्या स्वबुद्ध्या चाविपन्नया ॥१॥
भवान्मे प्रियकामार्थं वचनं यदिहोक्तवान् ॥ अकार्यं कार्यसङ्काशमपथ्यं पथ्यसंमितम् ॥ २ ॥
निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ॥ मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३ ॥
कुलीनमकुलीनं वा वीरं पुरुषमानिनम् ॥ चारित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम् ॥४॥
अनार्यस्त्वार्यसंकाशः शौचाद्धीनस्तथा शुचिः ॥ लक्षण्यवदलक्षण्यो दुःशीलः शीलवानिव ॥ ५ ॥
अधर्मं धर्मवेषेण यदीमं लोकसंकरम् ॥ अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जितम् ॥ ६ ॥
कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः ॥ बहुमंस्यति मां लोके दुर्वृत्तं लोकदूषणम् ॥ ७ ॥

लोकानुभाव्यं यत्प्रत्यक्षं प्रत्यक्षसिद्धंराज्यभोगादिकं । तदातिष्ठप्रतिगृह्णीष्व परोक्षं परोक्षसुखफलकंपितृवचनपरिपालनादिकं ॥ १७ ॥ तांबुद्धिं प्रत्यक्षादन्यन्नास्तीतिबुद्धिं । सर्वलोकनिदर्शिनीं सर्वजनसंमतामित्यर्थः ॥१८॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

अथजाबालिमतनिरासपूर्वकं वैदिकमतस्थापनंनवोत्तरशततमेसर्गे—जाबालेरित्यादिना । सत्यात्मनां सत्यबुद्धीनां भक्त्या । वैदिकधर्मश्रद्धया । अविपन्नया जाबालिवचनैः सांदृष्टिकैरप्यचलितया ॥ १ ॥ प्रियकामार्थं प्रियविषयेच्छासिद्ध्यर्थं यद्वचनमुक्तवान् तत् कार्यसंकाशं कार्यवत्प्रतीयमानं । अकार्यं पथ्यसंमितं पथ्यवदवभासमानं । अपथ्यं दुःखोदर्कमितियावत् एवंवचनंदूषितं ॥ २ ॥ अथवक्तारंदूषयति—निर्मर्यादइत्यादिना । निर्मर्यादः मर्यादारहितः । अतएव पापाचारसमन्वितः तत्रहेतुः—भिन्नचारित्रदर्शनइति । दर्शनं मतं वेदविहिताद्भिन्नाचारप्रतिपादकमतप्रवर्तकइत्यर्थः । एवंभूतःपुरुषः सत्सु मानं पूजां । नलभते प्रत्युत निन्दामेवलभतइत्यर्थः ॥ ३ ॥ पापाचारत्वेकिंप्रमाणमित्याशङ्क्य तदुक्तिरेवप्रमाणमित्याह—कुलीनमित्यादिना । पुरुषमानिनं । अतिधीरमित्यर्थः । चारित्रं उक्तरूपाचारः ॥ ४ ॥ एतादृशपुरुषोपदेशश्रवणेस्वस्यानर्थंदर्शयतिश्लोकत्रयेण—अनार्यइत्यादिना । अनार्यएवसन्नार्यसंकाशः शौचाद्धीनएवसन्शुचिरिव लक्षण्यवत् शिष्टलक्षणयुक्ततुल्यएवसन् । अलक्षण्यः लक्षणहीनः । शीलवानिवसन्दुःशीलः अहं शुभंहित्वा शुभसाधनं वैदिकधर्मंहित्वा । लोकसंकरं लोकसंकरकारकं । क्रियाविधिविवर्जितं वैदिकक्रिययावेदविधिनाचवर्जितंइमं त्वदुक्तमधर्मं । धर्मवेषेण धर्मत्वेनाभिपत्स्ये स्वीकरि-

तिबुद्धिंकुरु । परोक्षं अनुमानशब्दादिगम्यं ॥ १७ ॥ ति० सतां प्रत्यक्षसिद्धस्यैवसत्यत्वंवदतां । तएवहिसाधवोनतुशब्दप्रमाणकादेस्सत्यत्वंवदन्तइतिभावः । भिन्नेपदेवा । सः त्वं ॥ १८ ॥ इत्यष्टोत्तरशततमस्सर्गः ॥ १०८ ॥

**ति०** सत्यपराक्रमः सत्यप्रधानःपराक्रमोयस्यसः । विप्रतिपन्नया जाबाल्युक्तार्थेप्रतिपत्तिरहितया । बुद्ध्यायुक्तस्सन् सूक्त्या वेदलक्षणसुवचनालंबनेन । उवाच । **स०** अविप्रतिपन्नया वेदाद्यविरुद्धया ॥ १ ॥ **ति०** आर्यसंस्थानः तत्सदृशः ॥ ५ ॥ **ति०** यद्यहंत्वदुपदिष्टंलोकसंकरकारकंअधर्ममार्गं धर्मवेषेणयुक्तोऽभिपत्स्ये तदाविधिविवर्जितां श्रुत्याद्युक्तविधानरहितां । क्रियांकृत्वातत

[ पा० ] १ ङ. छ. ट. सत्वंनिगृह्णीष्व. २ ख. ज. सत्यवतां. घ. ङ. छ. झ. ट. सत्यपराक्रमः. ३ क. ङ. च. छ. झ. ञ. ट. सूक्त्या. ख. युक्त्या. ४ ङ. छ. झ. ट. बुद्ध्याविप्रतिपन्नया. ५ ग. घ. ङ. छ.—ट. संस्थानः. ६ ङ. छ. झ. ञ. ट. यद्यहं. ७ ङ. छ. झ. ट. क्रियांविधिविवर्जितां. ८ ङ. च. छ. झ. ञ. ट. बहुमन्येत.

कस्य [1]धास्याम्यहं [2]वृत्तं केन वा स्वर्गमाप्नुयाम् ॥ अनया [3]वर्तमानो हि वृत्त्या हीनप्रतिज्ञया ॥ ८ ॥
कामवृ[4]त्तस्त्वयं लोकः कृत्स्नः समुपवर्तते ॥ यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥९॥
सत्यमेवानृशंसं च राजवृत्तं सनातनम् ॥ तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥
[5]ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ॥ सत्यवादी हि लोकेऽस्मि[6]न्परमं गच्छति क्षयम् ॥ ११ ॥
उद्विजन्ते यथा सर्पान्नरादनृतवादिनः ॥ धर्मः स[7]त्यं परो लोके मूलं स्व[8]र्गस्य चोच्यते ॥ १२ ॥
सत्यमेवेश्वरो लोके स[9]त्यं पद्मा श्रिता सदा ॥ सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥१३॥
दत्तमिष्टं हुतं चैव तप्तानि [10]च तपांसि च ॥ वेदाः सत्यप्रतिष्ठानास्तस्मात्सत्यपरो भवेत् ॥ १४ ॥
एकः पालयते लोकमेकः पालयते कुलम् ॥ मज्जत्येको हि निर[11]ये एकः स्वर्गे महीयते ॥ १५ ॥
सोहं पितु[12]र्नियोगं तु किमर्थं नानुपालये ॥ सत्यप्रतिश्रवः सत्यं सत्येन समयीकृ[13]तः ॥ १६ ॥

ष्यामियदि दुर्वृत्तंमां चेतयानः ज्ञानवान् कःपुरुषः लोकेबहुमंस्यति नकोपीत्यर्थः ॥ ५—७ ॥ नकेवलंबहुमानहानिः परलोकहानिश्चेत्याह—कस्येत्यादिना । अहं हीनप्रतिज्ञया वनवासप्रतिज्ञारहितया । अनयावृत्त्या "परोक्षंपृष्ठतःकुरु"इतित्वदुक्तयावृत्त्यावर्तमानः सन् । वृत्तं त्वदुक्ताचरणं । कस्य धास्यामि आधास्यामि उपदेक्ष्यामीत्यर्थः । दास्यामीतिपाठान्तरं । केनवासाधनेनस्वर्गमाप्नुयामितियोजना ॥ ८ ॥ त्वदुक्ताचरणेसर्वलोकस्यापिपरलोकहानिःस्यादित्याह—कामवृत्तइत्यादिना ॥ ९ ॥ सत्यप्रशंसापूर्वकंसत्यनिष्ठांदर्शयन्सत्यपरत्वरूपस्वमतंस्थापयति—सत्यमेवेत्यादिना । अनृशंसं भूतानुकम्पाप्रधानं सनातनंच राजवृत्तं सत्यमेव सत्यरूपमेव तस्मात् राजवृत्तस्यसत्यरूपत्वात् । राज्यं राज्यस्थजनजातं । सत्यात्मकं सत्यरूपं सत्यप्रधानमितियावत् । लोकइतिजात्येकवचनं ॥ १० ॥ मेनिरे उत्कृष्टमितिशेषः । परमंक्षयं परमंधाम । "धिष्ण्यं धामनिकेतनंचसदनंवस्त्यंचवास्तुक्षयः" इतिवैजयन्ती ॥ ११ ॥ उद्विजन्ते जनाइतिशेषः ॥ १२ ॥ ईश्वरःनियन्ताव्यवस्थापकइतियावत् ॥ १३ ॥ सत्यप्रतिष्ठानाः सत्याधाराः । सत्यप्रतिष्ठानानीतिविपरिणम्यपूर्वार्धेनयोज्यं ॥ १४ ॥ प्रस्तुतसत्यनिष्णातस्यैहिकामुष्मिकफलं तद्रहितस्यनिरयप्राप्तिंचदर्शयति—एकइत्यादिना ॥ १५ ॥ सत्यप्रतिश्रवः सत्यसन्धः

एवशुभंहित्वा अशुभंप्राप्नुयामितिशेषः ॥ ६ ॥ **शि०** हीनप्रतिज्ञया हीना निवृत्ता प्रतिज्ञायस्यां तया अनयावृत्त्यावर्तमानोऽहं वृत्तं स्वधर्मच्युतिरूपवृत्तान्तं । कस्ययास्यामि प्रापयिष्यामि कथयिष्यामीत्यर्थः । केनकर्मणा उपलक्षितंजनंस्वर्गं अवाप्नुयां प्रापयेयं ॥ ८ ॥ **ति०** सत्यपरः सत्यंपरंश्रेष्ठंयस्यसः धर्मः सर्वस्यमूलमुच्यते ॥ १२ ॥ **ति०** लोके ईश्वरस्सत्यमेव सत्यपदवाच्यइतिप्रसिद्धइत्यर्थः । तथा सद्भिराश्रितोधर्मः सत्ये सत्यपदवाच्येईश्वरे । प्रतिष्ठितः । आदौतस्यैवधर्मोपदेष्टृत्वादित्यर्थः । सत्येपद्माप्रतिष्ठितेतिपाठान्तरं । पद्मा लक्ष्मीः । सत्यमूलानिसर्वाणीत्यनेन जगदुपादानप्रवर्तकत्वेनसर्वाधिष्ठानत्वेनचतत्सिद्धिर्दर्शिता । तस्यैवतत्त्वेहेतुमाह । सत्यात्परंपदंनास्ति । अनेन तदितरस्यसर्वस्यमिथ्यात्वमचेतनत्वंचदर्शितं । एतेन चेतनानधिष्ठिता मायैवजगदुपादानकारणमितिनिरस्तं । चेतनाधिष्ठानंविनातत्परिणामासंभवात् । तस्याःपरिणामित्वेनमिथ्यात्वेनचेतनाधिष्ठानत्वासंभवाच्च ॥ १३ ॥ **ति०** एवंनास्तिकंप्रतीश्वरंप्रसाध्यवेदप्रामाण्यंसाधयति—**दत्तमित्यादि** । दत्तादीनिप्रतिपादयन्तोवेदाः सत्यप्रतिष्ठानाः सत्यादीश्वरात् श्वासप्रश्वासवदाविर्भूताइतिवक्तृदोषशंकाकलङ्कराहित्येनतत्प्रतिपादितदानादीनांफलसंवाददर्शनेनच सर्वत्राप्रामाण्यशङ्कारहिताः किंतुस्वतःप्रमाणभूताएवेतिभावः । तस्मात् सत्यस्यईश्वरवाचकवाच्यत्वेनतदभेदात्सत्यपरः सत्यपरिपालनतत्परोभवेदित्यर्थः ॥ १४ ॥ **ति०** वेदोक्तधर्माधर्मफलस्यप्रत्यक्षमनुभूयमानत्वेनतत्प्रामाण्यंसिद्धमित्याह—**एकइति** । लोकं राज्यं । कुलं स्वकुलमात्रं । एतेनपालनसाधनधर्मफलतारतम्यस्यवेदोक्तस्यानुभवोदर्शितः । निरयोत्रदुःखं । स्वर्गश्च सुखं । तेनधर्माधर्मफलानुभवोदर्शितः । **स०** एकः अन्यः । "एकेमुख्यान्यकेवलाः" इत्यमरः ॥ १५ ॥ **स०** सत्येनशपथेन समयीकृतः कैकेय्याप्रतिज्ञावान्कृतः यतः अतः कथंनानुपालये । कृतमित्यपिपाठः । **ति०** सोहं उक्तरीत्याएवंविवेकवानित्यर्थः ।

**[ पा० ]** १ क. ख. ग. ङ. च. छ. झ. ट. यास्याम्यहं. २ क. वृत्तिं. ३ क. ग. ङ.—ट. वर्तमानोहं. ४ ङ. छ. झ. ञ. ट. वृत्तोन्वयं. क.—घ. च. ज. वृत्तस्स्वयं. ५ क. ख. ऋषयश्चहि. ६ ङ. छ. झ. ट. परंगच्छतिचाक्षयं. ७ ङ. छ. झ. ञ. ट. सत्यपरो. ८ ङ. छ. झ. ट. सर्वस्य. ९ ङ. च. छ. झ. ट. सत्येधर्मःसदाश्रितः. घ. सत्यंपद्मासनाश्रिता. ख. ग. ज. सत्यंपद्मासमाश्रिता. १० घ. सुतपांसि. ११. ङ. नरके. १२ क. ख. ङ. छ. झ. ञ. ट. निर्देशं. १३ ङ. छ. झ. ट. कृतं.

नैव लोभान्न मोहाद्वा न ह्यज्ञानात्तमोन्वितः ॥ सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥१७॥
असत्यसन्धस्य सतश्चलस्यास्थिरचेतसः ॥ नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥ १८ ॥
प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं स्वयम् ॥ भारः सत्पुरुषाचीर्णस्तदर्थमभिमन्यते ॥ १९ ॥
क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् ॥ क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २० ॥
कायेन कुरुते पापं मनसा संप्रधार्य च ॥ अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥ २१ ॥
भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ॥ स्वर्गस्थं चानुपश्यन्ति सत्यमेव भजेत तत् ॥२२॥
श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवानवधार्य माम् ॥ आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्व ह ॥ २३ ॥

॥ १६ ॥ लोभात् राज्यलोभात् । मोहात् विप्रलम्भवाक्यजनितचित्तविभ्रमात् । अज्ञानात् तमोन्वितः तमोगुणयुक्तः । सत्यस्य "करिष्यामितवप्रीतिंसुकृतेनापितेशपे"इत्यस्यसत्यवचनस्य । सेतुं मर्यादां ॥ १७ ॥ चलस्य चलस्वभावस्य । प्रतीच्छन्ति हव्यकव्यादिकमितिशेषः । नः अस्माभिः । श्रुतं ॥ १८ ॥ अहं सत्यं सत्यरूपमिमंधर्मं प्रत्यगात्मंस्वयंपश्यामि आत्मानंप्रत्यविनाभूतत्वेनप्रवृत्तंपश्यामीत्यर्थः । सत्पुरुषाचीर्णः सत्पुरुषैराचरितः संपादितइतियावत् । भारः जटावल्कलादिभारः । तदर्थं सत्यरूपधर्मार्थं । अभिमन्यते अभिमतोभवति ॥ १९ ॥ पूर्वैराचरितंसत्यंपरित्यज्य त्वदुक्तरीत्याराज्यंनाङ्गीकरिष्यामीत्याह—क्षात्रमित्यादिना । अधर्मं अधर्मप्रचुरं । धर्मसंहितं धर्मलेशसहितं । अधर्मप्रचुरधर्मलेशयुक्तक्षत्रियधर्ममहंत्यक्ष्यइत्यर्थः ॥ २०—२१ ॥ कीर्तिः वितरणजनिताप्रथा । यशः पौरुषनिबन्धनं । पुरुषं करणत्रयेणसत्यनिष्णातं । अनुपश्यन्ति अनुसृत्यपश्यन्ति अनुबध्नन्तीतियावत् ॥ २२ ॥ श्रेष्ठमित्यवधार्यनिश्चित्य । इदंभद्रंकुरुष्वेति भवान्युक्तिकरैर्वाक्यैः यदाह तदनार्यमेवस्यात् ॥२३॥

ननुस्त्रीवशतयापितृकृतेननियोगेकिमियतानिर्बन्धनेनतत्राह—**सत्येति** । यतोमेपितासत्यप्रतिश्रवः स्वप्रतिज्ञातसत्याङ्गीकारवान् । समयीसदाचरवान् । अतस्तेनसत्येनसत्यपरिपालनेनहेतुनासत्यमेवमांप्रतिकृतं उक्तमित्यर्थः । **शि०** राजा यतस्सत्यप्रतिश्रवः अतस्सत्येन सत्यपरिपालनहेतुना । सत्यमेवकृतंआज्ञापितमित्यर्थः । एतेन धर्मपरिपालनमेवप्रव्राजनेहेतुरितिसूचितं ॥ १६ ॥ **ति०** पूर्वंसत्यप्रतिश्रवः शपथपूर्वकंकृतप्रतिज्ञस्सन् नैवभेत्स्यामि नभेत्स्यामि नचभेत्स्यामीतित्रिवारोक्त्यासर्वथादार्ढ्यंसूचितं । **स०** तमः तत्कार्यंकोपादि । गुरोः पितुः ॥ १७ ॥ **स०** उपासकस्यचञ्चलत्वादेव तेपिदेवाद्याः अस्थिरचेतसस्सन्तः नप्रतीच्छन्तिगृह्णन्ति । हव्यादिकमितिशेषः ॥ १८ ॥ **स०** प्रत्यगात्मं अञ्चन्तिगच्छन्तिनानायोनिष्वित्यञ्चः । तेचतेआत्मानः अगात्मानोजीवाः । अगात्मनःप्रतिविद्यमानंप्रत्यगात्मं । वीप्सायामव्ययीभावः । "अनश्च" इतिटच् । सत्यं सत्यपरिपालनं ध्रुवं मुख्यंधर्मंपश्यामि । भारः जटाभारः यतः धर्मार्थंसत्पुरुषैश्चीर्णः अतस्तदर्थं अभिनन्द्यते आद्रियते ॥ १९ ॥ **ति०** ननुस्वधर्मो राज्यपालनमेवकिमितिनाभिनन्द्यतेतत्राह—**क्षात्रमिति** । धर्मसंहितं धर्मवत्प्रतिभासमानं वस्तुतोऽधर्मं पित्राज्ञाभङ्गकरत्वात् । क्षुद्रादिभिस्सेवितं ईदृशंक्षात्रधर्मं पित्राज्ञाभङ्गेनराज्यकरणरूपं । अहंत्यक्ष्ये नतुन्याय्यंक्षात्रधर्ममितिभावः ॥२०॥ **ति०** अस्य पापस्य शरीरसाध्यत्वेपि कायिकवाचिकमानसिकसकलपापप्रसक्तिरित्याह—**कायेनेति** । आदौमनसा एवंकर्मंकरिष्यइतितत्पापंसंप्रधार्य ततोजिह्वया ऋतं धर्मजनकं ततोभिन्नमनृतं तत्कर्म कर्तव्यत्वेनजिह्वयातत्सहायभूतेषुपुरुषेष्वाह । ततःकायेनकुरुते । अतःपापंकर्म क्रियारूपंपापं त्रिविधं कायिकवाचिकमानसिकरूपत्रिविधजनकमित्यर्थः । तेनकायिकंपापंबहुदुःखजनकमितिभावः । कलौतुपापसंकल्पादितोनदोषइत्युक्तंभागवते । "नानुद्वेष्टिकलिंसम्राट्सारङ्गइवसारभुक् । कुशलान्याशुसिद्ध्यन्तिनेतराणिकृतानियत्" सम्राट परीक्षित् । सारमाह—कुशलानि पुण्यानि । आशु संकल्पमात्रात् । सिद्ध्यन्ति यथामानसपूजा । इतराणिपापानिसंकल्पमात्रान्नफलन्ति । यत् यतः । तानिकृतान्येवफलन्तीतितदर्थः । **शि०** कायेनयत्पापंकुरुतेतत् जिह्वयाअनृतंयदाहतच्च मनसाअसंप्रधार्य अनिश्चित्यैवयत्कुरुते दुर्मार्गेधावतीत्यर्थः । तच्च पापं । अतःपातकंत्रिविधं । मनोवाक्कायत्रितयसंबन्धित्वात्त्रिप्रकारकं । एतेन सत्यप्रतिज्ञत्वत्यागपूर्वमेतद्राज्यकरणेत्रिविधपापसंबन्धोभविष्यतीतिसूचितं ॥ २१ ॥ **ति०** अवधार्य युक्तत्वेननिश्चित्य ।

**[ पा० ]** १ घ. मोहान्नलोभाद्वा. २ क. ख. ग. ङ. च. छ. झ. ञ. ट. नचाज्ञानात्. ३ ङ. च. छ. झ. ञ. ट. ध्रुवं. ४ ङ. छ. झ. ञ. ट. सत्पुरुषैश्चीर्णः. ५ ख. ग. ङ.—ट. मभिनन्द्यते. ६ ख. घ. ङ. ट. क्षात्रधर्मं. ७ क. ङ. च. छ. झ. ट. संप्रधार्थतत्. ख. ग. संप्रधारयन्. ८ ग. चेमं. ख. वक्ति. ९ छ. पापमात्मजं. १० च.—ट. सत्यंसमनुवर्तन्ते सत्यमेवभजेत्ततः. ११ ख. ग. चानुबध्नन्ति.

कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरौ ॥ भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसन्निधौ ॥ प्रहृष्यमाणा सा देवी कैकेयी चाभवत्तदा ॥ २५ ॥
वनवासं वसन्नेवं शुचिर्नियतभोजनः ॥ मूलैः पुष्पैः फलैः पुण्यैः पितॄन्देवांश्च तर्पयन् ॥ २६ ॥
संतुष्टपञ्चवर्गोहं लोकयात्रां प्रवर्तये ॥ अकुहः श्रद्दधानः सन्कार्याकार्यविचक्षणः ॥ २७ ॥
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ॥ अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ २८ ॥
शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः ॥ तपांस्युग्राणि चास्थाय दिवं याता महर्षयः ॥ २९ ॥

अमृष्यमाणः पुनरुग्रतेजा निशम्य तन्नास्तिकवाक्यहेतुम् ॥
अथाब्रवीत्तं नृपतेस्तनूजो विगर्हमाणो वचनानि तस्य ॥ ३० ॥
सत्यं च धर्मं च पराक्रमं च भूतानुकम्पां प्रियवादितां च ॥
द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३१ ॥
तेनैवमाज्ञाय यथावदर्थमेकोदयं संप्रतिपद्य विप्राः ॥
धर्मं चरन्तः सकलं यथावत्काङ्क्षन्ति लोकागममप्रमत्ताः ॥ ३२ ॥

---

" प्रत्यक्षंयत्तदातिष्ठपरोक्षंपृष्ठतःकुरु " इत्यन्तस्यजाबालिवाक्यजातस्योत्तरमभिधाय " राज्यंत्वंप्रतिगृह्णीष्वभरतेनप्रसादितः " इत्यस्याप्युत्तरमाह—कथमित्यादिना ॥ २४ ॥ प्रतिज्ञा प्रतिज्ञाता कृतेत्यर्थः ॥ २५ ॥ वनवासमित्यादिश्लोकद्वयमेकंवाक्यं । वनवासं वसन् कुर्वन्नित्यर्थः । नियतभोजनः नियतवन्याहारः । संतुष्टपञ्चवर्गः परितुष्टपञ्चेन्द्रियवर्गः । लोकयात्रां पितृवचनपरिपालनरूपलोकवर्तनं । " गमनेवर्तनेयात्रा " इतिवैजयन्ती । अकुहः अकृत्रिमः ॥ २६—२७ ॥ अष्टकोदाहरणेनवैदिककर्मणांनिष्फलत्वंयदुक्तंतत्रपरिहारमाह—कर्मभूमिमित्यादिना । यच्छुभंकर्म तत्कर्तव्यं जनैरितिशेषः । तत्रफलवदनुष्ठानंदर्शयति—अग्निरित्यादि । कर्मणां कर्मभूमिकृतस्वस्वकर्मणां । फलभागिनः अग्नित्वादिफलंप्राप्तवन्तः ॥ २८ ॥ क्रतूनांशतं आहृत्य कृत्वेत्यर्थः । प्रवासिनंप्रतिश्राद्धकरणविधेरभावात् विहितस्थलेकुत्रापिन व्यभिचारइतिभावः ॥ २९ ॥ नास्तिकवाक्यहेतुं । " यदिभुक्तमिहान्येनदेहमन्यस्यगच्छति । दद्यात्प्रवसतःश्राद्धंनतत्पथ्यशनंभवेत् " इत्यादिनास्तिकवाक्यरूपतर्कं विगर्हमाणः मनसिविगर्हमाणः ॥ ३०—३१ ॥ तेनहेतुना विप्राः एवमर्थंयथावत् आज्ञाय ज्ञात्वा । एकोदयंसंप्रतिपद्य ऐककण्ठ्यंप्राप्य । सकलं धर्मं स्वस्ववर्णाश्रमोचितधर्मं । अप्रमत्ताः सावधानाः । यथावच्चरन्तः अनुतिष्ठन्तः । लोकागमं स्वर्गादिलो-

---

युक्तिकरैः युक्तिरेवकरःकरणंयेषांतैर्वाक्यैः । श्रेष्ठंहि श्रेष्ठमिवाह तदनार्यं अन्याय्यमेवस्यात् ॥ २३ ॥ ति० गुरोःपुरतः इमं गुर्वाज्ञप्तं । गुरोर्वचोहित्वेत्यन्वयः ॥ २४ ॥ ति० कैकेयीचेति । एवंचतस्याहर्षदस्यपुनरहर्षदत्वमत्यन्तमनुचितमितिभावः ॥२५॥ ति० तर्पयन् प्रतिज्ञांपालयिष्यामीतिशेषः ॥ २६ ॥ ति० श्रद्दधानः आस्तिकः । लोकयात्रांप्रवाहये प्रवाहरूपेणप्रवर्तयामीत्यर्थः । शि० किंच संतुष्टपञ्चवर्गः संतुष्टेनसंतोषेणपञ्चौव्यक्तौवर्गौसीतालक्ष्मणौयस्य ॥ २७ ॥ वि० फलभागिनः अग्नित्वादिकंकर्मफलत्वेनप्राप्तवन्तः । अतस्सर्वैरपिशुभकर्मैवकर्तव्यमितिभावः स० कर्मणांफलभागिनः अस्मिन्वर्षेकर्मकृत्वैवप्राप्तपदाः ॥ २८ ॥ ति० शतमिति । अनेनपूर्वोक्तंसमर्थितं । अतीतानागतज्ञेन्द्रादीनांतत्तत्फलानुभवेनतत्तद्वेदभागप्रामाण्यंदर्शितंच । स० त्रिदिवं स्वर्गं । गतः स्वामित्वेनप्राप्तः । महर्षयइत्यनेन पारत्रिकसुखास्तित्वनिश्चयेनैवतपःकरणं नतुभ्रान्त्येति ॥ २९ ॥ ति० नास्तिकवाक्येहेतुं नास्तिपरलोकइतिवचनोपपादकं "यदिभुक्तमिहान्येन" इत्याद्युक्तशुष्कतर्करूपं । अमृष्यमाणः जाबालिमितिशेषः । तस्य जाबालेः अनेन नास्तिकवृत्तयोब्राह्मणाअपिराज्ञोऽवश्यंवाग्दण्डेनदण्ड्याइतिसूचितं । ति० अथ पुनः । तमब्रवीदितिसंबन्धः ॥ ३० ॥

[ पा० ] १ ख. ग. ङ. च. छ. झ. ञ. ट. गुरोः. २ ङ.—ट. प्रहृष्टमानसा. ३ क.—ट. मूलपुष्पफलैः. ञ. पत्रपुष्पफलैः. ४ क. ख. घ. पितृदेवांश्च. ५ छ. गामिनः. ६ ङ. छ. झ. ट. प्राप्ता. ७ ख. घ. हेतुवाक्यं.

निन्दाम्यहं कर्म पितुः कृतं तद्यस्त्वामगृह्णाद्विषमस्थबुद्धिम् ॥
बुद्ध्याऽनयैवंविधया चरन्तं सुनास्तिकं धर्मपथादपेतम् ॥ ३३ ॥
यथा हि चोरः स तथाहि बुद्धस्तथागतं नास्तिकमत्र विद्धि ॥
तस्माद्धि यः शङ्क्यतमः प्रजानां नं नास्तिकेनाभिमुखो बुधः स्यात् ॥ ३४ ॥
त्वत्तो जनाः पूर्वतरे वराश्च शुभानि कर्माणि बहूनि चक्रुः ॥
जित्वा सदेमं च परं च लोकं तस्माद्द्विजाः स्वस्ति हुतं कृतं च ॥ ३५ ॥
धर्मे रताः सत्पुरुषैः समेतास्तेजस्विनो दानगुणप्रधानाः ॥
अहिंसका वीतमलाश्च लोके भवन्ति पूज्या मुनयः प्रधानाः ॥ ३६ ॥
इति ब्रुवन्तं वचनं सरोषं रामं महात्मानमदीनसत्त्वम् ॥
उवाच तथ्यं पुनरास्तिकं च सत्यं वचः सानुनयं च विप्रः ॥ ३७ ॥
न नास्तिकानां वचनं ब्रवीम्यहं न चास्तिकोऽहं न च नास्ति किंचन ॥

कप्राप्तिंकाङ्क्षन्तीति ॥ ३२ ॥ विषमस्थबुद्धिं । अवैदिकमार्गनिष्णातबुद्धिं । अनयाबुद्ध्याचरन्तं चार्वाकमतानुसारिणींबुद्धिंपरान्प्रत्युपदिश्याचरन्तमित्यर्थः। सुनास्तिकं परलोकोनास्तीतिबुद्धियुक्तं । सुशब्देनवैदिकवत्स्थित्वाचार्वाकमतप्रवर्तकइत्युच्यते । निन्दामि वैदिककर्मभ्योबहिष्करोमि ॥ ३३ ॥ प्रत्यक्षैकप्रमाणवादीयदिकश्चिद्राज्येस्यात्सोपिबहिष्करणीयइत्याह— यथेत्यादिना । चोरोयथानिराकरणीयः सः वेदबाह्यत्वेनप्रसिद्धोपि । तथाहि तथैव । अत्र अस्मिँल्लोके । नास्तिकं चार्वाकं । तथागतं बुद्धतुल्यंविद्धि । तस्माद्यः प्रजानांशङ्क्यतमः अवैदिकत्वेनशङ्कनीयः । तेन नास्तिकेनबुधोभिमुखोनस्यात् ॥ ३४ ॥ ऐहिकामुष्मिकफलसाधनेधर्मेशिष्टाचारंप्रमाणयति—त्वत्तइत्यादिना । त्वत्तःपूर्वतरे पुरातनाश्च वराश्च ज्ञानतःश्रेष्ठाश्चजनाः बहूनिशुभानिकर्माणिचक्रुः ते इमंपरंचलोकंजित्वा सदा वर्तन्तइतिशेषः । सदावर्तमानत्वंचप्रहनक्षत्रादिरूपेणदृश्यमानत्वात् । "सुकृतांवाएताज्योतींष्यिन्नक्षत्राणि" इतिश्रुतेः । तस्मात् कर्मानुष्ठानस्यैहिकामुष्मिकसकलफलसाधनत्वात् । द्विजाः स्वस्ति मङ्गलात्मकंकर्म हुतंयज्ञादिकृतंच तपोदानादिकंच कुर्वन्तीतिशेषः । एवंप्रत्यक्षमेवनप्रमाणं तदतिरिक्तानांवेदानामपिप्रमाणत्वात् । तत्त्वंच तेषां महाजनपरिग्रहात् । सचापौरुषेयत्वेन तच्चाविच्छिन्नसंप्रदायत्वेसतिअस्मर्यमाणकर्तृकत्वात् । वैदिकानि चकर्माणिसफलानि अग्निरविसोमनक्षत्रेन्द्रादिफलभोगस्याबाधितप्रत्यक्षसिद्धत्वात् । अन्यकृतभोजनस्यपथिकाशनत्वाभावस्तु अदर्शनादविहितत्वाच्चेत्युक्तं ॥ ३५—३६ ॥ तथ्यं यथार्थं । सत्यं सद्भ्योहितं ॥ ३७ ॥ धर्मसंकटेप्राप्तेसर्वमतज्ञेनविदुषायत्किंचिन्मतमवलम्ब्यापितस्यपरिहरणीयत्वात् महतोराज्यस्या-

ति० चरन्तं लोकनाशायाटन्तं । विषमस्थबुद्धिं अवैदिकदुर्मार्गप्रतिष्ठितबुद्धिं । त्वां योमेपिताअगृह्णात् याजकत्वेनस्वीकृतवान् तत्पितुःकर्मनिन्दामि ॥ ३३ ॥ ति० बुद्धः बुद्धमतानुसारी तथा चोरवद्दण्ड्यः इति हि प्रसिद्धं । नास्तिकं चार्वाकं । तथागतं तत्सदृशं चोरवद्दण्ड्यंविद्धि । नास्तिकविशेषस्तथागतः । तमपिचोरवद्दण्डयामीतिशेषइत्यन्ये । वेदप्रामाण्यापहर्तृत्वेनतेषामपिचोरत्वात् । दण्डयितुंशक्यतमोयस्सचोरवदेवदण्ड्यः । दण्डायोग्येतुनास्तिकेबुधोऽभिमुखोनस्यात् । तत्संभाषणादि नकुर्वीतेत्यर्थः ॥ ३४ ॥ ति० यतः त्वत्तः अन्येइतिशेषः । त्वदन्येद्विजाजनाः पूर्वतरे श्रेष्ठाः । आर्षमिदं । यदेतिपाठे नाध्याहारापेक्षा । तस्यैवयतइत्यर्थकत्वात् । बहूनिशुभानिचक्रुः । इमंलोकं परंचलोकंछित्वा ऐहिकामुष्मिकफलकामनांत्यक्त्वापि वेदोक्तोऽयंधर्मइत्येतावतैवकर्माणिचक्रुरितितात्पर्यं । तस्मात् द्विजाः स्वस्ति अहिंसासत्यादिकं कृतं तपोदानपरोपकारादि । हुतं यज्ञादि कुर्वते वेदप्रामाण्यादेव ॥ ३५ ॥ ति० मुनयः वसिष्ठाद्याः पूज्याभवन्तिलोके नत्वादृशाइत्यर्थः ॥ ३६ ॥ ति० इतिधिकृतोजाबालिः स्वविषयकोपशमनायाह—इतीति । पथ्यं परमार्थं ॥ ३७ ॥ नेति । एवंचसर्वमतज्ञेनकालविशेषेअन्यथावाग्व्यवहारेपिनत-

[पा०] १ ख. विषयस्थबुद्धिः. २ झ. ट. ठ. सनास्तिके. ३ ञ. वृत्तःपराः. क. त्वत्तोवराः. ४ ङ. छ. झ. ट. द्विजाश्च. क. जनाश्च. ५ ङ. च. छ. झ. ञ. ट. कृतंहुतंच. ६ ङ. च. छ. झ. ट. सदोषं. ७ ङ. च. छ. झ. ञ. ट. पथ्यं. ८ क. घ. च. झ. ञ. ट. नास्तिकोहं.

समीक्ष्य कालं पुनरास्तिकोऽभवं भवेय काले पुनरेव नास्तिकः ॥ ३८ ॥
स चापि कालोऽयमुपागतः शनैर्यथा मया नास्तिकवागुदीरिता ॥
निवर्तनार्थं तव राम कारणात्प्रसादनार्थं तु मयैतदीरितम् ॥ ३९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे नवोत्तरशततमः सर्गः ॥१०९॥

## दशोत्तरशततमः सर्गः ॥ ११० ॥

वसिष्ठेनजाबालयेरुष्टंरामंप्रतितद्भावकथनेनपरिसान्त्वनम् ॥ १ ॥ तथातंप्रतिज्येष्ठस्यैवराज्यार्हतेतिव्याप्तेरव्यभिचारप्रदर्शनायब्रह्माणमारभ्यदशरथावधिवंशानुक्रमकीर्तनपूर्वकंज्येष्ठत्वहेतुनाराज्यस्वीकारचोदना ॥ २ ॥

क्रुद्धमाज्ञाय रामं तं वसिष्ठः प्रत्युवाच ह ॥ जाबालिरपि जानीते लोकस्यास्य गतागतिम् ॥ १ ॥
निवर्तयितुकामस्तु त्वामेतद्वाक्यमुक्तवान् ॥ इमां लोकसमुत्पत्तिं लोकनाथ निबोध मे ॥ २ ॥
सर्वं सलिलमेवासीत्पृथिवी यत्र निर्मिता ॥ ततः समभवद्ब्रह्मा स्वयंभूर्दैवतैः सह ॥ ३ ॥

नायकत्वरूपसंकटपरिहारायत्वांनिवर्तयितुंमयानास्तिकमतमुपन्यस्तं नत्वहंवस्तुतोनास्तिकइत्याह—ननास्तिकानामित्यादिना । किंचन परलोकादिकंनास्तीतिन अस्त्येव । समीक्ष्यकालं पुनरास्तिकोभवं यदावादिनाऽन्येननास्तिकमतमवलम्ब्यते तंकालंसमीक्ष्य अहंपुनरास्तिकमतावलम्ब्यभवं । अन्यैर्वादिभिर्नास्तिकमतमवलम्ब्यकुतर्कोद्घाटने तदानीमहमेवत्वदुक्तरीत्याशतशस्तत्खण्डनमकार्षमित्यर्थः । तर्हीदानींनास्तिकमतंकुतोवलम्बितवानसीत्यत्राह—भवेयकालेपुनरेवनास्तिकइति । तादृशोहमेवपुनः काले धर्मसंकटकाले । नास्तिकोभवेय धर्मसंकटकालप्रयुक्तोयंमम नास्तिकवादइत्यर्थः । भवेयेत्यनेन इतःपरमपि कस्मिंश्चिद्धर्मसंकटकाले नास्तिकमतमवलम्बनीयमेव नच तावतावस्तुतोनास्तिकत्वंममभवेदितिभावः ॥ ३८ ॥ तादृशधर्मसंकटकालएवायमित्याह—सचापीति। एवमपिपरमवैदिकस्यतवनयुक्तमेतादृशंवचनमित्याशङ्क्याह—निवर्तनार्थमित्यादिना । निवर्तनार्थं तवनिवृत्तिज्ञापनार्थं तववेदमार्गादविचाल्यत्वस्यलोकानांप्रकटीकरणार्थमित्यर्थः । कारणात् भरतकारणात् । भरतमुखोल्लासायतवप्रसादनार्थंचेत्यर्थः ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने नवोत्तरशततमःसर्ग ॥ १०९ ॥

अथवसिष्ठोजाबालिवचनयाथार्थ्यप्रदर्शनेनतद्विषयकोपंनिवर्त्यस्वाभिमतंज्येष्ठस्यैवराज्यार्हतारूपंनिवर्तनोपायंप्रतिपादयति—क्रुद्धमित्यादिना । लोकस्य जनस्य । गतं गमनं। भावेनिष्ठा । परलोकप्राप्तिं तत इहागतिंचजानीते । नासौनास्तिकइत्यर्थः ॥१॥ निवर्तनार्थमिति तदुक्तमपिसत्यमित्याह—निवर्तयितुकामइत्या-

स्यनास्तिकत्वंभवतीतिभावः ॥ ३८ ॥ ति० कारणात् तादृशकालागमनकारणात् । ति० कारणात् त्वदीयास्तिकत्वातिशयस्य लोकेअतिप्रसिद्धिसंपादनरूपकारणात् । नास्तिकवागुक्ता । स० यथानास्तिकवागुदाहृता तथा कारणात् तवकोपरूपनिमित्तात् । त्वत्प्रसादनार्थं एतत् आस्तिकवचनं ॥ इतिनवोत्तरशततमस्सर्गः ॥ १०९ ॥

स० क्रुद्धं जाबालये ॥ १ ॥ स० सर्वं सर्वत्र । सलिलं लक्ष्म्यात्मकं । तत्र सलिले । ति० पूर्वाह्णान्तेऽपहृतंसर्वंजगत् पराह्णादौसलिलमेव सविग्रहहिरण्यगर्भात्मनाऽवस्थितमभूत् । तत्र सलिलान्तः । पृथिवी निर्मिता सलिलरूपेणभगवतास्वेच्छया । ब्रह्मा विराड्रूपोदैवतैस्सह । " अग्निर्वाग्भूत्वामुखंप्राविशत् " इत्याद्युपदिष्टरीत्या । वि० सलिलमेव एकार्णवोदकमेवासीत् । नारायणाधिष्ठितमितिशेषः । ततोनारायणात् स्वयंभूर्ब्रह्मा समभवत् । नाभिपद्मेइतिशेषः । ननुसर्वनाम्नःप्रधानपरामर्शित्वात्कथमिहनारायणपरामर्शइतिचेन्न । " दशैतेराजमातङ्गास्तस्यैवामीतुरङ्गमाः" इत्यादावप्रधानपरामर्शित्वदर्शनेनतस्यौत्सर्गिकत्वात् ॥३॥

[ पा० ] १ ख.— ट. प्रसादनार्थंच. २ क.—ट. रामंतु. ३ ख. गतागतं. ४ क. ख. ङ. च. छ. झ. ञ. ट. मब्रवीत्. ५. ख. सलिलंसर्वमेवा. ६ ङ. छ. झ. ञ. ट. तत्र.

स वराहस्ततो भूत्वा प्रोज्जहार वसुन्धराम् ॥ असृजच्च जगत्सर्वं सहपुत्रैः कृतात्मभिः ॥ ४ ॥
आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ॥ तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥५॥
विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः [1]सुतः ॥ [2]स तु प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ ६ ॥
[3]यस्येयं प्रथमं दत्ता समृद्धा मनुना मही ॥ तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ ७ ॥
इक्ष्वाकोस्तु सुतः श्रीमान्[4]कुक्षिरेवेति [5]विश्रुतः ॥ कुक्षेरथात्मजो [6]वीरो विकुक्षिरुदपद्यत ॥ ८ ॥
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ [7]बाणस्य तु महाबाहुरनरण्यो [8]महायशाः ॥ ९ ॥
[9]नानावृष्टिर्बभूवास्मिन्न [10]दुर्भिक्षं सतां वरे ॥ अनरण्ये महाराजे तस्करो [11]नापि कश्चन ॥ १० ॥
अनरण्या[12]न्महाबाहुः पृथू राजा बभूव ह ॥ तस्मात्पृथो[13]र्महाराजस्त्रिशङ्कुरुदपद्यत ॥
स सत्यवचना[14]द्वीरः सशरीरो दिवं गतः ॥ ११ ॥
[15]त्रिशङ्कोरभवत्सूनुर्धुन्धुमारो महायशाः ॥ [16]धुन्धुमारो महातेजा युवनाश्वो व्यजायत ॥ १२ ॥
युवनाश्वसुतः श्रीमान्मान्धाता समपद्यत ॥ [17]मान्धातु[18]स्तु महातेजाः सुसन्धिरुदपद्यत ॥ १३ ॥
सुसन्धेरपि पुत्रौ द्वौ [19]ध्रुवसन्धिः प्रसेनजित् ॥ यशस्वी [20]ध्रुवसन्धेस्तु भरतो रिपु[21]सूदनः ॥ १४ ॥

दिना । ज्येष्ठस्यैवराज्यार्हतांवक्तुमारभते—इमामित्यादि । लोकनाथ तवैवतत्प्रत्यक्षंहीतिभावः ॥ २—४ ॥ आकाशप्रभवइत्यत्राकाशशब्दःपरब्रह्मपरः । "आकाशोहवैनामरूपयोर्निर्वहितातेयदन्तरातद्ब्रह्म" इतिश्रुतेः । इत्थमेवाव्यक्तप्रभवोब्रह्मेतिबालकाण्डोक्तमपि । शाश्वतःप्रवाहरूपेणनित्यः । नित्यः इतरापेक्षयाचिरकालस्थायी । अन्यथा आकाशप्रभवइतिविरुध्यते । अव्ययः तस्मात्स्थानात्तस्यमोक्षसिद्धेः ॥ ५ ॥ वैवस्वतः विवस्वत्संबन्धी । तस्येक्ष्वाकुवंशकूटस्थत्वंचदर्शयति—सत्वित्यादिना । "मनुनामानवेन्द्रेणयापुरीनिर्मितास्वयं" इतितस्यायोध्यानिर्मातृत्वोक्तिः ॥६—११॥ युवनाश्वएव महातेजःप्रभावेनमहाबलधुन्धुनामकासुरमारणाद्धुन्धुमारसंज्ञामलभतेत्यर्थः ॥ १२—१३ ॥ सुसंधेरिति । ज्येष्ठस्यध्रुवसंधेर्वंशकथनाज्ज्येष्ठस्यैव-

**ति०** ततस्सत्रिमूर्तेर्विराजोविष्ण्वात्मकोंशोवराहरूपोभूत्वा वसुंधरांप्रोज्जहार । तस्यैवविराजोरजःप्रधानस्सृष्टिव्यापारवानंशोब्रह्मेतिव्यवह्रियमाणः सर्वंजगत् पुत्रैस्सह निजानुग्रहप्राप्तसृष्ट्यादिशक्तिमद्भिर्दक्षादिभिस्सहासृजत् । **स०** सः भगवान् चतुर्मुखान्तर्यामितयाप्रसक्तः । वसुंधरां रसातलगतामितिशेषः । कृतात्मभिः शिक्षितमनस्कैः । **वि०** ननुपृथिव्यास्सलिलेनिमग्नत्वात्कदैवतान्यभवन्नित्याकाङ्क्षायामाह—**सवराहइति** । सः नारायणः । ततोब्रह्मनासारंभाद्वराहोभूत्वा वसुंधरां प्रोज्जहार सलिलादुद्धृत्यतदुपरिस्थापयामासेत्यर्थः । सएवनारायणोब्रह्ममूर्तिः पुत्रैस्सहसर्वमसृजत् । वक्ष्यत्युत्तरकाण्डे "संक्षिप्यहिपुरालोकान्मायया स्वयमेवहि । महार्णवेशयानोप्सुमांत्वंपूर्वमजीजनः । पद्मेदिव्येऽर्कसंकाशेनाभ्यामुत्पाद्यमामपि । प्राजापत्यंत्वयाकर्ममयिसर्वंनिवेशितं" इति ॥ ४ ॥ **ति०** नन्वसावेवसर्वादिर्नेत्याह—**आकाशेति** । आकाशपदेनकारणोपाधिकंब्रह्मेश्वराख्यं । ब्रह्मेतित्रिमूर्तेर्ग्रहणं । अस्मिन्शाश्वतत्वनित्यत्वाव्ययत्वान्यापेक्षिकाणि । तस्मात् विराजोब्रह्मणः । **स०** आसमन्तात्काशमानत्वादाकाशो भगवान् । तत्प्रभवोब्रह्मा तदन्तर्गतस्तच्छब्दवाच्योहरिरपिग्राह्यः ॥ ५ ॥ **वि०** तत्रमन्वन्तामानसीसृष्टिः । मनोःक्षेत्रेइक्ष्वाकुः ॥ ६ ॥ **स०** सत्यवचनात् त्वांस्वर्गंप्रापयिष्यइतिविश्वामित्रसत्यवचनात् ॥ ११ ॥ **वि०** धुन्धुमाराद्युवनाश्वइति । त्रिशङ्कुसुतो युवनाश्वइत्यन्यत्रश्रूयमाणंकल्पान्तरविषयं । यद्वा युवनाश्वएवमहातेजःप्रभवत्वाद्धुन्धुमारसंज्ञांलभते । यद्वाऽन्यत्रत्रिशङ्कुसुतइत्य-

[पा०] १ घ. क. ख. च. ज. ञ. स्मृतः. ङ. छ. झ. ट. स्वयं. २ ज. मनुः प्रजापतिः. सतुप्रजापतिःपूर्वमित्यर्धस्यस्थाने. क. पाठे. सतुप्रजापतिःपूर्वमिक्ष्वाकूणांमहात्मनां । जजानाङ्गिरसंब्रह्माप्रचेतसमथाङ्गिराः । मनुःप्रचेतसःपुत्रइक्ष्वाकुस्तु मनोःसुतः । इत्यर्धत्रयंदृश्यते. ३ ख. तस्येयं. ४ क. ख. ङ. च. छ. झ. ञ. ट. कुक्षिरित्येव. ५ ख. नःश्रुतं. ज. नःश्रुतः. ६ ङ. च. छ. झ. ट. वीर. ७ ङ. च. झ. ञ. बाणस्यच. ८ ङ. च. झ. ञ. महातपाः. ९ च. नचावृष्टिः. १० क. ङ. च. झ. ट. दुर्भिक्षः. ११ ख. ङ. छ.—ट. वापि. च. वान. १२ ख. ग. ङ. छ. झ. ट. न्महाराज. ञ. न्महातेजाः. १३ ङ. च. छ. ञ. ट. र्महातेजाः. १४ ग. द्धीरः. १५ क. ग. त्रिशङ्कोस्त्वभवत्. १६ क.—ट. धुन्धुमारान्महा. १७ ख. मान्धातुश्च. १८ ज. सुतःश्रीमान्सुसंधिः. १९ घ. दृढसंधिः. २० घ. दृढसंधेस्तु. २१ रघुनंदन.

भरतात्तु [1]महाबाहोरसितो [2]नाम जायत ॥ यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ॥
हैहयास्तालजङ्घाश्च शूराश्च [3]शशिबिन्दवः ॥ १५ ॥
[4]तांस्तु सर्वान्प्रतिव्यूह्य युद्धे राजा प्रवासितः ॥ स च शैलवरे रम्ये बभूवाभिरतो मुनिः ॥१६॥
द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति [5]श्रुतिः ॥ १७ ॥
[ [6]तत्र चैका महाभागा भार्गवं देववर्चसम् ॥ ववन्दे पद्मपत्राक्षी काङ्क्षिणी पुत्रमुत्तमम् ॥ ]
एका [7]गर्भविनाशाय सपत्न्यै [8]सा गरं ददौ ॥ १८ ॥
भार्गवश्च्यवनो [9]नाम हिमवन्तमुपाश्रितः ॥ तमृषिं [10]समुपागम्य कालिन्दी [11]त्वभ्यवादयत् ॥ १९ ॥
स ता[12]मभ्यवदद्विप्रो वरेप्सुं पुत्रजन्मनि ॥ पुत्रस्ते भविता देवि महात्मा लोकविश्रुतः ॥
धार्मिकश्च [13]सुशीलश्च वंशकर्तारिसूदनः ॥ २० ॥
[14]कृत्वा प्रदक्षिणं [15]हृष्टा मुनिं तम[16]नुमान्य च ॥ पद्मपत्र[17]समानाक्षं पद्मगर्भसमप्रभम् ॥
ततः सा गृहमागम्य [18]देवी पुत्रं व्यजायत ॥ २१ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ॥ गरेण सह तेनैव [19]जातः स सगरोऽभवत् ॥ २२ ॥
स राजा सगरो नाम यः समुद्रमखानयत् ॥ इष्ट्वा पर्वणि वेगेन [20]त्रासयन्तमिमाः प्रजाः ॥ २३ ॥
असमञ्जस्तु पुत्रोऽभूत्सगरस्येति नः श्रुतम् ॥ जीवन्नेव स पित्रा तु निरस्तः पापकर्मकृत् ॥ २४ ॥
[21]अंशुमानपि पुत्रोऽभूदसमञ्जस्य वीर्यवान् ॥ दिलीपोंशुमतः पुत्रो दिलीपस्य भगीरथः ॥ २५ ॥

राज्येस्थापितत्वमुक्तं ॥ १४ ॥ जायतेत्यत्राडभावः । अनित्यत्वात् । प्रतिराजानः सामन्ताः शत्रवः । उदपद्यन्त आसन्नित्यर्थः । हैहयाद्यास्तत्तद्देशाधिपतयः ॥ १५ ॥ प्रतिव्यूह्य युद्धंकृत्वा । राजा असितः । शैलवरे हिमवति । रम्ये निर्भयतयास्थातुंयोग्ये । मुनिः सन्नभिरतोबभूव अन्यथा तस्मादपि शैलात्प्रवासयेयुरितिभावः ॥ १६ ॥ श्रूयतइतिश्रुतिः जनवादइत्यर्थः ॥१७—१९॥ अभिवादनप्रसन्नोविप्रःपुत्रजन्मनिविषये वरेप्सुं तां अभ्यवदत् उवाच । महात्मा महामतिः । लोकविश्रुतः सर्वलोकप्रसिद्धः । पुत्रोभवितेत्यभ्यवददित्यन्वयः ॥ २० ॥ सादेवी तंमुनिं अनुमान्य संपूज्य । ततोगृहमागम्य पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभंपुत्रं । व्यजायत व्यजीजनत् ॥२१—२२ ॥ यः इष्ट्वा दीक्षांकृत्वा । पर्वणिवेगेन अम्बुवेगेन इमाः प्रजाः त्रासयन्तंसमुद्रं । अखानयत् ॥२३॥ नः

स्वतत्पौत्रइत्यर्थः ॥ १३ ॥ **ति०** तान् हैहयादिचतुर्विधशत्रून् । युद्धेस्वसैन्यंप्रतिव्यूह्यावस्थितोपि शत्रुबाहुल्यात्तज्जयोशक्यइतिबुध्या प्रवासितः संजातप्रवासोबभूव । शत्रुजयोद्देशेनतपसेहिमवद्गिरिंजगामेत्यन्वयः । **शि०** पित्राप्रवासितः शत्रुबाहुल्यात्पराजयशङ्कयाविवासितः । मुनिः परमात्ममननशीलोबभूव ॥ १६ ॥ **ति०** तेनैवसह जातइतिशेषः ॥ २२ ॥ **ति०** अखानयत् स्वपुत्रैरितिशेषः । इष्ट्वा दीक्षितोभूत्वा । वेगेन खननवेगेन । त्रासमानः उद्वेजयत् । **शि०** यः पर्वणि इष्ट्वा दीक्षांगृहीत्वा । **स०** इमाःप्रजाः हैहयादिरूपाः ॥ २३ ॥ **शि०** पापकर्मकृदिव । एवइवार्थे । **स०** पापकर्मकृत् तद्वत्प्रदर्शकः । श्रीमद्भागवतेतस्य पुनर्योगेनकुमारप्रदर्शकत्वोक्तेः ॥ २४ ॥

**[ पा० ]** १. क. च. ज. महाबाहुः. २ क. नामतोऽभवत्. ३ घ. ङ. छ. झ. ञ. ट. शशबिन्दवः. ४ ख. ग. तांश्च. ५ क. श्रुतं. ६ इदमर्धद्वयं क. ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ७ ख. गर्भविनाशार्थं. ञ. पुत्रविनाशाय. ८ ग. चगरं. क. ख. ट. तुगरं. ङ. च. छ. झ. ञ. गरलं. ९ ख. राम. १० ङ. च. झ. ञ. ट. साऽभ्युपागम्य. क. समुपागत्य. ११ ग. चाभ्यवादयत्. ख. साभ्यवादयत्. १२ ङ. च. छ. झ. ञ. ट. मभ्यवदत्प्रीतो. १३ ङ. च.—ट. सुभीमश्च. क. महाबाहुः. १४ ङ. छ. झ. ट. श्रुत्वा. १५ च. नत्वा. ञ. स्तुत्वा. ङ. छ. झ. ट. कृत्वा. १६ ख. ग. घ. मभिवाद्य. १७ ख. ग. विशालाक्षी. घ. समानाक्षी. १८ ङ. झ. पत्नीपुत्रमजायत. १९ ङ. छ. झ. ट. तस्मात्स. २० क.—ट. त्रासयानइमाः. २१ क. च. ञ. अंशुमानस्य. ख. घ. ज. अंशुमानिति.

भगीरथात्[1]ककुत्स्थस्तु काकुत्स्था येन[2] विश्रुताः ॥ [3]ककुत्स्थस्य च पुत्रोऽभूद्रघुर्येन तु राघवाः ॥ २६॥
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ॥ कल्माषपादः सौदास इत्येवं प्रथितो भुवि ॥ २७ ॥
कल्माषपादपुत्रोऽभूच्छङ्खणस्त्विति वि[4]श्रुतः ॥ य[5]स्तु तद्वीर्यमासाद्य [6]सहसैन्यो व्यनीनशत् ॥ २८ ॥
[7]शङ्खणस्य च पुत्रोऽभूच्छूरः श्रीमान्सुदर्शनः ॥ सुदर्शनस्याग्निवर्ण अग्निवर्णस्य शीघ्रगः ॥ २९ ॥
शीघ्रगस्य मरुः पुत्रो मरोः पुत्रः प्रशुश्रुकः ॥ प्रशुश्रुकस्य पुत्रोऽभूदम्बरीषो [8]महाद्युतिः ॥ ३० ॥
अम्बरीषस्य पुत्रोऽभून्नहुषः सत्यविक्रमः ॥ नहुषस्य च नाभागः पुत्रः परमधार्मिकः ॥ ३१ ॥
अजश्च सुव्रतश्चैव नाभागस्य सुतावुभौ ॥ अजस्य चैव धर्मात्मा राजा दशरथः [9]सुतः ॥ ३२ ॥
तस्य ज्येष्ठोसि दायादो राम इत्यभिविश्रुतः ॥ तद्गृहाण स्वकं राज्यमवेक्षस्व [10]जनं नृप ॥ ३३ ॥
इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ॥ पूर्वजे नावरः पुत्रो ज्येष्ठो रा[11]ज्येऽभिषिच्यते ॥ ३४ ॥
स राघवाणां कुलधर्ममात्मनः सनातनं नाद्य वि[12]हन्तुमर्हसि ॥
प्रभूतरत्नामनुशाधि मेदिनीं प्रभूतराष्ट्रां पितृवन्महायशः ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥

---

## एकादशोत्तरशततमः सर्गः ॥ १११ ॥

वसिष्ठेनरामंप्रतिपित्रपेक्षयामातुराचार्यस्यचाभ्यर्हितत्वोपपादनपूर्वकंतद्वचनानुरोधेनाश्रितपारतन्त्र्यरूपस्वासाधारणधर्मपरिरक्षणायभरतप्रार्थनासफलीकरणस्यज्यायस्त्वोक्तिः ॥ १ ॥ रामेणतंप्रत्याचार्यापेक्षयामातापित्रोरेवाभ्यर्हितत्वसमर्थनपूर्वकं पितृवचनपालनस्यप्रथमंप्रतिज्ञाततयाऽनतिक्रमणीयत्वोक्तिः ॥ २ ॥ निरुत्तरीकृतेनभरतेनरामस्यपुरतःप्रत्युपवेशनायकुशानामास्तरणम् ॥ ३ ॥ रामेणतस्यक्षत्रियाणामधर्म्यत्वोक्तौभरतेनतंप्रतितत्प्रतिनिधितयास्वेनवनवासपूरणोक्तिः ॥ ४ ॥ रामेण प्रतिनिध्यपेक्षणस्यासमर्थविषयतयास्वस्यनिन्द्यत्वोक्त्याप्रतिज्ञासमापनानन्तरमयोध्यांप्रत्यागमोक्त्याभरतपरिसान्त्वनम् ॥ ५ ॥

वसि[13]ष्ठस्तु तदा राममुक्त्वा राजपुरोहितः ॥ अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥

---

श्रुतं । अस्माभिःश्रुतमित्यर्थः ॥ २४—२७ ॥ तद्वीर्यं वसिष्ठशापाद्राक्षसत्वंप्राप्तस्यकल्माषपादस्य पराक्रमं । आसाद्य व्यनीनशत् विनाशंप्राप्तवानित्यर्थः । राक्षसत्वात्कल्माषपादेनस्वपुत्रएवविनाशितइत्यर्थः ॥२८—३२ ॥ दायादः सुतः । "दायादौसुतबान्धवौ" इत्यमरः ॥ ३३ ॥ पूर्वजेविद्यमाने अपरःकनिष्ठपुत्रो राज्ये नाभिषिच्यते किंतुज्येष्ठएवेत्यन्वयः ॥ ३४ ॥ सत्वं आत्मनः संबन्धिनांराघवाणांसनातनंपरम्परयाऽऽगतं कुलधर्मं ज्येष्ठाभिषेचनरूपं । अद्यभवन्तमारभ्यनविहन्तुमर्हसि । अन्येनरक्षितुंचाशक्यमित्याह—प्रभूतेति । रत्नानि श्रेष्ठवस्तूनि । प्रभूतराष्ट्रां बहुविधावान्तरजनपदयुक्तां ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने दशोत्तरशततमः सर्गः ॥११०॥

---

अथरामनिवर्तनोपायान्पुनरुपन्यस्यनिरस्यत्येकाद-

---

**ति०** रघोः पुत्रः प्रवृद्धादिनामचतुष्टयेनप्रसिद्धः ॥ २७ ॥ **कतकस०** यः शङ्खणस्तुतत्प्रसिद्धं वीर्यं पराक्रमं । युद्धेप्राप्य दैवात्सहसैन्योव्यनीनशत् नष्टोभूत् स्वार्थेणिः ॥ २८ ॥ **ति०** अजोनाभागस्यज्येष्ठपुत्रः ॥३२॥ इतिदशोत्तरशततमस्सर्गः ॥ ११० ॥

**ति०** मन्वादीनारभ्यैतावत्पर्यन्तंज्येष्ठेनैवराज्यंपर्यपाल्यतेतिश्रुतेपितदनङ्गीकारमालोच्यपितृवचनादपिपितुस्तवचगुरोर्ममवचनं

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. त्ककुत्स्थश्च. २ क. ङ.—ट. येनतुस्मृताः. ३ क. ख. ग. ङ. च. झ. ञ. ट. ककुत्स्थस्यतु. ४ क. ख. ङ. च. छ. झ. ञ. ट. नःश्रुतं. ५ घ. सतुदैवेनविधिनाससैन्योऽभ्यनशत्पुरा. ६ ख. ग. च. ज. ञ. सहसेनो. ७ ख.—ङ. छ.—ञ. शङ्खणस्यतु. ८ ख. ङ. च. झ. ञ. ट. महामतिः. ९ ग. घ. ज. स्मृतः. १० ख. गतंनृपं. क. ग. ङ.—ट. जगन्नृप. ११ ङ. छ. झ. ट. राजाभि. क. ञ. भ्राताऽभि. १२ क.—घ. च. ज. ञ. विहातुं. १३ ङ. छ. झ. ट. वसिष्ठस्स.

पुरुषस्येह जातस्य भवन्ति गुरवस्त्रयः ॥ आचार्यश्चैव काकुत्स्थ पिता माता च राघव ॥ २ ॥
पिता ह्येनं जनयति पुरुषं पुरुषर्षभ ॥ प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ ३ ॥
सोऽहं ते पितुराचार्यस्तव चैव परंतप ॥ मम त्वं वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥ ४ ॥
इमा हि ते परिषदः श्रेणयश्च द्विजास्तथा ॥ एषु तात चरन्धर्मं नातिवर्तेः सतां गतिम् ॥ ५ ॥
वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्तितुम् ॥ अस्यास्तु वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥ ६ ॥
भरतस्य वचः कुर्वन्याचमानस्य राघव ॥ आत्मानं नातिवर्तेस्त्वं सत्यधर्मपराक्रम ॥ ७ ॥
एवं मधुरमुक्तस्तु गुरुणा राघवः स्वयम् ॥ प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ॥ ८ ॥
यन्मातापितरौ वृत्तं तनये कुरुतः सदा ॥ न सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम् ॥ ९ ॥
यथाशक्तिप्रदानेन स्नापनोच्छादनेन च ॥ नित्यं च प्रियवादेन तथा संवर्धनेन च ॥ १० ॥

शोत्तरशततमे—वसिष्ठस्त्वित्यादिना ॥ १ ॥ एवंकुलधर्मोपपादनेपि सर्वतत् पितृनियोगव्यतिरिक्तविषयमितिमत्वातूष्णींस्थितस्यरामस्याशयंजानन्वसिष्ठःपुनर्निवर्तनहेत्वन्तरमाह—पुरुषस्येत्यादिना ॥ २ ॥ पितेति मातुरप्युपलक्षणं । शरीरमेवमातापितरौजनयत इत्यर्थः । तस्मात् प्रज्ञादानात् गुरुः मातापितृभ्यांगरीयानित्यर्थः । "सहिविद्यातस्तंजनयति तच्छ्रेष्ठंजन्म"इतिवचनादितिभावः ॥ ३—४ ॥ परिषदः ब्राह्मणसमूहाः । श्रेणयः पौरजनाः । द्विजाः क्षत्रियाः । वैश्याश्च तेत्वत्संबन्धिनः येषुविषयेधर्मपरिपालनरूपंचरन् सतांगतिं सतांपूर्वेषांराज्ञां मार्गनातिवर्तेः नातिवर्तेथाः ॥ ५ ॥ अवर्तितुं शुश्रूषामकर्तुंनार्हसि। अस्यास्तु पितुःशतगुणंमातेत्युक्तायाः ॥६॥ याचमानस्य सान्त्वितामामिकामातेत्यादिप्रार्थयमानस्य । आत्मानं आत्मभूतंभरतंनातिवर्तेथाइत्युदारधीः । सत्यधर्मनिष्णातत्वस्वभावमित्यपरे । स्वासाधारणधर्मत्वादाश्रितपारतन्त्र्यंनातिवर्तेथाइत्याचार्याः । सएवहिसर्वेश्वरस्यस्वभावः स्वतःसिद्धः सत्यधर्मपराक्रमेतिदृष्टान्तार्थं । यथासत्यवचनमनतिक्रमणीयं यथाचधर्मोनातिक्रमणीयः तथाआश्रितपारतन्त्र्यमपीत्यर्थः । सत्यधर्मयोः पराक्रमः अनुष्ठानशूरत्वंयस्येतिबहुव्रीहिः ॥ ७—८ ॥ "सतिधर्मिणिधर्माश्चिन्त्यन्ते" इतिन्यायेनसर्वधर्मसंपादनबीजभूतशरीरोत्पादकत्वात् अत्यन्ताज्ञानदशायामपिसर्वप्रकारसंरक्षणेनबहुविधोपकारकत्वाच्चाचार्यवचनादपिपितृवचनमवश्यंकर्तव्यं। अतएव "मातृदेवोभव पितृदेवोभव आचार्यदेवोभव" इतिचरमपर्वण्याचार्यउपात्तइत्यभिप्रायेणाह—यन्मातेत्यादिनाश्लोकद्वयेन। तनये तनयसंपादननिमित्तं यद्वृत्तं व्रतोपवासदेवताराधनादिकं कुरुतः तन्नसुप्रतिकरं सुतरामशक्यप्रत्युपक्रियं । मात्रापित्राच उत्पत्त्यनन्तरंयथाशक्तिप्रदानेन स्तन्यान्नादिप्रदानेन स्नापनोच्छादनेन नित्यंप्रियवादेनसदासंवर्धनेनच यत्कृतं तच्च नसुप्रति-

करणीयमितिवक्तुमुपक्रमतेवसिष्ठइत्याह—**वसिष्ठइति** । राजपुरोहितः राज्ञःपुरोहितंचिन्तयतीतिराजपुरोहितः ॥ १ ॥ **ति०** गुरवः उपास्याः । **स०** इत्येतेगुरवः ॥ २ ॥ **ति०** जनयति शरीरमात्रेण । प्रज्ञांददाति उपनयनसंस्कारपूर्वंवेदविषयांप्रज्ञांददाति । तस्मादाचार्यएव गुरुसमवायेगुरुः गरीयानुच्यते । तदुक्तमापस्तंबेन । "आचार्यश्श्रेष्ठोगुरूणांसहिविद्यातस्तंजनयतितच्छ्रेष्ठंजन्म शरीरमेवमातापितरौजनयतः जीर्यत्स्वभावंसर्वयोनिसुलभंप्राकृतंमलजंशरीरं" इति ॥ ३ ॥ **ति०** नातिवर्तेः नातिवर्तेथाः । सद्गतिभ्रंशोनभवतीत्यर्थः ॥ ४ ॥ **वि०** नृपाः माण्डलिकाः ॥ ५ ॥ **ति०** मातुःशुश्रूषणेवचनकरणेच अवर्तितुंनार्हसीत्यर्थः । **स०** अवर्तितुं अतिवर्तितुं ॥ ६ ॥ **ति०** आत्मानंत्वांप्रति राज्यप्रत्यर्पणपूर्वंप्रतिनिवृत्तिंयाचमानस्यभरतस्यवचःकुर्वन्नित्यर्थः ॥७॥ **स०** मातापितरौसंभूय तनयेयद्वृत्तं पालनादिरूपं कुरुतः । तन्नसुप्रतिकरं प्रत्युपकारार्हंनभवतीत्यर्थः । नकेवलमुभाभ्यां कृतंन सुप्रतिकरं किंतुमात्रापित्राचयत्प्रातिस्विकंकृतंतदपिनसुप्रतिकरं ॥ ९ ॥ **ति०** यथाशक्तिप्रदानेन बालस्यजीवनार्थपदार्थभोजनशक्त्यनुरोधतःक्षीरान्नादिप्रदानेन । उच्छादनं उद्वर्तनं तिलपिष्टादिना । संवर्धनं क्रीडनं । **स०** उच्छादनं उद्वर्तनं गलप्रान्तगत-

[ **पा०** ] १ घ. ङ. छ. ज. ट. पुरुषस्यहि. २ ङ. छ. झ. ट. गुरवस्सदा. ३ क. ग.—छ. झ. ञ. ट. सतेहं.— ४ ङ. छ. झ. ट. परिषदोज्ञातयश्चनृपास्तथा. ५ ज. तस्यास्तु. ङ. च. छ. झ. ञ. ट. अस्याहि. ६ ग. घ. च. ज. मुक्तस्सन्गुरुणा, ङ. छ. झ. ट. मुक्तस्सगुरुणा.

स हि राजा [1]जनयिता पिता दशरथो मम ॥ [2]आज्ञातं यन्मया तस्य न तन्मिथ्या भविष्यति ॥११॥
[3]एवमुक्तस्तु रामेण भरतः प्रत्यनन्तरम् ॥ उवाच [4]परमोदारः सूतं परमदुर्मनाः ॥ १२ ॥
[5]इह मे स्थण्डिले शीघ्रं कुशानास्तर सारथे ॥ आर्यं प्रत्युपवेक्ष्यामि यावन्मे [6]न प्रसीदति ॥ १३ ॥
[7]अनाहारो निरालोको धनहीनो यथा द्विजः ॥ [8]शेष्ये पुरस्ताच्छालाया [9]यावन्न प्रतियास्यति ॥१४॥
स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः ॥ कुशोत्तरमुपस्थाप्य भूमावे[10]वास्तरत्स्वयम् ॥ १५ ॥
तमुवाच महातेजा रामो राजर्षिसत्तमः ॥ किं मां भरत कुर्वाणं तात [11]प्रत्युपवेक्ष्यसि ॥ १६ ॥
ब्राह्मणो ह्येकपार्श्वेन नरान्रोद्धुमिहार्हति ॥ न तु [12]मूर्धाभिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥
उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतम् ॥ पुरवर्यामितः क्षिप्रमयोध्यां याहि राघव ॥ १८ ॥
आसीनस्त्वेव भरतः पौर[13]जानपदं जनम् ॥ उवाच सर्वतः प्रेक्ष्य [14]किमार्यं नानुशासथ ॥ १९ ॥
ते [15]तमूचुर्[16]महात्मानं पौरजानपदा जनाः ॥ काकुत्स्थमभिजानीमः [17]सम्यग्वदति राघवः ॥ २० ॥
[18]एषोपि हि [19]महाभागः पितुर्वचसि तिष्ठति ॥ अतएव न शक्ताः स्मो व्यावर्तयितुमञ्जसा ॥ २१ ॥

करं ॥९—१०॥ जनयितापितेति गौणपितृव्यावृत्तिः। आज्ञातं प्रतिज्ञातं। एवंप्रथमंप्रतिज्ञातत्वात् मातृवचनंभ्रातृवचनंचकर्तुंनार्हामीतिभावः ॥ ११ ॥ प्रत्यनन्तरं समीपस्थं परमोदारः सान्त्वितामामिकेत्यादिनादत्तराज्यनिर्वाहकः ॥ १२ ॥ इहस्थण्डिलेभूमौकुशानास्तर आस्तृणीहि । पावनत्वार्थमित्यर्थः । अत एववक्ष्यति—कुशानास्तीर्यराघवइति । प्रत्युपवेक्ष्यामि प्रतिरोत्स्यामीत्यर्थः ॥ १३ ॥ प्रत्युपवेशप्रकारमाह—अनाहारइति । निरालोकः अवकुण्ठिताननः धनहीनः वृद्ध्यर्थमृणप्रदानान्निर्धनः । शेष्ये शयिष्ये । इडभावआर्षः ॥ १४ ॥ राममवेक्षन्तं रामानुज्ञांकाङ्क्षन्तमित्यर्थः । कुशोत्तरं कुशास्तरणं । उपस्थाप्य आनीय । स्वयमेवास्तरत् आस्तृणात् शयनंकृतवानित्यर्थः ॥ १५ ॥ किंकुर्वाणं किमपकारंकुर्वाणं । तातेतिसान्त्वनार्थमुक्तं ॥ १६ ॥ एकपार्श्वेन एकपार्श्वशयनेन । मूर्धाभिषिक्तानां अभिषिक्तक्षत्रियाणां ॥ १७—१८ ॥ नानुशासथेत्यत्र इतिकरणंबोध्यं ॥ १९ ॥ काकुत्स्थंरामं । अभिजानीमः अभितोजानीमः सत्यसन्धंजानीमइत्यर्थः ॥ २० ॥ सम्यग्वदतीत्येतदुपपादयति—एषइत्यादिना । अञ्जसा शीघ्रं व्यावर्तयितुंनशक्ताःस्मइतितंभरतमूचुरित्यन्वयः

मृत्तिकाद्युद्वासनमितियावत् ॥ १० ॥ **ति०** जनयिता उत्पादकःपिता नतुगौणः । पिता यदाज्ञापयत् वनवासरूपं । एवंचभवदाज्ञातःपूर्वंतेनाज्ञादानान्मयाचावश्यमितिप्रतिज्ञानात्भवदाज्ञयापितदन्यथाकरणमधुनाऽत्यन्तमनुचितमितिभावः ॥ ११ ॥ **ति०** आर्यंप्रत्युपवेक्ष्यामि आर्यमुद्दिश्यप्रत्युपशयनकर्मकरिष्यइत्यर्थः । तच्चोपरोद्धव्यस्यगृहद्वारसमीपेकुशेषुयावत्कार्यसिद्धिनिराहारतयाऽवकुण्ठिताननस्य एकपार्श्वेनैवपार्श्वान्तरपरिवृत्तिराहित्येनशयनमिति । **वि०** धनहीनः वृद्ध्यर्थमृणंदत्वातद्ग्रहणार्थमधमर्णावरोधकोत्तमर्णः अधनइत्यर्थः । सयथाशेते तद्वदहंशये यावन्मां मद्वचनमङ्गीकृत्यप्रतियास्यति अयोध्यामित्यर्थः । **स०** शालायाः पुरस्तात्मामुद्दिश्यप्रतियास्यति त्वद्विधानंकरोमीत्यायास्यति । **कतक०** निराहारइत्यादिपद्यंप्रक्षिप्तं ॥ १४ ॥ **स०** रामं तन्मुखं । सः भरतः । दुर्मनाः मद्वचनंनशृणोतीतिदुःखितमनाः ॥ १५ ॥ **ति०** किंकुर्वाणं किमन्याय्यं कुर्वाणं ॥ १६ ॥ **ति०** ब्राह्मणः धनादिनावियोजितइतिशेषः । अनेनक्षत्रियाणामेतत्करणेप्रायश्चित्तमितिसूचितं । **स०** एकपार्श्वेन परिवर्तनरहितैकभागशयनेन ॥१७॥ **स०** आर्यंरामंकिंनानुशासथ नानुशिष्टेत्यर्थः । अयोध्यांप्रतिगन्तुमितिशेषः ॥ १९ ॥ **स०** काकुत्स्थं रामंप्रति । राघवोभवान् सम्यग्वदतीत्यभिजानीमः ॥ २० ॥ **स०** तर्हिकिमर्थंरामंप्रतिकिमपिनोच्यतेभवद्भिरित्यतआह—**एषोपीति** । रामोपीत्यर्थः । **ति०** एषोपिमहाभागोरामः पितुर्वचसितिष्ठति । तदपिसम्यगेव । यदेवं अतएवेत्यर्थः । अत्रभगवतास्वव्यावर्तननिश्चयेनाग-

**[ पा० ]** १ ङ. च. छ. झ. ञ. ढ. दशरथोपिताजनयिता. २ ङ. छ. झ. ट. आज्ञापयन्मांयत्तस्य. ३ च.—ठ. एवमुक्तेतु. ४ ग.—ट. विपुलोरस्कः. ५ छ. झ. ट. इहतु. ङ. इहत्वं. ६ ङ. झ. संप्रसीदति. ७ ङ. छ. झ. ट. निराहारो. ८ ङ. छ. झ. ञ. ट. शये. ९ ङ. च. झ. ञ. यावन्मांप्रति. १० घ. ङ. झ. ट. वास्थितस्स्वयं. ११ ङ.—ट. प्रत्युपवेक्ष्यसे. १२ क. ख. घ. ज. मूर्धावसिक्तानां. १३ ख. जानपदाञ्जनान्. १४ च. ट. किमर्थं. १५ ङ. छ. झ. ट. तदोचुः. ग. तथोचुः. १६ ख. महात्मानः. १७ ख. सत्यंवदति. १८ ङ. एषोपीह. १९ ग. महाबाहुः.

तेषामाज्ञाय वचनं रामो वचनमब्रवीत् ॥ एवं निबोध वचनं सुहृदां धर्मचक्षुषाम् ॥ २२ ॥
एतच्चैवोभयं श्रुत्वा सम्यक्संपश्य राघव ॥ उत्तिष्ठ त्वं महाबाहो मां च स्पृश तथोदकम् ॥ २३ ॥
अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् ॥ शृण्वन्तु मे परिषदो मन्त्रिणः श्रेणयस्तथा ॥ २४ ॥
न याचे पितरं राज्यं नानुशासामि मातरम् ॥ आर्यं परमधर्मज्ञं नानुजानामि राघवम् ॥ २५ ॥
यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ॥ अहमेव निवत्स्यामि चतुर्दश समा वने ॥ २६ ॥
धर्मात्मा तस्य तथ्येन भ्रातुर्वाक्येन विस्मितः ॥ उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥ २७ ॥
विक्रीतमाहितं क्रीतं यत्पित्रा जीवता मम ॥ न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥
उपधिर्न मया कार्यो वनवासे जुगुप्सितः ॥ युक्तमुक्तं च कैकेय्या पित्रा मे सुकृतं कृतम् ॥ २९ ॥
जानामि भरतं क्षान्तं गुरुसत्कारकारिणम् ॥ सर्वमेवात्र कल्याणं सत्यसन्धे महात्मनि ॥ ३० ॥
अनेन धर्मशीलेन वनात्प्रत्यागतः पुनः ॥ भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ ३१ ॥
वृतो राजा हि कैकेय्या मया तद्वचनं कृतम् ॥ अनृतान्मोचयानेन पितरं तं महीपतिम् ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे एकादशोत्तरशततमः सर्गः ॥१११॥

---

॥ २१—२२ ॥ एतदुभयं मद्वचनंपौरजनवचनंचेत्यर्थः । सम्यक्संपश्य कर्तव्यंसम्यङ्निरूपय । मांच स्पृशतथोदकमिति क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तार्थमित्यर्थः । वसिष्ठादिषुविद्यमानेषुस्वस्पर्शनविधेः इतः परमेवंविधंनक्रियतइतिशपथार्थंजलंस्पृष्ट्वामांस्पृशेत्यपिसिद्धम् ॥ २३—२४ ॥ नयाचे नयाचितवान् । नानुशासामि नानुशास्मि एवंकुर्वितिनानुशिष्टवानस्मीत्यर्थः । नानुजानामि वनवासायनानुज्ञातवानस्मीत्यर्थः ॥ २५ ॥ अवश्यंपितुर्वचःकर्तव्यंवनेवस्तव्यंचेतियदिमन्यसे तर्हिअहमेवत्वत्प्रतिनिधित्वेनवने वत्स्यामि त्वंतुमत्प्रतिनिधित्वेनायोध्यांपालय एवंचसत्युभाभ्यांसम्यक्पितृवचनंकृतंभवेदितिभावः । इति भरतोवाक्यमब्रवीदित्यन्वयः ॥ २६—२७ ॥ आहितं आधिरूपेणन्यस्तं विक्रयस्त्यागः क्रयः स्वीकारइति भेदः । मह्यंवनवासंदत्त्वातन्मूल्यत्वेनराज्यंस्वीकृतवान् । यद्वा ममवनवासमाधिंकृत्वातवराज्यंदापितवान् । तल्लोपयितुंनशक्यमित्यर्थः ॥ २८ ॥ वारुणस्नानाशक्तस्यमात्रस्नानवदशक्तस्यैवप्रतिनिधिस्वीकारः । अहंतुवनवासेशक्तः अतः प्रतिनिध्याचरणंनपितृऋणमोचनमित्याह—उपधिरित्यादिना । उपधिः प्रतिनिधिरित्यर्थः । मयाशक्तेनजुगुप्सितः हीनकल्पत्वेननिन्दितः । “ हीनकल्पंनसेवेतपुरुषोविभवेसति ” इतिवचनादितिभावः । कैकेय्या युक्तंयोग्यमेवोक्तं । पित्राचसुकृतंधर्म्यंकृतं । आवाभ्यांतदकरणेहीनकल्पकरणेचपितुरनृतंस्यात् ॥ २९—३१ ॥ पितरंअनेन

---

तानामपिपौरादीनामन्तर्यामिविधयास्वानुकूलवचनप्रयोगःकारितः । भरतस्यतुयशःख्यापनायज्येष्ठेकनिष्ठेनैवंवर्तितव्यमितिलोकव्यवहारबोधनायचतथाप्रवर्तनमितिप्रतिभाति ॥ २१ ॥ **ति०** वचनमब्रवीत् भरतंप्रतीतिशेषः । निबोध शृणु ॥ २२ ॥ **ति०** उभयं त्वद्विषयंमद्विषयंचवचनं । श्रुत्वा संपश्य विचारय । विचारेणापिकर्तव्यंनिश्चेतुमशक्तश्चेन्मयोक्तंकुर्वितिशेषः । स्वोक्तमेवाह—**उत्तिष्ठेति । स०** उदकंस्पृश आचाम ॥२३॥ **ती०** नाभिजानामीतिपाठे आर्यवनवासोयुक्तंनज्ञातवानस्मीत्यर्थः । **शि०** नानुजानामि वनवासायानुमतिंनाकार्षं । एतेनस्वापराधाभावस्सूचितः ॥ २५ ॥ **स०** तस्य भ्रातुः ॥ २७ ॥ **स०** जीवता मत्पित्रायद्विक्रीतं मूल्यंगृहीत्वादत्तं । आहितं मर्यादाविशेषंकृत्वान्यस्तं । क्रीतं मूल्यंदत्वागृहीतं । तद्भरतेन मयावा लोपयितुंनशक्यं आवयोरुभयोःपुत्रत्वाविशेषात् । तथाचेदंराज्यंकैकेय्यांचतुर्दशवर्षपर्यन्तंन्यस्तमितिभावः ॥ २८ ॥ **ति०** उक्तौकृतौचयुक्तत्वं वररूपऋणापाकरणार्थत्वाद्बहूपकारकत्वाच्च । अतस्तयोर्वचनमवश्यमेवकार्यमितिशेषः । अयुक्तवादित्वेहिगुरोरप्यवलिप्तस्येत्यादिन्यायविषयत्वंस्यादितिभावः ॥२९॥ **स०** क्षान्तं क्षमावन्तं । अत्रभरते सर्वं राज्यपालनादिकं । कल्याणमिति संभावयामीति शेषः ॥३०॥ **शि०** वनात्पुनःप्रत्यागतोहं धर्मशीलेनभ्रात्राभरतेनसह पृथिव्याउत्तमःपतिर्भविष्यामि ॥३१॥ विक्रीतमित्यादिनापौ-

**[ पा० ]** १ ख. ततश्चैव. २ ट. सम्यक्त्वंपश्य. ३ ग. ज. महाभाग. ४ झ. शृणुयुस्तथा. ५ ख. ग. शंसामि. ६ ङ. छ. झ. ट. एवंपरम. ७ घ. नाभिजानामि. ८ क. ङ. च. छ. झ. ञ. ट. वनेसमाः. ९ ङ. च. छ. ञ. ट. सत्येन. १० ञ. शान्तं. ११ ख. पितरंते. ज. पितरंतु.

# द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

रामभरतसंभाषणशुश्रूषयागगनाङ्गणमुपागतैर्देवादिभिस्तत्संभाषणप्रशंसनम् ॥ १ ॥ तथाभरतंप्रतिरामेणपितुरानृण्यार्थं वनवासस्यावश्यंकर्तव्यत्वोक्तिपूर्वकंस्वस्यावासगमनम् ॥ २ ॥ रामप्रतिनिवर्तनेउपायान्तरमनुपलभमानेनभरतेनराज्यपालने स्वस्यशक्त्यभावकथनपूर्वकंपुनस्सप्रणामंरामंप्रतिप्रार्थनम् ॥ ३ ॥ रामेणभरतंप्रतिस्वस्यदुस्त्यजप्रतिज्ञत्वकथनेभरतेनतंप्रतिहेमपादुकाद्वयप्रदर्शनेनतत्रनिजपदार्पणपूर्वकंस्वस्मैतद्दानप्रार्थना ॥ ४ ॥ रामेणपादुकादानेभरतेनतंप्रतिचतुर्दशवर्षसमाप्त्यव्यवहितोत्तरदिनेऽनागमनेस्वेनाग्नौप्रवेशप्रतिज्ञानम् ॥ ५ ॥ रामेणतदङ्गीकरणेनसपरिष्वङ्गंभरतशत्रुघ्नविसर्जनपूर्वकंयथोचितसंमाननेनसकलजनानांगमनाभ्यनुज्ञानेनस्वपर्णशालाप्रवेशः ॥ ६ ॥

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् ॥ विस्मिताः सङ्गमं प्रेक्ष्य [1]समवेता महर्षयः ॥ १ ॥
[2]अन्तर्हितास्त्वृषिगणाः [3]सिद्धाश्च परमर्षयः ॥ तौ भ्रातरौ [4]महात्मानौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
[5]स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ [6]धर्मविक्रमौ ॥ श्रुत्वा वयं हि संभाषा[7]मुभयोः स्पृहयामहे ॥ ३ ॥
ततस्त्वृषिगणाः [8]क्षिप्रं दशग्रीववधैषिणः ॥ भरतं [9]राजशार्दूलमि[10]त्यूचुः सङ्गता वचः ॥ ४ ॥
कुलेजात महाप्राज्ञ [11]महावृत्त महायशः ॥ ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥
सदानृणमिमं रामं वयमिच्छामहे पितुः ॥ अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६ ॥
[12]एतावदुक्त्वा वचनं [13]गन्धर्वाः समहर्षयः ॥ राजर्षयश्चैव [14]तदा सर्वे स्वां स्वां गतिं गताः ॥ ७ ॥

राज्यपरिपालनेन अनृतान्मोचयेत्यर्थः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकादशोत्तरशततमःसर्गः ॥ १११ ॥

---

अथभरतस्यसमाधानंकृत्वाप्रस्थापनंद्वादशोत्तरशततमे—तमित्यादि । भ्रातृभ्यांसंगमं भ्रातृभ्यामन्योन्यसौहार्देनकृतंसंगमं प्रेक्ष्य विस्मिताअभूवन्निति शेषः ॥१॥ अन्तर्हिताः पूर्वमेवान्तर्धानं प्राप्ताः ऋषिगणाः राजर्षिगणाः । सिद्धाः देवजातिविशेषाः । परमर्षयः देवर्षयः । इदमुत्तरत्र "एतावदुक्त्वावचनंगन्धर्वाः समहर्षयः । राजर्षयश्चैव" इत्यत्रव्यक्तीभविष्यति ॥ २ ॥ धर्मविक्रमौ धर्मशूरौ । वयमुभयोः संभाषां श्रुत्वा स्पृहयामहे पुनःपुनः श्रोतुंवाञ्छामइत्यर्थः । वयंययोरुभयोः संभाषां श्रुत्वास्पृहयामहे तादृशौधर्मज्ञौधर्मविक्रमौद्वौपुत्रौयस्य । सधन्यइत्यन्वयः ॥ ३ ॥ संगताः ऐककण्ठ्यंप्राप्ताः ॥ ४ ॥ पितरंयद्यवेक्षसे

रजनमाख्यायपुनर्भरतंप्रत्याह—**वृतइति** । तद्वचनं तस्याःकैकेय्यावचनं । मयाकृतं । मोचयानेन मोचयमानेन । एवंमदुक्तकरणेनत्वमपिपितरमनृतान्मोचयेतिध्वनिः । **शि०** राजाकैकेय्यावृतः वरदायकत्वेनस्वीकृतः । मयाच तद्वचनंकृतं स्वीकृतं । अतः अनेनत्वत्कर्तृकराज्यपरिपालनेनमत्कर्तृवनवाससंमतिदानेनचपितरमनृतान्मोचय ॥३२॥ इत्येकादशाधिकशततमस्सर्गः ॥१११॥

**ति०** समुपेताः स्वार्थरावणवधसंपत्तयेतत्रस्थलेसमवेताः । महर्षयोनारदाद्याः । **स०** तंसंगमं परस्परमेलनं । भ्रातृभ्यां भ्रात्रोः । प्राधान्यादुभयोक्तिः । संगमंप्रेक्ष्यविस्मिताबभूवुः ॥१॥ **ति०** अन्तर्हिताः अदृश्यरूपाआकाशस्थाः ॥ २ ॥ **स०** सदार्यौ सदुत्कृष्टौ । नकेवलंधर्मज्ञौ किंतु धर्मविक्रमौ धर्मप्रवर्तकौ । **ति०** उभयोःसंभाषां संभाषणंश्रुत्वा उभाभ्यांस्पृहयामहे प्रीताभवामः । **शि०** सदास्पृहयामहे पुनःपुनःश्रोतुंवाञ्छामः ॥ ३ ॥ **स०** पितरंयद्यवेक्षसे सत्यवचनंयदीच्छसीत्यर्थः ॥ ५ ॥ **ति०** सदानृणं सतास्वकृतसमीचीनानुष्ठानेनआसर्वतोऽनृणमित्यर्थः । अनृणत्वात् रामप्रतिज्ञयेतिशेषः । यदिरामइदानींविपरीतंकुर्यात्प्रतिनिधिद्वारावाऽनुतिष्ठेत्तदातेपितुःपुनस्स्वर्गाद्भ्रंशएवेतिध्वनिः । **स०** पितुस्सदाऽनृणं ऋणरहितं इच्छामहे । साचेच्छाऽत्र सत्येवपर्याप्ताभवतीतिभावः । कैकेय्याअनृणत्वात् तत्संबन्ध्यृणरहितत्वादित्यर्थः । **शि०** यतः कैकेय्याअनृणत्वात् अनृणत्वंप्राप्य

[ **पा०** ] १ ङ. च. ज.—ट. समुपेता. २ ङ. छ. झ. ञ. ट. अन्तर्हितामुनिगणाः. च. ज. अन्तर्हिताऋषिगणाः. ३ ङ. छ. झ. ट. स्थिताश्च. ४ ङ. च. छ. झ. ञ. ट. महाभागौ. क. ख. महावीर्यौ. ५ छ. झ. ट. सदार्यौराजपुत्रौ. ङ. सभार्यौराजपुत्रौ. ६. क. धर्मवत्सलौ. घ. सत्यविक्रमौ. ७ क. ख. मुभाभ्यां. ८ क. सिद्धाः. ९ ख. रघुशार्दूलं. १० क. मूचुस्ते. ११ ख. घ. महाव्रत. १२ च. ज. एवमुक्त्वातु. १३ क. सगन्धर्वामहर्षयः. १४ क.—ट. तथा.

ह्लादितस्तेन वाक्येन [1]शुभेन शुभदर्शनः ॥ रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ॥ ८ ॥
स्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ॥ कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥
[2]राजधर्ममनुप्रेक्ष्य कुलधर्मानु[3]सन्ततिम् ॥ कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥ १० ॥
रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे ॥ पौरजानपदांश्चापि रक्तान्रञ्जयितुं [4]तथा ॥ ११ ॥
[5]ज्ञातयश्च हि [6]योधाश्च मित्राणि सुहृदश्च नः ॥ त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः ॥ १२ ॥
इदं राज्यं महाप्राज्ञ [7]स्थापय प्रतिपद्य हि ॥ [8]शक्तिमानसि काकुत्स्थ लोकस्य परिपालने ॥ १३ ॥
[9]इत्युक्त्वा न्यपतद्भ्रातुः पादयोर्भरतस्तदा ॥ भृशं संप्रार्थयामास [10]राममेव प्रियंवदः ॥ १४ ॥
तमङ्के [11]भ्रातरं कृत्वा रामो वचनमब्रवीत् ॥ श्यामं नलिनपत्राक्षं [12]मत्तहंसस्वरं स्वयम् ॥ १५ ॥
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ॥ भृशमुत्सहसे तात रक्षितुं [13]पृथिवीमपि ॥ १६ ॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ॥ सर्वकार्याणि संमन्त्र्य [14]सुमहान्त्यपि कारय ॥ १७ ॥

---

पितरंसुखास्थितंयदिमन्यसइत्यर्थः ॥ ५—८ ॥ सज्जमानया स्खलन्त्या । स्वमनोरथस्यसर्वथाअसिद्धत्वात् शिथिलगात्रत्वंसज्जमानवाक्त्वंच ॥ ९ ॥ राजधर्मं राज्यपरिपालनधर्मं। कुलधर्मानुसंततिं ज्येष्ठाभिषेकरूपकुलधर्मस्यानुस्यूतिं ॥ १०—११ ॥ सुहृदः शोभनहृदयाः। पर्जन्यं रसदब्दमिन्द्रंवा।"पर्जन्यौरसदब्देन्द्रौ" इत्यमरः ॥ १२—१३ ॥ एवंस्वबुद्धिशक्त्युपन्यस्तोपायान्तरवैफल्यदर्शनेनगत्यन्तराभावाद्भरतोराममेवप्रपद्यतेइत्याह—इत्युक्त्वेति ॥ १४ ॥ तमङ्कइति स्वप्रपदनस्यामोघत्वात् तदानींपूर्वकृतदेवसंघशरणागतिफलप्रदानप्रवृत्त्यनुकूलपितृवचनपरिपालनावरुद्धावसरतयातन्निर्वर्तनानन्तरंफलप्रदित्सुस्तावद्विलम्बसहनायसान्त्वपूर्वमङ्कमारोपयति । रामदिव्यदेहसंस्पर्शकृतपुष्ट्यतिशयद्योतनायश्याममित्यादिविशेषणं मत्तहंसस्वरत्वमादरातिशयंद्योतयति । किंचस्वररामणीयकेनपूर्वहंसभूतावस्थासूचकेन सदात्वत्करपुष्करहंसभूतमपिमां कथंवियोजयितुमिच्छसीतिचसूच्यते । स्वयमङ्केकृत्वेत्यन्वयः ॥ १५ ॥ स्वजा सहजा । वैनयिकी विनयोगुरुशिक्षा ततः प्राप्ताइयं उभयाकाराबुद्धिः । त्वामागता त्वांपूर्वमेवप्राप्तवती । अतोभृशमुत्सहसे शक्नोषि ॥ १६ ॥ अमात्यैः प्रधानसचिवैः । मन्त्रिभिः

---

कैकेय्यैवरंदत्त्वेत्यर्थः । दशरथस्स्वर्गंगतः । अतोरामंसदावनवासक्लेशेनापिपितुरनृणं ऋणनिवर्तकंवयमिच्छामहे । एतेन रामकर्तृकवनवासमन्तराराज्ञोभिलाषपूर्तिर्नभविष्यतीतिसूचितं । तेनरावणवधार्थमेवराज्ञारामःप्रेषितइतिव्यञ्जितं ॥ ६ ॥ **ति०** अभ्यपूजयत् सम्यक्त्वांधर्मतोरक्षितवन्तइत्युक्तवानित्यर्थः । **स०** ह्लादितः तोषितः । पूर्वमपिशुभदर्शनः विशेषतस्संहृष्टवदनस्सन् शुशुभे स्वावतारकार्याभिमुख्यादितिभावः ॥ ८ ॥ **ति०** त्रसगात्रः उद्विग्नगात्रः । स्रस्तगात्रइतिपाठान्तरं ॥ ९ ॥ **ति०** राजधर्ममथ प्रेक्ष्यकालधर्मांश्चसंततमितिपाठे अथ अथवा । कालधर्मान् कालकृतस्वशक्तिमन्निष्ठतदभावलक्षणान् । प्रेक्ष्य विचार्य ॥ १० ॥ **ति०** अथकालकृतांस्वस्यरक्षणाशक्तिंदर्शयति—**रक्षितुमिति** । एकः असहायः । **स०** तदा त्वद्वियोगकाले । रक्तान् त्वय्यनुरक्तान् । रञ्जयितुं मयिस्नेहमुत्पादयितुं ॥ ११ ॥ **ति०** अतइदंराज्यंप्रतिपद्य स्वीकृत्य । कस्मिंश्चित्स्थापयहि । हिर्वाक्यालङ्कारे । हि यतः । सः त्वद्दत्तराज्यः लोकपालनेशक्तिमान्भवति । शक्तिमानसीतिपाठे अयंमदीयइतिस्वीकारमात्रेणलोकस्यसमस्तस्यपालनेशक्तिमानसि । रामस्यराज्यमित्येतावल्लोकपरिपालनेऽपेक्षितसहायतयेत्यर्थः ॥ १३ ॥ **ति०** इयंबुद्धिः मद्वनवासविरोधिनी । स्वीयत्वेनाङ्गीकृत्यस्थापनविषया । आगता जाता । सा स्वजा स्वाभाविकी वैनयिकीच इतराच सर्वादुष्टेतिभावः । अथ यात्वयास्वस्याशक्तिरुक्तापालनेसानास्त्येवेत्याह—**भृशमिति** । **स०** इयं मद्वचनानुकूला । त्वदीयत्वेनस्वीकृत्ययत्रक्वचनस्थापयेत्येवंरूपा । **शि०** वैनयिकी पित्रादिसेवाजनितविनयजन्या । स्वजा स्वंस्वकीयधर्मं प्रजापालनमित्यर्थः । जनयतिउत्पादयति सा यात्वामागताप्राप्ता इयंबुद्धिः तयाबुद्ध्या पृथिवींरक्षितुंत्वंभृशमुत्सहसे । एतेनमत्कर्तृकायोध्यागमनंनप्रार्थनीयमितिसूचितं । तेनायोध्यागम-

[ पा० ] १ ङ. च. छ. झ. ट. शुशुभे. २ ङ. छ. झ. ञ. ट. रामधर्ममिमं. ३ ङ. छ. झ. ट. संततं. ४ ङ. छ. झ. ट. तदा. ५ ङ. च. छ. झ. ट. ज्ञातयश्चापि. ६ ञ. पौराश्च. ७ च. ञ. पालय. ८ ङ. छ. झ. ट. शक्तिमान्सहि ९ ङ. छ. झ. ट. एवमुक्त्वापतद्भ्रातुः. १० छ. झ. ट. राघवेऽतिप्रियंवदन्. क. च. ज. ञ. राममेवंप्रियंवदन्. ११ क. ग. च. भरतं. १२ ङ. च. ज.—ट. हंसस्वरःस्वयं. १३ क. पृथिवीमिमां. १४. क. ङ. छ. झ, ट. महान्त्यपिहि.

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा[1] हिमं त्यजेत् ॥ अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८ ॥
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम् ॥ न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥१९॥
एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् ॥ तेजसाऽऽदित्यसंकाशं प्रतिपच्चन्द्रदर्शनम् ॥ २० ॥
अधिरोहार्य पादाभ्यां पादुके हेमभूषिते ॥ एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥
सोधिरुह्य नरव्याघ्रः पादुके ह्य[2]वरुह्य च ॥ [3]प्रायच्छत्सुमहातेजा भरताय महात्मने ॥ २२ ॥
स पादुके संप्रणम्य रामं वचनमब्रवीत् ॥ चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ २३ ॥
फलमूलाशनो वीर भवेयं रघुनन्दन ॥ तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहिः ॥ २४ ॥
तव पादुकयोर्न्य[4]स्तराज्यतन्त्रः परंतप ॥ चतुर्दशे हि संपूर्णे वर्षे[5]ऽहनि रघूत्तम ॥
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥ २५ ॥
तथेति च प्रतिज्ञाय तं[6] परिष्वज्य सादरम् ॥ [7]शत्रुघ्नं च परिष्वज्य भरतं चेदमब्रवीत् ॥ २६ ॥
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ मया च सीतया चैव शप्तोसि [9]रघुसत्तम ॥ २७ ॥
इत्युक्त्वाऽश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ २८ ॥

---

उपमन्त्रिभिः ॥१७॥ मयादेवर्षिसंघैश्चपुनःपुनरुच्यमानोप्ययंनिवर्तनेच्छांनत्यजेदिति तदिच्छा सवासना त्याजयितव्येति स्वप्रतिज्ञादार्ढ्यंदर्शयति—लक्ष्मीरित्यादिना । नप्रतिज्ञां अतीयामितिशेषः ॥ १८ ॥ स्त्रिया कामकृतत्वात्त्यक्तुमियंप्रतिज्ञाऽर्हेत्याशङ्क्याह—कामादित्यादिना । कामात् त्वद्विषयस्नेहात् । लोभात् त्वद्व्याजेनराज्यकरणलोभात् । मातृवत् मातरीव ॥ १९ ॥ तेजसादित्यसंकाशमित्यनेनानिवर्त्यप्रतिज्ञत्वमुच्यते ।प्रतिपच्चन्द्रदर्शनमित्यनेन क्रमेणराज्येपूर्णप्रतिष्ठत्वंसर्वैरपि पूज्यत्वंचद्योत्यते ॥ २० ॥ अथमध्यस्थेनोभयोर्हितपरेणवसिष्ठेननियुक्तोभरतःप्रार्थयते—अधिरोहेत्यादिना । अतएवभरद्वाजंप्रतिभरतोवसिष्ठोक्तिमनुवदिष्यति "एतेप्रयच्छसंहृष्टःपादुकेहेमभूषिते" इति ॥२१॥ अथरामः स्वप्रतिज्ञांभरतकृतप्रपत्तिंचनिर्वहंस्तथाकरोति—सइति । प्रायच्छत् गृहाणेत्यन्वयुङ्क्त ॥ २२ ॥ सइत्यादिसार्धश्लोकत्रयमेकान्वयं । चतुर्दशेवर्षेसंपूर्णेसति अहनि उत्तरवर्षादिमदिने । प्रवेक्ष्यामीत्यन्तेइति

---

नेनिरन्तरवनवासविषयकप्रतिज्ञाहानिर्नभवितेतिसूचितम् ॥ १६ ॥ **तनि०** लक्ष्मीः कान्तिः । चन्द्रादपेयात् इन्दुक्षयादिषुतथादर्शनात् । उदाहरणान्तरमाह—**हिमवान्वेति** । ग्रीष्मकालेहिमवतोपिहिमपरिक्षयसंभवात् । सागरोप्यतीयाद्वेलां प्रलयेवेलोल्लङ्घनसंभवात् । **शि०** लक्ष्मीः शोभा अपेयात् रात्रावपगच्छेत् ॥ १८ ॥ **ति०** तुभ्यं तव । कामात् देवानामिच्छातः । लोभाद्वा लोभादेव । तेषांदेवलोकराज्यलोभात् । तवमात्रा देवैरेवमन्थराद्वारा इदं कृतं कारितमितिगूढोर्थः । **स०** कामात् ईशेच्छायाएव । लोभाद्वा लोभादिव । मातृवत् मन्मातृवत् ॥ १९ ॥ **ती०** तेजसादित्यसंकाशमित्यनेन परैरप्रधृष्यत्वं प्रतिपच्चन्द्रमित्यनेन सर्वैरपिपूज्यतयादृश्यमानत्वं वर्धिष्णुत्वं चिरमदर्शनंचद्योत्यते ॥ २० ॥ **स०** हेआर्य अधिरोह पादुकयोःपादौस्थापयेत्यर्थः । एतेचपादुके भरतेन सहानीतेइतिबोध्यं । अन्यथा रामस्यवस्त्राणिगृहीत्वाऽजिनानिदत्तवत्याःकैकेय्यारामायहेमपादुकादानस्यानुचितत्वात् ॥ **ति०** एते उटजसन्निहिते । अधिरोहेत्यनेन भद्रासनस्थानीयपादुकयोःप्रतिनिधिभूतयोरारोहणेनराज्यप्रतिपत्तिःकारिता । **शि०** विधास्यतइत्यनेन पादुकयोश्चेतनत्वंध्वनितं । तेन तयोःप्राकृतविलक्षणत्वंसूचितं ॥ २१ ॥ **ति०** सरामःपादुके अधिरुह्य ध्यंवमुच्य पुनस्ततोवमुच्य भरतायप्रायच्छत् । एतेन प्रतिनिधिदानद्वाराराज्यरक्षानियोगःकृतः । प्रतिपद्यस्थापयेतिचिरंभरतप्रार्थनंचसाधितं । अधिरोहणेनशक्तिविशेषस्यतत्रस्थापनं । यद्दर्शनेनसर्वज्ञत्वसंपत्तिरितिबोध्यं । तदुक्तंपाद्मे "ज्ञात्वातदाज्ञांताभ्यांभ्वभरतःक्षितिमन्वशात्" इति । ताभ्यांपादुकाभ्यांतद्दर्शनमात्रेणेदृशेविषयेभगवतएवमाज्ञेतिज्ञात्वातथाव्यवहारमकरोदित्यर्थः । भरतस्तु पाञ्चजन्यावतारत्वादाच्छादितसार्वज्ञ्यइत्यनेनसूचितम् । भगवत्स्पर्शेनाचेतनेपिसार्वज्ञ्यदानशक्तिमत्त्वमितिभगवन्माहात्म्यातिशयद्वारारामस्येश्वरत्वंचसूचितं ॥ २२ ॥ **ति०** शप्तोसि रोषाकरणायेतिशेषः ॥ २८ ॥

[ **पा०** ] १ च. ञ. हिमवाञ्शीततां. २ ङ. झ. ट. व्यवमुच्य. ३ च. ञ. प्रायच्छत्स. ४ क. ङ. छ. झ. ञ. ट. न्यस्यराज्यतन्त्रं. ख. ग. न्यस्तोराज्यभारः. ५ ग. ज. वर्षेह्निरघुनन्दन. ६ क. घ. ज. संपरिष्वज्य. ७ घ. शत्रुघ्नंभरतंचेदंरामोवचनमब्रवीत्. ८ ङ. च. छ. झ. ञ. ट. वचनं. ९ ख. घ.—ट. रघुनन्दन.

स पादुके ते भरतः प्रतापवान्स्वलंकृते संपरिपूज्य धर्मवित् ॥
प्रदक्षिणं चैव चकार राघवं चकार चैवोत्तमनागमूर्धनि ॥ २९ ॥
अथानुपूर्व्यात्प्रतिनन्द्य तं जनं गुरूंश्च मन्त्रिप्रकृतीस्तथाऽनुजौ ॥
व्यसर्जयद्राघववंशवर्धनः स्थिरः स्वधर्मे हिमवानिवाचलः ॥ ३० ॥
तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः ॥
स त्वेव मातॄरभिवाद्य सर्वा रुदन्कुटीं स्वां प्रविवेश रामः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

---

## त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

वसिष्ठादिभिःसहायोध्यांप्रस्थितेनभरतेनभरद्वाजाश्रममेत्यतदभिवादनम् ॥ १ ॥ तथातस्मिन्स्वस्यरामपादुकालाभादिरूपचित्रकूटवृत्तवृत्तान्तनिवेदनपूर्वकंतदामन्त्रणेनसकलैस्सहपुनरयोध्यांप्रतिप्रस्थानम् ॥ २ ॥ परिजनैस्सहयमुनागङ्गातरणेनशृङ्गवेरमेत्यततो निर्गत्यायोध्यांदृष्टवताभरतेनसुमन्त्रंप्रतितस्यानिष्प्रभत्वप्रदर्शनम् ॥ ३ ॥

ततः शिरसि कृत्वा तु पादुके भरतस्तदा ॥ आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ॥ १ ॥
वसिष्ठो वामदेवश्च जाबालिश्च दृढव्रतः ॥ अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २ ॥
मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा ॥ प्रदक्षिणं च कुर्वाणाश्चित्रकूटं महागिरिम् ॥ ३ ॥
पश्यन्धातुसहस्राणि रम्याणि विविधानि च ॥ प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ॥ ४ ॥
अदूराच्चित्रकूटस्य ददर्श भरतस्तदा ॥ आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः ॥ ५ ॥

---

करणं। इत्यब्रवीदितिपूर्वेणान्वयः ॥ २३॥२४॥२५—३१॥इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने द्वादशोत्तरशततमःसर्गः ॥ ११२ ॥

अथ भरतस्यायोध्याप्रवेशस्त्रयोदशोत्तरशततमे पादुकेशिरसिकृत्वा शत्रुंजयमूर्ध्निनिक्षिप्तेपादुकेसादरमादायस्वमूर्ध्न्याधायेत्यर्थः । पादुकेशिरसिकृत्वाहृष्टः "यावन्नचरणौभ्रातुःपार्थिवव्यञ्जनान्वितौ । शिरसाधारयिष्यामिनमेशान्तिर्भविष्यति" इतिस्वप्रार्थितस्यानुगुणकिरीटधारणंकृत्वाहृष्टः पूर्वस्वातन्त्र्यभीतः इदानींपादुकाप्राप्त्याहृष्टः ॥ १ ॥ मन्त्रपूजिताः अमोघकार्यविचारनैपुण्यात्पूजिताः ॥ २ ॥ सीतारामयोर्जलक्रीडादिभिःरम्यांमन्दाकिनीं रामनिवासत्वेनमहाप्रभावंचित्रकूटंगिरिंचप्रदक्षिणंकुर्वाणाः सन्तः प्राङ्मुखाययुः ॥३॥द्रुतगतिंविहायनानाधातून् दृग्भ्यांपिबन्निवपश्यन् तस्यचित्रकूटस्यपार्श्वेनययौ ॥ ४ ॥ अदूरादिति । चित्रकूटसौन्दर्यदर्शनाकृष्टचित्ततयाअदूरादिवभासमानम्

**ति०** संपरिगृह्य शिरसेतिशेषः । उत्तमनागमूर्धनि राजोपवाह्यगजमस्तके । तत्कालाभिषिक्तराजाधिरोहणधियेतिशेषः । सर्वलोकप्रख्यापनार्थमेतत् ॥ २९ ॥ **शि०** अथव्यसर्जयत् मङ्गलंयापयामास ॥ ३० ॥ **शि०** रुदन् स्वगमनाभावेनरोदयन् ॥ **ति०** सर्वाः सकैकेयीकाः । अनेनकैकेय्यादोषराहित्यंसूचितं । रुदन् रुदन्निव ॥ ३१ ॥ इतिद्वादशोत्तरशततमस्सर्गः ॥ ११२ ॥ **तनि०** पादुकेशिरसिकृत्वाहृष्टः "यावन्नचरणौभ्रातुःपार्थिवव्यञ्जनान्वितौ । शिरसाधारयिष्यामिनमेशान्तिर्भविष्यति" इतिस्वप्रार्थितस्यानुगुणकिरीटधारणंकृत्वाहृष्टः । पूर्वस्वातन्त्र्यभीतः इदानींपादुकाप्राप्त्याहृष्टः ॥ **ति०** यद्वा शिरसीत्यस्यगजशिरसीत्येवार्थः ॥ १ ॥ **ति०** यत्र यमुनादक्षिणकूले । अतएवचित्रकूटस्यादूरात् । अनेनयमुनादक्षिणतटेपिक्वचिद्भरद्वाजाश्रमइतिज्ञायते ।

**[ पा० ]** १ ङ. छ. झ. ट. स्वलंकृतेमहोज्ज्वले. २ क. ग.—ट. संपरिगृह्य. ख. संप्रतिगृह्य. ३ च. ञ. राघवः. ४ क. ख. घ. ङ. च. ज.—ट. प्रतिपूज्य. ५ घ. ङ. च. ज.—ट. मन्त्रीन्प्रकृतीः. ६ घ. स्तदा. ७ क.—ट. स्थितः. ८ ख. घ. नामन्त्रयितुंन. ९ ङ. झ. ट. सचैव. १० घ. शीघ्रं. ११ छ. झ. शत्रुघ्नसहितस्तदा. ग. शत्रुघ्नेनसमंततः. १२ घ. प्रकुर्वाणाः १३ ग. न्सानुसहस्राणि. १४ ख. ज. स्तथा.

स तमाश्रमम[1]ागम्य भरद्वाजस्य [2]बुद्धिमान् ॥ अवतीर्य रथात्पादौ ववन्दे [3]भरतस्तदा ॥ ६ ॥
ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् ॥ अपि कृत्यं कृतं तात रामेण च [4]समागतम् ॥ ७ ॥
एवमुक्तः स तु [5]ततो भरद्वाजेन धीमता ॥ प्रत्युवाच भरद्वाजं भरतो [6]भ्रातृवत्सलः ॥ ८ ॥
[7]स याच्यमानो गुरुणा मया च दृढविक्रमः ॥ राघवः परमप्रीतो वसिष्ठं वाक्यमब्रवीत् ॥ ९ ॥
पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः ॥ [8]चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १० ॥
एवमुक्तो महाप्राज्ञो वसिष्ठः प्रत्युवाच ह ॥ वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥
एते प्रयच्छ संहृष्टः पादुके हेमभूषिते ॥ अयोध्यायां महाप्राज्ञ योगक्षेम[9]करे तव ॥ १२ ॥
एवमुक्तो वसिष्ठेन राघवः प्राङ्मुखः स्थितः ॥ पादुके [10]अधिरुह्यैते मम राज्याय वै [11]ददौ ॥ १३ ॥
निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना ॥ अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ॥ [12]भरद्वाजः शुभतरं मुनिर्वाक्य[13]मुवाच तम् ॥ १५ ॥
[14]नैतच्चित्रं [15]नरव्याघ्र शीलवृत्तवतां वर ॥ यदार्यं त्वयि तिष्ठेत्तु [16]निम्ने सृष्टमिवोदकम् ॥ १६ ॥
[17]अमृतः स महाबाहुः पिता दशरथस्तव ॥ यस्य त्वमीदृशः पुत्रो [18]धर्मज्ञो धर्मवत्सलः ॥ १७ ॥
तमृषिं [19]तु महात्मानमुक्तवाक्यं कृताञ्जलिः ॥ आमन्त्रयितुमारेभे चरणावुपगृह्य च ॥ १८ ॥
ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनःपुनः ॥ भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ॥ १९ ॥

॥ ५ ॥ सइति । भरद्वाजस्यपादौववन्दइत्यन्वयः ॥ ६ ॥ अपिशब्दःप्रश्ने । रामेणकिंसमागतंसंगतं भवतारामेण कृत्यंभवत्प्रयोजनंकिंकृतमित्यर्थः ॥ ७—८ ॥ गुरुणावसिष्ठेन । पितुरिति । चतुर्दशवर्षाणिवनेवस्तव्यमितिकैकेयीनिमित्तंकृतापितुर्याप्रतिज्ञास्ति तामेवपितुःप्रतिज्ञां तत्वतःपालयिष्यामीत्यब्रवीदितिसंबन्धः ॥ ९—१० ॥ हेमभूषितेइत्यनेन रामायप्रीत्यासमर्पयितुमभिनवतयानिर्मायनगराद्भरतेनानीतेइतिगम्यते ।योगक्षेमकरे अपूर्ववस्तुलाभोयोगः । लब्धस्यपरिपालनंक्षेमः । एते पादुकेप्रयच्छेतिवसिष्ठःप्रत्युवाचहेतिसंबन्धः ॥ ११ ॥ १२—१५ ॥ आर्यं ज्येष्ठानुवर्तनरूपंश्रेयः । निम्ने तटाकादौ । सृष्टंधृतम् ॥ १६ ॥ "प्रजामनुप्रजायसेतदुतेमर्त्यामृतं" इतिश्रुत्युक्तरीत्या सत्पुत्रलाभान्मृतोपिदशरथः अमृतइत्याह अमृतइति ॥ १७ ॥ आमन्त्रयितुमारेभे विनयेनामन्त्रणोद्युक्तइवस्थितइत्यर्थः ॥ १८ ॥ ततः तदनुज्ञानन्तरं । अत्र पुनःपुनरित्यनेनएकंप्रदक्षिणंन कार्यमित्युक्तं । प्रदक्षिणविशेषणेन प्रणामस्तुसकृदेवेत्युक्तंभवतीत्याचार्याः । केचित्तु एकहस्तप्रणामैकप्रदक्षिणयोरिव एकप्रणामस्यापिनिषिद्धत्वात् पुनःपुनरितिविशेषणस्यात्रार्थिकेवा पूर्वश्लोकोक्ताभिवादनबलल-

अतएवाग्रेभरद्वाजामन्त्रणोत्तरं "ततस्तेयमुनांतीर्त्वे" तिवक्ष्यति । संप्रतितत्रस्थितिस्तुरामभरतयोस्संवादंशिष्यद्वाराझटितिश्रोतुमिति बोध्यं ॥ स० यत्र प्रयागे ॥ ५ ॥ ति० प्रयच्छ प्रतिनिधित्वेनेतिशेषः । योगक्षेमकरोभवेति एतद्द्वाराभरतेसार्वज्ञसंपादनेनेतिशेषः ॥ १२ ॥ ति० हेमविकृते हेम्नाविचित्रतयाकृते । ममराज्याय ममराज्यरक्षाशक्त्यनुग्रहार्थमित्यर्थः । शि० नचपूर्वंभरतप्रार्थनयारामकर्तृकपादुकादानस्योक्तत्वेनेदंविरुद्धमितिवाच्यं । गुरावीश्वरत्वबुद्ध्याकर्तृत्वंकरणत्वंचेत्यादिश्रुत्याकर्तृत्वस्येश्वरेपर्यवसन्नत्वेनवसिष्ठस्यैवमुख्यकर्तृत्वेनादोषात् ॥ १३ ॥ ति० आर्यं शोभनचरित्रं । त्वयितिष्ठेदितियत् तत् उत्सृष्टमुदकं निम्नेतिष्ठेदितिवन्नचित्रं । निम्नेतिलुप्तसप्तम्यन्तं ॥ १६ ॥ शि० आमन्त्रयितुं गमनायप्रार्थयितुं ॥ ति० आमन्त्रयितुमारेभे आमन्त्रणंकृतवान्

[ पा० ] १ ख. ग. घ. ज. मासाद्य. २ ङ. झ. वीर्यवान्. ३ क.—ङ. छ. ज. झ. कुलनन्दनः. च. ञ. रघुनन्दनः. ४ च. समागतः. ५ ख. ग. च. ञ. तदा. ६ क. ङ. च. छ. झ. ञ. ट. धर्मवत्सलः. ७ क. याच्यमानोपि. ८ ग. चतुर्दशच. ९ ङ. झ. ट. करोभव. १० क. ख. ङ. च. छ. झ. ञ. ट. हेमविकृते. ११ क. ख. ङ. च. छ. झ ञ. ट. तेददौ. १२ क. च. ञ. भरद्वाजस्तुभरतं. ज. भरद्वाजःशुभरतं. १३ क. ख. ङ. च. छ. झ. ञ. ट. मुदाहरत्. ग. मुवाचह. १४ च. नैवचित्रं. १५ ङ. च. छ. झ. ञ. ट. नरव्याघ्रेशीलवृत्तविदांवरे. १६ ङ. झ. ञ. ट. निम्नोत्सृष्ट. ख. ग. घ. च. ज. निम्नेवृष्ट. १७ ङ. छ. झ. ञ. ट. अनृणः. १८ ख. ङ. छ. झ. ञ. ट. धर्मात्मा. १९ क. समहात्मानं. ख. ङ. च. छ. झ. ञ. ट. तुमहाप्राज्ञं.

यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः ॥ पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥
ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीम् ॥ ददृशुस्तां पुनः सर्वे गङ्गां शुभजलां नदीम् ॥२१
तां रम्यजलसंपूर्णां संतीर्य सहबान्धवः ॥ शृङ्गिबेरपुरं रम्यं प्रविवेश ससैनिकः ॥ २२ ॥
शृङ्गिबेरपुराद्भूयस्त्वयोध्यां संददर्श ह ॥ २३ ॥
अयोध्यां च ततो दृष्ट्वा पित्रा भ्रात्रा विवर्जिताम् ॥ भरतो दुःखसंतप्तः सारथिं चेदमब्रवीत् ॥२४॥
सारथे पश्य विध्वस्ता साऽयोध्या न प्रकाशते ॥ निराकारा निरानन्दा दीना प्रतिहतस्वरा ॥२५॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे त्रयोदशोत्तरशततमः सर्गः ॥११३

---

## चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

वाल्मीकिनाबहुलिदर्शनप्रदर्शनेनायोध्यायाःशोभाराहित्यनिरूपणम् ॥ १ ॥ अयोध्यांप्रविष्टवताभरतेनसुमन्त्रंप्रत्ययोध्यायानिश्शोभत्वप्रदर्शनपूर्वकंशोकात्पितृनिवेशप्रवेशः ॥ २ ॥

स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान्प्रभुः ॥ अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥
बिडालोलूकचरितामालीननरवारणाम् ॥ तिमिरंभ्याहतां कालीमप्रकाशां निशामिव ॥ २ ॥
राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभाम् ॥ ग्रहेणाभ्युत्थितेनैकां रोहिणीमिव पीडिताम् ॥३॥
अल्पोष्णक्षुब्धसलिलां घर्मोत्तप्तविहंगमाम् ॥ लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥
विधूमामिव हेमाभामध्वराग्नेः समुत्थिताम् ॥ हविरभ्युक्षितां पश्चाच्छिखां विप्रलयं गताम् ॥ ५ ॥
विध्वस्तकवचां रुग्णगजवाजिरथध्वजाम् ॥ हतप्रवीरामापन्नां चमूमिव महाहवे ॥ ६ ॥

---

न्धेवाप्रणामेप्यन्वयेन नकोपिविरोधइत्याहुः । अयोध्यामुद्दिश्यययावित्यन्वयः ॥ १९ ॥ भरतस्यैवसेनायाश्चित्रकूटान्निवृत्तिमाह—यानैरिति ॥ २० ॥ भरतमनुसृत्यसेनानुयानप्रकारमाह—ततइति । यमुनांतीर्त्वागच्छन्तस्तेसर्वे गङ्गांददृशुरितिसंबन्धः ॥ २१—२४ ॥ निराकारा निर्गतशोभनाकारा ॥ २५ ॥ इति श्रीगोविन्दराजविरचितेश्रीमद्रामायणभूषणेपीताम्बराख्याने अयोध्याकाण्डव्याख्याने त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

पूर्वसर्गान्तिमश्लोकोक्तंविस्तरेणदर्शयति चतुर्दशोत्तरशततमे । उपयान् समीपमागच्छन् ॥ १॥ कालींकृष्णपक्षसंबन्धिनीम् ॥ २ ॥ राहुशत्रोः चन्द्रस्य ॥ ३—४ ॥ हविरभ्युक्षितां दध्यादिहविषाअभ्युक्षितां । शिखां प्रव

---

॥ १८ ॥ ति० यमुनांतीर्त्वा तस्मिन्नेवदिनेभरद्वाजंदृष्ट्वा गङ्गांददृशुरित्यर्थइतिकश्चित् । तत्तुपूर्वोक्तरीत्याऽसामञ्जस्याद्धेयं । जलस्य शिवत्वंरम्यत्वंच दर्शनमात्रेणसकलपापापहन्तृत्वंमधुरत्वंच ॥ २१ ॥ ति० शृङ्गबेरपुरादिति । निर्गत्येतिशेषः ॥ २३ ॥ ति० विध्वस्ता विध्वस्तशोभा । निराकारा निरलङ्कारा ॥ २५ ॥ इतित्रयोदशाधिकशततमस्सर्गः ॥ ११३ ॥

ति० आसमन्तात्लीनानिश्लिष्टानिलग्नानि नराणांवारणानिकवाटानियस्यां । शि० आलीनानिपिहितानि नरचारणानि नराणांचारणानिमुखानियस्यांतां । किंच आलीनानि निवृत्तानि नराणांप्रतीहाराणांवारणानिनिवारणानियस्यांसातां ॥ २ ॥ ति० विधूमां अतएवहेमाभां अग्नेस्समुत्थितांशिखामिवा । पूर्वंरामस्थितिंसमयेजाज्वल्यमानरूपतयास्थितां । पश्चात् रामविवासनकाले हविरभ्युक्षितां होमीयपयस्सिक्तां अतएव विप्रलयंगतांशिखामिवस्थितां । अध्वराग्नेस्समुत्थितामितिपाठोबहुसंमतः तत्राप्यर्थःप्रागव-

[ पा० ] १ क.—ट. शिवजलां. २ ज. रम्यांतांजल. ग. तांपुण्यजल. ३ ज. बान्धवैः. ४ ग. संददर्शसः. ५ क. ख. ङ. च. छ. झ. ञ. ट. अयोध्यांतुतदा. ६ क. च. ञ. भ्रात्राचवर्जितां. ग. भ्रात्राविनाकृतां. ख. भ्रात्राचवर्जितः. ७ क. वाक्यमब्रवीत्. ८ ङ. छ. झ. ट. विध्वस्ताअयोध्या. ९ क. ख. घ.—छ. झ. ञ. ट. प्रतिहतस्वना. १० ग. तिमिरेणाहतां. ११ क. ख. घ. ङ. छ. ज. झ. ट. ग्रहेणाभ्युदितेनैकां. १२ ङ. झ. ञ. ट. घर्मतप्त. क. घर्मातप्त. १३ ङ. छ. झ. ट. हेमाभांशिखामग्नेः. १४ ग. समुच्छ्रितां. १५ क. ख. प्रविलयं.

सफेना सस्वना भूत्वा सागरस्य समुत्थिताम् ॥ प्रशान्तमारुतोद्धूतां जलोर्मिमिव निःस्वनाम् ॥७॥
त्यक्तां यज्ञायुधैः सर्वैरभिरूपैश्च याजकैः ॥ सुत्याकाले विनिर्वृत्ते वेदिं गतरवामिव ॥ ८ ॥
गोष्ठमध्ये स्थितामार्तामचरन्तीं तृणं नवम् ॥ गोवृषेण परित्यक्तां गवां पत्नीमिवोत्सुकाम् ॥ ९ ॥
प्रभाकराद्यैः सुस्निग्धैः प्रज्वलद्भिरिवोत्तमैः ॥ वियुक्तां मणिभिर्जात्यैर्नवां मुक्तावलीमिव ॥ १० ॥
सहसा चलितां स्थानान्महीं पुण्यक्षयाद्गताम् ॥ संहृतद्युतिविस्तारां तारामिव दिवश्च्युताम् ॥ ११ ॥
पुष्पनद्धां वसन्तान्ते मत्तभ्रमरनादिताम् ॥ द्रुतदावाग्निविप्लुष्टां क्लान्तां वनलतामिव ॥ १२ ॥
संमूढनिगमां स्तब्धां संक्षिप्तविपणापणाम् ॥ प्रच्छन्नशशिनक्षत्रां द्यामिवाम्बुधरैर्वृताम् ॥ १३ ॥
क्षीणपानोत्तमैर्भिन्नैः शरावैरभिसंवृताम् ॥ हतशौण्डामिवाकाशे पानभूमिमसंस्कृताम् ॥ १४ ॥
वृक्णभूमितलां निम्नां वृक्णपात्रैः समावृताम् ॥ उपयुक्तोदकां भग्नां प्रपां निपतितामिव ॥ १५ ॥
विपुलां विततां चैव युक्तपाशां तरस्विनाम् ॥ भूमौ बाणैर्विनिष्कृत्तां पतितां ज्यामिवायुधात् ॥ १६
सहसा युद्धशौण्डेन हयारोहेण वाहिताम् ॥ निक्षिप्तभाण्डामुत्सृष्टां किशोरीमिव दुर्बलाम् ॥ १७ ॥
शुष्कतोयां महामत्स्यैः कूर्मैश्च बहुभिर्वृताम् ॥ प्रभिन्नतटविस्तीर्णां वापीमिव हृतोत्पलाम् ॥ १८ ॥
पुरुषस्याप्रहृष्टस्य प्रतिषिद्धानुलेपनाम् ॥ संतप्तामिव शोकेन गात्रयष्टिमभूषणाम् ॥ १९ ॥

ग्र्योत्थितज्वालाम् ॥ ५—७ ॥ यज्ञायुधैः स्फ्यादिभिः । सुत्याकाले सुत्यादिवसे ॥ ८ ॥ अचरन्तींअभक्षयन्तीम् ॥९॥ प्रभाकराद्यैः पद्मरागाद्यैः ॥ १० ॥ ११ ॥ वसन्तान्ते ग्रीष्मे द्रुतदावाग्निविप्लुष्टां वेगवद्दावाग्निनाईषद्दग्धाम् ॥१२॥ संमूढनिगमां जनसंचाररहितमार्गां । "निगमोनिश्चयेवेदेपुरेपथिवणिक्पथे" इतिवैजयन्ती । संक्षिप्तविपणापणां संकुचितविक्रयां संकुचितनिषद्यांच ॥ १३ ॥ क्षीणपानोत्तमैः क्षीणमधूत्तमैः । शरावैः चषकाकारैः । हतशौण्डां हतमत्तजनां आकाशे अनावृतप्रदेशे ॥ १४ ॥ वृक्णभूमितलां विदीर्णभूमितलां । वृक्णपात्रैःभिन्नपात्रैः ॥ १५ ॥ विततां अटनीद्वयव्याप्तां आरोपितामितियावत् । युक्तपाशांयुक्तरज्जुं । तरस्विनां वीराणां । बाणैः विनिष्कृत्तां छिन्नामितियावत् । आयुधात् धनुषः ॥ १६ ॥ युद्धशौण्डेन आहवसमर्थेन । निक्षिप्तभाण्डां अवरोपिताश्वभूषां । उत्सृष्टां वाहनानर्हा

देव । शिखामित्यस्यचावृत्तिः ॥ ५ ॥ **ति०** समुत्थितां प्रबलमारुतेनसमुत्थितां । अतएवसफेनां सस्वनांऊर्मिमिव भूत्वा तत्सदृशंरूपंप्राप्य पश्चात् प्रशान्तमारुतेनउत्अल्पंधूतांकंपितां अतएवनिस्स्वनांसागरस्यजलोर्मिमिवस्थितां । **स०** ऊर्मिमिवरूपंपूर्वं भूत्वा प्राप्य ॥ ७ ॥ **स०** यज्ञायुधैः याज्ञीयायुधाकारस्फयादिभिः । सुत्याकाले यज्ञकाले । सुनिर्वृत्ते निष्पन्नेसति । रवः ध्वनिः ॥ ८ ॥ **ति०** गोष्ठः व्रजं । गोवृषेण गोश्रेष्ठेन । यद्वा गवांप्रियेणवृषेणत्यक्तां अतएवार्तां तत्रोत्सुकां नवंतृणमचरन्तीं अभक्षयन्तीं । गवांतरुणवृषाणांपत्नीमिवस्थितां । गवांपङ्क्तिमिवेतिपाठान्तरं । पत्नीमित्यस्यपङ्क्तिमित्यर्थंतीर्थआह तच्चिन्त्यं ॥ ९ ॥ **ती०** मणिभिः नायकमणिभिः । **ति०** प्रभाकराद्यैः स्फटिकाद्यैरितिकतकोक्तंतुनयुक्तं । **स०** प्रज्वलद्भिः अग्निभिरिवोत्तमैः ॥ १० ॥ **ति०** चरितां चलितां । पुण्यक्षयेतिलुप्तसप्तम्यन्तं । पुण्यक्षयेसतिमहींप्राप्तां । **स०** संहृतद्युतिविस्तारां उपसंहृतप्रकाशां । क्षीणपुण्यत्वात् ॥ ११ ॥ **ति०** संमूढाः शोकाकुलचित्ताः निगमाःवणिजोयस्यां ॥ १३ ॥ **ति०** हतशौण्डां हतमद्यपां ॥ १४ ॥ **ति०** वृक्णभूमितलां भिन्नचत्वरां । भग्नां भग्नस्तंभां । उपयुक्तोदकां समाप्तोदकां ॥ १५ ॥ **स०** युक्तपाशां धनुष्कोट्योःस्थापनार्थमुभयत्र

**[ पा० ]** १ क. ख. घ.—ट. सफेनांसस्वनां. ग. सफेनांसस्वरां. २ घ. काले. ३ ख. घ.—ट. मारुतोद्धूतां. ४ च. ञ. चनिर्वृत्ते. ङ. छ. झ. ट. सुनिर्वृत्ते. ५ क. ख. ङ—ट. नवंतृणं. ६ ङ. ट. विमुक्तां. ७ ङ. छ—ट. चरितां. ८ च. छ. झ. ञ. ट. क्षयोद्गतां. ९ घ. ज. विस्तीर्णां. १० क. ङ. छ. झ. ट. भ्रमरशालिनीं. ख. च. ञ. भ्रमरताडितां. ग. भ्रमरलालितां. ११ ख. ग. च. द्रुतं. क. भृशं. १२ घ. ज. संप्लुष्टां. १३ ख. च. लतामिवचदुर्बलां. १४ क. ख. ङ. च. छ. झ. ञ. ट. सर्वां. १५ ङ. छ. झ. ट. युतां. १६ ङ. छ. ञ. ट. भग्नैः. १७ ग. घ. ङ. छ.—ट. मिवध्वस्तां. १८ घ. भिन्नां. १९ क. ख. ङ. च. छ. झ. ञ. ट. निहतांप्रतिसैन्येनबडबामिवपातितां. २० शुष्कतोयामित्यादिश्लोकत्रयं. झ.—ठ. पुस्तकेषुन दृश्यते.

[1]प्रावृषि प्रविगाढायां प्रविष्टस्याभ्रमण्डलम् ॥ प्रच्छन्नां नीलजीमूतैर्भास्करस्य प्रभामिव ॥ २० ॥
भरतस्तु रथस्थः सञ्श्रीमान्दशरथात्मजः ॥ वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत् ॥ २१ ॥
किंनु खल्वद्य गम्भीरो मूर्च्छितो न निशम्यते ॥ यथापुरमयोध्यायां गीतवादित्रनिःस्वनः ॥ २२ ॥
वारुणीमदगन्धश्च माल्यगन्धश्च मूर्च्छितः ॥ [2]धूपितागरुगन्धश्च न प्रवाति समन्ततः ॥ २३ ॥
यानप्रवरघोषश्च [3]स्निग्धश्च हयनिस्वनः ॥ [4]प्रमत्तगजनादश्च महांश्च रथनिःस्वनः ॥
नेदानीं श्रूयते पुर्यामस्यां रामे विवासिते ॥ २४ ॥
चन्दनागरुगन्धांश्च महार्हांश्च [5]नवस्रजः ॥ [6]गते हि रामे तरुणाः संतप्ता नोपभुञ्जते ॥ २५ ॥
बहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा नराः ॥ नोत्सवाः संप्रवर्तन्ते रामशोकार्दिते पुरे ॥ २६ ॥
[7]सह नूनं मम [8]भ्रात्रा पुरस्यास्य द्युतिर्गता [9] ॥ [10]न हि राजत्ययोध्येयं सासारेवार्जुनी क्षपा ॥ २७ ॥
[11]कदा नु खलु मे भ्राता महोत्सव इवागतः ॥ जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः ॥ २८ ॥
तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः ॥ संपतद्भिरयोध्यायां [12]नाभिभान्ति महापथाः ॥ २९ ॥
[13]एवं बहुविधं जल्पन्विवेश वसतिं पितुः ॥ तेन हीनां नरेन्द्रेण सिंहहीनां गुहामिव ॥ ३० ॥
तदा तदन्तःपुरमुज्झितप्रभं सुरैरिवो[14]त्सृष्टमभास्करं दिनम् ॥
निरीक्ष्य [15]सर्वं तु विविक्तमात्मवान्मुमोच बाष्पं भरतः [16]सुदुःखितः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥११४

---

किशोरीं बालवडवां ॥ १७—१९ ॥ प्रविगाढायां प्रवृद्धायां भास्करस्यप्रभामिवस्थितां। उक्तविशेषणविशिष्टामयोध्यांप्रविवेशेतिपूर्वेणान्वयः ॥ २०–२१ ॥ किंनु खलु अहोकष्टंजातमित्यर्थः ॥ २२ ॥ वारुणीमदगन्धः वारुण्याः मदोत्पादकोगन्धइत्यर्थः ॥ २३—२६ ॥ सासारा वेगवद्वृष्टिसहिता । "आसारःस्यात्प्रसरणेवेगवृष्टौसुहृद्बले" इतिवैजयन्ती । अर्जुनी शुक्लपक्षसंबन्धिनी ॥ २७ ॥ महोत्सवः ग्रीष्मेअम्बुदइवच अयोध्यायां कदामेभ्राता हर्षंजनयिष्यतीतिसंबन्धः ॥ २८ ॥ उन्नतगामिभिः सगर्वगमनैरित्यर्थः । महापथाः राजमार्गाः ॥ २९ ॥ एवंबहुविधंजल्पन्निति पाठः ॥३०॥ सुरैरुत्सृष्टं अभास्करंदिनमिव उज्झितप्रभं अन्तःपुरंनिरीक्ष्येतिसंबन्धः । विविक्तं विजनं। "विविक्तौपूतविजनौ" इत्यमरः । पुराकिलदेवासुरयुद्धेअसुरैर्देवाःपराजिताःस्वर्भानुनाचभानुःपातितः तदानींकियान्कालोदिवारात्रविभागरहितोभूत्। ततःपरं ब्रह्मनियोगादत्रिःस्वतेजसासप्तरात्रंसूर्याधिपत्यंचकारेतिपौराणिकीकथा । अग्निःस्वतेजसेतिपाठान्तरम् ॥ ३१ ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने चतुर्दशोत्तरशततमःसर्गः ॥ ११४ ॥

---

पाशसहितां ॥ १६ ॥ **ति०** मूर्छितः व्याप्तः **स०** मूर्छितः समुत्कृष्टः । **शि०** वारुणी वरुणप्रेषिताओषधिः तस्यामदगन्धः ॥२३॥ **कतक०** भास्करहीनंदिनं । कविकल्पितमत्रोपमानं । **ति०** विभक्तं विगतसंस्कारं । भक्तंसेवितंसंस्कृतं तद्भिन्नमितियावत् ॥ ३१ ॥ इति चतुर्दशोत्तरशततमस्सर्गः ॥ ११४ ॥

**[पा०]** १ अयंश्लोकः. ख. च. पुस्तकयोः. पुष्पनद्धामितिश्लोकात्परंसंमूढनिगमामितिश्लोकात्पूर्वंदृश्यते. २ क. ङ. छ. झ. ञ. ट. चन्दनागरु. ख. च. धूपेनागरु. ३ ङ. च. ञ. सुस्निग्धहय. ४ ग. उन्मत्तगज. ५ ङ. झ. ञ. वनस्रजः. ६ क.—ट. गतेरामेहि. ७ क.—ट. साहि. ८ घ. ज. सहभ्रात्रा. ९ ख. हृता. १० क. नविराजति. ११ क. कदातु. १२ क. ख. घ. च. ज. ञ. नविभान्ति. ग. नातिभान्ति. १३ एवंबहुविधमित्यर्धस्यस्थाने, " इतिब्रुवन्सारथिना दुःखितोभरतस्तदा । अयोध्यांसंप्रविश्यैवविवेशवसतिंपितुः । " इत्येकःश्लोकः, ख. ङ. च. छ. झ. ञ. ट. पुस्तकेषुदृश्यते. ख. अयोध्यांचप्रविश्यैवं. च. ञ. विवेशभवनंपितुः. १४ ङ. छ. झ. ट. रिवोत्कृष्टं. १५ ख.—ट. सर्वत्रविभक्तं. १६ क. ख. ङ. सदुःखितः.

## पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

भरतेनवसिष्ठाद्यनुमत्यामातृणामयोध्यायांस्थापनपूर्वकंशत्रुघ्नादिभिःसहनन्दिग्रामप्रवेशः ॥ १ ॥ मुनिवेषधारिणाभरतेन तत्रसमस्तराजोपचारैरामपादुकयोराज्येऽभिषेचनपूर्वकंराज्यपालनम् ॥ २ ॥

ततो निक्षिप्य मातृः स अयोध्यायां दृढव्रतः ॥ भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ॥ १ ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽद्य वः ॥ तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥ २ ॥
गतश्च हि दिवं राजा वनस्थश्च गुरुर्मम ॥ रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ॥ अब्रुवन्मन्त्रिणः सर्वे वसिष्ठश्च पुरोहितः ॥ ४ ॥
सुभृशं श्लाघनीयं च यदुक्तं भरत त्वया ॥ वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ॥ ५ ॥
नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे ॥ आर्यमार्गं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६ ॥
मन्त्रिणां वचनं श्रुत्वा यथाऽभिलषितं प्रियम् ॥ अब्रवीत्सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७ ॥
प्रहृष्टवदनः सर्वा मातृः समभिवाद्य सः ॥ आरुरोह रथं श्रीमाञ्शत्रुघ्नेन समन्वितः ॥ ८ ॥
आरुह्य च रथं शीघ्रं शत्रुघ्नभरतावुभौ ॥ ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥ ९ ॥
अग्रतो गुरवस्तत्र वसिष्ठप्रमुखा द्विजाः ॥ प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतोऽभवत् ॥ १० ॥
बलं च तदनाहूतं गजाश्वरथसंकुलम् ॥ प्रययौ भरते याते सर्वे च पुरवासिनः ॥ ११ ॥
रथस्थः स हि धर्मात्मा भरतो भ्रातृवत्सलः ॥ नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके ॥ १२ ॥
ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः ॥ अवतीर्य रथात्तूर्णं गुरूनिदमुवाच ह ॥ १३ ॥
एतद्राज्यं मम भ्रात्रा दत्तं संन्यासवत्स्वयम् ॥ योगक्षेमवहे चेमे पादुके हेमभूषिते ॥ १४ ॥
भरतः शिरसा कृत्वा संन्यासं पादुके ततः ॥ अब्रवीद्दुःखसंतप्तः सर्वं प्रकृतिमण्डलम् ॥ १५ ॥
छत्रं धारयत क्षिप्रमार्यपादाविमौ मतौ ॥ आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥ १६ ॥

अथभरतस्यनन्दिग्रामेस्थित्वाराज्यपरिपालनंपञ्चदशोत्तरशततमे ॥ १ ॥ राघवंविनादुःखं राघवंविनाप्राप्तंदुःखम् ॥ २—४ ॥ सुभृशंश्लाघनीयंचेति पाठः । सदृशमितिपाठे कुलस्यसदृशमित्यर्थः ॥ ५ ॥ नानुमन्येत वचनमितिशेषः ॥ ६—१३ ॥ मातृवरव्याजेनपित्रादत्तंराज्यंभरतःकरोतीतिजनवादोमाभूदितिधियावदति एतदित्यादिना । संन्यासवत् सम्यङ्निक्षिप्तद्रव्यमिव । अनेनान्यूनतयाप्रत्यर्पणीयत्वंध्वन्यते । निक्षेपवद्दत्तस्यराज्यस्यरक्षणादिस्वातन्त्र्यमपि स्वस्यनास्तीतिदर्शयति योगक्षेमवहेचेति ॥ १४ ॥ संन्यासं पादुके स्वप्रतिनिधित्वेनन्यस्तेपादुके ॥ १५ ॥ छत्रमित्येतच्चामरादीनामुपलक्षणं । अतएवधारयतेति बहुवचनं । आर्यपादाभेदभावनया पादुकयोरिमाविति पुँल्लिङ्गनिर्देशः । पादुकाभ्यामितिहेतौतृतीया ॥ १६ ॥

ति० नन्दिग्रामो यतोभवेत् येनमार्गेणसप्राप्तोभवेत् तेनययुः ॥ १० ॥ ति० पादुकेसंन्यासं पादुकात्मकंसद्वस्तुन्यासं । वेदाःप्रमाणमितिवत्साधु । स० संन्यासं ममागमनपर्यंतंत्वयितिष्ठत्विति संन्यस्यतइतिसंन्यासं । कर्मणिघञन्तः " घञबन्ताःपुंसेव " इतिनियमोनास्तीतिसंबन्धमनुवर्तिष्यतइतिभाष्याद्दौस्पष्टमुक्तेर्युक्तःपादुकेइत्यनेनान्वयः ॥ १५ ॥ शि० स्थितः स्थापितः । अन्त-

[ पा० ] १ ङ. छ. झ. ट. मातृस्ताः २ क. ग. च. ञ. ह्ययोध्यायां. ३ झ. ञ. ट. नामन्त्रयेत्र. ४ ङ. छ. झ. ट. गतश्चाहो. ५ क. ख. ग. ङ.—ट. वनस्थस्स. ६ ख. ग. ङ.—ट. मार्गमार्य. ७ घ. प्रहृष्टमनसः. ८ ङ. छ. झ. ट. समभिभाष्यच. च. ञ. समभिवाद्यच. ९ ख. घ. च. ज. ञ. शीघ्रंशत्रुघ्नेन. १० क. ख. ग. ङ च. छ. झ. आरुह्यतु. ११ ङ. छ. झ. ट. क्षिप्रं. क. दीप्तं. १२ ग. ङ. छ. झ. ञ. ट. गुरवस्सर्वे. ख. घ. च. गुरवस्तस्य. १३ ग. ग्रामंसमन्ततः. ङ. छ. झ. ञ. ट. ग्रामोयतोभवेत्. १४ ग. तद्बलंचयथाभूतं. १५ ख. ग. रथाश्वगजसंकुलं. १६ क. ग.—ट. सतु. १७ ङ. छ. झ. ञ. ट. शिरस्यादाय. १८ ङ. झ. ट. भरतस्तुततः. १९ ख. च. ञ. शीघ्रं. २० ङ. छ. झ. ट. निदमभाषत. २१ ङ. छ. झ. ट. संन्यासमुत्तमं. २२ ख. च. ञ. तस्य. २३ क. ख. राज्यस्थितो.

भ्रात्रा[1] हि मयि संन्यासो निक्षिप्तः सौहृदादयम् ॥ तमिमं पालयिष्यामि राघवागमनं[2] प्रति ॥१७॥
क्षिप्रं संयोजयित्वा तु राघवस्य पुनः[3] स्वयम् ॥ चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ[4] ॥ १८॥
ततो निक्षिप्तभारोऽहं राघवेण समागतः ॥ निवेद्य गुरवे राज्यं भजिष्ये गुरुवृत्तिताम्[5] ॥ १९ ॥
राघवाय च संन्यासं दत्त्वेमे वरपादुके ॥ राज्यं चेदमयोध्यां च धूतपापो भवामि[6] च ॥ २० ॥
अभिषिक्ते[7] तु काकुत्स्थे प्रहृष्टमुदिते[8] जने ॥ प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणम् ॥ २१ ॥
एवं तु विलपन्दीनो[9] भरतः स महायशाः ॥ नन्दिग्रामेऽकरोद्राज्यं दुःखितो मन्त्रिभिः सह ॥२२॥
स वल्कलजटाधारी मुनिवेषधरः प्रभुः ॥ नन्दिग्रामेऽवसद्धीरः[10] ससैन्यो भरतस्तदा[11] ॥ २३ ॥
रामागमनमाकाङ्क्षन्[12][13]भरतो भ्रातृवत्सलः ॥ भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तथा[14] ॥ २४ ॥
पादुके[15] त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा ॥ [ संवालव्यजनं[16] छत्रं धारयामास स स्वयम् ॥
भरतः शासनं सर्वं पादुकाभ्यां न्यवेदयत्[17] ॥ २५ ॥
ततस्तु भरतः श्रीमानभिषिच्यार्यपादुके ॥ तदधीनस्तदा राज्यं कारयामास सर्वदा[18] ॥ २६ ॥
तदा[19] हि यत्कार्यमुपैति किंचिदुपायनं चोपहृतं महार्हम् ॥
स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चाद्भरतो यथावत्[20] ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे पञ्चदशोत्तरशततमः सर्गः ॥११५॥

---

अयंसंन्यासः पादुकारूपप्रतिनिधिः । पालयिष्यामिरक्षिष्यामि ॥ १७–१८ ॥ राघवेण समागतः संगतः । गुरवेराज्यंनिवेद्य रामायराज्यंप्रत्यर्प्य ततः गुरुवृत्तितांभजिष्ये पितरीवशुश्रूषांकरिष्यामीत्यर्थः ॥ १९ ॥ धूतपापइत्यत्रपापशब्देन कैकेयीनिमित्तमयशउच्यते ॥ २० ॥ प्रहृष्टमुदिते प्रहृष्टःपुलकितगात्रः । मुदितः संजातमानसहर्षः ॥२१—२३॥ रामागमनमाकाङ्क्षन्नित्यादि । पादुकाभ्यांन्यवेदयत् विज्ञापयामास ॥ २४—२५ ॥ आर्यपादुकेअभिषिच्य राज्याभिषेकमार्यपादुकयोः कृत्वेत्यर्थः। तदधीनः पादुकापरतन्त्रः ॥ २६ ॥ तदा पादुकेपुरस्कृत्यराज्यपालनसमये । उपायनं उपहारः । " उपायनमुपग्राह्यमुपहारः " इत्यमरः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

---

भावितणिजर्थः ॥ १६ ॥ **तनि०** यत्कार्यं राज्यपरिपालनकृत्यं । उपायनमित्यत्रयदित्यनुवर्तते । उपायनं पत्रफलपुष्पादिकं । पादुकाभ्यांप्रथमंनिवेद्येत्यनेन प्रतिदिनंपादुकार्चातन्निवेदितस्वीकारश्चध्वन्यते । यथावच्चकारेतिहव्यकव्यादिषुविनियोगोव्यज्यते ॥ २७ ॥ इतिपञ्चदशोत्तरशततमस्सर्गः ॥ ११५ ॥

**[ पा० ]** १ क. ङ. च. छ. झ. ञ. ट. भ्रात्रातु. ग. ममभ्रात्राहि. २ घ. भ्रातुरागमनं. ३ क. ग. पुनस्त्वहं. ४ ग. पादोहं. ५ झ. गुरुवार्तितां. ६ ख. ङ. च. छ. झ. ञ. ट. भवाम्यहं. ७ अभिषिक्तेलित्यादिश्लोकद्वयं. झ. पाठेनदृश्यते. ८ ख. च. ञ. प्रहृष्टे. ९ ग. न्वीरो. १० क. ङ. झ. ञ. द्धीरः. ११ च. स्तथा. १२ रामागमनमितिश्लोको झ. पाठे नदृश्यते. १३ क. ख. च. काङ्क्षीचभरतो. घ. ज. माकाङ्क्षीभरतो. १४ ञ. तस्यपादुकयोःसदा. १५ घ. ज. पादुके अभिषिच्याथ. ग. पादुके अभिषिच्याशु. १६ इदमर्धं ङ. छ.—ट. पुस्तकेषुदृश्यते. १७ झ. निवेदयन्. १८ घ. वैतदा. १९ क. ख. घ. च. ज. यदाहि. २० क. यथाभवेत्.

# षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

रामेणेङ्गितादिनामुनिकुलस्याश्रमान्तरजिगमिषाविज्ञानेनकुलपतिंप्रतितत्कारणप्रश्नः ॥ १ ॥ तेनरामंप्रतिचित्रकूटेतदवस्थाहेतुकखरादिराक्षसकृतदुस्सहोपद्रवस्यतत्कारणत्वकथनपूर्वकंसगणस्यात्मनआश्रमान्तरगमनाभ्यनुज्ञानप्रार्थना ॥ २ ॥ रामेणसबहुमानंमुनिगणप्रस्थापनपूर्वकंस्वावासप्रवेशः ॥ ३ ॥

प्रति[1]प्रयाते भरते वसन्रामस्त[2]पोवने ॥ लक्षयामास सोद्वेगमथौत्सुक्यं तपस्विनाम् ॥ १ ॥
ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे ॥ राममाश्रित्य निरतास्तानलक्षयदुत्सुकान् ॥ २ ॥
नयनैर्भ्रू[3]कुटीभिश्च रा[4]मं निर्दिश्य शङ्किताः ॥ अन्योन्यमुपजल्पन्तः शनैश्चक्रुर्मिथः कथाः ॥ ३ ॥
तेषामौत्सुक्यमालक्ष्य रामस्त्वात्मनि शङ्कि[5]तः ॥ कृताञ्जलिरुवाचेदमृषिं कुलपतिं त[6]तः ॥ ४ ॥
न कच्चिद्भगवन्किंचित्पूर्ववृत्तमिदं मयि ॥ दृश्यते विकृतं येन विक्रियन्ते तपस्विनः ॥ ५ ॥
प्रमादाच्चरितं क[7]च्चित्किंचिन्नावरजस्य मे ॥ ल[8]क्ष्मणस्यर्षिभिर्दृष्टं नानु[9]रूपमिवात्मनः ॥ ६ ॥
कच्चि[10]च्छुश्रूषमाणा वः शुश्रूषणपरा मयि ॥ [11]प्रमादाभ्युचितां वृत्तिं सीता [12]युक्तं न वर्तते ॥ ७ ॥

अथरामस्यचित्रकूटान्निर्गमनंषोडशोत्तरशततमे । सोद्वेगं सभयं । औत्सुक्यं आश्रमान्तरगमनाभिलाषं लक्षयामास । इङ्गिताकारादिभिरितिशेषः ॥ १ ॥ पुरस्तात् पूर्वे । चित्रकूटस्यतापसाश्रमेराममाश्रित्ययेनिरतास्तान् उत्सुकान् गमनोत्सुकान् । अलक्षयत् राम इत्यनुषङ्गः ॥ २ ॥ रामं निर्दिश्य प्रदर्श्य । मिथः रहस्ये । “ मिथोऽन्योन्यरहस्ययोः ” इतिवैजयन्ती ॥ ३ ॥ आत्मनिशङ्कितः स्वस्मिन् संजातशङ्कः ॥ ४ ॥ हेभगवन्मयिपूर्ववृत्तं विकृतंनदृश्येतकच्चित् । येनतपस्विनोविक्रियन्ते इदंकिंचित् किमिदमित्यर्थः ॥ ५ ॥ प्रमादात् अनवधानात् । मे अवरजस्य लक्ष्मणस्य । आत्मनोनानुरूपमिव किंचिच्चरितंऋषिभिर्दृष्टंनकच्चिदित्यन्वयः ॥ ६—७ ॥

ति० येतापसाः । चित्रकूटस्याश्रमे । सन्धिरार्षः । राममाश्रित्यनिरताः नितरांरताः सानन्दाः तानुत्सुकानलक्षयत् । अत्रेदंबोध्यं । चैत्रशुक्लदशम्यांपुष्येरामवनप्रस्थानं । ततः पूर्णिमायामर्धरात्रेदशरथमरणं । ततःपक्षेणभरतागमनमयोध्यायां । तत और्ध्वदैहिकेनपक्षोगतः । एवंवैशाखेगतेज्येष्ठेभरतस्यचित्रकूटंप्रतिप्रस्थानं । अग्रेवर्षाकालेसंनिहितेसतिकार्तिक्यन्तंचित्रकूटेवासो रामस्य । तदनन्तरंतापसौत्सुक्यलक्षणं । नतुभरतनिवृत्त्यनन्तरमेवैतदिति । अतएवपाद्मे भरतस्यायोध्यांप्रतिनिवृत्त्यनन्तरमुक्तं “ राघवश्चित्रकूटाद्रौसानुजोऽरमतस्त्रिया । कदाचिदङ्केवैदेह्यानिद्राणेरघुनन्दने । ऐन्द्रःकाकस्समागम्यजानकींवीक्ष्यकामुकः । विददारनखैस्तीक्ष्णैःपीनोन्नतपयोधरम् । तद्दृष्ट्वाराघवःक्रुद्धःकुशंजग्राहपाणिना । ब्राह्मेणास्त्रेणसंयोज्यचिक्षेपध्वाङ्क्षमारणे । तंदृष्ट्वाघोरसंकाशंज्वलत्कालानलोपमम् । दृष्ट्वाकाकःप्रदुद्रावनिनदन्दारुणस्वनम् । वायसस्त्रिषुलोकेषुबभ्रामभयपीडितः । यत्रयत्रययौकाकःशरणार्थीचवायसः । तत्रतत्रतदस्त्रंतुप्रविवेशभयावहम् । ब्रह्माणमिन्द्रंरुद्रंमांशरणार्थीजगामसः । तंदृष्ट्वावायसंभीतंदेवतानररक्षिम । नशक्तास्स्मवयंत्रातुंराघवास्त्राद्भयङ्करात् । इत्यब्रूममहादेवाअन्यथास्त्रंदहेच्चनः । पुनश्चागाद्धिग्धिकाकोदययाविधिराहतम् । भोभोबलिभुजांश्रेष्ठतमेवशरणंव्रज । सएवरक्षकःश्रीशश्शरणागतवत्सलः । इत्युक्तस्सोथबलिभुग्ब्रह्मणारघुनन्दनम् । उपेत्यसहसाभूमौनिपपातभयातुरः । प्राणसंशयमापन्नंदृष्ट्वासीतातुवायसम् । त्राहित्राहीतिभर्तारमुवाचदयिताविभुम् । तच्छिरःपादयोस्तस्ययुयुजेचाथजानकी । तमुत्थाप्यकरेणाथकृपापीयूषसागरः । ररक्षासौनिजास्त्रायतदेकाक्षिददौतदा । वायसोपिमुहुर्नत्वासीतायैराघवायच । स्वर्लोकंप्रययौहृष्टोराघवेणाभिपालितः । ततोरामोमहातेजावैदेह्यालक्ष्मणेनच । उवासचित्रकूटाद्रौस्तूयमानोमहर्षिभिः । ” इति । शि० किञ्चिद्वक्तव्यविषयकौत्सुक्यविशिष्टान् ॥ २ ॥ ति० कथमलक्षयत्तत्राह । नयनैरित्यादि । निर्दिश्य प्रदर्श्य । शङ्किताः रामःकिंमंस्यतइतिभीताः । नयनादिभिःप्रदर्श्यान्योन्यमुपजल्पन्तः आह्वयन्तः । शनैरुपांशुकथाश्चक्रुः । अयंरामइहसस्त्रीकआस्तेराक्षसाश्चैतद्द्वेषेणेहसंचरन्तोस्मान्बाधन्ते । अतोन्यत्रगन्तव्यमित्येवंरूपाःकथाश्चक्रुः ॥ ३ ॥ ति० शङ्कित अशङ्क

[ पा० ] १ घ.—छ. झ. ञ. ट. यातेतु. २ ङ. छ. झ. ट. स्तदावने. ३ झ. भ्रुकुटीभिश्च. ४ ग. घ. राममुद्दिश्य. ५ ख. शङ्कया. ङ. झ. शङ्कत. ६ ख. तदा. ७ क. ख. ङ. छ. झ. ञ. किंचित्कच्चिन्नावरजस्य. ८ क. लक्ष्मणस्यहिनिर्दिष्टं. छ. लक्ष्मणस्यापिनिर्दिष्टं. ९ ख. नानुकूलं. १० क. च्छुश्रूषमाणापि. ख. ग. च. ञ. च्छुश्रूषमाणावा. ११ क. ग. च. छ. झ. ट. प्रमदाभ्युचितां. १२ घ. ङ. छ. झ. ञ. ट. युक्तां.

अथर्षिर्जरया वृद्धस्तपसा च जरां गतः ॥ वेपमान इवोवाच रामं भूतदयापरम् ॥ ८ ॥
कुतः कल्याणसत्त्वायाः कल्याणाभिरतेस्तथा ॥ चलनं तात वैदेह्यास्तपस्विषु विशेषतः ॥ ९ ॥
त्वन्निमित्तमिदं तावत्तापसान्प्रति वर्तते ॥ रक्षोभ्यस्तेन संविग्नाः कथयन्ति मिथः कथाः ॥ १० ॥
रावणावरजः कश्चित्खरो नामेह राक्षसः ॥ उत्पाट्य तापसान्सर्वाञ्जनस्थाननिकेतनान् ॥ ११ ॥
धृष्टश्च जितकाशी च नृशंसः पुरुषादकः ॥ अवलिप्तश्च पापश्च त्वां च तात न मृष्यते ॥ १२ ॥
त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात वर्तसे ॥ तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ १३ ॥
दर्शयन्ति हि बीभत्सैः क्रूरैर्भीषणकैरपि ॥ नानारूपैर्विरूपैश्च रूपैर्विकृतदर्शनैः ॥ १४ ॥
अप्रशस्तैरशुचिभिः संप्रयोज्य च तापसान् ॥ प्रतिघ्नन्त्यपरान्क्षिप्रमनार्याः पुरतः स्थिताः ॥ १५ ॥
तेषुतेष्वाश्रमस्थानेष्वबुद्धमवलीय च ॥ रमन्ते तापसांस्तत्र नाशयन्तोऽल्पचेतसः ॥ १६ ॥
अपक्षिपन्ति स्रुग्भाण्डानग्नीन्सिञ्चन्ति वारिणा ॥ कलशांश्च प्रमृद्नन्ति हवने समुपस्थिते ॥ १७ ॥
तैर्दुरात्मभिरामृष्टानाश्रमान्प्रजिहासवः ॥ गमनायान्यदेशस्य चोदयन्त्यृषयोऽद्य माम् ॥ १८ ॥
तत्पुरा राम शारीरीमुपहिंसां तपस्विषु ॥ दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इममाश्रमम् ॥ १९ ॥
बहुमूलफलं चित्रमविदूरादितो वनम् ॥ पुराणाश्रममेवाहं श्रयिष्ये सगणः पुनः ॥ २० ॥

---

तपसाचजरांगतः सुदीर्घतपाइत्यर्थः ॥ ८ ॥ कल्याणसत्त्वायाः कल्याणस्वभावायाः । " सत्त्वोस्त्रीजन्तुषुक्लीबोऽध्यवसायेपराक्रमे । आत्मभावेपिशाचादौद्रव्येसत्तास्वभावयोः " इतिवैजयन्ती ॥ ९ ॥ त्वन्निमित्तं त्वत्तोहेतोः । रक्षोभ्यःसमागतं इदं वक्ष्यमाणमुपद्रवजातं । तापसान्प्रति वर्तते । तेनरक्षस्संजातोपद्रवेण । संविग्नास्तापसाः । मिथः रहसि । कथाः रक्षोविषयिणीः तदुपद्रवविषयिणीश्चकथयन्ति ॥१०॥ ताएवाह रावणावरजइत्यादिना । श्लोकद्वयमेकंवाक्यं । उत्पाट्य उत्खाय निष्कास्येतियावत् । जितेनजयेन काशतेप्रकाशतइतिजितकाशी । यद्वा जिताहवः । "जितकाशीजिताहवः" इतिहलायुधः ॥११—१२॥ विप्रकुर्वन्ति अपकुर्वन्ति ॥ १३ ॥ बीभत्सैः जुगुप्सितैः । क्रूरैः भीषणकैः भयंकरैः । नानारूपैः अनेकप्रकारैः । विरूपैः लोकविलक्षणसंस्थानैः । विकृतदर्शनैः विकृतदृष्टिभिः । रूपैः शरीरैः । दर्शयन्ति भयमितिशेषः ॥ १४ ॥ अप्रशस्तैः अशुभैः । अशुचिभिः अशुचिद्रव्यैः संप्रयोज्य ॥ १५ ॥ अबुद्धंअविदितंयथाभवतितथा अवलीय निलीय । रमन्ते विहरन्ति । अल्पचेतसः क्षुद्रबुद्धयः ॥ १६ ॥ हवनेसमुपस्थिते होमकर्मणिप्रवृत्ते ॥ १७ ॥ प्रजिहासवः प्रकर्षेणहातुमिच्छवः ॥ १८ ॥ पुरादर्शयन्ति दर्शयिष्यन्ति । यावत्पुरानिपातयोर्लडितिलट् ॥ १९—२० ॥

---

तेत्यर्थः । **शि०** कुलपतिं संघाधीशंऋषिंवाल्मीकिं ॥ ४ ॥ **वि०** स्खलनं स्वभावविपर्यासः । **स०** अन्तेकथनात्सीतायाबुद्धौपरिवर्तनात्तद्विषयएव । कल्याणसत्वायाःमङ्गलदेव्याः । कल्याणेत्वयिअभिरतिर्यस्याःसातस्याश्चलनमितिवा । विशेषतइत्यनेन साधारणस्थलेपिमङ्गलकार्याच्चलनंनास्तीतिसूचयति ॥ ९ ॥ **स०** काशः मौञ्जीरज्ज्वात्मकः यस्मिन्नाहवेसकाशीत्युच्यते । ततोबहुव्रीहिः " जितकाशीजिताहवः " इतिहलायुधः । **ति०** जितकाशी जितभयोवा ॥ १२ ॥ **स०** असृग्भाण्डानि रक्तपात्राणि अवक्षिपन्ति ॥ १७ ॥ **ति०** प्रजिघांसवः । परित्यक्तुमिच्छवः । मिथोमिलिताः ॥ १८ ॥ **ति०** अश्वस्य नविद्यतेश्वः संचयो

**[ पा० ]** १ छ. परः. २ ख. वृत्तायाः. ३ घ. ङ. छ. झ. ट. रतेस्सदा. ञ. रुचेस्सदा. ४ ख. ञ. स्खलनं. ५ क. च. तातताप्सान्. ६ ङ. कथयन्तिस्मतेमिथः. ७ ङ. छ. झ. ट. निवासिनः. ८ क. ख. ङ. च. झ. ञ. ट. रूपैरसुखदर्शनैः. छ. रूपैरसुरदर्शनैः. ९ क. ङ. झ. ञ. ट. संप्रयुज्यच. छ. संप्रसह्यच. १० ख. च. ञ. क्षिप्रंमायया. ११ क. ख. घ.—ट. स्थितान्. १२ घ. छ.—ट. अवक्षिपन्ति. १३ न्त्यसृग्भाण्डान्यग्नी. १४ ङ. झ. ञ. ट. प्रमर्दन्ति. १५ क. ख. ङ. च. छ. झ. ञ. ट. राविष्टान्. १६ ग. छ. झ. जिघांसवः. १७ च. झ. ञ. न्त्यृषयोमिथः. १८ क. दर्शयन्तिस्म. ख. दर्शयन्तिसु. १९ ख. च. ञ. त्यक्ष्यामस्त्विमं. २० क. ख. च. ञ. दितोपरं. २१ क. ख. ग. च. ञ. कण्वस्याश्रम. ङ. छ. झ. ट. अश्वस्याश्रम. २२ ख. च. ञ. गमिष्ये.

खरस्त्वय्यपि चायुक्तं[1] पुरा तात प्रवर्तते ॥ सहास्माभिरितो गच्छ यदि बुद्धिः प्रवर्तते ॥ २१ ॥
सकलत्रस्य संदेहो नि[2]त्यं यत्तस्य राघव ॥ समर्थस्यापि [3]वसतो वासो दुःखमिहाद्य ते ॥ २२ ॥
इत्युक्तवन्तं [4]रामस्तं राजपुत्रस्तपस्विनम् ॥ न शशाकोत्तरैर्वाक्यैरव[5]रोद्धुं [6]समुत्सुकः ॥ २३ ॥
अभिनन्द्य [7]समापृच्छ्य समाधाय च राघवम् ॥ स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥२४
रामः सं[8]साध्य त्वृषिगणमनुग[9]मनादेशात्तस्मात्कुलपतिमभिवाद्य ऋषिम् ॥
सम्यक्प्रीतैस्तैर[10]नुमत उपदिष्टार्थः पुण्यं वासाय स्वनिलय[11]मुपसंपेदे ॥ २५ ॥
[12]आश्रमं त्वृषिविरहितं प्रभुः क्षणमपि [13]न विजहौ स राघवः ॥
[14]राघवं हि सततमनुगता स्तापसाश्चा[15]र्षचरितधृतगुणाः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे षोडशोत्तरशततमः सर्गः ॥११६॥

## सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

बहुदोषदर्शनेनचित्रकूटवासारोचनात्स्थानान्तरंप्रतिप्रस्थितेनरामेणमध्येमार्गमत्र्याश्रममेत्यतदभिवादनम् ॥ १ ॥ अत्रिणारामंप्रत्यनसूयातपःप्रभाववर्णनपूर्वकंतत्समीपेसीताप्रेषणचोदना ॥ २ ॥ अत्रिभार्ययाऽनसूययासीतांप्रतितत्प्रशंसनपूर्वकंपातिव्रत्यधर्मोपदेशः ॥ ३ ॥

राघवस्त्[16]वथ यातेषु [17]तपस्विषु विचिन्तयन् ॥ न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १ ॥
इह मे भरतो दृष्टो मातरश्च सनागराः ॥ सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ॥ २ ॥

अयुक्तमितिक्रियाविशेषणं । पुराप्रवर्तते प्रवर्तिष्यते ॥ २१ ॥ संदेहः संदेहजनकः । यत्तस्य संनद्धस्य । दुःखं दुःखहेतुः ॥ २२ ॥ उत्तरैर्वाक्यैरवरोद्धुंनशशाक मयिवर्तमानेयुष्माकंकाभीतिः अहमेवपरितो रक्षामीत्युत्तरवाक्यैर्निरोद्धुंनशशाक ॥ २३ ॥ कुलैः ऋषिसंघातैः । " कुलंसंघातवंशयोः " इतिवैजयन्ती ॥ २४ ॥ रामः ऋषिगणंतस्मादेशात् आश्रमप्रदेशात् । अनुगमनात् संसाध्य प्रस्थाप्य । कुलपतिमभिवाद्य तैरुपदिष्टार्थः उपदिष्टप्रयोजनःसन् । वासायपुण्यंस्वनिलयं । उपसंपेदेइतिसंबन्धः ॥ २५ ॥ राघवः ऋषिविरहितमप्याश्रमंक्षणंनविजहौ मुनिशून्यतयातद्वैवल्याज्यमप्याश्रमं मुनिविषयप्रेम्णाक्षणंन त्यक्तवानित्यर्थः । आर्षचरितधृतगुणाः रामस्यार्षचरित्रेणसंचितगुणाः हियस्मात्कारणात् तापसाः राममनुगताःतस्मात् तत्प्रेम्णा क्षणंनजहाविति । वृत्तंतुश्लोकद्वयस्यापिचिन्त्यम् ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

---

अथरामस्यात्र्याश्रमप्रवेशः सप्तदशोत्तरशततमे ॥ १ ॥ बहुकारणान्येवाह इहमइत्यादिना ॥ २ ॥

---

यस्यतस्यमहर्षेः । स० पृषोदरादित्वात्साधु । एतेनरक्षोभयनिवारणक्षमत्वंतस्यदर्शितं ॥ २० ॥ ति० नित्ययुक्तस्यापि सदासावधानस्यापि । रक्षोनिग्रहेसमर्थस्यापि सकलत्रस्य । हेतुगर्भमेतत् ॥ इहाश्रमे । सन्देहः सन्देहवानेववासः । अर्शआद्यच् । अतस्तवाप्यत्रावस्थानमनुचितमितिव्यङ्ग्यं ॥ २२ ॥ शि० राघवं अभिनन्द्य प्रशस्य । समाश्वास्य समाश्वासनंकृत्वा । समाधाय चित्तेनिधाय ॥ २४ ॥ इतिषोडशोत्तरशततमस्सर्गः ॥ ११६ ॥

ति० अनुविचिन्तयन् वक्ष्यमाणलक्षणमुपाधिं ॥ १ ॥ ति० मे मया । सामेस्मृतिः मांनित्यमनुशोचतस्तानन्वेति विषयी-

[ पा० ] १ ख. ङ. च. झ. ञ. ट. राम. २ क.—घ. छ. झ. नित्ययुक्तस्य. ङ. च. ञ. ट. निलंयुक्तस्य. ३ ख.—छ. ञ. ट. ह्रिसतो. झ. सहितो. ४ ख. च. बहुधा. ग. घ. ज. रामस्तु. ५ ख.च.—ट. रवबद्धुं. ६ क.—घ. च.—ट. समुत्सुकं. ७ ट. समाश्वास्य. ८ घ. ङ. च. झ. ञ. ट. संसाध्यऋषिगणं. ९ ख. च. ञ. गमनात्तस्माद्देशात्. १० च. रनुगमनउप. ११ ग. घ. च. ञ. मभिसंपेदे. क. ख. मभिसंप्रपेदे. १२ च. आश्रमंऋषिगणरहितं. झ. आश्रममृषि. १३ क. ग. ङ. छ. झ. ञ. ट. नजहौ. १४ क. राघवंसतत. १५ क. ख. ज. ट. श्चर्षिचरिते. ङ. छ. झ. ञ. श्चार्षचरिते. घ. श्चार्षचरितगृहीतधृत. १६ ख. ग. ङ च, छ. झ. ञ. ट. स्त्वपयातेषु. १७ ङ, झ. ट. सर्वेष्वनुविचिन्तयन्. क. तपस्विष्वनुचिन्तयन्.

स्कन्धावारनिवेशेन तेन तस्य महात्मनः ॥ हयहस्तिकरीषैश्च [1]उपमर्दः कृतो भृशम् ॥ ३ ॥
[2]तस्मादन्यत्र [3]गच्छाम इति संचिन्त्य राघवः ॥ प्रातिष्ठत स वैदेह्या लक्ष्मणेन च [4]संगतः ॥ ४ ॥
सोऽत्रेराश्रममासाद्य [5]तं ववन्दे महायशाः ॥ [6]तं चापि भगवानत्रिः पुत्रवत्प्रत्यपद्यत ॥ ५ ॥
स्वयमातिथ्यमादिश्य सर्व[7]मस्य सुसत्कृतम् ॥ सौमित्रिं च [8]महाभागां सीतां च समसान्त्वयत् ॥६॥
पत्नीं च [9]समनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् ॥ सान्त्वयामास [10]धर्मज्ञः सर्वभूतहिते रतः ॥ ७ ॥
अनसूयां महाभागां तापसीं धर्मचारिणीम् ॥ प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः ॥
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ॥ ८ ॥
दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता ॥ ९ ॥
उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ॥ दशवर्षसहस्राणि यया तप्तं महत्तपः ॥ १० ॥
अनसूया [11]व्रतैः स्नाता प्रत्यूहाश्च [12]निवर्तिताः ॥ देवकार्यनिमित्तं च यया संत्वरमाणया ॥
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥ ११ ॥

---

स्कन्धावारनिवेशेन सेनानिवेशेन।करीषैश्चउपमर्दइत्यत्रवाक्यसंहितायाअनित्यत्वान्नसंधिकार्यं। "पदेषुसंहितानित्यानित्याधातूपसर्गयोः। नित्यासमासेवाक्येतुसाविवक्षामपेक्षते" इतिवचनात् ॥ ३ ॥ प्रातिष्ठत प्रस्थितः ॥ ४—५ ॥ आतिथ्यमादिश्य आतिथ्यं कृत्वा ॥ ६ ॥ सत्कृतां सर्वैः सत्कृताम् ॥ ७ ॥ प्रतिगृह्णीष्वेत्यत्र इतिकरणंद्रष्टव्यं ॥ ८ ॥ दशवर्षाणीत्यारभ्य सेयंमातेवतेनघेत्यन्तमेकंवाक्यं । दशवर्षाण्यनावृष्ट्यालोकेदग्धेसति ययास्वतपोमहिम्ना निरन्तरं मूलफलेसृष्टे जाह्नवीचप्रवर्तिता । ययादशवर्षसहस्राणिमहत्तपस्तप्तं कृतं। ययाव्रतैः कृच्छ्रचान्द्रायणादिभिः। प्रत्यूहाः तपोविघ्नाश्च।निवर्तिताः निरस्ताः। देवकार्यनिमित्तंसंत्वरमाणयायया दशरात्रमेकारात्रिश्चकृता दशरात्रावधिकःकालएकरात्रत्वेन कृतइत्यर्थः। इयंकथापुराणेषुद्रष्टव्या । उग्रेणतपसायुक्ता नियमैश्चाप्यलंकृता सेयमनसूया तेमातेव मातृवत्पूजनीयेत्यर्थः ॥ ९—

---

करोति । एवंचताशद्दतत्स्मरणेनममापिशोकोवर्धतइतिभावः ॥ २ ॥ **ति०** राजधानीतोनिर्गतायास्सेनायानिवासस्थानं स्कन्धावारः । तेन पुरतोदृश्यमानेन । अनेनस्मृत्युद्बोधकमुक्तं । उपमर्दः भूमेरशुचिता । **स०** स्कन्धावाराः शिबिराणि ॥ **शि०** स्कन्धावारः सेनासमूहः तस्यनिवेशेन निवासेनहेतुना ॥ ३ ॥ **ति०** तमपिजगत्कारणमपिरामंलोकव्यवहारानुसारेणपुत्रवदङ्गीचकार आलिङ्गनमूर्धाघ्राणादिभिः ॥ **ती०** ववन्दे । वस्तुतस्तु—ववन्दे अस्तौषीत् । पुत्रवत् पुंसः पुरुषान् भक्तान् त्रायतेइतिपुत्रः । तद्वत् । प्रत्यपद्यत ईश्वरत्वेनप्राप्तवानित्यर्थः ॥ ५ ॥ **ति०** तं देशं । अनुप्राप्तां । वाचा सत्कृतां । आमन्त्र्य संबोध्य । सान्त्वयामास प्रीत्यासीतांदर्शयामास । अनन्तरंवैदेहींप्रतिगृह्णीष्वेत्यब्रवीदित्यर्थः । **स०** सान्त्वयामास कुशलप्रश्नादिनातोषयामास ॥ ७ ॥ **शि०** तापसीं परमात्मविचारनिरतां ॥ ८ ॥ **ति०** फलमूले ऋषीणांजीवनायेतिशेषः । जाह्नवीचप्रवर्तिता । दशवर्षमनावृष्ट्याभूमेर्निर्जलत्वात्तेषांस्नानार्थमन्त्रसिद्धिवैभवेनावाहिता । स्वाश्रमेइतिशेषः ॥ ९ ॥ **ति०** अनसूयाव्रतैः तत्कृतैर्व्रतैः **स०** दशरात्रं चात्संख्याव्ययादेः इत्युक्तेरच् । देवकार्यनिमित्तं । अत्रेयंकथापौराणिकी । अनसूयायाःकाचनसखीपतिव्रताऽभूत् । साचकांचनवेश्यांदृष्ट्वातत्संगंकामयमानंस्वपतिंस्वस्कन्धेसमारोप्यतद्गृहंगन्तुमारेभे । तत्समयेमाण्डव्यऋषिश्चोरबुद्ध्याराजभटैश्शूले समारोपितः । सचमार्गेपतिव्रतायाः पत्यापदास्पृष्टोतीवव्यथितोभूत् । तंचदशाहाभ्यन्तरेसूर्योदयेसतिम्रियस्वेतिशशापमाण्डव्यः । ततस्तद्भार्यासूर्योदयानन्तरंकिलमद्भर्तुर्मरणं सएवमाभूदित्यूचे । ततश्चतत्प्रभावात्सूर्येऽनुदितेयज्ञादिलोपेप्राप्ते देवाब्रह्माणमासाद्य प्रार्थयामासुः । सचावादीत् तत्सखीमनसूयांप्रार्थयत । साभवत्कार्यं करोतीति । ततस्तैः प्रार्थितासत्यनसूया दशरात्रावधिकालमेकरात्रित्वेनकृत्वासूर्योदयानन्तरंतद्भर्तुर्मरणेसतिपुनरुज्जीवयिष्यामइतिवरंददतेत्युक्त्वातैर्वरंगृहीत्वादेवकार्यंकृतवतीति ॥ ११ ॥

**[ पा० ]** १ ग. च. ञ. ह्युपमर्दः. २ ख. अस्मादन्यत्र. ३ च. छ. ट. गच्छामि. ४ क. संवृतः. ५ च. ञ. ववन्देतं. ६ ख. च. छ. ञ. तंचस्सभगवान्. ७ ज. मर्घ्यं. ८ क. ख. ङ. छ. झ. ञ. ट. महाभागं. ९ ङ. छ. झ. ट. तमनुप्राप्तां. १० च. ञ. सर्वज्ञः. ११ ख. व्रतस्नाता. क. ग.—ट. व्रतैस्तात. १२ क.—घ. छ. ज. झ. ट. निर्बर्हिताः.

तामिमां सर्वभूतानां नमस्कार्यां यशस्विनीम् ॥ अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा ॥ १२ ॥
अनसूयेति या लोके कर्मभिः ख्यातिमागता ।[ तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् ] ॥१३॥
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः ॥ सीतामुवाच धर्मज्ञामिदं वचनमुत्तमम् ॥ १४ ॥
राजपुत्रि श्रुतं त्वेतन्मुनेरस्य समीरितम् ॥ श्रेयोर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम् ॥ १५ ॥
सीता त्वेतद्वचः श्रुत्वा राघवस्य हितैषिणः ॥ तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली ॥ १६ ॥
शिथिलां वलितां वृद्धां जरापाण्डुरमूर्धजाम् ॥ सततं वेपमानाङ्गीं प्रवाते कदली यथा ॥ १७ ॥
तां तु सीता महाभागामनसूयां पतिव्रताम् ॥ अभ्यवादयदव्यग्रा स्वंनाम समुदाहरत् ॥ १८ ॥
अभिवाद्य च वैदेही तापसीं तामनिन्दिताम् ॥ बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ॥ १९ ॥
ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणी ॥ सान्त्वयन्त्यब्रवीद्धृष्टा दिष्ट्या धर्ममवेक्षसे ॥२०॥
त्यक्त्वा ज्ञातिजनं सीते मानमृद्धिं च भामिनि ॥ अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि ॥२१॥
नगरस्थो वनस्थो वा पापो वा यदि वा शुभः ॥ यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः २२
दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ॥ स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥ २३ ॥
नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् ॥ सर्वत्र योग्यं वैदेहि तपःकृतमिवाव्ययम् ॥ २४ ॥
न त्वेनमवगच्छन्ति गुणदोषमसत्स्त्रियः ॥ कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः ॥ २५ ॥

---

११ ॥ या कर्मभिरनन्यशक्यैः परानुग्रहार्थतपोविशेषैः । अनसूया असूयारहितेतिलोकेख्यातिमागता । यद्वाकर्मभिः पातिव्रत्यवर्धकैः अन्याभिःकर्तुमशक्यैःपतिरक्षणादिकर्मभिः । अनसूया अस्पर्धनीयमाहात्म्ययुक्तत्वादसूयितुमशक्या इतिलोकेख्यातिमागता तामिमांवैदेही अभिगच्छत्वितिसंबन्धः ॥१२॥१३—१६॥ शिथिलामित्यादिश्लोकद्वयमेकान्वयम् । शिथिलां श्लथसंधिबन्धावयवसंनिवेशां । वलितां संजातवलिकाम् ॥ १७—१८॥ अनामयं आरोग्यं । "अनामयंस्यादारोग्यं" इत्यमरः ॥ १९ ॥ दिष्ट्या भाग्येन । धर्ममवेक्षसे पातिव्रत्यधर्ममवधानेनसमीक्षसे ॥२०॥ ज्ञातिजनं बन्धुजनं । मानमहंकारं । वनेअवरुद्धं चतुर्दशवर्षाणिवनेवस्तव्यमितिपित्रानियुक्तं ॥ २१—२३ ॥ सर्वत्रयोग्यं सर्वावस्थासुरक्षणसमर्थं ॥ २४ ॥ कामवक्तव्यहृदयाः कामविषयवक्तव्यहृदयाः कामरूपार्थाभिलाषिण्यइतियावत् । यद्वा मदनविधेयहृदयाः। भर्तृनाथाः भर्तृणांनाथभूताः भर्तृनियामिकाइत्यर्थः । यद्वा भर्तारंनाथन्तेयाचन्तइतितथा परपुरुषकाङ्क्षिण्य

---

ति० ननुवैदेह्याअल्पवयस्त्वेनव्यवहारानभिज्ञत्वात्कचिद्व्यवहारेस्खलनेऽनर्थस्स्यादतआह–**अक्रोधनांसदेति** ॥ १२ ॥ **रामानु०** श्रेयोर्थमात्मनश्शीघ्रमभिगच्छतपस्विनीमित्यतःपरं सीतात्वेतदित्यादिश्लोकः । **ति०** अस्यमुनेःसमीरितंवचनंयतश्श्रुतं अतआत्मनश्श्रेयोर्थमित्यादि ॥ १५ ॥ **ति०** तां अनसूयेत्यन्वर्थनाम्नीं । अभिगम्यां अक्रोधनत्वात् ॥ **ति०** समुदाहरत् । अभिवादनांगत्वेनेतिशेषः ॥ १८ ॥ **ति०** अनामयमिति तपस्विनांस्वायत्तकुशलतयाऽऽरोग्यप्रश्नएवोचितइतिभावः ॥ १९ ॥ **ति०** धर्मचारिणीं भर्तृसमानधर्मचारिणीं । दिष्ट्या दैवयोगेन ॥ २० ॥ **ति०** मानं राजसुताऽहंकथंवनंगच्छेयमित्येवंरूपं ॥२१॥ **ति०** शुभः अनुकूलः । अशुभः प्रतिकूलः । प्रियः लौकिकालौकिकनिमित्ततोप्रियत्वानास्पदं ॥ २२ ॥ **ति०** अतोविशिष्टं भर्तुर्विशिष्टं । बान्धवं इष्टबन्धुं । सर्वत्रयोग्यं इहामुत्रचेष्टसाधनतयाभजनयोग्यं । तपःकृतं भावेनिष्ठा । तपोनुष्ठानमितियावत् ॥ २४ ॥ **ति०** कामवक्तव्यहृदयाः कामाधीनहृदयाः । "गृह्याधीनौतुवक्तव्यौ" इत्यमरः । भर्तृनाथाः भर्तृणांनाथभूतास्तन्नियन्त्र्यः । यद्वा भर्तृन्भोगार्थंनाथन्तेयाचन्तेताःपरपुरुषकांक्षिण्यः । ताश्चरन्ति स्वेच्छयाइतस्ततोयान्ति । **स०** कामवक्तव्यहृदयाः यथाकामं

[ **पा०** ] १ ङ. च. झ. ञ. ट. तपस्विनीं २ ख. गच्छेत्तु. ३ ख. च. ञ. सतीं. ४ अनसूयेत्यर्धं तांशीघ्रमित्युत्तरार्धसहितं सीतात्वेतदितिश्लोकात्पूर्वं राजपुत्रिश्रुतमितिश्लोकात्परं घ.—छ. झ. ञ. ट. पुस्तकेषुदृश्यते. ५ ङ. छ. झ. ट. मालोक्य. ६ ङ. छ. झ. ट. मब्रवीत्. ७ क. च. ञ. चैतद्वचः. छ. तद्वचनं. ८ ङ. छ. ट. यशस्विनी. क. घ. हितैषिणी. ९ ङ. छ. झ. ट. कदलीमिव. १० ज. ततःसीतामहाभागादृष्ट्वातांधर्मचारिणीम्. ११ ख. घ. च. छ. झ. ट. स्वंनाम. १२ घ. पापीवा. ख. ङ. छ. झ. ञ. ट. शुभोवायदिवाऽशुभः. १३ ख. घ. धनीवायदिवाऽधनः. १४ क.—ज. ञ. ट. नेत्वमव. झ. नत्वेवमनु. १५ ख. काममव्यक्तहृदया.

प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि ॥ अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥ २६ ॥
त्वद्विधास्तु[1] गुणैर्युक्ता दृष्टलोकपरावराः ॥ स्त्रियः स्वर्गे चरिष्यन्ति यथा धर्मकृतस्तथा[2] ॥ २७ ॥
तदेवमेनं[3] त्वमनुव्रता सती पतिव्रतानां समयानुवर्तिनी ॥
भव स्वभर्तुः सहधर्मचारिणी यशश्च धर्मं च ततः समाप्स्यसि ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे सप्तदशोत्तरशततमः सर्गः ॥ ११७

## अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

सीतयाऽनसूयांप्रतिरामगुणगणानुवर्णनपूर्वकंकैमुत्येनतस्मिन्स्वेननिरुपचरितोपचारकरणोक्तिः ॥ १ ॥ तथास्वस्यपूर्वमेव मात्राद्युपदेशेनपातिव्रत्यधर्माभिज्ञत्वकथनपूर्वकंतदुपदेशप्रशंसनम् ॥ २ ॥ अनसूययास्वस्यतपस्समृद्धिमत्त्वकथनेनाभीष्टार्थवरणचोदनेप्यनिच्छन्त्यैसीतायैपरितोषाद्दिव्यमाल्याभरणादिदानम् ॥ ३ ॥ सीतयाऽनसूयांप्रतितच्चोदनयास्वस्वयंवरादिवृत्तान्तप्रतिपादनम् ॥ ४ ॥

सा त्वेवमुक्ता वैदेही त्वनसूयाऽनसूयया[4] ॥ प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥ १ ॥
नैतदाश्चर्य[5]मार्याया[6] यन्मां त्वमनुभाषसे[7] ॥ विदितं तु ममाप्येतद्यथा नार्याः पतिर्गुरुः ॥ २ ॥
यद्यप्येष भवेद्भर्ता ममार्ये[8] वृत्तवर्जितः[9] ॥ अद्वैधमुपचर्तव्य[10]स्तथाप्येष मया भवेत् ॥ ३ ॥
किंपुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः ॥ स्थिरानुरागो धर्मात्मा मातृवत्पितृवत्प्रियः[11] ॥४॥
यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः[12] ॥ तामेव[13] नृपनारीणामन्यासामपि वर्तते ॥ ५ ॥

---

इत्यर्थः ॥ २५—२७ ॥ समयानुवर्तिनी आचारानुवर्तिनी । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । भर्तुः सहधर्मचारिणीभवस्व भव । आर्षमात्मनेपदं । ततः भर्तुः सहधर्मचारित्वेन । यशश्च धर्मंच कालान्तरानुभाव्यसुखसाधनमदृष्टंच समाप्स्यसि । यद्वा भर्तुः सहधर्मचारिणी । एवंभूतात्वं ततः भर्तुस्सहधर्मचारित्वरूपहेतोःयशश्चभवस्वप्राप्नुहीत्यर्थः । धर्मंचसमाप्स्यसि । भूप्राप्तावात्मनेपदीतिगणपाठात् प्राप्त्यर्थस्यभवतेरात्मनेपदं । पातिव्रत्यधर्मेण सर्वैःश्लाघांप्राप्य कालान्तरेतज्जन्यादृष्टद्वारानिरतिशयंश्रेयःसमवाप्स्यसीत्यर्थः । इतिधर्मचारिण्यनसूयासीतामब्रवीदितिसंबन्धः ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

---

अथसीताऽनसूयासंवादोऽष्टादशोत्तरशततमे ।अनसूया असूया रहिता। पातिव्रत्यधर्मोपदेशं गुणत्वेनगृहीतवतीत्यर्थः ॥१—२॥ अद्वैधं द्वैधीभावरहितं । उपचर्तव्यः गुणवत्त्वनिर्गुणत्त्वभेदंविहायसम्यगुपचरणीयइत्यर्थः ॥ ३ ॥ मातृवत्प्रियः प्रियपरत्वात् । पितृवत्प्रियः अत्यंतहितपरत्वेन ॥ ४ ॥ नृपनारीणां

---

वचनशीलाः । गुणदोषं "सर्वोद्वन्द्वोविभाषयैकवद्भवति"इत्येकवद्भावःगुणेनसहितोदोषइत्युत्तरपदलोपोवा ॥२५॥ **ति०** दृष्टोलोकः परोऽवरश्चयाभिस्ताः । **स०** दृष्टाः लोकेपराअवराश्चयाभिस्ताः ॥ २७ ॥ इतिसप्तदशोत्तरशततमस्सर्गः ॥ ११७ ॥

**ति०**अनुभाषसे शिक्षयसि । नार्यागुरुःपतिरितियथाभवत्योपदिष्टंएतद्विदितं एतद्विषयकंज्ञानंममापि ॥ २ ॥ **ती०** एषमेभर्तावृत्तिवर्जितोयद्यपि ॥ **ति०** एषभर्तायद्यप्यनार्यः पूज्यचरित्रहीनः । वृत्तिवर्जितः जीवनरहितः दरिद्रश्चभवेत् । तथापि मया मद्विधया । अत्र भर्तरि । अद्वैधंप्रकारद्वयरहितंयथाभवतितथा वर्तव्यं वर्तितव्यं । प्रीतिप्रकारेणैववर्तितव्यमित्यर्थः ॥ ३ ॥ **ती०**

**[ पा० ]** १ घ. तद्विधास्तु. २ क. ख. ग. ङ. च. छ. झ. ञ. ट. पुण्यकृतः. ३ ङ. छ. झ. ट. तदेवमेतं. ग. तदेतमेवं. ४ ख. च. ञ. ह्यनसूया. ज. अनसूया. ५ क. नतदाश्चर्यं. ६ ख. ग. छ. ज. झ. ट. मार्यायां. ७ ख. ग.घ. ज. मभिभाषसे. ८ ङ. च. छ. झ. ञ. ट. अनार्यो. क. ख. ममार्यो. ९ ख. वित्तवर्जितः. ङ. छ. ज. झ. ट. वृत्तिवर्जितः. १० ङ. छ. झ. ट. अद्वैधमत्रवर्तव्यं. घ. अवश्यमुपचर्तव्यः. ११ ग. घ. च. ज. ञ. मातृवर्तीपितृप्रियः. क. मातृवर्तीपितुःप्रियः. १२ क. ख. ग. महायशाः. १३ घ. तांवृत्तिं.

सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः ॥ मातृवद्वर्तते [1]वीरो मानमुत्सृज्य धर्मवित् ॥ ६ ॥
आगच्छन्त्याश्च विजनं वनमेवं भयावहम् ॥ सम[2]ाहितं मे श्वश्रवा च [3]हृदयेतद्धृतं महत् ॥ ७ ॥
पाणि[4]प्रदानकाले च यत्पुरा त्वग्निसंनिधौ ॥ [5]अनुशिष्टा जनन्याऽस्मि वाक्यं तदपि मे धृतम् ॥८॥
[6]नवीकृतं च तत्सर्वं [7]वाक्यैस्ते धर्मचारिणि ॥ पतिशुश्रूषणान्नार्यास्तपो नान्यद्विधीयते ॥ ९ ॥
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते ॥ तथावृत्तिश्च याता त्वं पतिशुश्रूषया दिवम् ॥ १० ॥
वरिष्ठा सर्वनारीणामेषा च दिवि देवता ॥ रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥ ११ ॥
एवंविधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः ॥ देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥ १२ ॥
ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ॥ शिरस्याघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३ ॥
नियमैर्विविधैराप्तं [8]तपो हि महदस्ति मे ॥ तत्संश्रित्य बलं सीते छन्दये त्वां [9]शुचिस्मिते ॥ १४ ॥
[10]उपपन्नं मनोज्ञं च वचनं तव मैथिलि ॥ प्रीता चास्म्य[11]ुचितं किं ते करवाणि [12]ब्रवीहि मे ॥ १५ ॥
तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दवि[13]स्मया ॥ कृतमित्यब्रवीत्सीता तपोबलसमन्विताम् ॥ १६ ॥
सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराऽभवत् ॥ सफलं च [14]प्रहर्षं ते हन्त सीते करोम्यहम् ॥ १७ ॥
इदं दिव्यं [15]वरं माल्यं वस्त्रमाभरणानि च ॥ अङ्गरागं च वैदेहि [16]महार्हं चानुलेपनम् ॥ १८ ॥

सप्तम्यर्थेषष्ठी ॥५—६ ॥ श्वश्र्वा कौसल्यया । यत्पातिव्रत्यधर्माचरणंसमाहितं उपदिष्टमित्यर्थः ॥७—९॥ तथावृत्तिस्त्वंचदिवंयातेत्युक्तिः पातिव्रत्यतपोमाहात्म्येनस्वर्गस्यहस्तगतत्वात् ॥ १०—११ ॥ भर्तृदृढव्रताः अतिसंकटदशायामपिभर्तृविषयदृढव्रतयुक्ताः ॥ १२ — १३ ॥ छन्दये वरंवृणीष्वेतिप्रार्थये ॥ १४ — १५ ॥ मन्दविस्मया मन्दस्मितेत्यर्थः ॥१६॥ प्रहर्षं ते तुभ्यं । सफलंकरोमि करिष्यामि ॥ १७ ॥ अङ्गरागः कुङ्कुमहरिचन्दनादिः । अनुलेपनं कर्पूरागरुकस्तूरीप्र-

मातृवर्ती मातृशुश्रूषकः । पितृप्रियः पितुःप्रीतिविषयइत्यर्थः । **ति०** मातृवत्पितृवत्प्रियः । मयीतिशेषः । प्रियः प्रीतिमान् । ममेतिवाशेषः । प्रीतिविषयइत्यर्थः । ४ । **ति०** अन्यासामपि नृपनारीणांसुमित्रादीनांविषयेपीत्यर्थः । तथा अन्यासामपिविषये मदतिरिक्तस्त्रीमात्रविषयेपि । तामेववृत्तिंकुरुतइत्यर्थः । नृपनारीणामित्यनेनैवसुमित्रादीनांलाभादित्यन्ये ॥ ५ ॥ **ति०** नृपेण दशरथेन । मानं अहंमहाप्रभुरित्यभिमानंत्यक्त्वेत्यर्थः । अन्यमते उक्तार्थेसत्यत्वप्रत्यायनायैतदुक्तिरितिबोध्यं । **स०** सकृद्दृष्टासु भुक्तासु ॥ ६ ॥ **ति०** यच्च स्वैः आत्मीयैर्बन्धुवर्गैः । पतिशुश्रूषणादिप्रकारैर्बोधितमर्थजातं तच्चमेनविस्मृतंत्वित्यर्थः ॥ ९ ॥ **स०** सावित्री सत्यवान्नामकश्चिद्राजा तस्यपत्नी । सावनेमृतंस्वभर्तारं यमंप्रतोष्यतद्वरादुज्जीवितवतीत्यादिकथाज्ञेया । यातेतिसिद्धवत्कृत्योक्तिः ॥ **ति०** तथावृत्तिः सावित्रीसमानवृत्तिः । **कतक०** तपोर्थमिहवर्तमानापिपतिसेवयामूर्त्यन्तरेणदिवंयातेत्यर्थः ॥१०॥ **शि०** दिवं समस्तसिद्धिप्राप्तिजनितातिप्रमोदंयाता । **ति०** रोहिणीति । पूर्वकृतपतिशुश्रूषावशादेवंपतिसाहित्यंप्राप्तमितिभावः ॥ ११ ॥ **ति०** प्रवराःस्त्रियः अरुन्धत्यादयः ॥ १२ ॥ **ति०** विस्मिता जाताश्चर्या । अहोतपसोमाहात्म्यंयन्ममापिवरदानेसामर्थ्यं । कृतं भवत्याअनुग्रहेणैवसर्वंमेपूर्णंनकिंचित्कर्तव्यमस्तीतिभावः । **शि०** अविस्मितातदैश्वर्यविषयकविस्मयरहिता ॥ १६ ॥ **ति०** तया लोभरहितवाचा । प्रहर्षं लोभराहित्यजंस्वनिष्ठं । ते त्वद्विषयं ॥ **वि०** तेप्रकर्षं त्वन्निष्ठमेवदिव्यवैभवं । त्वत्पूजनेनस्वात्मनिसफलं फलजनकंकरोमीत्यर्थः । हंतेतिहर्षे ॥ १७ ॥ **ति०** उद्वर्तनेनाङ्गानिरञ्जयतीत्यङ्गरागः केसरचन्दनादिजः । अनुलेपनंतुकर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमइत्युक्तप्रकारोदिव्यगन्धद्रव्यकल्पइतितीर्थः । कतकस्तु अङ्गरागं अङ्गरञ्जनकरं अनुलेपनं

**[ पा० ]** १ घ. धीरो. ख. रामो. २ क. ङ. छ.—ट. हितंहिमेश्वश्र्वा. ख. हितंतुमेश्वश्र्वा. ३ ख. ङ. छ. झ. ञ. ट. हृदयेयत्स्थिरंमम. ग. हृदयेऽवस्थितंमहत्. क. च. हृदयेयत्स्थितंमम. ४ ग. ग्रहणकाले. ५ ङ. च. झ. ञ. ट. अनुशिष्टं. ६ ङ. च. छ. झ. ञ. नविस्मृतंतुमेसर्वं. ट. नवीकृतंचमेसर्वं. ७ झ. वाक्यैस्स्वैर्धर्मे. ८ ग. तपोभिर्महत्. ९ क. ख. ग. ङ. च. झ. ट. शुचिव्रते. १० क.—छ. झ. ञ. ट. उपपन्नंच युक्तंच. ११ क. स्म्युच्यतांकिंते. झ. ट. स्म्युच्यतांसीते. १२ ख. च. ञ. ब्रवीहितत्. ङ. झ. ट. प्रियंचकिं. १३ ख. ग. विस्मिता. १४ च. ञ. प्रकर्षं. १५ क. ग. परं. १६ क. ख. ङ. च. छ. झ. ञ. ट. महार्हमनु.

मया दत्तमिदं सीते तव गात्राणि शोभयेत् ॥ [1]अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ १९ ॥
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे ॥ शोभयिष्यसि भर्तारं यथा श्रीर्विष्णुमव्ययम् ॥ २० ॥
सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा ॥ मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥ २१ ॥
प्रतिगृह्य च तत्सीता प्रीतिदानं यशस्विनी ॥ श्लिष्टाञ्जलिपुटा [2]तत्र [3]समुपास्त [4]तपोधनाम् ॥ २२ ॥
तथा सीतामुपासीनामनसूया दृढव्रता ॥ वचनं प्रष्टुमारेभे [5]कांचित्प्रियकथामनु ॥ २३ ॥
स्वयंवरे किल प्राप्ता त्वमनेन [6]यशस्विना ॥ राघवेणेति मे सीते कथा श्रुतिमुपागता ॥ २४ ॥
तां कथां श्रोतुमिच्छामि [7]विस्तरेण च मैथिलि ॥ [8]यथाऽनुभूतं कार्त्स्न्येन [9]तन्मे त्वं वक्तुमर्हसि ॥२५॥
एवमुक्ता तु [10]सां सीता [11]तां ततो धर्मचारिणीम् ॥ श्रूयतामिति [12]चोक्त्वा वै कथयामास तां कथाम् २६
[13]मिथिलाधिपतिर्वीरो जनको नाम धर्मवित् ॥ [14]क्षत्रधर्मेष्वभिरतो न्यायतः शास्ति मेदिनीम् ॥ २७ ॥
तस्य लाङ्गलहस्तस्य [15]कर्षतः क्षेत्रमण्डलम् ॥ अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता ॥ २८ ॥
स मां [16]दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः ॥ पांसुकुण्ठितसर्वाङ्गीं [17]जनको विस्मितोऽभवत् ॥ २९ ॥
अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम् ॥ [18]ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः ॥ ३० ॥
अन्तरिक्षे च वागुक्ता प्रति माऽमानुषी किल ॥ एवमेतन्नरपते धर्मेण तनया तव ॥ ३१ ॥
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः ॥ अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः ॥३२॥

---

मुखपरिमलमिलितं ॥ १८ ॥ अनुरूपं त्वद्गात्रानुरूपं। असंक्लिष्ट अबाधितशोभमित्यर्थः । भर्तारंशोभयिष्यसीत्यन्ते इत्यब्रवीच्चेत्यध्याहारः । सा अनसूया । प्रीततराभवत् शोभयिष्यसीत्यब्रवीच्चेतिसंबन्धः ॥१९—२२ ॥ प्रियकथामनु प्रियांकथामुद्दिश्यसीतांप्रष्टुं-वचनमारेभे वचनंवक्तुमारेभेइत्यर्थः ॥ २३ ॥ श्रुति-मुपागता श्रुतिपथंप्राप्ता ॥ २४—२७ ॥ कर्षतः । "षड्भवेनकृषति" इतिश्रुत्या शोधनंकुर्वतः । क्षेत्रमंडलं यागोपयोगिक्षेत्रं चयनस्थानमित्यर्थः ॥ २८ ॥ मुष्टि-विक्षेपतत्परः । "याजाताओषधयः इतिचतुर्दशभि-रोषधीर्वपति" इत्युक्तप्रकारेण ओषधिमुष्टिविकिरण-तत्परः ॥ २९ ॥ अनपत्येनचतेन स्नेहान्मामङ्कमारो-प्य इयंममतनयेतिचोक्त्वास्नेहोमयिनिपातितः । अङ्कं उत्सङ्गं ॥ ३० ॥ माप्रति मामुद्दिश्य । एवमेतन्नरपते धर्मेणतनयातवेति अन्तरिक्षे अमानुषीवागुक्ता। यद्वा वागुक्ताप्रतिमेत्यत्र अप्रतिमेतिच्छित्वा वाग्विशेष-

---

दिव्यगन्धद्रव्यकल्पमित्यर्थइत्याह । इदमेवचयुक्तं ॥ १८ ॥ **ति०** शोभयेत् शोभयिष्यति । अनुरूपं त्वदेकोचितं । नित्यमेवासंक्लिष्टं उपभोगेप्यशुचित्वमृदितत्वादिदोषरहितंभविष्यति ॥ १९ ॥ **ति०** शोभयिष्यसीत्यनेन त्वत्पूजयाभर्तुरपिपूजाकृतेतिसूचितं ॥ **शि०** किंच श्रीः लक्ष्मीस्त्वं अव्ययं विकारशून्यं विष्णुं स्वप्रकाशद्वारासर्वत्रपूर्णं भर्तारं स्वपतिं यथा यथावत् शोभयिष्यसि ॥ **स०** श्रीः मूलरूपा ॥ २० ॥ **ति०** क्षत्रियात्वात्प्रतिग्रहानधिकारेणप्रीतिदानमित्युक्तं । लक्ष्म्युद्देशेनब्राह्मणादिभ्यो दत्तमक्षयंचेत्साक्षाल्लक्ष्म्यैप्रीत्यादत्तंतथेतिकिंवक्तव्यमितिदेव्यैतद्दानमनसूयायाइदिबोध्यं ॥ २१ ॥ **कतक०** मुष्टिविक्षेपतत्परः निम्नोन्नतसमीकरणायमृत्तिकामुष्टिविक्षेपतत्परः ॥ २९ ॥ **शि०** अनपत्येन अपत्यान्तररहितेन । अंकमारोप्य मामितिशेषः ॥ ३० ॥ **ति०** प्रतिमामानुषी प्रतिमयास्वरूपेणमानुषी मनुष्यवाक्यतुल्यावागन्तरिक्षेउक्ता । तांवाचमाह—**एवमिति** । एतत् ममेयंतनयेत्येतत् । एवं अर्थवदेव । यतोहेनरपतेधर्मेणन्यायेनएषा त्वत्क्षेत्रजातत्वात्तवतनयैव । **शि०** अप्रतिमा उच्चारयितृस्वरूपरहिता । अमानुषी मानुषवाक्सदृशी । वाक्उक्ता प्रादुर्भूता ॥ ३१ ॥ **ति०** मामवाप्य यज्ञभूमेरितिशेषः ।

[ **पा०** ] १ घ. अनुरूपंतुसंश्लिष्टं. २ क.—ङ.—छ.—ट. धीरा. ३ ग. समुपास्ते. ४ च. ञ. तपस्विनीं. ५ क.—ट. कथांकांचिदनुप्रियां. ६ च. ञ. यशस्विनी. ७ घ. विस्तरेणतु. क. विस्तरेणैव. ८ ङ. छ. झ. ट. यथाभूतंच. ९ क. तन्मेवक्तुंत्वमर्हसि. ख. तथामेवक्तुमर्हसि. १० च. ञ. तांसीता. ११ ङ. च. छ. झ. ञ. ट. तापसींधर्म. ख. तांतथाधर्म. १२ ख. चोक्त्वाथ. १३ घ. मिथिलायाःपतिः. १४ ग. ङ. च. झ. ञ. ट. क्षत्रकर्मण्यभिरतो. १५ क. ग. ङ.—ट. कृषतः. १६ ख. नरपतिर्दृष्ट्वा. १७ ख. ग. ङ. छ. झ. ञ. ट. विस्मितोजनकोऽभवत्. १८ क. ममैव.

दत्ता चासीष्टवद्देव्यै ज्येष्ठायै पुण्य[1]कर्मणा ॥ तया संभाविता चास्मि स्निग्धया मातृसौहृदात् ॥ ३३ ॥
[2]पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता ॥ चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः ॥ ३४ ॥
सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् ॥ प्रधर्षणामवाप्नोति शक्रेणापि समो भुवि ॥ ३५ ॥
तां धर्षणामदूरस्थां [3]दृष्ट्वा चात्मनि पार्थिवः ॥ चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ ३६ ॥
अयोनिजां हि मां ज्ञात्वा [4]नाध्यगच्छद्विचिन्तयन् ॥ सदृशं [5]चानुरूपं च महीपालः [6]पतिं मम ॥ ३७
तस्य बुद्धिरियं जाता चिन्तयानस्य संततम् ॥ स्वयंवरं तनूजायाः करिष्यामीति धी[7]मतः ॥ ३८ ॥
महायज्ञे [8]तदा तस्य वरुणेन महात्मना ॥ दत्तं धनुर्वरं प्रीत्या तूणी [9]चाक्षयसायकौ ॥ ३९ ॥
असंचाल्यं मनुष्यैश्च [10]यत्नेनापि च गौरवात् ॥ तन्न शक्ता नमयितुं स्वप्नेष्वपि नराधिपाः ॥ ४० ॥
तद्धनुः प्राप्य मे पित्रा व्याहृतं [11]सत्यवादिना ॥ समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥ ४१ ॥
[12]इदं च धनुरुद्यम्य सज्यं यः कुरुते नरः ॥ तस्य मे दुहिता भार्या भविष्यति न संशयः ॥ ४२ ॥
तच्च दृष्ट्वा धनुःश्रेष्ठं गौरवाद्गिरिसन्निभम् ॥ अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने ॥ ४३ ॥
[13]सुदीर्घस्य तु कालस्य राघवोऽयं महाद्युतिः ॥ विश्वामित्रेण सहितो यज्ञं द्रष्टुं समागतः ॥
लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः ॥ ४४ ॥
विश्वामित्रस्तु धर्मात्मा मम पित्रा सुपूजितः ॥ प्रोवाच पितरं तत्र [14]भ्रातरौ रामलक्ष्मणौ ॥ ४५ ॥
[15]सुतौ दशरथ[16]स्येमौ धनुर्दर्शनकाङ्क्षिणौ ॥ [17]धनुर्दर्शय रामाय राजपुत्राय दैविकम् ॥ ४६ ॥
इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् ॥ [ [18]तद्धनुर्दर्शयामास राजपुत्राय दैविकम् ॥ ४७ ॥ ]
निमेषान्तरमात्रेण तदानम्य [19]सवीर्यवान् ॥ ज्यां समारोप्य झटिति [20]पूरयामास वीर्यवत् ॥ ४८ ॥

णतयावायोज्यं ॥३१—३२॥ इष्टवद्देव्यै इच्छावत्यै देव्यै । पुण्यकर्मणा अनवरतयज्ञादिकर्मयुक्तेनजनकेन । संभाविता । संवर्धितेत्यर्थः ॥ ३३ ॥ पतिसंयोगेसति सुलभं अन्यथा दुर्लभमित्यर्थः । पतिसंयोगंविनास्थातुमशक्ययौवनावस्थावदित्यर्थः ॥ ३४ ॥ प्रधर्षणांतिरस्क्रियां ॥ ३५ ॥ अप्लवः प्लवरहितः ॥ ३६ ॥ सदृशं अभिजनवृत्तादिनातुल्यं । अनुरूपं प्रादुर्भूतयौवनाप्रतिमरूपलावण्यादिनायोग्यं ॥३७—३८॥ वरुणेनदत्तं वरुणेनातिसहकारिणादत्तं ॥३९—४१॥ भविष्यति नसंशयइत्यत्र इतिकरणंद्रष्टव्यम् ॥४२॥ तोलने चालने

मन्नाभोत्तरंतस्यमहतीसमृद्धिर्जातेतिभावः ॥ ३२ ॥ **रामानु०** पुण्यकर्मणेतितृतीयान्तःपाठः । केचिच्चतुर्थ्यन्तंपठित्वादेवीविशेषणंकुर्वन्ति ॥ **ति०** इष्टमितिभावेक्तः । इष्टमिच्छा । तद्वत्यै विषयतासंबन्धेनेत्यक्षरार्थः । यद्वा सन्तानेच्छावत्यैदेव्यैइत्यर्थः ॥ ३३ ॥ **शि०** पतिसंयोगसुलभं पतिसंयोगःसुलभोयस्मिंस्तत् । वित्तनाशात् अर्जितवित्तस्यादर्शनात् । अधनइवदीनोमे पिता ॥ ३४ ॥ **शि०** सदृशात् कुलादिनास्वतुल्याद्वरपित्रादेः । अपकृष्टात् वरमातुलादेश्च ॥ ३५ ॥ **ति०** महायज्ञे दक्षयज्ञे । तस्यमत्पितृपूर्वजस्यदेवरातस्यतदाशत्रुजयसमर्थधनुर्लाभायतपःकरणकाले । दक्षयज्ञेहिशिवेनपीडितादेवाश्शिवंसंप्रार्थ्यधनुर्याचितवन्तः । सचदेवेभ्योदत्वोक्तवानिदंदेवरातायदीयतामिति । ततोदेवैर्वरुणद्वारादेवरातायदत्तं।यद्वा व्रियतेसर्वदेवैरितिव्युत्पत्त्यावरुणश्शिवएव ॥ **शि०** उःशंभुश्चासौअरुणोलोहितश्चवरुणस्तेन । स्वभागाकल्पनजनितकोपहेतुकारुण्यविशिष्टशिवेनेत्यर्थः । दत्तंदेवैर्दापितं ॥ ३९ ॥ **स०** नमयितुं नामयितुं ॥ ४० ॥ **स०** सवीर्यवान् वीर्यवद्भिर्निरीक्षकैःक्षोणीशैस्सहितः सवीर्यवान् । अने-

**[ पा० ]** १ ङ. छ. झ. ट. कर्मणे. २ ख. भर्तृसंयोग. ३ ङ. च. छ. झ. ञ. ट. संदृश्यात्मनि. ४ क. च. छ. झ. ञ. ट. नाध्यगच्छत्स. ख. नाध्यगच्छत्तु. ५ ङ. छ. झ. चाभिरूपं. ६ ख. ग. घ. च. ञ. पिता. ७ ङ. छ. झ. ट. धर्मतः. ८ ज. तथा. ९ ङ. च. छ. झ. ञ. ट. चाक्षय्य. १० छ. बलेनापि. ११ ञ. सूक्ष्मवादिना. १२ ख. इदंहि. १३ ख. च. ञ. सुदीर्घस्याथ. १४ ग. ङ. छ. झ. ट. राघवौ. १५ क. ख. च. ञ. पुत्रौ. १६ छ. स्यैतौ. १७ धनुर्दर्शयेत्यर्धं ङ. छ. झ. पाठेषुनदृश्यते. १८ तद्धनुर्दर्शयामासेत्यर्धं ङ. छ. झ. पाठेषुदृश्यते. १९ ख. सराघवः. क. च. सुवीर्यवान्. ङ. झ. ट. महाबलः. २० क. वीर्यवद्बलवद्धनुः. ख. ङ. छ. झ. ञ. ट. पूरयामासवीर्यवान्.

तेन पूरयता वेगान्मध्ये भग्नं द्विधा धनुः ॥ तस्य शब्दोऽभवद्भीमः पतितस्याशनेरिव ॥ ४९ ॥
ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना ॥ निश्चिता दातुमुद्यम्य जलभाजनमुत्तमम् ॥ ५० ॥
दीयमानां न तु तदा प्रतिजग्राह राघवः ॥ अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः ॥ ५१ ॥
ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् ॥ मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२ ॥
मम चैवानुजा साध्वी ऊर्मिला प्रियदर्शना ॥ भार्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥५३
एवं दत्ताऽस्मि रामाय तदा तस्मिन्स्वयंवरे ॥ अनुरक्ताऽस्मि धर्मेण पतिं वीर्यवतां वरम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे अष्टादशोत्तरशततमः सर्गः ॥११८॥

## एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

अनसूययास्वदत्तदिव्यमाल्याभरणादिविभूषितांसीतांप्रतिसायंकालवर्णनपूर्वकंरामसमीपगमनचोदना ॥ १ ॥ सीतयास्वावलोकनसंहृष्टरामंप्रतिस्वस्यैदिव्यमाल्याभरणादिवितरणपूर्वानसूयावृत्तान्तकथनम् ॥ २ ॥ तापसकुलार्चितेनरामेण सीतयासहरात्रियापनपूर्वकंप्रभातेगमनायमुनिगणंप्रत्यापृच्छनम् ॥ ३ ॥ तथास्वेषांराक्षसकृतोपद्रवनिवेदनेनतन्निधनप्रार्थनपूर्वकंमुनिकुलप्रदर्शितवर्त्मनासीतालक्ष्मणाभ्यांसहदण्डकारण्यप्रवेशः ॥ ४ ॥

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् ॥ पर्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥१॥
व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया ॥ यथा स्वयंवरं वृत्तं तत्सर्वं हि श्रुतं मया ॥
रमेऽहं कथया ते तु दृढं मधुरभाषिणि ॥ २ ॥
रविरस्तंगतः श्रीमानुपोह्य रजनीं शिवाम् ॥ दिवसं प्रतिकीर्णानामाहारार्थं पतत्रिणाम् ॥
संध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः ॥ ३ ॥
एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः ॥ सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ४ ॥

॥४३—५०॥ छन्दं अभिप्रायं । "वशाभिप्राययोश्छन्दः" इतिवैजयन्ती ॥५१—५४॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने अष्टादशोत्तरशततमःसर्गः ११८

अथात्र्याश्रमे रजनीमुषित्वा प्रातर्निर्गमएकोनविंशत्युत्तरशततमे ॥ १—२ ॥ उपोह्य समीपंप्रापय्य । स्वसंचाराद्विमुक्तंप्रदेशंप्रापय्येत्यर्थः ॥ ३ ॥ कलशो-

मनैकान्तिकतास्यप्रमेयस्येतिसूच्यते । विश्वासौईर्यःप्रेर्यश्वसगरुडोस्यास्तीतिसवा ॥ ४८ ॥ **स०** जलभाजनं कमण्डलुं उद्यम्य दातुमुद्यता ॥ ५० ॥ **स०** ममश्वशुरं आमन्त्र्य आकारयित्वा ॥ ५२ ॥ इत्यष्टादशोत्तरशततमस्सर्गः ॥ ११८ ॥

**ति०** स्वयंवरंवृत्तं स्वयंवरोवृत्तः । अर्धर्चादिस्स्वयंवरः ॥ **शि०** यथास्वयंवरं स्वयंवरमनतिक्रम्ययत्त्वयाभाषितं तद्वृत्तं वृत्तान्तं सर्वं मयाश्रुतं । तेकथयादृढंयथास्यात्तथारमेय विहरेय ॥ २ ॥ **शि०** रविस्तुरजनीमुपोह्यसमीपंप्रापय्यअस्तंगतः ॥ दिवसंप्राप्य आहारार्थंपरिकीर्णानांचतुर्दिक्षुगतानां । सन्ध्याकालेप्राप्तेसतिनिद्रार्थंनिलीनानां स्वस्वावासस्थानेषुस्थितानांपतत्रिणां पक्षिणां । **ति०** निलीनानां निलीयमानानां ॥ ३ ॥ **शि०** उपवर्तन्ते समीपेदृश्यन्तइत्यर्थः । **स०** उपवर्तन्ते शालांप्रत्यागच्छन्ति ॥ ४ ॥

**[ पा० ]** १ ङ. छ. झ. तेनापूरयता. क. तेनकृष्टंतदा. २ ख. च. ञ. महद्धनुः. क. तदाधनुः. ३ क. ख. ङ. च. छ. झ. ञ. ट. स्याशनेर्यथा. ४ ख. अहंच. ५ क.—ठ. उद्यता. ६ ग. मात्रापित्रापिरामायदत्ताहं. ७ ङ. च. छ. झ. ञ. ट. शुभदर्शना. ८ ग.—च. ज. ञ. पित्रादत्ता. ९ ङ. छ. झ. ट. तथा. १० क. ख. ग. च. ञ. तत्रस्वयंवरे. ११ क.—घ. च. ज. ञ. अनुरक्ताच. १२ छ. तांतुमहत्कथां. १३ क. ग. स्वयंवरे. १४ ङ. छ. झ. ट. तत्सर्वंच. १५ ङ. छ. झ. ट. रमेय. १६ च. ञ. देवि. १७ ङ. च. झ. ञ. ट. शुभां. १८ ख. ङ. च. छ. झ. ञ. ट. परिकीर्णानां. १९ घ. निद्रार्थे. २० च. ञ. एतेवैह्यभिषेकाय. क. ख. एतेचाप्यभिषेकाय. २१ क. ह्युपवर्तन्ते.

[1]ऋषीणामग्निहोत्रेषु हुतेषु विधिपूर्वकम् ॥ कपोताङ्गारुणो धूमो दृश्यते [2]पवनोद्धतः ॥ ५ ॥
अल्पपर्णा हि तरवो घनीभूताः समन्ततः ॥ [3]विप्रकृष्टेऽपि देशेऽस्मिन्न प्रकाशन्ति वै दिशः ॥ ६ ॥
रजनीचरसत्त्वानि प्रचरन्ति समन्ततः ॥ तपोवनमृगा ह्येते वेदितीर्थेषु शेरते ॥ ७ ॥
[4]संप्रवृद्धा निशा सीते नक्षत्रसमलंकृता ॥ ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ८ ॥
गम्यतामनुजानामि रामस्यानुचरी भव ॥ कथयन्त्या हि मधुरं [5]त्वयाऽहं परितोषिता ॥ ९ ॥
अलंकुरु च तावत्त्वं प्रत्यक्षं [6]मम मैथिलि ॥ प्रीतिं जनय मे वत्से [7]दिव्यालंकारशोभिता ॥ १० ॥
[8]सा तथा समलंकृत्य सीता सुरसुतोपमा ॥ प्रणम्य शिरसा [9]तस्यै रामं त्वभिमुखी ययौ ॥ ११ ॥
[10]तथा तु भूषितां सीतां ददर्श वदतांवरः ॥ राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १२ ॥
[11]न्यवेदयत्ततः सर्वं सीता रामाय मैथिली ॥ प्रीतिदानं तपस्विन्या वसनाभरण[12]स्रजम् ॥ १३ ॥
प्रहृष्टस्त्वभवद्रामो लक्ष्मणश्च महारथः ॥ मैथिल्याः सत्क्रियां दृष्ट्वा [13]मानुषेषु सुदुर्लभाम् ॥ १४ ॥
[14]ततस्तां [15]शर्वरीं प्रीतः पुण्यां [16]शशिनिभाननः ॥ अर्चितस्तापसैः [17]सिद्धैरुवास रघुनन्दनः ॥ १५ ॥
तस्यां रात्र्यां [18]व्यतीतायाम[19]भिषिच्य हुताग्निकान् ॥ आपृच्छेतां नरव्याघ्रौ तापसान्वनगोचरान् ॥१६
तावूचुस्ते वनचरास्तापसा धर्मचारिणः ॥ वनस्य तस्य संचारं राक्षसैः समभिप्लुतम् ॥ १७ ॥
रक्षांसि पुरुषादानि नानारूपाणि राघव ॥ वसन्त्यस्मिन्महारण्ये व्यालाश्च रुधिराशनाः ॥ १८ ॥

---

द्यताः उद्यतकलशाः ॥ ४ ॥ कपोताङ्गारुणः कपोतकन्धरावदव्यक्तरागः । "अव्यक्तरागस्त्वरुणः" इत्यमरः ॥ ५ ॥ विप्रकृष्टेपिदेशेअल्पपर्णाःयेतरवस्तेपि समन्ततः घनीभूताहि अव्यक्तपर्णान्तरालत्वात्सान्द्रीभूताइव । तत्रहेतुमाह नप्रकाशन्तिवैदिशइति ॥ ६ ॥ वेदितीर्थेषु वेद्यवतरणप्रदेशेषु ।"तीर्थमन्त्राद्युपाध्यायशास्त्रेष्वम्भसिपावने । पात्रोपधावतरणेषु" इतिवैजयन्ती ॥ ७—८ ॥ अनुजानामि अनुमतिं करोमि । अनुचरीभवेतिपाठः ॥ ९ ॥ अलंकुरु आत्मानमितिशेषः ॥ १०—१२ ॥ प्रीत्यादीयतइति प्रीतिदानं । कर्मणिल्युट् । वसनाभरणस्रजांसमाहारोवसनाभरणस्रजं । "द्वन्द्वाच्चुदषहान्तात्समाहार" इतिसमासान्तष्टच् । वसनाभरणस्रजामितिपाठे प्रीतिदानमितिभावेल्युट् ॥ १३—१५ ॥ अभिषिच्यहुताग्निकान् स्नात्वाकृतहोमान् ॥ १६ ॥ वनस्यसंचारं कंदमूलफलाद्याहरणार्थसंचारं । राक्षसैः समभिप्लुतं सम्यगुपद्रुतमूचुः ॥१७॥ व्यालाः हिंस्रपशवः । "सर्पहिंस्र-

---

ति० कपोताङ्गवत् पारावतकण्ठवदरुणोमेचकः । " श्यामेरक्तेऽरुणोर्केच " ॥ ५ ॥ ति० विप्रकृष्टेन्द्रियेदेशे इन्द्रियविप्रकृष्टे दूरेदेशेइत्यर्थः । स० अल्पपर्णाः संकुचितपत्राः तरवः अतसीप्रमुखावृक्षाः ॥ ६ ॥ ति० वेदितीर्थेषु अग्निहोत्रवेदिसंबन्धात्पुण्यक्षेत्ररूपाश्रमप्रदेशेषु । तीर्थशब्दः पुण्यक्षेत्रवाची ॥ ७ ॥ ति० चन्द्रोदृश्यतइत्यनेनकार्तिक्युत्तरंप्रतिपदियात्रेतिसूचितं ॥ ८ ॥ स० मद्दत्तालङ्कारपदार्थैर्ममप्रत्यक्षं आत्मानमलङ्कुरु ॥ ति० प्रीतिंजनय अलङ्कृत्यदिव्यस्वस्वरूपानुभावनेनेतिशेषः ॥ १० ॥ शि०ति० पुण्यां अनसूयासमर्पितपुण्यालङ्कारादिविशिष्टांशशिनिभाननांसीतां दृष्ट्वाशर्वरीं रात्रिंउवास ॥ स० पुण्यांशशिनिभाननां तांसीतांप्रति प्रीतस्सन्सर्वैस्तापसैस्सहशर्वरीमुवास ॥ १५ ॥ ति० आपृच्छेतां वनान्तरगमनार्थमितिशेषः ॥ १६ ॥ स० संचरन्त्यत्रेतिसंचारोदेशःतं ॥ १७ ॥ स० व्यालाः वनगजाः । शि० नानारूपाणि अनेकवेषधराणि । व्यालाः सर्पाः हिंस्रपशव-

[ पा० ] १ ङ. च. झ. अग्निहोत्रेचऋषिणाहुतेच. २ ख. घ. च. पवनोच्छ्रितः. ख. पवनोत्थितः. ३ ङ. छ. झ. ठ. विप्रकृष्टेन्द्रियेदेशेन. ग. विप्रकृष्टेहिदेशेस्मिन्. ख. घ. ज. विप्रकृष्टेपिवैदेशे. ४ क.—च. झ. ञ. ट. संप्रवृत्ता. ५ ङ. छ. झ. ञ. ठ. त्वयाऽहमपि. ६ घ. देविमैथिलि. ७ ख.—ट. दिव्यालंकारशोभिनी. क. सर्वालंकारशोभिनी. ८ ख.—ङ. ज. झ. ट. सातदा. च. ञ. तत्रसा. ९ ङ. छ. झ. ट. पादौ. १० च. ञ. तथाविभूषितां. ङ. छ. तथाऽनुभूषितां. ११ ख. च. ज. ञ. न्यवेदयतत्सर्वं. १२ क. ग. च. छ. झ. ञ. ट. स्रजां. १३ ग. मानुषेष्वतिदुर्लभां. १४ ङ. झ. ट. ततस्स. १५. घ. रजनीं. १६ ङ. छ. झ. ञ. ट. शशिनिभाननां. १७ ङ. छ. झ. ट. सर्वैरुवास. १८ क. प्रभातायां. १९ ख. मभिषिक्तान्हुता.

उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणम् ॥ अदन्त्यस्मिन्महारण्ये तान्निवारय राघव ॥ १९ ॥
एष पन्था महर्षीणां फलान्याहरतां वने ॥ अनेन तु वनं दुर्गं गन्तुं राघव ते क्षमम् ॥ २० ॥
इतीव तैः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतस्वस्त्ययनः परंतपः ॥
वनं सभार्यः प्रविवेश राघवः सलक्ष्मणः सूर्यइवाभ्रमण्डलम् ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां अयोध्याकाण्डे एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

इति अयोध्याकाण्डः समाप्तः ॥ २ ॥

---

पशून्व्यालौ" इत्यमरः ॥ १८—२० ॥ तैः प्राञ्जलिभिः तपस्विभिः द्विजैः कृतस्वस्त्ययनः कृतमङ्गलाशीर्वचनः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

इत्थंश्रीमच्छठारेश्चरणसरसिजद्वन्द्वनिर्द्वन्द्वसेवानिर्धूताशेषमोहोनिरुपमधिषणःकौशिकानांकुलेन्दुः ॥ गोविन्दार्योनिवार्यप्रतिकथकगजस्तोमपञ्चास्यरूपष्टीकांपीताम्बराख्यांव्यतनुतविपुलां साधु साकेतकाण्डे ॥ १ ॥ अयोध्याकाण्डं समाप्तम् ॥ २ ॥

---

श्व । उभयार्थलाभस्त्वेकशेषवृत्त्या ॥ १८ ॥ ति० उच्छिष्टं अशुचिं । प्रमत्तं असावधानं ॥ १९ ॥ ति० क्षमं युक्तं ॥ २० ॥ ति० इतीरितः एवमुपदिष्टमार्गः । स० अभ्रमण्डलंआकाशमण्डलं मेघमण्डलंवा ॥ " अभ्रंनभस्स्वर्गवलाहकेषु" इतियादवः ॥ २१ ॥ इत्येकोनविंशत्युत्तरशततमस्सर्गः ॥ ११९ ॥

[ पा० ] १ ङ. च. झ. ट. ब्रह्मचारिणं. ख. वनचारिणं. २ क. गन्तुमर्हसिते. ३ ङ. छ. झ. ट. इतीरितः.

इदं अयोध्याकाण्डम् कुंभघोणस्थने टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३३ सन १९११.

# SRIMAD VĀLMIKI RĀMĀYANA

A CRITICAL EDITION

## With the commentary of Sri Govindaraja

AND

Extracts from many other commentaries and Readings.

---

ĀRAṆYAKĀṆDA 3.



EDITED AND PUBLISHED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilâs Book Depot, Kumbakonam.



*Printed by B. R. Ghanekar for the proprietors,*

*at the "Nirnaya-sagar" Press, 23, Kolbhat Lane,*

**BOMBAY.**

---

1911.

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीयव्याख्यानसमलंकृतम् ।

तथा

तिलकप्रभृत्यनेकापूर्वव्याख्यानोद्धृतैः
गोविन्दराजीयानुक्तापूर्वविषयैश्च संवलितम् ।



## आरण्यकाण्डम् ३.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण
टी. आर्. श्रीनिवासाचार्येण च

अनेकेषां विदुषां साहाय्येन नानादेशीयकोशानुसारेण

संशोध्य

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३३ विरोधकृन्नाम संवत्सरे ।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

## श्रीमद्गोविन्दराजीयव्याख्यासमलंकृतम् ।

## आरण्यकाण्डम् ३

श्रीरामचन्द्राय नमः ॥

### प्रथमः सर्गः ॥ १ ॥

वाल्मीकिनादण्डकारण्यस्थतापसाश्रममण्डलवर्णनम् ॥ १ ॥ तत्रत्यैस्तापसैःस्वाश्रमप्रवेशिनांरामादीनांप्रत्युद्गममङ्गलाशासनपूर्वकमर्घ्यादिनापूजनम् ॥ २ ॥ तथारामंप्रतिसप्रशंसनंस्वरक्षणप्रार्थनपूर्वकंस्तुतिप्रणामादिनापरितोषणम् ॥ ३ ॥

**प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ॥ ददर्श[1] रामो दुर्धर्षस्[2]तापसाश्रममण्डलम् ॥ १ ॥**
**कुशचीरपरिक्षिप्तं ब्राह्मया लक्ष्म्या समावृतम् ॥ यथा प्रदीप्तं दुर्दर्शं[3] गगने सूर्यमण्डलम् ॥ २ ॥**

श्रीरामचन्द्रायनमः ॥ वात्स्यश्रीशठकोपदेशिकवरश्रीपादरेणवञ्जनैर्दृष्ट्या निर्मलया निरीक्ष्य बहुधा वल्मीकजन्माशयम् । श्रीमत्कौशिकवंशसागरमणिर्गोविन्दराजाह्वयो व्याचक्षेऽहमरण्यकाण्डमधुना पश्यन्तु निर्मत्सराः ॥ १ ॥ श्रीरामायणराजस्य दत्त्वा पीताम्बरं महत् । अर्पये परया लक्ष्म्या राजन्तीं रत्नमेखलाम् ॥ २ ॥ एवं पूर्वस्मिन्काण्डे जगज्जन्मादिकारणस्य वेदान्तवेद्यस्य ब्रह्मणो निरस्तसमस्ताविद्यत्वं नित्यानन्दपरिपूर्णत्वं निखिलान्तर्यामित्वं निरतिशयौज्ज्वल्यं निरुपमधर्मप्रवर्तकत्वमित्याद्यनन्तकल्याणगुणजातमुपवर्णितम् । संप्रति सज्जनसंरक्षणरूपं धर्मविशेषमभिधातुमारण्यकाण्डआरभ्यते । यद्वा पूर्वकाण्डे पितृवचनपरिपालनरूपो धर्मः सद्भिरनुष्ठातव्य इति प्राधान्येन दर्शितम् । अथ सज्जनसंरक्षणरूपं धर्मविशेषं प्रतिपादयितुमारण्यकाण्ड आरभ्यते—प्रविश्येत्यादि । तुशब्दः पूर्वारण्यवैलक्षण्यं द्योतयति । महारण्यं इतरदुरवगाहं । दण्डकारण्यं दण्डकस्य राज्ञोरण्यं शुक्रशापादरण्यभूतं जनपदं । प्रविश्य । आत्मवान् धैर्यवान् । दुरवगाहमहागहनप्रवेशेप्यजनितभयलेश इत्यर्थः । तत्र हेतुमाह—दुर्धर्ष इति । हिंस्रादिभिरप्रधृष्य इत्यर्थः । रामः । तापसानां तपस्विनां आश्रममण्डलं आश्रमसमूहं । "तपोवने मठे ब्रह्मचर्यादावाश्रमोस्त्रियां" इति बाणः । ददर्श ॥ १ ॥ अभिगम्यत्वायाश्रममण्डलं वर्णयति—कुशेत्यादिभिस्सार्धसप्तश्लोकैः । कुशैः यज्ञार्थमाहृतैः चीरैः स्नानानन्तरमातपे परिशोषणार्थं क्षिप्तैर्वल्कलैश्च परिक्षिप्तं व्याप्तं । ब्रह्मवेदः तत्संबन्धिनी । वेदाध्ययनतदर्थानुष्ठानजन्येत्यर्थः । तया लक्ष्म्या श्रिया । समावृतं समन्तादावृतं । अत एव गगने प्रदीप्तं गगनमध्यस्थमित्यर्थः । दुर्दर्शं सूर्यमण्डलं यथा तथाऽवस्थितमित्यर्थः । तद्वद्रक्षोभिरनभिभवनीयं । उदयास्तमययोर्हि सूर्यस्य मन्देहाख्यरक्षोभिराक्रमणं नतु मध्याह्ने

श्रीरामचन्द्रायनमः ॥ **ति०** प्रविश्येति । ऋषिदर्शितवर्त्मनेतिशेषः ॥ दण्डकारण्यं प्रायेणमहाराष्ट्रदेशोऽयं ॥ दुर्धर्षमितिपाठे रक्षोयुतत्वादशक्यप्रवेशमित्यर्थः ॥ **शि०** तापसाश्रममण्डलं तापसानांपरमात्मविचारशीलानां आश्रममण्डलं पर्णशालासमूहं । **स०** आत्मवान् प्रशस्तचित्तः ॥ १ ॥ **ती०** ब्राह्मीलक्ष्मीः तपोजनिततेजोविशेषः । तयासमावृतत्वादेव गगनाधिकरणकसूर्यमण्डलव. दुर्दर्शं रक्षोसुरादिभिर्द्रष्टुमप्यशक्यं ॥ **शि०** कुशचीराणि परिक्षिप्तानियास्मिंस्तं । कुशचीराणां परिक्षिप्तं परिक्षेपोयस्मिंस्तमितिवा ॥

[ **पा०** ] १ ङ. छ. झ. ञ. ट. रामोददर्श. २ ग. दुर्धर्षं. ३ च. घ. दुर्धर्षं.

शरणं सर्वभूतानां सुसंमृष्टाजिरं सदा ॥ मृगैर्बहुभिराकीर्णं पक्षिसङ्घैः समावृतम् ॥ ३ ॥
पूजितं [1]च प्रनृत्तं च नित्यमप्सरसां गणैः ॥ विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः ॥ ४ ॥
समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् ॥ आरण्यैश्च महावृक्षैः [2]पुण्यैः स्वादुफलै[3]र्वृतम् ॥ ५ ॥
बलिहोमार्चितं पुण्यं ब्रह्मघो[4]षैर्निनादितम् ॥ [5]पुष्पैर्वन्यैः परिक्षिप्तं पद्मिन्या च सपद्मया ॥ ६ ॥
फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः ॥ सूर्यवैश्वानराभैश्च पुराणैर्मुनिभि[6]र्वृतम् ॥ ७ ॥
पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः ॥ तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनि[7]नादितम् ॥
ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम् ॥ ८ ॥
[8]स दृष्ट्वा राघवः श्रीमांस्तापसाश्रममण्डलम् ॥ अभ्यगच्छन्महातेजा विज्यं कृत्वा महद्धनुः ॥ ९ ॥
दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ॥ [9]अभ्यगच्छंस्तथा प्रीता वैदेहीं च [10]यशस्विनीम् ॥ १० ॥
ते [11]तं सोममिवोद्यन्तं दृष्ट्वा वै धर्म[12]चारिणः ॥ लक्ष्मणं चैव [13]दृष्ट्वा तु वैदेहीं च यशस्विनीम् ॥
मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन्दृढव्रताः ॥ ११ ॥

॥ २ ॥ अत एव शरण्यं शरणार्हं। "तदर्हति" इति यत्प्रत्ययः। सहजवैरप्रयुक्तवध्यघातुकभावाभावेन सर्वप्राणिनां वरणीयमित्यर्थः। रक्षोभ्यो भीतानां वासार्हं वा "शरणं गृहरक्षित्रोः" इत्यमरः। सदा सुसंमृष्टाजिरं सम्यक् संमृष्टाङ्गणं। "अङ्गणं चत्वराजिरे" इत्यमरः। सर्वभूतशरण्यत्वंप्रपञ्चयति मृगैरिति ॥ ३ ॥ प्रनृत्तं प्रकृष्टनृत्तवत्। अर्शआद्यच् बहुव्रीहिर्वा। अतिरमणीयप्रदेशत्वाद्देवतासान्निध्याद्वा नर्तनं। अत एव पूजितं। अग्निशरणैः अग्निहोत्रगृहैः। स्रुङ्मुखानि भाण्डानि यज्ञपात्राणि स्रुग्भाण्डानि "स्फ्यश्चकपालानि च" इत्याद्याम्नातानि तैः। "वणिङ्मूलधने पात्रे भाण्डं" इतिवैजयन्ती। कुशैः परिस्तरणार्थैः। कुशचीरेत्यत्र संगृहीतकुशोक्तिः ॥ ४ ॥ अरण्ये भवैः आरण्यैः ॥ ५ ॥ बलिभिः भूतबलिप्रभृतिभिः होमैर्वैश्वदेवादिहोमैश्च। अर्चितं सत्कृतं। ब्रह्मघोषैर्वेदघोषैः। निनादितं संजातनिनादं। पुष्पैः देवपूजार्थमुपक्षिप्तैः। सपद्मया पद्मसहितया। पद्मिन्या सरस्या ॥६॥ मुनिषु तारतम्यप्रदर्शनार्थं सूर्यवैश्वानराभैरित्युपमानद्वयं। पुराणैः वृद्धैः ॥ ७ ॥ परमार्षिभिः उक्तमुनीनामपि पूजनीयैः। तत् प्रसिद्धं। ब्रह्मभवनप्रख्यं ब्रह्मलोकतुल्यप्रसिद्धिकं ब्रह्मघोषैः कर्मकालिकवेदमन्त्रघोषैः। निनादितं। ब्रह्मविद्भिः परब्रह्मज्ञानिभिः। महाभागैः महाभाग्यैः। "भागो रूपार्थके प्रोक्तो भागधेयैकदेशयोः" इति विश्वः। एतादृशं तापसाश्रममण्डलं ददर्शेति पूर्वेणान्वयः ॥ ८ ॥ विज्यं विसृष्टमौर्वीकं। कृत्वा। विनीतवेषप्रवेश्यत्वादाश्रमाणामाश्रममृगपक्ष्यादिभयनिवृत्त्यर्थं च विज्यकरणं। अभ्यगच्छत् अभिमुखीभूयगतः ॥ ९ ॥ दिव्यं लोकविलक्षणं ज्ञानं तेन उपपन्ना युक्ताः। अतीतानागतज्ञानवन्त इत्यर्थः। रामोयं रावणवधार्थमवतीर्णो विष्णुः सीता लक्ष्मीः लक्ष्मणश्च तदंश इतिविज्ञाततदवतारहस्या इतियावत् ॥ १० ॥ ते तमित्यादिसार्धश्लोक एका-

**स०** ब्राह्मयालक्ष्म्या ब्राह्मणसंबन्धिन्याशोभया वेदसंबन्धिन्यावा ॥ २ ॥ **स०** फलमूलैः उत्कृत्तकन्दैः। त्रिफलाविशरणेकर्मणिघञ्। फलानिमूलानिचतैरितिवा ॥ ५ ॥ **स०** पद्मिन्या सरस्यापरिक्षिप्तं सरामः पद्मया रमारूपयासीतयासह ददर्शेत्यनेनान्वयः ॥ ६ ॥ **ति०** ब्रह्मविद्भिः सर्वत्रब्रह्मानन्यत्वज्ञानवद्भिः। ब्राह्मणैः उक्तलक्षणैरन्वर्थब्राह्मणैः। तादृशैर्युक्तत्वादेवब्रह्मभवनप्रख्यत्वमाश्रमस्य ॥ ८ ॥ **स०** तापसानामाश्रमे श्रमाभावविषये मण्डलीकृतंयत्तद्धनुः विज्यंकृत्वाऽभ्यगच्छदित्यन्वयः ॥ ९ ॥ **स०** पूर्वमेतन्निमित्तकरक्षोविक्षोभभिया त्यक्तचित्रकूटाः पुनाराममागतमवलोक्य न जहर्षिरेमहर्षयः किमित्यतोनेत्याह—**महर्षयइति**। नायंरूढोमहर्षिशब्दः किंतुयौगिकइत्याह—**दिव्यज्ञानोपपन्नाइति**। एतेन चित्रकूटेरामसहवासाननुमतिरत्रतदनुमतिश्च खरादिनिराकरणाहेतुस्थानत्वतत्स्थानत्वाभ्यामितिसूचयति ॥ १० ॥ **तनि०** प्रत्यगृह्णन् आत्मीयताकरणंप्रतिग्रहः।

**[पा०]** १ क. ग. ङ.—ट. चोपनृत्तं. २ झ. पुण्यस्वादुफलैः. ३ घ. युतं. ४ च. छ. ज. घोषानुनादितं. क. घोषविनादितं. ५ ग. ङ. झ. ञ. ट. पुष्पैश्चान्यैः. छ. पुष्पैरन्यैः. ६ झ. ञ. ट. युतं. ७ च. छ. ज. विनादितं. ८ क. ख. ग. ङ.—ज. ञ. तंदृष्ट्वा. झ. तद्दृष्ट्वा. ९ ङ. च. झ. ञ. ट. अभिजग्मुस्तदाप्रीताः. घ. अभ्यगच्छन्ततेप्रीताः. ग. अभ्यागच्छन्तसौमित्रिं. क. अभ्यागच्छंस्तदाप्रीत्या. १० घ. तपस्विनीं. ११ ङ झ. ञ. ट. तेतु. १२ क. ग. ङ.—ट. धर्मचारिणं. १३ क. दृष्ट्वावै.

रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् ॥ ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥ १२ ॥
वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव ॥ आश्चर्यभूतान्ददृशुः सर्वे ते वनचारिणः ॥ १३ ॥
अत्रैनं हि महाभागाः सर्वभूतहिते रतम् ॥ अतिथिं पर्णशालायां राघवं संन्यवेशयन् ॥ १४ ॥
ततो रामस्य सत्कृत्य विधिना पावकोपमाः ॥ आजहुस्ते महाभागास्सलिलं धर्मचारिणः ॥
[ मङ्गलानि प्रयुञ्जाना मुदा परमया युताः ] ॥ १५ ॥

न्वयः । ते त्रिकालज्ञाः । तं राक्षसनिरासायावतीर्णं रामं । उद्यन्तं सोममिव स्थितं अन्धकारनिवर्तनप्रवृत्तं चन्द्रमिव स्थितं । यद्वा उद्यन्तं सोममिव प्रतिपच्चन्द्रमिवार्चनीयं । यद्वा वनराज्यन्तःप्रादुर्भवत्तया मेघावृतमिन्दुमिव स्थितं । धर्मचारिणो दृष्ट्वा स्वाचर्यमाणधर्माराध्यं साक्षात्कृत्य । यद्वा इतः पूर्वं धर्मवीर्येण पश्यन्ति संप्रति चक्षुषा साक्षात्कुर्वन्तीत्यर्थः । तथा लक्ष्मणं च वैदेहीं च दृष्ट्वा मङ्गलानि प्रयुञ्जानाः स्वापेक्षितरक्षाभ्यर्थनात्प्रागेव मङ्गलानि प्रयुञ्जानाः । रामस्य सौन्दर्यसौकुमार्यादिकंदृष्ट्वा रक्षोभूयिष्ठेच वने किं भविष्यतीति व्याकुलहृदयतया तस्मै विरोधिनिरसनवचनानि प्रयुञ्जानाः । दृढव्रताः अशिथिलतद्रक्ष्यत्वनियमाःसन्तः । प्रत्यगृह्णन् प्रतिगृहीतवन्तः । प्रत्युत्थानफलप्रदानाद्युपचारमकुर्वन्नित्यर्थः ॥ ११ ॥ मङ्गलाशासननिमित्तं सौन्दर्यसौकुमार्यादिकमाह—रूपेति । रूपस्य शरीरस्य संहननं "समः समविभक्ताङ्गः" इत्युक्तावयवसंस्थानविशेषं । लक्ष्मीं समुदायशोभां । सौकुमार्यं पुष्पहासतुल्यकोमलतां । सुवेषतां शोभनलावण्यवत्तां । लावण्यस्वरूपमुक्तम् "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभातियदङ्गेषु लावण्यंतदिहोच्यते" इति ॥ विस्मितानामाकारा इवाकारा येषां ते विस्मिताकाराः । विस्मयावेदकस्वमुखप्रसादफुल्लनेत्रत्वादियुक्ता इत्यर्थः । वनवासिनः विकारहेतौ सत्यप्यविकृतचित्ता इत्यर्थः । वनवासिनोपि विस्मिताकाराःसन्तः रामस्य रूपसंहननादिकं ददृशुः । अभेदेन प्रत्ययद्योतनार्थं चकाराप्रयोगः । यद्वा अभूषणेपि भूषितवद्भासमानत्वं रूपं । तथोक्तं "अङ्गान्यभूषितान्येव वलयाद्यैर्विभूषणैः । येनभूषितवद्भाति तद्रूपमितिकथ्यते" इतिसंहननं सौन्दर्यं तदप्युक्तं "अङ्गप्रत्यङ्गकानांयः सन्निवेशो यथोचितः । सुश्लिष्टसन्धिबन्धः स्यात्तत्सौन्दर्यमिहोच्यते" इति ॥ लक्ष्मीं लावण्यं तच्चोक्तं पूर्वमेव । सौकुमार्यमप्युक्तमेव । सुवेषतां उचितशृङ्गारसंपन्नत्वं ॥ १२ ॥ एतं न्यायं सीतालक्ष्मणयोरप्यतिदेष्टुमाह—वैदेहीमिति । सर्वे वनचारिणः । आश्चर्यभूतान् अदृष्टपूर्वतया आश्चर्यावहान् वैदेहीं लक्ष्मणं रामं च दिव्यरूपदर्शनजनितानन्दभङ्गभीरुतया विस्मयविस्फारितेक्षणतया च सर्वथा निर्निमेषैरिव स्थितैर्नेत्रैरुपलक्षिताः सन्तः ददृशुः । अनेन पूर्वश्लोके विस्मिताकारा इत्येतद्विवृतम ॥ १३ ॥ अत्र आश्रममण्डले । महाभागाः महाभाग्या ऋषयः । सर्वभूतहिते रतं । अतिथिं न्यायतः पूजार्हं । एनं राघवं । पर्णशालायां स्वस्वपर्णशालायां संन्यवेशयन् स्थापयामासुः ॥ १४ ॥ रामस्य सत्कृत्येति षष्ठ्यार्षी । "नलोकाव्ययनिष्ठा" इत्यादिना निषेधात् । सत्कृत्य सत्कारंकृत्वा कुशलप्रश्नादिकं कृत्वेत्यर्थः । पावकोपमा इत्यनेन रामस्य पवित्राणां पवित्रत्वमुक्तं धर्मचारिण इत्यनेन सत्कारस्य धर्माचरणफलत्वमुक्तं । महाभागा इति सुकृतपरिपाक उच्यते । सलिलं

" निसृष्टात्मासुहृत्सुच " इतिवक्ष्यति । **स०** उद्यन्तंसोमंचन्द्रमिव । एतेन स्वराजदर्शनेनेव महर्षीणांहर्षोद्योत्यते । " सोमोवैब्राह्मणानांराजा " इतिश्रुतेः । यद्वा सोमं उमयासहितं रुद्रमिवोद्यन्तंलक्ष्मणमित्युत्तरत्रापिसंबध्यते । उभयोरशेषरुद्रयोस्साम्यादितिभावः ॥ **ती०** तंराममेव स्वेष्टदेवतात्वेन प्रत्यगृह्णन् स्वीचक्रुरित्यर्थः ॥ ११ ॥ **स०** सुवेषतां सुशोभनोवेषः कृत्रिमतापसाकारता यस्य तस्यभावस्सुवेषता तां । वनवासिनइतिषष्ठ्यन्तं रामविशेषणं । प्रथमाबहुवचनान्तमृषिविशेषणं ॥ १२ ॥ **तनि०** नेत्रैरनिमिषैरिव जगन्मोहनदिव्यमङ्गलविग्रहदर्शनानन्दविच्छेदभयेन निमेषरहितैर्नेत्रैः । इवशब्दोवाक्यालङ्कारे । अनिमिषत्वे हेतुमाह—**आश्चर्यभूतानिति** । **ती०** वनचारिणः पशुपक्षिमृगादयः । अयंभावः पद्मभवप्रमुखानामप्यगोचरोभगवान्सीता-

[ **पा०**]१ ग. च. छ. ज. आश्चर्यभूताः. २ ग. सर्वेंच. ३ क. ङ.—झ. ञ. वनवासिनः. ४ ख. च. ज. अत्रैवं. छ. तत्रैनं. ५ ट. सर्वभूत. ६ क.—ज. रताः. ७ क. च. छ. ज. ञ. रामंसुसत्कृत्य. ८ ख. प्रजहुः. ९ क. ट. ब्रह्मचारिणः. १० इदमर्धं क. ङ.—ट. पाठेषुदृश्यते.

**मूलं पुष्पं फलं वन्यमाश्रमं च महात्मनः ॥ निवेदयित्वा धर्मज्ञास्ततः प्राञ्जलयोऽब्रुवन् ॥ १६ ॥**
**धर्मपालो जनस्यास्य शरण्यस्त्वं महायशः ॥ पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ॥ १७ ॥**
**इन्द्रस्येह चतुर्भागः प्रजा रक्षति राघव ॥ राजा तस्माद्वरान्भोगान्भुङ्क्ते लोकनमस्कृतः ॥ १८ ॥**
**ते वयं भवता रक्ष्या भवद्विषयवासिनः ॥ नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः ॥ १९ ॥**
**न्यस्तदण्डा वयं राजञ्जितक्रोधा जितेन्द्रियाः ॥ रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः ॥ २० ॥**

अर्घ्याद्युचितं आजह्रुः ॥ १५ ॥ धर्मज्ञाः शेषिणि शेषवृत्तिरूपधर्मज्ञाः । प्राञ्जलयः प्रकृष्टाञ्जलयः । मूर्ध्नि कृताञ्जलय इत्यर्थः । महात्मनः शेषिणो रामस्य । वन्यंमूलादिकं आश्रमं च । निवेदयित्वा इमानि भवदीयानि यथेष्टं विनियुङ्क्ष्वेति निवेद्य । ततोऽब्रुवन् ॥ १६ ॥ धर्मपालः वर्णाश्रमधर्मपालकः । अस्य आर्तस्य मुनिजनस्य । शरण्यः शरणार्हः । पूजनीयश्च देवताबुद्ध्या अर्चनार्हः । मान्यः राजबुद्ध्या बहुमानार्हः । मान्यत्वेहेतुः—राजा दण्डधर इति । दण्डस्य निग्रहस्य धरः कर्ता । पूजनीयत्वे हेतुः—गुरुरिति ॥१७॥पूज्यत्वे हेत्वन्तरमाह—इन्द्रस्येहेति । इह भूस्वर्गे। इन्द्रस्य चतुर्भागः चतुर्थांशः । राजा प्रजा रक्षति । तस्माद्धेतोः । वरान् श्रेष्ठान् भोगान् भुङ्क्ते अनुभवति । इन्द्रस्येति लोकपालान्तराणामुपलक्षणं । "अष्टाभिर्लोकपालानां मात्राभिः कल्पितो नृपः" इति वचनात् । वस्तुतस्तु इन्द्रशब्दोयं परमात्मपरः । इदि परमैश्वर्ये इतिधातोस्तत्रैव मुख्यवृत्तित्वात् "इन्द्रो मायाभिः पुरुरूपईयते" इति श्रौतप्रयोगाच्च । इन्द्रस्य परमात्मनः । चतुर्भागःचतुर्थांशः । तदवतारभूते व्यक्तिचतुष्टये एकव्यक्तिभूतो भवान्भोगान्भुङ्क्ष इत्यर्थः। पूर्वापरश्लोकानुगुण्याच्चायमेवार्थः । नह्यन्यस्मै ऋषयः प्राञ्जलयो भवन्ति नचाश्रमं निवेदयन्ति नापिगर्भभूतत्वं वदन्ति ॥ १८ ॥ भवता रक्ष्यत्वे त्वद्देशवासित्वमेव निष्प्रमादोहेतुः नोपासनादिकमित्याहुः—ते वयमिति । तेवयं आर्ता वयं । भवता रक्ष्याः । आर्तरक्षणदीक्षितेन त्वया रक्षितुमर्हाः । किमुपासनबलेनैवमुच्यते नेत्याहुः—भवद्विषयवासिन इति । भवद्देशवासित्वमेव भवद्रक्ष्यत्वेहेतुः नान्यः । तत्र प्रमादादिसंभवात् देशवासित्वे तदभावादिति भावः । भवतु तथैव रक्षिष्यामः यदारक्षणप्रदेशे स्थास्याम इत्यत्राहुः—नगरस्थ इति । नगरस्थः सिंहासनस्थो वा । वनस्थः तद्रहितो वा । त्वं स्वतःसिद्धसर्वशक्तिकः निरुपाधिकसर्वशेषी च त्वं। नःअस्माकं राजारक्षकः।तत्रहेतुः—जनेश्वर इति । निरुपाधिकसर्वशेषीत्यर्थः॥१९॥ ननु भवन्त एव तपःप्रभावेन स्वरक्षणक्षमा इत्यत्राहुः—न्यस्तेति । न्यस्तः त्यक्तो दण्डो यैस्ते न्यस्तदण्डाः । शापतो निग्र-

लक्ष्मणोपेतः श्रीरामः पङ्गूपरिगङ्गाप्रवाहवदस्माकमपिपुरतः प्रादुरासीदिति मृगादयोप्याश्चर्ययुता ददृशुरित्यर्थः ॥ १३ ॥ **तनि०** आत्मीयभरसमर्पणमत्रोच्यते ॥ **स०** निवेदयित्वा सर्वंतावकमित्युक्त्वा । प्राञ्जलयः बद्धाञ्जलयः । क्षत्रियंप्रत्यपि विदितस्वरूपाणामृषीणामञ्जलिबन्धउचित इतिनानौचिती ॥ १६ ॥ **शि०** धर्मपालः परमधर्मरक्षकः अतएव अस्य एतल्लोकस्थस्यजनस्य इन्द्रस्य तदुपलक्षितोर्ध्वलोकस्थस्यच ब्रह्मादित्रयस्यवा शरण्यः शरणेहितः अतएव महायशाः समातिशयरहितयशोविशिष्टः ॥१७॥ **शि०** चतुर्भागः चतुर्णां अर्थधर्मकाममोक्षाणांभागः आश्रितकर्तृकसेवा यस्मात्सः ॥ १८ ॥ **ति०** भवद्विषयवासिनइति । विषयोदेशः । सार्वभौमत्वाद्दण्डकारण्यमपि तद्देशएवेतिभावः । विष्ण्ववतारत्वात्सर्वोदेशस्तवैवेतिगूढोऽभिप्रायः । **स०** यद्वा भवद्विषये वासिनः त्वद्रूपविषयध्यानयुक्ताः ॥ **तनि०** ते पूर्वोक्तप्रकारेणात्मात्मीयभरसमर्पकाः । वयं उपायशून्यत्वापायबहुलत्वादिमन्तः । भवता निरुपाधिकसर्वलोकशरण्येन रक्ष्याः । अतिप्रसङ्गपरिहारार्थमाह—**भवद्विषयवासिनइति** । भवद्विषयवासित्वात् साकेतसंभवचराचरजन्तुन्यायेन प्रपत्तिनिरपेक्षमेव रक्षणमित्येकःपक्षः । पूर्वोत्तरश्लोकपर्यालोचनया प्रपत्तिद्वारकमित्यन्यः पक्षः । नच पूर्वकृतात्मात्मीयरक्षाभरसमर्पणेनैव प्रयोजनेसिद्धे विषयवासित्वकथनं व्यर्थमितिशङ्क्यं । रक्षकेपश्यति तत्संनिधाने रक्ष्यविनाशस्यदोषभूयस्त्वकथनार्थत्वात् विषयवासित्वस्यनिरपेक्षहेतुत्वनिर्बन्धेपि मोक्षव्यतिरिक्तरक्षणोपायस्याविरोधात् । नह्यत्र महर्षयो मोक्षापेक्षयोपायानुष्ठानंचक्रुः किंतु दुष्टराक्षसनिरसनापेक्षया । नगरस्थोवनस्थोवेति इतरे मूर्धाभिषिक्ताः बुद्धि-

**[ पा० ]** १ क. पुष्पंमूलं. घ. पुष्पमूलफलंरम्यं. ङ. झ. ट. पुष्पमूलफलंसर्वं. २ घ. महात्मने. ३ ङ. च. झ. ट. तेतुप्राञ्जलयः. ४ ङ. झ. ट. शरण्यश्च. ख. ग. शरणंच. ५ क. घ.—ट. इन्द्रस्यैव. ६ ङ. झ. ट. न्भोगान्रम्यान्भुङ्क्तेनमस्कृतः. क. ख. ग. छ. ज. भोगानग्र्यान्भुङ्क्तेनमस्कृतः. ७ ङ. झ. ट. रक्षणीयाः.

एवमुक्त्वा फलैर्मूलैः पुष्पैर्वन्यैश्च राघवम् ॥ अन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ॥ २१ ॥
तथान्ये तापसाः सिद्धा रामं वैश्वानरोपमाः ॥ न्यायवृत्ता यथान्यायं तर्पयामासुरीश्वरम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ॥ २ ॥

मुनिकृतातिथ्यस्वीकारपूर्वकंसीतालक्ष्मणाभ्यांसहवनमध्यंप्रविष्टवतारामेणतत्रविराधाख्यघोरराक्षसदर्शनम् ॥ १ ॥ विराधेनसीतापहरणपूर्वकंराघवौप्रतिसगर्हणंतद्वधप्रतिज्ञानम् ॥ २ ॥ सीतायास्तादृशावस्थादर्शनेनकैकेय्युपालंभगर्भवचनोक्तिपूर्वकंशोचन्तंरामंप्रतिलक्ष्मणेनससान्त्वनंविराधवधप्रतिज्ञानम् ॥ ३ ॥

कृतातिथ्योथ रामस्तु सूर्यस्योदयनं प्रति ॥ आमन्त्र्य स मुनीन्सर्वान्वनमेवान्वगाहत ॥ १ ॥

हङ्करणरहिताइत्यर्थः । तत्रहेतुः—जितक्रोधा इति । तपोनाशभीत्या त्यक्तक्रोधा इत्यर्थः । तत्रापि हेतुः— जितेन्द्रिया इति । इन्द्रियजयेन कामाद्यभिष्वङ्गाभावात्तन्मूलक्रोधरहिता इत्यर्थः । वस्तुतस्तु स्वसामर्थ्ये सत्यपि स्वरूपविरोधान्नास्माभिरस्मद्रक्षणमुचितमित्याहुः । त्वया रक्षितव्या इति । अनन्यार्हशरणा इत्यर्थः । गर्भभूताः प्रजातुल्याः । अनेनानन्यार्हशेषत्वमुक्तं । शश्वदिति काकाक्षिन्यायेनोभयत्राप्यन्वेति । तेनानन्यार्हशेषत्वानन्यशरणत्वयोस्स्वाभाविकत्वमुक्तं तथापि साधनं विना रक्षणेऽतिप्रसङ्गस्स्यादित्यत्राहुः । तपोधना इति । तपोत्र न्यासनिक्षेपापरपर्यायः "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इति श्रुतेः प्रपत्त्येकधनावयमित्यर्थः । अस्मत्कृतां प्रपत्तिं व्याजीकृत्यास्मान्रक्षेत्यर्थः । रक्षणमत्र मोक्षप्रापणमेव । खरादिभ्यस्त्राणस्य शरभङ्गाश्रमवासिभिर्वक्ष्यमाणत्वात् । इमे तु मुनयो मोक्षैकपराः ॥ २० ॥ अतस्तेषां प्रपन्नानां यथोचितकैङ्कर्यप्रवृत्तिं दर्शयति—एवमित्यादि । ऋषयः एवमुक्त्वा सलक्ष्मणंराघवं । वन्यैः पुष्पैः फलादिभिश्चापूजयन् । राघवमित्यनेन सीतापूजनमप्यर्थसिद्धं । मिथुनशेषित्वस्यैव स्वरूपत्वात् । प्रभाप्रभाववन्न्यायेन तयोरपृथग्भावात् । अन्यैः संकल्पसिद्धैः । विविधाहारैः मृष्टान्नादिभिः ॥ २१ ॥ सिद्धाःसिद्धसाधननिष्ठाः । न्यायवृत्ताः न्ययानुगुणव्यापाराः । स्वरूपानुरूपकैङ्कर्यवृत्तयइत्यर्थः । वैश्वानरोपमाः अस्पृष्टविरोधिनः स्वरूपविरुद्धनिषिद्धकाम्यकर्मान्तरत्यागिन इत्यर्थः । अन्ये पूर्वेभ्यो विलक्षणाः । तापसाः कायिककैङ्कर्याशक्ता इत्यर्थः । ईश्वरं परमशेषिणं रामं । यथान्यायं यथोचितं । स्तुतिप्रणामादिभिस्तर्पयामासुरित्यर्थः ॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

एवं प्रथमसर्गेण सिद्धसाधननिष्ठानां मुमुक्षूणां मुनीनां तदीयपर्यन्तं विशिष्टविषयकैङ्कर्यं प्रतिपाद्य खरवधार्थिमुनिजनशरणागतिंवक्ष्यञ्शरण्यत्वोपयोगिसामर्थ्यं विराधवधकथनमुखेन बोधयितुमुपक्रमते । कृतातिथ्य इत्यादिना । अतएव संक्षेपे विराधं राक्षसं हत्वा शरभङ्गं ददर्श हेत्यत्र विराधवधोपहारमुखेन शरभङ्गं दृष्टवानिति व्याख्यातं ।तुशब्देन अत्र्यादिकृतातिथ्याद्वैलक्षण्यमुच्यते । अनन्यप्रयोजनदत्तं हि भगवतःपरमभोग्यं पत्रं पुष्पमित्यादि । अथशब्दः कृत्स्नवाची । कात्स्न्र्येन कृतातिथ्य इत्यर्थः। भक्त्यैर्यत्किञ्चिद्दत्त-

बलेन स्थानबलेन चतुरङ्गबलेनच स्वराज्यमात्ररक्षणेसमर्थाभवन्ति । सकललोकरक्षणधुरंधरस्यासहायशूरस्यतव नगरवासेकिंबलमुपचीयते वनवासेकिमपचीयते स्वाभाविकनित्यनिरतिशयशक्तिसंपन्नस्यावसादकंसत्त्वंकिमपिनास्तीत्यर्थः । सोपाधिकशेषिणो देशविशेषादिसंबन्धापेक्षा । निरुपाधिकशेषिणस्तव यत्रकुत्रचिदवस्थानेप्यस्मद्रक्षणमावश्यकमितिराजशब्दार्थः ॥ १९ ॥ स० सलक्ष्मणं लक्ष्मणेन श्रीवत्सचिह्नेन वैदेह्या सहितमितियावत् । एतेन पूर्वंरामलक्ष्मणाभ्यांसहदृष्टायास्सीतायाः कथमनर्च्यत्वमितिशङ्कापरास्ता । ति० सलक्ष्मणमित्यनेन लक्ष्मणस्याप्याहारभक्षणंस्पष्टमुक्तं ॥२१॥ ती० सिद्धाः भरद्वाजादिवत्सिद्धसंकल्पाः । न्यायवृत्ताः न्यायोभगवदुपासनादिरूपधर्मः सएववृत्तंशीलंयेषांतेतथा ॥ २२ ॥ इतिप्रथमस्सर्गः ॥ १ ॥

[ पा० ] १ क. ख. ग. ङ.—ट. पुष्पैरन्यैश्च. २ क. ख. च. छ. ज. पार्थिवं. ३ क. ख. ग. ङ.—ट. वन्यैश्च. ४ च. छ. ज. ञ. वैश्वानरोपमं. ५ ख. ग. आमन्त्र्यच.

नानामृग[1]गणाकीर्णं शार्दूलवृकसेवितम् ॥ ध्वस्तवृक्षलतागुल्मं दुर्दर्शसलिलाशयम् ॥ २ ॥
निष्कूजनानाश[2]कुनिझिल्लिकागण[3]नादितम् ॥ [4]लक्ष्मणानुगतो रामो वनमध्यं ददर्श ह ॥ ३ ॥
[5]सीतया सह काकुत्स्थस्तस्मिन्घोरमृगायुते ॥ ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ॥ ४ ॥
[6]गम्भीराक्षं [7]महावक्त्रं विकटं [8]विषमोदरम् ॥ बीभत्सं विषमं दीर्घं विकृतं घोरदर्शनम् ॥ ५ ॥
वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम् ॥ त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम् ॥ ६ ॥
त्रीन्सिंहांश्चतुरो व्याघ्रान्द्वौ वृकौ पृषतान्दश ॥ सविषाणं वसादिग्धं गजस्य च शिरो महत् ॥
अवसज्यायसे शूले विनदन्तं महास्वनम् ॥ ७ ॥
स रामं लक्ष्मणं चैव सीतां दृष्ट्वा च मैथिलीम् ॥ [9]अभ्यधावत संक्रुद्धः प्रजाः काल इवान्तकः ॥ ८ ॥
स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ॥ अङ्केनादाय वैदेहीमपक्रम्य [10]ततोऽब्रवीत् ॥ ९ ॥
युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ॥ प्रविष्टौ दण्डकारण्यं शरचापा[11]सिधारिणौ ॥ १० ॥

---

मपि तत्सर्वातिथ्यत्वेन हि भगवान्स्वीकरोति । सूर्यस्योदयनंप्रतीति कर्मप्रवचनीययोगे द्वितीया । "लक्षणेत्थंभूताख्यान–" इत्यादिना प्रतेः कर्मप्रवचनीयत्वं । उदयनं प्रति उदयकाले । प्रातःस्नानादिकर्मावसान इत्यर्थः । वनमेवान्वगाहत नच तत्र स्थातुमैच्छदित्यर्थः ॥ १ ॥ नानामृगगणेत्यादिश्लोकद्वयमेकान्वयं । ध्वस्तवृक्षलतागुल्मं तुङ्गकठिनविराधदेहसंपर्कादिति भावः । दुर्दर्शसलिलाशयमित्यत्राप्येष्ययमेव हेतुः । निष्कूजनानाशकुनि निःशब्दनानाविधपक्षिकं । सुदूरमुड्डीयमानोपि पक्षी तस्माद्भिया निःशब्दं लीयत इति भावः । झिल्लिकागणनादितं झिल्लिकाभिस्तु दुर्दर्शत्वात्सर्वदा शब्द्यत इत्यर्थः । नानेत्यादि सर्वं वनमध्यविशेषणं ॥ २—३ ॥ सीतया सहेत्यादि सार्धश्लोकचतुष्टयमेकान्वयं । घोरमृगास्तरक्ष्वादयः । पुरुषानत्ति भक्षयतीति पुरुषादः । पचाद्यच् । राक्षसमित्यर्थः । महास्वनं दृढकण्ठध्वनिकं ॥ ४ ॥ गम्भीराक्षं निम्नाक्षं । महावक्त्रं पृथुतरमुखं । विकटं विशालं । विषमोदरं निम्नोन्नतोदरं । बीभत्सं मांसरुधिरालिप्तशरीरतया कुत्सितं । विषमं न्यूनाधिकावयवं । विकृतं उक्तप्रकारेण विकृतवेषं । अतएव घोरदर्शनम् ॥ ५ ॥ वसा मांसं तया आर्द्रं । रुधिरोक्षितं रक्तसिक्तं । व्यादितास्यं व्यात्तास्यं । आर्ष इट् ॥ ६ ॥ भक्षणार्थमितिशेषः । पृषतान् बिन्दुमृगान् । आयसे अयोमये । शूले अवसज्य प्रोतान् कृत्वा । महास्वनं यथाभवति तथा विनदन्तं विनादं कुर्वन्तं ॥ ७ ॥ काले संहारकाले । प्रजा उद्दिश्य अन्तको यथा धावति तथा अभ्यधावत ॥ ८ ॥ अङ्केन कटिप्रदेशेन ॥ ९ ॥ सभार्याविति भार्याशब्दो योषिन्मात्रवाचीत्येके वदन्ति। अन्ये तु यथा "प्राणभृत उपदधाति" इत्यत्र प्राणभृच्छब्दः प्राणभृदप्राणभृत्साधारणः । यथाच "ऋतं पिबन्तौ" इत्यत्र पानकर्त्रकर्तृसाधारणो जीवेश्वरयोः पिबच्छब्दप्रयोगस्तथा छत्रिन्यायेनात्रापि सभार्यावित्युक्तमित्याहुः । तथापि ध्वनिदोषोऽवर्जनीयः । वस्तुतस्तु द्वयोरेका भार्यास्तीति दुर्बुद्धिनैवमुक्तमिति

---

**स०** कुरुपाण्डवन्यायेन नानामृगगणाकीर्णं ऋक्षशार्दूलसेवितमितिसंभवति । दुर्दर्शसलिलाशयं गंभीरत्वात् ॥ २ ॥ **शि०** झिल्लिकागणनादितमित्यनेन झिल्लिकाशब्दस्यराक्षसप्रियत्वंसूचितं ॥ **स०** निष्कूजनानाशकुनि स्वधनुर्दर्शनेननिश्शब्दनानापक्षि । झिल्लिकानांचीरीणां । लक्ष्मणः अनुगतोयंरामंसः । लक्ष्मणानुचरइतिपाठे लक्ष्मणैः शुभलक्षणैः अनुचरास्सर्वैपियस्य सः ॥ ३ ॥ **स०** मृगाणामयुतंयस्मिंस्तस्मिन् । **ती०** गिरिशृङ्गाभं गिरेश्शृङ्गं आभा उपमा यस्यतं ॥ ४ ॥ **ती० टी०** अत्र विराधेनसीताग्रहणं स्वाघौघपरिहारार्थमेव नतुदारबुध्या । तदुक्तंस्कान्दे "सोपितांजानकींदृष्ट्वाशीघ्रंसंजातविक्रमः । इयंपुरामहाशक्तिस्सेयंस्वर्गस्यकारणम् । अस्याविबोधोमोक्षेपिकारणंबन्धनेपिच । तस्मादिमांभजिष्यामिदिष्ट्याप्राप्तंहिदर्शनम् । इतिदर्शनमात्रेण विमुक्ताघौघपञ्जरः । भक्तियुक्तोजहारैनांसीतांचैतन्यरूपिणीम् ।" इति । **शि०** अङ्केन शीघ्रगत्या । वैदेहीं अपक्रम्य स्वस्कन्धयोस्संस्थाप्य ॥ ९ ॥ **ती०** यद्वा सभायामार्यौ सभार्यौ । **स०** सभार्यौ भार्यासहितौ । सीतायाउभयभार्यात्वभ्रमेणेयमुक्तिः । द्वयो-

**[ पा० ]** १ ग. समाकीर्णं. २ ट. शकुनं. ३ ग. सेवितं. ४ ङ. झ. ट. लक्ष्मणानुचरो. ५ क. ख. ग. वनमध्येतुकाकुत्स्थः. ६ च. झ. ञ. ट. गभीराक्षं. ७ ग. घ. महासत्वं. ८ क. च. ज. ञ. विकृतोदरं. झ. ट. विकटोदरं. ९ क. ख. ग. अभ्यधावत्सुसंक्रुद्धः. क. ख. ग. अभ्यगच्छत्सु. १० ङ. झ. ट. तदाऽब्रवीत्. ११ ङ. झ. ट. पाणिनौ.

कथं तापसयोर्वां च वासः प्रमदया सह ॥ अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ ॥ ११ ॥
अहं वनमिदं दुर्गं विराधो नाम राक्षसः ॥ चरामि सायुधो नित्यमृषिमांसानि भक्षयन् ॥ १२ ॥
इयं नारी वरारोहा मम भार्या भविष्यति ॥ युवयोः पापयोश्चाहं पास्यामि रुधिरं मृधे ॥ १३ ॥
तस्यैवं ब्रुवतो धृष्टं विराधस्य दुरात्मनः ॥ श्रुत्वा सगर्वितं वाक्यं संभ्रान्ता जनकात्मजा ॥
सीता प्रावेपतोद्वेगात्प्रवाते कदली यथा ॥ १४ ॥
तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां शुभाम् ॥ अब्रवील्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥ १५ ॥
पश्य सौम्य नरेन्द्रस्य जनकस्यात्मसंभवाम् ॥ मम भार्यां शुभाचारां विराधाङ्के प्रवेशिताम् ॥
अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीम् ॥ १६ ॥
यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् ॥ कैकेय्यास्तु सुसंपन्नं क्षिप्रमद्यैव लक्ष्मण ॥ १७ ॥
या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी ॥ ययाऽहं सर्वभूतानां हितः प्रस्थापितो वनम् ॥
अद्येदानीं सकामा सा या माता मम मध्यमा ॥ १८ ॥

सम्यक् । क्षीणजीवितौमद्धस्ते पतनादिति भावः । यद्वा क्षीणजीवितौ प्रविष्टौ क्षीणजीवितत्वादेव प्रविष्टौ । अत्र प्रविष्टानां जीवितं दुर्लभमितिभावः ॥ १० ॥ वस्तुतो विपरीताचारौ युवां मम वध्यावेवेत्याशयेनाह—कथमिति । वां युवयोः । प्रमदया सह वासश्च कथं विरुद्ध इत्यर्थः । "नचवाहा–" इति निषेधेपि वामादेशआर्षः । कथंशब्दोक्तं विवृणोति—अधर्मेति । मुनिदूषकौ मुनिवेषविरुद्धशरचापासिधारणादितिभावः । अतएव पापौ ॥ ११—१२ ॥ मृधे युद्धे ॥ १३ ॥ सगर्वितं सगर्वं । भावे निष्ठा । उद्वेगात् भयात् ॥ १४ ॥ परिशुष्यता शोकसंकुचितेन । मुखेन उपलक्षितः ॥ १५—१६ ॥ कैकेय्याः अस्मासु विषये यदभिप्रेतं योभिप्रायः । यच्च प्रियं वरवृतं वरव्याजेन वृतं । तदद्यैवसुसंपन्नं फलितं ॥ १७ ॥ अभिप्रेतशब्दोक्तं सूक्ष्मेक्षिकया विवृणोति—या न तुष्यतीति । दीर्घदर्शिन्या कैकेय्या अस्मद्व्यसनं पूर्वमेव यदि नचिन्तितं स्यात्तर्हि पुत्रार्थं राज्यमेव वरयेत् । नतु मत्प्रवासनं । मत्प्रवासनवरणादवगम्यते । अयं वनं गतश्चेत्सीतापि गच्छेत् । सा च राक्षसादिभिरपह्रियेत । तेन रामोपि व्यसनं महत्प्राप्नुयात् । ततश्च मत्पुत्रस्य राज्यं निष्कण्टकं स्यादिति कैकेयी नूनममन्यतेति भावः । पुत्रार्थे पुत्रप्रयोजननिमित्तं । माता मम मध्यमेति । यद्यपि पूर्वं मम माता कनीयसीत्युक्तं तथापि महिषीत्रयापेक्षया कनीयसीत्वं सर्वदशरथपत्न्यपेक्षया मध्यमात्वं । त्रिशतंपञ्चाशच्च दशरथपत्न्यः सन्तीति पूर्वमेवोक्तं । अद्य अस्मिन्दिवसे । इदानीं अस्मिन्क्षणे

रेकप्रियत्वंप्रमाणविकलंसदपि तदनुमतंचेन्ममापि सा भार्याभवितुंयोग्येतिभावमवगमयितुमियमुक्तिर्वा । अतएव "इयंनारीवरारोहाममभार्याभविष्यति" इतिवक्ष्यमाणंयुक्तंभवति । छत्रिन्यायेनवा ॥ ति० यद्वा विराधस्येदंनिन्दोक्तिरूपमेववाक्यं ॥ १० ॥ ति० तदेवाह—**कथमिति** । प्रमदया एकयासह द्वयोर्वासः कथंचेत्यन्वयः । **स०** मुनिदूषकौ मुनिधर्मदूषकौ ॥ ११ ॥ **शि०** वरारोहा वरः अत्युत्कृष्टः आरोहः ममस्कन्धयोरारोहणं यस्यास्सा इयंनारी ममभार्या मत्पोष्याभविष्यति । एतेन तस्यसीतायांसेव्यत्वबुद्धिस्संजातेतिध्वनितं ॥ १३ ॥ **शि०** विराधाङ्कगतां विराधस्याङ्केन शीघ्रगत्याहेतुभूतया गतां तत्स्कन्धयोः प्राप्तां ॥ १५ ॥ **शि०** विराधाङ्के प्रवेशितां विराधाङ्कस्य विराधशीघ्रगमनस्य या ईः व्याप्तिस्तया प्रवेशितां स्कन्धयोस्संस्थापितां । राजपुत्रीं राजती शोभावतीचसा पुत्री तां । **स०** प्रवेशितां तेनेतिशेषः ॥ १६ ॥ **ति०** मध्यमामाता कौसल्यातः कनिष्ठत्वात्सुमित्रातो ज्येष्ठत्वात् । कौसल्यापेक्षयाकनिष्ठत्वात्पूर्वंयवीयसीत्युक्तिरपिनासंगता । भगवतोपीदृशोक्तिस्तु लक्ष्मणोत्साहवर्धनायेतिभावः । **स०** यद्वा मध्यमा सुमित्रा तत्सामीप्यान्मध्यमाकैकेयी । अथवा मध्यमा उक्तकारिणी । स्वतस्सद्बुद्धित्वान्मन्थरोक्तकारिणीति

[ **५१०** ] १ क. ग. मुनिदूषणौ. २ ङ. च. झ. ञ. ट. दुष्टं. ३ क. ख. ग. सगर्ववचनं. ज. सममर्मवचनं. ४ झ. ट. प्रवेपितोद्वेगात्. घ. प्रावेपतोद्विग्ना. ५ घ. च. ज. ञ. राघवःश्रीमान्. ६ क.—घ. प्रवेपितां. ७ क. ख. ग. च. ज. ञ. मनस्विनीं. ८ घ. वरकृतंच. ज. वरमयंचतत्. ९ क. ग. ङ. च. ज. झ. ञ. ट. स्तुसुसंवृत्तं. घ. स्ततसुसंवृत्तं. १० ज. झ. ट. मध्यमामम.

परस्पर्शात्तु वैदेह्या न दुःखतरमस्ति मे ॥ पितुर्वियोगात्सौमित्रे स्वराज्यहरणात्तथा ॥ १९ ॥
इति ब्रुवति काकुत्स्थे बाष्पशोकपरिप्लुते ॥ अब्रवील्लक्ष्मणः क्रुद्धो रुद्धो नाग इव श्वसन् ॥ २० ॥
अनाथ इव भूतानां नाथस्त्वं वासवोपमः ॥ मया प्रेष्येण काकुत्स्थ किमर्थं परितप्यसे ॥ २१ ॥
शरेण निहतस्याद्य मया क्रुद्धेन रक्षसः ॥ विराधस्य गतासोर्हि मही पास्यति शोणितम् ॥ २२ ॥
राज्यकामे मम क्रोधो भरते यो बभूव ह ॥ तं विराधे प्रमोक्ष्यामि वज्री वज्रमिवाचले ॥ २३ ॥
मम भुजबलवेगवेगितः पततु शरोस्य महान्महोरसि ॥
व्यवसयतु तनोश्च जीवितं पततु ततस्स महीं विघूर्णितः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्वितीयः सर्गः ॥ २ ॥

---

॥ १८ ॥ किं ते तादृशं व्यसनं तत्राह—परस्पर्शादिति । वैदेह्याः परस्पर्शाद्यथा दुःखतरं अतिदुःखं । पितृवियोगाद्राज्यहरणाच्च तथा दुःखं नास्तीति योजना ॥ १९ ॥ रुद्धः मन्त्रगणनिरुद्धः । नागः सर्पः । श्वसन् रामशोकदर्शनादिति भावः ॥ २० ॥ वासवोपमो भूतानां नाथः सन् अनाथ इव नाथसापेक्षो नर इव । विशिष्य मया प्रेष्येण सहितोपि किमर्थं परितप्यसे । वास्तवार्थस्तु भूतानां सर्वलोकानां नाथःवासव उपमीयतेनेनेति वासवोपमः त्वं अनाथ इव नाथभिन्न इव किमर्थं परितप्यसे । एवमेव तत्त्वं जगुः । यथा विश्वामित्रः "अहं वेद्मि महात्मानं" इति । यथा च परशुरामः "त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः" इति । एवमृषयोपि ॥ २१ ॥ प्रेष्येण त्वया किं क्रियत इत्यत्राह—शरेणेति ॥२२॥ कैकेय्याः भरतार्थं राज्यकाङ्क्षित्वाद्भरतस्यापि राज्यकामत्वं । तं विराधे विमोक्ष्यामीति शरणागतेभरते दुर्विमोचत्वादिति भावः । ननु भरतकैकेयीभ्यामज्ञानात्प्रवासनं कारितं पुनरागन्तव्यमिति क्षमापणस्य कृतत्वात् । कुतः पुना रामलक्ष्मणाभ्यां तत्र राज्यापहारित्वमनुस्मर्यते । उच्यते अनन्तरं तथाऽनुष्ठानेपि पूर्वं कैकेय्या तथा चिन्तितत्वात्तस्यचावश्यकर्तव्यत्वाद्दुःखकाले तच्चिन्तनं । तथापि व्यसनकालेपि परदोषोद्घाटनं सत्पुरुषानुचितं रामप्रकृतिविरुद्धं च । सुप्तप्रमत्तकुपितानां भावज्ञानंदृष्टमितिन्यायेन दोषदर्शनमेवरामस्यहार्दं तदुपेक्षकत्वं त्वभिनयमात्रमिति स्यात् । अत्रोच्यते । व्यसनकाले लोकोवाच्यमवाच्यं च न जानातीत्यमुमर्थं व्यञ्जयितुमेवमुक्तमिति ॥ २३ ॥ भुजबलवेगेन धनुराकर्षणवेगेन वेगितः आनीतवेगः । इतजन्तो वा । विघूर्णितः संजातभ्रमणः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

---

प्रोक्तकारिणीत्यर्थः । " प्रोक्तकारीतुमध्यमः " इत्युक्तेः ॥ १८ ॥ **ती०** क्रुद्धः कैकेयींप्रति ॥२०॥ **ती०** सरामंलक्ष्मणंदृष्ट्वेत्यारभ्य किमर्थंपरितप्यसइत्यन्तस्यग्रन्थसंदर्भस्य वास्तवार्थस्तु सः विराधः रामंलक्ष्मणंवैदेहींचदृष्ट्वासंक्रुद्धस्सन् सीतामभ्यधावत् गृहीतुमिति शेषः।रामादीन्दृष्ट्वा तत्तेजसाऽभिभूतोविराधः स्ववृत्तान्तंकथयंस्तान्पृच्छति । स क्वलेत्यादिश्लोकपञ्चकेन । ततस्सविराधः अन्तेसमीपे । आगत्येतिशेषः । वैदेहीमादायापक्रम्याब्रवीत् । रामलक्ष्मणावितिशेषः। युवामिति । सभार्यौ सभायामार्यौ । क्षीणजीवितौ क्षीणंजीवितमरीणांयाभ्यां । शरचापासिधारिणौसन्तौ जटाचीरधरौचसन्तौ दण्डकारण्यंप्रविष्टौ । यद्यपि तापसयोर्वांप्रमदयासहवासोयद्यपि । तथापि कथंपापौ कथंमुनिदूषकौ । तादृशौनभवतइत्यर्थः । अत्रहेतुः अधर्मचारिणौ अधर्मंचरतो भक्षयतो नाशयतइतितथा । एतादृशविशेषणविशिष्टौकौयुवां । किंच । अहमिति । अहंविराधोनामराक्षसः। इदानींमम पापयोः पापाभ्यां । हस्ताभ्यामितिशेषः । ऋषिमांसानिभक्षयन् सायुधोमृधेरुधिरंपास्यामीतिधिया दुर्गंवनंचरामि । किंच भया कान्त्या आर्याश्रेष्ठा इयंनारी युवयोःकाभविष्यतीति तावब्रवीदितिपूर्वेणसंबन्धः । तस्येति । ऋषिमांसानिभक्षयंश्चरामीत्येवं दुष्टंयथातथा विराधस्यब्रुवतस्सतः सीताप्रावेपत । तामिति । विराधाङ्के तत्समीपे प्रवेशितां स्थितामित्यर्थः । सीतांदृष्ट्वा परिशुष्यतामुखेनोपलक्षितः सीताभीत्येतिशेषः । अब्रवीत् पश्येति । विराधाङ्के तत्समीपे प्रवेशितांस्थितां । यदभिप्रेतमित्यादिवाक्यानि सीताभीतिनिमित्तेनोक्तानीति द्रष्टव्यानि । परस्पर्शात् परस्यराक्षसस्यस्पर्शात् समीपागमनादित्यर्थः । बाष्पशोकपरिप्लुते सीताभीतिनिमित्तमितिभावः ॥२१॥ इतिद्वितीयस्सर्गः ॥२॥

**[ पा० ]** १ ग. दुःखान्तर. २ क. ख. ग. ङ. च. ज. झ. ट. पितुर्विनाशात्. ३ ङ. झ. ट. परिप्लुतः. ४ ख. लक्ष्मणस्तत्र क्रुद्धोनागइव. ५ घ. लोकानां. ६ क. ग. ङ. च. झ. ञ. ट. विमोक्ष्यामि. ७ क. ट. व्यपनयतु. ८ च. ञ. ततोस्य. ९ क. ख. ङ. च. ज. झ. ञ. ततश्च.

# तृतीयः सर्गः ॥ ३ ॥

रामेणविराधंप्रतिस्ववृत्तान्तनिवेदनपूर्वकंतद्वृत्तान्तनिवेदनप्रश्नेतेनतंप्रतिस्वपितृनामस्वप्रभावनिवेदनपूर्वकंसीताविसर्जनेन त्वरयापलायनचोदना ॥ १ ॥ ततोरामबाणाभिहतिव्यथितेनतेनसीतायाभुविन्यसनपूर्वकंरामलक्ष्मणयोःस्वस्कन्धारोपणेन वनमध्यप्रवेशः ॥ २ ॥

[ [1]इत्युक्त्वा लक्ष्मणः श्रीमान्राक्षसं[2] प्रहसन्निव[3] ॥ को भवान्वनमभ्येत्य चरिष्यति यथासुखम् ॥ १ ॥]
[4]अथोवाच पुनर्वाक्यं विराधः पूरयन्वनम् ॥ [5]आत्मानं पृच्छते ब्रूतं कौ युवां क्व गमिष्यथः ॥ २ ॥
तमुवाच ततो रामो राक्षसं[6] ज्वलिताननम् ॥ पृच्छन्तं सुमहातेजा इक्ष्वाकुकुलमात्मनः ॥ ३ ॥
क्षत्रियौ वृत्तसंपन्नौ विद्धि नौ वनगोचरौ ॥ त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डकान् ॥ ४ ॥
तमुवाच विराधस्तु रामं सत्यपराक्रमम् ॥ [7]हन्त वक्ष्यामि ते राजन्निबोध मम राघव ॥ ५ ॥
पुत्रः किल जयस्याहं [8]मम माता शतह्रदा ॥ विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥ ६ ॥
तपसा चापि[9] मे प्राप्ता ब्रह्मणो हि प्रसादजा ॥ शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ॥ ७ ॥
उत्सृज्य प्रमदामेनामनपेक्षौ यथागतम् ॥ त्वरमाणौ पलायेथां न वां जीवितमाददे ॥ ८ ॥
तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः ॥ राक्षसं विकृताकारं विराधं पापचेतसम् ॥ ९ ॥

---

अथ विराधानुग्रहाय तदाक्रमणं तृतीये—अथोवाचेत्यादि । पूरयन् शब्देनेति शेषः । आत्मानं युष्मत्स्वरूपं । पृच्छते मह्यमिति शेषः । ब्रूतमिति लोण्मध्यमपुरुषद्विवचनम् । प्रश्नप्रकारमाह—काविति ॥ १—२ ॥ राक्षसत्वेन प्रकृत्या ज्वलिताननमिति भयहेतूक्तिः । आत्मनः सम्बन्धि इक्ष्वाकुकुलमुवाचेत्यन्वयः । इक्ष्वाकुवंश्यदशरथपुत्रावावां पितृवचनाद्वनं गमिष्याव इत्युवाचेत्यर्थः ॥ ३ ॥ अधर्मचारिणौ पापाविति पूर्वोक्तविराधवचनस्योत्तरमाह—क्षत्रियौ वृत्तसंपन्नाविति । त्वामिति । कस्य पुत्रः किंप्रभाव इति ज्ञातुमिच्छावइत्यर्थः । "अहं वनमिदं दुर्गं विराधो नाम राक्षसः" इति नामजात्योः पूर्वमुक्तत्वान्नतद्विषयोयं प्रश्नः ॥४॥ हन्तस्वाभिप्रायकीर्तनोद्योगजगर्वेण । मम मत्तः मे स्वरूपमिति शेषः । निबोधेत्युवाचेत्यन्वयः ॥ ५ ॥ विराधः विगताराधनः दुराराध्यइत्यन्वर्थसंज्ञः । राक्षसाः सजातीयाः सजातीयैः कृतं नामेदं नतु मातापितृभ्यामिति भावः ॥ ६ ॥ चापि किञ्च । तपसा साधनेन । ब्रह्मणः प्रसादजा शस्त्रेणावध्यता अमारणीयता प्राप्ता । अच्छेद्याभेद्यत्वं च प्राप्तं । प्राणवियोजनहेतुखण्डनविदारणानर्हत्वं च प्राप्तमित्यर्थः ॥७॥ अनपेक्षौ अपेक्षायां मरणं ध्रुवमिति भावः । त्वरमाणौ मन्दगमने मे मनश्चलेदिति भावः । न वां जीवितमाददे उत्तमप्रमदारत्नप्रापणादिति भावः ॥ ८ ॥ तं एवं परुषं वदन्तं । परुषवचनादेव

---

**शि०** विराधंज्ञातुकामस्य लक्ष्मणस्योक्तिमाह—**इतीति** । श्रीमाँल्लक्ष्मणः इतिवचः उक्त्वा रामंप्रतीतिशेषः । वनं अभ्येत्य प्राप्य यथासुखं यश्चरिष्यति चरति । सभवान्कः इतिवचःप्रहसन्निव विराधं आहेतिशेषः ॥ १ ॥ **स०** वनं गोचरोययोस्तौ । यद्वा वनस्ययागौर्भूस्तस्यां चरत इतितौ तथोक्तौ । समासान्तविधेरनित्यत्वान्नटच् । यद्वा गविचरतोगोचरौ वनस्य गोचरौवनगोचरौ । वनपदार्थस्य योग्यतयागोचरपदैकदेशगोपदार्थेनानन्वयः । "दीप्तानलार्कद्युतिमप्रमेयं"इत्यत्राप्रमेयत्वस्य द्युतावन्वयोज्ञेयः ॥ ४ ॥ **स०** सर्वराक्षसाइत्यनेन लोकप्रसिद्धत्वंद्योतयति ॥ ६ ॥ **स०** लोके ये छेद्यास्तेषामभेद्यत्वं । यद्वा छेद्यानामङ्गानामभेद्यत्वं । अवध्यत्वप्रकारनिरूपणं वैतत् ॥ **ती०** शस्त्रेण येनकेनापिशस्त्रेण । शस्त्रबलेनाच्छेद्याभेद्यत्वं छेदभेदाभ्यामव्यथनीयत्वं ॥ **शि०** अच्छेद्यत्वं अवयवद्वैधीभवनाभावः । अभेद्यत्वं शरीरेव्रणप्राप्त्यभावः । वस्तुतस्तु छेद्येन छेत्तुमर्हेणप्राकृतशस्त्रेणेत्यर्थः । अतएव वक्ष्यमाणरामशस्त्रकरणकभेदनंसंगच्छते । तेषांप्राकृतभिन्नत्वात् ॥ ७ ॥ **ती०** अनपेक्षौ प्रमदाशारहितौ । वस्तुतस्तु उत्सृज्य मामितिशेषः । प्रमदामादायेतिशेषः । वां युवयोः जीवितं प्राणसमंस्त्रीरत्नं नाददे इत्युवाचेतिपूर्वेण

[ **पा०** ] १ अयंश्लोकः क. ग. च. छ. ज. ञ. ट. पुस्तकेष्वेवदृश्यते. २ क. च. ज. ञ. ट. न्विराधं. ३ ग. प्रदहन्निव. ४ क. तावुवाचततोभीमोविराधः. ५ ङ. झ. ट. पृच्छतोममहिब्रूतं. ६ घ. विराधं. ७ क. अहं. ८ ख. ग. ङ. च. ज. झ. ञ. मातामम. ९ ङ. ज. झ. ट. चाभिसंप्राप्ता.

[1]क्षुद्र धिक्त्वां तु हीनार्थं मृत्युमन्वेषसे ध्रुवम् ।। रणे [2]संप्राप्स्यसे तिष्ठ न मे जीवन्गमिष्य[3]सि ।। १० ।।
ततः सज्यं धनुः कृत्वा राम[4]स्सुनिशिताञ्शरान् ।। सुशीघ्रमभिसन्धाय राक्षसं निजघा[5]न ह ।। ११ ।।
धनुषा ज्यागुणवता सप्त बाणान्मुमोच ह ।। रुक्मपुङ्खान्महावेगान्सुपर्णानिलतुल्यगान् ।। १२ ।।
ते शरीरं विराधस्य भित्त्वा बर्हिणवाससः ।। निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः ।। १३ ।।
स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः ।। अभ्यद्रवत्सुसंक्रुद्धस्तदा रामं सलक्ष्मणम् ।। १४ ।।
स विनद्य महानादं शूलं शक्रध्वजोपमम् ।। प्रगृह्याशोभत तदा व्यात्तानन इवान्तकः ।। १५ ।।
अथ तौ भ्रातरौ [6]दीप्तं शरवर्षं ववर्षतुः ।। विराधे राक्षसे तस्मिन्कालान्तकयमोपमे ।। १६ ।।
स प्रहस्य [7]महारौद्रस्स्थित्वाऽजृम्भत राक्षसः ।। जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ।।१७।।
[8]स्पर्शात्तु वरदानेन प्राणान्[9]संरोध्य राक्षसः ।। विराधः शूलमुद्यम्य [10]राघवावभ्यधावत ।। १८ ।।
तच्छूलं वज्रसंकाशं गगने ज्वलनोपमम् ।। द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ।। १९ ।।

हेतोः कोपसंरक्तलोचनः । विकृताकारं विकृताकारमपि पापे सीताहरणे चेतो यस्य तं ।। ९ ।। क्षुद्रहीनजाते। धिक्कारे हेतुरयं । हीनार्थं उत्तमाङ्गनाभिलाषरूपहीनप्रयोजनमितियावत्। मृत्युं अन्वेषणहेतुं मरणं संप्राप्स्यसे । अन्वेषणं सफलं भविष्यतीत्यर्थः । तदा किञ्चिदुपेक्षया गन्तुमुद्युक्तं प्रत्याह—तिष्ठेति । गमनं च दुर्लभमित्याह—नेति । मे पुरत इति शेषः ।।१०।। राक्षसं प्रति शरान् । निजघान अमुञ्चत् । हन हिंसागत्योरिति धातुः ।। ११ ।। पुनःशरान्विशिंषन्नाह—धनुषेति । ज्यारूपो गुणो रज्जुः तद्वता । महावेगान् अतएव सुपर्णानिलाभ्यां तुल्यं गच्छन्तीति तथोक्तान् ।। १२ ।। बार्हिणवासस इति स्वार्थे इनच् । बार्हिणवाससः बर्हपत्रा इत्यर्थः । शोणितेन आदिग्धाः ईषल्लिप्ताः । रक्तोद्गमात्पूर्वमेव शरीरान्निर्गमादितिभावः । पावकोपमा इति भूस्थतृणादिदहनादग्निसाम्यसिद्धिः ।। १३ ।। विद्धः बाणवेधजनितवेदनातिशयवान् । न्यस्य भूमौ निक्षिप्य ।। १४ ।। महान् नादः प्रतिध्वनिर्यस्मिंस्तद्यथा भवति तथा विनद्य । शक्रध्वजोपमं तद्वदुन्नतं । व्यात्तानन: विवृत्तास्यः । अनेन प्रसारितजिह्वत्वं लक्ष्यते शूलोपमेयतालाभाय ।। १५ ।। अथ सीतानिक्षेपानन्तरं । यथेष्टं बाणमोचनार्हत्वात् दीप्तं पूर्वबाणेभ्यस्तेजस्वि शरवर्षं शरसमूहं । उभाभ्यामपि मोचनीयत्वे हेतवः राक्षस इत्यादिविशेषणानि । कालान्तकयमोपमे काले संहारकाले अन्तको नाशको यो यमस्तत्तुल्ये ।। १६ ।। प्रहस्यकिमेतैर्मशकप्रायैरिति हसित्वा । अजृम्भत गात्रविनाममकरोत् । बाणाः काये किञ्चिल्लग्नाः । आशु गच्छन्तीत्याशुगाः आशुगा अपीत्यर्थः । निष्पेतुः जगलुः ।। १७ ।। वरदानेन स्पर्शात् संबन्धात् । प्राणान् प्राणवायून् । संरोध्य हृदये समूह्य बलं कृत्वेत्यर्थः ।। १८ ।। तत् हस्तस्थं । गगने ज्वलनः आकाशस्थाग्निः तदुपममित्यभूतोपमा

संबन्धः ।। ८ ।। **ती०** ज्यागुणवता ज्याशब्दवता । **स०** ज्यागुणवता भूमौप्रशस्तगुणवता । यद्वा ज्या मौर्वी गुणो मासृण्यादिः ताभ्यांयुक्तेन । **शि०** सुपर्णानिलतुल्यगान् सुपर्णानिलौ तुल्यं स्वसादृश्यं गच्छन्तिप्रापयन्ति तान् ।।१२।। **शि०** बर्हिणवाससः बर्हिणः मयूराः तत्संबन्धिपिञ्छानीत्यर्थः। तान्येववासांसियेषांतेतथा ।। **स०** बर्हिणवासएव वासोयेषांतेबर्हिणवाससः। मयूरपक्षवस्त्राः ।। १३ ।। **ती०** वस्तुतस्तु वैदेहींन्यस्य सीतासमीपमगत्वा ।। १४ ।। **ती०** कालोन्तकोयमश्चेतित्रयो मारणाधिकारिणः। तत्र कालस्याधिकारो जीवितविच्छेदे। अन्तकस्य प्राणापहारे। यमस्यपुण्यापुण्यविवेके इतिभेदः ।। **ति०** कालान्तकयमाः प्राणतनुमनस्संहारप्रधानास्संहाररुद्रस्यमूर्तयः तत्सदृशे ।। **शि०** कालान्तकयमोपमे अन्तकः मृत्युः । कालस्तन्निमित्तं । यमस्तन्नियन्ता । तैरुपमा यस्य । किंच कालः प्राप्तः अन्तकोयस्य सएव यमोपमस्तस्मिन् ।। **स०** कालः कालाभिमानी अन्तकोमृत्युरित्युभौ यमभृत्यौ । तौच यमश्च तेषामुपमायस्य तस्मिन् ।। १६ ।। **ति०** प्रहस्य शस्त्रावध्येमयि वृथैवबाणपातइतिहासः ।। १७ ।। **ती० टी०** वरदानेन ईश्वरवरदानेन । तदुक्तं । "विराधोहाटकपुरेविधिवन्मामपूजयत् । मदनुग्रहवैशिष्टयादवध्यस्ससुरा-

[ पा० ] १ च. क्षुद्रं. २ क. ख. ङ. च. ज.—ट. प्राप्स्यसिसंतिष्ठ. ३ ख. घ. ङ. च. ज.—ट. न्विमोक्ष्यसे. ४ ग. सतु. ५ ख. निजघानसः. ६ क. च. ज. ञ. तत्र. ७ क. ख. ञ. महारौद्रंस्थित्वा. ८ क. ख. ग. च. ज. बलात्तुवरदानस्य ९ क. च. ज संरुध्य. १० क. ङ. च. छ. ज. ट. राघवायव्यसर्जयत्.

तद्रामविशिख[1]च्छिन्नं शूलं तस्य कराद्भुवि ॥ पपाताशनिना छिन्नं मेरोरिव शिलातलम् ॥ २० ॥
तौ खड्गौ[2] क्षिप्रमुद्यम्य कृष्णसर्पोपमौ[3] शुभौ ॥ तूर्ण[4]मापततस्तस्य तदा प्रहरतां बलात् ॥ २१ ॥
स[5] वध्यमानस्सुभृशं बाहुभ्यां[6] परिरभ्य[7] तौ ॥ अप्रकंप्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत[8] ॥ २२ ॥
तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत् ॥ वहत्वयमलं तावत्पथाऽनेन तु राक्षसः ॥ २३ ॥
यथा[9] चेच्छति सौमित्रे तथा वहतु राक्षसः ॥ अयमेव हि नः पन्था येन याति निशाचरः ॥ २४ ॥
स तु स्वबलवीर्येण समु[10]त्क्षिप्य निशाचरः ॥ बालाविव स्कन्धगतौ[11] चकारातिबलौ ततः ॥ २५ ॥
तावारोप्य ततः स्कन्धं[12] राघवौ रजनीचरः ॥ विरा[13]धो निनदन्घोरं जगामाभिमुखो वनम् ॥ २६ ॥
वनं महामेघनिभं प्रविष्टो द्रुमैर्महद्भिर्विविधैरुपेतम् ॥
नानाविधैः पक्षि[14]शतैर्विचित्रं शिवायुतं व्यालमृगैर्विकीर्णम् ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः ॥ ४ ॥

विराधेनरामलक्ष्मणापहरणेसीतयाविषादादुच्चैराक्रोशनम् ॥ १ ॥ राघवाभ्यांशस्त्रेणविराधबाहुद्वयभञ्जनपूर्वकंशस्त्रादिना बहुधापीडनेप्यविमुक्तप्राणेतस्मिन्रामेणलक्ष्मणंप्रतिविराधस्यशस्त्राद्यवध्यत्वोक्तिपूर्वकंगर्तेनिखननस्यतद्वधोपायत्वोक्तिः ॥ २ ॥ रामपादस्पर्शमहिम्नापूर्वजन्मस्मृतिमताविराधेनतंप्रतिकुबेरशापात्स्वस्यराक्षसत्वप्राप्तिनिवेदनपूर्वकंशरभङ्गाश्रमगमनचोदना ॥ ३ ॥ विराधेनापिस्वस्यगर्तक्षेपंप्रार्थितेनरामेणलक्ष्मणखातगर्तेतन्निखननम् ॥ ४ ॥ ततःसीतालक्ष्मणाभ्यांसहवनेसुखनिवासः ॥ ५ ॥

ह्रियमाणौ तु[15] तौ दृष्ट्वा वैदेही रामलक्ष्मणौ ॥ उच्चैस्स्वरेण चुक्रोश प्रगृह्य सुभुजा[16] भुजौ ॥ १ ॥

---

॥ १९ ॥ अशनिना वज्रेण ॥ २० ॥ प्रहरतां प्राहरतां ॥ २१ ॥ अप्रकम्प्यौ चालयितुमप्यशक्यौ । किंपुनः परिग्रहीतुमिति कविःपरिहसति । रौद्रः रौद्राकृतिः । अप्रकम्प्यत्वे हेतुः—नरव्याघ्राविति । नरव्याघ्रौ पुरुषोत्तमौ ॥ २२ ॥ अभिप्रायं वनान्तर्नयनेच्छां । वहतु नौ प्रापयतु । अनेन आवाभ्यां गन्तव्येन पथावहतु । अथवा यथेच्छति येनमार्गेण गन्तुमिच्छति तथा वहतु । उभयथापि न दोष इति भावः । तत्र हेतुमाह —अयमिति । नः वनमध्यगमनेच्छूनामस्माकं ॥ २३—२४ ॥ अतिबलौ रामलक्ष्मणौ समुत्क्षिप्य बालाविव स्कन्धगतौ चकार तयोरिच्छावशादिति भावः ॥ २५—२६ ॥ इमावपि स्वाभीष्टवनं प्रविष्टावित्याशयेनाह—वनमिति । शिवाः सृगालविशेषः ताभिर्युतं । व्यालमृगैः दुष्टमृगैः । "दुष्टे द्विपे श्वापदे च व्यालः पुंसि शठेपि च" इति बाणः । अत्र सर्गे भगवतः स्वायत्तसकलप्रवृत्तिकत्वं महाभयहेतावपि निर्भयत्वं च दर्शितं । अस्मिन्सर्गे षड्विंशतिः श्लोकाः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

---

अथ परमपुरुषवहनफलं वक्तुमुपक्रमते—ह्रिय-

---

सुरैः " इति ॥ १८ ॥ **ति०** तच्छूलं करस्थमूलमागमेवेतिशेषः । गगनेज्वलनोपमं शिखाभागावच्छेदेनेतिभावः ॥ १९ ॥ **स०** महामेघनिभं सूर्यप्रकाशाच्छादकत्वेनेतिभावः ॥ २७ ॥ इतितृतीयस्सर्गः ॥ ३ ॥

**शि०** सुमहाभुजौ सुमहान्तौस्वबाहूप्रगृह्य समुत्थाप्य । सुमहाभुजौ काकुत्स्थौ प्रगृह्य ह्रियमाणौदृष्ट्वा चुक्रोशेत्यन्वयो वा ॥१॥

**[ पा० ]** १ क. ख. ङ.—ट. विशिखैश्छिन्नं. ग. विशिखैर्भिन्नं. २ घ. च. छ. ज. भुजौ. ३ ङ. झ. ट. सर्पाविवोद्यतौ. ४ ट. मापेततुस्तस्य. ५ क. वध्यमानस्सतुभृशं. ६ ख. ग. ङ.—ट. भुजाभ्यां. ७ क.—ज. ञ. ट. परिगृह्य. ८ ज. मासाद्य. ९ क. ख. ग. च. छ. ज. ञ. यथेच्छतिहि. १० क. च. छ. ज. ञ. तौसमुत्क्षिप्यराक्षसः. ११ ग. चचारातिबलौ. ङ. झ. ट. चकारातिबलोद्धतः. १२ क. ङ. ज. ञ. स्कन्धे. १३ ख. घ.—ट. विनदन्घोरं. १४ क. च. छ. ज. ञ. पक्षिगणैः. ङ. झ. ट. पक्षिकुलैः. १५ ङ. झ. ट. तुकाकुत्स्थौदृष्ट्वासीतारघूत्तमौ. क. ख. ततोदृष्ट्वा. १६ ङ. झ. ञ. ट. सुमहाभुजौ.

एष दाशरथी राम[1]स्सत्यवाञ्छीलवाञ्छुचिः ॥ रक्षसा [2]रौद्ररूपेण ह्रियते सहलक्ष्मणः ॥ २ ॥
[3]मां वृका भक्षयिष्यन्ति शार्दूला द्वीपिनस्तथा ॥ मां हरोत्सृज्य काकुत्स्थौ नमस्ते [4]राक्षसोत्तम ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ ॥ वेगं प्रचक्रतुर्वीरौ वधे तस्य दुरात्मनः ॥ ४ ॥
तस्य रौद्रस्य [6]सौमित्रिर्बाहुं सव्यं बभञ्ज ह ॥ [7]रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५ ॥
स भग्नबाहुः संविग्नो [8]निपपाताशु राक्षसः ॥ धरण्यां मेघसंकाशो वज्रभिन्न इवाचलः ॥ ६ ॥
मुष्टिभिर्जानुभिः पद्भिः [9]सूदयन्तौ तु राक्षसम् ॥ उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः ॥७॥
स विद्धो बहुभिर्बाणैः खड्गाभ्यां च परिक्षतः ॥ निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥८॥
[10]तं प्रेक्ष्य रामः सुभृशमवध्यमचलोपमम् ॥ भयेष्वभयदः श्रीमानिदं वचनमब्रवीत् ॥ ९ ॥
तपसा पुरुषव्याघ्र राक्षसोयं न शक्यते ॥ शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥ १० ॥
[ [11]कुञ्जरस्येव रौद्रस्य [12]राक्षसस्यास्य लक्ष्मण ॥ [13]वनेऽस्मिन्सुमहच्छ्वभ्रं खन्यतां [14]रौद्रवर्चसः ॥ ११ ॥
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति ॥ तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥१२॥]
तच्छ्रुत्वा राघवेणोक्तं राक्षसः [15]प्रश्रितं वचः ॥ इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥१३॥
[16]हतोस्मि पुरुषव्याघ्र शक्रतुल्यबलेन वै ॥ मया तु पूर्वं त्वं [17]मोहान्न ज्ञातः पुरुषर्षभः ॥ १४ ॥

---

माणावित्यादि । चुक्रोश रामस्यातिमानुषं चरित्रमवगच्छन्त्यपि स्नेहातिशयेन व्याकुला रुरोदेत्यर्थः ॥ १ ॥ सत्यवान् सत्यवचनवान् । शीलवान् सदाचारसंपन्नः । शुचिः ऋजुबुद्धिः ॥ २ ॥ एवं दैवं प्रत्याक्रुश्य विराधं प्रत्याह—मामिति । वृकाः ईहामृगाः । "कोकस्त्वीहामृगो वृकः" इत्यमरः । शार्दूलाः महाव्याघ्राः । द्वीपिनः अल्पव्याघ्राः । "व्याघ्रो मृगारिः शार्दूलो हिंसारुश्चित्रकी मृगात् । चण्डश्चाल्पस्त्वयं द्वीपी" इति वैजयन्ती । नमस्त इत्येवं चुक्रोशेति पूर्वेणान्वयः ॥ ३—४ ॥ सव्यमिति । ननु विराधादानेकबन्धादाने च लक्ष्मणः सव्यं रामो दक्षिणं भुजमच्छिनदित्यविशेषेणोच्यते किमत्र नियामकमिति चेत् । उच्यते । सर्वदा लक्ष्मणो रामस्य दक्षिणपार्श्वे एव तिष्ठति अतो गृह्णन्दक्षिणेन रामं सव्येन लक्ष्मणं चागृह्णादित्यविरोधः । तरसा बलेन ॥ ५ ॥ संविग्नः भीतः ॥ ६ ॥ मुष्टिभिरिति । बहुवचनमावृत्त्या उद्यम्योद्यम्य ·सूदयन्तौ मुष्ट्यादिकमुद्धृत्योद्धृत्य प्रहरन्तौ । स्थण्डिले भूतले ॥ ७—८ ॥ भयेष्वभयदः शापापायकारणाय प्रसन्न इत्युच्यते ॥ ९ ॥ शस्त्रेण शस्त्रादिभिः । निखनावहे भूमौ निक्षिपेव ॥ १० ॥ प्रश्रितं विनयान्वितं यथा तथा प्रोवाचेत्यन्वयः ॥ ११—१३ ॥ रामपादस्पर्शेन प्रत्यभिजानन्नाह—हत इत्यादि । त्वयेति शेषः । पुरुषर्षभः पुरुषोत्तमस्त्वं रामत्वेनावतीर्ण इति न ज्ञात इत्यर्थः ॥ १४ ॥

---

**ती०** शार्दूलद्वीपिनः सबिन्दुबिन्दुव्याघ्राः ॥ ३ ॥ **ति०** बाहुंबभञ्जनैतावतापिप्राणहानिरिति नवरदानविरोधः । अभेद्याच्छेद्यत्वंच प्राणनाशक्षमावयवविशेषपरंबोध्यं । बभञ्ज मुष्टिप्रहारेणेतिशेषः । अभेद्याच्छेद्यत्ववरस्तु शस्त्रकरणकतद्विषयइत्यन्ये ॥५॥ **स०** संविग्नखिन्नः । अनेनवरस्तु रामेतरविषयइतिज्ञायते ॥६॥ **ति०** भयेषुभयकालेषु । **स०** भयेषु भयसाधनेषु । **ती०** भयेष्वभयदइति स्वश्रवःणस्मरणकीर्तनादिसंविदधतः पुरुषस्य सकलभयापहारीभवति ॥ ९ ॥ **स०** मया रमयासीतया सहितस्त्वंनज्ञातइतिवा ॥ १४ ॥

**[पा०]** १ क. च. छ. ज. ञ. सत्यवान्बलवानृजुः. २ ख. घोररूपेण. ३ झ. मामृक्षाः. ४ ग. राक्षसेश्वर. क. ५ भ्रातरौ. ६ क. ख. ङ.—ट. सौमित्रिस्सव्यंबाहुं. ७ ग. रामोपि. ८ ङ. झ. ट. पपाताशुविमूर्च्छितः. ९ क. च. छ. ज. ञ. सूदयन्तौच. १० क. संप्रेक्ष्य. घ. संप्रेक्षमाणस्सभृशं. ११ इदंश्लोकद्वयं क.—ट. पुस्तकेष्वत्रापिदृश्यते. १२ क. च. ज. ञ. राक्षसस्याथ. घ. राक्षसस्यतु. छ. राक्षसस्यच. १३ ख. महतस्सुमहच्छ्वभ्रं. ध. महतस्सुमहच्छिद्रं. क. च. छ. ज. ञ. महतोस्यमहच्छ्वभ्रं. १४ ग. रौद्रकर्मणः. छ. रौद्ररक्षसः. १५ च. ज. प्रथितं. १६ क. ख. ग. ङ.—ट. हतोहं. ध. भक्तोस्मि. १७ क. ध. च. छ. ज. ञ. मोहादज्ञातः.

कौसल्या [1]सुप्रजा राम [2]तात त्वं विदितो मया ॥ वैदेही च महाभागा लक्ष्मणश्च [3]महायशाः ॥ १५ ॥
[4]अपि शापादहं घोरां प्रविष्टो राक्षसीं तनुम् ॥ तुम्बुरुर्नाम गन्धर्वः शप्तो [5]वैश्रवणेन ह ॥ १६ ॥
प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः ॥ यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ॥
[6]तदा प्रकृतिमापन्नो भवान्स्वर्गं गमिष्यति ॥ १७ ॥
इति [7] वैश्रवणो राजा रम्भा[8]सक्तं पुराऽनघ ॥ अनुपस्थीयमानो मां सं[9]क्रुद्धो व्याजहार ह ॥ १८ ॥
तव प्रसादान्मुक्तोऽह[10]मभिशापात्सुदारुणात् ॥ [11]भुवनं स्वं गमिष्यामि स्वस्ति वो[12]ऽस्तु परं[13]तप ॥ १९ ॥
इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥ अध्यर्धयोजने तात महर्षिः सूर्यसन्निभः ॥ २० ॥
तं क्षिप्र[14]मभिगच्छ त्वं स ते [15]श्रेयो विधास्यति ॥ अवटे [16]चापि मां राम [17]प्रक्षिप्य [18]कुशली व्रज ॥ २१ ॥
रक्षसां [19]गतसत्त्वानामेष धर्मः सनातनः ॥ अवटे ये निधीयन्ते तेषां लोकाः सनातनाः ॥ २२ ॥
एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः ॥ बभूव स्वर्गसंप्राप्तो न्यस्तदेहो महाबलः ॥ २३ ॥
तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २४ ॥
कुञ्जरस्येव रौद्रस्य [20]राक्षसस्यास्य लक्ष्मण ॥ [21]वनेऽस्मिन्सुमहच्छ्वभ्रं खन्यतां रौद्रकर्मणः ॥ २५ ॥

ज्ञानप्रकारमाह—कौसल्येति । तात सर्वलोकजनक । त्वं कौसल्यायाः सुप्रजाः । "नित्यमसिच् प्रजामेधयोः" इत्यसिच् । इति विदितोसि । महाभागा श्रीवैदेहीत्यवगता । अयं च त्वदंशभूतो महायशाः त्वदनुवर्तनजकीर्तिमान् । लक्ष्मण इति विदितः ॥ १५ ॥ एतावत्पर्यन्तं कुतो न ज्ञातवानसीत्यत्राह—अपीति । अपिर्गर्हायां । कस्य केन शाप इत्यत्राह—तुम्बुरुरित्यादि । अहमिति शेषः ॥ १६ ॥ उपकारस्मृत्योपश्लोकयति—महायशा इति । प्रकृतिं स्वरूपं । शापनिमित्तमाह—अनुपस्थीयमान इति । रम्भासक्तं मां अनुपस्थीयमानः अवसरे मया असेव्यमानः । अत एव संक्रुद्धः राजा अस्मत्स्वामी वैश्रवणः इति उक्तप्रकारेण । राक्षसो भवेति व्याजहार । पुनर्मया प्रसाद्यमान इत्यब्रवीच्च । उक्तप्रकारेण शापावसानं चोवाचेति योजना ॥ १७—१८ ॥ स्वंभुवनं स्वर्गलोकं । उपकारस्मृत्या मङ्गलमाशास्ते—स्वस्ति व इति ॥ १९ ॥ वाचिककैङ्कर्यमातनोति—इत इति । प्रतापवान् महातपाः । अधिकमर्धं यस्य तदध्यर्धं तच्च तद्योजनं च तस्मिन् सार्धयोजन इत्यर्थः ॥२०॥ क्षिप्रं तदग्निप्रवेशात्पूर्वं । ते त्वत्तः । श्रेयः ब्रह्मलोकं । विधास्यति पोषयिष्यति । यद्वा ते श्रेयः निवासस्थानप्रवेशनादिकं । अवटे श्वभ्रे । कुशली आर्तत्राणरूपकुशलयुक्तः ॥२१॥ गतसत्त्वानां गतासूनां । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । एषः अवटप्रक्षेपः । अस्य धर्मस्य फलमाह—अवट इति ॥ २२ ॥ स्वर्गसंप्राप्तः संप्राप्तप्राय इत्यर्थः । खननानन्तरं स्वर्गप्राप्तेः ॥२३—२४ ॥ कुञ्जरस्येत्यादि श्लोकद्वयं । वैपुल्यं विधाय निम्नतां विधत्ते—प्रदरः खन्यतामिति । प्रकृष्टोदरः प्रदरः ॥२५

**ति०** त्वयाकौसल्यासुप्रजाइति त्वंविदितः कौसल्यापुत्रइतिज्ञातोसीत्यर्थः ॥ १५ ॥ **ति०** व्याजहारेत्यस्य राक्षसींतनुंप्रविशेतीति शेषः ॥ १८ ॥ **ति०** अनुपस्थानेकारणमाह—**इतीति** । उक्तंशापं तत्प्रतीकारंचोवाचेत्यर्थः । शापमुक्तिकालजानन्दपारवश्यात्पुनरुक्तिर्नदोषाय । रंभासक्तं पुरानघेतिपाठे पुनरुक्त्यभावएव ॥ १८ ॥ **स०** सते सज्जनाय तुभ्यं । तेसकाशात्स्वस्य श्रेयोविधास्यतीतिवा ॥ २१ ॥ **ति०** सनातनः परंपराप्राप्तः । अतएव कलिराक्षसेषुयवनेष्वेतद्धर्मप्रवृत्तिः ॥ २२ ॥ **ति०** बभूव तथाभवितुमुद्यतोबभूव । यद्वा बभूवेत्यर्थेनसंक्षिप्ततयोक्तस्य विस्तरमाह—**तच्छ्रुत्वेति** । अवटनिक्षेपेणस्वर्गप्राप्तिंश्रुत्वा ॥

[ पा० ] १ ग. घ. ङ. झ. ट. सुप्रजास्ताताराम. २ ख. मयात्वंविदितोधुना. क. च. छ. ज. ञ. विदितस्त्वंमयाधुना. ३ क. ख. ग. महाबलः. ४ क. अहंशापादिमां. ख.—ञ. अभिशापादहं. ५ ङ.—ट. वैश्रवणेनहि. ६ क. ग. ततः प्रकृतिसंपन्नो. ख. ततःप्रकृतिसंपन्नःपुनस्स्वर्गं. ७ इतिवैश्रवणइत्यस्मिञ्श्लोकेपूर्वोत्तरार्धयोःपौर्वापर्यं क. ङ.—ट. पुस्तकेषुदृश्यते. ८ ङ.—ट. सक्तमुवाचह. ९ ङ. झ. ञ. सक्रुद्धो. १० क. च. छ. ञ. ट. मिहशापात्. ११ क.—घ. च. छ. ज. ञ. ट. भवनं. १२ क. च. छ. ज. ञ. तेस्तु. १३ ख. वरानन. १४ क. मधिगच्छ. १५ झ. श्रेयोऽभिधास्यति. १६ ग. वापि. १७ ङ.—ट. निक्षिप्य. १८ ख. कुशलं. १९ ख. हतसत्वानां. २० क. ख. ङ. छ. ज. ञ. राक्षसस्याद्य. २१ क. च. छ. ज. ञ. महतस्सुमहच्छ्वभ्रं. ख. घ. ङ. झ. वनेऽस्मिन्सुमहाञ्श्वभ्रः.

इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति ॥ तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥२६॥
ततः खनित्रमादाय लक्ष्मणश्श्वभ्रमुत्तमम् ॥ अखनत्पार्श्वतस्तस्य विराधस्य [१]महात्मनः ॥ २७ ॥
तं मुक्त[२]कण्ठं निष्पिष्य शङ्कुकर्णं महास्वनम् ॥ विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम् ॥ २८ ॥

[३]तमाहवे निर्जित[४]माशुविक्रमौ [५]स्थिरावुभौ संयति रामलक्ष्मणौ ॥
मुदान्वितौ चिक्षिपतुर्भयावहं नदन्तमुत्क्षिप्य बिले[६] तु राक्षसम् ॥ २९ ॥
अवध्यतां प्रेक्ष्य [७]महासुरस्य तौ शितेन शस्त्रेण तदा नरर्षभौ ॥
[८]समर्थ्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ॥ ३० ॥
स्वयं विराधेन हि [९]मृत्युरात्मनः प्रसह्य रामेण [१०]वधार्थमीप्सितः ॥
निवेदितः काननचारिणा स्वयं न मे वधः शस्त्रकृतो भवेदिति ॥ ३१ ॥
[११]तदेव रामेण निशम्य भाषितं कृता मतिस्तस्य बिलप्रवेशने ॥
बिलं च [१२]रामेण बलेन रक्षसा प्रवेश्यमानेन वनं वि[१३]नादितम् ॥ ३२ ॥
प्रहृष्टरूपाविव रामलक्ष्मणौ विराधमु[१४]र्व्याः प्रदरे नि[१५]हत्य तौ ॥
ननन्दतुर्वीतभयौ महावने शिलाभिरन्तर्दधतुश्च राक्षसम् ॥ ३३ ॥
ततस्तु तौ [१६]काञ्चनचित्रकार्मुकौ निहत्य रक्षः परिगृह्य मैथिलीम् ॥

—२६ ॥ उत्तमं अतिनिम्नं । महात्मनः महाकायस्य ॥२७॥ मुक्तकण्ठं कण्ठाक्रमणरहितं । अतएव महास्वनं शङ्कुकर्णं शङ्कुः कीलं तत्सदृशकर्णं गर्दभाकारं वा । "शङ्कुकर्णौ गर्दभोष्ट्रौ" इति बाणः । भैरवस्वनं भयंकरप्रतिध्वानं यथा भवति तथानदन्तं । महास्वनमित्यत्र स्वभावोक्तिः । अत्रोच्चारणरूपकार्योक्तिरिति भिदा ॥ २८ ॥ समस्तमुक्तमेवार्थं वृत्तान्तरेण संगृह्णाति—तमाहव इत्यादिना । संयति युद्धे स्थिरौ ॥ २९ ॥ बिलप्रक्षेपनिमित्तमाह—अवध्यतामिति । महासुरस्य वृत्राद्यसुरसदृशस्य । समर्थ्य अयमेवास्य वधोपाय इतिनिश्चित्य ॥ ३० ॥ न केवलं स्वनिश्चयः विराधेन चानन्तरं तथोक्तमित्याह—स्वयमिति । काननचारिणा रामेण प्रसह्य बलात्कृत्य । आत्मनो वधार्थं स्वयमीप्सितः मृत्युः बिलप्रवेशरूपवधोपायः । न मे वधः शस्त्रकृतो भवेदित्युपायान्तरं प्रतिषिध्य स्वयं निवेदितः उक्तो हीति योजना ॥ ३१ ॥ रामेण तद्भाषितमेव निशम्य तस्य विराधस्य । बिलप्रवेशने मतिः कृता । रामेण बलेन बिलं प्रवेश्यमानेन रक्षसा वनं विनादितमिति योजना ॥ ३२ ॥ प्रहृष्टरूपौ पुलकितशरीरौ । वस्तुतो हर्षशोकावनयोर्न स्तः किंतु तन्नटनमात्रमिति इवशब्देन सूचयति॥३३॥पत्नीसहितस्य रामस्य तद्रहितस्य परतन्त्रस्य लक्ष्मणस्य चोपमानमाह—चन्द्रदिवा-

२३—२४ ॥ ति० महात्मनः गन्धर्वत्वप्रत्यापत्त्यभिप्रायेण रामस्वरूपज्ञानाभिप्रायेणच कविना महात्मनइतिप्रयुक्तंवा ॥ २७ ॥ ती० मुक्तकण्ठं श्रीरामचरणपीडनेन शिथिलीकृतकण्ठं । यद्वा श्वभ्रेक्षेपणार्थं रामेणमुक्तकण्ठाक्रमणं । नदन्तं परमेश्वरेणश्रीरामेण वधंप्राप्तोस्म्यतो धन्योहं धन्योहमिति हर्षेण नादंकुर्वन्तमित्यर्थः । शि० महास्वनं महाऽसुभिः ऊर्ध्वोच्छ्वासैः अनिति जीवतितं आसन्नमरणमित्यर्थः ॥ २८ ॥ ति० यथार्थं स्वप्रयोजनोचितं । रामेणकर्त्रा प्रसह्यस्वयं स्वस्य योमृत्युरीप्सितः तमात्मनोमृत्युं प्रसह्य उद्दिश्य । प्रपद्येतिपाठेप्ययमेवार्थः । काननचारिणा विराधेन । मेवधः शस्त्रकृतो नभवेदिति निवेदितोभूत् रामइतिशेषः ॥ ३१ ॥ ति० नीलत्वाद्रिशालत्वाच्चवनस्याकाशसादृश्यं । उभावपि चन्द्रवत्कलासंपन्नौसूर्यवत्प्रतापयुतौ ॥ ३४ ॥ इतिचतुर्थसर्गः ॥ ४ ॥

[ पा० ] १ क. ख. ग. च. छ. ज. ञ. दुरात्मनः. २ ख. ग. ङ.—ट. कण्ठमुत्क्षिप्य. ३ क. महावने. ४ ङ. झ. ञ. दारुणमाशु. ५ क. च. छ. ज. ञ. स्थितावुभौ. ६ क. ख. घ.—ट. बलेन. ७ क. महाबलस्य. ८ क.—घ. संमन्त्र्य. ९ ख. घ. ङ. च. झ. ञ. ट. मृत्युमात्मनः. १० ङ. झ. ट. यथार्थं. ११ क. च. छ. ज. ञ. तथैव. घ. निशम्य रामेणतदेवभाषितं. १२ क. ख. घ.—ट. तेनातिबलेन. १३ घ. ट. निनादितं. १४ क. ङ.—ट. मुर्व्यां. ख. ग. मुग्रं. १५ क. ङ.—ट. निपात्यतं. १६ ख. ग. कार्मुकखड्गधारिणौ.

विजह्रतुस्तौ मुदितौ महावने दिवि स्थितौ चन्द्रदिवाकराविव ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ॥ ५ ॥

विराधवनाच्छरभङ्गाश्रमसंप्रविशतारामेणरथादवरुह्यशरभङ्गेणसहसंभाषमाणस्येन्द्रस्यावलोकनम् ॥ १ ॥ तथालक्ष्मणंप्रति सपरिजनेन्द्रप्रदर्शनपूर्वकंसीतयासहतत्रैवावस्थानचोदनेनप्रत्यक्षतोपितस्येन्द्रत्वजिज्ञासयातत्समीपंप्रतिप्रस्थानम् ॥ २ ॥ रामागमनमवलोकयतेन्द्रेणशरभङ्गंप्रतितदानींस्वस्यरामसंभाषणादीनामनौचित्यनिवेदनपूर्वकंतदापृच्छनेनस्वलोकगमनम् ॥ ३ ॥ रामेणसीतालक्ष्मणाभ्यांसहशरभङ्गाभिवादनपूर्वकंतंप्रतीन्द्रागमनकारणप्रश्नः ॥ ४ ॥ शरभङ्गेणरामंप्रतितत्कारणमभिधायसुतीक्ष्णाश्रमगमनचोदनपूर्वकंतत्संनिधावग्नौशरीरविसर्जनेनब्रह्मलोकगमनम् ॥ ५ ॥

हत्वा तु तं भीमबलं विराधं राक्षसं वने ॥ ततः सीतां परिष्वज्य समाश्वास्य च वीर्यवान् ॥
अब्रवील्लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् ॥ १ ॥
कष्टं वनमिदं दुर्गं न च स्म वनगोचराः ॥ अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ॥ २ ॥
आश्रमं शरभङ्गस्य राघवोभिजगाम ह ॥ तस्य देवप्रभावस्य तपसा भावितात्मनः ॥ ३ ॥
समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥ विभ्राजमानं वपुषा सूर्यवैश्वानरोपमम् ॥ ४ ॥
अवरुह्य रथोत्सङ्गात्सकाशे विबुधानुगम् ॥ असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् ॥ ५ ॥
सुप्रभाभरणं देवं विरजोम्बरधारिणम् ॥ तद्विधैरेव बहुभिः पूज्यमानं महात्मभिः ॥ ६ ॥

---

कराविवेति ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

---

एवं विराधवनवासिमुमुक्षुमुनिजनशरणागतेरानुषङ्गिकफलभूतं विराधवधमभिधाय खरादिवधफलशरभङ्गाश्रमवासिमुनिजनशरणागतिं दर्शयिष्यन् तदुचितसौलभ्यदर्शनायशरभङ्गाश्रमवनगमनं दर्शयति पञ्चमे—हत्वेत्यादि । परिष्वज्य समाश्वास्य चेति विराधाङ्कस्पर्शजभयदुःखव्रीडाशान्त्यर्थमिति भावः ॥१॥ कष्टं कृच्छ्रं गहनं वा । "कृच्छ्रगहनयोःकषः" इत्यनिण्निष्ठा । अतएव दुर्गं विषमं विश्रमायोग्यमित्यर्थः ॥ २ ॥ तस्य विराधोक्तस्य । देवप्रभावस्य तपसा साधनेन भावितात्मनः साक्षात्कृतपरब्रह्मणः । "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतेः ॥ ३ ॥ महदद्भुतंमहाश्चर्यभूतं किमपि वस्तु । विभ्राजमानं वपुषा भ्राजमानवपुषमित्यर्थः । वैश्वानराः सूर्यव्यतिरिक्ततेजांसि । सूर्यादितेजःसमुदायोपममित्यर्थः ॥ ४ ॥ ततः किञ्चित्समीपगमनानन्तरं रथोत्सङ्गात् रथतटादवरुह्य वसुधामसंस्पृशन्तं। अभूमिस्पर्शस्य देवस्वभावत्वात् । सकाशे समीपे । विबुधानुगं विबुधा अनुगाः यस्य तं विबुधेश्वरमिन्द्रंददर्श ॥५॥ सुप्रभान्याभरणानि यस्य तं। देवं देदीप्यमानं। विरजो निर्मलं अम्बरं धर्तुं शीलमस्यास्तीति विरजोम्बरधारिणं । तद्विधैः इन्द्रतु-

---

स० कष्टं कष्टसाधनं । वयं अवनगोचराः । वनंगोचरोविषयोयेषांते वनगोचराः । ते नभवन्तीत्यवनगोचराः । नचस्मः अत्रेतिशेषः । नस्थास्यामः । अन्यत्रगच्छामइतिभावः । यद्वावनगोचरा नचस्म इतीदंवनं दुर्गंकष्टमित्यब्रवीत् ॥२॥ स० इत्युक्त्वेति शेषः । ती० तपसा सर्वेश्वरालोचनेन । भावितः वासितः आत्मा अन्तःकरणं यस्य सतथा ॥ ३ ॥ स० महदद्भुतं महतामद्भुतं। आत्त्वस्यानित्यत्वान्महांश्चासावद्भुतश्चेतिवा ॥ ति० वपुषा वपुःकान्त्या ॥४॥ स० विबुधेश्वरं ज्ञानिश्रेष्ठं । टीका० रथोत्सङ्गादाकाशे इतिपाठान्तरं । आकाशे भूमेस्समीपवर्तिनि ॥ ५ ॥ स० हरिभिरितिपाठे "त्वक्केशवालरोमाणि सुवर्णाभानियस्यतु ।

[ पा० ] १ क. विजह्रतुर्वै. २ झ. ट. अब्रवीद्भ्रातरंरामोलक्ष्मणं. ३ क. ङ.—ट. वैश्वानरप्रभं. ४ क. ख. ङ.—ट. रथप्रवरमारूढमाकाशे. ५ ख. ग. झ. संप्रभा. ६ क. ग. छ. ज. ञ. महर्षिभिः.

[1]हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ॥ [2]ददर्शादूरतस्तस्य तरुणादित्यसन्निभम् ॥ ७ ॥
पाण्डुराभ्रघनप्रख्यं चन्द्रमण्डलसन्निभं ॥ अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् ॥ ८ ॥
चामरव्यजने चाग्र्ये रुक्मदण्डे महाधने ॥ गृहीते वरनारीभ्यां [3]धूयमाने च मूर्धनि ॥ ९ ॥
गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ॥ अन्तरिक्षगतं देवं [4]वाग्भिरग्र्याभिरीडिरे[5] ॥ १० ॥
सह संभाषमाणे तु शरभङ्गेण वासवे ॥ दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मणमब्रवीत् ॥
[6]रामोऽथ रथमुद्दिश्य [7]लक्ष्मणाय प्रदर्शयन् ॥ ११ ॥
अर्चिष्मन्तं श्रिया जुष्टमद्भुतं पश्य लक्ष्मण ॥ प्रतपन्तमिवादित्यमन्तरिक्षगतं रथम् ॥ १२ ॥
ये हयाः पुरुहूतस्य पुरा शक्रस्य नः श्रुताः ॥ अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥ १३ ॥
इमे च पुरुषव्याघ्रा ये तिष्ठन्त्यभितो [8]रथम् ॥ शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १४ ॥
विस्तीर्णविपुलोरस्काः परिघायतबाहवः ॥ [9]शोणांशुवसनास्सर्वे व्याघ्रा इव दुरासदाः ॥ १५ ॥
उरोदेशेषु सर्वेषां हारा ज्वलनसन्निभाः ॥ रूपं बिभ्रति सौमित्रे पञ्चविंशतिवार्षिकम् ॥ १६ ॥
एतद्धि किल देवानां वयो भवति नित्यदा ॥ [10]यथेमे पुरुषव्याघ्रा दृश्यन्ते [11]प्रियदर्शनाः ॥ १७ ॥

---

त्याकारैः । ददर्शेत्यनुषङ्गः ॥ ६ ॥ हरिभिः श्यामैः । यद्वा वाजिभिः वेगवद्भिः हरिभिः अश्वैः । तस्य इन्द्रस्य ॥ ७ ॥ पाण्डुराभ्रस्येव घना अधिका प्रख्या कान्तिर्यस्य तदिति श्वैत्ये दृष्टान्तः । चन्द्रमण्डलसन्निभमिति वृत्ततायां । चित्रमाल्यैर्लम्बमानकुसुमसरैः उपशोभितं ॥ ८ ॥ चामरव्यजने चामररूपव्यजने । महाधने बहुमूल्ये । मूर्धनि तस्येति शेषः । अपश्यदित्यनुषङ्गः ॥ ९ ॥ ईडिरे तुष्टुवुः । ईडमानानपश्यदित्यर्थः ॥१०॥ सहेत्यादिसार्धःश्लोक एकान्वयः । तत्र तदानीं । राम इति पदस्यावृत्तिःक्रियाभेदात् । अतो न पुनरुक्तिः । उद्दिश्य हस्तेन निर्दिश्य शरभङ्गेण साकं वासवे संभाषमाणे सति तत्र समये रामः शतक्रतुं दृष्ट्वा तदीयरथं रामः लक्ष्मणाय उद्दिश्य प्रदर्शयन् सन् अथ लक्ष्मणमब्रवीदिति योजना ॥ ११ ॥ अर्चिष्मन्तं सतेजस्कं । श्रिया कान्त्या ॥ १२ ॥ पुरुहूतस्य । यज्वभिर्बहुशो हूतस्य । नः अस्माभिः । इमे हरितवर्णाः । हरयः अश्वाः ते । यद्वा त इमे शक्रस्य हरय इत्यन्वयः ॥ १३ ॥ इमे चेत्यादिश्लोकत्रयमेकं वाक्यं । शतं शतमिति प्रतिदिशमिति शेषः ॥ १४ ॥ विस्तीर्णविपुलोरस्काः अत्यन्तविशालोरस्काः । शोणांशुवसनाः रक्तकान्तियुक्तवस्त्राः । एवंभूता य इमे तिष्ठन्तीत्यन्वयः ॥ १५ ॥ येषां सर्वेषामुरोदेशेषु हाराः ज्वलनसन्निभाः अग्निवच्छुक्लभास्वराः दृश्यन्ते । रूपमित्यत्रापि ये इत्यध्याहार्यं । पञ्चविंशतिः वर्षाः परिमाणमस्य पञ्चविंशतिवार्षिकं । "तदस्य परिमाणं" इति ठक् । "वर्षस्याभविष्यति" इत्युत्तरपदवृद्धिः । एवंभूतं रूपं शरीरं ये बिभ्रति "अदभ्यस्तात्" इत्यदादेशः । पञ्चविंशतिवार्षिकमिति यौवनावस्थोच्यते । "कौमारं स्यात्पञ्चदशाद्यौवनं तु ततः परं" इत्युक्तेः । त इमे सुरा इत्यध्याहार्यम् ॥ १६ ॥ तत्रयुक्तिमाह —एतद्धीति । एतत् पञ्चविंशतिवार्षिकं । वयः शरीरावस्था । देवानां नित्यदा भवतिं । नित्यदेति निपातः । किलेति प्रसिद्धौ । यथेमे वसनाभरणादिभिश्चारुदर्शनाः

---

हरिस्सवर्णतोश्वस्तुपीतकौशेयसप्रभः" इतिशालिहोत्रोक्तेर्हरिशब्दार्थोज्ञेयः ॥ ७ ॥ **स०** पाण्डुराश्वते अभ्रेविद्यमानघनाश्च तैः प्रख्या सादृश्यं यस्यतं । पाण्डुराभ्रेषुमेघेषु येघनाश्श्रेष्ठास्तत्प्रख्यमितिवा ॥ ८ ॥ **ति०** महाधने रत्नयुतत्वाद्बहुमूल्ये । चामरव्यजने चामरं वालनिर्मितं । व्यजनं मयूरपिच्छनिर्मितं । धूयमाने प्रकंप्यमाने ॥ ९ ॥ **ति०** तं शतक्रतुं दृष्ट्वा ज्ञात्वा । रामो ब्रवीत् । उक्तस्यैवप्रपञ्चः **रामोथेति** । दर्शयत अदर्शयतेत्यर्थः ॥ ११ ॥ **ती०** शतशब्दोत्रानेकवाची ॥ १४ ॥ **ती०** शोणाश्मवसनाः

**[ पा० ]** १ ङ. झ. ञ. ट. हरितैः. २ क. घ. च. छ. ज. ञ. ददर्शदूरतः. ३ क. धूयमानेतु. ४ ङ. झ. ट. गीर्भिः. ५ क. च. छ. ज. रस्तुवन्. ङ. झ. रैडयन्.. ६ क. च. छ. ज. ञ. रामोपि. ७ क- ङ.—ट. भ्रातुर्दर्शयताद्भुतं. ८ ङ. झ. ट. दिशं. ९ ग. घ. च. छ. ज. ञ. शोणाश्मवसनाः. ख. शोणाश्ववसनाः. १० क. च. छ. ज. ञ. यइमे. ११ च. छ. ज. ञ. शुभदर्शनाः.

इहैव सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण ॥ यावज्जानाम्यहं व्यक्तं क एष द्युतिमान्रथे ॥ १८ ॥
तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति ॥ अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ १९ ॥
[1]ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः ॥ शरभङ्गम[2]नुप्राप्य विविक्त इदमब्रवीत् ॥ २० ॥
इहोपयात्यसौ रामो यावन्मां नाभिभाषते ॥ निष्ठां [3]नयतु तावत्तु ततो मां द्रष्टुमर्हति ॥ २१ ॥
[ [4]तावद्गच्छामहे शीघ्रं यावन्मां नाभिभाषते ॥ २२ ॥ ]
[5]जितवन्तं [6]कृतार्थं च [7]द्रष्टाऽहमचिरादिमम् ॥ कर्म ह्यनेन कर्तव्यं [8]महदन्यैस्सुदुष्करम् ॥
निष्पादयित्वा तत्कर्म ततो मां द्रष्टुमर्हति ॥ २३ ॥
[9]इति वज्री तमामन्त्र्य [10]मानयित्वा च तापसम् ॥ रथेन [11]हरियुक्तेन ययौ दिवमरिन्दमः ॥ २४ ॥
प्रयाते तु सहस्राक्षे [12]राघवस्सपरिच्छदम् ॥ अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ॥ २५ ॥
तस्य [13]पादौ च संगृह्य रामः सीता च लक्ष्मणः ॥ निषेदुस्[14]समनुज्ञाता लब्धवासा निमन्त्रिताः ॥२६॥
ततः शक्रो[15]पयानं तु [16]पर्यपृच्छत्स राघवः ॥ शरभङ्गश्च तत्सर्वं राघवाय न्यवेदयत् ॥ २७ ॥

तथा किल देवा इति योजना ॥ १७ ॥ रथे इत्यनेन तदानीं रामं दृष्ट्वा रथमारूढ इत्यवगम्यते । यावज्जानामि ज्ञास्यामि। "यावत्पुरानिपातयोर्लट्"इति लट्। व्यक्तं अनुमितिं विना स्पष्टं प्रत्यक्षेण ज्ञास्यामीत्यर्थः ॥ १८ ॥ विरहासहिष्णुतया अनुव्रजन्तं लक्ष्मणं पुनः प्रदिश्य जगामेत्याह—तमेवमिति ॥ १९ ॥ अनुप्राप्य एकान्तवचनश्रवणाय समीपमागत्य । विविक्ते रहसि । वक्ष्यमाणस्यातिगोप्यत्वात् ॥ २० ॥ असौ रामः इह मत्समीपे । उपयाति । उपयानसौ यावति काले मां नाभिभाषते तावत्स्वप्रतिज्ञां निष्ठां समाप्तिं नयतु। "निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः। मया असंभाषमाण एव स्वप्रतिज्ञां निर्वर्तयतु मया संभाषणेऽस्मद्देवत्वप्रकटनं स्यादिति भावः । संभाषणाभावेपि दर्शनमस्त्वित्यत आह—तत इति । ततः स्वप्रतिज्ञानिष्ठानयनानन्तरं । मां द्रष्टुमर्हति स मां पश्यतु ॥ २१—२२ ॥ भवांस्तं पश्यत्वित्यत्राह—जितवन्तमिति । रावणं जितवन्तं अतएव कृतार्थं कृतदेवप्रयोजनं इममहमचिराद्द्रष्टा द्रष्टास्मि । दर्शनसंभाषणाभ्यां देवत्वप्रकटने का हानिरित्यत्राह—कर्मेति । हि यस्मादन्यैर्देवैर्दुष्करं महत्कर्म रावणवधादिकं । अनेन मानुषवेषेण कर्तव्यं तस्मादित्यर्थः ॥ २३ ॥ इति उक्तप्रकारेण तापसं तापसवेषं। मानयित्वा बहुमान्य । तं शरभङ्गमामन्त्र्य । हरियुक्तेन अश्वयुक्तेन रथेन दिवं ययौ ॥ २४ ॥ प्रयाते त्विति रामागमनोद्योगकाल एवेन्द्रस्य प्रयातत्वात् । सपरिच्छदं स्त्रीभ्रातृरूपपरिवारसहितं यथा भवति तथा । अग्निहोत्रं वह्निं । उपासीनं तत्रप्रवेशार्थमुपतिष्ठन्तं । शरभङ्गमुपागमत्॥२५॥ समनुज्ञाताः आसनाय कृतानुमतिकाः । लब्धवासाः मुनितो लब्धासनाः । ततो निमन्त्रिताः सत्कृताश्च सन्तः निषेदुः ॥२६॥ शक्रो-

पद्मरागसदृशवसनाः ॥ **टीका०** शोणाश्ववसनाइतिपाठे शोणा अश्वा वसनानिच येषांते ॥ १५ ॥ **ति०** अनुज्ञाप्य गमनाय कृतानुमतिकंकृत्वा ॥ २० ॥ **ति०** यावदसौ मां नाभिभाषते तावन्मां निष्ठां स्थानान्तरं स्वर्गंवा नयत मयासहगच्छत । ततो वनचारित्वाद्धेतोः मा मां अद्रष्टुमर्हति द्रष्टुं नार्हतीत्यर्थः । अइतिनिषेधार्थमव्ययं पृथक्पदं । विपदीवस्थितेन एवंवैभवस्य दर्शनमनुचितमितिभावः ॥ २१ ॥ **ति०** कृतार्थं निस्तीर्णविपदं। तदावैभवयुक्तमिमं द्रक्ष्यामीतिशेषः । कतकस्त्वेतत्पद्यं प्रक्षिप्तमित्याह। तद्वृथैव मद्रीत्याव्याख्याने सर्वसामञ्जस्यात् । **शि०** जितवन्तं कृतरावणवधमित्यर्थः । अहं द्रष्टास्मीतिशेषः । एतेन रामसंभाषणे सति रावणः कोपंकर्तेतीन्द्रस्यभीतिर्व्यञ्जिता ॥ **स०** जितवन्तमिति । अनेन रामेण अन्यैस्सुदुष्करंकर्म रावणहननरूपंकर्तव्यं । जितवन्तं तत्कर्मप्राप्तिमन्तं । जिःप्राप्त्यर्थकः । स्वर्जितइत्यादौ तथात्वात् । कृतार्थं पूर्णं ॥२३॥ **स०** सपरिच्छदः धनुर्बाणसहि-

**[ पा० ]** १ ख. ततस्तमभि. २ क.—ट. मनुज्ञाप्यविबुधानिदं. ३ क.—ट. नयत. ४ इदमर्धं क. च. छ. ज. पुस्तकेषुदृश्यते. ५ घ. जीवितंच. ६ ङ. झ. ट. कृतार्थंहि. ७ ङ. झ. ट. तदाहं. क. च. छ. ज. ञ. दिष्ट्याद्रक्ष्याम्यहंहरिं. ८ ख. ग. मन्यैर्दुरासदं. ९ ङ. झ. ट. अथ. १० घ. मानयित्वातु. ११ ङ. झ. ट. हययुक्तेन. १२ ख. घ. ङ. झ. ञ. ट. सपरिच्छदः. क. च. छ. ज. सपरिच्छदे. १३ क. पादौतु. १४ क. ङ. च. ज.—ट. स्तदनुज्ञाताः. १५ क. ख. च. छ. ज. ञ. यानंतत्. १६ ध. झ. पर्यपृच्छत.

**मामेष वरदो राम ब्रह्मलोकं निनीषति ॥ जितमुग्रेण तपसा दुष्प्रापमकृतात्मभिः ॥ २८ ॥**
**अहं ज्ञात्वा नरव्याघ्र वर्तमानमदूरतः ॥ ब्रह्मलोकं न गच्छामि त्वामदृष्ट्वा प्रियातिथिम् ॥ २९ ॥**
**त्वयाऽहं पुरुषव्याघ्र धार्मिकेण महात्मना ॥ समागम्य गमिष्यामि त्रिदिवं देवसेवितम् ॥ ३० ॥**
**अक्षया नरशार्दूल मया लोका जिताश्शुभाः ॥ ब्राह्म्याश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् ॥३१॥**
**एवमुक्तो नरव्याघ्रः सर्वशास्त्रविशारदः ॥ ऋषिणा शरभङ्गेण राघवो वाक्यमब्रवीत् ॥ ३२ ॥**
**अहमेवाहरिष्यामि सर्वलोकान्महामुने ॥ आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ ३३ ॥**
**राघवेणैवमुक्तस्तु शक्रतुल्यबलेन वै ॥ शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः ॥ ३४ ॥**

पयानं इन्द्रागमननिमित्तं ॥ २७ ॥ कथं न्यवेदयदित्यत्राह—मामिति । सर्वेषां वरं ददातीति वरदः एष इन्द्रः मां ब्रह्मलोकं निनीषति नेतुमिच्छति । ब्रह्माज्ञयेति शेषः ॥ २८ ॥ तर्हि किमर्थं न गतोसीत्यत्राह—अहमिति । हे नरव्याघ्र अदूरतो वर्तमानं मनसि सदा सन्निहितं त्वां योगतो ज्ञात्वा प्रियातिथिं त्वामदृष्ट्वा त्वदनुभवानन्दं विहाय ब्रह्मलोकं आब्रह्मभवनाल्लोकाः पुनरावर्तिन इत्युक्तलोकं न गच्छामि ॥ २९ ॥ तर्हि केन साधनेन कं लोकं गमिष्यसीत्यत्राह—त्वयेति । धार्मिकेण धर्मस्वरूपेण । स्वार्थे ठक् । महात्मना सत्यसंकल्पेन त्वया समागम्य त्वत्कटाक्षविषयो भूत्वा । देवसेवितं "यत्र पूर्वे साध्याः सन्ति देवाः" इत्युक्तरीत्या नित्यसूरिसेवितं । त्रिदिवं त्रिपाद्विभूतिं ब्रह्मलोकादुत्कृष्टं । गमिष्यामि ब्रह्मलोकं न गच्छामि । त्रिदिवं गमिष्यामीत्यनेनायमर्थोवगम्यते ॥ ३० ॥ क्रमेण तथा भविष्यति आर्जितकर्मफलानि प्रथममनुभवेत्यत आह—अक्षया इति । ब्राह्म्याः ब्रह्मलोकभवाः । नाकपृष्ठ्याः स्वर्गलोकभवाः । अक्षयाः चिरकालस्थायिनः । ये लोकाः भोगभूमयः मया आर्जिताः तान्मामकान् प्रतिगृह्णीष्व मत्कृतानि सर्वाणि सुकृतानि त्वदर्पितानि सन्त्विति भावः । सर्वत्रातिथिसत्कारः प्रातीतिकोर्थः । कर्मणां भगवदर्पणं नाम फलसङ्गत्यागकर्तृत्वत्यागपूर्वकं भगवत्कैङ्कर्यतयानुष्ठानं ॥३१—३२ ॥ तदिदमङ्गीकुर्वन् तस्य वाचिककैङ्कर्यं नियमयति—अहमेवेति । आहरिष्याम्येव स्वीकरिष्याम्येव । सर्वलोकान् त्वया मय्यर्पितान् । इह कानने प्रदिष्टं त्वया निर्दिष्टं । आवासं त्विच्छामि तुशब्देन त्वदभिमतदेश एव वास इत्युच्यते । "सा काशीति न चाकशीति भुवि साऽयोध्येति नाध्यास्यते" इत्यादिकमिहानुसंधेयम् ॥ ३३ ॥ महाप्राज्ञ इत्यनेन

तः ॥ २५ ॥ **ति॰** रामस्तस्यपादौसंगृह्येति । रामस्येश्वरावतारत्वेपि क्षत्रियरूपेणावतीर्णत्वात् "यद्यदाचरतिश्रेष्ठः" इतिन्यायेन क्षत्रियमर्यादांप्रवर्तयतीतिसूचितं ॥ **ती॰** हेनरव्याघ्र पुरुषोत्तम अदूरतोवर्तमानं बहुकालंमनसाध्यातं अधुनाममभाग्यवशेन बाह्येप्यदूरेवर्तमानं प्रियातिथिं प्रियाअतिथयोभक्तायस्यतं त्वामदृष्ट्वा ब्रह्मलोकं नगच्छामि नगमिष्यामीत्यर्थः ॥ **स॰** प्रियातिथिमित्यनेन ब्रह्मलोकापेक्षया रामदर्शनस्यानश्वरेष्टसाधनत्वंद्योतयति ॥ २९ ॥ **ती॰** महात्मना महान् जगदाधारः आत्मा मूर्तिर्यस्य तेनत्वया ॥ **ति॰** त्वत्समागमश्च सकृदपिसंवृत्तः एतावत्कालपर्यन्तानुष्ठितोपासनातोऽधिकफलदइतिभावः ॥३०॥ **तनि॰** ब्राह्म्याः ब्रह्मलोकभवाः भोगप्रदेशविशेषाः । नाकपृष्ठ्याः स्वर्गलोकभवाः भोगप्रदेशविशेषाः । उभयत्र "दिगादिभ्योयत्" इतियत् । प्रतिगृह्णीष्वमामकानिति सर्वेश्वरेफलसमर्पणाभिप्रायेणोक्तं । अतिथिसत्कारविवक्षा प्रातीतिकी । उत्तरत्र "मत्प्रसादात्सभार्यस्त्वं विहरस्व सलक्ष्मणः" इतीदमपि फलसमर्पणाभिप्रायमेव । **ति॰** तान्प्रतिगृह्णीष्व स्वकृतत्वेनाङ्गीकुरुष्व । अनेन सर्वकर्मणां भगवदर्पणमकरोदितिसूचितं । "कामतोकामतोवापियत्करोमिशुभाशुभम् । तत्सर्वंत्वयिसंन्यस्तंत्वत्प्रयुक्तःकरोम्यहम् । नाहंकर्तासर्वमेतद्ब्रह्मैवकुरुतेतथा । एतद्ब्रह्मार्पणंप्रोक्तमृषिभिस्तत्वदर्शिभिः". इतिकौर्मोक्तिः यैर्जिताः भवत्कृपया स्वप्राप्तियोग्याः कृतास्तान्मामकाँल्लोकान् त्वंप्रतिगृह्णीष्व स्वकीयत्वेन जानीहि । एतेन तल्लोकेरघुनाथागमनंप्रार्थितमितिसूचितं ॥३१॥ **ति॰** अहमे वेति । तपसेत्यर्थः त्वद्दत्तप्रतिग्रहे नाहमधिकारीत्यापाततोर्थः । वास्तवस्तु ऋषेः परमभक्तस्यानुग्रहाय तदर्पितधर्माङ्गीकारमाहभगवान्—**अहमेवेति** ॥ मयिन्यासत्वेनस्थापितानिमांस्त्वदर्जितान्सर्वलोकांस्तुभ्यमहमेवाहरिष्यामि प्रापयिष्यामीत्युक्त्वेतरजरनप्रतारणायाह—**आवासंत्विति । तनि॰** अहमेवाहरिष्यामि संपादयामि प्रदास्यामीत्यर्थः । "इष्टापूर्तंबहुधाजातंजायमानंविश्वंबि-

**[ पा॰ ]** १ ख. घ. मजितात्मभिः. २ घ. त्वांदृष्ट्वाच. ३ ङ. झ. ट. चावरंपरं. ४ क. ङ.—ट. जितालोकामयाशुभाः. ख. मयालोकाःशुभाजिताः. ५ ग. ब्राह्म्यांस्तु. ६ ग. रामतान्. ७ च. छ. ज.ञ. शास्त्रविदांवरः. ८ ख. ग. स्वर्यंलोकान्. झ—ट. सर्वाल्लोकान्. ९ ख. निर्दिष्टमिह. १० क. बलेनतु.

इह राम [1]महातेजास्सुतीक्ष्णो नाम धार्मिकः ॥ वसत्यरण्ये [2]धर्मात्मा स ते [3]श्रेयो विधास्यति ॥ ३५ ॥
सुतीक्ष्णमभिगच्छ त्वं [4]शुचौ देशे [5]तपस्विनम् ॥ रमणीये वनोद्देशे स ते वासं विधास्यति ॥ ३६ ॥
इमां मन्दाकिनीं राम प्रतिस्रोतामनु[6]व्रज ॥ नदीं [7]पुष्पोडुपवहां तत्र[8] तत्र गमिष्यसि ॥ ३७ ॥
एष पन्था नरव्याघ्र मुहूर्तं [9]पश्य तात माम् ॥ [10]यांवज्जहामि गात्राणि जीर्णां त्वचमिवोरगः ॥ ३८ ॥
[11]ततोग्निं सुसमाधाय हुत्वा चाज्येन [12]मन्त्रवित् ॥ शरभङ्गो [13]महातेजाः प्रविवेश हुताशनम् ॥ ३९ ॥
तस्य रोमाणि केशांश्च [14]ददाहाग्निर्महात्मनः ॥ जीर्णां [15]त्वचं तथाऽस्थीनि यच्च [16]मांसं सशोणितम् ॥ ४० ॥
रामस्तु विस्मितो भ्रात्रा भार्यया च सहात्मवान् ॥ ४१ ॥
स च पावकसंकाशः कुमारः समपद्यत ॥ उत्थायाग्नि[17]चयात्तस्मा[18]च्छरभङ्गो व्यरोचत ॥ ४२ ॥
स लोकानाहिताग्नीनामृषीणां [19]च महात्मनाम् ॥ देवानां च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४३ ॥

---

मृगरूपमारीचनिरसनं मनसि कृतवानिति सूचयति ॥ ३४ ॥ धार्मिकः धर्मचारी । धर्मात्मा धर्मबुद्धिः । वसति अदूर इति शेषः ॥ ३५—३६ ॥ मन्दाकिनीशब्दः पुण्यनदीमात्रे मुनिभिरुपचर्यते । अतएव चित्रकूटेप्युक्तं । प्रतिस्रोतामिति टाबार्षः । प्रतिस्रोतसं कृत्वाऽनुसृत्य व्रज नद्यां पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति । पुष्पोडुपवहां उडुपः प्लवः उडुपाकारपुष्पचयावहामित्यर्थः । नदीं तत्र तत्र गमिष्यसीत्यनेन क्वचिन्नदीतीरे क्वचिद्व्यवहिते च मार्ग इत्युच्यते ॥ ३७ ॥ अनयोक्त्या सुतीक्ष्णाश्रममार्गो हस्तेन निर्दिश्यते । अथ मुनिः स्वदेहत्यागकाले रामसन्निधानमर्थयते—मुहूर्तं पश्य तात मामिति तात सर्वलोकजनक ॥ ३८ ॥ मन्त्रवित् ब्रह्ममेधमन्त्रवित् शरभङ्गः अग्निं सुसमाधाय परिस्तरणादिभिरलंकृत्य । आज्येन ब्रह्ममेधमन्त्रैर्हुत्वा हुताशनं प्रविवेश । अत्र विधिः "यद्युत्कण्ठा तदावाप्तौ ब्रह्ममेधानलं व्रजेत् । नाभिवक्त्रास्यगानग्नीनवरोप्य यथास्थलम् ॥ संस्कारयेत्" इति ॥ ३९—४१ ॥ अथास्य देवयानमार्गेण ब्रह्मलोकप्राप्तिं दर्शयति—सचेत्यादिना । कुमारलक्षणमुक्तं रत्नाकरे "बालोथ पञ्चदशभिस्त्रिंशद्भिस्तु कुमारकः" इति ॥ ४२ ॥ ब्रह्मलोकं "तेर्चिषमभिसंभवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति" इत्युक्तं ब्रह्मात्मकं लोकं ॥ ४३ ॥

---

भर्तिभुवनस्यनाभिः" इतिश्रुतेः । "लभतेचततःकामान्मयैवविहितान्हितान्" इति भगवदुक्तेश्च ॥ ३३ ॥ **ति०** मन्दाकिनीं तामिवपुण्यां तन्नामिकांवा चित्रकूटस्थेयमेव । पुष्पवल्लघूडुपवहां ॥ **स०** पुष्पाणिच नौकादीनिच वहतीति तां ॥ **शि०** प्रतिस्रोतां देवादिभिः प्रतिस्रोतस्त्वंप्रापितां पश्चिमाभिमुखं वाहितामित्यर्थः । मन्दाकिनीं तदवयवभूतामल्पधारां नदीं ॥ ३७ ॥ **ती०** तात जगज्जनक मांपश्य अयंकृतार्थोभवत्विति करुणाकटाक्षेणेतिशेषः । गात्राणीत्यवयवाभिप्रायेण । वृद्धश्शौचक्रियाल्लुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनादि(म्बु)भिः ॥" इति वचनाच्छरभङ्गस्याग्निप्रवेशस्समञ्जसइति ॥ **स०** जुहोमि अग्नावितिशेषः ॥ ३८ ॥ **ति०** वह्निः ददाहेतिशेषः ॥ ४० ॥ **ति०** आहिताग्निलोकाः कर्मणा पितृलोकइति श्रुताश्चन्द्रप्रदक्षिणाः ऋषिलोकाः । "विद्ययादेवलोकः" इति श्रुतास्सूर्यप्रदक्षिणाः । देवानां आजानदेवानां ब्रह्मविष्णुरुद्राणांच लोकाः यान्ध्रुवःप्रदक्षिणीकरोति । ततोब्रह्मलोकंतुर्यं । व्यरोहत आरूढवान् । **स०** ऋषीणां कश्यपादीनां । ब्रह्मलोकं भगवद्धारत्वेनेत्यर्थः । "स्वगतिंतथादात्" इत्याचार्योक्तेः ॥ ४३ ॥

**[ पा० ]** १ क. महाप्राज्ञः. २ ङ. झ. ट. नियतः. ३ ख. ग. वासं. ४ घ. शुचिदेशे. ५ क. छ. तपस्विनां. ६ क. च. छ. ज. ञ. मभिव्रज. ७ ख. पुष्पोत्करवहां. ८ क. ख. ग. ज.—ञ. ततस्तत्र. ९ क. छ. ज. पश्यतांतु. १० ठ. यावज्जुहोमि. ११ क. ख. ग. ङ. झ. ढ. ततोऽग्निंस. छ. ज. ञ. ततोवह्निंसमाधाय. १२ ग. ङ. झ. ञ. ट. मन्त्रवत्. १३ क. च. छ. ज. ञ. महाप्राज्ञः. १४ ङ. झ. ट. तदावह्निः. १५ क. ग. च. छ. ज. ञ. त्वचमथा. झ. त्वचंतदस्थीनि. १६ ध. झ. मांसंच. १७ क. चितात्. १८ ग. च्छरभङ्गोप्यरोचत. १९ क. च. छ. ज. ञ. च. सुकर्मणां. ख. ग. भावितात्मनां.

स पुण्यकर्मा भवने द्विजर्षभः पितामहं सानुचरं ददर्श ह ॥
पितामहश्चापि समीक्ष्य तं द्विजं ननन्द सुस्वागतमित्युवाच ह ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ॥ ६ ॥

शरभङ्गाश्रमेमुनिगणैःश्रीरामंप्रतिराजधर्मकथनपूर्वकंस्वेषांराक्षसकृतपीडानिवेदनेनतद्वधप्रार्थनम् ॥ १ ॥ रामेणसबहुमानंतेभ्योऽभयप्रदानपूर्वकंसुतीक्ष्णाश्रमंप्रतिप्रस्थानम् ॥ २ ॥

शरभङ्गे दिवं याते मुनिसङ्घाः समागताः ॥ अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥ १ ॥
वैखानसा वालखिल्यास्संप्रक्षाला मरीचिपाः ॥ अश्मकुट्टाश्च बहवः पत्राहाराश्च धार्मिकाः ॥ २ ॥
दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे ॥ गात्रशय्या अशय्याश्च तथैवाभ्रावकाशकाः ॥ ३ ॥

अत्र पितामहशब्दोपि सविग्रहपरमात्मपरः । सर्वमिदं शरभङ्गस्य रामसान्निध्यप्रतीक्षया व्यज्यते । अस्मिन्सर्गे चतुश्चत्वारिंशच्छ्लोकाः ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

एवं खरवधार्थिमुनिजनशरणागतिं वक्तुं तदुपयोगितया रामस्य समर्थकारुणिकत्वमुक्त्वा अथ तच्छरणागतिं वक्तुमुपक्रमते—शरभङ्ग इत्यादि । शरभङ्गे दिवं यात इति कालप्रदर्शनं सुतीक्ष्णादीनां विद्यमानत्वात् । समागताः संमिलिताः ॥ १ ॥ वैखानसा इत्यादि । "ये नखास्ते वैखानसाः ये-वालास्ते वालखिल्याः" इत्युक्तरीत्या भगवन्नखरोमजाता ऋषयः । सदाशरीरं संप्रक्षालयन्तीति संप्रक्षालाः । मरीचींश्चन्द्रसूर्यादिकिरणान् सदा पिबन्तीति मरीचिपाः । सदाऽन्तःकिरणान् प्रवेशयन्तः विवृतास्या इत्यर्थः । अश्मभिरात्मशरीराणि कुट्टन्तीत्यश्मकुट्टाः । पत्राहाराः पर्णाशनाः ॥ २ ॥ दन्ता एवोलूखलं तदेषामस्तीति दन्तोलूखलिनः दन्तैरेव व्रीह्यादितुषनिर्मोकंकृत्वा भक्षयन्तइत्यर्थः । उन्मज्जकाः शिरोमात्रमुद्धृत्य सदा जलावगाढाः । गात्रमेव शय्या येषां ते गात्रशय्याः । उरसि पृष्ठेंऽसयोर्वा शिरः कृत्वा शयाना इत्यर्थः । अतो न स्थण्डिलशायिन इत्यनेन पुनरुक्तिः । अशय्याः अनम्रगात्रा इत्यर्थः । अभ्रावकाशकाः

**ति०** पितामहं ब्रह्मादित्रयसमष्टिरूपं ॥ ४४ ॥ इतिपञ्चमस्सर्गः ॥ ५ ॥
**ती०** मुनिसंघाः काकुत्स्थं ककुत्स्थान्वयेऽवतीर्णं । रामं " रमन्तेयोगिनोऽनन्ते " इतिश्रुतेः परंब्रह्म । अभ्यगच्छन्त द्रष्टुं किंचिद्विज्ञापयितुंचेतिशेषः । अयंभावः—स्वप्रकाशंपरंब्रह्मैव ककुत्स्थान्वयेऽवतीर्णं सद्भाग्यवशेनास्मद्दृष्टिगोचरोऽभूत् । अतोस्मत्तपोदानादिकमद्य फलितमिति दर्शनानन्देन कृतार्थीभवितुं निर्धनस्यधनलाभेयथा तद्वदानन्दनिर्भरामुनिसंघा नानादिग्भ्यस्समागताइति ॥ १ ॥ **ती०** वैखानसादयस्तपोविशेषलब्धसंज्ञास्तापसविशेषाः । यद्वा विखनसमुनिनाप्रोक्तंसूत्रमधिकृत्य तन्मार्गानुसारिणो वैखानसाः । वालखिल्यास्तु नवेऽन्नेलब्धे पूर्वसंचितत्यागिनः । संप्रक्षालास्तु भगवतःश्रीपादप्रक्षालनजाता महर्षयः । यद्वा प्रत्यहं जीवनसाधनंसंपाद्य सर्वतद्विनियुज्यवर्तन्ते ये ते वा संप्रक्षालाः । अश्वस्तनिकाइत्यर्थः । अश्मकुट्टास्तु भक्षणार्थंप्रियंगवादीनश्मन्येवकुट्टयन्तीतितथा । अश्मकुट्टाः अपक्वकुट्टितान्नभक्षकाः ॥ **स०** विखनसःप्रजापतेर्जातावैखानसाः । विखनसाप्रोक्तंसूत्रमधीयन्ते वैखानसाइतिवा । "तेनप्रोक्त"मित्यणन्तात् "तदधीते—" इत्यणि तस्य "प्रोक्ताल्लुक्" इतिलुक् अनुशतिकादिनिवेशादुभयपदवृद्धिः । संप्रक्षालाः निरन्तरं भक्ष्यप्रक्षालितोदकोपजीविनोवा संप्रक्षालितपात्रावा अश्वस्तनिकाइतियावत् । अश्मकुट्टकाः कुट्टिताश्मभक्षकाः ॥ २ ॥ **ती०** उन्मत्तकाइतिपाठे उद्गतः मत्तोमात्सर्यं येषां ते तथा । स्वार्थेकः । यद्वा ज्ञानिनः बालोन्मत्तपिशाचवदितिस्मरणात्तथा । ये कदाचिदपि नशेरते ते अशय्याः । अभ्यवकाशिनइतिपाठे अभ्यवकाशिनः सदाजाग्रत्स्वभाविनः । **स०** उन्मज्जकाः सदास्नानपराः उपदेशादिनेतरमज्जकावा । अनवकाशकाः सर्वदाभगवदुपासनेनेतरव्यासंगार्थमवकाशरहिताः । **ति०** अनवकाशिकाः एकपादस्य स्थित्यवकाशदानरहिताः । एकपादस्थितिमन्तइतियावत् । **शि०** गात्रशय्याः गात्रावयवानि

**[ पा० ]** १ ङ.—ट. भुवने. २ घ. झ. मित्युवाच. ३ क.—ट. प्राप्ते. ४ ग. घ. ङ. छ. झ. ट. तापसाः. ५ घ. गतशय्याश्चआर्याश्च. ६ ङ. झ. ट. तथैवानवकाशिकाः.

मुनयः सलिलाहारा वायुभक्षास्तथा परे ॥ आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ ४ ॥
[1]व्रतोपवासिनो दान्तास्तथाऽऽर्द्रपटवाससः ॥ सजपाश्च [2]तपोनित्यास्तथा पञ्चतपोऽन्विताः ॥ ५ ॥
सर्वे ब्राह्म्या श्रिया [3]जुष्टा [4]दृढयोगाः समाहिताः ॥ शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः ॥ ६ ॥
[5]अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् ॥ ऊचुः परमधर्मज्ञमृषिसङ्घाः [6]समाहिताः ॥ ७ ॥
[7]त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च [8]महारथ ॥ प्रधान[9]श्चासि नाथश्च देवानां मघवानिव ॥ ८ ॥
वि[10]श्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ॥ [11]पितृभक्तिश्च सत्यं च त्वयि [12]धर्मश्च पुष्कलः ॥ ९ ॥
त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् ॥ अर्थित्वान्नाथ वक्ष्यामस्तच्च नः क्षन्तुमर्हसि ॥ १० ॥

वर्षवातातपादिष्वप्यनावृतदेश एव वर्तमानाः ॥ ३ ॥ सलिलाहाराः सलिलमात्राहाराः । वायुभक्षाः वायुमात्रभक्षाः । आकाशे वृक्षाग्रादौ निलीयन्तइत्याकाशनिलयाः । स्थण्डिले कुशाद्यास्तृतभूतले शेरत इति स्थण्डिलशायिनः ॥ ४ ॥ व्रतोपवासिनः व्रतोपवासनिरताः । सर्वाहारशून्या इत्यर्थः । आर्द्रपटवाससः आर्द्रपटवसनशीलाः । सजपाः सदाजपशीलाः । तपोनित्याः "स्वाध्यायमधीते तपएव तत्तप्यते तपो हिस्वाध्यायः" इत्युक्तसदास्वाध्यायपारायणरूपतपोनिष्ठाः । पञ्चतपोन्विताः ग्रीष्मे पञ्चाग्निमध्यस्थाः ॥ ५ ॥ ब्राह्म्या श्रिया ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन । दृढः परिपक्वः योगो यमनियमाद्यष्टाङ्गयोगो येषां ते दृढयोगाः । समाहिताः योगैकाग्रचित्ताः । एवंभूतास्तापसाः राममभिजग्मुरित्यन्वयः । मुनिवैविध्योक्तिर्दर्शनीयत्वाय । अत्राभिजग्मुरित्यनेन शरणागतिरुक्ता ॥ ६—७ ॥ इक्ष्वाकुकुलस्य प्रधानः पृथिव्याश्च नाथः । प्रथमे दृष्टान्तः—देवानामिति । यथादेवेन्द्र इति शक्रस्य नाम तथा रघुपतिरिति तव नामेत्यर्थः ॥ ८ ॥ यशसा शरभङ्गानुग्रहकीर्त्या । विक्रमेण विराधनिरसनेन च त्रिषु लोकेषु भूर्भुवःसुवर्लोकेषु । विश्रुतः प्रसिद्धः । पितृभक्तिस्त्वयि पुष्कला तद्वचनेन लब्धस्यापि राज्यस्य त्यागात् सत्यं सत्यवचनं च । त्वयि पुष्कलं भरतप्रार्थनयापि प्रतिज्ञातस्याभञ्जनात् । धर्मश्च त्वयि पुष्कलः शरभङ्गानुग्रहात् ॥ ९ ॥ धर्मज्ञं धर्मवत्सलमित्युक्तानुवादः । अर्थिनो याचकास्तेषां भावोर्थित्वं याच्ञेत्यर्थः । सा च रक्षोनिरसनविषया तया त्वां किंचिद्वक्ष्यामः तत् क्षन्तुमर्हसि आर्ततया त्वदग्रगमनमेव कार्यसाधनं आर्त्यतिशयेन विज्ञापनं तु क्षमस्वेत्यर्थः । एतेन उपायत्वाध्यवसाय एव चेतनस्य कृत्यं प्रार्थनं तु न कर्तव्यं । हठात्कृतेपि क्षमापणं कर्तव्यमित्युक्तं भवति ॥ १० ॥

व्याघ्रचर्मादीनि शय्या येषांते ॥ ३ ॥ **ती०** आकाशनिलयाः आकाशएव वायुधारणबलेन ये निलीयन्ते तेतथा ॥४॥ **ति०** ऊर्ध्ववासिनः गिरिशिखराद्यूर्ध्वप्रदेशे नित्यंवासशालिनः ॥५॥ **स०** दृढयोगसमाहिताः दृढंयोगस्समाहितोयेषु । यद्वा दृढंयोगाः अणिमादयोवा समाहितायेषु । यद्वा दृढयोगाः अत्यन्तसंबन्धवन्तः पुत्रादयोबान्धवाश्च । तैस्समाः अहिता येषांते । "सुहृन्मित्रार्युदासीन—" इत्यादेः समबुद्धयइतियावत् ॥ ६ ॥ **ती०** त्वमित्यादिश्लोकद्वयस्य प्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु देवानांमघवानिव इक्ष्वाकुकुलस्य इक्ष्वाकुकुलमात्रस्य पृथिव्याश्च पृथिवीमात्रस्यच प्रधानोनाथस्त्वमितिकाकुः । किंतु जगद्धारणपोषणकर्ता । अतएव निरवधिकेनयशसा विक्रमेणच त्रिषुलोकेषु सर्वलोकेषु विश्रुतः सकललोकाधीश्वरइतिशेषः । तथापि क्षत्रियरूपेणावतीर्णत्वाल्लोकशिक्षार्थं पितृव्रतत्वं पित्रर्थंव्रतंयस्यपितृव्रतः तस्यभावस्तत्त्वं पितृवचनपरिपालकत्वमितियावत् । सत्यं सत्यवचनत्वं । पुष्कलं अधिकोधर्मश्च त्वय्यस्तीत्यर्थः । **ति०** किंच त्वयिस्मृते धर्मश्चपुष्कलः अङ्गहीनोपि सकलाङ्गपूर्णो भवतीत्यर्थः । "प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुच । तद्विष्णोस्स्मरणादेवसंपूर्णंस्यादितिश्रुतिः" इतिस्मृतेः । **स०** यशसा विक्रमेणच विश्रुतः । यशस्वी विक्रमीचेति प्रसिद्धइत्यर्थः । त्वयि विक्रमेणापि विरुद्धः क्रमः कनिष्ठराज्यप्रदानरूपस्तेनापि त्यागहेतौसत्यपीतियावत् । पितृव्रतत्वं पित्रनुव्रतत्वं

**[ पा० ]** १ क. च. ज. ञ. मासोपवासिनो. ख. घ. तथोपवासिनो. ग. ङ. झ. तथोर्ध्ववासिनो. २ ङ. झ. ट. तपोनिष्ठाः. ३ ङ. झ. ञ. ट. युक्ताः. ४ ङ. झ. ञ. ट. योगसमाहिताः. छ. ज. योगाःसहस्रशः. ५ घ. अभिजग्मुश्च. ६ घ. ङ. ञ. ट. समागताः. क. सहस्रशः. ७ क. इक्ष्वाकूणांकुलस्यास्य. ८ क. ङ.—ट. महारथः. ९ घ. ङ. झ. ट. श्चापि. १० ग. विश्रुताः. घ. विश्रुतं. ११ क. ख. ङ. ट. पितृव्रतत्वं. १२ घ. धर्माश्चपुष्कलाः.

अधर्मस्तु महांस्तात भवेत्तस्य महीपतेः ॥ यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११ ॥
युञ्जानः स्वानिव प्राणान्प्राणैरिष्टान्सुतानिव ॥ नित्ययुक्तः सदा रक्षन्सर्वान्विषयवासिनः ॥१२॥
प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम् ॥ ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥१३॥
यत्करोति परं धर्मं मुनिर्मूलफलाशनः ॥ तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षतः ॥ १४ ॥
सोयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ॥ त्वन्नाथोऽनाथवद्राम राक्षसैर्बाध्यते भृशम् ॥ १५ ॥
एहि पश्य शरीराणि मुनीनां भावितात्मनाम् ॥ हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने ॥ १६ ॥
पम्पानदीनिवासानामनुमन्दाकिनीमपि ॥ चित्रकूटालयानां च क्रियते कदनं महत् ॥ १७ ॥

स्वविषये रामेण रक्षणं स्वाभाविकमिति दर्शयिष्यन्तः औपाधिकलौकिकराजरक्षणप्रकारंदर्शयन्ति—अधर्मस्त्वित्यादिना । यः प्रजाभ्यो बलिषड्भागं हरति हृत्वा च ताः न रक्षति तस्य महानधर्मः । बलिः करः । "भागधेयःकरोबलिः" इत्यमरः । षष्ठो भागः षड्भागः लुप्तपूरणो निर्देशः बलिश्चासौ षड्भागश्च बलिषड्भागः ॥ ११ ॥ एवमरक्षणे प्रत्यवायमुक्त्वा रक्षणेऽभ्युदयमाहुः—युञ्जान इति । युञ्जानो यतमानः । नित्ययुक्तो नित्यावहितः । सर्वान् स्वविषयवासिनः स्वकीयान् प्राणानिव प्राणैः प्राणेभ्योपि । इष्टान् सुतानिव च यो रक्षति स महीपतिः बहुवार्षिकीं बहुकालस्थायिनीं । शाश्वतीं अनुवृत्तां । "मुहुःपुनःपुनःशश्वत्" इतिबाणः । भवार्थेण् । तोङीप् । कीर्तिं प्राप्नोति । ब्रह्मणः स्थानमासाद्य तत्र ब्रह्मणा महीयते पूज्यते च ॥ १२—१३ ॥ यस्तु करप्रदानासमर्थो मुनिजनस्तद्रक्षणं कुत इत्यत्राह—यदिति । यद्धर्मं तत्र धर्मे राज्ञः चतुर्भागः चतुर्थांशोभवति ॥ १४ ॥ एवं धर्माय प्रजारक्षकस्य फलमुक्त्वा धर्मानपेक्षे रामे शरणागतिरेव रक्षणहेतुरित्याहुः—सोयमित्यादिना । सः पूर्वोक्तवैखानसादिरूपः । ब्राह्मणाः भूयिष्ठाः अधिकाः यस्मिन् स ब्राह्मणभूयिष्ठः । क्षत्रियवैश्यवानप्रस्थसंभवाद्ब्राह्मणभूयिष्ठ इत्युक्तं । यद्वाब्राह्मणाः ब्रह्मविदः । "तदधीतेतद्वेद" इत्यण् । वानप्रस्थानां तृतीयाश्रमिणां गणः त्वं नाथो यस्यासौ त्वन्नाथः । अनाथवद्बाध्यते ॥ १५ ॥ बाधामेव दर्शयन्ति—एहीत्यादिना । दूरे सम्यङ् नदृश्यत इत्यत एहि पश्येत्युक्तं । भावितात्मनां ध्यातात्मनां । बहुधा छेदनभेदनभक्षणादिभिः ॥ १६ ॥ हतानां बहूनामित्युक्तं विवृणोति—पम्पेति । अनुमन्दाकिनीमपीति अनुले-

विश्रुतमिति विपरिणामेनान्वयः । यद्वा हेपितृव्रत त्वं विश्रुत इत्यन्वयः ॥ ८ ॥ ९ ॥ स० बलयश्चते षट्च बलिषण्णांभागो यस्य तं षष्ठांशमितियावत् । पूरणार्थकप्रत्ययलोपोवा ॥ ११ ॥ स० शाश्वतीं बहुकालसंबन्धिनीं । बहुवार्षिकीं बह्वीचसा वार्षिकीच रक्षकसंबन्धिनीं तां कीर्तिं प्राप्नोतीत्यन्वयः । "वार्षिकंत्रायमाणंस्याद्वर्षाकालभवेऽन्यवत्" इतिविश्वः । शि० बहुवार्षिकीं भारतावनेकखण्डसंबन्धिनीं । शाश्वतीं नित्यां ॥ १३ ॥ ती० ननु क्वचित्षष्ठोभागउच्यते अत्र चतुर्थोभागोभण्यते क्वचिद्द्वितीयोभागः पठ्यते तत्कथमितिचेदुच्यते उपवासिभिक्षाहारजनकृतधर्मात्षष्ठोभागः । राजपरिपालितदेशसंभूतफलाशिनोधर्माच्चतुर्थोभागः । तदन्नपानपुष्टाङ्गजनस्य धर्माद्द्वितीयोभागः । "यस्यान्नपानपुष्टाङ्गःकुरुतेधर्मसंचयम् । अन्नप्रदातुस्तस्यार्धंकर्तुश्चार्धंनसंशयः" इतिस्मरणात् । ति० यदिति सामान्ये नपुंसकं । प्रजाः वानप्रस्थप्रजाः । स० "स्याद्धर्ममस्त्रियां" इत्यमरात् यद्धर्ममिति संभवति ॥ १४ ॥ तनि० सोयंब्राह्मणभूयिष्ठइत्यनेन क्षत्रियवैश्यवानप्रस्थाश्च केचिदिह संतीति व्यज्यते । यद्वा ब्रह्मविद्ब्राह्मणः । ब्राह्मणत्वादिपरमैकान्तिकधर्मनिष्ठइत्यर्थः । अतएव त्वन्नाथइत्येकंपदं । त्वमेव नाथोयस्य सः । तेनानन्यशेषत्वमुक्तं । तस्यैव नाथनीयत्वेनानन्यसाधनत्वानन्यभोग्यत्वे कथिते । अतएव महान् निरतिशयमहिमयुक्तः । तथाविधोप्यनाथवदयं वध्यते । अस्मत्पराभवोनाथ नतेऽनुरूपइतिभावः । स० त्वां नाथत इतिवा प्रार्थयत इत्यर्थः ॥ १५ ॥ तनि० मुनीनां सर्वेश्वरमननपराणां । भावितात्मनां निदिध्यासननिष्ठानां हतानांशरीराणिपश्येति कारुण्यातिशयोत्पादनायोक्तं । बहुधाहतानां अङ्गप्रत्यङ्गशस्त्रभिन्नानामस्माकं शरीराणि पश्येतिव्यज्यते ॥ स० बहुधा खड्गादिनानाशस्त्रेण ॥१६॥ ति० सकलदण्डकारण्यपीडामाहुः—पंपेत्यादि ।

[ पा० ] १ ङ.—ट. अधर्मस्सुमहान्नाथ. २ ङ.—ट. तस्यतुभूपतेः. ३ ग. प्रजाःस्वानिवचप्राणान्स्वसुतानिवनित्यशः. ४ च. छ. ञ. न्प्राणिनःस्वान्सुतानिव. ५ च.—झ. तत्रापिच. ६ क.—घ. च. छ. ज. ञ. यःकरोति. ७ क. च. छ. ज. ञ. पर्णमूल. ८ ग. रक्षितुं. ९ क.—घ. च. ज. ञ. वध्यते. ङ. झ. ट. हन्यते. १० घ. भीतानां. ११ क. ख. ग. पंपावननिवासानां.

एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् ॥ क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः ॥ १८ ॥
ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः ॥ परिपालय नो राम वध्यमानान्निशाचरैः ॥ १९ ॥
परा त्वत्तो गतिर्वीर पृथिव्यां नोपपद्यते ॥ परिपालय नः सर्वान्राक्षसेभ्यो नृपात्मज ॥ २० ॥
एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम् ॥ इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ॥२१॥
नैवमर्हथ मां वक्तुमाज्ञाप्योऽहं तपस्विनाम् ॥ केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम् ॥
विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम् ॥ २२ ॥
पितुस्तु निर्देशकरः प्रविष्टोऽहमिदं वनम् ॥ भवतामर्थसिद्ध्यर्थमागतोहं यदृच्छया ॥ २३ ॥
तस्य मेऽयं वने वासो भविष्यति महाफलः ॥ २४ ॥

क्षणे कर्मप्रवचनीयः । मन्दाकिनीं शरभङ्गाश्रमवाहिनीं । मन्दाकिन्यास्तटवासिनामित्यर्थः । कदनं हिंसा ॥ १७ ॥ शरीराण्युपेक्ष्य तपस्यतां किं हिंसाभयेनेत्याशङ्क्य न वयं स्वशरीरपीडातो भीताः किंतु महत्सु गरीयस्सु क्रियमाणं कदनं न मृष्याम इत्याहुः—एवमिति । विप्रकारं निकारं । "निकारोविप्रकारः–स्यात्" इत्यमरः । स्वजनपीडा दुःसहेति भावः ॥ १८ ॥ शरणार्थं रक्षणार्थं । समुपस्थिताः प्रपन्नाः । "गत्यर्थाकर्मक—" इत्यादिना कर्तरि क्तः ॥ १९ ॥ त्वत्तः परा अन्या । गतिः उपायः नोपपद्यते । पृथिव्यामिति सर्वभुवनोपलक्षणं । तथाच श्रुतिः । "नान्यः पन्था अयनाय विद्यते" इति । इत्यूचुरिति पूर्वेणान्वयः ॥ २० ॥ तपस्विनां प्रशस्ततपसां । तापसानां मुनीनां ॥ २१ ॥ शरणागत्यैवाऽऽज्ञप्तोहं परिपालयेत्यादिकं वक्तुं नार्हथ । केवलेनात्मकार्येण केवलात्मप्रयोजनत्वेन । राक्षसैः क्रियमाणं भवतामिमं विप्रकारं अपाक्रष्टुं निवर्तयितुं । मया वनं प्रवेष्टव्यं प्रविष्टं । "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि तव्यप्रत्ययः । स्वतो मत्प्रयोजनरूपं भवद्विरोधिनिरसनं कर्तुमेवेदं वनं प्रविष्टोस्मीत्यर्थः । शेषभूतरक्षणस्य शेषिप्रयोजनत्वादिति भावः ॥ २२ ॥ पितृवाक्यपरिपालनाय वनं प्रविष्टोसीति किंवदन्त्याः का गतिरित्यत्राह—पितुरिति । अहं भवतामर्थसिद्ध्यर्थमागतोस्मि यदृच्छया दैवगत्या । पितुर्निर्देशकरः वनमिदं प्रविष्टोस्मि । पितृवाक्यकरणव्याजेन भवदर्थसिद्ध्यर्थमेवागतोस्मीतिभावः ॥ २३ ॥ भवत्कार्यार्थमेवागतस्य मे वने

पंपा च नद्यश्च तत्रनिवासो येषांतेषां । पंपारूपा नदीवा । अनुमन्दाकिनीमपीति । मन्दाकिन्या अत्रत्यपुण्यनद्यास्तीरवासिनां । मन्दाकिन्याविस्तीर्णप्रवाहत्वाद्दुरवगाहतयापृथगुक्तीराघवाख्याने । **स०** मन्दाकिनीमित्यनेनास्यास्स्वर्णदीत्वं पंपादीनांचभूनदीत्वं सूच्यते ॥ १७ ॥ **तनि०** शरण्यमितिनिरुपपदेन सर्वलोकशरण्यत्वमुक्तं । तेन तदुपर्युक्तगुणास्स्वामित्वादयः पूर्वखण्डनारायणपदोक्तास्स्मारिताः । शरणार्थं उपायान्तरस्थाने निवेशयितुमित्यर्थः । समुपागताः विश्वासाद्यङ्गसंपत्तिपूर्वकरक्षाभरसमर्पणं कृतवन्तः । नःपरिपालयेति गोप्तृत्ववरणोक्तिः । उत्तरार्धेनानिष्टनिवृत्तिरूपफलप्रार्थना पर्यवसिता ॥ १९ ॥ **तनि०** उत्तरखण्डविवरणमाकिंचिन्यमाह—**परेति** । त्वत्तः सिद्धोपायात्परा । गतिः । यद्वा "नान्यःपन्थाअयनायविद्यत"इति श्रुत्यर्थं मनसिकृत्वाह—**परेति** । पृथिव्यांनोपपद्यते यस्मात्परिमितंफलमित्याद्युक्तबहुदोषदुष्टत्वादितिभावः । नस्सर्वानिति आत्मात्मीयसर्वसंग्रहः । राक्षसेभ्यइति सर्वानिष्टोपलक्षणं । **स०** यतोतइतिशेषः । यतस्त्वत्तः परागतिः पृथिव्यांनोपपद्यते अतः परिपालयेत्यन्वयः ॥ २० ॥ **स०** एवं क्षन्तुमर्हसीत्यादिरूपेण । आज्ञाप्यः नियोज्यः । केवलेन मुख्येनस्वकार्येण चतुर्दशवर्षवनवासरूपकार्येणेत्यर्थः ॥ २२ ॥ **स०** भवतां विप्रकारमपाक्रष्टुं पितुर्निर्देशकरश्च वनंप्रविष्टइत्यन्वयः । तुना मद्वनगमनं पितृनिर्देशकरणभवद्विप्रकारापाकरणरूपप्रयोजनवदिति विशेषस्सूच्यते । **ति०** यदृच्छयाऽऽगतएवाहं भवतामर्थसिध्यर्थमपि भविष्याम्येवेतिशेषः ॥ २३ ॥ पितुस्त्वित्यनेनोक्तएवार्थः कविना श्लोकान्तरेण वर्ण्यते । इयमपिशैली कवेरिति कतकतीर्थौ । यतश्शत्रून्हन्तुमिच्छामि अतस्तस्य यदृच्छया वनमागतस्य मेऽयं वनवासो महाफलोभविष्यतीति स्वगतोविचारः । अथऋषिधैर्याय प्रकाशंप्रतिजानीते—**पश्यन्त्विति** । **तनि०** तस्य भवत्कार्यार्थमेवागतस्य मे वनवासः तपस्विनांमहाफलः अतः रणे तपस्विनांशत्रून्हन्तुमिच्छामीति योजनीयं । महाफलं नाम अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिरूपं ॥ **स०** तपस्विनांशत्रून्हन्तुमि-

[ **पा०** ] १ ख. एवंविधं. २ क. च. छ. ज. ञ. भीमविक्रमैः. ३ घ. समुपागतान्. ४ क.—ट. माज्ञाप्योहं. ५ क. ङ. च. छ. झ. ञ. ट. केवलेनस्वकार्येण. ज. केवलेनच. ख. ग. घ. केवलेनैव. ६ क.—ट. वनंमया. ७ घ. महोदयं.

[1]तपस्विनां रणे शत्रून्हन्तुमिच्छामि राक्षसान् ॥ पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः ॥ २५ ॥
[2]दत्त्वाऽभयं चापि [3]तपोधनानां धर्मे धृतात्मा सह लक्ष्मणेन ॥
तपोधनैश्चापि [4]सभाज्यवृत्तः सुतीक्ष्णमेवाभिजगाम वीरः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ॥ ७ ॥

रामेणसीतालक्ष्मणाभ्यांसहसुतीक्ष्णाश्रममेत्यतदभिवादनपूर्वकंतंप्रतिस्वावासस्थलप्रदर्शनप्रार्थना ॥ १ ॥ सुतीक्ष्णेन-रामंप्रतिस्वाश्रमस्यवासोपयोगिगुणवत्ताकथनपूर्वकंमृगगणप्रलोभनरूपदोषोत्कीर्तनेरामेणतंप्रतिस्वस्यतत्रवासानभिरोचनोक्तिः ॥ २ ॥

[5]रामस्तु सहितो भ्रात्रा सीतया च परंतपः ॥ सुतीक्ष्णस्याश्रमपदं जगाम [6]सह तैर्द्विजैः ॥ १ ॥
[7]स गत्वाऽदूरमध्वानं नदीस्तीर्त्वा बहूदकाः ॥ [8]ददर्श विपुलं शैलं [9]महामेघमिवोन्नतम् ॥ २ ॥
ततस्तदिक्ष्वाकुवरौ [10]संततं विविधैर्द्रुमैः ॥ काननं तौ विविशतुस्सीतया सह राघवौ ॥ ३ ॥
[11]प्रविष्टस्तु वनं [12]घोरं [13]बहुपुष्पफलद्रुमम् ॥ ददर्शाश्रममेकान्ते चीरमालापरिष्कृतम् ॥ ४ ॥
तत्र [14]तापससमासीनं मलपङ्क[15]जटाधरम् ॥ रामस्सुतीक्ष्णं विधिव[16]त्तपोवृद्धमभाषत ॥ ५ ॥

---

वासो महाफलो भविष्यति ॥ २४ ॥ तदेवफलमाह—तपस्विनामिति । तपस्विनां शत्रून् रणे हन्तुमिच्छामि इतीदं प्रोवाचेत्यन्वयः ॥ २५ ॥ अभयमिति छेदः । धृतात्मा निश्चलमनाः । तपोधनैः ऋषिभिश्च सभाज्यवृत्तः पूज्याचारः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षष्ठःसर्गः ॥ ६ ॥

---

अथ सुतीक्ष्णाभ्यर्थनया मृगरूपमारीचादिदुष्टराक्षसनिरासःसप्तमे । आश्रमपदं उद्दिश्येति शेषः । तैर्द्विजैः वैखानसादिभिः ॥ १ ॥ अदूरमितिच्छेदः । पूर्वं शरभङ्गेण "इह राम महातेजाः" इति सुतीक्ष्णाश्रमस्यादूरत्वोक्तेर्नदीरिति बहुवचनमेकस्या एव मन्दाकिन्याः बहुप्रदेशेष्वावृत्त्या । बहूदकाः विपुलोदकाः । नौतार्यत्वानुक्तेः शैलं शैलसंबन्धिवनं काननमित्यनुवादात् । तस्येदमित्यण् । महामेघमिवेति श्यामिकायामुपमा ॥ २ ॥ द्रुमैः संततं व्याप्तं । इक्ष्वाकुवरौ राघवावित्युभयथा धैर्यमूलोक्तिः ॥ ३ ॥ चीरमालया वल्कलपङ्क्त्या परिष्कृतं अलंकृतं ॥ ४ ॥ मलपङ्कजटाधरं नित्यनिश्चलतपोयोगेन वा वार्धकेन वा मलपङ्क-

---

च्छामीति पारोक्ष्यनिर्देशेन पश्यन्त्वितिपारोक्ष्येण निर्देशस्संभवति ॥ २४ ॥ २५ ॥ **शि०** आर्यदत्तः आर्यं सर्वश्रेष्ठं अचलमित्यर्थः दत्तंदानं यस्यसः ॥ **स०** आर्यवृत्तः आर्याणांवृत्तंयस्यसः । आर्यंवृत्तंयस्येतिवा । सुतीक्ष्णं तन्नामकमृषिं । सुतीक्ष्णं राक्षसानां तीक्ष्णंयथाभवतितथा जगामेत्यथोवा ॥ २६ ॥ इतिषष्ठस्सर्गः ॥ ६ ॥

**स०** तैर्द्विजैस्सह । यद्वा हतैः राक्षसैर्हतप्रायैः । स रामः ॥ १ ॥ **ति०** विमलं पवित्रं । महामेघमिवेतिपाठे स्थितमितिशेषः । नैल्यस्थौल्याभ्यां सादृश्यं । उन्नतमिति स्वरूपकथनं ॥ **स०** महामेरुमिव स्थौल्येनेत्यर्थः । उन्नतं अनेकपक्षिभिर्ध्वनितं । "णमुप्रह्वत्वेशब्देच" इत्युक्तेः ॥ २ ॥ **रामानुजीयं** । तदित्यनेन प्रस्तुतस्यकाननस्यपरामर्शः । प्रथमं शैलस्यप्रस्तुतत्वात्तस्यकाननमपि प्रस्तुतमेवेति ॥ ३ ॥ **स०** पूर्वं त्रयाणांप्रस्तुतत्वेप्युत्तरत्र प्रश्नप्रतिवचनयोरामैककर्तृकत्वतदेकविषयत्वाभ्यां प्रविष्टइत्येकवचनमुपपद्यते । अमुमेवविशेषंद्योतयति तुशब्दः ॥ ४ ॥ **ती०** मलपङ्कजटाधरं मलंनाम उद्वर्तनादिसंस्काराभा-

**[ पा० ]** १ ङ. छ. तपस्विनो. २ क. ग.—ट. दत्वावरं. ३ क. च. छ. ज. ञ. सतापसानांधर्मप्रधानःसह. ४ ख. ग. च. छ. ञ. सहार्यवृत्तः. ङ. झ. ट. सहार्यदत्तः. क. महानुभावः. ५ च. छ. ज. ञ. रामश्च. ६ क. घ. च. छ. ज. ञ. सहितोद्विजैः. ट. सहितैर्द्विजैः. ७ घ. ते. गत्वा. ८ घ. ददृशुर्विपुलं. ख. ग. ङ.—ट. ददर्शविमलं. ९ क. ग. ङ.—ट. महामेरुं. १० झ. सततं. ११ ख. ग. प्रविष्टस्स. १२ क. च. छ. ज. ञ. रामो. १३ ख. ग. बहुमूलफल. १४ छ. तावत्समासीनं. १५ ङ. झ. ट. पङ्कजधारिणं. १६ ख. ङ. झ. ट. तपोधनं.

रामोऽहमस्मि भगवन्[1]भवन्तं द्रष्टुमागतः ॥ [2]त्वं माऽभिवद धर्मज्ञ महर्षे सत्यविक्रम ॥ ६ ॥
स[3] निरीक्ष्य त[4]तो वीरं रामं धर्मभृतां व[5]रम् ॥ समाश्लिष्य च बा[6]हुभ्यामिदं वचनमब्रवीत् ॥ ७ ॥
स्वागतं ख[7]लु ते वीर राम धर्मभृतां[8] वर ॥ आश्रमोऽयं त्वयाऽऽक्रान्तः सनाथ इव[9] सांप्रतम् ॥ ८ ॥
प्रतीक्षमाणस्त्वामेव नारोहेऽहं महायशः ॥ देवलोकमितो वीर देहं त्यक्त्वा म[10]हीतले ॥ ९ ॥
चित्रकूट[11]मुपादाय राज्य[12]भ्रष्टोसि मे श्रुतः ॥ १० ॥
इहोपयातः काकुत्स्थ देवराजः शतक्रतुः ॥ [13]उपागम्य च [14]मां देवो महादेवस्सुरेश्वरः ॥
[15]सर्वांल्लोकाञ्जितानाह मम पुण्येन कर्मणा ॥ ११ ॥

जटानां धरं । विधिवत् क्रमवद्यथा भवति तथा । अभाषत । मीलितनयनत्वेन स्वाभिवादनापरिज्ञानाद्भाषणं ॥ ५ ॥ मा अभिवादयन्तं मां अभिवाद प्रत्यभिवादनं कुरु । सत्यविक्रम अमोघतपःप्रभाव ॥ ६—७ ॥ सनाथइव सनाथएव । यद्वा सर्वदा त्वया सनाथत्वेपि पामराणां सनाथत्वप्रतिभेदानीं जातेत्यर्थः ॥ ८ ॥ स्वस्य मोक्षापेक्षां व्यञ्जयति—प्रतीक्षमाण इति । त्वामेव प्रतीक्षमाणः प्रतिपालयन् त्वदागमनं काङ्क्षमाण इत्यर्थः । देवलोकं नारोहे "तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलं" इति तस्य मोक्षविरोधित्वादिति भावः ॥ ९ ॥ मदागमनं कुतोऽवगतं तत्राह—चित्रकूटमिति । चित्रकूटमुपादाय चित्रकूटगमनमारभ्य । राज्याद्भ्रष्टः प्रच्युत इति मे मया श्रुतोसि ॥ १० ॥ स्वर्गारोहणस्य कः प्रसङ्ग इत्यत्राह—इहेति । उपयातः शरभङ्गार्थमागतः । मामुपागम्याह । तर्हि तादृशमहाफलं किमिति त्यक्त-

वाच्छरीरजन्यं । पङ्कोनाम वनसंचाराच्छरीरलग्नमितिभेदः ॥ **कतक०** मलपङ्कजधारिणं मलस्यसर्वाघस्य शान्तये पङ्कजे पद्मासने स्थित्वा धारणशीलं । यद्वा कपङ्कजे हृदयपङ्कजे धारिणं ऐश्वरयोगधारणशीलमित्यर्थः । अत्र ततस्तदिक्ष्वाकुवरौ इत्यादिश्लोकत्रयंप्रक्षिप्तं । **स०** मलपङ्कजधारिणं मलं शारीरमलं । पङ्कजाः पङ्कोद्भूताः कणाः । तान्धर्तुंशीलमस्यास्तीति मलपङ्कजधारी तं तापसं । यद्वा तापसमासीनमित्येकंपदं । तापेषु पञ्चाग्नितापेषु सम्यगासीनं । **ति०** विधिवत् उपगम्येतिशेषः ॥ ५ ॥ **स०** मा मां वद । अनेन ऋषेर्मौनंसूच्यते ॥ ६ ॥ **स०** धीरः धीषुरमणकर्ता ॥ ७ ॥ **ति०** सनाथइव सस्वामिकइव । अत्रायमाश्रमः ब्रह्मचर्याद्याश्रमव्यवहार्योऽयंदेहः । त्वया जीवरूपेणाक्रान्तोपि सांप्रतं अद्य बहिश्चक्षुषानुभवन् सनाथइव मायया सच्चिदानन्दस्यैवैवंशरीररूपेणप्रतिभासमानस्येदृशस्यत्वद्रूपस्य दर्शनेन चित्तशुद्ध्या पूर्वंजीवाभेदेनाहमितिप्रतीत्याग्रहीतस्य । तद्वैलक्षण्येनेदानींग्रहाद्भेदनिबन्धनसनाथत्वव्यवहारः । इवेन जडानामप्यतिरिक्तत्वाभावस्सूचितइति ध्वनिः ॥ **स०** पूर्वं मयासनाथ इव सांप्रतं त्वयासमाक्रान्तइति सनाथः ॥ ८ ॥ **स०** अहं देवलोकं सत्यलोकं । नारोहे नगच्छेयं । यद्वा हेदेव महीतले देहंत्यक्त्वा इतः परं लोकं देहान्तरं नरोहे इत्यान्तरङ्गिकार्थः ॥ ९ ॥ **ति०** ननु कात्र मदागमनसंभावना तत्राह—**चित्रेति**। यदा राज्यभ्रष्टः चित्रकूटं उपादाय प्राप्य स्थितोसि तदाप्रभृति मे मया श्रुतोसि ॥ आश्रमोयमित्यस्य व्यङ्ग्यार्थेतु चित्रं विचित्रफलहेतुकूटं दुरवगाहत्वात्संसारं प्राप्य राज्यभ्रष्टो विद्यासंसर्गेणस्वाराज्यात् नित्यशुद्धबुद्धमुक्तस्वरूपात् भ्रष्टः । तद्योगात्संसारंप्राप्तस्त्वमेव मया श्रुतिवाक्येभ्यश्श्रुतोसि । अतस्तत्प्रतीक्षया नदेवलोकं गतइति व्यङ्ग्योर्थः ॥ १० ॥ नन्विदानीं कुते देवलोकारोहणप्रसक्तिस्तत्राह—**इहेति** । शरभङ्गाह्वानानन्तरमिहाप्यागतइत्यर्थः । **ति०** पुण्येनकर्मणाजितानित्यनेन श्रवणसंपत्तावपि निदिध्यासनसंपत्त्यभावोस्योक्तः । पूजावचनेषु पौनरुक्त्यं नदोषाय । देवादिपदानां प्रवृत्तिनिमित्तभेदस्य स्पष्टत्वान्नपौनरुक्त्यमितिकेचित् ॥ **स०** महादेवः महेनउत्सवेन आदेवः अतिकान्तिमान् सुरेश्वरः । सर्वान् चितान् प्राप्तानाहेत्यन्वयः । आहेत्यनेन तन्निदिध्यासितब्रह्मलोकादिज्ञानं तस्यास्तीति तत्र साक्षित्वेनेन्द्रवचसउपयोगइति कविस्सूचयति । तन्निदिध्यासनाभावोस्योक्तइति नागोजिभट्टीयंव्याख्यानं "यंयंलोकंमनसासंविभाति "यंयंवापिस्मरन्भावं" इत्यादिश्रुतिस्मृतिविरुद्धत्वादसंगततर-

[ **पा०** ] १ घ. भद्रंत्वां. २ क. च. छ. ज. आगतंपाहिधर्मज्ञ. ग. ङ. झ. ट. तन्माऽभिवद. ३ क. च. ज. संनिरीक्ष्य. ४ ख. ग. ङ. झ. ट. ततोधीरो. क. च. छ. ज. ञ. तदारामंवीरं. ५ क. वरः. ६ क. बाहुभ्यांवचनंचेदं. ७ ङ. झ. ट. तेरघुश्रेष्ठ. क. च. ज. ञ. तेनरश्रेष्ठ- ८ ङ. झ. ट. सत्यभृतां. ९ क. इति. ग. इह. १० ख. ग. महीतलात्. ११ क. ख. च. छ. ज. ञ. मनुप्राप्तो. १२ क. छ. ञ. भ्रष्टोमयाश्रुतः. च. ज. भ्रंशोमयाश्रुतः. १३ क. छ. ज. ञ. उपगम्य. १४ ग. घ. ङ. झ. ट. मेदेवो. ख. देवेशो. १५ छ. सर्वंलोकान्.

तेषु देवर्षिजुष्टेषु जितेषु तपसा मया ॥ मत्प्रसादात्[1]सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥ १२ ॥
तमुग्रं[2]तपसा युक्तं महर्षिं [3]सत्यवादिनम् ॥ प्रत्युवाचात्मवान्रामो ब्रह्माणमिव [4]कश्यपः ॥ १३ ॥
[5]अहमेवाहरिष्यामि स्वयं लोकान्महामुने ॥ आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १४ ॥
भवान्सर्वत्र कुशलस्सर्वभूतहिते रतः ॥ [6]आख्यातश्शरभङ्गेण गौतमेन महात्मना ॥ १५ ॥
एवमुक्तस्तु रामेण महर्षिर्लोकविश्रुतः ॥ अब्रवीन्मधुरं वाक्यं हर्षेण महताऽऽप्लुतः[7] ॥ १६ ॥
अयमेवाश्रमो राम गुणवान्रम्यता[8]मिह ॥ ऋषिसङ्घानुचरितस्सदा मूलफला[9]न्वितः ॥ १७ ॥
इममाश्रममागम्य मृगसङ्घा [10]महायशः ॥ [11]अटित्वा प्रतिगच्छन्ति लोभयित्वाऽकुतोभयाः ॥
नान्यो दोषो भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै ॥ १८ ॥
तच्छ्रुत्वा वचनं [12]तस्य महर्षेर्लक्ष्मणाग्रजः ॥ उवाच वचनं धीरो वि[13]कृष्य सशरं धनुः ॥ १९ ॥
तानहं सुमहाभाग मृगसङ्घान्[14]समागतान् ॥ हन्यां निशितधारेण शरेणा[15]शनिवर्चसा ॥ २० ॥
भवांस्तत्राभिषज्येत किं स्यात्[16]कृच्छ्रतरं ततः ॥ [17]एतस्मिन्नाश्रमे वासं चिरं तु न समर्थये ॥ २१ ॥

---

वानसीत्युक्ते तारतम्यज्ञानादिति भावः ॥ ११—१४॥ गौतमेन गौतमवंश्येन ॥ १५ ॥ हर्षेण महता प्लुतः मोक्षानुग्रहेण परमानन्दभरितः ॥ १६—१७ ॥ गुणमुक्त्वा दोषमाह निरसनीयत्वाभिप्रायेण—इममिति । आश्रमं तपोवनं । अविद्यमानं कुतोपि भयं येषां ते अकुतोभयाः सन्तः अटित्वा इतस्ततः परिप्लुत्य । लोभयित्वा समाधिभङ्गं जनयित्वा । विचित्रतरवेषैरिति शेषः । प्रतिगच्छन्ति प्रतियान्ति । अत्र वने । मृगेभ्योन्यत्र मृगान्विनाऽन्यो दोषो न भवेदिति विद्धि मृगप्रलोभनरूपदोषादन्यो दोषोत्र नास्तीत्यवेहीत्यर्थः । इति वाक्यमब्रवीदिति पूर्वेण संबन्धः ॥ १८ ॥ तत् मृगभयविषयकं वचनं । विकृष्य सशरं धनुरिति स्वोत्साहप्रकटनं ॥ १९ ॥ हन्यामिति प्राप्तकाले लिङ् । वधकाले प्राप्ते सकलमृगहननं कुर्यामित्यर्थः । प्राप्तकालश्च तद्दर्शनकालः ॥ २० ॥ तच्च हननमिह स्थित्वा न कर्तुं शक्यमित्याह—भवानिति । तत्र मृगसङ्घवधविषये । भवान् मया अभिषज्येत अभिभूयेत । अभिपूर्वात् षञ्जेः कर्मणि लिङ् । "अभिषङ्गः परिभवे सङ्गाक्रोशनयोरपि" इति बाणः । तादृशमृगहनने मया त्वं

---

मिति द्रष्टव्यं ॥ ११ ॥ **ती०** वस्तुतस्तु मत्प्रसादात् मय्यनुग्रहात् । तेषुविहरस्वेत्यपि तान्विशेषेण हरस्वस्वीकुर्विति भगवति कर्मफलसमर्पणबुद्ध्या मुनिनोक्तं ॥ १२ ॥ **स०** आहरिष्यामीत्यनेन त्वया तपसासंपादितांल्लोकांस्तुभ्यं दास्यामीति रामस्य स्वातन्त्र्यंद्योत्यते । प्रदिष्टमित्यनेन मयैव पूर्वंतुभ्यंप्रदिष्टमिति भावमाविष्करोतिदेव इत्यवगमयति कविः । **ति०** अहमेवेति । तपसेत्यर्थः । त्वत्तःप्रतिग्रहे नाहमधिकारीत्यापाततोर्थः । वास्तवस्तु तद्दत्तपुण्याङ्गीकारेणानुगृह्णाति भगवान्—**अहमेवेति** । न्यासत्वेन त्वयास्थापितं तुभ्यंप्रापयिष्यामि । अहमेवेत्यनेन सर्वकर्मफलदाता सर्वोपासनास्वहमेवेति सूचितं । अथ लोकदृष्ट्येतरजनप्रतारणायावासमिति । प्रदिष्टं । त्वयेतिशेषः ॥ १४ ॥ **टीका०** मृगेभ्यइति हेतुगर्भितं । मृगरूपधारिणोराक्षसाएवागत्य तपोभङ्गंकुर्वन्तीत्यर्थः । **ति०** महीयसः अतिशयितमहत्त्ववतोपि अहत्वा हननमकृत्वा लोभयित्वारूपकान्तिगतिविशेषैश्चित्तक्षोभंकृत्वा गच्छन्तीत्यर्थः । अनेन भावी मारीचवृत्तान्तस्सूचितः । **स०** एतन्निवेशिनांपशूनामपि नद्वेषबुद्धिः किमु मनुष्याणामित्याह—**इममिति** । महीयसः महीयांसः । अहत्वा विरोधिनमितिशेषः । लोभयित्वा स्वस्यावलोकान् सस्वाकाङ्क्षान्कृत्वा । अकुतोभयाः मुक्ताः तइव ॥ **स०** अन्यत्र मदाश्रमातिरिक्ते । अत्र दण्डकारण्ये । मृगेभ्योऽन्योदोषोनास्ति मृगाएवदोषाः । भयकारिणइति यावत् । अतएव पूर्वश्लोके इममितीममर्थं ज्ञापयति ॥ १८ ॥ **स०** तत्रभवानभिषज्येत शपथंवा आक्रोशंवा कुर्यात् मृगहननं नकुर्विति । अतः भवदाक्रोशात् शपथाद्वा । कृच्छ्रतरं कष्टतरं किमु । हातुं हन्तुं नशक्नोमीतिभावः ॥ "अभिषङ्गो

**[ पा० ]** १ क. त्सभार्यस्तु. २ क. ख. ग. ङ.—ट. मुग्रतपसंदीप्तं. ३ छ. सत्यविक्रमः. ४ क. ङ. ट. वासवः. ५ ङ. ज. ट. अहमेवहरिष्यामि. ६ ङ. झ. ट. आख्यातं. ७ ङ. झ. ट. युतः. ८ ङ. झ. ट. मिति. ९ क.—घ. च. छ. फलायुतः. ङ. झ. ट. फलैर्युतः. १० ङ. झ. ट. महीयसः. ११ ङ. झ. ट. अहत्वा. ग. अभितः. १२ क. च. छ. ज. ञ. रामो. १३ ङ. झ. ट. विगृह्य. १४ ग. सहागतान्. १५ ङ. झ. ट. शरेणानतपर्वणा. १६ ग. स्याद्दुःखतरं. १७ च. छ. ज. एकस्मिन्नाश्रमे.

तमेवमुक्त्वा वरदं रामस्संध्यामुपागमत् ॥ २२ ॥
अन्वास्य पश्चिमां संध्यां तत्र वासमकल्पयत् ॥ सुतीक्ष्णस्याश्रमे रम्ये सीतया लक्ष्मणेन च ॥२३॥
ततश्शुभं तापसभोज्यमन्नं स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम् ॥
ताभ्यां सुसत्कृत्य ददौ महात्मा संध्यानिवृत्तौ रजनीमवेक्ष्य ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ॥ ८ ॥

प्रभातेकृताह्निकेनरामेणसुतीक्ष्णंप्रतिस्वस्यदण्डकारण्यदर्शनोत्कण्ठानिवेदनेनतद्गमनाभ्यनुज्ञाप्रार्थनम् ॥ १ ॥ मुनिना कृताभ्यनुज्ञेनरामेणतत्प्रदक्षिणीकरणपूर्वकंदण्डकारण्यंप्रतिप्रस्थानम् ॥ २ ॥

रामस्तु सहसौमित्रिस्सुतीक्ष्णेनाभिपूजितः ॥ परिणाम्य निशां तत्र प्रभाते प्रत्यबुध्यत ॥ १ ॥
उत्थाय तु यथाकालं राघवः सह सीतया ॥ उपास्पृशत्सुशीतेन जलेनोत्पलगन्धिना ॥ २ ॥
अथ तेऽग्निं सुरांश्चैव वैदेही रामलक्ष्मणौ ॥ काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३ ॥

---

कृतापराधोभवेः आश्रमसंबन्धित्वादितिभावः । ततः किमित्यत्राह—किंस्यात्कृच्छ्रतरं तत इति । ततः भवदभितापात् । कृच्छ्रतरं कष्टतरं । किं न किमपीत्यर्थः । तस्मादेतस्मिन्नाश्रमे चिरं तद्दर्शनपर्यन्तं । वासं न समर्थये नेच्छामि । इह वासे मृगसङ्घपीडां सोढ्वा स्थातव्यं । हत्वावस्थाने स्वाश्रममृगाणां स्वसन्निधौहननेन तव वैमनस्यं स्यात् । तच्च ममानिष्टं अतोन्यत्र त्वदसन्निधाने मृगान् हनिष्यामीत्यर्थः । इत्युवाचेति पूर्वेणान्वयः ॥ २१ ॥ वरदमित्यनेन मुनिस्तथैवानुज्ञातवानिति गम्यते । सन्ध्यामुपागमत् सन्ध्यामुद्दिश्य सरस्तीरं गतवानित्यर्थः ॥ २२ ॥ पश्चिमां सन्ध्यामन्वास्य । अत्यन्तसंयोगे द्वितीया । यावत्सन्ध्यं जलतीरे जपन् स्थित्वेत्यर्थः । तत्राश्रमे वासमकल्पयदित्यनेन प्रातर्जिगमिषा जातेति व्यज्यते । अन्यत्र गत्वा मृगनिरासश्च रावणं प्रति मारीचानुवादादवगन्तव्यः ॥ २३ ॥ शुभं भक्त्युपनीतत्वेन पावनं तापसभोज्यं फलमूलादि । अन्नं अदनीयं । स्वयं नतु शिष्यमुखेन । सुसत्कृत्य अर्घ्यपाद्यादिना संपूज्य । महात्मा तत्र परमपुरुषत्वज्ञानवान् । सन्ध्यानिवृत्तौ सन्ध्याकर्मावसाने । रजनीमवेक्ष्य ददौ रजनीभक्ष्यानुसारं ददावित्यर्थः । सीता तु रामभुक्तशेषं भुक्तवतीत्याशयः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

---

अथ सुतीक्ष्णानुज्ञया रामस्याश्रममण्डलं प्रति प्रस्थानमष्टमे—रामस्त्वित्यादि । परिणाम्य अतिवाह्य । प्रभाते उषःकाले ॥ १ ॥ सह सीतयेत्यनेन पूर्वमेव सौमित्रिः स्नात इति व्यज्यते । उपास्पृशत् स्नातवान् । "स्नानाचान्त्योरुपस्पर्शः" इति बाणः । सुशीतेनेत्युष्णोदकव्यावृत्तिः । उत्पलगन्धिनेत्यनेन तटाकस्नानं सूच्यते ॥ २ ॥ अग्निमित्येकवचनेन एकाग्नित्वावगमान्न त्रेताग्निरिदानीमिति गम्यते । सुरान् नारायणं । "सहपत्न्या विशालाक्ष्या नारायणमुपागमत्" इत्ययोध्याकाण्डोक्तेः । परिवारापेक्षया बहुवचनं । काल्यं यथाकालप्राप्तं यथा तथा । देशानुगुण-

---

यशपथे स्यादाक्रोशे पराभवे" इतिविश्वः ॥ २१ ॥ **ति०** उपरमं उपरम्य । क्वचिदुपरम्येत्येवपाठः ॥ **शि०** उपरमं अतिनिवृत्तचित्तं । तं महर्षिं ॥ २२ ॥ इतिसप्तमस्सर्गः ॥ ७ ॥

**[ पा० ]** १ ङ. झ. ट. मुक्त्वोपरमं. क. घ. मुक्त्वावचनं. २ क. ख. ग. मुपाविशत्. ३ क. च. छ. ज. ञ. रामः. ख. ग. पुण्ये. ४ ङ. झ. ट. योग्यमन्नं. ५ क. च. छ. ज. ञ. सत्कृत्यताभ्यांप्रददौ. ६ क. ख. ग. ङ. झ. ट. रजनींसमीक्ष्य. च. छ. ज. ञ. रजनींनिरीक्ष्य. ७ क. च. छ. ज. ञ. प्रत्यूषे. ८ ङ. झ. ट. उत्थायच. ९ ख. ग. च. छ. ज. ञ. उपस्पृश्यतुशीतेन. ङ. झ. ट. उपस्पृश्यसुशीतेन. १० ङ.—ट. तोयेनोत्पल. ११ क. छ. ज. ञ. तेऽग्नीन्. १२ क. ट. काल्ये.

उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः ॥ सुतीक्ष्णमभिगम्येदं श्लक्ष्णं वचनमब्रुवन् ॥ ४ ॥
सुखोषितास्स्म भगवंस्त्वया पूज्येन पूजिताः ॥ आपृच्छामः प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५ ॥
[1]त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलम् ॥ ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६ ॥
[2]अभ्यनुज्ञातुमिच्छामस्सहैभिर्मुनि[3]पुङ्गवैः ॥ धर्मनित्यैस्तपोदान्तैर्विशिखैरिव पावकैः ॥ ७ ॥
अविषह्यातपो यावत्सूर्यो नाति विराजते ॥ अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८ ॥
तावदिच्छामहे गन्तुमित्युक्त्वा चरणौ मुनेः ॥ व[4]वन्दे सहसौमित्रिस्सीतया [5]सह राघवः ॥ ९ ॥
[6]तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः ॥ गाढमा[7]लिङ्ग्य [8]सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥
अरिष्टं गच्छ पन्थानं राम सौमित्रिणा सह ॥ सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११ ॥
[9]पश्याश्रमपदं र[10]म्यं दण्डकारण्यवासिनाम् ॥ एषां तपस्विनां वीर[11] तपसा भावितात्मनाम् ॥ १२ ॥
[12]संप्राज्यफलमूलानि पुष्पितानि वनानि च ॥ [13]प्रशस्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३ ॥
फुल्लपङ्कज[14]षण्डानि प्रसन्नसलिलानि च ॥ कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४ ॥
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ॥ रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५ ॥
गम्यतां वत्स सौमित्रे भवानपि च गच्छतु ॥ [15]आगन्तव्यं त्वया तात पुनरेवाश्रमं म[16]म ॥ १६ ॥
एवमुक्तस्तथेत्युक्त्वा काकुत्स्थस्स[17]हलक्ष्मणः ॥ [18]प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७ ॥

पूजाकथनायतपस्विशरण इत्युक्तं । उदयन्तं उद्यन्तं । अनेन होमानन्तरमादित्योपस्थानोक्त्या अनुदितहोमपक्षसूचनात् कात्यायनसूत्रक्रमेण राघवाणामनुष्ठानमितिगम्यते ॥ ३—४ ॥ सुखोषिता इत्यादित्रिश्लोक्येकान्वया । आपृच्छामः आपृच्छामहे । परस्मैपदमार्षं । अभ्यनुज्ञातुमिति भावेतुमुन् । त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयामहे इत्यर्थः । मुनयः सहवासयोग्याइत्याह—धर्मनित्यैरित्यादि । धर्मनित्यैः नित्यधर्मैः । तपोभिर्दान्तैः निगृहीतेन्द्रियैः । तपो हीन्द्रियनिग्रहहेतुः । विशिखैः विगतज्वालैः । “ आर्चिर्हेतिः शिखास्त्रियां ”इत्यमरः । गुप्तमाहात्म्यैरित्यर्थः ॥ ५—७ ॥ सूर्यः अविषह्यातपः असह्यातपः सन् यावन्नातिविराजते नात्यन्तमुद्गच्छति । कथमिव अमार्गेणान्यायेनागतां लक्ष्मीं ऐश्वर्यं । प्राप्य अन्वयवर्जितः साधुसमागमवर्जितो दुष्प्रभुरिवाविषह्यातप इत्यन्वयः । तावदिच्छामहे गन्तुमित्यनेन रावणवधत्वरा व्यज्यते । अतो न हीनोपमादोषोपि ॥ ८—१० ॥ अरिष्टं अनुपद्रवं । रिषेः “ तीषसह—” इति भावे निष्ठा । अनेनापि रावणविजयाभ्यनुज्ञा सूच्यते ॥ ११ ॥ तपोवनपदार्थान् कृतार्थयितुमाह—पश्येत्यादि ॥ १२ ॥ प्राज्यं अदभ्रं । “ प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ” इत्यमरः ॥ १३ ॥ कारण्डवो जलकुक्कुटः । “ मद्गुः कारण्डवः प्लवः ” इत्यमरः ॥ १४ ॥ रमणीयत्वादिना विशेषयितुं पुनरप्याह—रमणीयानीति । मयूराणामभिरुतानि येषु तानि ॥ १५ ॥ गम्यतां त्वयेति शेषः । भवानिति

**टीका॰** त्वरयन्तिमामितिपाठान्तरं । मुनयस्त्वभियन्तिमामित्यनेनचित्रकूटमारभ्यमार्गप्रदर्शनव्याजेनपञ्चवटीप्रवेशपर्यन्तंरामेणसहमुनयस्समागताइतिगम्यते ॥ ५ ॥ **ति॰** अभ्यनुज्ञातुमिच्छामः त्वत्कर्तृकंगमनानुज्ञानंप्रार्थयामः । विशिखैः विधूमैः । **स॰** पावकैः शुचित्वादिनातत्समैः ॥ ७ ॥ **स॰** नातिविराजते नतापयति । अन्वयवर्जितः अकुलीनः ॥ ८ ॥ **शि॰** अश्रमपदं श्रमनिवर्तकंस्थानंपश्य । **ति॰** आश्रमपदमितिजातावेकवचनं ॥ १२ ॥ **ति॰** शान्तपक्षिगणत्वं परस्परविरोधाभावात् । **स॰** शान्तपक्षिगणानि मरन्दतुन्दिलत्वादितिभावः ॥ १३ ॥ **शि॰** अत्रस्रोतोरहितानितटाकानि तत्सहितानिसरांसीतिनपौनरुक्त्यं ॥ १४ ॥

**[ पा॰ ]** १ ज. इच्छामहे. २ घ. तदनुज्ञातुं. ३ क. च. ज. ञ. सत्तमैः. ४ क. च. छ. ज. ववन्दतुस्तावेकाग्रौसीतयासहराघवौ. ५ घ. चैव. ६ घ. संस्पृशन्तौच. च. छ. ज. संस्पृशन्तावुत्थाप्यचरणौ. ७ क. ख. ग. ङ.—ट. माश्लिष्य. ८ च. छ. ज. तंराममिदं. ९ क. ख. ग. पश्याश्रममिदं. १० ग. पुण्यं. ११ क. च. छ. ज. राम. १२ क. ख. घ. ट. सुप्राज्य. १३ क.—घ. प्रशान्तमृग. १४ ङ. च. छ. झ. ञ. खण्डानि. १५ ग. गन्तव्यंच. ङ. झ. आगन्तव्यंचतेद्रष्टा. ट. आगन्तव्यंचतंद्रष्टा. १६ ङ. झ. ट. प्रति. १७ क. च. छ. ज. ञ. सहसीतया. १८ क. च. छ. ज. ञ. प्रदक्षिणमृषिं.

ततः शुभतरे तूणी धनुषी चायतेक्षणा ॥ ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः ॥ १८ ॥
आबध्य च शुभे तूणी चापौ चादाय सस्वनौ ॥ निष्क्रान्तावाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥१९॥
श्रीमन्तौ रूपसंपन्नौ दीप्यमानौ स्वतेजसा ॥ प्रस्थितौ धृतचापौ तौ सीतया सह राघवौ ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टमस्सर्गः ॥ ८ ॥

## नवमः सर्गः ॥ ९ ॥

सीतयादण्डकारण्यप्रस्थानसमयेआयुधधारिणंरामंप्रतिदृष्टान्ततयापुरावृत्तकथनपूर्वकमायुधधारणेदोषोक्तयातद्व्यसनप्रार्थना ॥ १ ॥

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ॥ हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १ ॥
अयं धर्मस्सुसूक्ष्मेण विधिना प्राप्यते महान् ॥ निवृत्तेन तु शक्योऽयं व्यसनात्कामजादिह ॥ २ ॥

राम उच्यते आश्रमं प्रतीति शेषः ॥१६—१७॥ ततः प्रस्थानोपक्रमानन्तरं । विमलौ तत इति । ततः धनुरादिदानानन्तरमित्यर्थः । ततः शुभतरे इत्यादिनायमर्थोऽवगम्यते । आश्रमप्रवेशे किमस्माकमायुधैरिति मन्यमाना सीता आयुधानि मुनिगृहे कुत्रचिन्निहितवती । अथ अमार्गेणेत्यादिरामवाक्येन अरिष्टं गच्छेत्यादिमुनिवाक्येन च तयोर्हृदयं विदित्वा स्वयमेवादाय पुनर्दत्तवतीति । अत एवोत्तरसर्गे स्वाशयं वक्ष्यति ॥१८-२०॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥

अथ सीता वीरपत्नीत्वेन धनुर्मुष्टिग्रहणविशेषेण सायुधतया सन्नद्धं पतिमालोक्य यदि त्वं सायुधो राक्षसभूयिष्ठे देशे प्रविष्टः स्याः तर्हि तैः साकं विरोधः स्यात् तेनावयोर्विश्लेषः स्यात् तेन भवतो महान्क्लेशः स्यात् अतो निधायायुधं वनेस्माभिर्गन्तव्यमित्याह नवमे—सुतीक्ष्णेनेत्यादि । अभ्यनुज्ञातं "अरिष्टं गच्छ पन्थानमिति" रावणवधाभिप्रायेणानुज्ञातं । हृद्यया युक्तियुक्तत्वेन हृदयंगमया । स्निग्धया स्नेहप्रवृत्तया । अनेन वक्ष्यमाणवचने स्नेह एव मूलमित्युक्तं । रामेण ऋषिभ्यः प्रतिज्ञाकरणं रामप्रतिज्ञाया दुरावर्त्वं च बहुशो दृष्टवत्यपि राक्षसैर्वैरे भर्तुः स्वविरहद्वारा महान्क्लेशो भवेदिति प्रेमान्धतया तथोक्तवतीति भावः ॥ १ ॥ किं तदुक्तं तत्राह—अयं धर्म इति । महानयं धर्मः त्वयाऽनुष्ठीयमानो मुनिधर्मः । सुसूक्ष्मेण विधिना मार्गेण । प्राप्यते धर्मकामैरिति शेषः । सूक्ष्मविधिमेवाह—निवृत्तेनेति । इह वने । कामजात् इच्छाकृताद्व्यसनान्निवृत्तेन पुरुषेणायं धर्मः शक्यः

**ति०** चापे चापशब्दोद्विलिङ्गकः ॥ १९ ॥ इत्यष्टमस्सर्गः ॥ ८ ॥

**टीका०** अथ "केवलेनात्मकार्येण प्रवेष्टव्यंवनंमया । विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमं" इतिमुनीनां राक्षसवधप्रतिज्ञां कुर्वाणंभर्तारंप्रति सीता "अहिंसापरमोधर्म"इतिन्यायंमनसिनिधाय हिंसांनिवर्तयितुं लोकदृष्टान्तेनवक्तुमारभते—**यस्तुधर्मइत्यादिना** । महान् उत्कृष्टः । योधर्मः सुतीक्ष्णेनमुनिना विधिना शास्त्रोक्तप्रकारेणप्राप्यते । अयंधर्मः । इहलोकेकामजाद्व्यसनान्निवृत्तेनपुरुषेण त्वयेतिवा शक्यः आचरितुंशक्यइतियोजना । अधर्मंतुसुसूक्ष्मेणेतिपाठेतु महान् महात्मायद्यपिभवान् । तथापि सुसूक्ष्मेणविधिना सूक्ष्ममार्गेणविचारणेसति अधर्मंप्राप्यते । आपेश्छान्दसश्श्यन्वा कर्तरियग्वा छान्दसः । अधर्ममेवप्राप्नोति

**[ पा० ]** १ च. छ. ज. ञ. कनकत्सरू. ख. ग. विमलौशुभौ. २ क. च. छ. ज. ञ. चापेचादायसुस्वने. ख. ग. ङ. झ. चापेचादायसस्वने. ३ क. च. छ. ज. ञ. वाश्रमपदात्तावुभौ. ४ ङ. झ. ट. शीघ्रंतौ. ५ क. ख. ग. ङ.—ट. संपन्नावनुज्ञातौमहर्षिणा. ६ ङ. झ. ञ. ट. प्रस्थितौधृतचापासी. ख. ग. संप्रस्थितौमहावीरौ. ७ ख. राघवौसहसीतया. ८ क. वैदेही. ९ ङ. झ. अधर्मंतुसु. ख. ग. अथधर्मः. च. छ. ज. ञ. यस्तुधर्मः. ट. योधर्मस्तु. १० ङ. झ. ट. निवृत्तेनच.

त्रीण्येव [1]व्यसनान्यत्र कामजानि भवन्त्युत ॥ मिथ्यावा[2]क्यं परमकं तस्माद्[3]गुरुतरावुभौ ॥
परदाराभिगमनं विना वैरं च रौद्रता ॥ ३ ॥
मिथ्यावाक्यं न ते भूतं न भविष्यति राघव ॥ कुतो[4]भिलाषणं स्त्रीणां परेषां धर्मनाशनम् ॥ ४ ॥
तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन ॥ [5]मनस्यपि तथा राम न चैतद्विद्यते क्वचित् ॥ ५ ॥
स्वदारनि[6]रतस्त्वं च नित्यमेव नृपात्मज ॥ धर्मिष्ठस्सत्यसन्धश्च [7]पितुर्निर्देशकारकः ॥ ६ ॥
सत्यसन्ध [8]महाभाग श्रीमँल्लक्ष्मणपूर्वज ॥ [9]त्वयि सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ७ ॥
तच्च सर्वं महाबाहो शक्यं [10]धर्तुं जितेन्द्रियैः ॥ [11]तव वश्[12]येन्द्रियत्वं च जानामि शुभदर्शन ॥ ८ ॥
तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् ॥ निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥ ९ ॥

संपाद्यः । व्यसनमिति जात्येकवचनं ॥२॥ किंतद्व्यसनं तत्राह—त्रीण्येवेति । अत्र लोके । उत अत्यर्थं । कामजानि रागकृतानि । त्रीण्येव व्यसनानि भवन्ति । कानि तानि त्रीणीत्यत्राह—मिथ्यावाक्यमित्यादि । मिथ्यावाक्यं परमकं प्रथममित्यर्थः । सर्वेभ्यो व्यसनेभ्यः श्रेष्ठमित्यर्थः । स्वार्थेकः । तस्मादपि व्यसनात् गुरुतरावुभौ व्यसनविशेषौ तावाह्—परदारेत्यादिना । परदाराभिगमनं परदाराभिमर्शनं । वैरं विनारौद्रता हिंसकता चेति ॥ ३ ॥ एवं सामान्येन व्यसनरूपमुक्त्वा प्रकृते परिहार्यत्वेन वक्तव्यं व्यसनं दर्शयितुमितरपरिशेषमाह—मिथ्येत्यादिना । अत्र भूतभविष्यतोर्वर्तमानस्यान्तर्भावः । कुत इति परेषां संबन्धिनीनां स्त्रीणां धर्मनाशनं अधर्मकरं च । अभिलाषणं अभिलाषः । कुतः असंभावित इत्यर्थः । धर्मनाशनशब्देन गुरुतरशब्दोक्तातिशयो दर्शितः । मिथ्यावाक्यमधर्मकरं इदमुभयकरमिति भावः ॥४॥ कुत इत्यादिना परदाराभिलाष एव नास्ति कुतस्तदभिगमनमित्युक्तं कालत्रयेपि तदभाव इति विशेषयति—तवेति । मनुष्येन्द्रेति हेतुगर्भं संबोधनं । तव परदाराभिलाषणमिदानीं नास्ति । कदाचन ते तन्नाभूत् । हे राम एतत् अभिलाषणं । ते कचित्सुन्दरेष्वपि परदारेषु मनसा संकल्पेनापि न विद्यते । अनेन भविष्यत्कालेपि नास्तीत्युक्तं । तथेति समुच्चये । चोवधारणे ॥ ५ ॥ उक्तव्यसनद्वयाभावे बहून्हेतून्दर्शयति—स्वदारेत्यादिना । हे नृपात्मज त्वं नित्यमेव स्वदारनिरतः धर्मिष्ठश्च । अतएव सत्यसन्धः सत्यप्रतिज्ञः । तत्र निदर्शनं—पितुर्निर्देशकारकः ॥६ ॥ उक्तानुवादपूर्वकं भर्तारं स्तौति—सत्यसन्धेति । महाभाग महाधर्मन् । श्रीमान् निरवधिकैश्वर्य । लक्ष्मणपूर्वज वैराग्ये लक्ष्मणादप्यधिक । त्वयि सत्यं प्रतिष्ठितं । धर्मश्चप्रतिष्ठितः । अन्यत्सर्वमैश्वर्यवैराग्यादिकं च त्वयि प्रतिष्ठितं सुस्थिरं ॥ ७ ॥ तृतीयव्यसनसद्भावं वक्तुमुक्तव्यसनद्वयाभावं स्वानुभवसिद्धत्वेन द्रढयति—तच्चेति । हे महाबाहो जितेन्द्रियैः धर्तुं शक्यं तत्पूर्वोक्तं धर्मिष्ठत्वादिकं सर्वं तव वश्येन्द्रियत्वं च जानामि शुभदर्शन तत्सद्भावे तवदर्शनमेव प्रमाणं । “ रूपमेवास्यैतन्महिमानं व्याचष्टे” इति श्रुतेः ॥ ८ ॥ एवं व्यसनद्वयरहितेन त्वया तृतीयव्यसनमपि कथंचित्परिहर्तव्यमित्याशयेनाह—तृतीयमिति । निर्वैरं यथा भवति तथा परप्राणाभिहिंसनरूपं यदिदं रौद्रं रौद्राख्यं । तृतीयं महद्व्यसनं पामरैः क्रियते । तच्च तत्तु । ते समुपस्थितं त्वया कर्तुमुद्युक्तमित्यर्थः ॥ ९ ॥

भवानित्यर्थः ॥२॥ **शि०** परमं परा अत्युत्कृष्टा मा अर्थाभावेपिमनोहारिका संपत्तिर्यस्मिंस्तत् मिथ्यावाक्यं । **स०** परदाराभिगमनं विनावैरंचरौद्रता । इतीतिशेषः । उभावित्यन्वयः ॥ ३ ॥ **स०** परेषांस्त्रीणामित्यन्वयः । अभिलषणं इच्छापूर्वकसंबन्धः । कुतः कुतश्चित्कारणादपिनास्ति । कदाचन नचाभूदित्यर्थः । अथवा मूलरूपे तवपरस्त्रीसंबन्धाभावेपि भूमौ किंनस्यादित्यतआह—**कुतइति** । भूसंबन्धादपीत्यर्थः ॥ ४ ॥ **स०** स्वदारनिरतः स्वदारेषुमयि निरतः ॥ ६ ॥ **स०** रक्षणार्थाय रक्षणाभिन्नप्रयो-

**[ पा० ]** १ क. ग. ङ—ट. व्यसनान्यद्य. २ ग. वादंपरमकं. ङ. झ. ट. वाक्यंतुपरमं. घ. वाक्यंगुरुतरं. ३ ख. ग. द्रुतरेशुभे. ४ घ. ङ. च. झ. ञ. ट. कुतोभिलषणं. ग. कुतोहिधर्षणं. ५ ख. मनसापि. ६ ङ. झ. ट. निरतश्चैव. ७ क. पितृनिर्देश. ८ ख. ग. महाबाहो. ९ क. ख. ङ—ट. त्वयिधर्मश्चसत्यंच. ग. वेत्सिधर्मंचसत्यंच. घ. वेत्सिसत्यंचधर्मंच. १० ग. घ. ङ. छ—ट. वोढुं. ख. च. बोद्धुं. ११ ज. तच्च. १२ ङ. झ. ट. भूतानां.

प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम् ॥ ऋषीणां रक्षणार्थाय वधस्संयति रक्षसाम् ॥ १० ॥
एतन्निमित्तं च वनं दण्डका इति विश्रुतम् ॥ प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥ ११ ॥
ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः ॥ [1]त्वद्वृत्तं चिन्तयन्त्या वै भवे[2]न्निःश्रेयसं हितम् ॥१२॥
न हि मे रोचते वीर गमनं दण्डकान्प्रति ॥ कारणं [3]तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥ १३ ॥
त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह [4]वनं गतः ॥ दृष्ट्वा वनचरान्[5]सर्वान्कच्चित्कुर्याश्शरव्ययम् ॥ १४ ॥
[6]क्षत्रियाणां च हि धनुर्हुताशस्येन्धनानि च ॥ समीपतस्स्थितं तेजो बलमुच्छ्रयते भृशम् ॥ १५ ॥
पुरा किल महाबाहो तपस्वी [7]सत्यवाक्छुचिः ॥ कस्मिंश्चिदभवत्पुण्ये वने रतमृगद्विजे ॥ १६ ॥
तस्यैव तपसो विघ्नं कर्तुमिन्द्रश्शचीपतिः ॥ खड्गपाणिरथागच्छदाश्रमं भट[8]रूपधृत् ॥ १७ ॥
तस्मिंस्तदाश्रमपदे निशि[9]तः खड्ग उत्तमः ॥ स न्यासविधिना दत्तः पुण्ये तपसि तिष्ठतः ॥ १८ ॥
स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ॥ [10]वने तं वि[11]चरत्येव रक्षन्प्रत्ययमात्मनः ॥ १९ ॥

कथमुद्युक्तमित्यत्राह—प्रतिज्ञात इति ॥ १० ॥ न केवलमृष्यभ्यर्थनया प्रतिज्ञातं प्रथमसंकल्पश्च तव तथैवेत्याह—एतन्निमित्तमिति । दण्डका इतिविश्रुतं वनं प्रति त्वं भ्रात्रा सह धृतबाणशरासनः सन् प्रस्थितः । "केवलेनात्मकार्येण" इत्यादिना भवतैवोक्तत्वादिति भावः ॥ ११ ॥ ततः किमित्यत्राह——ततस्त्वामिति । प्रस्थितं त्वां दृष्ट्वात्वद्वृत्तं सत्यप्रतिज्ञत्वस्वदारैकनिरतत्वादिकं च दृष्ट्वा। त्वन्निःश्रेयसं तव सौख्यं हितं तत्साधनं च चिन्तयन्त्या मम मनश्चिन्ताकुलं भवेद्धि भवतिहि । भवान् सत्यप्रतिज्ञत्वेन रक्षोवधान्न निवर्तेत निर्वैरं परहिंसनं च न करोषि । यस्य कस्यचिद्वैरमूलस्य करणे तदहमेव स्यां । मद्विरहं च त्वमेकदारव्रतनिरतो न सोढुमर्हसि । अतः कथमिदं संपत्स्यत इति भावः ॥ १२ ॥ तर्हि क उपायस्ते प्रतिभातीत्यपेक्षायां रामपक्षस्यैव स्वपक्षत्वात्तत्पक्षं स्थूणादिखनन्यायेन द्रढयितुं पक्षान्तरमाह —नहीति । मम मत्तः ॥ १३ ॥ शरव्ययं शरमोक्षं। कच्चिदिति कामप्रवेदने ॥ १४ ॥ तर्हि शरव्ययं न करोमीत्यत्राह—क्षत्रियाणामिति । क्षत्रियाणां समीपतःस्थितं धनुः तेजोरूपं बलं भृशं उच्छ्रयते वर्धयति। हुताशस्य समीपस्थितानीन्धनानि च तेजोबलमुच्छ्रयन्ते । दृष्टान्तालंकारः ॥ १५ ॥ उक्तार्थे ऐतिह्यमाह—पुरेत्यादि । रतमृगद्विजे संतुष्टमृगपक्षिके । तपस्वी कश्चिदभवदित्यन्वयः ॥ १६—१७॥ स इति खड्गविशेषणं । न्यासविधिना न्यासप्रकारेण । "राजचोरादिकंभयाद्दायादानां च वञ्चनात् । स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः" इत्युक्तो न्यासः । तिष्ठतः तस्येति शेषः । चतुर्थ्यर्थे षष्ठी ॥ १८॥ आत्मनः प्रत्ययं विश्वासस्थापितं वस्तु। "प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । रक्षन्नेव

जनाय ॥ १० ॥ स० दण्डकाइतीत्यस्य विवक्षाऽभावान्नसंधिः ॥ ११ ॥ ति० ममनश्चिन्ताकुलं भवेत् भवति । रक्षसांबलवत्त्वेन तेभ्योऽनिष्टसंभावनया ऐहिकसुखभङ्गोपि संभावितइतिभावः । शि० त्वद्वृत्तं राक्षसवधप्रतिज्ञावृत्तान्तं । चिन्तयन्त्याम मम हितंनिश्श्रेयसं कल्याणं भवेत् । मत्प्रार्थनांस्वीकुर्वित्यर्थः । एतेन राक्षसमात्रवधप्रतिज्ञाश्रयणादनपराधिविभीषणादिवधविषयकसंशयो जातइति व्यञ्जितं । नच "तपस्विनांरणेशत्रून्हन्तुमिच्छामिराक्षसान्" इति प्रतिज्ञावाक्ये तपस्विशत्रुत्वविशिष्टराक्षसवधप्रतिज्ञया विभीषणादिव्यावृत्तिस्सिद्धैवेति संशयस्यनावकाशइति वाच्यं । शत्रुभ्रातृत्वादेश्शत्रुत्वाभासस्य संशयबीजत्वात् । नच प्रतिज्ञावाक्ये रणइतिसप्तम्यन्तस्योपादानाद्रणेआगतान्राक्षसान्हन्तुमिच्छामीत्यर्थात्कथंविभीषणादिसंग्रहसंशयइति वाच्यं । रणेविद्यमानोऽहं हन्तुमिच्छामीत्यर्थस्यापि संभवात् विभीषणानुयायिनामपि बहूनां रावणाधीनत्वाद्रणागमनसंभवाच्च यत्नविशेषमन्तरा विभीषणागमनस्यापि दुर्वारत्वाच्चेतिदिक् ॥ १२ ॥

[ पा० ] १ ट. तद्वृत्तं. २ क. घ. तवनिश्श्रेयसंहितत्. ३ क. छ. ज. तव. ४ च. वने. ५ क. च. छ. ज. ञ. न्घोरान्. ६ क. च. छ. ज. ञ. क्षत्रियाणामपि. ङ. झ. ट. क्षत्रियाणामिह. ७ क—ङ. छ. झ. ञ. ट. सत्यवाञ्शुचिः. ८ क. ग. ङ. छ. ज. ञ. ट. रूपधृक्. ९ ङ. छ. झ. ट. निहितः. १० क—ट. वनेतु. ११ ख. ग. ङ. ट. विहरत्येव. क. विहरत्येवं. च. विचरत्येवं.

यत्र गच्छत्युपादातुं मूलानि च फलानि च ॥ न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ २० ॥
नित्यं शस्त्रं परिवहन्क्रमेण स तपोधनः ॥ चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥२१॥
ततः स रौद्रेऽभिरतः प्रमत्तो धर्मकर्शितः ॥ तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥ २२ ॥
एवमेतत्पुरा वृत्तं शस्त्रसंयोगकारणम् ॥ २३ ॥
अग्निसंयोगवद्धेतुश्शस्त्रसंयोग उच्यते ॥ स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥ २४ ॥
न कथंचन सा कार्या गृहीतधनुषा त्वया ॥ बुद्धिर्वैरं विना हन्तुं राक्षसान्दण्डकाश्रितान् ॥
अपराधं विना हन्तुं लोकान्वीर न कामये ॥ २५ ॥
क्षत्रियाणां तु वीराणां वनेषु निरतात्मनाम् ॥ धनुषा कार्यमेतावदार्तानामभिरक्षणम् ॥ २६ ॥
क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च ॥ व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ॥ २७॥
तदार्य कलुषा बुद्धिर्जायते शस्त्रसेवनात् ॥ पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २८ ॥

विचरति व्यचरत् ॥ १९ ॥ एतदेवोपपादयति—यत्रेति ॥ २० ॥ परिवहन् रक्षन् । रौद्रीं हिंसापरां । स्वां शस्त्रधार्यसाधारणां ॥ २१ ॥ रौद्रे हिंसारूपकर्मणि । अधर्मेण कर्शितः पीडितः । संवासात्संपर्कात् ॥ २२ ॥ शस्त्रसंयोगकारणं पुरावृत्तं उक्तमिति शेषः ॥ २३ ॥ पुरावृत्तफलितमर्थमाह—अग्नीति । अग्निसंयोगो यथा वस्तुनो विकारहेतुः एवं शस्त्रसंयोगोपि शस्त्रिणो विकारहेतुर्भवति । स्नेहात् त्वद्विषयस्नेहात् । बहुमानात् मद्विषये त्वत्कृतबहुमानात् । स्मारये भवद्विज्ञातार्थमेव स्मारयामि । न शिक्षये नापूर्वमर्थमुपदिशामि ॥ २४ ॥ गृहीतधनुषा त्वयावैरं विना राक्षसान् हन्तुं सा रौद्री बुद्धिः । कथंचन केनापि प्रकारेण । न कार्या न कर्तुं योग्या । त्वत्प्रकृत्यननुगुणत्वादिति भावः । इयं बुद्धिर्मत्प्रकृतेरप्यननुगुणेत्याह—अपराधमिति । लोकान् प्राणिनः ॥ २५ ॥ यद्येवं तर्हि क्षत्रियधर्मो धनुर्धारणं निरवकाशं स्यादित्याशङ्कयाह—क्षत्रियाणां त्विति । वीराणां क्षत्रियाणां धनुषा कार्यं कर्तव्यं । वनेषु निरतात्मनां आर्तानां पीडितानां रक्षणं बाधकोत्सारणमित्येतावदेव । तुरवधारणे ॥ २६ ॥ ननु रक्षणार्थं वा धनुर्धार्यमेवेत्याशङ्क्य तदपिनेदानीमुचितं किंतु राज्यपालनकाल इत्याह—क्वचेत्यादिना । क्षात्रं क्षत्रधर्मः । क्विंशब्दाभ्यांगम्यमानमर्थमाह—व्याविद्धमिदमिति । शस्त्रवने क्षात्रतपसी च । परस्परविरुद्धमिदमस्माभिर्न पूज्यतां । किंतु देशधर्मस्तपोवनधर्मःपूज्यतां । क्षात्रशस्त्रे विहाय वनवासतपश्चरणे एव क्रियतामित्यर्थः ॥ २७ ॥ व्यत्ययो वा किं न स्यादित्यत्राह—तदार्येति । तर्हि वर्णधर्मो

**ति०** स्नेहात् भवद्विषयात् । बहुमानात् त्वत्कर्तृकान्मद्विषयात् । किंच बहुमानोनाम मदीयोऽयंभर्तेत्येवमभिमानः । स्मारये पुरावृत्तमितिशेषः । अत्र स्नेहोहेतुः । बहुमानाच्च त्वां तु शिक्षये इत्यर्थः । तदेवशिक्षणंकरोति । नकथंचनेति । यत्तुतीर्थः स्मारयेत्वांनशिक्षये इतिपठति व्याचष्टेच तत्तूत्तरवाक्ये करिष्यमाणशिक्षणेन व्याहतमिति कतकः ॥ २४ ॥ **तनि०** अपराधंविनेति । निरपराधहननमेवात्रप्रतिषिध्यते नतु तपस्विषुसापराधराक्षसहननं । तेन सापराधं सम्यगालोच्य तत्राप्यपराधक्षालनोपायान्तराभावे हन्तव्यमितिभावः । लोकान्हन्तुमिति । "अकुर्वन्तोपिपापानि शुचयःपापसंश्रयात्" इत्युक्तन्यायेन एकापराधिलक्षीकरणेनप्रवृत्तेहनने अनपराधिनामपि बाधा यथा नभवति तथा कार्यमितीहार्थः । **ति०** हन्तुं राक्षसानिति शेषः । नमंस्यते तवयत्नमौचित्येनेतिशेषः ॥ लोकान्वीरनकामये इति पाठे लोकान्हन्तुंनेच्छामि राक्षसवधवदितरप्राणिवधस्याप्येवंसति प्रसङ्गादितिभावः ॥ **शि०** नमंस्यते प्रशस्तत्वेननिश्चेष्यतिकश्चिद्विद्वानितिशेषः ॥ २५ ॥ **शि०** निवृत्तानांतु प्राकृतक्षत्रियाणामपि शस्त्रधारणमनुचितमित्याह—**क्वचेति** । क्षात्रं क्षत्रियसंबन्धि शस्त्रंक्व तपश्चक्व । इदं धर्मद्वयस्वीकारः व्याविद्धं विरुद्धं अस्माभिर्निश्चीयतइतिशेषः । अतोदेशधर्मः प्राकृतविलक्षणायोध्योचितरीतिः सद्वारकाद्वारकपालनं पूज्यतां क्रियतां ॥२७॥

[ पा० ] १ ङ. तां. २ ग. नित्यतां. ख. निष्ठतां. ३ क. घ. ङ. च. ज—ट. रौद्राभिरतः. ४ क. धर्मदर्शने. घ. धर्मवर्जितः. ५ ङ. झ. त्वांतुशिक्षये. ६ ङ. झ. लोकोवीरनमंस्यते. ट. लोकेवीरनमंस्यते. क. वीरलोकान्नकामये. ग. लोकान्वीरान्नकामये. ७ क. ख. ग. वनेतु. ८ ङ. च. ज. ञ. नियतात्मनां. ९ ग. धार्यं. १० ग. क्वचित्. ११ क. च. छ. ज. ञ. मस्माकंदेश. १२ क. ङ. झ. ट. कदर्यकलुषा. १३ क. त्वयोध्यांवै.

अक्षया तु भवेत्प्रीतिः श्वश्रूश्वशुरयोर्मम ॥ यदि राज्यं परित्यज्य भवेस्त्वं निरतो मुनिः ॥ २९ ॥
धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् ॥ धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥ ३० ॥
आत्मानं नियमैस्तैस्तैः कर्शयित्वा प्रयत्नतः ॥ प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम् ॥ ३१ ॥
नित्यं शुचिमतिः सौम्य चर धर्मं तपोवने ॥ सर्वं हि विदितं तुभ्यं त्रैलोक्यमपि तत्त्वतः ॥ ३२ ॥
स्त्रीचापलादेतदुदाहृतं मे धर्मं च वक्तुं तव कस्समर्थः ॥
विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु मा चिरेण ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः ॥ १० ॥

रामेणसीतांप्रतिसश्लाघंशरणार्थिषुमुनिजनेषुरक्षोहननस्यस्वेनप्रतिज्ञानत्वोक्तयाप्रतिज्ञापालनस्यप्राणादिभ्योपिगरीयस्त्वेन दुस्त्यजत्वोक्तिपूर्वकंरक्षोवधेनमुनिजनरक्षणस्यावश्यंकर्तव्यत्वोक्तिः ॥ १ ॥

वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया ॥ श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ मैथिलीम् ॥ १ ॥

---

लुप्येतेत्यत्राह—पुनरिति ॥ २८ ॥ तपोमात्रकरणे फलान्तरमप्याह—अक्षयेति । यद्वा सर्वदा क्षत्रधर्मं त्यक्त्वा मुनिवृत्तिराश्रीयतामित्याह—अक्षयेति । तुः समुच्चये । अकलुषा बुद्धिश्च ते भवेदित्यर्थः । श्वश्रूश्वशुरयोः कैकेयीदशरथयोः । "श्वशुरः श्वश्वा" इत्येकशेषाभाव आर्षः ॥ २९ ॥ केवलधर्मानुष्ठानस्य सर्वश्रेयोमूलत्वमाह—धर्मादित्यादिना । सर्वं मुक्तिमपि ज्ञानद्वारा लभत इत्यर्थः ॥ ३० ॥ धर्मार्थज्ञानप्रकारमाह—आत्मानमिति । नियमैः चान्द्रायणादिव्रतैः । आत्मानं शरीरं ॥ ३१ ॥ त्रैलोक्यं त्रिलोकभवं पुरुषार्थतत्साधनतदङ्गकलापं ॥ ३२ ॥ स्त्रीचापलात् स्त्रीत्वप्रयुक्तचापलात् । मे मया । मा चिरेण विचारस्य विलम्बो मा भूत् । अत्र सार्धत्रयस्त्रिंशच्छ्लोकाः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

---

एवं रामः सत्यप्रतिज्ञो निर्वैरं च रक्षोवधं नकरिष्यति । तथाच मद्वियोगेन रक्षोवधेन भवितव्यं । मद्विरहं च न सहिष्यते । संकटमिदमुपस्थितमित्याकुलचित्ता वैदेही पतिप्रेमान्धा रक्षोवधान्निवर्तयितुमुपक्रान्ता । रामस्तु सीताविरहं सोढ्वापि तन्मूलवैरेण रक्षांसि निहत्य प्रतिज्ञा निर्वोढव्येति समाधत्ते दशमे—वाक्यमेतत्त्वित्यादि । भर्तृभक्तयेत्यनेन भर्तृप्रेमपारवश्येन पूर्वमुक्तमिति ज्ञायते । धर्मेस्थित इत्यनेन सीताविरहक्लेशमङ्गीकृत्यापि प्रतिश्रुतनिर्वहणपरता द्योत्यते । यद्यपि

---

ति० यतः शस्त्रसेवनात् कदर्याणां कृपणानामिव कलुषाबुद्धिर्जायतेधर्मानुष्ठानविरोधिनी । अतः शस्त्रसेवनं वने नकर्तव्यमिति ध्वनिः ॥ २९ ॥ ती० श्वश्रूश्वशुरयोः अक्षयाप्रीतिर्भवेत् वनवासोचितधर्मानुष्ठाने श्वशुरस्यस्वर्गलाभजा प्रीतिः । पुत्रस्य युद्धादिक्लेशराहित्येन श्वश्वाःकौसल्यायाः प्रीतिरित्यर्थः ॥ स० श्वश्रूश्वशुरयोः वैकल्पिकत्वान्नैकशेषः ॥ २९ ॥ ति० अत्रेदं गूढंसीतातात्पर्यं । यदि सकलरक्षःक्षयेण सकलत्रिभुवनवर्त्यार्तरक्षणमनपराधिपीडांविहाय कर्तुंशक्यं तदा क्षात्रधर्मं चर नोचेच्छुद्धतपोधर्मंचरेति "धनुषाकार्यमेतावदार्तानामभिरक्षणं" इत्यनेनेदं ध्वनितं । "क्षत्रियाणांतुवीराणां वनेषुनियतात्मनां" इति पूर्वार्धस्य वनेष्वपिवसतांक्षत्रियाणांवीराणामुत्तरार्धोक्तमावश्यकमिति गूढतात्पर्यं ॥ स० पूर्वं स्वस्यस्त्रियाः प्रकृतत्वेपि कस्समर्थइति पुंनिर्देशेन स्त्रीपुरुषसाधारण्येनसमर्थोनास्तीति सूचयति । यद्वा कूटस्थोक्षरइति रमायाः पुंशक्तिमत्त्वेन पुंल्लिङ्गशब्दवाच्यत्वात्कस्समर्थइति वक्ती स्वस्य तत्वंसूचयामासेत्यवसेयं । अनुजेनसहविचार्येति लोकानुकरणार्थं ॥ ३३ ॥ इतिनवमस्सर्गः ॥ ९ ॥

स० आपाततोऽधर्मत्वेनप्रतिपादितहिंसांसीतासंमत्यैवधर्मत्वेनोदाहरति—**वाक्यमिति** । ति० संवर्धितइतिपाठेसंवर्धि-

[ पा० ] १ क. ख. ग. ङ—ट. राज्यंहिसंन्यस्य. २ ख. ग. घ. प्रभवते. ३ ग. ज. लभ्यते. ४ ङ. झ. ट. लभते. ५ क. च. ज. ञ. सम्यक्चर. ६ ङ—ज. ञ. ट. सर्वंतु. ७ च. छ. ज. ञ. त्रैलोक्येयद्धिवर्तते. क. त्रैलोक्येयद्धिवर्तते. ८ ख. ग. सहलक्ष्मणेन. ९ च. ञ. धर्मस्थितो. १० क. ख. ग. ङ—ट. जानकीं.

हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ॥ कुलं व्यपदिशन्त्या च धर्मज्ञे[1] जनकात्मजे ॥ २ ॥
किंतु[2] वक्ष्याम्यहं देवि त्वयैवोक्तमिदं वचः ॥ क्षत्रियैर्धार्यते[3] चापो नार्तशब्दो भवेदिति ॥ ३ ॥
मां[4] सीते स्वयमागम्य शरण्याः[5] शरणं गताः ॥ ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ॥ ४ ॥
वसन्तो[6] धर्मनिरता वने[7] मूलफलाशनाः ॥ न लभन्ते सुखं भीता[8] राक्षसैः क्रूरकर्मभिः[9] ॥ ५ ॥
काले[10] काले च निरता नियमैर्विविधैर्वने[11] ॥ भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः ॥ ६ ॥
[12]ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ॥ अस्मानभ्यवपद्येति[13] मामूचुर्द्विजसत्तमाः ॥ ७ ॥
मया तु वचनं श्रुत्वा तेषामेवं[14] मुखाच्च्युतम् ॥ कृत्वा चरणशुश्रूषां[15] वाक्यमेतदुदाहृतम् ॥ ८ ॥
प्रसीदन्तु भवन्तो मे ह्रीरेषा[16] हि ममातुला ॥ यदीदृशैरहं[17] विप्रैरुपस्थेयैरुपस्थितः ॥
किं करोमीति च मया व्याहृतं द्विजसंनिधौ[18] ॥ ९ ॥
[19]सर्वैरेतैः समागम्य वागियं समुदाहृता ॥ १० ॥
राक्षसैर्दण्डकारण्ये बहुभिः कामरूपिभिः ॥ अर्दिताः[20] स्म दृढं राम भवान्[21]नस्तत्र रक्षतु ॥ ११ ॥

खरवध एवदण्डकारण्यवासिभिरर्थितो रामेण प्रतिज्ञातश्च । तथापि खरवधो रावणवधमूलमिति खरवधद्वारा रावणवधोप्यर्थित एवेति सीतयोक्तमुपपन्नं ॥ १ ॥ स्निग्धया अनुरक्तया । कुलं व्यपदिशन्त्या स्वमहाकुलीनत्वं प्रख्यापयन्त्या । त्वया सदृशं अनुरागकुलसदृशं हितमुक्तं । हितोक्तौ हेतुः—धर्मज्ञ इति । कुलव्यपदेशे हेतुः—जनकात्मज इति ॥ २ ॥ यदि मया हितमुक्तं तर्हि तथैव क्रियतामिति चेत्तत्र वक्ष्यामि । तदेवाह—त्वयैवेति । क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदितीदं वचनं त्वयैवोक्तं खलु । मुनयश्चार्ताः तस्मात्तद्विरोधिवधः कर्तव्य एवेति भावः ॥ ३ ॥ ननूक्तं विरोध्युत्सारणेनार्तरक्षणंकर्तव्यं नतु निरपराधवध इत्याशङ्क्य तेषां शरणागतत्वेन मत्प्राणभूतत्वात्तेष्वपराधो मदपराध इत्याशयेनाह—मामित्यादि । अत्रत्यविशेषणैरात्मनः शरणागतपक्षपातं स्फोरयति ॥ ४—५ ॥ काले काले सर्वकालेष्वित्यर्थः ॥ ६ ॥ अभ्यवपद्य अनुगृह्णेत्यर्थः । लोण्मध्यमपुरुषैकवचनं । आर्षं परस्मैपदं । अभ्यवपत्तिः अनुग्रहः ॥ ७ ॥ चरणशुश्रूषां पादवन्दनं ॥ ८ ॥ प्रसीदन्तु मदपचारं क्षमन्तां । ह्रीः लज्जा । अतुला अधिका । तत्रहेतुमाह—यदिति । उपस्थेयैः अभिगन्तव्यैः । उपस्थितः अभिगतः । किं करोमीति लोडर्थे लट् । किं करवाणीत्यर्थः ॥ ९—१० ॥ अर्दिताः पीडिताः । तत्र तेभ्यः रक्षत्विति अभ्यवपद्येत्यत्र सामान्येनानुग्रहः प्रार्थितः । इह तु तद्विशेषे पृष्टे विशेष उक्तः ॥ ११ ॥

ततेजाः ॥ १ ॥ **ती०** कुलंव्यपदिशन्त्या क्षत्रियाणांहिवीराणामित्यादिना क्षत्रियकुलधर्मप्रकाशयन्त्येत्यर्थः ॥ १ ॥ **ती०** हेदेवि किंनुवक्ष्यामि किंचिदपिमयानवक्तव्यं । तत्कुतः त्वयैवोक्तमिदंवचः ॥ ३ ॥ **स०** संशितव्रताः सम्यक् तीव्रफलजनकव्रतविशिष्टाः । संसितव्रताइतिपाठे सम्यक् सितंबद्धं व्रतंयेषांतेतथा । राक्षसोपद्रवादननुष्ठितसद्व्यापाराइतिभावः ॥ ४ ॥ **ति०** कालकालेषु सर्वकालेष्वित्यर्थः । राक्षसैरित्यस्य वध्यमानाइतिशेषः ॥ ५ ॥ **ती०** वचनशुश्रूषां वचनानुष्ठानलक्षणशुश्रूषामित्यर्थः । कृत्वा मनसिकृत्वेत्यर्थः ॥ ८ ॥ **ति०** उपस्थितः रक्षणार्थमितिशेषः ॥ एषा ममह्रीः अकीर्तिः । अतःप्रसीदन्त्वित्यर्थः । **स०** उपस्थेयैः अस्माभिरुपगम्यसंरक्षणीयैः ॥ **तनि०** स्तोत्रादिनाचेतस्संकोचनं ह्रीः “ वीतरागस्यस्तोत्राद्यैश्चेतस्संकोचनं व्रीडा ” इतिलक्षणात् ॥ ९ ॥ **स०** तत्र तत्कृतपीडावस्थायां । यद्वा तांस्त्रायतइति तत्रः । तस्यसंबुद्धिः हेतत्र । एतावत्काल-

**[ पा० ]** १ क. च. छ. ज. ञ. जनकस्यमहात्मनः. २ क. ङ—झ. ट. किंनु. ३ क. ग. घ. धार्यतेक्षत्रियैश्चापो. ४ अस्मिञ्श्लोकेपूर्वोत्तरार्धयोःपौर्वापर्यं क—ट. पुस्तकेषुदृश्यते. ५ घ. ङ. झ. ट. शरण्यं. ६ ङ. झ. ट. वसन्तःकालकालेषु. ७ ग. वनमूल. ८ क. ख. ग. ङ—ट. भीरु. ९ ग. भीमकर्मभिः. १० क. ख. च. छ. ज. ञ. सर्वकालेषुनिरताः. ग. सर्वकालेऽभिनिरताः. ११ क. च. छ. ज. ञ. युताः. ख. वृताः. १२ क. च. छ. ज. ञ. तैर्भक्ष्यमाणा. १३ घ. ङ. झ. ट. पद्यैते. १४ क. ख. घ. च. छ. ज. ञ. तेषामेव. १५ क. ग. ङ—ट. वचनशुश्रूषां. १६ ग. घ. झ. ह्रीरेषातु. ख. श्रीरेषातु क. ह्रीरेषाच. १७ च. छ. ज. रुपस्थेयैरहंवीरैरुपस्थितः. क. रहंवीरैरुपस्थेयैः. १८ क. च. छ. ज. ञ. मुनिसंनिधौ. १९ क. ख. ग. ङ—ट. सर्वैरेव. २० ख. अर्दितान्सुदृढं. घ—ट. अर्दितास्स्मभृशं. २१ क. च. छ. ज. ञ. नस्त्रातुमर्हसि.

होम[1]कालेषु संप्राप्ताः पर्वकालेषु चानघ ॥ [2]धर्षयन्ति सुदुर्धर्षा राक्षसाः पिशिताशनाः ॥ १२ ॥
राक्षसैर्धर्षितानां च तापसानां तपस्विनाम् ॥ गतिं मृगयमाणानां भवान्नः परमा गतिः ॥ १३ ॥
कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान् ॥ चिरार्जितं तु[3] नेच्छामस्तपः खण्डयितुं वयम् ॥१४॥
बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव ॥ तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १५ ॥
[4]तदर्द्यमानान्रक्षोभिर्दण्डकारण्य[5]वासिभिः ॥ [6]रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने ॥ १६ ॥
मया चैतद्वचः श्रुत्वा कार्त्स्न्येन परिपालनम् ॥ ऋषीणां दण्डकारण्ये संश्रुतं जनकात्मजे ॥ १७ ॥
संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम् ॥ मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥१८॥
अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ॥ न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥१९॥
तदवश्यं मया कार्यमृषीणां परिपालनम् ॥ अनुक्तेनापि वैदेहि [7]प्रतिज्ञाय तु किं पुनः ॥ २० ॥
[8]मम स्नेहाच्च सौहार्दादिदमुक्तं [9]त्वयाऽनघे ॥ परितुष्टोस्म्यहं सीते न ह्यनिष्टोऽ[10]नुशिष्यते ॥ २१ ॥
सदृशं [11]चानुरूपं च कुलस्य तव [12]चात्मनः ॥ सधर्मचारिणी [13]मे त्वं प्राणेभ्योपि गरीयसी ॥ २२ ॥

न केवलं पीडयन्ति यज्ञविघ्नं च कुर्वन्तीत्याहुः—होमेति। यज्ञविघ्नकरं हन्यामिति मद्भोजननिवर्तनात्कः परोपराध इति सीतायै सूचयितुमिदमनूदितं । होमकालेषु अग्निहोत्रकालेषु । पर्वकालेषु दर्शपौर्णमासादियज्ञकालेषु । धर्षयन्ति अभिधावन्ति ॥ १२ ॥ गतिं रक्षकं । मृगयमाणानां अन्वेषयतां ॥१३॥ परमशब्दव्यवच्छेद्यं दर्शयति—काममिति ॥१४॥ उक्तं विवृणोति—बह्विति ॥१५॥ उपसंहरति—तदिति । त्वन्नाथा इति बहुव्रीहिः । इयं वाक् समुदाहृतेति पूर्वेणान्वयः ॥१६॥ कार्त्स्न्येन परिपालनं रक्षोवधपर्यन्तपरिपालनं। संश्रुतं प्रतिज्ञातं । मदाश्रितविरोधिनो मद्विरोधित्वात् मद्भोजनविघातकत्वाच्चेत्यर्थः ॥ १७ ॥ जीवमानः जीवन् । प्रतिश्रवं प्रतिज्ञां। अन्यथाकर्तुं न शक्ष्यामि । तत्र हेतुः—सत्यमिष्टमिति । सत्यं सत्यवचनं॥ १८॥ तर्ह्यावयोर्विश्लेषो दुर्विषहः स्यात्तत्राह—अप्यहमिति। "आत्मानं सर्वदा रक्षेद्दारैरपि धनैरपि" इत्युक्तं जीवितमपि जह्यां। "भ्राता स्वा मूर्तिरात्मनः" इत्युक्तं लक्ष्मणमपि जह्यां। "अर्धो वा एष आत्मनो यत्पत्नी" इत्युक्तांत्वां वा जह्यामिति किमाश्चर्यं । संश्रुत्य यस्मै कस्मैचित्किंचिद्यत्प्रतिज्ञाय तां प्रतिज्ञां न जह्यां । ब्राह्मणेभ्यः ब्रह्मविद्भ्यः कृतां प्रतिज्ञां विशेषतो न जह्यां ॥ १९ ॥ अनुक्तेनापीति ऋषिभिरिति शेषः । उक्तरीत्या रक्षसां मदपराधित्वेन तद्वधस्य मत्कार्यत्वादिति भावः ॥ २० ॥ एवं वदन्त्यास्तव हृदयं च जानामीत्याह—ममेति । मम त्वयि स्नेहात् तव मयि सौहार्दाच्चोक्तं । विरहो दुःसहो भविष्यतीत्युक्तमित्यर्थः । अनिष्टः अप्रियः पुरुषः ॥ २१ ॥ तव आत्मनः सदृशं तव कुलस्य चानुरूपमिदं वचः धर्मप्राधान्योक्तिस्त्वत्कुलानुरूपा । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति हि त्वत्कुलपद्धतिः । सापराधेष्वपि निरपराधोक्तिस्तव सदृशी । "पापानां वा शुभानां वा वधार्हाणां प्लवंगम । कार्यं करुणमार्येण न कश्चि-

पर्यन्तं राक्षससंरक्षक । त्वद्रक्षणमन्तरेण तेषांजीवनासंभवादितिभावः ॥ ११ ॥ **स०** तापसानां तपसइमे तापसाः अतीतकालीनतपस्काः तेषां । तपस्विनां वर्तमानकालीनतपस्कानां। यद्वा तपस्विनामिति निर्धारणेषष्ठी । तपस्विनांमध्ये तापसानामित्यर्थः । अत्यन्ततपस्विनामितिभावः ॥ **शि०** तपस्विनां परमात्मविचारशीलानां । तापसानां वेदशास्त्रसंपन्नानां ॥ १३ ॥ **ति०** चतुर्दशवर्षपर्यन्तं पित्राज्ञया राज्यत्यागेप्यग्रेराज्यसंबन्धस्यावश्यकत्वाच्छरणागतरक्षणेऽस्त्येवाधिकारः । किंच क्षत्रजातेरेवात्राधिकारः नतुराज्यपदस्थस्यैवेतितात्पर्यं ॥ १७ ॥ **शि०** जीवमानः जीवेनसकलपालनेन मानः सत्कारोयस्य सोहं ॥ सदेत्यनेन स्वाभाविकोधर्मस्त्यक्तुं नशक्यत इतिसूचितं॥ १८ ॥ **शि०** सधर्मचारिणी सहधमर्चरणशीला । त्वं मेप्राणेभ्योपिगरीयसी। असीतिशेषः। एतेन संसर्गप्राप्तानपराधिवधस्त्वयापियत्नतस्त्याजनीयइतिसूचितं । तेन लङ्कागमनाय सीतामाज्ञापयामासेति ध्वनितं ।

[ **पा०** ] १ क. ख. ग. ङ—ट. कालेतुसंप्राप्ते. २ क. ख. ग. ङ—ट. धर्षयन्तिस्म. ३ ङ. झ. ट. नचेच्छामः. ४ क. च. छ. ज. तद्धन्यमानान्. ५ क. छ. ञ. वासिनः. ६ ङ. झ. ञ. ट. रक्षकस्त्वं. ७ क. ख. ग. छ. ज. प्रतिज्ञायाथकिं. ङ. झ. ञ. ट. प्रतिज्ञायकथं. ८ क. मयि. ९ क. ख. ग. ङ. च. छ. झ. ञ. ट. त्वयावचः. १० झ. शास्यते. ख. शिक्ष्यते. ११ क. चानुकूलं. १२ क—ट. शोभने. १३ ख. नित्यं.

इत्येवमुक्त्वा वचनं महात्मा सीतां प्रियां मैथिलराजपुत्रीम् ॥
रामो धनुष्मान्सह लक्ष्मणेन जगाम रम्याणि तपोवनानि ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ॥ ११ ॥

दण्डकारण्यंगच्छतारामेणपञ्चाप्सरोनामकेक्वचनतटाकेअन्तर्जलेगीतवादित्रध्वनिश्रवणेनादर्शनेनचवाद्यवादकादीनां विस्मयात्सहचरंकंचनमुनिंप्रतितत्त्वकथनप्रार्थना ॥१॥ तस्मान्मुनिवरात्ततटाकादिवृत्तान्तंशृण्वतैवगच्छतारामेणदण्डकारण्येमुनिगणाश्रममण्डलदर्शनम् ॥ २ ॥ तथासीतालक्ष्मणाभ्यांसहतत्रतत्राश्रमेषुत्रिचतुरादिमासक्रमेणनिवासेनदशवर्षपरिमितकालयापनम् ॥ ३ ॥ पुनरपिसुतीक्ष्णाश्रममुपागतवतारामेणतंप्रतिस्वस्यागस्त्यावलोकनौत्सुक्यनिवेदनेनतदाश्रममार्गप्रश्नः ॥४॥ तेनतंप्रत्यगस्त्यभ्रातुराश्रममार्गलक्षणकथनपूर्वकंतत्रैकरात्रिवासेनतेनैवपथाऽगस्त्याश्रमगमनचोदना ॥ ५ ॥ अगस्त्यभ्रात्राश्रमसमीपंगतेनरामेणलक्ष्मणंप्रतिवातापील्वलनिषूदनरूपागस्त्यचरितानुवर्णनपूर्वकंसायाह्नेतद्भ्रातरमेत्यतदभिवादनादिपूर्वकं तत्रतद्रात्रियापनम् ॥ ६ ॥ प्रभातेऽगस्त्याश्रममुपगतेनरामेणलक्ष्मणंप्रतिविन्ध्यगिरिनिरोधकत्वाद्यगस्त्यप्रभाववर्णनपूर्वकमगस्त्यायस्वागमननिवेदनचोदना ॥ ७ ॥

अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा ॥ पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १ ॥
तौ पश्यमानौ विविधाञ्शैलप्रस्थान्वनानि च ॥ नदीश्च विविधा रम्या जग्मतुः सीतया सह ॥२॥
सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः ॥ सरांसि च सपद्मानि युक्तानि जलजैः खगैः ॥ ३ ॥
यूथबद्धांश्च पृषतान्मदोन्मत्तान्विषाणिनः ॥ महिषांश्च वराहांश्च नागांश्च द्रुमवैरिणः ॥ ४ ॥
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ॥ ददृशुः सहिता रम्यं तटाकं योजनायतम् ॥ ५ ॥

---

न्नापराध्यति" इति हि तव प्रकृतिः । तथापि त्वं मे प्राणेभ्यो गरीयस्यपि सधर्मचारिणीभव मया यो धर्मः संकल्पितस्तत्रैव त्वयापि संकल्पयितव्यमिति भावः ॥ २२॥ महात्मा महाधृतिः । प्रियां मैथिलराजपुत्रीं । इतीति उक्तधर्मद्वयानुवादः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने दशमः सर्गः ॥१०॥

अथ कर्माणि सापायानि रामसेवैका निरपायेति दर्शयितुं माण्डकर्णिवृत्तान्तप्रकटनपूर्वकं सकलमुनिजनाश्रममण्डलसंचरणमेकादशे—अग्रत इत्यादि । अनेन श्लोकेन प्रणवार्थ उक्तः । तौ पश्यमानावित्यादिना नारायणपदार्थः । माण्डकर्णिवृत्तान्ते नम इत्यस्यार्थः । ततः परं विरोधिनिवृत्तिः सूच्यते । एवं मूलमन्त्रार्थानुसंधानमेव परमा गतिरित्युच्यते ॥ १ ॥ पश्यमानौ पश्यन्तौ । शैलप्रस्थान् शैलसानूनि ॥ २ ॥ सारसान् हंसविशेषान् । पुलिनं सैकतं । जलजैः खगैः जलपक्षिभिः ॥ ३ ॥ यूथबद्धान् यूथतयाबद्धान् समूहीभूतानित्यर्थः । पृषतान् बिन्दुमृगान् विषाणिन इति महिषादिविशेषणं । नागान् गजान् ॥ ४ ॥ लम्बमाने अस्तमयोन्मुखे । योजनायतं चतुर्दिशि योजनप्रमाणविस्तारं । पद्मपुष्करसंबाधं पद्मैः पुष्करैः

---

नहिलङ्कागमनमन्तरा संग्रामाय विभीषणस्य रावणसहगमनं. निवारणार्हमिति तात्पर्यं ॥ स० सधर्मचारिणी समानोधर्मस्सधर्मः । सधर्मं चरितुं शीलमस्याअस्तीति सधर्मचारिणी ॥ २२ ॥ इतिदशमस्सर्गः ॥ १० ॥

तनि० अनेनश्लोकेन प्रणवार्थःप्रकाशितइति संप्रदायः । तत्र अग्रतइति अवर्णप्राथमिकत्वं । अग्रतः प्रययावित्यर्थप्राथम्यं । रामइति सत्तासंपादनरक्षणादिना रमयतीति कारणत्वरक्षकत्वेच रमासंबन्धित्वेन श्रीशत्वंच । सुमध्यमेति प्रणवद्वितीयवर्णश्च । मध्यइतितस्यवर्णद्वयमध्यवर्तित्वं । सीतामध्येइति लक्ष्म्याः पुरुषकारत्वं । लक्ष्मणइति मनज्ञानेइति धातोः असाधारणधर्मवत्वं । धनुष्पाणिरिति निरन्तरकैङ्कर्यवत्त्वं । अनुजगामेति अहंकारममकारविरहेणानुसरणं । पदान्तमकारेण प्रणवतृतीयवर्णश्च व्यज्यतइतिसंक्षेपः । तौपश्यमानावित्यादिना नारायणपदार्थःप्रकाशितइतिसंप्रदायः ॥ स० मध्ये रामलक्ष्मणयोर्मध्ये जगाम । मध्येकटिप्रदेशे

[ पा० ] १ ङ. झ. ट. सुशोभना. २ क—ट. सहसीतया. ३ च. छ. झ. ञ. ट. युतानि. ४ क. ख. ग. ङ—ट. गजांश्च.

पद्मपुष्करसंबाधं गजयूथैरलंकृतम् ॥ सारसैर्[1]हंसकादम्बैः संकुलं [2]जलचारिभिः ॥ ६ ॥
प्रसन्नसलिले रम्ये तस्मिन्सरसि शुश्रुवे ॥ गीतवादित्र[3]निर्घोषो न तु कश्चन दृश्यते ॥ ७ ॥
ततः [4]कौतूहलाद्रामो लक्ष्मणश्च [5]महाबलः ॥ मुनिं धर्मभृतं नाम प्रष्टुं समुपचक्रमे ॥ ८ ॥
इदमत्यद्भुतं [6]श्रुत्वा सर्वेषां नो महामुने ॥ कौतूहलं महज्जातं [7]किमिदं साधु कथ्यताम् ॥ ९ ॥
वक्तव्यं यदि चेद्विप्र नातिगुह्यमपि प्रभो ॥ १० ॥
तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा ॥ [8]प्रभवं सरसः कृत्स्नमाख्यातुमुपचक्रमे ॥ ११ ॥
इदं पञ्चाप्सरो नाम तटाकं [9]सार्वकालिकम् ॥ निर्मितं तपसा राम मुनिना [10]माण्डकर्णिना ॥ १२ ॥
स हि तेपे तपस्तीव्रं माण्डकर्णिर्[11]महामुनिः ॥ दशवर्षसहस्राणि वायुभक्षो [12]जलाश्रयः ॥ १३ ॥
ततः प्रव्यथिताः [13]सर्वे देवाः साग्निपुरोगमाः ॥ अब्रुवन्वचनं सर्वे परस्परसमागताः ॥ १४ ॥
अस्माकं कस्यचित्स्थानमेष प्रार्थयते मुनिः ॥ इति संविग्नमनसः [14]सर्वे ते त्रिदिवौकसः ॥ १५ ॥
[15]तत्र कर्तुं तपोविघ्नं [16]देवैः सर्वैर्नियोजिताः ॥ प्रधानाप्सरसः पञ्च [17]विद्युच्चलितवर्चसः ॥ १६ ॥
अप्सरोभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः ॥ नीतो मदनवश्यत्वं [18]सुराणां कार्यसिद्धये ॥ १७ ॥
[19]ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः ॥ तटाके निर्मितं [20]तासामस्मिन्नन्तर्हितं गृहम् ॥ १८ ॥
[21]तथैवाप्सरसः पञ्च निवसन्त्यो यथासुखम् ॥ रमयन्ति तपोयोगान्मुनिं यौवनमास्थितम् ॥ १९ ॥

सर्पैश्च संबाधं निबिडं। "वाद्यभाण्डमुखे सर्पे कारण्डे पुष्करं स्मृतं" इति विश्वः। सारसैः "सारसो मैथुने कामी गोनर्दः पुष्कराह्वयः" इत्युक्तेः। हंसैः राजहंसैः। कादम्बैः कलहंसैः। "कादम्बः कलहंसश्च हंसः स्याद्धूसरच्छदः" इत्युक्तेः ॥ ५—६ ॥ गीतेति गीतानि षड्जादिस्वरनिबद्धप्रबन्धाः। वादित्राणि ततघनसुषिरानद्धभेदेन चतुर्विधानि तेषां निर्घोषः। अत्र यादवः। "वादित्रं वादितं वाद्यमातोद्यं तच्चतुर्विधम्। ततं वीणादिकं वाद्यं तालं तु विततं घनम्। वंशादिकं तु सुषिरमानद्धं मुरजादिकं" इति कश्चन वादयिता। न दृश्यते नादृश्यत ॥७॥ धर्मभृतं सहागतेषु मुनिष्वन्यतमं। कथ्यतामित्येवं प्रष्टुं समुपचक्रम इत्यन्वयः ॥ ८—१० ॥ प्रभवं उत्पत्तिं। कृत्स्नं गीतवादित्रमूलं चेत्यर्थः ॥ ११ ॥ पञ्चाप्सरःक्रीडासाधनत्वात् पञ्चाप्सरो नाम। सार्वकालिकं सर्वकाले भवं। "कालाट्ठञ्" उभयपदवृद्धिः। सर्वस्मिन्नपि काले अशुष्यदित्यर्थः ॥ १२ ॥ उक्तार्थे इतिहासमाह—स हीत्यादिना। जलाश्रयः स्वनिर्मिततटाकजलावगाढः ॥ १३ ॥ साग्निपुरोगमाः अग्निना पुरःसरेण सहिताः। क्रियाभेदात्सर्वशब्दावृत्तिः ॥ १४ ॥ अस्माकं मध्ये। संविग्नमनसः भीतमनस्काः ॥ १५ ॥ तत्र तदा। विद्युच्चलितवर्चसः विद्युतइव तरलतेजसः चलितविद्युद्वर्चस इति वार्थः ॥ १६ ॥ दृष्टपरावरः दृष्टपरमात्मजीवस्वरूपः ॥ १७—१८ ॥ तपोयोगात्

सुशोभनेत्यपि द्योत्यते ॥ १ ॥ **ती०** पद्मानां रक्तपङ्कजानां। पुष्कराणां पुण्डरीकाणां ॥ **कतक०** पद्मानां पुष्करेजले संबाधोनैबिड्यं यत्र तं ॥ **स०** पद्मानि कमलानि। पुष्कराः पक्षिणः। तेषां संबाधः संमर्दो यस्मिंस्तं। "पुष्करः। औषधद्वीपविहगेषु" इतिविश्वः। जलजातिभिः। जलेषु जातिर्जन्म येषां तैर्मत्स्यादिभिः ॥ ६ ॥ **ती०** सर्वेप्रव्यथिता अभूवन्। सर्वे अब्रुवन्निति च सर्वशब्दद्वयस्यनिर्वाहः ॥ १४ ॥ प्रधानाप्सरसः पञ्चेत्यनेन तत्परिचारिकाअन्याअपि सन्तीत्यवगम्यते ॥ १६ ॥ **ति०** दृष्टपरावरः

[ **पा०** ] १ घ. च. छ. कारण्डैः. २ ङ—ट. जलजातिभिः. ३ क. च. छ. निर्घोषस्तत्रकश्चिन्नदृश्यते. ४ क. ग. कुतूहलात्. ५ ख—ङ. झ. ट. महारथः. ६ क. च. छ. ज. ञ. दृष्ट्वा. ७ छ. ज. किमेतत्. ८ क. ख. घ. ङ. च. ज—ट. प्रभावं. ९ च. छ. ज. सार्वकामिकं. १० क. ग. माण्डुकर्णिना. ११ ख. महातपाः. १२ क. ख. ग. च. छ. ज. ञ. जलाशयः. ङ. झ. ट. जलाशये. १३ क. देवास्सर्वे. १४ क. ख. ग. ङ—झ. सर्वेतत्र. १५ क—ट. ततः. १६ ख. ग. ङ. ट. सर्वैर्देवैः. झ. सर्वदेवैः. १७ ग. विद्युत्सदृश. १८ ङ—ट. देवानां. १९ ख. तस्यैवा. २० क. ग—ट. तासांतस्मिन्. २१ ख. ग. ङ—ट. तत्रैवा.

तासां संक्रीडमानानामेष वादित्रनिःस्वनः ॥ श्रूयते भूषणोन्मिश्रो गीतशब्दो मनोहरः ॥ २० ॥
आश्चर्यमिति तस्यैतद्वचनं भावितात्मनः ॥ राघवः प्रतिजग्राह सह भ्रात्रा महायशाः ॥ २१ ॥
एवं कथयमानस्य ददर्शाश्रममण्डलम् ॥ कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम् ॥ २२ ॥
प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः ॥ उवास मुनिभिः सर्वैः पूज्यमानो महायशाः ॥ २३ ॥
तथा तस्मिन्स काकुत्स्थः श्रीमत्याश्रममण्डले ॥ उषित्वा तु सुखं तत्र पूज्यमानो महर्षिभिः ॥२४॥
जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम् ॥ येषामुषितवान्पूर्वं सकाशे स महास्त्रवित् ॥ २५ ॥
क्वचित्परिदशान्मासानेकं संवत्सरं क्वचित् ॥ क्वचिच्च चतुरो मासान्पञ्च षट्च चापरान्क्वचित् ॥ २६ ॥

तपोरूपोपायात् । यौवनमास्थितं । "योगःसन्नहनोपायध्यानसंगतियुक्तिषु" इत्यमरः ॥ १९ ॥ संक्रीडमानानामिति "क्रीडोनुसंपरिभ्यश्च" इत्यात्मनेपदं । भूषणोन्मिश्रः भूषणघोषोन्मिश्रः वादित्रनिःस्वनविशेषणं । भूषणोन्मिश्रो वादित्रनिःस्वनो गीतशब्दश्च श्रूयत इत्यन्वयः ॥२०॥ एतत् पूर्वोक्तं वचनं । आश्चर्यमिति प्रतिजग्राह श्रुतवान् ॥ २१ ॥ कथयमानस्य कथयमाने तस्मिन्मुनौ । कथयमानःस इतिपाठे एवं संभाषमाणः स रामः ब्राह्म्या ब्राह्मणसंबन्धिन्या । लक्ष्म्या समृद्ध्या ब्राह्मणसंपूर्णमित्यर्थः । आश्रममण्डलं ददर्श राघव इत्यनुषङ्गः ॥ २२ ॥ प्रविश्येति आश्रममण्डलमित्यनुषज्यते । सर्वैस्तदाश्रमवासिभिः पूज्यमानः स्वस्वाश्रमे अर्घ्यादिना अर्च्यमानः ॥ २३ ॥ कियन्तं कालं तत्रोवासेत्यपेक्षायां कालपरिमाणं वक्तुं रामस्याश्रमवासप्रकारंदर्शयति—तथेत्यादिश्लोकद्वयेन । तथा उक्तप्रकारेण । तस्मिन्नाश्रममण्डले । सुखमुषित्वा तत्र पूज्यमानः स राम इत्युक्तानुवादः । येषां सकाशे पूर्वमुषितवान् तेषामाश्रमान् पर्यायेण द्वितीयपर्यायेण च जगाम । एवमाश्रमवासप्रकारः । एकवारं सर्वेषामाश्रमान्गत्वा पुनरपि तेषामेवाश्रमाञ्जगामेति वाक्यार्थः । महास्त्रविदित्यनेन तत्रत्यराक्षसोपद्रवपरिहाराय पुनर्गमनमिति सूचयति । वक्ष्यति हि मारीचः "तेन मुक्तास्त्रयो बाणाः" इत्यारभ्य "पराक्रमज्ञौ रामस्य शरो दृष्टभयः पुरा । समुद्भ्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ" इति ॥ एतदर्थमेव सुतीक्ष्णेनात्र गमनमनुज्ञातं ऋषिभिः कारितं च ॥ २४—२५ ॥ पूर्वमुषितवानित्युक्तवासक्रमं दर्शयति—क्वचिदित्यादिना ।राघवो रामः क्वचिदाश्रमे परिदशान् परिगताः दश येषां ते परिदशाः । "संख्ययाव्यय—" इत्यादिना बहुव्रीहिसमासः । "बहुव्रीहौ संख्येयेडजबहुगणात्" इतिटच् समासान्तः । तान्मासान् त्रयोदशमासानित्यर्थः । अत्यन्तसंयोगे द्वितीया । सुखं यथा भवति तथा न्यवसत् । क्वचिदाश्रमे एकं संवत्सरं सुखं न्यवसत् । क्वचिदाश्रमे चतुरो मासान् सुखं न्यवसत् । क्वचित् पञ्च मासान् क्वचित् षण्मासान् क्वचिदपरान् षड्भ्योन्यान् सप्त मासान् । सुखं न्यवसत् । पञ्च षट् च तथा क्वचिदिति पाठे तथा पुनः क्वचित् षण्मासानित्यर्थः । परिदशानित्यत्र चतुर्दशमासानित्यर्थः । अपरत्राश्रमे मासादधिकं सुखं न्यवसत् । अधिकशब्देनात्र मासचतुर्थांशो विवक्षितः । एकमासं मासपादं चेत्यर्थः । अपरत्राधिकं मासमिति पाठे मासं अधिकं तत्पादं चेत्यर्थः । अपिशब्दः सर्वत्र मासानुकर्षणार्थः । क्वचिदाश्रमे अर्धमधिकं च न्यवसत् पादोनमासमित्यर्थः । तथा चैतदव्यवहितपूर्वाश्रमवासदिनैर्द्वौ मासौ संवृत्तौ एकत्र सपादमासः अपरत्र पादोनमास इत्याहृत्य मासद्वयसंभवात् । अध्यर्धमधिकं

दृष्टैहिकपारलौकिकधर्माधर्मः ॥ १७ ॥ **ति०** एवंकथयमानः आश्चर्यमित्येवं कथयन् ॥ २२ ॥ **ती०** तस्मिन्नाश्रममण्डले उषित्वा तत्रैव महर्षिभिःपूज्यमानइति तच्छब्दद्वयस्यसंबन्धः ॥ २४ ॥ **ती०** परिदशान् दशसमीपान् एकादशनववेत्यर्थः ॥

**[ पा० ]** १ क. भूषणैर्मिश्रो. २ ख. ग. आश्चर्यतरमस्यैतत्. ३ एवंकथयमानस्येत्यर्धस्यस्थाने क. च. छ. ज. ञ. पुस्तकेषु. एवंकथयमानस्यसहभ्रात्रामहामुनेः । अग्रतोरमणीयंचददर्शाश्रममण्डलम् । इत्यर्धद्वयं दृश्यते. ४ ङ. झ. ट. कथयमानस्स. ५ ग. घ. च. छ. ज. नानावृक्षसमाकुलं. ६ क. राघवोलक्ष्मणेनच. ७ ग. ऋषिभिः. ८ क. ख. ग. च. छ. ज. महात्मभिः. ९ घ—ट. तदा. १० ग. ङ. झ. ट. ससुखं. क. ख. घ. सुसुखं. ११ क. ख. ग. चाश्रमंतेषां. १२ क. परमास्त्रवित्. च. छ. ज. सुमहास्त्रवित्. १३ ङ. झ. ट. नेकसंवत्सरं. १४ ध. ङ. झ. षट्चपरान्. च. ज. षड्वासरान्. छ. ञ. षड्वापरान्.

[१]अपरत्राधिकं मासादप्यर्धमधिकं क्वचित् ॥ त्रीन्मासानष्टमासांश्च राघवो न्यवसत्सुखम् ॥ २७ ॥
[२]तथा संवसतस्तस्य मुनीनामाश्रमेषु[३] वै ॥ रमतश्चानुकूल्येन ययुः संवत्सरा दश ॥ २८ ॥
[४]परिवृत्य च धर्मज्ञो राघवः सह सीतया ॥ सुतीक्ष्णस्याश्रमं[५] श्रीमान्पुनरेवाजगाम ह ॥ २९ ॥
स तमाश्रममासाद्य[६] मुनिभिः प्रतिपूजितः[७] ॥ तत्रापि न्यवसद्रामः किंचित्कालमरिंदमः ॥ ३० ॥
[८]अथाश्रमस्थो विनयात्कदाचित्तं महामुनिम् ॥ उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् ॥३१॥
अस्मिन्नरण्ये भगवन्[९]नगस्त्यो मुनिसत्तमः ॥ वसतीति मया नित्यं कथाः कथयतां श्रुतम् ॥ ३२ ॥
[१०]न तु जानामि तं देशं वनस्यास्य महत्तया ॥ [११]कुत्राश्रममिदं पुण्यं[१२] महर्षेस्तस्य धीमतः ॥ ३३ ॥
[१३]प्रसादात्तत्र भवतः सानुजः सह सीतया ॥ अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् ॥ ३४ ॥
मनोरथो महानेष हृदि [१४]मे परिवर्तते ॥ [१५]यदहं तं मुनिवरं शुश्रूषेयमपि स्वयम् ॥ ३५ ॥
इति रामस्य स[१६] मुनिः श्रुत्वा धर्मात्मनो वचः ॥ सुतीक्ष्णः प्रत्युवाचेदं प्रीतो दशरथात्मजम् ॥३६॥
अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् ॥ अगस्त्यमभिगच्छेति सीतया सह राघव ॥ ३७ ॥
दिष्ट्या त्विदानीमर्थेऽस्मिन्स्वयमेव ब्रवीषि माम् ॥ अहमाख्यामि ते[१७] वत्स यत्रागस्त्यो महामुनिः॥३८॥
योजनान्या[१८]श्रमादस्मात्तथा चत्वारि वै ततः ॥ दक्षिणेन महाञ्छ्रीमानगस्त्यभ्रातुराश्रमः ॥ ३९ ॥

क्वचिदितिपाठे अध्यर्धं अर्धाधिकं अर्धमासाधिकमित्यर्थः । अधिकं पूर्वोक्तपादमासात्सकाधिकं तथाच त्रिपादमासमित्यर्थः । क्वचित्रीन्मासान् न्यवसत् क्वचिदष्टमासान् न्यवसत् । एवं षष्टिमासाः सिद्धाः । केचिदाहुः परिदशान् दशाधिकानिति । वक्ष्यमाणेष्वष्टसुस्थानेष्वन्वेति । तथाचायमर्थः । एवं संवत्सरं क्वचिदित्यत्र द्वाविंशतिमासानित्यर्थः । क्वचिच्च चतुरो मासानित्यत्र चतुर्दश मासानित्यर्थः । पञ्च षट् चापरान् क्वचिदित्यत्र क्वचित् पञ्चदश मासान् क्वचित् षोडशमासानित्यर्थः । अपरानधिकं मासादप्यर्धमधिकं क्वचिदित्यत्र प्रथमाधिकशब्दोर्धमासरूपाधिकांशपरः । तथा च अपरान्परिदशान्मासान् अधिकं चेत्यन्वये अर्धाधिकदशमासानित्यर्थः । मासादप्यर्धमित्यादेरयमर्थः । क्वचित्परिदशान्मासान् तदुपरिमासादधिकमर्धमपि चेति । तथाच अर्धाधिकैकादशमासानित्यर्थः । त्रीन्मासानष्टमासांश्चेत्यत्र त्रयोदश मासान् अष्टादश मासांश्चेत्यर्थः । तथाच विंशत्युत्तरशतमासा लब्धा इति । तस्मिन्पक्षे प्राथमिकक्वचित्पदमासपदानर्थक्यं पूर्वग्रन्थविरोध इत्यादि द्रष्टव्यम् ॥२६—२७॥ तथाचाश्रममण्डले दश संवत्सराः संवृत्ता इत्याह—तथा संवसत इति । इयमेवाश्रमवाससंख्या । पूर्वापरसंख्या तु किष्किन्धाकाण्डे वक्ष्यते ॥ २८ ॥ परिवृत्य एवमाश्रमं सर्वं परिक्रम्य ॥ २९—३१ ॥ कथाः नानाकथाः । कथयतां कथयत्सु ॥ ३२—३३ ॥ तत्र वने । अगस्त्यमभिवादयितुमभिगच्छेयमित्यन्वयः ॥ ३४ ॥ तं मुनिवरं शुश्रूषेयमिति यत् एष मनोरथः अभिलाषो मे हृदि परिवर्तत इत्यन्वयः । शुश्रूषेयमिति परस्मैपदमार्षं ॥ ३५—३६ ॥ अहमिति । अगस्त्यमभिगच्छेत्येतद्वक्तुकामोस्मीत्यन्वयः ॥ ३७—३८ ॥ अस्मादाश्रमाद्दक्षिणेन । तथेति हस्तेन निर्देशः । चत्वारि

**ति०** परिदशान् दशत्वसंख्यांपरिगतान् । दशसंख्यानित्यर्थः ॥ २६ ॥ **ति०** “ योजनादाश्रमादस्मादभिचत्वारिवैततः ” इति कतकपाठे अस्मादाश्रमाद्योजनादभि अधिकं चत्वारियोजनानीत्यर्थः । **स०** अगस्त्यभ्रातुः इध्मवाहस्य । “ अगस्त्यः

[ **पा०** ] १ क. ङ—ट. अपरत्राधिकान्मासानध्यर्धं. २ क. ख. घ. च. छ. ज. ञ. ततः. ङ. झ. ट. तत्र. ३ क. च. छ. ज. ञ. ट. माश्रमेषुच. ४ क. ख. झ. परिसृत्यच. च. ज. ञ. परिवृत्यस. ५ ङ. ट. स्याश्रमपदंपुनः. ग. स्याश्रयंरामःपुनः. ६ क. ख. ग. ङ.—ट. मागम्य. ७ क. च. छ. ज. ञ. पूजितस्तदा. ख.—ङ. झ. ट. परिपूजितः. ८ घ. तदाश्रमस्थो. च. ज. अथाश्रमस्थं. ९ क.—घ. च. ज. भगवान्. १० क. च. छ. ज. ञ. नहि. ११ क. च. छ. ज. ञ. यत्राश्रमं. ग. यत्राश्रमपदं. ख.—च. ज. झ. कुत्राश्रमपदं. १२ ङ. ज. झ. ञ. रम्यं. १३ ख. ग. ङ. छ. झ. ट. प्रसादार्थंभगवतः. १४ ख. ग.—ङ. ट. संपरिवर्तते. १५ घ. यद्यहं. १६ क. च. छ. ज. तच्छ्रुत्वाधर्मात्मामुनिसत्तमः. १७ च.—झ. ट. राम. १८ ख. ङ.—ट. न्याश्रमात्तातयाहि.

[1]स्थलीप्राये वनोद्देशे पिप्पलीवनशोभिते ॥ बहुपुष्पफले रम्ये [2]नानाशकुनिनादिते ॥ ४० ॥
पद्मिन्यो विविधास्तत्र प्रसन्न[3]सलिलाः शिवाः ॥ हंसकारण्डवाकीर्णा[4]श्चक्रवाकोपशोभिताः ॥ ४१ ॥
तत्र[5]ैकां रजनीं व्युष्य प्रभाते राम गम्यताम् ॥ दक्षिणां दिशमास्थाय वन[6]षण्डस्य पार्श्वतः ॥ ४२ ॥
[7]तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरम् ॥ रमणीये वनोद्देशे बहुपाद[8]पसंवृते ॥ ४३ ॥
रंस्यते तत्र वैदेही लक्ष्मणश्च [9]सह त्वया ॥ [10]स हि रम्यो वनोद्देशो बहुपाद[11]पसंकुलः ॥ ४४ ॥
यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् ॥ अद्यैव गमने बुद्धिं रोचयस्व [12]महायशः ॥ ४५ ॥
इति रामो मुनेः श्रुत्वा सह भ्रात्राऽभिवाद्य च ॥ प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः [13]सीतया सह ॥ ४६॥
पश्यन्वनानि [14]रम्याणि पर्वतांश्चाभ्रसन्निभान् ॥ सरांसि सरितश्चैव [15]पथि मार्ग[16]वशानुगाः ॥ ४७ ॥
सुतीक्ष्णेनोपदिष्टेन गत्वा तेन पथा सुखम् ॥ इदं परमसंहृष्टो वाक्यं लक्ष्मणमब्रवीत् ॥ ४८ ॥
एतदेवाश्रमपदं नूनं तस्य महात्मनः ॥ अगस्त्यस्य मुनेर्भ्रातुर्दृश्यते पुण्यकर्मणः ॥ ४९ ॥
[17]यथा हि मे वनस्यास्य [18]ज्ञाताः पथि सहस्रशः ॥ संनताः फलभारेण पुष्पभारेण च द्रुमाः ॥ ५० ॥
पिप्पलीनां च पक्वानां वनादस्मादुपागतः ॥ गन्धोऽयं पवनोत्क्षिप्तः सहसा कटुकोदयः ॥ ५१ ॥
तत्र तत्र च दृश्यन्ते [19]संक्षिप्ताः काष्ठसंचयाः ॥ लूनाश्च [20]पथि दृश्यन्ते दर्भा [21]वैदूर्यवर्चसः ॥ ५२ ॥
एतच्च वनमध्यस्थं कृष्णाभ्रशिखरोपमम् ॥ पावकस्याश्रमस्थस्य धूमाग्रं संप्रदृश्यते ॥ ५३ ॥
विविक्तेषु च [22]तीरेषु [23]कृतस्नाना [24]द्विजातयः ॥ [25]पुष्पोपहारं कुर्वन्ति कुसुमैः स्वय[26]मार्जितैः ॥ ५४ ॥

योजनानि अभियाहीति शेषः । ततस्तत्र अगस्त्यभ्रातुराश्रमो वर्तते । आश्रमाद्दक्षिणेनेत्यत्र "एनपा द्वितीया" इति द्वितीयाऽभाव आर्षः ॥ ३९ ॥ स्थलीप्राये स्थलीप्रचुरे ॥ ४० ॥ कारण्डवाः सारसाः ॥ ४१ ॥ तत्र अगस्त्यभ्रात्राश्रमे रजनीं व्युष्य रात्रिमतिवाह्य वनषंडस्य वनसमूहस्य । पार्श्वतः दक्षिणां दिशं । आस्थाय उद्दिश्य । निर्वणदेशे योजनमन्तरं योजनावकाशं गत्वा अगस्त्याश्रमपदं गम्यतामित्यन्वयः ॥ ४२—४५ ॥ इति एवंप्रकारेण । मुनेःसकाशाच्छ्रुत्वा ॥ ४६ ॥ अभ्रसन्निभान् मेघसन्निभान् । मार्गवशानुगाः मार्गवशेनानुगम्यमानाः । रामइति पूर्वश्लोकादनुकृष्यते ॥ ४७—४८ ॥ नूनमिति वितर्के । यदाश्रमपदं दृश्यते एतन्मुनेर्नूनमित्यन्वयः ॥ ४९ ॥ उक्तेर्थे हेतुमाह—यथाहीति । यथाहि मे पथि चिह्नतया वनंश्रुतं तथैवास्य वनस्य फलभारेण पुष्पभारेण च संनताः द्रुमाः सहस्रशो मया ज्ञाताः ज्ञायमाना वर्तन्ते ॥ ५० ॥ असाधारणोपदिष्टलिङ्गं चानुभूयत इत्याह—पिप्पलीनामित्यादि । पक्वानां पिप्पलीनामिति तत्फलानामित्यर्थः । कटुकस्य कटुरसस्य उदयोभिव्यक्तिरानुमानिकी येन स तथा गन्धः उपागतः ॥ ५१—५२ ॥ कृष्णाभ्रशिखरोपमं नीलमेघाग्रोपमं ॥ ५३ ॥ विविक्तेषु पूतेषु । "विविक्तौ पूतविजनौ" इत्यमरः ।

प्राग्दुहितरमुपयेमेदृढव्रताम् । यस्यांदृढच्युतोजातइध्मवाहात्मजोमुनिः" इतिभागवतेज्येष्ठत्वाद्दुहितृसमायामिध्मवाहभार्यायां देवरात्सुतोत्पत्तिन्यायेन दृढच्युतमपत्यमगस्त्योलेभइतिभावः ॥ ३९ ॥ **स०** " स्थलीप्राये अकृत्रिमस्थलबहुले । "जानपद–" इत्यादिनाङीष् ॥ **ती०**"स्थलप्रायेवनोद्देशेपिप्पलीवनशोभिते "इतिमार्गप्रदर्शनार्थमुक्तं । स्थलप्राये स्थलं प्रायः प्रायेणयस्मिंस्तथा ॥ **शि०** स्थलीं अकृत्रिमभूमिलं प्रैति प्राप्नोति तस्मिन् । किंच स्थल्याः अकृत्रिमभूमेः प्रायः नित्यस्थितिर्यस्मिंस्तस्मिन् ॥ ४० ॥

**[पा०]** १ ग. च. छ. ज. ञ. स्थलप्राये. झ. स्थलीप्रायवनोद्देशे. २ ङ. झ. ट. विहगनादिते. ३ ङ. झ. ट. सलिलाशयाः. घ. सलिलाःशुभाः. ४ क. च. छ. ज. ञ. चक्रवाकैरलंकृताः. ५ क.—घ. च. छ. ज. ञ. रजनीमुष्य. ६ ङ. च. छ. झ. ञ. ट. खण्डस्य. ७ क. च. छ. ज. ञ. ततोऽगस्त्या. ८ ङ. झ. ट. शोभिते. ९ ङ. झ. ट. त्वयासह. १० ख. ग. सतु. ११ ङ. झ. ट. संयुतः. १२ ङ. च. ज.—ट. महामते. १३ क—ट. सहसीतया. १४ ख. ग. ङ. झ. ट. चित्राणि. १५ क. च. छ. ज. ञ. सानूनिविविधानिच. १६ ङ. झ. ट. वशानुगान्. १७ क. ख. ग. ङ. च. ज. झ. ञ. यथाहिमे. १८ ख. च. छ. ज. ञ. जाताः. १९ ख. संसक्ताः. २० ख. ङ. झ. ट. परिदृश्यन्ते. २१ झ. ञ. वैदूर्य. २२ ख. ङ.—झ. ट. तीर्थेषु. घ. देशेषु. २३ ख. ग. च. छ. कृतस्नाता. २४ च. ज. ञ. महर्षयः. २५ ङ. झ. पुण्योपहारं. क. च. छ. ज. ञ. पुष्पोपहारान्. २६ ङ. च. झ. ञ. ट. मर्जितैः.

[1]तत्सुतीक्ष्णस्य वचनं यथा सौम्य मया श्रुतम् ॥ अगस्त्यस्याश्रमो भ्रातुर्नून[2]मेष भविष्यति ॥ ५५ ॥
निगृह्य [3]तरसा मृत्युं लोकानां हितकाम्यया ॥ [4]यस्य भ्रात्रा कृतेयं दिक्छरण्या पुण्यकर्मणा ॥५६॥
इहैकदा किल क्रूरो वातापिरपि चेल्वलः ॥ भ्रातरौ सहितावास्तां ब्राह्मणघ्नौ महासुरौ ॥ ५७ ॥
धारयन्ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् ॥ आमन्त्रयति [5]विप्रान्स [6]श्राद्धमुद्दिश्य निर्घृणः ॥ ५८ ॥
भ्रातरं संस्कृतं [7]कृत्वा ततस्तं मेषरूपिणम् ॥ [8]तान्द्विजान्भोजयामास श्राद्धदृष्टेन कर्मणा ॥ ५९ ॥
ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् ॥ वातापे निष्क्रमस्वेति स्वरेण महता वदन् ॥ ६० ॥
ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषवन्नदन् ॥ भित्त्वा [9]भित्त्वा [10]शरीराणि ब्राह्मणानां [11]विनिष्पतत् ६१॥
ब्राह्मणानां सहस्राणि तैरेवं कामरूपिभिः ॥ विनाशितानि [12]संहत्य नित्यशः पिशिताशनैः ॥६२॥
अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा ॥ अनुकूलः किल श्राद्धे भक्षितः स [13]महासुरः ॥ ६३ ॥
ततः संपन्नमित्युक्त्वा दत्त्वा [14]हस्तोदकं ततः ॥ भ्रातरं निष्क्रमस्वेति [15]चेल्वलः [16]सोऽभ्यभाषत ॥६४॥
[17]स तं तथा भाषमाणं भ्रातरं विप्रघातिनम् ॥ अब्रवीत्प्रहसन्धीमानगस्त्यो [18]मुनिसत्तमः ॥ ६५ ॥
कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः ॥ [19]भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् ॥ ६६ ॥
अथ [20]तस्य वचः श्रुत्वा भ्रातुर्निधने[21]संश्रयम् ॥ प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः ॥ ६७ ॥
[22]सोऽभिद्रवन्मुनिश्रेष्ठं मुनिना दीप्ततेजसा ॥ चक्षुषाऽनलकल्पेन निर्दग्धो निधनं गतः ॥ ६८ ॥

---

उपहारं पुष्पबलिं । स्वयमार्जितैः । " समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् " इति स्मरणात् ॥ ५४ ॥ नूनं निश्चये । "नूनं तर्के विनिश्चये " इत्यमरः ॥ ५५ ॥ मृत्युं वातापील्वलनिमित्तकं मरणं । हितकाम्यया हितेच्छया । इयं दिक् दक्षिणा दिक् । शरण्या संश्रयितुं योग्या ॥ ५६ ॥ अस्मिन्नर्थे आख्यायिकामाह—इहेत्यादिना ॥ ५७ ॥ संस्कृतं व्याकरणसंस्कारवतीं वाचं । वदन् ॥ ५८ ॥ संस्कृतं श्राद्धोचितपाकसंस्कारसंस्कृतं कृत्वा श्राद्धदृष्टेन श्राद्धकल्पावगतेन ॥ ५९ ॥ भुक्तवतां भुक्तवत्सु । वदन्नब्रवीत् व्यक्तमब्रवीत् ॥ ६० ॥ व्यनिष्पतत् विनिरपतत् ॥ ६१ ॥ तैरिति बहुवचनं परिवारापेक्षया । संहत्य बहुश इतियावत् ॥ ६२ ॥ अनुभूय श्राद्धवरणादिकमनुभूय ॥ ६३ ॥ ततः श्राद्धान्ते संपन्नमित्युक्त्वा ततो हस्तोदकं च दत्त्वा ॥६४—६६ ॥ निधनसंश्रयं नाशविषयं । प्रधर्षयितुं हिंसितुं ॥ ६७ ॥ अनलकल्पेन अग्निसदृशेन ॥ ६८ ॥ वि-

---

**रामानु॰** मेषवन्नदन् मृतसंजीविनीवैभवात् उदरान्तरितिशेषः ॥ ६१ ॥ **स॰** जीर्णस्य पक्वीकृतस्य " जीर्णं पक्वेपुराणेच " इतिविश्वः ॥ ६६ ॥ **स॰** ननु वनपर्वणि " ततोजगामकौरव्य—भिक्षितुंवसु " इत्यारभ्य " ततोराजर्षयस्सर्वेविषण्णागतचेतसः । वातापिंसंस्कृतंदृष्ट्वामेषभूतंमहासुरम् । अथाब्रवीदगस्त्यस्तान्राजर्षीनृषिसत्तमः । विषादोवोनकर्तव्योह्यहंभोक्ष्येमहासुरम् । धुर्यासनमथासाद्य निषसाद महामुनिः । तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव । अगस्त्यएव कृत्स्नंतु वातापिं बुभुजेततः" इतिगर्भीकृत्य "गवांदशसहस्राणि राज्ञामेकैकशोसुर । तावदेव सुवर्णस्य दित्सितं तु महासुर । मह्यं ततोवै द्विगुणं रथश्चैवहिरण्मयः । मनोजवौ वाजिनौ च दित्सितंतेमहासुर । जिज्ञास्यतां रथस्सद्यो व्यक्तएष हिरण्मयः । ततः प्रव्यथितोदैत्योददावभ्यधिकंवसु । विवाजाश्वसुवाजाश्व तस्मिन्युक्तौ रथे हयौ । ऊहतुस्स वसूनाशु तानगस्त्याश्रमंप्रति । सर्वान्राज्ञस्सहागस्त्यान्निमेषादिवभारत "

[ **पा॰** ] १ ङ. झ. ट. ततःसुतीक्ष्णवचनं. ज. सुतीक्ष्णस्यास्यवचनं. २ क. ख. च. छ. ज. मेव. ३ छ. ज. ञ. तपसा. ४ ख. ग. अस्य. ५ क. ख. घ.—ट. विप्रान्स. ६ घ. श्राद्धकर्मणि. ७ क. ख. ग. भ्राता. ८ क. सद्विजान्. च.—ञ. द्विजातीन्. ९ घ. हित्वा. १० ख. सहस्राणि. ११ क. विनिष्पतन्. ख. सहस्रशः. १२ क. च. छ. ज. ञ. सुभृशं. ग. ङ. ट. संहत्य. १३ क. च. छ. ज. ञ. निशाचरः. १४ ङ. झ. ट. हस्तेवनेजनं. क. ख. ग. च. छ. ज. ञ. हस्तावसेचनं. १५ क. ख. ग. ङ.—ट. इल्वलः. १६ ङ. छ. झ. ट. समभाषत. १७ ङ. झ. ट. सतदाभाषमाणंतु. क. च. छ. ञ. तंतदाभाषमाणंतु. ख. ग. घ. तंतथाभाषमाणंतु. १८ क. च. छ. ञ. मुनिपुङ्गवः. १९ ङ. झ. ट. भ्रातुस्तु. २० क. च. छ. ज. ञ. तद्वचनं. २१ क. ख. ङ.—ट. संश्रितं. २२ क. ख. ग. ङ. झ. ट. सोभ्यद्रवद्द्विजेन्द्रंतं. घ. सोभ्यद्रवद्द्विजश्रेष्ठं. छ. सोभ्यद्रवद्द्विजेन्द्रंतु ।

तस्यायमाश्रमो भ्रातुस्तटाकवनशोभितः ॥ विप्रानुकम्पया येन कर्मेदं[1] दुष्करं कृतम् ॥ ६९ ॥
एवं कथयमानस्य तस्य सौमित्रिणा सह ॥ रामस्यास्तं गतः सूर्यः सन्ध्याकालोऽभ्यवर्तत ॥ ७० ॥
उपास्य पश्चिमां सन्ध्यां सह भ्रात्रा यथाविधि ॥ प्रविवेशाश्रमपदं तमृषिं सोऽभ्यवादयत्[2] ॥ ७१ ॥
सम्यक्प्रतिगृहीतश्च[3] मुनिना तेन राघवः ॥ न्यवसत्तां निशामेकां प्राश्य मूलफलानि च ॥ ७२ ॥
तस्यां रात्र्यां व्यतीतायां[4] विमले सूर्यमण्डले[5] ॥ भ्रातरं तमगस्त्यस्य आमन्त्रयत[6] राघवः ॥ ७३ ॥
अभिवादये त्वां भगवन्सुखमध्युषितो निशाम् ॥ आमन्त्रये[7] त्वां गच्छामि गुरुं ते द्रष्टुमग्रजम् ७४॥
गम्यतामिति तेनोक्तो जगाम रघुनन्दनः ॥ यथोद्दिष्टेन मार्गेण वनं तच्चावलोकयन् ॥ ७५ ॥
नि[8]वारान्पनसांस्तालांस्तिमिशान्वञ्जुलान्धवान् ॥ चिरि[9]बिल्वान्मधूकांश्च बिल्वानपि[10] च तिन्दुकान् ७६॥
पुष्पितान्पुष्पिताग्राभिर्लताभि[11]रनुवेष्टितान् ॥ ददर्श रामः शतशस्तत्र कान्तारपादपान् ॥ ७७ ॥
हस्तिहस्तैर्विमृदितान्वानरैरुपशोभितान् ॥ मत्तैः शकुनिसंघैश्च शतशश्च[12] प्रणादितान् ॥ ७८ ॥
ततोऽब्रवीत्समीपस्थं रामो राजीवलोचनः ॥ पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् ॥ ७९ ॥
स्निग्धपत्रा यथा वृक्षा यथा क्षान्ता मृगद्विजाः[13] ॥ आश्रमो नातिदूरस्थो महर्षेर्भावितात्मनः ॥८०॥
अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा ॥ आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ ८१ ॥
प्रा[14]ज्यधूमाकुलवनश्चीरमालापरिष्कृतः ॥ प्रशान्तमृगयूथश्च नानाशकुनिनादितः[15] ॥ ८२ ॥
निगृह्य तरसा मृत्युं लोकानां हितकाम्यया ॥ दक्षिणा दिक्कृता येन शरण्या पुण्यकर्मणा ॥ ८३ ॥

---

प्रानुकम्पया विप्रेष्वनुकम्पया ॥ ६९—७१ ॥ प्रतिगृहीतः प्रत्युद्गतः । प्राश्य भुक्त्वा ॥ ७२—७३ ॥ अभिवादय इति अत्रवर्णाधिक्यमार्षं ॥ ७४ ॥ यथोद्दिष्टेन सुतीक्ष्णोक्तेन ॥ ७५ ॥ निवारान् जलकदम्बान् । वञ्जुलान् बकुलान् । " बकुलोवञ्जुलोशोकः " इत्यमरः । तिमिशान् नेमिवृक्षान् । धवान् चिरिबिल्वान् नक्तमालान् । " करञ्जः स्यान्नक्तमालः प्रकीर्यश्चिरिबिल्वकः " इति वैजयन्ती । मधूकान् मधुद्रुमाख्यवृक्षान् । तिन्दुकान् स्फूर्जकाख्यान्वृक्षान् ॥७६—७९ ॥ स्निग्धपत्राः आश्रमवासिभिः रक्षितत्वेन सरसपत्राः । क्षान्ताः शान्ताः । यथा येन प्रकारेण । तथा तेन प्रकारेण । आश्रमो नातिदूरस्थ इति मन्ये ॥ ८० ॥ स्वेन कर्मणा विन्ध्यस्तम्भनरूपेण । अगस्त्य-इति विख्यातः अगं स्तम्भयतीत्यगस्त्य इति व्युत्पत्तेः । परिश्रान्तानां श्रममपहन्तीति परिश्रान्तश्रमापहः । प्राज्यैर्बहुभिर्धूमैराकुलं वनं यस्य सः ॥ ८१—८३ ॥

---

इत्यन्तेन प्रधर्षणारंभस्येल्वलकृतस्य तेनागस्त्येन तद्धननस्यचानुक्तेर्विरोधइतिचेत्सत्यं । कल्पभेदेन समाधिसंभवात् । यद्वा अनलकल्पेनस्वेनचक्षुषा दग्धइव सन्निल्वलस्तंमुनिमभ्यद्रवत् । अनन्तरं तेनदीप्तेनतेजसामुनिनागस्त्येन निधनं भारतरीत्या धनाभावरूपंनिधनंगतइत्यर्थैककण्ठ्यंज्ञेयम् ॥ ६८ ॥ **ती०** प्रतिगृहीतः प्रतिपूजितः ॥ ७२ ॥ **स०** लक्ष्मिवर्धनं इकारान्तलक्ष्मीशब्दोप्यस्तीतिभावः । **शि०** लक्ष्मिणां सुचिह्नानां वर्धनं वृद्धिर्यस्मिंस्तं ॥ ७९ ॥ **शि०** अगइतिस्त्यः विन्ध्याद्रौशब्दः नामेतिया-

**[ पा० ]** १ ख. ग. कर्मैतत्. २ क. ख. ङ.—ट. चाभ्यवादयत्. ३ ङ. झ. ट. प्रतिगृहीतस्तु. क. च. छ. ज. ञ. प्रतिगृहीतस्स. ख. ग. परिगृहीतस्तु. ४ ख. ङ.—ञ. व्यतीतायामुदिते. ५ ङ. झ. ट. रविमण्डले. ६. क.—घ. च. छ. झ. ट. आमन्त्रयत. ७ क. च. छ. ज. आमन्त्रयित्वा. ८ क. च. छ. ज. ञ. निवारांस्तिमिशांश्चैवपनसान्वञ्जुलान्धवान्. ख. ग. ङ. ट. निवारान्पनसान्सालान्वञ्जुलांस्तिलशांस्तथा. झ. निवारान्पनसान्सालान्वञ्जुलांस्तिनिशांस्तथा. ९ घ. च. चीरबिल्वान्. १० क. प्रकीर्यानपिकिंतुकान्. च. छ. ज. ञ. प्रकीर्यानपि. झ. ट. बिल्वानथच. ११ क. च. छ. ज. ञ. लताभिःपरिवेष्टितान्. ङ. झ. ट. लताभिरुपशोभितान्. १२ क.—च. झ. ट. शतशःप्रतिनादितान्. छ. ज. ञ. शतशःप्रविनादितान्. १३ ख. मृगाद्विजाः १४ ग. च. छ. ज. ट. आज्य. १५ क. ग. च. छ. ज. ञ. संकुलः.

[1]तस्येदमाश्रमपदं प्रभावाद्यस्य राक्षसैः ॥ दिगियं दक्षिणा त्रासाद्दृश्यते नोप[2]भुज्यते ॥ ८४ ॥
यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा ॥ तदाप्रभृति निर्वैराः प्रशान्ता रजनीचराः ॥ ८५ ॥
नाम्ना चेयं भगवतो दक्षिणा दिक्प्रदक्षिणा ॥ प्रथिता त्रिषु लोकेषु दुर्धर्षा क्रूरकर्मभिः ॥ ८६ ॥
मार्गं निरोद्धुं [3]निरतो भास्करस्याचलोत्तमः ॥ [4]निदेशं [5]पालयन्यस्य [6]विन्ध्यः शैलो न वर्धते ॥ ८७ ॥
अयं दीर्घायुषस्तस्य लोके [7]विश्रुतकर्मणः ॥ अगस्त्यस्याश्रमः श्रीमान्विनीतज[8]नसेवितः ॥ ८८ ॥
एष लोकार्चितः साधुर्हिते नित्य[9]रतः सताम् ॥ अस्मा[10]नभिगतानेष श्रेयसा योजयिष्यति ॥ ८९ ॥
आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम् ॥ शेषं च वनवासस्य सौम्य वत्स्याम्यहं [11]प्रभो ॥ ९० ॥
[12]अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ अगस्त्यं [13]नियताहारं सततं पर्युपासते ॥ ९१ ॥
नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः ॥ नृशंसः [14]कामवृत्तो वा मुनिरेष तथाविधः ॥ ९२ ॥
अत्र [15]देवाश्च यक्षाश्च नागाश्च पतगैः सह ॥ वसन्ति नियताहारा धर्ममाराधयिष्णवः ॥ ९३ ॥
अत्र सिद्धा महात्मानो विमानैः सूर्यसंनिभैः ॥ [16]त्यक्तदेहा नवैर्देहैः स्वर्याताः परमर्षयः ॥ ९४ ॥
यक्षत्वममरत्वं च राज्यानि विविधानि च ॥ अत्र देवाः प्रयच्छन्ति भूतैराराधिताः [17]शुभैः ॥ ९५ ॥

---

त्रासात् दृश्यते न तु प्राचीनकाल इवोपभुज्यते ॥ ८४ ॥ यदाप्रभृतीति अगस्त्यागमनात्प्रभृति । दिक् अगस्त्याश्रमप्रदेशः । अन्यथा पूर्वोक्तविराधादिराक्षसोपद्रवो विरुध्येत । यद्वा दिक् सर्वापि । विराधादयोप्यगस्त्यागमनप्रभृति मन्दोपद्रवा एव । अशुचितादशायामेव मुनिमांसभक्षणं । निर्वैराः वैरप्रवर्तनाशक्ताः । प्रशान्ताः प्रशान्तवद्वर्तमानाः । अतएवेयं दक्षिणा दिक् नाम्ना भगवतोऽगस्त्यस्य दिगिति प्रसिद्धेत्युच्यते ॥ ८५—८६ ॥ निरतः उद्युक्तः । वर्धमान इत्यर्थः । न वर्धते अद्यापीति शेषः ॥ ८७—८८ ॥ सतां हिते साधुः नित्यरतश्च ॥ ८९ ॥ प्रभो इत्युक्तिः लक्ष्मणस्यापि राजपुत्रत्वात् । प्रभोरिति पाठे प्रभोरगस्त्यस्य । नियोगादिति शेषः ॥ ९० ॥ देवाः वक्ष्यमाणाः पूज्यव्यतिरिक्ताः ॥ ९१ ॥ क्रूरः निर्दयः । "क्रूरौ कठिणनिर्दयौ" इत्यमरः । शठः गूढविप्रियकृत् । नृशंसः घातुकः । कामेन वृत्तं यस्य सः कामवृत्तः स्वैरवृत्तः । एषमुनिः अगस्त्यः । तथाविधः मृषावाद्यद्यनर्हः ॥ ९२ ॥ देवाः वक्ष्यमाणब्रह्मादिभिन्नाः । पतगैः गरुडजातिभिः । आराधयिष्णवः आराधयन्तः । छान्दस इष्णुच् ॥ ९३ ॥ सिद्धाः तपस्सिद्धाः । नवैः दिव्यैः ॥ ९४ ॥ भूतैः प्राणिभिः । देवाः ब्रह्मादयः । अगस्त्योपासनकृतनित्यसान्निध्यादितिभावः ।

---

वत् । यस्मात् ॥ ८१ ॥ **स०** तस्येदमाश्रमपदं दृश्यतइत्यन्वयः ॥ ८४ ॥ सनिर्वैराः एतद्देशस्थितप्राणिषुवैररहिताः ॥ ८५ ॥ **स०** भगवतः अगस्त्यस्यमहिम्ना इयंदिक् क्रूरकर्मभीरक्षोभिर्दुर्धर्षा । अतोदक्षिणा अत्युदारा इतिहेतोः नाम्ना दक्षिणेति त्रिषुलोकेषु प्रथितेत्यन्वयः ॥ ८६ ॥ **ति०** मेरुस्पर्धयाभास्करमार्गंनिरोद्धुं वर्धितुकामोप्यचलोविन्ध्यः तस्यअगस्त्यस्य संदेशं मदागमनपर्यन्तं मावर्धस्वेत्याज्ञां पालयन्न वर्धते । अद्यापीति शेषः । **शि०** इयमत्राख्यायिका । सूर्यमाक्रमितुंवर्धमानोऽगस्त्यशिष्यो-विन्ध्यो गुरूद्देश्यकनित्यसाष्टाङ्गप्रणामसमये देवप्रार्थितागस्त्येन शिष्यद्वारा यावन्मदागमं प्रणमन्भूमावेव पतेत्याज्ञाप्य तदारभ्य स्वयं दक्षिणस्यांदिश्येवातिष्ठदिति ॥ ८७ ॥ **स०** श्रेयसा धनुर्दानादिना ॥ **ति०** श्रेयसायोजयिष्यति इन्द्रोदीरितं शरभङ्गोक्तमर्थं मनसिनिधायेदमुक्तमित्यनुसंधेयं ॥ ८९ ॥ **ति०** प्रभो शुश्रूषणसमर्थेत्यर्थः ॥ **स०** तमगस्त्यं प्रभोइत्यहमाराधयिष्यामीत्यन्वयः ॥ ९० ॥ **ति०** तथाविधः दुर्वृत्तासहिष्णुः ॥ ९२ ॥ **ति०** अत्र आश्रमे । भूतैःप्राणिभिः कर्तृभिः । शुभैः सत्कर्मभिः आराधितादेवादयः आश्रममाहात्म्यादल्पकालेनैव राज्यादीनि प्रयच्छन्तीत्यर्थः ॥ ९५ ॥ इत्येकादशःसर्गः ॥ ११ ॥

**[ पा० ]** १ क. ख. ग. च. छ. ज. ञ. तस्यैतदाश्रम. २ च. छ. ज. नोपयुज्यते. ३ क. ख. घ.—ट. सततं. ४ क. ङ. छ. ट. संदेशं. ५ ग. ङ. झ. ट. पालयंस्तस्य. ख. पालयंस्तत्र. ६ क. ख. घ.—ट. विन्ध्यशैलो. ७ क. प्रथित. ८ क. ङ.—ट. मृगसेवितः. ९ क. च. छ. ज. ञ. चाभिरतः. ख. ङ. झ. ट. नित्यंरतः. १० च. ज. निहागतान्. ग. ङ. झ. ञ. ट. नधिगतान्. ख. नभ्यागतान्. ११ क. च. छ. ज. ञ. सुखं. १२ ख. तत्र. १३ ङ. झ. ट. नियताहाराः. १४ ङ. झ. ट. पापवृत्तो. १५ क. देवास्सयक्षाश्च. १६ ङ. च. ज.—ट. त्यक्त्वादेहान्नवैः. १७ घ. शुभाः.

आगताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः ॥ निवेदय[1]ेह मां प्राप्तमृषये सीतया[2] सह ॥ ९६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकादशः सर्गः ॥ ११ ॥

---

## द्वादशः सर्गः ॥ १२ ॥

लक्ष्मणेनागस्त्यशिष्यंप्रत्यगस्त्येरामागमननिवेदनचोदना ॥ १ ॥ तेनागस्त्याज्ञयाससीतालक्ष्मणस्यरामस्याश्रमप्रवेशनम् ॥ २ ॥ तत्रब्रह्मादिदेवगणस्थानान्यवलोकयतारामेणशिष्यैःसहाभ्यागच्छतोऽगस्त्यस्यपादाभिवादनम् ॥ ३ ॥ अगस्त्येनश्रीरामायसादरमातिथ्यकरणपूर्वकमिन्द्रदत्तवैष्णवधनुराद्यायुधदानम् ॥ ४ ॥ अगस्त्येनरामंप्रतिभृगुशापेनमरुभूतस्यदण्डकारण्यस्यपुनःस्वप्रभावेणयथापुरंतरुनिकरसरित्सरस्समुदयरूपनिजरूपप्राप्तिकथनपूर्वकंरक्षश्शिक्षणेनमुनिकुलरक्षणप्रार्थना ॥ ५ ॥

स प्रविश्याश्रमपदं लक्ष्मणो राघवानुजः ॥ अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ १ ॥
राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली ॥ रामः प्राप्तो मुनिं द्रष्टुं[3] भार्यया सह सीतया ॥ २ ॥
लक्ष्मणो नाम तस्याहं भ्राता त्ववरजो हितः ॥ [4]अनुकूलश्च भक्तश्च यदि ते श्रोत्रमागतः ॥ ३ ॥
ते वयं वनम[5]त्युग्रं प्रविष्टाः पितृशासनात् ॥ द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः ॥ तथेत्युक्त्वाऽग्निशरणं प्रविवेश निवेदितुम् ॥ ५ ॥
स प्रविश्य मु[6]निश्रेष्ठं तपसा दु[7]ष्प्रधर्षणम् ॥ कृताञ्जलिरुवाचेदं [8]रामागमनमञ्जसा ॥
यथोक्तं लक्ष्मणेनैव शिष्योऽगस्त्यस्य संमतः ॥ ६ ॥
[9]पुत्रौ दशरथस्येमौ [10]रामो लक्ष्मण एव च ॥ [11]प्रविष्टावाश्रमपदं सीतया सह भार्यया ॥ ७ ॥
द्रष्टुं भवन्त[12]मायातौ शुश्रूषार्थम[13]रिंदमौ ॥ यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि ॥ ८ ॥
ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणम् ॥ वैदेहीं च महाभागामिदं वचनमब्रवीत् ॥ ९ ॥

---

शुभैः सत्कर्मनिरतैः ॥ ९५ ॥ सीतया सह प्राप्तमित्यन्वयः । अनेन रावणवधोद्युक्तत्वं द्योतयति ॥९६॥ अत्र चतुर्नवतिः श्लोकाः ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

---

रुद्रस्यापूज्यत्वमाह—स प्रविश्येत्यादि ॥ १—२॥ हितः हितकारी । अनुकूलः प्रियकरः । प्रियहितकरत्वे हेतुः—भक्तइति । भक्तः प्रीतिमान् । यदीति संभावनायां । अहं रामश्च ते श्रुतौ भवेवेत्यर्थः । अग्रजत्वादिविशेषणानि रामेण तुल्यप्रतिपत्तिवारणाय ॥ ३ ॥ निवेद्यतां अस्मद्दर्शनेच्छेति शेषः । एतद्वाक्यमुवाचेति पूर्वेणान्वयः । तेवयमित्यस्मिन् श्लोके यमिति गायत्र्या अष्टमाक्षरं सप्तसहस्रसंख्याकाः श्लोका गताः ॥ ४ ॥ अग्निशरण अग्निगृहं ॥ ५ ॥ अञ्जसा आशु । यथोक्तमित्यस्य उवाचेत्यनेनान्वयः । संमतः शिष्येषु मान्यत्वेन संमतः ॥ ६—७ ॥ शुश्रूषार्थं सेवार्थं चेत्यर्थः । अत्र अस्मिन् रामे विषये । अनन्तरं तदागमनानन्तरं । यद्वक्तव्यं तत्त्वं तस्यभावं प्रकारं आज्ञा-

---

ती० हितः शुभोदर्ककारी । अनुकूलः तदिच्छाकरणशीलः । भक्तः पूज्यविषयकानुरागो भक्तिस्तद्वान् ॥१॥ ती० ततइति । प्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु अस्मत्कुलदैवतं सीतालक्ष्मणोपेतश्रीराम आगतइति शिष्यादुपश्रुत्य स्वयं श्रवणानन्दमनुभूय

[ पा० ] १ क. घ. च ज. निवेदयस्व. २ ख. ङ. च. ज.—ट. सहसीतया. ३ क. च. ञ. सीतयासहभार्यया. ४ क. च. ज. ञ. अनुरक्तश्च. ५ घ. मव्यग्रं. ६ ग. मुनिश्रेष्ठं. ७ क. च. ज. ञ. द्योतितप्रभं. ८ क. च. छ. ज. वचनंव्यक्तयागिरा. ९ क. च. छ. ज. ञ. पुत्रोदशरथस्यासौ. १० क. च. छ. ज. ञ. रामोनाममहायशः. ख. भ्रातारौरामलक्ष्मणौ. ११ क. च. छ. ज. ञ. सहभ्रात्राश्रम. १२ क. च. छ. ज. ञ. मायातो. १३ क. च. छ. ज. ञ. मरिंदमः.

दिष्ट्या रामश्चि[1]रस्याद्य द्रष्टुं मां स[2]मुपागतः ॥ मनसा काङ्क्षितं ह्यस्य मयाऽप्यागमनं प्रति ॥ १० ॥
गम्यतां सत्कृतो रामः स[3]भार्यः सहलक्ष्मणः ॥ प्रवेश्यतां समीपं मे किं[4] चासौ न प्रवेशितः ॥११
एवमुक्तस्तु मुनिना धर्मज्ञेन महात्मना ॥ अभिवाद्याब्रवीच्छिष्यस्तथेति नियताञ्जलिः ॥ १२ ॥
त[5]तो निष्क्रम्य संभ्रान्तः शिष्यो लक्ष्मणमब्रवीत् ॥ क्वा[6]सौ रामो मुनिं द्रष्टुमेतु प्रविशतु स्वयम् ॥१३
ततो गत्वाऽऽश्रम[7]द्वारं शिष्येण सह लक्ष्मणः ॥ दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम् ॥१४॥
[8]तं शिष्यः प्रश्रि[9]तो वाक्यमगस्त्यवचनं ब्रुवन् ॥ प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतम् ॥ १५॥
प्रविवेश ततो रामः सीतया सह लक्ष्मणः ॥ प्रशान्तहरिणाकीर्णमाश्रमं ह्यवलोकयन् ॥ १६ ॥
स[10] तत्र ब्रह्मणः स्थानमग्नेः स्था[11]नं तथैव च ॥ वि[12]ष्णोः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः ॥१७॥
सोमस्थानं भ[13]गस्थानं स्था[14]नं कौबेरमेव च ॥ धातुर्विधातुः स्था[15]ने च वायोः स्थानं तथैव च ॥१८॥
ना[16]गराजस्य च स्थानमनन्तस्य महात्मनः ॥ स्थानं तथैव गायत्र्या वसूनां स्थानमेव च ॥ १९ ॥
स्थानं च पाशहस्तस्य वरुणस्य महात्मनः ॥ कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति ॥ २० ॥

पयितुमर्हसि ॥ ८—९॥ दिष्टया यदृच्छया। चिरस्य चिरात् प्रतिकाङ्क्षितमित्यन्वयः । प्रतिर्वीप्सायां । सत्कृतः सत्कारार्हः । किंचासौ न प्रवेशितः—कुतो विलम्बितइत्यर्थः ॥ १०—११॥ अभिवाद्येति । विलम्बकरणापचारनिवृत्त्यर्थं वन्दनं । अतएव संभ्रान्त इति वक्ष्यति ॥ १२—१४ ॥ अगस्त्येनोच्यत इत्यगस्त्यवचनं अगस्त्योक्तमित्यर्थः । सुसत्कृतं सविनयवाक्येनबहुमतं ॥ १५ ॥ आश्रमं मुनिगृहं ॥ १६ ॥ अयं तत्र देवपूजागृहाण्यपश्यदित्याह—स तत्रेत्यादि । तत्र अगस्त्यगृहे । ब्रह्मणः चतुर्मुखस्य । अग्नेः पावकस्य । तथैव चेति निपातसमुदायस्समुच्चये ॥ १७ ॥ भगो देवताविशेषः ॥१८—१९॥ पाशहस्तस्येत्यादिविशेषणानि तत्र मुनेरगस्त्यस्य भक्तिविशेषद्योतनार्थं । इमे ब्रह्मादयः पूर्वसर्गे फलप्रदत्वेनोक्ताः । अन्ये अगस्त्योपासकत्वेनोक्ताः । एते ब्रह्माग्निविष्णुमहेन्द्रविवस्वत्सोमभगकुबेरधातृविधातृवाय्वनन्तगायत्रीवसुवरुणकार्तिकेयधर्माख्याः सप्तदशदेवाः । "यो वै सप्तदशं" इत्यनुवाकोक्तसप्तदशाक्षरदेवताः यायजूकेन मुनिना पूजार्थं प्रतिष्ठिता इति बोध्यं । अत्र पूज्यदैवतेषु रुद्रस्यानुपादानादपूज्यत्वमुक्तम् । अधुना जनैः कैश्चित्पूज्यमानता तु तामसशास्त्रानुरोधेनेति बोध्यम् । ननु विष्णोः स्थानं महेशस्येति पाठात् स्थानानुक्त्यसंभव इति चेत् तदापूर्वं रामेण "अगस्त्यं नियताहारं सततं पर्युपासते" इत्युक्तावपि स्थाननिर्देशे

पश्चादब्रवीदित्यर्थः ॥२॥ **ती०** वस्तुतस्तु मयापि अन्तरङ्गभूतया लक्ष्म्यापि । यस्यास्य विष्णोः । "अकारोब्रह्मविष्ण्वीशेषु" इतिनिघण्टुः । आगमनं ज्ञानं । "सर्वेगत्यर्था ज्ञानार्था इतिवचनात् । मनसा काङ्क्षितंहि काङ्क्षितंखलु । "दृश्यतेत्वग्र्यया बुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः" इतिश्रुतेः । सएव सर्वलोकैकशरण्यश्श्रीरामः भीषणामयपीडितस्यभिषगिव चिरस्य चिरकालस्य अद्य द्रष्टुं मांप्रति मामुद्दिश्य दिष्ट्या मद्भाग्यवशेन समुपागतः ममपुरतआविर्भूतइत्यहो ममभाग्यं किंवर्णनीयमित्यर्थः । एतदात्मगतं ॥ **ति०** किंच । अन्तर्भावितण्यर्थो दृशिः । मामात्मानं दर्शयितुं यद्वनेवसतः चिरस्यचिरकालस्य गमनेप्यागतः तद्दिष्ट्या मद्भाग्येन । उद्बुद्धेनेत्यर्थः । **स०** चिरस्यबहुकालक्षेपंकृत्वा । चिरमस्यति । असुक्षेपणेण्यत् । संज्ञापूर्वकत्वादृद्ध्यभावः शकंध्वादित्वात्पररूपं । "चिरस्यायाश्चिरार्थकाः" इत्यमरः ॥ १० ॥ **ति०** अग्निरत्ररुद्रः । **शि०** पश्यति अपश्यत् । तत्राग्निशब्देन शंभुरुच्यते । अतएव ब्रह्मविष्णुवाचकशब्दयोरन्तरापाठः ॥ १७ ॥ **ति०** भगः स्थूलमण्डलाभिमानी । **कतक०** धाता कार्यप्रजापतिः । विधाताविश्वकर्मा ॥ **स०** धातुर्विधातुः तन्नामसूर्ययोः पृथक्पृथग्विद्यमानंस्थानं ॥ १८ ॥ **ति०** गायत्रीति सरस्वतीसावित्र्योरप्युपलक्षणं ॥ १९ ॥ **ति०** एतेन

**[ पा० ]** १ ग. चिरादद्य. २ ग. समुपस्थितः. ३ क. सहभार्यस्सलक्ष्मणः. ४ छ. झ. किमसौ. ङ. ट. किमयं. ५ ङ. झ. ट. तदा. ६ ङ. झ. ट. कोसौ. ७ क. ङ.—ढ. पदं. ८ क. ख. सशिष्यः. ९ ग. ङ.—ट. प्रश्रितं. १० क. ख. ङ.—ज. तत्रतु. ११ क. स्थानंचपश्यति. १२ क. ग. विष्णुस्थानं. १३ घ. शिवस्थानं. १४ च. छ. ज. कौबेरंस्थानमेव. १५ क. ग. ङ.—ट. स्थानंच. १६ नागराजस्यचेत्याद्यर्धत्रयं क. ख. ग. ङ.—ट. पुस्तकेषु स्थानंचपाशहस्तस्य. स्थानंतथैवगायत्र्याः. स्थानंचनागराजस्य. इतिव्युत्क्रमेणदृश्यते. क. च. छ. ज. ट. स्थानंचनागराजस्यगरुडस्यतथैवच. ङ. झ. ञ. स्थानंचनागराजस्यगरुडस्थानमेवच. ख. ग. स्थानंचनागराजस्यवासुकेःसुमहात्मनः.

ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ॥ तं ददर्शाग्रतो रामो मुनीनां दीप्त[1]तेजसाम् ॥ २१ ॥
अब्रवीद्वचनं [2]वीरो लक्ष्मणं लक्ष्मिवर्धनम् ॥ [3]एष लक्ष्मण निष्क्रामत्यगस्त्यो [4]भगवानृषिः ॥
औदार्येणावगच्छामि [5]निधानं तपसामिमम् ॥ २२ ॥
एवमुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम् ॥ [6]जग्राह परमप्रीतस्तस्य पादौ परंतपः ॥ २३ ॥
अभिवाद्य तु धर्मात्मा तस्थौ रामः कृताञ्जलिः॥ सीतया सह वैदेह्या तदा रामः सलक्ष्मणः ॥२४॥
[7]प्रतिजग्राह काकुत्स्थमर्चयित्वाऽऽसनोदकैः ॥ [8]कुशलप्रश्नमु[9]क्त्वा च [10]आस्यतामिति [11]चाब्रवीत् ॥२५॥
अग्निं हुत्वा प्रदायार्घ्यमतिथीन्प्रतिपूज्य च ॥ वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २६ ॥
प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुङ्गवः ॥ उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २७ ॥
[12]अग्निं हुत्वा प्रदायार्घ्य[13]मतिथिं प्रतिपूजयेत् ॥ अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन् ॥
दुःसाक्षीव परे लोके स्वानि मांसानि भक्षयेत् ॥ २८ ॥
राजा सर्वस्य लोकस्य धर्मचारी महारथः ॥ पूजनीयश्च मान्यश्च भवान्प्राप्तः प्रियातिथिः ॥ २९ ॥

---

उपास्योपासकयोरुभयोरपि निर्देशो नविरुध्यते । यद्वा उपासनं समीपावस्थानं नत्वाराधनं । धर्ममाराधयिष्णव इत्युक्तेः । धर्मस्याराधनं परिपालनमेव ॥ २० ॥ अभिनिष्पतत् अभ्युत्थानं कृतवान् अडभावआर्षः । मुनीनामग्रतः स्थितमिति शेषः ॥ २१ ॥ औदार्येण तेजोविशेषरूपौन्नत्येन । इममवगच्छामि अगस्त्यत्वेनेति शेषः । इति वचनमब्रवीदित्यन्वयः ॥ २२ ॥ अगस्त्यं उद्दिश्येति शेषः ॥ २३ ॥ रामः अभिवाद्य रामस्तस्थावित्यन्वयः ॥ २४ ॥ प्रतिजग्राह अतिथित्वेनेति शेषः । उदकानि पाद्यानि ॥ २५ ॥ तस्मिन्नासीने अग्निं हुत्वा वैश्वदेवं कृत्वा । तेभ्यः अर्घ्यं दत्त्वा अतिथीन् तान् प्रतिपूज्य आचमनीयपुष्पादिभिः पूजयित्वा । वानप्रस्थेन धर्मेण सिद्धं भोजनं कन्दमूलादिकं ददौ ॥ २६ ॥ स्वयं प्रथमसुपविश्य आसीनं राममुवाच ॥ २७ ॥ अयं रामव्याजेन सीतां प्रत्युपदेशः । धर्मकोविदमित्युक्तस्य रामस्य हि नेदं वक्तव्यं । अतएव सीता रावणं सत्करिष्यति । अन्यथा समुदाचरन् होमममतिथिसत्कारं चकुर्वन्नित्यर्थः । दुःसाक्षी कूटसाक्षी ॥ २८ ॥ भवांस्तु विशिष्टातिथिरित्याह—राजेति । राजपक्षे स्पष्टोर्थः । तत्त्वार्थस्तु सर्वस्य लोकस्य भुवनत्रयस्य। राजा स्वामी । "पतिं विश्वस्य" इति श्रुतेः । अतएव लोकस्य पूजनीयः कर्मभिराराध्यः । "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति श्रुतेः । मान्यः मुक्तये योगिभिश्चिन्त्यः । प्रियातिथिः लौकिकातिथिभ्यो विलक्ष-

---

पूजास्थाने एतावतांदेवानां पूजाऽऽवश्यकीतिसूचितं ॥ २० ॥ **ती०** योगरूढिभेदेन रामशब्दस्यापौनरुक्त्यं ॥ **स०**.स-आरामः उपवनंयस्यसः तदारामः । अतो नपुनरुक्तिः । **शि०** आरामः सर्वाभिरामदाता । रामः ॥ २४ ॥ **ति०** आसीनं पश्चादासीनमित्यर्थइतिप्राञ्चः । ममतुभाति प्रथममिति भोजनं ददावित्यनेनान्वेति । अथ उपविश्य । अतिथिपूजाव्यग्रतया तावत्पर्यन्तमनुपवेशनमिति ॥ २७ ॥ **ती०** ननु निरपेक्षेण पूजनीयो न क्षत्रियः । कथं किमर्थं पूजितइत्याशङ्कायां वानप्रस्थधर्मेइति मयैवमनुष्ठितं नान्यथेति समाधित्सुराह—**अन्यथेति** । तपस्वी वानप्रस्थः । अन्यथासमुदाचरन् पूज्यपूजातिक्रमंकुर्वन् परेलोके स्वानिमांसानिभक्षयेत् । किंच दुस्साक्षी कूटसाक्ष्यपि परलोके स्वानिमांसानिभक्षयेत् । अतः प्रत्यवायपरिहाराय त्वां पूजयामीत्यर्थः ॥ **सं०** ब्राह्मणैः क्षत्रियपूजा न कार्येत्यतो धर्मस्वरूपनिरूपणव्याजेनातिथिमात्रस्य पूज्यत्वं सूचयति—**अन्यथेति** । परेलोके यमलोके ॥२८ ॥ **ती०** वस्तुतस्तु सर्वस्यलोकस्य ब्रह्माण्डस्य राजा प्रभुः । तथापि धर्मचारी लो-

[ **पा०** ] १ ङ. झ. ञ. ट. दीप्ततेजसं. २ क. च. ञ. रामो. ग. धीरो. ३ ङ. झ. ट. बहिर्लक्ष्मण. ४ ग. मुनिसत्तमः. ५ च. छ. ज. ञ. तपसोराशिमुत्तमं. क. तपसोराशिमव्ययं. ङ. झ. निधानंतपसामिदं. ट. निदानंतपसामिदं. ख. निधानं तपसामिव. ६ ङ. झ. ट. जग्राहापततस्तस्यपादौचरघुनन्दनः. ७ ग. ङ—ट. प्रतिगृह्यच. क. प्रतिगृह्यतुतंवीरं. ८ ख. कुशलंप्रश्नयित्वा. ९ क. च. छ. ज. मुक्त्वातु. १० क. ख. ग. ङ—ट. आस्यतामिति. ११ ङ—ट. सोब्रवीत्. १२ इदमर्धं क. ख. ग. छ—ट पुस्तकेषुनदृश्यते. १३ घ. मतिथीन्प्रति.

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ॥ पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् ॥ ३० ॥
इदं दिव्यं महच्चापं हेमरत्नविभूषितम् ॥ वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥
अमोघः सूर्यसंकाशो ब्रह्मदत्तः शरोत्तमः ॥ ३१ ॥
दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ ॥ संपूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पावकैः ॥ ३२ ॥
महारजतकोशोयमसिर्हेमविभूषितः ॥ ३३ ॥
अनेन धनुषा राम हत्वा संख्ये महाऽसुरान् ॥ आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ॥३४
तद्धनुस्तौ च तूणीरौ शरं खङ्गं च मानद ॥ जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ ३५ ॥
एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम् ॥ दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥ ३६ ॥
[ सुखं स्वप महाबाहो ससीतः सहलक्ष्मणः ॥ रविरस्तंगतः सौम्य सन्ध्याकालोप्युपागमत् ॥३७॥
एते निशाचरा राम निलीना मृगपक्षिणः ॥ नगाग्रेषु भृशं लीना दृश्यन्ते सुसमाहिताः ॥
नैशेन तमसा व्याप्तमप्रकाशं नभस्स्थलम् ॥ ३८ ॥
एवमुक्तो महाबाहुरगस्त्येन महात्मना ॥ उपास्य पश्चिमां सन्ध्यां रामः सौमित्रिणा सह ॥ ३९ ॥
अभिवाद्य महात्मानमगस्त्यमृषिसत्तमम् ॥ सुष्वाप रजनीमेकां पूजितः परमर्षिणा ॥ ४० ॥
सुखोषितस्तदा रामः सन्ध्यामन्वास्य सानुजः ॥ कृतपूर्वाह्णिकस्तस्थौ स्नात्वा हुतहुताशनः ॥४१॥
लक्ष्मणेन सह भ्रात्रा सीतया च परंतपः ॥ उपागच्छदमेयात्मा अगस्त्यं सूर्यवर्चसम् ॥ ४२ ॥
स दृष्ट्वा राघवं श्रीमानगस्त्यः संयताञ्जलिम् ॥ प्रतिपूज्य यथान्यायमिदं वचनमब्रवीत् ॥ ४३ ॥
कच्चित्सुखा निशा राम व्यतीता रघुनन्दन ॥ तव सभ्रातृभार्यस्य ममाश्रमपदे शुभे ॥ ४४ ॥

णः । एवमुवाचेति पूर्वेणान्वयः ॥ २९ ॥ एवमिति पुनः फलादिदानं सीतायाः ॥ ३० ॥ परशुरामाद्गृहीत्वा वरुणहस्ते दत्तं रामेण तदेव वरुणः खरादिवधः सन्निहित इत्यगस्त्यहस्ते निक्षिप्तवानित्यवगम्यते । वैष्णवशब्दप्रत्यभिज्ञानात् । ब्रह्मदत्तः ब्रह्मणा दत्तः । अयमितिशेषः ॥ ३१॥ तूणी इमाविति शेषः ॥३२॥ महारजतं सुवर्णं तन्मयः कोशः खङ्गपिधानं यस्य सः महारजतकोशः । बालरामायणे ऐन्द्रं शरासनमिति इन्द्रदत्तत्वोक्तिश्छत्रिन्यायात् ॥ ३३ ॥ धनुषा धनुरादिना ॥ ३४ ॥ शरं खङ्गं च वैष्णवाविति शेषः । वज्रं वज्रधरो यथेत्यनेन तावकं त्वमेव गृहाणेत्युक्तं ॥ ३५ ॥ एवमुक्त्वा ततः पुनरेव इत्यब्रवीदित्यन्वयः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

———

कशिक्षार्थं धर्मांश्चरति आचरतीतितथा । महारथः महान्महात्मा गरुडो रथो यस्य सतथोक्तः । किंच पूजनीयः सत्कर्मभिराराध्यः मान्यः मुक्तिसिद्धये मन्तव्यश्चेतियोजना । **स०** अतिथिमात्रस्ययदापूज्यता तदा काकथा सर्वोत्तमस्यतवेत्याह—**राजेति** । प्रियातिथिरिति कर्मधारयो बहुव्रीहिर्वा । बहुव्रीहिपक्षे रामस्यापिप्रियातिथिकत्वंसूचयति ॥ २९ ॥ **कतक०** परशुरामाद्गृहीत्वा वरुणहस्तेदत्तंयद्रामेण तदेव वरुणादादाय महेन्द्रोऽगस्त्ये निक्षिप्तवान् ॥ योगेन महेन्द्रपदेन वरुणएवेत्यन्ये ॥ **स०** महत् चापमितिपदद्वयं । इदंच शार्ङ्गमिन्द्रदत्तं । " शार्ङ्गंतदादिपुरुषो निजमाजहार " इत्याचार्योक्तेः । एतदुत्पत्तिप्रकारस्तु " अत्रागमंतेवक्ष्यामि " इत्यारभ्य ' एतत्तेसर्वमाख्यातं ' इत्यन्तेनानुशासनिकेपर्वण्युक्तः । नन्वानुशासनिकेपर्वणि धनुषोवेणुविकृतत्वोक्तेः कथं शृङ्गविकृतत्वाच्छार्ङ्गत्वोक्तिरितिचेत् कण्वशिरस्स्थवल्मीकगवेणुविकृतत्वात्तथा व्यपदेशः । **ति०** ब्रह्मणादत्तो ब्रह्मदत्तः तदाख्यश्च ॥ ३१ ॥ तूणीचेति चेन धनुश्शरयोरुभयोरिन्द्रदत्तत्वंगम्यते ॥ ३२ ॥ **स०** दिवौकसांश्रियंसंपदं । **ति०** वज्रं वज्रधरोयथेत्यनेन त्वदीयमेव त्वयास्वीक्रियतइतिध्वनितं ॥३५॥ **ति०** वरायुधं वरस्यविष्णोरायुधंच ॥ ३६ ॥ इतिद्वादशस्सर्गः ॥ १२ ॥

**[ पा० ]** १ ङ. झ. ट. पुष्पैश्चान्यैश्च. २ ख. पार्थिवं. ३ ततोऽगस्त्यस्तमब्रवीत्. क. छ. ज. ञ. पुनरेवाब्रवीद्वचः. घ. पुनरेवतमब्रवीत्. ४ क. ख. घ. ङ. झ. ञ. ट. वज्र. ५ ङ—ञ. चाक्षय्य. ६ झ. राजत. ७ ग. सौम्य. संख्येहत्वाराम. ८ ङ. छ. झ. ट. तूणीच. ९ इमेसप्तत्रिंशच्छ्लोकाः क. पुस्तकएवाधिकादृश्यन्ते.

अगस्त्येनैवमुक्तस्तु काकुत्स्थो वाक्यमब्रवीत् ॥ मानिताः स्म यथान्यायं त्वया पूज्येन पूजिताः ॥ ४५
शयनासनदानेन भोजनाच्छादनैः शुभैः ॥ राज्ञो दशरथस्यैव पुरस्यान्तःपुरे यथा ॥
सुखोषिताः स्म भगवन्सर्वकामैरुपस्थिताः ॥ ४६ ॥
सुखोपविष्टे रामे तु सहसीते सलक्ष्मणे ॥ स तेन ऋषिसङ्घेन अगस्त्यो वाक्यमब्रवीत् ॥ ४७ ॥
कालोऽयं गतभूयिष्ठो यः कालस्तव राघव ॥ समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥
तीर्णप्रतिज्ञः काकुत्स्थ सुखं राम निवत्स्यसि ॥ ४८ ॥
धन्यस्ते जनको राम स राजा रघुनन्दन ॥ यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः ॥ ४९ ॥
एवमुक्तस्ततो रामः प्रत्युवाच कृताञ्जलिः ॥ प्रीतः प्रीततरं वाक्यं प्रत्युवाच महायशाः ॥ ५० ॥
धन्योस्म्यनुगृहीतोस्मि यस्य मे मुनिपुङ्गव ॥ प्रीयमाणस्तु सुप्रीतो नास्ति धन्यतरो मम ॥ ५१ ॥
मया न तारितो राजा स्वगुणैरेव तारितः ॥ स्वर्गं दशरथः प्राप्तः स्वकृतैः पुण्यकर्मभिः ॥ ५२ ॥
अयं तु देशो निखिलः सर्व एव महातपः ॥ अशरण्यः शरण्योऽभूद्यथैव विनिवेशितः ॥
तथाऽऽख्यातुमर्हसि तत्त्वेन परं कौतूहलं मम ॥ ५३ ॥
श्रुत्वा तु वचनं तस्य रामस्य मधुराक्षरम् ॥ प्रत्युवाच ततो राममगस्त्यो भगवानृषिः ॥ ५४ ॥
शृणु राघव तत्त्वेन देशस्यास्य यथातथम् ॥ ५५ ॥
दण्डकेन परित्यक्तो ह्ययं देशो महात्मना ॥ भार्गवस्य च शापेन निर्मनुष्यमृगोऽभवत् ॥ ५६ ॥
वृक्षगुल्मलताहीनं तापसैरभिवर्जितम् ॥ कान्तारमभवत्तात घोरं परमदारुणम् ॥
योजनार्धसहस्रं तु विन्ध्यपादस्तु दक्षिणः ॥ ५७ ॥
नानुवर्षति पर्जन्यो नानुवाति सुखोऽनिलः ॥ रक्षःप्रतिभयं घोरमासीत्परमदारुणम् ॥ ५८ ॥
बहून्यब्दसहस्राणि ह्येतदासीदमानुषम् ॥ गन्धर्वैर्ऋषिसंघैश्च देवैश्च परिवर्जितम् ॥ ५९ ॥
कस्य चित्त्वथ कालस्य दैवयोगादहं नृप ॥ हिमवच्छिखराद्देशादिह प्राप्तोस्मि मानद ॥ ६० ॥
ततो मया समाहूतः पर्जन्यो जलदैः सह ॥ स्वच्छन्दवर्षश्च कृतः कंचित्कालमरिन्दम ॥ ६१ ॥
यमस्य चैव चारास्तु बहून्यब्दशतानि वै ॥ तेजसा मृत्युभूताश्च व्याधयश्च निराकृताः ॥ ६२ ॥
हिमवत्पादजा वृक्षाश्चिन्तिता मनसाऽऽगताः ॥ प्रवृत्ताश्च पुनर्नद्यः फुल्लपङ्कजमण्डिताः ॥
तटाकानि च रम्याणि सरितश्च सरांसि च ॥ ६३ ॥
प्रवृद्धवनषण्डं तु स्फीतसस्यवनाकुलम् ॥ अचिरेणाभवद्रम्यं सर्षिसङ्घानुसेवितम् ॥ ६४ ॥
केवलं त्वभिशापेन तस्यैव रघुनन्दन ॥ सोपद्रुतमिवाप्येतद्राक्षसैरुग्रकर्मभिः ॥ ६५ ॥
यदाप्रभृति चापि त्वं चित्रकूटमुपागतः ॥ तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥
ऋषीणामभयं वीर दातुमर्हसि मानद ॥ ६६ ॥
अस्माद्धि कारणाद्राम दण्डकारण्यवासिनाम् ॥ त्राणार्थमिह संप्राप्तस्त्रातुमर्हति नो भवान् ॥ ६७ ॥
समर्थो ह्यसि काकुत्स्थ त्रैलोक्यस्यापि रक्षणे ॥ किंपुनर्वीर रक्षांसि द्विजमन्युहतानि वै ॥ ६८ ॥
अयमिक्ष्वाकुपुत्रेण दण्डकेन महाबल ॥ देशो निराकृतो राजञ्शापदोषेण राघव ॥ ६९ ॥
दण्डकारण्यमखिलं दर्शनादेव राघव ॥ शापस्यान्ताय काकुत्स्थ प्राप्तस्त्वमरिमर्दन ॥ ७० ॥
स त्वं मन्युपरावृत्तैः पितृभिः संनिराकृतम् ॥ तारय त्वं महाबाहो दण्डकारण्यमद्य वै ॥ ७१ ॥
एवमुक्तस्तदा रामः प्रत्युवाच महामुनिम् ॥ आश्चर्यमिदमाख्यातं देशस्यास्य यथातथम् ॥ ७२ ॥
एवमुक्तस्तु रामेण महर्षिस्त्विदमब्रवीत् ] ॥ ७३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्वादशस्सर्गः ॥ १२ ॥

# त्रयोदशः सर्गः ॥ १३ ॥

अगस्त्येनरामंप्रतिलौकिकनारीजनदुस्स्वभावनिरूपणपूर्वकंसीतायास्तद्वैलक्षण्योक्त्याप्रशंसनम् ॥ १ ॥ रामेणस्वावासोचितस्थाननिवेदनमर्थितेनागस्त्येनतंप्रतिपञ्चवट्यास्तदर्हत्वोक्तिपूर्वकंलक्षणोक्त्यातन्मार्गनिवेदनम् ॥ २ ॥ रामेणसीतालक्ष्मणाभ्यांसहसप्रणाममगस्त्यामन्त्रणेनपञ्चवटींप्रतिप्रस्थानम् ॥ ३ ॥

राम प्रीतोस्मि भद्रं ते परितुष्टोस्मि लक्ष्मण ॥ अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया ॥ १ ॥
अध्वश्रमेण वां खेदो बाधते प्रचुरश्रमः ॥ व्यक्तमुत्कण्ठते चापि मैथिली जनकात्मजा ॥ २ ॥
एषा हि सुकुमारी च दुःखैश्च न विमानिता ॥ प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ ३ ॥
यथैषा रमते राम इह सीता तथा कुरु ॥ दुष्करं कृतवत्येषा वने त्वामनुगच्छति ॥ ४ ॥
एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन ॥ समस्तमनुरज्यन्ति विषमस्थं त्यजन्ति च ॥ ५ ॥
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा ॥ गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ६ ॥
इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता ॥ श्लाघ्या च व्यपदेश्या च यथा देवी ह्यरुन्धती ॥ ७ ॥
अलंकृतोऽयं देशश्च यत्र सौमित्रिणा सह ॥ वैदेह्या चानया राम वत्स्यसि त्वमरिन्दम ॥ ८ ॥

एतादृशस्थले सर्गविच्छित्तिर्नास्तीति प्रतीयते कथाया अपर्यवसानात् । अथ खरवधायागस्त्येनानुज्ञातस्य रामस्य पञ्चवटीं प्रति प्रयाणं त्रयोदशे—रामेत्यादि । ते इत्यस्य लक्ष्मणेत्यत्राप्यन्वयः ॥ १ ॥ अध्वश्रमेण मार्गायासेन । प्रचुरः श्रमः श्रमजलं येन सः प्रचुरश्रमः । खेदः वां बाधते । उत्कण्ठते विश्रान्तिमभिलषति । अनेनास्याःश्रमातिशय उच्यते । जनकात्मजेति सौकुमार्यातिशयोक्तिः ॥ २ ॥ एषासुकुमार्यपि प्राज्यदोषं बहुदोषं वनं प्राप्ता दुःखैर्न विमानिता न परिभूता च । तत्र हेतुः—भर्तृस्नेहप्रचोदितेति ॥ ३ ॥ इह आश्रमे ॥ ४ ॥ प्रकृतिः स्वभावः । आसृष्टेः जगत्सृष्टिमारभ्य । समस्थं सुखं प्रति । विषमस्थं दुर्दशापन्नं ॥ ५ ॥ शतह्रदानां विद्युतां । लोलत्वं चञ्चलत्वं । अनुगच्छन्ति चञ्चलचित्तत्वादिति भावः । शस्त्राणां तीक्ष्णतां क्रौर्यं । अनुगच्छन्ति बहुकालागतस्नेहबन्धच्छेदनादिति भावः । गरुडानिलयोः शैघ्र्यं अनुगच्छन्ति । अविचारेणकार्यकरणादिति भावः ॥ ६ ॥ एवंलौकिकस्त्रीणां दुष्टस्वभावमुक्त्वा सीतायास्तद्वैलक्षण्यमाह—इयंत्विति । न केवलं दोषरहिता श्लाघ्या सद्भिः प्रशंसनीया च । व्यपदेश्या पतिव्रतास्वग्रगण्या । एवं सीताप्रशंसनं वक्ष्यमाणदेववन्दीमोचनोत्साहनाय ॥ ७ ॥ अयं देशः आश्रमप्रदेशः । यद्वा भूलोकः । वत्स्यसि दश-

ति० लक्ष्मण त्वयिच परितुष्टोस्मि । रामसेवातत्परत्वेन परितोषः । भगवद्विषयप्रीतेरेव भक्तित्वेन त्वद्भक्तोऽहमितिध्वनितं ॥१ ॥ ती० अध्वश्रमेण मार्गश्रमेण आगमनादिप्रयुक्तखेदादिकार्यकृत्खेदः खिन्नता वां बाधतेकिमितिशेषः । प्रचुरश्रमः मैथिलीमितिशेषः । व्यक्तंबाधतइतियोज्यं । अतएवमैथिलीउत्कण्ठते आकाङ्क्षते क्वचिद्विश्रान्तिमितिशेषः । स० अध्वश्रमेण खेदः तज्जन्यं दुःखंवांबाधतइतिव्यक्तं । ममापि प्रचुरश्रमः मैथिलीसंबन्धमात्रात् । हेजनक जगज्जनक राम आत्मनः स्वतएव जायतइत्यात्मजा अयोनिजेतियावत् ॥ २ ॥ स० इहवने रामे त्वयि यथा रमते सीता तथाकुरु । अभिगच्छतीति दीर्घान्तपाठे शत्रन्तं । ह्रस्वान्तपाठे तिङ् । आद्यपाठे अभिगच्छतीसती दुष्करंकृतवतीत्यन्वयः । द्वितीये यतोतइतिशेषः ॥ ४ ॥ स० आसृष्टेः ईषज्जन्मनः विवाहरूपद्वितीयजन्मारभ्येतियावत् । " स्त्रीणां प्रदानकर्मैव यथोपनयनंतथा " इत्याद्युक्तेः । यद्वा आसृष्टे जगति । समस्थं मया संपदा सहितास्समाः तेषुतिष्ठतीति समस्थस्तं संप्रयुक्तं । अनुरज्यन्ति अनुरागयुक्ता भवन्ति ॥ विषमस्थं दरिद्रं ॥ ५ ॥ स० " अजाद्यदन्तं " इत्यनिलशब्दएव प्राक्प्रयोज्यः । तथापि गरुडशब्दस्य मुख्यगरुडवाचकत्वादनिलशब्दस्य भूतवायुपरत्वात्तदपेक्षया गरुडस्याभ्यर्हितत्वात्पूर्वनिपातः । यद्वा " समुद्राभ्राद्धः " इत्यत्रादर्शनात् " अजाद्यदन्तं " इत्यस्यानित्यत्वाद्गरुड-

[ पा० ] १ ङ. झ. ट. वापि. क. च. छ. ञ. देवी. २ क. ङ. च. छ. झ. ञ. ट. एषाच. ३ च. छ. झ. ञ. खेदैश्च. ४ ग. ङ. झ. ञ. ट. त्वामभि. ख. त्वामिह. ५ ङ. झ. रज्यन्ते. ६ घ. रेतैस्तुवर्जिता. ७ ङ. झ. ट. देवेष्वरुंधती. ग. देवीष्वरुंधती. क. च. छ. ञ. देवीत्वरुंधती.

एवमुक्तः स मुनिना राघवः संयताञ्जलिः ॥ उवाच प्रश्रितं वाक्यमृषिं दीप्तमिवानलम् ॥ ९ ॥
धन्योस्म्यनुगृहीतोस्मि यस्य मे मुनिपुङ्गवः ॥ गुणैः सभ्रातृभार्यस्य वरदः परितुष्यति ॥ १० ॥
किंतु व्यादिश मे देशं सोदकं बहुकाननम् ॥ यत्राश्रमपदं कृत्वा वसेयं निरतः सुखम् ॥ ११ ॥
ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य तद्वचः ॥ ध्यात्वा मुहूर्तं धर्मात्मा धीरो धीरतरं वचः ॥ १२ ॥
इतो द्वियोजने तात बहुमूलफलोदकः ॥ देशो बहुमृगः श्रीमान्पञ्चवट्यभिविश्रुतः ॥ १३ ॥
तत्र गत्वाऽऽश्रमपदं कृत्वा सौमित्रिणा सह ॥ [ वैदेह्या चानया राम वत्स्यसि त्वमरिंदम ॥ ]
रंस्यसे त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥ १४ ॥
कालोऽयं गतभूयिष्ठो यः कालस्तव राघव ॥ समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥ १५ ॥
तीर्णप्रतिज्ञः काकुत्स्थ सुखं राज्ये निवत्स्यसि ॥ धन्यस्ते जनको राम स राजा रघुनन्दन ॥
यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः ॥ १६ ॥
विदितो ह्येष वृत्तान्तो मम सर्वस्तवानघ ॥ तपसश्च प्रभावेन स्नेहाद्दशरथस्य च ॥ १७ ॥
हृदयस्थश्च ते छन्दो विज्ञातस्तपसा मया ॥ इह वासं प्रतिज्ञाय मया सह तपोवने ॥ १८ ॥
[ वसन्तं त्वां जनास्सर्वे ज्ञास्यन्ति रघुनन्दन ॥ ] अतश्च त्वामहं ब्रूमि गच्छ पञ्चवटीमिति ॥ १९ ॥
स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते ॥ स देशः श्लाघनीयश्च नातिदूरे च राघव ॥ २० ॥
गोदावर्याः समीपे च मैथिली तत्र रंस्यते ॥ प्राज्यमूलफलश्चैव नानाद्विजगणायुतः ॥
विविक्तश्च महाबाहो पुण्यो रम्यस्तथैव च ॥ २१ ॥

वर्षसहस्राणि दशवर्षशतानि च ॥ ८ ॥ संयताञ्जलिः बद्धाञ्जलिः ॥९—१०॥ निरतः एकाग्रः ॥११॥ ध्यात्वा भाविकार्योचितदेशं ध्यात्वा । धीरः धीमान् निश्चितकार्योचितदेशइत्यर्थः । धीरतरं अतिनिश्चितं वचः ॥ १२ ॥ पञ्चानां वटानां समाहारः पञ्चवटीतद्युक्तदेशो लक्षणया पञ्चवटीत्युच्यते । पञ्चवटीत्यभिविश्रुतो देश इत्यन्वयः ॥ १३—१६॥ मम पितृवाक्यपरिपालनप्रकारःकथं ज्ञात इत्यत्राह—विदित इति । तपःप्रभावेन पर्यालोचनकरणे निमित्तमाह—स्नेहादिति ॥ १७ ॥ छन्दोभिप्रायः । "अभिप्रायवशौ छन्दौ" इत्यमरः । खरादिवधसंकल्प इत्यर्थः । तपसा आलोचनेन तन्मूलत्वद्वचनभङ्ग्याचेत्यर्थः । अलंकृतोयं देशश्चेति ममेह वासे प्रस्तुते किंतु व्यादिश मे देशमिति त्वदुक्त्या चेत्यर्थः । अभिप्रायवेदनकार्यमाह—इहेति । यस्मात्त्वदभिप्रायो मया विदितः अतो हेतोः इह तपोवने मया सह वासं प्रतिज्ञाय अनुज्ञाय तदनन्तरमेव त्वं पञ्चवटीं गच्छेति ब्रूमि ब्रवीमि । अनित्यमागमशासनमिति ईडभावः ॥ १८—१९ ॥ आयुतः व्याप्तः । विविक्तःविजनः ॥२०—

शब्दस्य पूर्वनिपातः ॥ ६ ॥ ती० ध्यात्वेति । भाविकार्यनिश्चयाय ध्यानं । ध्यानेनागामिसीतावियोगरूपं किञ्चिद्विक्षेपं दृष्ट्वापि भाविवाञ्छितरावणादिवधसीताप्त्यादिकार्यसिद्धिदर्शनेन धीरस्सन् तं वचोऽब्रवीत् । ति० ततउवाचेत्यर्थेततोवाचेति संधिरार्षः ॥ १२ ॥ स० द्वियोजने द्वैयोजने । द्वितीयाद्विवचनमेतत् । इतः प्राप्तः । योजनद्वयमवधीकृत्य विद्यमानोदेशइतियावत् ॥१३॥ दशरथस्यस्नेहात् कैकेयीविषयदशरथस्नेहात् । तव सर्वोपिवृत्तान्तः प्रवृत्तइति मम तपसःप्रभावेन विदितइत्यन्वयः । यद्वा ममतपसःप्रभावेन । दशरथस्य तवोपरिपरमस्नेहाच्च तवदशरथस्यच वृत्तान्तः पितृवाक्यपरिपालनायवनवासवृत्तान्तः दशरथवृत्तान्तः कैकेयीविषयस्नेहात्त्वत्प्रेरणारूपः विदितइत्यर्थः । स० सर्वस्तवेतिव्यस्तं समस्तंच । समस्तत्वपक्षे सर्वैः स्तवो यस्यसः ॥ १७ ॥ ति० यदिह वासंप्रतिज्ञाय । "आराधयिष्याम्यत्राहमगस्त्यंतंमहामुनिम् ॥ शेषंचवनवासस्यसौम्यवत्स्याम्यहंप्रभो" इत्यनेन ममसमीपे इह मदाश्रमे वासंप्रतिज्ञाय पुनर्मांप्रति व्यादिशमेवासमित्येतद्वदसि तन्मूलं ते हृदयस्थः छन्दः अभिप्रायः

[ पा० ] १ ग. ङ. झ. ट. मुक्तस्तु. २ ङ. झ. ट. गुरुर्नः. ३ क.—ट. भाषितं. ४ ङ. झ. ट. ततोवाचवचःशुभं. ५ इदमर्धं क. च. छ. पुस्तकेषु दृश्यते. ६ ग. ङ.—ट. रमस्व. ७ ग. घ. तदानघ. ८ घ. हार्दात्. ९ क. ख. ग. च. छ. ज. पुस्तकेषुदृश्यते. १० ग. याहि. ११ ख. पञ्चवटीमितः. १२ च. छ. झ. ञ. गणैर्युतः.

भवानपि सदारश्च शक्तश्च परिरक्षणे ॥ अपि चात्र वसन्राम तापसान्पालयिष्यसि ॥ २२ ॥
एतदालक्ष्यते वीर मधूकानां महद्वनम् ॥ उत्तरेणास्य गन्तव्यं न्यग्रोधमभिगच्छता ॥ २३ ॥
ततः स्थलमुपारुह्य पर्वतस्याविदूरतः ॥ ख्यातः पञ्चवटीत्येव नित्यपुष्पितकाननः ॥ २४ ॥
अगस्त्येनैवमुक्तस्तु रामः सौमित्रिणा सह ॥ सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनम् ॥ २५ ॥
तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ॥ तदाश्रमात्पञ्चवटीं जग्मतुः सह सीतया ॥ २६ ॥

गृहीतचापौ तु नराधिपात्मजौ विषक्ततूणौ समरेष्वकातरौ ॥
यथोपदिष्टेन पथा महर्षिणा प्रजग्मतुः पञ्चवटीं समाहितौ ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ॥ १४ ॥

पञ्चवटींगच्छतारामेणमध्येमार्गंदृष्टंजटायुषंप्रतितत्त्वप्रश्नः ॥ १ ॥ तेनरामंप्रतिप्रसङ्गात्सर्वभूतसमुद्भवकथनपूर्वकंस्वस्यारुणात्मजत्वकथनम् ॥ २ ॥ तथास्वस्यदशरथसखत्वकथनेनवनवासेसीतारक्षणादिरूपसाहाय्यकरणोक्तिः ॥ ३ ॥ रामेणसबहुमानंतत्परिष्वङ्गादिपूर्वकंसीतालक्ष्मणाभ्यांतेनचसहपञ्चवटींप्रतिगमनम् ॥ ४ ॥

अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः ॥ आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १ ॥
तं दृष्ट्वा तौ महाभागौ वटस्थं रामलक्ष्मणौ ॥ मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति ॥ २ ॥
स तौ मधुरया वाचा सौम्यया प्रीणयन्निव ॥ उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥ ३ ॥

---

२१ ॥ परिरक्षणे तापसानामिति शेषः । अत्र पञ्चवट्याश्रमे ॥ २२ ॥ अस्य मधूकवनस्य । न्यग्रोधमभिगच्छता उत्तरेण मार्गेण गन्तव्यं । इदंमधूकवनंगत्वातदुत्तरेण मार्गेण गन्तव्यं स मार्गो न्यग्रोधं प्रापयतीत्यर्थः ॥ २३ ॥ ततो न्यग्रोधात्परतः । स्थलं निर्वणप्रदेशं । किंचिदुन्नतमुपारुह्य गमने कश्चित्पर्वतो दृश्यते । तस्याविदूरतः पञ्चवटीति ख्यातः पञ्चवटत्वेन प्रसिद्धः । नित्यपुष्पितकाननत्वेन ज्ञातुं योग्यश्चाश्रमो दृश्यत इत्यर्थः ॥ २४ ॥ सत्कृत्य प्रदक्षिणनमस्काराभ्यामिति शेषः ॥ २५—२६ ॥ विषक्ततूणौ बद्धतूणीरौ । अकारान्तोपि तूणशब्दः । महर्षिणा यथोपदिष्टेन पथेत्यन्वयः । समाहितौ एकाग्रौ । अस्मिन्सर्गे सार्धसप्तविंशतिः श्लोकाः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

अथ गृध्रराजसमागमश्चतुर्दशे—अथ पञ्चवटीमित्यादि ॥ १ ॥ वटस्थं अगस्त्योपदिष्टवटस्थं । पक्षिमिति च्छान्दसं रूपं । को भवानिति ब्रुवाणौ सन्तौ राक्षसं मेनाते राक्षसं मत्वा को भवानित्यब्रूतामित्यर्थः ॥ २ ॥ सौम्यया सौजन्यपरया । प्रीणयन्निवेति इव-

---

मयाज्ञातः अत्रावस्थाने प्रतिज्ञातराक्षसवधनिर्वाहो नभवति । अत्र राक्षसागमनाभावादित्येवंरूपइतिभावः ॥ १८ ॥ ति० भवानपीत्यनेन स्वस्यापि तापसलक्षणेसामर्थ्यबोधनेन स्वाश्रमे रक्षसामपीडा सूचिता ॥ २२ ॥ इतित्रयोदशस्सर्गः ॥ १३ ॥

शि० महाकायं अतएव राक्षसं राक्षसत्वेन प्रतीयमानं तं जटायुषं दृष्ट्वा महाभागौ रामलक्ष्मणौ पक्षिं पक्षिणं मेनाते । को भवानितिविशेषं ब्रुवाणौ अभवतां चेति शेषः ॥ १—२ ॥ ति० तं पक्षिणं राक्षसं मेनाते विज्ञातवन्तौ । तं राक्षसं ब्रुवाणौ

[ पा० ] १ ङ. झ. ञ. ट. सदाचारः. २ ग. शक्तोहि. ३ ग. पालयिष्यति. ४ ङ. झ. ट. महावनं. ५ क. ख. ङ. च. झ. ट. तमाश्रमं पञ्चवटीं. ग. तदाश्रमं. ६ क. ख. ङ.—ट. तूणी. ७ क. ततः. ८ ग. तंदृष्ट्वाथ. ख. दृष्ट्वातुतं. ९ ख. ग. ङ. झ. ञ. ट. वनस्थं. १० झ. ततो. ११ ख. स्निग्धया.

स तं पितृसखं बुद्ध्वा[1] पूजयामास राघवः ॥ स तस्य कुलमव्यग्रमथ पप्रच्छ नाम च ॥ ४ ॥
रामस्य वचनं श्रुत्वा सर्व[2]भूतसमुद्भवम् ॥ आचचक्षे द्विजस्तस्मै कु[3]लमात्मानमेव च ॥ ५ ॥
पूर्वकाले महाबाहो ये प्रजापतयोऽभवन् ॥ तान्मे निगदतः सर्वानादितः शृणु राघव ॥ ६ ॥
कर्दमः प्रथमस्तेषां वि[4]श्रुतस्तदनन्तरः ॥ शेषश्च सं[5]श्रयश्चैव बहुपुत्रश्च वीर्यवान् ॥ ७ ॥
स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः ॥ पुलस्त्यश्चाङ्गिराश्चैव प्रचेताः पुलहस्तथा ॥ ८ ॥
दक्षो विवस्वानपरोरिष्टनेमिश्च राघव ॥ कश्यपश्च महातेजास्तेषामासीच्च पश्चिमः ॥ ९ ॥
प्रजापतेस्तु दक्षस्य बभूवुरिति वि[6]श्रुतम् ॥ षष्टिर्दुहितरो राम यशस्विन्यो महायशः ॥ १० ॥
कश्यपः प्रतिजग्राह तासामष्टौ सुमध्यमाः ॥ अदितिं च दितिं चैव द[7]नुमप्यथ कालिकाम् ॥
ताम्रां क्रोधवशां चैव मनुं चाप्यनलामपि ॥ ११ ॥
तास्तु कन्यास्ततः प्रीतः कश्यपः पुनरब्रवीत् ॥ पुत्रांस्त्रैलोक्यभर्तॄन्वै जनयिष्यथ मत्समान् ॥१२॥
अदितिस्तन्मना राम दितिश्च म[8]नुजर्षभ ॥ का[9]लिका च महाबाहो शेषास्त्वमनसोऽभवन् ॥ १३ ॥
अदित्यां जज्ञिरे देवास्त्रयस्त्रिंशदरिंदम ॥ आदित्या वसवो रुद्रा ह्य[10]श्विनौ च[11] परंतप ॥ १४ ॥
दितिस्त्वजनयत्पुत्रान्दैत्यांस्तात यशस्विनः ॥ तेषामियं वसुमती पुराऽऽसीत्सवनार्णवा ॥ १५ ॥
दनुस्त्वजनयत्पुत्रमश्वग्रीवमरिंदम ॥ नरकं का[12]लकं चैव का[13]लिकाऽपि व्यजायत ॥ १६ ॥
क्रौञ्चीं भा[14]सीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीम् ॥ ता[15]म्राऽपि सुषुवे कन्याः पञ्चैता लोकविश्रुताः ॥१७॥
उलूकाञ्जनयत्क्रौञ्ची भासी भासान्व्यजायत ॥ श्येनी श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः ॥१८॥
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ॥ चक्रवाकांश्च भद्रं ते विजज्ञे सा[16]ऽपि भामिनी ॥ १९ ॥

---

शब्द एवकारार्थः । आत्मन इत्यन्ते इतिकरणं ज्ञेयं । आत्मनः रामस्य ॥ ३–४ ॥ द्विजः आत्मानं आत्मनाम ॥ ५ ॥ स्वोत्पत्तिं कथयिष्यन् प्रसङ्गादादौ सर्वभूतसमुद्भवमाह—पूर्वकाल इत्यादि ॥ ६–८ ॥ अरिष्टनेमिरिति कश्यपविशेषणं ॥ ९–१० ॥ तासां दुहितॄणां मध्ये सुमध्यमाः अष्टौ कन्याः प्रतिजग्राह पर्यणैषीत् ॥ ११ ॥ त्रैलोक्यभर्तॄन् त्रैलोक्यरक्षणक्षमान् ॥ १२ ॥ तन्मनाः तद्वचनदत्तावधाना । कालिकाचेत्यत्र चकारेण मनुरप्युच्यते । तन्मना इति दितिकालिकामनूनामपि विशेषणं । चतस्रः प्रौढपुत्रोत्पादनमनसोभवन् चतस्रो नाभवन्नित्यर्थः ॥ १३ ॥ भर्तृवचनादरानादरफलेदर्शयति—अदित्यामित्यादिना । द्वादशादित्याः अष्टौ वसवः एकादश रुद्राः अश्विनौ द्वौ एवं त्रयस्त्रिंशत् ॥ १४ ॥ तेषां दितिपुत्राणां ॥ १५–१७ ॥ ताम्रावंशं प्रपञ्चयति—उलूकानित्यादिना । जनयदित्यत्र आगमशास्त्रस्यानित्यतया नाडागमः ॥ १८ ॥ अप्रसक्तवृत्तान्तानादरप्रतिषेधाय मध्ये भद्रं ते इत्युक्तिः । सा भामिनीति धृतराष्ट्रीवि-

---

परस्परं कथयन्तौ कोभवानिति पप्रच्छतुरितिशेषः ॥ २ ॥ **ति०** पूर्वकाले ब्रह्मणोऽहरादिकाले ॥ ६ ॥ **ति०** कर्दमाद्यास्सप्तदश प्रजापतयो बभूवुः ॥ ७ ॥ **ती०** ननु " ददौ स दश धर्माय कश्यपाय त्रयोदश " इतिश्रूयते । अत्र कथमष्टावित्युच्यत इतिचेत्सत्यं । अष्टावित्येकवारमितिवा उपलक्षणमितिवा वैवस्वतमन्वन्तरे एवमितिवा द्रष्टव्यं ॥ **ति०** वक्ष्यमाणसन्तानोपयोगिन्योष्टावितिवा ॥ ११ ॥

[ **पा०** ] १ ङ. झ. ट. मत्वा. २ क. ख. ग. ङ.—ट. कुलमात्मानमेव च. ३ क. ख. ग. ङ.—ट. सर्वभूतसमुद्भवं. ४ ग. ङ. ट. विकृतस्तदनन्तरः. छ. झ. ञ. विकृतस्तदनन्तरं. ख. घ. च. छ. ज. विक्रीतस्तदनन्तरं. ५ घ. संश्रितश्चैव. ६ ङ. झ. ट विश्रुतः. क. नःश्रुताः. ख. ग. च. छ. ज. ञ. नःश्रुतं. ७ ख. घ. ङ. झ. ट. दनूमपि च. ८ क. घ. ङ. च. झ. ञ. ट. दनुरेवच. ख. मनुरेवच. ९ ङ. झ. ट. कालका. १० ङ.—ञ. अश्विनौ. ११ ग. चैवराघव. १२ ग. घ. च. छ. ज. ञ. कालिकं. १३ ङ. झ. ट, कालकापि, १४ क. घ. हंसीं. १५ ङ. छ. झ. ट. नाम्नातु. १६ च. ज. ञ. साच.

शुकी नतां [1]विजज्ञे तु नताया विनता सुता ॥ २० ॥
[2]दश क्रोधवशा राम [3]विजज्ञे ह्यात्मसंभवाः ॥ मृगीं च मृगमन्दां च हरिं भद्रमदामपि ॥ २१ ॥
[4]मातङ्गीमपि शार्दूलीं श्वेतां च [5]सुरभिं तथा ॥ सर्वलक्षणसंपन्नां सुरसां कद्रुकामपि ॥ २२ ॥
अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम ॥ ऋक्षाश्च मृगमन्दायाः सृमराश्चमरास्तथा ॥ २३ ॥
[6]हर्याश्च हरयोपत्यं वानराश्च तरस्विनः ॥ ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् ॥ २४ ॥
तस्यास्त्वैरावतः पुत्रो लोकनाथो महागजः ॥ [7]मातङ्ग्यास्त्वथ मातङ्ग्या अपत्यं मनुजर्षभ ॥ २५ ॥
[8]गोलाङ्गूलांश्च शार्दूली व्याघ्रांश्चाजनयत्सुतान् ॥ [9]दिशागजांश्च काकुत्स्थ [10]श्वेताऽप्यजनयत्सुतान् ॥२६॥
ततो दुहितरौ राम [11]सुरभिर्द्वे व्यजायत ॥ रोहिणीं नाम भद्रं ते गन्धर्वीं च यशस्विनीम् ॥ २७ ॥
रोहिण्यजनयद्[12]गा वै गन्धर्वी वाजिनः सुतान् ॥ सुरसाऽजनयन्नागान्राम [13]कद्रूस्तु पन्नगान् ॥ २८ ॥
मनुर्मनुष्याञ्[14]जनयद्राम पुत्रान्यशस्विनः ॥ ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्च मनुजर्षभ ॥ २९ ॥
[[15]मुखतो ब्राह्मणा जाता [16]उरसः क्षत्रियास्तथा ॥ [17]ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां [18]शूद्रा इति श्रुतिः] ॥३०॥
सर्वान्[19]पुण्यफलान्वृक्षाननलाऽपि व्यजायत ॥ [[20]जज्ञे राम महाबाहो तांश्च सर्वान्महीरुहान्] ॥३१॥
[21]विनता च शुकीपौत्री कद्रूश्च सुरसास्वसा ॥ कद्रू[22]र्नागं सहस्रास्यं विजज्ञे [23]धरणीधरम् ॥ ३२ ॥

शेषणं ॥ १९ ॥ शुकी ताम्रापुत्री । विजज्ञे एवमादयोन्तर्भावितण्यर्थाः शब्दाः ॥ २० ॥ क्रोधवशा कश्यपपत्नी ॥ २१–२२ ॥ अपत्यमिति जात्येकवचनं । सृमराः स्त्रीणां केशसहायोपयुक्तविनीलदीर्घवालाः मृगाः । चमराः चामरमृगाः ॥ २३ ॥ हरयः सिंहाः ॥ २४ ॥ मातङ्गाः गजाः ॥ २५ ॥ गोलाङ्गूलाः अत्यन्तदीर्घलाङ्गूलाः मर्कटजातिविशेषाः ॥२६–२७॥ रोहिण्यजनयद्गा वै इति पाठः । नागाः बहुफणाः सर्पाः । पन्नगाः केवलसर्पाः ॥ २८ ॥ मनुः कश्यपपत्नी ॥ २९–३० ॥ पुण्यफलान् चारुफलान् । "पुण्यं तु चारु" इत्यमरः । विषवृक्षनिम्बादयोपि महौषधत्वेन पुण्यफला एव । पिण्डफलानितिपाठे पिण्डाकारफलानित्यर्थः । प्रायिकं चैतदिति बोध्यं ॥ ३१ ॥ एवं प्रासङ्गिकं परिसमाप्य स्वकुलमवतारयति—विनता चेति । अत्र कद्र्वा उपादानं स्वप्रतिपक्षकुलत्वेनेति केचित् । वस्तुतस्तु धरणीधरशेषजनकत्वेन स्वकुलतुल्यत्वं वक्तुं "कद्रूर्नागं सहस्रास्यं

**ती०** येषांश्वेतवालैर्देवराजादिवीजनंक्रियते ते चमरामहिषाकृतयः ॥ २३ ॥ **शि०** लोकनाथः सर्वैरीप्सितः ॥ २५ ॥ **ति०** गोलाङ्गूलाइतिपूर्वान्वयि ॥ २६ ॥ **ति०** गावः गाइत्यर्थः ॥ **ती०** यद्वा मनुष्याकाराः फणालाङ्गूलयुक्ता नागाः । तदन्ये पन्नगाः ॥ **कतक०** निर्विषा नागाः । तदन्ये पन्नगाः । **स०** नागान् फणानुद्धृत्य गन्तॄन् पन्नगान् भूमिमालंब्य गन्तॄन् ॥२८॥ **ति०** उरसः बाहुमध्यात् । क्वचित्तु बाहुभ्यामितिपाठः । **ति०** नागसहस्रं पन्नगसहस्रमित्यर्थः । अतोनोक्तेनविरोधः । **शि०** कद्रूस्तुधरणीधरान्नागसहस्रंविजज्ञे । "सुरसाजनयन्नागान्नामकद्रूश्चपन्नगान्" इतिपूर्वोक्तेन न विरोधः । सुरसाया धरणीधरनागातिरिक्त नागोत्पादकत्वेन विरोधाभावात् ॥ ३२ ॥

[**पा०**] १ क. च. छ. ज. ञ. विजज्ञेसा. २ ग. ततःक्रोशवशानाम. ३ क. ग. ङ. च. छ. ञ. ट. विजज्ञेप्यात्म. ४ ख. ग. ङ—ट. मातङ्गामथ. ५ ख. ग. झ. सुरभीं. ६ हर्याश्चहरयोपत्यं. ततस्त्विरावतींनाम. तस्यास्त्वैरावतः पुत्रो. मातङ्गास्त्वथ. गोलाङ्गूलांश्च. इतिपञ्चानामर्धानां. ख.—ट. पुस्तकेषु. ततस्त्विरावतींनाम. तस्यास्त्वैरावतःपुत्रो. हर्याश्चहरयोपत्यं. गोलाङ्गूलाश्च. मातङ्ग्यास्त्वथ, इतिक्रमभेदोदृश्यते. ७ झ. ञ. ट. मातङ्ग्यास्त्वथमातङ्गाः. ८ क. ख. घ. ङ. च. झ. ञ. गोलाङ्गूलाश्च. ९ ग. छ.—ट. दिशागजंतु. १० ग. छ.—ट. श्वेताव्यजनयत्सुतं. घ. श्वेताचजनयत्सुतं. ११ ख. ग. सुरभीर्द्वे. झ. ञ. सुरभिर्दे-व्यजायत. १२ क. ङ—ट. द्वावो. १३ घ. ङ. झ. ट. कद्रूश्च. १४ क. ग. छ. झ. ञ. जनयत्काश्यपस्यमहात्मनः. १५ अयं श्लोकः क. घ. ङ. छ. झ. ट. पुस्तकेष्वधिकोदृश्यते. १६ घ. शिरसो. १७ च. छ. ज. ञ. बाहुभ्यां. क. भुजाभ्यां. १८ च. छ. ज. ञ. शूद्राविनिस्सृताः. घ. शूद्राइतिस्मृतिः. १९ घ. च. छ. ज. ञ. न्पिण्डफलान्. २० इदमर्धं क. च. छ. ज. पुस्तकेषुदृश्यते. २१ ग. विनतातु. २२ ख. ग. ङ. ज. झ. ट. नागसहस्रंतु. क. नागसहस्रंच. २३ ङ. झ. ट. धरणीधरान्.

द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च ॥ तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः ॥
जटायुरिति मां विद्धि श्येनीपुत्रमरिंदम ॥ ३३ ॥
सोहं वाससहायस्ते भविष्यामि यदीच्छसि ॥ इदं दुर्गं हि कान्तारं मृगराक्षससेवितम् ॥
सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥ ३४ ॥
जटायुषं तं प्रतिपूज्य राघवो मुदा परिष्वज्य च सन्नतोऽभवत् ॥
पितुर्हि शुश्राव सखित्वमात्मवाञ्जटायुषा संकथितं पुनः पुनः ॥ ३५ ॥
स तत्र सीतां परिदाय मैथिलीं सहैव तेनातिबलेन पक्षिणा ॥
जगाम तां पञ्चवटीं सलक्ष्मणो रिपून्दिधक्षञ्शलभानिवानलः ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः ॥ १५ ॥

लक्ष्मणेनरामचोदनयापञ्चवट्यांगोदावरीसमीपेपर्णशालासहिताश्रमनिर्माणम् ॥ १ ॥ पर्णशालारामणीयकावलोकनहृष्टेन रामेणलक्ष्मणश्लाघनपूर्वकंसीतयासहतत्रसुखनिवासः ॥ २ ॥

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् ॥ उवाच भ्रातरं रामः सौमित्रिं दीप्ततेजसम् ॥ १ ॥
आगताः स्म यथोद्दिष्टममुं देशं महर्षिणा ॥ अयं पञ्चवटीदेशः सौम्य पुष्पितपादपः ॥ २ ॥
सर्वतश्चार्यतां दृष्टिः कानने निपुणो ह्यसि ॥ आश्रमः कतरस्मिन्नो देशे भवति संमतः ॥ ३ ॥

---

विजज्ञे धरणीधरं ” इत्युक्तं ॥ ३२ ॥ श्येनीपुत्रमिति इयं च श्येनी पूर्वोक्ताया अन्या । यद्वा कश्यपसुता श्येनीमाता कश्यपस्य पञ्चमोऽरुणः । पिता कश्यपप्रजापतिः कूटस्थ इति स्वीयवंशप्रभावो निवेदितः । विधिनिषेधयोस्तिर्यङ्क्ष्वभावान्न मातृपुत्रयोरेकवंश्यत्वादिदोषः । अयंच सृष्टिक्रमो वैवस्वतमन्वन्तरप्रकारः । अतो न पुराणान्तरविरोधः ॥ ३३ ॥ वाससहायः वासस्थले सीतायाः रक्षणे सहाय इत्यर्थः । यदीच्छसि उक्तार्थमिति शेषः । सहायापेक्षत्वे हेतुमाह —इदमिति । याते मृगयार्थमिति शेषः ॥३४॥ सन्नतौ हेतुमाह—पितुर्हीति ॥ ३५ ॥ सीतां तत्र परिदाय रक्षणाय जटायुवशां कृत्वेत्यर्थः । “यमाय त्वा परिददाम्यसावन्तकाय त्वा परिददाम्यसौ ” इत्यादौ तथा प्रयोगात् । शलभानिवानल इत्यनेन लीलया विरोध्युन्मूलनाभिप्रायोवगम्यते ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्दशः सर्गः ॥१४॥

---

अथ शेषभूतस्य शेष्यभिमतकैङ्कर्यमेव कर्तव्यमिति दर्शयति पञ्चदशे—तत इत्यादि । सौमित्रिं रामं दशरथं विद्धीत्यादिसुमित्रानियोगेन रामकैङ्कर्योद्युक्तं । दीप्ततेजसं कैङ्कर्योचितदेशलाभेन संतुष्टमित्यर्थः । व्यालाः दुष्टसर्पाः ॥ १ ॥ यथोद्दिष्टं अगस्त्योक्तक्रमेण आगताः स्म । यं देशं मुनिरब्रवीत् सोयं पञ्चवटीदेश इत्यर्थः ॥ २ ॥ सर्वतः सर्वत्र । कानने त्वया दृष्टिश्चार्यतां सर्वं काननमवलोक्यतामित्यर्थः । हिर्हे-

---

**ती०** ननु श्येनीशुक्यौ ताम्रायाःपुत्र्यौ श्येनीपुत्रस्तु कथंजटायुः अरुणस्यकथंश्येनी भार्या । उच्यते । श्येनीसंतानपरंपरापतिता काचन श्येनी भविष्यतीत्यदोषः ॥ ३३ ॥ **ति०** परिधायेतिपाठे परिवार्येत्यर्थः ॥ ३६ ॥ इतिचतुर्दशस्सर्गः ॥ १४ ॥

**ति०** यं देशं मुनिरब्रवीत् यथोद्दिष्टं तंदेशमागतास्स्मेत्यन्वयः ॥ २ ॥

**[ पा० ]** १ क. ख. ग. ङ. छ.—ट. संपातिश्च. २ ख. ग. रामसहायः. ३ क.—ट. जटायुषंतु. ४ क. च. छ. ज. रामः. ख. सीतासहितोरघूत्तमःसहैव. ५ घ. च. छ. ज. ञ. ट. परिधाय. ६ ङ. झ. दिधक्षन्सवनानिपालयन्. ७ ग. सतु. ८ ङ. झ. ट. लक्ष्मणंरामोभ्रातरं. क. च. छ. ज. ञ. भ्रातरंश्रीमान्. ९ घ. च.—ञ. यथोद्दिष्टंयंदेशंमुनिरब्रवीत्. ख. ङ. ट. यथोद्दिष्टमिमं. १० ङ. झ. ञ. ट. पुष्पितकाननः.

रमते यत्र वैदेही त्वमहं चैव लक्ष्मण ॥ तादृशो दृश्यतां देशः सन्निकृष्टजलाशयः ॥ ४ ॥
वनरामण्यकं यत्र स्थलरामण्यकं तथा ॥ सन्निकृष्टं च यत्र स्यात्समित्पुष्पकुशोदकम् ॥ ५ ॥
एवमुक्तस्तु रामेण लक्ष्मणः संयताञ्जलिः ॥ सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥ ६ ॥
परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते ॥ स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ७ ॥
सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महात्मनः ॥ विमृशन्रोचयामास देशं सर्वगुणान्वितम् ॥ ८ ॥
स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि ॥ हस्तौ गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ९ ॥
अयं देशः समः श्रीमान्पुष्पितैस्तरुभिर्वृतः ॥ इहाश्रमपदं सौम्य यथावत्कर्तुमर्हसि ॥ १० ॥
इयमादित्यसंकाशैः पद्मैः सुरभिगन्धिभिः ॥ अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ॥ ११ ॥

तौ । असीति त्वमित्यर्थे निपातः । यस्मात्त्वमाश्रमोचितस्थलपरिज्ञाने निपुणः तस्मात्कतरस्मिन्प्रदेशे सर्वेषां नः संमत आश्रमो भवतीति सर्वत्र कानने दृष्टिश्चार्यतामित्यर्थः ॥ ३ ॥ सर्वसंमतत्वमुपपादयति—रमत इति । त्वं रमस इति शेषः । सर्वरतिहेतुमाह—सन्निकृष्टेति ॥ ४ ॥ तदेवविवृणोति—वनेति । रामण्यकं रमणीयता । "योपधाद्गुरूपोत्तमाद्वुञ्" इति वुञ् । ईकारलोपश्छान्दस इति बोध्यं । वनस्य रमणीयता चूतपुन्नागादिमिश्रत्वं । स्थलस्य रमणीयता निम्नोन्नतत्वरहितकोमलसिकतामयत्वं । समिदिति "जातिरप्राणिनां" इत्येकवद्भावः । वनरामण्यकं कुसुमाभिलाषिण्याः सीताया रतिहेतुः । स्थलरामण्यकं सुखशयनादिकाङ्क्षिणो रामस्य । सन्निकृष्टसमिदादिमत्त्वं शुश्रूषमाणस्य सौमित्रेः ॥ ५ ॥ एवं स्वसौख्यमप्युक्तवतो रामस्य वचनमसहमानःसौमित्रिः सीतायास्तव च यः प्रदेशो रमणीयः स एवाज्ञप्तव्यः न तु मे सौकर्यावह इत्याह—एवमिति । सीतासमक्षमिति पुरुषकारसांनिध्योक्तिः ॥ ६ ॥ परवानस्मि ममास्मिता तवास्मितावन्न भवति पारतन्त्र्यैकवेषा ममास्मितेति भावः । काकुत्स्थ इदं च पारतन्त्र्यं न परत्वावस्थायामेव किंत्ववतारावस्थायामपीत्यर्थः । इदं च पारतन्त्र्यं कियत्कालं तत्राह—त्वयि वर्षशतं स्थित इति । शतशब्द आनन्त्यवचनः । सार्वकालिकं मम पारतन्त्र्यमिति भावः । एवं पारतन्त्र्यस्यैव मत्स्वरूपत्वेन तदनुकूलतया त्वया आज्ञापनं कर्तव्यमित्याह—स्वयमिति । स्वयं रुचिरे देशे तवैव रमणीये प्रदेशे । आश्रमः क्रियतामिति मां वद ॥ ७ ॥ विमृशन् पर्यालोचयन् । देशं कंचिदितिशेषः ॥ ८ ॥ आक्रम्य स्वीयत्वेनाभिमन्य । आश्रमकर्मणि आश्रमनिमित्तं । हस्तौ कृताञ्जलिकौ । स्वहस्तेन गृहीत्वाअब्रवीत् । स्नेहातिशयकृतानुभावो हस्तग्रहणं ॥ ९ ॥ समः समतलः । पुष्पितैः संजातपुष्पैः । यथावत् यथायोग्यं ॥ १० ॥ आदित्यसंकाशैः आदित्यविकसितैः तद्वदुज्ज्वलैर्वा । "तुलसीकाननं यत्र यत्र पद्मवनानि च । वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः" इत्युक्तरीत्या नित्यसंनिहितहरिभिरिति वा ।

**तनि०** एवमुक्तः त्वमहंचैव लक्ष्मणेति तवापि सौख्यकारिणि कस्मिंश्चिद्देशे पर्णशालांकुर्विति लक्ष्मणे स्वातन्त्र्यं निक्षिप्य श्रीरामेणोक्ते मयि स्वातन्त्र्यनिक्षेपकालएव रामो मां त्यक्तवान् । एतावत्पर्यन्तं ममाज्ञानेन स्वरूपहानिः कृता । इतःपरं ममस्वरूपं नाम कश्चनपदार्थोऽस्ति किमित्येवमवस्थान्तरं प्राप्तवाँल्लक्ष्मणः पारतन्त्र्यैकलक्षणः संयताञ्जलिः इदानीं श्रीरामं प्रत्यञ्जलिरेव मद्रक्षकः । अञ्जलेस्सर्वाभिमतसाधनत्वादितिमत्वा कृताञ्जलिस्सन् । सीतासमक्षं पुरुषकारभूतायाःश्रियस्संनिधौ काकुत्स्थं प्रति वचनमब्रवीत् । एतादृशमुक्तवानिति ऋषिःस्तौति । सीतासमक्षमित्यनेनकैङ्कर्यप्रतिसंबन्धित्वं द्वयोत्तरखण्डोक्तं लक्ष्मीविशिष्टस्यैवेति व्यञ्जितं । परवानस्मि ममास्मिता तवास्मितावन्न भवति । तच्च पारतन्त्र्यं न केनाप्याकांक्षितं । अतएव भवता न दीयते । लोकस्य भिन्नरुचित्वात् । मयोऽपेक्षितमेव वर्षशतं । अत्र शतशब्द आनन्त्यवाची । तेन सार्वकालिकत्वोक्तिः । परवानस्मीति सर्वदा परवत्त्वप्रतीत्या सर्वावस्थोक्तिः । क्रियतामिति मां वदेति निरुपपदक्रियापदयोगात्सर्वविधकैङ्कर्योपलक्षणं । एवंकैङ्कर्यरूपफलप्रार्थना द्वयोत्तरखण्डोक्ता व्यञ्जिता ॥ ७ ॥ **ति०** हस्तेन स्वहस्तेन । हस्ते लक्ष्मणस्यहस्ते । लक्ष्मणंगृहीत्वेत्यर्थः

[ **पा०** ] १ क.—ट. जलरामण्यकं. २ क. ङ.—ट. संनिकृष्टं च यस्मिंस्तु. ग. संनिकृष्टं वनस्यास्य इध्मपुष्पकुशाजिनं. ३ क.—ट. महाद्युतिः. ४ ग. सदृशंरोचयामास. ५ ख. ङ.—झ. ट. हस्ते. क. ञ. हस्तं. ६ ङ. झ. ट. रम्यं. ७ ग. पुण्या. ८ ग. घ. च. छ. ज. ञ. पद्मसेविता.

यथाऽऽख्यातमगस्त्येन मुनिना भावितात्मना ॥ इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ॥ १२ ॥
नातिदूरेण चासन्ने मृगयूथनिपीडिताः ॥ मयूरनादिता रम्याः प्रांशवो बहुकन्दराः ॥
दृश्यन्ते गिरयः सौम्य फुल्लैस्तरुभिरावृताः ॥ १३ ॥
सौवर्णै राजतैस्ताम्रैर्देशे देशे च धातुभिः ॥ गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः ॥ १४ ॥
सालैस्तालैस्तमालैश्च खर्जूरपनसाम्रकैः ॥ निवारैस्तिमिशैश्चैवं पुन्नागैश्चोपशोभिताः ॥ १५ ॥
चूतैरशोकैस्तिलकैश्चम्पकैः केतकैरपि ॥ पुष्पगुल्मलतोपेतैस्तैस्तैस्तरुभिरावृताः ॥ १६ ॥
चन्दनैः स्पन्दनैर्नीपैः पर्णासैर्लिकुचैरपि ॥ धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः ॥ १७ ॥
इदं पुण्यमिदं मेध्यमिदं बहुमृगद्विजम् ॥ इह वत्स्यामि सौमित्रे सार्धमेतेन पक्षिणा ॥ १८ ॥
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ॥ अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ १९ ॥
पर्णशालां सुविपुलां तत्र संघातमृत्तिकाम् ॥ सुस्तम्भां मस्करैर्दीर्घैः कृतवंशां सुशोभनाम् ॥ २० ॥

सुरभिगन्धिभिः सौम्यगन्धयुक्तैः । "गन्धस्येत्—" इत्यादिना इकारोन्तादेशः । "सुरभिर्मधुमासे स्याद्वसन्तर्तावपि त्रिषु । सौम्ये सुगन्धौ स्त्रीधेन्वाम्" इति दर्पणः । "सर्वगन्धः सर्वरसः" इत्युक्तरीत्या सुरभिणा हरिणा गन्धिभिः गन्धवद्भिरिति वा । पद्मिनी गोदावरीसमीपस्था पुष्करिणी । पद्मया शोभिता पद्मशोभिता । "ङ्यापोःसंज्ञाछन्दसोर्बहुलं" इति ह्रस्वः । हरिसांनिध्येन तन्नित्यानपायिन्या श्रिया च युक्तेत्यर्थः । अनेन श्लोकेन वासयोग्यत्वमुक्तं ॥ ११ ॥ अगस्त्येन यथा ख्यातं तथेयं गोदावरी दृश्यत इत्यनुषङ्गः ॥१२॥ नातिदूरेण चासन्न इति । अस्य गोदावर्या गिरिभिश्चान्वयः । काकाक्षिन्यायात् । मृगेत्यादि गिरिविशेषणं । मयूरनादिताः मयूरनादयुक्ताः । इतच्प्रत्ययः । प्रांशवः उन्नताः । बहुकन्दराः विपुलगुहाः । "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः । फुल्लैः विकसितपुष्पैः । "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति निपातितः ॥ १३ ॥ देशे देशे नानादेशे वर्तमानैः सुवर्णादिसदृशैः धातुभिः परिणतत्वद्शासंक्रान्तैः गैरिकैः । "धातवो गिरिसंभवाः" इत्यमरः । उपलक्षिताः गजाः परमभक्तिभिः उत्कृष्टरेखालंकारैः । गवाक्षिताः संजातगवाक्षा इवाभान्ति । गजानां हि गवाक्षाकाराः भक्तीः कुर्वन्ति ॥ १४ ॥ प्रीत्यतिशयेन वनं वर्णयति—सालैरित्यादिना । सालैः सर्जकाख्यैर्वृक्षैः । तमालैः कालस्कन्धाख्यैः । खर्जूरैः खर्जूरवृक्षैः । पनसैः । आम्रकैः रसालभेदैः । निवारैः जलकदम्बैः । तिमिशैः नेमिद्रुमैः । पुन्नागैः । तिलकैः क्षुरकवृक्षैः । गुल्माः जातिप्रभृतयः । लताः माधवीप्रभृतयः । स्पन्दनैःतिमिशभेदैः । नीपैः स्थलकदम्बकैः । पर्णासैः करिञ्जराख्यैः । लिकुचैः धवैः अश्वकर्णैः खदिरैः शमीभिः । किंशुकैः पलाशैः । पाटलैः । अत्र पूर्वश्लोकात् गिरयो दृश्यन्त इत्यनुषक्तपदाभ्यामन्वयः ॥ १५—१७॥ पुण्यं पुण्यप्रदं । मेध्यं पवित्रं । एतेन अस्माभिः सहागतेन । पक्षिणा जटायुषा ॥ १८ ॥ परवीरहेति क्विप् छान्दसः । आश्रमं अङ्गणादिविस्तारवदाश्रमप्रदेशं ॥ १९ ॥ तत्र आश्रमे । पर्णशालां उटजं । संखातमृत्तिकां भित्तीकृतमृत्तिकामित्यर्थः । मस्करैः वेणुभिः । "मस्करमस्करिणौ वेणुपरिव्राजकयोः" इति निपातनात्साधुः । कृतवंशां कृतगृहोर्ध्वकाष्ठां ।

॥ ९ ॥ ती० परमभक्तिभिः नीलपीतादिवर्णरचनाभिः । गवाक्षिताः चित्रिताः । अलङ्कृताइतियावत् ॥ १४ ॥ ती० खर्जूरः कण्टकच्छदः । नीवारः स्थलकदंबः ॥ १५ ॥

[ पा० ] १ च. छ. ज. ञ. सेविता. २ क.—च. ज. झ. ञ. नातिदूरेनचासन्ने. ३ घ. यूथाभिपीडिताः. क. यूथावपीडिता. ङ. झ. ञ. ट. यूथावपीडिताः. ४ घ. गिरिकन्दराः. ५ ङ. झ. ट. सौम्याः. ६ ग. पुष्पितैस्तरुभिर्वृताः. ७ ङ. झ. ट. तथाशुभैः. ८ ख. ग. घ. स्तमालैस्तालैश्च. ९ ङ. झ. ट. खर्जुरैःपनसैर्द्रुमैः. च. ज. ञ. खर्जुरैःपनसाम्रकैः. १० झ. स्तिनिशैश्चैव. ११ ङ. झ. ट. स्तिलकैः केतकैरपि चंपकैः. १२ ख. फुल्लगुल्म. १३ घ. स्तैर्बहुभिरावृताः. १४ ङ.—ट. स्यन्दनैश्चन्दनैर्नीपैः. क. स्यन्दनैश्चन्दनैः. १५ ख.—ट. लैकुचैरपि. १६ ङ. झ. रम्यमिदं. १७ ख. ग. ङ—ट. संघात.

शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम् ॥ कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥ २१ ॥
समीकृततलां रम्यां चकार लघुविक्रमः ॥ निवासं राघवस्यार्थे प्रेक्षणीयमनुत्तमम् ॥ २२ ॥
स गत्वा लक्ष्मणः श्रीमान्नदीं गोदावरीं तदा ॥ स्नात्वा पद्मानि चादाय सफलः पुनरागतः ॥ २३ ॥
ततः पुष्पबलिं कृत्वा शान्तिं च स यथाविधि ॥ दर्शयामास रामाय तदाश्रमपदं कृतम् ॥ २४ ॥
स तं दृष्ट्वा कृतं सौम्यमाश्रमं सह सीतया ॥ राघवः पर्णशालायां हर्षमाहारयत्परम् ॥ २५ ॥
सुसंहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा ॥ अतिस्निग्धं च गाढं च वचनं चेदमब्रवीत् ॥ २६ ॥
प्रीतोस्मि ते महत्कर्म त्वया कृतमिदं प्रभो ॥ प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥ २७ ॥
भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण ॥ त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥ २८ ॥
एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनः ॥ तस्मिन्देशे बहुफले न्यवसत्सुसुखं वशी ॥ २९ ॥
कंचित्कालं स धर्मात्मा सीतया लक्ष्मणेन च ॥ अन्वास्यमानो न्यवसत्स्वर्गलोके यथाऽमरः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

" वंशस्तु पृष्ठास्थ्नि गृहोर्ध्वकाष्ठे वेणौ गुणे कुले " इति वैजयन्ती । वेणुमयस्तम्भोपरि प्रसारिततिर्यक्काष्ठामित्यर्थः । शमीशाखाभिरास्तीर्य तिर्यग्वेणूपरि शमीशाखाभिरास्तीर्य । दृढपाशावपाशितां दृढवल्कलादिकृतपाशैरवपाशितां संजातपाशां । तिर्यग्वंशैः सह शमीशाखाः दृढं बध्वेत्यर्थः । कुशकाशशरैः कुशादिरूपैः पर्णैः सुपरिच्छादितां सुशोभनं रमणीयं यथा तथा परिच्छादितां । पर्णशालारूपं निवासं चकारेत्यन्वयः ॥ २०—२२ ॥ सफलः फलानि चादायेत्यर्थः ॥ २३ ॥ पुष्पबलिं वास्तुपूजां । शान्तिं आभ्युदयिकीं क्रियां । यथाविधि वास्तुकल्पानुसारेण ॥ २४ ॥ पर्णशालायां विषये हर्षमाहारयत् संतोषं प्राप्तवानित्यर्थः ॥ २५ ॥ अतिस्निग्धं च गाढं चेति परिष्वङ्गक्रियाविशेषणं ॥ २६ ॥ हे प्रभो समर्थ । त्वया इदं महत्कर्म कृतं अतस्ते प्रीतोस्मि । यन्निमित्तं यदाश्रमनिर्माणनिमित्तं । प्रदेयः पारितोषिकोस्ति तन्निमित्तं मया परिष्वङ्गः कृतः आश्चर्यभूतपर्णशालानिर्माणस्य उचितपारितोषिकान्तराभावात्परिष्वङ्गमेव दत्तवानस्मीत्यर्थः ॥ २७ ॥ भावज्ञेन मच्चित्तज्ञेन सीतया सह रहसि स्थातुं मम स्थलं रचयेति रामो न वदेत् किंतु मनसि कुर्यादिति तदपि ज्ञातवतेत्यर्थः । कृतज्ञेन चिरमपुत्रेण दशरथेन स्वस्मिन्नादरातिशयाद्येन क्रमेण चन्द्रताराबलालोचनपूर्वकं गृहं निर्मापितं तेन क्रमेण तत्कृतप्रकारज्ञेनेत्यर्थः । धर्मज्ञेन स्वयं राजपुत्रोपि स्वोचितस्थलमकृत्वा यथा रामः संतुष्यति तथैव मया स्थातव्यमित्येवंविधधर्मज्ञेन । त्वया पुत्रेण पुन्नाम्नो नरकात्त्रायत इति पुत्रः । ततो मदभिमतासिद्धिरेव स्वस्य निरय इत्यभिमेने । मदभिमतकरणेन तस्य निरयनिस्तारकेण त्वयेत्यर्थः । धर्मात्मा स्वयं यावज्जीवंमदभीष्टमेव कृत्वा स्वचरमकालेपि मदभिमतकरणाय त्वां स्थापितवान् पानीयशालाप्रवर्तकवत् । मम पिता न संवृत्तः किंतु त्वमेव त्वन्मुखेन पित्रा मम सर्वाभिलषितपरिपूरणात् अहं सर्वं करिष्यामीति हि त्वयोक्तमिति भावः ॥ २८ ॥ वशी विषयचापलरहितः ॥ २९—३० ॥ अत्र एकत्रिंशच्छ्लोकाः । इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

---

ती० लघुविक्रमः अनलसगतिः ॥ २२ ॥ ती० नाथेन पालकेनत्वया ॥ २८ ॥ इतिपञ्चदशस्सर्गः ॥ १५ ॥

[ पा० ] १ क. ङ. छ. झ. ञ. ट. चकारसुमहाबलः. घ. चकारसमहाबलः. च. छ. ज. चकारातुलविक्रमः. २ ख. सजलः. ३ घ. पुष्पाञ्जलिं. ४ घ. सीतयासह. ५ क. ख. ग. ङ.—ट. त्परं. ६ क.—घ. ससंहृष्टः. ७ ङ. ञ. ट. कृतमरिंदम. ८ च. नाथेन. ९ ख. तव. १० च. ज. त्ससुखीसुखं. छ. झ. ञ. त्ससुखंसुखी. ग. ङ. त्सुसुखंसुखी. क. त्सुखंसुखी. ११ घ. स्वर्गेलोके.

## षोडशः सर्गः ॥ १६ ॥

हेमन्तागमेप्रातस्स्नानायसीतयासहकदाचनगोदावरींगच्छन्तंराममनुगच्छतालक्ष्मणेनहेमन्तवर्णनम् ॥ १ ॥ लक्ष्मणेन भरतवृत्तान्तप्रस्तावपूर्वकंकैकेय्युपालंभेरामेणतत्प्रतिषेधपूर्वकंभरतप्रशंसनम् ॥ २ ॥ तथासीतालक्ष्मणाभ्यांसहस्नानपूर्वकं सन्ध्योपासनाद्याचरणम् ॥ ३ ॥

वसतस्तस्य तु सुखं राघवस्य महात्मनः ॥ शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तते ॥ १ ॥
स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः ॥ प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥
प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान् ॥ पृष्ठतोऽनुव्रजन्भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥
अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ॥ अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥
नीहारपरुषो लोकः पृथिवी सस्यशालिनी ॥ जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ॥ कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः ॥ विचरन्ति महीपाला यात्रास्था विजिगीषवः ॥ ७ ॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ॥ विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ॥ यथार्थनामा सुव्यक्तं हिमवान्हिमवान्गिरिः ॥ ९ ॥
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ॥ दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥

अथ भाविशूर्पणखादर्शनाद्यनर्थसूचकतया हेमन्तवर्णनं प्रस्तौति—वसत इत्यादि। इष्टः तपस्विनां तपःसाधनायेष्टः । रामस्य तु खरादिराक्षसवधविजयमूलशूर्पणखाऽऽगमनहेतुतयेष्टः ॥ १ ॥ प्रभातायां विरामोन्मुखायां ॥ २—३ ॥ येन हेमन्तेन ॥ ४ ॥ लोको जनः । नीहारेण हिमेन । परुषः परुषत्वक् । सर्वत्र भवतीति शेषः । स्वभावोक्तिरलंकारः । "स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनं" इति लक्षणात् ॥ ५ ॥ काले आग्रयणकर्मानुष्ठानकाले । आग्रयणं नाम कश्चिद्धविर्यज्ञो नूतनधान्यभोजनस्यादावनुष्ठेयः । तदुक्तमापस्तम्बेन "नानिष्ट्वाग्रयणेनाहिताग्निर्नवस्य धान्यस्याश्नीयाद्व्रीहीणां यवानां श्यामाकानामग्रे पाकस्य यजेत" इति । आग्रयणरूपपूजाभिः पितृदेवता अभ्यर्च्य कृताग्रयणकाः नतु कृताग्रयणप्रतिनिधय इत्यर्थः ॥ ६ ॥ प्राज्यकामाः बहुलकामोद्रेकाः । "प्राज्यमदभ्रंबहुलंबहु" इत्यमरः । जनपदाः जनपदस्थाः । यात्रायां युद्धयात्रायां आस्था येषां ते यात्रास्थाः ॥ ७ ॥ अन्तकसेवितां दक्षिणामित्यर्थः । अत्रोत्प्रेक्षालंकारेण दक्षिणा दिक् सतिलकेव प्रकाशत इत्युत्प्रेक्षा व्यज्यते ॥ ८ ॥ प्रकृत्या स्वभावेन । हिमकोशैः घनीभूतहिमैः । आढ्यः संपूर्णः । सांप्रतं दक्षिणायने दूरसूर्यः अत एव हिमवान् अधिकहिमः । भूमार्थे मतुप् । हिमवान् गिरिः यथार्थनामा भवति सुव्यक्तमित्युत्प्रेक्षाव्यञ्जकं निरुक्तिश्चालंकारः । "निरुक्तिर्योगतो नाम्नामन्वर्थत्वप्रकल्पनं" इति लक्षणात् ॥ ९ ॥ मध्याह्ने स्पर्शतः उष्णस्पर्शतः। सुखाः सुखकराः । अतएव तदानीं अत्यन्तसुखसंचाराः सुभगादित्याः दर्शनयोग्यादित्याः । छायासलिलदुर्भगाः दुर्भगच्छायासलिलाः । आहिताग्न्यादित्वात्परनिपातः । अतिशीतच्छायासलिला इत्यर्थः ।

**ती०** इष्टः कामिनीनां कामिनामिष्टइत्यर्थः ॥ १ ॥ **ती०** येन हेमन्तेनसुपक्वसस्यादिसंपन्नेन । शुभस्सन्नयंसंवत्सरः अलङ्कृतो यद्यपि तथापि तवातिसुकुमारस्य प्रियइवाभातिकिमितियोजना। यद्वा । यःहेमन्तकालः तेप्रियः । येनहेमन्तेनसंवत्सरश्शुभस्सन्नलङ्कृतइवभाति । अयंकालस्संप्राप्तइतियोजना ॥ ४ ॥ **ती०** जलान्यनुपभोग्यानि शैत्यातिशयात्स्नानाद्यर्थमशक्यानि । सुभगः इष्टः ॥ ५ ॥ **ती०** संपन्नतरगोरसाः बहुलतरगोक्षीराः । जनपदाः भवन्तीतिशेषः ॥ ७ ॥ **शि०** हिमकोशाढ्यः हिमकोशैः कोशवद्घनीभूतहिमैः आढ्यः हिमवान्गिरिः सांप्रतंदूरसूर्यस्सन् सुव्यक्तंहिमवानिति यथार्थनामाऽभवत् । सूर्यस्यदूरस्थत्वात्

[ **पा०** ] १ ग. ङ. झ. ञ. ट. हस्तस्तु. २ घ. न्भ्रातुः. ख. न्भ्रात्रा. ३ क.—घ. च. ज. झ. ञ. मालिनी. ४ ङ. ज—ञ. यात्रार्थं. छ. यात्रार्थे. ५ च. पश्यतः.

मृदुसूर्याः [1]सनीहाराः पटुशीताः [2]समारुताः ॥ शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ॥ शीता [3]वृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥ १२ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ॥ निश्श्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥
[4]ज्योत्स्नी तुषारमलिना पौर्णमास्यां न राजते ॥ सीतेव चातपश्यामा लक्ष्यते [5]न तु शोभते ॥ १४ ॥
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् ॥ प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥

भवन्तीति शेषः । स्वभावोक्तिरलंकारः ॥ १० ॥ मृदुसूर्याः अक्रूरसूर्याः । पटुशीताः प्रबलशीताः । शून्यारण्याः आरण्या वनचराः तैः शून्याः आवरणरहितत्वेन शीतपीडिताः न बहिः संचरन्तीत्यर्थः । हिमध्वस्ताः हिमध्वस्तजनवन्तः । शैत्येन पिण्डीभूतशरीरजना इत्यर्थः । अनेन राक्षसकृतसार्वत्रिकपीडा द्योतिता ॥ ११ ॥ निवृत्ताकाशशयनाः निवृत्तचन्द्रशालाद्यनावृतप्रदेशशयनाः । पुष्यनीताः पुष्यनक्षत्रयुक्ता पौर्णमासी पुष्यं तेन नीताः तत्प्रधाना इत्यर्थः । यद्वा पुष्यः पुष्यमासः तेन नीताः पुष्यमाससन्निहिता इत्यर्थः । हिमारुणाः हिमधूसराः । शीताः शीतवाताः । वृद्धतरायामाः चतुर्विंशतिघटिकायुक्तत्वेनातिवृद्धतरविस्ताराः त्रियामाः रात्रयः । दिनान्ते अर्धयामस्य दिनादावर्धयामस्य च दिनशेषत्वात् । अनेन स्वर्गलोकोपद्रवः तामसराक्षसवृद्धिः सज्जनक्षयः कल्यनुसारिता चोक्ता । पुष्यः कलिः ॥ १२ ॥ मन्दरश्मित्वेन संक्रान्तं संप्रवृत्तं सौभाग्यं भोग्यत्वं यस्य सः सूर्ये स्वसौभाग्यं दत्तवानित्यर्थः । तुषारैः हिमशीकरैः अरुणं रक्तं मण्डलं यस्य । हिमशीकरावरणेन चन्द्रसूर्यमण्डलयोरारुण्यं प्रत्यक्षसिद्धं । निःश्वासेन अन्धः अप्रकाशः । आदर्शः दर्पणमिव । उपमालंकारः । अनेन रावणापहृतसर्वस्वस्य मलिनाकृतेरिन्द्रस्यावस्थोक्ता ॥ १३ ॥ ज्योत्स्नी चन्द्रिकयान्विता रात्रिः । तुषारमलिना सती पौर्णमास्यामपि न राजते न शोभते । एवंभूता सा आतपश्यामा आतपापहृतवर्णा सीतेव लक्ष्यते किंतु सीतावन्न शोभते । व्यतिरेकालंकारः । "व्यतिरेको विशेषश्चेदुपमानोपमेययोः" इति तल्लक्षणं । अनेन सीताया भाविरावणाभिभवः तेनापि सुरनारीजनबन्दीमोक्षणार्थत्वेनातिशयश्च व्यज्यते ॥ १४ ॥ प्रकृत्या शीतलस्पर्शः वायोः शीतस्पर्श एव स्वभावः । उष्णस्पर्शस्त्वागन्तुक इति हृदयं । सांप्रतं हेमन्ते । हिमविद्धः हिमयुक्तः । काले प्रातःकाले । द्विगुणशीतलः द्विरावृत्त्या शीतलः । "अथो गुणः । रूपादौ सूदशिञ्जिन्योरावृत्तीन्द्रियतन्तुषु । सङ्ख्यादावपि सत्त्वादौ त्यागादावुपसर्जने" इति रत्नमाला । पश्चिमो वायुः पश्चिमदिग्वायुः । अनेन स्वभावतः करुणाशीलस्य अवतारकाले देवप्रार्थनोत्तम्भितकृपस्य पुनर्मुन्याश्रमे

हिमद्रवाभावेन घनीभूतहिमविशिष्टोभवतीत्यर्थः ॥ ९ ॥ **टीका०** सनीहाराइत्युक्त्वा हिमध्वस्ताइतिपुनर्वचनं हिमवासराइतिविशेषणदर्शनार्थं । **स०** हे मध्वस्त मधुरस्तो ध्वस्तोयेन सतथा तत्संबुद्धिः । आहिताग्न्यादित्वात्परनिपातः । आदिवसाः ईषद्दिवसाः अहर्मानन्यौन्यात् । छन्दस्तुल्यत्वादाभान्तीति तिङावाऽऽङोन्वयः । अरण्यपुरहिमभेदाद्वाऽपौनरुक्त्यं । **शि०** मृदुसूर्याः मृदुः सहनयोग्योष्मविशिष्टःसूर्योयेषु । अतएवसनीहाराः । अतएव हिमैर्ध्वस्ताः ध्वंसकर्मीभूताजनायेषुते । अतएव शून्यानि हिमध्वस्तत्वेनकोमलपत्रादिरहितानि अरण्यानि येषुते । **ति०** हिमध्वस्ताः हिमध्वस्तपङ्कजाः ॥ ११ ॥ **ती०** पुष्यनीताः पुष्यनक्षत्रेण नीताः प्रवर्तिताः । येषुदिवसेषु पुष्यनक्षत्रं रात्रिकालपरिमाणंबोधयतीत्यर्थः । अन्येतु पुष्यनीताः पुष्यशब्देन पुष्यनक्षत्रयुक्तापौर्णमासी नीतालक्ष्यते । तथाच पुष्यनक्षत्रयुक्तांपौर्णमासीं नीताः गताः तदुपलक्षिताइतियावत् । कादाचित्कतया भेदधीहेतुरुपलक्षणमित्याहुः । यद्वा पुष्यनीताः पुष्याः पोष्याः गुणाभावआर्षः । शीतनिवारकोपचारैःपोष्याः भोगिनइत्यर्थः । तैर्नीताः कृच्छ्रेणगमिताः । **स०** पुष्यनीताः पुष्यमासावधिकाः ॥ **ति०** हिमारुणाः हिमधूसराः । कपोतवर्णेप्यरुणशब्दः । शीतं वृद्धतरं यासुताः । आयामाः दैर्घ्यवत्यः ॥ १२ ॥ **स०** निश्श्वासान्धः निश्श्वासएव अन्धं तिमिरंयस्यसः । "अन्धंस्यात्तिमिरं" इति विश्वः । प्रतिफलनप्रतिबन्धकत्वादितिभावः ॥ १३ ॥ **ती०** प्रकृत्या स्वभावेन अशीतलस्पर्शः । अशीतेत्युपलक्षणं । अनुष्णोपीतिद्रष्टव्यं । तथाच अनुष्णाशीतस्पर्शइत्यर्थः । काले प्रातःकाले । हिमविद्धस्सन् द्विगुणशीतलः प्रातःकालभवत्वेन हिमविद्धत्वेन द्विगुणशीतलत्वमितिभावः । **स०** यद्वा प्रकृत्याशीतलस्पर्शः । त्रिवृत्करणाज्जलविशेषगुणस्यापि वायुवृत्तित्वं नानुपपन्नं ॥ १५ ॥

[ **पा०** ] १ झ. सुनीहाराः. २ ङ. झ. सम्महिताः. ३ क. ङ. च. झ. ञ. ट. शीतवृद्धतरा. ४ क.—ट. ज्योत्स्ना. ५ ङ—ट. नच.

बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ॥ शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ॥ शोभन्ते किंचिदानम्राः शालयः कनकप्रभाः ॥१७॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ॥ दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥
अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ॥ संरक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ॥ १९ ॥
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ॥ वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २० ॥
स्पृशंस्तु विपुलं शीतमुदकं द्विरदः सुखम् ॥ अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥
एते हि समुपासीना विहंगा जलचारिणः ॥ न विगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥
अवश्यायतमोनद्धा नीहारतमसा वृताः ॥ प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ॥ हिमार्द्रवालुकैस्तीरैः सरितो भान्ति साम्प्रतम् ॥ २४ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ॥ शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २५ ॥

द्विगुणितकरुणस्य रामस्य व्यापारः सूचितः ॥ १५ ॥ बाष्पैः ऊष्मभिः छन्नानि यथा कूपोदकेभ्यो निर्गच्छन्तो धूमाकारा बाष्पाः । अनेन रामसमागमानन्तरभाव्याश्रमसमृद्धिरुच्यते । बाष्पशब्देन रामकृपोच्यते । यवेत्यादिना तपःसमृद्धिः । नदद्भिरिति वेदघोषः ॥ १६ ॥ खर्जूरपुष्पाकृतिभिः तद्वत्पिशङ्गवर्णैः । शिरोभिः कणिशैः । कनकप्रभाः परिपक्वनालपत्रत्वात्कनकवर्णाः । अनेन वृद्धा अपि जटाभरितशिरोभिस्त्वां प्रणमन्तीति द्योतितं ॥ १७ ॥ हिमनीहारैः शीतलनीहारैः संवृताः तैः । अनेन बहुकालं समागतोपि राक्षसप्रभाभिभूततेजस्को मृदुरिव किमर्थं वर्तस इत्यर्थः सूच्यते ॥ १८ ॥ पूर्वाह्णे अग्राह्यवीर्यः अग्राह्यौष्ण्यः चन्द्रिकायमाणो वर्तत इत्यर्थः । ईषदर्थे वा नञ् । अनुदरा कन्येतिवत् । तदुक्तं " तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः " इति । मध्याह्ने स्पर्शेन सुखः सुखकरः । किंचित्संरक्तः किंचिदापाण्डुश्च । अनेनापि राक्षसाक्रमेप्यपराक्रमत्वमनुचितमिति गम्यते ॥ १९ ॥ अवश्यायः हिमं । शाद्वलः शष्पप्रचुरा भूमिः । " नडशादाड्ड्वलच् " इति वलच् । अनेन राक्षसाभिभवकृतमुनिजनरोदनं रामकृपाप्रवृत्तिश्चोच्यते ॥ २० ॥ प्रतिसंहरते अतिदुःसहशैत्यवदिति भावः । अनेनेन्द्रस्य राज्यभोगाभिलाषिणोपि तद्भोगभीरुत्वं सूचितं ॥ २१ ॥ समुपासीनाः जलमिति शेषः । अनेन मुनीनां समाधिभङ्गो द्योत्यते । अप्रगल्भाः अधृष्टाः । आहवं युद्धं ॥ २२ ॥ अवश्यायः हिमसलिलं स एव तमः तेन नद्धाः बद्धाः । अनेन निश्चलत्वं लक्ष्यते । हिमक्लिन्ना हि लता निश्चलीभवन्ति । नीहारः अजलवर्षिमहाहिमं तदेव तमः तेनावृताः । अनेन प्रच्छादनपटाच्छन्नत्वं व्यज्यते । विपुष्पा इत्यनेन निमीलिताक्षत्वमुक्तं । अनेन वनवासिनां दैन्यातिशय उक्तः । अत्रोत्प्रेक्षालंकारः ॥२३॥ रुतं शब्दः । हिमार्द्रवालुकैः हिमसिक्तसिकतैः । अनेनापि ऋषिजनदैन्यमेव द्योत्यते ॥ २४ ॥ तुषारः हिमं । अगाग्रस्थमपि निर्मलशिलातलस्थमपि । रसवत् विषवत् । " रसो रागे विषे द्रव्ये शृङ्गारादौ

ती० प्रातःकालेकूपोदकादिष्विव वनादप्यूष्मा प्रादुर्भवतीत्यनुभवएवप्रमाणं ॥ १६ ॥ ति० खर्जूरपुष्पाकृतित्वं प्रलंबत्वेनपीतत्वेनच ॥ किंचिदालंबाः किंचिन्नम्राः ॥ १७ ॥ ति० नीहारः हिमातिशयरूपो वृक्षपर्वताद्यदर्शनसंपादनक्षमः ॥ १८ ॥ ति० आग्राह्यवीर्यः ईषद्ग्राह्यौष्ण्यः ॥ स० अग्राह्यवीर्यः अग्राह्यं हिमप्रसरात्स्वेनगृहीतुमशक्यंवीर्यंयस्यसः ॥ १९ ॥ ति० नावगाहन्ति नावगाहन्ते ॥ २२ ॥ ति० अवश्यायतमोभ्यां नद्धा रात्रौ । नीहारतमसावृताः प्रत्यूषे ॥ २३ ॥ स० रुतविज्ञेयसारसाः हिमाच्छादितत्वादितिभावः ॥ २४ ॥ ती० अगाधस्थमपि गंभीरस्थमपि । अगाग्रस्थमितिपाठे पर्वताग्रस्थमपीत्यर्थः ।

[ पा० ] १ ग. शष्पच्छन्नानि. २ क. ग. ङ.—ट. दालंबाः. ३ झ. आग्राह्यवीर्यः. ४ क. ङ—ञ. संसक्तः. ५ ङ. च. छ. ज. ञ. संस्पृशन्विमलं. घ. स्पृशंस्तुविमलं. ६ ख. च. छ. ज. ञ. अत्यर्थं. ७ घ. विहंगाः. ८ क ख. घ. ङ. ज.—ट. नावगाहति. ९ ङ. झ. ट. वालुकास्तीरैः. १० ग. यान्ति. ११ ग. च. दगारस्थमपि. छ. ज. ञ. दगाधस्थमपि. क. ख. दपात्रस्थमपि.

जरा[1]जर्झरितैः [2]पद्मैः शीर्ण[3]केसरकर्णिकैः ।। [4]नालशेषैर्हिमध्वस्तैर्न भान्ति कमलाकराः ।। २६ ।।
अस्मिंस्तु पुरुषव्याघ्रः काले दुःखसमन्वितः ।। तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ।। २७ ।।
त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान्बहून् ।। तपस्वी नियताहारः शेते शीते महीतले ।। २८ ।।
सोपि वेलामिमां नूनमभिषेकार्थमुद्यतः ।। वृतः प्रकृतिभिर्नित्यं [5]प्रयाति [6]सरयूनदीम् ।। २९ ।।
अत्यन्तसुखसंवृद्धः [7]सुकुमारः सुखोचितः ।। कथं [8]न्वपररात्रेषु सरयूमवगाहते ।। ३० ।।
पद्म[9]पत्रेक्षणो वीरः श्यामो निरुदरो महान् ।। धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ।। ३१ ।।
प्रियाभिभाषी मधुरो दीर्घबाहुररिंदमः ।। संत्यज्य [10]विविधान्भोगा[11]नार्यं सर्वात्मना श्रितः ।। ३२ ।।
जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना ।। वनस्थमपि तापस्ये यस्त्वाम[12]नुविधीयते ।। ३३ ।।
न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।। ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ।। ३४ ।।

पराक्रमे ” इतिबाणः । शैत्यातिशयेन विषवदनुपादेयं भवतीत्यर्थः । एतेन राक्षसप्रकोपात् भवतश्चानुद्योगान्मुनिमनो दुःखितं भवतीति द्योत्यते ।। २५ ।। जरया चिरप्ररूढतया जर्झरितैः विवर्णैः । जीर्णकेसरकर्णिकैः शिथिलकिञ्जल्ककर्णिकैः । पद्मैर्न भान्ति । स्पष्टं व्यङ्ग्यं ।। २६ ।। एवमृषिपीडातिशयेपि रामस्य राक्षसवधानुद्यममुक्त्वा भरतस्य त्वदागमनव्यसनित्वात्तद्दर्शनकालोपि संनिहित इत्याशयेनाह—अस्मिन्नित्यादिना । दुःखसमन्वितः त्वद्विरहादिति शेषः ।।२७।। राज्यं राजत्वं प्रभुत्वमित्यर्थः । मानं राजपुत्रोहमित्यभिमानं । भोगान् स्रक्चन्दनवनितादीन् । बहूनित्यपरित्याज्यत्वमुच्यते । तपस्वी तपस्विचिह्नजटादिमान् । नियताहरः फलमूलाद्यशनः । शीत इत्यनेनावरणराहित्यमुच्यते । महीतल इत्यनेन खट्वादिराहित्यं ।। २८ ।। वेलां प्राप्येति शेषः । प्रकृतिभिरिति “ उपभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलं ” इति वक्ष्यमाणरीत्या भरतभक्त्या त्वद्भक्त्या च भरतमनुसरन्तीभिरित्यर्थः ।। २९ ।। अत्यन्तसुखसंवृद्धः राज्ञा उपलालितत्वात् सुखसंवृद्धः त्वयापि लालितत्वादत्यन्तसुखसंवृद्धः । सुकुमारः भवतोपिदृष्ट्यवेक्षणासहसौकुमार्यः । सुखोचितः त्वया सह वस्तुं योग्यः नतु त्वद्वियोगार्हः । कथं नु आत्मौपम्येन मन्यते स्वस्य रामविरहाभावेन शैत्यानुभवः तस्य रामतापात् “ उपतप्तोदका नद्यः ” इत्युक्तरीत्या नदीनामपि रामविरहेणोष्णत्वाच्च शैत्यप्रसक्तिरेव नास्ति । अपररात्रेषु यथा नववैधव्याः स्त्रियः मनुष्यसंचारात्पूर्वमेव मनुष्यमुखमनवलोकयन्त्यो गच्छन्ति । तथाऽयमपि । कैकेयीपुत्रोयं । एतन्निमित्त एवानर्थ इति जना वक्ष्यन्तीति भीत्या अपररात्रेष्वेव गच्छति । सरयूमवगाहते निर्वेदातिशयेनातित्वरितगामिनीमपि सरयूं निर्भयोवगाहते । अवगाहते जलेनिमग्नश्चेन्मनुष्यादाव्यो भवति ।।३०।। निरुदरः अतुन्दिलः । ह्रीनिषेधः ह्रिया लज्जया निषेधः अकृत्येभ्यो निवर्तनं यस्य सः ।। ३१ ।। मधुरः मधुरवाक् सुन्दरो वा । आर्यं ज्येष्ठं त्वां सर्वात्मना करणत्रयेण श्रितः ।।३२।। स्वर्गः रामप्राप्त्यन्तरायभूतः स्वर्गः । जितः तिरस्कृतः । वनस्थमपि त्वां तापस्ये तापसकर्मविषये । अनुविधीयते अनुकरोति श्यन्नार्षः ।। ३३ ।। एवं प्रतिज्ञातराक्षसवधे विलंबः कृतः भरतक्लेशेन तत्रापि शीघ्रं गन्तव्यं । अतःकिमत्र कृत्यमिति सूचयित्वा सर्वस्यानर्थस्य मूलभूता कैकेयीत्याशयेनाह—न पित्र्यमित्यादिश्लोकद्वयेन । पित्र्यं पितृस्वभावं । द्वे पदे येषां ते द्विपदाः मनुष्याः । अन्यथाकृतः पितृस्वभाव

रसवत् रुचिकरं ।। २५ ।। **स०** निरुदरः अल्पाहारत्वात्कृशोदरः । निस्संदेहोवा । अभिधानंतूक्तं । ह्रियाःनिषेधोयस्यसः । राजपुत्रोऽहं कथंस्थण्डिलशायीभविष्यामीति ह्रीप्रतियोगिकनिषेधवानित्यर्थः ।। ३१ ।। **ती०** आर्यं ज्येष्ठंत्वां । वस्तुतस्तु सर्वात्मना श्रवणादिरूपनवविधभक्त्या । आर्यं ब्रह्मादीनामपिपूज्यंत्वामेवाश्रितः ।। ३२ ।। **ति०** अनुविधीयते अनुकरोति सेवत

[ **पा०** ] १ ङ. कर्करितैः. ञ. मर्मरितैः. २ क. ङ. ञ. ट. पत्रैः. ख. पर्णैः. ३ क. च. छ. ज. केसरपाण्डुभिः. ४ ङ. झ. ट. नालशेषाहिमध्वस्ताः. ५ क. ज. संयाति. छ. सयाति. ६ क—ट. सरयूंनदीं. ७ क—ट. सुकुमारोहिमार्दितः. ८ च. ज. चापररात्रेषु. ग. घ. ङ. झ. ञ. ट. स्वपररात्रेषु. छ. धापररात्रेषु. ९ क. ख. घ. च. छ. ज. ञ. पत्रेक्षणःश्रीमान्. ग. ङ. झ. ट. पत्रेक्षणःश्यामःश्रीमान्निरुदरो. १० ग. ङ. झ. ट. विविधान्सौख्यान्. ११ ख. नार्यः. १२ क. विधास्यते.

भर्ता दशरथो यस्याः साधुश्च भरतः सुतः ॥ कथं नु साम्बा कैकेयी तादृशी क्रूरशीलिनी[1] ॥३५॥
इत्येवं लक्ष्मणे वाक्यं स्नेहाद्ब्रुवति[2] धार्मिके ॥ परिवादं जनन्यास्तमसहन्राघवोऽब्रवीत् ॥ ३६ ॥
न तेऽम्बा[3] मध्यमा तात[4] गर्हितव्या[5] कथंचन ॥ तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३७ ॥
निश्चिताऽपि[6] हि मे बुद्धिर्वनवासे दृढव्रता ॥ भरतस्नेहसंतप्ता बालिशीक्रियते पुनः ॥ ३८ ॥
संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च ॥ हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥३९॥
कदान्वहं[7] समेष्यामि भरतेन महात्मना ॥ शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥ ४० ॥
इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम् ॥ चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥४१॥
तर्पयित्वाऽथ[8] सलिलैस्ते[9] पितॄन्दैवतानि[10] च ॥ स्तुवन्ति स्मोदितं सूर्यं[11] देवताश्च[12] समाहिताः ॥ ४२ ॥

एवानुक्तो न मातृस्वभाव इत्यर्थः ॥ ३४ ॥ साधुशब्दस्य भर्तरि भरते चान्वयः । तादृशीति पूर्वं कैकेय्युक्तस्मरणं ॥३५॥ इत्येवमिति । अनेन लक्ष्मणः प्रत्यूषे रामस्य ससीतस्य सरःस्नानादिक्लेशमालोक्य सुदुःखिततया कैकेयीं निन्दितुमुपक्रम्य झटितिनिन्दायां क्रियमाणायां रामः कुप्येदिति प्रथमं हेमन्तस्वभावं प्रस्तुत्य तत्प्रसङ्गेन भरतमुपक्षिप्य कैकेयीं निन्दतिस्मेति गम्यते। स्नेहात् रामस्नेहात् । परिवादं अपवादं । असहन् असहमानः ॥ ३६ ॥ मध्यमा सर्वदशरथपत्न्यपेक्षया । कथंचन प्रासङ्गिककथायामपि। मध्यमाम्बेति स्वाभिमानद्योतनाय । इक्ष्वाकुनाथस्य राजनि स्वर्गं गते अस्मासु च वनं गतेषु पूर्वतरास्मत्कुलमर्यादास्थापकस्य ॥ ३७ ॥ वनवासे निश्चिता दृढव्रतापि मे बुद्धिः । भरते स्नेहसंतप्ता सती बालिशीक्रियते बालबुद्धिरिव भवति । असंपूर्णेपि वनवासकाले तद्दर्शने संजातकुतूहला भवतीत्यर्थः ॥ ३८ ॥ स्नेहमेव प्रकाशयति—संस्मरामीत्यादिना। लोके कैश्चिदुक्तानि वाक्यानि प्रियाण्यपि कर्णकठोराणि भवन्तीति तद्व्युदासायाह—मधुराणीति। हृद्यानि हृदयादनपेतानि । अमृतकल्पानि शुभोदर्काणि । इदानीमपि मनःप्रह्लादनानि ॥ ३९ ॥ कदेति भरतसाहित्याभावेन विद्यमानाभ्यां सीतालक्ष्मणाभ्यामपि विरहितमात्मानं मन्यते। भरतस्नेहातिशयप्रकारोयम् ॥ ४० ॥ इत्येवं विलपन् भरतस्नेहकृतानि बहूनि वाक्यानि जल्पन्नित्यर्थः। अभिषेकं स्नानं ॥ ४१ ॥ तर्पयित्वेति । ऋषितर्पणस्याप्युपलक्षणं । स्तुवन्ति स्म उपतस्थिरे । " मित्रस्य—" इत्यादिमन्त्रैः । सीतात्वमन्त्रेण । देवताः संध्यादिदेव-

इत्यर्थः । धीङोदैवादिकस्यरूपं ॥ **स०** जितः प्राप्तः ॥ ३३ ॥ **स०** असहन्नितिपदव्यत्ययेन मत्प्रव्राजनं कैकेयीबुद्धिकृतं नभवतीतिसूच्यते । परस्मैपदतापिसंभवति । " सएवायंनागस्सहतिकलभेभ्यःपरिभवं " इत्यादिकौमुद्युक्तेः ॥ ३६ ॥ **तनि०** तामेव तस्मिन्पुरुषव्याघ्रइत्याद्युक्तां । इक्ष्वाकुनाथस्य " आस्फोटयन्तिपितरः " इत्यादिना इक्ष्वाकुभिःप्रार्थनीयस्य । भरतस्य पद्मपत्रेक्षणइत्याद्युक्तसद्गुणभरितस्य ॥ **स०** आमध्यमेतिच्छेदः । सुमध्यमेतितदर्थः । यद्वा यथातथाशब्दावध्याहार्यौ । तथाच यथाते मातामध्यमा सुमित्रा । मध्येमकारोयस्याइतियोगाद्वा । नगर्हितव्या तथेयमपिनगर्हितव्येत्यन्वयः ॥ ३७ ॥ **तनि०** वाक्यानि अर्थपरिपूर्णानि । प्रियाणि श्रवणप्रियाणि । मधुराणि "माधुर्यंसुकुमारता" इत्याद्युक्तगुणवन्ति । एवं शब्दधर्मानुक्त्वाऽर्थधर्मानाह—**हृद्यानीति** । हृद्यानि हृदयाह्लादजननानि । अमृतकल्पानि शर्करामध्वादिवदत्यन्तभोग्यानि । मनःप्रह्लादनानि विजातीयप्रत्ययमूलतया आनन्दैकजनकानि ॥ यद्वा हृद्यानि हृदयंगमानि । " बन्धनेचर्षौ " इति यत्प्रत्ययः । वश्यमन्त्रवत्परहृदयबन्धनानीतियावत् ॥ ३९ ॥ **तनि०** रघुनन्दन शत्रुघ्नेन त्वयाचसहितेनभरतेन कदासमेष्यामि संगतोभविष्यामीतियोजनीयं । चकारेण सीतासमुच्चयः । यावदनुरक्तमेलनेपि एकानुरक्तविरहे सर्वानुरक्तविरहइवार्तिर्जायते। तस्यैकस्यापिमेलने अपूर्वसर्वसुहृज्जनमेलनइवातिहर्षोजायतइति त्वयाचेति लक्ष्मणमेलनस्यसिद्धत्वेप्यसिद्धवत्कथनं भरतशत्रुघ्नविषयप्रेमातिशयेनेतिभावः ॥ ४० ॥ इतिषोडशस्सर्गः ॥ १६ ॥

[ **पा०** ] १ क—ट. क्रूरदर्शिनी. २ ङ. छ.—ट. द्रुदति. ३ ज. तेसा. ४ ग. वत्स. ५ घ. गर्हितास्यात्कथंचन. झ. गर्हितव्याकदाचन. ६ ङ. झ. ट. निश्चितैव. ख. सुनिश्चिता. ७ ग. ङ.—ट. कदाह्यहं. कदाप्यहं. ८ ग. तर्पयित्वातु. तर्पयित्वायथान्यायंसपितॄन्. ९ क. ग. ङ. च. ज. झ. ट. सलिलैस्तैः. १० ग. न्देवताअपि. ख. झ. दैवतानपि. ११ ङ. छ. घ. ट. दैवतांश्च. १२ क. ख. ङ. च. छ. ज. ट. तथानघाः.

कृताभिषेकः स रराज रामः सीताद्वितीयः सह लक्ष्मणेन ॥
कृताभिषेको गिरिराजपुत्र्या रुद्रः सनन्दी भगवानिवेशः ॥ ४३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ॥ १७ ॥

गोदावरीतीरात्सीतालक्ष्मणाभ्यांसहपर्णशालामेत्यऋषिभिःसहसंभाषमाणंराममेत्यशूर्पणखयातत्तत्त्वप्रश्नः ॥ १ ॥ रामेण स्वतत्वकथनपूर्वकंतांप्रतितत्तत्वादिप्रश्नः ॥ २ ॥ तयारामंप्रतिस्वतत्वकथनेनस्वस्यभार्याभावेनस्वीकारप्रार्थनापूर्वकंसीताल-क्ष्मणयोर्भक्षणप्रतिज्ञानम् ॥ ३ ॥

[1]कृताभिषेको रामस्तु सीता सौमित्रिरेव च ॥ तस्माद्गोदावरीतीरात्ततो जग्मुः स्वमाश्रमम् ॥ १ ॥
आश्रमं तमुपागम्य राघवः सहलक्ष्मणः ॥ कृत्वा पौर्वाह्णिकं [2]कर्म पर्णशाला[3]मुपागमत् ॥ २ ॥
उवास [4]सुखितस्तत्र पूज्यमानो महर्षिभिः ॥ [5]लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ३ ॥
स रामः पर्णशालायामासीनः सह सीतया ॥ विरराज महाबाहुश्चित्रया [6]चन्द्रमा इव ॥ ४ ॥
[7]तथाऽऽसीनस्य रामस्य कथासंसक्तचेतसः ॥ तं देशं राक्षसी [8]काचिदाजगाम यदृच्छया ॥ ५ ॥
सा तु [9]शूर्पणखा नाम दशग्रीवस्य रक्षसः ॥ भगिनी राम[10]मासाद्य ददर्श त्रिदशोपमम् ॥ ६ ॥
[11]सिंहोरस्कं महाबाहुं [12]पद्मपत्रनिभेक्षणम् ॥ [13]आजानुबाहुं दीप्तास्यमतीव प्रियदर्शनम् ॥ ७ ॥
गजविक्रान्तगमनं जटामण्डलधारिणम् ॥ सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् ॥ ८ ॥

---

ताः ॥ ४२ ॥ रुद्रः सनन्दीत्युपमया दुष्प्रधर्षणत्वमुच्यते । रुद्रः सविष्णुर्भगवानिवेश इति न क्वचिदपि कोशे दृश्यते । कश्चिद्दृश्यत इत्याह तदा अभूतोपमेति युक्तमिति ज्ञेयं ॥ ४३ ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

---

एवं रामतपोविशेषद्योतनाय हेमन्तं प्रथमप्रवृत्तमुपवर्ण्य ततस्त्रिषु संवत्सरेष्वतीतेषु कदाचिच्चैत्रमासे प्रसक्तं भाविसकलराक्षसवधनिधानत्वेन शूर्पणखावृत्तान्तमुपक्षिपति सप्तदशे—कृताभिषेक इत्यादि । ततः अभिषेकान्तरभाविकृत्यानन्तरं । आश्रमं तपोवनं । “ तपोवने मठे ब्रह्मचर्यादावाश्रमोस्त्रियां ” इति बाणः ॥ १ ॥ पूर्वाह्णे भवं पौर्वाह्णिकं ब्रह्मयज्ञादि नत्वग्निकृत्यं । अनुदितहोमत्वेन तस्य सूर्योपस्थानानन्तरभावित्वाभावात् । पर्णशालामुपागमत् आश्रमे पर्णशालातो बहिरेव कर्तव्यमनुष्ठाय वासस्थानमगमदित्यर्थः ॥ २ ॥ कथाः पुराणेतिहासकथाः । चकार उवाचेत्यर्थः । तथा चोक्तं धातुवृत्तौ “ करोतिरभूतप्रादुर्भावे वर्तते अश्मानमितः कुरु पादं जले कुरु यः प्रथमः शकलः परापतेत् सस्मरुः कार्यः चोरंकारमाक्रोशतीत्यदौ अवस्थापननिर्मलीकरणोपादानोच्चारणादौ प्रयोगात् । चौरंकारमित्यत्र चोरशब्दमुच्चार्येत्यर्थः । नह्यत्र चोरः क्रियते । अर्थनिर्देशस्तूपलक्षणं ” इति ॥ ३ ॥ चित्रया चित्रानक्षत्रेण । चित्रापौर्णमास्यामितिभावः ॥ ४ ॥ रामस्यासीनस्य रामे आसीने ॥ ५ ॥ राक्षसीमृषिर्विशेषयति—सेति । राममासाद्य ददर्श रामं दृष्ट्वाआससादेत्यर्थः । समानकर्तृकत्वमात्रेल्यप् ॥ ६ ॥ सिंहोरस्कं सिंहशब्दः श्रेष्ठवाची विशालोरस्कमित्यर्थः ॥ ७ ॥ महासत्त्वं महाबलं । पार्थिवव्यञ्जनानि रा-

---

ति० पर्णशालां बाह्यां ॥ २ ॥

[ पा० ] १ क. ख. ग. ङ. च. ज.—ट. कृताभिषेकस्त्वगराज. २ क. ग. छ. ज. ञ. सर्वं. ३ क. ग. च. छ. ज. ञ. मुपाविशत्. ४ ख. सहितः. ५ इदमर्धं क. ग. ङ.—ट. पुस्तकेषु. विरराजमहाबाहुरित्यर्धात्परतः. तथासीनस्येत्यर्धात्पूर्वं दृश्यते. ६ क. सहचन्द्रमाः. ७ ङ. ट. तदा. ८ घ. कामात्. ९ क.—घ. छ. ज. शूर्पनखी. १० क. मागम्य. ११ ङ. झ. ट. दीप्तास्यंच. १२ ङ. झ. ट. पत्रायतेक्षणं. १३ इदमर्धं ङ. झ. ट. पाठेषुनदृश्यते.

राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम्[1] ॥ बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ९ ॥
सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ॥ विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥ १० ॥
प्रीतिरूपं[2] विरूपा सा सुस्वरं भैरवस्वरा ॥ तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ ११ ॥
न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ॥ शरीरजसमाविष्टा राक्षसी वाक्यमब्रवीत्[3] ॥ १२ ॥
जटी तापसरूपेण[4] सभार्यः शरचापधृत्[5] ॥ आगतस्त्वमिमं देशं कथं राक्षससेवितम् ॥
किमागमनकृत्यं[6] ते तत्त्वमाख्यातुमर्हसि ॥ १३ ॥
एवमुक्तस्तु राक्षस्या शूर्पणख्या परंतपः ॥ ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ १४ ॥
अनृतं न हि रामस्य कदाचिदपि संमतम् ॥ विशेषेणाश्रमस्थस्य[7] समीपे स्त्रीजनस्य च ॥ १५ ॥
आसीद्दशरथो नाम राजा त्रिदशविक्रमः ॥ तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १६ ॥
भ्राताऽयं लक्ष्मणो नाम यवीयान्मामनुव्रतः ॥ इयं भार्या च वैदेही मम सीतेति विश्रुता ॥ १७ ॥
नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ॥ धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः ॥ १८ ॥
त्वां तु वेदितुमिच्छामि कथ्यतां[8] काऽसि[9] कस्य[10] वा ॥ १९ ॥
न हि[11] तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि[12] मे ॥ इह[13] वा किन्निमित्तं त्वमागता ब्रूहि तत्त्वतः ॥२०॥
साऽब्रवीद्वचनं श्रुत्वा राक्षसी मदनार्दिता[14] ॥ श्रूयतां राम वक्ष्यामि[15] तत्त्वार्थं वचनं मम ॥ २१ ॥

जलक्षणानि । कामकृतमोहहेतवो विशेषणानि ॥ ८—९ ॥ तस्यास्तस्मिन्मनःप्रवृत्तिं मुनिः परिहसति—सुमुखमित्यादिना । वृत्तमध्यं तनुमध्यं । विरूपाक्षी विकटनेत्री । सुकेशं नीलकेशं ॥ १० ॥ प्रीतिरूपं प्रियरूपं । प्रीयत इति प्रीतिः । विरूपा विकटरूपा । सुस्वरं स्निग्धगम्भीरस्वरं तरुणं युवानं सौम्यं चेत्यर्थः । दारुणेति प्रतियोगिनिर्देशात् दक्षिणं ऋजुभाषिणं । वामभाषिणी वक्रभाषिणी ॥ ११ ॥ न्यायवृत्तं उचिताचारं । शरीरजो मन्मथः ॥१२॥ तापसरूपेण जटी कामुकरूपेण सभार्यः क्षत्रियरूपेण शरचापधृत् । राक्षससेवितं एतद्रूपासहैः सेवितमित्यर्थः ॥१३॥ शूर्पनख्येति छान्दसौ ङीषूणत्वाभावौ । ऋजुबुद्धितया कुटिलेष्वप्यकुटिलबुद्धितया ॥ १४ ॥ आश्रमस्थस्य तपोवनस्थस्य ॥ १५—१६ ॥ यवीयान् कनिष्ठः । अनुव्रतः अनुसरणं व्रतं यस्य सः । वैदेही विदेहराजपुत्री ॥ १७ ॥ मातुः कैकेय्याः । यन्त्रितः नियतः चोदित इति यावत् । धर्मकाङ्क्षी पितृवाक्यपालनरूपधर्मकाङ्क्षी । धर्मार्थं तपोरूपधर्मसिद्ध्यर्थं । वनंवस्तुं यन्त्रितः सन्निहागत इत्यन्वयः ॥ १८ ॥ कासीति नामजातिप्रश्नः । कस्येति पित्रादिविषयः प्रश्नः ॥ १९ ॥ तावत् कात्स्र्न्येन । मनोज्ञाङ्गी न भवसि मां प्रति राक्षसीति प्रतिभासि । यद्वा राक्षससेवित इति तद्वचनात् राक्षसीत्व मित्याशङ्क्य परिहरति । मनोज्ञाङ्गि त्वं राक्षसीति न प्रतिभासीति रामदर्शनकाले तथारूपं कृतवती कामरूपत्वात् । दुर्मुखीत्यादिकं वास्तवाभिप्रायेण मुनिनोक्तमिति ज्ञेयं ॥ २० ॥ तत्त्वार्थं परमार्थं

ति० सुमुखमित्यादि । विषमालङ्कारोत्र ॥ १० ॥ ति० शूर्पनख्येतियौगिकं ॥ १४ ॥ शि० त्रिदशेषुदेवेषु विक्रमः प्रसिद्धः पराक्रमोयस्यसः ॥ १६ ॥ ति० कस्यत्वं कन्येतिशेषः । कासि किंनामासि । कस्य वंशजेतिशेषः ॥ १९ ॥ ति० राक्षसी एवंमनोज्ञाङ्गत्वस्य कामरूपत्वंविनाऽसंभवात् । कामरूपत्वंच राक्षसत्वंविनानेतिभावः ॥ २० ॥ ति० मदनार्दिता रामदर्शनादितिशेषः ॥ २१ ॥

[ पा० ] १ क. च. छ. ज. सदृशंप्रभुं. २ क. ङ. च. छ. झ. ञ. ट. प्रियरूपं. ३ ख.—ट. राममब्रवीत्. ४ ङ. झ. ट. वेषेण. ५ घ. चापभृत्. ख. च.—ट. चापधृक्. ६ क. ग. च. छ. ज. ञ. कार्यं. ७ क. ख. च. ज. ञ. विशेषादाश्रम. ८ ङ. झ. ट. कस्यत्वं. ९ क. काच. १० ग. छ. कस्यच. ११ ङ. च. झ. ट. त्वंहि. १२ क. घ. प्रतिभाति. १३ च. छ. ज. इहैव. १४ ख. ज. मदनान्विता. १५ ङ. छ. ट. तत्वार्थंवक्ष्यामि. च. ज. ञ. वक्ष्यामितत्वार्थवचनं.

अहं शूर्पणखा नाम राक्षसी कामरूपिणी ॥ अरण्यं विचरामीदमेका सर्वभयंकरा ॥ २२ ॥
रावणो नाम मे भ्राता बलीयान्राक्षसेश्वरः ॥ वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ॥ २३ ॥
प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः ॥ विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः ॥ २४ ॥
प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ॥ तानहं समतिक्रान्ता राम त्वा पूर्वदर्शनात् ॥
समुपेताऽस्मि भावेन भर्तारं पुरुषोत्तमम् ॥ २५ ॥
अहं प्रभावसंपन्ना स्वच्छन्दबलगामिनी ॥ चिराय भव मे भर्ता सीतया किं करिष्यसि ॥ २६
विकृता च विरूपा च न चेयं सदृशी तव ॥ अहमेवानुरूपा ते भार्यारूपेण पश्य माम् ॥ २७ ॥
इमां विरूपामसतीं करालां निर्णतोदरीम् ॥ अनेन ते सह भ्रात्रा भक्षयिष्यामि मानुषीम् ॥२८॥
ततः पर्वतशृङ्गाणि वनानि विविधानि च ॥ पश्यन्सह मया कान्त दण्डकान्विचरिष्यसि ॥ २९ ॥

---

॥ २१ ॥ कामरूपिणी इतोप्यधिकरूपधारणेसमर्था । सर्वभयंकरेति वक्ष्यमाणरतिप्रतिबन्धकनिवारणक्षमतोक्ता॥ १२॥ कासीति प्रश्नस्योत्तरमुक्त्वा कस्येत्यस्य प्रश्नस्योत्तरमाह—रावणइत्यादिना ॥ २३ ॥ कुम्भकर्णश्च मे भ्रातेत्यन्वयः। विभीषणस्तु तस्य विशेषोस्ति सोपि मे भ्रातेत्यर्थः । तं विशेषमाह—धर्मात्मेति । धर्मात्मा धर्मस्वभावः । राक्षसचेष्टितो न जन्मना राक्षसोपि न राक्षसव्यापारइत्यर्थः ॥ २४ ॥ एतद्देशागमने निमित्तमाह—प्रख्यातेति । खरदूषणौ जनस्थानस्थावितिशेषः । एवं भ्रातृकथनेन रामस्य स्वपरिग्रहे भीतिर्माभूदित्याह—तानहमिति । अतिक्रान्ता अतिक्रम्य वर्तमाना स्वच्छन्दचारिणीत्यर्थः । त्वा त्वां । पूर्वदर्शनात् प्रथमदर्शनमारभ्य । अपूर्वदर्शनादिति वा छेदः । देवदानवमर्त्येष्वितः पूर्वमदृष्टत्वद्रूपदर्शनाद्धेतोः । भावेन हृदयेन रत्याख्यभावेन वा । भर्तारं समुपेतास्मि तत्र हेतुः—पुरुषोत्तममिति ॥ २५ ॥ सीतायां विद्यमानायां किंत्वयेत्यत्राह—अहमिति । स्वच्छन्दबलगामिनी स्वेच्छानुगुणबलगमना च ॥ २६ ॥ सीतां निन्दति—विकृताचेति । विकृतेति विषमशरीरत्वमुच्यते ॥२७॥ करालां विकृतां "करालो दन्तुरे तुङ्गे विशाले विकृतेपि च" इति वैजयन्ती। निर्णतं निरतिशयेन नतं निम्नमुदरं यस्याः सा निर्ण-

---

ति० यदितेश्रोत्रमागतः प्रायश्श्रुतएवभविष्यतीतिभावः ॥ २३ ॥ ति० खरदूषणौ विभीषणवत्त्रिशिराअराक्षसस्वभावत्वान्नोक्तः । रावणादीन्वीर्येणसमतिक्रान्ता ततोधिका । अतस्तान्समतिक्रान्ता त्वदभिसरणेतन्निमित्तभयरहितेत्यावृत्त्यायोज्यं ॥ २५ ॥ ति० प्रभावसंपन्ना प्रकृष्टेनभावेनश्शृङ्गारेणसंपन्ना । यद्वा प्रभावेण शक्त्यतिशयेनसंपन्ना ॥ २६ ॥ ति० आत्मनोदेवयोनिभेदत्वेनानभिमतग्रहणसामर्थ्याभिमानेनस्वस्मिन्रामप्रवृत्तयेसीतादूषणमाह—**विकृताचेति** । विकृता मायास्वरूपतयापरिणामाख्यविकारवती । विरूपा नानारूपोच्चावचकार्यकारिणी । अतएव शुद्धमुक्तस्वभावस्तव नसदृशीतिपरमार्थः । अहमेवानुरूपा उभयोरपिमायाधिष्ठातृत्वादित्यर्थः ॥ २७ ॥ ति० असतीं स्वपुरुषस्यदुस्तरानेकसंसारदत्वात् । कार्यरूपेणसतींच । त्वयासहप्रौढ्यानिर्मनुष्येवनेआगमनाच्चासतीं । सतीहिवृद्धानांश्वश्र्वादीनांसविधएव पातिव्रत्यरक्षणायतिष्ठेदित्याशयः । ती० निर्णतोदरीं लंबोदरीं । स० मानुषीमितिभक्ष्यत्वेहेतुः ॥ शि० ननुसीतायाःकागतिरित्यत्राह—**इमामिति** । विरूपां मदीप्सितरूपविहीनां । असतीं सूक्ष्माङ्गत्वेनाविद्यमानामिव । अतएव करालां पतनभीत्युत्पादिकां । निर्णतोदरीं अतुन्दिलां ॥ २८ ॥

[ पा० ] १ क. ख. ग. च. छ. ज. ञ. शूर्पनखी. २ घ. मेकाकीतुभयंकरा. ख. च. मेकाकीतुभयंकरी. ३ रावणोनामेत्येकश्लोकस्यस्थाने ङ. झ. ट. पाठेषु. रावणोनाममेभ्रातायदितेश्रोत्रमागतइत्यर्धमेवदृश्यते. ४ क. ख. ग. च. छ. ज. ञ. राक्षसोराक्षसाधिपः. ५ घ. छ. ज. सोयं. क. ख. च. योयं. ञ. साक्षाद्विश्रवसः. ६ अस्मिञ्श्लोके पूर्वोत्तरार्धयोः पौर्वापर्यं ङ. ट. पाठयोर्दृश्यते. ७ क. ज. छ. ज. ञ. निद्रस्तु. ८ ख. घ. विभीषणश्च. ९ ङ. झ. भर्तामे. १० छ. ज. ञ. जायारूपेण. ११ ङ. इमामरूपां. १२ ग. च. छ. ज. ञ. करालीं. १३ क. ख. ग. ङ. ट. सहते. १४ क. ख. ग. ङ. झ. ट. कामी.

इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् ॥ इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ॥ १८ ॥

रामेणशूर्पणखांप्रतिस्वेनतदपरिग्रहेहेतूक्तिपूर्वकंसोपहासंलक्ष्मणवरणचोदना ॥ १ ॥ लक्ष्मणेनसयुक्त्युपन्यासंचोदितया शूर्पणखयापुनारामंप्रतिस्वपरिग्रहप्रार्थनापूर्वकंसीताभक्षणोद्यमः ॥ २ ॥ रामचोदनयालक्ष्मणेनछिन्नकर्णनासयाशूर्पणखया खरसमीपगमनम् ॥ ३ ॥

ततः शूर्पणखां रामः कामपाशावपाशिताम् ॥ स्वेच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १ ॥
कृतदारोस्मि भवति भार्येयं दयिता मम ॥ त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २ ॥
अनुजस्त्वेष मे भ्राता शीलवान्प्रियदर्शनः ॥ श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३ ॥
अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः ॥ अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४ ॥

---

तोदरी ॥ २८—२९ ॥ तां मदिरेक्षणां मदयति दर्पयतीति मदिरं तादृशमीक्षणं यस्यास्तां । मददर्पशोभनयोरित्यस्माद्धातोः "इषिमदि—" इत्यादिना किरच् प्रत्ययः । अत्रसार्धत्रिंशच्छ्लोकाः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

अथ खरक्रोधहेतुः शूर्पणखाविरूपकरणमष्टादशे। ततः तत्र पर्णशालायां । अथ शूर्पणखावचनानन्तरं । स्वेच्छया स्पष्टार्थया श्लक्ष्णया मृद्व्या। काम एव पाशः तेनावपाशितां संजातपाशां बद्धामित्यर्थः ॥ १ ॥ कृतदारः स्वीकृतभार्यः । करोतेरनेकार्थत्वात् । अस्मीत्यहमित्यस्मिन्नर्थे निपातः । भवतीति शूर्पणखायाः संबोधनं । इष्टत्वेन त्यक्तुमनर्हेत्याह—दयितेति । तर्हि "तुल्योनेकत्रदक्षिणः" इत्युक्तदक्षिणो भवेत्याशङ्क्याह—त्वद्विधानामिति । सुदुःखा सुतरां दुःखकरी । सपत्न्या सहिता ससपत्नी तस्या भावः ससपत्नता । "त्वतलोर्गुणवचनस्य" इति पुंवद्भावः । गुणत्वं चास्य न शुक्लतादिवत् किंतु कठिनत्वमित्यादिवद्द्रव्यत्वव्यावृत्तिः । अतः सपत्नीसाहित्यरूपगुणवचनत्वात्पुंवद्भावः ॥ २ ॥ अकृतदारः असहकृतदार इत्यर्थः । "न वितथापरिहासकथास्वपि" इत्युक्तेः "अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन" इत्युक्तेश्चाकृतदार इति नार्थः ॥ ३ ॥ पूर्वं भार्यासुखं ज्ञातमनेन पूर्वी "पूर्वादिनिः" इति इनिः । न पूर्वी

---

टीका० मदिरेक्षणां रक्तलोचनां ॥ ३० ॥ इतिसप्तदशस्सर्गः ॥ १७ ॥

ति० स्वेच्छयेतिपाठे परिहासविनोदेनेत्यर्थः । अतएवस्मितपूर्वमितितीर्थः । स्वच्छन्दामितिपाठोयुक्तः । स्वेच्छाचारिणीमित्यर्थः । स० स्वेच्छया स्वपतित्वापेक्षया ॥ १ ॥ ति० कृतदारः ऊढभार्यः । इयंभार्यामम दयिता संनिहिताचेतिशेषः । ससपत्नता सशत्रुता । पत्युर्भार्यान्तरंहिभार्यान्तरस्यशत्रुभूतंभवति । सपत्नीसाहित्यमितिवार्थः । अगुणवचनत्वेप्यार्षःपुंवद्भावः । सपत्नीशब्दश्चसपत्नप्रकृतिकोपिभर्तुर्द्वितीयभार्यायामेवरूढइतिध्येयं । शि० नन्वियंतुमयाभक्ष्यतइत्यतआह—**दयितेति** । अतिप्रिया । एतेन न भक्षणीयेतिसूचितं । ननुमयासहइयमपितिष्ठत्वित्यतआह—**त्वद्विधानामिति** ॥ २ ॥ ती० "गुरुणापि समंहास्यंकर्तव्यंकुटिलंविना" इतिन्यायेन भ्रातृविषयमपिपरिहासंप्रयोजयंत्रामोलक्ष्मणविषयत्वेनप्रवृत्त्याभासप्रत्यायकैस्तात्पर्येण निवृत्तिप्रतिपादकैश्श्लिष्टशब्दैरुत्तरमनुभाषते—**अनुजइत्यादिना** । ति० अकृतदारः अकृतपरदारपरिग्रहइति धातूनामनेकार्थत्वादसंनिहितदारइतिवाहृदिस्थोर्थः । नहिरामोमिथ्याब्रूते । परिहासादौमिथ्याभाषणे न दोषइत्यनेनसूच्यतइतिवयं ॥ ३ ॥ शि० अकृतदारः न कृताः वनेस्वीकृता दारायेनसः । अतएवापूर्वी पूर्वभार्याभाववान् अतएवभार्ययाऽर्थीप्रयोजनवांश्च

[ पा० ] १ अस्यार्धस्यवैपरीत्येनैकमर्धं ततोऽधिकमर्धद्वयंच क. ख. पाठयोर्दृश्यते. इत्येवमुक्त्वाकाकुत्स्थंप्रहस्यमदिरेक्षणा । देवीलक्ष्मणमध्येतुबभूवावस्थितापुनः । संप्रहासनिमित्तंतुरामःशूर्पणखांततःइति. २ क. ग. छ. ज. ञ. मदिरेक्षणः. ३ क. ग. ङ. च. ज.—ट. तांतु. ४ क. शूर्पनखीं. ५ क. ख. ङ.—ट. स्वेच्छया. ६ च. ज. ट. सुदुःखाच. ख. सुदुःखाहि. ७ ख. च. ज. अपूर्वभार्यया. घ. अपूर्वभावोभार्यार्थी. च. शीलवान्प्रिय. ८ घ. रूपस्यच.

एनं भज विशालाक्षि भर्तारं भ्रातरं मम ॥ असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥ ५ ॥
इति रामेण सा[1] प्रोक्ता राक्षसी काममोहिता ॥ विसृज्य रामं[2] सहसा ततो लक्ष्मणमब्रवीत् ॥ ६ ॥
अस्य रूपस्य ते युक्ता भार्याऽहं वरवर्णिनी ॥ मया सह सुखं सर्वान्दण्डकान्विचरिष्यसि ॥ ७ ॥
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ॥ ततः शूर्पनखीं[3] स्मित्वा लक्ष्मणो युक्तमब्रवीत्[4] ॥८॥
कथं दासस्य मे दासी भार्या भवितुमिच्छसि ॥ सोहमार्येण परवान्भ्रात्रा कमलवर्णिनि ॥ ९ ॥
समृद्धार्थस्य सिद्धार्था मुदितामलवर्णिनी[5] ॥ आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १० ॥
एनां[6] विरूपामसतीं करालां निर्णतोदरीम् ॥ भार्यां[7] वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११ ॥
को हि रूपमिदं श्रेष्ठं संत्यज्य वरवर्णिनि ॥ मानुषीषु वरारोहे कुर्याद्भावं[8] विचक्षणः ॥ १२ ॥
इति सा लक्ष्मणेनोक्ता कराला[9] निर्णतोदरी ॥ मन्यते तद्वचस्तथ्यं[10] परिहासाविचक्षणा ॥ १३ ॥
सा रामं पर्णशालायामुपविष्टं परंतपम् ॥ सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥ १४ ॥

---

अपूर्वी चिरादज्ञातभार्यासुख इत्यर्थः । अतएव भार्यया अर्थी प्रयोजनवान् । इदं वचनद्वयं स्वभार्याविषयकान्तराशयेन प्रयुक्तं । अनुरूपश्च ते भर्तेत्यत्र अभर्तेति च्छेदेनान्तराशयः । रूपस्यास्य कुत्सितस्य रूपस्येत्यर्थः ॥ ४ ॥ विशालाक्षी वर्तुलतया विशालाक्षीत्वमपि गम्यते । अर्कप्रभा मेरुं यथा भजति तथेत्यन्वयः । अर्कप्रभा मेरुं प्राप्य यथा निवर्तते तथेत्यप्यर्थः । एवं रामो दयालुतया स्वस्मिन्काममोहेन प्राप्तायाः स्त्रियाः सहसा धिक्कारेण दुःखं मा भूदिति परिहासकथां प्रवर्तयामास ॥५—७॥ शूर्प इव नखो यस्याः सा शूर्पनखी संज्ञाया अविवक्षितत्वात् "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् । असंज्ञात्वादेव "पूर्वपदात्संज्ञायां—" इति णत्वाभावः ॥ ८ ॥ दासस्य मे भार्या भूत्वा कथं दासी भवितुमिच्छसि । कस्य दासस्त्वमित्यत्राह—सोहमिति । अहमार्येण ज्येष्ठेनभ्रात्रा । परवान् नाथवान् । "दूरानात्मोत्तमाःपराः" इत्यमरः । तस्य दासोहमित्यर्थः । अकमलवर्णिनीत्यपि च्छेदः ॥ ९ ॥ सिद्धार्था सिद्धनिवृत्तिः । "अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । अमुदिता मलवर्णिनीत्यपि । यवीयसी कनिष्ठा हीना च ॥ १० ॥ सीतायां विद्यमानायां कथं मां परिग्रहीष्यसीत्यत्राह—एनामिति । एतादृशावस्थां त्वामेव परित्यज्य सीतां भजिष्यतीति हार्दोर्थः । असतीं अप्रशस्तामिति सीतापक्षे । अतो नपुरः स्फूर्तिकदोषः । करालां दन्तुरां । निर्णतं निरतिशयं उदरं यस्यास्तां ॥ ११ ॥ कोहीति । विपरीतलक्षणा ॥ १२ ॥ परिहासाविचक्षणा परिहासानभिज्ञा ॥ १३ ॥ पर्णशालायामित्यनेन लक्ष्मणो बहिरेव स्थित इति गम्यते

---

यदिभविष्यतितदाभर्ताभविष्यति । भविष्यतीत्यावर्तते ॥ **ती०** अपूर्वभार्ययाचार्थीतिपाठेअयमर्थः । अपूर्वा नूतना या भार्या तामेवार्थयतीति साच त्वमेवभविष्यसीतिपरिहासानुकूलःप्रातीतिकोर्थः । अन्तराशयस्तु अकृतदारः अकृतपरदारपरिग्रहः असंनिहितभार्योवा । अपूर्वभार्यया प्रथमभार्ययैवार्थी चरितार्थः । शीलवान् एकपत्नीव्रतशीलः । प्रियदर्शनः प्रियेषुमित्रेषुदर्शनंदृष्टिर्यस्य सतथोक्तः । तेअभर्तेतिछेदः । अनुरूपः स्वभार्यानुरूपइतियावत् । अस्यरूपस्य योग्यइतिशेषः । भविष्यति काक्कादरेणनभविष्यतीत्यर्थः । यद्वा अस्यरूपस्यानुरूपोभविष्यतीतिकाकुः ॥ ४ ॥ **ती०** भर्तारं मद्दास्यकर्मणाऽस्मत्पोषकमित्यन्तराशयः ॥ ५ ॥ **स०** सहसेत्यव्ययं प्रथमैकवचनंच । बलात्कारेण हसेनहासेनसहितेतिचार्थः ॥ ६ ॥ **स०** आर्येणपरवान् आर्याभिन्नपरवान् कमलवर्णिनि कमलसदृशवर्णवति । पुण्डरीकवद्यशस्विनीतिवा । "वर्णोरूपयशोक्षरे" इतिविश्वः ॥ ९ ॥ **स०** अमलवर्णिनि शुद्धाक्षरालापे ॥ १० ॥ **ती०** वस्तुतस्तुविरूपां विशेषरूपां त्रिलोकसुन्दरीमित्यर्थः । असतीं नविद्यतेअन्यासतीयस्यास्तां । परमपतिव्रतेत्यर्थः । करालां उन्नतां । "करालोदन्तुरेतुङ्गेदारुणेपिचकथ्यते" इतिनिघण्टुः । निर्णतोदरीं निर्णतंनिम्नंउदरंयस्यास्सातां ।

[ **पा०** ] १ ख. सुप्रोक्ता. २ च. छ. ज. ञ. सहसारामं. ३ च. ज. शूर्पणखां. ४ क. ख. ग. वाक्यं घ. युक्तिं. ५ च. छ. ज. ञ. वरवर्णिनी. क. कामरूपिणी. ६ ङ. झ. ञ. ट. एतां. ७ क. ख. घ. वृद्धांभार्यां. ८ च. छ. ज. ञ. रतिंकुर्याद्विचक्षणः. ९ ख. च. छ. ज. कराली. १० ङ. झ. ट. तद्वचस्सत्यं. छ. ज. तद्वचःपथ्यं.

एनां विरूपामसतीं करालां निर्णतोदरीम् ॥ वृद्धां भार्यामवष्टभ्य मां न त्वं बहुमन्यसे ॥ १५ ॥
अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् ॥ त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६ ॥
इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा ॥ अभ्यधावत्सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७ ॥
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ॥ निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८ ॥
क्रूरैरनार्यैः सौमित्रे परिहासः कथंचन ॥ न कार्यः पश्य वैदेहीं कथंचित्सौम्य जीवतीम् ॥ १९ ॥
इमां विरूपामसतीमतिमत्तां महोदरीम् ॥ राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २० ॥
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पार्श्वतः ॥ उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ २१ ॥
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ॥ यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥ २२ ॥
सा विरूपा महाघोरा राक्षसी शोणितोक्षिता ॥ ननाद विविधान्नादान्यथा प्रावृषि तोयदः ॥२३॥
सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना ॥ प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४ ॥

ततस्तु सा राक्षससंघसंवृतं खरं जनस्थानगतं विरूपिता ॥
उपेत्य तं भ्रातरमुग्रदर्शनं पपात भूमौ गगनाद्यथाऽशनिः ॥ २५ ॥
ततः सभार्यं भयमोहमूर्च्छिता सलक्ष्मणं राघवमागतं वनम् ॥
विरूपणं चात्मनि शोणितोक्षिता शशंस सर्वं भगिनी खरस्य सा ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

॥१४॥ अवष्टभ्य अवलम्ब्य ॥१५॥ पश्यतस्तव त्वयि पश्यति । निःसपत्ना निष्प्रतिबन्धिका ॥ १६ ॥ अलातसदृशेक्षणा निर्ज्वालकाष्ठाग्नितुल्येक्षणा । उल्का निर्गतज्वाला सा चोत्पातकालभाविनी प्रकृते विवक्षिता ॥ १७ ॥ निगृह्य हुंकारेण प्रतिषिध्य ॥ १८ ॥ अनार्यैः दुर्जनैः । कथंचिज्जीवतीं शूर्पणखायाः क्रौर्यमालोक्य कथंचित्स्वास्थ्यमापन्नां ॥ १९ ॥ पूर्वमेव विरूपां पुनर्विरूपयेति भावः । एतावत्पर्यन्तमपराधाभावात्तूष्णीं स्थितं अद्य सीताक्रमणव्याजेनेमां विरूपयेत्यर्थः ॥ २० ॥ तस्याः कर्णनासमित्यन्वयः । प्राण्यङ्गत्वादेकवद्भावः । रामे बद्धभावाया अपि शूर्पणखायास्तदीयापचारेण हानिर्जातेत्यनुसन्धेयं ॥२१॥ यथागतं आगतमार्गमनतिक्रम्य । वनं प्रदुद्रावेति संबन्धः ॥ २२ ॥ शोणितोक्षिता रक्तेन सिक्ता । नादान्ननाद नादांश्चकारेत्यर्थः । ओदनपाकं पचतीतिवत् । प्रावृषि वर्षाकाले ॥२३॥ विसरन्ती स्रवन्ती । रुधिरं रक्तं । प्रगृह्य उद्यम्य ॥ २४ ॥ तं रामवध्यत्वेन प्रसिद्धं । यथाऽशनिः अशनिरिव । गगनात् भूमौ पपात ॥ २५ ॥ उत्तरसर्गार्थमेकेन संगृह्णाति—ततः सभार्यमिति । भयजो मोहो भयमोहः निःसंज्ञता

---

तनुमध्यामित्यर्थः । वृद्धां ज्ञानशीलगुणवृद्धामित्यर्थः ॥ ११ ॥ **ति०** अनार्यैःपरिहासोनकथमपिकार्यइत्यत्रानुभवंप्रमाणयति । पश्यवैदेहींभक्षयितुमुद्युक्ता । अस्मत्कृतपरिहासदोषादितिशेषः । हेसौम्य कथंचिज्जीवतीमेवेत्युत्तरश्लोकान्वयि ॥ **कतक०** इदंपरिहासेनाप्यनृतवचनंसत्यनिष्ठस्यरामस्यसर्वानर्थमूलं । मूलाविद्यायांमायायांबीजावेशमूलंच ॥ १९ ॥ **टीका०** कर्णनासमित्युपलक्षणं । स्तनोष्ठमपीत्यर्थः । उक्तंचभारते " निकृत्तकर्णनासोष्ठांचकाररघुनन्दनः " इति । स्कान्देच " लक्ष्मणस्तूर्णमुत्थायकरवालेनवीर्यवान् । कर्णौस्तनौनासिकांचअच्छिनद्रामशासनात् " । **स०** कर्णनासेइतिपाठे छान्दसएकवद्भावाभावः । यद्वा कर्णश्च नासाचकर्णनासं । कर्णनासंचकर्णनासंचकर्णनासेइत्येकशेषाद्द्विवचनोपपत्तिः ॥२१॥ **ति०** अत्रेदंबोध्यं—दशवर्षगमनोत्तरंपुनस्सुतीक्ष्णाश्रमगमनंरामस्य । तत्रचवर्षाकालापगमपर्यन्तंस्थित्वाकिंचिच्छिष्टेएकादशेऽगस्त्याश्रमगमनं । ततोवर्षाकालारंभेपञ्चवट्यांवासः। "मयूरनादितारम्याः" इतितत्रोक्तेः । एवंवसतस्तस्यशरद्यपायेहेमन्तर्तुःप्रविष्टइत्युक्तेरत्रद्वादशवर्षपूर्तिः। "पञ्चमेपञ्चमेवर्षेद्वौद्वावधि-

**[ पा० ]** १ ख.—च. ज.—ट. इमां. २ ङ. झ. ट. नमांत्वं. च. छ. ञ. मांत्वंन. ३ ङ. निस्सपत्नी. ४ ङ. झ. ट. अभ्यगच्छत्. ५ ट. प्रगृह्य. ६ क.—ट. पश्यतः. ७ ङ. झ. ञ. ट. कर्णनासे. ८ ख. ग. घ. विकृत्त. ९ च. छ. ज. महानादा. १० ङ. झ. ट. सुप्रतेजसं.

# एकोनविंशः सर्गः ॥ १९ ॥

खरेण शूर्पणखांप्रतितद्वैरूप्यकारिजनप्रश्ने तयातंप्रति रामवृत्तान्तकथनपूर्वकंतच्चोदनयालक्ष्मणेनस्वस्यवैरूप्यकरणोक्तिः ॥ १ ॥ खरेण रामलक्ष्मणवधंचोदितैश्चतुर्दशभीराक्षसैः शूर्पणखयासह रामाश्रमाभिगमनम् ॥ २ ॥

तां [1]तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ॥ भगिनीं क्रोध[2]संतप्तः खरः पप्रच्छ राक्षसः ॥ १ ॥
उत्तिष्ठ तावदाख्याहि प्रमोहं जहि संभ्रमम् ॥ [3]व्यक्तमाख्याहि केन त्वमेवं[4]रूपा विरूपिता ॥ २ ॥
[5]कः कृष्णसर्पमासीनमाशीविषमनागसम् ॥ तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ॥ ३ ॥
[6]कः कालपाशमासज्य कण्ठे मोहान्न बुध्यते ॥ यस्त्वामद्य समासाद्य पीतवान्विषमुत्तमम् ॥ ४ ॥
बलविक्रमसंपन्ना कामगा कामरूपिणी ॥ इमामवस्थां नीता त्वं केनान्तकसमा [7]गता ॥ ५ ॥
देवगन्धर्वभूतानामृषीणां [8]च महात्मनाम् ॥ कोयमेवं वि[9]रूपां त्वां महावीर्यश्चकार ह ॥ ६ ॥
न हि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् ॥ [10]अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ७ ॥

---

तेन मूर्च्छिता व्याप्ता । राघवं वनमागतं शशंस आत्मविरूपणंच सर्वं शशंस समूलं शशंसेत्यर्थः । खरस्य भगिनी सपत्नीमातृपुत्रत्वान्मातृष्वसेयत्वाच्चेति पूर्वमुपपादितं ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

---

अथ खरवधमूलभूतः खरक्रोध उच्यते एकोनविंशे । भगिनीं ज्येष्ठां ॥ १ ॥ प्रमोहो विसंज्ञता । संभ्रमश्चित्ताप्रतिष्ठा । एवंरूपा यथा भवसि तथा विरूपितेत्यर्थः ॥ २ ॥ उत्तरकाल एवापकर्तुरनिष्टावाप्तिंसूचयन्पृच्छति—क इति । कृष्णेत्यमोघविषत्वव्यञ्जनाय । आसीनं निश्चलमित्यर्थः । आशिषि दंष्ट्रायां विषं यस्येति सर्पविशेषणं । पृषोदरादित्वात्सकारलोपः । “आशीरुरगदंष्ट्रायां प्रियवाक्याभिषङ्गयोः” इति निघण्टुः । ईकारान्तोप्याशीशब्दोस्ति । तुदति व्यथयति । अभिसमापन्नं आभिमुख्येनागतमिति शीघ्रप्रतीकारमूलं । अङ्गुल्यग्रेण लीलयेति प्रभावानभिज्ञत्वोक्तिः । अनेनस्वस्यलीलया सद्यःप्रतीकारसामर्थ्यं द्योतितं ॥ ३ ॥ पुनरपि स्वमहिमानं प्रकटयञ्शूर्पणखां चाश्वासयन्पृच्छति—कः कालेति । यः कण्ठे कालपाशं मृत्युपाशं । आसज्य आबध्य । न बुध्यते उत्तरक्षणे स्वमरणं न जानातीत्यर्थः । यश्च त्वां आसाद्य प्राप्य । उत्तमं विषं कालकूटं पीतवान् स क इत्यन्वयः । अत्र आसादनशब्देन विरूपकरणमुच्यते । त्वदासादनरूपं विषमित्यर्थः ॥ ४ ॥ अथ विस्मयेन पृच्छति—बलेति । इतो गता त्वं केनेमामवस्थां नीतेत्यन्वयः ॥ ५ ॥ देवेत्यादि । निर्धारणे षष्ठी । देवादीनां मध्ये । अयं एतादृशकार्यकर्ता कः एवं विरूपां चकार ॥ ६ ॥ स्वनिश्चयमाह—नहीति । अत्रतमित्यध्याहार्यं । तस्य

---

कमासकौ” इत्युक्तेर्मार्गशुक्लैकादश्यांत्रयोदशारंभः । अतएवपाद्मउक्तं—“ तत्र तु द्वादशाब्दानि रामस्य अतिचक्रमुः । कस्मिंश्चिदथ काले तु राक्षसी कामरूपिणी । तत्र शूर्पणखा भेजे राघवं रावणानुजा” इतिकेचित् । अन्येतु त्रयोदशेकिञ्चिदवशिष्टेशूर्पणखागमनं ततोमाघेसीताहरणमित्याहुः । भारतेयुधिष्ठिरवनवासस्याधिकमासंगृहीत्वाऽर्वागेवसमाप्तेः । “पञ्चमेपञ्चमेवर्षेद्वौमासावुपजायतः । एषामभ्यधिकामासाःपञ्चद्वादशक्षपाः । त्रयोदशानांवर्षाणामितिमेवर्ततेमतिः” इतिभीष्मेणोक्तत्वात्तद्रीत्याऽत्रापितथैवोचितमितिपूर्वव्याख्यैवयुक्तेतिममभाति । यत्तुतत्रत्रयोदशाब्दानिरामस्यअतिचक्रमुरितिपाद्मेपाठःक्वचित् तत्रापिप्रवेशमात्रेणतदतिक्रमव्यवहारः । यथान्येतु वादिनामर्धावस्थितौतद्व्यवहारइतिबोध्यं । प्रचुरस्तुद्वादशाब्दानीत्येवपाठः ॥ **टीका०** सर्गफलं—“ कर्णनासापहारंचश्रृण्वतांपठतामपि । नजातुमानभङ्गस्स्याद्रघुनाथप्रसादतः ।” इतिस्कान्दे ॥२६॥ इत्यष्टादशस्सर्गः ॥ १८ ॥

**ती०** बलंआत्मशक्तिः । विक्रमः पराभिभवनसामर्थ्यं ॥ ५ ॥ **ती०** अमरेष्विति । अत्रमहेन्द्रशब्दोविशेष्यं । पाकशासन.

**[ पा० ]** १ क. ख. ग. तदा. २ ग. क्रोधसंरक्तः. ख. कोपसंतप्तः. ३ व्यक्तमाख्याहीत्यर्धमारभ्यदेवगन्धर्वभूतानामित्यर्धपर्यन्तंविद्यमानानामष्टानामर्धानांपौर्वापर्यं च. छ. ज. ञ. पुस्तकेषु. यस्त्वामद्य. बलविक्रमसंपन्ना. इमामवस्थां. देवगन्धर्व. व्यक्तमाख्याहि. कःकृष्णसर्पं. तुदत्यभि. कःकालपाशं. एवंक्रमेणदृश्यते. ४ ङ. छ. रूपविरूपिता. ५ घ. कृतान्तसममापन्नं. ६ च. छ. ज. झ. ञ. ट. कालपाशंसमासज्य. ७ क. ख. घ. मता. ८ ख. सुमहात्मनां. ९ क—ट. महावीर्यस्त्वांविरूपां. १० क. ग. ङ—ट. अमरेषु.

अथाहं मार्गणैः प्राणानादास्ये जीवितान्तकैः ॥ सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८ ॥
निहतस्य मया संख्ये शरसंकृत्तमर्मणः ॥ सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ९ ॥
कस्य पत्ररथाः कायान्मांसमुत्कृत्य संगताः ॥ प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १० ॥
तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः ॥ मयापकृष्टं कृपणं शक्तास्त्रातुमिहाहवे ॥ ११ ॥
उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि ॥ येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ १२ ॥
इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः ॥ ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १३ ॥
तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ॥ पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥

गर्वविशेषद्योतनाय इन्द्रस्य विशेषणद्वयं ॥ ७ ॥ प्राणान् तस्येति शेषः । जीवितान्तकैः शत्रुजीवितविनाशकैः । मार्गणैः बाणैः । सारसः हंसविशेषः ॥ ८ ॥ संख्ये युद्धे । शरसंकृत्तमर्मणः बाणच्छिन्नमर्मस्थलस्य । सफेनं प्राणवायुनिर्गमनकालिकफेनसहितं । रक्तं रक्तवर्णं । अचिरप्रवृत्तत्वमनेनोच्यते । मेदिनी भूमिः ॥ ९ ॥ पत्ररथाः पक्षिणः । कायात् देहात् । उत्कृत्य उच्छिद्य । संगताः संघशः समवेताः ॥ १० ॥ मया आहवे अपकृष्टं आकृष्टं इहेति युद्धसन्निधानोक्तिः ॥ ११ ॥ उपलभ्य प्राप्य । दुर्विनीतेन दुर्जनेन । विक्रम्य शौर्यं कृत्वा ॥ १२ ॥ विशेषतः अतिशयेन । क्रुद्धस्य कृतक्रोधस्य ॥ १३ ॥ ननु व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपितेति पृच्छन्तं खरं प्रति "पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ" इत्येव

सहस्राक्षशब्दौविशेषणे । एतेषुषष्ठ्यर्थेद्वितीया । यथामहेन्द्रस्येतिदृष्टान्तः । पाकं पाकाख्यंवृत्रासुरभ्रातरं शासितवानितिपाकशासनः । अन्तरेणसहस्राक्षमितिपाठे महेन्द्रमन्तरेण इन्द्रंविना । कोममविप्रियंकुर्यात् तंनहिपश्यामीत्यन्वयः । **ति०** महेन्द्रमित्यस्यान्तरेणेतिशेषः । मनुष्यादीनांतुस्वाप्रियकरणेसंभावनैवनेतिभावः ॥ ७ ॥ **ति०** जीवितान्तगैः जीवितस्यान्तंगमयन्तिप्रापयन्तितैः । तृषयानिष्पिबन् सारसोहंसो यथा सलिलेआसक्तंक्षीरमादत्ते एवंप्राणानादास्यइत्यर्थः ॥ ८ ॥ **ती०** श्रीरामचन्द्रेदोषाणामभावाद्गुणोक्त्यैवतंबोधयति—**तरुणावित्यादि** ॥ **तनि०** एतत्पुत्रावेतन्नामकावितिवक्तव्ये सौन्दर्यवर्णनमस्यावैरूप्यप्राप्तावपिवैराग्योत्पत्त्यभावेन । काममोहितत्वादवशा भ्रातुस्संनिधाववाच्यमपिहृद्गतमेवाह ॥ विषयाभिनिवेशवन्तोह्यनुकूलप्रतिकूलविचारमन्तरेणप्रथमंमनसियल्लग्नंतदेवानुवदन्ति ॥ यद्वा "सर्वाणिरूपाणिविचित्यधीरःनामानिकृत्वा" इतिवत्प्रथमंरूपोदाहरणं । अथवा सुप्तमत्तकुपितानांभावज्ञानंदृष्टमितिकुपितत्वाद्भावज्ञानंप्रकाशितं । यद्वा एवंराक्षसावासवनप्रवेशविरूपकरणाभ्यां तौबलिष्ठावितिमाभैषीः किंतुमृदुप्रकृतिकावित्युच्यते । यद्वा "युवाकुमारं" इत्यादिवेदान्तसिद्धमर्थंराक्षस्याचष्टे । "व्यक्तमेषमहायोगी" इतिमन्दोदरीवत् परत्वंखल्वुमुक्तवेद्यं स्नेहस्तु दशरथादिभिःकार्यः तदविशेषेणराक्षस्या जातं ज्ञानंस्नेहश्चेत्युभयं रघुनन्दनसौन्दर्यवैलक्षण्यमहिम्नेतिज्ञेयं । ननुरूपसंपदाप्रथमंतरुणत्वादिविशेषणविशिष्टेश्रीरामेभावानुबन्धः । लक्ष्मणेतुविरूपकरणाद्द्वेषः । उभयोःप्राधान्येनग्रहणंकथमितिचेत्परस्परस्यसदृशावितितारुण्यादिसामान्याद्रामप्रत्याख्यानेलक्ष्मणेपिभावबन्धनात् रामेणापिकर्णनासच्छेदाभ्यनुज्ञानेनद्वेषसाम्याच्च नदोषः । ताभ्यामुभाभ्यामिमामवस्थांसंप्राप्तेतिवक्ष्यति । कथं युगपदेकस्याद्वयोर्भावबन्धो जातः। ज्येष्ठकनिष्ठभावानुसंधानेपिनतारुण्यवैषम्यं। तेनोभयत्रैकधा(दा)भावबन्धः तारुण्यैक्येपिरूपवैषम्ये अन्यथाभावबन्धस्यात्तच्चनेत्याह । **रूपसंपन्नौ** । लोके मन्मथादिभिःरूपापेक्षया यथाप्रार्थनीयौभवेतां तथा रूपसमृद्धौ एतदङ्गप्रत्यङ्गसौष्ठवलेशयाऽनयाखल्वुमदनोरूपवान् । "रूपदाक्षिण्यसंपन्नःप्रसूतः" इत्युक्तरीत्या उत्पत्तिसिद्धरूपसमृद्धौ नतुवयउपाचितरूपसमृद्धौ । "रामेतिरामेतिसदैवबुद्ध्याविचार्यवाचाब्रुवतीतमेव" इत्येतादृशातिव्यामोहजनकरूपसंपन्नौ । सुकुमारौ आलिङ्गनेकाठिन्यरहितावयवौ पुष्पसमुदायालिङ्गनवत् । अतएव शिरीषपुष्पसाम्यं । सौकुमार्यप्रयुक्तदौर्बल्यंपरिहरति—**महाबलाविति** । बलंमनुभवसामर्थ्यं । तेन "रामस्तुसीतयासार्धंविजहारबहूनृतून्" इत्युक्तरीत्याऽनवरतकान्तानुभवसंभवेपिबलहानिराहित्यमुक्तं । एतेन राक्षसजातिप्रयुक्तकठिनप्रकृतियुक्तायाः अपिस्वस्याःसमरतिप्रदानसामर्थ्यमभिप्रेतं । स्त्रीणांतुस्वानुभवविशेषैः पुरुषोजेतव्यइतिमनोरथः । तमतिक्रम्यस्वबलाधिक्येनक्रीडायांस्त्रियं यो जयति स महाबलः । पुण्डरीकविशालाक्षौ अवयवानांसौन्दर्यंसमीपगमनेसम्यक्प्रकाशते । नेत्रेतु दूरेस्फुटंप्रकाशते । यद्वा पुण्डरीकंसिताम्भोजं । अनेन सत्वगुणप्रचुरतयादृष्टिप्रसन्नतोच्यते नतुमहापुरुषलक्षणोपयुक्तरक्तान्तत्वं कनीनिकानैल्यंचनिवार्यते । अथवा मनुष्यावतारेणपरत्वगोपनेपि "कप्यासं पुण्डरीकाक्षं" इत्युक्तपुण्डरीकाक्षत्वंप्रकाशतएव । किंच क्षीरसमुद्रवन्नेत्रविशालत्वंगाम्भीर्यंकेनापिनिश्चेतुमशक्यं लोकरीत्यापुण्डरीकसाम्यमुक्तं । वस्तुतस्तु

[ पा० ] १ झ. जीवितान्तगैः. २ ङ. सफेनरुधिरं. ३ ङ. झ. ट. कस्य. ४ ङ. झ. ट. पातुमिच्छति. ५ ध. मुद्धृत्य. ६ ड—ट. त्रातुंमहाहवे. ७ च. ज. ञ. ततः. ८ क.—घ. निष्क्रम्य.

वक्तव्ये तरुणावित्यादिना रामादिसौन्दर्यादिकं किमर्थं कथयतीति चेत् अस्या वैरूप्ये जातेपि वैराग्याजननात्काममोहातिशयेन भ्रात्रादिसन्निधानेपि हृद्गतमेवोक्तवती । अनुकूलानां प्रतिकूलानां च रामं दृष्टवतामयमेव स्वभावः । अतएव "यानि रामस्य चिह्नानि" इति पृष्टवतीं सीतां प्रति "त्रिस्थिरस्त्रिप्रलम्बश्च" इति वक्तव्ये "रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः" इत्येवमाह हनुमान् । यद्वा । "सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टं" इति न्यायेन कर्णनासाच्छेदेनप्रमत्ता कुपिता च शूर्पणखा हृद्गतमेवाह । तरुणौ कामिनीनां प्रथमाकर्षकं वय एव हि अतस्तदुच्यते । परस्परपरिहासकरणेनोभयत्र भावबन्धाविशेषाद्द्विवचनं । वयसातुल्यत्वेपि रूपेकिमनयोस्तारतम्यमस्ति नेत्याह—रूपसंपन्नौ । रूपं सौन्दर्यं तेन संपन्नौ समृद्धौ । इतरेषां कामादीनां रूपमाभ्यां भिक्षित्वा संपादयितव्यमिति मन्यमानावित्यर्थः । यद्वा रूपसंपन्नौ संपन्नरूपौ । आहिताग्न्यादित्वात्परनिपातः । तेन "उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति" इतिन्यायं विहाय "रूपदाक्षिण्यसंपन्नः प्रसूतः" इत्युक्तरीत्या धर्मिणा सहैवोत्पन्नरूपावित्यर्थः । वयोरूपसत्त्वेपि किं कठिनस्पर्शौ नेत्याह—सुकुमारौ । परुषतरभवच्छरीरवन्नभवत्यनयोश्शरीरं किंतुपुष्पहाससुकुमारौ । एवं सौकुमार्यसत्त्वेपि रतिवैयात्ये किं श्रान्तौ स्यातां नेत्याह—महाबलौ । "रामस्तु सीतया सार्धं विजहार बहूनृतून्" इत्याद्युक्तरीत्याऽनेकर्तुषु विहरणेपि श्रमलवरहितौ । एवं समुदायशोभासंपन्नत्वेपि किमवयवशोभासु वैकल्यं नेत्याह—पुण्डरीकविशालाक्षौ । "संरक्तनयनाघोरा" इत्युक्तरीत्या त्वादृशनयनवन्न भवति तन्नयनमित्यर्थः । पुण्डरीकं सिताम्भोजं । तमोगुणोद्रेकेण निद्राकषायितत्वं रजोगुणोद्रेकेण संरक्तत्वं वा नास्ति । किंतु सर्वदा सत्त्वप्रसन्ननयनावित्यर्थः । न केवलमेवावयवशोभातिशयः चीरकृष्णाजिनाम्बरौ "किमिव हि मधुराणां मण्डनं नाकृतीनां" इत्युक्तरीत्या वल्कलाजिनधारणेप्यतिरमणी-

"अदीर्घमप्रेमदुघं" इत्याद्युक्तरीत्याऽनुपममेव । अपिच बद्धमुक्तनित्यात्मकत्रिविधकोव्युभयविभूतिमेकप्रत्यत्नेनकटाक्षयितुं विशालत्वं । महाबलौ पुण्डरीकाक्षाविति बलंप्रदर्श्य भयंजनयित्वा "जितंतेपुण्डरीकाक्ष" इतिस्तुतिप्रसन्ननेत्रतांप्रकाशयति । सुकुमारौ पुण्डरीकविशालाक्षाविति नयनपुष्पबाणवत्त्वमुक्तं अरविन्दस्यमदनबाणत्वात् । तेनशूर्पणखामनोदारकत्वंव्यज्यते । चीरकृष्णाजिनांबरौ आभरणरहितावेव मां मन्मथपीडितां कुलाव्यथयतः । "इयमधिकमनोज्ञावल्कलेनापि"—इत्युक्तंहि कालिदासेन । अतश्चीरकृष्णाजिनधारणेन तयोस्सौन्दर्यं न्यूनतांनैति । किंतु तत्तारुण्यादिगुणसमुदायरञ्जितमिदंचीरं रामशरीरसंनिकर्षेणसर्वस्यापिहृदयाकर्षकंसत् "रूपंसंहननंलक्ष्मींसौकुमार्यंसुवेषताम् । ददृशुर्विस्मिताकारारामस्यवनवासिनः" इति स्वरूपध्यानपराणामिदमेव हृदयग्राहकंभवति । द्वितीययोजनायां तरुणौ "ऊनषोडशवर्षः नयुद्धयोग्यतामस्यपश्यामि" इत्याद्युक्तरीत्या युद्धायोग्यौ । यद्वा विषयप्रवणौ नतुयुद्धप्रवणौ । रूपसंपन्नौ "कन्याकामयतेरूपं" इतिरूपेण वनिताजनानुरागजनकसौन्दर्यवन्तौ नतुपौरुषज्ञापकपराक्रमसंपन्नौ ॥ केवलमाकारसुन्दरौ नत्वन्तस्सारवन्तौ । अत्रहेतुः **सुकुमारौ** श्रीमत्कुमारतया श्रमासहनौ भवदीयरक्तलोचननिरीक्षणासहावत्युग्रभवदायुधनिपातंकथंसहेतां महाऽबलौ अत्यन्ताबलौ । स्त्रीनिमित्तंराज्यत्यागेनतयोर्बलंदृष्टमेव । यद्वा महतीरक्षणीया अबला ययोस्तौ । प्रतिबन्धकीभूताऽबलाचास्तीत्यर्थः । पुण्डरीकविशालाक्षौ भाविकार्यापरिज्ञानेन कर्णनासच्छेदःकृतः इतःपरंकिं भविष्यतीति भयेन निर्निमेषेणप्रफुल्लनेत्रौ दैन्येनशीतायमाननेत्रौवा स्वस्थानसामर्थ्येपि जलादपनीतपुण्डरीकवदन्यत्रासामर्थ्यंलोचनेनप्रकाशितं । स्वयमशक्तत्वेप्यैश्वर्यादिसंपत्तौप्रबलौ भवतः साचनेत्याह—**चीरकृष्णाजिनांबरौ ।** वस्त्राभावेन दारुचर्म मृगचर्मंच वसानौ । अतोद्रव्यसाध्यसेनासंपादनं कथमित्यर्थः । यद्वा आच्छादनमेकजातीयमपिन । किंतु स्थावरेणैकंदत्तं जङ्गमेनैकंदत्तमिति । तृतीययोजनायांतु तरुणौ "ऊनषोडशवर्षः—" इत्युक्तरीत्या अनतिबालावनतिवृद्धौच । यौवनेविजिगीषूणामितिवत् युद्धेनहस्तकण्डूनिरसनंकर्तुमिच्छन्तौ । रूपसंपन्नौ वीररसाभिव्यञ्जकसंहननविशेषौ । "सिंहोरस्कंमहाबाहुं" इतिवत् संनिवेशदर्शनेनशत्रवः पलायन्ते । रूप्यते अनेनेतिव्युत्पत्त्या रूपशब्दोसाधारणनिरतिशयरूपविशेषवाची "नाविजित्यनिवर्तते" इति "यशसश्चैकभाजनं" इतिचबाल्यादारभ्य सुबाहुप्रभृतिनिरसनेनैतावत्पर्यन्तंप्रसिद्धापदानौ । सुकुमारौ अनायासेनशत्रुनिरासकौ । पौरुषदर्शनेहृदयग्राहित्वव् रूपसौकुमार्ययोरपि हृदयग्राहित्वं । महाबलौ "सदेवगन्धर्वमनुष्यपन्नगंजगत्सशैलंपरिवर्तयाम्यहम् ।" "सागरमेखलां । महींदहतिकोपेन" इत्याद्युक्तरीत्याप्रसिद्धबलयुक्तौ । बलशब्देनबाहुबलंमनोबलमुपायबलंचोच्यते । पुण्डरीकविशालाक्षौ अतिसङ्कटवनसंचारेप्यम्लाननेत्रौ । एतेन युद्धेअश्रमावितिज्ञायते । युद्धादिकालेपि शत्रुष्वलक्ष्यबुद्ध्यानेत्रविकारादिरहितौ "प्रीतिविस्फुरितेक्षणं" इतिवत् शत्रुदर्शनेप्युत्तरोत्तरमुत्साहेनातिविस्तृतनेत्रौ । चीरकृष्णाजिनांबरौ सर्वदायुद्धसंनाहसूचकवस्त्रबन्धादियुक्तौ । यद्वा मृगयाशीलतया तदुचितकृष्णाजिनदारुपटकञ्चुकधरौ । "सत्येनलोकाञ्जयति" इत्युक्तरीत्या तदुचितवेषव्यापारवत्त्वंप्रसिद्धं । महाबलावित्यनेन खरोक्तवीरालापाननादृत्याजेयत्वंसमर्थितं ॥ १४ ॥

फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ॥ पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ॥ देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १६ ॥
तरुणी रूपसंपन्ना सर्वाभरणभूषिता ॥ दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७ ॥
ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् ॥ इमामवस्थां नीताऽहं यथाऽनाथाऽसती तथा ॥१८॥
तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् ॥ सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १९ ॥
एष मे प्रथमः कामः कृतस्तात त्वया भवेत् ॥ तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ २० ॥
इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् ॥ व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥२१॥

यौ । यद्वा कोयमेवं महावीर्य इति भीतं प्रति तयोर्दुर्बलत्वमुच्यते । तरुणौ ऊनषोडशवर्ष इत्याद्युक्तरीत्या युद्धायोग्यौ । यद्वा यौवने विषयैषिणामित्याद्युक्तरीत्या विषयप्रावण्येन युद्धभीतौ । रूपसंपन्नौ "कन्या कामयते रूपं" इत्युक्तरीत्या वनिताजनवशीकरणाय शरीरमुद्भासयन्तौ नपौरुषसंपन्नौ । सुकुमारौ श्रीमत्पुत्रतया संपत्कुमारौ । अतो भवदायुधप्रहारासहौ । महाबलौ विपरीतलक्षणया द्वावेतौ दुर्बलौ । ससैन्यस्य भवतो न पर्याप्ताविल्यर्थः । यद्वा सुकुमारतराबलासहितौ युद्धविरोधिकलत्रसहितत्वान्न युद्धार्हौ । पुण्डरीकविशालाक्षौ तयोर्युद्धासामर्थ्यं मद्वैरूप्यकरणानन्तरं किं भविष्यतीति भीत्या शुभ्रीभूतलोचनतया चावगम्यते । चीरकृष्णाजिनाम्बरौ परिधानसंपादनस्याप्यशक्तौ । तत्राप्येकरूपोत्तरीयरहितौ । चीरकृष्णाजिनाम्बरौ स्थावरतिर्यग्भ्यां याचित्वा लब्धे अम्बरे बिभ्राणौ । यद्वा खरस्य प्रोत्साहनाय तयोर्बलातिशय उच्यते—तरुणावित्यादि । तरुणौ जयोत्साहयोग्यवयस्कौ । रूपसंपन्नौ "सिंहोरस्कं महाबाहुं" इत्युक्तरीत्या युद्धाभावेपि दर्शनमात्रेण परहृदयकम्पजनकशरीरौ । सुकुमारौ लीलयैव सर्वसंहरणक्षमौ । महाबलौ मनोबलबाहुबलोपायबलसंपन्नौ । पुण्डरीकविशालाक्षौ वैरिषु गौरवबुद्धिमूलककालुष्यरहिततया विमलनेत्रौ । अनेन शत्रुदर्शनकृतक्षोभराहित्यमुच्यते । चीरकृष्णाजिनाम्बरौ सदा बद्धवसनतया युद्धसन्नद्धावित्यर्थः । एवमुत्तरत्रापि योज्यं ॥ १४—१५ ॥ पुनरपि हृदये परिवर्तमानं तत्सौन्दर्यमाह—गन्धर्वेति । देवाविति । यद्यपि दशरथसुताविति श्रुतं तथापि तत्प्रभावदर्शनेनतदसत्यमेवोक्तमिति मन्य इति भावः ॥ १६ ॥ तत्र आश्रमे ॥ १७ ॥ प्रमदां अधिकृत्य निमित्तीकृत्य । उभाभ्यां संभूय ऐकमत्यं प्राप्य इमामवस्थां नीतास्मि । यथा अनाथा असती कुलटा नीयते तथा नीतास्मीति योजना ॥ १८ ॥ अनृजुवृत्तायाः कुटिलवृत्तायाः । अनेन तत्प्रेरणेनैव मां तौ विरूपितवन्तावित्यमन्यतेति गम्यते । रणमूर्धनिहतयोरित्यन्वयः । सीताया रणमूर्धनि गमनासंभवाद्धताया इति विपरिणामो न युक्तः । अन्यथा अशक्यत्वाद्रणमूर्धनीत्युक्तं ॥ १९ ॥ अवश्यकर्तव्यत्वाय पुनरप्याह—एष इति । प्रथमः श्रेष्ठः । कामः अभिलाषः । "प्रथमौ प्रवरादिमौ" इतिवैजयन्ती । *ताततेति पितृवज्ज्येष्ठसंबोधनं ॥ २० ॥ चतुर्दशेति

**स०** भ्रातराविति खरदूषणयोस्संबोधनं । अतोनपुत्रावित्यादिनाऽर्थतःपुनरुक्तिः ॥ १५ ॥ **ती०** रुधिरंपातुमिच्छामीत्यनेन श्रीरामवर्णनेनस्वस्यकामुकीत्वशङ्कांखरस्यनिवर्तयतीतिज्ञेयं । तस्याहतायाइतिविपरिणामः । तस्याश्चानृजुवृत्तायाइत्यादिश्लोकद्वयस्यवास्तवार्थस्तु रणमूर्धनितयोःरामलक्ष्मणयोः । तृतीयार्थेषष्ठी । अनृजुवृत्तायाः तस्याः त्वद्भगिन्याः । ममेतिशेषः । हतयोः छिन्नयोः । द्वितीयार्थेषष्ठी । कर्णनासिके । पश्येतिशेषः । अतइतःपरमहं सफेनमपिरुधिरंपातुमिच्छामीतिकाकुः । नेच्छाम्येवेत्यर्थः । आहवेतयोस्त्वयंकृतोभवेद्यदि । अपकारइतिशेषः । छिन्नकर्णनासांमांदृष्ट्वाप्युपेक्षसेयदि तदा त्यक्ताहारा देहंत्यक्ष्यामीतिभावः ॥ २० ॥ **ती०** इतितस्यांब्रुवाणायामित्यारभ्य सर्गसमाप्तिपर्यन्तस्यवास्तवार्थस्तु—तस्यांब्रुवाणायां रामवृत्तान्तमितिशेषः । खरः—"तस्माद्यःक्रूररूपेणदेहेनहरताऽमृतम् । विष्णुर्दाशरथिर्भूत्वामोक्षयिष्यतिसुव्रत" इति शिवशापाद्राक्षसत्वंप्राप्तो याज्ञवल्क्यसुतश्चन्द्रकान्तइत्यर्थः । अतएव शूर्पणखामुखाद्रामवृत्तान्तश्रवणानन्तरं विष्णुत्वेनज्ञात्वा सपरिवारस्यस्वस्यरामहस्ताद्वधेच्छुस्सन्भगिनीप्रीतयइव रामेणसहयुद्धार्थंराक्षसान्व्यादिदेशेत्यर्थः । अस्मिन्नर्थेशेषधर्मेभीष्मयुधिष्ठिरसंवादकथाऽनुसंधेया ।

**[ पा० ]** १ घ. ङ. छ. ञ. मूलाशिनौ. २ ख. घ. दशरथस्येमौ. ३ ङ. झ. ट. दानवावेतौ. ४ क. ख. श्चानतवृत्तायाः. ५ ङ. ज. झ. ञ. स्तत्र.

मानुषौ शस्त्रसंपन्नौ चीरकृष्णाजिनाम्बरौ ॥ प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ २२ ॥
तौ हत्वा तां च दुर्वृत्ता[1]मपावर्तितुमर्हथ ॥ इयं च [2]रुधिरं तेषां भगिनी मम पास्यति ॥ २३ ॥
मनोरथोयमिष्टोस्या भगिन्या मम राक्षसाः ॥ शीघ्रं संपाद्यतां [3]तौ च प्रमथ्य स्वेन तेजसा ॥२४॥
[ [4]युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे ॥ इयं प्रहृष्टा मुदिता रुधिरं [5]युधि पास्यति ] ॥ २५ ॥
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश ॥ तत्र जग्मुस्तया सार्धं घना वातेरिता यथा ॥ २६ ॥
ततस्तु [6]ते तं समुदग्रतेजसं [7]तथापि तीक्ष्णप्रदरा निशाचराः ॥
न शेकुरेनं सहसा प्रमर्दितुं [8]वनद्विपा दीप्त[9]मिवाग्निमुत्थितम् ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ॥ २० ॥

रामेण शूर्पणखासहागतराक्षसावलोकनेन सीतारक्षणे लक्ष्मणनियोजनपूर्वकंरणायनिर्गमनम् ॥ १ ॥ तथा स्वेनस्ववृत्तान्तनिवेदनपूर्वकं सामोक्तौपरुषोक्तावप्यपरावर्तनेनसमरोद्यतानांरक्षसां हननम् ॥ २ ॥ शूर्पणखया खरसमीपमेत्य चतुर्दशराक्षसक्षयनिवेदनम् ॥ ३ ॥

ततः शूर्पणखा घोरा राघवाश्रम[10]मागता ॥ [11]रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १ ॥
ते रामं पर्णशालायामुपविष्टं महाबलम् ॥ ददृशुः सीतया सार्धं वैदेह्या[12] लक्ष्मणेन च ॥ २ ॥
[13]तान्दृष्ट्वा राघवः श्रीमा[14]नागतां तां च राक्षसीम् ॥ अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३ ॥
मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः ॥ इमानस्या वधिष्यामि पदवी[15]मागतानिह ॥ ४ ॥

चतुर्दशसहस्राध्यक्षानित्यर्थः ॥ २१—२२ ॥ दुर्वृत्तां भगिनीवैरूप्यमूलत्वात् । अपावर्तितुं आनेतुं । तां चेतिचकारेण तावपीत्युच्यते । आनयनप्रयोजनमाह—इयं चेति ॥ २३ ॥ अस्या अयं मनोरथः मम चायमिष्टः संमत इत्यर्थः । प्रमथ्य हत्वा ॥ २४—२५ ॥ इतीति । तयोर्मार्गं प्रदर्शयन्त्येति शेषः । इयं खरेणाप्रेरितापि गतेति बोध्यं ॥ २६ ॥ प्रदराः बाणाः । "प्रदरा भङ्गनारीरुग्बाणाः" इत्यमरः । तथा तीक्ष्णप्रदरा अपीति योज्यं । तमेनमित्यन्वयः । उत्थितं राक्षसान् दृष्ट्वा अभिमुखमुद्गतमिति रामविशेषणं । उत्तरसर्गसंग्रहोयं श्लोकः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

---

अथ चतुर्दशराक्षसवधो विंशे । ततः शूर्पणखेत्यादि ॥ १—३ ॥ प्रत्यनन्तरः प्रत्यासन्नः रक्षक इति

" भीष्मउवाच । याज्ञवल्क्यसुता राजंस्त्रयोवैलोकविश्रुताः । चन्द्रकान्तमहामेधविजयाब्राह्मणोत्तमाः । खरश्चदूषणश्चेतित्रिशिरा ब्रह्मवित्तमाः । आसंस्तेषांचशिष्याश्च चतुर्दशसहस्रधा " इति । अतएव बाह्यदृष्ट्यापरुषोक्तिवत्प्रतीयमानानि तस्यवाक्यानिसौम्यरूपाण्येव तथाव्याख्यास्यामः ॥ २१ ॥ **स०** रुधिरंममपास्यतीत्यन्वयेन खरमरणमसूचयत्कविरितिज्ञेयं ॥ **ती०** वस्तुतस्तु हेराक्षसाः इयंभगिनी प्रमथ्यममरुधिरंपास्यति । अतस्तेषांसमीपंगत्वा स्वतेजसाशीघ्रेणतौरामलक्ष्मणौ । दुर्वृत्तां दुर्लभंवृत्तंआचारोयस्यास्तांसीतांच हत्वा ज्ञात्वा । "हन हिंसागत्योः" इतिधातोर्गत्यर्थस्यज्ञानार्थत्वात् । अपावर्तितुं प्रतिनिवर्तितुमर्हथ । अयंमम भगिन्याः इष्टोमनोरथः ॥ २३ ॥ इत्येकोनविंशस्सर्गः ॥ १९ ॥

**ति०** सहसीतया वर्तमानावितिशेषः ॥ १ ॥

**[ पा० ]** १ क.—ट. मुपावर्तितुं. २ ख. ङ.—ट. भगिनीतेषांरुधिरं. ३ क.—ट. गत्वातौप्रमथ्यस्वतेजसा. ४ क. ख. ङ. झ. ट. पुस्तकेष्वयंश्लोकोदृश्यते. ५ क. भूरि. अयं पाठः झ. ट. पाठयोर्नदृश्यते. ६ च. छ. ज. तेराघवमुग्रतेजसं. ७ च. छ. ज. तथासुतीक्ष्णप्रदराश्चराक्षसाः. घ. दुरासदंधर्षयितुंनचाशकन्वनद्विपादीप्तमिवाग्निमुद्धतं. ८ क. च. ज. वनेद्विपाः. ९ छ. दीप्तदवाग्नि. १० क. ग. घ. माश्रिता. ११ ङ. झ. ट. राक्षसानाचचक्षे. १२ ङ.–ट. लक्ष्मणेनापिसेवितं. १३ झ. ट. तांदृष्ट्वा. १४ ख. ङ. झ. ट. नागतांस्तांश्चरक्षसान्. १५ ज. मागतानहं.

वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः ॥ तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५ ॥
राघवोपि महच्चापं चामीकरविभूषितम् ॥ चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ॥ प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७ ॥
फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ॥ वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८ ॥
युष्मान्पापात्मकान्हन्तुं विप्रकारान्महाहवे ॥ ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः ॥ ९ ॥
तिष्ठतैवात्र संतुष्टा नोपावर्तितुमर्हथ ॥ यदि प्राणैरिहार्थो वा निवर्तध्वं निशाचराः ॥ १० ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश ॥ ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ॥ ११ ॥
संरक्तनयना घोरा रामं संरक्तलोचनम् ॥ परुषं मधुराभाषं हृष्टा दृष्टपराक्रमम् ॥ १२ ॥
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ॥ त्वमेव हास्यसे प्राणानद्यास्माभिर्हतो युधि ॥ १३ ॥
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ॥ अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ ॥
एहि बाहुप्रयुक्तैर्नः परिघैः शूलपट्टिशैः ॥ प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १५ ॥
इत्येवमुक्त्वा संक्रुद्धा राक्षसास्ते चतुर्दश ॥ [ उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः ॥ ]
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ॥ १६ ॥

---

यावत् । अस्याः पदवीमागतानित्यन्वयः ॥ ४ ॥ प्रत्यपूजयत् परिपालितवान् ॥ ५ ॥ चामीकरं स्वर्णं ॥ ६ ॥ स्वस्य कपटवेषत्वं परिहरन्नाह—पुत्रावित्यादि । आवां किमर्थमुपहिंसथ ॥७—८॥ प्रत्युत युष्मानेवाहं हन्तुमागत इत्याह—युष्मानिति । विप्रकारान् हिंसकान् । भवतां प्रथमप्रवृत्तिमाकाङ्क्षन्स्थितोस्मीत्यर्थः ॥ ९ ॥ अत्रैव संतुष्टाः अभीता इति यावत् । तिष्ठत नोपावर्तितुमर्हथेति मा पलायध्वमित्यर्थः । यदि वा प्राणैः अर्थः प्रयोजनं प्राणापेक्षास्ति चेन्निवर्तध्वमित्यर्थः ॥ १० ॥ ब्रह्मघ्नाः ब्राह्मणघ्नाः ॥ ११—१३ ॥ शक्तिः बलं । " शक्तिर्बले प्रभावादौ " इतिविश्वः ॥ १४ ॥ परिघैः गदाभेदैः । पट्टिशैः असिभेदैः ॥१५॥ तानि

---

ति० अनपकारिणामस्माकंहिंसार्थया युष्मत्प्रवृत्त्या युष्मद्वधार्थमस्मदपेक्षितनिमित्तं संपन्नमित्याह—**युष्मानिति** । विप्रकारात् भवत्कृतपीडारूपान्निमित्ताज्जातनियोगेन युष्मान्हन्तुं सशरासनोऽहं संप्राप्तः संप्राप्तनिमित्तः । यद्वा विप्रकारानित्यर्शआद्यजन्तं । अस्मास्वस्मदीयेषुच वृथावैरवतोयुष्मानित्यर्थः ॥ ९ ॥ **ती०** हेसंदुष्टाः अतिदुष्टाः ॥ १० ॥ **शि०** संरक्तनयाः रामवचनश्रवणजनितकोपहेतुकारुण्यविशिष्टनेत्रवन्तः । संरक्तलोचनं स्वाभाविकारुण्यविशिष्टनयनविशिष्टं ॥ **ति०** अदृष्टपराक्रममितिच्छेदः संधिरार्षः ॥ १२ ॥ **ती०** क्रोधमुत्पाद्येत्यादिश्लोकत्रयस्यप्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु सुमहात्मनः सुमहानात्माशरीरंयस्यसः भर्तुराज्ञःखरस्य क्रोधमुत्पाद्य । तत्प्रेरितैरस्माभिरतितुच्छैःहतः ताडितोपित्वं प्राणान्नोहास्यस्येव । अत्रहेतुः **काहीति** । रणमूर्धन्येकस्यतेऽग्रतः स्थातुंबहूनामप्यस्माकंकाशक्तिः शक्तिर्नास्ति तदा किंपुनर्योद्धुमितियोजना । अतएव खरनिर्बन्धेनागतानामस्माकमित्यत्राप्याकृष्यते । परिघादिभिरुपलक्षितानामस्माकंप्राणान् । वीर्यमित्यादिजात्येकवचनं । वीर्यादिकंच त्यक्ष्यसि । गर्भितणिच् । त्याजयिष्यसि । नसंदेहः । अतएवहीतिसंबन्धः । इतःपरावृत्यगतानामस्माकंखरहस्तवधाद्वरं लब्धस्तेनवधइतिभावः ॥ १३—१५ ॥

**[ पा० ]** १ ख. ग. ज. मेततुतच्छ्रुत्वा. २ घ. ङ. झ. राघवस्यप्रपूजयन्. ३ ब्रह्मचारिणौ. ४ च. ज. ञ. पापात्मनो हन्तुं. ५ क. घ. च. छ. ज. ञ. न्महावने. ६ ङ.—ट. संप्राप्तः. ७ ङ. झ. ट. सशरासनः. ८ च. संदुष्टाः. ९ क. ङ.—ज. ञ. ट. नोपसर्पितुं. ख. ग. घ. नोपासर्पितुं. १० ख. ग. च.—ञ. चो. ११ ख. वचः. ग. वचनसंक्रुद्धाः. १२ क. ग. च. छ. ज. ञ. रक्तान्तलोचनं. १३ क. ख. ङ.—ट. पुरुषः. १४ ख. दृष्ट्वाधृष्ट. १५ क. प्राणानिहास्माभिः. ङ. झ. प्राणान्सद्योस्माभिः. च. छ. ज. ञ. प्राणान्नामास्माभिः. १६ क. ख. घ. ङ. च. ज.—ट. एभिः. १७ छ. ञ. बाहुविनिर्मुक्तैः. च. ज. बाहुविमुक्तैर्नः. ङ. झ. बाहुप्रत्युक्तैश्च. ख. बाहुप्रत्युक्तैस्तु. १८ क.—घ. पट्टसैः. १९ क. ङ. च. छ. झ. ञ. ट. संरब्धाः. ज. संरुद्धाः. २० क. ख. ङ.—ट. पाठेष्विदमर्धंदृश्यते. २१ ख. तावुभावभिदुद्रुवुः.

[1]तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ॥ तावद्भिरेव चिच्छेद शरैः[2] काञ्चनभूषणैः ॥ १७ ॥
ततः पश्चान्[3]महातेजा नाराचान्सूर्यसन्निभान् ॥ जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान्[4] ॥ १८ ॥
[5]गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान् ॥ मुमोच राघवो बाणान्वज्रानिव शतक्रतुः ॥ १९ ॥
रुक्मपुङ्खाश्च विशिखा दीप्ता[6] हेमविभूषिताः ॥ [ [7]अन्तरिक्षे महोल्कानां बभूवुस्तुल्यदर्शनाः ]॥२०॥
ते भित्त्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः[8] ॥ विनिष्पेतुस्तदा[9] भूमौ [10]न्यमज्जन्ताशनिस्वनाः ॥२१॥
[11]ते भिन्नहृदया भूमौ छिन्न[12]मूला इव द्रुमाः ॥ निपेतुः शोणिता[13]र्द्राङ्गा विकृता विगतासवः ॥२२॥
[14]तान्दृष्ट्वा पतितान्भूमौ [15]राक्षसी क्रोधमूर्छिता ॥ परित्रस्ता पुनस्तत्र व्यसृजद्भैरवस्वनान्[16] ॥ २३ ॥
सा नदन्ती पुन[17]र्नादं [18]जवाच्छूर्पणखा पुनः ॥ [ [19]जगाम तत्र संभ्रान्ता खरो यत्र महाबलः ]॥२४॥
उपगम्य खरं सा तु किंचित्संशुष्कशोणिता ॥ पपात पुनरेवार्ता सनिर्यासेव सल्लकी[20] ॥ २५ ॥
भ्रातुः समीपे शोकार्ता [21]ससर्ज निनदं [22]मुहुः ॥ [ [23]भूमौ शयाना दुःखार्ता लब्धसंज्ञा चिरात्पुनः ]॥
सस्वरं मुमुचे बाष्पं विषण्ण[24]वदना तदा ॥ २६ ॥

निपातितान्दृष्ट्वा[25] रणे तु राक्षसान्प्रधाविता शूर्पणखा पुन[26]स्ततः ॥
वधं च [27]तेषां निखिलेन रक्षसां शशंस सर्वं भगिनी खरस्य सा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे विंशः सर्गः ॥ २० ॥

---

शूलपाणय इति पूर्वमुक्तानि ॥ १६—१७ ॥ नाराचान् अफलकान्बाणान् । शिलाशितान् शिलास्वपि शितान् शिलानिर्भेदक्षमानित्यर्थः । शाणोपलसन्निघृष्टानित्यप्याहुः ॥ १८ ॥ लक्ष्यान् वेध्यान् । वज्रानित्यभूतोपमा ॥ १९—२० ॥ न्यमज्जन्त न्यमज्जन्तचेत्यर्थः ॥ २१ ॥ विकृताः विरूपाः । विगतासवः विगतप्राणाः ॥ २२ ॥ भैरवस्वनान् भयंकरशब्दान् ॥ २३ ॥ महानादं नदन्ती कुर्वन्तीत्यर्थः ॥ २४ ॥ निर्यासः क्षतप्रसृतवृक्षरसः । सल्लकीलताविशेषः ॥२५—२६॥ पुनः सर्गार्थं संक्षेपेणाह—निपातितानिति । दृश्य दृष्ट्वा । अस्मिन्सर्गे पञ्चविंशतिश्लोकाः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

---

स० खिलोदुर्बलोनभवतीत्यखिलः प्रबलोरामः । तेनवधं ॥ २७ ॥ इतिविंशस्सर्गः ॥ २० ॥

[ पा० ] १ तानिशूलानीतिश्लोकानन्तरं च. छ. ज. पुस्तकेषु. अभिपत्यततो वेगाच्चिक्षिपुस्तेनिशाचराः । परिघान्पट्टिशाशूलांश्चतुर्दश चतुर्दश ॥ तावद्भिरवच्चिच्छेदसमस्तान्सवरायुधान् । चतुर्दशभिरव्यग्रःशरैःकाञ्चनभूषणैः ॥ इतिश्लोकद्वयमधिकं दृश्यते. ञ. पुस्तकेतु. तानागतान्प्रचिच्छेदसमस्तान्सवरायुधान् । चतुर्दशभिरव्यग्रःशरैःकाञ्चनभूषितैः ॥ इत्येकःश्लोकोऽधिको दृश्यते. २ ख. कनकभूषणैः. ग. ङ. झ. ट. काञ्चनभूषितैः. ३ ङ. छ.—ञ. पश्यन्महातेजाः. ४ ख. ग. शराञ्शितान्. ५ च. ज. गृहितधनुरानम्य. ६ च. छ. ज. प्रदीप्ताहेमभूषणाः. क. ग. प्रदीप्ताहेमभूषिताः. ख. दीप्ताहेमपरिष्कृताः. ७ इदमर्धं क. ख. पाठयोर्दृश्यते. ८ ङ. जं. झ. ट. रुधिरप्लुताः. ९ क. विनिपेतुः. १० ङ.—ट. वल्मीकादिवपन्नगाः. ११ क. ख. ग. ञ. तैर्भिन्न. ङ. झ. ट. तैर्भग्न. १२ ङ. झ. भिन्नमूलाः. १३ ग. ङ. झ. ट. शोणितस्नाताः च. छ. ज. ञ. शोणिताक्ताङ्गाः. क. शोणितादिग्धाः. १४ च. छ. ज. ञ. राक्षसान्पतितान्दृष्ट्वा. क. ख. ग. ङ. झ. ट. तान्भूमौपतितान्दृष्ट्वा. १५ ख. घ. क्षणेनैवमहाबलान्. १६ ख. ग. स्वरान्. १७ क.—घ. च. छ. ज. ञ. महानादं. १८ छ. यथाशूर्पनखी. १९ इदमर्धं च. छ. ज. ञ. पाठेषुदृश्यते. २० ख. घ.—ट. वल्लरी. २१ ग. विसृज्य. २२ ङ.—झ. ट. महत्. २३ इदमर्धं क. च. छ. ज. ञ. पाठेषुदृश्यते. २४ ङ.—ट. विवर्णवदना. २५ क. घ.—ट. न्प्रेक्ष्य. २६ च. छ. ज. ञ. पुनःपुनः. २७ ठ. तेषामखिलेन.

# एकविंशः सर्गः ॥ २१ ॥

खरेणसरोदनंपुनरागतांशूर्पणखांप्रतिससान्त्वनंरोदनकारणप्रश्नः ॥ १ ॥ तयातंप्रतितत्प्रेषितरक्षसांरामेणहनननिवेदनपूर्वकं परुषभाषणैरणप्रोत्साहनम् ॥ २ ॥

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः ॥ उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥१॥
मया त्विदानीं शूरास्ते राक्षसा रुधिराशनाः ॥ त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥
भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः ॥ घ्नन्तोपि न निहन्तव्या न न कुर्युर्वचो मम ॥ ३ ॥
किमेतच्छ्रोतुमिच्छामि कारणं यत्कृते पुनः ॥ हा नाथेति विनर्दन्ती सर्पवल्लुठसि क्षितौ ॥ ४ ॥
अनाथवद्विलपसि नाथे तु मयि संस्थिते ॥ उत्तिष्ठोत्तिष्ठ मा भैषीर्वैक्लव्यं त्यज्यतामिह ॥ ५ ॥
इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता ॥ विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६ ॥
अस्मीदानीमहं प्राप्ता हृतश्रवणनासिका ॥ शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७ ॥
प्रेषिताश्च त्वया वीर राक्षसास्ते चतुर्दश ॥ निहन्तुं राघवं क्रोधान्मत्प्रियार्थं सलक्ष्मणम् ॥ ८ ॥
ते तु रामेण सामर्षाः शूलपट्टिशपाणयः ॥ समरे निहताः सर्वे सायकैर्मर्मभेदिभिः ॥ ९ ॥
तान्दृष्ट्वा पतितान्भूमौ क्षणेनैव महाबलान् ॥ रामस्य च महत्कर्म महांस्त्रासोऽभवन्मम ॥ १० ॥
अहमस्मि समुद्विग्ना विषण्णा च निशाचर ॥ शरणं त्वां पुनः प्राप्ता सर्वतोभयदर्शिनी ॥ ११ ॥
विषादनक्राध्युषिते परित्रासोर्मिमालिनि ॥ किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२ ॥
एते च निहता भूमौ रामेण निशितैः शरैः ॥ येऽपि मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः॥१३॥
मयि ते यद्यनुक्रोशो यदि रक्षस्सुतेषु च ॥ रामेण यदि ते शक्तिस्तेजो वाऽस्ति निशाचर ॥
दण्डकारण्यनिलयं जहि राक्षसकण्टकम् ॥ १४ ॥

---

अथ खरप्रोत्साहनमेकविंशे—स पुनरित्यादि । अनर्थार्थं सर्वराक्षसविनाशार्थं ॥ १—२ ॥ भक्ताः विश्वासभाजः । हिताः हितपराः । नकुर्युरिति न किंतु कुर्युरेवेत्यर्थः ॥ ३ ॥ किमेतदिति विस्मये । यत्कृते यस्यकृते । कृत इत्यव्ययं । यन्निमित्तं लुठसि तस्य कारणं श्रोतुमिच्छामीत्यन्वयः ॥४॥ विलपसीति किमिति शेषः । वैक्लव्यं कातर्यं । इह मत्समीपे ॥५॥ दुर्धर्षा दुःसाध्या ॥ ६ ॥ खरोक्तमङ्गीकरोति—अस्मीत्यादिना ॥ ७—१० ॥ समुद्विग्ना भीता । विषण्णा दुःखिता । सर्वतो भयदर्शिनी सर्वत्ररामप्रतिभासवतीति भावः ॥ ११ ॥ नक्रो ग्राहः ॥ १२ ॥ क्रोधभीतिभ्यां पूर्वोक्तं विस्मृत्य पुनराह—एते चेति ॥ १३ ॥ अनुक्रोशो दया । शक्तिरिति तुल्येति शेषः

---

**ति॰** यदितेशक्तिः योद्धुमितिशेषः । **ती॰** रामेणेत्यादिश्लोकचतुष्टयस्यप्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु—शूर्पणखारामंनजहीतिहितबुद्ध्याखरंनिवारयति—**रामेणेत्यादिना** । हेनिशाचर रामेण तेशक्तिः वीर्यंतेजोवास्तियदि । तथापिअमित्रघ्नंदण्ड-

**[ पा॰ ]** १ ख. तांपुनः. २ ङ. झ. ट. पुनः. ३ ख. गतास्त्विदानीं. ४ ख. ङ.—ट. पिशिताशनाः. ५ ख. मयोद्दिष्टाः. ६ ख. भीताश्च. ७ क. ख. ग. ङ.—ट. हन्यमानानहन्यन्ते. ८ घ. निहन्यन्ते. ९ क.—घ. सर्पवद्वेष्टसे. ङ. च. ज.—ट. सर्पवच्चेष्टसे. १० क.—घ. च. ट. किंतुनाथेमयिस्थिते. ङ. छ.—ञ. किंनुनाथेमयिस्थिते. ११ क.—घ. च. ज. ञ. माभैस्त्वं. ङ. झ. ट. मामैवं. १२ ङ.—ट. त्यज्यतामिति. १३ ग. सात्वेवं. १४ ख. विवृत्य. १५ ग. सास्ये. १६ ख. त्वयातु. १७ ख. प्रेषितास्ते. १८ क.—ट. शूराः. १९ ख. छ. ट. राक्षसाश्च. २० च.—ञ. घोरंमत्प्रियार्थं. ङ. ट. घोरामत्प्रियार्थं. २१ क. ख. ग. ङ. च. ज.–ट. तान्भूमौपतितान्दृष्ट्वा. २२ ङ.–ट. महाजवान्. २३ च. छ. ज. ञ. सास्मिभीताभयोद्विग्ना. क. ग. ङ. झ. ट. सास्मिभीतासमुद्विग्ना. २४ ख. विषण्णास्मि. २५ ख. प्रपन्नाहं. २६ च. छ. ज. ञ. विनिहता. २७ ख. घ. ङ. झ. येच. २८ च. ज. ञ. यदितेमय्यनु. २९ क. रामेवा. ३० ङ. झ. यदिशक्तिस्ते.

यदि [1]रामं मम[2]मित्रं न त्वमद्य वधिष्यसि ॥ [3]तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा ॥ १५ ॥
बुद्ध्या[4]ऽहमनुपश्यामि न त्वं रामस्य संयुगे ॥ स्थातुं प्रतिमुखे शक्तः [5]सबलश्च महात्मनः ॥ १६ ॥
[6]शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः ॥ [7]मानुषौ यौ न शक्नोषि [8]हन्तुं तौ रामलक्ष्मणौ ॥ १७ ॥
रामेण यदि ते शक्तिस्तेजो [9]वाऽस्ति निशाचर ॥ दण्डकारण्यनिलयं जहि [10]तं कुलपांसन ॥ १८ ॥
निःसत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ॥ अपयाहि जनस्थानात्त्वरितः सह[11]बान्धवः ॥
[ [12]जहि त्वं समरे मूढाऽन्यथा तु कुलपांसन ] ॥ १९ ॥
रामतेजोभिभूतो हि त्वं क्षिप्रं विनशिष्यसि ॥ २० ॥
स हि तेजःसमायुक्तो रामो दशरथात्मजः ॥ भ्राता चास्य महावीर्यो येन चास्मि विरूपिता ॥ २१ ॥
एवं विलप्य [13]बहुशो राक्षसी वि[14]ततोदरी ॥ भ्रातुः समीपे दुः[15]खार्ता नष्टसंज्ञा [16]बभूव ह ॥
कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

## द्वाविंशः सर्गः ॥ २२ ॥

खरेणशूर्पणखासमाश्वासनपूर्वकंदूषणंप्रतिसेनासंनाहनादिचोदना ॥ १ ॥ तथादूषणानायितरथाधिरोहणेनचतुर्दशसहस्रसंख्याकराक्षससेनयादूषणेनचसहरणायनिर्याणम् ॥ २ ॥

एवमाधर्षितः शूरः शूर्पनख्या खरस्[17]तदा ॥ उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥
तवावमानप्रभवः [18]क्रोधोऽयमतुलो मम ॥ न शक्यते धारयितुं लवणाम्भ इ[19]वोत्थितम् ॥ २ ॥

---

॥ १४ ॥ निरपत्रपा निर्लज्जा । हृतकर्णनासात्वादिति भावः ॥ १५ ॥ प्रतिमुखे अग्रे । सबलः ससैन्यः ॥१६॥ मिथ्येति मिथ्यावचोभिरित्यर्थः । आरोपितविक्रमः कल्पितपराक्रमः ॥ १७—१८ ॥ कीदृश इति अत्यन्तायोग्य इत्यर्थः ॥१९—२१॥ विततोदरी प्रहारार्थं विस्तृतोदरी। अत्र द्वाविंशतिःश्लोकाः ॥२२॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

---

अथ खरस्य युद्धोद्योगो द्वाविंशे। आधर्षितः अवमानितः। खरः दारुणः। खरतरं परुषतरं ॥१॥ लवणा-

---

कारण्यनिलयं । रामंत्वंनजहि मावधीः । यदिहनिष्यसि तर्हि तवाग्रतोहंप्राणांस्त्यक्ष्यामीतिसंबन्धः । विचार्यमाणेतयोर्हननेतवशक्तिरपिनास्तीत्याह—**बुद्ध्येति** ॥ १४—१७ ॥ इत्येकविंशस्सर्गः ॥ २१ ॥

**स०** अखरः स्वभावतोऽक्रूरः । याज्ञवल्क्यसुतत्वात् । यथोक्तंशान्तिपर्वणि " याज्ञवल्क्यसुताराजन्- " इत्यादि ॥ १ ॥ **ती०** आत्मनीत्यध्याहारः । आत्मनिकोपोधारयितुंनशक्यतइत्यन्वयः । लवणांभइवोल्बणं । व्रणइतिशेषः । व्रणेविक्षिप्तंलवणयुक्तमंभइव धारयितुंनशक्यतइत्यर्थः । उदितमितिपाठे उदितं न्यस्तं । **ति०** ममेतिमयेत्यर्थेसंबन्धेषष्ठी । **स०** क्रोधः यम-

**[ पा० ]** १ क. ग. ङ. छ. झ. ट. राममित्रघ्नं. २ च. छ. ज. ञ. मित्रमद्यत्वं. ३ च. छ. ज. ञ. तवाहमग्रतः. घ. तवैवचाग्रतः. ४ क. मनुशोचामि. ५ क. ग. च. छ. ज. सचापस्यमहारणे. ख. सचापस्यमहात्मनः. ङ. झ. ञ. ट. सबलोपिमहारणे. ६ शूरमानीत्यर्धादनन्तरं झ. पुस्तके. अपयाहि. जहित्वं. मानुषौतौ. निस्सत्वस्येत्यर्धानिएवंक्रमेणदृश्यन्ते. किंचरामेणयदितेशक्तिरितिपुनरपिदृश्यमानोऽष्टादशःश्लोकश्चनदृश्यते. ७ ङ. झ. ञ. मानुषौतौ. क. ग. मनुष्यौयौ. च. छ. ज. मनुष्यौयत्र. ८ ङ. झ. ञ. हन्तुंवै. क. ग. हन्तुंत्वं. ९ घ. वापि. १० ग. त्वं. ११ ख. च. छ. ज. ञ. बान्धवैः. १२ इदमर्धं झ. पुस्तके दृश्यते. १३ क. ग. बहुधा. १४ घ. च. छ. ज. ञ. प्रततोदरी. ङ. झ. ट. प्रदरोदरी. १५ क. ग. ङ.—ट. शोकार्ता. १६ क. ग. घ. च. छ. ज. बभूवसा. १७ क. ग. झ. ट. स्ततः. १८ क. कोपोयं. १९ ङ.—ट. इवोल्बणं.

न रामं गणये वीर्यान्मानुषं क्षीणजीवितम् ॥ आत्मदुश्चरितैः प्राणान्हतो योऽद्य विमोक्ष्यति ॥३॥
बाष्पः संह्रियतामेष संभ्रमश्च विमुच्यताम् ॥ अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४ ॥
परश्वधहतस्याद्य मन्दप्राणस्य संयुगे ॥ रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ॥ ५ ॥
सा प्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् ॥ प्रशशंस पुनर्मौर्ख्याद्भ्रातरं रक्षसां वरम् ॥ ६ ॥
तया परुषितः पूर्वं पुनरेव प्रशंसितः ॥ अब्रवीद्दूषणं नाम खरः सेनापतिं तदा ॥ ७ ॥
चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम् ॥ रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८ ॥
नीलजीमूतवर्णानां घोराणां क्रूरकर्मणाम् ॥ लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥ ९ ॥
तेषां शार्दूलदर्पाणां महास्यानां महौजसाम् ॥ सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय ॥ १० ॥
उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च ॥ शरांश्चित्रांश्च खड्गांश्च शक्तीश्च विविधाः शिताः ॥११॥
अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम् ॥ वधार्थं दुर्विनीतस्य रामस्य रणकोविदः ॥१२॥
इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् ॥ सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १३ ॥
तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् ॥ हेमचक्रमसंबाधं वैडूर्यमयकूबरम् ॥ १४ ॥

---

म्भः लवणसमुद्राम्भः । उत्थितं पर्वण्युल्बणं ॥२॥ यः आत्मदुश्चरितैरेव हतः सन् अद्य प्राणान्विमोक्ष्यति तं रामं न गणये ॥३॥ संह्रियतां निवर्त्यतां । सदनमेव सादनं ॥ ४ ॥ परश्वधः कुठारः । मन्दप्राणस्य अल्पप्राणस्य । औष्ण्यार्थमिदमुक्तं रक्तवर्णत्वार्थं च ॥ ५ ॥ मौर्ख्यात् अव्यवस्थितचित्ततया । पुनः प्रशशंस॥६॥ अमुमर्थं विशदयति—तयेति ॥ ७ ॥ चतुर्दशेत्यादिश्लोकत्रयमेकंवाक्यं । चतुर्दश सहस्राणि सन्तीति शेषः । घोराणां घोररूपाणां । लोकहिंसाविहाराणां जनवधैकलीलानां । महास्यानां विकृतमुखानामिति यावत् । उदीर्णानां गर्वितानां सर्वोद्योगं सर्वप्रकारैरुद्योगं सर्वायुधवाहनादिभिरुद्योगमित्यर्थः ॥८—१०॥ शक्तिः आयुधविशेषान् ॥ ११ ॥ पौलस्त्यानां पुलस्त्यवंश्यानां अग्रे रणकोविदोहं गन्तुमिच्छामीत्यन्वयः । रामस्य रणज्ञत्वात् पौलस्त्यानां वधार्थमिति दैवी वाक् भाविसूचनी ॥१२॥ शबलैः नानावर्णैः । "शबलैताश्च कर्बुरे" इत्यमरः । महारथं सदश्वैर्युक्तमाचचक्ष इत्यन्वयः ॥ १३ ॥ तप्तकाञ्चनं परिशुद्धकाञ्चनं । असंबाधं विस्तीर्णं । कूबरः युगंधरः ।

---

तुलः यमसदृशः । तद्वन्मारकत्वात् । अयमित्यपिच्छेदः ॥ २ ॥ **ती०** आत्मदुश्चरितैः विरूपकरणैः ॥ ३ ॥ **ती०** संभ्रमः भयं ॥ ४ ॥ **ति०** तवावमानप्रभवइत्यादिश्लोकचतुष्टयस्य वास्तवार्थस्तु—तवावमानप्रभवः त्वत्संबन्ध्यवमानोत्पन्नः मयित्वयाक्तावमानप्रभवइत्यर्थः । क्रोधः धारयितुंनशक्यते ॥ किंचमानुषंच । वीर्यात् मच्छौर्यात् । क्षीणजीवितं नगणये । तमहंजेतुंनशक्नोमीत्यर्थः । सरामएव । प्राणान् मदीयप्राणान् । मोक्ष्यति मोक्षयिष्यतीत्यर्थः । अतोहेदुर्भगे आत्मदुश्चरितैः स्वापचारव्यापारैः । अद्य अयः मच्छुभावहविधिः हतः । त्वन्निमित्तंममैश्वर्यंक्षीणजीवितंच नष्टमितिभावः । इतःपरंबाष्पस्संह्रियतां । संभ्रमश्चविमुच्यतां । अहंभ्रात्रासहारामंप्रतियामि । यमसादनंचयामि नसन्देहइत्यर्थः । परश्वधेति । ततः परं रामस्यपरश्वधहतस्य रामसंबन्धिपरश्वधेनहतस्य मन्दप्राणस्य भूतलेपतितस्य । ममेतिशेषः । हेराक्षसि रुधिरंपास्यसीतिसंबन्धः । **ति०** परश्वधहतस्येति । परश्वधस्तस्य मुख्यमायुधमित्यनेनज्ञायते । रक्तं रक्तवर्णमित्यर्थः ॥ ५ ॥ **ती०** तयेति । पुनश्शंसितत्वमेवसकलरक्षश्श्रेष्ठइत्यादि । **स०** परुषितः श्रावितनिष्ठुरवाक् । दूषितइतियावत् ॥ ७ ॥ **स०** पौलस्त्यानांमध्ये रणकोविदः ॥ १२ ॥

[ पा० ] १ ख. क्षणजीवितं. २ घ.—झ. ट. विमोक्ष्यते. ३ ङ. झ. ट. संधार्यतां. घ. संश्रियतां. ४ ख. हतस्यास्य. घ. हतस्याथ. ५ क. ख. ग. ङ. ट. भूतले. ६ क. च. छ. ज. काङ्क्षितं. ७ च. छ. ज. ञ. प्रहृष्टावचनं. ङ. झ. ट. संप्रहृष्टा. ८ अस्यश्लोकस्यप्रतिनिधितया, नीलजीमूतवर्णानांलोकहिंसाविहारिणां. इत्यर्धमेव ग. ङ. झ. ट. पुस्तकेषुदृश्यते. ९ क. ख. च. छ. ञ. कामरूपिणां. १० लोकहिंसाविहाराणां. तेषांशार्दूलदर्पाणां. इत्यनयोरर्धयोःपौर्वापर्यं च. छ. ज. ञ. पाठेषुदृश्यते. ११ ग. ङ. छ. ट. पुस्तकेष्विदमर्धंनदृश्यते. १२ ख. शार्दूलसत्वानां. १३ च. छ. ज. ञ. महात्मनां. १४ ग. रथांश्चचित्रान्खड्गांश्च. ख. ङ.—ट. शरांश्चचित्रान्खड्गांश्च. १५ च. छ. ञ. रणमूर्धनि. १६ ग. सबलैः.

मत्स्यैः पुष्पैर्द्रुमैः शैलै[1]श्चन्द्रसूर्यैश्च काञ्चनैः ॥ [2]मङ्गलैः पक्षिसङ्घैश्च [3]ताराभिरभिसंवृतम् ॥ १५ ॥
ध्वजनिस्त्रिंशसंपन्नं [4]किङ्किणीकविराजितम् ॥ सदश्वयुक्तं सो[5]मर्षादारुरोह [6]खरो रथम् ॥ १६ ॥
निशाम्य तु रथस्थं [7]तं राक्षसा भीमविक्रमाः ॥ [8]तस्थुः संपरिवार्यैनं दूषणं च महाबलम् ॥ १७ ॥
खरस्तु [9]तान्महेष्वासान्घोरवर्मायुधध्वजान् ॥ निर्यातेत्य[10]ब्रवीद्धृष्टो [11]रथस्थः सर्वराक्षसान् ॥ १८ ॥
[12]ततस्तद्राक्षसं सैन्यं घोर[13]वर्मायुधध्वजम् ॥ निर्जगाम जनस्थानान्महानादं महाजवम् ॥ १९ ॥
मुद्गरैः पट्टिशैः शूलैः [14]सुतीक्ष्णैश्च परश्वधैः ॥ [15]खड्गैश्चक्रैश्च हस्तस्थै[16]र्भ्राजमानैश्च तोमरैः ॥ २० ॥
शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः ॥ [17]गदासिमुसलैर्वज्रैर्गृहीतैर्भीम[18]दर्शनैः ॥ २१ ॥
राक्षसानां सुघोराणां सहस्राणि चतुर्दश ॥ निर्यातानि जनस्थानात्खरचित्तानुवर्तिनाम् ॥ २२ ॥
[19]तांस्त्वभिद्रवतो दृष्ट्वा राक्षसान्भीमवि[20]क्रमान् ॥ [21]खरस्यापि रथः किंचिज्जगाम तदनन्तरम् ॥२३॥
ततस्तान्शबलानश्वांस्तप्तकाञ्चन[22]भूषितान् ॥ खरस्य [23]मतिमाज्ञाय सारथिः समचोदयत् ॥ २४ ॥
[24]स चोदितो रथः शीघ्रं खरस्य रिपुघातिनः ॥ शब्देनापूरयामास [25]दिशश्च प्रदिशस्त[26]दा ॥ २५ ॥
प्रवृद्धमन्युस्तु खरः [27]खरस्वनो रिपोर्वधार्थं त्वरितो यथाऽन्तकः ॥
अचूचुदत्सारथि[28]मुन्नदन्घनं महाबलो मेघ इवाश्मवर्षवान् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

" कूबरस्तुयुगंधरः " इत्यमरः ॥ १४ ॥ मङ्गलैः मङ्गलावहैः अलंकारकरैरित्यर्थः । काञ्चनैः काञ्चनविकारैः । इदं विशेषणद्वयं मत्स्यादिसर्वविशेषणं। निस्त्रिंशः असिः ॥ १५—१८ ॥ राक्षसं राक्षससंबन्धि ॥ १९ ॥ मुद्गरः लोहमयगदा । पट्टिशः पट्टयमितिद्रमिडनामयुक्त आयुधविशेषः । तोमरः वल्लयमिति द्रमिडनामयुक्तः ॥ २० ॥ शक्तिः ईट्टीति द्रमिडनामकः । परिघः कुण्डान्तडीति द्रमिडनामा । अतिमात्रैः महद्भिः । वज्रैः अष्टास्रैरायुधैः ॥ २१—२२ ॥ किंचिज्जगाम सेनासंमर्दादिति भावः । खरानुज्ञाभावाद्वा ॥ २३ ॥ मतिं संमतिं यात्राभिप्रायमिति यावत् ॥ २४ ॥ शब्देन नेमिघोषेण । प्रदिशः विदिशः ॥ २५ ॥ महाबलः झञ्झामारुतः । "झञ्झावातो महाबलः " इति निघण्टुः । तद्वान् अर्शआद्यच् । झञ्झामारुतप्रेरित इत्यर्थः । महानिल इत्यपि पाठः । अश्मवर्षवान् अश्मवर्षोद्युक्त इत्यर्थः । घनं उपरितनमेघं ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

---

**ती०** अमर्षात् क्रोधादारुरोहेतिपराजयसूचनं । "क्रोधःकार्यविभङ्गाय" इतिशकुनशास्त्रे ॥ १६ ॥ **ति०** दूषणः दूषणश्चेत्यर्थः ॥ १८ ॥ **ति०** संचोदितइत्यादिश्लोकद्वयं कतकसंख्यारीत्याप्रक्षिप्तं ॥ २५ ॥ इतिद्वाविंशस्सर्गः ॥ २२ ॥

**[ पा० ]** १ ङ. झ. श्चन्द्रकान्तैश्च. २ क. घ. ङ. झ. ट. माङ्गल्यैः. छ. पक्षिसंघैश्चताराभीरामाभिश्चसमावृतं. ख. पुष्पसंघैश्चमाङ्गल्यैः. ३ ग. ङ. च. झ. ञ. ताराभिश्चसमावृतं. ४ च. छ. ज. ञ. किङ्किणीभिर्विभूषितं. झ. किङ्किणीवरभूषितं. ङ. ट. किङ्किणीरवभूषितं. क. ख. किङ्किणीजालभूषितं. ग. घ. किङ्किणीकविभूषितं. ५ ग. घ. च. छ. ज. ञ. ट. सामर्षात्, ६ क. च. छ. ज. ञ. ट. रथंखरः. ख. घ. ङ. झ. खरस्तदा. ७ ख. ते. ८ क. ग. च. छ. ज. ञ. तस्थुश्चपरिवार्यैनं. ९ ङ. ज. झ. तन्महत्सैन्यंरथचर्मायुधध्वजं. ट. तत्सैन्यंरथवर्मायुधध्वजं. क. तान्महाप्रासान्. १० ङ. झ. ट. त्यब्रवीत्प्रेक्ष्य. ख. घ. त्यब्रवीद्दृष्ट्वा. ११ क. सरथः. ङ. झ. ट. दूषणः. १२ च. छ. ज. ञ. ततस्तद्रक्षसां. घ. ततस्तुतन्महत्सैन्यं. १३ ङ. झ. ट. चर्मायुध. १४ ख. तीक्ष्णैश्चैव. १५ ख. चक्रैःखड्गैश्च. ङ. झ. ट. खड्गैश्चक्रैरथस्थैश्च. १६ क.—ट. भ्राजमानैस्स. १७ ङ. ज. झ. गदाभिर्मुसलैः. १८ क. ग. रुग्रदर्शनैः. १९ ङ. च. छ. झ. ञ. ट. तांस्तुनिर्धावतो. २० ङ. च. छ. झ. ञ. ट. भीमदर्शनान्. २१ ङ. झ. ट. खरस्याथ. २२ क. ख. ङ. च. छ. ञ. भूषणान्. २३ क.—ङ. छ. झ. ञ. ट. मतं. २४ झ. संचोदितः. २५ ङ. च. झ. ट. दिशस्सप्रदिशः. २६ क. ङ. च. छ. झ. ञ. ट. स्तथा. २७ ङ. झ. खरस्वरे. २८ क. ग. ङ.—ट. मुन्नदन्पुनः. ख. घ. मुन्नदन्भृशं.

## त्रयोविंशः सर्गः ॥ २३ ॥

खरेण रणप्रयाणसमयसमुद्भूतदुर्निमित्तनिरीक्षणेपि गर्वात्तदविगणनेनैव दूषणादिभिस्सहरणायनिर्याणम् ॥ १ ॥

तस्मिन्याते जनस्थानादशिवं शोणितोदकम् ॥ अभ्यवर्षन्[2]महामेघस्तुमुलो गर्दभारुणः ॥ १ ॥
निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः ॥ समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥
श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् ॥ अलातचक्रप्रतिमं परि[3]गृह्य दिवाकरम् ॥ ३ ॥
ततो ध्वजमुपागम्य हेम[4]दण्डं समुच्छ्रितम् ॥ समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४ ॥
जनस्थानस[5]मीपे तु [6]समागम्य [7]खरस्वनाः ॥ विस्वरा[8]न्विविधांश्चक्रुर्मांसादा मृगपक्षिणः ॥ ५ ॥
[9]व्याजह्रुश्च प्रदीप्तायां दिशि वै भैरवस्वनम् ॥ अशिवं यातुधानानां शिवा घोरा [10]महास्वनाः ॥ ६ ॥
प्र[11]भिन्नगिरिसंकाशास्तोयशोणितधारिणः ॥ आकाशं तदनाकाशं च[12]क्रुर्भीमा बलाहकाः ॥ ७ ॥
बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् ॥ दिशो वा विदिशो वाऽपि [13]न च व्यक्तं चकाशिरे ॥ ८ ॥
क्षतजार्द्रसवर्णाभा सन्ध्या कालं विना बभौ ॥ [14]खरस्याभिमुखा नेदुस्तदा घोर[15]मृगाः खगाः ॥ ९ ॥
कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः ॥ [ [16]चक्रिरे विस्वरान्घोरान्मांसादा वनगोचराः ] ॥ १० ॥
नि[17]त्याशुभकरा युद्धे शिवा घोरनिदर्शनाः ॥ नेदुर्बल[18]स्याभिमुखं ज्वालोद्गारिभिराननैः ॥ ११ ॥
[19]कबन्धः परिघाभासो दृश्यते भास्करान्तिके ॥ जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः ॥ १२ ॥

---

अथ युद्धाय प्रयातस्य खरस्य उत्पातवर्णनं त्रयोविंशे । अशिवं अशुभावहं । शोणितोदकं रक्तवर्णजलं । तुमुलः संकुलः । गर्दभारुणः गर्दभवद्धूसरः ॥१॥ निपेतुः स्खलिताः रथयुक्ताः रथे बद्धाः । पुष्पचिते पुष्पैः निबिडे । यदृच्छया दैवगत्या ॥ २ ॥ सूर्यपरिवेषमाह—श्याममिति । सर्वत्र श्यामं । पर्यन्ते प्रान्ते रुधिरं रुधिरवर्णं । अलातचक्रप्रतिममिति ह्रस्वत्वमुच्यते । परिवेषणं परिवेषः । परिगृह्य परितो व्याप्य ॥३॥ समुच्छ्रितं उन्नतं । ध्वजमुपागम्य समाक्रम्य परिक्रम्य तस्थौ ॥४॥ खरस्वनाः परुषस्वनाः । विस्वरान् विकृतस्वरान् । मांसमदन्तीति मांसादः ॥ ५ ॥ प्रदीप्तायां दिशि सूर्यसन्निहितदिशीत्यर्थः । शिवाः सृगालाः । घोराः ज्वालामुखाः ॥ ६ ॥ प्रभिन्नाः इन्द्रच्छिन्नपक्षाः । तोयशोणितधारिणः शोणिततोयधारिणः । परनिपातः । अनाकाशं अप्रकाशं छन्नमिति यावत् । बलाहकाः मेघाः ॥ ७ ॥ उद्धतं सान्द्रं ॥ ८ ॥ क्षतजार्द्रसवर्णाभा क्षतजेन रक्तेनार्द्रं संसिक्तं यत् पटादिकं तत्तुल्याभा । कालं विना स्वकालं विना । सन्ध्या बभौ मेघेष्विति शेषः । खरस्येति । पूर्वं सूर्याधिष्ठितदिशि शिवारुतमुक्तं । अधुना खरस्याभिमुखमुच्यते । घोरमृगाः श्वापदादयः । कङ्काः स्थूलकायाः भयंकराः मृतपशुनरादिभक्षणशीलाः पक्षिविशेषाः ॥ ९—१० ॥ सेनाभिमुखशिवारुतमाह—नित्येति । युद्धे नित्यमशुभकराः अशुभशंसिनः । घोरनिदर्शनाः घोरफलकनिदर्शनाः । शिवाः गोमायवः । "स्त्रियां शिवाभूरिमायगोमायुमृगधूर्तकाः" इत्यमरः । ज्वालामुद्गिरन्तीति ज्वालोद्गारीणि तैः आननैः उपलक्षणे तृतीया ॥ ११ ॥ परिघवत् परिघायुधव-

---

ति० तुमुलः तुमुलशब्दः । अभ्यवर्षत् मेघइतिशेषः ॥ १ ॥ ति० प्रभिन्नगजेतिपाठे मत्तगजेत्यर्थः । प्रभिन्नगिरीतिपाठे गैरिकादिधातुस्राविणइत्यर्थः ॥ ७ ॥ टीका० कङ्कः श्वेतगृध्रः ॥ १० ॥ ती० कबन्धः धूमकेतुः ॥ १२ ॥

[ पा० ] १ ङ—ट. तंप्रयातंबलंघोरमशिवं. घ. तंप्रयातंजनस्थानात्. ग. तंप्रयान्तंबलंघोरमशिवं. २ ङ. ज.—ट. महाघोरः. ३ क—ट. प्रतिगृह्य. ४ घ. दण्डसमुच्छ्रितं. ५ क. ग.—ट. समीपेच. ६ ङ.—ट. समाक्रम्य. ७ ख. ग. घ. खरस्वराः. ८ ङ. झ. ट. विविधान्नादान्मांसादाः. ९ ङ. झ. ट. व्याजह्रुरभिदीप्तायां. क. ख. व्याजह्रुरपिदीप्तास्यादीप्तायां दिशिभैरवं. १० ख. महास्वराः. ११ क. ख. ङ. झ. ट. प्रभिन्नगज. १२ घ. भीमवलाहकाः. ङ. झ. ट. भीमांबुवाहकाः. १३ च. ज. ञ. नव्यक्तंसंचकाशिरे. ङ. झ. ट. सुव्यक्तंनचकाशिरे. क. ग. नव्यक्तंप्रचकाशिरे. १४ ट. खरंचाभिमुखे. ङ. झ. खरंचाभिमुखं. ख. खरस्याभिमुखे. १५ क.—छ. झ. ञ. ट. घोरामृगाः. १६ इदमर्धं क. पुस्तकेदृश्यते. १७ क—ट. नित्याशिवकराः. १८ घ. च. छ. ज. ञ. बलस्याभिमुखा. १९ घ. च. ञ. कबन्धाःपरिघाभासोदृश्यन्ते.

[1]प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ॥ उत्पेतुश्च विना रात्रिं ताराः खद्योत[2]संप्रभाः ॥ १३ ॥
संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ॥ तस्मिन्क्षणे बभूवुश्च विना [3]पुष्पफलैर्द्रुमाः ॥ १४ ॥
उद्धूतश्च विना वातं रेणुर्जलधरारुणः ॥ [4]वीचीकूचीति [5]वाश्यन्त्यो बभूवुस्तत्र [6]शारिकाः ॥ १५ ॥
उल्काश्चापि [7]सनिर्घाता निपेतुर्घोरदर्शनाः ॥ प्रचचाल मही सर्वा सशैलवनकानना ॥ १६ ॥
खरस्य च रथस्थस्य नर्दमानस्य धीमतः ॥ प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत ॥ १७ ॥
[9]सास्रा संपद्यते दृष्टिः पश्यमानस्य सर्वतः ॥ ललाटे च रुजा जाता न च मोहान्न्यवर्तत ॥ १८ ॥
तान्समीक्ष्य महोत्पातान्[10]उत्थितान्रोमहर्षणान् ॥ अब्रवीद्राक्षसान्सर्वान्[11]प्रहसन्स खरस्तदा ॥ १९ ॥
महोत्पातानिमान्सर्वान्[12]उत्थितान्घोरदर्शनान् ॥ न चिन्तयाम्यहं वीर्याद्बलवान्दुर्बलानिव ॥ २० ॥
तारा अपि शरैस्तीक्ष्णैः [13]पातयामि नभःस्थलात् ॥ मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् ॥ २१ ॥
राघवं तं बलोत्सिक्तं भ्रातरं [14]चास्य लक्ष्मणम् ॥ अहत्वा सायकैस्तीक्ष्णैर्नोपावर्तितुमुत्सहे ॥ २२ ॥
[15]सकामा भगिनी मेऽस्तु [16]पीत्वा तु रुधिरं तयोः ॥ [17]यन्निमित्तस्तु [18]रामस्य लक्ष्मणस्य विपर्ययः ॥ २३ ॥

दाभासत इति परिघाभासः कबन्धः शिरःशून्यमनुष्यकायः । भास्करान्तिके सूर्यस्य समीपे । दृश्यते अदृश्यत । तथोक्तं कामन्दकीये । "सूर्यदृष्टकबन्धादिरकस्मान्मूढवाहनः" इति । कबन्धाकारमेघखण्ड इतियावत् । महानाग्रहो यस्य स महाग्रहः स्वर्भानुः राहुः । अपर्वणि प्रतिपद्दर्शसंधिः पर्व तस्मादन्यस्मिन्नपि काले सूर्यं जग्राह । तदाह वराहमिहिरः । "अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः" इति ॥ १२ ॥ प्रवाति प्रतिकूलो वाति । उत्पेतुः प्रचकाशिरे । खद्योतसप्रभाः ज्योतिरिङ्गणसमानकान्तयः ॥ १३ ॥ संलीनाः जलान्तरगताः । पुष्पफलैर्विना बभूवुः गलितपुष्पादिका बभूवुरित्यर्थः ॥ १४ ॥ उद्धूतः उत्क्षिप्तः । जलधरारुणः मेघवद्धूसरः । वीचीकूचीति शब्दनुकारः । वाश्यन्त्यः शब्दं कुर्वन्त्यः ॥ १५ ॥ उल्कानिर्घातौ ज्योतिर्वायुविशेषौ । अत्रवराहमिहिरः "उल्का शिरसि विशाला निपतन्ती वर्धते तनुप्रभया । पवनाभिहता गगनादवनौ च यदा समापतति ॥ भवति तदा निर्घातः स च पापो दीर्घखगविरुतः" इति ॥ १६ ॥ अवसज्जत अवासज्जत । गद्गदकण्ठतया प्रतिबद्धोभूदित्यर्थः ॥ १७ ॥ रुजा पीडा । "स्त्रीरुग्रुजाचोपतापरोगव्याधिगदामयाः" इत्यमरः । मोहात् अज्ञानात् । न न्यवर्तत एवमनेकदुर्निमित्तदर्शनेपियुद्धगमनान्न न्यवर्ततेत्यर्थः ॥ १८ ॥ उत्थितान् उद्भूतान् । रोमहर्षणान् रोमाञ्चकरान् भयजनकानित्यर्थः । तदुक्तं साहित्यचिन्तामणौ "उल्कानिपातनिर्घातव्यालव्याघ्रादिदर्शनैः । उत्पन्नः सहसा चित्तविक्षोभस्त्रास इष्यते ॥ नेत्रसंमीलनोत्कम्पगात्रसंकोचगद्गदैः । वैवर्ण्यस्वेदरोमाञ्चस्तम्भाद्यैरनुभाव्यते" इति ॥ प्रहसन्नित्यनेन गर्वः सूच्यते ॥ १९ ॥ तत्कार्यप्रतिज्ञामाह—महोत्पातानिति । तथाचोक्तं चिन्तामणौ । "कुलरूपवयोविद्याबलैश्वर्यधनादिभिः । या भवेदात्मनः श्लाघा स गर्व इति कथ्यते ॥ उद्ग्रीवावेक्षणावज्ञाप्रतिज्ञातिर्भवेदिह" इति । दुर्बलानिव पुरुषान् ॥ २०—२१ ॥ उत्सिक्तं

**ति०** खद्योतसप्रभत्वंनिस्तेजस्कत्वेनचाञ्चल्येनच ॥१३॥ **ति०** वाश्यन्तः । आर्षं ॥१५॥ **शि०** वनकाननयोर्निबिडानिबिडत्वेनभेदान्नपौनरुक्त्यं ॥१६॥ **स०** मरणधर्मेण मरणाख्यधर्मेण ॥२१॥ **टीका०** ननुरामस्यामानुषचरित्रंज्ञात्वा युद्धागमनवेलायां स्वस्यदुर्निमित्तानिदृष्ट्वाचखरोनिर्भीकःप्रहृष्टःकिमर्थमभू दित्याशङ्कायामुच्यते । स्वस्यशिवशापविमुक्तिर्भविष्यतीतितद्वासनावशात्प्रमोदो जातइत्यविरोधः ॥ **ती०** वस्तुतस्तुअहत्वानो पावर्ति तुमुत्सहइत्यनेन हत्वैवोपावर्तितुमुत्सहइत्यभिप्रायः । हन्तुमसमर्थः अतोनोपावर्ततइतिव्यज्यते ॥२२॥ **ती०** वस्तुतस्तु रामस्यलक्ष्मणस्यचजयइतिशेषः । मेममविपर्ययः नाशश्च यन्निमित्तः याशूर्पणखानिमित्तं

[ पा० ] १ ग. विवाति. २ क. ख. च. छ. ञ. संनिभाः. ३ घ. च. छ. ज. ञ. पुष्पैःफलैः. ४ झ. चीचीकूचीति. ५ झ. वाश्यन्तो. घ. शंसन्त्यो. ६ ङ. छ.—ट. सारिकाः. ७ ङ. झ. ञ. ट. सनिर्घोषाः. ८ क.—ट. चापि. ९ घ. सास्रं. १० ङ. ट. नुदितान्. ११ क. ख. ग. च. छ. ज. ञ. प्रहसन्वाहिनीपतिः. १२ ङ. ट. नुदितान्. १३ क. ग. ङ.—ट. पातयेयं. १४ ङ. ट. चापि. १५ एतच्छ्लोकार्धयोःपौर्वापर्यं. क. ङ.—ट. पुस्तकेषुदृश्यते. १६ ख. ग. पीत्वाच. छ. ज. ञ. पीत्वेयंशोणितं. १७ क. ग.—ट. यन्निमित्तंतु. १८ ख. रामश्चलक्ष्मणश्चविपत्स्यते.

न क्वचित्[1]प्राप्तपूर्वो मे [2]संयुगेषु पराजयः ॥ युष्माकमेतत्प्रत्यक्षं नानृतं कथयाम्यहम् ॥ २४ ॥
देवराजमपि क्रुद्धो मत्तैरावत[3]यायिनम् ॥ वज्रहस्तं रणे हन्यां किं पुन[4]स्तौ कुमानुषौ ॥ २५ ॥
सा तस्य गर्जितं श्रुत्वा [5]राक्षसस्य महाचमूः ॥ प्रहर्षमतुलं लेभे मृत्यु[6]पाशावपाशिता ॥ २६ ॥
[7]समीयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ॥ ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः ॥
समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ॥ २७ ॥
स्वस्ति गो[8]ब्राह्मणेभ्योस्तु लोकानां [9]येऽभिसंगताः ॥ जयतां [10]राघवः संख्ये [11]पौलस्त्यान्रजनीचरान् ॥
चक्रहस्तो [12]यथा युद्धे सर्वानसुर[13]पुङ्गवान् ॥ २८ ॥
एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ॥ जातकौतूहलास्तत्र विमानस्थाश्च देवताः ॥
ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ २९ ॥
रथेन तु खरो [14]वेगादुग्रसैन्यो विनिःसृतः ॥ तं दृष्ट्वा [15]राक्षसं भूयो [16]राक्षसाश्च विनिःसृताः ॥ ३० ॥
श्येनगामी [17]पृथुग्रीवो यज्ञ[18]शत्रुर्विहङ्गमः ॥ दुर्जयः [19]करवीराक्षः परुषः कालकार्मुकः ॥ ३१ ॥
मेघमाली [20]महामाली [21]सर्पास्यो रुधिराशनः ॥ द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् ॥ ३२ ॥
महाकपालः स्थूलाक्षः [22]प्रमाथी त्रिशिरास्तथा ॥ चत्वार एते [23]सेनान्यो दूषणं [24]पृष्ठतो ययुः ॥ ३३ ॥

सा भीमवेगा समराभि[25]कामा [26]महाबला राक्षसवीरसेना ॥
तौ राजपुत्रौ सहसाऽभ्युपेता माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

गर्वितं ॥२२—२६ ॥ समीयुः सङ्गताः । सहिताः लोकहितपराः । पुण्यकर्मणः पुण्यकर्माणः। दीर्घाभाव आर्षः ॥ २७ ॥ लोकानामभिसङ्गता इति ये लोकानां अभिसङ्गताः अनुकूलाः तेभ्योपि स्वस्त्यस्त्वित्यर्थः । जयतां जयतु। आर्षमात्मनेपदं। संख्ये युद्धे। चक्रहस्तो विष्णुः ।वाहिनीं सेनां । गतायुषां गन्तुमुद्युक्तायुषां । एतत् स्वस्तीत्यादिवाक्यं । अन्यच्च राघवजयविषयकं वाक्यं । ब्रुवाणाः परमर्षयः विमानस्था देवताश्च जातकौतूहलाः सन्तः । राक्षसानां वाहिनीं ददृशुरिति संबन्धः ॥ २८—२९ ॥ वेगात् रथवेगात् । विनिःसृतः गतः ॥ ३० ॥ श्येनगाम्यादयो द्वादशखरामात्याः ॥३१—३३॥ समराभिकामा युद्धेप्सुः । ग्रहाणां अङ्गारकादीनां ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

यस्यसः । साभगिनी तयोः ताभ्यां मृतस्यममेतिशेषः । रुधिरंपीलासकामाऽस्तु ॥ २३ ॥ **ती०** कुमानुषौ कौ भूमौ मनुष्यरूपेणावतीर्णावित्यवगन्तव्यं ॥ २५ ॥ **ति०** सैन्यस्याग्राद्विनिस्सृतः पूर्वंसैन्यसंबद्धएवतदग्रभागेस्थितः । इदानींतुसेनांबहुदूरेपृष्ठतस्त्यक्त्वास्वयमेवाग्रेगतइत्यर्थः ॥ ३० ॥ इतित्रयोविंशस्सर्गः ॥ २३ ॥

[ **पा०** ] १ च. छ. ज. ञ. प्राप्तपूर्वस्तु. २ ख. संग्रामेषु. ३ ख. ङ. च. झ. ट. गामिनं. ४ ख. ग. छ. स्तौतुमानुषौ. ङ. झ. ट. स्तौतुमानवौ. ५ ङ. झ. ट. राक्षसानां. ६ ख. पाशवशंगता. ७ क.—च. ञ. ट. समेयुश्च. ८ ङ. झ. ञ. ट. ब्राह्मणेभ्यस्तु. ९ ङ. झ. ञ. ट. येचसंमताः. ख. येहितैषिणः. १० क. ख. ग. ङ. झ. ञ. ट. राघवोयुद्धे. ११ सर्वानसुरसत्तमान्. १२ ङ. झ. ञ. ट. यथाविष्णुः. १३ क. ग. ङ. झ. ञ. ट. सत्तमान्. १४ ङ. झ. ट. वेगात्सैन्याग्राद्विनिस्सृतः. १५ च. छ. ज. ञ. निस्सृतंभूमौ. १६ घ. श्चापिनिस्सृताः. १७ ङ. ट. पृथुश्यामो. १८ क. ख. शत्रुर्महाविषः. १९ ट. परवीराक्षः. २० ख. महाबाहुः. २१ ङ. ट. वरास्यो. २२ ङ. ट. प्रमाथित्रिशिराः. झ. प्रमाथस्त्रिशिराः. २३ घ. च. छ. ज. ञ. सेनाग्र्याः. क. ग. ङ. झ. ट. सेनाग्रे. २४ ङ.—ट. पृष्ठतोन्वयुः. २५ ङ. झ. ट. कांक्षिणी. २६ क. ग. ङ.—ट. सुदारुणा.

# चतुर्विंशः सर्गः ॥ २४ ॥

रामेणलक्ष्मणंप्रति खरप्रयाणकालिकदुर्निमित्तप्रदर्शनेन तेषां स्वपरजयापजयसूचकत्वकथनपूर्वकंसीतारक्षणाय तयासहगुहाश्रयणचोदना ॥ १ ॥ श्रीरामेयुद्धसन्नद्धे समरावलोकनायदेवगन्धर्वादिषुगगनाङ्गणमवतीर्णेषु खरसैन्येनरणायरामंप्रत्यभिसर्पणम् ॥ २ ॥

आश्रमं प्रतियाते तु खरे खरपराक्रमे ॥ तानेवोत्पातिकान्रामः सह भ्रात्रा ददर्श ह ॥ १ ॥
तानुत्पातान्महाघोरानुत्थितान्रोमहर्षणान् ॥ प्रजानामहितान्दृष्ट्वा वाक्यं लक्ष्मणमब्रवीत् ॥ २ ॥
इमान्पश्य महाबाहो सर्वभूतापहारिणः ॥ समुत्थितान्महोत्पातान्संहर्तुं सर्वराक्षसान् ॥ ३ ॥
अमी रुधिरधारास्तु विसृजन्तः खरस्वनान् ॥ व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः ॥ ४ ॥
सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिनः ॥ रुक्मपृष्ठानि चापानि विवेष्टन्ते च लक्ष्मण ॥ ५ ॥
यादृशा इह कूजन्ति पक्षिणो वनचारिणः ॥ अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६ ॥
संप्रहारस्तु सुमहान्भविष्यति न संशयः ॥ ७ ॥
अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ सन्निकर्षे तु नः शूर जयं शत्रोः पराजयम् ॥ ८ ॥
संप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते ॥ उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मण ॥
निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥ ९ ॥
रक्षसां नर्दतां घोरः श्रूयते च महाध्वनिः ॥ आहतानां च भेरीणां राक्षसैः क्रूरकर्मभिः ॥ १० ॥

अथ रामस्य युद्धसन्नाहश्चतुर्विंशे । औत्पातिकानिति स्वार्थेठक् ॥ १—२ ॥ सर्वभूतापहारिणः सर्वभूतापहारसूचकान् । प्रकृतेतु सर्वराक्षसान् संहर्तुमुद्यतानिति योजना ॥ ३ ॥ रुधिरमय्यो धारा येषां ते रुधिरधाराः । खरस्वनान् घोरस्तनितानि । विवर्तन्ते संचरन्ति ॥ ४ ॥ सधूमा इति । प्रतापानलोद्युक्ता इतिभावः । अत एव मम युद्धाभिनन्दनः रुक्मपृष्ठानि स्वर्णमयपृष्ठानि । चापानि धनूंषि । "अथास्त्रियां । धनुश्चापौ" इत्यमरः । विवेष्टन्ते चलन्ति । युद्धसन्नद्धानि भवन्तीत्यर्थः । आत्मनश्चापद्वयं लक्ष्मणस्यैकमिति बहुवचनं ॥ ५ ॥ यादृशाः प्रसिद्धाः । पूर्वकृतसंवादा इत्यर्थः । अग्रतः अव्यवहितोत्तरकाले । नो भयमिति सुवाक् ॥ ६ ॥ सुमहान् संप्रहारः युद्धं ॥ ७ ॥ बाहुः दक्षिणः । सन्निकर्षे अव्यवहितोत्तरकाले ॥८॥ स्वमुखप्रसादादेः स्वयं द्रष्टुमशक्यत्वेन स्वसमानसुखे लक्ष्मणेनिदर्शयति—सप्रभमिति । मुखप्रसादफलं व्यतिरेकमुखेनाह—उद्यता-

स० तान् ये खरदृष्टाः ॥१॥ शि० अत्यमर्षणः मुनिखेदासहिष्णुः । रामः प्रजानां दशरथराज्यनिवासिराक्षसानां । किंच प्रकर्षेण जो मृत्युञ्जयोयेषांतेषांराक्षसानां । अहितान् घोरानुत्पातान् दृष्ट्वा अवलोक्य दृष्ट्वा विचार्यच । लक्ष्मणमब्रवीत् । "जो ना मृत्युञ्जयेजन्यांतातमात्रेजनार्दने" इतिमेदिनी ॥२॥ ती० एवंराक्षसानांदुर्निमित्तान्युक्त्वा स्वस्यजयसूचकानिनिमित्तान्याह—सधूमाइति । ममयुद्धाभिनन्दिताः युद्धेअभितोनन्दः आनन्दः एषांसंजातइतितथोक्ताः । श्रीरामगतोयुद्धहर्षस्तच्छरेषूपचर्यते । ममयुद्धहर्षसूचकाइतिफलितार्थः । चापानिविवेष्टन्ते विशेषेणवेष्टन्ते । अभिमन्त्रिततत्तद्देवतासांनिध्याच्चापेषुस्वयमेवशरास्संसक्ताभवन्तीत्यर्थः । स० शराः तदभिमानिदेवताः । एवमुत्तरत्रापि ॥ ५ ॥ ती० अग्रतः अस्माकंपुरतइत्यर्थः । वनचारिणः यादृशाःसौम्याः पक्षिणःकूजन्ति । तादृशैस्सुनिमित्तैः नः अस्माकं अभयंप्राप्तं । चकारादरीणांजीवितस्यसंशयश्चप्राप्तइत्यर्थः ॥ ६ ॥ स० आयुःपरिक्षयइतिपदद्वयं । यतस्तववक्त्रंसुप्रसन्नंलक्ष्यते तस्माद्भवतित्वयि आयुः । येषांपरिक्षयोभावी तेषांवदनंनिष्प्रभंभवति ॥ ९ ॥

[ पा० ] १ ङ.—ट. घोरान्रामोदृष्ट्वात्यमर्षणः. २ ख. महितान्घोरान्. ३ च. छ. ञ. लक्ष्मणंवाक्यं. ४ ग. ङ. झ. ट. विसृजन्तेखरस्वनाः. क. ख. ग. विसृजन्तःखरस्वनाः. च. छ. ज. ञ. विसृजन्तःखरस्वराः. ५ ग. निवर्तन्ते. च. छ. ज. ञ. विनर्दन्ते. ६ ङ.—ट. नन्दिताः. ७ च. छ. ज. ञ. चेष्टन्तेपिच. ङ. ट. विचेष्टन्तेच. झ. विचेष्टन्तेविचक्षण. ८ ग. गर्जन्ति. ९ च. छ. ञ. ससंप्रहारः. १० ख. घ.—ट. सुप्रभं. ११ ट. युद्धार्थे. १२ क. च. ज. ञ. श्रूयतेहि. ङ. झ. ट. श्रूयतेऽयं.

अनागतविधानं तु कर्तव्यं [1]शुभमिच्छता ॥ [2]आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ ११ ॥
तस्माद्गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः ॥ गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम् ॥ १२ ॥
प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया ॥ शापितो मम पादाभ्यां गम्यतां [3]वत्स मा चिरम् ॥ १३
त्वं हि शूरश्च [4]बलवान्हन्या ह्येतान्न संशयः ॥ [5]स्वयं तु हन्तुमिच्छामि सर्वानेव निशाचरान् ॥ १४ ॥
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया ॥ शरानादाय चापं च गुहां दुर्गां समाश्रयत् ॥ १५ ॥
तस्मिन्प्रविष्टे तु गुहां लक्ष्मणे सह सीतया ॥ हन्त [6]निर्युक्तमित्युक्त्वा रामः कवचम[7]ाविशत् ॥ १६ ॥
स तेनाग्निनिकाशेन कवचेन विभूषितः ॥ बभूव रामस्तिमिरे [8]विधूमोग्निरिवोत्थितः ॥ १७ ॥
स चापमुद्यम्य [9]महच्छरानादाय वीर्यवान् ॥ [10]बभूवावस्थितस्तत्र ज्यास्वनैः पूरयन्दिशः ॥ १८ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च [11]सह चारणैः ॥ [12]समेयुश्च महात्मानो युद्धदर्शन[13]काङ्क्षिणः ॥ १९ ॥
ऋषयश्च महात्मानो लोके ब्रह्मर्षिसत्तमाः ॥ समेत्य चोचुः [14]संहिता अन्योन्यं पुण्यकर्मणः ॥ २० ॥
स्वस्ति गो[15]ब्राह्मणेभ्योऽस्तु लोकानां [16]येऽभिसङ्गताः ॥ जयतां राघवो युद्धे पौलस्त्यान्रजनीचरान् ॥ २१ ॥
चक्रहस्तो यथा युद्धे सर्वानसुर[17]पुङ्गवान् ॥ [ [18]एतच्चान्यच्च बहवो ब्रुवाणाः परमर्षयः ॥ ]
एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम् ॥ २२ ॥

---

नामिति ॥ ९—१० ॥ आपदं निमित्तवशाच्छङ्कमानेन शुभं आपत्परिहारं । इच्छता विपश्चिता दूरदर्शिना पुरुषेण अनागतविधानं अनागतस्य भाविनोऽनर्थस्य विधानं प्रतिविधानं कर्तव्यं ॥ ११ ॥ गृहीत्वा रक्ष्यत्वेन गृहीत्वा । पादपसंकुलां वृक्षावृतां ॥ १२ ॥ अहमेव योत्स्यामीति वक्तुमुद्यतं प्रत्याह—प्रतिकूलितुमिति । इदं वाक्यं प्रतिकूलितुं नेच्छामि । मयाशापितोसीति वक्तव्ये मम पादाभ्यामित्युक्तिर्लक्ष्मणव्यवहारानुसारेण ॥ १३ ॥ त्वन्निवर्तनं न त्वदशक्तया किंतु मुनिभ्यः प्रतिज्ञानान्मयैव तद्वधः कर्तव्य इत्याशयेनाह—त्वं हीति ॥ १४ ॥ दुर्गां अन्यैर्दुरासदां ॥ १५ ॥ हन्तेति हर्षे । निर्युक्तं निश्चयेन उपायश्चिन्तित इत्यर्थः । "योगः सन्नहनोपायध्यानसंगतियुक्तिषु" इत्यमरः । आविशत् प्राविशत् अधारयदित्यर्थः ॥ १६ ॥ अत्रोपमालंकारेण क्षणेन रक्षःक्षयो ध्वन्यते ॥ १७—१८ ॥ ततो देवा इत्यादि । पूर्वसर्गे समागमनमुक्तं अत्र सन्निधानं । चारणाः देवजातिविशेषाः ॥ १९ ॥ लोके त्रैलोक्ये । ब्रह्मर्षिसत्तमाः भृग्वादयः । पुण्यकर्मणः पुण्यकर्माणः ॥ २० ॥ लोकानां येभिसंगता इति ये लोकानामभिसंगताः अनुकूलाः । तेभ्योपि स्वस्त्यस्त्वित्यर्थः । देवादयः समेत्य स्वस्तीत्याद्यूचुः । तएवैवमुक्त्वा कथं युद्धं भविष्यतीत्यन्तं पुनः प्रोचुरिति संबन्धः ॥ २१ ॥

---

**ति०** प्रतिकूलितुं विपरीतंकर्तुं नेच्छामि । भिन्नकर्तृके तुमुनार्षः । **ती०** प्रतिकूलितमितिपाठे त्वयाप्रतिकूलितं त्वत्कर्तृकप्रातिकूल्यवद्वाक्यंनेच्छामीत्यर्थः । **स०** इदंवाक्यंत्वयाप्रतिकूलितुंनेच्छामीतिभिन्नकर्तृकत्वेपिभोक्तुमनुजानामीत्यादिवत्तुमुन्संभवति । यद्वा इदंत्वयेत्येकंपदं अयंचासौत्वंचइदंत्वंतेन प्रतिकूलितुं । भवान्युवत्यासहगच्छतीतिशङ्कामारोपयितुंवाक्यंनेच्छामीतिपादाभ्यांशपितोसि । अतश्चिरंमामाकुरु । यद्वा इदं वाक्यं । चिरमुत्तरं प्रत्युत्तररूपं मामाकार्षीः ॥ १३ ॥ **ती०** निर्युक्तं अस्मदुक्तं लक्ष्मणेन निर्युक्तं नितरांयुक्तंकृतमित्युक्त्वा रामः कवचमाविशत् धृतवानित्यर्थः । **स०** निर्युक्तं अतिशोभनं । इत्युक्त्वा । यथोक्तंकर्मनिर्णयटीकायां "युक्तशब्दश्शोभनपर्यायः । यथाहभिक्षुः" इति । तट्टिप्पण्यांच यथाहभिक्षुः "बालक्रीडावासुदेवस्ययुक्ता" इतीति ॥ १६ ॥ **ती०** येलोकानामभिसंगताः हविर्मुखेनानुकूलाभवन्तीत्यर्थः । तदुक्तं " अग्नौप्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टि-

**[ पा० ]** १ ख. घ. जयमिच्छता. २ झ. आपदा. ३ ख. च. छ. ज. ञ. तत्र. ४ ख. बलवानेतांहन्तुंन. ५ क. ग. ङ. च. छ. झ. ञ. ट. स्वयंनिहन्तुं. ख. अहंतुहन्तुं. ६ ख. निर्यामिचेत्युक्त्वा. ७ घ. मादधत्. ८ क. ग. ङ. ट. महानग्निः. ९ ग. च्छरमादाय. १० ङ. झ. ट. संबभूवास्थितः. ११ ख. च. छ. ज. ञ. परमर्षयः. १२ ख. समेताश्च. च. छ. ज. ञ. समेयुश्चारणैस्तत्र. १३ क. ङ.—ट. काङ्क्षया. १४ क. ग. ङ.—ट. सहितास्तेऽन्योन्यं. १५ क. ग.—च. झ. ट. ब्राह्मणानांच. ख. ब्राह्मणेभ्यश्च. १६ ङ. झ. ट. चेतिसंस्थिताः. घ. च. छ. ज. येहिसंगताः. क. ख. ग. चेतिसंगताः. १७ क. सत्तमान्. १८ इदमर्धं क. च. छ. ज. पाठेषुदृश्यते.

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २३ ॥
इति राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः ॥ जातकौतूहलास्तस्थुर्विमानस्थाश्च देवताः ॥ २४ ॥
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ॥ दृष्ट्वा[1] सर्वाणि भूतानि भयाद्विव्यथिरे[2] तदा ॥ २५ ॥
रूपमप्रतिमं तस्य रामस्याक्लिष्टकर्मणः ॥ बभूव रूपं क्रुद्धस्य रुद्रस्येव पिनाकिनः[3] ॥ २६ ॥
इति संभाष्यमाणे तु देवगन्धर्वचारणैः[4] ॥ ततो गम्भीरनिर्ह्रादं घोरवर्मा[5]युधध्वजम् ॥
अनीकं यातुधानानां समन्तात्[6]प्रत्यदृश्यत ॥ २७ ॥
सिंहनादं[7] विसृजतामन्योन्य[8]मभिगर्जताम् ॥ चापानि विस्फारयतां जृम्भतां चाप्यभीक्ष्णशः ॥ २८ ॥
विप्रघुष्ट[9]स्वनानां च दुन्दुभींश्चापि[10] निघ्नताम् ॥ तेषां सुतुमुलः[11] शब्दः पूरयामास तद्वनम् ॥ २९ ॥
तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः ॥ दुद्रुवुर्यत्र निःशब्दं पृष्ठतो न[12] व्यलोकयन् ॥ ३० ॥
तत्त्वनीकं[13] महावेगं रामं[14] समुपसर्पत ॥ धृतनानाप्रहरणं गम्भीरं सागरोपमम् ॥ ३१ ॥
रामोपि[15] चारयंश्चक्षुः सर्वतो रणपण्डितः ॥ ददर्श खरसैन्यं तद्युद्धा[16]भिमुखमुत्थितम्[17] ॥ ३२ ॥
वितत्य[18] च धनुर्भीमं तूण्योश्चो[19]द्धृत्य सायकान् ॥ क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् ॥ ३३ ॥

—२३ ॥ राजर्षयः देवत्वं प्राप्ताः । यद्वा वानप्रस्थीभूताः । सगणाः सपरिकराः ॥ २४ ॥ संग्रामशिरसि युद्धाग्रे ॥ २५ ॥ रामस्य रूपं रुद्रस्य रूपमिव बभूव ॥ २६ ॥ निर्ह्रादः शब्दः । वर्म कवचं । अनीकं सेना ॥ २७ ॥ अन्योन्यमभिगर्जतां अहमेव शत्रुं हनिष्यामीति जल्पतामित्यर्थः । विस्फारयतां ज्याशब्दं कुर्वतां । अभीक्ष्णशः भृशं । जृम्भतां जृम्भमाणानां मदेनोद्गच्छतामित्यर्थः । विप्रघुष्टस्वनानां घोषो गुञ्जनाख्यध्वनिविशेषः । "घोषो गुञ्जनमञ्जने" इति वैजयन्ती । भावे निष्ठा । तद्रूपस्वनवतामित्यर्थः ॥ २८—२९ ॥ श्वापदाः हिंस्रा व्याघ्रादयः । यत्र निःशब्दं शब्दाभावः । "अव्ययं विभक्ति—" इत्यादिना अव्ययीभावः । तं देशं दुद्रुवुरित्यन्वयः । पृष्ठतः पश्चाद्भागं ॥ ३० ॥ समुपसर्पत समुपासर्पत् । गम्भीरं इतरदुष्प्रवेशं ॥ ३१ ॥ उत्थितं उद्युक्तं ॥ ३२ ॥ वितत्य किञ्चिद्बाणविसर्पणं कृत्वेत्यर्थः । "विततं संहितस्येषोः किंचिदेव विसर्पणं" इति वैजयन्ती । तूण्योः पृष्ठपार्श्वद्वयबद्धयोः । आहारयदित्यनेन करुणामूर्तिरप्याश्रितकण्टकोद्धारणाय क्रोधमारोपयामासेति गम्यते । भीमं धनुरुद्धृत्य तूण्योः शरांश्चोद्धृत्य

वृष्टेरन्नंततःप्रजाः " इति ॥ २१ ॥ **ति०** धर्मात्मा अच्छद्मयोधीत्यर्थः ॥ २३ ॥ **ति०** तेजसा वैष्णवेनक्षात्रेण । एतेनसहजस्वभावोभगवतोग्राह्यएव । क्षात्रस्तुस्वेच्छयाकार्यायभगवतास्वीक्रियतइतिसूचितं । भयात् अनुमितरामपरिश्रमजनितभीतेः ॥२५॥ **ती०** रूपमिति । जगत्संहरणार्थमुद्युक्तस्यप्रलयकालरुद्रस्यरूपंयद्वत् तद्वत्खरादिवधार्थमुद्युक्तस्यरामस्यरूपमपिबभूवेत्यर्थः । तदुक्तंस्कान्दे—" रुद्रतेजोविलसितंदृष्ट्वारामकलेबरम् । शङ्खंचक्रंचशूलंचपिनाकंखेटमेवच । खट्वांघण्टांचडमरुंबाणपाशाङ्कुशंतथा । चापंवज्रंचखड्गंचपरशुंत्रासकारणम् । जयश्रियंचगङ्गांचददृशुस्सिद्धचारणाः । " इति ॥ **शि०** नक्लिष्टं नकस्मैचित्खेदप्रदं कर्म व्यापारोयस्यतस्य ॥ **ति०** रुद्रस्यरूपमिव रामस्यरूपमप्रतिमं ॥ २६ ॥ **स०** समन्तात् सम्यगन्तमुद्दिश्येतिल्यब्लोपनिमित्तापञ्चम्यपि ॥ २७ ॥ **ति०** अन्योन्यमभिगच्छतां एवंयुद्धंकर्तव्यमितिचबोधनार्थमितिशेषः । देहममताराहित्येनयुद्धप्रवृत्तये मादकद्रव्यस्वीकारजंजृंभणं ॥ २८ ॥ **शि०** विप्रहृष्टस्वनानां अतिहर्षसूचकशब्दवतां ॥ २९ ॥ **ति०** सर्वरक्षसांवधार्थं सर्वरक्षोवधद्वारत्वादस्ययुद्धस्येतिभावः ॥ ३३ ॥ इतिचतुर्विंशस्सर्गः ॥ २४ ॥

[ **पा०** ] १ ट. तं दृष्ट्वासर्वभूतानि. २ तत्र. ३ ङ. झ. ट. महात्मनः. ४ क. सर्षिसंघैश्चचारणैः. ५ ङ. झ. ट. चर्मायुध. ६ ङ. झ. ट. त्प्रत्यपद्यत. ७ ङ. च. ज.—ट. वीरालापान्विसृजतां. क. छ. ज. विरावांस्तान्विसृजतां. ८ ङ. झ. ट. मन्योन्यमभिगच्छतां. ख. मन्योन्यंभयगर्जनां. ९ ग. घ. च. ज. ट. विप्रहृष्ट. १० क. ख. दुन्दुभीनांचनिःस्वनैः. ११ क.—ट. सुविपुलः. १२ क.—ट. नावलोकयन्. १३ ङ.—ट. तच्चानीकं. ग. गत्वानीकं. १४ ङ. च. छ. झ. ञ. ट. रामंसमनुवर्तत. क. ख. राघवंसमसर्पत. ज. रामंसमनुवर्तते. १५ ख. रामोविचारयन्. ग. घ. च. छ. ज. ञ. ट. रामोपिचालयन्. १६ घ. तद्युद्धायसमुपस्थितं. ङ. झ. तद्युद्धायाभिमुखोगतः. १७ क. ख. ग. च. छ. ज. ञ. ट. मुद्यतं. १८ ख. विनम्यच. क. सज्यंकृत्वा. १९ झ. तूण्याश्चोद्धृत्यसायकं. क. ख. ङ. च. ञ. तूण्याश्चोद्धृत्य. घ. तूणाच्चोद्धृत्य.

[1]दुष्प्रेक्षः सोभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ॥ तं दृष्ट्वा तेजसाऽऽविष्टं प्राद्रवन्वनदेवताः ॥ ३४ ॥
तस्य [2]क्रुद्धस्य रूपं तु रामस्य [3]ददृशे तदा ॥ दक्षस्येव क्रतुं [4]हन्तुमुद्यतस्य पिनाकिनः ॥ ३५ ॥
[5]आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ॥ दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ॥ ३६ ॥
तत्कार्मुकैराभरणैर्ध्वजैश्च तैर्[6]वर्मभिश्चाग्निसमानवर्णैः ॥
बभूव सैन्यं पिशिताशनानां सूर्योदये नीलमिवाभ्र[7]वृन्दम् ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

## पञ्चविंशः सर्गः ॥ २५ ॥

रामस्यखरसैन्येनसहसंकुलयुद्धम् ॥ १ ॥

अवष्टब्धधनुं रामं [8]क्रुद्धं च रिपुघातिनम् ॥ ददर्शाश्रममागम्य खरः सह [9]पुरःसरैः ॥ १ ॥
तं दृष्ट्वा [10]सशरं चापमुद्यम्य [11]खरनिःस्वनम् ॥ रामस्याभिमुखं सूतं [12]चोद्यतामित्यचोदयत् ॥ २ ॥
स खरस्याज्ञया सूतस्तुरगान्समचोदयत् ॥ यत्र रामो महाबाहुरेको [13]धुन्वन्स्थितो धनुः ॥ ३ ॥
तं तु निष्पतितं दृष्ट्वा [14]सर्वे ते रजनीचराः ॥ [15]नर्दमाना महानादं [16]सचिवाः पर्यवारयन् ॥ ४ ॥
स तेषां यातुधानानां मध्ये रथगतः खरः ॥ बभूव मध्ये ताराणां लोहिताङ्ग [17]इवोदितः ॥ ५ ॥
ततः शरसहस्रेण राममप्रतिमौजसम् ॥ अर्दयित्वा महानादं ननाद समरे खरः ॥ ६ ॥
ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः ॥ रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम् ॥ ७ ॥
[18]मुद्गरैः पट्टिशैः शूलैः [19]प्रासैः खड्गैः परश्वधैः ॥ राक्षसाः समरे रामं निजघ्नू रोषतत्पराः ॥ ८ ॥
ते वलाहकसंकाशा [20]महानादा महौजसः ॥ अभ्यधावन्त काकुत्स्थं [21]रथैर्वाजिभिरेव च ॥
[22]गजैः पर्वत[23]कूटाभै रामं युद्धे जिघांसवः ॥ ९ ॥

---

वितत्य सर्वरक्षसां वधार्थं क्रोधमाहारयदित्यन्वयः ॥ ३३—३४ ॥ दक्षस्येति क्रोधातिशयमात्रे दृष्टान्तः ॥३५—३६॥ कवचसूर्यकिरणयोः साम्यं । नीलाभ्राणां रक्षसां च कार्मुकवत्त्वं ध्वजवत्त्वं च तुल्यं मेघे उत्पातध्वजसंभवात् । अत्र सार्धसप्तत्रिंशच्छ्लोकाः ॥३७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

---

तुमुलयुद्धं पञ्चविंशे। धन्यत इति धनुः। धन धान्य इत्यस्माद्धातोः "भृमृशीङ्तृचरितत्सरितनिधनिमीमस्जिभ्यउः" इत्यौणादिकसूत्रेण उप्रत्ययः । "धनुषां च धनुं विदुः धनुरिवाजनिवक्रः" इति कविकाव्यप्रयोगश्च ॥ १ ॥ चोद्यतामिति रथ इतिशेषः ॥२—३॥ निष्पतितं युद्धोन्मुखं । सचिवाः श्येनगाम्यादयः ॥४॥ लोहिताङ्गः अङ्गारकः ॥ ५॥ अर्दयित्वा पीडयित्वा । महानादं ननाद चकारेत्यर्थः ॥ ६ ॥ भीमधन्वानं "धनुषश्च" इत्यनङ्समासान्तः । शस्त्रैः आयुधैः । "शस्त्रमायुधलोहयोः" इत्यमरः ॥ ७ ॥ मुद्गरैःस्थूलगदाभिः । प्रासैः कुन्तैः । रोषतत्पराः क्रोधपरवशाः ॥ ८ ॥ वलाहकसंकाशाः मेघतुल्याः । कूटं शृङ्गं ।

---

[पा०] १ ङ.—ज. ञ. ट. दुष्प्रेक्षश्चाभवत्. २ क. ग. ङ. झ. ट. रुष्टस्य. ३ ख. ददृशुस्तदा. ४ च. छ. ज. ञ. हन्तुंक्रुद्धस्येव. ५ ख. ग. घ. प्रविष्टं. ६ ख. ङ. झ. ट. तद्वर्मभिः. ७ ग. ङ. झ. ञ. ट. जालं. ८ ङ. झ. ञ. ट. कुद्धं. ९ क. ग. पुरस्सरः. १० ख. ग. ङ. च. छ. झ. ञ. ट. सगुणं. ११ क. च. छ. ज. ञ. खरनिस्स्वनः. १२ ख. चोदयामासराक्षसं. १३ ङ.—ट. धुन्वन्धनुस्स्थितः. १४ ङ. झ. ट. सर्वतो. घ. सर्वेपि. १५ ङ.—ट. मुञ्चमानाः. १६ क. सचापाः. १७ क. च. ज. ञ. ट. इवोत्थितः. ङ. झ. इवोद्धतः. १८ क. ख. ग. ङ.—ट. मुद्गरैरायसैः. १९ ख. खड्गैःप्रासैः. २० ङ.—ट. महाकायामहाबलाः. २१ ख. गजैर्वाजिभिः. २२ ख. रथैः. २३ क. संकाशैः.

ते रामे शरवर्षाणि व्यसृजन्रक्षसां गणाः ॥ शैलेन्द्रमिव धाराभिर्वर्षमाणा [1]वलाहकाः ॥ १० ॥
[2]स तैः परिवृतो घोरै राघवो रक्षसां गणैः ॥ [3]तिथिष्विव महादेवो वृतः पारिषदां गणैः ॥ ११ ॥
तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः ॥ प्रतिजग्राह विशिखैर्नद्योघानिव सागरः ॥१२॥
स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे ॥ रामः प्रदीप्तैर्बहुभिर्वज्रैरिव [4]महाचलः ॥ १३ ॥
स विद्धः [5]क्षतजादिग्धः सर्वगात्रेषु राघवः ॥ बभूव रामः सन्ध्याभ्रैर्दिवाकर इवावृतः ॥ १४ ॥
विषेदुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः ॥ एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा [6]समावृतम् ॥ १५ ॥
ततो [7]रामः सुसंक्रुद्धो मण्डलीकृतकार्मुकः ॥ ससर्ज [8]विशिखान्बाणाञ्शतशोथ सहस्रशः ॥ १६ ॥
दुरावारान्दुर्विषहान्[9]कालदण्डोपमान्रणे ॥ मुमोच [10]लीलया रामः कङ्कपत्रानजिह्मगान् ॥ १७ ॥
ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ॥ आददू रक्षसां प्राणान्पाशाः कालकृता इव ॥१८॥
[11]भित्त्वा राक्षसदेहांस्तांस्ते शरा रुधिराप्लुताः ॥ अन्तरिक्षगता रेजुर्दीप्ताग्निसमतेजसः ॥ १९ ॥
[12]असंख्येयास्तु रामस्य सायकाश्चापमण्डलात् ॥ विनिष्पेतुरतीवोग्रा रक्षःप्राणापहारिणः ॥ २० ॥
तैर्धनूंषि ध्वजाग्राणि [13]वर्माणि च शिरांसि च ॥ बाहून्सहस्ताभरणानूरून्करिकरोपमान् ॥
[14]चिच्छेद रामः समरे शतशोथ सहस्रशः ॥ २१ ॥
हयान्काञ्चनसन्नाहान्रथयुक्तान्ससारथीन् ॥ गजांश्च [15]सगजारोहान्सहयान्सादिनस्[16]तथा ॥
[ [17]चिच्छिदुर्बिभिदुश्चैव रामबाणा गुणच्युताः ] ॥ २२ ॥

अभ्यधावन्त आभिमुख्येनाधावन्त ॥ ९ ॥ शैलेन्द्रमिवेत्युपमानेन रामस्य निर्दुःखत्वमुक्तं ॥ १०—११ ॥ विशिखैः बाणैः । प्रतिजग्राह प्रतिरुरोध । नद्योघान् नदीप्रवाहान् ॥ १२ ॥ वज्रैः अशनिभिः ॥ १३ ॥ क्षतजादिग्धः रुधिरालिप्तः ॥ १४ ॥ बहुभिः सहस्रैः चतुर्दशसहस्रैः ॥ १५ ॥ मण्डलीकृतकार्मुकः आकर्णाकर्षणेन मण्डलाकारीकृतधनुः । विशिखान् बाणान् अर्धचन्द्राग्रबाणान् । प्रथमं शतशः अनन्तरं सहस्रशः स निर्बिभेदेति योजना ॥ १६ ॥ दुरावारान् वारयितुमशक्यान् । दुर्विषहान् दुःसहान् । कालदण्डोपमान् यमदण्डतुल्यान् । अजिह्मगान् अवक्रगामिनः । अस्खलितलक्ष्यकानित्यर्थः । कङ्कपत्रान् बाणान् । " कङ्कपत्रशरमार्गणबाणाः " इति हलायुधः ॥ १७ ॥ प्राणानाददुः अमारयन्नित्यर्थः । कालकृताः यममुक्ता इत्यर्थः ॥ १८ ॥ रुधिराप्लुता इति विशेषणं दीप्ताग्न्युपमासिद्ध्यर्थं ॥ १९ ॥ सायकाः बाणाः ॥ २० ॥ तैरित्याद्यर्धत्रयमेकं वाक्यं । वर्माणि कवचानि ॥ २१ ॥ काञ्चनसन्नाहान् काञ्चनाभरणान् । रथयुक्तान् रथबद्धान् । सगजारोहान्

**ति०** तिथिषु प्रदोषतिथिषु । पारिषदां नुडभावआर्षः ॥ ११ ॥ **ती०** वज्रैरिवमहाचलइतिव्यतिरेकदृष्टान्तः । वज्रैः वज्रनिपातैः । अनयोपमया श्रीरामस्यनकदाचिदपितत्कृतव्यथेतिसूच्यते । **शि०** भिन्नगात्रः भिन्नंप्राकृतविलक्षणं गात्रंशरीरंयस्यसः ॥ १३ ॥ क्षतजादिग्धः स्वीकृतकोपाभासहेतुकारुण्यविशिष्टत्वेन रुधिरलिप्तइव ॥ १४ ॥ **ती०** विशिखान्बाणान् बाणसंज्ञाञ्शरान् । " बाणास्तुगतपत्रिणः " इतिवैजयन्ती ॥ १६ ॥ **ति०** लीलयेति । युगपत्सकलप्रपञ्चसंहारस्वरूपस्यैतावन्मात्रंलीलैवेति नाश्चर्यायेतिभावः ॥ १८ ॥ **ति०** चापमण्डलात् सन्धानमोचनशैघ्र्यान्मण्डलाकारताचापस्य ॥ २० ॥ **ति०** छेदभेदौ द्वैधीभा

**[पा०]** १ क. ख. ग. ङ. च. छ. झ. ञ. ट. महाघनाः. २ ङ.—ट. सर्वैःपरीवृतोरामोराक्षसैःक्रूरदर्शनैः. ३ इदमर्धं ङ. झ. ञ. ट. पाठेषुदृश्यते. एतदर्धस्यप्रतिनिधितया. घोररूपैर्महादेवोवृतःपारिषदांगणैः. इत्यर्धं च. छ. ज. पाठेषु दृश्यते. ४ घ. च. महाबलः. ५ क. ग. क्षतजैर्दिग्धः. ६ घ. समागतं. ७ ङ. झ. ट. रामस्तु. ८ क. ङ.—ट. निशितान्. ख. विविधान्. ९ ङ. झ. ट. कालपाशोपमान. १० ङ. झ. लीलयाकङ्कपत्रान्काञ्चनभूषणान्. ११ ख. हत्वा. १२ घ. असङ्ख्येयाश्च. १३ ङ.—ट. चर्माणिकवचानिच. १४ घ. बिभेद. १५ ख. गजसंरोहान्. १६ ङ.—ट. स्तदा. १७ इदमर्धं ङ.—ट. पुस्तकेषुदृश्यते. चिच्छिदुर्बिभिदुश्चैव. पदातीन्समरे. इत्यनयोरर्धयोःपौर्वापर्यं. च. छ. ज. ञ. पुस्तकेपुदृश्यते.

पदातीन्समरे हत्वा [1]ह्यनयद्यमसाधनम् ॥ २३ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ॥ भीममार्तस्वरं चक्रु[2]र्भिद्यमाना निशाचराः ॥ २४ ॥
तत्सैन्यं [3]निशितैर्बाणैरर्दितं मर्मभेदिभिः ॥ [4]रामेण न सुखं लेभे शुष्कं वनमिवाग्निना ॥ २५ ॥
केचिद्भीम[5]बलाः शूराः [6]शूलान्खड्गान्परश्वधान् ॥ [7]रामस्याभिमुखं गत्वा चिक्षिपुः परमायुधान् ॥ २६ ॥
ता[8]नि बाणैर्[9]महाबाहुः शस्त्राण्यावार्य रा[10]घवः ॥ जहार समरे प्राणांश्चिच्छेद च शिरोधरान् ॥ २७ ॥
[11]ते छिन्नशिरसः पेतुश्छिन्न[12]वर्मशरासनाः ॥ सुपर्ण[13]वातविक्षिप्ता जगत्यां पादपा यथा ॥ २८ ॥
अवशिष्टाश्च ये तत्र वि[14]षण्णाश्च निशाचराः ॥ खरमे[15]वाभ्यधावन्त शरणार्थं [16]शरार्दिताः ॥ २९ ॥
तान्सर्[17]वान्पुनरादाय समाश्वास्य च दूषणः ॥ [18]अभ्यधावत काकुत्स्थं [19]क्रुद्धो रुद्रमिवान्तकः ॥ ३० ॥
निवृत्तास्तु पुनः सर्वे दूषणाश्र[20]यनिर्भयाः ॥ राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ ३१ ॥
शूलमुद्गरहस्ताश्च [21]चापहस्ता महाबलाः ॥ सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे ॥
द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः ॥ ३२ ॥
तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ [22]रामस्य च महाघोरं पुनस्तेषां च रक्षसाम् ॥ ३३ ॥
ते समन्तादभिक्रुद्धा राघवं [23]पुनरभ्ययुः ॥ ३४ ॥

सनिषादान् । सादिनः अश्वारोहान् ॥ २२ ॥ सदनमेव सादनं स्वार्थे अण् ॥ २३ ॥ नालीकाः नालमात्रशराः । नाराचाः आयसशराः । विकर्णिनः कर्णशराः । भीममिति क्रियाविशेषणं ॥ २४ ॥ रामेण कर्त्रा बाणैः अर्दितं पीडितं । तत्सैन्यं सुखं दुःखनिवृत्तिं । अग्निनार्दितं शुष्कं वनमिव न लेभे ॥ २५ ॥ परमायुधानिति शूलादिविशेषणं ॥ २६ ॥ आवार्य निवार्य शिरोधरानिति पुल्लिङ्गत्वमार्षं । शिरोधरांश्चिच्छेद प्राणाञ्जहारेति क्रमः ॥ २७ ॥ सुपर्णो गरुडः तस्य वातेन पक्षानिलेन विक्षिप्ताः उन्मूलिताः । जगत्यां भुवि ॥ २८ ॥ तत्र सैन्येषु । अवशिष्टाः हतावशिष्टाः । विषण्णाः दुःखिताः । शरणार्थं रक्षणार्थमिति यावत् ॥ २९ ॥ आदाय खरसमीपगमनान्निवर्त्य । अन्तकः रुद्रपराजितो यमः ॥ ३० ॥ निवृत्ताः युद्धान्निवृत्ताः । दूषणरूपाश्रयेण निर्भयाः सन्तः अभ्यधावन्त अभिमुखमाजग्मुः । प्रायशो नष्टायुधत्वात्सालतालेत्याद्युक्तं ॥ ३१ ॥ शस्त्रवर्षाणि शरभिन्नायुधवर्षाणीत्यर्थः । सृजन्त इति आसन्निति शेषः ॥ ३२ ॥ रामस्य रक्षसां च तुमुलं संकुलं । महाघोरं अत एव रोमहर्षणं भयातिरेकेण रोमाञ्चकं । अत एवाद्भुतं तद्युद्धं पुनरपि बभूव ॥ ३३ ॥ त इत्यर्धमेकं

वविदारणरूपौ ॥ २२ ॥ **शि०** यमसादनं ईनांसर्वसंपत्तीनांअमःनित्यंप्राप्तिर्यस्मिन् तदेवसादनंगृहंयस्मिंस्तंनित्यलोकं ॥ २३ ॥ **ति०** नालीकाः मुखमात्रायस्संयुक्ताः । नाराचाः सर्वतआयसाः । विकर्णिनः अग्राङ्कुशाः उद्धारेप्राणहराः ॥ २४ ॥ **स०** शूलान् " शूलोस्त्री रोगआयुधे " इत्यमरव्याख्या ॥ २६ ॥ **कतक०** सुपर्णवातेन गरुडपक्षवातेन अमृतहरणयुद्धे विक्षिप्ताः भग्नाः । पादपाः नन्दनस्थाःकल्पवृक्षादयोयथा तद्वत् । समग्रालङ्कारयुतत्वाद्रक्षस्तनूनांकल्पवृक्षादिसाम्यं ॥ २८ ॥

**[ पा० ]** १ ङ. झ. ञ. ट. अनयत्. २ ङ.—ट. चक्रुश्छिद्यमानाः. ३ ङ. झ. ट. विविधैर्बाणैः. ४ ङ.—ट. नरामेण. ५ ग. भीमबलान्प्रासान्. ६ क. ख. ङ. झ. ट. प्रासाञ्शूलान्परश्वधान्. च. छ. ज. ञ. शूलांश्चैवपरश्वधान्. ७ ङ. झ. ट. चिक्षिपुःपरमक्रुद्धारामायरजनीचराः. ८ च. छ. ज. ञ. स्थिला. ९ ङ. झ. ट. तेषां. क. तेषांयुधिमहा. ग. तेषांसुधीर्महा. १० ङ. झ. ट. वीर्यवान्. ११ घ. तैश्छिन्न. ग. तैर्भीन्न. १२ ङ. झ. ट. चर्मशरासनाः. ग. वर्मशिरोधराः. १३ च. पक्षविक्षिप्ता. घ. ङ. ट. वातनिक्षिप्ता. क. ख. पादविक्षिप्ता. १४ ङ. झ. विषण्णास्ते. १५ ग. ङ. मेवाभिधावन्तः. १६ ङ. झ. शराहताः. १७ ङ.—ट. सर्वान्धनुरादाय. १८ ङ. झ. ञ. ट. अभ्यधावत्सुसंक्रुद्धःक्रुद्धंक्रुद्धइवान्तकः. १९ ग. रुद्रंक्रूर इवान्तकः. क. ख. क्रुद्धंरुद्रमिवान्तकः. २० च. छ. ज. संश्रयाः. ग. दुर्जयाः. ञ. संश्रिताः. २१ क. ङ.—ट. पाशहस्ता. २२ क. ग. ङ.—ट. रामस्यास्य. २३ ङ. झ. ट. पुनरर्दयन्.

तैश्च सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः ॥ राक्षसैरुद्यतप्रासैः शरवर्षाभिवर्षिभिः ॥ ३५ ॥
स कृत्वा भैरवं नादमस्त्रं परमभास्वरम् ॥ संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥ ३६ ॥
ततः शरसहस्राणि निर्ययुश्चापमण्डलात् ॥ सर्वा दश दिशो बाणैरावार्यन्त समागतैः ॥ ३७ ॥
नाददानं शरान्घोरान्न मुञ्चन्तं शिलीमुखान् ॥ विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः ॥३८॥
[ शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्रिणः ॥ सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् ]॥३९॥
शरान्धकारमाकाशमावृणोत्सदिवाकरम् ॥ बभूवावस्थितो रामः प्रवमन्निव ताञ्शरान् ॥ ४० ॥
युगपत्पतमानैश्च युगपच्च हतैर्भृशम् ॥ युगपत्पतितैश्चैव विकीर्णा वसुधाभवत् ॥ ४१ ॥
निहताः पतिताः क्षीणाश्छिन्ना भिन्ना विदारिताः ॥ तत्रतत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥४२॥
सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैर्बाहुभिस्तथा ॥ ऊरुभिर्जानुभिश्छिन्नैर्नानारूपविभूषणैः ॥ ४३ ॥

वाक्यं । अभ्ययुः आवव्रुः ॥३४॥ इदमनुवदन्नाह—तैश्चेत्यादि श्लोकद्वयमेकं वाक्यं । महाबलः स रामः दिशः प्रदिशश्च तैरावृता दृष्ट्वा भैरवं भयंकरं नादं कृत्वा राक्षसेषु राक्षसनिमित्तं । गान्धर्वमस्त्रं धनुषि संयोजयत समयोजयत् । शरवर्षाभिवर्षिभिः शरवर्षकारिभिरित्यर्थः ॥ ३५—३६ ॥ चापमण्डलात् संहितगान्धर्वास्त्रात् । आकर्षणातिशयेन मण्डलीकृताच्चापान्निर्ययुः । समागतैस्तैर्बाणैर्दश दिशः सर्वाः अन्यूनाः अवार्यन्त ॥ ३७ ॥ राक्षसा रामस्य शरादानकर्षणमोचनानि नापश्यन् किंतु स्वहिंसनमेवापश्यन्निति क्रियाप्रधानो निर्देशः । यद्यपि गान्धर्वास्त्रप्रयोगे विचित्रबाणनिर्गमोस्ति तदस्मिञ्श्लोके नोच्यते । किंतु तदनन्तरभाविकेवलशरमोक्ष इति ज्ञेयं ॥ ३८—३९ ॥ अन्धकारमिति क्लीबत्वमार्षं । प्रवमन् उद्गिरन् ॥ ४० ॥ युगपच्छरनिर्गमः समुत्प्रेक्ष्यते—युगपदिति । पतमानैः पतद्भिः । एककाले शरहतैः एककाले भूमौ पतद्भिः एककाले पतितैश्च राक्षसैः । वसुधा विकीर्णा व्याप्ताऽभवदिति युगपच्छरनिर्गमनकार्योक्तिः ॥ ४१ ॥ अथ हिंसावैचित्र्यमाह—निहता इति । निहताः केवलं प्रहताः । पतिताः अशनिपात इव भयेन भूमौ पतिताः । क्षीणाः कण्ठगतप्राणाः । छिन्नाः द्विधाकृताः । भिन्नाः खण्डितावयवाः । विदारिताः नृसिंहेन हिरण्यवदानाभिकण्ठमुद्भिन्नशरीराः । तत्र तत्रेत्यनेन कश्चिच्छिन्नः कश्चिद्विदारितः पुनः कश्चिच्छिन्न इत्येवं विचित्रशववत्त्वमुक्तं ॥ ४२ ॥ चित्रवधं दर्शयति—सोष्णीषैरित्यादिना । सोष्णीषैः शिरोवेष्टनवद्भिः । उत्तमाङ्गैः केवलशिरोभिः । नानारूपविभूषणैरित्यूरुजानूनां विशेषणं । सार्धोरुकैरूरुभिः सकटकैर्जानुभिश्चेत्यर्थः । अनेकशो भिन्नैरिति हयादित्रयविशेषणं । विच्छिन्नैरिति चामरादिसर्वविशेषणं । विचित्रैरिति शूलादिविशेषणं । नानाविधैरिति चामरादिविशेषणं । पूर्वोक्तैरेतैर्विकीर्णा अतएव भयंकराऽभूदिति योजना । एतावता ग्रन्थेन रामशरप्रभावातिशयो दर्शितः ।

**स०** सर्वाइत्यनुपचरितत्वंद्योतयति । **शि०** अत्र दशशब्दोपादानेनैव सर्वदिशांग्रहणेसिद्धे पुनस्सर्वशब्दोपादानमवान्तरदेशव्याप्तिपरिग्रहाय ॥३७॥ **शि०** प्रक्षिपन्निवबभूव प्रक्षिपन्निवेत्यनेनाभिप्रायविज्ञानमात्रेण स्वतश्चलन्तीतिसूचितं । तेन रामबाणानांचेतनत्वं सूचितं । **ति०** प्रक्षिपन्निव भूयोभूयःप्रक्षिपन्निवेत्यर्थः । इवशब्दएवार्थे ॥ ४० ॥ **वि०** विस्तीर्णा विशेषतःकृताच्छादना ॥ ४१ ॥ **ति०** विभूषणैरुपलक्षितैः । राक्षसैरितिशेषः ॥ ४३ ॥ इतिपञ्चविंशस्सर्गः ॥ २५ ॥

[ **पा०** ] १ ङ. झ. ट. ततः. २ ङ. झ. ट. राक्षसैस्सर्वतःप्राप्तैः. ३ क. ग. च. छ. ज. ञ. वर्षाणिवर्षिभिः. ङ. झ. ट. वर्षाभिरावृतः. ४ ङ. झ. ट. समयोजयद्गान्धर्वं. ५ च. ट. रापूर्यन्तः. ख. ग. रावार्यन्ते. ६ ख. घोरान्नामुञ्चन्तं. ङ. झ. ट. घोरान्विमुञ्चन्तं. ७ ख. ग. ङ.—ट. शरोत्तमान्. ८ क. न कार्मुकं विकर्षन्तं रामं पश्यन्ति संयुगे. ९ अयं श्लोकः क. पुस्तके दृश्यते. १० ङ. झ. ञ. ट. प्रक्षिपन्निव. च. छ. ज. विसृजन्निशिताञ्शरान्. ११ ग. च. छ. ज. ञ. युगपत्प्रहितैःशरैः. १२ घ. युगपत्प्रेरितैश्चैव. १३ क.—घ. च. छ. ज. विस्तीर्णा. १४ घ. भग्नानिवारिताः. १५ ख. बहुभिस्तदा. १६ क. ख. घ. ङ. झ. ट. बाहुभिः. १७ क. ट. रूपैर्विभूषणैः.

हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः ॥ [1]चामरैर्व्यजनैश्छत्रैर्ध्वजैर्नानाविधैरपि ॥ ४४ ॥
[2]रामस्य बाणाभिहतैर्विचित्रैः[3] शूलपट्टिशैः ॥ खड्गैः[4] खण्डीकृतैः प्रासैर्विकीर्णैश्च परश्वधैः ॥ ४५ ॥
चूर्णिताभिः शिलाभिश्च शरैश्चित्रैरनेकशः ॥ [7]विच्छिन्नैः समरे भूमिर्विकीर्णा[8]ऽभूद्भयंकरा ॥४६॥
[ [9]तान्दृष्ट्वा निहतान्[10]सर्वे [11]राक्षसाः परमातुराः ॥ न तत्र [12]चलितुं शक्ता रामं परपुरंजयम् ॥ ४७ ॥
बलावशेषं तु निरस्तमाहवे खराधिकं राक्षसदुर्बलं बलम् ॥
जघान रामः स्थिरधर्मपौरुषो धनुर्बलैरप्रतिवारणैः शरैः ॥ ४८ ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः ॥ २६ ॥

दूषणेन स्वसेनाक्षयजकोपात्पञ्चसहस्रराक्षसैस्सह रामंप्रत्यभियानम् ॥ १ ॥ रामेण दूषणेतदनुयायिनिसेनापतित्रयेच सेनयासहनिहते खरेणद्वादशसेनाध्यक्षैस्सहतंप्रत्यभियानम् ॥ २ ॥ खरेण स्वसहचराणांद्वादशसेनापतीनामविरामेणहनने स्वयमेवतंप्रत्यभियानम् ॥ ३ ॥

दूषणस्तु स्वकं सैन्यं हन्यमानं [13]निरीक्ष्य सः ॥ संदिदेश महाबाहुर्भीमवेगा[14]न्दुरासदान् ॥
राक्षसान्पञ्च साहस्रान्समरेष्वनिवर्तिनः ॥ १ ॥
ते शूलैः पट्टिशैः खड्गैः शिलावर्षै[15]र्द्रुमैरपि ॥ शरवर्षै[16]रविच्छिन्नं ववृषु[17]स्तं समन्ततः ॥ २ ॥
[18]स द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ॥ प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः ॥ ३ ॥
[19]प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः ॥ रामः क्रोधं परं [20]भेजे वधार्थं सर्वरक्षसाम् ॥ ४ ॥
ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा ॥ शरैर[21]वाकिरत्सैन्यं सर्वतः सहदूषणम् ॥ ५ ॥

---

अस्मिन्सर्गे पञ्चचत्वारिंशच्छ्लोकाः ॥ ४३—४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

अथ दूषणप्रमुखसर्वसैन्यविनाशः षड्विंशे । दूषणस्त्वित्याद्यर्धत्रयमेकं वाक्यं । निरीक्ष्य चेति खिन्नश्चेत्यर्थः । भीमवेगान् भयंकरधावनान् । अतएव दुरासदान् । पञ्चसहस्रानित्यनेन पञ्चसाहस्री पूर्वं हतेति व्यज्यते ॥ १ ॥ तं रामं ॥ २ ॥ प्राणहरं अन्येषामिति शेषः । प्रतिजग्राह प्रतिरुरोध । धर्मात्मेत्यनेन कूटयोधित्वव्युदासः ॥ ३ ॥ निमीलितइवर्षभ इत्यनेन शरवर्षेपि निर्व्यथत्वमनायासत्वं च द्योत्यते ॥ ४ ॥ क्रोधसमाविष्ट इति राम इति शेषः। प्रदीप्त इव तेजसेति तेजोयुक्तत्वेन प्रदीप्त इव स्थित

---

स० पञ्चसाहस्रान् " शतमानविंशतिक—" इत्यण् । सहस्राणीतिवक्तव्येयत्साहस्रानितिकथनं तेन अहस्रैःअमूर्खैस्सहितास्साहस्रास्तान् कुशलपुरुषसहितानितियावत् । " हस्रोमूर्खेविदूषके " इतिसंसारावर्तः ॥ १ ॥ ति० निमीलितः वर्षधारयानि-

[ पा० ] १ क. ख. घ. झ. ट. चामरव्यजनैः. २ क. ग. ङ. झ. ञ. ट. रामेण. ३ ख. ग. ङ.—ट. विच्छिन्नैः. ४ खड्गैः खण्डीकृतैः. चूर्णिताभिःशिलाभिश्च. इत्यर्धद्वयं झ. ञ. ट. पाठेषु न दृश्यते. ५ ख. चूर्णीकृतैः. ६ च. शरैश्छिन्नैः. घ. ज. शरैश्छन्नैः. ७ च. छ. ज. विच्छिन्नैस्तोमरैर्भूमिः. ञ. विचित्रैस्समरे. क. विभिन्नैस्समरे. ८ क.—ट. विस्तीर्णाभूत्. ९ इदं श्लोकद्वयं क. ख. ङ.—ज. ञ. पुस्तकेषुदृश्यते. झ. ट. पाठयोस्तु तान्दृष्ट्वेतिश्लोकमात्रं दृश्यते. १० क. ख. च. छ. ज. ञ. न्सङ्ख्ये. ११ च. छ. ज. राक्षसान्परमातुरान्. १२ क. ख. च. छ. ज. सहितुं. १३ ङ.—ट. विलोक्यच. ख. निरीक्ष्यतत्. क. ग. घ. निरीक्ष्यच. १४ घ. वेगान्निशाचरान्. ख. वेगान्महाबलान्. १५ ख. ग. वर्षद्रुमैरपि. १६ घ. रविच्छिन्नैः. १७ ख. ववृषुश्च. १८ ङ.—ट. तद्द्रुमाणां. १९ क. प्रतिगृह्यतु. २० ग. ङ. च. छ. झ. ञ. ट. लेभे. २१ क. ख. ग. ङ. झ. ट. रभ्यकिरत्. च. छ. ज. ञ. रभ्यहनत्तूर्णं.

ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः ॥ शरैरशनि[1]कल्पैस्तं राघवं [2]समवाकिरत् ॥ ६ ॥
ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ॥ चिच्छेद समरे वीरश्चतुर्भिश्चतुरो हयान् ॥ ७ ॥
हत्वा चाश्वाञ्शरैस्तीक्ष्णैरर्धचन्द्रेण सारथेः ॥ शिरो [3]जहार तद्रक्षस्त्रिभिर्विव्याध वक्षसि ॥ ८ ॥
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ जग्राह गिरि[4]शृङ्गाभं परिघं रोमहर्षणम् ॥ ९ ॥
वेष्टितं काञ्चनैः पट्टैर्देव[5]सैन्यप्रमर्दनम् ॥ आयसैः शङ्कुभिस्तीक्ष्णैः कीर्णं परवसोक्षितम् ॥ १० ॥
वज्राशनिसमस्पर्शं [6]परगोपुरदारणम् ॥ तं महोरगसंकाशं प्रगृह्य परिघं रणे ॥
[7]दूषणोऽभ्यद्रवद्रामं क्रूरकर्मा निशाचरः ॥ ११ ॥
तस्याभिपतमानस्य दूषणस्य स राघवः ॥ द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १२ ॥
भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि ॥ परिघश्छिन्नहस्तस्य शक्रध्वज [8]इवाग्रतः ॥ १३ ॥
[9]स कराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः ॥ विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः १४
[10]तं दृष्ट्वा पतितं भूमौ दूषणं निहतं रणे ॥ साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ १५ ॥
एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः ॥ [11]संहत्याभ्यद्रवन्रामं मृत्युपाशावपाशिताः ॥ १६ ॥
महाकपालः स्थूलाक्षः प्रमाथी च महाबलः ॥ महाकपालो विपुलं शूलमुद्यम्य राक्षसः ॥
स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधम् ॥ १७ ॥
दृष्ट्वैवापततस्[12]तूर्णं राघवः सायकैः शितैः ॥ तीक्ष्णाग्रैः प्रतिजग्राह संप्राप्तानतिथीनिव ॥ १८ ॥
महाकपालस्य शिरश्चिच्छेद [13]परमेषुभिः ॥ असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् ॥ १९ ॥
[14]स पपात [15]हतो भूमौ विटपीव महाद्रुमः ॥ स्थूलाक्षस्याक्षिणी [16]तीक्ष्णैः पूरयामास सायकैः ॥ २० ॥
दूषणस्यानुगान्पञ्चसा[17]हस्रान्कुपितः क्षणात् ॥ [18]बाणौघैः पञ्च साहस्रैरनयद्यमसादनम् ॥ २१ ॥

इत्यर्थः । सहदूषणं दूषणसहितं ॥ ५ ॥ दूषणः खरस्य सेनापतिः ॥६॥ चतुर्भिरिति शरैरित्यनुषङ्गः ॥ ७ ॥ तद्रक्षः दूषणं । वक्षसि विव्याधेति संबन्धः ॥८॥ परितो हन्यतेनेनेति परिघः तं । पट्टैः बन्धनैः । परवसोक्षितं शत्रुमेदःसिक्तं "हृन्मेदस्तु वपावसा" इत्यमरः । वज्राशनिसमस्पर्शं वज्रं वज्राख्यरत्नं । अशनिः वज्रायुधं । तदुभयसदृशकाठिन्यं । परगोपुरदारणं परेषां शत्रूणां यत् गोपुरं पुरद्वारं तस्य दारणं भेदकं । "पुरद्वारं तु गोपुरं" इत्यमरः ॥ ९—११ ॥ अभिपतमानस्य अभिपततः । सहस्ताभरणावित्यनेन शौर्यबिरुदवत्त्वं लक्ष्यते ॥ १२ ॥ रणमूर्धनि छिन्नहस्तस्य तस्य दूषणस्य भ्रष्टः हस्ताच्च्युतः । महाकायः महाप्रमाणः । परिघः शक्रध्वज इवाग्रतः पपातेत्यन्वयः ॥ १३ ॥ कराभ्यां सह पपातेत्यन्वयः । मनस्वी धीरः ॥ १४ ॥ अपूजयन् अस्तुवन् ॥ १५—१६ ॥ त्रीनेवाह—महाकपाल इति । कः किमायुधंगृहीत्वाऽभ्यद्रवदित्यत्राह—महाकपाल इति ॥ १७ ॥ शितैः शाणोल्लीढैः । प्रतिजग्राह तेषु बाणानर्पयामासेत्यर्थः । यथा गृहं प्राप्तानतिथीनुपचारैः प्रतिगृह्णाति तथेत्यर्थः ॥ १८ ॥ प्रतिजग्राहेत्युक्तं विवृणोति—महाकपालस्येत्यादिना । प्रममाथ चूर्णीचकारेत्यर्थः ॥ १९ ॥ चूर्णशरीरत्वे दृष्टान्ततयोक्तं—

मीलिताक्षः ॥ ४॥ ति० क्षुरेण क्षुरधारेण शरेण ॥७॥ ति० पुरगोपुरदारणं शत्रूणांगावइन्द्रियाणितेषांपुरंशरीरंतस्यदारणंविदारकं । ती० वज्राशनिसमस्पर्शं व्रजतियात्येव न प्रतिहन्यतइतिवज्रं । अश्नाति शत्रुजीवितमित्यशनिः । तदुभयसमस्पर्शं ॥ ११ ॥ शि० असंख्येयैः अतिद्रुतगमनवत्त्वेनसंख्यातुमशक्यैः ॥ १९ ॥ ति० पञ्चसाहस्रान्पञ्चसाहस्रैरित्यनेन भगवतोऽमोघेषुत्वंसूचितं

[ पा० ] १ ख. कल्पैश्च. २ ङ. झ. ट. समवारयत्. ३ क. जघान. ४ ख. संकाशं. ५ क.—घ. च.—ट. सैन्याभिमर्दनं. ६ ग. च. छ. ज. पुरगोपुर. ७ ख. ग. ङ.—ट. दूषणोऽभ्यपतत्. क. दूषणोह्यपतत्. ८ घ. इवोच्छ्रितः. ९ ङ. झ. ट. कराभ्यांच. १० क.—ट. दृष्ट्वा तं. ११ क. संगम्याभ्यद्रवन्. १२ क.—ट. स्तांस्तु. १३ ङ.—ट. रघुनन्दनः. क. परमेषुणा. १४ एतच्छ्लोकार्धयोः पौर्वापर्यं क.—ट. पुस्तकेषु दृश्यते. १५ ख. ग. महान्भूमौ. १६ ङ. झ. ट. स्थूले. १७ ख. ग. च. छ. ज. ञ. सहस्रान्. १८ क. ङ. झ. ञ. हत्वातुपञ्च. च. छ. ज. ट. हत्वातान्पञ्चसाहस्रान्.

दूषणं निहतं दृष्ट्वा[1] तस्य चैव पदानुगान्[2] ॥ व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान्महाबलान् ॥२२॥
अयं विनिहतः संख्ये[3] दूषणः सपदानुगः ॥ महत्या सेनया सार्धं युध्वा रामं कुमानुषम् ॥ २३ ॥
शस्त्रैर्नानाविधाकारैर्हनध्वं सर्वराक्षसाः ॥ एवमुक्त्वा खरः क्रुद्धो राममेवाभिदुद्रुवे ॥ २४ ॥
श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः ॥ दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ २५ ॥
मेघमाली[4] महामाली सर्पास्यो रुधिराशनः ॥ द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः ॥
राममेवाभ्यवर्तन्त[5] विसृजन्तः शरोत्तमान् ॥ २६ ॥
ततः पावकसंकाशैर्हेमवज्रविभूषितैः ॥ जघान शेषं[6] तेजस्वी तस्य सैन्यस्य सायकैः ॥ २७ ॥
ते रुक्मपुङ्खा विशिखाः सधूमा इव पावकाः ॥ निजघ्नुस्तानि रक्षांसि वज्रा[7] इव महाद्रुमान्[8] ॥२८॥
रक्षसां तु शतं रामः शतेनैकेन[9] कर्णिना ॥ सहस्रं[10] च सहस्रेण जघान रणमूर्धनि ॥ २९ ॥
तैर्भिन्नवर्माभरणाश्छिन्नभिन्नशरासनाः ॥ निपेतुः शोणितादिग्धा धरण्यां रजनीचराः ॥ ३० ॥
तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः ॥ आस्तीर्णा[11] वसुधा कृत्स्ना[12] महावेदिः कुशैरिव ॥ ३१ ॥
क्षणेन[13] तु महाघोरं वनं निहतराक्षसम् ॥ बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥ ३२ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम्[14] ॥ हतान्येकेन रामेण मानुषेण पदातिना ॥ ३३ ॥
तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः ॥ राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः ॥ ३४ ॥
शेषा हता महासत्त्वा[15] राक्षसा रणमूर्धनि[16] ॥ घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते ॥ ३५ ॥

ततस्तु तद्भीमबलं महाहवे समीक्ष्य रामेण[17] हतं बलीयसा ॥
रथेन रामं महता खरस्तदा[18] समाससादेन्द्र इवोद्यताशनिः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

विटपीति ॥ २०—२३ ॥ हनध्वं घ्नत ॥ २४ ॥ सेनाध्यक्षानेवाह—श्येनगामीत्यादिना ॥२५—२६॥ वज्रं वज्रमणिः । तेजस्वी राम इति शेषः ॥ २७ ॥ सधूमा इत्यनेन दहनोन्मुखत्वं व्यज्यत इत्यङ्गारावस्थाव्यावृत्तिः । वज्रा इवेति "वज्रमस्त्रियां" इत्युभयलिङ्गो वज्रशब्दः ॥ २८ ॥ कर्णिना कर्णाकारशरीरेण ॥ २९ ॥ छिन्नं खण्डितं । भिन्नं विदारितं । आदिग्धाः आलिप्ताः ॥ ३० ॥ रणाग्रपतितत्वातिशयात्कुशसाम्योक्तिः ॥ ३१ ॥ निरयप्रख्यं नरकतुल्यं । मांसशोणितैः कृतः कर्दमः पङ्को यस्य तत्तथा ॥ ३२ ॥ मानुषेण ऋजुना । पदातिना वाहनरहितेनेत्यद्भुतोक्तिः ॥ ३३ ॥ सैन्यस्य युद्धप्रवृत्तस्य । अतो रामस्यापि तत्रान्तर्भावः । खरादित्रयं शेषः अवशिष्टांश इत्यर्थः । शेषाः सर्वे राक्षसा हता इत्यन्वयः । महासत्त्वा इत्यादिविशेषणैर्महारथा एव हताः क्षुद्राः केचन भीरवो न हता इतिगम्यते। अत एवोत्तरसर्गे हतशेषा इति वक्ष्यति । लक्ष्मणस्याग्रजेनेति रामस्य विष्णवर्धांशभाक्त्वेनाधिकबलत्वोक्तिः ॥ ३४—३५ ॥ भीमबलं भीमसैन्यं । उद्यताशनिः उद्यतवज्रः ॥३६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

शि० पञ्चसाहस्रान्दूषणस्यानुगान्हत्वा तान्पञ्चसाहस्रान् यमसादनं सकलसंपत्तिविशिष्टलोकविशेषं अनयत् । वि० पञ्चसाहस्रैः बाणैरितिशेषः ॥ २१ ॥ स० कुमानुषं कौ भूमौमनुष्याकारंप्राप्तं ॥ २३ ॥ ति० शतं एकेन शतेन तत्संख्याकेन । कर्णिना बाणविशेषेण । एवंसहस्रंसहस्रेण ॥ २९ ॥ शि० मुक्ताः ग्रन्थिरहिताःकेशाःयेषांतैः ॥ ३१ ॥ इतिषाड्विंशस्सर्गः ॥२६॥

[ पा० ] १ ङ. झ. ट. श्रुत्वा. २ ग. वशानुगान्. ३ च. छ. ज. ञ. शेते. ४ ङ.—ट. हेममाली. ५ क. ङ.—ट. वाभ्यधावन्त. ६ ख. शेषांस्तेजस्वी. ७ क. वज्राणीव. ८ च. छ. ज. ञ. महासुरान्. ९ च. छ. ज. शरेणैकेन. १० क.—ट. सहस्रंतु. ११ ङ. झ. ट. विस्तीर्णा. १२ क. तत्र. १३ ङ. च. छ. झ. ञ. ट. तत्क्षणेतु. १४ क. क्रूरकर्मणां. १५ ङ.—ट. महावीर्याः. १६ क. रणनिर्भयाः. ख. ग. रणदुर्जयाः. १७ ङ. झ. ट. धर्मेण. १८ क. ङ.—ट. स्ततः.

## सप्तविंशः सर्गः ॥ २७ ॥

त्रिशिरसा रामाभियायिनः खरस्यरामवधप्रतिज्ञानेननिवर्तनपूर्वकं तंप्रत्यभियानम् ॥ १ ॥ रामेणत्रिशिरसोपिवधे खरेणरामंप्रति स्वयमेवाभियानम् ॥ २ ॥

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः[1] ॥ राक्षसस्त्रिशिरा नाम संनिपत्येदमब्रवीत्[2] ॥ १ ॥
मां नियोजय विक्रान्त[3] [4]संनिवर्तस्व साहसात् ॥ पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २ ॥
प्रतिजानामि ते सत्यमायुधं[5] [6]चाहमालभे ॥ यथा रामं वधिष्यामि वधार्हं[7] सर्वरक्षसाम् ॥ ३ ॥
अहं वाऽस्य रणे मृत्युरेष वा समरे मम ॥ विनिवृत्य रणोत्साहान्मुहूर्तं प्राश्निको भव ॥ ४ ॥
[8]प्रहृष्टे वा हते रामे जनस्थानं प्रयास्यसि ॥ मयि वा निहते रामं संयुगायोपयास्यसि[9] ॥ ५ ॥
खरस्त्रिशिरसा तेन मृत्युलोभात्प्रसादितः ॥ गच्छ युध्येत्यनुज्ञातो[10] राघवाभिमुखो ययौ ॥ ६ ॥
[11]त्रिशिराश्च रथेनैव वाजियुक्तेन भास्वता ॥ अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः ॥ ७ ॥
शरधारासमूहान्स महामेघ इवोत्सृजन् ॥ [12]व्यसृजत्सदृशं नादं [13]जलार्द्रस्य तु दुन्दुभेः ॥ ८ ॥
आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः ॥ धनुषा प्रतिजग्राह विधून्वन्सायकाञ्शितान् ॥ ९ ॥
स संप्रहारस्तुमुलो रामत्रिशिरसोर्महान्[14] ॥ [15]बभूवातीव बलिनोः सिंहकुञ्जरयोरिव ॥ १० ॥

---

त्रिशिरश्शिरसां छेददृष्टान्तेन स्वसेविनाम् । दुःखत्रयनिहन्तारं लक्ष्मणाग्रजमाश्रये ॥ वाहिनीपतिः सेनापतिः । संनिपत्य समीपमागत्येत्यर्थः ॥ १ ॥ साहसात् युद्धाभिमुख्यलक्षणात् । विनिपातितमिति मयेतिशेषः ॥ २ ॥ आलभे स्पृशामि । प्रतिज्ञाप्रकारमाह—यथेति । सर्वरक्षसां सर्वरक्षोभिः ॥ ३ ॥ मृत्युः मारयिता । प्राश्निकः जयापजयनिर्णायकः ॥४॥ प्रहृष्टे गर्विष्ठे । संयुगाय युद्धं कर्तुं । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ॥५॥ मृत्युलोभात् मृत्युना कृतो लोभो युद्धलोभस्तस्मात् । प्रसादितः निवर्तित इति यावत् । युध्य युद्धं कुरु । अनुज्ञातः खरेणेति शेषः । त्रिशिरा इति सिद्धं ॥ ६ ॥ त्रिशिराश्चेति चकारो न समुच्चयार्थः ॥ ७ ॥ शरा एव धाराः आसाराः तासां समूहान् । दुन्दुभिशब्दः पुंलिङ्गः । "भेरी स्त्री दुन्दुभिः पुमान्" इत्युक्तेः । दुन्दुभेः दुन्दुभिनादस्य । जलार्द्रस्येत्यनेनास्य हीनस्वरत्वमुक्तं ॥ ८ ॥ धनुषा सायकान् विधून्वन् कम्पयन् मुञ्चन्निति यावत् ॥ ९ ॥ संप्र-

---

**ती०** सप्तविंशेसर्गेमांनियोजयेत्यादिसार्धश्लोकस्यचतुष्टयस्यवास्तवार्थस्तु—हेखर संयुगेरामंच तेनविनिपातितंसैन्यंचेतिशेषः । पश्य । अतस्त्वंसाहसान्निवर्तस्व । मांनियोजय । तर्हित्वं तंहनिष्यसिकिं तत्राह—**प्रतिजानामीत्यादि** । सर्वरक्षसांवधार्हं सर्वरक्षसांहन्तारमित्यर्थः । रामं यथा यथावत् । अहंप्रतिजानामि सम्यग्जानामीत्यर्थः । अतस्त्वं वधिष्यामीति सर्वमायुधमालभे ग्रहिष्यामिकेवलमित्यर्थः । हन्तुमशक्यश्चेदनेनाकिं तत्राह—**अहमिति** । अस्यरामस्य अहं वा रणेमृत्युः किंतु एषवा एषरामएव समरेममृत्युः । अतस्त्वं महोत्साहाद्विनिवर्तस्व । मुहूर्तंप्राश्निकोभवेतिसंबन्धः । प्रहृष्टोवाहतइत्यत्र अहतइतिच्छेदः । रामे अहतेसति मे मयिच निहतेसति प्रहृष्टस्त्वं रामंप्रति संयुगायोपयास्यसि अथवा जनस्थानंवा प्रयास्यसीतिसंबन्धः । प्रसादितः प्रार्थितः ॥ २—६ ॥ **स०** सर्वरक्षसांवधार्हं सर्वराक्षसकर्मकवधयोग्यं वधकर्तारमितियावत् ॥ ३ ॥ **ति०** अहंवासमरेइतिपाठे मृत्युरित्यस्यास्येतिशेषः ॥ ४ ॥ **ति०** मृत्युलोभात् मृत्युकृतेयुद्धलोभात् । मृत्युसमये रक्षःप्रकृतिविपर्ययात्तस्यभगवत्तत्वंज्ञात्वा तद्धस्तमृत्युलोभादित्यर्थश्च ॥६॥ **ति०** जलार्द्रस्येति । अनेन नादवैपरीत्येनमृत्युसांनिध्यंसूचितं । **स०** मेघपक्षे शरशब्दउदक-

[ **पा०** ] १ च. छ. ज. ञ. वाहिनीपतिं. २ क. ख. संनिवर्त्येदं. ३ च. छ. ज. ञ. संग्रामे. घ. ङ. झ. विक्रान्तं. ४ ङ. झ. ट. त्वंनिवर्तस्व. ५ क. सर्वं. ६ क. च. समालभे. ७ ख. हितार्थं. ८ घ. प्रहृष्टोनिहते. क. ख. ग. ङ.—ट. प्रहृष्टोवाहते. ९ ङ.—ट. संयुगायप्रयास्यसि. १० क. ग. युद्धेऽभ्यनुज्ञातः. ११ घ. ङ. झ. ट. त्रिशिरास्तु. १२ च. छ. ज. ञ. व्यसृजद्भैरवं. १३ क.—ट. जलार्द्रस्येव. १४ ङ. झ. ट. त्रिशिरसोस्तदा. १५ ङ.—ट. संबभूवाति.

ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः ॥ अमर्षी कुपितो रामः संरब्धमिदमब्रवीत् ॥ ११ ॥
अहो विक्रमशूरस्य राक्षसस्येदृशं बलम् ॥ पुष्पैरिव शरैर्यस्य ललाटेऽस्मि परिक्षितः ॥ १२ ॥
ममापि प्रतिगृह्णीष्व शरांश्चापगुणच्युतान् ॥ एवमुक्त्वा तु संरब्धः शरानाशीविषोपमान् ॥
त्रिशिरोवक्षसि क्रुद्धोः निजघान चतुर्दश ॥ १३ ॥
चतुर्भिस्तुरगानस्य शरैः संनतपर्वभिः ॥ न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः ॥ १४ ॥
अष्टभिः सायकैः सूतं रथोपस्थे न्यपातयत् ॥ रामश्चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम् ॥१५॥
ततो हतरथात्तस्मादुत्पतन्तं निशाचरम् ॥ बिभेद रामस्तं बाणैर्हृदये सोभवज्जडः ॥ १६ ॥
सायकैश्चाप्रमेयात्मा सामर्षस्तस्य रक्षसः ॥ शिरांस्यपातयद्रामो वेगवद्भिस्त्रिभिः शितैः ॥ १७ ॥
स भूमौ रुधिरोद्गारी रामबाणाभिपीडितः ॥ न्यपतत्पतितैः पूर्वं स्वशिरोभिर्निशाचरः ॥ १८ ॥
हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः ॥ द्रवन्ति स्म न तिष्ठन्ति व्याघ्रत्रस्ता मृगा इव ॥१९॥
तान्खरो द्रवतो दृष्ट्वा निवर्त्य रुषितः स्वयम् ॥ राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

हारो युद्धं ॥ १० ॥ संबन्धं सकोपमित्यर्थः । लोके कश्चित्कुपितोपि वचनेन कोपं न प्रकटयति अयं तु प्रकटयतीति भावः ॥ ११ ॥ अहो इत्यादिव्यङ्ग्योक्तिः । विक्रमः पराभिभवनं तत्र शूरस्य समर्थस्येत्यर्थः । ईदृशमित्यस्यैव विवरणं—पुष्पैरिवेत्यर्धं । ललाटे स्वललाटे । ललाटे स्वल्पापि क्षतिर्बाधिका भवति सापि नास्तीति सूचयितुं पुष्पतौल्यं । चापगुणः चापमौर्वी । संरब्धः सन्नेवमुक्त्वा क्रुद्धो निजघानेत्यन्वयः ॥ १२—१३ ॥ सन्नतपर्वभिः ऋजुपर्वभिः । वाजिनः वेगवतः ॥ १४ ॥ रथोपस्थे रथोपरिभागे ॥१५॥ हतरथात् हतहयसारथिकरथात् । हृदये वक्षसि । बिभेदेत्यन्वयः । जडः निश्चेष्टः ॥ १६—१७ ॥ पूर्वं पतितैः शिरोभिः हेतुभिः स्वयं न्यपतत् ॥ १८ ॥ खरसंश्रयाः खरसेवकाः ॥ १९—२० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

---

वाची ॥ ८ ॥ **शि०** अमर्षी ऋष्यपराधासहनशीलः ॥ ११ ॥ **ती०** अहोइतिसोपहासवचनं । पुष्पैस्स्वल्पापीडाभवति । त्वच्छरैस्तादृशपीडापिनास्तीतिभावः । **स०** परिक्षतः वर्जितक्षतः । "अपपरीवर्जने" इतिवचनात् पुष्पैरितिसुलभं ॥ १२ ॥ **ति०** जडः आयुधपरिग्रहेइतिशेषः ॥ १६ ॥ **ति०** पूर्वपतितैः शिरोभिरुपलक्षितः पश्चान्न्यपतत् । "चतुर्दशसहस्राणिमम-च्चित्तानुवर्तिनाम्" इतिसेनोद्योगेखरोक्तेः चतुर्दशसहस्राणिहतानि खरत्रिशिरसावेवावशिष्टाविति पूर्वसर्गान्ते उक्तेर्हतशेषान्निवर्त्ये-त्यत्रत्योक्तेश्चचतुर्दशसहस्रं यूथपाअत्रेतिज्ञायते । हतशेषाइतितु खरीयमूलबलाभिप्रायंबोध्यं । **टी०** ननु खरश्शेषोमहारथः । त्रिशिराश्चैवरामश्चेत्युक्तं कथमिदानींहतशेषाइति । उच्यते । तत्र प्रधानेषुत्रयोऽवशिष्टाइतिमुनेरभिप्रायः ॥ १९ ॥ **स०** निवर्त्य निवर्तयित्वा । रुषितः रुष्टः ॥ २० ॥ इतिसप्तविंशस्सर्गः ॥ २७ ॥

**[ पा० ]** १ क. ख. ङ. च. छ. झ. ञ. ट. संरब्धइदं. २ ङ.—ट. शरैर्योहं. ३ ट. सुसंरब्धः. क. ख. तु संक्रुद्धः. ४ ख. घ. निचखान. ५ ञ. रथोपस्थान्न्यपातयत्. ६ ङ.—ट. चिच्छेद. ७ क. ग. ङ.—ट. स्यपातयत्त्रीणि. ८ क.—ट. शरैः. ९ ङ. झ. ट. सधूमशोणितोद्गारी. ख. ग. च. छ. ज. ञ. सभूमौशोणितोद्गारी. १० ख. ङ. ट. समरस्थोनिशाचरः. घ. स्वशिरोभिर्महाबलः. ११ क. शेषास्तु. १२ ङ. झ. ट. रुषितस्त्वरन्.

# अष्टाविंशः सर्गः ॥ २८ ॥

खरकृतधनुश्छेदरुष्टेनरामेणागस्त्यदत्तधनुरादानेन शरैः खरस्यविरथीकरणम् ॥ १ ॥ रथसङ्गेगदापरिग्रहेणधरणीतलस्थे खरे विमानस्थैर्देवादिभिः सहर्षश्रीरामाभिष्टवः ॥ २ ॥

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह ॥ खरस्याप्यभवत्त्रासो दृष्ट्वा रामस्य विक्रमम् ॥ १ ॥
स दृष्ट्वा राक्षसं सैन्यमविषह्यं महाबलः ॥ हतमेकेन रामेण त्रिशिरोदूषणावपि ॥ २ ॥
तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः ॥ आससाद खरो रामं नमुचिर्वासवं यथा ॥ ३ ॥
विकृष्य बलवच्चापं नाराचान्रक्तभोजनान् ॥ खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ४ ॥
ज्यां विधून्वन्सुबहुशः शिक्षयाऽस्त्राणि दर्शयन् ॥ चकार समरे मार्गाञ्शरै रथगतः खरः ॥ ५ ॥
स सर्वाश्च दिशो बाणैः प्रदिशश्च महारथः ॥ पूरयामास तं दृष्ट्वा रामोपि सुमहद्धनुः ॥ ६ ॥
स सायकैर्दुर्विषहैः सस्फुलिङ्गैरिवाग्निभिः ॥ नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७ ॥
तद्बभूव शितैर्बाणैः खररामविसर्जितैः ॥ पर्याकाशमनाकाशं सर्वतः शरसंकुलम् ॥ ८ ॥
शरजालावृतः सूर्यो न तदा स्म प्रकाशते ॥ अन्योन्यवधसंरम्भादुभयोः संप्रयुध्यतोः ॥ ९ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ॥ आजघान खरो रामं तोत्रैरिव महाद्विपम् ॥ १० ॥
तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् ॥ ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११ ॥
हन्तारं सर्वसैन्यस्य पौरुषे पर्यवस्थितम् ॥ परिश्रान्तं महासत्त्वं मेने रामं खरस्तदा ॥ १२ ॥
तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् ॥ दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥ १३ ॥
ततः सूर्यनिकाशेन रथेन महता खरः ॥ आससाद रणे रामं पतङ्ग इव पावकम् ॥ १४ ॥

---

महामोहसहायस्य दर्पस्याश्रयनिग्रहम् । व्यङ्क्तुं खरोपकरणं हन्तारं राममाश्रये ॥ निहतं दूषणं दृष्ट्वा रामस्य विक्रमं च दृष्ट्वा स्थितस्य खरस्य त्रासोऽभवदिति योजना ॥ १ ॥ रक्षसां संबन्धि राक्षसं त्रिशिरोदूषणौ हतावित्यनुषङ्गः । बलं सैन्यं । हतभूयिष्ठं हतप्रवरराक्षसं । चतुर्दशसहस्रसंख्याकाः प्रधाना हताः अवशिष्टं सैन्यं प्रेक्ष्येत्यर्थः । विमनाः विगतगर्वावस्थं मनो यस्य स तथा ॥ २—३ ॥ बलवत् अत्यन्तं । नाराचान् "प्रक्ष्वेडनास्तु नाराचाः" इत्यमरः । रक्तभोजनानिति रक्तरूषितत्वेन रक्तभोजनत्वव्यपदेशः । आशीविषानिव सर्पानिव स्थितान् ॥ ४ ॥ शिक्षया धनुर्वेदशिक्षापाटवेन । ज्यां विधून्वन् अस्त्राणि दर्शयन् अस्त्रप्रयोगपाटवं दर्शयन्नित्यर्थः । समरे शरैः मार्गान् नानाप्रकारांश्चकार ॥ ५ ॥ स रामोपि तं दृष्ट्वा बाणैः सुमहद्धनुः सर्वा दिशः प्रदिशश्च पूरयामासेत्यन्वयः ॥ ६ ॥ सः रामः । अविवरं नीरन्ध्रं ॥ ७ ॥ पर्याकाशं परितः स्थितमाकाशं । खररामयोश्चतुःपार्श्ववर्त्याकाशमित्यर्थः । सर्वतः सर्वत्र । अनाकाशं अनवकाशं बभूव ॥ ८ ॥ संरम्भात् कोपात् । "संरम्भः संभ्रमे कोपे" इत्यमरः । उभयोः शरजालावृत इत्यन्वयः ॥ ९ ॥ तोत्रैः गजशिक्षणयष्टिभिः ॥ १०—११ ॥ खरः सर्वसैन्यहननपरिश्रान्तमपि रामं पौरुषे पर्यवस्थितं महासत्त्वं मेने । यद्वा उक्तविशेषणं रामं परिश्रान्तं मेने ॥ १२ ॥ नोद्विजते नाचलत् । क्षुद्रमृगं शशं ॥ १३ ॥ पतङ्ग

---

स० मार्गान् शरसंघातप्रक्षेपणादिप्रकारभेदान् । स० रथगतइत्यनेन रामस्यपदातित्वेप्यस्यरथगतत्वमन्याय्यमितिसूचयति ॥ ५ ॥ स० शरसंकुलं उदकसंकुलमिव ॥ ८ ॥ ति० रामंखरःपरिश्रान्तंमेने । अनेनायंप्रहारावसरइति खरबोधस्सूचितः ।

[ पा ] १ ख.—च. झ. ट. महाबलं. २ ङ. झ. ञ. ट. दूषणस्त्रिशिराअपि. ३ ख. तत्सैन्यं. ४ क. घ. सबहुशः. ५ क. च.—ट. चचार. ६ क. ग. रामश्चकार. ख. रामश्चकाराविरतं. ७ ख. च. छ. ज. ञ. संप्रकाशते. ८ क.—ट. रणे. ९ क. च. छ. ज. ञ. तस्यसैन्यस्य.

ततोस्य सशरं चापं मुष्टिदेशे महात्मनः ॥ खरश्चिच्छेद रामस्य दर्शयन्[1]पाणिलाघवम् ॥ १५ ॥
स पुनस्त्वपरान्सप्त शरानादाय [2]वर्मणि ॥ [3]निजघान खरः [4]क्रुद्धः शक्राशनि[5]समप्रभान् ॥ १६ ॥
[6]ततस्तत्प्रहतं बाणैः खरमुक्तैः [7]सुपर्वभिः ॥ पपात कवचं भूमौ रामस्यादित्य[8]वर्चसः ॥ १७ ॥
ततः शरसहस्रेण [9]राममप्रतिमौजसम् ॥ [10]अर्दयित्वा महानादं ननाद समरे खरः ॥ १८ ॥
स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघवः ॥ रराज समरे रामो [11]विधूमोग्निरिव ज्वलन् ॥ १९ ॥
ततो गम्भीरनिर्ह्रादं रामः शत्रुनिबर्हणः ॥ चकारान्ताय स रिपोः सज्यमन्यन्महद्धनुः ॥ २० ॥
सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा ॥ वरं तद्धनुरुद्यम्य खरं समभिधावत ॥ २१ ॥
ततः कनक[12]पुङ्खैस्तु शरैः सन्नतपर्वभिः ॥ [13]बिभेद रामः संक्रुद्धः खरस्य समरे ध्वजम् ॥ २२ ॥
[14]स दर्शनीयो बहुधा [15]विकीर्णः काञ्चनध्वजः ॥ जगाम धरणीं सूर्यो देवतानामिवाज्ञया ॥ २३ ॥
[16]तं चतुर्भिः खरः क्रुद्धो [17]रामं गात्रेषु मार्गणैः ॥ विव्याध [18]युधि मर्मज्ञो मातङ्गमिव तोमरैः ॥२४॥
स रामो बहुभिर्बाणैः खरकार्मुकनिःसृतैः ॥ विद्धो रुधिर[19]सिक्ताङ्गो बभूव रुषितो भृशम् ॥ २५ ॥
स धनुर्धन्विनां श्रेष्ठः [20]प्रगृह्य परमाहवे ॥ मुमोच परमेष्वासः षट् छरानभिलक्षितान् ॥ २६ ॥
शिरस्येकेन बाणेन द्वाभ्यां [21]बाह्वोरथार्दयत् ॥ त्रिभिश्चन्द्रार्ध[22]वक्त्रैश्च वक्षस्य[23]भिजघान ह ॥ २७ ॥

---

इत्यनेन अमृत्वा अनिवृत्तिरुच्यते ॥ १४ ॥ मुष्टिदेशे मुष्टिबन्धनसमीपदेशे । महात्मन इत्यनेन मुष्टिदेशे पततो बाणस्य परिहरणसामर्थ्यं व्यज्यते । लाघवं शैघ्र्यं। चिच्छेद रामस्य किंचिच्छ्रान्तत्वेनानवधानादिति भावः ॥ १५ ॥ पाणिलाघवमेवाह—स पुनरित्यादिना । वर्मणि निजघान अवदारयति स्म ॥ १६ ॥ आदित्यवर्चस इत्यनेन कवचपतनानन्तरं प्रकाशमानतेजोविशेष उच्यते ॥१७—१८ ॥ आर्पितः संयुक्तः । विधूम इत्यनेन ज्वालाधिक्यमुच्यते ॥ १९ ॥ गम्भीरनिर्ह्रादं गम्भीरध्वनिकं। धनुः रिपोरन्ताय नाशाय । चकारेत्यन्वयः ॥२०॥ यत्तदिति प्रसिद्ध्यतिशयवाची। महर्षिणा अगस्त्येन । अतिसृष्टं दत्तं । समभिधावत समभ्यधावत ॥ २१ ॥ सन्नतपर्वभिः ऋजुपर्वभिः ॥ २२ ॥ दर्शनीयः रम्यः । आज्ञया शापेन । उत्प्रेक्षेयं ॥ २३ ॥ मातङ्गं गजं । तोमरैः गजशिक्षादण्डैः । चतुर्भिरित्यत्र वीप्सा बोध्या। बहुभिरित्यनुवादात् ॥ २४—२५ ॥ परमेष्वासः उत्कृष्टशरासनः । अभिलक्षितान् प्रसिद्धान् ॥२६॥ षण्णां विनियोगप्र-

---

अतएवानुपदं तेनरामधनुषश्छेदः । **स०** महासत्वमपि रामं परिश्रान्तंमेने । अनेन भ्रमस्सूच्यते। **शि०** पौरुषे परमपुरुषत्वे पर्यवस्थितंरामं खरःपरिश्रान्तंमेने । एतेन खरस्याज्ञानंसूचितं ॥ १२ ॥ **शि०** चिच्छेद । एतेन तद्धनुषोऽदिव्यत्वंसूचितंयद्यपि । वस्तुतस्तु चिच्छेदेत्यस्य द्विधाभवनानुकूलव्यापारंचकारेत्यर्थः । नहि व्यापारमात्रेण फलसिद्धिस्सार्वत्रिकीति अत्र फलसिद्धेरभावा-च्चापस्यदिव्यत्वमक्षतमेव ॥१५॥ **शि०** खरमुक्तैर्बाणैः प्रहतं ताडनाश्रयत्वेनेच्छविषयीभूतं । आदित्यवर्चसं तद्रामकवचं भूमौपपात ताडितस्वसंस्पर्शजनितरामखेदसंभावनया बाणसंबन्धात्पूर्वमेव रामशरीरान्निस्सृत्य खरप्रक्षिप्तबाणान्गृहीत्वा पृथिव्यामतिष्ठ-दित्यर्थः ॥ १७ ॥ **शि०** अगस्त्येनदत्तमित्यनेन मद्दत्तचापेनैव खरोहन्तव्य इत्यगस्त्यप्रार्थना सूचिता । तेनागस्त्यस्याप्यनेन कश्चिदपराधःकृतइति सूचितं ॥ २१ ॥ **स०** देवतानां स्वोत्तमानां हरिब्रह्महराणां आज्ञया सूर्यः अस्तसमयेधरणींमिव ध्वजो-जगामेत्यर्थः ॥ २३ ॥ **शि०** बाणैर्विद्धस्ताडितः. रुधिरसिक्ताङ्गः निहतानेकराक्षसशरीरजनितशोणितोक्षितोरामः ॥ **स०** रुधि-रसिक्ताङ्गः तद्वद्बभूवेत्यर्थः ॥ २५ ॥ **स०** अभिलक्षितान् ज्ञातसामर्थ्यान् ॥ २६ ॥

[ **पा०** ] १ ङ. झ. ट. न्हस्तलाघवं. २ क.—घ. च.—ञ. मर्मणि. ३ क—घ. निचखान. ४ क.—ट. रणे. ५ क. ग. समस्वनान्. ६ ततस्तत्प्रहितं. ततःशरसहस्रेणेत्यनयोः श्लोकयोः पौर्वापर्यं क. ख. ग. ङ.—ट. पाठेषु दृश्यते. क. ततस्तन्मृदितं. छ. ततस्तत्प्रहतैः. ७ ग. सपर्वभिः. ८ ङ. झ. ञ. ट. वर्चसं. ९ ख. रामंचापिमहौजसं. १० ख. ग. घ. च. छ. ज. अर्पयित्वा. ११ घ. विधूमाग्निरिव. १२ च. ज. पुङ्खैश्च. १३ ङ.—ट. चिच्छेद. १४ ख. दर्शनीयोथ. १५ क. ङ.—ट. विच्छिन्नः काञ्चनो ध्वजः. १६ ख. खरश्चतुर्भिःक्रुद्धोथ. १७ ज. रामगात्रेषु. १८ ङ. झ. ट. हृदि. १९ ख. च. छ. ज. ञ. दिग्धाङ्गो. २० ङ. झ. ट. संगृह्य. २१ क. ग. घ. ङ. छ. झ. ञ. ट. बाह्वोरथार्पयत्. ख. बाह्वोस्समार्पयत्. २२ घ. वक्त्रैस्तं. २३ घ. जघानच.

ततः पश्चान्महातेजा नाराचान्भास्करोपमान् ॥ [1]जिघांसू राक्षसं क्रुद्धस्त्रयोदश [2]समाददे ॥ २८ ॥
[3]ततोस्य युगमेकेन [4]चतुर्भिश्चतुरो हयान् ॥ [5]षष्ठेन तु शिरः सङ्ख्ये [6]खरस्य रथसारथेः ॥ २९ ॥
[7]त्रिभिस्त्रिवेणुं बलवान्द्वाभ्यामक्षं महाबलः ॥ द्वादशेन तु बाणेन खरस्य [8]सशरं धनुः ॥ ३० ॥
छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव ॥ त्रयोदशेनेन्द्रसमो बिभेद समरे खरम् ॥ ३१ ॥
[9]प्रभग्नधन्वा विरथो हताश्वो हतसारथिः ॥ गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२ ॥
तत्कर्म रामस्य महारथस्य समेत्य देवाश्च महर्षयश्च ॥
[10]अपूजयन्प्राञ्जलयः प्रहृष्टास्तदा विमानाग्रगताः समेताः ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः ॥ २९ ॥

रामेण खरंप्रति सगर्हणंवीरवादः ॥ १ ॥ तथा सगर्हणंसवीरवादं खरप्रक्षिप्तायागदाया बाणैर्बहुधाखण्डनम् ॥ २ ॥

खरं तु विरथं रामो गदापाणिमवस्थितम् ॥ मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १ ॥
गजाश्वरथसंबाधे बले महति तिष्ठता ॥ कृतं [11]सुदारुणं कर्म सर्वलोकजुगुप्सितम् ॥ २ ॥
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ॥ त्रयाणामपि लोकानामीश्वरोपि न तिष्ठति ॥ ३ ॥
कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर ॥ तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४ ॥

---

कारमाह—शिरसीत्यादिना । द्वाभ्यामिति । बाह्वोरिति एकैकस्य बाहोरेकैकेनेत्यर्थः । चन्द्रार्धवक्त्रैः । अर्धचन्द्राकारमुखैरित्यर्थः ॥ २७ ॥ त्रयोदश नाराचान् समाददे इत्यन्वयः । अन्तिमपादे त्रयोदशशराञ्छितानिति पाठे मुमोचेति क्रियाध्याहार्या ॥ २८ ॥ त्रयोदशानां विनियोगमाह—ततोस्येत्यादिना । छित्त्वेत्युत्तरत्र स्थिता क्रिया सर्वत्र संबध्यते । त्रिवेणुर्नाम रथमुखस्थो युगाधारदण्डः । प्रहसन्निव लीलयेत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ अवप्लुत्य रथात्समुल्लङ्घ्य ॥ ३२ ॥ तत्कर्म खरभङ्गकर्म । अपूजयन् अस्तुवन् । समेत्य समूहीभूय । समेताः आगताः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

---

अहंकारस्य हीनस्य व्यक्तां शक्तिमिव स्थिताम् । गदां खरस्य निर्भिद्य राजन्तं राममाश्रये ॥ सर्वसाधनवैकल्येन खरस्यानुकूल्यमपि भवेदिति तच्चित्तपरीक्षार्थमाह—खरं त्वित्यादिना । मृदुपूर्वं न्यायावलम्बनेनोक्तं । परुषं मर्मोद्घाटनरूपत्वात् ॥ १ ॥ तिष्ठता अधिपतित्वेन तिष्ठतेत्यर्थः ॥ २ ॥ मृदुपूर्वत्वसिद्धये लोकन्यायमाह—उद्वेजनीय इति । उद्वेजनीयः उद्वेजकः । नृशंसो घातुकः । एवंविधो लोकानामीश्वरोपि न तिष्ठति न जीवेत् । किंपुन-

---

**ति०** भास्करोपमानित्यस्य गृहीत्वेतिशेषः ॥ २८ ॥ **शि०** रथस्य युगं रथाङ्गं । यद्यपि "युगोरथहलाद्यङ्गे" इतिकोशाद्युगेनैव रथाङ्गग्रहणेसिद्धे रथस्येति निरर्थकं । तथापि स्पष्टतइतराङ्गव्यावृत्तये तदुपात्तं । अन्वयस्तु विशेषणाविवक्षया ॥ २९ ॥ **स०** कर्म समेत्य ज्ञात्वा अपूजयन्नित्यन्वयः ॥ ३३ ॥ इत्यष्टाविंशस्सर्गः ॥ २८ ॥

**स०** मृदुपूर्वं शब्दतः । परुषं अर्थतः ॥ १ ॥ **ति०** त्वत्कृतान्यायेनायंतवनाशइत्याह—**गजेत्यादि** ॥ **स०** तिष्ठता त्वया ॥ २ ॥ **ति०** नतिष्ठति नचिरंतिष्ठति । **स०** उद्वेजनीयः जनकतासंबन्धेनभयवानित्यर्थः । सर्वजनः अपकृतानपकृतजनः ॥३॥

[ **पा०** ] १ ङ. झ. ञ. ट. जघान. २ ग. समादिशत्. क. ख. घ.—ट. शिलाशितान्. ३ ङ. झ. ञ. ट. रथस्य. ४ क. ङ.—ट. चतुर्भिःशबलान्हयान्. ५ क. ङ.—ट. षष्ठेनच. ६ ङ. झ. ञ. ट. चिच्छेदखरसारथेः. ७ ग. ङ. झ. ञ. ट. त्रिवेणून्. ८ ङ. झ. ञ. ट. सकरं. ९ घ. च. छ. ज. ञ. सभग्नधन्वा. ख. प्रभिन्नधन्वा. १० ख. ग. आपूजयन्. ११ ङ. झ. ट. तेदारुणं.

लोभात्पापानि कुर्वाणः कामाद्वा यो न बुध्यते ॥ भ्रष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥५॥
वसतो दण्डकारण्ये तापसान्धर्मचारिणः ॥ किंनु हत्वा महाभागान्फलं प्राप्स्यसि राक्षस ॥ ६ ॥
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः ॥ ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः ॥ ७ ॥
अवश्यं लभते जन्तुः फलं पापस्य कर्मणः ॥ घोरं पर्यागते काले द्रुमाः पुष्पमिवार्तवम् ॥ ८ ॥
नचिरात्प्राप्यते लोके पापानां कर्मणां फलम् ॥ सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥ ९ ॥
पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् ॥ अहमासादितो राज्ञा प्राणान्हन्तुं निशाचर ॥ १० ॥
अद्य हि त्वां मया मुक्ताः शराः काञ्चनभूषणाः ॥ विदार्य निपतिष्यन्ति वल्मीकमिव पन्नगाः ॥११॥
ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः ॥ तानद्य निहतः संख्ये ससैन्योऽनुगमिष्यसि ॥ १२ ॥
अद्य त्वां पतितं बाणैः पश्यन्तु परमर्षयः ॥ निरयस्थं विमानस्था ये त्वया हिंसिताः पुरा ॥ १३ ॥
प्रहर त्वं यथाकामं कुरु यत्नं कुलाधम ॥ अद्य ते पातयिष्यामि शिरस्तालफलं यथा ॥ १४ ॥
एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः ॥ प्रत्युवाच खरो रामं प्रहसन्क्रोधमूर्च्छितः ॥ १५ ॥

भवादृश इति भावः ॥ ३ ॥ सर्वजन इति दयालुरपीति भावः ॥ ४ ॥ लोभात् लब्धस्य त्यागासहिष्णुतया । कामात् अपूर्वलाभेच्छया । न बुध्यते न पश्चात्तापं करोतीत्यर्थः । भ्रष्टः ऐश्वर्याद्भ्रष्टः । तस्य कर्मणः । अन्तं फलं । पश्यति अनुभवति । कथमिव करकात् ब्राह्मणीव । करकाः वर्षोपलाः । "वर्षोपलस्तु करकः" इत्यमरः । तानत्तीति करकात् । ब्राह्मणी रक्तपुच्छिका "ब्राह्मणी रक्तपुच्छिका" इति निघण्टुः । तस्यास्तद्भक्षणं विषभक्षणवन्मारकमिति प्रसिद्धिः । यथा ब्राह्मणी स्वमारकं कर्म स्वयमेव करोति तथा त्वमपीत्यर्थः ॥५॥ किं पापं मया कृतमित्यत्राह—वसत इति ॥६॥ ननु तर्हि कथं पापिनोपि बहवो जीवन्तीत्यत्राह—न चिरमिति । केवलपापिनो जन्मान्तरे फलं भुञ्जते क्रूरास्तु पुण्यलेशेन ऐश्वर्यं प्राप्यापि न चिरं तिष्ठन्ति क्षिप्रमेव विनश्यन्तीत्यर्थः ॥ ७ ॥ पापस्य कर्ता जन्तुः काले प्राप्ते अवश्यं घोरं दुःखरूपं फलं लभते ऋतुलक्षणे काले पर्यागते प्राप्ते आर्तवं तत्तदृतुप्राप्तं पुष्पमिव ॥ ८ ॥ नचिरादित्येकं पदं अविलम्बेनेत्यर्थः । अत्र पुरुषेणेति शेषः । पापानां अत्युत्कटानामित्यर्थः ॥ ९ ॥ एवं मृदुपूर्वमुक्त्वा परुषमाह—पापमित्यादिना । आसादितः प्राप्तोस्मि । आगमने हेतुमाह—राज्ञेति ॥ १० ॥ मया मुक्ताः शराः त्वां विदार्य निपतिष्यन्ति प्रवेक्ष्यन्ति । यथा पन्नगाः सर्पाः । वल्मीकं प्रविशन्ति तथा ॥ ११ ॥ताननुगमिष्यसीति पापिनामपि समरे हतानां स्वर्गसंभवादिति भावः ॥ १२ ॥ निरयस्थं नरकसदृशं दुःखं भूमौ पतित्वाऽनुभवन्तमित्यर्थः ॥ १३ ॥ तालफलं यथेत्यनेनाना-

**कतक०** एवंयःकर्मकरणकाले नाशकमिदमितिनबुध्यते तस्यतत्कर्मप्राप्तं अन्तं नाशं लोकोहृष्टस्सन्पश्यतीत्यर्थः । **स०** पापानिकुर्वाणः यःभ्रष्टः नबुध्यते मयेदंकृतमिति सः तस्य पापस्यसकाशात् अन्तं स्वनाशं पश्यति । कस्मात्केव करकाद्ब्राह्मणीव । " वर्षोपलस्तुकरका " इत्यमरव्याख्यानावसरे " वर्षोपलस्तुकरकाकरकोपिचदृश्यत " इतिभानुदीक्षिताभिधानात्करकशब्दः पुँल्लिङ्गोप्यस्ति ॥ ५ ॥ **ति०** घोरं कर्मणःफलंभवतीतिशेषः । अतोहेतोरहंराजा दुष्टनिग्रहाधिकारी । हेनिशाचर रक्षसांप्राणान्हन्तुंआसादितः । ऋषिभिरितिशेषः । त्वयेतिवा । राज्ञेतिपाठे राज्ञा दशरथेन आसादितःनियुक्तइत्यर्थइतितीर्थः ॥ १० ॥ **ती०** येधर्मचारिणस्ताननुगमिष्यतीत्यनेन पापिनामपिस्वेनहतानामुत्तमलोकप्राप्तिरस्तीत्युक्तंभवति । तदुक्तंस्कान्दे—"रामविद्धा निशिचरा बाणैर्मर्मसु ताडिताः । राममासाद्य समरे सायुज्यपदवींगताः " इति ॥ **ति०** अत्र ऋष्यनुगमनं प्राणनाशमात्रेण । अतएव निरयस्थमितिवक्ष्यति ॥१२॥ **ति०** निरयस्थमिति । ननु भगवताहतस्य मृतिसमयेभगवद्दर्शनवतः कथंनिरयस्थत्वमितिचेन्न । अत्युग्रस्य ब्रह्मवधकर्मणः फलस्यावश्यंभोक्तव्यत्वेनादौभगवदिच्छयैव निरयभोगपूर्वमुत्तमपदवीप्राप्तेस्सत्वेनादोषात् । **स०** विमानस्थाइत्यनेन तेषामुत्तमलोकस्थितत्वं द्योतयति ॥ १३ ॥ **शि०** यत्नं स्ववधाभावप्रयत्नं । कामं यथेच्छं

[ पा० ] १ ङ. झ. ट. हृष्टः. ख. नष्टः. २ घ. पापाः. ३ क.—ट. कर्ता. ४ ख. ग. ङ.—ट. द्रुमः. ५ क. ख. घ. ङ. झ. राजा. ६ क. ख. घ. ङ. झ. ञ. ट. भित्त्वा. ग. हत्वा. ७ झ. विदार्यापि. ग. ङ. छ. ञ. ट. विदार्याति. ८ ख.—च. ज.—ट. निहतं. ९ ङ. च. छ. झ. ञ. ट. निहताः. १० ङ.—ट. प्रहरस्व. ११ क. ख. ङ—ट. ततो.

प्राकृतान्राक्षसान्हत्वा युद्धे दशरथात्मज ॥ आत्मना कथमात्मानमप्रशस्यं प्रशंससि ॥ १६ ॥
विक्रान्ता [1]बलवन्तो वा [2]ये भवन्ति नरर्षभाः ॥ कथयन्ति न ते किंचित्तेजसा स्वेन गर्विताः ॥१७॥
[3]प्राकृतास्त्वकृतात्मानो लोके क्षत्रियपांसनाः ॥ निरर्थकं विकत्थन्ते यथा राम विकत्थसे ॥ १८ ॥
कुलं व्यपदिशन्वीरः समरे [4]कोऽभिधास्यति ॥ मृत्यु[5]काले हि संप्राप्ते स्वयमप्रस्तवे स्तवम् ॥ १९ ॥
[6]सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम् ॥ सुवर्णप्रतिरूपेण [7]तप्तेनेव कुशाग्निना ॥ २० ॥
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम् ॥ धराधरमिवाकम्प्यं पर्वतं [8]धातुभिश्चितम् ॥ २१ ॥
[9]पर्याप्तोहं गदापाणिर्हन्तुं प्राणान्रणे तव ॥ त्रयाणामपि लोकानां पाशहस्त इवान्तकः ॥ २२ ॥
कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहम् ॥ अस्तं गच्छेद्धि सविता युद्धविघ्नस्ततो भवेत् ॥२३॥
[[10]अग्रतस्संस्थितं दृष्ट्वा त्वां मनो रुष्यते मम ॥ रणे यस्य तु रुष्यामि मुहूर्तं न स जीवति ॥ २४ ॥
मम कृत्वाऽप्रियं राम दुर्लभं तव जीवितम् ॥ तोयवर्षमिवावर्षे तोयदस्य विनर्दतः ॥ २५ ॥ ]
चतुर्दश सहस्राणि राक्षसानां [11]हतानि ते ॥ त्वद्विनाशा[12]त्करोम्येष तेषा[13]मश्रुप्रमार्जनम् ॥ २६ ॥

यासोक्तिः ॥ १४—१५ ॥ आत्मना स्वयमेव ॥१६॥ तेजसा प्रतापेन ॥ १७ ॥ प्राकृताः क्षुद्राः । अकृतात्मानः अप्रतिष्ठितधृतयः । क्षत्रियपांसनाः क्षत्रियाधमाः । निरर्थकं निष्प्रयोजनं यथा तथा विकत्थन्ते श्लाघन्ते ॥ १८ ॥ कुलं व्यपदिशन् आत्मनो महाकुलप्रसूतत्वं प्रकटयन् । को वीरः मृत्युकाले संप्राप्ते अप्रस्तवे अनवसरे । स्वयं स्तवमभिधास्यतीत्यन्वयः ॥ १९ ॥ ते कत्थनेन लघुत्वमल्पत्वं सर्वथैव स्पष्टमेव विदर्शितं यथा तप्तेन अतएव सुवर्णसदृशेन कुशाग्निना कुशदर्भमाश्रितेनाग्निना । लघुत्वं विदर्श्यते तद्वत् । यथा तृणाग्निः सुवर्णतुल्यतया भासमानोपि ज्वलन्नप्युत्तरकाले दाहकार्यकरो न भवति । तथा कत्थनेन वीरवद्भासमानोपि पुरुषः उत्तरकाले लघुरेव भविष्यतीत्यर्थः । शीघ्रं ज्वलन् तृणाग्निः यथा सद्यः शान्तो न दग्धुमीष्टे तथा कत्थमानः पुरुषः स्वकत्थनानुरूपं कार्यं न करोतीति सिद्धमिति ॥२०॥ इह तव पुरतः तिष्ठन्तं निश्चलतया स्थितं । गदाधरं शत्रुरक्तोक्षितगदावन्तं । मां सर्वनिर्वाहकं पर्वतमिवाकम्प्यं न पश्यसि अतएवैवं कत्थस इति भावः ॥ २१ ॥ गदापाणिरहं पाशहस्तोन्तक इव तव त्रयाणां लोकानामपि प्राणान् हन्तुं पर्याप्तः समर्थ इति योजना ॥ २२ ॥ त्वयि आत्मश्लाघिनि विषये। कामं यद्यपि बहु पारुष्यं वक्तव्यमस्ति तथापि तन्न वक्ष्यामि । कुतः हि यस्मात् । सविता अस्तं गच्छेत्। ततः अस्तमयेन युद्धविघ्नो भवेत् । यद्यपि स्वस्य रात्रिर्बलायैव तथापि रात्र्यशक्तमनुष्यवधे स्वस्य न कापि कीर्तिरिति खरहृदयं ॥ २३—२५ ॥ ते त्वया । एष इत्यव्यवधानोक्तिः । तेषां तद्बन्धूनामि-

कुरु । अनवधानतयाहतोस्मीति न वक्तव्यमितितात्पर्यं ॥ १४ ॥ **स०** अप्रस्तवे अप्रस्तावे ॥ १९ ॥ **ती०** सुवर्णप्रतिरूपेण सुवर्णसदृशेन । अग्निना अग्निवर्णेन । अश्मना पाषाणेन । नतप्यते वस्त्वितिशेषः । सुवर्णवर्णमश्मानंदृष्ट्वा अयमङ्गारइति स्तुत्या व्यपदिशन्ति तथापि तेनाग्निनावस्तु न तप्यते । किं तु मुख्येनैवाग्निना तप्यतइत्यर्थः । एतदुक्तंभवति । अग्निबुद्ध्याऽग्निवर्णमश्मानंस्पृशते पुरुषायानुपलभ्यमानोष्णस्पर्शेनात्मनाऽऽत्मनोऽनग्नित्वंनाम लघुत्वं यथाविदर्शितं भवति तथा ते त्वया । त्वांवीरंमन्वानायमह्यं कत्थनेन आत्मप्रशंसया .अवीरत्वंनामात्मनोलघुत्वंविदर्शितमित्यपेक्षितपदाध्याहारेणयोजना । तप्तेनेवकुशाग्निनेतिपाठेत्वयमर्थः । कुशाग्निना सुवर्णशोधकाग्निना तप्तेन सुवर्णप्रतिरूपेणारकूटेन । लघुत्वं कार्ष्ण्यरूपं यथाविदर्शितंभवति तथा ते त्वया । कत्थनेनात्मप्रशंसयालघुत्वमशूरत्वं प्रदर्शितंभवतीति ॥ **ति०** कत्थनेन प्राकृतेन । ते त्वया सर्वथैवात्मनोलघुत्वंदर्शितं । यथा सुवर्णप्रतिरूपेण स्वर्णतुल्यरूपेणपित्तलेन । कुशाग्निना स्वर्णादिशोधनाग्निना तप्तेन यथा स्वस्यकृष्णवर्णत्वरूपं लाघवं दर्शितंभवति तद्वत्तापात्पूर्वंहि तत्र स्वर्णताबुद्धिः सा तापेयथानश्यति तथा त्वयास्वस्मिन्स्थिता प्राक्छूरत्वबुद्धिः कत्थनेनापहृतेत्यर्थः । तुषाग्निनेतिपाठान्तरं ॥ २० ॥ **ती०** प्राकृतानित्यादीनांवास्तवार्थस्तु आत्मानंप्रशंससि । इह महात्मनस्तवैतन्नयुक्त-

**[ पा० ]** १ ग. बलवन्तोहि. २ क. ग. भवन्तीह. ध. येनिहन्ति. ३ ख. प्राकृताविकृतात्मानो. ४ ञ. कोविधास्यति. ५ ङ.—ट. कालेतु. ६ क. ख. ग. ङ. झ. ट. सर्वथातु. ७ च. तप्तेनेवाश्मनाग्निना. ग. तप्तेनेवतुषाग्निना. ८ ख. धातुमण्डितं. ९ ङ. झ. ट. प्राप्नोति. १० इदंश्लोकद्वयं. क. ख. पाठयोर्दृश्यते. ११ ख. हतानिवै. १२ ङ.—ट. त्करोम्यद्य. ख. ग. घ. त्करिष्यामि. १३ क.—घ. मास्रप्रमार्जनं.

[ ततो रुधिरधाराभिस्त्वच्छरीरविमर्दनात् ॥ करिष्यामि बलिं भूमौ त्वां हत्वा सर्वरक्षसाम् ॥२७॥ ]
इत्युक्त्वा परमक्रुद्धस्तां गदां परमाङ्गदः ॥ खरश्चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २८ ॥
खरबाहुप्रमुक्ता सा प्रदीप्ता महती गदा ॥ भस्म वृक्षांश्च गुल्मांश्च कृत्वाऽगात्तत्समीपतः ॥ २९ ॥
तामापतन्तीं ज्वलितां मृत्युपाशोपमां गदाम् ॥ अन्तरिक्षगतां रामश्चिच्छेद बहुधा शरैः ॥ ३० ॥
सा विकीर्णा शरैर्भग्ना पपात धरणीतले ॥ गदा मन्त्रौषधबलैर्व्यालीव विनिपातिता ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

## त्रिंशः सर्गः ॥ ३० ॥

रामेणसवीरवादमधिक्षिप्तेनखरेण निरायुधतयासक्रोधं तदुपरिवृक्षप्रक्षेपः ॥ १ ॥ रामेणखरक्षिप्ततरुच्छेदपूर्वकंशूरगणैस्तच्छरीरविदारणे स्रवद्रुधिराप्लुतेनतेन सरभसंरामोपरिसमुत्पतनोद्यमः ॥ २ ॥ रामेण जुगुप्सयापश्चात्किंचिदपसर्पणपूर्वकंखरोरसि शरार्पणेनतद्धननम् ॥ ३ ॥ खरनिधने देवर्ष्यादिभिस्सपुष्पवर्षणंरामाभिष्टवः ॥ ४ ॥ लक्ष्मणेनसहगुहामुखान्निर्गतयासीतया निजाश्रममुपेयुषोरामस्य हर्षात्परिष्वङ्गः ॥ ५ ॥

भित्त्वा तु तां गदां बाणै राघवो धर्मवत्सलः ॥ स्मयमानः खरं वाक्यं संरब्धमिदमब्रवीत् ॥ १ ॥
एतत्ते बलसर्वस्वं दर्शितं राक्षसाधम ॥ शक्तिहीनतरो मत्तो वृथा त्वमेवगर्जसि ॥ २ ॥
एषा बाणविनिर्भिन्ना गदा भूमितलं गता ॥ अभिधानप्रगल्भस्य तव प्रत्यरिघातिनी ॥ ३ ॥

त्यर्थः । यद्वा तद्वधप्रतिक्रियां करिष्यामीत्यत्र हृदयं ॥ २६—२७ ॥ परमाङ्गदः गदाप्रहारसामर्थ्यविरुदयुक्त इत्यर्थः । अशनिं वज्रं ॥ २८ ॥ भस्म कृत्वा तत्समीपमगादित्यन्वयः । समीपत इति सार्वविभक्तिकस्तसिः ॥ २९–३० ॥ व्याली पन्नगी ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

निरस्तनिखिलालम्बमहंकारमिव स्थितम् । खरं विहत्य साधूनां सुखावहमहं भजे ॥ धर्मवत्सल इत्यनेन निरायुधवधोनुचित इति श्रीरामोमन्यतेति गम्यते । स्मयमानः परिहसन्नित्यर्थः । संरब्धं भ्रान्तमिति खरविशेषणं "संरम्भः संभ्रमे कोपे" इत्यमरः ॥१—२॥ अभिधाने वचसि प्रगल्भस्य धृष्टस्य । प्रत्यरिघातिनीति वीप्सायां प्रतिः । अरीनरीन् प्रतिघाति-

मितिभावः । विक्रान्ताइति । ये नरर्षभाः त्वादृशमहात्मानः । ते एवं नकथयन्ति । केचित्स्वतेजसागर्विताः कथयन्ति । अतस्तवोचितंनभवतीतिभावः ॥ प्राकृताइति । क्षत्रियपांसनाः यथानिरर्थकंविकत्थन्ते तथात्वंविकत्थसे । तवनयुक्तमितिभावः । कुलमिति । समरे शत्रुपक्षस्यमृत्युकालेसंप्राप्तेसति स्तवंकोवाभिधास्यति नकोपीत्यर्थः । सर्वथेति । आत्मानमेवं भूषयसियदि तदा तवलघुत्वमेवप्रदर्शितंभविष्यति । अतस्त्वैतन्नयुक्तमितिभावः । नन्विति । हेराम गदाधरंमांपश्यसि । नन्वेतादृशगदापाणिरहं पाशहस्तोन्तकइव त्रयाणामपिलोकानांप्राणान्हन्तुं पर्याप्तोयद्यपि । तथापि रणे तव नपर्याप्तइतिशेषः । चतुर्दशेति । राक्षसानां चतुर्दशसहस्राणि ते त्वयाहतानि । तथा त्वन्नाशात् त्वत् त्वत्तः । नाशात् मन्नाशात् । त्वत्तोमन्नाशेसतीत्यर्थः । तेषां तद्दारादीनां । अश्रुप्रमार्जनंकरोमीतिसंबन्धः । त्वदिति । घातयितुर्मम मरणे तद्दाराणांदुःखनिवृत्तिर्भवतीतिभावः ॥ २६ ॥ ति० परमा अङ्गदाः कनकवलयानियस्याः । तां प्रसिद्धां हस्तस्थांगदांचिक्षेप । ती० इत्युक्त्वा अश्रुप्रमार्जनंकरोमीत्युक्त्वेत्यर्थः । रामाद्वधाकाङ्क्षीसन्निति शेषः । परमक्रुद्धः खरः गदांरामायचिक्षेपेतिसंबन्धः ॥ २८ ॥ इत्येकोनत्रिंशस्सर्गः ॥ २९ ॥

ति० तवप्रत्ययघातिनी अभिधानेकेवलंप्रगल्भस्यतवानयाशत्रुवधोभवत्येवेत्ययं यःप्रत्ययो विश्वासः तस्य स्वनाशेन घातिका

[ पा० ] १ अयंश्लोकः क. च. छ. ज. पुस्तकेषुदृश्यते. २ ख. ङ. झ. ट. क्रुद्धस्सगदां. ३ ख. ङ. झ. ट. परमांगदां. च. छ. ज. ञ. कनकाङ्कितां. ४ क. ग. मशनीमिव. ५ ग. ङ. झ. ट. महतीं. ख. सहसा. ६ ङ. छ.—ट. विशीर्णा. ७ ङ. झ. ञ. ट. शरैर्भिन्ना. ख. च. छ. ज. शरैर्दग्धा. ८ ङ. झ. ट. मन्त्रौषधि. ९ ग. सहला. १० ग. रघुनन्दनः. ११ घ. ङ. झ. ट. मुपगर्जसि. ग. मभिगर्जसि. १२ घ. तले. १३ ङ.—ट. प्रत्ययघातिनी. ख. प्रत्ययघातिनः.

यत्त्वयोक्तं विनष्टाना[1]महमश्रुप्रमार्जनम् ॥ राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥ ४ ॥
नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य र[2]क्षसः ॥ प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ५ ॥
अद्य ते छि[3]न्नकण्ठस्य फेनबुद्बुद[4]भूषितम् ॥ विदारितस्य मद्बाणैर्मही पास्यति शोणितम् ॥ ६ ॥
पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयः ॥ स्वप्स्यसे गां स[5]मालिङ्ग्य दुर्लभां प्रमदामिव ॥ ७ ॥
[6]प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसने ॥ [7]भविष्यन्त्यशरण्यानां शरण्या दण्डका इमे ॥ ८ ॥
जनस्थाने हतस्थाने तव राक्षस मच्छरैः ॥ निर्भया विचरिष्यन्ति सर्वतो मुनयो वने ॥ ९ ॥
अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः ॥ बाष्पार्द्र[8]वदना दीना भयादन्यभयावहाः ॥ १० ॥
अद्य शोकरसज्ञास्ता भविष्यन्ति नि[9]रर्थकाः ॥ अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः ॥ ११ ॥
[10]नृशंस नीच क्षुद्रात्मन्नित्यं ब्राह्मण[11]कण्टक ॥ [12]यत्कृते शङ्कितैरग्नौ मुनिभिः पात्यते हविः ॥ १२ ॥
तमेवमभिसंरब्धं ब्रुवाणं राघवं [13]रणे ॥ खरो निर्भर्त्सयामास रोषात्खरतर[14]स्वनः ॥ १३ ॥
दृढं खल्ववलिप्तोसि भयेष्वपि च निर्भयः ॥ वाच्यावाच्यं [15]ततो हि त्वं मृत्युवश्यो न बुध्यसे ॥१४॥
[16]कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये ॥ [17]कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः ॥ १५॥

नी गदा ॥ ३—४ ॥ नीचस्य केवलवाचाटकत्वेन क्षुद्रस्य । क्षुद्रशीलस्य हीनस्वभावस्य । मिथ्यावृत्तस्य असद्वृत्तस्य ॥ ५ ॥ फेनबुद्बुदाभ्यां भूषितं अलङ्कृतं । अनेन नूतनत्वमुक्तं। विदारितस्य विदारितोदरस्य॥६॥ पांसुरूषितेति । रूषितं लिप्तं । स्रस्तं यथा तथा भुवि न्यस्तं भुजद्वयं येन । गां भूमिं समालिङ्ग्येत्यनेनावाग्भूतत्वमुच्यते ॥ ७ ॥ प्रवृद्धनिद्रे दीर्घनिद्रे । अशरण्यानां ऋष्यादीनामगतीनां । शरण्याः सुखावासभूताः ॥ ८ ॥ हतस्थाने हतराक्षसावस्थानसन्निवेशे ॥ ९ ॥ पूर्वमन्यभयावहाः राक्षस्यः अद्य मद्भयात् जनस्थानात् विप्रसरिष्यन्ति पलायिष्यन्ते ॥ १० ॥ यासां त्वमीदृशः पापी पतिः ताः पत्न्यः अनुरूपकुलाः त्वत्सदृशदुर्वृत्ता इत्यर्थः । इतः पूर्वं शोकानभिज्ञा अपि अद्य शोकरसज्ञाः निरर्थकाः निर्गतकामपुरुषार्थाः भविष्यन्ति ॥ ११ ॥ ईदृश इत्युक्तं विवृणोति—नृशंसेति । नृशंस घातुक । नीच वृत्ततोहीन । क्षुद्रात्मन् क्षुद्रबुद्धे । ब्राह्मणकण्टक ब्राह्मणशत्रो । मुनिभिः यत्कृते यन्निमित्तं । शङ्कितैः सद्भिः अग्नौ हविः पात्यते हविर्दानसमयेपि किमेतदपहरिष्यन्तीति भीता भवन्तीत्यर्थः ॥ १२—१३ ॥ अवलिप्तोसि गर्वितोसि । दृढं निश्चितं । ततः कारणात् । भयेषु भयकारणेषु सत्स्वपि । निर्भयोसि वाच्यं चावाच्यं च वाच्यावाच्यं । "येषां च विरोधः शाश्वतिकः" इति द्वन्द्वैकवद्भावः । तन्मृत्युवश्यः सन् न बुध्यस इति योजना ॥ १४ ॥ उक्तमर्थं विशिष्य दर्शयति—कालेति । परिक्षिप्ताः बद्धाः ।

॥ ३ ॥ **स०** अमृतमित्यनेन खरदेहे सच्चेतनोस्तीति सूचितं ॥ ५ ॥ **स०** शयिते शायिते । **ति०** शरण्यानां तपोमहिम्ना सर्वजनशरण्यानां ॥ ८ ॥ **स०** हतस्थाने राक्षस तव मृतस्थानेसति । यद्वा तवजनस्थाने राक्षसानांमृतस्थानेसति ॥ ९ ॥ **स०** भयात् दीनाः अन्यभयावहाः अन्येषांस्वविकारेणभयावहाः ॥ १० ॥ **ति०** शङ्कितैः त्वद्भटेभ्यः । यद्यपि भगवतईदृशेषुक्षुद्रेष्वेवंवादोऽनुचितः । तथापि निरयस्थमिति स्वोक्तिं सत्यांकर्तुं मरणकाले क्रोधजनकतमोगुणोद्रेकस्य तामसगुणगतिसंपादकस्योद्भवायेतिबोध्यम् ॥ १२ ॥ **ती०** वस्तुतस्तु एवंब्रुवाणंरामं मृत्युवश्यः खरः हेराम त्वं वाच्यावाच्यंनबुध्यसइति दृढमवलिप्तोसीतिच निर्भर्त्सयामासेतिसंबन्धः ॥ १३—१४ ॥ एवंनिर्भर्त्सनेहेतुमाह—**कालपाशेति** । लोकेकालपाशपरिक्षिप्ताः पुरुषाः महात्मानमपि निर्भर्त्सयन्त्येवेतिभावः । **ति०** मृत्युकाले स्फुरितभगवद्रूपश्लेषेणस्वाविनयंक्षमापयतिच—**कालेति** । अतस्त्वया मदुक्तयः क्षन्तव्याइति व्यङ्ग्यमित्यन्ये । तेषां निरयस्थमितिभगवदुक्तेरसंगतिस्स्पष्टैव । **शि०** मनसोपीन्द्रियत्वमितिमतेन मनसः प्रधा-

[ **पा०** ] १ क. ख. ग. महमास्र. ङ—झ. ट. मिदमश्रु. २ क. च. छ. ज. ञ. राक्षस. ३ क.—ट. भिन्नकण्ठस्य. ४ च. छ. ञ. दूषितं. ख. ग. रूषितं. घ. शोभितं. ५ क. ग. ङ.—ट. समाश्लिष्य. ६ क. ख. च. ज. प्रबद्ध. ७ ङ. झ. ट. भविष्यन्तिशरण्यानां. घ. प्रभवन्त्यशरण्यानां. ८ क. ग. नयनाः. ९ क. च. ज. निशाचर. १० क. ग. ङ.—ट. नृशंसशील. ११ क. ग. कण्टकः. १२ क. ग. ङ. झ. ट. त्वत्कृते. १३ ङ. झ. ट. वने. १४ ङ. च. झ. ट. स्वरः. १५ ख. प्रयाहि. १६ ख. ध्रुवंकालपरिक्षिप्ता. १७ ख. वाच्यावाच्यं.

एवमुक्त्वा ततो रामं संरुध्य भ्रुकुटीं ततः ॥ स ददर्श महासालमविदूरे निशाचरः ॥
रणे प्रहरणस्यार्थे सर्वतो[1]ह्यवलोकयन् ॥ १६ ॥
स तमुत्पाटयामास [2]संदश्य दशनच्छदम् ॥ १७ ॥
तं समुत्क्षिप्य बाहुभ्यां वि[3]नद्य च [4]महाबलः ॥ राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ॥ १८ ॥
तमापतन्तं बाणौघैश्छित्त्वा रामः प्रतापवान् ॥ रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ॥ १९ ॥
जातस्वेदस्[5]ततो रामो रो[6]षाद्रक्तान्तलोचनः ॥ नि[7]र्बिभेद सहस्रेण बाणानां समरे खरम् ॥ २० ॥
तस्य [8]बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् ॥ गिरेः [9]प्रस्रवणस्येव तोयधारा[10]परिस्रवः ॥ २१ ॥
वि[11]ह्वलः स कृतो बाणैः खरो रामेण संयुगे ॥ मत्तो रुधिरगन्धेन तमे[12]वाभ्यद्रवद्द्रुतम् ॥ २२ ॥
तमापतन्तं सं[13]रब्धं [14]कृतास्त्रो रुधिराप्लुतम् ॥ अ[15]पासर्पत्प्रतिपदं किंचित्त्वरितविक्रमः ॥ २३ ॥
ततः पावकसंकाशं वधाय समरे शरम् ॥ खरस्य रामो जग्राह ब्रह्मदण्डमि[16]वापरम् ॥ २४ ॥
[17]स तं दत्तं मघवता सुरराजेन धीमता ॥ संदधे [18]चापि धर्मात्मा [19]मुमोच च खरं प्रति ॥ २५ ॥

निरस्तषडिन्द्रियाः निरस्तषडिन्द्रियव्यापाराः ॥१५॥ भ्रुकुटीं संरुध्य कृत्वेत्यर्थः । प्रहरणस्यार्थे आयुधार्थं । सर्वतोवलोकयन्सन्नपि दूरे महासालं ददर्शेत्यन्वयः ॥ १६ ॥ दशनच्छदं अधरं । संदश्य निपीड्य । अनेन सालस्य दुर्ग्रहत्वमुक्तं ॥ १७ ॥ बाहुभ्यामित्यनेन सालस्थौल्यमुक्तं । विनद्येत्यादिना जयाशोच्यते ॥ १८ ॥ रोषमिति सर्वसामग्रीविरहेप्यानुकूल्यलेशाभावादिति भावः ॥ १९ ॥ रोषाज्जातस्वेदः नतु श्रमात् । रक्तान्तलोचनः रक्तवर्णापाङ्गः ॥ २० ॥ बाणान्तरात् बाणक्षतविवरात् । फेनिलं फेनवत् । प्रस्रवणस्य प्रस्रवणाख्यस्य । परिस्रवः प्रवाहः ॥ २१ ॥ विह्वलः विक्लवः । रुधिरगन्धेनोपलक्षितः ॥ २२ ॥ संरब्धं संभ्रान्तं । प्रतिपदं अस्त्रमोचनप्रतिकूलं तं खरं किंचिदपासर्पत् पश्चादागतः तस्मादपासर्पदित्यर्थः । अपसर्पणनिमित्तमाह—कृतास्त्र इति । संहितास्त्रत्वात् अस्त्रमोचनावकाशलाभायापासर्पदिति भावः । निमित्तान्तरमाह—रुधिराप्लुतमिति । तत्स्पर्शबीभत्सेनापसर्पणमित्यर्थः । यद्यपि किंचिदपसर्पणं शूरस्यायुक्तं तथापि "सर्वतो बलवती ह्यन्यथानुपपत्तिः" इति न्यायेनापसर्पणं विना तत्संहारहेत्वलाभादपसर्पणं न दोष इति हृदयम् ॥ २३ ॥ ततः बाणपातावसरलाभात् । ब्रह्मदण्डं ब्रह्मशापं ॥ २४ ॥ धीमता भावज्ञेन दत्तं अगस्त्यमुखेनेति शेषः

मत्वेनचेन्द्रियाणांषट्त्वमिति नानुपपत्तिः॥१५॥ **ति०** जातस्वेदः रोषादितिशेषः । नतुश्रमादिति । अयंरोषोपि भगवताऽऽरोपितएव नवत् । नतु वास्तवोमानुषत्वस्थिरीकरणायेतिबोध्यं । **स०** जातस्वेदइव ॥२०॥ **ति०** विकलः परवशः कृतः । नतु मृत इत्यर्थः ॥ २२ ॥ **तनि०** संरब्धं अतिक्रुद्धं । आपतन्तं आयुधप्रसारणानवकाशतयाऽतिसन्निकृष्टमागच्छन्तं । तत्रहेतुः **त्वरितविक्रमइति** । शस्त्रसन्धानावकाशार्थं त्वरितविक्रमतया किंचिदपासर्पदित्यर्थः । हेत्वन्तरमाह—**रुधिराप्लुतमिति** । तद्देहरुधिरस्य स्वस्मिन्संश्लेषोभवेदिति जुगुप्सयेत्यर्थः । इदमेवाभिप्रेत्य वेदान्ताचार्यैरुक्तं क्वचिदतिसंकटविषये सुभटानामभिमतोऽयमपसर्पइति । **शि०** कृतास्त्रः कृतानि छिन्नानि अस्त्राणि खरायुधानियेनसः । **ति०** आपतन्तं बाणक्षेपावकाशोयथानभवति तथोपर्यापतन्तंखरंदृष्ट्वा अत्यासत्तौधनुर्व्यापारो नस्यादिति स्वशरीरे तद्रुधिरपातभियाच द्वित्रीणिपदानित्वरितपदन्यासोबाणंसंदधदेव पृष्ठतोपासर्पत । अनेन महाबलत्वंखरस्योक्तं । नह्यन्यथा रामधनुश्छेदोऽनन्ततद्बाणसहनंवा सुशकं । अतएवाग्रे तद्वधाय विशिष्यस्वशक्तिरूपवैष्णवबाणग्रहणं ॥ २३ ॥ **स०** सधर्मात्मा धर्मेआत्मा मनः धर्मात्मा तेनसहितः सधर्मात्मा ॥ २५ ॥

**[ पा० ]** १ क. ग. व्यवलोकयन्. २ ङ. झ. ञ. ट. संदष्टदशनच्छदं. ३ क.—ट. विनर्दित्वा. ४ ख. महाबलं. ५ घ. स्तथा. क. ख. स्तदा. ६ ङ. झ. ट. रोषरक्तान्त. ७ ग. बिभेदच. क. ख. तं बिभेद. ८ क. च. छ. तस्मिन्बाणान्तरे रक्तं. ग. तत्र बाणान्तररक्तं. ९ क. प्रस्रवतोयद्रुत्. १० ङ. झ. ट. धाराणां च परिस्रवः. ११ ङ. झ. ट. विकलः. १२ च. छ. ज. ञ. मेवाभ्यपतत्. क. तमेवाभ्यागमत्. १३ क. ग. ङ. झ. ट. संक्रुद्धं. च. छ. ज. ञ. संप्रेक्ष्य. १४ क. ग. रुधिरौघपरिप्लुतं. १५ ङ. झ. अपासर्पद्द्वित्रिपदं. १६ क. ग. मिवोद्यतं. १७ घ. च. छ. ज. ञ. सतुदत्तं. ङ. झ. ट. सतद्दत्तं. १८ क. ग. ङ.—ट. चसधर्मात्मा. १९ ख. समुमोच.

स विमुक्तो महाबाणो निर्घातसमनिस्वनः ॥ रामेण धनुरायम्य खरस्यो[1]रसि चापतत् ॥ २६ ॥
स पपात खरो भूमौ दह्यमानः शराग्निना ॥ [2]रुद्रेणेव विनिर्दग्धः श्वेतारण्ये [3]यथान्तकः ॥ २७ ॥
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा ॥ [4]बलो वेन्द्राशनिहतो निपपात हतः खरः ॥ २८ ॥
ततो राजर्षयः सर्वे सं[5]गताः परमर्षयः ॥ स[6]भाज्य मुदिता [7]राममिदं वचनमब्रुवन् ॥ २९ ॥
एतदर्थं महातेजा महेन्द्रः पाकशासनः ॥ शरभङ्गाश्रमं पुण्यमाजगाम पुरंदरः ॥ ३० ॥
आनीतस्त्वमिमं देशमुपायेन महर्षिभिः ॥ एषां वधार्थं [8]क्रूराणां रक्षसां [9]पापकर्मणाम् ॥ ३१ ॥
तदिदं नः कृतं कार्यं त्वया दशरथात्मज ॥ [10]सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ॥ ३२ ॥
[11]एतस्मिन्नन्तरे देवाश्चारणैः सह संगताः ॥ दुन्दुभींश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः ॥
रामस्योपरि संहृष्टा ववृषुर्विस्मितास्तदा ॥ ३३ ॥
अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ॥ चतुर्दशसहस्राणि रक्षसां भीम[12]कर्मणाम् ॥ ३४ ॥
खरदूषणमुख्यानां निहतानि [13]महाहवे ॥ अहो बत महत्कर्म रामस्य विदितात्मनः ॥ ३५ ॥
अहो वीर्यमहो दाक्ष्यं विष्णोरिव हि दृश्यते ॥ इत्येवमुक्त्वा ते सर्वे ययुर्देवा [14]यथागतम् ॥ ३६ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ॥ [15]गिरिदुर्गाद्विनिष्क्रम्य संविवेशाश्रमं [16]सुखी ॥ ३७ ॥
ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ॥ [17]प्रविवेशाश्रमं वीरो लक्ष्मणेनाभि[18]पूजितः ॥ ३८ ॥
तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ॥ बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ ३९ ॥

॥ २५ ॥ रामेण धनुरायम्य आकृष्य । विमुक्त इत्यन्वयः ॥ २६ ॥ स खरः शराग्निना दह्यमानः सन् रुद्रेण रुद्रनेत्राग्निना । दग्धोन्तक इव श्वेतारण्येयथा श्वेतारण्य इव । भूमौ पपात ॥ २७ ॥ सः रामबाणेन हतः खरः । अमोघबाणहतत्वज्ञापनाय प्रथमो दृष्टान्तः । लीलया हतत्वज्ञापनाय द्वितीयः । समर्थाधिष्ठितत्वज्ञापनाय तृतीयः । आर्द्राच्छुष्काच्चावध्यत्वं नमुचेर्लब्धं तदर्थं फेनेन हतः । बलो वेति वाशब्द इवार्थः । वृत्रादित्रयमिन्द्रेणैव हतं ॥ २८ ॥ परमर्षयः ब्रह्मर्षयः । सभाज्य संपूज्य ॥ २९ ॥ एतदर्थं एतद्वधाय ॥ ३० ॥ इदमुपपादयति—आनीत इति । उपायेन तत्तदाश्रमदर्शनव्याजेन ॥३१—३२॥ एतस्मिन्नित्याद्यर्धत्रयमेकान्वयं ॥३३॥ रामं स्तुवन्ति—अर्धेत्यादिना । अर्धाधिकमुहूर्तेन घटिकात्रयेण ॥ ३४—३५ ॥ दाक्ष्यं सर्वसंहारचातुर्यम् ॥ ३६ ॥ अन्तरे अवसरे । गिरिदुर्गात् गिरिदुर्गप्रदेशात् । सुखी रामपराक्रमदर्शनजन्यसंतोषवान् ॥ ३७—३८ ॥ चतुर्दशसहस्ररक्षोभिरयमेकाकी किं करिष्यतीत्युद्विग्ना सीता रामेण जिते वीरतारतम्याभिज्ञकुलप्रसूततया सबहुमानं परिषस्वज

**ति०** श्वेतारण्येयथान्धकः अन्धकासुरः श्वेतारण्ये रुद्रेणहतइति पुराणप्रसिद्धं । रुद्रेणेवेतीवशब्दो वाक्यालङ्कारे । श्वेतारण्येयथान्तकइति प्रचुरः पाठः । तत्र कावेरीतीरवर्तिनिश्वेतारण्ये मार्कण्डेयचिरजीवित्वायान्तकसंहारो रुद्रेणकृतइति तन्माहात्म्येप्रसिद्धिः । कौर्मेतूत्तरखण्डे—श्वेतस्यराजर्षेः परमशैवस्य कालञ्जरेपर्वते तपस्यभिरतस्य मारणायागतस्यान्तकस्य शिवेन वामपादप्रहारेण संहारः कृतइति षट्त्रिंशेऽध्यायेउक्तं ॥ २७ ॥ **ति०** फेनेन तदाच्छादितवज्रेण । एवंचान्तकादिवधस्य रुद्रेन्द्रातिरिक्तासाध्यत्ववत्खरवधस्य रामातिरिक्तासाध्यत्वं प्रकाशितंकविना ॥ २८ ॥ **स०** विदितात्मनः विख्यातस्वरूपस्य विष्णोरिवेत्यन्वयः । "स्वदृष्टान्तोहरेर्भवेत्" इतिऋग्भाष्यं ॥ ३५॥ **ती०** "तेतुयावन्तएवाजौ तावांस्तु ददृशेसतैः" इत्युक्तरीत्या तात्कालिकस्वेच्छागृहीत-

[ पा० ] १ क. स्योरस्यवापतत्. २ घ. रुद्रेणपरिनिर्दग्धः. ३ ग. च. झ. ञ. यथान्धकः. ४ ग. बलोवज्राशनिहतो. ख. बलोवज्राभिनिहतो. च. छ. ज. बलोयथाऽशनिहतो. ५ च. छ. ज. ञ. संगताश्चमहर्षयः. ६ घ. समेत्य. ७ ङ. झ. ट. सागस्त्याइदमब्रुवन्. ८ ङ. झ. ट. शत्रूणां. क. च. छ. ज. ञ. शूराणां. ९ घ. क्रूरकर्मणां. १० ङ. झ. ट. स्वधर्मंप्रचरिष्यन्ति. ११ एतस्मिन्नन्तरेदेवाश्चारणैरित्यारभ्य. ययुर्देवायथागतमित्यन्तं विद्यमानाश्चत्वारःश्लोकाः ङ. झ. ट. पुस्तकेषु ततो राजर्षयः सर्वे इति श्लोकात्पूर्वं समुपलभ्यन्ते. १२ क. ग. ङ—ट. कामरूपिणां. १३ क. ग. ङ—ट. महामृधे. १४ ख. यथासुखं. १५ ख. गिरिकुञ्जात्. १६ च. छ. ज. सुखं. १७ क. ग. घ. प्रविवेशाश्रमपदं. १८ क. च. छ. ज. ञ. वादितः. ग. वन्दितः.

मुदा परमया युक्ता दृष्ट्वा रक्षोगणान्हतान् ॥ रामं चैवाव्यथं दृष्ट्वा तुतोष जनकात्मजा ॥ ४० ॥

इत्याह । तं दृष्ट्वा पूर्वं महासमरे अदृश्यतया स्थितं इदानीं दृष्ट्वा । तं दृष्ट्वा "वीरव्रणेन विगलद्रुधिरेण रोमकूपोल्लसद्भिरपि घर्मपयःकणौघैः । कोदण्डदण्डमवलम्ब्य विनीय वर्म किंचित्परिश्रमभृतं प्रियमीक्षमाणा" इत्युक्तप्रकारं दृष्ट्वा । तं दृष्ट्वा ततोद्ग्रथितजटामण्डलेन दृढबद्धकक्ष्यतया स्कन्धावलम्बितूणीरेण रणावसाननिर्वापितकोपाग्नितया प्रसन्नवदनेन सीतालक्ष्मणमार्गावलोकनेन पुनरपि किमागमिष्यन्ति राक्षसा इति दत्तावधानेन च लक्षितं दृष्ट्वा । तं दृष्ट्वा । पूर्वं वीर इति श्रुतं इदानीं निर्वर्तितवीरकृत्यं दृष्ट्वा । दर्शनप्रकारमाह शत्रुहन्तारं हननव्यापारे कर्मभावः शत्रूणां । स्वस्य तु कर्तृभाव एव । हन्तारं हननव्यापार एव दृष्टः नतु शरसंधानादिव्यापार इत्यर्थः । शत्रुपदेन देवगन्धर्वादिसङ्केसत्यपि शत्रूनेव हतवानित्युच्यते । दुष्टनिग्रह उक्तः । शिष्टपरिपालनमाह—महर्षीणां सुखावहं महर्षीणां तपोलेशेन हन्तुं सामर्थ्येपि रक्षकस्वरूपस्यरक्ष्यभूतस्वस्वरूपस्य च हानिर्मा भूदिति केवलं रक्षकव्यापारप्रतीक्षाणां रामप्रतिज्ञामेवावलोकयतां । सुखावहं "एहि पश्य शरीराणि" इत्युक्तदुःखगन्धं निवर्त्य सुखस्यैव प्रापकं । बभूव बहुतरशत्रुगणाक्रमणाद्रामस्यैकाकितया च पूर्वं सत्तारहिता सीता संप्रति सत्तां लेभे जगत्प्राणस्य रामस्य सत्तालाभात् स्वयमपि सत्तामवाप । "आत्मा वै पुरुषस्य दाराः" इत्युक्तरीत्या रामसत्तालाभात्स्वस्या अपि सत्ता जातेति भावः । यद्वा भूप्राप्तावित्यस्माल्लिटि व्यत्ययेन परस्मैपदं । भर्तारं विजयिनमालोक्य सरभसं गुहान्तरादागतेत्यर्थः । दृष्ट्वा "सति धर्मिणि धर्माः" इति न्यायेन धर्मिलाभानन्तरं तद्धर्महर्षोभूदित्यर्थः । यद्वा आन्तरप्रीत्यङ्कुरोपमरोमाञ्चाञ्चितेत्यर्थः । एवं शौर्यावलोकनप्रीतत्वेहेतुमाह वैदेही । "मिथिलाधिपतिर्वीरः" इत्युक्तरीत्या वीरकुलप्रसूतत्वादित्यर्थः । भर्तारं परिषस्वजे तादृशनिरवधिकप्रेमभारभरिततया स्वयमालिलिङ्गे । भर्तारं लोकभर्तारं । सर्वलोकमातृत्वेन सर्वप्रजारक्षणं दृष्ट्वा परिषस्वजे । आयुधक्षतव्रणेषु सुखोष्णाभ्यां स्तनाभ्यां पस्पर्श परिषस्वजे पर्याप्तं सस्वजे । पश्चात् पुरस्तात् पार्श्वतश्च पस्पर्शेत्यर्थः । यद्यपि रणे अपलायमानस्य पृष्ठे शरपातप्रसङ्ग एव नास्ति तथापि सर्वतः समावृत्य आयुधप्रक्षेपात् पृष्ठतोपि व्रणसंभवः बाणानां सम्यक्क्षिप्तानां पृष्ठतो निर्गमोपि संभवति । महर्षीणां सुखावहं परिषस्वजे पुत्रविषये स्वभर्त्रोपकारकरणे पुत्रवात्सल्याद्भर्तरि संतुष्टा भार्येव ऋषिजनसंरक्षणेन प्रीता परिषस्वजे । रामं विना गुहागता सीता ततो निर्गत्य निरस्तसमस्तशत्रुं रामं परिषस्वज इत्यनेन हृदयगुहागतो जीवः परतन्त्रः आचार्यमुखेन परमशेषिणं दृष्ट्वा तेन सकलविरोधिवर्गे निवर्तिते ततो निर्गत्य नित्यसूरिपरिषदासीनं शेषिणमासाद्य तद्भोगपरिवाहमनुबभूवेति ध्वन्यते ॥ ३९ ॥ उक्तमेवार्थं

चतुर्दशसहस्रदिव्यमङ्गलविग्रहवत्तया प्रतिराक्षसंप्रत्येकं रामइवस्थिला दृश्यमानमिति तच्छब्दार्थः । यद्वा इन्द्रादिभिरपि संभूयाप्रधृष्यान्बलीयसश्चतुर्दशसहस्रराक्षसानेकएवार्धाधिकमुहूर्तेन स्वयमक्षतएव लीलयासंहृत्य स्वपुरस्स्थितं । "राम जामातरंप्राप्य श्रियंपुरुषविग्रहं" इत्यात्मनाऽज्ञानात्पूर्वंविप्रलब्धमितिवा तच्छब्दार्थः । "तैर्धनूंषिध्वजाग्राणि वर्माणिचशिरांसिच । बाहून्सहस्ताभरणानूरून्करिकरोपमान् । चिच्छेद समरेरामः" इत्युक्तप्रकारेण शत्रुहन्तारंदृष्ट्वेत्यर्थः । किंच "परित्राणायसाधूनां विनाशायच दुष्कृतां । धर्मसंस्थापनार्थाय संभवामियुगेयुगे" इति स्वप्रतिज्ञां परिपालयन्नवतीर्यासतोराक्षसान्हत्वा सतामृष्यादीनां जगन्मोहनदिव्यमङ्गलस्वमूर्तिसाक्षात्कारेण परमानन्दं संपादितवानित्याह—**महर्षीणांसुखावहमिति** ॥ ३९ ॥ **तनि०** रक्षोगणान्हतानिति वीर्यगुणविवरणं । तत्र रामंचैवाव्यथमिति वीर्यलक्षणे स्वयमक्षतइति विशेषविवरणं । रक्षोगणान्हतानित्यनेन यः पराजयतीति लक्षणगतविशेष्यविवरणं ॥ ४० ॥

[ पा० ] १ क. ग. ङ—ट. चैवाव्ययं.

ततस्तु तं राक्षससङ्घमर्दनं संभाज्यमानं मुदितैर्महर्षिभिः ॥
पुनः परिष्वज्य शशिप्रभानना बभूव हृष्टा जनकात्मजा तदा ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ॥ ३१ ॥

अकंपननाम्नाराक्षसेनलङ्कामेत्यरावणंप्रतिश्रीरामेणखरादिसकलराक्षसक्षपणनिवेदनम् ॥ १ ॥ तथारामवधप्रतिज्ञानेन जनस्थानप्रस्थानोन्मुखंदशमुखंप्रतिराममहिमानुवर्णनेनतस्यसर्वावध्यत्वकथनपूर्वकंसीतापहारस्यतद्वधोपायत्वकथनम् ॥ २ ॥ रावणेनमारीचाश्रममेत्यतंप्रतिरामेणखरादिनिधननिवेदनपूर्वकंसीतापहरणेसाहाय्यकरणप्रार्थना ॥ ३ ॥ मारीचेनरावणंप्रति रामप्रभावप्रतिपादनपूर्वकंतस्याजय्यत्वकथनेनतस्यपुनर्लङ्कांप्रतिनिवर्तनम् ॥ ४ ॥

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः ॥ प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १ ॥
जनस्थानस्थिता राजन्राक्षसा बहवो हताः ॥ खरश्च निहतः सङ्ख्ये कथंचिदहमागतः ॥ २ ॥
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ॥ अकम्पनमुवाचेदं निर्दहन्निव चक्षुषा ॥ ३ ॥

विशदं दर्शयति द्वाभ्यां—मृदेत्यादि ॥४०—४१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

---

एवं शरणागतिमन्त्रविवरणरूपे श्रीरामायणे इयता ग्रन्थसंदर्भेण उत्तरखण्डार्थो विवृतः। अनुष्ठानदशायां हि प्रथमखण्डार्थस्य प्राथम्यं व्युत्पत्तिदशायां तूत्तरखण्डार्थस्य फलानुसारेणोपायप्रवृत्तेः। अतो द्वितीयखण्डार्थः प्रथमं विवृतः। तत्र बालकाण्डे प्रथमपदार्थभूतपुरुषकारयोगो दर्शितः। अयोध्याकाण्डे द्वितीयपदार्थभूतसौलभ्यादिगुणयोगः। आरण्यकाण्डे शूर्पणखागमनात्पूर्वभाविवृत्तान्तेन चतुर्थ्यर्थभूता किंकरवृत्तिरुक्ता। ततः खरवधान्तवृत्तान्तेन चरमपदार्थभूता विरोधिनिवृत्तिरिति। अथ पूर्वखण्डार्थ उच्यते शास्त्रशेषेण। तत्र चारण्यकाण्डशेषेण विभीषणस्य पुरुषकारसान्निध्यमुच्यते। किष्किन्धाकाण्डेन नारायणपदार्थभूतं वात्सल्यं। सुन्दरकाण्डेन चरणशब्दोक्तदिव्यमङ्गलविग्रहवैशिष्ट्यं। "रामःकमलपत्राक्षः" इत्यादिना तथोक्तेः। युद्धकाण्डे शरणागतिः। उत्तरकाण्डे प्रपन्नचर्येति बोध्यं। एवमानुषङ्गिकमुनिजनशरणागतिफलं देवशरणागतिकार्यरावणवधाङ्गत्वेनोक्त्वा अथ तन्निमित्तभूतसीतापहाररूपबीजमुपक्षिपति—त्वरमाण इत्यादिना ॥ संहृत्य सकलं लोकं पुनः स्रष्टुं च यः क्षमः। तमहं शिरसा वन्दे जानकीप्राणनायकम् ॥ त्वरमाणः शूर्पणखागमनापेक्षयेति शेषः। अकम्पनो रावणचारः। त्वरमाणो गत्वा वेगेनाब्रवीदित्यन्वयः ॥ १ ॥ कथंचिदिति स्त्रीवेषधारणेनेति भावः। अतएव शूर्पणखा वक्ष्यति। "एका कथंचिन्मुक्ताहं परिभूय महात्मना। स्त्रीवधं शङ्कमानेन राघवेण महात्मना" इति ॥ २ ॥ क्रुद्धत्वं नारोपितमितिज्ञापयितुं संरक्तलोचन इत्युक्तं कोपा-

ति० हर्षातिशयात्पुनरालिङ्गनं। इदंयुद्धंप्रायश्शिशिरार्धे ॥ ४१ ॥ टीका० सर्गफलंस्कान्दे—"श्रुत्वा श्रीरामविजयं पापबन्धात्प्रमुच्यते। तथैव श्रृङ्खलाबन्धादणबन्धाद्विमुच्यते। श्रुत्वा पुष्पवतीनारी तनयं वंशवर्धनं। लभते राघवेन्द्रस्य प्रसादात्कीर्तिवर्धनम्।" इति ॥ इतित्रिंशस्सर्गः ॥ ३० ॥

स० जनस्थानात् तदन्तर्गतगोदावरीतीरात्। गत्वा शूर्पणखागमनात्पूर्वमितिशेषः ॥ १ ॥ स० कथंचित् पलायनादिना। ति० कथंचित् केवलंप्रेक्षकतया स्थितत्वाद्रामबाणाविषयीकृतइत्याशयः ॥ तनि० लङ्काया जनस्थानं पुरद्वारसदृशंखलु। लङ्कायाराज्यं जनपदग्रामादिसंकुलंकिंचिदपि नास्तिखलु। एकालङ्का तस्यारक्षाभूतं जनस्थानमेकं। तस्य नाशाल्लङ्कायाअपावृतंद्वारंसंवृत्तं राजंस्तवैव सत्ताहानिःखलु। राक्षसाः राक्षसराजस्य तव। तन्नाशेराजत्वंनाशितंकिल। बहवः एकद्वित्रिनाशेपि हानिर्भवत्येव किमुत बहूनांनाशे। हताः मारिताः। ननु सप्राणाः। सर्वराक्षसनाशे खरेणकिंकृतमित्यत्राह—खरश्चेति। चकारेण

[ पा० ] १ ङ. झ. ट. संपूज्यमानं. २ ङ. झ. ट. मैहात्मभिः. ३ ङ. झ. ट. मुदान्वितानना. ४ ङ.—ट. तेजसा.

केन [1]रम्यं जनस्थानं हतं मम परासुना ॥ [2]को हि सर्वेषु लोकेषु गतिं [3]चाधिगमिष्यति ॥ ४ ॥
न हि मे विप्रियं कृत्वा शक्यं मघवता सुखम् ॥ प्राप्तुं वैश्रवणेनापि [4]न यमेन न विष्णुना ॥ ५ ॥
कालस्य चाप्यहं कालो दहेयमपि पावकम् ॥ मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ॥ ६ ॥
[5]दहेयमपि संक्रुद्धस्तेजसाऽऽदित्यपावकौ ॥ वातस्य तरसा वेगं निहन्तु[6]महमुत्सहे ॥ ७ ॥
तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः ॥ भयात्संदिग्धया वाचा रावणं याचतेऽभयम् ॥ ८ ॥
दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः ॥ स विस्रब्धोऽब्रवीद्वाक्यमसंदिग्धमकम्पनः ॥ ९ ॥
पुत्रो दशरथस्या[7]स्ति सिंहसंहननो युवा ॥ रामो नाम [8]वृषस्कन्धो वृत्तायतमहाभुजः ॥ १० ॥
[9]वीरः पृथुयशाः श्रीमानतुल्यबलविक्रमः ॥ [10]हतं तेन जनस्थानं खरश्च सहदूषणः ॥ ११ ॥
अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः ॥ [11]नागेन्द्र इव निःश्वस्य [12]वचनं चेदमब्रवीत् ॥ १२ ॥
स सुरेन्द्रेण संयुक्तो रामः सर्वामरैः सह ॥ उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ॥ १३ ॥
रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः ॥ आचचक्षे बलं तस्य विक्रमं च महात्मनः ॥ १४ ॥
रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् ॥ दिव्यास्त्रगुणसंपन्नः [13]पुरंदरसमो युधि ॥ १५ ॥
तस्यानुरूपो बलवान्[14]रक्ताक्षो दुन्दुभिस्वनः ॥ कनीयाँल्लक्ष्मणो [15]नाम भ्राता शशिनिभाननः ॥ १६ ॥
स तेन सह संयुक्तः पावकेनानिलो यथा ॥ श्रीमान्राजवरस्तेन जनस्थानं निपातितम् ॥ १७ ॥
नैव देवा महात्मानो नात्र कार्या विचारणा ॥ १८ ॥
शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्रिणः ॥ सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् ॥ १९ ॥
येन [16]येन च गच्छन्ति राक्षसा [17]भयकर्शिताः ॥ तेन [18]तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् ॥
इत्थं विनाशितं तेन जनस्थानं तवानघ ॥ २० ॥

तिरेकं दृष्टान्तमुखेनाह—निर्दहन्निवेति ॥ ३ ॥ परागताः असवः प्राणाः यस्य तेन परासुनेति परुषभाषणमात्रं । गम्यत इति गतिः स्थानं ॥ ४—५ ॥ कालस्यापि काल इत्यत्रोपपत्तिमाह—मृत्युमिति ॥ ६ ॥ आदित्यपावकौ परस्परसाहाय्येन संयुक्तावपीत्यर्थः । अतो न पुनरुक्तिः ॥ ७ ॥ संदिग्धया सदिग्धाक्षरया । याचते अयाचत । अभयमिति छेदः ॥ ८—११ ॥ नागेन्द्रः सर्पेन्द्रः ॥ १२ ॥ स रामः सुरेन्द्रेणामरैश्च युक्तः सन् जनस्थानमुपयातः कच्चित् । अन्यथा तस्यैतादृशसामर्थ्यं न युज्यत इति भावः ॥ १३—१४ ॥ इन्द्रादिसहायानपेक्षो राम इत्याशयेनाह—रामो नामेत्यादिना । दिव्यास्त्रगुणसंपन्नः दिव्यास्त्रकृतातिशययुक्तः ॥ १५ ॥ रक्ताक्षः रक्तरेखाञ्चितनयनः । दुन्दुभिस्वनः दुन्दुभिवत् गम्भीरस्वनः । संयुक्त इति वर्तत इति शेषः ॥ १६—१७ ॥ नैव देवा इति । सहायार्थमागता इतिशेषः ॥ १८ ॥ पञ्चाननाः विस्तृताननाः भूत्वा भक्षयन्ति स्मेत्युत्प्रेक्षा ॥ १९ ॥ राक्षसाः भयकर्शिताः भयपीडिताः सन्तो येन येन

दूषणत्रिशिरसावुच्येते ॥ २ ॥ **स०** परासुना मृतेन । तस्यमरणंनिश्चित्येयमुक्तिः । गतिं त्रातारं ॥ ४ ॥ **स०** सिंहसंहननः वराङ्गरूपोपेतः । " वराङ्गरूपोपेतोयस्सिंहसंहननोहिसः " इत्यमरः ॥ १० ॥ **स०** हे इन रावण सता लक्ष्मणेन यःश्रीमान्राजवरोरामःसंयुक्तः तेन जनस्थानंनिपातितं । **शि०** संयुक्तः अतिविचारवान् ॥१७॥ **स०** ससुरेन्द्रेणसंयुक्तइत्यस्योत्तरमाह—**नैवेति** । देवाः एतदपेक्षया महात्मानोनैव । तस्मायुक्तंतेषां तेन हननमितिभावः ॥ १८ ॥ **स०** पञ्चाननास्सर्पाभूत्वा तद्वन्मारकाः ॥ १९ ॥ **तनि०** येनयेन मार्गेणेत्यर्थः । अथवा येनयेन यद्यद्वस्त्वन्तर्धानसाधनत्वबुद्ध्यागच्छन्ति तेनतेन तस्मिंस्त-

**[ पा० ]** १ ख. ङ. झ. ट. भीमं. २ क. ग. च. छ. ज. ञ. कोद्य. ३ क. ग.—ट. नाधिगमिष्यति. ४ ग. यमेनवरुणेनवा. ङ. झ. ट. नयमेनच. ५ च. छ. ज. ञ. दहेयंवास्वयंक्रुद्धः. ६ ङ. झ. मपिचोत्सहे. ७ ख. स्यासीत्. ङ. झ. ट. स्यास्ते. ८ ङ—ट. महास्कन्धो. ९ ख. ङ—ट. श्यामः. १० ग. ङ. झ. ञ. ट. हतस्तेनजनस्थाने. ११ छ. मृगेन्द्रइव. १२ क.—ट. इदंवचनमब्रवीत्. १३ क. ङ. झ. ट. परंधर्मंगतो. ख. परंधामयुतो. १४ ख. त्रक्तास्यो. १५ ङ. झ. ट. भ्राताराकाशशिनिभाननः. १६ क. येनहि. १७ क. भयशङ्किताः. १८ क. तेनच.

अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ [1]जनस्थानं गमिष्यामि [2]हन्तुं रामं सलक्ष्मणम् ॥२१॥
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः ॥ शृणु राजन्यथावृत्तं रामस्य बलपौरुषम् ॥ २२ ॥
[3]असाध्यः कुपितो रामो विक्रमेण महायशाः ॥ [4]आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः ॥ २३ ॥
सताराग्रहनक्षत्रं नभश्चाप्यवसादयेत् ॥ असौ रामस्तु [5]मज्जन्तीं श्रीमानभ्युद्धरेन्महीम् ॥ २४ ॥
भित्त्वा वेलां समुद्रस्य लोकानाप्[6]लावयेद्विभुः ॥ वेगं [7]वाऽपि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५ ॥
संहृत्य वा पुनर्लोकान्विक्रमेण महायशाः ॥ [8]शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः ॥ २६ ॥
न हि रामो दशग्रीव शक्यो जेतुं [9]त्वया युधि ॥ रक्षसां [10]वाऽपि लोकेन स्वर्गः पापजनैरिव ॥ २७ ॥

---

मार्गेण गच्छन्ति तेन तेन मार्गेणाग्रतः स्थितं राममेव पश्यन्ति स्म । अत्र विशेषणासामर्थ्याद्रामदर्शनं भयकृतमिति व्यज्यते ॥ २०—२१ ॥ यथावृत्तं परमार्थभूतमित्यर्थः ॥ २२ ॥ असाध्यः अनिग्राह्यः ॥२३॥ ग्रहाः नवग्रहाः । नक्षत्राणि सप्तविंशतिनक्षत्राणि । ताराः तदन्यज्योतींषि । अवसादयेत् विशीर्णं कुर्यात् । मज्जन्तीं समुद्र इति शेषः ॥ २४ ॥ विप्लावयेत् सिञ्चेत् । विधमेत् दहेत् । ध्मा शब्दाग्निसंयोगयोरिति धातोर्लिङि धमादेशः ॥ २५ ॥ लोकान् भूरादीन् । संहृत्य पुनः स्रष्टुं शक्तः इमाः प्रजाश्च संहृत्य पुनः स्रष्टुं शक्त इत्यर्थः ॥ २६ ॥ लोकेन समूहेन ॥२७॥

---

स्मिन्वस्तुनि राममेवाग्रतस्स्थितंपश्यन्ति । अत्रप्रतिराक्षसमिच्छागृहीतदेहत्वंध्वन्यते ॥ २० ॥ **तनि०** यथावृत्तं तत्कृतातिमानुषकर्मानतिक्रमेण । यद्वा रामस्यवृत्तं इतिहासपुराणोक्तवृत्तान्तं यथा यथावत् । बलं पराभिभवसामर्थ्यं । पौरुषं महापुरुषकर्म । कुपितः मर्यादोल्लङ्घनविषयनिग्रहवान् रामइति कोपस्यापरिहार्यत्वंव्यज्यते । विक्रमेणासाध्यः विक्रमेप्रवृत्ते निवारयितुमशक्यइत्यर्थः । असाध्यइतिनिरुपपदेन ब्रह्मरुद्रेन्द्रादिभिरसाध्यत्वंध्वन्यते । महायशाः लोकेवेदेचप्रसिद्धविभवः । अनेन त्रिविक्रमावतारोव्यज्यते । आपगायास्सुपूर्णायावेगंपरिहरेदित्यनेन भविष्यत्कृष्णावतारो भूतकृष्णावतारोवा व्यज्यते । "भयानकावर्तशताकुलानदी मार्गं ददौसिन्धुरिवश्रियःपतेः" इति श्रीभागवतोक्तेः । अनेन मत्स्यावतारइति केचित् ॥२३॥ **तनि०** सताराग्रहनक्षत्रं ताराः अश्विन्यादयः । ग्रहाः सूर्यादयः । तदितराणि नक्षत्राणि । नभश्चापीति तदधिष्ठानाण्डकोशउच्यते । तमप्यवसादयेदित्यनेनापित्रिविक्रमावतारध्वनिः । तथाचश्रुतिः "योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायः" इति । सीदन्तीं मज्जन्तीं । महीमभ्युद्धरेदसाविति वराहावतारोव्यज्यते"तांवराहोभूत्वाऽहरत्" इतिश्रुतेः । श्रीमानित्यवतारेषुसर्वत्रानुवृत्तिर्लक्ष्म्यास्सूच्यते । "अन्येषुचावतारेषु विष्णोरेषानपायिनी" इतिपराशरवचनात् । श्रीमानिति लक्ष्मीसमभिव्याहारबलेन संसारेमज्जन्तंचेतनमभ्युद्धरेदिति परत्वासाधारणलिङ्गमोक्षप्रदत्वंव्यञ्जितं । श्रीमान्महीमभ्युद्धरेदिति लक्ष्म्यास्सहकारित्वश्रवणेन सपत्नीद्वेषाभावोव्यज्यते ॥ २४ ॥ **तनि०** भित्वेति । समुद्रवेलाभेदेन लोकानाप्लावयेदिति संकर्षणावतारोध्वन्यते । समुद्रस्यवेगमपिविधमेदिति करिष्यमाणसमुद्रबन्धनं व्यज्यते । वायुंवाविधमेदिति पृथिव्यादिभूतोपलक्षणं । "पृथिव्यप्सुप्रलीयते, आपस्तेजसिलीयन्ते" इत्याद्युक्तप्रकारेण प्रलयं कुर्यादितिध्वन्यते । संहृत्येत्यनन्तरमनुवादात् ॥ २५ ॥ **तनि०** पुनस्संहृत्येत्यनेन पूर्वसंहारसृष्ट्योरप्येतत्कर्तृकत्वंव्यज्यते । "बभूवभूयश्चयथा महाभागभविष्यती"ति प्रश्नवल्लोकानितिबहुवचनस्यासंकोचेन साण्डास्सर्वेलोकाविवक्षिताः । विक्रमेण संकल्पमात्रेणेत्यर्थः । "एतस्यवाअक्षरस्य—" इत्यादिश्रुतेः । महायशाः षड्गुणैश्वर्यकृतप्रसिद्धिः । शक्तः अनन्तशक्तिमान् । "परास्य शक्तिः" इतिश्रुतेः । ननु नारायणस्य "एकोहवैनारायणः" इत्यादिना सृष्ट्यादिकर्तृत्वंश्रूयते कथमेतस्येति तत्राह—**सपुरुषव्याघ्रइति** । "सहिदेवैरुदीर्णस्य" इत्यादिना सएवायंनारायणोरामात्मनाऽवतीर्णइत्युक्तत्वात् । स्रष्टुंपुनरित्यत्रापि पुनश्शब्दःपूर्वसृष्टेरेतदधीनत्वव्यञ्जकः । प्रजाइतिप्रकृतिसंसृष्टचेतनवर्गस्समष्टिकारणभूतउच्यते । अकंपनस्यापि भगवत्प्रसादादेवंज्ञानं ॥ २६ ॥ **स०** स्वर्गपक्षे जेतुं प्राप्तुमित्यर्थः ॥ **तनि०** रामः विक्रमैरञ्जनीयः । दशग्रीवः अनितरसाधारणदशवदनत्वंखलु तवावलेपहेतुः रामरामानुजौतु सहस्रशीर्षाविवितिव्यज्यते । त्वयाजेतुंयुधिनशक्यः अल्पशक्तिस्त्वं अपरिमितानन्तशक्तिमान्रामः कथंजेतुंशक्यः । रक्षसां नमुचिहिरण्यकशिपुशंबरबलिप्रभृतीनां । लोकेन जनेन । "कोमज्जतोरणुकुलाचलयोर्विशेषः" इति न्यायसाम्यंद्योतयितुं त्वयालोकेनेत्येकवचननिर्देशः । जयस्यात्यन्तासंभावनाद्योतयितुं स्वर्गःपापजनैरिवेत्युक्तं । प्रसिद्धैर्बहुभिरेकः

**[ पा० ]** १ क—ङ. झ. ट. गमिष्यामिजनस्थानं. २ क—ङ. झ. ट. रामंहन्तुं. ३ क. अवध्यः. ४ ङ. झ. ट. आपगायास्तु. ५ क. ग. ङ. छ—ट. सीदन्तीं. ६ ख. ग. च. छ. ज. ञ. नाप्लावयेदिमान्. ७ च. चापि. घ. सोपि. ८ ङ. झ. ट. शक्तश्श्रेष्ठस्सपुरुषः. घ. शक्तश्च. ९ ङ. झ. ट. रणेत्वया. १० घ. चापि.

**न तं वध्यमहं मन्ये सर्वैर्देवासुरैरपि ॥ अयं तस्य वधोपायस्तं ममैकमनाः शृणु ॥ २८ ॥**
**भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा ॥ श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ॥ २९ ॥**
**नैव देवी न गन्धर्वी नाऽप्सरा नाऽपि दानवी ॥ तुल्या सीमन्तिनी तस्या मानुषीषु कुतो भवेत् ॥३०॥**
**तस्यापहर भार्यां त्वं प्रमथ्य तु महावने ॥ सीतया रहितः कामी रामो हास्यति जीवितम् ॥ ३१ ॥**
**अरोचयत तद्वाक्यं रावणो राक्षसाधिपः ॥ चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ॥ ३२ ॥**
**बाढं काल्यं गमिष्यामि ह्येकः सारथिना सह ॥ आनयिष्यामि वैदेहीमिमां हृष्टो महापुरीम् ॥३३॥**

मम मत्तः । एकमनाः सावधानः ॥२८॥ "श्यामा यौवनमध्यस्था" इत्युत्पलः । समं यथा तथा विभक्तानि नेत्रकर्णाद्यङ्गानि यस्याः सा तथोक्ता । स्त्रीरत्नं स्त्रीश्रेष्ठा अस्तीति शेषः ॥ २९ ॥ देवी देवस्त्री । "पुंयोगादाख्यायां" इति ङीष् । एवमुत्तरत्रापि । अप्सरःशब्द एकवचनान्तोप्यस्ति । सीमन्तिनी स्त्री ॥ ३० ॥ महावने प्रमथ्य विलोड्य । येनकेनाप्युपायेन रामं वञ्चयेत्यर्थः ॥ ३१ ॥ चिन्तयित्वा रामोच्चाटनोपायमिति शेषः ॥ ३२ ॥ बाढमित्यङ्गीकारे । काल्यं

कथंजेतुमशक्यइत्यत्राह—**स्वर्गःपापजनैरिवेति** ॥ २७ ॥ **तनि०** इन्द्रजिता निर्जिता इन्द्रादयोस्मत्सहायाभविष्यन्तीत्याशां वारयति—**नतमिति** । देवासुरैरितिबहुवचनेन सर्वदेवासुरग्रहणे पुनस्सर्वशब्दो भूतभविष्यद्वर्तमानकालिकेन्द्रजात्यादिसमुदायवाचकः । अहंमन्ये राक्षसजातित्वेपि सुकृतपरिपाकवशेन श्रीराममहत्त्वविषयंज्ञानमुत्पन्नं । तवतु " आसुरींयोनिमापन्ना मूढा जन्मनिजन्मनि " इतिशास्त्ररीत्या दुष्कर्मवशेननोत्पन्नमिति । इदंचाकंपनस्यपरत्वज्ञानं सनत्कुमारादिप्रोक्तेतिहासश्रवणादिनावा माल्यवत्प्रभृतिभिरुक्तसुमालिमालिवधादिवृत्तान्तादिनावा विश्वरूपादिदर्शनवच्चतुर्दशसहस्रराक्षसयुद्धे प्रतिराक्षसं रामविग्रहाभेदादिप्रतिपत्त्यावा संजातमितिवा अकंपनापदेशेन ऋषिरेवपरत्वख्यापनंकृतवानितिवा न कोपिविरोधः । **स०** समुद्रमथनकाले सख्यस्यापिदर्शनेन विरोधस्य शाश्वतिकत्वाभावाद्देवासुरैरितिसाधु ॥ २८ ॥ **स०** उत्तमेति सामान्यतःप्रतिज्ञा । शिष्टं तद्विवरणं ॥ **शि०** उत्तमा उद्गतःतमः आकाङ्क्षा यस्याः रामातिरिक्तसर्वाकाङ्क्षारहिता ॥ २९ ॥ **ती०** अरोचयततद्वाक्यमित्यस्य वास्तवार्थस्तु—चिन्तयित्वा अकम्पनाद्रामवृत्तान्तश्रवणानन्तरंचिन्तयित्वा त्रेतायुगे श्रीरामोऽवतरिष्यतीति सनत्कुमारवाक्यंस्मृत्वेत्यर्थः। श्रीरामहस्ताद्वधेच्छूरावणः तद्वाक्यं तस्याकम्पनस्यवाक्यं सीतामाहरेत्येवंरूपंवचनं । अरोचयत अनुकूलत्वेनाङ्गीचकारेतिसंबन्धः । अस्मिन्नर्थे उत्तररामायणोक्ता सनत्कुमाररावणसंबन्धिनी अगस्त्यरामसंवादरूपा कथाऽनुसंधेया । तथाहि रामंप्रत्यगस्त्यवचनं– " अथापरां कथां दिव्यां शृणु राजन्पुरातनीम् । यदर्थं राम वैदेही रावणेनहृतापुरा । पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम् । सनत्कुमारमासीनं रावणो वाक्यमब्रवीत् । दैत्यदानवरक्षांसि ये हतास्समरेऽरयः । कां गतिं प्रतिपद्यन्ते केन ते हरिणा हताः । सनत्कुमारः । येये हताश्चक्रधरेण राजंस्त्रैलोक्यनाथेन जनार्दनेन । तेते गतास्तन्निलयं नरेन्द्राः क्रोधोपि देवस्य वरेण तुल्यः । श्रुत्वा ततस्तद्वचनं निशाचरस्सनत्कुमारस्य मुखाद्विनिर्गतम् । तदा प्रहृष्टस्स बभूव विस्मितः कथंनु यास्यामि हरिं महाहवे । मुनिः। मनसश्चेप्सितं यत्तद्भविष्यति तदाहवे । सुखीभव महाबाहो किंचित्कालं प्रतीक्षय । अथवा राक्षसेन्द्र त्वं यदीदं प्रष्टुमिच्छसि । कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते । कृतेयुगे व्यतीते वै मुखे त्रेतायुगस्य तु । हितार्थं देवमर्त्यानां भविता नृपरिग्रहः । इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि । तस्य सूनुर्महातेजा रामो नाम भविष्यति । एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् । त्वया सह विरोधेच्छुश्चिन्तयामास राघव । सनत्कुमारात्तद्वाक्यं चिन्तयानो मुहुर्मुहुः । रावणो मुमुदे मोहाद्युद्धार्थी विचचार ह । एतदर्थं महाबाहो रावणेन दुरात्मना । सुता जनकराजस्य हृता राम महामते । लङ्कामानीय यत्नेन मातेव परिरक्षिता । " इत्यादि ॥ अतएव रावणस्य सीतारामभृत्यत्वेन तावुद्दिश्य तेनवक्ष्यमाणानि बाह्यदृष्ट्यादुर्भाषणवत्प्रतीयमानान्यपि वाक्यानि वस्तुतस्स्तुतिपराण्येव । तथा तत्रतत्रव्याख्यास्यामः ॥ ३२ ॥ **ति०** उत्तमस्त्रीलाभोभविष्यतीति हृष्टइत्यर्थउचितः । श्रुतस्यापितस्यार्थस्य तामसत्वेनविस्मरणात् । तेपद्येतु नयथाश्रुतार्थे । वक्ष्यमाणविष्णुपुराणविरोधात् । किंतु श्रीरामस्य स्वमृत्योरवतारंश्रुत्वा त्वयासहमृत्युविघातकविरोधेच्छुस्तांहृतवान् । तद्वियोगे तवमरणमित्याशयेनेतितयोरर्थइत्यन्ये । वस्तुतस्त्वेतेषांश्लोकानां तद्गतांसर्गाणांच प्रक्षिप्तत्वान्नते प्रमाणभूताः । अतएव तेसर्गाःकतकादिभिस्तीर्थेनच नव्याख्याताः । एतेन " एतदर्थंमहाबाहो रावणेनदुरात्मना । विज्ञायापहृतासीता त्वत्तोमरणकाङ्क्षया " इति तत्रपाठोदृश्यते तत्रचत्वदुक्तार्थासंभवइत्यपास्तं ॥ कल्यं प्रातः ।

[ पा० ] १ क. ङ—ट. स्तन्ममैक. २ च. छ. ज. ञ. सर्वविभक्ताङ्गी. ३ ङ. झ. ट. नचपन्नगी. ग. नापिपन्नगी. ४ ङ. झ. ट. मानुषीतु. ५ ग. तस्याहरस्व. ६ च. छ. ज. तां. ७ ङ. झ. ट. तंप्रमथ्य. ८ ख. घ. सतया. ९ ङ. झ. ट. रहितोरामोनचैवहिभविष्यति. १० क. लोकरावणः. ख. कालचोदितः. ११ ङ. झ. ट. आनेष्यामिच. ग. आनेष्यामितु.

अथैवमुक्त्वा प्रययौ खरयुक्तेन रावणः ॥ रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन् ॥ ३४ ॥
स रथो राक्षसेन्द्रस्य नक्षत्रपतगो महान् ॥ संचार्यमाणः शुशुभे जलदे चन्द्रमा इव ॥ ३५ ॥
स मारीचाश्रमं प्राप्य ताटकेयमुपागमत् ॥ मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः ॥ ३६ ॥
तं स्वयं पूजयित्वा तु आसनेनोदकेन च ॥ अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ३७ ॥
कच्चित्सुकुशलं राजँल्लोकानां राक्षसेश्वर ॥ आशङ्के नाथ जाने त्वं यतस्तूर्णमिहागतः ॥ ३८ ॥
एवमुक्तो महातेजा मारीचेन स रावणः ॥ ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ३९ ॥
आरक्षो मे हतस्तात रामेणाक्लिष्टकर्मणा ॥ जनस्थानमवध्यं तत्सर्वं युधि निपातितम् ॥
तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे ॥ ४० ॥
राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१ ॥
आख्याता केन सीता सा मित्ररूपेण शत्रुणा ॥ त्वया राक्षसशार्दूल को न नन्दति निन्दितः ॥
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ॥ ४२ ॥
रक्षोलोकस्य सर्वस्य[12] कः शृङ्गं छेत्तुमिच्छति[13] ॥ प्रोत्साहयति कश्चित्त्वां[14] स हि[15] शत्रुरसंशयः[16] ॥ ४३ ॥
आशीविषमुखाद्दंष्ट्रामुद्धर्तुं चेच्छति त्वया ॥ कर्मणा[17] तेन केनाऽसि कापथं प्रतिपादितः ॥ ४४ ॥

प्रातः ॥ ३३ ॥ खराः अश्वतराः । तत्स्वरूपमुक्तमश्वशास्त्रे । "अश्वसृग्भ्यः समुत्पन्नास्तस्मादश्वतराः खराः । खररूक्षस्वरास्तीक्ष्णाः खरशीलाः खराह्वयः" इति ॥ ३४ ॥ नक्षत्रपथगः आकाशगः । संचार्यमाणः प्रेर्यमाणः ॥३५॥ ताटकेयं ताटकापुत्रं । भक्ष्यभोज्यैः पेयखाद्यैः । अमानुषैः मनुष्यलोकदुर्लभैः ॥ ३६ ॥ अर्थोपहितया अर्थेन प्रयोजनेन उपहितया विशिष्टया ॥ ३७ ॥ हे राजन् । लोकानां राक्षसलोकानां। राक्षसेश्वरेतिसमभिव्याहारादयमर्थोलभ्यते । सुकुशलंकच्चिदिति सामान्येन प्रश्नः । अथ अथवा । त्वं यतस्तूर्णमिहागतः ततः कारणात्किंचिदत्याहितमस्तीत्याशङ्के । तद्विशिष्य न जाने । महत्कार्यं विना भवतस्तूर्णमागमनं नोपपद्यत इति भावः । यद्वा लोकानां कच्चित्सुकुशलं । अथ अथवा । तेषां कुशलं नेत्याशङ्के यतस्त्वंतूर्णमागतः । न जाने तद्विशिष्य न जान इत्यर्थः ॥३८॥ ततःपश्चात् तद्वाक्यादनन्तरं ॥ ३९॥ आरक्षः अन्तपालः । उक्तमुपपादयति—जनस्थानमित्याद्यर्धेन । जनस्थानशब्देन तत्स्थो रक्षोगणो लक्ष्यते । तत् प्रसिद्धं । साचिव्यं साहाय्यं । तस्य मे हृतस्वजनस्य मे ॥ ४०—४१ ॥ आख्यातेत्याद्यर्धत्रयमेकान्वयं । यः सीतायाः आख्याता स मित्ररूपः शत्रुः । यश्च तामानयेत्युपदेष्टा सः त्वया निन्दितः सन् तिरस्कृतः सन् । त्वदैश्वर्यं न नन्दति तावुभौ ब्रूहीत्यर्थः । ब्रवीहीत्यत्र ईडागमश्छान्दसः ॥ ४२ ॥ शृङ्गं प्राधान्यं । "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः । प्रोत्साहयति सीताऽऽनयनं प्रतीति शेषः । सच स एव ॥ ४३ ॥ आशीविषः सर्पविशेषः । उद्धर्तुं उद्धारयितुं । क इति शेषः । तेन कर्मणा सीतापहारलक्ष-

मान्तमव्ययं ॥ ३३ ॥ **ति०** चञ्चूर्यमाणः भृशंचरन् ॥ ३५ ॥ **स०** अमानुषैः राक्षसयोग्यैः ॥ ३६ ॥ **ति०** आशङ्के भयमितिशेषः । नाधिजाने क्षेममितिशेषः ॥ ३८ ॥ **ति० स०** आरक्षः रक्षणीयःखरादिः । "आरक्षंरक्षणीयेस्यात्" इतिविश्वः ॥ ४० ॥ **ति०** सासीता केनाख्याता हर्तव्यत्वेनकथिता । येनकथिता समित्ररूपस्तेशत्रुः । त्वयादानादिना नन्दितः कोननन्दति । निन्दितइतिपाठे निन्दितः अवमानितः । कस्त्वांननन्दति नसंतुष्यति क्रुध्यतीतियावत् । त्वयातिरस्कृतस्तावकमैश्वर्यमसहमानस्संस्त्वयासह कृत्रिममित्रभावंप्राप्तस्संस्तवेदृशींबुद्धिमुपदिशतीतिभावः ॥ ४२ ॥ **स०** शृङ्गं प्रभुत्वमुत्कर्षंवा । "शृङ्गंप्रभुत्वे

**[ पा० ]** १ ङ. झ. ट. तदेवमुक्त्वा. २ ङ. झ. ञ. ट. चञ्चूर्यमाणः. क. च. छ. ज. संत्वर्यमाणः. ३ ङ. झ. दूरेचाश्रमं ४ ङ. च. छ. झ. ञ. ट. गत्वा. ५ क. ङ—ट. राक्षसाधिप. ६ ग. ङ. झ. ट. नाधिजाने. ७ क. यतश्शीघ्रं. ८ ङ. झ. ट. मुपागतः. ९ ङ. झ. ट. कारिणा. १० घ. ङ. झ. केनवासीता. च. छ. ज. ञ. ट. केनसासीता. ११ ङ. च. छ. झ. ञ. ट. नन्दितः. १२ च. छ. ज. कःशृङ्गंछेत्तुमिच्छतिसांप्रतं. १३ घ. मर्हति. १४ क. ग. ङ—ट. यश्चत्वां. १५ च. छ. ज. ञ ट. सचशत्रुर्नसंशयः. क. ख. ग. ङ. झ. सचशत्रुरसंशयं. १६ ग. कस्त्वयेच्छति. १७ ख—ट. कर्मणानेन.

सुखसुप्तस्य ते राजन्प्रहृतं केन मूर्धनि ॥ ४५ ॥
विशुद्धवंशाभिजनाग्रहस्तस्तेजोमदः संस्थितदोर्विषाणः ॥
उदीक्षितुं रावण नेह युक्तः स संयुगे राघवगन्धहस्ती ॥ ४६ ॥
असौ रणान्तस्थितिसन्धिवालो विदग्धरक्षोमृगहा नृसिंहः ॥
सुप्तस्त्वया बोधयितुं न युक्तः शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७ ॥
चापावहारे भुजवेगपङ्के शरोर्मिमाले सुमहाहवौघे ॥
न रामपातालमुखेऽतिघोरे प्रस्कन्दितुं राक्षसराज युक्तम् ॥ ४८ ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ ॥
त्वं स्वेषु दारेषु रमस्व नित्यं रामः सभार्यो रमतां वनेषु ॥ ४९ ॥

णकर्मणा । कापथं कुमार्गं । "ऋक्पूरब्धूःपथामनक्षे" इति समासान्तोऽप्रत्ययः । प्रतिपादितः उपदिष्टोसि । कर्मणा केनेति पाठे केन पुरुषेण केन कर्मणा केनोपायेन । कापथं प्रतिपादितोसीत्यन्वयः । मूर्ध्नि केन प्रहृतं केन प्रहारः कृतः । वृथैव केन दुःखमुत्पादितमित्यर्थः ॥ ४४—४५ ॥ रामे कं गुणं दृष्ट्वैवं वदसीत्याशङ्क्याह—विशुद्धेति । अनेन रामस्य मत्तगजसमाधिरुच्यते । विशुद्धवंशे अभिजनः अभिजननं तदेवाग्रहस्तो यस्य स तथा । द्वयोरौन्नत्यकरत्वसाम्याद्रूपकं निरूढं । तेजोमदः तेजःप्रताप एव मदो यस्य सः । तेजोमदयोर्दुर्धर्षताहेतुत्वसाम्याद्रूपकोपपत्तिः । उपरितनपदे संस्थितत्वसाम्याद्रूपकं । संस्थितौ समीचीनसंस्थानवन्तौ दोषौ बाहू एव विषाणे यस्य सः । राघव एव गन्धहस्ती मदगजः । यस्य गन्धमात्रेणान्ये गजाः पलायन्ते स गन्धहस्तीत्युच्यते । उदीक्षितुमपि इहअस्मिन्देशे काले च न युक्तः ॥ ४६ ॥ पुनरप्यतिशयं वक्तुं रामस्य सिंहसाम्यमाह—असाविति । रणान्तो रणाग्रं तत्र स्थितिर्नासीरावस्थानं सैव संधिवालो यस्य स तथा । संदधातीति संधिः । "उपसर्गे घोः किः"इति किः । संधिभूतः लोमसंघभूत इत्यर्थः। वालो लाङ्गूलं । यद्वा संधिर्मध्यः तद्गतो वालो लाङ्गूलं यस्य स तथेति वा । सिंहस्य लाङ्गूलं क्रोधदशायां मध्योपरिप्रदेशे वर्तत इति प्रसिद्धिः । तस्य मृगाणां गर्वहेतुत्वेन रणाग्रस्थितिसाम्यं । विदग्धानि पटूनि रक्षांस्येव मृगाः तान् हन्तीति तथा । ब्रह्मादिव्यतिरिक्तेप्युपपदे प्रयोगानुसारात् क्विप् । शराङ्गपूर्णः शरा एवाङ्गानि नखाद्यवयवाः तैः पूर्णः । निशितासिरेव दंष्ट्रे यस्य स तथा । नृसिंहो नरश्रेष्ठः । सिंह इत्यपि ध्वन्यते । यद्वा नृसिंह एव सिंह इत्येकशेषः । यद्वा विद्वन्मानसहंस इतिवत् श्लिष्टं रूपकं । यद्वा नृसिंहो रामः पुरुषसिंह इति व्यङ्ग्यं ॥ ४७ ॥ सिंहाभिमुखगमनेपि दैवाद्दृष्टिवैषम्यान्निवर्तितुं शक्यं न तु रामाहवगमन इत्याशयेन रामस्य पातालसाम्यमाह—चापेति । चाप एवावहारो ग्राहो यस्मिन् स तथा । "ग्राहोवहारः" इत्यमरः । अनेन पतनकाल एव ग्रहणसामर्थ्युक्ता । भुजवेगः शरमोक्षणवेगः स एव पङ्को यस्य स तथा । अनेन मज्जने निर्गमायोग्यतोक्ता । शरा एवोर्मिमाला तरङ्गपङ्क्तिर्यस्य स तथा । अनेन मज्जनसामर्थ्युक्ता । सुमहानाहव एव ओघो जलपूरो यस्य स तथा । अनेन दुस्तरत्वमुक्तं । अतिघोरे राम एव पातालं महाबिलं तस्य मुखे मध्ये । प्रस्कन्दितुं पतितुं न युक्तं ॥ ४८ ॥ एवं वस्तुस्थितिमुक्त्वा प्रेमातिशयेन पुनः पुनः सान्त्वयति

विषाणोत्कर्षयोरपि" इतिविश्वः ॥ ४३ ॥ **ती०** सुप्तः परद्रोहविमुखतयाऽवस्थानमेव सुप्तत्वंरामपक्षेद्रष्टव्यं ॥ **शि०** सुप्तः त्वदपकारविषयकोद्योगरहितः ॥ ४७ ॥ इत्येकत्रिंशस्सर्गः ॥ ३१ ॥

[ **पा०** ] १ घ. आवीक्षितुं. च. छ. ज. ञ. उद्वीक्षितुं. २ ख. रणाग्रस्थिति. ३ ङ. झ. ट. शक्यः. ४ ग. वेगनागे. ५ ग. जाले. ख. मालेषु. ६ ग. प्रपन्नो.

एवमुक्तो दशग्रीवो मारीचेन स रावणः ॥ न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ॥ ३२ ॥

खरादिनिधनखिन्नयाशूर्पणखयालंकामेत्यरावणायस्ववैरूप्यप्रदर्शनम् ॥ १ ॥

ततः शूर्पणखी दृष्ट्वा सहस्राणि चतुर्दश ॥ हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ॥ १ ॥
दूषणं च खरं चैव हतं त्रिशिरसा सह ॥ दृष्ट्वा पुनर्महानादं ननाद जलदो यथा ॥ २ ॥
सा दृष्ट्वा कर्म रामस्य कृतमन्यैः सुदुष्करम् ॥ जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ॥ ३ ॥
सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् ॥ उपोपविष्टं सचिवैर्मरुद्भिरिव वासवम् ॥ ४ ॥
आसीनं सूर्यसंकाशे काञ्चने परमासने ॥ रुक्मवेदिगतं प्राज्यं ज्वलन्तमिव पावकम् ॥ ५ ॥
देवगन्धर्वभूतानामृषीणां च महात्मनाम् ॥ अजेयं समरे शूरं व्यात्ताननमिवान्तकम् ॥ ६ ॥
देवासुरविमर्देषु वज्राशनिकृतव्रणम् ॥ ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ७ ॥
विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् ॥ विशालवक्षसं वीरं राजलक्षणशोभितम् ॥ ८ ॥
स्निग्धवैडूर्यसंकाशं तप्तकाञ्चनकुण्डलम् ॥ सुभुजं शुक्लदशनं महास्यं पर्वतोपमम् ॥ ९ ॥
विष्णुचक्रनिपातैश्च शतशो देवसंयुगे ॥ अन्यैः शस्त्रप्रहारैश्च महायुद्धेषु ताडितम् ॥ १० ॥
आहताङ्गं समस्तैश्च देवप्रहरणैस्तथा ॥ अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणम् ॥ ११ ॥

प्रसीदेति ॥ ४९—५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

तपोबाहुबलोपेतं सर्वभूतभयंकरम् । यो हनिष्यति दुर्बुद्धिं रावणं सोस्तु मे मुदे ॥ शूर्पणखीत्यार्षोङीषादिः । महानादमिति क्रियाविशेषणं ॥ १—२ ॥ कृतं कर्म पर्याप्तं कर्म । परमोद्विग्ना अत्यन्तभीता ॥ ३ ॥ विमानाग्रे पुष्पकविमानाग्रे । उपोपविष्टं उपोपेत्येकनिपातः । उपनिविष्टमित्यर्थः । मरुद्भिः देवैः ॥ ४ ॥ रुक्मवेदिगतं हिरण्येष्टकचितवेदिगतं । तदुक्तमापस्तम्बेन "सावित्रं स्वर्गकामश्चिन्वीत पञ्चाशीतिशतं हिरण्येष्टकाः" इत्यादिना । प्रभूतमाज्यं यस्य तं प्राज्यं प्रभूतेनाज्येन वर्धितमित्यर्थः । अत एव ज्वलन्तं ॥५—६॥ विमर्देषु युद्धेषु । वज्राशनिकृतव्रणमित्यनेन तदवध्यत्वमुक्तं । उद्धृष्टं उल्लेखनं भावे क्तः । तेन जातो यः किणः तदङ्कितवक्षसं ॥ ७ ॥ विंशद्भुजं विंशतिभुजं । दर्शनीयपरिच्छदं दर्शनीयच्छत्रचामरादिकं ॥ ८ ॥ स्निग्धवैडूर्यैः कान्तियुक्तवैडूर्यरत्नैः आभरणस्थैः संकाशं भासमानं । सुभुजं दीर्घवृत्तभुजं ॥ ९ ॥ विष्णुचक्रनिपातैरित्यत्र ताडितमित्यनुषज्यते ॥१०॥ क्षोभणं

स० विष्णुचक्रस्येवनिपातोयेषांतैः । यद्वा विष्णुचक्रैः आयुधान्तरैः । अन्यैः पूर्वोक्तिभ्यः । कर्तृभिः । शस्त्रप्रहारैःकरणैस्ताडितं ॥ १० ॥

[ पा० ] १ अयंश्लोकः च. छ. ज. पाठेषु ३२ तमाध्यायारंभेदृश्यते. २ ग. राक्षसः. ३ घ. ततो. ४ छ. ज. ञ. प्रविवेश. ५ ख. घ. पुरोत्तमं. ६ घ. तत्र. ७ ख. ट. क्रूरकर्मणां. ८ ख. ञ. हतौ. ९ ङ. झ. ट. त्रिशिरसंरणे. ग. त्रिशिरसंतथा. १० ङ. झ. महानादान्ननाद. ११ ङ—ट. जलदोपमा. १२ ख. उपोपविष्टैः. १३ क. कृतं. १४ ग. पूज्यं. १५ ङ. झ. ट. घोरं. १६ क. ग. घ. व्यक्तानन. १७ ग. च—ट. रुत्कृष्ट. क. रुत्कृत्त. घ. रुत्सृष्ट. १८ ङ. झ. ट. लक्षितं. १९ ङ. झ. ट. नद्धवैदूर्य. २० ग. भूषितं. ङ. झ. ट. भूषणं. २१ घ. श्लक्ष्णदशनं. २२ ग. चक्रप्रहारैश्च. २३ च. छ. ज. ञ. शत्रुप्रहारैश्च. झ. शस्त्रैःप्रहारैश्च. २४ ङ. झ. अहताङ्गैः. २५ ग. समर्थैश्च. ङ. झ. समस्तैस्तं. च. छ. ज. ञ. समस्तैस्तु. २६ क. ख. क्षोभकं.

क्षेप्तारं पर्वतेन्द्राणां सुराणां च प्रमर्दनम् ॥ उच्छेत्तारं च धर्माणां परदाराभिमर्शनम् ॥
सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा ॥ १२ ॥
पुरीं भोगवतीं प्राप्य पराजित्य च वासुकिम् ॥ तक्षकस्य प्रियां भार्यां पराजित्य जहार यः ॥१३॥
कैलासपर्वतं गत्वा विजित्य नरवाहनम् ॥ विमानं पुष्पकं तस्य कामगं वै जहार यः ॥ १४ ॥
वनं चैत्ररथं दिव्यं नलिनीं नन्दनं वनम् ॥ विनाशयति यः क्रोधाद्देवोद्यानानि वीर्यवान् ॥ १५॥
चन्द्रसूर्यौ महाभागावुत्तिष्ठन्तौ परंतपौ ॥ निवारयति बाहुभ्यां यः शैलशिखरोपमः ॥ १६ ॥
दशवर्षसहस्राणि तपस्तप्त्वा महावने ॥ पुरा स्वयंभुवे धीरः शिरांस्युपजहार यः ॥ १७ ॥
देवदानवगन्धर्वपिशाचपतगोरगैः ॥ अभयं यस्य संग्रामे मृत्युतो मानुषादृते ॥ १८ ॥
मन्त्रैरभिष्टुतं पुण्यमध्वरेषु द्विजातिभिः ॥ हविर्धानेषु यः सोममुपहन्ति महाबलः ॥ १९ ॥
आप्तयज्ञहरं क्रूरं ब्रह्मघ्नं दुष्टचारिणम् ॥ कर्कशं निरनुक्रोशं प्रजानामहिते रतम् ॥ २० ॥
रावणं सर्वभूतानां सर्वलोकभयावहम् ॥ राक्षसी भ्रातरं शूरं सा ददर्श महाबलम् ॥ २१ ॥
तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम् ॥ आसने सूपविष्टं च कालकालमिवोद्यतम् ॥२२॥
राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम् ॥ रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम् ॥
अभिगम्याब्रवीद्वाक्यं राक्षसी भयविह्वला ॥ २३ ॥
तमब्रवीद्दीप्तविशाललोचनं प्रदर्शयित्वा भयमोहमूर्च्छिता ॥

क्षोभकर्तारं ॥ ११ ॥ योक्तारं प्रयोक्तारं । यज्ञेति । उच्छेत्तारमित्यत्र उच्छास्त्रवर्तित्वमुक्तं । अत्र परयज्ञध्वंसकत्वं ॥ १२ ॥ भोगवतीं सर्पनगरीं । पराजित्य बलात्कृत्येति यावत् ॥ १३ ॥ नरवाहनं कुबेरं ॥१४॥ नलिनीं कुबेरस्य पुष्करिणीं । नन्दनं वनं इन्द्रोद्यानं । देवोद्यानानि नन्दनवनादन्यानि ॥ १५ ॥ उत्तिष्ठन्तौ उद्यन्तौ ॥ १६ ॥ उपजहार पूजोपकरणानि चकार ॥ १७ ॥ देवदानवेति देवादिभिः कर्तृभिः । मृत्युतः मृत्योः । षष्ठ्यर्थे तसिः । अभयं भयाभावः । अस्तीति गम्यमानत्वादप्रयोगः । मनुष्यादृते मनुष्यं विना मनुष्यात्तु भयमस्तीत्यर्थः ॥ १८ ॥ अध्वरेषु यागेषु । हविर्धानेषु सोमाभिषवशालासु । मन्त्रैः प्रातरनुवाकग्रावस्तोत्रादिभिः करणैः । द्विजातिभिः कर्तृभिः । अभिषुतं क्षरितं । सोमं उपहन्ति होमकाले नाशयतीत्यर्थः ॥ १९ ॥ आप्तयज्ञहरं आप्तान् दक्षिणाकालं प्राप्तान् यज्ञान् हरतीति तथा । कर्कशं निर्दाक्षिण्यं । निरनुक्रोशं निर्दयं ॥ २० ॥ रावणं रावकं । सा ददर्शमहाबलमित्युपसंहारः । अतो न सर्गादिस्थेन ददर्शेति पदेन पौनरुक्त्यं ॥ २१ ॥ कालकालं मृत्योरपि मृत्युं । उद्यतं उद्युक्तं ॥ २२ ॥ पौलस्त्यानां कुलं नन्दयतीति तथा ॥ २३ ॥ पुनः सर्गान्ते संग्रहश्लोकः—तमिति । प्रदर्शयित्वा स्वकं वैरूप्य-

**शि०** मानुषात् नित्यनराकृतिपरमात्मनः । मृत्युतोमरणात् यस्याभयं । अतएवदेवादिभ्यश्चाभयं ॥ **स०** देवदानवादिभिस्सहमृत्युतोऽभयं । तत्रापवादमाह—**मानुषादृते** भक्ष्यत्वेनालक्ष्यत्वात्ततोऽवध्यत्वाप्रार्थनादितिभावः ॥ १८ ॥ **ति०** काले प्रलयकाले ॥ २२ ॥ **शि०** भयलोभमोहिता भयेनराक्षसविनाशजनितभीत्या लोभेन अतिसुन्दररामविषयकप्राप्त्युत्कटेच्छयाच मोहिता कर्तव्यविषयकाविवेकंप्राप्ता ॥ २४ ॥ इतिद्वात्रिंशस्सर्गः ॥ ३२ ॥

[ **पा०** ] १ ङ—ट. पर्वताग्राणां. २ ग. परेषांच. क. परेषांपुरमर्दनं. घ. परचक्रप्रमर्दनं. ३ क—ट. गत्वा. ४ क. ग—ट. कैलासंपर्वतं. ५ क. ग. क्रुद्धोदेवोद्यानानि. ६ घ. महावेगावुत्तिष्ठन्तौ. ७ ख. घ. वीरः. ८ घ. देवर्षिपतगो. ९ ख. सर्वभूतेभ्यो. १० ङ—ट. प्राप्तयज्ञहरंदुष्टं. ख. सर्वयज्ञहरं. ११ ङ. झ. ट. क्रूरकारिणं. १२ ख. च. ज. ञ. सर्वलोकानां. १३ च. ञ. सर्वभूत. क. ग. सर्वभूतभयंकरं. १४ क. राक्षसं. १५ क. ग. ङ. छ—ट. क्रूरं. १६ क. सादिव्य. १७ ख—ट. सूपविष्टंतं. १८ क. ख. ग. ङ. च. छ. झ. ञ. ट. कालेकाल. १९ रावणंशत्रुहन्तारं. अभिगम्याब्रवीद्वाक्यं. इत्यनयोरर्धयोःपौर्वापर्यं ङ. झ. ट. पाठेषुदृश्यते. २० ङ. झ. ट. उपगम्य. २१ च. छ. ज. भयशोकमोहिता. ङ. झ. ञ. ट. भयलोभमोहिता. क. भयशोकमूर्च्छिता.

सुदारुणं वाक्यमभीतचारिणी महात्मना शूर्पणखा विरूपिता ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

शूर्पणखयासभामध्येरावणंप्रतिजनस्थानवृत्तान्तनिवेदनपूर्वकंतस्मिन्राजगुणराहित्यप्रतिपादनेनोपालंभः ॥ १ ॥

ततः शूर्पणखा दीना रावणं लोकरावणम् ॥ अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १ ॥
प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ॥ समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥ २ ॥
सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् ॥ लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥
स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः ॥ स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ४ ॥
अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् ॥ वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ५ ॥
ये न रक्षन्ति विषयमस्वाधीना नराधिपाः ॥ ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ६ ॥
आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः ॥ अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७ ॥
त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस ॥ ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि ॥ ८ ॥
येषां चारश्च कोशश्च नयश्च जयतां वर ॥ अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः ॥ ९ ॥
यस्मात्पश्यन्ति दूरस्थान्सर्वानर्थान्नराधिपाः ॥ चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १० ॥

---

मिति शेषः । विरूपितेत्युक्तेः । अभीततया सर्वपुरुषेषु सर्वलोके च चारोस्या अस्तीति सा ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

---

अमर्यादो भृशं मूर्खो वध्यो यस्य निशाचरः । तमहं नीतिसंपन्नं रघुनाथं समाश्रये ॥ दीना रामपरिभूतत्वात् । स्वपरिभवदर्शनेपि भ्रातुर्निश्चलतया संक्रुद्धा ॥ १ ॥ कामभोगेषु स्वैरवृत्तः स्वतन्त्रः । सदा कामपरवश इत्यर्थः । निरङ्कुशः कामभोग एव निष्प्रतिबन्धः । घोरंभयं शृण्वतामपि भयंकरमित्यर्थः । बोद्धव्यं चारमुखेनेति शेषः ॥ २ ॥ एवं कामवृत्तस्य संभावितां हानिं लोकरीत्या दर्शयति—सक्तमित्यादिना । ग्राम्येषु मैथुनादिषु । कामवृत्तं यथेच्छव्यापारं ॥ ३ ॥ कार्याणि पालनादीनि ॥ ४ ॥ अयुक्तचारं अनियोजितचारं । दुर्दर्शं उचितकाले सभायां प्रजादर्शनप्रदानरहितं । अस्वाधीनं पत्न्यादिपरतन्त्रं परप्रत्ययनेयबुद्धिं वा । पङ्केपि विशेषणद्वयं योज्यं । अयुक्तश्चारो यस्मिन् स्वस्य संचारकर्तुरधीनो न भवतीत्यर्थः ॥ ५ ॥ विषयं स्वराज्यं । वृद्ध्या वर्तमानयाऽपीति शेषः ॥ ६ ॥ आत्मवद्भिः यत्नवद्भिः त्वत्प्रतीकारदत्तावधानैरित्यर्थः । चपलः विषयचपलः ॥७॥ उक्तमेवार्थं पुनरपि प्रलपति रावणस्याग्रहोत्पादनाय—त्वमित्यादिना । बालस्येव स्वभावो विवेकशून्यत्वं यस्य स तथा । बुद्धिहीनः विवेकहेतुर्बुद्धिः तयाहीनः ॥८॥ स्वपरराष्ट्रकार्याकार्यज्ञापकश्चारः । कोशो धनसमृद्धिः । नयो नीतिः । प्राकृतैर्जनैः साधारणैर्जनैः ॥ ९॥ चार-

---

**स०** लोकरावणं जनरोदकं ॥ १ ॥ **स०** बोद्धव्यं अवश्यंज्ञातव्यं ॥ २ ॥ **स०** ग्राम्येषुभोगेषु स्वस्त्र्यादिभोगेषु । विहितमर्यादोल्लङ्घनेनासक्तं । कामवृत्तं परनार्यादिनिरतं । श्मशानाग्निं शवाग्निं । **ति०** श्मशानाग्निमिव अस्पृश्यत्वेनसादृश्यं ॥ ३ ॥ **स०** राज्येनकार्यैश्च सहेतिसंबन्धः । **ति०** तैः कार्यैः अननुष्ठितैः ॥ ४ ॥ **ति०** अस्वाधीनं स्वभिन्नाधीनं । पूर्वंस्वाधीनं देशं पश्चात्परायत्तं ये नरक्षन्ति स्वाधीनीकरणेनेतिशेषः ॥ ६ ॥ **ती०** आत्मवद्भिः प्रशस्तधैर्यैः ॥ ७ ॥ **टीका०** चारः देशा-

[ **पा०** ] १ ङ. झ. दीप्ता. २ ग. समुत्पन्नमिदं. ३ ङ. झ. ज. ट. मस्वाधीनं. ४ क. बुद्ध्या. ५ च. छ. ज. ञ. सागरे गिरयोयथा. ६ ङ. झ. ट. ज्ञातव्यंतं. ख. ञ. ज्ञातव्यंच. ७ ख. स्तैःसमाजनैः. घ. स्तैर्जनैस्समाः.

अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्[1]वृतम् ॥ [2]स्वजनं तु [3]जनस्थानं [4]हतं यो नावबुध्यसे ॥ ११ ॥
चतुर्दश सहस्राणि रक्षसां [5]क्रूरकर्मणाम् ॥ हतान्येकेन रामेण खरश्च सहदूषणः ॥ १२ ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ धर्षितं च जनस्थानं रामेणाक्लिष्ट[6]कर्मणा ॥ १३ ॥
त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च [7]रावण ॥ विषये स्वे समुत्पन्नं [8]भयं यो नावबुध्यसे ॥ १४ ॥
तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ॥ व्यसने [9]सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १५ ॥
[10]अतिमानिनमग्राह्यमात्मसंभावितं नरम् ॥ [11]क्रोधिनं व्यसने हन्ति स्वजनोपि [12]महीपतिम् ॥ १६ ॥
नानुतिष्ठति कार्याणि भयेषु न बिभेति च ॥ क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो [13]भविष्यति ॥१७॥
[14]शुष्कैः काष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः ॥ [15]न तु स्थानात्परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥१८॥
[16]उपभुक्तं यथा वासस्स्रजो वा मृदिता यथा ॥ एवं राज्यात्परिभ्रष्टः समर्थोपि निरर्थकः ॥ १९ ॥
अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः ॥ कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २० ॥
नयनाभ्यां [17]प्रसुप्तोपि जागर्ति नयचक्षुषा ॥ व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ २१ ॥
त्वं तु रावण दुर्बुद्धिर्गुणैरेतैर्विवर्जितः ॥ यस्य तेऽविदितश्चारै रक्षसां सुमहान्वधः ॥ २२ ॥

परावमन्ता विषयेषु [18]संगतो नदेशकालप्रविभागतत्त्ववित् ॥
अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो नचिराद्विपत्स्यसे ॥ २३ ॥

---

प्रयोजनमाह—यस्मादिति ॥ १० ॥ एवं लोकरीत्योक्तं रावणे उपसंहरति—अयुक्तेत्यादिना । जनस्थानं जनस्थानस्थं ॥ ११—१२ ॥ स्वजनवधादपि दुःसहं कार्यान्तरमाह—ऋषीणामिति ॥ १३ ॥ लुब्धः चारादीनामभिमताप्रदाता ॥ १४ ॥ तीक्ष्णं क्रूरं । शठं गूढविप्रियकारिणं । व्यसने व्यसनकाले । सर्वभूतानि भृत्यामात्यादीनि । नाभिधावन्ति तद्रक्षणाय न प्रवर्तन्ते ॥ १५ ॥ अग्राह्यं सद्भिरितिशेषः । आत्मना स्वेनैव बहुमानंप्राप्तः सोयमात्मसंभावितः तं । क्रोधिनं अस्थाने क्रोधवन्तं । व्यसने व्यसनकाले । स्वजनोपि अमात्यादिरपि ॥ १६ ॥ भयेषु भयहेतुषु न बिभेति साशङ्को नवर्ततइत्यर्थः ॥ १७—१८ ॥ उपभुक्तवस्त्रादिदृष्टान्तः परेषामयोग्यत्वप्रदर्शनाय ॥ १९ ॥ चिरं तिष्ठत इत्यत्र आर्षमात्मनेपदं ॥ २० ॥ जागर्ति अप्रमत्तो भवतीत्यर्थः ॥ २१ ॥ यस्य ते येन त्वया । अविदित इति च्छेदः ॥ २२ ॥ सर्गार्थमेकेन संगृह्णाति—परेति । परावमन्ता शत्रुषूपेक्षावान् । विषयेषु शब्दादिषु । सङ्गतः संगवान् । नदेशकालप्रविभागतत्त्वविदित्येकंपदं । नगनैकादिवन्नसमासः । देशकालभेदातत्त्वज्ञ इत्यर्थः । गुणदोषनिश्चये विषये । अयुक्तबुद्धिः अनियोजितबुद्धिः अप्रवृत्तबुद्धिरित्यर्थः । नचिरात् क्षिप्रं । विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः ।

---

न्तरवर्तमानकार्यवक्ता ॥ ९ ॥ **ति०** स्वजनं स्वस्यजनाःयस्मिंस्तत् । **शि०** प्राकृतैः प्रकृतिःस्वभावएवयेषांतैः शास्त्रसंस्काररहितैरित्यर्थः ॥ ११ ॥ **ती०** तीक्ष्णं प्रत्यक्षदृश्यमानं ॥ १५ ॥ **ती०** सर्वज्ञः स्वराष्ट्रपरराष्ट्रवृत्तान्तज्ञः ॥ २० ॥ **ती०** व्यक्तक्रोधप्रसादश्च व्यक्तौ सार्थकत्वेनाभिव्यक्तौ क्रोधप्रसादौ यस्यसतथोक्तः । **शि०** व्यक्तौ दण्डदानाभ्यांप्रकटितौ क्रोधप्रसादौयस्यसः ॥ २१ ॥

**[ पा० ]** १ ङ—ट. युतं. २ क. ग. ङ—ट. स्वजनंच. ३ क. ख. घ. च. छ. ज. जनस्थाने. झ. यतस्स्थानं. ४ ङ. झ. ट. निहतंनाव. ५ क. ख. ग. ङ. झ. ट. भीमकर्मणां. च. छ. ज. ञ. कामरूपिणां. ६ ङ. झ. कारिणा. ७ झ. राक्षस. ८ ङ. झ. ट. यद्भयंनाव. ९ च. छ. ज. ञ. नाभिधावन्तिसर्वभूतानि. १० च. छ. ज. ञ. अभिमानिनं. ११ ङ—ट. क्रोधनं. १२ ख. ङ—ट. नराधिपं. १३ ङ. झ. ञ. ट. भवेदिह. १४ क—ट. शुष्ककाष्ठैः. १५ ग. नहि. १६ च. उपयुक्तं. १७ झ. प्रसुप्तोवा. १८ क. ख. घ—ट. सङ्गवान्नदेश.

इति स्वदोषान्परिकीर्तितांस्तया समीक्ष्य बुद्ध्या क्षणदाचरेश्वरः ॥
धनेन दर्पेण बलेन चान्वितो विचिन्तयामास चिरं[1] स रावणः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रावणेनशूर्पणखांप्रतिरामगुणविषयकप्रश्नपूर्वकंतेनतद्वैरूप्यकरणकारणप्रश्नः ॥ १ ॥ शूर्पणखयारामलक्ष्मणसीतागुणानुवर्णनपूर्वकंरावणंप्रतितदर्थंस्वेनसीतापहरणोद्यमस्यस्ववैरूप्यकरणकारणत्वोक्त्यासीतापहारचोदना ॥ २ ॥

ततः शूर्पणखां क्रुद्धां[2] ब्रुवन्तीं[3] परुषं वचः ॥ अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः[4] ॥ १ ॥
कश्च रामः कथंवीर्यः किंरूपः किंपराक्रमः ॥ किमर्थं दण्डकारण्यं प्रविष्टः[5] स दुरासदम्[6] ॥ २ ॥
आयुधं किंच रामस्य निहता[7] येन राक्षसाः ॥ खरश्च निहतः[8] संख्ये दूषणस्त्रिशिरास्तथा ॥
[ तत्त्वं[9] ब्रूहि मनोज्ञाङ्गि केन त्वं च विरूपिता ॥ ३ ॥ ]
इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्च्छिता ॥ ततो रामं यथा[10]तत्त्वमाख्यातुमुपचक्रमे ॥ ४ ॥
दीर्घबाहुर्विशालाक्ष[11]श्चीरकृष्णाजिनाम्बरः ॥ कन्दर्पसमरूपश्च रामो दशरथात्मजः ॥ ५ ॥
शक्रचापनिभं चापं विकृष्य कनकाङ्गदम्[12] ॥ दीप्तान्क्षिपति नाराचान्सर्पानिव महाविषान् ॥ ६ ॥
नाददानं शरान्घोरान्न[13] मुञ्चन्तं शिलीमुखान्[14] ॥ न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे ॥ ७ ॥
हन्यमानं[15] तु तत्सैन्यं पश्यामि शरवृष्टिभिः ॥ इन्द्रेणेवोत्तमं सस्यमाहतं त्वश्मवृष्टिभिः[16] ॥ ८ ॥
रक्षसां भीमरूपाणां[17] सहस्राणि चतुर्दश ॥ निहतानि शरैस्तीक्ष्णै[18]स्तेनैकेन पदातिना ॥ ९ ॥
अर्धाधिकमुहूर्तेन खरश्च सहदूषणः ॥ ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ १० ॥

---

त्वमिति शेषः ॥ २३—२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

परगोष्ठीप्रसिद्धानां गुणानामाकरो महान् । अनुजो यस्य सौमित्रिस्तमहं राममाश्रये ॥ संक्रुद्धः शत्रुविषयेऽतीव क्रोधवान् ॥ १ ॥ कथंवीर्यः कीदृशवीर्यः ॥२॥ येन खरदूषणत्रिशिरःप्रभृतयो राक्षसा निहतास्तादृशं तदीयमायुधं किं किंरूपं । इति परिपप्रच्छेति पूर्वेणान्वयः ॥ ३—४ ॥ रामानुजपरवशहृदयापि तदग्रजकृतमहोन्मादहेतुभूतं रामलावण्यं संग्रहेणाभिधत्ते —दीर्घबाहुरित्यादिना ॥ ५ ॥ कनकाङ्गदं कनकमयपट्टबन्धं ॥ ६ ॥ नाददानमिति अत्रादानमोचनविकर्षणानि लक्ष्यन्ते । वेगातिशयेनादानादिकं नपश्यामि किंतु हननमेवेति भावः । अश्मवृष्टिभिः करकामयवर्षैः ॥ ७—९ ॥ अर्धाधिकमुहूर्तेन घटिकात्र-

---

**ती०** विचिन्तयामासेति मारीचस्समरोमास्त्विति ब्रूते इयंभगिनीतु समरंप्रोत्साहयति किमत्रकर्तव्यमिति चिन्तयामासेत्यर्थः ॥ २४ ॥ इतित्रयस्त्रिंशस्सर्गः ॥ ३३ ॥

**शि०** हेमनोज्ञाङ्गि त्वं केनहेतुनाविरूपिता । तत् त्वंब्रूहि ॥ ३ ॥ **स०** विकर्षन्तंरामंनपश्यामीत्यस्य "सविशेषणे—"

**[ पा० ]** १ च. छ. ज. ञ. ट. चिरेण. २ ङ. झ. ञ. ट. दृष्ट्वा. च. छ. घोरां. ३ ज. झ. ट. ब्रुवतीं. ग. वदन्तीं. ४ ख. च. छ. ज. राक्षसः. ५ क. ख. ग. ङ—ट. प्रविष्टश्च. ६ ङ. झ. ट. सुदुस्तरं. क. ग. च. छ. ज. ञ. सुदुश्चरं. ७ ङ. झ. ट. येनतेराक्षसाहताः. ८ ख. दूषणःसंख्येहतस्त्रिशिरसासह. ९ इदमर्धं ङ—ट. पुस्तकेषुदृश्यते. १० क. ग. ङ—ट. यथान्यायं. ११ ख. श्रीमाञ्शत्रुनिबर्हणः. १२ च. छ. ज. कनकाङ्कितं. १३ ङ. झ. ट. घोरान्विमुञ्चन्तं. १४ क. ग. ङ—ट. महाबलं. १५ घ. दह्यमानंतुमत्सैन्यं. १६ च. ज. त्वतिवृष्टिभिः. १७ क. ग. ङ. छ—ट. भीमवीर्याणां. १८ ख. स्तीक्ष्णैरामेणाक्लिष्टकर्मणा.

एका कथंचिन्मुक्ताऽहं परिभूय[1] महात्मना ॥ स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥ ११ ॥
भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः[2] ॥ अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १२ ॥
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली ॥ रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १३ ॥
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना[3] ॥ धर्मपत्नी प्रिया भर्तुर्नित्यं[4] प्रियहिते रता ॥ १४ ॥
सा सुकेशी सुनासोरुः सुरूपा च यशस्विनी ॥ देवतेव वनस्यास्य राजते श्रीरिवापरा ॥ १५ ॥
तप्तकाञ्चनवर्णाभा[5] रक्ततुङ्गनखी शुभा ॥ सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ १६ ॥
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥ नैवंरूपा[6] मया नारी दृष्टपूर्वा महीतले ॥ १७ ॥
यस्य सीता भवेद्भार्या यं च हृष्टा परिष्वजेत् ॥ अतिजीवेत्[7] स सर्वेषु लोकेष्वपि पुरंदरात्[8] ॥ १८ ॥
सा[9] सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा[10] भुवि ॥ तवानुरूपा भार्या[11] सा त्वं च[12] तस्यास्तथा पतिः ॥ १९ ॥
तां तु विस्तीर्णजघनां पीनश्रोणी[13]पयोधराम् ॥ भार्यार्थे[14] च तवानेतुमुद्यताहं[15] वराननाम् ॥
विरूपिता[16]ऽस्मि क्रूरेण लक्ष्मणेन महाभुज[17] ॥ २० ॥
तां तु[18] दृष्ट्वाऽद्य वैदेहीं पूर्णचन्द्रनिभाननाम् ॥ मन्मथस्य शराणां[19] वै त्वं विधेयो भविष्यसि ॥ २१ ॥

येण । ससैन्यः खरो हत इत्यर्थः ॥ १० ॥ स्त्रीवधं शङ्कमानेन स्त्रीवधोभविष्यतीति शङ्कमानेनेत्यर्थः ॥ ११ ॥ अनुरक्तः अनुरागवान् । भक्तः तत्कार्यभजनशीलः ॥ १२ ॥ दक्षिणो बाहुरित्यनेन सर्वकार्यधुरंधरत्वमुक्तं । प्राणत्वरूपणेन निरतिशयप्रेमास्पदत्वं । अनुरक्त इत्यस्य दृष्टान्तोयमिति न पुनरुक्तिः ॥ १३ ॥ रामस्य प्रिया अस्तीत्यन्वयः ॥ १४ ॥ तां वर्णयति—सेत्यादिना । यशस्विनी उक्तरूपादिमत्त्वकीर्तिमती । वनस्य देवतेव स्थिता श्रीरिव राजते ॥ १५ ॥ तप्तकाञ्चनवर्णाभा तप्तकाञ्चनवर्णतुल्या आभा यस्याः सा । वैदेही विदेहराजेन पुत्रीकृता ॥ १६ ॥ एवंरूपा देवी च न दृष्टपूर्वा गन्धर्वी च न दृष्टपूर्वा यक्षी च न दृष्टपूर्वा किन्नरी च न दृष्टपूर्वा एवंरूपा नारी महीतलेपि न दृष्टपूर्वा इत्यन्वयः । उत्तरार्धे महीतल इत्यनेन पूर्वार्धे स्वर्गलोक इति सिद्धं । देव्यादीनां तत्रैव वाससंभवात् । यद्वा महीतल इति सर्वलोकोपलक्षणं ॥ १७ ॥ परिष्वङ्गं विना भार्यात्वेन स्थिता चेत् सः सर्वेषु लोकेषु सर्वानपि लोकान् । अतिजीवेत् अतीत्य जीवेत् सर्वलोकोत्तीर्णपरमसुखमयजीवन इत्यर्थः । परिष्वङ्गाभावेपि सदा सन्निधानादिसौख्यादिति भावः । भार्यात्वं विनापि यं सकृत् परिष्वजेत् । सः पुरंदरादपि पुरंदरमपि । अतिजीवेत् अतिशय्य जीवेत् ॥ १८ ॥ वपुश्श्लाघ्या वपुषा श्लाघ्या सर्वानवद्याङ्गीत्यर्थः ॥ १९ ॥ विस्तीर्णजघनां विशालजघनां।

इतिन्यायेनविशेषणेतात्पर्यं ॥ ७ ॥ **ति०** पूर्वतनंस्ववृत्तंगोपयन्त्याह—**एकेति** ॥ ११ ॥ **शि०** तुल्यविक्रमोमहातेजा लक्ष्मणो नामास्यभ्राता गुणतः रामनिष्ठातिसौशील्यादेर्हेतोः अनुरक्तः रामविषयकात्यनुरागवान् ॥ **स०** रामगुणसदृशगुणानततीतिगुणात् तेनतुला सास्तीतितत्तुली । सोपिकंकंहतवानित्यतआह—**अविक्रमः** इदानीमिति ॥ १२ ॥ **शि०** यथारूपानारी सीता । मयामहीतलेदृष्टपूर्वा दृष्टंदर्शनंपूर्वंयस्यास्सा तथारूपानारी देव्यादिर्न ॥ १७ ॥ **ति०** यंचहृष्टापरिष्वजेत् सएवसर्वेषुकालेषुलोकेषुच पुरन्दरादप्यधिकंजीवेत् । तस्यालक्ष्म्यवतारत्वादितिव्यङ्ग्यं ॥ १८ ॥ **ति०** तवानेतुमुद्यताऽहमितिमृषावचोरावणसंतोषार्थं ॥ २० ॥ **स०** विधेयः अधीनः ॥ २१ ॥

**[ पा० ]** १ ख. परिभूता. २ ठ. गुणात्ततुल्यविक्रमः. क. ग. गुणतस्तुल्यलक्षणः. ३ ख. पूर्णचन्द्रनिभानना. ४ क. ग. ङ—ट. नित्यंभर्तुः. घ. भर्तुर्नित्या. ५ ख. काञ्चनोज्वलवर्णाभा. ६ क. ग. ङ—ट. तथारूपा. ७ ङ. झ. ट. अभिजीवेत्. ८ च. छ. ज. ञ. देवेष्विवपुरन्दरः. ख. ग. लोकेष्विवपुरन्दरः. ९ घ. साधुशीला. क. यासुशीला. १० क. ग. च. छ. ज. ञ. णाप्रतिदर्शना. ११ क. ग. ङ—ट. भार्यासात्वं. ख. भार्यार्थेत्वं. १२ ङ. झ. ट. चतस्याःपतिर्वरः. ग. चैवास्यास्तथापतिः. ख. चतस्याःपतिस्समः. १३ ङ. झ. ट. पीनोत्तुङ्गपयोधरां. १४ ग. ङ. छ. ज. झ. ट. भार्यार्थेतु. ञ. भार्यार्थंतु. १५ क. ग. मुद्युक्ताहं. १६ ख. विरूपिताहि. १७ ग. च. छ. ज. महात्मना. १८ ग. तांदृष्ट्वाद्यच. क. ख. तांचदृष्ट्वैव. १९ क. ख. ग. ङ—ट. शराणांच.

यदि तस्यामभिप्रायो भार्यार्थे तव जायते ॥ शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः ॥ २२ ॥
कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर ॥ वधात्तस्य नृशंसस्य रामस्याश्रमवासिनः ॥ २३ ॥
तं शरैर्निशितैर्हत्वा लक्ष्मणं च महारथम् ॥ हतनाथां सुखं सीतां यथावदुपभोक्ष्यसि ॥ २४ ॥
रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर ॥ क्रियतां निर्विशङ्केन वचनं मम रावण ॥ २५ ॥
विज्ञायेहात्मशक्तिं च ह्रियतामबला बलात् ॥ सीता सर्वानवद्याङ्गी भार्यार्थे राक्षसेश्वर ॥ २६ ॥
निशम्य रामेण शरैरजिह्मगैर्हतान् जनस्थानगतान्निशाचरान् ॥
खरं च बुद्ध्वा निहतं च दूषणं त्वमत्र कृत्यं प्रतिपत्तुमर्हसि ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रावणेनसीतापहरणनिर्धारणेनरथाधिरोहिणा समुद्रानूपचारिणा मध्येमार्गमप्सरोविमानाद्यद्भुतावलोकिनाचसता पुनस्सागरोत्तरतीरेमारीचाश्रममेत्यतदवलोकनम् ॥ १ ॥

ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ॥ सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम सः ॥ १ ॥
तत्कार्यमनुगम्याथ यथावदुपलभ्य च ॥ दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २ ॥

तत्र चेत्यन्वयः ॥ २०—२४ ॥ ते तुभ्यं । "रुच्यर्थानांप्रीयमाणः" इति चतुर्थी । निर्विशङ्केन त्वयेति शेषः ॥ २५ ॥ आत्मशक्तिं स्वबलं । "शक्तिर्बले प्रभावादौ" इति विश्वः । विज्ञाय पर्यालोच्य । बलात् पौरुषेण । सीता भार्यार्थे ह्रियतां ॥ २६ ॥ उक्तमर्थं सर्गान्ते पुनः संगृह्णाति—निशम्येति । प्रतिपत्तुं ज्ञातुं ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

यद्वाहनस्य माहात्म्यं सर्वेषां विस्मयावहम् । अवतीर्णं रघोर्वंशे तमहं विष्णुमाश्रये ॥ रोमहर्षणं भयोत्पादकत्वेन रोमाञ्चकरं । सचिवमुखेन कार्यं बुद्ध्वा तानभ्यनुज्ञाय विसृज्य ॥ १ ॥ तदित्यादिश्लोकद्वयमेकान्वयं । अनुगम्य स्वयमनुसंधाय पर्यालोच्येत्यर्थः । यथावदुपलभ्य इदमित्थमिति निश्चित्य । पुनरपि दार्ढ्याय गुणदोषप्राबल्यदौर्बल्यविषयचिन्तां निर्णयान्तां दर्शयति—दोषाणां चेति । इदमत्र संप्रधार्यं स्वेन चिकीर्षितं सीतापहारलक्षणं कार्यं किं पौरुषेण सुकरं आहोस्विच्चौर्येण कर्तव्यमिति । कतरस्मिन्पक्षे दोषाल्पत्वं गुणभूयस्त्वमिति । तत्रपौरुषेण कर्तुमशक्यं । खरादियुद्धे रामस्याचिन्त्यपराक्रमत्वेन श्रुतत्वात् । उपायपरिकल्पितचौर्याश्रयणेतादात्विकदोषा न लक्ष्यन्ते । सीतारहितेनतद्व्यसनिना रामेण कापि हानिर्न संभाव्यते । तस्मादयमेव पक्षः सम्यगित्येवं निश्चित्य प्रावर्ततेत्यर्थः । स्थिरबुद्धिः निश्चलबुद्धिः ।

**स०** भार्यात्वे भार्यात्वेनादाने । **ति०** भार्यात्वे भार्यात्वेनसंपादने ॥ २२ ॥ **ति०** एषां रामादीनां । अशक्तिं । तेषां राज्याद्यभावात् । चकारात्तवशक्तिंच । विज्ञाय सीतातवभार्यात्वेक्रियतां । भार्यात्वे तद्व्यवहारेयथाविषयोभवति तथाक्रियतां यत्यतामित्यर्थः ॥ २६ ॥ इतिचतुस्त्रिंशस्सर्गः ॥ ३४ ॥

**ती०** शूर्पं शोणितभाजनं तेनयज्ञादिसत्क्रियां नखयति विदूषयतीति शूर्पणखा । नखविदूषणइतिधातुः ॥ **ति०** शूर्पणखावाक्यस्य कामविकारजनकतयारोमाञ्चकरत्वं ॥ १ ॥ **ति०** तत्कार्यं सीतापहरकार्यं । अन्तः चित्ते । अनुगम्य उद्दिश्य ॥ २ ॥

**[ पा० ]** १ ङ. झ. ट. भार्यात्वे. २ ख. जृंभते. ३ २३—२४ एतच्छ्लोकद्वयं. झ. ट. पुस्तकयोर्नदृश्यते. ४ च. छ. ज. ञ. रामस्यवनवासिनः. ५ ग. महाबलं. ६ ख. सीतामानीयलङ्कांत्वंयथावदुपसेवसे. ७ क. ग. घ. च. छ. ज. ञ. भोक्ष्यसे. ८ ङ. झ. ट. विज्ञायैषामशक्तिं. ख. विचार्येहात्म. ९ ङ. झ. ट. क्रियतांचमहाबल. १० क—ट. तवानवद्याङ्गी. ११ ख. ङ. झ. ट. भार्यात्वे. १२ ग. राक्षसाधिप. १३ ङ. झ. ट. दृष्ट्वा. १४ क. ख. ङ—ट. त्वमद्य. १५ ख. राक्षसाधिपः १६ ग. ङ. कार्यबुद्ध्या. १७ क—च. ञ. ट. जगामह. १८ क. मुपगम्याथ. ङ. झ. ट. मनुगम्यान्तर्यथा.

इतिकर्तव्यमित्येव कृत्वा निश्चयमात्मनः ॥ स्थिरबुद्धिस्ततो रम्यां यान[1]शालां जगाम ह ॥ ३ ॥
यानशालां ततो गत्वा [2]प्रच्छन्नो राक्षसाधिपः ॥ सूतं संचोदयामास रथः [3]संयोज्यतामिति ॥ ४ ॥
एवमुक्तः क्षणेनैव सारथिर्लघुविक्रमः ॥ रथं [4]संयोजयामास तस्याभिमतमुत्तमम् ॥ ५ ॥
काञ्चनं रथमास्थाय कामगं रत्नभूषितम् ॥ पिशाचवदनैर्युक्तं खरैः [5]काञ्चनभूषणैः ॥ ६ ॥
मेघप्रतिमनादेन स तेन धनदानुजः ॥ राक्षसाधिपतिः श्रीमान्ययौ नदनदीपतिम् ॥ ७ ॥
स श्वेतवालव्यजनः श्वेतच्छत्रो दशाननः ॥ स्निग्धवैडूर्यसंकाशस्तप्तकाञ्चन[6]कुण्डलः ॥ ८ ॥
[7]विंशद्भुजो दशग्रीवो दर्शनीयपरिच्छदः ॥ त्रिदशारिर्मुनीन्द्रघ्नो [8]दशशीर्ष इवाद्रिराट् ॥ ९ ॥
कामगं रथमास्थाय शुशुभे [9]राक्षसेश्वरः ॥ विद्युन्मण्डलवान्मेघः सबलाक इवाम्बरे ॥ १० ॥
सशैलं सागरानूपं वीर्यवानवलोकयन् ॥ नानापुष्पफलैर्वृक्षैरनुकीर्णं सहस्रशः ॥ ११ ॥
शीतमङ्गलतोयाभिः पद्मिनीभिः समन्ततः ॥ विशालैराश्रमपदैर्वेदि[10]मद्भिः समावृतम् ॥ १२ ॥
[11]कदल्याढकिसंबाधं नालिकेरोपशोभितम् ॥ सालैस्तालैस्तमालैश्च [12]पुष्पितैस्तरुभिर्वृतम् ॥ १३ ॥
[13]नागैः सुपर्णैर्गन्धर्वैः किन्नरैश्च सहस्रशः ॥ अजैर्वैखानसैर्माषैर्वालखिल्यैर्मरीचिपैः ॥ १४ ॥
अत्यन्तनियताहारैः शोभितं परमर्षिभिः ॥ जितकामैश्च सिद्धैश्च [14]चारणैरुपशोभितम् ॥ १५ ॥
दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतम् ॥ क्रीडा[15]रतिविधिज्ञाभिरप्सरोभिः सहस्रशः ॥ १६ ॥
सेवितं देवपत्नीभिः [16]श्रीमतीभिः श्रिया वृतम् ॥ देवदानवसङ्घैश्च चरितं त्वमृताशिभिः ॥ १७ ॥

---

यानशालां अश्वशालां ॥ २—३ ॥ प्रच्छन्न इति प्रकाशश्चेद्भ्रात्रा मन्दोदर्यादयश्च वारयिष्यन्तीति भावः । यद्वा पौरुषं विहाय चौर्यमार्गाश्रयणं लज्जावहमिति प्रच्छन्नमार्गाश्रयणं । यद्वा तत इत्यादि । सचिवान् तदानीं सभास्थितान् । विसृज्य स्वयं कार्यं बुद्ध्वेत्यर्थः । अतएव सचिवैः पर्यालोचनाभावात्प्रच्छन्न इत्युक्तं । अतएव कुम्भकर्णादिभिरुच्यते । सचिवैरमन्त्रयित्वा कृतस्य कथमिदानीं प्रतीकार इति । खरलक्षणं पूर्वमुक्तं ॥ ४—९ ॥ विद्युत्स्थाने आभरणानि । मेघस्थाने रावणः । बलाकास्थाने अलंकृतरथः ॥ १० ॥ सशैलं शैलसहितं । सागरानूपं समुद्रतीरं ॥ ११ ॥ मङ्गलतोयाभिः शुभजलाभिः । पद्मिनीभिरिति समावृतमित्यनुकर्षः ॥ १२ ॥ आढकिः सूपोपयुक्तधान्यस्तम्बः ॥ १३ ॥ सुपर्णैः गरुडैः । अजैः अयोनिजैः वैखानसैः ब्रह्मनखजैः । "ये नखास्ते वैखानसाः" इति श्रुतेः । माषैः माषगोत्रजैः । वालखिल्यैः ब्रह्मवालजैः । "ये वालास्ते वालखिल्याः" इति श्रुतेः । मरीचिपैः रविकिरणपानव्रतनिष्ठैः ॥ १४—१६ ॥ अमृताशिभिः देवैश्चेति शेषः । यद्वा "ऋतामृताभ्यां जीवेत"इत्युक्तायाचितलब्धाशिभिः । "ऋतमुञ्छशिलं

---

**ति॰** प्रच्छन्नं गूढं ॥४॥ **ति॰** बलाकास्थाने छत्रं ॥ १० ॥ **ति॰** शैलसहितसागरानूपं तत्कूलं । तस्यैववर्णनंनानापुष्पैरित्यादिना ॥ ११ ॥ **ति॰** कदल्यटविः कदलीवनं तेनशोभावत् ॥१३॥ **स॰** आजैः ब्रह्मपुत्रैर्योनिजैः । वैखानसैः अयोनिजब्रह्मपुत्रैः । माषैः तत्संज्ञिकैः । **शि॰** आजैः अजस्यब्रह्मणइमे तैः । किंच शरीरसंबन्धेनोत्पत्तिरहितैः मानसैरित्यर्थः । आङीषदर्थे । किंच स्वसिद्ध्याऽनेकशरीरधारिभिः । वालखिल्यैः ब्रह्मकेशजैः । तथाचश्रुतिः "येवालास्तेवालखिल्याः" इति ॥१४॥ **स॰** जितकामैः

**[ पा॰ ]** १ च. छ. ज. ञ. शालामुपागमत्. २ क. ग—ट. प्रच्छन्नं. ३ क. ख. ग. ङ—ट. संयुज्यतामिति. ४ ख. घ. संचोदयामास. ५ क. ग. ङ. छ. झ. ट. कनकभूषणैः. ख. शीघ्रजवैस्तदा. ६ क. ङ—ट. भूषणः. ७ च. छ. ज. ञ. दशास्योविंशतिभुजो. ङ. झ. दशग्रीवोविंशतिभुजो. ८ ख. च. छ. ज. ञ. दशशृङ्गः. ९ क—ट. राक्षसाधिपः. १० च. छ. ज. ञ. वेदिमद्भिर्विराजितं. ङ. झ. ट. वेदिमद्भिरलंकृतं. ११ ङ. झ. ञ. ट. कदल्यटविसंशोभं. ग. कदल्यटविसंबाधं. घ. कदलीवनसंबाधं. १२ क. ख. घ. ङ. झ. ट. तरुभिश्चसुपुष्पितैः. १३ नागैःसुपर्णैः. अजैर्वैखानसैः. अत्यन्तनियताहारैः. जितकामैश्चेत्यर्धानि क—ट. पुस्तकेषु. अत्यन्तनियताहारैः. नागैस्सुपर्णैः. जितकामैश्च. अजैर्वैखानसैः इतिक्रमभेदेनदृश्यन्ते. १४ ग. ङ. झ. ट. चारणैश्चोप. १५ क. च. छ. ज. ञ. विधिरसज्ञाभिः. ङ. झ. रतविधिज्ञाभिः. ट. रसविधिज्ञाभिः. १६ क. ख. श्रीमतीभिस्समावृतं. ङ. झ. ट. श्रीमतीभिरुपासितं.

हंसक्रौञ्चप्लवाकीर्णं सारसैः [1]संप्रणादितम् ॥ वैडूर्यप्रस्तरं [2]रम्यं स्निग्धं सागरतेजसा ॥ १८ ॥
पाण्डराणि विशालानि दिव्यमाल्ययुतानि च ॥ तूर्यगीताभि[3]जुष्टानि विमानानि समन्ततः ॥१९॥
तपसा जितलोकानां कामगान्यभिसंपतन् ॥ गन्धर्वाप्सरसश्चैव ददर्श धनदानुजः ॥ २० ॥
निर्यासरसमूलानां चन्दनानां सहस्रशः ॥ वनानि पश्यन्सौम्यानि घ्राणतृप्तिकराणि च ॥ २१ ॥
[4]अगरूणां च मुख्यानां वनान्युपवनानि च ॥ तक्कोलानां च जात्यानां [5]फलानां च सुगन्धिनाम् ॥२२॥
पुष्पाणि च तमालस्य गुल्मानि [6]मरिचस्य च ॥ मुक्तानां च समूहानि शुष्यमाणानि तीरतः ॥२३॥
[7]शङ्खानां [8]प्रस्तरं चैव प्रवालनिचयं तथा ॥ काञ्चनानि च [9]शैलानि राजतानि [10]च सर्वशः ॥ २४ ॥
प्रस्रवाणि मनोज्ञानि [11]प्रसन्नानि ह्रदानि च ॥ धनधान्योपपन्नानि [12]स्त्रीरत्नैः शोभितानि च ॥२५॥
हस्त्यश्वरथगाढानि [13]नगराण्यवलोकयन् ॥ तं समं सर्वतः स्निग्धं मृदुसंस्पर्शमारुतम् ॥
[14]अनूपं सिन्धुराजस्य ददर्श त्रिदिवोपमम् ॥ २६ ॥
तत्रापश्यत्स मेघाभं [15]न्यग्रोधमृषिभिर्वृतम् ॥ समन्ताद्यस्य ताः शाखाः शतयोजनमायताः ॥ २७॥
यस्य हस्तिनमादाय महाकायं च कच्छपम् ॥ भक्षार्थं गरुडः शाखामाजगाम महाबलः ॥ २८ ॥
तस्य तां सहसा शाखां भारेण पतगोत्तमः ॥ सुपर्णः पर्णबहुलां [16]बभञ्ज च महाबलः ॥ २९ ॥
तत्र वैखानसा माषा वालखिल्या मरीचिपाः ॥ अजा बभूवुर्धूम्राश्च संगताः परमर्षयः ॥ ३० ॥

प्रोक्तममृतं स्यादयाचितं" इति मनुः ॥ १७ ॥ प्लवाः जलकुक्कुटाः । मण्डूका इत्यप्याहुः । वैडूर्यप्रस्तरं वैडूर्यमयाः प्रस्तराः शिलाः यस्मिन् तं । "पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषत्" इत्यमरः ॥ १८ ॥ तपसा जितलोकानां पुरुषाणां विमानानीत्यन्वयः । अभिसंपतन् मार्गवशात् प्राप्नुवन् । सशैलं नानापुष्पफलैर्वृक्षैरनुकीर्णमित्यारभ्य सागरतेजसा स्निग्धमित्यन्तविशेषणविशिष्टं सागरानूपमवलोकयन् पाण्डुरत्वादिविशेषणविशिष्टानि तपसाजितलोकानांविमानान्यभिसंपतन् गन्धर्वाप्सरसो ददर्शेत्यन्वयः ॥ १९—२० ॥ निर्यासरसमूलानामित्यादिसार्धश्लोकषट्कमेकान्वयं । निर्यासरसमूलानां हिङ्गुरूपनिर्यासरसयुक्तमूलानां मूलाख्यौषधीविशेषाणां । मूलाख्यौषधीमूलाद्धिङ्गुरूपनिर्यासा उत्पद्यन्त इति प्रसिद्धिः । वनानि अकृत्रिमाणि । उपवनानि कृत्रिमाणि । तक्कोलानां गन्धद्रव्याणां । जात्यानां जातिभवानां । फलानां जातिफलानामित्यर्थः। सुगन्धिनां उपवनानीत्यन्वयः। गुल्मानि स्तम्बान् । मरिचस्य मरीचस्य। समूहानीति नपुंसकत्वमार्षं । शुष्यमाणानि चिरसङ्गतत्वेनानार्द्राणीत्यर्थः । तीरतः तीरे । शैलानीति नपुंसकत्वमार्षं । तथा प्रस्रवह्रदशब्दयोः । प्रस्तरं समूहं । निचयं समूहं । प्रस्रवाणि प्रस्रवणानि निर्झरानित्यर्थः । गाढानि निबिडानि । एवं बहुधा सागरानूपवर्णनं पुनर्बहुदूरमार्गगमनप्रयासेनमारीचोपदेशानिवर्त्याध्यवसायविशेषं व्यञ्जयितुं ॥ २१—२६ ॥ यस्य वाहनप्रभावोप्यपरिच्छेद्यस्तेन रामेण विरुणद्धि रावणो मूढ इति परिहसन्नाह—तत्रापश्यदित्यादिना । ताः प्रसिद्धाः ॥ २७ ॥ गरुडः महाकायं महाप्रमाणं । हस्तिनं गजं । कच्छपं चादाय यस्य शाखामाजगामेत्यन्वयः ॥ २८ ॥ भारेण बभञ्ज नतु यत्नेनेत्यर्थः । महागजकच्छपवहनात् भारेण शाखा भग्नाभूदित्यर्थः ॥ २९ ॥ तत्र शाखाया अधःप्रदेशे ये सङ्गताः मरी-

प्राप्तमनोरथैः पराजितमन्मथैर्वा ॥ १५ ॥ **ति०** सागरतेजसा सागरोर्मिवैभवेन । स्निग्धं सान्द्रंशीतलं ॥ १८ ॥ **स०** शोभनश्चासौगन्धश्च सोस्तियेषांतेषां ॥ २२ ॥ **ति०** शैलानि शिलासमूहान् ॥ २४ ॥ **ति०** समं समभूतलंदेशं ॥ २६ ॥

**[ पा० ]** १ ङ. झ. ट. प्रसादितं. २ च. छ. ज. ञ. दिव्यं. ङ. झ. ट. स्निग्धंसान्द्रं. ३ क. घुष्टानि. ४ च. छ. ज. ञ. ट. अंकोलानांच. ५ च. छ. ज. ञ. पलाशानां. ६ ख. मलयस्यच. ७ ङ. झ. ट. शैलानिप्रवरांश्चैवप्रवालनिचयांस्तथा. ८ च. प्रकरं. ९ ङ. ट. शृङ्गाणि. १० ङ. झ. ट. तथैवच. घ. सहस्रशः. ११ च—झ. प्रसन्नान्यद्भुतानिच. १२ क. ख. ग. ङ—ट. रत्नैराव्रतानिच. १३ ङ. झ. ट. नगराणिविलोकयन्. १४ झ. अनूपे. १५ ङ—ट. न्यग्रोधंमुनिभिः. १६ क. ख. ङ. च. झ. ञ. ट. बभञ्जाथ.

तेषां दयार्थं गरुडस्तां शाखां शतयोजनाम् ॥ [1]जगामादाय वेगेन तौ चोभौ गजकच्छपौ ॥
एकपादेन धर्मात्मा भक्षयित्वा तदामिषम् ॥ ३१ ॥
निषादविषयं हत्वा शाखया [2]पतगोत्तमः ॥ प्रहर्षमतुलं लेभे मोक्षयित्वा [3]महामुनीन् ॥
[ [4]शाखानिपातभीतांश्च शाखां चोत्सृज्य सर्ववित् ॥ ३२ ॥ ]
[5]स तेनैव प्रहर्षेण द्विगुणीकृतविक्रमः ॥ अमृतानयनार्थं वै चकार [6]मतिमान्मतिम् ॥ ३३ ॥
[7]अयोजालानि निर्मथ्य भित्त्वा [8]रत्नमयं गृहम् ॥ महेन्द्रभवनाद्गुप्तमाजहारामृतं ततः ॥ ३४ ॥
तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणम् ॥ नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३५ ॥
तं तु गत्वा परं पारं समुद्रस्य नदीपतेः ॥ ददर्शाश्रममेकान्ते [9]रम्ये पुण्ये वनान्तरे ॥ ३६ ॥
तत्र कृष्णाजिनधरं [10]जटावल्कलधारिणम् ॥ ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ ३७ ॥
[11]स रावणः समागम्य विधिवत्तेन रक्षसा ॥ मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥ ३८ ॥
तं स्वयं [12]पूजयित्वा तु [13]भोजनेनोदकेन च ॥ अर्थोपहितया [14]वाचा मारीचो वाक्यमब्रवीत् ॥ ३९ ॥
[15]कच्चित्सुकुशलं राजँल्लङ्कायां राक्षसेश्वर ॥ [16]केनार्थेन पुनस्त्वं वै [17]तूर्णमेवमिहागतः ॥ ४० ॥
एवमुक्तो महातेजा मारीचेन स रावणः ॥ [18]तं तु पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥४१॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

चिपाः रविकिरणपानव्रताः । धूम्राः धूमपाः । तेषां दयार्थं शाखापातेन पीडा माभूदिति तदनुग्रहार्थमित्यर्थः । एकपादेन आदाय अवष्टभ्येत्यर्थः । भक्षयित्वा आकाश एवेति शेषः । आमिषं गजकच्छपरूपं मांसं ॥ ३०—३१ ॥ निषादविषयं निषादग्रामं । शाखया हत्वा तानपि भक्षयित्वा । महामुनीन् वैखानसादीन् निषादविषयस्थब्राह्मणान्वा निषादैः पीड्यमानान्वा । तद्रक्षणार्थमेव तद्धननमिति भावः । तादृशशाखारूपप्रहरणलाभेन तदैव मुनिबाधकनिषाददेशं सर्वं हत्वा शिष्टपालनाद्दुष्टनिग्रहाच्चातुलं प्रहर्षं लेभ इति भावः ॥ ३२ ॥ तेनैव भक्षणजन्येनेत्यर्थः ॥ ३३ ॥ अयोजालानि अयोनिर्मितजालकानि । निर्मथ्य ध्वंसयित्वा । तदन्तर्वर्तिरत्नमयं गृहं भित्त्वा ततः तदन्तरे गुप्तममृतं महेन्द्रभवनादाजहार ॥३४॥ सुपर्णकृतलक्षणं सुपर्णेन गरुडेन कृतं भग्नैकशाखत्वरूपं लक्षणं चिह्नं यस्य ॥ ३५—३६ ॥ कृष्णाजिनेत्यादिना रामभक्ततया जनितवैराग्यचिह्नोक्तिः ॥३७॥ समागम्य मारीचं प्राप्य सर्वकामैः सर्वभोग्यवस्तुभिः । अर्चितो बभूव ॥ ३८—३९ ॥ एवं तूर्णं एकाकितया शीघ्रं ॥ ४० ॥ इदं उत्तरसर्गे वक्ष्यमाणं ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

**ती०** अयोजालानि अयश्शृङ्खलनिर्मितानिजालानि रत्नमयगेहोपरिपक्षिराजप्रवेशपरिहारायबद्धानि निर्मथ्य ॥ ३४ ॥ इतिपञ्चत्रिंशस्सर्गः ॥ ३५ ॥

**[ पा० ]** १ ङ. झ. ट. भग्नामादाय. २ क. पतगाधिपः. ३ ख. तदामुनीन्. ४ इदमर्धं ख. पाठेदृश्यते. ५ ङ. झ. ट. सतुतेन. ६ ग. झ. गमनेमतिं. ७ ग. अयोजालंतु. क. अयोजालंविनिर्मथ्य. ८ ङ. छ—ट. रत्नगृहंवरं. ख. रत्नगृहं महत्. ९ क. ग. ङ—ट. पुण्येरम्ये. १० ङ—ट. जटामण्डल. ११ ख. रावणस्सहसागम्य. घ. रावणस्तं. १२ ङ. झ. ट. पूजयित्वाच. १३ क. ग. भोजनेनासनेनच. १४ घ. बुद्ध्या. १५ ङ. झ. ट. कच्चित्तेकुशलं. घ. कच्चित्सुकुशली. १६ च. छ. ज. केनैवचार्थजातेन. ख. केनचैवार्थजातेन. १७ ख. च. छ. ज. तूर्णमेवत्वमागतः. ङ. झ. ञ. ट. तूर्णमेवइहागतः. १८ क. ग. ङ—ट. ततःपश्चात्.

# षट्त्रिंशः सर्गः ॥ ३६ ॥

रावणेनमारीचंप्रतिपुनर्जनस्थानवृत्तान्तकथनपूर्वकंस्वचिकीर्षितसीतापहरणेसाहाय्यप्रकारनिवेदनेनतत्करणप्रार्थना ॥ १ ॥
रामवार्ताश्रवणमात्रेणत्रस्तविषण्णचेतसामारीचेनरावणायहितोपदेशसमुद्यमः ॥ २ ॥

मारीच श्रूयतां तात[1] वचनं मम भाषतः ॥ आर्तोस्मि मम चार्तस्य भवान्हि परमा गतिः ॥ १ ॥
जानीषे त्वं[2] जनस्थाने यथा[3] भ्राता खरो मम ॥ दूषणश्च महाबाहुः स्वसा शूर्पणखा च मे ॥ २ ॥
त्रिशिराश्च महातेजा[4] राक्षसः पिशिताशनः ॥ अन्ये च बहवः शूरा लब्धलक्षा निशाचराः[5] ॥ ३ ॥
वसन्ति मन्नियोगेन नित्यवासं[6] च राक्षसाः ॥ बाधमाना महारण्ये मुनीन्वै[7] धर्मचारिणः ॥ ४ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ शूराणां लब्धलक्षाणां खरचित्तानुवर्तिनाम् ॥ ५ ॥
ते त्विदानीं जनस्थाने वसमाना[8] महाबलाः ॥ संगताः[9] परमायत्ता रामेण सह संयुगे ॥
नानाप्रहरणोपेताः[10] खरप्रमुखराक्षसाः ॥ ६ ॥
तेन संजातरोषेण रामेण रणमूर्धनि ॥ अनुक्त्वा परुषं किंचिच्छरैर्व्यापारितं धनुः ॥ ७ ॥
चतुर्दश सहस्राणि रक्षसामुग्रतेजसाम्[11] ॥ निहतानि शरैस्तीक्ष्णैर्[12]मानुषेण पदातिना ॥ ८ ॥
खरश्च निहतः संख्ये दूषणश्च निपातितः[13] ॥ हतश्च[14] त्रिशिराश्चापि निर्भया दण्डकाः कृताः ॥ ९ ॥
पित्रा निरस्तः क्रुद्धेन सभार्यः क्षीणजीवितः ॥ स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ॥१०॥
दुःशीलः[15] कर्कशस्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः ॥ त्यक्तधर्मा[16] ह्यधर्मात्मा भूतानामहिते रतः ॥११॥

महासमरमध्येपि गाम्भीर्यं यस्य निश्चलम् । तमहं शिरसा वन्दे जानकीप्राणवल्लभम् ॥ भाषतः भाषमाणस्य ॥ १ ॥ कर्तव्यं वक्ष्यन्पूर्ववृत्तं स्मारयति—जानीष इत्यादिना । अनुवर्तिनामित्यन्तमेकं वाक्यं । खरादयश्चतुर्दशसहस्रराक्षसान्ताः जनस्थाने नित्यवासं यथा तथा वसन्तीति जानीष इत्यन्वयः । रतिवासमिति पाठे रत्या प्रीत्या वासो यस्मिन्कर्मणि तत्तथा ॥ २—५ ॥ वसमानाः ताच्छील्ये शानच् । संयुगे रामेण सह संगताः रामेण सह युद्धमकुर्वन्नित्यर्थः । परं अत्यन्तं । आयत्ताः सन्नद्धाः । प्रहरणं आयुधं ॥६॥ अनुक्त्वा परुषंकिंचिदित्यनेन गाम्भीर्यं विवक्ष्यते । व्यापारितं संधानमोक्षणव्यापारविशिष्टं कृतं ॥७—८॥ संख्ये युद्धे। "युद्धमायोधनं इत्यारभ्य मृधमास्कन्दनं संख्यं" इत्यमरः ॥ ९—१० ॥ कर्कशः कठिनहृदयः

ति०तातेत्युपलालने ॥ १ ॥ ति० जानीषइति भ्रात्रादयो मन्नियोगाज्जनस्थानंप्राप्यवसन्तीति त्वंजानीषेकिलेत्यन्वयः ॥२॥ ती० लब्धलक्षाः लब्धावसराः । प्राप्तयुद्धोत्साहाइतियावत् ॥३॥ ति० अथतत्रस्थित्वाक्रियमाणंवृत्तंच जानीषेइत्याह—अधिवासंचेति । मुनीन्बाधमानाः बाधहेतवे । हेतौशानच् । अधिवासंचकुर्वन्ति । मन्नियोगादितिशेषः । कतक० । अधिवासः उपद्रवः ॥४॥ स० वसमानाः । आर्षश्शानच् । व समानाइतिपदद्वयंवा । ममसमानाः सदृशाः मानेन मत्कृतमानेन सहितावा ॥ ६ ॥ ती० वस्तुतस्तु क्रुद्धेनपित्रानिरस्तः निष्कासितःकिं । किंतु कैकेयीवरदानमोहितेनपित्राप्रार्थितस्सन्वनमागतः । सभार्यः सभायामार्यः सभ्यः । क्षीणजीवितःकिं । किंतु तस्यखरस्यसैन्यस्यसंहर्ता । कुतः क्षत्रियपांसनः क्षत्रियान्पातीतिक्षत्रियपः । सचासावंसनश्च शत्रुनाशकः अंससमाघातइतिधातुः । अतएव अशीलःकिं किंतुसद्वृत्तः । तथापि कर्कशः कठिनः । शत्रुविषयइतिशेषः । तीक्ष्णः कार्येष्वनलसः । अतएव अमूर्खः अलुब्धः । जितेन्द्रियइतिच्छेदः । त्यक्तधर्मः त्यक्ताः विरुद्धाः धर्मायेनेति मध्यमपदलोपिसमासः । अतएवाधर्मात्माकिं किंतु धार्मिकएव । अतएव भूतानामहिते अरतः सर्वभूतदयापरइत्यर्थः ॥ १०—११ ॥

[ पा० ] १ ग. वत्स. २ क—ङ. झ. ञ. ट. जनस्थानं. ३ क—ट. भ्रातायत्र. ४ ङ.—ट. महाबाहूराक्षसः. ५ ग. महाबलाः. ६ ग. ङ. झ. ञ. ट. अधिवासंच. ख. तन्निवासंच. क. च. कृतवासाश्च. घ. निवासंचैव. छ. ज. रतिवासाश्च. ७ ङ. झ. ट. मुनीन्ये. क. ग. मुनींस्तान्धर्मे. ८ ख. वर्तमानाः. ९ ख. संयताः. १० ङ. झ. ट. शस्त्रप्रहरणाः. ११ ख. रक्षसांभीमकर्मणां. १२ क. ग. ङ—ज. ट. शरैर्दीप्तैः. १३ ग. महाबलः. १४ च. छ. ज. ञ. हत्वात्रिशिरसंचैव. क. ख. ग. ङ. झ. ट. हत्वात्रिशिरसंचापि. १५ क. ङ—ट. अशीलः. १६ ख. घ. त्यक्त्वाधर्ममधर्मात्मा. ङ. झ. ट. त्यक्तधर्मा त्वधर्मात्मा. क. च. छ. ज. ञ. त्यक्तधर्मस्त्वधर्मात्मा.

येन वैरं विनाऽरण्ये सत्त्वमाश्रित्य केवलम् ॥ कर्णनासापहरणाद्भगिनी मे विरूपिता ॥ १२ ॥
तस्य भार्यां जनस्थानात्सीतां सुरसुतोपमाम् ॥ आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ॥ १३ ॥
त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ॥ भ्रातृभिश्च सुरान्युद्धे समग्रान्नाभिचिन्तये ॥ १४ ॥
तत्सहायो भव त्वं मे समर्थो ह्यसि राक्षस ॥ वीर्ये युद्धे च दर्पे च न ह्यस्ति सदृशस्तव ॥ १५ ॥
उपायज्ञो महाञ्शूरः सर्वमायाविशारदः ॥ एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर ॥ १६ ॥
शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १७ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥१८॥
त्वां तु निःसंशयं सीतां दृष्ट्वा तु मृगरूपिणम् ॥ गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥१९॥
ततस्तयोरपाये तु शून्ये सीतां यथासुखम् ॥ निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २० ॥
ततः पश्चात्सुखं रामे भार्याहरणकर्शिते ॥ विस्रब्धः प्रहरिष्यामि कृतार्थेनान्तरात्मना ॥ २१ ॥
तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः ॥ शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव सः ॥ २२ ॥
ओष्ठौ परिलिहञ्शुष्कौ नेत्रैरनिमिषैरिव ॥ मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥ २३ ॥
स रावणं त्रस्तविषण्णचेता महावने रामपराक्रमज्ञः ॥
कृताञ्जलिस्तत्त्वमुवाच वाक्यं हितं च तस्मै हितमात्मनश्च ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

---

॥ ११ ॥ सत्त्वं बलं केवलमाश्रित्य नतु धर्ममित्यर्थः । "सत्त्वं बले च जन्तौ च" इति विश्वः । आनयिष्यामि आनेष्यामि इडार्षः ॥ १२—१३ ॥ भ्रातृभिः कुम्भकर्णादिभिः । समग्रान् संपूर्णान् । नाभिचिन्तये न गणयामि ॥ १४—१६ ॥ शृणुतत्कर्मेत्यत्र तदिति भिन्नं पदं । प्रकृते कार्यसाहाय्येयत्कर्म कार्यं कर्तव्यं । तन्मम वचनाच्छृण्विति संबन्धः ॥ १७ ॥ प्रमुखे अग्रे ॥ १८ ॥ गृह्यतामिति अयमिति शेषः ॥ १९ ॥ तयोः रामलक्ष्मणयोः । अपाये अपगमे सति शून्ये प्रदेशे । निराबाधः अप्रतिबन्धः ॥ २० ॥ विस्रब्धः निःशङ्कः । अन्तरात्मना अन्तस्थधैर्येण ॥ २१ ॥ सः मारीचः । रामकथां श्रुत्वा परित्रस्तो बभूव । तेन त्रासेन तस्य वक्त्रं शुष्कं समभवदित्यन्वयः ॥ २२ ॥ भयकार्यान्तरमाह—ओष्ठाविति । शुष्कौ ओष्ठौ परिलिहन् सः अनिमिषैः निमेषरहितैः । नेत्रैः नेत्रव्यापारैः । मृतभूत इव मृतजन्तुरिवार्तः सन् रावणं समुदैक्षत ॥ २३॥ उत्तरसर्गार्थं संगृह्णाति—स इति । त्रस्तविषण्णचेताः भीतदुःखितमनाः । तत्र हेतुः—

---

**स०** क्षीणजीवितः मत्संगमनावधिकत्वात्तज्जीवनक्षयस्येतिभावः । **ति०** अथभगिनीवैरूप्यंनिष्कारणंमन्यमानःक्रोधाद्दूषयतिरामं—**पित्रेत्यादिना** । क्षीणजीवितः निरपराधस्त्रीवैरूप्यकरणादेवतथात्वंमन्यते । **ती०** वस्तुतस्तु सनत्कुमारवचनाद्विष्णुरूपश्रीरामाद्वधंप्राप्यतत्पदंप्राप्तुं तस्यभार्यामानयिष्यामि नतुद्रोहबुद्ध्येतिभावः ॥ **ति०** अतएवाशीलोऽजितेन्द्रियश्च । अस्थानेक्रोधात् ॥ ११ ॥ **ति०** उपायतः उपायेष्वित्यर्थः ॥ १६ ॥ **ती०** वस्तुतस्तु रामेभार्याहरणकर्शिते रामएवेभः रामेभस्य आर्यासीता तस्याआहरणं तेनहेतुना कर्शिते नाशितेसति । रामेणमच्छरीरे इतिशेषः । ततः कृतार्थेनान्तरात्मना उपलक्षितस्सन् पश्चाद्विस्रब्धं निष्कलङ्कं । सुखं परमानन्दसुखं मोक्षमितियावत् । प्रहरिष्यामि प्रकर्षेणाहरिष्यामि प्राप्स्यामीत्यर्थः । इदमात्मगतं ॥२१॥ **ती०** मृतभूतइव मृतसदृशः । नेत्रैः नेत्रव्यापारैः । अन्यथाबहुवचनायोगात् । **स०** भयेनपुनःपुनःपरिभ्रमणाद्बहुवचनं नेत्रैरिति । यद्वा अनिमिषैर्नेत्रैरुपलक्षितंरावणं समुदैक्षतेत्यध्याहारेणान्वयः ॥ २३ ॥ इतिषट्त्रिंशस्सर्गः ॥ ३६ ॥

**[ पा० ]** १ ङ. झ. ट. मास्थाय. २ ङ—ट. नासापहारेणभगिनी. ३ ङ. झ. ट. अस्य. ४ क. यिष्याम्यतिक्रम्य. ५ ट. सह. ६ ङ. ट. सुरान्सर्वान्नाहमत्रानुचिन्तये. झ. सुरान्सर्वान्नाहमत्राभिचिन्तये. ख. सुरान्सर्वान्समग्रान्. ७ ख. दर्पेचयुद्धेच. ८ झ. ञ. ट. उपायतो. ९ घ. ङ. ञ. ट. महाशूरः. १० ङ. झ. ञ. ट. महामाया. ख. सर्वशास्त्रविशारदः. ११ च. छ. ज. ञ. त्सकाशं. १२ क. त्वांहि. १३ च. छ. ज. ञ. दृष्ट्वासीताच. १४ क. निराबाधं. घ. निरायासो. ग. निरापायो. १५ ङ. झ. ट. विस्रब्धं. १६ क. तस्माद्राम. १७ च. छ. ज. ञ. सराक्षसस्तत्र. क. ख. सरावणंतत्र. १८ ञ. त्रस्तमुवाच.

# सप्तत्रिंशः सर्गः ॥ ३७ ॥

मारीचेनरावणंप्रतिसीतारामयोःप्रभावातिशयानुवर्णनपूर्वकंसीताहरणस्यस्वमरणकारणत्वोक्तयाततोनिवृत्तिरूपहितोपदेशः ॥ १ ॥

तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः ॥ प्रत्युवाच [1]महाप्राज्ञो मारीचो राक्षसेश्वरम् ॥ १ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ॥ अप्रिय[2]स्य तु पथ्यस्य वक्ता श्रोता[3] च दुर्लभः ॥ २ ॥
न नूनं बुध्यसे रामं महा[4]वीर्यं गुणोन्नतम् ॥ अयुक्तचारश्चपलो महेन्द्रवरुणोपमम् ॥ ३ ॥
अपि स्वस्ति भवेत्तात [5]सर्वेषां भुवि रक्षसाम् ॥ अपि रामो न संक्रुद्धः कुर्या[6]ल्लोकमराक्षसम् ॥ ४ ॥
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ॥ अपि सीतानिमि[7]त्तं च न भवेद्व्यसनं [8]मम ॥ ५ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् ॥ न विनश्येत्पुरी लङ्का त्वया सह सराक्षसा ॥ ६ ॥
त्वद्विधः कामवृत्तो हि दुःशीलः पापम[9]न्त्रितः ॥ आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥७॥
[10]न च पित्रा परित्यक्तो नामर्यादः कथंचन ॥ न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः ॥८॥
न च धर्मगुणैर्हीनः कौसल्या[11]नन्दिवर्धनः ॥ [12]न तीक्ष्णो न च भूतानां [13]सर्वेषामहिते रतः ॥ ९ ॥

---

रामपराक्रमज्ञइति । पूर्वं दण्डकारण्ये यो रामपराक्रम आसीत् तज्ज्ञ इत्यर्थः । तस्मै रावणाय । हितं अनपायं । "हितयोगे च" इति वार्तिकेन चतुर्थी ॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

---

सीतापतित्वसंभूतमप्रमेयं वहन्महः । समस्तापायरहितो रामो जयतु मे धनम् ॥ तच्छ्रुत्वेत्यादि ॥ १ ॥ सततं आपत्प्राप्तावपि । प्रियवादिनः स्वामिहिताहितविमर्शमुपेक्ष्य केवलं स्वप्रयोजनाय यथेच्छावादशीलाः। पुरुषाः सुलभाः । राज्ञः अप्रियस्य तु अप्रियस्यापि तत्काले श्रवणकटुतया प्रतीयमानस्यापि । कालान्तरे पथ्यस्य हितस्य शुभोदर्कस्येत्यर्थः । वचनस्य वक्ता भृत्यः तथाविधवचनस्य श्रोता च पथ्यभक्षणवन्ममेदं हितमिति ग्रहीता राजा च दुर्लभः । अतो मयोच्यमानमप्रियमिवस्थितमपि परमहितमिति गृहाणेति भावः ॥ २ ॥ पथ्यवचनमेवाह—ननूनमित्यादिना । अयुक्तचारः अनियोजितचारः । चपलतया अयुक्तचारत्वाद्वा तद्वीर्यं सम्यङ्न जानासीत्यर्थः ॥ ३ ॥ अत्रैव निर्गत्यपुनरागमनान्नूनं नमे वचनंश्रोष्यतीतिनिश्चित्य रावणचापलेन संभावितानन्र्थानाह—अपीत्यादिना । अपिः संभावनायां । काकुस्वरो द्रष्टव्यः । एवमुत्तरवाक्येष्वपि स्वरपर्यवसानेनार्थपरिच्छेदः कार्यः । रक्षसां सजातीयानां । स्वस्ति भवेदपि । आर्षी षष्ठी । अकार्यनिवृत्त्यर्थं तातेति संबोधनं ॥४—५॥ ईश्वरं स्वामिनं । कामवृत्तं यथेच्छव्यापारं । निरङ्कुशं अमर्यादं ॥ ६॥ य इत्यध्याहार्यं । पापं दुष्टं मन्त्रितं विचारो यस्य सः ॥ ७॥ पित्रा निरस्त इत्यादिनापूर्वं रावणोक्तदूषणानि परिहरति—न चेत्यादिना ॥ ८ ॥ कौसल्यानन्दिवर्धन इति । आनन्दिरानन्दः "सर्व-

---

**स०** अप्रियस्य तत्कालंतथाऽवभासमानस्य वचसःत्रिकटुकादेश्च वक्तेव भोक्तापिदुर्लभः । **ति०** भोक्ताअहितवत्प्रतिभासमानमपीदंपथ्यमेवेतिग्रहीता राजाविवेकीदुर्लभः ॥ २ ॥ **स०** सर्वेषांरक्षसांस्वस्तीतिषष्ठ्या नस्वस्तिभवतिरक्षोभ्यइत्यभिप्रैति ॥४॥ **स०** निरङ्कुशंगजमिवविद्यमानं निरङ्कुशं निषेधकबुद्धिमत्पुरुषशून्यं ॥ ६ ॥ **ति०** तैक्ष्ण्याभावेहेतुः **सर्वभूतहितेरतत्वं**

**[ पा० ]** १ ङ.—ट. महातेजाः. २ घ. ङ—ट. अप्रियस्यच. ३ ङ. झ. भोक्ताच. ४ च—ञ. वीर्यगुणोन्नतं. ख. घ. वीर्यगुणान्वितं. ५ ङ.—ट. सर्वेषामपि. क. सर्वेषांरक्षसांभुवि. ६ ग. ङ. झ. ट. ल्लोकानराक्षसान्. ७ च. छ. ज. ञ. निमित्तंते. ८ क. ग. ङ.—ट. महत्. ९ क. ख. च. छ. ज. यन्त्रितः. १० क. ख. घ. च. छ. ज. ञ. नस. ११ क. घ—ट. नन्दवर्धनः. १२ क. ख. ग. ङ.—झ. ट. नचतीक्ष्णोहिभूतानां. १३ ङ. झ. ट. सर्वभूतहिते. क. ख. ग. च. छ. ज. सर्वेषांचहिते.

वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् ॥ करिष्यामीति धर्मात्मा तात प्रव्रजितो वनम् ॥ १० ॥
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च ॥ हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकावनम् ॥ ११ ॥
न रामः कर्कशस्तात नाविद्वान्नाजितेन्द्रियः ॥ अनृतं दुःश्रुतं चैव नैवं त्वं वक्तुमर्हसि ॥ १२ ॥
रामो विग्रहवान्धर्मः साधुः सत्यपराक्रमः ॥ राजा सर्वस्य लोकस्य देवानां मघवानिव ॥ १३ ॥
कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा ॥ इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४ ॥
शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे ॥ रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ १५ ॥
धनुर्व्यादितदीप्तास्यं शरार्चिषममर्षणम् ॥ चापपाशधरं वीरं शत्रुसैन्यप्रहारिणम् ॥ १६ ॥
राज्यं सुखं च संत्यज्य जीवितं चेष्टमात्मनः ॥ नात्यासादयितुं तात रामान्तकमिहार्हसि ॥ १७ ॥
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ॥ न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ १८ ॥
तस्य सा नरसिंहस्य सिंहोरस्कस्य भामिनी ॥ प्राणेभ्योपि प्रियतरा भार्या नित्यमनुव्रता ॥ १९ ॥
न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया ॥ दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २० ॥
किमुद्यममिमं व्यर्थं कृत्वा ते राक्षसाधिप ॥ दृष्टश्चेत्त्वं रणे तेन तदन्तं तव जीवितम् ॥ २१ ॥
जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् ॥ यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ २२ ॥

धातुभ्य इन्'' इति इन् ॥ ९ ॥ कैकेय्या वञ्चितं पितरं दृष्ट्वा तं सत्यवादिनं करिष्यामीति स्वयं प्रव्रजितः गतः । तातेति सान्त्वोक्तिः ॥ १० ॥ वनगमने हेत्वन्तरमाह—कैकेय्या इति । प्रियस्य कामः कामना स एवार्थो यस्मिन्कर्मणि ॥ ११ ॥ अनृतं असत्यं । दुःश्रुतं वैपरीत्येन श्रुतं च । त्वंवक्तुं नार्हसीत्यन्वयः ॥१२॥ रामः विग्रहवान् मूर्तो धर्म एव । तत्रदोषसंभावनाकथंचिदपिनकार्येतिभावः । यथा वासवो देवानां नायकस्तथा रामः सर्वेषां लोकानां नायक इत्यर्थः ॥१३॥ स्वेन तेजसा पातिव्रत्यवैभवेन । प्रसभं बलात्कृत्य ॥ १४ ॥ शरार्चिषमिति शरपदं खड्गधाराया अप्युपलक्षणं । चापखड्गेन्धनमिति रूपणात् । सहसा साहसेन ॥ १५ ॥ धनुरित्यादिश्लोकद्वयमेकान्वयं । धनुरेव व्यादितदीप्तास्यं । व्यादितं विवृतं । अत्यासादयितुं अत्यन्तमासन्नो भवितुं ॥ १६—१७ ॥ जनकात्मजा यस्य यत्संबन्धिनी । तत्तेजः तस्य तेजः । अप्रमेयं अपरिच्छेद्यं । ''श्रद्धया देवो देवत्वमश्नुते '' इत्युक्तरीत्या सीतासंबन्धेन रामस्यातिशय उक्तः । वने सावधानतयारक्षणीयप्रदेशे । रामचापाश्रयामिति रामवैभवोक्तिः । उभयथापि न हर्तुं शक्येत्यर्थः । जनकात्मजेति कुलप्रभावादपि न हर्तुं शक्येत्यर्थः ॥ १८—२० ॥ व्यर्थमिममुद्यमं उद्योगं । कृत्वा ते किं किं फलं प्राप्तव्यमित्यर्थः । तदन्तं दर्शनान्तं ॥ २१ ॥ न केवलं जीवितं सुखादिकं च दुर्लभमित्याह—जीवितं

॥ ९ ॥ ति० अनृतंनश्रुतंचैव अनृतप्रसंगमपिनजानाति । तेन तत्कथनंदूरापास्तमित्यर्थः । एवंवक्तुं रामंदुर्गुणंवक्तुं ॥ १२ ॥ ति० अप्रमेयंहितत्तेजइत्यनेनावाङ्मनसगोचरत्वंध्वनितं । यस्यसेत्यनेन तस्याअपितत्त्वंसूचितं ॥ १८ ॥ ति० नरसिंहस्येत्यनेन हिरण्यकशिपुप्रभृतिहन्ताऽयमेवेतिसूचितं । नित्यमनुव्रतेत्यनेन तस्यास्तच्छक्तिलंसूचितं ॥१९॥ शि० तदन्तं तेन रणेरामदर्शनेन अन्तोविध्वंसोयस्यतत् । उपजीवितं स्वजीवनं । विद्धीतिशेषः ॥ २१ ॥ इतिसप्तत्रिंशस्सर्गः ॥ ३७ ॥

[ पा० ] १ क–ट. ततः. २ क.–घ. छ. ज. ञ. ट. प्रव्राजितो. ३ क. ख. घ. भोगंच. ४ ख. रामोनकर्कशः. ५ ख. घ. ङ. झ. ट. नश्रुतं. च. छ. ज. दुष्कृतं. ६ ख. ङ. झ. ञ. ट. नैवंत्वंवक्तुमर्हसि. ७ क. ख. ग. च. छ. ज. ञ. धर्मोविग्रहवान्रामः. ८ ग. रणे. ९ क. ख. ग. ङ—ट. देवानामिववासवः. १० क. ङ.—झ. ट. कथंनु. ख. ग. ञ. कथंतु. ११ ङ. झ. ट. इच्छसे. १२ ख. खड्गधरं. १३ ग. शरजिह्वं. १४ ख. ममर्षिणं. १५ ङ. झ. ट. चापबाणधरंतीक्ष्णं. च. छ. ज. ञ. खड्गचापधरं. क. खड्गपाशधरं. १६ क. घ. सैन्यापहारिणं. ङ—ट. सेनापहारिणं. १७ ख. तंतु. १८ घ. मथार्हसि. १९ क. ख. घ. पादाश्रयां. २० ङ. झ. ट. तस्यैव. २१ ख. ग. च. छ. ज. ञ. मैथिलीजनकात्मजा. २२ ङ—ट. मुद्यमं व्यर्थमिमं. २३ क. च. छ. ज. ञ. दृष्टश्चेत्तु. २४ ङ. झ. ट. तदन्तमुपजीवितं. ख. तदन्तंजीवितंतव. २५ क. सुखं.

[1]स सर्वैः सचिवैः सार्धं विभीषणपुरोगमैः[2] ॥ मन्त्रयित्वा तु [3]धर्मिष्ठैः कृत्वा [4]निश्चयमात्मनः ॥ २३ ॥
दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः ॥
[5]हिताहितं विनिश्चित्य क्षमं त्वं कर्तुमर्हसि ॥ २४ ॥
अहं तु मन्ये तव न क्षमं रणे [6]समागमं कोसलराजसूनुना ॥
इदं हि भूयः शृणु वाक्यमुत्तमं क्षमं च युक्तं च [7]निशाचरेश्वर ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः ॥ ३८ ॥

मारीचेनरावणंप्रतियज्ञभङ्गादिरूपस्वकृतपीडामसहमानेनविश्वामित्रेणयज्ञरक्षणायस्वाश्रमंप्रतिरामानयनादिवृत्तान्तनिवेदनपूर्वकंरामेणैकशरेणसुदूरतरसागराम्भसिस्वस्यप्रक्षेपादिनिवेदनम् ॥ १ ॥ तथासीताहरणस्यैहिकपारत्रिकमहानर्थहेतुत्वोक्त्याततोनिवर्तनोपदेशः ॥ २ ॥

कदाचिदप्यहं वीर्यात्पर्यटन्पृथिवीमिमाम् ॥ बलं नागसहस्रस्य धारयन्पर्वतोपमः ॥ १ ॥
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः ॥ भयं लोकस्य जनयन्किरीटी परिघायुधः ॥
व्यचरं [8]दण्डकारण्ये ऋषिमांसानि भक्षयन् ॥ २ ॥
[9]विश्वामित्रोथ धर्मात्मा मद्वित्रस्तो महामुनिः ॥ स्वयं गत्वा दशरथं नरेन्द्रमिदमब्रवीत् ॥ ३ ॥
[10]अद्य रक्षतु मां रामः पर्वकाले समाहितः ॥ मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर ॥ ४ ॥
इत्येवमुक्तो धर्मात्मा राजा दशरथस्तदा ॥ प्रत्युवाच महाभागं विश्वामित्रं महामुनिम् ॥ ५ ॥
[11]बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः ॥ कामं तु मम [12]यत्सैन्यं मया सह गमिष्यति ॥ ६ ॥
बलेन चतुरङ्गेण स्वयमेत्य [13]निशाचरान् ॥ वधिष्यामि मुनिश्रेष्ठ [14]शत्रूंस्ते मनसेप्सितान् ॥ ७ ॥

---

चेति ॥ २२ ॥ स इत्यादि सार्धश्लोकद्वयमेकान्वयं । सत्वमित्यन्वयः । क्षमं साधु ॥ २३—२४ ॥ अधुना स्वबुद्धिं दर्शयति—अहं त्विति । युक्तं युक्तिसहितं ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

आबाल्यसिद्धसहजशौर्यादिगुणशेवधिः । रघुनाथो महाप्रीत्या परिस्फुरतु सर्वतः ॥ तद्गुणजातं नयुक्त्याकल्पयित्वोच्यते किंत्वनुभवसिद्धमित्याह—कदाचिदित्यादिना । सार्धश्लोकद्वयमेकान्वयं । अहंव्यचरमित्यन्वयः । नागो गजः । भयजनने हेतुमाह—नीलेत्यादिना ॥ १—२ ॥ मदिति पञ्चमी ॥ ३ ॥ पर्वकाले यज्ञसुत्याकाले ॥ ४—५ ॥ द्वादशवर्षः द्वादशवर्षवयस्कः । केचित्तु इदं रावणबिभीषयोक्तं वस्तुत ऊनषोडशवर्ष इत्युक्तमित्यूचुः । कामं भृशं । यत्सैन्यं

---

ति० पञ्चदशवर्षोपि तथादशरथेनानूदितोप्यत्यन्तबाल्यद्योतनायातिबालेनापीदृशंकृतं किमधुनावाच्यमिति रावणस्यात्यन्तभयाय मारीचेन तथा दशरथेनोक्तइत्यूनद्वादशवर्षइत्युक्तं । ऊनषोडवर्षोयमितिपाठान्तरं । स० ऊनषोडशवर्षइत्येवपाठः । शि० ऊनद्वादशवर्षः किंचिन्मासोनषोडशवार्षिकइत्यर्थः । अयमर्थः द्वौचद्वौचद्वौचेत्येकशेषेणलब्धः । अत्रबीजंतु बालकाण्डघटकीभूतोनषोडश-

[ पा० ] १ च. छ. ज. ञ. सर्वैश्च. २ क. ग. ङ. झ. ञ. ट. पुरस्कृतैः. ३ क. ख. ग. च. छ. ज. ञ. धर्मिष्ठं. ४ घ. कार्यविनिश्चयं. ५ क. च—ट. हितंहितव. ङ. हिताहितंच. ६ ग. समागतं. ७ क. ग. ङ—ट. निशाचराधिप. ८ क. ग. ङ—झ. ट. दण्डकारण्यं. ९ ख. ग. विश्वामित्रोपि. १० ग. ङ. झ. ट. अयं. ११ ङ. झ. ट. ऊनद्वादश. १२ ङ. झ. ट. तत्सैन्यं. १३ ङ—ट. निशाचरं. १४ ङ—ट. शत्रुंतवयथेप्सितं.

इत्येवमुक्तः स मुनी राजानमिदमब्रवीत् ॥ रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः ॥ ८ ॥
देवतानामपि भवान्समरेष्वभिपालकः ॥ आसीत्तव कृतं कर्म त्रिलोके विदितं नृप ॥ ९ ॥
काममस्तु महत्सैन्यं तिष्ठत्विह परंतप ॥ १० ॥
बालोप्येष महातेजाः समर्थस्तस्य निग्रहे ॥ गमिष्ये राममादाय स्वस्ति तेस्तु परंतप ॥ ११ ॥
एवमुक्त्वा तु स मुनिस्तमादाय नृपात्मजम् ॥ जगाम परमप्रीतो विश्वामित्रः स्वमाश्रमम् ॥ १२ ॥
तं तदा दण्डकारण्ये यज्ञमुद्दिश्य दीक्षितम् ॥ बभूवोपस्थितो रामश्चित्रं विस्फारयन्धनुः ॥ १३ ॥
अजातव्यञ्जनः श्रीमान्पद्मपत्रनिभेक्षणः ॥ एकवस्त्रधरो धन्वी शिखी कनकमालया ॥ १४ ॥
शोभयन्दण्डकारण्यं दीप्तेन स्वेन तेजसा ॥ अदृश्यत ततो रामो बालचन्द्र इवोदितः ॥ १५ ॥
ततोऽहं मेघसंकाशस्तप्तकाञ्चनकुण्डलः ॥ बली दत्तवरो दर्पादाजगाम तदाश्रमम् ॥ १६ ॥
तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः ॥ मां तु दृष्ट्वा धनुः सज्यमसंभ्रान्तश्चकार सः ॥ १७ ॥
अवजानन्नहं मोहाद्बालोऽयमिति राघवम् ॥ विश्वामित्रस्य तां वेदिमभ्यधावं कृतत्वरः ॥ १८ ॥
तेन मुक्तस्ततो बाणः शितः शत्रुनिबर्हणः ॥ तेनाहं त्वाहतः क्षिप्तः समुद्रे शतयोजने ॥ १९ ॥
नेच्छता तात मां हन्तुं तदा वीरेण रक्षितः ॥ रामस्य शरवेगेन निरस्तोऽहमचेतनः ॥ २० ॥
पातितोहं तदा तेन गम्भीरे सागराम्भसि ॥ प्राप्य संज्ञां चिरात्तात लङ्कां प्रति गतः पुरीम् ॥ २१ ॥

तदित्यध्याहार्यं ॥ ६—७ ॥ रामादन्यत् बलं सैन्यं तस्य न पर्याप्तं न समर्थं ॥ ८ ॥ दशरथस्य कोपो माभूदिति सान्त्वयति—देवतानामिति । तव कृतं त्वया कृतं कर्म । त्रिलोके लोकत्रये । आर्षत्वान्न ङीप् । विदितं प्रसिद्धं । यद्यपि महत्सैन्यमप्यस्तु तथापि तत्सर्वमिह तिष्ठतु । प्रकृतकार्यासामर्थ्यादितिभावः ॥ ९—१२ ॥ रामः चित्रं धनुः विस्फारयन् नयन्सन् उपस्थितः रक्षणाय समीपं प्राप्तो बभूवेत्यर्थः ॥ १३ ॥ अजातेत्यादिश्लोकद्वयमेकान्वयं । अजातव्यञ्जनः अनुत्पन्नयौवनलक्षणः । एकवस्त्रधरः ब्रह्मचर्यव्रते स्थित इत्यर्थः । शिखी कुलोचितशिखायुक्तः । व्रीह्यादित्वादिनिः । कनकमालयेत्युपलक्षणे तृतीया ॥ १४ ॥ शोभयन् मयूरकण्ठच्छायया व्याप्तं कुर्वन्नित्यर्थः । उदितचन्द्रौपम्येन विरोधिनिरसनोद्युक्तत्वं गम्यते । शत्रोरपि विग्रहवर्णनमाकर्षकतया ॥ १५ ॥ आजगामेत्युत्तमपुरुषः ॥ १६—१७ ॥ मोहात् अवजानन् तिरस्कुर्वन् ॥ १८ ॥ तेन रामेण । बाणो मुक्तः मयि क्षिप्त इत्यर्थः ॥ १९ ॥ नेच्छता अनिच्छता । नशब्दस्य " सुप्सुपा " इति समासः । अनिच्छाहेतुर्न ज्ञायते स्वयं हन्तुं समर्थ एवेति भावः । अचेतनः

वर्षमिइतिपद्येनिरूपितं । अतएवाकृतार्थः अस्त्राभ्यासरहितोस्तीतिशेषः ॥ ६ ॥ **ति०** रामादन्यद्बलं तस्यरक्षसोनपर्याप्तं । अतः कामं तवबलं यदस्ति तदत्रैवतिष्ठतु । तदुपयोगाभावात् । अतएव बालोपियतस्तन्निग्रहसमर्थः अतोदेयएवेतिशेषः ॥ १०—११ ॥ **तनि०** श्रीमान् अनपायश्रीकः । पद्मपत्रनिभेक्षणः रविकरविकसितपुण्डरीकदलायतेक्षणः । धन्वी बाल्योचितप्रशस्तधनुः ॥ १४ ॥ **तनि०** शोभयन्निति । स्वेन स्वासाधारणेनतेजसा दण्डकारण्यंशोभयन्निति । मयूरग्रीवासदृशस्वकान्त्या श्यामारुणकान्तिवर्धयन्नित्याचार्याः । तादृशतेजोवत्त्वेप्यनुद्वेगदायित्वमाह—**बालचन्द्रइति** ॥ १५ ॥ **ति०** आजगामेत्युत्तमपुरुषः । अत्र पारोक्ष्यार्थकलिटा दैवपारवश्यादेवाहमागतो नतु तदागमनं ममप्रत्यक्षमितिध्वनयति । यद्वा बहुकालिकत्वेनविस्मृतत्वाद्वा तत्वारोपः । आर्षोवालिट् आश्रमान्तरं आश्रममध्यं । **स०** आजगामेति रामभयाद्व्यत्यासः ॥ १६ ॥ **ति०** नेच्छतेति । एतच्चरक्षणं केवलंकृपाजन्यमिति मारीचाशयः । भाविकार्यार्थमिति वस्तुतत्वं ॥ **शि०** अहंनिरस्तएव । " सर्ववाक्यंसावधारणंभवति " इति

[ पा० ] १ ङ. झ. ट. एवमुक्तस्सतुमुनिः. २ क. ग. च. छ. ज. राजानंपुनरब्रवीत्. ३ क. ग—ट. त्रिलोकविदितं. ४ ङ. झ. ट. काममस्ति. च. छ. ज. ञ. ममश्रीमान्पद्मपत्रनिभेक्षणः. ५ ख. रामोह्येष. क. बालोप्ययं. ६ ङ—ट. इत्येवमुक्त्वासमुनिः. ७ ङ. झ. ट. तथा. ८ ख. रक्षितुं. ९ क. ग. घ. च. छ. ज. ञ. बभूवावस्थितो. १० च. छ. ज. ञ. रामः सज्यं. ११ ङ—ट. श्रीमान्बालःश्यामःशुभेक्षणः. १२ क. ग. ङ—ट. तदा. १३ ख. भूषणः. १४ च. छ. ज. दागतोस्मि. ङ. झ. ट. दाजगामाश्रमान्तरं. ग. दाजगामापराश्रमं. १५ ङ. झ. ट. श्चकारह. १६ ख. च. छ. ज. अवज्ञानादहं. १७ घ. मभ्यधावमतित्वरः. १८ च. छ. ज. ञ. स्तदा. १९ ख. ग. ङ—ट. ताडितः. २० ङ. झ. ट. निरस्तोभ्रान्तचेतनः.

एवमस्मि तदा मुक्तः सहायास्तु[1] निपातिताः ॥ अकृतास्त्रेण बालेन[2] रामेणाक्लिष्टकर्मणा ॥ २२ ॥
तन्मया वार्यमाणस्त्वं[3] यदि रामेण विग्रहम् ॥ करिष्यस्यापदं घोरां क्षिप्रं प्राप्स्यसि[4] रावण ॥ २३ ॥
क्रीडारतिविधिज्ञानां[5] समाजोत्सवशालिनाम्[6] ॥ रक्षसां चैव सन्तापमनर्थं चाहरिष्यसि ॥ २४ ॥
हर्म्यप्रासादसंबाधां नानारत्नविभूषिताम् ॥ द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ॥ २५ ॥
अकुर्वन्तोपि पापानि शुचयः पापसंश्रयात् ॥ परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ २६ ॥
दिव्यचन्दनदिग्धाङ्गान्[7]दिव्याभरणभूषितान् ॥ द्रक्ष्यस्यभिहतान्भूमौ तव दोषात्तु राक्षसान्[8] ॥ २७ ॥
हृतदारान्[9]सदारांश्च दश विद्रवतो दिशः ॥ हतशेषान्[10]अशरणान्द्रक्ष्यसि त्वं निशाचरान् ॥ २८ ॥
शरजालपरिक्षिप्तामग्निज्वालासमावृताम् ॥ प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं[11] न संशयः ॥ २९ ॥
परदाराभिमर्शात्तु नान्यत्पापतरं महत् ॥ प्रमदानां सहस्राणि तव राजन्परिग्रहः[12] ॥ ३० ॥
भव स्वदारनिरतः स्वकुलं रक्ष राक्षस[13] ॥ मानमृद्धिं च राज्यं[14] च जीवितं चेष्टमात्मनः ॥ ३१ ॥
सीताहेतोः[15] समग्राणि विद्रविष्यन्ति भीतवत् ॥ ३२ ॥
आत्मनश्च दशग्रीव पुरस्यान्तःपुरस्य च ॥ रक्षसां च विनाशाय मैथिलीमानयिष्यसि ॥
मा नाशय त्वं राज्यं च जीवितं चेष्टमात्मनः ॥ ३३ ॥ ]
कलत्राणि च सौम्यानि मित्रवर्गं[16] तथैव च ॥ यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ ३४ ॥
निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि धर्षयिष्यसि ॥
गमिष्यसि क्षीणबलः सबान्धवो यमक्षयं रामशरात्त[17]जीवितः ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

निश्चेष्टः मूर्छितो वा ॥ २०—२१ ॥ निपातिताः हताः ॥ २२—२३ ॥ क्रीडा लीला रतिः भोगः तयोर्विधिः क्रमः तज्ज्ञानां तत्र सक्तानामित्यर्थः । समाजः सभा । अनर्थं दुःखं । संतापः तत्कार्यं । आहरिष्यसि यत्नेन संपादयिष्यसि ॥ २४ ॥ हर्म्येति " हर्म्यादि धनिनां वासः प्रासादो देवभूभुजां " इत्यमरः । संबाधां निबिडां । रत्नविभूषितां गृहद्वारादौ ॥ २५ ॥ त्वद्दोषेण सकलराक्षसक्षयो भविष्यतीति दर्शयिष्यन् तदर्थमसत्सङ्गदोषन्यायारूढमुपवर्णयति—अकुर्वन्तोपीति । शुचयः परिशुद्धाः अपापा इत्यर्थः । पापान्यकुर्वन्तोपि पापसंश्रयात् पापपुरुषसंसर्गात् । परपापैर्विनश्यन्ति । यथा नागह्रदे सर्पह्रदे । नागनिग्रहाय प्रवृत्तेन मत्स्याअपि तत्सहवासाद्धन्यन्ते तद्वदित्यर्थः ॥ २६ ॥ तव दोषात्तु तव दोषादेव ॥ २७ ॥ हृतदारान् त्यक्तदारान् । अशरणान् रक्षकरहितान् ॥ २८ ॥ प्रदग्धभवनां प्रकर्षेण दग्धगृहां ॥ २९ ॥ एवं दृष्टदोषमुपपाद्यादृष्टदोषं दर्शयति—परदारेति । " परिग्रहः कलत्रे स्यात् " इतिशाश्वतः । जात्यभिप्रायेणैकवचनं ॥ ३०—३३ ॥ रामविप्रियं रामापराधं ॥ ३४ ॥ प्रसह्य बलात्कृत्य मामनादृत्येत्यर्थः । रामशरेण आत्तं आ-

---

न्यायेनैवकारलाभः । तेन हननव्यवच्छेदः ॥ २० ॥ **स०** सह अयोगतिर्येषांते सहायाः ॥ २२ ॥ **ति०** नागह्रदे सर्पयुक्तह्रदे । सर्पनिग्रहायप्रविष्टेन राजप्रेरितधीवरादिना गरुडेनवा यथाप्रसङ्गान्मत्स्या नश्यन्ति तद्वत् ॥ २६ ॥ **ति०** तव परिग्रहे अन्तःपुरे । प्रमदानांसहस्राणि । अतस्तास्वेवरमस्व नान्यत्रमनोधेहीत्यर्थः ॥ ३० ॥ इत्यष्टत्रिंशस्सर्गः ॥ ३८ ॥

**[ पा० ]** १ ख. ङ. झ. ञ. ट. सहायास्ते. २ क. ङ—ट. रामेणबालेनाक्लिष्ट. ३ क. च—ञ. वार्यमाणस्तु. ४ क. ग. ङ—ट. प्राप्यनशिष्यसि. ५ क. विधिरसज्ज्ञानां. ६ ङ. झ. दार्शिनां. ७ क. ग. च. छ. ज. ञ. लिप्ताङ्गान्. ८ ख. रावण. ९ झ. हतदारान्. १० ख. नशेषेण. ११ ख. घ. ङ. झ. ट. त्वमसंशयं. १२ ङ. झ. ट. परिग्रहे. १३ झ. ट. राक्षसान्. ख. रावण. १४ ख. राष्ट्रं. च. १५ इदमर्धचतुष्टयं क. च. छ. ज. पाठेषुदृश्यते. १६ क. मित्रवर्गांस्तथैव. १७ ख. ग. शरार्तजीवितः. ङ. झ. ट. शरास्तजीवितः.



## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

मारीचेनरावणंप्रतिरामेपूर्ववैरानुस्मरणेनतज्जिघांसयामृगरूपधारिभ्यांराक्षसाभ्यांसहस्वेनापिमृगरूपस्वीकारेणदण्डकारण्यमेत्यतद्वधप्रयतनेतेनशरद्वयेनस्वसहचरद्वयहननेपलायनोपायेनतत्तृतीयशरादात्मरक्षणनिवेदनम् ॥ १ ॥ तथातंप्रतियुद्धेनक्षमयावावैरनिर्यातनकरणोक्तिपूर्वकंसीताहरणोद्यमान्निवर्तनोपदेशः ॥ २ ॥

एवमस्मि तदा मुक्तः कथंचित्तेन संयुगे ॥ इदानीमपि यद्वृत्तं तच्छृणुष्व[1] निरुत्तरम्[2] ॥ १ ॥
राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथाकृतः ॥ सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावनम् ॥ २ ॥
दीप्तजिह्वो म[3]हाकायस्तीक्ष्णदंष्ट्रो महाबलः ॥ व्यचरं द[4]ण्डकारण्यं मां[5]सभक्षो महामृगः ॥ ३ ॥
अग्निहोत्रेषु तीर्थेषु चैत्यवृक्षेषु रावण ॥ अत्यन्तघोरो व्यचरं ता[6]पसान्संप्रधर्षयन् ॥ ४ ॥
निहत्य दण्डकारण्ये तापसान्धर्मचारिणः ॥ रुधिराणि पिबंस्तेषां त[7]था मांसानि भक्षयन् ॥ ५ ॥
ऋषिमांसाशनः क्रूरस्त्रासयन्वनगोचरान् ॥ त[8]था रुधिरमत्तोहं विचरन्धर्मदूषकः ॥ ६ ॥
आसादयं त[9]दा रामं तापसं धर्मचा[10]रिणम् ॥ वैदेहीं च महाभागां लक्ष्मणं च म[11]हारथम् ॥ ७ ॥
तापसं नियताहारं सर्वभूतहिते रतम् ॥ सोहं वनगतं रामं परिभूय महाबलम् ॥ ८ ॥
तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ॥ अभ्यधावं हि[12] संक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः ॥ ९ ॥
जिघांसुरकृतप्रज्ञस्तं प्रहारमनुस्मरन् ॥ तेन मु[13]क्तास्त्रयो बाणाः शिताः शत्रुनिबर्हणाः ॥
विकृष्य ब[14]लवच्चापं सुपर्णानिलनि[15]स्वनाः ॥ १० ॥
[[16]तैर्बाणैर्दण्डकारण्ये मत्तैराशीविषोपमैः । कृतं वितिमिरं सर्वं रामेणाक्लिष्टकर्मणा ॥] ॥ ११ ॥
ते बाणा वज्रसंकाशाः सु[17]मुक्ता रक्तभोजनाः ॥ आजग्मुः सहिताः सर्वे त्रयः सन्नतपर्वणः ॥ १२ ॥

---

कृष्टं नाशितमिति यावत् । तादृशं जीवितं यस्य सः ॥३५॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

अपराधविहीनेषु नापराधं करोति यः । दयालुं सर्वभूतेषु तमहं राममाश्रये ॥ इदानीमपि प्रौढावस्थायामपि । यद्वृत्तं मद्विषयमभूत् तत् निरुत्तरं शृणुष्व मध्ये वाक्यविच्छेदाकरणेन शृण्वित्यर्थः । यदुत्तरमिति पाठे यत्सर्वान्तोत्तरं तदतिरिक्तासाध्यं तदपिशृण्वित्यर्थः ॥ १ ॥ तथाकृतः उक्तरीत्या प्राणसंकटं प्रापितोपि । अनिर्विण्णः निर्वेदरहितः । निर्वेदोनिष्फलत्वधीः । अप्राप्तत्द्विषयप्रवृत्तिवैराग्यइत्यर्थः ॥ २ ॥ दीप्तजिह्व इत्यादिविशेषणत्रयेण निरपेक्षहननसाधनभूयस्त्वं विवक्ष्यते ॥ ३—८ ॥ रामपराक्रमं जानन्नपि कथंतत्परिभवायोद्युक्त इत्यत्राह—तापसोयमितिज्ञात्वेति तापसत्वादहिंसापरेणभवितव्यमिति विश्वस्येत्यर्थः । एवंविधदुर्व्यापारप्रयोजकं वैरस्मरणं ॥९॥ अकृता अप्रवर्तिता प्रज्ञा बुद्धिर्यस्य सः ॥१०॥ सर्वे इति प्रयोगयौगपद्यार्थमुक्तं । सन्नतपर्वणः सन्नत-

---

**स०** यदुत्तरमितिपाठे यद्वृत्तं मदनुभवसिद्धं उत्तरं सर्वलोकासाध्यत्वेनोत्तमं । तच्छृणुष्वेत्यन्वयः । **शि०** यत् यत्नवान् योऽहमस्मि तस्यमे उत्तरं लोकविलक्षणं । यद्वृत्तं तच्छृणुष्व । अहंवच्मीत्यर्थः ॥ १ ॥ **शि०** तदारामं तदः अमृतदाता आरामो

[ पा० ] १ घ. तच्छृणुत्वं. २ ग. ङ—ट. यदुत्तरं. घ. निशाचर. ३ क. ख. ग. ङ—ट. महादंष्ट्रस्तीक्ष्णशृङ्गो. ४ क. दण्डकारण्ये. ५ च. छ. ज. ञ. ऋषिमांसानिभक्षयन्. ६ क. ख. ग. ङ—ट. तापसांस्तान्प्रधर्षयन्. ७ ङ. झ. ट. तन्मांसानिच. ८ तथारुधिरमत्तोहमित्यर्धस्थाने क. ङ—ट. पुस्तकेषु. तदारुधिरमत्तोहंव्यचरंदण्डकावनं । तदाहंदण्डकारण्येविचरन्धर्मदूषकः । इत्यर्धद्वयंदृश्यते. ९ क. घ. च. छ. ज. ञ. तथा. १० ग. ङ. झ. ञ. ट. माश्रितं. क. च. छ. ज. संश्रितं. ११ ग. च. छ. ज. ञ. महाबलं. १२ क. ख. ग. ङ—ट. सुसंक्रुद्धः. १३ ङ. झ. ट. त्यक्ताः. १४ ङ. झ. ट. सुमहच्चापं. १५ ङ. झ. ट. तुल्यगाः. १६ अयंश्लोकः क. पुस्तकेदृश्यते. १७ क. ग. ङ.—ट. सुघोराः.

पराक्रमज्ञो रामस्य शैरो दृष्टभयः पुरा ॥ समुद्भ्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ ॥ १३ ॥
शरेण मुक्तो रामस्य कथंचित्प्राप्य जीवितम् ॥ इह प्रव्राजितो युक्तस्तापसोह समाहितः ॥ १४ ॥
वृक्षेवृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ॥ गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ॥ १५ ॥
अपि रामसहस्राणि भीतः पश्यामि रावण ॥ रामभूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ १६ ॥
राममेव हि पश्यामि रहिते राक्षसाधिप ॥ दृष्ट्वा स्वप्नगतं राममुद्भ्रमामि विचेतनः ॥ १७ ॥
रकारादीनि नामानि रामत्रस्तस्य रावण ॥ रत्नानि च रथाश्चैव त्रासं संजनयन्ति मे ॥ १८ ॥
अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम् ॥ बलिं वा नमुचिं वाऽपि हन्याद्धि रघुनन्दनः ॥१९॥
रणे रामेण युध्यस्व क्षमां वा कुरु राक्षस ॥ न ते रामकथा कार्या यदि मां द्रष्टुमिच्छसि ॥ २० ॥

पर्वाणः ॥११-१२॥ दृष्टं भयं येन करणेन स दृष्टभयः। उद्भ्रान्तः पलाय्यगतः । मुक्त इति पलायितेषु रामशराप्रवृत्तेरिति भावः । रामस्येतिपदं काकाक्षिन्यायात्पूर्वोत्तरपदयोरन्वेति । यतः मया रामस्य शरः पुरा दृष्टभयः ततः रामस्य पराक्रमज्ञोहं समुद्भ्रान्तः सन् मुक्तः । रामपराक्रमाज्ञौ तावुभौराक्षसौ तु हताविल्यन्वयः ॥ १३ ॥ प्रव्राजितः कृतसकलदुर्वृत्तपरित्याग इत्यर्थः । युक्तः उचिताचरणः । तापसः तपोनिष्ठः । समाहितः नियतमनस्कः ॥ १४ ॥ वृक्षेवृक्ष इति । "हृदयान्नापयातोसि दिक्षु सर्वासु दृश्यसे ॥ रामभूतं जगदभूद्रामे राज्यं प्रशासति " इत्यादाविव शोकरागभयादिजनितनिरन्तरसंतन्यमानचिन्तासक्तस्य साक्षात्कारोपपत्तिः । भयस्योत्तरोत्तरभूमिकाभिप्रायेण दर्शनस्याप्युत्तरोत्तरदशेत्यनुसंधेयं ॥ १५ ॥ एकस्यैव रामस्य प्रतिवृक्षंगत्वागत्वा दृश्यमानत्वमुच्यत इति भ्रमं वारयति—अपीति । नकेवलं प्रतिवृक्षं किंतु सर्वत्रप्रदेश इत्याह—रामभूतमिति ॥ १६ ॥ नेदं रामस्य मायाकृतमित्याह—राममेवेति । रहिते रामरहिते प्रदेशे । न केवलं जाग्रद्दशायामेव प्रतीतोयं किंतु स्वप्नदशायामपीत्याह—दृष्ट्वेति । उद्भ्रमामि भ्रान्तं प्रलापं करोमीत्यर्थः ॥ १७ ॥ नकेवलं दर्शनदशायां भीतिकार्यं श्रवणदशायामपीत्याह—रकारादीनीति । कारप्रत्ययश्छान्दसः । रेफादीनि यानि रत्नादीनि नामानि तेषामाद्याक्षरोच्चारणे राममेवायमब्रवीदिति त्रासोजायते । द्वितीयाक्षरोच्चारणे शनैः स निवर्तत इति भावः ॥ १८—१९ ॥ यदिवैरनिर्यातनं कर्तुमिच्छसि तदा रामेण रणे युध्यस्व । यद्वा क्षमां कुरु खरादिवधं सहस्व । सर्वथा चोरव्यापारो न कर्तव्य इति भावः । हितं चाह—न त इति । रामकथा रामप्रसङ्गोपि । ते त्वया । न कार्या ।

विहारोयस्य तंरामं । आसादयं अपीडयं ॥ ७ ॥ ति० शठः गूढविप्रियकारी । दृष्टभयः रामादितिशेषः । शि० समुत्क्रान्तः पलायितः ॥ शि० पलायनान्मुक्तइत्यनेन पलायनपरंरामबाणोनहन्तीतिसूचितं । तेनतद्बाणस्यापिपरमधर्मज्ञत्वंसूचितं ॥ १३ ॥ ति० युक्तः योगाभ्यासरतः ॥ १४ ॥ तनि० चीरकृष्णाजिनांबरमिति गृहीतधनुषमितिच शुभाश्रयसंशीलने पीतांबरशङ्खचक्रादियोगइव ज्ञानालंबनयोगोव्यज्यते ॥ १५ ॥ शि० रकारादीनि रत्नरथप्रभृतीनिनामानि । रामत्रस्तस्यमे वित्रासंजनयन्ति- एतेन रकारोच्चारणमात्रेण राममेवोच्चारयतीति भ्रान्तिरुत्पद्यतइतिसूचितं । तेन रामेतिनाम्ना रामवाच्यमयत्वंबोधितं । तेन यदि रकारोच्चारणमात्रेणभीतिस्तर्हि रामोच्चारणेभीतिरिति किंवक्तव्यमिति काव्यार्थापत्तिरलङ्कारोध्वनितः । तेन रामसमीपगमनयोग्यता ममनास्तीतिसूचितं ॥ १८ ॥ स० यद्यपिनक्षमं तथापियुध्यस्वेत्युक्तिः विशिष्टनाशापेक्षयारावणमात्रनाशस्यलघीयस्त्वादिति भावेन ॥ २० ॥

[ पा० ] १ क. ख. ग. ङ. छ.—ट. शठो. २ ङ. झ. ट. समुत्क्रान्तः. ३ ख. स्तथा. ४ क. ख. ग. ङ.—ट. वृक्षेहि. ५ घ. राममेवाभि. ६ ङ.—ट. राक्षसेश्वर. ७ ख. रामंसहसोद्भ्रान्तचेतनः. ८ ङ. झ. ट. वित्रासंजनयन्ति. ९ घ. क्षमांचकुरु. ख. नक्षमंतत. १० ख. ङ. झ. ट. रावण. ११ घ. नचैनंद्रष्टुमर्हसि.

बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः ॥ परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ २१ ॥
सोहं तवापराधेन विनश्येयं निशाचर ॥ कुरु यत्ते क्षमं तत्त्वमहं त्वा नानुयामि ह ॥ २२ ॥
रामश्च हि महातेजा महासत्त्वो महाबलः ॥ अपि राक्षसलोकस्य न भवेदन्तकोपि सः ॥ २३ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ॥ अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ २४ ॥
अत्र ब्रूहि यथा तत्त्वं को रामस्य व्यतिक्रमः ॥ २५ ॥
इदं वचो बन्धुहितार्थिना मया यथोच्यमानं यदि नाभिपत्स्यसे ॥
सबान्धवस्त्यक्ष्यसि जीवितं रणे हतोद्य रामेण शरैरजिह्मगैः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

## चत्वारिंशः सर्गः ॥ ४० ॥

रावणेनमारीचंप्रतिपरुषभाषणैरुपालंभपूर्वकंमाययाचित्रमृगरूपधारणेनसीताप्रलोभनाकरणेसावधारणंतस्यहननोक्तिः १

मारीचेन तु तद्वाक्यं क्षमं युक्तं निशाचरः ॥ उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ॥ १ ॥
तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः ॥ अब्रवीत्परुषं वाक्यमयुक्तं कालचोदितः ॥ २ ॥
यत्किलैतदयुक्तार्थं मारीच मयि कथ्यते ॥ वाक्यं निष्फलमत्यर्थमुप्तं बीजमिवोषरे ॥ ३ ॥
त्वद्वाक्यैर्न तु मां शक्यं भेत्तुं रामस्य संयुगे ॥ पापशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥ ४ ॥

---

यदि मां द्रष्टुमिच्छसि जीवितुमिच्छसीत्यर्थः ॥ २० ॥ लोकन्यायमाह—बहव इति । युक्ताः सम्यगाचाराः । धर्मं अनुष्ठिताः अनुष्ठितवन्तः साधवोपि परेषामपराधेन विनष्टाः । असत्संसर्गदोषेणेत्यर्थः ॥ २१ ॥ सामान्यन्यायं स्वविषये दर्शयति—सोहमिति । सोहं साधुभूतोहं । यत्ते क्षमं यत्त्वया कर्तुं शक्यं तत् त्वमेव कुरु । अहं त्वा त्वां । नानुयामि अनर्थस्य निश्चितत्वादित्यर्थः ॥ २२ ॥ तत्र हेतुमाह —रामश्च हीति । हिः प्रसिद्धौ । अपिः कामचारकरणे । "अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थेषु कामचारक्रियासु च" इति विश्वः । द्वितीयोपिशब्दः अवधारणे ॥ २३ ॥ खरवधेन नाग्रहः कार्य इत्याह—यदीति । सीतापरिभवकरणेन शूर्पणखाविरूपिता । खरश्चातिवृत्तः रामस्योपरि गत्वा प्रहारोद्युक्तो रामेण हतः । अत्र रामस्य व्यतिक्रमः कः न कोपीत्यर्थः ॥ २४—२५ ॥ अवश्यं वक्तव्यमर्थं पुनर्निष्कृष्य दर्शयति—इदमिति । यथोच्यमानं परमार्थत उच्यमानं । नाभिपत्स्यसे नाङ्गीकरोषि ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

यस्य तत्त्वंसमुद्दिष्टं नाभिजानन्ति दुर्जनाः । तमहं शिरसा वन्दे रघुनाथं गुणार्णवम् ॥ क्षमं निवर्तनसमर्थं । युक्तं कार्यं ॥ १ ॥ पथ्यं अनपायं । हितं सुखावहं । अयुक्तं अयुक्तार्थं ॥ २ ॥ अयुक्तार्थं राजचित्तप्रतिकूलत्वादनुचितार्थं । उप्तं निक्षिप्तं ॥ ३ ॥ रामस्य संयुगे विषये मां भेत्तुं सीताप्रहरणोपायाद्युद्धे

---

**ती०** सर्गफलश्रुतिस्स्कान्दे । "मारीचोक्तिमुपश्रुत्य गुरुमान्भवतिक्षितौ" इति ॥ २६ ॥ इत्येकोनचत्वारिंशस्सर्गः ॥ ३९ ॥
**ति०** मारीचस्य मारीचेन ॥ १ ॥ **स०** पथ्यवद्धितं । रोगिणोयथापथ्यान्नंहितंतद्वद्धितमितिभावः ॥ २ ॥ **ति०** शत्रोर्मानुषस्यस्तावकत्वात्क्रोधेनाह—**दुष्कुलेति** । निष्फलं तमोगुणाक्रान्तेममहृदयेतस्यानवकाशात् ॥ ३ ॥

[ **पा०** ] १ ख. नष्टाःसर्वपरिच्छदाः. २ ङ. झ. ट. परापराधेन. ३ ग. ननश्येयं. ४ ख. रामश्चापि. ५ क. महावीर्यो. ञ. महासत्वोमहातेजाः. ६ क. ग. घ. ट. भवेदन्तकरोहिसः. ख. भवेदन्तकरोपिहि. ७ ग. कुतोरामव्यतिक्रमः. ८ ङ. झ. ट. मारीचस्तु. ९ क.—घ. च ज. क्षेमयुक्तंचरावणः. ङ. छ. झ. ञ. ट. क्षमंयुक्तंचरावणः. १० ङ. झ. ट. दुष्कुलैतत्. ११ ख. ग. ङ. च. झ. ञ. ट. मत्यर्थंबीजमुप्तं. १२ ङ. झ. ट. मूर्खस्यपापशीलस्य.

यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा ॥ स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ५ ॥
अवश्यं तु मया तस्य संयुगे खरघातिनः ॥ प्राणैः प्रियतरा सीता हर्तव्या तव सन्निधौ ॥ ६ ॥
एवं मे निश्चिता [1]बुद्धिर्हृदि मारीच [2]वर्तते ॥ न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ७ ॥
दोषं गुणं वा संपृष्टस्त्वमेवं वक्तुमर्हसि ॥ अपायं [3]वाऽप्युपायं वा कार्यस्यास्य विनिश्चये ॥ ८ ॥
संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता ॥ उद्यताञ्जलिना [4]राज्ञे य इच्छे[5]द्भूतिमात्मनः ॥ ९ ॥
वाक्यमप्रतिकूलं तु मृदुपूर्वं [6]हितं शुभम् ॥ उपचारेण [7]युक्तं च वक्तव्यो वसुधाधिपः ॥ १० ॥
[8]सावमर्दं तु यद्वा[9]क्यं मारीच हितमुच्यते ॥ नाभि[10]नन्दति तद्राजा [11]मानार्हो [12]मानवर्जितम् ॥ ११ ॥
पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ॥ अग्नेरिन्द्रस्य सोमस्य [13]वरुणस्य यमस्य च ॥ १२ ॥
औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ॥ धारयन्ति महात्मानो राजानः क्षणदाचर ॥
तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च [14]पार्थिवाः ॥ १३ ॥
त्वं तु धर्ममविज्ञाय केवलं मोहमास्थितः ॥ अभ्यागतं मां दौरात्म्यात्परुषं [15]वक्तुमिच्छसि ॥ १४ ॥

मां प्रवर्तयितुं । त्वद्वाक्यैर्न शक्यं । तत्र हेतुत्रयं—पापेत्यादि । पापशीलत्वान्मूर्खत्वाद्विशेषतो मानुषत्वाच्च तेन नाहं योद्धुमर्हः किंतु तद्भार्यापहरणमेव तदपकाराय प्रतिक्रियेति भावः ॥ ४ ॥ मूर्खत्वमुपपादयति—यदिति । प्राकृतं असारं । स्त्रीवाक्यं कैकेयीवाक्यं । एकपदे उत्तरक्षणे । प्राणैः प्राणेभ्यः । प्रियतरा तत्प्राणापहरणादपि वरं तत्स्त्रियाअपहरणमिति भावः । तव सन्निधौ सति हर्तव्या त्वत्सन्निधिमुखेन हर्तव्येत्यर्थः ॥ ५—६ ॥ निश्चिता निश्चयरूपा । सेन्द्रैः किं पुनस्त्वयेति भावः ॥ ७ ॥ अपिचापृष्टोत्तरप्रलापस्तवासंगत इत्याह—दोषमिति । कार्यनिश्चये विषये कौ गुणदोषौ तत्साधने कावुपायाविति पृष्टश्चेदुत्तरं वक्तुमर्हसि नास्माकं तज्जिज्ञासा ततो नैवं वक्तुं युक्तमित्यर्थः ॥ ८ ॥ प्रसङ्गाद्राजसन्निधौ विज्ञापनप्रक्रियां दर्शयति—संपृष्टेनेत्यादिना । विपश्चिता विदुषा राजसेवाप्रकारज्ञेनेति यावत् । भूतिं ऐश्वर्यं ॥ ९ ॥ एवं वक्तृगुणा उक्ताः अथ वचनप्रकारमाह—वाक्यमिति। उपचारेण युक्तं बहुमानेन पुरस्कृतं । हितमप्युपचारपूर्वं वक्तव्यमित्यर्थः ॥ १० ॥ प्रकारान्तरेण न वक्तव्यमित्याह—सावमर्दमिति । सावमर्दं तिरस्कारसहितं ॥ ११ ॥ पञ्च रूपाणि अग्न्यादिपञ्चकस्यया-निरूपाणि तानि धारयन्तीत्यर्थः ॥१२॥ तान्येवाह—औष्ण्यमिति । औष्ण्यं तैक्ष्ण्यं । सौम्यं आह्लादकरत्वं । दण्डं दुष्टनिग्रहं । मान्याः मनसा पूज्याः । पूज्याः वाचा बहुमन्तव्याः ॥ १३ ॥ सामान्यत उक्तमर्थं प्रकृते संगमयति—त्वं त्विति । धर्मं राजधर्मं । मोहं

**ती०** मारीचेनेत्यादेः हर्तव्यातवसंनिधावित्यन्तस्यग्रन्थस्यवास्तवार्थेऽयमर्थः । तद्वाक्यं सीतांनाहरेतिवाक्यं । नजग्राह । तंप्रतिपरुषवाक्यंचाब्रवीत् । तदेवाह—**यदिति** । हेमारीच मयि सीताहरणकामेइत्यर्थः । अयुक्तार्थं अयोग्यार्थं । वाक्यंनिष्फलं । इदंचेद्युक्तमित्याह—**त्वदिति** । मानुषस्यमूर्खस्य विशेषतःपापशीलस्य । द्वितीयार्थेषष्ठी । भेत्तुंशक्यं । रामस्य रामंतु मयाभेत्तुंनशक्यमितियदुक्तं त्वद्वाक्यैः तत्सत्यमेवकरुणाशालितयाप्राकृतस्त्रीवाक्यमपिश्रुत्वा राज्यादिकंत्यक्त्वावनंगतः तस्यसीताभार्यात्ववश्यंमया आहर्तव्येतिसंबन्धः ॥ सीतापहरणाभावे स्वस्यरामहस्तान्मरणंनभविष्यतीतिहृद्गतः ॥ **शि०** प्राणैःप्रियतरेत्यनेन तद्दुःखार्थमेव सीताहरणमितिसूचितं ॥ ६ ॥ **ति०** अथवेति यद्यप्यर्थे । यद्यपिहितं तथापि नाभिनन्देत । त्वंत्वपृष्टएवममाहितमवमर्दसहितं मानहीनंवदसीत्यनुचितमितिभावः ॥ ११ ॥ **शि०** धारयन्तीति । एतेन राजा द्रोहिणोऽवश्यंविनाशयतीतिसूचितं ॥ १३ ॥ इतिचत्वारिंशस्सर्गः ॥ ४० ॥

**[ पा० ]** १ च. छ. ज. ञ. बुद्धिर्मारीचहृदि. २ ङ. झ. ट. विद्यते. ३ ङ. झ. ट. वाउपायंवा. ४ क. ख. ङ. झ. ट. राज्ञो. ५ घ. द्वर्तिं. ६ क. ख. ङ. ट. शुभंहितं. ७ झ. वक्तव्योयुक्तंच. ८ क. घ. च. छ. ज. ञ. सोपमर्दं. ग. सावमानं. ९ ङ. झ. ञ. ट. वाक्यमथवाहितं. ख. वाक्यंमानहारीदं. ग. वाक्यंमानहानंनिशाचर. १० ङ—ट. नन्देत. ११ ङ. झ. ञ. ट. मानार्थी. १२ क. ग. घ. मानवर्जितः. १३ क. ख. ङ—ट. यमस्यवरुणस्यच. १४ ङ. झ. तित्यदा. १५ क. ग. ङ—ट. वदसीदृशं.

गुणदोषौ न पृच्छामि क्षेमं चात्मनि राक्षस ॥ मयोक्तं तव चैतावत्संप्रत्यमितविक्रम ॥ १५ ॥
अस्मिंस्तु त्वं महाकृत्ये साहाय्यं कर्तुमर्हसि ॥ शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १६ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १७ ॥
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥ १८ ॥
त्वां तु मायामृगं दृष्ट्वा काञ्चनं जातविस्मया ॥ आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥ १९ ॥
अपक्रान्ते तु काकुत्स्थे दूरं यात्वा व्युदाहर ॥ हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ॥ २० ॥
तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः ॥ अनुगच्छति संभ्रान्तः सौमित्रिरपि सौहृदात् ॥ २१ ॥
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् ॥ आनयिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥ २२ ॥
एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस ॥ राज्यस्यार्धं प्रयच्छामि मारीच तव सुव्रत ॥ २३ ॥
गच्छ सौम्य शिवं मार्गं कार्यस्यास्य विवृद्धये ॥ अहं त्वाऽनुगमिष्यामि सरथो दण्डकावनम् ॥ २४ ॥
प्राप्य सीतामयुद्धेन वञ्चयित्वा तु राघवम् ॥ लङ्कां प्रति गमिष्यामि कृतकार्यः सह त्वया ॥ २५ ॥
न चेत्करोषि मारीच हन्मि त्वामहमद्य वै ॥ एतत्कार्यमवश्यं मे बलादपि करिष्यसि ॥
राज्ञो हि प्रतिकूलस्थो न जातु सुखमेधते ॥ २६ ॥

आसाद्य तं जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुध्य ॥
एतद्यथावत्प्रतिगृह्य बुद्ध्या यदत्र पथ्यं कुरु तत्तथा त्वम् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

अज्ञानं । दौरात्म्यात् दौर्जन्यात् ॥ १४ ॥ तर्हि कथं मया वक्तव्यमित्यत्राह—गुणेति । गुणदोषौ आत्मनि क्षेमं च न पृच्छामि किंतु संप्रति मया तव तुभ्यं मयोक्तमेतावत् ॥ १५ ॥ किंतदित्यत्राह—अस्मिन्निति । कृत्ये कार्ये शृण्विति साहाय्ये करणीये यत्कार्यं तद्वचनं तद्विषयवचनं शृणु ॥ १६ ॥ प्रमुखे अग्रे ॥ १७—॥ १८ ॥ किं तस्य प्रयोजनं तत्राह—त्वामिति ॥ १९ ॥ अनुरूपकं स्वार्थे कप्रत्ययः ॥ २० ॥ पदवीं मार्गं ॥ २१ ॥ यथासुखं यत्नंविना ॥ २२—२३ ॥ मार्गं मृगसंबन्धिरूपं । शिवं मनोहरं । गच्छ प्राप्नुहि ॥ २४—२५ ॥ बलादपि करिष्यसि अनिच्छतापि त्वया सर्वथाऽहमेतत्कार्यं कारयिष्यामीत्यर्थः । विपक्षे बाधकमाह—राज्ञ इति ॥ २६ ॥ कार्यकरणाकरणयोर्गुणदोषौ दर्शयति—आसाद्येति । तं रामं । आसाद्य मृगरूपेण प्राप्य । जीवितस्य संशयः दैवाज्जीवितं लभ्येतापि । मद्विरोधे तु जीवितहानिरेव स्यात् । प्रतिगृह्य निश्चित्य । अत्र कार्यद्वये । यत्ते पथ्यं तत्कुरु । मदुक्ताकरणे अवश्यं हननमित्यर्थः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

[ पा० ] १ क. ग. ङ—ट. मयोक्तमपिचैतावत्त्वां. २ क. ग. च. छ. ञ. तद्भवान्कृत्ये. ङ. झ. ट. सभवान्कृत्ये. ३ क. ग. ङ—ट. मर्हति. ४ ग. वचनंमम. ५ क. ख. च. छ. ज. ञ. त्वांहि. ६ क. जानकी. ७ घ—ट. अपक्रान्तेच. ८ क. च. छ. ज. ञ. गत्वाभ्युदाहर. ९ च. छ. ज. ञ. लक्ष्मणइति. १० च. छ. ज. ञ. प्रतिचोदितः. ११ क. ङ. च. झ. ञ. ट. आहरिष्यामि. १२ क. ख. ग. ङ. झ. ट. प्रदास्यामि. १३ ख. च. छ. ज. ञ. चानु. १४ च. छ. ज. ञ. राघवौ. १५ ङ. झ. ट. नोचेत्. १६ ङ. झ. ट. राज्ञोविप्रति. १७ ङ. झ. ट. त्परिगण्य. ग. त्प्रतिगम्य. क. च. छ. ज. ञ. त्परिगृह्य. १८ ख. यद्रोचतेतत्कुरुमाचिरेण.

# एकचत्वारिंशः सर्गः ॥ ४१ ॥

मारीचेनरावणंप्रतिपुनर्वैयात्यात्परुषभाषणैरुपालंभपूर्वकंसीताहरणस्यमहानर्थहेतुत्वोक्त्यातंप्रतिपरिशोचनम् ॥ १ ॥

आज्ञप्तो[1]ऽराजवद्वाक्यं प्रतिकूलं निशाचरः ॥ अब्रवीत्[2]परुषं वाक्यं मारीचो[3] राक्षसाधिपम् ॥ १ ॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा ॥ सपुत्रस्य[4] सराष्ट्रस्य[5] सामात्यस्य निशाचर ॥ २ ॥
कस्त्वया सुखिना राजन्नाभिनन्दति पापकृत्[6] ॥ केनेदमुपदिष्टं ते मृत्युद्वारमुपायतः[7] ॥ ३ ॥
शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचराः ॥ इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥ ४ ॥
केनेदमुपदिष्टं ते क्षुद्रेणाहितवादिना[8] ॥ यस्त्वामिच्छति नश्यन्तं स्वकृतेन निशाचर ॥ ५ ॥
वध्याः खलु न हन्यन्ते[9] सचिवास्तव रावण ॥ ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ६ ॥
अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः[10] ॥ निग्राह्यः सर्वथा सद्भिर्न[11] निग्राह्यो निगृह्यसे ॥७॥
धर्ममर्थं च कामं च यशश्च जयतां वर ॥ स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर ॥ ८ ॥
विपर्यये तु तत्सर्वं व्यर्थं भवति रावण ॥ व्यसनं स्वामिवैगुण्यात्प्राप्नुवन्तीतरे जनाः ॥ ९ ॥
राजमूलो हि धर्मश्च जयश्च[12] जयतां वर ॥ तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १० ॥
राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर ॥ न[13] चापि प्रतिकूलेन नाविनीतेन राक्षस ॥ ११ ॥
ये तीक्ष्णमन्त्राः सचिवा भज्यन्ते सह तेन वै ॥ विषमे तुरगाः शीघ्रा मन्दसारथयो यथा ॥१२॥

येन सर्वात्मना वर्ज्यं प्रातिकूल्यं हितैषिणाम् । सर्वलोकानुकूलं तमाश्रये रघुनायकम् ॥ अराजवत् यदा रामप्रातिकूल्ये प्रवृत्तस्तदैव राजत्वं गतमिति मुनेराशयः । यद्वा राजवत् राजार्हं । "तदर्हं" इत्यर्हार्थे वतिः । यद्वा राजवदिति पूर्वसर्गोक्तमौद्धत्यं लक्ष्यते । वाक्यं वाक्यार्थानुष्ठानं मृगरूपमासाद्य त्वया गन्तव्यमित्येवंरूपं प्रतीत्यर्थः । यद्वा प्रतिकूलंवाक्यं आज्ञप्तः चोदितः उक्त इत्यर्थः ॥ १ ॥ विनाशः विनाशोपायः ॥ २ ॥ सुखिना त्वया अवस्थानमिति शेषः । मृत्युद्वारं मृत्युद्वारतुल्यमिदं कार्यं । उपायतः व्याजेन ॥ ३ ॥ बलीयसा रामेण उपरुद्धं आक्रान्तं । अतएव विनश्यन्तं त्वामिच्छन्ति त्वद्विनाशं रामविरोधमुखेनेच्छन्तीत्यर्थः ॥ ४ ॥ न केवलं शत्रवः तत्रापि क्षुद्रा एवेदं कार्यमिच्छन्तीत्याह—केनेति । स्वकृतेन त्वत्कृताकृत्येन ॥ ५ ॥ ये उत्पथं लोकशास्त्रविरुद्धमार्गं । आरूढं प्रविष्टं त्वां न निगृह्णन्ति तस्मान्मार्गान्न निवर्तयन्ति । ते सचिवाः वध्याः वधार्हाः ॥ ६ ॥ एतदुपयुक्तत्वेन सचिवकर्तव्यं दर्शयन् प्रकृते तदभावं चतुर्थपादेनाह—अमात्यैरिति । कापथं कुमार्गं । निग्राह्यः निवर्तनीयः ॥ ७ ॥ स्वामिप्रसादात् स्वामिनः प्रसन्नभावात् स्वामिसाद्गुण्यादित्यर्थः ॥ ८ ॥ विपर्यये स्वामिवैगुण्ये । स्वामिवैगुण्यान्न केवलममात्या एव नश्यन्ति किंतु तदितरेपि जना इत्याह—व्यसनमिति ॥ ९ ॥ उक्तमर्थमुपसंहरति—तस्मादिति ॥ १० ॥ तीक्ष्णेन क्रूरदण्डेन । प्रतिकूलेन प्रजाविरुद्धेन । अविनीतेन इन्द्रियजयरहितेन । "विनयो हीन्द्रियजयः" इति कामन्दकः ॥ ११ ॥ तीक्ष्णमन्त्राः तीक्ष्णोपायप्रयोक्तारः । तेन स्वमन्त्रग्राहिणाराज्ञा सह । विषमे निम्नोन्नतप्रदेशे । शीघ्रगास्तुरगाः मन्दसारथयः अपटुसारथयः सन्तः । यथा सारथिना सह नश्यन्ति

ती० यद्वा राजवदितिशब्देन पूर्वसर्गोक्तरावणगतमौद्धत्यंलक्ष्यते । तदस्मिन्वाक्ये प्रवर्तकत्वेनास्तीतिराजवदितियोज्यं । स० राज्ञातुल्यंराजवत् भयाभावाद्रावणोयथाऽवदत्तथैवाब्रवीदितिभावः । ति० मृत्योर्निश्शङ्कोमारीचः । परुषं शब्दतोऽर्थतश्च । वाक्यमब्रवीत् ॥ १ ॥ स० विनाशः विनाशहेतुर्व्यापारः ॥ २ ॥ स० पूर्वमुत्तरत्रचकेनेदमित्येकवचननिर्देशेपि शत्रवइतिबहुवचनं दुर्बुद्धिप्रवर्तकानांनाशयोग्यानांबहुलात्संभवति ॥ ४ ॥ शि० सः कापथमाश्रितः अतएवनिग्राह्यस्त्वं नगृह्यसे ग्राह्यत्वेननस्वीक्रियसे ॥ ७ ॥

[पा०] १ ङ. झ. ट. आज्ञप्तोरावणेनेत्थंप्रतिकूलंचराजवत्. २ छ. त्सरुषं. ३ ङ. झ. ट. निश्शङ्को. ४ क. च. ज. ञ. सपुरस्य. ५ ङ. झ. ट. सराज्यस्य. ६ च. छ. ञ. निन्दितः. ७ क. ख. मपावृतं. ८ ङ. झ. ट. बुद्धिना. ९ क—ट. वध्यन्ते. १० क. ख. च. छ. ज. ञ. कुपथं. ११ ङ. झ. ट. सद्भिस्सनिग्राह्योनगृह्यसे. १२ क. ग. ङ.—ट. यशश्च. १३ च. ज—ट. नचाति.

बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः ॥ परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ १३ ॥
स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण ॥ रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ १४ ॥
अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः ॥ येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ १५ ॥
तदिदं काकतालीयं घोरमासादितं मया ॥ अत्रैव शोचनीयस्त्वं ससैन्यो विनशिष्यसि ॥ १६ ॥
मां निहत्य तु रामश्च नचिरात्त्वां वधिष्यति ॥ अनेन कृतकृत्योस्मि म्रिये यदरिणा हतः ॥ १७ ॥
दर्शनादेव रामस्य हतं मामुपधारय ॥ आत्मानं च हतं विद्धि हृत्वा सीतां सबान्धवम् ॥ १८ ॥
आनयिष्यसि चेत्सीतामाश्रमात्सहितो मया ॥ नैव त्वमसि नाहं च नैवं लङ्का न राक्षसाः ॥ १९ ॥

निवार्यमाणस्तु मया हितैषिणा न मृष्यसे वाक्यमिदं निशाचर ॥
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

तथेत्यर्थः ॥ १२ ॥ उत्तरश्लोके वक्ष्यमाणस्य सामान्यन्यायं दर्शयति—बहव इति । साधवो धर्मज्ञाः । युक्ताः नीतिमार्गनिष्ठाः । धर्मं अनुष्ठिताः अनुष्ठितवन्तः । "गत्यर्थाकर्मक—" इत्यादिना कर्तरि क्तः । सपरिच्छदाः सपरिवाराः ॥ १३ ॥ गोमायुना क्रोष्ट्रा । सहि मेषघातुक इति प्रसिद्धिः ॥ १४ ॥ कर्कशः क्रूरबुद्धिः ॥ १५ ॥ काकतालीयं यादृच्छिकं । घोरं भयंकरं इदं कृत्यं मया आसादितं ततो नाहं शोच्यः । नहि प्रमादविपन्नः शोच्य इति भावः । यद्वा ससैन्यस्त्वं विनशिष्यसीत्यत्रैव कृत्ये त्वं मे शोचनीयः बुद्धिपूर्वकारी त्वमेव हि शोच्य इति भावः । यद्वा ससैन्यो विनशिष्यसीति यत् तदिदं काकतालीयं घोरं कार्यं त्वया आसादितं । अत्रैव मया त्वं शोचनीयः हन्त दैवान्महाननर्थो राज्ञ उपस्थित इति शोचामीत्यर्थः ॥ १६ ॥ त्वयि विद्यमाने मम का हानिरित्यत्राह—मामिति । नचिरात् क्षणेनैव । अहं न शोचनीय इत्यत्र हेतुमाह—अनेनेति । तवारिणा रामेण हतो म्रिये इति यत् अनेन हेतुना कृतकृत्योस्मि विश्वामित्रयागसंरक्षणप्रभृतिखरादिवधान्तातिमानुषचारित्रानुस्मृतिकृतासाधारणमहिमस्फूर्त्या राघवं परमपुरुषं निश्चितवतो मम तत्करप्रापितमरणस्य परमपुरुषार्थत्वादितिभावः । तथोक्तं नृसिंहपुराणे "रामादपि हि मर्तव्यं मर्तव्यं रावणादपि । उभयोरपि मर्तव्ये वरं रामान्न रावणात्" इति ॥ यद्वा त्वत्तो निरुपाधिकवधाच्छत्रुहस्ताद्वधो निःश्रेयसकर इति भावः ॥ १७—१९ ॥ उक्तमर्थं न्यायप्रदर्शनेन प्रतिपादयति—निवार्यमाण इति । हिर्हेतौ । यस्मात् गतायुषो नराः हितं न गृह्णन्ति तस्माद्वाक्यमिदं न मृष्यसे न सहसे । गतायुष्कत्वाद्धितं न गृह्णासीत्यर्थः । परेतकल्पाः आसन्नमरणाः । ईषदसमाप्तौ कल्पप्प्रत्ययः ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

ति० राजतो बलान्मरणापेक्षया रणेशत्रुतोमृत्योःस्वर्गदत्वादाद्यमृत्योरपमृत्युत्वेनदुर्मरणत्वेनशास्त्रेउक्तेः राज्ञामारितस्य शौचोदकदानाद्यभावश्रवणाद्रामतोमरणेन कृतकृत्योहमितिव्यङ्ग्यं । ईदृशंज्ञानंचास्य तपसायोगेनचशुद्धचित्तत्वादितिबोध्यं ॥ १७ ॥ इत्येकचत्वारिंशस्सर्गः ॥ ४१ ॥

[ पा० ] १ ख. घ—ट. युक्तधर्मं. २ ग. ङ. छ. झ. ञ. ट. मृगाः. ३ क. घ. च. छ. ज. ञ. अत्रकिं. ङ. झ. ट. अत्रत्वंशोचनीयोसि. ४ घ. ङ. छ. झ. ञ. ट. रामोसावचिरात्. ५ ङ. झ. चाप्यरिणा. ६ घ. मांविद्धिरावण. ङ. झ. ट. मामवधारय. ७ घ. त्वमपि. ८ ङ. झ. ञ. ट. नाहंवै. ९ ख. नापि.

# द्विचत्वारिंशः सर्गः ॥ ४२ ॥

मारीचेनकृच्छ्राद्रावणनिदेशाभ्युपगमेनतेनसहरथाधिरोहणेनदण्डकारण्येरामाश्रमसमीपंप्रत्यागमनम् ॥ १ ॥ तथारथादवरुह्यरावणचोदनयामायया विचित्रमृगरूपपरिग्रहेणरामाश्रमद्वारिविक्रीडनम् ॥ २ ॥ कविनाचित्रमृगविहाराकाररामणीयकवर्णनम् ॥ ३ ॥ आश्रमान्निर्गत्यकुसुमान्यवचिन्वन्त्यासीतयाऽद्भुततरंविहरमाणमायामृगविलोकनम् ॥ ४ ॥

एवमुक्त्वा तु वचनं मारीचो रावणं ततः ॥ गच्छावेत्यब्रवीद्दीनो भयाद्रात्रिंचरप्रभोः ॥ १ ॥
दृष्टश्चाहं पुनस्तेन शरचापासिधारिणा ॥ मद्वधोद्यतशस्त्रेण विनष्टं जीवितं च मे ॥ २ ॥
न हि रामं पराक्रम्य जीवन्प्रतिनिवर्तते ॥ वर्तते प्रतिरूपोसौ यमदण्डहतस्य ते ॥ ३ ॥
किंतु शक्यं मया कर्तुमेवं त्वयि दुरात्मनि ॥ एष गच्छाम्यहं तात स्वस्ति तेऽस्तु निशाचर ॥ ४ ॥
प्रहृष्टस्त्वभवत्तेन वचनेन स रावणः ॥ परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ॥ ५ ॥
एतच्छौण्डीर्ययुक्तं ते मच्छन्दादिव भाषितम् ॥ इदानीमसि मारीचः पूर्वमन्यो निशाचरः ॥ ६ ॥
आरुह्यतामयं शीघ्रं रथो रत्नविभूषितः ॥ मया सह तथा युक्तः पिशाचवदनैः खरैः ॥ ७ ॥
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥ तां शून्ये प्रसभं सीतामानयिष्यामि मैथिलीम् ॥ ८ ॥
ततो रावणमारीचौ विमानमिव तं रथम् ॥ आरुह्य ययतुः शीघ्रं तस्मादाश्रममण्डलात् ॥ ९ ॥
तथैव तत्र पश्यन्तौ पत्तनानि वनानि च ॥ गिरींश्च सरितः सर्वा राष्ट्राणि नगराणि च ॥ १० ॥
समेत्य दण्डकारण्यं राघवस्याश्रमं ततः ॥ ददर्श सहमारीचो रावणो राक्षसाधिपः ॥ ११ ॥

क्षणं क्षणार्धमपि वा वियोगो यस्य दुःखदः । तमहं शिरसा वन्दे जानकीप्राणवल्लभम् ॥ भयात् रावणादधुनैव वधो भविष्यतीति भयात् ॥ १ ॥ दीन इत्युक्तं दौस्थ्यमुपपादयति—दृष्ट इत्यादिना । यद्यहं तेन दृष्टः तदा मे जीवितं विनष्टमित्यन्वयः ॥ २ ॥ यमदण्डहतस्य ते प्रतिरूपः सदृशः । असौ जनो वर्तते त्वमिवाहमपि यमदण्डहत इत्यर्थः ॥३—४ ॥ सुसंश्लिष्टं दृढं ॥ ५ ॥ शौण्डीर्यं वीरत्वं । "कृशृपृकटिपटिशौण्डिभ्यईरन्" इत्यौणादिकसूत्रेण शौडिगर्वे इत्यस्मादीरन्प्रत्ययः । "शौण्डिरोवीरः" इति वृत्तिकारः । "शौण्डीरस्त्यागिनीरयोः" इति निघण्टुः । तत्कर्म तद्भावो वा शौण्डीर्यं । गुणवचनत्वात् ष्यञ् । शौण्डीर्ययुक्तमेतत्ते भाषितं मच्छन्दादिव मदभिप्रायादिव । भाषितं मत्सदृशं भाषितमित्यर्थः । पूर्वमन्यो यः कश्चन निशाचरोसि विक्लबभाषणात् । इदानींमारीचोसि मारीच इति लोकप्रसिद्धनामधेयानुरूपव्यापारोसि । स्वप्रकृतिं प्राप्तोसीत्यर्थः ॥ ६ ॥ तथेति समुच्चये । खरैर्युक्तो रत्नविभूषितश्चेत्यर्थः ॥ ७—८ ॥ तस्मात् मारीचीयात् ॥ ९ ॥ तथैव रथरूढावेव । सहैव स्थितावित्यर्थः । पत्तनानि नगरविशेषान् । नगाः वृक्षाः सन्त्येष्विति नगराणि उद्यानाकीर्णपुराणीत्यर्थः । "नगपांसुपाण्डुभ्यश्च" इति मत्वर्थीयो रप्रत्ययः । नगरपत्तनादिलक्षणमुक्तं वास्तुशास्त्रे—"ग्रामश्च नगरं चैव पत्तनं खर्वटं पुरम् । खेटकं कुसुमं चैव शिबिरं राजवासिकम् । सेनामुखमितित्वेवं दशधा कीर्तितं बुधैः । विप्राणां च सभृत्यानां वासो ग्राम इतीरितः । स एव विप्रैराकीर्णस्त्वग्रहार इति स्मृतः । कुटुम्बिभेदैरेकोनत्रिंशद्भिश्च समन्वितः । अनेकनारीसंबद्धं नानाशिल्पिजनैर्वृतम् । क्रयविक्रयकैः कीर्णं सर्वदेवैः समन्वितम् । नगरं त्विति विख्यातं पत्तनं शृणु साम्प्रतम् । द्वीपान्तरागतद्रव्यक्रयविक्रयकैर्युतम् । पत्तनं त्वब्धितीरे स्यात्तयोर्मिश्रं

स० यमदण्डहतस्य यमदण्डेनैष्यद्धननस्य । प्रतिरूपः योग्यः ॥ ३ ॥ ति० मच्छन्दवशवर्तिनः मदभिप्रायवशवर्तिनः ॥ ६ ॥ ति० खगः आकाशगामी रथः ॥ ७ ॥

[ पा० ] १ क. ख. ग. ङ—ट. परुषं. २ क. च. छ. ज. ञ. तदा. ३ ङ. झ. ट. निहतं. ४ झ. ट. किंतुकर्तुंमयाशक्यमेवं. ५ ख. ग. ङ—ट. राक्षसः. ६ झ. ञ. ट. मच्छन्दवशवर्तिनः. ७ क. घ—ट. खगो. ८ क. ख. ग. ङ—ट. रथो. ९ क. ख. घ. जानकीं. १० घ. विविधानिच.

अवतीर्य रथात्तस्मात्ततः काञ्चनभूषणात् ॥ हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् ॥ १२ ॥
एतद्रामाश्रमपदं दृश्यते कदलीवृतम् ॥ क्रियतां तत्सखे शीघ्रं यदर्थं वयमागताः ॥ १३ ॥
स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा ॥ मृगो भूत्वाऽऽश्रमद्वारि रामस्य विचचार ह ॥ १४ ॥
स तु रूपं समास्थाय महदद्भुतदर्शनम् ॥ मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः ॥ १५ ॥
रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः ॥ किंचिदभ्युन्नतग्रीव इन्द्रनीलदलाधरः ॥ १६ ॥
कुन्देन्दुवज्रसंकाशमुदरं चास्य भास्वरम् ॥ मधूकनिभपार्श्वश्च पद्मकिञ्जल्कसन्निभः ॥ १७ ॥
वैडूर्यसंकाशखुरस्तनुजङ्घः सुसंहतः ॥ इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं विराजता ॥ १८ ॥
मनोहरः स्निग्धवर्णो रत्नैर्नानाविधैर्वृतः ॥ क्षणेन राक्षसो जातो मृगः परमशोभनः ॥
वनं प्रज्वलयन्रम्यं रामाश्रमपदं च तत् ॥ १९ ॥
मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः ॥ प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् ॥
विचरन्गच्छते तस्माच्छाद्वलानि समन्ततः ॥ २० ॥
रूप्यैर्बिन्दुशतैश्चित्रो भूत्वा स प्रियदर्शनः ॥ विटपीनां किसलयान्भङ्क्त्वादन्विचचार ह ॥ २१ ॥

तु खर्वटम् । क्रयविक्रयकैर्युक्तं नानाजातिसमन्वितम् । तन्तुवायसमायुक्तं तत्पुरं त्विति कथ्यते । एतैरधिष्ठितं यत्तत्खेटकं परिकीर्तितम् । तेषामेकान्तरेष्वेव वासः कुसुममुच्यते—" इत्यादिना ॥ १०—११ ॥ हस्ते गृहीत्वेत्यनेनावश्यकत्वं द्योत्यते ॥ १२ ॥ यदर्थं यत्कार्यार्थं । तत् कार्यं । क्रियतां आगमप्रयोजननिर्वाहकं मृगरूपं भजस्वेत्यर्थः ॥ १३—१४ ॥ संग्रहेणोक्तं विवृणोति—स त्वित्यादिना । अद्भुतं विस्मयावहं दर्शनं यस्य तत्तथा । मणिप्रवरः इन्द्रनीलः तत्तुल्ये शृङ्गाग्रे यस्य स तथा । क्वचित्सिता—क्वचिदसिता च मुखस्याकृतिः शोभारेखा यस्य । "वर्णोवर्णेन" इति समानाधिकरणसमासः । अवयवद्वारेण सितासितशब्दौ समुदाये वर्तमानौ समानाधिकरणौ भवतः॥१५॥ रक्तपद्मोत्पलमुखः मुखपुटयोरेकोरक्तपद्मवर्णः अन्यस्तूत्पलवर्ण इत्यर्थः । इन्द्रनीलोत्पलश्रवाः श्रवसोरिन्द्रनीलसादृश्यं नीलभास्वररूपेण । उत्पलसादृश्यं रूपेण । इन्द्रनीलदलवदधरो यस्य स तथा ॥ १६ ॥ अस्य मृगरूपस्य कुन्देन्दुवज्रसंकाशमुदरमासीत् । तस्मात्तादृशोदर इति विपरिणमयितव्यं । अन्यथा पूर्वापरविरोधः । मधूकनिभपार्श्वः गुडपुष्पतुल्यवर्णैकपार्श्वः । पार्श्वान्तरे हेमवर्णस्य वक्ष्यमाणत्वात् । पद्मकिञ्जल्कसन्निभः उक्तावयवव्यतिरिक्तपृष्ठसर्वप्रदेशे पद्मकेसरवर्णः ॥ १७ ॥ सुसंहतः सुश्लिष्टसंधिबन्धः । ऊर्ध्वं पुच्छोर्ध्वपार्श्वे । इन्द्रायुधसवर्णेन इन्द्रधनुर्वन्नानावर्णेन । पुच्छेनोपलक्षितः ॥ १८ ॥ स्निग्धवर्ण इति पूर्वोक्तसर्ववर्णानां स्निग्धत्वं विशेषणं । रत्नैः रत्नाकारबिन्दुभिः । उपसंहरति—क्षणेनेति । प्रज्वलयन् प्रकाशयन् । मृगो जात इति पूर्वेणान्वयः ॥ १९ ॥ मनोहरमित्यादिसार्धश्लोक एकान्वयः । धातुवर्णः । शाद्वलानि शादाः बालतृणानि "शादोजम्बालशष्पयोः" इत्यमरः । तद्वन्ति स्थलानि शाद्वलानि । "नडशादाड्ड्वलच्" इतिड्वलच्प्रत्ययः । विचरन् भक्षयन् । चर गतिभक्षणयोः । गच्छते गच्छति ॥ २० ॥ विटपीनामिति दीर्घश्छान्दसः । किस-

स० वयमितिबहुवचनं " अस्मदोद्वयोश्च " इतिसंभवति । विधेयविशेषणत्वात्सविशेषणत्वप्रयुक्तप्रतिषेधाभावश्च ॥ १३ ॥
कतक० मणिशब्दः केवलइन्द्रनीले इतिकविसमयः ॥ १५ ॥

[ पा० ] १ ख. तप्तकाञ्चन. २ क. ग. एतत्तदाश्रम. ३ च. ज. ञ. ट. रावणस्यवचः. ४ ख. रत्ननीलोत्पलमुखः. ५ ख. नीलोपम. ६ ङ. झ. दत्युन्नत. ७ क. ख. ङ—ट. निभोदरः. ग. घ. तलोदरः. ८ इदमर्धं क—ट. पुस्तकेषुनदृश्यते. ९ क. मयूरनिभपार्श्वश्च. ख. मयूरनिभपार्श्वोयं. १० ङ. झ. ट. कञ्जकिञ्जल्क. ११ ख. ग. विचरंश्चवनंसर्वंशाद्वलानि. १२ क. च. छ. ज. ञ. सम्यक्छाद्वलानि. ङ. झ. ट. शष्पंशाद्वलानि. १३ ङ—ट. रौप्यैर्बिन्दुशतैः क. ख. रूप्यबिन्दुशतैः. १४ क. ख. ग. ङ—ज. ञ. भूत्वाच. १५ क. ख. ग. ङ.—ट. प्रियनन्दनः. १६ ङ. झ. ट. भक्षयन्विचचार.

कदलीगृहकं गत्वा कर्णिकारानितस्ततः ॥ समाश्रयन्मन्दगतिः सीतासंदर्शनं तथा ॥ २२ ॥
राजीवचित्रपृष्ठः स विरराज महामृगः ॥ रामाश्रमपदाभ्याशे विचचार यथासुखम् ॥ २३ ॥
पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः ॥ गत्वा मुहूर्तं त्वरया पुनः प्रतिनिवर्तते ॥ २४ ॥
विक्रीडंश्च क्वचिद्भूमौ पुनरेव निषीदति ॥ आश्रमद्वारमागम्य मृगयूथानि गच्छति
मृगयूथैरनुगतः पुनरेव निवर्तते ॥ २५ ॥
सीतादर्शनमाकाङ्क्षन्राक्षसो मृगतां गतः ॥ परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् ॥
[ समीपे मृगयूथस्य विस्मितानि विशेषतः ] ॥ २६ ॥
समुद्वीक्ष्य च तं सर्वे मृगा ह्यन्ये वनेचराः ॥ उपागम्य समाघ्राय विद्रवन्ति दिशो दश ॥ २७ ॥
राक्षसः सोपि तान्वन्यान्मृगान्मृगवधे रतः ॥ प्रच्छादनार्थं भावस्य न भक्षयति संस्पृशन् ॥२८॥
तस्मिन्नेव ततः काले वैदेही शुभलोचना ॥ कुसुमापचयव्यग्रा पादपानभ्यवर्तत ॥ २९ ॥
कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा ॥ कुसुमान्यपचिन्वन्ती चचार रुचिरानना ॥ ३० ॥
अनर्हाऽरण्यवासस्य सा तं रत्नमयं मृगम् ॥ मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ॥ ३१ ॥
सा तं रुचिरदन्तोष्ठी रूप्यधातुतनूरुहम् ॥ विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत ॥ ३२ ॥

लयान् पल्लवान् । पुंल्लिङ्गत्वमार्षं ॥ २१ ॥ कदलीगृहकं कृत्रिमकदलीमयगृहं । तदनन्तरं कर्णिकारान् गत्वा ततः सीता संदृश्यतेऽस्मिन्निति सीतासंदर्शनं अधिकरणे ल्युट् । सीतासंदर्शनयोग्यस्थानमित्यर्थः । तथेति समुच्चये । तदपि गत्वा मन्दगतिः सन् इतस्ततः समाश्रयत् ॥ २२ ॥ राजीवचित्रपृष्ठः राजीवकेसरवदाश्चर्यकरपृष्ठदेशः । चित्रत्वं पूर्वस्माद्विशेषः । रामाश्रमपदाभ्याशे रामाश्रमस्थानसमीपे ॥ २३ ॥ पुनर्गत्वेति पुनर्निवृत्तश्चेत्यन्वयः । निवृत्य गमनमुक्त्वा गत्वानिवर्तनमाह—गत्वेति ॥ २४ ॥ एवं गमनागमनाभ्यां विक्रीडन्सन् पुनः क्वचित्तूष्णीं निषीदति ॥ २५ ॥ विनिष्पतन् संचरन् ॥ २६ ॥ समाघ्रायेति घ्राणेन विशेषं जानन्ति तिर्यञ्च इति प्रसिद्धिः ॥२७॥ भावस्य क्रौर्यस्य । प्रच्छादनार्थं मृगवधे रतोपि मृगान्न भक्षयति । किंतु संस्पृशन्नास्ते ॥ २८ ॥ ततः आश्रमात् । अभ्यवर्ततेत्यन्वयः ॥ २९ ॥ मदिरं आनन्दजनकं ईक्षणं यस्याः सा मदिरेक्षणा । अनेन रुचिराननेत्यनेन च वक्ष्यमाणकार्योपयोग्युल्लासो द्योत्यते ॥ ३० ॥ अरण्यवासस्यानर्हेत्यनेन सन्निहितव्रतसमाप्तिकालत्वकथनान्मृगग्रहणत्वरातिशयो द्योत्यते । रत्नमयं श्रेष्ठभूतं । स्वार्थे मयट् । "रत्नं स्वजातौ श्रेष्ठेपि" इत्यमरः । मुक्तामणिशब्देन तत्तुल्यबिन्दुमत्त्वमुक्तं ॥ ३१ ॥ रुचिरदन्तोष्ठीत्यनेन कुतुकानुभाव उक्तः । रूप्यं रजतं धातवः ताम्रगैरिकादयः तत्तुल्यतनूरुहं । "तनूरुहं रोम लोम" इत्यमरः

ति० कदलीगृहं कदलीवाटिकां कर्णिकारान् तद्वनंच गत्वा त्यक्त्वा । सीतासंदर्शनमपेक्ष्य इतस्ततोमन्दगतिंसमाश्रयन्विचचार विरराजच ॥ २२—२३ ॥ ति० अपचयः ग्रहणं । अत्राशोकचूतकुसुमानामपचयोक्त्या शिशिरान्तकालोयं । "गन्धवान्सुरभिर्मासो जातपुष्पफलद्रुमः" इति "संतापयतिसौमित्रे क्रूरश्चैत्रवनानिलः" इतिच पंपातीरेरामोक्तेश्च । किंच अग्रे द्वादशमासोत्तरंयद्येषा मां नाङ्गीकरोतितदैनांहन्मीतिरावणप्रतिज्ञा । ततोहनुमद्दर्शनकालेच तंप्रतिसीतावाक्यं "वर्ततेदशमो मासोद्वौतुशेषौप्लवङ्गम" इतिसंगच्छते । माघशुक्लाष्टम्यांहरणेहि मार्गशुक्लाष्टम्यां ततोऽर्वागेववा दशमसमाप्त्या तस्यवर्तमानत्वोक्तिरसंगतैवस्यात् । तच्छुक्लपक्षान्तेहनूमतस्तद्दर्शनात् ॥ ३० ॥

[ पा० ] १ झ. न्मन्दगतिं. २ च. छ. ज. ञ. तदा. ङ. झ. ट. ततः. ३ क. ङ.—ज. ञ. पृष्ठश्च. ४ च. छ. ज. मृगोत्तमः. ५ क—ट. पुनर्भूमौ. ६ ख. घ. मण्डलान्यभिनिष्पतन्. ७ इदमर्धं च. छ. ज. पाठेषुदृश्यते. ८ ङ—ट. उपगम्य. ९ ङ—ट. कुसुमापचये. १० झ. ञ. ट. नत्यवर्तत. ११ ङ. झ. ट. अनर्हावनवासस्य. १२ ख. रत्नविभूषितं. १३ ङ. झ. ट. तंवै. ख. तंसा. १४ ख. झ. रुचिरदन्तोष्ठं.

स च तां रामदयितां पश्यन्मायामयो मृगः ॥ विचचार पुनश्चित्रं दीपयन्निव तद्वनम् ॥ ३३ ॥
अदृष्टपूर्वं[2] तं दृष्ट्वा नानारत्नमयं मृगम् ॥ विस्मयं परमं सीता जगाम जनकात्मजा ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

सीतयाहर्षादाह्वानेनरामलक्ष्मणाभ्यांमायामृगप्रदर्शनम् ॥ १ ॥ लक्ष्मणेनरामंप्रतिमृगस्यरत्नमयत्वासंभवरूपहेतूक्त्यामारीचमायामयत्वाभिधानेपिसीतयातन्निवारणपूर्वकंरामंप्रतिमृगेस्वस्योत्कण्ठाविष्करणेनतदानयनप्रार्थना ॥ २ ॥ रामेणलक्ष्मणंप्रतिमृगस्यमारीचत्वपक्षेपिअगस्त्येनवातापेरिवस्वेनतस्यावश्यंहन्तव्यत्वोक्त्यातद्धननेनतदीयचर्मानयनप्रतिज्ञानपूर्वकंतावत्सीतारक्षणचोदना ॥ ३ ॥

सा तं संप्रेक्ष्य सुश्रोणी कुसुमान्यपचिन्वती[3] ॥ हैमराजतवर्णाभ्यां[4] पार्श्वाभ्यामुपशोभितम् ॥ १ ॥
प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी ॥ भर्तारमभिचक्रन्द लक्ष्मणं[5] चापि[6] सायुधम् ॥ २ ॥
[ आहूयाहूय[7] च पुनस्तं मृगं साधु वीक्षते ॥ आगच्छागच्छ शीघ्रं वै आर्यपुत्र सहानुजः ] ॥ ३ ॥
तयाऽऽहूतौ[8] नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ ॥ वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ॥ ४ ॥
शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो राममब्रवीत्[9] ॥ तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ॥ ५ ॥
चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने ॥ अनेन निहता राजन्[10]राजानः कामरूपिणा[11] ॥ ६ ॥
अस्य[12] मायाविदो[13] माया मृगरूपमिदं कृतम् ॥ भानुमत्पुरुषव्याघ्र[14] गन्धर्वपुरसन्निभम् ॥ ७ ॥
मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव ॥ जगत्यां जगतीनाथ मायैषा हि न संशयः ॥ ८ ॥
एवं ब्रुवाणं काकुत्स्थं[15] प्रतिवार्य[16] शुचिस्मिता ॥ उवाच सीता संहृष्टा चर्मणा[17] हृतचेतना[18] ॥ ९ ॥

॥ ३२ ॥ दीपयन् प्रकाशयन् ॥ ३३—३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

सीतायास्त्वेकनाथायाः पूरयिष्यन्मनोरथम् । मायामृगं योनुययौ श्रीरामं तमुपास्महे ॥ हैमराजतवर्णाभ्यामित्यनेन द्वयोः पार्श्वयोर्वर्णभेद उच्यते । मृष्टं शुद्धं हाटकं सुवर्णं तस्य वर्णोस्या अस्तीति तथा । " स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकं " इत्यमरः । अभिचक्रन्द उच्चैराह्वयत् । क्रदि आह्वाने रोदने चेति धातुः । सायुधमित्यनेन आयुधेनसहागन्तव्यमित्याहूतवतीति गम्यते ॥ १—५ ॥ मृगयां चरन्तः मृगयार्थं पर्यटन्तो राजानः । अनेन पापेन मृगरूपोपाधिनानिमित्तेन हताः ॥ ६ ॥ मायां वेत्तीति मायावित् अस्य । मायैव मृगरूपंकृतं मृगाकारेण परिणतं । भानुमत् प्रकाशवत् । गन्धर्वपुरं नानाविधविस्मयनीयाकारसंस्थानं क्षणभङ्गुरमभ्रं तत्सन्निभं तद्वद्विस्मयनीयमित्यर्थः ॥ ७ ॥ जगत्यां भूमौ ॥ ८ ॥ काकुत्स्थं प्रतिवार्य निवर्त्य । उवाच राममिति शेषः ।

स० विस्मयंजगाम जगामेव ॥ ३४ ॥ इतिद्विचत्वारिंशस्सर्गः ॥ ४२ ॥
स० हैमंचराजतंच । स्वार्थेऽण् । तयोर्वर्णाविववर्णोययोस्ताभ्यां ॥ १ ॥ चक्रन्देति रोदनार्थेन भाव्यशुभमितिसूचितंकविना ॥ २ ॥ स० अयंमायावीतिज्ञानन्नपि छद्मनावञ्चनेनहृतचेतनेवोवाच ॥ ९ ॥

[पा०] १ क. ङ. झ. ञ. ट. ततस्तत्र. २ क.—ट. दृष्ट्वातं. ३ क.—ट. कुसुमानिविचिन्वती. ४ ङ. छ. झ. ञ. हेमराजत. ५ क. ख. घ. च. भर्तारमपिचाक्रन्दल्लक्ष्मणं. झ. भर्तारमपिचक्रन्द. ६ क—ट. चैव. ७ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ८ ख. ङ. झ. ट. तावाहूतौ. ९ ङ. झ. ट. वाक्यमब्रवीत्. १० क. ख. ङ. झ. ट. रामराजानः. ११ ङ. झ. ट. पापरूपिणा. १२ ग. मन्ये. १३ ख. घ. मायाविनो. १४ घ. सुमतेपुरुष. १५ क. सौमित्रिं. १६ च. छ. ज. ञ. परिवार्य. १७ झ. ञ. ट. छद्मना. क. च. छ. ज. मृगेण. १८ ग. हृतलोचना.

आर्यपुत्राभिरामोसौ मृगो हरति मे[1] मनः ॥ आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ १० ॥
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः ॥ मृगाश्चरन्ति सहिताः [2]सृमराश्चमरास्तथा ॥ ११ ॥
ऋक्षाः पृषतसङ्घाश्च वानराः किन्नरास्तथा ॥ वि[3]चरन्ति महाबाहो रूपश्रेष्ठा [4]मनोहराः ॥ १२ ॥
न [5]चास्य सदृशो राजन्दृष्टपूर्वो[6] [7]मृगः पुरा ॥ तेजसा क्षमया दीप्त्या यथाऽयं मृगसत्तमः ॥ १३ ॥
नानावर्णविचित्राङ्गो [8]रत्नबिन्दुसमाचितः ॥ द्योतयन्वनम[9]व्यग्रं [10]शोभते शशिसन्निभः ॥ १४ ॥
अहो रूपमहो लक्ष्मीः स्वरसंपच्च शोभना ॥ मृगोऽद्भुतो विचि[11]त्राङ्गो हृदयं हरतीव मे ॥ १५ ॥
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव ॥ आश्चर्य[12]भूतं भवति विस्मयं जनयिष्यति ॥ १६ ॥
समाप्तवनवासानां राज्यस्थानां च नः पुनः ॥ [13]अन्तःपुरविभूषार्थो मृग एष भविष्यति ॥ १७ ॥
भरतस्यार्यपुत्रस्य श्वश्रूणां [14]मम च प्रभो ॥ मृगरूपमिदं [15]व्यक्तं विस्मयं जनयिष्यति ॥ १८ ॥
जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ॥ अजिनं नरशार्दूल [16]रुचिरं मे भविष्यति ॥ १९ ॥
निहतस्यास्य सत्त्वस्य जाम्बूनदमयत्वचि ॥ शष्पबृस्यां विनीतायामिच्छाम्यहमुपासितुम् ॥ २० ॥
कामवृत्तमिदं रौद्रं स्त्रीणामसदृशं मतम् ॥ वपुषा त्वस्य सत्त्वस्य विस्मयो जनितो मम ॥ २१ ॥

---

तत्र हेतुःचर्मणेति । हृतचेतना हृतप्रज्ञा ॥ ९ ॥ नो भविष्यति नः भविष्यति । नभविष्यतीत्यपि वाग्दोषः ॥ १० ॥ सहिताः सङ्घीभूताः । सृमराः व्यालमृगाः । " सृमरः स्याद्व्यालमृगः " इति वैजयन्ती । चमराः चामरमृगाः । ऋक्षाः भल्लूकाः । पृषताः बिन्दुमृगाः । किन्नराः मृगविशेषाः ॥ ११—१२ ॥ तेजसा वर्णेन । क्षमया अत्वरया । दीप्त्या शारीरप्रकाशेन । यथाऽयं मृगो दृश्यते तथा तेजआदिभिः अस्य सदृशो मृगो न दृष्टपूर्वः । पुरा भाविकालेपि । न दृश्यत इति शेषः । " स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा " इत्यमरः ॥ १३ ॥ समाचितः व्याप्तः । अव्यग्रं समग्रंयथा तथा शोभते। शशिसन्निभः आनन्दकरत्वेन शशिसाम्यं ॥ १४ ॥ रूपं वर्णः । लक्ष्मीः कान्तिः । उक्तानुवादपूर्वकं मनोहरत्वमाह—मृगइति ।अतो न पूर्वार्धेन गतार्थता ॥ १५ ॥ श्लोकद्वयमेकान्वयं । तवग्रहणं त्वत्कर्तृकग्रहणं । कर्तरि षष्ठी । तदा एष मृगः आश्चर्यभूतं अस्माकं विस्मयावहं सत्त्वं भवति इदानीमिति शेषः। समाप्तवनवासानां अतएव पुनः राज्यस्थानां च नः विस्मयं जनयिष्यति । किंच अन्तःपुरविभूषार्थोपि भविष्यति ॥ १६—१७ ॥ आर्यपुत्रस्य तव । श्वश्रूणां ममश्वश्रूणां चेति योजना । मृगरूपं प्रशस्तमृगः । प्रशंसायां रूपप् प्रत्ययः । मृगस्य रूपं वा ॥ १८ ॥ जीवतः अग्रहणेपि प्रयोजनमाह—जीवन्निति । अजिनं चर्म । रुचिरं प्रियं ॥ १९ ॥ प्रियत्वमेव विवृणोति—निहतस्येति । जाम्बूनदमयत्वचि स्वर्णसदृशत्वचि । शष्पबृस्यां बालतृणैःकृतायांबृस्यां । मध्यमपदलोपिसमासः । " व्रतिनामासनं बृसी " इत्यमरः । तस्यां विनीतायां आस्तृतायां । उक्तरूपत्वचि उपासितुं स्थातुं । इच्छामि त्वयासहेति शेषः ॥ २० ॥ अथ सविनयमाह—कामवृत्तमिति । रौद्रं घोरं । इदं कामवृत्तं भर्तृप्रेरणरूपस्वेच्छाव्यापारः । स्त्रीणां असदृशं अयुक्तं । कैकेयीवत् । तथाप्यस्य सत्त्वस्य तु वपुषा विलक्षणदेहेन । मम विस्मयो जनितः ममात्यन्तं कुतूहलं वर्तते । आनयेति वक्तुमप्ययुक्तं अतः तवापि कुतूहलमस्ति चेत्तथा क्रियतामिति भावः ।

---

ति० नोस्माकं । अयोध्यागमनोत्तरं तत्रसख्यभिप्रायेण बहुवचनं ॥ १० ॥ ति० सृमरचमरौ कृष्णशुक्लपुच्छौ ॥ ११ ॥

[ पा ] १ च. छ. ज. ञ. मन्मनः. २ ग—ट. चमरास्सृमरास्तथा. ३ ङ. झ. ट. विहरन्ति. ४ क. ख. ग. ङ—ट. महाबलाः. ५ ङ. झ. ट. चान्यः. ६ झ. न्दृष्टःपूर्वं. ७ ङ. झ. ट. मृगोमया. ८ ङ. झ. रत्नभूतोममाग्रतः. छ. ट. रत्नबिन्दुसमन्वितः. ९ ग. घ. च. छ. ज. ञ. मव्यग्रः. १० ङ. झ. ट. द्योतते. ११ ग. च. छ. ज. विचित्रोसौ. १२ ख. भूतो. घ. च. ज. रूपं. १३ झ. अन्तःपुरेविभूषार्थो. ङ. ट. अन्तःपुरेपिभूषार्थो. १४ ख. चमम. १५ ङ. झ. ट. दिव्यं. १६ ङ. झ. ट. रुचिरंतु.

तेन काञ्चनरोम्णा तु मणिप्रवरशृङ्गिणा ॥ तरुणादित्यवर्णेन नक्षत्रपथवर्चसा ॥
बभूव राघवस्यापि मनो विस्मयमागतम् ॥ २२ ॥
एवं सीतावचः श्रुत्वा तं दृष्ट्वा मृगमद्भुतम् ॥ लोभितस्तेन रूपेण सीतया च प्रचोदितः ॥
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २३ ॥
पश्य लक्ष्मण वैदेह्याः स्पृहां मृगगतामिमाम् ॥ रूपश्रेष्ठतया ह्येष मृगोऽद्य न भविष्यति ॥ २४ ॥
न वने नन्दनोद्देशे न चैत्ररथसंश्रये ॥ कुतः पृथिव्यां सौमित्रे योऽस्य कश्चित्समो मृगः ॥ २५ ॥
प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः ॥ शोभन्ते मृगमाश्रित्य चित्राः कनकबिन्दुभिः ॥ २६ ॥
पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम् ॥ जिह्वां मुखान्निस्सरन्तीं मेघादिव शतह्रदाम् ॥२७॥
मसारगल्लर्कमुखः शङ्खमुक्तानिभोदरः ॥ कस्य नामाभिरूपोसौ न मनो लोभयेन्मृगः ॥ २८ ॥
कस्य रूपमिदं दृष्ट्वा जाम्बूनदमयं प्रभो ॥ नानारत्नमयं दिव्यं न मनो विस्मयं व्रजेत् ॥
[ किं पुनर्मैथिली सीता बाला नारी न विस्मयेत् ॥ २९ ॥ ]
मांसहेतोरपि मृगान्विहारार्थं च धन्विनः ॥ घ्नन्ति लक्ष्मण राजानो मृगयायां महावने ॥ ३० ॥
धनानि व्यवसायेन विचीयन्ते महावने ॥ धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३१ ॥

अनेन पूर्वमानयेति प्रमादादुक्तस्य क्षमापणं कृतं ॥ २१ ॥ न केवलं स्त्रीपारवश्येन कृतवान् किंतु स्वविस्मयेनापीत्याह—तेनेत्यादिना । मणिप्रवरो नीलरत्नं । काञ्चनवर्णरोमत्वात् बालसूर्यवर्णत्वं । नक्षत्रपथः छायापथः तत्तुल्यवर्चसा। नक्षत्रसदृशबिन्दूपलक्षितत्वात् । आगतं प्राप्तं ॥ २२ ॥ रूपेण मृगेण । "रूपं मृगेपि विज्ञेयं" इतिहलायुधः ॥ २३ ॥ पश्येति । सीता स्पृहायुक्तेतिभावः । तत्र हेतुमाह—रूपेति । मृगेषुश्रेष्ठतयावा एष मृगः एतादृशमृगः । अद्य वनवासे न भविष्यति न सेत्स्यति । दुर्लभ इत्यर्थः ॥ २४ ॥ नकेवलमत्र देशान्तरेपि दुर्लभ इत्याह—न वन इति । नन्दन इत्युद्देशः । कीर्तनं यस्य तस्मिन् वने चैत्ररथसंश्रये चैत्ररथाख्ये वने च । न भविष्यतीत्यनुषज्यते । पृथिव्यां कुतो हेतोर्भविष्यति ॥२५॥ प्रतिलोमाः तिर्यग्भूताः । अनुलोमाः अनुकूलाः । रोमराजयश्च मृगमाश्रित्य दृश्यन्ते । चित्राः आश्चर्यभूताः । कनकबिन्दवः कनकवर्णबिन्दवश्च । मृगमाश्रित्य शोभन्ते ॥ २६ ॥ शतह्रदां तटितं ॥२७॥ मसारः इन्द्रनीलः । गल्लर्कः चषकः । "गल्लर्कश्चानुतर्षश्च तर्षकश्चषकः स्मृतः" इति हलायुधः । इन्द्रनीलनिर्मितचषकाकारमुखसंपुट इत्यर्थः । अभिरूपः सुन्दरः ॥ २८ ॥ रूपं मृगं । जाम्बूनदमयेति स्वार्थे मयट् । नानारत्नमयं नानाबिन्दुप्रचुरं ॥ २९ ॥ मांसहेतोरपि विनोदार्थं च राजानो मृगान् घ्नन्ति । किं पुनरेवंविधविचित्रवस्तुलाभहेतोरिति भावः ॥ ३० ॥ एतन्मृगरूपं महद्धनं एतच्च वन एव संभवति तस्मादिदं व्यवसायेन स्वीकर्तव्यमित्यभिप्रायेणाह—धनानीति। मणिरत्नं मणिश्रेष्ठं सुवर्णं च मणिरत्नसुवर्णे ते येषु स्त इति मणिरत्नसुवर्णिनः। मणयः सुवर्णानि च धातुषु भवन्तीति प्रसिद्धिः । तथाभूता विविधा धातवश्च धनानि करिमस्तकमुक्ताप्रभृतीनि । महावने व्यवसायेन मृगयोद्योगेन । राजभिः विचीयन्ते संगृह्यन्ते । यद्वा धनानि व्यवसायेन मृगयोद्योगेन । महावने विचीयन्ते । ननु कुतो वने

**स०** काञ्चनरूपेणेतिपाठे काञ्चनात्मकेन काञ्चनमृगेणेतिवा । " रूपंमृगेऽपिविज्ञेयं " इतिहलः । नक्षत्रपथवर्चसा नक्षत्रसदृशनानाबिन्दूपलक्षिततयातत्पथवर्चाःतेन ॥ २२ ॥ **ति०** सर्वश्रेष्ठरूपेणहेतुना अद्यैषमृगो नभविष्यति नजीविष्यति । जीवनमस्य नसंभावितमित्यर्थः ॥ **कतक०** प्रायेणमृगत्वमत्र नसंभावितमित्यर्थः ॥ २४ ॥ **ति०** योस्यकश्चित्समोमृगः सः पृथिव्यामस्तीतिकुतस्संभाव्यतइत्यर्थः ॥ **स०** चैत्ररथसंश्रये चैत्ररथाभिन्नस्संश्रयः नानावृक्षाश्रयः कुबेरवनं ॥ २५ ॥

[ **पा०** ] १ ङ. झ. ट. इति. २ ङ—ट. दृष्ट्वाच. ख. दृष्ट्वातु. ३ ग. बालार्काभमुखःशङ्खमुक्तामणिमनोहरः क. ख. घ. मसारगल्वर्क. ४ ख. ग. नामानुरूपः. ङ. छ—ट. नामानिरूप्योसौ. घ. नामातिरूपोसौ. ५ क—ट. मयप्रभं. ६ ग. रम्यं. ७ इदमर्धं क—ट. पुस्तकेषुनदृश्यते. ८ घ. श्चैव.

तत्सारमखिलं नृणां धनं निचयवर्धनम् ॥ मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण ॥ ३२ ॥
अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् ॥ तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्याश्च लक्ष्मण ॥ ३३ ॥
एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि ॥ उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ३४ ॥
न कादली न प्रियकी न प्रवेणी न चाविकी ॥ भवेदेतस्य सदृशी स्पर्शनेनेति मे मतिः ॥ ३५ ॥
एष चैव मृगः श्रीमान्यश्च दिव्यो नभश्चरः ॥ उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ३६ ॥
यदि वाऽयं तथा यन्मां भवेद्वदसि लक्ष्मण ॥ मायैषा राक्षसस्येति कर्तव्योस्य वधो मया ॥ ३७ ॥
एतेन हि नृशंसेन मारीचेनाकृतात्मना ॥ वने विचरता पूर्वं हिंसिता मुनिपुङ्गवाः ॥ ३८ ॥

धनसंग्रहप्रसक्तिरित्यत्राह—धातव इति । यस्मादुक्तरूपा विविधा धातवः सन्ति तस्मादित्यर्थः ॥ ३१ ॥ तेषां धनानां सारं श्रेष्ठभूतं। अखिलं धनं नृणां निचयवर्धनं कोशवर्धनं भवेत् । किमिव शुक्रस्य मनसा चिन्तितं संकल्पितंवस्तुजातम् । तथैवाविर्भूयनिचयवर्धनंयथा । तद्वदित्यर्थः । यद्वा नृणां मनसा चिन्तितं वृथामनोरथकल्पितं सर्वं धनं यथा शुक्रस्य कोशं पूरयति तथेत्यर्थः । तदुक्तमुद्योगपर्वणि । " मनुष्येभ्यः समादत्ते शुक्रश्चिन्तार्जितं धनं " इति । यद्वा नृणां राजादिधनिनां । कोशवर्धनं तत् वन्यं धनं । सारं भवति । जानपदधनादपि वन्यं धनं सारं अतिप्रशस्तंभवति । अपूर्वत्वात् । अतोनिवृत्तवनवासैरस्माभिर्वनादपूर्वधनतया पुरीं नेतुमयं ग्रहीतव्य इति भावः ॥ ३२ ॥ अस्त्विदं अथापिविचार्य कार्यमिति चेत्तत्राह—अर्थीति । अर्थी असन्निहितार्थापेक्षी ।"अर्थाचासन्निहिते" इति इनिप्रत्ययः। सः येन अर्थकृत्येन अर्थकार्येणहेतुना । अविचारयन् संव्रजति सम्यग्गच्छति यद्वस्तुसौन्दर्यजातोपकारलोभेन पुरुषस्तत्साधनेव्यग्रःप्रवर्तते तमेवार्थं प्राहुः । अर्थशास्त्रज्ञाः नीतिशास्त्रज्ञाः । अर्थ्याः अर्थादनपेताश्च । " अर्थ्योभिज्ञार्थशालिनोः " इत्यजयः । "धर्मपथ्यर्थन्यायादनपेते" इतियत्प्रत्ययः । यस्य गुणप्रीतः पुरुषः अभिनिविशते सएवार्थ इति नीतिशास्त्रज्ञा अर्थवन्तश्चाहुः । अयंच तथाविधइतिभावः ॥ ३३ ॥ एवं प्रयत्नसंपाद्यं वस्त्वयमेव मृग इत्यभिप्रायेणाह—एतस्येति । मृगरत्नस्य मृगश्रेष्ठस्य । परार्ध्ये श्लाघ्ये । काञ्चनत्वचि काञ्चनसदृशत्वचि । पुंल्लिङ्गत्वमार्षं ॥ ३४ ॥ परार्ध्यत्वं विवृणोति—नेति । कदल्येव कादली मृगविशेषः । तल्लक्षणमुक्तं वैजयन्त्यां " कदली तु बिले शेते मृदुसूक्ष्मोच्चकर्बुरैः । नीलाग्रैर्लोमभिर्युक्ता सा विंशत्यङ्गुलायता ॥ प्रियकी लोमभिर्युक्ता मृदुश्च मसृणैर्घनैः " इति । प्रवेणी आस्तरणविशेषः मृगविशेषो वा । अविरेव अविकः " अवेः कः " इति स्वार्थे कप्रत्ययः । तस्येयमाविकी तल्लोमनिर्मिताशाटीत्यर्थः । स्पर्शनेन मार्दवेन ॥ ३५ ॥ दिव्यः श्लाघ्यः । नभश्चरो मृगः मृगशीर्षः । दिव्यौ शोभमानौ ॥ ३६ ॥ एवं सीतामतमङ्गीकृत्य प्रवृत्तिरुक्ता। अथ लक्ष्मणमतमङ्गीकृत्याह—यदि वेति । मायैषा राक्षसस्येति यन्मां वदसि तथाऽयं यदि वा भवेत् एवमप्यस्य वधो मया कार्यः ॥ ३७ ॥ हनने हेतुत्वेन

**ति०** तत् वन्यंधनं नृणांसारं अतिप्रशस्तंभवति । शुक्रं ब्रह्म । " सपर्यगाच्छुक्रमकायमव्रणं " इतिश्रुतेः । एवंच शुक्रस्य ब्रह्मलोकंप्राप्तस्य तद्रूपमापन्नस्य मनसाचिन्तितंसर्वं संकल्पमात्रसिद्धंसर्वभोग्यवस्तु यथा सर्वस्मात्सारतरं तद्वत् ॥ **स०** तत् वन्यंधनं नृणां सारं वरेण्यं । तत्रदृष्टान्तमाचष्टे । मनसाचिन्तितं सर्वं तत्वन्यंशुक्रस्यउशनसःयथासारं तथेत्यर्थः ॥ वन्यरसेनैवकूपंनिर्माय मृतजीवनकर्तृत्वाच्छुक्रस्येतिभावः ॥ ३२ ॥ **ति०** अर्थीअर्थापेक्षःपुमान् । येनार्थकृत्येन अर्थनिमित्तेनकर्तव्येन कर्मणा । तत्सौन्दर्यादाक्षिप्तहृदयः अविचारयन्नेवसंव्रजति तत्संपादनार्थंपारवश्येनव्रजतीत्यर्थः । तमेव अर्थ्याः अर्थसंपादनचतुराः । अर्थशास्त्रज्ञाः अर्थं अर्थपदवाच्यमाहुः ॥ ३३ ॥ **ति०** अतोऽविचारितैवात्रप्रवृत्तिरित्याह—**एतस्येति**। अत्रविचारोनकर्तव्यः । एतन्मूलेन महतोर्थस्यसिद्धिरितिगूढतात्पर्यम् ॥ ३४ ॥ **ति०** कदल्याइयंत्वक्कादली । प्रियकस्येयंत्वक्प्रियकी । प्रवेणी अजविशेषसंबन्धिनी । आविकी अविलक् । प्रत्येकंनञुक्तिः सर्वथा सादृश्याभावबोधनाय । अनेन एतदीयत्वचा ॥ **शि०** एतस्य मृगत्वचः । कादली मृगविशेषत्वक् सदृशीन । एतस्येतिसामान्येनपुंसकं । एतच्छब्देनमृगस्यैवपरामर्शे कादल्यादिशब्दैर्मृगीविशेषाणामेवग्रहणेच एतच्छब्दस्यपुँल्लिङ्गत्वमितिदिक् ॥ ३५ ॥ **शि०** उभावेतौ तारामहीमृगौ दिव्यौ क्रीडायोग्यौ । एतेनतयोर्द्वयोरेवपरस्परमुपमानोपमेयभावस्सूचितः ॥ ३६ ॥

**[ पा० ]** १ ख. ग. शुक्रमतंतथा. २ . ख. भवान्वदति. ३. घ. मारीचेनदुरात्मना.

उत्थाय [1]बहवो येन मृगयायां [2]जनाधिपाः ॥ निहताः परमेष्वासास्तस्माद्वध्य[3]स्त्वयं मृगः ॥ ३९ ॥
पुरस्तादिह वातापिः परिभूय तपस्विनः ॥ उदरस्थो द्विजान्हन्ति स्वगर्भोऽश्वतरीमिव ॥ ४० ॥
स कदाचिच्चिरा[4]ल्लोभादाससाद महामुनिम् ॥ अगस्त्यं तेजसा युक्तं [5]भक्षस्तस्य [6]बभूव ह ॥ ४१ ॥
समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्य तम् ॥ उत्स्मयित्वा तु भगवान्वातापिमिदमब्रवीत् ॥ ४२ ॥
त्वयाऽविगण्य वातापे परि[7]भूताः स्वतेजसा ॥ जीवलोके द्विजश्रेष्ठास्तस्मादसि जरां गतः ॥ ४३ ॥
[8]तदेतन्न भवेद्रक्षो वातापिरिव लक्ष्मण ॥ मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् ॥
भवेद्धतोऽयं वातापिरगस्त्येनेव मां गतः ॥ ४४ ॥
इह त्वं भव सन्नद्धो यन्त्रितो रक्ष मैथिलीम् ॥ अस्यामायत्तमस्माकं यत्कृत्यं रघुनन्दन ॥ ४५ ॥
अहमेनं [9]वधिष्यामि ग्रहीष्याम्य[10]पि वा मृगम् ॥ यावद्गच्छामि सौमित्रे मृगमा[11]नयितुं द्रुतम् ॥ ४६ ॥
पश्य लक्ष्मण [12]वैदेहीं मृगत्वचि [13]गतस्पृहाम् ॥ त्वचा प्रधानया ह्येष मृगोऽद्य नभविष्यति ॥ ४७ ॥
अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया ॥ ४८ ॥
यावत्पृषतमेकेन सायकेन निहन्म्यहम् ॥ हत्वैतच्चर्म चादाय शीघ्रमेष्यामि लक्ष्मण ॥ ४९ ॥

---

तदीयदौरात्म्यमाविष्करोति—एतेन हीति । नृशंसेन घातुकेन । अकृतात्मना दुष्टभावेन ॥ ३८ ॥ उत्थाय प्रादुर्भूय ॥ ३९ ॥ पूर्वोक्तमपि वातापिवृत्तान्तं मारीचस्य मायाव्यापारे दृष्टान्तत्वेनाह—पुरस्तादिति । पुरस्तात् पूर्वस्मिन्काले । इह दण्डकारण्ये । अश्वतरो नाम गर्दभादश्वायामुत्पन्न इति वृत्तिकारः । "गोखरोऽश्वतरोमतः" इति हलायुधः । तत्स्वरूपमुक्तं शालिहोत्रीये "खररूक्षस्वरास्तीक्ष्णाः खरशीलाः खराग्रयः" इति । तामश्वतरीं स्वगर्भो यथा हन्ति तथाऽयमपि गर्भस्थो द्विजान् हन्ति । अश्वतरी वृश्चिकेत्यप्याहुः ॥ ४० ॥ भक्षः आहारः ॥ ४१ ॥ समुत्थाने श्राद्धान्ते । तद्रूपं रक्षोरूपं । उत्स्मयित्वा । ईषत्स्मित्वा । ल्यबभाव आर्षः ॥ ४२ ॥ अविगण्य अविचार्य । पापमिति शेषः । जीवलोके भूलोके । जरां जीर्णतां । इति वातापिमब्रवीदिति पूर्वेणान्वयः ॥ ४३ ॥ तदिति रक्षःशब्दाभिप्रायेण नपुंसकत्वं । अतिमन्येत अतिक्रामेत् । मां गत इति अगस्त्यो यथा-अजरूपंवातापिंलोकहितार्थं नाशितवान् तथाऽहमपि मृगरूपमेनंहनिष्यामीत्यर्थः ॥ ४४ ॥ सन्नद्धःधनुःकवचादिसन्नाहयुक्तः । यन्त्रितः व्याक्षेपान्तररहितः । अस्यामिति अस्माकं यत्कृत्यमावश्यकं तत्सर्वमस्यामायत्तं एतद्रक्षणप्रधानमित्यर्थः । एतन्मूलतया रावणवधादिकं कर्तव्यं । इयंहि पूर्वं वेदवतीभावे तथा संकल्पितवतीत्यपि सूचयति ॥ ४५ ॥ यावद्गच्छामि गमिष्यामि । "यावत्पुरानिपातयोः" इति भविष्यदर्थे लट् ॥ ४६ ॥ गतस्पृहां प्राप्तस्पृहां । प्रधानया प्रधानप्रयोजनभूतया । नभविष्यति मरिष्यतीत्यर्थः । अत्र सीताप्रार्थितमेव प्रधानप्रयोजनं अन्यदानुषङ्गिकमित्यर्थः ॥ ४७ ॥ सीतया हेतुभूतया । आश्रमस्थेन ते त्वया । अप्रमत्तेन भाव्यं । आश्रमस्थोऽप्रमत्तः सन्

---

**ति०** अश्वतरी गर्दभादश्वायामुत्पन्नेतितीर्थः । अश्वतरी कर्कटीतिपरे । वृश्चिकइतिकतकः । अत्राद्यव्याख्यैवज्यायसी । तस्या गर्भस्योदरपाटनंविना ननिस्सरणमिति सर्वजनप्रसिद्धेः ॥ ४० ॥ **ति०** अस्माकंयत्कृत्यमावश्यकंकर्तव्यं तदस्यां एतद्रक्षणविषये । आयत्तं स्थितं । तन्मुख्यकृत्ये त्वंसावधानस्तिष्ठ । स्वकर्तव्यमाह—**अहमिति** । अत्रपूर्वश्लोकचतुर्थचरणश्लेषेणअयन्त्रितःयन्त्रणयाहीनः अतियत्नरहितः । सीतांरक्ष । यदस्माकंकृत्यं अवतारग्रहणप्रयोजनं । तदस्यामायत्तं अनयैवसाधनीयमित्यपिसूचितं ॥ ४५ ॥ **ति०** यावद्गच्छामि आनयितुं आनेतुं । तत्रहेतुः **पश्येति** ॥ **शि०** वैदेहींपश्य रक्षेत्यर्थः ॥ ४७ ॥ **ति०** सीतया सहेतिशेषः ॥ ४८ ॥ **शि०** हत्वा मृगंनिहत्य । चर्म तद्विषयकस्पृहां । आदाय छित्वा निवर्त्यैत्यर्थः । अवखण्डनार्थकदोरूपं ॥ ४९ ॥ इतित्रिचत्वारिंशस्सर्गः ॥ ४३ ॥

**[ पा० ]** १ ख. ग. ङ. ञ. बहवोऽनेन. २ क. ख. छ. ञ. नराधिपाः. ३ घ. स्त्वयामृगः. ४ क. ङ. झ. ट. ल्लोकेआससाद. ५ घ. तस्यभक्ष्यो. ६ क. ग. च. ज. ञ. बभूवसः. ७ क. घ. ङ. च. ज.—ट. भूताश्वतेजसा. ग. भूताश्वदेवताः. ८ क. ख. घ. छ. एवंतन्नभवेद्रक्षो. ङ. झ. ट. तद्रक्षोनभवेदेव. च. ज. ञ. एवंतुनभवेद्रक्षो. ९ ग. हनिष्यामि. १० ङ. झ. ट. म्यथवा. ११ ख. मानेतुमुद्धतं. १२ वैदेह्याः. १३ झ. गतां.

प्रदक्षिणेनातिबलेन पक्षिणा जटायुषा बुद्धिमता च लक्ष्मण ॥
भवाप्रमत्तः परिगृह्य मैथिलीं प्रतिक्षणं सर्वत एव शङ्कितः ॥ ५० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रामेणमृगग्रहणायधनुष्पाणिनासतातदनुधावनम् ॥ १ ॥ तथामृगेणमाययागतिवैचित्र्येणात्मप्रलोभनेकोपाच्छरेणतन्मारणम् ॥ २ ॥ म्रियमाणेनमारीचेनमृगशरीरपरित्यागपूर्वकंनिजशरीरपरिग्रहेणरामकण्ठस्वरानुकरणेनहासीतेलक्ष्मणेत्युच्चैराक्रोशनम् ॥३॥ रामेणमारीचाक्रोशनश्रवणेनसीतालक्ष्मणयोर्दुरवस्थासंभावनयासविषादंस्वाश्रमंप्रत्यभिनिवर्तनम् ॥ ४ ॥

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः ॥ बबन्धासिं महातेजा जाम्बूनदमयत्सरुम् ॥ १ ॥
ततस्त्र्यवनतं चापमादायात्मविभूषणम् ॥ आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २ ॥
तं वन्यराजो राजेन्द्रमापतन्तं निरीक्ष्य वै ॥ बभूवान्तर्हितस्त्रासात्पुनः संदर्शनेऽभवत् ॥
बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः ॥ ३ ॥
तं स पश्यति रूपेण द्योतमानमिवाग्रतः ॥ अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिं महावने ॥ ४ ॥
अतिवृत्तमिषोः पाताल्लोभयानं कदाचन ॥ शङ्कितं तु समुद्भ्रान्तमुत्पतन्तमिवाम्बरे ॥ ५ ॥
दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् ॥ छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम् ॥ ६ ॥

---

सीतारक्षणं कुर्वित्यर्थः । पृषतं मृगं ॥ ४८—४९ ॥ प्रदक्षिणेन अत्यन्तसमर्थेन । जटायुषेति सहार्थे तृतीया । "वृद्धो यूना—" इति ज्ञापकात् । मैथिलीं परिगृह्य स्ववशीकृत्य । सर्वतः शङ्कित एव प्रतिक्षणमतिशङ्कयेवाप्रमत्तो भवेत्यन्वयः । अत्र पञ्चाशच्छ्लोकाः ॥ ५० ॥ इतिश्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिचत्वारिंशःसर्गः ॥ ४३ ॥

---

अजानन्निव यो मायामृगं कार्यान्तरैकदृक् । अनुसृत्य जघानाशु तं लीलामानुषं भजे ॥ अथ मारीचवधः—तथात्वित्यादिना । त्सरुः खड्गमुष्टिः । "त्सरुः खड्गादिमुष्टिः स्यात्" इत्यमरः ॥ १ ॥ त्र्यवनतं त्रिषु स्थलेष्ववनतं शार्ङ्गमित्यर्थः । आत्मविभूषणं आत्मालंकारं । कलापौ द्वौ द्वौ तूणीरौ । "कलापो भूषणे बर्हे तूणीरे संहतेपि च" इत्यमरः ॥ २ ॥ वन्यराजः वन्यमानः । अनित्यो मुमागमः । संदर्शने दृष्टिविषये । अभवत् स्थितः । यतः यस्मिन्प्रदेशे । मृगो वर्तते तत्र प्रदुद्राव ॥ ३ ॥ तमित्यादिश्लोकत्रयमेकं वाक्यं । रूपेण कान्त्या । अग्रे द्योतमानमिव स्थितं इषोः पातात् अतिवृत्तं अतिक्रान्तं । शङ्कितमिवेत्यन्वयः । धनुष्पाणिं दृष्ट्वा शङ्कितमिवेत्यनेन धनुष्पाणिदर्शनादन्यमृगाणामिवास्य शोको न भवतीतीवशब्दः प्रयुज्यते । यद्वा रामाद्भयं शङ्कमानं सन्तं उत्पतन्तमिव स्थितं । वस्तुतस्तत्राप्यदर्शनादिति भावः । लोभयानं हस्तप्राप्तमिवदृश्यमानमित्यर्थः । दृश्यमानमिति केषुचिद्दृश्यमानं केषुचिददृश्यं । अतएव छिन्नाभ्रैः संवीतं व्याप्तं चन्द्रमण्डलमिव स्थितं । शारदमिति

---

ति० मध्येस्थलत्रये विनतं त्रिविनतं । आत्मविभूषणं चापस्यवीरालङ्कारत्वात् । आत्मविभूषणमित्यनेनागस्त्यदत्तं वैष्णवमितिसूचितं ॥ २ ॥ ति० वन्यराजः वन्यानां मृगाणांराजा । विचित्रमृगत्वात् ॥ स० संदृश्यतइति संदर्शनः । कर्मणि ल्युट् । चक्षुर्विषयोऽभूत् । शि० वन्यराजः वन्येषुमृगेषुराजतेशोभते समारीचः । त्रासात् रामभयात् । अन्तर्हितोबभूव । पुनः त्रासात् रावणभयात् । संदर्शनेऽभवत् ॥ ३ ॥

[ पा० ] १ क. ख. घ. ङ. झ. ट. प्रतिगृह्य. २ ङ. झ. ट. दधारासिं. ३ क. ङ—ट. ततस्त्रिविनतं. ४ क. ग. जगामलघुविक्रमः. ५ क. ख. च. छ. ज. मात्रजन्तं. ६ ठ. संदर्शनो. ७ ख. तंपश्यतिस्म. ८ च. ज.—ट. द्योतयन्तमिव. ९ ख. ग. ङ. झ. ट. धनुष्पाणिर्महा. १० घ. कथंचन. ११ च. ज. ञ. कुत्रचित्.

मुहूर्तादेव ददृशे मुहुर्दूरात्प्रकाशते ॥ ७ ॥
दर्शनादर्शनादेवं सोपाकर्षत राघवम् ॥ सुदूरमाश्रमस्यास्य मारीचो मृगतां गतः ॥ ८ ॥
आसीत्क्रुद्धस्तु काकुत्स्थो विवशस्तेन मोहितः ॥ अथावतस्थे संभ्रान्तश्छायामाश्रित्य शाद्वले ॥९॥
स तमुन्मादयामास मृगरूपो निशाचरः ॥ मृगैः परिवृतो वन्यैरदूरात्प्रत्यदृश्यत ॥ १० ॥
ग्रहीतुकामं दृष्ट्वैनं पुनरेवाभ्यधावत ॥ तत्क्षणादेव संत्रासात्पुनरन्तर्हितोऽभवत् ॥ ११ ॥
पुनरेव ततो दूराद्वृक्षषण्डाद्विनिःसृतम् ॥ दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ॥
भूयस्तु शरमुद्धृत्य कुपितस्तत्र राघवः ॥ १२ ॥
सूर्यरश्मिप्रतीकाशं ज्वलन्तमरिमर्दनः ॥ सन्धाय सुदृढे चापे विकृष्य बलवद्बली ॥ १३ ॥
तमेव मृगमुद्दिश्य श्वसन्तमिव पन्नगम् ॥ मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥ १४ ॥
शरीरं मृगरूपस्य विनिर्भिद्य शरोत्तमः ॥ मारीचस्यैव हृदयं बिभेदाशनिसन्निभः ॥ १५ ॥
तालमात्रमथोत्प्लुत्य न्यपतत्स शरातुरः ॥ विनदन्भैरवं नादं धरण्यामल्पजीवितः ॥ १६ ॥
म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम् ॥ स्मृत्वा तद्वचनं रक्षो दध्यौ केन तु लक्ष्मणम् ॥
इह प्रस्थापयेत्सीता शून्ये तां रावणो हरेत् ॥ १७ ॥
स प्राप्तकालमाज्ञाय चकार च ततः स्वरम् ॥ सदृशं राघवस्यैव हा सीते लक्ष्मणेति च ॥ १८ ॥
तेन मर्मणि निर्विद्धः शरेणानुपमेन च ॥ मृगरूपं तु तत्त्यक्त्वा राक्षसं रूपमात्मनः ॥
चक्रे स सुमहाकायो मारीचो जीवितं त्यजन् ॥ १९ ॥
ततो विचित्रकेयूरः सर्वाभरणभूषितः ॥ हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ॥ २० ॥

मेघशकलसंभावनार्थमुक्तं ॥ ४—६ ॥ समीपे मुहूर्तात् मुहूर्तं । ददृशे । दूरात् दूरं । मुहुः प्रकाशते ॥ ७ ॥ अतः एवं उक्तरीत्या । दर्शनादर्शनात् दर्शनादर्शनाभ्यां । सुदूरमपाकर्षत आकृष्टवान् ॥ ८ ॥ विवशः कुतूहलपरवशः । मोहितः वञ्चितः ॥ ९ ॥ उन्मादयामासेति उन्मादश्चित्तविभ्रमः । बहुदूराकर्षणेन चित्तमोहं चकारेत्यर्थः ॥ १०—११ ॥ भूयः अत्यर्थं । कुपितोभूत् ॥ १२ ॥ सूर्येत्यादिश्लोकद्वयमेकं वाक्यं ॥ १३—१४ ॥ प्र[illegible] मृगरूपस्यशरीरंविनिर्भिद्य ततः मारीच[illegible] [illegible]न्तर्वर्तिस्वशरीरं । बिभेद ॥ १५ ॥ ताल[illegible] तालप्रमाणं । "प्रमाणे द्वयसच्—" इत्यादिना [illegible]ण मात्रच् ॥ १६ ॥ सीता केनोपायेन लक्ष्मणमिह प्रस्थापयेत् केनोपायेन रावणस्तां हरेदिति दध्यौ चिन्तयामास ॥ १७ ॥ प्राप्तकालं कालप्राप्तं कालोचितमर्थं । आज्ञाय निश्चित्य

**स०** दर्शनादर्शनेन । " सर्वोद्वन्द्वः " इत्येकवद्भाव इतिकेचित् । वस्तुतस्तु । " विप्रतिषिद्धं च—" इत्येकवद्भावः ॥ ८ ॥ **शि०** अविवशः क्रोधादिवशभिन्नः । तेनमोहितः ते नमश्शब्दोच्चारणमात्रेणैव हितकारी । काकुत्स्थोरामः क्रुद्धः क्रुद्धत्वेनप्रतीयमानआसीत् ॥ ९ ॥ **ति०** मृगरूपसदृशरूपस्यमायाकृतरूपेयक्षवत्प्रविश्यस्थितस्यमारीचस्यैवहृदयं नतुतत्कृतमायामृगाकारमात्रस्य ॥ **स०** मृगरूपस्यसदृशं विनिर्भिद्य अन्तर्विद्यमानमारीचशरीरं बिभेद ॥ **ती०** सदृशमिति । रूपमितिशेषः । मारीचस्यतदानींरूपमन्यदीयं । हृदयंतुस्वीयमेव । तथाचायमर्थः । मृगरूपस्यसदृशंरूपं तस्यास्वकीयं रूपंभित्वा पश्चात्स्वकीयंहृदयंबिभेदेतिभावः ॥ १५ ॥ **ती०** स्मृत्वेति । तांमतिं रावणोक्तसीतालक्ष्मणाह्वानोपायंस्मृत्वा । केन मत्कृतोपायेनेतिशेषः । सीता लक्ष्मणंप्रेषयेत् । तांसीतांशून्ये रावणोहरेदितिदध्याविितियोजना ॥ **टीका०** तांमतिं विश्वामित्रयागेरामकृतवैरबुद्धिं स्मृत्वावा ॥ १७ ॥

**[ पा० ]** १ क. ख. ग. ङ—ट. दर्शनादर्शनेनैव. २ क. ख. ग. ङ—ट. सुश्रान्तः. ३ ङ. झ. ट. वृतोथान्यैः. ४ ङ. झ. ट. दृष्ट्वातं. ख. घ. च. छ. ज. ञ. दृष्ट्वैव. क. ग. दृष्ट्वाच. ५ क. छ. ङ. ट. खण्डात्. ६ ख. ङ. च. ज—ट. मरिमर्दनं. ७ क. ख. ग. ङ—ट. ज्वलन्तमिव. ८ झ. ञ. ठ. सदृशं. ९ च. तांतुमतिं. १० ग. ङ—ट. तांशून्ये. ११ ख—ङ. छ. झ. ट. णानुपमेनहि. १२ क. ख. ङ. झ. ञ. ट. मास्थितः. १३ झ. ट. सुमहाकायं.

तं दृष्ट्वा पतितं भूमौ राक्षसं घोरदर्शनम् ॥ रामो रुधिरसिक्ताङ्गं वेष्टमानं महीतले ॥
जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २१ ॥
मारीचस्यैव मायैषा पूर्वोक्तं लक्ष्मणेन तु ॥ तत्तथा ह्यभवच्चाद्य मारीचोयं मया हतः ॥ २२ ॥
हा सीते लक्ष्मणेत्येवमाक्रुश्य च महास्वनम् ॥ ममार राक्षसः सोयं श्रुत्वा सीता कथं भवेत् ॥२३॥
लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति ॥ इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २४ ॥
तत्र रामं भयं तीव्रमाविवेश विषादजम् ॥ राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वरम् ॥ २५ ॥
निहत्य पृषतं चान्यं मांसमादाय राघवः ॥ त्वरमाणो जनस्थानं ससाराभिमुखस्तदा ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

हासीतेलक्ष्मणेतिमारीचाक्रोशश्राविण्यासीतयासादृश्यात्तस्मिन्रामकण्ठस्वरत्वज्ञानेनतस्य विपत्संभावनयातद्रक्षणाय लक्ष्मणंप्रतितदनुधावनचोदना ॥१॥ लक्ष्मणेनसीतांप्रतिराममहिमानुवर्णनेनतस्यविपदभावप्रतिपादनम् ॥ २ ॥ सीतया तंप्रत्यश्राव्यानुचितपरुषभाषणेतदसहिष्णुतयालक्ष्मणेनराममार्गानुधावनम् ॥ ३ ॥

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ॥ उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥ १ ॥
न हि मे हृदयं स्थाने जीवितं वाऽवतिष्ठति ॥ क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशम् ॥२॥
आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि ॥ तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥
रक्षसां वशमापन्नं सिंहानामिव गोवृषम् ॥ ३ ॥

---

॥ १८—२१ ॥ मायैषेत्यत्र इतिकरणं बोध्यं ॥ २२—२३ ॥ हृष्टतनूरुहः भयात्पुलकितः । अभूदितिशेषः ॥ २४ ॥ विषादजं विषादोत्थं । विषादो भविष्यतीत्युत्पन्नं । हत्वा मरणानुकूलव्यापारं कृत्वा । ततस्तदुक्तं स्वरं श्रुत्वा ॥ २५ ॥ त्वरमाणो रामः जनस्थानं जनस्थानस्थस्वाश्रममुद्दिश्याभिमुखः सन् ससार ययौ । अत्र सार्धसप्तविंशतिश्लोकाः ॥२६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

अस्थाने भयशङ्किन्या जानक्यापि सुहृज्जनम् । धिक्कृत्य चिन्तितं रामं नित्यापूर्वमहं भजे ॥ भर्तुः भर्तुः स्वरस्य ॥ १ ॥ हृदयं मनः । जीवितं प्राणः । वाशब्दः समुच्चये । स्थाने स्वस्थाने । मोहो जायत इति भावः । शरणैषिणं रक्षकार्थिनं । गोवृषमिति

---

स० कथंभवेत् किंप्रकाराभवेत् । ति० कथंभवेत् किं लक्ष्मणंप्रेषयेत् उतधीराभवेदित्यर्थः ॥ २३ ॥ ति० कामवस्थां अधैर्यादितिशेषः ॥ हृष्टतनूरुहः त्रासादिवरोमाञ्चिततनुः । वस्तुतएतन्मूलेन सर्वकार्यनिष्पत्तिरितिहर्षाद्रोमाञ्चिततनुः ॥ २४ ॥ ति० तत्रनटवद्भगवान्मनुष्यरूपत्वाद्भयशोकादिमत्त्वंनाटयतीतिकविरपि सर्वलोकवेद्यंतथैवाह—**तत्ररामंभयमिति** । तात्त्विकमर्थंतु हृष्टतनूरुहइतिहृष्टपदेन प्रागेवध्वनितवान् ॥ २५ ॥ इति चतुश्चत्वारिंशस्सर्गः ॥ ४४ ॥

ति० भर्तुस्स्वरेणसदृशंस्वरं भर्तुस्स्वरइत्येवज्ञात्वेत्यर्थः ॥ १ ॥ स० स्थाने एकस्मिन् । क्रोशतउपरीतिवा ॥ २ ॥ शि० शरणैषिणं स्वरक्षाकामं । सिंहानांगोवृषमिव रक्षसांवशमापन्नं अतएव आक्रन्दमानं तंजनं भ्रातरंच क्षिप्रंत्वं त्रातुमर्हसि । अतः भ्रातरमभिधाव । भ्रातरमभिधावेत्युक्त्या तदनुमत्यैवाक्रन्दमानजनस्यरक्षा कर्तव्येतिसूचितं । रक्षसांवशमापन्नमित्यनेन रावण प्रेरणयैव मारीचोत्रागतइतिसूचितं । तेन तस्यात्रागमने स्वातन्त्र्याभावोव्यञ्जितः । रामंत्रातुमर्हसीत्युक्त्या दूरगमनेन तद्विषय-

[ पा० ] १ ङ. झ. ट. भीमदर्शनं. २ ङ—ट. चेष्टमानं. ३ क—ट. मारीचस्यतु. ४ क. ग—ट. पूर्वोक्ता. ५ क. ख. ग. ङ—ट. माक्रुश्यतु. ६ ग. ममस्वरं. ७ घ. ङ. झ. ट. मुखंतदा. ८ च. छ. ज. ञ. वचः. ९ ङ. झ. ट. जीवितंस्थानेहृदयं. १० ङ. झ. ट. तिष्ठते. ११ क. ख. ज्ञातुमर्हसि.

न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ॥ तमुवाच ततस्तत्र कुपिता[1] जनकात्मजा ॥ ४ ॥
सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ॥ यस्त्वम[2]स्यामवस्थायां भ्रातरं नाभिपत्स्यसे ॥ ५ ॥
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ॥ लोभान्मम[3] कृते नूनं[4] नानु[5]गच्छसि राघवम् ॥ ६ ॥
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ॥ तेन तिष्ठसि विस्रब्ध[6]स्तमपश्यन्महाद्युतिम् ॥ ७ ॥
किं हि संशयमापन्ने तस्मिन्निह मया भवेत् ॥ कर्तव्य[7]मिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः ॥ ८ ॥
इति[8] ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुताम् ॥ अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ॥ ९ ॥
पन्नगासुरगन्धर्व[9]देवमानुषराक्षसैः ॥ अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः ॥ १० ॥
देवि देवमनुष्येषु गन्धर्वेषु पतत्रिषु ॥ राक्षसेषु पिशाचेषु किंनरेषु मृगेषु च ॥ ११ ॥
दानवेषु च घोरेषु न स विद्येत शोभने ॥ यो रामं प्रतियुध्येत समरे वासवोपमम् ॥ १२ ॥
अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ॥ न त्वामस्मिन्वने हातुमुत्सहे राघवं विना ॥ १३ ॥
अनिवार्यं बलं तस्य बलैर्बलवतामपि ॥ त्रिभिर्लोकैः समुद्युक्तैः सेश्वरै[10]रपि सामरैः ॥ १४ ॥
हृदयं निर्वृतं तेऽस्तु संताप[11]स्त्यज्यतामयम् ॥ आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ॥१५॥
न[12] च तस्य स्वरो व्यक्तं मायया केनचित्कृतः ॥ गन्धर्वनगरप्रख्या माया सा तस्य रक्षसः ॥१६॥

सामान्यविशेषयोःप्रयोगः करिकलभवत् । इति सीता लक्ष्मणमुवाचेतिसंबन्धः ॥ २—३ ॥ शासनं अप्रमत्तेन ते भाव्यमित्याद्युक्तं ॥ ४ ॥ मित्ररूपेणोपलक्षितः रूपेण मित्रसदृशः क्रियया शत्रुतुल्योसीत्यर्थः। शात्रवक्रियां दर्शयति—यस्त्वमिति ॥ ५ ॥ इच्छायां हेतुमाह—मत्कृत इति । मत्परिग्रहार्थमित्यर्थः । दार्ढ्याय पुनराह—लोभादिति । लोभो मल्लाभेच्छा ॥ ६—७ ॥ त्वद्रक्षणं विहाय कथं गमिष्यामीत्यत्राह—किं हीति । यो रामः प्रधानं यस्य सः यत्प्रधानः त्वमिहागतः तस्मिन् रामे । संशयं प्राणसंशयमापन्ने सति । इहाश्रमपदे तिष्ठन्त्या मया किं कार्यं न किमपीत्यर्थः ॥ ८—१२ ॥ एवं उक्तप्रकारं परुषभाषणं । राघवं विना स्थितां त्वामित्यन्वयः ॥ १३ ॥ समुद्युक्तैः सन्नाहवद्भिः । सेश्वरैः सेन्द्रैः ॥ १४ ॥ निर्वृतं निर्दुःखं ॥ १५ ॥ तस्य रामस्य । नायं स्वरः अपितु केनचिदन्येन मायया विचित्रशक्त्या कृतः ।

स्संशयउत्पन्नइतिव्यञ्जितं । तेन तत्रस्नेहातिशयोध्वनितः । सार्धश्लोकएकान्वयी ॥ ३ ॥ शि० तमुवाचेत्यर्धंपृथक् । सौमित्रइत्याद्यर्धद्वयमेकान्वयि । यद्वा इदमप्यर्धंपृथक् । तथाहि भ्रातुर्मित्ररूपेणहेतुना त्वमपिशत्रुवत् रामशत्रुत्वापन्नराक्षसशत्रुतुल्योसि । शत्रुमित्रेपि शत्रुत्वबुद्धेर्लोकेप्रसिद्धत्वादितितात्पर्यं । एतेन यदि रामसमीपेत्वंनगमिष्यसि तर्हि एकाकिनंत्वामवलोक्य तच्छत्रव इहाप्यापतिष्यन्तीतिव्यञ्जितं । तेनैकत्रैव द्वाभ्यांस्थातव्यमितिध्वनितं ॥ ४ ॥ शि० यदिति । यत् यस्माद्धेतोः । विनशी रिपुसूदनः । त्वं अस्यां सहायरहितायांअवस्थायां भ्रातरंरामंनाभिपत्स्यसे तस्माद्धेतोः हेलक्ष्मण मत्कृते मद्रक्षार्थं । अन्तं स्वविनाशं । इच्छसि इत्यनुमीयतइतिशेषः । एतेनास्मिन्समये रामसमीपगमनमन्तरा ते महत्यपकीर्तिर्भवितेतिव्यञ्जितं ॥ मत्कृते मद्रक्षार्थंयो लोभः मयिगते इमांकोरक्षिष्यतीतिवैचित्र्यं तस्माद्धेतोः राघवंनानुगच्छसिचेत्तर्हि अप्रियंव्यसनं अपवादरूपदुःखं । भ्रातरि ते स्नेहोनास्तीतिचाहंमन्ये । स० लोभात् गार्ध्यात् । मत्कृते अहंकृताशिक्षितायेन समत्कृतः तस्मिन्भ्रातरीत्यन्वयः । व्यसनं रामदुःखं ॥ ५—७ ॥ ति० तस्मिन् रामे संशयमापन्नेसति मयातिष्ठन्त्या त्वद्रक्षणेनजीवन्त्या । किंकर्तव्यं भवेत् । तदभावे मरणमेवश्रेयः । अत्रायंध्वनिः—राक्षससंहाररूपप्रधानकार्यकरणायागतस्तव त्वद्भ्रातुर्वा तस्मिन्कार्ये इहमदवस्थित्यासंशयमापन्ने इहजीवन्त्यामयाकिंकार्यंभवेत् । सर्वत्रोत्पत्तिस्थितिसंहारेषु तवभ्रातुरहमेवसहकारिणी । प्रकृतश्चसंहारोत्र मत्स्थित्या न निर्वर्ततइति ॥ स० संशयं सम्यग्राक्षसहस्तमापन्ने इतिवा । हिसंशयं गतसंशयंयथाभवतितथा तस्मिन् रामे आपत् न । यतोऽहं ई साक्षाल्लक्ष्मीः ततो मया आपत् प्राप्तेतिशेषः । नभवेत् इतिमानसिकोभावोपिज्ञेयः ॥ ८ ॥ ति० एवंबोधिततत्त्वोपि मानुष्यनाटनेनलोकव्यवहारानुसारा ल्लक्ष्मणोऽवददित्याह—अब्रवीदिति ॥ ९ ॥ ति० तव त्वया ॥ १५ ॥ ति० दैवतः

[पा०] १ ङ. झ. ट. क्षुभिता. २ ट. यत्त्वं. ३ ङ. झ. ट. लोभात्तुमत्कृते. ४ ख. रामं. ५ ख. लक्ष्मण. ६ ङ. झ. ट. विस्रब्धंतं. ७ ङ. झ. ट. एवं. ८ ङ. झ. ट. समन्वितां. ९ च. देवमानव. ङ. ङ. झ. ट. देवदानव. १० च—ट. सेश्वरैस्सामरैरपि. ११ छ. झ. ञ. ट. त्यज्यतांतव. १२ ग—ट. नस. झ. नकश्चिदपिदैवतः.

न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ॥ रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे ॥ १७॥
कृतवैराश्च [1]वैदेहि वयमेतैर्निशाचरैः ॥ खरस्य [2]निधनादेव जनस्थानवधं प्रति ॥ १८ ॥
राक्षसा विविधा [3]वाचो विसृजन्ति महावने ॥ हिंसाविहारा वैदेहि न चिन्तयितुमर्हसि ॥ १९ ॥
लक्ष्मणेनैव[4]मुक्ता सा क्रुद्धा संरक्तलोचना ॥ अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ॥ २० ॥
[5]अनार्याकरुणारम्भ नृशंस कुलपांसन ॥ अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ॥ २१ ॥
रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ॥ २२ ॥
[6]नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् ॥ त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥ २३ ॥
सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि ॥ मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २४ ॥
तन्न सिध्यति सौमित्रे [7]तव वा भरतस्य वा ॥ कथमिन्दीवरश्यामं [8]पद्मपत्रनिभेक्षणम् ॥
उपसंश्रित्य भर्तारं [9]कामयेयं पृथग्जनम् ॥ २५ ॥

वस्तुतस्तु मारीचस्यैवेयं मायेत्याह—गन्धर्वेति । तस्य रक्षसः मृगीभूतस्य रक्षसः । सा स्वरः । मायापेक्षया स्त्रीत्वं । गन्धर्वनगरप्रख्या गन्धर्वनगरतुल्या माया । यद्वा सा मृगरूपं । गन्धर्वनगरं नाम मेघादावारोपितं प्रासादवनादिकं । तत्कदाचिद्दृश्यते तद्यथा व्यामोहजनकं तथा चित्रवस्तुरूपा परव्यामोहजनिका काचिच्छक्तिर्माया सा तस्य रक्षसः मारीचस्यास्ति । यया मुह्यसीत्यर्थः । "गन्धर्वनगरं प्रोक्तमिन्द्रजालं मनीषिभिः" इत्यप्याहुः ॥ १६ ॥ न्यासभूतासि निक्षेपरूपासि । केन निक्षिप्तेत्यत आह—रामेणमयि न्यस्तेति ॥१७॥ खरस्य स्वामिनो निधनात् जनस्थाने वधो यः तं प्रति वयमेतैर्निशाचरैः कृतवैराः एते अस्मासु वैरमाचरितवन्त इत्यर्थः ॥ १८ ॥ किं तत इत्यत्राह—राक्षसा इति । वाचो विसृजन्ति अस्मन्मोहनार्थमिति शेषः ॥ १९—२० ॥ अनार्य दुःशील । अकरुणारम्भ दयाप्रसक्तिरहित । तत्र युक्तिमाह—रामस्येति । तेन अनार्यत्वादिकारणेन । रामस्य व्यसनं दृष्ट्वा एतानि पूर्वोक्तवचनानि प्रभाषसे ॥२१—२२॥ प्रच्छन्नचारिषु त्वद्विधेषु सपत्नेषु पापं भवेदिति यत् एतन्न चित्रं । नृशंसत्वादिकमत्र हेतुत्वेनोपात्तं ॥ २३ ॥ प्रयुक्तः प्रेषितः ॥ २४ ॥ पृथग्जनं

अशरीरदेवतासंबन्धीकश्चित्स्वरइत्यपिनेत्यर्थः ॥ १६ ॥ **ति०** खरस्यनिधने रामेणकृतेसति जनस्थानवधं जनस्थानवर्तिस्वपरिकररक्षोवधंप्रतिलक्ष्य कृतवैराइत्यन्वयः ॥ १८ ॥ व्याहरन्ति अस्मद्व्यामोहनार्थं । अतस्त्वांत्यक्तुंनोत्सहे ॥ १९ ॥ **ति०** अनार्यकरुणारम्भ अनार्ययाकुत्सितयाकरुणया रामव्यसनेपिमद्विषयारम्भोमद्रक्षणारम्भोयस्य तत्संबोधनं ॥ **शि०** अनार्यकरुणारम्भ अनार्येषुक्षुद्रराक्षसेषु करुणायाआरम्भोयस्यतत्सदृशः तत्संबोधनं । अतएव नृशंसकुलपां राक्षससमूहपालकानां सनो रचयितेव तत्संबोधनं सन । रामस्यमहद्व्यसनंतवप्रियं त्वत्प्रीतिविषयीभूतंमन्ये । तेनहेतुना रामस्यव्यसनं सहायाभावप्रयुक्तदुःखाभासंदृष्ट्वा ज्ञात्वा । एतानि गमनाभावबोधकवचनानि प्रभाषसे । आचारक्रिपासदृशलाभः ॥ **वि०** अकार्यकरणारम्भ अशोभनकृत्यकरणोद्युक्त ॥ **स०** आर्ये करुणारम्भोयस्य सनभवतीत्यनार्यकरुणारम्भः ॥ २१ ॥ **ति०** तेन रामव्यसनप्रियत्वेन । अत्ररामव्यसनं रामस्य प्रतिज्ञातार्थस्यसर्वरक्षोवधरूपस्यहानिस्तत्प्रियत्वेनेति गूढंतात्पर्यं । अतएषा मद्विषयाकरुणा अनार्या कुत्सिता । प्रधानकार्यविरोधित्वादितिबोध्यं ॥ २२ ॥ **शि०** त्वद्विधेषु अस्मद्वारणाभिन्नविविधधारणावत्सु । अतएव नृशंसेषु क्रूरेषु । अतएव नित्यंप्रच्छन्नचारिषु दुर्ज्ञेयाचरणविशिष्टेषुसपत्नेषु यत्पापं पापकर्मभवेत् । तत् नैवचित्रं । एतेन राक्षसानांविश्वासो न कार्यइतिध्वनितं ॥ २३ ॥ **शि०** शोभनाः दुष्टाः यस्मात्सः दुष्टध्वंसकइत्यर्थः । अतएव एकंरामं एकएवानुगच्छसि । अतएव हेतोः रामगमनकारणीभूतस्यमृगस्य भरतेन शोभानिरीक्षणरतिमता प्रयुक्तः अत्रसंस्थापितस्त्वं यदिप्रतिच्छन्नः राक्षसभियानिलीनः । नगच्छसीत्यर्थः ॥ तर्हि हेसौमित्रे ममतवच भरतस्य मृगशोभानिरीक्षणरतस्यरामस्यच तत् इहागमनप्रयोजनंनसिध्यति । रामस्यप्रयोजनं मुनिरिपुध्वंसः । आवयोःप्रयोजनं तत्सेवा । तयोस्सिद्धिर्नस्यादित्यर्थः । एतेन रागादर्शनासहिष्णुत्वंसीतायाव्यञ्जितं ॥ एको वा यद्यर्थे अपरोहेतौ । सार्धश्लोकएकान्वयी ॥ २४ ॥ **शि०** ननु रक्षकरहितांत्वांविहाय गन्तुमशक्यतया मत्कर्तृकगमनस्यावश्य-

[ **पा०** ] १ क. च—ट. कल्याणि. २ झ. निधनेदेवि. ३ झ. व्याहरन्ति. ङ—ट. ४ मुक्तातु. ५ च. छ. ज. ञ. अकार्यकरणारम्भ. ख. अनार्यकृपणारम्भ. ६ झ. ट. नैवचित्रं. ७ ख. च. छ. ज. ट. तवापि. ८ क. झ. रामंपद्मनिभेक्षणं. ९ च. छ. ज. ञ. कामयेन्यं. क. ग. कामयेप्राकृतंजनं.

समक्षं तव सौमित्रे प्राणांस्त्यक्ष्ये[1] न संशयः ॥ रामं विना क्षणमपि न[2] हि जीवामि भूतले ॥२६॥
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ॥ अब्रवील्लक्ष्मणः सीतां प्राञ्जलिर्[3]विजितेन्द्रियः ॥ २७ ॥
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ॥ वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि ॥ २८ ॥
स्वभावस्त्वेष नारीणामेवं लोकेषु[4] दृश्यते ॥ विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः ॥ २९ ॥
न सहे हीदृशं वाक्यं वैदेहि जनकात्मजे ॥ श्रोत्रयोरुभयोर्मेऽद्य तप्तनाराचसन्निभम् ॥ ३० ॥
उपशृण्वन्तु मे[5] सर्वे साक्षिभूता[6] वनेचराः ॥ न्यायवादी यथा[7]ऽन्यायमुक्तोऽहं परुषं त्वया ॥ ३१ ॥
धिक्त्वामद्य प्रणश्य[8] त्वं यन्मामेवं विशङ्कसे ॥ स्त्रीत्वं[9] दुष्टं स्वभावेन गुरुवाक्ये व्यवस्थितम् ॥३२॥
गमिष्ये[10] यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ॥ रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ॥३३॥
निमित्तानि[11] हि घोराणि यानि प्रादुर्भवन्ति मे ॥ अपि त्वां सह रामेण पश्येयं पुनरागतः ॥
[ न वेत्येतन्न जानामि वैदेहि जनकात्मजे ] ॥ ३४ ॥
लक्ष्मणेनैवमुक्ता[12] सा रुदन्ती[13] जनकात्मजा ॥ प्रत्युवाच ततो वाक्यं तीव्रं बाष्पपरिप्लुता ॥ ३५ ॥
गोदावरीं प्रवेक्ष्यामि विना[14] रामेण लक्ष्मण ॥ आबन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः ॥ ३६॥
पिबाम्यहं[15] विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम् ॥ न त्वहं राघवादन्यं पदाऽपि पुरुषं स्पृशे ॥ ३७॥

---

क्षुद्रपुरुषं ॥ २५—२६ ॥ इत्युक्तःपरुषं वाक्यमिति "अप्रधाने दुहादीनां-" इति कर्मण्यप्रधाने द्वितीया । सीतापारुष्येणप्रतिपारुष्यादिराहित्यंसूचयति--विजितेन्द्रिय इति ॥ २७ ॥ अप्रतिरूपं अत्यन्तानुचितं ॥ २८ ॥ विमुक्तधर्माः परित्यक्तविनयादिधर्माः । चपलाः चञ्चलचित्ताः । तीक्ष्णाः क्रूरहृदयाः । भेदकराः परस्परस्नेहकार्यविच्छेदकराः ॥ २९—३० ॥ मे साक्षिभूताः वनेचराः । न्यायवादी अहं त्वया अन्यायं परुषं । यथा उक्तः तथा उपशृण्वन्तु ॥ ३१ ॥ धिक्त्वामिति "उभसर्वतसोः—" इत्यादिना धिग्योगे द्वितीया ॥ ३२—३५ ॥ आबन्धिष्ये उद्बन्धनं करिष्यामि । विषमे भृग्वादिविषमस्थले । पातेनेति शेषः ॥ ३६ ॥ स्पृशे स्पृशामि

---

कतयाच युगपद्द्वयोर्विरोधेन त्वामयोध्यांशीघ्रंप्रापय्य रामसंनिधावहंगमिष्यामीत्यतआह—**कथमिति** । जनं साक्षाद्ब्रह्मादिद्वाराच सर्वेषांजनयितारं । भर्तारंरामं उपसंश्रित्य वनेसहागत्य । पृथक् तंविना कां सुखस्वरूपामप्ययोध्यां । कथं अयेयं रामंविहायगन्तुंनसमर्थेत्यर्थः । अतः हेसौमित्रे तवसमक्षं प्राणांस्त्यक्ष्यामि । असंशयं अत्रसंशयोन । तत्रहेतुः रामंविना भूतलेक्वचिदपिस्थले क्षणमपिनैवजीवामि ॥ अर्धचतुष्टयमेकान्वयि ॥ २५ ॥ २६ ॥ अत्रनशेर्नाशेच्छाऽर्थः । तेनराक्षसकुलस्यनाशेच्छावतींत्वांधिक् । यतोयदर्थंमामेवंविशङ्कसे वदसि इतिगूढं ॥ यद्वा विनश्यन्तीं शक्तितयाप्रतिक्षणंपरिणामरूपेणविनश्यन्तींत्वां धिक् । यन्मां त्वदस्पृष्टंत्वदाक्रमणायोग्यं एवंविशङ्कसे । त्वदाक्रान्तेषुकिलैवंसंभावनेति । **ति०** पुनर्वैषानुसारेणाह—**स्त्रीत्वादिति ।** स्त्रीत्वाद्दुष्टस्वभावेनक्रौर्येणयुतात्वं गुरुवाक्ये ज्येष्ठनियोगे स्थितंमां एवंब्रूषेइतिशेषः । अतोयत्र काकुत्स्थः तत्रगच्छामि गमिष्यामि । तेस्वस्त्यस्तु सर्वतइतिशेषः ॥ ३२ ॥ ३३ ॥ **ति०** सर्वथाकर्तव्यमाह—प्रवेक्ष्यामिहुताशनं । अतएवात्र वाशब्दानुक्तिः । अनेन साक्षाद्रावणगृहंनगमिष्यामि किन्त्वहंस्वरूपेणाग्नौस्थित्वा माययैव तद्गृहंगमिष्यामीतिध्वनितं । तदुक्तं कूर्मपुराणे—"रामस्यसुभगांभार्यां रावणोराक्षसेश्वरः । सीतांविशालनयनां चकमेकालनोदितः । गृहीत्वामाययावेषं चरन्तींविजनेवने । समाहर्तुं मनश्चक्रे तापसःकिलकामिनीं । विज्ञायसाचतद्भावं स्मृत्वादाशरथिंपतिम् । " तद्भावं लङ्कायामेवहृदिकृतं । तापसोभूत्वा हरिष्यामीतिभावमित्यर्थः । " जगामशरणंवह्निमावसथ्यंशुचिस्मिता । प्रपद्येपावकंदेवं साक्षिणंविश्वतोमुखम् । आत्मानंदीप्तवपुषं सर्वभूतहृदिस्थितम् । " इत्याद्यष्टश्लोकानुक्त्वा "इतिवन्ह्यष्टकंजप्त्वा रामपत्नीयशस्विनी । ध्यायन्तीमनसातस्थौ राममुन्मीलितेक्षणा । अथावसथ्याद्भगवान्हव्यवाहोमहेश्वरः । आविरासीत्सुदीप्तात्मा तेजसानिर्दहन्निव । सृष्ट्वामायामयींसीतां सरावणवधेच्छ-

**[ पा० ]** १ ङ. झ. ट. स्त्यक्ष्याम्यसंशयं. २ ङ. झ. ट. नैवजीवामि. ख. नजीवामीह. ३ ङ. झ. ट. प्राञ्जलिस्स. छ. प्राञ्जलिश्च. ४ क. ङ. छ.—ट. मेषुलोकेषु. ५ ख. तेसर्वे. ६ झ. ट. साक्षिणोहि. ७ क. ख. ग. ङ—ट. यथावाक्यं. ८ झ. विनश्यन्तीं. ९ झ. स्त्रीत्वाद्दुष्टस्वभावेन. १० ङ. झ. ट. गच्छामि. ११ ख. निमित्तानिच. क. घ. निमित्तानीह. १२ क. ग. ङ. झ. ट. मुक्तातु. १३ ङ. झ. ट. रुदती. १४ ङ. झ. ट. हीनारामेण. १५ क. ङ—ट. पिबामिवा.

इति लक्ष्मणमा[1]क्रुश्य सीता दुः[2]खसमन्विता ॥ पाणिभ्यां रुदती दुःखादुदरं प्रजघान ह ॥ ३८ ॥
तामार्तरूपां विमना रुदन्तीं सौमित्रि[3]रालोक्य विशालनेत्राम् ॥
आश्वासयामास न चैव भर्तुस्तं भ्रातरं किंचिदुवाच सीता ॥ ३९ ॥
ततस्तु सीतामभिवाद्य लक्ष्मणः कृताञ्जलिः किञ्चिदभिप्रणम्य च ॥
अन्वीक्षमाणो [4]बहुशश्च मैथिलीं जगाम रामस्य समीपमात्मवान् ॥ ४० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

सीताचोदनयालक्ष्मणेरामंप्रतियातेलब्धावकाशेनरावणेनसंन्यासिवेषपरिग्रहेणसीतासमीपंप्रत्यागमनम् ॥ १ ॥ सीतया स्वसौन्दर्यप्रशंसनपूर्वकं स्ववनागमनकारणादिकंपृच्छतेरावणायपाद्यादिनापरिपूजनम् ॥ २ ॥

तया परुषमुक्तस्तु कुपितो राघवानुजः ॥ स विकाङ्क्षन्भृशं रामं प्रतस्थे नचि[5]रादिव ॥ १ ॥

॥ ३७ ॥ आक्रुश्य विनिन्द्य ॥ ३८ ॥ भर्तुर्भ्रातरंन किंचिदुवाचेति आश्वासनव्याजेनगमनविलम्बंकरोतीति कोपेनेति शेषः ॥ ३९ ॥ किंचिदिति कोपमिश्रत्वात् किंचित्प्रणामः । बहुशोऽन्वीक्षमाण इति कथमेनामेकाकिनींत्यक्त्वा गमिष्यामीत्यनुशयेन बहुशोन्वीक्षणं । आत्मवान् धैर्यवान् । अस्मिन्सर्गे सार्धचत्वारिंशच्छ्लोकाः ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥४५॥

अथ सीतायाः लक्ष्मणविषयपरुषभाषणफलं दर्शयत्येकादशभिः सर्गैः । रावणप्रलोभनमाह षट्चत्वारिंशे—तया परुषमित्यादिना । विकाङ्क्षन् अनिच्छन्नेव । राममुद्दिश्य प्रतस्थे । नचिरादिव अविलम्बितमेव । इवशब्दो वाक्यालङ्कार इति वा । यद्वा नचिरादिव सीतात्यागासहिष्णुतया पादौ पश्चादाया ।

सीतामादायरामेष्टां पावकोन्तरधीयत । कृत्वातुरावणवधं रामोलक्ष्मणसंयुतः । समादायाभवत्सीतां शङ्काकुलितमानसः । साप्रत्ययायभूतानां सीतामायामयीपुनः । विवेशपावकंदीप्तं ददाहज्वलनोपिताम् । दग्ध्वामायामयींसीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोसौसुरप्रियः। एतत्पतिव्रतानांवै माहात्म्यंकथितंमया । स्त्रीणांसर्वाघशमनं प्रायश्चित्तमिदंस्मृतम् ।” इत्युत्तरखण्डे चतुस्त्रिंशेऽध्याये । अनेन स्त्रीणांजातिभ्रंशकरापदि अग्निप्रवेशोनदोषाय सर्वप्रायश्चित्तंचेतिध्वनितं । कदाप्यन्यंपुरुषंनस्पृशे इत्यन्वयः ॥ अत्र पत्यसांनिध्यइतिशेषः । तेन विराधस्पर्शेपिनहानिः । तदा पतिसंनिधानात् । किंच साक्षाद्भगवतीस्पर्शे रावणोविराधवत्तत्क्षणादेवम्रियेत । एवंच सर्वराक्षसवधोनस्यादिति मायासीतारचना । किंचास्यकार्यं हनुमत्पुच्छाग्निनालङ्कादाहः । अन्यथा रावणवशेनलोकपालाग्निना कथं तन्नगरदाहस्स्यात् । एतच्छक्तिप्रवेशेनतु तत्कार्यसामर्थ्यंतस्येतिमन्तव्यं । किंचैवंप्रतिज्ञाय रावणस्पर्शेजगन्मातुःप्रतिज्ञाभङ्गस्स्यात् ॥ **स०** स्पृशे स्पर्शनंचपतित्वेनस्वीकरणं ॥ ३७ ॥ **ति०** आश्रुत्य लक्ष्मणंप्रतिप्रतिज्ञाय । दुःखात् सकलकरणतापादिव । उदरंप्रजघानेत्यनेन सर्वरक्षोमरणंविना नमेउदरपूर्तिरितिसूचितं । अन्यथा शोके वक्षआघातस्यैवस्त्रीषुप्रसिद्ध्याऽसंगतिस्स्यात् ॥ ३८ ॥ **ति०** अभिवाद्य मनसेतिशेषः । किंचिदभिप्रणम्येतिकायिकस्सउक्तः । अत्रकिंचिदित्यनेन कोपस्सूचितः । यद्यपि कोपेपि यथोचितव्यवहारत्यागोलक्ष्मणस्यानुचितः । तथापि प्रतिज्ञोत्तरंतथैव स्वच्छायांसंदर्श्य तस्याअग्निप्रवेशोद्यमेनच्छायाबुद्ध्याकिंचित्प्राञ्जलित्वं किंचिदेवनमनमित्यनेनसूचितं । कथमेनांरामेणविनात्यक्ष्यामीति बहुशोऽवेक्षमाणः अग्निंप्रविष्टानवेतिचवीक्षमाणः ॥ ४० ॥ इतिपञ्चचत्वारिंशस्सर्गः ॥ ४५ ॥

**ति०** नचिरादिव शीघ्रमेवेत्यर्थः । विकाङ्क्षन् विशेषेणकाङ्क्षमाणः तत्सविधगमनमिच्छन्नित्यर्थः । काङ्क्षिरशङ्कायामपि । तेन रामंविरुद्धंशङ्कमानः । शीघ्रमितोऽनपसरणे कार्यनाशाद्रामोपि विरुद्धस्स्यादितिशङ्कमानः शीघ्रंजगामेतिव्यङ्ग्यं । अतएव व्यवहितपूर्वसर्गान्ते मारीचस्य तथाशब्दोत्तरं सीताविषयांमहतींचिन्तामुक्त्वा ततः पुनरपिमांसार्थमितर-

[ **पा०** ] १ ङ. झ. ट. माश्रुत्य. २ ङ. झ. ट. शोकसमन्विता. ३ क. ख. ग. रालक्ष्य. ४ ङ—ट. बहुशस्समैथिलीं. क. ग. बहुशश्चजानकीं. ५ घ. चिरादिह.

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ॥ अभिचक्राम वैदेहीं परिव्राजकरूपधृत् ॥ २ ॥
श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही ॥ वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू ॥
परिव्राजकरूपेण वैदेहीं[२] समुपागमत् ॥ ३ ॥
ता[३]मांससादातिबलो भ्रातृभ्यां रहितां वने ॥ रहितां चन्द्रसूर्याभ्यां सन्ध्यामिव महत्तमः ॥ ४ ॥
तामपश्यत्ततो बालां रामपत्नीं यशस्विनीम् ॥ रोहिणीं शशिना हीनां ग्रहवद्भृशदारुणः ॥ ५ ॥
तमुग्रतेजःकर्माणं जनस्थानरुहा द्रुमाः ॥ समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः ॥ ६ ॥
शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ॥ [१०]स्तिमितं गन्तुमारेभे भयाद्गोदावरीनदी ॥ ७ ॥
रामस्य [११]त्वन्तरप्रेप्सुर्दशग्रीव[१२]स्तदन्तरे ॥ उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ॥ ८ ॥
अभव्यो भव्यरूपेण भर्तारमनुशोचतीम् ॥ अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ॥ ९ ॥
[१३]स पापो भव्यरूपेण तृणैः कूप इवावृतः ॥ अतिष्ठत्प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम् ॥ १० ॥
[ तिष्ठन्संप्रेक्ष्य च तदा पत्नीं रामस्य रावणः ] ॥ शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम् ॥
आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् ॥ ११ ॥

---

कर्षतः रामप्राप्तित्वरा तु पुरतः कर्षतीतीवशब्दस्य भावः ॥ १ ॥ आस्थितः अवकाशं प्रतीक्षमाणस्थितो दशग्रीवः । तदेव अन्तरं अवकाशं । आसाद्य वैदेहीं अभिचक्राम आभिमुख्येनाजगाम । परिव्राजको भिक्षुः। तस्य रूपं लिङ्गं धारयतीति परिव्राजकरूपधृत् ॥२॥ परिव्राजकलिङ्गान्याह—श्लक्ष्णेति । शिखी अदन्तत्वाभावेपि व्रीह्यादित्वादिनिः । छत्रीत्यत्र वाक्यसंधेरनित्यत्वेन यणभावः । उपानहीत्यत्र इनिरार्षः । यष्टिः त्रिदण्डं । शिखीत्यनेन साहचर्यात् । अत्र धर्मप्रधानजनककुलनन्दिन्याः सीताया विश्वासाय धृतत्वादित्थमेव यतिलिङ्गमिति दर्शितं । तथाह्यङ्गिराः "यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः । ब्रह्मसूत्रं त्रिदण्डं च वस्त्रं जन्तुनिवारणं ॥ शिक्यं पात्रं बृसी चैव कौपीनं कटिवेष्टनम् । यस्यैतद्विद्यते लिङ्गं स यतिर्नेतरो यतिः" इति । परिव्राजकरूपेणेत्यनेन ब्रह्मसूत्रादिकमुक्तं । समुपागमदिति प्रतिपाद्यार्थभेदात्पुनःपुनः क्रियापदप्रयोगः ॥ ३ ॥ भ्रातृभ्यां रामलक्ष्मणाभ्यां । महत्तम इत्यभूतोपमा । सन्ध्यायां महतस्तमसोसंभवात् ॥ ४ ॥ ग्रहः अङ्गारकः शनैश्चरो वा । स रोहिणीमिव भृशदारुणो रावणस्तामपश्यत् । यथा रोहिण्याःक्रूरग्रहवीक्षणंलोकानर्थकरं तथा रावणस्यसीतावीक्षणमिति भावः ॥ ५ ॥ दारुणत्वं प्रकटयति—तमुग्रमिति ॥ ६ ॥ शीघ्रस्रोताः शीघ्रप्रवाह । वीक्षन्तं वीक्षमाणं । स्तिमितमिति क्रियाविशेषणं ॥ ७ ॥ रामस्यान्तरप्रेप्सुः विश्लेषान्वेषी । तदन्तरे तस्मिन्नवकाशे । प्रथमं सीतामुद्दिश्य गमनं अथाश्रमसमीपगमनं ततः सीतादर्शनं ततः सन्निकर्षगमनमिति क्रमः ॥ ८ ॥ अथाभिमुखगमनमाह—अभव्यइति । अभव्यः दुर्जनः । भव्यरूपेण सुजनरूपेण । अनुशोचतीमिति आगमशासनस्यानित्यत्वान्नुमभावः ॥९॥ पापः अन्तःपापात्मा । भव्यरूपेण बाह्याकारेणोपलक्षितः ॥१०॥ बाष्पशो-

---

मृगवधप्रवृत्तिरुक्ता । सा विलंबायैव ॥ १ ॥ स० तेनैव रक्षोरूपेणाऽऽगमने न प्रत्यानयनं-सीतायास्स्यादिति वेषान्तरेणागमनंचेद्गृहस्थवेषेण कुतो नागतिरितिचेन्न । मध्येसंवादे रामागतौ समरसमारंभोभवेदितिमतिमान् अयं यतिवेषस्तदनारंभकइति तमदीधरदितिसंभवात् । हन्ततर्हि रामरूपंकुतोनदधारेति परमवशिष्यतेशङ्केतिचेन्न । इदानीन्तना अपि यद्यद्वेषमिषेणायान्तस्तत्तदाचाराइति रामरूपग्रहणे नान्यकामिनीकामस्स्यादिति तत्यागइतिसंभवात् ॥ २ ॥ ति० शिखीति । अनेन त्रिदण्डिसंन्यासिविशेषस्सूचितः । तदुक्तं भारते—"रावणस्तुयतिर्भूत्वा मुण्डः कुण्डीत्रिदण्डधृक्" इति । तत्रमुण्डइत्यनेन जटिलव्यावृत्तिः । यष्टिस्त्रिदण्डात्मिका ॥ ३ ॥ ति० भ्रातृभ्यां परस्परभ्रातृभ्यां ॥ ४ ॥ ति० बाष्पैः

[ पा० ] १ घ. दण्डकमण्डलू. २ ङ. झ. ट. वैदेहीमन्ववर्तत. क. घ. ञ. वैदेहीमन्वपद्यत. ३ क. च. छ. ज. ञ. माससादतद्रक्षो. ४ झ. सूर्यचन्द्राभ्यां. ५ क. ख. ङ—ट. राजपुत्रीं. ६ ङ. झ. ट. तमुग्रंपापकर्माणं. ७ ङ—ठ. जनस्थानगताः. ८ ङ. झ. ञ. ट. संदृश्य. ९ क. प्रवातिस्म. १० क. स्तिमिता. ११ ख. ङ. झ. ट. त्वन्तरंप्रेप्सुः. १२ ख. दशग्रीवो महाबलः. १३ झ. ट. सहसाभव्य. १४ इदमर्धं क. ख. ग. ङ. झ. पाठेषुदृश्यते.

स तां पद्मपलाशाक्षीं[1] पीतकौशेयवासिनीम् ॥ अभ्यगच्छत वैदेहीं दुष्टचेता[2] निशाचरः ॥ १२ ॥
स[3] मन्मथशराविष्टो ब्रह्मघोषमुदीरयन् ॥ अब्रवीत्प्रश्रितं वाक्यं रहिते राक्षसाधिपः ॥ १३ ॥
तामुत्तमां स्त्रियं[4] लोके पद्महीनामिव श्रियम् ॥ विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥ १४ ॥
कां त्वं काञ्चनवर्णाभे[5] पीतकौशेयवासिनि ॥ कमलानां शुभां मालां पद्मिनीव हि बिभ्रती ॥ १५ ॥
ह्रीः कीर्तिः[6] श्रीः शुभा लक्ष्मीरप्सरा वा शुभानने[7] ॥ भूतिर्वा[8] त्वं वरारोहे रतिर्वा स्वैरचारिणी ॥ १६ ॥
समाः शिखरिणः स्निग्धाः पाण्डुरा दशनास्तव ॥ विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ॥ १७ ॥
विशालं जघनं पीनमूरू करिकरोपमौ[9] ॥ १८ ॥
एतावुपचितौ वृत्तौ संहतौ[10] संप्रवल्गितौ ॥ पीनोन्नतमुखौ कान्तौ स्निग्धौ[11] तालफलोपमौ ॥
मणिप्रवेकाभरणौ रुचिरौ[12] ते पयोधरौ ॥ १९ ॥
चारुस्मिते चारुदति चारुनेत्रे विलासिनि ॥ मनो हरसि मे कान्ते[13] नदीकूलमिवाम्भसा ॥ २० ॥

---

कामिपीडितां रामार्तस्वरश्रवणेन बाह्याभ्यन्तरास्वास्थ्यवतीं । पीतकौशेयं वस्ते इति पीतकौशेयवासिनीं । णिन्यन्तात् ङीप् । अभ्यगच्छत पूर्वस्मादपि सन्निकर्षं प्राप्तः ॥ ११—१२ ॥ ब्रह्मघोषं "उपनिषदमावर्तयेत्" इत्युक्तपरिव्राजकोचितवेदघोषं । प्रश्रितं विनयान्वितं । रहिते विजनप्रदेशे ॥१३॥ लोके उत्तमां स्त्रियमित्यन्वयः । प्रश्रितं वाक्यमब्रवीदित्यस्यैव विवरणं—प्रशशंसेति ॥ १४ ॥ काञ्चनवर्णाभे काञ्चनतुल्यवर्णे । कमलानां मालां बिभ्रती पद्मिनीव स्थिता । पद्मतुल्यमुखनयनपाणिपादविशिष्टत्वादिति भावः ॥ १५ ॥ ह्रीः विष्णुपत्नी भूमिः । "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेः । श्रीः कमला । लक्ष्मीः कान्त्यधिष्ठानदेवता । रतिः मन्मथस्त्री । स्वैरचारिणी स्वतन्त्रा ॥ १६ ॥ समाः वैषम्यरहिताः । शिखराणि अग्राणि प्रशस्तानि सन्तीति शिखरिणः । प्रशंसायामिनिः । कुन्दकुड्मलवत्प्रशस्ताग्रा इत्यर्थः । स्निग्धाः मसृणाः । रक्तान्ते रक्तरेखायुक्तान्ते । जघनं कटिपुरोभागः । "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः ॥ १७—१८ ॥ उपचितौ उन्नतौ । वृत्तौ वर्तुलौ । संहतौ अन्योन्यसंश्लिष्टौ । सम्यक् प्रकृष्टं वल्गितं चलनं ययोस्तौ संप्रवल्गितौ गुरुत्वौन्नत्याभ्यां किंचिच्चलन्ताविव स्थिताविव्यर्थः । पीनोन्नतमुखौ कचित्स्तनयोः पीनत्वेप्यग्रे औन्नत्यं पीनत्वं च न स्तः तथा न भवत इमौ किंतु पीनं उन्नतं च मुखं ययोस्तौ । कान्तौ काम्यमानौ । मणिप्रवेकाभरणौ मणिप्रवेकाः मणिश्रेष्ठाः । "प्रवेकानुत्तमोत्तमाः" इत्यमरः । ते मालात्मकाः आभरणं ययोस्तौ । रुचिरौ शोभमानौ । सूक्ष्मतरकौशेयोत्तरीयचलनवशेन हठाद्दृष्टः प्रकारो दुरात्मना वर्ण्यते ॥ १९ ॥ चारवो दन्ता यस्याः सा चारुदती । आर्षो दन्तस्य दत्रादेशः । छन्दोवद्भावेन "छन्दसि च" इति सूत्रेण समासान्तो दन्तस्य दत्रादेशो वा "उगितश्च" इति ङीप् । समा इत्यादिना पूर्वोक्तस्य सामान्योक्तिरियं चारुस्मितत्वनिर्वाहाय । विलासोऽम्भ-

---

शोकेनचाभिपीडितां । स्वयमग्नौप्रविश्य मांरक्षसे दत्तवतीति शोकबाष्पौ । रामव्यसनशङ्कयेत्यापाततोर्थः ॥ ११ ॥ **शि०** अब्रवीत् प्रशंसितुमैच्छत् । अतएववक्ष्यमाणेन नपौनरुक्त्यं ॥ १३ ॥ **टीका०** कालमित्यादिप्रश्नस्तयासह संलापार्थः नत्वज्ञानज्ञानार्थः । **ति०** रौप्यकाञ्चनं उत्तमकाञ्चनं ॥१५॥ **शि०** श्रीः शोभासंपत्तिः । लक्ष्मीरैश्वर्यसंपत्तिरिति नपौनरुक्त्यं ॥ **ति०** ह्रीः गौरी । श्रीः ऐश्वर्यप्रधानाभगवच्छक्तिः । भूतिरणिमादिसिद्धिः ॥१६॥ **ति०** संप्रगल्भितौ आलिङ्गनादौ संजातप्रागल्भ्यौ । संप्रवल्गितावितिपाठे आलिङ्गनोद्यतावित्यर्थः ॥ १९ ॥ **स०** हेरामे हेसीते । नदीतिकर्तृनिर्देशः । नदी स्वांभोलक्षणकरणे नकूलं

**[ पा० ]** १ ख. विशालाक्षीं. २ च. छ. ज. ञ. दुष्टचित्तो. ग. दुष्टरूपो. ३ ग. ङ. झ. ट. दृष्ट्वाकामशराविद्धो. ४ क. ङ—ट. त्रिलोकानां. ५ ङ. झ. ट. रौप्यकाञ्चन. ६ क. ङ—ट. श्रीःकीर्तिः. ७ च. छ. ज. ञ. वरानने. ८ क. ख. भूमिर्वा. ९ ग. गजकरोपमौ. १० क. ख. घ. ङ—ज. सहितौ. झ. संप्रगल्भितौ. ११ च. छ. ज. ञ. श्रेष्ठौ. क. ङ. झ. ट. स्निग्धताल. १२ ङ. झ. ट. रुचिरौतौ. १३ छ. झ. ञ. ट. रामे.

करान्तमितमध्यासि सुकेशी संहतस्तनी ॥२१॥
नैव देवी न गन्धर्वी न यक्षी नच किन्नरी ॥ नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥ २२ ॥
रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते ॥ इह वासश्च कान्तारे चित्तमुन्मादयन्ति मे ॥ २३ ॥
सा प्रतिक्राम भद्रं ते न त्वं वस्तुमिहार्हसि ॥ राक्षसानामयं वासो घोराणां कामरूपिणाम् ॥२४॥
प्रासादाग्राणि रम्याणि नगरोपवनानि च ॥ संपन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ॥ २५ ॥
वरं माल्यं वरं भोज्यं वरं वस्त्रं च शोभने ॥ भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे ॥ २६ ॥
का त्वं भवसि रुद्राणां मरुतां वा वरानने ॥ वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ २७ ॥
नेह गच्छन्ति गन्धर्वा न देवा न च किन्नराः ॥ राक्षसानामयं वासः कथं नु त्वमिहागता ॥ २८ ॥
इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगास्तथा ॥ ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसि ॥२९॥
मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् ॥ कथमेका महारण्ये न बिभेषि वरानने ॥ ३० ॥
कासि कस्य कुतश्चित्त्वं किंनिमित्तं च दण्डकान् ॥ एका चरसि कल्याणि घोरान्राक्षससेवितान् ॥ ३१ ॥
इति प्रशस्ता वैदेही रावणेन दुरात्मना ॥ द्विजातिवेषेण हितं दृष्ट्वा रावणमागतम् ॥
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥ ३२ ॥
उपनीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च ॥ अब्रवीत्सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥ ३३ ॥

स्थानीयः । अतो न न्यूनोपमा ॥ २० ॥ करान्तेति करान्तेन करतलाङ्गुष्ठप्रदेशिनीचक्रमानेन मितं परिच्छिन्नं मध्यं यस्याः सा । संहतस्तनीति पूर्वं संहतावित्युक्तकल्पेपि पुनरुक्तिर्दुर्लभलक्षणत्वविस्मयेन ॥ २१ ॥ एवंरूपा देवी देवस्त्री । देवलोके न दृष्टा । एवमुत्तरत्रापि योज्यं । नारी मनुष्यस्त्री ॥ २२ ॥ लोकेष्वग्र्यं श्रेष्ठं । रूपं लावण्यं । रूपादीनि कान्तारवासश्च उन्मादयन्ति परस्परविरुद्धत्वात् । किमत्र तवागमनमिति निर्णयबुद्धिं न जनयन्तीत्यर्थः ॥२३॥ प्रतिक्राम प्रतिनिवर्तस्व । निलयमिति शेषः । वस्तुं स्थातुं ॥ २४ ॥ संपन्नानि समृद्धानि । आचरितुं संचरितुम् ॥ २५ ॥ वरं श्रेष्ठं । माल्यादि त्वद्युक्तं तव योग्यं मन्ये । नतु यादृशतादृशं । एवमुत्तरत्रापि । यद्वा माल्यादिकं त्वद्युक्तं त्वत्संबद्धं सत् वरं प्रशस्तं भवतीति मन्ये ॥ २६ ॥ त्वं मे देवता देवस्त्रीति प्रतिभासि । तत्र कात्वं किं रुद्राणां संबन्धिनी उत मरुतां आहोस्विद्वसूनां संबन्धिनी । वाकारःसमुच्चयार्थः । तेन किमादित्यानामित्यपि सिध्यति ॥ २७ ॥ तत्रापि संशयनिवृत्तिमाह—नेहेति ॥ २८ ॥ भयहेत्वन्तरमाह—इहेति । शाखामृगाः वानराः । द्वीपं चर्म तद्योगात् द्वीपिनो बालव्याघ्राः । व्याजिघ्रन्तीति व्याघ्राः द्वीप्यपेक्षया किञ्चिन्महान्तोऽमी । तरक्षवो मृगादनामहाव्याघ्राः । न बिभ्यसि न बिभेषि । कङ्काः मांसादा भयंकराकृतयःपक्षिविशेषाः ॥ २९ ॥ पञ्चम्यर्थे षष्ठी । तरस्विनां बलवतां ॥ ३० ॥ कासि किंनामधेयासि । कस्य संबन्धिनी । कुतः कस्माद्देशादागतासि ॥ ३१ ॥ द्विजातिवेषेण संन्यासिवेषेण हितं सहितं । सत्क्रियते एभिरिति सत्काराः पूजाद्रव्याणि तैः ॥ ३२ ॥ उक्तं विवृणोति—उपनीयेति । पाद्येन पादोदकेन । अभिनिमन्त्र्य सत्कृत्य । तदा पाद्यप्रदानानन्तरं सिद्धमि-

यथा तथेत्यर्थः । तैश्चारुस्मितादिभिर्मनोहरसीत्यर्थः । अरामे इतिच्छेदः । रामरहितदेशेवा ॥ २० ॥ **ति०** प्रतिक्राम निर्गच्छ । रामचन्द्राधिष्ठितस्थाने राक्षसपराक्रमासंभवादेवंवचनं ॥ २४ ॥ **ति०** द्वीपिव्याघ्रौ सबिन्दुनिर्बिन्दू ॥ २९ ॥ **ति०** द्विजातिवेषेण तमागतंदृष्ट्वा द्विजातिवेषोऽयंरावणइतिज्ञात्वापि । अतिथिसत्कारैः अतिथियोग्यसत्कारैः ॥ ३२ ॥

**[ पा० ]** १ ख. रूपमप्रतिमंलोके. २ क. ख. घ. संप्रतिक्राम. ३ ङ. झ. ट. गन्धं. ४ क. ग. ङ—ट. शुचिस्मिते. ख. शुभानने. ५ क. ख. ङ. च. ज. ञ. नेहागच्छन्ति. ६ ङ. झ. ट. मृगावृकाः. ७ क—ट. बिभ्यसे. ८ ङ. झ. ट. महात्मना. ९ ख—ङ. झ. ट. उपानीय. १० क. सौम्यदर्शना.

द्विजातिवेषेण समीक्ष्य मैथिली समागतं पात्रकुसुम्भधारिणम् ॥
अशक्यमुद्द्वेष्टुमुपायदर्शनं न्यमन्त्रयद्ब्राह्मणवत्तदाऽङ्गना ॥ ३४ ॥
इयं बृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतामिति ॥
इदं च सिद्धं वनजातमुत्तमं त्वदर्थमव्यग्रमिहोपभुज्यताम् ॥ ३५ ॥
निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ॥
प्रसह्य तस्या हरणे धृतं मनः समार्पयत्स्वात्मवधाय रावणः ॥ ३६ ॥
ततः सुवेषं मृगयागतं पतिं प्रतीक्षमाणा सहलक्ष्मणं तदा ॥
विवीक्षमाणा हरितं ददर्श तन्महद्वनं नैव तु रामलक्ष्मणौ ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

त्येवाब्रवीत् पक्वान्नं सिद्धमित्यब्रवीत् ॥३३॥ उक्तमर्थं सर्गान्तश्लोकाभ्यां विवृणोति द्विजातीति। द्विजातिवेषेण समागतं प्राप्तं। अलाबुप्रभृतिष्वेकं कुसुम्भं महारजताख्यरञ्जकद्रव्यविशेषरक्तं वस्त्रं। "तेन रक्तं—" इति प्राप्तस्याणो लोप आर्षः। यद्वा कुसुम्भः कमण्डलुः। "स्यान्महारजते क्लीबं कुसुम्भं करके पुमान्" इत्यमरः। तदुभयधारिणं। अपाये अपहरणे अनर्थकरणे वा दर्शनं बुद्धिर्यस्य तं। अत एव उद्द्वेष्टुं भोजयितुमशक्यं तं समीक्ष्य मैथिली ब्राह्मणवत् ब्राह्मणेन सदृशं यथा भवति तथा। न्यमन्त्रयत् ब्राह्मणातिथिवन्निमन्त्रितवतीत्यर्थः। यद्वा ब्राह्मणवत् ब्राह्मणार्हं। "तदर्हं" इति वतिः। यद्वा मैथिली जनककुलजाततया तद्व्यवहारपरिपाटीविज्ञातकपटवेषापि संन्यासिवेषधारणमात्रेण उद्द्वेष्टुं द्वेषं कर्तुं। अशक्यं तं न्यमन्त्रयत्। "काषायदण्डमात्रेण यतिः पूज्यो न संशयः" इति वचनादिति भावः ॥ ३४ ॥ सत्कारप्रकारमाह—इयमिति। इयं बृसी मुनीनामासनं। आस्यतां त्वदर्थं सिद्धं पक्वं। इदं वनजातं कन्दमूलफलादिकं। इह स्थले अव्यग्रमुपभुज्यतां। इतिकरणस्य उत्तरश्लोकेऽन्वयः ॥ ३५ ॥ इति प्रतिपूर्णभाषिणीं सर्वं संपन्नमित्यतिथये वक्तव्यंवचनंभाषमाणां। धृतं धीरं यथा तथा मनोविशेषणं वा। तस्या हरणे मनः समार्पयत् निहितवान् ॥ ३६ ॥ सुवेषं शोभनाकारं मृगयागतं मृगयार्थंगतं पतिं प्रतीक्षमाणा प्रतिपालयन्ती। हरितं यत्र गतौ तौ तां दिशं विवीक्षमाणा विविधं पश्यन्ती। महद्वनमेव ददर्श रामलक्ष्मणौ तु न ददर्श ॥३७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

**ति०** उपायानांब्राह्मणत्वप्रतिपत्त्यैरावणेनकृतानांकाषायवस्त्रब्रह्मघोषदण्डादीनांदर्शनात्। उद्द्वेष्टुंउपेक्षितुंअशक्यमितिविचार्यैतिशेषः। तथागतं ब्राह्मणवेषेणागतं। रावणं ब्राह्मणवदेव न्यमन्त्रयत्। पाठान्तरंत्वत्राशक्तकल्पितं। अयमेवरक्षस्संहारोपाय इतिदर्शनादित्यपि गूढमत्र ॥ ३४ ॥ **टीका०** "यतीनांपूजनंकार्यं स्त्रियावापुरुषेणवा" इत्युक्तत्वात्सीता तमपूजयदितिभावः ॥ ३५ ॥ **वि०** मनस्समर्पयित्वात्मवधायेतिपाठे हरणेधृतंनिश्चितंमनस्समर्पयित्वा दत्वास्थितइत्यर्थः ॥ ३६ ॥ **रामानु०** हरितं श्यामं ॥ ३७ ॥ **ती०** फलश्रुतिस्स्कान्दे—"सीतारावणसंवादं येश्शृण्वन्तिनरोत्तमाः। नतेषांपापराशिभ्यः पीडालोकेभविष्यति" इति ॥ ३८ ॥ इतिषट्चत्वारिंशस्सर्गः ॥ ४६ ॥

[ **पा०** ] १ क. च. छ. ज. ञ. तमागतं. २ क. घ. च. छ. ज. मुपायदर्शनं. क. ङ. झ. ञ. ट. मुपायदर्शनान्यमन्त्रयत्. ३ ङ. झ. ट. तथागतं. ४ ङ. झ. ञ. ट. समर्पयामासवधाय. च. छ. ज. समर्पयित्वाऽऽत्मवधाय. क. ख. समर्पयन्नात्मवधाय. ५ ङ—ञ. निरीक्षमाणा. ग. समीक्षमाणा.

# सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

सीतयारावणंप्रतिशापभीत्या स्वयाथात्म्येनसहवनागमनकारणकथनपूर्वकंतद्याथात्म्यप्रश्नः ॥ १ ॥ लब्धावकाशेनरावणेन सीतांप्रतिस्वस्यरावणत्वाविष्करणेनस्ववैभवप्रशंसनपूर्वकंस्वकलत्रीभवनप्रार्थना ॥ २ ॥ सीतयारावणंप्रतिरामगुणानुवर्णनेन स्वस्यतदन्यकामनाऽभावनिवेदनपूर्वकंसदृष्टान्ताभिधानंरामरावणयोस्तारतम्यप्रतिपादनेनबहुधातद्गर्हणम् ॥ ३ ॥

रावणेन तु वैदेही [1]तथा पृष्टा [2]जिहीर्षता ॥ [3]परिव्राजकलिङ्गेन [4]शशंसात्मानमङ्गना ॥ १ ॥
[5]ब्राह्मणश्चातिथिश्चायमनुक्तो हि शपेत माम् ॥ इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥ २ ॥
दुहिता जनकस्याहं मैथिलस्य महात्मनः ॥ सीता नाम्नाऽस्मि भद्रं ते [6]रामभार्या द्विजोत्तम ॥ ३ ॥
उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ॥ भुञ्जानान्मानुषान्भोगान्सर्वकामसमृद्धिनी ॥ ४ ॥
[7]ततस्त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः ॥ अभिषेचयितुं रामं [8]समेतो राजमन्त्रिभिः ॥ ५ ॥
तस्मिन्संभ्रियमाणे तु [9]राघवस्याभिषेचने ॥ कैकेयी नाम [10]भर्तारमार्या सा याचते वरम् ॥ ६ ॥
[11]प्रतिगृह्य तु कैकेयी श्वशुरं [12]सुकृतेन मे ॥ [13]मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ॥
द्वावयाचत भर्तारं सत्यसन्धं नृपोत्तमम् ॥ ७ ॥

---

अथ मैथिली आर्जवेन स्वस्वरूपमुक्त्वा रावणानार्जवदर्शनेन स्वपातिव्रत्यानुरूपं तमुपालभते—रावणेन त्वित्यादिना । जिहीर्षता हर्तुमिच्छता । तेन कापट्येन पृष्टापि यतिचिह्नं पुरस्कृत्य स्वयाथात्म्यमुक्तवतीति भावः ॥ १ ॥ यतिवेषंप्रत्यासवंशं सा किमर्थमुक्तवतीत्यत्राह—ब्राह्मणश्चेति ॥ २ ॥ कासीत्यस्योत्तरमाह—दुहितेति । कस्येत्यस्योत्तरमाह—रामेति ॥ ३ ॥ कुतश्चिदित्यादेरुत्तरमाह—उषित्वेत्यादिना । विवाहानन्तरं इक्ष्वाकूणां निवेशने अयोध्यायां । द्वादशसमाः द्वादशवत्सरानुषित्वा तत्र सर्वकामसमृद्धिनी काम्यन्त इति कामाः भोगोपकरणस्रक्चन्दनादीनि तेषां समृद्धं समृद्धिः भावे निष्ठा । तद्वती सती मानुषान्भोगान् रतिक्रीडाः । अग्राम्यत्वाय मानुषानित्युक्तं । वस्तुतः स्वयं दिव्यभोगपरतया मानुषानित्यवशमुक्तवती । यद्वा मानुषान् मनुष्यत्वेनावतीर्णरामकृतान् भोगान् । अमानुषानिति वा छेदः । मनुष्यदुर्लभान् दिव्यान्भोगानित्यर्थः । भुञ्जाना अभवमिति शेषः । सर्वकामसमृद्धिनि इति सप्तम्यन्तपाठे सर्वकामसमृद्धिनि इक्ष्वाकूणां इक्ष्वाकुवंश्यस्यरामस्य । पूजायां बहुवचनं । व्रीडया भर्तृनामाग्रहणं । निवेशने गृहे । द्वादश समाः द्वादश वत्सरान् । अत्यन्तसंयोगे द्वितीया । अमानुषान्भोगान् भुञ्जाना अनुभवन्ती सती उषित्वा उषितवत्यस्मि । व्यत्ययेन त्वाप्रत्ययः ॥ ४ ॥ राजा दशरथः । अमन्त्रयत् अकथयत् । राजमन्त्रिभिः मन्त्रिराजैः मन्त्रिश्रेष्ठैरिति यावत् । राजदन्तादित्वात्परनिपातः ॥ ५ ॥ तस्मिन् रामाभिषेचने । संभ्रियमाणे आरभ्यमाणे सति । आर्या पूज्या मम श्वश्रूरित्यर्थः । सा प्रसिद्धा कैकेयी वरं याचते अयाचत ॥ ६ ॥ कं वरं कमयाचतेत्यत्राह—प्रतिगृह्येति । सार्धश्लोक एकान्वयः । कैकेयी मे श्वशुरं स्वस्य भर्तारं । सत्यसन्धं सत्यप्रतिज्ञं । नृपोत्तमं दशरथं सुकृतेन प्रतिगृह्य धर्मेणशापयित्वा । यद्वा । सुकृतेनोपकारेण प्रतिगृह्य वशीकृत्य । स्वकृतप्राणप्रदानोपकारस्मारणेन राजानं वशीकृत्येत्यर्थः । मम भर्तुः प्रव्राजनं भरतस्याभिषेचनमित्येवंरूपौ द्वौ

---

**ति०** ननु पूजामात्रंकर्तव्यं किं प्रतिवचनेनेत्यत्राह—**ब्राह्मणश्चेति** । एषअनुक्तइत्यार्षोसन्धिः ॥ अनुक्तः अनुक्तप्रतिवचनः ॥ २ ॥ **ति०** ममार्या ममपूज्याश्वश्रूः । अनार्येतिक्वचित्पाठः ॥ ६ ॥

**[ पा ]** १ ङ. छ. झ. ञ. ट. तदा. २ च. ज. जिहीर्षया. ङ. झ. ञ. ट. जिहीर्षुणा. ३ ङ—ट. रूपेण. ४ क. ख. घ. ङ. छ. ञ. ट. त्मानमात्मना. ५ क. ख. च. छ. ज. ञ. श्चातिथिश्चैवह्यनुक्तो. घ. ङ. झ. ट. श्चातिथिश्चैषअनुक्तो. ६ ख. घ. रामस्यमहिषीद्विज. ङ. झ. ट. रामस्यमहिषीप्रिया. ७ क—ट. तत्रत्रयोदशे. ८ ख. सर्वेषांमतमास्थितः. ९ ख. मध्यमामहिषीविभोः. १० ङ—ट. भर्तारममार्यायाचते. ख. भर्तारमनार्यायाचते. ११ ख. ग. ङ. छ. झ. ट. परिगृह्य. १२ च. छ. ज. ञ. सुकृतेनवै. १३ ख. विवासनंचमे.

नाद्य भोक्ष्ये न च स्वप्स्ये न पास्ये च कथंचन[1] ॥ एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते[2] ॥ ८ ॥
इति ब्रुवाणां कैकेयीं श्वशुरो मे स मानदः[3] ॥ अयाचतार्थैरन्वर्थैर्न च याञ्चां चकार सा ॥ ९ ॥
मम भर्ता महातेजा वयसा पञ्चविंशकः ॥ अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥ १० ॥
रामेति प्रथितो लोके गुणवान्सत्यवाञ्शुचिः[4] ॥ विशालाक्षो महाबाहुः सर्वभूतहिते रतः ॥ ११ ॥
कामार्तस्तु[5] महातेजाः[6] पिता दशरथः स्वयम् ॥ कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् ॥ १२ ॥

वरावयाचत ॥ ७ ॥ पास्य इत्यात्मनेपदमार्षम् । एषः अभिषेकः ॥ ८ ॥ मानदः बहुमानप्रदः । अन्वर्थैः अर्थानुगतैः सप्रयोजनैरिति यावत् । उपभोगक्षमैरित्यर्थः । अर्थैः सुवर्णरत्नादिभिः । कैकेयीमयाचत वरद्वयप्रतिनिधित्वेनैतानर्थान्प्रतिगृहाणेति प्रार्थयामासेत्यर्थः । सा तां याञ्चां न चकार नाङ्गीचकार ॥ ९ ॥ वस्तुतो मम भर्ता प्रव्राजनायोग्यः बालत्वाद्गुणवत्त्वाच्चेत्याह—मम भर्तेति । पञ्चोत्तरा विंशतिः पञ्चविंशतिः वयसा पञ्चविंशतिवर्षाण्यर्हतीति पञ्चविंशकः । "विंशतित्रिंशद्भ्यांड्वुनसंज्ञायां" इत्याहीयो ड्वुन्प्रत्ययः । "संख्यापूर्वपदानां तदन्तग्रहणमलुकि" इति तदन्तविधिः । पञ्चविंशतिवर्ष इत्यर्थः । वयःपरिमाणं वननिर्गमनकालिकं । मम जन्मनि सति वर्षाण्यष्टादशेति गण्यते । रामस्य जन्मारभ्य द्वादशे वर्षे विश्वामित्रागमनं । तदनन्तरं वैदेह्या सह नगरे द्वादशवर्षाणि वासं कृतवान् । ततः परं त्रयोदशे वर्षे यौवराज्याभिषेकारम्भः । ततश्च वनप्रवेशसमये रामः पञ्चविंशतिवर्षार्हः । ततो मुनीनामाश्रमेषु दश वत्सराः पञ्चवट्यां त्रयः वनवासस्य चतुर्दशे वर्षे सीताहरणं । सीतायाश्च भूगर्भादाविर्भावानन्तरं मिथिलायां षट् संवत्सराः ततो विवाहानन्तरमयोध्यायां द्वादश इत्येवमष्टादश वर्षा गता वनवासारम्भ इत्युक्तं । विस्तरेणायमर्थः "ऊनषोडशवर्षोमे" इत्यत्र प्रत्यपादि । इदानीं तु रामः अष्टत्रिंशद्वर्षः मम लेकत्रिंशद्वर्षा गताः । इदानीं तु द्वात्रिंशो वर्षो वर्तते । अस्मिञ्श्लोके मम भर्तेत्यत्र भकारो गायत्र्याः नवमाक्षरं । अष्टसहस्रश्लोका गताः ॥ १० ॥ एवं वनवासायोग्यं वय इत्युक्त्वा गुणवत्तया प्रव्राजनानर्हत्वमाह—रामेतीति । गुणवान् सौशील्यवान् ॥ ११ ॥ एवंभूतस्य प्रव्राजनं दशरथदोषकृतमित्याह—कामार्त इति । नाभ्यषेचयत् कैकेयीसंमतिं विनेति शेषः । तत्र हेतुः—प्रियकामार्थमिति । प्रियकरणकामाय प्रतिज्ञातकैकेयीप्रियकरणनिर्वाहायेत्यर्थः । तव प्रियं करिष्यामीति प्रथमप्रतिज्ञाकरणे हेतुः—कामार्त इति । कामार्ततया प्रथमं तव यत्प्रियं तत्करिष्यामीति प्रतिज्ञाय पश्चाद्रामप्रव्राजनेतया वृते

ति० वयसापञ्चविंशकः । वननिर्गमनकालइतिशेषः । नन्विदमयुक्तं—ऊनषोडशवर्षोयमिति विश्वामित्रंप्रतिदशरथोक्तेः उषित्वाद्वादशसमाइत्यत्रोक्तेश्चेतिचेन्न । अल्पान्तरत्वात् । अतितरुणावस्थायामपिराज्यंत्यक्तवानित्यर्थेतात्पर्येणास्थयातथोक्तेः । यद्वाऽतिक्रान्तपञ्चविंशकइत्यर्थः । ममभर्तावयसा महातेजाः । अतितरुणइत्यर्थः । पञ्चविंशकः साङ्ख्यसिद्धंपञ्चविंशतत्वंचैतन्यंसोयमेव । एतच्चैतन्येनैवजगद्व्याप्तं । नततोऽधिकंकिञ्चिदस्तीतिसूचयितुंतथोक्तिरितितत्वं । ममजन्मतोवनप्रवेशसमयेअतीतानीत्यर्थः । गण्यतइत्यार्षमेकत्वं । ममपञ्चतन्मात्रपञ्चमहाभूतपञ्चेन्द्रियाहङ्कारबुद्धिमनोरूपाण्यष्टादशवर्षाणिपर्वाणि जन्मनि कार्येगण्यन्तइति तन्मूलीभूता प्रकृतिरहमितिसूचितम् । स० वयसापञ्चविंशकः तदानीं । यदत्रवक्तव्यंतदुक्तमयोध्याकाण्डे । एतज्जन्मनि ममवर्षाण्यष्टादशेति गण्यते गण्यन्ते । यद्वा जन्मेतिद्वितीयान्तं । आरभ्येतिशेषः । जन्मारभ्य ममवर्षाण्यष्टादशेत्यन्वयः । लोकेयोरामेतिप्रथितोनिगण्यते प्रथमतश्शरेषुयश्चगुणवान् इति यच्छब्दाध्याहारेण एतच्छ्लोकस्य कैकेय्याःप्रियकामार्थंराममित्यत्रत्यतच्छब्देनान्वयः । एतादृशगुणवन्तमपिरामंकामार्तस्सन्नाभ्यषेचयदिति स्तोतुंरामं प्रवृत्तत्वादनयोश्श्लोकयोर्नासंगतिरिति बोध्यं ॥ शि० वयसापञ्चविंशकः पञ्चविंशेनयुक्ताः काः त्रयोयस्यसः अष्टाविंशतिवार्षिकइत्यर्थः । अयोध्यातोनिर्गमनसमये इतिशेषः । अतएव "ऊनषोडशवर्षोमे रामोराजीवलोचनः" इतिविश्वामित्रंप्रतिदशरथोक्त्या "उषित्वाद्वादशसमा इक्ष्वाकूणांनिवेशने" इति रावणंप्रतिसीतोक्त्याच सिद्धस्य वनप्रवेशसमये अष्टाविंशतिवार्षिकत्वस्य नापलापः । निरूपितंचैतत् "ऊनषोडशवर्षोमे" इत्यत्रत्यव्याख्याने । ममजन्मनि प्रादुर्भावेसतितु अष्टादशवर्षाणिगण्यन्ते । अयोध्यातोनिर्गमनसमयेअष्टादशवर्षाणिमेव्यतीतानीत्यर्थः ॥ १० ॥ शि० कामार्तः कामेनकिञ्चिद्विषयकेच्छयाआर्तोयुक्तः ॥ १२ ॥

[ पा० ] १ क. ख. ग. ङ. च. ज—ट. कदाचन. २ ङ. झ. ट. यदभिषिच्यते. ३ ङ. झ. ट. पार्थिवः. ४ ङ. झ. ट. सत्यवाञ्शीलवाञ्शुचिः. ५ च. छ. ज. ञ. कामार्तश्च. ख. कामार्थंच. ६ ङ. झ. ट. महाराजः. ख. महाबाहुः.

अभिषेकाय तु पितुः समीपं राममागतम् ॥ कैकेयी मम भर्तारमित्युवाच धृतं[1] वचः ॥ १३ ॥
तव पित्रा समाज्ञप्तं ममेदं शृणु राघव ॥ भरताय प्रदातव्यमिदं राज्यमकण्टकम् ॥ १४ ॥
त्वया[2] हि खलु वस्तव्यं नव वर्षाणि पञ्च च ॥ वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात्[3] ॥ १५ ॥
तथेत्युक्त्वा[4] च तां रामः कैकेयीमकुतोभयः ॥ चकार तद्वचस्तस्या[5] मम[6] भर्ता दृढव्रतः ॥ १६ ॥
दद्यान्न प्रतिगृह्णीयात्सत्यं ब्रूयान्न चानृतम् ॥ एतद्ब्राह्मण रामस्य ध्रुवं[7] व्रतमनुत्तमम् ॥ १७ ॥
तस्य भ्राता तु द्वैमात्रो[8] लक्ष्मणो नाम वीर्यवान् ॥ रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ॥ १८ ॥
स [9]भ्राता लक्ष्मणो नाम धर्मचारी[10] दृढव्रतः ॥ अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ॥ १९ ॥
जटी तापसरूपेण मया सह सहानुजः ॥ प्रविष्टो दण्डकारण्यं धर्मनित्यो[11] जितेन्द्रियः[12] ॥ २० ॥
ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः ॥ विचराम[13] द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥ २१ ॥
समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया ॥ आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ॥
[ रुरून्[14] गोधान्वराहांश्च हत्वाऽऽदाया[15]मिषान्बहून् ] ॥ २२ ॥
स त्वं नाम च गोत्रं च कुलं[16] चाचक्ष्व तत्त्वतः ॥ एकश्च दण्डकारण्ये[17] किमर्थं चरसि द्विज ॥२३॥
एवं ब्रुवन्त्यां सीतायां रामपत्न्यां[18] महाबलः ॥ प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः[19] ॥ २४ ॥

प्रतिज्ञाभङ्गं कर्तुमक्षमो नाभ्यषेचयदित्यर्थः ॥ १२॥ सामान्यतआह्वानेनाभिषेकाय भवितुमर्हति मदाह्वानमित्यागतमित्यर्थः । धृतं धैर्ययुक्तमिति क्रियाविशेषणं ॥ १३ ॥ तवेत्यादिश्लोकद्वयमेकान्वयं । त्वद्विषये पित्रा समाज्ञप्तं समाज्ञापनं । मम मत्तः । शृणु । इदं राज्यं भरताय प्रदातव्यं तदर्थं त्वया नवपञ्चच वर्षाणि चतुर्दशवर्षाणीत्यर्थः । वने वस्तव्यं तदर्थं प्रव्रज अनृतात् प्रतिज्ञाभङ्गरूपात् ॥ १४—१५ ॥ अकुतोभयः राज्यत्यागवनवासाभ्यां भयरहितः ॥१६॥ दृढव्रत इत्युक्तमुपपादयति—दद्यादिति । ध्रुवं निश्चलं । अनुत्तमं अवश्यपरिपालनीयं ॥ १७ ॥ द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः । अण् प्रत्ययः । "मातुरुत्सङ्ख्या—" इत्युदादेशाभाव आर्षः । गुर्वक्षरं च छान्दसम् । अरिहेतिछन्दोवद्भावात् " बहुलं छन्दसि " इति सूत्रेण ब्रह्मादिभिन्नेप्युपपदे क्विप् । अन्येभ्योपि दृश्यते " इत्यत्र दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वाद्वा क्विप् ॥ १८ ॥ मया सह अन्वगच्छदित्यन्वयः ॥ १९ ॥ तापसरूपस्यानेकरूपत्वाज्जटीति विशेषयति ॥ २० ॥ कृते प्रयोजनाय । क्रियते संपाद्यत इति कृत् । संपदादित्वात् क्विप् । गम्भीरं दुष्प्रवेशं । ओजसा बलेन । "ओजो दीप्तौ बले—" इत्यमरः ॥ २१ ॥ समाश्वस समाश्वसिहि विश्रान्तिं कुर्वित्यर्थः । वस्तुं स्थातुं । शक्यं पवित्रदेशत्वादिति भावः । पुष्कलं समग्रं ॥ २२ ॥ स त्वं एवं समाश्वस्तस्त्वं । कुलं गृहं । "कुलमन्वयसंघातगृहपर्याश्रमेष्वपि—" इति निघण्टुः । ननु संन्यासिनं प्रति कुलगोत्रप्रश्नोनुपपन्नः एकाकितयारण्ये संचारश्च यतेर्धर्म एव अतोसङ्गत इव प्रतिभातीति चेत् उच्यते । पूर्वाश्रमनामगोत्रप्रश्नोयं । "भिक्षार्थं ग्रामं प्रविशेत्" इति श्रुत्या भिक्षोर्ग्रामसमीपारण्ये वस्तव्यं नतु ग्रामप्रसङ्गरहितेरण्य इति कथं भवान् भिक्षाप्रदजनरहितेचरतीति प्रश्न उपपद्यते ॥ २३ ॥ आत्मवै-

**तनि०** दद्यादित्यनेन अर्थिनांयावदपेक्षितंदानंविवक्षितं । नप्रतिगृह्णीयादित्यनेनावाप्तसमस्तकामत्वंव्यज्यते ॥ १७ ॥ **ती०** द्वैमात्रः द्वयोर्मात्रोरपत्यं सापत्नीकमातुःपुत्रइत्यर्थः ॥ **ति०** वैमात्रः शुभ्रादिषुविमातृशब्दपाठेप्यार्षोऽण् । असहोदरोभ्रातेत्यर्थः । विभिन्नायामातुरपत्यंवैमात्रः ॥ १८ ॥ **स०** वन्यंफलाद्यादाय आमिषमादायेति वैलक्षण्यद्योतनायद्विवारमुक्तिः ॥

**[ पा० ]** १ क. ग. च. छ. ज. ञ. दृढं. ख. ङ. झ. ट. द्रुतं. २ क—ट. त्वयातु. ३ ग. मोचयत्वृणात्. ४ ङ. झ. ट. तथेत्युवाच. ५ च. छ. ज. ञ. वचनंतस्या.. ङ. झ. ट. तद्वचश्श्रुत्वा. ६ क. ख. ग. ङ. झ. ट. भर्तामम. ७ ख. घ—ज. ञ. ट. व्रतंध्रुवं. झ. व्रतंधृतं. ८ ङ. झ—ठ. वैमात्रो. ९ च. छ. ज. ञ. तद्भ्राता. १० ङ. झ. ट. ब्रह्मचारी. ११ क. धर्मयुक्तो. १२ ग. ङ—ट. दृढव्रतः. १३ ख. ग. विचरामो. १४ इदमर्धं ख. ङ. झ. ट. पाठेषुदृश्यते. १५ ख. ङ. झ. ट. यामिषंबहु. १६ ख. ग. ङ. झ. ट. कुलमाचक्ष्व. १७ च. छ. ज. दण्डकारण्यं. १८ ङ. राजपत्न्यां. १९ ख. राक्षसेश्वरः.

येन:वित्रासिता लोकाः सदेवासुरपन्नगाः ॥ अहं तु रावणो नाम सीते रक्षोगणेश्वरः ॥ २५ ॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ॥ रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥ २६ ॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ॥ सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २७ ॥
लङ्का नाम समुद्रस्य मध्ये मम महापुरी ॥ सागरेण परिक्षिप्ता निविष्टा नगमूर्धनि ॥ २८ ॥
तत्र सीते मया सार्धं वनेषु विहरिष्यसि ॥ न चास्यारण्यवासस्य स्पृहयिष्यसि भामिनि ॥ २९ ॥
पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः ॥ सीते परिचरिष्यन्ति भार्या भवसि मे यदि ॥ ३० ॥
रावणेनैवमुक्ता तु कुपिता जनकात्मजा ॥ प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ ३१ ॥

भवप्रकटनावसरप्रतीक्षकतया तीव्रं झटितीत्युक्तं ॥ २४ ॥ लोकाः जनाः ॥ २५ ॥ काञ्चनवर्णाभां स्वर्णवर्णतुल्यकान्तिं ॥ २६ ॥ उत्तमस्त्रीणामिति निर्धारणे षष्ठी ॥ २७ ॥ समुद्रमध्ये वर्तमाने नगमूर्धनि गिरिशृङ्गप्रदेशे । निविष्टा कृतनिवेशा । सागरेण सगरनिर्मितेनसमुद्रेण । परिक्षिप्ता परिवृता । पुरी मम अस्तीति शेषः ॥ २८ ॥ वनेषु उद्यानेषु । अरण्यवासस्येति चतुर्थ्यर्थे षष्ठी ॥ २९ ॥ पञ्च सहस्राणि दास्यस्त्वां परिचरिष्यन्ति ॥३०॥ तुशब्देन पूर्वोक्तोपचारवचनविलक्षणवचना ॥ ३१ ॥

यद्वा अदभक्षणइत्यस्माद्भावेघञ्जि आदाय भक्षणार्थमित्यर्थोबोध्यः ॥ २२ ॥ **ती०** वस्तुतस्तु त्वां ममेष्टदेवतामित्यर्थः । दृष्ट्वा स्वकेषुपुत्रमित्रादिषुदारेषुच । रतिं इच्छां । नाधिगच्छामि । ममेष्टदेवतायास्तवदर्शनेनानन्दपूर्णोऽहं सर्वतोनिवृत्तोऽस्मीतिभावः ॥ २६ ॥ **ती०** किंच पञ्चेति । पञ्चसहस्राणिदास्यो मेमयासार्धं परिचरिष्यन्ति यदि । तदेतिशेषः । तदा भार्या भया कान्त्या आर्या पूज्याभवसीतिसंबन्धः ॥३०॥ **ति०** पञ्चेत्यादि । रक्षोयोनौतमोगुणप्रधानायांजातत्वादुद्रिक्ततमसा भगवन्मायया ज्ञानाच्छादनादेवमुक्तिः । सर्वथा तत्वज्ञोरावणः कथमेवंवदेदितितु श्रद्धाजाड्यमेव । तत्वज्ञचिह्नानुपलंभात् । सीतारामौ सर्वेश्वरावित्येतन्मात्रज्ञानं रावणस्यास्त्येवेत्यपि श्रद्धाजाड्यमेव । विष्णुपुराणादिविरोधात् । तथाचोक्तंविष्णुपुराणे—मैत्रेयउवाच "हिरण्यकशिपुत्वेच रावणत्वेचविष्णुना । अवापनिहतो भोगानप्राप्यानमरैरपि । नलयंतत्रतेनैव निहतस्सकथंपुनः । संप्राप्तश्शिशुपालत्वे सायुज्यंशाश्वतेहरौ । एतदिच्छाम्यहंश्रोतुं सर्वधर्मभृतांवर । कौतूहलपरेणैतत्पृष्टोमे वक्तुमर्हसि । पराशरउवाच । दैत्येश्वरस्यतुवधायाखिललोकोत्पत्तिस्थितिविनाशकारिणा पूर्वांतनुंगृह्णता नृसिंहरूपमाविष्कृतं । तत्र हिरण्यकशिपोर्विष्णुरयमित्येवं नमनस्यभूत् । निरतिशयपुण्यजातसंभूतमेतत्सत्वमिति रजउद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात्ततोवाप्तवधहैतुकीं निरतिशयामेवाखिलत्रैलोक्याधिक्यधारिणीं दशाननत्वे भोगसंपदमवाप । नातस्तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालंबनीकृते मनसस्तत्रलयम् । दशाननत्वेप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत् । नायमच्युतइत्यासक्तिर्विपद्यतोन्तःकरणस्य मानुषबुद्धिरेवकेवलमभूत् । विपद्यतइति विपद्यतोपीत्यर्थः । तस्मिन्नपिसमये विष्णुत्वबुद्धिर्नासीदितिभावः । पुनरच्युतविनिपातनमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजकुलजन्माव्याहतंचैश्वर्यं शिशुपालत्वेचावाप । तत्रत्वखिलान्येव भगवन्नामकारणान्यभवन् । नामानि गोविन्दादीनि । कारणानि गवांरक्षणादीनीत्यर्थः । ततश्च तत्कारणकृतानांतेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्मसंवर्धितविद्वेषानुबन्धिचित्तो विनिन्दन्संतर्जनादिषूच्चारणमकरोत् । तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधार्यनलकिरीटकेयूरकटकोपशोभितमुदारपीवरचतुर्बाहु शङ्खचक्रगदाधरमतिप्रौढवैरानुभावादटनभोजनस्नानासनशयनादिष्ववस्थान्तरेषु नैवापययावस्यात्मचेतसः । ततस्तमेवानुक्रोशेषूच्चारयंस्तमेवहृदयेधारयन्नात्मवधाय भगवदस्त्रचक्रांशुमालोज्ज्वलमक्षय्यतेजस्स्वरूपं परमब्रह्मस्वरूपमपगतरागद्वेषादिदोषं भगवन्तमद्राक्षीत् । तावच्च भगवच्चक्रेणाशुव्यापादितः । तेन तत्स्मरणदग्धाखिलाघसंचयो भगवतैवान्तमुपनीतस्तस्मिन्नेवलयमुपययौ । एतत्तवाभिहितं । भगवानिहकीर्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरादिदुर्लभंफलंप्रयच्छति किमुतसम्यग्भक्तिमन्तं" इति । लोकदृष्ट्यातु सीतासादृश्यात्सीताबुद्ध्याहरणाच्चाततायित्वसंपत्त्या तद्वधेभगवतःप्रवृत्तिः । एवंचेदृशोक्तीनां यद्वातद्वाप्रकारेणान्यथायोजनप्रयासस्तीर्थादीनां विफलएव । विष्णुपुराणोक्तरीत्यैवभागवतउक्तं—" एतेचांशकलाःपुंसः कृष्णस्तुभगवान्स्वयम्" इति । एतइत्यनेन पूर्वोक्ताअवतारा ऋष्यादयश्च परामृश्यन्ते । पुंसः परमेश्वरस्य । तत्रावतारा अंशाः । ऋष्यादयः कलाः । यद्यपि कृष्णोप्यंशएव । तत्रैव दशमे " तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणिशंस नः " इत्याद्युक्तेः । " उज्जहारात्मनःकेशौ सितकृष्णौमहामुने । " इति विष्णुपुराणाद्युक्तेः । द्वितीये-

[ **पा०** ] १ ङ. झ. ट. मानुषाः. २ क. ख. ग. ङ—ट. अहंस. ३ क. ग. ङ. ट. गिरिमूर्धनि. ४ ङ.—ट. विचरिष्यसि. ५ ङ—ट. चास्यवनवासस्य. ६ ख. ग. दासीसहस्राणि.

महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् ॥ महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ ३२ ॥
सर्वलक्षणसंपन्नं न्यग्रोधपरिमण्डलम् ॥ सत्यसन्धं महाभागमहं राममनुव्रता ॥ ३३ ॥
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ॥ नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥ ३४ ॥
पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् ॥ पृथुकीर्तिं महात्मानमहं राममनुव्रता ॥ ३५ ॥
त्वं पुनर्जम्बुकः सिंहीं मामिच्छसि सुदुर्लभाम् ॥ नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥ ३६ ॥
पादपान्काञ्चनान्नूनं बहून्पश्यसि मन्दभाक् ॥ राघवस्य प्रियां भार्यां यस्त्वमिच्छसि रावण ॥ ३७ ॥
क्षुधितस्य हि सिंहस्य मृगशत्रोस्तरस्विनः ॥ [ आस्यं प्रविश्य तरसा जिह्वामाहर्तुमिच्छसि ॥
वल्मीकान्ताद्विनिस्सृत्य प्रत्याशां वीक्षितस्यच ॥ ] आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ३८ ॥

महेन्द्रसदृशं पतिं पतित्वे स्वामित्वे महेन्द्रतुल्यमित्यर्थः । अनुव्रता अनुकूलं व्रतं यस्याः सा राममुद्दिश्यानुव्रता ॥ ३२ ॥ न्यग्रोधपरिमण्डलं वटवृक्षमिव महापरिणाहं । यद्वा न्यग्रोधवत् बहुशाखबन्धुस्तोमं । तद्वत्सर्वसमाश्रयणीयमितिवा । यद्वा "कूपोदकं वटच्छाया युवतीनां स्तनद्वयम् । शीतकाले भवत्युष्णमुष्णकाले च शीतलं" इत्युक्तरीत्या सर्वकालेपि सर्वजनानुकूलमित्यर्थः ॥ ३३ ॥ सिंहवद्विक्रान्तं पराक्रमयुक्तं सगर्वमिति यावत् । तथा गच्छतीति सिंहविक्रान्तगामिनं । सिंहसंकाशं पराक्रमे सिंहतुल्यं । नृसिंहं पुरुषश्रेष्ठं ॥ ३४ ॥ राजवत्सं राजकुमारं ॥ ३५ ॥ एवं स्वभर्तुरतिशयमुक्त्वा तस्य हीनत्वमाह—त्वमित्यादिना । त्वं तु जम्बुकः गोमायुः । निगीर्याध्यवसानं । तथा सिंहीमित्यत्रापि । आदित्यस्य प्रभेव रामस्याविनाभूताहं त्वया स्प्रष्टुं न शक्येत्यर्थः ॥ ३६ ॥ आसन्नमरणाः वृक्षान् स्वर्णमयान्पश्यन्तीति प्रसिद्धिः । मन्दभाक् मन्दभाग्यः । यद्वा मन्दं क्षीणं आयुरादिकं भजतीति मन्दभाक् । मदभिलाषयुक्तस्त्वं सद्यो मरिष्यसीति भावः ॥ ३७ ॥ सर्वात्मना आदानस्याशक्यत्वज्ञापनाय विशेषणानि । आशीविषस्य सर्पस्य । चकारो द्रष्टव्यः । क्षुधितस्य तरस्विन इति चाशीविषस्यापि विशेषणं । अत्र सदृशयोर्वाक्यार्थयोरैक्या-

भागवतेप्येवमेव । भारतेप्येवमेव । एतेन "तत्रांशेनावतीर्णस्य" इत्यादिदशमस्थलोकव्याख्यानमपास्तं । तथापि तत्तत्कारणकृतनाम्नां तत्रलाभाद्बहुशोऽज्ञानकार्यनाटनाच्च । शङ्खचक्रादीनां प्रत्यक्षतोदर्शनाच्च स्वयंभगवानित्युक्तिः । नैतावता रामाद्यवताराणां ततोन्यूनत्वमितिभ्रमःकार्यः । श्रीधरोपि–मत्स्याद्यवताराणांसर्वज्ञत्वसर्वशक्तिमत्त्वेपि यावदुपयोगमेवज्ञानशक्त्याविष्कारः । अज्ञानाविष्कारश्चबहुशः । कृष्णत्वेन्त्योल्पः । यथाऽभिमन्युमरणे नाहं तत्रसंनिहितआसं अतस्तस्यमरणमिति । यथा द्रौपद्यास्सभायांनयनकाले नाहंद्वारकायांसंनिहितः किंतु सौभवधार्थंगतोतोभवतामयंक्लेशइति । सौभवधेच मायिकं मृतवसुदेवशरिरंदृष्ट्वा मोहइत्याद्यज्ञाननाट्यमल्पं । रामावतारेपि ज्ञानाविष्कारस्तत्रतत्रदर्शितोदर्शयिष्यतेच । अवताराश्चेमे विराजएवांशाः । भागवतेप्रथमे तृतीयेऽध्याये–"जगृहेपौरुषंरूपं भगवान्महदादिभिः । संभूतंषोडशकलमादौ लोकसिसृक्षया" इत्यादिनावैराजंरूपमुक्त्वा "एतन्नानावताराणां निधानंबीजमव्ययम् । यस्यांशांशेनसृज्यन्ते देवतिर्यङ्नरादयः" इत्युक्तेः । एतदुक्तंवैराजनिधानं कार्यावसानेप्रवेशस्थानं । बीजंउद्गमकारणं अव्ययं स्वयंचिरस्थायि । नकेवलमवताराणामेवबीजं किंतु सर्वेषामित्याह—**यस्येति**। यद्यपि विराड्जीवएव तथापि तदन्तर्यामिणस्तथोपासानायैवमुक्तं । सितकृष्णकेशोद्धारेणच तेषांमूर्धन्यत्वेन मुख्यत्वात्तद्वन्मुख्ययोःप्रधानयोर्मदंशयोस्तत्लक्षयोस्तद्वर्णयोर्वैकुण्ठस्थभूतलस्थयोर्विष्णुशेषयोरवतारइति सूचितम् । अतएवान्ते कृष्णंप्रति देवदूतेन । त्वांविनास्वर्गोनशोभतेऽतस्त्वमागच्छेति निवेदितमिति स्पष्टंपुराणेषु । अत्र रामंप्रत्यपितथैवोक्तं । अंशत्वंचैषामौपाधिकं । मायायास्सांशत्वादित्यलम् ॥ ३१ ॥ **स०** न्यग्रोधपरिमण्डलं न्यग्रोधोव्यामः तत्परिमण्डलं तत्परिमाणं । "व्यामोबाह्वोस्सकरयोस्ततयोस्तिर्यगन्तरम्" इत्यभिधानं । 'व्यामोवटश्चन्यग्रोधौ' इत्यमरसिंहः । यत्तु न्यग्रोधवृक्षवद्विशालं बहुजनाश्रयइतियावदिति नागोजिभट्टादिव्याख्यानं तदभिधानज्ञानदारिद्र्यमूलमित्युपेक्ष्यं ॥ ३३ ॥ **ति०** नृसिंहमित्यस्य हिरण्यकशिपुहन्तृत्वंव्यङ्ग्यम् ॥ ३४ ॥ **शि०** आदित्यस्यप्रभेव त्वयास्प्रष्टुं रामात्पृथक्कृत्यनेतुं नाहंशक्या । एतेनस्वस्यरामतेजोरूपवह्निनाऽऽवृतत्वं सूचितं । अतएवलक्ष्मणप्रेषणसमये अग्निंवा-

**[ पा० ]** १ क. ख. घ. च. छ. ज. ञ. सदृशद्युतिं. २ ख. घ. महाबाहुमहं. ३ ख. ग. घ. वीरं. ४ घ. राजीवाक्षं. ५ ग. ङ—ट. महाबाहुमहं. ख. महावीर्यमहं. ६ क. ख. घ. ङ—ट. मामिहेच्छसिदुर्लभां. ७ ग. भार्यांसत्त्वं. छ. ञ. भार्यामधिगन्तुत्वमिच्छसि. ८ ङ. झ. ट. राक्षस. ९ क. घ. ङ. च. ज—ट. क्षुधितस्यच. ख. ग. क्षुधितस्येव. १० इदमर्धद्वयं. ख. पुस्तकेदृश्यते. ११ क. घ. तुमुखात्.

मन्दरं पर्वतश्रेष्ठं [1]पाणिना हर्तुमिच्छसि ॥ [2]कालकूटं विषं पीत्वा स्वस्तिमान्गन्तुमिच्छसि ॥ ३९ ॥
अक्षि सूच्या प्रमृजसि जिह्वया [3]लेक्षि च क्षुरम् ॥ राघवस्य प्रियां [4]भार्यां योऽधिगन्तुं त्वमिच्छसि ॥४०॥
अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि ॥ सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ॥
यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि ॥ ४१ ॥
अग्निं प्रज्वलितं [5]दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ॥ कल्याणवृत्तां [6]रामस्य यो भार्यां हर्तुमिच्छसि ॥ ४२ ॥
अयोमुखानां [7]शूलानामग्रे चरितुमिच्छसि ॥ रामस्य सदृशीं भार्यां [8]योऽधिगन्तुं त्वमिच्छसि ॥४३॥

यदन्तरं सिंहसृगालयोर्वने यदन्तरं स्यन्दिनिकासमुद्रयोः ॥
सुराग्र्यसौवीरकयोर्यदन्तरं [9]तदन्तरं वै तव राघवस्य च ॥ ४४ ॥
यदन्तरं काञ्चनसीसलोहयोर्यदन्तरं चन्दनवारिपङ्कयोः ॥
यदन्तरं हस्तिबिडालयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ४५ ॥
यदन्तरं वायसवैनतेययोर्यदन्तरं मद्गुमयूरयोरपि ॥
यदन्तरं [10]सारसगृध्रयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ४६ ॥
तस्मिन्सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ ॥
हृताऽपि तेहं न जरां गमिष्ये [11]वज्रं यथा मक्षिकयाऽवगीर्णम् ॥ ४७ ॥

रोपान्निदर्शनालङ्कारः ॥ ३८ ॥ मन्दरमिति अत्रापि राघवस्य भार्यां यस्त्वमिच्छसीत्यनुषज्यते। स्वस्तिमान् सुखित इत्यर्थः॥ ३९॥ स्वाक्षि प्रमृजसि प्रकर्षेण मार्जनं करोषि । लेक्षि लेहनं करोषि । लिह आस्वादन इत्यस्माल्लुग्विकरणस्थाद्धातोर्लेटि मध्यमपुरुषैकवचनं । क्षुरं तीक्ष्णधारं शस्त्रं । अधिगन्तुं प्राप्तुं ॥ ४० ॥ अवसज्येति सार्धश्लोक एकान्वयः । अवसज्य बद्ध्वा ॥ ४१ ॥ कल्याणवृत्तां शुभाचारां ॥ ४२ ॥ अयोमुखानां अयोमयाग्राणां । शूलानामग्रे शूलाग्रपङ्क्तिषु । संचरितुमिच्छसीत्यर्थः ॥ ४३ ॥ उक्तं रामोत्कृष्टत्वं रावणनिकृष्टत्वं च सदृष्टान्तमाह—यदन्तरमित्यादिना । सिंहसृगालयोः । " सृगालो वञ्चकः क्रोष्टा " इत्यमरः । यत् अन्तरं भेदः तारतम्यमिति यावत् " अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च " इत्यमरः । वने जले विषये । " जीवनं भुवनं वनं " इत्यमरः । स्यन्दिनिका स्यन्दितुं प्रस्रवितुं शीलमस्या अस्तीति स्यन्दिनिका । ताच्छिल्ये णिनिः । अल्पार्थे कप्रत्ययः । केण इति ह्रस्वः । क्षुद्रनदी स्यन्दिनिका । सुराग्र्यं श्रेष्ठमद्यं । सौवीरकं काञ्चिकं । " आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तीसोमधान्याम्लकुञ्जलानि च काञ्चिकं " इत्यमरः ॥ ४४ ॥ काञ्चनसीसलोहयोरित्यत्र लोहशब्दः प्रत्येकमभिसम्बध्यते । काञ्चनस्यापि नवलोहेषु परिगणनात् । चन्दनवारि चन्दनपङ्कः । बिडालो मार्जारः ॥ ४५॥ मद्गुः जलवायसः। सारसो हंसविशेषः॥४६॥ तस्मिन् रामे स्थिते सति जरां जीर्णतां । मक्षिकया अवगीर्णं ग्रस्तं । वज्रं हीररत्नं । मक्षिकया तण्डुलखण्डभ्रान्त्या ग्रस्तं हीररत्नमित्यर्थः । यथा न जीर्णं भवति । यद्वा मक्षिकया सहावगीर्णं भुक्तं वज्रं आज्यं " वज्रो वा आज्यं" इति श्रुतेः। यथा न जीर्णं भवतीत्यर्थः। तथा अहं त्वया हृतापि ते जीर्णतां न गमिष्ये न गमिष्यामि।

प्रवेक्ष्यामि अन्यंपुरुषं नस्प्रक्ष्यामीति तत्कृतप्रतिज्ञाया न हानिः ॥ ३६ ॥ **ति०** लेढि लेक्षि ॥ ४० ॥ **ति०** जरां जीर्णावस्थां । मक्षिकयाऽवगीर्णं भुक्तं आज्यं यथा तां नाशयति तद्वत् ॥ ४७ ॥ **स०** भयकारणार्थं भयरूपंयत्कारणं स्ववशीकरणकारणं तदर्थं ॥ **ती०** फलश्रुतिस्स्कान्दे–" यदन्तरेत्यादिवाक्यश्रवणादघनाशनम् " इति ॥ ४९ ॥ इतिसप्तचत्वारिंशस्सर्गः ॥ ४७ ॥

[ **पा०** ] १ ग. पाणिभ्यां. २ ग. घ. झ. ञ. कालकूटविषं. ३ क—ट. लेढि. ४ ख. ग. ङ—ट. भार्यामधिगन्तुं. ५ ग. दीप्तं. घ. स्पृष्ट्वा. ६ ङ. झ. योभार्यांरामस्याहर्तुं. ७ ङ. झ. ट. शूलानांमध्ये. ८ च. छ. ज. योऽभिगन्तुं. ९ ख. ङ. छ. झ. ञ. ट. तदन्तरंदाशरथेस्तवैवच. १० ङ. झ. ट. हंसकगृध्रयोः. ११ ङ—झ. ट. आज्यंयथा.

इतीव तद्वाक्यमदुष्टभावा [1]सुधृष्टमुक्त्वा रजनीचरं तम् ॥
गात्र[2]प्रकम्पव्यथिता बभूव वातोद्धता सा कदलीव तन्वी ॥ ४८ ॥
तां वेपमानामुपलक्ष्य सीतां स रावणो मृत्युसमप्रभावः ॥
कुलं बलं नाम च [3]कर्म च स्वं समाचचक्षे भयकारणार्थम् ॥ ४९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

सीतयानिन्दितेनरावणेनपुनस्तांप्रतिस्वकुलप्रतापसंपत्प्रशंसनेनसहरामेदोषारोपपूर्वकं स्वभजनप्रार्थना ॥ १ ॥ सीतयातं प्रतिसक्रोधगर्हणंस्वकामनायाआत्मविनाशहेतुत्वोक्तिः ॥ २ ॥

एवं ब्रुवन्त्यां सीतायां [4]संरब्धः परुषं वचः ॥ ललाटे [5]भ्रुकुटीं कृत्वा रावणः प्रत्युवाच ह ॥ १ ॥
भ्राता वैश्रवणस्याहं [6]सापत्न्यो वरवर्णिनि ॥ रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥
यस्य देवाः सगन्धर्वाः [7]पिशाचपतगोरगाः ॥ विद्रवन्ति [8]भयाद्भीता मृत्योरिव सदा प्रजाः ॥ ३ ॥
येन वैश्रवणो [9]राजा द्वैमात्रः कारणान्तरे ॥ द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥ ४ ॥
[10]यद्भयार्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् ॥ कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥
यस्य तत्पुष्पकं नाम विमानं कामगं शुभम् ॥ [11]वीर्यादेवार्जितं भद्रे येन यामि विहायसम् ॥ ६ ॥
मम सञ्जातरोषस्य मुखं [12]दृष्ट्वैव मैथिलि ॥ विद्रवन्ति परित्रस्ताः सुराः शक्रपुरोगमाः ॥ ७ ॥

प्रत्युत तवैव मरणं प्रापयिष्यामीत्यर्थः ॥४७॥ इतीव उक्तप्रकारसदृशं तद्वाक्यं । सुधृष्टं यथा तथा उक्त्वा सा सीता वातोद्धता वाताहता कदलीव गात्रप्रकम्पव्यथिता शरीरकम्पेन पीडिता बभूव ॥४८॥ वेपमानां कम्पमानां । उपलक्ष्य तत्कम्पेन तद्भयमुपलक्ष्य भूयो भयजननेन एषा स्ववशीकर्तुं शक्येति मत्वा भयकारणार्थं भयोत्पादनार्थं । स्वं स्वकीयं कुलादिकमाचचक्षे । कर्म पौरुषं ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

एवं ब्रुवन्तीं सीतां रावणो भर्त्सयति—एवमित्यादिना । संरब्धः कुपितः संभ्रमाविष्टो वा ॥ १ ॥ वैश्रवणस्य सपत्न्या मातुरपत्यं पुमान् सापत्नः सापत्न एव सापत्न्यः । स्वार्थे ष्यञ् ॥ २ ॥ यस्य संबन्धिनो भयात् देवादयः मृत्योर्भीताः प्रजा इव विद्रवन्ति ॥ ३ ॥ द्वयोर्मात्रोरपत्यं द्वैमात्रः सपत्नीमातृपुत्र इत्यर्थः । कारणान्तरे कस्मिंश्चित्कारणावकाशे । द्वन्द्वं युद्धं । " द्वन्द्वं कलहयुग्मयोः" इत्यमरः ॥ ४ ॥ स्वमधिष्ठानं स्वां पुरीं । कैलासमध्यास्ते प्रबलावष्टम्भार्थमिति भावः । "अधिशीङ्स्थासां कर्म" इत्यधिकरणस्य कर्मसंज्ञा । नरवाहनः कुबेरः ॥५॥ तत् प्रसिद्धं कामेन गच्छतीति कामगं अधिष्ठातृकामानुरूपं गच्छतीत्यर्थः । येन पुष्पकेन विहायसं आकाशं । एतादृशविशेषणविशिष्टो यो रावणो नाम रावण इति प्रसिद्धः सोहमितिपूर्वेणान्वयः ॥ ६ ॥ विद्रवन्ति

---

**ति०** परुषं क्रोधावेशेन वर्णानां चर्वणेनैवोच्चारणाच्छ्रुतिकट्वक्षरमित्यर्थः ॥ १ ॥ **स०** द्वितीयामाता द्विमाता तस्याअयं द्वैमात्रः । आर्षमनुत्वं । यद्वा पूरणार्थकतीयप्रत्ययान्तार्थबोधकत्वाद्विशब्दस्य केवलसंख्यार्थलाभावान्नोत्वमितिकेचित् । वैमात्रइतिपाठोवा ॥ कारणान्तरे मन्मातृवाक्यपरिपालनरूपकारणान्तरे ॥ ४ ॥ **ति०** वीर्यादावर्जितं आच्छिद्यगृहीतं । मयेतिशेषः ॥

**[ पा० ]** १ क. घ—ट. सुदुष्टं. ग. सुदुःखं. २ ग—च. ज. ट. प्रकंपाद्व्यथिता. ३ क—ट. कर्मचात्मनः. ४ ग. ञ. संरब्धपरुषाक्षरं. च. छ. ज. संरब्धःपरुषाक्षरं. ५ छ. भ्रुकुटीकृत्य. ६ ङ. झ. ञ. सापत्नो. ७ च. छ. ज. ञ. पिशाचाः पन्नगोरगाः. ८ ङ. झ. ट. सदाभीताः. ९ ख. ग. ङ. झ. ट. भ्राता. १० क—ङ. झ. ञ. ट. मद्भयार्तः. च. छ. ज. मद्भयात्तत्परि. ११ ग. वीर्यादपिजितं. ख. वीर्येणचार्जितं. ङ. छ. झ. ञ. ट. वीर्यादावर्जितं. १२ ख. दृष्ट्वाथ.

यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः ॥ तीव्रांशुः शिशिरांशुश्च भयात्संपद्यते रविः ॥ ८ ॥
निष्कंपपत्रास्तरवो नद्यश्च स्तिमितोदकाः ॥ भवन्ति यत्र यत्राहं तिष्ठामि विचरामि च ॥ ९ ॥
मम पारे समुद्रस्य लङ्का नाम पुरी शुभा ॥ संपूर्णा राक्षसैर्घोरैर्यथेन्द्रस्यामरावती ॥ १० ॥
प्राकारेण परिक्षिप्ता पाण्डुरेण विराजता ॥ हेमकक्ष्या पुरी रम्या वैडूर्यमयतोरणा ॥ ११ ॥
हस्त्यश्वरथसंबाधा तूर्यनादविनादिता ॥ [ शतयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ ]
सर्वकालफलैर्वृक्षैः संकुलोद्यानशोभिता ॥ १२ ॥
तत्र त्वं वसती सीते राजपुत्रि मया सह ॥ न स्मरिष्यसि नारीणां मानुषीणां मनस्विनी ॥ १३ ॥
भुञ्जाना मानुषान्भोगान्दिव्यांश्च वरवर्णिनि ॥ न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥ १४ ॥
स्थापयित्वा प्रियं पुत्रं राज्ञा दशरथेन यः ॥ मन्दवीर्यः सुतो ज्येष्ठस्ततः प्रस्थापितो ह्ययम् ॥ १५ ॥

विद्रवेयुः ॥ ७ ॥ यत्र देशे तीव्रांशुश्च तीक्ष्णांशुरपि । रविः मद्भयात् शिशिरांशुः शीतलांशुः संपद्यते ॥ ८ ॥ निष्कंपेति पत्राण्यपि न चलन्तीत्यर्थः ॥ ९ ॥ पारे पारसदृशे त्रिकूटे । समुद्रस्य मध्य इति पूर्वमुक्तत्वात् । यथेन्द्रस्यामरावती तथा मम लङ्का पुरी असाधारणेत्यर्थः । अस्तीति शेषः ॥ १० ॥ लङ्कां वर्णयति—प्राकारेणेति । रजतमयत्वात्पाण्डुरेण । हेममय्यः कक्ष्याः हर्म्याङ्गणादयो यस्याः सा । "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः । तोरणो बहिर्द्वारं । संबाधा संकुला । तूर्यनादेन वाद्यशब्देन विनादिता । सर्वः कालो येषां तानि सर्वकालानि सर्वकालसंभवानीत्यर्थः । तादृशानि फलानि येषां तैः सर्वकालफलैः । संकुलोद्यानैः व्याप्तोद्यानैः शोभिता एतादृशी सा पुरी रम्येत्यन्वयः ॥ ११—१२ ॥ वसती वसन्ती । अनित्यमागमशासनमिति नुमभावः । नारीणामिति "अधीगर्थ—" इति षष्ठी । मनस्विनी तत्समासक्तेत्यर्थः ॥ १३ ॥ मानुषान् मनुष्यलोकसंभवान् । दिव्यान् स्वर्गसंभवान् । गतायुषः गतप्रायायुषः । अल्पायुष इत्यर्थः । अनेन "भुञ्जाना मानुषान्भोगान्" इति पूर्वं सीतोक्तस्य परिहार उक्तः ॥ १४ ॥ अथ रामस्य स्वापेक्षया उक्तमतिशयं प्रतिवक्ति—स्थापयित्वेत्यादिना । श्लोकद्वयमेकान्वयं । प्रियं पुत्रं भरतं । राज्ये स्थापयित्वा ततो राज्यात् प्रव्राजितः । ज्येष्ठत्वेपि प्रव्राजनान्मन्दवीर्यत्वं सिद्धमित्याह—तेनेति । तेन मन्दवीर्येण । गतचेतसा कर्तव्याकर्तव्यमूढमनसा । तापसेन "भग्नाः कृषेर्भागवता भवन्ति" इति न्यायेन अशूरेण । तपस्विना शोच्येन । "तपस्वी तापसः

॥ ६ ॥ **ती०** तत्रत्वंवसतीसीतेत्यारभ्य तवभाग्येनसंप्राप्तंभजस्ववरवर्णिनीत्यन्तस्यग्रन्थसंदर्भस्य प्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु तत्र लङ्कायां वसती त्वं मयाभृत्येन समर्पितानितिशेषः । मानुषान्दिव्यांश्चभोगान् सह एकदैव भुञ्जानासती । मानुषीणांनारीणामिति द्वितीयार्थे षष्ठी । नस्मरिष्यसि । किंच मानुषस्य मनुष्यत्वेनावतीर्णस्य । गतायुषः गतंप्राप्तमङ्गीकृतं एकादशसहस्रवत्सरायुर्येन तस्यरामस्य भगवतः श्रीमन्नारायणस्य संबन्धिनइतिशेषः । नः अस्मान् स्मरिष्यसि । स्थापयित्वेति । यः मन्दवीर्यः तमप्रियमपिपुत्रंभरतं अन्तर्यामिप्रेरितेनराज्ञा स्थापयित्वा । राज्यइतिशेषः । ततस्तेनैवप्रेरितेनराज्ञा । ज्येष्ठः श्रीमन्नारायणश्श्रीरामः । "ज्येष्ठश्श्रेष्ठःप्रजापतिः" इतिसहस्रनामोक्तेः । सर्वराक्षससंहाराय वनंप्रस्थापितः । तेनेति । भ्रष्टराज्येन भ्रष्टमरीणांराज्यंयेनतेन । गतचेतसा मायोपाधिकेश्वरस्यश्रीरामस्यान्तःकरणाभावाद्गतचेतस्कत्वं । "नतस्यकार्यंकरणंचविद्यते" इतिश्रुतेः । तापसेनतपस्विना तापसानामिनस्तापसेनः सचासौतपस्वीच तेनश्रीरामेणसह करिष्यसिकिं । अयमस्मदीयइति विज्ञापनामितिशेषः ॥ **सर्वेति** । सर्वराक्षसभर्तारं । प्रतिशब्दइवार्थे । कामात् तवभृत्योभविष्यामीतिमनोरथात् । आगतंमांमन्मथशराविष्टंजनमिव । स्वयं ममेष्टदेवतात्वमेवमाख्यातुंवक्तुंनार्हसीत्यर्थः ॥ **प्रत्याख्यायेति** । कामुकंपुरूरवसमुर्वशी चरणेनाभिहत्य पश्चात्तापमगमदिति यत्तद्युक्तं । अकामुकंभृत्यंमां ममसातृरूपात्वं चरणेनाभिहत्य तिरस्कृत्येत्यर्थः । परितापंगमिष्यसीत्येतदयुक्तमित्यर्थः । उर्वशीपुरूरवसंचरणेनाभिहत्यपश्चात्तापंगतेतिपुराणेषुयथाप्रसिद्धं तथापश्चात्तापंगमिष्यसि । रामंविनालङ्कांप्रत्यागन्तुमनिच्छन्तीं प्रत्याह—अङ्गुल्येति । युद्धेयस्याङ्गुल्यासमःकोपिनास्ति । कुतः यस्सरामः श्रीमन्नारायणएव मानुषः मनुष्यरूपेणावतीर्णः । तं मम

[ **पा०** ] १ क. ख. घ. तीव्रांशुरमृतांशुश्च. २ ङ. झ. ट. दिवि. ३ क—ट. तत्राहं. ४ क—ट. तिष्ठामिचचरामिच. ५ इदमर्धं घ. च. छ. ज. पाठेषुदृश्यते. ६ क. ग. ङ—ट. कामफलैः. ७ ङ. झ. ट. भूषिता. ८ ग. झ. वसहेसीते. ९ ग. झ. राज्ये. १० ग. च. ज—ट. वीर्यस्ततोज्येष्ठस्सुतः. ११ क.–ट. वनं.

तेन किं भ्रष्टराज्येन रामेण गतचेतसा ॥ करिष्यसि विशालाक्षि तापसेन तपस्विना ॥ १६ ॥
सर्वराक्षसभर्तारं कामात्स्वयमिहागतम् ॥ न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥ १७ ॥
प्रत्याख्याय हि मां भीरु परितापं गमिष्यसि ॥ चरणेनाभिहत्येव पुरूरवसमुर्वशी ॥ १८ ॥
अङ्गुल्या न समो रामो मम युद्धे स मानुषः ॥ तव भाग्येन संप्राप्तं भजस्व वरवर्णिनि ॥ १९ ॥
एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना ॥ अब्रवीत्परुषं वाक्यं रहिते राक्षसाधिपम् ॥ २० ॥
कथं वैश्रवणं देवं सर्वभूतनमस्कृतम् ॥ भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ॥ २१ ॥
अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः ॥ येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२ ॥
अपहृत्य शचीं भार्यां शक्यमिन्द्रस्य जीवितुम् ॥ न च रामस्य भार्यां मामपनीयास्ति जीवितम् ॥ २३ ॥

जीवेच्चिरं वज्रधरस्य हस्ताच्छचीं प्रधृष्याप्रतिरूपरूपाम् ॥
न मादृशीं राक्षस दूषयित्वा पीतामृतस्यापि तवास्ति मोक्षः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

शोच्यः" इति विश्वः । अनेन इतः परं राज्यं साधयिष्यतीत्याशा न कर्तव्येत्युक्तं ॥ १५—१६ ॥ सर्वराक्षसभर्तारं त्वया प्रार्थनीयमित्यर्थः । स्वयं कामात् अर्थितया इहागतं । प्रत्याख्यातुं निराकर्तुं । स्वयमागमने हेतुः—मन्मथेति ॥ १७ ॥ प्रत्याख्यानफलमाह—प्रत्याख्यायेति । भीरु इत्यनेन रामाद्भीतिः प्रत्याख्यानमूलमिति मम मन इति व्यज्यते । परितापं पश्चात्तापं । पुरूरवसं राजानं चरणेनाभिहत्य । उर्वशीव उरून् महतो वशीकरोतीत्युर्वशी । वश कान्तौ । पृषोदरादित्वादुकारलोपः । गौरादित्वात् ङीष् । एवं ह्रस्वादिस्तालव्यान्तश्च । तथाच माघयमकं "दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलं" इति । नारायणस्य ऊरौ वसतीति व्युत्पत्तावपि पृषोदरादित्वाद्वर्णलोपादिना ह्रस्वादिस्तालव्यान्त एव च युक्तः । उर्वशी किल स्वयमेव प्रार्थयन्तं पुरूरवसं प्रथमं निरस्य पश्चात्तापेन पुनस्तमागतेति पौराणिकी कथा ॥ १८ ॥ अङ्गुल्या अङ्गुलिबलेन । न समः न समबलः । संप्राप्तं मामिति शेषः ॥ १९ ॥ संरक्तेति कोपातिशयो द्योत्यते । रहिते निर्जने वने । "रागं विविक्ताइति वर्धयन्तीः" इति रागजननौचित्येपि परुषमब्रवीत् । हन्त सीतायाः पातिव्रत्यमेतदिति ऋषिर्विस्मयते ॥२०॥ कथमिति पुण्यात्मनःकुबेरस्य भ्राता सन् कथं पापकर्मणि प्रवर्तस इत्यर्थः ॥२१॥ कर्कशः क्रूरः ॥ २२ ॥ अपनीय स्थितस्य तवेति शेषः ॥ २३ ॥ क्रोधातिशयेनोक्तमेव पुनराह—जीवेदिति । अप्रतिरूपं अनुपमं रूपं यस्यास्तां मादृशीं । अश्लीलत्वपरिहाराय न मामित्यनुक्तिः । मोक्षः मरणादिति शेषः । अमृतमपि न त्वद्रक्षणसमर्थमित्यर्थः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

भाग्येनतत्रैवसंप्राप्तं तव पतिमितिशेषः । भजस्वेतिसंबन्धः ॥ १३—१९ ॥ **स०** तापसानामयंतापसः तद्वेषः तेन । तपस्विना तद्वद्द्रियमानेन ॥ १६ ॥ **ति०** रक्ष पालय ॥ १७ ॥ **ति०** ईदृशवंश्यस्येदृशंकृत्यमनुचितमिति मिथ्यैवान्यवंशं स्ववंशत्वेन कथयसीतिव्यङ्ग्यं ॥ २१ ॥ **ति०** अत्रसर्गेरावणोक्तौ—"सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः । पञ्चपञ्चकतत्वज्ञो रावणोहंभजस्व माम्" इतिश्लोकः क्वचित्पठ्यते । तमेवंव्याचक्षते—सप्तसप्तकं षडङ्गसहितवेदोपवेदसहितचतुर्दशविद्यारूपं तद्वेत्ता । अष्टाष्टकविभूषितः चतुष्षष्टिकलाभूषितः । पञ्चपञ्चकतत्वज्ञः पञ्चविंशतितत्वस्वरूपवेत्ता । नित्यानित्यवस्तुविवेकवानितियावत् । इति । स कतकाद्यव्याख्यातत्वात्प्रक्षिप्तइति ज्ञायते । आद्यपादेऽर्थासंगतिरपि । परपादपर्यालोचनया तृतीयपादोक्तज्ञानवतईदृशेकर्मणिप्रवृत्तिरप्यनुचितेतिभाति ॥ इत्यष्टचत्वारिंशस्सर्गः ॥ ४८ ॥

**[पा०]** १ क.—घ. यक्षराक्षस. ङ. झ. ट. रक्षराक्षस. २ च. छ. ज. ञ. तुमां. ३ ग. घ. ङ. झ. ट. पश्चात्तापं. ४ ङ. झ. ट. सर्वदेव. ५ ग. मर्हसि. ६ क.—घ. च. छ. ज. ञ. ट. नतु. ङ. झ. नहि. ७ ङ. झ. ट. मामानीयस्वस्तिमान्भवेत्. ८ ङ. झ. ट. पश्चाच्छचीं. ९ ख. ङ.—ट. धर्षयित्वा.

# एकोनपञ्चाशः सर्गः ॥ ४९ ॥

भिक्षुरूपपरित्यागेननिजरूपधारिणारावणेनसान्त्वोक्त्यासीतायाः केशग्रहणेनरथारोपणपूर्वकंलङ्कांप्रतिप्रस्थानम् ॥ १ ॥ गिरितरुगोदावरीप्रभृतीन्प्रतिरामायस्ववृत्तान्तनिवेदनप्रार्थनापूर्वकंबहुधाक्रन्दन्त्यास्यन्दनस्थयासीतयामार्गेदृष्टंजटायुषंप्रत्युच्चैराक्रन्दनेनरामायस्ववृत्तान्तनिवेदनप्रार्थना ॥ २ ॥

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् ॥ हस्ते हस्तं समाहत्य[1] चकार सुमहद्वपुः ॥ १ ॥
स मैथिलीं पुनर्वाक्यं बभाषे[2] च ततो भृशम् ॥ नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥ २ ॥
उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः ॥ आपिबेयं[3] समुद्रं च हन्यां[4] मृत्युं रणे स्थितः ॥ ३ ॥
अर्कं रुन्ध्यां[5] शरैस्तीक्ष्णै[6]र्विभिन्द्यां हि महीतलम् ॥ कामरूपिणमुन्मत्ते पश्य मां कामदं[7] पतिम्[8] ॥४॥
एवमुक्तवतस्तस्य सूर्यकल्पे[9] शिखिप्रभे ॥ क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५ ॥
सद्यः सौम्यं परित्यज्य भिक्षुरूपं[10] स[11] रावणः ॥ स्वंरूपं[12] कालरूपाभं[13] भेजे वैश्रवणानुजः ॥ ६ ॥
संरक्तनयनः श्रीमांस्तप्तकाञ्चनकुण्डलः[14] ॥ क्रोधेन महताऽविष्टो नीलजीमूतसन्निभः ॥
दशास्यः[15] कार्मुकी बाणी बभूव क्षणदाचरः ॥ ७॥

यश्चिन्तनीयः सततमापत्सु परमासु च। नान्योस्ति चिन्तनीयस्तं सीतापतिमुपास्महे ॥ हस्ते हस्तं समाहत्य संयोज्य । अयं च कोपाकृतिविशेषः ॥ १ ॥ स इत्यादिश्लोकत्रयमेकान्वयं । ततः रूपकरणानन्तरं । उन्मत्तया त्वयेति शेषः । वीर्यपराक्रमौ पूर्वोक्ताविति शेषः। उद्वहेयं उद्धरेयं। विभिन्द्यां विदारयेयं। महद्वपुरित्युक्तं दर्शयति—कामेति ॥ २—४ ॥ अथ सीतापहारोपयोगिरूपान्तरपरिग्रहमाह—एवमित्यादिना । सूर्यकल्पे शिखिप्रभे इति तेजस्यौष्ण्ये चोपमाद्वयं । हरिपर्यन्ते पिङ्गलवर्णपर्यन्ते । "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषुहरिर्नाकपिलेत्रिषु " इत्यमरः ॥ ५ ॥ स्वं स्वासाधारणं । कालरूपाभं मृत्युशरीराभं । वैश्रवणानुज इत्यनेन जन्मकारणे तुल्येपि हन्तान्यतरस्य क्रौर्यमित्युच्यते ॥ ६ ॥ सार्धश्लोक एकान्वयः । श्रीमान् विचित्रशक्तिसंपन्नः । क्षणदाचरः संरक्तनयनत्वादिविशिष्टो

**ती०** महापुण्यस्यपरमभागवताग्रगण्यस्य श्रीहनुमतोपि रूपान्तरस्वीकरणसमये आग्रहपूर्वकत्वस्यश्रूयमाणत्वेनाग्रहंविना क्रूररूपस्वीकारायोगाद्रावणोपि देवीनिकटेकपटमनुचितमितिमत्वा देव्यैस्वरूपंदर्शयितुं स्वसामर्थ्यप्रशंसापूर्वकंनिजरूपंस्वीकरोति । सीतायाइत्यारभ्य वसनाभरणोपेतामित्यन्तस्यप्रकृतार्थस्स्पष्टः । वास्तवार्थस्तु—वीर्यपराक्रमौ वीर्यंसमरेऽभीरुत्वं । पराक्रमः पराभिभवनसामर्थ्यं । उन्मत्तया मत्तजनानुद्गताउन्मत्ता उन्मत्तभिन्ना । तादृश्यापि नश्रुतौ । योऽहमेतादृग्विशेषणविशिष्टस्तं । कामरूपिणं कामदं। पतिं रक्षसामिति शेषः। मांपश्येतिबभाषेइतिपूर्वेणान्वयः॥ ४ ॥ एवमिति । अस्मिञ्श्लोके पूर्वश्लोकस्थमुन्मत्तइतिपदमाकृष्य श्लोकोयोजनीयः । तथासत्येवंयोजना । एवमुक्तवतोरावणस्य क्रुद्धस्य उन्मत्ते हरिपर्यन्ते हरिःपिङ्गलवर्णः पर्यन्तयोरुपान्तयोर्ययोस्ते । शिखिप्रभे अग्निसदृशे । नेत्रे बभूवतुः ॥७॥ **ति०** हस्तेहस्तं समाहन्य समाहत्येत्यर्थः । विनिष्पीड्येतियावत् । महिषादयः स्त्रियैवहताः तथा कदाचिदेषा हरणसमयेक्रौर्यंकुर्यादितिशङ्कया क्रूरस्वीयमहारूपाङ्गीकारः । यद्वा कपटेनापि शान्तस्वभावयतिवेषधारणात्तद्वेषस्वाभाव्येनहरणे स्वस्यप्रतिबद्धतांदृष्ट्वा स्वरूपग्रहणं । ममरावणस्याप्ययंवेषः क्रौर्यप्रतिबन्धकइत्यतश्च हस्तेहस्ताघातइतिबोध्यं ॥ १ ॥ **शि०** अ इत्यव्ययं। तदत्र त्वर्थे ।एवंच रणेस्थितोऽहंतु मृत्युंहन्यां ।**स०**अपिबेयमिति पाठेआर्षोऽडागमः। **वि०** अपिबेयमिति। अ इतिपृथक् विस्मयार्थंद्रष्टव्यं॥३॥ **ति०** कामेन चित्तजेन रूपेणच । उन्मत्ते इत्यर्थः। **स०** तुयां व्यथायुक्तंकरोमि ॥ **शि०** कामरूपेण स्वेच्छाचारेण उपलक्षिते । अतएव हेउन्मत्ते कामरूपिणं स्वेच्छारूपधारिणं ।

**[पा०]** १ झ. समाहन्य. २ ङ.—ट. बभाषेवाक्यकोविदः. ३ ख. ग. छ. ञ. ट. अपिबेयं. ४ क. ख. ग. ङ.—ट. मृत्युंहन्यां. ५ झ. ट. तुयां. ६ घ. च. ज. ञ. विनिर्भिन्ध्यांमहीतलं. ७ ङ. झ. ट. कामरूपेणउन्मत्ते. ८ ङ. झ. ट. कामरूपिणं. ९ क. ग. ङ.—ट. रावणस्यशिखि. १० ङ. झ. तीक्ष्णरूपं. ११ क. ख. घ. च. संमतं. १२ क.—ज. ञ. ट. स्वरूपं. १३ च. छ. ज. ञ. कालसंकाशं. १४ ङ. झ. ट. भूषणः. १५ ङ. झ. ट. दशास्योविंशतिभुजो.

स परिव्राजकच्छद्म महाकायो विहाय तत् ॥ प्रतिपद्य स्वकं रूपं रावणो राक्षसाधिपः ॥ ८ ॥
संरक्तनयनः क्रोधाज्जीमूतनिचयप्रभः ॥ रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीम् ॥ ९ ॥
स तामसितकेशान्तां भास्करस्य प्रभामिव ॥ वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत् ॥ १० ॥
त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ॥ मामाश्रय वरारोहे तवाहं सदृशः पतिः ॥ ११ ॥
मां भजस्व चिराय त्वमहं श्लाघ्यः प्रियस्तव ॥ नैवं चाहं क्वचिद्भद्रे करिष्ये तव विप्रियम् ॥१२॥
त्यज्यतां मानुषो भावो मयि भावः प्रणीयताम् ॥ राज्याच्युतमसिद्धार्थं रामं परिमितायुषम् ॥१३॥
कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि ॥ यः स्त्रिया वचनाद्राज्यं विहाय ससुहृज्जनम् ॥ १४ ॥
अस्मिन्व्यालानुचरिते वने वसति दुर्मतिः ॥ १५ ॥
इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम् ॥ अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः ॥
जग्राह रावणः सीतां बुधः खे रोहिणीमिव ॥ १६ ॥

बभूव ॥ ७ ॥ उक्तानुवादपूर्वकं क्रौर्यान्तरमाह द्वाभ्यां । परिव्राजकच्छद्म परिव्राजकरूपं । परिव्राजकरूपेण परिवृतं मां प्रेक्ष्य तस्थौ । किमेवंरूपं दृष्ट्वापि मां भजिष्यतीति प्रत्याशयेति भावः ॥ ८—९ ॥ असितकेशान्तां नीलकेशाग्रां । केशाग्रे पैङ्गलं दुर्लक्षणं । भास्करस्यप्रभामित्यनेन दुष्प्रसहत्वमुच्यते । वसनेत्यादिना दुस्त्यजत्वमुच्यते ॥ १० ॥ वरारोहे वरजघने ॥ ११ ॥ पुनस्त्यागशङ्कां मा कार्षीरित्याह—मामिति । क्वचित् कापीत्यर्थः ॥ १२ ॥ सार्धश्लोकद्वयमेकान्वयं । मानुषः मनुष्यरामविषयः । भावः स्नेहबन्धः । व्यालाः हिंस्राः । तमिति पूर्वेणान्वयः ॥ १३—१५ ॥ इतीत्यादिसार्धश्लोक एकान्वयः ।

मांपश्य । एतेन पृथिवीपरिमितरूपस्यापि धारणसामर्थ्यमप्यस्तीतिसूचितं ॥ ४ ॥ **ती०** परिव्राजकच्छद्म मायात्मकं यतिवेषं ॥८॥ **स०** असितकेशान्तां कृष्णकेशान्तां । आदित्यप्रभायाअसितत्वंच "असौवाआदित्यःपिङ्गलः एषशुक्लः एषनीलः" इत्यादिच्छान्दोग्यवाक्यसिद्धं ॥ १० ॥ **स०** पण्डितामात्मानंमन्यतइति पण्डितमानिनी तस्यास्संबुद्धिः । रामःपण्डितइति ज्ञानिनीतिवा ॥ १४ ॥ **ती०** त्रिषुलोकेषुविख्यातमित्यादिसार्धश्लोकचतुष्टयस्य प्रातीतिकार्थस्स्पष्टः । कुलकं । वस्तुतस्तु— भर्तारं शुश्रूषादिनास्वामिनंबिभर्तीतिभर्ता भृत्यइत्यर्थः । पतिः रक्षसामितिशेषः । यद्यप्यहंरक्षसांपतिः तथापि तवसदृशः अनुरूपःकिं । भृत्यइतिशेषः । अनुरूपोभृत्योनभवामि । तथापि भृत्यमिच्छसियदि त्रिषुलोकेषुविख्यातं यथाभवतितथा मामाश्रय भृत्यत्वेनाङ्गीकुरु । कुतः चिराय चिरकालादारभ्य । तव श्लाघ्यः प्रियः प्रीणयतिशुश्रूषादिनास्वामिनमितिप्रियोभृत्यः । जयस्यैवरावणरूपेणोत्पन्नत्वात् । अतोमांभृत्यइति भजस्व जानीहीत्यर्थः । अतएव नैवाहमितिमानुषेभावस्त्यज्यतां । मनुष्यएवरक्षणीयइत्यभिप्रायस्त्यज्यतामित्यर्थः । किंतु प्राचीनकृपया मूढे पण्डितमानिन्यपि राक्षसेभृत्येमयि भावःप्रणीयतां । अयमपिरक्षणीयइत्यनुसन्धीयतामित्यर्थः । किंच राज्याच्युतं तुच्छीकृतराज्यभोगमित्यर्थः । कुतः असिद्धार्थं अश्चासौसिद्धार्थश्चासिद्धार्थस्तं अवाप्तसमस्तकामंविष्णुमित्यर्थः । परिमितायुषं परिगतंत्यक्तं मितमल्पमायुर्येनतं अपरिमितायुषमित्यर्थः । किंच कैर्गुणैः अनिर्वचनीयैर्गुणैः अनन्तकल्याणगुणैरित्यर्थः । युक्तामितिशेषः । अनुरक्तासि । कुतएवं दुर्मतिः दुष्टेष्वपिमतिः अनुग्राहिकायस्यसः । अतएवहि स्त्रियावचनात्सुहृज्जनंराज्यंविहाय वनेवसति । तादृशंत्वमनुरक्तासियतः अतस्सर्वोत्तमा लक्ष्मीस्त्वं । अतएव मांभृत्यत्वेनाङ्गीकुर्विति तात्पर्यं ॥ १५ ॥ **ती०** वस्तुतस्तु रावणः अन्यत्र सुदुष्टात्मा काममोहितश्चयद्यपि तथाप्यत्रनतथा । अतएव बुधःरोहिणीमिवजग्राह । बुधस्स्वमातरंयथापूजार्थंगृह्णाति तथा रावणोपि सीतां जग्राह । स्वगृहेसंस्थाप्य स्वेष्टदेवताबुद्ध्यापूजयितुमेवेत्यर्थः । " जग्राहरावणस्सीतां बुधःखेरोहिणीमिव" इति । नन्वत्र नलकूबरवेदवतीशापाद्बलात्कथंपरदारस्पर्शइतिचेत्सत्यं । रावणस्सीतांसाक्षान्नजग्राह नस्पृष्टवान् । परंतु जानुकेशादिच्छायामेवजग्राह । राक्षसानां छायाग्राहित्वात् । तदुक्तंस्कान्दे—"छायाग्राहित्वमप्यस्ति सर्वविद्याविशारदे । केशच्छायांपरामृश्य जानुच्छायांतथैवच । गृहीत्वाजानकीं हृष्टो लङ्कांप्रायात्सरावणः । सीतापहरणंचैव येश्रृण्वन्तिनरोत्तमाः । नतेषामशुभंदेवि भविष्यतिकदाचन" । इति ॥ **ति०** सीतया सद्योमरणपर्यवसायिशापादानंतु समूलनाशनस्य वेदवत्यंशेनप्रतिज्ञातस्यनिर्वाहाय ऋषीणांदेवानामग्रे रामप्रतिज्ञातस्यचनिर्वा-

[ **पा०** ] १ ख. ग. ङ. झ. ट. प्रतिपेदे. २ घ. ङ. प्रेक्ष्य. ३ ख. घ. च. छ. ज. सीतां. ४ ख. वाक्यमब्रवीत्. ५ ख. भर्तारंयदिविख्यातं. च. छ. ज. ञ. विख्यातंभर्तारंत्वंयदिच्छसि. ६ क. ख. ग. च. ज. ञ. श्लाघ्यस्तवप्रियः. ङ. झ. ट. श्लाघ्यःपतिस्तव. ७ छ. ञ. नैवाहंतु. ८ क. ङ.—ञ. रावणः. ९ ग. कालचोदितः.

वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ॥ ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥ १७ ॥
तं दृष्ट्वा मृत्युसंकाशं तीक्ष्णदंष्ट्रं महाभुजम् ॥ प्राद्रवन्गिरिसंकाशं भयार्ता वनदेवताः ॥ १८ ॥
स च मायामयो दिव्यः खरयुक्तः खरस्वनः ॥ प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ॥ १९ ॥
ततस्तां परुषैर्वाक्यैर्भर्त्सयन्स महास्वनः ॥ अङ्केनादाय वैदेहीं रथमारोपयत्तदा ॥ २० ॥
सा गृहीता विचुक्रोश रावणेन यशस्विनी ॥ रामेति सीता दुःखार्ता रामं दूरगतं वने ॥ २१ ॥
तामकामां स कामार्तः पन्नगेन्द्रवधूमिव ॥ विवेष्टमानामादाय उत्पपाताथ रावणः ॥ २२ ॥
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ॥ भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथाऽऽतुरा ॥ २३ ॥
हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ॥ ह्रियमाणां न जानीषे रक्षसा मामर्षिणा ॥ २४ ॥
जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् ॥ ह्रियमाणामधर्मेण मां राघव न पश्यसि ॥ २५ ॥
ननु नामाविनीतानां विनेताऽसि परंतप ॥ कथमेवंविधं पापं न त्वं शास्सि हि रावणम् ॥ २६ ॥
ननु सद्यो ऽविनीतस्य दृश्यते कर्मणः फलम् ॥ कालोप्यङ्गीभवत्यत्र सस्यानामिव पक्तये ॥ २७ ॥

प्रियार्हत्वे हेतुः—प्रियवादिनीमिति । अत्र मुहूर्तं तिष्ठ भूयः सत्करिष्यामीति प्रियभाषिणीं मैथिलीं । इत्युक्त्वा एवं परुषमुक्त्वा । तत्र हेतुः—सुदुष्टात्मेति । बुधः खे रोहिणीमिवेत्यभूतोपमा । बुधः स्वपितृपत्नीत्वेन मातरं खे आकाशे सुखेनसंचरन्तींरोहिणींयदि गृह्णीयात् तत्तुल्यमिदं पापमित्यर्थः ॥ १६ ॥ शापकृतदोषो भविष्यतीति मूर्धजेषूर्वोश्च ग्रहणं ॥ १७ ॥ तमिति गृह्णन्तमित्यर्थः ॥ १८ ॥ सः पूर्वं गुप्तः । मायामयः अन्तर्धानाद्यर्हतया आश्चर्यमयः । खरयुक्तः अश्वतरयुक्तः । हेमाङ्गः स्वर्णमयचक्रः । चक्रं हि रथाङ्गमित्युच्यते ॥ १९ ॥ अङ्केन ऊरुभागेन ॥ २० ॥ वनेदूरगतं राममुद्दिश्य रामेति विचुक्रोश । क्रुश आह्वाने रोदने च ॥ २१ ॥ अकामां विरागिणीं । विवेष्टमानां रथोपरिस्थले लुठन्तीं । आदाय पुनरङ्केनादाय । उत्पपात रथेन सहित इति शेषः ॥ २२ ॥ आतुरा सा मत्तेव मद्युक्तेव । भ्रान्तचित्ता यथा भ्रान्तचित्तेव च चुक्रोश ॥ २३ ॥ अमर्षिणा खरवधकृतामर्षवता ॥ २४ ॥ धर्महेतोः आश्रितसंरक्षणरूपधर्महेतोः । जीवितं सुखमर्थांश्च परित्यजन् जीवितादिपरित्यागशीलः ॥ २५ ॥ ननु नामेति प्रसिद्धौ । अविनीतानां दुर्जनानां । विनेता शिक्षकः । पापं पापिष्ठं । कथं न शास्सि न शिक्षयसि ॥ २६ ॥ अशासने स्वयमेव हेतुमुन्नयति—नन्विति । अविनीतस्य दुर्जनस्य । कर्मणः पापस्य । सद्यः फलं न

हाय ॥ स० प्रियः स्वप्रियोरामः तस्यैवार्हा । अतएव तमेववदतीति प्रियवादिनी तां ॥ १६ ॥ ती० मूर्धजेषुकरेण मूर्धजाः श्रेष्ठाः इषवःयस्मिंस्तेनकरेण दक्षिणेन वामेनच ऊर्वोः पादयोः परिजग्राह । पादौगृहीत्वा लङ्कांप्रत्यागन्तव्यमितिप्रार्थितवानिति भावः ॥ स० अत्रानुक्तं मायासीताकृतिनिर्माणमित्यादिकं पुराणान्तरादवगन्तव्यं । तथाचोक्तं कूर्मपुराणेचतुस्त्रिंशेऽध्याये—“सृष्टामायामयींसीतां सरावणवधेच्छया । सीतामादायरामेष्टां पावकोन्तरधीयत । ” इत्यादि । तथा आग्नेयपुराणे षट्सप्ततितमाध्याये “इत्युक्त्वास्वप्रभावेन प्रतिबिंबंमनोमयं । यथारूपंयथावेषं कल्पयित्वातिसुन्दरम् । वह्नावाच्छादयन्ती स्वमग्नावेव समास्थिता । अथमायामयीसीता” इत्याद्युक्तं । एतच्च द्वारप्रदर्शनपरं महाभारततात्पर्यनिर्णयादौ कैलासगमनोक्तेः । ति० वामेनेति अननुरक्ततया शापदानभिया स्ववामाङ्गासनलनिवारणायैवंग्रहणमित्याहुः ॥ १७ ॥ स० दिव्यः आकाशगामी ॥१९॥ ती० वस्तुतस्तु—परुषैर्वाक्यैः यदिमां भृत्यत्वेननाङ्गीकरोषि तर्हि तवाग्रतःप्राणांस्त्यक्ष्यामीत्यादिवाक्यैः । भर्त्सयन् भीतिमुत्पादयन् रथमारोपयत् ॥ २० ॥ ती० सागृहीतेत्यादीनांवास्तवार्थेसीतायादैन्यवत्प्रतीयमानानिवाक्यानिसर्वाणि सीतया लौकिकरीतिमनुसृत्योक्तानीति द्रष्टव्यानि । ति० अतिचुक्रोशेत्यादि तच्छायायाअपि मनुष्यभावनाढ्यं ॥ २१ ॥ ति० अत्र इवयथाभ्यां सर्वचेष्टानांनाट्यत्वंसूचितं ॥ २३ ॥ ति० नशाधि प्राप्तकालंशासनं नकरोषि । हिर्वाक्यालङ्कारे । शोकातुरत्वाद्वाऽधिकपदं

[ पा० ] १ च. छ. ज. ञ. गिरिसंकाशं. क. ग. ङ. झ. ट. गिरिशृङ्गाभं. २ क. ग. ङ—ट. न्मृत्युसंकाशं. घ. गिरिशृङ्गाभं. ३ क. ङ. झ. ट. वाक्यैरभितर्ज्य. च. छ. ज. ञ. वाक्यैस्तर्जयित्वा. ४ ग. ङ.—ज. ञ. अङ्केनोद्यम्य ५ क.–घ. च.—ञ. मारोहयत्. ६ ख. ततः. ७ च. छ. ज. ञ. रामकामां. ट. तामकामांच. ८ क. ङ.—ट. कामरूपिणा. ९ ख. ङ.—ट. मर्थंच. १० झ. शाधि.

स कर्म कृतवानेतत्कालोपहतचेतनः ॥ जीवितान्तकरं घोरं रामाद्व्यसनमाप्नुहि ॥ २८ ॥
हन्तेदानीं सकामाऽस्तु कैकेयी सह बान्धवैः ॥ ह्रियेयद्धर्मकामस्य धर्मपत्नी यशस्विनः ॥ २९ ॥
आमन्त्रये जनस्थाने कर्णिकारान्सुपुष्पितान् ॥ क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ३० ॥
माल्यवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम् ॥ क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥ ३१ ॥
हंसकारण्डवाकीर्णां वन्दे गोदावरीं नदीम् ॥ क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥ ३२ ॥
दैवतानि च यान्यस्मिन्वने विविधपादपे ॥ नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् ॥ ३३ ॥
यानि कानि चिदप्यत्र सत्त्वानि निवसन्त्युत ॥ सर्वाणि शरणं यामि मृगपक्षिगणानपि ॥ ३४ ॥
ह्रियमाणां प्रियां भर्तुः प्राणेभ्योपि गरीयसीम् ॥ विवशाऽपहृता सीता रावणेनेति शंसत ॥ ३५ ॥
विदित्वा मां महाबाहुरमुत्रापि महाबलः ॥ आनेष्यति पराक्रम्य वैवस्वतहृतामपि ॥ ३६ ॥
सा तदा करुणा वाचो विलपन्ती सुदुःखिता ॥ वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥ ३७ ॥
सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशं गता ॥ समाक्रन्दद्भयपरा दुःखोपहतया गिरा ॥ ३८ ॥
जटायो पश्य मामार्य ह्रियमाणामनाथवत् ॥ अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ॥ ३९ ॥
नैष वारयितुं शक्यस्त्वं क्रूरो निशाचरः ॥ सत्त्ववाञ्जितकाशी च सायुधश्चैव दुर्मतिः ॥ ४० ॥

दृश्यते । कुतः अत्र फलदर्शने । कालोप्यङ्गीभवति सहकारिकारणं भवति । अभूततद्भावे च्विः । पक्तये पाकाय ॥ २७ ॥ सः त्वमित्यर्थः । व्यसनं भ्रंशं । "व्यसनं विपदि भ्रंशे" इत्यमरः ॥ २८ ॥ वने राक्षसादिभिर्हृता भवेदिति मां कैकेयी वनं प्रेषितवतीति वैदेह्या हृदये सर्वदास्थितं । तदिदानीं "सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टं" इति न्यायेनोद्घाटयति—हन्तेति । अत्र हेतुमाह—ह्रियेयदिति ॥ २९ ॥ अथ चित्तविभ्रमातिरेकादचेतनानपि रामायाख्यातेत्यभ्यर्थयते—आमन्त्रय इत्यादिभिः सप्तश्लोकैः । आमन्त्रये संबोधयामि । जनस्थाने स्थितानितिशेषः । कर्णिकारान् परिव्याधाख्यान्पुष्पवृक्षान् । रावणः सीतां हरतीति यत् एतच्छंसध्वं कथयत । एवमुत्तरत्रापि योज्यं ॥ ३० ॥ माल्यवन्तं पुष्पवन्तं । शिखरिणं प्रशस्तशिखरं । प्रस्रवणं प्रस्रवणाख्यं ॥ ३१ ॥ संघुष्टाः हंसाः सारसाश्च यस्यां सा हंससारससंघुष्टा । कर्तरि क्तः । हंसकारण्डवाकीर्णामिति शुद्धः पाठः ॥ ३२ ॥ तेभ्यः युष्मभ्यमिति शेषः ॥ ३३ ॥ यानीत्यादिश्लोकद्वयमेकान्वयं । सत्त्वानि जन्तवः । उतेति संबोधने समुच्चये वा । ह्रियमाणां प्राणेभ्योपि गरीयसीं प्रियां मां सीता रावणेन हृतेति भर्तुः शंसत । रावणान्न भेतव्यं तत्त्वं कथयतेति भावः ॥ ३४—३५ ॥ कथने किं प्रयोजनं तत्राह—विदित्वेति । भवदुक्तप्रकारेण मां विदित्वा अमुत्र स्वर्गलोके गतामपि वैवस्वतहृतामपि पराक्रम्यानेष्यति । तस्मादवश्यं शंसतेति भावः ॥३६॥ करुणाः दीनाः । तात्कालिकहर्षं सूचयति—आयतलोचनेति ॥ ३७ ॥ समाक्रन्दत् क्रदि आह्वाने रोदने च । दुःखोपहतया दुःखगद्गदया ॥ ३८ ॥ आर्येति श्वशुरवत्संबोधनं । करुणं यथा तथा ह्रियमाणां ॥ ३९ ॥ अशक्यत्वे हेतुः—सत्त्ववानित्यादिकं । जितकाशी

नदोषाय ॥ २६ ॥ ति० सकामातु जातेतिशेषः । यतइत्यादिः ॥ २९ ॥ स० सीतांरावणोहरतीतिपारोक्ष्योक्त्या आकृतेरेव ग्रहणमिति सूचयति ॥ ३० ॥ शि० वन्दे तत्प्रयोजनमाह । क्षिप्रंरामायशंसध्वं । अत्र वन्द्यमानयोरुद्भूतावयवविवक्षया बहुवचनं । एवमुत्तरत्रापि ॥ ३१ ॥ शि० वनस्पतिगतं वृक्षेस्थितं । स० करुणयन्तीतिकरुणाः ॥ ३७ ॥ इत्येकोनपञ्चाशस्सर्गः ॥ ४९ ॥

[ पा० ] १ क. ङ.—ट. त्वंकर्म. २ झ. ञ. ट. सकामातु. ३ क. ख. ग. ङ.–ट. बान्धवैस्सह. ४ क.–ट. ह्रियेयधर्म. ५ अयंश्लोको झ. पाठेनदृश्यते. ६ ग. घ. छ. ट. शंसध्वं. ७ ख.—ट. हंससारससंघुष्टां. ८ ख. ट. घ. झ. ट. शंसध्वं. ९ ङ. झ. ट. विविधानिच. १० ङ. झ. ट. विदित्वातु. ११ क.—घ. च. छ. ज. ञ. तथा. १२ च. छ. ज. ञ. वशानुगा. १३ घ. छ. ञ. शब्दोपहतया. १४ क. ङ.—ञ. नैव. १५ क. च. छ. ज. ञ. स्त्वयाह्येष. ङ. झ. ट. स्त्वयाक्रूरो.

रामाय तु यथातत्त्वं जटायो हरणं मम ॥ लक्ष्मणाय च तत्सर्व[1]माख्यातव्यमशेषतः ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ॥ ५० ॥

सीतासमाक्रन्दनश्रवणात्स्वापादुद्बुद्धेनजटायुषासीतारावणयोर्दर्शनम् ॥ १ ॥ तथास्वनामकीर्तनादिपूर्वकंरावणंप्रति सीतामोचनयाचनेपितेनतदकरणे सगर्हणंसक्रोधंयुद्धायतत्प्रतिरोधनम् ॥ २ ॥

तं शब्दमवसुप्तस्तु [2]जटायुरथ शुश्रुवे ॥ [3]निरीक्ष्य रावणं क्षिप्रं वैदेहीं च [4]ददर्श सः ॥ १ ॥
ततः पर्वत[5]कूटाभस्तीक्ष्णतुण्डः [6]खगोत्तमः ॥ वनस्पतिगतः श्रीमान्व्याजहार शुभां गिरम् ॥ २ ॥
दशग्रीव स्थितो धर्मे पुराणे [7]सत्यसंश्रयः ॥ [[8]भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि सांप्रतम् ] ॥
जटायुर्नाम नाम्नाऽहं गृध्रराजो महाबलः ॥ ३ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ॥ लोकानां च हिते युक्तो रामो दशरथात्मजः ॥ ४ ॥
तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ॥ सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि ॥ ५ ॥
कथं राजा स्थितो धर्मे परदारान्परामृशेत् ॥ रक्षणीया विशेषेण राजदारा महाबल ॥ ६ ॥
निवर्तय मतिं नीचां परदाराभिमर्शनात् ॥ न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् ॥
यथाऽऽत्मनस्तथाऽन्येषां दारा रक्ष्या[9] [10]विमर्शिता ॥ ७ ॥

---

जयावहः । दुर्मतिः कूटयोधी ॥ ४० ॥ तर्हि मया किं कर्तव्यं तत्राह—रामाय त्विति । तत् अस्य दुर्जयत्वादेव हेतोः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

अथ स्वामिविषये दासेन यावच्छक्ति शेषवृत्तिरवश्यं कर्तव्येत्यमुमर्थं लोके प्रवर्तयितुं जटायुवृत्तान्तमुपक्षिपति सर्गद्वयेन । अत्र प्रथमं जटायुः सान्त्वनभर्त्सनाभ्यां रावणमनुकूलयितुमिच्छतीत्याह—तं शब्दमित्यादिना । अवसुप्तः ईषत्सुप्तो जटायुः । अथ सीतावचनानन्तरं । तं शब्दं शुश्रुवे । आत्मनेपदमार्षम् । ततः प्रथमं महाशरीरतया रावणं निरीक्ष्य सः वैदेहीं ददर्श ॥ १ ॥ तीक्ष्णतुण्डः तीक्ष्णमुखः । "वक्त्रास्ये वदनं तुण्डं" इत्यमरः । श्रीमान् कैङ्कर्यश्रीसमृद्धः । शुभां रावणस्य शोभनावहां ॥ २ ॥ पुराणे सनातने । धर्मे दास्यवृत्तावित्यर्थः । स्थितः तदेकपरायणः । सत्यं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तः परमात्मा संश्रयः आलम्बनं यस्य सः भगवदेकोपायनिष्ठ इत्यर्थः । नाम्ना जटायुर्नाम जटायुरिति प्रसिद्धः । तथाच मयि दासे स्थिते तव सीतापहरणं न युक्तमिति भावः ॥ ३ ॥ स्वस्वरूपमुक्त्वा स्वामिस्वरूपमाह—राजेति । महेन्द्रवरुणोपमत्वमेकदेशसाम्यात् । सर्वलोकस्य राजा स्वामी भवतोपि स्वामीत्यर्थः ॥ ४ ॥ तथाच राजदारापहारो न युक्त इत्याह—तस्येति । सहधर्मचारिणीति धर्मपत्नीशब्दार्थः ॥ ५ ॥ मा भूत्तव रामे स्वामित्वबुद्धिः मनुष्यमात्रबुद्धिं राजबुद्धिं वा कृत्वा सीतां परिहरेत्याह—कथमिति । राजा भवानिति शेषः ॥ ६ ॥ राजत्वबुद्धिस्तव रामे मा भूत् तथापि परदाराभिमर्शनं न कार्यमित्याह—निवर्त-

---

ति० अहं सत्यसंश्रवः सत्यप्रतिज्ञः । सीतारक्षणेऽहंसहायइत्युक्तत्वादितिभावः । नाम्नाजटायुरिति प्रसिद्धः । अतो मत्समक्षमीदृशंकर्म कर्तुंनार्हसि । भ्रातरितिसामप्रयोगः । यद्येवंनत्यक्ष्यसि तदा सत्यप्रतिज्ञत्वान्मयासहयुद्धंभावीति दण्डप्रयोगश्चव्यङ्ग्यः ॥ ३ ॥ ती० रक्षणीयाविशेषेणराजदाराः इत्यनेन राजदारापहरणस्य गुरुतल्पसमत्वादितिभावः ॥ ६ ॥

[ पा० ] १ ख. माख्यातव्यंविशेषतः. २ ग. जटायुरपि. ३ क. ग. घ. छ. झ. ठ. निरैक्षद्रावणं. ४ क. च. छ. ज. ञ. यशस्विनीं. ५ ख. च. छ. ज. ञ. संकाशः. झ. शृङ्गाभः. ६ च. छ. ज. ञ. खगेश्वरः. ७ ङ. झ. ट. सत्यसंश्रवः. ८ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ९ ग. रक्ष्यादाराः. १० क. घ. विमर्शिता. ङ.—ट. विमर्शनात.

[1]अर्थं वा यदि वा कामं शिष्टाः शास्त्रेष्वनागतम् ॥ [2]व्यवस्यन्ति न राजानो धर्मं पौलस्त्यनन्दन ॥८॥
राजा धर्मश्च कामश्च [3]द्रव्याणां चोत्तमो निधिः ॥ धर्मः शुभं वा [4]पापं वा राजमूलं प्रवर्तते ॥ ९ ॥
पापस्वभावश्चपलः कथं त्वं रक्षसांवर ॥ [5]ऐश्वर्यमभिसंप्राप्तो विमानमिव दुष्कृतिः ॥ १० ॥
कामं स्वभावो [6]यो यस्य न [7]शक्यः परिमार्जितुम् ॥ न हि दुष्टात्मनामार्य[8]मावसत्यालये चिरम् ॥ ११ ॥
विषये वा पुरे वा ते [9]यदा रामो महाबलः ॥ नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ १२ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ॥ अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ १३ ॥
[10]अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ॥ यस्य त्वं लोकनाथस्य [11]भार्यां हृत्वा गमिष्यसि ॥१४॥
क्षिप्रं विसृज वैदेहीं मा [12]त्वां घोरेण चक्षुषा ॥ दहे[13]द्दहनभूतेन वृत्रमिन्द्राशनिर्यथा ॥ १५ ॥
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ॥ ग्रीवायां [14]प्रतिमुक्तं च कालपाशं न पश्यसि ॥ १६ ॥

येति । परदाराभिमर्शनान्मतिं निवर्तय । तद्विषयमतिं न कुर्वित्यर्थः । नीचत्वमेवाह—नेति । धीरः धीमान् । तत्कर्म नसमाचरेत् । अस्य धीरस्य यत् कर्म । परो विगर्हयेत् निन्देत् । विपश्चिता विवेकिना ॥ ७ ॥ शिष्टाः सन्तः । राजानः शास्त्रेष्वनागतमनुपदिष्टं धर्ममर्थंवा यदिवाकामं कामं वा न व्यवस्यन्ति नेच्छन्तीत्यर्थः । लोके यथातथावा भवतु राज्ञस्तव सुतरां नेदमुचितमिति भावः ॥ ८ ॥ नकेवलंस्वार्थं लोकानुग्रहार्थं चेदं परिहर्तव्यमित्याह—राजेति । अत्रधर्मादिशब्दौ धर्मादिप्रवर्तकपरौ । द्रव्याणामर्थानामुत्तमो निधिराश्रयः । यस्मादेवं तस्मात् धर्मः धर्मादिः । राजमूलंयथातथाप्रवर्तते । शुभं शुभाचारः । पापं वा राजमूलं प्रवर्तते । राजानुसारेण लोकाः धर्माधर्मादिषु प्रवर्तन्ते । अतोराज्ञा पापं विहाय धर्मादिकमेव कर्तव्यमित्यर्थः ॥ ९ ॥ परदाराभिमर्शनमैश्वर्याद्भ्रंशकं चेत्याह—पापस्वभाव इति । पापं स्वभावःसहजधर्मो यस्य स पापस्वभावः । अतएव चपलः विषयप्रवणः । त्वं दुष्कृतिः । विमानं देवार्हं विमानमिव । ऐश्वर्यमभि ऐश्वर्यंप्रति । कथं संप्राप्तः योग्यः । एवं विषयचपलश्चेदैश्वर्याद्भ्रष्टो भविष्यसीति भावः ॥ १० ॥ एवं बहुसान्त्वनेपि सीताविसर्जनाकरणात् भवादृशे उपदेशो निरर्थक इत्याह—काममिति । यो यस्य स्वभावः औत्पत्तिकः । स धर्मः । कामं अत्यन्तं । परिमार्जितुं न शक्यः । उपदेशेन निवर्तयितुं न शक्य इत्यर्थः । तथाहि आर्यं सदुपदेशः । दुष्टात्मनां आलये हृदये । चिरं नावसति न तिष्ठति ॥ ११ ॥ शत्रुभार्यापहरणं मम स्वभाव इत्याशङ्क्य शात्रवप्रसक्तिरत्र नास्तीत्याह—विषये वेति । विषये राज्ये । यदा नापराध्यति तदा तस्य कथमपराध्यसि ॥ १२ ॥ खरवध एव ममापराध इत्याशङ्क्याह द्वाभ्यां । वृत्तं मर्यादामतिक्रान्तोतिवृत्तः । अत्र हननविषये । यस्येति तस्येति पूर्वशेषः ॥ १३—१४ ॥ प्रकृतमुपसंहरति—क्षिप्रमिति । अत्र राम इत्यध्याहार्यं । चक्षुषेत्यनेन दर्शनमात्रेण वधो लक्ष्यते । अशनिः वज्रं ॥ १५ ॥ सीताग्रहणमवश्यं मृत्युकरमित्याह—सर्पमित्यादिना । आशीविषं आशीविषाख्यं । प्रतिमुक्तं आमुक्तं । यथा वस्त्रबद्धः सर्पोऽवश्यं नाशयति तद्वदियं सीता गृहीता त्वां

**ति०** शास्त्रेष्वनागतं शास्त्रेष्वनवगतं परमसूक्ष्मत्वाच्छास्त्रतोनवगतमप्यर्थंवा राजानमनुसृत्य व्यवस्यन्ति । शास्त्रेऽस्फुटमपि राज्ञआचरणंदृष्ट्वाप्रजाआचरन्ति । तस्माद्राज्ञोऽधर्मप्रवृत्तिरनुचितेतितात्पर्यं । नव्यवस्यन्तिराजानइतिपाठे शास्त्रेष्वनागतं तत्राप्रतिपादितंधर्मं राजानोनव्यवस्यन्ति नेच्छन्तीत्यर्थः । तस्माच्छास्त्रानुसारिधर्मेएव मतिंकुर्यादित्याशयः ॥ ८ ॥ **स०** कार्यगौरवादार्येति रावणसंबोधनं । दुष्टात्मनामालये मालक्ष्मीः चिरंबहुकालं नवसति । किंतु आर्यमा ज्येष्ठलक्ष्मीर्वसति । पूर्वत्र मा वसतीतिच्छेदः ॥ ११ ॥

**[ पा० ]** १ च. छ. ज. ञ. धर्ममर्थंचकामंच. २ ङ. झ. ट. व्यवस्यन्त्यनुराजानं. क. च. छ. ज. ञ. नव्यवस्यन्ति. ३ च. छ. ज. ञ. द्रव्याणामुत्तमो. ४ क. च. छ. ज. कामोवा. ५ घ. ऐश्वर्यमिह. ६ ङ. झ. ट. यस्सोसौ. ७ ङ. झ. ट. शक्यःसंप्रमार्जितुं. घ. शक्यःपरिवर्जितुं. ८ घ. मार्याह्यावसन्त्यालये. ९ ख. ग. यथा. ग. यदि. १० ख. च. छ. ज. तत्रब्रूहियथासत्यं. ११ क. ख. ग. ङ.—ट. हत्वाभार्यां. १२ च. छ. ज. ञ. त्वां. १३ क. ख. च. छ. ज. ञ. दहनकल्पेन. १४ घ. प्रतिसक्तं. छ. प्रतियुक्तं.

स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् ॥ तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥१७॥
यत्कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो भुवि ॥ शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ॥ १८ ॥
षष्टिर्वर्षसहस्राणि मम जातस्य रावण ॥ पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥ १९ ॥
वृद्धोऽहं त्वं युवा धन्वी सशरः कवची रथी ॥ तथाऽप्यादाय वैदेहीं कुशली न गमिष्यसि ॥२०॥
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ॥ हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ॥ २१ ॥
युध्यस्व यदि शूरोसि मुहूर्तं तिष्ठ रावण ॥ शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ॥ २२ ॥
असकृत्संयुगे येन निहता देवदानवाः ॥ नचिराच्चीरवासास्त्वां रामो युधि वधिष्यति ॥ २३ ॥

नाशयिष्यतीति भावः । व्याजस्तुतिरलंकारः ॥ १६ ॥ भारः भारद्रव्यं । नावसादयेत् न पीडयेत् । अनामयं व्याध्यनुत्पादकं । अत्रापिपूर्ववद्व्याजस्तुतिः ॥ १७ ॥ यत्कार्यं कृत्वा स्थितस्य न धर्मो भवेत् । कीर्तिः ऐश्वर्यादिजनिता प्रथावा । न भवेत् । यशः भोगित्वकृतप्रथावा । न भवेत् । प्रत्युत शरीरदुःखमेव भवेत् । तत्कर्म कः समाचरेत् । मूढ एवाचरेत् । तथाविधकर्मकरणाद्भवान्मूढ एवेति भावः ॥१८॥ मयि वृद्धत्वेनावमतिं मा कृथा इत्याशयेनाह द्वाभ्यां । षष्टिर्वर्षसहस्राणि गतानीति शेषः । जातस्येत्यनेन वयसा जीर्णत्वमुच्यते । राज्यं यथावत् अनुतिष्ठतः पालयत इत्यनेन कर्मणा जीर्णत्वमुक्तं । अहं धनुराद्युपकरणरहितः ॥१९—२०॥ एतदेव दृष्टान्तमुखेन द्रढयति— न शक्त इति । मम पश्यतः मयि पश्यति सति । सीतां बलाद्धर्तुं नशक्तः न समर्थः । कथमिव । न्यायसंसिद्धैः न्यायशास्त्रसंसिद्धैः । हेतुभिः अनुमानैः । ध्रुवां निश्चलां । अविचाल्यप्रामाण्यामिति यावत् । वेदश्रुतीमिव वेदश्रुतिमिव । दीर्घ आर्षः । वेदयतीति वेदः । स्वतःप्रमाणभूतां श्रुतिमित्यर्थः । यथा वेदविदग्रसरे पश्यति सति हैतुकैः न्यायसिद्धैर्हेतुभिः श्रुतिः अन्यथा अन्यपरा नेतुं न शक्यते तद्वदिति भावः । अन्यपरार्थवादादिव्यावृत्त्यर्थो वेदशब्दः । यथा तामन्यथा कुर्वन्स्वयमेव विनश्यति न वेदश्रुतेः कापि हानिः । एवं सीतामपहरंस्त्वमेव नशिष्यसि । न तु सीतायाः कापि हानिरित्याकूतं । यथा वेदविदग्रेसरो वेदश्रुतिमन्यथा नीयमानामवलोकयन् तदसहमानो यावच्छक्ति निवर्तयति । तथाऽहमपि त्वया बलान्नीयमानामपि सीतां यावच्छक्ति निवर्तयिष्यामीत्यर्थः ॥ २१ ॥ यदि शूरोसि मुहूर्तं तिष्ठ मा पलायस्व मयायुध्यस्व । युद्धे मया हतस्त्वं पूर्वरामेण हतः खर इव भूमौ शयिष्यसे । यद्वा यदि शूरोसि तदा मया युध्यस्व । अथवा रामागमनपर्यन्तं मुहूर्तं तिष्ठ तेन हतः शयिष्यस इति । यद्वा यदि शूरोसि मुहूर्तं तिष्ठ स्थित्वा तेन युध्यस्व ॥ २२ ॥ न केवलं स्वापराधप्रतीकारः किन्तु "देवानां दानवानां च सामान्यमधिदैवतं" इत्युक्तस्य रामस्य स्वकीयापराधप्रतीकारोपि भविष्यती-

**ति०** मेवैदेहीं दशरथमित्रत्वान्ममस्नुषांवैदेहीमादाय नकुशलीगमिष्यसीत्यर्थः ॥२०॥ **ती०** यथा नसुरांपिबेदित्यादिकां ध्रुवांनित्यां निरपेक्षलक्षणांश्रुतिं—सुरापेया द्रवद्रव्यत्वात्क्षीरवदित्यादिभिः न्यायसंयुक्तैः तर्कसहितैःहेतुभिः हर्तुंबाधितुं पुमान्नशक्नोति । किंतु श्रुत्यैवहेतवः कालात्ययापदिष्टाभवन्ति । तथैव हेतुशक्तिसमानमायाबलसंपन्नस्त्वं श्रुतिसदृशींसीतां हर्तुंनशक्तः । किंतु तयैव नश्यसीत्यर्थः । **स०** न्याययुक्तैः आपाततः । हेतुभिः हेत्वाभासैः । श्रुतीमित्यत्र दीर्घआर्षः । यद्वा श्रुतिः क्तिन्प्रत्ययान्तोऽयं । ततश्च "कृदिकारात्—" इतिङीष् ॥ **शि०** न्यायसंयुक्तैः न्याय्यत्वेनप्रतीयमानैः हेतुभिः नास्तिकादियुक्तिभिः ईश्वरोनास्ति अदृश्यत्वादित्यादिहेत्वाभासैः ध्रुवां क्षित्यङ्कुरादिकंसकर्तृकं कार्यत्वादित्याद्यनुमानेन "यतोवाइमानिभूतानिजायन्ते" इत्यादिशब्देनच "दृश्यतेत्वग्र्याबुद्ध्या" इत्याद्युक्त्या प्रत्यक्षेणच कप्यासंपुण्डरीकमिवेत्याद्युक्त्योपमानेनच सिद्धां । वेदश्रुतीं वेदानांसामादीनां श्रुतयः तात्पर्यवृत्त्या यस्यांपरदेवतायां तामिव । दीर्घआर्षः ॥ २१ ॥ **स०** नचिरात् अल्पकाले । **ति०** संयुगे रामेणेति

[ **पा०** ] १ ङ. झ. ट. ध्रुवं. २ घ. नतत्कर्म. ३ ङ.—ञ. षष्टिवर्ष. ४ ख. ङ.—ट. जातस्यमम. ५ क. ख. ग. ङ. छ. झ. ञ. ट. सरथःकवचीशरी. ६ ङ. झ. ट. नचाप्यादायकुशलीवैदेहींमे. ख. नचाप्यादायवैदेहींकुशलीमे. ७ च. छ. ज. ञ. मागमिष्यसि. ८ झ. दैत्य.

[1]किंनु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ ॥ [2]क्षिप्रं त्वं नश्यसे नीच तयोर्भीतो न संशयः ॥२४॥
[3]नहि मे जीवमानस्य नयिष्यसि शुभामिमाम् ॥ सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥२५॥
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ॥ जीवितेनापि रामस्य तथा दशरथस्य च ॥ २६ ॥
तिष्ठतिष्ठ दशग्रीव मुहूर्तं पश्य रावण ॥ [4]युद्धातिथ्यं प्रदास्यामि [5]यावत्प्राणं निशाचर ॥ २७ ॥
वृन्तादिव [6]फलं त्वां तु पातयेयं रथोत्तमात् ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

## एकपञ्चाशः सर्गः ॥ ५१ ॥

जटायुषासहयुध्यतारावणेन तेननिजरथादिभञ्जनेभूमौनिपतनम् ॥ १ ॥ किंचित्परिश्रान्तेजटायुषि लब्धावकाशेनरावणेन पुनःसीतामादायपलायनम् ॥ २ ॥ पुनरमर्षात्तदनुधाविनाजटायुषा खरतरनखैस्तत्पृष्ठविदारणपूर्वकंतुण्डेनतदीयभुजमण्डलखण्डनम् ॥ ३ ॥ पुनःप्ररूढभुजमण्डलेनतेनसीताविसर्जनपूर्वकंमुहूर्तंनियुध्यखड्गेनजटायुषःपक्षपादच्छेदनम् ॥ ४ ॥ सीतयाभूशायिनोमन्दजीवितस्यजटायोरालिङ्गनेनपरिदेवनम् ॥ ५ ॥

[7]इत्युक्तस्य यथान्यायं रावणस्य जटायुषा ॥ क्रुद्धस्याग्निनिभाः सर्वा रेजुर्विंशतिदृष्टयः ॥ १ ॥
संरक्तनयनः [8]कोपात्तप्तकाञ्चन[9]कुण्डलः ॥ राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ २ ॥
स संप्रहारस्तुमुलस्तयोस्तस्मिन्[10]महावने ॥ बभूव [11]वातोद्धतयोर्मेघयोर्गगने यथा ॥ ३ ॥
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा ॥ सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥ ४ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ॥ अभ्यवर्षन्महाघोरैर्गृध्रराजं [12]महाबलः ॥ ५ ॥

---

त्याह—असकृदिति ॥ २३ ॥ एवमुक्तेपि पुनः पलायमानंप्रत्याह—किंन्विति । किंतु शक्यंकिंवा शक्यं । नश्यसे अदर्शनं प्राप्नोषि । तयोः ताभ्यां ॥ २४ ॥ तथापि त्वां नाहं गमयामीत्याह—नहीति । जीवमानस्य जीवतः । मयि जीवतीत्यर्थः ॥२५॥ त्वया किं कर्तुं शक्यमित्यत्राह—अवश्यमिति । जीवितेनापि जीवितव्ययेनापि ॥ २६ ॥ यथाप्राणं यथाबलं ॥ २७ ॥ वृन्तादित्यर्धमेकान्वयं । "वृन्तं प्रसवबन्धनं" इत्यमरः ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

---

अथ स्वामिकार्याय प्राणत्यागमकरोज्जटायुरित्याह—इतीत्यादिना ॥१॥ अमर्षणः असहनः ॥२॥ सः युध्यस्वेति पूर्वप्रवर्तितः । संप्रहारः युद्धं । वा ताभ्यां प्रतिकूलवायुभ्यां उद्धतयोः प्रेरितयोः । मेघपक्षे संप्रहारः संघट्टनमात्रं ॥ ३ ॥ सपक्षयोः पक्षसहितयोः । माल्यवतोः माल्यवन्नामानौ द्वौपर्वतौ एको दण्डकारण्ये पूर्वमुक्तः "माल्यवन्तं शिखरिणं"इति । अन्यः किष्किन्धासमीपे । वक्ष्यति वर्षावर्णने ॥ ४ ॥ नालीकैः नालमात्रशरैः । नाराचैः आयसशरैः । विक-

---

शेषः । नवधिष्यति अपितु वधिष्यतीत्यर्थः । अनेन रामस्येश्वरत्वंव्यङ्ग्यं ॥२३॥ **स०** अल्पकालव्यवधानमपि कुतइत्यतआह—किंनुशक्यमिति । तयोः ताभ्यां ॥ २४ ॥ इतिपञ्चाशस्सर्गः ॥ ५० ॥

**ति०** माल्यवतोः द्वौमाल्यवन्तौ एको दण्डकारण्ये । अपरोमेरुपार्श्वे । यद्वा यथथोक्ता कल्पनेयं । यदिद्वौमाल्यवन्तौ सपक्षौयुध्येयातां तदा तत्सदृशमिदमिति । तेनानुपमत्वंफलति ॥ ४ ॥ **स०** नालीकाः अव्यर्थीभवन्तश्चते नाराचाश्चतैः । रूढोवा

**[ पा० ]** १ ख. ग. ङ. च. छ. ट. किंतु. २ ग. क्षिप्रंच. ३ च. छ. ज. ञ. नमेत्वं. ४ युद्धातिथ्यं. वृन्तादिवेत्यनयोरर्धयोःपौर्वापर्यं ङ.—ट. पाठेषुदृश्यते. ५ क.—ट. यथाप्राणं. ६ घ. फलंपक्वं. ७ ग. घ. ङ. झ. ञ. ट. इत्युक्तः क्रोधताम्राक्षस्तस्र. ८ क. च. ज. क्रोधात्. ९ ख. भूषणः. १० ङ.—ट. महामृधे. ११ ङ. झ. वातोद्धुतयोः. १२ ङ. च. ज. झ. ट. महाबलं.

स तानि शरजालानि गृध्रः पत्ररथेश्वरः ॥ जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ६ ॥
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ॥ चकार बहुधा गात्रे व्रणान्पतगसत्तमः ॥ ७ ॥
अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् ॥ मृत्युदण्डनिभान्घोराञ्शत्रुमर्दनकाङ्क्षया ॥ ८ ॥
स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः ॥ बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैः शिलीमुखैः ॥ ९ ॥
स राक्षसरथे पश्यञ्जानकीं बाष्पलोचनाम् ॥ अचिन्तयित्वा तान्बाणान्राक्षसं समभिद्रवत् ॥ १० ॥
ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् ॥ चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ११ ॥
ततोऽन्यद्धनुरादाय रावणः क्रोधमूर्च्छितः ॥ ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ॥ १२ ॥
शरैरावारितस्तस्य संयुगे पतगेश्वरः ॥ कुलायमुपसंप्राप्तः पक्षीव प्रबभौ तदा ॥ १३ ॥
स तानि शरवर्षाणि पक्षाभ्यां च विधूय च ॥ चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ॥ १४ ॥
तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् ॥ पक्षाभ्यां स महावीर्यो व्याधुनोत्पतगेश्वरः ॥ १५ ॥
काञ्चनोरश्छदान्दिव्यान्पिशाचवदनान्खरान् ॥ तांश्चास्य जवसंपन्नाञ्जघान समरे बली ॥ १६ ॥
वरं त्रिवेणुसंपन्नं कामगं पावकार्चिषम् ॥ मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥ १७ ॥
पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैः सह ॥ पातयामास वेगेन ग्राहिभी राक्षसैः सह ॥ १८ ॥
सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः ॥ पुनर्व्यपाहरच्छ्रीमान्पक्षिराजो महाबलः ॥ १९ ॥
स भग्नधन्वा विरथो हताश्वो हतसारथिः ॥ अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥ २० ॥
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् ॥ साधुसाध्विति भूतानि गृध्रराजमपूजयन् ॥ २१ ॥

र्णिभिः अङ्कुशाग्रशरैः ॥ ५ ॥ पत्ररथेश्वरः पक्षीश्वरः । प्रतिजग्राह सेहे । रावणास्त्राणि रावणप्रयुक्तास्त्राणि ॥ ६ ॥ तस्य रावणस्य गात्रे ॥ ७ ॥ मार्गणान् बाणान् ॥ ८ ॥ पूर्ण आकर्णाकृष्टं यथा तथा मुक्तैः अजिह्मगैः ऋजुगामिभिः । निशितैः शाणोल्लीढैः । अतएव तीक्ष्णैः घोरैः भयङ्करैः । शिलीमुखैः शिली शल्यं मुखे येषां तैः बाणैः । गृध्रं बिभेद ॥ ९ ॥ समभिद्रवत् समभ्यद्रवत् ॥ १० ॥ सशरं संहितशरं ॥ ११ ॥ क्रोधमूर्छितः क्रोधेन व्याप्तः ॥ १२ ॥ आवारितः आसमन्ताद्व्याप्तः । कुलायं नीडं । प्राप्तः पक्षीव बभौ ॥ १३ ॥ तानि च पक्षाभ्यां विधूय चरणाभ्यां धनुर्बभञ्ज चेत्यन्वयः ॥ १४ ॥ शरावरं कवचं पक्षाभ्यां पक्षवातेन । व्याधुनोत् प्राच्यावयत् ॥ १५ ॥ काञ्चनोरश्छदान् स्वर्णमयकवचयुक्तान् । "उरश्छदः कङ्कटको जागरः कवचोस्त्रियां" इत्यमरः । बली जटायुः ॥ १६ ॥ त्रिवेणुः युगन्धरः । कामं यथेच्छं गच्छतीति कामगं ॥ १७ ॥ ग्राहिभिः छत्रचामरादिग्राहकैः । "नन्दिग्रहि—"इत्यादिना णिनिः ॥ १८ ॥ व्यपाहरत् खण्डितवान् । पुनरित्यनेन छत्रादिखण्डनं तुण्डेनेति सूच्यते ॥ १९ ॥ भग्नधन्वा "धनुषश्च" इत्यनङ् ॥ २० ॥ अपूजयन् मनसेति शेषः ॥ २१ ॥

नालीकशब्दः । शरविशेषस्तदर्थः ॥ ५ ॥ ति० रावणास्त्राणिरावणक्षिप्तानीतिशरजालविशेषणं । अस्यतेरौणादिकस्त्रन् । रावणास्त्रानीतिपाठस्तुसुगमएव ॥ ६ ॥ ती० बाणाजिह्मगशब्दौ गुणवचनौ । बाणयन्तिरोषयन्तिशत्रुमितिबाणाः ॥ ९ ॥ ति० शरासनमितिपाठे शरप्रक्षेपकारणं । तच्च द्वितीयंधनुश्च बभञ्जेत्यन्वयः ॥ व्यधुनोत् कंपयतिस्म । रावणमितिशेषः ॥ १५ ॥ ति० अङ्केन कटिभागेन ॥ २० ॥

[ पा० ] १ ग. चरणाभ्यामपोथयत्. २ च. छ. ज. न्विहगसत्तमः. ३ घ. क्रुद्धोदशग्रीवो. ४ ङ.—ट. शत्रोर्निधन. ५ ट. रावणरथे. ६ ङ.—ट. बाणांस्तान्. ७ ङ.—ट. पतगोत्तमः. ८ ग. ङ.—ट. मभिसंप्राप्तः. ९ ङ. झ. ट. पक्षिवच्चबभौ. ख. ग. च. छ. ज. ञ. पक्षीवसबभौ. १० ङ. झ. ट. शरजालानि. ११ ग. घ. च. ज.—ट. तुविधूयह. १२ ख. च. ज. शरासनं. १३ क.—ट. पक्षाभ्यांच. १४ ङ. झ. ञ. ट. महातेजाः. १५ झ. व्यधुनोत्. १६ ङ. झ. ट. अथत्रिवेणु. १७ ङ. झ. मणिसोपानचित्राङ्गं. १८ ख. च. छ. ज. ञ. बभञ्जाथ. १९ घ. स्तस्य. २० ङ. झ. ट. तुण्डेनच. २१ ग. ञ. छ. झ. व्यपहनत्. २२ घ. भग्नधन्वास.

परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् ॥ उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥ २२ ॥
तं प्रहृष्टं निधायाङ्के [1]गच्छन्तं जनकात्मजाम् ॥ गृध्रराजः समुत्पत्य [2]समभिद्रुत्य रावणम् ॥
[3]समावार्य महातेजा जटायुरिदमब्रवीत् ॥ २३ ॥
वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण ॥ अल्पबुद्धे हरस्येनां वधाय खलु रक्षसाम् ॥ २४ ॥
समित्रबन्धुः सामात्यः सबलः सपरिच्छदः ॥ विषपानं पिबस्येतत्पिपासित इवोदकम् ॥ २५ ॥
अनुबन्धमजानन्तः कर्मणामविचक्षणाः ॥ शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ २६ ॥
बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ॥ वधाय बडिशं गृह्य सामिषं जलजो यथा ॥ २७ ॥
न हि जातु दुराधर्षौ काकुत्स्थौ तव रावण ॥ धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ ॥ २८ ॥
यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ॥ तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ २९ ॥
युध्यस्व यदि शूरोसि मुहूर्तं तिष्ठ रावण ॥ शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ॥ ३० ॥
परेतकाले पुरुषो यत्कर्म प्रतिपद्यते ॥ विनाशायात्मनोऽधर्म्यं प्रतिपन्नोसि कर्म तत् ॥ ३१ ॥
पापानुबन्धो वै यस्य कर्मणः [4]कर्म को नु तत् ॥ कुर्वीत लोकाधिपतिः स्वयंभूर्[5]भगवानपि ॥ ३२ ॥
एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ॥ निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ ३३ ॥
तं गृहीत्वा नखैस्तीक्ष्णैर्[6]विररराद समन्ततः ॥ अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम् ॥ ३४ ॥

---

गृह्य गृहीत्वा ॥ २२ ॥ तमित्यादिसार्धश्लोक एकान्वयः । समुत्पत्य ऊर्ध्वं गत्वा । समभिद्रुत्य अभिमुखं गत्वा । समावार्य सम्यगवरुध्य ॥ २३ ॥ वज्रसंस्पर्शाः वज्रसमस्पर्शाः बाणाः यस्य ॥ २४ ॥ पीयत इति पानं पानकरसादि । विषयुक्तं पानमिति मध्यमपदलोपिसमासः । यद्वा । विषस्य पानं विषपानं । एतत्सीताहरणरूपं विषपानं पिबसि करोषि । ओदनपाकं पचतीतिवत् प्रकृतेः प्रत्ययोपस्थानमात्रं प्रयोजनं ॥ २५ ॥ अनुबध्यत इत्यनुबन्धः फलं । अविचक्षणाः असमर्थाः । कर्मणां आत्मना क्रियमाणानां । फलमजानन्तः शीघ्रं विनश्यन्ति । तत्रोदाहरणं भवानित्याह—यथेति ॥ २६ ॥ कालपाशेन बद्धस्त्वं क्व देशे गतः सन् तस्य तस्मात्कालपाशान्मोक्ष्यसे सहानुवर्तमानाद्बन्धात्कथं ते मुक्तिर्भविष्यतीत्यर्थः । सामिषं मांससहितं । बडिशं मत्स्यबन्धनं । "बडिशं मत्स्यबन्धनं"इत्यमरः । आमिषलोभेन गृह्य गृहीत्वा । जलजो मत्स्यो यथा देशान्तरं गतोपि न जीवति बडिशामोक्षणात् तद्वत् ॥ २७ ॥ आश्रमकर्मकं त्वत्कर्तृकं धर्षणं परिभवं । आश्रमशब्देन आश्रमस्था सीतोच्यते । मञ्चाः क्रोशन्तीतिवत् ॥ २८ ॥ लोकगर्हितं कर्म भीरुणा त्वया यथा कृतं तथा तस्कराचरितो मार्गः । तस्करकृत्यतुल्यं त्वत्कृत्यमित्यर्थः । तस्मादेष मार्गः वीरनिषेवितो न भवतीत्यर्थः ॥ २९ ॥ युध्यस्वेति पूर्वसर्गान्ते व्याख्यातोयं ॥ ३० ॥ परेतकाले मृत्युकालइत्यर्थः । यत्कर्म यादृशं कर्म । पुरुषः आत्मविनाशाय प्रतिपद्यते प्राप्नोति । अधर्म्यं अधर्मादनपेतं । तत्कर्म सीताहरणरूपं प्रतिपन्नोसि । एतादृशकर्मकरणादवश्यमविलम्बितं मृत्युं प्राप्नोषीत्यर्थः ॥ ३१ ॥ यस्य कर्मणः पापानुबन्धः पापफलसंबन्धो भवति तत्कर्म लोकाधिपतित्वादिविशिष्टोपि को नु कुर्वीत ॥ ३२ ॥ पृष्ठ इत्यनेन जटायुषमनादृत्य रावणस्य पलायमानत्वं गम्यते ॥ ३३ ॥ तं गृहीत्वा बलान्निवर्त्याधिरूढः सन् जटायुः गजारोहो यन्ता दुष्टवारणं पलायितं अङ्कुशैर्निरुध्य यथाविदारयति तथा नखैः

---

ति० सबलः सचतुरङ्गबलः । परिच्छदः दासीदासादि । निदर्शनालङ्कारोत्र । तत्सहितो नशिष्यसीतितात्पर्यम् ॥ २५ ॥ ति० दुष्टवारणमधिरूढो गजारोहो हास्तिपको गजविषयेयथास्यात् यादृशव्यापारोभवेत् गजक्षतकरणव्यापारोभवेत् तथा ॥ ३४ ॥

[ पा० ] १ ङ. झ. ट. रावणंजनकात्मजां. एतदनन्तरं. गच्छन्तंखड्गशेषंच प्रनष्टहतसाधनं, इत्यर्धमधिकंदृश्यते. २ ङ.—ट. रावणंसमभिद्रवत्. ३ क. ङ.—ज. ञ. तमावार्य. ४ ङ.—ट. कोनुतत्पुमान्. ५ ग. भगवानिव. ६ ख. ग. च.—ट. विंददार.

विर्[1]रराद नखैरस्य तुण्डं पृष्ठे समर्पयन् ॥ केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३५ ॥
स तथा[2] गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः ॥ अमर्षस्फुरितोष्ठः सन्प्राकम्पत स[3] रावणः ॥ ३६ ॥
स[4] परिष्वज्य वैदेहीं वामेनाङ्केन रावणः ॥ तलेनाभिजघा[5]नाशु जटायुं क्रोधमूर्च्छितः ॥ ३७ ॥
जटायु[6]स्तमभिक्रम्य तुण्डेनास्य खगाधिपः ॥ वामबाहून्दश तदा व्यपाहरदरिंदमः ॥ ३८ ॥
संच्छिन्नबाहोः स[7]द्यैव बाहवः सहसाऽभवन् ॥ विषज्वालावलीयुक्ता वल्मीकादिव पन्नगाः ॥३९॥
ततः क्रोधाद्दशग्रीवः सीतामुत्सृज्य रावणः ॥ मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ ४० ॥
ततो मुहूर्तं संग्रामो बभूवातुलवीर्य[8]योः ॥ राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥ ४१ ॥
तस्य व्यायच्छमानस्य रामस्यार्थे[9] स रावणः ॥ पक्षौ पा[10]र्श्वौ च पादौ च खड्गमु[11]द्धृत्य सोच्छिनत् ॥४२॥
स च्छिन्नपक्षः सहसा रक्षसा रौद्र[12]कर्मणा ॥ निपपात ह[13]तो गृध्रो धरण्यामल्पजीवितः ॥ ४३ ॥
तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥ अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ४४ ॥

तं नीलजीमूतनिकाशकल्पं सुपाण्डुरोरस्कमुदारवीर्यम् ॥
ददर्श लङ्काधिपतिः पृथिव्यां जटायुषं शान्तमिवाग्निदावम् ॥ ४५ ॥
ततस्तु तं पत्ररथं महीतले निपातितं रावणवेगमर्दितम् ॥
पु[14]नः परिष्वज्य शशिप्रभानना रुरोद सीताजनकात्मजा तदा ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

विरराद । स्यादिति संभावनायां ॥ ३४ ॥ नखपक्षमुखायुधो गृध्रः अस्य रावणस्य पृष्ठे नखैः सह तुण्डं समर्पयन् व्यापारयन्सन् । विरराद व्यदारयदित्यर्थः । केशांश्चोत्पाटयामास ॥३५॥ अमर्षेण क्रोधेन । स्फुरितोष्ठः चलितोष्ठः । प्राकम्पत प्रहारार्थं प्रदक्षिणं प्राचलदित्यर्थः॥३६॥ अङ्केन ऊरुभागेन । जटायुं जटायुरित्युकारान्तोप्यस्ति ॥ ३७ ॥ अभिक्रम्य अभितोगत्वा । अवसरंप्रतीक्ष्येत्यर्थः । अस्य वामबाहून् यैःसीतापरिष्वक्ता तानित्यर्थः । व्यपाहरत् अच्छिनत् ॥ ३८ ॥ संछिन्नबाहोः रावणादिति शेषः । सद्यैवेत्यार्षे सलोपे वृद्धिः । अभवन् प्रादुरभवन् । विषज्वालेत्युपमानविशेषणाद्बाहूनांसायुधत्वं गम्यते ॥ ३९ ॥ अपोथयत् अताडयत् ॥ ४० ॥ संग्रामो युद्धं ॥ ४१ ॥ व्यायच्छमानस्य व्यायामं कुर्वतः । "आङोयमहनः" इत्यात्मनेपदं "शरीरायासजनकं कर्मव्यायामउच्यते" इति वाग्भटः । युद्धं कुर्वतः इत्यर्थः । पार्श्वौ पक्षमूले ॥ ४२ ॥ अल्पजीवितः द्वित्रिक्षणावस्थानोचितप्राण इत्यर्थः ॥ ४३ ॥ क्षतजं शोणितं ॥ ४४ ॥ नीलजीमूतनिकाशकल्पं नीलमेघप्रकाशतुल्यं । अग्निदावं दावाग्निं ॥ ४५ ॥ परिष्वज्य बाहुभ्यामिति शेषः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

---

स० अग्निदावं अग्निसुदावं दावाग्निमिव ॥ ३५ ॥ ती० सर्गफलश्रुतिःस्कान्दे—श्रुत्वाखगेश्वरस्यापि रक्षसामीश्वरस्यच । आयोधनमृणान्मुक्तो भृत्यस्स्वामिकृताद्भवेत् ॥ इत्येकपञ्चाशस्सर्गः ॥ ५१ ॥

[ पा० ] १ ख. च. छ. ज. ञ. विददारनखैस्तुण्डंतस्य. घ. ङ. झ. ट. विददार. २ तदा. ३ ख. ट. च. राक्षसः. ४ ख. परिष्वज्यच. क. घ. ङ. च. ज.—ट. संपरिष्वज्य. ५ क.—ट. जघानार्तो. ६ क. ख. ङ. झ. ञ. ट. मतिक्रम्य. ७ क. घ. ङ. छ. झ. ञ. ट. सद्योवै. ८ क. ख. ङ.—ट. वीर्यवान्. ९ ख. च. छ. ज. ञ. स्वार्थेऽथ. १० ङ. छ. झ. ट. पादौच. पार्श्वौच. ११ घ. मुद्यम्य. १२ च. छ. ज. ञ. घोरकर्मणा. १३ ङ. झ. ट. महागृध्रो. छ. ततोगृध्रो. १४ ङ. झ. ट. पुनश्चसंगृह्य.

# द्विपञ्चाशः सर्गः ॥ ५२ ॥

जटायुंप्रतिरामलक्ष्मणयोः स्ववृत्तान्तनिवेदनावधिप्राणधारणरूपवरदानपूर्वकं तदङ्गपरामर्शेन परिदेवयमानांसीतामेत्य रावणेनपुनःकेशग्रहणेन तदपहरणपूर्वकं गगनमार्गेणगमनम् ॥ १ ॥ तदानीं हरिणादिप्राणिगणैरावणगर्हणपूर्वकं दुःखात्परिदेवनम् ॥ २ ॥ रावणस्वगतेर्वेगात्सीताङ्गेभ्योहारनूपुराद्याभरणानांधरणीतलेपरिभ्रंशनम् ॥ ३ ॥

तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः ॥ ददर्श भूमौ पतितं समीपे राघवाश्रमात् ॥ १ ॥
सा तु ताराधिपमुखी रावणेन समीक्ष्य तम् ॥ गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ २ ॥
आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा ॥ विललाप सुदुःखार्ता सीता शशिनिभानना ॥ ३ ॥
निमित्तं लक्षणज्ञानं शकुनिस्वरदर्शनम् ॥ अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ४ ॥
नूनं राम न जानासि महद्व्यसनमात्मनः ॥ धावन्ति नूनं काकुत्स्थं मदर्थं मृगपक्षिणः ॥ ५ ॥
अयं हि पापचारेण मां त्रातुमभिसंगतः ॥ शेते विनिहतो भूमौ ममाभाग्याद्विहंगमः ॥ ६ ॥
[रावणेन हृतां मां हि कथयित्वा विहंगम ॥ राघवाभ्यां यथातत्वमथो हास्यसि जीवितं ॥ ७ ॥
आदेहपातं पक्षीश युध्यता रावणेन यत् ॥ त्वया विदर्शितस्नेहौ श्वशुरे मम राघवौ ॥ ८ ॥
जटायो हरणं यावन्मम रामाय वक्ष्यसि ॥ तावच्छरीरे ते प्राणाः संचरिष्यन्ति धीरपि ॥ ९ ॥
इति पक्षिं समालिङ्ग्य स्मृत्वा श्वशुरमेव च ॥ उच्चैस्स्वरेण चुक्रोश हा राघव न पश्यसि ] ॥ १० ॥
त्राहि मामद्य काकुत्स्थ लक्ष्मणेति वराङ्गना ॥ सुसंत्रस्ता समाक्रन्दच्छृण्वतां तु यथाऽन्तिके ॥ ११ ॥
तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् ॥ अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥ १२ ॥

जटायुर्युद्धकाले विसृष्टायाः सीतायाः पुनरपि रावणेन हरणप्रकारमाह । राघवाश्रमादित्यवधित्वात्पञ्चमी ॥ १ ॥ रावणेन विनिहतं समीक्ष्येत्यन्वयः ॥ २ ॥ विशेषान्तरं वक्तुं पुनरनुवदति—आलिङ्ग्येति । कराभ्यांसंस्पृश्येत्यर्थः ॥ ३ ॥ लक्षणानि अक्षिस्पन्दनादीनि तेषां ज्ञानं । शकुनीनां पिङ्गल्यादीनां स्वरस्य दर्शनं ज्ञानं । नराणां सुखदुःखेषु निमित्तं ज्ञापकं प्रतिदृश्यते ॥ ४ ॥ ततःकिमित्यत्राह—नूनमिति । हे राम आत्मनो महद्व्यसनं न जानासि किमिति काकुः । जानास्येव । यस्मान्मदर्थं मदपहरणसूचनप्रयोजनमुद्दिश्य । मृगपक्षिणः काकुत्स्थं त्वामभिधावन्ति । नूनं संप्रतिमद्व्यसनसूचका मृगपक्षिणः काकुत्स्थंत्वामभिधावन्ति । तेन निमित्तेन मद्व्यसनं जानास्येवेत्यर्थः ॥ ५ ॥ व्यसनमेवाह—अयं हीति । अयं विहङ्गमः । पापचारेण रावणेन । विनिहतः शेते ॥ ६—१० ॥ शृण्वतामन्तिकेयथा शृण्वतां समीप इव । दूरस्थितं रामं लक्ष्मणं च रामेति लक्ष्मणेति च संबोध्य आक्रन्दत् ॥ ११ ॥ क्लिष्टमाल्याभरणां मृदितमाल्याभरणां । क्षणंविश्रान्तः अभ्यधावत

ती० अन्येतु—निमित्तंलक्षणंज्ञानमितिपाठमङ्गीकृत्यएवंव्याचक्षते । निमित्तं गोमाय्वादिकं । लक्षणं अङ्गस्पन्दनादिकं । ज्ञानं यदृच्छयातथाप्रतिभासः ॥ ति० नराणांसुखदुःखेषुनिमित्तं सूचनं वामदक्षिणाङ्गस्पन्दनादिरूपंलक्षणं चिह्नं । तथाजलादर्शादावात्मनोशिरसोदर्शनंचलक्षणं । स्वप्नं "स्वप्नेयःपुरुषंकृष्णंकृष्णदन्तंप्रपश्यति । सएनंहन्ति" इत्यादिस्वप्नाध्यायोपदिष्टं । तथाशकुनीनां वामदक्षिणगमनविशेषदर्शनं । तथातेषांस्वराणांदर्शनमनुभवः । एतत्सर्वंयथायोगंपरिदृश्यतेसर्वेण । लक्षणज्ञानमिति पाठे अङ्गस्फुरणादिज्ञानमित्यर्थः । शकुनिग्रहणंमृगाद्युपलक्षणं ॥ ४ ॥ ति० मदर्थंमृगपक्षिणोशुभसूचनमार्गेणधावन्ति । त्वंतु तैस्सूचितमपिस्वस्यमहद्व्यसनंनजानासिनूनं । जानीथाश्चेन्नोपेक्षेथाइतितात्पर्यमितिलोकाभिनयेनरामोपालंभः ॥ ५ ॥ ति० यथान्तिकेनिकटस्थितानांशृण्वतांश्रवणंभवेत्तथासमाक्रन्दत् नतूच्चैः । शीघ्रंरामागमनंमाभूदितितात्पर्येण ॥ ११ ॥

[ पा० ] १ अत्रत्यौप्रथमतृतीयौश्लोकौ झ. ञ. ट. पुस्तकेषुनदृश्येते. २ क. ख. च. छ. ज. ञ. भूमौ. ३ क. ख. च. छ. ज. ञ. गृध्रं. ४ झ. लक्षणंस्वप्नं. ५ क. च.—ञ. संप्रदृश्यते. झ. ट. परिदृश्यते. ६ झ. ञ. ट. काकुत्स्थ. ७ क. ग. ञ. ट. पापाचारेण. ख. ङ. झ. कृपयाराममांत्रातुं. ८ ख. ङ. झ. ट. मिहसंगतः. ९ इदंश्लोकचतुष्टयं ख. पाठेदृश्यते.

तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमान् ॥ मुञ्चमुञ्चेति बहुशः [1]प्रवदन्राक्षसाधिपः ॥ १३ ॥
क्रोशन्तीं रामरामेति रामेण रहितां वने ॥ जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ॥ १४ ॥
प्रधर्षितायां सी[2]तायां बभूव सचराचरम् ॥ जगत्सर्वममर्यादं तमसाऽन्धेन संवृतम् ॥ १५ ॥
न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः ॥ १६ ॥
दृष्ट्वा [3]सीतां परामृष्टां दी[4]नां दिव्येन चक्षुषा ॥ कृतं कार्यमिति श्रीमान्व्याजहार पितामहः ॥ १७ ॥
प्रहृष्टा व्यथिताश्चासन्सर्वे ते परमर्षयः ॥ दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः ॥
रावणस्य विनाशं च प्राप्तं [5]बुद्ध्वा यदृच्छया ॥ १८ ॥
स तु तां रामरामेति रुदन्तीं लक्ष्मणेति च ॥ [6]जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥ १९ ॥
तप्ताभरण[7]वर्णाङ्गी पीतकौशेयवासिनी ॥ रराज राज[8]पुत्री तु विद्युत्सौदामिनी यथा ॥ २० ॥
उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः ॥ अधिकं [9]प्रतिबभ्राज गिरिर्दीप्त इवाग्निना ॥ २१ ॥
तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च ॥ पद्मपत्राणि वैदेह्या [10]अभ्यकीर्यन्त रावणम् ॥ २२ ॥
तस्याः कौशेयमुद्धूतमाकाशे कनकप्रभम् ॥ बभौ चादित्यरागेण ताम्रमभ्रमिवातपे ॥ २३ ॥
तस्यास्[11]तत्सुनसं वक्त्रमाकाशे रावणाङ्कगम् ॥ न रराज विना रामं विनालमिव पङ्कजम् ॥ २४ ॥
बभूव जलदं [12]नीलं भित्त्वा चन्द्र इवोदितः ॥ सुललाटं सुकेशान्तं पद्मगर्भाभमव्रणम् ॥ २५ ॥

अभ्यधावत् ॥ १२ ॥ तामित्यादि द्वावेकान्वयौ । लतामिव भूतले वेष्टन्तीं वेष्टमानां ॥ १३—१४ ॥ अमर्यादं भिन्नसत्त्वप्रकृतिकं । अन्धेन गाढेन । तमसा अज्ञानान्धकारेण । तदा जगत्सर्वं संवृतं विमूढं चासीदित्यर्थः ॥ १५ ॥ न वातीत्यर्धमेकं वाक्यं ॥ १६ ॥ परामृष्टां अपहृतां । दिव्येन चक्षुषा ज्ञानेन । दृष्ट्वा ज्ञात्वा । कार्यं बालकाण्डे विष्णुना प्रतिज्ञातं । कृतमिति व्याजहार । प्रीत्यतिशयेन पुरुषान्तरासन्निधानेप्युदाहरत् ॥ १७ ॥ प्रहृष्टाइति रावणवधस्य सिद्धप्रायत्वेन हर्षः । तादात्विकसीतादशावलोकनेन व्यथा । सीतां परामृष्टां दृष्ट्वा । यदृच्छया दैवगत्या । रावणस्य प्राप्तं सन्निहितं विनाशं च बुद्ध्वा व्यथिताः प्रहृष्टाश्चासन्नित्यन्वयः ॥ १८ ॥ सत्विति तुशब्देन ऋष्यादिभ्यो व्यावृत्तिः ॥ १९ ॥ तप्ताभरणं तप्तं काञ्चनाभरणं तत्तुल्यवर्णाङ्गी । विद्युत् विशेषेण द्योतमाना । सौदामिनी तटित् । अनेन तटिद्यथा मेघे क्षण तिष्ठति तथा रावणे सीतेति सूचितम् ॥ २० ॥ उद्धूतेति । अत्रापि सीताग्रहणेन रावणस्य संतापो भविष्यतीत्यलंकारेण वस्तुध्वनिः ॥ २१ ॥ रावणमभ्यकीर्यन्त रावणाङ्के पतितानीत्यर्थः । अत्र रावणैश्वर्यं क्षणाद्विशीर्णं भविष्यतीति वस्तुना वस्तुध्वनिः ॥ २२ ॥ आतपे मध्याह्ने । आदित्यरागेण ताम्रं अरुणमभ्रमिव बभौ । अनेन रावणविनाशपिशुनोत्पातः सूचितः ॥ २३ ॥ "उपसर्गाच्च"इति नासिकाशब्दान्ताद्बहुव्रीहेरच्समासान्तः । नासिकाशब्दस्य नसादेशश्च । अत्र सीताया मुखविवर्णत्वोक्त्या खेदातिशय उच्यते ॥ २४ ॥ अथ त्वरितगमनमाह—बभूवेति । अत्र मुखमिति शेषः । जलदं भित्त्वा उदितः प्रकाशमानश्चन्द्र इव । मेघरन्ध्रे भासमान इत्यर्थः । अत्र प्रतिचन्द्रदर्शनरूपोत्पातः सूच्यते । पद्मगर्भाभं विकसितपद्माभमित्यर्थः ।

**ति०** वेष्टन्तीं लतामिववृक्षानालिङ्गन्तीं मामुञ्चमुञ्चेति बहुशोवृक्षान्वदन्तीमितिशेषः । मोचयमोचयेत्यर्थोवा । प्राप्त इतस्ततोधावन्तीं समीपगतआसीत् ॥ १३ ॥ **ति०** जीवितान्ताय अनेन परस्त्रीकेशस्पर्शो यस्यकस्यापि जीवितापहारीतिबोधितं ॥ १४ ॥ **ति०** सुदाम्नोबहुरत्नादिमत्वात्तद्भवाविद्युदतिप्रकाशमानाभवति तद्वत्सीतेत्यर्थः ॥ २० ॥ **ती०** तरुप्रवालरक्तेतिपाठे प्रवालसदृशरक्ता ॥ २१ ॥

**[ पा० ]** १ ङ. झ. ट. प्रापताराक्षसाधिपः. २ क. ख. ग. ङ.—ट. वैदेह्यां. ३ क. ख. दीनां. घ. हितां. ४ क. ख. घ. सीतां. ङ. छ. झ. ञ. ट. देवोदिव्येन. ५ ग. दृष्ट्वा. ६ क. ख. ग. च. छ. ज. ञ. जगामाकाशमादाय. ७ क.—घ. च. ज. ञ. सर्वाङ्गी. ८ क. पुत्रीसा. ९ क. ख. ग. ङ.—ट. परिबभ्राज. १० ग. च. छ. ञ. अवाकीर्यन्त. ११ क. ख. ग. ङ.—ट. स्तद्विमलं. १२ च. छ. ज. भित्त्वानीलं.

शुक्लैः सुविमलैर्दन्तैः प्रभावद्भिरलंकृतम् ॥ तस्या[1]स्तद्विमलं वक्त्रमाकाशे रावणाङ्कगम् ॥ २६ ॥
रुदितं व्यपमृष्टास्रं चन्द्रवत्प्रियदर्शनम् ॥ सु[2]नासं चा[3]रु ताम्रोष्ठमाकाशे हाटकप्रभम् ॥ २७ ॥
[4]राक्षसेन समाधूतं तस्यास्तद्वदनं शुभम् ॥ शुशुभे न विना रामं दिवा चन्द्र इवोदितः ॥ २८ ॥
सा हेमवर्णा नीला[5]ङ्गं मैथिली राक्षसाधिपम् ॥ शुशुभे काञ्चनी काञ्ची नील[6]ं मणिमिवाश्रिता ॥ २९ ॥
सा प[7]द्मगौरी हेमाभा रावणं जनकात्मजा ॥ विद्युद्घनमिवाविश्य शुशुभे तप्तभूषणा ॥ ३० ॥
[8]तरुप्रवालरक्ता सा नीलाङ्गं राक्षसेश्वरम् ॥ प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ ३१ ॥
त[9]स्या भूषणघोषेण वैदेह्या राक्षसाधिपः ॥ [10]बभौ सचपलो नीलः सघोष इव तोयदः ॥ ३२ ॥
[11]उत्तमाङ्गाच्च्युता तस्याः पुष्पवृष्टिः समन्ततः ॥ सीताया ह्रियमाणायाः पपात [12]धरणीतले ॥ ३३ ॥
सा तु रावणवेगेन पुष्पवृष्टिः समन्ततः ॥ समाधूता दशग्रीवं पुनरे[13]वाभ्यवर्तत ॥ ३४ ॥
अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम् ॥ नक्षत्रमाला विमला [14]मेरुं नगमिवोन्नतम् ॥ ३५ ॥
चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् ॥ विद्युन्मण्डलसङ्काशं पपात [15]मधुरस्वनम् ॥ ३६ ॥

---

अव्रणं निर्दोषं ॥ २५ ॥—शुक्लैरिति । न शुशुभ इति वक्ष्यमाणमनुषज्यते । रावणाङ्कगं सत् न शुशुभे । अननुरूपत्वादिति भावः ॥ २६ ॥ रुदितं रोदनवत् । अतएव व्यपमृष्टास्रं अनिवृत्ताश्रुकं । हाटकप्रभं हिरण्यप्रभं "हिरण्यं हेम हाटकं"इत्यमरः । पूर्वं मनोज्ञं मुखं इदानीं रुदितादिमत्त्वान्नशुशुभ इति भावः ॥२७॥ राक्षसेन निमित्तेन समाधूतं भयकम्पितं ॥ २८ ॥ राक्षसाधिपमाश्रिता सा सीता नीलं मणिमाश्रिता काञ्चनी काञ्चनमयी । काञ्ची मेखलेव शुशुभे । रजतमेव नीलरत्नस्य परभागकरमिति प्रसिद्धिः । तेन काञ्चनस्य नीलमणिशोभातिरस्कारकत्वात् शुशुभ इति व्यतिरेकोक्त्या न शुशुभ इत्यर्थः । नेत्यनुषङ्गो वा ॥ २९ ॥ पद्मगौरी पद्मवत्पीतवर्णा । अनेन सुकुमारवर्णतोक्ता । हेमाभेत्यनेन स्थिरवर्णतोक्ता । तप्तभूषणा तपनीयभूषणा । विद्युदिव सीता तस्मिन् क्षणं स्थितापि सौहृदं नाकाङ्क्षतेत्यर्थः ॥ ३० ॥ तरुविशेषप्रवालवत् रक्ता पीतवर्णा । "तेन रक्तं रागात्" इत्यत्र रागशब्दोहि वर्णमात्रे प्रयुक्तः । कक्ष्या इभबन्धनी । यथा कक्ष्या गजगता गजं यन्तुर्निग्राह्यं करोति तथेयं रावणं प्राप्य रामनिग्राह्यमकरोदिति भावः ॥ ३१ ॥ सचपलः सविद्युत् । यथा सगर्जितो मेघ आशु निस्सारो भविष्यति तथेति भावः ॥ ३२ ॥ उत्तमाङ्गात् शिरसः ॥३३॥ सा पुष्पवृष्टिः रावणवेगेन रावणवेगजनितवातेन । समाधूता पुनर्दशग्रीवमेव अभ्यवर्तत अभितः प्रावर्तिष्ट । अनेन रावणस्य त्वरितगमनमुक्तम् ॥ ३४ ॥ उक्तां पुष्पवृष्टिं वर्णयति—अभ्यवर्ततेति । धारा पङ्क्तिः ॥ ३५ ॥ चरणादिति वामचरणादित्यर्थः । भ्रष्टं शिथिलं पपात ॥ ३६ ॥

---

ति० अभूत्सचपलोनीलइतिपाठे चपला विद्युत् । तयासहितोघोषवान्मेघइवाभूदित्यर्थः ॥ ३२ ॥ ति० उत्तमाङ्गेति । मातस्त्वया संपादितोस्मन्मनोरथइति हर्षाद्देवैः क्रियमाणापुष्पवृष्टिस्तदुत्तमाङ्गाच्च्युता तत्कालेभूमौपपातेतिकतकः । वस्तुतोरावणसंनिधौ देवानांतथावीर्यासंभवात् उत्तमाङ्गे धृतपुष्पाणां तद्वेगेन ततश्च्युत्या उत्तमाङ्गाच्च्युतेत्युक्तं । अतएवाग्रे भूमौपुष्पयुतंमार्गंदृष्ट्वा रामोवक्ष्यति— "अभिजानामिपुष्पाणितानीमानीहलक्ष्मण । अपिनद्धानिवैदेह्यामयादत्तानिकानने" इति ॥ ३३ ॥

**[ पा० ]** १ क. ख. ग. च. छ. ज. ञ. स्तत्सुनसं. ङ. झ. ट. स्सुनयनं. २ क. ग. सुनेत्रं. ३ ख. च. छ. ज. ञ. चारुदन्तोष्ठं. ४ क.—ट. राक्षसेन्द्रसमा. ५ ख. नीलाभं. ६ ङ. च. छ. झ. ञ. ट. गजमिवा. ७ ङ. झ. ट. पद्मपीता. ग. पद्मगौरा. ८ अयंश्लोकः क.—ट. पुस्तकेषु. चरणान्नूपुरमितिश्लोकात्परं तांमहोल्कामितिश्लोकात्पूर्वंदृश्यते. ९ क. ख. ग. ङ.—ट. राक्षसेश्वरः. १० क. ख. ङ.—ट. बभूवविमलो. ११ ग. ङ.—झ. ट. उत्तमाङ्गच्युता. १२ ख. पृथिवीतले. १३ ख. रेवाभ्यधावत. घ. रेवाभ्यवर्षत. १४ च. छ. ज. ञ. मेरुशृङ्गमिवोत्तमं. ख. ग. ङ. झ. ट. मेरुंनगमिवोत्तमं. १५ ङ. झ. ट. धरणीतले. ख. ञ. मधुरस्वरं.

तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ॥ जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ ३७ ॥
तस्यास्तान्यग्निवर्णानि भूषणानि महीतले ॥ सघोषा[1]ण्यवकीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३८ ॥
तस्या[2]स्तनान्तराद्भ्रष्टो हारस्ताराधिपद्युतिः ॥ वैदेह्या निपतन्भाति गङ्गेव [3]गगनाच्च्युता ॥ ३९ ॥
[4]उत्पन्नवाताभिहता नानाद्विजगणायुताः ॥ मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः ॥ ४० ॥
नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः ॥ सखीमिव [5]गतोच्छ्वासामन्वशोचन्त मैथिलीम् ॥ ४१ ॥
समन्तादभिसंपत्य सिंहव्याघ्रमृगद्वि[6]जाः ॥ अन्वधावं[7]स्तदा रोषात्[8]सीतां छायानुगामिनः ॥ ४२ ॥
जलप्रपातास्रमुखाः शृङ्गैरुच्छ्रित[9]बाहवः ॥ सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ४३ ॥
ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ॥ [10]प्रतिध्वस्तप्रभः श्रीमानासीत्पाण्डरमण्डलः ॥ ४४ ॥
नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ॥ [11]यत्र रामस्य वैदेहीं [12]भार्यां हरति रावणः ॥
इति [13]सर्वाणि भूतानि गणशः पर्यदेवयन् ॥ ४५ ॥
[14]वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ॥ उद्वीक्ष्योद्वीक्ष्य नयनै[15]रास्रपाताविलेक्षणाः ॥ ४६ ॥
सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः ॥ विक्रोशन्तीं दृढं सीतां दृष्ट्वा [16]दुःखं तथा गताम् ॥ ४७ ॥
तां तु लक्ष्मण रामेति क्रोशन्तीं [17]मधुरस्वरम् ॥ अवेक्षमाणां बहुशो वैदेहीं [18]धरणीतलम् ॥ ४८ ॥
[19]स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ॥ जहारात्मविनाशाय [20]दशग्रीवो मनस्विनीम् ॥ ४९ ॥

उत्पातसूचकातारा महोल्का ॥ ३७ ॥ भूषणानि उपात्तनूपुरादिभिन्नानि ॥ ३८ ॥ भाति भातिस्म ॥ ३९ ॥ उत्पन्नेति रावणवेगोत्पन्नेत्यर्थः । वातकम्पिताग्रत्वात् । पक्षिगणरववत्त्वाच्च विधूताग्राः आश्वासनाय चलितशिरसः सन्तः । मा भैरिति व्याजह्रुरिव ॥ ४० ॥ गतोच्छ्वासां गतप्राणां मूर्च्छितामिति यावत् । तादृशीं सखीमिव मैथिलीमुद्दिश्य अशोचन्त अशोचन् । ध्वस्तकमलाः कान्तिहीना इत्यर्थः । त्रस्ताः भीताः मीनाः मत्स्याः जलेचराः नक्रादयश्च यासु ताः । त्रस्तेत्यादिना आकुलनेत्रत्वादिकमुच्यते ॥ ४१ ॥ तदा व्याघ्रादयः समन्तान्नानादेशात् अभिसम्पत्य आगत्य । रावणे रोषाच्छायानुसारिणः सन्तोऽन्वधावन् ॥४२॥ जलप्रपातरूपाण्यस्राणि मुखे येषां ते उच्छ्रितबाहवः उन्नतबाहवः । विक्रोशन्तीव व्याक्रोशन्निव ॥ ४३ ॥ श्रीमान् प्राप्तविषयशोक एव श्रीः ॥ ४४ ॥ नास्तीति सार्धश्लोक एकान्वयः । अनृशंसता दया । यत्र यस्मात् । गणशः संघशः । पर्यदेवयन् व्यलपन् ॥४५॥ वित्रस्तका इति स्वार्थे कः । मृगपोतकाः मृगशाबाः । आविलं कलुषं ॥ ४६ ॥ सुप्रवेपितेत्यादिश्लोकद्वयमेकान्वयं । तथा वाचामगोचरं दुःखं । धरणीतलं बहुशोऽवेक्षमाणां रामलक्ष्मणप्रत्याशयेति भावः ॥ ४७—४८ ॥ विप्रमृष्टं विलुलितं विशेषकं तिलकं यस्यास्तां । "तमालपत्रतिलकचित्रकाणिविशेषकं" इत्यमरः । मनस्विनीं दृढमनस्कां पतिव्रतामित्यर्थः

ति० तांसीतामित्यन्वयः । अत्रप्रकरणेवारंवारंवैश्रवणानुजत्वोक्त्याईदृशक्रियायाअत्यनौचित्यप्रदर्शनेनशीघ्रफलदत्वंसूचयति ॥ ३७ ॥ इतिद्विपञ्चाशस्सर्गः ॥ ५२ ॥

[ पा० ] १ ख. ङ. झ. ण्यवशीर्यन्त. २ ख. ग. ङ. ट. स्तनान्तरभ्रष्टो. ३ ङ. झ. ट. गगनच्युता. ४ ख. ग. ङ.—ट. उत्पातवाताभि. ५ क. ख. ग. ङ. झ. ट. गतोत्साहांशोचन्तीवस्म. च. छ. ज. गतोच्छ्वासांशोचन्तीहस्म. ६ ख. द्विपाः. ७ च. छ. ज. ञ. स्ततोरोषात्. ८ ख. सीतांचाथानु. ङ. छ. झ. ञ. ट. सीताच्छायानु. ९ घ. ङ. झ. ट. बाहुभिः. १० क. ख. ग. ङ.—ट. प्रविध्वस्त. ११ ख. प्रियांरामस्य. १२ ङ.—ट. सीतां. १३ ङ.—ट. भूतानिसर्वाणि. १४ क. ख. घ. वित्रस्ताङ्गा. १५ च. छ. ज. ञ. रश्रु. ङ. झ. ट. भयादिवविलक्षणैः. १६ क. दुःखसमाहतां. १७ क. ङ.—ट. मधुरस्वरां. १८ छ. ज. धरणीतले. १९ ख. छ. सीतामाकुल. २० क. दशग्रीवस्तपस्विनीं. ख. दशग्रीवोयशस्विनीं.

ततस्तु सा चारुदती शुचिस्मिता विनाकृता बन्धुजनेन मैथिली ॥
अपश्यती राघवलक्ष्मणावुभौ विवर्णवक्त्रा भयभारपीडिता ॥ ५० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रावणेनगगनमार्गेणनीयमानयासीतयामध्येमार्गंबहुधातद्गर्हणम् ॥ १ ॥

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ॥ दुःखिता परमोद्विग्ना भये महति वर्तिनी ॥ १ ॥
रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् ॥ रुदन्ती करुणं सीता ह्रियमाणेदमब्रवीत् ॥ २ ॥
न व्यपत्रपसे नीच कर्मणाऽनेन रावण ॥ ज्ञात्वा विरहितां यन्मां चोरयित्वा पलायसे ॥ ३ ॥
त्वयैव नूनं दुष्टात्मन्भीरुणा हर्तुमिच्छता ॥ ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४ ॥
यो हि मामुद्यतस्त्रातुं सोप्ययं विनिपातितः ॥ गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम ॥ ५ ॥
परमं खलु ते वीर्यं दृश्यते राक्षसाधम ॥ विश्राव्य नामधेयं हि युद्धेनास्मि जिता त्वया ॥ ६ ॥
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ॥ स्त्रियाश्च हरणं नीच रहिते तु परस्य च ॥ ७ ॥
कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् ॥ सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥ ८ ॥
धिक्ते शौर्यं च सत्त्वं च यत्त्वं कथितवांस्तदा ॥ कुलाक्रोशकरं लोके धिक्ते चारित्रमीदृशम् ॥ ९ ॥

॥ ४९ ॥ शुचिस्मितेति भूतपूर्वाभिप्रायेण स्वाभाविकहसितत्वाद्वा । विवर्णवक्त्रा बभूवेतिशेषः ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

अथ सीता रावणस्य चौर्यवृत्त्यादिकं बहुशो निन्दति—खमित्यादिना । दुःखिता बभूवेति शेषः । परमोद्विग्ना कम्पिता । ओविजी भयचलनयोरित्यस्मान्निष्ठा । वर्तिनी वर्तमाना ॥ १ ॥ रोषवद्रोदनमपि रक्तिमहेतुः ॥ २ ॥ नीचेति संबोधनं । न व्यपत्रपसे न लज्जसे । विरहितां रामलक्ष्मणाभ्यामिति शेषः ॥३॥ हर्तुमामिति शेषः । अपवाहितः अपनीतः । मृगरूपेण मायया मायारूपमृगेणेत्यर्थः ॥ ४ ॥ पुराणो वृद्ध इतिव्यङ्ग्योक्तिः । अतिवृद्धं हत्वा शूरोहमिति मन्यस इतिभावः ॥ ५ ॥ परममिति सोल्लुण्ठनं वचनं अतिनीचमित्यर्थः । तत्रहेतुमाह—विश्राव्येति । हि यस्मात्स्वनामधेयं विश्राव्य अहं रावणोस्मीति स्वनाम प्रख्याप्य युद्धेनास्म्यहं जितेति व्यतिरेकोक्तिः । यद्वा ते परमं अवीर्यं क्लीबत्वं हि । यस्माद्युद्धे न जितास्मि ॥ ६ ॥ रहिते स्वामिरहितप्रदेशे । परस्यस्त्रियाः हरणरूपमीदृशं गर्हितं निन्दितं कर्म कृत्वा कथं नलज्जसे ॥ ७ ॥ शौण्डीर्यमानिनः तव कर्म कुत्सितं सुनृशंसं अधर्मिष्ठं च कथयिष्यन्तीत्यन्वयः ॥ ८॥ तदा हरणकाले । यच्छौर्यं सत्त्वं बलं च कथितवानसि तद्धिक् । " उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः" इत्यादि त्वदुक्तमनृतप्रलपनमित्यर्थः । कुलाक्रोशकरं कुलनि-

---

ति० वर्तिनीत्यसुप्यपिणिनिरार्षः । स० अभयेरामेसदावर्तिन्यपिइदानींपरमोद्विग्नासतीदुःखिताभूत् । यद्वा महतिभयेअपरमोद्विग्नापि इदानींदुःखिता । यद्वा अमेनगत्याहृतौ रामवियोगेवर्ततइतितथा । एतत्पक्षेणिनेरार्षत्वं नकल्पनीयं ॥ १ ॥ स० नीचेति कर्मविशेषणंसंबुध्यन्तंच ॥ ३ ॥ ति० स्त्रियाहरणमेवगर्हितं । राक्षसादिविवाहानांशास्त्रेगर्हितत्वात् । तत्रापिपरस्य विवाहितायाः ।

[ पा० ] १ ख. सीतारुदती. २ ख. घ. ह्यपत्रपसे. ३ ख. भर्त्राविरहितां. ४ ख. ग. ङ.—ट. योमां. ५ ख. यत्त्वयैवहि. ६ ख. युद्धेनापहृता. ७ क. घ. ङ. झ. ट. स्त्रियाश्चाहरणं. ८ क. ख. ग. ङ. छ. झ. ञ. ट. रहितेच. घ. रहितेहि. ९ च. छ. ज. ञ. वीर्यंचशौर्यंच. १० ख. यत्त्वयाकथितंमम. ङ. झ. ट. यत्त्वयाकथितंतदा.

किं कर्तुं[1] शक्यमेवं हि य[2]ज्जवेनैव धावसि ॥ [ [3]त्वयैव नूनं दुष्टात्मन्यद्वीर्यं कथितं मम ॥ ]
मुहूर्त[4]मपि तिष्ठस्व न जीवन्प्रतियास्यसि ॥ १० ॥
न हि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः ॥ ससैन्योपि समर्थस्त्वं [5]मुहूर्तमपि जीवितुम् ॥ ११ ॥
न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथंचन ॥ वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः ॥ १२ ॥
साधु कृत्वाऽऽत्मनः पथ्यं साधु मां मुञ्च रावण ॥ १३ ॥
[6]मत्प्रधर्षणरुष्टो हि भ्रात्रा सह पतिर्मम ॥ विधास्यति विनाशाय त्वं मां यदि न मुञ्चसि ॥ १४ ॥
येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि ॥ [7]व्यवसायः स ते नीच भविष्यति निरर्थकः ॥ १५ ॥
न ह्यहं तमपश्यन्ती भर्तारं वि[8]बुधोपमम् ॥ उत्सहे शत्रुवशगा प्राणान्धारयितुं चिरम् ॥ १६ ॥
न नूनं चात्मनः श्रेयः पथ्यं [9]वा [10]समवेक्षसे ॥ मृत्युकाले यथा मर्त्यो विपरीतानि सेवते ॥ १७ ॥
[11]मुमूर्षूणां हि सर्वेषां यत्पथ्यं तन्न रोचते ॥ [12]पश्याम्यद्य हि कण्ठे त्वां कालपाशावपाशितम् ॥१८॥
यथा चास्मिन्भयस्थाने न बिभेषि [13]दशानन ॥ व्यक्तं हि[14]रण्मयान्हि त्वं संपश्यसि महीरुहान् ॥१९॥
नदीं वैतरणीं घोरां रुधिरौघनि[15]र्वाहिनीम् ॥ [16]असिपत्रवनं चैव भीमं पश्यसि रावण ॥ २० ॥

न्दाकरं ॥ ९ ॥ यत् यदा । एवं जवेनैव धावसि तदा रामेण त्वयि किं कर्तुं शक्यं । तर्हि कदाशक्यमित्यत आह—मुहूर्तमिति । मुहूर्तमपि मुहूर्तमेव । तिष्ठस्व तिष्ठ । तदा जीवन्सन् न प्रतियास्यसि मृतो भविष्यसीत्यर्थः ॥ १० ॥ उक्तमुपपादयति—न हीति ॥ ११ ॥ दर्शनप्राप्तिमात्रेण कथं जीवितुमशक्यत्वं तत्राह—न त्वमिति ॥ १२ ॥ अथ कर्तव्यमुपदिशति—साध्विति । अर्धश्लोक एकान्वयः । आत्मनः पथ्यं हितं । साधु कृत्वा विचार्य । कृतिर्हि नानार्थो धातुवृत्तिकृतोक्तः । यथा उरसिकृत्वा मनसिकृत्वेति । मां साधु सम्यक् आर्जवपूर्वकं मुञ्च ॥ १३ ॥ अमोचने बाधकमाह—मदिति । त्वं मां यदि न मुञ्चसि तदा मम पतिः मत्प्रधर्षणेन मत्परिभवेन । रुष्टः सन् भ्रात्रासह त्वद्विनाशाय यत्नं विधास्यति ॥ १४ ॥ अहमपि सफलयत्नो भविष्यामीत्याशङ्क्याह—येनेति । व्यवसायेन भोगव्यवसायेनेत्यग्राम्योक्तिः ॥ १५ ॥ नैरर्थक्यमेवाह—न हीति । इदानीं कथं धारयसीत्यत्रपरिहारः—चिरमिति ॥ १६ ॥ किंच त्वमात्मनः श्रेयः प्रियं । पथ्यं हितं वा । न समवेक्षसे न पर्यालोचयसि । किन्तु मृत्युकालेमर्त्योयथा विपरीतानि सेवते तथा त्वमपिविपरीतानिसेवस इत्यर्थः ॥ १७ ॥ त्वां कण्ठे कालपाशावपाशितं कालपाशेन बद्धं पश्यामि ॥ १८ ॥ किंच येन प्रकारेण नबिभेषि तेनप्रकारेण महीरुहान् हिरण्मयान् संपश्यसीति मन्य इति योजना ॥१९॥ रुधिरौघैः रक्तौघैःसह निवहति प्रवहतीति तथा । असिपत्रवनं असिमयपत्रयुक्तवनमिति नरकविशेषस्य नाम ।

तत्रापि रहिते पतिरहितेकालेदेशेचेत्यतिनिन्द्यंतेकर्मेतिभावः ॥ ७ ॥ **ती०** भयेनधावसीतियत् एवंकर्तुंशक्यंकिं । नशक्यमित्यर्थः । श्रीरामभयेनत्वयापलायनं क्रियते तदेतन्मयानिवारयितुंनशक्यं । स्त्रीत्वादितिभावः । यद्वाइहभयेनधावसीतियत् एवंकर्तुंशक्यंनशक्यं । शक्त्यभिमानपलायनयोरन्योन्यविरोधादित्यर्थः । तिष्ठस्व यदिशूरइतिशेषः ॥१०॥ **शि०** प्राणान् तेजीवनं । चिरंधारयितुंनोत्सहे । एतेन शीघ्रमेवरामस्त्वांहनिष्यतीतिसूचितं ॥ १६ ॥ **ती०**पथ्यं सुखोदर्कंश्रेयः । वासं लङ्कारूपंनिवासंच नावेक्षसे उभयंत्यक्तुमिच्छसीत्यर्थः ॥ १७ ॥ **स०** सुवर्णवृक्षादिदर्शनस्यमृतिसूचकत्वं "स्वर्णप्रतीतिर्वृक्षेषु" इतिपूर्वार्धभागवते स्पष्टं ॥ १९ ॥ इतित्रिपञ्चाशस्सर्गः ॥ ५३ ॥

**[ पा० ]** १ ख. ग. ङ.—ट. शक्यंकर्तुमेवं. २ ख. ग. यज्जवेनेह. ३ इदमर्धं क. पुस्तकेदृश्यते. ४ ख. मुपतिष्ठत्वं. क. ङ.—ट. मपितिष्ठत्वं. ५ ख. मुहूर्तमिह. ६ क. मद्धर्षणप्ररुष्टोहि. ङ. झ. ट. मत्प्रधर्षणसंक्रुद्धो. ७ ङ. झ. ट. व्यवसायस्तु. ग. व्यवसायश्च. ८ क. च. छ. ज. ञ. वासवोपमं. ९ च. छ. पथ्यंवासंवा. १० ख. नसमीक्षसे. क. समुदीक्षसे. ११ ख. ग. ङ.—ट. मुमूर्षूणांतु. १२ क. ङ. च. छ. ञ. पश्यामेवहि. झ. ट. पश्यामीहहि. ख. ग. पश्यामीवहि. १३ ग. कदाचन. ङ. च. छ. झ. ञ. ट. निशाचर. १४ ङ—ट. हिरण्मयांस्त्वंहि. १५ ख. प्रवाहिनीं. ङ. झ. ट. विवाहिनीं. १६ क. ख. घ.—ट. खड्गपत्र.

तप्तकाञ्चनपुष्पां च वैडूर्यप्रवरच्छदाम् ॥ द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् ॥ २१ ॥
न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ॥ धरितुं शक्ष्यसि चिरं विषं पीत्वेव निर्घृणः ॥२२॥
बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ॥ क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः ॥ २३ ॥
निमेषान्तरमात्रेण विना भ्रात्रा महावने ॥ राक्षसा निहता येन सहस्राणि चतुर्दश ॥ २४ ॥
स कथं राघवो वीरः सर्वास्त्रकुशलो बली ॥ न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ॥ २५ ॥
एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा ॥ भयशोकसमाविष्टा करुणं विललाप ह ॥ २६ ॥
तथा भृशार्तां बहु चैव भाषिणीं विलापपूर्वं करुणं च भामिनीम् ॥
जहार पापः करुणं विवेष्टतीं नृपात्मजामागतगात्रवेपथुम् ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

रावणेनगगनेनीयमानयासीतयाऋश्यमूकशिखरे दृष्टानांसुग्रीवादिवानराणां मध्ये रावणाविदितमाभरणगर्भनिजकौशेयोत्तरीयप्रक्षेपणम् ॥ १ ॥ रावणेनत्वरयालङ्कामेत्य निजान्तःपुरेसीतास्थापनपूर्वकं रामवृत्तान्तपरिज्ञानायजनस्थानंप्रति निजभटाष्टकप्रेषणम् ॥ २ ॥

ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती ॥ ददर्श गिरिशृङ्गस्थान्पञ्च वानरपुङ्गवान् ॥ १ ॥
तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ॥ उत्तरीयं वरारोहा शुभान्याभरणानि च ॥
मुमोच यदि रामाय शंसेयुरिति मैथिली ॥ २ ॥

---

पश्यसीति वर्तमानसामीप्ये वर्तमाननिर्देशः ॥ २० ॥ पारदारिकस्यासाधारणनरकानुभवं दर्शयति—तप्तेति । तप्तानि सद्योग्निनिष्टप्तानि काञ्चनमयानि पुष्पाणि यस्यास्तां । स्वर्णस्य तप्तत्वेऽतीवौष्ण्यं भवति । वैडूर्यप्रवराः वैडूर्यमणिश्रेष्ठमयाः छन्दाः पर्णानि यस्यास्तां । अत्रापि तप्तेति विशेषणं बोध्यं । शाल्मलीं पारदारिकालिङ्ग्यत्वेन यमलोकोत्पन्नां शाल्मलीवृक्षाकारस्थूणां । द्रक्ष्यसे द्रक्ष्यसि । आलिङ्गितुमिति शेषः ॥ २१ ॥ भवत्वेवं कालान्तरे सद्यो लब्धंहि सुखमित्यत्राह—न हीति । तस्य अलीकमप्रियं कृत्वा । "अलीकं त्वप्रियेऽनृते" इत्यमरः । धरितुं जीवितुं ॥ २२ ॥ त्वामादाय देशान्तरं गमिष्यामि तदा न मे रामभयं तत्राह—बद्ध इति । भर्तुरिति हेतौ पञ्चमी । तस्माद्धेतोः क्व गतः सन् शर्म लप्स्यसे नकचिदपीत्यर्थः ॥ २३ ॥ कथं तस्य तादृशी शक्तिरित्यत्राह द्वाभ्यां । निमेषान्तरमात्रेण निमेषावकाशमात्रेण । भ्रात्रा विना एकाकिनेत्यर्थः ॥ २४—२५ ॥ एतच्चान्यच्च वचनं करुणं परुषं च यथा भवति तथा विललाप परिदेवनमकरोत् ॥२६॥ सीतोक्तं सर्वं पापिष्ठस्य तस्य समुद्रघोषतुल्यमासीदित्याह—तथेति । तथेति वाचामगोचरत्वोक्तिः । विलापपूर्वं करुणं च यथा तथा भाषिणीं करुणं यथा तथाविवेष्टन्तीं विवेष्टमानां । आगतगात्रवेपथुं उत्पन्नशरीरकम्पां ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

अथसीताया अशोकवनिकायां स्थापनमाह । नाथं रक्षकं ॥ १ ॥ तेषामित्यादिसार्धश्लोक एकान्वयः । उत्तरीयं उत्तरीयभूतं कौशेयं । आभरणानि कौशेये बद्ध्वा मुमोचेत्यर्थः । किमर्थं मुमोचेत्यत्राह—यदिरामायशंसेयुरिति । यदृच्छया दृष्टाय रामाय स्वस्य रावणापहरणं कथयेयुरिति प्रत्याशयेत्यर्थः । "आशंसा-

---

[ पा० ] १ क. चित्रांच. २ ग. तीक्ष्णैरायसैः. ३ क. ग. घ. चरितुं. झ. धारितुं. ४ क. ग. ङ. च. झ. ट. ममभर्तुः. ५ क. ग. ङ. च. ज.—ट. भ्रातरमाहवे. ६ ग. ङ. झ. ट. कथंस. ७ च. छ. ञ. स्तीक्ष्णैर्दृष्टभार्या. ८ क. च. छ. ञ. बहुरूप. ९ ग. ङ. झं. ट. पापस्तरुणीं. १० ख.—ञ. विचेष्टतीं. ११ ख. ग. ङ. झ. वेपथुः. १२ ङ. झ. ट. भामिनी.

वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं[1] सहभूषणम् ॥ संभ्रमात्तु दशग्रीवस्तत्कर्म[2] न स बुद्धवान् ॥ ३ ॥
पिङ्गाक्षास्तां विशालाक्षीं नेत्रैरनिमिषैरिव ॥ विक्रोशन्तीं [7]तथा सीतां ददृशुर्वानरर्षभाः ॥ ४ ॥
स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ॥ जगाम [4]रुदतीं गृह्य [5]वैदेहीं राक्षसेश्वरः ॥ ५ ॥
तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ॥ उत्सङ्गेनैव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ॥ ६ ॥
वनानि सरितः शैलान्सरांसि च विहायसा ॥ स क्षिप्रं समतीयाय शरश्चापादिव च्युतः ॥ ७ ॥
तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ॥ सरितां शरणं [6]गत्वा समतीयाय सागरम् ॥ ८ ॥
संभ्रमात्परिवृत्तोर्मी रुद्धमीननमहोरगः ॥ वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥ ९ ॥
अन्तरिक्षगता वाचः ससृजुश्चारणास्[3]तदा ॥ एतदन्तो दशग्रीव इति सिद्धास्तदाऽब्रुवन् ॥ १० ॥
स तु सीतां [8]विवेष्टन्तीमङ्केनादाय रावणः ॥ प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ॥ ११ ॥
सोभिगम्य पुरीं लङ्कां [9]सुविभक्तमहापथाम् ॥ सं[10]रूढकक्ष्याबहुलं स्वमन्तःपुरमाविशत् ॥ १२ ॥
तत्र तां[11]मसितापाङ्गां शोकमोह[12]परायणाम् ॥ निदधे रावणः सीतां मयो मायामि[13]व स्त्रियम् ॥ १३ ॥
अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ॥ यथा नेमां पुमान्स्त्री वा सीतां पश्यत्यसंमतः ॥ १४ ॥

---

वचने लिङ्" इति लिङ् ॥ २ ॥ सहभूषणं भूषणान्तरितं वस्त्रं । उत्सृज्य उन्मुच्य । तन्मध्ये सीतया निक्षिप्तमिति यत् तत्कर्म। संभ्रमात्सीतापहारजनितक्षोभात् न बुद्धवान् । यदि बुध्येत गृह्णीयादेवेति भावः ॥ ३ ॥ पिङ्गाक्षाः वानराः । न केवलं वानराः अपि तु वानरर्षभाः वानरश्रेष्ठाः । अनिमिषैरिव निमेषरहितैरिव । तथा विक्रोशन्तीं राम रामेति विक्रोशन्तीमित्यर्थः ॥ ४ ॥ पम्पां पम्पोपर्याकाशं । लङ्कामभिमुख इत्यनेन एतावत्पर्यन्तं रामाश्रमदत्तदृष्टिर्गतः ततः स्वच्छन्दं गतवानिति गम्यते । अतएव सुसंहृष्ट इति वक्ष्यते ॥ ५ ॥ उत्सङ्गेनेत्यस्य उभयत्राप्यन्वयः । मृत्युं मृत्युहेतुभूतां ॥ ६ ॥ विहायसा आकाशमार्गेण ॥ ७ ॥ तिमीति तिमयो मत्स्यविशेषाः नक्राः ग्राहाः तेषां निकेतं वासस्थानं । वरुणस्य आलयं वासः । शरणं प्राप्यं । गत्वा प्राप्य । क्रमेण सागरं समतीयाय ॥ ८ ॥ संभ्रमात् रावणदर्शनक्षोभात् परिवृत्तोर्मिः । रुद्धमीनमहोरगः बहिःसंचाररहितमत्स्यसर्पः ॥ ९ ॥ अन्तरिक्षगताश्चारणाः दशग्रीवः एतदन्तः एतत्सीतापहरणावसानइति वाचः ससृजुः ऊचुरित्यर्थः । अन्तरिक्षगताःसिद्धाश्च एतदन्तो दशग्रीव इत्यब्रुवन् ॥ १० ॥ आत्मनः रूपिणीं रूपवतींमृत्युमिति सीताविशेषणं ॥ ११ ॥ संरूढाः जनाकीर्णाः कक्ष्याः द्वारप्रकोष्ठाः ताभिः बहुलं निबिडं ॥ १२ ॥ तत्र अन्तःपुरे शोकमोहपरायणां शोकमोहपरतन्त्रां । निदधे स्थापितवान् । मयस्त्रिपुराधिपतिः । मायां मायामयीं आश्चर्यशक्तियुक्तामित्यर्थः । स्त्रियं स्वयंप्रभां बिले यथानिदधे तथेत्यर्थः ॥१३॥ पिशाचीः पिशाच्याकाराः राक्षसीः । यथेमां स्त्री वा पुमान्वा असंमतः अननुज्ञातः । नपश्यति तथाऽब्रवीत् । एनामन्यो न पश्येदित्यब्रवीदित्यर्थः

---

**ति०** वस्तुतोऽयंयदिशब्दः"वेदाःप्रमाणंयदिस्युः" इतिवत् ॥ **स०** संभ्रमात् रामआगच्छेदितिमनश्चाञ्चल्यात् । **शि०** सहभूषणंवस्त्रमुत्सृज्यविद्यमानायास्सीतायाः संभ्रमात् तदुक्तिहेतुकोद्वेगाद्धेतोः । निक्षिप्तं निक्षेपरूपं । तत्कर्मदशग्रीवोनबुद्धवान् ॥ ३ ॥ **ति०** सुसंहृष्टः मृत्योस्तत्त्वेनाज्ञानात् । केचित्तु—लब्धंरामहस्तान्मृत्युद्वारमितिसंहृष्टः । विनाचोत्कटंपापंपुण्यक्षयाभावेननमृत्युस्संनिहितःस्यादितितमोगुणावृतस्सन्मातर्यपिविरुद्धशब्दव्यवहारंकृतवानितिवदन्ति । तेषामेतत्सर्गान्तेवक्ष्यमाणं"बभूवमोहान्मुदितः" इत्यसङ्गतंस्यात् । तथा "आत्मानंबुद्धिवैक्लब्यात्कृतकृत्यममन्यत" इत्युत्तरसर्गादिस्थंचासंगतंस्यात् ॥६॥ **ति०** संरूढकक्ष्यां बहुजनाकीर्णद्वारां । बहुलां विपुलां । संरूढकक्ष्याबहुलामितिपाठे तादृशबहुतरद्वारवत्इत्यन्तःपुरविशेषणं ॥ १२ ॥

**[ पा० ]** १ क. ख. ग. विनिक्षिप्तंसभूषणं. २ घ.—ट. चनबुद्धवान्. क. ख. ग. नचबुद्धवान्. ३ ख. ग. ङ. झ. ट. सदा. ४ ङ. छ. ज. झ. मैथिलींगृह्यरुदतीं. च. ञ. ट. मैथिलींगृह्यरुदन्तीं. ५ क. ख. ग. मैथिलीं. ६ क. ग. च. छ. ज. रम्यं. ७ ङ. झ. ट. स्तथा. ८ ख. प्रवेष्टन्तीं. ङ.—ट. विचेष्टन्तीं. ९ ख. सुसंरुद्ध. १० क. ङ. छ. झ. ट. संरूढकक्ष्यांबहुलां. ११ क. ङ.—ट. मसितापाङ्गीं. १२ ङ. झ. ट. मोहसमन्वितां. १३ क.—ट. मिवासुरीं.

मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ॥ यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा ॥ १५ ॥
या च वक्ष्यति वैदेहीं वचनं किंचिदप्रियम् ॥ अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियम्॥१६॥
तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् ॥ निष्क्रम्यान्तःपुरात्तस्मात्किं कृत्यमिति चिन्तयन् १७
ददर्शाष्टौ महावीर्यान्राक्षसान्पिशिताशनान् ॥ १८ ॥
स तान्दृष्ट्वा महावीर्यो वरदानेन मोहितः ॥ उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः ॥ १९ ॥
नानाप्रहरणाः क्षिप्रमितो गच्छत [1]सत्वराः ॥ जनस्थानं हतस्थानं भूतपूर्वं खरालयम् ॥ २० ॥
[2]तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ॥ पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २१ ॥
[3]बलं हि सुमहद्यन्मे जनस्थाने निवेशितम् ॥ सदूषणखरं युद्धे [4]हतं रामेण सायकैः ॥ २२ ॥
[5]तत्र क्रोधो ममामर्षाद्धैर्यस्योपरि वर्तते ॥ वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २३ ॥
निर्यातयितुमिच्छामि [6]तच्च वैरमहं रिपोः ॥ [7]न हि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २४ ॥
तं त्विदानीमहं हत्वा खरदूषणघातिनम् ॥ रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५ ॥
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता ॥ प्रवृत्तिरुपनेतव्या किङ्करोतीति तत्त्वतः ॥ २६ ॥
अप्रमादाच्च गन्तव्यं [8]सर्वैरपि निशाचरैः ॥ कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २७ ॥
[9]युष्माकं च [10]बलज्ञोऽहं बहुशो रणमूर्धनि ॥ अतश्चास्मिञ्जनस्थाने मया यूयं [11]नियोजिताः ॥ २८ ॥
[12]ततः प्रियं वाक्यमुपेत्य राक्षसा महार्थमष्टा[13]वभिवाद्य रावणम् ॥
विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थानमलक्ष्यदर्शनाः ॥ २९ ॥

॥ १४ ॥ एषा यद्यदिच्छेत्तत्तद्देयं यथामच्छन्दतः मदिच्छानुसारेण । यथा मह्यं दीयते तद्वद्देयमित्यर्थः ॥ १५ ॥ जीवितं न प्रियं मारयेयमित्यर्थः ॥ १६ ॥ चिन्तयन् महावीर्यान्राक्षसान् ददर्श अपश्यत् ॥१७—१८ ॥ वरदानेन ब्रह्मवरदानेन । तानेतानित्यन्वयः ॥ १९ ॥ नानेति "आयुधं तुप्रहरणं" इत्यमरः । हतस्थानं शून्यसन्निवेशं । खरालयं भूतपूर्वं पूर्वं खरालयमित्यर्थः । "भूतपूर्वे चरट्" इति निर्देशात्समासः ॥ २० ॥ पौरुषं बलं न केवलं नीतिबलमित्यर्थः ॥ २१ ॥ पौरुषबलाश्रयणे हेतुमाह—बलं हीति । यत् बलं सैन्यं निवेशितं तद्धतमित्यन्वयः ॥ २२ ॥ तत्र वधनिमित्तं । अमर्षात् असहनात् ॥ २३ ॥ निर्यातयितुं अवसितुं ॥ २४ ॥ शर्म सुखं । उपलप्स्यामि प्राप्स्यामि ॥ २५ ॥ प्रवृत्तिर्वार्ता । रामः किं करोतीति तत्त्वतो वार्ता मत्सकाशमुपनेतव्येत्यर्थः ॥२६॥ अप्रमादादिति अवधानादित्यर्थः ॥ २७ ॥ खरादिस्थाने अस्माभिः कथं स्थातुं शक्यं तत्राह—युष्माकं चेति ॥ २८ ॥ महानर्थोभिधेयो यस्य तं महार्थं प्रियं श्लाघारूपं वाक्यं । उपेत्य लब्ध्वा । रावणतः स्तुतिं प्राप्येत्यर्थः । यतो यत्र जनस्थानं तद्वनमुद्दिश्य प्रतस्थिरे । अलक्ष्यदर्शनाः वेगातिशयेन दुष्प्रेक्षस्वरूपाः

ति० मायामिवासुरीमित्यनेन मायारूपैवैषासीतायालङ्कामागतेतिध्वनितं । मुख्यसीतात्वाग्निंप्रविष्टेतिपूर्वमेवध्वनितं । अत एवरावणस्यवहनीयैषाजाता । मायात्वादेवरावणस्यतदज्ञानं ॥ १३ ॥ ति० मच्छन्दतइत्यस्यमद्वशप्राप्तिसिद्ध्यर्थमित्यर्थइति कतकः ॥ १५ ॥

[ पा० ] १ घ. राक्षसाः. २ ङ. झ. ट. तत्रास्यतां. ३ क. ङ.—ट. बहुसैन्यंमहावीर्यं. ४ क. ख. ङ. च. छ. झ. ञ. ट. निहतंरामसायकैः. ५ ख. ङ.—ट. ततःक्रोधोममापूर्वोधैर्यस्योपरिवर्धते. क. ततःक्रोधोमयापूर्वोधैर्येणपरिवर्धते. ६ घ. ङ.—ट. तच्चवैरंमहारिपोः. ख. वैरंममरिपोर्वधात्. ७ क. नाभिगच्छाम्यहं. ख. च. छ. ज. नाभिपत्स्याम्यहं. घ. नैवलप्स्याम्यहं. ८ क.—ट. सर्वैरेव. ९ ग. युष्माकंहि. ङ. छ. झ. ट. युष्माकंतु. १० ङ. झ. ट. बलंज्ञातं. ११ क. ख. ग. ङ.—ट. निवेशिताः. १२ घ. अतः. १३ च. छ. ज. ञ. वभिवन्द्य.

ततस्तु सीतामुपलभ्य रावणः सुसंप्रहृष्टः [2]परिगृह्य मैथिलीम्[1] ॥
प्रसज्य रामेण च वैरमुत्तमं बभूव मोहान्मुदितः स [3]राक्षसः ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रावणेनसीतासमीपमेत्यबलात्तस्यास्तत्रतत्रसमानयनेनविचित्रतरभवनप्रासादोद्यानादिप्रदर्शनपूर्वकं तत्प्रलोभनेच्छयाबहुधाचाटुवचनोपन्यासः ॥ १ ॥

संदिश्य राक्षसान्घोरान्रावणोष्टौ महाबलान् ॥ आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत ॥ १ ॥
स चिन्तयानो वैदेहीं [4]कामबाणसमर्पितः ॥ [5]प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २ ॥
[6]स प्रविश्य तु तद्वेश्म रावणो [7]राक्षसाधिपः ॥ अपश्यद्राक्षसीमध्ये सीतां [8]शोकपरायणाम् ॥ ३ ॥
अश्रुपूर्णमुखीं दीनां शोक[9]भाराभिपीडिताम् ॥ वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४ ॥
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ॥ [10]अधोमुखमुखीं [11]सीतामभ्येत्य च निशाचरः ॥ ५ ॥
तां तु [12]शोकपरां दीनामवशां [13]राक्षसाधिपः ॥ [14]स बलाद्दर्शयामास गृहं देवगृहोपमम् ॥ ६ ॥
हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् ॥ नानापक्षिगणैर्जुष्टं नानारत्न[15]समन्वितम् ॥ ७ ॥
[16]काञ्चनैस्तापनीयैश्च स्फाटिकै [17]राजतैरपि ॥ वज्रवैडूर्यचित्रैश्च [18]स्तम्भैर्दृष्टिमनोहरैः ॥ ८ ॥

॥ २९ ॥ सर्गार्थं संगृह्य दर्शयति—ततस्त्विति । उपलभ्य दृष्ट्वा । सुसंप्रहृष्टः कामविकारवान् । परिगृह्य गृहीत्वा । रामेण वैरं प्रसज्य प्राप्यापि । मोहान्मुदितो बभूव । अत्र त्रिंशच्छ्लोकाः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

पूर्वं स्वप्रभावकथनमुखेन प्रलोभनं कृतवान् अथ भोगोपकरणप्रदर्शनमुखेन रावणः सीतां प्रलोभयति पञ्चपञ्चाशे । बुद्धिवैक्लव्यात् बुद्धिदौर्बल्यात् अकृतबुद्धित्वादित्यर्थः ॥ १ ॥ समर्पितः पीडित इत्यर्थः । अभित्वरन् अभित्वरमाणः ॥ २ ॥ वेश्म अन्तःपुरं ॥३॥ अश्रवित्यादिश्लोकत्रयमेकं वाक्यं । अधोमुखमवनतं मुखं यस्यास्तां । "स्यादवाङप्यधोमुखः" इत्यमरः । शोकभाराभिपीडितामभ्येत्य शोकपरां दर्शयामासेति क्रियाभेदादपुनरुक्तिः । अवशां दर्शनमनिच्छन्तीं ॥ ४—६ ॥ गृहं वर्णयति द्वाभ्यां । हर्म्येत्यादि । हर्म्यैः ह्रस्वविमानैः । प्रासादैः उन्नतविमानैश्च संबाधं निबिडं । काञ्चनैः स्वर्णमयैः । तापनीयैः तप्तस्वर्णमयैः । स्तम्भैरुपलक्षितं ॥ ७—८ ॥

**ति०** मोहान्मुदितः खरहन्तुर्वधोममसुकरः स्त्रीवियोगेनातिखिन्नस्येतिहर्षितः ॥ **ती०** वस्तुतस्तुरावणस्यश्रीरामेणसहवैरंलोकदृष्ट्याऽनर्थवत्प्रतीयमानमपिसीताहरणद्वाराश्रीरामहस्तात्स्ववधस्येष्टतमत्वाद्रामेणवैरंप्राप्यमुमुदइतिभावः । सर्गश्रवणफलं—"सीतापहारमारभ्यलङ्कायांस्थापनावधि । श्रवणाच्छास्त्रविहिताज्ज्येष्ठादेवीविनश्यति" इतिस्कान्दे ॥ ३० ॥ इतिचतुष्पञ्चाशस्सर्गः ॥ ५४ ॥

**ति०** शोकोवायुस्थाने । अश्रुचार्णवजलस्थाने । अनेनाश्रुवेगातिशयउक्तः ॥ ४ ॥ **ती०** अधोमुखमुखीं अधोमुखे अधःप्रदेशे

**[ पा० ]** १ च. छ. ज. ञ. मैथिलीं. २ च. छ. ज. ञ. प्रतिगृह्यरावणः. क. सनिगृह्य. ३ ङ. झ. ट. रावणः. ४ ङ. छ. झ. ञ. ट. बाणैःप्रपीडितः. क. च. ज. बाणावपीडितः. ५ ग. सविवेश. ६ ख. संप्रविश्य. ७ क. च. छ. ज. ञ. राक्षसेश्वरः. ८ ङ. झ. ट. दुःखपरायणां. ९ क. घ.—छ. झ. ञ. ट. भारावपीडितां. १० ङ. झ. ट. अधोगतमुखीं. ११ च. ज. दीनांतामभ्येत्य. ग. दीनामभ्येत्यस. ख. दीनांसीतामभ्येत्य. १२ क. ग. च. छ. ज. ञ. ट. शोकवशां. ङ. झ. शोकवशाद्दीनां. १३ ख. सनिशाचरः. क. राक्षसेश्वरः. १४ ग. विविधंदर्शयामास. ख. स्वबलंदर्शयामास. १५ ग. विभूषितं. १६ ङ. झ. ञ. ट. दान्तकैः. १७ ग. ङ. च. छ. झ. ञ. ट. राजतैस्तथा. १८ क. स्तम्भैर्जुष्टंमनोहरं. ख. ङ.—ट. स्तम्भैर्दृष्टिमनोरमः.

दिव्यदुन्दुभिनिर्ह्रादं[1] तप्तकाञ्चनतोरणम्[2] ॥ सोपानं काञ्चनं चित्रमारुरोह तया सह ॥ ९ ॥
दान्तिका[3] राजताश्चैव गवाक्षाः प्रियदर्शनाः ॥ हेमजालावृताश्चासंस्तत्र प्रासादपङ्क्तयः ॥ १० ॥
सुधामणिविचित्राणि[4] भूमिभागानि सर्वशः ॥ दशग्रीवः स्वभवने प्रादर्शयत मैथिलीम् ॥ ११ ॥
दीर्घिकाः पुष्करिण्यश्च नानावृक्षसमन्विताः[5] ॥ रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२ ॥
दर्शयित्वा तु[6] वैदेह्याः कृत्स्नं तद्भवनोत्तमम् ॥ उवाच वाक्यं पापात्मा सीतां[7] लोभितुमिच्छया ॥१३॥
दश राक्षसकोट्यश्च[8] द्वाविंशतिरथापराः ॥ तेषां[9] प्रभुरहं सीते सर्वेषां भीमकर्मणाम् ॥ १४ ॥
वर्जयित्वा जरावृद्धान्[10]बालांश्च रजनीचरान् ॥ सहस्रमेकमेकस्य मम कार्यपुरस्सरम् ॥ १५ ॥
यदिदं राजतन्त्रं[11] मे त्वयि सर्वं प्रतिष्ठितम् ॥ जीवितं च विशालाक्षि त्वं मे प्राणैर्गरीयसी ॥ १६ ॥
बहूनां[12] स्त्रीसहस्राणां मम योऽसौ परिग्रहः ॥ तासां त्वमीश्वरा[13] सीते मम[14] भार्या भव प्रिये ॥१७॥
साधु किं [15]तेऽन्यथाबुद्ध्या रोचयस्व वचो मम ॥ भजस्व[16] माऽभितप्तस्य प्रसादं कर्तुमर्हसि ॥१८॥

---

दिव्यदुन्दुभिनिर्ह्रादं निर्ह्रादवत् । अर्शआद्यच् । यद्वा दिव्यदुन्दुभेरिव निर्ह्रादः शब्दो यस्य तत् । आरोहणकाले दुन्दुभिवत् ध्वनतीति भावः । तोरणो बहिर्द्वारं । चित्रं आश्चर्यभूतं । "आलेख्याश्चर्ययोश्चित्रं" इत्यमरः । तया सहारुरोह तामादायारुरोहेत्यर्थः ॥ ९ ॥ वक्ष्यमाणभूभागदर्शनसाधनान्याह—दान्तिका इति । दान्तिकाः दन्तविकृताः । तत्र सोपानमार्गे । गवाक्षा आसन् तदुपरि हेममयैः जालैः जालकैः आवृताःप्रासादपङ्क्तयश्चासन् ॥ १० ॥ सुधावलेपनेन मणिभिश्च विचित्राणि भूमिभागानीति क्लीबत्वमार्षं । प्रादर्शयत् प्रदर्शयामास । तैर्गवाक्षैरिति शेषः ॥ ११ ॥ दीर्घिकाः वाप्यः । पुष्करं जलमासामस्तीति पुष्करिण्यः । द्वितीयार्थे प्रथमा । "पुष्करादिभ्यो देशे" इति इनिप्रत्ययः । शोकपरायणामित्यनेन तस्या असह्यत्वं द्योत्यते ॥ १२ ॥ लोभितुं लोभयितुं । अन्तर्भावितण्यर्थोयं ॥ १३ ॥ दशेति । दश द्वाविंशतिश्चेति द्वात्रिंशत्कोटयः तेषां द्वात्रिंशत्कोटिराक्षसानां । गुणीभूतानामपि राक्षसानां तच्छब्देन परामर्शः । "अथशब्दानुशासनं । केषां शब्दानां" इत्यादौतथा दर्शनात् ॥ १४ ॥ —वर्जयित्वेति । बालवृद्धान्विना ममैकस्य पुरः सरतीति पुरःसरं परिचारकजातं । एकसहस्रमस्ति ॥ १५ ॥ मम यदिदं राजतन्त्रं राजपरिकरः । तत्सर्वं त्वयि प्रतिष्ठितं त्वदधीनं मम जीवितं च त्वदधीनं । त्वयि प्रतिष्ठितं । त्वं मे मम । प्राणैः प्राणेभ्यः गरीयसी ॥ १६ ॥ अन्तःपुरचारिणां स्त्रीसहस्राणां मध्ये योसौ मम परिग्रहः या भार्येत्यर्थः । "परिग्रहः कलत्रे स्यात्" इति शाश्वतः । नियतपुँल्लिङ्गः । जात्यभिप्रायेणैकवचनं । तासामित्यत्र स्त्रीणामित्यभिप्रायेण स्त्रीलिङ्गनिर्देशः । मम भार्यासती तासामीश्वरा स्वामिनी भव । "स्थेशभासपिसकसोवरच्" इति वरच् । ततष्टाप् ॥ १७ ॥ मम वचो रोचयस्व मदुक्तं स्वीकुरु ।

---

मुखंयस्यास्तां ॥५॥ **स०** बालान्वृद्धाञ्जनान्वर्जयित्वाद्वात्रिंशतसंख्याकेषुराक्षसेषुमध्येएकैकस्यकार्यपुरस्सरंकार्यकरंएकैकसहस्रंतिष्ठति । एतच्चरावणगृहमध्येपरिचारसङ्ख्यानं । एतदतिरिक्ताश्चबहवश्शूरास्सन्ति । अतोनाशीतिकोटियूथपमित्यादिविरोधः ॥१५॥ **ती०** योममपरिग्रहः याममभार्याइत्यर्थः । परिग्रहशब्दोनियतपुल्लिङ्गः । अत्रायंजात्येकवचनेयोसौपरिग्रहइतिनिर्दिश्यतासामितिस्त्रीलिङ्गेनस्त्रीणांनिर्देशः । परमार्थतःपरिग्रहशब्दवाच्यानांस्त्रीत्वादितिज्ञेयं । मेममभार्यासतीतासामीश्वरास्वामिनीभवेत्यन्वयः । वस्तुतस्तु अभवप्रियेइतिच्छेदः । मोक्षप्रिये । भार्येत्यत्रभा आर्येतिच्छेदः । भा चिद्रूपिणी आर्याश्रेष्ठा त्वंममतासांचईश्वराभवेतियोजना । **स०** हेप्रियेतासांयःपरिग्रहः मूलं असौत्वमेवेतियोजना । "परिग्रहःस्वीकारमूलयोः"इतिविश्वः ॥ १७ ॥ **ती०** वस्तुतस्तु—कामाभितप्तस्य कामेनलब्धृत्योभविष्यामीत्येवंरूपेणमनोरथेन । अभितप्तस्येत्यर्थः ॥ **शि०** ननुरामंविनाऽहंनस्थास्यामीत्यतआह ।

[ पा० ] १ ङ.—ट. निर्घोषं. २ ङ. च. छ. ज. ञ. भूषणं. ३ क. ग. ङ. झ. ट. दान्तकाः. ४ क. ग. विचित्रांश्च भूमिभागान्सहस्रशः. ५ ङ.—ट. पुष्पसमावृताः. ग. वृक्षसमावृताः. ६ ख. ग. ङ. च. छ. झ. ञ. ट. वैदेहीं. ७ क. ग. च. छ. ज. रावणोजनकात्मजां. ८ क. कोट्यस्तु. ९ क. ख. ग. च. छ. ज. येषां. १० ङ. छ.—ट. जनान्वृद्धान्. ११ च.—ट. राज्यतन्त्रं. १२ ङ.—ट. बह्वीनामुत्तमस्त्रीणां. १३ ख. ङ.—ट. मीश्वरी. २४ ख. भार्याभवमम. १५ क. ग. ज, तेऽन्यया. १६ च. छ. भजकामाभितप्तस्य. क. भजस्वमेऽभितप्तस्य.

परिक्षिप्ता [1]सहस्रेण लङ्केयं शतयोजना ॥ नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १९ ॥
न देवेषु न यक्षेषु न [2]गन्धर्वेषु [3]पक्षिषु ॥ अहं पश्यामि लोकेषु यो मे वीर्यसमो भवेत् ॥ २० ॥
राज्यभ्रष्टेन दीनेन तापसेन [4]गतायुषा ॥ किं करिष्यसि रामेण मानुषेणाल्प[5]तेजसा ॥ २१ ॥
भजस्व सीते मामेव भर्ताऽहं सदृशस्तव ॥ यौवनं [6]ह्यध्रुवं भीरु रमस्वेह मया सह ॥ २२ ॥
दर्शने मा कृथा बुद्धिं राघवस्य वरानने ॥ काऽस्य शक्तिरि[7]हागन्तुमपि सीते मनोरथैः ॥ २३ ॥
न शक्यो वायुराकाशे पाशैर्बद्धुं [8]महाजवः ॥ दीप्यमानस्य [9]वाऽप्यग्नेर्ग्रहीतुं [10]विमला शिखा ॥ २४ ॥
त्रयाणामपि लोकानां न तं पश्यामि शोभने ॥ विक्रमेण नयेद्यस्त्वां मद्बाहु[11]परिपालिताम् ॥ २५ ॥
[12]लङ्कायां सुमहद्राज्यमिदं त्वमनुपालय ॥ त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि [13]चराचराः ॥ २६ ॥
[14]अभिषेकोदकक्लिन्ना तुष्टा च रमयस्व माम् ॥ २७ ॥

इदं साधु समीचीनं । ते अन्यथाबुद्ध्या किं । रामविषया बुद्धिर्मा भूदित्यर्थः । तस्मात् मा मां । भजस्व । अभितप्तस्य कामाभितप्तस्य । मे प्रसादं कर्तुमर्हसि । अर्हसि किं नार्हसीत्यपि ध्वनिः ॥ १८ ॥ रामागमनप्रसक्तिरेव नास्तीत्याशयेनाह—परिक्षिप्तेति । "शतं सहस्रमयुतं सर्वमानन्त्यवाचकं" इति वचनात् सहस्रेण अनेकराक्षसैः । परिक्षिप्ता परिवृता । इयं लङ्का शतयोजना शतयोजनपरिमिता । तस्मान्नेयं धर्षयितुं शक्या ॥ १९ ॥ माभूत्पुरस्य दुर्धर्षता मम पुनर्वीर्यं शृण्वित्याह—न देवेष्विति । मे वीर्ये यःसमोभवेत् तं देवेषु न पश्यामि । यक्षेषु न पश्यामि । गन्धर्वेषु न पश्यामि । पक्षिषु च न पश्यामि ॥२०॥ गतायुषा अल्पायुषेत्यर्थः ॥ २१ ॥ इह भवने ॥ २२ ॥ राघवस्य दर्शने बुद्धिं मा कृथाः । तद्दर्शनं च दुर्लभमित्यर्थः । तदेव स्पष्टयति—कास्येति । अत्र आगन्तुं मानसिकव्यापारोपि नशक्यः किंपुनः कायिकइत्यर्थः ॥ २३ ॥ अशक्यत्वे दृष्टान्तमाह—न शक्य इति । विमला निर्धूमा । शिखा ज्वाला ॥ २४ ॥ लोकानामिति निर्धारणे षष्ठी ॥ २५ ॥ त्वत्प्रेष्याः त्वत्परिचारिकाः । भविष्यन्तीति शेषः ॥ २६ ॥ अभिषेकेत्यर्धमेकं वाक्यं । अभिषेकोदकेन पट्टमहिषी-

साध्विति । साधु स्वहितंममवचोरोचयस्व । अन्यथारामविषयिण्याबुद्ध्यातेकिं नकिमपीत्यर्थः । अतएव स्वमा ममनित्यमाता । त्वंभज सेवांकारय । अभितप्तस्य भ्रात्रादिवधेनपीडितस्यममप्रसादंप्रसन्नतांकर्तुंत्वमर्हसि ॥ १८ ॥ **ती०** राज्यभ्रष्टेनेत्यादिश्लोकद्वयस्यवाक्यार्थस्स्पष्टः । वस्तुतस्तु–राज्यभ्रष्टेन राज्याद्भ्रष्टाः रिपवोयस्मात्तेन । दीनेनतापसेनगतायुषेत्यन्तमेकंपदं । दीनानामिनः । तापसानामिनः । दीनेनश्चासौतापसेनश्चदीनेनतापसेनः । तादृशस्सन् । गतंप्राप्तंआयुःएकादशसहस्रवत्सरपरिमितंयेनतेन । दीनजनानांतापसानांचरक्षणार्थमवतीर्णेनेत्यर्थः । मानुषेण मनुष्यरूपेणावतीर्णेन । अल्पतेजसा अल्पमितरेषांतेजोयस्मात्तेन । "तमेवभान्तमनुभातिसर्वंतस्यभासासर्वमिदंविभाति" इतिश्रुतेः । रामेणकिं एतादृशंपरमपुरुषमुद्दिश्यकिमर्थंविलापःक्रियतइति भावः ॥—॥ भजस्वेति । मामेअवेतिच्छेदः । यौवनं यौवनशब्देनसर्वाअवस्थालक्ष्यन्ते । ताभिस्सर्वमायुर्लक्ष्यते । तथाचयतःमे मम । त्वत्सेवानुकूलंसर्वमायुरध्रुवं । भर्ता बिभर्तिशुश्रूषादिनास्वामिनमितिभर्ताभृत्यः । सदृशः अनुरूपः । यतस्तवाहमनुरूपोभृत्यः अतोमा मांभजस्व भृत्यत्वेनाङ्गीकुरु । अव रक्षच । तदर्थमिहलङ्कायांमयासहराज्यलक्ष्म्यासह रमस्व ॥ २१–२२ ॥ **शि०** रामविषयकविरक्तिमुत्पादयन्नाह—**राज्येति** । राज्यभ्रष्टेन अतएव अल्पतेजसा रामेण किंकरिष्यसि । एतेन रामकर्तृकराज्यप्राप्त्यनन्तरंतत्संगमःकर्तव्यइतिव्यञ्जितं ॥२१॥ **ती०** दर्शनइत्यादिश्लोकत्रयस्यप्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु—यथावायुर्बद्धुंनशक्यते अग्नेश्शिखागृहीतुंयथानशक्यते । एवंमनोरथैरपिइहलङ्कांप्रत्यागन्तुंकस्यशक्तिः नकस्यापि ॥ रामंविनेतिशेषः । तथामद्बाहुपरिपालितांत्वांयोहरेत् तंनपश्यामि । रामं विनेतिशेषः । श्रीरामश्चेदागन्तुंशक्नुयात्त्वामाहर्तुंचशक्नुयात् । अतस्सएवागत्यत्वांप्राप्स्यति । त्वंतुश्रीरामंकदाद्रक्ष्यामीत्युत्कण्ठांमाकुर्वित्यर्थः ॥ २३—२५ ॥ **ती०** लङ्कायामित्यारभ्यअलंव्रीडेनेत्यन्तश्लोकानांप्रातीतिकार्थस्स्पष्टः । वस्तुतस्तु—कुलदेवतायैदेव्यैरावणस्स्वात्मात्मीयसमर्पणंकरोति लङ्कायामित्यादिश्लोकद्वयेन । मद्विधाइत्यनेनात्मसमर्पणं । लङ्कायांराज्यमनुपालयेत्यनेनात्मीयसमर्पणमितिज्ञेयम् ॥ २६—२७ ॥

**[पा०]** १ क.—ट. समुद्रेण. २ क. च. छ. ज. ञ. गन्धर्वेषूरगेषुच. ३ ग. ङ. झ. ट. नर्षिषु. ४ ङ. छ. झ. ट. पदातिना. ५ ख. चेतसा. ६ ङ. झ. ट. त्वध्रुवं. ७ ख. रथागन्तुं. ८ ख. मनोजवः. ९ क. ख. च. छ. ज. चाप्यग्नेः. १० ङ. झ. ट. विमलाःशिखाः. ११ क. ख. बलपालितां. १२ ङ. झ. ञ. लङ्कायाः. १३ ङ. झ. ञ. ट. चराचरं. १४ ङ. झ. ट. अभिषेकजलक्लिन्ना.

दुष्कृतं यत्पुरा कर्म वनवासेन तद्गतम् ॥ [1]यश्च ते सुकृतो धर्मस्तस्येह फलमाप्नुहि ॥ २८ ॥
इह [2]माल्यानि सर्वाणि दिव्यगन्धानि मैथिलि ॥ भूषणानि च मुख्यानि [3]सेवस्व च मया सह ॥२९॥
पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ॥ विमानं सूर्यसंकाशं तरसा [4]निर्जितं [5]मया ॥ ३० ॥
विशालं रमणीयं च त[6]द्विमानमनुत्तमम् ॥ [7]तत्र सीते मया सार्धं विहरस्व यथासुखम् ॥ ३१ ॥
वदनं पद्मसंकाशं विमलं चारुदर्शनम् ॥ शोकार्तं तु वरारोहे न भ्राजति वरानने ॥ ३२ ॥
एवं वदति तस्मिन्सा वस्त्रान्तेन वराङ्गना ॥ पिधायेन्दुनिभं सीता [8]मुखमश्रूण्यवर्तयत् ॥ ३३ ॥
ध्यायन्तीं तामिवास्वस्थां [9]दीनां चिन्ताहतप्रभाम् ॥ उवाच वचनं [10]पापो रावणो [11]राक्षसेश्वरः ॥ ३४ ॥
अलं व्रीडेन वैदेहि धर्मलो[12]पकृतेन च ॥ आर्षोयं दैवनि[13]ष्यन्दो यस्त्वामभिगमिष्यति ॥ ३५ ॥
एतौ पादौ [14]महास्निग्धौ शिरोभिः परिपीडितौ ॥ प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते ॥३६॥

त्वेनाभिषेकोदकेन क्लिन्ना सिक्ता ॥ २७ ॥ पुरा पूर्वजन्मनि । यद्दुष्कृतं कर्मास्ति तत् वनवासेन वनवासक्लेशेन । दत्तफलत्वात् गतं नष्टं ॥ २८ ॥ भूषणानि च मुख्यानि सेवस्व धारयेत्यर्थः ॥ २९ ॥ तरसा बलेन ॥ ३० ॥ विशालं वेशनयोग्यं । "वेः शालच्छङ्कटचौ" इत्यनेन शालच् प्रत्ययः । असंकोचन्यायाद्यावदुपवेशेष्वसंभावनमुपवेशार्हमित्यर्थः ॥ ३१ ॥ न भ्राजति न भासते ॥ ३२ ॥ वदतीति सतिसप्तमी । पिधाय आच्छाद्य ॥ ३३ ॥ इवशब्दोऽवधारणे । यद्वा अस्वस्थामिव भूताविष्टामिवेत्यर्थः ॥ ३४ ॥ हे वैदेहि धर्मलोपकृतेन व्रीडेनालं व्रीडा माभूदित्यर्थः । कुत इत्यत्राह—आर्ष इति । यो दैवनिष्यन्दः दैवकृतसंबन्धः । त्वामभिगमिष्यति । अयं संबन्धः आर्षः ऋषिप्रोक्तः । न त्वधर्म्य इत्यर्थः । अत्र नारदः—"परपूर्वाःस्त्रियस्त्वन्याः सप्त प्रोक्ताः स्वयंभुवा । पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥ कन्यावाक्षतयोनिर्वा पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्मणा ॥ देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्त्यते ॥ मृते भर्तरि तु प्राप्ता देवरादीनपास्य या । उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता" इति ॥ ३५ ॥ एताविति

**शि०** अभिषेकजलक्लिन्ना अभिषेकजलैःस्नानोदकैः क्लिन्ना स्नाता । तुष्टा लङ्काराज्यप्राप्त्याप्राप्तसंतोषाचत्वंमां लङ्कासंपत्तिं । रमयस्वयथेच्छंपालय । एतेनापहरणसमयादारभ्यतावत्कालपर्यन्तंस्नानं तयानकृतमितिसूचितम् ॥ २७ ॥ **ती०** सुकृतफलमपिसमर्पयति—**दुष्कृतमिति** । वनवासेन वनं जलं । जलमध्यस्थलङ्काद्वीपवासिना । मयेति शेषः । पुरायद्दुष्कृतं कर्म कृतमितिशेषः । तद्गतं नष्टं । मदिष्टदेवतायास्तवदर्शनमात्रेणेतिशेषः । पुरामयासुकृतोयोधर्मस्तस्यफलंतेतुभ्यंनिवेदयामि । आप्नुहि गृहाणेत्यर्थः ॥ २८ ॥ **ती०** इहेति । मयासमर्पितानीतिशेषः । सह एकदैव ॥ २९ ॥ **ती०** पुष्पकमित्यादिश्लोकद्वयमेकंवाक्यं । अत्रपुष्पके मयासमर्पितेपुष्पकइत्यर्थः । सार्धं । सर्वसंपद्भिरितिशेषः । विहरस्व ॥ ३०—३४ ॥ **ती०** अलंव्रीडेनेति । वैदेहि धर्मलोपकृतेनालं । व्रीडामाभूदित्यर्थः । कुतइति चेत् । दैवनिष्यन्दः दैवनिपातः यस्संबन्धःत्वामभिगमिष्यति सोयं दैवनिष्यन्दः आवयोर्निष्कारणस्संबन्धइतियावत् । आर्षः ऋषिदृष्टः । अनादिसिद्धइतियावत् । वस्तुतस्तु अलंव्रीडेनेति । भृत्यलक्षणविषयेव्रीडानोचितेत्यर्थः । कोवातोधर्मलोपोभविष्यति । कुतःयोदैवनिष्यन्दः आवयोर्दैवेनसंपादितदासदासवद्भावः अयंसंबन्धः आर्षः अनादिसिद्धः । सएवत्वामभिगमिष्यति नतुनवीनः । अतोव्रीडामाभूदित्यर्थः ॥ **ति०** हेदेवि त्वामभि त्वामुद्दिश्य । मयाक्रियमाणोनिष्पन्दः स्नेहबन्धः प्रार्थनारूपः । यश्चाग्रेभविष्यति सोयमार्षः ऋषिदृष्टएव । क्षत्रियाणामुचितत्वेनवेदोक्तएव । "बलात्कारेणराक्षसः"इतिविवाहेषुस्मृत्यागणनात् । एवमुक्तिरपितमोगुणप्राधान्येनैव । कन्यायाबलात्कारे-

[ **पा०** ] १ ङ.—ट. यच्चतेसुकृतंकर्मतस्येह. २ क.—ट. सर्वाणिमाल्यानि. ३ ङ. च. छ. झ. ञ. ट. तानिसेव. क. निषेवय. ४ ख. चार्जितं. ५ ङ. झ. ञ. ट. रणे. ६ ख. ङ—ट. द्विमानंमनोजवं. ७ च. छ. पुष्पकेऽत्रमया. ८ ख.—ङ. झ. ट. मन्दमश्रूणि. ९ ङ. झ. ट. सीतांचिन्ता. क. च. छ. ज. दीनचित्तां. १० क. च. छ. ज. ञ. सीतांरावणो. ग. ङ. झ. ट. वीरोरावणो. ११ ख. ग. ङ.—ट. रजनीचरः. १२ ख. लोपेनतेनते. क. ग. ङ.—ट. लोपकृतेनते. १३ झ. देविनिष्पन्दो. १४ ख. ग. ङ—ट. मयास्निग्धौ.

ई[1]माः [2]शून्या मया वाचः शुष्यमाणेन भाषिताः ॥ न चापि रावणः कांचिन्मूर्ध्ना स्त्रीं प्रणमेतह ॥३७॥
एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् ॥ कृतान्तवशमापन्नो ममेयमिति मन्यते ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मिकीये आदिकाव्ये आरण्यकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

रावणप्रलोभनैरविकृतमानसयासीतया तृणमन्तरतःकृत्वा तंप्रतिबहुधोपालंभपूर्वकं रामप्रभाववर्णनेन तेनतद्वधस्याव-श्यंभावित्वोक्त्या पश्चात्तूष्णींभावः ॥ १ ॥ रावणेनसीतांप्रति तदादित्रयोदशमासादर्वाक्तनकाले स्वभजनाभावे हननप्रति-ज्ञानपूर्वकं राक्षसीःप्रति सीतायाअशोकवनप्रापणेनतत्र तर्जनप्रलोभनाद्युपायैर्वशीकरणचोदना ॥ २ ॥ राक्षसीभिः सीतायाअशोकवनप्रापणेनाप्रमादेनपरिरक्षणं ॥ ३ ॥

सा तथोक्ता तु वैदेही निर्भया शोककर्शिता ॥ तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १ ॥
राजा दशरथो नाम धर्मसेतुरिवाचलः ॥ सत्यसन्धः परिज्ञातो यस्य पुत्रः स राघवः ॥ २ ॥
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ॥ दीर्घबाहुर्विशालाक्षो दैवतं हि[3] पतिर्मम ॥ ३ ॥
इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः ॥ लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान्[4]हरिष्यति ॥ ४ ॥
प्रत्यक्षं यद्यहं तस्य [5]त्वया स्यां धर्षिता बलात् ॥ शयिता त्वं हतः संख्ये जनस्थाने यथा खरः ॥ ५ ॥
य[6] एते राक्षसाः प्रोक्ता घोररूपा महाबलाः ॥ राघवे निर्विषाः सर्वे सुपर्णे पन्नगा यथा ॥ ६ ॥
तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः ॥ शरीरं विधमिष्यन्ति गङ्गा कूलमिवोर्मयः ॥ ७ ॥
असुरैर्वा [7]सुरैर्वा त्वं यद्यवध्योसि रावण ॥ उत्पाद्य [8]सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८ ॥

तवेति शेषः ॥ ३६ ॥ शुष्यमाणेन अनङ्गेनतप्यमानेन मया । इमाः शून्याः नीचाः वाचो भाषिताः । कुतः यस्माद्रावणः स्त्रीं न प्रणमेत न प्रणमेत् । अदृष्टपूर्वत्वात्स्वस्यापि नीचोक्तिर्विस्मयावहा जातेति भावः ॥३७॥ मन्यते अमन्यत ॥३८॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

तथैतच्छ्रुत्वा परुषं भाषमाणायाः सीतायाः पुनरशोकवनिकानयनं षट्पञ्चाशे । अन्तरतो मध्ये । पतिव्रतायाः परपुरुषं प्रत्यभिमुखतया भाषणायोगात् ॥ १ ॥ धर्मसेतुः धर्मस्य सेतुरिव । मर्यादास्थापक इत्यर्थः । अचलः स्थिरः । परिज्ञातः प्रसिद्धः । कथमेतादृशकुलं प्राप्ताऽतिचरेदिति भावः ॥ २ ॥ सः दशरथपुत्रः । दैवतं सर्वलोकानामिति शेषः । य एवंभूतः स मे पतिरिति योजना । कथमेवंभूतभर्तृकातिचरेदिति भावः ॥ ३ ॥ इक्ष्वाकूणामिति । त्वद्वधार्थमेव भ्रात्रा सह इक्ष्वाकुकुलेऽवतीर्ण इति भावः । तथाच न मे त्वत्तो भयमितिभावः ॥ ४ ॥ तर्हि कथमिदानीं स तूष्णीं स्थित इत्याशङ्क्याह—प्रत्यक्षमिति । प्रत्यक्षं यथातथा यदिधर्षितास्यां तदा त्वं हतः सन् युद्धे शयिता म्रियेथा इत्यर्थः ॥ ५ ॥ निर्विषाः निर्वीर्या इति राक्षसपक्षे ॥ ६ ॥ विधमिष्यन्ति ध्मास्यन्ति निपातयिष्यन्तीत्यर्थः । गङ्गेत्यविभक्तिकनिर्देशः । गङ्गाया ऊर्मय इत्यर्थः ॥ ७ ॥ त्वं सुरासुरैर्यद्यप्यवध्यः तथापि तस्य रामस्य । सुमह-

---

णग्रहणस्यैवराक्षसविवाहपदार्थादितिबोध्यं ॥ ३५ ॥ **ति०** इमाः दासोहमित्यन्ताः । शुष्यमाणेन कामपीडितेनमया । भाषिताः उक्तावाचः । शून्यायथानभवन्ति तथाकुर्वितिशेषः ॥ ३७ ॥ इतिपञ्चपञ्चाशस्सर्गः ॥ ५५ ॥

**ति०** निर्भया स्त्रियाबलादुपभोगे "मूर्धातेनिपतिष्यति" इत्यप्सरसो रावणंप्रति शापंचित्तेविज्ञायनिर्भया । बलात्कारेयोगवशाददृश्याऽस्पृश्याच भविष्यामीतिधियानिर्भयावा ॥ **स०** तृणमन्तरतः मध्येकृत्वा । प्रत्यभाषतेत्यर्थः । अनेनरावणस्याभाष्यत्वं द्योत्यते । वायसासुरशासनंतृणेनैवममपत्याकृतं तवापिदशानन दशातथास्यादितिद्योतयितुमितिवा ॥ १ ॥

**[ पा० ]** १ क. ख. च. छ. ज. ञ. मेमाः. २ झ. शून्यमयाः. ३ क.—ट. सपतिः. ४ ङ. छ.—ट. न्वधिष्यति. ५ ङ. झ. ट. त्वयावै. ६ ख. एतेते. ७ ङ. सुरैर्वापि. ८ ग. सुमहावैरं.

स ते जीवितशेषस्य राघवोऽन्तकरो बली ॥ पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ॥ ९ ॥
यदि पश्येत्स रामस्त्वां रोषदीप्तेन चक्षुषा ॥ रक्षस्त्वमद्य निर्दग्धो गच्छेः सद्यः पराभवम् ॥ १० ॥
यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत वा ॥ सागरं शोषयेद्वाऽपि स सीतां मोचयेदिह ॥ ११ ॥
गतायुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः ॥ लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति ॥ १२ ॥
न ते पापमिदं कर्म सुखोदर्कं भविष्यति॥ याहं नीता विनाभावं पतिपार्श्वात्त्वया वने ॥ १३ ॥
स हि दैवतसंयुक्तो मम भर्ता महाद्युतिः ॥ निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके ॥ १४ ॥
स ते दर्पं बलं वीर्यमुत्सेकं च तथाविधम् ॥ अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥ १५ ॥
यदा विनाशो भूतानां दृश्यते कालचोदितः ॥ तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥ १६ ॥
मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम ॥ आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥ १७ ॥
न शक्या यज्ञमध्यस्था वेदिः स्रुग्भाण्डमण्डिता ॥ द्विजातिमन्त्रपूता च चण्डालेनावमर्दितुम् ॥ १८ ॥
तथाऽहं धर्मनित्यस्य धर्मपत्नी पतिव्रता ॥ त्वया स्प्रष्टुं न शक्याऽस्मि राक्षसाधम पापिना ॥ १९ ॥
क्रीडन्ती राजहंसेन पद्मषण्डेषु नित्यदा ॥ हंसी सा तृणषण्डस्थं कथं पश्येत मद्गुकम् ॥ २० ॥

द्वैरं कोपमुत्पाद्य स्थितस्त्वं जीवन्सन् तच्छरपातान्न मोक्ष्यसे नमुक्तोभविष्यसीत्यर्थः ॥ ८ ॥ स राघवः। ते जीवितशेषस्य अन्तकरः नाशं कर्तुं समर्थः। तस्मात् यूपगतस्यपशोरिव रामापराधिनस्तव। जीवितं दुर्लभं ॥ ९ ॥ हे रक्षः स रामः त्वां रोषदीप्तेनचक्षुषा यदिपश्येत् तदा त्वं निर्दग्धःसन् सद्यः पराभवं गच्छेः। निर्दग्धशब्देनातीव पीडितत्वमुच्यते ॥१०॥ नभसः आकाशात्। पातयेत् नाशयेतवा अदर्शनं प्रापयेद्वा। सागरमपि शोषयेत्। सः सीतांमोचयेदिति किमुत ॥ ११ ॥ त्वत्कृतेन परदाराभिमर्शनरूपपापेन। त्वं आयुरादिहीनोभविष्यसि। लङ्काच वैधव्यसंयुक्ता अनाथत्वयुक्ता भविष्यति। "आयुर्बलं यशो लक्ष्मीः परदाराभिमर्शनात्। सद्यएव विनश्यन्ति" इति स्मृतेः ॥ १२ ॥ याऽहं वने पतिपार्श्वात् विनाभावं वियोगं। नीता। तस्यां मयि ते इदं पापं कर्म सुखोदर्कंनभविष्यति। किंतु दुःखोदर्कमेव भविष्यतीत्यर्थः ॥ १३ ॥ दैवतसंयुक्तः दैवबलसंयुक्तः। दीनस्तापसो रामो मां किं करिष्यतीति पूर्वं रावणेनोक्तस्य परिहारोयम् ॥ १४ ॥ दर्पं मदं। उत्सेकं उल्लङ्घ्य कार्यकारित्वं। गात्रेभ्य इत्युक्तिर्दर्पादीनां देहविशिष्टगुणत्वात् ॥१५॥ लोकन्यायमाह—यदेति। कालचोदितो दैवकृतः विनाशोयदा दृश्यते सन्निहितो भवतीत्यर्थः। तदा कार्ये कृत्ये। प्रमाद्यन्ति वैपरीत्यं प्राप्नुवन्ति ॥ १६ ॥ उक्तं लोकन्यायं प्रकृते योजयति—मामिति। मां प्रधृष्य स्थितस्यतव कालोप्ययमेव वर्तमानएव नतुचिरायेत्यर्थः। आत्मनो राक्षसानामन्तःपुरस्य च वधाय प्राप्तः ॥ १७ ॥ न शक्येत्यादिश्लोकद्वयमेकान्वयं। यज्ञो यज्ञपुरुषः तन्मध्यस्था गार्हपत्याहवनीयमध्यगता। वेदिः ऐष्टिकीमहावेदिः। स्रुग्भाण्डमण्डिता स्रुगाद्युपकरणालंकृता। द्विजातिमन्त्रैः उद्धननादिमन्त्रैः। पूता शुद्धा यथा चण्डालेनावमर्दितुं पादेनाक्रमितुं। न शक्या नार्हा। तथाहं धर्मनित्यस्य नित्यधर्मस्य यज्ञस्थानीयस्य। धर्मपत्नी पतिव्रता। त्वयास्प्रष्टुं न शक्या ॥ १८—१९ ॥ नित्यदा नित्यं।

ती० त्वत्कृतेन त्वन्नाशनिमित्तेन ॥ १२ ॥ शि० तेन रामस्यातिसामर्थ्यविशिष्टत्वेनहेतुना इदमपहरणरूपं पापंकर्मदुःखोदर्कं भविष्यति। नतेइतिपाठे काकुर्बोध्या। अतएव याहंपतिपार्श्वात्विनाभावं पतिसेवाराहित्यं। बलात् हठात् नीता प्रापिता। तां मां रामोनेष्यतीतिशेषः ॥१३ ॥ ति० देवरसंयुक्तः लक्ष्मणसंयुतः। सः खरादिहन्ता ॥१४॥ ति० स्वमरणेनवैधव्यमेवान्तःपुरवधः ॥ १७ ॥ ति० द्रक्ष्येत पश्येत् ॥ २० ॥

[ पा० ] १ ख. रोषाद्दीप्तेन. २ ङ. झ. ट. यथारुद्रेणमन्मथः. ३ ख. च. छ. ञ. शोषयेच्चापि. ४ ङ. छ. झ. ञ. ट. गतासुस्त्वं. ५ ङ. ट. तेन. ६ ङ. ट. दुःखोदर्कं. ७ क. ख. ग. च. ञ. वनात्. ङ. छ. झ. ट. बलात्. ८ क. योहि. ९ ङ. झ. ञ. ट. देवरसंयुक्तो. १० ङ. च. छ. झ. ञ. ट. वीर्यबलंदर्पं. ११ ङ. झ. ट. व्यपनेष्यति. १२ ख. च. छ. ज. ट. मन्त्रसंपूता. १३ ख. नाभिमर्शितुं. १४ ङ.—ट. दृढव्रता. ग. यशस्विनी. १५ ख. शक्यासा. ग. ङ. झ. शक्याहं. १६ क. ङ. छ.—ट. नित्यशः. १७ क. ङ. छ.—ट. तृणमध्यस्थं, १८ क. ग. ङ.—ट. द्रक्ष्येत.

इदं शरीरं निस्संज्ञं बन्ध वा खादयस्व वा ॥ नेदं शरीरं रक्ष्यं[1] मे जीवितं[2] वाऽपि राक्षस ॥ २१ ॥
न तु [3]शक्ष्याम्युपक्रोशं पृथिव्यां दातुमात्मनः ॥ २२ ॥
एवमुक्त्वा तु वैदेही क्रोधात्[4]सुपरुषं वचः ॥ रावणं मैथिली[5] तत्र पुनर्नोवाच किंचन ॥ २३ ॥
सीताया [6]वचनं श्रुत्वा परुषं रोमहर्षणम् ॥ [7]प्रत्युवाच ततः सीतां भयसंदर्शनं वचः ॥ २४ ॥
शृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि ॥ कालेनानेन नाभ्येषि यदि मां चारुहासिनि ॥
ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः ॥ २५ ॥
इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः ॥ राक्षसीश्च [8]ततः क्रुद्ध इदं वचनमब्रवीत् ॥ २६ ॥
शीघ्रमेव हि राक्षस्यो [9]विकृता घोरदर्शनाः ॥ दर्पम[10]स्या विनेष्यध्वं मांसशोणितभोजनाः ॥ २७ ॥
वचनादेव तास्तस्य [11]सुघोरा [12]राक्षसीगणाः ॥ [13]कृतप्राञ्जलयो भूत्वा मैथिलीं[14] पर्यवारयन् ॥ २८ ॥
स [15]ताः प्रोवाच [16]राजा तु रावणो घोरदर्शनः ॥ [17]प्रचाल्य चरणोत्कर्षैर्दारयन्निव मेदिनीम् ॥ २९ ॥
अशोकवनिकामध्ये मैथिली नीयतामि[18]यम् ॥ तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ ३० ॥

नित्यशब्दस्य सर्वैकादिष्वपाठेप्यार्षोदाप्रत्ययः । सा प्रसिद्धा । तृणषण्डस्थं जलजनडादितृणकदम्बमध्यस्थं । मद्गुकं जलकाकं ॥ २० ॥ निःसंज्ञं निश्चेष्टं । बन्ध बधान । खादयस्व भक्षय ॥ २२ ॥ न त्वित्यर्धमेकं वाक्यं । आत्मनः उपक्रोशं अपवादं । पृथिव्यां दातुं नशक्ष्यामि ॥ २२ ॥ तत्र तद्विषये । क्रियाभेदात्पुनर्मैथिलीशब्दप्रयोगः ॥ २३ ॥ रोमहर्षणं क्रोधावहत्वाद्रोमाञ्चकरं । भयसंदर्शनं भयोत्पादकं॥२४॥ शृण्वित्यादिसार्धश्लोक एकान्वयः । द्वादश मासानित्यत्यन्तसंयोगे द्वितीया । प्रतीक्ष इति शेषः। प्रातराशार्थं प्रातर्भक्षणार्थं । सूदाः पाचकाः "सूदाऔदनिका गुणाः" इत्यमरः । सीताहरणं चैत्रमास इत्यवगन्तव्यं । संवत्सरान्ते रावणवधकरणात् । तेन त्रीन्वर्षान्पञ्चवट्यां रामःस्थित इति गम्यते । हेमन्तवर्णनं तु रामतपोविशेषज्ञापनाय नशूर्पणखागमनज्ञापनाय ॥२५॥ शत्रून् रावयति क्रोशयतीति शत्रुरावणः ॥२६॥ विनेष्यध्वं विनयध्वं । व्यत्ययेन स्यादेशः ॥२७॥ कृतप्राञ्जलयः रावणवाक्याङ्गीकारे कृतप्रकृष्टाञ्जलयः ॥२८॥ चरणोत्कर्षैः चरणाघातैः । मेदिनीं भुवं । दारयन्निव भिन्दन्निव । प्रचाल्य गत्वा उत्थायवा ताः प्रोवाच ॥ २९ ॥ युष्माभिःपरिवारिता युष्माभिः रक्ष्य-

ति० निस्संज्ञं स्वतोजडं ॥ २१ ॥ ती० वस्तुतस्तु हेवैदेहि मेवाक्यंशृणु । तत्किं द्वादशमासान् द्वादशमासपर्यन्तं । प्रतीक्षइतिशेषः । अनेनकालेननाभ्येषि । द्वादशमासपर्यन्तं भृत्यानुग्रहार्थंअत्रस्थातुंनाङ्गीकरोषियदीत्यर्थः । ततस्त्वामुद्दिश्य प्रातराशार्थं प्रातः प्रातरेव आशार्थं आशासुस्थितगृध्राद्यर्थं । सूदाः मांछेत्स्यन्ति । मदाज्ञयैवेतिशेषः । देवि मांभृत्यत्वेननाङ्गीकरोषियदि अहमितःपरं जीवितुंनेच्छामि । मांशस्त्रैश्छित्वाकाकगृध्राद्यर्थंप्रयच्छतेतिममाज्ञयैवसूदास्तथाकरिष्यन्तीतिभावः । ति० यत्तुपाद्मे—"दशमासात्परंसीतेयदिमांनभजिष्यसि । तदाहन्मि" इत्युक्तं तत्तु पुनस्सीतासविधगमनकालिकंवचइतिनविरोधः । नाभ्येषि स्वारस्येनेतिशेषः ॥ स० पद्मपुराणे "दशमासात्परंसीते" इत्येवकथनात् द्वादशमासानन्तर्यस्यापिदशमासानन्तर्यसंभवान्नविरोधः । यद्वा दशचमासौचतेषांसमाहारः । दशपदार्थैमासपदार्थस्यबुद्ध्याविवेकेनान्वयः । अतोद्वादशमाससंपत्तिरितिनविरोधः ॥ २५ ॥ ती० वस्तुतस्तु हेराक्षस्यः मांसशोणितभोजनाः घोरदर्शनाश्चयूयंशीघ्रमविकृताः अविरूपाभूत्वा । दर्पंविनाअस्यास्समीपे इष्यध्वं सेवार्थंस्थातुमिच्छतेत्यर्थः । छादेशाभावादिरार्षः ॥ २७ ॥

[ पा० ] १ घ. रक्षिष्ये. २ च. छ. ज. ञ. चापि. ३ ख. ङ. छ. ट. शक्ष्याम्यपक्रोशं. झ. शक्यमपक्रोशं. ४ क. ख. त्सपरुषं. ५ ङ. छ. झ. ट. जानकी. ६ घ. परुषंश्रुत्वावचनं. ७ ख. रावणःपरमःक्रुद्धइदंवचनमब्रवीत्. ८ ख. तदा. ९ ङ. च. छ. झ. ञ. ट. विरूपाः. १० ङ.—ट. मस्यापनेष्यन्तु. क. ग. मस्याविनेष्यन्तु. ख. मस्यापनेष्यध्वं. ११ क. ग. च. छ. ज. ञ. विकृताः. १२ क. ग. ङ.—ट. घोरदर्शनाः. १३ ख. ततःप्राञ्जलयो. १४ क. च. छ. ज. ञ. जानकीं. १५ ग. ताश्चोवाच. १६ ख. ङ. झ. ट. राजासौ. १७ ङ. झ. ट. प्रचल्य. च. छ. ज. प्रचार्य. १८ ग. ङ. झ. ट. मिति. ख. घ. मितः.

तत्रैनां तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम् ॥ आनयध्वं वशं सर्वा वन्यां गजवधूमिव ॥ ३१ ॥
इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ॥ अशोकवनिकां जग्मुर्मैथिलीं प्रतिगृह्य तु ॥ ३२ ॥
सर्वकालफलैर्वृक्षैर्नानापुष्पफलैर्वृताम् ॥ सर्वकालमदैश्चापि द्विजैः समुपसेविताम् ॥ ३३ ॥
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ॥ राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा ॥३४॥
शोकेन महता ग्रस्ता मैथिली जनकात्मजा ॥ न शर्म लभते भीरुः पाशबद्धा मृगी यथा ॥ ३५॥
न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता ॥
पतिं स्मरन्ती दयितं च दैवतं विचेतनाऽभूद्भयशोकपीडिता ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

# अथ प्रक्षिप्तसर्गः ।

प्रवेशितायां सीतायां लङ्कां प्रति पितामहः ॥ तदा प्रोवाच देवेन्द्रं परितुष्टं शतक्रतुम् ॥ १ ॥
त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च ॥ लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥ २ ॥
पतिव्रता महाभागा नित्यं चैव सुखैधिता ॥ अपश्यन्ती च भर्तारं पश्यन्ती राक्षसीजनम् ॥ ३ ॥
राक्षसीभिः परिवृता भर्तृदर्शनलालसा ॥ निविष्टा हि पुरी लङ्का तीरे नदनदीपतेः ॥ ४ ॥

---

तां ॥ ३० ॥ अत्यन्तभयेन प्राणवियोगो माभूदिति पुनः सान्त्वैरित्युक्तं ॥३१॥ प्रतिगृह्य आदाय ॥३२॥ सर्वस्मिन्नपि काले फलानि येषां ते सर्वकालफलाः तैः। एवमुत्तरत्रापिजग्मुरिति पूर्वेणान्वयः ॥३३॥ राक्षसीत्यविभक्तिकनिर्देशः। राक्षसीनामित्यर्थः ॥३४॥ लभते अलभत ॥ ३५ ॥ तत्र अशोकवनिकायां । दयितं प्राणवल्लभं । ननु सीता लक्ष्म्याअवतार इति सिद्धं । वक्ष्यति हि "सीतालक्ष्मीर्भवान्विष्णुः" इति । विष्णुपुराणे चोक्तं "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि"इति । एवंभूतांसीतां समरसीमनिजनितमूर्च्छालक्षणंलक्ष्मणमप्युद्धर्तुमसमर्थो रावणः कथं बलात्करोति स्म । वक्ष्यति हि "हिमवान्मन्दरो मेरुस्त्रैलोक्यंवासहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः" इति । उच्यते । वेदवतीरूपपूर्वजन्मनि देवी तथा संकल्पितवती । उक्तं ह्युत्तरकाण्डे "यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने । तस्मात्तव वधार्थं वै उत्पत्स्येहं महीतले" इति ॥ देवकार्यनिर्वाहाय स्वयमेव स्वधर्षणमङ्गीचकार । प्रजायां कूपपतितायां यथा माता स्वयंतदुपरिपतति वात्सल्यातिशयेन तथा रावणबन्दीकृतदेवस्त्रीरक्षणाय स्वयं तत्रस्वगमनमनुमतवती । वक्ष्यति सुन्दरकाण्डे "नापहर्तुमहं शक्या तस्य रामस्य धीमतः । विधिस्तव वधार्थाय विहितो नात्र संशयः" इति ॥ तर्हि सीता प्रलापादिकं किमर्थं कृतवतीति चेत् शृणु। पतिविरहे पतिव्रतयैवं वर्तितव्यमिति लोकहितप्रवर्तनाय प्रलापादिकमकरोदिति ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

**ती०** घोरैस्तर्जनैः विनेतिविशेषः। पुनस्सान्त्वैरेववशमानयध्वं ॥ ३१ ॥ **शि०** सर्वकामफलैः सर्वान्कामान्फलन्तितैर्वृक्षैः कल्पतरुभिः ॥ ३३ ॥ **ती०** सर्गश्रवणफलंस्कान्दे—"सीतारावणसंवादं राक्षसीनांचतर्जनम् । सीताप्रत्युक्तिकथनं येश्शृण्वन्तिनरोत्तमाः । विधूतपापास्तेयान्तिब्रह्मलोकंसनातनम्"इति ॥ ३६ ॥ इतिषट्पञ्चाशस्सर्गः ॥ ५६ ॥

[ **पा०** ] १ च. छ. ज. ञ. आनयध्वंहिविवशां. २ ग. ङ. झ. ट. परिगृह्यतु. ञ. परिगृह्यतां. च. छ. ज. परिगृह्यताः. ३ ग.—ट. कामफलैः. ४ घ. युतां. ५ क. कामप्रदैश्चापि. ६ क. ङ.—ञ. त्रस्ता. ७ ख. ङ. झ. ट. चदेवरं. ग. च. छ. ज. ञ. सलक्ष्मणं. क. चराघवं. ८ अयंप्रक्षिप्तस्सर्गः ङ. झ. पुस्तकयोर्दृश्यते.

कथं ज्ञास्यति तां रामस्तत्रस्थां तामनिन्दिताम् ॥ दुःखं संचिन्तयन्ती सा बहुशः परिदुर्लभा ॥५॥
प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्यसंशयम् ॥ स भूयस्संशयो जातः सीतायाः प्राणसंक्षये ॥ ६ ॥
स त्वं शीघ्रमितो गत्वा सीतां पश्य शुभाननाम् ॥ प्रविश्य नगरीं लङ्कां प्रयच्छ हविरुत्तमम् ॥७॥
एवमुक्तोथ देवेन्द्रः पुरीं रावणपालिताम् ॥ आगच्छन्निद्रया सार्धं भगवान्पाकशासनः ॥ ८ ॥
निद्रां चोवाच गच्छ त्वं राक्षसान्संप्रमोहय । सा तथोक्ता मघवता देवी परमहर्षिता ॥
देवकार्यार्थसिद्ध्यर्थं प्रामोहयत राक्षसान् ॥ ९ ॥
एतस्मिन्नन्तरे देवस्सहस्राक्षः शचीपतिः ॥ आससाद वनस्थां तां वचनं चेदमब्रवीत् ॥ १० ॥
देवराजोस्मि भद्रं ते इह चास्मि शुचिस्मिते ॥ अहं त्वां कार्यसिद्ध्यर्थं राघवस्य महात्मनः ॥ ११ ॥
साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥ मत्प्रसादात्समुद्रं स तरिष्यति बलैस्सह ॥ १२ ॥
मयैवेह च राक्षस्यो मायया मोहिताश्शुभे ॥ तस्मादन्नमिदं सीते हविष्यान्नमहं स्वकम् ॥ १३ ॥
स त्वां संगृह्य वैदेहि आगतः सह निद्रया ॥ एतदत्स्यसि मद्धस्तान्न त्वां बाधिष्यते शुभे ॥ १४ ॥
क्षुधा तृषा च रंभोरु वर्षाणामयुतैरपि ॥ एवमुक्ता तु देवेन्द्रमुवाच परिशङ्किता ॥ १५ ॥
कथं जानामि देवेन्द्रं त्वामिहस्थं शचीपतिम् ॥ देवलिङ्गानि दृष्टानि रामलक्ष्मणसंनिधौ ॥ १६ ॥
तानि दर्शय देवेन्द्र यदि त्वं देवराट् स्वयम् ॥ सीताया वचनं श्रुत्वा तथा चक्रे शचीपतिः ॥१७॥
पृथिवीं न पृशत्पद्भ्यामनिमेषेक्षणानि च ॥ अरजोऽम्बरधारी च नम्लानकुसुमस्तथा ॥ १८ ॥
तं ज्ञात्वा लक्षणैः सीता वासवं परिहर्षिता ॥ उवाच वाक्यं रुदती भगवद्राघवं प्रति ॥ १९ ॥
सह भ्रात्रा महाबाहुर्दिष्ट्या मे श्रुतिमागतः ॥ यथा मे श्वशुरो राजा यथा च मिथिलाधिपः ॥२०॥
तथा त्वामद्य पश्यामि सनाथो मे पतिस्त्वया ॥ तवाज्ञया च देवेन्द्र पयोभूतमिदं हविः ॥
अशिष्यामि त्वया दत्तं रघूणां कुलवर्धनम् ॥ २१ ॥
इन्द्रहस्ताद्गृहीत्वा तत्पायसं सा शुचिस्मिता ॥ न्यवेदयत भर्त्रे सा लक्ष्मणाय च मैथिली ॥२२॥
यदि जीवति मे भर्ता सह भ्रात्रा महाबलः ॥ इदमस्तु ततोभक्त्या तदाश्नात्पायसं स्वयम् ॥२३॥

इतीव तत्प्राश्य हविर्वरानना जहौ क्षुधादुःखसमुद्भवं च तम् ॥
इन्द्रात्प्रवृत्तिमुपलभ्य जानकी काकुत्स्थयोः प्रीतमना बभूव ॥ २४ ॥
स चापि शक्रस्त्रिदिवालयं तदा प्रीतो ययौ राघवकार्यसिद्धये ॥
आमन्त्र्य सीतां स ततो महात्मा जगाम निद्रासहितः स्वमालयम् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे प्रक्षिप्तः सर्गः ॥

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

मारीचमारणानन्तरं स्वकण्ठरवानुकारिमारीचकण्ठरवश्रवणाद्दुर्निमित्तदर्शनाच्च सीताया विपदाशङ्कया त्वरितमागच्छता रामेण मध्येमार्गं लक्ष्मणदर्शनं ॥ १ ॥ तथा लक्ष्मणंप्रति विजनेसीतात्यागेनागमस्यानौचित्योक्त्योपालंभपूर्वकं दुर्निमित्तप्रदर्शनेन सीताया राक्षसैर्हरणमारणादिसंभावना ॥ २ ॥

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् ॥ निहत्य रामो मारीचं तूर्णं पथि निवर्तते ॥ १ ॥

एवमियता ग्रन्थसंदर्भेण सीताहरणवृत्तान्तमुपवर्ण्य | अथ रामस्य मृगानुसरणकथाशेषं दर्शयितुमारभते—

स० राक्षसमिति । प्रवेशितायामित्यादिर्मध्ये एकःसर्गः प्रक्षिप्तः क्वचित्पुस्तकेदृश्यते । सचमूलकोशेष्वदर्शनान्नव्याख्यातः

[ पा० ] १ क. च.—ट. न्यवर्तत.

तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ॥ क्रूरस्व[1]नोथ गोमायुर्विननादास्य पृष्ठतः ॥ २ ॥
स[2] तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् ॥ चिन्[3]तयामास गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥
अशुभं बत मन्येहं गोमायुर्वाश्यते यथा ॥ स्वस्ति स्या[4]दपि वैदेह्या राक्षसैर्भक्षणं विना ॥ ४ ॥
मारीचेन तु विज्ञाय स्वरमा[5]लम्ब्य मामकम् ॥ विक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयाद्यदि ॥ ५ ॥
स सौमित्रिः स्वरं श्रुत्वा तां च हित्वा[6] च मैथिलीम् ॥ तयैव प्रहितः क्षिप्रं मत्सकाशमिहैष्यति ॥ ६ ॥
राक्षसैः सहितैर्नूनं सीताया ईप्सितो वधः ॥ काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥ ७ ॥
दूरं नीत्वा[7] तु मारीचो राक्षसोऽभूच्छराहतः ॥ हा लक्ष्मण हतोस्मीति यद्वाक्यं व्याजहार[8] च ॥ ८ ॥
अपि स्वस्ति भवे[9]त्ताभ्यां [10]रहिताभ्यां म[11]हावने ॥ जनस्थाननिमित्तं हि कृतवैरोसि राक्षसैः ॥ ९ ॥
निमित्तानि च घोराणि दृ[12]श्यन्तेऽद्य बहूनि च ॥ इत्येवं चिन्तयन्रामः श्रुत्वा गोमायुनिस्स्वनम् ॥ १० ॥
[ नि[13]वर्तमानस्त्वरितो जगामाश्रममात्मवान् ॥ ]
आत्मनश्चा[14]पनयनान्मृगरूपेण रक्षसा ॥ आजगाम जनस्थानं राघवः परिशङ्कितः ॥ ११ ॥
तं दीन[15]मनसो दीनमासेदुर्मृगपक्षिणः ॥ सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥ १२ ॥
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ॥ न्यवर्तताथ त्वरितो जवेनाश्रममात्मनः ॥ १३ ॥
स[16] तु सीतां वरारोहां लक्ष्मणं च महाबलम् ॥ आजगाम जनस्थानं चिन्तयन्नेव राघवः ॥ १४ ॥

---

राक्षसमित्यादिना । निवर्तते न्यवर्तत ॥ १ ॥ द्रष्टुकामस्य । तदर्थत्वरमाणस्येति संबन्धः । गोमायुः क्रोष्टा । एकस्य गोमायोः पृष्ठतः क्रूरस्वरकरणं दुर्निमित्तमिति भावः ॥ २ ॥ भयंकरत्वेन रोमहर्षणमित्युच्यते । पूर्वमेव मारीचस्वरेण परिशङ्कितः संजातशङ्कः । स रामः तस्य गोमायोः स्वरं आज्ञाय श्रुत्वा । चिन्तयामास ॥ ३ ॥ चिन्तामेवाह— अशुभमित्यादिना । गोमायुः यथा येन प्रकारेण । वाश्यते शब्दायते । तेन प्रकारेणाशुभं मन्ये । अपिः संभावनायां ॥ ४ ॥ मारीचेनेत्यादिश्लोकद्वयमेकान्वयं । मृगरूपेण मारीचेन मामकं मदीयं । स्वरंविज्ञाय मामकं स्वरं आलम्ब्य अनुसृत्य । विक्रुष्टं हा सीते लक्ष्मणेत्याह्वानेनोद्घोषितंस्वरं । लक्ष्मणः शृणुयाद्यदि तदा स सौमित्रिर्मामकं स्वरं श्रुत्वा तं स्वरं श्रुतवत्या तया सीतया च प्रेषितः सन् इहदेशे मत्सकाशं मत्समीपं एष्यति ॥ ५—६ ॥ राक्षसैरित्यादिश्लोकद्वयमेकान्वयं । यद्यस्मान्मारीचः काञ्चनः मृगो भूत्वा मामाश्रमाद्व्यपनीय दूरं नीत्वा मया हतःसन् राक्षसोभूत् लक्ष्मण हतोस्मीति वाक्यं व्याजहार च तस्मात्कचित्सहितैः राक्षसैः सीताया वधः ईप्सितः । नूनं ॥ ७—८ ॥ जनस्थाननिमित्तं जनस्थानवासनिमित्तेन । निमित्तकारणहेतूनां सर्वासामिष्टिः ॥ ९ ॥ निमित्तानीत्यादिश्लोकद्वयमेकान्वयं । गोमायुनिस्वनं श्रुत्वा मृगरूपेण रक्षसाऽऽत्मनः अपनयनात् आश्रमादपकर्षणाच्च । परिशङ्कितः सन् जनस्थानं आजगाम ॥ १०—११ ॥ सव्यंकृत्वा अप्रदक्षिणंकृत्वा आसेदुः ॥ १२ ॥ त्वरितः मानसिकत्वरासहितः । जवेन कायिकत्वरया ॥ १३ ॥ सीतां लक्ष्मणं च

॥१॥ शि० तस्यगोमायोःस्वरं दारुणं दारुणकर्मसूचकं । आज्ञाय निश्चित्य । स्वरेण स्वशब्दानुकारकमारीचस्वनेन । परिशङ्कितः ॥ ३ ॥ ति० मारीचेन मामकस्वरं विज्ञाय मामकस्वरध्वनिंज्ञात्वा । आलक्ष्य मदपकारोपायमवधार्य । यन्मृगरूपेणतेनाक्रुष्टं हासीतेलक्ष्मणेतिच । तद्यदिलक्ष्मणःशृणुयात् ॥ ५ ॥

[ पा० ] १ क.—घ. छ. ज. स्वरोथ. २ क. ग. तस्यसस्वरं. च. छ. ज. ञ. तस्यस्वरमथालक्ष्य. क. तस्यसस्वरमालक्ष्य. ३ ङ. झ. शङ्कयामास. ख. च. छ. ज. ञ. रामःप्रोवाचगोमायोः. ४ ख. घ. छ. ज. ञ. स्यादथ. ५ क.—ट. मालक्ष्य. ६ क. ङ. च. ज.—ट. हित्वाथ. घ. छ. हित्वातु. ७ ङ. झ. ट. नीत्वाथ. ८ क.—ट. व्याजहारह. ९ ङ. झ. ट. भवेद्वाभ्यां. १० घ. राक्षसानां. ११ क. ख. ग. ङ.—ट. मयावने. १२ क. च. छ. ज. ञ. दृश्यन्तेत्र. १३ इदमर्धं ख.—ट. पाठेषु दृश्यते. १४ क. ग. ङ.—ट. श्चापनयनंमृगरूपेण. १५ ख. ग. ङ. झ. ञ. ट. दीनमानसं. १६ क. घ. सीतांसतु.

ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् ॥ १५ ॥
ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ॥ विषण्णः [1]सुविषण्णेन दुःखितो दुःखभागिना ॥१६॥
सञ्जगर्हेऽथ तं भ्राता [2]ज्येष्ठो लक्ष्मणमागतम् ॥ विहाय सीतां विजने वने राक्षससेविते ॥ १७ ॥
गृहीत्वा च करं [3]सव्यं लक्ष्मणं रघुनन्दनः ॥ उवाच मधुरोदर्कमिदं परुष[4]मार्तिमत् ॥ १८ ॥
अहो लक्ष्मण गर्ह्यं ते कृतं [5]यस्त्वं विहाय ताम् ॥ सीतामिहागतः सौम्य कच्चित्स्वस्ति [6]भवेदिह ॥ १९ ॥
न मेऽस्ति संशयो वीर सर्वथा जनकात्मजा ॥ विनष्टा भक्षिता वापि राक्षसैर्वनचारिभिः ॥
अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ॥ २० ॥
अपि लक्ष्मण सीतायाः [7]सामग्र्यं [8]प्राप्नुयावहे ॥ जीवन्त्यः पुरुषव्याघ्र सुताया [9]जनकस्य वै ॥२१॥
यथा वै मृगसंघाश्च [10]गोमायुश्चैव भैरवम् ॥ वाश्यन्ते शकुनाश्चापि प्रदीप्तामभितो दिशम् ॥ २२ ॥
अपि स्वस्ति [11]भवेत्तस्या राजपुत्र्या महाबल ॥ २३ ॥

इदं हि रक्षो मृगसन्निकाशं प्रलोभ्य मां दूरमनुप्रयान्तम् ॥
हतं कथंचिन्महता श्रमेण स राक्षसोभून्म्रियमाण एव ॥ २४ ॥
मनश्च मे दीनमिहाप्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् ॥
असंशयं लक्ष्मण नास्ति सीता हृता मृता वा पथि वर्तते वा ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

चिन्तयन्नेवाजगाम ॥ १४ ॥ तत इत्यर्धमेकं वाक्यं ॥ १५ ॥ ततो दर्शनानन्तरं । अविदूरे समीपे । समीयाय संगतः । दुःखभागिनेत्यर्थः "संपृच—"इत्यादिसूत्रेण घिनुण्प्रत्ययः ॥ १६ ॥ विजने स्वजनरहिते ॥ १७ ॥ सव्यं करं गृहीत्वा लक्ष्मणमुवाच । कथं परुषं अथ मधुरोदर्कं मधुरोत्तरं । आर्तिमत् आर्तियुक्तं । सर्वमिदं क्रियाविशेषणं । अहो इत्यादि परुषं । लक्ष्मणेत्यादि मधुरं ॥१८॥ ते त्वया । इत्युवाचेत्यन्वयः ॥ १९ ॥ केनापिहेतुना विनष्टा वा राक्षसैर्भक्षिता वा । उक्तार्थे हेतुमाह—अशुभानीत्यर्धेन । भूयिष्ठं बहुलं यथा तथा ॥ २० ॥ अपिः प्रश्ने । सामग्र्यं अक्षतत्वं । क्षेममिति यावत् । हे लक्ष्मणेति सम्बन्धः ॥ २१ ॥ सामग्र्यप्राप्तिसंशये कारणमाह—यथेति । प्रदीप्तां दिशं सूर्याधिष्ठिता तत्पार्श्वद्वयदिशौ च प्रदीप्ता तामभिमुखं वाश्यन्ते नदन्ति। तेन वायसादिपक्षिणां शृगालादीनां कृष्णसारादिमृगाणां च सूर्याधिष्ठितदिशि कूजनं दुःखसूचकमित्युक्तं ॥ २२ ॥ चिन्तातिशयेन पुनरप्याह— अपि स्वस्तीति । अर्धमेकान्वयं ॥ २३ ॥ लक्ष्मणाय दर्शयति—इदमिति । मृगसन्निकाशं पूर्वं मृगवद्भातं । इदं रक्षः महता श्रमेण उपलक्षितं मां प्रलोभ्य कथंचिद्धतं । कथंचिदित्यनेन चिरं लक्ष्यवधाप्राप्तिर्द्योत्यते । मृगत्वं कुतो गतमित्यत्राह—स इति । सः म्रियमाणः सन् राक्षस एवाभूदित्यर्थः ॥ १४ ॥ निमित्तान्तरेणापि सीताहानिमनुमिनोति—मनश्चेति। इह सीतावियोगविषये । अप्रहृष्टं विकारं स्फुरणं । नास्तीति आश्रम इति शेषः ॥ २५ ॥ इति श्रीगोविन्दराजीये...

---

ति० यद्वा मधुरोदर्कं तात्पर्यतोमधुरं । आपाततःपरुषं ॥ १८ ॥ शि० जनकस्यसुतायास्सीतायाः सामग्र्यं अविच्छिन्नावयवत्वं । प्राप्नुयामहेअपि । अपिस्संभावनार्थकः ॥ २१ ॥ स० कथंचित् महताश्रमेणेतिलोकानुकरणं ॥ २४ ॥ शि० सीतानास्ति अभावप्रतियोगिनी । ननुनित्यायाःकथमभावप्रतियोगित्वमित्यतआह । अमृता नित्यापिसीता असंशयंयथाभवतितथाहृतासतीपथ्येववर्तते । एकोवाशब्दोप्यर्थे द्वितीयएवार्थे ॥ २५ ॥ इतिसप्तपञ्चाशस्सर्गः ॥ ५७ ॥

[ पा० ] १ ङ. झ. सन्विषण्णेन. ख. घ. सविषण्णेन. २ क. ग. ङ.—ट. दृष्ट्वा. ३ ख. तस्य. ४ ख. घ. ङ. छ. झ. ञ. ट. मार्तवत्. ५ क. च. छ. ज. ञ. यत्तु. यत्त्वं. ६ ख. ग. ङ. च. झ. ञ. ट. भवेदिति. ७ ख. ग. घ. सकाशं. ८ ङ.—ट. प्राप्नुयामहे. ९ ख. जनकस्यच. १० च. छ. ज. ञ. गोमायुश्चाथ. क. ख. गोमायुश्चापि. ११ च. छ. ज. ञ. भवेदस्याः.

# अष्टपञ्चाशः सर्गः ॥ ५८ ॥

रामेण लक्ष्मणंप्रति सीतागुणानुवर्णनपूर्वकं तद्वियोगे स्वस्यदुर्जीवत्वोक्त्या बहुधाशोचनं ॥ १ ॥ तथा मारीचाक्रोशनश्रवणात्सीतया लक्ष्मणप्रेषणसंभावनापूर्वकं स्वकृतखरवधप्रतिचिकीर्षया राक्षसैः सीताहननसंभावना ॥ २ ॥

[1]स दृष्ट्वा लक्ष्मणं [2]दीनं [3]शून्ये दशरथात्मजः ॥ पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥ १ ॥
प्रस्थितं दण्डकारण्यं या मामनुजगाम ह ॥ क्व सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २ ॥
राज्यभ्रष्टस्य दीनस्य दण्डकान्परिधावतः ॥ क्व सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३ ॥
यां विना नोत्सहे वीर मुहूर्तमपि जीवितुम् ॥ क्व सा प्राणसहाया मे सीता सुरसुतोपमा ॥ ४ ॥
पतित्वम[4]मराणां वा पृथिव्याश्चापि लक्ष्मण ॥ [5]तां विना त[6]पनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५ ॥
कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम ॥ कच्चित्प्रव्राजनं [7]सौम्य न मे मिथ्या भविष्यति ॥ ६ ॥
सीतानिमित्तं सौमित्रे मृते मयि गते त्वयि ॥ कच्चित्सकामा सुखिता कैकेयी सा भविष्यति ॥ ७ ॥
[8]सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी ॥ उपस्थास्यति कौसल्या कच्चित्[9]सौम्य न कैकयीम् ॥ ८ ॥
यदि जीवति वैदेही गमिष्याम्याश्रमं [10]पुनः ॥ [11]सुवृत्ता यदि वृत्ता सा प्राणांस्त्यक्ष्यामि लक्ष्मण ॥ ९ ॥
यदि मामाश्रमगतं वैदेही नाभिभाषते ॥ [12]पुनः प्रहसिता सीता विनशिष्यामि लक्ष्मण ॥ १० ॥
ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा ॥ त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा तपस्विनी ॥ ११ ॥

---

न्द्रराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

अथ सीताप्राप्तिसंदेहकृतशोकप्रलापोऽष्टपञ्चाशे । शून्ये वने वैदेहीं विना आगतं वैदेहीं विसृज्यागतं । लक्ष्मणं पर्यपृच्छत पर्यपृच्छत् ॥ १ ॥ प्रश्नस्वरूपमाह—प्रस्थितमित्यादिना । दण्डकारण्यं प्रति प्रस्थितं ॥ २ ॥ दुःखसहाया समानदुःखेत्यर्थः ॥ ३ ॥ सुरसुता सुरस्त्री ॥ ४ ॥ तपनीयं स्वर्णं । इच्छेयं इच्छामि ॥ ५ ॥ प्राणैः प्राणेभ्यः । प्रव्राजनं चतुर्दशवर्षवनवासः । मिथ्या असत्यं । न भविष्यतीति कच्चित् । चतुर्दशवर्षासमाप्तावेव सीतावियोगजं जीववियोगं किं प्राप्स्यामीत्यर्थः ॥ ६ ॥ सीतानिमित्तं सीताविनाशनिमित्तं । त्वयिगते अयोध्यामिति शेषः । सकामेत्यनेन रामस्य हृदये कैकेयी स्वविनाशार्थमेव वनं प्रेषितवतीति सदा वर्तते । तदिदानीं "सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टं" इति न्यायेन व्यक्तीकृतं ॥ ७ ॥ तपस्विनी शोच्या ॥ ८ ॥ वृत्ता परेता । सुवृत्ता स्वाचारा ॥ ९ ॥ प्रहसिता प्रहसितमुखी ॥ १० ॥ यदि जीवति तदा ब्रूहि वद । वैदेही जीवतिवा नवा । न

---

ति० शून्यं संतोषादिहीनचित्तं ॥ स० यादुःखसहाया कष्टकालेपिसहायभूता ॥ ३ ॥ ति० प्राणसहाया तांविनाअसहायाः प्राणाः कथंस्थास्यन्तीतिभावः ॥ ४ ॥ शि० ममप्राणैः प्रियतरावैदेही कच्चिज्जीवति । मेप्रव्राजनं प्रव्राजनसंबन्धिव्रतं । नगरप्रवेशाभावादि मिथ्या असत्यंकच्चिन्नभविष्यति । एतेन यदिनगरमध्येएवसीताऽपहृत्यसंस्थापिता तर्हितदानयनं नगरप्रवेशमन्तरा कथंसंभवेदितिरामविचारस्सूचितः । तेनापहृतापिनगराद्बहिः संस्थापिताचेच्छोभनमितितदभिप्रायोव्यञ्जितः ॥ ६ ॥ शि० हेसौमित्रे सीतानिमित्तं मयित्वयिच मृते राक्षसमृतत्वे । गते प्रापितेसति । सकामा राक्षसवधविषयकेच्छावतीकैकेयी सुखिताकच्चिद्भविष्यति ॥ ७ ॥ शि० सपुत्रराज्यांमद्विषयकातिप्रीतिपुत्रशोभासहितां । सिद्धार्थां सिद्धोर्थः राक्षसवधरूपंप्रयोजनंयस्यास्तां कैकेयीं । मृतःराक्षसघातकः पुत्रोयस्यास्सा कौसल्या कच्चिदुपस्थास्यति प्रशंसिष्यति ॥ ती० सौम्येन विनयेन ॥ ८ ॥ शि० आश्रमगतंमां प्रहसितावैदेही यदिपुनर्नाभिभाषते नाभिभाषिष्यते राक्षसकृतपीडाजनितमूर्छादिनायदिकिंचिन्नवक्ष्यतीत्यर्थः । तर्हिविनशिष्यामि राक्षसान्विनाशयिष्यामि ॥ १० ॥

[ पा० ] १ ग. दृष्ट्वातु. २ घ. दीनः. ३ ग. ङ. झ. ट. शून्यं. ४ ङ. झ. ट. ममराणांहि. क. च. छ. ज. ञ. ममराणांच. ५ ग. ङ.—ट. विनातां. ६ क. तपनीयाङ्गीं. ७ ङ. झ. ट. वीर. ८ ख. च. छ. ञ. तांपुत्रराज्यसिद्धार्थां. ९ च. छ. सौम्येन. १० ख. ङ. ट. प्रति. ११ झ. संवृत्ता. १२ झ. पुरः.

सुकुमारी च बाला च नित्यं [1]चादुःखदर्शिनी ॥ मद्वियोगेन वैदेही व्यक्तं शोचति [2]दुर्मनाः ॥ १२ ॥
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना ॥ वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयम् ॥ १३ ॥
[3]श्रुतस्तु शङ्के वैदेह्या [4]स स्वरः सदृशो मम ॥ त्रस्तया प्रेषितस्त्वं च [5]द्रष्टुं मां शीघ्रमागतः ॥ १४ ॥
सर्वथा तु कृतं कष्टं सीतामुत्सृजता वने ॥ प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् ॥ १५ ॥
दुःखिताः खरघातेन राक्षसाः पिशिताशनाः ॥ तैः सीता निहता घोरैर्भविष्यति न संशयः ॥ १६ ॥
[6]अहोस्मिन्व्यसने मग्नः सर्वथा [7]शत्रुसूदन ॥ [8]किंन्विदानीं करिष्यामि शङ्के प्राप्तव्यमीदृशम् ॥ १७ ॥
इति सीतां वरारोहां [9]चिन्तयन्नेव राघवः ॥ आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥ १८ ॥

विगर्हमाणोनुजमार्तरूपं क्षुधा [10]श्रमाच्चैव पिपासया च ॥
विनिःश्वसञ्शुष्कमुखो [11]विवर्णः प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९ ॥
स्वमाश्रमं संप्रविगाह्य [12]वीरो विहारदेशाननुसृत्य कांश्चित् ॥
एतत्तदित्येव निवासभूमौ प्रहृष्टरोमा व्यथितो बभूव ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टपञ्चाशस्सर्गः ॥ ५८ ॥

---

वेत्यस्य विवरणं—त्वयीति । प्रमत्ते अनवहिते ॥ ११ ॥ दुःखं पश्यतीति दुःखदर्शिनी सा नभवतीत्यदुःखदर्शिनी । शोचति अशोचत् । वनवास इति शेषः । दुर्मनाः चिन्ताकुलेति यावत् ॥ १२ ॥ जिह्मेन कपटेन । तवापि अतिशूरस्यापि ॥ १३ ॥ मम स्वरेण यस्मादागतः तस्मात् सः स्वरो वैदेह्या श्रुतः त्रस्तया तया त्वं प्रेषितश्चेति शङ्क इति योजना ॥ १४ ॥ कष्टमेवाह—प्रतीति । प्रतिकर्तुं मत्कृतापकारस्य प्रत्यपकारं कर्तु । अन्तरं अवकाशो दत्तः ॥ १५ ॥ प्रतीकारमेवाह—दुःखिता इति । पिशिताशनत्वं निहनने हेतुः ॥ १६ ॥ अहोस्मिन्निति संधिरार्षः । ईदृशं व्यसनमज्जनं प्राप्तव्यमिति शङ्के ॥ १७ ॥ वरारोहामितिचिन्ता हेतुसौन्दर्यातिशयोक्तिः ॥ १८ ॥ विगर्हमाण इत्यादिश्लोकद्वयमेकान्वयं वक्ष्यमाणानेकसर्गार्थसंग्रहरूपं । श्रमात् बहुदूरधावनात् । प्रतिश्रयं स्वाश्रमप्रदेशं । शून्यं सीतारहितं । प्रतिश्रयमित्यनुषज्यते । अनन्तरं स्वाश्रमं संप्रविगाह्य प्रविश्य । तमपि शून्यं समीक्ष्येति शेषः । तदनु सीतायाः कांश्चिद्विहारदेशाननुसृत्य विचित्य । तानपि शून्यान्समीक्ष्य तत्रत्यनिवासभूमौ क्रीडास्थाने तदेतदिति तादृशमेतादृशमिति विहारविशेषं स्मृत्वा प्रहृष्टरोमा सन् शोकेन व्यथितो बभूव ॥ १९—२० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

**ति०** तवापि ज्ञातमद्बलवीर्यादिमतोपि ॥ १३ ॥ **ति०** जनस्थानं तद्वर्तिस्वाश्रमं ॥ १८ ॥ **ति०** प्रतिश्रयं आश्रमसमीपदेशं ॥ १९ ॥ प्रतिश्रयंप्रेक्ष्यानन्तरंस्वाश्रमंप्रविगाह्य ॥ २० ॥ इत्यष्टपञ्चाशस्सर्गः ॥ ५८ ॥

**[ पा० ]** १ घ. सादुःखदर्शिनी. वादुःखदर्शिनी. ङ. झ. चादुःखभागिनी. ख. चादुःखकर्शिनी. २ क. दुःखिता. ३ ङ. झ. ट. श्रुतश्चमन्ये. क.—घ. च. छ. ज. ञ. श्रुतश्चशङ्के. ४ घ. स्वरस्स. ५ च. छ. ज. ञ. त्रातुं. ६ क. ग. ङ.—ट. अहोस्मिव्यसने. ७ ख. ग. ङ.—ट. रिपुनाशन. क. रिपुकर्शन. ८ ख.—ट. किन्त्विदानीं. क. किंचेदानीं. ९ घ. चिन्तयामास. १० ङ. झ. ट. श्रमेणैव. ११ ख. ग. ङ.—ट. विषण्णः. १२ घ. धीरो.

# एकोनषष्टितमः सर्गः ॥ ५९ ॥

रामेणलक्ष्मणंप्रति सीतात्यागेनागमनेकारणप्रश्नः ॥ १ ॥ लक्ष्मणेनतंप्रति मारीचाक्रोशनश्रवणेनविषीदन्तींसीतांप्रति स्वकृतसान्त्वनप्रकारस्य स्वंप्रतितस्याःपरुषभाषणप्रकारस्यचानुवादपूर्वकं तद्वचनस्यतत्कारणत्वोक्तिः ॥ २ ॥ रामेणतंप्रति सकोपंतदागमनस्यानौचित्योक्तिपूर्वकं स्वानुसृतमायामृगवृत्तान्तकथनं ॥ ३ ॥

अथाश्रमादुपावृत्तमन्तरा रघुनन्दनः ॥ परिपप्रच्छ सौमित्रिं रामो दुःखार्दितं पुनः ॥ १ ॥
तमुवाच किमर्थं त्वमागतोपास्य मैथिलीम् ॥ यदा सा तव विश्वासाद्वने विरहिता मया ॥ २ ॥
दृष्ट्वैवाभ्यागतं त्वां मे मैथिलीं त्यज्य लक्ष्मण ॥ शङ्कमानं महत्पापं यत्सत्यं व्यथितं मनः ॥ ३ ॥
स्फुरते नयनं सव्यं बाहुश्च हृदयं च मे ॥ दृष्ट्वा लक्ष्मण दूरे त्वां सीताविरहितं पथि ॥ ४ ॥
एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ॥ भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५ ॥
न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः ॥ प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६ ॥
आर्येणेव पराकुष्टं हा सीते लक्ष्मणेति च ॥ परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७ ॥
सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली ॥ गच्छ गच्छेति मामाह रुदन्ती भयविह्वला ॥ ८ ॥
प्रचोद्यमानेन मया गच्छेति बहुशस्तया ॥ प्रत्युक्ता मैथिली वाक्यमिदं त्वत्प्रत्ययान्वितम् ॥ ९ ॥
न तत्पश्याम्यहं रक्षो यदस्य भयमावहेत् ॥ निर्वृता भव नास्त्येतत्केनाप्येवमुदाहृतम् ॥ १० ॥
विगर्हितं च नीचं च कथमार्योभिधास्यति ॥ त्राहीति वचनं सीते यस्त्रायेत्रिदशानपि ॥ ११ ॥

एवं संग्रहेणोक्तमर्थं पुनर्विस्तरेण वक्तुमुपक्रमते—अथेत्यादि । अन्तरा मध्येमार्गे । दुःखार्दितमिति क्रियाविशेषणं । मारीचवधस्थानात्स्वाश्रमं गच्छन्मध्ये पप्रच्छेत्यर्थः ॥ १ ॥ तं सौमित्रिमुवाच । तत्र प्रश्नप्रकारमाह—किमर्थमिति । यदा तु त्वया रक्षितायाः का हानिरिति विश्वासात् मया विरहिता कृता तदा तामपास्य विहाय किमर्थमागतः ॥ २ ॥ उवाचेत्युक्तार्थमाह—दृष्ट्वेति । त्वां दृष्ट्वा पापं सीतानिष्टरूपं । शङ्कमानं मे मम मनः व्यथितमिति यत् तत्सत्यं ॥३॥ एतच्च कथं निश्चीयत इत्यत्राह—स्फुरत इति । बाहुः सव्य इत्यनुषज्यते । हृदयं वक्षोमध्यं ॥ ४ ॥ भूयो दुःखेन बहुतरदुःखेन समाविष्टः पूर्वं सीतावचनाद्दुःखाक्रान्तः सम्प्रति रामेण त्वया अकृत्यं कृतमित्युच्यमानत्वात् भूयोदुःखसमाविष्टत्वं ॥ ५ ॥ कामकारेण स्वेच्छाकरणेन । स्वयमित्यस्य विवरणमिदं । उग्रैः वचोभिरित्यर्थसिद्धं ॥ ६ ॥ हा सीते लक्ष्मणेति परित्राहीतिच यद्वाक्यं आर्येणेव भवतेव । केनचित्पराकुष्टं आह्वानपुरःसरं घोषितं तत् । मैथिल्याः श्रुतिं गतं ॥ ७ ॥ तव स्नेहेन त्वयि स्नेहेन ॥ ८ ॥ त्वत्प्रत्ययान्वितं त्वयि प्रत्ययः दुराधर्षत्वदैन्यराहित्यविषयो विश्वासः तेनान्वितं । इदं वक्ष्यमाणलक्षणं वाक्यं । मैथिली प्रत्युक्ता ॥ ९ ॥ निर्वृता सुखिता भव । नास्त्येतत् रामवाक्यत्वेन यच्छङ्कितं एतत् रामवाक्यं न भवति ॥ १० ॥ रामवचनत्वेऽनुपपत्तिमाह—विगर्हितमिति । विगर्हितं दैन्यावहत्वान्महाकुलप्रसूतस्य निन्दितं । नीचं आपत्काले स्त्रीसमाह्वानस्य क्षुद्रकृतत्वात्कुत्सितं । वचनं कथमभिधास्यति । यस्त्रिदशानपि त्रायेत् कथं सः सीते

स० कामकारेण स्वेच्छया । अहंतां त्यक्त्वा इहनागतः । किंतुतयासीतया उग्रैः प्रचोदितः इहत्वत्सकाशमागतः । प्रलापकालइति त्रिवारमहमित्युक्तिः द्विवारमिहेत्युक्तिश्चसंभवतः । त्रिवारंकामकारेणनेतिवक्तुं त्रिरहमित्युक्तिः । "जहिहि जहाहि जहीहि रामभार्यां" इतिवत् ॥ ६ ॥

[ पा० ] १ ग. छ. ञ. तथा. २ ङ. झ. ट. दुःखादिदंवचः. क.—घ. दुःखादिदंपुनः. ञ. दुःखार्दितंवचः. ३ घ. मैथिलीरहितं. च. छ. ज. ञ. तयाविरहितं. ४ ङ. ट. ठ. नह्यहंकामचारेण. ५ ङ. ट. त्वयैवाहंत्वत्सकाशं. ६ क. ख. ङ. झ. परिकुष्टं. ७ ङ. झ. ट. लक्ष्मणेतिसुविस्वरं. ८ क. च. छ. ज. ञ. वैदेह्याः. ९ ग. ङ. झ. रुदती. १० ख. ङ. च. ज.—ट. विक्लबा. ११ ख. त्वदा. १२ क. च. छ. ज. ञ. मानयेत्. १३ क. ख. ङ. झ. ट. प्यैतदुदाहृतं.

किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरम् ॥ राक्षसेनेरितं वाक्यं [1]त्राहित्राहीति शोभने ॥ १२ ॥
विस्वरं व्याहृतं वाक्यं लक्ष्मण त्राहि मामिति ॥ न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १३ ॥
अलं [2]वैक्लैब्यमालम्ब्य स्वस्था भव निरुत्सुका ॥ [3]न सोस्ति त्रिषु लोकेषु पुमान्वै राघवं रणे ॥
जातो वा जायमानो वा संयुगे यः पराजयेत् ॥ १४ ॥
[4]न जय्यो राघवो युद्धे देवैः शक्रपुरोगमैः ॥ १५ ॥
एवमुक्ता तु वैदेही परिमोहितचेतना ॥ उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६ ॥
भावो मयि तवात्यर्थं [5]पाप एव निवेशितः ॥ विनष्टे भ्रातरि प्राप्तुं न च त्वं [6]मामवाप्स्यसि ॥ १७ ॥
संकेताद्भरतेन त्वं रामं समनुगच्छसि ॥ क्रोशन्तं हि [7]यथात्यर्थं नैनमभ्यवपद्यसे ॥ १८ ॥
रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि ॥ राघव[8]स्यान्तरप्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९ ॥
एवमु[9]क्तो हि वैदेह्या संरब्धो रक्तलोचनः ॥ क्रोधात्प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतः ॥ २० ॥
एवं ब्रुवाणं सौमित्रिं रामः सन्तापमोहितः ॥ अब्रवीद्दुष्कृतं सौम्य तां विना [10]यस्त्वमागतः ॥ २१ ॥
जानन्नपि समर्थं मां [11]रक्षसां विनिवारणे ॥ अनेन क्रोधवाक्येन मैथिल्या [12]निस्सृतो भवान् ॥ २२ ॥
नहि ते परितुष्यामि त्यक्त्वा [13]यद्यासि मैथिलीम् ॥ क्रुद्धायाः परुषं श्रुत्वा [14]स्त्रियाश्च त्वमिहागतः ॥ २३ ॥

त्राहीति वचनमभिधास्यति ॥ ११ ॥ किं निमित्तं किमपि प्रयोजनमुद्दिश्य । केनापि दुर्जनेन राक्षसेन मे भ्रातुः स्वरं स्वरसदृशं स्वरं । आलम्ब्य अवलम्ब्य । त्राहि त्राहीति वाक्यं ईरितं उक्तं । शोभने इति सीतासंबोधनं ॥ १२ ॥ विस्वरमिति स्वरप्रकारविशेषशोधनेऽपि नायं रामस्वर इत्यर्थः ॥ १३ ॥ अलमित्यादिसार्धश्लोक एकान्वयः । वैक्लब्यं विक्लबत्वं । "विक्लबो विह्वलस्तथा" इति हलायुधः । निरुत्सुका मत्प्रस्थापनोद्योगरहिता भव । नास्ति नविद्यते ॥ १४ ॥ नेत्यर्धमेकं वाक्यं । पूर्वमेकैकेनाजय्यत्वमुक्तं संप्रति मिलितैरिति विशेषः ॥ १५ ॥ परिमोहितचेतना कलुषितबुद्धिः ॥ १६ ॥ भ्रातरि विनष्टे सति मां प्राप्तुं पापः कुत्सितः । भावः मयि तव त्वया निवेशित एव । त्वं च मां नावाप्स्यसि ॥ १७ ॥ भरतेन कृतात्संकेतात् कुतश्चिदवकाशे राममवश्यं हनिष्यामीत्येवंरूपात् । रामं समनुगच्छसि न तु रामभक्त्या । अत्र हेतुमाह—क्रोशन्तमिति । क्रोशन्तमेनं यथा नाभ्यवपद्यसे न प्राप्नोषि । तेन प्रकारेण संकेतादनुगच्छसीत्यन्वयः ॥ १८ ॥ अन्तरप्रेप्सुः रन्ध्रान्वेषी । येन प्रकारेण एनमनुगच्छसि तथा नाभिपद्यसे इत्यन्वयः ॥ १९ ॥ क्रोधादिति काकाक्षिन्यायेनोभयत्रान्वेति ॥ २० ॥ तां विना त्वमागत इति यत् तद्दुष्कृतं अकृत्यं ॥ २१ ॥ उक्तं विवृणोति —जानन्नपीति ॥ २२ ॥ अनेनेत्युक्तं विशदयति— नहीति । स्त्रिया इत्यविवेकसंभावनासूचनं । स्त्रीष्वपि विशेषज्ञापनाय क्रुद्धाया इति । यस्त्वं क्रुद्धायाः

**ति०** किंनिमित्तं कुत्सितंकिंचिन्निमित्तमाश्रित्य केनापिरक्षसेरितं ॥ १२ ॥ **ति०** जायमानइत्यनेन जनिष्यमाणइत्यर्थकेनभाविनोपिवारणं । अतःसंयुगइत्यस्यनपौनरुक्त्यं ॥ १४ ॥ **शि०** संकेतात् संकेतंप्राप्य । यथा यथावत् । नसमनुगच्छसि । तर्हिभरते भरतसमीपेपि । त्वंनाभ्यवपद्यसे नस्थास्यसि । भरतो निस्सारयिष्यतीतितात्पर्यं ॥ १८ ॥ **ती०** सीताप्रेरणयामयिराक्षससंहारसामर्थ्याभावमाशङ्कयागतोसिवा सीतापरुषवाक्यैस्त्वलोकगर्हिताभविष्यतीतिवा परुषवाक्यासहनमात्रेणवा समागतोसीतित्रेधाविकल्प्याद्यं पराकरोति दुष्कृतमित्यादि ॥ २१ ॥

**[ पा० ]** १ ङ. झ. ट. त्रासात्राहीति. २ ग. ङ. झ. ट. विक्लबतांगन्तुं. च. ज. विक्लबमालंब्य. क. विक्लबमागन्तुं. ३ क. ख. ग. ङ. च. ज.—ट. नचास्ति. घ. सनास्ति. ४ क. ख. ङ. झ. ञ. ट. अजेयो. घ. अजय्यो. ५ क. च. छ. ज. ञ. पापाचारनिवेशितः. ख. पापभाव. ६ ङ.—ट. मवाप्स्यसे. ७ ख. तथात्यर्थं. घ. यदत्यर्थं. ८ छ. झ. ञ. ट. स्यान्तरंप्रेप्सुः. ९ ख. मुक्तोस्मि. ङ. झ. ट. मुक्तस्तु. १० ख. ङ. झ. ञ. ट. त्वमिहागतः. ११ ङ. झ. ट. रक्षसामपवारणे. १२ क. ङ. च. झ. ट. निर्गतो. ञ. गर्हितो. १३ ङ. झ. ञ. ट. यदसि. १४ ग.—च. ज. झ. ट. विहायत्वमिहागतः. क. ञ. स्त्रियायस्त्वमिहागतः.

सर्वथा त्वपनीतं ते सीतया यत्प्रचोदितः ॥ क्रोधस्य वशमापन्नो नाकरोः शासनं मम ॥ २४ ॥
असौ हि राक्षसः शेते शरेणाभिहतो मया ॥ मृगरूपेण येनाहमाश्रमादपवाहितः ॥ २५ ॥
विकृष्य चापं परिधाय सायकं सलीलबाणेन च ताडितो मया ॥
मार्गीं तनुं त्यज्य सविक्लबस्वरो बभूव केयूरधरः स राक्षसः ॥ २६ ॥
शराहतेनैव तदाऽऽर्तया गिरा स्वरं ममालम्ब्य सुदूरसंश्रवम् ॥
उदाहृतं तद्वचनं सुदारुणं त्वमागतो येन विहाय मैथिलीम् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

रामेणदुर्निमित्तदर्शनात्सीतायाविपदाशङ्कयात्वरितं लक्ष्मणेनसहस्वपर्णशालाप्रवेशः ॥ १ ॥ तथा सीताविहारार्हस्थले-ष्वन्वेषणेपि तददर्शनाद्दुःखेन तरुमृगादीन्प्रति सीतादर्शनप्रश्नः ॥२॥ तथा सीतायाःक्वाप्यदर्शने राक्षसैर्भक्षणादिनानाप्रकारविकल्पपूर्वकं बहुधा विलापेन पुनःपुनस्तदन्वेषणाय वनेपरिभ्रमणं ॥ ३ ॥

भृशमाव्रजमानस्य तस्याधोवामलोचनम् ॥ प्रास्फुरच्चास्खलद्रामो वेपथुश्चास्यजायत ॥ १ ॥

स्त्रियाःपरुषं श्रुत्वा इहागतः तस्य ते मैथिलीं त्यक्त्वा यासीति यत्तत्कर्म न परितुष्यामि॥२३॥ नाकरोःशासनंममेतियत्तत्सर्वथा ते अपनीतं अपनयः। क्रुद्धया स्त्रिया यत्किंचित्परुषमुक्तं चेत्तत्सोढव्यं । कथंचिदसहने बहिरागत्यान्तर्हितो भूत्वा तत्परिपालनं कर्तव्यं । केवलमागमनं तवापनीतिरेवेति भावः ॥ २४ ॥ अपनीतिमेवोपपादयितुं स्वरान्यथाभावं दर्शयति—असावित्यादिश्लोकत्रयेण ॥ २५ ॥ परिधाय संधाय। सलीलबाणेन लीलार्थबाणेन । मार्गीं मृगसंबन्धिनीं । त्यज्य त्यक्त्वा । सविक्लबस्वरः सदीनस्वरः। केयूरधरः अङ्गदधरः। आसीदित्यनेन दुरातीतत्वं गम्यते ॥ २६ ॥ तदेति च्छेदः । सुदूरे संश्रवः श्रवणं यस्य तं। मम स्वरं मत्स्वरसदृशं स्वरं । आलम्ब्य आश्रित्य । आर्तया गिरा दीनया वाचा । शराहतेन तेनैव तदा तस्मिन्काले। सुदारुणं तद्वचनमुदाहृतं । येन वचनेन श्रुतेन मैथिलीं विहाय आगतोसि । अस्मिन्सर्गे सप्तविंशतिश्लोकाः ॥ २७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

एवमियता प्रबन्धेन संभोगशृङ्गारो वर्णितः। अथ विप्रलम्भशृङ्गारमासुवेलारोहणाद्वर्णयितुमारभते। तदङ्गत्वेन रसान्तराणि दर्शितानि । "संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः" इति लक्षणात् । तत्र "अभिलाषमनःसङ्गौ संकल्पो गणसंस्तुतिः प्रद्वेषः।तापाभिमतत्यागावुन्मादो मूर्छना च मृतिः" इत्युक्तविप्रलम्भावस्थास्वष्टमीं दशामाह—सर्गत्रयेण। आव्रजमानस्य आगच्छतः। अधोवामलोचनं वामनेत्रस्याधःपक्ष्म प्रास्फुरत्। "अधोवामदृशः स्फूर्तौ बह्वनिष्टो भवेत्पुमान्" इति लक्षणात् । स्वयमस्खलत्। "प्रयाणकाले स्खलनं करोतीष्टस्य भञ्जनं"

ती० सर्गश्रवणफलंस्कान्दे—"सीतादुरुक्तिकथनं लक्ष्मणस्यमुखाच्छ्रुतम् । श्रुत्वानजातुपीडास्यादभिशापकृतेमहत्" इति ॥ २७ ॥ इत्येकोनषष्टितमस्सर्गः ॥ ५९ ॥

शि० यद्यपिसीतावियोगस्यसंभोगशृङ्गारपोषकत्वेनानिष्टत्वाभावाद्दुर्निमित्तानुभवोनसंभवति तथापि तात्कालिकवियोगजनित-

[ पा० ] १ ख. त्वांविनिन्दन्ते. घ. च. ज. त्वविनीतं. २ क. ग. ङ.—ट. वशमागम्य. ख. वशमागत्य. ३ क. ख. प्रणिधाय. ४ क. सएषबाणेन. ५ क. ग. ङ.—ट. त्यज्यच. ६ घ. समालम्ब्य. ७ ख. व्रजमानस्य तस्याधोवामलोचनमस्फुरत्। प्रास्खलच्चासकृत्पादेवेपथुश्चास्यजायत. ८ घ. ङ. ञ. श्वास्यजायत. क. च. ज. झ. ट. श्चास्यजायते.

उ[1]पालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः ॥ अपि क्षे[2]मं नु सीताया इ[3]ति वै व्याजहार च ॥ २ ॥
त्वरमाणो जगामाथ सीतादर्शनलालसः ॥ शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३ ॥
उद्भ्रमन्निव वेगेन विक्षिपन्रघुनन्दनः ॥ त[4]त्रतत्रोटजस्थानम[5]भिवीक्ष्य समन्ततः ॥ ४ ॥
ददर्श पर्णशालां च र[6]हितां सीतया तदा ॥ श्रिया विरहितां ध्वस्तां हेम[7]न्ते पद्मिनीमिव ॥ ५ ॥
रुदन्तमिव वृक्षैश्च म्लानपुष्पमृगद्विजम् ॥ श्रिया विहीनं विध्वस्तं सं[8]त्यक्तवनदेवतम् ॥ ६ ॥
विप्रकीर्णाजिनकुशं वि[9]प्रविद्धबृसीकटम् ॥ दृष्ट्वा शू[10]न्यं निजस्थानं वि[11]ललाप पुनःपुनः ॥ ७ ॥
हृता मृता वा[12] नष्टा वा भक्षिता वा भविष्यति ॥ निलीनाऽप्यथवा भीरु[13]रथवा वनमाश्रिता ॥ ८ ॥
गता विचेतुं पुष्पाणि फलान्यपि च[14] वा पुनः ॥ अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥ ९ ॥
यत्नान्मृगयमाणस्तु नाससाद वने प्रियाम् ॥ शोकरक्तेक्षणः शो[15]कादुन्मत्त इव लक्ष्यते ॥ १० ॥

इति प्रसिद्धिः । वेपथुः कम्पः ॥ १ ॥ अशुभानि अशुभसूचकानि ॥ २ ॥ लालसः साभिलाषः । आवसथं गृहं । "स्थानावसथवास्तु च" इत्यमरः ॥ ३ ॥ श्लोकद्वयमेकान्वयं । वेगेन उद्भ्रमन्निव उत्पतन्निव । विक्षिपन् हस्तादीनवयवानितस्ततः क्षिपन् ॥ ४—५ ॥ श्लोकद्वयमेकान्वयं । वृक्षैः रुदन्तमिव स्थितं हीनस्वरभृङ्गवत्त्वादिति भावः । पुष्पाणि सीतया पूर्वमपचितानि । द्विजाः पक्षिणः । म्लानाः पुष्पमृगद्विजाः यस्मिंस्तत् तथोक्तं । श्रिया कान्त्या । विहीनं विध्वस्तं विशीर्णं । रावणसंन्यासिने दत्तत्वेन विप्रकीर्णाः अयथास्थानस्थिताः अजिनकुशाः यस्मिन् तत्तथा । ग्रहणकाले सीताया अवलम्बितत्वेन विप्रविद्धबृसीकटं विपर्यस्तमुन्यासनास्तरणं । शून्यं सीतारहितं । विललाप पर्यदेवयत् ॥ ६—७ ॥ विलापमाह द्वाभ्यां । हृता अपहृता । नष्टा यादृच्छिकमदर्शनं गता । निलीना विनोदाय व्यवहिता । अथवा निर्जनतया भीरुः सती गूढं वनमागता । पद्मिनीं याता स्नानार्थमिति शेषः । नदीं गतेत्यन्तरमितिकरणं द्रष्टव्यं ॥ ८—९ ॥ शोकाद्धेतोः उन्मत्त इव लक्ष्यते अलं-

दुःखाभासस्यावश्यंभावित्वाद्दुर्निमित्तदर्शनंसंभवत्येवेतिदिक् ॥ १ ॥ **ति०** रुदन्तमित्यादेराश्रमोविशेष्यः । वर्णनीयमयीभावेन कवेरपिसंनिहितवैपरीत्यं । **स०** रुदन्तमित्यार्षंपुंल्लिङ्गत्वं ॥६॥ **शि०** विप्रकीर्णाजिनकुशमित्यनेन भूकंपादिर्जातइतिध्वनितं ॥७॥ **ति०** नष्टा अदर्शनंगता । स्वयोगशक्त्यापुनरलभ्यदर्शनाजातेतितात्पर्यं ॥ ८ ॥ **ति०** नदींगतेत्यादिसंतर्क्य तत्रतत्रयत्नान्मृगयमाणोपिनाससाद । उन्मत्तइवेत्ययमिवशब्दो मृगयमाणःप्रधावन्बभ्रामेत्यादौसर्वत्रसंबध्यः । एतत्सर्वंलोकव्यवहारनटनं भगवतश्चित्स्वरूपस्य लोकेसर्वतो भार्याप्रियतमेतिबोधयितुं । अतएव मातापितृवियोगोनैतावच्छोककारणं । तदुक्तंभागवते—"समनुजोऽजभवार्चिताङ्घ्रिरलङ्घ्यवीर्यः" इत्यादिनाविशिष्टंराममुपक्रम्य "रक्षोऽधमेनवृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपवाहितायाम् । भ्रात्रावनेकृपणवत्प्रियया‌वियुक्तः स्त्रीसङ्गिनांगतिमितिप्रथयंश्चचार"इति "नेदंयशोरघुपतेस्सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः । रक्षोवधोजलधिबन्धनमस्त्रपूगैर्यत्तस्यशत्रुहननेकपयःसहायाः" इतिच । यद्यथासुग्रीवाद्याश्रयणवदिदमपिलीलैवेतिनतत्तस्यस्तुतिरिरितितदर्थः । लीलाप्रयोजनंचतच्छ्रवणेनलोकोद्धारः । एतन्नवमेएकादशाध्यायस्थेपद्ये । तथापञ्चमेपि—"मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलंविभोः । कुतोऽन्यथास्यूरमतःस्वआत्मन्सीताकृतानिव्यसनानीश्वरस्य"इति ॥ **ती०** वस्तुतस्तुनतादृशः श्रीरामइत्यर्थः । अतएवसीतादीन्प्रतिविलापादिकं । सीतान्वेषणसमयेसीतामुद्दिश्यवृक्षमृगादीन्प्रतिप्रश्नादिकंसर्वंश्रीरामेणलोकशिक्षार्थंनटनंकृतमितिप्रदर्शयितुमेवसर्वज्ञेनभगवताश्रीवाल्मीकिना उद्भ्रमन्निव उन्मत्तइवेत्यादौतत्रतत्रेवशब्दःप्रयुक्तः । अतएवश्रीशुकोप्याह "रक्षोधमेनवृकवद्विपिनेसमक्षंवैदेहराजदुहितर्यपयापितायां । भ्रात्रावनेकृपणवत्प्रियया‌वियुक्तः स्त्रीसङ्गिनांगतिमितिप्रथयंश्चचार ॥ मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलंविभोः । कुतोन्यथास्यूरमतस्स्वआ-

[ **पा०** ] १ क. ख. च. ज. ञ. उपलक्ष्य. २ क.—ट. क्षेमंतु. ३ ख. च. ज. ञ. व्याजहारपुनःपुनः. ग. ङ. झ. ट. इतिवैव्याजहारह. ४ ख. च. ज. ञ. तत्रतत्रजनस्थानं. ५ च. ज. मनुवीक्ष्य. ६ घ. ङ. च. ज.—ट. सीतयारहितां. ७ घ. हिमान्ते. ८ क. ङ. च. ज.—ट. संत्यक्तंवनदैवतैः. ९ क. ख. प्रविध्वस्तबृसी. ग. विप्रकीर्णबृसी. १० ग. ङ. च. ज.—ट. शून्योटजस्थानं. ११ ग. सुदुःखितः. १२ ग. च. ज. ञ. विनष्टावा. १३ घ. भीरुर्गहनंवासमाश्रिता. १४ ख. हिवा. १५ ङ. च. ज.—ट. श्रीमानुन्मत्तइव.

वृक्षाद्वृक्षं प्रधावन्स [1]गिरेश्चाद्रिं नदान्नदीम् ।। [2]बभूव विलपन्रामः [3]शोकपङ्कार्णवाप्लुतः ।। ११ ।।
[4]अपि कच्चित्त्वया दृष्टा सा [5]कदम्बप्रिया प्रिया ।। कदम्ब यदि जानीषे शंस सीतां शुभाननाम् ।। १२।।
स्निग्धपल्लवसं[6]काशा पीतकौशेयवा[7]सिनी ।। शंसस्व [8]यदि वा दृष्टा बिल्व बिल्वोपमस्तनी ।। १३ ।।
अथवाऽर्जुन शंस[9] त्वं प्रियां तामर्जुनप्रियाम् ।। जनकस्य सुता [10]भीरुर्यदि जीवति वा न वा ।।१४।।
[11]ककुभः ककुभोरूं तां व्यक्तं जानाति मैथिलीम् ।। [12]यथा पल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ।। १५।।
भ्रमरैरुपगीतश्च [13]यथा द्रुमवरो ह्ययम् ।। एष व्यक्तं विजानाति तिलकस्तिलकप्रियाम् ।। १६ ।।
अशोक शोकापनुद शोकोपहत[14]चेतसम् ।। त्वन्नामानं कुरु क्षिप्रं प्रियां[15]संदर्शनेन माम् ।। १७ ।।
यदि ताल त्वया दृष्टा पक्वताल[16]फलस्तनी ।। कथयस्व वरारोहां कारुण्यं यदि ते मयि ।। १८ ।।

---

क्ष्यतेत्यर्थः ।। १० ।। नदात् पश्चिमप्रवाहात् । शोकपङ्कार्णवाप्लुतो बभूव ।। ११ ।। अथ शोकमोहातिरेकेणाचेतनेषु चेतनबुद्ध्या तान्प्रतिभाषते—अपीत्यादिना । कदम्बानि कदम्बपुष्पाणि प्रियाणि यस्याः सा कदम्बप्रिया । प्रिया मत्कान्ता । अपिः प्रश्ने । एवं प्रश्नेऽपि प्रतिवचनादानमनादरकृतमिति मत्वाह—कदम्बेति । शुभाननामिति चिह्नकीर्तनं । कदम्बप्रियेत्यनेन दर्शनसंभावनोच्यते ।। १२ ।। स्निग्धपल्लवसंकाशेत्यनेन कोमलाङ्गित्वमुक्तं । बिल्वोपमस्तनीत्यनेन पद्मिनीजातिरुक्ता । तदुक्तं रतिरहस्ये पद्मिनीलक्षणे "स्तनयुगमपि यस्याः श्रीफलश्रीविडम्बि " इति ।। १३ ।। बिल्वेनानुक्तौ अयं मत्सरान्न कथयतीत्यर्जुनवृक्षं पृच्छति । यदि ज्ञातं यदीत्यर्थः ।। १४ ।। प्रतिवचनादानेनायं न जानातीति मत्वा वृक्षान्तरे तज्ज्ञानं संभावयति—ककुभ इति । ककुभोऽर्जुनविशेषः । स च स्त्रीणामूरुतुल्यो भवति अत एवमुच्यते—ककुभोरूमिति । केचित्करभोरूमिति वदन्ति तत्प्रकृतशैलीविरुद्धम् । कदम्ब कदम्बप्रिया बिल्व बिल्वोपमस्तनीत्येवं ह्युच्यते । ज्ञाने हेतुमाह—यथेति । अनेन परिचयसंभावनोक्ता । जानाति कथंनकथयतीत्यर्थसिद्धं । एवमुत्तरत्रापि श्लोके द्रष्टव्यं ।।१५।। उप समीपे गीतः कृतवेदघोष इति ध्वन्यते । यथा येन कारणेन । एवंभूतो द्रुमवरोऽयं । तेन कारणेनमन्ये एष जानातीतिलोकः ।।१६।। स्ववचनकरणाय स्तौति —शोकापनुदेति । पचाद्यच् । गुणाभाव आर्षः । त्वन्नामानं कुरु अशोकं कुरु । संदर्शनेन ज्ञापनेन । शोकनिवृत्त्यर्थं प्रियां संदर्शयेत्यर्थः ।।१७।। पक्वतालेति

---

त्मन्सीताकृतानिव्यसनानीश्वरस्य । सवैनआत्मात्मवतामधीश्वरःसक्तस्त्रिलोक्यांभगवान्वासुदेवः । नस्त्रीकृतंकश्मलमश्नुवीतनलक्ष्मणंचापिविहातुमिच्छति । "इति । तथाचस्कान्दे उमासंहितायां देवान्प्रतिविष्णुवचनं—"अहंदाशरथिर्भूत्वा हन्मिरावणमाहवे । श्रीमद्रामावतारेऽस्मिन्नज्ञवत्क्रियतेमया । तत्रशङ्कानकर्तव्यासर्वज्ञेनापिमायया । मन्मायामोहितंरक्षो मनुष्यंमामवेक्ष्यति । अन्यथातस्यसानूनं नभवेद्यत्रकुत्रचित्"इति । किंच बहुविधदुःखप्रलापस्यदेहादावात्मबुद्धिपूर्वकत्वात्तद्बुद्धेरज्ञानमूलकत्वात् स्वकृतलीलाश्रवणद्वारासर्वलोकानांमुक्तिप्रदानाय । नृपरूपेणावतीर्णस्यसच्चिदानन्दघनविग्रहस्यपरमात्मनः श्रीरामस्यमायाधिष्ठातुःपरमेश्वरस्यभृगुशापादिनाप्यज्ञानगन्धोप्यस्तीतिवक्तुमशक्यत्वादेतद्विधविलापादिकंसर्वंश्रीरामेणलोकशिक्षार्थमेवकृतमितिवेदितव्यं । अन्यत्राप्येतादृशस्थलेष्वेवमेवाऽर्थोऽनुसन्धेयः॥१०॥ नदीनदं नदीसंबन्धिनंनदं। जातावेकवचनं । नाराइतिलोकप्रसिद्धं । नदाः पश्चिमप्रवाहाइति कतकः। पश्चिमप्रवाहायाअपिनर्मदायानदत्वव्यवहाराभावाच्चिन्त्यंतत् ॥ **स०** नद्यश्चनदाश्चतेषांसमाहारः । "जातिरप्राणिनां" इत्येकवद्भावोवा । नदीसहितश्चासौनदश्चेतिवा ॥ ११ ॥ **ति०** उपसमीपेगीतः क्रियमाणझङ्कारइत्यर्थः । तथा द्रुमवरोह्यसीतिस्तौति । ततउत्तरमलब्ध्वाऽन्यंप्रत्याह—एषइति । तत्प्रियत्वात्तज्ज्ञेयत्वसंभावना ॥ १६ ॥ **तनि०** शोकोयस्मान्नभवतिस अशोकइतिव्युत्पत्तिमभिप्रेत्यशोकापनुदेत्युक्तिः । त्वन्नामानं शोकरहितमित्यर्थः ॥ १७ ॥

**[पा०]** १ ङ. झ. ञ. ट. गिरींश्चापिनदीनदं. २ क. ङ. झ. ट. बभ्रामविलपन्रामः. च. ज. ञ. बभ्रामविलपन्दीनः. ३ क. ख. शोकार्णवपरिप्लुतः. ४ ग. ङ. झ. ञ. ट. अस्तिकच्चित्. ५ च. ज. ञ. कदंबवनप्रिया. क. ख. कदम्बप्रियामम. ६ ग. —च. ज.—ट. संकाशां. ७ ग.—च. ज.—ट. वासिनीं. ८ ङ. झ. यदिसा. ९ ख. ग. ञ. शंसस्व. १० ङ. झ. ट. तन्वीयदि. क. सीतायदि. ११ ख. ग. घ. करभोरूं. १२ ख.—ट. लतापल्लव. १३ ङ.—ट. तथाद्रुमवरोह्यसि. १४ ट. हृतचेतनं. ङ. झ. हृतचेतनं. १५ ग. च. छ. ज. ञ. संदर्शनाद्धिमां. १६ क. ग. ङ. झ. ट. तालोपमस्तनी.

यदि दृष्टा त्वया [1]सीता जम्बु जम्बुफलोपमाम् ॥ प्रियां यदि [2]विजानीषे निःशङ्कं कथयस्व मे ॥ १९ ॥
अहो त्वं [3]कर्णिकाराद्य [4]सुपुष्पैः शोभसे भृशम् ॥ कर्णिकार[5]प्रियां साध्वीं शंस दृष्टा [6]प्रिया यदि ॥२०॥
चूतनीपमहासालान्पनसान्[7]कुरवान्धवान् ॥ [8]दाडिमानसनान्गत्वा दृष्ट्वा रामो महायशाः ॥ २१ ॥
[9]मल्लिका माधवीश्चैव चम्पकान्केतकीस्तथा ॥ [10]पृच्छन्रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ॥ २२ ॥
अथवा मृगशावाक्षीं मृग जानासि मैथिलीम् ॥ मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ॥२३॥
गज सा गजनासोरूर्यदि दृष्टा त्वया भवेत् ॥ तां मन्ये विदितां तुभ्यमाख्याहि वरवारण ॥ २४ ॥
शार्दूल [11]यदि सा दृष्टा प्रिया [12]चन्द्रनिभानना ॥ मैथिली मम [13]विस्रब्धं कथयस्व न ते भयम् ॥ २५ ॥
किं धावसि प्रिये [14]नूनं दृष्टाऽसि कमलेक्षणे ॥ [15]वृक्षैराच्छाद्य चात्मानं किं मां [16]न प्रतिभाषसे ॥२६॥
तिष्ठतिष्ठ वरारोहे न तेस्ति करुणा मयि ॥ नात्यर्थं हास्यशीलाऽसि किमर्थं मामुपेक्षसे ॥ २७ ॥
पीतकौशेयकेन[17]ासि सूचिता वरवर्णिनि ॥ धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ॥ २८ ॥
नैव सा नूनमथवा हिंसिता [18]चारुहासिनी ॥ कृच्छ्रं [19]प्राप्तं न मां नूनं [20]यथोपेक्षितुमर्हति ॥ २९ ॥

संबन्धोक्तिः ॥ १८ ॥ जम्बु "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वं । "एङ्ह्रस्वात्सम्बुद्धेः" इति सुलोपः । स्निग्धताकारेण जम्बुफलौपम्यं । विजानीषे चिह्नत इति शेषः ॥ १९ ॥ सुपुष्पैरिति धार्मिकत्वोक्तिः ॥ २० ॥ श्लोकद्वयमेकान्वयं । क्रियाभेदाद्रामपदद्वयं । नीपः कदम्बः । कुरवान् कुरवकान् । रामः चूतादीन् गत्वा दृष्ट्वा पृच्छन् आधावनेन सर्वत्र भ्रान्तः कृतभ्रमणःरामः उन्मत्तः चित्तविभ्रमवानिव । लक्ष्यते अलक्ष्यत ॥२१—२२ ॥ इति वृक्षान्पृष्ट्वा मृगान्पृच्छति—अथेति । वृक्षा मा कथयन्तु त्वं तु कथयेत्याशयेनाथवाशब्दप्रयोगः । मृगशावस्य मृगबालस्याक्षिणी इवाक्षिणीयस्यास्तां । मृगस्य सीताज्ञाने योग्यतामाह—मृगेति । मृगवद्विविधं प्रेक्षत इति मृगविप्रेक्षणी । सहिता भवेदिति संभावनायां लिङ् ॥ २३ ॥ गजनासोरूः करिकरोरूः । वरवारण वारणश्रेष्ठ । हे गज तां सीतां । तुभ्यं तव । विदितां मन्ये शङ्के । गजनासोरूः सा त्वया यदि दृष्टा भवेत्तदाख्याहि ॥ २४ ॥ शार्दूलेति । अत्र तुल्यगतित्वरूपः संबन्धो बोध्यः । न ते भयं शूरस्यतव भयं नास्ति । एतेन पूर्वोक्ताः सर्वे भीत्या न प्रत्यूचुरिति रामस्याशयः ॥ २५ ॥ पुनरवस्थाविशेषं दर्शयति—किं धावसीति । प्रिये किमर्थं धावसि धावन्ती दृष्टासि नूनं । अथादर्शनादाह—वृक्षैरिति । इदं च पूर्वापेक्षयातिरिक्तं दर्शनान्तरं ॥ २६—२७ ॥ अन्तर्हितापि पीतकौशेयेन सूचितासि । इदमपि प्रत्ययान्तरं । पुनरपि प्रत्ययान्तरमाह—धावन्त्यपीति ॥२८॥ अथ सर्वात्मनादर्शनाभावात्प्रकारान्तरमुत्प्रेक्षते—नैवेति । अथवा सात्र नैव विद्यते किंतु हिंसिता । अत्र हेतुमाह—कृच्छ्रमिति । कृच्छ्रं दुःखं । प्राप्तंमां यथा येन कारणेन । उपेक्षितुं नार्हति नूनं । तेन कारणेन हिंसितैव

**शि०** उन्मत्तइवलक्ष्यते । इवेनविप्रलंभदशायाउन्मादाद्वैलक्षण्यंसूचितं ॥ २२ ॥ **ति०** पुनर्बोधावस्था । नूनंसानैवयादृष्टा । तर्हिसाकेत्यत्राह । अथवाहिंसिता रक्षोभिः । तत्रहेतुः—यथा । एवंप्रकारेण । कृच्छ्रंनूनं मां प्राप्तं सापेक्षितुमर्हति । नापक्षते तस्मान्नैवसेत्यर्थः । उपेक्षितुमितिपाठेकाकुः ॥ २९ ॥

**[ पा० ]** १ ङ. झ. ञ. ट. जंबोजांबूनदसमप्रभा. ख. ग. घ. सीताजंबुजांबूनदप्रभा. च. ज. जंबोजांबूफलप्रिया. छ. जंबुजांबूफलप्रिया. २ ख. हिजानीषे. ङ. झ. ट. विजानासि. ३ ख. कर्णिकाराङ्ग. ४ ङ. झ. पुष्पितः. ग. सुपुष्पैरुपशोभितः. ५ ग. ङ.—ट. प्रियांसाध्वीं. ६ ङ. झ. ट. यदिप्रिया. ७ क. ख. ग. ङ. छ. ज. ञ. ट. कुरवांस्तथा. ८ च. ज. दाडिमान्पनसान्. ख. ङ. झ. ट. दाडिमानपितान्गत्वा. ९ ग. घ. ङ. छ. झ. ञ. ट. बकुलानथपुन्नागांश्चन्दनान्केतकांस्तथा. च. ज. बकुलानथपुन्नागांश्चपंकान्केतकांस्तथा. १० ङ. ट. गच्छन्रामो. ११ क. ख. यदिवा. १२ च. छ. ज. ञ. चन्द्रसमानना. १३ क. ङ. च. छ. झ. ञ. ट. विस्रब्धः. १४ ख. मेऽद्य. १५ क. ख. ग. वृक्षेणाच्छिद्य. १६ ग. ऽतिनभाषसे. १७ घ. नापि. १८ च. छ. ज. चारुवर्णिनी. १९ क. ख. घ.—ट. प्राप्तंहि. ग. प्राप्तंतु. २० घ. ङ. झ. यथापेक्षितुं.

व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः ॥ वि[1]भज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥३०॥
नूनं तच्छुभदन्तोष्ठं सुनासं चा[2]रुकुण्डलम् ॥ पूर्णच[3]न्द्रमिव ग्रस्तं मुखं निष्प्रभतां गतम् ॥ ३१ ॥
सा हि चम्पकवर्णाभा ग्रीवा ग्रैवे[4]यशोभिता ॥ कोमला विलपन्त्यास्तु कान्ताया भक्षिता शु[5]भा ॥३२॥
नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ ॥ भक्षितौ वेपमानाग्रौ सह[6]स्ताभरणाङ्गदौ ॥ ३३ ॥
मया विरहिता बाला रक्षसां भक्षणाय वै ॥ सा[7]र्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ॥ ३४ ॥
हा लक्ष्मण महाबाहो प[8]श्यसि त्वं प्रियां क्वचित् ॥ हा प्रिये क्व गता भद्रे हा सीतेति पुनःपुनः ॥३५॥
इत्येवं विलपन्रामः प[9]रिधावन्वनाद्वनम् ॥ क्वचिदुद्भ्रमते वेगात्क्वचिद्विभ्रमते बलात् ॥
क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः ॥ ३६ ॥
स वनानि नदीः शैलान्गिरिप्रस्रवणानि च ॥ काननानि च वेगेन [10]भ्रमत्यपरिसंस्थितः ॥ ३७ ॥
त[11]था स गत्वा विपुलं महद्वनं परीत्य सर्वं त्वथ मैथिलीं प्रति ॥
[12]अनिष्ठिताशः स चकार मार्गणे पुनः प्रियायाः परमं परिश्रमम् ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

नूनं ॥ २९ ॥ एतदेव द्रढयति—व्यक्तमिति ॥ ३० ॥ वक्ष्यमाणदशामनुसंधाय प्रलपति—नूनमिति । पूर्णचन्द्रमिव ग्रस्तं राहुग्रस्तं पूर्णचन्द्रमिव स्थितमित्यर्थः । एवंभूतं मुखं निष्प्रभतां गतं । नूनमित्यन्वयः ॥ ३१ ॥ ग्रैवेयकं कण्ठभूषणं । या उक्तविशेषणा ग्रीवा सा भक्षिता भवेदित्यन्वयः ॥ ३२ ॥ हस्ताभरणं कटकं ॥ ३३ ॥ भक्षणाय विरहितासीदिति पूर्वार्धेऽन्वयः । सार्थेन पथिकसमुदायेन ॥ ३४ ॥ लक्ष्मणमामन्त्र्य पृच्छति—हा लक्ष्मणेति । पश्यसि पश्यसिकिं । हा सीत इति वक्तव्ये हा सीतेति सन्धिरार्षः । इतिकरणस्य सर्गारम्भस्थेन विललापेत्यनेनान्वयः ॥ ३५ ॥ इत्येवमिति सार्धश्लोक एकान्वयः । प्रथमार्धं पूर्वानुवादरूपं । क्वचित् अधिष्ठाने सादृश्याभावेपि वेगात् शोकवेगादेव । उद्भ्रमते सीताप्रतीतिरूपं भ्रमं प्राप्नोति । क्वचित् लतादौ । बलात् सादृश्यबलात् । विभ्रमते तत्प्रतीतिभ्रमं लभते । मत्त इवाभाति मत्तवत्परिभ्रमतीत्यर्थः ॥ ३६ ॥ सुगमानि वनानि । दुर्गमाणि काननानि । गिरेरुद्भूतानिप्रस्रवणानि गिरिप्रस्रवणानि । " उत्सः प्रस्रवणं वारिप्रवाहः " इत्यमरः । अपरिसंस्थितः अप्रतिष्ठितः ॥ ३७ ॥ सरामः तथा क्वचिदुद्भ्रमत इत्यादिरीत्या । विपुलं विशालं महत् निरन्तरं । वनं गत्वा सर्वं वनस्यसर्वप्रदेशं परीत्य पुनःपुनश्चरित्वा अथ मैथिलीं प्रति मैथिलीलाभं प्रति । अनिष्ठिताशः अनिष्पन्नाशः सन् । पुनरपि प्रियाया मार्गणे परमं परिश्रमं चकार ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

**शि०** आविरहिता आविभिः स्वजनरूपरक्षकैः रहिता शून्यासात्वं राक्षसैर्यदिभक्षिता तर्हि अङ्गानि राक्षसावयवान् विभज्य भङ्क्त्वा मय मां प्राप्नुहि ॥ ३० ॥ इतिषष्टितमस्सर्गः ॥ ६० ॥

**[ पा० ]** १ ग. विभिन्द्याङ्गानि. २ क. ग. ङ.—ट. शुभकुण्डलं. ३ क. ख. ग. च. ज.—ट. चन्द्रनिभं. ४ ङ. झ. ट. ग्रैवेयकोचिता. ५ ख. बलात्. ६ च. छ. ज. ञ. सहस्राभरणौगतौ. ७ ग. सावनेस्मिन्परित्यक्ता. क. सावनेस्मिन्परिक्षिप्ता. ख. सावनेऽस्मिन्परिभ्रष्टा. ८ क. ख. ङ.—ट. पश्यसे. ९ ख. पर्यधावत्. १० च. छ. ज. ञ. भ्रमन्विपरि. ११ ङ. झ. ट. तदा. १२ च. छ. ज. ञ. अधिष्ठिताशः.

## एकषष्टितमः सर्गः ॥ ६१ ॥

पर्णशालादावन्वेषणेपिसीतायाअलाभाद्बहुधाविलापेन शोचन्तंरामंप्रतिलक्ष्मणेनससान्त्वनंसमग्रवनभागेषुपुनरन्वेषणस्य कर्तव्यत्वोक्तिः ॥ १ ॥ पुनर्वनगिरिदर्यादिषुगवेषणेपिसीतामलब्धवतारामेणलक्ष्मणेनसान्त्वनेपिशोकात्सीतांप्रत्याक्रोशनं ॥ २ ॥

दृष्ट्वाऽऽश्रमपदं शून्यं रामो दशरथात्मजः ॥ रहितां पर्णशालां च [1]विध्वस्तान्यासनानि च ॥ १ ॥
अदृष्ट्वा तत्र वैदेहीं सन्निरीक्ष्य च [2]सर्वशः ॥ उवाच रामः प्राक्रुश्य [3]प्रगृह्य रुचिरौ भुजौ ॥ २ ॥
क नु लक्ष्मण वैदेही [4]कं वा देशमितो गता ॥ केना[5]हृता वा सौमित्रे [6]भक्षिता केन वा प्रिया ॥ ३ ॥
वृक्षेणा[7]च्छाद्य यदि मां सीते हसितुमिच्छसि ॥ अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४ ॥
यैः [8]सह क्रीडसे सीते विश्वस्तै[9]र्मृगपोतकैः ॥ एते हीनास्त्वया सौम्ये [10]ध्यायन्त्यास्राविलेक्षणाः ॥५॥
सीतया रहितोऽहं वै नहि जीवामि लक्ष्मण ॥ ६ ॥
मृतं शोकेन महता सीताहरणजेन माम् ॥ परलोके महाराजो नूनं द्रक्ष्यति मे पिता ॥ ७ ॥
कथं प्रतिज्ञां संश्रुत्य मया त्व[11]मभियोजितः ॥ अपूरयित्वा तं कालं मत्सकाश[12]मिहागतः ॥ ८ ॥
कामवृत्त[13]मनार्यं मां मृषावादिनमेव च ॥ धिक्त्वामिति परे लोके [14]व्यक्तं वक्ष्यति मे पिता ॥ ९ ॥
विवशं शोकसंतप्तं दीनं भग्नमनोरथम् ॥ मामिहोत्सृज्य करुणं कीर्तिर्नरमिवानृजुम् ॥ १० ॥
क गच्छसि वरारोहे [15]मां नोत्सृज सुमध्यमे ॥ त्वया विरहितश्चाहं [16]मोक्ष्ये जीवितमात्मनः ॥११॥
[17]इतीव विलपन्रामः सीतादर्शनलालसः ॥ न ददर्श सुदुःखार्तो राघवो जनकात्मजाम् ॥ १२ ॥

अथ रामस्य नवमीमवस्थां दर्शयत्येकषष्टितमे । दृष्ट्वेत्यादिश्लोकद्वयमेकान्वयं । शून्यं सीतारहितं । रहितां सीतयेति शेषः । विध्वस्तानि रावणाक्रान्तत्वादिति भावः । सर्वशः सर्वत्र । तत्र वनप्रदेशे । वैदेहीं संनिरीक्ष्य विचित्य । तत्राद्दृष्ट्वा पुनरपि रामग्रहणं क्रियाभेदात् । प्राक्रुश्य सीतामुच्चैराहूय उवाच । भुजग्रहणं शोककृतविकारविशेषः । प्रगृह्य उत्क्षिप्य ॥ १—२ ॥ क नु अत्र वने कुत्र प्रदेशे वर्तते । कं वा देशान्तरं गता ॥ ३ ॥ आच्छाद्य स्वमिति शेषः । हसितुं अन्तर्हितां मां ज्ञातुमसमर्थोसीत्येवं परिहसितुं । अद्य शोककाले ॥ ४ ॥ क्रीडसे क्रीडसि । विश्वस्तैः चिरोपलालनेन विश्वासं प्राप्तैः । मृगपोतकैः बालमृगैः । "पोतः पाकोऽर्भको डिम्भः" इत्यमरः । ध्यायन्ति त्वामिति शेषः । किमपि ध्यायन्तीति वा ॥५॥ सीतयेति इदमर्धमेकं वाक्यं ॥६॥ परलोके स्वर्गे ॥७॥ श्लोकद्वयमेकान्वयं । प्रतिज्ञां चतुर्दशवर्षवनवासप्रतिज्ञां । संश्रुत्य अङ्गीकृत्य । मया अभियोजितः नियुक्तस्त्वं तं कालमपूरयित्वा कथमागतः । कामवृत्तं यथेष्टाचारं । अनार्यं दुर्जनं मां धिक्त्वामिति वक्ष्यति । अहमुपालम्भयोग्य एव कामवृत्तत्वादिति भावः ॥८–९॥ विवशमित्यादश्लोकद्वयं । विवशं अस्वाधीनं त्वत्परतन्त्रमित्यर्थः । करुणं यथा भवति तथा उत्सृज्य त्यागकालेऽपि तव दयास्त्येवेति भावः । अनृजुं कपटाचारं । मां नोत्सृज सुमध्यमे इदं मदुत्सर्जनं त्वल्लक्षणस्याननुरूपमिति भावः । उत्सर्जने को दोष इत्यत्राह—त्वयेति ॥१०—११॥ इतीवेति । एवंप्रकारेणेत्यर्थः ।

**ति०** प्राक्रुश्य हाइतिशब्दंकृत्वा ॥ २ ॥

**[ पा० ]** १ ङ.—ट. प्रविद्धान्यासनानिच. ख. ग. विप्रविद्धासनानिच. २ ग. च. ज. ञ. सर्वतः. ३ ट. परिगृह्यशुभौ भुजौ. ४ ज. क्वचादिशं. ५ क. ख. ग. नाहृताच. ६ च. छ. ञ. केनवाभक्षिता. ७ क.—ट. वृक्षेणावार्य. ८ ङ. झ. ट. परिक्रीडसे. ९ च. छ. ज. ञ. सीते. १० ग. ङ. झ. ञ. ट. ध्यायन्त्यस्राविले. क. च. ज. धावन्त्यस्राविले. ११. क. ख. ग. मभिचोदितः. १२ ख. मितोगतः. १३ ङ. झ. मनार्यंवा. १४ ग. नूनं. १५ ग. झ. ञ. ट. मामोत्सृज. क. घ. मामुत्सृज्य. १६ ङ. झ. ट. त्यक्ष्ये. १७ क. ङ.—ज. ञ. इत्येवं.

अनासादयमानं तं सीतां[1] दशरथात्मजम् ॥ पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम् ॥
लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ॥ १३ ॥
मा विषादं[2] महाबाहो[3] कुरु यत्नं मया सह ॥ इदं[4] च हि वनं शूर[5] बहुकन्दरशोभितम् ॥ १४ ॥
प्रियकाननसंचारा वनोन्मत्ता च मैथिली ॥ सा[6] वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् ॥ १५ ॥
सरितं वाऽपि संप्राप्ता मीनवञ्जुलसेविताम् ॥ स्नातुकामा निलीना स्याद्धासकामा वने क्वचित् ॥१६॥
वित्रासयितुकामा वा लीना स्यात्कानने क्वचित् ॥ जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभ ॥ १७ ॥
तस्या[7] ह्यन्वेषणे श्रीमन्क्षिप्रमेव यतावहै[8] ॥ १८ ॥
वनं सर्वं विचिनुवो यत्र सा जनकात्मजा ॥ मन्यसे यदि काकुत्स्थ मा स्म शोके मनः कृथाः ॥१९॥
एवमुक्तस्तु[9] सौहार्दाल्लक्ष्मणेन समाहितः ॥ सह सौमित्रिणा रामो विचेतुमुपचक्रमे ॥ २० ॥
तौ वनानि गिरींश्चैव सरितश्च सरांसि च ॥ निखिलेन [10]विचिन्वानौ सीतां दशरथात्मजौ ॥२१॥
तस्य शैलस्य सानूनि गुहाश्च[11] शिखराणि च ॥ निखिलेन [12]विचिन्वानौ नैव तामभिजग्मतुः[13] ॥२२॥
विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ॥ नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभाम् ॥ २३ ॥
ततो दुःखाभिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् ॥ विचरन्दण्डकारण्यं भ्रातरं दीप्ततेजसम् ॥ २४ ॥

लालसः साभिलाषः ॥ १२ ॥ अनासादयमानमित्यादिसार्धश्लोक एकान्वयः । अप्राप्तवन्तमित्यर्थः । अत्यर्थं हितकाम्ययेत्यन्वयः ॥ १३ ॥ विषादं मा कुरु अन्वेषणे यत्नं कुर्वित्युभयत्रान्वयः । अन्वेषणयोग्यतामाह—इदं हीति । बहुकन्दरैः कन्दरतुल्यलतागृहैः शोभितं ॥ १४ ॥ प्रियः काननसंचारो यस्याः सा । वनोन्मत्ता च । वनं जलं "जीवनं भुवनं वनं" इत्यमरः । वनेनवनदर्शनेन उन्मादवती अतिप्रियसलिलेत्यर्थः । यथाक्रमं तत्कार्यमाह—सेति ॥ १५ ॥ वञ्जुलो वेतसः । सरितं स्नातुकामा संप्राप्ता स्यात् । हासकामा परिहासकामा । क्वचिद्वने निलीना स्याद्वा ॥१६॥ वित्रासयितुकामेति । पूर्वं हासार्थं गूढेति शङ्का अत्र वित्रासनार्थमिति भिदा । मां त्वां च जिज्ञासमाना आवयोरन्वेषणादिसामर्थ्यं जिज्ञासमानेत्यर्थः ॥१७॥ तस्या इत्यर्धं पृथक् । श्रीमन् भार्यावियोगलक्षणं ते नास्तीति भावः ॥१८॥ यदि मन्यसे यदीच्छसि । तदा विचिनुवः त्वं शोके मनो मा कृथाः ॥१९॥ लक्ष्मणेनैवमुक्तः अत एव समाहितः कृतचित्तसमाधानः । विचेतुं अन्वेष्टुं ॥२०॥ वनानि स्वल्पानि महान्ति च पुष्पापचयव्यग्रात्र सन्निहिता भवेदिति । गिरीन् विचित्रधातुसंग्रहसक्ताऽत्र भवेदिति । सरितः हंसकारण्डवादिललितपुलिनतया तदवलोकनकुतुकिनी भवेदिति । सरांसि च फुल्लकमलषण्डमण्डिततया तद्विहारपरात्र भवेदिति । निखिलेन भावप्रधानो निर्देशः । कार्त्स्न्येन विचिन्वानौ । सीता न लब्धेति त्यक्तव्यापारौ न भवतः । तौ दशरथात्मजौ न दृष्टेति तूष्णीं तिष्ठन्तौ न भवतः । मृदुप्रकृतिकत्वात् । नैव तामभिजग्मतुरिति वक्ष्यमाणमत्राप्यनुषज्यते ॥२१॥ तस्य शैलस्य प्रस्रवणगिरेः । सानूनि प्रस्थान् । शिखराणि शृङ्गाणि ॥ २२ ॥ शैलं सर्वतः सर्वत्र शैले । "उभसर्वतसोः—"इति द्वितीया । अन्त इतिकरणं ॥ २३ ॥ दीप्ततेजसमिति वक्ष्यमाणसीतालाभहेतुलक्षणोक्तिः

**ती०** वनोन्मत्ता वनसंचारकोविदा ॥ **ति०** वनोन्मत्ता वनस्पुष्पितत्वदर्शनादुन्मत्ता हर्षवती ॥ १५ ॥ **शि०** असकामा अन्यत्रवासविषयकेच्छाभाववत्यपिवैदेही । मां त्वां चजिज्ञासमाना आवयोरन्वेषणसामर्थ्यज्ञानेच्छावतीसती वनेक्वचिदवलीना निलीना स्याद्वा । तत्र वञ्जुलोवेतसः ॥ १६ ॥

[ पा० ] १ ङ. झ. ट. शोकपरायणं. २ च. ज. माविषीद. ३ ङ. झ. ट. महाबुद्धे. ४ ङ. ञ. ट. इदंगिरिवनं. ५ क. ङ.—ज. ञ. ट. वीर. ६ क. च. छ. ज. ञ. काननंवा. ७ क. ग. अस्याः. ८ क.ट. यतावहे. ९ ङ. झ. ट. मुक्तस्स. १० क. ग. ङ.—ट. विचिन्वन्तौ. ११ ङ. झ. ट. शिलाश्च. १२ क. ग. ङ.—ट. विचिन्वन्तौ. १३ घ. मधिजग्मतुः.

[1]प्राप्स्यसि त्वं महाप्राज्ञ मैथिलीं जनकात्मजाम् ॥ यथा विष्णुर्महाबाहुर्बलिं बद्ध्वा महीमिमाम् ॥२५॥
एवमुक्तस्तु [2]सौहार्दाल्लक्ष्मणेन स राघवः ॥ उवाच दीनया वाचा दुःखाभिहतचेतनः ॥ २६ ॥
वनं [3]सर्वं सुविचितं पद्मिन्यः फुल्लपङ्कजाः ॥ गिरिश्चायं महाप्राज्ञ बहुकन्दरनिर्झरः ॥ २७ ॥
न हि पश्यामि वैदेहीं प्राणेभ्योपि गरीयसीम् ॥ २८ ॥
एवं स विलपन्रामः सीताहरणकर्शितः ॥ दीनः शोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ॥ २९ ॥
[4]संतप्तो ह्यवसन्नाङ्गो गतबुद्धिर्विचेतनः ॥ [5]निषसादातुरो दीनो [6]निःश्वस्याशीतम[7]।यतम् ॥ ३० ॥
[8]बहुलं स तु निःश्वस्य रामो राजीवलोचनः ॥ हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥३१॥
तं [9] ततः सान्त्वयामास लक्ष्मणः [10]प्रियबान्धवः ॥ बहुप्रकारं [11]धर्मज्ञः [12]प्रश्रितं प्रश्रिताञ्जलिः ॥३२॥
अनादृत्य तु तद्वाक्यं लक्ष्मणोष्ठ[13]पुटाच्च्युतम् ॥ अपश्यंस्तां प्रियां सीतां प्राक्रोशत्स पुनःपुनः ॥३३॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ॥ ६२ ॥

सीतामपश्यतारामेणलक्ष्मणंप्रतिसंबोधनेनबहुधाविलापः ॥ १ ॥

सीतामपश्यन्धर्मात्मा [14]कामोपहतचेतनः ॥ विललाप महाबाहू रामः कमललोचनः ॥ १ ॥
[15]पश्यन्निव स तां सीतामपश्यन्[16]मदनार्दितः ॥ उवाच राघवो वाक्यं वि[17]लापाश्रयदुर्वचम् ॥ २ ॥

---

॥२४॥ प्राप्स्यसीति । सीताहर्तारं बद्ध्वेति शेषः ॥२५॥ दुःखाभिहतचेतनः दुःखोपहतहृदय इत्यर्थः॥२६॥ पद्मिन्य इत्यादौ सुविचिताः सुविचित इति विपरिणामः कार्यः ॥२७॥ न हीत्यर्धमेकं वाक्यं ॥२८॥ विह्वलः परवशः ॥ २९ ॥ अवसन्नाङ्गः कृशाङ्गः । गतबुद्धिः निस्संज्ञः । विचेतनः निश्चेष्टः । अशीतं उष्णं आयतं दीर्घमितिनिश्श्वासक्रियाविशेषणं ॥ ३० ॥ विचुक्रोश उच्चैस्स्वरेणाहूतवान् ॥ ३१ ॥ प्रश्रितं सविनयमिति क्रियाविशेषणं । प्रश्रिताञ्जलिः बद्धाञ्जलिः ॥ ३२ ॥ लक्ष्मणोष्ठपुटाच्च्युतं लक्ष्मणोक्तमित्यर्थः । पुनः प्राक्रोशत् उद्घोषेणाहूतवान् ॥३३॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

---

अथ रामस्य "दृङ्मनःसङ्गसङ्कल्पा जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" इत्युक्तावस्थासु रतिं नाम षष्ठीमवस्थां प्रदर्शयति द्विषष्टितमे । धर्मात्मा कामोपहतचेतन इत्याभ्यां धर्माविरुद्धकामस्यानिन्द्यत्वमुक्तं । महाबाहुरित्यूर्ध्वबाहुत्वमुच्यते । कमललोचन इत्यनेन समधुपद्मसाम्यादश्रुकालुष्यमुच्यते । कामेन सीताविप्रलम्भजनितव्यामोहेन उपहता अप्रकृतिस्था चेतना चैतन्यं यस्य स तथा ॥ १ ॥ पुरोवर्तित्वाभावेन सीतामप-

---

**स०** हाप्रिये अतीतिच्छेदः । तस्य विचुकोशेत्यनेनान्वयः । इतीतिशेषः ॥ २९ ॥ इत्येकषष्टितमस्सर्गः ॥ ६१ ॥

**शि०** मन्मथार्दितः स्वप्रेर्यशिवद्वारान्मन्मथार्दकोराघवः ॥ २ ॥

**[ पा० ]** १ ङ. झ. ञ. ट. प्राप्स्यसे. २ ङ. झ. ट. वीरेणलक्ष्मणेन. ३ ङ. ञ. ट. सुविचितंसर्वं. च. ज. सर्वतुविचितं. ४ संतप्तोह्यवसन्नाङ्गो. बहुलंसतुनिश्श्वस्य. इत्यनयोःश्लोकयोःपौर्वापर्यं च. छ. ज. पाठेषुदृश्यते. ख. ङ.—ट. सविह्वलितसर्वाङ्गो. ५ ङ.—ट. विषसादातुरो. ६ ख. निश्श्वसंश्चमुहुर्मुहुः. क. निश्श्वस्याधिकं. ७ ङ.—ज. मारुतं. घ. मारुतः. ८ क.—ट. बहुशः. ९ ङ.—ट. तंसान्त्वयामासततो. ख. ग. तंसान्त्वयामासतदा. १० झ. प्रियबान्धवं. ११ घ. ङ. झ. ञ. ट. शोकार्तः. १२ क.—ङ. झ. ञ. ट. प्रश्रितः. १३ ङ. छ. झ. ञ. ट. पुटच्युतं. १४ क. ङ.—ट. शोकोपहत. १५ क.—ट. पश्यन्निवच. १६ ङ. झ. ट. न्मन्मथार्दितः. १७ घ. विरहाश्रय.

त्वमशोकस्य शाखाभिः पुष्पप्रिय[1]तया प्रिये ।। आवृणोषि शरीरं ते मम शोकविवर्धनी ।। ३ ।।
कदली[2]काण्डसदृशौ कदल्या संवृतावुभौ ।। ऊरू पश्यामि ते देवि नासि शक्ता निगूहितुम् ।। ४ ।।
कर्णिकारवनं भद्रे हसन्ती देवि सेवसे ।। [3]अलं ते परिहासेन मम बाधावहेन वै ।। ५ ।।
परिहासेन किं सीते परिश्रान्तस्य मे प्रिये ।। [4]अयं स परिहासोपि साधु देवि न रोचते ।। ६ ।।
विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते ।। अवगच्छामि ते[5] शीलं परिहासप्रियं प्रिये ।। ७ ।।
आगच्छ त्वं विशालाक्षि शून्योऽयमुटजस्तव ।। ८ ।।
सुव्यक्तं राक्षसैः सीता भक्षिता वा हृताऽपि वा ।। नहि सा विलपन्तं मामुपसंप्रैति लक्ष्मण ।। ९ ।।
एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण ।। शंसन्तीव हि [6]वैदेहीं भक्षितां रजनीचरैः ।। १० ।।
हा ममार्ये क्व यातासि हा साध्वि वरवर्णिनि ।। हा स[7]कामा त्वया [8]देवी कैकेयी सा भविष्यति ।। ११ ।।
सीतया सह निर्यातो विना सीतामुपागतः ।। कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं [9]पुनः ।। १२ ।।
निर्वीर्य इति [10]लोको मां निर्दयश्चेति वक्ष्यति ।। कातरत्वं प्रकाशं हि सीतापनयनेन मे ।। १३ ।।
निवृत्तवनवासश्च जनकं मिथिलाधिपम् ।। कुशलं [11]परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ।। १४ ।।
विदेहराजो नूनं मां दृष्ट्वा विरहितं [12]तया ।। [13]सुतास्नेहेन संतप्तो मोहस्य वशमेष्यति ।।
[ [14]तात एव कृतार्थः स तत्रैव वसताद्गतः ।। १५ ।। ]

श्यन्नपि मदनार्दितो मदनपरवशः तां पश्यन्निव संबोध्योवाच । तद्वाक्यं विलापाश्रयत्वेन दुर्वचं गद्गदकण्ठत्वादिति भावः । यद्वा विलापसंबन्धादस्माभिर्वक्तुमशक्यं अनुवदितुमशक्यमित्यर्थः ।। २ ।। पश्यन्निवेत्युक्तमुपपादयति—सार्धैस्त्वमित्यादिपञ्चभिः । त्वं अशोकस्य शाखाभिः पुष्पिततया स्वर्णसदृशीभिः स्वयं पुष्पप्रियतया स्वशरीरं मम शोकविवर्धनी सती आवृणोषि । किंतेनावरणेन । मया दृष्टत्वादिति भावः ।। ३ ।। कदलीकाण्डसदृशौ कदलीदण्डतुल्यत्वेन कदल्यासंवृतावपि ते ऊरू पश्यामि तेन तौ निगूहितुं आच्छादितुं । नशक्तासि दृष्टस्याच्छादनासंभवादिति भावः ।। ४ ।। हसन्ती हासार्थं कर्णिकारवनं सेवसे ।। ५ ।। हे सीते परिहासेन किं किं प्रयोजनं । हि यस्मात् परिश्रान्तस्य मे मह्यं । सः पूर्वं प्रियः । अयं परिहासः साधु सम्यक् । न रोचते ।। ६ ।। शीलं स्वभावः । परिहासेन प्रीणातीति परिहासप्रियं । "इगुपधज्ञाप्रीकिरः कः" इति कः ।। ७ ।। आगच्छेत्यर्धमेकं वाक्यं ।। ८ ।। हिर्हेतौ । उपसंप्रैति उपेक्षत इत्यर्थः ।। ९ ।। शंसनप्रकारः साश्रुनेत्राणीति ।। १० ।। मम मदीये । आर्ये पूज्ये । लोकैरिति शेषः । सकामा स्वाभीष्टासन्मरणसिद्धेरिति भावः ।। ११ ।। सीतां विनाऽऽगतत्वाच्छून्यं ।। १२ ।। कातरत्वं अधीरत्वं । जीवितधारणाशक्तेरिति भावः ।। १३ ।। निवृत्तवनवासः समाप्तवनवासः । "समाप्तौ वृत्त इत्यदः" इति शब्दार्णवे । निरीक्षितुं प्रतिवक्तुं सुतरामिति भावः ।। १४ ।। तया

**शि०** हेप्रिये यद्यपिपरिहासप्रियंतेशीलं स्वभावं । अवगच्छामि जानामि । तथापि आश्रमस्थाने विशेषश्रमस्थित्यर्थं विशेषेणायंतेपरिहासः नप्रशस्यते । यद्यपीत्यध्याहृतं ।। ७ ।। **ति०** उपसंप्रैति हासरसेनोपेक्षते ।। ९ ।। **शि०** मेदेवी माता । अद्यसकामा तदीप्सितराक्षसवधस्यसंनिहितत्वात्प्राप्तमनोरथाभविष्यति । **स०** अममार्येइतिपदं । निर्ममाधिके ।। ११ ।। **स०** कातरत्वं अवीरत्वं । प्रकाशं प्रकाशतइतितथा । प्रकटं अभूदिति शेषः ।। १३ ।। **ति०** "तत एवकृतार्थः सतत्रैववसतादिति" इत्यर्धमधिकं कतकपाठे । ततोदशरथएवकृतार्थः । वसतादितिलोड्व्यत्ययेन । यतस्तत्रैवस्वर्गएववसति । नतुजीवन्तीकौसल्ये-

**[ पा० ]** १ ङ. झ. प्रियतरा. २ ग. च. छ. ज. ञ. स्कन्धसदृशौ. क. स्तंभसदृशौ. ३ ख. अलंतेबाधयाभीरुपश्याम्यसितलोचने. ४ क. अलंतेपरिहासेन. ५ क. शीलंते. ६ ङ.—ट. मेदेवीं. ७ क. ख. सकामाद्यकैकेयीदेवीमेसा. च. छ. ज. सकामाद्यकैकेयीदेवीसाद्य. ग. सकामाद्यकैकेयीसापिदेवी. ङ. झ. ट. सकामाद्यकैकेयीदेवीमेऽद्य. ञ. सकामाथकैकेयीदेवीसाद्य. ८ घ. सीते. ९ ङ. झ. ट. मम. १० घ. च. छ. ञ. लोकोयं. क. मांलोको. ११ ख. ममपृच्छन्तं. १२ ख. ग. च. छ. त्वया. १३ क. ख. ग. च. छ. ज. दुहितृस्नेहसंतप्तो. ङ. झ. ट. सुताविनाशसंतप्तो. १४ इदमर्धं ख. पाठेदृश्यते.

अथवा न गमिष्यामि पुरीं भरतपालिताम् ॥ स्वर्गोपि[1] सीतया हीनः शून्य एव मतो मम ॥१६॥
मामिहोत्सृज्य[2] हि वने गच्छायोध्यां पुरीं शुभाम् ॥ न त्वहं[3] तां विना सीतां जीवेयं हि कथंचन ॥१७॥
गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया ॥ अनुज्ञातोसि रामेण पालयेति वसुंधराम् ॥ १८ ॥
अम्बा च मम कैकेयी सुमित्रा च त्वया विभो ॥ कौसल्या च यथान्यायमभिवाद्या ममाज्ञया ॥१९॥
रक्षणीया प्रयत्नेन भवता सोक्त[4]कारिणा ॥ २० ॥
सीतायाश्च विनाशोयं मम चामित्रकर्शन[5] ॥ विस्तरेण जनन्या मे विनिवेद्यस्त्वया भवेत् ॥ २१ ॥
इति विलपति राघवे[6] सुदीने वनमुपगम्य तया विना सुकेश्या ॥
भयविकलमुखस्तु[7] लक्ष्मणोपि[8] व्यथितमना भृशमातुरो बभूव ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

सीतामपश्यतारामेणलक्ष्मणंप्रतिसंबोधनेनतस्याराक्षसैर्नानादुरवस्थासंपादनसंभावनापूर्वकं तांप्रतिशोचनं ॥ १ ॥ लक्ष्मणेनोन्मत्तवद्बहुधाप्रलापेनशोचन्तंरामंप्रतिसमाश्वासनं ॥ २ ॥

स राजपुत्रः प्रियया विहीनः कामेन[9] शोकेन च पीड्यमानः ॥
विषादयन्भ्रातरमार्तरूपो भूयो विषादं प्रविवेश तीव्रम् ॥ १ ॥
स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले[10] तु रामः ॥
उवाच वाक्यं व्यसनानुरूपमुष्णं विनिश्श्वस्य रुदन्सशोकम्[11] ॥ २ ॥

---

सीतया ॥ १५ ॥ भरतपालितां सुसमृद्धामपीत्यर्थः ॥ १६ ॥ कथंचन त्वत्कृताश्वासनेनापीत्यर्थः ॥१७॥ पालयेति वाच्य इत्यन्वयः ॥ १८ ॥ अम्बेति प्रथमोक्तिः शोकजाग्रहात् ॥ १९ ॥ रक्षणीयेत्यर्धं । सा कौसल्या ॥ २० ॥ मम विनाशः भावीतिशेषः ॥ २१ ॥ तया विनाकृतं वनमुपगम्येत्यर्थः । सुकेश्येति विलापहेतुः । भयेन विकलमुखः विवर्णमुखः । आतुरः तप्तशरीरः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

अथ तापाख्यां मदनावस्थां दर्शयति त्रिषष्टितमे— स राजपुत्र इत्यादि । कामेन प्रियास्मरणजन्येन । शोकेन प्रियाविरहजन्येन । भ्रातरं भूयो विषादयन् । आर्तरूपः पीडितशरीरः । सः रामः । तीव्रं विषादं प्रविवेश स्वशोकलक्ष्मणशोकाभ्यामधिकतरं शोकं गत इत्यर्थः ॥ १ ॥ विपुले शोके निमग्नः लक्ष्मणशोकदर्शनजशोकेन विपुले शोके सीताशोके निमग्नः । व्यसनानुरूपं लोकवद्दुःखप्रसङ्गोचितं । उष्णं यथा तथा विनिश्श्वस्य रुदन् सशोकं वाक्यमुवाच ॥ २ ॥

---

त्यर्थः ॥ **स०** तत्रैवस्वर्गएववसतात् । मयासाकमितिशेषः । इति उक्त्वागतः ततोदशरथः कृतार्थः । स्नुषादर्शनं तत्रैवजातमितिकृतार्थ इतिभावः ॥१५॥ इतिद्विषष्टितमस्सर्गः ॥ ६२ ॥

**ति०** इष्टवियोगजः शोकः । कामजंचित्तविवशत्वं मोहः ॥ १ ॥ **स०** सशोपि ससुखोपि अकं असुखंयथाभवतितथा ।

**[ पा० ]** १ क. च. छ. ज. ञ. स्वर्गोपिचतया. ख. ग. ङ. झ. ट. स्वर्गोपिहितया. २ घ. तामिहोत्सृज्य. ङ. झ. तन्मामुत्सृज्य. ३ क. नह्यहं. ४ क. ख. ग. च. छ. ज. ञ. युक्तकारिणा. घ. सूक्तकारिणा. ङ. झ. ट. सूक्तचारिणा. ५ ख. ङ.—ट. सूदन. ६ ङ. झ. ट. राघवेतुदीने. ७ च. छ. ज. ञ. मुखश्च. ८ ग. लक्ष्मणोवै. ९ घ. ङ. झ. ट. शोकेनमोहेन. च. ख. ञ. कामेनशोकेनच. ज. शोकेनकामेनच. १० च. छ. ञ. विपुलेहि. ११ क. छ. ज. न्सशोकः.

न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोस्ति वसुंधरायाम् ॥
शोकेन शोको हि परम्पराया मामेति भिन्दन्हृदयं मनश्च ॥ ३ ॥
पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यसकृत्कृतानि ॥
तत्रायमद्यापतितो विपाको दुःखेन दुःखं यदहं विशामि ॥ ४ ॥
राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननीवियोगः ॥
सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥ ५ ॥
सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य शून्यम् ॥
सीतावियोगात्पुनरप्युदीर्णं काष्ठैरिवाग्निः सहसा प्रदीप्तः ॥ ६ ॥
सा नूनमार्या मम राक्षसेन बलाद्धृता खं समुपेत्य भीरुः ॥
अपस्वरं सस्वरविप्रलापा भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७ ॥
तौ लोहितस्य प्रियदर्शनस्य सदोचितावुत्तमचन्दनस्य ॥
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ नूनं प्रियाया मम नाभिभातः ॥ ८ ॥

द्वितीयो मद्विधो दुष्कृतकर्मकारी पापकर्मकारी । वसुंधरायां नास्तीति मन्ये । शोकेनेति । नमद्विधः इत्यादिनोक्तमनेनार्धेन स्पष्टीक्रियते । परम्परायाः परम्परारूपेणागतः । शोकेन शोकः शोकाच्छोकः । हृदयं मनश्च भिन्दन् मामेति । मनोऽधिष्ठानं हृदयं ॥ ३ ॥ एवं शोकपारम्पर्ये हेतुमुत्प्रेक्षते—पूर्वमिति । पूर्वं पूर्वजन्मनि । अभीप्सितानि प्रार्थितानि । तत्र तेषु पापेषु । विपाकः कार्योन्मुख्यं । आपतितः प्राप्तः ॥ ४ ॥ दुःखानिपरिगणयति—राज्येति । राज्यप्रणाशो राज्यभ्रंशः । स्वजनैः बन्धुभिः । सर्वाणीति सामान्ये नपुंसकं । शोकवेगं शोकराशिं । प्रविचिन्तितानि स्मृतानि ॥ ५ ॥ शून्यं निर्जनं वनमेत्य स्थितस्य मम शरीरे शान्तं शरीरक्लेशेन विस्मृतमित्यर्थः । उदीर्णं उद्रिक्तं । प्रदीप्तोग्निः पुनः काष्ठैरिव ॥ ६ ॥ मम संबन्धिनी आर्या सा राक्षसेन केनचित् बलाद्धृता सती खमाकाशमुपेत्य भीरुतया सस्वरविप्रलापा सती उच्चैर्ध्वनियुक्तविप्रलापा सती । भयेन अपस्वरं अपगतनिजस्वरं यथा तथा । अभीक्ष्णमत्यर्थं आक्रन्दितवती उद्घोषितवतीत्युत्प्रेक्षा ॥ ७ ॥ लोहितस्य लोहिताख्यस्य उत्तमचन्दनस्य । "रक्तं तु चन्दनं विद्याल्लोहितं हरिचन्दनं" इति । यद्वा कुङ्कुमादिना रक्तस्य उत्तमचन्दनस्य सदा उचितौ योग्यौ । वृत्तौ वर्तुलौ । मम प्रियायाः स्तनौ शोणितपङ्कदिग्धौ राक्षसेन भक्षणाय विशसनादिति भावः । एवंभूतौ सन्तौ नाभिभातः न प्रकाशेते । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः । मम नाभिपात इति पाठान्तरे

रुदन्नुवाचेत्यन्वयः ॥ २ ॥ **ति०** शोकमनुप्रवृत्तः शोकः शोकानुशोकः । सः । परंपरायाः तृतीयार्थेषष्ठी । परंपरया । अविच्छेदेन । ह्रियतो मां हृदयं तदधिष्ठानमात्मानंमनश्चभिन्दन् एति प्राप्नोति ॥ ३ ॥—**शि०** असकृत् वारंवारं कृतानि राक्षसैराचरितानि । पापानि कर्माणि । पूर्वं स्वाप्राकव्यसमयेतत्रसाकेतेविद्यमानेनमया । यत् यस्मात् । अभीप्सितानि मदिच्छाविषयीभूतानि । तस्मादयंविपाकः इच्छामात्रजनितफलं । अद्यापतितः । अतएवदुःखेनदुःखं अहं विशामि । एतेन यदिमदिच्छानस्यात्तर्हिराक्षसानां ब्रह्मादिप्रेरितदुष्कृतकर्मप्रवृत्तिर्नस्यादितिसूचितं । तेनसकलजनकर्तृत्वादीनांस्वायत्तत्वंध्वनितं । तथाचश्रुतिः " कर्तृत्वंकरणत्वंचस्वभावश्चेतनाधृतिः । यत्प्रसादादिमेसन्ति नसन्ति यदुपेक्षया " इति ॥ **स०** दुःखेनदुःखं तत्परंपरामित्यर्थः ॥ ३ ॥ **ति०** वनमेत्य शरीरेक्लेशमनुभूयापि । सीतासंनिधानात्सर्वंशान्तं । अद्यसीतावियोगात्पुनरुदीर्णं वृद्धिंप्राप्तं । प्रियावियोगएव दुस्सह इतिभावः ॥ **स०** एत्यक्लेशमितिगुर्वक्षरोक्त्या क्लेशातिशयोद्योत्यते ॥ ६ ॥ **स०** अनूनमार्या पूर्णसंपत्स्वामिनी । " अर्यः स्वामिवैश्ययोः " इतिनिपातनात् ॥ ७ ॥

**[ पा० ]** १ ग. घ. कामकारी. २ ख. ङ.—ट. शोकानुशोको. ३ घ. सर्वाण्यसकृत्. ४ ङ. झ. ट. क्लेशं. ५ ख. घ. ङ. झ. ञ. ट. रप्युदीर्णं. ६ क. ख. च. झ. ञ. ट. सहसोप्रदीप्तः. ७ ख. घ. ङ. झ. ञ. ट. ह्यभ्याहृता. क. च. छ. बालाहृता. ८ ज. दुःखमपेत्य. ९ झ. अप्यस्वरं. १० क.—ज. ञ. ट. सुस्वर.

तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं तस्या मुखं कुञ्चितकेशभारम् ॥
रक्षोवशं नूनमुपागताया न भ्राजते राहुमुखे यथेन्दुः ॥ ९ ॥
तां हारपाशस्य सदोचिताया ग्रीवां प्रियाया मम सुव्रतायाः ॥
रक्षांसि नूनं परिपीतवन्ति विभिद्य शून्ये रुधिराशनानि ॥ १० ॥
मया विहीना विजने वने या रक्षोभिराहृत्य विकृष्यमाणा ॥
नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥ ११ ॥
अस्मिन्मया सार्धमुदारशीला शिलातले पूर्वमुपोपविष्टा ॥
कान्तस्मिता लक्ष्मण जातहासा त्वामाह सीता बहुवाक्यजातम् ॥ १२ ॥
गोदावरीयं सरितां वरिष्ठा प्रिया प्रियाया मम नित्यकालम् ॥
अप्यत्र गच्छेदिति चिन्तयामि नैकाकिनी याति हि सा कदाचित् ॥ १३ ॥
पद्मानना पद्मविशालनेत्रा पद्मानि वाऽऽनेतुमभिप्रयाता ॥
तदप्ययुक्तं न हि सा कदाचिन्मया विना गच्छति पङ्कजानि ॥ १४ ॥

एवमपि मम देहपातो न जायत इत्यर्थः ॥ ८ ॥ तत् पूर्वमनुभूतं श्लक्ष्णो मधुरः सुव्यक्तः अर्थव्यक्तियुक्तः मृदुः अपरुषः प्रलापो यस्य तत् ॥ ९ ॥ हारपाशस्य हारमालायाः । सदोचितायाः सुव्रतायाः मदन्यं स्प्रष्टुमनिच्छन्त्याः । मम प्रियायाः ग्रीवां शून्ये एकान्ते । विभिद्य रुधिररूपाणि अशनानि पानानि परिपीतवन्ति । नूनं ॥ १० ॥ या विजने वने मया विहीना सा कुररीव क्रौञ्चीव । विनादं मुक्तवती । आयतकान्तनेत्रेत्यनेन तत्काले मदागमनमार्गव्यग्रतोक्ता ॥ ११ ॥ पूर्वं गोदावर्यां सीतया सह सरसलीलाविहारो यस्मिन्कृतस्तस्मिन्प्रदेशे गत्वा तद्दर्शनेन जातपूर्वस्मरणो लक्ष्मणं प्रत्याह । अस्मिन् एवं शून्यतया स्थिते प्रदेशे हि मया पूर्वं निधिर्लब्धः । मया सार्धं प्रणयधारायामहं पण्डितमानी तादृशोहमप्यप्रधानोऽभवं तदीयविदग्धव्यवहारेषु । उदारशीला पूर्वं नगरवासे श्वश्र्वादिसन्निधानेन सङ्कुचितविहारा स्थिता । सीतया सार्धमिति ह्युक्तं । साम्प्रतं तु एकान्तस्थलतया सरसभोगेषु सर्वस्वदानं कृतवती । शिलातले पूर्वमुपोपविष्टा गोदावरीसलिले चिरं सलिलविहारे प्रवृत्ते । खिन्नो रामः प्रदेशान्तरे निस्तरणायोगात् केनचिच्छिलातलमार्गेण निर्गन्तुमालोकितवान् । सीता तु "प्रेक्षितज्ञास्तु कोसलाः" इति न्यायेन कान्तस्य प्रेक्षणातिशयमवगम्य तं पुनः क्लेशयितुं तच्छिलातलं पूर्वमधिरूढा उपोपविष्टा । तत्र यं यं कोणमवलम्ब्योत्थातुमिच्छति तत्तदाक्रम्य मुखे सलिलमभिषिञ्चन्ती स्थिता । वीप्सयैवमवगम्यते । कान्तस्मिता सहजमधुरहासवती । जातहासा स्वविजयकृतहर्षेण संजातहासा । त्वामाह इतःपूर्वं कुत्रापि पराजयाभावात् अधुना स्त्रीतोऽभिनवपराजयाद्रामो लज्जानम्रवदनोऽभूत् । तं विहाय भ्रातरं बहुधा प्रशंसन्तं लक्ष्मणं प्रत्युक्तवती बहुवाक्यजातं । युवां संकल्पितं सर्वं निर्वर्तितवन्तौ हि युवामतिबलपराक्रमशालिनौ पुरुषधौरेयौ वयमबलाजनाः युवां मृगयायै शत्रुहत्यायै चाभियातारौ वयं गृहादनिर्गच्छन्त्यः । युवयोः संकल्पितं सर्वं कर्तुं शक्यं युष्मदग्रजो जितवानिह इत्येवं बहुमुखं वचनमवोचत् ॥ १२ ॥ नित्यकालं सर्वकालं । अत्र गोदावर्यां । चिन्तयामि तन्न युक्तमिति शेषः ॥ १३ ॥ अभिप्रयाता गोदावरीमिति शेषः । पङ्कजानीत्यत्राप्यानेतुमित्यनुषज्यते ॥ १४ ॥

शि० आयतकान्तनेत्रा आयतेविस्तृते कान्ताय पत्यन्वेषणायनेत्रेयस्यास्स्या ॥ ११ ॥

[ पा० ] १ ध. केशपाशं. २ ङ. झ. ट. सदोचितांतां. ३ ङ. ट. रुधिरंपिबन्ति. च. छ. ज. ञ. परिपीडयन्ति. ४ क.—ट. शून्येहिभित्त्वा. ५ घ. पिशिताशनानि. ६ क. ख. ङ.—ट. वनेसा. ७ क. ङ.—ट. राहृत्य. ८ ख. घ. मिहोपविष्टा. ९ क. घ. च. छ. झ. ञ. ट. मामाह. १० क. ङ.—ट. पद्मपलाशनेत्रा.

कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणैरुपेतम् ॥
वनं प्रयाता नु तदप्ययुक्तमेकाकिनी सा[1]ऽतिविभेति भीरुः ॥ १५ ॥
आदित्य भो लोककृताकृतज्ञ लोकस्य सत्यानृतकर्मसाक्षिन् ॥
मम प्रिया सा क गता हृता वा शंसस्व मे शोक[2]वशस्य नि[3]त्यम् ॥ १६ ॥
लोकेषु सर्वेषु च[4] नास्ति किंचिद्यत्ते न नित्यं विदितं भवेत्तत् ॥
शंसस्व वायो कु[5]लशालिनीं तां हृ[6]ता मृता वा पथि वर्तते वा ॥ १७ ॥
इ[7]तीव तं शोकविधेयदेहं रामं विसंज्ञं विलपन्तमे[8]वम् ॥
उवाच सौमित्रिरदीनसत्त्वो न्याये स्थितः का[9]लयुतं च वाक्यम् ॥ १८ ॥
शोकं वि[10]मुञ्चार्य धृतिं भजस्व सोत्साहता चा[11]स्तु विमार्गणेऽस्याः ॥
उत्साहवन्तो हि नरा न लोके सीदन्ति क[12]र्मस्वतिदुष्करेषु ॥ १९ ॥
इतीव सौमित्रिमुदग्रपौरुषं ब्रुवन्तमा[13]र्तो र[14]घुवंशवर्धनः ॥
न चिन्तयामास धृतिं विमुक्तवान्पुनश्च दुःखं म[15]हदभ्युपागमत् ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

अतिबिभेति अत्यन्तं बिभेति ॥१५॥ भो इत्यादित्यस्य संबोधनं । लोकस्य कृताकृते जानातीति तथा । सत्यानृतयोः पुण्यपापयोः कर्मणोः साक्षिन् । "कर्मसाक्षी जगच्चक्षुः" इत्युक्तेः । मम प्रिया कगता अथवा हृता केनचिदपहृतेति शंसस्व शंस ॥ १६ ॥ ते नित्यं यन्न विदितं तत् सर्वेषु लोकेषु नास्ति तस्माच्छंसेति ॥१७॥ शोकविधेयः शोकपरवशः । कालयुतं कालोचितं । अदीनसत्त्वः अदीनधृतिः । एवमुवाचेत्यन्वयः॥१८॥ अस्याः सीतायाः । विमार्गणे अन्वेषणे ॥ १९ ॥ उदग्रपौरुषं श्रेष्ठपराक्रमं । इतीव ब्रुवन्तं सौमित्रिं न चिन्तयामास तद्वचनं नादृतवानित्यर्थः । धृतिं च मुक्तवान् ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

ति० लोककृताकृतज्ञेत्यादिना तादृशसूक्ष्मज्ञानवतस्तज्ज्ञानंसर्वथाऽस्तीतिभावः ॥ स० लोककृताकृतज्ञ बहिःप्रकाशद्वाराकृताकृतज्ञानिन् । लोकस्यसत्यानृतकर्मसाक्षिन् अन्तः । मूलपुरुषत्वादादित्यंप्रत्युक्तिर्युक्तेतिभावः ॥ १६ ॥ ति० कुलपालिनीमित्यनेन तस्यामहत्त्वात्तज्ज्ञानंममनेति वक्तुमशक्यमितिसूचितं ॥ स० उत्तरत्रत्वदभिमानिनामरुतैव सर्वकार्यसाधयिष्यामीति वायुंपृच्छति ॥ १७ ॥ ति० इतीवातीवशब्दौपर्यायौ ॥ १८ ॥ इतित्रिषष्टितमस्सर्गः ॥ ६३ ॥

[ पा० ] १ क.—घ. सातु. २ ङ. झ. ट. शोकहतस्य. ३ ङ. झ. ट. सर्वं. क. ग. च. छ. ज. ञ. सत्यं. ४ क. ङ. च. छ. ञ. ट. नचास्ति. ५ ङ. झ. ट. कुलपालिनीं. ६ ङ. झ. ट. मृताहृतावा. ख. ग. हृताहृतावा. ७ च. छ. ज. ञ. अतीव. ८ घ. ङ. छ.—ट. मेव. ९ क. च. छ. ज. कालहितं. १० ङ. झ. ट. विसृज्याद्य. च. छ. ज. ञ. चमुञ्चार्य. ११ च. छ. ज. वास्तु. १२ ग. च. छ. ज. कर्मस्वपि. १३ ङ. झ. ञ. ट. मार्तं. १४ ङ. झ. ट. रघुवंशसत्तमः. १५ घ. भृशमभ्युपागमत्. च. छ. ज. ञ. महदप्युपागतः. ङ. झ. ट. महदप्युपागमत्.

# चतुःषष्टितमः सर्गः ॥ ६४ ॥

रामेणसीतायाः पद्मानयनार्थंगोदावरींप्रतिगमनसंभावनया गोदावरीमेत्यसीतादर्शनप्रश्नः ॥ १ ॥ तथा रावणभयात्सीतावृत्तान्तानभिधानं ॥ २ ॥ ततोनिर्विण्णेनरामेण मृगाणामिङ्गितविज्ञानेनतान्प्रतिप्रश्नः ॥ ३ ॥ तथा तच्चेष्टया नैर्ऋतदिशिसीतागमनंनिर्धारितवतालक्ष्मणेनसह तदाभिमुख्येनगमनं ॥ ४ ॥ तथा मार्गपतितांसंततधारांपुष्पपरंपरांदृष्टवतातेनतेषु लीलापुष्पत्वप्रत्यभिज्ञानं ॥ ५ ॥ तथा भूमौसीतारावणचरणाङ्कानां जटायुभग्नरथसारथिकवचकार्मुकादीनांचावलोकनं ॥ ६ ॥ तथा देवादिभिःकैरपि सीतावृत्तान्तानिवेदने कोपात्सकलभुवनभस्मीकरणप्रतिज्ञानेन धनुषिशरारोपणं ॥ ७ ॥

स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् ॥ १ ॥
शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीम् ॥ अपि गोदावरीं सीता पद्मान्यानयितुं गता ॥२॥
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ॥ नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ॥ ३ ॥
तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत् ॥ ४ ॥
नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ॥ कं नु सा देशमापन्ना वैदेही क्लेशनाशिनी ॥
न हि तं वेद वै देशं यत्र सा जनकात्मजा ॥ ५ ॥
लक्ष्मणस्य वचः श्रुत्वा दीनः सन्तापमोहितः ॥ रामः समभिचक्राम स्वयं गोदावरीं नदीम् ॥ ६ ॥
स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥ ७ ॥
भूतानि राक्षसेन्द्रेण वधार्हेण हृतामपि ॥ न तां शशंसू रामाय तथा गोदावरी नदी ॥ ८ ॥
ततः प्रचोदिता भूतैः शंसास्मै तां प्रियामिति ॥ न तु साऽभ्यवदत्सीतां पृष्टा रामेण शोचता ॥ ९ ॥

---

अथ चिह्नविशेषैः सीताहरणनिश्चयश्चतुष्षष्टितमे । लोके कश्चिद्दीनोपि दीनां वाचं न व्याहरति । इदमर्धमेकं वाक्यं ॥ १—२ ॥ लघुविक्रमः त्वरितपदविन्यासः ॥३॥ तीर्थवतीं अवतारवतीं । क्रोशतः आह्वयतः । मे मत्तः । न शृणोति । सेति शेषः ॥ ४—५ ॥ वेद जानामि स तामित्यर्धमेकं वाक्यम् ॥ ६ ॥ भूतानि वन्यानि सत्त्वानि । दृष्टान्तार्थमिदं । यथा पूर्वं पृच्छ्यमानानि भूतानि न शशंसुः तथा गोदावरी च न शशंसेत्यर्थः ॥७—८॥ स्वयं न शशंस । भूतैः प्रचोदितापि न शशंसेत्यर्थः । अस्मत् अस्मदर्थे । पञ्चमी

---

स० दीनयावाचासहितंलक्ष्मणं सरामोदीनः सन्वाक्यमब्रवीत् । ति० एवंशोककरणं चारद्वाराश्रवणेनरावणस्यमनुष्यत्वबुद्धिदार्ढ्यपूर्वकंस्ववध्यत्वसंपादनायेतिबोध्यं । तदुक्तंब्रह्माण्डपुराणे—"स्त्रीपुंमलानुषङ्गात्मा देहोनास्यविजायते । किंतुनिर्दोषचैतन्यं सुखनित्यांस्वकांतनुम् । प्रकाशयतिसैवेयं जनिर्विष्णोर्नचापरा । तथाप्यसुरमोहार्थं परेषांचक्वचित्क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्वव्रणादिक्वचाज्ञानंस्वतन्त्राचिन्त्यसद्गुणे । मोक्षाभावायतेषांतुदर्शयेत्तानजोहरिः । कृष्णोह्यत्यक्तदेहोपि त्यक्तदेहस्य देहवत् । लोकानांदर्शयामास स्वरूपसदृशाकृतिम्" इति । एतेन रावणस्येश्वरत्वबुद्धिप्रतिबन्धेनमोक्षाभावोपिशोकफलमित्युक्तं । एवंरावणद्वारासीताहरणमपितत्पुण्यातिशयनाशेनवध्यतासंपादनाय । तथाचकेदारखण्डेउक्ताऽऽख्यायिका । "महतातपसालब्धबलोरावणस्तदधिकतपोबलंविनाजेतुमशक्यः । देवाश्चस्वयंतदधिकंतपःकर्तुमक्षमाः । अतस्तेषांकार्यमत्यन्तानुचितसीतानुरागमोहानुवृत्तिसंपादनेनरावणस्य तपोवीर्यभ्रंशंसंपाद्यकर्तव्यमितिलक्ष्म्यासहविचार्यतदर्थंविष्णुः सीतयाब्रह्मविद्ययासहावतीर्णः"

[ पा० ] १ सदीनोदीनयावाचा लक्ष्मणंवाक्यमब्रवीत् इतिपादद्वयमध्ये. संशुष्कवदनोभृशम् । अभिराममिदंरामोविललापाकुलेन्द्रियः । त्रिलोकाधिपतिं देवंशक्रं त्वां वेदयाम्यहं । पुरंदर विहारार्हप्रिया भार्याजहातिमाम् । यस्मिन्कालेस्त्रियंकामी लब्ध्वाभूयोपि नन्दति । तस्मिन्सुखोदये काले प्रिया भार्या जहाति माम् । निर्वीर्यइवमातङ्गः परिवृत्तइवोत्सवः । प्रतिभात्ययमावासो गतध्वजइवाहवः । रतिंनैवचविन्दामि तांविनापद्मलोचनाम् । नाशयत्येव सर्वस्वमनुशोचामि भामिनीम् । इतिशोकसमाविष्टो. इतिपादद्वयसहिताइमेश्लोकाः ख. पाठेदृश्यन्ते. २ क. ख. ग. ङ. च. छ. झ. ञ. ट. पुनरेवहि. ३ ङ. च. छ. झ. ञ. ट. नहितंवेद्मिवैरामयत्रसातनुमध्यमा. ४ घ. कर्शितः. ५ छ. ज. तत्रैवस्थितो. च. तत्रावस्थितो. ६ ग. झ. शंसचास्मै. क. ख. घ.—ज. ञ. शंसास्मैतां. ७ क. ङ.—ट. नचसाह्यवदत्. ख. ग. नचसाभ्यवदत्.

रावणस्य च तद्रूपं [1]कर्माणि च दुरात्मनः ॥ ध्यात्वा भयात्तु वैदेहीं सा नदी न [2]शशंस ताम् ॥ १० ॥
निराशस्तु तया नद्या सीताया दर्शने कृतः ॥ उवाच रामः सौमित्रिं सीताऽदर्शनकर्शितः ॥ ११ ॥
एषा गोदावरी सौम्य किंचिन्न प्रतिभाषते ॥ किंनु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः ॥
मातरं चैव वैदेह्या विना तामहमप्रियम् ॥ १२ ॥
या मे राज्यविहीनस्य वेन वन्येन जीवतः ॥ सर्वं [3]व्यपनयेच्छोकं वैदेही क नु सा गता ॥ १३ ॥
[4]ज्ञातिपक्षविहीनस्य [5]राजपुत्रीमपश्यतः ॥ मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ॥ १४ ॥
मन्दाकिनीं [6]जनस्थानमिमं प्रस्रवणं गिरिम् ॥ [7]सर्वाण्यनुचरिष्यामि यदि सीता हि [8]दृश्यते ॥ १५ ॥
एते [9]मृगा महावीर्या मामीक्षन्ते [10]मुहुर्मुहुः ॥ वक्तुकामा इव हि मे इङ्गितान्युपलक्षये ॥ १६ ॥
तांस्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह ॥ क सीतेति निरीक्षन्वै [11]बाष्पसंरुद्धया [12]दृशा ॥ १७ ॥
एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ॥ दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् ॥ १८ ॥
मैथिली ह्रियमाणा सा दिशं [13]यामन्वपद्यत ॥ तेन मार्गेण [14]धावन्तो निरीक्षन्ते नराधिपम् ॥ १९ ॥
येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः ॥ [15]पुनश्च मार्गमिच्छन्ति लक्ष्मणेनोपलक्षिताः ॥ २० ॥
तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ उवाच लक्ष्मणो [16]ज्येष्ठं धीमान्भ्रातरमार्तवत् ॥ २१ ॥
क सीतेति त्वया पृष्टा [17]यथेमे सहसोत्थिताः ॥ दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः ॥ २२ ॥
साधु गच्छावहे देव [18]दिशमेतां हि नैर्ऋतिम् ॥ यदि [19]स्यादागमः कश्चिदार्या वा साऽथ लक्ष्यते ॥ २३ ॥

॥ ९ ॥ अकथने हेतुमाह—रावणस्येति ॥ १० ॥ निराशः कृत इत्यन्वयः ॥ ११—१२ ॥ वन्येन फलादिना ॥ १३ ॥ ज्ञातयश्च ते पक्षाः सहायाश्च तैर्विहीनस्य ॥ १४—१५ ॥ बाष्पसंरुद्धया दृशा निरीक्षन् निरीक्षमाणः सन् । क सीतेत्युवाच ॥ १६ ॥ उक्ताः पृष्टाः । नभःस्थलं दर्शयन्तः आकाशावलोकनेङ्गितेन सीतागमनमार्गं दर्शयन्तइत्यर्थः । उत्थिताः प्रस्थिताः आकाशमार्गेण दक्षिणां दिशं गता सीतेत्यसूचयन्निति भावः ॥ १७—१८ ॥ अमुमेवार्थं स्पष्टयति—मैथिलीति । ह्रियमाणा सा मैथिली यां दिशमन्वपद्यत प्राप । तेन मार्गेण तयादिशा । धावन्तः सन्तः नराधिपं निरीक्षन्ते ॥ १९ ॥ येन कारणेन । मार्गं आकाशमार्गं । भूमिं दक्षिणां भूमिं च । निरीक्षन्ते स्म । पुनश्च मार्गं दक्षिणमार्गं । इच्छन्ति स्म । गन्तुमिति शेषः । तेन कारणेन मृगाः उपलक्षिताः गृहीतचेष्टार्था आसन् ॥ २० ॥ उक्तमनुवदन्नाह—तेषामिति । वचनसर्वस्वं तत्सदृशमिङ्गितमित्यर्थः । लक्षयामास मृगचेष्टार्थं वचनोक्तमिव ज्ञातवानित्यर्थः । उवाचेत्यन्वयः । आर्तवत् आर्तमिति क्रियाविशेषणं । क्तवतुप्रत्ययः ॥ २१ ॥ केत्यादिश्लोकद्वयमेकान्वयं । यथा येन प्रकारेण दर्शयन्ति तथा गच्छावहे इत्यन्वयः । आर्षमात्मनेपदं । नैर्ऋतिं दक्षिणपश्चिमां राक्षसाधिष्ठितां । तस्याश्चदक्षिणैकदेशत्वाद्दक्षिणां दिशमिति व्यपदेशः । आगमः सीतादर्शनोपायः ॥ २२—

इति ॥ १ ॥ ति० मन्दाकिनी नाम काचिन्नदी ॥ १५ ॥ तनि० अत्ररामाशयाभिज्ञैर्मृगैः सीतागमनदिक्सूचकचेष्टाकरणात्सूक्ष्मालङ्कारः । " सूक्ष्मंपराशयाभिज्ञेतरसाकूतचेष्टितं ।" इतिलक्षणात् ॥ १८ ॥ ति० पुनश्चमार्गंदर्शयितुमिच्छन्तोलक्ष्मणेनोपलक्षिताः तेषामिङ्गितंलक्ष्मणोलक्षयामासेत्यर्थः । आकाशमार्गेणगत्वादक्षिणदिशिदूरेस्थापितासीता दक्षिणदिशिगच्छतेत्येवं तदिङ्गितं तेषांचवचनसर्वस्वभूतंस्वयंलक्षयामास ॥ १९ ॥ ती० तस्यागमः तस्या आगमइत्यर्थः । आर्षोदीर्घः । ज्ञापकंवस्तुदृश्ये-

[ पा० ] १ ङ. झ. ट. कर्मापिच. २ ङ.—ट. शशंसह. ३ ग. घ. ङ. झ. ञ. ट. व्यपानयच्छोकं. ४ ङ. झ. ज्ञातिवर्गं. ५ ङ. झ. वैदेहीमप्यपश्यतः. ६ घ. जनस्थानंतथाप्रस्रवणं. ७ छ. ज. ञ. संहृष्टोविचरिष्यामि. ८ ङ. झ. लभ्यते. ९ ङ. झ. ट. महामृगावीराः. १० ङ. झ. ट. पुनःपुनः. ११ ख. संदिग्धया. १२ ख.ङ. झ. ट. गिरा. १३ झ. ट. यामभ्यपद्यत. १४ ङ. झ. ट. गच्छन्तो. १५ ट. पुनर्नदन्तोगच्छन्ति. क.—घ. च.—ञ. पुनश्चमार्गमिच्छन्तो. १६ ङ. ट. धीमाञ्ज्येष्ठंभ्रातरं. १७ घ. ङ. झ. ट. यदिमे. क. च. छ. ञ. यथैते. १८ ङ. च. झ. ञ. ट. मेतांच. १९ ङ. झ. ट. तस्यागमः.

बाढमित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥ [1]लक्ष्मणानुगतः श्रीमान्वीक्षमाणो वसुंधराम् ॥२४॥
एवं संभाषमाणौ तावन्योन्यं भ्रातरावुभौ ॥ वसुंधरायां पतितं पुष्पमार्गमपश्यताम् ॥ २५ ॥
[2]तां पुष्पवृष्टिं पतितां दृष्ट्वा रामो महीतले ॥ उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः ॥२६॥
अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ॥ [3]पिनद्धानीह वैदेह्या मया दत्तानि कानने ॥२७॥
मन्ये सूर्यश्च वायुश्च मेदिनी च यशस्विनी ॥ अभिरक्षन्ति पुष्पाणि [4]प्रकुर्वन्तो मम प्रियम् ॥२८॥
एवमुक्त्वा [5]महाबाहुं लक्ष्मणं पुरुषर्षभः ॥ उवाच रामो धर्मात्मा गिरिं [6]प्रस्रवणाकुलम् ॥ २९ ॥
कच्चित्क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ॥ [7]रामा रम्ये [8]वनोद्देशे मया विरहिता त्वया ॥ ३० ॥
क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३१ ॥
तां हेमवर्णां [9]हेमाभां सीतां दर्शय पर्वत ॥ यावत्[10]सानूनि सर्वाणि न ते विध्वंसयाम्यहम् ॥ ३२ ॥
एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति ॥ [11]शंसन्निव ततः सीतां नादर्शयत राघवे ॥ ३३ ॥
ततो दाशरथी राम उवाच च शिलोच्चयम् ॥ ३४ ॥
मम [12]बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि ॥ [13]असेव्यः संततं चैव निस्तृणद्रुमपल्लवः ॥ ३५ ॥
इमां वा सरितं [14]चाद्य शोषयिष्यामि लक्ष्मण ॥ यदि नाख्याति मे [15]सीतामार्यां चन्द्रनिभाननाम् ॥३६॥
एवं [16]स रुषितो रामो दिधक्षन्निव चक्षुषा ॥ ददर्श भूमौ निष्क्रान्तं राक्षसस्य [17]पदं महत् ॥ ३७ ॥

---

२३ ॥ श्रीमान् सीताधिगमनहेतुदर्शनश्रीमान् ॥२४॥ एवं साध्वित्याद्युक्तरीत्या । पुष्पमार्गं पुष्पयुक्तमार्गं । मध्यमपदलोपिसमासः ॥ २५ ॥ वीरः दर्शनोपायमात्रे ज्ञाते तांलब्धुंसमर्थः ॥ २६ ॥ तानीमानि पुष्पाणि मया दत्तानि वैदेह्या केशपाशे पिनद्धानि बद्धानीत्यभिजानामि ॥ २७ ॥ अम्लानीकरणात्सूर्यः अनुत्क्षेपणाद्वायुः धारणाद्भूमिश्च रक्षन्तीति भावः ॥ २८ ॥ महाबाहुमित्यनेन बलवत्सहायत्वं । पुरुषर्षभ इत्यनेन स्वतः पराक्रमशालित्वमुक्तं । तथापि धर्मात्मा सहसा गिरेरविनाशकरणात् ॥२९॥ रामा स्त्री ॥ ३० ॥ अदर्शनादाह—क्रुद्ध इति । एकमर्धं ॥ ३१ ॥ हेमवर्णां हेमप्रतिमासदृशीं । हेमाभां स्वर्णतुल्यकान्तिं ॥ ३२ ॥ शंसन्निव प्रतिध्वनिना कथयन्निव । स्वपृष्टस्यैवानुवादेनानादरोक्तिं रामोऽमन्यतेति भावः । ततः अनादरोक्त्या । राघवे विषये सीतां नादर्शयत । "णिचश्च" इत्यात्मनेपदम् ॥ ३३ ॥ दाशरथिरिति हेतुगर्भं । शिलोच्चयं पर्वतं । इदमर्धमेकं ॥ ३४—३५ ॥ इमामिति इयमपि पृष्टा चेन्न वक्ष्यतीति मत्वेति भावः ॥ ३६ ॥ निष्क्रान्तं प्रादुर्भूतं ।

---

तेत्यर्थः ॥ २३ ॥ **तनि०** क्षितिभृतांनाथ पर्वतश्रेष्ठ । सर्वाङ्गसुन्दरी प्रत्यवयवशोभायुक्ता । मयाविरहितारामा रम्येवनोद्देशे त्वयादृष्टाकच्चित् । अस्यैवप्रश्नस्यावृत्त्यायोजने इदमेवोत्तरं । क्षितिभृतांनाथ क्षत्रियश्रेष्ठ । त्वयाविरहिता मयादृष्टेतिकच्चित् । कच्चित्कामप्रवेदने । मयादृष्टेतीदमेवममाप्यत्यन्ताभिमतमित्यर्थः । अत्रैकस्यैववाक्यस्यप्रश्नोत्तररूपत्वाच्चित्रालङ्कारध्वनिः । "कृतप्रश्नोत्तराभिन्नमुत्तरंचित्रमुच्यते ।" इतिलक्षणात् ॥ ३० ॥ **ती०** हेमाभामित्यनेन लावण्यनिर्देशः । हरिद्रादौहेमवर्णसद्भावेपिलावण्याभावादुभयनिर्देशः ॥ ३२ ॥ **तनि०** शंसन्निवप्रतिशब्देनकथयन्निव । अत्रप्रतिध्वनिव्यपदेशेनरामंप्रतिसीतादर्शनकथनंव्यज्यते । नादर्शयतेतिरावणाद्भयंव्यज्यते । **शि०** सीतांदर्शयन् जानन्नपि । राघवे (राघव)समीपे । नादर्शयत नाबोधयत् । एतेन ज्ञापनसमये रावणस्मृतिर्भवतीतिध्वनितं । तेनरावणभीतेरतिप्राबल्यंव्यञ्जितं ॥ ३३ ॥ **ति०** दिधक्षन्निव ।

[ पा० ] १ क. च. छ. ञ. लक्ष्मणानुचरः. २ ङ. झ. ट. पुष्पवृष्टिंनिपतितां. ३ क. ङ.—ट. अपिनद्धानिवैदेह्या. ४ ख. प्रकुर्वाणा. ५ क.—ट. महाबाहुर्लक्ष्मणंपुरुषर्षभं. ६ क. च. छ. ञ. प्रस्रवणाभिधं. ७ च. सीता. ८ च. छ. ज. ञ. वनेत्वस्मिन्मया. क. ख. ग. वनेह्यस्मिन्मया. ९ क. च. छ. ज. ञ. सुमुखीं. ङ. झ. ट. हेमाङ्गीं. १० क. ग. घ. च. छ. ज. ञ. त्सर्वाणिसानूनि. ११ ङ. झ. ट. दर्शयन्निवतांसीतां. १२ ख. ग. बाणास्त्रनिर्दग्धो. १३ ट. असेव्यःपर्वतश्चैव. क. च. ज. ञ. असेव्यस्त्वंततश्चैव. ङ. झ. असेव्यस्सर्वतश्चैव. १४ च. छ. ज. चैव. १५ क. ग. छ. ज. ञ. ट. सीतामद्य. १६ ङ. झ. ट. प्ररुषितो. १७ च. ज. ञ. महत्पदं.

त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ॥ राक्षसे[1]नानुवृत्ताया मै[2]थिल्याश्च पदान्यथ ॥ ३८ ॥
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥ भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् ॥
संभ्रान्तहृदयो रामः शशंस भ्रातरं [3]प्रियम् ॥ ३९ ॥
पश्य लक्ष्मण वैदेह्या [4]शीर्णाः कनकबिन्दवः ॥ भूषणानां हि सौमित्रे माल्यानि विविधानि च ॥ ४० ॥
तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः ॥ आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ॥ ४१ ॥
मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः ॥ भित्त्वाभित्त्वा [5]विभक्ता वा भक्षिता वा भविष्यति ॥ ४२ ॥
तस्या निमित्तं [6]वैदेह्यां द्वयोर्विवदमानयोः ॥ बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥ ४३ ॥
मुक्ता[7]मणिमयं चेदं [8]तपनीय[9]विभूषितम् ॥ धरण्यां पतितं सौम्य कस्य भग्नं महद्धनुः ॥
[ [10]राक्षसानामिदं वत्स सुराणामथवाऽपिवा ] ॥ ४४ ॥
तरुणादित्यसंकाशं वैडूर्यगुलिकाचितम् ॥ विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम् ॥ ४५ ॥
छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ॥ भग्नदण्ड[11]मिदं कस्य भूमौ [12]सम्यङ्निपातितम् ॥ ४६ ॥
काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ॥ भीमरूपा महाकायाः कस्य वा निहता रणे ॥ ४७ ॥
दीप्तपावकसंकाशो द्युतिमान्समरध्वजः ॥ अपविद्धश्च भग्नश्च कस्य सांग्रामिको रथः ॥ ४८ ॥
रथाक्षमात्रा विशिखास्तपनीय[13]विभूषणाः ॥ [14]कस्येमेऽभिहता बाणाः प्रकीर्णा [15]घोरकर्मणः ॥ ४९ ॥

---

इतःपूर्वमदर्शनादेवमुक्तं ॥ ३७ ॥ त्रस्तायाः रावणाद्भीतायाः । रामकाङ्क्षिण्याः रामाश्रमं प्रयातुमुद्युक्तायाः । अतएव राक्षसेनानुवृत्तायाः अनुगतायाः । अतएवेतस्ततो धावन्त्याः । ददर्शेत्यनुवर्तते ॥ ३८ ॥ स समीक्ष्येति सार्धश्लोक एकान्वयः । परिक्रान्तं परिक्रमं पदन्यासमिति यावत् ॥ ३९ ॥ कनकबिन्दवः स्वर्णशकलानि ॥ ४० ॥ तप्तं स्वर्णं ॥ ४१ ॥ मन्य इति । इति मन्य इति योज्यं ॥ ४२ ॥ तस्या निमित्तं सुन्दोपसुन्दवत्परिग्रहार्थमित्यर्थः । विवदमानयोः वैमत्यं प्राप्तयोः । "भासनोपसंभाषा—" इत्यादिना आत्मनेपदं ॥ ४३ ॥ मुक्तामणिमयं मुक्तामणिप्रचुरं ॥ ४४ ॥ वैडूर्यगुलिकाचितं वैडूर्यमणिखचितं ॥ ४५ ॥ सम्यक् शतधा भग्नदण्डमित्यन्वयः ॥ ४६ ॥ काञ्चनमयाः उरश्छदाः तनुत्राणि येषां ते । खराः अश्वतराः रासभविशेषा वा ॥ ४७ ॥ द्युतिमत्त्वादेव दीप्तपावकसंकाशः समरे नायकसूचको ध्वजः समरध्वजः । अपविद्धः रथश्च भग्न इति संबन्धः । सांग्रामिकः समरोचितः ॥ ४८ ॥ रथस्याक्षः आधारदण्डः तन्मात्राः तद्वद्दीर्घप्रमाणाः । प्रमाणे मात्रच् । विशिखाः विगतशिखाः मुण्डाग्रा इत्यर्थः । विगतफलभागा इति वा । अभिहताः भग्नाः । प्रकीर्णाः इतस्ततो विप्रकी-

---

सर्वंजगदितिशेषः ॥ दिधक्षन्निव नतुवास्तवींदिधक्षेतिभावः ॥ ३७ ॥ अनुसृतायाः अनुगम्यमानायाः । जटायुयुद्धसमयेसीतायारावणेनभूमौविसृज्यपुनर्ग्रहणादेवमुक्तिः ॥ ३८ ॥ **शि०** हेलक्ष्मण कामरूपिभिःराक्षसैः भित्वाभित्वाविभक्तासतीभक्षिता अनैवभविष्यतीतिमन्ये । एकोवाएत्रार्थे । अपरइत्यर्थे । एतेनतस्यानित्यत्वंसूचितं ॥ ४२ ॥ **शि०** द्वयोः राक्षसयोरिहयुद्धं बभूव । एतेनतयोरन्यतरशरीरजमितिव्यञ्जितं । बलवत्त्वेनराक्षससदृशपरैकराक्षसशब्देनैकशेषान्नमृषावाचित्वसंसर्गः ॥ ४३ ॥ **ती०** रथाक्षमात्राः चतुश्शताङ्गुलपरिमिताः । तदुक्तंशिल्पिप्रश्ने " अष्टाशीतिशतमीषातिर्यगक्षश्चतुश्शतः ।" इति ॥ ४९ ॥

**[ पा० ]** १ क. नाभितप्तायाः. ङ.—ट. नानुसृतायाः. २ ङ.—ट. वैदेह्याश्चपदानितु. घ. वैदेह्याश्चपदान्यपि. ३ क. प्रति. ४ ङ. झ. ट. कीर्णाः. ५ क. च. छ. ज. ञ. विभक्ताङ्गं. ६ ङ.—ट. सीतायाः. ७ क. च. छ. ज. मणिविचित्रंच. ख.—ङ. झ. ञ. ट. मणिचितंचेदं. ८ ङ. झ. रमणीयं. ९ ङ.—ज. विभूषणं. १० इदमर्धं ङ. झ. ञ. ट. पाठेषुदृश्यते. ११ ङ. झ. ट. मिदंसौम्य. १२ क.—घ. च. छ. ज. ञ. सौम्यनिपातितं. ङ. झ. ट. कस्यनिपातितं. १३ क. छ. ज. ञ. विभूषिताः. १४ क. ङ.—ज. ञ. कस्येमेविहताः. ख. घ. झ. ट. कस्येमेनिहताः. १५ घ. भीमकर्मणः. ङ. झ. ट. घोरदर्शनाः.

शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण ॥ प्रतोदाभीषुहस्तो वै कस्यायं सारथिर्हतः ॥
[ सारथिं हतवान्को वा महाबलपराक्रमः ] ॥ ५० ॥
कस्येमौ पुरुषव्याघ्र शयाते निहतौ युधि ॥ चामरग्राहिणौ सौम्य सोष्णीषमणिकुण्डलौ ॥ ५१ ॥
पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ॥ वैरं शतगुणं पश्य ममेदं जीवितान्तकम् ॥ ५२ ॥
सुघोरहृदयैः सौम्य राक्षसैः कामरूपिभिः ॥ हृता मृता वा सीता सा भक्षिता वा तपस्विनी ॥ ५३ ॥
न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ५४ ॥
भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण ॥ के हि लोकेऽप्रियं कर्तुं शक्ताः सौम्य ममेश्वराः ॥ ५५ ॥
कर्तारमपि लोकानां शूरं करुणवेदिनम् ॥ अज्ञानादवमन्येरन्सर्वभूतानि लक्ष्मण ॥ ५६ ॥
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ॥ निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५७ ॥
मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण ॥ अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५८ ॥
संहृत्यैव शशिज्योत्स्नां महान्सूर्य इवोदितः ॥ संहृत्यैव गुणान्सर्वान्मम तेजः प्रकाशते ॥ ५९ ॥

र्णाः ॥ ४९ ॥ शरानावृणुत इति शरावरौ निषङ्गौ । प्रतोदः तोत्रं । अभीषवः रश्मयः । " अभीषुः प्रग्रहे रश्मौ " इति शाश्वतः ॥ ५० ॥ उष्णीषः शिरोवेष्टनं ॥ ५१ ॥ एषा पदवी मार्गः । पुरुषस्य जघनभागनिम्नत्वाद्यभावात् । तत्रापि रक्षसः पदवी विषमरूपत्वात् । एवं च मम राक्षसैः सह इदं वैरं शतगुणं सत्तेषां जीवितमन्तयति विनाशयतीति जीवितान्तकं संपन्नं पश्य । एतावत्पर्यन्तं राक्षसैस्तीव्रवैराकरणात्तदपराधःसोढः संप्रति तान्समूलं नाशयिष्यामीति भावः ॥ ५२ ॥ मृता मारिता ॥ ५३ ॥ अस्यामवस्थायामरक्षकत्वाद्धर्मेपि रोषो जात इत्याह—न धर्म इति । इदमर्धमेकं ॥ ५४ ॥ न केवलं धर्मे तत्फलप्रददेवेषु च रोषो जात इत्याह—भक्षितायामिति । के वा ईश्वराः मम अप्रियं कर्तुं शक्ता इत्यन्वयः । आद्यो हिः पादपूरणे । द्वितीयः प्रसिद्धौ ॥ ५५ ॥ तर्हीदानीं कथमप्रियं तैः कृतमित्यत्राह—कर्तारमिति । लोकानांकर्तारमपि शूरमपि संहारकरणसमर्थमपि । करुणवेदिनं कारुण्यपरंपुरुषं । सर्वभूतानि अज्ञानादवमन्येरन् नाद्रियेरन् । लोकस्वभावोऽयमितिभावः ॥ ५६ ॥ विशिष्य गर्विता देवाः मां नाद्रियेरन्नित्याह—मृदुमिति । लोकहिते युक्तं सक्तं । अतएव मृदुं कोमलहृदयं । अतएव करुणवेदिनं दान्तं विषयचापलरहितंमां निर्वीर्यं मन्यन्ते । अज्ञत्वाविशेषादिति भावः ॥ ५७ ॥ गुणः कारुण्यादिः । मां प्राप्य दोषःसंवृत्तः अनिष्टसाधनत्वेनसंवृत्तः । तस्मादस्मदवमानहेतुतया दोषरूपेण गुणेन किं प्रयोजनमित्यर्थः । यद्वा सर्वभूतानां रक्षसां च अभवाय नाशाय । गुणः दोषःसंवृत्तः । दयांत्यक्त्वाक्रोधंकरिष्यामीत्यर्थः ॥ ५८ ॥ यथा उदितःसूर्यः शशिज्योत्स्नां शीतलचन्द्रचन्द्रिकां । संहृत्यैव प्रकाशते । तथा ममतेजः गुणान् मृदुत्वादीन् । संहृत्यैव निरस्यैव प्रकाशते

शि० यतः अमृता मरणधर्मरहिता । अतएव नभक्षितावैदेही हृतैव । महावनेह्रियमाणांसीतां । धर्म एवत्रायते ॥ ५३ ॥ शि० भक्षितायां रुद्रादिद्वारासकललोकसंहारकर्त्र्यां । वैदेह्यां हृतायांसत्यां ममप्रियंकर्तुंलोकेकेईश्वराः । ब्रह्मविष्णुमहेशाद्यन्यतमाः समर्थाः नकेपीत्यर्थः । अत्ररुद्रादिद्वारासकललोकसंहारकर्त्र्यां हृतायामित्युक्त्याऽपहरणमपिकस्यैचिन्निमित्ताय तदिच्छयैवजातमितिसूचितं । तेनापहरणकर्तुस्तत्परिकरवर्तित्वंसूचितं । भक्षिताशब्दः कर्तृनिष्ठान्तः । कर्मणोऽविवक्षितत्वेनाकर्मकत्वात् ॥ ५५ ॥ शि० करुणवेदिनं करुणोदयालुरेववेदीदयालुत्वसमानाधिकरणसकलविषयकज्ञानवन्तमित्यर्थः । ति० करुणवेदिनं करुणंयथातथावेदितुंशीलमस्यतं । दयादृष्ट्यातूष्णींस्थितं अज्ञानात् तद्वैभवाज्ञानात् अवमन्येरन् किमयंकुपितोपिकरिष्यतीतिनगणयन्तीत्यर्थः ॥ ५६ ॥ तनि० सर्वभूतानां राक्षसानुकूलतयायानिभूतानिप्रवर्तन्ते तेषां । रक्षसांच अभवाय नाशाय ॥ ५८ ॥ तनि० शशिज्योत्स्नामित्युपलक्षणं । उदितोमहान्सूर्यः अनायासेन शशिज्योत्स्नादीनितेजांस्यपहृत्ययथाप्रका-

[ पा० ] १ ङ. झ. ट. हस्तोयंकस्यवा. २ इदमर्धं घ. पाठेदृश्यते. ३ च. छ. ज. ञ. पापैर्ममासीत्. ४ ख. ग. घ. साघोर. ५ ख. ग. घ. सीतापि. क. च. छ. ज. सीताहि. ङ. झ. ञ. ट. वैदेही. ६ क. सीतायां. ७ क. वादिनं.

नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ॥ किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥६०॥
ममास्त्रबाणसंपूर्णमाकाशं पश्य लक्ष्मण ॥ [1]निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ६१ ॥
सन्निरुद्धग्रहगणमावारितनिशाकरम् ॥ विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६२ ॥
विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ॥ ध्वस्तद्रुमलतागुल्मं वि[3]प्रणाशितसागरम् ॥
त्रैलोक्यं तु करिष्यामि संयुक्तं कालधर्मणा ॥ ६३ ॥
न[5] तां कुशलिनीं सीतां प्रदास्यन्ति म[6]मेश्वराः ॥ अस्मिन्मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् ॥६४॥
नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ॥ मम चा[7]पगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् ॥ ६५ ॥
[8]अर्दितं मम नाराचैर्ध्वस्तभ्रान्तमृगद्विजम् ॥ समाकुलममर्यादं जगत्प[9]श्यार्य लक्ष्मण ॥ ६६ ॥
आकर्णपूर्णैरिषुभिर्जीव[10]लोकं दुरावरैः ॥ करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ॥ ६७ ॥
मम रो[11]षप्रयुक्तानां [12]सायकानां बलं सुराः ॥ द्र[13]क्ष्यन्त्यद्य विमुक्तानाम[14]तिदूरातिगामिनाम् ॥ ६८ ॥
नैव देवा न[15] दैतेया न पिशाचा न राक्षसाः ॥ भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणाशिते ॥६९॥
देवदानवयक्षाणां लोका ये रक्षसामपि ॥ बहुधा न[16]भविष्यन्ति बाणौघैः शकलीकृताः ॥ ७० ॥
निर्मर्यादानि[17]माँल्लोकान्[18]करिष्याम्यद्य सायकैः ॥ हृतां मृतां वा सौमित्रे न दास्यन्ति म[19]मेश्वराः॥७१॥
[20]तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् ॥ नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् ॥७२॥

॥ ५९ ॥ देवविषयःकोपस्तत्संबन्धिष्वपि प्रवर्ततामित्याह—नैवेति ॥ ६० ॥ अस्त्राणि ब्रह्मास्त्रादीनि । पश्य उत्तरक्षणइतिशेषः । त्रैलोक्यचारिणां निःसंपातं बाणप्रचारतोऽशक्यसंचारं ॥ ६१ ॥ सन्निरुद्धेत्यादिसार्धश्लोकद्वयमेकान्वयं । सन्निरुद्धः ग्रहगणः ग्रहगणसंचारः यस्य । आवारितः आच्छादितः । विप्रनष्टानलमरुत् नष्टाग्निवातं । भास्करद्युतिसंवृतं संवृतभास्करद्युति । आहिताग्न्यादित्वान्निष्ठायाःपरनिपातः । कालसाध्योधर्मः कालधर्मः विनाशः तेन कालधर्मणा । अनिजार्षः ॥ ६२—६३ ॥ न तामिति । तस्मादस्मिन्मुहूर्त इत्युपस्कार्यं । कुशलिनीं क्षेमयुक्तां। अक्षतामित्यर्थः ॥ ६४ ॥ गुणो मौर्वी ॥ ६५ ॥ अर्दितं हिंसितं । समाकुलं सम्यग्व्यग्रं । अमर्यादं त्यक्तस्वस्वप्रकृत्यवस्थानं ॥ ६६ ॥ दुरावरैः दुर्वारैः । जीवलोकं ब्रह्माण्डं ॥ ६७ ॥ रोषप्रयुक्तानां रोषसंप्रयुक्तानां । ममेति शेषः । अतिदूरातिगामिनां अतिदूरातिपातिनां ॥ ६८ ॥ नभविष्यन्ति नशिष्यन्तीत्यर्थः । पूर्वं दुःखप्राप्तिरेवोक्ता ॥ ६९ ॥ बहुधा शकलीकृता इत्यन्वयः ॥ ७० ॥ निर्मर्यादान् स्वस्वव्यवस्थारहितान् । न दास्यन्ति न दास्यन्ति यदि ॥७१॥ हृतां मृतां वेत्यत्र सूचितमाह—तथारूपामिति । जगत्सर्वं सर्वं जनमित्यर्थः । अन्यथा त्रैलोक्यमित्य-

शते तद्वन्ममतेजः सकलवस्तुगुणान् संहृत्यप्रकाशते ॥ ५९ ॥ ती० 'विप्रनष्टाखिलमहद्भास्करद्युति' इत्यपिपाठः । तस्यायमर्थः । विप्रनष्टाः अखिलमहतां भास्करस्यचद्युतयोयस्मिंस्तत् । अतएवसंवृतं । तमसेतिशेषः । कालकर्मणा विनाशेन । संयुक्तंकरिष्यामीत्यन्वयः ॥ ६२ ॥ शि० अमर्षात् राक्षसकृतबहुदुष्कृतासहनाद्धेतोः । रोषप्रयुक्तानां क्रोधात्त्यक्तानां । विमुक्तानां विशेषेण मुक्तंसंसारान्मोक्षोयैस्तेषां । दूरगामिनां विशिखानांबाणानांबलं सुराद्रक्ष्यन्ति । एतेन सुरकार्यार्थमेवायमुद्योगइतिध्वनितं ॥ ६८ ॥ ति० अत्रनदास्यन्तीतिपौनरुक्त्यं क्रोधातिशयान्नदोषाय ॥ ७१ ॥ ७२ ॥

[ पा० ] १ ङ. झ. ट. असंपातं. २ ख. श्रुतिवर्जितं. ३ ख. संप्रणाशित. ४ ङ. ज. झ. ट. कालकर्मणा. ५ ङ. झ. ट. नते. ६ क. ग. यदीश्वराः. ख. महेश्वराः ७ ङ.—ट. चापमुखान्मुक्तैः. क. ख. घ. ज. चापगुणान्मुक्तैः. च. चापगुणैर्मुक्तैः. ८ ख.—ज. ञ. ट. मर्दितं. ९ क. ख. ग. ङ.—ट. पश्याद्य. १० ङ. छ.—ट. लोकदुरावारैः. ११ ख. ग. रोषप्रमुक्तानां. १२ ङ. झ. ट. विशिखानां. १३ क. च. छ. ज. ञ. द्रक्ष्यन्तिज्याविमुक्तानां. १४ क. च. छ. ज. ञ. ममर्षाद्दूरपातिनां. ख. ग. ङ. झ. ट. ममर्षाद्दूरगामिनां. १५ क. नगन्धर्वाः. १६ क. ख. ङ. छ.—ट. निपतिष्यन्ति. १७ क. ख. ग. च. छ. ज. ञ. नहंल्लोकान्. १८ क. च. छ. ज. ञ. करिष्येमम. १९ ख. यदीश्वराः. २० क. ग. घ. च. छ. ञ. यथारूपां.

इत्युक्त्वा रोषताम्राक्षो रामो निष्पीड्य कार्मुकम् ॥ शरमादाय संदीप्तं घोरमाशीविषोपमम् ॥७३॥
सन्धाय धनुषि श्रीमान्रामः परपुरञ्जयः ॥ युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥ ७४ ॥
यथा जरा यथा मृत्युर्यथा कालो यथा विधिः ॥ नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ॥
तथाऽहं क्रोधसंयुक्तो न निवार्योस्मि सर्वथा ॥ ७५ ॥
पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् ॥
सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम् ॥ ७६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

सीताहरणकोपेन सकललोकसंहरणसमुद्युक्तंरामंप्रति लक्ष्मणेन सयुक्तिकवचनोपन्यासेनपरिसान्त्वनम् ॥ १ ॥

तप्यमानं तथा रामं सीताहरणकर्शितम् ॥ लोकानामभवे युक्तं संवर्तकमिवानलम् ॥ १ ॥
वीक्षमाणं धनुः सज्यं निःश्वसन्तं पुनःपुनः ॥ दग्धुकामं जगत्सर्वं युगान्ते तु यथा हरम् ॥ २ ॥

नेन पुनरुक्तिः । सचराचरमित्यनुवादः ॥७२॥ इत्युक्त्वेतिश्लोकद्वयमेकान्वयं । निष्पीड्य दृढमुष्टिबलेन गृहीत्वा ॥ ७३—७४ ॥ यथेत्यादिःसार्धश्लोकः । विधिः अदृष्टं । जरादयो यथा न प्रतिहन्यन्ते तथाहं न निवार्यः । अन्ये यथाशब्दाः पादपूरणार्थाः । यद्वा बहुवचनमविवक्षितं । प्रतिहन्यत इति प्रत्येकमन्वयः ॥ ७५ ॥ पुरेव मे चारुदतीं मायामृगंप्रतिगमनात्पूर्वं कान्तंमांप्रति इममृगं गृहीत्वामह्यं देहीतिहर्षेण यत् स्मितं कृतवती । तेन सहैव न दास्यन्ति चेत् अनिन्दितां तामलब्ध्वा जगदुपसंहारंकरिष्यामि चेदपि इदंनिन्दितमिति न केपि वक्ष्यन्तीति भावः । वक्ष्यते हि "यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत्। अस्या हेतोर्विशालाक्ष्या युक्तमित्येव मे मतिः" इति सर्वज्ञेन हनुमता । चारुदतीमित्यत्र "छन्दसि" इति सूत्रेण दन्तशब्दस्य दत्रादेशः । "अग्रान्त—" इति सूत्रस्थचकारेण वा दत्रादेशः । सीतां अयोनिजतया मत्तोप्यतिशयितां । मैथिलीं वीरश्रेष्ठजनकचक्रवर्तिपुत्रीत्वेन मत्सदृशीं । सदेवेत्यादि सर्वलोकस्य संभूतमरणमेव करिष्यामीति भावः । परिवर्तयामि नाशयामि अन्यथाकरिष्यामीति वा । अस्मिन्सर्गे सार्धपञ्चसप्ततिश्लोकाः ॥७६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥६४॥

---

एवं जगदुपसंहारक्रोधकलुषं रामं लक्ष्मणःसन्धुक्ष (सान्त्व)यति पञ्चषष्टितमे । तप्यमानमित्यादिश्लोकत्रयमेकान्वयं । तप्यमानं तपन्तं । तथातप्यमानमित्यनेन पूर्वोक्तजगदुपसंहारवाचस्तप्तत्वकृताः नतुसंकल्प-

**तनि०** अनेनाप्रतिहतसंकल्पत्वंपरैरनभिभवनीयत्वंचकथितं । अत्रयथेतिपदावृत्त्यानप्रतिहन्यन्तइत्यप्रतिक्रिया स्वरूपावृत्तिः । दीपकालङ्कारः ॥ **ति०** नन्वेवंविधःक्रोधः कथमस्य किमर्थंचेतिचेच्छृणु—मनुष्यदेहधारणेनतद्व्यवहारनटनमेवैतत् । किंचईदृशदुःखकालेऽस्यक्रोधाभावेरावणोमनुष्यबुद्धिंकुर्यात् । तथाचतद्वधोशक्यःस्यादित्येतदर्थंचसः । मृत्युंमरणधर्मेणयोजयामीत्यादिवचोपिरावणवचोवदेव ॥ आरोपितक्रोधमूलकत्वात् । अतएवशरैर्विधमिष्यामीत्युक्तिः । लक्ष्मणस्तुतत्वज्ञोपितद्वदेवातत्वज्ञइवतन्मायामोहितोवाप्रलयकालिकरौद्रशक्त्यावेशंसंभाव्यानुनयतिस्म । किंचास्यक्रोधस्यारोपितत्वाभावेऽद्यसीतायाअलाभेसर्वजगत्परिवर्तनंप्रतिज्ञायकथं लक्ष्मणप्रार्थनयापितामन्यथयेत् । अन्यथाकैकेय्यग्रेकृतां वनवासप्रतिज्ञांकथंकौसल्यावचसानत्यक्तवान् । तस्मात्सायथार्था । इयंत्वारोपितेत्येवसारं । अनेनव्यवहारेणक्रोधादिकालेकृतायाअयुक्तायाअपिप्रतिज्ञायाअपालनेऽत्यन्तदोषाभावइत्यपिसूचितं ॥ ७५ ॥ इतिचतुष्षष्टितमःसर्गः ॥ ६४ ॥

[ **पा०** ] १ क. ग. ङ.—ट. संदधे. २ घ. युगान्ताग्निसमः. ३ घ. ननित्यं. ४ ङ. छ. ज. झ. ट. निवार्योस्म्यसंशयं. ग. निवार्योस्मिसंयुगे. ५ घ. महिते. ६ ज. ट. सांवर्तक. घ. संवर्तइवचानलं. ७ क. ग. मुहुर्मुहुः. ८ क. ख. ग. च. छ. ज. हन्तुकामंपशुंरुद्रंक्रुद्धंदक्षक्रतौयथा. ९ ङ. झ. ञ. ट. युगान्तेच.

अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३ ॥
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ॥ न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ॥ एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥५॥
एकस्य नापराधेन लोकान्हन्तुं त्वमर्हसि ॥ न तु जानामि कस्यायं भग्नः सांग्रामिको रथः ॥
केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ॥ ६ ॥
खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ देशो निर्वृत्तसंग्रामः सुघोरः पार्थिवात्मज ॥ ७ ॥
एकस्य तु विमर्दोयं न द्वयोर्वदतां वर ॥ न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ॥ ८ ॥
नैकस्य तु कृते लोकान्विनाशयितुमर्हसि ॥ युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥ ९ ॥
सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ॥ को नु दारप्रणाशं ते साधु मन्येत राघव ॥ १० ॥
सरितः सागराः शैला देवगन्धर्वदानवाः ॥ नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥ ११ ॥
येन राजन्हृता सीता तमन्वेषितुमर्हसि ॥ मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः ॥ १२ ॥
समुद्रं च विचेष्यामः पर्वतांश्च वनानि च ॥ गुहाश्च विविधा घोरा नदीः पद्मवनानि च ॥ १३ ॥
देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः ॥ यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् ॥ १४ ॥
न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ॥ कोसलेन्द्र ततः पश्चात्प्राप्तकालं करिष्यसि ॥ १५ ॥

पूर्वाइत्युच्यते । रामंदृष्ट्वा राममब्रवीदिति क्रियाभेदान्नपुनरुक्तिदोषः । अभवे विनाशे । युक्तं उद्युक्तं । संवर्तकं संहारकं । अदृष्टपूर्वमिति क्रोधनक्रियाविशेषणं । परिशुष्यता लोकविनाशभयेनेति भावः ॥ १—३ ॥ क्रोधवशमापन्नःसन् प्रकृतिं मृदुत्वादिनिजस्वभावं । न हातुमर्हसि ॥ ४ ॥ लक्ष्म्यादिकमेकैकस्य प्रतिनियतं त्वयितु एतत्सर्वंच यशश्च प्रतिनियतमित्यर्थः ॥ ५ ॥ मम दान्ततयैवैतादृशीदशाजाता अधुनापियदिक्रोधोनस्यात् कोवाममवित्रस्येत् कथंचसीताप्राप्तिरित्याशङ्क्याह—एकस्येति । अर्धत्रयमेकान्वयं । अयंभावः । एकोरथोदृश्यते एकस्यैवपदंप्रतीयते । तेन एक एवापराधीतिनिश्चीयते । एकस्यचापराधेन सर्वान् हन्तुंनार्हसि । तर्हिकोवाऽपराधीत्यत्राह—नत्विति । केन प्रतिपक्षिणा कस्य प्रयोजनस्य हेतोः । "षष्ठी हेतुप्रयोगे" इति षष्ठी । प्रकृतादन्यस्माद्वा निमित्तादिति न जानामि । तच्चिन्तनीयमित्यर्थः । सपरिच्छदः सपरिकरः ॥ ६ ॥ खुरेति अश्वानां खुरैः रथनेमिभिः रथाङ्गैश्च क्षतः । निर्वृत्तसंग्रामः दृश्यत इति शेषः ॥ ७ ॥ विमर्दः संप्रहारः । तत्र हेतुमाह—नहीति । वृत्तं संक्रान्तं ॥ ८ ॥ वक्तव्यमुक्त्वा प्रकृतमाह—नैकस्येति । युक्तदण्डाः अपराधोचितशिक्षणप्रवर्तकाः ॥ ९ ॥ विशिष्य तवायं धर्म इत्याह—सदेति । शरण्यः शरणार्हः । परमा गतिः परमप्राप्यः । देवादिकृतोऽयमपराधो नेत्याह—को न्विति ॥१०॥ दीक्षितस्य उपक्रान्तयज्ञानुष्ठानस्य । साधवः ऋत्विजः ॥ ११ ॥ परमार्षिभिः एतद्वनस्थैः ॥ १२ ॥ विचेष्यामः अन्वेषिष्यामहे ॥ १३—१४ ॥ प्राप्तश्चतुर्थोपायकालोय-

स० अदृष्टपूर्वमितिविशेष्येणस्वरसान्वयिसत् विशेषणीभूतेक्रोधेऽन्वेति । ततश्चादृष्टपूर्वक्रोधवन्तमित्यर्थः ॥ ३ ॥ तनि० अत्रयशश्शब्देन"नतस्येशेकश्चनतस्यनाममहद्यशः" इत्युक्तनिस्सीमाभ्यधिकत्वादिगुणाः प्रतिनियताइत्युपलक्ष्यन्ते ॥ ५ ॥ शि० एकस्यराक्षसस्यापराधेन लोकान्सर्वजनान् हन्तुंत्वंनार्हसि । एतेनविभीषणकर्मैकविघातजनितभीतिमत्त्वंलक्ष्मणस्यसूचितं ॥ ६ ॥ स० बलस्य सैन्यस्य । वृत्तं भुविकृतचिह्नं ॥ ८ ॥ ती० युक्तदण्डाः यथापराधदण्डाः ॥ ९ ॥ ती० दीक्षितस्य प्रक्रान्तयज्ञानुष्ठानस्य । साधवः ज्ञानसंपन्ना ऋत्विजः । विप्रियं शापाद्यपचारं । कर्तुंनसमर्थाः । "नैनंशप्तंनाभिचरितमागच्छति" इत्यादिश्रुतिबलादितिभावः ॥ ११ ॥ स० पर्वताश्चअनिनश्चतत्रत्याः प्राणिनश्च वनानिचेत्येतानि ॥१३॥ ति० यद्यस्मात्

[ पा० ] १ क. ङ.—ट. सलक्ष्मणः. २ ङ. झ. ट. निर्त्यलयि. ३ ङ. च. छ. ज. ञ. लोकांस्त्वंहन्तुमर्हसि. ४ ङ. झ. संयुगः. ५ ख. च. छ. ज. ञ. रथनेमि. ६ क. सिक्तःशोणितबिन्दुभिः. ग. सिक्तःक्षतजबिन्दुभिः. ७ क. च. छ. ज. ञ. मन्वेष्टुंत्वमर्हसि. ८ ठ. पर्वतानिवनानिच. ९ ङ. झ. ट. ५भिन्योविविधास्तथा. क. ख. च. छ. ज. ञ. नलिनीःपार्वतीश्चह. १० क. च. छ. ज. ञ. पश्चाद्बाणमोक्षं. ११ घ. विधास्यति.

शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र ॥
ततः समुत्पादय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ॥ ६६ ॥

लक्ष्मणेन सीतावियोगेनशोचन्तंरामंप्रति वसिष्ठादिदृष्टान्तप्रदर्शनेन कर्मफलभोगस्यावश्यंभावित्वोक्त्यासमाश्वासनपूर्वकं लोकसंहरणोद्यमनिवृत्त्या सीतापहारिणोनिर्धारणेन तदसुहरणकरणोक्तिः ॥ १ ॥

तं तथा शोकसंतप्तं विलपन्तमनाथवत् ॥ मोहेन महताऽऽविष्टं परिद्यूनमचेतनम् ॥ १ ॥
ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः ॥ रामं संबोधयामास चरणौ चाभिपीडयन् ॥ २ ॥
महता तपसा राम महता चापि कर्मणा ॥ राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥ ३ ॥
तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः ॥ राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४ ॥
यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे ॥ प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ॥ ५ ॥
दुःखितो हि भवाँल्लोकांस्तेजसा यदि धक्ष्यते ॥ आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिम् ॥६॥
[ आश्वसिहि नरश्रेष्ठ प्राणिनः कस्य नापदः ॥ संस्पृशन्त्यग्निवद्राजन्क्षणेन व्यपयान्ति च ॥७॥ ]

स्मिन्कर्मणितत्तथा ॥१५॥ एतदेव स्पष्टयति—शीलेनेति । समुत्पादय विवक्षितकार्यमितिशेषः । समुत्सादयेतिपाठे लोकानितिशेषः । एवं लक्ष्मणप्रसादनेन रामकोपशान्तिप्रपञ्चनाद्रावणाराधिततत्पक्षपातिरुद्रसंकल्पाद्रामकोपो भग्न इति वदन् मूर्ख इत्यवगन्तव्यः ॥ १६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

एवं लक्ष्मणो राममाश्वास्य पुनर्वक्तव्यांशं ज्ञापयति षट्षष्टितमे । तं तथेत्यादिश्लोकद्वयमेकान्वयं । परिद्यूनं परिदेवनंप्राप्तं परिशोचन्तमित्यर्थः । "च्छ्वोः शूडनुनासिकेच" इत्यूठ् । "दिवोऽविजिगीषायां" इति निष्ठानत्वं । अचेतनं अस्वस्थचित्तं । संबोधयामास ज्ञापयामास । अभिपीडयन् उपसंगृह्णन् ॥१—२॥ महता तपसा कायक्लेशेन व्रतोपवासादिना । महता चापि कर्मणा अश्वमेधपुत्रकामेष्टिप्रभृतिकर्मणा । राज्ञा दशरथेन । राजा लोकस्य रञ्जनात् । अनेन मन्त्रद्रव्यक्रियालोपाभावेनाधिकारिणा कृतत्वमुच्यते । अमृतमिव तद्वत् भोग्यत्वं यत्नसाध्यत्वं चोच्यते । अमरैः अनेकसुरकृतयत्नः एकेनकृत इति गम्यते ॥३॥ एवकारेण इतरपुत्रव्यावृत्तिः । तवैव गुणैर्बद्धः त्वद्गुणैकपरवशः । महीपतिः राजा न तु जातिमात्रेण राजा । देवत्वमापन्नः । तत्र किं प्रमाणं तत्राह— भरतस्येति । भरतादित्यर्थः । पञ्चम्यर्थे षष्ठी । तथैव मयोक्तमिति शेषः ॥ ४ ॥ काकुत्स्थेत्यनेनाप्राकृतत्वं महासत्त्वत्वं च सिद्धं । सहिष्यति सहिष्यते ॥ ५ ॥ धक्ष्यते धक्ष्यति ॥६—७॥ प्रसङ्गात् दैविकावर्थानर्था-

विचयनेनाशक्यातत्प्राप्तिः स्यात् । ततः परंदेवाःसर्वज्ञाः यदितेपत्नींपत्नीवार्तांनदास्यन्ति ततः पश्चात्प्राप्तकालंचतुर्थोपायंदण्डंतेषुकरिष्यसि ॥ शि० त्रिदशेश्वराः तदुपलक्षितनिश्चितदारापहारिणः । प्राप्तकालं प्राप्तः कालोयस्मिंस्तंदण्डं ॥ १५ ॥ इतिपञ्चषष्टितमस्सर्गः ॥ ६५ ॥

स० देवत्वमापन्नइति यथा यथावत् । भरतस्यमुखाच्छ्रुतं ॥ ४ ॥ ति० इतरः कइति । "यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः" इत्युक्तेः "मर्त्यावतारस्त्विहमर्त्यशिक्षणं" इतिभागवतोक्तरीत्यालोकशिक्षणार्थमपित्वदवतारादितिभावः ॥ ५ ॥ ति० आश्वसिहीति । "नहवैशरीरस्यसतः प्रियाप्रिययोरपहतिरस्ति" इतिश्रुतेः ॥ ७ ॥

[ पा० ] १ क. ख. घ. ज. शिवेन. २ ख. घ. समुत्पाटय. ङ.—ट. समुत्सादय. ३ च. छ. ज. ञ. शोकसंतप्तंपरिद्यूनमचेतसम् । मोहेनमहताऽऽविष्टंविलपन्तमनाथवत्. ४ ङ. झ. ट. महतायुक्तं. ५ क. ङ. झ. ट. मचेतसं. ६ घ. मुहूर्तादेव. ७ ङ. झ. ट. तपसाचापि. ८ घ. दुःखमिव. ९ अयंश्लोकः झ. पाठेनदृश्यते. १० अयंश्लोकः क. ङ.—ट. पाठेषुदृश्यते.

लोकस्वभाव एवैष ययातिर्नहुषात्मजः ॥ गतः [1]शक्रेण सालोक्य[2]मनयस्तं तमः स्पृशत् ॥ ८ ॥
महर्षिर्यो वसिष्ठस्तु यः पितुर्नः पुरोहितः ॥ अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ९ ॥
या चेयं [3]जगतां माता [4]देवी लोकनमस्कृता ॥ अस्याश्च चलनं भूमेर्दृश्यते [5]सत्यसंश्रव ॥ १० ॥
[6]यौ धर्मौ [7]जगतां नेत्रौ यत्र सर्वं प्रतिष्ठितम् ॥ आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ ११ ॥
सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ ॥ न दैवस्य प्रमुञ्चन्ति सर्वभूतादिदेहिनः ॥ १२ ॥
शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ ॥ श्रूयेते नरशार्दूल न त्वं [8]शोचितुमर्हसि ॥ १३ ॥
[9]नष्टायामपि वैदेह्यां हृतायामपि [10]चानघ ॥ शोचितुं नार्हसे वीर यथाऽन्यः प्राकृतस्तथा ॥ १४ ॥
त्वद्विधा [11]न हि शोचन्ति सततं [12]सत्यदर्शिनः ॥ सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १५ ॥
तत्त्वतो हि [13]नरश्रेष्ठ बुद्ध्या समनुचिन्तय ॥ बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १६ ॥
अदृष्टगुणदोषाणा[14]मधृतानां च कर्मणाम् ॥ नान्तरेण क्रियां तेषां फल[15]मिष्टं प्रवर्तते ॥ १७ ॥

वन्ये महान्तोपि प्राप्नुवन्तीति दृष्टान्तमुखेन प्रतिपादयितुमाह—लोकस्वभाव इत्यादिना । एषलोकस्वभाव इति वक्ष्यमाणेषु सर्वत्र योज्यं । अनयः अनयमूलं दुःखमित्यर्थः। तमः अज्ञानं । स्पृशत् अस्पृशत् । स हि स्वर्गगतोपि इन्द्रेणासूयाकलुषेण भवद्राज्ये को वा श्रेष्ठ इति पृष्टः सत्यवादितयाऽहमेवेत्युक्तवान् । इन्द्रेणात्मश्लाघी त्वं न स्वर्गार्ह इति पातित इति पुराणप्रसिद्धिः। नहुषात्मजइत्यनेन नहुषानीतिरपिव्यज्यते । स च सप्तर्षीन्स्ववाहकान् शचीस्मरणेन सर्पसर्पेत्युक्तवान् । सर्पो भवेत्यगस्त्यशप्तश्चिरं तथाभूतस्तस्थौ ॥८॥ अह्ना पुत्रशतं हतं विश्वामित्रकोपेन युगपत्पुत्रशतनाशदुःखमनुभूतमितिभावः ॥ ९ ॥ माता सर्वोपादानत्वात् । देवी देवस्य विष्णोः पत्नी । अतएव लोकनमस्कृता । सत्यसंश्रवेति त्वयैव हि पूर्वं मह्यमेवमुपदिष्टमिति भावः ॥ १० ॥ धर्मौ धर्मप्रवर्तकौ । सर्वधर्मसाक्षित्वात् । नेत्रौ नेतारौ । कालपरिच्छेदादिमुखेनजगतः प्रवर्तकौ । "नेत्रो नेतरि भेद्यवान्" इति विश्वः । सर्वेषामर्थप्रकाशकत्वेन नेत्रभूतौ वा । लिङ्गव्यत्ययश्छान्दसः । यत्र ययोः । सर्वं जगत् । प्रतिष्ठितं यदधीनस्वरूपस्थितिप्रवृत्तिकाःसर्वे जना इत्यर्थः । सूर्यस्यवर्षहेतुत्वात् चन्द्रस्यौषधिहेतुत्वाच्चेतिभावः । "आदित्याज्जायते वृष्टिस्ततोऽन्नमभिजायते" इतिवचनात् । ग्रहणं राहुकेतुभ्यां ग्रासं॥११॥ किं बहुना संग्रहेणोच्यत इत्याह—सुमहान्तीति । सुमहान्तिभूतानि मान्धातृनलप्रभृतिमहाजना अपि। सर्वभूतादिदेहिनः सर्वभूतानिआदिदेहोस्यास्तीति तथा। सर्वभूतान्तर्यामिण इत्यर्थः । दैवस्य परमात्मनः । पञ्चम्यर्थे षष्ठी। न प्रमुञ्चति सर्वेपितत्संकल्पंनातिक्रामन्तीत्यर्थः ॥१२॥ उपसंहरति—शक्रादिष्वपीति। नयानयौ तन्मूलसुखदुःखे । अतोनत्वं शोचितुमर्हसीत्यर्थः ॥ १३ ॥ उक्तं विवृणोति—नष्टायामपीति । नार्हसे नार्हसि ॥१४॥ सत्यदर्शिनः यथार्थदर्शिनः । कृच्छ्रेषु दुःखेषु । अनिर्विण्णं अविनाशि दर्शनं कृत्याकृत्यविवेकोयेषां ते तथा ॥ १५ ॥ तत्त्वतो बुद्ध्या अबाधितबुद्ध्या । समनुचिन्तय शुभाशुभे इति शेषः । महाप्राज्ञाः बुद्ध्या तात्कालिक्या युक्ताःसन्तः शुभाशुभे भाविनी विजानन्ति ॥ १६॥ इदानींफलानुभवःपूर्वकर्मसाध्यः अतस्तत्रनशोचनीयमित्याह—अदृष्टेति । अदृष्टगु-

**ति०** एषः औपाधिकदुःखसंबन्धः । लोकस्य शरीरिणः । स्वभावएव । तदेवाह—**ययातिरिति** । अनयः अनयमूलंदुःखं । तच्चस्वर्गाद्भ्रंशरूपं । समस्पृशदित्यनेनाचिरस्थितिकस्पर्शमात्रार्थकेनपुनरविलंबेनैवदौहित्रप्रयुक्तसुखोत्तरकालिकदुःखनिवृत्तिरप्यस्यसूचिता ॥ ८ ॥ **ति०** दैवस्य कर्मणः । वशंनप्रमुञ्चन्तीत्यर्थः । किंपुनर्वक्तव्यं देहिनस्सर्वभूतानि देहवन्तिसर्वभूतानिनमुञ्चन्तीति । पुंस्त्वमार्षं ॥ ९ ॥ **ती०** अदृष्टाः शास्त्रैकसमधिगम्यतयाप्रत्यक्षतोद्रष्टुमशक्याः गुणदोषाः सुखदुःखरूपायेषां

[ पा० ] १ क. ख. ग. शक्रस्य. २ ख. ग. मनयस्तंचसंस्पृशत्. क. मपतत्ससतमःस्पृशन्. ३ क. ङ.—ट. जगतो. ४ ङ. झ. ञ. ट. सर्वलोक. ५ ङ. झ. ञ. ट. कोसलेश्वर. क. छ. ज. सत्यसंश्रय. ६ क. घ. ज. छ. ज. यौचेमौ. ७ ग. ङ. झ. ट. जगतो. ८ ग. ङ. च. झ. ञ. ट. व्यथितुं. ९ ङ. झ. ट. मृतायामपिवैदेह्यांनष्टायामपिराघव. १० क. ख. छ. वानघ. ११ क.—घ. हिनशोचन्ति. १२ ङ. झ. ट. सर्वदर्शनाः. ग. सत्यदर्शनाः. घ. समदर्शनाः. १३ क. ङ.—ज. ञ. महात्मानो. १४ ङ. झ. ट. मध्रुवाणांतु. ख. ग. मधृतानांतु. घ. मश्रुतानांतु. १५ ङ. छ.—ट. मिष्टंचवर्तते.

[3]त्वमेव हि पुरा [2]राम [1]मामेवं बहुशोऽन्वशाः ॥ [4]अनुशिष्याद्धि को नु [5]त्वामपि साक्षाद्बृहस्पतिः ॥ १८ ॥
बुद्धिश्च ते महाप्राज्ञ [6]देवैरपि दुरन्वया ॥ शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ १९ ॥
दिव्यं च मानुषं [7]चैं त्वमात्मनश्च पराक्रमम् ॥ इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ २० ॥
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ ॥ [8]तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

लक्ष्मणेनसमाश्वासनात्कोपत्यागपूर्वकं तेनसह पुनःसीतांविचिन्वतारामेण जटायुदर्शनं ॥ १ ॥ तथा तस्मिन्रक्षोबुद्ध्या तेनसीताहननसंभावनया तद्वधोद्यमः ॥ २ ॥ तेनरामंप्रति रावणेनसीताहरणनिवेदनपूर्वकं युद्धे स्वेनतदीयरथादिविध्वंसन-निवेदनेनसह वृद्धत्वाद्युद्धश्रान्तस्यस्वस्य तेनखड्गेनपक्षच्छेदनपूर्वकं पुनर्वैदेह्यानयनेन वैहायसमार्गगमननिवेदनम् ॥ ३ ॥ रामेणपितृसुहृत्त्वस्नेहाज्जटायुषःपरिष्वङ्गपूर्वकंविलापेनदुःखाद्भूमौपतनं ॥ ६३ ॥

पूर्वजोऽप्यु[9]क्तमात्रस्तु लक्ष्मणेन सुभाषितम् ॥ सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥
[10]संनिगृह्य महाबाहुः [11]प्रवृत्तं कोपमात्मनः ॥ अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २ ॥

---

णदोषाणां प्रत्यक्षतोद्रष्टुमशक्यसुखदुःखरूपगुणदोषाणां । अधृतानां पुरा एवंकर्म कृतमिति निश्चेतुमशक्यानां । तेषां प्रसिद्धानां पूर्वकृतानामित्यर्थः । कर्मणां इष्टं फलं क्रियां अनुष्ठानमन्तरेण न प्रवर्तते । पूर्वकर्मानुष्ठानं विना इदानीं फलं नोत्पद्यते । अतः पूर्वकर्मफले इदानींप्रवृत्ते कात्रपरिदेवनेति भावः ॥१७॥ अन्वशाः अनुशासितवानसि ॥ १८ ॥ दुरन्वया दुर्लभा । प्रसुप्तं स्तिमितं । संबोधयामि उत्थापयामि ॥१९॥ दिवि भवंदिव्यं । प्राणिजातं देवगन्धर्वादिकं । तच्च सात्त्विकं वधानर्हं । मानुषं मनुष्यलोकोद्भवं ब्राह्मणादिकं तदपि वधानर्हं । सर्वलोकसंहारसमर्थं आत्मनःपराक्रमं च अवेक्ष्य विचार्य द्विषतामेव वधे यतस्व ॥ २० ॥ उद्धर्तुं नाशयितुं ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

अथ लक्ष्मणवाक्यप्रतिष्ठापितधैर्यो रामो युद्धभूमेर्दक्षिणतः किंचिद्दूरे गृध्रराजं दृष्ट्वा रोदिति सप्तषष्टितमे । राघवः पूर्वजोपि लक्ष्मणेन कनिष्ठेन सुभाषितं युक्तियुक्ततयोक्तं वाक्यं । उक्तमात्रस्तु उक्तमात्र एव जग्राह । "बालादपि सुभाषितं" इति स्मृतेः । स्वयमुपदेष्टा कथमन्योक्तं जग्राहेत्यत्राह—सारग्राहीति । किमस्य वाक्यस्य सारवत्त्वं तत्राह—

---

तेषां । अतएवाध्रुवाणां अनिश्चितफलानां । सत्कर्मानुष्ठानेदुःखमित्यन्वयव्यतिरेकसूचकप्रत्यक्षप्रमाणेनानिश्चितफलानामित्यर्थः ॥ १७ ॥ **ति०** इयंचबुद्धिस्त्वद्दत्तैवमे अतस्तवोपदेशेकिंसामर्थ्यमिति नवाच्यमित्याह—मामिति । अकारणेक्रोधवशमापन्नमिति शेषः । बहुशोक्तवानितिसन्धिरार्षः ॥ **स०** बहुशोक्तवानितिपाठे बहुशेतिसंबोधनं । बहुश पूर्णसुख ॥ साक्षाद्बृहस्पतिरपि नानुशिष्यात् ॥ १८ ॥ **ति०** देवैरपिदुरन्वयाअन्वेतुमनुगन्तुमशक्या । त्वज्ज्ञानपरिच्छेदोदेवानामप्यशक्यइतिभावः । अनेनेश्वरतासूचिता ॥ १९ ॥ **ति०** दिव्यं देवोचितं मानुषं मनुष्योचितं । एवमुभयविधपराक्रमाश्रयत्वमात्मनोऽवेक्ष्य । तत्राद्यः परशुरामविषयः । अन्त्योरक्षोविषयः ॥ एवंच देवोचितपराक्रमस्यायं नावसरइतिभावः ॥२०॥ इतिषट्षष्टितमस्सर्गः ॥ ६६ ॥

**[ पा० ]** १ ख. ग. घ. मामेव. क. ङ. झ. ट. मामेवं. २ क. ख. ग. ङ.—ट. वीर. ३ क. ख. ङ. झ. ट. ठ. त्वमेवबहुशोक्तवान्. ग. त्वमेवबहुधोक्तवान्. घ. त्वमेवबहुशोऽन्वशाः. च. छ. ज. ञ. ह्यनुशिष्यसिराघव. ४ क. च. छ. ज. अनुशिष्यति. घ. अनुशिष्यात्तु. ५ ख. त्वांसाक्षादपिबृहस्पतिः. ६ क. ग. च. छ. ज. ञ. लोकैरेतैर्दुरन्वया. ७ ङ.—ट. चैवमात्मनश्च. घ. रूपमात्मनश्च. ८ ङ. झ. ट. तमेवतु. च. त्वमेवतं. ९ ङ. झ. ट. प्युक्तवाक्यस्तु. १० क. ङ.—ट. सनिगृह्य. ११ घ. ङ. झ. ट. प्रवृद्धंरोषमात्मनः. च. छ. ज. ञ. प्रवृद्धंक्रोधमात्मनः.

किं करिष्यावहे वत्स क्व[1] वा गच्छाव लक्ष्मण ॥ केनोपायेन पश्येयं[2] सीतामिति[3] विचिन्तय ॥ ३ ॥
तं तथा परितापार्तं लक्ष्मणो राममब्रवीत्[4] ॥ ४ ॥
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि[5] ॥ राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् ॥ ५ ॥
सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च ॥ गुहाश्च विविधा घोरा[6] नानामृगगणाकुलाः ॥ ६ ॥
आवासाः किन्नराणां च गन्धर्वभवनानि च ॥ तानि युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ॥ ७ ॥
त्वद्विधा बुद्धिसंपन्ना महात्मानो नरर्षभ ॥ आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ॥ ८ ॥
इत्युक्तस्तद्वनं सर्वं[8] विचचार सलक्ष्मणः ॥ क्रुद्धो रामः शरं घोरं सन्धाय धनुषि क्षुरम् ॥ ९ ॥
ततः पर्वतकूटाभं महाभागं[7] द्विजोत्तमम् ॥ ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १० ॥
अनेन सीता वैदेही भक्षिता नात्र संशयः ॥ गृध्ररूपमिदं रक्षो[9] व्यक्तं भवति कानने ॥ ११ ॥
भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् ॥ एनं वधिष्ये दीप्ताग्रैर्घोरैर्बाणैरजिह्मगैः[10] ॥ १२ ॥
इत्युक्त्वाऽभ्यपतद्[11]द्रष्टुं सन्धाय धनुषि क्षुरम् ॥ क्रुद्धो रामः समुद्रान्तां[12] कम्पयन्निव मेदिनीम् ॥ १३ ॥
तं दीनं[13] दीनया वाचा सफेनं रुधिरं वमन् ॥ अभ्यभाषत पक्षी तु[14] रामं दशरथात्मजम् ॥ १४ ॥
यामोषधिमिवायुष्मन्नन्वेषसि महावने ॥ सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५ ॥
त्वया विरहिता देवी लक्ष्मणेन च राघव ॥ ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६ ॥
सीतामभ्यवपन्नोऽहं रावणश्च रणे मया[15] ॥ विध्वंसितरथश्[16]चात्र पातितो[17] धरणीतले ॥ १७ ॥

---

महासारमिति ॥ १—२ ॥ पश्येयं पश्येव ॥ ३ ॥ तमित्यर्धमेकंवाक्यं ॥ ४—५ ॥ इह जनस्थाने । गिरिगतानि दुर्गाणि गन्तुमशक्यप्रदेशा इत्यर्थः । निर्दराः विदीर्णपाषाणाः । कन्दराणि पाषाणसन्धयः । गुहाः देवखातबिलानि । युक्तः संनद्धः ॥६—७॥ न प्रकम्पन्ते न चञ्चलचित्ता भवन्तीत्यर्थः ॥ ८ ॥ क्षुरं क्षुरप्राख्यं शरं । सीताया अदर्शनात्क्रोधः ॥ ९ ॥ कूटः शृङ्गं । महाभागं महाभाग्यं । स्वाम्यर्थे त्यक्तशरीरत्वात् । द्विजोत्तमं पक्षिश्रेष्ठं । "दन्तविप्राण्डजा द्विजाः" इत्यमरः । क्षतजं रुधिरं ॥ १० ॥ भक्षिता रुधिरार्द्रत्वादिति भावः। गृध्रेति । गृध्रस्य रूपमिव रूपं यस्य तत्तथा ॥११॥ अजिह्मं अकुण्ठं अवक्रं वा गच्छन्तीत्यजिह्मगाः तैः ॥१२॥ अभ्यपतत् अभिमुखं गतः। समुद्रान्तां समुद्रपर्यन्तां ॥ १३ ॥ दशरथात्मजमिति संबन्धोक्तिः॥१४॥ यथा महौषध्यन्वेषिणः प्रतिवनमन्वेषन्ते तथा यामस्मिन्विस्तीर्णे वनेऽन्वेषसि । एषृ गतावित्यस्माद्व्यत्ययेन परस्मैपदं । नित्यंप्राणसमेत्युक्ता सा देवी मम प्राणाश्च उभयं रावणेन हृतं । मम प्राणान्हृतप्रायान्कृत्वा सीतां रावणो हृतवानित्यर्थः । खरवधादिना रामबलंज्ञात्वाप्यस्थानेभयशङ्कितया रामस्यायुः प्रार्थयते—आयुष्मन्निति ॥ १५—१६ ॥ अभ्यवपन्नः आभिमुख्येन गतः । ह्रियमाणांसीतामवलोक्य तदभिमुखमागत इत्यर्थः । रावणश्च विध्वंसितरथःसन् अत्र धरणीतले पातितः रथाद्भ्रंशित

---

शि० क्रुद्धः क्रुधंजहातिसः त्यक्तकोपोरामः ॥ ९ ॥ शि० इदंगृध्ररूपंवस्तु यदिरक्षः राक्षसः तर्हि अनेनरक्षसाभक्षितासीता अत्र अस्योदरे भ्रमति भ्रमेत् । संशयोन । यदीत्यध्याहृतं । भ्रमतीत्यनेन तस्याः नित्यत्वंसूचितं तेनैतदुदरान्निर्गच्छेदितिसंभा-

[ पा० ] १ च. छ. ज. ञ. क्वगच्छावच. २ घ. झ. पश्यावः. ३ ङ. झ. ट. सीतामिह. क. सीतांसुरसुतोपमां. ४ घ. ङ. झ. ट. वाक्यमब्रवीत्. ५ ध.—ट. समन्वेषितुं. ६ ख. घोरं. ७ च. छ. ज. महाकायं. ८ च. छ. ज. ञ. किल. ९ ग. ङ.—ट. व्यक्तंरक्षोभ्रमतिकाननं. १० क. ग. ङ.—ट. दीप्ताग्रैःशरैर्घोरैरजिह्मगैः. ११ ङ. झ. ट. भ्यपतद्द्रष्टुं. १२ ख. च. छ. ज. ञ. सुसंभ्रान्तश्चालयन्निव. क. ग. घ. ङ. झ. ट. समुद्रान्तांचालयन्निव. १३ ख. च. दीनो. ङ. झ. ञ. दीनदीनया. १४ ङ. झ. ट. सरामं. १५ ङ. झ. ट. प्रभो. १६ क.—ट. रथच्छत्रः. १७ ख.—ट. पतितो.

एत[1]दस्य धनुर्भग्नमेत[2]दस्य शरावरम् ॥ अयमस्य र[3]थो राम भग्नः सांग्रामिको [4]मया ॥ १८ ॥
अयं तु सारथिस्तस्य मत्पक्षनिहतो युधि ॥ १९ ॥
परिश्रान्तस्य मे पक्षौ छित्त्वा ख[5]ड्गेन रावणः ॥ सीतामादाय वैदेहीमुत्पपात विहायसम् ॥ २० ॥
रक्षसा निहतं पूर्वं न[6] मां हन्तुं त्वमर्हसि ॥ २१ ॥
रामस्तस्य तु विज्ञाय बाष्पपूर्णमुखस्तदा ॥ द्विगुणीकृततापार्तः सीतासक्तां प्रि[7]यां कथाम् ॥ २२ ॥
[8]गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ॥ निपपातावशो भूमौ रुरोद सहलक्ष्मणः ॥
[ द्वि[9]गुणीकृततापार्तो रामो धीरतरोपि सन् ] ॥ २३ ॥
एकमेकायने [10]दुर्गे निःश्वसन्तं कथंचन ॥ समीक्ष्य [11]दुःखिततरो रामः सौमित्रिमब्रवीत् ॥ २४ ॥
[12]राज्याद्भ्रंशो वने वासः सीता नष्टा [13]द्विजो हतः ॥ ईदृशीयं [14]ममालक्ष्मीर्निर्दहेदपि पावकम् ॥ २५ ॥
संपूर्णमपि चेद[15]द्य प्रतरेयं महोदधिम् ॥ सोपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः ॥ २६ ॥

इत्यर्थः ॥ १७ ॥ भग्नमेतद्धनुः अस्य रावणस्य संबन्धि । एवमुत्तरत्रापि योज्यं । शरावरं वर्म तूणीरं वा ॥ १८ ॥ अयंत्वित्यर्धमेकं ॥ १९ ॥ वैदेहीं जनकेन सम्यक्परिपोषितां ॥ २० ॥ रक्षसेत्यर्धमेकं ॥ २१ ॥ तस्य गृध्रस्यसंबन्धिनीं । सीताविषयकथां विज्ञाय श्रुत्वा । द्विगुणीकृतेन गृध्रवधेनद्विरावर्तितेन तापेन आर्तः पीडितः । अभूदिति शेषः ॥ २२ ॥ अवशः मूर्च्छित इत्यर्थः । रुरोद क्रमादिति शेषः ॥ २३ ॥ एकं असहायं सहायरहितं दययासंरक्षकपथिकजनरहितमित्यर्थः । एकायने एकस्य मार्गे । "अयनं वर्त्म मार्गाध्व—" इत्यमरः । एकपद्यामित्यर्थः । दुर्गे इतः परमपिकेनचिद्गन्तुमशक्ये इति दुःखहेत्वतिरेकोक्तिः । निःश्वसन्तं गृध्रराजमितिशेषः ॥ २४ ॥ राज्यादिति । यद्यपि "न चास्य महतीं लक्ष्मीं राज्यनाशोपकर्षति" "वनवासो महोदयः" इति अभिमततमतया प्रोक्तौ राज्यनाशवनवासौ तथापि संप्रतिसीताविश्लेषकारित्वाज्जटायुवियोगफलकत्वाच्च तावेवानर्थकरौ जाताविति त्याह । राज्याद्भ्रंशः हठात् लब्धराज्यस्यविच्युतिः । वनेवासः राज्यभ्रंशेपि राज्येभिक्षुकवृत्त्यापिस्थातुंशक्यं तदपि नलब्धं । सीता नष्टा वनवासेप्यभिमतजनविश्लेषाभावे सुखेनावस्थातुं शक्यं तदपि नास्ति । हतो द्विजः अभिमतजनविश्लेषेपि बन्धुजनसन्निधौ शोको निर्वापयितुं शक्यः स च निवृत्तः । ईदृशी एतादृशदुःखपर्यवसायिनी । मम अलक्ष्मीः दौर्भाग्यं । पावकमपि निर्दहेत् सर्ववस्तुदाहकमपिदहेत् । सदा विश्लेषप्रसक्तिशून्यं लक्ष्मणमपि विश्लेषयेदिति भावः

वनाव्यञ्जिता ॥ ११ ॥ **ती०** तस्यजटायुषः । विज्ञाय स्वरूपमितिशेषः । सीतासक्तां सीताविषयां कथां श्रुत्वेतिशेषः ॥ २२ ॥ रामोरुरोदेत्यस्यायमभिप्रायः । परमेश्वरस्यश्रीरामस्यभक्तपक्षपातित्वेन भक्तजटायुषमापन्नंदृष्ट्वा परमप्रियांसीतांरावणेनहृतांचश्रुत्वा "व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः" इत्युक्तेः भक्तापदं दृष्ट्वारुरोदेति । द्विगुणीकृततापार्तः बभूवेतिशेषः । सीताऽदर्शनजस्तापः निजभक्तजटायुवधजनिततापश्च । एवंतापस्यद्विगुणत्वं ॥ २३ ॥ **ति०** एकंअसहायं । एकस्मिन् ऊर्ध्वतालक्षणे अयने श्वासमार्गे । अतएव कृच्छ्रे मुहुर्मुहुर्निश्वसन्तमितिकतकसंमतपाठेऽर्थः ॥ २४ ॥ **शि०** राज्यं राज्याभिषेकः । वनेवासः जातइतिशेषः । या पावकमपिदहेत् ईदृशी ममालक्ष्मीः मस्यमधुसूदनस्यमा लक्ष्मीः तस्याअपिलक्ष्मीः । इयं बुद्धिस्था सीता नष्टा अपहरणेनादृश्यत्वंप्राप्ता । द्विजः सहायकः पक्षी । मृतः मृतप्रायः । "मोयमेसमयेपिस्याद्विषेचमधुसूदने ।" इतिमेदिनी ॥ २५ ॥ **शि०** पतिः सर्वेषांनियन्ता अहं संपूर्णां सरितं नदीं संपूर्णमहोदधिंसमुद्रंच । ममालक्ष्या मधुसूदनलक्ष्मीलक्ष्म्या सहितः । अत् निरन्तरंवनपर्यटनशीलोहं चेत् यदि इच्छामि तदा प्रतरेयं विशुष्ये शोषयामिच । अतः येनरक्षसाहेतुभूतेन

[ **पा०** ] १ घ. एतत्तस्य. २ ङ. झ. ट. मेतेचास्यशरास्तथा. घ. मेतत्तस्य. ३ क. ग. ङ.—ट. रणे. ४ क. ङ.—ट. रथः. ५ क. घ. च. छ. खस्थस्स. ६ क. च. छ. ज. नमांत्वंहन्तुमर्हसि. ङ. झ. ट. मांनहन्तुंत्वमर्हसि. ७ घ. छ. ज. कथांप्रियां. ८ अतःपूर्वं 'श्रुत्वाजटायुषोवाक्यंरामःसौमित्रिणासह.' इत्यर्धं घ. पाठेअधिकंदृश्यते. ९ इदमर्धं. ङ. झ. ट. पाठेषुदृश्यते. १० ख. ङ. झ. ट. कृच्छ्रेनिश्वसंतंमुहुर्मुहुः. ११ क. ख. ग. ङ.—ट. दुःखितोरामःसौमित्रिमिदमब्रवीत्. १२ ङ. छ.—ट. राज्यंभ्रष्टं. क. राज्यभ्रंशो. १३ ङ.—ट. मृतोद्विजः. ग. घ. हतोद्विजः. क. द्विजोमृतः. १४ क. ममालक्ष्मीर्दहेदपिच. ङ. झ. ट. ममालक्ष्मीर्दहेदपिहि. १५ क. पाथोभिःप्रतरेयं. च. छ. ज. ञ. चेदद्यप्रविशेयं.

नास्त्यभाग्यतरो लोके मत्तोस्मिन्सचराचरे ॥ येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २७ ॥
अयं पितृवयस्यो मे गृध्रराजो जरान्वितः ॥ शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २८ ॥
इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः ॥ जटायुषं च पस्पर्श पितृस्नेहं विदर्शयन् ॥ २९ ॥
निकृत्तपक्षं रुधिरावसिक्तं सँ गृध्रराजं पँरिरभ्य रामः ॥
क्व मैथिली प्राणसमा मँमेति विमुच्य वाँचं निपपात भूमौ ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

रामेण सीताहरणवृत्तान्तस्ययाथातथ्यंपृष्टेनजटायुषा तंप्रतितत्कथनपूर्वकं सीताहरणकालस्य विन्दनामकमुहूर्तत्वोक्त्या तन्मुहूर्तमहिम्ना पुनःसीतालाभस्यभावित्वोक्त्या समाश्वासनं ॥ १ ॥ तथा तंप्रति रावणवृत्तान्तंकथयतोजटायोरर्धोक्तावेव शरीरात्प्राणानांविनिर्गमः ॥ २ ॥ तंप्रतिशोचतारामेण तस्यविष्णुलोकगमनानुग्रहपूर्वकं तच्छरीरदहनेनतंप्रतिपिण्डोदकदानं ॥ ३ ॥

रामः संप्रेक्ष्य तं गृध्रं भुवि रौद्रेण पातितम् ॥ सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥ १ ॥
ममायं नूनमर्थेषु यतमानो विहङ्गमः ॥ राक्षसेन हतः संख्ये प्राणांस्त्यक्ष्यति दुस्त्यजान् ॥ २ ॥
अयमस्य शरीरेस्मिन्प्राणो लक्ष्मण विद्यते ॥ तथाहि स्वरहीनोऽयं विक्लवः समुदीक्षते ॥ ३ ॥
जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः ॥ सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥४॥
किंनिमित्तोऽहरत्सीतां रावणस्तस्य किं मया ॥ अपराधं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५ ॥

---

॥२५॥ प्रतरेयं तापशान्तयेप्लवेयं चेत् ॥२६॥ व्यसनं वागुरेव व्यसनवागुरा । "वागुरा मृगबन्धिनी" इत्यमरः ॥ २७ ॥ पितुर्वयस्यः सखा ॥ २८ ॥ पितरीव स्नेहः पितृस्नेहः ॥ २९ ॥ रामः वाचं विमुच्य उक्त्वेत्यर्थः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

अथभगवत्कार्यार्थत्यक्तशरीरस्यगृध्रराजस्यमोक्षप्रदप्रापणमष्टषष्टितमे । रौद्रेण रावणेन । मित्रसंपन्नं सर्वजनमित्रमित्यर्थः । यद्वा परनिपातः । संपन्नमित्रं अत्यन्तरामविषयसौहार्दयुक्तमित्यर्थः ॥ १ ॥ अर्थेष्विति निमित्तसप्तमी । मम प्रयोजनार्थमित्यर्थः । संख्ये युद्धे ॥ २ ॥ अयंप्राणः सूक्ष्मप्राणः । स्वरहीनः हीनस्वरः । विक्लवः विह्वलः ॥ ३ ॥ व्याहरितुं व्याहर्तुं । वधं वधप्रकारं ॥४॥ किंनिमित्तः किंनिमित्तं

---

महती इयंव्यसनवागुरा दुःखरूपमृगादिबन्धनजालं । मयाकर्त्रा प्राप्ताप्रापिता । तस्मान्मत्तः उन्मत्तः अभाग्यतरश्च लोकेनास्ति । एतेन सशीघ्रंध्रुवंनङ्क्ष्यतीतिसूचितं । श्लोकद्वयमेकान्वयि ॥२६—२७॥ **शि०** तदेवद्रढयन्नाह—**अयमिति**। मेपितुर्वयस्यः सखा निहतः निहतप्रायः । अयंगृध्रराजः भाग्यविपर्ययात् हननकर्तुर्भाग्यवैपरीत्यादेव ममाग्रेशेते ॥ २८ ॥ **स०** वाचंविमुच्य क्वगतेति वाचंविमुच्यभूमौनिपपात ॥ ३० ॥ इतिसप्तषष्टितमः सर्गः ॥ ६७ ॥

**स०** मित्रसंपन्नं मित्रत्वेनसंप्रतिपन्नं ॥१॥ **स०** तस्य रावणस्य । आर्यां जगन्मातरं । तस्यकिमपराद्धमितितस्येत्युभयत्रान्वेति

**[ पा० ]** १ ङ. झ. ट. महाबलः. २ ङ.—ट. निदर्शयन्. ३ ख. ङ.—ट. तंगृध्रराजं. ४ ङ. झ. ट. परिगृह्यराघवः. ५ ङ. ट. गतेति. ६ ख. बाष्पं. ७ क. ग. ङ.—ट. प्रेक्ष्यतु. ८ क. घ. च. ञ. ट. स्त्यजति. ङ. झ. स्त्यजतिमत्कृते. घ. स्त्यजतिदुःखितान्. ९ ङ. झ. ञ. ट. अतिखिन्नःशरीरे. १० च. छ. ज. दृश्यते. ११ ङ.—ट. तथास्वरविहीनोयं. ख. तथापिस्वरहीनोयं. १२ च. छ. ज. विक्लबंसमुदैक्षत. ङ. झ. ञ. ट. विक्लबंसमुदीक्षते. १३ ख. ग. किंनिमित्तंहरेत्. ङ. झ. ट. किंनिमित्तोजहारार्यां. १४ ख. ङ.—ट. अपराद्धंतु.

कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् ॥ सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम ॥ ६ ॥
कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः ॥ क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ७ ॥
तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् ॥ वाचाऽतिसन्नया रामं जटायुरिदमब्रवीत् ॥ ८ ॥
हृता सा राक्षसेन्द्रेण रावणेन विहायसा ॥ मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९ ॥
परिश्रान्तस्य मे तात पक्षौ छित्त्वा स राक्षसः ॥ सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम् ॥ १० ॥
उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव ॥ पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्धजान् ॥ ११ ॥
येन यातो मुहूर्तेन सीतामादाय रावणः ॥ विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२ ॥
विन्दो नाम मुहूर्तोऽयं स च काकुत्स्थ नाबुधत् ॥ त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः ॥
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १३ ॥
न च त्वया व्यथा कार्या जनकस्य सुतां प्रति ॥ वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ॥ १४ ॥
असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ॥ आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १५ ॥

यस्यासौ किंनिमित्तः । केन हेतुना अहरदित्यर्थः । किं भोगार्थं उत अपकारप्रतीकारार्थमित्यर्थः । चरमपक्षे तत्स्वरूपं पृच्छति—तस्येति । यं अपराधं ॥ ५ ॥ कथं कीदृशप्रकारं । कानि वाक्यानि ॥ ६ ॥ तात पितृतुल्य ॥ ७ ॥ दीनात्मा दीनमनाः । अतिसन्नया अतिकार्श्यं प्राप्तया ॥ ८ ॥ किंकर्मेत्यस्योत्तरमाह—हृतेति । वातेन दुर्दिनेन च संकुलां । "मेघच्छन्नेह्नि दुर्दिनं" इत्यमरः । मायया महावातंमेघच्छादनंचोत्पाद्य हृतवानित्यर्थः ॥ ९ ॥ वधमाख्याहीत्यस्योत्तरमाह—परिश्रान्तस्येति । युद्धपरिश्रान्तस्येत्यर्थः ॥ १० ॥ प्रश्नान्तरे प्रत्युत्तरकथनाशक्तिमाह—उपरुध्यन्तीति । उपरुध्यन्ति उपरुध्यन्ते । मरणवेदनया पीड्यन्त इत्यर्थः । सौवर्णान् मरणकालेतथाप्रतीयन्त इतिप्रसिद्धं । उशीरैः लामज्जकैः कृताः कल्पिताः मूर्धजाः केशाः येषांते तथा ॥ ११ ॥ किमिह बहुनोक्तेन सर्वथा सीता पुनर्लप्स्यत इत्याह—येनेति । येनमुहूर्तेन निमित्तभूतेन । रावणः सीतामादाय यातिस्म । तन्मुहूर्तबलेन स्वामी धनस्वामी । विप्रनष्टं धनं क्षिप्रं अचिरेण । पुनः प्रतिपद्यते प्राप्नोति ॥ १२ ॥ कोसौ मुहूर्त इत्यत्राह—विन्द इति । नष्टं धनं विन्दति लभतेऽस्मिन्निति विन्दः । स रावणस्तु नाबुधत् नाबुध्यत । विकरणव्यत्ययश्छान्दसः । तस्मात् बडिशं गृह्य गृहीत्वा । झषवत् मत्स्यइव विनश्यति । वर्तमानसामीप्येवर्तमानवत् । "बडिशं मत्स्यवेधनं" इत्यमरः ॥ १३ ॥ फलितमाह—न चेति ॥ १४ ॥ असंमूढस्येति एतावत्पर्यन्तमिति शेषः । अनुभाषतः उत्तरं भाषमाणस्य ।

**ति०** यमपराधंदृष्ट्वातु प्रियासीताहृता सोपराधस्तस्यमयाकिंकृतः अपितुन । अतः किं निमित्तं हृदि यस्यसआर्यांजहार ॥ ५ ॥ **स०** कानि किंप्रकाराणि ॥ **शि०** चन्द्रसंकाशंचन्द्रस्यापिप्रकाशकं ॥ ६ ॥ **शि०** अनन्तरं अन्तररहितं निरन्तरमित्यर्थः । विलपन्तं विविधंपृच्छन्तं ॥ ८ ॥ **ती०** येनमुहूर्तेन यस्मिन्मुहूर्ते रावणस्सीतामादाययातः असौमुहूर्तो विन्दोनाम । तत्रनष्टं धनं पुनरायास्यति । तदेतत्सरावणोनाबुधत् नाबुध्यत । सीतामोहितत्वात् । विन्दतेऽनेन नष्टंधनमिति विन्दः । विद्लृलाभे इतिधातुः । सचैकादशोमुहूर्तः । मुहूर्तलक्षणंतूक्तंपुराणे—"रौद्रःश्वेतश्चमैत्रश्चतथासारभटःस्मृतः । सावित्रोवैश्वदेवश्चगान्धर्वः कुतपस्तथा । रौहिणस्तिलकश्चैवविजयोनैर्ऋतस्तथा । शंबरोवारुणश्चैवभगःपञ्चदशःस्मृतः" इति । एते अह्निमुहूर्ताः । अत्रविजयस्यैवनामान्तरंविन्दइतिज्ञेयं । यद्वा विन्दः घटिका । नकेवलंमुहूर्तमहिम्नासीतारूपेष्टप्राप्तिः । अपित्वनिष्टरूपरावणविनाशोपीत्याह । विनश्यति सीतापहर्तेतिशेषः ॥ १२—१३ ॥ **ति०** असंमूढस्य मृतिकालेप्यभ्रान्तस्य ॥ १५ ॥

[ पा० ] १ ङ. झ. ट. मुद्वीक्ष्यस. २ ङ.—ट. धर्मात्मा. ३ ख. च. छ. ज. ञ. मनाथवत्. ४ ख. घ.—ट. राममिदं वचनमब्रवीत्. ५ घ. च. ज.—ट. साहृता. ६ ङ. झ. ट. दुरात्मना. ७ ङ. झ. क्रान्तस्य. ८ क. ख. ग. ङ.—ट. निशाचरः. ९ क. ख. ग. ङ.—ट. दक्षिणामुखः. १० क. ख. ग. ङ.—ट. याति. ११ क. ग. ङ. छ.—ट. मुहूर्तोसौ. १२ ङ. झ. ट. नचकाकुत्स्थसोबुधत्. १३ ग. झ. वैदेह्यां. १४ ख. योक्ष्यसे. १५ ङ. झ. ट. रणमूर्धनि. च. छ. ज. ञ. रावणंरणे.

पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ॥ इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः ॥ १६ ॥
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः॥ त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम्॥१७॥
स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा ॥ विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥ १८ ॥
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ॥ रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ॥ १९ ॥
बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ॥ [ पक्षिराजेन वृद्धेन तातमित्रेण नस्सुखम् ] ॥
अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा ॥ २० ॥
अनेकवार्षिको यस्तु चिरकालसमुत्थितः ॥ सोयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २१ ॥
पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे ॥ सीतामभ्यवपन्नो वै रावणेन बलीयसा ॥ २२ ॥
गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ॥ मम हेतोरयं प्राणान्मुमोच पतगेश्वरः ॥ २३ ॥
सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ॥ शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ॥२४॥
सीताहरणजं दुःखं न मे सौम्य तथागतम् ॥ यथा विनाशो गृध्रस्य मत्कृते च परंतप ॥ २५ ॥
राजा दशरथः श्रीमान्यथा मम महायशाः ॥ पूजनीयश्च मान्यश्च तथाऽयं पतगेश्वरः ॥ २६ ॥

सामिषं मांससहितं रुधिरं ॥ १५ ॥ अथ रावणवंशं वक्तुमुपक्रमते—पुत्र इति । साक्षात्पुत्रः औरस इत्यर्थः । अस्योत्तरार्धं "अध्यास्ते नगरीं लङ्कां रावणो राक्षसेश्वरः" इति बोध्यम् । उत्तरत्र संपातिवचने इदमेव पूर्वार्धमुपादाय अस्योत्तरार्धस्य कथनादिति लोकाचार्योक्तम् । इत्युक्त्वा एतावन्मात्रमुक्त्वा । भवनादिकथनात्पूर्वमित्यर्थः । दुर्लभान् ब्रूहिब्रूहीति पृच्छते रामाय साकल्येन विज्ञापनपर्यन्तं प्राणा न स्थिताः हन्तेति ऋषिःशोचति ॥ १६ ॥ ब्रुवाणस्य ब्रुवाणे सति । प्राणः सूक्ष्मशरीरेन्द्रियप्राणसहित आत्मेत्यर्थः ॥ १७ ॥ निक्षिप्य मरणवेदनयेति भावः । विक्षिप्य विधूय । पपातेत्युक्तिरौपचारिकी ॥ १८ ॥ ताम्राक्षं अधःशिरस्कतया पतनजक्षोभात् ॥ १९ ॥ रक्षसां वासे दण्डकारण्ये । बहूनिवर्षाणि निर्भयतया सुखं वसताऽनेन पक्षिणा विशीर्णं देहविशरणं प्राप्तं इहैवसुखं वसित्वा इहैव मृतमनेनेति भावः । विचीर्णमिति पाठे अत्रैव वसता अनेन अत्रैव सुखं विचीर्णं अनुभूतमित्यर्थः ॥ २० ॥ एतदेव विवृणोति—अनेकेति । अनेकवार्षिकः बहुवयःप्राप्तः । चिरकालमभ्युदयं प्राप्तः ॥२१॥ पश्येति । अनेन मोक्षप्रदानोचितं तदीयसुकृतविशेषं दर्शयति । सीतामभ्यवपन्नो मे उपकारी सन्हतः ॥ २२ ॥ गृध्रराज्यं परित्यज्येति प्राप्याभासपरित्याग उक्तः । महदिति स्वकीयेक्ष्वाकुराज्यव्यावृत्तिः । एकमुखत्वात् । ममेत्यादिना उपायानुष्ठानोक्तिः । पतगेश्वरः पितुर्मरणात् इतःपरमस्य पक्षानाश्रित्य सुखं स्थास्यामीति स्थितोहं अयं तातवन्मत्कृते प्राणत्यागं कृतवानिति भावः ॥ २३ ॥ सर्वत्रेति सर्वजातिष्वपीत्यर्थः । तिर्यग्योनिगतस्यास्य कथमेतादृशीबुद्धिरिति नमन्तव्यमितिभावः ॥ २४ ॥ मत्कृते च मत्कृत एव । यथाऽस्य विनाशःप्राप्तः तथा सीताहरणजं दुःखं नागतं न प्राप्तं । अत्र विनाशशब्देन तज्जं दुःखमुच्यते ॥ २५ ॥ अथ संस्कारयोग्यतामाह—राजेति । पूजनीयः पैतृकविधिना अर्चनी-

ती० ननु रावणहतस्यजटायोरेतावन्तंकालंप्राणधारणंकथमितिचेत् तस्यास्सीतायाअनुग्रहवशादित्यनुसन्धेयं । उक्तंचस्कान्दे—"देवीमांप्राहराजेन्द्रयावत्संभाषणंमम । भवतस्तावदासन्मे प्राणाइत्याहजानकी ।" इति ॥ १८ ॥ ति० सीतामभ्यवपन्नः सीतांमोचयितुंप्रवृत्तः ॥ २२ ॥ ति० सीताहरणजदुःखाद्गृध्रविनाशजंदुःखमधिकमितिभावः । तस्याः पुनःप्राप्तिसंभावनासत्त्वादस्यतदभावाच्चेतितात्पर्यं ॥ २५ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. प्राणाजग्मुः. २ क. ख. ग. ङ.—ट. तथा. ३ क. ख. ग. विनिक्षिप्य. ४ इदमर्धं घ. पाठेदृश्यते. ५ क. वार्षिकोवीरश्चिरकालसमृद्धिमान्. ६ च. छ. ज. ञ. मभ्यवपन्नोयं. ङ. झ. ट. मभ्यवपन्नोहि. घ. मभ्यवपन्नोवै.

सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम् ॥ गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् ॥ २७ ॥
नाथं पतगलोकस्य चितामारोप्य राघव ॥ इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ॥ २८ ॥
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ॥ अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥२९॥

यः । मान्यः श्लाघ्यः ॥ २६ ॥ दिधक्षामि दग्धुमिच्छामि । देहस्सन्नन्तात् घत्वभष्भावौ ॥ २७ ॥ चितां काष्ठभारं ॥ २८ ॥ या गतिरित्यादिश्लोकद्वयमेकान्वयं । गम्यत इति गतिः लोकः । यज्ञशीलानां यज्ञाः शीलं सद्वृत्तं येषां ते तथा सदायज्ञानुष्ठानपराणांगृहस्थानामित्यर्थः । आहिताः परितःस्थापिताः अग्नयः पञ्चाग्नयो यस्य सतथा सर्वदातपःशीलस्य वानप्रस्थस्येत्यर्थः । अग्न्याधानस्य पूर्वेणैव सिद्धत्वात् पृथक्फलाभावाच्च । अपरावर्तिनां "अरण्यमियात्ततो नपुनरेयात्" इत्युक्तानांसंन्यासिनामित्यर्थः । रणादपलायितानामित्यर्थवर्णने जटायोस्तादृशत्वेन तत्फलस्य स्वतःसिद्धत्वेनानुज्ञातव्यत्वाभावात् । मुक्तानां धर्मप्रकरणे उक्त्यसंभवात् । भूमिप्रदायिनां भूमिभोगत्यागिनां नैष्ठिकानामित्यर्थः । ता गतीरिति यत्तदोर्नित्यसंबन्धात्सिद्धम् । ता गतीः "प्राजापत्यं गृहस्थानां ब्राह्मं संन्यासिनां स्मृतं" इत्याद्युक्तस्थानानि । यद्वा यज्ञदानतपःसंन्यासिनामित्यर्थः । तेषां या या गतिः शास्त्रविहिता तां मया संस्कृतो व्रज । मया समनुज्ञातस्तु अनुत्तमान् सर्वश्रेष्ठान् । लोकान् "अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु" इत्यादिश्रुतिप्रसिद्धान्विष्णुलोकान् गच्छ अवयवबहुत्वाद्बहुवचनं । अन्यथा गतिशब्देन पौनरुक्त्यमनन्वयश्च । समनुज्ञातःसंस्कृतश्चेति पदद्वयानर्थक्यं च । ननु मानुषभावंभावयतः श्रीरामस्य कथं मुक्तिप्रदानं तस्यपरत्वासाधारणचिह्नत्वादिति चेत् "सत्येनलोकाञ्जयति" इत्युक्तरीत्या स्वार्जितधर्मविशेषेण स्वाधीनसर्वलोकत्वाविरोधात् । केचित्तु मया संस्कृतस्ततोऽनुज्ञातस्त्वं यज्ञशीलादीनां या गतयः ताँल्लोकान्गच्छ सर्वान्ते मांव्रज । "सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इत्युक्तरीत्या मुक्तभोगं प्राप्नुहि । न च निर्हेतुकमुक्तिप्रदानेतिप्रसङ्गः स्वकार्यमुद्दिश्य प्राणत्यागस्यैव हेतुत्वात् । अतएव नृसिंहपुराणे "मत्कृतेनिधनंयस्मात्त्वया प्राप्तं द्विजोत्तम । तस्मान्मम प्रसादेन विष्णुलोकमवाप्स्यसि" इत्युक्तं ।

**ति०** दिधक्ष्यामि सद्गतिसिद्धये ॥२७॥ **तनि०** गम्यतइतिगतिर्लोकः । तिरश्चांकर्माधिकाराभावेप्यकृतसंस्काराणां परलोकाभावात्त्वं मयासंस्कृतस्सन् मदनुज्ञयैव अनुत्तमान् लोकान् गच्छ । अपरावर्तिनां पुनरावृत्तिरहितानां मुक्तानामित्यर्थः । "नसपुनरावर्तते" इति श्रुतेः । लोकानितिपूजायांबहुवचनं । यद्वा विश्वतःपृष्ठेषुसर्वतःपृष्ठेष्वनुत्तमेषूत्तमेष्वित्यत्र परमव्योमस्थितावान्तरलोकापेक्षयाबहुवचननिर्देशवदत्रापि बहुवचननिर्देशः । यज्ञशीलानां यज्ञशीलादिलोकमार्गेणापरावर्तिनां लोकंप्राप्नुहीत्यर्थः । तथा च नृसिंहपुराणे—'मत्कृतेमरणंयस्मात्' इत्यादि । ननु भगवतारामेण तिरश्चोगतायुषः संस्कारकरणंकथमितिचेत् 'नशूद्राभगवद्भक्ताः' इत्यत्र शूद्रशब्दस्योपलक्षणार्थत्वाद्भगवद्भक्तानांसर्वप्राणिनांमोक्षाधिकारस्यगम्यमानत्वाच्च युक्तमेवेदमितिज्ञेयं । नन्वेवंसति जटायुषोमोक्षप्रदत्वाद्रामस्यपरमात्मत्वंप्रतीयते । 'त्वंगतिः परमादेव' इत्यादिना बालकाण्डे 'सहिदेवैरुदीर्णस्य' इत्यादिना युद्धकाण्डे 'सीतालक्ष्मीर्भवान्विष्णुः' इत्यादिना श्रीभागवते च श्रीरामस्यपरमात्मत्वंस्फुटमुक्तं । एवं समस्तकल्याणगुणाकरस्य श्रीमन्नारायणस्य रावणादिवधरूपलोकहितार्थं स्वयमेवदशरथभवनेऽवतीर्णस्य सीतामुद्दिश्यविलापःकथमितिचेत् सत्यं । तथापि नदोषः । 'व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः ।—निश्चिताऽपि हिमेबुद्धिर्वनवासेदृढव्रता । भरतस्नेहसंतप्ता बालिशीक्रियते पुनः । सीताहरणजंदुःखं नमेसौम्यतथागतम् । यथाविनाशोगृध्रस्य मत्कृतेचपरंतप ।' इत्यनेनप्रकारेण सर्वेश्वरस्याप्याश्रितवत्सलत्वात् दुःखितानाश्रितानाकलय्य दुःखेनस्वयमपिदुःखितइवभाति तेषांदुःखमपनयतिचेति ऋषेरभिप्रायइतिवेदितव्यं । शुकादयस्तु 'मर्त्यावतारस्त्विहमर्त्यशिक्षणं रक्षोवधायैवनकेवलंविभोः' इत्यादिप्रकारेण श्रीरामस्यदुःखाभावमेववर्णयन्ति । एवमन्यत्राप्येवंविधविषयेपरिहारोद्रष्टव्यः ॥ **ति०** अपरावर्तिनां । संग्रामेइतिशेषः । गम्यतइतिगतिर्लोकः । यज्ञशीलानांलोकान्क्रमेणप्राप्य मदनुज्ञातस्सन् अनुत्तमान् येभ्यः परेउत्तमानसन्ति तांल्लोकान् ब्रह्मणो लोकान् क्रममुक्तिदान् गच्छ । अनेन संकल्पमात्रात्कर्मानधिकृततिरश्चः साधनहीनस्यापि तल्लोकदानेन भगवान्रामः स्वस्वरूपांशेमाययावृतज्ञानइतिप्रलपतांमुखंध्वस्तं । शोकादितु नटनमित्युक्तमेवासकृत् । तदुक्तं—" संस्कारमकरोत्तस्य रामोब्रह्मविधानतः । स्वपदंचददौतस्मै सोपिरामप्रसादतः । हरेस्सामान्यरूपेण प्रययौपरमंपदम् ।' इतिजटायुषंप्रक्रम्य पाद्मे । एतेन तिरश्चामपिस्नेहादिना दाहादियुक्तमितिध्वनितं ।

[ पा० ] १ क. घ. दिधक्ष्यामि. २ घ. देहंपतगराजस्य. ३ क. ख. ग. चितामारोपयाम्यहं. च. छ. झ. ञ. ट. चितिमारोपयाम्यहं.

मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ॥ गृध्रराज महासत्त्व संस्कृतश्च मया व्रज ॥ ३० ॥
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ॥ ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३१ ॥
रामोथ सहसौमित्रिर्वनं गत्वा स वीर्यवान् ॥ स्थूलान्हत्वा महारोहीननु तस्तार तं द्विजम् ॥३२॥
रोहिमांसानि चोत्कृत्य पेशीकृत्य महायशाः ॥ शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३३ ॥
यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ॥ तत्स्वर्गगमनं तस्य पित्र्यं रामो जजाप ह ॥ ३४ ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ॥ उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥ ३५ ॥
शास्त्रदृष्टेन विधिना जले गृध्राय राघवौ ॥ स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३६ ॥

"कर्मणैवहिसंसिद्धिमास्थिता जनकादयः" इतिहि कर्मणोपि मुक्तिहेतुत्वमुक्तं । "नान्यः पन्थाः" इति श्रुतिः परमात्मनोऽन्यत्र साक्षान्मुक्तिहेतुत्वं निषेधति। तस्यैवप्राधान्येन प्रकृतत्वादित्याहुः । यद्वा हे गृध्रराज महासत्त्व मया संस्कृतस्त्वं मयानुज्ञातो भूत्वा अनुत्तमांल्लोकान् मल्लोकानित्यर्थः । गच्छ आनुषङ्गिकतया यज्ञशीलादीनां या या गतयस्ता अपि गच्छ । गम्यत इति गतिः लोकः । आहिताग्नेः गार्हपत्याहवनीयदक्षिणाग्निनिरतस्य । या गतिः "अग्नयो वै त्रयीविद्या" इत्यारभ्य "तस्मादग्नीन्परमंवदन्ति" इत्याहिताग्नित्वस्यापि पृथग्धर्मत्वश्रवणात् । अपरावर्तिनां युद्धादपरावर्तमानानां । या गतिः दृष्टान्तार्थमिदमुक्तं । जटायोस्तादृशत्वेन तत्फलस्येदानीमदेयत्वात् । तिरश्चां यज्ञाद्यधिकाराभावेन तत्फलमात्रस्य देयत्वात् । यथाऽपरावर्तिनां गतिं प्राप्स्यसि तथा यज्ञशीलादीनां लोकानपि । ब्रह्मप्राप्तौ वसुत्वादिकमिव प्राप्नुहीत्यर्थः । अस्मिन्कल्पे भूमिप्रदायिनामित्यस्य प्रतीयमानार्थकत्वमेव । व्रज एवं गच्छ । यद्वा मया प्रथमं संस्कृतः अथ " तृतीयेन ज्योतिषा संविशस्व" इत्यादिमन्त्रेणानुज्ञातो मया त्वं यज्ञाधिकारिणां लोकान् गच्छ । ब्रह्ममेधसंस्कारबलेन प्राप्नुहीत्यर्थः । इदं च फलं संस्कारोत्तरक्षण एवानुतिष्ठतीत्युच्यते । संस्कृतो व्रजेति । गृध्रराज महासत्त्व संस्कृतश्च महाव्रतेति पाठे संस्कृतश्च भवेति वार्थः ॥ २९—३० ॥ दीप्तां दीपनार्हां । स्वबन्धुमिवेत्यनेन मन्त्रपूर्वकत्वं दाहस्योच्यते ॥ ३१ ॥ महारोहीन् महामृगान् । तं द्विजमनु जटायुषमुद्दिश्य । हत्वा तस्तार पिण्डदानार्थं दर्भानास्तृतवान् ॥३२॥ उत्कृत्य उद्धृत्य । पेशीकृत्यपिण्डीकृत्य । हरितशाद्वले नवीनतृणास्तृतप्रदेशे । शकुनाय पक्षिणे । ददौ ॥ ३३ ॥ प्रेतस्य मर्त्यस्य मनुष्यस्य । यत्तत् प्रसिद्धं मन्त्रजातं । स्वर्गगमनं स्वर्गोगम्यतेनेनेति स्वर्गगमनं स्वर्गप्रापकं वदन्ति । पित्र्यं पितृदेवताकं । तज्जजाप याम्यसूक्तादिकं जजापेत्यर्थः ॥३४॥ चक्रतुरिति लक्ष्मणस्यकर्तृत्वं सहकारितया । उदकं उदकदानमित्यर्थः ॥३५॥ उक्तस्यैवार्थस्यस्नानपूर्वकत्वविधिपूर्वकत्वप्रदर्शनायपुनरप्याह—शास्त्रेति । तदा तौराघवौ शास्त्रदृष्टेन विधिना गृध्राय गृध्रमुद्दिश्य । जलेस्नात्वा गृध्रराजायोदकं चक्रतुरित्यन्वयः । अयमत्र क्रमः । गृध्रराजंदग्ध्वा स्वर्गगमनसूक्तंजप्त्वा गोदावरींगत्वा स्नात्वा उदकंदत्त्वा रोहिमांसपिण्डंददाविति। ननु वैदिकोत्तमोरामः कथंहीनजातिंतिर्यञ्चं वैदिकेन कर्मणासंस्कृतवान् । मैवं । तस्यात्यन्तभक्तत्वेन जातेरपगमात् । "न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने" इत्युक्तेः। न चेदं वचनं "अपशवोवाअन्येगोअश्वेभ्यः" इतिवत्प्रशंसापरमितिवक्तुंशक्यं । बाधकाभावात् । ब्राह्मणत्वादिजातिर्हिशास्त्रैकसमधिगम्या ननु गोत्वादिवदाकृतिगम्या । येन तत्तुल्यत्वमाशङ्क्येत । अतएव विश्वामित्रस्यापि क्षत्रियत्वजातिरपनीता उपनीताचब्राह्मणत्वजातिरित्युपपादितं बालकाण्डे । अयमर्थ उपपादयिष्यतेच श्रमणीवृत्तान्ते । इदंच द्रौपदीविवाहादिवदैतिहासिकविलक्षणव्यक्तिविशेषनियतमितिच

सारूप्यमुक्तिलाभश्चोक्तः । मया मद्रूपेण सामान्यहरिरूपेण ॥ २९ ॥ ३० ॥ शि० जलं जलाशयं । प्राप्येतिशेषः ॥ ३६ ॥

[ पा० ] १ घ. द्विज. २ ङ.—ट. रामोपि. ३ क. ख. ग. ङ.—ट. यात्वा. ४ ख. हत्वाऽपरान्रोहीननु. ५ क. ख. ङ.—ट. पेशीकृत्वा. ६ क. ख. शकुनीनां. ७ च. छ. ज. ञ. मन्त्रंच. ८ च. छ. ज. ञ. क्षिप्रंयाम्यसूक्तंजजापह. ङ. झ. ट. क्षिप्रंतस्यरामो. ९ क. ख. ग. तथा. १० क. ङ.—ज. ट. जलं.

स गृध्रराजः कृतवान्यशस्करं सुदुष्करं कर्म रणे निपातितः ॥
महर्षिकल्पेन च संस्कृतस्तदा जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥
कृतोदकौ तावपि पक्षिसत्तमे स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ॥
प्रवेश्य सीताधिगमे ततो मनो वनं सुरेन्द्राविव विष्णुवासवौ ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

## एकोनसप्ततितमः सर्गः ॥ ६९ ॥

जटायुषेजलदानानन्तरं सुदूरंनैर्ऋतदिग्भागंगताभ्यां रामलक्ष्मणाभ्यां मध्येवनं कस्याश्चिद्राक्षस्या निरीक्षणं ॥ १ ॥ लक्ष्मणेनायोमुखीतिस्वनामनिर्देशपूर्वकं भोगायाह्वानेनोपगूहनोद्यतायास्तस्याः स्तनकर्णनासच्छेदः ॥ २ ॥ दुश्शकुनदर्शनेनानिष्टसंभावनया सावधानंचरद्भ्यांराघवाभ्यां कबन्धसदृशशरीरतयाकबन्धनाम्नोमहाराक्षसस्य निरीक्षणम् ॥ ३ ॥ तेन योजनायतनिजभुजाभ्यां राघवयोर्ग्रहणे भयाद्विषीदतोलक्ष्मणस्य रामेणसमाश्वासनं ॥ ४ ॥ अत्रान्तरे कबन्धेन तौप्रति वनागमनप्रयोजनादिप्रश्नपूर्वकं स्वेनतयोर्भक्षणप्रतिज्ञाने लक्ष्मणंप्रतिरामेण महतामपिशोकादिहेतुत्वहेतुना कालस्यबलीयस्त्वोक्तयाशोचनं ॥ ५ ॥

कृत्वैवमुदकं तस्मै प्रस्थितौ [3]रामलक्ष्मणौ ॥ [4]अवेक्षन्तौ वने सीतां [5]पश्चिमां जग्मतुर्दिशम् ॥ १ ॥
[6]तौ दिशं [7]दक्षिणां गत्वा शरचापासिधारिणौ ॥ अविप्रहतमैक्ष्वाकौ [8]पन्थानं प्रतिपेदतुः ॥ २ ॥
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् ॥ आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३ ॥
[9]व्यतिक्रम्य तु वेगेन [10]व्यालसिंहनिषेवितम् ॥ सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४ ॥

---

नातिप्रसङ्गावकाशः ॥ ३६ ॥ उक्तमर्थमादरातिशयेनपुनःसंगृह्णाति—सइति । रणे सीतानिमित्तं दुष्करं कर्म प्राणविनाशपर्यन्तंव्यापारं कृतवान् । सगृध्रराजः रावणेननिपातितः महर्षिकल्पेन महर्षितुल्येनरामेण । संस्कृतश्च तदा तदुत्तरक्षणएव । पुण्यां पुण्यफलभूतां । आत्मनः सुखावहांगतिं लोकं जगाम ॥ ३७ ॥ कृतोदकाविति । इदं पिण्डदानस्याप्युपलक्षणं । पक्षिसत्तमे स्थिरां बुद्धिंप्रणिधाय सीतामवश्यं प्राप्स्यसीत्युक्ततद्वचनं विश्वस्येत्यर्थः । सीताधिगमेमनः प्रवेश्य वनं जग्मतुः । सुरेन्द्रौविष्णुवासवाविव स्थितावित्यनेन सीतान्वेषणंभावनामात्रमितिसूच्यते । अस्मिन्सर्गे सार्धाष्टत्रिंशच्छ्लोकाः ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

अथायोमुखीविरूपकरणपूर्वकं कबन्धदर्शनमेकोनसप्ततितमे । अवेक्षन्तौ अवेक्षमाणौ । पश्चिमां दक्षिणपश्चिमामित्यर्थः ॥ १ ॥ दक्षिणांदिशमिति दक्षिणपश्चिमाह्युभयथा व्यवहर्तुंशक्या । अविप्रहतं अक्षुण्णं । ऐक्ष्वाकौ । "दाण्डिनायन—" इत्यादिसूत्रेनिपातितः । प्रतिपेदतुः प्रतिपेदाते ॥ २ ॥ गुल्मैरित्यादिश्लोकद्वयमेकान्वयं । गुल्मैः कीचकप्रभृतिभिः वृक्षैश्च । प्रवेष्टितं लताभिश्चावृतं । दुर्गं विषमं । गहनं दुष्प्रवेशं । घोरदर्शनं अतएव सुभीमं तत् महारण्यं दण्डकारण्यं । व्यतिक्रम्य

---

स० महर्षीणां ब्रह्मादीनां कल्पेन कल्पपादपवद्विद्यमानेन ॥ ३७ ॥ ती० सर्गश्रवणफलंस्कान्दे—" जटायोःसंस्कृतिंश्रुत्वास्वर्लोकंयातिमानवः ॥" इति ॥ ३८ ॥ इत्यष्टषष्टितमःसर्गः ॥ ६८ ॥

शि० अवेक्षन्तौ अन्वेषन्तौ॥१॥ शि० पश्चिमांदक्षिणां पश्चिमदक्षिणदिगन्तरालदिशंजग्मतुः। तांदिशंगत्वा अविप्रहतं जनै-

[ पा० ] १ छ. ज. मात्मनस्तदा. २ घ. तदा. ३ क.—ट. राघवौतदा. ४ क. च. छ. ज. ञ. अन्वेषन्तौ. ५ ङ.—ट. जग्मतुःपश्चिमांदिशं. ६ ट. पश्चिमांदक्षिणांगत्वा. झ. ञ. तांदिशं. ७ क. ग.-च. छ. ज. दक्षिणांगृह्य. घ. पश्चिमांगत्वा. ८ क. घ. च. छ. ज. ञ. पन्थानंप्रतिजग्मतुः. ग. पन्थानमभिजग्मतुः. ९ च. छ. ज. ञ. अतिक्रम्य, १० क. ख. ग. ङ.—ट, गृहीत्वादक्षिणांदिशं.

ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ ॥ क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५ ॥
नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः ॥ नानापक्षिगणैर्जुष्टं नानाव्यालमृगैर्युतम् ॥ ६ ॥
दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ॥ तत्रतत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७ ॥
ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा ॥ क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८ ॥
दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् ॥ नानासत्त्वसमाकीर्णं सर्वं गहनपादपम् ॥ ९ ॥
ददृशाते तु तौ तत्र दरीं दशरथात्मजौ ॥ पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १० ॥
आसाद्य तौ नरव्याघ्रौ दर्यास्तस्याविदूरतः ॥ ददृशाते महारूपां राक्षसीं विकृताननाम् ॥ ११ ॥
भयदामल्पसत्त्वानां बीभत्सां रौद्रदर्शनाम् ॥ लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२ ॥
भक्षयन्तीं मृगान्भीमान्विकटां मुक्तमूर्धजाम् ॥ प्रैक्षेतां तौ ततस्तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥
सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः ॥ एहि रंस्यावहेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४ ॥
उवाच चैनं वचनं सौमित्रिमुपगुह्य सा ॥ १५ ॥
अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः ॥ नाथ पर्वतकूटेषु नदीनां पुलिनेषु च ॥
आयुःशेषमिमं वीर त्वं मया सह रंस्यसे ॥ १६ ॥
एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः ॥ कर्णनासौ स्तनौ चास्या निचकर्तारिसूदनः ॥ १७ ॥

अतीत्य व्यतियातौ गतौ ॥ ३–४ ॥ ततःपरं गमनानन्तरं । जनस्थानात् त्रिक्रोशं गम्य गत्वा । क्रौञ्चारण्याख्यं गहनं वनं । विविशतुः । "गहनं काननं वनं" इत्यमरः ॥ ५ ॥ नानेत्यादिश्लोकद्वयमेकान्वयं । नानामेघघनप्रख्यं नानावर्णमेघसमूहसदृशं । प्रहृष्टमिव पुष्पोद्गमादिभिःसन्तुष्टमिव । व्यालमृगैः सर्पैः मृगैश्च । तद्वनं क्रौञ्चारण्यं । तत्रतत्र वृक्षमूले । विश्रान्त्यै तिष्ठन्तौसन्तौ । विचिक्यतुः मृगयामासतुः ॥ ६ ॥ ॥ ७ ॥ तत इत्यादिश्लोकत्रयमेकान्वयं । ततः क्रौञ्चारण्यमतिक्रम्य । मतङ्गाश्रमं पूर्वेण मतङ्गाश्रमपूर्वदिग्भागे । "एनपाद्वितीया" इति द्वितीया । त्रिक्रोशं गत्वा अन्तरे मतङ्गाश्रमक्रौञ्चारण्ययोर्मध्ये । तद्वनं मतङ्गाश्रमसंबन्धि किंचिद्वनं । दृष्ट्वा तत्र दरीं ददृशाते ददृशतुः । अत्रोपरिष्टाच्च कर्तरिलिड्यात्मनेपदमार्षं ॥ ८—१० ॥ तस्याविदूरत इत्यार्षःसन्धिः । महारूपां महाशरीरां ॥ ११ ॥ सामान्यतो दर्शनमुक्त्वा विशेषतो दर्शनमाह—द्वाभ्यां ॥१२—१३॥ रंस्यावहेत्युक्त्वेत्यत्र सन्धिरार्षः । समालम्बत हस्ते गृहीतवती ॥ १४ ॥ उवाचेत्यर्धं । उपगुह्य आलिङ्ग्य ॥ १५ ॥ अहमित्यादिसार्धश्लोकः । अयोमुखीत्यन्वर्थनामा । हयमुखीत्यपि पाठः । ते लाभः लाभभूता । त्वमपि मम प्रियोसि आयुःशेषमित्यत्यन्तसंयोगेद्वितीया ॥ १६ ॥ कर्णनासावित्यत्र एकवद्भावाभाव आर्षः । नासाशब्दस्य पुल्लिङ्गताचार्षी ॥ १७ ॥

रक्षुण्णंपन्थानंप्रतिपेदतुः प्रापतुः । पश्चिमदक्षिणशब्दौभाक्तौ । श्लोकद्वयमेकान्वयि ॥ १—२ ॥ ती० प्रहृष्टमिवसर्वतः वनगतपुष्पविकासादिना तद्गतमृगादिहर्षेणच वनस्यप्रहृष्टत्वव्यपदेशः ॥ ६ ॥ शि० नानासत्वानां अनेकविधमृगादीनां समाकीर्णभक्षणायराक्षसादिकर्तृकापक्षेपोयस्मिंस्तत् ॥ ९ ॥ ति० कर्णनासस्तनमितिसमाहारद्वन्द्वः । कर्णनासं प्राण्यङ्गत्वाद्द्वंद्वैकवद्भावः ॥१७॥

[ पा० ] १ ख. जनस्थानंहित्वावेगेनराघवौ. २ च. छ. ज. ञ. महाजवौ. ३ क. ख. ग. ङ.—ट. नानावर्णैःशुभैःपुष्पैर्मृगपक्षिगणैर्युतं. ४ क. विचेरतुः. ५ क. ख. ग. ङ—ट. दुःखितौ. ६ क. च. छ. ज. गम्य. ७ घ. ण्यंव्यतिक्रम्य. ८ ख. च. ञ. मन्तरा. ९ च. छ. ज. ञ. दृष्ट्वाथ. १० ङ. झ. नानावृक्षसमाकीर्णं. च. छ. नानासत्वमृगाकीर्णं. ११ ङ. झ. ट. गिरौतत्र. क. चतौतत्र. १२ क. ख. ङ.—ट. आसाद्यच. १३ क.—ट. ददर्शतुर्महा. १४ क.—घ. विकृतेक्षणां. १५ क.—ट. करालीं. १६ ङ. झ. ट. अवैक्षेतांतुतौतत्र. १७ क.—घ. च. छ. ज. ञ. तदातत्र. १८ क. चैनंसौमित्रिमुपगृह्यमहौजसं. १९ ङ. झ. ट. मुपगृह्यच. ख. ग. घ. छ. मुपगृह्यसा. २० ख. नाम्नालब्धोमे. २१ क. ख. ग. ङ.—ट. पर्वतदुर्गेषु. २२ क.—घ. आयुःशिष्टमिदं. ङ.—ट. आयुश्चिरमिदं. २३ ख. मुद्यम्य. क. मुद्गृह्य. २४ क. ख. कर्णनासे. ङ. झ. ञ. ट. कर्णनासस्तनं. २५ क.—ट. तस्याः. २६ ट. सचकर्तारि. २७ च. छ. ज. मर्दनः.

कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च ॥ यथागतं प्रदुद्राव राक्षसी भीमदर्शना ॥ १८ ॥
तस्यां गतायां गहनं विशन्तौ वनमोजसा ॥ आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥
लक्ष्मणस्तु महातेजाः सत्त्ववाञ्छीलवाञ्छुचिः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥२०॥
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ॥ प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१ ॥
तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं हितम् ॥ ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥२२॥
एष वञ्चुलको नाम पक्षी परमदारुणः ॥ आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा ॥ संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४ ॥
संवेष्टितमिवात्यर्थं गगनं मातरिश्वना ॥ वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ २५ ॥
तं शब्दं काङ्क्षमाणस्तु रामः कक्षे सहानुजः ॥ ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६ ॥
आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् ॥ विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ २७ ॥
रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ॥ नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ २८ ॥
अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ॥ महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९ ॥
एकेनोरसि घोरेण नयनेनाशुदर्शिना ॥ महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३० ॥

कर्णेति एकवद्भावे सप्तमी ॥ १८ ॥ गहनं दुष्प्रवेशं । वनं विशन्तौ वनमध्यं गच्छन्तौ । आसेदतुः वक्ष्यमाणनिमित्तानीति शेषः ॥ १९ ॥ महातेजा इत्यदीनतोक्तिः । सत्त्ववान् निर्मलमनस्कः । शीलवान् सद्वृत्तवान् । शुचिः कायशुद्धियुक्तः । एभिर्विशेषणैर्भ्रातृभक्तिरुक्ता ॥ २० ॥ बाहुः वामइतिशेषः । उद्विग्नं कम्पितं । अनिष्टानि अनिष्टसूचकानि ॥२१॥ मम वचनमित्यन्वयः । संभ्रमं भयं ॥ २२ ॥ वञ्चुलकः कर्णवालाख्यःपक्षिविशेषः। "वञ्चुलः कर्णवालः स्यात्" इतिनिघण्टुः । विनर्दति कूजति ॥ २३ ॥ एवं एतादृशोक्तिपूर्वकं । अन्वेषतोः अन्वेषमाणयोः । प्रभञ्जन् प्रभञ्जयन् ॥ २४ ॥ मातरिश्वना वायुना । संवेष्टितं पूरितं । अयमुत्पातविशेषः। शब्दः पूर्वोक्तः । तस्य वनस्य संबन्धिनीं । दिवं आकाशं। आपूरयन्निवाभूत् ॥ २५॥ तं काङ्क्षमाणः किमस्योत्पत्तिमूलमिति ज्ञातुमिच्छन् । गत्वेति शेषः । कक्षे गुल्मे । ददर्श दूरादितिशेषः ॥ २६ ॥ आसेदतुरित्यादिसार्धषट्च्छ्लोकी । प्रमुखे अग्रे । विवृद्धं उन्नतं । अशिरोग्रीवं । अदृश्यमानशिरोग्रीवं । अतएव कबन्धं अन्वर्थकबन्धनामकं । उदरेमुखं "अमूर्धमस्तकात्स्वाङ्गादकामे" इति लुक् । रोमभिरुपलक्षितं निचितैः निबिडैः । अग्निज्वालानिकाशेन तत्सदृशेन । महापक्ष्मेण महापक्ष्मणा । अदन्तत्वमार्षं । विपुलेन विस्तीर्णेन । आयतेन दीर्घेण । उरसि उरोन्तर्गतशिरस्कत्वेन उरसिदृश्यमानेनेत्यर्थः । लेलिहानं पुनःपुनर्जिह्वयालेहनं कुर्वन्तं महामुखं विपुलास्यरन्ध्रं । विकुर्वाणं व्यापारयन्तं । योजनमिति अध्ववाचित्वादत्यन्तसंयोगे द्वितीया । आकर्षन्तं आभिमुख्येन कर्षन्तं । विकर्षन्तं । विशेषेण कर्षन्तं मृगयूथपानिति मृगविशेषणं । प्रपन्नयोः समीपंप्राप्तयोः

शि० मेममबाहुः बाहुद्वयं दृढंस्पन्दतेप्रस्फुरति । अतएवमेमनः उद्विग्नमिव उद्विग्नसदृशं । सदृशमित्युक्त्या वस्तुतउद्विग्नत्वाभावस्सूचितः । तेन दक्षिणस्यापिभुजस्यप्रस्फुरणात् यथाकथंचित्प्राप्तस्यविघ्नस्य विध्वंसोभविष्यतीति निश्चयस्सूचितः । विनिगमनाविरहाद्बाहुशब्देन बाहुद्वयग्रहणं । एकवचनंतु जात्यभिप्रायेण ॥ २१ ॥ ति० एषइति । अनेन युद्धमवश्यंभावि जयश्चेत्युभयंसूचितं ॥ २३ ॥ ति० उच्यमानविशेषणेन ललाटस्थेनैकेननयनेन उरःप्रदेशान्तर्गतशिरस्त्वात् उरसि उरःप्रदेशे

[ पा० ] १ क. ख. ग. ङ.—ट. विस्वरंविननादसा. २ ङ.—ट. घोरदर्शना. ३ ङ. झ. ञ. ट. व्रजन्तौ. ४ ख. ग. लक्ष्मणश्च. ५ ख. ङ. ञ. सत्यवान्. ६ ङ. झ. ट. मम. ७ क. ममैवच. ८ छ. ज. सदा. ९ ग. विभ्रमं. १० ट. राम. ११ क. घ. ततस्त्वन्वेषतोः. १२ क. ङ. च. छ. झ. ञ. ट. गह्वरं. १३ ख. गंभीरस्तस्य. १४ क. ख. ङ. झ. ट. वनमापूरयन्निव. १५ ङ. झ. ट. रामःखड्गी. क. च. छ. ज. ञ. रामस्तस्थौ. १६ ट. समहाकायं. १७ ख. विपुलोदरं. १८ ख. आजग्मतुस्तत्र. ङ. झ. ट. आसेदतुश्चतद्रक्षस्तावुभौ. १९ घ. मिवोन्नतं. २० घ. भीममेघनिभं.

भक्षयन्तं महाघोरानृक्षसिंहमृगं[1]द्विपान् ॥ घोरौ भुजौ विकु[2]र्वाणमुभौ योजनमायतौ ॥ ३१ ॥
कराभ्यां विविधान्गृह्य ऋक्षान्पक्षि[3]गणान्मृगान् ॥ आकर्षन्तं विकर्षन्तमनेकान्मृगयूथपान् ॥
स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ॥ ३२ ॥
अथ [4]तौ समभिक्रम्य क्रोश[5]मात्रे ददर्शतुः ॥ महान्तं दारुणं [6]भीमं कबन्धं भुजसंवृतम् ॥
कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥ ३३ ॥
स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ॥ जग्राह सं[7]हितावेव राघवौ पीडयन्बलात् ॥ ३४ ॥
खड्गिनौ दृढधन्वानौ ति[8]ग्मतेजोवपुर्धरौ ॥ भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३५ ॥
तत्र[9] धैर्येण शूरस्तु राघवो नैव विव्यथे ॥ बाल्या[10]दनाश्रयत्वाच्च लक्ष्मणस्[11]त्वतिविव्यथे ॥
उवाच च विषण्णः सन्राघवं राघवानुजः ॥ ३६ ॥
पश्य मां वीर वि[12]वशं राक्षसस्य वशं गतम् ॥ [13]मयैकेन विनिर्युक्तः परिमुञ्चस्व राघव ॥
मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३७ ॥
अधिगन्ताऽसि वैदेहीमचिरेणेति मे मतिः ॥ ३८ ॥
प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् ॥ तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा ॥ ३९ ॥
[14]लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ॥ मा स्म त्रासं कृथा वीर न हि त्वादृग्विषीदति ॥४०॥

॥ २७—३२ ॥ अथेति सार्धश्लोक एकान्वयः । अथ आसादनानन्तरं । समभिक्रम्य आभिमुख्येनगत्वा । क्रोशमात्रे समीपे । ददर्शतुः ददृशतुः । दारुणं भीमं अतिशयेन भीमं भुजाभ्यां मृगान् संवृणोतीति भुजसंवृतं । संस्थानात् देहस्थित्या । कबन्धमिव सर्वदाअशिरस्कत्वलक्षणकबन्धवत्स्थितं ॥३३॥ सहितावेव नैकमपि मुक्त्वेत्यर्थः ॥३४॥ तिग्मं खरं तेजो यस्यतत्तथा तादृशवपुर्धरौ विवशं पारवश्यं । प्राप्तौ ॥३५॥ तत्र तस्यामवस्थायां । बाल्यात् बालबुद्धित्वात् । रामवदप्रौढबुद्धित्वादित्यर्थः ।अनाश्रयत्वात् धैर्यानालम्बनात् । अतिविव्यथे अत्यन्तं खिन्नोऽभूत् उवाच च ॥३६॥ राक्षसस्य वशं गतत्वेन विवशमिति योजना । विनिर्युक्तः वियुक्तः । एतस्यैवविवरणं मामिति । भूतबलिं भूतस्य कबन्धस्य बलिं ॥३७॥ अधीत्येकार्धं ॥३८॥ तत्र मह्यां ॥३९—

अन्तरुपलभ्यमानेननयनेनोपलक्षितंमुखंलेलिहानं ॥ ३० ॥ ति० तिग्मतेजौ तिग्मतेजसौ ॥ ३५ ॥ ति० अनाश्रयात् धैर्यस्येतिशेषः । धैर्यानालंबनादित्यर्थः । तत्रहेतुर्बाल्यं बालबुद्धित्वं । शुद्धसत्त्वाप्रधानत्वं । अनाश्रयत्वादितिपाठे आश्रयभूतस्यरामस्यापि कबन्धभुजावृतत्वादितिभावः ॥ ३६ ॥ ति० निर्युक्तः निर्योजितरक्षोबलिस्सन्त्वं किंचित्स्ववशमात्मानंपरिमुञ्चस्व । पलायनेनेतिशेषः ॥ शि० मांभूतबलिंदत्वा पिशाचाकारराक्षसायसमर्प्येत्यर्थः । एकेनमयानिर्युक्तः वियुक्तस्त्वं पलायस्व राक्षसमिति शेषः । अतएव यथासुखंपरिमुञ्चस्व । आत्मानमितिशेषः । मांभूतबलिंदत्वेत्यनेनमांप्राप्य संतोषप्राप्त्यापराक्रमाद्राक्षसोनिवर्तिष्यतइति सूचितं । तेन सीतान्वेषणेविलंबोनकार्यइतिध्वनितं । तेन लक्ष्मणस्यसीताविषयकप्रेमातिशयोव्यञ्जितः ॥ ३७ ॥

[ पा० ] १ ख. च. छ. ज. ञ. रुरुद्विपान्. ङ. झ. ट. मृगद्विजान्. २ ट. विकुर्वन्तमुभौ. ३ घ. गणान्बहून्. ४ च. छ. ज. ञ. ट. तत्समतिक्रम्य. ख. ग. घ. झ. तंसमतिक्रम्य. ५ घ. ङ. छ. झ. ञ. ट. क्रोशमात्रं. ६ च. छ. ज. ञ. भूतं. ७ ङ. झ. ट. सहितावेष. ८ घ.—ट. तिग्मतेजौमहाभुजौ. ख. तिग्मतेजौधनुर्धरौ. ९ ख. च. छ. ज. ञ. ट. तत्रधैर्याच्च. १० झ. दनाश्रयाच्चैव. ११ ख. ञ. ट. स्त्वभिविव्यथे. १२ ङ.—ट. विवशंवीर. १३ क.—घ. च. छ. ज. ञ. मयैकेनतुनिर्युक्तः. १४ प्रतिलभ्यचकाकुत्स्थेतिश्लोकात्परं एतस्मिन्नन्तरे इतिश्लोकात्पूर्वं लक्ष्मणेनैवमुक्तस्त्वितिश्लोकस्यस्थाने क. च. छ. ज. पाठेषु. नहिमेत्वत्समोबन्धुः कश्चनानघविद्यते । नमातुश्चममाख्येयोविनाशश्चकथंचन । विषीदत्यतिमात्रंहिप्रियपुत्राहिसाभृशम् ॥ १ ॥ तंतुसंपन्नयावाचापरितापार्तमातुरम् । आश्वासहेतोर्वचनमिदमाहपरंतपः ॥ २ ॥ पुत्रोदशरथस्यासीद्द्वितीयोममचानुजः । सप्राकृतइवोदारःकथंनामविषीदसि ॥ ३ ॥ मांसराशिमयःपापोरूपमात्रंहिभीषणम् । मासंत्रासंकृथावीरनहित्वादृग्विषीदति ॥ ४ ॥ ततःसत्वानितद्रक्षःक्षुधयाह्यग्रसत्तदा ॥ ५ ॥ खड्गिनौदृढधन्वानौतिग्मबाणौधनुर्धरौ । भ्रातरावरणींप्राप्यकृष्यमाणौददर्शतुः ॥ ६ ॥ महाजगरसंकाशौखड्गरोमभिरावृतौ । तीक्ष्णरोमनखौबाहूपञ्चास्याविवपन्नगौ ॥ ७ ॥ ताभ्यांतुकृष्यमाणौतौबाणपातमिवागतौ । कृच्छ्रेणदूरतस्तस्यतत्रदृष्ट्वाव्यवस्थितौ ॥ ८ ॥ इत्यष्टौश्लोकादृश्यन्ते.

[1]एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ [2]पप्रच्छ घननिर्घोषः कबन्धो दानवोत्तमः ॥ ४१ ॥
कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ घोरं दे[3]शमिमं प्राप्तौ [4]मम भक्षावुपस्थितौ ॥ ४२ ॥
वदतं कार्यमिह वां किमर्थं [5]चागतौ युवाम् ॥ इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ॥ ४३ ॥
[6]सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ [7]ममास्यमनुसंप्राप्तौ दुर्लभं [8]जीवितं पुनः ॥ ४४ ॥
तस्य तद्वचनं श्रुत्वा कबन्धस्य दु[9]रात्मनः ॥ उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ ४५ ॥
कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ॥ व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् ॥४६॥
कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ॥ त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ ॥ ४७ ॥
[10]नातिभारोस्ति दैवस्य सर्वभूतेषु लक्ष्मण ॥ शूराश्च बलवन्तश्च कृतास्त्राश्च [11]रणाजिरे ॥
[12]कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ४८ ॥
इति ब्रुवाणो दृढसत्यविक्रमो [13]महायशा दाशरथिः प्रतापवान् ॥
अवेक्ष्य सौमित्रि[14]मुदग्रपौरुषं स्थिरां तदा स्वां मतिमात्मनाऽकरोत् ॥ ४९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

४०॥ एतस्मिन्नन्तरे लक्ष्मणाश्वासनावसरे ॥ ४१ ॥ भक्षौ आहारौ ॥४२॥ इह वने । वां युवयोः । कार्यं वदतं । लोण्मध्यमपुरुषद्विवचनं । वामिह वने किं कार्यं किं कर्तव्यं । किमर्थं कस्य प्रयोजनाय । आगतौ न किमप्यस्त्यत्रवां प्रयोजनं । प्रत्युतास्मत्प्रयोजनमेव सिद्धमित्याह—इममिति । इह तिष्ठतः ममेति शेषः । क्षुधार्तस्य मम संबन्धिनमिमं देशमनुप्राप्तावित्यनेन मम क्षुन्निवृत्त्यर्थमेव वामागमनमिति भावः ॥ ४३ ॥ आगमने आवयोःकाहानिरित्यत्राह—सबाणेति ॥४४॥ मुखेन उपलक्षित इति शेषः ॥ ४५ ॥ कृच्छ्रात्कृच्छ्रतरं राज्यभ्रंशवनवाससीताहरणपर्यन्तं प्राप्यावस्थितयोः पुनश्चतां प्रियामप्राप्यैव आवयोर्जीवितान्ताय दारुणं व्यसनं दुःखं प्राप्तं ॥ ४६ ॥ अत्र हेतुमाह—कालस्येति । सर्वभूतेष्वपि कालस्य वीर्यं सुमहत् अनर्गलमित्यर्थः । त्वां च मां च महाबलपराक्रमावपि व्यसनैर्मोहितौ करोति पश्य ॥ ४७ ॥ उक्तमर्थमुपपादयति—नातीति । सार्धश्लोकएकान्वयः । वालुकसेतवः सिकतामयसेतवः ॥ ४८ ॥ सौमित्रिं दीनमवेक्ष्य स्वांमतिं आत्मनैव स्थिरामकरोत् ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे

---

**शि०** दानवोत्तमइत्युक्त्यादनुवंशोद्भवत्वेपिकर्मणाराक्षसत्वादन्यत्रराक्षसत्वोक्तिर्नविरुध्यते ॥ ४१ ॥ **शि०** जीवितान्ताय अवध्यतिक्रमणहेतुकायोध्यावासिजीवनविध्वंसाय व्यसनं राक्षसग्रहजनितदुःखं प्राप्तम् ॥ ४६ ॥ **ती०** सर्ववाक्यंसावधारणं इतिन्यायेनात्रैवकारोद्रष्टव्यः । अस्यार्थः—सर्वभूतेषुमध्ये कालस्यैवसुमहद्वीर्यं । अस्तीतिशेषः । कुतः त्वांत्वादृशं । मांमादृशंच । व्यसनैः कालकृतैरितिशेषः । मोहितौपश्येत्यर्थः ॥ ४७ ॥ **ती०** नातीति । दैवस्यकालस्यसर्वभूतेषुविषये । यद्वा सर्वभूतेषु सर्वभूतानां संहारइतिशेषः । नातिभारोस्ति नप्रयाससाध्यइत्यर्थः । कुतः । शूराश्चेति । समहाबाहुरित्यारभ्य ' तत्रमांराम राज्यस्थः ' इत्यन्तस्यवास्तवार्थेऽयमर्थः । सकबन्धस्तौजग्राहयद्यपि । तथापि तौविवशं । विवेतिनिपातौपादपूरणार्थौ । शंसुखंप्राप्तौ । यद्वा विवशं वेःपक्षिणःगरुत्मतः वशंप्राप्तौ गरुडारूढावित्यर्थः । तौसजग्राहेतिपूर्वेणसंबन्धः । तत्र लक्ष्मणस्यमनुष्यनाट्यं दर्शयति—तत्रेति । तुइवार्थे । अभिविव्यथइव ॥ कृच्छ्रात्कृच्छ्रतरमित्यादेर्वास्तवार्थस्तु दारुणंकृच्छ्रतरंप्राप्यापि तांप्रियामप्राप्य जीवितान्ताय व्यसनंप्राप्तमित्यादि लोकरीतिमनुसृत्य सीतादर्शनव्याजेनोक्तिः ॥ ४८ ॥ इत्येकोनसप्ततितमः सर्गः ॥ ६९ ॥

[ **पा०** ] १ एतस्मिन्नन्तरेइतिश्लोकस्यस्थाने ख. पाठे. ततःपिपासाविक्षिप्तः क्षुधयानिभृतस्तदा । विक्षिप्तांसबाहुभ्यांमृगैः सहमहावने । भ्रातरौनिकटंप्राप्य कृष्यमाणौददर्शह । तावुवाचमहाबाहुःकबन्धोदानवोत्तमः । इतिश्लोकादृश्यते. २ ङ.—ट. तावुवाचमहाबाहुः. ३ घ. मनुप्राप्तौ. ४ ङ. झ. ट. दैवेनममचाक्षुषौ. ५ च. छ. ज. चागतावुभौ. ६ घ. च. छ. ज. ञ. सचापबाणखड्गौच. ख. ट. सचापबाणखड्गेन. ७ ङ. झ. मांतूर्णमनुसंप्राप्तौ. ८ ङ. झ. ट. जीवितंहिवां. ९ च. छ. ज. महात्मनः. १० ङ. झ. ञ. नहिभारोस्ति. ११ च. छ. ज. ञ. महारणे. १२ क. ख. ग. कालावपन्नाः. १३ घ. महारथो. १४ ख. ग. च. छ. ज. मुदारविक्रमं. ङ. झ. ञ. मुदारविक्रमः.

## सप्ततितमः सर्गः ॥ ७० ॥

लक्ष्मणेनरामंप्रतिकबन्धस्यप्रतियोधनाक्षमतयामारणाकरणेनभुजच्छेदनमात्रस्यकर्तव्यत्वोक्तिः ॥ १ ॥ तद्वचनश्राविणाकबन्धेनतयोर्भक्षणोद्यमेताभ्यांतद्भुजयोश्छेदनं ॥२॥ ततोभुविपतितेनतेन तौप्रतितत्त्वप्रश्ने लक्ष्मणेनतंप्रतिसीताहरणान्तनिजवृत्तान्तकथनपूर्वकं तत्स्वरूपप्रश्नेनसहकबन्धसादृश्यप्राप्तिकारणप्रश्नः ॥ ३ ॥

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ॥ बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥
तिष्ठतः किंनु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ॥ आहारार्थं तु संदिष्टौ दैवेन गतचेतसौ ॥ २ ॥
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ॥ उवाचार्तिं समापन्नो विक्रमे कृतलक्षणः ॥ ३ ॥
त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः ॥ तस्मादसिभ्यामस्याशु बाहू छिन्दावहै गुरू ॥ ४ ॥
भीषणोयं महाकायो राक्षसो भुजविक्रमः ॥ लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ५ ॥
निश्चेष्टानां वधो राजन्कुत्सितो जगतीपतेः ॥ क्रतुमध्योपनीतानां पशूनामिव राघव ॥ ६ ॥
एतत्सञ्जल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः ॥ विदार्यास्यं तदा रौद्रस्तौ भक्षयितुमारभत् ॥ ७ ॥
ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ ॥ अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशतः ॥ ८ ॥
दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः ॥ चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ९ ॥

---

रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

अथ कबन्धस्य बाहुच्छेदेन पूर्वजन्मस्मृतिरुच्यते सप्ततितमे । परिक्षिप्तौ परिवेष्टितौ ॥ १ ॥ क्षुधार्तं मांदृष्ट्वा भीतौ किंनुतिष्ठतः व्यर्थमेव नतुजीवितापत्परिहारइत्यर्थः । यतो गतचेतसौयुवां मे दैवेनाहारार्थं संदिष्टौ ॥ २ ॥ कृतलक्षणः कृतोद्योगः ॥ ३ ॥ पुरा आदत्ते आदास्यतीत्यर्थः ॥ ४ ॥ भुजयोरेव विक्रमो यस्य स तथा । लोकं जनं । अतिजितं अत्यन्तजितं ॥ ५ ॥ भुजच्छेदनमात्रंकर्तव्यंनतुमारणमित्याह—निश्चेष्टानामिति । निश्चेष्टानां प्रतीकाराशक्तानां । जगतीपतेः क्षत्रियस्य । क्रतुमध्योपनीतानां निश्चेष्टानामित्यस्मिन्नर्थे प्रयुक्तं । "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इत्युक्तरीत्या अश्वमेधक्रतावुपनीतानामारण्यपशूनां वधः कुत्सित एव ॥ ६ ॥ तयोरेतत् संजल्पितं श्रुत्वा भक्षयितुमारभत् हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥ सुसंहृष्टौ कदलीकाण्डवत्सुखच्छेदनादिति भावः ॥ ८ ॥ दक्षिणः समर्थः । असक्तं अप्रतिबन्धं यथाभवतितथा । रामदक्षिणपार्श्वेगमनं लक्ष्मणस्य । अत उभयोर्दक्षिणसव्यपार्श्वप्राप्तिः ॥९॥

---

**ती०** वस्तुतस्तु—हेक्षत्रियर्षभौ युवांदैवेनाहारार्थंसंदिष्टौकिं । ममेतिशेषः । गतचेतसौकिं तादृशौनभवतः । अतः क्षुधार्तं मांदृष्ट्वा किंतिष्ठतः । गच्छतमितिशेषः । इत्यब्रवीदितिपूर्वेणसंबन्धः । **शि०** क्षुधार्तंमांदृष्ट्वादैवेनाहारार्थंसंदिष्टौ । अतःकिमर्थंतिष्ठतः ॥ २ ॥ **ती०** अस्यहननमेवयुक्तमित्याकांक्षायामाह—निश्चेष्टानामिति । निश्चेष्टानां अकृतविक्रमाणां । वधः कुत्सितः अयुक्तइत्यर्थः । क्रतुमध्यापनीतानां क्रतुमध्यादन्यत्रनीतानां । क्रतुबाह्यानां क्रत्वनङ्गभूतानामितियावत् ॥ **ति०** क्रतुमध्यंप्राप्तानां पशूनांवधइव । सयथास्वर्गफलदोपि शास्त्रविहितोपि कुत्सितः । साङ्ख्यपातञ्जलाद्युक्तरीत्या धर्मजनकत्वाल्लोकदृष्ट्याचकुत्सितः । एतेन तद्वधस्यापीषत्पापफलदता सूचिता । केचित्तु क्रतुमध्यापनीतानामितिपाठं श्रद्धाजाड्येनकल्पयित्वा क्रतुमध्यादन्यत्रनीतानामितिव्याचक्षते ॥ **स०** क्रतुमध्योपनीतानां पशूनांवधः कलिकाले प्रायस्तद्विधानाज्ञत्वाल्लोकानांयथाकुत्सितः पिष्टपशोरेवहिंस्यत्वेन भारताद्युक्तेः । अथवा क्रतुमध्ये तद्धननाकृतदिने ॥ ६ ॥ **ति०** दक्षिणः समर्थः दक्षिणपार्श्वस्थोवा ॥ ९ ॥

**[ पा० ]** १ क. सतौतत्र. २ ख. ङ. झ. ट. स्थितो. ३ ङ. तिष्ठतं. ४ ङ. झ. हृतचेतसौ. च. ट. हृतचेतनौ. घ. छ. ज. गतचेतनौ. ५ घ. ङ. झ. ट. कृतनिश्चयः. ६ ख. ग. महाबाहूराक्षसो. ७ ख. ह्यपजितं. ८ ख. ग. घ. च. छ. ज. ञ. जगतीपते. ९ क. क्रुद्धरस. १० ख. ततौरौद्रः. ग. ङ—ट. ततोरौद्रंतं. ११ ट. तुसंहृष्टौ. १२ ख. ग. ङ.—ट. देशयोः. १३ च. छ. ज. धीरस्तु.

स पपात महाबाहुश्छिन्नबाहुर्महास्वनः ॥ खं च गां च दिशश्चैव नादयञ्जलदो यथा ॥ १० ॥
स[1] निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः ॥ दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥११॥
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः ॥ शशंस[2] राघवं तस्य कबन्धस्य महात्मनः ॥ १२ ॥
अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः ॥ अस्यैवावरजं[3] विद्धि भ्रातरं मां च लक्ष्मणम् ॥१३॥
[ मात्रा[4] प्रतिहृते राज्ये रामः प्रव्राजितो वनम् ॥ मया सह चरत्येष भार्यया[5] च महद्वनम् ] ॥१४॥
अस्य देवप्रभावस्य वसतो विजने वने ॥ राक्षसाऽपहृता पत्नी यामिच्छन्ताविहागतौ ॥ १५ ॥
त्वं तु को वा किमर्थं वा कबन्धसदृशो वने ॥ आस्येनोरसि दीप्तेन भग्नजङ्घो विवेष्टसे[6] ॥ १६ ॥
एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं[7] वचः ॥ उवाच परम[8]प्रीतस्तदिन्द्रवचनं स्मरन् ॥ १७ ॥
स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि चाप्यहम्[9] ॥ दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ ॥१८॥
विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा ॥ तन्मे शृणु नरव्याघ्र[10] तत्त्वतः शंसतस्तव ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

## एकसप्ततितमः सर्गः ॥ ७१ ॥

कबन्धेनश्रीरामंप्रति सामस्त्येननिजवृत्तान्तनिवेदनपूर्वकं कुत्सितनिजराक्षसशरीरदाहेसति विज्ञानप्रतिबन्धकशापनिवृत्त्यानिजरूपप्राप्तौ सीतान्वेषणसहकारिणो निवेदनप्रतिज्ञानम् ॥ १ ॥

पुरा राम महाबाहो महाबलपराक्रम[11] ॥ रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥
यथा सोमस्य[12] शक्रस्य सूर्यस्य च यथा वपुः ॥ १ ॥
सोहं रूपमिदं कृत्वा लोकवित्रासनं महत् ॥ ऋषीन्वनगतान्राम त्रासयामि ततस्ततः ॥ २ ॥

---

गां भूमिं ॥ १० ॥ पूर्वमदत्तोत्तरत्वात्पुनः प्रश्नः ॥११॥ क्रियाभेदात्पुनस्तच्छब्दः ॥ १२ ॥ इक्ष्वाकुदायादः दशरथपुत्रः । "दायादौ सुतबान्धवौ" इत्यमरः ॥१३—१४॥ इच्छन्तौ अन्वेषमाणावित्यर्थः ॥१५॥ विवेष्टसे लुठसीति यावत् ॥ १६ ॥ प्रीतः शापमोक्षकालप्रत्यभिज्ञानात् । तदिन्द्रवचनं उत्तरसर्गप्रतिपाद्यं ॥ १७ ॥ बाह्वोर्बन्धनं ययोस्तौ बाहुबन्धनौ अंसावित्यर्थः ॥ १८ ॥ विरूपं विषमरूपं । यथा येनकारणेन । प्राप्तं तत्कारणं तत्त्वतस्तव शंसतो मे सकाशाच्छृणु । अस्मिन्सर्गे अष्टादश श्लोकाः ॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

---

अथ कबन्धः स्ववृत्तान्तकथनपूर्वकं स्वशापमोक्षाय स्वशरीरदहनमर्थयते एकसप्ततितमे । पुरेत्यादिसार्धश्लोक एकान्वयः। अचिन्त्यं अचिन्त्यवैभवं ॥१॥ सोहमिति । सुन्दररूपोहं । रूपं शरीरं लोकवित्रासनं क्रूरं ।

---

**शि०** इति ब्रुवाणस्यकबन्धस्यसमीपे तस्यरामस्यप्रेरितोलक्ष्मणः काकुत्स्थंरामंशशंस ॥ १२ ॥ **स०** यां सीतां । इच्छन्तौ आवां ॥ १५ ॥ **ति०** यथाऽविनयात्यादृशाविनयात्प्राप्तंतच्छृणुवित्यन्वयः ॥ १९ ॥ इतिसप्ततितमः सर्गः ॥ ७० ॥

**स०** अचिन्त्यं अचिन्त्यमिव । सोमस्यचन्द्रस्य । रुद्रस्येत्यप्यर्थः । यथातेषांवपुः तथाममापिरूपमासीदितिपूर्वेणसंबन्धः ॥ १ ॥ सोहंएतादृशोप्यहं लोकवित्रासनं इदंरूपं राक्षसरूपं वैभवेनकृत्वा ऋषींस्त्रासयामीतिसंबन्धः ॥ २ ॥

**[ पा० ]** १ घ. सन्निकृत्तौ. २ क. ख. ग. ङ.—ट. तस्यकाकुत्स्थंकबन्धस्यमहाबलः ३ ङ. झ. ञ. ट. तस्यैवावरजं. ४ अयंश्लोकः घ.—ट. पाठेषुदृश्यते. ५ ख. ङ.—ट. भार्या. ६ ख. ढ. विचेष्टसे. ७ ग. च. च. छ. ज. ट. नोत्तमं. ८ ङ.—ढ. वचनंप्रीतः. ९ ङ. झ. ट. वामहं. १० ख. ग. नरश्रेष्ठ. ११ ख. ग. ङ. झ. ढ. पराक्रमं. १२ क. ख. ग. ङ.—ट. सूर्यस्यसोमस्यशक्रस्यच.

ततः स्थूलशिरा नाम महर्षिः कोपितो मया ॥ संचिन्वन्विविधं वन्यं रूपेणानेन धर्षितः ॥ ३ ॥
तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ॥ एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ॥ ४ ॥
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ॥ अभिशापकृतस्येति तेनेदं भाषितं वचः ॥ ५ ॥
यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने ॥ तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ॥ ६ ॥
श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण ॥ इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे ॥ ७ ॥
अहं हि तपसोग्रेण पितामहमतोषयम् ॥ दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् ॥ ८ ॥
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ॥ इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥ ९ ॥
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ॥ सक्थिनी चैव मूर्धा च शरीरे संप्रवेशितम् ॥ १० ॥
स मया याच्यमानः सन्नानयद्यमसादनम् ॥ पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ॥ ११ ॥
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ॥ वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् ॥ १२ ॥
एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ ॥ प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ॥ १३ ॥
सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान् ॥ सिंहद्विपमृगव्याघ्रान्भक्षयामि समन्ततः ॥ १४ ॥
स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ॥ छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ॥ १५ ॥

कृत्वा परिगृह्य ततस्ततः तत्रतत्र । ऋषीन् त्रासयामि अत्रासयं ॥२॥ विविधं वन्यं संचिन्वन् स्थूलशिराः धर्षितः अपहृतवन्यः । तेन कोपितश्च ॥ ३ ॥ एवंविधं मे रूपं प्रेक्ष्य घोरशापाभिधायिना तेन ऋषिणा नृशंसं गर्हितं एतदेव रूपं ते अस्त्वित्यहमुक्तः ॥ ४ ॥ अभिशापशब्देन तन्निमित्तंधर्षणंलक्ष्यते । मद्धर्षणकृतस्य शापस्यान्तोभवेदिति स मया याचितः प्रार्थितः इति हेतोः तेन मयैवं याचितेन । इदं वक्ष्यमाणं । वचो भाषितं ॥ ५ ॥ तदेवाह—यदेति ॥ ६ ॥ तर्हि कबन्धरूपप्राप्तिः केन हेतुनेत्यत्राह—श्रियेति । मामिति शेषः । एवं एवंविधं । रणाजिरे रणाङ्गणे ॥ ७ ॥ इन्द्रेणयोद्धुंतव कुतःसामर्थ्यं तत्राह—अहं हीति । ऋषिदत्तघोराकारप्राप्त्यनन्तरं उग्रेण तपसा पितामहमतोषयं । स्वकुलशत्रोरिन्द्रस्य जयायेत्यर्थः । विभ्रमः अज्ञानं ॥८॥ तदेवाह—दीर्घमिति ॥ ९ ॥ शतपर्वणा शतधारेण । सक्थिनी पृष्ठास्थिफलके शरीरे मध्यदेहे उदरभागे सक्थ्नोः प्रवेशनं उरोभागे मूर्ध्नः प्रवेशनं । संप्रवेशितमित्यत्र " नपुंसकमनपुंसकेन— " इति नपुंसकपरिशेषत्वमेकवद्भावश्च ॥ १० ॥ याच्यमानः मारयेति प्रार्थ्यमानः । यमसादनं नानयत् मृतिं न प्रापितवान् । कुत इत्यत्राह—पितामहेति । तत् पूर्वोक्तं दीर्घायुर्विषयकं पितामहवचः सत्यमस्त्विति मम मह्यं । अब्रवीत् न त्वां मारयामीत्यब्रवीदित्यर्थः॥११॥ अनाहार इत्यादिश्लोकद्वयमेकान्वयं । अनाहारः सन् सुदीर्घं कालं कथं जीवितुं शक्तः । भग्नसक्थिशिरोमुखत्वमनाहारत्वे हेतुः । बाहू प्रादात् आस्यमकल्पयत् ॥१२-१३॥ संकृष्य आकृष्य ॥१४॥ स मामित्यनेन

स० अभिशापकृतस्य मत्कृतप्रधर्षणादिनिमित्तकस्य शापस्यान्तःपरिहारोभवेदिति । समयायाचितइत्येकंपदं । समये शापानन्तरकाले आयाचितोयस्तेनेदंवचोभाषितमित्यन्वयः ॥ ५ ॥ ति० तदास्वं विपुलं उत्तमं श्रियाविराजितंरूपंप्राप्स्यसेइति तेनभाषितमितिसंबन्धः । एवंवृत्तं मांदनोःपुत्रं विद्धीत्यन्वयः । 'श्रियाविराजितंपुत्रंदनुंत्वंविद्धिलक्ष्मण' इतिपाठान्तरं । तदा श्रियाः श्रीनाम्नोदानवस्य पुत्रं दनुनामानमित्यर्थः ॥ ती० श्रियइति । श्रियः श्रिया विराजितं दनोःपुत्रंविद्धि । यद्वा दनोः दनुवंशजस्य । श्रियः श्रीनाम्नःपुत्रं विद्धि । मामितिशेषः । " दनुर्नामश्रियःपुत्रः शापाद्राक्षसतांगतः " इतिकिष्किन्धाकाण्डे वक्ष्यमाणत्वात् ॥ ७ ॥

[ पा० ] १ ङ.—ट. इन्द्रशापात्. २ ख. प्रादान्मानोमांचतदाऽस्पृशत्. ३ ख. विमुक्तेन. च. छ. ज. प्रयुक्तेन. ४ ख. नतपर्वणा. ५ ग. ङ.—ट. सक्थिनीचशिरश्चैव. ६ घ. भग्नस्कन्धशिरोधरः. छ. ञ. भग्नस्कन्धशिरोमुखः. ७ ख. ङ. झ. ञ. ट. तदाचास्यंच. ८ घ. च. छ. ज. ञ. समाकृष्यवनेचरान्. ङ. झ. ट. संक्षिप्यास्मिन्. ख. विकृष्यास्मिन्. ९ ङ. झ. ञ. ट. सिंहद्वीपि.

अनेन वपुषा राम वनेऽस्मिन्राजसत्तम ॥ यद्यत्पश्यामि सर्वस्य ग्रहणं साधु रोचये ॥ १६ ॥
अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ॥ इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ॥ १७ ॥
स त्वं रामोसि भद्रं ते नाहमन्येन राघव ॥ शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा ॥ १८ ॥
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ ॥ मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ॥ १९ ॥
एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ॥ इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ॥ २० ॥
रावणेन हृता भार्या मम सीता यशस्विनी ॥ निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् ॥ २१ ॥
नाममात्रं तु जानामि न रूपं तस्य रक्षसः ॥ निवासं वा प्रभावं वा वयं तस्य न विद्महे ॥ २२ ॥
शोकार्तानामनाथानामेवं विपरिधावताम् ॥ कारुण्यं सदृशं कर्तुमुपकारे च वर्तताम् ॥ २३ ॥
काष्ठान्यादाय शुष्काणि काले भग्नानि कुञ्जरैः ॥ धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ॥ २४ ॥
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ॥ कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ॥ २५ ॥
एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ॥ प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् ॥ २६ ॥
दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ॥ यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ॥
[ योभिजानाति तद्रक्षस्तं वक्ष्ये राम तत्परम् ] ॥ २७ ॥
अदग्धस्य तु विज्ञातुं शक्तिरस्ति न मे प्रभो ॥ राक्षसं तं महावीर्यं सीता येन हृता तव ॥ २८ ॥
विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ॥ स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ २९ ॥
किंतु यावन्न यात्यस्तं सविता श्रान्तवाहनः ॥ तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ॥ ३० ॥

बलात्कारो लक्ष्यते ॥ १५ ॥ अनेनवपुषा उपलक्षितोहं यद्यत्पश्यामि तस्यग्रहणंरोचये नत्वभक्ष्यबुद्ध्या किंचित्त्यजामीत्यर्थः ॥ १६ ॥ महर्षिवाक्यविश्वासात् अवश्यं रामो ग्रहणं समुपैष्यतीति मन्ये । इमांबुद्धिंपुरस्कृत्य देहन्यासेकृतश्रमो भवामि विकृतदेहत्यागेकृतोद्योगो भवामि । देहत्यागेकृतबुद्धितया रामोऽवश्यंग्रहणमुपैष्यतीति सर्वग्रहणंरोचयइतिभावः ॥ १७ ॥ रामत्वेयुक्तिमाह—नाहमिति । एवं यथातत्त्वं यथार्थमेव । महर्षिणोक्तं ॥ १८ ॥ मतिसाचिव्यं बुद्धिसाहाय्यं । करिष्यामि । किंच तद्विषये मित्रं चोपदेक्ष्यामि । युवाभ्याममग्निना संस्कृतश्चेद्भवेयं ॥ १९ ॥ दनुना दनुवंश्येन । औपचारिकस्तद्वंश्ये तच्छब्दः ॥ २० ॥ जनस्थानाद्यथासुखं निष्क्रान्तस्य निर्गतस्य मे भार्या हृता ॥ २१ ॥ नाममात्रं तु जानामि आप्तवाक्यादिति शेषः । न विद्महे अहं मत्पुरीजनाश्चेत्यर्थः ॥ २२ ॥ उपकारे परोपकारे । वर्ततां प्रवर्तमानानां । अस्माकं विषये कारुण्यंकर्तुं सदृशं युक्तं ॥ २३ ॥ उपकारमेवाह—काष्ठानीति । कल्पिते सज्जे । श्वभ्रे अवटे ॥ २४ ॥ कल्याणं तत्त्वकथनरूपं ॥ २५ ॥ वक्तारमपिराघवं वक्तुं कुशलः ॥ २६ ॥ मैथिलीं तदपहर्तारंचेति द्रष्टव्यं । तर्हि किंवा मतिसाचिव्यं करिष्यसीत्यत्राह—य इति । तर्हि तंवाब्रूहीत्यत्राह—दग्ध इति ॥ २७ ॥ इदमेव व्यतिरेकमुखेनाह—अदग्धस्येति ॥ २८ ॥ कुत इत्यत्राह—विज्ञानं हीति । विज्ञानं अतीन्द्रियविषयकं । स्वकृतेन पापेनेति शेषः ॥ २९ ॥ अवटे श्वभ्रे । यथाविधि यथा

ति० ऋषेरिन्द्रस्यचवाक्यविश्वासात् अवश्यरामोममहस्तेग्रहणमेष्यतीतिमन्ये मन्यमानस्तिष्ठामि—ममदेहन्यासे देहत्यागेकृतश्रमः कृतयत्नः रामोममहस्तेग्रहणमेष्यतीतिमांबुद्धिंपुरस्कृत्यसर्वस्यग्रहणंसाधुरोचये । अयमेवरामोभवेदितिबुद्ध्याकिमपिनत्यजामीत्याशयः ॥ १७ ॥ स० मतिसाचिव्यं बुद्ध्यासाहाय्यं ॥ १९ ॥ ति० दनुना दनुनाम्ना ॥ २० ॥ स० 'वयमिति अस्मदो द्वयोश्च' इतिबहुवचनं ॥ २२ ॥ ति० तत्परं दाहात्परं ॥ २७ ॥ इत्येकसप्ततितमःसर्गः ॥ ७१ ॥

[ पा० ] १ क.—ट. तात. २ ख. रघुसत्तम. ३ ख. सर्वत्र. ४ च. समुपैष्यसि. ५ ख. ग. च. छ. ज. मेतदुक्तं. ६ ङ. झ. ट. लक्ष्मणस्यचपश्यतः. ७ क. ख. ग. सीताममभार्या. ङ.—ट. भार्यासीतामम. ८ ङ.—ट. मुपकारेण. ९ ख. ग. ङ.—ट. न्यानीय. १० ख. ङ. झ. ट. भग्नानिकालेशुष्काणि. ११ घ. ङ. झ. ट. वक्ष्यति. १२ इदमर्धं ङ. छ. झ. ञ. ट. पाठेषुदृश्यते. १३ ख. घ. ट. अदग्धस्यहि. १४ ङ.—ट, राक्षसंतु. १५ ङ. झ. ट. महद्भ्रष्टं. घ. परिभ्रष्टं.

दग्धस्त्वयाऽहमवटे न्यायेन रघुनन्दन ॥ वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ॥ ३१ ॥
तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव ॥ कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः ॥ ३२ ॥
न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव ॥ सर्वान्परिसृतो लोकान्पुराऽसौ कारणान्तरे ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

## द्विसप्ततितमः सर्गः ॥ ७२ ॥

रामलक्ष्मणाभ्यां कबन्धदेहस्यगर्तेचितारोपणपूर्वकमग्निनादहनं ॥ १ ॥ ततश्चितामध्यात्समुत्पत्यनभसिहंसयुक्तविमानमधिरूढेनकबन्धेनरामंप्रतिसुग्रीववृत्तान्तनिवेदनपूर्वकं ऋश्यमूकमेत्यतेनसहसख्यकरणे तेनस्वानुचरवानरैः सीतान्वेषणकरणोक्तिः ॥ २ ॥

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ ॥ गिरिप्रदरमासाद्य पावकं विससर्जतुः ॥ १ ॥
लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः ॥ चितामादीपयामास सा प्रजज्वाल सर्वतः ॥ २ ॥
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ॥ मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ३ ॥
स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः ॥ अरजे वाससी बिभ्रन्मालां दिव्यां महाबलः ॥४॥
ततश्चिताया वेगेन भास्वरो विमलाम्बरः ॥ उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ५ ॥
विमाने भास्वरे तिष्ठन्हंसयुक्ते यशस्करे ॥ प्रभया च महातेजा दिशो दश विराजयन् ॥ ६ ॥
सोन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् ॥ शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥ ७ ॥
राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते ॥ ८ ॥
परिमृष्टो दशान्तेन दशाभागेन सेव्यते ॥ दशाभागगतो हीनस्त्वं हि रामः सलक्ष्मणः ॥

---

सम्यग्दग्धंभवति तथेत्यर्थः ॥ ३० ॥ न्यायेन सम्यक्त्वेन ॥ ३१ ॥ न्यायवृत्तेन नीतिमच्चरित्रेण ॥ ३२ ॥ कारणान्तरे भ्रातृविरोधरूपनिमित्तान्तरे । अयं रावणमेव न जानाति सुग्रीवं तु जानाति । किंतु तन्नाम न कथितवान् दाहात्पूर्वकथने कुत्सितशरीरदहनेरामोवैमनस्यं कुर्यादिति । अस्मिन्सर्गे सार्धत्रयस्त्रिंशच्छ्लोकाः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

---

अथ संस्कृतः कबन्धः स्वरूपं प्रत्यापन्नो मित्रमुपदिशति द्विसप्ततितमे । प्रदरं श्वभ्रं । आसाद्य प्राप्य्य कबन्धमिति शेषः ॥ १ ॥ महोल्काभिः निर्गतज्वालकाष्ठैः ॥२॥ मेदसा मांसेन । पच्यमानस्य अभिवृद्धस्य कबन्धस्य शरीरं ॥ ३ ॥ अरजे निर्मले । अदन्तत्वमार्षं ॥ ४ ॥ चिताया उत्पपात । सर्वेषु प्रत्यङ्गेष्वङ्गुल्यादिष्वपि भूषणानि यस्य स तथा ॥ ५ ॥ हंसयुक्त इत्यनेन रामदग्धतया ब्रह्मलोकप्राप्तिः सूच्यते । विराजयन् अभूदिति शेषः ॥ ६ ॥ तत्त्वेन परमार्थतः । शृण्विति वाक्यमब्रवीदिति संबन्धः ॥ ७ ॥ हेराम लोके षड्युक्तयः सन्ति । युक्तयः उपायाः । ते च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः । याभिर्युक्तिभिः सर्वं राज्ञां कृत्यं विमृश्यते ताः सन्तीति ॥ ८ ॥ ततः किमित्यपेक्षायां संधिविषयं दर्शयति—

---

ती० यद्वाषड्युक्तयइति । तत्रयुक्तयः प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावप्रमाणानि । पार्थसारथिमिश्रैः शास्त्रदीपिकायां युक्तिशब्दस्यप्रमाणपरतयाव्याख्यातत्वात् । अस्यार्थः । हेराम लोके षड्युक्तयः षट्प्रमाणानिसन्ति । याभिःप्रत्यक्षादिभिः सर्ववस्तु विमृश्यते ज्ञाप्यते ॥ ८ ॥ अत्र सर्वप्रमाणैः क्षीणःपुरुषः क्षीणेनपुरुषेण सेव्यतइतिफलितार्थः । तत्रान्वयव्यतिरेकमूलं

[ पा० ] १ ङ. झ. ञ. ट. वीर. २ ङ. झ. ञ. ट. परिवृतो. ३ ख. ङ.—ट. पुरावै. ४ ग. घ. ज. प्रवरं. ५ ख. दह्यमानस्य. ६ ग. झ. ञ. न्माल्यंदिव्यं. ७ ख. झ. ठ. विरजांबरः. घ. विरजोंबरः. ८ ख. ङ.—ट. वाक्यंकबन्धोरामं. ९ ख. झ. स्त्वंतु. क. च. छ. ज. ञ. स्त्वंरामसहलक्ष्मणः.

यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ ९ ॥
तदवश्यं त्वया कार्यः स सुहृत्सुहृदां वर ॥ अकृत्वा हि[1] न ते सिद्धिमहं पश्यामि चिन्तयन् ॥१०॥
श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ॥ भ्रात्रा निरस्तः क्रुद्धेन[2] वालिना शक्रसूनुना ॥ ११ ॥
ऋश्यमूके गिरिवरे पम्पापर्यन्तशोभिते ॥ निवसत्यात्मवान्वीरश्चतुर्भिस्सह वानरैः ॥ १२ ॥
वानरेन्द्रो महावीर्यस्तेजोवान[3]मितप्रभः ॥ सत्यसन्धो विनीतश्च धृतिमान्मतिमान्महान् ॥ १३ ॥
दक्षः प्रगल्भो द्युतिमान्महाबलपराक्रमः ॥ भ्रात्रा विवासितो रा[4]म राज्यहेतोर्महा[5]बलः ॥ १४ ॥
स ते सहायो मित्रं च सीतायाः परिमार्गणे ॥ भविष्यति हि ते राम मा च शोके मनः कृथाः ॥१५॥
भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा ॥ कर्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः ॥ १६ ॥
गच्छ शीघ्रमितो रा[6]म सुग्रीवं तं महाबलम् ॥ वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव ॥
अद्रोहाय समागम्य दीप्यमाने विभावसौ ॥ १७ ॥
स[7] च ते नावमन्तव्यः सुग्रीवो वानराधिपः ॥ कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् ॥१८॥
शक्तौ ह्यद्य युवां कर्तुं कार्यं त[8]स्य चिकीर्षितम् ॥ कृतार्थो वाऽकृतार्थो वा कृ[9]त्यं तव करिष्यति ॥१९॥
स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः ॥ २० ॥

परिमृष्ट इति । दशा नाम दौस्थ्यरूपावस्था तस्या अन्तः परिपाकः तेन । परिमृष्टः संस्पृष्टः पुरुषः दशाभागेन दशायाः भागः परिपाकलक्षणोंशो यस्य तेन । सेव्यते संधीयते । अस्तुप्रकृतेकिमायातंतत्राह—दशाभागगत इति । हे राम सलक्ष्मणस्त्वं दशाभागगतः दुर्दशापन्नः । अतएव हीनश्च । कुतः यत्कृते येन कारणेन । दारप्रधर्षणं नाम व्यसनं प्राप्तं तेन त्वं दशाभागगतः ॥ ९ ॥ ततोपि किमित्यत्राह—तदिति । दशाभागेन त्वया सः दशाभागगतःकश्चित् सुहृत् कार्यः । अवश्यमित्यत्र हेतुमाह—अकृत्वेति । सुहृदं अकृत्वा असम्पाद्य । सिद्धिं सीतालाभं । चिन्तयन्नपि न पश्यामि ॥ १० ॥ स पुनः क इत्यपेक्षायामाह । श्रूयतामित्यादिश्लोकद्वयमेकान्वयं ॥ ११—१२ ॥ स च त्वत्सदृशगुणकत्वाद्दशाभागगतत्वाच्च ते मित्रतामर्हतीत्याह त्रिभिः—वानरेन्द्र इति । तेजोवान् तेजस्वी । द्युतिमान् कान्तिमान् ॥ १३—१५ ॥ शोकापनोदनाय लोकन्यायमाह—भवितव्यमिति श्लोकेन ॥ १६ ॥ गच्छेत्यादिसार्धश्लोक एकान्वयः । इतो गत्वेत्यनुवादः । समागम्य सुग्रीवेणसंयुज्य । अद्रोहाय परस्परद्रोहाभावाय । विभावसौ अग्नौ । दीप्यमाने सति । अग्निसाक्षिकमित्यर्थः । तं सुग्रीवं वयस्यं कुरु ॥ १७ ॥ स च सुग्रीवः ते त्वया । नावमन्तव्यः अयंतिर्यक् किमनेनेति तस्मिन्नावमतिः कार्या । तत्र हेतुमाह—कृतज्ञ इति ॥ १८ ॥ तस्य सुग्रीवस्य । चिकीर्षितं युवां कर्तुं शक्तौ । अतः सः कृतार्थः कृतस्वप्रयोजनः । अकृतार्थः करिष्यमाणस्वप्रयोजनो वा । तव कृत्यं करिष्यति ॥ १९ ॥ स कस्यपुत्रःकुत्रतिष्ठतीत्यत्राह—स इति । सन्धिरार्षः ।

प्रत्यक्षंदर्शयति—दशाभागगतोहीनस्त्वमिति । 'यत्कृतेव्यसनंप्राप्तं त्वयादारप्रधर्षणं' इत्यनुमानंदर्शयति । 'अकृत्वा नहिते सिद्धिमहंपश्यामि चिन्तयन्' इत्यर्थापत्तिंदर्शयति । ' वयस्यंतं कुरुक्षिप्रमितोगत्वाद्य राघव ' इति शब्दप्रमाणंदर्शयति ॥ **ति०** परिभ्रष्टइतिपाठे दशान्तेन दुर्दशापरिपाककालेनार्थाद्भ्रंशितइत्यर्थः ॥ **शि०** दशा सर्वदंशकेन । अन्तेनकालेन परिमृष्टःवशंप्राप्तःपुरुषः दशाभागेन दशांशेन दुर्दशयेत्यर्थः । सेव्यतेप्राप्यते । दशान्तेनकालेनहीनंः तद्वशत्वानाक्रान्तोपि सलक्ष्मणस्त्वं दशाभागगतः भार्यापहरणेनकुदशांप्राप्तइव । हिरिवार्थे । आश्चर्यमेतदितितात्पर्यम् ॥ ९ ॥ **शि०** तेजस्वी प्रतापवान् । अमितप्रभः अनियतबुद्धिविशेषविशिष्टः ॥ १३ ॥ **ति०** तेइत्यादीनांपुनरुक्तिस्तु रामदुःखेनतस्यापिदुःखितचित्तत्वान्नदोषाय ॥ १५ ॥ इतिद्विसप्ततितमःसर्गः ॥ ७२ ॥

**[ पा० ]** १ ग. ङ.—ट. नहितेसिद्धिं. ख. नहितेवृद्धिं. २ ख. संक्रुद्धोवालिना. ३ घ. ट. तेजस्वीचामितप्रभः. ख. तेजसाचरविप्रभः. ४ क. ख. ग. ङ.—ट. वीर. ५ ङ. झ. ट. महात्मना. ६ क. ख. च.—ट. वीर. ७ क.—ट. नचतेसोवमन्तव्यः. ८ ख. यच्च. ९ क. ङ. झ. ट. तवकृत्यं.

सन्निधायायुधं क्षिप्रमृश्यमूकालयं कपिम् ॥ कुरु राघव सत्येन वयस्यं वनचारिणम् ॥ २१ ॥
स हि स्थानानि [1]सर्वाणि कात्स्न्र्येन [2]कपिकुञ्जरः॥नरमांसाशिनां लोके नैपुण्याददधिगच्छति ॥२२॥
न तस्याविदितं लोके किंचिदस्ति हि राघव ॥ यावत्सूर्यः प्रतपति [3]सहस्रांशुररिन्दम ॥ २३ ॥
स नदीर्विपुलाञ्छैलान्गिरिदुर्गाणि कन्दरान्॥[4]अन्वीक्ष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ॥२४॥
वानरांश्च [5]महाकायान्प्रेषयिष्यति राघव ॥ दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ॥
[6]स यास्यति वरारोहां [7]निर्मलां रावणालये ॥ २५ ॥

स मेरुशृङ्गाग्रगतामनिन्दितां प्रविश्य पातालतलेऽपि [8]वाऽऽश्रिताम् ॥
[9]प्लवंगमानां प्रवरस्तव प्रियां निहत्य रक्षांसि पुनः प्रदास्यति ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ॥ ७३ ॥

कबन्धेनरामंप्रति मार्गस्थपंपावनादिवर्णनपूर्वकमृश्यमूकमार्गप्रदर्शनं ॥ १ ॥ तथा मार्गेशबर्याश्रमस्यगन्तव्यत्वनिवेदनं ॥ २ ॥ तथामतङ्गमहर्षितपःप्रभावजऋश्यमूकगिरिमहिमातिशयवर्णनपूर्वकं तद्गुहायांसुग्रीवस्यावस्थानकथनं ॥ ६ ॥ रामलक्ष्मणाभ्यांकबन्धंप्रतिनिजलोकगमनाभ्यनुज्ञानं ॥ ४ ॥

[10]निर्दर्शयित्वा रामाय सीतायाः प्रतिपादने ॥ वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥
एष राम [11]शिवः पन्था यत्रैते पुष्पिता द्रुमाः ॥ प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २ ॥
जम्बूप्रियाल[12]पनसप्लक्षन्यग्रोधतिन्दुकाः ॥ अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३ ॥

---

ऋक्षरजास्तन्मातेत्याहुः । पम्पामटति तत्तीरे पर्यटति शङ्कितः वालिनिमित्तमिति शेषः । कृतकिल्बिषः कृतवैरः ॥ २० ॥ सख्यं च न केवलमग्निसाक्षिकं किं त्वायुधमपि सन्निधाप्य कर्तव्यमित्याह्—सन्निधायेति । सत्येन शपथेन ॥ २१ ॥ नरमांसाशिनां राक्षसानां । अधिगच्छति ज्ञास्यति ॥ २२ ॥ यावत्सूर्यः प्रतपति तावति लोक इत्यन्वयः ॥ २३ ॥ अधिगमिष्यति ज्ञास्यति ॥ २४ ॥ वानरांश्चेति सार्धश्लोकः । शोचतीं शोचन्तीं ॥ २५ ॥ प्रविश्य रक्षांसि निहत्येत्यन्वयः । अनिन्दितामिति सीतायाः शुद्धत्वप्रतिज्ञा ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

अथकबन्धः सुग्रीवस्थानमार्गं दर्शयित्वा गत इत्याह् त्रिसप्ततितमे । सीतायाः प्रतिपादने प्रापणे निमित्ते निदर्शयित्वा प्रदर्श्य "क्त्वाच च्छन्दसि" इति क्त्वाप्रत्ययः । पूर्वोक्तमुपायमिति शेषः ॥ १ ॥ ऋश्यमूकमार्गं सचिह्नं दर्शयति—एष इति । शिवः शोभनः । शोभनत्वमेवाह्—यत्रेति ॥ २ ॥ द्रुमान् विशेषयति सार्धद्वयेन । प्रियालाः धनुःपटाख्या वृक्षाः । प्लक्षाः वटभेदाः । तिन्दुकाः स्फूर्जकाख्या वृक्षाः । धन्वनाः धवाः । नागवृक्षाः नागकेसराः । तिलकाः क्षुरकवृक्षाः

---

[ पा० ] १ ङ. झ. ट. कात्स्न्र्येनसर्वाणि. २ क. ख. ग. च. छ. ज. ञ. कपिपुङ्गवः. ३ ङ. झ. ट. सहस्रांशुःपरंतप. ४ क. च. ज.—ट. अन्विष्य. ५ क. ख. च. छ. ज. ञ. महाभागान्. ६ ङ. झ. ट. अन्वेष्यति. क. ख. ग. च. छ. ज. ञ. गमिष्यति. ७ ख. ङ. झ. ट. मैथिलीं. ८ च. छ. ञ. चाश्रितां. ९ क. ङ.—ट. प्लवङ्गमानामृषभः. ख. प्लवङ्गमानामधिपः. १० घ. ङ. झ. दर्शयित्वातु. ११ च. छ. ज. गिरेःपन्थाः. घ. पुनःपन्थाः. १२ ङ. च. छ. झ. ञ. ट. पनसान्यग्रोधप्लक्ष. क. ग. पनसाः प्लक्षन्यग्रोध.

धन्वना नागवृक्षाश्च तिलका नक्तमालकाः ॥ नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥
[1]अग्निमुख्या [2]अशोकाश्च सुरक्ताः पारिभद्रकाः ॥ ४ ॥
तानारुह्याथवा भूमौ पातयित्वा [3]च तान्बलात् ॥ फलान्यमृतकल्पानि [4]भक्षयन्तौ गमिष्यथः ॥ ५ ॥
तदतिक्रम्य काकुत्स्थ वनं पुष्पितपादपम् ॥ नन्दनप्रतिमं [5]चान्यत्कुरवो ह्युत्तरा इव ॥ ६ ॥
सर्व[6]कामफला वृक्षाः [7]पादपास्तु मधुस्रवाः ॥ सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा ॥ ७ ॥
फल[8]भारानतास्तत्र महाविटपधारिणः ॥ शोभन्ते [9]सर्वतस्तत्र मे[10]घपर्वतसन्निभाः ॥ ८ ॥
तानारुह्याथवा भूमौ [11]पातयित्वा यथासुखम् ॥ फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति ॥ ९ ॥
चङ्क्रमन्तौ वरान्देशाञ्शैलाच्छैलं वनाद्वनम् ॥ ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ॥ १० ॥
अशर्करामविभ्रंशां समतीर्थामशैवलाम् ॥ राम सञ्जातवालूकां कमलोत्पल[12]शालिनीम् ॥ ११ ॥
तत्र हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव ॥ वल्गुस्वना निकूजन्ति पम्पा[13]सलिलगोचराः ॥ १२ ॥
नोद्विजन्ते नरान्दृष्ट्वा [14]वधस्याकोविदाः शु[15]भाः ॥ घृतपिण्डोपमान्स्थूलांस्तान्द्विजान्भक्षयिष्यथः ॥ १३ ॥
रोहि[16]तान्वक्रतुण्डांश्च न[17]डमीनांश्च राघव ॥ पम्पायामिषुभिर्म[18]त्स्यांस्तत्र राम [19]वरान्हतान् ॥ १४ ॥

नक्तमालकाः चिरिबिल्वाख्याः । करवीराः प्रतिहासाख्यावृक्षाः । अग्निमुख्याः भल्लातकीवृक्षाः । सुरक्ताः रक्तचन्दनाः । पारिभद्रकाः निम्बाः ॥ ३—४ ॥ पातयित्वा नमयित्वा । तानारुह्य अथवा भूमौ तान् पातयित्वा वेत्यन्वयः ॥ ५ ॥ तद्वनमतिक्रम्य नन्दनप्रतिममन्यद्वनं पश्यतमिति शेषः । उत्तरकुरुसाम्यं सर्वकामसमृद्ध्या ॥६॥ तद्वनं वर्णयति त्रिभिः । मधु पुष्परसं स्रवन्तीति मधुस्रवाः । सर्वैः काम्यमानानि फलानि येषां ते सर्वकामफलाः।ऋतवः षट् ऋतवः वसन्तीति शेषः। चैत्ररथे कुबेरोद्याने। तत्र वने। महाविटपधारिणः। "विस्तारो विटपोऽस्त्रियां" इत्यमरः। पादपा इत्यनुषङ्गः। तत्र मेघपर्वतसन्निभाः तत्रविद्यमानाः मेघपर्वताइवस्थिताइत्यर्थः ॥ ७—९ ॥ श्लोकद्वयमेकं वाक्यं । चङ्क्रमन्तौ चङ्क्रममाणौ पुनः पुनः गच्छन्तौ । पुष्करिणीं सरसीं । अशर्करां शर्करारहितां । अविभ्रंशां अशिथिलतटां । समतीर्थां अवतारस्थलेऽतिनिम्नत्वात्यगाधत्वरहितां ।सञ्जातवालूकां अपङ्कतया संहतसिकतां दीर्घ आर्षः ॥ १०—११ ॥ प्लवाः मण्डूकाः हंसभेदा वा । कुरराः क्रौञ्चभेदाः । वल्गुस्वराः रम्यस्वनाः । सलिलगोचराः सलिलचारिणः । गोचरः सञ्चारः ॥ १२ ॥ वधस्याकोविदाः वधमजानानाः । नोद्विजन्ते न बिभ्यति । द्विजा इति शेषः । तानित्यनुवादात् ॥ १३ ॥ रोहितानित्यादिश्लोकद्वयं । रोहितान् पितृप्रियमत्स्यभेदान् । वक्रतुण्डान् वक्रमुखमत्स्यान् । नडमीनान् नडाख्यतृणविशेषस्तम्बसञ्चारशीलान्मत्स्यान् । वरान् श्रेष्ठान् । अयस्तप्तान् अयःशूलाग्रप्रो-

**ति०** बलात्तान्वृक्षान्भूमौपातयित्वा शाखांधृत्वाभूमिपर्यन्तंसंनाम्य ॥ ५ ॥ **स०** उत्तरकुरवइवपुष्पितपादपं ॥ **शि०** यत्रवने उत्तराःकुरवइव पादपाः मधुस्रवाः मधुच्युतः सर्वकालफलाश्च सन्तीतिशेषः ॥ सार्धश्लोकएकान्वयी ॥ ६ ॥ **ती०** सर्वकामफलाः सर्वकामान्कामितान्पदार्थान्फलन्तीतितथा ॥ ७ ॥ **शि०** इषुभिः बाणाग्रभागैः । निस्त्वक्पक्षान् निर्गतवल्कलपरिग्रहणान् । अतएव नएकोपिकण्टकोयेषुतान् । अतएव घृतपिण्डोपमान् अकृशान् ।अशुष्कानित्यर्थः । अयस्तप्तान् अयसा वह्नौबाणाग्रभागगृहीतेन तप्तान्परिपक्वान् यान्भक्ष्यान् मूलफलसमूहान् । तवभक्त्यासमायुक्तोलक्ष्मणः तवतुभ्यं संप्रदास्यति तान्स्थूलान्द्विजान् पक्षिणः तान्प्रसिद्धान् वरान्श्रेष्ठान् रौहितादींश्च । हप्रसिद्धं । भक्षयिष्यथः । सार्धश्लोकत्रयमेकान्वयं ॥ **ती०** अकृशानेकक-

**[ पा० ]** १ ख. अग्निमुख्यास्त्वशोकाश्च. २ ग. अशोकास्त्वतिमुक्ताश्चसुभद्राःपारिभद्रकाः. ३ घ. चतान्बहून्—ङ. झ. सतान्बलात्. ४ ङ. झ. भक्षयित्वा. ५ क. ह्यन्यत्. ङ. झ. ट. त्वन्यत्. ६ ङ. च. छ. झ. ञ. ट. कालफलायत्र. ७ ङ. झ. ट. पादपामधुरस्वराः. ८ ग. घ. च. छ. ज. ञ. भारानताश्चैव. ९ च. छ. ज. ञ. तरवस्तत्र. १० क. च. छ. ज. ञ. महापर्वत. ११ ङ. झ. पातयित्वाऽथवा. १२ क. ख. ङ.—ट. शोभितां. घ. मालिनीं. १३ ख. सलिलवासिनः. १४ घ. भयस्याकोविदाः. १५ ङ. झ. ट. पुरा. १६ ग. ङ.—ट. रोहितांश्चक्रतुण्डांश्च. १७ क. ग. घ. च. छ. ज. ट. नलमीनांश्च. १८ क. मत्स्यान्हत्वाचादत्स्वतान्वरान्. च. छ. ज. ञ. मत्स्यान्हत्वाचादायनित्यशः. घ. मत्स्यान्हत्वावारिचरान्वरान्. १९ ख. वराङ्कान्.

निस्त्वक्पक्षानयस्तप्ता[1]नकृशानेककण्टकान् ॥ तव भक्त्या समायुक्तो ल[2]क्ष्मणः संप्रदास्यति ॥ १५ ॥
भृशं ते[3] खादतो मत्स्यान्पम्पायाः पुष्प[4]संचये ॥ पद्मगन्धि शिवं वारि सुख[5]शीतमनामयम् ॥ १६ ॥
उद्धृत्य स[6]ततासक्लिष्टं रौप्य[7]स्फाटिकसन्निभम् ॥ [8]असौ पुष्करप[9]र्णेन लक्ष्मणः पाययिष्यति ॥ १७ ॥
स्थूलान्गिरिगुहाशय्यान्[10]वराहान्वनचारिणः ॥ अपां लोभादुपावृत्तान्[11]वृषभानिव नर्दतः ॥
[12]रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम ॥ १८ ॥
सायाह्ने विचरन्राम विट[13]पीन्माल्यधारिणः ॥ [14]शीतोदकं च प[15]म्पाया दृष्ट्वा शोकं विहास्यसि ॥ १९ ॥
सु[16]मनोभिश्चितांस्तत्र तिलकान्नक्तमालकान् ॥ उत्पलानि च फुल्लानि पङ्कजानि च राघव ॥ २० ॥
न तानि कश्चिन्माल्यानि त[17]त्रारोपयिता नरः ॥ न च वै म्लानतां यान्ति न च शीर्यन्ति राघव ॥ २१ ॥
मतङ्गशिष्यास्[18]तत्रासन्नृषयः सुसमाहिताः ॥ तेषां [19]भाराभितप्तानां वन्यमाहरतां गुरोः ॥ २२ ॥
ये [20]प्रपेतुर्महीं तूर्णं शरीरात्स्वेदबिन्दवः ॥ तानि [21]जातानि माल्यानि मुनीनां तपसा तदा ॥
स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ॥ २३ ॥
[22]तेषामद्यापि तत्रैव दृश्यते परिचारिणी ॥ श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी ॥ २४ ॥
त्वां तु [23]धर्मे स्थिता नित्यं सर्व[24]भूतनमस्कृतम् ॥ दृष्ट्वा देवोपमं राम [25]स्वर्गलोकं गमिष्यति ॥ २५ ॥

ततया पक्वान् । कुशाश्चानेककण्टकाश्च ते न भवन्तीत्यकुशानेककण्टकाः तान् ॥ १४—१५ ॥ भृशमित्यादिद्वावेकान्वयौ । पुष्पसंचये पुष्पसमूहे वर्तमानं । अतएव सुगन्धि शिवं पापापहं सुखशीतं नातिशीतमित्यर्थः । अनामयं अव्याधिकरमित्यर्थः । एवंभूतं वारि पुष्करपर्णेन पद्मपत्रेण । पम्पाया उद्धृत्य पाययिष्यति ॥ १६—१७ ॥ स्थूलानित्यादिसार्धश्लोक एकान्वयः । गिरिगुहायां शय्या येषां तान् । रूपान्वितान् सौन्दर्यवतः ॥ १८ ॥ विटपीन् विटपिनः । इनिप्रत्ययस्य नलोप आर्षः । माल्यधारिणः पुष्पधारिणः । पुष्पविकासहेतुत्वात्सायाह्न इत्युक्तं ॥ १९ ॥ सुमनोभिः चितान् निरन्तरान् । उत्पलानि इन्दीवराणि । दृष्ट्वा शोकं विहास्यसीत्यत्राप्यनुषज्यते ॥२०॥ आरोपयिता गृहीत्वाग्रथिता । वनविस्तारात्पुष्पबाहुल्याच्च तानि म्लानतां न यान्ति । न शीर्यन्ति न शीर्यन्ते । शीर्णदलानि न भवन्तीत्यर्थः । मतङ्गशिष्यप्रभावाद्वाऽनारोपणं ॥ २१ ॥ अग्राह्यत्वाम्लानत्वादौ निमित्तमाह—मतङ्गेति । सार्धश्लोकद्वयमेकान्वयं । मतङ्गोनाम महाप्रभावो महर्षिः । तत्र पम्पातीरे । सुष्ठु समाहितं समाधिर्येषां ते तथा । वन्यमाहरतां अतएव भाराभितप्तानां । तानीति विधेयापेक्षया नपुंसकत्वं । स्वेदबिन्दुसमुत्थानीति हेतुगर्भविशेषणं । स्वेदबिन्दवो वायुना वृक्षोपरिनीता माल्यानिजातानीत्याशयः ॥ २२—२३ ॥ तेषां मतङ्गशिष्याणां । परिचारिणी श्रमणी संन्यासिनी । शबरीतिनाम शबरीतिप्रसिद्धा ॥२४॥ धर्मे गुरुपरिचरणधर्मे ॥२५॥

०टकान् कुशाः कुशवत्तीक्ष्णाः अनेककण्टकाः येषांनविद्यन्ते तेतथोक्ताः ॥ १४—१५ ॥ **शि०** अनामयंरोगनिवर्तकं ॥ १६ ॥ **ति०** पीतान् जलपानंकुर्वतः ॥ १८ ॥ **ति०** विटपीन् विटपिनः । आर्षमेकत्वं । प्रथमान्तत्वं ॥ १९ ॥ **ती०** देवोपमं हेदेव उपमं उप समीपे मा लक्ष्मीर्यस्यतं विष्णुंत्वामित्यर्थः ॥ स्वर्गलोकं स्वःगीयतइतिस्वर्गः स्वर्गश्चासौलोकश्च तं वैकुण्ठमित्यर्थः । कुतः नित्यंधर्मे उपासनात्मकेस्थिता । " विद्ययादेवलोकः " इतिश्रुतेः ॥ **स०** " स्वर्गःसुषुप्तिरित्याख्यामुक्तेरपिसमा ' इति

[ **पा०** ] १ च. छ. ज. ञ. नकुशानेक. २ क. लक्ष्मणस्तवदास्यति. ३ ङ. झ. ञ. ट. तान्खादतो. ४ क. पुष्पसंयुतं. ५ क. च. छ. ज. ञ. स्वादुशीत. ६ क. च. छ. ज. सितमक्लिष्टं. घ. चतदाक्लिष्टं. ख. ङ. झ. ञ. ट. सततदाक्लिष्टं. ७ ख. रूपस्फटिक. क. ग.—ट. रूप्यस्फटिक. ८ क.—ट. अथपुष्कर. ९ ग. च. ट. पत्रेण. १० ङ. झ. ट. न्वानरान्वनचारिणः. ११ ग. न्वृषभान्महिषांस्तथा. १२ ग. ङ. झ. ट. स्थूलान्पीतांश्चपंपायां. १३ क. ख. ग. ङ.—ट. विटपीमाल्य. १४ ङ. झ. शिवोदकं. १५ ख. ग. ङ.—ट. पंपायां. १६ क. ख. ग. ङ. झ. ट. सुमनोभिश्चितास्तत्रतिलकानक्तमालकाः. १७ च. तत्रगोपयिता. १८ क. ग. स्तत्रासन्मुनयः. १९ ख. भारावतप्तानां. २० ख. प्रपेतुर्महीरेणौ. २१ क. ख. ग. ङ.—ट. माल्यानिजातानि. २२ ङ. झ. ञ. ट, तेषांगतानामद्यापिदृश्यते. २३ च. छ. ज. धर्मस्थिता. २४ ख. लोकनमस्कृतं. २५ ग. देवलोकं.

[1]ततस्तद्राम पम्पायास्तीरमा[2]श्रित्य पश्चिमम् ॥ आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि ॥ २६ ॥
न तत्राक्रमितुं नागाः शक्नुवन्ति [3]तमाश्रमम् ॥ विविधास्तत्र वै नागा वने तस्मिंश्च पर्वते ॥ २७ ॥
ऋषेस्तस्य मतङ्गस्य वि[4]धानात्तच्च काननम् ॥ [ [5]मतङ्गवनमित्येव विश्रुतं रघुनन्दन ] ॥ २८ ॥
तस्मिन्नन्दनसंकाशे देवारण्योपमे वने ॥ नानाविहगसंकीर्णे रंस्यसे राम निर्वृतः ॥ २९ ॥
[6]ऋश्यमूकश्च पम्पायाः पुरस्तात्पुष्पितद्रुमः ॥ सुदुःखारो[7]हणो नाम शिशुनागाभिरक्षितः ॥ ३० ॥
[ [8]महात्मभिर्महायज्ञैः स्तोत्रमन्त्रैर्द्विजातिभिः ॥ ] उदारो ब्रह्मणा चैव पूर्वका[9]ले विनिर्मितः ॥ ३१ ॥
शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ॥ [10]यत्स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥ ३२ ॥
[11]न त्वेनं विषमाचारः पापकर्माऽधिरोहति ॥ ३३ ॥
[12]यस्तु तं विषमाचारः पापकर्माऽधिरोहति ॥ तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ॥ ३४ ॥
[13]तत्रापि शिशुनागानामाक्रन्दः श्रूयते महान् ॥ क्रीडतां राम पम्पायां [14]मतङ्गारण्यवासिनाम् ॥ ३५ ॥
सि[15]क्ता रुधिरधाराभिः सं[16]हृत्य परमद्विपाः ॥ प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ॥ ३६ ॥
ते तत्र पीत्वा पानीयं विमलं [17]शीतमव्ययम् ॥ [ [18]अत्यन्तसुखसंस्पर्शं सर्वगन्धसमन्वितम् ] ॥
निर्वृताः संविगाहन्ते वनानि वनगोचराः ॥ ३७ ॥

---

तत् शबर्यावासभूतं । गुह्यं इतरैरदर्शनीयं पश्यसि द्रक्ष्यसि ॥ २६ ॥ तस्मिन्वने वक्ष्यमाणे ऋश्यमूकपर्वते च । विविधाः नागाः गजाः सन्ति । तथापि तमाश्रमं तत्र प्रदेशे स्थिताः नागाः नाक्रमितुं शक्नुवन्ति ॥ २७ ॥ अनाक्रमणे हेतुमाह—ऋषेरिति । तस्य पूर्वोक्तस्य । विधानात् निर्माणात् । तत् काननं जातमिति शेषः ॥ २८ ॥ देवारण्यं चैत्ररथादि । निर्वृतः निवृत्तदुःख इत्यर्थः ॥ २९ ॥ एवमनुग्रहार्थं शबर्याश्रमंगत्वा पुनःपम्पायाःपुरस्तादृश्यमूकोगन्तव्यइत्याह सार्धश्लोकेन । ऋश्याः मृगविशेषाः मूकाः निःशब्दा भवन्ति यस्मिन् सः ऋश्यमूकः । सुदुःखमारोहणं यस्य स तथा । तत्र हेतुः—शिशुनागाभिरक्षितइति । अत्र नागाः गजा एव । "विविधास्तत्र वैनागाः" इतिपूर्वमुक्तत्वात् ॥ ३० ॥ उदारः प्रशस्तः । पूर्वकाले ब्रह्मणा उदारः प्रशस्तोनिर्मितः । कुत्रचिन्निमित्ते अयं प्रशस्तोभवत्वित्यनुगृहीतइत्यर्थः ॥ ३१ ॥ प्राशस्त्यमाह—शयानइति ॥ ३२—३३ ॥ अतिशयान्तरमाह—यस्त्विति ॥ ३४ ॥ शिशुनागानां कलभानां । तत्रापीत्यत्रापिशब्दात्पम्पादिकंसमुच्चीयते । अनेन ऋश्यमूकस्य पम्पासामीप्यमुक्तं ॥ ३५ ॥ संहृत्य अन्योन्यं प्रहृत्य । रुधिरधाराभिः सिक्ताः अतएव पृथक्कीर्णाश्चरन्ति ॥ ३६ ॥ संविगाहन्ते प्रविशन्ति

---

बृहदारण्यकभाष्योक्तेः मुक्तिमितिवा ॥ २५ ॥ **स०** नन्दनसंकाशे इन्द्रवनतुल्ये । देवारण्योपमे इतरदेवविहारस्थलसदृशे ॥ **शि०** नन्दनसंकाशे नन्दनेन फलपुष्पसंवृद्ध्या संकाशः अतिशोभायस्य तस्मिन् । देवारण्योपमे नन्दनचैत्ररथादिसदृशे ॥ २९ ॥ **स०** शिशुनागःकश्चनसर्पः । भागवतेद्वादशस्कन्धेकूर्मपुराणेचतथैवोक्तेः ॥ ३० ॥ **ति०** सुदुःखारोहणः अत्युच्चत्वात् । हेत्वन्तरमप्याह । शिशुभिर्नागैःसर्पैः अभिरक्षितः । उदारः दाता । ब्रह्मणापूर्वकाले सृष्टिकालेनिर्मितः विद्यौदार्यतपःप्राधान्येननिर्मितः ॥ ३१ ॥ **ति०** औदार्यमेवदर्शयति—शयानइति ॥ **स०** यः सः । स्वप्नस्तुसत्यएव तथापि तत्कालएवफलोपलंभइत्यतिशयइति महत्त्वमितिभावः ॥ ३२ ॥ **ति०** रुधिरधाराभिः ईषद्रक्तमदधाराभिः । सक्ताः संबद्धाः । संहृत्य संभूय ॥ ३६ ॥

**[ पा० ]** १ ज. ततस्त्वंराम. ग. तस्यास्तद्राम. २ ग. मासाद्य. ३ ख. च. छ. ज. तदाश्रमं. ङ. झ. ञ. ट. तदाश्रमे. ४ क. प्रभावाच्च. ५ ख. घ. ङ. झ. ट. पाठेष्विदमर्धंदृश्यते. ६ क.—ट. ऋश्यमूकस्तु. ७ ङ. झ. ञ. ट. रोहणश्चैव. ८ इदमर्धं क. पाठेदृश्यते. ९ ङ. झ. ट. कालेऽभिनिर्मितः. १० घ. ङ. झ. ट. यःस्वप्ने. ११ इदमर्धं झ. ञ. ट. पाठेषुनदृश्यते. १२ ङ. झ. ञ. ट. यस्त्वेनं. १३ क. घ.—ट. ततोपि. १४ ङ. झ. ट. मतङ्गाश्रमवासिनां. १५ ङ. झ. ञ. ट. सक्तारुधिर. १६ ख.—ट. संहृत्य. १७ ङ. झ. ट. चारुशोभनं. क. च. छ. ज. ञ. शीतलंसुखं. १८ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते.

ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् ॥ [1]रुरूनपेतापजयान्दृष्ट्वा शोकं [2]जेयिष्यसि ॥ ३८ ॥
राम तस्य तु शैलस्य [3]महती शो[4]भते गुहा ॥ शिलापिधाना काकुत्स्थ दुःखं [5]चास्याः प्रवेशनम् ॥ ३९ ॥
[6]तस्या गुहायाः [7]प्राग्द्वारे महाञ्शीतोदको ह्रदः ॥ फल[8]मूलान्वितो रम्यो [9]नानामृगसमावृतः ॥ ४० ॥
तस्यां वसति [10]सुग्रीवश्चतुर्भिः सह वानरैः ॥ कदाचिच्छिखरे तस्य [11]पर्वतस्यावतिष्ठते ॥ ४१ ॥
कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ ॥ स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ॥ ४२ ॥
तं तु खस्थं [12]महाभागं [13]कबन्धं रामलक्ष्मणौ ॥ [14]प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतु[15]रन्तिके ॥ ४३ ॥
गम्यतां कार्यसिद्ध्यर्थमिति तावब्र[16]वीत्स च ॥ सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४४ ॥

स तत्कबन्धः प्रतिपद्य रूपं वृतः श्रिया [17]भास्करतुल्यदेहः ॥
निदर्शयन्[18]राममवेक्ष्य खस्थः सख्यं कुरुष्वेति तदाऽभ्युवाच ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

॥ ३७ ॥ द्वीपिनः व्याघ्रान् । नीलकोमलकप्रभान् नीलरत्नवन्मनोज्ञप्रभान् । रुरून् मृगविशेषान् । अपेतापजयान् जयशीलानित्यर्थः । जहिष्यसि त्यक्ष्यसि ॥ ३८ ॥ शिला अपिधानमाच्छादनं यस्याः सा । अस्या गुहायाः प्रवेशनं दुःखं दुःखकरं । उन्नतस्थानस्थितत्वादिति भावः ॥ ३९ ॥ महान् विशालः । अस्तीतिशेषः । फलमूलान्वितः फलमूलान्वितृतीरः ॥४०॥ तस्यामिति । कदाचिद्भूमाविति सिद्धं ॥४१॥ अनुशास्य उपदिश्य । स्रगस्यास्तीति स्रग्वी । "अस्मायामेधास्रजोविनिः" इतिविनिप्रत्ययः । भास्करवर्णाभः सूर्यप्रभातुल्यप्रभः । खेव्यरोचत रामानुज्ञानार्थंक्षणमतिष्ठदित्यर्थः ॥ ४२ ॥ प्रस्थितौ सन्तौ सुखं व्रजस्व व्रज । इति अन्तिके ऊचतुः अन्तिके प्रस्थिताविति कबन्धसमीपमागत्योचतुरित्यर्थः ॥ ४३ ॥ प्रस्थितः स्वर्गमिति शेषः ॥ ४४ ॥ उक्तमर्थं सर्गान्ते संगृह्णाति—स इति । तत् पूर्वोक्तं । रूपं शरीरं । रामं प्रति निदर्शयन् । सख्यं कुरुष्व सुग्रीवेणेति शेषः । अस्मिन्सर्गे पञ्चचत्वारिंशच्छ्लोकाः ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

**ति०** अपेतान् मनुष्यंदृष्ट्वापलायितान् अजयान् प्राणिजयहीनान् । अनेनाक्रूरता ॥ ३८ ॥ **ती०** ऋश्यमूकस्यासाधारणचिह्नमाह—**रामेति** । शिलापिधानेति गुहानामेतिज्ञातव्यं । **ति०** शिलापिधानेति गुहानामेतितीर्थः । विशेषणमित्यन्ये ॥ ३९ ॥ **ति०** प्रस्थितौ आवांसुग्रीवसमीपंप्रस्थितौ । त्वंव्रजस्व पुण्यलोकमितिशेषः । अन्तिके वर्तमानं ॥ ४३ ॥ **स०** भास्वरसर्वदेहः प्रकाशमानसमग्राङ्गः । भास्वरः प्रकाशितः सर्वो भूभागादिर्येन सदेहोयस्यसइतिवा ॥ **ति०** निदर्शयन् मार्गादिकमितिशेषः । **ती०** सर्गश्रवणफलंस्कान्दे—'कबन्धरामसंवादं येश्शृण्वन्तिसदादरात् । विप्रावमानजनितस्तापःक्षिप्रंविनश्यति ।' इति ॥ ४५ ॥ इतित्रिसप्ततितमःसर्गः ॥ ७३ ॥

[ **पा०** ] १ घ. रुरून्गतभयांश्चैवदृष्ट्वाशोकंत्यजिष्यति. ङ. झ. ञ. ट. रुरूनपेतानजयान्. २ ङ. झ. ञ. ट. प्रहास्यसि. ३ ख. महतः. ४ ग. शोभना. ५ च. छ. ज. तस्याःप्रवेशने. ६ ख. ग. तस्यांगुहायां. ७ ग. वृद्धायां. क. च. छ. ज. ञ. प्राग्भागे. ८ क. ख. घ.—ट. बहुमूलफलो. ९ च. छ. ज. ञ. नानानागसमावृतः. ङ. झ. ट. नानानगसमाकुलः. घ. नानामृगसमाकुलः. क. नानामृगगणायुतः. ख. नानानगसमावृतः. १० ङ. झ. ट. धर्मात्मासुग्रीवःसह. ११ घ. ङ. झ. ञ. ट. पर्वतस्यापितिष्ठति. ख. सुग्रीवःपरितिष्ठति. १२ क. महाबाहुं. १३ ङ. झ. ट. तावुभौ. १४ च. छ. ज. प्रस्थितस्त्वं. क. प्रस्थितौतं. १५ क. ख. ग. च. छ. ज. रन्तिकात्. १६ ख. वब्रवीच्चसः. १७ ङ.—ट. भास्वरसर्वदेहः. क. ख. भास्करवर्णदेहः. १८ ग. त्राममुदारवीर्यसख्यं.

## चतुःसप्ततितमः सर्गः ॥ ७४ ॥

रामलक्ष्मणाभ्यांकबन्धप्रदर्शितमार्गेणपंपापश्चिमतीरे शबर्याश्रमगमनं ॥ १ ॥ शबर्या चिरसंचितमधुरतरफलमूलादि-नासादरंरामलक्ष्मणयोरर्चनं ॥ २ ॥ तथारामचोदनयावनप्रदेशेषुमतङ्गमहर्षेस्तच्छिष्याणांचतपःप्रभावव्यापकतत्तद्विशेषप्रद-र्शनपूर्वकंश्रीरामानुज्ञयाहुताशनेदेहत्यागाद्दिव्यरूपपरिग्रहेणस्वाचार्यमहर्ष्यध्युषितदिव्यलोकगमनं ॥ ३ ॥

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने ॥ [1]प्रतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १ ॥
तौ शैले[2]ष्वाचितानेकान्[3]क्षौद्रकल्पफलान्द्रुमान् ॥ [4]वीक्षन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २ ॥
[5]कृत्वा च शैल[6]पृष्ठे तु तौ वासं [7]रामलक्ष्मणौ ॥ पम्पायाः पश्चिमं [8]तीरं राघवावुपतस्थतुः ॥ ३ ॥
[9]तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम् ॥ अपश्यतां ततस्तत्र [10]शबर्या रम्यमाश्रमम् ॥ ४ ॥
तौ [11]तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम् ॥ सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५ ॥
[12]तौ च दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः ॥ [13]रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः ॥
पाद्य[14]माचमनीयं च सर्वं प्रादाद्यथाविधि ॥ ६ ॥
तामुवाच ततो रामः श्रमणीं [15]शंसितव्रताम् ॥ ७ ॥
कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः ॥ कच्चित्ते [16]नियतः क्रोध आहारश्च तपोधने ॥ ८ ॥
कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम् ॥ कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ॥ ९ ॥
रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता ॥ शशंस शबरी वृद्धा रामाय [17]प्रत्युपस्थिता ॥ १० ॥
अद्य प्राप्ता तपःसिद्धिस्तव सन्दर्शनान्मया ॥ अद्य मे सफलं [18]तप्तं गुरवश्च सुपूजिताः ॥ ११ ॥
अद्य मे सफलं [19]जन्म [20]स्वर्गश्चैव भविष्यति ॥ त्वयि देववरे राम पूजिते पुरुषर्षभ ॥ १२ ॥
[21]चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन ॥ गमिष्याम्यक्षयाँल्लोकांस्त्वत्प्रसादादरिन्दम ॥ १३ ॥

---

एवमेतावत्पर्यन्तं भगवत्कैङ्कर्यतत्फले दर्शिते । अथाचार्याभिमाननिष्ठा तत्फले दर्शयति चतुःसप्ततितमे । प्रतीचींदिशं गृह्य गृहीत्वा । कबन्धेन दर्शितं पम्पाया मार्गमुद्दिश्य प्रतस्थतुः प्रतस्थाते ॥ १ ॥ शैलेष्वाचितान् प्ररूढान् अनेकांश्च क्षौद्रकल्पफलान् मधुतुल्यफलयुक्तान् । वीक्षन्तौ वीक्षमाणौ ॥ २ ॥ वासं तस्यांरात्र्यामिति शेषः । उपतस्थतुः उपतस्थाते प्रापतुरित्यर्थः । रात्र्यन्तइतिशेषः ॥ ३—४ ॥ आश्रममासाद्य तं अभिवीक्षन्तौ अभिवीक्षमाणौ ॥ ५ ॥ तौ चेति सार्धश्लोक एकान्वयः । सिद्धा सिद्धयोगा ॥ ६—७ ॥ विघ्नाः तपोविघ्नाः कामादयः । नियतः निगृहीतः । आहारश्चेत्यत्रापि नियत इत्यनुषज्यते । "तपो नानशनात्परं" इति श्रुतेः ॥८॥ नियमाः व्रतानि । मनसः सुखं मनःसन्तोषः । चारुभाषिणीति साध्वीसंबोधनप्रकारः । इति तामुवाचेति संबन्धः ॥ ९ ॥ रामाय प्रत्युपस्थितेति तादर्थ्ये चतुर्थी ॥ १० ॥ तपःसिद्धिः तपःपरिपाकः । तप्तं तपः ॥११॥ अद्येत्यस्यार्थं विवृणोति—त्वयीति । देववरे विष्णौ । अनेन शबर्याः परमार्थज्ञानंवृत्तमितिसूच्यते ॥ १२॥ एवमुपचारवादानुक्त्वा स्वप्रयोजनमाह—चक्षुषेति । तेन सौम्येन

---

[ पा० ] १ क.—ट. आतस्थतुः. २ क. ष्वाचितान्वृक्षान्. ३ ङ. झ. ट. न्क्षौद्रपुष्पफलद्रुमान्. क. न्क्षौद्रकल्पफलान्बहून्. ४ ख. ग. पश्यन्तौ. ५ क. घ. ङ. झ. कृत्वातु. ६ क. पृष्ठेषु. ग. पृष्ठेच. ७ क. ख. ङ.—ट. रघुनन्दनौ. ८ ग. देशंराघवौसमुपस्थितौ. क. ख. तीरमुपयातौचराघवौ. घ. तीरंराघवावुपजग्मतुः. ९ ग. पुष्करिण्यास्तु. १० ग. शबरीमाश्रमस्थितां. ११ घ. तदाश्रम. १२ क.—घ. तौतु. ङ. च. झ. ञ. ट. तौदृष्ट्वातु. १३ क. ङ. झ. ट. पादौजग्राहरामस्य. १४ च. ञ. माचमनीयंतु. १५ ङ. झ. ट. धर्मसंस्थितां. १६ ख. निर्जितःकोपः. क. ग.—ट. नियतःकोपः. १७ ङ. छ. ज. ञ. ट. प्रत्यवस्थिता. क. प्रयतास्थिता. १८ ख. ग. ङ.—ट. जन्म. १९ ख. ग. ङ.—ट. तप्तं. २० ख. स्वर्गश्चेह. २१ घ. ङ. झ. तवाहंचक्षुषासौम्यपूतासौम्येनमानद. क. च. छ. ज. ञ. तवाहंचक्षुषारामपूतासौम्येनमानद. ग. तवाहंचक्षुषाराजन्पूतासौम्येनमानद. ख. त्वयाहंचक्षुषासौम्यपूतासौम्येनमानद.

चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ॥ इतस्ते दिवमारूढा यानहं पर्यचारिषम् ॥ १४ ॥
तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः ॥ आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५ ॥
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः ॥ तं च दृष्ट्वा वराँल्लोकानक्षयांस्त्वं गमिष्यसि ॥१६॥
मया तु विविधं वन्यं संचितं पुरुषर्षभ ॥ तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् ॥ १७ ॥
एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् ॥ राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ॥१८॥
दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः ॥ श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे ॥ १९ ॥
एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम् ॥ शबरी दर्शयामास तावुभौ तद्वनं महत् ॥ २० ॥
पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम् ॥ मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ २१ ॥
इह ते भावितात्मानो गुरवो मे महाद्युते ॥ जुहवांचक्रिरे तीर्थं मन्त्रवन्मन्त्रपूजितम् ॥ २२ ॥

चक्षुषा निर्हेतुककटाक्षेण पूतास्मि । अनेन पूर्वाघविनाश उक्तः । अरिन्दमेत्यनेन उत्तराघाश्लेष उच्यते । त्वत्प्रसादात् "धातुः प्रसादान्महिमानमात्मनः" इत्युक्तत्वादाचार्यप्रसादोपबृंहितात्त्वत्प्रसादात् । अक्षयान् लोकान् गमिष्यामि पुनरावृत्तिरहितं परमपदं प्राप्स्यामीत्यर्थः ॥ १३ ॥ तर्हि त्वदाचार्यैरेवसहकिमर्थं न गतासीत्यत्राह—चित्रकूटमिति । ते मतङ्गशिष्या मदाचार्याः ॥ १४ ॥ धर्मज्ञैः योगरूपभगवत्प्राप्त्युपायाभावेप्याचार्यप्रसादकृतभगवत्प्रसादात् सद्गतिमियं प्राप्स्यतीत्येतद्धर्मज्ञैः । महाभागैः भविष्यत्तद्वृत्तान्तज्ञानोचितभाग्यवद्भिः । सुपुण्यमित्यागमनार्हत्वमुच्यते । प्रतिग्रहीतव्यः आतिथ्यकरणेनसत्करणीयः । दृष्ट्वा तेन दर्शनेन निमित्तेन । अक्षयान् लोकान् गमिष्यसि वरानिति कैवल्यव्यावृत्तिः । गमिष्यसीति तैरहमुक्तेत्यन्वयः। अनेन आचार्यशुश्रूषणं भगवत्प्रसादद्वारा मोक्षहेतुरित्युक्तंभवति॥१५—१६॥ आचार्योक्तिश्रद्धामात्मनः सूचयति—मया त्विति । तीरसंभवं विविधं वन्यं संचितं।वन्यशब्देन फलमूलादिकमुच्यते। विविधमित्यनेन फलमूलादिभेद उच्यते । संचितमित्यनेन रामस्य चित्रकूटागमनात्प्रभृति संपादितत्वमादरेण गुप्तत्वं च तत्तत्फलजातीयमाधुर्यं परीक्ष्य स्थापितमिति संप्रदायः ॥१७॥ विज्ञानेविषये । अबहिष्कृतां अन्तरङ्गभूतां । जात्याहीनामप्याचार्यप्रसादलब्धब्रह्मज्ञानामितिभगवताप्यादरणीयत्वोक्तिः ॥ १८ ॥ दनोःसकाशात् दनुतइत्यर्थः । पञ्चम्यर्थे सकाशशब्दंप्रयुञ्जते । तत्त्वेन याथार्थ्येन । ते महात्मनः त्वत्संबन्धिनो महात्मनः मतङ्गस्येत्यर्थः । महात्मनामिति पाठे त्वदाचार्याणामित्यर्थः । श्रुतं प्रभावं प्रत्यक्षं संद्रष्टुमिच्छामि । यदि मन्यसे दर्शयितुमिति शेषः ॥ १९ ॥ विनिःसृतं निर्गतं ॥ २० ॥ मेघघनप्रख्यं घनमेघसदृशं । विश्रुतं वनमिति शेषः॥२१॥ भावितात्मानः चिन्तितात्मानः । ते प्रसिद्धाः । मे गुरवः । मन्त्रवन्मन्त्रपूजितं मन्त्रवतांमन्त्रैःपूजितं । तीर्थं गङ्गादिपुण्यसलिलं । इहप्रदेशे जुहवांचक्रिरे आहूतं-

**ति०** एवमुक्ताऽहं यतः अतो मयात्वदर्थं वन्यंसम्यक्परीक्ष्य माधुर्ययुतं संचितमित्यर्थः । तदुक्तंपाद्मेशबरींप्रस्तुत्य—"प्रत्युद्गम्यप्रणम्याथ निवेश्यकुशविष्टरे । पादप्रक्षालनंकृत्वा तत्तोयंपापनाशनम् । शिरसाधार्यपीत्वाच वन्यैःपुष्पैरथार्चयत् । फलानि चसुपक्वानि मूलानिमधुराणिच । स्वयमास्वाद्यमाधुर्यं परीक्ष्यपरिभक्ष्यच । पश्चान्निवेदयामास राघवाभ्यांदृढव्रता । फलान्यास्वाद्यकाकुत्स्थस्तस्यैमुक्तिंपरांददौ ॥" इति ॥ १७ ॥ **स०** विज्ञाने तद्विषये अबहिष्कृतां सर्वदाविज्ञानसंपन्नामितियावत् ॥ **कतक०** विज्ञानेब्रह्मविद्यायां मैत्रेय्यादिवदबहिष्कृतां तत्राप्यधिकारिणीमित्यर्थः ॥ **ति०** विशिष्टंज्ञानंयेषां तेषांसंबन्धोयस्यास्तत्संबोधनं हेविज्ञाने इतिसंबोध्य । तां नित्यमबहिष्कृतां भोजनादिव्यवहारादितिशेषः । तद्वृत्तमाहारायङ्गीकृत्येतिचशेषइत्यन्ये ॥ १८ ॥ **ति०** मेघोवर्षुकोयोघनस्तद्वन्नीलं । मिह सेचने । बाहुलकाद्वलं ॥ २१ ॥ **ती०** मन्त्रवतांमुनीनां मन्त्रैः पूजितं पालितं तीर्थंयज्ञं । 'तीर्थंमन्त्राद्युपाध्याययज्ञेष्वंभसिपावके' इतिरत्नाकरे। **ति०** मन्त्रपूजितं मन्त्रस्य गायत्र्याः जपेनपूजितं अतिशुद्धं । नीडं

**[ पा० ]** १ क. महात्मभिः. २ सतइतिश्लोकानन्तरं. मयात्वितिश्लोकात्पूर्वं. एवमुक्तामहाभागैस्तदाहंपुरुषर्षभ इत्यर्धं क. ङ.—ट. पाठेषुदृश्यते. ३ ङ.—ञ. संचितंवन्यंविविधं. ४ क. ख. ग. छ. ज. एवमुक्तस्तु. ५ ङ. च. झ. ट. महात्मनां. ६ घ. गणाकुलं. ७ क. ख. महामते. ८ क. ख. देहान्मन्त्रविन्मन्त्रपूजितान्. ग. झ. नीडं.

इयं प्रत्यक्स्थली वेदिर्यत्र ते मे[1] सुसत्कृताः ॥ पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ॥ २३ ॥
तेषां[2] तपःप्रभावेन पश्याद्यापि रघूद्वह[3] ॥ द्योतयन्ति[4] दिशः सर्वाः श्रिया वेद्योतुलप्रभाः[5] ॥ २४ ॥
अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः ॥ चिन्तितेऽभ्यागतान्पश्य[6] सहितान्सप्त सागरान् ॥ २५ ॥
कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह ॥ अद्यापि नावशुष्यन्ति[7] प्रदेशे रघुनन्दन ॥ २६ ॥
देवकार्याणि कुर्वद्भिर्यानीमानि कृतानि वै ॥ पुष्पैः कुवलयैः[8] सार्धं म्लानत्वं नोपयान्ति वै[9] ॥ २७ ॥
कृत्स्नं[10] वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया ॥ तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत्कलेवरम् ॥ २८ ॥
तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् ॥ मुनीनामाश्रमो[11] येषामहं च परिचारिणी ॥ २९ ॥
धर्मिष्ठं[12] तु वचः श्रुत्वा राघवः सहलक्ष्मणः ॥ प्रहर्षमतुलं लेभे आश्चर्यमिति[13] तत्त्वतः ॥ ३० ॥
तामुवाच ततो रामः श्रमणीं[14] संशितव्रताम् ॥ अर्चितोऽहं त्वया भक्त्या[15] गच्छ कामं यथासुखम्[16] ॥ ३१ ॥

वन्तः । महाद्युते इत्यनेन मुनिप्रभावश्रवणेसन्तोषवत्त्वंव्यज्यते ॥ २२ ॥ प्रत्यक्स्थली प्रत्यक्प्रदेशे स्थलीभूता। प्राक्प्रदेशेपश्चिमाभिमुखविष्णुस्थानत्वेन प्रत्यङ्निम्नेत्यर्थः । वेदिः देवपूजास्थानं । इयं अवलोक्यतामिति शेषः। यत्र वेद्यां । मे मया सुसत्कृतास्ते गुरवः श्रमात् वृद्धताकृतयापुष्पधारणाशक्त्या उद्वेपिभिः उत्कम्पिभिः । करैः पुष्पोपहारं पुष्पैरर्चनं कुर्वन्ति अकुर्वन् । अत्र वेदिरिति जात्येकवचनं उत्तरश्लोके बहुवचनप्रयोगात् बहूनां बहुवेदिसंभवाच्च ॥ २३ ॥ तेषां अस्मदाचार्याणां प्रभावेन अतुलप्रभाः इमाः वेद्यः । अद्यापि तेषामसन्निधानेपि। सर्वा दिशः द्योतयन्ति प्रकाशयन्ति । अनेन आचार्याभिमतो देशस्तदसन्निधानेप्युद्देश्य इत्युक्तं ॥ २४ ॥ पुनर्वैभवान्तरमाह—अशक्नुवद्भिरिति । उपवासश्रमेण अलसैः मन्दैः । अतएव सप्तसागरान् गन्तुमशक्नुवद्भिः मे गुरुभिः चिन्तिते चिन्तितमात्रे । अभ्यागतान् अभिमुखमागतान् । सप्तसागरान् पश्य ॥ २५ ॥ अद्भुतान्तरमाह—कृतेति । इह प्रदेशे सागरप्रदेशे । कृताभिषेकैः कृतस्नानैः । तैर्गुरुभिः पादपेषु न्यस्ताः आर्द्रवल्कलाः अद्यापिनावशुष्यन्ति नशुष्काभवन्ति । तदङ्गसम्पर्कवैभवादितिभावः ॥ २६ ॥ देवकार्याणि देवार्चनानि । कुर्वद्भिः तैः कुवलयैः सह पुष्पैः पुष्पान्तरैः । यानीमानि माल्यानिकृतानि तानि म्लानत्वं नोपयान्ति भक्त्यतिशयेनसमर्पितत्वादिति भावः । एतावता ग्रन्थसंदर्भेण "गुरुं प्रकाशयेद्धीमान्" इत्युक्तरीत्या आचार्यवैभवप्रकटनंकर्तव्यमितिसूचितं ॥ २७ ॥ उपसंहरति—कृत्स्नमिति । अभ्यनुज्ञाता त्वयेतिशेषः ॥ २८ ॥ त्यक्त्वाकिंकरिष्यसीत्यत्राह—तेषामिति । समीपं पादमूलं । गमिष्यामि । "यानहं पर्यचारिषं" इत्यन्यत्रोक्तेः । आश्रमः अयमिति शेषः । येषामाश्रमोऽयं येषामहं च परिचारिणी तेषां समीपं गन्तुमिच्छामीतिसंबन्धः ॥ २९ ॥ वचः आचार्यवैभवप्रदर्शनादिरूपं । तत्त्वतः मायां विना । आश्चर्यमिति मत्वा ॥ ३० ॥ अथ शबरीमनोरथंपूरयति—तामिति । शंसितव्रतां आचार्यपरिचर्यानिष्ठामित्यर्थः । अर्चितः तव गुरुवृत्तिसंदर्शनेनैवेतिशेषः । भक्त्या वन्यसंपादनमात्रेण वा । अयमेवार्थःसंक्षेपे "शबर्या पूजितः सम्यक्" इत्युक्तः ।

देहपञ्जरं । तीर्थमितिपाठे सएवार्थः । मन्त्रवत् तद्धोममन्त्रवत् । जुहवांचक्रिरे हुतवन्तः ॥ २२ ॥ ती० दृष्टं त्वया मयादर्शितं । श्रुतं त्वया मयाश्रावितं ॥ २८ ॥ शि० भावितात्मनां परिशीलितपरमात्मनां ॥ २९ ॥

[ पा० ] १ क. च. छ. ज. पुरुषर्षभाः. २ ख. ग. तेषामेवंप्रभावेन. ३ क.—ट. रघूत्तम. ४ क. ङ.—ट. द्योतयन्ती. ५ क. ङ.—ट. वेद्यतुलप्रभा. ६ च. छ. ज. ञ. चिन्तितेनागतान्सप्तसहितान्पश्य. क. चिन्तितैरागतान्पश्य. ख. ग. चिन्तितेनागतान्पश्यसमेतान्सप्त. ७ ख. घ.—ट. नविशुष्यन्ति. क. नैवशुष्यन्ति. ८ क. घ. झ. किसलयैः. ९ ख. ग. ङ. झ. ट. म्लानत्वंनतुयान्तिवै. क. नग्लानिमुपयान्तिच. १० क. कदावासंवनंदृष्टं. ११ ख. च. छ. ज. माश्रमे. १२ च. छ. ञ. धर्मिष्ठायावचः. ग. धर्मिष्ठंतद्वचः. १३ ङ. झ. ट. मितिचाब्रवीत्. १४ ङ. झ. ट. शबरीं. १५ ख. घ.—ट. भद्रे. १६ ग. तपोधने.

इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनाम्बरा ॥ तस्मिन्मुहूर्ते शबरी देहं जीर्णं जिहासती ॥ ३२ ॥
अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने ॥ ज्वलत्पावकसंकाशा स्वर्गमेव जगाम सा ॥ ३३ ॥
दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ॥ दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ॥
विराजयन्ती तं देशं विद्युत्सौदामिनी यथा ॥ ३४ ॥
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ॥ तत्पुण्यं शबरीस्थानं जगामात्मसमाधिना ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये आरण्यकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

## पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

मतङ्गादिमहर्षिमहिमप्रशंसनपूर्वकं निर्वर्तितपुण्यतीर्थावगाहनाह्निकेनरामेण लक्ष्मणेनसहशबर्याश्रमान्निर्गत्यपंपांप्रतिगमनं ॥ १ ॥

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा ॥ लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥
स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम् ॥ हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥२॥
दृष्टोऽयमाश्रमः सौम्य बह्वाश्चर्यः कृतात्मनाम् ॥ विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३ ॥
सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण ॥ उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः ॥ ४ ॥
प्रनष्टमशुभं तत्तत्कल्याणं समुपस्थितम् ॥ तेन तत्त्वेन हृष्टं मे मनो लक्ष्मण संप्रति ॥ ५ ॥

---

कामं काम्यमानंलोकं ॥ ३१ ॥ इतीति श्लोकद्वयमेकान्वयं। जिहासती हातुमिच्छन्ती । स्वर्गमेवेत्यवधारणंद्योतयति ॥ ३२—३३ ॥ दिव्येतिसार्धश्लोकः । तत्र स्वर्गगमनारम्भे । विद्युत् विशेषेणद्योतमाना । सौदामिनी तटित् ॥ ३४ ॥ ते गुरवः सुकृतात्मानः सुकृतधैर्यवन्तः । आत्मसमाधिना आत्मविषययोगेन । एतत्सर्गवृत्तान्तेन मतङ्गशिष्योपदिष्टसमाधिकाशबरी गुर्वनुज्ञयारामागमनपर्यन्तंस्थित्वा ततोरामानुज्ञयास्वसमाधिबलेनस्वगुरुगतंस्वर्गविशेषंप्राप्तेत्यत्रगम्यते । स्त्रियाअपि विदुरादेरिवयोगाधिकारःसंभवति । तदज्ञयज्ञादिकर्मस्थाने गुरुशुश्रूषा । स्वर्गश्च आदौअक्षयानित्युक्त्या पुनरावृत्तिरहितंपरमपदमित्यवगम्यते । "एवमेवामुत्रपुण्यचितोलोकःक्षीयते" इतिश्रुत्याकेवलस्वर्गस्यक्षयित्वावगमात् । अस्मिन्सर्गेसार्धपञ्चत्रिंशच्छ्लोकाः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

अथ पम्पागमनंपञ्चसप्ततितमे । स्वेनतेजसा उपलक्षितायामितिशेषः ॥ १ ॥ एकाग्रं एकचित्तं ॥२॥ बह्वाश्चर्यः अत्यद्भुतपुष्पफलादिसंपत्तिसकलतीर्थसमागमादिनाआश्चर्ययुक्तः । विश्वस्ताः विश्वासंप्राप्ताः परस्परहिंसकत्वरहिताः मृगाः शार्दूलाश्चयस्मिंस्तथा ॥ ३ ॥ उपस्पृष्टं स्नातं। अनेन पुण्यतीर्थप्राप्तौ स्नानश्राद्धादिकंकर्तव्यमित्युक्तं ॥ ४ ॥ तत्तदशुभं प्रनष्टं । कल्याणं शुभं । तेन अशुभनिवृत्तिपूर्वकशुभप्राप्त्या

---

**ती०** सर्गश्रवणफलंस्कान्दे—'शबर्यासत्कृतिंश्रुत्वा साध्वीनांलोकगोभवेत्'इति ॥ ३५ ॥ इतिचतुस्सप्ततितमःसर्गः ॥ ७४ ॥
**शि०** चिन्तयामास मुनिप्रभावंप्रशंसयामासेत्यर्थः ॥ १ ॥

**[ पा० ]** १ ङ. झ. ट. इत्येवमुक्ताजटिला. २ क. ख. ग. जीर्णंदेहंविहायतत्. च. छ. ज. ञ. देहंजीर्णंविहायतत्. ३ ग. ङ. झ. ट. जगामह. ४ विराजयन्तीत्येतदर्धात्परं. क. ख. घ. च. छ. ज. ञ. पाठेषु. प्रणम्यशिरसारामंस्वर्गतासुप्रभानना. इत्यर्धमधिकंदृश्यते. ५ क. घ. कर्मणा. ६ ङ.—ट. चिन्तयित्वातु. ७ ग.—ट. दृष्टोमयाऽऽश्रमः. ८ घ. बह्वाश्चर्यो महात्मनां. ९ च. छ. ज. ञ. विहगशोभितः. १० ग. झ. समुद्राणामेषां. ११ ख. ग. घ. च. छ. ज. यत्तत्कल्याणं. क. ङ. झ. ञ. ट. यत्नःकल्याणं. १२ क. ङ. च. छ. झ. ञ. ट. तेनत्वेतत्प्रहृष्टं. ख. तेनचापिप्रहृष्टं.

हृदये[1] हि नरव्याघ्र शुभ[2]माविर्भविष्यति ॥ ६ ॥
तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ॥ ऋश्यमूको [3]गिरिर्यत्र नातिदूरे प्रकाशते ॥ ७ ॥
यस्मिन्वसति धर्मात्मा सुग्रीवोंशुमतः सुतः ॥ नित्यं वालिभया[4]त्त्रस्तश्चतुर्भिः सह वानरैः ॥ ८ ॥
[5]अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् ॥ तदधीनं हि मे[6] सौम्य सीतायाः परिमार्गणम् ॥ ९ ॥
[7]एवं ब्रुवाणं [8]तं धीरं रामं सौमित्रिरब्रवीत् ॥ गच्छावस्त्वरितं तत्र ममापि [9]त्वरते मनः ॥ १० ॥
आश्रमात्तु ततस्तस्मान्नि[10]ष्क्रम्य स विशांपतिः ॥ आजगाम ततः पम्पां लक्ष्मणेन [11]सहाभिभूः ॥ ११ ॥
[12]स ददर्श ततः पुण्यामुदारजनसेविताम् ॥ नानाद्रुमलताकीर्णां पम्पां पानीयवाहिनीम् ॥ १२ ॥
पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः ॥ नीलां [13]कुवलयोद्घाटैर्बहुवर्णां कुथामिव ॥ १३ ॥
स तामासाद्य वै रामो [14]दूरादुदकवाहिनीम् ॥ मतङ्गसरसं नाम ह्रदं समवगाहत ॥ १४ ॥
अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् ॥ पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ॥ १५ ॥

॥ ५ ॥ हृदय इत्यर्धमेकं । शुभं शुभस्मरणं ॥ ६ ॥ तदित्यादिश्लोकद्वयं । अंशुमतः सूर्यस्य ॥ ७—८ ॥ मे सीताया इत्यन्वयः ॥ ९ ॥ धीरं कृतधैर्यमित्यर्थः ॥१०॥ ततः अनन्तरं । विशां प्रजानां पतिः । ततः तत्र मार्गे । अभिभवतीत्यभिभूः अभिभावक इत्यर्थः । शत्रूणामित्यर्थसिद्धं । प्रभुरित्यपिपाठः ॥ ११ ॥ सददर्शततःपुण्यामित्यादी द्वौ श्लोकौ । उदारजनाः श्रेष्ठजनाः मुनिप्रभृतयः । पानीयवाहिनीं पानार्हशीतलस्वादुजलवतीमित्यर्थः । सौगन्धिकैः कह्लारैः । कुवलयोद्घाटैः कुवलयसमूहैः । कुथा चित्रकम्बलं ददर्श दूरादिति बोध्यं । अग्र इत्यनुवादात् ॥ १२—१३ ॥ उदकवाहिनींतां दूरादासाद्य मतङ्गसरसंनाम मतङ्गसरसमिति प्रसिद्धं । "अनोश्मायःसरसांजातिसंज्ञयोः" इति टच् समासान्तः । ह्रदं पम्पासमीपस्थं सरः । समवगाहत सस्नौ । पुण्यतीर्थत्वादिति भावः ॥१४॥ दूरतः पम्पादर्शनमनुवदंस्तत्तीरवनदर्शनमाह षड्भिः । अरविन्दं रक्ताब्जं । पद्मैः सितपद्मैः । आम्रवणं चूतवनं । बर्हिणोद्घुष्टं मयूरशब्दः तेन नादितां संजातनादां । तिलकैः क्षुरकवृक्षैः । बीजपूरैः दाडिमैः । धवैः धवाख्यैर्वृक्षविशेषैः । शुक्लद्रुमैः अर्जुनवृक्षैः । करवीरैः प्रसिद्धैः । पुन्नागैः तुङ्गवृक्षैः । मालतीति मालतीगुल्मैः कुन्दगुल्मैश्चेत्यन्वयः । भाण्डीरैः वटैः । निचुलैः वञ्जुलैः । सप्तपर्णैः विषमच्छदवृक्षैः । अतिमुक्तकैः नेमिवृक्षैः । भूषितां शोभितां । अतएव प्रमदामिव स्थितां । सर्वतः चतुर्दिक्प्रदेशेपि । कोयष्टिकैः टिट्टिभाख्यैःपक्षिविशेषैः । अर्जुनकैः पक्षिविशेषैः । शतपत्रैः दार्वाघाटैः । कीरकैः शुकैः । अव्यग्रौ सुसमाहितौ व्याकुलत्वरहितौ । प्रत्युत सावधानौ चेत्यर्थः । राघवौ अरविन्दोत्पलवतीमित्यादिविशेषिताम् । तिलकादिभिर्वृक्षैर्भूषितां अतएव प्रमदामिव स्थितां पम्पां सर्वतःसमीक्षमाणौ ततः पुष्पाढ्यं सर्वतो विपुलद्रुमं कोयष्टिकादिभिर्विहगैर्नादितं अन्यैःशकुनैश्चयुतं सरसः पम्पायाःसंबन्धि तद्वनंच पश्यन्तावेव सन्तौ अव्यग्रौ सुसमाहितौ च

**स०** वालिनोभयं आतयतिगमयतीति वालिभयात् अहं अभित्वरे ॥ ८—९ ॥ **ति०** पानीयवाहिनीं पानार्हातिमधुरसुशीतनिर्मलजलवाहिनीं । अनेन पंपा नदीतिलभ्यते । वाहिनीमित्यस्य धारिणीमित्यर्थोवा । मतङ्गसरसमित्यकारान्तः । तच्च पंपायामेवप्रदेशभेदो गङ्गायांमणिकर्णिकेव ॥ १४ ॥

**[ पा० ]** १ घ. हृदयेऽपि. च. छ. ज. ञ. निश्चितंहिनरव्याघ्र. घ. ङ. झ. ट. हृदयेमे. २ छ. ज. ञ. शुभमाशुभविष्यति. ३ ग. घ. गिरिर्यस्या. ४ ख. छ. भयत्रस्तः. ५ ङ. झ. ट. अहंत्वरे. ६ ङ. झ. ट. मेकार्यं. ग. यत्सौम्य. ७ क. ख. घ.—ट. इति. ८ क. ङ. झ. ट. तंवीरंसौमित्रिरिदमब्रवीत्. च. छ. ज. ञ. काकुत्स्थंसौमित्रिरिदमब्रवीत्. घ. तंरामंसौमित्रिरिदमब्रवीत्. ग. तंवीरंरामं. ९ ग. त्वरितं. १० ग. न्निर्गत्यच. ११ ख. ग. ङ. ज.—ट. सहप्रभुः. १२ सददर्शततःपुण्यामिति श्लोकमारभ्य आसर्गसमाप्तिविद्यमानेषुश्लोकेषुकेषांचित्पौर्वापर्यं. केषांचिदानुपूर्वीभेदः. केषांचिन्न्यूनाधिकभावश्च. झ. ञ. ट. पाठेषुदृश्यते. १३ ग. छ. ज. कुवलयैर्जातैः. १४ ङ. झ. ञ. ट. दूरात्पानीयवाहिनीं. ख. आरादुदक.

तिलकैर्बीजपूरैश्च [1]धवैः शुक्लद्रुमैस्तथा ॥ पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ॥ १६ ॥
मालतीकुन्दगुल्मैश्च भाण्डीरैर्निचुलैस्तथा ॥ अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ॥ १७ ॥
अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् ॥ [2]समीक्षमाणौ [3]पुष्पाढ्यं सर्वतो विपुलद्रुमम् ॥ १८ ॥
[4]कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च [5]कीरकैः ॥ एतैश्चान्यैश्च [6]विहगैर्नादितं [7]तु वनं महत् ॥ १९ ॥
[8]ततो जग्मतुरव्यग्रौ [9]राघवौ सुसमाहितौ ॥ तद्वनं चैव सरसः पश्यन्तौ शकुनैर्युतम् ॥ २० ॥
स ददर्श ततः पम्पां शीत[10]वारिनिधिं शुभाम् ॥ प्रहृष्टनानाशकुनां पादपैरुपशोभिताम् ॥
तिलकाशोकपुन्नागबकुलोद्दालकाशिनीम् ॥ २१ ॥
स रामो विविधान्वृक्षान्सरांसि विविधानि च ॥ पश्यन्कामाभिसंतप्तो जगाम परमं ह्रदम् ॥ २२ ॥
पुष्पितोपवनोपेतां सालचम्पकशोभिताम् ॥ षट्पदौघसमाविष्टां श्रीमतीमतुलप्रभाम् ॥ २३ ॥
स्फटिको[11]पमतोयाढ्यां श्लक्ष्णवालुकसंतताम् ॥ स तां दृष्ट्वा पुनः पम्पां पद्मसौगन्धिकैर्युताम् ॥
इत्युवाच [12]तदा वाक्यं लक्ष्मणं [13]सत्यविक्रमः ॥ २४ ॥
[14]अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ॥ ऋश्यमूक इति ख्यातः [15]पुण्यः पुष्पितपादपः ॥ २५ ॥
[16]हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ॥ अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ॥ २६ ॥
सुग्रीव[17]मभिगच्छ त्वं वानरेन्द्रं नरर्षभ ॥ [18]इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ॥ २७ ॥
राज्यभ्रष्टेन [19]दीनेन तस्यामासक्तचेतसा ॥ कथं मया विना [20]शक्यं सीतां लक्ष्मण जीवितुम् ॥ २८ ॥
इत्येवमुक्त्वा मदनाभिपीडितः स लक्ष्मणं वाक्य[21]मनन्यचेतसम् ॥
विवेश पम्पां नलिनीं [22]मनोहरां रघूत्तमः शोकविषादयन्त्रितः ॥ २९ ॥

---

सन्तौ । तद्वनं जग्मतुरिति संबन्धः । अतो न वनशब्दद्वयदोषः ॥ १५—२० ॥ समीपतःपम्पादर्शनमाह—स ददर्शेति ॥ २१ ॥ अथ पम्पाप्राप्तिमाह—स राम इति । परमंह्रदं पम्पाख्यं सरः ॥ २२ ॥ प्राप्त्यनन्तरं पम्पां दृष्ट्वा लक्ष्मणं प्रत्याह—पुष्पितेत्यादिसार्धश्लोकद्वयं । सालाः सर्जकवृक्षाः । चम्पकाः चाम्पेयवृक्षाः ॥ २३—२४ ॥ पूर्वोक्तः कबन्धेनेति शेषः ॥ २५ ॥ हरेः वानरस्य । तस्य प्रसिद्धस्य । तं ऋश्यमूकं ॥ २६ ॥ अभिगच्छेत्यनन्तरमित्युक्त्वेति शेषः । इति वक्ष्यमाणप्रकारेण । सुग्रीवमभिगच्छेत्युक्त्वा लक्ष्मणंपुनरित्युवाचेत्यन्वयः ॥ २७ ॥ राज्यभ्रष्टेन अतएव दीनेन सर्वदैन्यपरिहारार्थं तस्यां सीतायां । आसक्तचेतसा मया सीतांविना कथंजीवितुं शक्यं ॥ २८ ॥ अनन्यचेतसं स्ववाक्यश्रवणेसावधानं । विवेश स्नानायेति शेषः । नलिनीं सरसीं । शोकः दुःखं विषादः तत्कृतःकार्यकरणापाटव-

---

**शि०** अनन्यचेतनः न अन्यस्मिन् सीतातिरिक्तवस्तुनि चेतनंचित्तं यस्यसः । रघूत्तमः सरामः ॥ २९ ॥

**[ पा० ]** १ ख. घ. च. छ. वरैः. २ क.—ङ. झ. ञ. ट. समीक्षमाणः. ३ ख. पुष्पाढ्यांफलपुष्पसमाकुलां. ४ ङ. झ. कोयष्टिभिश्चा. ५ झ. कीचकैः. ख. घ. किंशुकैः. ६ क. ख. घ. च. ञ. विविधैः. ङ. झ. ट. बहुभिः. ७ क. ख. घ.—ट. तद्वनं. ८ च. छ. ज. ट. समाजग्मतुः. ङ. झ. ञ. तत्रजग्मतुः. ९ ङ. झ. ञ. राघवौहि. १० ख. वारिधरां. ११ क. ख. ञ. तोयांतां. १२ ख. ग. झ. ट. पुनर्वाक्यं. १३ ख. च. छ. ज. ट. सत्यविक्रमं. १४ ख. तस्यास्तीरेतु. ग. अस्यास्तुतीरे. १५ क. ख. घ. ङ. चित्रपुष्पितकाननः. ङ. झ. ट. चित्रपुष्पितपादपः. ग. सदापुष्पितपादपः. च. छ. ज. ञ. सदापुष्पितकाननः. १६ क. ख. हरिर्ऋक्ष. १७ ग. मभिगच्छावो. १८ घ. च.—झ. इत्युक्त्वाच. १९ घ. हीनेन. २० क. ख. ग. ङ. ज.—ञ. सीतांशक्यं. २१ ङ. झ. ञ. ट. मनन्यचेतनः. क. मदीनचेतसं. च. छ. ज. मदीनसत्वः. २२ क. घ. च. छ. झ. ञ. ट. मनोरमां.

ततो महद्वर्त्म सुदूरसंक्रमः क्रमेण गत्वा प्रतिकूलधन्वनम् ॥
ददर्श पम्पां शुभदर्शकाननामनेकनानाविधपक्षिजालकाम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां आरण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

श्रीमदारण्यकाण्डपठनश्रवणयोः फलं ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये—
आरण्यकं तु यः काण्डमतिभक्तिसमन्वितः । पठेद्वा शृणुयाद्वापि सोमसायुज्यमाप्नुयात् ॥

इति आरण्यकाण्डः समाप्तः ॥ ३ ॥

---

रूपशरीरावसादः ताभ्यांयन्त्रितः नियमितः । तत्परवशइत्यर्थः ॥ २९ ॥ सर्गार्थसंगृह्णाति—तत इति । सुदूरं संक्रमः गमनं यस्य स तथा दूरादागत इत्यर्थः। प्रतिकूलधन्वनं पथिकजनप्रतिकूलभूतमरुकान्तारंकबन्धवनमित्यर्थः । क्रमेण अनेकविघ्ननिवृत्तिपूर्वकंगत्वा शुभः शोभनः दर्शः दर्शनंयस्य तादृशं काननं यस्यास्तां । अनेके नानाजातीयाः बह्वो वा नानाविधाः नानासंस्थानाःपक्षिणः शुकशारिकाकोकिलप्रभृतयः तेषांजालकानि समूहाः यस्यां तां । यद्वा अनेकानि नानाविधपक्षिजालकानि यस्यां तां । काननद्वारापक्षिजालवत्त्वं । तादृशीं पम्पां ददर्श । अस्मिन्सर्गे त्रिंशच्छ्लोकाः। न्यूनातिरेकसद्भावस्तु कोशेषु बहुधा दृश्यते ॥३०॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

इत्थं कौशिकदिव्यवंशकलशीवाराशिराकाशशीपादाम्भोजमरन्दभोगरसिकः श्रीमच्छठारेर्गुरोः ॥ आलोक्याखिलदेशिकोत्तमकृतव्याख्यानशैलीश्चिरं व्याचख्यौ तदरण्यकाण्डमखिलं गोविन्दराजाभिधः १

---

ती० फलस्तुतिस्स्कान्दे "आरण्यकाण्डमाहात्म्यं येशृण्वन्ति महीतले । श्रीरामस्यप्रसादेन विष्णुलोकंव्रजन्तिते ॥" इति ॥ ३० ॥ इतिपञ्चसप्ततितमःसर्गः ॥ ७५ ॥

[ पा० ] १ क. ख. घ. छ. द्रुमैश्चदूरसंक्रमं. २ ख.—ङ. झ. ञ. ट. प्रविलोकयन्वनं. क. च. छ. सविलोकयन्वनं. ३ क. नानामृग. ४ क. —ट. संकुलां.

---

इदं आरण्यकाण्डम् कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३४ सन १९१२.

# SRIMAD VĀLMĪKI RĀMĀYAṆA

A CRITICAL EDITION

## With the commentary of Sri Govindarāja

AND

Extracts from many other commentaries and Readings.

---

KISHKINDHĀKĀṆDA 4.



EDITED AND PUBLISHED

BY


**T. R. Krishnacharya,**

Proprietor, Madhva Vilâs Book Depot, Kumbakonam.





*Printed by B. R. Ghanekar for the proprietor,*

*at the "Nirnaya-sagar" Press, 23, Kolbhat Lane,*

**BOMBAY.**

---

1912.

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीयव्याख्यानसमलंकृतम् ।

तथा

तिलकप्रभृत्यनेकापूर्वव्याख्यानोद्धृतैः
गोविन्दराजीयानुक्तापूर्वविषयैश्च संवलितम् ।



## किष्किंधाकाण्डम् ४.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण**

अनेकेषां विदुषां साहाय्येन नानादेशीयकोशानुसारेण

संशोध्य

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३४ परिधाविनामसंवत्सरे ।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

## श्रीमद्गोविन्दराजीयव्याख्यासमलंकृतम् ।

## किष्किन्धाकाण्डम् ४

श्रीरामचन्द्राय नमः ॥

### प्रथमः सर्गः ॥ १ ॥

पंपामुपागतेनरामेण लक्ष्मणसंबोधनेन पंपायास्तत्तीरवनादेश्च रामणीयकानुवर्णनपूर्वकमुद्दीपनसामग्रीसमुद्दीपितशोकतया सीतानुशोचनेनबहुधापरिदेवनम् ॥ १ ॥ सचिवैस्साकमृश्यमूकवासिनासुग्रीवेण पंपापरिसरचारिणोरामलक्ष्मणयोर्दर्शनम् ॥ २ ॥

**स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् ॥ रामः सौमित्रिसहितो[1] विललापाकुलेन्द्रियः ॥ १ ॥**

॥ श्रीरामचन्द्रायनमः ॥ काहं मन्दमतिर्गभीरमधुरं रामायणं तत्कच व्याख्यानेऽस्य परिभ्रमन्नहमहो हासास्पदं धीमताम् । को भारोऽत्र मम स्वयं कुलगुरुः कोदण्डपाणिः कृपाकूपारो रचयत्यदः सपदि मज्जिह्वाग्रसिंहासनः ॥ श्रीरामायणराजस्य समर्प्य मणिमेखलाम् । सारोद्धारमिमं हारमर्पयिष्यामि संप्रति ॥ एवं पूर्वस्मिन्काण्डे दीनजनसंरक्षणरूपो धर्मोऽनुष्ठापितः । अथ किष्किन्धाकाण्डे मित्रसंरक्षणरूपो धर्मोऽनुष्ठाप्यते । तथा पूर्वस्मिन्काण्डे मोक्षप्रदत्वरूपं परतत्त्वचिह्नमुपदर्शितं । अत्रासंख्येयकल्याणगुणाकरत्वं प्रतिपाद्यते । वस्तुतस्तु प्रथमेकाण्डे श्रीमत्त्वं श्रीमत्पदोदीरितमुक्तं । द्वितीये सर्वजनव्यामोहविषयत्वोक्त्या नारायणशब्दार्थः । तृतीये पञ्चवटीवासपर्यन्तवृत्तान्तेन मुनिजनकृतकैङ्कर्योक्त्या चतुर्थ्यर्थ उक्तः । खरादिवधवृत्तान्तेन नमःशब्दार्थउक्तः । अथ मारीचदर्शनवृत्तान्तमारभ्य चेतनोज्जीवनप्रकारःप्रदर्श्यते । तत्र मारीचदर्शनवृत्तान्तेन भगवन्नित्यानुभवयोग्यस्य चेतनस्याप्राप्तविषयप्रावण्यं । तेन रावणरूपमहामोहाक्रमणं । जटायुव्यापारेण रावणानिवृत्तिकथनात् केवलकर्मणा संसारस्यानिवर्त्यत्वम् । लङ्काप्रवेशेन सांसारिकशरीरप्रवेशः । एकाक्ष्येककर्णीप्रभृति व्यापारैस्तापत्रयाभिहतिः । रामान्वेषणेन भगवतश्चेतनोज्जीवनोपायचिन्तनं चोक्तमारण्यकाण्डे । अथाचार्यमुखेन चेतनस्य स्वविषयभक्त्युत्पादनकृते तदन्वेषणमुच्यते किष्किन्धाकाण्डे ॥ तत्र प्रथमे सर्गे नित्यकैङ्कर्यपरनित्यसूरिदर्शनेन एतत्तुल्यभोगस्य प्राप्ताजीववर्गः किमिति न मां प्राप्त इति भगवतः क्लेशातिशयं दर्शयति । स

**तनि०** पद्मेतिसीतायामुखानुस्मरणं । उत्पलेतिनेत्रानुस्मरणं । झषेतिनेत्रचाञ्चल्यानुस्मरणं । सौमित्रेइतितस्यदुःखाविष्करणपात्रत्वंचव्यज्यते ॥ **ती०** सः विराधखरत्रिशिरोदूषणकबन्धादीनामयत्नसंहारप्रसिद्धपराक्रमयुक्तःश्रीरामः । तां चिकीर्षितरावणवधोपयोगिसुग्रीवाधिष्ठितऋश्यमूकसमीपवर्तिनीं । पुष्करिणीं पंपां । आकुलेन्द्रियः पुष्करिणीदर्शनजनितसीताविरहशोकातिशयेनक्षुभितसर्वेन्द्रियस्सन् विललाप परिदेवयामास ॥ **टीका०** अस्मिन्किष्किन्धाकाण्डेतदेवसुग्रीवसख्यंवक्तुमनाःप्रसङ्गात्पुरुषधौरेयाणामपीष्टजनवियोगिनांकामोद्दीपकदर्शनेनचित्तविभ्रमोभवतीतिसूचनायपंपावर्णनमुखेनरामस्यचित्तविभ्रमंदर्शयितुमुपक्रमते—**सतामिति** ॥ **ति०** पुष्करिणीं पंपानद्यन्तरगतंपंपाख्यं मतङ्गाख्यंवा सरोविशेषः ॥ **सत्य०** यद्वा सतामेवोपभोग्यांपुष्करिणीं ॥ १ ॥

[ पा० ] १ क. ग. सौमित्रिणासार्धं.

**तस्य दृष्ट्वैव तां हर्षादिन्द्रियाणि चकम्पिरे ॥ स कामवशमापन्नः सौमित्रिमिदमब्रवीत् ॥ २ ॥**
**सौमित्रे शोभते पम्पा वैडूर्यविमलोदका ॥ फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः ॥ ३ ॥**
**सौमित्रे पश्य पम्पायाः काननं शुभदर्शनम् ॥ यत्र राजन्ति शैलाभा द्रुमाः सशिखरा इव ॥ ४ ॥**
**मां तु शोकाभिसंतप्तं माधवः पीडयन्निव ॥ भरतस्य च दुःखेन वैदेह्या हरणेन च ॥ ५ ॥**
**शोकार्तस्यापि मे पम्पा शोभते चित्रकानना ॥ व्यवकीर्णा बहुविधैः पुष्पैः शीतोदका शिवा ॥६॥**
**नलिनैरपि संछन्ना ह्यत्यर्थं शुभदर्शना ॥ सर्पव्यालानुचरिता मृगद्विजसमाकुला ॥ ७ ॥**
**अधिकं प्रतिभात्येतन्नीलपीतं तु शाद्वलम् ॥ द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् ॥ ८ ॥**

एकाकी न रमेतेति ह्युक्तं । सतामित्यादि । पद्मोत्पलझषैः कमलेन्दीवरमत्स्यैः आकुलां । तां पम्पाख्यां । पुष्करिणीं सरसीं । गत्वा । मुखनयनकटाक्षवत्याः कान्तायाः स्मारकत्वेन व्याकुलेन्द्रियः मोहं प्रसादं च प्राप्तः । स रामः तादृशधैर्यविशिष्टोपि । सौमित्रिसहितः आश्वासकान्तरङ्गपुरुषसहितोऽपि विललाप ॥ १ ॥ आकुलेन्द्रिय इत्येतद्विवृण्वन्नाह—तस्येति ॥ दृष्ट्वा स्थितस्य तस्य । इन्द्रियाणि हर्षाच्चकम्पिरे च्युतानीत्यर्थः ॥ २ ॥ प्रलापप्रकारमाह—सौमित्रे इत्यादिना ॥ अनेन भक्तिद्रुतहृदयस्तत्सूचकमुखप्रसादः सपरिकरः पुरुष उच्यते ॥ ३ ॥ यत्र कानने । सशिखरा इव उन्नताग्रशाखाभिः सश्रृङ्गा इव स्थिताः । अतएव शैलाभाः । अनेन भगवद्दयारसोपजीविन आचार्याः तदुपजीविनोऽन्तेवासिनश्चोच्यन्ते । "अत्र परत्र चापि" इति न्यायेन नित्यविभूतावपि शिष्यवत्त्वं सिद्धं ॥ ४ ॥ भरतस्य दुःखेन नगराद्बहिर्व्रतोपवासादिनियमकृतदुःखेन । वैदेह्याः हरणेन च पूर्वमेव संतप्तं मां । माधवो वसन्तः । तु विशेषेण पीडयन्निवभवतीत्यर्थः । वस्तुतः पीडाभावादिवशब्दः । अनेन संसारतो जीवस्य दुःखेन दुःखितत्वमुक्तं ॥ ५ ॥ सर्वेषुमङ्गक्तेषु सुखं वसत्सु किमर्थमेते संसारिणः क्लिश्यन्तीत्यभिप्रायेणाह—शोकार्तस्येत्यादिना ॥ शोकार्तस्यापि मे मयि शोकार्तेपि । शोभते । व्यर्थेयं शोभेति भावः ॥ ६ ॥ अपिशब्देन कुमुदादिकं समुच्चीयते । व्यालोऽजगरः । सर्पव्याला एवानुचराः ते अस्य संजाता इति सर्पव्यालानुचरिता । सर्पव्यालानुचरितत्वेपि नलिनसंछन्नत्वादत्यर्थं शुभदर्शना भवतीत्यर्थः । अनेन ज्ञानिनो यःकश्चिद्दोषोऽपि नतस्यहेयतापादक इत्युक्तं । "तेषां तेजोविशेषेण प्रत्यवायो न विद्यते" इति स्मृतेः ॥७॥ एतदिति परिसरप्रदेशमङ्गुल्या निर्दिशति । नीलपीतमिति । मयूरकण्ठवर्ण इत्युच्यते । परिस्तोमैः कुथैः ।

**ति०** चकंपिरे उद्रिक्तविकाराणीवाभूवन् । कामवशमापन्नइव ॥ **शि०** हर्षात् सीतावयवसदृशपङ्कजादिदर्शनजनितप्रमोदात् । इन्द्रियाणि चकंपिरे चञ्चलतांप्रापुः । अतएव कामवशं सीतादर्शनविषयकातीच्छाहेतुकतदन्वेषणजनितविविधचेष्टोपलक्षितशोभाविशेषं ॥ २ ॥ **ति०** वैडूर्यवत् तत्प्रभावत् निर्मलोदका । पंपा तदाख्यसरोवरावच्छिन्नापंपानदी । तज्जलस्यौपाधिकश्यामलप्रतिभासाद्वैडूर्यप्रभासादृश्यं । उपाधिमाह—**फुल्लेति** । द्रुमादिच्छाययातथाभानं ॥ ३ ॥ **ति०** पंपायाःकाननं तत्परिसरवर्तिकाननं । यत्र कानने । सशिखराइव उन्नताग्रशाखाभिःसश्रृङ्गाइवद्रुमाः शैलावा शैलाइव राजन्ति ॥ **स०** शैलानां प्रत्यन्तपर्वतानां आभायैस्तेशैलाभाः महापर्वताः । सशिखराः महापर्वतवद्विद्यमानाः ॥ ४ ॥ **रामानु०** भरतस्यदुःखेन प्रार्थनाभङ्गजनितभरतसंबन्धिदुःखेन । माधवः पीडयन्निव वर्ततइतिशेषः । इवशब्दोवाक्यालङ्कारे । आधयः पीडयन्तिवैइतिपाठे वक्ष्यमाणवसन्तवर्णनस्वारस्यंनास्ति ॥ **स०** भरतस्यचदुःखेन तद्वियोगजनितेन ॥ **ति०** शोकाभिसंतप्तं राज्यभ्रंशसीतावियोगादिनाशोकतप्तं । आधयःपीडयन्तीत्युक्तं । तानाधीनाह—**भरतस्येति** । दुःखेन जटावल्कलादिदुःखस्मरणेन ॥ **शि०** भरतस्यदुःखेन मद्वियोगजनितभरतक्लेशस्मरणेन ॥ ५ ॥ पंपा शोकार्तस्यापिमेशोभते । एतेन सीतावयवसदृशकमलादिदर्शनेनसीतैवदृश्यत इतिस्वसंभावनासूचिता ॥ **रामानु०** शोभते अतिरमणीयतयाहृदयङ्गमाभवतीत्यर्थः ॥ ६ ॥ **ति०** व्यालाः श्वापदाः ॥ **स०** व्यालाः वनगजाः सर्पाश्च । सर्पन्तोव्यालाइतिवा । **ती०** सर्पाः बहुफणाः । तदन्ये व्यालाः ॥ ७ ॥ **ति०** द्रुमाणामुच्छ्रितैरितिपाठे उच्छ्रितगन्धैः । यद्वा परिस्तोमैः परिस्तोमभूतैः राशीभूतैरिवस्थितैःपुष्पैः अर्पितंयुक्तं ॥ **शि०** विविधैः पुष्पैः अर्पितं

[ पा० ] १ च. ज. तस्यदृष्टवतो. छ. झ. तत्रदृष्ट्वैव. २ ङ. च. छ. झ. ट. शैलावा. ३ घ. मांहि. ४ क. ख. ग. ङ.—ट. व्याधयःपीडयन्तिवै. ५ ख. शोकेन. ६ ख. प्रविकीर्णा. ७ ङ. शीतोदकैः. ८ ङ. च. ज. ञ. संकीर्णा. ९ क. ङ. च. ज. ञ. ह्यत्यन्तशुभ. झ. ट. ह्यत्यर्थशुभ. ग. अत्यन्तंशुभ. १० क. ग. ङ.—ज. ञ. ट. प्रविभात्येतत्.

पुष्पभारसमृद्धानि शिखराणि समन्ततः ॥ लताभिः पुष्पिताग्राभिरुपगूढानि सर्वतः ॥ ९ ॥
सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः ॥ गन्धवान्सुरभिर्मासो जातपुष्पफलद्रुमः ॥ १० ॥
पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम् ॥ सृजतां पुष्पवर्षाणि [1]तोयं तोयमुचामिव ॥ ११ ॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ॥ वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ १२ ॥
पतितैः पतमानैश्च पादपस्थैश्च मारुतः ॥ कुसुमैः पश्य सौमित्रे [2]क्रीडन्निव समन्ततः ॥ १३ ॥
विक्षिपन्विविधाः शाखा [3]नगानां [4]कुसुमोत्कचाः ॥ मारुतश्चलितस्थानैः षट्पदैरनुगीयते ॥ १४ ॥
मत्तकोकिलसन्नादैर्नर्तयन्निव पादपान् ॥ शैलकन्दरनिष्क्रान्तः [5]प्रगीत इव चानिलः ॥ १५ ॥
तेन विक्षिपताऽत्यर्थं पवनेन समन्ततः ॥ अमी संसक्तशाखाग्रा ग्रथिता इव पादपाः ॥ १६ ॥
[6]स एष सुखसंस्पर्शो वाति चन्दनशीतलः ॥ गन्धम[7]भ्यावहन्पुण्यं श्रमापनयनोऽनिलः ॥ १७ ॥

"परिस्तोमःकुथोद्वयोः" इत्यमरः । अनेन नानागुरुमुखलब्धज्ञानतया भगवद्वासयोग्यः पुरुष उच्यते ॥ ८ ॥ शिखराणि वृक्षाग्राणि । समन्ततः सर्वत्रप्रदेशे । आमूलाग्रं उपगूढानि शोभन्तइतिशेषः । अनेन गार्हस्थ्येऽपि निरवधिकबोधा उच्यन्ते ॥ ९ ॥ सुखेति अनेन जनकादिवदैश्वर्ये सत्यपि भगवज्ज्ञानरत उच्यते ॥१०॥ तोयं सृजतां तोयमुचां रूपाणीवेति पूर्णोपमा। अनेन परोपदेशप्रवृत्ता आचार्या उच्यन्ते॥११॥ प्रस्तरेषु पाषाणेषु । गां भूमिं प्रस्तरभूमिमित्यर्थः । अनेन कठिनहृदयेष्वपि दयावशात् ज्ञानवर्षिणउच्यन्ते ॥ १२ ॥ पतमानैः पतद्भिः । अनेन सर्वगुरुप्रेरणैकलीलःसर्वान्तर्याम्युच्यते ॥ १३ ॥ कुसुमोत्कचाः कुसुमोत्कटाः । विक्षिपन् कम्पयन् । मारुतः चलितस्थानैः स्वस्थानकुसुमोच्चालितैः । षट्पदैः अनुगीयते । अनेन "ज्ञानीत्वात्मैवमेमतं" इत्यात्मभूतज्ञानिनां भक्तिवृद्धये भगवति भुवमवतीर्णे "इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते" इत्युक्तरीत्या तमनुगच्छन्भक्तलोक उच्यते ॥ १४ ॥ मत्तकोकिलसन्नादैः मुखवाद्यस्थानीयैः । पादपान्नर्तयन् । शैलकन्दरनिष्क्रान्ततया तन्निष्क्रमणध्वनियुक्ततया । प्रगीतइव गातुमुपक्रान्त इव । "आदिकर्मणि क्तःकर्तरिच" इति कर्तरि निष्ठा । यद्वा पादपान् नर्तयन् नर्तयितुमिव । "लक्षणहेत्वोः—" इतिशतृप्रत्ययः । मत्तकोकिलसन्नादैः प्रगीतः प्रहृष्टगीतः सन् । शैलकन्दरात् नैपथ्यस्थानान्निष्क्रान्तः । अनेन वेदप्रवर्तनमुखेन लोकस्य भक्त्युत्पादनाय वैकुण्ठादवतीर्णो भगवानित्युच्यते ॥ १५ ॥ विक्षिपता विविधं प्रेरयता । पवनेन । अत्यर्थं समन्ततः संसक्तशाखाग्रा अमी पादपाः ग्रथिताः मालावन्निबद्धाइवभान्ति । अनेन भगवत्कृपया परस्परमनुरक्ताभागवताउच्यन्ते ॥ १६ ॥ मन्दमारुतं वर्णयति —स एष इति ॥ स्पार्शनप्रत्यक्षत्वादेष इत्युक्तिः ।

युक्तं । अतएवनीलपीतं एतत् शाद्वलं अधिकमेवप्रविभाति । इवएवार्थे ॥ ८ ॥ **स०** उपगूढानीत्यनेन स्वस्यसीतालिङ्गनजसुखाभावंसूचयति ॥ ९ ॥ **ति०** अयंकालः वसन्तः । प्रचुरमन्मथः कामोद्दीपकः । अतएव गन्धवान् गर्ववान् । "गन्धोगन्धकआमोदेलेशेसंबन्धगर्वयोः" इति । सुरभिर्मासः मधुमासः । जातानिपुष्पफलानियत्रतादृग्द्रुमः ॥ **स०** प्रचुरः उद्दीपितः मन्मथोयस्मिन्सः ॥ **शि०** अयंमासः चैत्रइत्यर्थः । कालः वियुक्तानांचित्तविक्षेपहेतुः अस्तीतिशेषः । क्षेपणार्थककलधातुप्रकृतिकणिजन्तप्रकृतिकोच् ॥ १० ॥ **ति०** प्रस्तरेषु समशिलातलेषु ॥ १२ ॥ **शि०** पश्य "पश्यमृगोधावति" इतिवत्प्रयोगः ॥ १३ ॥ **रामानु०** षट्पदैरिवनीयतइतिपाठः । नीयतइवपुष्परसोत्कण्ठयास्तूयतइव । अनुगीयतइतिपाठे अनुसृत्य गीयतइत्यर्थः ॥ **कतक०** कुसुमोत्कचाइतिपाठे कुसुमैरुद्भूतकचाः संजातकेशाइवेत्यर्थः । **स०** चलितस्थानैः वायुवेगेनशाखादिषुइतस्ततोगतेषुसत्सुचलितस्थानैःभ्रमरैः अनुगीयतइवदृश्यते ॥ **शि०** शाखाः विक्षिपन्चालयन्मारुतः चलितस्थानैः कुसुमेभ्यः कुसुमान्तराणिप्राप्तैः षट्पदैःअनुगीयते गानेनप्रशस्यतइवेत्यर्थः ॥ १४ ॥ **रामानु०** अत्रवायोर्नर्तकगायकसाधर्म्यमुच्यते । नर्तयितुंमुखवाद्यस्थानीयैर्मत्तकोकिलसंनादैः पादपान्नर्तयन्निव ॥ **श०** प्रगीयते गानंकरोति ॥ **ति०** अत्रवायोर्गानकर्तृत्वेननर्तकाचार्यसाधर्म्यमुच्यते ॥ १५ ॥ **टीका०** विक्षिपता द्रुमाग्राणीतिशेषः ॥ १६ ॥ **रामानु०** पूर्वश्लोकेविक्षिपतेतिपठितं वायोस्तीव्र-

**[ पा० ]** १ क. ग. छ. झ. ट. वर्षं. २ क. ग. ङ.—ट. क्रीडतीव. ३ क. ग. द्रुमाणां. ४ ङ. छ. ट. कुसुमोत्कटाः. च. कुसुमोत्कराः. ५ ट. प्रगीयतइवानिलः. ६ झ. ञ. ट. सएव. ७ ख. ग. ङ.—ट. मभ्यवहन्पुण्यं.

अमी पवननिक्षिप्ता विनदन्तीव पादपाः ॥ षट्पदैरनुकूजन्तो वनेषु मधुगन्धिषु ॥ १८ ॥
गिरिप्रस्थेषु रम्येषु पुष्पवद्भिर्मनोरमैः ॥ संसक्तशिखराः शैला विराजन्ते महाद्रुमैः ॥ १९ ॥
पुष्पसंछन्नशिखरा मारुतोत्क्षेपचञ्चलाः ॥ अमी मधुकरोत्तंसाः प्रगीता इव पादपाः ॥ २० ॥
पुष्पिताग्रांस्तु पश्येमान्कर्णिकारान्समन्ततः ॥ हाटकप्रतिसंछन्नान्नरान्पीताम्बरानिव ॥ २१ ॥
अयं वसन्तः सौमित्रे नानाविहगनादितः ॥ सीतया विप्रहीणस्य शोकसंदीपनो मम ॥ २२ ॥
मां हि शोकसमाक्रान्तं सन्तापयति मन्मथः ॥ हृष्टः प्रवदमानश्च मामाह्वयति कोकिलः ॥ २३ ॥
एष नत्यूहको हृष्टो रम्ये मां वननिर्झरे ॥ प्रणदन्मन्मथाविष्टं शोचयिष्यति लक्ष्मण ॥ २४ ॥
श्रुत्वैतस्य पुरा शब्दमाश्रमस्था मम प्रिया ॥ मामाहूय प्रमुदिता परमं प्रत्यनन्दत ॥ २५ ॥

---

चन्दनशीतलः मलयगतचन्दनेनशीतलः दक्षिणमारुतइत्यर्थः । चन्दनवच्छीतलोवा । गन्धं पुष्पगन्धं । पुण्यं रम्यं । सुखसंस्पर्श इत्यनेन मान्द्यमुक्तं । एवं शैत्यमान्द्यसौरभ्यवान् । अतएव श्रमापनयनः। अनेन "सर्वगन्धःसर्वरसः—" इत्युक्तस्य भगवतो भक्तेषु सान्निध्यमुक्तं॥१७॥ अमीइति ॥ अनेन भगवदनुभवबलात्कारेण " एतत्सामगायन्नास्ते " इत्युक्तसामगानरसिकाउच्यन्ते ॥ १८ ॥ गिरिप्रस्थेषु निजप्रस्थेष्वित्यर्थः । तदुत्पन्नैर्द्रुमैः संसक्तशिखराः परस्परसंश्लिष्टाग्राः । शैलाभान्ति महान्तः पुष्पराशयइवभान्तीत्यर्थः । अनेन सर्वेषां ज्ञानिनामेककण्ठत्वमुक्तं ॥ १९ ॥ मधुकरा एव उत्तंसाः शेखराणि येषां ते । " पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेपि शेखरे " इत्यमरः । पुष्पावृतशिखोपरिनीलोष्णीषधारिणः सगीतिकंनृत्यन्तइवभान्तीत्यर्थः । अनेन भगवद्भक्त्यानर्तनपरा गम्यन्ते ॥ २० ॥ पुष्पिताग्रान् पुष्पितोपरिप्रदेशान् । अतएव हाटकसंच्छन्नान् पीताम्बरांश्च नरानिवपश्य । पुष्पिताग्राः कर्णिकाराः सुवर्णवस्त्राभरणवन्तइवभान्तीत्यर्थः । अनेन भगवत्सारूप्यं गताउच्यन्ते ॥ २१ ॥ एवं मद्भक्तेषु सर्वेषु मदनुभवतृप्तेषु बद्धा मांदुःखीकुर्वन्तीत्याह—अयमिति ॥ इदानींवसन्तवर्णनेन नगरनिर्गममारभ्य त्रयोदशवत्सरागताइतिगम्यते ॥ २२ ॥ एवं वासन्तपुष्पसमृद्धिं वर्णयित्वा तथैवोद्दीपनभूतपक्षिरवानह—मामित्यादिना ॥ पूर्वार्धं स्पष्टं । मां शोकिनंमां । हृष्टः कोकिलः प्रवदमानः प्रवदन् विजयघोषं कुर्वन्सन् । आह्वयति स्पर्धतइवेतिगम्योत्प्रेक्षा । ज्ञानैकवत्सलं मामविज्ञाय केवलं कर्मठा मांस्पर्धन्तइतिभावः ॥ २३ ॥ नत्यूहकः कुक्कुटभेदः । वननिर्झरे प्रणदन्नित्यन्वयः । अनेन केवलजपपराउच्यन्ते। ज्ञानभक्तयोरेव भगवतः सद्यःप्रीत्यावहत्वात् साधनान्तरपरो नातिप्रिय इतिरहस्यं । " ज्ञानी त्वात्मैव मे मतं" "भक्तिक्रीतो जनार्दनः" इत्यादिवचनात् ॥ २४ ॥ किमयं सर्वदैत्थं शोकावहः नेत्यह—श्रुत्वेति ॥ श्रुत्वा प्रमुदिता प्रिया

---

गतिलंनिवारयति—सएषइति । अचक्षुर्विषयेत्वनिले एषइतिनिर्देशस्तदानींतनानांसान्द्रपरागदर्शनात् ॥ १७ ॥ **रामानु०** गिरिप्रस्थेष्विति । अत्राविवक्षितसंबन्धप्रस्थेष्वित्यर्थः ॥ तत्रोत्पन्नैर्महाद्रुमैः संसक्तशिखराइतिसंबन्धः । अनेनद्रुमाणामौन्नत्यंसूचितं ॥ १९ ॥ **टीका०** हाटकप्रतिसंछन्नाः अत्रहाटकशब्देनतन्मयान्याभरणानि ॥ **वि०** हाटकसंछन्नान् पीतांबरांश्चनरानिवपश्य । पुष्पिताग्राःकर्णिकाराः सुवर्णवस्त्राभरणाइवभान्तीत्यर्थः ॥ २१ ॥ **ति०** हृष्टंयथातथाप्रवदमानः समाह्वयति स्पर्धयेवेत्यर्थः ॥ **शि०** शोकसमाक्रान्तंमांमन्मथः मन्निष्ठमदापहारित्वंसंतापयति सीतापहर्तृविज्ञानमन्तराऽवस्थितिंनलभतइत्यर्थः ॥ हृष्टंयथाभवतितथाप्रवदमानःकोकिलः समाह्वयति प्रिययासंयोक्तुंप्रेरयतीवेत्यर्थः॥२३॥ **ती०** नत्यूहः जलकुक्कुटः ॥ **ति०** हृष्टः कामावेशेन ॥ **शि०** हृष्टएषदात्यूहकः जलकुक्कुटः । प्रणदन्सन् मन्मथाविष्टं मदापहारकत्वविशिष्टंमां शोषयिष्यति प्रियापहारिणोविशेषज्ञानाभावात्तन्मदापहरणस्याशक्यतयाशोकएवतिष्ठतीत्यर्थः ॥ २४ ॥ **ति०** मामाहूय प्रदर्शनार्थमितिशेषः ॥ २५ ॥

[ **पा०** ] १ क.—ट. विक्षिप्ता. २ च. छ. ज. विचरन्तीव. ३ क. ग. छ—ट. रनुकूजद्भिः. ४ ख. संरूढैः. ५ ग.—ट. विराजन्ति. ६ क. ख. छ. झ. ट. सुपुष्पितांस्तुपश्यैतान्. घ. ङ. च. ज. ञ. सुपुष्पितांस्तु. ७ क. ग. कारानेकशः. ८ ङ. छ.—झ. ञ. ट. हृष्टं. ९ घ. प्रयतमानश्च. १० क. छ. ज. ञ. ट. समाह्वयति.

एवं विचि[1]त्राः पतगा नानारावविराविणः ॥ वृक्षगुल्मलताः पश्य संपतन्ति ततस्ततः ॥ २६ ॥
विमिश्रा वि[2]हगाः पुंभिरात्मव्यूहाभिन[3]न्दिताः ॥ भृ[4]ङ्गराजप्रमुदिताः सौमित्रे म[5]धुरस्वराः ॥ २७ ॥
[ अ[6]स्याः कूले प्रमुदिताः संघशः शकुनास्त्विह ॥ ] न[7]त्यूहरुतविक्रन्दैः पुंस्कोकिलरुतैरपि ॥
स्वनन्ति पादपाश्चेमे ममानङ्गप्रदी[8]पनाः ॥ २८ ॥
अशोकस्तबकाङ्गारः षट्पदस्वननिःस्वनः ॥ मां हि पल्लवताम्रार्चिर्वसन्ताग्निः प्रधक्ष्यति ॥ २९ ॥
न हि तां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम् ॥ अपश्यतो मे सौमित्रे जी[9]विते ऽस्ति प्रयोजनम् ॥ ३० ॥
अयं हि द[10]यितस्तस्याः कालो रुचिरकाननः ॥ कोकिलाकुलसीमान्तो दयिताया ममानघ ॥ ३१ ॥
मन्मथायाससंभूतो वसन्तगुणवर्धितः ॥ अयं मां धक्ष्यति क्षिप्रं शो[11]काग्निर्नचिरादिव ॥ ३२ ॥
अपश्यतस्तां द[12]यितां पश्यतो रु[13]चिरद्रुमान् ॥ ममायमात्मप्रभवो भूयस्त्वमुपयास्यति ॥ ३३ ॥
अदृश्यमाना वैदेही शोकं व[14]र्धयते मम ॥ दृश्यमानो वसन्तश्च स्वेदसंसर्गदूषकः ॥ ३४ ॥
[15]मां ह्यद्य मृगशावाक्षी चिन्ताशोकबलात्कृतम् ॥ सन्तापयति सौमित्रे क्रू[16]रश्चैत्रो वनानिलः ॥ ३५ ॥

मामाहूय परमं प्रकामं प्रत्यनन्दत । नत्यूहरवाकर्ण-
नोद्दीपिता मामाहूय विविधं क्रीडारसमनुभूतवतीत्य-
र्थः । अनन्यप्रयोजनस्य जपः प्रीत्यावहइतिभावः
॥ २५—२६ ॥ विहगाः स्त्रियः । पुंभिः पुंविहगैः ।
विमिश्राः आश्लिष्टाःसत्यः । आत्मव्यूहाभिनन्दिताः
अनुरूपेण कान्तेन सहितासीत्येवंसजातीयैःश्लाघिताः ।
भृङ्गराजप्रमुदिताः भृङ्गराजझङ्कारश्रवणसन्तुष्टाः ।
तदुद्दीपनेन मधुरस्वराः रम्यरतिकूजिताः । वर्तन्ते
एतान्पश्येति शेषः । अनेनाचार्यपरतन्त्राःसामगान-
परा उच्यन्ते॥२७॥ विक्रन्दैः शब्दैः । स्वनन्ति स्वन-
न्तीव । अनेन नानाविधभगवन्नामकीर्तनपराः
श्लाघ्यन्ते ॥ २८ ॥ षट्पदस्वननिःस्वन इति । अग्नेः
निःस्वनवत्त्वं ज्वलनावस्थायां दृष्टं । अनेन स्वप्रेमज-
नकभक्तियुक्ता उच्यन्ते ॥ २९ ॥ नहीति । एतेष्वेवं
मत्प्रेमपरतन्त्रेषु संसारिचेतनो दुःखमनुभवतीत्येत-
न्ममासह्यमिति भावः ॥ ३० ॥ अयं कालो मम
दयितायाः रुचिरोहि प्रियतरोहीत्यर्थः । यदीहेदा-
नींदयितास्यात्तदातीव तुष्येदितिभावः । कोकिलाकु-
लसीमान्तः कोकिलरवाकुलचतुःसीम इत्यर्थः ॥ ३१ ॥
मन्मथायाससंभूतः मदनपीडाजनितः । वसन्तस्य
गुणेन रामणीयकेन वर्धितः । क्षिप्रं धक्ष्यति नतुचि-
रात् । इवशब्दोवाक्यालंकारे ॥ ३२ ॥ आत्मप्रभवः
मन्मथः । भूयस्त्वं प्रवृद्धत्वं ॥ ३३ ॥ दृश्यमानः
पुष्पादिद्वारा । स्वेदसंसर्गदूषकः मलयमारुतद्वारास्वे-
दसंबन्धनिवर्तकः । रतिश्रान्तिहरइत्यर्थः ॥३४॥ क्रूरः
मन्मथोद्दीपकत्वात् । अत्र चकारोद्रष्टव्यः ॥ ३५ ॥

**स०** वृक्षगुल्मलताइतिद्वितीयाबहुवचनं ॥ २६ ॥ **ति०** यद्वा भृङ्गराजसंबन्धेनप्रमुदिताःमधुरस्वराभृङ्ग्यश्चात्रसन्तीतिशेषः ॥ २७॥ **ति०** दात्यूहानांरतिसंबन्धिनोविक्रन्दाः दात्यूहरतिविक्रन्दास्तैः । **शि०** दात्यूहानां रतिविक्रन्दैः प्रीत्युत्पादकशब्दविशेषैः ॥ **ति०** दात्यूहरुतविक्रन्दैः दात्यूहगदितविरावैः ॥ २८ ॥ **ती०** नचिरादिवेत्यस्योत्तरश्लोकेनसंबन्धः ॥ **शि०** मन्मथायाससंभूतः मन्मथेनस्वनिष्ठमदमथनसामर्थ्यनिरोधेनयआयासः तन्निरोधजनितश्रमः तस्मात्संभूतः ॥ ३२ ॥ **शि०** मम आत्मप्रभवःमनोजनितः । चिन्तेत्यर्थः ॥ ३३ ॥ **ति०** स्वेदसंसर्गः कामविकारजः तेनदूषयति मलिनीकरोतितादृशः । यद्वा तंदूषयति नाशयति । मलयानिलसंबन्धात्तादृशः ॥ ३४ ॥ **ति०** चिन्ताशोकाभ्यांबलात्कृतं बलात्कृतपीडं ॥ **ती०** चिन्ताशोकबलात्कृतं संततस्मरणाद्दुःखपरवशमित्यर्थः ॥ **शि०** चिन्ताशोकबलात्कृतं चिन्ताशोकबलहेतुकविविधकृतिमन्तं । अविवक्षितकर्मकत्वेनाकर्मकत्वात्कर्तरिनिष्ठा ॥ ३५ ॥

**[ पा० ]** १ क. च. छ. ज. ञ. विचित्राविहगाः. २ च. विहगैः. ३ च. नादिताः. ४ भृङ्गराजप्रमुदिताइत्यर्धात्पूर्वं. कं. ग. पाठयोः. विचित्राविहगामत्ताःप्रवदन्तिमनस्सुखम्. इत्यर्धंदृश्यते. ५ च. ज. ञ. मधुरस्वनाः. ६ इदमर्धं घ.—छ. झ. ट. पाठेषुदृश्यते. ७ ङ. ज.—ट. दात्यूहरति. ८ ङ.—ट. प्रदीपकाः. ९ च. ज. ञ. जीवितंनिष्प्रयोजनं. १० घ.—झ. ट. रुचिरस्तस्याः. ११ ङ. च. ज. झ. ञ. शोकाग्निरचिरादिव. १२ क. ग. च.—ट. वनितां. १३ ग. घ. ङ. छ.—ट. रुचिरान्द्रुमान. १४ च. छ. ज. ञ. ट. वर्धयतीहमे. १५ क. ग. ङ.—ट. मांहिसा. घ. मांह्यसौ. १६ घ. ङ. छ. ञ. ट. श्चैत्रवनानिलः.

अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः ॥ स्वैः पक्षैः पवनोद्धूतैर्गवाक्षैः स्फाटिकैरिव ॥ ३६ ॥
शिखिनीभिः परिवृतास्त एते मदमूर्च्छिताः ॥ मन्मथाभिपरीतस्य मम मन्मथवर्धनाः ॥ ३७ ॥
पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति ॥ शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु ॥ ३८ ॥
तामेव मनसा रामां मयूरोऽप्युपधावति ॥ वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव ॥ ३९ ॥
मयूरस्य वने नूनं रक्षसा न हृता प्रिया ॥ तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया ॥ ४० ॥
मम त्वयं विना वासः पुष्पमासे सुदुःसहः ॥ ४१ ॥
पश्य लक्ष्मण संरागं तिर्यग्योनिगतेष्वपि ॥ यदेषा शिखिनी कामाद्भर्तारं रमतेऽन्तिके ॥ ४२ ॥
मामप्येवं विशालाक्षी जानकी जातसंभ्रमा ॥ मदनेनाभिवर्तेत यदि नापहृता भवेत् ॥ ४३ ॥
पश्य लक्ष्मण पुष्पाणि निष्फलानि भवन्ति मे ॥ पुष्पभारसमृद्धानां वनानां शिशिरात्यये ॥ ४४ ॥
रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया ॥ निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥ ४५ ॥

ततस्ततः तत्रतत्र प्रदेशे । पवनोद्धूतैः अतएव स्पष्टदृष्टशुभ्रनालजालत्वात् स्फाटिकैर्गवाक्षैरिव स्थितैः । यद्वा स्फाटिकैः स्फटिकप्रधानैः चन्द्रार्कपरम्परायास्तत्तुल्यत्वादितिभावः । अनेन भगवत्कृपाप्रवर्तितविविधकर्मपराउच्यन्ते ॥३६॥ शिखिनीभिः मयूरस्त्रीभिः। परिवृताः अतएव मदमूर्छिताः मदव्याप्ताः । त एते पूर्वश्लोकोक्ता एते शिखिनः। मन्मथाभिपरीतस्य पूर्वमेव मन्मथाभिव्याप्तस्य । मम पुनर्मन्मथवर्धनाः । अन्यरतिदर्शनस्योद्दीपनत्वादिति भावः । सशिष्यभक्तदर्शनं मे सर्वत्रभक्त्युत्पादनव्यामोहंजनयतीत्यर्थः ॥ ३७ ॥ पश्येत्यादिश्लोकद्वयमेकान्वयं । नृत्यन्तं स्वयंलीलारसप्रवृत्तं भर्तारं प्रति मन्मथार्ता रत्यर्थंतमाक्रष्टुकामा । शिखिनी उपनृत्यति । तामेव रामां कान्तां । मनसा उपधावति । समीपमागन्तुमिच्छतीत्यर्थः । उपधावनंचरत्यर्थमितिद्योतयति—वितत्येति। रुतैः रतिकूजितैः । उपलक्षितः । पक्षविस्तारणंचरत्यर्थंव्यापारः । उपहसन्निव प्रसन्नमुख इत्यर्थः । यद्वा कान्ताविरहिणंमामुपहसन्निवेत्युत्प्रेक्षा । अत्र शिष्याचार्ययोरन्योन्यप्रावण्यमुच्यते ॥ ३८—३९ ॥ वने उपभोगयोग्ये देशेरावणः सीतां हृतवान् । नतु नगर इति हार्दो भावः । न हृता अस्यभाग्यवशादिति भावः । तस्मादित्यादि । एतादृशरम्यदेशकालेषु धन्याः कान्ताभिः क्रीडन्तीति भावः ॥ ४० ॥ अमुमेवाशयमुद्घाटयति—मम त्विति ॥ विना सीतयेति शेषः ॥ ४१ ॥ सम्यग्रागः संरागः तं कान्तानुरागमित्यर्थः । तिर्यग्योनिगतेषु तिर्यग्योनिजातेषु । लोके स्त्रियं पुमाननुवर्तते नतु स्त्री पुरुषं । अतोतीवास्याः कामः । अहो वसन्तवैभवइतिभावः ॥ ४२ ॥ विशालाक्षी मदवलोकनविस्फारितेक्षणा । जातसंभ्रमा जातत्वरा । यदि नापहृता भवेत् तदा मामेवाभिवर्तेत । अत्र चापलं नाम संचारीभावः ॥ ४३ ॥ शिशिरात्यये वसन्ते । पुष्पभारसमृद्धानां पुष्पाणि अमितानि पुष्पाणीत्यर्थः । संसारिदुःखं पश्यतो मे ज्ञानिलाभोऽकिंचित्करइव भातीत्यर्थः ॥ ४४ ॥ उक्तमर्थं विशिष्य दर्शयति—रुचिराण्यपीति ॥ अतिश्रिया अत्यन्तकान्त्या । रुचिराण्यपि । अस्मदनुप्रयोजनान्निष्फलानि भवन्ति । निर्भरमकरन्दभरिततया मधुकरसमूहैः समं महीं यान्ति ॥४५ ॥

**रामानु०** पक्षैःबर्हैः । बर्हाणांस्फाटिकगवाक्षसाम्यं नर्तनावस्थायां अन्तरान्तराविततोर्ध्वशुभ्रनालतया ॥ ३६ ॥ **ति०** अनुधावति नृत्यप्रसङ्गेनाग्रेगतां॥३९॥**रामानु०** ममेति अस्यश्लोकस्यमामप्येवमित्येतच्छ्लोकानन्तरावस्थानमुचितं । वनदुर्गवर्णनप्रकरणत्वारस्यात् ॥ **ती०** मयूरस्येतिश्लोकानन्तरंमामप्येवमितिश्लोकः ॥४०॥ **ति०** नन्वेतावान्रागस्तवानुचितस्तत्राह—**पश्येति** । संरागः अतिशयितोरागः ॥ ४२ ॥ **ति०** वन्यानिपुष्पाणि मेसीतावियोगाद्भोगसाधनत्वाभावान्निष्फलानिभवन्ति ॥ ४४ ॥

**[ पा० ]** १ क.—घ. मन्मथाभि. २ छ. झ. ट. सानुनि. ३ क. तरसाकामात्. ४ घ. च. छ. झ. ञ. ट. प्युनुधावति. क. ख. ग. प्यभिधावति. ५ ख. रपहसन्निव. ६ क. च. छ. ज. संयोगं. झ. ट. संरागः. ७ झ. अधुनाशिखिनी कामाद्भर्तारमभिवर्तते. ८ क. ग. घ. च. ज. ञ. ट. द्भर्तारमभिवर्तते. ९ ट. ममाप्येवं. १० च. छ. ज. भवन्तिहि. ११ च. छ. ज. समूहानां.

वदन्ति रावं मुदिताः शकुनाः संघशः कलम् ॥ आह्वयन्त इवान्योन्यं कामोन्मादकरा मम ॥ ४६ ॥
वसन्तो यदि तत्रापि यत्र मे वसति प्रिया ॥ नूनं परवशा सीता साऽपि शोचत्यहं यथा ॥ ४७ ॥
नूनं न तु वसन्तोऽयं देशं स्पृशति यत्र सा ॥ कथं ह्यसितपद्माक्षी वर्तयेत्सा मया विना ॥ ४८ ॥
अथवा वर्तते तत्र वसन्तो यत्र मे प्रिया ॥ किं करिष्यति सुश्रोणी सा तु निर्भर्त्सिता परैः ॥ ४९ ॥
श्यामा पद्मपलाशाक्षी मृदुपूर्वाभिभाषिणी ॥ नूनं वसन्तमासाद्य परित्यक्ष्यति जीवितम् ॥ ५० ॥
दृढं हि हृदये बुद्धिर्मम संप्रति वर्तते ॥ नालं वर्तयितुं सीता साध्वी मद्विरहं गता ॥ ५१ ॥
मयि भावस्तु वैदेह्यास्तत्त्वतो विनिवेशितः ॥ ममापि भावः सीतायां सर्वथा विनिवेशितः ॥ ५२ ॥
एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः ॥ तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ ५३ ॥
सदा सुखमहं मन्ये यं पुरा सह सीतया ॥ मारुतः स विना सीतां शोकं वर्धयते मम ॥ ५४ ॥
तां विना स विहङ्गो यः पक्षी प्रणदितस्तदा ॥ वायसः पादपगतः प्रहृष्टमभिनर्दति ॥ ५५ ॥
एष वै तत्र वैदेह्या विहगः प्रतिहारकः ॥ पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति ॥ ५६ ॥

---

शकुनाः मम कामोन्मादकराःसन्तः अन्योन्यमाह्वयन्त इव । कलं मधुरं । रावं वदन्ति शब्दं कुर्वन्तीत्यर्थः । मम कामोन्मादकरणार्थंसंघीभवितुमन्योन्यमाह्वयन्त इवेत्युत्प्रेक्षा । अनेन स्वदयोत्तम्भकज्ञानिव्यापारउक्तः ॥ ४६ ॥ शोचति शोचेत् ॥ ४७ ॥ गूढदेशप्रापणेन तद्देशे वसन्तप्रसङ्गाभावान्न तस्याः शोकप्रसक्तिरित्याशङ्क्य वसन्ताभावेपि मां विना न जीवितं धारयिष्यतीत्याह—नूनमिति ॥ ४८ ॥ वसन्तप्राप्तिमङ्गीकृत्याह—अथवेति ॥ ४९ ॥ श्यामा यौवनमध्यस्था ॥ ५० ॥ उक्तमर्थं सहेतुकं द्रढयति—दृढं हीति ॥ अस्यान्ते इतिकरणंद्रष्टव्यं । वर्तयितुं जीवितुं । नालं नसमर्था ॥ ५१ ॥ अत्र हेतुमाह—मयीति ॥ भावोऽनुरागः । तत्त्वतः एकतत्त्वतया । सर्वथा "न चास्य माता न पिता न चान्यः स्नेहाद्विशिष्टोऽस्तिमया समो वा" इत्युक्तप्रकारेण । अनेन स्वस्य जीवसंबन्धः स्वाभाविक उक्तः ॥ ५२ ॥ एवं वसन्तोद्दीपनतामुक्त्वा मलयमारुतोद्दीपनतामाह—एष इत्यादिना ॥ पुष्पवहः पुष्पगन्धवहः । अनेन सौरभ्यमुक्तं । सुखस्पर्श इत्यनेन मान्द्यं । हिमावहः हिमवत्त्वावह इति शैत्यं । "तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः" इत्यमरः । तां विचिन्तयतः विरहिण इत्यर्थः।पावकप्रतिमः संतापकरइत्यर्थः॥५३॥ उक्तमर्थं विवृणोति—सदेति ॥ आभ्यां संसारिण्यकिंचित्करी स्वदया स्वस्याप्यसह्येत्युच्यते ॥५४॥ मध्ये यत्किंचिदाश्वसनं दृष्टमनुवदति द्वाभ्यां तदा प्रथमदर्शनकाले। सीताया वियोगपूर्वकाले वा । वायसः पक्षी । विहङ्गः आकाशगतःसन्। यः प्रणदितः परुषं वाशितवान्। सः इदानीं तांविना तद्विरहावस्थायां। पादपगतःसन् प्रहृष्टं यथा तथा अभिनर्दति । पूर्वमाकाशगतःसन् परुषनादेन तद्विश्लेषं सूचितवान् । इदानीं पादपगतःसन् प्रहृष्टनादेनास्याः संश्लेषंसूचयतीत्यर्थः ॥५५॥ एतदेव विवृणोति—एष इति ॥ तत्र तदानीं।

---

**ति॰** अथवावर्तते तत्रवसन्तः तथापिपरैःशत्रुभिःपीडितायतःसा । अतस्तस्यावसन्तःकिंकरिष्यति । परकृतपीडासत्त्वेकामपीडानवकाशादितिभावइतिप्राञ्चः ॥ परेतु तत्रवसन्तोनास्त्येव । तत्सत्त्वेमयाविनासाकथंतत्रतिष्ठेत् । आगतैवस्यादित्यर्थः । तदेवसूचयन्नाह—**अथवेति**। परनिर्भर्त्सनवशान्नायातीत्याशयइत्याहुः ॥४९॥ **रामानु॰** साध्वीविरहंगतेतिचविशेषणद्वयंहेतुगर्भितं ॥ **ति॰** साध्वीसीता मद्विरहंगता संप्राप्ता वसन्तस्यसत्त्वेऽसत्त्वेवासर्वथा वर्तयितुं जीवितुं । नालं नसमर्था ॥ **शि॰** मद्विरहंगता सीता अलंवर्तयितुं शोभनतयास्थातुं । नशक्ष्यतीतिशेषः ॥ ५१ ॥ **कतक॰** पक्षीप्रणदितस्तथेति विहगःप्रीतिकारक-

**[ पा॰ ]** १ छ. झ. ट. नदन्ति. २ च. छ. झ. ञ. ट. कामंशकुनामुदिताः. ३ घ. सर्वशः. ४ ज. ञ. आह्वयन्तीवचान्योन्यं. ५ ङ. ज. ञ. ननूनंतु. ६ क. ग.—ट. वसन्तस्तं. ७ घ. सापि. ङ. च. ज. ञ. साविनिर्भर्त्सिता. ८ ख. पद्मविशालाक्षी. ९ च. छ. झ. झ. ट. मृदुभाषाचमेप्रिया. क. मृदुभाषीचमेप्रिया. ङ. ज. ञ. विनाभूतामयाप्रिया. १० ङ.—ट. संपरिवर्तते. ११ क. ख. घ.—ट. भावोहि. ग. भावोपि. १२ क. सर्वश्चापिनिवेशितः. १३ क. ग.—ट. शोकसंजननोमम. १४ क.—घ. छ.—ट. विनाथविहङ्गोसौ. १५ छ. झ. ट. मभिकूजति. १६ घ. पतिंमांतु.

**पश्य लक्ष्मण सन्नादं वने मदविवर्धनम् ॥ पुष्पिताग्रेषु वृक्षेषु द्विजानामुपकूजताम् ॥ ५७ ॥**
**विक्षिप्तां पवनेनैतामसौ तिलकमञ्जरीम् ॥ षट्पदः सहसाऽभ्येति मदोद्धूतामिव प्रियाम् ॥ ५८ ॥**
**कामिनामयमत्यन्तमशोकः शोकवर्धनः ॥ स्तबकैः पवनोत्क्षिप्तैस्तर्जयन्निव मां स्थितः ॥ ५९ ॥**
**अमी लक्ष्मण दृश्यन्ते चूताः कुसुमशालिनः ॥ विभ्रमोत्सिक्तमनसः साङ्गरागा नरा इव ॥ ६० ॥**
**सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु ॥ किन्नरा नरशार्दूल विचरन्ति ततस्ततः ॥ ६१ ॥**
**इमानि शुभगन्धीनि पश्य लक्ष्मण सर्वशः ॥ नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् ॥ ६२ ॥**
**एषा प्रसन्नसलिला पद्मनीलोत्पलायुता ॥ हंसकारण्डवाकीर्णा पम्पा सौगन्धिकायुता ॥ ६३ ॥**
**जले तरुणसूर्याभैः षट्पदाहतकेसरैः ॥ पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ ६४ ॥**
**चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा ॥ मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः ॥ ६५ ॥**
**पवनाहितवेगाभिरूर्मिभिर्विमलेऽम्भसि ॥ पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ॥ ६६ ॥**

प्रतिहारकः वियोजकःसन्। आभ्यां यादृच्छिकप्रासङ्गिकसुकृतदर्शनमुक्तं ॥५६॥ पश्येति । अनेन परमपदे ज्ञानप्रधाने सामगायिनां नित्यमुक्तानां स्थितिरुक्ता ॥५७॥ पवनेन विक्षिप्तां कम्पितां । प्रियामिव स्थितां तिलकमञ्जरीं षट्पदः भृङ्गोऽभ्येति । अनेन भगवद्याविषयभूतस्योत्तरक्षणे द्वयप्राप्तिर्भवितेत्युच्यते ॥५८॥ कामिनां विरहिणां । शोकवर्धनः दुःखवर्धनस्वभावः । स्वभावतो दुष्टप्रकृतिरित्यर्थः । अशोकः पवनोत्क्षिप्तैः वायुना पत्राणां बहिश्चालितैः । स्तबकैः मां तर्जयन्निव स्थितः । त्वत्संहारार्थमिमे तप्तबाणाः पञ्चबाणेन स्थापिता इति भीषयन्निव स्थित इत्युत्प्रेक्षा । संसारिणमनुज्जीवयन्तं मां ज्ञानिनो लज्जितं कुर्वन्तीत्यर्थः ॥ ५९ ॥ पुनरपि ज्ञानिनां समृद्धिं दर्शयन्वर्णयति—अमी इत्यादिना ॥ कुसुमशालिनः अतएव साङ्गरागाः । विभ्रमोत्सिक्तमनसः विलासगर्वितमनसः । रागिण इति यावत् । नरा इव भान्ति ॥ ६०—६१ ॥ नलिनानि रक्तोत्पलानि । जले तरुणसूर्यवत् प्रतितरङ्गं प्रतिफलितबालसूर्यवत् ॥६२॥ विरजादृष्टयापम्पां वर्णयति—एषेत्यादिभिश्चतुर्भिः॥ "सौगन्धिकंतुकह्लारं" इत्यमरः। शोभत इति शेषः ॥ ६३ ॥ पङ्कजैरभिसंवृतेत्यन्वयः ॥ ६४ ॥ चित्रप्रस्थवनान्तरा चित्रतीरवनपरिधाना । अन्तरं परिधानं ॥ ६५ ॥ पवनाहितवेगाभिः पवनोत्पादितवेगाभिः । ताडयमानानि कशाभिस्ताड्यमानानीव

इतिचप्राचीनःपाठः । असौपक्षी तथा अतिसुखंयथाभवतितथा विहगःसन् आकाशगः । प्रणदितः नादंकृतवान् । अस्यपूर्वमिति शेषः । तत्संयोगकालइतिशेषः । अथेदानींतांविना तद्वियोगकाले । अन्यथेतिशेषः । दुःखनादइत्यर्थः । अथकंचिच्छकुनमाह । पादपगतोवायसः प्रहृष्टंयथाकूजति । एषविहगः एवंनादविशिष्टोविहगोवायसः यत्रसीतातिष्ठतितत्रतस्याः प्रीतिकारकः अतिपीडाभावसूचकः। मांतु मांच । तस्यास्समीपंतत्समीपगमनद्वारं । उपनेष्यति उपस्थापयिष्यतीत्यर्थः॥ **स०** प्रतिहारकः द्वारपालकः । द्वारपालकोयथास्वनाथंप्रतिनेष्यतितथाऽयमपिसीतायास्समीपमुपनेष्यति ॥ ५६ ॥ **रामानु०** संनादंपश्य शब्दंशृण्वित्यर्थः । **शि०** पश्य जानीहि ॥ ५७ ॥ **ति०** मदोद्धतां मदेनस्खलन्तीं ॥ ५८ ॥ **ति०** विचरन्ति किंनरीभिस्सहेतिशेषः । स्वनायिकासहितनायकान्तरदर्शनमुद्दीपनं ॥ ६१ ॥ **शि०** जलेतरुणसूर्यवत् उदयकालिकसूर्यइव । इमानिनलिनानि अरुणकमलानि । प्रकाशन्ते अभूतोपमैषा ॥ **स०** शुभगन्धीनि शुभश्चासौगन्धश्च । सएषामस्तीतिशुभगन्धीनि । यद्वा गन्धोयेषामस्तितानिगन्धीनि । शुभानिचतानिगन्धीनिच । शुभत्वंतु " दीप्तानलार्कद्युतिमप्रमेयं " इत्यत्राप्रमेयत्वंद्युताविवविशेषणेऽन्वेति । प्रथमे "नञानिर्दिष्टमनित्यं"इति द्वितीये"रसादिभ्यश्च"इतिप्रायिकंइतिचएकदेशिनेत्यादिनारूपीघटइत्यादिनाचावसेयं । एतेन उदादिपूर्वकत्वाभावात्कथमित्त्वमितिशङ्कानिरस्ता ॥ ६२ ॥ **ति०** पद्मनीलोत्पलैरासमन्ताद्युता ॥ ६३ ॥ **ति०** षट्पदाहतकेसरैः जलेभ्रमरपातितपुष्पधूलिभिः । अभिसंवृता व्याप्ता । **स०** तरुणसूर्याभैः तरुणसूर्यकाभैः ॥ ६४ ॥ **ति०** चित्रप्रस्थानि चित्रप्रदेशानि वनान्तराणियस्यास्सा ॥ ६५ ॥ **शि०** पवनेन आहताः वेगाःयासांताभिः ॥ ६६ ॥

**[ पा० ]** १ क.—च. ज. ञ. शृणु. २ क. ङ. च. झ. ञ. ट. मवकूजतां. ३ ग. साङ्गरागाङ्गनाइव. ४ ङ.—ट. यतस्ततः. ख. समन्ततः. ५ क. सौगन्धिकान्विता. ६ ङ. च. ज. ञ. चित्रस्थल. ७ क. ख. मातङ्गैर्मृग. ८ क. ख. ग. ङ.—ट. पवनाहृत.

पद्मपत्रविशालाक्षीं सततं पङ्कजप्रियाम्[1] ॥ अपश्यतो मे वैदेहीं जीवितं नाभिरोचते ॥ ६७ ॥
अहो कामस्य वामत्वं यो गतामपि दुर्लभाम् ॥ स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् ॥६८॥
शक्यो धारयितुं कामो भवेदद्यागतो मया ॥ यदि भूयो वसन्तो मां न हन्यात्पुष्पितद्रुमः ॥६९॥
यानि स्म[2] रमणीयानि तया सह भवन्ति मे ॥ तान्येवारमणीयानि जायन्ते मे तया विना ॥ ७० ॥
पद्मकोशपलाशानि द्रष्टुं[3] दृष्टिर्हि मन्यते ॥ सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण ॥ ७१ ॥
पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः ॥ निःश्वास इव सीताया वाति वायुर्मनोहरः ॥ ७२ ॥

॥६६॥ एवं पम्पादर्शनजकामोद्रेकमरत्यवस्थया दर्शयति—पद्मेति। "स एकाकी न रमेत" इतिवद्विरजातीरवासो मे न रोचत इति लक्ष्मणायाभिव्यनक्ति ॥६७॥ वामत्वं वक्रत्वं। गतां दूरगतां। स्मारयिष्यति स्मारयति। कल्याणतरवादिनीं शुभतरवचनशीलां। मृगमाहरेति चरमश्रुतमेव वाक्यमस्य हृदये वर्तते ॥६८॥ अद्यागतः इदानीं वर्तमानः। पुष्पिताः द्रुमाः येन स पुष्पितद्रुमः। सर्वथा कामो दुःसह इत्युच्यते ॥ ६९ ॥ भोग्यस्य वसन्तस्य कुतो बाधकत्वं तत्राह—यानीति ॥ ७० ॥ नेत्रकोशाभ्यां नेत्रदलाभ्यां। सीतानेत्रे स्मारयित्वा सन्तापयन्तीत्यर्थः ॥ ७१ ॥ सर्वप्राणिनां प्राणहेतुर्वायुरेवास्मत्सर्वस्वापहारं कुरुत इत्याह—पद्मकेसरेति ॥ पद्मकेसरसंसृष्टः । धूलीकरणं वायुकार्यं। तथाच सर्वप्राणहेतुरेव सर्वधूलीकरणप्रवृत्तः। सर्वसंहारप्रवृत्त इत्यर्थः। यद्वा पद्माविरहात् पद्मकेसराणि प्रतिकूलानिसन्ति वायोःसाहाय्यंकुर्वन्ति। पादारुन्तुदमेवपङ्कजरजइति स्वजनसहजबाधकं कथंनास्मद्बाधकं। राजसप्रकृतित्वादस्मानपिबाधितुमुपक्रमते। केसरशब्देन तत्स्थरजसोऽत्रविवक्षितत्वात्। किञ्जल्कानामानयनायोगात् । एतन्मूलंकण्टकिसंसर्गः। पद्मकेसरसंसृष्टः। नायं वातः किंतु केसरी। सिंहइत्यपिध्वनिः । यद्वा पद्मकेसरैः संसृष्टः स्वयमेवसंहारक्षमः। तदुपरि ससहायः। यद्वा रूपवान्ह्यसहायशूरः रूपरहितोयंकथं न सहायमपेक्षेत। रूपवान् दृढशरीरइत्यपिध्वनिः। वायुर्बाधकश्चेत्त्वया पूर्वमेवपरिहृत्यवर्तितव्यं तत्राह। वृक्षान्तरविनिःसृतः। दूरे दृष्ट्वापरिहर्तुं शक्यते। वृक्षषण्डे पूर्वमात्मानंसङ्गोप्यस्थित्वाझटितिविनिर्गतः। यद्वा यथाराजकुमारः सौकुमार्येण छायामार्गेणागच्छति तथायमपीत्यर्थः। यद्वा मन्मथतापेन विश्रमाय तरुच्छायमपिनाश्रयितुं क्षमते। यदि तेऽहं बाधकः तर्हि दूरादपसरेत्यत्राह। निःश्वास इवसीतायाः पूर्वपरिचितवदवभासमानतया परिहर्तुमपि नशक्नोमि। यद्वा सीतानिःश्वासतुल्यतया सात्र किं वृक्षमूले निलीना समागच्छतीति चापलातिशयेनान्यत्र न चलितुं शक्नोमि । "सुरभिणि श्वसितेदधतस्तृषं" इति निःश्वासस्य सौरभ्यं कविभिरुक्तं। यद्वा नकेवलमनिलः सपरिकर एवबाधते। किंतु स्मारकतयापिवाति नकदाचिदायाति। सर्वदायाति। सकलमपि काननंसविलासंसंचरति । यद्वा वाति "वा गतिगन्धनयोः" स्वार्जितगन्धेन सर्वान्परवशीकरोति। एतादृशबाधकोपि न यःकश्चिदित्याह। वायुः सर्वोज्जीवनहेतुः। यद्वा "भीषास्माद्वातः पवते" इति मत्तो भीतो मां भर्त्सयति। बाधनप्रकारमाह। मनोहरः आन्तरमपि पदार्थमपहरति। पद्मकेसरसंसृष्ट इत्यनेन शैत्यमुक्तं। वृक्षान्तरविनिःसृतइत्यनेन मांद्यं। निःश्वासइवसीताया इति सौरभ्यं। यद्वा पद्मकेसरसंसृष्टइत्यनेन चोरसमाधिरुच्यते। स्वस्वरूपापरिज्ञानाय भीरुजनभीषणायच भस्मोद्धूलितवदनः समायाति । वृक्षान्तरविनिःसृतः पथिकानांस्वसमीपागमनपर्यन्तं गूढतयास्थित्वा तेषुसमीपमागतेषु सपदिसमुत्तिष्ठन्नि-

**ति॰** अपश्यतोमे आत्मनेइतिशेषः। यद्वा कर्तुश्शेषत्वविवक्षायांमेइतिषष्ठी ॥६७॥ **ति॰** दुर्लभां अद्याप्राप्यां। स्मारयिष्यति स्मारयतीत्यर्थः। चित्तवैकल्यबोधनद्वाराऽन्यथाप्रयोगोविरहपरिपोषाय ॥६८॥ **ति॰** कामः कामकृततापः ॥६९॥ **रामानु॰** पद्मकोशपलाशानि पद्ममुकुलोपरिदलानि। नेत्रकोशाभ्यां नेत्रकोशशब्देननेत्रपिधानभूतपक्ष्मप्रदेशउच्यते ॥ **ति॰** पद्मकोशस्यपलाशानि दलानि। कामोद्दीपकान्यपि तन्नेत्रकोशाभ्यांतन्नेत्रपुटाभ्यांसदृशानीतिद्रष्टुंदृष्टिर्मन्यतइत्यर्थः ॥ **शि॰** पद्मकोशपलाशानीत्युभयान्वयि। एकत्रशाब्दः अपरत्रार्थः ॥ ७१ ॥ **ति॰** पद्मकेसरेत्यादिनाशैत्यसौरभ्ये। वृक्षान्तरेत्यादिनामान्द्यं ॥ ७२ ॥

**[ पा॰ ]** १ ख. घ. छ. झ. ट. प्रियपङ्कजां. क. ग. प्रियदर्शनां. २ क. ग. संरमणीयानि. ३ क. ग. ग. ज. ज.—ट. द्रष्टुंदृष्टिर्हि. ख. द्रष्टुंदृष्टिर्विमन्यते.

सौमित्रे पश्य पम्पाया दक्षिणे गिरिसानुनि ॥ पुष्पितां कर्णिकारस्य यष्टिं परमशोभनाम् ॥ ७३ ॥
अधिकं शैलराजोऽयं धातुभिः सुविभूषितः ॥ विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ॥ ७४ ॥
गिरिप्रस्थास्तु सौमित्रे सर्वतः संप्रपुष्पितैः ॥ निष्पत्रैः सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ॥ ७५ ॥
पम्पातीररुहाश्चेमे संसक्ता मधुगन्धिनः ॥ मालतीमल्लिकाषण्डाः करवीराश्च पुष्पिताः ॥ ७६ ॥
केतक्यः सिन्धुवाराश्च वासन्त्यश्च सुपुष्पिताः ॥ माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च सर्वशः ॥७७॥
चिरिबिल्वा मधूकाश्च वञ्जुला बकुलास्तथा ॥ चम्पकास्तिलकाश्चैव नागवृक्षाः सुपुष्पिताः ॥ ७८ ॥

वभाति । निःश्वासइवसीतायाः चिरपरिचितइवसरससँल्लापविशेषैः कस्तेग्रामः किंतेनामेतिसंभाषमाणइवस्थितः वाति । धनस्य हस्तगतिपर्यन्तं निःस्पृहतया ततस्ततःसंचरन्निव स्थितः । वायुः चौर्यदृष्ट्वाकेनचिद्ध्रीतुमुद्युक्तं चेल्लाघवेन हस्तग्रहणानर्हः। मनोहरः नापाततोपाहरत् । अपितुसुगुप्तमपि । अनेन निर्हेतुकहरिदयाप्रवाह उपवर्ण्यते । पद्मकेसरसंसृष्टः "ङ्यापोःसंज्ञाछन्दसोः" इति ह्रस्वः। पद्मायाः केसरैः तत्तुल्यानुरागैःसंसृष्टः पुरुषकारभूतलक्ष्मीप्रणयप्रवृत्त इत्यर्थः । "पितेव त्वत्प्रेयाञ्जननिपरिपूर्णागसि जने हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः। किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥" वृक्षान्तरविनिःसृतः "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययं" इति वृक्षत्वेनोक्ते संसारमण्डले प्रवृत्तः । निःश्वास इव सीतायाःस्त्रीप्रायमितरत्सर्वमिति परतन्त्रतया स्त्रीतुल्यानां लोकानामाश्वासको धारकश्चेत्यर्थः । वाति अनवरतं प्रवहति । वायुः सार्वत्रिकः मनोहरः मानसिकसकलकल्मषहरः। द्रविडोपनिषद्व्याख्याकारैर्व्याख्यातोयंश्लोकः ॥ ७२ ॥ अथ बिरजाया अर्वाक्प्रदेशवर्तिनां राजसतामससात्त्विकभेदभिन्नानां चेतनानां स्वरूपं स्वकटाक्षविषयभूतं दर्शयति—सौमित्र इत्यादिना ॥ दक्षिण इत्यनेन पम्पादक्षिणतीरं क्रमेण प्रविष्ट इत्यवगम्यते । अनेन कर्णिकारवर्णनेन सत्यलोकादिषु जृम्भमाणा राजसी वृत्तिरुच्यते । यष्टिं लतां ॥७३॥ अधिकमिति । अनेन ऋश्यमूकसमीपगमनं द्योतितं । रजोवर्धक लोक उक्तः ॥ ७४ ॥ प्रदीप्ताः ज्वलिताः ॥ ७५ ॥ पम्पेत्यादिसार्धसप्तश्लोकाः । इमे उपशोभन्त इत्यन्वयः । तदुपरि दृश्यन्त इत्यन्वयः । संसक्ताः अविरलाः । मधुगन्धिन इति सर्वविशेषणं । लिङ्गवचनविपरिणामः कार्यः । एवं पुष्पितपदमपि । पम्पातीररुहा इमे माल्यादयः पदार्था उपशोभन्ते इत्येकोन्वयः । मालती जातिः । मल्लिकाषण्डाः मल्लिकासमूहाः । करवीराः प्रसिद्धाः । सिन्धुवाराः निर्गुण्ड्यः । वासन्त्यः पीतवर्णपुष्पालताः । "अत्र पीतायां वासन्ती हेमपुष्पिका" इति वैजयन्ती । माधव्यः अतिमुक्तलताः । गन्धेन पूर्णाः गन्धपूर्णाः । कुन्दानां गुल्माः कक्षाः कुन्दगुल्माः । चिरिबिल्वाः नक्तमालाः । मधूकाः मधुद्रुमाख्यावृक्षाः । वञ्जुलाः वेतसाः । बकुलाः प्रसिद्धाः । तिलकाः क्षुरकाः । नागवृक्षाः नागकेसराः । नीपाः जलकदम्बाः । वरणाः वरणवृक्षाः । खर्जूराः प्रसिद्धाः । पद्मकाः पद्मपर्ण्याख्या वृक्षविशेषाः । लोध्राः शाबरवृक्षाः। सिंहकेसरपिञ्जराः सिंहकेसरवर्णा इत्यर्थः । अङ्कोलाः निकोचकाः । कुरण्टाः पीतवर्णपुष्पा महासहाख्यागुल्माः । पूर्णकाः शाल्मलिभेदावृक्षविशेषाः । पारिभद्रकाः निम्बाः । पाटलयः इकारान्तआर्षः । कोविदाराः युगपत्रकाख्या वृक्षाः । मुचुलिन्दाः नारङ्गवृक्षाः । अर्जुनाः ककुभवृक्षाः । केतकानि हेमवर्णपुष्पाणि इति पूर्वस्माद्विशेषः । उद्दालकाः श्लेष्मातकवृक्षाः । शिरीषाः कपीतनाख्या वृक्षाः । शिंशुपाः भस्मगर्भाख्यावृक्षाः । धवाः मधुराख्यावृक्षविशेषाः । कुरवकाः रक्तवर्णपुष्पामहासहाख्या गुल्माः । रक्तपदं विस्पष्टार्थं । तिनिशाः नेमिद्रुमाः । नक्तमालाः चिरिबिल्वभेदाः । चन्दना प्रसिद्धाः ।

ति० संसिक्ताः तज्जलसेकेनवर्धिताः ॥ ७६ ॥

[ पा० ] १ ख. झ. सानुषु. २ क. ख. ग. ङ—ट. शोभितां. ३ ङ—ट. धातुभिस्तु. ख. धातुभिस्स. ४ घ. ग. ताश्चेमे. ५ झ. संसिक्ताः. ६ छ. झ. ट. पद्मकरवीराश्च. ७ ज.—ट. मातुलिङ्गाश्चपूर्णाश्च. ८ क. ख. घ. छ.—ट. वृक्षाश्चपुष्पिताः.

नीपाश्च वरणाश्चैव खर्जूराश्च सुपुष्पिताः ॥ [1]पद्मकाश्चोपशोभन्ते नीलाशोकाश्च पुष्पिताः ॥ ७९ ॥
लोध्राश्च गिरिपृष्ठेषु सिंहकेसरपिञ्जराः ॥ अङ्कोलाश्च कुरण्टाश्च [2]पूर्णकाः पारिभद्रकाः ॥ ८० ॥
[3]चूताः पाटलय[4]श्चैव कोविदाराश्च पुष्पिताः ॥ मुचुलिन्दार्जुनाश्चैव दृश्यन्ते गिरिसानुषु ॥ ८१ ॥
केतकोद्दालकाश्चैव शिरीषाः शिंशुपा धवाः ॥ शाल्मल्यः किंशुकाश्चैव रक्ताः कुरवकास्तथा ॥
[5]तिनिशा नक्तमालाश्च चन्दनाः [6]स्पन्दनास्तथा ॥ [[7]हिन्तालास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः]॥८२॥
पुष्पितान्पुष्पिताग्राभिर्[8]लताभिः परिवेष्टितान् ॥ द्रुमान्पश्येह सौमित्रे पम्पाया रुचिरान्बहून् ॥८३॥
वातविक्षिप्त[9]विटपान्यथासन्नान्द्रुमानिमान् ॥ [10]लताः समनुवर्तन्ते मत्ता इव [11]वरस्त्रियः ॥ ८४ ॥
पादपात्पादपं गच्छञ्शैलाच्छैलं वनाद्वनम् ॥ [12]वाति नैकरसास्वादः संमोदित इवानिलः ॥ ८५ ॥
केचित्पर्याप्तकुसुमाः पादपा मधुगन्धिनः ॥ [13]केचिन्मुकुलसंवीताः श्यामवर्णा इवाबभुः ॥ ८६ ॥
इदं मृष्टमिदं स्वादु प्रफुल्लमिदमित्यपि ॥ [14]रागमत्तो मधुकरः [15]कुसुमेष्ववलीयते ॥ ८७ ॥
[16]निलीय पुनरुत्पत्य सहसाऽन्यत्र गच्छति ॥ मधुलुब्धो मधुकरः पम्पातीरद्रुमेष्वसौ ॥ ८८ ॥
इयं कुसुमसंघातैरुपस्तीर्णा सुखाकृता ॥ स्वयं निपतितैर्भूमिः शयनप्रस्तरैरिव ॥ ८९ ॥
विविधा विविधैः पुष्पैस्तैरेव नगसानुषु ॥ [17]विकीर्णैः पीतरक्ता हि सौमित्रे प्रस्तराः कृताः ॥९०॥

स्पन्दनाः वृक्षविशेषाः ॥ ७६—८२ ॥ पम्पायाः संबन्धिनइतिशेषः ॥ ८३ ॥ वातविक्षिप्तविटपान् वायुविधूतशाखानितितात्कालिककान्तिविशेषोक्तिः । यथासन्नान् यथासंस्प्रष्टुंशक्यते तथा आसन्नान् । समीपवर्तिनइत्यर्थः । इयताग्रन्थेन विषयान्तरप्रवणाः प्राकृताउक्ताः ॥ ८४ ॥ पादपात्पादपमिति । कच्छात्कच्छमित्यपिज्ञेयं । नैकरसास्वादः अनेकमधुरसकबलनेन संमोदितः संजातसंमोद इव ॥ ८५ ॥ पर्याप्तकुसुमाइत्यनेन मुकुलाल्पत्वं । मुकुलसंवीताः मुकुलैःसमन्तात्वेष्टिताइत्यनेन विकसितपुष्पस्वल्पत्वंचावगम्यते । श्यामवर्णाः वृन्तवर्णेनेति भावः । आबभुः आभान्ति । लडर्थेलिट् ॥ ८६ ॥ मृष्टं रम्यं । स्वादु रसवत् । रागमत्तः अभिनवपुष्पकुतूहलाकुल इत्यर्थः । अवलीयते सक्तोभवति ॥ ८७ ॥ पुनर्मधुकरस्य चापलं दर्शयति—निलीयेति ॥ निलीय कचित्पुष्पेक्षणमात्रंस्थित्वा । पुष्पान्तरेभूयसीमिवमधुसमृद्धिं दृष्ट्वा तत्क्षणादन्यत्र पुष्पे गच्छति । एवं सर्वत्रेति ज्ञापयितुं पम्पातीरद्रुमेष्वित्युक्तं ॥८८॥ इयं भूमिः । स्वयं निपतितैः अतिसुकुमारैरित्यर्थः । कुसुमसंघातैः उपस्तीर्णा व्याप्ता सती । शयनप्रस्तरैः शयनास्तरणैरिव । सुखाकृता सुखावहाकृता ॥ ८९ ॥ नगसानुषु विकीर्णैः विविधैः इतस्ततःस्वयं पतितैः पुष्पैः । विविधाः प्रस्तराः कृताहीत्युत्प्रेक्षा । विविधाइत्यस्यविवरणं —पीतरक्ताइति । इदमुपलक्षणं । नानावर्णाइत्यर्थः । कचित्पीतवर्णचम्पकादिपुष्पाणि पतितानि हेममयपर्यङ्का इव भान्ति । कचिद्रक्तवर्णकर्णिकारादिपुष्पाणिपतितानिपट्टवस्त्ररचिततलिमानीव । इत्येवं नानावर्ण-

**रामानु०** पुष्पात्पुष्पान्तरंगच्छन्तंमधुकरंविलोक्योत्प्रेक्षते—**इदमिति** ॥८७॥ **ति०** शयनप्रस्तरैः शयनार्थतल्पप्रसरणैरिव । सुखाकृता सुखकरी । " सुखप्रियादानुलोम्ये " इतिडाच् ॥ ८९ ॥

**[ पा० ]** १ ख. पद्मकाश्चानु. क. ङ.—ट. पद्मकाश्चैव. २ ख. छ. झ. ट. चूर्णकाः. ३ क. चूताश्चपाटलाश्चैव. ४ छ. झ. ट. श्चापि. ५ क.—च. ज. तिमिशाः. ६ छ. ज. झ. स्यन्दनास्तथा. ७ इदमर्धं क. ङ.—ट. पाठेषुदृश्यते. क. ङ. ज. ञ. हिन्तालाश्चैवपनसानाग. ८ क. लताभिरनुवेष्टितान्. ९ क. ख. ग. विटपान्पंपासन्नान्द्रुमाँल्लताः. १० क. ग. वृताः संपरिवर्तन्ते. ख. एताःसमनुवेष्टन्ते. ११ क. ग. पतिंस्त्रियः. १२ ख. याति. १३ ख. केचित्कुसुम. १४ ङ. च. ज. झ. ञ. रागरक्तो. ट. रागयुक्तो. १५ छ. ज. झ. कुसुमेष्वेव. क. ग. कुसुमेषुनिलीयते. १६ घ. निपीय. १७ छ. झ. ट. विस्तीर्णाः पीतरक्ताभाः. ख. ग. ङ. ञ. विशीर्णैःपीतरक्ताभाः. च. ज. विशालैःपीतरक्ताभाः.

हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसंभवम् ॥ ९१ ॥
पुष्पमासे हि तरवः संघर्षादिव पुष्पिताः ॥ आह्वयन्त इवान्योन्यं नगाः षट्पदनादिताः ॥
कुसुमोत्तंसविटपाः शोभन्ते बहु लक्ष्मण ॥ ९२ ॥
एष कारण्डवः पक्षी विगाह्य सलिलं शुभम् ॥ रमते कान्तया सार्धं काममुद्दीपयन्मम ॥ ९३ ॥
मन्दाकिन्यास्तु यदिदं रूपमेवं मनोहरम् ॥ स्थाने जगति विख्याता गुणास्तस्या मनोरमाः ॥९४॥
यदि दृश्येत सा साध्वी यदि चेह वसेमहि ॥ स्पृहयेयं न शक्राय नायोध्यायै रघूत्तम ॥ ९५ ॥
न ह्येवं रमणीयेषु शाद्वलेषु तया सह ॥ रमतो मे भवेच्चिन्ता न स्पृहाऽन्येषु वा भवेत् ॥ ९६ ॥
अमी हि विविधैः पुष्पैस्तरवो रुचिरच्छदाः ॥ काननेऽस्मिन्विना कान्तां चित्तमुन्मादयन्ति मे ॥९७॥
पश्य शीतजलां चेमां सौमित्रे पुष्करायुताम् ॥ चक्रवाकानुचरितां कारण्डवनिषेविताम् ॥
प्लवैः क्रौञ्चैश्च [11]संपूर्णां [12]वराहमृगसेविताम् ॥ ९८ ॥
अधिकं शोभते पम्पा विकूजद्भिर्विहङ्गमैः ॥ ९९ ॥
[13]दीपयन्तीव मे कामं विविधा मुदिता द्विजाः ॥ श्यामां चन्द्रमुखीं [14]स्मृत्वा प्रियां [15]पद्मनिभेक्षणाम् ॥ १०० ॥

नानाशय्या इवभान्तीतिभावः ॥ ९० ॥ हिमान्त इत्यर्धं । हिमान्ते वसन्ते । वृक्षाणां पुष्पसंभवं पुष्पसमृद्धिं । वक्ष्यमाणस्य संक्षेपेणोक्तिः ॥ ९१ ॥ पुष्पमासे वसन्ते । संघर्षात् पुष्पिता अमी तरवः षट्पदनादिताःसन्तः परस्परमाह्वयन्त इव । यूयं वयमिव न पुष्पिता इत्यन्योन्यं भृङ्गरवेण व्याजेन वदन्तीवेत्युत्प्रेक्षा । अर्धत्रयमेकान्वयं वा । आह्वयन्त इवेत्युक्त्वा कुसुमोत्तंसविटपाः पूर्वोक्तास्तरवः । बहु अधिकं । शोभन्त इति ॥ ९२ ॥ काममुद्दीपयन् अन्यरतिदर्शनस्योद्दीपकत्वादिति भावः ॥ ९३ ॥ यदिदं पम्पायाः रूपं एवं मन्दाकिन्याश्च मनोहरं रूपं । कथमेतत्सादृश्यं तस्या इत्यत्राह—स्थान इति । मनोरमाः जगति विख्याताः तस्या गुणाः स्थाने युक्ताः ॥ ९४ ॥ ननु परपुरुषेणापहृता कथं रतये प्रार्थ्यते तत्राह—साध्वीति । वसेमहि "भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते" इत्युक्तवता त्वया सह वसेमेत्याशयेन बहुवचनं । शक्राय शक्रत्वाय । ऐश्वर्येइन्द्रत्वस्य प्राथमिकत्वात्तथोक्तं । "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । उत्तमं पुरुषं प्रति नासत्यमुच्यत इत्याशयेन रघूत्तमेत्युक्तिः ॥ ९५ ॥ उक्तेर्थे हेतुमाह—नहीति ॥ रमतः रममाणस्य । हि यस्मात् । चिन्ता न भवेत् अयोध्यायाः अलाभकृताचिन्ता न स्यात् । अन्येषु शक्रत्वादिषु । रहस्यप्येवंविधमानुषत्वभावनानुरूपंवचनं योगिनोबुध्येरन्निति ॥ ९६ ॥ विना वर्तमानस्येतिशेषः ॥ ९७ ॥ पश्येत्यादिसार्धश्लोकः । पुष्करैः पद्मैः आयुतां व्याप्तां । कारण्डवाः जलकाकाः । प्लवैः जलकुक्कुटैः । वराहेति तीर इति शेषः ॥ ९८ ॥ अधिकमित्यर्धं । विहङ्गमैः उक्तभिन्नैः ॥ ९९ ॥ स्मृत्वा वर्तमानस्येति शेषः ॥ १०० ॥

**रामानु०** हिमान्ते शिशिरादौ । वृक्षाणांयःपुष्पसंभवोस्ति तं । अस्मिन्कालेपश्येत्यर्थः । **ति०** हिमान्ते शिशिरान्ते ॥९१॥ **ति०** मन्दाकिन्याः तत्सदृशपंपायाः । अतिशयोक्तिरत्र ॥ **ती०** मन्दाकिन्याः चित्रकूटपर्वतपरिसरवर्तिन्याः ॥९४॥ **रामानु०** यदिचेहवसेन्मयि । मयि मत्समीपे ॥ ९५ ॥ **स०** मेइत्येतच्चतुर्थ्यन्तमपि । तथाचमे मह्यंस्पृहायस्याः तयासीतयारमतः मे अन्येष्वपिविषयेषुचिन्ताभवेत्किं नभवेदेवेत्यर्थः । यद्वा स्पृहधातुयोगेचतुर्थ्यभावआर्षः ॥ ९६ ॥ **ति०** स्मृत्वा स्मारयित्वा ॥१००॥

**[ पा० ]** १ क. ख. ङ. च. ज. ञ. पुष्पसंचयं. २ ख. षट्पदनिस्स्वनैः ३ ख. भुवि. ४ घ. एकः. ५ क. ङ. झ. ञ. ट. मुद्दीपयन्निव. ६ क. घ. ङ. च. ज. ञ. यदितद्रूपं. ७ ज. झ. ट. मेतन्मनोहरं. ८ ख. वसेन्मम. ९ झ. ञ. ट. विविधच्छदाः. १० छ. झ. ट. चिन्तामुत्पादयन्ति. ११ ङ. च. ज. ञ. संकीर्णां. १२ छ. झ. ट. महामृगनिषेवितां. १३ च. दीपयन्तिच. १४ घ. स्मृत्वामन्मथोवर्धतेहिमे. १५ ङ. चन्द्रनिभेक्षणां.

पश्य सानुषु चित्रेषु मृगीभिः सहितान्मृगान् ॥ मां पुनर्मृगशावाक्ष्या वैदेह्या विरहीकृतम् ॥१०१॥
व्यथयन्तीव मे चित्तं संचरन्तस्ततस्ततः ॥ अस्मिन्सानुनि रम्ये हि मत्तद्विजगणायुते ॥ १०२ ॥
पश्येयं यदि तां कान्तां ततः स्वस्ति भवेन्मम ॥ १०३ ॥
जीवेयं खलु सौमित्रे मया सह सुमध्यमा ॥ सेवते यदि वैदेही पम्पायाः पवनं सुखम् ॥ १०४ ॥
पद्मसौगन्धिकवहं शिवं शोकविनाशनम् ॥ धन्या लक्ष्मण सेवन्ते पम्पोपवनमारुतम् ॥ १०५ ॥
श्यामा पद्मपलाशाक्षी प्रिया विरहिता मया ॥ कथं धारयति प्राणान्विवशा जनकात्मजा ॥१०६॥
किंनु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम् ॥ सीताया जनकं पृष्टः कुशलं जनसंसदि ॥ १०७ ॥
या मामनुगता मन्दं पित्रा प्रव्राजितं वनम् ॥ सीता सत्पथमास्थाय क नु सा वर्तते प्रिया ॥१०८॥
तया विहीनः कृपणः कथं लक्ष्मण धारये ॥ या मामनुगता राज्याद्भ्रष्टं विगतचेतसम् ॥ १०९ ॥
तच्चार्वञ्चितपक्ष्माक्षं सुगन्धि शुभमव्रणम् ॥ अपश्यतो मुखं तस्याः सीदतीव मनो मम ॥११०॥

पुनस्त्वर्थः । विरहीकृतं विरहिणमित्यर्थः । मृगीभिः सहितान् मृगान् पश्य । वैदेह्या विरहीकृतंमां पुनः पश्येत्यन्वयः । एतेषु सकलत्रेषु सुखं संचरत्सु ममैकस्याहो कष्टावस्थेति भावः ॥ १०१ ॥ संचरन्तः मृगादयइतिशेषः ॥ १०२ ॥ पश्येयमित्यर्धं ॥ ततः तदा । स्वस्ति शुभं ॥ १०३—१०४ ॥ पद्मेति ॥ पद्मकह्लारगन्धवहमितिलक्षणयार्थः । धन्याः सकान्ताः । पदप्रयोजनत्वाचार्या ऊचुः । पद्मं च सौगन्धिकं च पद्मसौगन्धिके ते वहति प्रापयतीति पद्मसौगन्धिकवहं । अत्र पद्मसौगन्धिकयोर्वहनानुपपत्तेस्तद्गन्धो लक्ष्यते । लक्षणायाश्च प्रयोजनेन भवितव्यं । यथा गङ्गायां घोष इत्यत्र पावनत्वादि तथात्र प्रयोजनं । यथा पद्मस्यैव घ्राणसमीपानयनेपिउपरिस्थितःपरिमलः शीतलोगृह्यते । नान्तःस्थित उष्णमिश्रः । तथायं वायुरपि उपरिस्थशीतलपरिमलमादाय समागच्छतीत्यर्थः । यद्वा पद्मकेसरसंस्पृष्ट इत्यनुक्तेः पद्मसौगन्धिकोपरिवर्तिपरिमलावह इत्यर्थः । गुणगुणिनोरभेदविवक्षया पद्मसौगन्धिकेत्युक्तिः । उभयोक्त्या नानापुष्पग्रथितमालिकाधारिण इव नानापुष्पपरिमलं वहतीत्युच्यते । शिवं शुद्धं । तथा चान्यासंस्पर्शितोक्त्या प्राथमिकमलयमारुत इत्युच्यते । शोकविनाशनं । विरहिणो दक्षिणपवनः शोकवर्धनः नतु शोकविनाशनः । तथाच जीवतो हि शोकं कुर्यात् जीवितापायकरणेन शोकधर्म्यभावाच्छोकविनाशनं । धन्याः एवंविधे मलयानिले वातिसति एकान्तस्थलमन्वेष्यशयनपराः केचन सन्ति हि। सेवन्ते कदा समागमिष्यत्ययं पवन इत्यवसरप्रतीक्षा भवन्ति। सेवाह्यवसरप्रतीक्षा । पम्पोपवनमारुतं आकरादागताग्निमिव स्थितं । समुद्रादुत्थितवडवानलमिवेत्यर्थः । प्रत्येकश्लोकव्याख्यानेप्ययमेवाभिप्राय उक्तः ॥ १०५॥ विवशा प्राणत्यागेपि न स्वतन्त्रेत्यर्थः ॥ १०६ ॥ किंन्विति ॥ सीतया सह मम कुशलं पृष्ट इत्यर्थः ॥ १०७ ॥ मन्दं भाग्यरहितं । "मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः । सत्पथं पतिव्रतामार्गं आस्थाय अनुगतेत्यन्वयः ॥ १०८ ॥ धारये जीवामि । विगतचेतसं विकलहृदयं ॥ १०९ ॥ अञ्चितपक्ष्माक्षं अञ्चितानि पूजितानि स्निग्धानीति । यावत् । पक्ष्माणि ययोस्ते । अञ्चितपक्ष्मणी अक्षिणी

**रामानु०** पुनश्शब्दोप्यर्थे । मामपिपश्येतिसंबन्धः ॥ विरहीकृतं विरहः अर्शआद्यजन्तः । अविरहः विरहभिन्नः विरहत्वेनकृतस्तंमांपश्येत्यत्र च्विर्विरहस्यावास्तवत्वंद्योतयति ॥ १०१ ॥ **ति०** संचरन्तः मृगीभिस्सहितामृगाइतिशेषः ॥ १०२ ॥ **ति०** पृष्टासीताक्वेतियेनतं । **वि०** सीतयासहितस्यतव कुशलमितिपृष्टः ॥ १०७ ॥

[ **पा०** ] १ क. चरन्तइतस्ततः. २ क. ङ. रम्येऽहं. ३ ङ.—ट. गणाकुले. ४ ङ. छ. झ. ट. सेवेत. ५ छ. झ. ट. शुभं. ६ च.—झ. ट. पंपायावनमारुतं. ख. पंपाविपिनमारुतं. ७ ङ. च. ज. ञ. धारयते. ८ क. ग. ङ.—ट. धर्मज्ञंराजानं. ९ छ. झ. ट. जनकंपृष्टसीतंतं. ख. सीतयाजनकं. क. ग. ङ. च. ज. ञ. जनकंसीतया. १० छ. झ. ट. प्रस्थापितं. ११ छ. झ. ट. धर्मसमास्थाय. १२ ग. संवर्तते. १३ छ. झ. ट. विहृतचेतसं. ङ. च. ज. ञ. विगतचेतनं. १४ क. ख. ग. ङ.—ट. पद्माक्षं. १५ छ. झ. मतिर्मम.

स्मितहास्यान्तरयुतं गुणवन्मधुरं हितम् ॥ वैदेह्या वाक्यमतुलं कदा श्रोष्यामि लक्ष्मण ॥ १११ ॥
प्राप्य दुःखं वने श्यामा सा मां मन्मथकर्शितम् ॥ नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत ॥११२॥
किंनु वक्ष्यामि कौसल्यामयोध्यायां नृपात्मज ॥ क सा स्नुषेति पृच्छन्तीं कथं चातिमनस्विनीम् ॥११३॥
गच्छ लक्ष्मण पश्य त्वं भरतं भ्रातृवत्सलम् ॥ नह्यहं जीवितुं शक्तस्तामृते जनकात्मजाम् ॥११४॥
[ इति रामस्तु विलपन्हतनौरिव सागरे ॥ न ददर्श तदा पारं शोकस्य पुरुषर्षभ ] ॥ ११५ ॥
इति रामं महात्मानं विलपन्तमनाथवत् ॥ उवाच लक्ष्मणो भ्राता वचनं युक्तमव्ययम् ॥ ११६ ॥
संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम ॥ नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ॥११७॥
स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने ॥ अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापि दह्यते ॥ ११८ ॥
यदि गच्छति पातालं ततो ह्यधिकमेव वा ॥ सर्वथा रावणस्तावन्नभविष्यति राघव ॥ ११९ ॥
प्रवृत्तिर्लभ्यतां तावत्तस्य पापस्य रक्षसः ॥ ततो हास्यति वा सीतां निधनं वा गमिष्यति ॥१२०॥

---

यस्य तत् । शुभं शोभमानं । अव्रणं । निर्दोषमित्यर्थः । व्रणकिणरहितं वा ॥ ११० ॥ स्मितहास्यान्तरयुतं "कान्तस्मिता लक्ष्मण जातहासा" इत्युक्तरीत्या स्मितेन नैसर्गिकस्मितेन हास्यान्तरेण आगन्तुकहास्येन च युक्तं । गुणवत् स्ववचनापेक्षया उत्कर्षवत् । मधुरं हितं प्रियहितं । अतुलं "प्रियवादि च भूतानां" इत्युक्तरामवचनमप्यस्य न सदृशमित्यर्थः । संसारादुत्तीर्णस्यचेतनस्य "एतत्साम गायन्नास्ते" इत्युक्तसामध्वनिं कदा श्रोष्यामीति व्यञ्जयति ॥ १११ ॥ स्वयं दुःखं प्राप्य स्थितापि स्वदुःखमप्रकाशयन्ती हर्षं भावयन्ती । साधु मन्मथार्तिनिवर्तकं वचनमभ्यभाषत । पूर्वमितिशेषः । अनादिकालं ममकैङ्कर्ययोग्योजीवइत्यर्थः ॥ ११२ ॥ सा स्नुषा क कथं कीदृक्प्रकारेतिपृच्छन्तींकौसल्यां किंवक्ष्यामि । अतिमनस्विनीमित्यनेन यथार्थं वक्ष्यामि चेत्तदानीमेव वात्सल्यातिशयान्नश्येदित्युच्यते ॥११३॥ किमत्रयुक्तं तत्राह—गच्छेति ॥ ऋते विना ॥११४—११५॥ अव्ययं युक्तिभिरविनाश्यं ॥ ११६ ॥ संस्तम्भ संस्तम्भस्व । धैर्यमवलम्बस्वेत्यर्थः । अकलुषात्मनां सधैर्यहृदयानां । ईदृशानां त्वादृशानां । मन्दा अल्पा । कलुषितेत्यर्थः ॥ ११७ ॥ वियोगजं दुःखं भवतीत्येतल्लोकवृत्तं स्मृत्वा तद्धेतुभूतं प्रियजनविषयातिस्नेहं त्यजेत्यर्थः । तत्र श्लेषगर्भमर्थान्तरं न्यस्यति—अतीति । स्नेहः प्रीतिः तैलं च । अतः वात्सल्यप्रवृत्तिं विहाय चेतनसंतरणोपायं चिन्तयेत्यर्थः ॥ ११८ ॥ नभविष्यति विनशिष्यतीत्यर्थः ॥ ११९ ॥ प्रवृत्तिः वार्ता ॥ १२० ॥

---

**ति०** धारये प्राणानितिशेषः ॥ १०९ ॥ **शि०** मनःसीदत्येव । इवशब्दएवार्थे ॥ ११० ॥ **ति०** स्मितेन ईषद्धास्येनविनोदवचनेन अन्तरे मध्येएवयुतं नत्वोष्ठप्रदेशाद्बहिरितिपतिव्रतालक्षणसूचनं ॥ **ती०** स्मितहास्यान्तरयुतं प्रसन्नहास्यविशेषेणयुक्तं । यद्वास्मितंमन्दहासः । हास्यं प्रकटहासः । अन्तरं अवसरः । यथावसरंतद्युक्तमित्यर्थः । गुणवत् उपचारवत् ॥ **स०** हास्यशब्दसमभिव्याहारात्स्मितशब्दस्यमान्द्यमात्रमर्थः । तथाच स्मितहास्योत्तरयुतं मन्दहासोपेतवचनमित्यर्थः । एतादृशं यन्महावाक्यंतत्कदाश्रोष्यामि ॥ १११ ॥ **रामानु०** नह्यहंजीवितुंशक्तस्तामृतेजनकात्मजामित्यस्यानन्तरं इतिरामस्तुविलपन्नित्यादयःकेचनश्लोकाःकतिपयकोशेषुदृश्यन्ते । तेबहुकोशेष्वदृष्टत्वाद्वाल्मीकिपाकाप्रतीतेश्चतैर्विनाकथासंगत्युपपत्तेश्चनव्याख्याताः ॥ ११४ ॥ **स०** अतिस्नेहकरणे कदाचिद्वियोगेनदुःखंभवति । अतोवियोगजंदुःखंस्मृत्वाप्रियेजनेस्नेहंत्यज । तदेवदृष्टान्तेनाह **—अतीति ।** आर्द्रापीत्यनेनविरोधाभासस्सूच्यते । लोकेआर्द्रवस्तुनोदाहाभावात् ॥ ११८ ॥ **ति०** तावत् प्रथमं । प्रवृत्तिः वासवृत्तान्तः ॥ १२० ॥

**[ पा० ]** १ ख. मितहास्यान्तर. ठ. स्मितहास्योत्तरयुतं. २ ग. गतं. ३ ङ. च. ज. ञ. प्राप्तदुःखं. ४ छ. झ. ट. मांमन्मथविकर्शितं. ५ ङ. च. ज. ञ. सालभ्यभाषत. ६ छ. झ. ट. धक्ष्याम्ययोध्यायांकौसल्यांहि. ७ ग. भ्रातरं. ८ अयं श्लोकः ङ. च. ज. पाठेषुदृश्यते. ९ क. ख. व्यक्तमव्ययं. १० ख. पुरुषर्षभ. ११ ङ. झ.—ट. रावणस्तातनभविष्यति. ख. रावणस्तातविनशिष्यति. १२ क. ग. हास्यतिवै.

यदि [1]यात्यदितेर्गर्भे रावणः सह सीतया ॥ तत्राप्येनं [2]हनिष्यामि न [3]चेद्दास्यति [4]मैथिलीम् ॥१२१॥
स्वास्थ्यं भद्रं भजस्वार्य त्यज्यतां कृपणा मतिः॥ अर्थो हि [5]नष्टकार्या[6]र्थैर्नायत्नेनाधिगम्यते ॥१२२॥
उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम्॥ [7]सोत्साहस्यास्ति लोकेस्मिन्न किंचिदपि दुर्लभम् ॥१२३॥
उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु ॥ उत्साहमात्रमाश्रित्य [8]सीतां प्रति लभेमहि ॥ १२४ ॥
त्यज्यतां [9]कामवृत्तत्वं शोकं [10]संन्यस्य पृष्ठतः ॥ महात्मानं कृतात्मानमात्मानं [11]नावबुध्यसे ॥ १२५ ॥
एवं [12]संबोधितस्तत्र शोकोपहतचेतनः ॥ [13]न्यस्य शोकं च मोहं च [14]ततो धैर्यमुपागमत् ॥ १२६ ॥
सोभ्यतिक्रामदव्यग्रस्तामचिन्त्यपराक्रमः ॥ रामः पम्पां सुरुचिरां रम्यपारिप्लवद्रुमाम् ॥ १२७ ॥
निरीक्षमाणः सहसा महात्मा सर्वं वनं [15]निर्झरकन्दरांश्च ॥
उद्विग्नचेताः सह लक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे ॥ १२८ ॥
तं मत्तमातङ्ग[16]विलासगामी गच्छन्तमव्यग्र[17]मना महात्मा ॥
सलक्ष्मणो [18]राघवमप्रमत्तो ररक्ष धर्मेण बलेन चैव ॥ १२९ ॥

अदितेः इन्द्रस्यमातुः ॥ १२१ ॥ स्वास्थ्यं धैर्यं । नष्टकार्यार्थैः नष्टकार्यरूपप्रयोजनैः पुरुषैः। अयत्नेन यत्नाभावेन ॥१२२॥ अतो यत्नः कर्तव्य इत्याह—द्वाभ्यामुत्साह इत्यादिभ्यां ॥ १२३—१२४ ॥ कामे वृत्तो व्यापारो यस्य स तथा तस्यभावस्तत्त्वं । पृष्ठतः संन्यस्य तिरस्कृत्येत्यर्थः । आत्मानं कृतात्मानं शिक्षितमनस्कं । महात्मानं महाधैर्यं । नावबुध्यसे । तस्मात्त्यज्यतामित्यन्वयः । किं वात्सल्येनतप्यसे । साधुकारीसाधुर्भवति पापकारी पापी भवतीति भवद्भिरेव कृतांशास्त्रमर्यादां किं नावबुध्यसइत्यर्थः ॥ १२५ ॥ एवमिति । अत्र शोकमोहशब्दाभ्यां दयावात्सल्येउच्येते । तयोस्त्यागोनाम शास्त्रमर्यादानुसारेणचेतनरक्षणोद्योगः ॥ १२६ ॥ अभ्यतिक्रामत् अनित्यत्वादडभावः । पारिप्लवद्रुमां चञ्चलद्रुमां । अनेन भगवतः संसारिमण्डलाभिमुख्यंसूचितं ॥ १२७ ॥ सर्गार्थंपुनःसंग्रहेणदर्शयति—द्वाभ्यां । विचार्य सीतामन्विष्येत्यर्थः ॥ १२८ ॥ मत्तगजवत् विलासेनगन्तुं शीलमस्यास्तीति तथा । अनेन वनदुर्गप्रदेशेपिनिर्भयसंचारित्वमुच्यते । अव्यग्रमनाः अचञ्चलचित्तः । अप्रकम्प्यरामविषयप्रेमभारइत्यर्थः । महात्मा अप्रच्युतधैर्यः । अप्रमत्तः गमनसौन्दर्यानुभवेप्यसक्तः । सः "रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति" इति सुमित्रया संदिष्टः लक्ष्मणः कैङ्कर्यलक्ष्मीयुक्तः । तं सीतावियोगार्तं । गच्छन्तंमत्तमातङ्गगामिनमित्युक्तरीत्या गमनचारुतया सर्वान्वशीकुर्वन्तं राघवं । धर्मेण संस्तम्भेत्यादिराजनीतिकथनेन । बलेन तत्राप्येनंहनिष्यामीति स्वबलकथनेन च । ररक्ष निर्दुःखमक-

**ति०** दितेः असुरमातुः ॥ १२१ ॥ **रामानु०** स्वास्थ्यं स्वभावावस्थानं धैर्यमितियावत् ॥ १२२ ॥ **ति०** उत्साहमात्रं शत्रुसंहारेपौरुषं ॥ १२४ ॥ **ति०** कामवृत्तत्वं कामपरतन्त्रत्वं । शोकंपृष्ठतस्संन्यस्य कामजशोकसेवनेकामस्यवृद्धेस्तत्सेवनंपृष्ठतः कृत्वेत्यर्थः । महात्मानं रजस्तमोमलास्पृष्टचित्तं निरतिशयशौर्यधैर्यादिस्वभावचित्तंच । कृतात्मानं श्रुतिस्मृत्यादिषुगुरुभिश्शिक्षितस्वरूपं । किंनावबुध्यसे । यद्यपीश्वरस्यलोकवद्धर्माधर्माश्रयंचित्तंनास्ति । तथापि मायिकंतदाश्रयंतदस्ति । तत्स्वीकारेबाधकाभावात् ॥ १२५ ॥ **ति०** मोहः कामजः । मोहजश्चशोकः ॥ १२६ ॥ **ति०** विचार्य लक्ष्मणोक्तेर्युक्तत्वमितिशेषः ॥ १२८ ॥ **शि०** इष्टचेष्टः इष्टेरघुनाथेच्छाविषयीभूतेचेष्टाव्यापारोयस्य रामेप्सितसाधकइत्यर्थः ॥ **स०** बलेनरक्षणंचनिद्राद्यावन्योपद्रवपरिहारेण ॥ १२९ ॥

**[ पा० ]** १ क.—ट. यातिदितेर्गर्भं. २ क. ख. घ. वधिष्यामि. ३ क. ख. घ. ङ. च. ज.—ट. चेद्दास्यति. ४ ग. जानकीं. ५ ख. घ. विनष्ट. ग. विनष्टधैर्यार्थैः. ६ छ. झ. ट. रयत्नेनाधिगम्यते. क. ग. र्यत्नेनापिनगम्यते. ७ क. ग.—ट. सोत्साहस्यहिलोकेषुन. ख. सोत्साहस्यच. ८ क.—घ. छ. झ. ट. प्रतिलप्स्यामजानकीं. ङ. च. ज. प्रतिलप्स्यसिजानकीं. ९ च. ज. कामवृत्तित्वं. १० ग. संत्यज्य. ११ क. ग. ङ. च. ज. ञ. किंनबुध्यसे. १२ क. ङ.—ट. संबोधितस्तेन. १३ छ. झ. ट. त्यज्य. १४ क. ग. ङ.—ट. रामो. १५ क. ग. निर्दरकन्दरंच. घ. च.—ट. निर्झरकन्दरंच. ङ. वैगिरिकन्दरंच. १६ ङ.—ज. ञ. विलासगामिनं. १७ घ. ङ. मसौमहात्मा. १८ क. ग. च.—ट. राघवमिष्टचेष्टो.

तावृश्यमूकस्य समीपचारी चरन्ददर्शाद्भुतदर्शनीयौ ॥
शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव चिचेष्ट किंचित् ॥ १३० ॥
स तौ महात्मा गजमन्दगामी शाखामृगस्तत्र चिरं चरन्तौ ॥
दृष्ट्वा विषादं परमं जगाम चिन्तापरीतो भयभारमग्नः ॥ १३१ ॥
तमाश्रमं पुण्यसुखं शरण्यं सदैव शाखामृगसेवितान्तम् ॥
त्रस्ताश्च दृष्ट्वा हरयोऽभिजग्मुर्महौजसौ राघवलक्ष्मणौ तौ ॥ १३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ॥ २ ॥

रामलक्ष्मणदर्शिनासुग्रीवेण तयोर्वालिप्रेषितत्वबुद्ध्या सचिवैःसहभीत्या गूढस्थानान्तरगमनम् ॥ १ ॥ हनुमता सयुक्तिकंसुग्रीवसमाश्वासनम् ॥ २ ॥ सुग्रीवेण रामलक्ष्मणभावपरीक्षणाय तौप्रतिहनुमत्प्रेषणम् ॥ ३ ॥

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ॥ वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥ १ ॥
उद्विग्नहृदयः सर्वा दिशः समवलोकयन् ॥ न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुङ्गवः ॥ २ ॥
नैव चक्रे मनः स्थाने वीक्षमाणो महाबलौ ॥ कपेः परमभीतस्य चित्तं व्यवससाद ह ॥ ३ ॥

रोत् ॥ १२९ ॥ अथ सीताप्राप्तिबीजमुपक्षिपति—तावृति ॥ ऋश्यमूकस्य ऋश्यमूकाख्यपर्वतस्य । समीपचारी समीपसंचरणशीलः । वालिभयादिति शेषः । चरन् कदाचित्पम्पोपान्तेपर्यटन् । अद्भुतं यथा भवति तथा दर्शनीयौ । शाखामृगाणां वानराणां अधिपः सुग्रीवः । तरस्वी बलवान् । वितत्रसे तत्रास । व्यत्ययेनात्मनेपदं । भीतोऽभूत् । न चिचेष्ट न चिचेष्टे । व्यत्ययेन परस्मैपदं । स्तब्धोऽभूदित्यर्थः ॥ १३० ॥ तत्र पम्पावने । विषादचिन्ताभयहेतव उत्तरसर्गे व्यक्तीभविष्यन्ति ॥ १३१ ॥ न केवलं सुग्रीव एव त्रस्तः तत्सचिवा अपीत्याह—तमिति ॥ आश्रमं मतङ्गाश्रमं । पुण्यं धर्मवर्धकं । सुखं सुखकरं । शरण्यं मुनिजनवासयोग्यं । सदैव वानरसेवितान्तं । वानरसेवितमध्यमिति दुष्प्रवेशत्वोक्तिः । तौ दृष्ट्वा । हरयः वानराः । वित्रस्ताः मुनिवेषेणवालिप्रेरितौसमागताविति शङ्कयेति भावः । हरयः तौदृष्ट्वात्रस्ताःसन्तः आश्रममभिजग्मुरित्यन्वयः ॥ १३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

अथ सुग्रीवेण हनुमत्प्रेषणं द्वितीये—तौ त्वित्यादि ॥ महात्मानौ महाशरीरौ । भद्राकृती इत्यर्थः । वरायुधधरौ अतएव वीरौ ॥ १ ॥ उद्विग्नहृदयः भीतमनस्कः ॥ २ ॥ स्थाने स्वस्थाने । निश्चलत्वइति यावत् । व्यवससाद दुःखितमभूत् ॥ ३ ॥

ति० वितत्रसेवितत्रास । वाल्यानीतत्वशङ्कयात्रासः ॥ विश्रान्तिमत्तस्यबभूवचित्तंइत्याधुनिकपाठे तस्यसुग्रीवस्यचित्तं तद्दर्शनेनविश्रान्तिमत् भयवद्बभूवेत्यर्थः ॥ १३० ॥ ति० भयभारभग्नः भयभारेणभग्नोत्साहः ॥ १३१ ॥ ती० तमाश्रमं मतङ्गशापाद्वालिनोदुष्प्रवेशत्वेनप्रसिद्धंमतङ्गाश्रमं । अयंश्लोकः उत्तरसर्गार्थसंग्राहकः । एवमेवान्येषुपुराणेषुपंपादर्शनेनरामस्यकामार्तत्वंप्रतिपादितं । अतएवरामोविरहभरेणभ्रमरादीञ्शशापेत्युक्तंस्कान्दे । "वैमुख्यंगन्धफल्यास्तुभ्रमरानशपत्प्रभुः । कोकान्निशीथेविश्लेषं पिकमन्यविवर्धनम् । चन्दनंसर्पनिलयंवायुंसर्पाशनंतथा । ज्योत्स्नांकलङ्कसंछन्नांशशापरघुनन्दनः ।" इति ॥ रामानु० हरयः सुग्रीवादयः । बहुवचनप्रयोगस्तुसचिवापेक्षया । एतदुपरितनसर्गेव्यक्तीभविष्यति ॥ १३२ ॥ इतिप्रथमस्सर्गः ॥ १ ॥

[ पा० ] १ क. ख. ग. ङ. च. ज. ञ. विश्रान्तिमत्तस्यबभूवचित्तं. २ छ. ज. झ. ट. चेष्टं. ३ घ. ततोमहात्मा. ४ ख.—ङ. छ.—ट. चरंश्चरन्तौ. ५ छ. ज. झ. ट. हरयोविजग्मुः. ६ ग. व्यतिष्ठत. ७ छ. झ. ट. स्थातुं.

चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् ॥ सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ॥ ४ ॥
ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ॥ शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥ ५ ॥
एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् ॥ छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥ ६ ॥
ततः सुग्रीवसचिवा दृष्ट्वा परमधन्विनौ ॥ जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ॥ ७ ॥
ते क्षिप्रमधिगम्याथ यूथपा यूथपर्षभम् ॥ हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥ ८ ॥
एकमेकायनगताः प्लवमाना गिरेर्गिरिम् ॥ प्रकम्पयन्तो वेगेन गिरीणां शिखराण्यपि ॥ ९ ॥
ततः शाखामृगाः सर्वे प्लवमाना महाबलाः ॥ बभञ्जुश्च नगांस्तत्र पुष्पितान्दुर्गसंश्रितान् ॥१०॥
आप्लवन्तो हरिवराः सर्वतस्तं महागिरिम् ॥ मृगमार्जारशार्दूलांस्त्रासयन्तो ययुस्तदा ॥ ११ ॥
ततः सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः ॥ संगम्य कपिमुख्येन सर्वे प्राञ्जलयः स्थिताः ॥ १२ ॥
ततस्तं भयसंविग्नं वालिकिल्बिषशङ्कितम् ॥ उवाच हनुमान्वाक्यं सुग्रीवं वाक्यकोविदः ॥ १३ ॥
संभ्रमस्त्यज्यतामेष सर्वैर्वालिकृते महान् ॥ मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ॥ १४ ॥
यस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुङ्गव ॥ तं क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम् ॥ १५ ॥

धर्मे राजधर्मे आत्मा मतिर्यस्य स धर्मात्मा । अनुचरैः मन्त्रिभिः सह चिन्तयित्वा । गुरुलाघवं विमृश्य स्थाने पलायने च गुरुलाघवं विमृश्य च । परमोद्विग्नोऽभवत् ॥ ४ ॥ रामलक्ष्मणौ तत्स्वभावं शशंस ॥ ५ ॥ प्रणिहितौ चारौ । छद्मना ऋषिवेषव्याजेन ॥ ६ ॥ जग्मुः सुग्रीववचने हितत्वबुद्ध्येति शेषः ॥ ७ ॥ अधिगम्य नानादिक्षुपलायिताएकत्र समागम्य ॥ ८ ॥ पुनरपि गिरेर्गिरिं प्लवमानाः गिरीणां शिखराण्यपि प्रकम्पयन्तः । एकायनगताः क्रमेणैकस्थानगताः सन्तः । एकं एकाकिनं सुग्रीवमुपतस्थिर इत्यनुषङ्गः । एवमेकायनगता इति पाठे एवं उक्तरीत्या । एकायनगतास्ते प्रकम्पयन्तोभवन्निति योजना ॥ ९ ॥ दुर्गं गिरिः ॥१०॥ आप्लवन्तो ययुः ननु मन्दं ययुरित्यर्थः ॥ ११ ॥ पर्वतेन्द्रं ऋश्यमूकं । पर्यन्तपर्वतेषु तत्रतत्रगत्वा पुनस्तमेव ऋश्यमूकं ययुरित्यर्थः ॥ १२ ॥ वालिकिल्बिषेण वालिकपटेन शङ्कितं । वालिना प्रेषिताविमाविति शङ्कितमित्यर्थः ॥ १३ ॥ वालिकृते वालिनिमित्तं संभ्रमस्त्यज्यतां । मलय इतिपर्वतमात्रस्य नाम । अयंमलयः अयंपर्वतः । गिरिवरः ऋश्यमूक इत्यर्थः ॥ १४ ॥ वाली वेषान्तरधारी समागत इति भ्रमं वारयति—यस्मादित्यादिना ॥ यस्मात् वालिनः । क्रूरं क्रूरकर्मा-

**स०** गुरु गुरुकार्यं । लाघवं लघुकार्यं । स्वार्थिकोऽण् । यद्वा गुर्विंतिभावप्रधानः । तथाच कार्यगौरवंलाघवंचविमृश्य । अथवा अत्रावस्थानविषये गुरुलाघवं अतिलाघवंविमृश्येत्यर्थः ॥ **शि०** चिन्तयित्वा वालिबलंसंस्मृत्य । गुरुलाघवं तद्बलस्यगुरुत्वंस्वबलस्यलाघवंलघुत्वंच । विमृश्य निश्चित्य । वानरैस्सहपरमोद्विग्नआसेतिशेषः ॥ ४ ॥ **ति०** ततोविचारानन्तरंप्रस्थानेच्छयासचिवेभ्यश्शशंस । भयहेतुमितिशेषः ॥ ५ ॥ **ति०** जग्मुः सुग्रीवेणसहेतिशेषः । अन्यंशिखरमितिपाठे पुंस्त्वमार्षं ॥ ७ ॥ **रामानु०** अपिशब्दोभिन्नक्रमः । एवमेकायनगताअपि पूर्वोक्तप्रकारेणैकस्थानगताअपि । गिरीणांशिखराणिप्रकंपयन्तः गिरेर्गिरिंप्लवमानाः जग्मुरितिशेषः । अत्रगिरिशब्दोगिर्येकदेशवाची । एकमेकायनगताइतिपाठे एकं पलायनेनैकाकिनंयूथपर्षभंसुग्रीवमधिगम्य अतएवएकायनगताः एकस्थानगताः । परिवार्योपतस्थिरइतिपूर्वेणसंबन्धः ॥ **ति०** उक्तमेवविवृणोति—**एवमिति** । उक्तरीत्यास्थितिगतिभयाभयसुखदुःखादावेकायनंएकमार्गसमानत्वंगताः ॥ ९ ॥ **ति०** वालिकिल्बिषात् वालिप्रवर्तनयाकिल्बिषात् वधात् शङ्कितं ॥ **शि०** वालिकिल्बिषशङ्कितं वालिनिभासमानस्वापराधेनभीतं । अतएवभयसंत्रस्तं भयाभ्यांवालिप्रेषिताविमावितिसंभावनयाभयहेतुभ्यांसंत्रासवन्तंसुग्रीवं ॥ भयसंत्रस्तं भयसाधनेनभीतं ॥ १३ ॥ **शि०** यतः अयंगिरिर्मलयः मस्य भवद्विघातकवालिनः लयःऋषिशापाद्विध्वंसोयस्मिन्सः । अतइहवालिनोभयंनास्ति ॥ १४ ॥ **रामानु०** मलयोयंऋश्यमूकावयवःपर्वतः । " पर्वताद्दृश्यमूकात्तुपुप्लुवेयत्रराघवौ " इतिमलयस्यैवऋश्यमूकशब्देनवक्ष्यमाणत्वात् ॥ १४ ॥ **शि०** वालिनं

**[ पा० ]** १ क. ग. चिन्तयित्वातु. २ छ. झ. ट. सर्वैस्तैर्वानरैस्सह. ३ ख. ग. ङ. छ. झ. ञ. ट. एवमेकायन. च. एकायनगतास्तेपिधावमानाः. ४ ङ.—ट. शिखराणिच. ५ ङ.—ट. दुर्गमाश्रितान्. ६ छ. झ. ट. पर्वतेन्द्रेसमाहिताः. ७ क. ग. ङ.—ट. ततस्तूभयसंत्रस्तं. ८ ङ. ज. ञ. वाक्यकोविदं. ९ क. ग. ङ. ज. ञ. वालिकृतो. १० ङ. छ.—ट. विद्रुतो.

यस्मात्तव भयं सौम्य पूर्वजात्पापकर्मणः ॥ स नेह वाली दुष्टात्मा [1]न ते पश्याम्यहं भयम् ॥ १६ ॥
अहो शाखामृगत्वं ते व्यक्तमेव प्लवङ्गम ॥ लघुचित्ततयाऽऽत्मानं न स्थापयसि [2]यो मतौ ॥ १७ ॥
बुद्धिविज्ञानसंपन्न इङ्गितैः सर्वमाचर ॥ न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ॥ १८ ॥
सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः ॥ ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ॥ १९ ॥
दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ ॥ कस्य न स्याद्भयं दृष्ट्वा ह्येतौ सुरसुतोपमौ ॥ २० ॥
वालि[3]प्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ ॥ राजानो बहुमित्राश्च विश्वासो [4]नात्र हि क्षमः ॥ २१ ॥
अरयश्च मनुष्येण विज्ञेयाश्[5]छन्नचारिणः ॥ विश्वस्ताना[6]मविश्वस्ता रन्ध्रेषु प्रहरन्ति हि ॥ २२ ॥
कृत्येषु वाली मेधावी राजानो ब[7]हुदर्शनाः ॥ भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः ॥ २३ ॥
तौ त्वया [8]प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गम ॥ इङ्गितानां प्रकारैश्च [9]रूपव्याभाषणेन च ॥ २४ ॥
[10]लक्षयस्व तयोर्भावं प्रहृष्टमनसौ यदि ॥ विश्वासयन्प्रशंसाभिरिङ्गितैश्च पुनःपुनः ॥ २५ ॥
ममैवाभिमुखं स्थित्वा [11]पृच्छ त्वं हरिपुङ्गव ॥ प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ॥ २६ ॥
शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवङ्गम ॥ [12]व्याभाषितैर्वा विज्ञेयौ[13] स्याद्दुष्टादुष्टता तयोः ॥ २७ ॥

णं ॥ १५ ॥ पापकर्मणः अनुजभार्यापहारिणः । भयं भयहेतुं ॥ १६ ॥ मतौ सम्यग्विचारे ॥ १७ ॥ बुद्धिः सामान्यतो ज्ञानं । विशेषतो ज्ञानं विज्ञानं । इङ्गितं अभिप्रायसूचको व्यापारः । सर्वं कार्यं । अबुद्धिं अबुद्ध्यादिकं ॥१८॥ ततः शुभतरं तद्वाक्यादत्यन्तशुभं ॥ १९ ॥ दीर्घा बाहवो ययोस्तौ दीर्घबाहू । इत्येवं सर्वत्र समासः ॥ २० ॥ वालिप्रणिहितौ नाहं वाली समागत इतिबिभेमि किंतु तत्प्रेषिताविति मत्वेतिभावः । एतादृशतदीयपुरुषस्य का प्रसक्तिस्तत्राह—राजान इति । अत्र राजविषये ॥ २१ ॥ छन्नचारिणोऽरयः मनुष्येण शत्रुमता ज्ञेयाः । कुत इत्यत्राह—विश्वस्तानामिति । विश्वस्तानां शत्रूणां रन्ध्रेषु प्रमादेषुसत्सु । स्वयमविश्वस्ताः सन्तः प्रहरन्ति हि ॥ २२ ॥ कृत्येषु कर्तव्यकार्येषु । वाली मेधावी दूरदर्शी । स्वभावश्चायं राज्ञामित्याह—राजान इति । राजानः बहुदर्शनाः बहूपायज्ञाः । परहन्तारो भवन्ति । ते प्राकृतैः दीनवेषधरैः । नरैः ज्ञेयाः ॥ २३ ॥ प्राकृतेन प्राकृतवेषेण । इङ्गितानां भावसूचककायिकव्यापाराणां । प्रकारैः अवान्तरभेदैः । रूपेण सौम्यासौम्यलक्षणेन । व्याभाषणेन अन्योन्यसंभाषणेन च । तौ ज्ञेयौ ॥ २४ ॥ यदि प्रहृष्टमनसौ यदि शुद्धभावौ । तदा प्रशंसाभिः तदनुकूलेङ्गितैश्च पुनः पुनः विश्वासयन् ममैवाभिमुखं अनुकूलं यथा भवति तथा । स्थित्वा स्थापयित्वा । धनुर्धरौ धनुर्धरतयात्र वने प्रवेशस्य प्रयोजनं

इहनपश्यामि तस्येहागमनंनसंभावयामीत्यर्थः ॥ १५ ॥ **रामानु०** मतौ सम्यग्विचारविषयबुद्धौ ॥ १७ ॥ **ति०** ननुततोभयाभावेपितत्प्रेरिताद्भयंतत्राह—**बुद्धीति** ॥ १८ ॥ **टीका०** सुरसुतः सुरराजः तदुपमौ । "पार्थिवेतनयेसुतः" इत्यमरः ॥२०॥ **ति०** ननुवनचारिणावानरेणवालिनाकुतोऽनयोःप्रवर्तनातत्राह—**राजानइति** । बहुमित्राः जात्यन्तरेष्वपिमित्रवन्तः । यथा दशरथोगृध्रराजेनमित्रवान् । एवंवालिनापिनरमैत्र्यंसंभावितमितिभावः । **ति०** राजानोबहुमित्राः वेषान्तरधारिभिर्मित्रैः शत्रून्घातयिष्यन्तीतिभावः ॥ २१ ॥ **ती०** विज्ञेयाः शोधनीयाः॥ २२ ॥ **ति०** प्राकृतेनेव उदासीनेनेव । व्याभाषणेन तत्तत्प्रसङ्गेदीयमानोत्तरेणच ॥ २४ ॥ **ति०** तयोर्मनुष्ययोः । यदित्वयिसमीपस्थिते प्रहृष्टमनसौ उत्तरप्रत्युत्तरादौसंतुष्टमनसौ । तदा तयोरभिमुखंस्थित्वा ममैवप्रशंसाभिः तद्बोधकवाक्यैः । इङ्गितैः मामकाभिप्रायबोधनैः । मयितौविश्वासयन्नस्यवनस्यप्रवेशस्यप्रयोजनं पृच्छ । यद्वा ममैवाभिमुखंयथातथास्थित्वाप्रशंसाभिः तयोस्स्तुतिभिः । इङ्गितैः स्वीयैः । तवात्मनिमयिचविश्वासयन्पृच्छेत्यन्वयः । स्वाभिमुखस्थितिकथनमन्यादृशवचनकथनसंभावनयातन्निरासायेतिबोध्यं ॥ २५—२६ ॥ **ति०** प्रश्नावसरंदर्शयति—**शुद्धेति** ।

**[ पा० ]** १ ख. नेह. २ ग. च. ज. मेमतौ. ३ छ. झ. प्रणिहितावेव. ४ घ. नास्तिहिक्षमः. ५ छ. झ. ञ. ट. श्छद्मचारिणः. ६ छ. झ. मविश्वस्ताश्छिद्रेषु. ७ क. ख. घ.—ट. बहुदर्शिनः. ८ च. झ. प्राकृतेनेव. ९ ख. घ. रूपेणाभाषणेनच. १० ज. लक्षयंश्च. ११ ख. विद्धिलं. १२ ग. संभाषणैर्वा. क. व्याभाषणैर्वा. १३ छ. ज. झ. ट. रूपैर्वाविज्ञेयादुष्टतानयोः.

इत्येवं कपिराजेन संदिष्टो मारुतात्मजः ॥ चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ २८ ॥
तथेति संपूज्य वचस्तु तस्य तत्कपेः सुभीमस्य दुरासदस्य च ॥
महानुभावो हनुमान्ययौ तदा स यत्र रामोतिबलश्च लक्ष्मणः ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ॥ ३ ॥

हनुमता भिक्षुवेषपरिग्रहेण श्रीरामलक्ष्मणवुपेत्य सप्रणामंसप्रशंसनंच तदीययाथात्म्यप्रश्नः ॥ १ ॥ तथा तयोःसुग्रीववृत्तान्तादिनिवेदनपूर्वकं तस्यतत्सख्याकाङ्क्षानिवेदनम् ॥ २ ॥ हनुमतोव्यवहारचातुरीतुष्टेनरामेण लक्ष्मणे हनुमतःसाङ्गसकलवेदवेत्तृत्वनिवेदनपूर्वकं तच्छ्लाघनम् ॥ ३ ॥ लक्ष्मणेन रामचोदनया हनुमन्तंप्रति रामस्यापिसुग्रीवसख्यापेक्षानिवेदनम् ॥ ४ ॥

वचो विज्ञाय हनुमान्सुग्रीवस्य महात्मनः ॥ पर्वतादृश्यमूकात्तु पुप्लुवे यत्र राघवौ ॥ १ ॥
कपिरूपं परित्यज्य हनुमान्मारुतात्मजः ॥ भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः ॥ २ ॥
ततः स हनुमान्वाचा श्लक्ष्णया सुमनोज्ञया ॥ विनीतवदुपागम्य राघवौ प्रणिपत्य च ॥
आबभाषे तदा वीरौ यथावत्प्रशशंस च ॥ ३ ॥

---

पृच्छ ॥ २५—२७ ॥ यद्येतौ शुद्धात्मानौ तदा पुनरपि जानीहि । किं तेनेत्यत्राह—व्याभाषितैरिति । वाकारश्चार्थः । अदुष्टतेति च्छेदः । सुग्रीववचनं समीचीनममन्यतेत्याह—इतीति ॥ २८ ॥ संपूज्य श्लाघयित्वा । सुभीमस्य दुरासदस्येत्येताभ्यांसुनीतित्वं सूचितं । महानुभावः वेषान्तरधारणसमर्थः । सः हनुमान् । यत्ररामोलक्ष्मणश्च तंदेशंययावित्यन्वयः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

---

प्रथमे सर्गे वैकुण्ठवासिनो भगवतः स्वीयेषु केषांचित्स्वपरत्वेवर्तमाने केषांचिद्विषयान्तरप्रावण्यमवलोक्यदूयमानमानसस्य दयावृत्तिविशेषःप्रतिपादितः । द्वितीये चेतनस्य भगवदपराधदण्डभीतस्य तस्मिन्नाभिमुख्यमुक्तं । अथ तल्लाभहेत्वाचार्यकृत्यं दर्शयति तृतीये—वच इत्यादि ॥ १ ॥ रूपान्तरपरिग्रहसामर्थ्यमुच्यते मारुतात्मजइति । शठबुद्धितया वञ्चकबुद्धितया । भिक्षुरूपं संन्यासिवेषं । "भिक्षुःपरिव्राट् कर्मन्दी पाराशर्यपि मस्करी" इत्यमरः ॥ २ ॥ तत इति सार्धः ॥ विनीतवत् सविनयं । उपागम्य प्रणिपत्य नमस्कृत्य । श्लक्ष्णया अपरुषया । सुमनोज्ञया अर्थतोतिरम्यया । वाचा आबभाषे । यथावत्परमार्थतया प्रशशंस च । अत्रभिक्षुरूपस्यहनुमतःप्रणामादन्यत्रापि भिक्षोर्गृहस्थादिविषये प्रणामः कर्तव्यएवेतिविज्ञायते । संन्यासिनो गृहस्थादिप्रणामनिषेधवच-

यद्येतौशुद्धात्मानौ अस्मासुद्वेषरहितौजानीहि ज्ञास्यसि तर्ह्येव तदभिमतंप्रयोजनंपृच्छ । उपसंहरति—**व्याभाषितैरिति**। दुष्टता-अदुष्टताचेतितन्त्रेणपदच्छेदः ॥ २७ ॥ **रामानु०** तावित्यादि । रूपव्याभाषणेनचतयोर्भावंलक्षयस्व । यदिप्रदुष्टमनसौ प्रशंसाभिरिङ्गितैश्चपुनःपुनर्विश्वासयन् ममैवाभिमुखंयथाभवतितथास्थित्वा स्थापयित्वा । अस्यवनप्रवेशस्यप्रयोजनंपृच्छ । धनुर्धरावेतौशुद्धात्मानौयदि तदानीमपिपूर्वोक्तप्रकारेणतौमदीयौकृत्वा आगमनप्रयोजनंजानीहि ॥ २४—२७ ॥ इतिद्वितीयःसर्गः ॥ २॥
**ति०** विज्ञाय तात्पर्यतोज्ञात्वा ॥ १ ॥ **टीका०** भिक्षुरूपं नैष्ठिकब्रह्मचर्यरूपं ॥ **शि०** अशठबुद्धितया वानरत्वसूचितशठबुद्धित्वाभावेनोपलक्षितः । एतेन वानरत्वसूचितशठबुद्धिंमांविज्ञाय रामोनसंभाषेतेतिहनुमत्संभावनासूचिता । रूपान्तरमगृहीत्वा भिक्षुरूपंभेजइत्यनेन इमौदीनदयालूइतिहनुमताज्ञातमितिव्यञ्जितं । तेनतद्बुद्धेः प्रभावातिशयोव्यक्तः ॥ २ ॥ **ति०** यथावत्प्रश-

**[ पा० ]** १ क. ग. ञ. हरिराजेन. २ छ. झ. ट. तत्कपिः. ३ क. ख. ग. ङ.—ट. सुभीतस्य. ४ घ. छ. झ. ट. बलीसलक्ष्मणः. ५ ज. दृश्यमूकात्स. ६ च. भिक्षुवद्ब्रह्मचारीचरामदर्शनलालसः. ज. भिक्षुवद्भैक्षचारीचरामदर्शनलालसः. ७ क. ख. घ. छ. झ. ट. आबभाषेचतौवीरौ. ङ. च. ज. ञ. आबभाषेहितौ. ग. आबभाषेथतौ.

संपूज्य विधिवद्वीरो हनुमान्मारुतात्मजः ॥ उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ ॥ ४ ॥
राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ ॥ देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ॥ ५ ॥
त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः ॥ पम्पातीररुहान्वृक्षान्वीक्षमाणौ समन्ततः ॥ ६ ॥
इमां नदीं शुभजलां शोभयन्तौ तपस्विनौ ॥ धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ॥ ७ ॥
निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः ॥ सिंहविप्रेक्षितौ वीरौ सिंहातिबलविक्रमौ ॥ ८ ॥
शक्रचापनिभे चापे गृहीत्वा शत्रुसूदनौ ॥ श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ ॥ ९ ॥

नान्यज्ञविषयाणीतिमन्तव्यानि । यदिहिज्ञानाधिकं दृष्ट्वा कर्ममात्रेणाधिको यतिर्नप्रणमेत् तर्हि " विप्राणांज्ञानतोज्यैष्ठ्यं " इति मनुवचनं विरुध्येत । नहि तत्प्रणामनिषेधकं मनुवचनं किंचिद्दृश्यते । किंत्वनारभ्याधीतमदृष्टाकरं यत्किंचिद्यतिप्रणामनिषेधवचनं किंवदन्तीसिद्धं । तस्य च विषयोऽज्ञगृहस्थादिरूपः । यत्तु कैश्चिदुक्तं [ रामानुजीयं ] अत्यद्भुतरामलक्ष्मणरूपदर्शनसंजातातिविस्मयस्सन्नङ्गीकृतं भिक्षुरूपं विस्मृत्य " अवशाःप्रतिपेदिरे " इतिवत्प्रणनामेति नविरोध इति । तन्न । उपक्रमविरोधात् । इङ्गितवचनादिभिःपरहृदयज्ञानार्थं हि प्रेषितोयं । नहि तथानियुक्तःसुनिपुणमतिःसचिवधुरंधरः स्वकार्यविरोधकरं परिगृहीताकारविरुद्धमविस्रम्भहेतुत्वेन परेङ्गितानाविष्कारहेतुभूतं कार्यंकुर्यात् । यदप्युक्तं [ रामानु० तीर्थीयं ] " रूपमेवास्यैतन्महिमानंव्याचष्टे " इति न्यायेन दर्शनमात्रेणैतौसुग्रीवविरोधिनिरसनदक्षावितिनिश्चित्य परिगृहीतवेषान्तरस्य स्वस्य चारत्वंप्रकटयितुंनमस्कारं कृतवानिति न दोषइति । तदपिन । तथासति सुग्रीवोनामेत्यादिवक्ष्यमाणमेव प्रथमंकथयेत् । केचित्तु [ टीका० ] भिक्षुर्ब्रह्मचारी । अतो न दोष इत्याहुः । तन्न । तादृशभिक्षुकत्वस्यपूर्वमेव सिद्धत्वेन इदानीमपरिग्राह्यत्वात् । अपरे तु [रामानु०] सर्वथा कपिरूपं परित्यज्येत्युपक्रमात् उपरिष्टात्प्रच्छन्नत्वोक्त्या च मानुषरूपाङ्गीकारावश्यंभावात्तद्रूपविशिष्टं ब्रह्मचर्यमेवात्र भिक्षुशब्देनोच्यतइतिनविरोध इत्यूचिरे । तत्पक्षेतु पूर्वोक्तयादिशादूषणंचिन्त्यं ॥३॥ कामतः भक्त्या । पूर्वोक्तप्रशंसा भक्तिकृता नतु केवलपरीक्षाकृतेति भावः ॥ ४ ॥ राजर्षीत्यादिश्लोकद्वयं । मृगगणान् अन्यान्वनचारिणश्च । त्रासयन्तौ समन्ततः पम्पातीररुहान्वृक्षान् वीक्षमाणौ च भवन्तौ वरवर्णिनौ स्निग्धरूपवन्तौ । कर्मधारयादपि मत्वर्थीयो दृष्टचरः । अतएव राजर्षिदेवप्रतिमौ । संशितव्रतौ तीक्ष्णव्रतौ । अतएव तापसौ तपस्विवेषौ भूत्वा । इमं दुर्गमं देशं कथं प्राप्तौ ॥ ५-६ ॥ इमामित्यादिसार्धश्लोकत्रयमेकान्वयं । पम्पायाःसरस्त्वेपि स्वल्पतयापूर्वापरप्रवाहवत्त्वेन नदीत्वमविरुद्धं । शोभयन्तौ । स्वतेजसेति शेषः । सुवर्णाभौ रामस्य श्यामत्वेपि लक्ष्मणस्य पीतवर्णत्वाच्छत्रिन्यायात्सुवर्णकान्तित्वं । निःश्वसन्तौ वनसञ्चारायासात् । वरभुजौ सुन्दरभुजौ । हस्तिहस्तेत्यनेन दैर्घ्यपीवरत्वयोर्वक्ष्यमाणत्वात् । इमाः प्रजाः पक्षिमृगादीन् । पीडयन्तौ । अपूर्वदर्शनेन विद्रावकावित्यर्थः । सिंहस्येवविप्रेक्षितं वीक्षणं ययोस्तौ । सिंहातिबलविक्रमौ सिंहातिशायिबलपराक्रमौ । शक्रचापनिभेइन्द्रधनुस्तुल्ये चापे गृहीत्वा । शत्रुसूदनौ शत्रुसंहारकौ । नीलभेदपरभागतयाधनुषोराभरणत्वं शत्रुसंहारकत्वेनायुधकोटिप्रविष्टत्वंचदर्शितमाभ्यांविशेषणाभ्यां । श्रीमन्तौ कान्तिमन्तौ । रूपसंपन्नौ सौन्दर्ययुक्तौ । वृषभश्रेष्ठविक्रमौ वृषभश्रेष्ठगमनौ । द्युतिमन्तौ तेजस्विनौ । तेजस्तु श्रियोभिन्नमिति न पुनरुक्तिः । एवंभूतौ युवां कावि-

शंस नतुमिथ्यास्तुतिरित्यर्थः ॥ ३ ॥ **रामानु०** कामतः सुग्रीवोपदेशाविरुद्धस्वेच्छातः ॥ **शि०** कामतः सुग्रीवेच्छानुसारात् ॥ ४ ॥ **रामानु०** वर्णिनौ प्रशस्तवर्णौ । वरौचतौवर्णिनौचेतिविग्रहः ॥ **ति०** वरवर्णिनौ ब्रह्मचारिश्रेष्ठौ ॥ ५ ॥ **ति०** समन्ततोवीक्षमाणौ किंचिद्दूरस्थंन्वेषमाणाविवेत्यर्थः ॥ ६ ॥ **ति०** इमांनदीमिति सरस्यपिविस्तृतत्वेननदीत्वोपचारइतिकेचित् । नद्येवेत्यन्ये ॥ **शि०** द्रुतसुवर्णस्यश्यामत्वेनदृश्यमानत्वात् अद्रुतस्यचगौरवर्णत्वेनदृश्यमानत्वात्सुवर्णाभावितिनविरुद्धं । सुवर्णशब्दे-

[ **पा०** ] १ क. ख. घ.—ट. द्वीरौ. २ छ. झ. ट. न्वानरोत्तमः. ३ ख. वाग्भिर्मृद्वीभिस्सत्यविक्रमौ. ४ क—ट. तरस्विनौ. ५ झ. महाबलपराक्रमौ. ६ ङ.—ट. शत्रुनाशनौ. क. ग. घ. शत्रुनाशने.

हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ॥ १० ॥
प्रभया पर्वतेन्द्रोऽयं युवयोरवभासितः ॥ ११ ॥
राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ ॥ पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ ॥ १२ ॥
अन्योन्यसदृशौ वीरौ देवलोकादिवागतौ ॥ यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुन्धराम् ॥ १३ ॥
विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ॥ सिंहस्कन्धौ महोत्साहौ समदाविव गोवृषौ ॥ १४ ॥
आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ॥ सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः ॥ १५ ॥
उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ॥ ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् ॥ १६ ॥
इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने ॥ प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते ॥ १७ ॥
संपूर्णा निशितैर्बाणैस्तूणाश्च शुभदर्शनाः ॥ जीवितान्तकरैर्घोरैः श्वसद्भिरिव पन्नगैः ॥ १८ ॥
महाप्रमाणौ विस्तीर्णौ तप्तहाटकभूषितौ ॥ खड्गावेतौ विराजेते निर्मुक्ताविव पन्नगौ ॥ १९ ॥
एवं मां परिभाषन्तं कस्माद्वै नाभिभाषथः ॥ २० ॥
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः ॥ वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ २१ ॥

त्यन्वयः ॥ ७–१० ॥ प्रभयेत्यर्धं ॥ ११ ॥ राज्येत्यादित्रय एकान्वयाः । अमरप्रख्यौ देवतुल्यपराक्रमौ । देवलोकादागतौ वीराविवस्थितौ । यदृच्छया दैवात् । वसुन्धरांप्राप्तौ चन्द्रसूर्याविव स्थितौ । देवरूपिणौ देवतुल्यरूपिणौ । वीरौ मानुषौ युवां राज्यार्हावपि राज्यं त्यक्त्वा वीरौ जटामण्डलधारिणौ अविच्छिन्नजटामण्डलधारिणौ भूत्वा । इह देशं वनदेशं । कथं किमर्थं । आगतौ । समस्तराजलक्षणलक्षितयोर्युवयोः राज्यभोगएवोचितः । नतु वनवास इतिभावः ॥ १२–१४ ॥ आयताः आजानुविलम्बिनः । सुवृत्ताः भुजगभोगवद्वृत्ताः । बाहवः रामस्यदक्षिणोबाहुरितिलक्ष्मणस्य रामबाहुत्वात्तद्वाहुभ्यां बहुवचनं । यद्वा हनुमतो भक्तत्वेन तस्य चतुर्भुजवेषेण दृश्योऽभवत् । यद्वा द्वयोर्बाहुचतुष्टयवत्त्वाद्बहुवचनं । परिघोपमाः परिघोगदाविशेषः तदुपमाः । स्वसौन्दर्यानुभवपराणां समस्तविरोधिनिवर्तनक्षमा इत्यर्थः । सर्वभूषणभूषार्हाः "आभरणस्याभरणं" इत्युक्तरीत्या भूषणान्यपि भूषयितुमर्हाः । किमर्थंनविभूषिताः इमान् भूषणैरलंकृत्य आभरणाभरणत्वं किमितिनप्रकाशितमित्यर्थः । यद्वा दृष्टिदोषपरिहाराय एतादृशबाहुसौन्दर्यमाच्छादयितव्यं । तत्किमर्थं नाच्छादितमितिभावः । यद्वा आभरणच्छन्नसौन्दर्यमेवालमस्मद्वशीकरणाय । अधिकं निरावरणसौन्दर्यप्रदर्शनमितिभावः । यद्वा राजकुमाराणां क्षणमात्रं ताम्बूलाभावेम्लानतावत्क्षणमात्रविरहेपि स्थातुमनर्हा भूषाःकिमर्थं विश्लेषिताइतिभावः । यद्वा एवं भूषणविरहःकस्यवा शत्रोर्मूलघातायेतिभावः । अनेन अप्रतिहतसंकल्पत्वेपि नित्यसूरीन्विहाय चतुर्धावतरणे को हेतुरित्युक्तं ॥ १५ ॥ विन्ध्यमेरुविभूषितामिति दृष्टान्तार्थः—यथा विन्ध्यमेरू भूरक्षकौ तथा भवन्तावपीति ॥ १६ ॥ चित्रे लोकेएतादृशधनुषोरदर्शनादद्भुतावहे । वज्रे इत्यभूतोपमा ॥ १७ ॥ तूणा इतिबहुवचनं एकैकस्य पार्श्वद्वयेपि तूणीरद्वयसत्त्वात् ॥ १८ ॥ महाप्रमाणाविति दीर्घत्वं । विस्तीर्णाविति विशालता । तप्तहाटकं द्रुतकनकं । निर्मुक्तौ निर्मुक्तत्वचौ ॥ १९ ॥ परिभाषन्तं पुनःपुनर्भाषमाणं । नाभिभाषतः नाभिभाषेथे । व्यत्यय आर्षः ॥ २० ॥ एवं स्ववाक्सौष्ठवेन तूष्णींभूतौदृष्ट्वास्वका-

नावस्थाद्वयापन्नयोर्ग्रहणेबाधकाभावात् ॥ **ति०** शोभनोवर्णआभाकान्तिश्चययोस्तौ ॥ ७ ॥ **ती०** एकत्वेनप्रसिद्धस्यापिवज्रायुधस्यानेकत्वकल्पनमुपमेयानेकत्वनिबन्धनमित्यविरुद्धं ॥ **स०** अनेकेन्द्रापेक्षयावज्रेइत्युक्तिः ॥ १७ ॥ **ति०** ननुकस्त्वंकस्यवा यस्या-

[ **पा०** ] १ छ. झ. ट. पर्वतेन्द्रोसौ. २ ङ. च. ज. ञ. देशमुपागतौ. ३ ङ.—ट. दिहागतौ. ४ घ. ङ. च. ज. ञ. यदृच्छयेह. ५ क. ख. घ. च. ज. ञ. महासत्वौ. ६ ग. सुधनुषी. ७ छ. झ. ट. संपूर्णाश्चशितैः. ८ ख. स्तूण्यश्च. ९ क. ख. ङ.—ट. ज्वलद्भिरिव. ग. ज्वलद्भिरिवपावकैः. १० क. ख. ग. ङ. च. छ. झ. ञ. ट. विपुलौ. घ. विवृतौ. ११ ज. झ. ट. भूषणौ. १२ ग. ङ.—ट. निर्मुक्तभुजगाविव. क. निर्मुक्तौभुजगाविव. १३ क. ख. ग. कस्मान्नैवाभिभाषतः. १४ छ. झ. ट. द्वानरपुङ्गवः.

प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ॥ राज्ञा वानरमुख्यानां हनू[1]मान्नामवानरः ॥ २२ ॥
युवाभ्यां [2]सह धर्मात्मा सुग्रीवः सख्यमिच्छति ॥ तस्य मां सचिवं वि[3]त्तं वानरं पवनात्मजम् ॥२३॥
भिक्षुरूप[4]प्रतिच्छन्नं सुग्रीवप्रियका[5]म्यया ॥ ऋश्यमूकादिह प्राप्तं कामगं [6]कामरूपिणम् ॥ २४ ॥
एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ ॥ [7]वाक्यज्ञौ वाक्य[8]कुशलः पुनर्नोवाच किंचन ॥२५॥
एत[9]च्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् ॥ प्रहृष्टवदनः श्रीमान्भ्रातरं पार्श्वतः स्थितम् ॥ २६ ॥
सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ॥ तमेव काङ्क्षमाणस्य ममान्तिकमु[10]पागतः ॥ २७ ॥
तम[11]भ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ॥ वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्त[12]मरिंदम ॥ २८ ॥
नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ॥ नासामवेदविदुषः शक्यमेवं प्र[13]भाषितुम् ॥ २९ ॥
नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ॥ बहु व्याहरताऽनेन न किंचिदपशब्दितम् ॥ ३० ॥

येमावेदयति—सुग्रीव इत्यादिना । विनिकृतः वञ्चितः ॥ २१ ॥ महात्मना महाबुद्धिना ॥ २२ ॥ वित्त विदेर्लोटि मध्यमपुरुषद्विवचनं ॥ २३ ॥ तर्हि कथं भिक्षुरसीत्यत्राह—भिक्ष्विति ॥ २४ ॥ नोवाच । तद्वचनश्रवणेच्छयेतिभावः ॥ २५ ॥ एतदिति । हनुमन्तंस्तोतुंलक्ष्मणं प्रत्युक्तिः ॥ २६ ॥ उपागतः । स एव सचिवद्वारेति शेषः ॥ २७ ॥ स्नेहयुक्तं । मयि सुग्रीवेचप्रीतियुक्तमित्यर्थः । अभ्यभाष अभिभाषस्व । अडागमपरस्मैपदे आर्षे । मन्त्रिणा स्वामिनो वचनं न नीतिरिति सौमित्रिं नियोजयति ॥ २८ ॥ अथ चेतनोज्जीवनस्याचार्यमुखमन्तरेणासंभवादाचार्यलाभं दर्शयति—नानृग्वेदेत्यादिना ॥ “ आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थदः शुचिः ॥ गुरुभक्तिसमायुक्तःपुराणज्ञोविशेषतः । एवंलक्षणसंपन्नो गुरुरित्यभिधीयते ” इत्युक्तमाचार्यलक्षणंदर्शयति । ऋग्वेदेषु विनीतस्य शिक्षितस्य । विनयधारणवेदनानि सर्वत्रवेदेषुयोज्यानि । यद्वा प्रतिवर्णस्वरभूयस्त्वेनमनोनियमनेन सावधानोच्चार्यत्वादृग्वेदविनीतस्येत्युक्तिः । एकैकानुवाकेअनुवाकान्तरवाक्यासाङ्कर्येणधारणस्यदुष्करत्वाद्यजुर्वेदधारिणइत्युक्तं । ऊहरहस्यादिगर्भितगानविशेषाणांदुर्विज्ञेयत्वात् सामवेदविदुष इति । आथर्वणस्याध्ययनादिनियमाभावादनुक्तिः । एवं प्रभाषितुं । देशं कथमिमं प्राप्तावित्यारभ्य उक्तरीत्या व्यक्तंवक्तुं न शक्यमिति । अनृग्वेदविनीतस्य एवं प्रभाषितुंन शक्यं । अयजुर्वेदधारिण एवंप्रभाषितुं नशक्यं । असामवेदविदुषः एवंप्रभाषितुं नशक्यमिति प्रत्येकमन्वयः । प्रत्येकं नञ्प्रयोगात् दार्ढ्यार्थंव्यतिरेकमुखेनोक्तिः । अनृग्वेदविनीतस्य “ उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ” इत्यादिनोक्तसृष्टिस्थितिसंहारकर्तृत्वं वक्तुं नशक्यं । ऐतरेयके हि “ब्रह्मवा इदमेक एवाग्र आसीत् ” इत्यादिना तथात्वंप्रथमतः प्रतिपाद्यते । अयजुर्वेदधारिणः “ मानुषौ देवरूपिणौ ” इत्यादिना “ अजायमानो बहुधा विजायते ” इत्युक्तावताररहस्यं वक्तुं न शक्यं । असामवेदविदुषः “सुवर्णाभौ पद्मपत्रेक्षणौ ” इत्येवं भाषितुं न शक्यते । छान्दोग्येहि “ अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते ” इत्यारभ्य “ तस्य यथाकप्यासं पुण्डरीकमेवमक्षिणी ” इत्याम्नायते ॥ २९ ॥ न केवलं वेदाध्ययनं अङ्गाध्ययनंच कृतमित्याह—नूनमिति ॥ तत्र हेतुमाह—बह्विति । अपशब्दितं अपकृष्टं नशब्दितं । अत्रादौ यदित्यध्याहार्यं । व्याकरणं

स्माभिःप्रत्युत्तरंदेयंतत्राह—**सुग्रीवइति** । सुग्रीवस्याक्षुद्रत्वबोधनायतत्स्तुतिपूर्वकमुक्तिः । विनिकृतः निरस्तः ॥२१॥ **ति०** ननुत्वद्राजेनास्मत्समीपेप्रेषणंकिमर्थं । तत्राह—**युवाभ्यामिति** ॥२३॥ **ति०** ननुवानरराजसचिवस्यमानुषंरूपंकुतस्तत्राह—**भिक्षुरूपेति** । अनेनशुद्धंवानररूपत्वमेवनेत्यपिबोध्यं ॥ २४ ॥ **शि०** वाक्यज्ञः वाक्यतात्पर्यज्ञाता । वाक्यकुशलः वाक्यप्रयोगेनिपुणः ॥ २५ ॥ **रामानु०** नकिंचिदपशब्दितमित्यनेन संस्कृतभाषयैवव्यवहृतवानित्यवगम्यते ॥ **ति०** ननुवेदमात्राध्यायिनानकिंचिद्राजमन्त्रादिज्ञातुंशक्यंतत्राह—**नूनमिति** । कृत्स्नं पदतदर्थस्वरूपनिर्णयोपयोगिन्यायसहितं । व्याकरणबोध्यसाधुत्वस्या-

**[ पा० ]** १ ख. हनूमान्मारुतात्मजः. २ झ. ट. सहि. ३ क. ग.—च. ज. ट. विद्धि. ४ घ. परिच्छन्नं. ५ क. ग. ङ.—ट. कारणात्. ६ छ. ज. झ. कामचारिणं. ७ ट. वाक्यज्ञो. ८ ख. वाक्यकुशलौ. ९ ङ. च. ज. ञ. तच्छ्रुत्वावचनंतस्य. ख. एतच्छ्रुत्वाशुभंवाक्यं. १० छ. झ. ट. मिहागतः. ११ ख. घ. अभिभाषस्व. १२ छ. झ. मरिन्दमं. १३ छ. झ. विभाषितुं.

**न मुखे नेत्रयोर्वाऽपि ललाटे च भ्रुवोस्तथा ॥ अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित् ॥ ३१ ॥**
**अविस्तरमसंदिग्धमविलम्बितमद्रुतम् ॥ उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥ ३२ ॥**
**संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम् ॥ उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥ ३३ ॥**
**अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ॥ कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥ ३४ ॥**
**एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु ॥ सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥ ३५ ॥**

श्रुतं । अतो नापशब्दितं । कृत्स्नं श्रुतम् । अतो न किंचिदपशब्दितं । प्रकृतिप्रत्ययसमाससन्ध्यादिषु किंचिदपि नापभ्रंशितमित्यर्थः । बहुधा श्रुतंएकवारश्रवणे क्वचिदन्यथाभावोपि स्यात् ॥ ३० ॥ शिक्षा चानेन श्रुतेत्याह चतुर्भिर्न मुख इत्यादिभिः ॥ लोके केषांचिद्व्यवहारदशायां मुखादिषु सर्वत्र यत्र कुत्रापिवा विकारोदृश्यते न तथात्रेति भावः । दोषः विकृतिः । न संविदित इत्यनेन स्वेन सूक्ष्ममवलोकितमिति गम्यते । तदुक्तं शिक्षायां । "गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोल्पकण्ठश्च षडेते पाठकाधमाः ॥ न शिरः कम्पयेद्गात्रं भ्रुवौ चाप्यक्षिणी तथा । तैलपूर्णमिवात्मानं तत्तद्वर्णे प्रयोजयेत्" इति ॥ ३१ ॥ एवमुच्चारणशक्तिरुक्ता । अथवाक्यप्रयोगचातुरीं दर्शयति—अविस्तरमिति ॥ अविस्तरं शब्दप्रपञ्चरहितं । "प्रथनेवावशब्दे" इति घञोनिषेधात् "ऋदोरप्" इत्यप्प्रत्ययः । असंदिग्धं पदवर्णसंदेहरहितं । अविलम्बितं विलम्बितत्वे स्वाशक्तिःप्रकटिता स्यात् । अद्रुतं द्रुतोच्चारणे परप्रत्यायनं न स्यात् । उरःस्थं मन्द्रं । कण्ठगं मध्यमं । तादृशं वाक्यं मध्यमे स्वरे वर्तते । न मन्द्रं न मध्यमं न द्रुतं न विलम्बितं चेत्यर्थः । इदं चतुर्दशदोषाभावानामुपलक्षणं । तथाह शिक्षाकारः "शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकुस्वरं शीर्षगतं तथा स्थानविवर्जितम् ॥ विस्वरं विरसं चैव विश्लिष्टं विषमान्वितम् । व्याकुलं तालुभिन्नं च पाठदोषाश्चतुर्दश" इति ॥ अन्यत्राप्युक्तं "उपांशुदष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं नतु सानुनास्यम् ॥ ३२ ॥ एवं पाठदोषा उक्ताः । अथ तद्गुणानाह—संस्कारेति । संस्कारो व्याकरणकृता शब्दशुद्धिः व्यक्तपदत्वमिति यावत् । क्रमः वर्णानांक्रमिकता । व्यक्ताक्षरत्वमिति यावत् । कल्याणीं इतरगुणवतीं । हृदयहारिणीं मधुरां । वाणीं उच्चारयति उच्चरति । तदिदमुक्तं शिक्षायां । "माधुर्यमक्षरव्यक्तिः पदच्छेदस्तथाऽस्वरा । धैर्यं लयसमलं च षडेतेपाठकागुणाः" इति ॥ ३३ ॥ माधुर्यपराकाष्ठामाह—अनयेति ॥ चित्रया आश्चर्यावहया । त्रिस्थानानि उरःकण्ठशिरांसि । व्यज्यन्ते एषु वर्णाइतिव्यञ्जनानि । त्रिस्थानरूपव्यञ्जनेषु तिष्ठतीति तथा । तथात्वं च न तदुत्पन्नत्वं । शिरस्यत्वस्य निषिद्धत्वात् । शीर्षगतं तथेति ह्युदाहृतं । किंतु उदात्तानुदात्तस्वरितवत्त्वं । तथोक्तं शिक्षायां "अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कण्ठमूलीयः पार्श्वास्ये प्रचयस्य तु" इति ॥ नाराध्यते न तोष्यते । कस्येत्यस्य विवरणं उद्यतासेररेरपीति । उद्यतासेः छेत्तुमुद्धृतासेरित्यतिक्रूरतोक्तिः । अनेन हनुमदादिभी रामादीनां संस्कृतभाषयैव व्यवहार इति गम्यते ॥ ३४ ॥ एवं हनुमतो वाक्चातुरीमभिनन्द्य बुद्धिचातुरीमभिनन्दति—एवंविध इति ।

र्थघटितत्वात् । अनेनसर्वज्ञत्वंसूचितं । तथाश्रवणेहेतुमाह—**बह्विति** ॥ ३० ॥ इङ्गितैरप्यसौविश्वासयोग्यइत्याह—**नमुखइति** । दोषःसंविदितः । व्यवहारकालेइतिशेषः ॥ ३१ ॥ **ति०** अव्यथं नविद्यतेश्रोतृश्रुतेर्व्यथायस्मात्तादृशं ॥ तेनाश्रुतिकटुवर्णमित्यर्थः । उरस्स्थं मध्यमारूपेण । कण्ठगं वैखरीरूपेण । कण्ठविवराच्छ्रोतृश्रोत्रंगतं । अतएवमध्यमस्वरं नात्युच्चैः नातिनीचैः ॥ ३२ ॥ **ति०** संस्कारक्रमसंपन्नां संस्काराणांक्रमे क्रमेणजनने संपन्नांसमर्थां । "विशिष्टानुपूर्वीविशेषरूपेणपदादीनांग्रहणायक्रमवत्तत्तद्वर्णाकारसंस्कारानन्तःकरणउत्पाद्यतत्क्रमेणक्रमवद्वर्णावभासपदवाक्यज्ञानं" इतिवाक्यप्रदीपादौस्पष्टं । तेनमध्यमवृत्त्योच्चारणंसूचितं । तदाह—**अद्रुतामविलंबितामिति** । अतएवहृदयहर्षिणीं ॥ ३३ ॥ **ति०** कार्याणांगतयः परिपाकाः ॥ ३५ ॥

**[ पा० ]** १ छ. झ. ट. नेत्रयोश्चापि. २ क. ग. ङ.—ट. सर्वेषु. ३ घ. अविस्वरं. ४ क. ग. ङ.—ज. मव्ययं. ख. झ. ञ. ट. मव्यथं. ५ ङ. च. ज. ञ. मध्यमेवर्ततेस्वरे. छ. झ. ट. वर्ततेमध्यमस्वरं. ख. वर्ततेमध्यमस्वरे. ६ क. मन्यूनाधिकविस्तरां. ७ घ.—ट. हर्षिणीं.

एवं गुण[1]गणैर्युक्ता यस्य स्युः कार्यसाधकाः ॥ तस्य सिद्ध्यन्ति [2]सर्वार्था [3]दूतवाक्यप्रचोदिताः ॥३६॥
एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् ॥ अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥३७॥
विदिता नौ गुणा विद्वन्सुग्रीवस्य महात्मनः ॥ तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ॥ ३८ ॥
यथा ब्रवीषि हनुमन्सुग्रीववचनादिह ॥ तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥ ३९ ॥
तत्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः ॥
मनः समाधाय जयोपपत्तौ सख्यं तदा कर्तुमियेष ताभ्याम् ॥ ४० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ॥ ४ ॥

हनुमता श्रीरामंप्रति पंपासंप्राप्तिहेतुप्रश्नः ॥ १ ॥ लक्ष्मणेन रामचोदनयातंप्रति सीतावियोगान्तरामवृत्तान्तकथनपूर्वकं कबन्धवचनानुवादेन रामागमनस्य सुग्रीवसख्यसंपादनफलकत्वोक्तिः ॥ २ ॥ हनुमता रामलक्ष्मणौप्रति सुग्रीवस्य समानदुःखतानिवेदनेन रामप्रसादापेक्षितया तेनसीतान्वेषणेसाहाय्यकरणोक्त्यानिजरूपपरिग्रहणपूर्वकंतयोःस्वस्कन्धारोपणेनऋश्यमूकप्रापणम् ॥ ३ ॥

ततः [5]प्रहृष्टो हनुमान्कृत्यवानिति तद्वचः ॥ श्रुत्वा [6]मधुरसंभाषं सुग्रीवं मनसा गतः ॥ १ ॥
[7]भव्यो राज्यागमस्तस्य सुग्रीवस्य महात्मनः ॥ [8]यदयं कृत्यवान्प्राप्तः कृत्यं चैतदुपागतम् ॥ २ ॥
ततः परमसंहृष्टो हनुमान्[9]प्लवगर्षभः ॥ प्रत्युवाच ततो [10]वाक्यं रामं [11]वाक्यविशारदः ॥ ३ ॥

एवंविधः एवंप्रष्टा । अस्मत्प्रशंसाव्याजेन कुलगोत्रनामधेयराज्यत्यागकारणादीनां प्रष्टा । गतयः सिद्धयः ॥ ३५ ॥ उक्तमर्थमन्वयमुखेनापि दर्शयति—एवमिति ॥ दूतवाक्यप्रचोदिताः । दूतवाक्यमूलाएवसिद्ध्यन्ति । नप्रधानापेक्षा इतिभावः ॥ ३६ ॥ वाक्यज्ञो वाक्यज्ञमित्युक्त्या यथारीत्या हनुमतोक्तं तथैवसौमित्रिणापीत्युच्यते ॥ ३७ ॥ विद्वन्निति हनुमत्संबोधनं ॥ ३८ ॥ यथेति अनेन ये तावदाचार्याभिमाननिष्ठाः तेषां कार्यं तद्वचनादेव करिष्यामीति भगवतःप्रतिज्ञासूचिता ॥ ३९ ॥ जयोपपत्तौ वालिजयोपपत्तिनिमित्तं ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

अथाचार्यमुखेन चेतनलाभश्चतुर्थे—तत इत्यादि ॥ मधुरसंभाषं मधुरभाषणं । तद्वचः श्रुत्वा कृत्यवान् कार्यवान् रामः इति प्रहृष्टःसन् सुग्रीवंमनसा गतः । "तमेव चावां मार्गावः"इति वचनभावतया रामस्य कृत्यवत्त्वज्ञानं ॥ १ ॥ मनसा गत इत्येतद्दर्शयति—भव्य इति ॥ यदस्मादयं कृत्यवान्प्राप्तः । तस्मात् महात्मनः महाभाग्यस्य । तस्य सुग्रीवस्य राज्यागमः भव्यः भावी । एतत्कृत्यं राज्यागमनरूपकार्यं । उपागतं समीपे आगतं । निष्पन्नप्रायमित्यर्थः ॥ २ ॥ अस्मिञ्श्लोकेप्लवगर्षभ इत्यत्र गकारो गायत्र्या दशमाक्षरं । नवसहस्रश्लोका गताः ॥ ३ ॥

ति० नौ आवयोः । तमेव सुग्रीवमेव । मार्गावः मार्गयावः ॥३८॥ यथाब्रवीषि सख्यमिच्छतीतियदवादीः । तत्तथैवकरिष्यावइत्यर्थः ॥ ३९ ॥ ति० ताभ्यां रामसुग्रीवाभ्यां ॥ स० ताभ्यां रामलक्ष्मणाभ्यां ॥ टीका० "सुग्रीवोमारुतिंतत्रप्रेषयामास राघवम् । मारुतिप्रेषणंश्रुत्वासद्गुरुंलभतेनरः । राममारुतिसंवादश्रवणाद्राज्यमाप्नुयात्" इतिस्कान्दे ॥४०॥ इतितृतीयस्सर्गः ॥३॥
ती० एतदितिषष्ठी । एतस्यरामस्येत्यर्थः । कृत्यंच उपागतं उपसमीपेआगतं निष्पन्नप्रायमितियावत् ॥ शि० कृत्यंतत्प्रयोजनं च एतदुपागतं एतंसुग्रीवंउपागतं सुग्रीवसाध्यत्वेननिश्चितमित्यर्थः ॥ २ ॥ शि० ततः सुग्रीवराज्यप्राप्तिनिश्चयाद्धेतोः परम-

[ पा० ] १ ज. ञ. गणैर्युक्तोयस्यस्यात्कार्यसाधकः. २ छ. झ. ट. सर्वेर्थाः. ३ छ. हितवाक्य. ४ क. ग. च. ज. ञ. मधुरं. ५ ख. सहृष्टो. ६ क.—ज. ञ. मधुरभाषंच. झ. ट. मधुरभावंच. ७ च. छ. झ. ट. भाव्यो. ८ क. यद्रामः. ९ झ. प्लवगोत्तमः. १० ङ. च. छ. ज. ञ. रामंवाक्यं. ११ क. छ. ज. झ. ट. वाक्यविशारदं. ग. वाक्यविदांवरं.

किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम् ॥ आगतः सानुजो दुर्गं नानाव्यालमृगायुतम् ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः ॥ आचचक्षे महात्मानं रामं दशरथात्मजम् ॥ ५ ॥
राजा दशरथो नाम द्युतिमान्धर्मवत्सलः ॥ चातुर्वर्ण्यं स्वधर्मेण नित्यमेवाभ्यपालयत् ॥ ६ ॥
न द्वेष्टा विद्यते तस्य नैच स द्वेष्टि कंचन ॥ स च सर्वेषु भूतेषु पितामह इवापरः ॥
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ॥ ७ ॥
तस्यायं पूर्वजः पुत्रो रामो नाम जनैः श्रुतः ॥ शरण्यः सर्वभूतानां पितुर्निर्देशपारगः ॥ ८ ॥
वीरो दशरथस्यायं पुत्राणां गुणवत्तमः ॥ राजलक्षणसंपन्नः संयुक्तो राजसंपदा ॥ ९ ॥
राज्याद्भ्रष्टो वने वस्तुं मया सार्धमिहागतः ॥ भार्यया च महातेजाः सीतयाऽनुगतो वशी ॥
दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ १० ॥
अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः ॥ कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ॥ ११ ॥
सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः ॥ ऐश्वर्येण च हीनस्य वनवासाश्रितस्य च ॥ १२ ॥
रक्षसाऽपहृता भार्या रहिते कामरूपिणा ॥ तच्च न ज्ञायते रक्षः पत्नी येनास्य सा हृता ॥ १३ ॥
दनुर्नाम दितेः पुत्रः शापाद्राक्षसतां गतः ॥ आख्यातस्तेन सुग्रीवः समर्थो वानरर्षभः ॥ १४ ॥

पम्पाकानने पम्पोपवने मण्डितं वनं दण्डकारण्यं । दण्डकारण्येप्येतत्प्रदेशं किमर्थमागत इति भावः । अनुजत्वमाकारसाम्यात्तमभ्यभाषेति नियोजनाच्चेति ॥ ४ ॥ महात्मत्वेन दशरथात्मजत्वेन चाचचक्ष इत्यर्थः ॥ ५—६ ॥ सर्वेषु भूतेषु मध्ये पितामह इव श्रेष्ठ इत्यर्थः ॥ ७—८ ॥ पुत्राणां पुत्राणां मध्ये ॥ ९ ॥ ऐश्वर्यभ्रंशदशायामप्यनुवर्तनद्योतनाय दिनक्षय इत्युक्तं ॥ १० ॥ भवानस्य कइत्याकाङ्क्षायामाह—अस्यावरो भ्राता एतदभिप्रायेणभ्रातास्मि । अहंतु गुणैर्दास्यमुपागतः गुणवशीकृतहृदयःसन् तस्य दासोस्मि । यद्यपि परवानस्मीत्यादौ स्वरूपप्रयुक्तदास्यमुक्तं तथापि योग्यताप्रकर्षाद्गुणोत्तम्भितंतद्दास्यमितितदविरोधोद्रष्टव्यः । उपेत्यनेन सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यप्राप्तइत्युच्यते । इदमपि कैङ्कर्यं तन्मुखोल्लासार्थं न तु मदर्थमित्याह—कृतज्ञस्य बहुज्ञस्येति । अल्पमपि कृतं बहुतया जानत इत्यर्थः । इदमपि कैङ्कर्यं सहजमित्याशयेनाह—नाम्ना लक्ष्मणो नामेति । स्वनामतः कैङ्कर्यलक्ष्मीसंपन्न इतिप्रसिद्धः ॥ ११ ॥ सुखेत्यादिश्लोकद्वयमेकान्वयं । यद्वा प्रथमश्लोकस्य पूर्वेणान्वयः । सहजत्वमुपपादयति—सुखेति । महार्हस्य ऐश्वर्यसंपन्नस्य । वनवासाश्रितस्य दुःखितस्येत्यर्थः । तथाच समृद्धिदशायामसमृद्धिदशायां च दास्योक्त्या सहजत्वमुपपादितं । सहजमेवकैङ्कर्यं । गुणास्तुतद्वर्धकाइतिभावः ॥ १२ ॥ रहिते आवाभ्यांरहितदेशे ॥ १३ ॥ दनुः दनुवंशजः कबन्धः । दितेः पुत्रः पुत्रप्रायः । तेनसुग्रीवः समर्थ

संहृष्टः ॥ **ति०** एवंसुहृदयत्वमवगत्यस्वस्वाम्युक्तंपृच्छति—**ततइति** ॥ ३ ॥ **ती०** सामान्याकारेणावगतकार्यवत्त्वंविशेषतः पृच्छति—**किमर्थमित्यादिना** ॥ **स०** पंपाकाननमण्डितं पंपाया यान्युदकानि तेषामनेनचेष्टया मण्डितमितिवा ॥ ४ ॥ **ति०** रामचोदितः इङ्गितेनेतिशेषः ॥ ५ ॥ **ति०** पितामहइव पालकत्वेनेत्यर्थः ॥ **स०** द्वेष्टेतितृजन्तं । तेनषष्ठ्युपपत्तिः ॥ ७ ॥ **ति०** निर्देशः नियोगः तत्पारगः तस्यसमाप्तकल्पत्वादेवमुक्तं ॥ **शि०** निर्देशपारगः निर्देशपाराय आज्ञापितसमाप्तयेगच्छतिसः ॥ ८ ॥ **ति०** संयुक्तः संयुज्यमानः ॥ ९ ॥ **रामानु०** दिवाकरप्रभया=दिवाकरानुगमनस्यसायंकालएवसम्यक्प्रतीयमानत्वाद्दिनक्षयपदोपादानं ॥ **ती०** सीतायाःप्रभासाम्यंसर्वावस्थास्वपिनित्यसंनिहितत्वात् ॥ १० ॥ **तनि०** अस्यावरोभ्राता अहंतुदास्यंगतः । सर्वदेशसर्वकालादिषुअविश्लेषेणकैङ्कर्यकारित्वंद्योतयितुमुपपदं । सहजसिद्धदास्यव्रतसंबन्धिनोपिभोग्यतमत्वमाह—**गुणैरिति** ॥ ११ ॥ **ति०** नज्ञायते विशिष्येतिशेषः ॥ **स०** संहृतेत्यत्र समः नज्ञायतइत्यनेनान्वयः ॥ येनास्यचाहृतेतिपाठे नकाप्य-

[ **पा०** ] १ क. ग. झ. ञ. ट. किमर्थंच. २ ख. दुर्गं. ३ ख. घोरं. ४ क. ग. झ. मेवाभिपालयन्. ५ छ. झ. ट. सतुद्वेष्टिनकंचन. घ. सचनद्वेष्टिकंचन. ६ छ. झ. ट. सतु. ७ घ. लोकेषु. ८ झ. ट. ज्येष्ठो. ९ क.—ङ. झ. ञ. ट. गुणवत्तरः. १० छ. झ. ट. मयावस्तुंवने. ११ छ. झ. ट. महाभाग. १२ ख. ङ.—झ. ट. विहीनस्य. १३ छ. झ. ट. वनवासेरतस्यच. १४ ठ. संहृता. झ. वाहृता. छ. ट. चाहृता. १५ क. ख. च. श्रियःपुत्रः. १६ ङ. च. ज. ञ. सामात्यो. १७ क. ग. ङ. छ. झ. ट. वानराधिपः.

स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् ॥ एवमुक्त्वा दनुः स्वर्गं भ्राजमानो गतः सुखम् ॥१५॥
एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः ॥ १६ ॥
अहं चैव हि रामश्च सुग्रीवं शरणं गतौ ॥ १७ ॥
एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः ॥ लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥१८॥
पिता यस्य पुरा ह्यासीच्छरण्यो धर्मवत्सलः ॥ तस्य पुत्रः शरण्यश्च सुग्रीवं शरणं गतः ॥ १९ ॥
सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा ॥ गुरुर्मे राघवः सोयं सुग्रीवं शरणं गतः ॥ २० ॥
[ इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः । धर्मे निगदितश्चैव पितृनिर्देशपालकः ॥ २१ ॥
तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः ॥ रावणेन हृता भार्या सुग्रीवं शरणं गतः ॥ २२ ॥ ]
यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः ॥ स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते ॥ २३ ॥
येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः ॥ मानिताः सततं राज्ञा सदा दशरथेन वै ॥ २४ ॥
तस्यायं पूर्वजः पुत्रस्त्रिषु लोकेषु विश्रुतः ॥ सुग्रीवं वानरेन्द्रं तु रामः शरणमागतः ॥ २५ ॥
शोकाभिभूते रामे तु शोकार्ते शरणं गते ॥ कर्तुमर्हति सुग्रीवः प्रसादं हरियूथपः ॥ २६ ॥
एवं ब्रुवाणं सौमित्रिं करुणं साश्रुलोचनम् ॥ हनुमान्प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ २७ ॥

---

इत्याख्यातः ॥ १४—१५ ॥ ते तुभ्यं याथातथ्येनाख्यातं ॥ १६ ॥ अहमित्यर्धम् ॥ १७ ॥ परत्वसौशील्ये दर्शयति—एष इति । त्रैलोक्यनाथत्वमेव सुग्रीवनाथत्वेच्छायां हेतुः । परत्वं विनासौशील्यस्यागुणत्वात् । इच्छति लप्स्यते नवा स्वयमभिलषति । अपर्यनुयोज्याहिस्वतन्त्राइतिभावः । चकारेण लब्ध्वा चेत्युच्यते । अनुत्तमं परत्वापेक्षयावतारप्रयुक्तातिशयवत् । लोकनाथः सर्वलोकैर्याच्यमानःसर्वस्वामीच । "नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु" धातुः ॥ १८ ॥ तदेव सौशील्यं प्रकारान्तरेणाह—पितेति । शरण्यः प्राप्यः । शरणं रक्षकं ॥ १९ ॥ शरण्य इत्युक्तं विशेषयति—सर्वलोकस्येति ॥ गुरुः अग्रजः ॥ २०—२२ ॥ इमाःप्रजाःसततं प्रसीदेयुः तत्प्रसादलब्धसकलपुरुषार्थतयासर्वदाप्रसन्नचित्ताभवेयुः । वानरेन्द्रस्य स्वप्रसाद्यप्रजैकदेशक्षुद्रतरजनस्य । प्रसादमभिकाङ्क्षते । स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वादिति भावः ॥ २३ ॥ येनेत्यादिश्लोकद्वयमेकान्वयं । येन सततं सर्वगुणोपेताः सर्वोपचारोपेतायथा भवन्ति तथा सदा मानिताः । वानरेन्द्रं वनमात्रप्रसिद्धशाखामृगमिति सौशील्यातिशयध्वनिः ॥ २४—२५ ॥ शोकेनाभिभूते शोकपरतन्त्रे । शोकार्ते शोकपीडिते । कर्मपरतन्त्रं शोकाकुलं स्वजनमालोक्य स्वयं शोकाकुलस्याचार्यमुखं विनोभयशोकानुद्धारादिति भावः ॥२६॥ साश्रुलोचनमिति रामदुःखदर्शनाद्दुःखितत्वमुच्य-

---

नुपपत्तिः ॥१३॥ ति० स्वर्गंगन्तुं दिवमाकाशं गतः उत्पतितः ॥ स० यद्वा सदादिवंगतएव इदानींतुशापान्मुक्तःस्वर्गंगतः ॥१५॥ शि० रामेरक्षणसामर्थ्यमस्तीतिसुग्रीवविश्वासंद्रढयितुंरामगुणान्पुनःपुनर्वर्णयति—एषइत्यादिभिः ॥ नाथं रक्षाकामं । सुग्रीवमिच्छति रक्षकत्वेनप्राप्तुंवाञ्छतीत्यर्थः ॥ १८ ॥ शि० शरणं रक्षाकामं सुग्रीवं गतः प्राप्तः ॥ २० ॥ ति० सर्वगुणोपेताः मूर्धाभिषिक्ताइतियावत् । सदा प्रतिदिनं । सततं अनुक्षणं ॥ शि० मानिताः स्वसेवकत्वेनसत्कृताः ॥ २४ ॥ स० शोकः अभिभूतोयेनस शोकाभिभूतः । वस्तुतस्तादृशेपि इदानींशोकार्ते इवविद्यमाने ॥ शि० सुग्रीवःहरियूथपैस्सहप्रसादंप्रसन्नतांकर्तुमर्हति ॥ एतेनइतःप्रभृतिसुग्रीवेभयंनप्राप्स्यतीतिसूचितं ॥ २६ ॥ ति० साश्रुपातनं अस्माकमप्यन्यशरणापेक्षेत्यश्रुपातनसहितं ॥ २७ ॥

[ पा० ] १ ख. संज्ञास्यति. २ छ. झ. ञ. ट. दिवंगतः. ३ ग. ङ.—ट. चैवच. ४ क. ग. ङ.—ज. ञ. प्राप्तवानुत्तमं. ५ छ. झ. ट. सीतायस्यस्नुषाचासीत्. ६ क. ग.—ट. शरण्यस्य. ख. शरण्यस्सन्सुग्रीवं. ७ इदंश्लोकद्वयं क. पाठेदृश्यते. ८ घ. प्राज्ञाः. ९ छ. झ. ट. सहयूथपैः ग. हरियूथपैः. १० क.—घ. छ. झ. ठ. साश्रुपातनं. ङ. च. ज. ञ. साश्रुभाषितं.

ईदृशा बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियाः ॥ द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः ॥ २८ ॥
स हि [1]राज्यात्परिभ्रष्टः कृतवैरश्च वालिना ॥ हृतदारो वने [2]त्यक्तो भ्रात्रा विनिकृतो भृशम् ॥२९॥
[3]करिष्यति स साहाय्यं युवयोर्भास्करात्मजः ॥ सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे ॥३०॥
इत्येवमुक्त्वा हनुमाञ्श्लक्ष्णं मधुरया गिरा ॥ बभाषे [4]सोभिगच्छेम सुग्रीवमिति राघवम् ॥ ३१ ॥
एवं [5]ब्रुवाणं [6]धर्मात्मा हनुमन्तं स लक्ष्मणः ॥ प्रतिपूज्य यथान्यायमिदं प्रोवाच राघवम् ॥ ३२ ॥
कपिः कथयते हृष्टो यथाऽयं मारुतात्मजः ॥ कृत्यवान्सोपि संप्राप्तः कृतकृत्योसि राघव ॥ ३३ ॥
प्रसन्नमुखवर्णश्च व्यक्तं [7]हृष्टश्च भाषते ॥ नानृतं वक्ष्यते वीरो हनुमान्मारुतात्मजः ॥ ३४ ॥
ततः स [8]तु महाप्राज्ञो हनुमान्मारुतात्मजः ॥ जगामादाय तौ वीरौ हरिराजाय राघवौ ॥ ३५ ॥
भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः ॥ पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥ ३६ ॥

स तु विपुलयशाः कपिप्रवीरः पवनसुतः [9]कृतकृत्यवत्प्रहृष्टः ॥
गिरिवरमुरुविक्रमः प्रयातः [10]सुशुभमतिः सह रामलक्ष्मणाभ्याम् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

ते ॥ २७ ॥ द्रष्टव्याः अन्वेषितव्याः ॥ २८ ॥ विनिकृतः वञ्चितः ॥ २९ ॥ करिष्यतीति परिमार्गणे साहाय्यं करिष्यति । ततःपरंभवतोरग्रे का शत्रुवार्तेतिभावः ॥ ३० ॥ बभाषे पुनरपीति शेषः ॥ ३१ ॥ यथान्यायं दूतानुरूपं ॥ ३२ ॥ अयं हृष्टः सन् यथा यथार्थं कथयते । यथार्थकथने हृष्टत्वं हेतुः । सीतापरिमार्गणं करिष्यतीति यथार्थमेव । सोपि सुग्रीवः कृत्यवान् प्राप्तः जातः । तस्मात् कृतकृत्योसि ॥३३॥ हृष्टपदसूचितं विवृणोति—प्रसन्नेति ॥ वक्ष्यते वक्ष्यति । अनृतं न वदेदित्यर्थः ॥३४॥ हरिराजाय वानरराजाय ॥ ३५ ॥ उक्तं विवृणोति—भिक्ष्विति ॥ ३६ ॥ विपुलयशाः सर्वदेववरप्रसादेन विशालकीर्तिः । कपिप्रवीरः सुग्रीवमपि नियन्तुं समर्थः । अनेनभगवल्लाभआचार्याधीनइत्युक्तं ॥३७॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

---

**स०** दर्शनमागताइतिबहुवचनंगौरवात् ॥ २८ ॥ **स०** वालिनेत्येतद्देहलीदीपन्यायेनोभयत्रान्वेति ॥ २९ ॥ **ति०** यदेवं अतः परिमार्गणेसाहाय्यंकरिष्यतीत्यन्वयः ॥ ३० ॥ **रामानु०** अत्रेतिकरणंद्रष्टव्यं । राघव संप्राप्तोऽयंकपिर्मारुतात्मजः हृष्टः मद्वाक्यश्रवणात्संजातहर्षः । सोपि सुग्रीवोपि । कृत्यवानितियथावत्कथयते अतःकृतकृत्योसीतियोजना ॥ **ति०** सोपित्वयाकृत्यवानितियथाकथयतेतथाजाने एनंदेशंसंप्राप्तस्त्वंकृतकृत्योसीत्यर्थः ॥ संप्राप्तः इहागतस्त्वंकृतकृत्यः सिद्धप्रयोजनोसि । **एतेन** नष्टाश्वदग्धरथन्यायेनद्वयोस्सख्यमेवद्वयोःकार्यसाधकंभवितेतिध्वनितं ॥ ३३ ॥ **रामानु०** हनुमदुक्तवाक्यस्ययाथार्थ्यंसमर्थयते—**प्रसन्नेति** ॥ ३४ ॥ **शि०** हरिराजाय सुग्रीवायजगाम । "गत्यर्थकर्मणि—" इतिकर्मणिचतुर्थी ॥ ३५ ॥ **ति०** वानरं वानरस्येदं । आर्षोऽण् ॥ ३६ ॥ **स०** किंचिद्व्यवधानात्कृतकृत्यवदित्युक्तिः ॥ ३७ ॥ इतिचतुर्थस्सर्गः ॥ ४ ॥

**[ पा० ]** १ क. छ. झ. ट. राज्याच्चविभ्रष्टः. २ क. ग. ङ.—झ. ढ. त्रस्तो. ३ ख. करिष्यतिहि. घ. करिष्यतिच. ४ ङ.—ट. साधुगच्छामः ग. सौम्यगच्छामः. ५ च. छ. ज. ञ. ट. ब्रुवन्तं. ६ घ. धर्मज्ञं. ७ क. ग. हृष्टंच. ८ छ. झ. ट. सुमहाप्राज्ञो. ९ ग. कृतकृत्यवान्प्रहृष्टः. १० ख. ङ.—ट. सशुभमतिः. क. ग. सशुभमुखः.

## पञ्चमः सर्गः ॥ ५ ॥

हनुमता मलयस्थंसुग्रीवमेत्य स्वेनराघवयोः ऋश्यमूकप्रापणनिवेदनपूर्वकं सामस्त्येनरामवृत्तान्तनिवेदनम् ॥ १ ॥ सुग्रीवेण सहर्षंमानुषवेषस्वीकारेणराममेत्य तंप्रति सप्रशंसनं स्वपाणिप्रसारणपूर्वकं मर्यादाबन्धाय तत्पाणिनास्वपाणिग्रहणप्रार्थना ॥ २ ॥ रामेण सुग्रीवपाणिग्रहणपूर्वकं तत्परिष्वङ्गः ॥ ३ ॥ रामसुग्रीवाभ्यामग्निसाक्षिकं सख्यकरणम् ॥ ४ ॥ सुग्रीवेण स्ववृत्तान्तनिवेदनपूर्वकं वालिवधंप्रार्थितेनरामेण तंप्रतितत्प्रतिज्ञानम् ॥ ५ ॥

ऋश्यमूकात्तु हनुमान्गत्वा तुं मलयं गिरिम् ॥ आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ १ ॥
अयं रामो महाप्राज्ञः संप्राप्तो दृढविक्रमः ॥ लक्ष्मणेन सह भ्रात्रा रामोऽयं सत्यविक्रमः ॥ २ ॥
इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः ॥ धर्मे निगदितश्चैव पितुर्निर्देशपारगः ॥ ३ ॥
तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः ॥ रावणेन हृता भार्या स त्वां शरणमागतः ॥ ४ ॥
राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः ॥ दक्षिणाश्च तथोत्सृष्टा गावः शतसहस्रशः ॥ ५ ॥
तपसा सत्यवाक्येन वसुधा येन पालिता ॥ स्त्रीहेतोस्तस्य पुत्रोऽयं रामस्त्वां शरणं गतः ॥ ६ ॥
भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ ॥ प्रतिगृह्यार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७ ॥
श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः ॥ भयं च राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ८ ॥
स कृत्वा मानुषं रूपं सुग्रीवः प्लवगर्षभः ॥ दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ॥ ९ ॥
भवान्धर्मविनीतश्च विक्रान्तः सर्ववत्सलः ॥ आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ १० ॥
तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो ॥ यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ ११ ॥
रोचते यदि वा सख्यं बाहुरेष प्रसारितः ॥ गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥ १२ ॥
एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ॥ स प्रहृष्टमना हस्तं पीडयामास पाणिना ॥ १३ ॥

---

अथपापभीतस्यकर्मानुरूपंफलंदिशतोभगवतोपित्रस्तस्य आचार्यमुखाद्भगवद्गुणाञ्श्रुत्वा तदेकोपायनिष्ठासूच्यतेपञ्चमे—ऋश्यमूकात्त्वित्यादि । रामलक्ष्मणदर्शनभीतःसुग्रीवः ऋश्यमूकादुत्प्लुत्य गहनं मलयाख्यमृश्यमूकपर्यन्तपर्वतं गतः । हनुमान् रामलक्ष्मणौ तत्रप्रतिष्ठाप्य सुग्रीवंतत्रानीतवानिति बोध्यम् ॥ १ ॥ अयं रामः संप्राप्तः । अयं रामः सत्यविक्रमः त्वच्छत्रुनिबर्हणक्षम इत्यर्थः ॥ २ ॥ निगदितः प्रसिद्धः ॥ ३—८ ॥ राघवं प्राप्येति शेषः ॥ ९—११ ॥ मर्यादा व्यवस्था ॥ १२ ॥ एतत्त्विति राम इति

---

**ति०** अयंरामः मलयस्थसुग्रीवदृष्टिपथवर्तित्वादेवंनिर्देशः । पुनराहादराद्रामोयमिति ॥ **शि०** सत्यविक्रमः सत्याय सत्यपरिपालनाय विक्रमः पादन्यासोयस्यसः ॥ आरामः सर्वाभिरामदाता । अरामः अरं अतिप्रकाशं अमतिप्राप्नोतिसः । अयंरामः अयं शापवशेनवालिनाप्राप्तुमशक्यंऋश्यमूकंसंप्राप्तः ॥ श्लोकद्वयमेकान्वयि ॥ **स०** सत्यविक्रमः सति बलेसत्यपि अविक्रमः इदानीमप्रदर्शितविक्रमः । भ्रात्रारामः भ्रातुः तवभ्रातुर्वालिनः आसम्यक् अरामोदुःखंयस्मात्सतथा संप्राप्तइत्यन्वयः ॥ २ ॥ **स०** धर्मे धर्मविषये । रामएवेतिनिगदितः लोकैः ॥ **ति०** धर्मे स्वसत्यपरिपालनरूपधर्मनिमित्तं । निगदितः प्रेरितः । पित्रेतिशेषः ॥ ३ ॥ **ति०** प्रगृह्य दर्शनाकाङ्क्षिणोर्दर्शनंदत्वा । **ती०** प्रतिगृह्य प्रत्युद्गम्य ॥ ७ ॥ **ती०** वानरेण तिरश्चा । असमानेनेत्यर्थः ॥ ११ ॥ **ति०** ध्रुवामर्यादा अनुल्लङ्घनीयोऽन्योन्यकार्यसंपादनविषयोनिश्चयः । बध्यतां बुद्ध्याविचार्यप्रतिज्ञायतां

**[ पा० ]** १ क.—ट. तंमलयं. २ च. हरिराजाय. ३ घ. शूरोयं. ४ ङ.—ट. कारकः. ५ अयंश्लोकः झ. पाठे. तपसासत्यवाक्येनेतिश्लोकानन्तरंदृश्यते. ६ क. ग. रक्षसापहृता. ७ छ. झ. ट. तेन. ८ छ. झ. ट. रामोरण्यंसमागतः. क. ग. ङ. च. ज. ञ. रामःशरणमागतः. ९ च. ज—ट. प्रगृह्यचार्च्यंयस्व. १० ख. स्वेमौ. ११ ङ. छ. झ. ञ. वानराधिपः. १२ भयंचराघवाद्घोरं. सकृत्वामानुषंरूपं. इत्यर्धद्वयं झ. पाठेनदृश्यते. क. ख. घ. ङ. च. ञ. ट. भयंस. १३ ग. ङ च. ज. ञ. ट. प्लवगाधिपः. १४ क. ग.—छ झ. ट. प्रीत्योवाचच. १५ ग. छ. झ. ट. सुतपाः. क. सुप्रियः. १६ ङ. च. ज. ञ. सत्यविक्रमः. १७ च. तन्ममैवच. १८ ङ.—ट. यदिमे. १९ क. ङ.—ज. ञ. ध्रुवं. २० क. ङ. छ.—ट. सुग्रीवस्य. २१ क. ख. घ. ङ. छ. झ. ञ. ट. संप्रहृष्ट. २२ क. ग. च. ज. पाणिं.

हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम् ॥ १४ ॥
ततो हनूमान्संत्यज्य भिक्षुरूपमरिंदमः ॥ काष्ठयोः स्वेन रूपेण जनयामास पावकम् ॥ १५ ॥
दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ॥ तयोर्मध्येऽथ सुप्रीतो निदधे सुसमाहितः ॥ १६ ॥
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥ सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥ १७ ॥
ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ॥ अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः ॥ १८ ॥
त्वं वयस्योसि मे हृद्यो ह्येकं दुःखं सुखं च नौ ॥ सुग्रीवो राघवं वाक्यमित्युवाच प्रहृष्टवत् ॥१९॥
ततः स पर्णबहुलां छित्त्वा शाखां सुपुष्पिताम् ॥ सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥२०॥
लक्ष्मणायाथ संहृष्टो हनुमान्प्लवगर्षभः ॥ शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् ॥ २१ ॥
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा ॥ प्रत्युवाच तदा रामं हर्षव्याकुललोचनः ॥ २२ ॥
अहं विनिकृतो राम चरामीह भयार्दितः ॥ हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः ॥ २३ ॥
सोहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः ॥ वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥ २४ ॥
वालिनो मे महाभाग भयार्तस्याभयं कुरु ॥ कर्तुमर्हसि काकुत्स्थ भयं मे न भवेद्यथा ॥ २५ ॥
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ॥ प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ २६ ॥
उपकारफलं मित्रं विदितं मे महाकपे ॥ वालिनं तं वधिष्यामि तव भार्यापहारिणम् ॥ २७ ॥
अमोघाः सूर्यसंकाशा ममैते निशिताः शराः ॥ तस्मिन्वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥२८॥
कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः ॥ तीक्ष्णाग्रा ऋजुपर्वाणः सरोषा भुजगा इव ॥ २९ ॥
तमद्य वालिनं पश्य क्रूरैराशीविषोपमैः ॥ शरैर्विनिहतं भूमौ विकीर्णमिव पर्वतम् ॥ ३० ॥

शेषः ॥ १३ ॥ हृद्यमित्यर्धं । पीडितं दृढं ॥ १४॥ मर्यादा बध्यतामिति वदतः सुग्रीवस्याशयं विदित्वाचरति—तत इति ॥ भिक्षुरूपंसंत्यज्येत्यनेन सुग्रीवविश्वासार्थं "तौत्वयाप्राकृतेनैवगत्वाज्ञेयौ प्लवङ्गम" इतितदुक्तप्रकारेणपुनर्भिक्षुरूपेणैवतदन्तिकं गतइत्यवगम्यते । स्वेन रूपेण वानररूपेण । काष्ठयोः अरणिभूतशमीकाष्ठयोः । सप्तम्यन्तंपदं ॥ १५ ॥ सत्कृतमित्यभ्यर्च्येत्यस्यानुवादः । तयोः रामसुग्रीवयोः ॥१६॥ प्रदक्षिणंचक्रतुः अन्योन्यं पाणिंगृहीत्वेति शेषः । उपागतौ अग्निसाक्षिकमिति शेषः ॥ १७ ॥ अभिवीक्षन्तौ अभिवीक्षमाणौ ॥ १८ ॥ एकं समानं । त्वद्दुःखेन मम दुःखंभवतु त्वत्सुखेनममसुखंभवत्वित्यर्थः । अनेन परसाम्यापत्त्यभ्यर्थनंसूचितं ॥ १९ ॥ सराघव इत्यनेन एकासनत्वमुक्तं ॥ २०—२१ ॥ प्रत्युवाच तदा राममिति पाठः ॥२२—२३॥ त्रस्तः भीतः उत्तरोत्तरं भीतः । यद्वा वालित्रस्तोहमस्मिन्वने अभीतो वसामीत्यर्थः ॥ २४ ॥ अभयं भयाभावं कुरु । आर्त्यतिशयेनदार्ढ्यायपुनरुच्यते—कर्तुमित्यर्धेन । मे भयं यथानभवेत्तथाकर्तुमर्हसीत्यन्वयः ॥ २५॥ प्रहसन्निव कियन्मात्रमेतदितिहसित्वा । इवशब्दो मन्दस्मितत्वे ॥ २६—२८ ॥ कङ्कपत्रप्रतिच्छन्नाः कङ्कपत्रैर्बद्धाइत्यर्थः ॥ २९ ॥ अद्य पश्येत्यनेन क्रिया-

॥ १२ ॥ **ती०** काष्ठयोरितिसप्तम्यन्तं । अत्र हनुमतापावकोत्पादनंरामाभ्यनुज्ञयैव । अग्निसाक्षिकंस्नेहंकुर्वितिकबन्धेनोक्तत्वात् ॥ १५ ॥ **ति०** प्रहृष्टवत् प्रहृष्टस्सन् ॥ १९ ॥ **ति०** एतावत्पर्यन्तंसम्यग्विश्वासाभावात्सुग्रीवः पृथगासनस्थएवासीदितिज्ञायते । तदाह—**ततस्सुपर्णेति** ॥२०॥ **ति०** लक्ष्मणायविषादपरिहारार्थंचन्दनशाखास्तरणदानं ॥२१॥ **रामानु०** त्रस्तः चकितः । अत्रस्तइतिवा ॥ २३ ॥ **ति०** अभयंकुरु अभयप्रतिज्ञांकुरु ॥ २५ ॥ **स०** वालिसंहर्तुर्बाणस्यैकत्वेप्यनेकबाणसाध्यमहाकार्यकर्तृ-

**[ पा० ]** १ छ. झ. ञ. ट. हृष्टः. २ ख. पूजितं. ३ छ. झ. ट. निदधौ. ख. निदधेस. ४ ख. घ.—ट. मभिजग्मतुः. ५ क. ख. ग. ङ.—ट. हृद्योमे. ६ ग.—ज. ञ. सुग्रीवंराघवो. ख. सुग्रीवोराघवश्चैवमूचतुस्तौप्रहृष्टवत्. ७ क. ग. ङ.—ट. सुपर्णबहुलां. ८ क. ख. ग. ङ.—ट. भङ्क्त्वा. ९ ङ.—ट. हनूमान्मारुतात्मजः. १० ख. ततो. ११ ङ. ज. ञ. भ्रात्रा. १२ क. ग. च.—ट. ममैते. १३ क. घ. छ. परिच्छन्नाः. १४ ख. सरोषाइवपन्नगाः. १५ ङ.—ट. तीक्ष्णैः. १६ च. झ. ट. प्रकीर्णमिव.

स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् ॥ सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३१ ॥
तव प्रसादेन नृसिंह राघव प्रियां च राज्यं च समाप्नुयामहम् ॥
तथा कुरु त्वं नरदेव वैरिणं यथा निहंस्यद्य रिपुं ममाग्रजम् ॥ ३२ ॥
सीताकपीन्द्रक्षणदाचराणां राजीवहेमज्वलनोपमानि ॥
सुग्रीवरामप्रणयप्रसङ्गे वामानि नेत्राणि समं स्फुरन्ति ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ॥ ६ ॥

सुग्रीवेण रामंप्रति हनुमत्सकाशात्स्वस्यतदीयवृत्तान्तपरिज्ञाननिवेदनपूर्वकं सीतान्वेषणप्रतिज्ञानम् ॥ १ ॥ तथा गगने रावणेननीयमानायाःसीतायाः स्वैरवलोकननिवेदनेनसह स्वेषुतयासोत्तरीयस्याभरणोत्सर्जननिवेदनपूर्वकं तदाभरणप्रदर्शनम् ॥ २ ॥ रामेण लक्ष्मणेनसह तदाभरणानांसीतासंबन्धित्वप्रत्यभिज्ञानेन परिदेवनपूर्वकं सुग्रीवंप्रतिरावणयाथात्म्यप्रश्नः ॥ ३ ॥

पुनरेवाब्रवीत्प्रीतो राघवं रघुनन्दनम् ॥ १ ॥
अयमाख्याति मे राम सचिवो मन्त्रिसत्तमः ॥ हनुमान्यन्निमित्तं त्वं निर्जनं वनमागतः ॥ २ ॥
लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव ॥ रक्षसाऽपहृता भार्या मैथिली जनकात्मजा ॥ ३ ॥
त्वया वियुक्ता रुदती लक्ष्मणेन च धीमता ॥ अन्तरप्रेप्सुना तेन हत्वा गृध्रं जटायुषम् ॥
[ भार्यावियोगजं दुःखं प्रापितस्तेन रक्षसा ] ॥ ४ ॥
भार्यावियोगजं दुःखमचिरात्त्वं विमोक्ष्यसे ॥ अहं तामानयिष्यामि नष्टां वेदश्रुतीमिव ॥ ५ ॥

---

क्षात्वमित्युक्तं ॥ ३०—३१ ॥ कुरु यतस्वेत्यर्थः । वैरिणं रिपुमितिद्विरुक्त्या वैरकृतंशात्रवं नतुजात्येत्युक्तं ॥ ३२ ॥ प्रसङ्गात्कविराह—सीतेति ॥ सीतानेत्रं राजीवोपमं । वालिनेत्रं हेमोपमं । पिङ्गाक्षत्वात् । रावणनेत्राणि ज्वलनोपमानि । पुरुषस्य वामनेत्रस्फुरणमनर्थकरं स्त्रियास्तु शोभनमिति निमित्तशास्त्रविदः ॥ ३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

एवंरामेण वालिवधेप्रतिज्ञाते सुग्रीवेणापि रामकार्यसिद्धिः प्रतिज्ञायते षष्ठे—पुनरेवेत्यादि ॥ राघवमिति नाम । सुग्रीव इति शेषः ॥ १ ॥ त्वं यन्निमित्तं वनमागतः तदाख्याति स्म ॥२॥ लक्ष्मणेनेत्यादिश्लोकद्वयं । तेन पूर्वमविज्ञातेन ॥ ३—४ ॥ विमोक्ष्यसे

त्वाद्बहुत्वेनोक्तिः ॥२८॥ स० सीतायावामनेत्रस्फुरणं त्रिकालदर्शिनाऋषिणादृष्टैवोक्तमितिवक्तव्यं ॥३३॥ इतिपञ्चमःसर्गः ॥५॥
स० राघवं रघुकुलोत्पन्नं । रघूणां नन्दयतीतितथा तं ॥ १ ॥ रामानु० आख्याति आख्यातवान् । “वर्तमानसामीप्ये वर्तमानवद्वा” इतिभूतेलट् ॥ शि० मेसेवकोऽयंहनुमान् मेआख्याति ॥ २ ॥ ती० अन्तरप्रेप्सुना तवानवस्थानंप्राप्तुमिच्छता । वैदेहीअपहृतेतिहनुमानाख्यातीत्यब्रवीदितिपूर्वेणसंबन्धः ॥ ति० तेनरक्षसामैथिलीहृता । त्वंभार्यावियोगजंदुःखंप्रापितइतिचाख्यातवान् ॥ स० अन्तरमवकाशं ॥४॥ ती० वेदश्रुतीमिव श्रूयतइतिश्रुतिरितिव्युत्पत्त्या श्रुतित्वंवेदशास्त्रसाधारणं । तद्व्यावृत्त्यर्थं वेदश्रुतीमित्युक्तं । मधुकैटभाभ्यांपातालेगुप्तंवेदजातंमत्स्याकृतिर्हरिर्यथाऽऽनीतवान् तद्वत्सीतामानयिष्यामि आनेष्यामीत्यर्थः ॥

[ पा० ] १ ख. राघवस्यमनोहितं. २ ङ.—ट. परमंवाक्यं. ३ क. ख. ग. ङ.—ट. वीर. ४ ङ. च. ज. ञ. निहन्म्यद्य. छ. झ. ट. नहिंस्यात्सपुनर्ममाग्रजं. ५ ख. मेवीर. झ. तेराम. ६ छ. झ. ट. सेवको. ७ ङ. ज. ञ. वैदेही. ८ छ.—ट. अन्तरं. ९ क. ग. गृध्रंहत्वा. १० इदमर्धं ङ. छ. झ. ञ. ट. पाठेषुदृश्यते. ११ छ. झ. दुःखंनचिरात्त्वं. १२ क. ग. वेदश्रुतिंयथा. झ. देवश्रुतीमिव.

रसातले वा वर्तन्तीं वर्तन्तीं वा नभस्तले ॥ अहमानीय दास्यामि तव भार्यामरिंदम ॥ ६ ॥
इदं तथ्यं मम वचस्त्वमवेहि च राघव ॥ न शक्या सा [1]जरयितुमपि सेन्द्रैः सुरासुरैः ॥ ७ ॥
तव भार्या महाबाहो भक्ष्यं विषकृतं यथा ॥ ८ ॥
त्यज शोकं महाबाहो [2]तां कान्तामानयामि ते ॥ अनुमानात्तु जानामि मैथिली सा न संशयः ॥ ९ ॥
ह्रियमाणा मया दृष्टा रक्षसा [3]क्रूरकर्मणा ॥ क्रोशन्ती रामरामेति लक्ष्मणेति च विस्वरम् ॥
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्र[4]वधूर्यथा ॥ १० ॥
आत्मना पञ्चमं मां हि दृष्ट्वा [5]शैलतटे स्थितम् ॥ उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ॥ ११ ॥
तान्यस्माभिर्गृहीतानि निहितानि च राघव ॥ आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ॥ १२ ॥
तमब्रवीत्ततो रामः सुग्रीवं [6]प्रियवादिनम् ॥ आनयस्व सखे शीघ्रं किमर्थं [7]प्रविलम्बसे ॥ १३ ॥
एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम् ॥ प्रविवेश ततः शीघ्रं राघव[8]प्रियकाम्यया ॥ १४ ॥
उत्तरीयं [9]गृहीत्वा तु [10]शुभान्याभरणानि च ॥ इदं पश्येति रामाय दर्शयामास वानरः ॥ १५ ॥
ततो गृहीत्वा [11]तद्वासः शुभान्याभरणानि च ॥ अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ॥ १६ ॥
सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः ॥ हा प्रियेति रुदन्धैर्यमुत्सृज्य न्यपतत्क्षितौ ॥ १७ ॥
हृदि [12]कृत्वा तु बहुशस्तमलंकारमुत्तमम् ॥ निशश्वास भृशं सर्पो बिलस्थ इव रोषितः ॥ १८ ॥
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं [13]वीक्ष्य पार्श्वतः ॥ परिदेवयितुं दीनं रामः समुपचक्रमे ॥ १९ ॥
पश्य लक्ष्मण [14]वैदेह्या संत्यक्तं ह्रियमाणया ॥ उत्तरीयमिदं भूमौ शरीराद्भूषणानि च ॥ २० ॥
शाद्वलिन्यां ध्रुवं भूम्यां सीतया ह्रियमाणया ॥ उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते ॥ २१ ॥

त्यक्ष्यसि । नष्टां मधुकैटभापहृतां । वेदश्रुतीं श्रूयतइति श्रुतिः शब्दः । वेदरूपश्रुतीमिव वेदगिरमिव । दीर्घ आर्षः ॥ ५ ॥ वर्तन्तीं वर्तमानां ॥ ६ ॥ जरयितुं आत्मसात्कर्तुं । विषकृतं विषेण पक्कम् ॥ ७—८ ॥ अनुमानात् योग्यतया । या दृष्टा सा मैथिली न संशयः । अनुमानात्तुजानामीत्यस्यैव विवरणमिदम् ॥ ९—१० ॥ आत्मना मया पञ्चमम् ॥ ११ ॥ प्रत्यभिज्ञातुं स्मर्तुं ॥ १२—१४ ॥ उत्तरीयमाभरणानि च उत्तरीयबद्धानीत्यर्थः ॥ १५—१७ ॥ अलंकारमिति जात्येकवचनं । रोषितः संजातरोषः ॥ १८ ॥ परिदेवयितुं प्रलपितुं । दीनमिति क्रियाविशेषणं ॥ १९ ॥ शरीरात् अपनीयेति शेषः ॥ २० ॥ अत्र शाद्वलशब्देन हरिततृणान्युच्यन्ते । स्वार्थे वलजार्षः । तद्वत्यां भूमौ मृदुस्थले

ति० देवस्य धर्मस्य ब्रह्मणश्च ज्ञानसाधनभूताश्रुतिःत्रयी तामिव ॥ ५ ॥ शि० ननुतस्याःस्थितिरेवनविज्ञायते इतिकथमानेष्यसीत्यतआह—**रसातलइति** ॥ ६ ॥ शि० जरयितुं गोपयितुमित्यर्थः ॥ ७ ॥ ति० विषकृतं विषमिश्रितं ॥ शि० भार्या भार्याहरणं ॥ ८ ॥ रामानु० मैथिलीत्यत्र इतिकरणंद्रष्टव्यं । ति० यादृष्टासामैथिलीत्यनुमानात् त्वद्भार्यात्वानुमापकाद्रामेत्याक्रोशाल्लिङ्गात् जानामीत्यन्वयः । शि० अनुमानप्रकारस्तु—इयंनैतत्संबन्धिनी एतत्स्पर्शभीतत्वात् चण्डालस्पर्शभीतब्राह्मणवत् । इयंसीता निरन्तरंराममनस्कत्वात्यन्नैवंतन्नैवं । इयंराममनस्का असकृत्तत्प्रार्थनाबोधकशब्दवत्त्वात् शंभुवदिति ॥ ९ ॥ वि० आत्मनापञ्चमं मन्त्रिचतुष्टयसहितंमामित्यर्थः ॥ स० आत्मनास्वेनपञ्चमंपञ्चत्वसंख्यापूरकंमांदृष्ट्वेत्यनेन इतरेषांदर्शनकर्मत्वाभावे अस्यपञ्चत्वसंख्यापूरकत्वमेवनभवतीतिभावः ॥ ११ ॥ ती० निहितानि निगूढानि विधिवद्रक्षितानीत्यर्थः । ति० आनयिष्यामि आनेष्यामि । दृष्टेत्यत्र प्रमाणप्रदर्शनमिदं ॥ १२ ॥ ति० गहनां दुष्प्रवेशां ॥ १४ ॥ ति० हाप्रियेतीत्यत्रसंधिरार्षः । स० हाप्रियेअतिरुदन्नितिच्छेदः । इतिशब्दोऽध्याहार्यः । प्रियेतिलक्ष्मणसंबोधनंवा । शि० बाष्पेणदूषितः व्याप्तः ॥ १७ ॥ ति० हृदीति प्रियासंबन्धेनप्रीत्यतिशयात् ॥ १८ ॥

[ **पा०** ] १ क. ग. च. जरयितुंसेन्द्रैरपि. २ ज. कान्तांतां. ३ छ. झ. ट. रौद्रकर्मणा. ४ ख. वधूरिव. ५ छ. झ. ट. शैलतले. ६ ङ. ज. ञ. प्रियदर्शनं. ७ क. त्वंविलंबसे. ८ ज. प्रतिकाम्यया. ९ ङ. गृहीत्वास. १० झ. ट. सतान्याभरणानिच. ११ क. छ. झ. ट. वासस्तु. १२ छ.—ट. कृत्वास. १३ ङ.—ट. प्रेक्ष्य. १४ ख. संत्यक्तंवैदेह्या.

एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ॥ नाहं जानामि केयूरे नाहं जानामि कुण्डले ॥
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ॥ २२ ॥
ततः स राघवो दीनः सुग्रीवमिदमब्रवीत् ॥ २३ ॥
ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया ॥ रक्षसा रौद्ररूपेण मम प्राणैः प्रिया प्रिया ॥ २४ ॥
क्व वा वसति तद्रक्षो महद्व्यसनदं मम ॥ यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् ॥ २५ ॥
हरता मैथिलीं येन मां च रोषयता भृशम् ॥ आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ॥ २६ ॥

मम दयिततरा हृता वनान्ताद्रजनिचरेण विमथ्य येन सा ॥
कथय मम रिपुं त्वमद्य वै प्लवगपते यमसादनं नयामि ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ॥ ७ ॥

सुग्रीवेण रामंप्रति स्वस्यरावणकुलनिलयाद्यपरिज्ञाननिवेदनपूर्वकं सीतान्वेषणप्रतिज्ञानेन समाश्वासनम् ॥ १ ॥ सुग्रीवसमाश्वासनविगतशोकेनरामेण सुग्रीवप्रशंसनपूर्वकं सशपथं वालिवधप्रतिज्ञानम् ॥ २ ॥

एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ॥ १ ॥
न जाने निलयं तस्य सर्वथा पापरक्षसः ॥ सामर्थ्यं विक्रमं वाऽपि दौष्कुलेयस्य वा कुलम् ॥ २ ॥

---

उत्सृष्टत्वात् तथारूपं अविकलरूपं दृश्यते ॥ २१—२३ ॥ कं देशं कां दिशं प्रति । ह्रियन्ती ह्रियमाणेत्यर्थः । प्राणैः प्राणेभ्यः ॥२४॥ अपावृतं उद्घाटितं येन तत्क वसतीत्यन्वयः ॥ २५—२६ ॥ ममेति विषमवृत्तं ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

---

एवमाभरणदर्शनव्याजेन चेतनस्य यादृच्छिकप्रासङ्गिकसुकृतदर्शनेन तल्लाभत्वरा भगवत उच्यते

सप्तमे—एवमुक्त इत्यादि ॥ बाष्पगद्गदः रामबाष्पदर्शनेन स्वयमपि बाष्पगद्गदः । एकं दुःखं सुखं च नावित्यस्य प्रथमोदाहरणमिदं ॥ १ ॥ दौष्कुलेयस्य । दुष्कुले भवोदौष्कुलेयः । "दुष्कुलाड्ढक्" इति ढक् । तस्यपापरक्षसः परदारापहरणरूपपापकृतो राक्षसस्य । निलयं वासस्थानं । सामर्थ्यं शक्तिं । विक्रमं वा । सर्वथा न जाने । किंचिदपि नजानामीत्यर्थः । नन्विदं वक्ष्यमाणेन विरुध्यते । वक्ष्यति वानरप्रेषणावसरे—"द्वीपस्तस्यापरे पारे शतयोजनमायतः । अगम्यो मानुषैर्देवैस्तं मार्गध्वं समन्ततः ॥ सहि

---

ति० नाहमिति ऊर्ध्वदृष्ट्यापरस्त्रीत्वेनकदाप्यदर्शनादितिभावः ॥ २२ ॥ ती० कंदेशं अत्यन्तसंयोगेद्वितीया । कस्मिन्देशेलक्षितेत्यर्थः ॥ ति० प्राणप्रिया प्राणेभ्योपीष्टा । प्राणसंबन्धस्यतदधीनत्वादितिभावः ॥ २४ ॥ ति० यन्निमित्तं प्रियापहारितन्निमित्तं । स० महदितिभिन्नं ॥ २५ ॥ रामानु० अस्मिन्सर्गान्तेममदयिततरेत्ययंश्लोकोबहुषुकोशेषुनदृश्यते ॥ २७ ॥ इति षष्ठःसर्गः ॥ ६ ॥

ति० नजानइति । सर्वप्रकारेणनजाने किंचिज्जानामीत्यर्थः । उत्तरत्रसीतान्वेषाणार्थंहनुमदादिवानरप्रेषणसमये "सहिदेशस्तुवध्यस्यरावणस्यदुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः" इतिवचनेनरावणावासस्यसुग्रीवावगतत्वप्रतीतेरेवंव्याख्यातं ॥ ति० पापरक्षसः पापंकृतवतोरक्षसः । निलयं निलयस्थानं गुप्तवासस्थानं । सर्वथानजाने । नहीदृशंपापंकर्मकृत्वाराजधान्यांवस्तुमर्हतीतिभावः । सामर्थ्यं शौर्यादि । विक्रमं विशेषेणक्रामतिपादविक्षेपंकरोतियत्रतद्वासनगरं । दौष्कुलेयस्येत्यनेन रक्षःकुलजत्वंध्वनितं । तज्जाने एवेतिशेषः । वाशब्दस्त्वर्थे । अतएवलङ्काद्वीपंनिर्दिश्य "सहिदेशस्तुवध्यस्य—"इतिहनुमदादिप्रेषण-

[ पा० ] १ झ. ट. ततस्तुराघवोवाक्यं. २ छ. झ. ञ. प्राणप्रियाहृता. ख. ग. ङ. ट. प्राणप्रियाप्रिया. ३ ङ. च. ज. ञ. यन्निमित्तमिमान्सर्वान्. ४ छ. झ. ट. ध्रुवं. ५ छ. झ. ट. दयिततमा. ६ ग. घ. छ. झ. वनाद्रजनिचरेण. ७ क.—घ. छ. झ. ट. तमद्यवै. ८ क.—ट. यमसंनिधिं. ९ ख. बाष्पगद्गदं. १० ञ. चापि. ११ छ. वैकुलं.

सत्यं ते प्रतिजानामि त्यज शोकमरिन्दम ॥ करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥३॥
रावणं सगणं हत्वा परितोष्यात्मपौरुषम् ॥ तथाऽस्मि कर्ता नचिराद्यथा प्रीतो भविष्यसि ॥ ४ ॥
अलं वैक्लब्यमालम्ब्य धैर्यमात्मगतं स्मर ॥ त्वद्विधानामसदृशमीदृशं विद्धि लाघवम् ॥ ५ ॥

देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः " इति । तत्र हि रावणस्य निलयसामर्थ्यपराक्रमाः सुग्रीवेण स्पष्टमवगता इति गम्यते । सत्यं । तथापि स्वकार्ये प्रथमं प्रवर्तयितुमेवमुक्तवान्सुग्रीवः । अतएव " ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया " इत्यस्यापि प्रतिवचनंनोक्तवान् । कथंगमनदेशमपिन जानीयात् । य एवमाह "ह्रियमाणा मया दृष्टा" इति । न चैवमादावेव मित्रद्रोहः कृतःस्यादिति वाच्यं । दूरदर्शिना सुग्रीवेणैवं मनसि कृतं । यदि मया 'रावणवृत्तान्तो मया ज्ञात' इत्युक्तः स्यात् । तदातिव्यसनी रामोयं सीतान्वेषणे प्रथमं मां प्रवर्तयेत् । तच्चायुक्तं । वानराणां वालिवशंवदत्वेनास्मदधीनत्वाभावात् । कथंचित्केषांचिद्वशीकरणेपि रावणेनकृतसख्यो वाली चास्मन्मनोरथानुरूपां प्रवृत्तिं कथंसहेत । तथा चोभयकार्यभङ्ग इत्यज्ञानमभिनीतवान्सुमतिःसुग्रीवः । न चैवंसति वानरप्रेषणकालिकसुग्रीववचनेन कथमिव रामोनाशङ्कतेति वाच्यं । तारोक्तलक्ष्मणवचनश्रवणेनरामस्यन शङ्कावकाशः । पूर्वमयंनजानाति पश्चात्तारावचनैर्ज्ञातवानितिरामस्यापिप्रतिपत्तिर्भवेत् । एवं ह्याह लक्ष्मणंप्रतितारा " शतकोटिसहस्राणि लङ्कायांकिलराक्षसाः । अयुतानिचषट्त्रिंशत्सहस्राणि शतानि च ॥ अहत्वा तांश्च दुर्धर्षान्राक्षसान्कामरूपिणः । नशक्योरावणोहन्तुं येनसामैथिली हृता " इत्यादि । किंच कथंवालोकालोकपर्यन्तं पर्यटतस्तदपरिज्ञानं । अतएवहि रामबलपरीक्षासमये दुन्दुभ्यादिधर्षणकथनप्रसङ्गेवक्तव्यमपिरावणजयवृत्तान्तं नोक्तवान् । नन्वेवमिदानीं परमार्थतो न विजानातिसुग्रीवः पश्चात्तारया ज्ञातवानिति किंन विकल्प्यतइतिचेन्न । तारादर्शनात्प्रभृति कामपरवशेन सुग्रीवेण तारया सह रामकार्यपर्यालोचनाप्रसक्तेः । यदिचसुग्रीवः सर्वथा नजानीयात् तदा सीताक्रोशादिना स्फुटमवगतांदिशंवदेदेव । यच्च कैश्चिदुक्तं । निलयं नजानामीत्यस्य इदानींतदवस्थानदेशं नजानामीत्यर्थइति । तन्न । सर्वात्मना रावणवृत्तान्तमपरिज्ञायकियदपितत्स्वरूपज्ञानं भवत्वितितात्पर्येण क्व वावसति तद्रक्ष इतिपृष्टवन्तंप्रतिज्ञातांशमात्रमप्यनुक्त्वा इदानींतदवस्थानभूमिं न जानामीत्युत्तरस्य छलत्वापत्तेः । तद्वासमात्रज्ञानेतद्भञ्जनेसस्वयमेवेहागमिष्यतीतिहि रामाभिप्रायः । किंच इदानीं निलयापरिज्ञानेपि सामर्थ्यपराक्रमौवा वक्तव्यौ स्यातां । इतरदिशः प्रतिवानराणांप्रेषणं तान्प्रति—"रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः " इतिवचनंच बहुकालविलम्बेन यत्रकुत्रापि सीतां स्थापयेत्तिष्ठेद्वेतिसंगच्छते । एतेनेदमपिनिरस्तं । सर्वथा सर्वप्रकारेणापितन्निलयंनजानामीतिविशिष्टाभावोर्थः । तथाचाग्रे केनचित्प्रकारेण तन्निलयज्ञानाविरोधइति । वानरान्प्रति यावन्मात्रमुच्यतेतावतआदावपिवक्तव्यत्वात् । यदपि केनचिदुन्नीतं । संवत्सरपर्यन्तं सीतादुःखकरणाभावे रावणकृतशिवपूजाफलं नभवेदितिदैवप्रतिबन्धवशात्तदानीं सुग्रीवस्याज्ञानमिति । तत्तुच्छं । दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् । सम्यक्च परदारधर्षणं शिवपूजाफलमिति । तस्माद्यथोक्तएवार्थोग्राह्यः ॥ २-३ ॥ सगणं सपरिवारं । रावणं हत्वा भवन्तं परितोष्य आत्मपौरुषं तथाकर्तास्मि । यथा प्रीतोभविष्यसीतिसंबन्धः ॥ ४ ॥ वैक्लब्यं दैन्यं ॥ ५ ॥

कालिकसुग्रीववचसानविरोधः ॥ **शि०** दौष्कुलेयस्येति । तत्कुलस्यदुष्कुलत्वंतुतन्मातूराक्षसीत्वेन । आकुलं चञ्चलचित्तत्वं तत्कारणंचेत्यर्थः ॥ २ ॥ **ति०** यद्यप्येतावज्जानामि तथापितदुपवर्णनंनिष्फलं । तावन्मात्रज्ञानेपितद्वधासंभवात् ॥ क्वचिद्वसेस्थितिसंभवात् । एतावत्त्ववगम्यतामित्याह—**सत्यंत्विति** । **ति०** परितोष्यं भवतःपरितोषार्हं । आत्मनः सपरिवारस्यमम पौरुषं । अवलंब्येतिशेषः । **स०** अपरितोष्यं आत्मपौरुषंयस्यतंरावणं ॥ **शि०** आत्मपौरुषं सेनामित्यर्थः । परितोष्य संतोष्य ॥ ४ ॥

[ **पा०** ] १ क. ग. ङ.—ट. सत्यंतु. २ क. ग. ङ. च. झ. ञ. ट. त्वद्विधानांनसदृशं. ३ क.—ङ. छ.—ट. बुद्धिलाघवं.

मयाऽपि व्यसनं प्राप्तं [1]भार्याहरणजं महत् ॥ [2]न चाहमेवं शोचामि [3]न च धैर्यं परित्यजे ॥ ६ ॥
[4]नाहं तामनुशोचामि प्राकृतो वानरोपि सन् ॥ महात्मा च विनीतश्च किं पुनर्धृतिमान्[5]भवान् ॥७॥
बाष्पमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि ॥ मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८ ॥
व्यसने वाऽर्थकृच्छ्रे वा भये वा जीवि[6]तान्तके ॥ वि[7]मृशन्वै स्वया बुद्ध्या धृतिमान्नावसीदति ॥ ९ ॥
बालिशस्तु नरो नित्यं वैक्लब्यं [8]योऽनुवर्तते ॥ स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १० ॥
एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये ॥ पौरुषं श्रय शोकस्य नान्तरं [9]दातुमर्हसि ॥ ११ ॥
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् ॥ तेजश्च क्षी[10]यंते तेषां न त्वं शोचितुमर्हसि ॥ १२ ॥
शोकेनाभिप्रपन्नस्य जीविते [11]चापि संशयः ॥ स शोकं त्यज राजेन्द्र धैर्यमाश्रय केवलम् ॥ १३ ॥
हितं वयस्यभावेन ब्रूमि [12]नोपदिशामि ते ॥ वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि ॥ १४ ॥
मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ॥ मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन [13]प्रमार्जयत् ॥ १५ ॥
प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात्प्रभुः ॥ संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥ १६ ॥
कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च ॥ अनुरूपं च युक्तं च कृतं सुग्रीव [14]तत्त्वया ॥ १७ ॥
एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे ॥ दुर्लभो हीदृशो बन्धुरस्मिन्काले विशेषतः ॥ १८ ॥
किंतु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे ॥ राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९ ॥
मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् ॥ वर्षास्विव च सुक्षेत्रे सर्वं संपद्यते [15]मयि ॥ २० ॥
मया च यदिदं वाक्यमभिमानात्समीरितम् ॥ तत्त्वया हरिशार्दूल तत्त्वमित्युपधार्यताम् ॥ २१ ॥
अनृतं नोक्तपूर्वं मे नच वक्ष्ये कदाचन ॥ एतत्ते प्रतिजानामि सत्येनैव [16]च ते शपे ॥ २२ ॥
ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह ॥ राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३ ॥
एवमेकान्तसंपृक्तौ ततस्तौ [17]नरवानरौ ॥ उभावन्योन्य[18]सदृशं [19]सुखं दुःखं प्रभाषताम् ॥ २४ ॥

---

परित्यजे परित्यजामि ॥ ६ ॥ प्राकृतः हीनः । विनीतः वृद्धैःसुशिक्षितः ॥ ७ ॥ सत्त्वयुक्तानां व्यवसायवतां । " द्रव्यासुव्यवसायेषु सत्त्वमस्त्रीतुजन्तुषु " इत्यमरः । मर्यादां व्यवस्थारूपांधृतिं ॥ ८ ॥ अर्थकृच्छ्रे धननाशे ॥ ९–१० ॥ अन्तरं अवकाशं ॥ ११–१३ ॥ ब्रूमि ब्रवीमि । वयस्यतां मित्रत्वं ॥ १४ ॥ प्रमार्जयत् । स्वार्थे णिच् । " अनित्यमागमशासनं " इत्यडभावः ॥ १५–१६ ॥ अनुरूपं मित्रत्वानुरूपं । युक्तं शोकनिवारणयोग्यं । कृतं उक्तमित्यर्थः ॥ १७–१९ ॥ विस्रब्धेन स्निग्धेन ॥ २० ॥ अभिमानात् शौर्याभिमानात् । त्वय्यभिमानाद्वा । तत्त्वं यथार्थं ॥ २१—२३ ॥ एकान्तसं-

---

**ति०** व्यसने इष्टवियोगजे । भये चोरव्याघ्रादिजे । जीवितान्तगे जीवितनाशप्रापके । विमृशन् प्रारब्धवेगमितिशेषः । **ती०** व्यसने विपदि । अर्थकृच्छ्रे कार्यसंकटे ॥ ९ ॥ **शि०** पौरुषं स्वैकनिष्ठपरमपुरुषत्वंश्रय स्मरेत्यर्थः ॥११॥ **ती०** प्रकृतिस्थः स्वभावस्थः दुःखरहितइत्यर्थः ॥ १६ ॥ **शि०** स्निग्धेन स्नेहविशिष्टेन । युक्तं युक्तिविशिष्टं ॥ १७ ॥ **ति०** अस्मिन्काले व्यसनकाले ॥ १८ ॥ **ति०** रावणस्य संहारेचेतिशेषः ॥ **स०** रावणस्यच परिमार्गणे ॥ १९ ॥ **ति०** यदनुष्ठेयं तवेतिशेषः ॥ वर्षास्विवसुक्षेत्रे उप्तंबीजमितिशेषः । संपद्यते सफलंभविष्यतीत्यर्थः । शैघ्र्यप्रत्यायनायवर्तमानप्रयोगः ॥ **स०** विस्रब्धेन विश्वस्तेनमया यत्कर्तव्यंतदुच्यतां । अनन्तरंच वर्षासुतत्रापिचसुक्षेत्रे उप्तंयथासंपद्यते तथातवसर्वंसंपद्यते ॥ २० ॥ **ती०** इदंवाक्यं

**[ पा० ]** १ छ. झ. ट. भार्याविरहजं. २ छ. झ. ट. नाहमेवंहि. ३ ग. छ. झ. ट. धैर्यंनच. ४ ग. अहंतावन्नशोचामि. ङ. ञ. नाहंत्वमिवशोचामि. ५ छ. झ. ट. न्महान्. ६ ख. ग. घ. छ.—ट. जीवितान्तगे. ७ च. छ. झ. ज. ट. विमृशंश्च. ८ क. ग. सोनुगच्छति. ९ क. ग. गन्तुमर्हसि. १० छ. झ. क्षयते. ११ ख. वापि. १२ क. नोपदिशाम्यहं. १३ क. प्रमार्जितं. ख. ममार्जतत्. १४ क. ग. मेत्वया. १५ क. ग. ङ. च. छ. झ. ञ. ट. तव. १६ छ. झ. ट. शपाम्यहं. क.—च. ज. ञ. शपामिते. १७ ज. हरिवानरौ. १८ क. ग. सदृशौ. १९ ख. ङ. च. झ. ञ. ट. सुखंदुःखमभाषतां. ज. सुसुखंप्रत्यभाषतां.

महानुभावस्य वचो निशम्य हरिर्नराणामृषभस्य तस्य ॥
कृतं स मेने हरिवीरमुख्यस्तदा स्वकार्यं हृदयेन विद्वान् ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ॥ ८ ॥

रामेण सहैकशाखाऽऽसनगतेनसुग्रीवेण रामंप्रति स्वस्मिन्वालिकृतापकारनिवेदनपूर्वकमभययाचना ॥ १ ॥ तथा रामेण वालिवधप्रतिज्ञाने विस्तरेणभार्याहरणादिरूपवाल्यपकारनिवेदनेन तद्वधप्रार्थना ॥ २ ॥ रामेण सुग्रीवंप्रति वालिनासह तादृशविरोधकारणप्रश्नः ॥ ३ ॥ सुग्रीवेण तंप्रति तत्कथनोपक्रमः ॥ ४ ॥

परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः ॥ लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १ ॥
सर्वथाऽहमनुग्राह्यो देवतानामसंशयः ॥ उपपन्नगुणोपेतः सखा यस्य भवान्मम ॥ २ ॥
शक्यं खलु भवेद्राम सहायेन त्वयाऽनघ ॥ सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः प्रभो ॥ ३ ॥
सोहं सभाज्यो बन्धूनां सुहृदां चैव राघव ॥ यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४ ॥
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ॥ नतु वक्तुं समर्थोऽहं स्वयमात्मगतान्गुणान् ॥ ५ ॥
महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् ॥ निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥ ६ ॥
रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च ॥ अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७ ॥
आढ्यो वाऽपि दरिद्रो वा दुःखितः सुखितोपि वा ॥ निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥ ८ ॥
धनत्यागः सुखत्यागो देहत्यागोपि वा पुनः ॥ वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ ९ ॥

पृक्तौ एकान्ते रहसि संयुक्तौ एकान्तंनियतं यथातथा संयुक्तौवा । प्रभाषतां । व्यत्ययेन परस्मैपदमडभावश्च ॥ २४—२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

अथ सुग्रीवस्य स्वशोकमूलविज्ञापनमष्टमे—परितुष्ट इत्यादि ॥ १ ॥ देवतानामनुग्राह्यः दयनीयोऽभवं । यस्य मे भवान् सखाऽऽसीत् । कीदृशः सखा । उपपन्नगुणोपेतः राजयोग्यशौर्यवीर्यादिसर्वगुणोपपन्नः ॥ २ ॥ शक्यमित्यादि चतुश्चत्वारिंशत् ॥ ३ ॥ सभाज्यः पूज्यः ॥ ४—५ ॥ भूयिष्ठं अतिशयेन । आत्मवतां आत्मज्ञानिनां ॥ ६ ॥ साधूनां मित्राणां । साधवो मित्राणि ॥ ७—८ ॥ तथाविधं स्वस्नेहसदृशं स्नेहंदृष्ट्वाश्थितस्य वयस्यस्य वयस्यार्थे धनत्यागादयःप्रवर्तन्तइतियोजना । अनया सुग्रीववचनभङ्ग्या

वालिनंवधिष्यामीतिवाक्यं ॥ २१ ॥ ती० स्वकार्यं वालिवधरूपकार्यं ॥ सर्गश्रुतिफलमुक्तंस्कान्दे—"रामसुग्रीवसँल्लापंश्रुत्वा दुःखाद्विमुच्यते" इति ॥ २५ ॥ इतिसप्तमःसर्गः ॥ ७ ॥

ति० तेनवाक्येन अनृतंनोक्तपूर्वंमेइत्यादिवाक्येन ॥ स० तुष्टं तोषः । भावेक्तः । परि उपरतं तुष्टंयस्यसपरितुष्टः । तुरप्यर्थे । तादृशोपि तेनरामेणवाक्येनहर्षितः । "परिस्यात्सर्वतोभावइत्यारभ्य—दोषाख्यानेप्युपरमेव्याप्तौनिवसनेपिच ।" इतिविश्वः ॥ १ ॥ शि० उपपन्नः स्वाभाविकसकलसंपत्तिविशिष्टः । गुणोपेतः सकलसद्गुणयुक्तः ॥ २ ॥ ति० अनुरूपः योग्यः । ज्ञास्यसे आनुरूप्यमितिशेषः । नतुवक्तुंसमर्थः । "आत्मप्रशंसामरणं" इतिन्यायात् ॥ ५ ॥ ती० महात्मनां विमलान्तःकरणानां । आत्मवतां प्रशस्तबुद्धीनां । स० कृतात्मनां शिक्षितमनस्कानां ॥ ६ ॥ ती० अविभक्तानि स्वेनतुल्यानि ॥ ७ ॥

[ पा० ] १ ख. ङ. छ. झ. ञ. ट. हरिर्नृपाणामधिपस्य. २ ङ. च. छ. झ. ञ. ट. हर्षितः. ३ क. ग. ङ. च. छ. झ. ञ. ट. स्याग्रजंशूरमिदं. ज. स्याग्रतस्त्वमिदं. ४ ङ. च. छ. झ. ट. देवतानांनसंशयः. ५ छ. झ. ट. किमुतप्रभो. ६ छ. झ. त्वयिआत्मगतान्. ७ छ. झ. मात्मवतांवरा. ८ ङ. च. झ. ट. शुभान्याभरणानिच. ९ ङ.—ञ. निर्दोषश्चसदोषश्च. क. ग. निर्दोषश्चाक्षमश्चैव. १० ङ. च. छ. झ. ञ. ट. देशत्यागोपिवाऽनघ.

तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनम्[1] ॥ लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः ॥ १० ॥
ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् ॥ सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११ ॥
स ददर्श ततः सालमविदूरे हरीश्वरः ॥ सुपुष्पमीषत्पत्राढ्यं[2] भ्रमरैरुपशोभितम् ॥ १२ ॥
तस्यैकां पर्णबहुलां भङ्क्त्वा[3] शाखां सुपुष्पिताम् ॥ सालस्यास्तीर्य[4] सुग्रीवो निषसाद सराघवः ॥१३॥
तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् ॥ सालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥ १४ ॥
सुखोपविष्टं रामं[5] तु प्रसन्नमुदधिं यथा ॥ फल[6]पुष्पसमाकीर्णे तस्मिन्गिरिवरोत्तमे ॥ १५ ॥
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं[7] मधुरया गिरा ॥ उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् ॥ १६ ॥
अहं विनिकृतो भ्रात्रा चरा[8]म्येष भयार्दितः ॥ ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥ १७ ॥
सोहं त्रस्तो भये मग्नो वसा[9]म्युद्भ्रान्तचेतनः ॥ वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥ १८ ॥
वालिनो मे भयार्तस्य सर्वलोकाभयंकर ॥ ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥ १९ ॥
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ॥ प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव[10] ॥ २० ॥
उपकारफलं मित्रमपकारोरिलक्षणम् ॥ अद्यैव तं हनिष्यामि[11] तव भार्यापहारिणम् ॥ २१ ॥
इमे हि मे महावेगाः[12] पत्रिणस्तिग्मतेजसः ॥ कार्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २२ ॥
कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः ॥ सुपर्वाणः सुतीक्ष्णाग्राः सरोषा भुजगा[13] इव ॥ २३ ॥
भ्रातृ[14]संज्ञममित्रं ते वालिनं[15] कृतकिल्बिषम् ॥ शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ २४ ॥

आवाभ्यामेवं वर्तितव्यमितिव्यवस्थाद्योत्यते ॥ ९ ॥ लक्ष्म्या कान्त्या वासवस्येव स्थितस्य लक्ष्मणस्याग्रत इतिसंबन्धः । अनेनोक्तार्थे लक्ष्मणानुमतिर्द्योतिता ॥ १० ॥ स्थितं भूषणग्रहणकालात्प्रभृतितिष्ठन्तमित्यर्थः । लोलंचक्षुरपातयदिति । समीचीनशाखालाभार्थं सर्वत्रोन्मेषयामासेत्यर्थः ॥ ११ ॥ ईषत्पत्राढ्यमिति पल्लवप्रचुरमित्यर्थः ॥ १२ ॥ पर्णबहुलां पल्लवबहुलां ॥ १३ ॥ विनीतं । एकासने स्थितिमनङ्गीकुर्वन्तमित्यर्थः । उपवेशयत् उपावेशयत् ॥ १४ ॥ सुखोपविष्टमित्यादिश्लोकद्वयमेकान्वयं । द्वितीयरामपदमभिरामार्थकं । प्रसन्नमुदधिं यथा तद्वत्प्रसन्नं । गम्भीरमित्यर्थः ॥ १५—१८ ॥ हे सर्वलोकाभयंकर । वालिनः सकाशात् भयार्तस्य मे ममापि अत्यन्तभाग्यहीनस्यापि । प्रसादं कर्तुमर्हसि ॥ १९ ॥ प्रहसन्निव पूर्वमेव प्रतिज्ञातेपि चापलातिशयात्पुनः प्रार्थयत इति मन्दस्मितवानित्यर्थः ॥ २० ॥ अरिलक्षणमित्यनन्तरं अत इत्युपस्कार्यं ॥ २१ ॥ पत्रिणः प्रशस्तपत्रिणः । तिग्मतेजसः क्रूरतेजसः । कार्तिकेयवनोद्भूताः शरवणोद्भूताः । कङ्कपत्रप्रतिच्छन्ना इति पत्रिण इत्युक्तं विशेष्यते । महेन्द्रपदेनाशनेस्तत्सन्निहितत्वातिशय उच्यते । इमे मे शराः महावेगत्वादिविशिष्टाहि । अतः एतैः शरैर्वालिनं विनिह-

**रामानु०** लक्ष्मणः तेजोविशेषेणवासवसदृशइत्यर्थः ॥ १० ॥ **स०** ततः परदिने । अतोनपौनरुक्त्यं ॥ ११ ॥ **रामानु०** आस्तीर्येति । पुनरासनप्रदानकथनेनायंपरेद्युर्वृत्तान्तइत्यवगम्यते ॥ १३ ॥ **शि०** गिरिवरोत्तमे गिरिवरस्योत्तमप्रदेशे ॥ रामं ददर्शेतिशेषः ॥ १५ ॥ **रामानु०** अत्रद्वितीयोरामशब्दोऽभिरामवचनः । क्रियाविशेषणंवा ॥ १५—१६ ॥ **स०** अहमित्यादिपुनःपुनर्वचनं स्वप्रमेयदार्ढ्याय ॥ **ति०** अहंविनिकृतइतिपूर्वदिवसोक्तार्थस्मारणं तदर्थस्यावश्यानुष्ठेयत्वाभिप्रायेण ॥ १८ ॥ **रामानु०** सर्वलोकाभयंकर अतएवममाप्यभयंकर । वालिनोभयार्तस्यमेप्रसादंकर्तुमर्हसि । सखित्वेनमह्यंविशेषतःप्रसादःकर्तव्यइत्यभिप्रायः ॥ **स०** आपिनोभावः आपित्वं प्राप्तिरित्यर्थः । मम ममतया आपित्वंयस्य तंप्रसादं । मे मत्संबन्धिनोवालिन इतिवा ॥ १९ ॥ **शि०** कार्तिकेयवनोद्भूताः स्कन्दोत्पत्तिभूमिकाननप्रादुर्भूतकाण्डकाः । एतेनतेषामभेद्यत्वंबोधितं । तदुद्भूतशराणामभेद्यत्वेनप्रसिद्धत्वात् ॥ २२ ॥ **ति०** भ्रातरं अमित्रमप्येकोदरजन्ममात्रेणतथाव्यवहृतं । पश्य द्वित्रैर्दिवसैरितिशेषः ॥२४॥

[ पा० ] १ ङ.—झ. ट. प्रियदर्शनं. ञ. प्रियदर्शनः. २ क. च. ज. ञ. त्वर्णाढ्यं. ३ ङ.—ट. शाखांभङ्क्त्वासुशोभनां. ४ क.—ट. रामस्यास्तीर्य. ५ च. ज. रामंतं. ६ ग. छ. झ. ट. सालपुष्पावसंकीर्णे. ७ क. ग.—ट. श्लक्ष्णयाशुभयागिरा. ८ ग. चराम्येव. ९ क. ग. ङ. च. छ. झ. ञ. ट. वनेसंभ्रान्तचेतनः. १० ख. वानरोत्तमं. ११ ङ.—ट. वधिष्यामि. १२ च. झ. ट. महाभाग. १३ ङ. ज. ञ. इवपन्नगाः. १४ ङ.—ट. वालिसंज्ञं. १५ ङ.—ट. भ्रातरं.

राघवस्य वचः श्रुत्वा सुग्रीवो [1]वाहिनीपतिः ॥ प्रहर्षमतुलं लेभे साधुसाध्विति चाब्रवीत् ॥ २५ ॥
राम [2]शोकाभिभूतोऽहं शोकार्तानां भवान्गतिः ॥ वयस्यइति कृत्वा हि त्वय्यहं परिदेवये ॥ २६ ॥
त्वं हि पाणिप्रदानेन वयस्यो मेऽ[3]ग्निसाक्षिकम् ॥ कृतः [4]प्राणैर्बहुमतः [5]सत्येनापि शपामि ते ॥ २७ ॥
वयस्यइति कृत्वा च [6]विस्रब्धं प्रवदाम्यहम् ॥ दुःखमन्तर्गतं [7]यन्मे मनो [8]हरति नित्यशः ॥ २८ ॥
एतावदुक्त्वा वचनं बाष्पदूषितलोचनः ॥ [9]बाष्पोपहतया वाचा [10]नोच्चैः शक्नोति भाषितुम् ॥ २९ ॥
बाष्पवेगं तु सहसा नदीवेगमिवागतम् ॥ धारयामास धैर्येण सुग्रीवो रामसन्निधौ ॥ ३० ॥
सन्निगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे ॥ विनिःश्वस्य च तेजस्वी राघवं [11]वाक्यमब्रवीत् ॥ ३१ ॥
पुराऽहं वालिना राम राज्यात्स्वादवरोपितः ॥ परुषाणि च संश्राव्य निर्धूतोस्मि बलीयसा ॥ ३२ ॥
हृता भार्या च मे तेन प्राणेभ्योपि गरीयसी ॥ सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३ ॥
यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव ॥ [12]बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४ ॥
शङ्कया त्वेतया चेह दृष्ट्वा त्वामपि राघव ॥ नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति ॥ ३५ ॥
केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे ॥ अतोऽहं धारयाम्यद्य प्राणान्कृच्छ्रगतोपि सन् ॥ ३६ ॥
एते हि कपयः स्निग्धा मां रक्षन्ति [13]समन्ततः ॥ सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति [14]च स्थिते ३७
सङ्क्षेपस्त्वेष [15]ते राम किमुक्त्वा [16]विस्तरं हि ते ॥ स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः ॥ ३८ ॥
[17]तद्विनाशाद्धि मे दुःखं प्रनष्टं स्या[18]दनन्तरम् ॥ सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९ ॥

---

तंपश्येतिसंबन्धः ॥ २२—२४ ॥ वाहिनीपतिः वानरसेनाधिपतिः ॥ २५ ॥ वयस्य इति । वयस्य इतिचेत्यर्थः । त्वयि त्वत्समीपे ॥ २६—२८ ॥ एतावदुक्त्वा पुराहं वालिनेत्यादि वक्तुकामस्तदुपोद्घातत्वेन " दुःखमन्तर्गतं यन्मेमनो हरतिनित्यशः " इत्येतावदुक्त्वा । शक्नोति अशक्नोत् ॥ २९ ॥ रामसन्निधाविति । मांप्रत्युपदिश्य स्वयंनशक्नोतीति रामो मन्येतेति भियाधारयामासेतिभावः ॥ ३०—३१ ॥ स्वाद्राज्यात् यौवराज्यात् । निर्धूतः निरस्तः ॥ ३२ ॥ बन्धनेषु कारागृहेषु ॥ ३३—३४ ॥ एतयाशङ्कया वालिप्रयुक्तत्वशङ्कया । भीतःनोपसर्पामि नोपासर्पं । भये भयनिमित्ते ॥ ३५ ॥ केवलं अद्वितीयंयथातथा ॥ ३६ ॥ केवलत्वमुपपादयति—एतेहीति ॥ गन्तव्ये । मयिगच्छतीत्यर्थः ॥ ३७ ॥ संक्षेपइत्यादिद्वयं ॥

---

॥ २४ ॥ **वि०** दुःखातिशयात्पुनराह—**रामेत्यादि** । शोकार्तगतित्वाद्वयस्यत्वाच्च त्वयिपरिदेवनं ॥ २६ ॥ **ति०** अवक्तव्यमपिवयस्यइतिकृत्वाविस्रब्धः विश्वस्तः । वदामि । हरति क्षीणंकरोति ॥ २८ ॥ **रामानु०** अत्रपुनश्शब्दोऽध्याहर्तव्यः । एतावदुक्त्वा वचनं " रामशोकाभिभूतोऽहं " इत्यारभ्य " मनोहरतिनित्यशः " इत्येतदन्तंवचनजातंपुनरुक्त्वा ॥ २९ ॥ **स०** अवरोपितः अपहृताधिकारः । परुषाणि निष्ठुरवचांसि । संश्राव्य श्रावयित्वा । निर्धूतोस्मि ॥ ३२ ॥ **रामानु०** बन्धनेषु बध्यतेऽस्मिन्निति बन्धनंकारगारं ॥ ३३ ॥ **रामानु०** परमकारुणिकंत्वामपि ॥ **ति०** भये यत्किंचिद्भयप्राप्तौ । बिभ्यति सर्वेतएवेतिशेषः ॥ ३५ ॥ **शि०** सः मद्वधविषयकयत्नवान् । अतएवरिपुः । वाली अस्तीतिशेषः ॥ ३८ ॥ **रामानु०** सख्यकरणादिना लब्धमपिसुखादिकंनलब्धप्रायमितिभावः ॥ **ति०** यद्यपिभ्रातृनाशोदुःखाय । तथाप्यनन्तरं संप्रतिविद्यमानंमेदुःखं तद्विनाशेएवप्रमृष्टंस्यात् ।

**[ पा० ]** १ घ. वानराधिपः. २ घ. शोकाभितप्तोहं. ३ क. ख. ङ.—ज. ञ. साक्षिकः. ४ क. ग. च. ज. ञ. प्राणैःप्रियतमः. ५ क. ग. ङ.—ट. सत्येनचशपाम्यहं. ख. घ. सत्येनापिशपाम्यहं. ६ ख.—ट. विस्रब्धः. ७ ङ. छ.—ट. तन्मे. ८ क. ख. दहति. ९ ग. ङ. छ.—ट. बाष्पदूषितया. १० ख. नचशक्तोऽभिभाषितुं. ११ क. ख. ग. पुनरब्रवीत्. ङ.—ट. पुनरूचिवान्. १२ क. ग. बहवः. १३ घ. सदोद्यताः. १४ झ. चास्थिते. १५ क. ङ. छ. ज. झ. ट. मेराम. १६ ख. बहुविस्तरैः. १७ छ. झ. ट. तद्विनाशेपि. ङ. च. ज. ञ. तद्विनाशेन. १८ ज. ञ. दनन्तकं.

एष मे राम शोकान्तः शोकार्तेन निवेदितः ॥ दुःखितः सुखितो वाऽपि सख्युर्नित्यं सखा गतिः॥४०॥
श्रुत्वैतद्वचनं रामः सुग्रीवमिदमब्रवीत् ॥ किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१ ॥
सुखं हि कारणं श्रुत्वा वैरस्य तव वानर ॥ आनन्तर्यं विधास्यामि संप्रधार्य बलाबलम् ॥ ४२ ॥
बलवान्हि ममामर्षः श्रुत्वा त्वामवमानितम् ॥ वर्तते हृदयोत्कम्पी प्रावृड्वेग इवाम्भसः ॥ ४३ ॥
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः ॥ सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव ॥ ४४ ॥
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ॥ प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ॥ ४५ ॥
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ॥ वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ॥ ९ ॥

दुन्दुभेरग्रजेन मायाविनाम्नामयसुतेन स्त्रीनिमित्तकवैरादर्धरात्रेकिष्किन्धामेत्य युद्धाय वालिनःसमाह्वानम् ॥ १ ॥ किष्किन्धातो निर्गतयोर्वालिसुग्रीवयोरवलोकनेन भयाद्गुहांप्रविष्टेमायाविनि वालिना सुग्रीवंप्रति स्वागमनावधि गुहामुखेऽवस्थाननियोजनपूर्वकमसुरवधाय गुहाप्रवेशः ॥ २ ॥ वत्सरान्तं वाल्यागमनप्रतीक्षया गुहाद्वारितिष्ठता तावदवधि तदागमनमपश्यता पश्यताच गुहामुखात्सफेनरुधिरधारानिस्सरणमुपशृण्वताचासुरकण्ठकोलाहलं सुग्रीवेण वालिनोनिधननिर्धारणेन महत्याशिलया बिलद्वारपिधानेन तस्मै जलदानपूर्वकं किष्किन्धाप्रवेशः ॥ ३ ॥ बलान्मन्त्रिभीराज्येऽभिषेचितेन सुग्रीवेण रिपुहननपूर्वकं प्रत्यागतवतः कोपाद्भर्त्सयतोवालिनःप्रसादनाय तदभिवादनम् ॥ ४ ॥

[ श्रूयतां राम यद्वृत्तमादितःप्रभृति त्वया ॥ यथा वैरं समुद्भूतं यथा चाहं निराकृतः ] ॥ १ ॥

---

तद्विनाशादनन्तरं मे दुःखं प्रनष्टं स्यात् । मेसुखं मेजीवितं चैव तद्विनाशनिबन्धनमित्येषसङ्क्षेपइत्यन्वयः ॥ ३८—४१ ॥ तव वैरस्य कारणं श्रुत्वा बलाबलं संप्रधार्य वैरकारणं वा वैरं वा बलवदिति विचार्य । आनन्तर्यम् अनन्तरम् । स्वार्थे ष्यञ् । तव सुखं विधास्यामि । स्वल्पापराधेप्रबलवैरंतेनकृतंचेत्तमद्यैव हत्वा तवसुखंविधास्यामि । अनल्पापराधेस्वल्पवैरंचेत्समाधानमुखेन सुखं विधास्यामीतिभावः ॥ ४२ ॥ अपराधस्वल्पत्वपक्ष आह—बलवानिति ॥ प्रावृषि वेगः प्रावृड्वेगः ॥ ४३ ॥ वालिवैरस्वल्पत्व आह—हृष्ट इति ॥ हृष्टइत्यनेन वालिहननानन्तरं शोकं माकुर्वित्यर्थः । क्रमेण तत्काले वक्ष्यत इत्यत्राह—सृष्ट इति । यदा बाणो विसृष्टस्तदैव रिपुर्नष्ट इत्यवेहीत्यर्थः ॥४४—४५॥ लक्ष्मणाग्रज इति निमित्तसप्तमी । तन्निमित्तमित्यर्थः ॥ ४६ ॥ श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥

---

अपिरेवार्थे । तदेवाह—**सुखमिति** ॥ ३९ ॥ **स०** वैरं उभयोरितिशेषः ॥४१॥ **रामानु०** संप्रधार्य बलाबलंगुणदोषौविचार्य । आनन्तर्यं अनन्तरप्राप्तंकर्म । तवसुखंयथाभवतितथा विधास्यामिहि विधास्याम्येव । गर्हितमगर्हितंवा तवाभिमतंकरिष्याम्येवेत्यर्थः ॥ **ति०** तवतेनवैरस्यकारणंश्रुत्वा युवयोर्बलाबलंचश्रुत्वा आनन्तर्यात् तदनन्तरोत्पन्नविमर्शात् । संप्रधार्य निश्चित्य हि निश्चयेन । तवसुखं त्वत्सुखसाधनंवालिवधं । विधास्यामि ॥ ४२ ॥ **शि०** अवमानितंश्रुत्वेत्यनेन तदपराधाभावेतंनहन्तास्मीति व्यञ्जितं । तेनरामस्यमर्यादापालकत्वंव्यक्तं । अमर्षोवर्धतइत्यनेन कोपोद्गममन्तरावधस्याशक्यत्वंसूचितं ॥ ४३ ॥ **ति०** यावदारोप्यते आरोपयिष्यामि । सृष्टः विसृष्टः । रिपुर्निरस्तश्च । समुच्चयालङ्कारः व्यङ्ग्यातिशयोक्तिश्च ॥ ४४ ॥ **स०** विरसस्यभावः वैरस्यं तत्कारणं वैरस्ययत्कारणंतदितिवा ॥ ४६ ॥ इत्यष्टमःसर्गः ॥ ८ ॥

**[ पा० ]** १ घ. एषरामसशोकान्तः. ख. ग. एषमेरामशोकाग्निः. २ क. ग. घ. दुःखितोऽदुःखितो. ३ क. ग. ङ. छ—ट. श्रुत्वैतच्चवचो. ४ ङ. छ.—ट. आनन्तर्याद्विधास्यामि. ५ ख. बलवान्वै. ६ क. घ.—ट. वर्धते. ७ क. च. ज. ञ. सृष्टश्चेद्धि. ८ ख. तस्मादाख्यातुं. ९ अयंश्लोकः घ. पाठे दृश्यते.

वाली नाम मम भ्राता ज्येष्ठः [1]शत्रुनिषूदनः ॥ पितुर्बहुमतो नित्यं [2]ममापि च तथा पुरा ॥ २ ॥
पितर्यु[3]परतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः ॥ कपीनामीश्वरो राज्ये कृतः [4]परमसंमतः ॥ ३ ॥
राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ॥ अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत्स्थितः ॥ ४ ॥
मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः ॥ तेन तस्य महद्वैरं [5]स्त्रीकृतं विश्रुतं पुरा ॥ ५ ॥
स तु [6]सुप्तजने रात्रौ किष्किन्धाद्वारमागतः ॥ [7]नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ६ ॥
प्रसुप्तस्तु मम भ्राता नर्दितं भैरवस्वनम् ॥ श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ॥ ७ ॥
स तु वै [8]निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम् ॥ वार्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ॥ ८ ॥
स तु निर्धूय [9]सर्वान्नो निर्जगाम महाबलः ॥ ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ॥ ९ ॥
स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम् ॥ असुरो जातसंत्रासः प्रदुद्राव [10]ततो भृशम् ॥ १० ॥
तस्मिन्द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ ॥ [11]प्रकाशश्च कृतो मार्गश्चन्द्रेणोद्गच्छता तदा ॥ ११ ॥
स तृणैरावृतं दुर्गं धरण्या विवरं महत् ॥ प्रविवेशासुरो वेगादावामासाद्य [12]विष्ठितौ ॥ १२ ॥
तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः ॥ मामुवाच [13]तदा वाली वचनं क्षुभितेन्द्रियः ॥ १३ ॥
इह [14]त्वं तिष्ठ सुग्रीव बिलद्वारि समाहितः ॥ [15]यावत्तत्र प्रविश्याहं निहन्मि [16]सहसा रिपुम् ॥ १४ ॥
मया त्वेतद्वचः श्रुत्वा याचितः स परंतपः ॥ शापयित्वा [17]तु मां पद्भ्यां प्रविवेश बिलं महत् ॥ १५ ॥
तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः ॥ स्थितस्य च [18]मम [19]द्वारि स [20]कालो व्यत्यवर्तत ॥ १६ ॥
अहं तु नष्टं [21]ज्ञात्वा तं स्नेहादागतसंभ्रमः ॥ भ्रातरं [22]नैव पश्यामि पापाशङ्कि च मे मनः ॥ १७ ॥

अथ वाल्यपराधवृत्तान्तो नवमे । वालीनामेत्यादि-षड्विंशतिश्लोकाः ॥१–२॥ अयं ज्येष्ठः अतः कपीनामीश्वरइति राज्ये कृतः स्थापितः ॥ ३ ॥ पितृपैतामहं स्वपितुः ऋक्षरजसः पित्राब्रह्मणातस्मैदत्तत्वात् ॥ ४ ॥ दुन्दुभेः पूर्वजः अग्रजः । सुतः मयस्येति शेषः । वक्ष्यत्युत्तरकाण्डे मयः "मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः" इति । तेन मायाविना । तस्य वालिनः । स्त्रीकृतं स्त्रीनिमित्तं । महद्वैरमस्तीति पुरा विश्रुतं ॥ ५ ॥ सुप्तजने सुप्तः जनोयस्मिन्रात्र्यंशे स सुप्तजनः । अर्धरात्र इत्यर्थः ॥ ६ ॥ भैरवस्वनं भैरवस्वनरूपं । नर्दितं गर्दितं ॥७—१०॥ उद्गच्छता उदयमानेन ॥ ११ ॥ आसाद्य बिलद्वारमिति शेषः ॥ १२—१४ ॥ याचितः सहप्रवेशनमिति शेषः । पद्भ्यां स्वपदाभ्यां । "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इतिचतुर्थी ॥ १५ ॥ तस्यप्रविष्टस्य तस्मिन्प्रविष्टे । साग्रः संपूर्णः । स कालः संवत्सरः । ममापि संवत्सरो गत इत्यर्थः ॥ १६ ॥ अहंतंनष्टं ज्ञात्वा साग्रसंवत्सरमदृष्टंबुद्ध्वा । स्नेहादागतसंभ्रमो-

**ति०** पितुः क्षेत्रिणः । मात्रैक्याच्चभ्रातृत्वंभीमार्जुनादिवत् ॥ **स०**पुरा कलहात् ॥२॥ **ति०**पितृपैतामहं आर्षत्वादुत्तरपदवृद्धिः ॥४॥ **ति०** मायावीत्यन्वर्थनाम । पूर्वजः ज्येष्ठः । स्त्रीकृतं स्त्रीनिमित्तं । अयमितिहासः क्वचित्पुराणेशोधनीयोबहुदर्शिभिः ॥५॥ **ति०** तृणैरावृतं छन्नं । विवरं बिलं । आसाद्य प्राप्य । विष्ठितौ स्थितौ ॥ १२ ॥ **स०** क्षुभितेन्द्रियः परिवृत्तनेत्रादिः ॥ १३ ॥ **ती०** याचितः वालिनासहबिलप्रवेशनमितिशेषः । शापयित्वातुमांपद्भ्यामिति बिलद्वार्येवतिष्ठामिनानुव्रजामीतिस्वपादस्पर्शनपूर्वकंशपथंमयाकारयित्वेत्यर्थः ॥१५॥ **स०** पापशङ्कि पापजन्यमरणशङ्कि । **शि०** पापशङ्कि पापात् पापिनोमायाविनः शङ्कते स्वभ्रातृकर्मकवधंसंभावयतितच्छीलं । मेमनोजातमितिशेषः । अतएव तंभ्रातरंनष्टं हिंसितंज्ञात्वा स्नेहात् तद्विषयकातिप्रीतेर्हेतोः ।

**[ पा० ]** १ क. ग. शत्रुनिबर्हणः. ख. शक्रनिषूदनः. २ क. ग. ङ. च. छ. झ. ञ. ट. ममचापि. ३ छ. झ. ट. रतेतस्मिन्. ४ ङ. परमसत्तमः. ५ झ. ट. वालिनःस्त्रीकृतंपुरा. ६ झ. ट. सुप्तेजने. ७ ङ. झ. ञ. ट. नर्दतो. ८ ख. निर्गतः. ९ क. ग. ङ.—ट. तास्सर्वानिर्जगाम. १० ग. ङ.—ट. तदा. ११ छ. झ. ट. प्रकाशोपि. क. ङ. प्रकाशोहि. १२ ज. तिष्ठतौ. १३ ख. घ. ङ. च. ज.—ट. ततो. १४ घ.—ट. तिष्ठाद्य. १५ क. ग. ङ.—ट. यावदत्र. १६ क. ख. ङ.—ट. समरे. १७ छ.—ट. समां. ख. ङ. चमां. १८ ङ.—ट. ततः. १९ छ. झ. ट. बिलंद्वारि. २० ख. घ. ज. कालोप्यत्यवर्तत. २१ क. ङ. छ.—ट. तंज्ञात्वा. २२ क. ग. ङ. छ.—ट. नप्रपश्यामि. ख. नहिपश्यामि. घ. तुनपश्यामि.

अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिःसृतम् ॥ सफेनं रुधिरं [1]रक्तमहं दृष्ट्वा सुदुःखितः ॥ १८ ॥
नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः ॥ [2]निरस्तस्य च संग्रामे [3]क्रोशतो निःस्वनो गुरोः ॥ १९ ॥
अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं [4]हतम् ॥ पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे ॥ २० ॥
गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् ॥ ततोऽहं तैः समागम्य [5]सम्मतैरभिषेचितः ॥ २१ ॥
राज्यं प्रशासतस्तस्य [6]न्यायतो मम राघव ॥ आजगाम रिपुं हत्वा [7]वाली तमसुरोत्तमम् ॥ २२ ॥
अभिषिक्तं तु मां दृष्ट्वा [8]वाली संरक्तलोचनः ॥ मदीयान्मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ॥ २३ ॥
[9]निग्रहेऽपि [10]समर्थस्य तं पापं प्रति राघव ॥ न प्रावर्तत मे [11]बुद्धिर्भ्रातुगौरवयन्त्रिता ॥ २४ ॥
हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ॥ मानयंस्तं महात्मानं यथावच्चाभ्यवादयम् ॥ २५ ॥
[12]उक्ताश्च नाशिषस्तेन [13]संतुष्टेनान्तरात्मना ॥ २६ ॥
नत्वा पादावहं तस्य मुकुटेनास्पृशं प्रभो ॥ अपि [14]वाली मम क्रोधान्न प्रसादं चकार सः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे नवमः सर्गः ॥ ९ ॥

---

ऽभवं । भ्रातरं च न पश्यामि नापश्यं । ततः मे मनः । पापाशङ्कि तन्मरणाशङ्कि जातं ॥ १७ ॥ रक्तं रक्तवर्णं ॥ १८—१९ ॥ चिह्नैः मरणकालिकस्वरैः ॥ २० ॥ तत्त्वं यथार्थं । वालिमरणं गूहमानस्य प्रच्छादयतः । मे मत्तः । यत्नतः बहुयत्नेन । स्वविषयशापादिना श्रुतमासीत् ॥ २१—२३ ॥ पापं अज्ञानकृतमिति सान्त्वनेपि धिक्करणात् पापिष्ठं । तं प्रति निग्रहेसमर्थस्य प्रकृतिबलसंपन्नत्वादिति भावः । यन्त्रिता नियमिता ॥ २४ ॥ प्रविवेश पुरमित्युक्त्या मन्त्रिबन्धनादिकं पुराद्बहिरिति ज्ञेयं ॥ २५—२६ ॥ मम क्रोधात् मयि कोपात् ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने नवमःसर्गः ॥ ९ ॥

---

आगतसंभ्रमः प्राप्तोद्वेगः आसमितिशेषः ॥ १७ ॥ **वि०** संग्रामेरतस्य निरतस्य । क्रोशतोपिगुरोःस्वनोनश्रोत्रमागतइत्यनुकर्षः ॥ १९ ॥ **ती०** गिरिमात्रया पर्वतप्रमाणया ॥ **ति०** चिह्नैः बिलद्वारिरुधिरनिस्सरणासुरीयसंग्रामक्रोशनादिभिः । भ्रातरंहतं अवगतः ज्ञातवान् । पिधाय राक्षसनिर्गमशङ्कया ॥ **स०** अहंअवगतः कर्तरिक्तः ज्ञातवान् । गिरिमात्रया गिरिप्रमाणया । यद्यपि"टिड्ढाण—"इत्यादिनाटापोपवादकेनङीपाभवितव्यं । तथाप्यार्षत्वाट्टाप् । यद्वा नायंमात्रच्प्रत्ययः । किंतु"मात्रापरिच्छदे"इत्यमरोक्तेः परिमाणवाचीमात्राशब्दः । अतोनपूर्वोक्तदोषः ॥ २० ॥ **शि०** तत्त्वं वालिवधं । यत्नतः अनेकविधोपायैः । गूहमानस्य शत्र्वाक्रमणादिशङ्कयागोपयमानस्य । मेमन्त्रिभिः अमात्यैः । श्रुतं तेषांसंनिधौमयाकथितमित्यर्थः । ततः तस्माद्धेतोः । समेतैः तैर्मन्त्रिभिः अहमभिषेचितः ॥ २१ ॥ **शि०** निग्रहे तत्परुषवाक्यादिनिरोधे ॥ **स०** मेममनिग्रहेसमर्थस्यापिवालिनः तंपापंमांप्रति तादृशीबुद्धिर्नप्रावर्तत । तत्रहेतुः **भ्रातृगौरवेत्यादि** । भ्राता ज्येष्ठभ्राताऽहं किंकनिष्ठभ्रातृबन्धनेनेतिभ्रातृगौरवयन्त्रितासती नप्रावर्तत । एतेनसुग्रीवस्यवालिनिग्रहेसामर्थ्याभावात्कथंनिग्रहेचसमर्थस्येतिवचनमितिशङ्कापरास्ता ॥ २४ ॥ **ति०** उक्तानुवादपूर्वमवशिष्टव्यापारकथनं **हत्वेत्यादि** ॥ २५ ॥ **ति०** अपि तथापीत्यर्थः ॥ २७ ॥ इतिनवमःसर्गः ॥ ९ ॥

**[ पा० ]** १ छ. झ. ट. दृष्ट्वाततोहंभृशदुःखितः. २ छ. झ. ञ. नरतस्यच. ३ ख. घ. च.—ट. क्रोशतोपिस्वनो. ४ ख. गतं. ५ क. ङ.—ट. समेतैरभि. ६ ङ. च. ज. ञ. न्यायेन. ७ क. ग. ङ. छ. झ. ञ. ट. दानवंसतुवानरः. ८ क.—ङ. झ. ञ. ट. क्रोधात्संरक्त. ९ ग. ङ. छ. झ. ञ. ट. निग्रहेच. १० ङ. समर्थंहि. ११ क.—ट. भ्रातृगौरव. १२ ङ.—ञ. नोक्तामममाशिषस्तेन. च. ज. नोक्तामेचाशिषस्तेन. १३ छ. झ. ट. प्रहृष्टेन. १४ क. ग. राममम.

## दशमः सर्गः ॥ १० ॥

सुग्रीवेण वालिनंप्रति राज्येस्वाभिषेचनस्य अमात्यमन्त्रिकृतत्वनिवेदनपूर्वकं पुनाराज्यप्रत्यर्पणोक्त्या सप्रणामं क्षमापणम् ॥ १ ॥ वालिना पौराद्यानयनेन तेषु स्वकृतशत्रुवधवृत्तान्ताभिधानपूर्वकं सुग्रीवेदोषारोपणेन क्रोधात्तस्य नगरान्निर्वासनम् ॥ २ ॥ एवं सुग्रीवेणोभयोर्वैरकारणंनिवेदितेनरामेण तंप्रति वालिवधप्रतिज्ञानेन समाश्वासनम् ॥ ३ ॥

ततः क्रोध[1]समाविष्टं संरब्धं तमुपागतम् ॥ अहं प्रसादयांचक्रे भ्रातरं प्रिय[2]काम्यया ॥ १ ॥
दिष्ट्याऽसि कुशली[3] प्राप्तो निहत[4]श्च त्वया रिपुः ॥ अनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दनः ॥ २ ॥
इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् ॥ छत्रं सवालव्यजनं प्रतीच्छस्व मयो[5]द्यतम् ॥ ३ ॥
आर्त[6]श्चाथ बिलद्वारि स्थितः संवत्सरं नृप ॥ दृष्ट्वा[7]ऽहं शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४ ॥
शोक[8]संविग्नहृदयो भृशं व्याकुलितेन्द्रियः ॥ अपिधाय[9] बिलद्वारं शैल[10]शृङ्गेण तत्तथा[11] ॥
तस्माद्देशादपाक्रम्य किष्किन्धां प्राविशं पुनः ॥ ५ ॥
विषादात्त्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ॥ अभिषिक्तो न कामेन तन्मे [12]त्वं क्षन्तुमर्हसि ॥ ६ ॥
त्वमेव राजा मानार्हः सदा चाहं यथापुरम्[13] ॥ राजभाव[14]नियोगोऽयं मया[15] त्वद्विरहात्कृतः ॥ ७ ॥
सामात्यपौरनगरं स्थितं निहतकण्टकम् ॥ न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् ॥ ८ ॥
मा च रोषं कृथाः सौम्य [16]मयि शत्रुनिबर्हण ॥ याचे त्वां शिरसा राजन्मया बद्धोऽयमञ्जलिः ॥ ९ ॥
बलादस्मि समागम्य मन्त्रिभिः पुरवासिभिः ॥ राजभावे नियुक्तोऽहं शून्यदेशजिगीषया ॥ १० ॥
स्निग्धमेवं ब्रुवाणं मां स [17]तु निर्भर्त्स्य वानरः ॥ धिक्त्वामिति च मामुक्त्वा बहु[18] तत्तदुवाच ह ॥ ११ ॥

अथवालिदोषदर्शनेनरामस्य दृढतरावालिवधप्रतिज्ञा दशमे—तत इत्यादि ॥ १ ॥ अनाथान् नन्दयतीत्यनाथनन्दनः ॥ २ ॥ उद्यतं अर्पितं । प्रतीच्छस्व प्रतीच्छ ॥ ३ ॥ संवत्सरं बिलद्वारिस्थितः । अहं च बिलद्वारिसमुत्थितंशोणितंदृष्ट्वा आर्तश्चास्मि ॥ ४ ॥ शोकसंविग्नहृदयः शोककम्पितहृदयः । तद्बिलद्वारं तथा त्वयादृष्टप्रकारेण । अपिधाय प्रच्छाद्य । प्राविशं ॥ ५ ॥ इह विषादादागतं मां दृष्ट्वा । विषादात् राज्यनाशविषादात् ॥ ६ ॥ अहं यथापुरं पूर्ववद्युवराजोभवामीत्यर्थः । राजभावनियोगः राजत्वेन राज्यशासनं ॥ ७—९ ॥ शून्यदेशजिगीषया राजशून्यदेशवशीकरणेच्छया ॥ १० ॥ तत् परुषभाषणं । अश्ली-

शि० क्रोधेनसमाविष्टं संयुक्तं । अतएवसंरब्धं क्रोधसूचकचेष्टावन्तं । हितकाम्यया स्वकल्याणवाञ्छया । अहंप्रसादयांचक्रे ॥ १ ॥ स० दिष्ट्येति प्राप्तेनेव निहतेनाप्यन्वेति ॥ २ ॥ ति० राजभावे राज्ये । अयंममनियोगः मन्त्रिभिस्त्वद्विरहात्कृतः । अमात्यपौरसहितंनगरं निहतकण्टकं अराजत्वप्रयुक्तदोषरहितं । कर्तुमितिशेषः । तच्चेदंत्वदीयराज्यं मयिन्यासभूतंस्थितं । अहंतवनिर्यातयामिप्रत्यर्पयामि । मारोषंकृथाइत्यन्वयः ॥ ७—८ ॥ रामानु० शून्यदेशजिगीषया देशस्यराजशून्यत्वापनिनीषयेत्यर्थः ॥ वि० शून्यदेशस्यराजहीनदेशस्ययापरेषांजिगीषातया तन्निवृत्तिहेतुना । "मशकार्थोधूमः" इतिवदयंप्रयोगः ॥ शून्यदेशजिगीषया । शून्येतिभावप्रधानं । शून्यत्वंददतीतिशून्यदाः तेचतेईशाश्चद्विषन्तोराजानः तज्जिगीषया तज्जयेच्छया । यद्वा शून्योदेशइतियाजिगीषा प्राप्तीच्छातया । जिरत्रप्राप्त्यर्थेक्रोधनजितइत्यादिवत् । स्निग्धं स्नेहपूर्वं ॥ शि० शून्यदेशजिगीषया राज-

[ पा० ] १ ङ. च. ज. ञ. क्रोधसमायुक्तं. २ छ.—ट. हितकाम्यया. ३ ज. कुशलं. ४ ङ. ञ. दिष्ट्यासंनिहतोरिपुः, च. ज. दिष्ट्याचनिहतोरिपुः. ५ छ. झ. ञ. ट. मयाधृतं. ६ झ. आर्तस्तस्य. ङ.—ज. ञ. ट. आर्तस्तत्र. ७ क. ख. ग. ङ.—ट. दृष्ट्वाच. ८ ख. शोकसंरक्तनयनो. ९ क. पिधायच. १० ग. गिरिशृङ्गेण. ११ क. ख. ङ.—ट. तत्तदा. १२ ङ.—ट. क्षंतुंत्वमर्हसि. १३ क.—ङ. छ.—ट. यथापुरा. १४ ङ. छ.—ट. राजभावे. १५ ङ. छ.—ट. मम. १६ ङ. च. छ. झ. ट. ममशत्रुनिषूदन. १७ क. ङ.—ट. विनिर्भर्त्स्य. १८ ङ. बहुनातदुवाचह.

प्रकृतीश्च समानीय मन्त्रिणश्चैव संमतान् ॥ मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् ॥ १२ ॥
विदितं वो यथा रात्रौ मायावी स महासुरः ॥ मां समाह्वयत क्रूरो युद्धकाङ्क्षी सुदुर्मतिः ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा निःसृतोहं नृपालयात् ॥ अनुयातश्च मां तूर्णमयं भ्राता सुदारुणः ॥ १४ ॥
स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ॥ प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां तमनुद्रुतौ ॥ १५ ॥
अनुद्रुतश्च वेगेन प्रविवेश महाबिलम् ॥ १६ ॥
तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम् ॥ अयमुक्तोथ मे भ्राता मया तु क्रूरदर्शनः ॥ १७ ॥
अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम् ॥ बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥ १८ ॥
स्थितोयमिति मत्वा तु प्रविष्टोहं दुरासदम् ॥ तं च मे मार्गमाणस्य गतः संवत्सरस्तदा ॥ १९ ॥
स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः ॥ निहतश्च मया तत्र सोसुरो बन्धुभिः सह ॥ २० ॥
तस्यास्यात्तु प्रवृत्तेन रुधिरौघेण तद्बिलम् ॥ पूर्णमासीद्दुराक्रामं स्तनतस्तस्य भूतले ॥ २१ ॥
सूदयित्वा तु तं शत्रुं विक्रान्तं दुन्दुभेः सुतम् ॥ निष्क्रामन्नेव पश्यामि बिलस्य पिहितं मुखम् ॥ २२ ॥
विक्रोशमानस्य तु मे सुग्रीवेति पुनः पुनः ॥ यदा प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २३ ॥
पादप्रहारैस्तु मया बहुभिस्तद्विदारितम् ॥ ततोऽहं तेन निष्क्रम्य पथा पुरमुपागतः ॥ २४ ॥
अत्रानेनास्मि संरुद्धो राज्यं प्रार्थयताऽऽत्मनः ॥ सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥ २५ ॥
एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः ॥ निर्वासयामास तदा वाली विगतसाध्वसः ॥ २६ ॥
तेनाहमपविद्धश्च हृतदारश्च राघव ॥ तद्भयाच्च महीं कृत्स्ना क्रान्तेयं सवनार्णवा ॥ २७ ॥

लतया विशिष्य नोक्तं ॥ ११ ॥ प्रकृतीरिति मामुद्दिश्य प्रकृत्यादीनाहेत्यर्थः ॥ १२—१९ ॥ अनिर्वेदात् अक्लेशात् ॥२०॥ भूतले भूविवरे । स्तनतः गर्जतः । तत् पूर्वोक्तं । तस्य बिलं स्तनतः तस्य आस्यात्प्रवृत्तेन रुधिरौघेण पूर्णसत् दुराक्रममासीदितियोजना ॥ २१ ॥ दुन्दुभेः सुतं भ्रातरमित्यर्थः । यद्वा नायं मायावी मयपुत्रः किंतु दुन्दुभिपुत्रोऽन्यइति बोध्यम् । "पूर्वजो दुन्दुभेःसुतः"इतिहिपूर्वमप्युक्तं । पिहितमिति हेतुगर्भं । पिहितत्वान्मुखं न पश्यामि ॥ २२ ॥ विक्रोशमानस्य आह्वयतः । "क्रुश आह्वाने रोदने च" इति धातुः ॥ २३ ॥ तत् बिलं । विदारितं कचित्सरन्ध्रीकृतं । तेनपथा रन्ध्रमार्गेण ॥ २४ ॥ अत्र बिले ॥ २५—२६ ॥ अप-

रहितदेशकर्तृकोत्कर्षप्राप्तीच्छया । शत्र्वाक्रमणनिवारणायेत्यर्थः ॥ १० ॥ **ति०** आपुरा युद्धाकाङ्क्षातिपूरकेणमया युद्धाकाङ्क्षी महासुरःमायावी मांसमाह्वयत । तत् वोयुष्माकंविदितं ॥ १३ ॥ **शि०** दुरासदं असुरातिरिक्तैःप्रवेष्टुमशक्यंविवरं । अहंप्रविष्टः ॥ १९ ॥ **रामानु०** भूतले भुवोऽधस्तले । " अधस्स्वरूपयोरस्त्रीतलं"इत्यमरः । तत् प्रसिद्धं ॥ २१ ॥ **ती०** अत्रैकस्तच्छब्दःप्रसिद्धपरः ॥२२॥ **स०** "प्राचां"इतियोगविभागा"दूराद्धूतेच" इत्यादेर्वैकल्पिकत्वेननसुग्रीवेत्यत्रप्लुतिसंप्रयुक्तप्रकृतिभावः ॥ नास्ति नासीत् ॥ २३ ॥ **ती०** यथाशब्दोवाक्यालङ्कारे ॥ २४ ॥ **शि०** सर्वांमहींक्रान्तवान् अस्मीतिशेषः । एतेन

**[ पा० ]** १ झ. क्रुद्धो. २ क. छ. झ. ट. युद्धाकाङ्क्षी. ३ क. ख. छ. झ. ट. तदापुरा. ४ क. ख. छ. झ. ट. तद्भाषितं. घ. ङ. च. ज. ञ. तद्गर्जितं. ५ ग. तूर्णभ्राताह्येष. ६ ङ.—ट. समुपागतौ. ख. ग. घ. समनुद्रुतौ. क. समभिद्रुतौ. ७ क. ङ.—ट. अभिद्रुतस्तु. ८ क. ङ.—ट. विवेशसमहाबिलं. ९ ङ.—ट. मत्वाहंप्रविष्टस्तु. १० क. ख. छ. झ. ञ. ट. तंमेमार्गयतस्तत्र. ११ ङ.—ट. मयासद्यःससर्वैःसहबन्धुभिः. १२ छ. झ. तस्यैवच. १३ क. ङ. छ. झ. ट. विक्रान्तंतमहंसुखं. च. ज. विक्रामन्तंमहासुरं. ख. ग. बलिनंदुन्दुभेः. ङ. ञ. विक्रान्तंचमहासुरं. १४ च.—ट. निष्क्रामन्नेह. १५ ख. ङ. छ. झ. ट. यतः. १६ ग. ङ. च. ज. ञ. बहुशस्तद्विदारितं. क. ख. बहुभिस्सविदारितः. छ. झ. ट. बहुभिःपरिपातितं. १७ ख. यत्नात्. च. यथा. १८ ख.—च. ज. ञ. पुनरुपागतः. क. पुनरिहागतः. १९ क. ख. घ.—ट. तत्रानेन. २० छ. झ. ट. मृगयतात्मनः. घ. ङ. च. ज. ञ. मार्गयतात्मनः. २१ क. ङ.—ट. तदानिर्वासयामास. २२ छ. झ. ट. महींसर्वांक्रान्तवान्सवनार्णवां. ङ. च. ञ. महीसर्वा.

ऋश्यमूकं गिरिवरं भार्याहरणदुःखितः ॥ प्रविष्टोस्मि दुराधर्षं वालिनः कारणान्तरे ॥ २८ ॥
एतत्ते सर्वमाख्यातं वैरानुकथनं महत् ॥ अनागसा मया प्राप्तं व्यसनं पश्य राघव ॥ २९ ॥
वालिनस्तु भयार्तस्य सर्वलोकाभयंकर ॥ कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ॥ ३० ॥
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मसंहितम् ॥ वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३१ ॥
अमोघाः सूर्यसंकाशा ममैते निशिताः शराः ॥ तस्मिन्वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥ ३२ ॥
यावत्तं नाभिपश्यामि तव भार्यापहारिणम् ॥ तावत्स जीवेत्पापात्मा वाली चारित्रदूषकः ॥ ३३ ॥
आत्मानुमानात्पश्यामि मग्नं त्वां शोकसागरे ॥ त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम् ॥ ३४ ॥
तस्य तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् ॥ सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ॥ ११ ॥

सुग्रीवेण रामबलपरीक्षणाय वालिबलप्रकारकथनोपक्रमः ॥ १ ॥ महिषाकृतिना दुन्दुभिनाम्नामहासुरेण वीर्योत्सेकाद्युद्धायवालिनः समाह्वानम् ॥ २ ॥ वालिना बाहुयुद्धेन तन्मारणपूर्वकं तद्गात्रस्य मतङ्गाश्रमपरिसरेवेगात्क्षेपणम् ॥ ३ ॥ दूरात्पतनवेगेन महिषमुखोद्गतैरक्तबिन्दुभिराकीर्णे निजाश्रमे रुष्टेन मतङ्गमहर्षिणा वालिनस्तदीयानांच स्वाश्रमप्रवेशक्रमेण प्राणवियोजनशैलीभवनप्रयोजकशापदानम् ॥ ४ ॥ सचिवमुखादृषिशापप्रकारं ज्ञातवतावालिना तदाप्रभृति ऋश्यमूकप्रवेशवर्जनम् ॥ ५ ॥ एवं वालिबलवर्णनेनसह तेनदुष्प्रवेशत्वादृश्यमूकस्य स्वेनशरणीकरणोक्तिपूर्वकं वालिवधे संदिहानंसुग्रीवंप्रति लक्ष्मणेन रामेवालिवधशक्तिप्रत्यायकनिवेदनचोदना ॥ ६ ॥ सुग्रीवेण प्रत्यायकंनिवेदितेनरामेण दुन्दुभिशरीरास्थ्नो निजपादाङ्गुष्ठेन दशयोजनानन्तरदेशेक्षेपणम् ॥ ७ ॥ तावताप्यपरितुष्टेनसुग्रीवेण सालसप्तकप्रदर्शनेन तेषुवालिबलप्रकारनिवेदनपूर्वकमेकबाणेनतेष्वेकतमविदारणस्य स्वप्रत्यायकत्वोक्तिः ॥ ८ ॥

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् ॥ सुग्रीवः पूजयांचक्रे राघवं प्रशशंस च ॥ १ ॥
असंशयं प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः ॥ त्वं दहेः कुपितो लोकान्युगान्त इव भास्करः ॥ २ ॥

---

विद्धः ताडितः ॥ २७ ॥ कारणान्तरे मतङ्गशापनिमित्तेसति । वालिनो दुराधर्षं दुराक्रमं ॥ २८ ॥ वैरानुकथनं वैरकारणाख्यानं ॥ २९ ॥ वालिनइति पञ्चमी ॥ ३०—३३ ॥ आत्मानुमानात् "आत्मवत्सर्वभूतानि" इतिन्यायादित्यर्थः । तारयिष्यामि शोकसागरादितिशेषः ॥ ३४—३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

अथ सुग्रीवो वालिवधक्षमं रामबलं परीक्षितुकामस्तद्बलं दर्शयत्येकादशे—रामस्येत्यादि ॥ पूजयांचक्रे अञ्जलिबन्धादिना । प्रशशंस तुष्टाव ॥ १–२ ॥

---

निर्वासितेपिसुग्रीवेऽनेकविधविघातयत्नंकृतवानितिव्यक्तं । तेनतस्यमहानपराधोव्यञ्जितः ॥ २७ ॥ **शि०** प्रहसन्निव प्रहसन्नेव ॥ ३१ ॥ **ति०** चारित्रदूषकः निषिद्धानिषिद्धज्ञानवत्त्वेसतिजीवतोभ्रातुर्भार्यापहारात् । **स०** चारित्रं सदाचारः ॥ ३३ ॥ **ती०** पुष्कलं सर्वं । पुष्कलं श्रेष्ठमित्यर्थः ॥ **ति०** आत्मानुमानात् अयंशोकाब्धिमग्नः रिपुहृतदारत्वात् मद्वत्इत्यनुमानं बाढं प्राप्स्यसि भार्यां पुष्कलं राज्यंच ॥ ३४ ॥ **स०** आत्मनोहितमिति रामदर्शनक्षणएव हितं स्वस्यैस्वसंबन्धिजनायचजातप्रायमितिषष्ठ्यास्पष्टयति । अन्यथा चतुर्थीश्रूयेतेतिज्ञेयं । यद्वा आत्मनास्वेन ऊहितं एवंरामोवदिष्यतीतितार्कितंवचःश्रुत्वा ॥ ३५ ॥ इतिदशमःसर्गः ॥ १० ॥

**स०** युगान्ते प्रलये । दहेः । दहेदितिपाठे युष्मद्योगेपिप्रथमपुरुषः । "त्वंदेवशक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविरादधेऽजः"

[ **पा०** ] १ ख. घ. वालिना. २ झ. ट. वालिनश्च. ३ क. ख. छ. सर्वभूतभयापह. छ. झ. ट. सर्वलोकभयापह. ४ क. छ. झ. ट. मुक्तस्स. ५ ख. धर्मवत्सलः. ६ ङ. छ. ज. झ. ट. निशितामेशराइमे. क. ख. च. ज. ममेमे. ७ क. ङ. छ.—ट. पतिष्यन्तिरुषान्विताः. घ. पतिष्यन्तिरुतान्विताः. ८ क. ङ.—ट. नहिपश्येयं. ग. घ. नहिपश्यामि. ९ ग. तावज्जीवेत्सपापीयान्वाली. १० ङ.—ट. मग्नस्त्वं. ११ छ. झ. ट. बाढं. ख. ङ. च. ज. ञ. सुखं. १२ ङ. छ. झ. ट. हर्षपौरुषवर्धनं. क. ख. राघवस्यमनोहितं.

वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या ॥ तन्ममैकमनाः श्रुत्वा विधत्स्व [1]यदनन्तरम् ॥ ३ ॥
समुद्रात्पश्चिमात्[2]पूर्वं दक्षिणादपि चो[3]त्तरम् ॥ क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ४ ॥
अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि ॥ ऊर्ध्व[4]मुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥
बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ॥ वालिना तरसा भग्ना [5]बलं प्रथयताऽऽत्मनः ॥ ६ ॥
[ [6]शृणु चापि रघुश्रेष्ठ विस्तरेण कथामिमाम् ] ॥ ७ ॥
महिषो दुन्दुभिर्नाम कै[7]लासशिखरप्रभः ॥ [ [8]यथा संनिहितः पापो वालिना क्रूरकर्मणा ] ॥ ८ ॥
आसीन्महासुरः कश्चिद्दुन्दुभिर्नाम नामतः ॥ बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ९ ॥
वीर्योत्सेकेन दुष्टात्मा वरदानाच्च मोहितः ॥ जगाम सुमहाकायः समुद्रं सरितां पतिम् ॥ १० ॥
ऊर्मिमन्तमतिक्रम्य सागरं रत्नसंचयम् ॥ [10]मह्यं युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ११ ॥
ततः समुद्रो धर्मात्मा समुत्थाय महाबलः ॥ अब्रवीद्वचनं राजन्नसुरं कालचोदितम् ॥ १२ ॥
समर्थो नास्मि ते दातुं युद्धं युद्धविशारद ॥ श्रूयतां [11]चाभिधास्यामि यस्ते युद्धं प्रदास्यति ॥ १३ ॥
शैलराजो महारण्ये तपस्विशरणं परम् ॥ शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १४ ॥
[12]गुहाप्रस्रवणोपेतो बहुकन्दरनिर्दरैः[13] ॥ स समर्थस्तव प्रीतिमतुलां [14]कर्तुमाहवे ॥ १५ ॥
तं भीत इति विज्ञाय समुद्रमसुरोत्तमः ॥ हिमवद्वनमा[15]गच्छच्छरश्चापादिव च्युतः ॥ १६ ॥
ततस्तस्य [16]गिरेः श्वेता [17]गजेन्द्रविपुलाः शिलाः ॥ चिक्षेप बहुधा भूमौ दुन्दुभिर्वि[18]ननाद च ॥ १७ ॥
ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः ॥ हिमवानब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १८ ॥

---

पौरुषं बलं । अनन्तरं यत्कर्तव्यं तद्विधत्स्व ॥ ३ ॥ समुद्रादिति । " ब्राह्मे मुहूर्ते उत्थाय " इति ब्राह्ममुहूर्तस्य सन्ध्याकर्मकालत्वेन तस्मिन्नुत्थाय अनुदिते सूर्येसन्ध्याकर्मकरणार्थं पश्चिमात्समुद्रात्पूर्वसमुद्रं दक्षिणात्समुद्रादुत्तरं समुद्रंचव्यपगतक्लमःसन्क्रामति। इदं व्यक्तमुत्तरकाण्डे । तारः–"चतुर्भ्योपिसमुद्रेभ्यः सन्ध्यामन्वास्यरावण । इमं मुहूर्तमायातिवाली तिष्ठ मुहूर्तकं " इति ॥ ननु कथं चतुर्ष्वप्येकसन्ध्याकरणं । उच्यते । एकस्मिंस्तटाकेपार्श्वभेदइव स्नानाचमनार्घ्यप्रदानजपानां कर्तुं शक्यत्वात् ॥ ४ ॥ अग्राणीति । कंतुकानीवेति भावः ॥ ५ ॥ बहव इति । मक्षिकोत्सारणरीत्येति भावः । सारवन्तः स्थिरांशवन्तः । " सारोबलेस्थिरांशेच " इत्यमरः ॥ ६ ॥ कैलासशिखरप्रभः । तदाकार इत्यर्थः ॥ ७–९ ॥ वीर्योत्सेकेन वीर्यगर्वेण । दुष्टात्मा दुर्बुद्धिः । अतिक्रम्यजगाम । पूर्वकालोनविवक्षितः । आक्रामन् जगामेत्यर्थः ॥ १०—११ ॥ समुत्थाय पुरुषवेषेणोत्थाय ॥ १२–१३ ॥ परं तपस्विशरणं तपस्विनांपरमावासस्थानं । नित्यनपुंसकं ॥ १४ ॥ प्रस्रवणं

---

इतिवत्संभवति । विस्तृतंचैतत्प्राक् ॥ २ ॥ **स०** अनुभूतभ्रातृप्रभावस्यकपेर्ममचाल्पतोविज्ञप्तिंश्रृण्विति भ्रातृपराक्रमंकथयति— **वालिनइति** । पौरुषं शारीरबलं । ममसकाशात् । **ति०** वीर्यं परसंहारशक्तिः । धृतिः रणेधैर्यं ॥ ३ ॥ **रामानु०** अनुदितेसूर्येइत्युत्तरावधिरभिहितः । पूर्वावधिस्तु—"ब्राह्मेमुहूर्तेउत्थाय"इत्यनुष्ठानाङ्गत्वेनविहितःकालः ॥ ४ ॥ **ति०** महिषः तद्रूपधरः ॥८॥ **शि०** नागसहस्रस्य गजसहस्रस्य ॥९॥ **वि०** समुद्रमतिक्रम्य अविगणय्य । तं तदधिष्ठातृदेवतां ॥ **स०** रत्नानांसंचयोयस्मिन्सः । अथवा रत्नानिसंचीयन्तेऽनेनेतिरत्नसंचयस्तं ॥११॥ **स०** प्रीतिकराकृतिः नम्रतादिभिःप्रीतिकृदाकारः ॥ १८ ॥

[ **पा०** ] १ क. ङ. च. ज. ञ. ट. तदनन्तरं. २ ख. घ. त्पूर्वात्. ३ ख. घ. चोत्तरात्. ४ छ. झ. ट. मुत्पाट्य. ५ क. बलंदर्शयतात्मनः. ज. बलजिज्ञासयात्मनः. ६ इदमर्धं ज. पाठेदृश्यते. ७ ज. वीर्यवान्सुमहाबलः. ८ कुण्डलितमिदमर्धद्वयं ज. पाठेदृश्यते. ९ क. ख. ग. झ. ट. सवीर्योत्सेकदुष्टात्मा. घ. सवीर्योत्सिक्तदुष्टात्मा. १० क. ख. ग. ङ.—ट. मम. ११ झ. ठ. त्वभिधास्यामि. १२ छ. झ. ट. महाप्रस्रवणो. १३ ग. घ. ङ. छ. ज. झ. ट. निर्झरः. १४ ख. दातुमाहवे. छ. झ. ट. कर्तुमर्हति. १५ छ. झ. मागम्यशरः. १६ च. छ. ज. गिरेश्चैव. १७ झ. ट. गजेन्द्रप्रतिमाः. च. ज. नरेन्द्रविपुलाः. १८ ग. ननादह.

क्रेष्टुमर्हसि मां न त्वं दुन्दुभे धर्मवत्सल ॥ रणकर्मस्वकुशलस्[1]तपस्वि[2]शरणं ह्यहम् ॥ १९ ॥
[3]तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः ॥ उवाच दुन्दुभिर्वाक्यं [4]रोषात्संरक्तलोचनः ॥ २० ॥
यदि युद्धेऽसमर्थस्त्वं मद्भयाद्वा निरुद्यमः ॥ [5]तमाचक्ष्व प्रदद्यान्मे [6]योऽद्य युद्धं युयुत्सतः ॥ २१ ॥
हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः ॥ अनुक्तपूर्वं धर्मात्मा क्रोधात्त[7]मसुरोत्तमम् ॥ २२ ॥
वाली नाम महाप्राज्ञः [8]शक्रतुल्यपराक्रमः ॥ अध्यास्ते वानरः श्रीमान्किष्किन्धा[9]मतुलप्रभाम् ॥२३॥
स समर्थो महाप्राज्ञस्तव युद्धविशारदः ॥ द्वन्द्वयुद्धं [10]महद्दातुं नमुचेरिव वासवः ॥ २४ ॥
तं शीघ्रमभिगच्छ त्वं यदि युद्धमिहेच्छसि ॥ स हि [11]दुर्धर्षणो नित्यं शूरः [12]समरकर्मणि ॥ २५ ॥
श्रुत्वा हिमवतो वाक्यं [13]क्रोधाविष्टः स दुन्दुभिः ॥ जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥२६॥
धारयन्माहिषं [14]रूपं तीक्ष्णशृङ्गो भयावहः ॥ प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ २७ ॥
[15]ततस्तद्द्वार[16]मागम्य किष्किन्धाया महाबलः ॥ ननर्द कम्पयन्भूमिं दुन्दुभिर्दुन्दुभिर्यथा ॥ २८ ॥
[17]समीपस्थान्द्रुमान्भञ्जन्वसुधां दारयन्खुरैः ॥ विषाणेनोल्लिखन्दर्पात्तद्द्वारं द्विरदो यथा ॥ २९ ॥
अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः ॥ निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ ३० ॥
मितं व्यक्ताक्षरपदं [18]तमुवाचाथ दुन्दुभिम् ॥ हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ ३१ ॥
किमर्थं नगरद्वारमिदं रुद्ध्वा वि[19]नर्दसि ॥ दुन्दुभे विदितो मेऽसि रक्ष प्राणान्महाबल ॥ ३२ ॥
तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः ॥ उवाच दुन्दुभिर्वाक्यं [20]रोषात्संरक्तलोचनः ॥ ३३ ॥
[21]न त्वं स्त्रीसन्निधौ वीर वचनं [22]वक्तुमर्हसि ॥ मम युद्धं [23]प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३४ ॥
अथवा धारयिष्यामि क्रोधमद्य निशामिमाम् ॥ गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ३५ ॥

---

निर्झरः । निर्दराः विदीर्णपाषाणरन्ध्राणि ॥१५–२०॥ त्वं युद्धासमर्थो यदि यदि वा समर्थोपि मद्भयान्निरुद्यमः उभयथापिनत्वांयोत्स्यामीत्यर्थः । युयुत्सतः योद्धुमिच्छतः ॥ २१ ॥ अनुक्तपूर्वं इतःपूर्वकेनाप्यनुक्तंवाक्यं । अतएवक्रोधात् ॥ २२–२३ ॥ दातुं समर्थ इत्यन्वयः ॥ २४—२७ ॥ तद्द्वारं किष्किन्धाद्वारं । विषाणेन उल्लिखन् उद्भिन्दन् ॥ २८—२९ ॥ सहस्त्रीभिरिति । मदातिरेकादितिभावः ॥ ३० ॥ व्यक्तान्यक्षराणियेषु तानि व्यक्ताक्षराणि पदानि यस्मिन्कर्मणि तद्व्यक्ताक्षरपदमितिक्रियाविशेषणं । वनचारिणां भल्लूकादीनां ॥ ३१—३३ ॥ स्त्रीसन्निधौ वचनं । स्त्रीजनभ्रामकंवचनमित्यर्थः ॥ ३४ ॥ उदयः सूर्योदयः । गृह्यतां अवधित्वेन गृह्यतां ॥३५॥

---

**स०**शरणगन्तृत्वेनशरणवान् । अर्शआद्यच् । शरणागतइतियावत् । तपस्विशरणइत्येकपदत्वेनक्वचित्पाठः ॥ **शि०** तपस्विशरणः तपस्विनएवशरणानिरक्षकायस्यसोहमस्मि ॥ १९ ॥ **ति०** अनुक्तपूर्वं इतःपूर्वंनोक्तःयुद्धदातायस्यतमसुरं ॥ अनुक्तपूर्वं अन्यंगच्छेतिकदाप्यनुक्तं । क्रोधआत्तः स्वीकृतोयेनसक्रोधात्तस्तं ॥२२॥ **ति०**एकस्सशब्दःप्रसिद्धपराक्रमार्थकः ॥२४॥ **ति०**मेविदितोसि मयाज्ञातबलोसि । अतःप्राणात्रक्षस्व ॥**शि०** विदितोसीत्यनेन तत्पराक्रमस्याल्पत्वंध्वनितं ॥३२॥**ती०** गृह्यतां अवधित्वेनगृह्यतां । सूर्योदयपर्यन्तंस्त्र्यादिभोगाननुभवेतिभावः ॥ **ति०** स्त्रीसमूहगतोयुद्धायनाह्वातव्यइतिस्मृत्वापक्षान्तरमाह—**अथवेति** ॥ ३५ ॥

**[ पा० ]** १ ठ. स्तपस्वी. २ ङ—ट. शरणोह्यहं. ३ ज. ततस्तद्वचनं. ४ ग. ङ. झ. ञ. ट. क्रोधात्संरक्त. ज. क्रोधसंरक्त. छ. क्रोधात्माक्रोधवत्सलः. क. कोपात्संरक्त. ५ घ. ममाचक्ष्व. ६ झ. ट. योहि. ७ ट. मसुरेश्वरं. ८ ख. ङ. छ.—ट. शक्रपुत्रः प्रतापवान्. ९ ख. ज. मतुलप्रभः. १० छ. झ. ञ. ट. सदातुंते. ११ क. च.—झ. ट. दुर्मर्षणो. १२ ङ. च. ज. ञ. संग्रामकर्मणि. १३ ङ.—ट. कोपाविष्टः. १४ क. ख. ङ.—ट. वेषं. १५ क. ख. ङ.—ञ. ततस्तुद्वारं. १६ ट. मागत्य. १७ क. ग. ङ. च. ज.—ट. समीपजान्. १८ क. ख. ङ.—ट. तमुवाचस. १९ छ. झ. ट. विनर्दसे. २० क. कोपात्संरक्त. ख. घ.—ट. क्रोधात्संरक्त. ग. क्रोधसंरक्त. २१ ख. ङ. च. ञ. किंत्वं. २२ क. ख. ङ. च. ञ. वक्तुमिच्छसि. २३ क. ख. च. ञ. प्रयच्छस्वं.

दीयतां संप्रदानं च परिष्वज्य च वानरान् ॥ सर्वशाखामृगेन्द्रस्त्वं संसाद्य सुहृज्जनान् ॥ ३६ ॥
सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे ॥ क्रीडस्व च सह स्त्रीभिरहं ते दर्पनाशनः ॥ ३७ ॥
यो हि मत्तं प्रमत्तं वा सुप्तं वा रहितं भृशम् ॥ हन्यात्स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥३८॥
स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरोत्तमम् ॥ विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३९ ॥
मत्तोऽयमिति मा मंस्था यद्यभीतोसि संयुगे ॥ मदोयं संप्रहारेऽस्मिन्वीरपानं समर्थ्यताम् ॥ ४० ॥
तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम् ॥ पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत॥४१॥
विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसन्निभम् ॥ आविध्यत तदा वाली विनदन्कपिकुञ्जरः ॥ ४२ ॥
वाली व्यापातयाञ्चक्रे ननर्द च महास्वनम् ॥ श्रोत्राभ्यामथ रक्तं तु तस्य सुस्राव पात्यतः॥४३ ॥
तयोस्तु क्रोधसंरम्भात्परस्परजयैषिणोः ॥ युद्धं समभवद्धोरं दुन्दुभेर्वानरस्य च ॥ ४४ ॥
अयुध्यत तदा वाली शक्रतुल्यपराक्रमः ॥ मुष्टिभिर्जानुभिश्चैव शिलाभिः पादपैस्तथा ॥ ४५ ॥
परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा ॥ आसीददसुरो युद्धे शक्रसूनुर्व्यवर्धत ॥ ४६ ॥
व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः ॥ तं तु दुन्दुभिमुत्पाट्य धरण्यामभ्यपातयत् ॥ ४७ ॥
युद्धे प्राणहरे तस्मिन्निष्पिष्टो दुन्दुभिस्तदा ॥ [ स्रोतोभ्यो बहुरक्तं तु तस्य सुस्राव पात्यतः ॥ ]
पपात च महाकायः क्षितौ पञ्चत्वमागतः ॥ ४८ ॥
[ तस्मिन्पञ्चत्वमापन्ने वाली क्रोधेन चान्वितः ॥ तत्कायं लोष्ठवत्क्षेप्तुमारब्धो वीर्यवांस्तदा ॥४९॥ ]

संप्रदानं देयद्रव्यं । वानरान् बन्धून् । परिष्वज्य तेभ्यः संप्रदानं दीयतां । चरमकालदानंदीयतामित्यर्थः । संसाद्य कंचिदपिकालंसंगच्छस्व । आत्मसमं राजानमित्यर्थः । क्रीडस्व क्रीड । अद्येतिशेषः । दर्पनाशनः । पश्चादिति शेषः ॥ ३६—३७ ॥ मत्तं मधुपानादिना मत्तं । प्रमत्तं अनवहितं । रहितं आयुधादिशून्यं । त्वद्विधं त्वामिवस्त्रीमध्यगतं । मदमोहितं मदनमोहितं । यो हन्यात्सः भ्रूणहा गर्भवधकृत् ॥ ३८ ॥ मन्दंप्रहस्य धर्मान्वितवाक्यत्वादिति भावः । ताः विसृज्याब्रवीत् ॥ ३९ ॥ संयुगे यद्यभीतोसि तदा अयं मत्त इति मा मंस्थाः । अयं मदः । अस्मिन् संप्रहारे युद्धे । वीरपानं समर्थ्यतां वीरपानं कृतमिति मन्यतां । वीरपानंनाम युद्धोपक्रमे उत्साहवर्धनायवीरैःक्रियमाणं पानं ॥४०॥ उत्क्षिप्य अंसयोरुपरि विन्यस्य । एतत्काञ्चनमालाधारणकालेयःपुरो युद्धायागच्छति तस्यबलंसर्वं तवैव भविष्यतीति महेन्द्रेण दत्तामित्यर्थः । व्यवतिष्ठत व्यवातिष्ठत ॥४१॥ आविध्यत अभ्रामयत् ॥ ४२ ॥ व्यापातयांचक्रे भूमौपातयामास । अथ पात्यतः पात्यमानस्य श्रोत्राभ्यांरक्तंसुस्राव । श्रोत्रमूलविषाणपीडनादितिभावः ॥ ४३ ॥ क्रोधसंरम्भात् क्रोधवेगात् ॥ ४४—४५ ॥ घ्नतोः सतोः ॥ ४६—४७ ॥ प्राणहरे तस्मिन्युद्धे निष्पिष्टो दुन्दुभिः । पञ्चत्वं भूतानां पृथग्भावं । मरणमिति यावत् । आगतः प्राप्तः । पपात

ति० संसाधय आमन्त्रयस्व । ती०संप्रदानं युद्धं ॥ स० क्रीडस्वेतिपदव्यत्ययेन पुनःक्रीडांकुर्यामित्याशानाशासनीयेतिद्योत्यते ॥३६॥ ति० सुदृष्टां पुनर्दर्शनासंभवात् । आत्मसमं पुत्रादिकं ॥ ३७ ॥ रामानु० मदमोहितं स्त्रीभोगार्थमधुपानमदादितिकर्तव्यतामूढं ॥३८॥ स० व्यापादयाञ्चक्रे संहृतवान् । एध्यन्निश्रयेनेयमुक्तिः॥ यद्वा व्यापादनं पाश्चात्यपादपूर्वकंयापनं ॥४३॥ ति० हीनः हीनबलः ॥४६॥ ति० उद्यम्य हस्ताभ्यामूर्ध्वीकृत्य । उत्साद्येतिपाठे उत्पाटितविषाणंकृत्वेत्यर्थः ॥४७॥ ति० स्रोतोभ्यः

[ पा० ] १ घ.—ट. ससाधयसुहृज्जनं. २ क. घ. च. ज. ञ. सुहृष्टां. ३ छ. झ. भग्नंवा. घ. स्त्रीभोगरहितं. ख. सुसंवाव्यथितं. ४ झ. ट. मसुरेश्वरं. ५ ङ. च. ज. ञ. मत्तोहमिति. ६ क. ख. ङ. च. ज. ञ. विनर्दन्. ७ क. ग. छ. झ. वालीव्यापादयांचके. ८ ङ. च. ज. ञ. बहुसुस्राव. ९ ग. आविध्यत. १० घ. ततो. ११ क.—ज. ञ. ट. आसीद्दीनोसुरो. झ. आसीद्धीनोसुरो. १२ ख. परिक्षीणपराक्रमं. १३ झ. सुद्यम्य. १४ इदमर्धं क. ग. घ. छ. झ. ट. पाठेषुदृश्यते. १५ छ. झ. महाबाहुः. १६ अयंश्लोकः ख. पाठेदृश्यते.

[1]तं तोलयित्वा बाहुभ्यां गतसत्त्व[2]मचेतनम् ॥ चिक्षेप [3]बलवान्वाली वेगेनैकेन योजनम् ॥ ५० ॥
तस्य वेगप्रविद्धस्य [4]वक्त्रात्क्षतजबिन्दवः ॥ प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ॥ ५१ ॥
[5]तान्दृष्ट्वा पतितां[6]स्तस्य मुनिः शोणितविप्रुषः ॥ [7]क्रुद्धस्तत्र महाभागश्चिन्तयामास को न्वयम् ॥ ५२ ॥
[8]येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना ॥ कोयं दुरात्मा दुर्बुद्धिरकृतात्मा [9]च बालिशः ॥ ५३ ॥
[10]इत्युक्त्वाथ विनिष्क्रम्य [11]ददर्श मुनिपुङ्गवः ॥ महिषं पर्वताकारं गतासुं पतितं भुवि ॥ ५४ ॥
स तु विज्ञाय तपसा [12]वानरेण कृतं हि तत् ॥ उत्ससर्ज [13]महाशापं क्षेप्तारं [14]वालिनं प्रति ॥ ५५ ॥
इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् ॥ वनं [15]मत्संश्रयं येन दूषितं रुधिरस्रवैः ॥
[16]संभग्नाः पादपाश्चेमे क्षिप[17]तेहासुरीं तनुम् ॥ ५६ ॥
[18]समन्ताद्योजनं पूर्णमाश्रमं मामकं यदि ॥ [19]आगमिष्यति दुर्बुद्धिर्व्यक्तं स नभविष्यति ॥ ५७ ॥
ये [20]चापि सचिवास्तस्य संश्रिता मामकं [21]वनम् ॥ न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् ॥ ५८ ॥
[22]यदि तेपीह तिष्ठन्ति शपिष्ये तानपि ध्रुवम् ॥ वनेऽस्मिन्मामके नित्यं पुत्रवत्[23]परिरक्षिते ॥
पत्राङ्कुरविनाशाय फलमूलाभवाय च ॥ ५९ ॥
दिवस[24]श्चास्य मर्यादा यं द्रष्टा श्वोस्मि वानरम् ॥ बहुवर्षसहस्राणि स वै शैलो भविष्यति ॥ ६० ॥
ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम् ॥ निश्चक्रमुर्वनात्तस्मात्तान्दृष्ट्वा वालिरब्रवीत् ॥ ६१ ॥
किं भवन्तः समस्ताश्च मतङ्गवनवासिनः ॥ मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् ॥ ६२ ॥
ततस्ते कारणं सर्वं [25]तदा शापं च वालिनः ॥ शशंसुर्वानराः सर्वे वालिने हेममालिने ॥ ६३ ॥

॥ ४८—४९ ॥ तोलयित्वा चालयित्वा । एकेनवेगेन एकप्रयत्नेन ॥ ५० ॥ वेगप्रविद्धस्य वेगेनक्षिप्तस्य ॥ ५१ ॥ शोणितविप्रुष इति पुँल्लिङ्गत्वमार्षं । तत्र शोणितबिन्दुविषये । क्रुद्धःसन् कोन्वयमिति चिन्तयामास ॥ ५२ ॥ कोन्वयमित्येतद्विवृणोति—येनेति ॥ स्पृष्टः अन्तर्भावितण्यर्थः । दुरात्मा दुःस्वभावः । अतएव दुर्बुद्धिः । अकृतात्मा अवशीकृतान्तःकरणः । बालिशः मूर्खः ॥ ५३—५४ ॥ तपसा तपोमाहात्म्येन ॥ ५५ ॥ अप्रवेष्टव्यं न प्रवेष्टव्यमित्यर्थः । संभग्ना इति । आसुरींतनुमिह क्षिपतेत्यन्वयः ॥ ५६ ॥ स नभविष्यति नश्यतीत्यर्थः ॥ ५७ ॥ तस्य वालिनः ॥ ५८ ॥ अस्मिन्वने पत्राङ्कुरविनाशाय फलमूलाभवायच यदीहतिष्ठन्तीत्यन्वयः ॥५९॥ अस्य शापस्य । एकोयं दिवसो मर्यादा । श्वः परेद्युः । यं द्रष्टास्मि सः शैलो भविष्यति ॥ ६० ॥ गिरं शापं ॥ ६१ ॥ वनौकसां वानरेभ्यः ॥ ६२ ॥ कारणं

नासादिद्वारेभ्यः ॥ ४८ ॥ **ति०** तोलयित्वा हस्तग्रहणेनभारंज्ञात्वा । योजनंतावद्दूरं ॥ **शि०** एकेन अल्पेन । वेगेन योजनंचिक्षेप ॥ ५० ॥ **ति०** तस्यविप्रुषःकर्तारं कोन्वयमितिचिन्तयामास ॥ **स०** विप्रुषइतिषष्ठी । तत्संबन्धिनः तान्बिन्दून् । यद्वा बिन्दवोत्रकिञ्चिद्भिनाः । विप्रुषस्त्वल्पीयांसः ॥ ५२ ॥ **ति०** शापमेवहेतूपन्यासपूर्वमाह—**वनेइति** । फलाद्यभावाय तन्नाशाय ।

[ **पा०** ] १ ख. सतोलयित्वा. २ क. मचेतसं. ३ ख. ग. च.—ट. वेगवान्वाली. ४ क. मुखात्क्षतज. ५ तान्दृष्ट्वेत्यर्धानन्तरं क. ङ. च. ज. पाठेषु. मतङ्गश्चमहाप्राज्ञःक्रुद्धःकस्येतिचाब्रवीत्. इत्यर्धंदृश्यते. ६ ख. ङ.—ट. स्तत्र. ७ ङ.—ट. क्रुद्धस्तस्य. ८ ख. ग. येनायमाश्रमस्स्पृष्टः. ९ ग. सबालिशः. १० छ. झ. ट. इत्युक्त्वास. क. ङ. च. ज. ञ. इत्युक्त्वाच. ख. इत्युक्त्वाथाभि. ११ क.—ट. ददर्शमुनिसत्तमः. १२ ख. वानरेन्द्रकृतंमहत्. ङ. च. ज. ञ. वानरेन्द्रकृतंहि. छ. वानरेणहृतंहि. १३ ग. तदाशापं. १४ छ. झ. ट. वानरं. १५ ग. मत्संश्रितं. ङ. ज. ञ. महत्स्वकं. १६ छ. झ. ट. क्षिपतापादपाश्चेमेसंभग्नाश्चासुरीं. १७ क. ङ. च. ज. ञ. क्षिपताह्यासुरीं. १८ छ. झ. ट. समन्तादाश्रमंपूर्णयोजनं. १९ ग. ङ. छ. झ. ञ. ट. आक्रमिष्यति. २० क. ख. ङ.—ट. चास्यसचिवाःकेचित्. २१ ञ. यदि. २२ छ. झ. ट. तेपिवायदि. ङ. च. ज. ञ. यदितेचेह. २३ ख. ग. त्परिपालिते. २४ क. ग. छ. झ. ञ. ट. श्चाय. ङ. च. ज. श्चात्र. २५ ङ. छ. झ. ट. तथा.

एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् ॥ स महर्षिं तदासाद्य याचते स्म कृताञ्जलिः ॥ ६४ ॥
महर्षिस्तमनादृत्य प्रविवेशाश्रमं तदा ॥ शापधारणभीतस्तु वाली विह्वलतां गतः ॥ ६५ ॥
ततः शापभयाद्भीत ऋश्यमूकं महागिरिम् ॥ प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वापि नरेश्वर ॥ ६६ ॥
तस्याप्रवेशं ज्ञात्वाऽहमिदं राम महावनम् ॥ विचरामि सहामात्यो विषादेन विवर्जितः ॥ ६७ ॥
एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते ॥ वीर्योत्सेकान्निरस्तस्य गिरिकूटोपमो महान् ॥ ६८ ॥
इमे च विपुलाः सालाः सप्त शाखावलम्बिनः ॥ यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ ६९ ॥
एतदस्यासमं वीर्यं मया राम प्रकीर्तितम् ॥ कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप ॥ ७० ॥
तथा ब्रुवाणं सुग्रीवं प्रहसँल्लक्ष्मणोऽब्रवीत् ॥ कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् ॥ ७१ ॥
तमुवाचाथ सुग्रीवः सप्त सालानिमान्पुरा ॥ एवमेकैकशो वाली विव्याधाथ स चासकृत् ॥ ७२ ॥
रामोऽपि दारयेदेषां बाणेनैकेन चेद्द्रुमम् ॥ वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् ॥ ७३ ॥
हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण ॥ उद्यम्याथ प्रक्षिपेच्चेत्तरसा द्वे धनुःशते ॥ ७४ ॥

दुन्दुभिपतनं ॥ ६३—६४ ॥ विह्वलतां गत इति । जगामेतिशेषः ॥ ६५—६७ ॥ अस्थिनिचयः शुष्ककायइतियावत् ॥ ६८ ॥ विपुलाः स्थूलाः । शाखावलम्बिनः लम्बितशाखाः । शाखावृतत्वेन दुर्ज्ञेयलक्ष्या इत्यर्थः । यत्र सालेषु एकं सालं । ओजसा नतुधनुषा । निष्पत्रयितुं निर्गतशरपत्रंकर्तुं । घटते शक्नोति । एकंसालंभित्त्वा शरोनिष्पत्रं यथातथा वृक्षान्तरासक्तमूलंगच्छति तथावेद्धुंसमर्थइत्यर्थः । धनुर्विना केवलबाणेन एकंसालंविध्यतीत्यर्थः । यद्वा वेद्धुंशक्तः नतु कदाचित्तथाकृतवानिति घटतइतिपदेनव्यज्यते । एवमुत्तरत्रापि योज्यं । यद्वा स्वजातिविरुद्धत्वेनयुद्धे धनुर्ग्रहणाभावेपि लीलार्थं धनुरस्तीतिध्येयम् ॥ ६९—७० ॥ कस्मिन्निति । मुहूर्तेनचतुःसमुद्रगमने उत्क्षिप्तपर्वतशिखरग्रहणे दुन्दुभिकायोत्क्षेपणे सालभेदनेवेत्यर्थः ॥ ७१ ॥ पुरा वाली इमान् सप्त सालान् । विव्याध । अथच अनन्तरमपि । एवमेकैकशः असकृद्विव्याधेतियोजना । यद्वा सवाली एवंविधानिमान्सप्त सालान् एकैकशः पुरा विव्याध । अनन्तरमप्यसकृद्विव्याध । एषां मध्ये एकं द्रुमं एकेन बाणेन यदि विदारयेत् तदा तादृशं विक्रमं दृष्ट्वा वालिनं निहतंमन्ये । उद्यम्य अङ्गुष्ठेनोत्क्षिप्य । द्वे धनुःशते धनुःशतद्वयदूरं । धनुर्नाम चतुर्हस्तमानं ।

जायन्तेयतः अतःशपिष्यामि ॥ ५९ ॥ **वि०** याचतेस्म अयाचत । शापमोक्षमितिशेषः ॥ ६४ ॥ **ति०** शापधारणेन शापविषयदोषज्ञानेन । **स०** शापकारणभीतः शापकारणस्वदोषभीतः ॥ ६५ ॥ **स०** शापेनभयमातयतिप्रापयतीतिशापभयात् मुनिः तस्माद्भीतः शापभयाद्भीतः ॥ ६६ ॥ **ति०** विपुलाः विशालमूलस्कन्धाः । शाखावलंबिनः प्रशस्तबहुशाखावन्तः । यत्र येषु । एकं एककालमेव । वाली ओजसा ओजोयुक्तकंपनेन । सर्वान्निष्पत्रयितुं पत्रहीनान्कर्तुं घटते चेष्टते । तइमेसप्तसालाइत्यर्थः । अनेनवायोरप्यधिकंबलंसूचितं । नहिवायोर्युगपत्कंपनेनसकलार्द्रपत्रपातनंक्वचिद्दृष्टं । कश्चित्तु निष्पत्रयितुं निष्पत्रीकर्तुमित्यर्थः । एकंसालं शरेणभित्त्वा शरोनिष्पत्रंयथागच्छतितथाकर्तुं अतिव्यथयितुमितियावत् । "सपत्रनिष्पत्रादतिव्यथने" इति शास्त्रात् । अप्राकृतकपित्वाच्चबाणव्यापारस्यापिसंभवइतिव्याचख्यौ ॥ ६९ ॥ प्रहसन् भगवद्वीर्याज्ञानादेवंवादइतिहासः ॥ ७१ ॥ **ती०** पुरा सवाली इमान् पुरतःस्थितान् सप्तसालान् एकैकशः एकमेकंविव्याध । अथच अनन्तरं । एवं पूर्वोक्तप्रकारेणासकृद्विव्याधेति संबन्धः । एतेषुसालेषु एकंपूर्वंभित्त्वा तत्रखानितंशरं समुद्धृत्यतस्मिन्रन्ध्रेपुनरन्यंशरंनिधाय तमपिसमुद्धृत्य तथाऽन्यंविध्वा एवमसकृदेताञ्छिद्रीकृतवानितिवाक्यार्थः ॥ **ति०** एवमुक्तप्रकारेण एकैकशः एकैकस्मिन्काले सप्तापि सः वाली । असकृद्विव्याथ पीडितवान् । आर्षपरस्मैपदं ॥ सकृत्कृतेःकाकतालीयत्वव्युदासायासकृदिति । विव्याधेतिपाठान्तरं ॥ ७२ ॥ **ति०** एकेनबाणेन एषामेकंद्रुममपिचेन्निर्दारयेत् तदापि वालिनंहतंमन्ये । तद्वधयोग्यतासंभावनयेतिभावः ॥ पादेन अस्थ्नोहस्तेनस्पर्शायोग्यत्वात् ।

[**पा०**] १ ग. ट. तंमहर्षिं. २ क. ख. च. तमासाद्य. छ.—ञ. समासाद्य. ३ ख. प्रविवेशस्वमाश्रमं. ४ ङ. छ.—ट. प्रति. ५ ठ. शापकारण. ६ क. मिमंराममहागिरिं. ७ क. ख. घ. चवर्जितः. ८ क. ख. ङ.—ट. कूटनिभो. ९ छ. झ. ट. प्रकाशितं. १० छ. वधे. ११ झ. विव्याथाथ. १२ ग. घ. झ. ट. रामोनिर्दारयेदेषां. १३ क. ख. ग. च. छ. झ. ट. चद्रुमं. १४ ङ.—ट. उद्यम्यप्रक्षिपेच्चापि.

एवमुक्त्वा तु सुग्रीवो रामं रक्तान्तलोचनम् ॥ ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् ॥ ७५ ॥
शूरश्च शूरघाती च प्रख्यातबलपौरुषः ॥ बलवान्वानरो वाली संयुगेष्वपराजितः ॥ ७६ ॥
दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि ॥ यानि संचिन्त्य भीतोऽहमृश्यमूकं समाश्रितः ॥७७॥
तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् ॥ विचिन्तयन्न मुञ्चामि ऋश्यमूकमहं त्विमम् ॥ ७८ ॥
उद्विग्नः शङ्कितश्चापि विचरामि महावने ॥ अनुरक्तैः सहामात्यैर्हनुमत्प्रमुखैर्वरैः ॥ ७९ ॥
उपलब्धं च मे श्लाघ्यं सन्मित्रं मित्रवत्सल ॥ त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः ॥ ८० ॥
किंतु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः ॥ अप्रत्यक्षं तु मे वीर्यं समरे तव राघव ॥ ८१ ॥
न खल्वहं त्वां तुलये नावमन्ये न भीषये ॥ कर्मभिस्तस्य भीमैस्तु कातर्यं जनितं मम ॥ ८२ ॥
कामं राघव ते वाणी प्रमाणं धैर्यमाकृतिः ॥ सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ॥ ८३ ॥
[ स्निग्धानां प्रीतियुक्तानां सुहृदां सुहृदं प्रति ॥ कातरं हृदयं राम प्रत्ययं नाधिगच्छति ॥ ८४ ॥
यदि बाणेन भेत्ता त्वं सालान्सप्ताद्य राघव ॥ वालिनं समरे हन्तुं समर्थः स्यात्ततो भवान् ॥ ८५ ॥ ]
तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः ॥ स्मितपूर्वमथो रामः प्रत्युवाच हरिं प्रभुः ॥ ८६ ॥
यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर ॥ प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते ॥ ८७ ॥
एवमुक्त्वा तु सुग्रीवं सान्त्वं लक्ष्मणपूर्वजः ॥ राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया ॥
तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ॥ ८८ ॥
असुरस्य तनुं शुष्कं पादाङ्गुष्ठेन वीर्यवान् ॥ क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत् ॥ ८९ ॥

"किष्कुःस्यादवटोहस्तश्चतुर्विंशतिरङ्गुलाः । चतुर्हस्तोधनुर्दण्डोधनुर्धन्वन्तरंयुगं" इतिवैजयन्ती । एवं सुग्रीवस्तमुवाचेति पूर्वेणान्वयः ॥ ७२—७४ ॥ एवमविश्वासकरणे सुहृद्दुर्मनायेतेत्यालोच्य यथा रामः संतुष्यति तथावदति एवमुक्त्वेत्यादिना ॥७५—७८॥ उद्विग्नः भीतः ॥ ७९—८२ ॥ वाणी एकरूपंवचनं । प्रमाणं बुद्धिः । धैर्यं अचञ्चलता । आकृतिर्वेषश्च भस्मच्छन्नमनलमिवस्थितं । तेपरं तेजः कामं अतिशयेन सूचयन्ति । अथापि मे कातर्यं जनितमिति पूर्वेणान्वयः ॥ ८३—८६ ॥ विक्रमे विषये । प्रत्ययं विश्वासं । समरे विषये ॥ ८७ ॥ सान्त्वमित्यनेन प्रत्ययप्रश्नेन सुग्रीवस्य दुःखितत्वं द्योत्यते । पादाङ्गुष्ठेन अनुद्धृतेन । तोलयित्वा चालयित्वा ॥८८॥ तनुं

तरसा बलेन । प्रक्षिपेदपिचेत् तदापि रामस्यविक्रमंदृष्ट्वा वालिनंहतंमन्यइतिसंबन्धः ॥ ७३—७४ ॥ ति० ध्यात्वा रामवीर्यस्याप्रत्यक्षत्वाद्रामेणवालिवधः शक्योनवेतिसंचिन्त्य ॥ ७५ ॥ शि० शूरः अतएवशूरमानी शूरकर्तृकसत्कारवान् । बलवान् प्रशस्तसेनाविशिष्टः । वाली अस्तीतिशेषः ॥ ७६ ॥ ति० वाणी वालिवधविषया । प्रमाणं विश्वसनीया । यतः धैर्यं अकातर्येणतृणीकृत्यवादः । आकृतिः अनुभवसिद्धोदिव्यविग्रहः । एतेद्वे परंतेजः सकलजगत्संहारकंतेजः । कामं अतिशयेन । सूचयन्ति सूचयतः । भस्मच्छन्नानलोपमयागुप्तावस्थितिमहाशक्तिमत्त्वंसूचितं ॥ ८३ ॥ शि० दुन्दुभेःकायं पादाङ्गुष्ठेनतोलयित्वा शुष्कांतनुं पादाङ्गुष्ठेनलीलयादशयोजनंचिक्षेप । कर्मणः करणस्यचपुनरुपादानमुभयत्रशाब्दान्वयविवक्षया ॥ ८८—८९ ॥

[ पा० ] १ छ. झ. लोचनः. २ क. पुनरेवाब्रवीद्वचः. ३ छ. झ. ट. शूरश्चशूरमानीच. क. ख. ङ. च. ञ. शूरश्चासुरघातीच. ४ छ. झ. ट. मृश्यमूकमुपाश्रितः. ५ ख. चिन्तयन्नविमुञ्चामि. ६ ख. ग. ङ. च. ज.—ट. मसुंत्वहं. घ. महंगिरिं. ७ क.—ट. शङ्कितश्चाहं. ८ ग. मिहाश्रितः. ९ च. छ. झ. ञ. ट. भीमैश्च. १० क. ख. रामभवद्वाणी. ११ इदंश्लोकद्वयं क. ङ. च. ज. पाठेषुदृश्यते. १२ ङ. छ.—ट. हरिंप्रति. क. गिरिंप्रभुः. १३ ख. ग. ङ. समरश्लाघ्यं. १४ ङ. छ. झ. ञ. ट. सान्त्वयँल्लक्ष्मणाग्रजः. १५ क. ङ. ञ. तोलयन्. च. ज. लोलयन्. १६ क. ङ. च. ज. ञ. पुनश्चलीलयारामश्चिक्षेप. १७ क. ख. ङ.—ट. शुष्कां. १८ क. पुनः. १९ क. झ. सुग्रीवोराममब्रवीत्.

लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ ९० ॥
आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे ॥ लघुः संप्रति निर्मांसस्तृणभूतश्च राघव ॥ ९१ ॥
परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा ॥ क्षिप्तमेवंप्रहर्षेण भवता रघुनन्दन ॥
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाऽधिकम् ॥ ९२ ॥
आर्द्रं शुष्कमिति ह्येतत्सुमहद्राघवान्तरम् ॥ स एव संशयस्तात तव तस्य च यद्बले ॥ ९३ ॥
सालमेकं तु निर्भिन्द्या भवेद्व्यक्तिर्बलाबले ॥ ९४ ॥
कृत्वेदं कार्मुकं सज्यं हस्तिहस्तमिवाततम् ॥ आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥ ९५ ॥
इमं हि सालं संहितस्त्वया शरो न संशयोत्रास्ति विदारयिष्यति ॥
अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजात्मज शापितो मया ॥ ९६ ॥
यथा हि तेजस्सु वरः सदा रविर्यथा हि शैलो हिमवान्महाद्रिषु ॥
यथा चतुष्पात्सु च केसरी वरस्तथा नराणामसि विक्रमे वरः ॥ ९७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकादशः सर्गः ॥ ११ ॥

---

पूर्वापेक्षया स्वल्पं । कायं शरीरं ॥८९॥ कथं कमित्यत्राह—लक्ष्मणस्येति ॥९०॥ आर्द्रः सरक्तः । प्रत्यग्रः यत्किंचित्प्राणचेष्टायुक्तः । लघुत्वंसदृष्टान्तमाह—तृणभूत इति ॥ ९१ ॥ एवं प्रक्षेपेप्यवैषम्यमुक्त्वा प्रक्षेप्तृतारतम्यमाह—परिश्रान्तेनेति ॥ एवंप्रहर्षेण एवंविधप्रहर्षवता । अत्र दुन्दुभिकायक्षेपकर्मणि । तववा तस्यवा अधिकंबलमिति ज्ञातुंनशक्यं॥ ९२ ॥ पुनःसंग्रहेणाह—आर्द्रमिति ॥ आर्द्रं शुष्कमित्येतत्सुमहत् अन्तरं तारतम्यं यद्यस्मादस्ति । अतस्तवच तस्यच बले युवयोर्बलतारतम्ये । सएव संशयोवर्तते । संशयोननिवृत्तइत्यर्थः ॥ ९३ ॥ निर्भिन्द्याः भञ्जय । व्यक्तिः विशेषज्ञानं ॥ ९४—९५ ॥ पुनर्निर्बन्धेन कुपितोभवेदितिसान्त्वयति—इममिति ॥ सहितः संहितः । "समोवा हिततयोः" इतिमलोपः । शरो विदारयिष्यति । विमर्शेन पुनःकिमर्थं प्रत्ययोत्पादनमिति विमर्शेन । ममप्रियं नतुत्वत्परीक्षार्थं ॥ ९६ ॥ तेजस्सु तेजस्विषु । विक्रमे । स्थितानामितिशेषः ॥ ९७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

---

ती० प्रत्यग्रः अभिनवः ॥ ९१ ॥ ति० मत्तेन भोगार्थंपीतमदेन ॥ ९२ ॥ ति० यद्बलं तत्रेतिशेषः । यद्बले इतिपाठेयदित्यव्ययं । यःसंशयोऽस्थिप्रक्षेपात्प्राग्बलविषये आसीत् सोऽद्याप्यस्त्येवेत्यर्थः ॥ ९३ ॥ ती० एकंसालं विनिर्भिद्य बलाबले प्रथमाद्विवचनं ॥ व्यक्तेभवेत् भवेतामित्यर्थः । एकसालभेदनेकृते त्वंबलाधिकइत्यहंज्ञास्यामीत्यर्थः ॥ ९४ ॥ ति० मया सख्या । संप्रतिशापितः शपथपूर्वंनियुक्तः । अतोममप्रियंध्रुवंकुरुष्वेत्यर्थः ॥ ९६ ॥ ती० सर्गफलं—"विद्याबलंदैवबलंज्ञानबन्धुबलं तथा । सेनाबलंभवेत्तस्यवालिनोबलकीर्तनात् ॥" इतिस्कान्दे ॥ ९७ ॥ इत्येकादशः सर्गः ॥ ११ ॥

[ पा० ] १ एतदर्धस्थप्रतिनिधितया क.—ट. पाठेषु. लक्ष्मणस्याग्रतोरामंतपन्तमिवभास्करम् । हरीणामग्रतोवीरमिदं वचनमर्थवत्. इत्येकःश्लोकोदृश्यते. २ घ. कायस्तदा. ३ लघुःसंप्रतिनिर्मांसः. परिश्रान्तेनमत्तेन. इत्यनयोरर्धयोःपौर्वापर्यं ङ. च. ज. झ. ञ. पाठेषुदृश्यते. ४ ग. झ. क्षिप्तएवं. क. ङ. च. ज. ञ. ट. क्षिप्तएव. ५ ङ.—ट. यद्बलं. ६ ङ.—ट. विनिर्भिद्य. ७ च. भवेद्व्यक्तेबलाबले. ८ च.—ट. कृत्वैतत्कार्मुकं. ९ छ. झ. ट. मिवापरं. क. घ. ङ. च. ञ. मिवायतं. १० क. ख. घ.—ट. प्रहितस्त्वया. ११ ङ. च. ज. ञ. संशयोह्यत्र. १२ क. तवप्रियं. १३ छ. झ. ट. राजन्प्रतिशापितो. ङ. च. ज. ञ. राजंस्त्वयिशापितो.

# द्वादशः सर्गः ॥ १२ ॥

सुग्रीवविस्रंभाय राममुक्तेनैकेनैवबाणेन युगपत्सालसप्तकरसातलादिभेदनपूर्वकं पुनःस्वतूणीप्रवेशः ॥ १ ॥ तदद्भुतावलोकनविस्मितेनसुग्रीवेण सप्रणामं प्रशंसनपूर्वकं रामंप्रति वालिवधप्रार्थना ॥ २ ॥ रामेण सुग्रीवंप्रति समरायवालिसमाह्वानचोदनपूर्वकं लक्ष्मणादिभिःसह वृक्षमूलेनिलीयावस्थानम् ॥ ३ ॥ सुग्रीवेण निजाह्वानमसहमानेनवालिना नियुद्धे निजबलभञ्जने वालिसुग्रीवयोःस्वराकारादिसादृश्याद्विशेषानुपलब्ध्या रामेण वालिनि शरामोचने सुग्रीवेण पुनर्ऋश्यमूकंप्रति पलायनम् ॥ ४ ॥ सर्वैःसह सुग्रीवसमीपमुपागतेनरामेण तंप्रति वालिवधाकरणे कारणाभिधानेन समाश्वासनपूर्वकं पुनर्वालिनासह नियुद्धचोदना ॥ ५ ॥ लक्ष्मणेन रामचोदनया प्रत्यभिज्ञानाय सुग्रीवग्रीवायां सपुष्पगजपुष्पीलताबन्धनम् ॥ ६ ॥

एतच्च वचनं श्रुत्वा सुग्रीवेण[1] सुभाषितम् ॥ प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १ ॥
स गृहीत्वा धनुर्घोरं शरमेकं[2] च मानदः ॥ सालमुद्दिश्य चिक्षेप ज्यास्वनैः[3] पूरयन्दिशः ॥ २ ॥
स विसृष्टो बलवता बाणः[4] स्वर्णपरिष्कृतः ॥ भित्त्वा सालान्गिरिप्रस्थे[5] सप्त भूमिं विवेश ह ॥ ३ ॥
प्रविष्टश्च[6] मुहूर्तेन धरां[7] भित्त्वा महाजवः[8] ॥ निष्पत्य[9] च पुनस्तूर्णं स्वंतूणीं[10] प्रविवेश ह ॥ ४ ॥
तान्दृष्ट्वा सप्त निर्भिन्नान्सालान्वानरपुङ्गवः ॥ रामस्य शरवेगेन विस्मयं परमं गतः ॥ ५ ॥
स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतभूषणः ॥ सुग्रीवः परमप्रीतो राघवाय कृताञ्जलिः ॥ ६ ॥
इदं चोवाच धर्मज्ञं कर्मणा तेन हर्षितः[11] ॥ रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७ ॥
सेन्द्रानपि सुरान्सर्वांस्त्वं बाणैः पुरुषर्षभ ॥ समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो ॥ ८ ॥

अथ प्रत्ययपूर्वकं वालिवधाय गमनं द्वादशे—एतच्चेत्यादि ॥ १—२ ॥ सः एकसालोद्देशेन विसृष्टः । स्वर्णपरिष्कृतः स्वर्णपट्टालंकृतः । अनेन सर्वोत्तमत्वमुक्तं । सप्त सालान् भित्त्वा । गिरिप्रस्थे गिरिप्रस्थमार्गेण भूमिं विवेश । इत्थंह्युक्तमभियुक्तैः । "सालांश्च सप्त सगिरीन्सरसातलान्" इति । संक्षेपेच "गिरिं रसातलंचैव" इति । अन्यस्त्वपपाठः ॥ ३ ॥ धरां भित्त्वा प्रविष्टः स शरः महाजवत्वान्मुहूर्तेन । निष्पत्य निर्गत्य । पुनस्तां तूणीं प्रविवेश । मन्त्रप्रभावेनाचेतनस्यापिपुनरागमनं ॥ ४ ॥ दृष्ट्वेत्यनेनाल्पज्ञत्वात्सुग्रीवः सालानेवभिन्नान्ददर्श । सप्तभूमिप्रवेशंत्वहमेवधर्मवीर्येण पश्यामीतिभावः ॥ ५ ॥ ससुग्रीवः परमप्रीतः सन् राघवायकृताञ्जलिः मूर्ध्नाभूमौन्यपतत् । शिरसा भूमिं स्पृष्ट्वा प्रणनामेत्यर्थः । प्रलम्बीकृतभूषणइत्यनेन उदरास्पर्शउक्तः । अनेनभगवद्विषयेप्रणा-

ती० मानंबहुमानंददातीतिमानदः ॥२॥ ती० सप्तसालान् गिरिप्रस्थेच भित्त्वा भूमिंविवेश । सप्तसालान्भित्त्वा गिरिप्रस्थंपर्वतमपिभित्त्वा भूमिंप्रविश्यतामपिभित्त्वा रसातलंगत्वेतिद्रष्टव्यं ॥ गिरिंरसातलंचेत्युक्तत्वात् । तथाचस्कान्दे—"सप्तभूमीःसप्तगिरीन्सप्तसालान्महाबलान् । सबाणोवेगसंपन्नोभित्त्वातूणीरमाविशत्" इति ॥ शि० सालान् गिरिप्रस्थं तदाश्रयीभूतगिरिखण्डंच सप्तभूमिं अधस्सप्तलोकावरकांश्चभित्त्वाविवेश उद्देश्यातिरिक्तभेदनस्यसामर्थ्यसूचकत्वान्नप्रयोक्तृनैपुण्यहानिः । उपलक्षणतयाऽन्यस्याप्युद्देश्यतावा ॥ ३ ॥ ति० निष्पत्य रसातलपर्यन्तंगत्वा । तत्रत्यासुरान्हत्वा तमेवतूणं पूर्वाधारंतूणं । अनेनरामबाणानांचेतनपरशक्तिमद्देवताऽधिष्ठितत्वंसूचयति । तदुक्तं—"युगपत्सप्ततालांश्चरघुनाथोबिभेदह ।पातालदानवान्हत्वापुनस्तूणंविवेशच"इति ॥ ४ ॥ ति० प्रलंबीकृतभूषणः साष्टाङ्गप्रणामवशाल्लंबमानावस्थापन्नोरःकण्ठादिवर्तिसकलभूषणः । कृताञ्जलिः उत्थानानन्तर-

[ पा० ] १ छ.—ट. सुग्रीवस्य. २ घ. मेकंतु. ३ क. ग. ङ. छ. ज. झ. ट. पूरयन्सर्वैर्दिशः. ४ ङ. च. छ. ज. ञ. बाणोहेमविभूषितः. ५ छ.—ट. प्रस्थं. ६ ख. छ. झ. ट. सायकस्तुमुहूर्तेन. ग. प्रविश्यच. क. सप्रविष्टो. च. ज. ञ. प्रविष्टस्तु. ७ छ. झ. ट. सालान्भित्त्वा. क. घ. ङ. च. ज. ञ. रसांभित्त्वा. ८ च. ज. महाशरः. ९ क. निपत्यच. १० छ. झ. तमेवप्रविवेशह. ख. ग. स्वतूर्णींपुनराविशत्. घ. स्वतूर्णींतामुपाविशत्. ११ घ. तोषितः.

येन सप्त महासाला गिरिर्भूमिश्च दारिताः ॥ बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ॥ ९ ॥
अद्य मे विगतः शोकः प्रीतिरद्य परा मम ॥ सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १० ॥
तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् ॥ वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥ ११ ॥
ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् ॥ प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ १२ ॥
अस्माद्गच्छेम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः ॥ गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ॥ १३ ॥
सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् ॥ वृक्षैरात्मानमावृत्य व्यतिष्ठन्गहने वने ॥ १४ ॥
सुग्रीवो व्यनदद्घोरं वालिनो ह्वानकारणात् ॥ गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम् ॥ १५ ॥
तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः ॥ निश्चक्राम सुसंरब्धो भास्करोऽस्ततटादिव ॥ १६ ॥
ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् ॥ गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ १७ ॥
तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ॥ जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ॥ १८ ॥
ततो रामो धनुष्पाणिस्तावुभौ समुदीक्ष्य तु ॥ अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥ १९ ॥
यन्नावगच्छत्सुग्रीवं वालिनं वाऽपि राघवः ॥ ततो न कृतवान्बुद्धिं मोक्तुमन्तकरं शरम् ॥ २० ॥
एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना ॥ अपश्यन्राघवं नाथमृश्यमूकं प्रदुद्रुवे ॥ २१ ॥

मप्रकारः शिक्षितोभवति ॥ ९—११ ॥ लक्ष्मणानुमतमिति क्रियाविशेषणं । भ्रातृगन्धिनं भ्रातृहिंसकं । " गन्धनावक्षेपण—" इत्यत्र तथा प्रयोगात् । इति रामः सुग्रीवं प्रत्युवाचेतिपूर्वेणान्वयः ॥ १२—१३ ॥ आत्मानं स्वंस्वमित्यर्थः ॥ १४ ॥ ह्वानं आह्वानं । गाढं परिहितः बलवृद्धयेदृढबद्धपरिधानः ॥ १५ ॥ भास्करोऽस्ततटादिवेति । यथा सूर्योऽस्ततटादवतरन्नदृष्टरश्मिर्भवति तथेदानींकिष्किन्धानिर्गमनं वालिनोऽल्पकाले-ननाशहेतुरितिद्योतनार्थमस्ततटादित्युक्तं । अस्मद्देशोदयगिरिः प्रदेशान्तरापेक्षया अस्तगिरिरित्युक्तमित्यप्याहुः ॥ १६ ॥ बुधाङ्गारकाख्ययोर्ग्रहयोरिव ॥ १७ ॥ अशनिः मेघज्योतिः ॥ १८ ॥ तत इत्यादिश्लोकद्वयमेकान्वयं । उभावश्विनौदेवाविवस्थितौ तावुभौसमुदीक्ष्य सुग्रीवं वालिनंवा विशेषतोयन्नावगच्छत् । ततः तस्मात् रामः शरं मोक्तुं बुद्धिं न कृतवानित्य-

मितिशेषः ॥ **रामानु०** प्रलंबगतभूषणइतिपाठान्तरं प्रलंबगतभूषणः प्रलंबत्वंप्राप्तभूषणइत्यर्थः ॥ ६ ॥ **ति०** भूमिश्च । चात् सप्तपातालास्तद्वर्तिनोसुराश्च ॥ ९ ॥ **टीका०** भ्रातृगन्धिनं गन्धःसंबन्धः । भ्रातृत्वमात्रेणसंबन्धी नतुदानमानादिनेतिभावः ॥ १३ ॥ **ति०** वेगात् नादकारणप्राणवेगात् । उत्पन्नैरितिशेषः ॥ १५ ॥ **ति०** भास्करोऽस्ततटादतिदूरमप्युदयपर्वतमत्यल्पेन कालेनयाति । एवमदृश्यस्थानतयातत्तुल्यगुहातःक्षणेनबहिरागतइत्यर्थः । यत्तु अस्तपदेनोदयगिरिलक्षणं यदपिमेरूत्तरवासिनोऽधिकृत्येयमुक्तिरितिव्याख्यानं तत्क्लिष्टमसंगतंचेतिस्पष्टंसुधियां ॥ **रामानु०** अस्माकमुदयपर्वतः सिद्धपुरवासिनामस्तगिरिरितितदपेक्षयाऽस्ततटादित्युक्तं । " उदयोयोलङ्कायांसोस्तमयःसवितुरेवसिद्धपुरे "इत्यार्यभटोक्तेः ॥ **ती०** मेरोरुत्तरवासिनोऽधिकृत्येदमुच्यते । अस्माकमस्तमयपर्वतोमेरोरुत्तरपार्श्वस्थानामुदयगिरिः । तेषामस्तगिरिरस्माकमुदयगिरिः । अतोस्तगिरेरपिभानोर्निर्गमनंसंभवति ॥ **स०** अस्ततटात् । ल्यब्लोपनिमित्तापञ्चमी । अस्ततटमुद्दिश्ययथानिष्पतति तथावाल्यपिनिष्पपात । उदयगिरेरित्यनुक्त्वाऽस्ततटादितिकथनेनवालिनोल्पकालशेषोद्योत्यते । प्राचीनेचैतच्छ्लोकव्याख्यानेसंगतेअसंगतेवासुधियोविभावयन्तु ॥ १६ ॥ **ति०** बुधाङ्गारकयोरिव । " वज्रगोकर्णयोर्यथा "इतिपाठान्तरं । वज्रगोकर्णौ तदाख्यपर्वतौ । यथा तथेतिशेषः ॥ १७ ॥ **ति०** अशनिः दंभोलिः । वज्रं वज्रायुधं ॥ १८ ॥ **शि०** यत् यस्माद्धेतोः राघवः नावगच्छत् मिलितत्वात्समानाकारत्वाच्चविविच्यबोद्धुंनैच्छत् ततः तस्माद्धेतोः । अन्तकरंशरंमोक्तुं बुद्धिं निश्चयं । नकृतवान् । एतेन वालिनिरामस्यस्नेहः सूचितः । तेनसुग्रीवविषयकस्नेहस्यपराकाष्ठाव्यञ्जिता । तेनेदानीमपियदिद्वयोर्मैत्रीस्यात्तर्हि नहनिष्यामीतिरामाभिप्रायोव्यक्तः ॥ २० ॥ **स०** स्तेनश्चासौ

[ **पा०** ] १ क. पराहिमे. २ ङ. छ.—ट. लक्ष्मणानुगतं. ३ क. छ. झ. ञ. ट. द्रच्छाम. ङ. च. ज. द्रच्छाव. ४ ख. ङ. छ. झ. ट. ह्यतिष्ठन्. ५ च. ज. न्गहनेतुते. ६ ग. ङ. छ. ज. झ. ट. सुग्रीवोप्यनदत्. ७ क. ख. ङ.—ट. निष्पपात. ८ छ. झ. ञ. ट. समुदैक्षत. ९ ख. यन्नाध्यगच्छत्. १० घ. च. छ. ज. ञ. चापि.

क्रान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्झरीकृतः ॥ वालिनाऽभिद्रुतः क्रोधात्प्रविवेश महावनम् ॥ २२ ॥
तं प्रविष्टं वनं दृष्ट्वा वाली शापभयार्दितः ॥ मुक्तो ह्यसि त्वमित्युक्त्वा संनिवृत्तो महाद्युतिः ॥
[ निवृत्तः स्वपुरीं प्राप क्रोधाविष्टो महाबलः ॥ २३ ॥ ]
राघवोपि सह भ्रात्रा सह चैव हनूमता ॥ तदेव वनमागच्छत्सुग्रीवो यत्र वानरः ॥ २४ ॥
तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् ॥ ह्रीमान्दीनमुवाचेदं वसुधामवलोकयन् ॥ २५ ॥
आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् ॥ वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २६ ॥
तामेव वेलां वक्तव्यं त्वया राघव तत्त्वतः ॥ वालिनं न निहन्मीति ततो नाहमितो व्रजे ॥
[ किंनु तत्कारणं येन शक्तेन हि न हन्यते ॥ २७ ॥ ]
तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः ॥ करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ २८ ॥
सुग्रीव श्रूयतां तात क्रोधश्च व्यपनीयताम् ॥ कारणं येन बाणोऽयं न मया स विसर्जितः ॥ २९ ॥
अलंकारेण वेषेण प्रमाणेन गतेन च ॥ त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥ ३० ॥
स्वरेण वर्चसा चैव प्रेक्षितेन च वानर ॥ विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ॥
ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम ॥ ३१ ॥
नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ॥ जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः ॥
मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३२ ॥

---

न्वयः ॥ १९—२१ ॥ जर्झरीकृतः परुषलकृतः ॥ २२—२४ ॥ वसुधामवलोकयन्निति लज्जानुभावः ॥ २५ ॥ दर्शयित्वाचविक्रममिति व्यतिरेकोक्तिः । त्वया किंकृतं किंचिन्तितमित्यर्थः । कृतिरनेकार्थः ॥ २६ ॥ तामेववेलामिति । अत्यन्तसंयोगे द्वितीया । वालिनंजहि काकुत्स्थेतिप्रार्थनवेलायामित्यर्थः । ततः तथोक्तंचेत् ॥ २७ ॥ करुणं सदयं अब्रवीत् ॥ २८ ॥ येनकारणेन बाणो नविसर्जितः तत्कारणं श्रूयतां श्रुत्वा क्रोधश्चापनीयतामितियोजना ॥ २९ ॥ वेषेण आकारेण । प्रमाणेन औन्नत्येन । गतेन गमनेन ॥ ३० ॥ वर्चसा तेजसा । प्रेक्षितेन वीक्षणेन । वाक्यैः भाषणैः । व्यक्तिं विशेषं । मोहितः संजातमोहः । विशेषानभिज्ञइत्यर्थः ॥ ३१ ॥ नोत्सृजामीत्यादिसार्धश्लोक एकान्वयः । अन्ते इतिकरणं द्रष्टव्यं । द्वयोरपि नौ मया मूलघातो न कृतःस्यादितिहि शरंनोत्सृजामि नोत्सृष्टवानस्मीति योजना । ननु काञ्चनमालारूपो वालिनोविशेषोस्ति । सत्यं । तस्मिन्दिने तन्नधृत्वागतवानितिज्ञेयं । यद्यप्यत्र मत्तत्वभोगचिह्नश्रान्तत्वपुरनिर्गतत्वादिकं वाल्यसाधारणमस्ति । समीपस्थाहनुमदादयश्चप्रष्टुंशक्याः स्वयंचसू-

---

वालीचतेनेत्यप्यर्थः । भार्यापहर्त्रेत्यभिप्रायः ॥ २१ ॥ स० विक्रमंदर्शयित्वा सालभेदनादिनेतिशेषः ॥ ति० किंकृतं अनुचितमेवकृतमित्यर्थः ॥ २६ ॥ शि० हेसुग्रीव त्वंवालीच अलङ्कारादिनास्वरादिनाचपरस्परंसदृशौस्थः । अतः व्यक्तिं द्वयोर्विभिन्नत्वलोकप्राप्तिं । नोपलक्षये नानुमिनोमि । वालिनिमृते त्वमपितत्स्नेहान्मरिष्यसीतितात्पर्यं । वाक्यैः वचनरचनाविशेषैः । अतएववचसेत्यनेननपौनरुक्त्यं ॥ ३०—३१ ॥ ति० मोहितइति । नन्विदमनुचितंयद्भगवतोमोहः । अमोहेमोहइत्यनृतकथनंच । किंचपलायनसमयेऋश्यमूकाभिमुखधावनेनव्यक्तिरस्त्येवेतिचेन्न । वालिनआयुर्दायासमाप्त्यातथाकरणेपिसुग्रीवसंतोषायस्वस्मिन्मानुष्यबुद्ध्यनुत्पादायचात्मनिमोहोत्प्रेक्षयासमाधानादक्षतेः । मोहितइत्यस्यइवेतिशेषः । ईदृशेविषयेएवंविधानृतवचनंन दोषायेत्यप्यनेनध्वनितं । नोत्सृजामि नोदसृजं ॥ शि० ततः तस्मात्रूपसादृश्याद्धेतोः । मोहितः मा न ऊहितं तर्कितंयेनसोहं शरंनोत्सृजामि । ननुममापिमरणेतवकाक्षतिरित्यतआह । सादृश्यात् तन्मूलकात्तवापिमरणादित्यर्थः । हेतोःनौ आवयोर्द्वयोः । मूलघातः मूलयोः राज्यप्राप्तिस्त्रीप्राप्तिरूपहेत्वोः विघातोविनाशोनस्यात् इतिविशङ्कितोहमभवमितिशेषः । सदृशभ्रातृमरणेतज्जनित-

[ पा० ] १ क. ग. महद्वनं. २ क. च. छ. झ. ञ. ट. भयात्ततः. ३ क. ग. ङ. छ. झ. सनिवृत्तोमहाबलः. ञ. ट. संनिवृत्तोमहाबलः. ४ इदमर्धं क. पाठेदृश्यते. ५ क. सचिवैश्च. ६ ग. ङ. च. ञ. तंनहन्मीति. ख. नहिहन्मीति. ७ इदमर्धं क. ङ. च. ज. ञ. पाठेषुदृश्यते. ८ घं. छ. ट. वचसा. ९ छ. झ. ट. द्वयोरिति.

त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया ॥ मौढ्यं च मम बाल्यं च ख्यापितं स्या[1]द्धरीश्वर ॥३३॥
दत्ताभयवधो नाम पातकं म[2]हदुच्यते ॥ ३४ ॥
अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी ॥ त्वदधीना वयं सर्वे वनेऽस्मिञ्शरणं भवान् ॥ ३५ ॥
तस्माद्युध्यस्व भूयस्त्वं [3]मा मा शङ्कीश्च वानर ॥ [4]एतन्मुहूर्ते सुग्रीव पश्य वालिनमाहवे ॥
निरस्तमिषुणैकेन वेष्टमानं महीतले ॥ ३६ ॥
अभिज्ञानं कुरुष्व त्वमात्मनो [5]वानरेश्वर ॥ येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ३७ ॥
गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् ॥ कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ३८ ॥
ततो गिरितटे [6]जातामुत्पाट्य [7]कुसुमाकुलाम् ॥ लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे [8]व्यसर्जयत् ॥ ३९॥
स तथा शुशुभे [9]श्रीमाँल्लतया कण्ठसक्तया ॥ [10]विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ४० ॥
मालयेव बलाकानां [11]ससन्ध्य इव तोयदः ॥ विभ्राजमानो वपुषा रामवाक्यसमाहितः ॥
जगाम सह रामेण किष्किन्धां [12]वालिपालिताम् ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

क्ष्मज्ञः " प्रेक्षितज्ञास्तुकोसलाः " इत्युक्तेः । तथापि " त्वया मया च कुन्त्या च " इति न्यायेनसाधारण्यं परिहर्तुं दृष्टहेतून्कांश्चिदुक्तवान्राम इति ज्ञेयं ॥ ३२—३५ ॥ मा मा शङ्कीरिति । मा मां प्रति । मा शङ्कीः शङ्कां मा कुरु । व्यत्ययेनपरस्मैपदं ॥३६॥ अभिज्ञानं चिह्नं ॥ ३७ ॥ गजपुष्पीं नागपुष्पींनाम लतां ॥ ३८ ॥ व्यसर्जयत् अमोचयत् बद्धवान् ॥३९॥ विपरीत इवेत्याद्युपरि विव्रीयते ॥४०॥ ससन्ध्य इवतोयदइति । सुग्रीवस्यहेमपिङ्गलत्वादितिभावः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

---

दुःखेनयदिसुग्रीवमृतिस्स्यात् तर्हितद्राज्यप्राप्तिविघातःस्यात् अतस्तद्व्यापारसाध्यसीताप्राप्तिविरहोभवेदितितात्पर्यं । अतएवमया कृतःप्रक्षेपाभावइतिशेषः ॥ ३१—३२ ॥ **ति०** दत्तमभयमस्मै सदत्ताभयः तस्यवधोमहत्पातकमितिनाम प्रसिद्धं ॥ ३४ ॥ स्वमूलघातमप्याह—**अहमिति** ॥३५॥ **ति०** मामाशङ्कीरित्याबाधायांद्वित्वं ॥ ३६ ॥ **शि०** अभिज्ञानमिति । येन द्वन्द्वयुद्धमुपागतंत्वां अहमभिजानीयां भ्रातृमरणजनितं महद्दुःखमस्मिन्नभविष्यतीतिनिश्चिनुयां । तत् आत्मनोऽभिज्ञानं । अतिशोकानुत्पत्त्यभिज्ञापकचिह्नंकुरुष्व ॥ ३७ ॥ **ति०** शुभंसम्यग्लक्षयतीतिशुभलक्षणा तां ॥ **शि०** हेलक्ष्मण शुभलक्षणां अतिशोकानुत्पादकत्वेनशुभप्रापिकां गजपुष्पीं । सुग्रीवस्यकण्ठेकुरु । एतेनगजपुष्पीनिबद्धानामतिशोकोनभवतीतिसूचितं ॥ ३८ ॥ **टीका०** मुत्पाट्यशुभदारुजामितिपाठः । शुभदारुजां देवदारुद्रुमाश्रितां । " भद्रदारुद्रुकिलिमंदेवदारुच " इत्यमरः ॥ ३९ ॥ **स०** सतयेत्यर्धानन्तरं "विपरीतइवाकाशेसूर्योनक्षत्रमालयेतिपाठःक्वचिद्दृश्यतेचेत्तस्यायमर्थः । विपरीते रात्रौ । "विपरीतंतुशर्वरी" इत्यभिधानात् । सूर्यः राकामध्यगतश्चन्द्रः । " राकामध्यगतश्चन्द्रःसूर्यइत्यभिधीयते"इत्युक्तेः ॥ नक्षत्रमालयासूर्यइवायमपिशुशुभइतिविपरीतः अभूतोदृष्टान्तइतिवा ॥ ४० ॥ इतिद्वादशःसर्गः ॥ १२ ॥

**[पा०]** १ क.—ट. स्यात्कपीश्वर. २ झ. ट. महदद्भुतं. ३ ञ. मामां. ख. ग. माशङ्कांगन्तुमर्हसि. क. निश्शङ्कोवानरेश्वर. ४ क.—ङ. एतन्मुहूर्तंतुमया. च.—ट. एतन्मुहूर्तेतु. त. ५ ग. वानरोत्तम. ६ क. जातांसमुत्पाट्यसुपुष्पितां. ७ ङ.—ट. कुसुमायुतां. ८ क. ङ. च. ज. समार्पयत्. ख. न्यवेशयत्. घ. न्यसर्जयत्. ९ ङ. च. ज. ञ. श्रीमान्मालया. १० इदमर्धं झ. ठ. पाठयोर्नदृश्यते. ११ क. सन्ध्याताम्रोवलाहकः. १२ झ. पुनरापसः. छ. पुनरागतः.

# त्रयोदशः सर्गः ॥ १३ ॥

रामेणवालिवधायसुग्रीवादिभिःसहकिष्किन्धांप्रतिप्रस्थानम् ॥ १ ॥ तथासुग्रीवंप्रतिमध्येमार्गंदृष्टस्यसप्तजनाश्रमस्यतत्व-प्रश्नः ॥ २ ॥ सुग्रीवेणतंप्रतितत्रदुश्चरतपश्चर्ययासशरीरंदिवंगतानांसप्तर्षीणांतपःप्रभावेनतदाश्रमस्यसुरादिदुरधिगमत्वादिम-हिमानुवर्णनपूर्वकंश्रेयःप्राप्तयेलक्ष्मणेनसहतन्महर्षिनमनचोदना ॥ ३ ॥ रामेणमुनिनमनपूर्वकंसुग्रीवादिभिःसहकिष्किन्धा-गमनम् ॥ ४ ॥

ऋ[1]श्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ॥ जगाम सहसुग्रीवो वालिविक्रमपालिताम् ॥ १ ॥
समुद्यम्य महच्चापं रामः काञ्च[2]नभूषितम् ॥ शरांश्चादित्यसंकाशान्गृहीत्वा रणसाधकान् ॥ २ ॥
अग्रतस्तु ययौ तस्य राघवस्य महात्मनः ॥ सुग्रीवः संहतग्रीवो ल[3]क्ष्मणश्च महाबलः ॥ ३ ॥
पृष्ठतो हनुमान्वीरो नलो नीलश्च वा[4]नरः ॥ तारश्चैव महातेजा हरियूथपयूथपः ॥ ४ ॥
ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः ॥ प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५ ॥
कन्दराणि च शैलाश्च निर्दराणि गुहास्तथा ॥ शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६ ॥
वैडूर्यवि[5]मलैः पर्णैः पद्मैश्चाकोशकुड्मलैः ॥ शोभितान्सजलान्मार्गे तटाकांश्च[6] व्यलोकयन् ॥ ७ ॥
कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः ॥ चक्रवाकैस्तथा चान्यैः श[7]कुनैरुपनादितान् ॥ ८ ॥
मृदुशष्पाङ्कुरा[8]हारान्निर्भयान्वनगो[9]चरान् ॥ चरतः स[10]र्वतोऽपश्यन्स्थलीषु [11]हरिणान्स्थितान् ॥ ९ ॥
तटाकवैरिणश्चापि शुक्लदन्तविभूषितान् ॥ घोरानेकचरान्वन्यान्द्विरदान्कूलघातिनः ॥ १० ॥
मत्तान्गिरि[12]तटोत्कृष्टान्पर्वतानिव जङ्गमान् ॥ [13]वारणान्वारिदप्रख्यान्महीरे[14]णुसमुक्षितान् ॥ ११ ॥
वने वनचरांश्चान्यान्खेचरांश्च विहङ्गमान् ॥ पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥ १२ ॥
तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः ॥ द्रुमषण्डं वनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १३ ॥

अथ पुनः कीष्किन्धाप्रवेशस्त्रयोदशे—ऋश्यमूकादित्यादि ॥ १—२ ॥ संहतग्रीवः निबिडकण्ठ इत्यर्थः । इदं स्वरूपकीर्तनं गजपुष्पीबन्धनेन वा ॥ ३—४ ॥ अथ कार्यसिद्धिसूचकपदार्थानुभवविशेषं दर्शयति—ते वीक्षमाणा इत्यादिना ॥ ५ ॥ कन्दराणि गृहाकारगुहाविशेषान् । निर्दराणि स्फुटितशैलरन्ध्रविशेषान् । गुहाः देवखातबिलानि । दरीः गुहाविशेषान् ॥ ६ ॥ आकोशकुड्मलैः ईषद्विकसितमुकुलैः ॥ ७ ॥ कारण्डैः । "कारण्डको महापक्षी" इति वैजयन्ती । सारसैः सरोनिवासैःशकुनैरुपनादितान् तटाकान् व्यलोकयन्निति पूर्वेणान्वयः॥८॥ चरतः स्थितांश्चापश्यन् ॥९॥ तटाकवैरिणः कलुषीकरणात् । एकचरान् एकाकिनः । द्विरदाः द्विदन्ताइति चतुर्दन्तव्यावृत्तिः । गिरितटोत्कृष्टान् उल्लिखितगिरितटान् ॥ १०—१२ ॥ द्रुमषण्डंवृक्षषण्डमयमिति

**स०** आदित्यसंकाशान् आदित्यं प्रागादित्यंसुग्रीवं सम्यक्प्रकाशयन्तीतितथातान् ॥ २ ॥ **ति०** हरियूथपानामपियूथंपाति तादृशः ॥ ४ ॥ **रामानु०** "कन्दराणिगुहाश्चैवशैलांस्तानिवनानिच" इतिबहुकोशेषुपाठः । कन्दराणि मन्दिराकाराकारितशिलाविवरविशेषान् । गुहाः देवखातबिलानि । दरीः स्फुटितशैलरंध्रविशेषान् ॥ ६ ॥ अकोशकुड्मलैः अकोशैः विकसितैः । कुड्मलैः मुकुलैः ॥ ७ ॥ **टी०** कारण्डः कारण्डवः नामैकदेशेनामग्रहणं । एतैरुपलक्षितांस्तटाकानपश्यन्नित्यन्वयः ॥ ८ ॥ **शि०** पश्यन् पश्यन्तः ॥ ९ ॥ **रामानु०** द्विरदवारणशब्दयोस्तत्तत्स्थलावस्थितव्यक्तिभेदवाचकत्वेननपौनरुक्त्यं । गिरितटा-

**[ पा० ]** १ घ. ऋश्यमूकात्तु. २ क. कनकभूषितं. ३ छ. झ. ट. लक्ष्मणस्य. ४ छ. ज. झ. ट. वीर्यवान्. ५ छ.—ट. विमलैस्तोयैः. ६ क. ग. ङ. छ.—ट. श्चावलोकयन्. ७ क. ख. ग. ङ. छ.—ट. शकुनैःप्रतिनादितान्. ८ क. ख. ग. हारान्मृगपोतांश्चनिर्भयान्. ९ ङ. छ. ञ. ट. न्वनचारिणः. १० च. ज. पर्वतेपश्यन्. ङ. ञ. ट. सर्वतःपश्यन्. ११ ग. हरिणान्मृगान्. क. हरिणांस्तथा. १२ ङ. छ. झ. ट. तटोद्घुष्टान्. ग. तटोत्कृष्टाञ्जङ्गमानिवपर्वतान. १३ छ. झ. ट. वानरान्द्विरदप्रख्यान्. १४ ग. रेणुसुभूषितान्.

एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते ॥ मेघसंघातविपुलः पर्यन्तकदलीवृतः ॥ १४ ॥
किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं हि[1] मे ॥ कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ॥ गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तं[2]न्महद्वनम् ॥ १६ ॥
एतद्राघव विस्तीर्णमाश्रमं श्रमनाशनम् ॥ उद्यानवनसंपन्नं स्वादु मूलफलोदकम् ॥ १७ ॥
अत्र सप्तजना नाम मुनयः संशितव्रताः ॥ सप्तैवासन्नधःशीर्षा नि[3]यतं जलशायिनः ॥ १८ ॥
सप्तरात्रकृताहारा वा[4]युना वनवासिनः ॥ दिवं वर्षशतैर्याताः सप्तभिः सकलेवराः ॥ १९ ॥
तेषा[5]मेवंप्रभावानां द्रुमप्राकारसंवृतम् ॥ आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २० ॥
पक्षिणो वर्जयन्त्येतत्तथाऽन्ये वनचारिणः ॥ विशन्ति मोहा[6]द्ये तत्र नि[7]वर्तन्ते न ते पुनः ॥ २१ ॥
विभूषणर[8]वास्तत्र श्रूयन्ते सकलाक्षराः ॥ तूर्यगीतस्व[9]नाश्चात्र गन्धो दिव्यश्च राघव ॥ २२ ॥
त्रेताग्नयोपि दीप्यन्ते धूमो ह्यं[10]त्र प्रकाशते ॥ वेष्टयन्निव वृक्षाग्रान्कपोताङ्गारुणो घनः ॥ २३ ॥
एते वृक्षाः प्रकाशन्ते धू[11]मसंसक्तमस्तकाः ॥ मेघजालप्रतिच्छन्ना वैडूर्यगिरयो यथा ॥ २४ ॥
कुरु प्रणामं धर्मात्मं[12]स्तान्समुद्दिश्य राघव ॥ लक्ष्मणेन सह भ्रात्रा प्रयतः संयताञ्जलिः ॥ २५ ॥
प्रणमन्ति हि ये [13]तेषां मुनीनां भावितात्मनाम् ॥ न तेषामशुभं किंचिच्छरीरे राम दृ[14]श्यते ॥२६॥
ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः ॥ समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७ ॥
[15]अभिवाद्य तु धर्मात्मा रामो भ्राता च लक्ष्मणः ॥ सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥२८॥

---

लतागुल्मव्यावृत्तिः॥१३॥ मेघ इवेति नीलवर्णे उपमा ॥ १४—१८ ॥ सप्तरात्रकृताहाराः वायुना सप्तरात्रस्य एकवारंकृताहाराः । सप्तभिर्वर्षशतैरित्यन्वयः ॥ १९ ॥ ये मोहादत्राश्रमे विशन्ति न ते निवर्तन्ते किंतु तत्रैव नश्यन्तीत्यर्थः ॥ २०—२१ ॥ दिवं गताःशरीरान्तरेण पुनरत्रागत्याप्सरोभिः क्रीडन्तीत्याशयेनाह—विभूषणेत्यादिना ॥ भूषणरवेण नृत्तमुपलक्ष्यते । सकलाक्षराइति गीतस्वनविशेषणं । तूर्यशब्दोत्र गीतभिन्नवाद्यपरः ॥ २२ ॥ त्रेताग्निदीपने लिङ्गमाह—धूमो हीति । घनः निबिडः ॥ २३—२४ ॥ समुद्दिश्य किंचित्फलमुद्दिश्य । तेषां प्रणामं कुरु ॥२५॥ शरीरे अशुभं व्याध्यादिकं ॥२६॥ महात्मानः महात्मनः॥२७॥ अभिवाद्येति । अनेन सर्वेषामभिवादनमनूद्यते । अत्राभिवादनं नमस्कारः । तेषां परोक्षत्वात् । अनेन सज्जनप्रणामो विजयावह इत्ययमर्थः सूचितः । तदिदं द्योत्यते उप-

---

नुत्कर्षन्तीतिगिरितटोत्कृष्टाः तान् । कर्तरिक्तः ॥ **स०** गिरितटोत्कृष्टान् गिरितटापेक्षयाउत्कृष्टान् ॥ ११ ॥ **ती०** गच्छन्नेवेति शतृप्रत्ययेन कार्यत्वरासूचिता ॥ १६ ॥ **शि०** सप्तजननाम्निनिमित्तंबोधयन्नाह—**सप्तेति** । सप्तरात्रेव्यतीतेसतीतिशेषः । वायुनाकृताहाराः । अचलवासिनः निश्चलनिवसनशीलाः ॥ १९ ॥ **ति०** एतदाश्रमं । अर्धर्चादिराश्रमशब्दः । **स०** नपुंसकत्वमार्षं । "संबन्धमनुवर्तिष्यते"इतिमहाभाष्यानुसारेण "घञजपाः—"इत्यस्यप्रायिकत्वाद्वानदोषः ॥ २० ॥ **शि०** वर्जयन्ति अतितेजोदर्शनजनितभियानगच्छन्तीत्यर्थः ॥ २१ ॥ **ति०** सकलाक्षराः कलाक्षराभिर्मधुराक्षराभिर्वाग्भिःसहिताः । भूषणरवाः अप्सरसामितिशेषः ॥२२॥ **ति०** तेषामुद्दिश्य तानुद्दिश्येतियावत् ॥२५॥ **शि०** हेराम भावितात्मनां परिशीलितपरमात्मनां । ऋषीणांयेप्रणमन्ति तेषांशरीरे अशुभं शुभविरोधि शोकादिकमित्यर्थः । नविद्यते नभवति ऋषीणामित्यत्रसंबन्धसामान्यविवक्षयाषष्ठी ॥ २६ ॥ **ति०** वानराः हनुमदादयः । एतत्कथाप्रश्नादिकं वाल्यायुस्समाप्तिकाललाभाय ॥ २८ ॥

**[ पा० ]** १ क. ङ.—ट मम. ख. ग. महत्. २ क. ग. स्तन्महावनं. ङ. च. ज. ञ. स्तद्वनंमहत्. ३ क. ङ. नियताः. ४ छ. झ. ट. वायुनाचलवासिनः. ५ क. छ. झ. ट. तेषामेतत्प्रभावेण. ६ च. झ. मोहाद्येप्यत्र. ७ झ. ट. ननिवर्तन्ते. ८ क. ख. घ. ङ. च. ज.—ट. रवाश्चात्र. ९ ङ. ज.—ट. स्वनाश्चापि. घ. स्वराश्चात्र. १० क. ङ. छ.—ट. ह्येषप्रदृश्यते. च. ह्यत्रप्रदृश्यते. ख. ह्ययप्रकाशते. ११ क. धूमसंरक्तसच्छदाः. १२ क.—ङ. छ.—ट. तेषामुद्दिश्य. १३ क.—ङ. ज. झ. ट. तेषामृषीणां. १४ ख. ङ. ज. ट. विद्यते. १५ ङ. छ.—ट. अभिवाद्यच.

ते गत्वा दूरमध्वानं तस्मात्सप्तजनाश्रमात् ॥ ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥२९॥
ततस्तु रामानुजरामवानराः प्रगृह्य शस्त्राण्युदिताग्र्यतेजसः ॥
पुरीं सुरेशात्मजवीर्यपालितां वधाय शत्रोः[2] पुनरागताः[3] सह ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ॥ १४ ॥

रामादिभिःकिष्किन्धासमीपवनेवृक्षैरात्माच्छादनेनावस्थानम् ॥ १ ॥ सुग्रीवेणरामंप्रति वालिवधप्रतिज्ञायाःसफलीकरणप्रार्थना ॥ २ ॥ रामेणसुग्रीवंप्रतिप्रत्ययोत्पादनपूर्वकंवालिवधप्रतिज्ञानेनतदाह्वानचोदना ॥ ३ ॥ सुग्रीवेणसगर्जनंयुद्धाय-वाल्याह्वानम् ॥ ४ ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिपालिताम् ॥ वृक्षैरात्मानमावृत्य व्यतिष्ठन्गहने वने ॥ १ ॥
विचार्य सर्वतो दृष्टिं कानने काननप्रियः ॥ सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ २ ॥
ततः स निनदं घोरं कृत्वा युद्धाय चाह्वयत् ॥ परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥
गर्जन्निव महामेघो वायुवेगपुरस्सरः ॥ ३ ॥
अथ बालार्कसदृशो दृप्तसिंहगतिस्तदा ॥ दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥ ४ ॥
हरिवागुरया व्याप्तां तप्तकाञ्चनतोरणाम् ॥ प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम् ॥५॥
प्रतिज्ञा या त्वया वीर कृता वालिवधे पुरा ॥ सफलां तां[11] कुरु क्षिप्रं लतां काल इवागतः ॥ ६ ॥
एवमुक्तस्तु धर्मात्मा सुग्रीवेण[12] स राघवः ॥ तमथोवाच[13] सुग्रीवं वचनं शत्रुसूदनः ॥ ७ ॥
कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया ॥ लक्ष्मणेन समुत्पाट्य यैषा[14] कण्ठे कृता तव ॥ ८ ॥

---

रितनश्लोके उदिताग्र्यतेजसइति । प्रणामेनेतिभावः ॥ २८—२९ ॥ सह युगपत् ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

अथ वाल्याह्वानभीतं सुग्रीवं निश्वासयति रामश्चतुर्दशे—सर्व इत्यादि ॥ १—२ ॥ वायुवेगपुरःसरः वायुवेगान्मेघे अधिको ध्वनिरिति प्रसिद्धिः । यतः वायुवेगपुरस्सरः अतएव गर्जन्महामेघइव स्थितः । परिवारैः परिवृतः सः नादैरम्बरं भिन्दन्निव घोरं निनदं कृत्वा युद्धायाह्वयत् । वालिनमितिशेषः ॥ ३—४ ॥ हरिवागुरया हरय एव वागुरा मृगग्रहणपाशः तया व्याप्तां इतरदुष्प्रवेशामित्यर्थः । यद्वा हरिवागुरया हरिगृहैः । जात्येकवचनं । " वागुरा मृगशालिका " इति वैजयन्ती ॥ ५ ॥ आगतः कालः फलकालः ॥ ६—७ ॥ अभिज्ञापकंचिह्नं अभिज्ञानचिह्नं । कृतमभिज्ञानचिह्नं यस्य स तथा । गजपुष्प्यामेव गजसाशब्दः । यद्वा गजेन समा आह्वा आख्या यस्याः सा गजसाह्वा तया शोभस इति । अत्राहुः—विपरीते रात्रौ । सूर्यः पूर्णचन्द्रः । " परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी " " राकामध्यगतश्चन्द्रः सूर्य इत्यभिधीयते " इति वचनात् । यद्वा नक्षत्रमालया विपरीतः विशेषेण

---

ति० शस्त्राणि वानराणांशस्त्रं शिलादि ॥ ३० ॥ इतित्रयोदशःसर्गः ॥ १३ ॥

ति० बालार्कसदृशः वर्णेनप्रतापेनच ॥ ४ ॥ ति० ध्वजैर्यन्त्रैः प्राकारयुद्धापेक्षितैः । आढ्यां ॥ ५ ॥

[ पा० ] १ क. ङ. छ.—ट. ण्युदितोग्रतेजसः. २ ज. सज्जाः. ३ छ. झ. ञ. ट. रागतास्त्विह. ४ क. ख. ग. ङ.—ट. वालिनःपुरीं. ५ क.—ट. विसार्य. ६ ज. झ. ट. ततस्तु. ७ ख. ङ.—ट. स्ततः. ८ क. ग. ङ. च. ज.—ट. भूषणां. ९ ग. वालिपालितां. १० ख. याप्रतिज्ञा. छ. झ. ञ. ट. प्रतिज्ञायाकृतावीरत्वया. ११ छ. झ. ट. कुरुतां. १२ घ. सुग्रीवेणहि. १३ क. ग. तमेवोवाच. छ. झ. ट. तमेवोवाचवचनंसुग्रीवं. ङ. च. ज. ञ. तदेवोवाचवचनंसुग्रीवं. १४ घ. छ. ज. झ. ट. एषा.

शोभसे ह्यधिकं वीर लतया कण्ठसक्तया ॥ विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ९ ॥
अद्य वालिसमुत्थं ते भयं वैरं च वानर ॥ एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ॥ १० ॥
मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् ॥ वाली विनिहतो यावद्वने पांसुषु वेष्टते ॥ ११ ॥
यदि दृष्टिपथं प्राप्तो जीवन्स विनिवर्तते ॥ ततो दोषेण माऽऽगच्छेत्सद्यो गर्हेच्च मा भवान् ॥१२॥
प्रत्यक्षं सप्त ते साला मया बाणेन दारिताः ॥ तेनावेहि बलेनाद्य वालिनं निहतं मया ॥ १३ ॥
अनृतं नोक्तपूर्वं मे वीरं कृच्छ्रेऽपि तिष्ठता ॥ धर्मलोभपरीतेन न च वक्ष्ये कथंचन ॥ १४ ॥
सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ॥ प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः ॥ १५ ॥
तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः ॥ सुग्रीव कुरु तं शब्दं निष्पतेद्येन वानरः ॥ १६ ॥
जितकाशी बलश्लाघी त्वया चाधर्षितः पुरा ॥ निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ॥ १७ ॥

परिवृतः । सूर्यइव चन्द्रइव । अन्यशब्देनान्यस्याभिधानं कथमिति चेत् । "नवो नवो भवति" इति श्रुतौ अह्नां केतुः सूर्यः चन्द्राप्यायकत्वाच्चन्द्रमाइत्युच्यते । तद्वच्चन्द्रोपिसूर्यकिरणानुप्रवेशायत्तप्रकाशविशेषवत्त्वात्सूर्यशब्देनाभिधीयतइति । यद्वा विशेषेणपरीतो विपरीतः नक्षत्रावृतः । सूर्य इवेत्यभूतोपमा । विपरीतइत्यनेन तात्कालिकतेजोवत्त्वमुच्यते । यद्वा विपरीते विपरीतकाले । सूर्यो नक्षत्रमालयेवानया लतयाशोभसे । उत्पातकालेहि मध्याह्ने नक्षत्राणिदृश्यन्तइत्युच्यते ज्योतिश्शास्त्रे । "रात्राविन्द्रधनुर्दर्शे दिवानक्षत्रदर्शने । तद्राष्ट्रनाथनाशःस्यादितिगर्गस्यभाषितम्" इति । अतः भाविवालिवधरूपफलानुसारेण तेजसा ज्वलन्सुग्रीवः शुभ्रपुष्पावलीशोभमानगजपुष्पीमालया उत्पातकाले नक्षत्रमालया सूर्यइव बभावित्यस्मदाचार्योक्तम् ॥८-९॥ प्रमोक्ष्यामि प्रमोचयिष्यामि । अनित्यत्वमार्षं ॥१०॥ यावद्वेष्टते वेष्टिष्यते । "यावत्पुरानिपातयोर्लट्" इति लट् ॥ ११ ॥ सवाली दृष्टिपथं प्राप्तः सन् पुनर्जीवन्यदि विनिवर्तते । ततः तदा । दोषेणोपलक्षितं । मा मां । आगच्छेत् । सद्यो मा मां । भवान् गर्हेच्च गर्हेतच । यदि दृष्टमात्रेण तं नहन्यां तदामत्समीपमागच्छ मां गर्हस्वचेत्यर्थः ॥ १२-१३ ॥ मे मया । "तेमयावेकवचनस्य" इत्येतत्तृतीयायामप्यार्षे दृश्यते । अतस्तद्विशेषणेपि तृतीयाप्रयोगः । धर्मलोभपरीतेन । लोभोलब्धस्य त्यागासहिष्णुता । धर्महान्यसहिष्णुनेत्यर्थः ॥ १४ ॥ संभ्रमं संशयकृतचाञ्चल्यं । पराक्रमेण प्रतिज्ञासफलत्वकरणे दृष्टान्तमाह—प्रसूतमिति ॥ कलमं सस्यं ॥ १५ ॥ तत् तस्मात् ॥ १६ ॥ जितेन जयेन काशते प्रकाशत इति जितकाशी । ताच्छील्ये णिनिः । असङ्गेन अविलम्बेन ॥ १७ ॥

**रामानु०** चन्द्रसूर्यकिरणानुप्रवेशप्रकाशवत्त्वंविष्णुपुराणेप्रसिद्धं । "क्षीणंसोमंसुरैःपीतमाप्याययतिदीप्तिमान् । मैत्रेयैककलं सन्तंरश्मिनैकेनभास्करः ॥" इति **ती०** सुवतिप्रेरयतीतिसूर्यइतिव्युत्पत्त्या नक्षत्रमण्डलपरिवृतत्वविशेषणेनचचन्द्रएवसूर्यशब्देनोच्यते । यद्वा अभूतोपमेयं । आकाशेनक्षत्रमालयाविपरीतःविशेषेणपरिवृतःसूर्यइवत्वंशोभसे । यद्वा विपरीतइतिसप्तम्यन्तं । विपरीते रात्रौ । सूर्यः पौर्णमासीचन्द्रः । "परीतंतुदिवाप्रोक्तंविपरीतंतुशर्वरी । पौर्णमासीगतश्चन्द्रःसूर्यइत्यभिधीयते" इतिवचनात् । रात्रावाकाशेपूर्णचन्द्रोनक्षत्रमालयायथाशोभते तथाकण्ठसक्तमालयात्वंशोभसइति । गजसाह्वया गजेनसमाआह्वाआख्यायस्याः साकुन्दलतेतियावत् । तया ॥ **ति०** नक्षत्रमालया आकाशेविपरीतःविशेषेणवेष्टितःसूर्यइव । कविविकल्पितोपमाऽलीकोपमा । तेनतादृशस्सूर्योयदिभवेत्तदा तरुणार्कवर्णस्यकण्ठसक्तशुक्लपुष्पमालस्योपमास्यादित्यतिशयोक्तिरत्रव्यङ्ग्या ॥ ९ ॥ **स०** एकेनबाणमोक्षेणेत्यनेन तस्यैवबाणस्यद्वितीयवारंमोचनमपिनास्तीतिसूचितं । प्रमोक्ष्यामि अन्तर्णीतण्यर्थः ॥ १० ॥ **स०** दर्शेर्ण्यन्तत्वदशायां द्विकर्मकत्वेनमामितिवक्तव्येममेत्युक्तिः स्वतस्सर्वज्ञत्वाद्रामस्यदर्शयेत्युक्तिरौपचारिकीतिदर्शयितुं । वालीविनिहतस्सन्यावद्वनेवेष्टते तावन्ममदर्शय । यावद्वनेसमग्रवनइतिवा ॥ ११ ॥ **शि०** कृच्छ्रे अत्याज्यपितृगुर्वादिपरस्परविरुद्धोक्तिसंशयजनितकष्टे ॥ १४ ॥ **ति०** जितकाशी जितश्वासोजितभयोवा ॥ **ति०** ननुकृतेप्याह्वानेस्त्र्यादिसक्तोननिष्पतिष्यतितत्राह—**निपतिष्यतीति** । अस-

**[ पा० ]** १ च. ज. क्षिप्रंविनिहतोयावच्चेष्टतेपांसुलुण्ठितः. २ क. ख. ग. छ. झ. ञ. ट. ततोवेत्सि. ३ छ.—ञ. रणे. ४ ख. कृच्छ्रेमहति. ५ ख. प्रभूतकलमंक्षेत्रं. छ. झ. ञ. ट. प्रसूतंकलमक्षेत्रं. ६ छ. झ. ट. निमित्तंच. ७ ग. च.—ट. जयश्लाघी. ८ छ, झ. ञ. ट. पुरात्.

रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे ॥ जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥ १८ ॥
स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ॥ ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ॥ १९ ॥
तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः ॥ राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ॥ २० ॥
द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ॥ पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥२१॥
ततः स जीमूतगणप्रणादो नादं व्यमुञ्चत्त्वरया प्रतीतः ॥
सूर्यात्मजः शौर्यविवृद्धतेजाः सरित्पतिर्वाऽनिलचञ्चलोर्मिः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः ॥ १५ ॥

सुग्रीवगर्जनश्रवणजरोषेणयुद्धायनिर्गच्छन्तंवालिनंप्रति तारयासपरिष्वङ्गंयुक्त्युपन्यासेन अङ्गदवचनानुवादेनरामसाहाय्योक्त्याचसुग्रीवस्यबलीयस्त्वोक्त्या श्रीरामगुणानुवर्णनेनतच्चरणशरणीकरणपूर्वकंसुग्रीवेणसख्यकरणप्रार्थना ॥ १ ॥

अथ तस्य निनादं तु सुग्रीवस्य महात्मनः ॥ शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १ ॥
श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् ॥ मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् ॥ २ ॥
स तु रोषपरीताङ्गो वाली संध्यातपप्रभः ॥ उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३ ॥

---

स्त्रीसमक्षमित्यनेन तदानीं सायंकाल इत्यवगम्यते । “ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । सायं कामेनपीड्यन्ते जन्तवो निशि निद्रया ” इति वचनात् ॥ १८—१९ ॥ हतप्रभाः भीतिविकृतमुखकान्तयः । गावइत्यनेन गवांपुरप्रवेशकालसूचनात्तत्कालस्य सायंतनत्वंगम्यते । राजदोषपरामृष्टाः राजदोषेण अराजकत्वरूपदोषेण परामृष्टाः परैः परपुरुषैः आमृष्टाः केशेषु गृहीताः । कुलस्त्रियइव आकुलाः गन्तव्यप्रदेशाभावेनाकुलाः ॥ २०—२१ ॥ प्रतीतः नादमोचने प्रसिद्धः । सरित्पतिर्वा समुद्रइव ॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

अथ ताराबुद्धिः पञ्चदशे—अथ तस्येत्यादि ॥ महात्मनः महाधैर्यस्य ॥ १ ॥ श्रुत्वेति स्थितस्येति शेषः । एकपदे एकस्मिन्नेव स्थाने । सद्यइत्यर्थः । आपतितः उत्पन्न इत्यर्थः ॥ २ ॥ रोषेण परीताङ्गः विपरीताङ्गः विकृतवेष इत्यर्थः । अतएव सन्ध्यातपप्रभः कोपपावकयावकिताननइतिप्रयोगात्कोपरक्तदेहत्वात्सन्ध्यातपप्रभत्वं । किंच उपरक्तः समीपरक्तः । कृतपरिवेष इत्यर्थः । परिवेषयुक्तोहिसूर्योनिष्प्रभोदृश्यते । उप-

---

ङ्गेन स्त्र्यादिसंगपरित्यागेनेत्यर्थः । यतः प्रियसंयुगः । नमर्षयन्तीत्यस्यशूराइतिशेषः ॥ **स०** जितेन जयेन श्लाघीस्तुत्यः । **शि०** जयश्लाघीस्वविजयविषयकश्लाघावान् ॥ १७ ॥ **वि०** विशेषतः नमर्षयन्तीत्यनुषङ्गः ॥ १८ ॥ **ती०** राजदोषपरामृष्टाः राजदोषव्याप्ताः । राजाज्ञाभावेबलाधिकजारभीत्यांकुलस्त्रियोयथानिष्प्रभायान्ति तथागावोयान्तीत्यर्थः ॥ **ति०** गावः महान्तोवृषभाः । हतप्रभाः हतशक्तयः ॥ २० ॥ **स०** ग्रहाः देवाः ॥ २१ ॥ **ति०** जीमूतवत्कृतप्रणादः । प्रतीतः रामेइतिशेषः । शौर्यपराक्रमकरणेविवृद्धंतेजोयस्य ॥ २२ ॥ इतिचतुर्दशःसर्गः ॥ १४ ॥

**टीका०** एकपदे तत्काले । “ एकंपदंस्यात्तत्कालेपदव्यामेकपद्यपि ” इतिविश्वः ॥ **शि०** तस्यनिनादंश्रुत्वाविद्यमानस्यवालिनः एकपदे तस्मिन्क्षणे । मदः मत्तस्सर्वैर्बिभ्यतीतिगर्वः । नष्टः । क्रोध आपादितः संप्राप्तः ॥ २ ॥ **ति०** कनकप्रभस्यक्रो-

[ **पा०** ] १ ङ.—ट. धर्षितंश्रुत्वा. क. ग. धर्षणंवीरा. २ घ. छ. धैर्यं. ३ टः तेन. झ. तत्र. ४ ङ.—ज. ञ. गतप्रभाः. ५ घ. पतगाभूमौ. ६ ङ.—ज. ञ. ग्रहाइव. ७ ङ.—ट. कृतप्रणादो. ८ ग. ङ. च. ज. ञ. विमुञ्चंस्त्वरया. ९ ख.—ट. निनादंतं. १० ख. घ. ङ. छ. झ. ञ. ट. श्चापादितो. ११ छ. झ. ट. ततो. १२ झ. ट. सकनकप्रभः. छ. कनकसप्रभः.

वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ता[1]ग्निसन्निभः ॥ भात्युत्पतितपद्माभः समृणाल इव ह्रदः ॥ ४ ॥
शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ॥ वेगेन च[2]रणन्यासैर्दारयन्निव मेदिनीम् ॥ ५ ॥
तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा ॥ उवाच त्र[3]स्तसंभ्रान्ता हितोदर्कमिदं वचः ॥ ६ ॥
साधु क्रोधमिमं वीर नदीवेगमिवागतम् ॥ शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७ ॥
काल्यमेतेन संग्रामं करिष्यसि च वानर ॥ वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८ ॥
सहसा तव निष्क्रामो मम तावन्न रोचते ॥ [4]श्रूयतां चाभिधास्यामि यन्निमित्तं नि[5]वार्यसे ॥ ९ ॥
पूर्वमापतितः क्रोधात्स त्वामाह्वयते युधि ॥ निष्पत्य च नि[6]रस्तस्ते हन्यमानो दिशो गतः ॥ १० ॥
त्वया तस्य निरस्तस्य पीडितस्य विशेषतः ॥ इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११ ॥
दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः ॥ नि[7]नादश्चापि संरम्भो नैतदल्पं हि कारणम् ॥ १२ ॥
नासहायमहं मन्ये सुग्रीवं तमिहागतम् ॥ अवष्टब्धसहायश्च य[8]माश्रित्यैष गर्जति ॥ १३ ॥
प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः ॥ [9]अपरीक्षितवीर्येण सुग्रीवः स[10]ह नैष्यति ॥ १४ ॥

---

रक्तो राहुग्रस्तो वा ॥ ३ ॥ दंष्ट्राकरालः दंष्ट्रादन्तुरः । "कराल्लोदन्तुरेतुङ्गे" इत्यमरः । क्रोधाद्धेतोः दीप्ताग्निसन्निभः अतएवोत्पतितपद्मः विकसितरक्तोत्पलः । उत्पतितपद्माभइतिपाठे उत्पतिता स्वोपरिप्रसृता पद्मानामाभा यस्मिन्स इत्यर्थः । समृणालो ह्रद इव भाति बभौ ॥ ४–५ ॥ परिष्वज्य स्ववचनश्रवणाभिमुख्यायालिङ्ग्य । स्नेहात् परिष्वज्येत्यन्वयः । दर्शितसौहृदा यथाभवति तथोवाचेत्यर्थः । संभ्रान्ता त्वरिता । "संभ्रमस्त्वरा" इत्यमरः । हितोदर्कं हितफलकं ॥ ६ ॥ काल्यं प्रातः शयनादुत्थितः पुरुषः भुक्तां स्रजमिव । नदीवेगमिव आगतं अप्रतिबद्धं क्रोधं । साधु निःशेषं त्यज ॥ ७ ॥ काल्यं प्रातःकाले । एतेन युद्धं करिष्यसि । तेन फल्गुता लाघवं वा शत्रुबाहुल्यं शत्रुगौरवं वा न विद्यते । अतः किमर्थमद्यैवनिर्गच्छसीत्यर्थः ॥ ८ ॥ सहसानिर्गमे कोदोष इत्यत्राह—सहसेति ॥ ९ ॥ प्रथमं युक्तिमाह—पूर्वमित्यादिश्लोकद्वयमेकान्वयं ॥ पूर्वमापतितः ते त्वया। क्रोधान्निष्पत्य योयुधि निरस्तः । हन्यमानो दिशो गतश्च । सत्वामाह्वयते । पुनरेत्य स्थितस्य तस्यैतदाह्वानं । मेशङ्कां सहायसहितत्वशङ्कांजनयतीतियोजना । इवशब्दो वाक्यालंकारे । अव्ययानामनेकार्थत्वादवधारणे वा ॥ १०—११ ॥ अवधारणे हेत्वन्तरमप्याह—दर्पश्चेति । नर्दतस्तस्य दर्पश्च व्यवसायश्च यत्नश्च निनादश्च संरम्भश्च यादृशः । अस्य एतत्कारणमल्पं नभवतीतियोजना ॥ १२ ॥ फलितमाह—नासहायमिति ॥ अवष्टब्धसहायश्च परिगृहीतसहायएव । कुतः । एषः यमाश्रित्यगर्जति तादृशगर्जनहेतुसहायाश्रित एषइत्यर्थः ॥ १३ ॥ सहायस्याधादतिरक्तत्वेसहजप्रभानाशेनोपरक्तादित्योपमेयता । एतदादीन्यासन्नमृत्युलक्षणानि ॥ ३ ॥ **रामानु०** दीप्ताग्निसंनिभोवाली । क्रोधाद्दंष्ट्राकरालः । उत्पतितपद्माभः गजादिभिरुद्धृतपद्माभः । समृणालोह्रदइवभातीतियोजना । दंष्ट्रामृणालस्थानीया । **ती०** दीप्ताग्निसंनिभत्वंकालुष्यकषायवर्णप्राकट्याय ॥ ४ ॥ **ती०** शत्रुबाहुल्यं शत्रोर्बाहुल्यं गौरवं वा । नविद्यते शत्रुविषयबलाबलविपयशङ्कातवनास्तीतिभावः । यद्यप्येवंतथापि ॥ ८ ॥ **स०** तंसुग्रीवं । असहायंनमन्ये । वष्टब्धसहायः परिगृहीतसमानलाभः सन भवतीत्यवष्टब्धसहायः अपरिगृहीतसमानराज्योऽयंसुग्रीवः यमाश्रित्यगर्जति तमपि सुग्रीवन्तं सुग्रीववदाचरन्तं सुग्रीववत्सामाद्युपायेनाभेद्यंमन्यइत्यावर्तितेनान्वयः ॥ अहमिहागतंसुग्रीवं असहायंनमन्ये । भवतुसहायःकश्चित्तमप्यहंहनिष्यामीत्यतआह—**अवष्टब्धसहायश्चेति** । अवष्टब्धःपरिगृहीतःसहायोयेनसएषः यमाश्रित्यगर्जति तंराममपि असहायं असहायशूरंमन्येइतिवा । अनेनतारायारामविषयकंज्ञानमस्तीतिसूचितं । तच्चानुपदंस्पष्टीभविष्यति ॥ १३ ॥ **ती०** अस्तुसोपिसहायःसुग्रीवतुल्यएवेत्यत

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. दीप्ताग्निलोचनः. २ ङ.—झ. ट. चपदन्यासैः. ३ क. ख. ङ. च. ज. ञ. त्राससंभ्रान्ता. ४ क. ङ.—ट. श्रूयतामभिधास्यामि. ख. ग. श्रूयतांत्वभि. ५ झ. निवार्यते. ६ ख. निरस्यस्ते. ७ ख. निनदस्यच. क. ग. च.—झ. ट. निनादस्यच. ८ घ. ट. माश्रित्यैव. ९ छ. झ. ञ. ट. नापरीक्षितवीर्येण. १० छ. झ. ञ. ट. सख्यमेष्यति.

पूर्वमेव मया वीर श्रुतं कथयतो वचः ॥ अङ्गदस्य कुमारस्य वक्ष्यामि त्वा हितं वचः ॥ १५ ॥
अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः ॥ प्रवृत्तिस्तेन कथिता चारैराप्तैर्निवेदिता ॥ १६ ॥
अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ ॥ इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ ॥
सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ ॥ १७ ॥
तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः ॥ रामः परबलामर्दी युगान्ताग्निरिवोत्थितः ॥ १८ ॥
निवासवृक्षः साधूनामापन्नानां परा गतिः ॥ आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥ १९ ॥
ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ॥ धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥ २० ॥

तिशये किंमानमित्यतआह—प्रकृत्येति ॥ १४ ॥ न केवलं युक्त्यायंनिर्णयः वचनाच्चेत्याह—पूर्वमिति । वचः यत् प्रासङ्गिकंकथयतोङ्गदस्य वचः मयाश्रुतं तत् हितं वचः त्वांप्रति वक्ष्यामि ॥ १५॥ वनान्तमुपवनान्तमभि निर्गतः विहारार्थं गतः । प्रवृत्तिर्वार्ता । "वार्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः । तत्र ऋश्यमूके । दुरासदावित्यनन्तरमितिकरणं बोध्यं । प्राप्ताविति प्रवृत्तिस्तेनकथितेतिसंबन्धः ॥ १६—१७ ॥ तौ कीदृशावित्यपेक्षायामेकस्य स्वरूपकथनेनान्यस्य स्वरूपमप्यर्थादुक्तंभवतीतिमत्वा प्रधानभूतरामस्वरूपमाह—तवेत्यादिनाश्लोकत्रयेण ॥ रामः उक्तविशेषणविशिष्टइत्यन्वयः । तत्त्वस्थितिं सूचयन्त्याह—निवासेति । यथा सुग्रीवस्यसहायः एवं ममापि कुतोनस्यादित्यत्राह—साधूनामिति । स्वच्छायापेक्षिणामनुकूलानां निवासवृक्षः । वृक्षइत्यभेदाध्यवसायेन सर्वथासादृश्यमुच्यते । यथावृक्षःप्रथमंतापमपहृत्य पुष्पफलप्रदानादिना सर्वेन्द्रियतर्पणः तथाऽयमित्यर्थः। निवासइतिविशेषणेन कादाचित्कच्छायकतरुव्यावृत्तिः । "वासुदेवतरुच्छाया नातिशीतानघर्मदा । नरकाङ्गारशमनी साकिमर्थंनसेव्यते" इत्युक्तत्वात् । सुग्रीवद्रोहकरणेन नास्माकंसाधुत्वलेशइत्याशयः । साधूनामेवं आपन्नानां तु परागतिः । "योगक्षेमं वहामि" इत्युक्तरीत्या आश्रितविषयेउपायदशाप्रभृतिफलपर्यन्तसर्वकार्यकरइत्यर्थः । तत्राप्यार्तानांसंश्रयश्चैव आश्रितेष्वप्यार्तानांतुसर्वदासमीचीनाश्रयः । सर्वकार्यनिर्वाहकइत्यर्थः । भवत्वेवं । ममापि कश्चिदाश्रयोभविष्यतीत्यत्राह—यशसश्चैकभाजनमिति । एवंविधरक्षको लोकेऽन्योनास्तीत्यर्थः । अत्र "चतुर्विधाभजन्तेमां जनाःसुकृतिनोर्जुन । आर्तोजिज्ञासुरर्थार्थी ज्ञानीचभरतर्षभ" इत्युक्ताश्चतुर्विधाधिकारिण उच्यन्ते । साधूनां जिज्ञासूनां । कैवल्यकामानामित्यर्थः । आपन्नानां अपूर्वैश्वर्यकामानां । आर्तानां भ्रष्टैश्वर्यकामानां । यशसः "ज्ञानी त्वात्मैव मे मतं" इत्युक्तयशोयुक्तस्य । एकवचनेन तस्य सुदुर्लभत्वमुक्तं । एकभाजनं अद्वितीयाश्रयः । यद्वा साधूनामुपासकानां । आपन्नानां "सकृदेवप्रपन्नाय" इत्युक्तरीत्या ईषत्प्रपन्नानां । आर्तानां आर्तप्रपन्नानां । "आर्तोवायदिवादृप्तः परेषांशरणागतः" इतिवक्ष्यमाणत्वात् । यशसश्चैकभाजनमित्यनेन एवंभूतोन्यो नास्तीत्युच्यते । आश्रितफलप्रदानोपयोगिज्ञानसंपत्तिमाह—ज्ञानविज्ञानसंपन्न इति ॥ ज्ञानं लौकिकज्ञानं । विज्ञानं शास्त्रजन्यज्ञानं । ताभ्यांसंपन्नः । यद्वा विज्ञानेन धर्मभूतेन संपन्नः । ज्ञानश्चासौ विज्ञानसंपन्नश्चेतिकर्मधारयः । ज्ञानस्वरूपोज्ञानगुणकश्चेत्यर्थः । ज्ञानसंपत्तिमुक्त्वानुष्ठानसंपत्तिमाह—निदेशेनिरतःपितुरिति । प्रधानत्वात्पितृवचन-

आह—अपरीक्षितेति । अपरीक्षितवीर्येण सहायेनेतिशेषः । अपरीक्षितंवीर्यंयस्येतिविग्रहः ॥१४॥ **स०** कथयतोङ्गदस्यवचः श्रुतं । तद्वचोयवक्ष्यामि । हेअवचइतिसंबोधनं । तूष्णींभूतवालिनिनितदर्थः ॥ १५ ॥ **ति०** वनान्तं वनमध्यं । यात्तस्मैचारैर्निवेदिताप्रवृत्तिरासीत् । प्रवृत्तिःसुग्रीववृत्तान्तः । सातेनममकथिता ॥ १६ ॥ **रामानु०** "स्वरक्षणेप्यशक्तस्यकोहेतुःपररक्षणे" इतिन्यायेनराज्यादिनाशितोरामःसुग्रीवंकथंरक्षितुंशक्तः । शक्तोवासदृशंमांविहायदुर्बलंसुग्रीवंकथमवलंबतइत्याशङ्कायामाह—**तवभ्रातुरित्यादिना** ॥१८॥ **रामानु०**आर्तानां नष्टैश्वर्यकामानां ॥१९॥ **रामानु०** ज्ञानविज्ञानसंपन्नः ज्ञानं ब्रह्मविषयकंज्ञानं।

[ पा० ] १ घ. महावीर. २ ङ.—ट. वक्ष्याम्यद्य. क. ख. ग. वक्ष्यामित्वां. ३ क. ख. ग. कुमारोसौ. ४ छ. झ. ट. रासीन्निवेदिता. ५ ङ.—ट. प्रस्थितौ. ६ छ. झ. ट. सतेभ्रातुर्हि. ७ छ. झ. ट. रणकर्मणि.

तत्क्षमं न विरोधस्ते सह तेन महात्मना ॥ दुर्जयेनाप्रमेयेन रामेण रणकर्मसु ॥ २१ ॥
शूर वक्ष्यामि ते किंचिन्न चेच्छाम्यभ्यसूयितुम् ॥ श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् ॥२२॥
यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय ॥ विग्रहं मा कृथा वीर भ्रात्रा राजन्बलीयसा ॥ २३ ॥
अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ॥ सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥ २४ ॥
लालनीयो हि ते भ्राता यवीयानेष वानरः ॥ तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ॥ २५ ॥
न हि तेन समं बन्धुं भुवि पश्यामि कंचन ॥ दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ॥ २६ ॥
वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु ॥ सुग्रीवो विपुलग्रीवस्तव बन्धुः सदा मतः ॥ २७ ॥
भ्रातुः सौहृदमालम्ब नान्या गतिरिहास्ति ते ॥ २८ ॥
यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् ॥ याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥२९॥

प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ॥
क्षमो हि ते कोसलराजसूनुना न विग्रहः शक्रसमानतेजसा ॥ ३० ॥

---

परिपालनत्वमुक्तं। इदमुपलक्षणं धर्मान्तराणां । अनेन सौलभ्यंचोक्तं । समस्तकल्याणगुणसमृद्धिमाह—गुणानामाकरइति । बहुवचनेनासङ्ख्येयत्वमुक्तं । आकरइत्यनेन गुणातिरिक्तत्वंगुणिनउक्तं । महानित्यनेन गुणानामप्युत्कर्षावहंगुणिस्वरूपमुच्यते । धातूनामित्यनेन गुणानांज्ञानशक्तिबलैश्वर्यादिभेदेन नानाविधत्वमुक्तं । शैलेन्द्रो हिमवान् । अनेनाप्रकंप्यत्वमुक्तं ॥ १८—२० ॥ रणकर्मसु दुर्जयेनेत्यन्वयः ॥ २१ ॥ ते अभ्यसूयितुंनेच्छामि त्वद्विषयेअभ्यसूयां दोषाविष्करणं कर्तुंकदाचिदपिनेच्छामीत्यर्थः । यद्वा मया वक्ष्यमाणे हिते त्वया अभ्यसूयानकार्येत्यर्थः ॥ २२ ॥ यौवराज्येनाभिषेचय यौवराज्येनोपलक्षितो यथाभवति तथाभिषिञ्चेत्यर्थः ॥ २३—२५ ॥ प्रत्यनन्तरं त्वदनन्तरं । समीपवर्तिनं वा कुरुष्व ॥ २६—२७ ॥ भ्रातुरित्यर्धं ॥ आलम्ब आलम्बस्व ॥ २८ ॥ अवैषि जानासि । प्रयत्नेन बहुप्रयत्नेन ॥ २९ ॥ स्ववचनाश्रवणेबाधकंसूचयन्त्याह—प्रसीदेति ॥ प्रसीद त्यक्तरोषो भव । पथ्यं हितं । जल्पितं वचनं । भावे क्तः ।

---

विज्ञानं शिल्पशास्त्रयोर्ज्ञानं । "मोक्षेधीर्ज्ञानमन्यत्रविज्ञानंशिल्पशास्त्रयोः" इत्यमरः । यद्वा ज्ञानं सामान्यज्ञानं । विज्ञानं विशेषज्ञानं ॥२०॥ तनि० साधूनां संसारतापतप्तानां । निवासवृक्षः विश्रामस्थानं । "वासुदेवतरुच्छायानातिशीतानघर्मदा" इत्युक्तत्वात् । साधूनां " साधवस्त्वभिगन्तव्याः " इत्युक्त्याअभिगन्तव्यतयायेप्रसिद्धास्तेषामावासवृक्षः अभिगन्तव्यस्थानं । साधूनां ज्ञानिनां । आवासवृक्षः प्राप्यदेशइतिच । आपन्नानां आकिञ्चन्यात्सङ्गपुरस्कारेणशरणंगतानांदृप्तानां । सदागतिः अपुनरावृत्तिप्राप्यस्थानं । अभ्युपगमप्रारब्धसहिष्णुतयादेहस्थितिकालेपिगतिरितिच । आर्तानां प्रारब्धदेहेनार्दितानां संश्रयः इतरवैलक्षण्येनाश्रयणीयः । यद्वा साधूनां भगवत्प्राप्तिकामानां । आपन्नानां कैवल्यनिष्ठानां । आर्तानां ऐश्वर्यकामानां । इतरवैलक्षण्येनाश्रयणीयः । यशसश्च यशसएव नायशसः । एकभाजनं अनितरसाधारण्येनाश्रयः । सुप्रतिष्ठितत्वपरिपूर्णत्वादिद्योतनायभाजनग्रहणं । अत्रयशश्शब्देन औदार्यप्रतापजनितकीर्तिर्लोकप्रसिद्धा । " नतस्येशेकश्चनतस्यनाममहद्यशः " इत्युक्तवैदिकप्रसिद्धाचकीर्तिःकथिता ॥१९–२०॥ ति० दुर्जयेनेत्यस्याद्यर्धपूर्वान्वयि ॥ २१ ॥ किंचिद्वक्ष्यमाणंत्वयाऽभ्यसूयितुंनेच्छामि । कथमियंमांप्रतिवदतीतिमदसूयानकर्तव्येत्यर्थः । आर्षत्वादसमानकर्तृत्वेपितुमुन् ॥ २२ ॥ शि० सुग्रीवं दानादिभिः प्रत्यनन्तरं प्राप्तान्तररहितं अन्तरङ्गमित्यर्थः । कुरुष्व । अतएवससुग्रीवःपार्श्वेतिष्ठतु ॥ २६ ॥ स० भ्रातृसौहृदमालंब्य आलंब्यैवगतिर्नान्यातेऽस्ति । आलंब्यस्थितस्येतिशेषोवा । " यदोर्वंशंनरःश्रुत्वा । सेतुंदृष्ट्वासमुद्रस्य " इत्यादौसमानकर्तृकत्वाभावस्यदर्शनात्तादृशनियमस्यप्रायिकत्वाद्वानदोषः । विस्तृतंचैतच्छेषवाक्यार्थचन्द्रिकायांतत्रतत्र ॥ २८ ॥ इतिपञ्चदशःसर्गः ॥ १५ ॥

[ पा० ] १ ख. छ.—ट. तत्क्षमो. २ ख. घ. राज्येतु. क. ग. राज्येच. ३ ङ. च. ञ. विरोधं. ४ ङ.—ट. राजन्यवीयसा. ५ छ. झ. ट. विपुलग्रीवोमहाबन्धुर्मतस्तव. ६ क. ख. ग. ङ. च. ज.—ट. भ्रातृसौहृदं. ७ क. ख. ग. ङ.—ट. मालम्ब्य. ८ छ. झ. ट. प्रियत्वेन.

तदा हि तारा हितमेव वाक्यं तं वालिनं पथ्यमिदं बभाषे ॥
न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाशकाले ॥ ३१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

## षोडशः सर्गः ॥ १६ ॥

वालिनासनिर्भर्त्सनंतारानिवर्तनपूर्वकंयुद्धायनिर्गमः ॥ १ ॥ वालिसुग्रीवाभ्यांसवीरवादंनियुद्धप्रवर्तनम् ॥ २ ॥ ततोयुद्धेवालिनिवर्धमानेसुग्रीवेचह्रीयमानेश्रीरामेणवालिवक्षसिशरविमोक्षणम् ॥ ३ ॥ वक्षस्स्रवद्रुधिरोक्षितेनवालिनानिश्चेष्टंक्षितौपतनम् ॥ ४ ॥

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् ॥ वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १ ॥
गर्जतोस्य [1]च संरम्भं भ्रातुः शत्रोर्विशेषतः ॥ [2]मर्षयिष्याम्यहं केन कारणेन वरानने ॥ २ ॥
अधर्षितानां शूराणां [3]समरेष्वनिवर्तिनाम् ॥ धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥ ३ ॥
सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे ॥ सुग्रीवस्य च संरम्भं हीनग्रीवस्य [4]गर्जतः ॥ ४ ॥
न च कार्यो विषादस्ते राघवं प्रति मत्कृते ॥ धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५ ॥
निवर्तस्व सह स्त्रीभिः कथं [5]भूयोऽनुगच्छसि ॥ [6]सौहृदं दर्शितं [7]तारे मयि [8]भक्तिः कृता त्वया ॥ ६ ॥
प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि संभ्रमम् ॥ [9]दर्पमात्रं विनेष्यामि न च प्राणैर्वि[10]मोक्ष्यते ॥ ७ ॥
[11]अहं ह्याजिस्थितस्यास्य करिष्यामि [12]यथेप्सितम् ॥ वृक्षैर्मुष्टिप्रहारैश्च पीडितः प्रतियास्यति ॥ ८ ॥
[13]न मे गर्वितमायस्तं सहिष्यति दुरात्मवान् ॥ कृतं तारे सहायत्वं [14]सौहृदं दर्शितं मयि ॥ ९ ॥

---

शक्रसमानतेजसा शक्रतेजस्तुल्यतेजसा । अनेन वालिनो रामस्याधिक्यमुक्तं ॥ ३० ॥ तदा वक्तव्यकाले । वालिनंप्रतीतिशेषः । भाषतेर्द्विकर्मकत्वात् । तस्य तस्मै । चतुर्थ्यर्थेषष्ठी । "रुच्यर्थानां—" इति हिस्मृतिः । विनाशकालत्वेहेतुः कालाभिपन्नस्येति । मृत्युनागृहीतस्येत्यर्थः ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चदशःसर्गः ॥ १५ ॥

---

अथ वालिवधः षोडशे—तामेवमित्यादि ॥ १—२ ॥ धर्षणामर्षणं धर्षणस्य आमर्षणं सहनमितिवा । धर्षणायाः तिरस्कारस्य मर्षणमितिवार्थः ॥ ३ ॥ हीनग्रीवस्येतिपरुषोक्तिः ॥ ४ ॥ पापं निरपराधवधं ॥ ५ ॥ निवर्तने क्रियमाणेपि भूयः । सौहृदं सुहृत्कर्तव्यं । हितोपदेशइति यावत् । भक्तिः कृता प्रकाशितेत्यर्थः ॥ ६ ॥ सुग्रीवं प्रतियोत्स्यामि ॥ ७ ॥ संप्रहारव्याकुलेन त्वया कथं तस्य प्राणरक्षणं कर्तुं शक्यं तत्राह—अहं हीति ॥ यथेप्सितं ईप्सितं तत्प्राणरक्षणमनतिक्रम्य । आजौ युद्धे स्थितस्य ॥ ८ ॥ गर्वितं गर्वं । आयस्तं आयासं । प्रयत्नमिति यावत् । सहि-

---

वि० सुसंरब्धं स्वार्थेनिष्ठा । सुसंरंभमित्यर्थः ॥ सुसंरंभमितिपाठः सुगमः ॥ २ ॥ स० मद्गमनेनग्रीवाहीनोभवतीतिमत्वाहीनग्रीवस्येत्युक्तवान् ॥ शि० इनग्रीवस्यइनाश्रेष्ठाविपुलेत्यर्थः । ग्रीवायस्यतस्य । संरंभं गर्वंगर्जितंचसोढुंनैव समर्थः । हिशब्दएवार्थे । अतएवविपुलग्रीवइत्यनेननविरुध्यते ॥ ४ ॥ ति० राघवंप्रति राघवनिमित्तभयमालक्ष्य । मत्कृतेत्वयाविषादोन कार्यः । यतोधर्मज्ञत्वादिगुणःसः ॥ ५ ॥ शि० यदुक्तंदानमानादिसत्कारैरितितस्यप्रत्युत्तरमाह—**नेति** । गर्वितं सामानाधिकर-

[पा०] १ छ. झ. ञ. ट. सुसंरब्धं. ख. ङ. ज. तुसंरंभं. २ ख. च. छ. झ. ट. मर्षयिष्यामिकेनापि. ३ ख. संयुगेषु. ४ ङ. छ. झ. ञ. ट. गर्जितं. ५ ङ. च. ज. ञ. मामनुगच्छसि. ६ क. ग. दर्शितंसौहृदं. ७ क. ग. च.—ट. तावन्मयि. ८ ङ.—ट. भक्तिस्त्वयाकृता. ९ ख. घ.—ट. दर्पंचास्य. क. ग. दर्पंचास्यापनेष्यामि. १० ख. ङ. छ.—ट. विंयोक्ष्यते. च. विंयोज्यते. ११ ङ. च. ज. ञ. अहमाजि. १२ ङ. झ. ट. यदीप्सितं. १३ ङ. च. ज. ञ. नाहंगर्वितमायस्तंसहिष्यामिदुरात्मनः. १४ क. ख. घ.—ट. दर्शितंसौहृदं.

शापिताऽसि मम प्राणैर्निवर्तस्व जयेन च ॥ अहं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १० ॥
तं तु तारा परिष्वज्य वालिनं प्रियवादिनी ॥ चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११ ॥
ततः स्वस्त्ययनं कृत्वा मन्त्रवद्विजयैषिणी ॥ अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२ ॥
प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयम् ॥ नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३ ॥
स निःश्वस्य महातेजा वाली परमरोषणः ॥ सर्वतश्चारयन्दृष्टिं शत्रुदर्शनकाङ्क्षया ॥ १४ ॥
स ददर्श ततः श्रीमान्सुग्रीवं हेमपिङ्गलम् ॥ सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ॥ १५ ॥
स तं दृष्ट्वा महावीर्यं सुग्रीवं पर्यवस्थितम् ॥ गाढं परिदधे वासो वाली परमरोषणः ॥ १६ ॥
स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् ॥ सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ॥ १७ ॥
श्लिष्टमुष्टिं समुद्यम्य संरब्धतरमागतः ॥ सुग्रीवोपि तमुद्दिश्य वालिनं हेममालिनम् ॥ १८ ॥
तं वाली क्रोधताम्राक्षः सुग्रीवं रणपण्डितम् ॥ आपतन्तं महावेगमिदं वचनमब्रवीत् ॥ १९ ॥
एष मुष्टिर्मया बद्धो गाढः सन्निहिताङ्गुलिः ॥ मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥ २० ॥
एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् ॥ तवैव चाहरन्प्राणान्मुष्टिः पततु मूर्धनि ॥ २१ ॥
ताडितस्तेन संक्रुद्धः समभिक्रम्य वेगितः ॥ अभवच्छोणितोद्गारी सोत्पीड इव पर्वतः ॥ २२ ॥
सुग्रीवेण तु निःसङ्गं सालमुत्पाट्य तेजसा ॥ गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३ ॥

ष्यतीति परस्मैपदमार्षं । सहायत्वं बुद्धिसाहाय्यं ॥ ९—१० ॥ दक्षिणा स्वस्मिन्परस्मिंश्च तुल्यहिता ॥ ११ ॥ मन्त्रवत् स्वस्त्ययनमन्त्रवत् । मन्त्रश्च वैदिकादन्य इति ज्ञेयः ॥ १२—१३ ॥ चारयन् प्रस्थित इति शेषः ॥ १४ ॥ सुसंवीतं वाससा सुष्ठु परिवीतं। अवष्टब्धं युयुत्सया भूमिमाक्रम्य स्थितं ॥ १५ ॥ पर्यवस्थितं समीपे अवस्थितं ॥ १६ ॥ कृतक्षणः कृतोत्सवः । लब्धावसरो वा । " निर्व्यापारस्थितौ कालविशेषोत्सवयोःक्षणः " इत्यमरः ॥ १७—२० ॥ पततु मूर्धनीत्यनन्तरमितिकरणंद्रष्टव्यं ॥ २१ ॥ तेन वालिना ताडितः । अतएव संक्रुद्धः । वेगितः संजातवेगः । पुनः प्रहारायेतिशेषः । अत्रसुग्रीवइत्यध्या-

प्यसंबन्धेनस्वबलवत्त्वादिजनितगर्वविशिष्टं । मेआयस्तं प्रवृत्तिं । नसहिष्यति । एतेनतस्यमद्वशवर्तित्वंनभविष्यतीतिसूचितं ॥ ९ ॥ **रामानु०** जवेनेतिपाठः । जवेन मनोजवेन । यद्वा जयेनेतिपाठः । जयाशिषेत्यर्थः । चोवधारणे ॥ **ती०** अहंजित्वाअहंनिवर्तिष्यइत्यहंशब्दद्वयस्यनिर्वाहः ॥ **ति०** जनेन स्वपरिवारजनेनालं । जित्वा जयमात्रंकृत्वा । निवर्तिष्ये नतुवधमित्यर्थः । अहंजित्वेतिपाठस्त्वसांप्रदायिकः ॥ **स०** तं भ्रातरं सुग्रीवं । अलंजित्वानिवर्तिष्ये । अहंजित्वेतिपाठे तमहमित्येकंपदं । "तमं-तुतमसासमं " इत्युक्तेः तमं हन्तीतितमहस्तंसूर्यावतारं । बाहुलकाड्डः ॥ १० ॥ **शि०** तं स्वोक्तस्वीकाराभाववन्तं वालिनं ॥ ११ ॥ **ति०** मन्त्रवित् स्वस्त्ययनमन्त्रवेत्री । देवांशत्वाद्वेदनं ॥ १२ ॥ **शि०** कृतक्षणः प्रकटितयुद्धोत्सवः ॥ १७ ॥ **शि०** सुनियताङ्गुलिः सुनियताः यथोचितंनिवेशिताअङ्गुलयोयस्मिन्सएषमहान्मुष्टिः ॥ २० ॥ **ती०** तेन वालिना । सोत्पीडइव सनिर्झरइव । समतिक्रम्य धीरसमयमितिशेषः । तथाचोक्तं—"धीरंप्रवर्ततेपूर्वंधिक्कर्तातदनन्तरम् । समयोऽयंद्वन्द्वयुद्धे " इति ॥ वेगितः संजातचलनः ॥ २२ ॥ **ति०** निश्शङ्कं शोणितोद्गारजदुःखसंबन्धरहितंयथातथाऽभिहतोवालीसागरेनौरिववि-

[ पा० ] १ क. ग. ङ. च. छ. झ. ञ. ट. जनेनच. २ ङ. छ. झ. ञ. ट. अलंजित्वा. ३ ख. तमलं. ४ झ. मन्त्रवित्. ५ क. ख. घ. ङ. छ.—ट. नगर्यानिर्ययौ. ६ ख. समुत्पत्य. ७ ङ.—ट. महारोषो. क.—घ. महावेगो. ८ घ. परममर्षणः. ङ.—ट. परमवेगवान्. ९ छ. झ. ट. तंसदृष्ट्वामहाबाहुः. क. ङ. च. ज. ञ. तंसदृष्ट्वामहाबाहुं. ग. तंसदृष्ट्वामहावीर्यः. १० ङ. ज. ञ. समुपस्थितं. ११ छ. झ. ट. परमकोपनः. घ. परममर्षणः. ङ. ज. ञ. समरदुर्मदः. १२ ङ. च. ज. ञ. मुद्यम्यदक्षिणं. १३ घ. ङ. क्लिष्टमुष्टिं. च. छ. झ. ञ. ट. श्लिष्टंमुष्टिं. १४ क. ख. घ.—ट. समुद्दिश्य. १५ क. घ.—ट. ताम्राक्षं. १६ छ. झ. ट. रणकोविदं. घ. च. ज. ञ. रणकर्कशं. १७ छ. झ. ट. महान्बद्धो. १८ क. ङ. छ. झ. ट. सुनियताङ्गुलिः. १९ ख. सतुवेगविमुक्तस्तु. २० छ.—ट. तवचैषहरन्. क. ख. ग. तवचैवहरन्. २१ ख. समतिक्रम्य. ङ. च. ज. ञ. समभिद्रुत्य. २२ ग. घ. छ. झ. ट. वेगतः. २३ छ. झ. ट. सापीडइव. २४ क. ग. सुग्रीवेणापि. २५ छ. झ. ञ. ट. निश्शङ्कं.

स[1] तु वाली प्रचलितः सालताडनविह्वलः ॥ [2]गुरुभारसमाक्रान्तो नौ[3]सार्थ इव सागरे ॥ २४ ॥
तौ भीमबलविक्रान्तौ [4]सुपर्णसमवेगिनौ ॥ [5]प्रवृद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ॥
परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ ॥ २५ ॥
ततोऽवर्धत वाली तु बलवीर्यसमन्वितः ॥ सूर्यपुत्रो महावीर्यः सुग्रीवः [6]परिहीयते ॥ २६ ॥
वालिना [7]भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ॥ वालिनं प्रति सामर्षो दर्शयामास [8]लाघवम् ॥ २७ ॥
वृक्षैः सशाखैः [9]संशिखैर्वज्रकोटिनिभैर्नखैः ॥ मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः ॥
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥ २८ ॥
तौ [10]शोणिताक्तौ युध्येतां वानरौ वनचारिणौ ॥ मेघाविव महाशब्दै[11]स्तर्जयानौ परस्परम् ॥ २९ ॥
[12]हीयमानमथोऽपश्यत्सुग्रीवं वानरेश्वरम् ॥ वी[13]क्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ ३० ॥
ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् ॥ [14]शरं च वीक्षते वीरो वालिनो [15]वधकारणात् ॥ ३१ ॥
ततो धनुषि संधाय शरमाशीविषोपमम् ॥ पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३२ ॥
तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः ॥ प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३३ ॥
मुक्तस्तु वज्रनिर्घोषः [16]प्रदीप्ताशनिसन्निभः ॥ राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३४ ॥
ततस्तेन महातेजा [17]वीर्योत्सिक्तः कपीश्वरः ॥ वेगेनाभिहतो वाली निपपात महीतले ॥ ३५ ॥

---

हार्ये । सोत्पीडः सनिर्झरः ॥ २२—२३ ॥ नौः पोतः ॥ २४ ॥ विक्रान्तौ विक्रमवन्तौ भीमबलौ च तौ विक्रान्तौ चेति कर्मधारयः । सुपर्णसमवेगिनौ गरुडवेगतुल्यवेगवन्तौ । कर्मधारयान्मत्वर्थीयः । चन्द्रसूर्याविव पौर्णमासीचन्द्रसूर्याविव । प्रवृद्धावभूतामित्यर्थः ॥ २५ ॥ अवर्धत । तेजसेति शेषः । परिहीयते पर्यहीयतेत्यर्थः ॥ २६ ॥ लाघवं शैघ्र्यं । “ लघु माधुर्यशीघ्रयोः ” इतिनिघण्टुः ॥२७—२८॥ युध्येतां अयुध्येतां । तर्जयानाविति । उभयत्रागमशासनस्यानित्यत्वादडभावः मुमभावश्च ॥२९—३०॥ शरं वीक्षते । वालिवधोचितं शरं पर्यालोचयदित्यर्थः ॥ ३१ ॥ कालचक्रं यमस्यायुधविशेषः ॥ ३२ ॥ पत्ररथेश्वराः पक्षिश्रेष्ठाः ॥ ३३ ॥ वज्रस्येव निर्घोषोयस्यतथा । प्रदीप्ताशनिसन्निभः प्रदीप्तविद्युत्तुल्यः । “ अशनिस्तु द्वयोर्वज्रे सौदामिन्यां ” इतिदर्पणः ॥ ३४ ॥ तत इत्यादिश्लोकद्वयमेकान्वयं ॥ उद्धूतः पातितः । आश्वयुक्समये आश्वयुक्समयरूपे । मासि पौर्णमास्यां । महीतलेपातितइत्यन्वयः

---

ह्वलोऽभवत् ॥ २३ ॥ **ती०** सार्थनौः संघसहितानौरिव । सार्थाः व्यावहारिकावा ॥ २४ ॥ **ति०** चन्द्रसूर्याविवेति । यद्यर्थातिशयोक्तिरेषा ॥ **शि०** भीमबलविक्रान्तौ बलेनविक्रान्तौ कृतपादन्यासौ । अतएवभीमौ भयंकरौ । भीमौचतौबलविक्रान्तावितिकर्मधारयः । भयंकरबलेनकृतपादन्यासावित्यर्थोवा । सुपर्णसमवेगितौ गरुडसमवेगंप्राप्तौ । प्रयुद्धौ प्रवृद्धयुद्धविशिष्टौ । तौवालिसुग्रीवौ अंबरेचन्द्रसूर्याविवदृश्येतेइतिशेषः । **स०** सुपर्णवद्बलवेगविशिष्टौ ॥२५॥ **ति०** परिहीयत अडभावआर्षः ॥२६॥ **शि०** राघवंदर्शयामास बोधयामास । स्वहानिंवालिनोवृद्धिंचेतिशेषः ॥२७॥ **ती०** सशिखैःसाग्रैः ॥ **शि०** सिंहावलोकनन्यायेन

**[ पा० ]** १ क. च. ज.—ट. सतुवृक्षेणनिर्भग्नः. ग. ङ. सतुवृक्षेणनिर्भिन्नः. २ ङ. च. ज.—ट. गुरुभारभराक्रान्तानौस्ससार्थैवसागरे. क.—घ गुरुभारभराक्रान्तासागरेनौरिवाभवत्. ३ च. सार्थनौरिव. ४ क. ख. ग. सुपर्णानिलवेगितौ. ङ. छ. ञ. सुपर्णबलवेगितौ. घ. सुपर्णसमतेजसौ. छ. झ. ट. सुपर्णसमवेगितौ. ५ ट. प्रयुद्धौ. ६ छ. झ. ञ. ट. परिहीयत. ७ घ. भिन्नदर्पस्तु. ८ क. छ. झ.ट. राघवं. ९ क. ख. ङ.—ट. शिखरैः. १० ख. शोणिताक्षौ. ११ ख. ङ. झ. ञ. ट. स्तर्जमानौ. १२ छ. ज. झ. ट. हीयमानमथापश्यत्. ख. हीयमानंततोपश्यत्. १३ क. ख. ग. ङ.—ट. प्रेक्षमाणं. १४ ख. ग. घ. छ. झ. ञ. ट. सशरंवीक्षते. क. च. ज. सज्यंचक्रेधनुर्वीरो. १५ छ. झ. ट. वधकाङ्क्षया. १६ ङ. प्रदीप्तानलसंनिभः. १७ क. ग. छ.—ट. वीर्ययुक्तः.

इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले ॥ आश्वयुक्समये मासि गतश्रीको विचेतनः ॥
[ बाष्पसंरुद्धकण्ठस्तु वाली चार्तस्वरः शनैः ] ॥ ३६ ॥
नरोत्तमः कालयुगान्तकोपमं शरोत्तमं काञ्चनरूप्यभूषितम् ॥
ससर्ज दीप्तं तममित्रमर्दनं सधूममग्निं मुखतो यथा हरः ॥ ३७ ॥
अथोक्षितः शोणिततोयविस्रवैः सुपुष्पिताशोक इवानलोद्धतः ॥
विचेतनो वासवसूनुराहवे विभ्रंशितेन्द्रध्वजवत्क्षितिं गतः ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ॥ १७ ॥

रामबाणेनहृदयविदारणेपि इन्द्रदत्तकाञ्चनमालाधारणेनप्राणान्धारयतावालिना स्वसमीपमागतंरामंप्रतिस्वमारणस्यान्याय्यत्वोक्त्यागर्हणम् ॥ १ ॥

ततः शरेणाभिहतो रामेण रणकर्कशः ॥ पपात सहसा वाली निकृत्त इव पादपः ॥ १ ॥
स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः ॥ अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥
तस्मिन्निपतिते भूमौ वानराणां गणेश्वरे ॥ नष्टचन्द्रमिव व्योम न व्यराजत भूतलम् ॥ ३ ॥

---

॥ ३५—३६ ॥ उक्तमर्थं वृत्तान्तरेण संगृह्णाति—नरोत्तम इत्यादिश्लोकद्वयेन ॥ कालयुगान्तकोपमं । युगान्तकालोपममित्यर्थः । स्वार्थे कप्रत्ययः । युगान्तकालो युगान्तमृत्युः । काञ्चनरूप्यभूषितं परभागाय स्वर्णरजताभ्यामलंकृतं । सधूममित्यनेन ज्वालोन्मुखत्वमुच्यते । हरः प्रलये संहर्ता । नन्वत्र एकवचनादेकेन बाणेन वाली हत इत्युक्तं । इदमुत्तरत्र तारावाक्येन " रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः " इत्यनेन बहुबाणहतत्ववचनेन विरुध्यते । मैवं व्याकुलवचनत्वात्तस्य । यतस्तारा एकबाणहतं श्रुत्वाप्येवमाह । वक्ष्यति हि—"तं भार्या बाणमोक्षेण रामदत्तेन संयुगे । हतं प्लवगशार्दूलं तारा शुश्राव वालिनं" इति ॥ सर्गोपक्रमेच " निजघान च तत्रैनं शरेणैकेन राघव" इत्यत्रैकशब्दःप्रयुक्तः । "प्रतिज्ञातंचरामेण तथावालिवधंप्रति" इति प्रतिज्ञानिर्वाहाय छद्मनापि वालिवधःकृतः ॥ ३७—३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

---

अथ रामंप्रति वालिनिन्दा सप्तदशे—ततः शरेणेत्यादि ॥ आरम्भणार्थोयमनुवादः ॥ १ ॥ रश्मिः

---

तयोर्युद्धमेववर्णयति—**वृक्षैरित्यादिभिः** ॥ २८ ॥ **ती०** इन्द्रध्वजइति । गौडदेशेकस्मिंश्चिदुत्सवेआश्वयुक्पौर्णमास्यामिन्द्रमुद्दिश्यध्वजंसंस्थाप्य उत्सवानन्तरंध्वजंपातयन्तितद्वद्वालीपातितइत्यर्थः ॥ **ति०** आश्वयुक्समयेमासिपौर्णमास्यामिन्द्रध्वजोत्सवान्ते उद्धूतः उत्क्षिप्तः । इन्द्रध्वजोयथाभूमौपपात तद्वद्वालीग्रीष्मान्तेपतितइत्यर्थः । अतएवसुग्रीवाभिषेकसमयेश्रावणोमासोऽभ्युनावर्ततइतिवचनेनेनविरोधः ॥ **शि०** आश्वयुजः अश्विनीयुक्तपौर्णमास्याः सम्यक्प्रयःप्राप्तिर्यस्मिंस्तस्मिन् । आश्विनेइत्यर्थः ॥ **स०** आश्वयुगितिसमयः संकेतोयस्यतस्मिन् ॥ ३६ ॥ **ती०** कालयुगान्तकोपमं अन्तयतीत्यन्तकः । युगानांकृतत्रेतादीनां अन्तकः युगान्तकः । कालश्चासौयुगान्तकश्चेतिविशेष्यपूर्वपदः कर्मधारयः । विशेषणविशेष्यभावस्यकामचारित्वात् । सउपमायस्यतं ॥ **वि०** मुखतः मुखस्थललाटनेत्रेणेत्यर्थः ॥ ३७ ॥ **ती०** फलश्रुतिस्स्कान्दे—"गिरीणांभेदनंचैवकिष्किन्धागमनंतथा । वालिसुग्रीवयोर्युद्धंश्रुत्वाविजयपूर्वकम् । युद्धेविजयमाप्नोतिवालिनोविजयंयथा" इति ॥ ३८ ॥ इतिषोडशःसर्गः ॥ १६ ॥

**[ पा० ]** १ ङ.—ट. गतसत्वो. २ इदमर्धं च.—झ. ट. पाठेषुदृश्यते. ३ क. ग. ङ.—झ. कालइवान्तकोपमं. ४ झ. रूपभासितं. ङ. च. ज. ञ. ट. रूपभूषितं. ५ क. कर्शनं. ६ क. ङ.—ट. प्रपुष्पिता. ७ ङ. छ. झ. इवाचलोद्गतः. च. इवाचलोत्थितः. ट. इवानिलोद्धतः. ख. इवातिलोहितः. ८ ख.—ट. प्रभ्रंशितेन्द्र. ९ झ. अस्मिन्निपतिते. १० क. ख. ङ. ज.—ट. हर्यृक्षाणां. ११ झ. ट. मेदिनी.

भूमौ निपतितस्यापि तस्य देहं महात्मनः ॥ न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४ ॥
शक्रदत्ता वरा माला काञ्चनी [1]वज्रभूषिता ॥ दधार [2]हरिमुख्यस्य प्राणांस्तेजः श्रियं च सा ॥ ५ ॥
स तया मालया वीरो हैमया हरियूथपः ॥ [3]सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत् ॥ ६ ॥
तस्य माला च देहश्च मर्मघाती च यः शरः ॥ त्रिधेव रचिता लक्ष्मीः [4]पतितस्यापि शोभते ॥ ७ ॥
तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम् ॥ रामबाणासनक्षिप्तमावहत्परमां गतिम् ॥ ८ ॥
तं [5]तदा पतितं संख्ये गतार्चिषमिवानलम् ॥ [6]बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥ ९ ॥
ययातिमिव पुण्यान्ते [7]देवलोकात्परिच्युतम् ॥ आदित्यमिव कालेन युगान्ते भुवि पातितम् ॥१०॥
महेन्द्रमिव [8]दुर्धर्षं महेन्द्रमिव दुःसहम् ॥ महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् ॥ ११ ॥
[9]सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ॥ [10]लक्ष्मणानुगतो रामो ददर्शोपससर्प च ॥ १२ ॥
[ तं [11]तथा पतितं वीरं गतार्चिषमिवानलम् ॥ [12]बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥
उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥ ] १३ ॥
तं [13]दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ॥ [14]अब्रवीत्प्रश्रितं वाक्यं परुषं धर्मसंहितम् ॥ १४ ॥
[ [15]बाष्पसंरुद्धकण्ठस्तु वाली सार्तस्वरं शनैः ॥ स भूमावल्पतेजोसुर्निहतो नष्टचेतनः ॥ १५ ॥
अर्थसंहितया वाचा गर्वितं [16]रणगर्वितः ॥ उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ॥ १६ ॥ ]

---

बन्धनरज्जुः ॥ २—३ ॥ तेजः प्रतापः ॥ ४ ॥ उक्तेऽर्थे हेतुमाह—शक्रेति ॥ ५ ॥ हैमयेति क्लीबभाव आर्षः ॥ ६ ॥ लक्ष्मीः तेजः ॥ ७ ॥ स्वर्गमार्गस्य प्रभावनं प्रापकं । "भू, प्राप्तौ" इत्यस्माल्ल्युट् । अतएव परमां गतिं आवहत् । संपादयामासेत्यर्थः ॥ ८ ॥ तं तदेत्यादिचत्वारः ॥ संख्ये युद्धे । तं वीरं रामं बहुमान्य साधुबाणं पातितवानसीति श्लाघयित्वा । स कुत्र स्थित इति शनैः वेदनातिशयान्मन्दं वीक्षमाणं । इवशब्दो वाक्यालंकारे । ययातिमिव । कालेन दैवेन । "कालः श्यामलदिष्टयोः" इति दर्पणः । महेन्द्रमिव दुःसहं आभिमुख्येन स्थातुमशक्यं । दीप्तास्यं दीप्तमुखं । हरिलोचनं कपिलनेत्रं ॥ ९—१३ ॥ प्रश्रितं विनयान्वितं ॥ १४—१६ ॥

---

**ति०** त्रिधारचितेव त्रिधाविभक्तेव । मालादेहशररूपालक्ष्मीरितियावत् ॥ ७ ॥ **ती०** स्वर्गमार्गः प्रभवत्यस्मादितिस्वर्गमार्गप्रभावनं । आवहत् संपादयामास । वालिनोमुक्तिरभूदित्यर्थः ॥ **ति०** बाणाअस्यन्तेऽनेनेतिबाणासनं धनुः ॥ **स०** अस्त्रमत्रबाणः । बाणासनं धनुः । स्वर्गमार्गप्रभावनमितियतः अतः परमांगतिमावहत् ॥ ८ ॥ **स०** तंतथेतिश्लोकस्थद्वितीयान्तानांचतुर्थश्लोकस्थयाददर्शेतिक्रिययाऽन्वयः ॥ ९ ॥ **ति०** महेन्द्रं उपेन्द्रस्यैववृत्रवधोत्तरमिदंनामेत्येके । महेन्द्रः आजानदेवः । उपेन्द्रः कर्मदेवइत्यन्ये ॥ **स०** महेन्द्रमिवदुर्धर्षमित्यादि पूर्वमेवबोध्यं । अतोगतार्चिषमित्यादिनानविरोधः ॥ ११ ॥ **शि०** हरिलोचनं पीतनेत्रं । हरिच्छब्दःपीतपर्यायः । "हरिद्राभःपालाशोहरितोहरित्" इतिकोशः । आर्षस्तलोपः इतिभट्टाः । वस्तुतस्तु हरिशब्दस्यापिपीतवाचकत्वं । "स्वर्णवर्णोहरिःस्मृतः" इत्यनेकार्थः ॥ १२ ॥ **ति०** बहुमान्य संमान्य । शनैरेवोपयातौ समीपंगतौ ॥ **शि०** संख्येतथापतितं वीरपरिपाट्यासंग्रामभुविलुण्ठितं । अतएवबहुमान्यं अधिकंसत्करणीयं । वीक्ष्यमाणं दृष्टिपथंप्राप्तं । वीरंतं प्राप्तमोक्षंतंवालिनं । शनैरुपयातौ । "तश्चोरामृतपुच्छेषु" इतिकोशः ॥ १३ ॥ **ति०** अल्पंतेजोसवश्चयस्यसः । नष्टचेतनः नष्टचेष्टः । गर्वितं गर्वोपेतंयथाभवतितथारणगर्वितं रामं अर्थयुक्तयावाचापरुषमब्रवीदित्यन्वयः ॥

[ पा० ] १ ङ.—ट. रत्नभूषिता. २ क. हरिराजस्य. ३ क. ख. ग. सन्ध्यानुरक्त. ४ छ. पतितस्याभि. ङ. च. ज. पतितस्याव. ५ क.—ट. तथा. ६ इदमर्धं झ. ट. पाठयोर्नदृश्यते. ७ ग. ङ—ज. ञ. लोकादवच्युतं. झ. ट. लोकादिहच्युतं. ८ छ. झ. ञ. ट. दुर्धर्षमुपेन्द्रमिव. ९ ङ. च. छ. झ. ट. व्यूढोरस्कं. १० ख. ङ.—ट. लक्ष्मणानुचरो. ११ ग. ङ.—ट. पाठेष्विदमर्धत्रयंदृश्यते. १२ ट. बहुमान्यंच. १३ घ. सदृष्ट्वा. १४ ङ—ट. अब्रवीत्परुषंवाक्यंप्रश्रितं. १५ इदंश्लोकद्वयं क. ख. ग. ङ.—ज. ञ. पाठेषुदृश्यते. झ. ठ. पाठयोस्तु बाष्पसंरुद्धकण्ठस्तु उवाचरामंसंप्रेक्ष्येत्यर्धद्वयवर्जंदृश्यते. १६ झ. ट. रणगर्वितं.

[1]त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ॥ [2]कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ॥ १७ ॥
पराङ्मुखवधं कृत्वा [3]को नु प्राप्तस्त्वया गुणः ॥ यदहं युद्धसं[4]रब्धः शरेणोरसि ताडितः ॥ १८ ॥
रामः करुणवेदी च प्रजानां च हिते रतः ॥ सानुक्रोशो जि[5]तोत्साहः समयज्ञो दृढव्रतः ॥
[6]इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ १९ ॥
दमः शमः क्षमा धर्मो धृतिः [7]सत्यं पराक्रमः ॥ पार्थिवानां गुणा राजन्दण्डश्चा[8]प्यपराधिषु ॥ २० ॥
तान्गुणान्संप्रधार्याहमग्र्यं चाभिजनं तव ॥ तारया [9]प्रतिषिद्धोपि सुग्रीवेण समागतः ॥ २१ ॥
न मामन्येन [10]संरब्धं प्रमत्तं यो[11]द्धुमर्हति ॥ [12]इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ २२ ॥
न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् ॥ जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥ २३ ॥
सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ॥ नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् ॥ २४ ॥
विषये वा पुरे वा ते यदा [13]नापकरोम्यहम् ॥ न च [14]त्वामवजाने च कस्मात्त्वं हंस्यकिल्बिषम् ॥ २५ ॥
फलमूलाशनं नित्यं [15]वानरं वनगोचरम् ॥ मामिहाप्रतियुध्यन्तमन्येन च समागतम् ॥ २६ ॥
लिङ्गमप्यस्ति ते राजन्दृश्यतेऽधर्मसंहितम् ॥ कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः ॥
धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २७ ॥

प्रश्रितं वचनमाह—त्वमित्यादिना ॥ प्रियदर्शनः प्रियं दर्शनं शास्त्रं यस्य सः । "दर्शनं दृशि शास्त्रे स्यात्" इति दर्पणः । पराङ्मुखवधं परयुद्धासक्तवधं । गुणः उत्कर्षः । युद्धसंरब्धः अन्ययुद्धपराङ्मुख इत्यर्थः ॥ १७—१८ ॥ करुणवेदी कारुण्यज्ञः । सानुक्रोशः सदयः । समयज्ञः आचारज्ञः । ते यश इत्यन्वयः ॥ १९ ॥ दम इति । "शमश्चित्तप्रशान्तिःस्याद्दम इन्द्रियनिग्रहः" ॥ २० ॥ अभिजनं आभिजात्यं । समागतः युद्धंकृतवानस्मीत्यर्थः ॥ २१ ॥ प्रमत्तं युद्धपरवशं । अर्हति । उक्तगुणो राम इति शेषः । अदर्शने तव । दर्शने त्वेवमभूदितिभावः ॥ २२ ॥ विनिहतात्मानं विशेषेण निहतबुद्धिं । धर्मध्वजं धर्मलिङ्गं । वस्तुतो धर्मरहितमित्यर्थः ॥ २३ ॥ एतदेव स्पष्टयति—सतामिति ॥ धर्मच्छद्माभिसंवृतं धर्मव्याजयुक्तं ॥ २४ ॥ यदा नापकरोमि यस्मान्नापाकरवं । त्वां नावजाने । त्वय्यवमानं नाकरवमित्यर्थः । तस्मादकिल्बिषं मां किमर्थं हंसीति संबन्धः ॥२५॥ फलेत्यस्य श्लोकस्य पूर्वेण संबन्धः ॥ २६ ॥ हे राजन् अधर्मसंहितं अधर्मकृतं । लिङ्गमपि ते अस्ति दृश्यतेच स्पष्टमवगम्यते चेत्यर्थः । कुत इत्यत्राह क

॥ १५ ॥ १६ ॥ **शि०** चरितव्रतः चरितानिकृतानिव्रतानिवेदोक्तकर्माणियेनसः ॥ १७ ॥ **ती०** समयज्ञः उचितानुचितसमयज्ञइत्यर्थः । करुणवेदी विचारादिसामग्रीसमेतस्सन् आश्रयान् रक्ष्यत्वेनवेत्तीतिकरुणवेदी ॥ **शि०** करुणवेदी करुणं दयावन्तंवेत्तिस्वकीयत्वेनजानातितच्छीलः । प्रजानांहितेइष्टसाधनेरतः । समयज्ञः समयंकार्योचितकालंजानातिसः । दृढव्रतः अप्रच्युतसंकल्पः रामोस्तीत्येतत्तवयशः भुविसर्वभूतानिसर्वप्राणिनः कथयन्ति । श्लोकचतुष्टयमेकान्वयि ॥ १९ ॥ **ति०** क्षमा शक्यप्रतिक्रियापकारसहिष्णुता ॥ २० ॥ **वि०** अन्येनसंयुक्तं अतएव ते त्वयि प्रमत्तं असावधानं मां नवेद्धुमर्हसीति बुद्धिः तवादर्शने तवदर्शनात्प्रागुत्पन्ना ॥ २२ ॥ **रामानु०** विनिहतात्मानं गूढात्मानं ॥ **वि०** विनिहतात्मानं अधर्माचरणान्नष्टात्मानं ॥ **शि०** विनिहतात्मानं विनिहतः घातितः आत्मा ममदेहोयेनतं ॥ २३ ॥ **ति०** यदा यस्मात् । पापंनकरोमि । नेत्यस्यानुकर्षः । **तनि०** अविभाव्यंकलहनिमित्तमित्याह—विषये देशे । पुरे पट्टणेवा । ते तुभ्यं । नापकरोमि भूतेलट् । त्वांनावजाने त्वयिविषयेअवज्ञांनाकरवं । आवयोस्सामन्तत्वाद्यभावात्सीमाविवादोवाजलविवादोवागोभूम्यादिविवादोवाकुलगत-

[ **पा०** ] १ इदमर्धं झ. ट. पाठयोर्नदृश्यते. २ इदमर्धं यदहंयुद्धसंरब्धइत्यर्धात्परं झ. ट. पाठयोर्दृश्यते. ३ छ. झ. ट. कोत्र. ४ छ. ज. झ. ट. संरब्धस्त्वत्कृतेनिधनंगतः. ५ क. ख. ग. ङ.—ट. महोत्साहः. ६ छ. झ. ट. इत्येतत्सर्वं. ७ छ. झ. ट. सत्त्वं. ८ क.—छ. झ. ट. प्यपकारिषु. ९ ख. झ. ट. प्रतिषिद्धस्सन्सुग्रीवेण. १० ङ. च. ज. संयुक्तं. ११ छ. झ. वेद्धुमर्हसि. क. ज. ट. वेद्धुमर्हति. १२ छ. झ. इतिते. १३ ङ. झ. ट. पापंकरोम्यहं. १४ ख. घ. ङ च. ज. ञ. त्वांप्रतियुध्येहंकस्मान्मां. क. झ. ट. मवजानेहं. घ. त्वांप्रतियोत्स्यामि. १५ ङ. च. ज. ञ. राजानंचवनौकसां.

राम[1] राजकुले जातो धर्मवानिति विश्रुतः ॥ अभव्यो भव्यरूपेण किमर्थं परिधावसि[2] ॥ २८ ॥
साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ॥ पार्थिवानां गुणा राजन्दण्डश्चा[3]प्यपराधिषु ॥ २९ ॥
वयं वनचरा राम मृगा मूल[4]फलाशनाः ॥ एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः[5] ॥ ३० ॥
भूमिर्हिरण्यं रूप्यं[6] च विग्रहे कारणानि च ॥ अत्र[7] कस्ते वने लोभो[8] मदीयेषु फलेषु वा ॥ ३१ ॥
नयश्च विनयश्चोभौ निग्रहानुग्रहावपि ॥ राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३२ ॥
त्वं तु कामप्रधानश्च कोपन[9]श्चानवस्थितः ॥ राजवृत्तै[10]श्च संकीर्णः शरासनपरायणः ॥ ३३ ॥
न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता ॥ इन्द्रियैः कामवृत्तः सन्कृष्यसे मनुजेश्वर ॥ ३४ ॥
हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ॥ किं वक्ष्यसि सतां मध्ये कर्म[11] कृत्वा जुगुप्सितम्[12] ॥ ३५ ॥
राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ॥ नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३६ ॥
सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ॥ लोकं[13] पापात्मनामेते गच्छन्ते नात्र संशयः ॥ ३७ ॥
अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम् ॥ अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ॥ ३८ ॥
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ॥ शल्यकः श्वाविडो गोधा शशः कूर्मश्च पञ्चमः ॥ ३९ ॥

इति ॥ २७ ॥ अभव्यः क्रूरः । भव्यरूपेण सौम्यरूपेण । परिधावसि चरसि ॥ २८ ॥ साम सान्त्वनं ॥ २९ ॥ लोके कस्यचिद्वधे अपराधस्तदर्थलाभेच्छा वा हेतुर्भवेत् । तत्र नाद्य इत्याह—वयमिति । पुरुषः मनुष्यः । नच केवलमनुष्यः अपितु नरेश्वरः ॥३०॥ द्वितीयोपि नेत्याह—भूमिरिति ॥ लोके भूम्यादीनि कलहे कारणानि भवन्ति । अत्र अन्येषु वा मदीयेषु फलेषु ते को लोभः किं विषयेच्छा वर्तते ॥ ३१ ॥ नयोनुग्रहश्च सद्राजधर्मौ । विनयो विपरीतनयः निग्रहश्च कुराजधर्मौ । इत्येषा राजवृत्तिरसङ्कीर्णा ग्राह्या । तथाच नृपाः कामवृत्तयो नस्युः । स्वेच्छया नयो विनयश्च निग्रहोनुग्रहश्च राजभिर्नकार्या इत्यर्थः ॥ ३२ ॥ अनवस्थितः अमर्यादः । राजवृत्तैः राजचरितैः हेतुभिः संकीर्णः । संकीर्णराजवृत्त इत्यर्थः । शरासनपरायणः यदृच्छयायं हन्तुमिच्छसि तं हंसीत्यर्थः ॥ ३३ ॥ अपचितिः पूजा । धर्मश्रद्धा नास्तीत्यर्थः । अवस्थिता व्यवस्थिता । परद्रव्याभिलाषिणीत्यर्थः । कामे च न व्यवस्थेत्याह—इन्द्रियैरिति ॥ ३४ ॥ मां हत्वा स्थितः त्वं जुगुप्सितं कर्म कृत्वा सतां साधुकर्मकारिणां मध्ये किं वक्ष्यसि ॥ ३५ ॥ परिवेत्ता ज्येष्ठेऽनूढे दारपरिग्रहकृत् । "परिवेत्तानुजोनूढे ज्येष्ठे दारपरिग्रहात्" इत्यमरः । निरयगामिनः नरकगामिनः ॥ ३६ ॥ सूचकः पिशुनः । कदर्यः लुब्धः । गच्छन्ते गच्छन्ति ॥ ३७ ॥ किमेवं निन्दसि मृगयायां मृगवधस्यादोषत्वादित्यत्राह—अधार्यमिति ॥ मृगचर्मवत् मे चर्म न धार्यं । मे रोमाणि ऊर्णादिवन्नास्तरणार्हाणि । मे अस्थि च गजास्थिवन्न स्पृश्यं । मांसानि च न भक्ष्याणि । अतः किमर्थं मां हतवानसि ॥ ३८ ॥ अभक्ष्यता कुत इत्यत्राह—पञ्चेति ॥ शल्यकः श्वाविडः गोधा शशः कूर्मश्चेति पञ्चनखाः

वैरंवा स्वयंवरादौनार्यादिविषयकविवादोवानास्तीतिभावः ॥ २५ ॥ **स०** भव्यरूपेण मङ्गलरूपेण । संहारकर्तृत्वेनभव्यरूपेण रुद्ररूपेणेत्यप्यर्थः ॥ २८ ॥ **तनि०** वयंवनचराः भवन्तः पुरचराः । वयंमृगाः भवन्तोमनुष्याः । वयंमूलफलाशनाः यूयंराजान्नभोजनाः । नरेश्वरस्त्वं वयंपरिचारकाः ॥ ३० ॥ **ति०** रूपं रूप्यं ॥ ३१ ॥ **ति०** शरासनपरायणः यत्रक्कापिशराणामसनंत्यागः तत्परायणः ॥ ३३ ॥ **वि०** परिवेत्ता ज्येष्ठेअकृतदारेऽकृताग्निहोत्रेच कृतदारःकृताग्निहोत्रोऽनुजः ॥ ३६ ॥ **स०** गच्छन्तइतिपदव्यत्यासेन रामस्यतदनर्हत्वंसूचयति ॥ ३७ ॥ **ती०** शल्यवाञ्शल्यः । अर्शआदित्वादच् । शल्यएवशल्यकः । शुक्तिकाकारशल्यावृतसर्वाङ्गोजन्तुविशेषः । श्वाविधः कण्टकाकारदीर्घरोमभिः श्वानंविध्यतीति श्वाविधः । **टी०** पञ्चनखत्वात्कथमयोग्यमित्याशंक्ययोग्यान्पञ्चनखान्संपरिचष्टे—**पञ्चेति** ॥ **स०** ब्रह्मक्षत्रेणेत्यत्र समाहारउत्तरपदलोपीवासमासः ॥ **शि०**

[ **पा०** ] १ छ. झ. त्वंराघवकुले. २ छ. झ. ट. परिधावसे. ३ क.—ट. प्यपकारिषु. ४ च. छ. झ. ट. फलाशिनः. ५ क. घ. च. छ. झ. नरेश्वर. ६ रूपंच. ७ च. छ. झ. ट. तत्र. ८ ख. ग. ङ. ज. ञ. लाभः. ९ ङ. च. ज. ञ. कोपी चाप्यनवस्थितः. १० झ. ट. राजवृत्तेषु. च. राजवृत्तेसमुत्तीर्णः. ज. राजवृत्तसमुत्तीर्णः. ञ. राजवृत्तेश्चसंकीर्णः. ११ ङ. ज. कृत्वाकर्म. १२ ख. सुदुष्करं. १३ ट. लोके.

चर्म चास्थि च मे राजन्न स्पृशन्ति मनीषिणः ॥ अभक्ष्याणि च मांसानि सोहं पञ्चनखो हतः ॥४०॥
तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम् ॥ तदतिक्रम्य मोहेन कालस्य वशमागतः ॥ ४१ ॥
त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा ॥ प्रमदा शीलसंपन्ना धूर्तेन पतिना यथा ॥ ४२ ॥
शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ॥ कथं दशरथेन त्वं जातः पापो महात्मना ॥ ४३ ॥
छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना ॥ त्यक्तधर्माङ्कुशेनाहं निहतो राम हस्तिना ॥ ४४ ॥
अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् ॥ वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः ॥ ४५ ॥
उदासीनेषु योस्मासु विक्रमस्ते प्रकाशितः ॥ अपकारिषु तं राजन्न हि पश्यामि विक्रमम् ॥ ४६ ॥
दृश्यमानस्तु युध्येथा मया यदि नृपात्मज ॥ अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥ ४७ ॥
त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः ॥ प्रसुप्तः पन्नगेनेव नरः पानवशं गतः ॥ ४८ ॥
मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ॥ मैथिलीमहमेकाह्ना तव चानीतवान्भवेत् ॥
[ राक्षसं च दुरात्मानं तव भार्यापहारिणम् ॥ ४९ ॥ ]
सुग्रीवप्रियकामेन यत्कृतेऽस्मि हतस्त्वया ॥ कण्ठे बद्ध्वा प्रदद्यां ते निहतं रावणं रणे ॥ ५० ॥

पञ्च भक्ष्याः। पञ्चनखेषु जन्तुषु एते पञ्चैव भक्ष्याः। नान्य इत्यर्थः। परिसंख्याविधिरयं । ब्रह्मक्षत्रेणेत्युपलक्षणं । त्रैवर्णिकेनेत्यर्थः । शलतीति शल्यः । "शल—श्वल, आशुगमने" इत्यस्माद्धातोः "सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलधिष्ण्यशल्याः" इति निपातनाद्यत्प्रत्ययः । ततः स्वार्थे कः । यद्वा शल्यं शङ्कुः । "वा पुंसि शल्यं शङ्कुर्ना" इत्यमरः। तत्सदृशानि रोमाणि शल्यानि तद्वान् शल्यः । अर्शआद्यजन्तः । ततः स्वार्थे कः । श्वानं विध्यतीति श्वाविधः । पचाद्यच् । "अन्येषामपि" इति दीर्घः। पृषोदरादित्वाड्डुकारः (?) । इमौ वराहविशेषौ ॥ ३९ ॥ उपसंहरति—चर्म चेति ॥ सोहं अभक्ष्यपञ्चनखान्तर्भूतोहं ॥ ४०—४१ ॥ पतिना पत्या शठः गूढविप्रियकृत् । निकृत्या अपकारेण जीवतीति नैकृतिकः । क्षुद्रः क्षुद्रकर्मकारी । मिथ्याप्रश्रितमानसः मिथ्याशान्तमनस्कः ॥ ४२—४३ ॥ छिन्ना चारित्रमेव कक्ष्या इभबन्धनं येन स तथा । सतां धर्मातिवर्तिना सतां धर्माः पूर्वोक्ताः सामदानसापराधजनदण्डनादयः । तानतीत्य वर्तत इति तथा । गजविषये अतिक्रान्तमर्यादेनेत्यर्थः ॥ ४४ ॥ ईदृशं कृत्वा स्थितस्त्वं सद्भिः ईदृशं अशुभत्वादिविशिष्टं वक्ष्यसे । अशुभकारीत्येवं वक्ष्यसीत्यर्थः ॥ ४५ ॥ अपकारिषु रावणादिषु ॥ ४६—४७ ॥ अदृश्येनेति च्छेदः ॥ ॥ ४८ ॥ एतदर्थं मैथिल्यानयनार्थं । भवेत् भवेयम्। पुरुषव्यत्यय आर्षः ॥ ४९ ॥ यत्कृते यस्य रावणस्यकृते हतोस्मि । तं कण्ठे बद्ध्वा ते प्रदद्यामिति

पञ्चनखाःशल्यकादयः पञ्चैवभक्ष्याः । परिसंख्याविधिरयं । रागादन्यत्रापिभक्षणस्यप्राप्तत्वात् । अतएवैवकारलाभः । तथाच मीमांसा—" विधिरत्यन्तमप्राप्तौनियमःपाक्षिकेसति । तत्रचान्यत्रचप्राप्तौपरिसंख्येतिगीयते " इति ॥ ३९ ॥ **स०** पञ्चमीं विहायदशरथेनेतितृतीयाप्रयोगेण नसाक्षाज्जनिर्विवक्षिता किंतुप्रादुर्भावरूपैवेतिसूचयति ॥ ४३ ॥ **ती०** चकारःकिमित्यर्थकः । किंवक्ष्यसे वक्ष्यसि ॥ ४५ ॥ **शि०** दृशीति । हेनृपात्मज, दृशी सर्वद्रष्टा अतएव अमानः सर्वद्रष्टृत्वादिगर्वरहितः । किंच नमानः पूजावान् यस्मात्सः सर्वपूज्यइत्यर्थः । त्वंयदिमयासहयुधियुध्येथाः तदा अद्यैवमयानिहतः ताडितएवत्वं स्वतं अतिविस्तृतं । देवं मद्युद्धोत्साहजनितकान्तिं । त्वंपश्येः । एतेनसुग्रीवस्याल्पबलत्वान्ममातीवयुद्धोत्साहोनजातइतिध्वनितं । तुशब्दोयद्यर्थे । वैवशब्दौएवार्थे ॥ ४७ ॥ **ति०** अतस्त्वंपापवशंगतइत्यर्थः । **टीका०** ननुवालिसुग्रीवयोर्युद्धेरामस्त्वदृश्योभूत्वाकथंवालिनंहतवानिति चेत्सत्यं—" आहूयवालिनंब्रह्माददौवरमनुत्तमम् । प्रतीपवर्तिनोभूयादर्धंबलमरिंदम " इतिवरप्रदानान्नाभिमुख्येनयुद्धकरणं ॥ ४८ ॥ **स०** एकेतिरामसंबोधनं प्रधानत्वाद्भार्यारहितत्वाद्वा । " राजाहस्सखिभ्यः—" इतिसमासान्तविधेरनित्यत्वाद्वा एका-

**[ पा० ]** १ ङ.—ट. रामनस्पृशन्ति. २ छ. झ. ञ. ट. शीलसंपूर्णा. ३ क. ख. ग. ङ.—ट. पत्येवचविधर्मणा. ४ क. ङ.—ट. विक्रमोयं. ५ क. ग. ङ. च. छ. झ ञ. ट. तेरामनैवपश्यामि. ६ ङ. झ. ट. युधि. ७ क. ग. च.—ञ. पापवशं. ८ ख. त्वानयिष्याम्यसंशयं. ९ इदमर्धं घ. च.—ञ. पाठेषुदृश्यते. १० क. ङ. ज.—ट. यदहंनिहतस्त्वया. ११ क. ङ. बध्वादशग्रीवंदद्यांते.

**न्यस्तां सागरतोये वा पाताले वाऽपि मैथिलीम् ॥ आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ॥ ५१ ॥**

योजना । सुग्रीवसख्यनिमित्तभूतं मैथिल्यानयनं च तारया पूर्वनिवेदितमिति ज्ञेयं ॥ ५० ॥ श्वेतामश्वतरीमिव मधुकैटभाभ्यां पाताले निरुद्धां श्वेताश्वतरीरूपां श्रुतिं हयग्रीव इवेत्यर्थः ॥ ५१ ॥

ह्वेतिसाधु ॥ ४९ ॥ **ती०** आनयेयमिति । ननूक्तरीत्यावालिनस्सीतानयनसामर्थ्यंज्ञात्वावालिनस्सख्यंनरामेणकिमितिकृतमिति चेत् तत्रसुग्रीवंप्रतिवालिवधस्यप्रतिज्ञातत्वाद्वैलन्तरसद्भावाच्च । तथाचस्कान्दे—“ अभयेवालिनेदत्तेप्रतिज्ञापरिहीयते । रावणस्यसखावालीरावणेपिव्रजेत्तुमाम् । रावणस्यवधाभावादवतारफलंनहि ” इति । “ तंदृष्ट्वाराघवंवालीलक्ष्मणंचमहाबलं ” इत्यारभ्यसर्गसमाप्तिपर्यन्तस्यवास्तवार्थोऽयमर्थः । वालिनिश्रीरामनिष्ठुरभाषणेप्रवृत्तेऽपिवालिवाणीश्रीराममीश्वरंमत्वास्तौति । दृष्ट्वेत्यादि । परुषं बाह्यदृष्ट्यापरुषवत्प्रतीयमानं । वस्तुतःप्रश्रितं धर्मसंयुतं अगर्वितंवाक्यमब्रवीदित्यन्वयः । तदेवाह पराङ्मुखेत्यादि । पराङ्मुखवधंपराङ्मुखस्यविषयलोलुपस्यममवधंकृत्वात्वयाकोनुगुणः निर्वक्तुमशक्यस्सद्गुणःप्राप्तः । यतः यस्मात्कारणात् । युद्धसंरंभोऽहंत्वत्कृतेनिधनंगतः त्वत्कृते त्वन्निमित्तं । त्वयानिधनंगतइत्यर्थः । अतोमयापीतिशेषः । सुगुणःप्राप्तइतियोजना । “राजात्वशासन्पापस्यतदवाप्नोतिकिल्बिषं ” इतिवचनात्मद्दण्डनेनतत्परिहाररूपगुणस्त्वयाप्राप्तः । “राजभिर्धृतदण्डास्तुकृत्वापापानिमानवाः । निर्मलाःस्वर्गमायान्तिसन्तःसुकृतिनोयथा ” इतिवचनात्मयापिनिष्कल्मषत्वरूपगुणःप्राप्तइतिभावः । ममसुग्रीवसख्यंश्रुत्वापियुद्धायागत्यमयाकिमर्थंहतोसीत्याशङ्क्य सुग्रीवहस्तवधान्ममदैवादुत्कृष्टमुक्तिकारणत्वद्धस्तवधोजातइत्याह—**कुलीनइत्यादिश्लोकपञ्चकेन** । कुलीनत्वादींस्तवगुणाञ्श्रुत्वा शमदमादिराजधर्ममपिविचार्यतवाभ्यमभिजनंचसंप्रधार्ययुद्धायनगन्तव्यमिति तारयाप्रतिषिद्धोपिअन्येनसंसक्तंवेद्धुंनार्हतीतितवादर्शनेसतिमेबुद्धिरुत्पन्नाबभूवेतिकृत्वासुग्रीवेणसमागतः । तथापि त्वंतुप्रमत्तंमांहतवान् । अतोममत्वद्धस्तहननमङ्गलंजातमित्यन्तेनवाक्यशेषेणयोजना । अतएवत्वामेवंमन्यइत्याह—**नत्वामित्यादिना** । त्वांविनिहतात्मत्वधर्मध्वजत्वाधार्मिकत्वपापसमाचारत्वादिविशेषणविशिष्टंनजाने । किंचसतांवेषधरत्वादिविशेषणविशिष्टंचनजानामि । किंत्वपहतपाप्मत्वादिगुणकमीश्वरमेवजानामीत्यर्थः । नन्वनपराधिनस्तवघातुकस्यममेश्वरत्वंदोषराहित्यंवाकुतइत्यतआह—**विषयइत्यादिना** । त्वमप्यकिल्बिषंनहंसि । अहमपितेविषयेदेशेपुरेवायदानापकरोमि अपकारंनकृतवान् । त्वांनावजानेच । तथापिफलमूलाशिनंवानरमप्रतियुध्यन्तमन्येनसमागतंमांहंसि । तत् तस्मात् मयिदोषसद्भावादेवेत्यर्थः । किंच क्षत्रियकुलेऽवतीर्यलोकानुग्रहार्थंजगन्मर्यादांपालयतःपरमकरुणाशालिनस्तवसुतरामन्यायाचरणंनसंभविष्यतीत्याशयेनाह—**धर्मलिङ्गेत्यादिसार्धश्लोकेन** । हेराम राजकुलेजातःधर्मवानितिविश्रुतस्सन् अर्थे प्रयोजनमुद्दिश्याभव्यस्सन् भव्यरूपेणपरिधावसिकिं । क्रूरकर्मसमाचारःकिं । उभयमपितवनघटतइतिभावः । राजनीतौविचार्यमाणायां मद्वधस्तवयुक्तएवेत्याशयेनाह—**सामदानमिति** । अपकारिषुपापिषु वैरबुध्या हतवन्तंमांकथमेवंस्तौषीत्याशङ्क्यविचार्यमाणेतवममचवैरप्रसक्तिरेवनास्तीत्याशयेनाह—**वयमिति** । कानितर्हिवैरकारणानीत्याकाङ्क्षायामाह—**भूमिरिति** । तवममचैतादृशकारणानिनसन्तीतिभावः । किंच**नयश्चेति** । नृपाअपिकामवृत्तयोनभवन्ति किमुतेश्वरस्त्वमितिभावः । रागद्वेषादियुक्तस्येन्द्रियपरवशस्यमर्त्यस्यममेश्वरत्वंकुतइत्याकाङ्क्षायांनिर्गुणेश्वरत्वमेवप्रतिपादयति—**त्वमित्यादिश्लोकद्वयेन** । तुकिमित्यर्थे । मनुजेश्वर मनुजश्चासावीश्वरश्चेतितथा । मनुष्यत्वेनावतीर्णेश्वरइत्यर्थः । कामप्रधानः कामस्यप्रधानः निर्जितकामइत्यर्थः । कोपनः शत्रुसंहारविषयइतिशेषः । तत्संहारार्थमनवस्थितः तत्रतत्रसंचरमाणः । राजवृत्तेश्चसंकीर्णः त्यक्तराजधर्म इत्यर्थः । वानप्रस्थधर्मयुक्तत्वादितिभावः । तेधर्मे सामान्यधर्मेपिअपचितिः पूजा आदरइत्यर्थः । कास्ति मनुष्याधिकारिकत्वाच्छास्त्रस्येतिभावः । तेबुद्धिः अर्थेपिनावस्थिता । लक्ष्मीपतित्वात् । अतएवैतादृशविशेषणविशिष्टस्त्वंकामवृत्तस्सन् इन्द्रियैः कृष्यसेकिं नकृष्यसएवअतएवत्वमीश्वरइतिभावः ॥ तथाप्यनपराधित्वद्वधजनितदुष्कृतकर्माऽहंसतांकिमुत्तरंवक्ष्यामीत्यतआह—**हत्वेति** । बाणेनानपराधिनंमांहत्वादुष्कृतंकर्मकृत्वासतांमध्येवक्ष्यसिकिं । किंत्वनपराधिनमेवमांहत्वा अतएवंसुकृत्वासतांमध्येवक्ष्यसीत्यर्थः । किंचापराधिनोवानरस्यममवधेनतवदोषशङ्कैवनास्तीत्याशयेनाह—**राजहेत्यादिश्लोकद्वयेन** । एतादृशानामेवनरकः अपराधिनोममघातुकस्यतव तुनास्तीतिभावः । किंचानुपयोगिचर्मादियुक्तमद्वधएवममदोषसद्भावद्योतकइत्याशयेनाह—**अधार्यंचर्मेत्यादिश्लोकत्रयेण** । तारयानिवारितोपित्वद्धस्तवधकाङ्क्षयैवयुद्धायागतोस्मीत्याशयेनाह—**तारयेति** । सर्वज्ञयापितारयाभर्तृमोहेनाहितमुक्तस्संस्तदतिक्रम्यकालस्येश्वरस्यतववशंपार्षदत्वमागतः । सत्यं नसंदेहः । त्वयेति । विधर्मणापत्याशीलसंपन्नाप्रमदा यथा सनाथा तथा तादृशेन तादृशनाथेनत्वया पृथिवीसनाथानकिंतुदुष्टनिग्रहादिरूपपरमकल्याणगुणसनाथेनत्वयासनाथेत्यर्थः । ममकपटयुद्धकारणहेतुनाशठत्वादिगुणयुक्तत्वादेतादृशेनपृथिवीसनाथाकथंभवतीत्याशंक्याह—**शठइत्यादि** । यतोमहात्मना दशरथेनत्वंजातः ततः “ कारणगुणपूर्वकत्वात्कार्यगुणस्य ” इतिन्यायेनसकलकल्याणगुणयुक्तस्त्वंकथंशठः कथंनैकृतिकः कथंपापइत्येवंयोजना । तादृशोनभवसीतिभावः । ईश्वरेणत्वयानिहतोऽहंकृतार्थइत्याशयेनश्रीरामेस्वतन्त्रेश्वरगुणान्प्रकटयति—**छिन्नचारित्रेत्यादि** । रामहस्तिनानिहतोऽहं कृतार्थइतिशेषः । रामस्येश्वरत्वादेवछिन्नचारित्रादियुक्तत्वमितिभावः । मयाहतस्यतवकथंकृतार्थत्वमतआह—अशुभमिति । समागतइत्यत्र सः मा गतः इतिच्छेदः । शुभमयुक्तंसतांविगर्हितंचमामि-

युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ॥ अयुक्तं यदधर्मेण त्वयाऽहं निहतो रणे ॥ ५२ ॥
काममेवंविधं लोकः कालेन विनियुज्यते ॥ क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम् ॥ ५३ ॥
इत्येवमुक्त्वा परिशुष्कवक्त्रः शराभिघाताद्व्यथितो महात्मा ॥
समीक्ष्य रामं रविसन्निकाशं तूष्णीं बभूवामरराजसूनुः ॥ ५४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः ॥ १८ ॥

रामेणवालिनंप्रतिसुग्रीवेजीवतिस्नुषातुल्यतद्भार्याहरणरूपतदपराधादिहेतुभिस्तद्वधस्यधर्म्यत्वसमर्थनम् ॥ १ ॥ श्रीरामगर्हणानुतप्तेनवालिनारामक्षमापणपूर्वकमङ्गदपालनप्रार्थना ॥ २ ॥ रामेणाङ्गदपालनादिप्रतिज्ञानेनवालिसमाश्वासनम् ॥३॥

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् ॥ परुषं वालिना रामो निहतेन विचेतसा ॥ १ ॥

---

राज्यार्थं सुग्रीवो मां हतवानित्येतद्युक्तं । त्वं तु मां हतवानित्येतत्त्वयुक्तमित्यर्थः । ज्ञातीनामेवंविधकृत्यस्य स्वाभाविकत्वादिति भावः ॥ ५२ ॥ लोकः एवंविधे मरणरूपे कर्मणि विनियुज्यते । जातस्य मरणं स्वभाव इत्यर्थः । भवता प्राप्तं अदृश्यतया प्रहरणं क्षमं चेत् तत्र साधूत्तरं चिन्त्यतामित्यर्थः ॥ ५३ ॥ परिशुष्कवक्त्रः बहुभाषणक्लेशादिति भावः ॥ ५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

---

अथ रामस्योत्तरमष्टादशे—इत्युक्त इत्यादि ॥

---

तिशेषः । यादृशंकृत्वा हत्वेत्यर्थः । सवाली मा मांगतः मत्पार्षदत्वंप्राप्तइतित्वंसद्भिस्सहवक्ष्यसे । एतादृशत्वत्कथनमेवममकृतार्थत्वसूचकमितिभावः। निरुपाधिककरुणामृतसागरस्यतवमहिमानंकोवावर्णयितुंशक्तइत्याशयेनाह—**उदासीनेष्विति**। हेराम अपकारिष्वस्मासु त्वद्भक्तसुग्रीवायकृतापकारएव तस्मैकृतापकारइतिकृत्वाऽपकारिष्वित्युक्तिः । अस्मास्विति बहुवचनं ताराङ्गदाद्यभिप्रायेण । एतादृशापकारिष्वस्मासुतेजोविक्रमःब्रह्मादीनामपिदुर्लभःपदारविन्दविन्यासःप्रकाशितः । पादारविन्दंप्रदर्शितमित्यर्थः । उदासीनेषुसर्वतोनिवृत्तेषुमुनिषु तंविक्रमंपादारविन्दविन्यासंनपश्यामीतियोजना । अतोऽहंकृतकृत्यइतिभावः । पादारविन्दप्रदर्शनंतु "बहुमान्यचतंवीरंवीक्षमाणंशनैरिव । उपयातौमहावीरौभ्रातरौरामलक्ष्मणौ" इत्युक्तेः । रामस्यपादारविन्दप्रदर्शनार्थमेवासन्नमरणवालिसमीपागमनमित्यवगन्तव्यं । त्वयादृश्यमानः त्वत्प्रतियोद्धाजीवितुंनशक्नोतीतिशङ्कयाऽहमदृश्यएवत्वांहतवानित्याशङ्कायांसत्यां तथात्वंत्वदन्येषामेवतवतुनास्तीत्याशयेनाह—**दृश्यमानइत्यादि**। यदिःकिमित्यर्थे । हेनृपात्मज अद्यमयादृश्यमानस्सन्युध्येथाअपि मयाहतस्सन्वैवस्वतंदेवंपश्येःकिं नपश्येरित्यर्थः । ईश्वरस्यतवमरणशङ्कानास्तीतिभावः । समक्षंरामेणसहप्रतियुध्यवालीनिहतइतिकीर्तिर्मयानलब्धेतिदुःखितआह । त्वयाऽदृश्येनेति । पापवशंगतोऽहंअदृश्येनत्वयानिहतइतिसंबन्धः । त्वदाज्ञाकरणरूपसेवाभाग्यंमयानलब्धमित्याशयेनखिद्यति । सुग्रीवप्रियकामेनेत्यादि । पूर्वंराज्यस्थंसुग्रीवंकिमर्थंनिष्कासितवानित्यतआह—**युक्तमिति**। अधर्मेण मन्नाशनिमित्तबिलद्वारपिधानरूपाधर्मेण । सुग्रीवः राज्यंप्राप्नुयादितियत् तदयुक्तं । अहंत्वयारणेनिहतः । इतःपरंमयिस्वर्गतेसतिसुग्रीवोराज्यंप्राप्नुयादितियत् तद्युक्तमितिसंबन्धः । अधर्मतोराज्यस्वीकारान्निष्कासितइतिभावः । एतादृशंकिमर्थंहतवानसीतिचिन्ताक्रान्तंप्रत्याह—**काममिति**। एवंविधोलोकः क्षत्रियवृत्तिमाञ्जनः । यद्वा लोकएवंविधश्चेत् मादृशाधर्मचारीजनश्चेदित्यर्थः । कामंकालेनविनियुज्यते । अतोहेतोः राम भवताप्राप्तंमद्वधरूपंउत्तरं उत्तमं । क्षमंयुक्तंउत्तमंयथातथाचिन्त्यतां । मयाकृतपापप्रायश्चित्तरूपत्वान्मद्वधस्ययुक्तत्वमुत्तमत्वंचेतिभावः ॥ ५१ ॥ **स०** एवंविधोलोकःकालेनअदृष्टप्रेरकश्रीहरिणावियुज्यतइतिहेतोःकाममेतद्भवतु । भवताक्षमंचप्राप्तं । उत्तरं उत्तरत्रक्रियमाणंत्वत्कार्यंसाधुयथातथाचिन्त्यतां ॥ ५२ ॥ **स०** सूर्यसंकाशमित्यनेन वैरिसादृश्योक्त्यातन्निरीक्षणंतद्वदेवेतिसूचयति ॥ **ति०** अस्यसर्गस्यतीर्थैनरामस्तुतिपरतयायद्योजनंतत्नकविनिबद्धस्यवक्तुर्वालितस्तात्पर्यविषयभूतं । "यदयुक्तंमयापूर्वंप्रमादाद्वाक्यमप्रियम् । तत्रापिखलुमेदोषंकर्तुंनार्हसिराघव" इत्यग्रेवाल्युक्तेः । नापिवाल्मीकेः तस्यदुरुक्त्यनुवादकत्वात् । अतात्पर्यविषयमपिबुद्धिवैभवादक्षरार्थत्वेनवर्ण्यतइतिचेत्काव्यान्तरमेवभगवतस्तावकंक्रियतांकिमनेनप्रयासेनेतिदिक् ॥ ५४ ॥ इतिसप्तदशःसर्गः ॥ १७ ॥

**रामानु०** इत्युक्तइतिश्लोकस्स्वतन्त्रंवाक्यं । अन्यथारामशब्दोतिरिच्यते ॥ **ती०** वालिनारामःपरुषमुक्तः अधिक्षिप्तइत्यादेर-

**[ पा० ]** १ झ. एवंविधो. २ झ. बभौवानरराजसूनु० बभूवामरराजसूनुरित्यनन्तरं क. ग. पाठयोः तमुक्तवन्तंप्रवरंहरीणामथोत्तरंवाक्यमुवाचरामः । हितंचतत्वंवचनंप्रसक्तंसमस्तधर्मार्थसमाहितंच ॥ इतिश्लोकोदृश्यते.

तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् ॥ उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २ ॥
धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् ॥ अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३ ॥
धर्ममर्थं च कामं च समयं चापि लौकिकम् ॥ अविज्ञाय कथं बाल्यान्[1]मामिहाद्य विगर्हसे ॥ ४ ॥
अपृष्ट्वा बुद्धिसंपन्नान्[2]वृद्धा[3]नाचार्यसंमतान् ॥ सौम्य वानरचा[4]पल्यात्किं मां वक्तुमिहेच्छसि ॥ ५ ॥
इक्ष्वाकूणामियं भूमिः सशैलवनकानना ॥ मृगपक्षिमनुष्याणां निग्र[5]हप्रग्रहावपि ॥ ६ ॥
तां पालयति धर्मात्मा भरतः सत्यवागृजुः ॥ धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ ७ ॥
नयश्च विनयश्चोभौ[8] यस्मिन्सत्यं च सुस्थितम् ॥ विक्रमश्च यथादृष्टः स राजा देशकालवित् ॥ ८ ॥
[6]तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः ॥ चरामो वसुधां कृत्स्नां धर्म[7]सन्तानमिच्छवः ॥ ९ ॥
तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ॥ पालयत्यखिलां भूमिं[10] कश्चरेद्धर्म[11]निग्रहम् ॥ १० ॥
[12]ते वयं [13]धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ॥ भरताज्ञां पुरस्कृत्य निगृ[14]ह्णीमो यथाविधि ॥ ११ ॥

वालिना इत्युक्त इत्यन्वयः । विचेतसेत्यनेन परुषवचनमज्ञानकृतमित्युच्यते ॥ १ ॥ तमित्यादि द्वौ ॥ तदा पूर्वं । अधिक्षिप्तो रामः धर्मार्थगुणसंपन्नं अनुत्तमं यथाभवतितथा पश्चाद्वालिनमब्रवीदिति योजना ॥२—३॥ समयं आचारं । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । बाल्यात् अज्ञानात् ॥ ४ ॥ अपृष्ट्वा धर्मादिकमितिशेषः । वानरचापल्यात् वानरत्वकृतचापल्यात् ॥ ५ ॥ इयं जम्बूद्वीपात्मिका । लोके कस्यचिद्भूमेः स्वत्त्वेपि शैलवनादिकमाक्रम्यान्ये भूमिं पीडयन्ति तद्व्यावृत्त्यर्थमाह—सशैलेति । काननं महारण्यं । मृगादिनिग्रहानुग्रहावपि इक्ष्वाकूणामेव । कृत्यमिति शेषः ॥ ६ ॥ तां भूमिं ॥ ७ ॥ नयो नीतिः । विनयः शिक्षा । तावुभौ सत्यं च यथादृष्टः शास्त्रविहितः विक्रमश्च । एतत्सर्वं यस्मिन्सुस्थितं देशकालवित् स भरतो राजेतियोजना ॥ ८ ॥ धर्मकृतादेशाः धर्मकृतनियोगाः । कथं कनिष्ठेन ज्येष्ठनियोग इत्यपेक्षायां राजधर्मोयमित्याशयेनोक्तं धर्मपदं । धर्मसन्तानं धर्मवृद्धिं । यद्यपि भरतेन नादेशः कृतः तथापि नेदमसत्यं । यथाकथंचिद्भरतेन राज्यभरणस्य स्वीकृतत्वात्तदन्येषां तत्कुलीनानां तदादिष्टत्वं सिद्धमिति हृदयं । अत एवायोध्याकाण्डे दर्शितं—त्वं राजेति ॥ ९ ॥ धर्मनिग्रहं धर्महानिं ॥ १० ॥ धर्मविभ्रष्टं जनमितिशेषः ॥ ११ ॥

यमाशयः । यद्यपिवालिनोवाणीराममस्तौषीत् । वालीतंरामंपरुषमुक्तवानितिकृत्वा वालिनारामःपरुषमुक्तइत्याद्युक्तिः । अतएवश्रीरामोपिवालिपरुषोक्तिमनुसृत्यैवोत्तरंवक्ति " धर्ममर्थंचकामंच " इत्यादिना ॥ **ति०** प्रश्रितं प्रश्रयाभासोपेतं । एवंधर्मार्थसहितत्वंचाभासरूपमेव । तत्र " मामेवयदिपूर्वं " इत्यादिहिताभासोर्थाभासश्च । धर्माभासोराजहेत्यादि । परुषत्वंतुमुख्यमेव । निहतेनविरुद्धेन ॥ **स०** निहतेन बाणेनेत्यर्थः ॥ १ ॥ **शि०** अनुत्तमं अनुजदारग्रहणरूपाधर्मकर्मणाऽधमं ॥ ३ ॥ **तनि०** धर्मं वैदिकपुरुषार्थं । लौकिकंसमयं लौकिकाचारं । तेनद्वयोरेकभार्यत्वेपिमाससंवत्सरादिप्रतिनियतकालसंकेतः ॥ ४ ॥ **तनि०** विषयेवापुरेवातेकलहनिमित्तंनास्तीत्यस्योत्तरं । त्वदुपभुक्तवनगिर्युपवनपत्तनान्यस्मदीयानिनभवन्तिकिं । ज्ञातिभावोप्यस्ति । " त्वंवयस्यश्चहृद्योमे " " एकंदुःखंसुखंचनौ " इतिसुग्रीवसखस्यममभवान्ज्ञातिर्नभवतिकिं । " तेनाहंप्रतिषिद्धश्चहृतदारश्चराघव " इतितेनमांप्रतिनोक्तंकिं । " वस्त्रेणैकेनवानरः " इत्युक्तरीत्याएकवस्त्रस्सननिर्वासितःकिं । सुग्रीवगृहदारभूजलादिकंत्वयानगृहीतंकिं । स्त्रीविवादश्च " भ्रातुर्वर्तसिभार्यायां " इत्यनेनदर्शितः ॥ ६ ॥ **तनि०** ममतवचपरस्परज्ञानंपरिचयश्चनास्ति । ममगृहमागत्यानपराधिनंहतवानसीत्यस्योत्तरमाह । " तांपालयतिधर्मात्मा " इत्यारभ्य " कामतन्त्रप्रधानश्चनस्थितोराजवर्त्मनि " इत्यन्तं । त्वंसापराधएवेत्यर्थः ॥ ७ ॥ **ति०** यथादृष्टः अपरोक्षानुभवसिद्धः । सराजा अस्मिन्काले । सर्वभूमेरितिशेषः ॥ **स०** यथादृष्टः शास्त्रेक्षत्रियस्ययोविक्रमोदृष्टस्संइत्यर्थः ॥ ८ ॥ **ती०** धर्मकृतादेशाः धर्मइत्यधर्मस्याप्युपलक्षणं । धर्माधर्मकृतनियोगाः

[ **पा०** ] १ ख. न्मांधर्षयितुमिच्छसि. २ क. ग. संपन्नानाचार्यान्धर्मसंहितान्. ३ ङ. च. ज. ञ. नाचारसंमतान्. ४ क. ख. ग. ङ.—ट. चापल्यात्त्वं. ५ ङ. च. छ. झ. ञ. ट. निग्रहानुग्रहेष्वपि. क. निग्रहप्रग्रहेष्वपि. ज. निग्रहानुग्रहावपि. ६ ङ. च. भरतस्यकृतादेशाः. ७ ख. धर्मसंस्थानं. ८ झ. यस्मिन्. ९ क. ख. सत्यविक्रमे. १० ङ.—ट. पृथ्वीं. ११ ङ.—ट. विप्रियं. १२ च. ज. नवयंमार्गविभ्रष्टाः. १३ क. ख. ग. छ. झ. ञ. ट. मार्गविभ्रष्टं. १४ ङ.—ट. चिन्तयामो.

त्वं तु संक्लिष्टधर्मा च कर्मणा च विगर्हितः ॥ कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२ ॥
ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ॥ त्रयस्ते पितरो ज्ञेया धर्मे पथि हि वर्तिनः ॥ १३ ॥
यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः ॥ पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेदत्र कारणम् ॥ १४ ॥
सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम ॥ हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥ १५ ॥
चपलश्चपलैः सार्धं वानरैरकृतात्मभिः ॥ जात्यन्ध इव जात्यन्धैर्मन्त्रयन्द्रक्ष्यसे नु किम् ॥ १६ ॥
अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ॥ न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७ ॥
तदेतत्कारणं पश्य यदर्थं त्वं मया हतः ॥ भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ १८ ॥
अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ॥ रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् ॥ १९ ॥

संक्लिष्टधर्मा धर्मविलोपकृत् । कर्मणा च विगर्हित इति अकृत्यकारीत्यर्थः ॥ १२—१३ ॥ आत्मन इति त्रिष्वप्यन्वेति । गुणोदित इति च । ते त्रयः पुत्रवच्चिन्त्याः । पुत्रशब्दोत्र दृष्टान्तार्थः । यथा पुत्रे पुत्रवद्वर्तते तथान्ययोरपि वर्तितव्यमित्यर्थः । पुत्रे पुत्रवद्वृत्तिर्नाम सम्यक् स्नेहः । "गगनं गगनाकारं" इतिवत् । एवं चिन्त्यत्वे किं प्रमाणं तत्राह—धर्मश्चेदिति । अत्र अस्मिन्नर्थे । धर्मः कारणं व्यवस्थापकं चेत् यदि धर्मो नानुवर्तनीयः तदा नैवं द्रष्टव्यं । अनुवर्तनीयश्चेत् अवश्यमेवं द्रष्टव्यमिति चेच्छब्दस्य भावः ॥ १४ ॥ सूक्ष्मः अतीन्द्रियः । अतएव सतामपि परमदुर्ज्ञेयः किमुत भवादृशस्येति भावः । यद्वा जनस्य धर्माधर्मकरणं न कोपि वेत्तुमर्हति । तर्हि को वेत्तीत्यत्राह—हृदिस्थ इति । सर्वभूतानां हृदिस्थः सर्वान्तर्यामी । अलुक् । आत्मा परमात्मा । शुभाशुभं शुभाशुभकरणं वेत्तीत्यर्थः । सूक्ष्मं धर्मं परमात्मना मया विना को वेत्तुं दक्ष इति भावः ॥ १५ ॥ त्वया तु न शक्य इत्याह—चपल इति ॥ किं नु द्रक्ष्यसे न किमपि द्रक्ष्यसीत्यर्थः ॥ १६ ॥ अस्य वचनस्य यवीयानात्मन इति पूर्वोक्तवचनस्य ॥ १७ ॥ वर्तसि वर्तसे ॥ १८ ॥ धरमाणस्य जीवितंधारयतः । अनेन जीवतो भ्रातुर्भार्या भ्रात्रा न ग्राह्या । मृतस्यतु

धर्माधर्मविचारार्थंनियुक्ताइत्यर्थः ॥ ९ ॥ **वि०** कामतन्त्रं कामरूपःपुरुषार्थः । सएवप्रधानोमुख्योयस्यसः ॥ १२ ॥ **ति०** अत्रचिन्तनेतथाधर्मः धर्मज्ञानमेवकारणं ॥ १४ ॥ **ति०** तच्चनसर्वेषांसुलभमित्याह—**सूक्ष्मइति** । सतांसूक्ष्मोयोधर्मःस परा सद्गुरूपदेशादिजा मा शोभायेषां तैरेवविज्ञेयः । अन्यैः परं अत्यर्थं । अविज्ञेयएव । किंच ईश्वरएवतज्ज्ञइत्याह—हृदिस्थइति । सर्वभूतानामात्मा तत्वभूतोव्यापकश्च । अतएवसर्वप्राणिहृदिस्थःसः सर्वभूतानां सर्वप्राणिनां शुभाशुभंवेद । एवंचान्तर्यामित्वात्तवपापमहंजानइतिव्यङ्ग्यमत्र ॥ **स०** परमैर्ज्ञानिभिर्विज्ञेयः ॥ १५ ॥ **ति०** जात्यन्धोजात्यन्धैरिव चपलैः अकृतात्मभिः आचार्याशिक्षितैर्वानरैस्सह । मन्त्रयन् निश्चिन्वन् । किंनु कथंनु । प्रेक्षसे ज्ञास्यसि । धर्ममितिशेषः । "रक्षसेनुकिं" इतिपाठे रक्षणीयप्रजाजातंकिंनुरक्षसि नकिमपि । अतोधर्मभ्रष्टोराजदण्ड्यस्त्वमितिभावः ॥ १६ ॥ **ति०** अस्यवचनस्य चपलश्चपलैरितिवचनस्य । व्यक्ततां व्यक्तोर्थोस्येत्यर्शआद्यजन्तंव्यक्तपदं । तद्भावोव्यक्तता तदर्थस्तंब्रवीमि ॥ **स०** हेव्यक्ततामस्य व्यक्ततमोगुण । तेवचनस्य "कस्मात्त्वंहंस्यकिल्बिषं" इत्यस्य । ब्रवीमि इत्युत्तरमितिशेषः । स्वार्थेतल्वा । व्यक्तं । अस्यवचनस्य ज्येष्ठइत्यादिवचनस्य । ब्रवीमि अर्थमितिशेषः ॥ १७ ॥ **ति०** धरमाणस्येति । सुग्रीवस्तुतवजीवननिश्चयाभावात्त्वत्पत्न्यांतारायांप्रागवर्तिष्ट । अतःपरंवर्त्स्यतिच । किंच त्रैवर्णिकेष्वपिदेवरस्यमृतभ्रातृस्त्रियामपुत्रायांवृत्तिदर्शनात्तिर्यग्योनिषुतस्यांवृत्तिर्नदोषः । तथावृत्तौचमरणज्ञानमेवप्रयोजकंतिर्यक्ष्वितिभगवदाशयः । अनेनत्रैवर्णिकेतरस्त्रीणांमृतभर्तृकाणांतरुणीनांस्वजातीयपुरुषाङ्गीकारोनाधर्मइतिसूचितं । दृश्यतेचतथाव्यवहारःशूद्रादिजातौ । नचमनुष्याधिकारस्यनिषेधादिशास्त्रस्यकथंतिर्यक्षुप्रवृत्तिरितिवाच्यं । तिर्यग्योनेरपिमनुष्यवद्राजादिव्यवहारदर्शनेनमनुष्यतुल्यज्ञानवत्त्वादस्त्येवायंदोषइत्याशयात् । किंचधर्मेऽनधिकारिणामपीन्द्रादीनांवृत्रवधादौब्रह्महत्यादिदोषस्मरणेननिषेधेषुतदतिक्रमप्रायश्चित्तादौचदेवानामधिकारवदेषामप्यधिकारेबाधकाभावः । किंच देवादीनांस्वयजनीयेन्द्रान्तराभावादनधिकारइतिपूर्वमीमांसायांनिर्णीतं । एवंचतदनपेक्षदानादिधर्मेषुब्रह्मविद्यायांचाधिकारोस्त्येवेत्युत्तरमीमांसायांस्पष्टं । तद्वदी-

**[ पा० ]** १ ख. संकीर्णधर्मश्च. क. छ. झ. संक्लिष्टधर्मश्च. २ छ. झ. पितावापि. ङ. च. ज. ञ. ट. पिताचापि. ३ क. धर्मवर्त्मानुगच्छता. घ. धर्मेहिपथि. ङ.—ट. धर्मेचपथि. ४ क. ख. यवीयान्सोदरःपुत्रः. ५ क. गुणान्वितः. ६ ङ.—ट. धर्मश्चैवात्र. ७ च.—ट. परमविज्ञेयः. ८ ख.—ज. शुभाशुभे. ९ छ.—ट. न्प्रेक्षसे. १० ङ. च. ज. ञ. भार्यायांदण्डोयं प्रतिपादितः. ११ च. कामंस्नुषायां.

तद्व्यतीतस्य ते धर्मात्कामवृत्तस्य वानर ॥ [1]भ्रातृभार्यावमर्शेऽस्मिन्दण्डोऽयं प्रतिपादितः ॥ २० ॥
नहि [2]धर्मविरुद्धस्य लोकवृत्तादपेयुषः ॥ दण्डाद[3]न्यत्र पश्यामि निग्रहं हरियूथप ॥ २१ ॥
न[4] हि ते मर्षये पापं क्षत्रियोऽहं कु[5]लोद्भवः ॥ २२ ॥
औरसीं भगिनीं [6]वापि भार्यां [7]वाऽप्यनुजस्य यः ॥ [8]प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ॥२३॥
भरतस्तु महीपालो वयं [9]त्वादेशवर्तिनः ॥ [10]त्वं तु धर्मादतिक्रान्तः कथं [11]शक्य उपेक्षितुम् ॥ २४ ॥
[12]गुरुर्धर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ॥ भरतः का[13]मवृत्तानां निग्रहे पर्यवस्थितः ॥ २५ ॥

प्राह्येति तत्कुलधर्म इतिप्रतीयते । अतएवहि वालिनो बिलगमनानन्तरं मन्त्रिभिरभिषिक्तस्य सुग्रीवस्यतारापरिग्रहं रामो ननिन्दितवान् । अतएव प्रायोपवेशेङ्गदोवक्ष्यति " भ्रातुर्ज्येष्ठस्ययोभार्यां जीवतो महिषीं प्रियाम् । धर्मेणमातरंयस्तुस्वीकरोतिजुगुप्सितः " इति ॥ १९—२१ ॥ तर्हिशिक्षैव कर्तव्या किमर्थमवधीस्तत्राह—न हीति ॥ २२ ॥ औरसीं पुत्रीं । प्रचरेत गच्छेत् ॥ २३—२४ ॥ भरतस्तुमहीपाल इत्युक्तं विवृणोति—गुरुरिति ॥ धर्मव्यतिक्रान्तं धर्मव्यतिक्रमणं । पालयन् परामृशन् । गुरुः भरतश्च निग्रहेपर्यवस्थितः । वयं च तदादेशं विधिं शास्त्रंकृत्वा । नियन्तुं पर्यवस्थिताः । अतः कथं शक्य उपेक्षितु-

दृशानांज्ञानवतांतिरश्चामप्यधिकारेबाधकाभावः । किंच सर्वदेवतावाचकपदानामन्तर्यामीश्वरवाचकत्वेनसर्वत्रदेवानामधिकारोस्त्येव । नचब्राह्मणत्वाद्यभावात्तेषामनधिकारः । तेषामपिक्षत्रियत्वाद्वैवस्वतमन्वादेरिव । अतएवचन्द्रवरुणादीनांयज्ञस्स्मर्यतेपुराणेषु । तत्रतत्रकर्मण्यर्थवादतःफलकल्पनवत्पुराणस्थार्थवादैस्तदधिकारस्यापिकल्पयितुंयुक्तत्वात् । किंच " त्रैवर्णिकस्याधिकारः " इत्यत्रवेदतदर्थज्ञानवत्परं । अतोदेवादीनांतदधिकारस्सिद्धइतिभगवतोव्यासवाल्मीकिप्रभृतीनांचाशयः । जैमिनेस्त्वेतदंशेऽज्ञानमेव । अतएवतद्दूरीकरणार्थंमार्कण्डेयेनात्मानंप्रतिधर्मान्पृच्छतोजैमिनेर्विन्ध्यारण्यवासितत्वज्ञपक्षिमुखेनधर्मबोधनंकृतं । तेनहिपक्षिणांज्ञानानधिकारइतिस्वोक्तेस्तस्याविश्वासेजातेऽन्यत्रापिव्यासादिविरुद्धेस्वोक्तेऽर्थेतस्याप्रामाण्यग्रहोभविष्यतीतितदाशयइत्यन्यत्र विस्तरः । अतएवगृध्रराजस्यभगवतादाहादिकृतं । अग्रेचसंपातिनातद्भ्रात्राकरिष्यमाणमुदकदानादि नासंगतमितिदिक् ॥ **स०** धरमाणस्य प्राणान्धारयतः । जीवतइतियावत् । वर्तसे प्रवर्तसे । ननुवालिनःस्वस्मादधमसुग्रीवभार्यापहारित्वेनाल्पदोषत्वात् सुग्रीवस्यतुस्वोत्तमवालिभार्यास्वीकारित्वेनमहादोषित्वात्तदाच्छाद्यवालिवधे कथंभगवतादोषाविष्करणंक्रियतइतिचेत् । उच्यते । वालिनोल्पपापत्वात्तस्मैएतज्जन्मनिमरणलक्षणमल्पपापफलंददौ । सुग्रीवायतुस्वोच्चदारग्रहणलक्षणमहापातकस्यफलीभूतांमुक्त्वावानन्दोन्नाहाप्राप्तिंश्रीकृष्णावतारेसहस्रवर्मनामकासुराविष्टतयाजनिकारणीभूतदोषोत्पादकवालिमारणंनिमित्तीकर्तुंचनतंजघानभगवान्रामः । तदुक्तंभगवत्पादैरनुव्याख्यानश्रीमन्महाभारततात्पर्यनिर्णययोः । "चन्द्रसुग्रीवयोश्चैवस्वोच्चदारपरिग्रहात् । प्राप्तहानिरभूत्नैवकृतहानिःकथंचन " इति । " पुरासवालिमारणप्रभूतदोषकारणात् । सहस्रवर्मनामिनाऽसुरेणवेष्टितोऽजनि " इति मरणस्याल्पपापफलत्वात्तन्मात्रेणपापंनचरितार्थंचक्रइत्यर्थः ॥ **शि०** ननु " हृद्यपेक्षयातुमनुष्याधिकारत्वात् " इतिसूत्रभाष्यादौ मनुष्यमात्रस्यैव शास्त्रनियम्यत्वमितिसिद्धान्तितत्वाद्वालिविषयेधर्माधर्मविचारःसर्वज्ञेनपरमात्मनारामेणकथंकृतइतिचेन्न । " तदुपर्यपिबादरायणः " इतितदुत्तरसूत्रभाष्यादौगन्धर्वादीनामपिशास्त्रनियम्यत्वस्यसिद्धान्तितत्वेनवालिनोदेवपुत्रत्वाद्देवत्वेनादोषात् । अतएवभगवत्पार्श्ववर्तिनांनन्दीश्वरगरुडकाकभुशुण्डादीनांवेदाधिकारोनविरुध्यते । अतएव सर्वज्ञपरमात्मरामकृताजटायुषःप्रमीतक्रिया तद्भ्रात्रासंपातिनाकरिष्यमाणोदकदानादिचसंगच्छते । नचब्राह्मणाद्युद्देशेनकर्मबोधकप्रवृत्तेर्देवादीनांतदभावात्कथंतद्विषयत्वमितिवाच्यं । तेषामपिकश्यपादिजन्यत्वादिनाब्राह्मणादित्वादितिदिक् ॥१९ ॥ **ति०** उपसंहरति **तदिति** । तत् तस्मात् । धर्माद्व्यतीतस्य धर्मभ्रष्टस्य । एवंचेदृशेव्यवहारेप्राणान्तोदण्डइतिसूचितं ॥ २० ॥ **ति०** लोकवृत्तात् लोकव्यवहारमर्यादातः । अपेयुषः अपगतवतः । दण्डादन्यत्र ततोऽन्यमित्यर्थः । केचित्तु अनेनतिर्यग्योनिव्यवहारमर्यादाप्येषैवेतिध्वनितं । दृश्यतेचगृहेपाल्यमानेषुपारावतादिष्वन्यंस्वभार्यासहितंदृष्टवत्सुपरस्परंयुद्धं । भार्यायाबहुप्रकारताडनादिदण्डइत्याहुः । **स०** अन्यत्र स्वार्थेत्रल् ॥ २१ ॥ **ति०** गुरुः महान् । योधर्मः तंव्यतिक्रान्तं तत्प्रच्युतं । निघ्नन्नितिशेषः । प्राज्ञोविद्वान् । धर्मेणपालयन् । धर्मयुक्तमितिशेषः ॥ **रामानु०** धर्मव्यति-

[ **पा०** ] १ ख. घ. च. ज. भ्रातुर्भार्या. ग. ङ. छ.—ट. भ्रातृभार्याभिमर्शे. २ ङ.—ट. लोकविरुद्धस्य. ३ ख. दन्यद्विपश्यामि. ४ क.—छ. झ. ञ. ट. नचते. ज. नचेदमर्थयेपापं. ५ क. ङ. च. ज.—ट. कुलोद्गतः. ६ क. ख. घ.—ज. ञ. चापि. ७ घ.—ज. ञ. चाप्यनुजस्य. ट. वाप्यनुजस्यच. ८ ङ. च. ज. ञ. प्रचरेद्वानरः. ख. योव्रजेतनरः. ९ ख. चादेशवर्तिनः. १० क. ङ.—ज. ञ. ट. त्वांचधर्मादतिक्रान्तं. ग. झ. त्वंच. ११ क. ख. ग. ङ.—ट. शक्यमुपेक्षितुं. १२ ख. गुरुवृत्तानतिक्रान्तः. १३ छ. झ. ट. कामयुक्तानां.

वयं तु भरतादेशं[1] विधिं कृत्वा हरीश्वर ॥ त्वद्विधान्भिन्नमर्यादान्नियन्तुं[2] पर्यवस्थिताः ॥ २६ ॥
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा[3] तथा ॥ दारराज्यनिमित्तं च निःश्रेयसि[4] रतः स मे ॥ २७ ॥
प्रतिज्ञा च मया दत्ता तदा वानरसंनिधौ[5] ॥ प्रतिज्ञा[6] च कथं शक्या मद्विधेनानवेक्षितुम्[7] ॥ २८ ॥
तदेभिः कारणैः सर्वैर्महद्भिर्धर्मसंहितैः[8] ॥ शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ॥ २९ ॥
सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ॥ ३० ॥
वयस्यस्यापि[9] कर्तव्यं धर्ममेवानुपश्यतः[10] ॥ शक्यं त्वयाऽपि तत्कार्यं[11] धर्ममेवानुपश्यता[12] ॥ ३१ ॥
श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ॥ गृहीतौ धर्मकुशलैस्तत्तथा[13] चरितं हरे[14] ॥ ३२ ॥

मिति पूर्वेण संबन्धः ॥ २५—२६ ॥ एवं निरपराधवधदोषशङ्कायाः परिहारमुक्त्वा " मामेव यदि पूर्वं त्वमेतदर्थमचोदयः " इत्युक्तस्य परिहारमाह—सुग्रीवेणेति ॥ सुग्रीवेण यत्सख्यं तल्लक्ष्मणसख्यतुल्यं तद्वदपरिहार्यं । दारराज्यनिमित्तं च दारराज्यफलकं च । स च मे निःश्रेयसि रतश्च । अतः कथमुपेक्षितुं शक्य इत्यन्वयः ॥ २७ ॥ हेत्वन्तरमप्याह—प्रतिज्ञा चेति ॥ तदा सख्यकरणकाले । अनवेक्षितुं उपेक्षितुमिति यावत् ॥ २८ ॥ तत्तस्मात् उपेक्षितुमशक्यत्वात् । एभिः भ्रातृभार्यापहरणादिकारणैः । तव भ्रातृभार्याविमर्शकस्य यच्छासनं कृतं तद्युक्तं शास्त्रविहितमिति भवाननुमन्यतां ॥ २९ ॥ पुनर्हेत्वन्तराणि वक्तुं पीठिकामारचयति—सर्वथेति ॥ ३० ॥ शत्रुवद्धर्ममेवानुपश्यतो वयस्यस्यापि स्वमित्रशत्रुनिरसनं कर्तव्यं । धर्ममेवानुपश्यता त्वयापि तत्कार्यं आत्मनिग्रहरूपं शक्यं । प्रायश्चित्तत्वेनानुमन्तुं योग्यमित्यर्थः ॥ ३१ ॥ स्वेनावश्यं हन्तव्यत्वे वालिनावश्यमनुमन्तव्यत्वे च संवादं दर्शयति—श्रूयत इति ॥ चारित्रवत्सलौ

क्रान्तं व्यतिक्रान्तधर्माणं ॥ **स०** अतिक्रान्तोनभवतीतिव्यतिक्रान्तः गुरुधर्मेणव्यतिक्रान्तः गुरुधर्मव्यतिक्रान्तस्तं । भावेवानिष्ठाप्रत्ययः । गुरुधर्मव्यतिक्रमणंपालयन्परामृशन् विचारयन् ॥ **शि०** किंच गुरुधर्मव्यतिक्रान्तंपालयन् दण्डपूर्वकशुद्ध्यारक्षन् । भरतः कामयुक्तानांनिग्रहे अन्वेषणेपर्यवस्थितः । वयंतु अवधिं कालनियमंकृत्वाभरतादेशाः भरतेआदेशःप्रजापालनाज्ञायेषांतेसन्तोवने चरामइतिशेषः । देशावधिमित्यत्र । " नमुने " इतिसूत्रेनेतियोगविभागेनक्वचित्त्रिपाद्याअसिद्धत्वाभावज्ञापनात्संहिता । भागुरिमतेअवाकारलोपेन वधिशब्दोप्यवधिवाचकोवा । भरतकर्तृकाज्ञायाअवधिंकृत्वेत्यर्थोवा । अत्रपक्षेसमासप्रयुक्तषष्ठ्यालुप्तत्वान्नसंहितायांसंदेहः । भरताज्ञप्ताइत्यर्थस्तुनयुक्तः । रामकर्मकभरताज्ञायाअप्रसिद्धत्वादयोग्यत्वाच्चक्लिष्टकल्पनायांप्रमाणाभावाच्च । सार्धश्लोकएकान्वयी ॥ २५ ॥ **ती०** भरतादेशविधिं भरताज्ञाकरणं । " औरसींभगिनींवापिभार्यांवाप्यनुजस्ययः । प्रचरेत्सनरः कामात्तस्यदण्डोवधःस्मृतः" इत्युक्तप्रकारेणामार्गवर्तिनस्तववधेदुष्टनिग्राहकशिष्टपरिपालकसार्वभौमभरतस्याज्ञाकारिणोममदोषोनास्तीति ॥ **ति०** भरतादेशावधिंकृत्वा भरतादेशंतदाज्ञां अवधिं प्रमाणंकृत्वा । ननुभरतेनरामंप्रत्याज्ञायाअकृतत्वान्मृषोक्तिरेषेतिचेन्न । अस्मादेवभगवद्वाक्यात्तथाभरतोक्तेरनुमानेनाक्षतेः । यद्वा राज्यमूलप्रभौपर्यवस्थिते सर्वेषांतदीयानांदण्ड्यदण्डनादावनुक्तापितदाज्ञासिद्धैवेतिनदोषः । अपिच स्वराज्येभगवताभरतस्यपालनाज्ञायांदत्तायामर्थात्स्वस्मिन्प्रधानराजपुरुषत्वसिद्धौतदाज्ञाऽर्थसिद्धैवेतिनदोषः ॥ २६ ॥ **ति०** एभिरुक्तैःकारणैः एकैकमेवतववधेपर्याप्तं किंपुनर्मिलितानि । तस्माद्यत्तवमयाशासनमिदंकृतंतद्युक्तंशास्त्रसंमतमितिभवानप्यनुमन्यतां चिन्तयतु । तवभ्रातृभार्यापहारकत्वेनदण्ड्यत्वात्सखिकार्यस्यस्वकार्यत्वात्क्षत्रियस्यतत्प्रतिज्ञाहानौ चमहतोऽधर्मस्यश्रवणात्तद्वधोमेआवश्यकोधर्मश्चेत्याशयः ॥२९॥ **रामानु०** वयस्यस्यापीत्ययंश्लोकोबहुषुकोशेषुनदृष्टः । **विषम०** किंचधर्ममेवानुपश्यताजानता मित्रस्योपकर्तव्यं । मित्रोपकारकरणमपिधर्मएवेतिसुग्रीवोपकाररूपत्वाद्वधस्यधर्मत्वमितिभावः । किंचानुतापादिनाधर्ममनुवर्तता एतद्दुष्कर्मप्रायश्चित्तरूपधर्मानुवृत्तिंकुर्वतात्वयापितत्कार्यंमत्कृतनिग्रहरूपंकार्यंशक्यं राजप्रार्थनापूर्वंकारयितुंशक्यं । सत्यनुतापेत्वयाप्रार्थनापूर्वमयंदण्डःस्वस्यकारणीयएवेति त्वत्करणीयस्यैवमयाकृतत्वान्नात्रक्षोभःकार्यइतिभावः ॥३१॥

[ **पा०** ] १ छ. झ. ट. भरतादेशावधिं. ग. भरतादेशंहृदिकृत्वा. २ छ. झ. ञ. निग्रहीतुंव्यवस्थिताः. घ. निहन्तुं. ख. नियन्तुंकृतनिश्चयाः. ३ ङ. च. ज. ञ. यथापुरा. ४ ङ. च. छ. झ. ञ. ट. निश्श्रेयसकरः. ख. ग. घ. निश्श्रेयसरतः. ५ ङ. च. ञ. पावकसंनिधौ. ६ ग. प्रतिज्ञातु. ७ ख. ङ. च. ज. ञ. मद्विधानामुपेक्षितुं. ग. मद्विधेनानपेक्षितुं. ८ छ. झ. ट. धर्मसंश्रितैः. ९ छ. झ. ट. वयस्यस्योपकर्तव्यं. १० ग. ङ.—ञ. पश्यता. ख. वर्ततः. ११ ग. ङ. च. ज. कर्तव्यं. १२ ग. छ. झ. ञ. ट. मेवानुवर्तता. ङ. च. ज. मेवानुवर्तिना. १३ क. कुशलैस्तथाविचरितं. छ. झ. ट. कुशलैस्तथातच्चरितं. १४ क. ख. ङ. च. ज. विभो. छ. झ. ट. मया. ग. परैः.

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ॥ निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३३ ॥
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ॥ राजा त्वशासन्पापस्य तदवाप्नोति किल्बिषम् ॥ ३४ ॥
आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् ॥ श्रमणेन कृते पापे यथा पापं कृतं त्वया ॥ ३५ ॥
अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ॥ प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥ ३६ ॥
तदलं परितापेन धर्मतः परिकल्पितः ॥ वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥ ३७ ॥
शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ॥ यच्छ्रुत्वा हेतुमद्वीर न मन्युं कर्तुमर्हसि ॥ ३८ ॥
न मे तत्र मनस्तापो न मन्युर्हरियूथप ॥ वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ ३९ ॥
प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् ॥ प्रधावितान्वा वित्रस्तान्विस्रब्धांश्चापि निष्ठितान् ॥ ४० ॥
प्रमत्तानप्रमत्तान्वा नरा मांसार्थिनो भृशम् ॥ विध्यन्ति विमुखांश्चापि न च दोषोत्र विद्यते ॥ ४१ ॥

आचारैकपरौ । गृहीतौ धृतौ । तत् श्लोकद्वयोक्तं ॥ ३२ ॥ श्लोकौ पठति—राजभिरित्यादिना ॥ ३३ ॥ शासने परस्याभ्युदयमुक्त्वा अशासने राज्ञोनभ्युदयमाह—शासनादिति ॥ राज्ञा शासने मोचने वा स्तेनश्चोरो मुच्यत एव पापात् । पापस्य पापिष्ठस्याशासनाद्राजा तत्किल्बिषं पापमाप्नोति ॥ ३४ ॥ न केवलं वचनं आचारश्चास्मिन्नर्थेस्तीत्याह—आर्येणेति ॥ यथा त्वया पापं कृतं तथाश्रमणेन क्षपणकेन केनचित्पापे कृते मम आर्येण वृद्धप्रपितामहेन मान्धात्रा । घोरं व्यसनं दण्डनं । ईप्सितं प्रयुक्तमिति यावत् ॥ ३५ ॥ प्रमत्तैर्वसुधाधिपैर्हेतुभिः । अन्यैरपि जनैः पापं कृतं ते वसुधाधिपाः विगतानवधानाः सन्तः कर्मपरामर्शवेलायां पापीनां प्रायश्चित्तं वधादिकं । कुर्वन्ति । तेन प्रायश्चित्तेन । तद्रजः तत्पापं । शाम्यति अद्यापीतिशेषः ॥ ३६ ॥ न स्ववशे स्थिताः न स्वतन्त्राः शास्त्रवश्याइत्यर्थः । अनेन पराङ्मुखवधस्यदोषत्वमपि परिहृतं । प्रायश्चित्तस्य यथाकथंचित्कर्तव्यत्वात् । पञ्चमहापातकादिप्रायश्चित्तस्य मरणान्तिकत्वाद्बलादेवहिकार्यभवति नान्यथा ॥ ३७ ॥ एवं सन्ध्योपासनराज्यपालनादिकं नियमेनानुतिष्ठतोवालिनः शास्त्रवश्यत्वमवलम्ब्योक्तं । अथ शाखामृगत्वमवलम्ब्याह—शृणुचेत्यादिना ॥ ३८ ॥ "दृश्यमानस्तु युध्येथामया यदि नृपात्मज । अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया" इति ॥ "त्वया दृश्येन तु रणे निहतोहं दुरासदः । प्रसुप्तः पन्नगेनेव नरः पानवशंगतः" इति च वालिनायदुक्तं तदुभयस्योत्तरमाह—न मे तत्र मनस्ताप इति ॥ तत्र यमसदनप्रापणोक्तिप्रच्छन्नवेधननिन्दोक्तिविषये । मे मन्युर्नास्ति । शाखामृगस्य तवालक्ष्यत्वादितिभावः । मनस्तापाभावश्च मृगविषये प्रच्छन्नवेदनस्यराज्ञांस्वभावतयादोषाभावादितिभावः । तदेवोपपादयति वागुराभिरित्यादिना । कूटैः कपटव्यापारैः विस्रब्धान् विश्वस्तान् । यद्यपि प्रकृतेनमांसार्थिता

**ति०** त्वयापिप्रार्थनापूर्वमयमर्थःकारणीयःस्यादित्यर्थप्रतिपादकंश्लोकमाह—**शासनाद्वेति** । पापोऽहंमेदण्डंकुर्वितिप्रार्थनयास्वसमीपमागतस्यपापिनःशासनाद्दण्डकरणाद्वामोक्षाद्दययाविसर्जनाद्वा । स्तेनइतिपापोपलक्षणं । तत्रद्वितीयःपक्षोराज्ञोदोषायेत्याह—**राजात्विति** । राजातुपापस्याशासन्पापनिग्रहमकुर्वन् । अनेनत्वद्दण्डकरणमस्मादृशामावश्यकमितिध्वनितं ॥ **वि०** राजातु पापस्येत्यर्थः । अशासनात् निग्रहाकरणात् । तत्किल्बिषंपापं अवाप्नोति । अतस्त्वदण्डआवश्यकइतिभावः । **ती०** पापस्य पापकारिणः । किल्बिषं दुरितं ॥ ३४ ॥ **रामानु०** कुर्वन्तिशाम्यतइत्येतदुभयमपिभूतार्थेलट् ॥ **स०** नकेवलमस्मत्पूर्वजैरेव अन्यैरपिकृतमित्याह—**अन्यैरिति** । अन्यैरपिप्रमत्तैः पापंकृतं । वसुधाधिपैःकृतं शासनमितिशेषः । यद्वा एतादृशैःपापंकृतं राजानश्चतत्प्रायश्चित्तंचनकुर्वन्ति । तेनेति ॥ ३६ ॥ **तनि०** वागुराभिरिति । प्रयोजनान्तराभावेपिजनपदहिंसापरिहारार्थंनिघ्नन्तीतिभावः । "विध्यन्तिविमुखांश्चापिनचदोषोत्रविद्यते । यान्तिराजर्षयश्चात्रमृगयांधर्मकोविदाः ।" तेनमृगयासक्तिर्नदोषायेतिसूचितं ॥ ३९ ॥ **शि०** ननुशिष्टाचारेणग्रहणेदोषाभावःप्रतीयते नतुवधे । अत्रतुवधइत्यतआह—**प्रमत्तानिति** । मांसार्थिनः अनराः

[ **पा०** ] १ ङ.—ट. दण्डाश्च. २ ख. छ. झ. ञ. ट. द्वापिमोक्षाद्वा. ३ छ. झ. ट. पापात्प्रमुच्यते. ञ. पापाद्विमुच्यते. ४ क. ग.—च. ज. ञ. त्वशासनात्पापंतदेवा. ५ ङ. च. ज. ञ. त्वयाकृतं. ६ ख. वधस्तेहरिशार्दूल. ७ छ. झ. ट. तच्छ्रुत्वा हिमहद्वीर. ८ छ. झ. ट. पुङ्गव. ९ छ. विविधानराः. १० च. ज. प्रधावितांश्च. क. विस्रब्धांश्चाप्यविस्रब्धान्विनिघ्नन्तितथैवच. ११ न्विस्रब्धानतिविष्ठितान्. १२ ङ. च. ज. प्रमत्तान्वाऽप्रमत्तान्वा. क. प्रसुप्तानप्रसुप्तांश्च. १३ छ. झ. मांसाशिनोभृशं.

यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ॥ तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ॥
अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ॥ ४२ ॥
दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च ॥ राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ ४३ ॥
तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ॥ देवा [1]मनुष्यरूपेण चरन्त्येते महीतले ॥ ४४ ॥
त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ॥ [2]प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् ॥ ४५ ॥
एवमुक्तस्तु रामेण वाली [3]प्रव्यथितो भृशम् ॥ न दोषं राघवे दध्यौ [4]धर्मेऽधिगतनिश्चयः ॥
प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ॥ ४६ ॥
यत्त्वमात्थ नरश्रेष्ठ [5]तदेवं नात्र संशयः ॥ प्रतिवक्तुं प्रकृष्टे हि [6]नाप्रकृष्टस्तु शक्नुयात् ॥ ४७ ॥
[7]तदयुक्तं मया पूर्वं [8]प्रमादादुक्तमप्रियम् ॥ तत्रापि खलु मे [9]दोषं कर्तुं नार्हसि राघव ॥ ४८ ॥
त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः ॥ कार्यकारणसि[10]द्धौ ते प्रसन्ना बुद्धिरव्यया ॥ ४९ ॥
[11]मामप्यगतधर्माणं व्यतिक्रान्तपुरस्कृतम् ॥ धर्मसंहितया वाचा धर्मज्ञ परिपालय ॥ ५० ॥

तथापि पराङ्मुखवधान्नदोषइतितात्पर्यम् ॥ ३९—४२ ॥ परपीडाकरो राज्ञां व्यापारो निष्फल इत्याशङ्क्य व्रणचिकित्सान्यायेन स श्रेयस्कर एवेत्याह—दुर्लभस्येति ॥ जीवितस्य जीवनस्य ॥४३॥ न हिंस्यात् न पीडयेत् । तेष्वनर्थकरत्वबुद्धिं न कुर्यादित्यर्थः । नाक्रोशेत् ननिन्देत् । नाक्षिपेत् नोक्तिखण्डनं कुर्यात् । नाप्रियं वदेत् परुषं नवदेदित्यर्थः । तत्रहेतुमाह—देवाइति । एते पूर्वोक्ता राजानः । देवाः अष्टौ लोकपालाः । "अष्टाभिर्लोकपालानांमात्राभिः कल्पितो नृपः" इति वचनात् । मनुष्यरूपेण मनुष्यशरीरेण । उपलक्षिताश्चरन्ति ॥ ४४ ॥ पितृपैतामहे पितृपितामहप्राप्ते । नन्वेवमपि कथंचित्परिहार्ये "वरतनुहर्तिं वालिद्रोहं मनागपसर्पणं" इत्याद्यपवादकरं छन्नवेधनं समर्थोपि किमर्थंकृतवान् । तदवहितमनाःशृणु । यदि रामो वालिनःपुरतस्तिष्ठेत्तदा विदिततदीयप्रभावतया वालीप्रह्वोभवेत् । तदा तद्वधो न युक्तः । प्रतिज्ञा च व्याहन्येत । तद्द्वारा तन्मित्रं रावणोपि शरणं व्रजेत् । देवकार्यं च लुप्येत् । अतः प्रच्छन्नो वालिनमवधीत् ॥ ४५ ॥ प्रव्यथितः अज्ञानाद्राममधिक्षिप्तवानस्मीत्यनुतप्तः ॥ ४६ ॥ प्रकृष्टे विषये ॥ ४७ ॥ कर्तुं चिन्तयितुं ॥ ४८ ॥ दृष्टार्थश्चासौ तत्त्वज्ञश्च दृष्टार्थतत्त्वज्ञः । यद्वा ज्ञः पण्डितः । दृष्टार्थतत्वश्चासौ ज्ञश्चेति समासः । कार्यकारणसिद्धौ कार्यं दण्डनं कारणं तद्धेतुभूतं पापं तयोः सिद्धौ परिज्ञाने । बुद्धिः अन्तःकरणं ॥ ४९ ॥ अगतधर्माणं कृत्याकरणवन्तं । व्यतिक्रान्तपुरस्कृतं पुरस्कृतव्यतिक्रमं अकृत्यकारिणमित्यर्थः ।

नरसदृशाः राजानस्तुप्रमत्तानप्रमत्तान्वाविमुखान्पलायितान्वामृगान् विध्यन्ति घ्नन्ति । अत्र वधे दोषः मनुष्यवधवत्पापं । नविद्यते । एतेन मृगवधजनितपापस्याल्पत्वात्प्रायश्चित्तस्यसुकरत्वान्नतद्वधेभीतिरितिसूचितं ॥ यदिचमांसार्थित्वंयागार्थमित्युच्यतेतदानदोष इत्यस्यदोषसंसर्गाभावोबोध्यइतिदिक् ॥ ४१ ॥ ति० प्रतियुध्यन् अन्येनयुद्धंकुर्वन् । मांसादिलोभाभावेपिक्षत्रियस्वाभाव्यात्तववधो मयाकृतः इतरव्याघ्रादितिर्यग्जन्तुवत् । तत्रमेनकश्चिन्महान्दोषः । अल्पस्तुप्राणायाममात्रापनेयइतिभावः ॥ ४२ ॥ ति० आक्रोशोनिन्दा । आक्षेपोऽवमाननं । अप्रियवादः प्रतिकूलवचनं । त्वंतुनतादृशोराजेतिभावः । एतेनराज्ञोवधादौब्रह्मवधादिदोषइतिसूचितं ॥ ४४ ॥ ती० "नाविष्णुःपृथिवीपतिः" इतिस्मरणात् देवतारूपाणांराज्ञामधिक्षेपस्तवनयुक्तइत्याशयेनाह—**दुर्लभस्येत्यादिश्लोकद्वयेन** ॥ शि० जीवितस्यप्रदातारइत्यनेनयदित्वयिजीवितेच्छा तर्हित्वांजीवयिष्यामीतिसूचितं ॥ ४३—४४ ॥ **टीका०** प्रकृष्टः श्रेष्ठः । सर्वज्ञइत्यर्थः । अपकृष्टः किञ्चिज्ज्ञः ॥ ४७ ॥ ति० धर्मादेवव्यतिक्रान्तानां पुरस्कृतं अग्रेसरं । अवगतं अग्रेसरत्वेनप्रसिद्धं । वाचापरिपालय उत्तमलोकान्प्रापयहीतित्वाचानुगृहाणेत्यर्थः ॥ स० सुग्रीवंपुरस्कृतस्त्वं व्यतिक्रान्तोयेनसव्यति-

[ पा० ] १ ग. घ. छ. झ. ञ. ट. मानुषरूपेण. २ ङ. छ.—झ. ट. विदूषयसि. च. त्वंदूषयसि. ३ ग. प्रव्यथितेन्द्रियः. ट. प्रमथितो. ४ क. ग. धर्मार्थकृतनिश्चयः. ५ झ. ट. तत्तथैवनसंशयः. ६ क. छ.—ट. नापकृष्टस्तु. ७ ख. छ. झ. ट. यदयुक्तं. क. ग. च. यदुक्तंते. ८ क. ग. छ. झ. ट. प्रमादाद्वाक्यं. ९ ङ. च. ज. ञ. रोषं. १० क. ग. छ.—ट. सिद्धौच. ङ. च. शुद्धौच. ११ ग. ङ. छ. झ. ञ. ट. मामप्यवगतंधर्मात्. क.—घ. मामप्यपगतं.

[ [1]बाष्पसंरुद्धकण्ठस्तु वाली सार्तस्वरं शनैः ॥ उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ॥ ५१ ॥ ]
न [2]त्वात्मानमहं शोचे न तारां [3]न च बान्धवान् ॥ यथा पुत्रं [4]गुणश्रेष्ठमङ्गदं कनकाङ्गदम् ॥ ५२ ॥
स ममादर्शनाद्दीनो बाल्यात्प्रभृति लालितः ॥ तटाक इव पीताम्बु[5]रुपशोषं गमिष्यति ॥ ५३ ॥
बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः ॥ तारेयो राम भवता रक्षणीयो [6]महाबलः ॥ ५४ ॥
सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमाम् ॥ त्वं हि [7]शास्ता च गोप्ता च कार्याकार्यविधौ स्थितः ॥५५॥
या ते नरपते [8]वृत्तिर्भरते लक्ष्मणे च या ॥ सुग्रीवे चाङ्गदे राजंस्तां त्वमाधातुमर्हसि ॥ ५६ ॥
मद्दोषकृतदोषां तां यथा तारां तपस्विनीम् ॥ सुग्रीवो [9][10]नावमन्येत तथाऽवस्थातुमर्हसि ॥ ५७ ॥
त्वया ह्यनुगृहीतेन [11]राज्यं शक्यमुपासितुम् ॥ त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥ ५८ ॥
शक्यं दिवं चार्जयितुं वसुधां चापि [12]शासितुम् ॥ ५९ ॥
त्वत्तोऽहं वधमाकाङ्क्षन्वार्यमाणोपि तारया ॥ सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः ॥ ६० ॥
इत्युक्त्वा [13]संनतो रामं विरराम हरीश्वरः ॥ ६१ ॥
स तमाश्वासयद्रामो वालिनं [14]व्यक्तदर्शनम् ॥ [15]सामसंपन्नया वाचा [16]धर्मतत्त्वार्थयुक्तया ॥ ६२ ॥
न संतापस्त्वया कार्य एतदर्थं प्लवङ्गम ॥ ६३ ॥
न वयं भवता चिन्त्या [17]नाप्यात्मा हरिसत्तम ॥ वयं भवद्विशेषेण धर्मतः कृतनिश्चयाः ॥ ६४ ॥

---

वाचा परिपालय सर्वं मया क्षान्तमितिवदेत्यर्थः ॥ ५०—५१ ॥ कार्यान्तरमभ्यर्थयते—न त्वित्यादिना ॥ नात्मानंप्रतिशोचे त्वयादत्तसम्यग्गतिकत्वात् । नापि तारादिकान्प्रति सुग्रीवस्यविद्यमानत्वात् । पुत्रं "अङ्गादङ्गात्संभवसि" इत्युक्तरीत्या स्वानतिरिक्तं । गुणश्रेष्ठं पितृशुश्रूषादिगुणैः श्रेष्ठं । कनकाङ्गदं दर्शनीयमित्यर्थः ॥ ५२—५४ ॥ मतिं तुल्यामितिशेषः ॥ ५५ ॥ वृत्तिः प्रीतिरिति यावत् ॥ ५६ ॥ नावमन्येत पुत्रनिर्वासनेनेति भावः । अवस्थातुं व्यवस्थापयितुं ॥ ५७ ॥ उपासितुं मयेतिशेषः । न केवलं मद्राज्यं । अन्यच्चेत्याह—शक्यमिति ॥ ५८—५९ ॥ तर्हि तथा किं न कृतं तत्राह—त्वत्त इति। आकाङ्क्षन् आकाङ्क्षमाण इवेत्यर्थः ॥६०—६१॥ व्यक्तदर्शनं विशदज्ञानं । साम सान्त्वनं ॥ ६२ ॥ एतदर्थं पुत्रपालनार्थं ॥ ६३ ॥ वयं न चिन्त्याः अकृत्यकारिण इतिशेषः । नाप्यात्मा निवृत्तपापत्वात् । कुत इत्यत्राह—वयमिति । भवद्विशेषेण भवतो कृत्यरूपविशेषेण हेतुना । धर्मतः प्रायश्चित्तरूपे धर्मे ।

---

क्रान्तपुरस्कृतस्त्वं ॥ ५० ॥ ति० उवाच पुत्रादिमायाकृष्टस्सन्नुवाचेत्यर्थः ॥ ५१ ॥ वि० पीतांबुः सस्याद्युपयोजितांबुः ॥ शि० पीतांबुः सूर्यकिरणशोषितजलः ॥ ५३ ॥ ति० मतिमुत्तमां । "मरणान्तानिवैराणि" इतिन्यायेनेतिभावः । सुग्रीवेचतत्रैवेत्यर्थः । भ्रातृस्नेहोद्बोधेनवातत्राप्यनुग्रहप्रार्थनं । कार्यविधौगोप्ता अकार्यविधौशास्ता ॥ ५५ ॥ ती० मद्दोषकृतदोषां सुग्रीवायमत्कृतापराधेनकृतापराधां । अवस्थातुं अवस्थापयितुं ॥ ५७ ॥ ति० शक्यमिति । स्वाराज्यमपित्वत्प्रसादलभ्यमितिभावः ॥ ५९ ॥ अहंत्वदुपदेशतस्त्वद्दर्शनतश्चेदानींक्षीणपापस्त्वत्तोवधं उत्तमलोकराज्यफलकं आकांक्षन् अपेक्षमाणः । इदानीमस्मि । अतस्तारयावार्यमाणोपि यद्भ्रात्रायुद्धमुपागतः तत्पूर्वकृतपुण्यपरिपाकेनेतिशेषः । शि० ननुतवेच्छाचेत्त्वांजीवयामिराज्यंकुर्वित्यतआह—त्वत्तइति । एतेनवालिनोजीवनेच्छाभावस्सूचितः ॥ ६० ॥ ती० व्यक्तदर्शनं अभिव्यक्तसर्वेश्वरस्वरूपज्ञानं ॥ ६२ ॥ ती० वयंभवतानचिन्त्याः नविचार्याः । पराङ्मुखस्यमेवधंप्रच्छन्नंकृत्वा एषपापमार्जितवान् उतपुण्यमितिभवतानविचार्याइत्यर्थः । नाप्यात्माचिन्त्यः भ्रातृभार्याहरणादिकंकृत्वागतोहंकिंभविष्यदिति त्वंच त्वयानविचार्यः । कुतः वयं भवद्विशेषेण भवतोविशेषेण । धर्मतः धर्मे । कृतनिश्चयाः । अस्यवधःकिंधर्मःउताधर्मइतिविशेषेणविचार्यधर्मेनिश्चयंकृतवन्त

[ पा० ] १ अयंश्लोकः. ङ.छ.झ.ट. पुस्तकेषु दृश्यते. २ छ.झ.ट. नचात्मानं. ३ क. ग. छ.—ट. नापि. ४ ङ.—ट. गुणज्येष्ठं. ५ झ. रुदशोषं. ६ ग. महाबल. ७ छ. झ. ट. गोप्ताचशास्ताच. ८ ग. घ. वृत्तिर्लक्ष्मणेभरतेचया. ९ क. ग. ङ. च.ज.—ट. तांचिन्तयितुमर्हसि. १० ख. नाभिमन्येत. ११ ग. ङ.—ट. शक्यंराज्यं. १२ ग. शाश्वतीं. १३ छ. झ. ञ. ट. वानरो. १४ क. व्यक्तविक्रमं. ख. व्यक्तदर्शनः. १५ ङ.—ट. साधुसंमतया. १६ क. धर्महेत्वर्थयुक्तया. १७ ख. नापित्वं.

दण्डये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते ॥ कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः ॥६५॥
तद्भवान्दण्डसंयोगादस्माद्विगतकल्मषः[1] ॥ गतः स्वां प्रकृतिं धर्म्यां धर्मदृष्टेन[2] वर्त्मना ॥ ६६ ॥
त्यज शोकं च मोहं च भयं[3] च हृदये स्थितम् ॥ त्वया विधानं हर्यग्र्य न शक्यमतिवर्तितुम् ॥ ६७ ॥
यथा त्वय्यङ्गदो नित्यं वर्तते वानरेश्वर ॥ तथा वर्तेत[4] सुग्रीवे मयि चापि न संशयः ॥ ६८ ॥

स तस्य वाक्यं मधुरं महात्मनः समाहितं धर्मपथानुवर्तिनः ॥
निशम्य रामस्य रणावमर्दिनो वचः सुयुक्तं[5] निजगाद वानरः ॥ ६९ ॥
शराभितप्तेन विचेतसा मया प्रदूषितस्त्वं[6] यदजानता प्रभो[7] ॥
इदं महेन्द्रोपमभीमविक्रम[8] प्रसादितस्त्वं क्षम मे नरेश्वर[9] ॥ ७० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

## एकोनविंशः सर्गः ॥ १९ ॥

वालिमरणश्रवणेनशोकात्तारयाकिष्किन्धातस्तत्समीपंप्रतिनिर्गमनम् ॥ १ ॥ रामभयात्पलायमानैर्वानरैर्मध्येमार्गमागच्छन्तींतारांप्रतिरामेणवालिमारणनिवेदनपूर्वकंभयोत्पादनेननगररक्षणाङ्गदाभिषेचनचोदनेनसहनगरंप्रतिनिवर्तनचोदनम् ॥ २ ॥ तन्निराकरणपूर्वकंशोकादापतन्त्यातारयारणाङ्गणशायिनोवालिनोरामादीनांचावलोकनम् ॥ ३ ॥

स वानरमहाराजः[10] शयानः शरविक्षतः[11] ॥ प्रत्युक्तो हेतुमद्वाक्यैर्नोत्तरं प्रत्यपद्यत[12] ॥ १ ॥
अश्मभिः प्रविभिन्नाङ्गः[13] पादपैराहतो[14] भृशम् ॥ रामबाणेन च[15] क्रान्तो जीवितान्ते मुमोह सः ॥ २ ॥

सप्तम्यर्थे तसिः । कृतनिश्चयाः अतो वयं न चिन्त्या इत्यादि पूर्वेणान्वयः ॥ ६४ ॥ उक्तं विवृणोति—दण्ड्य इति ॥ कार्यकारणसिद्धार्थौ दण्ड्यत्वदण्डयितृत्वाभ्यां निष्पन्नप्रयोजनावित्यर्थः ॥ ६५ ॥ धर्मदृष्टेन धर्मशास्त्रदृष्टेन । वर्त्मना दण्डसंयोगात् विगतकल्मषः सन् । धर्म्यां धर्मादनपेतां । स्वां प्रकृतिं यथावस्थितशुद्धस्वरूपं गतः ॥ ६६ ॥ हेत्वन्तरेणाश्वासयति—त्यजेति ॥ विधानं विधिः प्रारब्धंकर्मेतियावत् ॥ ६७—६८ ॥ उक्तमर्थं सर्गान्ते श्लोकाभ्यांपुनः संगृह्णाति—सतस्येति ॥ समाहितं समाधानरूपं ॥ ६९ ॥ प्रदूषित इति यत् इदं मे अपचरितं । क्षम क्षमस्व ॥ ७० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्कन्धाकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

---

तारागमनमेकोनविंशे—सवानरमहाराजइत्यादि॥ विक्षतः विशेषेण क्षतः । जीवितान्ते जीवितान्त-

इत्यर्थः । यद्वा भवद्विशेषेण भवदकृत्यविशेषेणहेतुना । धर्मतः प्रायश्चित्तरूपधर्मे । वयंकृतनिश्चयाः । अतोवयंभवताऽचिन्त्याः अकृत्यंकृतवन्तइतिनविचार्याः । नाप्यात्मा ममपरलोकप्रतिबन्धकमस्तीतिभवानपिनविचार्यइत्यर्थः । “ राजभिर्धृतदण्डास्तुकृत्वापापानिमानवाः । निर्मलाःस्वर्गमायान्ति संतःसुकृतिनोयथा । शासनाद्वाविमोक्षाद्वास्तेनःस्तेयाद्विमुच्यते । राजात्वशासन्पापस्यतदवाप्नोतिकिल्बिषं ” इतिमनुवचनानुसारेणोभयोरपिदोषाभावइतिभावः ॥ ६४ ॥ **ति०** दण्डदिष्टेन दण्डबोधकशास्त्रोक्तेन ॥६६॥ **ति०** भयं भ्रातृभार्याहरणजनितनरकभयं मद्दूषणनिमित्तपरलोकभयंच । दण्डेनकर्मणोनाशान्मद्दूषणस्यमयाक्षान्तत्वाच्च । शोकमोहौ तारातारेयविषयौ । विधानं प्राग्भवीयंकर्म । अत्रान्तेदण्डस्यैवसंहारात्तिरश्चामपिज्ञानवतांशास्त्रार्थेऽधिकारोदृढः कृतइतिबोध्यं ॥ ६७ ॥ **स०** इदं परुषभाषणं । क्षम क्षमस्व । क्षमेत्युक्त्यारामस्यकोपलेशोपिनास्तीतिसूचयति ॥ ७० ॥ इत्यष्टादशःसर्गः ॥ १८ ॥

**[ पा० ]** १ घ. किल्बिषः. २ ङ.—ट. दण्डदिष्टेन. ३ क. ख. मन्युंच. ४ छ. झ. वर्तितं. ५ ङ. च. सयुक्तं. ६ छ. झ. ट. प्रभाषितस्त्वं. ७ ङ.—ट. विभो. ८ ग. वीर्यविक्रम. ९ ग. च. छ. ज. ञ. महीश्वर. ङ. ट. महेश्वर. १० क. ग. च. ज. वानरोमहातेजाः. ११ ङ.—ट. शरपीडितः. ख. क्षतविक्षतः. १२ ङ. छ. ज. ञ. ट. प्रतिपद्यते. १३ क. ङ.—ट. परिभिन्नाङ्गः. १४ क. ग. पादपेनाहतो. १५ क. ङ.—ट. चाक्रान्तो.

तं भार्या बाणमोक्षेण रामदत्तेन संयुगे ॥ हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥ ३ ॥
सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुः सुदारुणम् ॥ निष्पपात भृशं त्रस्ता विविधाद्गिरिगह्वरात् ॥ ४ ॥
ये त्वङ्गदपरीवारा वानरा भीमविक्रमाः ॥ ते सकार्मुकमालोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५ ॥
सा ददर्श ततस्त्रस्तान्हरीनापततो भृशम् ॥ यूथादिव परिभ्रष्टान्मृगान्निहतयूथपान् ॥ ६ ॥
तानुवाच समासाद्य दुःखितान्दुःखिता सती ॥ रामवित्रासितान्सर्वाननुबद्धानिवेषुभिः ॥ ७ ॥
वानरा राजसिंहस्य यस्य यूयं पुरःसराः ॥ तं विहाय सुसंत्रस्ताः कस्माद्द्रवथ दुर्गताः ॥ ८ ॥
राज्यहेतोः स चेद्भ्राता भ्रात्रा रौद्रेण पातितः ॥ रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः ॥ ९ ॥
कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः ॥ प्राप्तकालमविक्लिष्टमूचुर्वचनमङ्गनाम् ॥ १० ॥
जीवपुत्रे निवर्तस्व पुत्रं रक्षस्व चाङ्गदम् ॥ अन्तको रामरूपेण हत्वा नयति वालिनम् ॥ ११ ॥
क्षिप्तान्वृक्षान्समाविध्य विपुलाश्च शिलास्तथा ॥ वाली वज्रसमैर्बाणै[11] रामेण विनिपातितः ॥ १२ ॥
[12]अभिद्रुतमिदं सर्वं विद्रुतं[13] प्रसृतं बलम् ॥ [14]अस्मिन्प्लवगशार्दूले हते शक्रसमप्रभे ॥ १३ ॥
रक्ष्यतां [15]नगरद्वारमङ्गदश्चाभिषिच्यताम् ॥ पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवङ्गमाः ॥ १४ ॥
[16]अथवाऽरुचितं स्थानमिह ते रुचिरानने ॥ [17]आविशन्ति हि दुर्गाणि क्षिप्र[18]मन्यानि वानराः ॥ १५ ॥

काले ॥ १—३ ॥ अप्रियमिति च्छेदः । विविधात् नानाकक्ष्यात् । गिरिगह्वराद्गिरिगुहातः । गुहारूपा हि किष्किन्धेत्युक्तं ॥ ४ ॥ ये त्वित्यादिश्लोकद्वयमेकान्वयं ॥ ५—६ ॥ पूर्वं सामान्यतो विदितवृत्तान्तापि विशेषजिज्ञासया पृच्छति तानिति ॥ ७ ॥ वानराइत्यानिश्लोकद्वयमेकान्वयं । दुर्गताः अगतिकाः । राज्यलोभाय सुग्रीवेण वाली हतश्चेद्भवतांकिंभयमित्यर्थः । मार्गणैरिति बहुवचनं संभावनयोक्तं ॥ ८—९ ॥ अविक्लिष्टं सयुक्तिकमितियावत् ॥ १० ॥ जीवपुत्रे इति अपुत्रायाः खलु मृतभर्त्रनुगमनमितिभावः । नयति लोकान्तरमिति शेषः ॥ ११—१२ ॥ विद्रुतं पूर्वं किष्किन्धातो निर्गतमिदं बलं प्रसृतं प्रकीर्णं सत् । अभिद्रुतं किष्किन्धाभिमुख्येन द्रुतं ॥ १३—१४ ॥ हे रुचिरानने ते इह किष्किन्धायां । स्थानं अवस्थानं । अरुचितं अनभिमतं । अत्र स्थातुं अस्माकं नरोचते इत्यर्थः । हि यस्मात्कारणात् वानराः शत्रु-

**रामानु०** विविधात् विचित्रान्तःप्रदेशात् ॥ ४ ॥ इषुभिरनुविद्धानिव अनुसृतानिवविद्यमानान् ॥ रामवित्रासितान् रामाद्वित्रस्तान् ॥ ७ ॥ **वि०** भ्राता प्रयोजककर्ता । रामःप्रयोज्यकर्ता । बाणाःकरणं । दूरात् दूरेस्थित्वामार्गणैःपातितश्चेत्किंयुष्माभिः पलायितमितिशेषः । तत्सेवयैवभवज्जीवनसंभवादितिभावः । वालिविषयबहुबाणप्रयोगसंभावनयामार्गणैरितिबहुवचननिर्देशः ॥९॥ **ती०** अविश्लिष्टं एकरूपं । **स०** ननुकथंकपिपत्न्याइति "पत्युर्नोयज्ञसंयोगे" इतियज्ञसंयोगएवपत्नीत्वविधानात् वालिनश्चतिर्यग्जातीयत्वेनयज्ञाधिकाराभावादितिचेन्न । तस्यदेवत्वेनदेवानांचदेवताधिकरणेऽधिकारस्यसमर्थितत्वात्परिदृश्यमानकपित्वंनयज्ञाधिकारविलोपकमितिभावः । अधिकारनिषेधस्तुप्रसिद्धपामरतिर्यग्विषयइतिभावः ॥ १० ॥ **स०** जीवन्पुत्रोयस्यास्सातथा तस्यास्संबुद्धिः । जीवेत्युक्तिविषयःपुत्रोयस्यास्सेतिवा ॥ ११ ॥ **शि०** वज्रेण वज्रिणेव । रामेणेतिशेषः । वज्रशब्दअर्शआद्यजन्तः । **स०** क्षिप्तान् खेनेतिशेषः । बाणैस्समाविध्यनिपातितः रामेणेतिशेषः । वालीपरमसमर्थःकथमेकेनबाणेननिपतेदितिवालिसामर्थ्यंजानद्भिः अजानद्भिश्चरामसामर्थ्यं बाणैरित्याद्युक्तमित्यदोषः । 'मार्गणैर्दूरपातिभिः' इतिपूर्वश्लोकेप्येवमेवार्थोबोध्यः ॥ १२ ॥ **ति०** वानरं वानराणामिदं ॥ १३ ॥ **ति०** अथवेति । सरामेसुग्रीवेकिष्किन्धामागच्छतिअभिषिक्तेनाप्यङ्गदेनास्मत्पालनमशक्य-

[ **पा०** ] १ ज. रामहस्तेन. २ छ. झ. ट. भृशंतस्मादुद्विग्नागिरिकन्दरात्. क. ग. भृशायत्तारम्याद्गिरिगुहान्तरात्. ङ. च. ज. ञ. भृशंतस्माद्विविधाद्गिरिकंदरात्. ३ क. ग. ङ. ट. वानराहिमहाबलाः. ४ क. घ. च.—ट. द्रुतं. ५ क. ख. ग. विद्धानिवेषुभिः. ६ क. ग. ङ.—ट. सुवित्रस्ताः. ७ ङ.—ञ. क्रूरेण. ८ क. ग. प्रहितैर्दूरान्मार्गणैः. ख. ङ.—ट. प्रसृतैर्दूरान्मार्गणैः. घ. प्रधृतैरौद्रैर्बाणैर्दूरातिपातिभिः. ९ छ.—ट. मविश्लिष्टं. १० च.—ट. तथाशिलाः. ११ क. घ. च. छ. झ. ञ. ट. बाणैर्वज्रेणेवनिपातितः. ग. बाणैर्वज्रेण. ज. बाणैरिन्द्रेणेवनिपातितः. १२ छ. झ. ट. अभिभूतमिदं. १३ छ. झ. ट. वानरंबलं. १४ च. ज. ञ. तस्मिन्प्लवग. १५ नगरीशूरैरङ्गदश्चा. क. ख. ग. च. नगरंशूरैरङ्गदश्चा. १६ ग. ङ. च. ज. ञ. अथवाऽरुचिरं. १७ क. ग. छ. झ. ट. आविशन्तिच. ज. ञ. आविशन्तिह. १८ क. ख. ग. छ. झ. ट. क्षिप्रमद्यैव. घ. ज. ञ. क्षिप्रमद्यच.

अभार्याश्च सभार्याश्च सन्त्यत्र वनचारिणः ॥ लुब्धेभ्यो विप्रयुक्तेभ्यस्तेभ्यो नस्तुमुलं भयम् ॥ १६ ॥
अल्पान्तरगतानां तु श्रुत्वा वचनमङ्गना ॥ आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥ १७ ॥
पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ॥ कपिसिंहे महाभागे तस्मिन्भर्तरि नश्यति ॥ १८ ॥
पादमूलं गमिष्यामि तस्यैवाहं महात्मनः ॥ योसौ रामप्रयुक्तेन शरेण विनिपातितः ॥ १९ ॥
एवमुक्त्वा प्रदुद्राव रुदन्ती शोककर्शिता ॥ शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २० ॥
आव्रजन्ती ददर्शाथ पतिं निपतितं भुवि ॥ हन्तारं दानवेन्द्राणां समरेष्वनिवर्तिनाम् ॥ २१ ॥
क्षेप्तारं पर्वतेन्द्राणां वज्राणामिव वासवम् ॥ महावातसमाविष्टं महामेघौघनिःस्वनम् ॥ २२ ॥

भूताः । दुर्गाणि किष्कन्धायाः दुष्प्रवेशस्थलानि । आविशन्ति आक्रमिष्यन्ति । अन्यानि अस्मदावासस्थलभिन्नानीत्यर्थः ॥ १५ ॥ अस्त्वाक्रमणं ततः किमित्यत्राह—अभार्या इति ॥ अभार्याः भार्याविरहिताः । सभार्याः समानभार्याः साधारणभार्याइत्यर्थः । ये वालिना विप्रवासिताः वनचारिणः सन्ति तेभ्यः विप्रयुक्तेभ्यः स्वभार्याविरहिभ्यः । लुब्धेभ्यः साधारणभार्यान्तराभिलाषिभ्यः । स्वेभ्यः ज्ञातिभ्यः सुग्रीवादिभ्यः । नः अस्माकं । अत्र किष्कन्धास्थाने । तुमुलं निरन्तरं । भयं भवति । अनेन भाविसुग्रीवव्यापारःसूचितः । रुचिरानन इत्यादिसंबोधनात्तस्याः सहमरणसाहसंद्योत्यते ॥ १६ ॥ अल्पान्तरगतानां किंचिदवकाशं प्राप्तानां । संभाषणाय कियन्मात्रावकाशं प्राप्तानामित्यर्थः । आत्मनः प्रतिरूपं स्वबुद्ध्यनुगुणं । यद्वा आन्तरं बुद्धिः अल्पबुद्धीनामित्यर्थः ॥ १७—१९ ॥ बाहुभ्यां हस्ताभ्यामित्यर्थः ॥ २० ॥ दानवेन्द्राणां मायाविप्रभृतीनां । वज्राणामिति प्रयोगबाहुल्यापेक्षया बहुवचननिर्देशः । महावातसमाविष्टं समाविष्टमहावातमिव स्थितं । समावेशः संघीभावः । यद्वा समाविष्टमिति भावे निष्ठा । महावातसमावेशमिव स्थितं । पराक्रान्तं पराक्रमः । नर्दतां मध्ये भीमं नर्दन्तं । शार्दूलेन सिंहेन । " सिंहोमृगेन्द्रः पञ्चास्यो हर्यक्षः श्वेतपिङ्गलः । व्यादीर्णास्यो महानादः शार्दूलोतुलविक्रमः " इतिवैजयन्ती । यद्वा असंभावितत्वद्योतनाय शार्दूलहिंसितसिंहमिवेत्यभूतोपमा । अर्चितमिति । अत्र भागवताद्युक्तकालीयनागप्रहरणवेलायां बलिस्थानं चैत्यमप्युन्मथितमित्यवगन्तव्यमित्याहुः । सर्वलोकस्य सर्वलोकेन । अर्चितं सपताकं अलंकृतमित्यर्थः । सवेदिकं श्रमहरवेदिकासंपन्नं । एवं वर्तमानमपि तत्र निगूढनागग्रहणाय गरुडोन्मथितं चैत्यमिव स्थितमित्यर्थः । शौर्यादिसंपन्नोपि भ्रातृभार्यापहरणपापवत्त्वेन हत इत्यत्र दृष्टान्तोयं । ऊर्जितं दृढं । धनुरवष्टभ्य तिष्ठन्तं । अनेनाकर्षकाकार उच्यते । चकारेण तादृशसंस्थानविशेषेणाकर्षकता कथ्यते । भर्तारं हतवन्तं रामं तत्साहाय्यकृतं तदनुजं तेन संहारयितारं सुग्रीवं च ददर्श । शुभा तत्र शत्रुत्वबुद्धिं विहाय शुभहृदया बभूव । न रामस्य दोषोस्ति । किंतु वालिन एव । पानीयपानाय तटाके खाते तत्र कण्ठे गुर्वीं शिलां बद्ध्वा पतित्वा म्रियमाणस्यैवहि दोषः । अयमप्यनुकूलश्चेत्कथमेनं न रक्षेत् । किंच " मम प्राणा हि पाण्डवाः " इत्युक्तरीत्या स्वप्राणभूते स्वाश्रिते हिंसां कुर्वन्तं कथं मृष्येत् । अतएव हि प्रथमयुद्धे न हिंसितवान् । किंतु स्वाश्रितापराधं दृष्ट्वैव पुनर्युद्धे वालिनं हतवानित्यमन्यतेति भावः

मेवेतिनेहस्थातुंयोग्यमितिशेषः । हेरुचिरानने यद्यपीदंस्थानं तेतुभ्यंरुचितं अभीष्टं । तथापि इह किष्किन्धायांविद्यमानानिदुर्गाणि अद्यैववानराः सुग्रीवहनुमदादयः आविशन्ति । वर्तमानसामीप्येलट् । लुब्धेभ्यः राज्यादिविषये । विप्रलब्धेभ्यःपूर्वमस्माभिर्वञ्चितेभ्यः । अस्माकं तुमुलं महत् । भयमस्ति । यतइतिशेषः । केचित्तुइहतेस्थानंअस्माकंअरुचितं अनभिमतं । इतरत्पूर्ववदित्याहुः । **स०** येसभार्याःसुग्रीवाद्याःतेअभार्याःविरहितभार्याःकृताः ॥ १५—१६ ॥ **ती०** अल्पान्तरगतानां नातिदूरवर्तिनां । आत्मनः प्रतिरूपं आत्मानुरूपं । अल्पान्तरगतानांएवंभयेनकिंचिद्रंध्रंप्राप्तानामितिवा । **ति०** अवान्तरगतानामितिपाठे मध्येमार्गमागतानामित्यर्थः ॥ **स०** चारुहासिनी पूर्वं ॥१७॥ **ती०** महावातसमाविष्टं । भावेनिष्ठा । महावातस्येवसमाविष्टंसमावेशनंयस्यसतथो-

[ **पा०** ] १ क. घ. छ. झ. ट. अभार्यास्सहभार्याश्च. २ छ. झ. ञ. विप्रलब्धेभ्यः. ट. विप्रलुब्धेभ्यः. ३ छ. झ. ट. नस्सुमहद्भयं. ४ च. छ. झ. ट. राज्येनापिकिमात्मना. ग. ङ. राज्येनचकिमात्मना. ५ ङ.—ट. शोकमूर्च्छिता. ६ च.—ट. सात्रजन्ती. क. ग. आविशन्ती. ७ ख. महाबलसमाविष्टं.

शक्रतुल्यपराक्रान्तं वृष्ट्वेवोपरतं घनम् ॥ नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितम् ॥ २३ ॥
शार्दूलेनामिषस्यार्थे [1]मृगराजं यथा हतम् ॥ २४ ॥
अर्चितं सर्वलोकस्य सपताकं सवेदिकम् ॥ नागहेतोः सुपर्णेन चैत्यमुन्मथितं यथा ॥ २५ ॥
अवष्टभ्य च तिष्ठन्तं ददर्श धनुरूर्जितं ॥ रामं रामानुजं चैव [2]भर्तुश्चैवानुजं शुभा ॥ २६ ॥
तानतीत्य समासाद्य भर्तारं निहतं रणे ॥ [3]समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह ॥ २७ ॥
सुप्त्वैव पुनरुत्थाय [4]आर्यपुत्रेति क्रो[5]शती ॥ रुरोद [6]सा पतिं दृष्ट्वा [7]संदितं मृत्युदामभिः ॥ २८ ॥
तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव ॥ विषादमगमत्कष्टं दृष्ट्वा चाङ्गदमागतम् ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ॥ २० ॥

तारया वाल्यालिङ्गनपूर्वकं सकरुणं बहुधाविलापेन प्रायोपवेशाध्यवसायः ॥ १ ॥

रामचापविसृष्टेन शरेणान्तकरेण तम् ॥ दृष्ट्वा विनिहतं भूमौ तारा [9]ताराधिपानना ॥
[10]सा समासाद्य भर्तारं पर्यष्वजत भामिनी ॥ १ ॥
इषुणाऽभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम् ॥ [11]वानरेन्द्रं [12]महेन्द्राभं [13]शोकसंतप्तमानसा ॥
तारा तरुमिवोन्मूलं [14]पर्यदेवयदातुरा ॥ २ ॥
रणे दारुणविक्रान्त प्रवीर प्लवतां वर ॥ [15]किं दीनामपुरोभागामद्य त्वं नाभिभाषसे ॥ ३ ॥

---

॥ २१—२६ ॥ तमिममर्थं व्यञ्जयन्नाह—तानिति ॥ अतीत्येति नातिक्रम उच्यते । सर्वेषां समीपस्थत्वात् । किंतु तत्र दोषबुद्धिमकृत्वेत्यर्थः । भर्तारं समासाद्येति उपसर्गेण स्वाज्ञानेनायं हत इति बुद्धवतीति ज्ञाप्यते ॥ २७ ॥ संदितं बद्धं । मृत्युदामभिः मृत्युपाशैः । आसन्नप्राणमित्यर्थः ॥२८॥ कष्टं विषादं । अत्यन्तविषादमित्यर्थः ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनविंशतिः सर्गः ॥ १९ ॥

---

अथ ताराप्रलापो विंशे—रामेत्यादिःसार्धश्लोकः । सा तारा तं दृष्ट्वा पर्यष्वजत ॥ १ ॥ इषुणेत्यादिःसार्धः ॥ २ ॥ अपुरोभागां दोषदर्शनरहितां अनपराधामि-

---

क्तः । तं । युद्धेमहावातसदृशवेगमित्यर्थः ॥ **रामानु०** वज्राणामिति । किंकरवज्रादिभेदविवक्षयाबहुवचननिर्देशः ॥ **ति०** रणेष्वितिशेषः । रणभेदमपेक्ष्यवज्राणामितिबहुवचनप्रयोगः ॥ २२ ॥ **ति०** मृगराजं प्रभूतमांसादिमत्त्वेनमृगश्रेष्ठं । शार्दूलोव्याघ्रः ॥ २३ ॥ **ति०** चैत्यं चतुष्पथवर्तिवल्मीकं । नागहेतोः अन्तर्विद्यमाननागभक्षणार्थंसुपर्णेनगरुडेनयथोन्मथितंतथासुग्रीवस्यराज्यभोगहेतोः रामेणोन्मथितमित्यर्थः ॥ २५ ॥ **रामानु०** संदितं बद्धं । “ बद्धेसंदानितंमूतमुद्दितंसन्दितंसितं” इत्यमरः ॥ २८ ॥ इत्येकोनविंशःसर्गः ॥ १९ ॥

**रामानु० रामचापेति** । एतदनन्तरं सा समासाद्येतिश्लोकःकतिपयकोशेषुप्रमादाल्लिखितोवर्तते । अयमुपरि “दुर्लभंदर्शनंतस्यतववत्सभविष्यति ” इत्यनन्तरंद्रष्टव्यः । तारा उच्चैस्स्वरा । अतोनपुनरुक्तिः । **स०** ताराधिपानना प्राक् । यद्वा मुखस्य कलङ्कितत्वेनतथोक्तिः ॥ १ ॥ **शि०** दारुणंविक्रान्तंविक्रमोयस्यतत्संबोधनं । पुरोभागां अग्रेस्थितां ॥ **ति०** इदानींपुरोभागां एत-

**[ पा० ]** १ छ. झ. ञ. ट. मृगराजमिवाहतं. २ च. ज.—ट. भर्तुश्चैवतथानुजं. ३ ग. सासमीक्ष्याथतंभूमौ. ४ क. ख. ह्यार्यपुत्रेति. ५ ङ.—ट. वादिनी. घ. शोचती. ६ ङ. च. ज. ञ. पतितंदृष्ट्वा. ७ छ. झ. ट. संवीतं. क. ग. ङ. च. ज. ञ. स्यन्दितं. ८ ङ. करेणच. ९ क. ख. ग. तारतरस्वना. १० सासमासाद्यभर्तारं. इषुणाभिहतं. इत्यर्धद्वयंरामानुजीयपाठेअत्रनदृश्यते. उत्तरत्रदुर्लभंदर्शनंवत्सेत्यर्धात्परंदृश्यते. ख. घ. समासाद्यच. ११ छ. झ. ट. वानरंपर्वतेन्द्राभं. १२ ग. महाभागं. १३ क. ग. शोकसंविग्नमानसा. ख. शोकसंतापकर्शिता. १४ घ. छ. झ. ट. पर्यदेवयतातुरा. १५ छ. झ. ञ. ट. किमिदानीं रोभागां. क. ग. किंदीनामनुरक्तांमामद्य.

उत्तिष्ठ हरिशार्दूल भजस्व शयनोत्तमम् ॥ नैवंविधाः शेरते हि भूमौ नृपतिसत्तमाः ॥ ४ ॥
अतीव खलु ते कान्ता वसुधा वसुधाधिप ॥ गतासुरपि यां गात्रैर्मां विहाय निषेवसे ॥ ५ ॥
व्यक्तमन्या त्वया वीर धर्मतः संप्रवर्तिता ॥ किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्मिता ॥ ६ ॥
यान्यस्माभिस्त्वया सार्धं वनेषु मधुगन्धिषु ॥ विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ७ ॥
निरानन्दा निराशाऽहं निमग्ना शोकसागरे ॥ त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ८ ॥
हृदयं सुस्थिरं मह्यं दृष्ट्वा विनिहतं पतिम् ॥ यन्न शोकाभिसंतप्तं स्फुटतेऽद्य सहस्रधा ॥ ९ ॥
सुग्रीवस्य त्वया भार्या हृता स च विवासितः ॥ यत्तु तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ॥ १० ॥
निःश्रेयसपरा मोहात्त्वया चाहं विगर्हिता ॥ यैषाऽब्रवं हितं वाक्यं वानरेन्द्र हितैषिणी ॥ ११ ॥
रूपयौवनदृप्तानां दक्षिणानां च मानद ॥ नूनमप्सरसामार्य चित्तानि प्रमथिष्यसि ॥ १२ ॥
कालो निःसंशयो नूनं जीवितान्तकरस्तव ॥ बलाद्येनावपन्नोसि सुग्रीवस्यावशो वशम् ॥ १३ ॥
[ अस्थाने वालिनं हत्वा युध्यमानं परेण च ॥ न संतप्यति काकुत्स्थः कृत्वा कर्म सुगर्हितम् ॥ १४ ॥ ]
वैधव्यं शोकसंतापं कृपणं कृपणा सती ॥ अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १५ ॥
लालितश्चाङ्गदो वीरः सुकुमारः सुखोचितः ॥ वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्च्छिते ॥ १६ ॥

ति यावत् ॥ ३—५ ॥ हे वीर अत्र निर्मिता किष्किन्धेवान्या पुरी स्वर्गमार्गे त्वया धर्मतःप्रवर्तिता । अतः खल्विमां त्यक्त्वा गन्तुमुद्यतोसीति भावः ॥ ६ ॥ अस्माभिरिति इतरस्त्र्यपेक्षया बहुवचनं । अस्माभिः सह त्वया यानि विहृतानि विहाराः । कृतानीत्यध्याहारः । तेषां त्वया उपरमः विरामः कृतः ॥ ७ ॥ अद्य निरानन्दा । निराशा कालान्तरे आनन्दो भविष्यतीत्याशारहिताऽहं शोकसागरे निमग्ना अस्मीति शेषः । पञ्चत्वं मरणं ॥ ८ ॥ मह्यं मम ॥ ९ ॥ व्युष्टिः फलं । " व्युष्टिः फले समृद्धौ च " इत्यमरः । विवासित इति यत्तस्य व्युष्टिरित्यन्वयः ॥ १० ॥ निःश्रेयसपरा श्रेयस्कामा ॥ ११ ॥ दक्षिणानां अनङ्गतन्त्रे कुशलानां । प्रमथिष्यसि वशीकरिष्यसीतिभावः । वीरस्य स्वर्गसिद्धेरितिभावः ॥ १२ ॥ वशं अवपन्नः प्राप्तः ॥ १३—१४ ॥ अहं पूर्वं अदुःखोपचिता अकृपणाचसती संप्रति कृपणाभूत्वा वैधव्यं शोककृतसंतापंच वर्तयिष्यामि धारयिष्यामि ॥ १५ ॥ मे मया लालितः अङ्गदः पितृव्ये पितृभ्रातरि । क्रोधमूर्च्छिते सति कामवस्थां वत्स्यते

स्मिन्कालेकृतापराधांमत्वाऽद्यनाभिभाषसेकिमित्यन्वयः ॥ ३ ॥ **ति०** हेवीर धर्मतःसंप्रवर्तता धर्मेणयुद्धमाचरतात्वयाऽद्यस्वर्गमार्गे स्वर्गसाधनरणभूमौकिष्किन्धेवाऽन्यारम्यापुरीनिर्मिता । नोचेत्कथंकिष्किन्धांविहायात्रशेषेइत्यर्थः । **कतक०** धर्मतःप्रवर्तिता रक्षिता । किष्किन्धेवान्यापिस्वर्गमार्गे स्वर्गरूपदेशेनिर्मिता ॥ **स०** अन्यापुरी वीरस्वर्गलक्षणा ॥ ६ ॥ **स०** नकालःअकालःअयस्यअदृष्टस्यअकालः अयाकालः । घटानधिकरणमितिवत् ॥ ७ ॥ **ति०** सविवासितइतियत् तत्प्रसिद्धंकर्म तस्यकर्मण इयंव्युष्टिःपरिपाकःप्राप्तइत्यर्थः ॥ १० ॥ **ति०** प्राप्तदिव्यदेहेनाप्सरसांकाममोहजननेनेतिशेषः ॥ **शि०** त्वद्वियोगेममैवदुःखं तवतुतत्रापिसुखमित्याह—**रूपेति** ॥ १२ ॥ **स०** नूनमित्यस्यवशमभिपन्नोसीत्यनेनान्वयादपौनरुक्त्यम् ॥ १३ ॥ **ति०** नसंतप्यति तत् अस्थाने अयुक्तं ॥ **शि०** अस्थाने अप्रसङ्गे स्वभार्यासुविद्यमानास्वित्यर्थः । सुगर्हितं अतिनिन्दितं कर्म अनुजवधूपरिग्रहंकृत्वापरेणसुग्रीवेणयुध्यमानंवालिनंहत्वाकाकुत्स्थोनसंतप्यतिसंतापहेतोरवध्यवधस्याभावादितिभावः ॥ १४ ॥ **ति०** कृपणाकृपणा अतिशयेनकृपणा । आबाधायांवाद्वित्वं । पूर्वमदुःखोपचिता अदुःखं दुःखरहितंयथाभवतितथा उपचिता वर्धिता ॥ १५ ॥

**[ पा० ]** १ झ. ट. तांगात्रैः. २ छ.—ट. व्यक्तमद्य. ३ छ. झ. ट. संप्रवर्तता. च. ज. परिवर्तिना. ४ ख. ग. वीर. ५ छ. झ. ट. सुस्थितं. ६ क. ग. ङ. च. ज. मन्ये. ७ क. ग. घ. विनिहतंभुवि. च.—ट. निपतितंभुवि. ८ च.—ट. यत्तत्तस्य. क. यत्तस्यहि. ग. यत्तस्यच. ९ झ. वशी. १० अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. ११ ग. छ. झ. ञ. ट. कृपणाकृपणा.

कुरुष्व पितरं पुत्र सुदृष्टं धर्मवत्सलम् ॥ [1]दुर्लभं दर्शनं वत्स तव तस्य भविष्यति ॥ १७ ॥
समाश्वासय पुत्रं त्वं [2]संदेशं संदिशस्व च ॥ मूर्ध्नि चैनं [3]समाघ्राय प्रवासं प्रस्थितो ह्यसि ॥ १८ ॥
रामेण हि महत्कर्म कृतं त्वामभिनिघ्नता ॥ [4]आनृण्यं च गतं तस्य सुग्रीवस्य प्रतिश्रवे ॥ १९ ॥
सकामो भव सुग्रीव रुमां त्वं प्रतिपत्स्यसे ॥ भुङ्क्ष्व राज्यमनुद्विग्नः [5]शस्तो भ्राता रिपुस्तव ॥ २० ॥
किं मामेवं [6]विलपतीं [7]प्रेम्णा त्वं नाभिभाषसे ॥ इमाः पश्य वरा [8]बह्वीर्भार्यास्ते वानरेश्वर ॥ २१ ॥
तस्या विलपितं श्रुत्वा [9]वानर्यः सर्वतश्च ताः ॥ परिगृह्याङ्गदं [10]दीनं दुःखार्ताः [11]परिचुक्रुशुः ॥ २२ ॥

किमङ्गदं साङ्गदवीरबाहो विहाय [12]यास्यद्य चिरप्रवासम् ॥
न युक्तमेवं गुणसन्निकृष्टं विहाय पुत्रं [13]प्रियपुत्र गन्तुम् ॥ २३ ॥
[14]किमप्रियं ते प्रियचारुवेष मया कृतं नाथ सुतेन वा ते ॥
सहाङ्गदां मां स विहाय वीर यत्प्रस्थितो दीर्घमितः प्रवासम् ॥ २४ ॥
यद्यप्रियं किंचिदसंप्रधार्य कृतं मया स्यात्तव दीर्घबाहो ॥
क्षमस्व मे तद्धरिवंशनाथ व्रजामि मूर्ध्ना तव वीर पादौ ॥ २५ ॥
तथा तु तारा करुणं रुदन्ती भर्तुः समीपे सह वानरीभिः ॥
व्यवस्यत [15]प्रायमुपोपवेष्टुमनिन्द्यवर्णा भुवि यत्र वाली ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे विंशः सर्गः ॥ २० ॥

---

वर्तयिष्यति । नश्यत्येवेतिभावः ॥ १६ ॥ कुरुष्वेति अनेन तदानीमङ्गदः समागत इति द्योत्यते ॥ १७—१८ ॥ महत् अन्यैरशक्यं । कर्म कृतं । आनृण्यंच गतं प्राप्तं । प्रतिश्रवे प्रतिज्ञाविषये ॥ १९ ॥ सुग्रीवं प्रत्याह—सकाम इति ॥ शस्तः हिंसितः ॥ २० ॥ वालिनं प्रत्याह—किमिति ॥ २१ ॥ विलपितं विलापं ॥ २२ ॥ साङ्गदौ वीरौ वीर्यवन्तौ बाहू यस्य स तथोक्तः । गुणसन्निकृष्टं गुणैः प्रत्यासन्नं । गुणैस्तव सदृशमित्यर्थः । हे प्रियपुत्रेति संबुद्धिः । प्रियः पुत्रो यस्य सः प्रियपुत्रइति । इयं स्त्रीजनप्रलापपरिपाटी ॥ २३—२४ ॥ असंप्रधार्य अविज्ञाय ॥ २५ ॥ प्रायमुपोपवेष्टुं प्रायोपवेशंकर्तुमित्यर्थः । " प्रसमुपोदः पादपूरणे " इति द्विर्वचनं ॥ २६ ॥ अत्र सर्गे श्लोकव्यत्यासो लेखककृतः । अस्मिन्सर्गे षड्विंशतिश्लोकाः ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

---

**स०** विगतःईरःकंपोययोस्तौवीरौ । ततस्त्रिपदगर्भबहुव्रीहिः ॥ **शि०** वीरः मानिवीरविध्वंसकत्वेनवीरत्वविशिष्टोबाहुर्यस्यतत्संबोधनं ॥ २३ ॥ **ती०** प्रायमुपोपवेष्टुं प्रायोपवेशंकर्तुं अनशनदीक्षांकर्तुमित्यर्थः ॥ २६ ॥ इतिविंशस्सर्गः ॥ २० ॥

[ पा० ] १ दुर्लभंदर्शनंवत्सेत्यर्धादनन्तरं रामानुजीयपाठे सासमासाद्यभर्तारंपर्यष्वजतभामिनी । इषुणाभिहतंदृष्ट्वावालिनंकुञ्जरोपमम् । इतिश्लोकोदृश्यते । रामानुजार्येणव्याख्यातश्च । साअङ्गदंप्रतितथोक्तवतीति. २ ङ. छ.—ट. संदिशस्वमे. ३ क. समाजिघ्रन्प्रवासं. ४ क.—च. ज.—ट. आनृण्यंतु. ५ च. मृतोभ्राता. ६ छ. झ. ट. प्रलपतीं. ७ ङ.—ट. प्रियांत्वं. ८ छ. झ. ट. बह्वयोभार्याः. ९ झ. वानर्याः. १० छ. झ. ट. दीनाः. ११ ङ. च. ज. ञ. संप्रचुक्रुशुः. छ. झ. ट. प्रतिचुक्रुशुः. १२ ङ.—ञ. यातोसिचिरंप्रवासं. १३ छ. झ. ञ. प्रियचारुवेषं. १४ अयंश्लोकः झ. ट. पाठयोर्नदृश्यते. ञ. तवाप्रियंकान्त मयाकचित्किंप्राज्यंकृतंनाथ. १५ ख. ग. घ. च.—ट. प्रायमनिन्द्यवर्णाउपोपवेष्टुंभुवि.

# एकविंशः सर्गः ॥ २१ ॥

हनुमताशोचन्तींतारांप्रति शास्त्रार्थकथनेन समाश्वासनपूर्वकमङ्गदेनवालिनऔर्ध्वदैहिकविधानचोदनेन सहाङ्गदाभ्युदयावलोकनेन शोकनिर्हरणोक्तिः ॥ १ ॥ तारया तंप्रति स्वस्याङ्गदाभ्युदयापेक्षया मृतभर्तृपार्श्वशयनस्यैव सुखसाधनत्वोक्तिः ॥ २ ॥

**ततो निपतितां तारां च्युतां तारामिवाम्बरात् ॥ शनैराश्वासयामास हनुमान्हरियूथपः ॥ १ ॥**
**गुणदोषकृतं जन्तुः स्वकर्मफलहेतुकम् ॥ अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥ २ ॥**
**शोच्या शोचसि कं शोच्यं दीनं दीनाऽनुकम्पसे ॥ कस्य को वाऽनुशोच्योस्ति देहेस्मिन्बुद्बुदोपमे ॥ ३ ॥**
**अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया ॥ आयत्यां च विधेयानि समर्थान्यस्य चिन्तय ॥ ४ ॥**
**जानास्यनियतामेवं भूतानामागतिं गतिम् ॥ तस्माच्छुभं हि कर्तव्यं पण्डितेनैहलौकिकम् ॥ ५ ॥**
**यस्मिन्हरिसहस्राणि प्रयुतान्यर्बुदानि च ॥ वर्तयन्ति कृतांशानि सोयं दिष्टान्तमागतः ॥ ६ ॥**
**यदयं न्यायदृष्टार्थः सामदानक्षमापरः ॥ गतो धर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७ ॥**
**सर्वे हि हरिशार्दूलाः पुत्रश्चायं तवाङ्गदः ॥ इदं हर्यृक्षराज्यं च त्वत्सनाथमनिन्दिते ॥ ८ ॥**

अथ हनुमत्समाश्वासनमेकविंशे—तत इत्यादि ॥ तारां तारकां ॥ १ ॥ जन्तुः गुणदोषकृतं ज्ञानाज्ञानाभ्यांकृतं । स्वकर्मफलं स्वकर्मवासना हेतुर्यस्य तत्तथोक्तं । यत् कर्मास्ति तत् तस्य शुभाशुभं फलभूतंसुखदुःखं । प्रेत्य लोकान्तरंप्राप्य । अव्यग्रः एकाग्रः सन् । अवाप्नोति । अत्रकृतंशुभाशुभरूपं कर्म लोकान्तरे फलदानाय सहैव गच्छतीत्यर्थः । सुग्रीवेणायं मारित इति न मन्तव्यं । किंतु स्वकर्मणैवहतः । निमित्तमात्रं सुग्रीवइतिभावः ॥ २ ॥ नायंशोचनीयः स्वकर्मानुरूपेणगतत्वात् । किंतु स्वात्मैवशोच्यः केनकर्मणा कंलोकंगमिष्यामीति । तद्दर्शयति—शोच्येति ॥ स्वयंशोच्या त्वं कंप्रति शोचसि । स्वयंदीना कं दीनं अनुकम्पसे दयसे। बुद्बुदोपमे जलबुद्बुदवदस्थिरे देहे । निमित्तसप्तमी । कस्य कोवानुशोच्योस्ति । सर्वेषामप्यस्थिरत्वाविशेषात् । स्वयं स्थिर एव ह्यस्थिरं शोचेदिति भावः ॥ ३ ॥ द्रष्टव्यः परिपालनीयः । आयत्यां उत्तरकाले । समर्थानि हितानि ॥ ४ ॥ अनियतामागतिं गतिं अस्थिरतामितियावत् । शुभं और्ध्वदैहिकं । ऐहलौकिकं रोदनादिकं ॥ ५ ॥ यस्मिन् विषये । हरीत्यविभक्तिकनिर्देशः । हरीणामित्यर्थः । कृतांशानि कृतविभागानि सन्ति वर्तयन्ति जीवनं कुर्वन्ति । सोयं दिष्टान्तं दिष्टस्य दैवकल्पितकालस्य अन्तं समाप्तिं । "कालो दिष्टोप्यनेहापि" इत्यमरः। बहून्स्वजनाञ्जीवयित्वा गतः स्वसुकृतफलं प्राप्तुं गतः । अतः स न शोच्य इतिभावः ॥६॥ न्यायदृष्टार्थः शास्त्रदृष्टतत्त्वार्थः । साम दुःखितानां स्वजनानां सान्त्वनं । दानं अभीष्टार्थदानं । क्षमा तत्कृतापराधसहनं । एतासु परः सक्तः अयं । धर्मजितां स्वाधीनधर्माधर्मकाणां । भूमिं लोकं । यत् यस्मात् गतः । तस्मान्नैनं शोचितुमर्हसि ॥७॥ हरीणां ऋक्षाणां च । राज्यं त्वत्सनाथं त्वया सनाथं ॥ ८ ॥

**स०** गुणदोषकृतं गुणदोषजन्यं । स्वकर्मफलहेतुकं सुष्ठुअकर्मफलंयस्यसःस्वकर्मफलोविष्णुः तद्धेतुकंशुभं स्वर्गनरकादिकं जन्तुः प्रेत्य अव्यग्रस्सन्प्राप्नोतीतियोजना ॥ **शि०** अव्यग्रोजन्तुः प्राणी गुणदोषकृतं गुणेनधर्मबुद्ध्या । दोषेण पापबुद्ध्या । कृतं निष्पादितं । फलहेतुकंशुभाशुभफलकारणीभूतंयत्स्वकर्मतत् तस्यस्वकर्मणःशुभाशुभंफलं । प्रेत्यप्राणांस्त्यक्त्वा । अवाप्नोति । एतेन पूर्वोपार्जितकर्मफलमेवत्वयाप्राप्तमितिसूचितं ॥ २ ॥ **स०** आयत्या प्रयत्नेन । अस्य वालिनः । विधेयानिकार्याणिसमर्थानि सुगतिप्रापकाणीत्यर्थः । चिन्तय कारयेतियावत् ॥ ४ ॥ **ति०** हेपण्डिते इह पतिपित्रादिवियोगकाले । लौकिकं बहुरोदनादि । नकर्तव्यं प्रीतिमात्रबोधकतयास्मृतेष्टासाधनत्वेनचतस्यलौकिकत्वं । **स०** अनियतां अव्यवस्थितांभगवन्नियतामित्यप्यर्थः । नियतामितिपाठेतुस्फुटोर्थः । पण्डितेनेत्येकंवापदं । अङ्गदेनेत्यर्थः । लौकिकं ऊर्ध्वलोकप्रापकं । कर्तव्यं त्वयाकारयितव्यंच ॥ ५ ॥ **रामानु०**

**[ पा० ]** १ ङ. च. ज. ञ. स्वयं. २ क. ग. घ. च. छ. झ. ञ. ट. कश्चकस्यानु. ३ ट. आयत्याञ्च. ४ क. ख. ङ.—ट. पण्डितेनेह. ५ क. ख. ग. छ. झ. शतानिनियुतानिच. च. ज. ट. प्रयुक्तान्यर्बुदानिच. ६ ज. धर्मकृतां. ७ ग. ङ.—ट. सर्वेच. क. सर्वेतु. ८ क. घ.—ट. हर्यृक्षपतिराज्यं.

**तावि॒मौ शोकसंतापौ शनैः प्रेरय भामिनि ॥ त्वया परिगृहीतोऽयमङ्गदः शास्तु मेदिनीम् ॥ ९ ॥**
**संततिश्च यथा दृष्टा कृत्यं यच्चापि सांप्रतम् ॥ राज्ञस्तत्क्रियतां तावदेष कालस्य निश्चयः ॥ १० ॥**
**संस्कार्यो हरिराजश्च अङ्गदश्चाभिषिच्यताम् ॥ सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ११ ॥**
**सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीडिता ॥ अब्रवीदुत्तरं तारा हनुमन्तमवस्थितम् ॥ १२ ॥**
**अङ्गदप्रतिरूपाणां पुत्राणामेकतः शतम् ॥ हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम् ॥ १३ ॥**
**न चाहं हरिराजस्य प्रभवाम्यङ्गदस्य वा ॥ पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः ॥ १४ ॥**
**न ह्येषा बुद्धिरास्थेया हनुमन्नङ्गदं प्रति ॥ पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम ॥ १५ ॥**
**न हि मम हरिराजसंश्रयात्क्षमतरमस्ति परत्र चेहँ वा ॥**
**अभिमुखहतवीरसेवितं शयनमिदं मम सेवितुं क्षमम् ॥ १६ ॥**
**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकविंशः सर्गः ॥ २१ ॥**

---

## द्वाविंशः सर्गः ॥ २२ ॥

वालिनाकनिष्ठमपिसुग्रीवंप्रतिस्वापकारक्षमापणपूर्वकं ताराबुद्धिप्रशंसनेन तद्वचनसंमाननचोदनेन सहाङ्गदपालनरामकार्यकरणयोश्चोदना ॥ १ ॥ तथा सुग्रीवाय स्वकण्ठस्थकाञ्चनमालादानपूर्वकमङ्गदंप्रति हितमुपदिशतिसतिवालिनि सहसा तत्प्राणैस्तच्छरीरादुत्क्रमणं ॥ २ ॥ वानरगणेषु वालिनोऽद्भुतापदानप्रशंसनपूर्वकमुच्चैः परिदेवयमानेषु तारया सहसा वालिपरिरंभणपूर्वकं भूमौनिपतनं ॥ ३ ॥

**वीक्षमाणस्तु मन्दासुः सर्वतो मन्दमुच्छ्वसन् ॥ आर्दावेव तु सुग्रीवं ददर्श त्वात्मजाग्रतः ॥ १ ॥**

---

तावि॒मौ शोकसंतापौ शोकतत्कृततापौ । शनैः क्रमेण । प्रेरय निवर्तय । भर्तृमरणशोकस्य सद्यो दुस्त्यजत्वादिति भावः ॥ ९ ॥ संततिश्च यथा दृष्टा यत्प्रयोजनकः संतानोलब्धः । सांप्रतं इदानीं । यच्च कृत्यं कर्तुं योग्यं तत्सर्वं राज्ञः क्रियतां । एष निश्चयोस्य कालस्य योग्य इति शेषः । नतु शोक इति भावः । पुत्रोत्पादनफलमौर्ध्वदैहिकं क्रियतामित्यर्थः ॥ १० ॥ उक्तमर्थं वाचा दर्शयति—संस्कार्य इति । शान्तिं दुःखशमं ॥११—१२॥ अङ्गदप्रतिरूपाणां अङ्गदतुल्यानां । पुत्राणां सत्पुत्राणां शतं एकतः एकत्र एकतुलायामस्तु । हतस्याप्यस्य गात्रसंश्लेषणं गाढालिङ्गनं । एकतोस्तु । तयोर्मध्ये भर्तृसंश्लेषणमेव वरमित्यर्थः ॥ १३ ॥ संस्कार्य इत्यस्योत्तरमाह—न चेति ॥ हरिराजस्य न प्रभवामि तस्य संस्कारकरणे न समर्थास्मि । अङ्गदस्य वा न प्रभवामि तस्य राज्याभिषेककरणे न प्रभवामीत्यर्थः ॥ १४ ॥ नास्थेया नादर्तव्या । नकर्तव्येत्यर्थः । पिता पितृव्यः ॥ १५ ॥ परत्र परलोके । इह अस्मिँल्लोके । शत्र्वभिमुखतया हतः अभिमुखहतः स चासौ वीरश्च तेन सेवितं ॥ १६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

---

एवममोघरामशराभिघातेन मोहसमाविष्टं वालिनं मृतं निश्चित्य संस्कारादिकरणाय त्वरमाणे हनुमति

---

हर्यृक्षपतिराज्यंचेतिपाठः । अन्यथावक्ष्यमाणाङ्गदाभिषेकवचनविरोधःस्यात् ॥ ८ ॥ **रामानु०** त्वयेति । अङ्गदाभिषेचनं तारादुःखशान्तयेदर्शितं ॥ **ति०** ताविमौ सुग्रीवाङ्गदौ शनैःप्रेरय उत्तरकार्यकरणायेतिशेषः ॥ ९ ॥ **शि०** ननुत्वत्कर्तृकाभिषेकाप्रवृत्तौत्वद्विषयकाङ्गदप्रीतिर्विनङ्क्ष्यतीत्यतआह—**नहीति** । हेहनुमन् पिता तदुपलक्षितपितृव्यादिश्चपुत्रस्यबन्धुः । मातातु न एषाबुद्धिः अङ्गदंप्रतिआस्थेया प्रापणीया । किंचमातैवबन्धुः पित्रादिस्तुनेतिबुद्धिर्नास्थेया । पितृव्येपिबन्धुत्वंबोधनीयमित्यर्थः । एतेनेदृग्बुद्ध्यनुत्पत्तौसुग्रीवविद्वेषेऽङ्गदविध्वंसोभविष्यतीतिव्यञ्जितं ॥ १५ ॥ इत्येकविंशःसर्गः ॥ २१ ॥

**[ पा० ]** १ ख. च. छ. ज. ञ. ट. शोकसंतप्तौ. २ क. ख. ग. ङ. ज.—ट. सर्वमेषकालस्य. च. सर्वमेषकार्यस्य. ३ घ. च.—झ. ट. हरिराजस्तु. ४ ख. हतस्यास्यप्रवीरस्य. ५ ग. राजसिंहस्य. ६ क. च. म्यङ्गदस्यच. ७ ज. ञ. चेहच. ८ क. आरादेवतु. ९ ख. ङ. च. छ. झ. ञ. ट. ददर्शानुजमग्रतः. ज. ददर्शानुजमग्रजः.

तं प्राप्तविजयं वाली सुग्रीवं [१]प्लवगेश्वरः ॥ [२]आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥
सुग्रीव दोषेण न मां गन्तुमर्हसि किल्बिषात् ॥ कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात् ॥ ३ ॥
युगपद्विहितं तात न मन्ये सुखमावयोः ॥ सौहार्दं भ्रातृयुक्तं हि तदिदं [३]तात नान्यथा ॥ ४ ॥
प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम् ॥ मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम् ॥ ५ ॥
जीवितं च हि राज्यं च श्रियं च वि[४]पुलामिमाम् ॥ प्रजहाम्येष वै तू[५]र्णं महच्चागर्हितं यशः ॥ ६ ॥
अस्यां त्वहमवस्थायां वीर वक्ष्यामि यद्वचः ॥ यद्यप्यसुकरं राजन्कर्तुमेव [६]तदर्हसि ॥ ७ ॥
सुखार्हं सुखसंवृद्धं [७]बालमेनमबालिशम् ॥ बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् ॥
मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम् ॥ ८ ॥
मया हीनमहीनार्थं सर्वतः परिपालय ॥ [८]त्वमेवास्य हि दाता च परित्राता च[९] सर्वतः ॥
भयेष्वभयदश्चैव यथाऽहं प्लवगेश्वर ॥ ९ ॥
एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः ॥ [१०]रक्षसां तु वधे तेषामग्रतस्ते भविष्यति ॥ १० ॥

---

दैवात्किंचित्समाश्वस्तो वाली कर्तव्यभागं नियच्छति द्वाविंशे—वीक्षमाण इत्यादि ॥ मन्दासुः अल्पप्राणः ॥ १ ॥ आभाष्य संबोध्य ॥ २ ॥ किल्बिषात् राज्यविवासनदारहरणरूपकिल्बिषाद्धेतोः । मां दोषेण गन्तुं दोषसहितं ज्ञातुं नार्हसि । किंतु भविष्येण भाविफलेन हेतुनाजातेन बुद्धिमोहेन बलात्कृष्यमाणं मां गन्तुमर्हसि ॥ ३ ॥ आवयोः भ्रात्रोः । भ्रातृयुक्तं भ्रातृत्वप्रयुक्तं । सौहार्दं सुखं राज्यसुखं च । एतदुभयं दैवेन युगपन्नविहितं । मन्ये ध्रुवं । अव्ययमेतत् । तदिदं दैवकृतं युगपदविधानं । अन्यथा न हि अन्यप्रकारं न भवतिहि ॥ ४ ॥ प्रतिपद्य पालयेति-शेषः । यद्वा प्रतिपद्यप्राप्नुहि । इयन्नन्तोयं । वैवस्वतक्षयं यमगृहं ॥ ५ ॥ अगर्हितं यशः केनाप्यवध्यो वालीति प्रसिद्धं यशः ॥ ६ ॥ अस्यामवस्थायां चरमावस्थायां । यद्वचो वक्ष्यामि एतद्यद्यप्यसुकरं तथाप्यवश्यं कतुमर्हसि । मदुक्तरीत्या राजाभवेत्यर्थः ॥ ७ ॥ वयसा बालमप्यबालिशं बालबुद्धिरहितं । प्राणैः प्राणेभ्यः । मम पुत्रं त्वं औरसं पुत्रमिव पश्येति संबन्धः ॥ ८ ॥ अस्य अङ्गदस्य । दाता वस्त्राभरणादीनामिति शेषः । सर्वतः

---

**ति०** हेसुग्रीव मांकिल्बिषात् प्राग्भवीयदुष्कृतवशात् । भविष्येण भविष्यताऽवश्यंभाविनाबुद्धिमोहेन त्वयिशत्रुबुद्धिरूपेण बलात्कृष्यमाणंमांज्ञात्वा त्वंदोषेण स्वापकारदोषवत्त्वेन । मांगन्तुं अवगन्तुं । नार्हसि ॥ ३ ॥ **स०** मन्येइत्येतदव्ययमितिकश्चित् तन्मूलंचिन्त्यं । **ति०** कार्यानुमितंकर्मप्राबल्यंदर्शयति—**युगपदिति** । भ्रातृयुक्तं भ्रात्रोर्युक्तंउचितं । सौहार्दं सुखंचराज्यसुखंच आवयोःकर्मणायुगपन्नविहितमितिमन्ये । यतस्तदिदमुचितमपिसौहार्दंसुखंचान्यथाजातंविघटितमित्यर्थः ॥ ४ ॥ **ति०** अथराम-शरक्षीणपापत्वात्प्राप्तदिव्यप्रकृतिःस्वयमेवसुग्रीवायस्वानन्तरंप्राप्तंराज्यंददाति—**प्रतिपद्येति** । प्रतिपद्यस्वेत्यर्थः । ननुराजनिमृतेतत्पुत्रएवराज्याधिकारी नतुतत्कनीयान्भ्रातेतिचेन्न । पुत्रस्यबालत्वेनराज्यरक्षणासामर्थ्याद्बलवदाश्रितत्वाच्चपुत्रनाशोमाभूदितितथोक्तः । भगवतारामेणापिराज्यरक्षणासामर्थ्येनाङ्गदस्यसुग्रीवोऽभिषिक्तो यौवराज्येचाङ्गदः । सुग्रीवानन्तरंत्वङ्गदस्यैवराज्याधिकारो नतुसुग्रीवपुत्राणांअज्येष्ठपुत्रत्वादित्याहुः ॥ **स०** अद्यैवगच्छन्तमित्यनेन नमज्जीवनभयंतवेतिद्योतयति ॥ **शि०** ननुराजपुत्रसत्त्वेभ्रातूराज्यानौचित्यात्कथमेवमुक्तमितिचेन्न । बिलप्रविष्टवालिमरणनिश्चयेतदानींवालिपुत्रस्याभावात्सुग्रीवस्यप्राप्तराज्यत्वेननवीनराज्यत्वाभावेनादोषात् ॥५॥ **ति०** अगर्हितंयशः वालीकेनाप्यवध्यइत्येवंरूपं । प्रजहामि एकेनैवशरेणरामहतत्वादितिप्राञ्चः। अन्येतुचस्त्वर्थे यशइत्युत्तरंबोध्यः । अगर्हितंयशस्तुप्राप्नोमीतिशेषः । वालीभगवतारामेणच्छन्नेनहतइत्येवंरूपंचयशइत्याहुः ॥ ६ ॥ **ति०** अस्यामवस्थायां चरमदशायां । यद्यप्यसुकरं मयाऽत्यन्तमपकृतत्वात् । तथापिकर्तुमर्हस्येवेतियोजना । सात्विकत्वात्सात्विकसमाश्रयणाच्चेत्याशयः । स्वयंराज्यस्यदत्तत्वाद्राजन्निति संबोधनं ॥ ७ ॥ **वि०** सर्वतः सर्वत्रदेशेकालेच । पालय स्वानन्तरमस्यैवराज्यंदेही-

**[ पा० ]** १ घ.—ञ. प्लवगेश्वरं. २ क. ग. ङ. च. ञ. आभाष्याव्यक्तया. ३ च.—ट. जातमन्यथा. ४ छ. झ. ञ. ट. विपुलांतथा. ५ ग. सौम्य. ङ. च. ज. तूर्णमहंवाऽगर्हितं. क. छ. झ. ञ. ट. तूर्णमहंचागर्हितं. ६ ङ.—ट. त्वमर्हसि. ७ ख. बालमत्यन्तबालिशं. ८ छ. झ. ट. त्वमप्यस्यपितादाता. ख. त्वमप्यमितदाताच. ङ. च. ज. ञ. त्वमस्यहितदाताच. क. ग. घ. त्वमप्यस्यहिदाताच. ९ घ. हिसर्वशः. क. तुसर्वशः. ख. ग. ङ.—ट. चसर्वशः. १० ङ.—ट. रक्षसांच.

अनुरूपाणि कर्माणि विक्रम्य बलवान्रणे ॥ करिष्यत्येष तारेयस्तरस्वी तरुणोऽङ्गदः ॥ ११ ॥
सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये ॥ औत्पातिके च विविधे सर्वतः परिनिष्ठिता ॥ १२ ॥
यदेषा साध्विति ब्रूयात्कार्यं तन्मुक्तसंशयम् ॥ नहि तारामतं किंचिदन्यथा परिवर्तते ॥ १३ ॥
राघवस्य च ते कार्यं कर्तव्यमविशङ्कया ॥ स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥ १४ ॥
इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम् ॥ उदारा श्रीः स्थिता ह्यस्यां संप्रजह्यान्मृते मयि ॥१५॥
इत्येवमुक्तः सुग्रीवो वालिना भ्रातृसौहृदात् ॥ हर्षं त्यक्त्वा पुनर्दीनो ग्रहग्रस्त इवोडुराट् ॥ १६ ॥
तद्वालिवचनाच्छान्तः कुर्वन्युक्तमतन्द्रितः ॥ जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम् ॥ १७ ॥
तां मालां काञ्चनीं दत्त्वा वाली दृष्ट्वाऽऽत्मजं स्थितम् ॥ संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥ १८ ॥
देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ॥ सुखदुःखसहः काले सुग्रीववशगो भव ॥ १९ ॥
यथा हि त्वं महाबाहो लालितः सततं मया ॥ न तथा वर्तमानं त्वां सुग्रीवो बहु मंस्यते ॥ २० ॥
मास्यामित्रैर्गतं गच्छेर्मा शत्रुभिररिंदम ॥ भर्तुरर्थपरो दान्तः सुग्रीववशगो भव ॥ २१ ॥
न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते ॥ उभयं हि महान्दोषस्तस्मादन्तरदृग्भव ॥ २२ ॥

शत्रुभ्यः परित्राता । भयेष्वभयदः शत्रुपुत्रत्वेन स्थानान्निष्कासनादिभयहेतुषु विषये अभयदः ॥ ९—११ ॥ अर्थसूक्ष्मविनिश्चये सूक्ष्मार्थविनिश्चये । औत्पातिके उत्पातविषयज्ञाने च । परिनिष्ठिता संजातनिष्ठा । समर्थेतियावत् ॥ १२ ॥ न परिवर्तते न भवतीत्यर्थः ॥ १३ ॥ विमानितः राघव इति शेषः ॥ १४ ॥ संप्रजह्यान्मृतेमयि मृते सति श्रीरिमां काञ्चनीं मालां संप्रजह्यात् । ततः पूर्वमेव मयि जीवति गृहाणेति भावः ॥ १५ ॥ दीनः अभूदिति शेषः । ग्रहग्रस्तः राहुग्रस्तः ॥ १६ ॥ तत् तदनन्तरं । शान्तः त्यक्तवैरः ॥ १७ ॥ प्रेत्यभावाय मरणाय । संसिद्धः कृतनिश्चयः ॥ १८ ॥ अद्य मत्प्रयाणानन्तरं । देशकालौ भजस्व । गत्यर्था ज्ञानार्थाः । देशकालौ जानीहि । अस्मिन्देशे अस्मिन्काले च एवं वर्तितव्यं एवं न वर्तितव्यमिति विवेचयेत्यर्थः । प्रियाप्रियेक्षममाणः । प्रभोः प्रियवचनवदप्रियवचनमपि सोढव्यमित्यर्थः । काले सुखदुःखसहः दुःखकाले सुखं सुखकाले दुःखं च सहमान इत्यर्थः । सुग्रीववशो भव सुग्रीवपरतन्त्रोभव ॥ १९—२० ॥ अस्य सुग्रीवस्यामित्रैर्गतं प्राप्तं पुरुषं मा गच्छेः । अस्य शत्रुमित्रं न भजेरित्यर्थः । शत्रुभिः सह च मा गच्छेः ॥ २१ ॥ अतिप्रणयः अतिस्नेहः अप्रणयः स्नेहाभावश्च ।

तिव्यङ्ग्यं ॥ ९ ॥ **स०** अनुरूपाणि मदनुरूपाणि त्वदनुरूपाणिवा ॥ ११ ॥ **ती०** ननुसमुद्रसंजातायास्तारायास्सुषेणदुहितृत्वंकथमितिचेत् तत्रक्षीराब्धिमथनसमयोत्पन्नांतारांदृष्ट्वासुषेणोवामंकरमग्रहीत् । वालीतुतारायादक्षिणंकरमगृह्णात् । तदाऽन्योन्यंविवादेसति देवैस्सुषेणदुहितृत्वंतारायावालिनोजायात्वंचनिश्चितं । तदुक्तंस्कान्दे—"देवैस्सुषेणकलहेपुत्रीतिप्रतिपादिता । सुषेणोदुहितुस्तस्याःस्वयंवरमकल्पयत् । इत्थमूढाकपीन्द्रेणतारासर्वाङ्गसुन्दरी । सुग्रीवमेकदारात्रौरूपसादृश्यमोहिता । प्रार्थयामासकामार्तारन्तुंरतिमतीप्रभुम् । नममायोनिजातायागमनंलोकगर्हितम् ।" इति ॥ **ति०** तारारक्षणंततउपकारमादर्श्यसूचयति—**सुषेणेति** । तद्दुहिता तारा । अर्थानांमध्येसूक्ष्मःपरमदुर्ज्ञेयोयोर्थस्तस्यनिश्चये औत्पातिकेविविधेनानाप्रकारोत्पातसूचितापत्कालिकानुष्ठेयनिश्चयेसर्वतऐहिकामुष्मिकनिश्चयेच । परिनिष्ठिता अतिसमर्था ॥१२॥ **ति०** नहीति । मदनुभवसिद्धमेतदितिभावः । अनेनत्रैवर्णिकेतरत्वेनतरुणत्वेनावश्यंकर्तव्यपुरुषान्तरस्वीकारायास्तारायादेवरत्वात्सुग्रीवस्यस्वीकारोप्यनुमतइतिगम्यते ॥ १३ ॥ **रामानु०** संप्रजह्याः संप्रजहि । शत्रूनितिशेषः ॥ १५ ॥ **ति०** विपक्षेबाधकमाह—**यथाहीति** । बालतयाकेवलंलालितः यथासेवोचितकालेपिसेवारहितोऽवर्तिष्ट तथा सेवाराहित्येनवर्तमानंत्वां सुग्रीवोनबहुमन्येत । अतस्सेवांकुर्वित्युपदेशः ॥ २० ॥ **स०** अस्य माशत्रुभिः मित्रैस्सह गच्छेः ॥ २१ ॥ **ति०** नातिप्रणयः पुत्रत्वात् अप्रणयश्चनकार्यः । अस्मद्वधादिनान्तरदृक् 'अत्यासत्तिर्वि-

[ **पा०** ] १ ग. कार्याणि. २ ख. ङ.—ट. तारेयस्तेजस्वी. ३ क. ग. विनिर्णये. ४ ङ.—ट. हिंस्यादमानितः. ५ क. ग. वालिनोवचनाच्छान्तः. ६ घ. चाभ्यनुज्ञातः. ७ ङ.—ट. दृष्ट्वाचैवात्मजंस्थितं. ८ क. ग.—ट. बहुमन्यते. ९ ख. छ. झ. ञ. ट. नास्यामित्रैः. १० ग. घ. छ. झ. ञ. ट. महादोषंतस्मात्. क. ङ. च. ज. महादोषः.

इत्युक्त्वाऽथ विवृत्ताक्षः शरसंपीडितो भृशम् ॥ विवृतैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ २३ ॥
ततो विचुक्रुशुस्तत्र वानरा हरियूथपाः ॥ परिदेवयमानास्ते सर्वे प्लवगपुङ्गवाः ॥ २४ ॥
किष्किन्धा ह्यद्य शून्यासीत्स्वर्गते वानराधिपे ॥ उद्यानानि च शून्यानि पर्वताः काननानि च ॥
हते प्लवगशार्दूले निष्प्रभा वानराः कृताः ॥ २५ ॥
यस्य वेगेन महता काननानि वनानि च ॥ पुष्पौघेणानुबध्यन्ते करिष्यति तदद्य कः ॥ २६ ॥
येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः ॥ गोलभस्य महाबाहोर्दश वर्षाणि पञ्च च ॥ २७ ॥
नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति ॥ ततस्तु षोडशे वर्षे गोलभो विनिपातितः ॥ २८ ॥
हत्वा तं दुर्विनीतं तु वाली दंष्ट्राकरालवान् ॥ सर्वाभयकरोऽस्माकं कथमेष निपातितः ॥ २९ ॥

हते तु वीरे प्लवगाधिपे तदा प्लवङ्गमास्तत्र न शर्म लेभिरे ॥
वनेचराः सिंहयुते महावने यथा हि गावो निहते गवांपतौ ॥ ३० ॥
ततस्तु तारा व्यसनार्णवाप्लुता मृतस्य भर्तुर्वदनं समीक्ष्य सा ॥
जगाम भूमिं परिरभ्य वालिनं महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

अन्तरङ्गभव । मध्यमभावमवलम्बस्वेत्यर्थः ॥ २२ ॥ विवृत्ताक्षः भ्रामितनेत्रः । विवृतैः प्रकाशितैः । अतएव भीमैः । दशनैः दन्तैरुपलक्षितः । उत्क्रान्तजीवितः उद्गतप्राणः ॥ २३ ॥ परिदेवयमानाः रुदन्त इत्यर्थः । प्लवगपुङ्गवाः बलेन श्रेष्ठाः । पुनश्च हरियूथपाः यूथस्य निर्वोढारः । वानराः वानरजातयः ॥ २४ ॥ परिदेवनमेवाह—किष्किन्धेत्यादिना ॥ शून्या शून्यप्राया ॥ २५ ॥ वेगेन पराक्रमेण । काननानि अरण्यानि । वनानि जलानि । सरांसीत्यर्थः। पुष्पौघेण अनुबध्यन्ते संबध्यन्ते । सदा पुष्पितानि भवन्तीत्यर्थः । तत् पुष्पानुबन्धनम् । अद्यतु वालिमरणानन्तरकाले । यद्वा । वनानि क्षुद्रारण्यानि । यस्मिन् वालिनि गच्छति सति तदूरुवेगेनाविशेषेण सर्वाणि वनानि पुष्पैः सहानुगच्छन्तीत्यर्थः ॥ २६ ॥ गोलभस्य गोलभाख्यस्य । उपशाम्यति उपाशाम्यत् । भूते लट् । दंष्ट्राकरालवान् करालदंष्ट्रावान् । परनिपातः ॥ २७—२९ ॥ शर्म सुखं । सिंहयुत इति । सिंहस्थानीयो रामः ॥ ३० ॥ व्यसनार्णवे आप्लुता मग्नेति यावत् ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

---

नाशायत्वतिदूरंतुनिष्फलं । सेवामध्यमभावेनराजवह्निगुरुस्त्रियाम्’ इतिन्यायेनमध्यममार्गमवलंबस्वेत्याशयः ॥ २२ ॥ **स०** षोडशमे असंख्यादेरिति नञानिर्दिष्टत्वेनानित्यत्वाद्वा संख्यापूरकमप्रत्ययाङ्गीकाराद्वाऽयंशब्दःसाधुः ॥ २८ ॥ **रामानु०** दंष्ट्राकरालवान् । भावप्रधानोनिर्देशः । दंष्ट्राभ्यांकरालवान् ॥ **ति०** दंष्ट्राकरालवान् आर्षःस्वार्थेमतुप् । दंष्ट्राकरालइत्यर्थः । अस्माकंसर्वाभयंकरः सर्वेभ्योऽभयंकरः ॥ २९ ॥ **स०** आवने सम्यग्रक्षके । नन्द्यादित्वाल्ल्युः । वालिनि हतेसति अचराः जडप्रायास्सन्तः । शर्म नलेभिरे । द्वितीयवनेचरशब्दोवानरपरः । गवांपतौ गोपाले । अलुक्समासत्वाद्वापतिरित्याख्यातइत्यादिरीत्यावासाधुरयं शब्दः ॥ ३० ॥ इतिद्वाविंशःसर्गः ॥ २२ ॥

[ **पा०** ] १ ङ.—ट. प्लवगसत्तमाः. २ क. ख. ग. शून्येयंस्वर्गते. ङ.—ट. शून्याचस्वर्गते. ३ ङ.—ट. वानरेश्वरे. ४ ख. वानरानिष्प्रभाःकृताः. ५ छ.—ट. ततःषोडशमे. ६ क.—ट. तंहत्वा. ७ छ. झ. ट. वनेचरास्तत्र. ८ क. ख. भर्तुर्व्यसनंसमाश्रिता. ग. च. ज. भर्तुर्वदनंसमाश्रिता. घ. भर्तुर्व्यसनंसमीक्ष्यसा.

# त्रयोविंशः सर्गः ॥ २३ ॥

वालिवदनाघ्राणपूर्वकं विविधं विलपन्त्यांतारायां तदङ्गालिङ्गनाक्षमायां नीलेन वालिहृदयाद्रामबाणोन्मूलनं ॥ १ ॥ अङ्गदेन ताराप्रेरणया वालिचरणयोश्चरमप्रणामः ॥ २ ॥

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ॥ पतिं लोका[1]च्च्युतं तारा मृतं वचनमब्रवीत् ॥ १ ॥
शेषे त्वं विषमे दुःखमकृत्वा वचनं मम ॥ उपलोपचिते वीर सुदुःखे वसुधातले ॥ २ ॥
मत्तः प्रियतरा नूनं वानरेन्द्र मही तव ॥ शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३ ॥
सुग्रीवस्य वशं प्राप्तो विधिरेष भव[3]त्यहो ॥ सुग्रीव एव विक्रान्तो वी[4]र साहसिकप्रिय ॥ ४ ॥
ऋक्षवानरमुख्यास्त्वां ब[5]लिनः पर्युपासते ॥ ए[6]षां वि[7]लपितं कृच्छ्रमङ्गदस्य च शोचतः ॥
मम चे[8]मां गिरं श्रुत्वा [9]किं त्वं न प्रतिबुध्यसे ॥ ५ ॥
इदं त[10]द्वीरशयनं यत्र शेषे हतो युधि ॥ शायिता निहता यत्र त्वयैव रिपवः पुरा ॥ ६ ॥
विशुद्धसत्त्वाभिजन प्रिययुद्ध मम प्रिय ॥ मामनाथां विहायैकां गतस्त्वमसि मानद ॥ ७ ॥
शूराय न प्रदातव्या कन्या खलु विपश्चिता ॥ शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥ ८ ॥
अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः ॥ अगाधे च निमग्नाऽस्मि विपुले शोकसागरे ॥ ९ ॥
अश्मसारमयं नूनमिदं मे हृदयं दृढम् ॥ भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा ग[11]तम् ॥ १० ॥
[12]सुहृच्चैव हि [13]भर्ता च [14]प्रकृत्या मम च प्रियः ॥ [15]आहवे च पराक्रान्तः शूरः पञ्चत्वमागतः ॥ ११ ॥
पतिहीना तु या नारी कामं भवतु पुत्रिणी ॥ [16]धनधान्यैः सुपूर्णापि विधवेत्युच्यते जनैः ॥ १२ ॥

---

अथ मरणानन्तरं ताराविलापस्त्रयोविंशे—ततः समुपजिघ्रन्तीत्यादि ॥ लोकाच्च्युतं अस्माल्लोकाच्च्युतं स्वर्गतमित्यर्थः ॥ १ ॥ दुःखमित्येतत्क्रियाविशेषणं । सुदुःखे सुतरां दुःखकरे ॥ २—३ ॥ त्वं सुग्रीवस्य त्वत्तो बहुशः कान्दिशीकस्य । वशं प्राप्तः । सुग्रीव एव विक्रान्त इत्येषः । विधिः दैवव्यापारः । अहो आश्चर्यकरो भवति ॥ ४ ॥ कृच्छ्रं दुःखं ॥ ५ ॥ युधि हतो यत्र शेषे पुरा त्वया निहता रिपवो यत्र शायिताः तदिदं वीरशयनमित्यन्वयः । युद्धपरायणस्य तवयुद्धेनैव मरणं प्राप्तं खल्विति भावः ॥ ६ ॥ विशुद्धसत्त्वाभिजनेति कूटयुद्धाभावाद्विशुद्धबल । सत्कुलप्रसूतत्वाद्विशुद्धकुल ॥ ७ ॥ अप्रदातव्यत्वे हेतुमाह—शूरभार्यामिति ॥ ८ ॥ गतिः पतिशुश्रूषेत्यर्थः । यद्वा गम्यत इति गतिः सुखमित्यर्थः ॥ ९ ॥ अश्मसारमयत्वे हेतुः—दृढमिति ॥ १० ॥ हृदयभेदने हेतुमाह—सुहृदिति ॥ पञ्चत्वं मरणं ॥ ११—१२ ॥

---

स० लोकात् देहात् च्युतं । लोकश्रुतेतिपाठे श्रुता प्रसिद्धेत्यर्थः ॥ १ ॥ वि० उपलैः पाषाणैः । उपचिते व्याप्ते । सुदुःखे सुतरांदुःखकरे ॥ २ ॥ ति० एषविधिः रामरूपः । सुग्रीवस्यवशंप्राप्तोभवति । अहोइत्याश्चर्ये । नतुत्वद्वशंप्राप्तः । येनाद्यैवभार्यायायोजितस्स्यादितिभावः । अतःसुग्रीवएवविक्रान्तोत्रराज्येभवितेतिशेषः । साहसिकं साहसकर्म ॥ शि० हेसाहसिकप्रिय यस्सुग्रीवः विक्रान्तः त्वयाबहुवारंपराभूतः तस्यसुग्रीवस्यवशंत्वंप्राप्तः । अतःएषः वशप्रापकरामरूपः । विधिः अहोआश्चर्यंभवति ॥४॥ ति० मानः राजपत्नीत्वाभिमानः । शाश्वती स्थिरा । गतिः सुखप्राप्तिः ॥ ९ ॥ ति० प्रहारे रणे । पराक्रान्तः परेणाक्रान्तोऽभिभूतः । पञ्चत्वमागतः । एतद्दृष्ट्वापियद्धृदयंनभिन्नंअतोदृढमितिपूर्वेणान्वयः ॥ ११ ॥ ति० ननुसपुत्रायाःकस्तेशोकःअतआह—

[ पा० ] १ छ. झ. ट. लोकश्रुता. ग. ङ. च. ञ. लोकच्युतं. २ ग. नित्यं. ३ क. ग. ट. भवत्यसौ. ४ ख. धीर. ५ क.—घ. छ. झ. ञ. ट. बलिनं. ६ ङ.—ट. तेषां. ७ क. प्रलापितं. ८ ङ. च. ञ. चैतागिरः. छ. झ. ट. चेमागिरः. ९ क. ग. किंचनप्रति. घ. किंचिन्नप्रति. १० क. ग. घ. तच्छूरशयनं. ११ क. ग. ङ.—ट. कृतं. १२ क. ग. ज. झ. ट. सुहृच्चैवच. १३ क. ग. भर्ताहि. १४ क. च.—ट. प्रकृत्याचमम. १५ च. ज. प्रहारेचपरिक्रान्तः. छ. झ. ञ. ट. प्रहारेचपरा. १६ च.—ट. धनधान्यसमृद्धापि.

स्वगात्रप्रभवे वीर शेषे रुधिरमण्डले ॥ कृमिरागपरिस्तोमे [1]त्वमात्मशयने यथा ॥ १३ ॥
रेणुशोणितसंवीतं गात्रं तव समन्ततः ॥ परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ ॥ १४ ॥
कृतकृत्योद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ॥ यस्य रामविमुक्तेन हृतमेकेषुणा भयम् ॥ १५ ॥
शरेण हृदि लग्नेन गात्रसंस्पर्शने तव ॥ वार्यामि त्वां [2]निरीक्षन्ती त्वयि पञ्चत्वमागते ॥ १६ ॥
उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा ॥ गिरिगह्वरसंलीनं दीप्त[3]माशीविषं यथा ॥ १७ ॥
तस्य निष्कृष्यमाणस्य बाणस्य च बभौ द्युतिः ॥ अस्तमस्तकसंरुद्धो रश्मिर्दिनकरादिव ॥ १८ ॥
पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य [4]सर्वशः ॥ ताम्रगैरिकसंपृक्ता धारा इव धराधरात् ॥ १९ ॥
अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना ॥ अस्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतम् ॥ २० ॥
रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहतं पतिम् ॥ उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥ २१ ॥
अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणाम् ॥ संप्रसक्तस्य वैरस्य गतोन्तः पापकर्मणा ॥ २२ ॥
बाल[5]सूर्योदयतनुं प्रयान्तं यमसादनम् ॥ अभिवादय राजानं पितरं पुत्र मानदम् ॥ २३ ॥
एवमुक्तः समुत्थाय जग्राह चरणौ पितुः ॥ भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् ॥ २४ ॥
अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ॥ दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे ॥ २५ ॥
अहं पुत्रसहाया त्वामुपासे [6]गतचेतसम् ॥ सिंहेन [7]निहतं सद्यो गौः सवत्सेव गोवृषम् ॥ २६ ॥
इष्ट्वा संग्रामयज्ञेन [8]रामप्रहरणांभसि ॥ [9]अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ॥ २७ ॥
या दत्ता देवराजेन तव तुष्टेन संयुगे ॥ [10]शातकुम्भमयीं मालां [11]तां ते पश्यामि नेह किम् ॥ २८ ॥
राजश्रीर्न जहाति त्वां गतासुमपि मानद ॥ सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ॥ २९ ॥
न मे वचः पथ्यमिदं त्वया कृतं न चास्मि [12]शक्ता विनिवारणे तव ॥

---

कृमेः इन्द्रगोपस्य राग इव रागो यस्मिन् स कृमिरागः परिस्तोमः आस्तरणं यस्मिन् स तथा ॥ १३—१५ ॥ वार्यामि वारितास्मीत्यर्थः ॥ १६ ॥ उद्बबर्ह उद्धृतवान्। नीलः सुग्रीवसेनापतिः ॥ १७ ॥ निष्कृष्यमाणस्य तस्य द्युतिः अस्तमस्तकसंरुद्धः अस्ताद्रिशिखरनिरुद्धः । दिनकरादुद्गच्छन् रश्मिरिव बभौ । पूर्वश्लोकोक्तसर्पसाम्यापेक्षया चशब्दः ॥ १८ ॥ व्रणेभ्यः इति बहुवचनं पाशाधिकरणन्यायेनावयवबहुत्वात् । यद्वा शिलापादपप्रहारकृतव्रणानि एतावत्पर्यन्तं शोणितनिर्गमशून्यतयास्थितानि इदानीं शरव्रणाच्छोणितनिर्गमकाले सर्वेभ्योपि शोणितानि सुस्रुवुरित्यर्थः । इदानीं रुधिरनिर्गमादेतावत्पर्यन्तं सर्वात्मना प्राणो न गत इतिगम्यते ॥ १९—२१ ॥ पापकर्मणा पापरूपकर्मणा । संप्रसक्तस्येति संबन्धः ॥ २२—२४ ॥ त्वामभिवादयमानमित्यन्वयः ॥ २५—२६ ॥ रामप्रहरणांभस्येवावभृथ इतिव्यस्तरूपकं ॥ २७—२८ ॥ शैलराजं मेरुं । आवर्तमानस्य अस्तं गच्छत इत्यर्थः ॥ २९ ॥ पथ्यं हितं वचः । न

---

पतिहीनेत्यादि ॥ १२ ॥ **ति०** कृमिरागः लाक्षारागः । 'कृमिरागंवदन्त्यार्यालाक्षिकंप्रियदर्शनं' इत्युत्पलमालाकोशादित्यन्ये ॥ १३ ॥ **ति०** मालामिहनपश्यामि किंतु सुग्रीवायमालादानस्यादर्शनं शोकवशादृष्टस्यापिविस्मरणंचेत्येवमुक्तिः ॥ २८ ॥ **वि०** पथ्यमिदंवचइतिस्मृतिसंनिहितस्यप्रागुपदिष्टस्यपरामर्शः ॥ ३० ॥ इतित्रयोविंशःसर्गः ॥ २३ ॥

**[ पा० ]** १ क. ग. त्वंपुराशयने. ख. छ. झ. ट. स्वकीयेशयने. घ. च. त्वमेवशयने. ङ. ञ. स्वएवशयने. २ क. ख. ग. निरीक्षन्ती. ३ घ. माशीविषोपमं. ४ ग. सर्वतः. ५ बालसूर्योज्ज्वलतनुं. ६ घ. छ. झ. ट. गतचेतनं. ७ छ. झ. ट. पातितं. ८ घ. रामबाणमहांभसि. ख. छ. झ. ञ. ट. रामप्रहरणांभसा. क. ग. ङ. च. ज. नानाप्रहरणांभसा. ९ क. ख. छ. झ. ट. तस्मिन्. १० क. ख. ग. ङ. च. छ. झ. ट. शातकौम्भींप्रियां. ११ क. तांतु. १२ ग. छ. झ. ट. शक्ताहि निवारणे. ख. शक्तापिनिवारणे.

हता सपुत्रास्मि हतेन संयुगे सह त्वया श्रीर्विजहाति मामिह ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

## चतुर्विंशः सर्गः ॥ २४ ॥

ताराविलापश्रवणसमुद्बुद्धदुःखान्निर्वेदमुपगतवति सुग्रीवे रामंप्रति वालिश्लाघनात्मनिन्दनपूर्वकमङ्गदादिभिः सीतान्वेषणनिवेदनेन स्वस्याग्निप्रवेशाभ्यनुज्ञानमर्थयति रामेणापिशोकान्मुहूर्तं विमनीभवनं ॥१॥ रामसमीपमेत्य भक्त्या तत्स्तवनपूर्वकं जीवितत्यागोन्मुखींतारांप्रति रामेणाङ्गदाभ्युदयाद्युपपादनेनसमाश्वासनं ॥ २ ॥

तां चाश्रुवेगेन दुरासदेन त्वभिप्लुतां शोकमहार्णवेन ॥
पश्यंस्तदा वाल्यनुजस्तरस्वी भ्रातुर्वधेनाप्रतिमेन तेपे ॥ १ ॥
स बाष्पपूर्णेन मुखेन वीक्ष्य क्षणेन निर्विण्णमना मनस्वी ॥
जगाम रामस्य शनैः समीपं भृत्यैर्वृतः संपरिदूयमानः ॥ २ ॥
स तं समासाद्य गृहीतचापमुदात्तमाशीविषतुल्यबाणम् ॥
यशस्विनं लक्षणलक्षिताङ्गमवस्थितं राघवमित्युवाच ॥ ३ ॥
यथाप्रतिज्ञातमिदं नरेन्द्र कृतं त्वया दृष्टफलं च कर्म ॥
ममाद्य भोगेषु नरेन्द्रपुत्र मनो निवृत्तं सह जीवितेन ॥ ४ ॥
अस्यां महिष्यां तु भृशं रुदन्त्यां पुरे च विक्रोशति दुःखतप्ते ॥
हतेऽग्रजे संशयितेऽङ्गदे च न राम राज्ये रमते मनो मे ॥ ५ ॥
क्रोधादमर्षादतिविप्रधर्षाद्भ्रातुर्वधो मेऽनुमतः पुरस्तात् ॥
हते त्विदानीं हरियूथपेऽस्मिन्सुतीव्रमिक्ष्वाकुकुमार तप्स्ये ॥ ६ ॥

---

कृतं नानुष्ठितं ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

अथ ताराप्रलापश्रवणदुःखितसुग्रीवनिर्वेदप्रदर्शनपूर्वकं ताराया रामे प्रतिपत्तिं दर्शयति चतुर्विंशे—तामित्यादि ॥ अश्रुवेगेनच दुरासदेन दुष्प्रापेण । शोकमहार्णवेनच । अभिप्लुतां व्याप्तां । तां तारां पश्यन् तेन भ्रातुर्वधेन च । तेपे दुःखितोभूत् ॥ १ ॥ मुखेन उपलक्षितः सः । वीक्ष्य तारामितिशेषः ॥ २ ॥ उदात्तं श्रेष्ठं । क्षणेन सुलक्षणेन लक्षिताङ्गं ॥ ३ ॥ यथाप्रतिज्ञातं प्रतिज्ञातमनतिक्रम्य । दृष्टफलं दृष्टराज्यफलकं । कर्म त्वया कृतं । जीवितेन सह स्थितेषुभोगेषु जीवितेभोगेषु च । मनो निवृत्तमित्यर्थः ॥ ४ ॥ पुरे पुरस्थजने । संशयिते पितृमरणदुःखेन जीवति वा न वेति संशयविषयीभूतेसति । राज्ये मनः न रमते रतिं न प्राप्नोति ॥५॥ क्रोधात् निर्निमित्तनिर्वासनकृतात् । अमर्षात् परुषभाषणाक्षमया । अतिविप्रधर्षात् अत्य-

---

वि० अप्रतिमेन असदृशेन । आत्मनइतिशेषः ॥ १ ॥ टी० इदं वालिवधरूपंकर्म । यथाप्रतिज्ञातं तथैवकृतं । तर्हितथैवराज्यमनुभूयतामित्याशङ्क्याह—**ममाद्येति** ॥ ४ ॥ टी० तर्हिवालिवधप्रयत्नःकिमर्थंकृतइत्याह—**क्रोधादिति** । पुरस्तात् आदौ। अतिविप्रधर्षात् अत्यन्ततिरस्कारात् । तन्निमित्तादमर्षादसहनात् तदुत्पन्नात्क्रोधात्मनःप्रज्वलनात् भ्रातुर्वधोमेऽनुमतइत्यन्वयः ।

[ पा० ] १ छ. झ. मामपि. २ ख. ञ. ट. तामश्रुवेगेन. छ. झ. तामाशुवेगेन. ३ छ. झ. ट. पश्यन्क्षणेन. ४ ङ. संपरिदह्यमानः. ५ च. ज. चापंतदातमाशीविष. ६ च.—झ. ट. नरेन्द्रसूनो. ७ छ. झ. ट. हतजीवितेन. ८ छ. झ. ट. हतेनृपे. ९ ख. हरिपुङ्गवेस्मिन्. १० ग. छ. झ. ट. सुतीक्ष्णं. ११ झ. ट. मिक्ष्वाकुवराव.



श्रेयोऽद्य मन्ये मम शैलमुख्ये तस्मिन्निवासश्चिरमृश्यमूके ॥
यथातथा वर्तयतः स्ववृत्त्या नेमं निहत्य त्रिदिवस्य लाभः ॥ ७ ॥
न त्वां जिघांसामि चरेति यन्मामयं महात्मा मतिमानुवाच ॥
तस्यैव तद्राम वचोनुरूपमिदं पुनः कर्म च मेऽनुरूपम् ॥ ८ ॥
भ्राता कथं नाम महागुणस्य भ्रातुर्वधं राघव रोचयेत ॥
राज्यस्य दुःखस्य च वीर सारं न चिन्तयन्कामपुरस्कृतः सन् ॥ ९ ॥
वधो हि मे मतो नासीत्स्वमाहात्म्याव्यतिक्रमात् ॥ ममासीद्बुद्धिदौरात्म्यात्प्राणहारी व्यतिक्रमः ॥१०॥
द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिष्टनन् ॥ सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्तुमर्हसि ॥ ११ ॥
भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः ॥ मया क्रोधश्च कामश्च कपित्वं च प्रदर्शितम् ॥ १२ ॥
अचिन्तनीयं परिवर्जनीयमनीप्सनीयं स्वनवेक्षणीयम् ॥
प्राप्तोसि पाप्मानमिमं नरेन्द्र भ्रातुर्वधात्त्वाष्ट्रवधादिवेन्द्रः ॥ १३ ॥
पाप्मानमिन्द्रस्य मही जलं च वृक्षाश्च कामं जगृहुः स्त्रियश्च ॥
को नाम पाप्मानमिमं क्षमेत शाखामृगस्य प्रतिपत्तुमिच्छन् ॥ १४ ॥

न्तमाक्रमणाच्च ॥ ६ ॥ यथातथा कथंचित् । स्ववृत्त्या वानरजात्युचितवृत्त्या । तस्मिन् शैलमुख्ये ऋश्यमूके । निवासः श्रेयस्करः । इमं वालिनं निहत्य त्रिदिवस्य स्वर्गस्य लाभोपि न श्रेय इत्यर्थः ॥ ७ ॥ महात्मा महास्वभावः । मतिमान् कर्तव्याकर्तव्यविवेकशीलः । अयं वाली । त्वां न जिघांसामि न मारयितुमिच्छामि । चर यथेष्टं गच्छेति मामुवाचेतियत् तद्वचः तस्यैव अनुरूपं सदृशं तद्बुद्धिशीलतुल्यं । इदं भ्रातृवधरूपं कर्मतु । मे दुरासनो दुर्मतेरनुरूपं ॥ ८ ॥ राज्यस्य भ्रातृवधसाध्यस्य । दुःखस्य वधानन्तरभाविदुःखस्य च । सारं उत्कर्षं । नचिन्तयन् उभयोस्तारतम्यमचिन्तयन्नित्यर्थः ॥९॥ महात्मेत्युक्तं विशदयति—वध इति । अस्य वालिनः । स्वमाहात्म्यस्य स्वमहत्वस्य अव्यतिक्रमात् अनतिक्रमणात् । मे वधः मन्निधनं । मतो नासीत् । ममतु बुद्धिदौरात्म्यात् बुद्धेर्दुःस्वभावात् । प्राणहारी भ्रातृवधकारी । व्यतिक्रमः अमर्यादा आसीत् ॥ १० ॥ मतो नासीदित्युक्तं विशदयति—द्रुमेति ॥ परिनिष्टनन् आर्तरवं कुर्वन् । नपुनःकर्तुमर्हसि युद्धमिति शेषः । अत्रेतिकरणं द्रष्टव्यं ॥ ११—१२ ॥ अचिन्तनीयं अपरिच्छेद्यमित्यर्थः । परिवर्जनीयं साधुभिस्त्यक्तव्यं । अनीप्सनीयं अनभिलषणीयं । कदाचिदपि इच्छाया अयोग्यमित्यर्थः । स्वनवेक्षणीयं सुतरामदर्शनीयं । जुगुप्सितमित्यर्थः । त्वष्टुःपुत्रः त्वाष्ट्रः विश्वरूपः । तं हत्वा इन्द्रो महान्तं पाप्मानमगमदिति कथा ॥ १३ ॥ इन्द्रस्य परमैश्वर्यसंपन्नस्य । पाप्मानं मह्यादयः ऊषरफेननिर्यासऋतुरूपेण जगृहुः । खातपूरणादिवरप्रदत्वात् । मम तु शाखामृगस्य कस्याप्यनुपकारस्य । पाप्मानं प्रतिपत्तुं किंचिद्वरं प्राप्तुमिच्छन् को नाम क्षमेत । ग्रहीतुमितिशेषः । यद्यपि विश्वरूपाख्यायिकायां त्वाष्ट्रशिरस्त्रयच्छेदकृत-

इदानींतुसुतीव्रं अलन्तंतप्स्ये । वैरस्यमरणान्तत्वादितिभावः ॥ स० अतिविप्रधर्षात् भार्यायाः ॥ ६ ॥ टी० वालिनंप्रशंसन्नात्मानंनिन्दति—नत्वामिति ॥ ८ ॥ ति० मांहन्तुंतस्यमतिर्नासीदित्यर्थः । तत्रहेतुःस्वमाहात्म्यव्यतिक्रमात् अनुचितकर्मकारीवालीत्ययशःप्रसङ्गभयात् ॥ १० ॥ स० अचिन्तनीयमनीप्सनीयमनवेक्षणीयमित्यभ्यासोभ्रातृवधस्याकार्यत्वेतात्पर्यद्योतकः । जहिहिजहाहीत्यादिवत् । इदंपाप्मानमितितु इदमधिकमित्यत्रेवव्याख्येयं ॥ १३ ॥ ती० प्रतिहर्तुं परिहर्तुं । कोवाइच्छेत् कोवा सहेतेतिसंबन्धः ॥ स० पुराणान्तरेवह्निप्रथमज्वालादिरूपेणविभागस्तु कल्पान्तरविवक्षयेतिबोध्यं । "भूम्यंबुद्रुमयोषिद्भ्यः"

[ पा० ] १ च. छ. झ. ञ. ट. वचःकर्मच. क. पुनःकर्मतु. २ ङ.—ट. रामविरोचयेत. ३ ख. छ. झ. ट. विचिन्तयन्. ङ. च. ञ. नाचिन्तयन्. ४ झ. ट. पुरस्कृतोपि. ५ ग. ङ.—ट. स्वमाहात्म्यव्यतिक्रमात्. ६ क. ग. बुद्धिसंमोहात्. ७ ज. सान्त्वयित्वेतियेनोक्तो. ८ च. झ. धर्मोश्चानेनरक्षिताः. ९ छ. ज. झ. मिदंवयस्य. क. ट. मिमंवयस्य. ग. महंवयस्य. १० च.—ट. सहेत. ११ च. प्रतिहर्तुं. १२ क. ग. ङ.—ट. मिच्छेत्.

नार्हामि संमानमिमं प्रजानां न यौवराज्यं कुत एव राज्यम् ॥
अधर्मयुक्तं कुलनाशयुक्तमेवंविधं राघव कर्म कृत्वा ॥ १५ ॥
पापस्य कर्ताऽस्मि विगर्हितस्य क्षुद्रस्य लोकापकृतस्य चैव ॥
शोको महान्मामभिवर्ततेऽयं वृष्टेर्यथा निम्नमिवाम्बुवेगः ॥ १६ ॥
सोदर्यघातापरगात्रवालः संतापहस्ताक्षिशिरोविषाणः ॥
एनोमयो मामभिहन्ति हस्ती दृप्तो नदीकूलमिव प्रवृद्धः ॥ १७ ॥
अंहो बतेदं नृवराविषह्यं निवर्तते मे हृदि साधुवृत्तम् ॥
विवर्णमग्नौ परितप्यमानं किट्टं यथा राघव जातरूपम् ॥ १८ ॥
महाबलानां हरियूथपानामिदं कुलं राघव मन्निमित्तम् ॥
अस्याङ्गदस्यापि च शोकतापादर्धस्थितप्राणमितीव मन्ये ॥ १९ ॥

ब्रह्महत्यात्रितयं पृथिवीवनस्पतिस्त्रिय एव जगृहुरित्युक्तं । तथापि शाखान्तरानुरोधेन जलेनापि कश्चिदंशोगृहीत इत्यवगन्तव्यं ॥ १४ ॥ कुलनाशयुक्तं कुलनाशफलकं । वालिविनाशेनाङ्गदादेरजीवनादिति भावः । एवंविधं भ्रातृवधरूपं कर्म कृत्वा । प्रजानां संमानं प्रजाकर्तृकराजसंमानं नार्हामि । अतएव यौवराज्यमेव नार्हामि । कुतो महाराज्यमितिभावः ॥ १५ ॥ क्षुद्रस्य दुष्टस्य । विगर्हितस्य विशेषेण शिष्टैर्निन्दितस्य । लोकापकृतस्य सर्वलोकैस्त्यक्तस्य । पापस्य कर्तास्मि । एतादृशपापस्योत्तरपापहेतुत्वज्ञापनाय तृच्प्रत्ययः । वृष्टेरुत्पन्नोम्बुवेगो यथा तादृशशोको मां निम्नमिवाभिवर्तते । उभयत्राप्युपमावाचकप्रयोगो महाकविनिबन्धनेष्वस्त्येव ॥ १६ ॥ सोदर्यस्य भ्रातुः घात एवापरगात्रवालौ अपरकायपुच्छौ यस्य स तथा । संताप एव हस्तादीनि यस्य स तथा । वधादपि संतापस्य प्राधान्यादूर्ध्वकायत्वरूपणं । वधप्रकारवैविध्यात्संतापवैविध्याच्च नानावयवत्वेन रूपणं । एनोमय इतिस्वार्थे मयट् । पापमेव हस्ती । एनसो दृप्तत्वमुत्कटत्वं । तस्य प्रवृद्धत्वं महत्त्वं गजस्योन्नतत्वं ॥ १७ ॥ हे नृवर राघव । मे हृदि इदं साधुवृत्तं अंहः स्वेन सह्वर्तमानं पापं अविषह्य असोढ्वा । निवर्तते निर्गच्छति । कथमिव । विवर्णं जातरूपं अग्नौ परितप्यमानं सत् किट्टं यथा ऋजीषांशमविषह्य निवर्तते । किट्टाद्वियुज्यत इत्यर्थः । बतेति विषादे ॥ १८ ॥ अपिचेति समुच्चयः पूर्वश्लोकोक्तदोषापेक्षया । मन्निमित्तं मत्तो निमित्तात् । अस्याङ्गदस्य शोकतापात् महाबलानां हरियूथपानां इदं परिदृश्यमानं कुलं यूथं । अर्धस्थितप्राणमिव भवतीति मन्ये । "सजातीयैः कुलं यूथं

इतिश्रीमद्भागवतोक्तेरत्रोक्तएवैतत्कल्पीयइतिध्येयं ॥ १४ ॥ शि० ननुराज्यप्राप्त्यनन्तरंयागादिनाशुद्धिर्भवितेत्यतआह—नेति । एवंविधं भ्रातृविनाशनंकर्मकृत्वाप्रजानांसंमानंप्रजाकर्तृकसत्कारंनार्हामि । अतएव यौवराज्यंनार्हामि । राज्यंकुतः राज्यप्राप्तेर्नसंभावनेत्यर्थः ॥ १५ ॥ शि० लोकापकृतस्य राजापकृतिद्वारासर्वजनापकारस्य । कर्तास्मि ॥ वि० लोकापकृतस्य परलोकेपरमानर्थसाधनस्यपापस्यकर्तास्मि । अतोमहाञ्शोकःमां इव तथा अभिवर्तते । इवशब्दस्तथाशब्दार्थे ॥ १६ ॥ ति० हेनृवर इदमंहः पापं । बत खेदे । अविषह्यं सोढुमशक्यं । प्राप्यमेहृदिस्थितं । साधुवृत्तं जन्मार्जितपुण्यंनिवर्तते । विवर्णं अतएवाग्नौ परितप्यमानंजातरूपं । अविषह्यं अशक्यसहावस्थानं । प्राप्यकिट्टं मलंयथानिवर्तते तथेत्यर्थः । यथाबलवतोत्तमेनाधमःस्थातुंन शक्नोति तथा बलवताऽधमेनसहोत्तमोपीत्याशयः । एवंचानेनपापेनसर्वपुण्यक्षयोजातइतितात्पर्यं । केचित्तु अग्नौपरितप्यमानंजातरूपं स्वर्णं । यथाविवर्णं विवर्णताकारकं । किट्टं दाहकक्षारद्रव्यं । प्राप्यनिवर्तते भस्मभवति तथेत्यर्थइत्याहुः ॥१८॥ शि० हरियूथपानामिदंकुलं मन्निमित्तं मदभिन्ननिमित्तात् । अङ्गदस्यातीवशोकसंतापाद्धेतोः अर्धस्थितप्राणंमन्ये । यद्वा मन्निमित्तं अहंनिमित्तं यस्मिन् वालिवधजनितदुःखे । तत्प्राप्य अतीव अत्यन्तं । अङ्गदस्यशोकतापात् शोकतापंविज्ञायविद्यमानमिदंकुलं अर्धस्थिताः

[ पा० ] १ क. ग. ङ. च. ज. संमानमर्हं. २ ङ. च. ज. ञ. लोकेपरिनिन्दितस्य. क.—घ. लोकावमतस्य. ३ छ. झ. ट. लोके. ४ क. ख. घ.—छ. झ. ञ. ट. नृवराविषह्यं. ५ छ. झ. ट. अग्नौविवर्णं. ६ क. ग. शोकभावात्. ७ ख. घ. ट. प्राणमतीव.

सुतः सुलभ्यः सुजनः सुवश्यः कुतः सुपुत्रः सदृशोऽङ्गदेन ॥
न चापि विद्येत स वीर देशो यस्मिन्भवेत्सोदरसंनिकर्षः ॥ २० ॥
यद्यङ्गदो वीरवरार्ह जीवेज्जीवेच्च माता परिपालनार्थम् ॥
विना तु पुत्रं परितापदीना तारा न जीवेदिति निश्चितं मे ॥ २१ ॥
सोहं प्रवेक्ष्याम्यतिदीप्तमग्निं भ्रात्रा च पुत्रेण च सख्यमिच्छन् ॥
इमे विचेष्यन्ति हरिप्रवीराः सीतां निदेशे तव वर्तमानाः ॥ २२ ॥
कृत्स्नं तु ते सेत्स्यति कार्यमेतन्मय्यप्रतीते मनुजेन्द्रपुत्र ॥
कुलस्य हन्तारमजीवनार्हं रामानुजानीहि कृतागसं माम् ॥ २३ ॥
इत्येवमार्तस्य रघुप्रवीरः श्रुत्वा वचो वाल्यनुजस्य तस्य ॥
संजातबाष्पः परवीरहन्ता रामो मुहूर्तं विमना बभूव ॥ २४ ॥
तस्मिन्क्षणेऽभीक्ष्णमवेक्ष्यमाणः क्षितिक्षमावान्भुवनस्य गोप्ता ॥
रामो रुदन्तीं व्यसने निमग्नां समुत्सुकः सोथ ददर्श ताराम् ॥ २५ ॥
तां चारुनेत्रां कपिसिंहनाथं पतिं समाश्लिष्य तदा शयानाम् ॥

तिरश्चां पुन्नपुंसकं" इत्यमरः ॥ १९ ॥ सुजनः सौजन्यवान् । सुवश्यः सुतरां वश्यः स्वाधीनः सुतः। सुलभ्यः लोके सुखेन लब्धुं योग्यः । अङ्गदेन तुल्यः पुत्रस्तु कुतो हेतोः सुलभ्यः । दुर्लभ इत्यर्थः । सोदरसन्निकर्षोपि दुर्लभ इत्याह—न चापीति । संनिकर्षः संनिधानं ॥ २० ॥ अङ्गदो यदि जीवेत्तदा तारापि जीवेत् अन्यथा नेत्याह—यदीति ॥ २१ ॥ अङ्गदमरणं निश्चित्याह—सोहमिति ॥ पुत्रेण अङ्गदेन । "भ्रातॄणामेकजातानां यद्येकः पुत्रवान्भवेत् । तेन पुत्रेण ते सर्वे पुत्रिणो मनुरब्रवीत्" । इति स्मृतिः । तन्मरणे मरणं हि स्नेहस्य पराकाष्ठा । निदेशे त्वदाज्ञायां ॥ २२ ॥ अप्रतीते अप्रकाशे मृत इति यावत् । मां विनापि त्वं सर्वं कार्यं कर्तुं क्षम इत्यर्थः ॥ २३ ॥ अथ रामस्याश्रितकार्यमेव स्वकार्यं नतु स्वतःकिंचिदस्ति । अतएव मम शत्रुर्वालीति सुग्रीवेणोक्ते तं निहत्य तस्मिन्नश्रूणि मुक्त्वा शोचतिसति स्वयमपि तथा शोचति स्मेत्याह—इत्येवमिति ॥ यद्वा सर्वेश्वरस्य कुत्रचिद्विषयीकारस्तत्संतानपर्यन्तः घण्टाकर्णमालाकारादिष्विवेत्याह—इत्येवमिति ॥ रघुप्रवीर इत्यनेन स्वस्य वानरेण संबन्धान्तरप्रसक्तिर्नास्तीत्युच्यते । वाल्यनुजस्य आर्तस्य वाल्यनुजे आर्ते सतीत्यर्थः । वचः श्रुत्वा तद्वचनं च श्रुत्वा संजातबाष्पः तदार्तिनिमित्तकार्तिक इत्यर्थः । परवीरहन्ता आश्रितविरोधिनिरसनशीलः । ताच्छील्ये तृन् । सुग्रीववचनात्कृतवालिवधत्वेन तच्छोचनादशोचदित्यर्थः । अनेन रामस्य क्रोधशोकावाश्रितक्रोधशोकायत्तावित्ययमर्थःसूचितः ॥ २४ ॥ तस्मिन्क्षणे तस्मिन्नवसरे । अभीक्ष्णं पुनः पुनः । अवेक्ष्यमाणः तारयेतिशेषः । अनेन तारायाः रामविषयमानुकूल्यमुक्तं । क्षितिक्षमावान् क्षितेर्यादृशी क्षमा तादृशक्षमावान् । क्षमावत्त्वभुवनगोप्तृत्वगुणौ तारया चिन्तितौ कविनोक्तौ । रुदन्तीमित्यादिना ताराया दयनीयतोक्ता । समुत्सुकः शोकापनयने कृतादरः ॥२५॥ रामागमनमालोक्य मन्त्रिणस्तामुत्था-

प्राणायस्मिंस्तत् अहंमन्ये ॥ १९ ॥ **टीका०** पितृवियोगादङ्गदेनश्रेष्ठपुत्रःकथंसुसंपादनीयइत्याह—**सुतइति** । सुलभ्यःसुतमात्रस्सुलभएवेत्यर्थः । किंतु सुजनःसुवश्यः अङ्गदेनसदृशःपुत्रः कुतः अतिदुर्लभइत्यर्थः । किंचसोदरसङ्गःकुत्रापिनास्तीत्याह—**नचेति** । **स०** लोकेसुजनःसुवंश्यःसुतःसुलभ्यः । परंतु अङ्गदेनसदृशःसुपुत्रःकुतः ॥ २० ॥ **स०** भुवनस्यगोप्ता श्रुत्यनुवादः । समुत्सुकः समाधानोत्सुकः ॥ २५ ॥ **ति०** कपिसिंहनाथां कपिसिंहानांस्वामिनीं ॥ **स०** कपिसिंहेनसुग्रीवेणनाथस्तापोयस्यास्सातां ॥२६॥

**[ पा० ]** १ क. ज. सुवंश्यः. २ ख. ग. ङ.—ट. कुतस्सुपुत्रः. ३ च. ज.—ट. अद्याङ्गदो. ४ च.—झ. ट. सानैवजीवेदिति. ५ ख. घ.—ट. परिवर्तमानाः. ६ क.—ट. वालिजघन्यजस्य. ७ क. ग. घ. च. झ. ञ. ट. सिंहनाथां. ८ क. ग. समालिङ्ग्य.

उत्थापयामासुरदीनसत्त्वां मन्त्रिप्रधानाः कपिवीरपत्नीम्[1] ॥ २६ ॥
सा विस्फुरन्ती परिरभ्यमाणा भर्तुः सकाशादपनीयमाना[2] ॥
ददर्श रामं शरचापपाणिं स्वतेजसा सूर्यमिव ज्वलन्तम् ॥ २७ ॥
सुसंवृतं पार्थिवलक्षणैश्च तं चारुनेत्रं[3] मृगशावनेत्रा ॥
अदृष्टपूर्वं पुरुषप्रधानमयं स काकुत्स्थ इति प्रजज्ञे ॥ २८ ॥
तस्येन्द्रकल्पस्य दुरासदस्य महानुभावस्य समीपमार्या ॥
आर्ताऽतितूर्णं व्यसनाभिपन्ना[4] जगाम तारा परिविह्वलन्ती ॥ २९ ॥
सा[5] तं समासाद्य विशुद्धसत्त्वा[6] शोकेन संभ्रान्तशरीरभावा ॥
मनस्विनी वाक्यमुवाच तारा रामं रणोत्कर्षणलब्धलक्ष्मम्[7] ॥ ३० ॥
त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च[8] ॥
अक्षय्यकीर्तिश्च[9] विचक्षणश्च क्षितिक्षमावान्क्षतजोपमाक्षः ॥ ३१ ॥

पयामासुरित्याह—तामिति ॥ २६—२७ ॥ पार्थिवलक्षणैः राजलक्षणैः । सुसंवृतं । अन्यूनतया युक्तमित्यर्थः । चारुनेत्रं पुण्डरीकाक्षं । मृगशावनेत्रा "विद्वानेव विजानाति विद्वज्जनपरिश्रमं" इति न्यायेन स्वयं चारुनेत्रतया तत्रैव प्रथमं दृष्टिं न्यधादिति भावः । अदृष्टपूर्वं इतः पूर्वं कुत्राप्यदृष्टचरं । योगं विना अदृष्टमित्यर्थः । पुरुषप्रधानं पुरुषोत्तमं । अयं स इति विजज्ञे । यः पूर्वं भर्तारं हतवान् सोयमिति ज्ञातवती । यद्वा यः पूर्वमङ्गदाच्छ्रुतः । यद्वा यः पूर्वं पुण्डरीकाक्षत्वादिगुणविशिष्टतया महाजनेभ्यः श्रुतः स एवायमित्यर्थः । अतएव वक्ष्यति—त्वमप्रमेयश्चेति ॥ २८ ॥ तस्येति व्यसननिवर्तनक्षमागुणा उच्यन्ते । परिविह्वलन्ती मूर्छन्तीत्यर्थः ॥ २९ ॥ रणे उत्कर्षणेन उत्कर्षेण लब्धं लक्ष्यं शरव्यं यस्य तथा । एकेनशरेण स्वभर्तृहन्तारमित्यर्थः । तं रामं । शोकेन संभ्रान्तः अयथाभूतः शरीरभावः शरीरकृतभावः यस्याः सा कुपितेत्यर्थः । मनस्विनी मत्प्रियहन्तारं यावच्छक्ति परुषाणि वदेयमिति कृताध्यवसाया । समासाद्य विशुद्धसत्त्वा रामसंनिधिमाहात्म्येन निवृत्तकालुष्यतया समुन्मिषितशुद्धसत्त्वा । तारा वाक्यमुवाच । परुषभाषणोद्युक्तयैव वाचा अस्तौषीदित्यर्थः ॥ ३० ॥ एवं पुरुषोत्तमत्वपुण्डरीकाक्षत्वादिभिरनुसंहितं परत्वं ताराऽनुसंधत्ते—त्वमप्रमेयश्चेति । त्वं वक्ष्यमाणकल्याणगुणानुगुणधर्मिवैलक्षण्ययुक्तः । अप्रमेयः "वेदाहमि"त्युपक्रम्य "महान्तं क इत्था वेदे"ति वेदैरप्यपरिच्छेद्यः । अप्रमेयः "सो अङ्ग वेद यदि

स० परिरभ्यमाणा इतरस्त्रीभिः ॥ २७ ॥ शि० किंच नदृष्टःपौर्वकालिकदर्शनकर्मीभूतभिन्नःसचासौपूर्वःसर्वेषामादिः ॥ २८ ॥ ति० परिविह्वलन्ती कष्टेनस्खलनपूर्वंगच्छन्ती ॥ शि० इन्द्रकल्पस्य इन्द्रादिनिर्माणेसमर्थस्य ॥ २९ ॥ तनि० विशुद्धसत्त्वा तत्संनिधिमाहात्म्येनसमुन्मिषितसत्त्वा । परुषभाषणोद्युक्तापि सत्त्वनिष्पन्नपरमज्ञानतयानिवृत्तकोपकलुषासान्त्वमुक्तवती ॥ ती० रणोत्कर्षणलब्धलक्ष्यं रणेउत्कर्षणमुत्कर्षःयेषांतेतथोक्तास्तैः । प्रथमगणनायांवीराग्रणीरितिलक्ष्यत्वेनलब्धमित्यर्थः ॥ शि० संभ्रान्तः विस्मृतःशरीरभावःराजस्त्रीत्वादिर्ययासा । रणेषु युद्धेषु । उत्कर्षणेनसर्वाधिकोत्कर्षेणलब्धंलक्ष्यंवेध्यंयेन सर्वतोधिकवेध्यवेधकइत्यर्थः ॥ स० संभ्रान्तशरीरभावा अपगतशरीराभिमाना ॥ शि० विशुद्धसत्त्वं प्राकृतविलक्षणसत्त्वविशिष्टं ॥ ३० ॥ तनि० त्वमप्रमेयः रावणदुन्दुभिनिग्रहीतारंवालिनंहत्वा अकिंचित्कुर्वन्निवस्थितस्त्वं वालिभयप्राप्तगिरिवरस्यसुग्रीवस्यापिजयंदत्तवान् । शापायोद्यतांमांस्तोतुंघटयिता । त्वमप्रमेयः । त्वत्स्वरूपमस्मत्स्वरूपंचविचार्यस्तोतुमुद्युक्ताऽहंत्वमप्रमेयःवेदैरप्यपरिच्छेद्योसि । अतोऽहंकथंस्तोतुंशक्नोमि । त्वमप्रमेयः पुरतोविद्यमानोप्यपरिच्छेद्यश्चक्षुषामनसाऽप्रमेयः । 'नचक्षुषागृह्यतेमनसातुविशुद्धेन' इतिश्रुतेः । त्वमप्रमेयः धनुष्पाणिसुलभस्त्वंशङ्खचक्रगदादिधरोनारायणोसि । त्वमप्रमेयः परत्वमपरिच्छेद्यमितिस्थितं । सौलभ्यंचापरिच्छेद्यंजातं । त्वमप्रमेयः एकाकीसन्नपिपरिकरपरीतइवाप्रधृष्योसि । त्वमप्रमेयः तापसइवस्थितोपिविराधादिदुष्टनिग्रहंकृत्वाशिष्यान्परिपालितवान् ॥ स० क्षितेःक्षमाक्षितिक्षमा । सा दातृतासंबन्धेनास्यास्तीतिक्षितिक्षमावान् । अनेनभूम्याअपिक्षमादानंयदा

[ पा० ] १ क.—घ. च.—ञ. कपिराजपत्नीं. २ च.—ञ. समीपात्. ३ क. ग. सातंसुनेत्रं. ४ ङ.—ट. व्यसनंप्रपन्ना. ५ ङ.—ट. तंसा. ६ क. ग.—ट. विशुद्धसत्वं. ७ ग. छ.—ट. लक्ष्यं. ८ छ. झ. ट. धर्मकश्च. ९ ङ.—ट. अक्षीणकीर्तिश्च.

वा न वेद" इति स्वेनापि परिच्छिद्य ज्ञातुमशक्यः। त्वमप्रमेयः प्रत्यक्षगम्योपि मनसा दुर्विभाव्यस्वभावः। त्वमप्रमेयः शरचापधरोपि त्वं शङ्खचक्रधरोसि । त्वमप्रमेयः सौलभ्यदशैव न परिच्छेत्तुं शक्यते। त्वमप्रमेयः परिकररहितोपि प्रतापातिशयेन निरवधिकपरिकरपरिगत इव दुरवगाहोसीत्येकवचनस्यभावः। एवमन्तःकरणेन दुष्प्रापोपि किं बाह्यकरणैः सुप्रापः नेत्याह—दुरासदश्च । मनसापि दुरासदः कथं प्रकारान्तरेण स्वासद इति भावः। दुरासदश्च "महाजनो येन गतः स पन्थाः" इत्युक्तं सन्मार्गं विना पथस्खलितेन दुष्प्राप इत्यर्थः । दुरासदश्च " षद्लृ विशरणगत्यवसादनेषु" इति धातुपाठोक्तार्थत्रयमपि तत्रोणोच्यते । नित्यत्वान्न विशरणार्हः। विभुत्वान्न विचालनार्हः । नित्यानन्दत्वान्नावसादमापादयितुं शक्य इत्यर्थः । दुरासदश्च वालिवधकुपितानां प्रतीकाराय सन्निधानमपि गन्तुमशक्य इत्यर्थः । दुरासदश्च बाह्यकुदृष्टिभिरुक्त्याभासैरप्रकम्प्यवैभव इत्यर्थः । एवमप्रमेयत्वदुर्धर्षत्वाभ्यां सुदृप्तोपि न परदारराज्यपरिग्रहलुब्ध इत्याह—जितेन्द्रियश्च । निस्पृहतया सुग्रीवाय दत्तराज्य इत्यर्थः । जितेन्द्रियश्च । यः कोपिपुरुषः कांचिद्योषितमालक्ष्य निर्वर्णयति त्वं तु न तथा। " न रामः परदारान्वै चक्षुर्भ्यामपि पश्यति " इत्युक्तेः । जितेन्द्रियश्च " पश्यत्यचक्षुः स शृणोत्यकर्णः । अपाणिपादो जवनो ग्रहीता"इत्याद्युक्तरीत्या सर्वेन्द्रियैर्विनापि सर्वं सर्वत्र सर्वदा जानन्नित्यर्थः। जितेन्द्रियः " दुर्ग्रहं मनसाऽप्यन्यैरिन्द्रियैरपि दुर्जयैः " इत्युक्तरीत्या वाङ्मनसागोचरः। त्वं जितेन्द्रियः त्वमेव जितेन्द्रियः। सर्वं वाक्यं सावधारणं । अब्भक्षो वायुभक्ष इतिवत्। "अहल्यायै जारः सुरपतिरभूदात्मतनयां प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलां " इत्युक्तरीत्या त्वद्व्यतिरिक्ताः सर्वेपि विषयचपलाः। त्वमेको जितेन्द्रिय इत्यर्थः । एवं विरक्तोप्ययमस्मद्धिंसया अधार्मिक इति मयास्थितं । न तथेत्याह—उत्तमधार्मिकश्च । स्वाश्रितसंरक्षणार्थमेवंविधव्यापारकारितया परमधार्मिकः। स्वार्थकर्मकारी अधमधार्मिकः। स्वपरसाधारणकर्मकारी मध्यमधार्मिकः। परार्थमेव प्रवर्तमान उत्तमधार्मिकः। यद्वा वर्णाश्रमाचारसमाराध्यो धार्मिकः। उत्तमधार्मिको भक्तिमार्गभजनीयः। यद्वा उत्तमधार्मिकः शरणागतसंरक्षकः । यद्वा " उपायो गुरुरेवस्यात्तेनानुगृहीतो ब्रह्मलोकं गच्छति " इत्युक्तधर्मवानुत्तमधार्मिकः । यद्वा " आनृशंस्यं परो धर्मः " इत्युक्तधर्मवान् धार्मिकः। स्वाश्रितानामापत्सु स्ववक्षोलक्ष्यीकुर्वन्नुत्तमधार्मिकः । यद्वा आर्तसुग्रीवरक्षणाद्धार्मिकः । अकृत्यकरणेन नारकिणं वालिनं निहत्य तस्य पूतत्वकरणादुत्तमधार्मिकः। प्रच्छन्नवेधितया निरपराधवधेन च कथमस्य धार्मिकत्वमित्याशङ्क्याह—अक्षय्यकीर्तिश्च। आश्रितापराधितया तिर्यक्षु मृगयान्यायेन पराङ्मुखवधस्यादोषत्वात्तिर्यग्भिराभिमुख्येन युद्धकरणस्य सार्वभौमस्यावद्यावहत्वाच्च तव कीर्तिं न दूषयितुं शक्येत्यर्थः। अक्षय्यकीर्तिश्च " तस्य नाम महद्यशः " इत्युक्तरीत्या परत्वप्रथायुक्तः । विचक्षणश्च दूरदृष्टितया युक्तायुक्तविचारपूर्वकं सर्वकार्यकृत् । अतएव हि निरपराधवधो मा भूदिति कदाचिद्वालितः पराभवं प्रापितवान् । लक्ष्यवैपरीत्यपरिहाराय गजपुष्पीं धारितवान्। एवं [illegible]संहर्तापि " सपुत्रपौत्रं सामात्यं समन्त्रिज्ञातिबा[illegible]वम् । हत्वा " इत्युक्तरीत्या अङ्गदादिष्वकिंचित्करतया प्रशस्तक्षमावानसीत्याह—क्षितिक्षमावान्। स्वाश्रितापराधकारिविषये तव सान्वयविनाशकरणे प्राप्तेपि तत्क्षमणं तवातिश्लाघ्यमित्यर्थः । क्षितिक्षमावान् " क्षमया पृथिवीसमः " इत्युक्तरीत्या पञ्चाशत्कोटिविस्तीर्णायाः पृथिव्या यावती क्षमा तावती तवैकस्यास्तीति भावः। नित्ययोगे मतुप्। तेन कदाचिदप्यस्याक्षमाप्रसङ्गोपि नास्तीतिद्योत्यते। क्षतजोपमाक्षः वालिविषये कोपातिशयेनाद्यापि शोणीकृतनयनोपि तदीयेषु क्षमावान्। यद्वा रक्तास्यनेत्रपाणिः त्रिताम्रः इत्यादिसामुद्रिकोक्तरीत्या रक्तान्तनेत्रः। " रामो रक्तान्तलोचनः " इति ह्युक्तिः। अत्र प्रतिपदं चकारप्रयोगः एकैकएव गुणः परत्वे पर्याप्तं लिङ्गमिति द्योतयितुं । क्षमावानित्यत्र चकाराप्रयोगस्तु रामेण क्षान्ते सर्वैरपि क्षान्तमेव । अतोन्यत्रापि संभवेन निरपेक्षत्वाभावाच्चकाराप्रयोगः। क्षतजोपमाक्ष इत्यत्र तु विग्रहगुणत्वेन भिन्नाधिकरणत्वात्समुच्चयाभावः । क्षतजोपमाक्षेति संबुद्ध्यन्तं वा। यद्वा अप्रमेयः अनाश्रितानां दुर्ज्ञेयः। चकारादाश्रितानां सुप्रमेयः। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते

त्वमात्तबाणासनबाणपाणिर्महाबलः संहननोपपन्नः ॥
मनुष्यदेहाभ्युदयं विहाय दिव्येन देहाभ्युदयेन युक्तः ॥ ३२ ॥
येनैक[1]बाणेन हतः प्रियो मे तेनैव[2] मां त्वं जहि सायकेन ॥
हता गमिष्यामि समीपमस्य न मामृते[3] राम रमेत वाली ॥ ३३ ॥
स्वर्गेपि पद्मामलपत्रनेत्रः समेत्य संप्रेक्ष्य[4] च मामपश्यन् ॥
न ह्येष उच्चावचताम्रचूडा विचित्रवेषाप्सरसोभजिष्यत् ॥ ३४ ॥
स्वर्गेऽपि शोकं च विवर्णतां च मया विना प्राप्स्यति वीर वाली ॥
रम्ये नगेन्द्रस्य तटावकाशे विदेहकन्यारहितो यथा त्वम् ॥ ३५ ॥
त्वं वेत्थ यावद्वनिता[5]विहीनः प्राप्नोति दुःखं पुरुषः कुमारः ॥
तत्त्वं प्रजानञ्जहि मां न वाली दुःखं ममादर्शनजं भजेत ॥ ३६ ॥
यच्चापि मन्येत भवान्महात्मा स्त्रीघात[6]दोषो न भवेत्तु मह्यम् ॥
आत्मेयमस्येति च मां जहि त्वं न स्त्रीवधः स्यान्मनुजेन्द्रपुत्र[7] ॥
शास्त्रप्रयोगाद्विविधाच्च वेदादात्मा[8] ह्यनन्यः पुरुषस्य दाराः ॥ ३७ ॥

तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां " इति श्रुतेः । " नमोनमो वाङ्मनसातिभूमये नमोनमो वाङ्मनसैकभूमये " इत्युक्तेश्च । एवमनाश्रितानां दुरासदो दुष्प्रापः । चकारादाश्रितानां सुलभः । जितेन्द्रियः चकारादाश्रितविषये चपलः । उत्तमधार्मिकः चकाराद्दूरीकृताधर्मः । अक्षय्यकीर्तिः तदनुरूपकृत्यश्चशब्दार्थः । विचक्षणः चकारादाश्रितविषयत्यागाशक्तश्च । " मित्रभावेन संप्राप्तं न त्यजेयं " इत्यशक्तिर्ह्युच्यते । अत्रत्यचकारः देहलीदीपन्यायेनोभयत्रान्वेति । तेन दयादिकं समुच्चीयते ॥ ३१ ॥ त्वमिति अनेनाप्राकृतविग्रहत्वमुच्यते । संहननेन समीचीनावयवसंस्थानेन उपपन्नः युक्तः । मनुष्यदेहाभ्युदयं मानुषशरीरपरिग्रहं । विहाय । दिव्येन देहाभ्युदयेन देहसौभाग्येन युक्तः ॥ ३२ ॥ एवं रामस्य दिव्यतेजोविशेषदर्शनेन विस्मिता क्षणंविस्मृतशोका तद्वैभवंवर्णयित्वा स्वप्रकृत्यनुसारेण प्रलपति —येनेत्यादिना ॥ ३३ ॥ पद्मामलपत्रनेत्रो वाली स्वर्गेपि अप्सरोभिः समेत्य ताः संप्रेक्ष्य च मामपश्यन् उच्चावचताम्रचूडाः विविधताम्रकुसुमैः कृतशेखराः विचित्रवेषाप्सरसः । नाभजिष्यत् न भजिष्यति । लडर्थे लङ् ॥ ३४ ॥ नगेन्द्रस्य ऋश्यमूकस्य ॥ ३५ ॥ कुमारः युवा । तत् वनिताविरहदुःखं । प्रजानन् त्वं मां जहि । वाली ममादर्शनजं दुःखं नभजेत ॥ ३६ ॥ यच्चापीत्यादिसार्धश्लोकः ॥ मह्यं

तदाऽस्यतदपेक्षयाऽधिकक्षमास्तीतिकिमुवक्तव्यमितिकैमुत्यंसूचितंभवति ॥ ३१ ॥ **तनि०** महाबलत्वेहेतुमाह—संहननोपपन्न इति । महावीर्यत्वनिमित्तान्तस्साराभिव्यञ्जकशरीरसंस्थानविशेषइत्यर्थः । अयंचप्राकृतशरीरेषुनसंभवतीत्याह—**मनुष्येति** । महाराजलक्षणशौर्यादिगुणाभिव्यञ्जकमनुष्यशरीरसंस्थानविशेषेष्वपिनैतादृशइतिद्योतयितुमभ्युदयपदप्रयोगः । दिव्येन 'त्रिपादस्यामृतंदिवि ' इत्यादिप्रमाणसिद्धाप्राकृतलोकस्थितदिव्यमङ्गलविग्रहसंनिवेशेनेत्यर्थः ॥ **स०** आत्तबाणासनश्चासौबाणपाणिश्चेतिवा आत्तौबाणासनबाणौयाभ्यांतादृशौपाणीयस्येतिवा । संहननोपपन्नः ।सिंहस्कन्धःममप्रियोवालीहतस्सन् । मनुष्यदेहाभ्युदयं मनुष्यसदृशमपिराज्यसौभाग्यंविहायदिव्येनविभवेनदेहाभ्युदयेन सौभाग्येनयुक्तः । अथवा दिविभवंदिव्यं देवजातंतस्येनःस्वामीइन्द्रः तस्यदेहाख्याभ्युदयेनयुक्तोभूत् । तेनैवबाणेनमांजहि संहर । इहि गच्छ । मांहत्वागच्छेतिलौकिकवाग्रीतिरियं । जहि इहीतिच्छेदः ॥ ३२ ॥ **ति०** कुमारः सुन्दरःपुरुषः । यद्वा दुःखहेतुमाह—**कुमारइति** । कुत्सितोमारोयस्य मारकत्वेनमदनस्यप्रसिद्धेः । अथवाकुत्सितोमारोमरणंयस्य । मरणादपिदुःखजनकत्वादेवमुक्तिः । भावेघञ् ॥ **शि०** कुमारः नित्यंकुमारत्वेनप्रतीयमानस्त्वं वेत्थ ॥ ३६ ॥ **ति०** महात्मेत्यनेन ताटकावधादिकृतवतःस्त्रीवधोकिंचित्करइत्यपिसूचितं ॥ ३७ ॥

[ **पा०** ] १ क.—ट. येनैवबाणेन. २ ङ—ट. तेनैवबाणेनहिमांजहीहि. ३ च.—ट. मांविनावीररमेत. ४ क. संप्रेक्ष्यतु. ५ ङ.—ट. तावद्वनिता. ६ ङ.—ञ, स्त्रीघातदोषस्तुभवेन्नमह्यं. ७ छ. सूनो. ८ ङ.—ट. वेदादनन्यरूपाःपुरुषस्य.

दारप्रदानान्न[1] हि दानमन्यत्प्रदृश्यते ज्ञानवतां हि लोके ॥ ३८ ॥
त्वं चापि मां तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर ॥
अनेन दानेन न लप्स्यसे त्वमधर्मयोगं मम वीरघातात् ॥ ३९ ॥
आर्तामनाथामपनीयमानामेवंविधामर्हसि[2] मां निहन्तुम् ॥
अहं हि मातङ्गविलासगामिना प्लवङ्गमानामृषभेण धीमता ॥
विना वरार्होत्तमहेममालिना चिरं न शक्ष्यामि नरेन्द्र जीवितुम् ॥ ४० ॥
इत्येवमुक्तस्तु विभुर्महात्मा तारां समाश्वास्य हितं बभाषे ॥ ४१ ॥
मा वीरभार्ये विमतिं कुरुष्व लोको हि सर्वो विहितो विधात्रा ॥
तं चैव सर्वं सुखदुःखयोगं लोकोऽब्रवीत्तेन कृतं विधात्रा ॥ ४२ ॥
त्रयो[3] हि लोका विहितं विधानं[4] नातिक्रमन्ते वशगा हि तस्य ॥
प्रीतिं परां प्राप्स्यसि तां तथैव पुत्रस्तु[5] ते प्राप्स्यति यौवराज्यम् ॥
धात्रा विधानं विहितं तथैव न शूरपत्न्यः परिदेवयन्ति ॥ ४३ ॥
आश्वासिता तेन[6] तु राघवेण प्रभावयुक्तेन परंतपेन ॥

स्त्रीघातदोषोभवेदिति भवान् यन्मन्येत तन्न युक्तं । इयं तारा । अस्य वालिनः । आत्मा इति मत्वा मां जहि । तेन ते स्त्रीवधः स्त्रीवधदोषो नस्यात् । आत्मेत्येतदुपपादयति—शास्त्रेति । " अर्धो वा एषआत्मनः यत्पत्नी, आत्मा हि दाराः " इत्यादिरूपात् विविधात् वेदात् वेदरूपात् शास्त्रप्रयोगादित्यन्वयः । यद्वा वेदात् शास्त्रप्रयोगात् धर्मशास्त्रप्रयोगाच्चेति वार्थः ॥ ३७ ॥ सुकृतमप्यस्तीत्याह—दारेति ॥ ३८ ॥ न केवलं पापनिवृत्तिसुकृते प्रायश्चित्तंचेदमित्याह—त्वंचापीति । वीरघातादित्येतत्सुग्रीवदुःखदुःखितरामहृदयानुसारेणोक्तं । त्वमुत्तमधार्मिकश्चेति पूर्वमुक्तत्वात् ॥ ३९ ॥ अपनीयमानां वालिनावञ्चिताम् ॥ ४०—४१ ॥ हितवचनमेवाह—मावीरेति ॥ विमतिं जीवितुं नशक्ष्यामीत्यादिविरुद्धमतिं । सर्वो लोकः विधात्रा ब्रह्मणा । विहितो निर्मितः । हिः प्रसिद्धौ । तं सुखदुःखयोगंच । विधात्रा कृतमिति लोकः पण्डितः पामरश्चाब्रवीत् ॥ ४२ ॥ वस्तुस्थितिश्च तथेत्याह—त्रय इति ॥ लोकाः लोकस्थजनाः । विहितं विधानं ब्रह्मकल्पितं प्रकारं । नातिक्रमन्ते । हि यस्मात्तस्य वशगाः । तां वालिसंभोगसदृशभोगमिति द्योतयति ॥ ४३ ॥ प्रभावयुक्तेन अङ्गदयौवराज्यप्रदानसमर्थेन । परंतपेन तद्विरोधिनिरसनसमर्थेन । आश्वासिता अतएव ध्वनता शब्दायमानेन मुखेनोपलक्षिता । सुवेषरूपेत्यनेन समाश्वासनकृता-

**ति॰** स्त्रीणांपुरुषात्मत्वमेवसाधयति—**शास्त्रेति** । शास्त्रेशास्त्रीययागाद्यनुष्ठाने । प्रकर्षेणसहैवयोगात् अधिकारात् । नकेवलं दोषाभावमात्रं अपितुस्त्रीदानफलमपीत्याह—**दारेति** ॥ ३८ ॥ **ति॰** ममवीरस्यपत्युश्छलेनघातात्प्राप्तमधर्मसंबन्धंनलप्स्यसे । किंच ततएवमच्छापतःप्राप्तमधर्मयोगमधर्मफलयोगंस्त्रीवियोगरूपंनलप्स्यसे । ममावधेतु लप्स्यसएव । अतएवक्वचित्पठ्यते—'अचिरेणैवकालेनत्वयावीर्यबलाहृता । सासीताममशापेननचिरात्त्वयिवत्स्यति' इति ॥ ३९ ॥ **शि॰** अपनीयमानां पत्यालिङ्गनाद्बहिष्कृतां ॥ ४० ॥ **ति॰** विमतिं मरणविषयांविरुद्धमतिं । सर्वोलोकोविधात्राविहितः । अहरादौसृष्टः तंलोकं सुखदुःखाभ्यामवर्ज्याभ्यांयोगोस्यतं तेनैवविधात्राकृतं । लोक्यतेऽनेनेतिलोकोवेदः अब्रवीत् । ' नहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्ति ' इतिश्रुतेः ॥ ४२ ॥ **ति॰** त्रयोपिलोकाः लोकत्रयवासिनोपिजनाः । विधातृविहितंविधानंनातिक्रमन्ते । हियतः तस्यवशगाः ब्रह्मादिस्थावरान्ताः । वालीपरांप्रीतिं त्वत्संबन्धजांप्राप्स्यति मत्सङ्कल्पात् । किंच भवत्यपिवालिसंबन्धजांप्रीतिंसुग्रीवसंबन्धात्प्राप्स्यति । तेपुत्रोयौवराज्यंप्राप्स्यतिन्व । चेनाहमपिशापंप्राप्स्याम्येवेति ॥ **टीका॰** ममाज्ञाकरणेन फलमस्तीत्याह—**प्रीतिमिति** । जीवतिवालिनियादृशीप्रीतिस्तादृशीमित्यर्थः ॥ ४३ ॥ इतिचतुर्विंशःसर्गः ॥ २४ ॥

[ **पा॰** ] १ ग.—ट. प्रदानाद्धिनदानं. २ क. ग. ङ.—ट. मेवंगतांनार्हसिमामहन्तुं. ३ ज. प्रायोहि. छ. झ. ट. त्रयोपि. ४ ख. घ. ज. ञ. विधातुर्नाति. ५ ख.—ठ. पुत्रश्च. ६ क. ग. ङ.—ट. तेनमहात्मनातु.

सा वीरपत्नी ध्वनता मुखेन सुवेषरूपा विरराम तारा ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ॥ २५ ॥

रामेणसुग्रीवादिसमाश्वासनानन्तरं लक्ष्मणेनसुग्रीवंप्रति वालिसंस्करणायकाष्ठादिसंभारसज्जीकरणचोदनपूर्वकंतारांप्रति शिबिकानयनचोदना ॥ १ ॥ सुग्रीवेणरामाज्ञयाऽङ्गदेनसह वालिशरीरस्यतारानीतशिबिकारोपणपूर्वकं सर्वैःसहगिरिनदीमेत्य पुलिनेवानरैः शिबिकावतारणपूर्वकंचितानिर्मापणम् ॥ २ ॥ वालिशिरसःस्वाङ्कसमारोपणेनबहुधाविलपन्त्यास्ताराया वानरीभिःसमाश्वासनम् ॥ ३ ॥ अङ्गदेनसुग्रीवेणसह वालिशरीरस्यचितारोपणेन यथाविधिसंस्करणम् ॥ ४ ॥ सुग्रीवेणाङ्गदपुरस्कारेण वानरैःसहवालिनेजलदानपूर्वकं रामसमीपगमनम् ॥ ५ ॥

सुग्रीवं चैव तारां च साङ्गदं सह लक्ष्मणः ॥ समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत् ॥ १ ॥
न शोकपरितापेन श्रेयसा युज्यते मृतः ॥ यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ ॥ २ ॥
लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् ॥ न कालादुत्तरं [2]किंचित्कर्म शक्यमुपासितुम् ॥ ३ ॥
नियतिः कारणं लोके नियतिः कर्मसाधनम् ॥ नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥ ४ ॥

न्तरहर्षवत्त्वं सूचितं । स्वलंकारयुक्तशरीरेत्यर्थः ॥४४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

अथ रामः सर्वसान्त्वनपूर्वकं वालिनः संस्कारं कारयति पञ्चविंशे—सुग्रीवमित्यादि ॥ साङ्गदमिति सुग्रीवविशेषणं । समानशोकः ताराङ्गदादिभिस्तुल्यशोकः ॥ १ ॥ शोकपरितापेन शोककृतपरितापेन । युष्मदीयेनेतिशेषः । मृतो वाली श्रेयसा नयुज्यते । अत्रवालिनि विषये । अनन्तरं मरणानन्तरं । यत् श्रेयस्करं कार्यं और्ध्वदैहिकरूपं । तत्समाधातुं कर्तुं । अर्हथ ॥ २ ॥ लोकवृत्तं लोकाचारसिद्धं । अतएव सर्वैरनुष्ठेयं बाष्पमोक्षणं । वः युष्माभिः । कृतं । बाष्पमोक्षणादतिरिक्तं किमपि न युष्माभिःकर्तुं शक्यमित्याह—कालादिति ॥ कालादुत्तरं कालं विनेत्यर्थः । किंचित्कर्म उपासितुं कर्तुं । न शक्यं देवाज्ञामुल्लङ्घ्य स्वातन्त्र्येण किंचिदपि कर्मकर्तुं न शक्यमित्यर्थः ॥ ३ ॥ तदेतदुपपादयति—नियतिरिति ॥ नियम्यतेनेनेति नियतिः ईश्वरः । लोकेविषये कारणं सर्वलोककर्तेत्यर्थः । क्रियत इति कर्म कार्यं तस्य साधनं सहकारीत्यर्थः । सर्वभूतानां नियोगेषु प्रेरणेषु । नियतिः कारणं । सर्वप्रवर्तकोपीश्वर इत्यर्थः । "तेन विना तृणाग्रमपि न चलति" इति न्यायात् । ईश्वरपरतन्त्रतया लोकः कर्म करोति न तु स्वात-

**रामानु०** कालात् विहितात्कालात् । उत्तरं उत्तरस्मिन्काले । "कालाध्वनोरत्यन्तसंयोगे" इतिद्वितीया ॥ **स०** यद्वा बाष्पमोक्षणं बाष्पाणांपतनंयथानभवेत्तथाकरणं भवदभिलषितकरणेनकृतं । मयेतिशेषः । यद्वा उक्षणंसेचनं तदभावोमोक्षणं । बाष्पैर्मोक्षणं मयावःकृतं । करणनिश्चयात्तथाव्यपदेशः । कालात्उत्तरं उत्तमं । किञ्चित्कर्मउपसितुंनशक्यं । कर्मउपासितुमित्यत्र "वाक्येतुसाविवक्षामपेक्षते" इत्युक्तेस्संध्यभावः । कर्मशक्यमुपासितुमितिपाठे नकाचिदनुपपत्तिः ॥ **ति०** लोकवृत्तं लोकाचारोप्यनुष्ठेयएव । तच्चबाष्पमोक्षणरूपंकृतं युष्माभिरितिशेषः । यद्वा कृतंपर्याप्तं । बाष्पमोक्षणमितिद्वितीयातृतीयार्थे । यतः कालात् तत्तत्कर्मणिविहितात्कालात् । उत्तरंपरं तस्मिन्नतिक्रान्तेइतियावत् । किञ्चिदपिपरंकर्म विहितंकर्म । उपासितुं कर्तुं । अशक्यं । कालस्योपादेयकारणत्वात् । अकालेकृतस्याकृतप्रायत्वादितिभावः ॥ ३ ॥ **ति०** कालस्यमुख्यत्वंदर्शयति—**नियतिरिति** । नियम्यतेऽनयेतिनियतिः कालः । कालकृताव्यवस्था निमेषादिपरार्धान्ता । कालस्त्वीश्वरएव । लोके लोकसृष्ट्यादिव्यवहारे । कर्मणोलौकिकालौकिककर्मप्रवृत्तेर्दिनादिरूपेणकारणंकालएव । सर्वभूतानां नियोगाधिकृतप्राणिमात्रस्य । नियोगेषु ज्योतिष्टोमादिषु । नियतिः वसन्तादिःकारणं

[ पा० ] १ ङ. च. ज. ञ. सुरूपचेष्टा. २ ङ. झ. किंचित्परंकर्मउपासितुं.

**न कर्ता कस्यचित्कश्चिन्नियोगे चापि नेश्वरः ॥ स्वभावे वर्तते लोकस्तस्य कालः परायणम् ॥ ५ ॥**
**न कालः कालमत्येति न कालः परिहीयते ॥ स्वभावं च समासाद्य न कश्चिदतिवर्तते ॥ ६ ॥**
**न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ॥ न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशः ॥ ७ ॥**

न्त्र्येणेत्यर्थः ॥ ४ ॥ एवमन्वयमुखेन ईश्वराधीनत्वमुक्त्वा व्यतिरेकमुखेन दर्शयति—न कर्तेति ॥ कश्चित्पुरुषः कस्यचित्कर्मणः न कर्ता न स्वातन्त्र्येण कर्ता । नियोगे कस्यचित्प्रेरणे च । नेश्वरः । किंतु स्वभावे वर्तते स्वभावाधीनो वर्तते लोकः । तत्रहेतुमाह—तस्येति । कालः तस्य परायणं गतिः । अत्र स्वभावनियतिकालादिशब्दैरीश्वरएवाभिधीयते । अन्यथानेकराजत्वापत्तेः । श्वेताश्वतरश्रुतिश्च—"स्वभावमेके कवयो वदन्ति" इत्यादिकैवमाह ॥ ५ ॥ कालः ईश्वरः । कालं आत्मानं । नात्येति नातिक्रामति । सः स्वाधीन एव नतु लोकवत्कस्यचित्परतन्त्रः । "न चास्य कश्चिज्जनिता न चाधिपः" इतिश्रुतेः । न कालः परिहीयते न नश्यति । इदमुपलक्षणं । षड्भावविकाररहित इत्यर्थः । "अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितःशक्यते वक्तुं यः सदास्तीति केवलं" इति ह्युक्तं । स्वस्मिन् भवतीति स्वभाव ईश्वरः । वाशब्दोऽवधारणे । स्वभावमासाद्यैव वर्तते नतु कश्चित्तमतिवर्तते । निरङ्कुशः स्वतन्त्रः । स्वकृतां व्यवस्थां स्वयमपि नातिवर्तते । तत्परतन्त्रोनीशः किमुतेतिभावः ॥ ६ ॥ पुनरपीश्वरस्य स्वातन्त्र्यमुपपादयति—न कालस्येति ॥ कालस्येश्वरस्य । बन्धुत्वं नास्ति पक्षपातो नास्तीत्यर्थः । हेतुश्च नास्ति । वशीकरणोपायश्च नास्ति । तत्प्रसादं विना स्वयत्नेन वशीकर्तुं न शक्यते इत्यर्थः । न पराक्रमः तज्जयहेतुपराक्रमोपिनास्ति । पुरुषपराक्रमस्य स नबिभेतीति भावः । न मित्रज्ञातिसंबन्धः न सुहृत्सगोत्रसंबन्धः । अपराधिषु दण्डधरत्वमुक्तं । "एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति श्रुतेः । अतः कारणमीश्वरः । आत्मनो जीवस्य । न वशः न परतन्त्रः ।

**शि०** नियम्यते तत्तत्कर्मणिप्रवर्त्यतेऽनयेति । किंच नितरांयतिः ऐहिकभोगान्निवृत्तिर्यया सानियतिः ॥ ४ ॥ **ति०** कालातिरिक्तनंसाक्षात्प्रवर्तकमित्याह—**नकर्तैत्यादि** । कस्यचित् कृष्यादेः । कश्चित्कर्तान नियतिनिरपेक्षःकर्तान । तथा नियोगे नियोगानुष्ठानेपि । नियतिनिरपेक्षःकश्चिदीश्वरोन नियतिनैरपेक्ष्येणसमर्थोन । यतोलोकोलोकव्यवहारः स्वभावे ईश्वरसहितेप्राकृतस्वकर्मणि वर्तते तदधीनोवर्तते । तस्यचस्वभावस्य कालःपरायणं सहकारीत्यर्थः । तदुक्तंसूतसंहितायांशिववाक्येन "स्वभावादेव संभूतंसमस्तमितिकेचन । तन्नसिध्यतिविप्रेन्द्रादेशकालाद्यपेक्षणात् । मत्तःकर्मादिरूपेणजगज्जन्मादिजायते । एषस्वभावोविप्रेन्द्राइत्रिवेदार्थनिर्णयः । नमयाकेवलेनापिनचकेवलकर्मणा । प्राणिनांकर्मपाकेनमयाचमुनिसत्तमाः । जगतःसंभवोनाशःस्थितिश्चभवति द्विजाः" इति ॥ **ती०** किमनयाकालादृष्टकल्पनया प्राणिनएवान्योन्यंकर्तारःकारयितारश्चभवन्तीत्यतआह—**नकर्तेति ।** **स०** कश्चित् जीवादिः । नेश्वरः नसमर्थः । स्वः स्वतन्त्रोविष्णुः । तल्लक्षणेभावेपदार्थेसर्वोलोकोवर्तते । तस्य लोकस्य । कालः परायणं पराश्रयः ॥ ५ ॥ **ती०** कालः महाकालः । कालं प्राणिनांसुखदुःखप्रापकत्वेनदिवसपक्षमासत्वादिरूपमौपाधिकंकालं । नात्येति नातिक्रामति । यस्मिन्कालेजन्तुनासुखंदुःखंवाभोक्तव्यं तमतिक्रम्यकालान्तरेणभोजयितुंनसमर्थइत्यर्थः । नकालःपरिहीयते नन्यूनतांप्राप्नोति । स्वभावंकालंसमासाद्य कश्चिन्नातिवर्तते । वाशब्दोऽवधारणे । निरङ्कुशस्वतन्त्रःकालःस्वकृतांव्यवस्थांस्वयमपिनातिक्रामति । तत्परतन्त्रोऽन्यःकिमुतेतिभावः ॥ **ति०** कालात्माभगवानेवसर्वकर्मप्रवर्तकइत्याह—**नकालइति** । कालः भगवानीश्वरः । कालं स्वकृतांकालव्यवस्थां जन्ममरणादिरूपां । नात्येति नातिक्रामति । सभगवान्कालोनपरिहीयते । अनुक्षणं जगद्धानिकरस्यहानिकारणाभावात् । स्वभावं उक्तलक्षणंसमासाद्य किंचिदत्युत्कृष्टमपिजीवजातंनातिवर्तते उत्पत्तियोग्यमुत्पद्यते नश्वरंनश्यत्येवेत्यर्थः ॥ **स०** कालः प्रसिद्धःकालः । कालं कालनियामकं तच्छब्दवाच्यंभगवन्तं । नात्येति । कालः प्रसिद्धः । नपरिहीयते नत्यज्यते । भगवतेतिशेषः । तत्रदृष्टान्तः**स्वभावंवेति** । कश्चित्पुमान् भगवन्तंवायथानातिवर्तते तथास्वभावंनात्येतीत्यर्थः ॥ ६ ॥ **ति०** सचभगवान्नपक्षपातस्वभावइत्याह—**नकालस्येति** । नकालस्यबन्धुत्वमस्ति । प्राप्तकालंवस्तुसर्वथासंहरत्येव । नतुपक्षपातेनकिमपित्यजतीत्यर्थः । नहेतुः स्वसृज्येस्वनाश्येवास्वकृतव्यवस्थातिरिक्तकारणनिरपेक्षइत्यर्थः । यद्वा प्राप्तकालसंहारनिवर्तनेनकश्चिदपिहेतुर्मन्त्रतन्त्रौषधादिःप्रभवतीत्यर्थः ॥ तस्यैवप्रपञ्चः । नपराक्रमः महापराक्रमवतामपिकालेप्राप्ते संहारोभवत्येव । नमित्रज्ञातिसंबन्धः नबहुमित्रतानबहुज्ञातिताप्राप्तकालसंहारनिवर्तनेहेतुः । सोपिभगवानात्मनःप्रत्यग्वर्गस्यजीवजातस्य नवशः तदिच्छाधीनोन । किंतु परमस्वतएव । तेनचभगवताकालेनक्रियमाणोनियत्यधीनःस्वस्वकर्मपरिणामएवसर्वसुख-

**[ पा० ]** १ क. छ. झ. ट. नापिचेश्वरः. २ क. ग. ङ. छ. ज. ञ. स्वभावंवा. ख. स्वभावंहि. ३ झ. ट. किंचिदतिवर्तते.

किं तु कालपरीणामो द्रष्टव्यः साधु पश्यता ॥ धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥
इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम् ॥ [1]धर्मार्थकामसंयोगैः पवित्रं प्लवगेश्वरः ॥ ९ ॥
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना ॥ स्वर्गः [2]परिगृहीतश्च प्राणानपरिरक्षता ॥ १० ॥
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ॥ तदलं परितापेन प्राप्तकालमुपास्यताम् ॥ ११ ॥
[3]वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ॥ अवदत्प्रश्रितं वाक्यं सुग्रीवं गतचेतसम् ॥ १२ ॥
कुरु त्वमस्य सुग्रीव प्रेतकार्यमनन्तरम् ॥ १३ ॥
ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति ॥ समाज्ञापय काष्ठानि शुष्काणि च बहूनि च ॥
[4]चन्दनादीनि दिव्यानि वालिसंस्कारकारणात् ॥ १४ ॥
समाश्वासय चैनं त्वमङ्गदं दीनचेतसम् ॥ [5]मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥ १५ ॥
अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च ॥ घृतं तैलमथो [6]गन्धान्यच्चात्र समनन्तरम् ॥ १६ ॥
त्वं तार शिबिकां शीघ्रमादायागच्छ संभ्रमात् ॥ त्वरा गुणवती युक्ता ह्यस्मिन्काले विशेषतः ॥ १७ ॥
सज्जीभवन्तु प्लवगाः शिबिका[7]वहनोचिताः ॥ समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् ॥ १८ ॥

तत्तत्कर्मानुगुणमेव ईश्वरः सर्वं वर्तयतीत्यर्थः ॥ ७ ॥ तर्ह्यनीशेन जन्तुना किं कर्तव्यं तत्राह—किं त्विति ॥ साधु सम्यक् । पश्यता शास्त्रनिष्कर्षमवगच्छतेत्यर्थः । कालस्य ईश्वरस्य परिणामः चेतनकर्मानुगुणप्रवृत्तिविशेषः द्रष्टव्यः ईश्वरकृतव्यापारेषु न शोकः कर्तव्यः । यद्भवितं तत्करिष्यतीति स्थातव्यमिति भावः । धर्मार्थकामास्तु कालक्रमेण ईश्वरमर्यादया समाहिताः समर्पिता भवन्ति । धर्मादिषु यत् प्राप्तव्यं तत् प्रापयतीश्वर एवेतिभावः । अत्र नियतिकालस्वभावपदैः व्यामिश्रतयोक्तिस्तदानीं रहस्यस्य वक्तुमनर्हत्वादितिबोध्यम् ॥ ८ ॥ एवमर्थस्थितिमुक्त्वा तां प्रकृते संगमयति—इत इति ॥ स्वां प्रकृतिं गतः मद्बाणवेधकृतप्रायश्चित्ततया स्वकीयं शुद्धभावं प्राप्तः सन् । प्लवगेश्वरो वाली । इतः अस्माल्लोकात् । धर्मार्थकामसंयोगैः विहितकालानुष्ठितधर्मार्थकामसंबन्धैः । पवित्रं क्रियाफलं स्वर्गं प्राप्तः । सामदानार्थसंयोगैरितिपाठे नीतिशास्त्रानुष्ठानैरित्यर्थः ॥ ९ ॥ केन स्वां प्रकृतिं प्राप्त इत्यपेक्षायामुक्तं विशदयति—स्वधर्मस्य चेति ॥ स्वधर्मस्य संयोगात् स्वविहितधर्मानुष्ठानात् । रणे प्राणानपरिरक्षतेत्यनेन शौर्यकृतधर्मोप्युक्तः । उभाभ्यां जितः पूर्वं स्ववशीकृतः स्वर्गः इदानीं परिगृहीतश्च ॥ १० ॥ हरियूथपः यां नियतिं गतः सा नियतिर्गतिः श्रेष्ठा । तत्तस्मात्कारणात् । परितापेनालं । सद्गतिं प्राप्तं प्रति शोको न कार्यः । प्राप्तकालं एतत्कालोचितं । उपास्यतां अनुष्ठीयतां ॥ ११ ॥ गतचेतसं दुःखितमिति यावत् ॥ १२ ॥ कुरु त्वमस्येत्यर्धमेकं वाक्यं ॥ १३ ॥ वालिनो दहनं प्रति ताराङ्गदाभ्यां सहितः सन् । वालिसंस्कारकारणात् वालिसंस्कारार्थं । चन्दनादीनि काष्ठानि समाज्ञापय ॥ १४—१५ ॥ यच्चात्र समनन्तरं मरणानन्तरं यदानेतव्यमस्ति तत्सर्वमङ्गदः समानयेदित्यर्थः ॥ १६ ॥ त्वरा गुणवती अस्मिन्काले विशेषतोयुक्ता ॥ १७ ॥ ये निर्हरिष्यन्ति ते सज्जीभवन्त्विति योजना । निर्हारः

दुःखादिलाभइत्येवसाधुपश्यतासुमतिनाविवेकवताद्रष्टव्यः ज्ञातव्यः । नतुविषादहर्षौकर्तव्यौ नापिस्वसामर्थ्यंनिन्देतिभावः । एवं धर्मादयोपि चादधर्मादयोपिकालक्रमेणैवसमाहिताः संपादिताभवन्ति ॥ ७–८ ॥ **ती०** धर्मश्चार्थश्चकालश्चकालक्रमसमाहिताः । पूर्वाह्णमध्याह्नापराह्णकालक्रमायत्ताः यस्मिन्कालेयत्कर्मकर्तव्यंसकालोऽनुल्लङ्घनीयइतिभावः ॥ ८ ॥ **ति०** प्रकृतमाह—**इतइति** । सामदानाभ्यामर्जितैः अर्थसंयोगैः ऐश्वर्यैः । पवित्रं शुभं । क्रियाफलं भोगं । इहलोकेप्राप्तवान्वालीइतोलोकाद्देहाच्च गतः अपगतः । स्वांप्रकृतिं गतः प्राप्तः । कार्याणांकारणेलयात् । एवंचेन्द्रलोकंगतोवालीतिसूचितं ॥ ९ ॥ **शि०** नियतिः मृतिः । प्राप्तकालं एतत्कालोचितं ॥ ११ ॥ **ति०** दहनंप्रति दहननिमित्तं । यतस्वेतिशेषः ॥ १४ ॥

**[ पा० ]** १ घ. ज. धर्मकामार्थसंयोगैः. ख. ग. दानमानार्थसंयोगैः. क. छ. झ. ट. सामदानार्थसंयोगैः. २ क. ग. झ. प्रतिगृहीतश्च. ३ क. ग. वचनादेवरामस्य. घ. वचनात्तस्यरामस्य. ४ क. ग. ङ.—ट. चन्दनानिच. ५ ख. माभूत्तेबालिशबुद्धिः. ६ ङ. च. ज. ञ. ट. गन्धानन्यच्च. ७ क. ग.—ट. वाहनोचिताः.

एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्धनः ॥ तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा ॥ १९ ॥
लक्ष्मणस्य वचः श्रुत्वा तारः संभ्रान्तमानसः ॥ प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः ॥ २० ॥
आदाय शिबिकां तारः स तु पर्यापतत्पुनः ॥ २१ ॥
वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः ॥ दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम् ॥ २२ ॥
पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम् ॥ आचितां चित्रपत्तीभिः सुनिविष्टां समन्ततः ॥ २३ ॥
विमानमिव सिद्धानां जालवातायनावृताम् ॥ सुनियुक्तां विशालां च सुकृतां विश्वकर्मणा ॥ २४ ॥
दारुपर्वतकोपेतां चारुकर्मपरिष्कृताम् ॥ वराभरणहारैश्च चित्रमाल्योपशोभिताम् ॥ २५ ॥
गुहागहनसंछन्नां रक्तचन्दनरूषिताम् ॥ पुष्पौघैः समभिच्छन्नां पद्ममालाभिरेव च ॥
तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् ॥ २६ ॥
ईदृशीं शिबिकां दृष्ट्वा रामो लक्ष्मणमब्रवीत् ॥ क्षिप्रं विनीयतां वाली प्रेतकार्यं विधीयताम् ॥ २७ ॥
ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा ॥ आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥ २८ ॥
आरोप्य शिबिकां चैव वालिनं गतजीवितम् ॥ अलंकारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम् ॥ २९ ॥
आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः ॥ और्ध्वदैहिकमार्यस्य क्रियतामनुरूपतः ॥ ३० ॥
विश्राणयन्तो रत्नानि विविधानि बहून्यपि ॥ अग्रतः प्लवगा यान्तु शिबिकासमनन्तरम् ॥ ३१ ॥

शववहनं ॥ १८—१९ ॥ गुहां किष्किन्धां ॥ २०—२१ ॥ भद्रासनयुतां राजासनयुक्तां । पक्षिकर्मभिराचित्रां कृत्रिमपक्षिभिः समन्तादाश्चर्यभूतां । क्रियत इति कर्म प्रतिकृतिः द्रुमकर्मभिः द्रुमप्रतिकृतिभिः विभूषितां । आचितां चित्रपत्तीभिः चित्रलेखाभिः । पदातिभिरित्येके । आर्षो दीर्घः । सुनिविष्टां शोभनसंनिवेशवतीं । जालवातायनावृतां सूक्ष्मरन्ध्रसमूहो जालं गोनयनाकृतिरन्ध्रसमूहो गवाक्षं तदावृतां । सुनियुक्तां सुश्लिष्टां । सुकृतां सुष्ठुकृतां । यत्नेन कृतामित्यर्थः । दारुपर्वतकोपेतां दारुनिर्मितक्रीडापर्वतयुक्तां । चारुकर्मणा उत्तेजनेन परिष्कृतां अलंकृतां । वराभरणैः हारैश्च युक्तामिति शेषः । गुहागहनसंछन्नां कृत्रिमैर्गुहागहनैः गुहाभिः काननैश्च संछन्नां । पुष्पौघैः मुक्तकपुष्पनिचयैः आस्तरणार्थैः । समभिच्छन्नां व्याप्तां । चतुर्दिक्षु पुष्पसरोपेतत्वेप्यन्तरान्तरा पद्ममालाभिः पद्मपङ्क्तिभिर्युक्तामित्यर्थः ॥ २२—२६ ॥ ईदृशीं शिबिकामिति पुनरुक्तिर्व्यवहितानुस्मरणार्था ॥२७॥ ततः लक्ष्मणं प्रति वाली विनीयतामित्युक्तिश्रवणानन्तरमित्यर्थः । यद्वा । लक्ष्मणं प्रत्युक्तिः स्वमुद्दिश्यैवेति ज्ञात्वेत्यर्थः । आरोपयत आरोपयत् ॥ २८—२९ ॥ आर्यस्य ज्येष्ठस्य । देहादूर्ध्वं कर्तव्यं और्ध्वदैहिकं उत्तरक्रिया । शिबिकासमनन्तरं आसन्दीसमीपे । अत्रेतिकरणं द्रष्टव्यं । इत्याज्ञा-

**शि०** दिव्यां देवलोकात्प्राप्तां । भद्रासनयुतांकल्याणकारकासनयुतां अतएवशिबिकां आरोहकाणांकल्याणप्रदां । उदीचामितीत्वं ॥ २२ ॥ **ती०** जालवातायनान्वितां जालैर्वातायनैरन्वितां । कुड्योपरितिर्यगवस्थितफलकनिर्मितविविधसंनिवेशरन्ध्राणि जालानि । वातायनानि वायुप्रवेशार्थगवाक्षाकाररन्ध्राणि ॥ २४ ॥ **ति०** गुहागहनशब्देन शिबिकोपरिप्रसार्यमाणपञ्जरमुच्यते ॥ २६ ॥ **रामानु०** क्षिप्रंप्रेतकार्यंविधीयतामितिलक्ष्मणोद्देशेनोक्तार्थस्यसुग्रीवेणक्रियमाणत्वाल्लक्ष्मणेनसुग्रीवोप्याज्ञप्तइत्यवगम्यते ॥ २७ ॥ **स०** अनुकूलतः कूलमनुसृत्य ॥ ३० ॥ **शि०** विश्राणयन्तः प्रक्षेपेणददतः । प्लवगाअग्रतोयान्तु । तदनन्तरं शिबिकायातु ॥ ३१ ॥

**[ पा० ]** १ क. ख. ग. ङ. च. ज. ञ. शिबिकागतमानसः. २ ख. शीघ्रंतारःपर्यापतत्. ३ ङ. च. ज. रुद्वहनोचितां. ४ ख. द्रुमकर्मभिरावृतां. ५ ख. ग. घ. आस्थितां. ६ क. ग. घ. च. ज. चित्रपङ्क्तीभिः. ७ क. ख. ग. झ. ट. वातायनायुतां. च. वातायनान्वितां. ८ क.—च. झ. ञ. ट. शिल्पिभिःकृतां. ९ ङ. छ. झ. ट. भूषितां. १० ङ. छ. झ. ट. पुष्पाढ्यैः. ११ घ. संपरिच्छन्नां. १२ घ. वर्णाभिर्लम्बमानाभिः. १३ ख. गतचेतसं. १४ ग. शोभितः. १५ ख.—ट. मनुकूलतः. १६ क. ग.—ट. बहूनिच. १७ क. ङ.—ट. शिबिकातदनन्तरं.

[1]राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः ॥ [ [2]तादृशीमिह कुर्वन्तु वानरा भर्तृसत्क्रियाम् ] ॥
[3]तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदैहिकम् ॥ ३२ ॥
अङ्गदं [4]परिगृह्याशु [5]तारप्रभृतयस्तदा[6] ॥ क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः ॥ ३३ ॥
ततः [7]प्रणिहिताः सर्वा [8]वानर्योऽस्य वशानुगाः ॥ चुक्रुशुर्वीर[9]वीरेति भूयः क्रोशन्ति ताः स्त्रियः ॥ ३४ ॥
ताराप्रभृतयः सर्वा वानर्यो [10]हतयूथपाः ॥ अनु[11]जग्मुर्हि भर्तारं क्रोशन्त्यः करुणस्वनाः ॥ ३५ ॥
तासां [12]रुदितशब्देन वानरीणां वनान्तरे ॥ वनानि गिरयः[13] सर्वे विक्रोशन्तीव सर्वतः ॥ ३६ ॥
पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते ॥ चितां चक्रुः सुबहवो [14]वानराः शोककर्शिताः ॥ ३७ ॥
अवरोप्य ततः स्कन्धाच्छिबिकां [15]वहनोचिताः ॥ तस्थुरेकान्तमाश्रित्य सर्वे शोक[16]समन्विताः ॥ ३८ ॥
ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् ॥ आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३९ ॥
हा वानर [17]महाराज हा नाथ मम वत्सल ॥ हा महार्ह महाबाहो हा मम प्रिय पश्य माम् ॥
जनं न पश्यसीमं त्वं कस्माच्छोकाभिपीडितम् ॥ ४० ॥
प्रहृष्टमिव ते वक्त्रं गतासोरपि मानद ॥ अस्तार्कसमवर्णं च [18]लक्ष्यते जीवतो यथा ॥ ४१ ॥
एष त्वां रामरूपेण कालः कर्षति वानर ॥ येन स्म विधवाः सर्वाः कृता एकेषुणा [19]वने ॥ ४२ ॥
इमास्तास्तव राजेन्द्र [20]वानर्यो वल्लभाः सदा ॥ पादैर्विकृष्टमध्वानमागताः किं न बुध्यसे ॥
तवेष्टा ननु [21]नामैता भार्याश्चन्द्रनिभाननाः ॥ ४३ ॥
इदानीं नेक्षसे [22]कस्मात्सुग्रीवं [23]प्लवगेश्वरम् ॥ एते हि सचिवा राजंस्तारप्रभृतयस्तव ॥ ४४ ॥
[24]पुरवासी जनश्चायं [25]परिवार्याऽऽसतेऽनघ ॥ वि[26]सर्जयैतान्प्लवगान्य[27]थोचितमरिन्दम ॥
ततः क्रीडामहे सर्वा वनेषु मदनोत्कटाः ॥ ४५ ॥
एवं विलपतीं तारां पतिशोक[28]परिप्लुताम् ॥ उत्थापयन्ति स्म तदा वानर्यः शोककर्शिताः ॥ ४६ ॥

पयदिति पूर्वेण संबन्धः ॥ ३०—३१ ॥ ऋद्धिविशेषाः ऋद्धिविशेषानुरूपाः । यादृशा और्ध्वदैहिकक्रियाप्रकारा दृश्यन्ते तादृशमौर्ध्वदैहिकं क्षिप्रं प्राकुर्वन् ॥ ३२ ॥ तारप्रभृतयो वानरा इति सम्यक् ॥ ३३ ॥ प्रणिहिताः आप्ताः ॥ ३४—३७ ॥ वहनोचिताः वाहकाः ॥ ३८—४२ ॥ विकृष्टं विप्रकृष्टं । अध्वानं पादैरागताः ॥ ४३—४४ ॥ मदनोत्कटाः उत्कटमदनाः ॥ ४५ ॥ विलपतीं विलपन्तीं ॥ ४६ ॥

**शि०** हताःराजविघातेनहतप्रायाबान्धवायेषांते हतबान्धवाः ॥ ३३ ॥ **रामानु०** प्रणिहिताः अत्यन्ताप्ताइत्यर्थः । **स०** अस्य वालिनः । क्रोशन्तीति लटाक्रोशस्यविरामोनास्तीतिध्वन्यते ॥ ३४ ॥ **ती०** विविक्ते पूते । "विविक्तौपूतविजनौ" इत्यमरः ॥ ३७ ॥ **ति०** अप्लवगाः प्लुतगतिमजानन्त्यः । विकृष्टं दूरं ॥ ४३ ॥ **स०** यथापुरं यथापूर्वंक्रीडामहे । पदव्यत्ययः । यद्वा हेनाथ वयंक्रीडामेतिलोडुत्तमबहुवचनं । जीवतीतिभ्रान्त्यावचनमिदं ॥ ४५ ॥

[ **पा०** ] १ क. ग. ङ. च. ज. ञ. राज्ञामृद्धिर्विशिष्टाहिदृश्यतेभुवियादृशी. २ इदमर्धं क. ग. ङ.—ट. पाठेषुदृश्यते. तादृशैरिह. ३ घ. तादृशाः. ४ ङ. छ.—ट. परिरभ्याशु. ५ क.—घ. च. ज. ताराप्रभृतयः. ६ ङ.—ञ. स्तथा. ७ क. प्रणादिताः. ८ छ. ज. वानरस्य. ९ ङ.—ट. प्रियं. १० क. ङ. च. ज.—ट. हतबान्धवाः. ११ ङ. झ. ञ. ट. जग्मुश्च. १२ ग. क्रन्दितशब्देन. १३ ङ.—ट. गिरयश्चैव. क. गिरयोवृक्षाःक्रोशन्तीवचसर्वशः. १४ क. ग. ङ.—ट. वानरावनचारिणः. १५ छ. झ. ट. वानरोत्तमाः. क. ग. ङ. ज. ञ. वाहनोचिताः. १६ ङ.—ट. शोकपरायणाः. १७ क. महावीर. १८ ङ.—ट. दृश्यते. १९ ख. छ. झ. ट. रणे. २० ङ.—ट. वानर्यःप्लवगास्तव. क. वानर्योत्यन्तवल्लभाः. २१ छ. झ. ट. चैवेमाभार्याः. २२ क. कस्मादनाथाः. २३ क. च.—ट. प्लवगेश्वर. २४ ग. ज.—ट. पुरवासिजनः. २५ ङ.—ट. परिवार्यविषीदति. २६ ङ.—ट. विसर्जयैतान्सचिवान्. ग. च. विसर्जयैनान्. २७ ठ. न्यथापुर. २८ ङ.—ट. शोकपरीवृतां.

सुग्रीवेण ततः सार्धमङ्गदः पितरं रुदन् ॥ चितामारोपयामास शोकेनाभिहतेन्द्रियः ॥ ४७ ॥
ततोऽग्निं विधिवद्दत्त्वा सोपसव्यं चकार ह ॥ पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ४८ ॥
संस्कृत्य वालिनं ते तु विधिपूर्वं प्लवङ्गमाः ॥ आजग्मुरुदकं कर्तुं नदीं शीतजलां शिवाम् ॥ ४९ ॥
ततस्ते सहितास्तत्र ह्यङ्गदं स्थाप्य चाग्रतः ॥ सुग्रीवतारासहिताः सिषिचुर्वालिने जलम् ॥ ५० ॥
सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः ॥ समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥ ५१ ॥
ततस्तु तं वालिनमग्र्यपौरुषं प्रकाशमिक्ष्वाकुवरेषुणाहतम् ॥
प्रदीप्य दीप्ताग्निसमौजसं तदा सलक्ष्मणं राममुपेयिवान्हरिः ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः ॥ २६ ॥

हनुमताकिष्किन्धाप्रवेशंप्रार्थितेनरामेण तंप्रति स्वस्यपितृनियोगानुरोधेनग्रामनगराप्रवेशनिवेदनपूर्वकं सुग्रीवंप्रतितस्य राज्येऽभिषेकचोदनेनसहाङ्गदस्ययौवराज्येऽभिषेचनचोदना ॥ १ ॥ तथा वर्षाकालावसानपर्यन्तंलक्ष्मणेनसहस्वस्यगिरिगुहायांनिवासोक्तिपूर्वकं तदनन्तरंसीतान्वेषणप्रयतनविधानम् ॥ २ ॥ सुग्रेवण रामाज्ञयानगरमेत्य यथाविधिवानरवरैराज्ये स्वाभिषेचनपूर्वकमङ्गदस्ययौवराज्येऽभिषेचनम् ॥ ३ ॥

ततः शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससम् ॥ शाखामृगमहामात्राः परिवार्योपतस्थिरे ॥ १ ॥
अभिगम्य महाबाहुं राममक्लिष्टकारिणम् ॥ स्थिताः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ २ ॥
ततः काञ्चनशैलाभस्तरुणार्कनिभाननः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं हनुमान्मारुतात्मजः ॥ ३ ॥

---

पितरं पितृशरीरं ॥४७॥ अपसव्यं अप्रदक्षिणं ॥४८॥ वालिनं वालिशरीरं । उदकं कर्तुं जलतर्पणं कर्तुं। नदीं किष्किन्धासमीपवर्तिनीं ॥ ४९ ॥ सुग्रीवतारासहिताइति तारयाप्युदकदानं कुलाचारः ॥५०॥ सुग्रीवेणेति ॥ अनेन रामः सहैवागत इत्यवगम्यते ॥५१॥ प्रकाशं प्रसिद्धं । प्रदीप्य दग्ध्वा । हरिः सुग्रीवः । अन्येपुरं प्रविविशुरित्यर्थसिद्धं । यद्यपि तिर्यगधिकरणरीत्या तिरश्चां न शास्त्रविहितसंस्काराधिकारः । तथापि देवांशसंभूतानां तिर्यगवस्थामात्रभाजां वेदाध्ययनसंयोगाद्देवक्षत्रजातत्वात्संस्कारार्हतास्तीति बोध्यं ॥५२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

अथ सुग्रीवाभिषेकः षड्विंशे—तत इत्यादि ॥ क्लिन्नवाससं आर्द्रवस्त्रं । सद्यः स्नानादितिभावः । शाखामृगमहामात्राः वानररूपामन्त्रिणः ॥ १ ॥ सर्वे

---

ति० विधिवत् देवांशत्वेनस्वयंज्ञातवेदत्वाज्ज्ञानवत् । तिर्यग्देहोचितविधिवदित्यर्थः । विधिवत् अग्निहोत्रविधिनेत्यर्थइत्यन्ये ॥ ४९ ॥ शि० वालिनः वालिने ॥ ५० ॥ रामानु० समानशोकःकाकुत्स्थइत्यनेन समानसुखदुःखित्वंसखित्वमित्येतत्प्रकटितंभवति ॥ ती० सुग्रीवेणैवाकारयत् तत्प्रामुख्येनैवाकारयदित्यर्थः ॥ ५१ ॥ ती० गतसर्गाणांफलश्रुतिः । "ताराप्रलापमाकर्ण्यवालिनोनिधनंतथा । कपीन्द्रसंस्कृतिंनारीश्रुत्वाह्यविधवाभवेत् । दीर्घायुष्यंभवेद्भर्तुःपुत्रिणीसंभविष्यति" इतिस्कान्दे ॥ ५२ ॥ इतिपञ्चविंशःसर्गः ॥ २५ ॥

[ पा० ] १ ङ. ज.—ट. सार्धंसोऽङ्गदः. २ छ.—ट. नाभिप्लुतेन्द्रियः. ३ ङ.—ट. तंतु. ४ ङ.—ट. विधिवत्प्लवगर्षभाः. ५ क. ङ. छ.—ट. शुभजलां. ख. शिवजलां. ६ क. ख. घ. शुभां. ७ ङ. ज. ञ. स्तस्थुरङ्गदं. क. ग. च. छ. झ. ट. स्तत्रअङ्गदं. ८ छ. झ. वानराजलं. क.—च. ञ. ट. वालिनो. ९ ग. ङ.—ज. ञ. सुग्रीवेणच. घ. सुग्रीवेणतु. १० ग. ङ.—ट. ततोथतं. ११ ख. क्लिन्नमानसं. १२ क. घ. ङ. ज. महामात्याः. १३ ख. घ. अभिवाद्य.

भवत्[1]प्रसादात्सुग्रीवः पितृपैतामहं महत् ॥ [2]वानराणां सुदुष्प्रापं प्राप्तो राज्यमिदं प्रभो ॥ ४ ॥
भवता समनुज्ञातः प्रविश्य नगरं शुभम् ॥ संविधास्यति कार्याणि सर्वाणि [3]ससुहृज्जनः ॥ ५ ॥
स्नातोयं विविधैर्गन्धैरौषधैश्च यथाविधि ॥ अर्चयिष्यति [4]रत्नैश्च माल्यैश्च त्वां विशेषतः ॥ ६ ॥
इमां गिरिगुहां रम्यामभि[5]गन्तुमितोर्हसि ॥ कुरुष्व स्वामिसंबन्धं वानरा[6]न्संप्रहर्षयन् ॥ ७ ॥
एवमुक्तो हनुमता राघवः परवीरहा ॥ प्रत्युवाच हनूमन्तं बुद्धिमान्वाक्यकोविदः ॥ ८ ॥
चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् ॥ न प्रवेक्ष्यामि हनुमन्पितुर्निर्देशपा[7]लकः ॥ ९ ॥
सुसमृद्धां गुहां [8]रम्यां सुग्रीवो वानरर्षभः ॥ प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् ॥ १० ॥
एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् ॥ वृत्तज्ञो वृत्तसंपन्नमुदारबलविक्रमम् ॥ ११ ॥
इममप्यङ्गदं [9]वीरं यौवराज्येऽभिषेचय ॥ ज्येष्ठ[10]स्य स सुतो ज्येष्ठः सदृशो वि[11]क्रमेण ते ॥
अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ॥ १२ ॥
पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः ॥ प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिकाः ॥ १३ ॥
नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ॥ अस्मिन्वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः ॥ १४ ॥
इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ प्रभूतसलिला सौम्य प्रभूतकमलोत्पला ॥ १५ ॥
कार्तिके समनुप्राप्ते त्वं रावणवधे यत ॥ एष नः समयः सौम्य प्रविश त्वं स्वमालयम् ॥ १६ ॥

सुग्रीवादयः ॥ २—३ ॥ वानराणां राज्यमित्यन्वयः ॥ ४—५ ॥ अतिनिपुणतया हनुमान् प्रथमं संग्रहेण विज्ञाप्य तच्छृण्वति रामे पुनर्विशदमाह—स्नात इति ॥ ६ ॥ गिरिगुहां किष्किन्धां । वानराणां स्वामिना संबन्धं कुरु सुग्रीवंवानरराजंकुर्वित्यर्थः ॥ ७—११ ॥ भाजनं योग्यमित्यर्थः ॥ १२ ॥ अस्त्वभिषेकः सीतान्वेषणरावणवधादिकं प्रत्युद्योगः क्रियत इत्याशङ्क्याह—पूर्व इत्यादि ॥ पूर्वः वर्षर्त्वपेक्षयाप्रथमः । वर्षाः वर्षर्तुः । “ स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः ” इत्यमरः । तत्र भवो वार्षिकः । “ द्वौ द्वौ मार्गादिमासौ स्यादृतुः ” इति श्रावणभाद्रपदौ वर्षर्तुः । तदेकदेशत्वाच्छ्रावणोवार्षिक इत्युच्यते । “ वर्षाभ्यष्ठक् ” इति ठक्प्रत्ययः । वार्षिकसंज्ञिकाश्चत्वारोमासा इति । आश्वयुजाषाढाभ्यां चतुष्कमिति ज्ञेयं । छत्रिन्यायात् । वर्षमुखत्वाद्वर्षानन्तरकालत्वाच्च चत्वारोपि युद्धयोग्या न भवन्ति । कश्चित्तु—“पक्षा वैमासाः ” इति श्रुतिपक्षमाश्रित्य चत्वारो वार्षिका मासा इत्युक्तम् । श्रावणः प्रथमो मास इत्यत्रापि प्रथमः पक्ष इत्यर्थः । “ चत्वारो वार्षिका मासा गता वर्षशतोपमाः ” इत्युपसंहारादित्याह ॥ १३—१५ ॥ कार्तिके मासि समनुप्राप्ते समीपंप्राप्ते । आश्वयुजान्तइत्यर्थः । यत यतस्व । सेनासंनहनंकुरु । कार्तिकशब्दस्य आश्वयुजान्तपरत्वं स्वयमेव वक्ष्यति—“वयमाश्वयुजे मासिपिङ्गाक्षप्रतिचोदिताः ” इति । प्रचोदनं संनहनं नतुनिर्गमः । निर्गमस्तु मार्गशीर्षे । स्वसंकेतितकार्तिकातिक्रमादेव रामस्य सुग्रीवे कोपो लक्ष्मणप्रेषणं च । स्वयंप्रभाबिलनिर्गमनानन्तरं “द्रुमान्वासन्तिकान्दृष्ट्वा ” इत्येतद्वसन्तपुष्पोद्गमोपक्रमभूतपत्रविगलनहेतुफाल्गुनापेक्षया । पक्षान्तरे फाल्गुनचैत्रयोर्वसन्तत्वोक्तेर्वा । अयमत्र क्रमोऽनुसन्धेयः । उत्तरस्यादिना पूर्वस्यावधिं जानीयादिति न्यायेन उत्तरस्योत्तरस्य ग्रहणात् पूर्वपूर्वकालसंख्याज्ञापनं वाल्मीकेः शैली । तथा च चैत्रे रामस्य साकेतान्निर्गमः । अगस्त्याश्रमागमनात्पूर्वं दश संवत्सरा गता इत्युक्तं ।

**टीका०** औषधैः अभिषेकद्रव्यैः ॥ ६ ॥ **स०** स्वामिसंबन्धं सुग्रीवस्यराज्याभिषेकेणस्वामित्वसंबन्धं ॥ ७ ॥ **स०** ग्रामं अल्पजनाधिष्ठितं ॥ ९ ॥ **टी०** प्रवृत्ताः प्रवर्तितुमुपक्रान्ताः ॥ **स०** सलिलानामागमः आगमनंयस्मिन्सतथा ॥ १३ ॥

**[ पा० ]** १ क. ग. छ. झ. ट. त्वत्प्रसादात्काकुत्स्थ. २ वानराणामित्यर्धस्थाने छ. झ. ट. पाठेषुवानराणांसुदंष्ट्राणांसंपन्नबलशालिनाम् । महात्मनांसुदुष्प्रापंप्राप्तंराज्यमिदंप्रभो । इत्यर्धद्वयंदृश्यते. ३ क. ङ.—ट. ससुहृद्गणः. ४ छ.—ट. माल्यैश्चरत्नैश्च. ५ ङ.—ञ. गन्तुंत्वमर्हसि. ६ ग. न्प्रतिहर्षयन्. ७ ङ. छ.—ट. पारगः. ८ क. ग.—च. ज.—ट. दिव्यां. ९ घ.—ट. वीरं. १० क. ख. ङ. छ.—ट. ज्येष्ठस्यहि. घ. ज्येष्ठस्यतु. ११ ग. विक्रमेणहि. ख. घ.—ट. विक्रमेणच.

[1]अभिषिक्तः स्वराज्ये च सुहृदः सं[2]प्रहर्षय ॥ १७ ॥
इति रामाभ्यनुज्ञातः सुग्रीवो [3]वानराधिपः ॥ प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥ १८ ॥
तं वानरसहस्राणि प्रविष्टं वानरे[5]श्वरम् ॥ अभिवाद्य [4]प्रविष्टानि सर्वतः पर्यवारयन् ॥ १९ ॥
ततः प्रकृतयः सर्वा दृष्ट्वा हरिगणेश्वरम् ॥ प्रणम्य मूर्ध्ना पतिता वसुधायां समाहिताः ॥ २० ॥
सुग्रीवः प्रकृतीः सर्वाः संभाष्योत्थाप्य वीर्यवान् ॥ भ्रातुरन्तःपुरं सौम्यं प्रविवेश महाबलः ॥ २१ ॥
[6]प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं [7]प्लवगेश्वरम् ॥ अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः ॥ २२ ॥
तस्य पाण्डुरमाजह्रुश्छत्रं हेमपरिष्कृतम् ॥ शुक्ले च वालव्यजने हेमदण्डे यशस्करे ॥ २३ ॥
तथा [8]सर्वाणि रत्नानि [9]सर्वबीजौषधैरपि ॥ सक्षीराणां च वृक्षाणां प्ररोहान्कुसुमानि च ॥ २४ ॥
शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् ॥ सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ॥ २५ ॥
चन्दनानि च दिव्यानि गन्धांश्च विविधान्बहून् ॥ अक्षतं जातरूपं च प्रियङ्गुमधुसर्पिषी ॥
दधि चर्म च वैयाघ्रं [10]वाराही चाप्युपानहौ ॥ २६ ॥
[11]समालम्भनमादाय रोचनां[12] समनःशिलाम् ॥ आजग्मुस्तत्र मुदिता वराः [13]कन्यास्तु षोडश ॥ २७ ॥
[14]ततस्ते वानर[15]श्रेष्ठं यथाकालं यथाविधि ॥ रत्नैर्वस्त्रैश्च भक्षैश्च तोषयित्वा [16]द्विजर्षभान् ॥ २८ ॥

अथ पञ्चवट्यां वर्षत्रयानन्तरं चैत्रे प्राप्ते शूर्पणखानासिकाच्छेदनखरवधादिकं कृतमित्यवगम्यते । रावणेन च मारीचवचनादिना किंचिद्विलम्ब्य तस्मिन्नेव चैत्रे सीता हृता । सीताविरहेण दूयमानस्य रामस्य वसन्तवर्णने चैत्रवनानिल इत्युक्तेः । लङ्कायां सीतायाः संवत्सरवासोक्तेश्च । पुनः फाल्गुने हि रावणवधः । आषाढे वालिवधः । शरदि सेनासंनहनं । मार्गशीर्षे वानरप्रस्थापनं । स्वयंप्रभाबिले बहुकालयापनं । "कालश्च नो महान्यातः" इत्युक्तेः । बहिर्निर्गमनानन्तरं फाल्गुनशुद्धत्रयोदश्यां हनुमतः समुद्रतरणं । चतुर्दश्यां पुनरागमनं (?) । पौर्णमास्यां दण्डयात्रेत्यादि । अन्यद्युद्धकाण्डे वक्ष्यते । समयः संकेतः ॥ १६—१९ ॥ मूर्ध्ना प्रणम्य वसुधायांपतिताः । समाहिताः अनन्यमनस्काः ॥ २० ॥ भ्रातुरन्तःपुरं प्रविवेशेति । तारां संमान्य स्ववशीकरणार्थमितिभावः ॥ २१—२२ ॥ प्ररोहान् पल्लवान् । अनुलेपनं कर्पूरादि । गन्धाः अगरुप्रभृतयः । अक्षतं जातरूपं अक्षततण्डुलं हरिद्रामिश्रं । प्रियङ्गुः सूक्ष्मधान्यविशेषः । वाराही वराहचर्मविकृती । "सुपां सुलुक्" इत्यादिना पूर्वसवर्णदीर्घः ॥ २३—२६ ॥ समालम्भनं अनुलेपनविशेषः । "समालम्भो विलेपनं" इत्यमरः । रोचनां गोरोचनां । समनःशिलां । शैलधातुविशेषसंहितं तिलकसाधनं मनःशिला ॥ २७ ॥ ततस्ते वानरश्रेष्ठमित्यारभ्य वसवो वासवं यथेत्यन्तमेकं वाक्यं ॥ यथाकालं विहितकालमनतिक्रम्य । यथाविधि यथाक्रमं । द्विजर्षभान् याजनार्थमाहूतान् । समिद्धं ज्वलितं । जातवेदसं अग्निं । मन्त्रविदः वानरपुरोहि-

ति० प्रविश्यत्वभिनिष्क्रान्तमितिपाठे प्रविश्य अन्तःपुरगतशोकादिकंदृष्ट्वा अभिषेकायतुपुनःनिष्क्रान्तंप्रतिनिवृत्तं सभामागतमित्यर्थः ॥२२॥ स० यशस्करे सुग्रीवे । पाण्डुरंछत्रं आजह्रुः । तस्यसुहृदइतितस्येत्यस्यपूर्वेणान्वयः । यशस्करेइतिवालव्यजनविशेषणंच ॥ २३ ॥ टीका० श्वेतमनुलेपनं कर्पूरद्रवः ॥ २५ ॥ टीका० प्रियङ्गुः फलिनीपुष्पं । "प्रियङ्गुःफलिनीफली" इत्यमरः । यद्वा "प्रियङ्गुःसिद्धार्थःसमौ" इतिविश्वप्रकाशः ॥ स० गन्धान् गन्धद्रव्याणि । जातरूपं रौप्यं । प्रियङ्गुसहितंमधु प्रियङ्गुमधु । अनन्तरंद्वन्द्वः । अतोनद्विवचनानुपपत्तिः ॥ २६ ॥ ती० द्विजर्षभान् वानरजातीयद्विजर्षभान् ॥ २८ ॥

[ पा० ] १ क. ग. छ. ज. झ. ट. अभिषिञ्चस्व. २ ग. संप्रचोदय. ३ क. ग. छ.—ट. वानरर्षभः. ४ क.—घ. च. ज. ञ. ट. प्रहृष्टानि. ५ ङ. छ.—ञ. प्लवगेश्वरं. ६ ङ.—ञ. प्रविष्टंभीमविक्रान्तंसुग्रीवंवानरर्षभं. ७ क.—घ. वानरर्षभं. ८ ङ.—ट. रत्नानिसर्वाणि. ९ क.—ट. सर्वबीजौषधानिच. १० क. ग. घ. ज. ञ. वराहौ. ङ. छ. झ. ट. पराध्यौं. ११ क. समालेपन. १२ झ. गोरोचनंमनःशिलां. छ. ट. गोरोचनमनःशिलां. ङ. ञ. गोरोचनमनःशिलाः. घ. च. ज. रोचनांसुमनःशिलाः. ख. रोचनांसुमनःशिलां. ग. रोचनांचमनःशिलां. १३ ख. ङ. छ. झ. ञ. ट. कन्याश्च. १४ ख.—ङ. ज. ञ. ततस्तं. १५ ङ. झ. ट. श्रेष्ठमभिषेक्तुं. १६ ग. ङ. द्विजोत्तमान्.

ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ॥ मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥ २९ ॥
ततो हेमप्रतिष्ठाने वरास्तरणसंवृते ॥ प्रासादशिखरे रम्ये चित्र[1]माल्योपशोभिते ॥ ३० ॥
प्राङ्मुखं विविधैर्मन्त्रैः स्थापयित्वा वरासने ॥ नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः ॥ ३१ ॥
आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः ॥ अपः कनककुम्भेषु निधाय [2]विमलाः शुभाः ॥ ३२ ॥
[3]शुभैर्वृषभशृङ्गैश्च [4]कलशैश्चापि काञ्चनैः ॥ शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ३३ ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ मैन्दश्च द्विविदश्चैव हनुमा[5]ञ्जाम्बवान्नलः ॥ ३४ ॥
अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ॥ सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ३५ ॥
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुङ्गवाः ॥ [6]प्रचुक्रुशुर्महात्मानो [7]हृष्टास्तत्र सहस्रशः ॥ ३६ ॥
[8]रामस्य तु वचः कुर्वन्सुग्रीवो [9]हरिपुङ्गवः ॥ अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥ ३७ ॥
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ॥ साधु साध्विति सुग्रीवं महात्मानो[10]ऽभ्यपूजयन् ॥ ३८ ॥
[11]रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः ॥ प्रीताश्च तुष्टुवुः सर्वे तादृशे तत्र [12]वर्तति ॥ ३९ ॥
हृष्टपुष्ट[13]जनाकीर्णा पताकाध्वजशोभिता ॥ बभूव नगरी रम्या किष्किन्धा गिरिगह्वरे ॥ ४० ॥

निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः ॥
रुमां च [14]भार्यां प्रतिलभ्य वीर्यवानवाप राज्यं त्रिदशाधिपो यथा ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

ताः । हैमप्रतिष्ठाने हेममयपादयुक्ते । वरासनविशेषणमेतत् । नदीनदेभ्यस्तीर्थेभ्यः समुद्रेभ्यश्च अपः आहृत्य आनीय । संहृत्य संमिश्रीकृत्य । तद्विमलं जलं कनककुम्भेषु निधाय तेभ्यो वृषभशृङ्गादिभिरुद्धृत्य । शास्त्रदृष्टेन विधिना क्रमेण । महर्षिविहितेन कल्पसूत्रविहितेन च विधिना । अभ्यषिञ्चन्त ॥२८—३७॥ सानुक्रोशाः अङ्गदे सदयाः ॥ ३८ ॥ तादृशे सुग्रीवाङ्गदाभिषेकरूपोत्सवे । वर्तति वर्तमाने सति ॥ ३९ ॥ पताकाध्वजयोर्भेद उक्तः ॥ ४० ॥ निवेद्य रामसमीपमागत्य निवेद्येत्यर्थः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

ति० ततःकुशेति । अनेनाग्निसाध्यकर्माधिकारंतेषांदर्शयति । मनुष्यसदृशसर्वव्यवहाराद्वेदज्ञत्वाच्च ॥ २९ ॥ ति० मन्त्रैस्स्थापयित्वा "वसवस्त्वागायत्रेणच्छन्दसा" इत्यादिमन्त्रैरासनेस्थापयित्वेत्यर्थः ॥ स० नदीनदेभ्यः अविवक्षितत्वान्नैकशेषः ॥ ३१ ॥ स० अपः नविद्यते पःपालकोयस्यसोपः । अस्यगजोगवाक्षइत्यादिनापृथगन्वयः । तेननजलशब्देनपौनरुक्त्यं ॥ ति० अपआहृत्यमिलिताःकृत्वाविमलंजलंकुंभेषुनिधायेतिसंबन्धः ॥ ३२ ॥ ति० तादृशेतत्रवर्तिनि अभिषिक्तेसुग्रीवेऽङ्गदेच । तत्र किष्किन्धायां । वर्तिनि वर्तमानेसतीत्यर्थः ॥ ३९ ॥ ती० फलश्रुतिः । "अभिषेकंच तारायारुमायाःप्राप्तिमुत्तमाम् । सुग्रीवस्यसदाश्रुत्वाराज्यलाभंसगच्छति" इति ॥ ४१ ॥ इतिषड्विंशःसर्गः ॥ २६ ॥

[ पा० ] १ ग. माल्यानुशोभिते. २ क. ग. झ. ट. विमलंजलं. ङ. च. ञ. विधिवज्जलं. ३ क. शुभैर्हिरण्यशृङ्गैश्च. ४ छ. झ. ट. कलशैश्चैव. ख. सुकुशैश्चापि. ५ ङ. छ. झ. ट. जांबवांस्तथा. ६ क. प्रतुष्टुवुः. ७ ङ. छ.—ट. हृष्टाःशतसहस्रशः. ८ ग. रामस्यवचनं. ९ छ. झ. ढ. वानरेश्वरः. १० ङ. छ.—ट. ह्यपूजयन्. ११ ग. रामंचलक्ष्मणंचैवप्रशशंसुःपुनःपुनः. १२ छ. झ. वर्तिनि. १३ घ. समाकीर्णा. १४ घ.—ट. भार्यामुपलभ्य.

## सप्तविंशः सर्गः ॥ २७ ॥

रामेण प्रस्रवणगिरिगुहामेत्यलक्ष्मणंप्रति तद्गुहायाःस्ववासानुगुणगुणसमृद्धिवर्णनपूर्वकं लक्ष्मणेनसहतत्रनिवासः ॥ १ ॥ लक्ष्मणेन चन्द्रदर्शनादिनासमुद्दीपितशोकंरामंप्रति बहुधासमाश्वासनम् ॥ २ ॥ रामेण लक्ष्मणप्रशंसनपूर्वकंशरत्प्रतीक्षया तत्रनिवासः ॥ ३ ॥

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ॥ आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥ १ ॥
शार्दूलमृगसंघुष्टं सिंहैर्भीमरवैर्वृतम् ॥ नानागुल्मलतागूढं बहुपादपसंकुलम् ॥ २ ॥
ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितम् ॥ मेघराशिनिभं शैलं नित्यं शुचिजलाश्रयम् ॥ ३ ॥
तस्य शैलस्य शिखरे महतीमायतां गुहाम् ॥ प्रत्यगृह्णत वासार्थं रामः सौमित्रिणा सह ॥ ४ ॥
कृत्वा च समयं सौम्यः सुग्रीवेण सहानघः ॥ कालयुक्तं महद्वाक्यमुवाच रघुनन्दनः ॥
विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्धनम् ॥ ५ ॥
इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ अस्यां वसाव सौमित्रे वर्षरात्रमरिंदम ॥ ६ ॥
गिरिशृङ्गमिदं रम्यमुन्नतं पार्थिवात्मज ॥ श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम् ॥ ७ ॥
नानाधातुसमाकीर्णं दरीनिर्झरशोभितम् ॥ विविधैर्वृक्षषण्डैश्च चारु चित्रलतावृतम् ॥ ८ ॥
नानाविहगसंघुष्टं मयूररवनादितम् ॥ मालतीकुन्दगुल्मैश्च सिन्धुवारकुरण्टकैः ॥ ९ ॥
कदम्बार्जुनसर्जैश्च पुष्पितैरुपशोभितम् ॥ १० ॥
इयं च नलिनी रम्या फुल्लपङ्कजमण्डिता ॥ नातिदूरे गुहाया नौ भविष्यति नृपात्मज ॥ ११ ॥
प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति ॥ पश्चाच्चैवोन्नता सौम्य निवातेयं भविष्यति ॥ १२ ॥
गुहाद्वारे च सौमित्रे शिला समतला शुभा ॥ श्लक्ष्णा चैवायता चैव भिन्नाञ्जनचयोपमा ॥ १३ ॥
गिरिशृङ्गमिदं तात पश्य चोत्तरतः शुभम् ॥ भिन्नाञ्जनचयाकारमम्भोधरमिवोत्थितम् ॥ १४ ॥

अथ रामस्यैकान्तवाससमुद्भूतसीताविरहशोकप्रशमनं लक्ष्मणेन क्रियते सप्तविंशे—अभिषिक्त इत्यादि ॥ १—२ ॥ शैलं शिलामयमिति मृच्छिलोभयमयगिरिभ्यो व्यावृत्तिः । अतो न गिरिं शैलमिति पुनरुक्तिः ॥ ३—४ ॥ कालयुक्तं तत्कालोचितं ॥ ५ ॥ युक्तमारुता उचितमारुता यावदपेक्षमारुतेत्यर्थः । वसाव लोडुत्तमद्विवचनं । वर्षरात्रमिति अच् समासान्त आर्षः । जात्येकवचनं ॥ ६—८ ॥ कदम्बाः अर्जुनाः नदीसर्जाः ॥ ९ ॥ नातिदूरे भविष्यतीत्यनेन वर्षाकालस्य प्रवृत्तत्वाद्भाविजलसमृद्ध्या समीपवर्तिनी भविष्यतीत्यर्थः ॥ १०—११ ॥ प्रागुदक्प्रवणे देशे वर्तमाना गुहा साधु भविष्यति । प्रागुदक्प्रवणे देशे वर्तमानत्वाभिधानाद्गुहाया नैर्ऋत्यभिमुखद्वारत्वमुक्तं । अतएव पौरस्त्यवर्षप्रवेशाभावेन साधुत्वमुक्तं भवति । इयं पश्चादुन्नता पश्चाद्भागोन्नता । अतएव पुरोवातनिरोधकत्वान्निवाता च भविष्यति ॥ १२ ॥ गुहाद्वारेचेति । अस्मिन् श्लोके वर्ततइतिशेषः ॥ १३ ॥ श्वेतमिव रूप्यमिव । " दुर्वर्णं रजतं रूप्यं खर्जूरं

ति० प्रस्रवणं तदाख्यं ॥ १ ॥ स० गोपुच्छैः नीलमुखवानरविशेषैः ॥ ३ ॥ स० ङीबन्तलक्ष्मीशब्दोप्यस्तीतिलक्ष्मिवर्धनमित्येतत्साधु ॥ " द्राग्लक्ष्मिभर्तृगुणान् " इत्यादिप्रयोगात् ॥ शि० अनघः शरणागतानामघनिवर्तकः ॥ ५ ॥ स० नदीदर्दुरसंयुतं नद्यांविद्यमानमण्डूकसदृशमहामण्डूकोपेतं ॥ ७ ॥ स० प्रागुदक्प्रवणे पूर्वोत्तरभागयोर्निम्नभूते ॥ ११ ॥

[ पा० ] १ ङ. च. ञ. संयुक्तं. २ क. ख. घ. ङ. च. ज. ञ. भीमतरैर्वृतं. ३ ख. नानाद्रुम. ४ ङ.—ट. शुचिकरंशिवं. ख. शुचिजलंशिवं. क. शुचिकरंशुभं. ५ क. ग. ङ.—ट. रामः. ६ छ. झ. ञ. ट. वत्स्याम. ख.—च. ज. वत्स्यामि. क. वस्त्याव. ७ ख. सौम्यमुन्नतं. क. ङ.—ट. रम्यमुत्तमं. ८ ग. र भिशोभितं. ९ ङ.—ट. नदीदर्दुरसंयुतं. १० ख. घ. द्वारिचित्र. ११ च. ज. झ. ट. सिन्धुवारैःशिरीषकैः. ख. सिन्धुवारैश्चशोभितैः. १२ च. ज. ञ. संघैश्च. क. संकीर्णैः. ख. वंशैश्च. १३ ङ. छ. झ. ट. कृष्णाचैव. १४ ग. घ. ङ. छ. ञ. ट. गिरेःशृङ्गं. १५ ङ. झ. ञ. ट. मिवोदितं. घ. मिवोन्नतं.

दक्षिणस्यामपि दिशि स्थितं श्वेत[1]मिवापरम् ॥ कैलासशिखरप्रख्यं नानाधातु[2]विभूषितम् ॥ १५ ॥
प्राचीनवाहिनीं चैव नदीं भृशमकर्दमाम् ॥ गुहायाः [3]पूर्वतः पश्य त्रिकूटे जाह्नवीमिव ॥ १६ ॥
[4]चम्पकैस्तिलकैस्तालैस्तमालैरतिमुक्तकैः ॥ पद्मकैः सरलैश्चैव [5]अशोकैश्चैव शोभिताम् ॥ १७ ॥
[6]वानीरैस्तिनिशैश्चैव [7]बकुलैः [8]केतकैर्धवैः ॥ [9]हिन्तालैस्तिरिटैर्नीपै[10]र्वेत्रकैः कृतमालकैः ॥ १८ ॥
तीरजैः शोभिता भाति नानारूपैस्ततस्ततः ॥ वसनाभरणोपेता प्रमदेवाभ्यलङ्कृता ॥ १९ ॥
शतशः पक्षिसङ्घैश्च नाना[11]नादैर्विनादिता ॥ एकैकमनुरक्तैश्च चक्रवाकैरलङ्कृता ॥ २० ॥
पुलिनैरतिरम्यैश्च हंससार[12]ससेवितैः ॥ प्रहसन्तीव भात्येषा [13]नारी सर्वविभूषिता ॥ २१ ॥
क्वचिन्नीलोत्पलच्छन्ना भाति रक्तोत्पलैः क्वचित् ॥ क्वचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२ ॥
पारिप्लवशतैर्जुष्टा [14]बर्हिणक्रौञ्चनादिता ॥ रमणीया नदी सौम्य [15]मुनिसङ्घैर्निषेविता ॥ २३ ॥
पश्य चन्दनवृक्षाणां पङ्क्तीः [16]सुरचिता इव ॥ ककुभानां च दृश्यन्ते मनसेवोदिताः समम् ॥ २४ ॥
अहो सुरमणीयोयं देशः शत्रुनिषूदन ॥ [17]इदं रंस्याव सौमित्रे साध्वत्र निवसावहै ॥ २५ ॥
इतश्च नातिदूरे सा किष्किन्धा चित्रकानना ॥ सुग्रीवस्य पुरी रम्या भविष्यति नृपात्मज ॥ २६ ॥
गीतवादित्रनिर्घोषः श्रूयते जयतां वर ॥ [18]नर्दतां वानराणां च मृदङ्गा[19]डम्बरैः सह ॥ २७ ॥
लब्ध्वा भार्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः ॥ ध्रुवं नन्दति सुग्रीवः संप्राप्य महतीं श्रियम् ॥ २८ ॥
[20]इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः ॥ बहुदृश्यदरीकुञ्जे तस्मिन्प्रस्रवणे गिरौ ॥ २९ ॥

---

श्वेतं " इत्यमरः । अपरं शृङ्गं पश्येति पूर्वेणान्वयः ॥ १४—१५ ॥ अतिमुक्तकैः पुण्ड्रकैः । पद्मकैः पद्मपर्णाख्यवृक्षविशेषैः । सरलैः यूपसरलैः । तिनिशैः स्यन्दनैः । " तिनिशे स्यन्दनो नेमिः " इत्यमरः । धवैः धुन्धुरैः । हिंतालैः लताङ्कुराख्यवृक्षैः । " अथ स्याल्लताङ्कुरः । हिन्तालस्तृणराजश्च" इति वैजयन्ती । तिरिटैः तिल्ववृक्षैः । " तिरीटस्तिल्वसार्जनौ " इत्यमरः । वेत्रकैरिति सम्यक् ॥ १६—१९ ॥ एकैकमनुरक्तैः अन्योन्यानुरागयुक्तैः ॥ २०—२२ ॥ पारिप्लवैः जलोपरिसंचारिपक्षिविशेषैः ॥ २३ ॥ सुरचिता इव मालारूपेण ग्रथिता इव । ककुभानां अर्जुनवृक्षाणां । दृश्यन्ते पङ्क्तय इति शेषः । मनसेवोदिताः सममिति मनसा संकल्पेन । समं युगपत् । उदिता इव स्थिताः ॥ २४ ॥ रंस्याव रंस्यावहे । अतः अत्र गिरौ । निवसावहै निवसाव ॥ २५ ॥ अत्र वासे क्रियमाणे किष्किन्धा च समीपवर्तिनीभविष्यतीत्याह—इतश्चेति ॥ २६ ॥ मृदङ्गाडम्बरैः सह नर्दतां वानराणां निर्घोषः श्रूयत इत्यन्वयः ॥ २७—२८ ॥ तत्र गुहायां । कुञ्जः लतागृहं

---

**ति॰** श्वेतमिवांबरं श्वेतवस्त्रमिवस्थितं ॥ १५ ॥ **ति॰** जाह्नवीपदेन तत्रत्याजाह्नवीसदृशीमन्दाकिन्याख्यानदी ॥ १६ ॥ **टीका॰** सममनसाउदिताइव एकोच्छ्रायविस्ताराउद्गवामइतिसंकल्प्योत्थिताइवेत्युत्प्रेक्षा ॥ **शि॰** मनसा मदिच्छया । समं उदिताः जाताइव । चन्दनवृक्षाणांककुभानां अर्जुनवृक्षाणांचयाःपङ्क्तयोदृश्यन्ते ताःसुरुचिराःपङ्क्तीःपश्य ॥२४॥ **ति॰** बहूनिदृश्यान्युत्तमवस्तूनियत्र तादृशःकुञ्जाश्रयस्मिन्निति गिरिविशेषणं ॥ २९ ॥

[ **पा॰** ] १ झ. ट. मिवांबरं. क. मिवांबुदं. २ ख. घ.—झ. ट. विराजितं. ३ झ. परतः. छ. ट. पुरतः. ४ ङ. छ. झ. ट. चन्दनैस्तिलकैस्सालैः. ५ ख. अङ्कोलैश्चैव. घ. अशोकैरुप. ङ. च. ज. ञ. अशोकैरपि. क. अङ्कोलैरपि. ६ क. ग. ङ. च. ज. ञ. नीवारैः. झ. वानीरैस्तिमिदैश्चैव. ७ क. ख. वञ्जुलैः. ८ छ. झ. ट. केतकैरपि. ९ झ. स्तिनिशैर्नीपैः. ङ. च. ज. ञ. रर्जुनैर्नीपैः. १० क. छ. झ. ट. वैतसैः. ११ क. ख. ङ. छ.—ट. नादविनादिता. घ. निनदनादिता. १२ ङ.—ट. सेविता. १३ ङ. छ.—ट. नानारत्नसमन्विता. क. ख. नानारत्नविभूषिता. १४ झ. बर्हिक्रौञ्चविनादिता. १५ घ. ऋषिसंघैः. छ. झ. ट. मुनिसंघनिषेविता. १६ क. सुरुचिराभुवि. १७ क. ख. घ. इह. १८ छ. झ. ट. नदतां. १९ ख. घ. ट. मृदङ्गा. डंबरः. २० इत्युक्त्वेत्यर्धस्यस्थाने क. पाठे. एवमुक्त्वामहातेजालक्ष्मणंशुभलक्षणम् । न्यवसत्तत्रधर्मज्ञोराघवःसहलक्ष्मणः । इत्येकःश्लोकोदृश्यते.

[1]सुसुखेऽपि बहुद्रव्ये [2]तस्मिन्हि धरणीधरे ॥ वसतस्तस्य रामस्य रतिरल्पाऽपि नाभवत् ॥
हृतां हि भार्यां स्मरतः प्राणेभ्योपि गरीयसीम् ॥ ३० ॥
[3]उदयाभ्युदितं दृष्ट्वा शशाङ्कं च[4] विशेषतः ॥ आविवेश न तं निद्रा निशासु शयनं गतम् ॥ ३१ ॥
तत्समुत्थेन शोकेन बाष्पोपहतचे[5]तसम् ॥ तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् ॥
तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणो[6]ऽनुनयन्वचः ॥ ३२ ॥
अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि ॥ शोच[7]तो ह्यव[8]सीदन्ति स[9]र्वार्था विहितं हि ते ॥ ३३ ॥
भवान्क्रियापरो लोके भवान्दैवपरायणः ॥ आस्तिको धर्मशीलश्च व्यवसायी च राघव ॥ ३४ ॥
न ह्यव्यवसितः शत्रुं राक्षसं तं विशेषतः ॥ समर्थस्त्वं रणे हन्तुं वि[10]क्रमैर्जिह्मकारिणम् ॥ ३५ ॥
समुन्मूलय शोकं त्वं व्यवसायं [11]स्थिरं कुरु ॥ ततः सपरिवारं तं निर्मूलं [12]कुरु राक्षसम् ॥ ३६ ॥
पृथिवीमपि काकुत्स्थ ससागरवनाचलाम् ॥ परिवर्तयितुं शक्तः कि[13]मङ्ग पुन रावणम् ॥ ३७ ॥
शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः ॥ ततः सराष्ट्रं सगणं रावणं त्वं वधिष्यसि ॥ ३८ ॥
अहं तु खलु ते वीर्यं प्रसुप्तं प्रतिबोधये ॥ दीप्तै[14]राहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ३९ ॥
[15]लक्ष्मणस्य तु तद्वाक्यं प्रतिपूज्य हितं शुभम् ॥ राघवः सुहृदं स्निग्धमिदं वचनमब्रवीत् ॥ ४० ॥
वाच्यं यदनुरक्तेन स्निग्धेन च हितेन च ॥ सत्यविक्रमयुक्तेन तदुक्तं लक्ष्मण त्वया ॥ ४१ ॥
एष शोकः परित्यक्तः सर्वकार्यावसादकः ॥ विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४२ ॥
शरत्कालं प्रतीक्षिष्ये स्थितोस्मि वचने तव ॥ सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४३ ॥

॥ २९ ॥ बहुद्रव्ये बहुपुष्पफलादिधने ॥ ३० ॥ उदयाभ्युदितं उदयपर्वतादुद्गतं ॥ ३१ ॥ लक्ष्मणोऽनुनयन्वचइतिपाठः ॥ ३२—३३ ॥ क्रियापरइत्यनेन कार्यसिद्धिहेतुभूतपुरुषकारवत्त्वमुक्तं । दैवपरायण इत्यनेन कार्यसिद्धिहेतुभूतदेवतानिष्ठतोक्ता ॥ ३४ ॥ अव्यवस्थितः धैर्यरहितइत्यर्थः । रणे विक्रमैर्हन्तुं नसमर्थइत्यन्वयः ॥३५—३६॥ परिवर्तयितुं अधरोत्तरं कर्तुं । अङ्गेति संबोधनं । पुनरित्यत्रदीर्घाभावआर्षः ॥३७—३८॥ दीप्तैः ज्वलनकरैः । उद्बोधकैः वाक्यैरितिशेषः ॥३९—४०॥ अनुरक्तेन अनुरागयुक्तेन । स्निग्धेन तत्कालोचितप्रियपरेण । हितेन हितपरेण । सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन । यद्वाच्यं

**स०** बहुद्रव्ये अनेकद्रव्योत्पत्तिस्थाने ॥ ३० ॥ **स०** उदयाभ्युदितं उदयपर्वतेऽभ्युदितं । सविशेषतः द्वितीयान्तत्वात्तसिः । सविशेषं पूर्णत्वादिविशेषसहितं । शशाङ्कं चन्द्रं दृष्ट्वास्थितं । शयनं शय्यां प्राप्तंतरामंनिद्राविवेश । यद्वासविशेषशशाङ्कउदयाभ्युदितंउदयपर्वतगतंसूर्यमिवदृष्ट्वास्थितमित्यादियोजना ॥३१॥ **टीका०** तत्समुत्थेनसीतास्मरणसमुत्थेन । **ति०** अनुनयं अनुनयंवत् ॥ ३२ ॥ **स०** हेवीरव्यथांगत्वाअलं व्यथांनकुर्वित्यर्थः । “ अलंखल्वोःप्रतिषेधयोःप्राचांक्त्वा” इतिप्रतिषेधार्थकालंशब्दयोगेसमानकर्तृकत्वाभावेपिक्त्वाप्रत्ययः । यद्वा अलमत्यन्तंव्यथांगत्वा मानसिकदुःखविशेषंप्राप्य शोचितुंनार्हसीत्येकमेववाक्यं । शोचतः पुरुषस्यसर्वार्थाः अवसीदन्ति अवसन्नाभवन्ति नश्यन्तीतियावत् ॥ **शि०** सर्वथा अत्यन्तंशोचन्तोजनाअवसीदन्तिइतितेविदितं ॥ ३३ ॥ **टीका०** दैवपरायणः भाग्यसंपन्नः उभयत्रहेतुः ॥ **ति०** क्रियापरः नित्यकर्मानुष्ठाता ॥ **शि०** देवपरायणः देवपराणांदेवतृप्तिकारकाणांअयनआश्रयः भवानेव । अतएव आस्तिकादिर्भवानेव । एतेनत्वत्सावधानतामात्रेणसर्वकार्यंसेत्स्यतीतिसूचितं ॥ **स०** आस्तिकः अस्तिपरलोकइतिज्ञानी । धर्मशीलः धर्मेधनुषिशीलंस्वभावोयस्य सदाधनुर्धारीतियावत् ॥ अभिधानंतूक्तंपूर्वं । व्यवसायी उद्योगवान् ॥ ३४ ॥ **रामानु०** विक्रमेजिह्मकारिणं विक्रमविषयेछद्मकारिणं ॥ **ति०** अव्यवसितः शोकेनोद्यमहीनस्त्वं हन्तुंनसमर्थः । विक्रमे विक्रमस्थानेरणे जिह्मकारिणं कुटिलं ॥ ३५ ॥ **ति०** काले होमकाले ॥ ३९ ॥

[ **पा०** ] १ ङ. छ. ट. सुसुखेहि. २ घ. ङ. च. ज. तस्मिन्प्रस्रवणेगिरौ. ३ च. उदयाभ्युदयं. ४ क. घ. ट. सविशेषतः. ५ ङ. ज. झ. चेतनं. ६ झ. लक्ष्मणोनुनयंवचः ७ ट. शोचन्तो. ८ ख. ग. छ.—ट. ह्यवसीदन्ति. ९ ट. सर्वथा. १० क. ग.—ट. विक्रमेजिह्मकारणं. ख. विक्रमोजयकारणं. ११ छ. ज. झ. ट. स्थिरीकुरु. १२ छ. झ. ट. तंराक्षसंहन्तुमर्हसि. १३ झ. किंपुनस्तंहिरावणं. छ. ट. किंपुनस्त्वंहि. ग. किंपुनारावणंरणे. ञ. किमङ्गयुधिरावणं. १४ क राहुतिसंघातैर्भस्म. १५ छ. झ. ट. लक्ष्मणस्यहि.

उपकारेण वीरस्तु प्रतिकारेण युज्यते ॥ अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ४४ ॥
अथैवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ॥
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन्दर्शनमात्मनः शुभम् ॥ ४५ ॥
यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता नचिराद्धरीश्वरः ॥
शरत्प्रतीक्षः क्षमतामिमं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ४६ ॥
नियम्य कोपं प्रतिपाल्यतां शरत्क्षमस्व मासांश्चतुरो मया सह ॥
वसाचलेऽस्मिन्मृगराजसेविते संवर्धयञ्शत्रुवधे समुद्यमम् ॥ ४७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

## अष्टाविंशः सर्गः ॥ २८ ॥

रामेणलक्ष्मणंप्रतिवर्षाकालवर्णनम् ॥ १ ॥

स तथा वालिनं हत्वा सुग्रीवमभिषिच्य च ॥ वसन्माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥
अयं स कालः संप्राप्तः समयोऽद्य जलागमः ॥ संपश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ २ ॥

---

तत्सर्वं त्वयोक्तमितिसंबन्धः ॥ ४१—४३ ॥ तुश-ब्दोऽवधारणे । उपकारेण युक्तो वीरः प्रतिकारेण युज्यतएव । प्रत्युपकारंकरोत्येवेत्यर्थः । अप्रतिकृतः अकृतप्रत्युपकारः पुरुषः । सत्त्ववतां सात्त्विकानां मनः । हन्ति पीडयति । सात्त्विकास्तमजस्रं निन्द-न्तीत्यर्थः । सज्जनापवादभीतः सुग्रीवोस्माकं प्रत्युप-कारंकरोत्येवेति भावः ॥ ४४ ॥ प्रणिधाय भाविका-र्यमालोच्य । दर्शनं मतं । प्रणिधानेनदृष्टार्थमि-त्यर्थः ॥ ४५ ॥ नचिरात् अविलम्बितं । जलानि प्रपात्यन्तेस्मिन्निति जलप्रपातो वर्षाकालः । भवान् क्षमतां त्वं क्षमस्व । वर्षाकालकृतविरहवेदनां मा कुर्वित्यर्थः । रिपुनिग्रहे धृतः धैर्ययुक्तः ॥ ४६ ॥ सुग्रीवः प्रत्युपकारं करोतुवा मा वा सद्यः शत्रुवधः कर्तव्यइति पुनः संजातकोपंरामं प्रत्याह—नियम्ये-ति ॥ चतुरोमासान् आषाढश्रावणभाद्रपदाश्वयुजान् । शरत् कार्तिकमासः । शत्रुवधेसमुद्यमं उत्साहं । संवर्धयन् अभिवर्धयन् । समुद्यतइतिपाठे संवर्तयन् मृगराजादीन्नाशयन् ॥ ४७ ॥ इति श्रीगोविन्दराज-विरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

---

अथ रामः स्वस्याश्रितविश्लेषासहिष्णुत्वमन्यापदे-शेन लक्ष्मणाय प्रदर्शयन् वर्षर्तुवर्णनमारभतेऽष्टाविंशे —स तथेत्यादि ॥ यत्किंचिद्विरोधिनिरसनाश्रितसं-रक्षणलाभेप्यसत्कल्पमेतन्मन्यमानः । माल्यवतः पूर्वं प्रस्रवणाख्यतयोक्तस्य गिरेः । पृष्ठे उपरि । वसन् सर्वजनोज्जीवनाय सन्निहित इत्यर्थः ॥ १ ॥ समयः सुग्रीवस्य स्थानावधित्वेन संकेतितः । सोयं जलागमः

---

**ती०** सुग्रीवस्त्ववश्यमस्माकंप्रत्युपकारंकरिष्यतीत्याशयेनाह—**उपकारेणेति** ॥ **शि०** अकृतज्ञः विस्मृतोपकारः । अतएव अप्रतिकृतः प्रत्युपकाररहितःजनः । सत्त्ववतां महात्मनां । मनः ईप्सिताज्ञां धर्मशास्त्रमित्यर्थः । हन्ति नमन्यते । एतेनशास्त्रा-नुसारित्वात्सुग्रीवोमदुपकृतिंनविस्मरिष्यतीतिसूचितं ॥ ४४ ॥ **ति०** तदेव रामवाक्यमेव । युक्तं प्रणिधायनिश्चित्य । आत्मनः शुभंदर्शनं शुभांबुद्धिं । प्रदर्शयन्नुवाच ॥ ४५ ॥ **रामानु०** संवर्तयन् कालंयापयन् ॥ ४७ ॥ इतिसप्तविंशःसर्गः ॥ २७ ॥

**टीका०** वर्षर्तोर्धर्मोविरहिभिर्दुस्सहइतिहृदिनिधायतल्लक्षणमाह—अयमिति ॥ **स०** जलागमः जलानामागमआगमनंयस्मि-न्सतथा । **शि०** जलागमः वृष्टिप्रापकःअतएवकालः सर्वस्थित्युपदेशकः । कालइत्युपदेशार्थककालधातुप्रकृतिककर्त्रजन्तः । अत-

**[ पा० ]** १ ङ. छ. झ. ञ. ट. तदेवयुक्तं. च. ज. तदैवमुक्तं. २ छ. झ. ट. नचिरात्तुवानरः. ३ ख. शोकं. ४ छ. झ. ट. परिपाल्यतां. ५ क. घ.—ट. संवर्तयन्. ६ छ. झ. ट. समर्थः. ग. घ. च. ज. ञ. समुद्यतः. ७ क.—ङ. छ. झ. ञ. ट. सतदा. ङ. च. ज. तथाहि. ८ ग. मभिषिच्यतु.

नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ॥ पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३ ॥
शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः ॥ कुटजार्जुनमालाभिरलंकर्तुं दिवाकरम् ॥ ४ ॥
सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः ॥ स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५ ॥
मन्दमारुतनिश्वासं सन्ध्याचन्दनरञ्जितम् ॥ आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६ ॥
एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ॥ सीतेव शोकसन्तप्ता मही बाष्पं विमुञ्चति ॥ ७ ॥
मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः ॥ शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥ ८ ॥
एष फुल्लार्जुनः शैलः केतकैरधिवासितः ॥ सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ९ ॥

कालः वर्षाकालः । अद्य संप्राप्तः संप्रवृत्तः ॥ २ ॥ द्यौः भास्करस्य गभस्तिभिः किरणैः । समुद्राणां रसं पीत्वा नवमासधृतं कार्तिकाद्याषाढपर्यन्तनवमासधृतं । रसायनं षड्रसानां कारणं । गर्भं जलं । प्रसूते जनयति । भास्करस्य गभस्तिभिरित्यनेन "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतिः सूच्यते । समुद्राणां रसमित्यनेन हंसस्य क्षीरनीरविभागचातुर्यवत् नीरलवणविभागसामर्थ्यं द्योत्यते । अत्र प्रस्तुतद्योवर्षवृत्तान्तेनाप्रस्तुतस्यानेकनायकाहितवीर्यगर्भं भक्तिकाभिर्धृत्वा काले प्रेमास्पदसुतप्रसवकृद्वधूवृत्तान्तस्य प्रतीतेः समासोक्तिरलंकारः । यदि सीता सन्निहिता सापीदानीं नवप्रसूतिःस्यादिति राममनोरथो गम्यते ॥ ३ ॥ मेघा एव सोपानानि तेषां पङ्क्तिभिरम्बरमारुह्य । कुटजार्जुनानां वार्षिकपुष्पाणां मालाभिः । दिवाकरं अस्मत्कुलगुरुभूतसूर्यमध्ये सदा ध्येयं विष्णुं । "अलंकारप्रियो विष्णुः" इति न्यायेनालंकर्तुं शक्यं । लिङ्गसामान्ये नपुंसकं । "सह पत्न्या विशालाक्ष्या नारायणमुपागमत्" इत्युक्तरीत्या सीतया सहाराधनं न लब्धमित्युत्कण्ठा द्योत्यते ॥ ४ ॥ सन्ध्यारागोत्थितैः उत्थितसन्ध्यारागैः । आहिताग्न्यादित्वात्परनिपातः । वस्त्रखण्डपक्षे उत्थितसन्ध्यातुल्यरागैः अतएव ताम्रैः । अन्तेषु प्रान्तेषु । अधिकपाण्डरैः अत्यन्तशुभ्रैः । स्निग्धैः आर्द्रैः । अभ्रपटच्छेदैः अभ्राणि मेघा एव पटच्छेदाः वस्त्रखण्डाः तैः । बद्धव्रणमिवाम्बरं भाति । उपमालंकारः ॥ ५ ॥ मन्दमारुत एव निश्वासो यस्य तत् तथा । अनेन निरंतरनिश्वासवत्त्वमुच्यते । सन्ध्या सन्ध्यारागः स एव चन्दनं तेनरञ्जितं आलिप्तं । अनेन तापशान्तिकरशीतोपचार उक्तः । आपाण्डुजलदमित्यनेन विरहपाण्डुतोक्ता । अतएव कामातुरं । कान्ताविरहपीडितमिवेत्युत्प्रेक्षा रूपकानुप्राणिता ॥ ६ ॥ घर्मेण ग्रीष्मसंतापेन । सीतापक्षे विरहतापेन परिक्लिष्टा । नववारिभिः परिप्लुतासिक्ता । सीतापक्षे अश्रुक्लिन्ना । बाष्पं ऊष्म अश्रुजलं च । विमुञ्चति । प्रथमजलनिपाते हि भूमेरूष्मा समुदञ्चति । श्लेषालंकारः ॥ ७ ॥ मेघेत्यादिना मान्द्यमुक्तं । कह्लारेत्यादिना शैत्यसौरभ्ये । एवंगुणत्वात् वाताः आदरातिशयेन अञ्जलिभिरादाय पातुं शक्यं । अतिशयोक्तिरलंकारः ॥ ८ ॥ फुल्लार्जुन इत्यनेन मालालंकृतत्वमुच्यते । केतकैरधिवासित इत्यनेन चन्दनादिमत्त्वं च सुग्रीवस्य सूच्यते । शान्तारिरित्यनेन शैलस्य निस्तापत्वमुक्तं । बिम्बप्रतिबिम्बभावेन साम्यप्रतिपादनादुपमालंकारः ॥ ९ ॥

एवनपौनरुक्त्यं ॥ २ ॥ **स०** कुटजो गिरिमल्लिका ॥ ४ ॥ **तनि०** अंबरस्य व्रणसंबन्धासंभवादतिशयोक्तिरलङ्कारः ॥ **टीका०** व्रणगोपनायनिहितेनघृतादिनेत्यर्थः ॥ प्रतीयतइतिशेषः ॥ ५ ॥ **ति०** घर्मेण रवितेजसा । परिक्लिष्टा संतप्ता ॥ ७ ॥ **तनि०** अञ्जलिभिःपातुंशक्यमिति वातावयवानामतिप्रश्लिष्टावयवत्वमतिशीतलत्वंच व्यञ्जितं ॥ **ती०** शक्यमञ्जलिभिःपातुमित्यनेन शैत्यमान्द्यसौरभ्यभूयस्त्वादादरातिशयेनाञ्जलिभिरादाय पातुंशक्यतइत्युच्यते ॥ **स०** मेघोदरविनिर्मुक्ताइत्यनेन बहुदूरागमनेन मान्द्यं सूचयति । कह्लारदलवच्छीतलाः । केतक्यागन्धइव गन्धएषामस्तीति केतकिगन्धिनः । एतादृशावाता अनेकवारं अञ्जलिभिरादाय पातुं शक्यं शक्याः । "मुखनासिकावचनः—" सूत्रभाष्यकैयटादिदिशा "शक्यंक्षुदपहन्तुं" इतिवच्छक्यमित्युपपन्नं पदसंस्कारपक्षइतिज्ञेयं ॥ ८ ॥ **ति०** अत्र शैलस्यारिर्वनदाहकलाद्यावाग्निः ॥ ९ ॥

[ **पा०** ] १ छ. झ. ट. दिवाकरः. २ ग. कालोत्थितैः. ३ रन्तेष्वपिचपाण्डुभिः. ग. ङ. च. छ. ज. रन्तेष्वधिकपाण्डुभिः. ४ ङ.—ट. कर्पूरदलशीतलाः. ५ क. ख. ग. ङ.—ट. केतकगन्धिनः. ६ ङ.—ट. रभिवासितः.

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ॥ मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १० ॥
कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ॥ अन्तः स्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ११ ॥
नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति मा ॥ स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२ ॥
इमास्ता मन्मथवतां हिताः प्रतिहता दिशः ॥ अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ १३ ॥
क्वचिद्बाष्पाभिसंरुद्धान्वर्षागमसमुत्सुकान् ॥ कुटजान्पश्य सौमित्रे पुष्पितान्गिरिसानुषु ॥
मम शोकाभिभूतस्य कामसंदीपनान्स्थितान् ॥ १४ ॥

रजः प्रशान्तं सहिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः ॥
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् ॥ १५ ॥
संप्रस्थिता मानसवासलुब्धाः प्रियान्विताः संप्रति चक्रवाकाः ॥
अभीक्ष्णवर्षोदकविक्षतेषु यानानि मार्गेषु न संपतन्ति ॥ १६ ॥

मेघा एव कृष्णाजिनानि तेषां धराः । नीलवर्णतया तद्रूपणं । शुभ्रत्वेन धाराया उपवीतत्वरूपणं । धारा निर्झरधाराः । मारुतापूरितगुहा इत्यनेन शब्दहेतुवायुमत्कण्ठत्वमुच्यते । प्राधीताः प्रकर्षेणाध्येतुमुपक्रान्ताः । आदिकर्मणि क्तः । रूपकानुप्राणित उपमालंकारः ॥ १० ॥ विद्युद्भिरेव हैमीभिः कशाभिः । व्यस्तरूपकं । ताडितमिव स्थितं । स्तनितमेव निर्घोषो यस्य तत् । अतएव अन्तः सवेदनमिवाम्बरं भाति । कशाभिघातेन उच्चैरधीयानसखेदमाणवकसाम्यमुच्यते । उपमोत्प्रेक्षारूपकाणामङ्गाङ्गिभावेन सङ्करः ॥ ११ ॥ स्फुरन्ती चलन्ती । तपस्विनी शोच्या ॥ १२ ॥ घनैरनुलिप्ता इव स्थिताः । नष्टग्रहनिशाकराः अदृष्टशुक्रादिग्रहचन्द्राः । "णश अदर्शने" इत्यस्मान्निष्ठा । यद्वा नष्टग्रहः ग्रहणरहितः अदृश्यमान इत्यर्थः । तादृशश्चन्द्रो यासु ताः । अतएव प्रतिहताः अज्ञातप्राच्युदीच्यादिदिशाविभागाः । ता इमाः दिशः । मन्मथवतां सस्त्रीकाणां । हिताः सुखकराः । विरहिणां तु दुःखकरा इत्यर्थः । यद्वा मन्मथवतां अभिसारिकजनानां । हिताः ॥ १३ ॥ क्वचिदित्यादिसार्धश्लोक एकान्वयः । बाष्पाभिसंरुद्धान् अभिनवजलकणसेचनसमुत्थनिदाघोष्मसमावृतान् । कामुकपक्षे आनन्दबाष्पवतः । वर्षागमेन समुत्सुकान् आप्यायितान् । अन्यत्र स्त्रीसङ्गमसन्तुष्टान् । गिरिसानुषु पुष्पितान् । अन्यत्र सहासान् । अतएव मम शोकाभिभूतस्य कामसंदीपनान् । अन्यरतिदर्शनस्योद्दीपनत्वादिति भावः । अनेन केषुचिदस्मदीयेषु ब्रह्मानुभवसंतुष्टेषु सत्सु केषांचिदस्मदनुभवाभावो ममातीव दुःसहइत्युक्तं ॥ १४ ॥ अथ भगवत्कटाक्षफलमन्यापदेशेन दर्शयति—रज इत्यादिना । रज इत्युपलक्षणं । रजस्तमसी प्रक्रान्ते । वायुशब्देन सततसंसारगतिर्जन उच्यते । सहिम इति शीतलहृदयत्वं । निदाघेत्यादिना आध्यात्मिकादितापशान्तिः । यात्रा संसारगतिः । स्वदेशान् स्वप्राप्यभूतपरमपदं । स्वभावार्थस्तु स्पष्टएव ॥ १५ ॥ मानसवासलुब्धाः हंसाः संप्रस्थिताः वर्षभीततया क्वचिल्लीनाः । परमहंसाख्यानां संन्यासिनां चातुर्मास्यतया संचारनिवृत्तिर्द्योत्यते । चक्रवाकाः कामोद्रेकेण प्रियासमन्विता भवन्ति । यानासंपतने हेतुः अभीक्ष्णेति । यानानि शकटरथादीनि । संप्रस्थिता इत्यनेन कृतवैराग्यत्वमुच्यते । प्रियान्विताइति भगवद्भक्तिः ।

**तनि०** अन्तस्संनिहितशब्देन प्राधीयमानवेदानांमाणवकानां कशाघातजनितरुदितं गुरूच्चारणानूच्चारणशब्दमिश्रमित्युच्यते ॥ ११ ॥ **स०** अस्यापत्यं इः चतुर्मुखः । तं रावयतीति इरावणः । "सभाषामकरोत्" इतिश्रुतेः । एतादृशस्य मे अङ्के स्फुरन्ती तपस्विनीवैदेहीव प्रतिभाति । स्वस्य नीलमेघसदृशत्वादितिभावः ॥ १२ ॥ **स०** मन्मथवतांहितामितिषष्ठीप्रयोगेण स्वस्य तत्कृतबाधा नास्तीति सूचयति ॥ १३ ॥ **स०** ममच शोकश्च ममशोकौ । ताभ्याममभिभूतस्यपुरुषस्य स्थितान् अचञ्चलान् ॥ १४ ॥ **रामानु०** सहिमः सशीकरः । स्थिता निवृत्ता स्थिता यान्तीतिच सिद्धवन्निर्देशः वर्षाकाले संभावितत्वात्कृतः ॥ १५ ॥ **टीका०** नसंपतन्ति नभ्रमन्ति ॥ १६ ॥

[ पा० ] १ क. ग. च.—ट. भातिमे. २ ख. संनद्धान्.

क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ॥
क्वचित्क्वचित्पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ १७ ॥
व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ॥
मयूरकेकाभिरनुप्रयातं[1] शैलापगाः शीघ्रतरं वहन्ति ॥ १८ ॥
रसाकुलं षट्पदसन्निकाशं प्रभुज्यते जम्बुफलं प्रकामम् ॥
अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम्[2] ॥ १९ ॥
विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसन्निकाशाः ॥
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २० ॥
वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि ॥
वनानि निर्वृष्टबलाहकानि पश्यापराह्णेष्वधिकं विभान्ति ॥ २१ ॥
समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः ॥
महत्सु शृङ्गेषु महीधराणां विश्रम्यविश्रम्य[3] पुनः प्रयान्ति ॥ २२ ॥
मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः ॥
वातावधूता वरपौण्डरीकी लम्बेव माला रचिताम्बरस्य[4] ॥ २३ ॥

अभीक्ष्णेत्यादिना भगवत्कटाक्षेण निवृत्तकर्मत्वमुच्यते ॥ १६ ॥ प्रकीर्णाम्बुधरं विप्रकीर्णमेघं । अतएव क्वचित्प्रकाशं क्वचिदप्रकाशं नभः । क्वचित्क्वचित् पर्वतसन्निरुद्धं । शान्तमहार्णवस्य निस्तरङ्गसमुद्रस्य । रूपं स्वरूपमिव भाति । अनेनमन्दाज्ञानेन प्रकाशाप्रकाशं ब्रह्मस्वरूपमुच्यते ॥ १७ ॥ सर्जैः असनपुष्पैः । कदम्बपुष्पैश्च व्यामिश्रितं संमिलितं । पर्वतधातुताम्रमित्यनेन नदीनां पर्वतादुत्पत्तिरुक्ता । मयूराणां केकाभिः केकारवैः । अनुप्रयातं अनुस्यूतं । नवं जलं वहन्ति । अत्र सात्विकराजसज्ञानमिश्रं भगवद्विषयानुरागयुक्तं भक्तिप्रेरितस्तुतिरवमुखरितपरिसरं हृदयं वहन्तो भक्ताः कथ्यन्ते ॥१८॥ रसाकुलं माधुर्यव्याप्तं । षट्पदसन्निकाशं भृङ्गवन्नीलं । जम्बू जम्ब्वाख्यं फलं । " जम्बूःस्त्री जम्बु जाम्बवं " इत्यमरः । प्रकामं अतिशयेन प्रभुज्यते । जनैरिति शेषः । अनेकवर्णं रक्तहरिताद्यनेकरूपं । आम्रफलं चूतफलं । अनेन भगवत्कृपया जीवफलभोग उच्यते ॥ १९ ॥ नक्षत्रमालास्थानीया बलाकमाला । शैलेन्द्रस्य कूटानां शृङ्गाणामाकृतेः संस्थानस्य सन्निकाशास्तुल्याः । अनेन सर्वलोकप्रसिद्धाः सकलवावदूकाः वेदमार्गप्रतिष्ठापका उक्ताः ॥ २० ॥ निर्वृष्टाः वर्षुकाः बलाहकाः मेघाः येषु तानि । कर्तरि क्तः । अत्र दिव्यदम्पत्योः स्वकरोद्धृतकुम्भजलसिक्तालवालकलितोद्यानतुल्या लोकाः सर्वे भगवत्कृपावर्षेण संपन्नार्थकामा इत्युच्यते ॥ २१ ॥ समुद्वहन्तइति सगर्भस्त्रीजनाः पर्वतमारोहन्त इव महत्सु शृङ्गेषु पुनःपुनर्विश्रम्य प्रयान्ति । अनेन " हृदयेनोद्वहन्हरिं " इत्युक्तरीत्या भगवद्ध्यानेन युक्ताः विशदज्ञानाः सन्ततस्तुतिशीलाः पूर्वाघोत्तराघक्लेशं क्रमेणोत्तीर्य परां कोटिमापन्नाः प्रतिपाद्यन्ते ॥ २२ ॥ गर्भधारणार्थं मेघमभिकामयत इति मेघा-

स० प्रकीर्णांबुधरंनभः । क्वचित्प्रकाशमित्यादि क्रियाविशेषणं । विभाति । पर्वतैःसंनिरुद्धं संवृतं शान्तंमहार्णवस्वरूपमिव दृश्यते । अभूतोपमेयं ॥ रामेश्वरे जलस्तंभस्योत्तरत्र करिष्यमाणत्वात् ॥१७॥ शि० रसाकुलं रसैर्व्याप्तं । षट्पदसंनि षट्पदैःसंनीयते रसपानार्थंप्राप्यते । तत् अनेकवर्णं पवनावधूतं वायुनाकंपितं विपक्कं जंबुफलं आम्रफलंच भूमौपतति ।अतएव काशं सुखव्याप्तंयथाभवतितथा प्रकामं भुज्यतेजन्तुभिरितिशेषः ॥ १९ ॥ टीका० लोकेभारभृतामयंस्वभावइतिभावः ॥ स० सलिलातिभारं सलिलानांअत्यन्तभारंसमुद्वहन्तः । बलाकिनः बलाकाएषांसन्तीतिशिखादित्वादिनिः । " बलाकादयश्च " इतिनिपातनात्साधुः । "बलाकाबिसकण्ठिका" इत्यमरः । यद्वा पूर्वमत्रोत्तरत्रचबलाकशब्दोबकवाचीपुँल्लिङ्गोबोध्यः । अतएवोक्तं "बलाकादयश्चे"तिसूत्रव्याख्यानावसरेमनोरमायां । " बलाकाबकपङ्क्तिःस्याद्बलाकाबिसकण्ठिका । बलाकाकामुकीप्रोक्ताबलाकश्चबकोमतः " इतितत्वसुबोधि-

[ पा० ] १ क. ख. ग. ङ. च. ज. ञ. रुतानुयातं. २ ख. विपक्कं. ३ क. ख. विमृश्यविश्रम्य. ४ छ. झ. ट. रुचिरांबरस्य.

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ॥
गात्रानुवृत्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥ २४ ॥
निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति ॥
हृष्टा बलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥ २५ ॥
जाता वनान्ताः शिखिसंप्रनृत्ता जाताः कदम्बाः सकदम्बशाखाः ॥
जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥ २६ ॥
वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ॥
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥ २७ ॥
प्रहर्षिताः केतकपुष्पगन्धमाघ्राय हृष्टा वननिर्झरेषु ॥
प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ २८ ॥
धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ॥
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९ ॥

भिकामा परिसंपतन्ती मेघंप्राप्तुमागच्छन्तीत्यर्थः । संमोदिता संजातसंमोदा । पुण्डरीकाणां सितपद्मानां विकारः पौण्डरीकी वरा चासौ पौण्डरीकीचेति कर्मधारयः । लम्बा रचिता लम्बमानतया कृता । अनेन भगवन्तं कालमेघश्यामं प्राप्तुं प्रवृत्ता भक्तिरूपापन्नधीर्भवति सत्पुरुषस्येति द्योत्यते ॥ २३ ॥ बालेन्द्रगोपैः अन्तरेषुचित्रितेन नानावर्णीकृतेन । नवशाद्वलेन उपलक्षिता भूमिः । शुकप्रभेण प्राचुर्येण शुकवर्णेन । लाक्षोक्षितकम्बलेन मध्येमध्ये लाक्षारसरञ्जितेन कम्बलेन नारीवभाति । अत्र भगवत्कटाक्षवर्षेण किंचिदुदञ्चितभक्तिका उच्यन्ते ॥ २४ ॥ निद्रेति । आषाढे स्वापारम्भः । श्रावणे निद्राशक्तिरुच्यते। अत्र तुल्ययोगितालंकारः। लोकोज्जीवनप्रवृत्त्या हरेस्तदेकचित्तत्वं शेषभूतानां शेषिपारतन्त्र्यसिद्धिश्च द्योतिता ॥ २५ ॥ शिखिभिः संप्रनृत्तं येषु ते तथोक्ताः । कदम्बशब्देन कदम्बपुष्पमुच्यते । सकदम्बपुष्पशाखा इत्यर्थः । सस्यवनेन सस्यसमूहेन । अभिरामा रम्या । अनेन सर्वानुकूल्यमुक्तं ॥ २६ ॥ वहन्तीति यथासंख्यमलंकारः । प्लवङ्गाः वानराः । समाश्वसन्ति । एकत्रैवबहुभक्ष्यलाभेन अचलचित्ता भवन्तीत्यर्थः ॥ २७ ॥ हृष्टाः पूर्वमेव संतुष्टाः । केतकगन्धमाघ्राय प्रहर्षिताः प्रकर्षेण संतुष्टाः । वननिर्झरेषु यः प्रपातशब्दः पतनकृतशब्दः तेनाकुलिताः ॥ २८ ॥ क्षणार्जितं तत्क्षणसंपादितं । पुष्परसेनावगाढं उत्पन्नं मदं । धारानिपातैः अभिहन्यमानाः अतएव पुष्पं विहायकेवलं शाखासु लम्बमा-

न्यामप्येवमेवबोध्यं । विश्रम्यविश्रम्यभारवहत्वादितिभावः ॥ २२ ॥ स० निद्रा निद्रामुद्रा । केशवं नारायणं । आषाढशुक्लैकादश्यांहरेःस्वापोक्तेः ॥ २५ ॥ शि० नदीप्रभृतयःयथाक्रमंवहनादिकुर्वन्ति । तत्रप्लवङ्गाः वानराः । समाश्वसन्ति इदानींनकस्माच्चित्तेभयमितिबोधयन्तीत्यर्थः । समाह्वयन्तीतिपाठान्तरं । तत्र हर्षेणेतस्ततोगच्छन्तीत्यर्थः ॥ स० वहन्तीत्यादेर्यथाक्रममन्वयः ॥ २७ ॥ प्रहर्षिताः हृष्टाः । स्वार्थिकेङन्तत्वादिड्डुपपद्यते । केतकिगन्धं केतकीनांगन्धआमोदस्तं । अगन्धद्रव्यवचनत्वादेकवचनंयुज्यते। केतकिगन्धमित्यत्र "ङ्यापोःसंज्ञाछन्दसोः—"इत्युक्तेःकेतकीतिसंज्ञात्वाद्ध्रस्वइतिबोध्यं । प्रपातशब्दाकुलिताः प्रपातशब्दाः उन्नतप्रदेशान्नतप्रदेशेजलपातजनितध्वनयः । तैराकुलिताःयेप्रहृष्टास्तैर्मयूरैःतेष्वेवमेघबुद्धिभिर्बर्हिभिःसार्धंनदन्तीत्यन्वयः । एतेन मेघदर्शनाभावान्मयूरसाहित्यवर्णनमयुक्तं । प्रहर्षिताइतिपूर्वमुक्तिःउत्तरत्रप्रहृष्टाइतिवचनंचतदिवेतिनिरस्तं । यद्वा प्रहर्षिताः संतोषकारणवस्तुभिस्तोषिताः । प्रहृष्टाः स्वयंतुष्टाइतिमन्तव्यं । आघ्रायमत्ताइतिपाठे समदाःससंतोषाइत्यर्थोऽवसेयः ॥ २८ ॥ स० क्षणार्जितंएकेनक्षणेनैवार्जितंसंपादितं । पुष्परसावगाढं पुष्पमकरन्दोन्नद्धं । मदं गर्वं । धारानिपातैरभिहन्यमानास्त्यजन्तीतियोजना । जलधारापातेनकदंबशाखावलंबनं । तेनपुनःपुष्पान्तरार्जनाभावः आर्जितस्यापित्यागः । क्षणार्जितंपुष्परसावगाढंमदमित्यनेन मदनिर्भरताद्योत्यतइतिज्ञेयं । क्षणेनोत्सवेनार्जितमितिव्याख्यानेबहुदिनार्जितत्वस्यापिशक्योक्तित्वान्माहात्म्यातिशयालाभ-

[ पा० ] १ क. झ. ट. गात्रानुपृक्तेन. ख. ङ. ज. ञ. गात्रानुषक्तेन. छ. गात्रानुसक्तेन. २ ग. वराभिरामा. ३ क. झ. ञ. प्लवङ्गमाः. ४ क. गन्धानाघ्राय. ५ घ. विलीयमानाः.

अङ्गारचूर्णोत्करसन्निकाशैः फलैः सुपर्याप्तरसैः समृद्धैः ॥
जम्बूद्रुमाणां प्रविभान्ति शाखा निलीयमाना इव षट्पदौघैः ॥ ३० ॥
तटित्पताकाभिरलङ्कृतानामुदीर्णगम्भीरमहारवाणाम् ॥
विभान्ति रूपाणि बलाहकानां रणोद्यतानामिव वारणानाम् ॥ ३१ ॥
मार्गानुगः शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य ॥
युद्धाभिकामः प्रतिनागशङ्की मत्तो गजेन्द्रः प्रतिसन्निवृत्तः ॥ ३२ ॥
क्वचित्प्रगीता इव षट्पदौघैः क्वचित्प्रनृत्ता इव नीलकण्ठैः ॥
क्वचित्प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ ३३ ॥
कदम्बसर्जार्जुनकन्दलाढ्या वनान्तभूमिर्नववारिपूर्णा ॥
मयूरमत्ताभिरुतप्रनृत्तैरापानभूमिप्रतिमा विभाति ॥ ३४ ॥
मुक्तासकाशं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् ॥
हृष्टा विवर्णच्छदना विहङ्गाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३५ ॥
षट्पादतन्त्रीमधुराभिधानं प्लवङ्गमोदीरितकण्ठतालम् ॥
आविष्कृतं मेघमृदङ्गनादैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३६ ॥
क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः ॥
व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३७ ॥

नाः । षट्चरणाः भृङ्गाः । त्यजन्ति । कदम्बपुष्पेषु रसबाहुल्यात्क्षणेन मदः क्षणेन तद्धानिश्च भवतीत्यर्थः ॥ २९ ॥ अङ्गारचूर्णानां इङ्गालचूर्णानां उत्करैः समूहैस्तुल्याः अङ्गारचूर्णोत्करसन्निकाशाः तद्वन्नीला इत्यर्थः ॥ ३० ॥ तटिदिति विद्युत्पताका इति श्लोकोक्तमेवार्थमादरातिशयेन भङ्ग्यन्तरेणोक्तवान् ॥ ३१ ॥ मार्गानुगः सन्मार्गचारी वेदमार्गानुसारी । दिग्जयाय प्रवृत्तः प्रतिवादिशब्दं श्रुत्वा वादाहवकाङ्क्षी प्रतिसन्निवृत्तः पुरुषधौरेयोत्र गम्यते ॥ ३२ ॥ प्रकृष्टं गीतं येषां ते प्रगीताः एवमुत्तरत्रापि योज्यं । अनेकाश्रयिणः गीतनृत्तमदाश्रयिणः ॥ ३३ ॥ कदम्बैः सर्जैः बन्धूकैः कन्दलैः भूतालपुष्पैश्चाढ्या । मयूराणां मत्ताभिरुतैः प्रनृत्तैश्च । आपानभूमिप्रतिमा मद्यपानस्थलीतुल्या विभाति । सा हि संस्कारपुष्पाढ्या मद्यपूर्णा उन्मादनृत्तवत्पुरुषयुक्ता च भवति ॥ ३४ ॥ विवर्णच्छदनाः विविधवर्णपक्षाः । विहङ्गाः चातकाः । सुरेन्द्रदत्तं देवेन्द्रदत्तं । चातकाः भूस्थं जलं न पिबन्ति किंतु सद्यो वर्षदेवताभूतेन्द्रदत्तमेव पिबन्तीति प्रसिद्धिः ॥ ३५ ॥ षट्पादा भृङ्गा एव तन्त्री तस्या मधुराभिधानं मधुरनादः यस्मिंस्तत् । प्लवङ्गमोदीरितं मण्डूकनादएव कण्ठतालो यस्मिंस्तत् । मेघाएव मृदङ्गा मर्दलाः तेषांनादैराविष्कृतं प्रकटीकृतं संगीतं वनेषु प्रवृत्तमिव संबभूवेतियोजना ॥ ३६ ॥ संगीतविषये केचिन्नृत्यन्ति केचिद्गायन्ति केचित्प्रधाना अनुभवन्ति तत्सर्वं वनेपि दर्शयति । नृत्यन्तो मयूराः नर्तकस्थानीयाः । नदन्तो मयूराः

इतिज्ञेयं ॥ २९ ॥ **रामानु०** अत्राङ्गारशब्दः शान्ताङ्गवाची । अन्यथा षट्पदौघसाम्यंनस्यात् ॥ **ति०** अङ्गारः शान्ताग्निः । तच्चूर्णस्ययउत्करस्तत्समैः । अनेनफलानामतिमहत्त्वंसूचितं । अत्युक्तिरत्रालङ्कारः ॥ ३० ॥ **स०** उदीर्णः उच्चः । गंभीरः उच्चतरः । महान् उच्चतमः । रवोयेषांतेषां । रूपाणि आकाराः ॥ ३१ ॥ **ती०** स्वनिवासभूमिशैलवनानुसारी । मार्गानुगः मार्गानुगमनेनसंप्रस्थितःपृष्ठतोमेघरवंनिशम्य प्रतिनिवृत्तइतिसंबन्धः ॥ **ति०** प्रतिनादशङ्की शत्रुभूतगजान्तरनादशङ्की ॥ ३२ ॥ **टी०** मुक्ताभिःसमानःकाशःप्रकाशोयस्यतत्तथोक्तं ॥ ३५ ॥

[ **पा०** ] १ ङ.—ट. निपीयमानाइव. २ ध.—छ. झ. ञ. ट. रणोत्सुकानामिव. ३ ख. युद्धाभिरामः. ४ ख. झ. ट. प्रतिनादशङ्की ५ ग. क्वचिच्चमत्ताइव. ६ ङ. ज. झ. ट. भूमिर्मधुवारि. ७ क. निकाशं. छ. झ. ट. समाभं. ङ. च. ज. ञ. समानं. ८ क. ङ. च. ज. ञ. मधुराभिनादं. ९ क. त्प्रमत्तैः. १० क. दुन्नमद्भिः.

स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसन्निरुद्धाम् ॥
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥ ३८ ॥
नद्यः समुद्वाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा ॥
दृप्ता नवप्राभृतपूर्णभोगा द्रुतं स्वभर्तारमुपोपयान्ति ॥ ३९ ॥
नीलेषु नीलाः प्रविभान्ति सक्ता मेघेषु मेघा नववारिपूर्णाः ॥
दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः ॥ ४० ॥
प्रहृष्टसन्नादितबर्हिणानि सशक्रगोपाकुलशाद्वलानि ॥
चरन्ति नीपार्जुनवासितानि गजाः सुरम्याणि वनान्तराणि ॥ ४१ ॥
नवाम्बुधाराहतकेसराणि द्रुतं परित्यज्य सरोरुहाणि ॥
कदम्बपुष्पाणि सकेसराणि नवानि हृष्टा भ्रमराः पतन्ति ॥ ४२ ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः ॥

गायकस्थानीयाः । वृक्षाग्रनिषण्णकायाः मयूराः अनुभवितृस्थानीयाः । अतस्तैः संगीतं प्रवृत्तमिव ॥ ३७ ॥ प्लवगाः मण्डूकाः । घनानां स्वनैः चिरसन्निरुद्धां चिरकालव्यापारनिरोधिकां । निद्रां विहाय प्रबुद्धा इति संबन्धः ॥ ३८ ॥ अथ नदीनां स्वभर्तृसङ्गमिच्छन्तीभिरुत्कटमन्मथाभिर्युवतिभिः साम्यमुच्यते । समुद्वाहितचक्रवाकाः वारिपूरोन्नमितचक्रवाकाः स्तनस्थानीयाः । अपवाहयित्वेत्येतन्नवोढोचितलज्जातिलङ्घनस्थानीयं । नवप्राभृतपूर्णभोगाः । प्राभृतं फलाद्युपहारः । भोगश्चन्दनकर्पूरकुसुमताम्बूलादिः । स्वभर्तारं समुद्रं । उपोपयान्ति उपयान्तीत्यर्थः ॥३९॥ दवाग्निदग्धेषु बद्धमूला दवाग्निदग्धाः शैला इव नीलेषु मेघेषु सक्ता नववारिपूर्णाः नीला मेघाः प्रविभान्ति । बद्धमूलत्वस्थाने नववारिपूर्णा इत्युक्तं । उभयत्र स्थायित्वमर्थः ॥ ४० ॥ वनान्तराणि वनमध्यानि चरन्ति । वनमध्येषु चरन्तीत्यर्थः ॥ ४१ ॥ कदम्बकेसराणामहतत्वे हेतुः—नवानीति ॥ ४२ ॥ मृगेन्द्राः सिंहाः । नगेन्द्राः पर्वतश्रेष्ठाः । रम्याः पल्लवपुष्पाकु-

ति० अनेकरूपाकृतिःसंस्थानं वर्णःनीलपीतादिः नादश्चयेषां ॥ ३८ ॥ ती० तटानिशीर्णान्यपवाहयित्वेत्येतत् वृद्धपरिजनातिक्रमस्थानीयं नवोढोचितलज्जातिलङ्घनस्थानीयंवा ॥ स० समुद्वाहितचक्रवाकाः उत्थापितचक्रवाकपक्षिण्यः । अन्यत्रोपमानपदेनोपमेयस्तनानांग्रहणं । यद्वाहितचक्रवाकेत्यनेनसद्योवेदीकृतस्तनत्वेनतारुण्यंद्योत्यते । तटानिप्रवाहवेगतोविशीर्णानि अवहापयित्वा त्याजयित्वा । अनेनचोद्वेलप्रसर्पणंसूचितंभवति । अन्यत्रजरत्यादीनांत्याजनंज्ञेयं । नवंनूतनंप्रावृतःप्रगतमावृतमावरणंयस्यसः । सचासौपूर्णःस्वस्वमनोनुसारः भोगोयासांतास्तथा । अन्यत्रनदीपक्षेवप्रेषुतटेषुआवृताश्चतेपूर्णाःपुष्टाभोगाःनागाङ्गानिप्रवृत्तपूर्णभोगानविद्यन्तेतेयासांताः । तीव्रप्रवहनेनानधिगततटस्वान्तः । सरत्सरीसृपशरीराइतिभावः । अवहापयित्वेतिल्यबभावआर्षः । यद्वा “ छन्दसिपरेव्यवहिताश्च ” इत्युक्तेरवेत्यस्यशीर्णपदेनान्वयेहापयित्वेतिसाधुः । स्वभर्तारं समुद्रं । अन्यत्रपतिं । “ वप्रस्तुरेणौचरोधसि ” इतित्रिकाण्डशेषः । “ वप्रःप्राकाररोधसोः ” इतिविश्वः । अथवा नवप्रावृतेषु नूतनप्रावरणेषु स्वकञ्चुकेषुपूर्णाभोगाःशरीराणियेषांसर्पाणांतेतथा । दृप्ताः आसम्यक्प्रवृत्तपूर्णभोगायासांताः । उपोपयन्ति “ प्रसमुपोदःपादपूरणे ” इत्युपोपसर्गाद्वित्वं । वप्रावृतः रेणुरूषितोनभवतीतिनवप्रावृतः सचासौपूर्णः तटद्वितयसंबन्धोभोगोविलासोयासांताः । वप्रैरेणुभिः आवृतं आवरणं तैःपूर्णारेणुरूषितास्तेनभवन्तीतितथातेभोगायासांतावा । स्वभर्तारमुपोपयन्ति । दृप्ताइत्यादिनास्मरपारवश्यंप्राग्विटघटनाच्च सूचितेइतिज्ञातव्यं । नदीपक्षेकांश्चननदान्मध्येऽध्वनस्संगम्यस्वभर्तारंसमुद्रमुपोपयान्तीत्यर्थः ॥ ३९ ॥ स० सशक्रगोपाकुलशाद्वलानि शक्रगोपैः तन्नामककीटविशेषैः आकुलैःशाद्वलैःसहितानि । नीपैरर्जुनैश्चवासितानिसुरभीकृतानिवनान्तराणिवनमध्यानि । वनविशेषानुद्दिश्यगजाश्चरन्ति संचरन्ति । बहुनैबिड्येनान्तर्झटितिगन्तुमशक्ताश्चरन्तीतिभावः । “ सप्तसुप्रथमा ” इत्युक्तेर्वनान्तरेषुसंचरन्तीतिवा । अथवावनान्तराणि । द्वितीयाबहुवचनं । चरन्ति भक्षयन्ति ॥ ४१ ॥ टीका० निभृताः निश्चलाः । दण्डया-

[ पा० ] १ च. छ. ज. ञ. विहगाः. २ छ. समुत्थापित. ३ ठ. न्यवहापयित्वा. ४ ङ. ज.—ट. प्रावृत. ५ क.—ट. नीलानववारिपूर्णामेघेषुमेघाःप्रतिभान्तिसक्ताः. ६ ङ.—ट. प्रमत्तसंनादित. ७ ङ.—ज. ञ. ट. ध्रुवं. ८ क. वनेषु. ९ क. ग. ङ.—ट. पिबन्ति. १० ङ. च. ज. ञ. वृषेन्द्राः. ११ छ. झ. ट. विक्रान्ततराः.

रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ४३ ॥
मेघाः [1]समुद्भूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः ॥
नदीस्तटाकानि सरांसि वापीर्महीं च कृत्स्नाम[2]पवाहयन्ति ॥ ४४ ॥
[3]वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः [4]समुदीर्णघोषाः ॥
प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो [5]जलैर्विप्रतिपन्नमार्गाः ॥ ४५ ॥
नरैर्नरेन्द्रा इव पर्वतेन्द्राः [6]सुरेन्द्रदत्तैः पवनोपनीतैः ॥
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६ ॥
घनोपगूढं गगनं [7]सतारं न भास्करो दर्शनमभ्युपैति ॥
नवैर्जलौघैर्धरणी [8]विसृप्ता तमोविलिप्ता न दिशः प्रकाशाः ॥ ४७ ॥
महान्ति कूटानि महीधराणां [9]धाराभिधौतान्यधिकं विभान्ति ॥
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ४८ ॥
शैलोपलप्रस्खलमानवेगाः शैलोत्तमानां विपुलाः प्रपाताः ॥
गुहासु सन्नादितबर्हिणासु हारा [10]विकीर्यन्त [11]इवाभिभान्ति ॥ ४९ ॥
[12]शीघ्रप्रवेगा विपुलाः प्रपाता निर्धौतशृङ्गोपतला गिरीणाम् ॥
मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्सङ्ग[13]तलैर्ध्रियन्ते ॥ ५० ॥
सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः ॥ [14]पतन्तीवाकुला दिक्षु तोयधाराः समन्ततः ॥ ५१ ॥
निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ॥ विकसन्त्या च मालत्या गतोस्तं ज्ञायते रविः ॥ ५२ ॥
वृत्ता यात्रा नरेन्द्राणां सेना [15]प्रतिनिवर्तते ॥ वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ५३ ॥

रादिमत्त्वादिति भावः । प्रक्रीडित इति कर्तरि निष्ठा ॥ ४३ ॥ अपवाहयन्ति परिवाहयन्ति ॥ ४४ ॥ वर्षप्रवेगाः अतिवेगा वृष्टय इत्यर्थः । विपुलाः निरन्तराः । नद्यो जलैः विप्रतिपन्नमार्गाः विरुद्धं प्राप्तमार्गाः ॥ ४५ ॥ अभिषिक्ताः नरेन्द्राः स्वां श्रियमिव अभिषिच्यमानाः पर्वताः स्वं रूपं दर्शयन्ति। नैर्मल्यादिनेति भावः ॥ ४६ ॥ तमोविलिप्ता दिशः न प्रकाशाः ॥ ४७ ॥ प्रपातैः निर्झरैः ॥ ४८ ॥ शैलोत्तमानां विपुलाः प्रपाताः निर्झराः । शैलोपलप्रस्खलमानवेगाः सन्तः । सन्नादितबर्हिणासु गुहासु विकीर्यन्तः विकीर्यमाणाः । हारा इव अवभान्ति ॥ ४९ ॥ निर्धौतानि निर्मलीकृतानि शृङ्गोपतलानि शृङ्गसमीपतलानि यैस्ते तथा । गुहोत्सङ्गतलैः गुहामध्यतलैः ॥ ५० ॥ तोयधाराः मौक्तिका इव पतन्तीति स्वरूपोत्प्रेक्षा ॥ ५१ ॥ निलीयमानैः नीडेषु गच्छद्भिः ॥ ५२ ॥ वृत्ता निवृत्ता । अतोग्रे गता सेना प्रतिनिवृत्ता । सलिलेन वैराणि समीकृतानि । सलिलप्रतिरोधाद्वैराणि शान्तानीत्यर्थः । मार्गाश्च समीकृताः

आदिव्यापाररहिताइत्यर्थः ॥ ४३ ॥ **रामानु०** अपवाहयन्ति वर्षन्ति ॥ **शि०** अपवाहयन्ति पूरयन्तीत्यर्थः ॥ **ति०** अपवाहयन्ति प्रवहज्जलानिकुर्वन्ति ॥ ४४ ॥ **ति०** वितृप्ता जामितांप्राप्ता ॥ ४७ ॥ **टीका०** स्वर्गस्त्रीहारमौक्तिकाः । मौक्तिकशब्दः पुँल्लिङ्गोप्यस्ति । " मुक्तास्त्रीमौक्तिकोस्त्रियां " इत्युक्तेः ॥ ५१ ॥

**[ पा० ]** १ क. ग. घ. च. छ. झ. ञ. ट. समुद्धूत. २ ख. मभिपूरयन्ति. ख. ङ. च. ज. मभितर्पयन्ति. ३ ख. ग. वर्षप्रयोगाः. ४ छ. झ. ट. समुदीर्णवेगाः. ५ ख. ग. छ. झ. ट. जलंविप्रतिपन्न. ६ ध. झ. सुरेन्द्रनीतैः. ७ छ. झ. ञ. ट. नतारा. ८ क. ग. ङ. च. छ. झ. ञ. ट. वितृप्ता. ९ छ. झ. ट. धाराविधौतानि. १० क. विशीर्यन्त. घ. विकीर्णाइवभान्तितासु. ११ ख. ङ. झ. ञ. ट. इवावभान्ति. १२ झ. शीघ्रंप्रवेगाः. ङ. सुशीघ्रवेगाः. १३ ख. वनैः. १४ झ. ट. पतन्ति चातुला. १५ छ. झ. ट. पथ्येववर्तते.

मासि प्रोष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम् ॥ अयमध्यायसमयः सामगानामुपस्थितः ॥ ५४ ॥
निवृत्तकर्मायतनो नूनं संचितसंचयः ॥ आषाढीमभ्युपगतो भरतः कोसलाधिपः ॥ ५५ ॥
नूनमापूर्यमाणायाः सरय्वा वर्धते रयः ॥ मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ५६ ॥
इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते ॥ विजितारिः सदारश्च राज्ये महति च स्थितः ॥ ५७ ॥
अहं तु हृतदारश्च राज्याच्च महतश्च्युतः ॥ नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥ ५८ ॥
शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः ॥ रावणश्च महाञ्शत्रुरपारं प्रतिभाति मे ॥ ५९ ॥
अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान् ॥ प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥ ६० ॥
अपि चातिपरिक्लिष्टं चिराद्दारैः समागतम् ॥ आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥ ६१ ॥
स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् ॥ उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ ६२ ॥
तस्मात्कालप्रतीक्षोहं स्थितोस्मि शुभलक्षण ॥ सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ६३ ॥
उपकारेण वीरो हि प्रतिकारेण युज्यते ॥ अकृतज्ञोप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ६४ ॥

तमेवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ॥
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन्दर्शनमात्मनः शुभम् ॥ ६५ ॥

जलेन मार्गामार्गविवेको नासीदित्यर्थः ॥ ५३ ॥ अनेन भाद्रपदो मासः संप्रवृत्त इति सूचयति । ब्रह्म वेदं । विवक्षतां अध्येतुमिच्छतां । अध्यायसमयः वेदारम्भसमयः ॥ ५४ ॥ निवृत्तं कर्म यस्य तन्निवृत्तकर्म आयतनं गृहं यस्य सः निवृत्तकर्मायतनः । उपरतसकलगृहोपकरणसंपादन इत्यर्थः । संचितसंचयः संपादितधननिचयः । आषाढीं आषाढमाससमाप्तिपौर्णमासीं । अभ्युपगतः व्रताङ्गत्वेन स्वीकृतवान् । अनेन चत्वारोवार्षिका मासा इति पूर्वोक्तमासानां आषाढः प्राथमिक इति सूचितम् ॥ ५५ ॥ अयोध्यायाः अयोध्यावासिजनस्य ॥ ५६ ॥ वर्षा इत्यत्यन्तसंयोगे द्वितीया ॥ ५७ ॥ अहं त्विति अजितारिश्चेत्यपि ज्ञेयं । क्लिन्नं आर्द्रं ॥ ५८ ॥ मम शोकश्च विस्तीर्णः । वर्षाश्च भृशदुर्गमाः अत्यन्तं दुरत्ययाः । रावणश्च महाञ्शत्रुः । अतश्च एतत्त्रितयं अपारं दुस्तरं प्रतिभाति ॥ ५९ ॥ अयात्रां राज्ञामेतत्कालोचितदण्डयात्राभावं । प्रणते चैव इदानीमेव सीतान्वेषणरावणनिरसनोद्योगः कर्तव्य इति प्रार्थनापूर्वकं प्रह्वीभूते सत्यपीत्यर्थः ॥ ६० ॥ आत्मकार्यगरीयस्त्वात् अस्मत्प्रयोजनस्यातिमहत्त्वात् । अल्पयत्नेन अल्पकालेनचासाध्यत्वादित्यर्थः । वक्तुं नियोक्तुं । नेच्छामीति भूतार्थे लट् ॥ ६१ ॥ कालं शरत्कालं ॥ ६२ ॥ उक्तोपपत्तिभिः पूर्वसर्गोक्तं द्रढयति—तस्मादित्यादिना ॥ ६३ ॥ अकृतज्ञः कृतोपकारानभिज्ञः पुरुषः । अप्रतिकृतः प्रत्युपकारमकुर्वन् । सत्त्ववतां महात्मनां । मनो हन्ति क्षोभयति । वीरः प्रत्युपकारसमर्थः । उपकारेण हेतुना प्रतिकारेण प्रत्युपकारेण युज्यते हि युज्यत एव । सुग्रीवोप्येवंविधत्वात्प्रत्युपकारं करिष्यतीतिभावः । अनेन प्रत्युपकारं कारयित्वा लोके प्रत्युपकारधर्मं प्रवर्तयिष्यामीत्याशयः ॥ ६४ ॥ अस्य

**शि०** ब्रह्म वेदंविवक्षतां पठितुमिच्छतां सामगानां । प्रौष्ठपदे भाद्रेमासि । अयंशुक्लतृतीयातिथिः । अध्यायसमयः उपाकरणकालः । उपस्थितः प्राप्तः ॥ ५४ ॥ **ती०** निवृत्तकर्मायतनः निवृत्तंकर्मयस्यतत् निवृत्तकर्म आयतनंगृहंयस्यतथोक्तः । उपरतगृहव्यापारइत्यर्थः । आषाढींआषाढमासपरिसमाप्तिपौर्णमासीं अभ्युपगतः व्रताङ्गत्वेनस्वीकृतवान् । तदुक्तंमहाभारते—" आषाढेतुसितेपक्षएकादश्यामुपोषितः । चातुर्मास्यव्रतंकुर्याद्यत्किंचित्प्रयतोनरः । वार्षिकांश्चतुरोमासान्व्रतंकिंचित्समापयेत् । असंभवे तुलार्केपिकर्तव्यंतत्प्रयत्नतः " इति ॥ ५५ ॥ **रामानु०** अपिचातिपरिक्लिष्टश्चिराद्दारैःसमागतः" इतिप्रथमान्तपाठेइतिकरणं द्रष्टव्यं ॥ ६१ ॥ इत्यष्टाविंशःसर्गः ॥ २८ ॥

**[ पा० ]** १ ङ. च. ञ. भाद्रपदे. २ ख. मार्गांश्च. ३ क. ख. ग. ङ.—ट. रपारः. ४ झ. ट. चापि. घ. वाति. ५ ख. अयमेव. ६ ङ. छ. झ. ट. मभिकाङ्क्षयन्. क. मभिपालयन्. ७ क. ख. युक्तोहि. ८ घ. छ. झ. ट. अथैवमुक्तः.

यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता नचिराद्धरीश्वरः ॥
शरत्प्रतीक्षः क्षमतामिमं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः ॥ २९ ॥

शरदागमेपि विषयासक्ततयाविस्मृतरामकार्यंसुग्रीवंप्रतिहनुमता श्रीराममहिमानुवर्णनपूर्वकंतदुपकारस्मारणेन सीतान्वेषणार्थंसकलवानरानयनायदूताज्ञापनचोदना ॥ १ ॥ सुग्रीवेणनीलंप्रति सकलवानरसैन्यानयनाय दूतप्रेषणचोदना ॥२॥

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् ॥ सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १ ॥
समृद्धार्थं च सुग्रीवं मन्दधर्मार्थसंग्रहम् ॥ अत्यर्थमसतां मार्गमेकान्तगतमानसम् ॥ २ ॥
निर्वृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा ॥ प्राप्तवन्तमभिप्रेतान्सर्वानेव मनोरथान् ॥ ३ ॥
स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् ॥ विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥ ४ ॥
क्रीडन्तमिव देवेशं नन्दनेऽप्सरसांगणैः ॥ मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् ॥ ५ ॥
उत्सन्नराज्यसन्देशं कामवृत्तमवस्थितम् ॥ निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६ ॥
प्रसाद्य वाक्यैर्मधुरैर्हेतुमद्भिर्मनोरमैः ॥ वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः ॥ ७ ॥

---

रामवचनस्य पूर्वसर्गान्तोत्तरमाह—तमिति ॥ तं राममित्यन्वयः । दर्शनं मतं ॥ ६५ ॥ कर्ता करिष्यति। लुट् ॥ ६६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

---

अथ हनुमान् रामभक्तोपि स्वस्वाम्यनुज्ञाभावेन तं ध्यायन् सुग्रीवसमीप एव स्थितः स्वस्वामिना सर्वस्वामिहितानुगुणं कार्यमारब्धवानित्याहैकोनत्रिंशे—समीक्ष्येत्यादि हनुमान्वाक्यमब्रवीदित्यन्तमेकं वाक्यं ॥ हनुमान् उक्तगुणविशिष्टं व्योम उक्तगुणविशिष्टं सुग्रीवं च समीक्ष्य । हरीशं प्रसाद्य हरीश्वरमुपागम्य प्रणयाद्वाक्यमब्रवीदितिसंबन्धः । विमलमित्यादिना सेनासन्नाहस्य प्राप्तकालत्वमुक्तं । समृद्धार्थमित्यादिना समयातिक्रमहेतवः प्रदर्श्यन्ते । समृद्धार्थं संपूर्णरत्नवस्त्राभरणादिकं । मन्दः अल्पः धर्मार्थयोः संग्रहः संपादनं यस्य तं । एकान्तगतमानसं एकस्मिन् कामपुरुषार्थे अन्तं निश्चयं गतं मानसं यस्य तथोक्तं । यद्वा असतां कामुकानां मार्गे एकान्तगतं अत्यन्तगतं मानसं यस्य स तथा । "तीव्रैकान्तनितान्तानि" इत्यमरः । निर्वृत्तकार्यं निष्पन्नवालिवधरूपकार्यं । सिद्धार्थं प्राप्तराज्यं । अभिप्रेतान् ईप्सितान् । मनोरथान् राज्यप्राप्त्यनन्तरमेवं करिष्यामीति संकल्पविषयीभूतानर्थान् । तारां च प्राप्तवन्तमिति संबन्धः । कृतार्थं निष्पन्नधनं । मन्त्रिणामनवेक्षकं मन्त्रिकृतकार्यापरामर्शकं । उत्सन्नराज्यसन्देशं नष्टराज्यनियमनं । कामवृत्तं कामव्यापारं । अवस्थितं कामव्यापारपरतन्त्रतयावस्थितमित्यर्थः । निश्चितार्थः निश्चितकर्तव्यः । अत्र हेतुः—अर्थतत्त्वज्ञ इति । कालोचितो धर्मः कालधर्मः तद्विशेषवित् । वाक्यवित् तदुचितव्यवहारवित् । हितं उदर्कसुखक-

---

ती० मन्दौस्वल्पौधर्मार्थौसंगृह्णातीतितथा ॥ स० अत्यर्थंअत्यन्तंअसतांमार्गोयस्यसः । अलुक्समासोयं । एकान्तेअन्तःपुरेगतं आसक्तंमानसंयस्यसतथातं ॥ २ ॥ ति० उच्छिन्नराज्यसन्देहं मन्त्रिसौष्ठवेननष्टराज्यपालनसन्देहं ॥ ६ ॥

[ पा० ] १ छ. झ. ट. यदुक्तमेतत्. २ घ. ङ. छ. झ. ञ. मिदं. ३ क. ग. ङ.—ट. सारसाकुल. ४ छ. झ. ट. अत्यर्थंचासतां. ५ क. चैव. ख. चसमभीप्सितां. ६ छ. झ. ट. गन्धर्वाप्सरसांगणैः. ७ क. ख. घ. ङ. ञ. मन्त्राणां. ग. मन्त्राणामनवेक्षणं. ८ ख.—ङ. छ.—ट. उच्छिन्नराज्यसंदेहं. ९ ज. झ. मिवस्थितं. १० झ. ट. वाक्यैर्विविधैः. ङ. च. ञ. विविधैर्वाक्यैः. ज. मधुरैर्वाक्यैः. ११ ख. ग. मैनोहरैः. ज. ञ. मनोनुगैः. १२ ङ. ज. तलज्ञो.

हितं तत्त्वं[1] च पथ्यं च सामधर्मार्थनीतिमत् ॥ प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ॥
हरीश्वरमुपागम्य हनुमान्वाक्यमब्रवीत् ॥ ८ ॥
राज्यं प्राप्तं[2] यशश्चैव कौली श्रीरभिवर्धिता[3] ॥ मित्राणां संग्रहः शेषस्तं[4] भवान्कर्तुमर्हति ॥ ९ ॥
यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ॥ तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते[5] ॥ १० ॥
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ॥ समवेतानि[6] सर्वाणि स राज्यं महदश्नुते ॥ ११ ॥
तद्भवान्वृत्तसंपन्नः स्थितः पथि निरत्यये ॥ मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ॥ १२ ॥
सन्त्यज्य सर्वकर्माणि[7] मित्रार्थे योऽनुवर्तते[8] ॥ संभ्रमाद्धि[9] कृतोत्साहः सोनर्थैर्नावरुध्यते[10] ॥ १३ ॥
यस्तु[11] कालव्यतीतेषु मित्रकार्येषु[12] वर्तते ॥ स कृत्वा महतोप्यर्थान्न मित्रार्थेन[13] युज्यते ॥ १४ ॥
यदिदं[14] वीर कार्यं नो मित्रकार्यमरिंदम ॥ क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम् ॥ १५ ॥
तदिदं वीर कार्यं ते कालातीतमरिंदम ॥ १६ ॥
न च कालमतीतं ते निवेदयति कालवित् ॥ त्वरमाणोपि सन्प्राज्ञस्तव[15] राजन्वशानुगः ॥ १७ ॥

रं । तत्त्वं यथार्थं । पथ्यं नीतिमार्गादनपेतं । सामधर्मार्थनीतिमत् साम च धर्मश्च अर्थश्च नीतिश्च सामधर्मार्थनीति तदस्यास्तीति सामधर्मार्थनीतिमत् । प्रणयप्रीतिसंयुक्तं प्रणयः समानविषयस्नेहः । प्रीतिः न्यूनविषयः । विश्वासकृतनिश्चयं आप्तवाक्यत्वविश्वासे विषये कृतनिश्चयं ॥ १—८ ॥ कौली कुलक्रमागता । श्रीः संपत् । अभिवार्धिता । अप्रतिद्वन्द्वत्वादिति भावः । मित्राणां संग्रहः तत्कार्यकारणं । शेषः अवशिष्टो भवति । इदमेव वचनं प्रसाद्य वाक्यैरित्यादिना पूर्वं प्रशंसितं ॥ ९ ॥ मित्रकार्यस्यावश्यकर्तव्यत्वमाह—यो हीति ॥ कालज्ञः मित्रसंग्रहकालज्ञः । तत्कालातिक्रमे विपरीतं भवतीत्यर्थः । मित्रेषु वर्तते मित्राधीनो भवतीत्यर्थः ॥१०॥ दण्ड्यतेनेनेति दण्डः सेनाविशेषः । आत्मा प्रभुरित्यर्थः । समवेतानि समुदितानि । एकन्यूनत्वे महाराज्यहानिरिति भावः ॥ ११ ॥ निरत्यये अविनाशिनि । पथि सन्मार्गे इत्यर्थः । मित्रार्थं मित्रकार्यं । अभिनीतार्थं प्रापितप्रयोजनं यथा भवति तथा । यथावत् यथाप्रतिज्ञमिति यावत् ॥ १२ ॥ सर्वकर्माणि स्वभोगसाधनानि सन्त्यज्य । कृतोत्साहः सन् संभ्रमात् आदरात् मित्रार्थे विषये । यःअनुवर्तते अनुस्यूततया तिष्ठति । सोनर्थैर्नावरुध्यते न संबध्यते ॥ १३॥ एवं कर्तव्यं मित्रकार्यमुचितकाले कर्तव्यमित्याह—यस्त्विति ॥ कालव्यतीतेषु अतिक्रान्तकालेषु ॥ १४ ॥ हेवीर । नः अस्माभिः । यदिदं मित्रकार्यं कर्तव्यं एतत् वैदेह्याः परिमार्गणं क्रियतामिति संबन्धः ॥ १५ ॥ तेकार्यं त्वया कर्तव्यं । इदं मित्रकार्यं ॥ १६ ॥ कालवित् रामइतिशेषः । त्वरमाण इत्यर्धं

**स०** कुलपरंपराप्राप्ताश्रीःकौली । शेषःशिष्टः । सचउक्तगुणश्चासौभवांश्च तद्भवान् । तदित्यव्ययंदोषपरामर्शकमितिवा ॥ ९ ॥ **रामानु०** दण्डःदण्डयतेऽनेनेतिदण्डःसैन्यविशेषः । तथाहकामन्दकः—"पितृपैतामहोवंशसंभवोदत्तवेतनः । विख्यातपौरुषोजन्येकुशलःकुशलैर्वृतः । नानाप्रहरणोपेतोनानायुद्धविशारदः । नानायोधसमाकीर्णोविराजितहयद्विपः । प्रवासयचसुदुःखेषुयुद्धेषुचकृतश्रमः । अद्वैध्यःक्षत्रियप्रायोदण्डोदण्डविदांमतः ।" इति ॥ **ति०** समानि स्ववशत्वेनसमत्वं । समवेतानीतिपाठे मिलितानीत्यर्थः । नत्वेकमपिपृथग्भूतमितिभावः ॥ ११ ॥ **ति०** अभिनीतार्थं प्रतिज्ञातार्थं ॥ **शि०** निरत्यये ध्वंसरहिते । पथि रामाश्रयणरूपेमार्गेस्थितः ॥ १२ ॥ **ति०** संभ्रमात् त्वरया । विशेषेणकृतोत्साहः । अन्यत्रकर्मणीतिशेषः ॥ **शि०** विपक्षेदोषमाह । समिति । योजनःसर्वकर्माणिसंत्यज्य मित्रार्थे मित्रप्रयोजनसिद्धये । संभ्रमात् उद्वेगात् । नवर्तते सजनः कृतःछिन्नःउत्साहो यस्यससन् । अनर्थैनावरुध्यतेनप्राप्यतइत्यर्थः । कृतोत्साहः जातोत्साहविशिष्टस्सन् नवर्ततइतिवायोजना ॥ १३ ॥

[ पा० ] १ घ. पथ्यंचतत्वंच. ख. ग. ङ. च. ज.—ट. तथ्यंचपथ्यंच. छ. पथ्यंचतथ्यंच. २ ख. घ. प्राप्तंराज्यं. ३ क. ख. ग. च. ज. ञ. श्रीरपि. ४ क. ग. घ. च. ज.—ट. शेषस्तद्भवान्. ५ क. ख. झ. ट. प्रतापश्चापि. ६ झ. ट. समान्येतानि. ७ ख. घ. ङ. च. ज. ञ. सर्वकार्याणि. ८ ख. ङ. झ. ट. योनवर्तते. ९ झ. संभ्रमाद्धिकृतोत्साहः. १० ग. झ. ट. सोनर्थैनावरुध्यते. ङ. च. ज. सोयंनैवावरुध्यते. ११ छ. झ. ट. योहि. १२ ख. मित्रार्थंयोनुवर्तते. १३ ट. मित्रार्थेहि. १४ झ. तदिदंमित्रकार्यंनःकालातीतमरिंदम. ज. तदिदंवीर. १५ झ. ञ. ट. सप्राज्ञः.

कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः ॥ अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ॥ १८ ॥
तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव ॥ हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि ॥ १९ ॥
न हि तावद्भवेत्कालो व्यतीतश्चोदनादृते ॥ चोदितस्य हि कार्यस्य भवेत्कालव्यतिक्रमः ॥ २० ॥
अकर्तुरपि कार्यस्य भवान्कर्ता हरीश्वर ॥ किं पुनः प्रतिकर्तुस्ते राज्येन च धनेन च ॥ २१ ॥
शक्तिमानपि विक्रान्तो वानरर्क्षगणेश्वर ॥ कर्तुं दाशरथेः प्रीतिमाज्ञायां किं न सज्जसे ॥ २२ ॥
कामं खलु शरैः शक्तः सुरासुरमहोरगान् ॥ वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञां तु काङ्क्षते ॥ २३ ॥
प्राणत्यागाविशङ्केन कृतं तेन तव प्रियम् ॥ तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ २४ ॥
न देवा न च गन्धर्वा नासुरा न मरुद्गणाः ॥ न च यक्षा भयं तस्य कुर्युः किमुत राक्षसाः ॥ २५ ॥
तदेवं शक्तियुक्तस्य पूर्वं प्रियकृतस्तव ॥ रामस्यार्हसि पिङ्गेश कर्तुं सर्वात्मना प्रियम् ॥ २६ ॥
नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे ॥ कस्यचित्सज्जतेऽस्माकं कपीश्वर तवाज्ञया ॥ २७ ॥
तदाज्ञापय कः किं ते कृते कुत्र व्यवस्यतु ॥ हरयो ह्यप्रधृष्यास्ते सन्ति कोट्यग्रतोऽनघाः ॥ २८ ॥
तस्य तद्वचनं श्रुत्वा काले साधु निवेदितम् ॥ सुग्रीवः सत्त्वसंपन्नश्चकार मतिमुत्तमाम् ॥ २९ ॥
स संदिदेशाभिमतं नीलं नित्यकृतोद्यमम् ॥ दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥ ३० ॥
यथा सेना समग्रा मे यूथपालाश्च सर्वशः ॥ समागच्छन्त्यसङ्गेन सेनाग्राणि तथा कुरु ॥ ३१ ॥

पूर्वेणान्वेति । कालवित् प्राज्ञो रामः त्वरमाणोपि सन् वैदेहीसमानयनाय त्वरमाणोपि सन् । न निवेदयतीति संबन्धः ॥ १७ ॥ स्वयं चेति । त्वमपि गुणैरप्रतिम इत्यर्थः ॥ १८ ॥ आज्ञापयितुं वानरसेनामानेतुमिति शेषः ॥ १९ ॥ इदानीं वानरानयनेपि कालव्यतिक्रमस्तुल्य इत्याशङ्क्याह—न हीति ॥ चोदनादृते रामप्रेरणं विना । कालो न व्यतीतो भवेत् । रामचोदनानन्तरं कार्यं क्रियते चेत्तदाकालातिक्रमः । तच्चोदनात्पूर्वमस्माभिः कार्यप्रवर्तनेन कालातिक्रमदोष इतिभावः ॥ २० ॥ अकर्तुः अनुपकर्तुः ॥ २१ ॥ प्रीतिं कर्तुं आज्ञायां आज्ञापने । न सज्जसे नोद्योगं करोषि ॥ २२—२३ ॥ प्राणत्यागाविशङ्केनेत्यनेन उपकारमहत्त्वं द्योतितं ॥ २४—२६ ॥ कस्यचिदिति । अस्माकं मध्ये कस्यचिद्गतिर्न सज्जते न मन्दीभवति ॥ २७ ॥ अप्रधृष्याः कोट्यग्रतः कोट्यधिकाः । हरयः ते सन्ति तेषां मध्ये कः । ते कृते त्वदर्थं । किं करोत्विति शेषः । कुत्र कुत्र कार्ये व्यवस्यतु व्यवसायं करोतु । तदाज्ञापय ॥ २८—३० ॥ सेनाग्राणि सेनाग्रेसरान् । सेनानेतॄनित्यर्थः ।

ति० यद्यपिरामस्यनसहायापेक्षा । तथापिसपरिवारोऽहंसीतामन्वेषयिष्यामीतित्वत्प्रतिज्ञामवेक्षते । सत्याऽसत्यावेतिपरीक्षतइत्यर्थः ॥ शि० त्वत्प्रतिज्ञामवेक्षते । एतेनत्वदनुग्रहार्थमेवरामस्त्वामाश्रितइतिसूचितं ॥ २३ ॥ ति० प्राणत्यागाविशङ्केन अनपकारिवालिप्राणत्याजनेतदनौचित्यशङ्कारहितेन मित्रकृत्यंस्वकृत्यमेवेतिबुद्ध्यातवप्रियंकृतं । मार्गाम अन्वेषयाम ॥ स० प्राणत्यागाविशङ्केनकथंचिद्वालिदर्शनेरामस्यजीवनेसंशयःस्यादितिसुग्रीवंप्रतिरामोपकारवर्णनं । ति० प्रतिकृतः कृतोपकारस्य । पिङ्गेश कपिराज ॥ २६ ॥ ति० आज्ञापनीयासेनाकियत्यस्तितत्राह—हरयइति । कोट्यग्रतः कोटिघटितसंख्यायान्यर्बुदस्याग्रेउपरि यासंख्यासमुद्राख्यातयासंख्ययेत्यर्थः ॥ २८ ॥ ति० असङ्गेन अविलंबेन । सेनाग्र्येण सेनानाथेन । सहेतिशेषः ॥ ३१ ॥

[ पा० ] १ ङ. च. ज. हेतुभूतःसन्. क. केतुभूतःसन्. ख. ग. केतुःस्फीतश्च. २ ग. दीर्घबाहुश्च. घ. दीर्घबन्धुस्स. ३ झ. ट. कपिश्रेष्ठान्. ४ ङ. च. ज.—ट. शक्तिमानति. क. ग. शक्तिमानसि. ५ झ. ट. त्वप्रतिज्ञामवेक्षते. ६ झ. ट. महत्प्रियं. ७ ङ.—ट. देवदानवगन्धर्वाअसुरास्समरुद्गणाः. क. देवदानवगन्धर्वानासुरा. ८ ङ.—ट. किमिव. ९ ङ. छ.—ट. प्रतिकृतस्तथा. घ. प्रियकृतस्तथा. १० ज. ट. सज्जतेऽस्मासु. ११ ग. ङ. ञ. तथाज्ञापय. ख. तमाज्ञापय. १२ ङ. नःकिंते. १३ ख. झ. ट. कुतोवापिव्यवस्यतु. ग. ङ. ञ. कृतेवसतुकुत्रचित्. १४ ख. घ. ङ. च. ज. ञ. ट. कोट्यग्रशो. १५ ङ. च. ज.—ट. निरूपितं. १६ घ सत्यसंपन्नः. १७ ङ. च. ज.—ट. संदिदेशातिमतिमान्नीलं. क. ससंदिदेशातिबलं. १८ च. ज. समागच्छन्तिवेगेन. १९ छ. झ. ट. सेनाग्र्येण.

ये त्वन्तपालाः [1]प्लवगाः शीघ्रगा व्यवसायिनः ॥ समानयन्तु ते[2] सैन्यं त्वरिताः शासनान्मम ॥
[3]स्वयं चानन्तरं सैन्यं भवानेवानुपश्यतु ॥ ३२ ॥
त्रिपञ्चरात्रादूर्ध्वं यः [4]प्राप्नुयान्नेह वानर ॥ तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥ ३३ ॥
हरींश्च [5]वृद्धानुपयातु साङ्गदो भवान्ममाज्ञामधिकृत्य [6]निश्चिताम् ॥
इति व्यवस्थां हरिपुङ्गवेश्वरो विधाय वेश्म प्रविवेश वीर्यवान् ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ॥ ३० ॥

लक्ष्मणे शरदागमेचन्द्रदर्शनादिनासमुद्दीपितशोकतया सीताचिन्तयाबहुधाविलपतोरामस्य समाश्वासनम् ॥ १ ॥ रामेणलक्ष्मणंप्रति शरद्वर्णनम् ॥ २ ॥ शरदागमेपिसुग्रीवानुद्योगकुपितेनरामेणलक्ष्मणंप्रति सुग्रीवे स्वकोपनिवेदनपूर्वकं तेनस्वकार्योद्यमनचोदना ॥ ३ ॥

[7]गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः ॥ [8]वर्षरात्रोषितो रामः कामशोकाभिपीडितः ॥ १ ॥
पाण्डुरं गगनं [9]दृष्ट्वा विमलं चन्द्रमण्डलम् ॥ शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २ ॥
कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् ॥ बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥ ३ ॥
स तु संज्ञामुपागम्य मुहूर्तान्[10]मतिमान्पुनः ॥ मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४ ॥
[11]आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ॥ शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ५ ॥
[12]दृष्ट्वा च विमलं व्योम गतविद्युद्बलाहकम् ॥ सारसारवसंघुष्टं वि[13]ललापार्तया गिरा ॥ ६ ॥

---

तथा कुरु तथा आज्ञापय ॥ ३१ ॥ अन्तपालाः सेनापर्यन्तपालकाः ॥ ३२ ॥ त्रिपञ्चरात्रादूर्ध्वं पञ्चदशरात्रादनन्तरदिवसे ॥ ३३ ॥ वृद्धान् जाम्बवत्प्रभृतीन् ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

---

अथ शरत्समागमेपि सुग्रीवस्यानुद्योगाद्रामकोपविशेषं—गुहामित्यादि ॥ सुग्रीवे गुहां प्रविष्टे वर्षरात्रोषितो रामः कामशोकाभिपीडितः सन् । क्रमेण गगने घनैर्विमुक्ते । पाण्डुरं निर्मलं । गगनं दृष्ट्वा परमातुरः वर्षाकालिकशोकादधिकं शोकं प्राप्तः सन् मुमोह । एतावत्पर्यन्तं कस्यचिदवधेर्विद्यमानतया कथंचिद्धृतवान् । संप्रतितदभावान्मुमोहेत्यर्थः ॥ १—३ ॥ मनःस्थामपि वैदेहीं चिन्तयामास । पुनः-पुनर्विशेषतश्चिन्तितवानित्यर्थः ॥ ४ ॥ मनसा जगाम । चिन्तयामासेति यावत् ॥ ५ ॥ गिरा स्वरेण ॥ ६ ॥

---

**ति०** समानयन्तु समागच्छन्तु ॥ ३२ ॥ **रामानु०** त्रिपञ्चरात्रादूर्ध्वंयःप्राप्नुयादिहवानरइतिपाठे पञ्चदशरात्रादर्वागेवागन्तव्यमितिभावः ॥ **ति०** त्रिपञ्चरात्रात् पञ्चदशदिनादूर्ध्वंयआगच्छेत् तस्यदण्डः । तेनपक्षमध्येसर्वैरागन्तव्यमितिभावः । कार्तिकशुक्लादावियमाज्ञेतिबोध्यं ॥३३॥ **ति०** वृद्धान्हरीन्साङ्गदोभवानुपयातु । संमानना‌र्थमितिशेषः ॥३४॥ इत्येकोनत्रिंशःसर्गः ॥२९॥

**ती०** सुग्रीवेविमुक्तइत्यत्रअविमुक्तइतिच्छेदः । सुग्रीवे गुहां किष्किन्धां प्रविष्टे गगने घनैरविमुक्ते आवृतेसति । वर्षरात्रोषितोरामः पाण्डुरंगगनंदृष्ट्वामुमोहेत्युत्तरत्रसंबन्धः ॥ १—२ ॥ **शि०** कामशोकाभिपीडितः कामेनजानकीप्राप्तिविषयकोत्कटेच्छया शोकेन तत्प्राप्त्यभावजनितचिन्तया अभिपीडितः व्याप्तः आसीदितिशेषः ॥ १ ॥ **रामानु०** सलिति ॥ अस्माच्छ्लोकात्परतः

**[ पा० ]** १ ख. सबलाः. २ ङ.—ट. तेशीघ्रं. ३ ज. तेषांचानन्तरंकार्यं. च. छ. झ. ट. स्वयंचानन्तरंकार्यं. क. यदत्रानन्तरंकार्यंभवान्समनुपश्यतु. ४ क. ग. छ. झ. ट. प्राप्नुयादिहवानरः. ५ क. ख. सर्वान्. ६ झ. निश्चितं. ७ छ. झ. गृहं. ८ छ. झ. वर्षरात्रेस्थितो. ९ ङ.—ट. दृष्ट्वा. १० क. ख. मतिमान्नरः च. ज. ञ. मतिमांस्ततः. छ. झ. ट. मतिमान्नृपः. ११ अयंश्लोकः ट. पुस्तकेनदृश्यते. १२ ख. दृष्ट्वास. १३ च. ञ. विललापाकुलेन्द्रियः.

[1]सारसारवसन्नादैः सारसारवनादिनी ॥ याऽश्रमे रमते बाला साऽद्य मे रमते कथम् ॥ ७ ॥
पुष्पितांश्चासनान्दृष्ट्वा काञ्चनानिव निर्मलान् ॥ कथं सा रमते बाला पश्यन्ती मामपश्यती ॥ ८ ॥
या पुरा कलहंसानां [2]स्वरेण कलभाषिणी ॥ बुध्यते चारुसर्वाङ्गी [3]साऽद्य मे [4]बुध्यते कथम् ॥ ९ ॥
निःस्वनं चक्रवाकानां निशम्य सहचारिणाम् ॥ पुण्डरीक[5]विशालाक्षी कथमेषा भविष्यति ॥ १० ॥
सरांसि सरितो वापीः काननानि वनानि च ॥ तां विना मृगशावाक्षीं [6]चरन्नाद्य सुखं लभे ॥ ११ ॥
अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् ॥ [7]न दूरं पीडयेत्कामः शरद्गुणनिरन्तरः ॥ १२ ॥
एवमादि नरश्रेष्ठो विललाप नृपात्मजः ॥ विहङ्ग इव सारङ्गः सलिलं त्रिदशेश्वरात् ॥ १३ ॥
[8]ततश्चञ्चूर्य रम्येषु फलार्थी गिरिसानुषु ॥ ददर्श पर्युपावृत्तो [9]लक्ष्मीवाँल्लक्ष्मणोऽग्रजम् ॥ १४ ॥

तं [10]चिन्तया दुःसहया परीतं विसंज्ञमेकं विजने मनस्वी ॥
भ्रातुर्वि[11]षादात्परितापदीनः समीक्ष्य सौमित्रिरुवाच [12]रामम् ॥ १५ ॥
किमार्य कामस्य वशंगतेन किमात्मपौरुष्यपराभवेन ॥
अयं [13]सदा संह्रियते समाधिः किमत्र योगेन निवर्तितेन ॥ १६ ॥

---

सारसारवसन्नादैः सारसारावोत्थितध्वनिभिः ॥ ७ ॥ पश्यन्ती मद्दिदृक्षया इतस्ततो दृष्टिं निक्षिपन्ती ॥ ८—९ ॥ पुण्डरीकविशालाक्षी चक्रवाकनिनदश्रवणस्यासह्यतया नायकागमपथं सलीलमवलोकयन्तीत्यर्थः । कथं भविष्यति कथं सत्तां धारयिष्यतीत्यर्थः ॥ १० ॥ वापीः कृत्रिमसरांसि । काननानि महावनानि ॥ ११ ॥ शरद्गुणनिरन्तरः शरद्गुणैः साधनैः निरन्तरः पूर्णः । कामः । सौकुमार्यात् मद्वियोगाच्च हेतोः । तां भामिनीं दूरं आमरणं । न पीडयेत् । अपिः संभावनायां । पीडयेदेवेत्यर्थः ॥ १२ ॥

त्रिदशेश्वरात् सलिलमुद्दिश्य सारङ्गश्चातक इव विललापेति संबन्धः ॥ १३ ॥ चञ्चूर्य कुटिलं चरित्वा । फलाभिलाषेण कुटिलमार्गेण चरित्वा । "नित्यं कौटिल्ये गतौ" इति यङ् ॥ १४—१५ ॥ वंशगतेन मनसेति शेषः । पौरुष्यं पौरुषं स्वार्थे ष्यञ् । अयं वर्तमानः । समाधिः चित्तसमाधानं । सदा तत्र तत्र काले । संह्रियते संपाद्यते । अत्र अस्मिन्काले । निवर्तितेन योगेन किं । अयं यदा संह्रियते समाधिरिति पाठान्तरं । यदा यस्मिन्काले । अयं समाधिः चित्तसमाधानं । संह्रियते संपाद्यते । अत्रास्मिन्काले

---

आसीनःपर्वतस्याग्रे इतिश्लोकः । अस्माच्चपरतः दृष्ट्वाचविमलंव्योमइतिश्लोकः । व्यत्यासस्तुलेखकप्रमादकृतः ॥ ४ ॥ **ति०** सारसनादसदृशनादवती या सारसानामारावाय परस्परसमाह्वानाय । कृतैर्नादैर्या रमतेआश्रमे ॥ ७ ॥ **ति०** काननवनयोःकान्तारोपवनात्मनाभेदः ॥ ११ ॥ **ति०** ततः तत्रकाले । रम्येषुगिरिसानुषुचञ्चूर्य भ्रातृदुःखेनगर्हितंचरित्वा । यङ्लुगन्तादार्षोसमासेल्यप् । पर्युपावृत्तोलक्ष्मणः अग्रजंरामंददर्श ॥ १४ ॥ **ती०** आर्य यदा यस्मिन्काले समाधिश्चित्तसमाधानं संपादनीयं । अत्र अस्मिन्काले । अयंकिंसंह्रियते किमर्थंसंह्रियते । कामस्यवशंगतेनकिं कामवशंगमनेनकिं । द्वितीयायाअलुगार्षः । भावेनिष्ठा । आत्मपौरुष्यपराभवेनकिं पौरुषमेवपौरुष्यं । निवर्तितेनयोगेनकिं । योगः संनहनं उद्योगइत्यर्थः ॥ **ति०** अथलक्ष्मणःकर्मयोगज्ञानयोगावेवपौरुषवृद्धयेदुःखशान्तयेचानुतिष्ठेतिस्मारयति **किमार्येत्यादि** । हेआर्य कामस्यवशंगतेनत्वया किंकर्मकृतंस्यात् । अपिचैवंकामवशत्वेनआत्मपौरुषस्यस्वपौरुषस्यअभिभवेनकिंप्रयोजनंसाधितंस्यात् । तस्मात्कामवशत्वंत्यक्त्वा कर्मयोगंकुरु । किंच स्नानादिकर्मयोगोत्तरकालमवसरप्राप्तोयंसमाधिः ब्रह्मानुसंधानं । ह्रियाहरतीतिह्रीःशोकः तेनकिमर्थंसंह्रियते । अत्र अस्यामवस्थायां योगेन समाधिना । सर्वदुःखमितिशेषः । किंननिवर्तते अपितुनिवर्ततएवेत्यर्थः । एवमेवपाङ्कःपाठइतिकतककृत् । पाठान्तरंत्वस्ययोजना-

**[ पा० ]** १ क. ख. घ.—छ. झ. ञ. ट. सारसाराव. २ झ. ट. कलेन. ३ ट. साद्यवै. ४ छ. रमतेकथं. ५ क. पलाशाक्षी. ६ ग. चिरंनाद्य. ७ छ. झ. सुदूरं. घ. ननूनं. ८ क. ख. ततस्संचार्य. ङ. च. ज. ञ. अतःसंचार्यकुटिलं. ९ ख. लक्ष्मणोलक्ष्मणाग्रजं. १० छ. झ. ट. सचिन्तया. ११ ङ.—ट. त्वरितोतिदीनः. १२ ख. ङ.—ट. दीनं. १३ क. ग. ज. यदा. ख. छ. झ. ट. ह्रिया. घ. ङ. ञ. यथा.

क्रियाभियोगं मनसः प्रसादं समाधियोगानुगतं च कालम् ॥
सहायसामर्थ्यमदीनसत्त्व स्वकर्महेतुं च कुरुष्व हेतुम् ॥ १७ ॥
न जानकी मानववंशनाथ त्वया सनाथा सुलभा परेण ॥
न चाग्निचूडां ज्वलितामुपेत्य न दह्यते वीरवरार्ह कश्चित् ॥ १८ ॥
सलक्षणं लक्ष्मणमप्रधृष्यं स्वभावजं वाक्यमुवाच रामः ॥
हितं च पथ्यं च नयप्रसक्तं ससाम धर्मार्थसमाहितं च ॥ १९ ॥
निःसंशयं कार्यमवेक्षितव्यं क्रियाविशेषो ह्यनुवर्तितव्यः ॥
ननु प्रवृत्तस्य दुरासदस्य कुमार कार्यस्य फलं न चिन्त्यम् ॥ २० ॥
अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् ॥ उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २१ ॥
तर्पयित्वा सहस्राक्षः सलिलेन वसुन्धराम् ॥ निर्वर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ॥ २२ ॥

निर्वर्तितेन योगेन सन्नहनेन उत्साहेन किमित्यर्थः ॥ १६ ॥ क्रियाभियोगं कार्योद्योगम् । मनसः प्रसादं समाधियोगानुगतं धैर्योपायाभ्यामनुबद्धं । कालं च । सहायसामर्थ्यं सुग्रीवादिसहायसामर्थ्यं । स्वकर्म देवतोपासनात्मकं तदेव हेतुः तं च हेतुं कुरुष्व । क्रियाभियोगादिकं सर्वं स्वकार्यसिद्धौ हेतुं कुरुष्वेत्यर्थः । अत्र प्रकरणे लक्ष्मणेन रामस्याश्रितरक्षणत्वरा संदीप्यत इति स्वोपदेशः सुलभः ॥ १७ ॥ सुलभा लब्धुमर्हा । अग्निचूडां अग्निज्वालां ॥ १८ ॥ रामः अप्रधृष्यं युक्तिभिरविचाल्यं । स्वभावजं स्वभावसिद्धं । हितं उदर्कसुखकरं । पथ्यं तत्कालसुखकरं । नयप्रसक्तं राजनीतियुक्तं । ससाम सान्त्वयुक्तं धर्मार्थसमाहितं च वाक्यमुक्तवन्तं सलक्षणं लक्ष्मणमुवाचेति योजना । यद्वा अप्रधृष्यत्वादिविशेषणविशिष्टं वाक्यं राम उवाच । लक्ष्मणोक्तानुवादरूपत्वाद्रामवाक्यस्यापि तथात्वमिति बोध्यं ॥ १९ ॥ कार्यं सीतान्वेषणादिकं । निःसंशयं यथाभवतितथा अवेक्षणीयं । तदनुरूपं धैर्यं कर्तव्यमित्यर्थः । क्रियाविशेषः उत्साहादिः । अनुवर्तितव्यः अनुवर्तितव्य एव । हे कुमार प्रवृत्तस्य दुरासदस्य कार्यस्य फलं सीताप्राप्तिरूपं । न चिन्त्यं ननु चिन्त्यमेव ॥ २० ॥ एवं लक्ष्मणसमाश्वासनेन प्रतिष्ठापितधैर्योपि सीताविषयकामानुवृत्त्यापुनः शरदं वर्णयति—अथेत्यादिना ॥ २१ ॥ निर्वर्तयित्वा परिपक्कानि कृत्वा । कृतकर्मा

शक्त्याकल्पितमितिचसः ॥ १६ ॥ **ति०** उक्तमेवविवृणोति—**क्रियाभियोगमिति** । क्रियाणांशौचस्नानादीनां अभितःकात्स्न्र्येन योगं अनुष्ठानं । मनसःप्रसादंचास्थाय । कालं सर्वकालं समाधियोगानुगतं तेनसंबद्धमेवकुरुष्व । तथा अदीनसत्वः अक्षीणसत्वसन् । स्वकर्महेतुं पौरुषवृद्धेःकारणं । सहायसामर्थ्यं तद्घटनरूपंस्वकर्मदेवार्चनादिरूपकर्मयोगंचकुरुष्व । अनेनयावत्फलंनिदिध्यासनजातकर्मसमुच्चयउक्तः ॥ **स०** क्रियाभियोगं सन्ध्यावन्दनाद्युद्योगंकुरुष्व । समाधियोगं चित्तैकाग्र्यरूपमुपायं अनुगतोयः कालस्तंचकुरुष्व । सहायसामर्थ्यं सुग्रीवादिसहायघटनां । हे अदीनसत्त्व स्वकर्महेतुं स्वकार्यसाधकं । एतच्चसहायसामर्थ्यस्यविशेषणं ॥ १७ ॥ **ति०** अतो या नीता सातत्प्रतिकृतिरेव । सातुत्वदुपासितामाविति व्यङ्ग्यं ॥ १८ ॥ **वि०** रामः अप्रधृष्यं युक्तिभिरविचाल्यं । स्वभावजं स्वभावसिद्धंवाक्यमुक्तवन्तं लक्षणसहितंलक्ष्मणमुवाच । हेलक्ष्मण यत्त्वयाप्रयुक्तंवाक्यं तद्धितं तत्कालसुखं । पथ्यं कालान्तरेपिसुखं । नयप्रसक्तं राजनीतियुक्तं । सामसहितधर्मार्थाभ्यांसमाहितं संगतं ॥ **रामानु०** एतच्छ्लोकोक्ताप्रधृष्यत्वादिधर्माणांपूर्वोक्तलक्ष्मणवाक्येषुविद्यमानत्वादुपरिष्टाद्रामेलक्ष्मणोक्तस्यास्यैवानूद्यमानत्वादुक्तवन्तमितिपदमध्याहर्तव्यं ॥ **स०** सलक्ष्मणं लक्षणसहितं । "लक्ष्मणंनाम्निचिह्नेचरामभ्रातरिलक्ष्मणः" इतिविश्वः ॥ १९ ॥ **ति०** तस्मात्त्वदुक्तंनिस्संशयंकार्यं त्वद्वाक्यार्थोनुष्ठेयएव । अनुष्ठेयमाह—अवेक्षितव्यं समाधियोगेनभगवत्तत्त्वंद्रष्टव्यं । क्रियाविशेषः कर्मयोगः । सोप्यनुवर्तितव्यः अनुष्ठेयः । हेकुमार नतुकर्मज्ञानयोगौहित्वाप्रकर्षेणवृद्धिंप्राप्तस्य । अतएव दुरासदस्य । वीर्यस्य वीर्यवतःकर्मणः फलंच फलमेव ।

**[पा०]** १ ङ. च. ज. महीन. २ छ. झ. ट. तात. ङ. च. ञ. योगं. ४ ख. सलक्ष्मिवाँल्लक्ष्मणं. ५ ङ. च. ञ. वचःप्रयुक्तं. ६ ङ. च. ज. धर्मसमाहितार्थं. ७ ग. मवेक्षणीयं. ८ ग. घ. ङ. झ. ट. विशेषोप्यनुवर्तितव्यः. ९ झ. ट. नतुप्रवृद्धस्य. घ. नचप्रवृत्तस्य. ग. ज. नतुप्रवृत्तस्य. १० झ. ट. वीर्यस्य. ११ घ. च. झ. ट. फलंच. १२ ग. वैदेहीमनु.

स्निग्धगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः ॥ विसृज्य सलिलं मेघाः परिश्रान्ता नृपात्मज ॥ २३ ॥
नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश ॥ विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ॥ २४ ॥
जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ॥ चरित्वा विरताः सौम्य वृष्टिवाताः समुद्यताः ॥ २५ ॥
घनानां वारणानां च मयूराणां च लक्ष्मण ॥ नादः प्रस्रवणानां च प्रशान्तः सहसाऽनघ ॥ २६ ॥
अभिवृष्टा महामेघैर्निर्मलाश्चित्रसानवः ॥ अनुलिप्ता इवाभान्ति गिरयश्चित्रदीप्तिभिः ॥ २७ ॥
दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ॥ नवसङ्गमसंव्रीडाजघनानीव योषितः ॥ २८ ॥

शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् ॥
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता ॥ २९ ॥
संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मीः शरत्कालगुणोपनीता ॥
सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥ ३० ॥
सप्तच्छदानां कुसुमोपगन्धी षट्पादवृन्दैरनुगीयमानः ॥
मत्तद्विपानां पवनोनुसारी दर्पं वनेष्वभ्यधिकं करोति ॥ ३१ ॥
अभ्यागतैश्चारुविशालपक्षैः सरःप्रियैः पद्मरजोवकीर्णैः ॥
महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः ॥ ३२ ॥

---

कृतकृत्यः ॥ २२ ॥ शैलद्रुमपुरोगमाः शैलद्रुमाणामग्रे गच्छन्तः । अत्र प्रकरणे सर्वत्र विषये प्रवृत्तिः रामावतारकृता सूच्यते ॥ २३—२४ ॥ वृष्टिकरा वाता वृष्टिवाताः पुरोवाता इत्यर्थः ॥ २५—२६ ॥ चित्रदीप्तिभिः नानावर्णकान्तिभिः ॥२७॥ दर्शयन्तीति । अनेन चिरकालानुवर्तनेन गुरूणां शिष्येभ्यो रहस्यार्थप्रकाशनं सूच्यते ॥ २८ ॥ सप्तच्छदानाम शरत्पुष्पावृक्षाः । शरत् कर्त्री । श्रियं स्वसमृद्धिं । विभज्य त्रेधाविभज्य । सप्तच्छदशाखादिषु प्रवृत्ता सप्तच्छदेषु पुष्पविकासरूपाश्रीः । तारादिप्रभासुनिर्मलतारूपा । गजलीलासु उन्मस्तकतारूपा ॥ २९ ॥ अनेकाश्रयचित्रशोभा सितरक्तनीलपङ्कजादिरूपानेकाश्रयतया चित्रशोभा नानावर्णकान्तिः । शरत्कालगुणोपनीता शरत्कालोत्कर्षेण प्रापिता । लक्ष्मीः समृद्धिः । सूर्यस्याग्रहस्तैः प्राथमिककिरणैः । हस्तशब्देन करा लक्ष्यन्ते । भगवत्कटाक्षबोधितेषु पुरुषेषु नानारूपसंवित्प्रकाश उच्यते ॥ ३० ॥ अनुसारी अनुसृत्य वर्तमानः। अविच्छेदेनैव प्रवर्तमान इत्यर्थः । मत्तद्विपानां दर्पकरोति । मदवृद्धिहेतुत्वादिति भावः ॥ ३१ ॥ अभ्यागतैरिति । मिथुनतया आभिमुख्येन संगतैः । चारु यथा तथा विशालपक्षैः हर्षेण विस्तृतपक्षैरित्यर्थः । क्रीडन्ति हंसाः सह चक्रवाकैः हंसाश्च क्रीडन्ति

---

त्रिन्त्यं अपेक्षणीयं । अनेनयावत्फलंनिदिध्यासनकर्मसमुच्चयउक्तः ॥ २० ॥ **ति०** शैलद्रुमपुरइति द्वितीयाबहुवचनान्तं । तान्गच्छन्तितथाभूतासलिलंविसृज्यपरिशान्ताः ॥ **शि०** दीर्घः गंभीरः निर्घोषोयेषांतेगमाः गगनमागतामेघाः सलिलं शैलद्रुमपुरः विसृज्य प्राप्य परिशान्ताअभवन्निितिशेषः । शैलद्रुमपुरोगमाइत्येकंपदंवा । तदर्थस्तु शैलद्रुमाणांपुरः अग्रभागेगच्छन्तीति ॥२३॥ **ति०** नीलोत्पलदलश्यामाइतिपयोधरविशेषणं । अर्हत्वशान्तकामवेगइतिव्यङ्ग्यं ॥ २४ ॥ **स०** मयूराणामिववारणानामपि वर्षाकालएवसंतोषातिशयइतिसंप्रदायः ॥ २६ ॥ **स०** अनुसारीशरत्कालानुगुणः मत्तद्विपानांदर्पंविनेष्यन् क्रीडासाधनजलापहारेणवा मदगन्धसदृशसप्तच्छदगन्धभ्रमरादिसाहित्येनवेतिज्ञेयं । **ती०** सप्तच्छदानामितिकर्मणिषष्ठी ।ताननुसारी अनुसृत्यवर्तमानः पवनः मत्तद्विपानांदर्पंकरोतीतिसंबन्धः ॥ **ति०** पवनमनुसरतितच्छीलः । विनेष्यन् जलंशोषयन् । शरत्कालइतिशेषः ॥ ३१ ॥ **रामानु०** क्रीडन्तिहंसास्सहचक्रवाकैरिति । हंसचक्रवाकाः परस्परंवैरिणोपिशरद्गुणसंजातहर्षपरवशाद्वैरंविस्मृत्यविहरन्तीतिनवि-

[ **पा०** ] १ ग. ङ.—ट. दीर्घगंभीर. २ च. छ. झ. ञ. परिशान्ता. ३ क.—ट. गिरयश्चन्द्ररश्मिभिः. ४ ग. क्रीडासु. ५ ज.—ट. गुणोपपन्ना. ६ ज. ञ. सूर्याग्रपाद. ७ ङ. च. छ. झ. ञ. ट. पवनानुसारी. ८ ङ.—ट. दर्पविनेष्यन्नधिकंविभाति. ९ छ. झ. ट. सरप्रियैः.

[1]मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ॥
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३३ ॥
नभः समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ॥
[2]प्रियास्वसक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥ ३४ ॥
मनोज्ञगन्धैः प्रियकै[3]रनल्पैः [4]पुष्पातिभारावनताग्रशाखैः ॥
सुवर्णगौरैर्नयनाभिरामैरुद्योतितानीव वनान्तराणि ॥ ३५ ॥
प्रियान्वितानां नलिनीप्रियाणां [5]वने रतानां [6]कुसुमोद्धतानाम् ॥
मदोत्कटानां मदलालसानां गजोत्तमानां गतयोऽद्य मन्दाः ॥ ३६ ॥
[7]व्यभ्रं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि ॥
कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३७ ॥
सूर्यातपक्रामणनष्टपङ्का [8]भूमिश्चिरोद्घाटितसान्द्ररेणुः ॥
अन्योन्य[9]वैरामर्षायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥ ३८ ॥
शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुत्क्षिताङ्गाः ॥
मदोत्कटाः संप्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥ ३९ ॥
[10]समन्मथं तीव्रगतानुरागाः कुलान्विता [11]मन्दगतिं करिण्यः ॥
[12]मदान्वितं संपरिवार्य [13]यान्तं वनेषु भर्तारमनु[14]प्रयान्ति ॥ ४० ॥
त्यक्त्वा वराण्यात्म[15]विभूषणानि बर्हाणि तीरोपगता नदीनाम् ॥
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना [16]विमदा मयूराः ॥ ४१ ॥
वित्रास्य कारण्डवचक्रवाकान्महारवैर्भिन्नकटा [17]गजेन्द्राः ॥
सरस्सु बुद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं [18]पिबन्ति ॥ ४२ ॥

चक्रवाकाश्च क्रीडन्तीत्यर्थः ॥ ३२—३३ ॥ गतोत्सवाः नष्टहर्षा इत्यर्थः । बभूवुरिति शेषः ॥ ३४ ॥ प्रियकैः बन्धूकैः । "सर्जकासनबन्धूकपुष्पप्रियकजीवकाः" इत्यमरः ॥ ३५ ॥ कुसुमोद्धतानां सप्तच्छदकुसुमाघ्राणेन मत्तानां । मदोत्कटानां मदेन उद्भिन्नकटानां ॥ ३६ ॥ व्यभ्रं विगतमेघं । शस्त्रविधौतवर्णं विधौतशस्त्रवर्णं । कृशप्रवाहानि संकुचितप्रवाहानि ॥ ३७ ॥ चिरोद्घाटितसान्द्ररेणुः चिरात् इषत् उत्पादितनिबिडरेणुः । स्थूलरेणुरित्यर्थः । अन्योन्यवैरामर्षायुतानामित्यत्र वृत्तभङ्ग आर्षः । वैरं विरोधः । अमर्षः असहिष्णुता । ताभ्यां आयुतानां आसमन्ताद्युतानां । वैरामर्षपूर्णानामित्यर्थः ॥३८॥ रूपशोभाः शरीरशोभाः ॥ ३९ ॥ कुलान्विताः सजातीयसमूहेन युक्ताः ॥४०॥ सारसौघैः हंससमूहैः ॥४१॥ महारवैः वित्रा-

रोधः ॥ ३२ ॥ **शि०** ध्यानपराः मेघचिन्तनरताः बभूवुरितिशेषः ॥३४॥ **ति०** कुसुमोद्गतानां सप्तच्छदकुसुमाघ्राणप्रवृत्तानां । उद्गतानामित्येवपाङ्क्तःपाठः । उद्धतानामितिकल्पितइतिकतकक्रतः । मदोत्कटाः अधिकमदाः । अतएवमदलालसाः । मदशब्देन तज्जन्यःकामभोगः तत्रेच्छावन्तः ॥ ३६ ॥ **ति०** सूर्यातपस्यक्रामणंसंबन्धः । चिरेणोद्घाटितः प्रकाशितःसान्द्रोरेणुर्यया । अनेनशरदुत्तरार्धकालोयमितिज्ञायते ॥ ३८ ॥ **ति०** समन्मथत्वादिविशेषणचतुष्टयंकरेण्वाः । करेणूरितिदीर्घत्वमार्षं ॥ ४० ॥ **ति०** विभूषितं विभूषणं । विमनामयूराः । मनःपर्यायोमनशब्दोकारान्तोपि द्विरूपकोशात् ॥ ४१ ॥ **ति०** बुद्धांबुजानि विकसित-

**[ पा० ]** १ ग. मत्तप्रगल्भेषु. ख. घ. मदप्रगल्भेष्वपि. २ ङ. झ. ट. प्रियास्वरक्ता. ३ घ. रनेकैः. ४ च. छ. झ. ट. पुष्पाग्रभारा. ५ ङ. ज.—ट. वनप्रियाणां. घ. वनेचराणां. ६ क. ङ. च. छ. झ. ञ. ट. कुसुमोद्गतानां. ७ झ. ट. व्यक्तं. ८ क. ग. घ. भूमिःसमुत्पादित. ट. भूमिःखुरोद्घाटित. ९ ङ.—ट. वैरेणसमायुतानां. ख. वैरादमर्षायुतानां. १० क. ख. घ.—ट. समन्मथातीव्रतरानुरागा. ११ क. मन्दगताःकरिण्यः. छ. झ. ञ. ट. मन्दगतिःकरेणूः. १२ ग. मदान्विता. १३ ख. कान्तं. १४ छ. झ. ट. प्रयाति. १५ ग.—ट. विभूषितानि. १६ ङ.—ट. विमनाः. १७ घ. गजाधिपाः. १८ ग. क्षिपन्ति.

व्यपेतपङ्कासु सवालुकासु प्रसन्नतोयासु सगोकुलासु ॥
ससारसा[1] रावविनादितासु[2] नदीषु हृष्टा[3] निपतन्ति हंसाः ॥ ४३ ॥
नदीघनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम्[4] ॥
प्लवङ्गमानां च गतोत्सवानां[5] द्रुतं[6] रवाः संप्रति संप्रनष्टाः ॥ ४४ ॥
अनेकवर्णाः सुविनष्टकाया नवोदितेष्वम्बुधरेषु[7] नष्टाः ॥
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः ॥ ४५ ॥
चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका ॥ अहो रागवती सन्ध्या जहाति स्वयमम्बरम् ॥ ४६ ॥
रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ॥
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥ ४७ ॥
विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः ॥
नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥ ४८ ॥
सुप्तैकहंसं कुसुमैरुपेतं[8] महाह्रदस्थं सलिलं विभाति ॥
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम् ॥ ४९ ॥
प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् ॥
वाप्युत्तमानामधिकाऽद्य लक्ष्मीर्वराङ्गनानामिव भूषितानाम् ॥ ५० ॥
वेणुस्वन[9]व्यञ्जिततूर्यमिश्रः प्रत्यूषकालानिलसंप्रवृद्धः[10] ॥
संमूर्छितो गर्गर[11]गोवृषाणामन्योन्यमापूरयतीव शब्दः ॥ ५१ ॥

स्येति संबन्धः । भिन्नकटाः मदेनेति शेषः ॥ ४२ ॥ सवालुकासु ससिकतासु । ससारसा इति पदच्छेदः । रावविनादितासु निजशब्देन संजातशब्दासु ॥ ४३ ॥ नद्यश्च घनप्रस्रवणानि च तेषां उदकानां । प्लवङ्गमानां मण्डूकानां ॥ ४४ ॥ अनेकवर्णाः कृष्णपीतादिवर्णाः । सुविनष्टकायाः अत्यन्तकृशशरीराः । नष्टाः लीनाः ॥ ४५ ॥ चञ्चच्चन्द्रकरस्पर्शेन यो हर्षः तेन उन्मीलिततारका निर्मलनक्षत्रा । रागवती आरुण्यवती सन्ध्या । अम्बरं आकाशं । स्वयं जहाति । अत्र कान्तकरस्पर्शेन हर्षविस्फारितनेत्रकनीनिका उत्तेजितानुरागा स्वयमेव रतये अम्बरं त्यजन्ती कामुकी प्रतीयत इति समासोक्तिः । सन्ध्यारागः प्रायेण शरद्येव भवतीत्येवमुक्तं ॥४६॥ शशाङ्कोदितसौम्यवक्त्रा उदितशशाङ्करम्यवक्त्रा । तारागणोन्मीलितचारुनेत्रा उन्मीलिततारागणचारुनेत्रा ॥ ४७ ॥ भुक्त्वा मुखाग्रे गृहीत्वा । माला नानावर्णपुष्पमाला ॥ ४८ ॥ सुप्तैकहंसमिति इदं चन्द्रस्थाने । महाह्रदस्थमिति गाम्भीर्यकृतनैर्मल्यातिशयेन आकाशसाम्याय । घनैर्विमुक्तमिति परिपूर्णत्वायोक्तं ॥ ४९—५० ॥ वेणूनां सुषिरवंशानां स्वनेन व्यञ्जितं यत्तूर्यं गीतवाद्यं तेन

कमलानि ॥ यद्वा विक्षोभ्यजलं अगाधजलंपिबन्तीत्यर्थः ॥ ४२ ॥ **ती०** ससारसारावविनादितासु ससारसाश्चतेषामारावविनादिताश्चेतितथा । तासु ॥ ४३ ॥ **स०** सुनिविष्टकायाः वल्मीकेषुसम्यङ्निवेशितदेहाः । अंबुधरेषुनवोदितेषुसत्सु नष्टाः अदर्शनंगताः । विप्रसरन्ति बहिर्निर्गच्छन्ति ॥ इतःपरंचञ्चच्चन्द्रकरेत्यादिश्लोकःक्वचित्पुस्तकेदृश्यते । सचमूलबहुपुस्तकेष्वदर्शनात्प्रक्षिप्त इतिनव्याख्यायते ॥ ४५ ॥ **स०** शशाङ्कात्मकंउदितंसौम्यवक्त्रंयस्यास्सा । ज्योत्स्नैवांशुकप्रावरणंयस्यास्सा ॥ ४७ ॥ **ति०** शालिप्रसवाः व्रीहयः ॥ ४८ ॥ **तनि०** महाह्रदशब्देनागाधत्वमुक्तं । तेनातिनीलाश्रयस्थतयाहंसस्यातिधावल्यंप्रकाश्यते ॥ ४९ ॥ **ति०** गह्वराणां गिरिगह्वराणांगोवृषाणांचवनवर्तिनांशब्दः । अन्योन्यमापूरयतीव वर्धयतीव । गह्वरगोवृषशब्दाः साजात्यात्परस्परवर्धकाइत्यर्थः । गह्वरगोवृषाणामितिपाठः ॥ **स०** प्रत्यूषः ऊष रुजायां । प्रत्यूषतिरजनीमितिप्रत्यूषकालः प्रातःकालः तस्मिन् ।

**[ पा० ]** १ ख. ग. सुसारसा. २ घ. विराविताासु. ञ. निनादितासु. ३ ङ. च. ज.—ट. हंसानिपतन्तिहृष्टाः. ४ घ. नदीजल. ५ ग. हतोत्सवानां. ६ ङ. च. ज.—ट. ध्रुवं. ७ घ. नवोदकेषु. ८ ग. घ. च. ज.—ट. कुमुदैरुपेतं. ९ क. झ. वेणुस्वर. १० ग. छ. ज. झ. ट. संप्रवृत्तः. ११ झ. ट. गह्वर.

नवैर्नदीनां कुसुमप्रभासैर्व्याधूयमानैर्मृदु मारुतेन ॥
धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥ ५२ ॥
वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः ॥
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥ ५३ ॥
जलं प्रसन्नं कुमुदं प्रभासं क्रौञ्चस्वनः शालिवनं विपक्वम् ॥
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥ ५४ ॥
मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः ॥
कान्तोपभुक्तालसगामिनीनां प्रभातकालेष्विव कामिनीनाम् ॥ ५५ ॥
सचक्रवाकानि सशैवलानि काशैर्दुकूलैरिव संवृतानि ॥
सपत्रलेखानि सरोचनानि वधूमुखानीव नदीमुखानि ॥ ५६ ॥
प्रफुल्लबाणासनचित्रितेषु प्रहृष्टषट्पादनिकूजितेषु ॥
गृहीतचापोद्यतचण्डदण्डः प्रचण्डचारोद्य वनेषु कामः ॥ ५७ ॥
लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा ॥
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥ ५८ ॥
प्रसन्नसलिलाः सौम्य कुररीभिर्विनादिताः ॥ चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥ ५९ ॥
असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ॥ दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६० ॥
हंससारसचक्राह्वैः कुररैश्च समन्ततः ॥ पुलिनान्यवकीर्णानि नदीनां पश्य लक्ष्मण ॥ ६१ ॥

मिश्रः । प्रत्यूषकालानिलेन प्रातःकालवायुना संप्रवृद्धः अभिवृद्धः । संमूर्छितः अभिव्याप्तः । गर्गरगोवृषाणां गर्गराणां दधिमथनभाण्डानां गवां वृषाणां च शब्दः । अन्योन्यमापूरयतीव परस्परमभिवर्धयतीव । प्रातःकालिकदधिमथनघोषः वत्सोत्सुकानां गवां पुष्ट्या कामातुराणां वृषाणां च शब्दः गोपालवेणुस्वनैः प्राभातिकवायुमिश्राभिवृद्धो जायत इत्यर्थः ॥ ५१ ॥ कुसुमैः प्रभासन्त इति कुसुमप्रभासाः तैः । पटप्रकाशैः पटतुल्यैः । काशैः शुभ्रपुष्पदर्भविशेषैः । नदीनां कूलानि तटानीत्युक्त्या स्त्रीणां जघनोपमा सूच्यते ॥ ५२ ॥ वने प्रचण्डाः निरङ्कुशगतयः । मधुपाने शौण्डाः धूर्ताः । पद्मानामसनानां च रेणुभिः गौराः । षट्चरणाः भृङ्गाः । वनेषु पवनानुयात्रां वातानुगमनं । कुर्वन्ति परिमलानुसारादिति भावः ॥ ५३ ॥ प्रभासत इति प्रभासं । पचाद्यच् । विकस्वरमित्यर्थः । वर्षव्यपनीतकालं वर्षात्ययकालं । शरत्कालमिति यावत् ॥ ५४ ॥ कामिनीनां वारस्त्रीणामित्यर्थः ॥ ५५ ॥ चक्रवाकशैवलकाशाः रोचनापत्रलेखावकुण्ठनदुकूलस्थानीयाः ॥ ५६ ॥ बाणाः बाणवृक्षाः । असनाः सर्जकाः । गृहीतचापेन उद्यतः प्रयुक्तः चण्डदण्डः तीक्ष्णदण्डनं येन स तथा । यद्वा गृहीतचापश्चासौ उद्यतचण्डदण्डश्च । दण्डः शरविशेषः । "दण्डादयः काण्डभेदाः स्युः" इति हलायुधः । प्रचण्डचारः उग्रसंचारः ॥ ५७ ॥ लोकं जनं ॥ ५८ ॥ कुररीभिः क्रौञ्चीभिः । सलिलाशयाः सरांसि ॥ ५९ ॥ बन्धुजीवाः श्यामाश्च लताविशेषाः ॥ ६०—६१ ॥

संमूर्छितः समूर्जितः । गर्गरः हस्तिहस्तः । तस्यगोवृषाणांचशब्दः । गर्गरशब्दस्यहस्तिहस्तार्थकत्वंतुकर्मनिर्णयटीकारील्याज्ञेयं । मीनभेदोवा । " गर्गरोमीनभेदेस्यात् " इतिविश्वः ॥ ५१ ॥ स० मीनाएवउपसंदर्शितामेखलायासांतासां । शरत्कालएवमीनदर्शनं स्वच्छत्वादुदकस्य ॥ कान्तोपभुक्ताश्चताअलसगामिन्यश्च । यद्वा भावेक्तः । तेनालसगामिन्यः ॥ ५५ ॥ ति० प्रचण्ड-

[ पा० ] १ ख. ग. ङ. छ. झ. ट. कुसुमप्रहासं. च. ज. कुसुमं. २ क. ग. घ. च.—झ. ट. क्रौञ्चस्वनं. ३ क. वनंच पक्वं. ४ क. सरोमुखानि. ५ घ. छ. झ. ट. दण्डचण्डः. ६ ङ. छ. झ. ञ. ट. प्रचण्डचापोद्य. ७ ग. प्रयाताः. ८ असनाः सप्तपर्णाश्चेत्यादीनांचतुर्णांश्लोकानांपौर्वापर्यं. छ. झ. ञ. ट. पाठेषुदृश्यते.

अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज ॥ उद्योगसमयः सौम्य पार्थिवानामुपस्थितः ॥ ६२ ॥
इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज ॥ न च पश्यामि सुग्रीवमुद्योगं[1] वा तथाविधम् ॥ ६३ ॥
चत्वारो वार्षिका मासा गता वर्षशतोपमाः ॥ मम शोकाभिभूतस्य[2] सौम्य[3] सीतामपश्यतः ॥ ६४ ॥
चक्रवाकीव भर्तारं पृष्ठतोनुगता वनम् ॥ विषमं दण्डकारण्यमुद्यानमिव याऽऽगता[4] ॥ ६५ ॥
प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते ॥ कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥ ६६ ॥
अनाथो हृतराज्योऽयं रावणेन च धर्षितः ॥ दीनो दूरगृहः कामी मां चैव शरणं गतः ॥ ६७ ॥
इत्येतैः कारणैः सौम्य सुग्रीवस्य दुरात्मनः ॥ अहं वानरराजस्य परिभूतः परन्तप ॥ ६८ ॥
स कालं परिसंख्याय सीतायाः परिमार्गणे ॥ कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते ॥ ६९ ॥
त्वं[5] प्रविश्य च किष्किन्धां ब्रूहि वानरपुङ्गवम् ॥ मूर्खं ग्राम्यसुखे सक्तं[6] सुग्रीवं वचनान्मम ॥ ७० ॥
अर्थिनामुपसन्नानां[7] पूर्वं चाप्युपकारिणाम् ॥ आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ ७१ ॥
शुभं वा यदि वा पापं यो[8] हि वाक्यमुदीरितम् ॥ सत्येन परिगृह्णाति स[9] वीरः पुरुषोत्तमः ॥ ७२ ॥
कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ॥ तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३ ॥
नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ॥ द्रष्टुमिच्छति चापस्य रूपं विद्युद्गणोपमम् ॥ ७४ ॥
घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे ॥ निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छति[10] ॥ ७५ ॥
काममेवंगतेप्यस्य परिज्ञाते पराक्रमे ॥ त्वत्सहायस्य मे वीर न चिन्ता स्यान्नृपात्मज ॥ ७६ ॥

---

हे नृपात्मज जिगीषूणां पार्थिवानामित्यन्वयः ॥ ६२ ॥ यात्रा उपस्थितेतिशेषः ॥ ६३ ॥ चत्वारः आषाढाद्याः । केचिदाहुः श्रावणाद्या इति । "पूर्वोयं वार्षिकोमासः श्रावणः सलिलागमः" इत्युपक्रमोक्तेः । आश्वयुजकार्तिकयोर्वर्षानुवृत्त्या वार्षिकत्वं । "कार्तिके समनुप्राप्ते त्वं रावणवधे यत" इति पूर्वोक्तवचनेतु कार्तिके समनुप्राप्त इत्यस्य समाप्तेइत्यर्थइत्याहुः ॥ ६४—६७ ॥ सुग्रीवस्य परिभूत इति "क्तस्य च वर्तमाने" इति षष्ठी । कृपां न कुरुत इत्यादिकं सुग्रीवाभिमानमनुसृत्योक्तं ॥ ६८—६९ ॥ त्वं प्रविश्य चेत्यादि ॥ यः उदीरितं वाक्यं सत्येन परिगृह्णाति सत्यत्वेन स्वीकरोति । यथोक्तमनुतिष्ठतीत्यर्थः । मित्राणां न भवन्ति मित्राणामुपकाराय न भवन्तीत्यर्थः । अस्य श्लोकस्य अन्ते इतिकरणं द्रष्टव्यं । इति सुग्रीवं ब्रूहीतिपूर्वेणसंबन्धः ॥ ७०—७४ ॥ घोरमिति ॥ निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छतीति पाठः ॥ ७५ ॥ वीर नृपात्मज । त्वत्सहायस्य मे एवंगते सालगिरिभूदलनादिषु इत्थमप्रतिहते पराक्रमे कामं परिज्ञातेसत्यपि अस्य सुग्रीवस्य चिन्ता समयव्यतिक्रमे मामपि हनिष्यतीति विचारः

---

श्वापोयस्यसः । इदंहेतुगर्भं ॥ ५७ ॥ चत्वारइति । यद्यपिचतुर्थोमासोविद्यतएवतथापितत्रोद्योगाभावेनतस्यापिगतप्रायत्वाद्गता इत्युक्तिः ॥ ६४ ॥ **ति०** कृपायाअकरणेहेतुमुन्नयति—**अनाथइति** । दूरग्रहइतिपाठे दूरवर्तिस्त्रीविषयोग्रहोरावणोऽभिनिवेशोवा यस्येत्यर्थः । **शि०** ननुस्वयंसमर्थत्वात्सुग्रीवापेक्षाकिमर्थंक्रियतइत्यतआह—अनाथइति । रावणेन रावणसदृशेनवालिना धर्षितः । अतएव अनाथः रक्षकरहितः । अतएवदीनः कामी अयंसुग्रीवः मांशरणंगतइत्येतैः कारणैः वानरराजस्यसुग्रीवस्य सुग्रीवेणपरिभूतः वशीकृतःअहमस्मीतिशेषः । **स०** दूरगृहः दूरेअयोध्यायांगृहंयस्य ॥ ६७ ॥ **ति०** वानरराजस्य वानरराजेन । शेषेषष्ठी ॥ ६८ ॥ **ति०** उपपन्नानां बलवीर्यादियुक्तानां । आशां अभिमतार्थविषयां । संश्रुत्य प्रतिज्ञाय ॥ ७१ ॥ **स०** वालिसंहारात्पूर्वमेकदाज्यातलशब्दश्रवणात्पुनरित्युक्तं । श्रोतुमिच्छसीत्यतःपरंइतिशब्दस्याध्याहृतस्य इतिवानरपुङ्गवंब्रूहीत्यन्वयः ॥ ७५ ॥ **स०** नन्वेवंसुग्रीवहननेकथंत्वत्कार्यनिष्पत्तिरितिलक्ष्मणशङ्कांपरिहरति—**काममिति** । एवं पूर्वोक्तप्रकारेण । मत्कोपेनसुग्रीवे गतेपि नष्टेपि । अस्यमे कामंयथातथा त्वयाज्ञातेसति । तत्रापित्वत्सहायस्यमेचिन्ताआगामिकार्येनस्यात् । यद्वा त्वत्सहायस्यमे

**[ पा० ]** १ छ. झ. ञ. ट. मुद्योगंच. २ क. ग.—ट. शोकाभितप्तस्य. ३ छ. झ. ट. तथा. ४ क. ङ.—ट. चाङ्गना. घ. ज. चागता. ५ क. ङ.—ट. सकिष्किन्धांप्रविश्यत्वं. ग. किष्किन्धांसंप्रविश्यत्वं. ६ क. ग्राम्यसुखैर्युक्तं. ७ झ. मुपपन्नानां. ८ क. ख. ज. येनवाक्यं. ९ क. ज. सलोके. १० ङ.—ट. मिच्छसि.

यदर्थमयमारम्भः कृतः परपुरञ्जय ॥ समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ॥ ७७ ॥
वर्षासमयकालं तु प्रतिज्ञाय हरीश्वरः ॥ व्यतीतांश्चतुरो मासान्विहरन्नावबुध्यते ॥ ७८ ॥
सामात्यपरिषत्क्रीडन्पानमेवोपसेवते ॥ शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ॥ ७९ ॥
उच्यतां गच्छ सुग्रीवस्त्वया वत्स महाबल ॥ मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ॥ ८० ॥
न च संकुचितः पन्था येन वाली हतो गतः ॥ समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ ८१ ॥
एक एव रणे वाली शरेण निहतो मया ॥ त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥ ८२ ॥
तदेवं विहिते कार्ये यद्धितं पुरुषर्षभ ॥ तत्तद्ब्रूहि नरश्रेष्ठ त्वर कालव्यतिक्रमः ॥ ८३ ॥

कुरुष्व सत्यं मयि वानरेश्वर प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ॥
मा वालिनं प्रेत्य गतो यमक्षयं त्वमद्य पश्ये मम चोदितैः शरैः ॥ ८४ ॥
स पूर्वजं तीव्रविवृद्धकोपं लालप्यमानं प्रसमीक्ष्य दीनम् ॥
चकार तीव्रां मतिमुग्रतेजा हरीश्वरे मानववंशनाथः ॥ ८५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

मा भूदित्यर्थः ॥ ७६ ॥ अयमारम्भः सख्यकरणवालिनिरसनरूपः । यदर्थं यस्मै सीतान्वेषणप्रयोजनाय कृतः । समयं तद्विषयसंकेतं । प्लवगेश्वरो नाभिजानातीति संबन्धः ॥ ७७ ॥ वर्षासमयकालं वर्षा एव समयकालः संकेतकालः तं । वर्षाशब्देन चत्वारो मासा उपलक्ष्यन्ते ॥ ७८ ॥ सामात्यपरिषत् सामात्यबान्धवः ॥ ७९ ॥ मम रोषस्य यद्रूपं तत्सुग्रीव उच्यतां । एनमिदं वक्ष्यमाणं वचश्च ब्रूयाः ॥ ८० ॥ हतो वाली येन पथा गतः स पन्थाः । परलोकइत्यर्थः । न संकुचितः न नष्टइत्यर्थः । समये मर्यादायां तिष्ठ । वालिपथं वालिगतं मार्गं ॥ ८१—८२ ॥ कार्ये एवं विहिते एवमवस्थिते सति । यद्धितं तद्ब्रूहि । कालव्यतिक्रमः माभूदितिशेषः । अतः त्वर त्वरस्वेतिसंबन्धः ॥ ८३ ॥ उक्तमर्थं पुनः संक्षेपेण सर्गान्ते दर्शयति—कुरुष्वेति ॥ मयि विषये प्रतिश्रुतं सत्यं कुरु । शाश्वतं धर्ममवेक्ष्य प्रतिश्रुतकरणमक्षयोधर्म इत्यवेक्ष्य ॥ ८४ ॥ सः लक्ष्मणः । हरीश्वरे सुग्रीवे । तीव्रांमतिं निग्रहबुद्धिमित्यर्थः । लालप्यमानं प्रलपन्तं ॥ ८५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

---

पराक्रमेअस्यसुग्रीवस्यएवंगतेकालेपरिज्ञातेपिचिन्तानस्यादितिकामं आश्चर्यं । **ती०** वीर नृपात्मज त्वत्सहायस्यमे एवंगते सालगिरिभूविदलनादिष्वितथमप्रतिहतेपराक्रमे । कामंपरिज्ञातेसत्यपि अस्यसुग्रीवस्यचिन्तानस्यात् । समयव्यतिक्रमेपिहनिष्यतीतिविचारोनाभूदित्यर्थः । यद्वा सुग्रीवव्यामोहातिशयंप्रतिविस्मयवचनमेतत् । एवंगते त्वत्सहायस्यमेपराक्रमेकामंपरिज्ञातेपि अस्यसुग्रीवस्यचिन्ता मयिबुद्धिर्नस्यात् नभवेत् । अहोविस्मयइत्यर्थः ॥ ७६ ॥ **स०** चतुरोमासान् व्यतीतान्तत्प्रायान् । कार्तिकस्यभोक्तुमारब्धत्वेनाल्पावशिष्टत्वात् ॥ **शि०** वर्षासमयकालं वर्षस्य वृष्टिसमयस्य आसमयःसम्यग्गमनंयस्मिन् तंकालं हरीश्वरः प्रतिज्ञाय विहरन्सन् व्यतीतांश्चतुरोमासान्नावबुध्यते ॥ ७८ ॥ **ति०** प्रेतगतः प्रेतत्वंप्राप्तः ॥ ८४ ॥ इतित्रिंशःसर्गः ॥ ३० ॥

**[ पा० ]** १ क. सहरीश्वरः. २ झ. वर्षाःसमय. क. ग. घ. वर्षसमय. ३ ङ. छ. झ. ट. वीर. ४ क. च. ज. ञ. वधिष्यामि. ५ झ. ट. यदेवं. ६ ङ. च. ज. चिन्तितं. ७ च. झ. ञ. ट. ममवा. ८ ख.—छ. झ. ट. प्रेतगतो. ९ क. ङ.—ञ. यमक्षये. १० क. पश्येर्निहतोमयाशरैः. ११ झ. ञ. ट. चोदितः. १२ क. घ.—ट. वंशवर्धनः.

# एकत्रिंशः सर्गः ॥ ३१ ॥

रामेण सुग्रीवेआपातजकोपोदितस्वपरुषभाषणश्रवणमात्रेणसुग्रीववधंप्रतिजानमानंलक्ष्मणंप्रति सान्त्वोक्त्यातत्कोपापनोदनपूर्वकं साम्नैवसुग्रीवेव्यवहारचोदना ॥ १ ॥ सशरचापपाणिनालक्ष्मणेन कोपाटोपेनकपिकुलभीषणपूर्वकमङ्गदंप्रति सुग्रीवेस्वागमननिवेदनचोदना ॥ २ ॥ साभिवादनमङ्गदेन लक्ष्मणागमननिवेदनेऽपिमदनमदपरवशतयातदबुद्धवतिसुग्रीवे लक्ष्मणसंत्रस्तकपिकुलकिलकिलाकोलाहलश्रवणसमुद्बुद्धेसति तंप्रति मन्त्रिवराभ्यां लक्ष्मणागमननिवेदनपूर्वकंतत्प्रसादनचोदना ॥ ३ ॥

स कामिनं दीनमदीनसत्त्वं शोकाभिपन्नं [1]समुदीर्णकोपम् ॥
नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ॥ १ ॥
न वानरः स्थास्यति साधुवृत्ते न [2]मंस्यते कर्म[3]फलानुषङ्गान् ॥
न भोक्ष्यते वानरराज्यलक्ष्मीं तथाहि [4]नाभिक्रमतेऽस्य बुद्धिः ॥ २ ॥
मतिक्षयाद्ग्राम्यसुखेषु सक्तस्तव [5]प्रसादाप्रतिकारबुद्धिः ॥
हतोऽग्रजं पश्यतु वीर[6] तस्य न राज्यमेवंविगुणस्य देयम् ॥ ३ ॥
न धारये कोपमुदीर्णवेगं निहन्मि सुग्रीवमसत्यमद्य ॥
हरिप्रवीरैः सह वालिपुत्रो नरेन्द्र[7]पत्न्या विचयं करोतु ॥ ४ ॥
तमात्तबाणासनमुत्पतन्तं निवेदितार्थं रणचण्डकोपम् ॥
उवाच रामः परवीरहन्ता [8]स्ववेक्षितं सानुनयं च वाक्यम् ॥ ५ ॥
न हि वै त्वद्विधो लोके पापमेवं समाचरेत् ॥ [9]पापमार्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६ ॥
ने[10]दमद्य त्वया [11]ग्राह्यं साधुवृत्तेन लक्ष्मण ॥ तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च सङ्गतम् ॥ ७ ॥

अथाङ्गदेन लक्ष्मणकोपकथनं सुग्रीवायैकत्रिंशे—स कामिनमिति ॥ कामिनं अधिककामं । अतएव दीनं । तथाप्यदीनसत्त्वं । एतेन वस्तुतः अदीनसत्त्वोपि दैन्यं भावयतीति गम्यते । शोकाभिपन्नं शोकंप्राप्तं । समुदीर्णकोपं अभिवृद्धकोपं । अस्मिञ्श्लोके नरदेवपुत्रमित्यत्र देकारो गायत्र्या एकादशाक्षरं । दशसहस्रश्लोका गताः ॥ १ ॥ साधुवृत्ते साधूनां मित्रसमानसुखदुःखानां सुहृदां वृत्ते आचारे । नस्थास्यति । कर्मफलानुषङ्गान् अग्निसाक्षिकसख्यरूपकर्मणा वालिनिरसनराज्यदारलाभरूपफलानुबन्धान् । नमंस्यते । वानरराज्यलक्ष्मीं न भोक्ष्यते । तथाह्यस्य बुद्धिः नाभिक्रमते अस्मत्प्रयोजनाभिमुख्ये न वर्तत इति योजना ॥ २ ॥ मतिभ्रमात् बुद्धिविपर्यासात् । तव प्रसादाप्रतिकारबुद्धिः प्रसादस्य राज्यप्रदानादिरूपस्य अप्रतिकारबुद्धिः प्रत्युपकारबुद्धिरहितः । अतएव हतःसुग्रीवः अग्रजं वालिनं । पश्यतु । एवंविगुणस्य तस्य राज्यं नदेयं । वालिनमिति क्वचित्पाठः । तत्र वृत्तमुपजातिः ॥ ३ ॥ नधारये अकार्यकरं धर्तुं न क्षम इत्यर्थः । असत्यं सत्यवचनरहितं । नरेन्द्रपत्न्याः सीतायाः । विचयं अन्वेषणं ॥ ४ ॥ मम अहृदयवचनमात्रेण अयं तं हन्यादेवेत्यनुतप्तो रामः प्राहस । परवीरहन्ता नतुस्वाश्रितहन्ता । स्ववेक्षितं सुष्ठुनिरूपितं ॥ ५ ॥ पापं मित्रहननाध्यवसायरूपं । आर्येण सम्यग्विवेकेन ॥ ६ ॥ इदं मित्रहननाध्यवसायरूपं

**स०** तव प्रतिकारबुद्धिः प्रत्युपकारबुद्धिः । नेत्यत्राप्यन्वेति । नवर्ततइत्यर्थः । हेवीर एवंगुणस्यत्वया प्रसादाद्राज्यंनदेयं ॥ **ति०** नदेयं दत्तं नानुपालनीयमित्यर्थः ॥ **रामानु०** वीरवालिनमित्यत्रवृत्तभङ्गआर्षः ॥ ३ ॥ **रामानु०** सानुनयं सप्रसादं ॥ **शि०** स्ववीक्षितं स्वेननिश्चितंवाक्यमुवाच । किंच स्ववीक्षितमितिलक्ष्मणविशेषणं । स्वस्मिन्वीक्षितंवीक्षणंयस्येत्यर्थः ॥ ५ ॥

[ पा० ] १ छ.—ट. समुदीर्णकामं. २ झ. ञ. नमन्यते. ३ क. फलानुषङ्गं. ४ ङ. छ. झ. ट. नातिक्रमते. ५ ग. घ. छ. झ. ट. प्रसादात्प्रतिकार. क. च. ज. ञ. प्रसादात्प्रतिपन्नराज्यः. ६ झ. ञ. ट. वीरवालिनं. ७ क. घ. छ.—ट. नरेन्द्रपुत्र्याः. ८ ङ. च. छ. ट. स्ववीक्षितं. ९ ङ. झ. ट. कोपमार्येण. १० छ. झ. ट. नेदमत्र. ११ घ. कार्यं.

सामोपहितया वाचा रूक्षाणि परिवर्जयन् ॥ वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये ॥ ८ ॥
सोऽग्रजेनानुशिष्टार्थो यथावत्पुरुषर्षभः ॥ प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा ॥ ९ ॥
ततः शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः ॥ लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १० ॥
शक्रबाणासनप्रख्यं धनुः[1] कालान्तकोपमः ॥ प्रगृह्य गिरिशृङ्गाभं मन्दरः सानुमानिव ॥ ११ ॥
यथोक्तकारी वचनमुत्तरं चैव सोत्तरम् ॥ बृहस्पतिसमो बुद्ध्या मत्वा रामानुजस्[2]तथा ॥ १२ ॥
कामक्रोधसमुत्थेन[3] भ्रातुः कोपा[4]ग्निना वृतः ॥ प्रभञ्जन इ[5]वाप्रीतः प्रययौ लक्ष्मणस्[6]तदा ॥ १३ ॥
सालतालाश्वकर्णांश्च तरसा पातयन्[7]बहून् ॥ पर्यस्यन्गिरि[8]कूटानि द्रुमानन्यांश्च वे[9]गतः ॥ १४ ॥
शिलाश्च शकलीकुर्वन्पद्भ्यां गज इवाशुगः ॥ दूरमेकपदं त्यक्त्वा ययौ कार्यवशाद्द्रुतम् ॥ १५ ॥
तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् ॥ दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरि[10]संकटे ॥ १६ ॥
रोषात्प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः ॥ ददर्श वानरान्भीमान्[11]किष्किन्धाया बहिश्चरान् ॥ १७ ॥
तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् ॥ शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥
जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे ॥ १८ ॥
तान्गृहीतप्र[12]हरणान्हरीन्दृष्ट्वा तु लक्ष्मणः ॥ बभूव द्विगुणं[13] क्रुद्धो बह्विन्धन इवानलः ॥ १९ ॥
[14]तं ते भयपरीताङ्गाः क्रुद्धं[15] दृष्ट्वा प्लवङ्गमाः ॥ कालमृ[16]त्युयुगान्ताभं शतशो विद्रुता दिशः ॥ २० ॥
ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ॥ क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ॥ २१ ॥
तारया सहितः कामी सक्तः क[17]पिवृषो रहः ॥ न तेषां क[18]पिवीराणां शु[19]श्राव वचनं तदा ॥ २२ ॥
ततः सचिव[20]संदिष्टा हरयो रोमहर्षणाः ॥ गिरिकुञ्जरमेघाभा न[21]गर्या निर्ययुस्तदा ॥ २३ ॥

---

पापं । पूर्ववृत्तं च सङ्गतं पूर्वकृतं सख्यरूपं बान्धवं च ॥ ७ ॥ कालपर्यये कालक्रमेविषये । व्यतीतं व्यतिक्रान्तवन्तं सुग्रीवं । रूक्षाणि परुषाणि । परिवर्जयन् । सामोपहितया सान्त्वयुक्तया वाचा । वक्तुमर्हसि ॥ ८—९ ॥ प्रतिसंरब्धः प्रतिनिवृत्तहननाध्यवसायः ॥ १० ॥ सोग्रजेनेत्यादिश्लोकद्वयोक्तं विस्तरेणाह— शक्रेत्यादिना ॥ धनुः प्रगृह्य सानुमान् पर्वत इवस्थितः ॥ ११ ॥ यथोक्तं रामोक्तमनतिक्रम्य करोतीति यथोक्तकारी लक्ष्मणः । वचनंसुग्रीवं प्रति स्वेन वक्तव्यं वचनं । यथोक्तकारीति विशेषणाद्रामोपदिष्टं वचनमिति सिद्धं । उत्तरं च स्ववचनस्य सुग्रीवेण वक्ष्यमाणमुत्तरं च । सोत्तरं स्वेन वक्ष्यमाणोत्तरसहितं । मत्वा आलोच्य । प्रययाविति संबन्धः । एकपदं पौरस्त्यपदं । दूरं त्यक्त्वा दूरे क्षिप्त्वा । अनेन द्रुतगमनं सूचितं । द्रुतं गच्छन्हि पुरुषः पुरःपादं दूरे क्षिपति ॥ १२—१५ ॥ गिरिसङ्कटे निबिडगिरिमध्ये । अनेन पूर्वोक्तगुहाशब्दो विवृतः ॥ १६—१७ ॥ वानराः

**स०** अनुशिष्टः शिक्षितः अर्थोयस्यैसः ॥ ९ ॥ **शि०** सोत्तरं दास्यमानसुग्रीवप्रत्युत्तरसहितं । उत्तरं सुग्रीवप्रत्युत्तरानन्तरकालिकदास्यमानस्वप्रत्युत्तरंवचनं । किंच उत्तरं उत्कृष्टं । सोत्तरं उत्तरत्वसहितंउत्तरमित्यर्थः ॥१२॥ **ति०** एकपदं एकैकपदं ॥ १५ ॥ **ति०** क्रुद्धलक्ष्मणदर्शनेनभीत्या शैलश्रृङ्गादिग्रहोवानराणां ॥ १८ ॥ **ति०** द्विगुणंक्रुद्धः मांदृष्ट्वेमेप्रणामंत्यक्त्वाप्रहरणंगृह्णन्तीतिकोपद्वैगुण्यं ॥ १९ ॥ **स०** सचिवैः सुग्रीवामात्यैः संदिष्टाः भीषयध्वमित्याज्ञप्ताः ॥ **ति०** सचिवसंदिष्टाः सुग्रीवं बोधयित्वातदनुमत्या लक्ष्मणोस्माभिर्यावत्प्रवेश्यते तावद्धठाल्लक्ष्मणप्रवेशंनिरुन्धानास्तिष्ठत इत्येवंसचिवैःहनुमदादिभिःसंदिष्टाहरयोनगरान्निर्ययुः ॥ २३ ॥

**[ पा० ]** १ क. ङ.—ट. कालान्तकोपमं. २ क.—ट. स्तदा. ३ घ. समृद्धेन. ४ घ.—ट. क्रोधाग्निना. ५ क. इवाविष्टः. ६ क. ङ.—ट. स्ततः. ७ ङ. छ. झ. ट. न्बलात्. ८ ग. शृङ्गाणि. ९ क. ख. ग. छ. झ. ञ. ट. वेगितः. १० ग. गिरिगह्वरे. ११ घ. झ. किष्किन्धायां. १२ क. ख. ङ. छ.—ट. प्रहरणान्सर्वान्. १३ ज. परमक्रुद्धः. १४ क. ग. ततोभय. १५ ङ.—ट. क्षुब्धं. १६ ट. मृत्युंसमायान्तं. क. मृत्युमिवायान्तं. १७ छ. झ. ट. कपिवृषस्तदा. ग. कपिवरो. १८ ङ. छ.—ट. कपिसिंहानां. १९ घ. जग्राह. २० ख. सुग्रीवसंदिष्टाः. २१ क. ग. ङ. छ.—ट. नगरान्निर्ययुः.

नखदंष्ट्रायुधा [1]घोराः सर्वे [2]विकृतदर्शनाः ॥ सर्वे [3]शार्दूलदर्पाश्च सर्वे च [4]विकृताननाः ॥ २४ ॥
दशनागबलाः केचित्केचिद्दशगुणोत्तराः ॥ केचिन्नागसहस्रस्य बभूवुस्[5]तुल्यविक्रमाः ॥ २५ ॥
[ [6]सन्ति चौघबलाः केचित्केचिद्वायुबलोत्तराः ॥ अप्रमेयबलाः केचित्तत्रासन्हरिपुङ्गवाः ॥ २६ ॥
प्रतिपूर्णमिवाकाशं संछन्नमिव तद्वनम् ॥ तेन वानरसैन्येन सुग्रीवस्य महात्मनः ॥ २७ ॥
ततो द्वाराणि सर्वाणि अङ्गदो राजशासनात् ॥ पर्यधावत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ] ॥ २८ ॥
[7]कृत्स्नां हि कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः ॥ अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां [8]तां दुरासदाम् ॥२९॥
ततस्ते हरयः सर्वे प्राकारपरिघान्तरात् ॥ निष्क्रम्योदग्रसत्त्वास्तु तस्थु[9]राविष्कृतं तदा ॥ ३० ॥
सुग्रीवस्य प्रमादं च पूर्वजं [10]चार्तमात्मवान् ॥ [11]बुद्ध्वा कोपवशं वीरः पुनरेव [12]जगाम सः ॥ ३१ ॥
स दीर्घोष्ण[13]महोच्छ्वासः कोपसंरक्तलोचनः ॥ बभूव नरशार्दूलः सधूम इव पावकः ॥ ३२ ॥
[ [14]बाणासनमहावीर्यो लक्ष्मणः परवीरहा ॥ प्रविवेश दुराधर्षां पुरीं सुग्रीवपालिताम् ॥ ३३ ॥
ततो नीलाभ्रसंकाशं तप्तकाञ्चनवेदिकम् ॥ श्रीमद्विमानमासाद्य रमणीयं मनोरमम् ॥
शुश्राव परमस्त्रीणां सोत्कृष्टहसितस्वनम् ] ॥ ३४ ॥
बाणशल्यस्फुरज्जिह्वः सायकासनभोगवान् ॥ स्वतेजोविष[15]संघातः पञ्चास्य इव पन्नगः ॥ ३५ ॥
तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् ॥ समासाद्याङ्गदस्त्रासाद्विषाद[16]मगमद्भृशम् ॥ ३६ ॥
सोऽङ्गदं रोषताम्राक्षः सन्दिदेश महायशाः ॥ [17]सुग्रीवः कथ्यतां वत्स ममागमनमित्युत ॥ ३७ ॥
एष रामानुजः प्राप्तस्त्वत्सकाशमरिन्दमः ॥ भ्रातुर्व्यसनसंतप्तो द्वारि तिष्ठति लक्ष्मणः ॥ ३८ ॥
तस्य [18]वाक्ये यदि रुचिः क्रियतां साधु वानर ॥ इत्युक्त्वा शीघ्रमागच्छ वत्स [19]वाक्यमरिन्दम ॥३९॥
लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ॥ पितुः समीपमागम्य सौमित्रिरयमागतः ॥४०॥

पूर्वोक्ता बहिश्चराः ॥ १८—२९ ॥ प्राकारपरिघान्तरान्निष्क्रम्य आविष्कृतं प्रकाशं यथा भवति तथा तस्थुः ॥ ३० ॥ आर्तं कामपीडितं ॥ ३१—३४ ॥ बाणशल्यं बाणाग्रमेव स्फुरन्ती जिह्वा यस्य स तथा । सायकासनं धनुः तदेव भोगः फणा तद्वान् बभूवेति पूर्वेणसंबन्धः ॥ ३५—३६ ॥ वत्स अरिन्दमः एष रामानुजः त्वत्सकाशं प्राप्त इति ममागमनं सुग्रीवः कथ्यतां । भ्रातृव्यसनसंतप्तः स लक्ष्मणः द्वारि तिष्ठति । तस्य वाक्ये तव यदि रुचिः तर्हि साधु युक्तं । तत्र तव गमनं वा अत्रैव तस्यानयनं वा क्रियतां । इत्येतद्वाक्यमुक्त्वा शीघ्रमागच्छ इति सोऽङ्गदं सन्दिदेशेति संबन्धः ॥ ३७—३९ ॥ अयमागतमित्यनन्तरमितिकरणं बोध्यं ॥ ४० ॥

**स०** विवृतदर्शनाः प्रकटीभूताइत्यर्थः । दशगुणोत्तराः शतनागबलाः । नागसहस्रस्यतुल्यवर्चसः सहस्रगजबलाभिव्यञ्जकवर्चोविशेषवन्तइत्यर्थः ॥ २५ ॥ **ति०** प्रमादंच । चाद्वानरप्रतिरोधंच ॥ **शि०** सुग्रीवस्यप्रमादं समीपानागमनानुमितानवधानतां । क्रोधवशं कोपकान्तिं ॥ ३१ ॥ **ति०** स्वतेजोरूपविषेणसंभूतः व्याप्तः ॥ **स०** बाणस्ययच्छल्यं अग्रस्थितमयोमयं तदेवस्फुरन्ती जिह्वायस्य ॥ ३५ ॥ **ति०** विषादमगमत् एतावत्पर्यन्तंरामकार्यंनचिन्तितमितिविषादः ॥ ३६ ॥ **ति०** इदमुक्तंममवाक्यंतस्मै इति उक्तप्रकारेण । उक्त्वा सवानरःसुग्रीवः साधु साधुकारीयथाभवतितथाक्रियतां । अनन्तरंतस्यास्मासुयदिरुचिर्भवति तदा

[ **पा०** ] १ क. ङ.—ज. ञ. वीराःसर्वे. झ. ट. सर्वेवीराः. २ ठ. विवृतदर्शनाः. ३ ङ. छ.—ट. शार्दूलदंष्ट्राश्च. ४ छ. झ. विवृतदर्शनाः. ५ ङ.च. ज. झ. ञ. स्तुल्यवर्चसः. ६ इदंश्लोकत्रयं ख. घ. ज. पाठेषुदृश्यते. ७ छ. झ. ञ. ट. ततस्तैः कपिभिः. ८ क. सुदुरासदां. ९ ङ. च. राविष्कृतास्तदा. क. ख. राविष्कृतायुधाः. १० छ. झ. ञ. ट. पूर्वजस्यार्थमात्मवान्. ख. ङ. च. ज. पूर्वजस्योक्तमात्मवान्. ११ ङ.—ट. दृष्ट्वाक्रोधवशं. १२ ग. जगामह. १३ क. ग. महाश्वासः. १४ इदं श्लोकद्वयं क. पाठेदृश्यते. १५ ज.—ट. संभूतः. १६ ङ.—ट. मगमत्परं. १७ च. सुग्रीवेकथ्यतां. १८ क. ग. घ. झ. वाक्यंयदि. १९ क. ङ. छ. ज. ञ. ट. वाक्यमिदंमम.

अथाङ्गदस्तस्य वचो निशम्य संभ्रान्तभावः परिदीनवक्त्रः ॥
निपत्य तूर्णं नृपतेस्तरस्वी ततः कुमारश्चरणौ ववन्दे ॥ ४१ ॥
संगृह्य पादौ पितुरग्र्यतेजा जग्राह मातुः पुनरेव पादौ ॥
पादौ रुमायाश्च निपीडयित्वा निवेदयामास ततस्तमर्थम् ॥ ४२ ॥
स निद्रामदसंवीतो वानरो न विबुद्धवान् ॥ बभूव मदमत्तश्च मदनेन च मोहितः ॥ ४३ ॥
ततः किलकिलां चक्रुर्लक्ष्मणं प्रेक्ष्य वानराः ॥ प्रसादयन्तस्तं क्रुद्धं भयमोहितचेतसः ॥ ४४ ॥
ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् ॥ सिंहनादं समं चक्रुर्लक्ष्मणस्य समीपतः ॥ ४५ ॥
तेन शब्देन महता प्रत्यबुध्यत वानरः ॥ मदविह्वलताम्राक्षो व्याकुलस्रग्विभूषणः ॥ ४६ ॥
अथाङ्गदवचः श्रुत्वा तेनैव च समागतौ ॥ मन्त्रिणौ वानरेन्द्रस्य संमतौ दारदर्शिनौ ॥ ४७ ॥
प्लक्षश्चैव प्रभावश्च मन्त्रिणावर्थधर्मयोः ॥ वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ शशंसतुः ॥ ४८ ॥
प्रसादयित्वा सुग्रीवं वचनैः सामनिश्चितैः ॥ आसीनं पर्युपासीनौ यथा शक्रं मरुत्पतिम् ॥ ४९ ॥
सत्यसन्धौ महाभागौ भ्रातरौ रामलक्ष्मणौ ॥ वयस्यभावं संप्राप्तौ राज्यार्हौ राज्यदायिनौ ॥ ५० ॥
तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः ॥ यस्य भीताः प्रवेपन्तो नादान्मुञ्चन्ति वानराः ॥ ५१ ॥
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः ॥ व्यवसायरथः प्राप्तस्तस्य रामस्य शासनात् ॥ ५२ ॥

उक्तं विस्तृणाति—अथेति ॥ ४१ ॥ मातुः पुनरेवेत्यनेन मातुः पृथग्वन्दनमुच्यते ॥ ४२ ॥ मदमत्तः पानकृतमदमत्तः ॥ ४३ ॥ किलकिलेति वानराणां शब्द उच्यते ॥ ४४ ॥ महौघनिभं महाप्रवाहतुल्यं लक्ष्मणं । समं युगपत् ॥ ४५—४६ ॥ तेनैव समागतौ तदाह्वानेन समागतौ । मन्त्रिणौ प्रशस्तमन्त्रौ । अर्थधर्मयोर्विषये उच्चावचं वक्तुं प्राप्तं लक्ष्मणं शशंसतुः ॥४७—४८॥ सामनिश्चितैः सान्त्वविषये निश्चितैः । ऊचतुरिति शेषः ॥ ४९ ॥ यस्य भीतः यस्मात् भीताः ॥ ५०—५१ ॥ वाक्यसारथिः रामवाक्यप्रेरित इत्यर्थः । कथमिदं दुर्गमेकः प्रविष्टवानित्यत्राह—व्यवसायरथ इति । प्रतिपक्षनिरासाध्यवसायरथः

तस्यवाक्यंश्रुत्वा शीघ्रमागच्छ ॥ ३९ ॥ **ति०** लक्ष्मणस्येतिश्लोकेनसंक्षिप्योक्तस्यार्थस्यविस्तरः—**अथेति** । संभ्रान्तभावः संभ्रान्तचित्तः । परदीनवक्त्रः परंअतिशयेनदीनंवक्त्रंयस्यसः । परिदीनेतिपाठान्तरं । निर्गत्य लक्ष्मणसंनिहितदेशात्परावृत्त्येत्यर्थः । पूर्वंनृपतेः ततोरुमायाः । इदमुपलक्षणं । तारायाश्चरणाविल्यन्वयः ॥ ४१ ॥ **रामानु०** जग्राहमातुःपुनरेवपादावित्यत्रपुनश्शब्दः पितृनमस्कारापेक्षयाप्रयुक्तः ॥ **स०** कार्यस्यात्यावश्यकताद्योतनाय पुनःप्रणमति—**संगृह्येति** । मातुः तारायाः । तदर्थं लक्ष्मणागमनरूपं ॥ ४२ ॥ **शि०** किलकिलां दीनतासूचकस्वजातीयशब्दं ॥ ४४ ॥ **स०** महौघनिभं महाप्रवाहवदागच्छन्तं लक्ष्मणं दृष्ट्वा समं युगपत् । चक्रुः । सुग्रीवबोधनार्थमितिशेषः ॥ ४५ ॥ **ती०** दारदर्शिनौ अन्तःपुरप्रवेशयोग्यौ ॥ **ति०** संमतौचतावुदारदर्शनौच संमतोदारदर्शनौ । संमतं उदारं उत्कृष्टंदर्शनंययोस्तौ । तेनाङ्गदेन सहागतौमन्त्रिणौचदृष्ट्वा प्लक्षप्रभावसंज्ञकौमन्त्रिणौ अर्थधर्मयोर्विषये उच्चावचं उत्कृष्टापकृष्टं धर्मं वक्तुंप्राप्तंलक्ष्मणंशशंसतुः ॥ ४७ ॥ **रामानु०** । भवसत्यप्रतिश्रवइत्यन्तमेकंवाक्यं । अत्रशशंसतुरित्यनुषज्यते । **ति०** सार्थनिश्चितैः अर्थनिश्चयसहितैः वचनैः प्रसादयित्वाशशंसतुरित्यन्वयः ॥४९॥ **ति०** राज्यार्हौ त्रिलोकीराज्यार्हौ । राज्यदायिनौ तवेतिशेषः । मनुष्यभावंप्राप्तावित्यनेन वस्तुतोनमनुष्यावितिसूचितं ॥ ५० ॥ **रामानु०** यस्यभीताः यस्माद्भीताः ॥ ५१ ॥ इत्येकत्रिंशःसर्गः ॥ ३१ ॥

[ **पा०** ] १ छ. झ. ट. स्तस्यसुतीव्रवाचा. २ ङ. छ. झ. ञ. ट. निर्गत्यपूर्वं. घ. च. ज. निपत्यपूर्वं. क. निर्गत्यतूर्णं. ३ घ.—ट. ततोरुमायाश्चरणौ. ४ ङ. ज. ञ. पुनरुग्रतेजाः. ५ ज. झ. ततस्तदर्थं. ६ ख. घ. झ. ट. निद्राक्रान्तसंवीतो. ग. निद्राग्लानिसंवीतो. च. ज. निद्रयासमुसंवीतो. ञ. निद्रायाससंवीतो. ७ ङ. च. ज. ञ. नावबुद्धवान्. ८ ग.—ज. किलिकिलां. ९ क. लक्ष्मणंसमुपस्थितं. १० घ. मत्तेभनिभं. क. महेन्द्रनिभं. ११ झ. संमतोदारदर्शिनौ. ख. ग. घ. ज. संमतौदूरदर्शिनौ. १२ छ. झ. यक्षश्चैव. १३ क. ग. ङ. च. ज. झ. ञ. प्रभासश्च. १४ ङ. च. ज.—ट. सार्थनिश्चितैः. १५ आसीनमित्यर्धात्पूर्वं क. पाठे. सुग्रीवसचिवाःसर्वेमन्त्रार्थेसमुपाविशन् । विनदश्चसुषेणश्चनीलोथनलएवच । अङ्गदोवालिसूनुश्चहनुमांश्चैवबुद्धिमान् । एतेसर्वेमहात्मानःसुग्रीवंवानरोत्तमाः । इतिश्लोकद्वयंदृश्यते. १६ क. पर्युपासीनाः. १७ छ. झ. ट. मनुष्यभावं.

अयं च द[1]यितो राजंस्तारायास्तनयोऽङ्गदः ॥ लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयाऽनघ ॥ ५३ ॥
सोयं रो[2]षपरीताक्षो द्वारि तिष्ठति वीर्यवान् ॥ वानरान्वानरपते चक्षुषा निर्दहन्निव ॥ ५४ ॥
तस्य मूर्ध्ना [3]प्रणम्य त्वं सपुत्रः [4]सह बन्धुभिः ॥ गच्छ शीघ्रं [5]महाराज रोषो[6]ह्यस्य निवर्त्यताम् ॥ ५५ ॥
[7]यदाह रामो [8]धर्मात्मा तत्कुरुष्व समाहितः ॥ राजंस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवः ॥ ५६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ॥ ३२ ॥

अङ्गदादिमुखतोलक्ष्मणकोपश्रवणेनत्रस्ततरंसुग्रीवंप्रतिहनुमता तत्कोपस्यसांकेतिककालातिक्रमहेतुकरामप्रणयकोपाधीनत्वकथनेन सप्रणामंलक्ष्मणप्रसादनचोदना ॥ १ ॥

अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह ॥ लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥ १ ॥
[9]सचिवानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् ॥ [10]मन्त्रज्ञान्मन्त्रकुशलो मन्त्रेषु [11]परिनिष्ठितान् ॥ २ ॥
न मे दुर्व्याहृतं किंचिन्नापि मे दुरनुष्ठितम् ॥ लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३ ॥
असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः ॥ [12]मम दोषानसंभूताञ्श्रावितो राघवानुजः ॥ ४ ॥
अत्र [13]तावद्यथाबुद्धि सर्वैरेव यथाविधि ॥ भावस्य निश्च[14]यस्तावद्विज्ञेयो निपुणं शनैः ॥ ५ ॥
न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् ॥ मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥ ६ ॥

---

॥ ५२—५४ ॥ तस्य तस्मै ॥ ५५ ॥ स्वसमये स्वमर्यादायां । सत्यप्रतिश्रवः सत्यप्रतिज्ञो भव ॥ ५६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्यान एकत्रिंशः सर्गः ॥ ३१ ॥

---

अथ हनुमता हितोपदेशो द्वात्रिंशे—अङ्गदस्येत्यादि ॥ अङ्गदस्य प्राधान्यादङ्गदस्य वचः श्रुत्वेत्युक्तं । आसनं मुमोच । भयेनासनादुदतिष्ठदित्यर्थः ॥१॥ मन्त्रकुशलः मन्त्रप्रयोगकुशलः ॥ २ ॥ दुर्व्याहृतं परुषभाषणं । दुरनुष्ठितं अपकारः । किं किमर्थं ॥३॥ असुहृद्भिः अशोभनहृदयैः ॥ ४ ॥ तावत् प्रथमं । यथाविधि यथाक्रमं । भावस्य चेष्टायाः । निश्चयः अध्यवसायः ॥ ५ ॥ निजभयकृतमासनचलनमपह्नुते—न खल्वि-

---

**शि०** गुरुलाघवं गुरुत्वलघुत्वे रामेगुरुत्वंस्वस्मिंल्लघुत्वंचेत्यर्थः । निश्चित्य मन्त्रेषुपरिनिष्ठितः तद्विषयकातिज्ञानवान् ॥ २ ॥ **ति०** दुर्व्याहृतं अनुचितवचनं उक्तं । दुरनुष्ठितं अनुचितंकृत्यं । कृतमितिशेषः ॥ ३ ॥ **ति०** कोपकारणमुन्नयति—**असुहृद्भिरिति ।** असुहृदः शत्रवः । अमित्राः अपकारिणः । अन्तरं छिद्रं । असंभूतान् अनुत्पन्नान् । श्रावितः नूनमितिशेषः ॥ **स०** असुहृद्भिः प्राणहरैः । अमित्रैः अरिभिः ॥ ४ ॥ **ति०** अत्र लक्ष्मणकोपविषये । यथा तत्वातिमिकाबुद्धिः ज्ञानंयस्मिन्निश्चयेसः । भावस्य कोपस्य । निश्चयः तात्विककोपनिमित्तस्यनिश्चयः । विज्ञेयः कर्तव्यः । **शि०** लक्ष्मणस्यनिश्चयोऽभिप्रायः यथाबुद्धि स्वस्वबुद्ध्यनुरूपं निपुणंयथाभवतितथा सर्वैर्भवद्भिः तावत् मत्संगमात्पूर्वमेव । शनैर्विज्ञेयः ॥ ५ ॥ **ति०** त्रासः मदपराधमूलइतिशेषः । कुतस्तर्हित्रासोतआह—**मित्रमिति ।** अस्थाने अकाण्डे । वास्तवापराधाभावेपिरिपुकृतमिथ्योपजापेनकुपितं संजातकोपंमित्रं । संभ्रमं भयं । जनयत्येव ॥ **शि०** राघवात् रामात् । न ममत्रासः । अतएव लक्ष्मणादपिनत्रासः । अस्थानकुपितं अपराधाभावेन अनवसरकोपविशिष्टंमित्रंतु । संभ्रमं भयंजनयत्येव । एतेनायंमित्रद्रोहीतिलोकोक्तेर्बिभेमीतिसूचितं । नत्रासइत्यनेन अपराधेपि राघवःशरणागतं नत्यजतीतिसुग्रीवनिश्चयस्सूचितः । “ कथंचिदुपकारेणकृतेनैकेनतुष्यति । नस्मरत्यपकाराणांशतमप्यात्मवत्तया”

[ पा० ] १ क. ख. ग. ङ.—ट. तनयोराजंस्तारायादयितो. २ क. रोषपरीतात्मा. ३ क. ङ.—ट. प्रणामंत्वं. ४ च.—ट. सहबान्धवः. ५ घ. महाभाग. ६ ङ—ट. रोषोह्यस्योपशाम्यतां. क. रोषश्चाप्युपशाम्यतां. ७ ङ. छ.—ट. यथाहि. ८ ज. शान्तात्मा. ९ ख. घ.—ट. सचतानब्रवीत्. १० ग. ज. मन्त्रज्ञोमन्त्रकुशलो. ११ छ.—ट. परिनिष्ठितः. १२ ज. गुणदोषान्. १३ झ. तावद्यथाबुद्धिः. १४ घ. निश्चयस्तस्यविज्ञेयो.

सर्वथा सुकरं मित्रं दुष्करं परिपालनम् ॥ अनित्यत्वाच्च चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७ ॥
अतोनिमित्तं त्रस्तोऽहं रामेण तु महात्मना ॥ यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥ ८ ॥
सुग्रीवेणैवमुक्तस्तु हनुमान्हरिपुङ्गवः ॥ उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९ ॥
सर्वथा नैतदाश्चर्यं यस्त्वं हरिगणेश्वर ॥ न विस्मरसि सुस्निग्धमुपकारकृतं शुभम् ॥ १० ॥
राघवेण तु वीरेण भयमुत्सृज्य दूरतः ॥ त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११ ॥
सर्वथा प्रणयात्क्रुद्धो राघवो नात्र संशयः ॥ भ्रातरं संप्रहितवाँल्लक्ष्मणं लक्ष्मिवर्धनम् ॥ १२ ॥
त्वं प्रमत्तो न जानीषे कालं कालविदां वर ॥ फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छिवा ॥ १३ ॥
निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका ॥ प्रसन्नाश्च दिशः सर्वाः सरितश्च सरांसि च ॥ १४ ॥
प्राप्तमुद्योगकालं तु नावैषि हरिपुङ्गव ॥ त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥
आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् ॥ वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६ ॥
कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् ॥ अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥१७॥
नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् ॥ अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥१८॥

ति ॥ ६ ॥ मित्रस्यास्थानकोपसंभावनायां लोकन्यायमाह—सर्वथेति ॥ अल्पे वैषम्य इतिशेषः ॥ ७ ॥ महात्मना रामेण मम यदुपकृतं तन्मया प्रतिकर्तुं न शक्यं । अतोनिमित्तं अस्मान्निमित्तात् । त्रस्तोहमिति संबन्धः ॥ ८ ॥ तर्केण ऊहेन ॥ ९ ॥ उपकारकृतं उपकारकारिणं ॥ १०—१५ ॥ पुरुषान्तरात् लक्ष्मणात् । आगतमितिशेषः । अत्र मर्षणीयत्वे बहवो हेतव उपन्यस्यन्ते । हृतदारस्य परुषवचनं मर्षणीयं । एवमार्तस्येत्यादौ । राघवस्य महात्मनः परमात्मनः सर्वस्वामिन इत्यर्थः ॥ १६ ॥ अथापराधप्रायश्चित्तं विदधाति—कृतेति ॥ कृतापराधस्य न त्वारब्धापराधस्य । अपराधारम्भकाले सानुतापो यदि लघुप्रायश्चित्तेन तदा तस्य परिहारः स्यात् । न तथाभूः किंतु निश्चयेन कृतापराधोसि । तेन अञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनादन्तरेण प्रसादनंविना । अन्यत् क्षमं अपराधपरिहारक्षमं साधनं । न पश्यामि । "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इतिशास्त्रात् । लक्ष्मणस्येत्यनेन तदीयंप्रत्यञ्जलिरेव भगवदपचारपरिहारक इत्युक्तं । त्वदङ्घ्रिमुद्दिश्येतिवत् । ते इत्यनेनात्राधिकारिनियमो नास्तीत्युच्यते । अञ्जलिमित्येकवचनेन सकृत्करणमेवालमित्युक्तं । बद्ध्वेत्यनेन देशकालनियमाभावः सूचितः । बद्ध्वा लक्ष्मणस्य प्रसादनादित्यनेन क्षिप्रं देवप्रसादिनीत्यस्यार्थ उक्तः ॥ १७ ॥ किमेवं मां प्रति हीनवृत्तमुपदिष्टवानसीत्य-

इत्यादिवचनमत्रानुसन्धेयं ॥ ६ ॥ ति० रिपुजोपजापपरिहारेणसख्यपालनंदुष्करमित्याह—**सर्वथेति** । अल्पेपि उपजापेइतिशेषः ॥ ७ ॥ ति० अतोनिमित्तं अस्मान्निमित्तात् । अथस्वदोषशङ्कानिवृत्तयेकृतज्ञतांमन्त्रिभ्योदर्शयति—रामेणत्विति ॥ ८ ॥ —ति० अथमुख्यमन्त्रीहनुमान्कोपनिमित्तंनिश्चित्याह—**सुग्रीवेणेति** ॥ स० तर्केण ऊहेन । हनुमतोऽद्यापि लक्ष्मणदर्शनाभावादितिभावः ॥ ९ ॥ ति० अथनिश्चयंविवक्षुःस्वस्यगुणग्राहित्वरूपंमन्त्रिलक्षणंप्रकटयति—**सर्वथेति** ॥ १० ॥ ति० उपकारमेवाह—**राघवेणेति** । भयं वालिपराक्रमजं । वालिनश्छलेनवधकृतं लोकापवादजंवा ॥ ११ ॥ ति० प्रणयात्क्रुद्धः नतुत्वद्रिपूपजापतइत्यर्थः ॥ १२ ॥ ति० प्रणयकोपस्यापिनिमित्ताभासंदर्शयति—**त्वमिति** । कालं प्रतिज्ञातंसीतान्वेषणकालं । प्रवृत्ता प्रकर्षेणवृत्ता । गतप्रायेतियावत् ॥ १३ ॥ ति० व्यक्तं ज्ञात्वेतिशेषः ॥ १५ ॥ तनि० लक्ष्मणज्याघोषंश्रुत्वाकृतकापेयचेष्टेनसुग्रीवेणतादृशावस्थायांकर्तव्यंकिमितिप्रश्नेकृतेसुग्रीवंप्रतिहनुमानाह—**कृतापराधस्येति** । अपराधारंभएवानुतापोयदिलघुप्रायश्चित्तेनपरिहारस्स्यात् । इदानींनतावन्मात्रेणपरिहर्तुंशक्यते । किंतु सान्त्वनंकार्यं । ततश्चाञ्जलिःकर्तव्यः । अनेनभगवदपचारेतदीयप्रसादनंप्रायश्चित्तमितिव्यञ्जितं । "अनुतप्तस्तुतापेनक्षामयेन्नान्यथाशमः । भगवत्यपचारेपिनैषाशक्तिरनुत्तमा"इतिस्मरणात् ॥ १७ ॥ ति० नियुक्तैः हितोपदेशइतिशेषः । भयंत्यक्त्वाब्रवीमि राजानमपिकार्यवशातपरस्माअञ्जलिंकुर्विति वचोऽवधृतं निश्चितंवदामि ॥

[ पा० ] १ घ. छ. झ. ट. अनित्यत्वात्तु. ङ. च. ज. ञ. अनित्यत्वाद्धि. २ क. ख. घ.—ट. मुक्तेतु. ३ च. ज. ञ. हनूमान्मारुतात्मजः. ग. हनूमान्हरियूथपः. ४ ङ. ज.—ट. नविस्मरस्यविस्रब्धं. क. नविस्मरस्यसुस्निग्धं. ५ क. ग. ङ.—झ. ट. मुपकारंकृतं. ६ ख. घ. शूरेण. ७ ङ.—ट. शरच्छुभा. ८ ग. च. सुप्रसन्नाश्चसरितःप्रसन्नानिसरांसिच. ९ ङ. ज.—ट. इतएव

अभिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः ॥ सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥ १९ ॥
न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् ॥ पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २० ॥
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः ससुहृज्जनः ॥ राजंस्तिष्ठ स्वसमये भर्तुर्भार्येव तद्वशे ॥ २१ ॥
न रामरामानुजशासनं त्वया कपीन्द्र युक्तं मनसाप्यपोहितुम् ॥
मनो हि ते ज्ञास्यति मानुषं बलं सराघवस्यास्य सुरेन्द्रवर्चसः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

अङ्गदादिभिःकिष्किन्धांप्रवेशितेन राजमार्गेऽद्भुततमनानाभवनादिकमवलोकयतासता सुग्रीवगृहंप्रविष्टेनलक्ष्मणेनान्तःपुरस्त्रीणांमञ्जीरादिशिञ्जितश्रवणजलजयाज्यास्वनेनसकलदिग्वलयपूरणपूर्वकं कुत्रचिदेकान्तदेशेऽवस्थानम् ॥१॥ ज्याघोषश्रवणचकितेनसुग्रीवेण लक्ष्मणसंनिधिंप्रेषितयातारया सकलवानरसेनासमानयनायसुग्रीवकृतनीलनियोजननिवेदनादिना क्षमापणपूर्वकंलक्ष्मणप्रसादनम् ॥ २ ॥ तारासान्त्वनेन किंचिच्छान्तरुषालक्ष्मणेन तदनुमत्याऽन्तःपुरप्रवेशेन सुग्रीवदर्शनम् ॥ ३ ॥

अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा ॥ प्रविवेश गुहां घोरां किष्किन्धां रामशासनात् ॥ १ ॥
द्वारस्था हरयस्तत्र महाकाया महाबलाः ॥ बभूवुर्लक्ष्मणं दृष्ट्वा सर्वे प्राञ्जलयः स्थिताः ॥ २ ॥
निःश्वसन्तं तु तं दृष्ट्वा क्रुद्धं दशरथात्मजम् ॥ बभूवुर्हरयस्त्रस्ता न चैनं पर्यवारयन् ॥ ३ ॥
स तां रत्नमयीं श्रीमान्दिव्यां पुष्पितकाननाम् ॥ रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४ ॥

---

त्राह—नियुक्तैरिति ॥ १८ ॥ कथमिदं हितं तत्राह—अभिक्रुद्ध इति ॥ १९ ॥ हेत्वन्तरमाह—न स इति ॥ २० ॥ अञ्जलिं बद्ध्वेत्युक्तं विवृणोति—तस्येति ॥ स्वसमये तिष्ठ तद्वशे च तिष्ठ ॥ २१ ॥ सुरेन्द्रवर्चसः सराघवस्य सलक्ष्मणस्य । अस्य रामस्य । मानुषंबलं दिव्यास्त्रादिबलमन्तरेण केवलं स्वाभाविकं बलं । ते मनो ज्ञास्यतिहि जानात्येव । सालगिरिभेदनादौ दृष्टचरत्वादितिभावः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

अथान्तःपुरं प्रविष्टस्य लक्ष्मणस्य तारया प्रसादनं त्रयस्त्रिंशे—अथेत्यादि ॥ प्रतिसमादिष्टः प्रत्याहूतः । अङ्गदेनेतिशेषः ॥ १—२ ॥ न चैनं पर्यवारयन् भयेन लक्ष्मणमुपगन्तुं नाशक्नुवन्नित्यर्थः ॥ ३ ॥ रत्नमयीं रत्ननिर्मितां । रत्नसमाकीर्णां आपणस्थरत्नैः समाकीर्णां । हर्म्याः धनिनां वासाः । प्रासादाः देव-

---

शि० नियुक्तैः युक्तार्थबोधनेनियोजितैः । पार्थिवोऽवश्यंहितंवाच्यः । इतएवभयंत्यक्त्वाऽवधृतं हितत्वेननिश्चितं । वचोब्रवीमि ॥ १८ ॥ स० यः पुमान्पुनःप्रसाद्योभवेत्सकोपयितुंनक्षमः । विशेषतस्तु पूर्वोपकारंस्मरता कृतज्ञेन कार्यज्ञेन । अकृतज्ञेनतुकोपयितुंक्षमइत्यपिबोधयितुंस्मरताकृतज्ञेनेत्युक्तिः ॥ २० ॥ ती० तद्वशइतिप्रथमान्तपाठःसाधुः । सप्तम्यन्तपाठे स्वसमयइत्यत्रवर्तमानइतिशेषः॥२१॥ ति० अपोहितुं उपेक्षितुं । सराघवस्य सलक्ष्मणस्य । अस्य रामस्य । मानुषंमनुष्यमतिक्रान्तंबलं। तेमनोज्ञास्यति जानात्येव । वालिवधादिनेतिभावः ॥ शि० सराघवस्य रामसहितस्य । अस्य लक्ष्मणस्य । मानुषं मः इयत्तायाः अनु षः विध्वंसःयस्मिंस्तद्बलंतेमनोज्ञास्यति ॥ २२ ॥ इतिद्वात्रिंशःसर्गः ॥ ३२ ॥
शि० रत्नसमाकीर्णां रत्नैः अनेकविधोत्तमपदार्थैर्व्याप्तां ॥ ४ ॥

[ पा० ] १ ग. सहबन्धुभिः. २ ग. शक्यं. ३ क. सलक्ष्मणस्यास्य. ४ घ. शुभ्रां. ५ क. घ.—ट. रम्यां. ६ ग. ङ. छ.—ट. दिव्यांश्रीमान्.

हर्म्यप्रासादसंबाधां नानापण्योपशोभिताम्[१] ॥ सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥ ५ ॥
देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः ॥ दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ६ ॥
चन्दनागरुपद्मानां गन्धैः सुरभिगन्धिनाम्[३] ॥ मैरेयाणां मधूनां च संमोदितमहापथाम् ॥
[ विन्ध्यमेरुगिरिप्रख्यैः प्रासादैर्नैकभूमिभिः ॥ ७ ॥ ]
ददर्श गिरिनद्यश्च विमलास्तत्र राघवः ॥ ८ ॥
अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ॥ गवयस्य गवाक्षस्य गजस्य[५] शरभस्य च ॥ ९ ॥
विद्युन्मालेश्च संपातेः सूर्याक्षस्य हनूमतः ॥ वीरबाहोः सुबाहोश्च नलस्य[६] च महात्मनः ॥ १० ॥
कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा ॥ दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ ११ ॥
एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् ॥ ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ १२ ॥
पाण्डुराभ्रप्रकाशानि दिव्यमाल्ययुतानि[७] च ॥ प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च ॥ १३ ॥
पाण्डुरेण तु सालेन[८] परिक्षिप्तं दुरासदम् ॥ वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ॥ १४ ॥
शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः ॥ सर्वकामफलैर्वृक्षैः[९] पुष्पितैरुपशोभितम् ॥ १५ ॥
महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसन्निभैः ॥ दिव्यपुष्पफलैर्वृक्षैः शीतच्छायैर्मनोरमैः ॥ १६ ॥
हरिभिः संवृतद्वारं बलिभिः शस्त्रपाणिभिः ॥ दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १७ ॥
सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः ॥ अवार्यमाणः सौमित्रिर्महाभ्रमिव भास्करः ॥ १८ ॥
स सप्त कक्ष्या धर्मात्मा नानाजनसमाकुलाः[१०] ॥ प्रविश्य[११] सुमहद्गुप्तं ददर्शान्तःपुरं महत् ॥ १९ ॥
हैमराजतपर्यङ्कैर्बहुभिश्च वरासनैः ॥ महार्हास्तरणोपेतैस्तत्र[१२]तत्रोपशोभितम् ॥ २० ॥
प्रविशन्नेव स ततं शुश्राव मधुरस्वरम्[१३] ॥ तन्त्रीगीतसमाकीर्णं समगीतपदाक्षरम्[१४] ॥ २१ ॥

गृहाः । पद्मानां आलेपविशेषाणां । गिरिनद्यः गिरिनदीः । व्यत्ययेन द्वितीया ॥४—११॥ महासाराणि अतिदृढानि ॥ १२—१३ ॥ पाण्डुरेण सालेन सुधाधवलितप्राकारेण । दिव्यपुष्पफलैर्वृक्षैरित्यनेन इन्द्रदत्ताःस्वर्गीयावृक्षा उच्यन्ते । पूर्वमुक्तावृक्षा भौमा इत्यवगन्तव्यं। पूर्वं वानरेन्द्रगृहं रम्यमित्युक्तस्यानेकविशेषणव्यवधानेन सुग्रीवस्यगृहंरम्यमिति पुनर्निर्गमनं । स्वरूपतोरम्यं उक्तविशेषणैश्च रम्यमितिरम्यपदद्वयनिर्वाहः । यद्वा वानरेन्द्रगृहं वानरेन्द्रयोः ऋक्षरजोवालिनोः गृहभूतं । इदानीं सुग्रीवस्य गृहं प्रविवेशेतिसंबन्धः ॥ १४—२० ॥ सः लक्ष्मणः । ततं वीणादिवाद्यजातं । मधुरस्वरं मधुरश्रुतियुक्तं । तन्त्रीशब्देन तन्त्रीध्वनिर्लक्ष्यते । तद्रूपैर्गीतैः समाकीर्णं । समगीतपदाक्षरं समतया तन्त्रीगीतसमतया गीतानि कण्ठैर्गीतानि पदान्यक्षराणि

**स०** सुरभिश्चासौगन्धश्चसयेषांतेषां । मधूनां पुष्परसानां । "मधुःपुष्परसः" इतिविश्वः ॥ ७ ॥ **ति०** पाण्डुरेणशैलेनपरिक्षिप्तं स्फटिकशिलामयवप्रेणवेष्टितं ॥१४॥ **शि०** सर्वकामाः मनोरथायेभ्यस्तानिफलानियेषांतैः । किंच सर्वान्कामान्फलन्ति निष्पादयन्ति तैर्वृक्षैश्च ॥ १५ ॥ **शि०** यानासनसमावृताः यानैः विमानादिभिः । आसनैः चित्रकंबलाद्यास्तरणविशिष्टपर्यङ्कादिभिः । किंच यानानांविमानादीनांआसनानि चित्रकंबलादीनितैःसमावृताः पूर्णाः । सप्तकक्ष्याः द्वारःप्रविश्य सुमहद्गुप्तं वानरैरत्यन्तंसंरक्षितं । अन्तःपुरं धर्मात्मालक्ष्मणोददर्श ॥ १९ ॥

**[ पा० ]** १ ङ.—ञ. नानारत्नोपशोभितां. २ क. रतिशोभितां. ३ छ. ज. झ. ट. गन्धितां. ४ इदमर्धं क. घ. ङ.—ञ. पाठेषुदृश्यते. ५ ङ. शरभस्यगजस्यच. ६ च. ज. बलस्यच. ग. नलस्यपनसस्यच. ७ ग. छ. झ. ट. गन्धमाल्य. ८ क. ग.—ट. शैलेन. ९ ङ. च. ञ. सर्वकालफलैः. १० क. ङ. च. ज.—ट. यानासनसमावृताः. ख. ग. यानासनसमाकुलाः. ११ च. छ. झ. ददर्शसुमहद्गुप्तं. ग. प्रविश्यबलिभिर्गुप्तं. १२ तत्रसमावृतं. १३ क. ग.—ट. मधुरस्वनं. १४ क. ख. ङ.—ट. समतालपदाक्षरं.

बह्वीश्च विविधाकारा रूपयौवनगर्विताः ॥ स्त्रियः सुग्रीवभवने ददर्श स[1] महाबलः ॥ २२ ॥
दृष्ट्वाभिजनसंपन्ना[2]श्चित्रमाल्यकृतस्रजः ॥ फल[3]माल्यकृतव्यग्रा भूषणोत्तमभूषिताः ॥ २३ ॥
नातृप्ता[4]न्नापि चाव्यग्रान्नानुदात्तपरिच्छदान् ॥ सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २४ ॥
कूजितं नूपुराणां च काञ्चीनां नि[5]नदं तथा ॥ [6]संनिशम्य ततः श्रीमान्सौमित्रिर्लज्जितोऽभवत् ॥ २५ ॥
रोषवेगप्र[7]कुपितः श्रुत्वा चाभरणस्वनम् ॥ चकार ज्यास्वनं वीरो दिशः शब्देन पूरयन् ॥ २६ ॥
चारित्रेण महाबाहुरपकृष्टः स लक्ष्मणः ॥ तस्थावेकान्तमाश्रित्य रामशो[8]कसमन्वितः ॥ २७ ॥
तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः ॥ विज्ञायाऽऽगमनं त्रस्तः संचचाल वरासनात् ॥ २८ ॥
अङ्गदेन यथा मह्यं पुरस्तात्प्रतिवेदितम् ॥ सुव्यक्तमेष संप्राप्तः[9] सौमित्रिर्भ्रातृवत्सलः ॥ २९ ॥
अङ्गदेन [10]समाख्यातं ज्यास्वनेन च वानरः ॥ बुबुधे लक्ष्मणं प्राप्तं मुखं [11]चास्य व्यशुष्यत ॥ ३० ॥
ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम् ॥ उवाच हितमव्यग्रस्त्राससंभ्रान्तमानसः ॥ ३१ ॥
किंनु तत्[12]कारणं सुभ्रु प्रकृत्या मृदुमानसः ॥ सरोष इव संप्राप्तो येनायं राघवानुजः ॥ ३२ ॥
किं पश्यसि कुमारस्य रोषस्थानमनिन्दिते ॥ न खल्वकारणे कोपमाहरे[13]न्नरसत्तमः ॥ ३३ ॥
यदस्य कृतमस्माभिर्बुध्यसे किंचिदप्रियम् ॥ तद्बुद्ध्या संप्रधार्याशु क्षिप्र[14]मर्हसि भाषितुम् ॥ ३४ ॥
अथवा स्वयमेवैनं द्रष्टुमर्हसि [15]भाषितुम् ॥ वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३५ ॥
[16]त्वद्दर्शनविशुद्धात्मा [17]न स कोपं करिष्यति ॥ न हि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥ ३६ ॥
त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम् ॥ ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम् ॥ ३७ ॥

---

च यस्य । यद्वा समानि अन्यूनातिरिक्तानि गीतसंबन्धीनि पदान्यक्षराणि च यस्य ॥२१—२२॥ फलमाल्यकृतव्यग्राः फलमाल्यार्थं व्यग्रा इत्यर्थः ॥ २३ ॥ नानुदात्तपरिच्छदान् उत्कृष्टवस्त्राभरणादिकान् ॥ २४ ॥ लज्जितोभवत् उपरिसुरतद्योतकत्वादिति भावः ॥ २५ ॥ रोषवेगप्रकुपितः रोषप्रवृद्धः । प्रकोपशब्दो ह्यभिवृद्धवाची ॥ २६ ॥ रामशोकसमन्वितः रामविषयशोकसमन्वितः । एकान्तं स्त्रीप्रसङ्गरहितप्रदेशं ॥ २७ ॥ सौमित्रिःसंप्राप्त इत्यागमनं विज्ञायेति संबन्धः । संचचाल वरासनात् लाङ्गूलचलनमाल्यच्छेदनादिकापेयव्यापारानकरोदित्यर्थः ॥ २८—३० ॥ अव्यग्रः कार्यांश इति शेषः ॥ ३१—३६ ॥ त्वया सान्त्वैः प्रसन्नेन्द्रियमानसमिति संबन्धः । उपक्रान्तं उपागतं ॥ ३७ ॥

---

**ति०** अभिजनसंपन्नाः आभिजात्ययुक्ताः । वरमाल्यकृतव्यग्राः वरमाल्यानांउत्तमस्रजांकृतंकरणंतत्रव्यग्राः ॥२३॥ **ति०** लज्जितोऽभवत् अयोध्यातोप्यधिकसौभाग्यदर्शनाल्लज्जा । परस्त्रीदर्शनकृतालज्जेत्यन्ये ॥२५ ॥ **ति०** आभरणस्वनंश्रुत्वा स्त्रीणांततोनिवृत्तयेज्यास्वनंचकार ॥ **शि०** आभरणस्वनंश्रुत्वा रोषवेगप्रचलितः रोषवेगःप्रचलितोनिवृत्तोयस्यसः तिरोहितकोपइत्यर्थः । ज्यास्वनं चकार सुग्रीवानवधानतानिवृत्तयेइतिशेषः ॥२६॥ **ति०** तदेवाह—चारित्रेणेति । चारित्रेण स्त्रीगोष्ठ्यांप्रवेष्टुंनोचितमित्याचारपर्यालोचनया । अपकृष्टोनिवर्तितान्तःपुरप्रवेशःसन् । एकान्तमाश्रित्य रामकोपसमन्वितः रामकार्याप्रवृत्तिदर्शनजकोपेनसमन्वितस्तस्थौ ॥ **ती०** रामकोपसमन्वितः बुद्धिस्थरामकोपइत्यर्थः । चारित्रेणापकृष्टः सच्चरित्रयुक्ततयापरस्त्रीदर्शनेनस्त्रीनूपुरशब्दश्रवणेनचलज्जयोदासीनस्सन् । एकान्तेस्थितवानितिभावः ॥२७॥ **ति०** उपशुष्यत उपाशुष्यत ॥३०॥ **ति०** निर्निमित्तकोपासंभवान्निमित्तंचानिर्णीयस्वस्यसमीपगमनमनुचितमितिपक्षान्तरंगृह्णाति—**अथवेति**। स्वयमेव मांविहायेत्यर्थः ॥३५॥ **ति०** विशुद्धात्मा

**[ पा० ]** १ क. ङ. ज. सुमहाबलः. २ छ. झ. ट. संपन्नास्तत्र. ३ ङ. च. छ. झ. ञ. ट. वरमाल्य. ४ घ. छ. झ. ट. न्नापिचाव्यग्रान्. च. न्नापिवाव्यग्रान्. ५ छ. झ. ट. निस्वनं. ६ ख. ग. ङ. सनिशम्य. ७ च. ज. ञ. ट. प्रचलितः. क. प्रकटितं. ८ क. ग. ङ.—ट. रामकोपसमन्वितः. ९ क. मांप्राप्तः. १० क. ग. ङ.—ट. समाख्यातो. ११ क. छ. झ. चास्योपशुष्यत. ख. ङ. च. ज. ञ. ट. चास्योपशुष्यते. १२ च.—ट. किंनुरुत्तारणं. ङ किंतारेकारणं. १३ ङ. छ.—ट. न्नरपुङ्गवः. १४ ङ.—ट. क्षिप्रमेवाभिधीयतां. १५ क. ग.—ट. भामिनि. १६ छ. झ. त्वद्दर्शने. १७ क. ख. घ.—ट. नस्सकोपं.

सा प्रस्खलन्ती मदविह्वलाक्षी प्रलम्बकाञ्चीगुणहेमसूत्रा ॥
[1]सलक्षणा लक्ष्मणसन्निधानं जगाम तारा नमिताङ्गयष्टिः ॥ ३८ ॥
स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा ॥
अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः स्त्रीसंनिकर्षा[2]द्विनिवृत्तकोपः[3] ॥ ३९ ॥
सा [4]पानयोगाद्विनिवृत्तलज्जा दृष्टि[5]प्रसादाच्च नरेन्द्रसूनोः ॥
उवाच तारा प्रणयप्रगल्भं वाक्यं महार्थं परि[6]सान्त्वपूर्वम् ॥ ४० ॥
किं कोपमूलं मनुजेन्द्रपुत्र कस्ते न संतिष्ठति वाङ्निदेशे ॥
कः शुष्कवृक्षं वनमापतन्तं [7]दवाग्निमासीदति निर्विशङ्कः[8] ॥ ४१ ॥
स तस्या वचनं श्रुत्वा सान्त्वपूर्वमसंशयम् ॥ भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४२ ॥
किमयं [9]कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः ॥ भर्ता भर्तृहिते युक्ते न चैनमवबुध्यसे ॥ ४३ ॥
न चिन्तयति राज्यार्थं [10]नोस्मान्शोकपरायणान् ॥ [11]सामात्यपरिषत्तारे पानमेवोपसेवते ॥ ४४ ॥
स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः ॥ व्यतीतांस्तान्मद[12]व्यग्रो विहरन्नावबुध्यते ॥ ४५ ॥
न हि धर्मार्थसिद्ध्यर्थं [13]पानमेवं प्रशस्यते ॥ पानादर्थश्च [14]धर्मश्च कामश्च परिहीयते ॥ ४६ ॥

सा कान्तसंश्लेषं विनापि रमणीयगमनसौन्दर्या । प्रस्खलन्ती संश्लेषकृतायासेन पदे पदं कृत्वागच्छन्ती । मदविह्वलाक्षी भोगसंवर्धकमधुपानमदेनविह्वलनेत्रा । प्रलम्बे काञ्चीगुणहेमसूत्रे यस्याः सा प्रलम्बकाञ्चीगुणहेमसूत्रा । ईषच्छिथिलदुकूलतया शयने यथा स्थिता तथैव समागतेत्यर्थः । सलक्षणा व्यक्तैः संभोगलक्षणैः समागता । लक्ष्मणसन्निधानं जगाम । किं मातुरपि गोप्यमस्तीत्यागता । नमिताङ्गयष्टिः द्रवीभावावस्थायां नमितं नार्जवमर्हति । अतः नम्रैव यथा निरूपकंभवति तथा स्थितेत्यर्थः ॥ ३८ ॥ उदासीनतया तत्कान्तिनिर्वर्णनानादरतया ॥ ३९ ॥ नरेन्द्रसूनोः धार्मिकस्य लक्ष्मणस्य । दृष्टिप्रसादाद्धेतोः । प्रणयप्रगल्भं स्नेहदृष्टं ॥ ४० ॥ चतुरोमासान् राजपुत्रौ विद्युत्स्तनितसात्कृत्य स्वयं भोगप्रवणा स्थिता तज्जानन्त्यपि किं कोपमूलमित्याह । तत्कृपारसविशेषज्ञतया दृष्टिप्रसादादिति ह्युक्तं । मनुजेन्द्रपुत्र । षष्टिवर्षसहस्राणि राज्यं परिपाल्य प्रजापराधं क्षान्तवतो दशरथस्य पुत्रस्त्वं अपराधिजनानां शिरश्छेदनं करिष्यामीति संप्रति समागतोसि सम्यञ्ची भवतो गतिः । कस्ते न संतिष्ठति वाङ्निदेशे यस्ते वाङ्निदेशे न तिष्ठति सकः । अशास्त्रवश्यस्य दृष्टेवस्तुनि सपदिचापलं कृत्वा निवर्तितुमक्षमस्य तिर्यग्जनस्य च्युतान्भोगान्स्वयमेव दत्त्वा स्वाज्ञां कुर्वन्तं हिंसितुमिच्छसि । क इत्यादि । दवाग्नौ पतन् चपलः शलभः किलेतिभावः । तद्वच्चपलोयमित्येवं दृष्टान्तः । संतिष्ठतीत्यार्षपरस्मैपदं ॥ ४१ ॥ असंशयं निःसंशयं । अकुटिलमितियावत् । प्रणयदृष्टार्थं स्नेहसंदर्शितप्रयोजनं ॥ ४२ ॥ अतीवायुक्तं तव भर्तुर्विषयप्रावण्यमित्याह—किमयमित्यादिना ॥ युक्ते सक्ते इति संबुद्धिः । अयं कामवृत्त इति एनं नावबुध्यसेकिमिति संबन्धः ॥ ४३ ॥ राज्यार्थं राज्यरूपप्रयोजनं ॥ ४४ ॥ प्रमाणं मर्यादां ॥ ४५ ॥ धर्मार्थसिद्ध्यर्थं यतमानस्येतिशेषः

गतक्रोधचित्तः ॥ ३६ ॥ **रामानु०** "येनैवबाणेनगतःप्रियोमेतेनैवमांत्वंजहिसायकेन । हतागमिष्यामिसमीपमस्यनमामृतेरामरमेतवाली " इतियारामंप्रत्युक्तवतीसेत्यर्थः । यद्वा " स्वयमेवैनंद्रष्टुमर्हसिभामिनि " इतिसुग्रीवेणोक्तासातारा ॥ **स०** हेमात्मकानिसूत्राणि तन्तवोयस्मिन्वस्त्रे तद्धेमसूत्रं । प्रलंबेकाञ्चीगुणहेमसूत्रेयस्यास्सा । नमिताङ्गयष्टिः विनयेनेतिवा स्तनादिभारेणेतिवाभावोबोध्यः ॥ ३८ ॥ **ति०** परिसान्त्वरूपं परितःसान्त्वरूपं । पतिसान्त्वेतिपाठस्सुगमः ॥ ४० ॥ **ति०** राज्यार्थं

**[ पा० ]** १ क. सुलक्षणा. २ क. ग. सन्निकर्षाच्चनिवृत्त. ३ घ. रोषः. ४ क. ख. घ.—ट. पानयोगाच्चनिवृत्त. ५ ख. ग. प्रसाराच्च. क. प्रचाराच्च. ६ छ. झ. ट. सान्त्वरूपं. ७ छ.—ट. दावाग्निं. ८ क. ख. ग.—ट. मशङ्कितः. ९ ङ. च. ज. ञ. कामवृत्तश्च. १० झ. ट. सोस्मान्. ११ झ. ट. सामान्यपरिषत्. १२ छ. झ. ट. न्मदोदग्रो. १३ ग. ङ.—ट. पानमेव. १४ ग. ङ.—ट. कामश्चधर्मश्च.

धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः ॥ अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ ४७ ॥
मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् ॥ तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४८ ॥
तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम् ॥ यत्कार्यं कार्यतत्त्वज्ञे तदुदाहर्तुमर्हसि ॥ ४९ ॥

सा तस्य धर्मार्थसमाधियुक्तं निशम्य वाक्यं मधुरस्वभावम् ॥
तारा गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं तमुवाच भूयः ॥ ५० ॥
न कोपकालः क्षितिपालपुत्र न चातिकोपः स्वजने विधेयः ॥
त्वदर्थकामस्य जनस्य तस्य प्रमादमप्यर्हसि वीर सोढुम् ॥ ५१ ॥
कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्त्वे ॥
कस्त्वद्विधः कोपवशं हि गच्छेत्सत्त्वावरुद्धस्तपसः प्रसूतिः ॥ ५२ ॥
जानामि रोषं हरिवीरबन्धोर्जानामि कार्यस्य च कालसङ्गम् ॥
जानामि कार्यं त्वयि यत्कृतं नस्तच्चापि जानामि यदत्र कार्यम् ॥ ५३ ॥
तच्चापि जानामि यथाऽविषह्यं बलं नरश्रेष्ठ शरीरजस्य ॥
जानामि यस्मिंश्च जनेऽवबद्धं कामेन सुग्रीवमसक्तमद्य ॥ ५४ ॥

॥ ४६ ॥ कृते उपकारविषये । अप्रतिकुर्वतः महान् धर्मलोपो भवेत् । प्रत्युपकाराकरणाद्गुणवतो मित्रस्य नाशे सति महानर्थलोपोभवेत् । चकारात्कामलोपश्च ॥४७॥ उक्तमर्थमुपपादयति—मित्रं हीति । सत्यधर्मपरायणं मित्रं अर्थगुणश्रेष्ठं हि । अत्र गुणशब्दः कामवाची । अर्थकामयोर्मूलत्वान्मित्रं ताभ्यां श्रेष्ठं हि । तादृशं मित्रं त्यजता सुग्रीवेण तद्द्वयं अर्थकामद्वयं । परित्यक्तं तु परित्यक्तमेव । धर्मेतुनव्यवस्थितं । धर्मोपि परित्यक्तइत्यर्थः ॥ ४८ ॥ तत् तस्मात् । कार्यतत्त्वज्ञे कार्ये धर्मार्थकामविलोपहेतुभूते मित्रपरित्यागलक्षणे कार्ये । एवं प्रस्तुते सति यदुत्तरं कार्यमस्माभिः कार्यं कर्तव्यं । तत् उदाहर्तुं वक्तुं अर्हसि ॥ ४९ ॥ धर्मार्थयोः समाधिना संबन्धेन युक्तं । गतार्थे प्रयोजनयुक्ते । नरेन्द्रकार्ये विषये विश्वासयुक्तं ॥ ५० ॥ न कोपकालः सुग्रीवस्य कामार्तत्वादितिभावः । त्वदर्थकामस्य । त्वत्प्रयोजनपरस्य । जनस्य सुग्रीवस्य ॥ ५१ ॥ गुणप्रकृष्टः उत्कृष्टवीर्यगुणः । अपकृष्टसत्त्वे हीनबले । सत्त्वावरुद्धः व्यवसाययुक्तः । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । तपसः शान्तिरूपस्य । प्रसूतिः उत्पत्तिस्थानं ॥ ५२ ॥ मद्रोषमेव जानासि नतु तद्धेतूनित्यत्राह—जानामीति ॥ हरिवीरबन्धोः रामस्य । रोषं जानामि रोषममोघस्वरूपं जानामीत्यर्थः । कार्यस्य च कालसङ्गं उद्योगरूपकार्यस्य कालविलम्बनं च जानामि । जानामि कार्यं त्वयि यत्कृतं नः । यत् वालिवधरूपं कार्यं । नः अस्माकं कृतं त्वयि विद्यमानं तदपि जानामि । यदत्र कार्यं अस्मिन्नुपकारे अस्माभिर्यत्सीतान्वेषणादिकं कर्तव्यं तच्चापि जानामि ॥ ५३ ॥ हे नरश्रेष्ठ शरीरजस्य कामस्य बलं यथा अविषह्यं तच्चापिजानामि । अद्य

राज्यस्थैर्यार्थं । सामान्यापरिषत्यस्यतादृशः । भूत्वेतिशेषः ॥ ४४ ॥ शि० अर्थगुणैः अर्थसाधनीभूतवात्सल्यादिभिःश्रेष्ठं सर्वोत्कृष्टं । सत्यधर्मपरायणं सत्यस्यधर्माणांवेदविहितकर्मणांच परायणं परमाश्रयः । तत्तत्फलादिदातेत्यर्थः । तत् मित्रं त्वद्भ्रात्रापरित्यक्तं । अतएवधर्मे नैवव्यवस्थितं । सनातनोधर्मस्त्यक्तइत्यर्थः । तत् तस्माद्धेतोः । द्वयं उभयलोकसुखंपरित्यक्तं । परित्यक्तमित्युभयान्वयि ॥ ४८ ॥ ति० धर्मार्थसमाधियुक्तं तत्संबन्धयुक्तं । अगतार्थे भ्रष्टप्रयोजने । मनुजेन्द्रकार्ये तद्विषये । विश्वासयुक्तंयथातथा भूयः पुनः । उवाच ॥ ५० ॥ ति० अपकृष्टसत्त्वे हीने । सत्त्वावरुद्धः सहजसत्त्वगुणावरुद्धविपरीतव्यापारः । सत्त्वाविरुद्धइतिपाठे सहजगुणाविरुद्धव्यापारः । अतएव तपसःप्रसूतिः ॥ ती० सत्त्वावरुद्धः रजस्तमसोरननुप्रवेशायसत्त्वगुणेन निरुद्धः ॥ शि० सत्त्वावरुद्धः विशुद्धसत्त्वमयः । अतएवतपसोविचारस्यप्रसूतिः ॥ ५२ ॥ ती० कामेन असक्तं सुग्रीवं । अद्य

[ पा० ] १ क. कृतेष्वप्रति. २ क. झ. ट. तत्कार्यं. ३ ङ. ज. मधुरस्वभावा. ४ क. कृतार्थां. ङ.—ज. ञ. ट. गतार्थां. ५ क. घ.—झ. ट. नचापि. ६ ख. ग. ङ. च. छ. झ. ञ. ट. कोपं. ७ ङ. छ. ज. जनेऽवरुद्धं.

न कामतन्त्रे तव बुद्धिरस्ति त्वं वै यथा मन्युवशं प्रपन्नः ॥
न देशकालौ हि न चार्थधर्मावपेक्षते कामरतिर्मनुष्यः ॥ ५५ ॥
तं कामवृत्तं मम सन्निकृष्टं कामाभियोगाच्च निवृत्तलज्जम् ॥
क्षमस्व तावत्परवीरहन्तस्त्वद्भ्रातरं वानरवंशनाथम् ॥ ५६ ॥
महर्षयो धर्मतपोभिकामाः कामानुकामाः प्रतिबद्धमोहाः ॥
अयं प्रकृत्या चपलः कपिस्तु कथं न सज्जेत सुखेषु राजा ॥ ५७ ॥
इत्येवमुक्त्वा वचनं महार्थं सा वानरी लक्ष्मणमप्रमेयम् ॥
पुनः सखेलं मदविह्वलं च भर्तुर्हितं वाक्यमिदं बभाषे ॥ ५८ ॥
उद्योगस्तु चिराज्ञप्तः सुग्रीवेण नरोत्तम ॥ कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५९ ॥
आगता हि महावीर्या हरयः कामरूपिणः ॥ कोटीशतसहस्राणि नानानगनिवासिनः ॥ ६० ॥
तदागच्छ महाबाहो चारित्रं रक्षितं त्वया ॥ अच्छलं मित्रभावेन सतां दारावलोकनम् ॥ ६१ ॥
तारया चाभ्यनुज्ञातस्त्वरया चापि चोदितः ॥ प्रविवेश महाबाहुरभ्यन्तरमरिन्दमः ॥ ६२ ॥
ततः सुग्रीवमासीनं काञ्चने परमासने ॥ महार्हास्तरणोपेते ददर्शादित्यसन्निभम् ॥ ६३ ॥
दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम् ॥ दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥ ६४ ॥
दिव्याभरणमाल्याभिः प्रमदाभिः समावृतम् ॥ संरब्धतररक्ताक्षो बभूवान्तकसन्निभः ॥ ६५ ॥

---

सुग्रीवं यस्मिन् जने कामेन असक्तं अनवरतं अवबद्धं जानामि । तं च स्त्रीजनं जानामीतियोजना ॥ ५४ ॥ लक्ष्मणसंरम्भोपशमनाय स्वप्रागल्भ्येन लोकस्थितिं दर्शयति—न कामतन्त्रे इत्यादिना ॥ त्वं यथा येन कारणेन । मन्युवशं प्रपन्नः तेन कारणेन । कामतन्त्रे रतिक्रीडादौ । तव बुद्धिर्नास्ति । कामतन्त्राभिज्ञश्चेत्तादृशं न द्विष्या इति भावः । किं कामतन्त्रप्रवणः किमपि न जानातीत्यत्राह—न देशकालाविति ॥५५॥ मम सन्निकृष्टं समीपस्थं । अतएव कामवृत्तं कामव्यापारमिति क्रमेण योजना ॥ ५६ ॥ महर्षयोपि कामवशाः किमुत पृथग्जन इत्याह—महर्षय इति ॥ धर्मतपसी अभिकामयन्त इति धर्मतपोभिकामाः । कामस्याभिलाषस्य अनु पश्चात् कामो येषां ते कामानुकामाः । प्रतिबद्धमोहाः नियतस्त्रीव्यामोहाः ॥५७॥ सखेलं सलीलं ॥ ५८—६० ॥ चारित्रं रक्षितं त्वया अन्तःपुरस्त्र्यवलोकनमनुचितमिति बहिरेव तिष्ठता त्वया सदाचारः सम्यगनुष्ठित इत्यर्थः । शरणागतरक्षणाचारस्त्वया सम्यगनुष्ठित इति वा । अच्छलं अदोषावहं॥६१॥ तारयेत्यादिश्लोकचतुष्टयमेकं वाक्यं। समावृतं परिवृतं । संरब्धतरः कुपिततरः । अतएव

---

यस्मिञ्जने अवबद्धंजानामीति स्त्रीजनंजानामीतिवायोजना ॥ ५४ ॥ **ति॰** ममसंनिकृष्टं स्वभार्यायाममसमीपेकामवशाद्वर्तमानं । कामाभियोगः कामावेशः । क्षमस्वेति । परवशप्रवृत्तापराधत्वात्स्वभ्रातृत्वाच्चक्षमैवात्रयोग्यानतुकोपइत्याशयः ॥ **स॰** कामवृत्तं स्वेच्छाचारिणं । अतएवममसंनिकृष्टं मच्छय्यासक्तं । त्वद्भ्रातरं सखित्वात् । एतादृशंसुग्रीवमुद्दिश्यक्षमस्व ॥५६॥ **ति॰** कामवशत्वंनास्यैवेत्याह—**महर्षयइति** । कामे कामभोगे अनुकामोऽभिलाषोयेषांते । अतएवस्त्रीषुप्रतिबद्धमोहाः । कपिः तत्रापिराजा ॥ ५६ ॥ **ति॰** चारित्रंरक्षितंझटित्यन्तःपुरगमनेन । अच्छलं छलमधर्मः । सनेत्यर्थः । मित्रभावेननतुविकारेण ॥ **शि॰** यतः चारित्रं सखाप्रबोधनीयइतिमर्यादा । त्वयारक्षितं । तत् तस्मात् । आगच्छ अन्तःप्रविश । ननुतत्प्रवेशेअनुचितपरस्त्रीदर्शनंभविष्यतीत्यतआह—मित्रभावेनदारावलोकनं सतां अच्छलं नाधर्मः ॥ ६१ ॥ **ती॰** प्रमदाभिः समं इतिच्छेदः । प्रमदाभिस्समंसुग्रीवंददर्श । ततः संरब्धतररक्ताक्षोबभूवेतिसंबन्धः ॥ ६५ ॥ इतित्रयस्त्रिंशःसर्गः ॥ ३३ ॥

**[ पा॰ ]** १ ङ. च. छ. झ. ञ. ट. यथार्थधर्मावेक्षते. २ क. ख. ङ.—ट. विमुक्तलज्जं. ३ छ. झ. ट. तपोभिरामाः. ४ छ. झ. ट. सखेदंमदविह्वलाक्षी. ञ. सखेलंमदविह्वलाक्षी. ५ घ. महावीर्याःकपयः. ६ घ. अथागच्छ. ७ ख. महेन्द्रवरुणोपमं. ग. महेन्द्रसदृशद्युतिं. ८ ग. झ. ट. मालाभिः. ९ क. घ. ङ. छ.—ट. समंततः. १० ग. तंदृष्ट्वाक्रोधताम्राक्षः.

रुमां तु वीरः परिरभ्य गाढं वरासनस्थो वरहेमवर्णः ॥
ददर्श सौमित्रिमदीनसत्त्वं विशालनेत्रः सुविशालनेत्रम् ॥ ६६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

लक्ष्मणेनसुग्रीवंप्रति रामप्रत्युपकारानुद्यमहेतुनाकृतघ्नताप्रतिपादनपूर्वकं तदकरणेरामबाणेन तस्यवालिमार्गानुसरणोक्तिः ॥ १ ॥

तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् ॥ सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १ ॥
क्रुद्धं निःश्वसमानं तं प्रदीप्तमिव तेजसा ॥ भ्रातुर्व्यसनसंतप्तं दृष्ट्वा दशरथात्मजम् ॥ २ ॥
उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् ॥ महान्महेन्द्रस्य यथा स्वलंकृत इव ध्वजः ॥ ३ ॥
उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः ॥ सुग्रीवं गगने पूर्णचन्द्रं तारागणा इव ॥ ४ ॥
संरक्तनयनः श्रीमान्विचचाल कृताञ्जलिः ॥ बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५ ॥
रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम् ॥ अब्रवील्लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥ ६ ॥
सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः ॥ कृतज्ञः सत्यवादी च राजा लोके महीयते ॥ ७ ॥
यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम् ॥ मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥ ८ ॥
शतमश्वानृते हन्ति सहस्रं तु गवानृते ॥ आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते ॥ ९ ॥
पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः ॥ कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर ॥ १० ॥
गीतोऽयं ब्रह्मणा श्लोकः सर्वलोकनमस्कृतः ॥ दृष्ट्वा कृतघ्नं क्रुद्धेन तं निबोध प्लवङ्गम ॥ ११ ॥
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ॥ निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२ ॥
अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर ॥ पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥ १३ ॥

---

रक्ताक्षश्च ॥ ६२—६६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

अथ सुग्रीवं प्रति रामसंदेशकथनं चतुस्त्रिंशे—तमप्रतिहतमित्यादि ॥ १ ॥ महेन्द्रस्य ध्वज इव उत्पपात । स्वलंकृत इत्युभयविशेषणं ॥ २—३ ॥ अनूत्पेतुः पश्चादुत्पेतुः ॥ ४ ॥ संरक्तनयनः मदेनेति-शेषः ॥ ५—७ ॥ अधर्म इति च्छेदः ॥ ८ ॥ पुरुषः अश्वानृते अश्वविषयानृते । शतं हन्ति शताश्वहननदोषभाग्भवेदित्यर्थः । एवं गवानृते गोविषयानृते । सहस्रं हन्ति सहस्रगोहननदोषभाग्भवेत् । पुरुषानृते आत्मानं स्वजनं हन्ति । आत्मस्वजनहननदोषभाग्भवेदित्यर्थः । महापुरुषरामविषयानृते तु सर्वहननदोषभाग्भवेदिति भावः ॥ ९ ॥ तत् मित्रकार्यं न प्रतिकरोति पुनर्न करोति ॥ १० ॥ ब्रह्मणा स्वायंभुवमनुना ॥ ११ ॥ निष्कृतिः प्रायश्चित्तं

---

**रामानु०** महेन्द्रस्यध्वजोयथास्वलङ्कृतः तथास्वलङ्कृतःहरिश्रेष्ठः सौवर्णमासनंहित्वा महाध्वजइवोत्पपातेतिसंबन्धः ॥ ३ ॥ **ति०** संचचार संमुखमाजगाम । अवस्थितोबभूवेत्यस्य लक्ष्मणइतिशेषः । कल्पवृक्षोपमयासर्वहितत्वंव्यज्यं ॥ ५ ॥ **ति०** प्रथममात्मानंहन्ति आत्मघातदोषभाक् । निजंपुण्यलोकंनाशयतिवा । तथास्वजनस्यपित्रादेःपुण्यलोकंचनाशयति ॥ ९ ॥ **ति०** ब्रह्मणा हिरण्यगर्भेण । अयंश्लोकः पूर्वोक्तः । सर्वलोकनमस्कृतः ब्रह्मवदेवसर्वैस्सत्कृतःसंमतइत्यर्थः ॥ ११ ॥

[ **पा०** ] १ क. ङ. ज.—ट. सविशाल. २ ङ. ञ. उत्पतन्तंसमुत्पेतुः. ३ क. घ.—ट. पूर्णं. ख. तूर्णं. ४ ङ.—ट. श्रीमान्संचचार. ख. श्रीमान्मदलोलः. ५ ग. घ. सहस्रंच. ६ क. ग.—ट. गोघ्नेचैवसुरापे. ७ छ. झ. ञ. चौरे.

ननु नाम कृतार्थेन त्वया रामस्य वानर ॥ सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥ १४ ॥
स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः ॥ न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥१५॥
महाभागेन रामेण पापः करुणवेदिना ॥ हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६ ॥
कृतं चेन्नाभिजानीषे रामस्याक्लिष्टकर्मणः ॥ सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् ॥ १७ ॥
न च संकुचितः पन्था येन वाली हतो गतः ॥ समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ १८ ॥
न नूनमिक्ष्वाकुवरस्य कार्मुकच्युताञ्शरान्पश्यसि वज्रसन्निभान् ॥
ततः सुखं नाम निषेवसे सुखी न रामकार्यं मनसाऽप्यवेक्षसे ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

तारया सुग्रीवायक्रुध्यतो लक्ष्मणस्य हेतूक्त्यापुनःसान्त्वनम् ॥ १ ॥

तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा ॥ अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥ १ ॥
नैवं लक्ष्मण वक्तव्यो नायं परुषमर्हति ॥ हरीणामीश्वरः श्रोतुं तव वक्त्राद्विशेषतः ॥ २ ॥
नैवाकृतज्ञः सुग्रीवो न शठो नापि दारुणः ॥ नैवानृतकथो वीर न जिह्मश्च कपीश्वरः ॥ ३ ॥
उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः ॥ रामेण वीर सुग्रीवो यदन्यैर्दुष्करं रणे ॥ ४ ॥
रामप्रसादात्कीर्तिं च कपिराज्यं च शाश्वतम् ॥ प्राप्तवानिह सुग्रीवो रुमां मां च परन्तप ॥ ५ ॥
सुदुःखं शयितः पूर्वं प्राप्येदं सुखमुत्तमम् ॥ प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६ ॥
घृताच्यां किल संसक्तो दश वर्षाणि लक्ष्मण ॥ अहोऽमन्यत धर्मात्मा विश्वामित्रो महामुनिः ॥७॥

---

॥ १२—१३ ॥ कृतमिच्छता उपकारंस्मरता ॥१४॥ मण्डूकराविणं मण्डूकग्रहणार्थं मण्डूकवद्रौति तमिव वञ्चकं त्वां न जानातीत्यर्थः ॥ १५—१८ ॥ रामसन्दिष्टं वाक्यमभिधाय प्रकृतकार्योचितं स्ववाक्यमाह—न नूनमिति ॥ इक्ष्वाकुवरस्य कार्मुकच्युतान् बाणान् वज्रसन्निभान् न पश्यसि नाद्राक्षीः । नूनं ततो नाम तस्मात्खलु । सुखं निषेवसे सुखी सन् रामकार्यं मनसापि नावेक्षस इति योजना ॥१९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुस्त्रिंशःसर्गः ॥३४॥

---

अथ पुनस्तारया लक्ष्मणसान्त्वनं पञ्चत्रिंशे—तथा ब्रुवाणमित्यादि ॥ १ ॥ वक्तव्यः परुषमितिशेषः ॥ २ ॥ जिह्मः कुटिलः ॥ ३ ॥ विस्मृत इति कर्तरि निष्ठा । अन्यैर्दुष्करं तं उपकारं न विस्मृत इति योजना ॥ ४—६ ॥ विश्वामित्रो घृताच्यामासक्तो

---

ति० मण्डूकराविणं स्वगृहीतस्वमुखस्थमण्डूकशब्देनशब्दवन्तंसर्पं यथाजनोऽनवलोकनान्मण्डूकमेवजानीतेनतुसर्पं तथातव स्वरूपं रामोनाज्ञासीदितिभावः । कश्चित्तु मण्डूकग्रहणार्थंसर्पोमण्डूकवद्रौति । तेनस्वरेणस्वगणइतिविस्रब्धः स्वसमीपमागतो मण्डूकस्तेनगृह्यते । एवंवञ्चकंत्वांनाज्ञासीदित्यर्थइत्याह । तत्तुतथालोकाप्रसिद्ध्योपेक्ष्यं ॥ १५ ॥ शि० किंच समये सम्यक्शुभावहकार्येतिष्ठ कुर्वित्यर्थः ॥ १८ ॥ इतिचतुस्त्रिंशः सर्गः ॥ ३४ ॥

स० कृतमुपकारंजानातीतिकृतज्ञः सनभवतीत्यकृतज्ञः । तादृशोनैव । शठः गूढद्वेषी । अनृतकथः मृषावादी । जिह्मः कुटिलः ॥ ३ ॥ स० यत् यस्मात् । अन्यैर्दुष्करंरामेणकृतं उपकारमुद्दिश्य यंवीरःसुग्रीवः । विस्मृतः भावेक्तः । विगतंस्मृतं यस्यसतथा । विस्मरणवानितियावत् । नापि नैवभवतीत्यर्थः । अतोपिनकृतघ्नइत्यर्थः ॥ ४ ॥ ति० यद्यपि पूर्वंबालकाण्डेमेनका-

[ पा० ] १ ज. यस्त्वं. २ ङ. च. ज. कृतंत्वंनाभि. झ. कृतंचेन्नाति. ३ ङ—ट. राघवस्यमहात्मनः. ४ घ. ङ. च. ज. ञ. कार्मुकाच्च्युतान्. क. ग. ट. कार्मुकाच्छरांश्च्युतान्. झ. कार्मुकाच्छरांश्चतान्. ५ क. काकुत्स्थं. ६ ज. मैवं. ७ क. हरीश्वरः. ८ क. कृतंपूर्वं. ९ ख. प्रसादात्सौमित्रे. १० ङ. छ.—ञ. सुदुःखशयितः. ११ क. ङ. च. ज. ञ. मुनिर्यथा.

स हि प्राप्तं न जानीते कालं कालविदांवरः ॥ विश्वामित्रो महातेजाः किं पुनर्यः पृथग्जनः ॥ ८ ॥
[1]देहधर्मं गतस्यास्य परिश्रान्तस्य लक्ष्मण ॥ अवितृप्तस्य कामेषु [2]कामं क्षन्तुमिहार्हसि ॥ ९ ॥
न च [3]रोषवशं तात गन्तुमर्हसि लक्ष्मण ॥ [4]निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ १० ॥
[5]सत्त्वयुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ ॥ अविमृश्य न रोषस्य सहसा यान्ति वश्यताम् ॥ ११ ॥
प्रसादये त्वां धर्मज्ञ [6]सुग्रीवार्थे समाहिता ॥ महान्रोषसमुत्पन्नः संरम्भस्त्यज्यतामयम् ॥ १२ ॥
रुमां [7]मां कपिराज्यं च धनधान्यवसूनि च ॥ रामप्रियार्थं सुग्रीवस्त्यजेदिति मतिर्मम ॥ १३ ॥
समानेष्यति सुग्रीवः सीतया सह राघवम् ॥ शशाङ्कमिव रोहिण्या [8]निहत्वा रावणं रणे ॥ १४ ॥
शतकोटिसहस्राणि लङ्कायां किल [9]राक्षसाः ॥ अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ १५ ॥
अहत्वा तांश्च दुर्धर्षान्राक्षसान्कामरूपिणः ॥ [10]न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥ १६ ॥
[11]ते न शक्या रणे हन्तुमसहायेन लक्ष्मण ॥ रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥ १७ ॥
एवमाख्यातवान्वाली [12]स ह्यभिज्ञो हरीश्वरः ॥ आगमस्तु न मे व्यक्तः [13]श्रवात्तस्माद्ब्रवीम्यहम् ॥ १८ ॥
त्वत्सहाय[14]निमित्तं वै प्रेषिता हरिपुङ्गवाः ॥ आनेतुं वानरान्युद्धे सुबहून्[15]हरियूथपान् ॥ १९ ॥
[16]तांश्च प्रतीक्षमाणोऽयं विक्रान्तान्सुमहाबलान् ॥ राघवस्यार्थसिद्ध्यर्थं [17]न निर्याति हरीश्वरः ॥ २० ॥

दश वर्षाणि अहोऽमन्यत दिनममन्यत । घृताचीशब्देनात्र मेनकैवोच्यते । मेनकासङ्गस्य बालकाण्डेभिधानात् ॥ ७—८ ॥ देहधर्मं गतस्य शरीरस्वभावं प्राप्तस्य । कामं कामवर्तनं ॥ ९ ॥ अपराधमङ्गीकृत्य सान्त्वयित्वा इदानीं विचार्यमाणे अपराधएव नास्तीत्याह—नचेति ॥ निश्चयार्थं निश्चयरूपमर्थं सुग्रीवाभिप्रायमिति यावत् ॥ १०—११ ॥ संरम्भः अभिनिवेशः ॥ १२ ॥ धनधान्येत्यत्र धनशब्दो हस्तिरथाश्वादिपरः । वसुशब्दो रत्नपरः ॥ १३ ॥ समानेष्यति घटयिष्यति । निहत्वेत्यत्रल्यबभाव आर्षः ॥ १४—१६ ॥ ते न शक्या इति च्छेदः । ते राक्षसाः । हन्तुं न शक्याः । रावणो विशेषेणासहायेन सुग्रीवेण हन्तुं न शक्यः ॥ १७ ॥ तर्हि रावणवृत्तान्तः सर्वोप्याख्यायतामित्यत्राह—एवमिति ॥ आगमः स्वयमवगमः । श्रवात् श्रवणात् । अत्र सुग्रीवेण युद्धाय निर्गमकाले ताराङ्गदोक्तरामसुग्रीवसख्यकरणेभिहिते एतादृशो रावणः सुग्रीवो दुर्बलः तं कथं रामोवलम्बत इति वालिनोक्तमिति ज्ञेयं ॥ १८—२० ॥

संबन्धउक्तः । तथाप्येतद्वचनात् घृताचीसंबन्धोपितस्यज्ञेयइत्याहुः ॥ ७ ॥ ति० देहधर्माः आहारनिद्रामैथुनानि । पशुधर्मइति पाठेप्ययमेवार्थः ॥ ९ ॥ ति० कथमयंरावणंहनिष्यतीत्यत्रतत्साहाय्यकसाध्यत्वात्तद्वधस्येत्याह—**शतेति** । एषासंख्याविवक्षितैव दशकोटिःसमुद्रः शतकोटिर्मध्यं । मध्यानांसहस्रं तथाषष्टिसहस्राधिकत्रिलक्षाणि । तदुपरिषट्त्रिंशत्सहस्राणि । तदुपरितावन्ति शतानीत्यर्थः ॥ १५ ॥ शि० कामरूपिणइत्यनेन लङ्कायामुक्तसंख्याकराक्षसस्थित्यसंभवाभावःसूचितः ॥ तेनकार्यवशादेवतच्छरीराणांमहत्त्वमितिव्यक्तं ॥ १६ ॥ ति० तावतांवधेपरमशूरस्यापिसहायापेक्षास्तीत्याह—**तेइति** । यस्मादसहायेनरामेण ते हन्तुमशक्याः यस्माद्रावणश्चक्रूरकर्मा क्रूरपराक्रमः । तस्माद्विशेषतः सुग्रीवेणसहायेनप्रयोजनमस्ति । तत्समप्रतिसेनाघटनस्यसुग्रीवाधीनत्वात्सर्वेषांमनुष्यावध्यत्वाच्चेतिभावः । यत्तुतीर्थः सुग्रीवेणसहायेनतेराक्षसाहन्तुमशक्याः रावणश्चहन्तुमशक्यइत्यन्वयंकृत्वा वालीकिलोक्तवान्रावणवधाय सुग्रीवंवृथाप्रार्थयतेरामः तस्यासावशक्यइतिकथांचकल्पयति तदपार्थकं । रामस्यसहायापेक्षासमर्थनस्यैवप्रस्तुतत्वात् ॥ १७ ॥ ति० नन्वेषारक्षस्संख्यात्वयाकथंज्ञातातत्राह—एवमिति । आगमस्तुनमेव्यक्तः रावणस्यैवंबलप्राप्तिप्रकारस्तु नमयाज्ञातः । संख्यामात्रं प्रसंगात्पूर्वंश्रुतं । तस्यश्रवणात्तन्मुखतोवाक्यश्रवणात् ॥ १८ ॥

[ पा० ] १ ख. ग. ङ. झ. ट. देहधर्मगतस्य. क. पशुधर्मगतस्य. २ क. ख. ङ.—ञ. रामःक्षन्तुमिहार्हति. ३ ख. रोषवशात्तात. ४ क. लोकयात्रामविज्ञाय. ५ क. सत्वयुक्ताश्च. ङ. च. ज. ञ. सत्ववन्तोहि. ६ ङ—ट. सुग्रीवार्थं. ७ छ. झ. ट. मांचाङ्गदंराज्यं. ८ छ. झ. ट. हत्वातंराक्षसाधमं. क. ङ. च. ज. ञ. हत्वातंरावणं. ग. हत्वारावणमाहवे. ९ ख.—ट. रक्षसां. १० क.—घ. नशक्यंरावणं. च—ट. अशक्यंरावणं. ङ. अशक्योरावणो. ११ ङ. च. ज. नशक्यो. १२ ङ. सत्वभिज्ञः. १३ क. ख. श्रवणात्तद्ब्रवीम्यहं. ङ. च. ज. ञ. श्रवणात्तुब्रवीम्यहं. ग. छ. झ. ट. श्रवात्तस्यब्रवीम्यहं. १४ च.—ट. निमित्तंहि. १५ क. ङ.—ट. हरिपुङ्गवान्. १६ ग. तांस्तु. १७ क. सिद्ध्यर्थंनौदासीन्यंगतोहरिः.

कृताऽत्र संस्था सौमित्रे सुग्रीवेण यथा पुरा ॥ अद्य तैर्वानरैः सर्वैरागन्तव्यं महाबलैः ॥ २१ ॥
ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च ॥ अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम ॥
कोट्योनेकास्तु काकुत्स्थ कपीनां दीप्ततेजसाम् ॥ २२ ॥
तव हि मुखमिदं निरीक्ष्य कोपात्क्षतजनिभे नयने निरीक्षमाणाः ॥
हरिवरवनिता न यान्ति शान्तिं प्रथमभयस्य हि शङ्किताः स्म सर्वाः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

## षट्त्रिंशः सर्गः ॥ ३६ ॥

तारापरिसान्त्वनेन प्रसन्नमनसंलक्ष्मणंप्रतिसुग्रीवेण राममहिमप्रशंसनपूर्वकं स्वापराधक्षमापणम् ॥ १ ॥ लक्ष्मणेनापि सुग्रीवंप्रति स्वपरुषभाषणक्षमापणपूर्वकं सत्वरंरामसमीपमेत्य सान्त्वनचोदना ॥ २ ॥

इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम् ॥ मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ॥ १ ॥
तस्मिन्प्रतिगृहीते तु वाक्ये हरिगणेश्वरः ॥ लक्ष्मणात्सुमहत्त्रासं वस्त्रं क्लिन्नमिवात्यजत् ॥ २ ॥
ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत् ॥ चिच्छेद विमदश्चासीत्सुग्रीवो वानरेश्वरः ॥ ३ ॥
स लक्ष्मणं भीमबलं सर्ववानरसत्तमः ॥ अब्रवीत्प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥ ४ ॥
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ॥ रामप्रसादात्सौमित्रे पुनः प्राप्तमिदं मया ॥ ५ ॥
कः शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा ॥ तादृशं विक्रमं वीर प्रतिकर्तुमरिन्दम ॥ ६ ॥
सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् ॥ सहायमात्रेण मया राघवः स्वेन तेजसा ॥ ७ ॥

---

अत्र सीतान्वेषणकार्यविषये । सुग्रीवेण पुरा त्वदागमनात्पूर्वमेव । संस्था व्यवस्था त्रिपञ्चरात्रादूर्ध्वं नागन्तव्यमित्येवंरूपा। यथा येन प्रकारेण कृता तथा । अद्य अस्मिन्दिने । तैरागन्तव्यं ॥ २१—२२ ॥ हिशब्दः पादपूरणे । सर्वाः हरिवरवनिताः तवेदं मुखं निरीक्ष्य प्रथमभयस्य शङ्किताः वालिवधजनितभयशङ्किताः सत्यः । रोषाद्धेतोः क्षतजसमे नयने निरीक्षमाणाः शान्तिं न यान्तिहि न यान्त्येव । प्रथमभयस्य शङ्किता इति कर्मणि षष्ठी । "न लोकाव्यय—" इत्यादिना षष्ठीप्रतिषेधेपि तत्प्रयोग आर्षः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

अथ लक्ष्मणसुग्रीवसौहृदभाषणं षट्त्रिंशे—इत्युक्त इत्यादि ॥ १ ॥ सुमहत्त्रासमिति "आन्महत—" इत्याकाराभाव आर्षः । क्लिन्नं आर्द्रं ॥ २ ॥ बहुगुणं बहुविधभोगप्रदं । महत् दिव्यं ॥ ३—४ ॥ इदं पूर्वोक्तं सर्वं ॥ ५ ॥ तादृशंविक्रमं प्रतिकर्तुं तादृशस्य विक्रमस्य प्रतिकर्तुमित्यर्थः ॥ ६ ॥ सहायमात्रेणमयेत्युप-

---

**शि०** गोलाङ्गूलशतानि अनन्तसंख्याकगोलाङ्गूलदैर्घ्यसदृशदैर्घ्यविशिष्टलाङ्गूलविशिष्टवानरविशेषाश्चेत्यर्थः ॥ २२ ॥ इति पञ्चत्रिंशः सर्गः ॥ ३५ ॥

**स०** धर्मसंहितंप्रश्रितंवचः अवाक्यंयथाभवतितथाप्रतिजग्राह । प्रत्युत्तरंनोक्तवानितियावत् । इतिवाक्यं उक्तः श्रावित इतिवा ॥ १ ॥ सुमहात्त्रासं अतिमहाभयं । सुमहत्त्रासमितिपाठे सुमहदितिव्यस्तंसद्वस्त्रपदेनान्वेति ॥ **रामानु०** सुमहत् सुमहान्तं ॥ २ ॥ **शि०** देवस्य नित्यप्रमोदवतः ॥ **ति०** स्वेनकर्मणा धनुर्भङ्गवालिवधादिना । तादृशं तज्जनितोपकारसदृशं ॥ ६ ॥

**[ पा० ]** १ छ. झ. ट. कृतासुसंस्था. क. ख. ग. ङ. च. ज. ञ. कृतातुसंस्था. २ ट. उद्यतैर्वानरैः. ३ ग. हरीणां. ४ ङ. च. ज.—ट. त्क्षतजसमे. ५ ज. लक्ष्मणोत्थमहत्. ६ छ. झ. ट. तादृशंप्रतिकुर्वीतअंशेनापिनृपात्मज.

सहायकृत्यं किं तस्य येन सप्त महाद्रुमाः ॥ शैलश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८ ॥
धनुर्विस्फारयाणस्य यस्य शब्देन लक्ष्मण ॥ सशैला कम्पिता भूमिः सहायैस्तस्य किंनु वै ॥ ९ ॥
अनुयात्रां नरेन्द्रस्य करिष्येऽहं नरर्षभ ॥ गच्छतो रावणं हन्तुं वैरिणं सपुरस्सरम् ॥ १० ॥
यदि किंचिदतिक्रान्तं विश्वासात्प्रणयेन वा ॥ प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ ११ ॥
इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः ॥ अभवल्लक्ष्मणः प्रीतः प्रेम्णा चैवमुवाच ह ॥ १२ ॥
सर्वथा हि मम भ्राता सनाथो वानरेश्वर ॥ त्वया नाथेन सुग्रीव प्रश्रितेन विशेषतः ॥ १३ ॥
यस्ते प्रभावः सुग्रीव यच्च ते शौचमार्जवम् ॥ अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४ ॥
सहायेन च सुग्रीव त्वया रामः प्रतापवान् ॥ वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥ १५ ॥
धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः ॥ उपपन्नं च युक्तं च सुग्रीव तव भाषितम् ॥ १६ ॥
दोषज्ञः सति सामर्थ्ये कोऽन्यो भाषितुमर्हति ॥ वर्जयित्वा मम ज्येष्ठं त्वां च वानरसत्तम ॥ १७ ॥
सदृशश्चासि रामस्य विक्रमेण बलेन च ॥ सहायो दैवतैर्दत्तश्चिराय हरिपुङ्गव ॥ १८ ॥
किं तु शीघ्रमितो वीर निष्क्राम त्वं मया सह ॥ सान्त्वय स्ववयस्यं त्वं भार्याहरणकर्शितम् ॥ १९ ॥
यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् ॥ मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

---

लक्ष्मणे तृतीया । स्वयमेवार्थसाधकः । अर्हंतु तस्यपरिकरमात्रमितिभावः ॥ ७–१० ॥ अतिक्रान्तं अतिक्रमणं । क्षमितव्यं क्षन्तव्यं ॥ ११—१५ ॥ उपपन्नं अर्हं । युक्तं युक्तियुक्तं ॥ १६ ॥ दोषज्ञः स्वदोषज्ञः । लोके हि समर्थः पुरुषः स्वदोषमपह्नुते नतुप्रकाशयति । न तथात्वमिति भावः ॥ १७—१९ ॥ स्वोक्तपरुषवा-

**ति०** सहायकृत्यं सहायसाध्यंकृत्यं । चेन पातालानितत्स्थदैत्याश्च ॥ ८ ॥ **तनि०** इदंकृतापराधस्येतिपूर्वोपदिष्टार्थस्यानुष्ठानं । किंचिदिति । अधिकातिक्रमणस्यप्रसादनेनानिवर्त्यत्वं । यदीति स्वल्पस्याप्यसंभावनाचद्योत्यते । विश्वासादिति बुद्धिपूर्वापराधव्यावृत्तिः । प्रणयेनेति अतिक्रमस्याभासत्वात् । प्रेष्यस्येति बुद्धिपूर्वकवास्तवापराधेपिक्षन्तव्यमितिव्यञ्जितं । क्षमितव्यमित्युक्त्या अक्षमणेप्रत्यवायोपिव्यञ्जितः । नकश्चिन्नापराध्यतीति विश्वासप्रणयपात्रभूतस्य स्वल्पापराधलेअयमपराधः सर्वत्रवर्जनीयइतिभावः । **शि०** प्रणयेन भृत्यविषयकस्वाभाविकस्नेहेन । क्षमितव्यं । कश्चिन्नापराध्यतीतिन । सर्वोपियत्किंचिदपराध्यतीत्यर्थः । तेनापराधंदृष्ट्वा तवक्षमायाअभावेतवभृत्यस्नेहोनिर्विषयोभविष्यतीतिव्यञ्जितं ॥ ११ ॥ **शि०** प्रश्रितेन स्नेहयुक्तेन । अतएवनाथेन अभिलाषप्रापकेणत्वयाममभ्राता सर्वथासनाथः अभिलाषप्रापकसहितोऽभवदितिशेषः ॥ १३ ॥ **ति०** शौचं इन्द्रियनिग्रहः । **स०** शौचं शुद्धान्तःकरणता ॥ १४ ॥ **ती०** दोषज्ञः विद्वान् । "विद्वान्विपश्चिद्दोषज्ञः" इत्यमरः ॥ १७ ॥ **तनि०** शोकाभिभूतस्येत्यनेन रामःस्वभावतःपरुषभाषणंनवक्तीतिव्यज्यते । "उच्यमानोपिपरुषंनोत्तरंप्रतिपद्यते" इतिप्रसिद्धेरितिभावः । तादृशस्यरामस्यभाषणंश्रुत्वा मयात्वमुक्तइत्यनेन उक्तानुवादस्यादोषत्वंव्यञ्जितं । तच्चेति । सूचनस्यापि यद्भवेदित्यनुवादिताप्रयुक्तमित्यर्थः ॥ अत्रेदंवेदितव्यं । कार्याभिसन्धिसद्भावेजाग्रतिस्वामिनः श्रीरामस्यसंनिधिंप्रतिगन्तव्यत्वरांविस्मृत्यभोगप्रसंगसंगेनान्यपरत्वात्समयातिलङ्घनापराधंकृतवतिमहाराजे लक्ष्मणक्रोधवेगंनिरीक्ष्य मित्रश्रेष्ठेनहनुमता "कृतापराधस्यहितेनान्यंपश्याम्यहंक्षमम् । अन्तरेणाञ्जलिंबद्ध्वालक्ष्मणस्यप्रसादनात्" इतिमहाराजायहितोपदेशेकृतेसति महाराजोपिबुध्वा "यदिकिंचिदतिक्रान्तंविश्वासात्प्रणयेनवा । प्रेष्यस्यक्षमितव्यंमेनकश्चिन्नापराध्यति" इतिकथनेनभगवद्विषयेकृतापराधेनापि भागवतक्षमापणेकृतेसतितन्मुखेन भगवानपराधान्क्षमयते । ततोभगवदपचाररहितस्सन् तत्कैंकर्ययोग्योभवतीत्येनमर्थंविशदीचकार । तदनन्तरं "यच्चशोकाभिभूतस्यक्रोधाद्रामस्यभाषितम् । मयात्वंपरुषाण्युक्तस्तच्चत्वंक्षन्तुमर्हसि" इतिलक्ष्मणस्तावदात्मीयपरुषवाक्यानांशोकविवशराम-

[ पा० ] १ ङ.—ट. गिरिश्च. २ ङ.—ट. सहायैःकिंनुतस्य. ३ क. यात्रांतुरामस्य. ४ क. ङ. छ. झ. ट. चेदमुवाचह. च. ज. ञ. चैनमुवाचह. ५ ङ. छ. झ. ट. शौचमीदृशं. क. ग. घ. ज. ञ. शौचमुत्तमं. च. शौर्यमुत्तमं. ६ ङ. छ.—ट. सहायेन. ७ घ. सदृशश्चापि. ८ छ. झ. ट. रामेण. ९ ख. निष्क्रमस्व. १० क. ख. ग. च.—ट. स्ववयस्यंच. ११ क. ग. ङ.—ट. हरणदुःखितं. १२ ङ.—ट. स्तत्क्षमस्वसखेमम.

# सप्तत्रिंशः सर्गः ॥ ३७ ॥

सुग्रीवेण हनुमन्तंप्रति सकलदिगन्तपर्यन्तावस्थितसर्ववानरनिकरसमानयनाय दूतप्रेषणचोदना ॥ १ ॥ तैस्तैर्वानरैः सुग्रीवसंदेशश्रवणमात्रेणसत्वरंस्वस्वस्थानेभ्यः सुग्रीवसमीपंप्रत्यागमनम् ॥ २ ॥ पूर्वमेवनीलप्रेषितदूतैः सुग्रीवंप्रति नानाफलमूलाद्युपायनसमर्पणपूर्वकं सर्ववानरागमननिवेदनम् ॥ ३ ॥

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ॥ हनुमन्तं स्थितं पार्श्वे सचिवं[1] त्विदमब्रवीत् ॥ १ ॥
महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च ॥ मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २ ॥
तरुणादित्यवर्णेषु भ्राजमानेषु सर्वतः[2] ॥ पर्वतेषु समुद्रान्ते पश्चिमायां[3] तु ये दिशि ॥ ३ ॥
आदित्यभवने चैव गिरौ सन्ध्याभ्रसन्निभे ॥ पद्मतालवनं[4] भीमं संश्रिता[5] हरिपुङ्गवाः ॥ ४ ॥
अञ्जनाम्बुदसंकाशाः कुञ्जरप्रतिमौजसः[6] ॥ अञ्जने पर्वते चैव ये वसन्ति[7] प्लवङ्गमाः ॥ ५ ॥
मनःशिलागुहावासा[8] वानराः कनकप्रभाः[9] ॥ मेरुपार्श्वगताश्चैव[10] ये धूम्रगिरिसंश्रिताः[11] ॥ ६ ॥
तरुणादित्यवर्णाश्च पर्वते च महारुणे[12] ॥ पिबन्तो मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥ ७ ॥
वनेषु च सुरम्येषु सुगन्धिषु महत्सु च ॥ तापसानां च रम्येषु[13] वनान्तेषु समन्ततः ॥ ८ ॥
तांस्तान्समानय[14] क्षिप्रं पृथिव्यां सर्ववानरान् ॥ सामदानादिभिः कल्पैराशु प्रेषय[15] वानरान् ॥ ९ ॥
प्रेषिताः प्रथमं ये च मया दूता[16] महाजवाः ॥ त्वरणार्थं तु भूयस्त्वं हरीन्संप्रेषयापरान्[17] ॥ १० ॥
ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः ॥ इहानयस्व तान्सर्वाञ्शीघ्रं[18] तु[19] मम शासनात् ॥ ११ ॥

---

क्यानां रामोक्तत्वशङ्का मा भूदिति स्वेनैवोक्तत्वमुपपादयन् स्वापराधं शमयति—यच्चेति ॥ भाषितं सीतोद्देशेन श्रवणासह्यं विलापं ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

---

अथ सर्ववानरसमानयनं सप्तत्रिंशे—एवमित्यादि ॥ १ ॥ महेन्द्रादय एव पञ्चशैलाः । पश्चिमायां दिशि ये स्थिताः तेषु ये वानराः स्थिताइतियोजना । अस्तगिरिपर्यन्तपर्वतेष्वित्यर्थः । आदित्यभवने उदयगिरौ । पद्माः चन्दनविशेषाः मनःशिलागुहावासाः मनःशिलामयगुहावासाः । महारुणे महारुणाख्ये । यत्र यच्छब्दो नास्ति तत्राध्याहर्तव्यः । कल्पैः उपायैः । समानय तदर्थं प्रेषय ॥ २—९ ॥ प्रेषितदूतत्वरणार्थोक्तिः स्वस्य प्रकृतकार्ये पूर्वमेव सावधानतां लक्ष्मणाय द्योतयितुं ॥ १० ॥ दीर्घसूत्राः चिरक्रियाः उद्योगं कुर्वाणा इव कालयापका इत्यर्थः ॥ ११ ॥

---

क्रोधमवेक्ष्यतदनुरूपाणिवाक्यान्युक्तानीतिसोपाधिकत्वमुपपाद्यसोपाधिकस्वापराधनिवृत्तयेसुमित्रात्मजस्सुग्रीवंप्रसादयन्सापराधेषु श्रीवैष्णवेषुपश्चात्तापेनकृतप्रायश्चित्तेष्वपराधान्निवृत्तेषुचसत्सु सापराधत्वदशायांस्वाचरितानामपचाराणांव्युदासार्थंतेप्रसादनीया इतिशास्त्रार्थंप्रकटनंकृतवानितिभावः ॥ २० ॥ इतिषट्त्रिंशः सर्गः ॥ ३६ ॥

**स०** पाण्डुशिखरेमन्दरे । इतिपञ्चशैलेषु ॥ २ ॥ **ति०** पश्चिमस्यामित्यार्षं ॥ ३ ॥ **ती०** आदित्योस्मिन्भवतिप्रादुर्भवतीत्यादित्यभवनमुदयाद्रिः ॥ **ति०** आदित्यभवनेगिरौ उदयाचलास्ताचलयोरित्यर्थः ॥ पद्माचलोगिरिविशेषः ॥ ४ ॥ **ति०** तापसाश्रमरम्येषु रम्यतापसाश्रमेषु । यद्वा तैरम्येष्विति वनविशेषणं ॥ ८ ॥ **ति०** क्षिप्रमानयेत्युक्तेकिंमयैवगन्तव्यमित्याशङ्क्याह—सामदानादिभिरिति । आदिना दुष्टेदण्डः । कल्पैः उपायैः ॥ **कतक०** आनय आनाययेत्यर्थः ॥ ९ ॥ **शि०** दीर्घसूत्राः

[ **पा०** ] १ ङ.—ट. वचनंचेदमब्रवीत्. क. ख. सचिवंवाक्यमब्रवीत्. २ ङ.—ट. नित्यशः. क. ग. घ. सर्वशः. ३ ग. घ. पश्चिमस्यांच. क. ङ.—ट. पश्चिमस्यांतु. ४ ङ. च. छ. झ. ञ. ट. पद्माचलवनं. ५ घ. येश्रिताः. ६ छ. झ. ट. कुञ्जरेन्द्रमहौजसः. ७ ग. येचसन्ति. ८ क. ङ.—ट. महाशैलगुहा. ९ घ. काञ्चनप्रभाः. १० क. गतायेच. ११ क. ग. ङ. च. ज.—ट. येचधूम्रगिरिंश्रिताः. छ. येचधूम्रगिरिस्थिताः. १२ क. ङ.—ट. येमहारुणे. १३ ङ.—ट. तापसाश्रमरम्येषु. १४ क. ग. छ. झ. ट. तांस्तांस्त्वमानय. १५ ङ. छ. ञ. ट. कल्पैर्वानरैर्वेगवत्तरैः. ग. कल्पैराशुप्रेरय. १६ ङ. छ. झ. ट. ज्ञाताः. १७ छ. झ. ट. संप्रेषयहरीश्वरान्. ख. ङ. च. ज. ञ. हरीन्प्रेषयचापरान्. १८ छ. झ. ट. ताञ्शीघ्रंसर्वानेवकपीश्वरान्. १९ ग. त्वंमम.

अहोभिर्दशभि[1]र्ये हि नागच्छन्ति ममाज्ञया ॥ हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२ ॥
शतान्यथ [2]सहस्राणां कोट्यश्च मम शासनात् ॥ प्रयान्तु कपिसिंहानां दिशो [3]मम मते स्थिताः ॥१३॥
मेघपर्वतसंकाशाश्छादयन्त इवाम्बरम् ॥ घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनादितः ॥ १४ ॥
ते गतिज्ञा गतिं [4]गत्वा पृथिव्यां सर्ववानराः ॥ आनयन्तु हरीन्सर्वांस्त्वरिताः शासनान्मम ॥ १५ ॥
तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः ॥ दिक्षु सर्वासु विक्रान्तान्प्रेषयामास वानरान् ॥ १६ ॥
ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः ॥ प्रयाताः प्रहिता राज्ञा [5]हरयस्तत्क्षणेन वै ॥ १७ ॥
ते समुद्रेषु गिरिषु वनेषु च सरस्सु च ॥ वानरा वानरान्सर्वान्रामहेतोरचोदयन् ॥ १८ ॥
मृत्युकालोपमस्याज्ञां [6]राजराजस्य वानराः ॥ [7]सुग्रीवस्याययुः श्रुत्वा सुग्रीव[8]भयदर्शिनः ॥ १९ ॥
ततस्तेऽञ्जनसंकाशा गिरेस्तस्मान्महा[9]जवाः ॥ तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ॥ २० ॥
अस्तं गच्छति यत्रार्कस्तस्मिन्गिरिवरे [10]स्थिताः ॥ [11]तप्तहेममहाभासस्तस्मात्कोट्यो दश च्युताः ॥ २१ ॥
कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् ॥ ततः कोटिसहस्राणि [12]वानराणामुपागमन् ॥ २२ ॥
फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः ॥ तेषां कोटिसहस्राणां सहस्रं समवर्तत ॥ २३ ॥
[13]अङ्गारकसमानानां भीमानां भीमकर्मणाम् ॥ विन्ध्याद्वानरकोटीनां [14]सहस्राण्यपतन्द्रुतम् ॥ २४ ॥
क्षीरोदवेलानिलयास्तमालवनवासिनः ॥ नारिकेलाशनाश्चैव तेषां संख्या न [15]विद्यते ॥ २५ ॥
वनेभ्यो गह्वरेभ्यश्च [16]सरिद्भ्यश्च महाजवाः ॥ आगच्छद्वानरी सेना पिबन्तीव दिवाकरम् ॥ २६ ॥
ये तु त्वरयितुं याता वानराः सर्ववानरान् ॥ ते वीरा [17]हिमवच्छैलं ददृशुस्तं महाद्रुमम् ॥ २७ ॥
तस्मिन्गिरिवरे [18]रम्ये यज्ञो माहेश्वरः पुरा ॥ [19]सर्वदेवमनस्तोषो [20]बभौ दिव्यो मनोरमः ॥ २८ ॥
अन्ननिष्यन्दजातानि मूलानि च फलानि च ॥ [21]अमृतास्वादकल्पानि ददृशुस्तत्र वानराः ॥ २९ ॥
तदन्नसंभवं दिव्यं [22]फलं मूलं मनोहरम् ॥ यः कश्चित्सकृदश्नाति मासं भवति तर्पितः ॥ ३० ॥

---

शतानीति बहुसंख्याभिधानं लक्ष्मणाय वानरासंख्येयत्वद्योतनार्थं ॥१२—१४॥ गम्यत इति गतिः वासस्थानं । पृथिव्यां सर्वान्हरीन् आनयन्तु इति संबन्धः ॥ १५—१६ ॥ पतत्रिज्योतिरध्वगाः पक्षिनक्षत्रमार्गगाः सन्तः । विष्णुविक्रान्तं पदं आकाशं । प्रयाताः ॥ १७—१९ ॥ यत्र येन हेतुनाराघवो वर्तते ततः तस्माद्धेतोः । तस्माद्गिरेः अञ्जनगिरेः । निर्ययुः ॥ २०—२४ ॥ अत्रापतन् द्रुतमित्यनुषज्यते । संख्या न विद्यतइति उत्तरत्र संख्याकीर्तनं प्रधानाभिप्रायेण ॥२५—२६॥ तुशब्दो हनुमत्प्रेरितवानरव्यावर्तकः । नीलेन पूर्वं प्रेरिता इत्यर्थः । तेषामेव लक्ष्मणसन्निधाने समागमनं । सद्यो हनुमत्प्रेरितानां तदसंभवात् । तं

---

स्वभावतोविलंबेनकार्यकारिणः । तान्शीघ्रमिहानय ॥ ११ ॥ **रामानु०** आनेतृबहुसंख्याभिधानमानेतव्यानामसंख्यातत्वंलक्ष्मणायद्योतयितुं ॥ १३ ॥ **शि०** गतिज्ञाः तत्तत्स्थानाभिज्ञाः । गतिं तत्तन्निवासं । गत्वा । गतिशब्दःकर्मसाधनः ॥ १५ ॥ **ति०** मृत्युकालोपमस्य निग्रहविषयेइतिशेषः ॥ १९ ॥ **कतक०** माहेश्वरोयज्ञः महेश्वरदेवत्यः । दिव्योश्वमेधः । सर्वदेवानांमनस्तोषोयत्रसः ॥ २८ ॥ **ती०** अन्ननिष्यन्दजातानि होमद्रव्याज्यादिस्रवणाज्जातानि । तत्र यज्ञायतने ॥ २९ ॥ इतिसप्तत्रिंशः सर्गः ॥ ३७ ॥

**[ पा० ]** १ क. ख. ग. ङ.—ट. यैंच. २ छ. ज. झ. ट. सहस्राणि. ३ छ. झ. ट. निदेशेममयेस्थिताः. ४ ग. ङ. च. ज. ञ. ज्ञात्वा. ५ छ. झ. ट. हरयस्तुक्षणेनवै. ६ घ. कपिराजस्य. ७ घ. सुग्रीवस्यवचःश्रुत्वा. ८ ङ—ट. भयशंकिताः. ९ ङ.—ट. न्महाबलाः. १० क. ग. छ. ट. रताः. ११ ङ.—ट. संतप्तहेमवर्णाभाः. १२ ङ.—ट. वानराणांसमागमन्. १३ ङ. च. ज. ञ. अङ्गारसमवर्णानां. ख. अङ्गारनिकराभाणां. १४ क. ग. ङ. च. ज. सहस्राण्यापतन्. १५ घ. शक्यते. १६ क. ग. वानराश्चमहौजसः. ङ.—ट. सरिद्भ्यश्चमहाबलाः. १७ छ. ज. झ. ट. हिमवच्छैले. १८ क. ङ. च. छ. झ. ञ. ट. पुण्ये. १९ क. सर्वदेवप्रियकरो. २० ङ.—ट. बभूवसुमनोरमः. २१ क. ग. ङ—ट. अमृतस्वादुकल्पानि. २२ क. छ. झ. ट. फलमूलं.

तानि मूलानि दिव्यानि फलानि च फलाशनाः ॥ औषधानि च दिव्यानि जगृहु[1]र्हरि[2]यूथपाः ॥३१॥
[3]तस्माच्च यज्ञायतनात्पुष्पाणि सुरभीणि च ॥ आनिन्यु[4]र्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२ ॥
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् ॥ संचोदयित्वा [5]त्वरिता यूथानां जग्मुरग्रतः ॥ ३३ ॥
ते तु[6] तेन मुहूर्तेन [7]यूथपाः शीघ्रगामिनः ॥ किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ॥ ३४॥
ते गृहीत्वौषधीः सर्वाः [8]फलं मूलं च वानराः ॥ तं प्रतिग्राहयामासुर्वचनं चेदमब्रुवन् ॥ ३५ ॥
सर्वे [9]परिगताः शैलाः [10]समुद्राश्च वनानि च ॥ पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥ ३६ ॥
[11]एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः ॥ प्रति[12]जग्राह तत्प्रीतस्तेषां सर्वमुपायनम् ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः ॥ ३८ ॥

सुग्रीवेण सौमित्रिणासहशिबिकारोहणेन रामसमीपमेत्यतत्पादयोःप्रणामः ॥ १ ॥ रामेणपरिष्वङ्गपूर्वकंस्वाज्ञयासमुपविष्टंसुग्रीवंप्रति संग्रहेणराजनीतिप्रदर्शनपूर्वकमुद्योगसमयसंप्राप्तिनिवेदनेन स्वकार्योद्यमनचोदना ॥ २ ॥ सुग्रीवेणश्रीरामंप्रति स्वविषयकतत्प्रसादप्रशंसनपूर्वकं स्वोद्यमसूचकनानादेशसमागतासंख्येयकपिसेनासमागमननिवेदनेन तत्परितोषणम् ॥ ३ ॥

प्रतिगृह्य च तत्सर्वमुपायनमुपाहृतम् ॥ वानरान्सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ॥ १ ॥
विसर्जयित्वा स हरीञ्शूरांस्तान्कृतकर्मणः ॥ मेने कृतार्थमात्मानं राघवं च महाबलम् ॥ २ ॥
स लक्ष्मणो भीमबलं सर्ववानरसत्तमम् ॥ अब्रवीत्प्रश्रितं वाक्यं सुग्रीवं संप्रहर्षयन् ॥
[13]किष्किन्धाया विनि[14]ष्क्राम यदि ते सौम्य रोचते ॥ ३ ॥
तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम् ॥ सुग्रीवः परमप्रीतो वाक्यमेतदुवाच ह ॥ ४ ॥
एवं भवतु [15]गच्छावः स्थेयं त्वच्छासने मया ॥ ५ ॥
तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् ॥ विसर्जयामास तदा [16]तारामन्याश्च योषितः ॥ ६ ॥
[17]एतेत्युच्चै[18]र्हरिवरान्सुग्रीवः समुदाहरत् ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा हरयः शीघ्रमाययुः ॥ बद्धाञ्जलिपुटाः सर्वे [19]ये स्युः स्त्रीदर्शनक्षमाः ॥ ८ ॥
तानुवाच ततः प्राप्तान्राजार्कसदृशप्रभः ॥ उपस्थापयत क्षिप्रं शिबिकां मम वानराः ॥ ९ ॥
श्रुत्वा तु वचनं तस्य हरयः शीघ्रविक्रमाः ॥ समुपस्थापयामासुः शिबिकां प्रियदर्शनाम् ॥ १० ॥
तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ॥ लक्ष्मणारुह्यतां [20]शीघ्रमिति सौमित्रिमब्रवीत् ॥ ११ ॥

---

प्रसिद्धं ॥ २७—३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

अथ रामेण सुग्रीवसमागमोष्टत्रिंशे—प्रतिगृह्येत्यादि ॥ उपायनं उपदां ॥ १—६ ॥ एत आगच्छत ॥ ७—११ ॥—

---

ति० विनिष्क्रामेति । प्रार्थनेलोट् ॥ ३ ॥

[ पा० ] १ ग. ददृशुः. २ झ. हरिपुङ्गवाः. ३ ग. तस्मात्तु. ४ ग. वानरश्रेष्ठाः. ५ क.—ट. त्वरितं. क. ङ. च. ज. ञ. त्वरितंयूथपाः. ग. त्वरितमागच्छन्नग्रतस्तदा. ६ च. तेनतेनमुहूर्तेन. ७ ङ. च. झ. ञ. ट. कपयःशीघ्रचारिणः. ८ घ. ङ. छ.—ट. फलमूलंच. ग. फलमूलानि. ९ ङ.—ट. परिहृताः. १० ज. परितश्चवनानिच. ङ. च. छ. झ. ञ. ट. सरितश्चवनानिच. ११ क. तच्छ्रुत्वातुततो. ख. एतच्छ्रुत्वावचोहृष्टः. ञ. पूर्वंश्रुत्वा. १२ ग. घ. छ. झ. ट. जग्राहचप्रीतः. क. च. ज. ञ. जग्राहसुप्रीतः. १३ घ. किष्किन्धातोऽभि. १४ ग. ङ—ज. ट. विनिष्क्रामो. १५ ङ.—ट. गच्छामः. १६ ङ. छ. झ. ञ. ठ. ताराद्याश्चैव. १७ छ. झ. ट. एहीत्युच्चैः. १८ ग. घ. हरिवरःसुग्रीवः. १९ घ. येच. २० घ. शीघ्रंसौमित्रिमिदमब्रवीत्.

इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसन्निभम् ॥ बृहद्भिर्हरिभिर्युक्तमारुरोह सलक्ष्मणः ॥ १२ ॥
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ शुक्लैश्च वालव्यजनैर्धूयमानैः समन्ततः ॥ १३ ॥
शङ्खभेरीनिनादैश्च हरिभिश्चाभिनन्दितः ॥ निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् ॥ १४ ॥
स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः ॥ परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ॥ १५ ॥
स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ॥ अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः ॥ १६ ॥
आसाद्य च ततो रामं कृताञ्जलिपुटोभवत् ॥ कृताञ्जलौ स्थिते तस्मिन्वानराश्चाभवंस्तथा ॥ १७ ॥
तटाकमिव तंदृष्ट्वा रामः कुड्मलपङ्कजम् ॥ वानराणां महत्सैन्यं सुग्रीवे प्रीतिमानभूत् ॥ १८ ॥
पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् ॥ प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे ॥ १९ ॥
परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत् ॥ तं निषण्णं ततो दृष्ट्वा क्षितौ रामोऽब्रवीद्वचः ॥ २० ॥
धर्ममर्थं च कामं च यस्तु काले निषेवते ॥ विभज्य सततं वीर स राजा हरिसत्तम ॥ २१ ॥
हित्वा धर्मं तथार्थं च कामं यस्तु निषेवते ॥ स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥ २२ ॥
अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः ॥ त्रिवर्गफलभोक्ता तु राजा धर्मेण युज्यते ॥ २३ ॥
उद्योगसमयस्त्वेष प्राप्तः शत्रुविनाशन ॥ संचिन्त्यतां हि पिङ्गेश हरिभिः सह मन्त्रिभिः ॥ २४ ॥
एवमुक्तस्तु सुग्रीवो रामं वचनमब्रवीत् ॥ २५ ॥
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ॥ त्वत्प्रसादान्महाबाहो पुनः प्राप्तमिदं मया ॥
तव देव प्रसादाच्च भ्रातुश्च जयतां वर ॥ २६ ॥
कृतं न प्रतिकुर्याद्यः पुरुषाणां स दूषकः ॥ २७ ॥
एते वानरमुख्याश्च शतशः शत्रुसूदन ॥ प्राप्ताश्चादाय बलिनः पृथिव्यां सर्ववानरान् ॥ २८ ॥
ऋक्षाश्चावहिताः शूरा गोलाङ्गूलाश्च राघव ॥ कान्तारवनदुर्गाणामभिज्ञा घोरदर्शनाः ॥ २९ ॥
देवगन्धर्वपुत्राश्च वानराः कामरूपिणः ॥ स्वैः स्वैः परिवृताः सैन्यैर्वर्तन्ते पथि राघव ॥ ३० ॥

हरिभिः वाहकहरिभिः ॥ १२—१६ ॥ तथाऽभवन् कृताञ्जलिपुटा अभवन् ॥ १७—१८ ॥ पूर्वं दूरादञ्जलिः कृतः संप्रति समीपे पादयोः पतनं ॥ १९—२२ ॥ त्रिवर्गफलभोक्ता यथाकालं धर्मार्थकामरूपफलभोक्ता । अयथाकालानुष्ठानवैषम्यं द्योतयति तुशब्दः । धर्मेण राजधर्मेण ॥ २३—२५ ॥ प्रनष्टेत्यादिसार्धश्लोकमेकं वाक्यं । देव त्वत्प्रसादात्तव भ्रातुः प्रसादाच्च कपिराज्यादिकं पुनश्च प्राप्तं ॥ २६—२७ ॥ आदाय आहूय ॥ २८—३० ॥—

स० एत आगच्छत । इत्युच्चैःसमुदाहरत् । लक्ष्मणसंवादकालेदूरस्थत्वादितिभावः ॥ ति० एहि एतेत्यर्थः ॥ ति० स्त्रीदर्शनक्षमाः स्त्रीसमूहेपिराजदर्शनक्षमाः। अत्याप्ताइतियावत् ॥ स० स्त्रीदर्शनक्षमाइत्यनेन तारादिविसर्जनंनैतद्दर्शनाभावार्थं किंतुरामं प्रतिगमनार्थमेवेतिसूचयति ॥ स० राज्यश्रियंप्राप्यनिर्ययौ । अनेन नपूर्ववच्चतुर्भिर्जगामेतिसूचयति ॥ १४ ॥ ति० वानराश्चतथाभवन् कृताञ्जलिपुटाअभवन्नित्यर्थः ॥ १७ ॥ ति० आह्लादकत्वात्तटाकोपमा । तदुपमेयं वानराणांमहत्सैन्यं ॥ स० कुड्मलपङ्कजं कुट्मलात्मकानिपङ्कजानियस्मिंस्तादृशतटाकमिवस्थितंतत्सैन्यंदृष्ट्वासुग्रीवेप्रीतिमानभूत् । निश्शब्दत्वात्तटाकसाम्योक्तिः । संपुटाकारत्वात्कुड्मलपङ्कजमित्युक्तिः ॥ १८ ॥ ति० वृक्षाग्रेसुप्तःपतितःसन्यथाप्रतिबुध्यते तथाकामपरोराज्यभ्रष्टःसन्प्रतिबुध्यतइत्यर्थः ॥ २२ ॥ शि० कृतमुपकारंयोनप्रतिकुर्यात् सपुरुषाणांमहात्मनांदूषकः महात्मविघातदोषंलभतइत्यर्थः ॥ ति० पुरुषाणांमध्येसएवदूषकः धर्मनाशकइत्यर्थः ॥ २७ ॥

[ पा० ] १ ङ.—ट. बहुभिः. ग. महद्भिः. २ घ. ङ.—ट. बन्दिभिश्चाभि. ३ घ. शतैर्भीमैः. ४ ग. आसाद्यतु. ५ ग. घ. ङ. छ.—ट. तंदृष्ट्वा. ञ. संदृष्ट्वा. ६ ङ. ज.—ट. निषण्णंतं. ७ ङ. च. ज.—ट. रामोऽब्रवीत्ततः.ग. रामस्ततोऽब्रवीत्. ८ क. ग. ङ. च. ज.—ट. कालेयस्तु. ९ ख. ततोर्थंच. १० क. पतन्नप्रतिबुध्यते. ११ ग. झ. ट. भोक्ताच. १२ ङ.—ट. शत्रुनिषूदन. ख. शत्रुनिबर्हण. १३ छ. झ. ट. पुरुषाणांहि. १४ ग. छ. झ. ट. ऋक्षाश्चवानराः. ख. ऋक्षाश्चवानराघोराः. ङ. च. ज. ञ. ऋक्षाश्चप्रहिताः. क. घ. ऋक्षाश्चावाहिताः.

शतैः शतसहस्रैश्च कोटिभिश्च प्लवङ्गमाः ॥ अयुतैश्चावृता वीराः शङ्कुभिश्च परन्तप ॥ ३१ ॥
अर्बुदैरर्बुदशतैर्मध्यैश्चान्तैश्च वानराः ॥ समुद्रैश्च परार्धैश्च हरयो हरियूथपाः ॥ ३२ ॥
आगमिष्यन्ति ते राजन्महेन्द्रसमविक्रमाः ॥ मेरुमन्दरसंकाशा विन्ध्यमेरुकृतालयाः ॥ ३३ ॥
ते त्वामभिगमिष्यन्ति राक्षसं ये सबान्धवम् ॥ निहत्य रावणं संख्ये ह्यानयिष्यन्ति मैथिलीम् ॥३४॥
ततस्तमुद्योगमवेक्ष्य बुद्धिमान्हरिप्रवीरस्य निदेशवर्तिनः ॥
बभूव हर्षाद्वसुधाधिपात्मजः प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रामसुग्रीवयोर्मिथः सहर्षसंभाषमाणयोःसतोः शतबलिप्रमुखैरनेकैर्वानरसेनापतिभिः नानादेशनिवासिभिर्नानाजातिसंख्याबलवर्णविशिष्टैर्धरणीतलचालकनिजचरणाभिघातसमुत्थितरेणुभिः सूर्यच्छायामाच्छादयद्भिः स्वस्वसैन्यैःसह रामसुग्रीवसमीपमेत्यचरणप्रणामः ॥ १ ॥

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः ॥ बाहुभ्यां संपरिष्वज्य प्रत्युवाच कृताञ्जलिम् ॥ १ ॥
यदिन्द्रो वर्षते वर्षं न तच्चित्रं भवेत्क्वचित् ॥ आदित्यो वा सहस्रांशुः कुर्याद्वितिमिरं नभः ॥ २ ॥
चन्द्रमा रश्मिभिः कुर्यात्पृथिवीं सौम्य निर्मलाम् ॥ त्वद्विधो वाऽपि मित्राणां प्रतिकुर्यात्परंतप ॥३॥
एवं त्वयि न तच्चित्रं भवेद्यत्सौम्य शोभनम् ॥ जानाम्यहं त्वां सुग्रीव सततं प्रियवादिनम् ॥ ४ ॥
त्वत्सनाथः सखे संख्ये जेतास्मि सकलानरीन् ॥ त्वमेव मे सुहृन्मित्रं साहाय्यं कर्तुमर्हसि ॥ ५ ॥

शतैरित्यादि । अत्र केचित्पदमध्याहर्तव्यं । केचित् प्लवङ्गमाः शतैः कपिशतैः । आवृता आगमिष्यन्ति । केचिच्छतसहस्रैरावृता आगमिष्यन्ति । केचित्कोटिभिरावृता आगमिष्यन्ति केचिदयुतैरावृता आगमिष्यन्ति । केचिच्छङ्कुभिः । केचिदर्बुदैः । केचिन्मध्यैः । केचिदन्तैरावृता आगमिष्यन्ति । केचिद्धरयः समुद्रैरावृता आगमिष्यन्ति । केचित्परार्धैरावृता आगमिष्यन्तीति योजना । संख्यालक्षणमुक्तं ज्योतिःशास्त्रे—“ एकं दशशतमस्मात्सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदवृन्दे खर्वं निखर्वं च ॥ तस्मान्महासरोजं शङ्कुं सरितांपतिं त्वन्तम् । मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तथा ज्ञेयं ॥ हरियूथपा इत्येतत्प्रथमान्तविशेषणत्वेन सर्वत्र संबध्यते ॥ ३१—३४ ॥ प्रबुद्धनीलोत्पलतुल्यदर्शनः विकसितनीलोत्पलदर्शनीयवर्णः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टत्रिंशः सर्गः ॥ ३८ ॥

अथ सर्ववानरसेनासमागम एकोनचत्वारिंशे—इति ब्रुवाणमित्यादि ॥ १ ॥ त्वद्विधः त्वादृशः सत्पुरुषः । मित्राणां प्रतिकुर्यात् प्रत्युपकारं कुर्यात् । न तच्चित्रमिति संबन्धः । शोभनं प्रत्युपकाररूपं । सुहृत

ती० शतसहस्रंलक्षं । शतलक्षंकोटिः । अयुतं दशसहस्रं । कोटिलक्षं शङ्कुः । शङ्कुसहस्रमर्बुदं । अर्बुदाद्दशगुणंमध्यं । अस्माद्दशगुणोन्तः । अस्माद्विंशतिगुणःसमुद्रः । अस्मात्रिंशद्गुणःपरार्धः ॥ ३१ ॥ ३२ ॥ इत्यष्टत्रिंशःसर्गः ॥ ३८ ॥

[ पा० ] १ छ. झ. ट. वर्तन्तेकोटिभिस्तथा. २ क. अर्बुदैर्न्यर्बुदशतैः. ३ छ. झ. समुद्राश्चपरार्धाश्च. ४ ग. हरिभिर्हरि. क. येचान्येहरि. ५ ङ.—ट. मेघपर्वतसंकाशामेरुविन्ध्यकृतालयाः. ६ ग. ज. त्वामनु. ७ छ. झ. राक्षसंयोद्धुमाहवे. ८ छ. झ. ट. युद्धे. ९ क.—ट. ततस्समुद्योगं. १० च.—ट. वीर्यवान्. ११ ङ. च. ज. नीलोत्पलदर्शनस्तदा. १२ ङ.—ट. भविष्यति. क. ग. भवेद्भुवि. १३ ङ. छ. झ. ट. रजनींकुर्यात्प्रभयासौम्य. १४ क. ग. छ. झ. ट. प्रीतिंकुर्यात्. १५ क. एतत्त्वयि. १६ ग. निर्मलं. १७ त्वमेवमेइत्यर्धस्थाने क. पाठे. त्वंमेभ्राताखाचत्वंप्रियःसौम्यसुहृच्चमे । त्वंमेसुग्रीववैदेह्याःसाहाय्यंकर्तुमर्हसि । इत्येकःश्लोकोदृश्यते.

जहारात्मविनाशाय [1]वैदेहीं राक्षसाधमः ॥ वञ्चयित्वा तु पौलोमीमनुह्लादो यथा [2]शचीम् ॥ ६ ॥
[3]नचिरात्त्वं [4]हनिष्यामि रावणं निशितैः शरैः ॥ पौलोम्याः पितरं दृप्तं शतक्रतुरि[5]वाहवे ॥ ७ ॥
एतस्मिन्नन्तरे चै[6]व रजः समभिवर्तत ॥ [7]उष्णां तीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥ ८ ॥
दिशः पर्याकुलाश्चा[8]सन्रजसा तेन [9]मूर्छता ॥ चचाल च मही सर्वा सशैलवनकानना ॥ ९ ॥
ततो नगेन्द्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः ॥ कृत्स्ना [10]संछादिता भूमिरसंख्येयैः प्लवङ्गमैः ॥ १० ॥
निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः ॥ कोटी[11]शतपरीवारैः [12]कामरूपिभिरावृता ॥ ११ ॥
नादेयैः [13]पार्वतीयैश्च सामुद्रैश्च महाबलैः ॥ हरिभि[14]र्मेघनिर्ह्रादैरन्यैश्च [15]वनचारिभिः ॥ १२ ॥
तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः ॥ पद्मकेसरवर्णैश्च श्वेतैर्मे[16]रुकृतालयैः ॥ १३ ॥
कोटी[17]सहस्रैर्दशभिः श्रीमान्परिवृतस्तदा ॥ वीरः शतबलिर्नाम वानरः प्रत्यदृश्यत ॥ १४ ॥
ततः काञ्चनशैलाभस्ताराया वीर्यवान्पिता ॥ [18]अनेकैर्दशसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥ १५ ॥
[19]तथापरेण कोटीनां सहस्रेण समन्वितः ॥ पिता रुमायाः संप्राप्तः सुग्रीव[20]श्वशुरो विभुः ॥ १६ ॥
पद्मकेसरसंकाशस्तरुणार्कनिभाननः ॥ बुद्धिमान्वानरश्रेष्ठः सर्ववानरसत्तमः ॥ १७ ॥
अनीकैर्बहुसाहस्रैर्वानराणां समन्वितः ॥ पिता हनुमतः श्रीमान्केसरी प्रत्यदृश्यत ॥ १८ ॥
[21]गोलाङ्गूलमहाराजो गवाक्षो भीमविक्रमः ॥ वृतः कोटि[22]सहस्रेण वानराणामदृश्यत ॥ १९ ॥
ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः ॥ वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत ॥ २० ॥
[23]महाचलनिभैर्घोरैः पनसो नाम यूथपः ॥ आजगाम [24]महावीर्यस्तिसृभिः कोटिभिर्वृतः ॥ २१ ॥
नीलाञ्जनचयाकारो नीलो [25]नामाथ यूथपः ॥ अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२ ॥
ततः काञ्चनशैलाभो गवयो नाम यूथपः ॥ आजगाम महावीर्यः [26]कोटिभिः पञ्चभिर्वृतः ॥ २३ ॥

शोभनहृदयः ॥ २—५ ॥ जहारेति इन्द्रेण ईप्सितां पौलोमीं तत्पितुः पुलोमस्यानुमत्यानुह्लादो जहार । इन्द्रस्त्वनुमन्तारं पुलोमं हत्वा तां पुनरानीयोदवहदिति पौराणिकी कथा ज्ञेया ॥ ६—७ ॥ समभिवर्तत समभ्यवर्तत । मूर्छता व्याप्नुवता ॥ ८—९ ॥ अथ सेनासमुदायव्याप्तिमाह—तत इति ॥ ततः रजोव्याप्त्यनन्तरं ॥ १० ॥ ततः सेनासमुदायव्याप्त्यनन्तरं । नादेयैः नदीतीरवनभवैः । पार्वतीयैः पर्वतोत्पन्नैः । वनचारिभिः आवृतेति पूर्वेणान्वयः ॥ ११—१४ ॥ तारायाः पिता सुषेणः ॥१५॥ रुमायाः पिता तारः ॥ १६—२० ॥ कोटिभिः कोटिसंख्याकैः ॥ २१—

**ति०** य आत्मविनाशायमैथिलींजहार मारीचेनमांवञ्चयित्वा तंनचिरात् शीघ्रं । अरिहा इन्द्रइववधिष्यामि । पौलोम्याःपितरमिवेत्यनेन रावणकृतोजानक्यतिक्रमाभावःसूचितः ॥ ६ ॥ **स०** शशिगौरैः चन्द्रवद्धवलैः । तस्यापिकलङ्किलात्तदपेक्षयाधावल्यंवक्तुंश्वेतैरित्युक्तं ॥ **ति०** हेमा हेमाचलः ॥ १३ ॥ **शि०** महाबलनिभैः महाबलेनप्रकाशमानैः ॥ २१ ॥ **रामानु०** सुग्रीवंसमुपस्थितमितिपाठः ॥ **शि०** दरीमुखोयूथपः सुग्रीवंसमुपस्थितःसन् अभ्याययौ ॥ २३ ॥

[ पा० ] १ ग. छ. झ. ट. मैथिलीं. २ च. ज. ञ. दिवि. ३ ख. अचिरात्तं. ४ क. ख. ग. ङ.—ट. वधिष्यामि. ५ क. ग.—ज. ञ. ट. रिवारिहा. ६ ग. भीमंरजः. ७ घ.—ञ. उष्णंतीव्रं. झ. उष्णतीव्रां. ८ छ. झ. ट. श्चासंस्तमसातेन. ९ ग. च.—झ. मूर्च्छिताः. १० घ. वसुमती. ११ ङ. च. ज. ञ. शतवृतैश्चान्यैः. ख. शतवृतैश्चैवप्रच्छन्नाकामरूपिभिः. १२ छ. झ. ट. वानरैर्हरियूथपैः. १३ क. ग. च.—ट. पार्वतेयैश्च. १४ ग. मेघसंकाशैर्ऋक्षैश्च. घ. मेघसंकाशैरन्यैश्च. १५ क. ख. ग. ङ.—ट. वनवासिभिः. १६ छ. झ. ट. हेमकृतालयैः. १७ ग. सहस्रैर्बहुभिः. १८ ङ.—ट. अनेकैर्बहुसाहस्रैः. १९ ग. तथाशतेन. २० घ. श्वशुरःप्रभुः. ख. श्वशुरोमहान्. २१ ङ. च. ज. ञ. गोलाङ्गूलाधिपःश्रीमान्. ग. गोलाङ्गूलोमहावीर्यः. २२ ग. कोटिसहस्राणांशतेनसमदृश्यत. २३ ङ. छ.—ट. महाबलनिभैः. २४ ग. महावीर्यःपञ्चभिः. २५ ङ.—ट. नामैषयूथपः. ख. नामाथवीर्यवान्. २६ क. घ. पञ्चभिःकोटिभिः.

[1]दरीमुखश्च बलवान्यूथपोभ्याययौ तदा ॥ वृतः कोटिसहस्रेण सुग्रीवं [2]समुपस्थितः ॥ २४ ॥
मैन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ ॥ कोटिकोटिसहस्रेण वानराणामदृश्यताम् ॥ २५ ॥
गजश्च बलवा[3]न्वीरः कोटिभिस्तिसृभि[4]र्वृतः ॥ आजगाम महातेजाः सुग्रीवस्य समीपतः ॥ २६ ॥
ऋक्षराजो महातेजा जाम्बवान्नाम नामतः ॥ कोटिभिर्दशभिः प्राप्तः सुग्रीवस्य वशे स्थितः ॥ २७ ॥
[5]रुमण्वान्नाम विक्रान्तो वानरो [6]वानरेश्वरम् ॥ [7]आययौ बलवांस्तूर्णं कोटीशतस[8]मावृतः ॥ २८ ॥
ततः कोटिसहस्राणां सहस्रेण शतेन च ॥ पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः ॥ २९ ॥
ततः पद्मसहस्रेण वृतः शङ्कुशतेन च ॥ युवराजोङ्गदः प्राप्तः [9]पितृतुल्यपराक्रमः ॥ ३० ॥
ततस्ताराद्युतिस्तारो हरिभि[10]र्भीमपराक्रमः ॥ पञ्चभिर्हरिकोटीभिर्दूरतः [11]प्रत्यदृश्यत ॥ ३१ ॥
[12]इन्द्रजानुः कपिर्वीरो यूथपः प्रत्यदृश्यत ॥ एकादशानां कोटीनामी[13]श्वरस्तैश्च संवृतः ॥ ३२ ॥
ततो [14]रम्भस्त्वनुप्राप्तस्तरुणादित्यसन्निभः ॥ अयुतेनावृतश्चैव सहस्रेण शतेन च ॥ ३३ ॥
ततो यूथपतिर्वीरो दुर्मुखो नाम वानरः ॥ प्रत्यदृश्यत कोटिभ्यां द्वाभ्यां परिवृतो बली ॥ ३४ ॥
कैलासशिखराकारैर्वानरैर्भीमविक्रमैः ॥ वृतः कोटिसहस्रेण हनुमान्प्रत्यदृश्यत ॥ ३५ ॥
नलश्चापि महावीर्यः [15]संवृतो द्रुमवासिभिः ॥ कोटीशतेन संप्राप्तः सहस्रेण शतेन च ॥ ३६ ॥
[16]ततो [17]दधिमुखः श्रीमान्कोटिभिर्दशभिर्वृतः ॥ संप्राप्तो[18]भिमतस्तस्य सुग्रीवस्य महात्मनः ॥ ३७ ॥
शरभः कुमुदो वह्निर्वानरो रंह एव च ॥ एते चान्ये च बहवो वानराः कामरूपिणः ॥ ३८ ॥
आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च ॥ यूथपाः समनुप्राप्तास्ते[19]षां संख्या न विद्यते ॥ ३९ ॥
[20]आगताश्च विशिष्टाश्च पृथिव्यां सर्ववानराः ॥ ४० ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ अभ्यवर्तन्त सुग्रीवं सूर्यमभ्रगणा इव ॥ ४१ ॥
कुर्वाणा [21]बहुशब्दांश्च प्रहृष्टा [22]बाहुशालिनः ॥ शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् ॥ ४२ ॥

२३ ॥ सुग्रीवं समुपस्थितः प्राप्तः ॥ २४ ॥ अदृश्यतां अदृश्येतां ॥ २५—२७ ॥ रुमण्वान्नाम विक्रान्तो वानरो वानरेश्वरमाययौ ॥ २८—३० ॥ ताराद्युतिः नक्षत्रतुल्यप्रभः । तारः रुमायाः पितुरन्योयं ॥ ३१—३४ ॥ कोटिसहस्रेणोपलक्षितैर्वानरैर्वृत इति संबन्धः ॥ ३५ ॥ कोटिशतेनेत्याद्युपलक्षणे तृतीया ॥ ३६—३९ ॥ पृथिव्यां विशिष्टाश्च अप्राकृताः । देवयोनय इत्यर्थः । सर्ववानराश्च प्राकृतवानराश्च । आगता एव ॥ ४० ॥ आप्लवन्तः लङ्घयन्तः । अभ्रगणाः मेघगणाः ॥ ४१ ॥ न्यवेदयन् आत्मानमिति

**शि०** कोटिसहस्राणांवानराणां शतेनसहस्रेण लक्षेणेत्यर्थः । वृतः । पृष्ठतोनुगतः पश्चाच्चलितः । किंच पृष्ठतोनुगताअनुचरा यस्यसगन्धमादनः प्राप्तः ॥ २९ ॥ **शि०** आप्लवन्तः वृक्षादीन्समुल्लङ्घयन्तः । प्लवन्तः शाखादीनुल्लङ्घयन्तः ॥ ३१ ॥ **ति०** शिरोभिर्न्यवेदयन् बहुसंमर्दाद्दूरेस्थित्वानमस्कारेणैवात्मानंन्यवेदयन्नित्यर्थः । **स०** न्यवेदयन् स्वनामोत्कीर्तनपूर्वकंस्वरूपंनिवेदितवन्तः ॥ ३२ ॥ **ति०** धर्मज्ञः राजधर्मज्ञः ॥ ३३ ॥ **ति०** योबलज्ञः बलतलज्ञः । प्रतिपत्तुं कआगतः कोनागत इतिज्ञातुं । ईष्टे ईशोभवेत् । लिङर्थेलट् ॥ ३५ ॥ इत्येकोनचत्वारिंशः सर्गः ॥ ३९ ॥

**[ पा० ]** १ घ. दधीमुखश्च. २ ङ.—ट. समवस्थितः. ३ क. ग. ङ.—ट. वीरस्तिसृभिःकोटिभिः. ४ ङ.—ट. दशभिर्व्याप्तः. ५ छ. झ. ञ. रुमणोनामतेजस्वीविक्रान्तैर्वानरैर्वृतः. ङ. च. ज. रुमण्वान्नामतेजस्वीविक्रान्तैर्वानरैर्वृतः. ट. रुमण्वान्नामतेजस्वीविक्रान्तोवानरेश्वरं. ६ घ. वानरेश्वरः. ७ च.—ट. आगतोबलवान्. ८ ख. घ. समन्वितः. ९ क. ङ.—ट. पितुस्तुल्य. १० क. ङ.—ट. हरिभिर्भीमविक्रमैः. ११ ङ. झ. ञ. ट. पर्यदृश्यत. १२ ङ.—ज. ट. इन्द्रभानुः. १३ ज. मीश्वरैस्तैः. ख. घ. मीश्वरस्तैःसमावृतः. १४ ग. रंभश्चसंप्राप्तः. १५ ङ. च. ज. ञ. संवृतःशैलवासिभिः. १६ ग. घ. तथा. १७ छ. झ. दरीमुखः. १८ ग. संप्राप्तोमातुलस्तस्य. छ. झ. ट. संप्राप्तोऽभिनदंस्तस्य. क. ङ. च. ज. संप्राप्तोऽभिरतस्तस्य. ञ. संप्राप्तोहरिभिस्तस्य. १९ ग. ङ.—ट. प्राप्तायेषां. २० क. ङ.—ट. आगताश्चनिविष्टाश्च. घ. आगताश्चावशिष्टाये. ग. आगताविनिविष्टाश्च. २१ क. बहुशःशब्दान्. २२ छ. झ. प्रकृष्टाबाहुशालिनः. ट. प्रकृष्टबलशालिनः. ख. प्रहृष्टाबलशालिनः.

अपरे वानरश्रेष्ठाः संयम्य च यथोचितम् ॥ सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ॥ ४३ ॥
सुग्रीवस्त्वरितो रामे सर्वांस्तान्वानरर्षभान् ॥ निवेदयित्वा धर्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ॥ ४४ ॥
यथासुखं पर्वतनिर्झरेषु वनेषु सर्वेषु च वानरेन्द्राः ॥
निवेशयित्वा विधिवद्बलानि बलं बलज्ञः प्रतिपत्तुमीष्टे ॥ ४५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ॥ ४० ॥

सुग्रीवेण रामाज्ञयाविनतनामकसेनापतिंप्रति प्राच्यांदिशिसूर्यसंचारार्हदेशावधि तत्तत्स्थलीयविशेषनिवेदनपूर्वकं तत्रतत्रस्वसैन्यैःसहसीतान्वेषणचोदनेनसह मासातिक्रमेदण्ड्यत्वोक्तिः ॥ १ ॥

अथ राजा समृद्धार्थः सुग्रीवः प्लवगेश्वरः ॥ उवाच नरशार्दूलं रामं परबलार्दनम् ॥ १ ॥
आगता विनिविष्टाश्च बलिनः कामरूपिणः ॥ वानरा वारणेन्द्राभा ये मद्विषयवासिनः ॥ २ ॥
त इमे बहुविक्रान्तैर्हरिभिर्भीमविक्रमैः ॥ आगता वानरा घोरा दैत्यदानवसन्निभाः ॥ ३ ॥
ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः ॥ पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः ॥ ४ ॥
पृथिव्यम्बुचरा राम नानानगनिवासिनः ॥ कोट्यग्रश इमे प्राप्ता वानरास्तव किङ्कराः ॥ ५ ॥
निदेशवर्तिनः सर्वे सर्वे गुरुहिते रताः ॥ अभिप्रेतमनुष्ठातुं तव शक्ष्यन्त्यरिन्दम ॥ ६ ॥
त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः ॥ यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् ॥
त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥ ७ ॥

शेषः ॥ ४२ ॥ संयम्य वस्त्रादिकं संकुचितं कृत्वा सन्नम्येति च पाठः ॥ ४३ ॥ सुग्रीवः प्राञ्जलिस्त्वरितः सन् सर्वान् रामे निवेदयित्वा स्थितः तानब्रवीत् । तदेवाह—यथेति । भो वानरेन्द्राः पर्वतादिषु स्वानि बलानि यथासुखं निवेशयित्वा । बलज्ञो यूथपः । स्वं बलं प्रतिपत्तुं ज्ञातुं । ईष्टे ईशो भवेत् । लिङर्थे लट् । यद्वा रामे निवेदयित्वा तदधीनं कृत्वा । अब्रवीत् तत्तत्स्वरूपमब्रवीत् । यथेति वानरेन्द्र इति च पाठः । सुग्रीवः बलं प्रतिपत्तुमीष्टे स्म ॥ ४४—४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

अथ सीतान्वेषणाय पूर्वस्यां दिशि सुग्रीवेण विनतप्रेषणं चत्वारिंशे—अथ राजेत्यादि ॥ १ ॥ मद्विषयवासिनः मदवगतदेशवासिनः । "विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि" इत्यमरः । यद्वा मद्राज्यवासिनः ॥ २—३ ॥ ख्यातकर्मापदानाः कर्म दूरलङ्घनाधिक्रिया अपदानं पूर्ववृत्तं विस्मयनीयशत्रुनिरसनं ख्याते कर्मापदाने येषां ते तथा ॥ ४ ॥ कोट्यग्रश इति बहुसंख्योपलक्षणं ॥ ५ ॥ गुरुहिते स्वामिहिते ॥ ६ ॥ बहुसाहस्रैर्भीमविक्रमैरनीकैः सहिताः । त इम इत्यङ्गुल्या निर्देशः । प्राप्तकालं

स० ख्यातोधर्मोयेषांते । पदाताः यानंविनापादेनैवगमनशीलाः । व्यवसायोनिश्चयबुद्धिः । मत्वर्थीयप्रत्ययान्तत्वात्तद्वत्सूत्तमाः ॥ ४ ॥ ति० अंबुचराः समुद्रमध्यद्वीपचराः ॥ ५ ॥

[ पा० ] १ ख. धर्मज्ञस्ततः. २ ग. पर्वतकन्दरेषु. ख. घ. छ. पर्वतनिर्दरेषु. ३ क. ग. प्लवगाधिपः. ४ ख. आगताश्चविशिष्टाश्च. ५ छ. झ. ट. कामधारिणः. ६ च.—ट. वानरेन्द्रामहेन्द्राभाः. क. ङ. वानरेन्द्रामहाभागाः. ७ मेविषय. ८ ङ.—ट. विक्रान्तैर्बलिभिः. ख. विक्रान्तैरनेकैर्भीमदर्शनैः. ९ ग. वानरश्रेष्ठाः. १० ठ. ख्यातकर्मपदाताश्च. ११ ख. पराक्रमेच. १२ ख. व्यवसायेपि. १३ ग. पृथिव्यंबरसंचाराः. १४ ग. कोट्योघैस्तइमे. ख. कोट्यग्रतइमे. क. कोट्यग्रगाइमे. छ. झ. ट. कोट्योघाश्चइमे. १५ च. छ. ज. ञ. ट. स्थिताः. १६ ग. छ. झ. ठ. रनेकैर्बहुविक्रमैः. ङ. ज. ञ. रनेकैर्भीमविक्रमैः.

[1]काममेषामिदं कार्यं विदितं [2]मम तत्वतः ॥ तथापि तु [3]यथातत्वमाज्ञापयितुमर्हसि ॥ ८ ॥
[4]इति ब्रुवाणं सुग्रीवं रामो [5]दशरथात्मजः ॥ बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ॥ ९ ॥
ज्ञायतां [6]मम वैदेही यदि जीवति वा न वा ॥ सच देशो महाप्राज्ञ[7] यस्मिन्वसति रावणः ॥ १० ॥
अधिगम्य तु वैदेहीं निलयं रावणस्य च ॥ प्राप्तकालं विधास्यामि तस्मिन्काले सह त्वया ॥ ११ ॥
नाहमस्मिन्प्रभुः कार्ये [8]वानरेश न लक्ष्मणः ॥[9]त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ॥ १२ ॥
त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम् ॥ त्वं हि जानासि [10]यत्कार्यं मम वीर न संशयः ॥ १३ ॥
सुहृद्द्वितीयो विक्रान्तः [11]प्राज्ञः कालविशेषवित् ॥ भवानस्मद्धिते युक्तः [12]सुकृतार्थोर्थवित्तमः ॥ १४ ॥
एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ॥ अब्रवीद्रामसान्निध्ये लक्ष्मणस्य च धीमतः ॥
शैलाभं मे[13]घनिर्घोषमूर्जितं [14]प्लवगेश्वरः ॥ १५ ॥
सोम[15]सूर्यात्मजैः सार्धं वानरैर्वानरोत्तम ॥ देशकालनयैर्युक्तः [16]कार्याकार्यविनिश्चये ॥ १६ ॥
वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ॥ १७ ॥
[17]तत्र सीतां च वैदेहीं निलयं रावणस्य च ॥ मार्गध्वं गिरि[18]शृङ्गेषु वनेषु च [19]नदीषु च ॥ १८ ॥
नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा ॥ कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् १९
सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ॥ महीं कालमहीं [20]चैवं शैलकाननशोभिताम् ॥२०॥
ब्रह्ममालान्विदेहांश्च मालवान्काशिकोसलान् ॥ मागधांश्च महाग्रामान्[21]पुण्ड्रान्वङ्गांस्तथैव च ॥
[22]पत्तनं कोशकाराणां भूमिं च रजताकराम् ॥ २१ ॥

कालोचितं ॥ ७ ॥ एषां कार्यं एभिः कर्तव्यं । मम विदितं मया विदितं ॥ ८—१३ ॥ सुहृद्भिनीत इति च पाठः ॥ १४—१५ ॥ कार्याकार्यविषये विनिश्चये देशकालनयैः देशोचितनीतिभिः कालोचितनीतिभिश्चेत्यर्थः । देशकालानुगुणनयप्रवर्तनं कर्तव्यमित्यर्थः ॥ १६—१८ ॥ नदीमित्यादि रजताकरामित्यन्तमेकंवाक्यं । प्राप्येति शेषः । ततस्ततः सीतां मृगयद्भिर्भवद्भिः भागीरथ्यादिकं प्राप्य एतत् पूर्वोक्तं सर्वं । विचेतव्यमिति संबन्धः । अत्रेदमवधेयं । शरावती नाम काचिन्नदी हिमवद्विन्ध्यमध्यदेशे वलयाकारेण प्रवहति । तदपेक्षया प्राचीदिगिदानीं विचेयत्वेनोच्यते नतु किष्किन्धापेक्षया नापि मेर्वपेक्षयेति । यामुनं महागिरिं यमुनासंबन्धिनंपर्वतं । मह्यादयो देशविशेषाः । मागधान् मगधदेशान् । महाग्रामान्

**स०** रावणनिवासउपलब्धश्चेत्तत्रकिंकार्यं किंरावणोहन्तव्यउतेहानेतव्यइत्यतआह—**अधिगम्येति** । अधिगम्य विज्ञाय । अनन्तरंतत्कालोचितंविधास्यामि ॥ ११ ॥ **शि०** यस्मिन्देशेरावणोवसतिसदेशः वैदेहीजीवतिनवाइतिचयदियस्मिन्कालेज्ञायतांतस्मिन्कालेवैदेहीमभिगम्यरावणस्यनिलयंप्राप्तकालंविध्वंसाश्रयमित्यर्थः । श्लोकद्वयमेकान्वयि ॥ १०—११ ॥ **ती०** सुहृद्द्वितीयः सुहल्लक्ष्मणापेक्षयाद्वितीयस्त्वं ॥ ननुमेरोःपूर्वदिगवस्थितोदयाचलपर्यन्तमन्वेष्टुंप्रेषितान्वानरान्प्रतिमेरोर्दक्षिणदिगवस्थितभागीरथ्यादिनदीपर्वताद्यन्वेषणविधानंकथमुपपद्यतइतिचेत् हेमाचलविन्ध्यमध्यदेशवर्त्यार्यावर्तापेक्षयाप्राच्यादिविभागोविवक्षितः । नतुमेर्वपेक्षया । स्वावस्थितमाल्यवदपेक्षयावेतिनदोषः ॥ १४ ॥ **ति०** विज्ञः त्वमितिशेषः ॥ १६ ॥ **ति०** निलयंरावणस्यनिलयंस्थानं । यद्वा चतुर्दिक्षुरावणवासस्थानमनेनसूचितं ॥ १८ ॥ **ति०** मार्गध्वमितिसामान्यतोनियोगः । विशेषेणाह—नदीमित्यादि द्वितीयान्तानांप्राप्येतिशेषः ॥ यामुनो गिरिःयमुनोत्पत्तिस्थानभूतःकालिन्दगिरिः ॥ १९ ॥ **ति०** महीकालमह्यौनद्यौ ॥ २० ॥ **ति०** कोशकाराणांभूमिं कौशेयकतन्तूत्पादकजन्तूत्पत्तिस्थानभूतांभूमिं । रजताकरां रजतखनिं ॥ २१ ॥

**[ पा० ]** १ च. झ. ञ. काममेवमिदं. २ क. ख. घ. वीर. ३ क. ङ.—ट. यथायुक्तं. ४ क. ख. ङ.—ट. तथा. ५ ग. बुद्धिमतांवरः. ६ क. ग.—ट. सौम्य. ७ ख. वीर. ८ ग. ङ.—ट. वानरेन्द्र. ९ ख. त्वमेव. १० छ. झ. मेकार्यं. ११ ख. छ. प्राप्तकाल. १२ ग. सकृतार्थो. छ. झ. सुहृदाप्तो. १३ क. ङ. च. ज. मेघनिर्घोषंजीमूतं. १४ ख. छ. झ. ञ. ट. प्लवगेश्वरं. १५ छ. झ. ञ. ट. सूर्यनिभैः. १६ छ. झ. ट. विज्ञःकार्य. १७ ङ. च. ज. ञ. ततः. १८ ख. च.—ट. दुर्गेषु. १९ ङ. नदेषुच. २० क. घ.—छ. झ. ञ. ट. चापि. २१ ङ. छ. झ. ञ. ट. न्पुण्ड्रांस्त्वङ्गांस्तथैवच. ख. न्पुण्ड्रान्वङ्गांश्चसर्वशः. २२ छ. झ. ट. भूमिंच.

सर्व[1]मेतद्विचेतव्यं मार्गयद्भि[2]स्ततस्ततः ॥ रामस्य द[3]यितां भार्यां सीतां द[4]शरथस्नुषाम् ॥ २२ ॥
समुद्रमवगाढांश्च पर्वतान्पत्तनानि च ॥ म[5]न्दरस्य च ये कोटिं संश्रिताः केचिद[6]ायताम् ॥ २३ ॥
कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः ॥ घोरलोहमुखाश्चैव ज[7]वनाश्चैकपादकाः ॥ २४ ॥
अक्षया बलवन्तश्च [8]पुरुषाः पुरुषादकाः ॥ कि[9]राताः कर्णचूडाश्च हेमा[10]ङ्गाः प्रियदर्शनाः ॥ २५ ॥
आममीनाशना[11]स्तत्र किराता द्वीपवासिनः ॥ अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ॥
एतेषा[12]मालयाः सर्वे विचेयाः [13]काननौकसः ॥ २६ ॥
गिरिभिर्ये च गम्यन्ते [14]प्लवनेन प्लवेन च ॥ र[15]त्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ॥
[16]सुवर्णरूप्यकं चैव [17]सुवर्णाकरमण्डितम् ॥ २७ ॥
यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ॥ दिवं स्पृशति शृङ्गेण देवदानवसेवितः ॥ २८ ॥
एतेषां गिरिदुर्गेषु [18]प्रपातेषु वनेषु च ॥ मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम् ॥ २९ ॥
ततो [19]रक्तजलं शोणमगाधं शीघ्र[20]गामिनम् ॥ गत्वा [21]पारं समुद्रस्य सिद्धचारणसेवितम् ॥ ३० ॥

महाग्रामयुक्तान् । कोशकाराणां राजविशेषाणां ॥१९—२२ ॥ समुद्रं अवगाढान् प्रविष्टान् । पर्वतान् । मन्दरस्य आयतां कोटिं च संश्रितायेकर्णप्रावरणादयः एतेषामालयाः सर्वे विचेयाइतिसंबन्धः । काननौकस इति संबोधनं । कर्णप्रावरणाः आच्छादितकर्णाः । निष्कर्णाइत्यर्थः । ओष्ठे कर्णौ येषां ते ओष्ठकर्णकाः । लोहमुखाः लोहतुल्यमुखाः । कर्णेषु चूडा येषां ते कर्णचूडाः । आममीनाशना इति पूर्वोक्तकिराता व्यावर्त्यन्ते । द्वीपवासिनः द्वीपान्तरेवसन्तो मन्दरेपि वसन्तीत्यर्थः । नरव्याघ्राः अर्धनररूपा व्याघ्ररूपाश्चेत्यर्थः ॥ २३—२६ ॥ एवं जम्बूद्वीपान्वेषणं विधाय द्वीपान्तरान्वेषणं विधत्ते—गिरिभिरित्यादि । रामपत्नीं यशस्विनीमित्यन्तमेकं वाक्यं ॥ ये द्वीपाः गिरिभिर्गम्यन्ते । प्लवनेन लङ्घनेन च ये गम्यन्ते । प्लवेन उडुपेन ये गम्यन्ते । तान्द्वीपान् । सप्तराज्योपशोभितं सप्तखण्डोपशोभितं । यवद्वीपं च गच्छत । तं यवद्वीपमतिक्रम्य यः शिशिरोनाम पर्वतःशृङ्गेण दिवं स्पृशति तं गच्छत । एतेषां द्वीपादीनां गिरिदुर्गेषु वनेषु च । प्रपातेषु निर्झरेषु च । रामपत्नीं मार्गध्वमिति संबन्धः । यवद्वीपसुवर्णरूप्यकावपि लङ्काद्वीपवत् समुद्रान्तर्वर्तिनौ द्वीपविशेषौ ॥ २७—२९ ॥ एवं जम्बूद्वीपं लवणसमुद्रं चोक्त्वा प्लक्षद्वीपप्रदेशानाह—तत इत्यादिना ॥ समुद्रस्य पारं लवणसमुद्रापरपारस्थं । रक्तजलं अगाधं शीघ्रगामिनं सिद्धचारणसेवितं शोणं शोणाख्यं नदं । गत्वा । तस्य तीर्थेषु अवतारेषु । वनेषु च वैदेह्यासह रावणोमार्गितव्यः । केवलं रावणं केवलं सीतां च दृष्ट्वा नागन्तव्यं । रावणहननाय सीतानयनाय च उभावपि दृष्ट्वा आगन्तव्यमितिभावः

सकर्णप्रावरणाः कर्णपुटस्यैवप्रावरणवस्त्रवद्विस्तृतत्वेनतथोक्तिः । तथा ओष्ठकर्णिकाः ओष्ठपर्यन्तंलंबमानकर्णाः । लोहमुखाः ताम्रमुखाः । चर्मपादुकाः जानुपर्यन्तंविद्यमानचर्ममयपादत्राणाः । एकपादकाइत्यपिक्वचित्पाठः ॥ २४ ॥ **शि०** अक्षयाः नाशरहिताः गृहरहितावा ॥ **ति०** अक्षयाः अक्षयसन्तानाः । एतेउक्ताःपुरुषाः । तथैवपुरुषादकाः रक्षोभेदाः । तीक्ष्णसूच्यग्रसदृशतैक्ष्ण्यवतीचूडाकेशपाशोयेषां ॥ २५ ॥ **ति०** आममीनाशनाः अपक्वमत्स्यभुजः ॥२६॥ **ती०** यवद्वीपं यवकोटिपर्युपलक्षितद्वीपं । अस्तीतिशेषः । **ति०** ततःपरंयत्नवन्तोभूत्वा । सप्तराज्योपशोभितंयवद्वीपं तथासुवर्णद्वीपंरूप्यकद्वीपंविचेतव्यमितिशेषः । सुवर्णकरमण्डितं सुवर्णंकुर्वन्तियेतैःशोभितं ॥ २७ ॥ **ति०** ततोनित्यजलमितिपाठे नित्यजलमितितस्यसंज्ञा ॥ ३० ॥

[ पा० ] १ च. झ. ट. सर्वंचतद्विचेतव्यं. ग. सर्वमेतद्विचिन्वध्वं. २ क. ख. घ.—ट. मृगयद्भिः. ग. मृगयन्तः. ३ छ. ज. भार्यांदयितां. ङ. दक्षिणांभार्यां. ४ क. स्नुषांदशरथस्यच. ५ ख. मन्दरस्यचकोटीश्चयेकिंचित्संश्रिताजनाः. ६ क. ङ.—ट. केचिदालयाः. ७ ख. ट. यवनाश्चैक. ठ. जवनाश्चर्मपादुकाः. ८ ङ. छ. झ. ट. तथैव. ९ ख. ङ. छ. झ. ञ. ट. किरातास्तीक्ष्णचूडाश्च. १० छ. झ. ट. हेमाभाः. ११ ग. ङ. च. ज. श्चात्र. छ. झ. ञ. ट. श्चापि. क. श्चैव. १२ छ. झ. ट. माश्रयाः. ङ. मालयाःकामं. १३ क. कामरूपिणः. १४ च. ज. लङ्घनेन. ङ. च. लङ्घनैःसुप्लवेनच. १५ झ. यत्नवन्तोयवद्वीपं. १६ ङ. सुवर्णद्वीपकंचैव. ख. सुवर्णकुड्यकंचैव. छ. झ. ट. सुवर्णरूप्यकद्वीपं. १७ छ. झ. ञ. ट. सुवर्णकरमण्डितं. १८ क. ग. प्रभूतेषु. १९ छ. झ. ट. रक्तजलंप्राप्यशोणाख्यंशीघ्रवाहिनं. २० क. ग. ज. शीघ्रवाहिनं. २१ क. समुद्रपारस्थं.

तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च ॥ रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३१ ॥
पर्वतप्रभवा नद्यः सुरम्या[1] बहुनिष्कुटाः ॥ मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ॥ ३२ ॥
ततः समुद्रद्वीपांश्च सुभीमान्द्रष्टुमर्हथ ॥ ३३ ॥
ऊर्मिमन्तं समुद्रं[2] च क्रोशन्तमनिलोद्धतम् ॥ ३४ ॥
तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः ॥ ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥ ३५ ॥
तं कालमेघप्रतिमं[3] महोरगनिषेवितम् ॥ अभिगम्य[4] महानादं तीर्थेनैव महोदधिम् ॥ ३६ ॥
ततो रक्तजलं भीमं लोहितं नाम सागरम् ॥ गता[5] द्रक्ष्यथ[6] तां चैव बृहतीं[7] कूटशाल्मलीम् ॥ ३७ ॥
गृहं च वैनतेयस्य नानारत्नविभूषितम्[8] ॥ तत्र कैलाससंकाशं विहितं विश्वकर्मणा ॥ ३८ ॥
तत्र शैलनिभा भीमा[9] मन्देहानाम राक्षसाः ॥ शैलशृङ्गेषु[10] लम्बन्ते नानारूपा भयावहाः ॥ ३९ ॥
ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ॥ निहता[11] ब्रह्मतेजोभिरहन्यहनि राक्षसाः ॥
अभितप्ताश्च[12] सूर्येण लम्बन्ते स्म पुनः पुनः ॥ ४० ॥
ततः पाण्डुरमेघाभं[13] क्षीरोदं नाम सागरम् ॥ गता[14] द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिवोर्मिभिः ॥ ४१ ॥
तस्य मध्ये महाञ्श्वेत ऋषभो नाम पर्वतः ॥ दिव्यगन्धैः कुसुमितै राजतैश्च नगैर्वृतः ॥ ४२ ॥

॥ ३०—३१ ॥ प्लक्षद्वीपपर्वतादीनाह—पर्वतेति ॥ निष्कुटाः उद्यानविशेषाः ॥ ३२ ॥ अथेक्षुसमुद्रद्वीपानाह—तत इति ॥ ३३ ॥ इक्षुसमुद्रविशेषं वक्तुमाह—ऊर्मिमन्तमित्यर्धे ॥ ऊर्मिमन्तं समुद्रं इक्षुसमुद्रमित्यर्थः । अभिगच्छतेति शेषः । "लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समं" इति समुद्रक्रमः ॥ ३४ ॥ इक्षुसमुद्रस्य दुर्गमत्वंदर्शयति—तत्रेति ॥ तत्र इक्षुसमुद्रे ॥ ३५ ॥ तीर्थेनाभिगम्य उपायेनाभिगम्य । "तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतरणेषु" इति वैजयन्ती ॥ छायाग्राहिपरिहारेण गन्तव्यमित्यर्थः । यद्वा तीर्थेनावतरणेन गन्तव्यं नान्येन । तेन छायाग्राहिपरिहारो भविष्यतीति भावः ॥३६॥ ततो गताः इक्षुसमुद्रान्निर्गताः । तां कूटशाल्मलीं लोहितं नाम सागरं मधुसमुद्रं च । द्रक्ष्यथ ॥ ३७ ॥ तत्र शाल्मलिद्वीपे ॥ ३८ ॥ तत्र मधुसमुद्रे ॥ सूर्यस्योदयनं प्रतीत्यतः परं निहता इत्यर्धं । ततः परं अभितप्ताश्चेत्यर्धं । लम्बन्ते वर्तन्त इत्यर्थः । ब्रह्मतेजोभिः गायत्रीप्रभावैः ॥३९–४०॥ ततः पाण्डुरेति । अत्र मधुसमुद्रानन्तरं सर्पिर्दधिसमुद्रयोः कुशक्रौञ्चद्वीपयोश्च वक्तव्यत्वेपि तान्विहाय क्षीरोदप्राप्त्यभिधानं तदुभयप्राप्तिमन्तरेण क्षीरोदप्राप्तेरसंभवात् । अतः अनुक्तावपि तावुक्तावेव समुद्रौ द्वीपौ चेति बोध्यं । यद्वा लवणसमुद्रं तन्मध्यद्वीपांश्चोक्त्वा प्लक्षद्वीपशाल्मलिद्वीपकुशद्वीपक्रौञ्चद्वीपान् इक्षुसुरासर्पिर्दधिसमुद्रांश्च तन्त्रेण दर्शयति—ततः समुद्रद्वीपांश्च सुभीमान्द्रष्टुमर्हथेति ॥ ततः ऊर्मिमन्तमित्यादिना इक्षुसमुद्रस्य विशेषणमुक्त्वा ततो रक्तजलमित्यादिना सुरासमुद्रस्य स्वरूपमुक्त्वा ततः शाल्मलिद्वीपवृत्तान्तं प्रदर्श्य अन्यत्र विशेषाभावात् क्षीरसमुद्रगमनं निर्दिशति—ततः पाण्डुरमेघाभमित्यादिना ॥ ऊर्मिभिर्मु-

**शि०** सुभीमबहुनिष्कुटाः भयङ्करानेकावनप्रदेशयुक्ताः ॥३२॥ **ति०** समनुज्ञाताः समनुज्ञातच्छायाद्वारकग्रहणसामर्थ्यादिमन्तः । छायागृहीतप्राणिभक्षणानुमतिकाश्च ॥ ३५ ॥ **ति०** सूर्यस्योदयनंप्रति । सूर्योदयंप्राप्योर्ध्वमुखाःसूर्येणयुध्यमानाः सूर्येणाभितप्ताः । तन्मण्डलब्रह्मतेजोभितप्ताः । ब्रह्मतेजोभिरहन्यहनित्रैवर्णिकप्रवर्तितैर्ब्रह्मविद्यातेजोभिर्निहताःसन्तः सुरोदजलेपतन्ति । ततः पुनरुज्जीवितालंबन्तेस्म । शैलशृङ्गेष्वितिशेषः ॥ **कतक०** शैलशृङ्गेषुलंबन्तइत्यादिश्लोकद्वयंप्रक्षिप्तं । "तानिरक्षांसिमन्देहारुणेद्वीपेप्रक्षिपन्ति" इतिश्रुतावरुणद्वीपेतत्प्रक्षेपोक्तेरत्रारुणद्वीपप्रसक्त्यभावात्प्राचीनपुस्तकेष्वदर्शनाच्च ॥ ४० ॥ **कतक०** ततःपाण्डुरेति ।

**[ पा० ]** १ छ. झ. ट. सुभीमबहु. २ ग.—ट. महारौद्रं. ३ ग. कालमेघप्रतिनिभं. ४ ग. अतिक्रम्य. घ. अधिगम्य. ५ क. ङ.—ट. गत्वा. ६ छ. झ. प्रेक्ष्यथ. ७ ग. महतीं. ८ ख. रत्नोपशोभितं. ९ क. घोराः. १० ङ. तेषुशृङ्गेषु. ११ निहता ब्रह्मतेजोभिः. अभितप्ताश्चसूर्येण. इत्यनयोरर्धयोःपौर्वापर्यं ग. ङ.—ट. पाठेषुदृश्यते. ग. रहिताः. १२ ङ.—ट. अभितप्ताःस. १३ क. पाण्डरसंघातं. १४ ङ.—ट. गत्वा. क. ततो.

सरश्च राजतैः पद्मैर्[1]ज्वलितैर्हेमकेसरैः ॥ नाम्ना सुदर्शनं नाम [2]राजहंसैः समाकुलम् ॥ ४३ ॥
विबुधाश्चारणा यक्षाः [3]किंनराः साप्सरोगणाः ॥ हृष्टाः [4]समभिगच्छन्ति नलिनीं तां [5]रिरंसवः ॥४४॥
क्षीरोदं समतिक्रम्य [6]ततो द्रक्ष्यथ वानराः ॥ जलोदं [7]सागरश्रेष्ठं सर्वभूतभयावहम् ॥ ४५ ॥
तत्र तत्कोपजं तेजः कृतं हयमुखं महत् ॥ [8]अस्याहुस्तन्महावेगमोदनं सचराचरम् ॥ ४६ ॥
तत्र विक्रोशतां नादो भूतानां [9]सागरौकसाम् ॥ श्रूयते [10]च समर्थानां दृष्ट्वा तद्बडबामुखम् ॥ ४७ ॥
[11]स्वादूदस्योत्तरे [12]देशे [13]योजनानि त्रयोदश ॥ जातरूपशिलो नाम [14]महान्कनकपर्वतः ॥ ४८ ॥
तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् ॥ पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ ४९ ॥
आसीनं पर्वतस्याग्रे सर्व[15]भूतनमस्कृतम् ॥ सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५० ॥
त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः ॥ स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥ ५१ ॥
पूर्वस्यां दिशि निर्माणं कृतं तत्त्रिदशेश्वरैः ॥ ५२ ॥
ततः परं हेममयः श्रीमानुदयपर्वतः ॥ तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ॥ ५३ ॥
जातरूपमयी दिव्या विराजति सवेदिका ॥ सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥
जातरूपमयैर्दिव्यैः शोभते सूर्यसन्निभैः ॥ ५४ ॥
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ॥ शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५५ ॥
तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ॥ द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५६ ॥

---

क्ताहारं मुक्ताहारयुक्तमिव स्थितं ॥ ४१—४२ ॥ नाम्ना सुदर्शनं सर इत्यन्वयः ॥ ४३—४४ ॥ जलोदं शुद्धजलसमुद्रं ॥ ४५ ॥ तत्र शुद्धोदके । कृतं निक्षिप्तं । कोपजलं और्वकोपजं । हयमुखं तत् प्रसिद्धं । महत्तेजः वर्तत इति शेषः । अस्य तेजसः । सचराचरं महावेगं तत् जलमितिशेषः । ओदनमाहुः संहारवेलायामिन्धनमाहुरित्यर्थः ॥ ४६ ॥ समर्थानामपि बडबामुखं तत्तेजो दृष्ट्वा विक्रोशतां नादः श्रूयते ॥ ४७ ॥ स्वादूदस्य शुद्धजलसमुद्रस्य । उत्तरे देशे अपरे पारे ॥ ४८—५१ ॥ पूर्वस्यां दिशि तन्निर्माणं कृतं । पूर्वदिगवधित्वेन तालरूपः केतुः कल्पित इत्यर्थः ॥ ५२—५४ ॥ तत्र उदयपर्वतकोटौ ॥ ५५ ॥ विष्णुः त्रिविक्रमे त्रिविक्रमप्रस्तावे । तत्र सौमनसशृङ्गे । पूर्वं पदं कृत्वा द्वितीयं पदं मेरोः पश्चिमदिगवधिभूतस्य सावर्णिमेरोः शिखरे चकार । पूर्वपश्चिमदिगवधिभूतयोरुदयाचलसावर्णिमेर्वोर्विष्णोः पदविन्यासः बलेः कृत्स्नराज्यग्रहणार्थः । भूमध्यस्थमेरौ पदविन्यासे कृत्स्नाक्रमणं न लभ्येत । वस्तुवस्तु

---

अत्रसुराक्षीरोदयोर्मध्येसर्पिर्दधिसमुद्रयोर्विचयनानुक्तिस्तत्रविचेतव्यदुर्गस्थलाभावात् ॥ ४१ ॥ **स०** क्षीरोदमित्यादौक्षीरादीनामुदकत्वेनव्यवहारदर्शनादत्रापिजलान्यस्यैवजलत्वेनोत्प्रेक्षानभवतीतिद्योतयितुंजलोदमित्युक्तं ॥ ४५ ॥ **स०** तत्कोपजं । तच्छब्देनबुद्धिस्थऔर्वःपरामृश्यते । उक्तंचभारतेआदिपर्वणिऔर्वे—"ततस्तंक्रोधजंतातऔर्वाग्निंवरुणालये । उत्ससर्जसचैवापउपभुङ्क्तेमहोदधौ । महद्धयशिरोभूत्वायत्तंवेदविदोविदुः । तमग्निमुद्गमन्वक्त्रात्पिबत्यापोमहोदधौ ।" इति । **स०** अस्यतेजसः । सचराचरं जगत् । ओदनंवदन्ति । ज्ञानिनइतिशेषः । चराचरमोदनमितिचराचरात्तृलकथनेनास्यतेजसोभगवद्रूपत्वंप्रतीयते । "अत्ताचराचरग्रहणात्" इतिसूत्रात् । तथाआचार्यैरपि "अश्वंनत्वावारवन्तंवन्दध्या" इतिऋचि "वारवान्बडबामुखः" इत्यादिनास्पष्टमुक्तेश्च ॥ ४६ ॥ **स०** तद्बडबामुखं दृष्ट्वास्थितानांअसमर्थानां तत्प्राप्यजीवितुंसामर्थ्यरहितानां । सागरौकसांनादः आर्तस्वरः । श्रूयतेच । **ति०** असमर्थानां । चात्समर्थानामपि ॥ ४७ ॥ **ति०** त्रिशिराः शिरःप्रदेशवर्तित्रिस्कन्धवान् । सवेदिकः आधा-

[ **पा०** ] १ ग. ज्वलद्भिर्हेम. २ ङ. च. ज. ञ. हंसैर्निषेवितं. ३ ख. छ. झ. ट. किन्नराश्चाप्सरोगणाः. ४ ङ.—ट. समधिगच्छन्ति. ५ ङ.—ज. ञ. रिरंसया. ६ छ. झ. ट. तदा. ङ. च. गत्वा. ज. ञ. गताद्रक्ष्यथ. ७ छ. झ. ट. सागरंशीघ्रं. ख.—च. ज. सागरंश्रेष्ठं. ८ ङ. च. ज. अत्यद्भुतंमहा. ख. ग. घ. छ. झ. ञ. ट. अस्याद्भुतंमहा. ९ ख. सलिलौकसां. १० घ. छ. झ. ञ. ट. चासमर्थानां. ११ ख. ङ. च. ज. ञ. जलदस्योत्तरे. १२ ग. घ. छ. झ. ट. तीरे. १३ ख. योजनानां. १४ छ. झ. ट. सुमहान्कनकप्रभः. ङ. ञ. महाकनकपर्वतः. १५ ख. ङ.—ट. देवनमस्कृतं.

उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः ॥ दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५७ ॥
तत्र वैखानसा नाम वालखिल्या महर्षयः ॥ प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ५८ ॥
अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते ॥ यस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ५९ ॥
शैलस्य तस्य शृङ्गेषु कन्दरेषु वनेषु च ॥ रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६० ॥
काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः ॥ आविष्टा तेजसा संध्या पूर्वा रक्ता प्रकाशते ॥६१॥
पूर्वमेतत्कृतं द्वारं पृथिव्या भुवनस्य च ॥ सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६२ ॥
तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च ॥ रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६३ ॥
ततः परमगम्या स्याद्दिक्पूर्वा त्रिदशावृता ॥ रहिता चन्द्रसूर्याभ्यामदृश्या तिमिरावृता ॥ ६४ ॥
शैलेषु तेषु सर्वेषु कन्दरेषु वनेषु च ॥ ये च नोक्ता मया देशा विचेया तेषु जानकी ॥ ६५ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ॥ अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६६ ॥
अधिगम्य तु वैदेहीं निलयं रावणस्य च ॥ मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥ ६७ ॥
ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम ॥ सिद्धार्थाः संनिवर्तध्वमधिगम्य च मैथिलीम् ॥६८॥

मेरोरेव शिखरे द्वितीयं पदं न्यस्तं । मेरुशिखरस्य स्वर्गत्वात् । भूमावेकं स्वर्गे द्वितीयं तृतीयं ब्रह्मलोक इति पौराणिकीगाथा ॥ ५६ ॥ दिवाकरःजम्बूद्वीपमुत्तरेण जम्बूद्वीपोत्तरभागे । "एनपा द्वितीया" इति द्वितीया । परिक्रम्य महोच्छ्रयं तत् सौमनसं शिखरं प्राप्येति शेषः । दृश्यो भवति मेरोर्दक्षिणपार्श्ववर्तिनां दृश्यो भवतीत्यर्थः ॥ ५७ ॥ वैखानसाः ब्रह्मनखोत्पन्नाः । वालखिल्याः ब्रह्मरोमोत्पन्नाः "ये नखास्ते वैखानसाः । येवालास्ते वालखिल्याः" इति श्रुतेः ॥ ५८ ॥ अयं उदयपर्वतपार्श्वस्थो द्वीपः सुदर्शनो नाम । सुदर्शनसंज्ञान्वर्थेत्याह—यस्येति । यस्य तेजसः । पुरः सन्निधौ । सर्वप्राणभृतामपि चक्षुः प्रकाशते विषयग्रहणशक्तं भवति । तत्तेजः सूर्याख्यं यस्मिन् द्वीपे प्रकाशते । अयं द्वीपः सुदर्शनो नामेति योजना ॥ ५९ ॥ शैलस्य उदयशैलस्येत्यर्थः ॥ ६०—६१ ॥ हि यस्मादेतदुदयपर्वतः । द्वारशब्दापेक्षया नपुंसकत्वं । पृथिव्याः भुवनस्य च पूर्वं द्वारं कृतं प्रथमद्वारत्वेन ब्रह्मणः सृष्ट्यादौ कल्पितं । सूर्यस्य परितो भ्रमणाय प्रथमं एतदुदयनं च कृतमुदयस्थानं कल्पितं । तस्मादेषा पूर्वा दिगुच्यते ॥ ६२ ॥ तस्येत्यादि ॥ सम्यगन्वेषणाय पुनरुक्तिः ॥ ६३ ॥ त्रिदशावृता त्रिदशाधिष्ठिता । दिक् उदयाचलप्रदेशरूपा । ततः परं उदयाद्रेः परं । अगम्या ॥ ६४ ॥ उपसंहरति—शैलेष्विति ॥ ये मया नोक्तास्तेषु शैलादिषु विचेया ॥ ६५ ॥ अमर्यादं ग्रामनगरादिमर्यादारहितं । केवलान्धकारभूतमित्यर्थः ॥६६—६८॥

रवेदिबन्धसहितः ॥ ५१ ॥ **ति०** अस्तानन्तरमुत्तरेणजंबूद्वीपंपरिक्रम्य तन्महोच्छ्रयं शिखरंसौमनसाख्यंप्राप्यस्थितोदिवाकरोजंबूद्वीपवर्तिनांभूयिष्ठंदृश्योभवति । सौमनसेशिखरेइत्यर्थः ॥ इदंसत्ययुगाभिप्रायं । त्रेतायांक्षीरसागरमध्यगस्यद्वापरेसुरोदमध्यगस्य कलौलङ्कामध्यगस्यजंबूद्वीपस्थमनुष्यदृश्यतायाअन्यत्रोक्तत्वात् ॥ ५७ ॥ **ती०** अयंसुदर्शनोद्वीपः शोभनदर्शनोऽयंद्वीपःप्रकाशते । अयमितिशृङ्गग्राहिकयानिर्देशाज्जंबूद्वीपउच्यते । यद्वासुदर्शनाकारत्वात्सुदर्शनशब्देनजंबूद्वीपउच्यते ॥ **स०** सुदर्शनः तन्नामकसरोवरचिह्नितोद्वीपःप्रकाशते ॥ ५९ ॥ **ति०** चोहेतौ । यतोभुवनस्यप्रकाशनहेतोःसूर्यस्योदयनमवेक्ष्यपूर्वं प्रथमं । पृथिव्याएतद्द्वारं ऊर्ध्वस्थानांपृथिवीप्रवेशस्यद्वारं । पृथ्वीस्थानांभुवनस्य ब्रह्मभुवनस्यप्रवेशद्वारं । एतत् उदयगिरिरूपंकृतं । अतएषापूर्वादिगुच्यते ॥ ६२ ॥ इतिचत्वारिंशःसर्गः ॥ ४० ॥

**[ पा ]** १ ख. घ. न्महोच्छ्रितं. २ ख. घ. ज. तस्यशैलस्य. ३ क. ख. घ. ङ. च. ज. ञ. कुञ्जेषु. छ. झ. ट. पृष्ठेषु. ४ क. ज. तस्यपूर्वासन्ध्या. ५ क. ख. सापूर्वादिक्. च. छ. ज. ट. सादिक्पूर्वा. ग. दिक्पूर्वाहि. ६ ख. ङ.—ट. तमसावृता. ७ ङ. च. ज.—ट. नदीषुच. ८ ज. येयेचोक्ता. ट. येचनोक्तामयोद्देशाः. ९ क. एतच्चवानरैः. १० ज. सिद्धार्थाश्चनिवर्तध्वं.

महेन्द्रकान्तां वनषण्डमण्डितां दिशं चरित्वा निपुणेन वानराः ॥
अवाप्य सीतां रघुवंशजप्रियां ततो निवृत्ताः सुखिनो भविष्यथ ॥ ६९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

सुग्रीवेण दक्षिणदिशितत्तद्देशीयविशेषाभिधानपूर्वकंसीतान्वेषणाय हनुमन्नीलाङ्गदादिप्रेषणम् ॥ १ ॥

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ॥ दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १ ॥
नीलमग्निसुतं चैव हनुमन्तं च वानरम् ॥ पितामहसुतं चैव जाम्बवन्तं महाबलम् ॥ २ ॥
सुहोत्रं च शरारिं च शरगुल्मं तथैव च ॥ गजं गवाक्षं गवयं सुषेणमृषभं तथा ॥ ३ ॥
मैन्दं च द्विविदं चैव विजयं गन्धमादनम् ॥ उल्कामुखमसङ्गं च हुताशनसुतावुभौ ॥ ४ ॥
अङ्गदप्रमुखान्वीरान्वीरः कपिगणेश्वरः ॥ वेगविक्रमसंपन्नान्संदिदेश विशेषवित् ॥ ५ ॥
तेषामग्रेसरं चैव महद्बलमसङ्गगम् ॥ विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६ ॥
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ॥ कपीशः कपिमुख्यानां स तेषां तानुदाहरत् ॥ ७ ॥
सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् ॥ नर्मदां च नदीं दुर्गां महोरगनिषेविताम् ॥ ८ ॥
ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् ॥ वरदां च महाभागां महोरगनिषेविताम् ॥ ९ ॥
मेखलामुत्कलां चैव दशार्णनगराण्यपि ॥ अब्रवन्तीमवन्तीं च सर्वमेवानुपश्यत ॥ १० ॥

---

महेन्द्रकान्तां इन्द्रप्रियां । निपुणेन नैपुण्येन ॥ ६९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

अथ दक्षिणदिशि वानरप्रेषणमेकचत्वारिंशे—ततः प्रस्थाप्येत्यादि ॥ अभिलक्षितान् दृष्टापदानान् ॥ १ ॥ नीलमित्यादि । अत्रोक्तः सुषेणस्तारापितुरन्यः । वेगविक्रमसंपन्नप्रेषणे हेतुमाह—विशेषविदिति ॥२—५ ॥ असङ्गं अविलम्बगामि । वेगवदितियावत् । बलं सैन्यं । अग्रेसरं अग्रचरं । विधाय ॥ ६ ॥ तान् समुद्देशान् ॥ ७ ॥ सहस्रशिरसमित्यादि । पूर्ववन्मध्यदेशापेक्षया विन्ध्यस्य दक्षिणत्वव्यपदेशः ॥८—१०॥

---

**ति०** अभिलक्षितान् कार्यसमर्थत्वेननिर्णीतान् ॥ १ ॥ **ति०** हुताशनसुताविति । अग्नित्वव्याप्यंहुताशनत्वमित्यग्निहुताशनयोर्भेदः ॥ **स०** हुताशनसुतौ अग्निपुत्रौ । नीलस्यसेनानीत्वेनपृथगुक्तिः ॥ ४ ॥ **ति०** विशेषवित् अन्वेष्टव्यदेशविशेषवित् ॥ **स०** विशेषवित् कपिगतपराक्रमविशेषाभिज्ञः ॥ ५ ॥ **ति०** अग्रेसरं मुख्यं । असंग्रहंइतिपाठे असंकोचप्रभुमित्यर्थः ॥ ६ ॥ **रामानु०** सहस्रशिरसमित्यादिनापूर्वभागस्थान्देशाननुपदिशति ॥ **स०** अत्रदिक्कल्पनाच्चजंबूद्वीपमध्यदेशमारभ्येतिज्ञेयं । तेनकथंकिष्किन्धादक्षिणदेशस्थत्वंविन्ध्यादीनामितिशङ्कापरास्ता ॥ तस्यानागकन्यात्वात्तत्रतेषांसंचारोयुक्तः ॥ **ति०** अत्राप्यार्यावर्तापेक्षयादक्षिणत्वं तदाह सहस्रशिरसं सहस्रशिखरं ॥ ८ ॥ **ति०** गोदावरीं विन्ध्यपूर्वप्रदेशवर्तिगोदावरीं ॥ ९ ॥ मेखलादयोदेशभेदाः ॥ १० ॥

**[ पा० ]** १ क. सुरेन्द्रकान्तां. २ ङ.—ट. महौजसं. ३ ख. ग. शरभं. ङ.—ट. सुषेणं. ४ छ. झ. ट. मनङ्गंच. ५ क. ग. महाबलमथाङ्गदं. ङ.—ट. बृहद्बलमथाङ्गदं. ६ क. कपिवीराणां. ७ ङ. च. ज. ञ. मादिदेशाथदक्षिणां. ८ ङ. ज. ञ. सुदारुणाः. ९ ङ.—ट. रम्यां. १० ग. भोगावतीं. ११ क. ञ. वरारोहां. ज. महारोहां. १२ क. च. अब्रुवन्तींब्रुवन्तींच. ङ. ञ. ट. अब्रुवन्तीमबन्तींच. ख. ग. अवन्तीमब्रुवन्तींच. छ. झ. आब्रवन्तीमवन्तींच.

विदर्भान्[1]ऋषिकांश्चैव रम्यान्माहिषकानपि ॥ तथा [2]वङ्गान्कलिङ्गांश्च [3]कौशिकांश्च [4]समन्ततः ॥ ११ ॥
[5]अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् ॥ नदीं गोदावरीं [6]चैवं सर्वमेवानु[7]पश्यत ॥
[8]तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान्पाण्ड्यान्सकेरलान् ॥ १२ ॥
[9]अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः ॥ विचित्रशिखरः श्रीमांश्चित्र[10]पुष्पितकाननः ॥ १३ ॥
[11]सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ॥ १४ ॥
ततस्तामापगां दिव्यां प्रसन्न[12]सलिलां शिवाम् ॥ तत्र द्रक्ष्यथ कावेरीं [13]विहितामप्सरोगणैः ॥ १५ ॥
तस्यासीनं नगस्याग्रे मलयस्य [14]महौजसम् ॥ द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥ १६ ॥
ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ॥ ताम्रपर्णीं [15]ग्राहजुष्टां तरिष्यथ महानदीम् ॥ १७ ॥
सा चन्दन[16]वनैर्दिव्यैः [17]प्रच्छन्ना द्वीपशालिनी ॥ कान्तेव [18]युवतिः कान्तं समुद्रमवगाहते ॥ १८ ॥
ततो हेममयं दिव्यं मुक्ता[19]मणिविभूषितम् ॥ युक्तं कवाटं पाण्ड्यानां [20]गता द्रक्ष्यथ वानराः ॥ १९ ॥
ततः समुद्रमासाद्य संप्रधार्यार्थनिश्चयम् ॥ अगस्त्येनान्तरे तत्र सागरे विनिवेशितः ॥ २० ॥
[21]चित्रनानानगः [22]श्रीमान्महेन्द्रः पर्वतोत्तमः ॥ जातरूपमयः श्रीमानवगाढो महार्णवम् ॥ २१ ॥
नानाविधैर्नगैः [23]सर्वैर्लताभिश्चोपशोभितम् ॥ [24]देवर्षियक्षप्रवरैरप्सरोभिश्च [25]सेवितम् ॥ २२ ॥
[26]सिद्धचारणसङ्घैश्च प्रकीर्णं [27]सुमनोहरम् ॥ [28]तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥ २३ ॥

तत्र सर्वमेवानुपश्यतेत्यन्तेन विन्ध्यस्य पश्चिमभागस्थांस्तद्दक्षिणपार्श्वस्थांश्च नदीनगरदेशाननुपदिशति—विदर्भानित्यादिना । पूर्वभागस्थान्देशाननुपदिशति—नदींगोदावरीमिति । दण्डकारण्यवर्तिगोदावरीखण्डमित्यर्थः ॥११—१२॥ अयोमुखः सह्यः ॥ १३—१४॥ अप्सरोगणैः विहितां पूजितामित्यर्थः ॥ १५ ॥ तस्य प्रसिद्धस्य ॥१६—१८॥ पाण्ड्यानां पाण्ड्यराजानां । युक्तं योग्यं । कवाटं । अनेन नगरं लक्ष्यते । मुक्तारूपैर्मणिभिः रत्नैः भूषितं । तदुत्पत्तिदेशत्वादितिभावः ॥ १९ ॥ अथ महेन्द्रं वर्णयति—तत इत्यादिना ॥ मार्गितव्या विशेषत इत्यन्तमेकान्वयं । ततः पाण्ड्यनगरात् । समुद्रमासाद्य अर्थनिश्चयं कर्तव्यसमुद्रलङ्घनाद्यर्थनिश्चयं । संप्रधार्य कृत्वा । अगस्त्येन तत्र सागरे अन्तरे अवकाशे निवेशितः । श्रीमान् पुष्पफलादिसमृद्धिमान् । श्रीमान् कान्तिमान् । महेन्द्रोऽस्ति । तं पर्वतं । पर्वसु पर्वसु समुद्रस्नानायागच्छति । तस्यापरे पारे अन्तरालिकतीरे द्वीपोऽस्ति तं मार्गध्वं । तत्र सर्वात्मना सर्वप्रयत्नेन विशेषतः सीता मार्गित-

ति० मत्स्यांश्चकलिङ्गांश्चतान् ॥ ११ ॥ स० अत्रनदींगोदावरीमिति दण्डकारण्यस्थितगोदावरीप्रदेशग्रहणं । एतच्च तत्रैवसीतायागमनाद्विशेषतस्तत्रान्वेषणार्थं ॥ १२ ॥ स० अयोमुखइति मलयस्यनामान्तरं । सुचन्दनवनोद्देशइतितच्चिह्नदर्शनात् " तस्यासीनंनगस्याग्रेमलयस्य" इतिवक्ष्यमाणत्वाच्च ॥ १३ ॥ स० अप्सरोगणैर्विहृतां विहृतंविहरणंअस्याअस्तीतिमत्वर्थीयप्रत्ययान्तोयं । ततश्चअप्सरोगणकर्तृकंयद्विहरणं तद्वतीमित्येकदेशेनान्वयोबोध्यः ॥ १५ ॥ ति० अगस्त्यमिति । यद्यपिपञ्चवटीतउदग्भागेअगस्त्याश्रमःपूर्वमुक्तः तथाप्यत्रापिबोध्यः वाल्मीकेरनेकदेशेष्वाश्रमवत् । समाननामाऽन्यएवायमित्यन्ये ॥ १६ ॥ ति० चन्दनैःप्रच्छन्नानिद्वीपानिवारिचयस्यास्साप्रच्छन्नद्वीपवारिणी । प्रच्छन्नशरीरेतियावत ॥ स० युवती कान्ता लज्जयायथादिव्यदुकूलैःप्रच्छन्नसर्वस्वावयवासतीस्वकान्तंगच्छति तद्वदियमपिदिव्यदुकूलस्थानीयैश्चन्दनैश्चित्रैःप्रच्छन्नद्वीपजलादिसर्वावयवासती स्वकान्तंसमुद्रमवगाहते ॥ १८ ॥ ति० सहस्राक्षउपैतीत्यनेन महेन्द्राधिष्ठितत्वादन्वर्थनामकत्वंमहेन्द्रस्यसूचितं ॥ २३ ॥

[ पा० ] १ ङ. छ. झ. ट. मुष्टिकांश्चैव. २ क. ख. वङ्गकलिङ्गांश्च. ङ. छ. झ. ञ. ट. मत्स्यकलिङ्गांश्च. घ. च. ज. वत्सकलिङ्गांश्च. ३ क.—घ. काशिकांश्च. ४ ख. तथैवच. ५ ख. अन्विष्य. ६ ख. चेति. ७ ग. ङ. च. ज. ञ. पश्यथ. ८ ग. च—ट. पाण्ड्यांश्चकेरलान्. ९ क. अधोमुखश्च. १० ख. पुष्पितपादपः. ११ घ.—ट. सुचन्दन. १२ झ. ट. सलिलाशयां. घ. सलिलांशुभां. १३ ख.—ट. विहृतामप्सरो. १४ क.—ट. महौजसः. १५ ख. ग. महाग्राहां. १६ ङ.—ट. वनैश्चित्रैः. १७ छ. झ. प्रच्छन्नद्वीपवारिणीं. ट. प्रच्छन्नद्वीपमालिनी. १८ ख. ग. ङ.—ट. युवतीकान्तं. १९ क. मणिनिषेवितं. २० ङ.—ज. ञ. ततो. २१ ङ. च. ज. ञ. ट. चित्रसानुगतः. झ. चित्रसानुनगः. ग. चित्रनानावनः. २२ घ. श्रीमान्नगेन्द्रः. २३ क.—ट. फुल्लैः. २४ ख. ग. गन्धर्वयक्ष. २५ घ.—ट. शोभितं. २६ क. चारणगन्धर्वैः. २७ ङ. ज.—ट. सुमनोरमं. २८ ख. समुपैति.

द्वीपस्तस्यापरे पारे शतयोजनमायतः ॥ अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः ॥
तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ॥ २४ ॥
स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः ॥ राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥ २५ ॥
दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी ॥ अङ्गारकेति विख्याता छायामाकृष्य भोजनी ॥ २६ ॥
एवं निःसंशयान्कृत्वा संशयान्नष्टसंशयाः ॥ मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ॥ २७ ॥
तमतिक्रम्य लक्ष्मीवान्समुद्रे शतयोजने ॥ गिरिः पुष्पितको नाम सिद्धचारणसेवितः ॥ २८ ॥
चन्द्रसूर्यांशुसंकाशः सागराम्बुसमावृतः ॥ भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥ २९ ॥
तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः ॥ श्वेतं राजतमेकं च सेवते यं निशाकरः ॥ ३० ॥
न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ॥ प्रणम्य शिरसा शैलं तं विमार्गत वानराः ॥ ३१ ॥
तमतिक्रम्य दुर्धर्षाः सूर्यवान्नाम पर्वतः ॥ अध्वना दुर्विगाहेन योजनानि चतुर्दश ॥ ३२ ॥
ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः ॥ सर्वकामफलैर्वृक्षैः सर्वकालमनोहरैः ॥ ३३ ॥
तत्र भुक्त्वा वरार्हाणि मूलानि च फलानि च ॥ मधूनि पीत्वा मुख्यानि परं गच्छत वानराः ॥३४॥
तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ॥ अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा ॥ ३५ ॥
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ॥ शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् ॥ ३६ ॥
तत्र भोगवती नाम सर्पाणामालयः पुरी ॥ विशालकक्ष्या दुर्धर्षा सर्वतः परिरक्षिता ॥

व्येत्यर्थः ॥ २०—२४ ॥ एवं रावणालयावगमेऽपि इतरदिक्षु वानरप्रेषणं स्थानान्तरे सीतामादाय किं गच्छेदिति शङ्कयेति बोध्यम् ॥ २५—२६ ॥ ननु पूर्वं "न जाने निलयं तस्य सर्वथा पापरक्षसः" इत्युक्तं । संप्रति "स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः" इत्युच्यते । अतो विरुद्धमिदमित्याशङ्क्य परिहरति—एवमिति ॥ एवं मदुक्तरीत्या । संशयान् संशयविषयभूतान्देशान् । निःसंशयान् संशयाविषयीभूतान् । निश्चितसदसद्भावान्कृत्वा नष्टसंशयाः सन्तः अमिततेजसो नरेन्द्रस्य पत्नीं मृगयध्वं । यदृच्छादर्शनापरिस्फुटज्ञातमर्थं कथं निश्चयेन कथयामीति न जान इति पूर्वमुक्तं । इदानीं तथाविधमप्यर्थमन्वेषणगौरवाय निश्चयेन ब्रवीमीतिभावः ॥ २७ ॥ तमतिक्रम्येति "परावरयोगे चे"ति क्त्वाप्रत्ययः । एवं पूर्वत्रापरत्र च बोध्यं ॥ २८—२९ ॥ तस्यैकमिति दक्षिणायन इति शेषः ॥ ३०—३१ ॥ हे दुर्धर्षाः सूर्यवान्नाम पर्वतः वर्तत इति शेषः । दुर्विगाहेनाध्वना उपलक्षितः । योजनानि चतुर्दश पुष्पितकसूर्यवतोरन्तराल इति शेषः ॥ ३२—३३ ॥ वराणां श्रेष्ठानामर्हाणीति वरार्हाणि । परं ततः परं देशं ॥ ३४—३५ ॥ अगस्त्यभवनं विशेषयति—तत्र

अपरेपारे अपरेपरतीरे । अपरशब्दोविशेषवाची परतीरविशेषेप्रतिष्ठितइतिशेषः । द्वीपइति । उत्तरभागेदक्षिणेलवणसमुद्रइति तस्यद्वीपत्वं । सगरखातोप्येकदेशेनोदग्भागेचसमुद्रसंबद्धः ॥ २४ ॥ ति० समुद्रसंबद्धत्वात्सागरोपिसमुद्रत्वेनसमुद्रश्चसागरत्वेनव्यवहियतइत्यविरोधः ॥ २६ ॥ स० एवं पूर्वोक्तप्रकारेण । संशयान् संशयविषयान् समुद्रतरणच्छायाग्रहनिवारणादीन्प्रति । निस्संशयान् निर्गतः संशयोयेषांतान्मयापरंतीरंप्राप्यतेवानवा । छायाग्रहोनिवार्यतेवानवेत्यादिसंशयरहितानितियावत् । कृत्वा-नियोज्य तत्कार्यकरणायतादृशानेवनियोज्येत्यर्थः । नष्टसंशयास्सन्तोमृगयध्वमित्यर्थः । एवमर्थाकरणेपूर्वोक्तच्छायाग्रहनिस्तरणोपायाकथनेनासांगत्यापत्तिः ॥ २७ ॥ ति० तत्र कुञ्जरपर्वते । अगस्त्यभवनवर्णनं । योजनेत्यादि । इदंतृतीयमगस्त्यस्थानं ॥ शरणं गृहं । अगस्त्यस्येतिशेषः ॥ ३६ ॥ तत्र कुञ्जरपर्वतएव । आलयशब्दोनित्यंपुंल्लिङ्गः । यद्यपिभोगवतीरसातलेप्रसिद्धातथापि

[ पा० ] १ क. ख. ग. ङ.—ट. विस्तृतः. २ ज. मानुषैर्वापि. ३ ग. महात्मनः. ४ क. मध्येवसति. ५ क. ख. ग. ङ.—ट. छायामाक्षिप्य. ६ ज. सागरान्तसमाश्रयः. ङ. च. छ. झ. ञ. ट. सागरांबुसमाश्रयः. ७ क. रजतशृङ्गंच. ८ क. ख. ङ.—ज. ञ. दुर्धर्षः. ९ क. मनोरमैः. १० क.—घ. महार्हाणि. ११ च.—झ. ट. जुष्टानि. १२ क. विस्तीर्णं. १३ क. ग. च.—ट. विशालरथ्या.

रक्षिता पन्नगैर्घोरै[1]स्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३७ ॥
सर्पराजो महाप्राज्ञो यस्यां वसति वासुकिः ॥ निर्याय मार्गितव्या च सा च भोगवती पुरी ॥३८॥
तत्र[2] चानन्तरा देशा ये केचन सुसंवृताः[3] ॥ ३९ ॥
[4]तं च देशमतिक्रम्य महानृषभसंस्थितः[5] ॥ सर्वरत्नमयः श्रीमानृषभो नाम पर्वतः ॥ ४० ॥
[6]गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ॥ दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् ॥ ४१ ॥
[7]न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं[8] च कदाचन[9] ॥ रोहिता नाम गन्धर्वा घोरा[10] रक्षन्ति तद्वनम् ॥ ४२ ॥
तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः ॥ शैलूषो ग्रामणीः शिक्षुः[11] शुभ्रो[12] बभ्रुस्तथैव च ॥ ४३ ॥
रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ॥ अन्ते पृथिव्या दुर्धर्षा[13]स्तत्र स्वर्गजितः स्थिताः ॥ ४४ ॥
ततः[14] परं न वः सेव्यः[15] पितृलोकः सुदारुणः ॥ राजधानी यमस्यैषा कष्टेन तमसा वृता ॥ ४५ ॥
एतावदेव युष्माभिर्वीरा वानरपुङ्गवाः ॥ शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥ ४६ ॥
सर्वमेतत्समालोक्य यच्चान्यदपि दृश्यते ॥ गतिं विदित्वा वैदेह्याः सन्निवर्तितुमर्हथ ॥ ४७ ॥
[16]यस्तु मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति ॥ मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥ ४८ ॥
ततः प्रिय[17]तरो नास्ति मम प्राणाद्विशेषतः ॥ कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥ ४९ ॥

अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः ॥
मनुजपतिसुतां यथा[18] लभध्वं तदधिगुणं[19] पुरुषार्थमारभध्वम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

योजनेति ॥ शरणं गृहं । ३६—३७ ॥ निर्याय अगस्त्यभवनान्निर्गत्य ॥ ३८ ॥ ये अनन्तराः अव्यवहिता देशाः । तेमार्गितव्या इति शेषः ॥ ३९ ॥ तं च देशमतिक्रम्य तस्माद्देशात्परत इत्यर्थः । ऋषभसंस्थितः ऋषभतुल्यसंस्थानः ॥ ४० ॥ गोशीर्षकं गोरोचनासदृशवर्णं । पद्मकं पद्मदलसवर्णं । हरिश्यामं तमालदलवर्णं । अग्निसमप्रभं अग्निसदृशवर्णं । एवंविधं दिव्यं चन्दनं यत्रोत्पद्यते स ऋषभः पर्वतो वर्तत इतिपूर्वेणान्वयः ॥ ४१—४८ ॥ ततः तस्मात्पुरुषात् । प्रियतरो नास्ति । मम प्राणाद्विशेषतः सः प्रियतर इतिशेषः ॥ ४९ ॥ तदधिगुणं तदनुगुणं । पुरुषार्थं पुरुषव्यापारं । अत्र संयमिनीपर्यन्तमभिधानात् सप्तद्वीपसागरगमनमर्थसिद्धं । एवमुत्तरसर्गयोरपिबोध्यं ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

रावणस्यजनस्थानवत्सर्पाणामपिभोगवत्याख्यपुरंभूमावप्यस्तीतिवासुकेर्भुवउपर्यपियोगवैभवात्स्थितिरितिचेतएवावगन्तव्यं । यथागस्त्यस्यकुञ्जरपर्वतावच्छिन्नेविश्वकर्मनिर्मितभवनेनक्षत्रपदेमलये पञ्चवटीदक्षिणभागेचवासस्तथेतिध्येयं ॥ ३७ ॥ **स०** गोशीर्षकं गोमेदमणिः । पद्मकं पद्मरागमणिः । हरिश्यामं इन्द्रनीलमणिः । चन्दनं चेत्येतावत्पदार्थजातंतथा अग्निसमप्रभंमाणिक्यंच यत्रोत्पद्यतेतच्चैवेतिपूर्वोक्तरत्नापेक्षयाऽस्यविशेषंसूचयति ॥ यद्वा गोशीर्षादयस्सर्वेचन्दनप्रभेदाः ॥ ४१ ॥ **स०** मत्तुल्यविभवस्सन् सुखंयथाभवतितथाविहरिष्यति । तस्मैमदर्धराज्याधिपत्यंदास्यामीत्यभिप्रायः ॥ ४८ ॥ इत्येकचत्वारिंशः सर्गः ॥ ४१ ॥

[ **पा०** ] १ क. ग.—ट. महाघोरो. २ क. घ. ततश्चानन्तरं. ग. छ. झ. ततश्चानन्तरोद्देशाः. ३ छ. झ. ट. समावृताः. ४ ग. तांश्चदेशानतिक्रम्य. ५ च. ज. नृषभपर्वतः. ग. नृषभसंज्ञकः. छ. झ. ट. नृषभसंस्थितिः. ६ ख. घ. गोशीर्षकंचपद्मंच. ७ ङ. च. ज. झ. ञ. नच. ८ च.—ट. स्प्रष्टव्यंतु. ९ ख. कथंचन. १० छ. झ. ट. घोरं. ११ क. ख. झ. ट. शिक्षः. ङ. च. ज. ञ. भिक्षुः. १२ ङ.—ट. शुको. ग. घ. शुभो. १३ क. ख. ङ.—ट. स्ततः. १४ ङ. च. ज. ञ. नातःपरंनरैः सेव्यः. घ. ततःपरंनगन्तव्यः. १५ क. ग. ङ. च. ज. ञ. सेव्याःपितृलोकाःसुदारुणाः. १६ क. ख. ङ.—ट. यश्च. १७ ख. घ. प्रियतमो. १८ च. ज. यथोपलभ्य. १९ ख. ङ. च. ज. ञ. ट. तदनुगुणं.

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

सुग्रीवेणपश्चिमदिशिसीतान्वेषणायसुषेणादिप्रेषणम् ॥ १ ॥

अथ प्रस्थाप्य सुग्रीवस्तान्हरीन्दक्षिणां दिशम् ॥ अब्रवीन्मेघसंकाशं सुषेणं नाम यूथपम् ॥ १ ॥
तारायाः पितरं राजा श्वशुरं भीमविक्रमम् ॥ अब्रवीत्प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २ ॥
मरीचिपुत्रं मारीचमर्चिष्मन्तं महाकपिम् ॥ वृतं कपिवरैः शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३ ॥
बुद्धिविक्रमसंपन्नं वैनतेयसमद्युतिम् ॥ मरीचिपुत्रान्मारीचानर्चिर्मालान्महाबलान् ॥
ऋषिपुत्रांश्च तान्सर्वान्प्रतीचीमादिशद्दिशम् ॥ ४ ॥
द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ॥ सुषेणप्रमुखा यूयं वैदेहीं परिमार्गत ॥ ५ ॥
सुराष्ट्रान्सहबाह्लीकाञ्शूरान्भीमांस्तथैव च ॥ स्फीताञ्जनपदान्रम्यान्विपुलानि पुराणि च ॥ ६ ॥
पुन्नागगहनं कुक्षिं वकुलोद्दालकाकुलम् ॥ तथा केतकषण्डांश्च मार्गध्वं हरियूथपाः ॥ ७ ॥
प्रत्यक्स्रोतोगमाश्चैव नद्यः शीतजलाः शिवाः ॥ तापसानामरण्यानि कान्तारा गिरयश्च ये ॥ ८ ॥
ततः स्थलीं मरुप्रायामत्युच्चशिरसः शिलाः ॥ गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् ॥९॥
ततः पश्चिममासाद्य समुद्रं द्रष्टुमर्हथ ॥ तिमिनक्रायुतजलमक्षोभ्यमथ वानराः ॥ १० ॥
ततः केतकषण्डेषु तमालगहनेषु च ॥ कपयो विहरिष्यन्ति नारिकेलवनेषु च ॥ ११ ॥
तत्र सीतां च मार्गध्वं निलयं रावणस्य च ॥ वेलातटनिविष्टेषु पर्वतेषु वनेषु च ॥ १२ ॥

---

अथ पश्चिमदिशिवानरयोजनं द्विचत्वारिंशे—अथेत्यादि ॥ १ ॥ प्राञ्जलित्वादिकथनार्थमब्रवीदिति। अतो न पौनरुक्त्यं ॥ २ ॥ मारीचपदमन्वर्थसंज्ञेति द्योतयितुं मरीचिपुत्रमित्युक्तिः। मरीचिपुत्रान्मारीचानित्यत्रापि तथा । मारीचमिति ज्येष्ठ उक्तः । मारीचा इति तदनुजा उच्यन्ते । अर्चिर्मालान् अर्चिष्मतः ॥ ३—६ ॥ पुन्नागगहनं पुन्नागवनं । कुक्षिः मध्यदेशविशेषः । उद्दालकाः वृक्षविशेषाः । केतकषण्डान् केतकवनानि । प्रत्यक् स्रोतो गच्छन्तीति प्रत्यक्स्रोतोगमाः । शिवाः पावनाः । कान्ताराः दुर्गममार्गाः । तान्मार्गध्वमिति पूर्वेण संबन्धः ॥ ७—८ ॥ ततः स्थलीमित्यादिश्लोकद्वयमेकान्वयं । स्थल्यादिकं मार्गित्वा ततः तस्माद्देशात् । पश्चिमं समुद्रमागम्य तिमिनक्रायुतमक्षोभ्यंतं द्रष्टुमर्हथ ॥ ९—१० ॥ कपयो भवदीयाः ॥ ११ ॥ वेलातटनिविष्टेषु वेलायां अम्बुविकृतौ तटे च स्थितेषु । "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः ॥१२॥

---

**स०** अब्रवीदितिपुनर्वचनमादरसूचनार्थं ॥ २ ॥ **स०** महर्षिपुत्रंमारीचमित्यत्र महर्षिरूपोयोमरीचिस्तत्पुत्रमितिबुद्ध्याविवेकेनान्वयः ॥ महेन्द्रसदृशद्युतिं महेन्द्रद्युतिसदृशद्युतिं । यद्वा महेन्द्रस्यसदृशीयोग्याद्युतिर्यस्येति ॥ **ती०** अर्चिष्मन्तं तदाख्यं । अयंतेषुप्रधानः । अर्चिर्माल्याख्याअन्येपिमरीचिपुत्राः ॥ ३ ॥ **ति०** मारीचशब्दस्यव्युत्पत्त्यन्तरसंभवान्मरीचिपुत्रानित्युक्तं ॥ ४ ॥ **ती०** कुक्षिमित्यादिनाकेतुमालप्रदेशाननुपदिशति ॥ ७ ॥ **ति०** कान्तारगिरयः कान्तारयुक्तागिरयः ॥ ८ ॥ स्थली

**[ पा० ]** १ ख. ततः. २ च.—ट. सहरीन्सुग्रीवोदक्षिणां. ३ ङ.—ट. वानरं. ४ घ.—ट. महर्षिपुत्रं. ५ क. समंजवे. ६ छ. झ. ट. नर्चिर्माल्यान्. ख. नर्चिर्ज्वालान्. ७ ख. घ. प्रतीचींदिशमादिशत्. ८ च. ज. सुग्रीवःकपिसत्तमः. क. ङ. कपीनांकपिसत्तमः. ९ क. ग.—ट. मार्गथ. १० ङ.—ट. सौराष्ट्रान्. ख. सौराष्ट्रान्बाह्लिकांश्चैव. घ. सुराष्ट्रानथ. ११ ङ.—ट. बाह्लीकांश्चन्द्रचित्रांस्तथैवच. १२ ग. ङ.—ट. हरिपुङ्गवाः. १३ च.—ट. स्रोतोवहाश्च. १४ क. ग. ङ.—ट. कान्तारगिरयः. १५ छ. झ. ञ. ट. तत्रस्थलीमरुप्राया। अत्युच्चशिशिराः. क. ग. तत्र. १६ क. मत्युग्रशिखराः. १७ ख. घ. मार्गध्वं. १८ क. तत्र. १९ क. ग. ङ.—ट. मागम्य. २० क. ख. ग. मीननक्रायुत. ङ. च. छ. ञ. ट. तिमिनक्राकुलजलं. ज. झ. तिमिनक्राकुलजलंगत्वाद्रक्ष्यथ. २१ क. विमार्गध्वं. २२ च.—ञ. वेलातल.

मुरचीपत्तनं[1] चैव रम्यं चैव जेटीपुरम्[2] ॥ अवन्तीमङ्गलोपां[3] च तथा[4] चालक्षितं वनम् ॥
राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १३ ॥
सिन्धुसागरयोश्चैव संगमे तत्र पर्वतः ॥ महान्[5]हेमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १४ ॥
तस्य[6] प्रस्थेषु रम्येषु सिंहाः पक्षगमाः[7] स्थिताः ॥ तिमिमत्स्यगजांश्चैव[8] नीडान्यारोपयन्ति ते ॥ १५ ॥
तानि नीडानि सिंहानां गिरिशृङ्गगताश्च[9] ये ॥ दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिःस्वनाः ॥
विचरन्ति[10] विशालेऽस्मिंस्तोयपूर्णे समन्ततः ॥ १६ ॥
तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् ॥ सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ॥ १७ ॥
कोटिं तत्र समुद्रे[11] तु काञ्चनीं शतयोजनाम् ॥ दुर्दर्शां पारियात्रस्य गता[12] द्रक्ष्यथ वानराः ॥ १८ ॥
कोट्यस्तत्र चतुर्विंशद्[13]गन्धर्वाणां तरस्विनाम् ॥ वसन्त्यग्निनिकाशानां घोराणां[14] कामरूपिणाम्[15] ॥ १९ ॥
पावकार्चिःप्रतीकाशाः[16] समवेताः[17] सहस्रशः[18] ॥ नात्यासादयितव्यास्ते[19] वानरैर्भीमविक्रमैः ॥ २० ॥
नादेयं च फलं तस्माद्[20]देशात्किंचित्प्लवंगमैः ॥ दुरासदा हि ते वीराः सत्त्ववन्तो महाबलाः ॥ २१ ॥
फलमूलानि ते तत्र रक्षन्ते[21] भीमविक्रमाः ॥ तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी ॥
न हि तेभ्यो भयं किंचित्कपित्वमनुवर्तताम् ॥ २२ ॥
तत्र वैडूर्यवर्णाभो वज्रसंस्थानसंस्थितः ॥ नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ॥
श्रीमान्समुदितस्तत्र योजनानां शतं समम् ॥ २३ ॥

---

पूर्वस्यां दिश्यवन्त्यन्या । इयं चान्या । यत्र प्रविष्टा वननैरन्तर्येण न लक्ष्यन्ते तदलक्षितं नाम । मार्गध्वमित्यनुषङ्गः ॥ १३ ॥ सिन्धुर्नदविशेषः । तत्र पश्चिमदिशि । पक्षैर्गच्छन्तीति पक्षगमाः । सपक्षा इति विशेषणं । नीडानि वृक्षाग्रप्रस्थस्वावासस्थानानि । अतएव महाद्रुम इति पूर्वमुक्तं ॥ १४—१५ ॥ तानीत्याद्यर्धत्रयं ॥ समन्ततस्तोयपूर्णेऽस्मिन् स्थले ये गजाः सन्ति गिरिशृङ्गगताश्च ये ते गजास्तानि नीडानि विचरन्ति । सिंहनीडाश्रयसानुषु विचरन्तीत्यर्थः । बाधकस्थानगमने हेतुमाह—दृप्ता इति ॥ १६ ॥ कपिभिः भवद्भिरिति शेषः ॥ १७ ॥ तत्र समुद्रे । गतां पारियात्रस्य कोटिं शृङ्गं ॥ १८—१९ ॥ नात्यासादयितव्याः नातिसमीपं प्रापन्व्याः ॥ २० ॥ नादेयं न स्वीकार्यं । तर्हि ते गन्धर्वा अस्मान्हनिष्यन्तीत्यत्राह—तत्रेति । यत्नः फलचापलनिवृत्तौ यत्नः कर्तव्यः । विशालत्वादन्वेषणे यत्नो वा । न किंचिद्भयं कपिसंचारस्य बनमात्रधर्मत्वादितिभावः । अनुवर्ततां अनुवर्तमानानां ॥ २१—२२ ॥ तत्र वैडूर्ये-

---

अकृत्रिमाभूः ॥ ९ ॥ **ति०** सिंहाः तदाख्याः । पक्षगमाः पक्षिणःस्थिताः । तेपक्षिणः तिमिमत्स्यगजान् नीडानि स्वावासस्थानानि । आरोपयन्ति प्रापयन्ति ॥ १५ ॥ **स०** सिंहानांयानितानिनीडानि । तेषुविचरन्तियेगजाः । दृप्तत्वादेवसिंहनीडसंचारित्वं । **ति०** बाधकबाहुल्येपिसंचारात्पर्वतस्यातिरमणीयत्वमवगम्यते ॥ १६ ॥ **ति०** घोराणां अतएवपापकर्मणांसंहर्तॄणां ॥ १९ ॥ **ती०** नात्यासादयितव्याः नद्रष्टव्याः नापराद्धव्यावा ॥ २० ॥ **ति०** ननुपापकारित्वात्तदनासादनेकथंतत्रमार्गणसंभवः अतआह—नहितेभ्यइति । तद्देशेमृगपक्षादिवत्प्राकृतमृगस्वभावेतिष्ठतामित्यर्थः । अतएवनापराद्धव्याइतिपूर्वंव्याख्यातं ॥ **शि०** ननुगन्धर्वाणामतिप्राबल्यात्कथमन्वेषणसिद्धिरित्यतआह । कपित्वं स्वाभाविकचाञ्चल्यं । अनुवर्ततां युष्माकंतेभ्यः गन्धर्वेभ्यः । किंचिद्भयंन । एतेन स्वाभाविकगमनव्याजेनैवान्वेषणंकर्तव्यमितिव्यञ्जितं ॥ **स०** कपित्वमनुवर्ततां विजातीयानांभवतांतेभ्योभयंकिंचिदपिनभव-

[ पा० ] १ ङ.—ज. ट. सुरवीपत्तनं. २ ग. नदीपुरं. च.—झ. जलापुरं. ३ ग. झ. ञ. मङ्गलेपांच. ४ घ. तथैवालक्षितं. क. तथाचारुक्षितं. ५ छ. झ. ट. महान्सोमगिरिः. ६ ङ.—ट. तत्र. ७ ख. पक्षिमृगाः. ८ ख. ग. मत्स्यान्गजांश्चैव. ९ ख. गताश्चते. १० क. विहरन्ति. ११ छ. झ. ञ. ट. समुद्रस्य. ख.—च. ज. समुद्रेथ. क. समुद्रेच. १२ ङ.—ट. गत्वा. १३ क. चतुस्त्रिंशत्. १४ क. महतां. १५ छ. झ. पापकर्मणां. १६ क. पाकशासनसंकाशाः. १७ ङ. च. ज. ञ. समेताश्च. १८ छ. झ. ट. समन्ततः. १९ च. ज. नान्यैस्तेदर्शितव्यास्तैर्वानरैः, २० क. सर्वतस्माद्देशात्प्लवङ्गमैः. २१ ख. रक्षन्तो.

## त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

सुग्रीवेणोत्तरदिशि सीतापरिमार्गणाय शतबलिप्रमुखकपिबलप्रेषणम् ॥ १ ॥

ततः संदिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् ॥ वीरं शतबलिं नाम वानरं [1]वानरर्षभः ॥ १ ॥
उवाच राजा धर्मज्ञः[2] सर्ववानरसत्तमम्[3] ॥ वाक्यमात्महितं चैव रामस्य च हितं तथा ॥ २ ॥
वृतः शतसहस्रेण [4]त्वद्विधानां वनौकसाम् ॥ वैवस्वतसुतैः सार्धं [5]प्रतिष्ठस्व स्वमन्त्रिभिः ॥ ३ ॥
दिशं ह्युदीचीं [6]विक्रान्तां हिमशैलावतंसकाम् ॥ सर्वतः परिमार्गध्वं रामपत्नीम्[7]अनिन्दिताम् ॥ ४ ॥
अस्मिन्[8]कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये ॥ ऋणान्मुक्ता भविष्यामः कृतार्थार्थविदां वराः ॥ ५ ॥
कृतं हि प्रियमस्माकं राघवेण महात्मना ॥ तस्य चेतत्प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६ ॥
अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत् ॥ तस्य स्यात्सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७ ॥
एतां बुद्धिमवस्थाय दृश्यते जानकी यथा ॥ तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८ ॥
अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः ॥ अस्मासु चागतप्रीती रामः परपुरंजयः ॥ ९ ॥
इमानि वनदुर्गाणि नद्यः शैलान्तराणि च ॥ भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ॥ १० ॥
तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च ॥ प्रस्थलान्भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११ ॥
[10]काम्बोजान्यवनांश्चैव [11]शकानारट्टकानपि ॥ [12]बाह्लीकानृषिकांश्चैव पौरवानथ [13]टङ्कणान् ॥ १२ ॥
चीनान्परमचीनांश्च [14]निहारांश्च पुनःपुनः ॥ [15]अन्वीक्ष्य दरदांश्चैव हिमवन्तं [16]तथैव च ॥ १३ ॥
लोध्रपद्मकषण्डेषु देवदारुवनेषु च ॥ रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १४ ॥
ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम् ॥ कालं नाम महासानुं [17]पर्वतं तु गमिष्यथ ॥ १५ ॥
महत्सु तस्य [18]शैलस्य निर्दरेषु गुहासु च ॥ [19]विचिनुध्वं महाभागां [20]रामपत्नीं ततस्ततः ॥ १६ ॥
तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ॥ ततः सुदर्शनं नाम [21]गन्तुमर्हथ पर्वतम् ॥ १७ ॥

---

अथोत्तरदिशि शतबलिप्रेषणं त्रिचत्वारिंशे— ततः संदिश्येत्यादि ॥ १—३ ॥ हिमशैलावतंसकां हिमशैलालङ्कारां ॥ ४ ॥ कृतार्थाश्चार्थविदश्च कृतार्थार्थविदः तेषां वराः ॥ ५—९ ॥ इमानि वक्ष्यमाणानि । नद्यः नदीः ॥ १० ॥ भरतान् इन्द्रप्रस्थादिप्रदेशान् । कुरून् दक्षिणकुरून् । हिमवदन्तान् पुनः पुनरन्विष्य परिमार्गन्त्विति पूर्वेण संबन्धः ॥ ११—१३ ॥ पद्मकाश्चन्दनविशेषाः । साहचर्यात् ॥ १४—१६ ॥ तमतिक्रम्येति ॥ तं कालंनाममहागिरिं अतिक्रम्य । ततः तस्मात् । सुदर्शनं पर्वतं

---

**ति०** सर्वज्ञः देशवृत्ताभिज्ञः ॥ २ ॥ **शि०** प्रतिष्ठस्व समानकार्यकारित्वेनैकीभव ॥ ३ ॥ **ति०** विक्रान्तेतिशतबलस्यसंबुद्धिः ॥ ४ ॥ **ती०** कृतार्थार्थविदांवराइत्यत्रसवर्णदीर्घआर्षः ॥ ५ ॥ **रामानु०** लोध्रपद्मकषण्डेष्वित्यत्र पद्मकशब्दश्चन्दनव्यतिरि-

**[ पा० ]** १ घ. वानराधिपः. क. ग. ङ. च. वानरर्षभं. छ. झ. ट. वानरेश्वरः. २ ख. ग. छ. झ. ञ. ट. सर्वज्ञः. च. ज. मन्त्रज्ञः. ३ क. ख. ग. ङ.—ट. सत्तमः. ४ च. मद्विधानां. ५ छ. झ. ट. प्रविष्टःसर्वमन्त्रिभिः. क. ग. च. ज. ञ. प्रतीक्षस्वस्वमन्त्रिभिः. ६ झ. विक्रान्त. ७ छ. झ. ट. पत्नींयशस्विनीं. ८ क. ख. ग. कार्येहिनिर्वृत्ते. ९ ख. बुद्धिंपुरस्कृत्ययथादृश्येतजानकी. क. घ. च.—ट. बुद्धिंसमास्थाय. १० छ. झ. कांबोजयवनांश्चैव. ङ. कांबोजान्पर्वतांश्चैव. ११ छ. झ. ञ. ट. शकानांपत्तनानिच. १२ घ. बाह्लीकान्निषधांश्चैव. १३ क. ग. घ. कङ्कणान्. ङ. च. ज. ञ. कोङ्कणान्. १४ क. ग. नगरांश्च. १५ घ. अन्विष्यबर्बरांश्चैव. ङ.—ट. अन्वीक्ष्यवरदांश्चैव. क. अन्विष्य. १६ ख. छ. झ. ट. विचिन्वथ. १७ क.—ट. पर्वतंतं. १८ ङ.—ट. शैलेषुपर्वतेषु. १९ क. ख. ग. ङ. छ. ज. झ. ट. विचिन्वत. २० ङ.—ट. रामपत्नीमनिन्दितां. २१ क. ख. ग. ङ.—ट. पर्वतंगन्तुमर्हथ.

ततो देवसखो नाम पर्वतः पतगालयः ॥ नानापक्षि[1]गणाकीर्णो विविधद्रुमभूषितः ॥ १८ ॥
तस्य [2]काननषण्डेषु नि[3]र्झरेषु गुहासु च ॥ रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९ ॥
तमतिक्रम्य चाकाशं सर्वतः शतयोजनम् ॥ अपर्वतनदीवृक्षं सर्वसत्वविवर्जितम् ॥ २० ॥
तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् ॥ कैलासं पाण्डुरं शैलं प्राप्य हृष्टा भविष्यथ ॥ २१ ॥
तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम् ॥ कुबेरभवनं दि[6]व्यं निर्मितं विश्वकर्मणा ॥ २२ ॥
विशाला नलिनी यत्र प्रभूतकमलोत्पला ॥ हंसकारण्डवाकीर्णा ह्यप्सरोगणसेविता ॥ २३ ॥
तत्र वैश्रवणो राजा [7]सर्वभूतनमस्कृतः ॥ धनदो रमते श्रीमान्गुह्यकैः सह यक्षराट् ॥ २४ ॥
त[8]स्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च ॥ रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २५ ॥
क्रौ[9]ञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् ॥ अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत्स्मृतम् ॥ २६ ॥
[10]वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ॥ देवै[11]रभ्यर्चिताः [12]सम्यग्देवरूपा महर्षयः ॥ २७ ॥
[13]क्रौञ्चस्य तु गुहाश्चान्याः सानूनि शिखराणि च ॥ निर्द[14]राश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥२८॥
क्रौञ्चस्य शिखरं चापि [15]निरीक्ष्य च ततस्ततः ॥ अवृक्षं कामशैलं च मानसं विहगालयम् ॥२९॥
न गतिस्तत्र भूतानां देवदानवरक्षसाम् ॥ स च सर्वैर्विचेतव्यः [16]ससानुप्रस्थभूधरः ॥ ३० ॥
क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ॥ मयस्य भवनं य[17]त्र दानवस्य स्वयं कृतम् ॥ ३१ ॥
मैनाकस्तु विचेतव्यः ससानुप्र[18]स्थकन्दरः ॥ स्त्रीणाम[19]श्वमुखीनां च निकेतास्तत्र तत्र तु ॥ ३२ ॥
तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ॥ सिद्धा वै[20]खानसास्तत्र वालखिल्याश्च तापसाः ॥ ३३ ॥

गन्तुमर्हथ ॥ १७ ॥ पतगालयः पक्षिणामावासभूतः । पक्षिणां वैविध्यमाह—नानापक्षिसमाकीर्ण इति ॥ १८—१९ ॥ तमतिक्रम्य तस्माद्देवसखाख्यपर्वतात्परं । अपर्वतनदीवृक्षं शून्यारण्यस्थलं । वर्तत इति शेषः ॥ २० ॥ कैलासमिति यद्यपि कैलासो हिमवदेकदेश इति पुराणान्तरोक्तं तथापि तदविरुद्धं ज्ञेयं । मध्ये शून्यप्रदेशेपि तावत्पर्यन्तं हिमवानिति ॥ २१ ॥ तत्र कैलासे । नलिनी मानसाख्यसरसी ॥ २२—२३ ॥ तत्र कैलासे ॥ २४ ॥ तस्यकैलासस्य । पर्वतेषु पर्यन्तपर्वतेषु ॥ २५ ॥ बिलं स्कन्दशक्तिकृतं ॥ २६—२८ ॥ शिखरं च प्रधानभूतं शिखरं च । अवृक्षं अवृक्षाख्यं प्रत्यन्तपर्वतं । विहगालयं मानसं मानसाख्यं गिरिं च निरीक्ष्य ते विचेतव्या इति पूर्वेण संबन्धः ॥ २९ ॥ तत्र मानसाख्ये पर्वते । ससानुप्रस्थभूधरः सानवः उपत्यकाः । प्रस्था मध्यतटाः । भूधरा अधित्यकाः ॥ ३० ॥ क्रौञ्चं गिरिमतिक्रम्य क्रौञ्चगिरेः परतः । मैनाको नाम पर्वतः । वर्तत इति शेषः ॥ ३१ ॥ अश्वमुखीनां किंपुरुषस्त्रीणां ॥ ३२ ॥ आश्रमं सिद्धसेवितं । अस्तीति शेषः

क्तवृक्षविशेषवाची । अकालेवनद्रव्यभूतलोध्रादिसहपाठात् ॥ १४ ॥ **रामानु०** 'ततोदेवसखोनामपर्वतःपर्वतालयाः' इतिपाठः । पर्वतालयाइतिवानराणांसंबोधनं ॥ १८ ॥ **ति०** कामशैलं कामतपस्स्थानशैलं ॥ **शि०** अवृक्षं वृक्षरहितं । कामशैलं दर्शनमात्रेणकामनापूरकक्रौञ्चशैलशिखरं । विहगालयं विहगानांपक्षिगतीनांआसमन्ताद्भावेनलयःअभावोयस्मिंस्तत् । मानसंचशिखरमस्तीतिशेषः ॥ २९ ॥ **ति०** तत्र मानसे । भूतादीनांगतिर्न शून्यत्वेनप्रयोजनाभावाद्भूतादयस्तत्रनगच्छन्तीत्यर्थः ॥ **ती०** सानुपर्वतपार्श्वसमतलः प्रस्थस्तु विषमतलः ॥ **स०** तत्र मानसे । अयंमानसोमानसोत्तरभिन्नः ॥ ३० ॥ **ति०** मैनाकोऽयं समु-

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. समाकीर्णो. २ क. ङ.—ट. काञ्चनखण्डेषु. ३ क. ग. ङ.—ट. निर्दरेषु. ४ च.—झ. ट. पाण्डुरंप्राप्यहृष्टायूयंभविष्यथ. ५ ख. परिच्छदं. ६ ग. च.—झ. ट. रम्यं. ७ ङ.—ट. सर्वलोक. ८ घ. तत्र. ९ ज. क्रौञ्चाख्यं. १० क. वसन्तिच. ११ ङ.—ट. रभ्यर्थिताः. १२ क. सम्यग्दिव्यरूपाः. १३ क. घ. क्रौञ्चस्यास्य. १४ ग. निर्झराश्च. क. झ. दर्दराश्च. च. दर्यश्चैव. ट. दर्दुराश्च. १५ क. संनिरीक्ष्य. १६ ख. पर्वतोबहुकन्दरः. क. ग. ज. ससानुप्रस्थकंदरः. १७ ख.—ट. तत्र. १८ ख. प्रस्थभूतलः. १९ क.—घ. च. छ. झ. ट. मश्वमुखीनांतु. २० ङ.—ट. वैखानसायत्र.

[1]वन्द्यास्ते तु तपःसिद्धास्तपसा वीतकल्मषाः ॥ प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥३४॥
हेमपुष्कर[2]संछन्नं तस्मिन्[3]वैखानसं सरः ॥ तरुणादित्यसंकाशैर्हंसैर्विचरितं शुभैः ॥ ३५ ॥
औपवाह्य कुबेरस्य सार्वभौम इति [4]स्मृतः ॥ गजः पर्येति तं देशं सदा [5]सह करेणुभिः ॥ ३६ ॥
तत्सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् ॥ अ[6]नक्षत्रगणं व्योम निष्पयो[7]दमनादितम् ॥ ३७ ॥
गभस्तिभिरिवार्कस्य स तु देशः प्रकाशते ॥ विश्राम्यद्भिस्तपःसिद्धैर्देवकल्पैः स्वयंप्रभैः ॥ ३८ ॥
तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ॥ ३९ ॥
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥ [8]ते नयन्ति परं तीरं सिद्धान्प्रत्यानयन्ति च ॥४०॥
उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥ ४१ ॥
ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः ॥ नीलवैडूर्य[9]पत्राभिर्नद्यस्तत्र सहस्रशः ॥ ४२ ॥
रक्तोत्पलवनै[10]श्चात्र मण्डिताश्च हिरण्मयैः ॥ तरुणादित्यस[11]दृशैर्भान्ति तत्र जलाशयाः ॥ ४३ ॥
महार्ह[12]मणिपत्रैश्च काञ्चनप्रभकेसरैः ॥ [13]नीलोत्पलवनैश्चित्रैः स देशः सर्वतो वृतः ॥ ४४ ॥
निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ॥ [14]उद्धूतपुलिनास्तत्र [15]जातरूपैश्च निम्नगाः ॥ ४५ ॥

॥ ३३ ॥ तपःसिद्धाः अणिमाद्यष्टैश्वर्यसिद्धियुक्ताः ॥ ३४—३५ ॥ औपवाह्यः राजार्हं वाहनं । "राजार्हस्त्वौपवाह्यः" इत्यमरः ॥ ३६ ॥ अथ महामेरुपर्यन्तेलावृतप्रदेशानुपदिशति—तत्सर इति ॥ उत्तरत्र "हिमवन्तं च मेरुं च समुद्रं च तथोत्तरं" इति वक्ष्यमाणत्वादत्र मेरुकीर्तनप्रसक्तिरेव नास्तीति न भ्रमितव्यं । व्योम वर्तत इति शेषः । व्योम्नो नष्टचन्द्रदिवाकरादित्वं नियतमार्गवर्तिनां चन्द्रसूर्यादीनां मेरुनिकटे किरणसंचाराभावात् । तदुक्तं विष्णुपुराणे " यावत्पुरस्तात्तपति तावत्पृष्ठे च पार्श्वयोः । ऋते हेमगिरिर्मेरोरुपरि ब्रह्मणः सभां " इति ॥ ३७ ॥ स देशः अर्कस्य गभस्तिभिरिव स्थितैः स्वयंप्रभैः स्वतःसिद्धज्ञानैः तपःसिद्धैः प्रकाशते ॥ ३८ ॥ निम्नगा वर्तत इति शेषः ॥ ३९ ॥ तस्याः शैलोदायाः । उभयोस्तीरयोः कीचका नाम वेणवः सन्ति । ते उभयतीरजाः कीचकाः । अन्योन्यसंग्रथिततया गमनसाधनभूताः सन्तः सिद्धान् परं तीरं नयन्ति प्रत्यानयन्ति च ॥ ४० ॥ उत्तराः कुरवः उत्तरकुरुसंज्ञिकाः देशाः । वर्तन्त इति शेषः । कृतपुण्यानां प्रतिश्रयाः आश्रयभूताः आवासभूताः ॥ ४१ ॥ ततः कृतपुण्यप्रतिश्रयत्वाद्धेतोः । कृतपुण्यभोग्यभूमित्वात् उक्तविशेषा नद्यः सन्तीति भावः । पद्मिनीभिः पद्मलताभिः । कृतोदकाः पर्याप्तोदकाः । "युगपर्याप्तयोः कृतं" इत्यमरः ॥ ४२ ॥ रक्तेत्यविभक्तिकनिर्देशः । रक्तैरुत्पलवनैर्हिरण्मयैरुत्पलवनैः । तरुणादित्यसदृशैरुत्पलवनैश्चेत्यर्थः । तत्रात्र तेष्वेतेषु कुरुष्वित्यन्वयः ॥ ४३ ॥ महार्हमणयो नीलरत्नानि तत्तुल्यपत्रैः ॥ ४४ ॥ निस्तुलाभिः वर्तुलाभिः । "वर्तुलं निस्तुलं वृत्तं" इत्यमरः । महाधनैः बहुमूल्यैः । उद्धूतपुलिनाः उन्नतपुलिनाः । निम्नगाः

द्रमभ्रादन्यः ॥ ३१ ॥ **ति०** वैखानसं वैखानसानामिदं ॥ ३५ ॥ **ति०** तत्सरोतिक्रम्यवर्तमानं व्योम । कियानवकाशः चन्द्रादिसर्वज्योतिर्गणप्रकाशरहितः । **शि०** अनादिमत् आदिरहितं । नित्यमित्यर्थः ॥ ३७ ॥ **ति०** नापिसान्धकारमित्याह—गभस्तिभिरिवेति । चन्द्रादिज्योतींष्यभिभूयार्कगभस्तिसदृशैःस्वीयैर्गभस्तिभिःप्रकाश्यते । केते यैर्गभस्तिभिःप्रकाश्यतेतत्राह—विश्राम्यद्भिरिति । सुखोपविष्टैःस्वतपस्सिद्धैः । अतएवदेवकल्पैः सूर्यादिदेवतुल्यैःस्वयंप्रभैश्चसूर्यादिवत्सदेशःप्रकाश्यते । यत्तु तत्रचन्द्रादीनांसंचाराभावएवेतितन्न । अग्रेसुप्रसिद्धचन्द्रादिसंचारवदुत्तरकुरूणांतदूर्ध्वमुपदेशानुपपत्तेः ॥ ३८ ॥ **ती०** कृतपुण्यप्रतिश्रयाः पुण्यानांप्रतिश्रयाः आश्रयभूताःज्योतिष्टोमादयः तेकृतायैस्तेकृतपुण्यप्रतिश्रयाः ॥ ४१ ॥ **ति०** कृतोदकाः कृतोदककार्याः ॥ ४२ ॥

[ **पा०** ] १ ङ. च. झ. ञ. ट. वन्दितव्यास्ततःसिद्धाः. क. ग. वन्द्यास्तुते. २ ञ. संपन्नं. ३ क. ग. ङ.—ट. तत्रवैखानसं. ४ ख. घ. श्रुतः. ५ ख. हस्तिकरेणुभिः. ६ ख. अनक्षत्रगतं. ७ ख. घ.—ज. ञ. ट. अनादिमत्. ८ ख. ग. घ. तैश्चयान्तिपरंतीरंसिद्धाःप्रत्यानयन्तिच. ९ ख. ङ. छ. झ. ट. पत्राढ्याः. ग. पद्माभाः. च. ज. ञ. पद्माढ्याः. १० ख. श्चारु. घ. श्चापि. ११ घ. झ. ट. संकाशाभान्ति. ख. च. ज. संकाशैः. १२ छ. झ. ट. मणिरत्नैश्च. १३ ख. नीलनीरजषण्डैश्च. १४ क. ख. घ. छ. ज. उद्धूतपुलिनाः. १५ ग. जातरूपमयाःशुभाः.

[1]सर्वैरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ॥ जातरूपमयैश्चापि हुताशनसमप्रभैः ॥ ४६ ॥
नित्यपुष्प[2]फलास्तत्र नगाः पत्ररथाकुलाः ॥ दिव्यगन्धरसस्पर्शाः [3]सर्वकामान्स्रवन्ति च ॥ ४७ ॥
[4]नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ॥ ४८ ॥
मुक्तावैडूर्यचित्राणि भूषणानि तथैव च ॥ स्त्रीणां [5]चाप्यनुरूपाणि पुरुषाणां तथैव च ॥
सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ॥ ४९ ॥
[6]महार्हाणि च चित्राणि हैमा[7]न्यन्ये नगोत्तमाः ॥ शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ॥ ५० ॥
मनःकान्तानि माल्यानि [8]फलन्त्यत्रापरे द्रुमाः ॥ [9]पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥ ५१ ॥
स्त्रियश्च गुणसंपन्ना रूपयौवनलक्षिताः ॥ गन्धर्वाः किन्नराः सिद्धा नागा विद्याधरास्तथा ॥
रमन्ते [10]संहितास्तत्र नारीभि[11]र्भास्करप्रभाः ॥ ५२ ॥
[12]सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ॥ सर्वे कामार्थसहिता वसन्ति सहयोषितः ॥ ५३ ॥
गीतवादित्र[13]निर्घोषः [14]सोत्कृष्टहसित[15]स्वनः ॥ श्रूयते सततं तत्र सर्वभूत[16]मनोहरः ॥ ५४ ॥
[17]तत्र नामुदितः कश्चिन्नास्तिकश्चिदसत्प्रियः ॥ अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ॥ ५५ ॥
[18]समतिक्रम्य तं देशमुत्तरः पयसां निधिः ॥ ५६ ॥
तत्र सोम[19]गिरिर्नाम मध्ये हेममयो महान् ॥ इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ॥
देवास्तं समवेक्षन्ते गिरिराजं दिवं [20]गताः ॥ ५७ ॥
स तु देशो विसूर्योपि तस्य भासा प्रकाशते ॥ [21]सूर्यलक्ष्म्याभिविज्ञेयस्तपतेव विवस्वता ॥ ५८ ॥
[22]भगवानपि विश्वात्मा शंभुरेकादशात्मकः ॥ ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ॥ ५९ ॥

भान्तीति शेषः ॥ ४५ ॥ नगोत्तमैः पर्वतश्रेष्ठैः । अवगाढाः प्रविष्टा इति निम्नगाविशेषणं ॥ ४६ ॥ पत्ररथाकुलाः पक्षिभिराकुलाः । सर्वकामान् सर्वाभीष्टान् ॥ ४७—४८ ॥ सर्वर्तुसुखसेव्यानि हेमन्ताद्यृतुष्वपि सुखेन सेवितुं योग्यानि ॥ ४९—५२ ॥ सहयोषितः योषित्सहिताः ॥५३॥ सोत्कृष्टहसितस्वनः उत्कृष्टहासशब्दसहितः ॥ ५४ ॥ असत्प्रियः अविद्यमानाङ्गनः । गुणाः सुखादयः ॥ ५५ ॥ पयसां निधिः लवणसमुद्रः । अस्तीति शेषः ॥ ५६ ॥ तत्र लवणसमुद्रे । मध्ये मध्ये देशे । ये दिवं गता इत्यनुषज्यते ॥ ५७ ॥ स देशः विसूर्योपि रात्रौ विगतसूर्योपि । तस्य सोमगिरेर्भासा प्रकाशते । कथमिव । सूर्यलक्ष्म्या अभिविज्ञेयः ज्ञातव्यपदार्थको देशः । तपता विवस्वतेव ॥ ५८ ॥ विश्वात्मा विश्वशरीरकः । भगवान् षाड्गुण्यपरिपूर्णो वासुदेवः । "एवमेव महाञ्शब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य

**कतक०** दिव्यगन्धेति ॥ इतउत्तरंकेचिच्छ्लोकाः "रमन्तेसततंतत्रनारीभिर्भास्वरप्रभाः" इत्यन्ताःप्रक्षिप्ताः । प्राचीनपुस्तकेष्वनुपलंभात् ॥ ४७ ॥ **रामानु०** नगोत्तमाः वृक्षश्रेष्ठाः ॥ ४८ ॥ **शि०** कामार्थसहिताः इच्छाविषयीभूतार्थैर्विद्यमानास्सन्तः रतिपरायणाः भवन्तीतिशेषः ॥ ५३ ॥ **स०** तत्रेत्यनेन बुद्धिसंनिहितत्वादत्रेत्युक्तिः । अव्ययानामनेकार्थत्वादत्रेत्यस्यतत्रेत्यर्थकत्वंद्रष्टव्यं । अत्रेवेतिलुप्तोपमानंवा । अत्र किष्किन्धायां । असत्प्रियोयथानास्ति तथेत्यर्थः । **ति०** असत् अविद्यमानं प्रियंयस्यतादृशः ॥ **शि०** असत्प्रियः असत्कर्मविषयकप्रीतिविशिष्टः । अत्र उत्तरकुरुषु ॥ ५५ ॥ **ति०** अत्रसुमेर्वन्वेषणंनोक्तं । तत्ररक्षसांवासासंभवादित्याहुः । मध्ये उत्तरसमुद्रमध्ये ॥ ५७ ॥ **रामानु०** ब्रह्मर्षिपरिवारितइत्येतच्चभगवाञ्शंभुरित्यत्रापिसंबध्यते ।

[ **पा०** ] १ क. रत्नमयैर्दिव्यैः. २ ग. फलाश्चात्र. ३ च. छ. ज. ञ. सर्वान्कामान्. ४ क. ख. ग. नानारूपाणि. ५ क. ङ.—ट. यान्यनुरूपाणि. ६ क. च.—ट. महार्हमणिचित्राणि. ७ ङ. छ. झ. ट. फलन्त्यन्ये. ८ ख. फलन्त्यन्येनगोत्तमाः. क. फलन्त्यत्रवनेद्रुमाः. ९ ग. फलानिच. १० झ. ट. संततंतत्र. ११ च.—झ. ट. भास्वरप्रभाः. १२ ग. सर्वेचकृत. १३ ग. च. ज. निर्घुष्टाःसोद्घुष्टहसितस्वराः । श्रूयन्तेसततंतत्रसर्वभूतमनोरमाः. १४ ख. घ. सोद्घुष्ट. १५ झ. स्वरैः. ञ. स्वरः. १६ झ. ञ. ट. मनोरमः. १७ ङ.—झ. ट. नात्र. १८ ङ.—ट. तमतिक्रम्यशैलेन्द्रमुत्तरः. १९ ख. हेमगिरिर्नाम. २० क.—च. ज. ञ. ट. गतं. २१ ग. स्वयालक्ष्म्याहि. ख. सूर्यलक्ष्म्याहि. २२ क. ग. च.—ट. भगवांस्तत्र.

न कथंचन गन्तव्यं कुरूणामुत्तरेण वः ॥ अन्येषामपि भूतानां नातिक्रामति वै गतिः ॥ ६० ॥
स हि सोमगिरिर्नाम देवानामपि दुर्गमः ॥ तमालोक्य ततः क्षिप्रमुपावर्तितुमर्हथ ॥ ६१ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ॥ अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६२ ॥
सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् ॥ यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥ ६३ ॥
ततः कृतं दाशरथेर्महत्प्रियं महत्तरं चापि ततो मम प्रियम् ॥
कृतं भविष्यत्यनिलानलोपमा विदेहजादर्शनजेन कर्मणा ॥ ६४ ॥
ततः कृतार्थाः सहिताः सबान्धवा मयार्चिताः सर्वगुणैर्मनोरमैः ॥
चरिष्यथोर्वीं प्रतिशान्तशत्रवः सहप्रिया भूतधराः प्लवङ्गमाः ॥ ६५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

नान्यगः ” इत्युक्तेः । नचेदमपि शंभुविशेषणं । एकादशात्मकत्वविरोधात् । नहि विश्वात्मकत्वमेकादशात्मकत्वं चैकत्र संभवति । एकादशात्मकः एकादशमूर्तिः । शंभुः रुद्रः । देवेशो ब्रह्मा । ब्रह्मर्षिपरिवारितः तत्र वसति । इयं च क्रिया सर्वत्रापि संबध्यते । यद्यत्र कश्चित् प्रकरणाभावाद्विष्णुरत्र नोच्यत इति कथयेत् तर्हि रुद्रोपि नोच्यते । कथमिति चेत् शं भावयतीति शम्भुरिति व्युत्पत्त्या “ शम्भू ब्रह्मत्रिलोचनौ ” इति कोशकारवचनाच्च सर्वाण्यपि विशेषणानि ब्रह्मपराणि भवेयुरिति ॥ ५९ ॥ कुरूणामुत्तरेण “ षष्ठ्यपीष्यते ” इत्यनेनैनपा योगे षष्ठी । अन्येषामपि शक्तिविशेषविशिष्टदैत्यादीनामपि । वः युष्माभिः । न गन्तव्यं ॥ ६०—६१ ॥ एतावत् उत्तरकुरुदेशपर्यन्तं । ततः परं उत्तरकुरुदेशात्परं समुद्रद्वीपादिकं । अभास्करममर्यादं च प्रदेशं न जानीमः । ततः परस्य देशस्य सर्वैर्गन्तुमशक्यत्वेन मयापि अनवगतत्वादिति भावः ॥ ६२ ॥ यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः । गम्यत्वेनोक्तप्रदेशानां यत्पार्श्वादिकमनुक्तं तत्रापि अन्वेषणे मतिः कर्तव्येत्यर्थः ॥ ६३ ॥ ततः अन्वेषणानन्तरं । विदेहजादर्शनजेन कर्मणा दाशरथेर्महत्प्रियं कृतं भविष्यति । मम चापि ततः दाशरथिप्रियात् । महत्तरं प्रियं कृतं भविष्यतीति योजना ॥ ६४ ॥ भूतधराः प्राणिभृतः प्राणिभिरुपजीव्या इति यावत् ॥ ६५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

अन्यथा तस्यसंनिहितब्रह्ममात्रसंबन्धेआद्ययोरेकैकविशेषणत्वंतृतीयस्यद्विविशेषणत्वमितिवैरूप्यंस्यात् ॥ **ती०** भगवान्नारायणः । रूढनामेदं । सहिभगवच्छब्देनझटितिप्रतीयते ॥ **ति०** विश्वमततिव्याप्नोतीतिविश्वात्मा व्यापकः । तेनविष्णुरूपः । विष्लृव्याप्तौइत्यनुसारात् । सएवशंभुः शंभवत्यस्मात्सः । सएवैकादशात्मकः एकादशानुवाकार्थैकादशरुद्रात्मकः । सएवब्रह्मा बृंहणत्वात्जगत्स्रष्टृत्वात् एवंरूपत्रयात्माभगवान् तत्रसोमगिरौ । कार्यब्रह्मलोकत्वाद्वसतीत्यर्थः ॥ **स०** भगवान् स्वोचितैश्वर्यादिगुणः । विश्वात्मा समस्तमनोनियामकः । एकादशात्मकः तद्गणस्वामी । शंभुः तत्रवसति । अनेनात्रभगवच्छब्दस्यश्रवणात्तस्यनारायणेरूढत्वात्सएवात्रतेनग्राह्यइतिनिरस्तं । “ एतस्यांसाध्विसन्ध्यायांभगवान्भूतभावनः । परीतोभूतपार्षद्भिः ” इत्यादौभागवतादौभवेपि भगवच्छब्दप्रयोगात् । “ अन्यतमोमुकुन्दात्कोनामलोकेभगवत्पदार्थः ” इतितुनिरवधिकैश्वर्यादिमद्बोधकभगवच्छब्दविवक्षया प्रवृत्तमितिनतद्विरोधः । ब्रह्माचवसति ॥ ५९ ॥ **ति०** नानुक्रामतिवैगतिः । तस्यकार्यब्रह्मलोकत्वेनब्रह्मर्षिव्यतिरिक्तस्यतत्रागतेः । ब्रह्मर्षिपदेनदहरादिमार्गेणब्रह्मोपासकाऋषयउच्यन्ते ॥ ६० ॥ **स०** भूतधराः धरन्तीतिधराः भूतस्यधराः सीतालाभेनयथार्थवचनधराः न्यायमार्गधरावा । “ भूतंक्ष्मादौपिशाचादौन्याय्येसत्योपमानयोः ” इतिविश्वः ॥ **शि०** सहिताः हितसहिताः ॥ ६५ ॥ इतित्रिचत्वारिंशःसर्गः ॥ ४३ ॥

**[ पा० ]** १ ख. घ. कथंचनन. २ ङ. ज. ञ. मुत्तरेणच. ३ ग. च. ज.—ट. नानुक्रामति. ४ ख. हेमगिरिर्नाम. ५ ग. वानरसत्तमाः. ६ छ. झ. ट. महत्प्रियं. ७ ङ. छ. ज. ट. शात्रवाः.

# चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

हनूमतिकार्यसाधकतांनिश्चितवतासुग्रीवेणतंप्रतितत्पराक्रमप्रशंसनपूर्वकंविशेषतःसीतान्वेषणचोदनं ॥ १ ॥ तेन हनूमति कार्यसाधकतामनुमिमानेनरामेणसीताप्रत्ययायतस्मिन्नभिज्ञानत्वेननिजनामाङ्किताङ्गुलीयकदानम् ॥ २ ॥ हनूमता रामचरणप्रणामपूर्वकंवानरसेनयासहसीतान्वेषणायप्रस्थानम् ॥ ३ ॥

विशेषेण तु सुग्रीवो हनुमत्यर्थमुक्तवान् ॥ सहि तस्मिन्हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १ ॥
अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ॥ सुग्रीवः परमप्रीतः प्रभुः सर्ववनौकसाम् ॥ २ ॥
न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये ॥ नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ॥ ३ ॥
सासुराः सहगन्धर्वाः सनागनरदेवताः ॥ विदिताः सर्वलोकास्ते ससागरधराधराः ॥ ४ ॥
गतिर्वेगश्च तेजश्च लाघवं च महाकपे ॥ पितुस्ते सदृशं वीर मारुतस्य महौजसः ॥ ५ ॥
तेजसा वापि ते भूतं समं भुवि न विद्यते ॥ तद्यथा लभ्यते सीता तत्त्वमेवोपपादय ॥ ६ ॥
त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः ॥ देशकालानुवृत्तिश्च नयश्च नयपण्डित ॥ ७ ॥
ततः कार्यसमासङ्गमवगम्य हनूमति ॥ विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥ ८ ॥
सर्वथा निश्चितार्थोयं हनूमति हरीश्वरः ॥ निश्चितार्थकरश्चापि हनुमान्कार्यसाधने ॥ ९ ॥

अथ निश्चितकार्यसाधनसामर्थ्याय हनुमते अङ्गुलीयकदानं चतुश्चत्वारिंशे—विशेषेणत्वित्यादि ॥ हनुमति विषये । अर्थं वक्ष्यमाणार्थं । उक्तवान् । विशेषार्थकथनेहेतुमाह—स हीति । अर्थसाधने विषये निश्चितार्थः ॥ १ ॥ संग्रहेणोक्तमर्थं विस्तरेण दर्शयति —अब्रवीच्चेत्यादिना ॥ २ ॥ भूमौ सजातीयप्रतिपक्षबहुलायां । अन्तरिक्षे निरालम्बे मेघादिसंचारमार्गे । अम्बरे वातचक्राक्रान्तप्रदेशे । अमरालये प्रबलाधिष्ठिते स्वर्गे । अप्सु तिर्यक्संचारानर्हासु वा । गतिसङ्गं गतिविलम्बं । नपश्यामि ॥ ३—४ ॥ गतिः अप्रतिहतगतिः ॥ ५ ॥ भूतं जन्तुः । तत् तस्मात्कारणात् । तत् सीतान्वेषणं । उपपादय संपादय ॥ ६ ॥ नयपण्डितेत्यनन्तरमितिकरणंबोध्यं । इत्यब्रवीदिति पूर्वेणान्वयः ॥ ७ ॥ ततः सुग्रीववचनात् । हनूमति कार्यसमासङ्गं कार्यविषयासक्तिं । अवगम्य अस्मिन् सुग्रीवेण स्वकार्यभारो निक्षिप्त इति ज्ञात्वेत्यर्थः । स्वयमपि हनुमन्तं कार्यसाधकं विदित्वाचिन्तयामास ॥ ८ ॥ चिन्ताप्रकारमाह—सर्वथेत्यादिना श्लोकद्व-

**रामानु०** हनुमत्यर्थमुक्तवान् निक्षिप्तवान् । धातूनामनेकार्थत्वात्कर्माधिकरणवाचिपदसमभिव्याहृतोवचिर्निक्षेपेवर्तते ॥ **ती०** अर्थं प्रयोजनं । उक्तवान् निक्षिप्तवानित्यर्थः । "वायुपुत्रसमीपंतुगत्वातंवाक्यमब्रवीत् । शृणुमद्वचनंवीरहनुमन्मारुतात्मज । अयमिक्ष्वाकुदायादोराजारामःप्रतापवान् । सर्वात्मासर्वलोकेशोविष्णुर्मानुषरूपधृत्" इति । अत्रहेतुमाह—सहीति । यस्मात्कारणात् सुग्रीवः अर्थसाधनेविषये तस्मिन्हरिश्रेष्ठेनिश्चितार्थः । अयंभावः । सीतान्वेषणायसर्वास्वपिदिक्षुवानरान्नियुज्य हनुमतस्सर्वोत्तमत्वादनेनैवकार्यसिद्धिर्भविष्यतीतिनिश्चित्यतत्प्रशंसापूर्वकंतंप्रत्यर्थमुक्तवानिति ॥ १ ॥ **ती०** अन्तरिक्षे पतत्रिमेघसंचारप्रदेशे । अंबरे तदुपरिसिद्धविद्याधरादिसंचरणप्रदेशे ॥ **स०** गतिसङ्गंगमनव्यवधानकरं । अन्तरिक्षं पक्षिमार्गः । अंबरं व्योम । अमरालयः स्वर्गः । यद्वा अंबरे अमरालयेइतिसामानाधिकरण्येनान्वयः । अथवा अप्सुआलये सर्वप्रलये । हेअमर अविनाशिन् । गतिसङ्गं ज्ञानप्रतिबन्धं । "प्रलयकालेपिप्रतिभातपरावरः" इत्युक्तेः । ना पुमान् अहं नपश्यामीतिभावः ॥ ३ ॥ **स०** पितुः वायोः । गत्या गतिःसदृशी । वेगेनवेगः । तेजसातेजः । लाघवेनलाघवंचेत्यन्वयोद्रष्टव्यः ॥ ५ ॥ **ति०** ततः एवंसुग्रीववचनात् । कार्यसमासङ्गं कार्यसिद्धिसंबन्धं । अवगम्य स्वयंचतत्सामर्थ्याद्यनुभवेनतस्मिन्कार्यसाधकत्वंविदित्वा । चात्तद्गम्यदेशएवसीतांविदित्वा चिन्तयामास । अस्मिन्स्वकर्तव्यसमर्पणंयुक्तमितिविचारयामास ॥ **शि०** अवगम्यहनूमति अवगम्यः सर्वकार्यसाधकत्वेनसर्वैर्ज्ञातव्यः । सचासौहनुमानितिकर्मधारयः । तस्मिन् । हनुमन्तंचिन्तयामास तद्गुणान्सस्मारेत्यर्थः ॥ ८ ॥ **स०** हनुमान् निश्चितार्थतरः । इदंच "अत्यन्तमन्तरङ्गत्वात्प्रधानाङ्गंहिमारुतिः" इत्युक्तेःप्रधानाङ्गत्वाद्युक्तमितिभावः ।

[ **पा०** ] १ ङ. च. ज. ञ. सविशेषेण. २ ङ. छ. ज. ञ. न्हरिश्रेष्ठो. ३ ज. गतिभङ्गं. ४ घ. सामराः. च. ज. सचुराः. ५ क. सनागहरिदेवताः. छ. सनागोरगदेवताः. ६ ङ. च. झ. ञ. ट. नसमंभुवि. ७ ग. ङ. च. छ. ञ. ट. तत्त्वमेवानुचिन्तय. ८ क. ग. छ. झ. ट. हनुमन्नस्ति. ङ. च. ज. ञ. हनुमन्सन्ति. ९ ङ. च. ज. ञ. विदित्वाचहनूमन्तं. १० ग. छ. झ. ट. निश्चितार्थतरश्चापि. क. निश्चितार्थतरश्चायं.

तदेवं[1] प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः ॥ भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १० ॥
तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् ॥ कृतार्थ इव संवृत्तः[2] प्रहृष्टेन्द्रियमानसः ॥ ११ ॥
ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् ॥ अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥
अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा ॥ मत्सकाशादनुप्राप्तमनुद्विग्नानुपश्यति ॥ १३ ॥
व्यवसायश्च ते वीर सत्वयुक्तश्च विक्रमः ॥ सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ॥ १४ ॥
स[3] तं गृह्य हरीश्रेष्ठः स्थाप्य[4] मूर्ध्नि कृताञ्जलिः ॥ वन्दित्वा चरणौ[5] चैव प्रस्थितः प्लवगोत्तमः[6] ॥१५॥

स तत्प्रकर्षन्हरिणां बलं[7] महद्बभूव वीरः पवनात्मजः कपिः ॥
गताम्बुदे व्योम्नि विशुद्धमण्डलः शशीव नक्षत्रगणोपशोभितः ॥ १६ ॥
अतिबल बलमाश्रितस्तवाहं हरिवरविक्रम विक्रमैरनल्पैः ॥
पवनसुत यथाभिगम्यते सा जनकसुता हनुमंस्तथा कुरुष्व ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

येन ॥ अन्ते इतिकरणं बोध्यं । कार्यसाधने विषये निश्चितार्थः निश्चितकार्यसाधकः । हनुमानपि निश्चितार्थकरः ॥ ९ ॥ अस्य कार्यफलोदयः अस्य संबन्धिनी कार्यसिद्धिः । ध्रुवः निश्चितः ॥ १० ॥ व्यवसायोत्तरं व्यवसायेन उत्तरं श्रेष्ठं । कृतार्थः संवृत्त इव । अमन्यतेतिशेषः ॥ ११ ॥ राजपुत्र्याः अभिज्ञानं अभिज्ञायतेनेनेत्यभिज्ञानं । ननु त्यक्तसकलधनस्य वन्यवृत्त्या वर्तमानस्य कुतोङ्गुलीयकमिति चेत् इदमेकमेतत्कार्यार्थं रक्षितवान् । अतएवाङ्गुलीयमुन्मुच्येति नोक्तं । यद्वा रामनामाङ्कितमङ्गुलीयकं सीतायाः कदाचिद्रावणागमनात्पूर्वं प्रणयपरत्वेन रामेण स्वीकृतमिति बोध्यम् । यद्वा भार्यास्नेहेन कनिष्ठिकायां सदा मुद्रिका धार्यत इति देशाचारः । यद्वा विवाहकाले जनकेन दत्तमिदं वरालङ्कारत्वेन । "गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणं" इत्युक्तेः ॥ १२ ॥ भवद्वचनमेवालं किमर्थमेतद्दीयते तत्राह—अनेनेति ॥ पश्यति द्रक्ष्यति ॥ १३ ॥ हनुमन्तं प्रशंसति—व्यवसाय इति ॥ सत्त्वयुक्तो विक्रमः बलं च विक्रमश्चेत्यर्थः ॥ १४—१५ ॥ प्रकर्षन नयन् । हरिणामित्यत्र दीर्घाभावआर्षः ॥ १६ ॥ पुनरपि गच्छन्तंप्रति रामवचनं—अतिबलेति ॥ अतिबलेति संबुद्धिः । हरिवरविक्रम सिंहश्रेष्ठविक्रम सुग्रीवतुल्यविक्रमेति वा । श्लोकान्ते इति रामोऽब्रवीदित्यध्याहार्यं ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

**शि०** कार्यसाधने निश्चितः अर्थतरः अत्युपायोयेनसः । योहनूमान् तस्मिन्हनूमति सर्वथा सर्वप्रकारेण । निश्चितः अर्थोजानकीदर्शनं येनसः हरीश्वरः सुग्रीवः । अस्तीतिशेषः । एतेनसुग्रीवस्ययाथार्थ्यवेदितृत्वंव्यञ्जितं ॥ किंच हरीश्वरोहनुमतिनिश्चितार्थोस्ति । हनूमांस्तुनिश्चितार्थतरः । एतेनहनुमतोज्ञानाधिकत्वंसूचितं । पूर्वकल्पे त्वरार्थस्याविवक्षयानेयंव्यञ्जनेतिबोध्यं ॥ ९ ॥ **ति०** प्रस्थितस्य भर्त्राप्रस्थापितस्य । परिज्ञातस्य परीक्षितस्य । परिगृहीतस्य श्रेष्ठतयेतिशेषः । कार्यस्यफलोदयः सीतादर्शनप्राप्तिरूपः । स ध्रुवः निश्चितार्थः ॥ १० ॥ **ति०** ततः निश्चितकार्यसाधकत्वादेवहेतोः ॥ **स०** अभिज्ञानं प्रत्यभिज्ञानद्वाराविश्वासजनकं ॥ १२ ॥ **ति०** तत् अभिज्ञानपदार्थं ॥ १५ ॥ **स०** हरिणां हरीणां ॥ यद्वा हरः मनःयेषामस्तितेहरिणः मनस्विनः तेषां । जन्यजनकयोरभिमन्यमानाभिमानिनोः "ब्रह्मादिकंमुखं" "महतश्चतुर्मुखात्" इत्यादिवदैक्यव्यपदेशात् हरिणांमनस्विनामित्यर्थस्संभवतीतिज्ञेयं ॥ १६ ॥ **ति०** कतकेनतुचतुस्त्रिंशत्संख्यश्लोकःसर्गोऽयमुक्तः ॥ १७ ॥ इतिचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥

[ पा० ] १ ग. छ. झ. ट. तदेव. २ छ. झ. ट. संहृष्टः. ३ क. ग. छ. झ. ट. सतद्गृह्य. ४ ङ. च. छ. झ. ञ. ट. कृत्वा. ५ क. चरणावेव. ६ क. ग. ङ. छ.—ट. प्लवगर्षभः. ७ च.—झ. ट. महद्बलंबभूव.

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

विनतादिभिश्चतुर्भिस्सेनाधिपैर्हर्षोत्कर्षात्सवीरवादंगर्जद्भिः स्वस्वसैन्यैःसह सुग्रीवोद्दिष्टस्वस्वदिगभिप्रस्थानम् ॥ १ ॥

सर्वांश्चाहूय सुग्रीवः प्लवगान्प्लवगर्षभः ॥ [1]समस्तानब्रवीद्भूयो रामकार्यार्थसिद्धये ॥
एवमेतद्विचेतव्यं [2]यन्मया परिकीर्तितम् ॥ १ ॥
तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ॥ शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ॥ २ ॥
रामः प्रस्रवणे [3]तस्मिन्न्यवसत्सहलक्ष्मणः ॥ प्रतीक्षमाणस्तं मासं [4]यः सीताधिगमे कृतः ॥ ३ ॥
[5]उत्तरां तु दिशं [6]रम्यां गिरिराजसमावृताम् ॥ प्रतस्थे सहसा वीरो हरिः शतबलिस्तदा ॥
पूर्वां दिशं प्रति ययौ विनतो [7]हरियूथपः ॥ ४ ॥
[8]ताराङ्गदादिसहितः [9]प्लवगो मारुतात्मजः ॥ [10]अगस्त्यचरितामाशां दक्षिणां हरियूथपः ॥ ५ ॥
[11]पश्चिमां तु भृशं घोरां सुषेणः प्लवगेश्वरः ॥ प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥ ६ ॥
ततः सर्वा दिशो [12]राजा चोदयित्वा [13]यथातथम् ॥ [14]कपिसेनापतीन्मुख्यान्मुमोद सुखितः सुखम् ॥ ७ ॥
एवं [15]संबोधिताः सर्वे राज्ञा [16]वानरयूथपाः ॥ [17]स्वां स्वां दिश[18]मभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ८ ॥
[19]आनयिष्यामहे सीतां हनिष्यामश्च रावणम् ॥ नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥
[20]क्ष्वेलन्तो धावमानाश्च [21]विनदन्तो महाबलाः ॥ ९ ॥

---

अथ प्रेषितानां वानराणां सन्नाह उच्यते पञ्चचत्वारिंशे—सर्वांश्चेत्यादि ॥ सर्वानाहूय ततः समस्तान् संचीभूतान् प्लवगान् अब्रवीत् । यद्वा सम इति च्छेदः । समः सर्वत्र पक्षपातरहितः । एतत् पूर्वोक्तं । एवं अस्मदुक्तप्रकारेण । इत्यब्रवीदिति संबन्धः ॥१॥ शलभा इति बहुत्वमात्रेदृष्टान्तः ॥ २ ॥ सीताधिगमे सीताधिगमनिमित्तं । कृतः कृतसंकेतः ॥ ३ ॥ प्रतस्थे प्रस्थातुमुद्युक्तः । सर्गान्ते सुग्रीवसन्निधौ सन्नाहकथनात् ॥ ४—६ ॥ मुमोद सुखितः सुखमिति । पूर्वं राज्यलाभेन सुखितो राजा सुखं यथा भवति तथा मुमोद । उत्तरोत्तरं सुखं प्रापेत्यर्थः ॥ ७ ॥ स्वांस्वांदिशं स्वांशभूमण्डलं ॥ ८ ॥ आनयिष्यामह इत्यत्र इतिकरणं द्रष्टव्यं । आनयिष्यामह इति नदन्त इत्यन्वयः । नदन्तः शब्दं कुर्वन्तः । उन्नदन्तः पुनः संतोषातिशयेन उच्चैर्नदन्तः । गर्जन्तः आत्मश्लाघां कुर्वन्तः । क्ष्वेलन्तः सिंहनादं कुर्वन्तः । विनदन्तः विविधान्विकृतान्वा नादान्कुर्वन्तः । संप्रतस्थिर इति

---

स० सर्वान् वैरिहिंसकान् । षर्व हिंसायमितिधातोः । यद्वा समस्तान् मासमध्येनायाताश्चेन्मच्छिक्षाविषयाइतिपूर्वसम्यङ्गिरस्तान् । रामकार्यार्थसिद्धये कार्यंसीतालाभश्चअर्थोमोक्षश्चतयोःसिद्ध्यर्थं । एवंच नार्थानर्थंतेतिज्ञेयं ॥ १ ॥ स० अगस्त्यचरितां अगस्त्यस्य चरितंभावेक्तः । चरितंचरणंसंचारोयस्यास्सा । तां । अगस्त्यस्यचरितंचरित्रंयस्यामितिवा ॥ ६ ॥ शि० वानराणामनुकूलत्वेनसुखितोराजासुग्रीवः कपिसेनापतीन् यथातथं यथायोग्यं । सर्वादिशश्चोदयित्वा मुमोद दानसत्कारादिनाप्रमोदयामास ॥ स० सुखितः आज्ञानुसारिभिर्हरिभिःसुखंप्रापितः । सुखं सु शोभनानि खानि इन्द्रियाणियस्मिन्कर्मणितद्यथाभवतितथा मुमोद स्वयंतुतोष ॥ ७ ॥

[ पा० ] १ ङ.—ट. समस्तांश्चाब्रवीद्राजा. २ ङ.—ट. भवद्भिर्वानरोत्तमैः. ३ ग. तस्मिन्नुवाससह. ४ छ. झ. ट. सीताधिगमनेकृतः. ङ. च. ज. ञ. सीताभ्यधिगमेकृतः. ५ ख. सउत्तरां. क. उत्तरांच. ६ क. गम्यां. ७ ख. घ. नामयूथपः. ८ ग. ताराङ्गदाभ्यांसहितः. ९ क. ख. हनूमान्मारुतात्मजः. च.—ट. प्लवगःपवनात्मजः. ग. हनूमान्पवनात्मजः. १० झ. ट. अगस्त्याचरितां. ११ ग. ङ.—ट. पश्चिमांच. क. पश्चिमांतांदिशंवीरः. १२ क. ग. राजाप्रस्थाप्यविजयायतान्. १३ ख. यथाबलं. ङ. ज. यथायथं. १४ ङ.—ट. कपिसेनापतिर्वीरोमुमोद. १५ क.—ट. संचोदिताः. ग. संबोधितास्तेन. १६ क. ख. वानरपुङ्गवाः. १७ क. तांतां. १८ च. जः ञ. मनुप्रेत्य. १९ आनयिष्यामहेइत्यर्धं ङ.—ट. पाठेषुक्ष्वेलन्तोधावमानाश्चेत्यर्धात्परतोदृश्यते. २० ङ.—ट. क्ष्वेडन्तो. २१ क. ख. ययुःप्लवगसत्तमाः.

अहमेको हनिष्यामि[1] प्राप्तं रावणमाहवे ॥ ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ॥ १० ॥
वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिह ॥ एक एवाहरिष्यामि पातालादपि जानकीम् ॥ ११ ॥
विमथिष्याम्यहं[2] वृक्षान्[3]पातयिष्याम्यहं गिरीन्[4] ॥ धरणीं दारयिष्यामि क्षोभयिष्यामि[5] सागरान् ॥ १२ ॥
अहं योजनसंख्यायाः प्लविता[6] नात्र संशयः ॥ शतं[7] योजनसंख्यायाः शतं समधिकं ह्यहम्[8] ॥ १३ ॥
भूतले सागरे वापि[9] शैलेषु च वनेषु च ॥ पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः ॥ १४ ॥
इत्येकैकं[10] तदा तत्र वानरा बलदर्पिताः ॥ ऊचुश्च वचनं तत्र[11] हरिराजस्य सन्निधौ ॥ १५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रामेणाखण्डभूमण्डलविज्ञानकारणं पृष्टेनसुग्रीवेण तंप्रति वालिदुन्दुभियुद्धादिकथनेन तन्मूलकस्वविषयकवालिविद्वेषादिनिवेदनादिपूर्वकं स्वस्य सकलभूवलयपरिवर्तनस्य तत्कारणत्वोक्तिः ॥ १ ॥

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् ॥ कथं भवान्विजानीते सर्वं वै मण्डलं भुवः ॥ १ ॥
सुग्रीवस्तु[12] ततो राममुवाच प्रणतात्मवान् ॥ श्रूयतां सर्वमाख्यास्ये विस्तरेण नरर्षभ[13] ॥ २ ॥
यदा[14] तु दुन्दुभिं नाम दानवं महिषाकृतिम् ॥ परिकालयते[15] वाली मलयं प्रति[16] पर्वतम् ॥ ३ ॥
तदा[17] विवेश महिषो मलयस्य गुहां प्रति ॥ विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४ ॥

---

पूर्वेणान्वयः ॥ ९ ॥ अहमित्यादि सागरानित्यन्तमेकान्वयं ॥ १०—१२ ॥ अहं योजनसंख्यायाः शतं प्लवितेत्येकस्य वचनं । योजनसंख्यायाः शतं समधिकमित्यन्यस्य । हिः प्रसिद्धौ ॥ १३—१५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

अथ रामाय सुग्रीवेण स्वस्य सर्वभूमण्डलज्ञानमूलकथनं षट्चत्वारिंशे—गतेष्वित्यादि ॥ १ ॥ प्रणतात्मवान् प्रणतदेहवान् ॥ २ ॥ केचिदत्र दुन्दुभिशब्देन उपचारान्मायाव्येवोच्यते । मायाविनो वृत्तान्तस्यानुवादादित्याहुः । तन्न । महिषाकृतिमित्यस्य विरोधात् । "तदा विवेशमहिषः, महिषो विनशेदिति" इति पुनःपुनरुक्तेश्च रामेण विदितवृत्तान्तश्च न वचनमर्हति । तर्हि कथमुपपत्तिरितिचेत् उच्यते । पूर्वं मायाविवृत्तान्ताभिधानादत्र महिषवृत्तान्ताभिधानाच्च तदानीमुभावप्यागताविति वेदितव्यं । तत्र महिषः कथंचित्स्वात्मानं गोपयित्वा वालिनि विनिर्गते पुनर्मत्तः कदाचिदागत्य वालिना हत इत्यविरोधः । वक्ष्यत्येवमन्यत्रापि विषये । रावणेन सीतोपप्लवे उद्युक्ते मन्दोदरीधान्यमालिन्यौ निवारिण्यौ । तत्रैका पूर्वमुक्ता अन्याः वानरसन्निधावनुवादे । तस्मादयमृषेः स्वभाव इति बोध्यम् । परिकालयते पलाययति । कलतेर्मितो वृद्धिरार्षी । तत्रापि गुहायामपि । तज्जि-

---

ति० एकैकः एकशइत्यर्थः ॥ १५ ॥ इतिपञ्चचत्वारिंशःसर्गः ॥ ४५ ॥

स० अव्ययानामनेकार्थत्वाद्वै इत्यर्थे । ततश्चइत्यब्रवीदित्यन्वयः ॥ १ ॥ स० प्रणतात्मवान् प्रणतश्चासावात्मादेहश्चसोस्यास्तीतिसतथा । एकदेशिनेत्यादिनिर्देशान्नकर्मधारयादितिनञानिर्देशाच्चमत्वर्थीयनिषेधोऽनित्यइतिप्रणतात्मवानितिसाधुः । आत्मामनोस्यास्तीत्यात्मवान् । प्रणतश्चासावात्मवांश्चेतिवा ॥ २ ॥ स० दुन्दुभिरितिजनकइत्यादिवत्कुलनाम । मायावीतितन्मात्रनामेति दुन्दुभेःपितृत्वात्कथंमायाविनिपुत्रेतन्नामेतिनिरस्तं । अथवा पितृनाम्नालक्षणयापुत्रोगृह्यते ॥ ति० अत्रदुन्दुभिशब्देनमहिषशब्दे-

[ पा० ] १ क. ग.—ट. वधिष्यामि. २ ङ. च. ज. ञ. निर्मथिष्याम्यहं. क.—घ. छ. झ. ट. विधमिष्याम्यहं. ३ क.—ङ. छ. ज. झ. ट. वृक्षान्दारयिष्याम्यहं. ४ ङ. च. ज. ञ. गिरिं. ५ ख. शोषयिष्यामि. ६ ङ.—ट. प्लवेयं. ७ क. ख. घ.—ट. शतयोजनं. ८ क. तथा. ९ ज. चापि. १० क. ङ.—ट. इत्येकैकः. ११ ङ.—ट. तस्य. क. ग. घ. तस्मिन्हरि. १२ च.—ट. सुग्रीवश्च. १३ छ.—ट. वचोमम. १४ घ. यदाहि. १५ ङ.—ट. प्रतिकालयते. १६ क. ख. पर्वतंप्रति. १७ क. यदा.

ततोहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत्[1] ॥ न च निष्क्रमते वाली तदा संवत्सरे गते ॥ ५ ॥
ततः क्षतजवेगेन आपुपूरे तदा बिलम् ॥ तदहं विस्मितो दृष्ट्वा भ्रातृशोक[2]विषार्दितः ॥
अथाहं कृत[3]बुद्धिस्तु सुव्यक्तं निहतो गुरुः ॥ ६ ॥
शिला पर्वतसंकाशा बिलद्वारि मया[4]ऽऽवृता ॥ अशक्नुवन्निष्क्रमितुं महिषो विनशे[5]दिति ॥ ७ ॥
ततो[6]हमागां किष्किन्धां निराशस्तस्य जीविते ॥ राज्यं च सु[7]महत्प्राप्तं तारया[8] रुमया सह ॥ ८ ॥
मित्रैश्च सहितस्तत्र[9] वसामि विगतज्वरः[10] ॥ ९ ॥
आजगाम ततो[11] वाली हत्वा तं दानवर्षभम्[12] ॥ ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ॥ १० ॥
स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः ॥ परिकालयते क्रोधाद्धावन्तं[13] सचिवैः सह ॥११॥
ततोऽहं वालिना तेन सानुबन्धः[14] प्रधावितः[15] ॥ नदीश्च विविधाः पश्यन्वनानि नगराणि च[16] ॥ १२ ॥
आदर्शतलसंकाशा ततो वै पृथिवी मया ॥ अलातचक्रप्रतिमा दृष्टा गोष्पदवत्तदा[17] ॥ १३ ॥
पूर्वां दिशं ततो गत्वा पश्यामि विविधान्द्रुमान् ॥ पर्वतांश्च नदी रम्याः सरांसि विविधानि च ॥१४॥
उदयं तत्र पश्यामि पर्वतं धातुमण्डितम् ॥ क्षीरोदं सागरं चैव[18] नित्यमप्सरसालयम् ॥
परिकालयमानस्तु[19] वालिनाभिद्रुतस्तदा ॥ १५ ॥
पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो ॥ पुनरावर्तमानस्तु वालिनाऽभिद्रुतो द्रुतम्[20] ॥ १६ ॥
दिशस्तस्यास्ततो भूयः प्रस्थितोऽदक्षिणां दिशम् ॥ विन्ध्यपादपसंकीर्णां चन्दनद्रुम[21]भूषिताम् ॥१७॥

घांसया मलयं विवेश ॥ ३—४ ॥ विनीतवत् विनययुक्तमिति क्रियाविशेषणं ॥ ५ ॥ भ्रातृशोक एव विषं तेन अर्दितः । अभवमिति शेषः । अहं गुरुर्निहत इति कृतबुद्धिः अभवमिति शेषः ॥ ६ ॥ विनशेत् विनश्येदित्यर्थः ॥ ७—८ ॥ वसामि अवसं ॥ ९ ॥ दानवर्षभं मायाविनं । भययन्त्रितः भयपरवशः ॥१०॥ परिकालयते निरकासयत् ॥ ११ ॥ सानुबन्धः सामात्यः । नदीः पश्यन्नहं प्रधावित इत्यन्वयः ॥ १२—१३ ॥ पश्यामि अपश्यं ॥ १४ ॥ अप्सरसा अप्सरसां । पूर्वसवर्णदीर्घः । वालिनाभिद्रुतः परिकालयमानोहं द्रुमादिकमपश्यमिति पूर्वेणान्वयः ॥ १५ ॥ पुनरित्यादि श्लोकद्वयमेकान्वयं । अस्याः पूर्वस्या दिशः पुनरावृत्य प्रस्थितोस्मि । आवर्तमानोहं पुनर्वालिनाभिद्रुतोस्मि । विन्ध्यपादपेत्यनेन किष्कि-

नचतत्पुत्रोमायाविनामादानवउच्यते । पितुर्महिषाकारत्वात्तत्पुत्रस्यचतदाकारत्वमितिचबोध्यं ॥ ३ ॥ स० "वाक्येतुसाविवक्षामपेक्षते" इत्युक्तेः वेगेनआपुपूरेत्यत्रविवक्षाभावादसंधिः । ति० गतबुद्धिः प्राप्तबुद्धिः जातइतिशेषः ॥ ६ ॥ ति० परिकालयते सचिवैस्सहधावन्तमनुधावतिस्म ॥ स० वालीसचिवैस्सहधावन्तंमां अवालीति अवाली नविद्यतेवालीयस्येत्यवाली । अहंमृतइतिमत्वा एवंकृतवानित्यवालीसुग्रीवइतिमत्वा प्रतिकालयतइत्यन्वये नपुनरुक्तिः ॥ ११ ॥ ति० सोहं अनुबद्धः अनुद्रुतः ॥ १२ ॥ ति० ततोवै तदनुधावनहेतोः । मयागोष्पदवत्परिभ्राम्यमाणा इयंपृथिवी अलातचक्रप्रतिमा आदर्शतलसंकाशाचदृष्टा । गोष्पदवदित्यनेनलङ्घनेऽप्रयासउक्तः । अलातचक्रेत्यनेनस्वीयोभ्रमणवेगः । आदर्शतलेत्यनेनभूचक्रवर्तिपदार्थस्यस्पष्टमनुभवउक्तः ॥ १३ ॥ ति० परिकाल्यमानः परिकालयमानः । पलायमानइत्यर्थः । अकारलोपआर्षः । पुनरावृत्य उदयगिरिभुवः । स० अहमित्यहंकारवाच्यव्ययमेकं । तेन अहं गर्वितेनवालिनेत्यन्वये नपुनरुक्तिः ॥ १५–१६ ॥

[ पा० ] १ क. विनीतवान्. २ ङ.—ट. भ्रातुःशोक. ३ क. ग.—ट. गतबुद्धिस्तु. ४ क. ख. घ. कृतामया. ज. समावृता. ग. छ. झ. ञ. ट. मयाकृता. ५ ङ.—ट. विनशिष्यति. ६ ङ. हमायां. ७ ग. छ. झ. ट. सुमहत्प्राप्य. ८ क.—घ. च. छ. ज. ञ. ट. तारांच. ९ छ. झ. ञ. ट. स्तस्य. १० घ. गतविज्वरः. ११ ग. तदा. १२ ङ.—ट. वानरर्षभः. १३ ङ.—ठ. वालीधावन्तं. क. कोपाद्धावन्तं. १४ छ. झ. सोनुबद्धः. १५ ङ. च. ज. ञ. प्रधर्षितः. १६ घ. विविधानिच. १७ ङ. छ.—ट. गोष्पदवत्कृता. १८ क. ख. चापि. १९ छ. झ. ट. परिकाल्यमानस्तुतदावालिनाऽभिद्रुतोह्यहं. २० च. ज. ञ. द्रुतोह्यहं. २१ ङ. च. ज. ञ. द्रुमसेवितां. क.—घ. छ. झ. ट. द्रुमशोभितां.

द्रुमशैलांस्ततः पश्यन्भूयो दक्षिणतोऽपरान् ॥ पश्चिमां तु दिशं प्राप्तो वालिना समभिद्रुतः ॥
संपश्यन्विविधान्देशानस्तं च गिरिसत्तमम् ॥ १८ ॥
प्राप्य चास्तं गिरिश्रेष्ठमुत्तरां संप्रधावितः ॥ हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् ॥ १९ ॥
यदा न विन्दं शरणं वालिना समभिद्रुतः ॥ तदा मां बुद्धिसंपन्नो हनुमान्वाक्यमब्रवीत् ॥ २० ॥
इदानीं मे स्मृतं राजन्यथा वाली हरीश्वरः ॥ मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रममण्डले ॥ २१ ॥
प्रविशेद्यदि वै वाली मूर्धाऽस्य शतधा भवेत् ॥ तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति ॥२२॥
ततः पर्वतमासाद्य ऋश्यमूकं नृपात्मज ॥ न विवेश तदा वाली मतङ्गस्य भयात्तदा ॥ २३ ॥
एवं मया तदा राजन्प्रत्यक्षमुपलक्षितम् ॥ पृथिवीमण्डलं कृत्स्नं गुहामस्यागतस्ततः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

तत्रतत्रगवेषणेपि सीतामदृष्टवद्भिर्विनतादिभिर्मासादर्वागेवसरामंसुग्रीवमेत्यसाभिवादनंसीतायाअदर्शननिवेदनपूर्वकमनेकहेतूक्त्या सीतादर्शनस्य हनुमदेकसाध्यत्वोक्तिः ॥ १ ॥

दर्शनार्थं तु वैदेह्याः सर्वतः कपियूथपाः ॥ व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १ ॥
सरांसि सरितः कक्षानाकाशं नगराणि च ॥ नदीदुर्गांस्तथा शैलान्विचिन्वन्ति समन्ततः ॥ २ ॥

न्धाया दक्षिणतोपि विन्ध्यपर्वतशेषोस्तीति गम्यते ॥ १६—१८ ॥ हिमवन्तमिति ॥ अपश्यमिति शेषः ॥ १९ ॥ शरणं रक्षणं । न विन्दं नाविन्दं ॥ २० ॥ राजन् अस्मिन्नाश्रममण्डले वाली प्रविशेद्यदि तदास्य मूर्धा शतधा भवेदिति मतङ्गेन पुरा हरीश्वरो यथाभिशप्तः तथा इदानीं मे स्मृतमिति योजना । निरुद्विग्नः निर्भयः । भावे निष्ठा । इति हनुमान् वाक्यमब्रवीदिति संबन्धः ॥ २१—२२ ॥ आसाद्य स्थितोहमिति शेषः॥२३—२४॥ अस्य ऋश्यमूकस्य । गुहां सीताभरणस्थानभूतां ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्चत्वारिंशः सर्गः॥४६॥

अथ दक्षिणेतरदिग्गतवानरागमनं सप्तचत्वारिंशे—दर्शनार्थं त्वित्यादि ॥ यथोक्तं देशं ॥ १ ॥ तदेव विवृणोति—सरांसीत्यादिना ॥ कक्षान् गुल्मान् । लतागृहानित्यर्थः । आकाशं वृक्षगुल्मादिरहितप्रदेशं ।

ति० द्रुमान्तरे शैलान्तरेच तद्व्यवहितंवालिनंपश्यन् अपरां पश्चिमांदिशं । समभिद्रुतइतिशेषः ॥ १८ ॥ ती० संपश्यन्नित्यनुषज्यते । हिमवन्तंचमेरुंचउत्तरसमुद्रंचसंपश्यन् उत्तरांदिशंसंप्रधावितइतिसंबन्धः । हिमवन्तंसंपश्यन्नित्यभिधानात्पश्चिमदेशोपिहिमवत्पर्यन्तंपुनरावृत्योत्तरांदिशंप्रधावितइत्यवगम्यते ॥ १९ ॥ ति० नविन्दे नलभे ॥ २० ॥ स० सुखमस्यास्तीतिसुखः " त्रिषुद्रव्येपापपुण्यसुखादिच " इत्यमरस्याप्ययमेवभावोविभावनीयः ॥ २२ ॥ स० मतङ्गस्यभयात् । षष्ठीअपादानत्वाविवक्षणात् । ततः पृथिवीभ्रमणात् ॥ २३ ॥ स० तदा गुहां ऋश्यमूकस्यगुहां । अतश्चतदेतिनपुनरुक्तं ॥ २४ ॥ इतिषट्चत्वारिंशःसर्गः ॥ ४६ ॥

[ पा० ] १ ङ.—ट. द्रुमशैलान्तरेपश्यन्. २ ङ.—ट. दक्षिणतोपरां. ३ छ. झ. ञ. ट. अपरांच. क.—घ. च. ज. पश्चिमांच. ४ ख. वालिनाऽभिद्रुतोभृशं. ५ ग. छ. झ. ट. सपश्यन्. ६ च. ज. ञ. प्राप्तश्चास्तं. ७ ख. छ. झ. ञ. ट. विन्दे. ८ क. ख. घ.—ट. ततो. ९ च. ज. यतो. १० ख. अत्र. ११ ङ.—ज. ञ. ट. सर्वं. ग. कृत्स्नंयथाह्यादर्शमण्डलं. १२ ख. स्तदा. १३ ङ.—ट. कपिकुञ्जराः. १४ क. ङ.—ट. तेसरांसिसरितकक्षान्. ख. ग. सरांसिसरितोवृक्षान्. १५ घ. कक्षान्ग्रामांश्च. १६ छ. झ. ट. देशान्. १७ ख. घ. ततस्ततः.

सुग्रीवेण [१]समाख्याताः सर्वे [२]वानरयूथपाः ॥ [३]प्रदेशान्प्रविचिन्वन्ति सशैलवनकाननान् ॥ ३ ॥
विचित्य दिवसं सर्वे सीताधिगमने धृताः ॥ समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥ ४ ॥
[४]सर्वर्तुकामान्देशेषु वानराः [५]सफलान्द्रुमान् ॥ आसाद्य रजनीं शय्यां चक्रुः सर्वेष्वहस्सु ते ॥ ५ ॥
तदहः प्रथमं कृत्वा मासे [६]प्रस्रवणं गताः ॥ कपिराजेन संगम्य निराशाः [७]कपियूथपाः ॥ ६ ॥
[८]विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ॥ अदृष्ट्वा विनतः सीतामाजगाम [९]महाबलः ॥ ७ ॥
[१०]उत्तरां च दिशं [११]सर्वां विचि[१२]त्य स महाकपिः ॥ आगतः सह सैन्येन वीरः शतबलिस्तदा ॥ ८ ॥
सुषेणः पश्चिमामाशां विचित्य सह वानरैः ॥ समेत्य मासे [१३]संपूर्णे सुग्रीवमुपचक्रमे ॥ ९ ॥
तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च ॥ आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १० ॥
विचिताः पर्वताः सर्वे वनानि [१४]गहनानि च ॥ निम्नगाः [१५]सागरान्ताश्च सर्वे [१६]जनपदाश्च ये ॥ ११ ॥
गुहाश्च विचि[१७]ताः सर्वास्त्वया याः परिकीर्तिताः ॥ विचिताश्च महागुल्मा लताविततसंतताः ॥ १२ ॥
गहनेषु च देशेषु दुर्गेषु विषमेषु च ॥ सत्त्वान्यतिप्रमाणानि विचितानि हतानि च ॥ १३ ॥
[[१८]ये चैव गहना देशा विचितास्ते पुनःपुनः ॥ ]
उदारसत्त्वाभिजनो [१९]महात्मा स मैथिलीं द्रक्ष्यति वानरेन्द्रः ॥

नदीदुर्गान् नदीभिर्दुर्गमान् ॥ २—३ ॥ धृताः तत्पराः ॥ ४ ॥ विचित्येतिश्लोकोक्तं विवृणोति—सर्वेति ॥ सर्वर्तुकामान् काम्यन्त इति कामाः पुष्पफलादयः । सर्वर्तुसंभवफलपुष्पादियुक्तानित्यर्थः । सफलान् वानरैरुपभुज्यमानत्वेन सफलान् । द्रुमानासाद्य । सर्वेष्वहस्सु एकमासान्तर्गतसर्वदिनेषु । रजनीं रजन्यामेव । शय्यां चक्रुः । अनेनाहारविश्रमादिकमहस्सु नास्तीत्यवगम्यते ॥ ५ ॥ तदहः प्रस्थानदिनं । प्रथमं कृत्वा तदारभ्य मासे पूर्णे सति । निराशाः सीतान्वेषणे निरुत्साहाः सन्तः । कपिराजेन संगम्य तस्मै स्वागमनं निवेद्येत्यर्थः । प्रस्रवणं माल्यवन्तं । गताः ॥ ६ ॥ एवं सामान्येन वानरागमनमुक्त्वा प्रत्येकं च दर्शयति—विचित्येत्यादिना । सचिवैः सहायभूतैः ॥ ७—८ ॥ उपचक्रमे उपागतः ॥ ९ ॥ प्रस्रवणपृष्ठस्थं प्रस्रवणाग्रस्थं । रामेण सहासीनं । रामेण सहितमित्यर्थः ॥ १० ॥ वनानि क्षुद्रवनानि । गहनानि महावनानि । सागरान्ताः समुद्रतीराणि ॥ ११ ॥ लताविततसंतताः लताभिर्वितताः व्याप्ताः संतताः निरन्तरा इति महागुल्मविशेषणं ॥ १२ ॥ गहनेषु दुष्प्रवेशेषु । नाना द्वीपेष्वित्यर्थः । दुर्गेषु दुःखेनगन्तव्येषु । निम्नोन्नतेष्वित्यर्थः । अतिप्रमाणानि अतिमात्रशरीराणि । विचितानि । किमयं रावणः उत नेतीति भावः ॥ १३ ॥ उदारसत्त्वः श्रेष्ठसत्त्वोऽभिजनो वंशो यस्य स उदारसत्त्वाभिजनः । महाबलवतः पुत्र इति सीतादर्शने

**शि०** सर्वेवानराः दिवसंविचित्य पृथक्पृथग्गत्वाअन्वीक्ष्य । निशाकालेषुमेदिन्यां सर्वसंमतिविषयीभूतभूमौ । समायान्ति सङ्घीभूयप्राप्नुवन्ति ॥ ४ ॥ **ती०** तेवानराःसर्वेष्वहस्सु दिवसेषु । सीतांविचित्य सर्वर्तुकान् सार्वकालिकपुष्पफलयुक्तान् । सफलान् तत्तत्कालीनफलयुक्तांश्चद्रुमानासाद्य फलादिभक्षणार्थं ॥ **ति०** सर्वर्तुकान् नित्यसंनिहितसर्वर्तुयुक्तान् । तादृशवृक्षवत्त्वंच देशस्यरामप्रसादात् ॥ ५ ॥ **स०** महाबलइत्यनेन विनतगतदिशिनसीतास्तीतिसूचयति ॥ ७ ॥ **शि०** विविच्य विचित्य ॥ ८ ॥ **ति०** सागरान्ताः सागरमध्यवर्तिद्वीपाः ॥ ११ ॥ **ति०** लतावितततैः लताप्रतानैः । संतताः समन्ताद्व्याप्ताः । तादृशामहागुल्माः लतागृहविशेषाः ॥ १२ ॥ **शि०** सत्वानि अन्वेषणप्रतिबन्धकीभूतप्राणिजातानि । हतानिविचितानिच ॥ १३ ॥ **स०** यांदिशं

**[ पा० ]** १ क. ख. घ. समाख्यातान्. २ क. ख. घ. वानरपुङ्गवाः. ३ क. च. छ. ज. ञ. ट. तत्रदेशान्विचिन्वन्ति. ४ ख.—ट. सर्वर्तुकांश्चदेशेषु. ५ ख. ग. छ.—ट. सफलद्रुमान्. ६ ख. प्रस्रवणाचले. ७ ङ. च. ज. ञ. ट. कपिकुञ्जराः. ८ घ. विचित्यच. ९ घ. महाकपिः. १० ङ.—ट. दिशमप्युत्तरां. ख. उत्तरांतु. ११ क. ग. सीतां. १२ च.—झ. ट. विविच्य. १३ ङ. च. ज.—ट. पूर्णेतु. १४ ग. नगराणिच. १५ क. ग. सागराश्चैव. १६ ख. ग. जनपदास्तथा. १७ घ. विविधाः सर्वाःसशैलवनकाननाः. ग. ङ.—ट. विचितास्सर्वायाश्चतेपरिकीर्तिताः. क. विचितास्सर्वाःसशैलवनकाननाः. १८ इदमर्धं क.—ट. पाठेषुदृश्यते. १९ च.—ट. हनूमान्समैथिलींज्ञास्यति.

दिशं तु यामेव गता तु सीता तामास्थितो वायुसुतो हनूमान् ॥ १४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

हनुमता ताराङ्गदादिभिस्सह विन्ध्यगुहागहनादिषुतत्रतत्रसीतान्वेषणम् ॥ १ ॥ पुत्रनिधनपरिखिन्नकण्डुमुनिशापेन निर्जले निष्फलपुष्पादिवृक्षकेचक्कचन विजनदेशे पर्यटनपरिखिन्नैर्वानरैस्तत्र कस्यचिन्महाराक्षसस्यावलोकनम् ॥ २ ॥ अङ्गदेन मुष्ट्युद्यमनपूर्वकं वानरान्प्रति साटोपमभ्यापततस्तस्य रावणबुद्ध्या तलघातेन हननम् ॥ ३ ॥ ततोगिरिगुहादिषुगवेषणेन परिश्रान्तैस्सर्वैर्वानरैः किंचिद्वृक्षमूलसमाश्रयणम् ॥ ४ ॥

सह ताराङ्गदाभ्यां तु गत्वा स हनुमान्कपिः ॥ सुग्रीवेण यथोद्दिष्टं तं देशमुपचक्रमे ॥ १ ॥
स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः ॥ विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥
पर्वताग्रान्नदीदुर्गान्सरांसि विपुलान्द्रुमान् ॥ वृक्षषण्डांश्च विविधान्पर्वतान्घनपादपान् ॥ ३ ॥
अन्वेषमाणास्ते सर्वे वानराः सर्वतोदिशम् ॥ न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥ ४ ॥
ते भक्षयन्तो मूलानि फलानि विविधानि च ॥ अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्रतत्र ह ॥
स तु देशो दुरन्वेषो गुहागहनवान्महान् ॥ ५ ॥
निर्जलं निर्जनं शून्यं गहनं रोमहर्षणम् ॥ त्यक्त्वा तु तं तदा देशं सर्वे वै हरियूथपाः ॥ ६ ॥
तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः ॥ देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ॥ ७ ॥
यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः ॥ निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् ॥ ८ ॥

---

प्रथमो हेतुः । महात्मा महाधैर्य इति द्वितीयः । दिशंत्वित्यादिना तृतीयो हेतुः । इत्यब्रुवन्वानरा इति पूर्वेणान्वयः ॥१४॥ अस्मिन्सर्गे चतुर्दश श्लोकाः ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तचत्वारिंशःसर्गः॥४७॥

अथ सीतान्वेषणाय दक्षिणां दिशं गतानामसुरनिरसनपर्यन्तोवृत्तान्तोष्टचत्वारिंशे—सह ताराङ्गदाभ्यामित्यादि ॥ १—२ ॥ पर्वताग्रान् विन्ध्याग्रप्रदेशान् । पर्वतान् पर्यन्तपर्वतान् ॥ ३—७ ॥ वन्ध्यफलाः

---

गतासीतेत्यनेन मनःपूर्वरक्षःक्षयायैवगता नतुस्वासामर्थ्येननीतेतिध्वनयति । अन्यथा नीतेत्यवक्ष्यत् ॥ १४ ॥ इतिसप्तचत्वारिंशः सर्गः ॥ ४७ ॥

**ती०** पर्वतान् विन्ध्यस्यप्रत्यन्तपर्वतान् गोमन्तत्र्यंबकादीन् । घनपादपानितिसर्वत्रविशेषणं । **स०** पर्वताग्रनदीदुर्गान् पर्वताग्रस्थिताश्चतानद्यश्च ताभिर्दुर्गान् दुस्साध्यगमनान्स्थलविशेषान् । विपुलद्रुमान् । दुर्गविशेषणमेतत् । वृक्षषण्डानिति सकीचकैर्न्यायेनबोध्यं । घनाः मेघाः पादपेषुवृक्षेषुयेषु । एतेन मेघमण्डलपर्यन्तमौन्नत्यंपर्वतानांद्योत्यते ॥ ३ ॥ **ति०** भृशपीडिताः निर्जलारण्यान्वेषणेनक्षुत्पिपासाभ्यांपीडिताः । सदेशः निर्जलादिदेशःयद्यपिदुरन्वेष्यः अथापितंविचित्यततस्तंदेशंत्यक्त्वाऽन्यदेशंविविशुरित्यग्रिमेणान्वयः ॥ ६—७ ॥ **स०** वन्ध्यानि पुरोङ्कुरप्ररोहाहेतवः फलानियेषांते । वन्ध्यानि नीरसानिफलानियेषामितिवा ।

**[ पा० ]** १ क. घ. गताहि. २ ख. घ. तांप्रस्थितो. ३ ख. घ. सगत्वा. क. संगम्य. ङ.—ट. सहसा. ४ क. ख. ग. तंप्रदेशंप्रचक्रमे. ङ.—ट. गन्तुंदेशंप्रचक्रमे. घ. तंतंदेशंप्रचक्रमे. ५ ङ.—ट. ततोविचित्यविन्ध्यस्य. ६ ग. विपिनानिच. ७ ङ. च. छ. झ. ञ. ट. पर्वताग्रनदी. ८ क. ङ.—ट. विपुलद्रुमान्. ग. विपुलानिच. ९ क. ग. ङ. झ. ञ. ट. न्वनपादपान्. १० ख. अवेक्षमाणास्ते. ११ ख. ददृशुस्सर्वे. १२ ङ.—झ. ट. विविधान्यपि. १३ इदमर्धं क. ग. ङ.—ञ. पाठेषुनदृश्यते. १४ क. निवसन्तस्ततस्ततः. १५ ङ. च. ज. तत्रतु. ट. तत्रहि. १६ सतुदेशोदुरन्वेषो. निर्जलंनिर्जनं. त्यक्त्वातुतंतदा. तादृशान्यप्यरण्यानि. इत्यर्धचतुष्टयं क. ग. ङ.—ञ. पाठेषु. निर्जलंनिर्जनं. तादृशान्यप्यरण्यानि. सदेशश्चदुरन्वेषो. त्यक्त्वातुतंततो. इतिक्रमभेदेनदृश्यते. ङ. झ. ञ. सदेशश्चदुरन्वेष्यो. १७ ग. ङ.—ञ. घोरदर्शनं. १८ ग. झ. ञ. ट. ततो. क. तथा.

न सन्ति महिषा यत्र न मृगा न च हस्तिनः ॥ शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः ॥
न यत्र वृक्षा नौषध्यो न [1]लता नापि वीरुधः ॥ ९ ॥
स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः ॥ प्रेक्षणीयाः सुगन्धाश्च [2]भ्रमरैश्चापि वर्जिताः ॥१०॥
कण्डुर्नाममहाभागः सत्यवादी तपोधनः ॥ महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ ११ ॥
तस्य तस्मिन्वने पुत्रो [3]बालः षोडशवार्षिकः ॥ प्रनष्टो जीवितान्ताय [4]क्रुद्धस्तत्र महामुनिः ॥ १२ ॥
तेन धर्मात्मना शप्तं कृत्स्नं तत्र [5]महद्वनम् ॥ अशरण्यं दुराधर्षं [6]मृगपक्षिविवर्जितम् ॥ १३ ॥
तस्य ते [7]काननान्तांश्च गिरीणां कन्दराणि च ॥ [8]प्रभवानि नदीनां च विचिन्वन्ति समाहिताः ॥१४॥
तत्र चापि महात्मानो नापश्यञ्जनकात्मजाम् ॥ हर्तारं रावणं [9]वापि सुग्रीवप्रियकारिणः ॥ १५ ॥
ते [10]प्रविश्याशु तं भीमं लतागुल्मसमावृतम् ॥ [11]ददृशुः क्रूरकर्माण[12]मसुरं [13]सुरनिर्भयम् ॥ १६ ॥
तं दृष्ट्वा वानरा [14]घोरं स्थितं शैल[15]मिवापरम् ॥ गाढं परिहिताः सर्वे दृष्ट्वा तं पर्वतोपमम् ॥ १७ ॥
सोपि [16]तान्वानरान्सर्वान्नष्टाः स्थेत्यब्रवीद्बली ॥ अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य [17]संहितम् ॥ १८ ॥
तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ॥ रावणोयमिति ज्ञात्वा तलेनाभिजघान ह ॥ १९ ॥
स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् ॥ [18]असुरोऽभ्यपतद्भूमौ पर्यस्त इव पर्वतः ॥ २० ॥
[19]तेपि तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः ॥ [20]व्यचिन्वन्प्रायशस्तत्र सर्वं [21]तद्गिरिगह्वरम् ॥२१॥

फलैर्वन्ध्याः । निष्फला इत्यर्थः ॥ ८—९ ॥ स्निग्धपत्रा इत्यादि । अत्रापि न सन्तीत्यनुषज्यत इति केचित् । तन्न । भ्रमरैश्चापि वर्जिता इत्यस्यानन्वयात् । किंतु भ्रमरैरप्यनुपभुक्तं स्थलपद्मिनीमात्रमित्यर्थः । सर्वेपि महातटाकाः स्थलपद्मिनीत्वंगता इतिभावः । अन्यं देशं विविशुरिति पूर्वेणान्वयः ॥ १० ॥ देशस्य तादृशत्वे निमित्तमृषिरित्याह—कण्डुरित्यादिना॥११॥ तत्र वने विषये । जीवितान्ताय तस्य नाशाय कुपितः ॥ १२ ॥ अशरण्यं अनाश्रयं । अभवदिति शेषः ॥ १३ ॥ नदीनां प्रभवानि गिरिगणमध्यप्रदेशाः ॥ १४—१५ ॥ सुरनिर्भयं सुरेभ्यो निर्भयं ॥ १६ ॥ गाढं परिहिताः दृढं परिहितवसनाः । अभवन् ॥ १७ ॥ संहितं दृढमित्यर्थः ॥ १८—१९ ॥ पर्यस्तः पातितः ॥ २० ॥ तस्मिन् असुरे । निरुच्छ्वासे मृत इत्यर्थः । तस्मिन्नसुरे रावणभ्रान्त्या तत्समीपवने

अथवा वन्ध्यानांफलमिवफलंयेषांते । अनुत्पन्नफलाइतियावत् ॥८॥ **स०** वनगोचराः वनविषयाः । यद्वा वनगौः वनभूमिः तत्रचरन्तीतितथा । **स०** वल्ल्यः वृक्षालिङ्गिताः । वीरुधः स्थललताः ॥९॥ **स०** शापानन्तरमित्यत्र शापात्पूर्वमित्युत्तरत्र स्निग्धपत्राइत्यादौ चशेषोज्ञेयः । नेत्यनुकर्षकृत्वाव्याख्यानं पद्मिनीमहत्त्वकथनाननुगुणमित्यनादरणीयं । भ्रमरैश्च विवर्जिताः वर्जितविरुद्धाः विवर्जिताः अत्यक्ताइत्यर्थः । अथवागतैः एकप्रसूनरसपानतुन्दिलैरिन्दिन्दिरैर्विवर्जिताः सुगन्धाः सुगन्धयःसुगन्धाः सुगन्धद्रव्याणि । पृथग्विशेष्यं । अतो "गन्धस्येत्—" इतीत्वंकथंनेतिशङ्कानवकाशः ॥ १० ॥ **ति०** यत्रस्थले नेत्यनुकर्षः । भ्रमरैश्चविवर्जिताः विगतंवर्जितंयासुताः संयुक्ताइत्यर्थः । तादृशाःफुल्लपङ्कजाश्चयत्रनसन्ति । यत्रवनेकण्डुर्नाममहर्षिरासीत् ॥ ११ ॥ **शि०** जीवितान्ताय वनप्रध्वंसाय ॥ १२ ॥ **ती०** नदीशब्देननिस्तोयनदीप्रदेशाउच्यन्ते । "निस्तोयाःसरितोयत्र" इतिपूर्वमभिधानात् ॥ **विषम०** प्रभूतानि उत्पत्तिस्थानानि ॥ १४ ॥ **स०** सुरनिर्भयं निर्गताभीर्यस्यसतथा । सुरेभ्योनिर्भयःसुरनिर्भयस्तं । सुनिर्भयमितिपाठः स्फुटार्थः । नकेवलंकर्मणासुरप्रायत्वादसुरोऽयं । अपितुपितुरपितज्जातित्वमित्याह—**आसुरमिति** । असुरस्यायमासुरः "तस्येदं"

**[ पा० ]** १ क.—ट. वल्ल्यो. २ क. ख. ग. ङ.—ट. भ्रमरैश्चविवर्जिताः. ३ क.—ट. बालकोदशवार्षिकः. ४ छ. झ. ट. क्रुद्धस्तेन. ५ ग. महावनं. ६ ग. कृत्स्नंपक्षि. ७ ज. काननेतांतु. ख. काननंतत्तु. छ. झ. ञ. ट. काननान्तांस्तु. ८ च. ज. ञ. प्रभूतानि. ९ ङ. च. ज. ञ. ट. चापि. १० ख. ङ.—ट. प्रविश्यतु. ११ ङ.—ट. ददृशुर्भीमकर्माणं. १२ ठ. मासुरं. १३ क. ख. सुरमर्दनं. १४ क. घोराः. १५ ङ.—ट. मिवासुरं. १६ क. ख. मारीचतनयोनष्टाः. ग. तान्वानरान्दृष्ट्वातिष्ठतेत्यब्रवीत्. १७ ख. संस्थितान्. क. दक्षिणं. छ. झ. ट. संगतं. १८ क. ग.—झ. ट. असुरोन्यपतत्. १९ क. ख. ग. ङ.—ट. तेतु. २० ख. व्यचिन्वन्बहुशः. ग. विचित्यप्रायशः. २१ ज.—ट. तेगिरिगह्वरं.

विचितं तु ततः [1]कृत्वा सर्वे ते [2]काननं पुनः ॥ अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् ॥ २२ ॥
ते विचित्य पुनः खिन्ना विनिष्पत्य [3]समागताः ॥ एकान्ते [4]वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ॥ ४९ ॥

अङ्गदेन परिश्रान्तान्वानरान्प्रति सुग्रीवस्यचण्डशासनताया अन्वेषणकालातिपातस्यच निवेदनेननिद्रातन्द्रादिवर्जंयथाशक्तिपुनरन्वेषणयत्नस्य साफल्यसंभावनोक्तिः ॥ १ ॥ गन्धमादनेन तदनुमोदनपूर्वकं तद्वचनस्यहितत्वोक्तौ सर्वैःपुनरुत्थानेन रजतगिरिगुहादिषुगवेषणम् ॥ २ ॥ पुनःसीतायाअदर्शनेन पिपासादिनाच परिश्रान्तैःसर्वैर्वृक्षमूलेकिंचिद्विश्रमपूर्वकं पुनरन्वेषणायप्रस्थानम् ॥ ३ ॥

अथाङ्गदस्तदा सर्वान्वानरानिदमब्रवीत् ॥ [5]परिश्रान्तो महाप्राज्ञः [6]समाश्वस्य शनैर्वचः ॥ १ ॥
वनानि गिरयो नद्यो दुर्गाणि गहनानि च ॥ [7]दर्यो गिरिगुहाश्चैव विचितानि समन्ततः ॥ २ ॥
तत्रतत्र सहास्माभिर्जानकी न च दृश्यते ॥ [8]तद्वा रक्षो हृता येन सीता सुरसुतोपमा ॥ ३ ॥
[9]कालश्च वो महान्यातः सुग्रीवश्चोग्रशासनः ॥ तस्माद्भवन्तः [10]संहिता विचिन्वन्तु समन्ततः ॥ ४ ॥
विहाय तन्द्रीं शोकं च [11]निद्रां चैव समुत्थिताम् ॥ विचिनुध्वं [12]यथा सीतां पश्यामो जनकात्मजाम् ॥ ५ ॥
अनिर्वेदं च दाक्ष्यं च [13]मनसश्चापराजयः ॥ कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥
[14]अद्यापि तद्वनं दुर्गं विचिन्वन्तु वनौकसः ॥ खेदं त्यक्त्वा पुनः [15]सर्वैर्वनमेतद्विचीयताम् ॥ ७ ॥
अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम् ॥ [16]अलं निर्वेदमागम्य नहि [17]नो मीलनं क्षमम् ॥ ८ ॥
सुग्रीवः [18]कोपनो राजा तीक्ष्णदण्डश्च [19]वानरः ॥ भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९ ॥

---

चिरमन्वेषितवन्त इति बोध्यं ॥ २१ ॥ अपरं अदूरं । "परं दूरान्यमुख्येषु" इति वैजयन्ती । गिरिगह्वरं गिरिमध्यप्रदेशं ॥ २२ ॥ विनिष्पत्य विनिर्गत्य । समागताः संघीभूताः ॥२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥४८॥

अथ पुनः प्रदेशान्तरान्वेषणमेकोनपञ्चाशे—अथाङ्गद इत्यादि ॥ १—२ ॥ सह युगपत् ॥३—५॥ दाक्ष्यं उत्साहः । " दक्ष उत्साहे " इत्युक्तेः । मनसश्चापराजयः धैर्यमित्यर्थः ॥ ६ ॥ वनमेतत् । विचीयतां अन्विष्यतां ॥७ ॥ मीलनं नेत्रमीलनं । कर्तव्यमकृत्वा

---

इत्यर्थ् ॥ १६ ॥ स० अपरं अनुत्तमं समीपवर्तिवा ॥ २२ ॥ इत्यष्टचत्वारिंशःसर्गः ॥ ४८ ॥

ति० रक्षः तद्रूपोपहर्तेत्याद्यर्थः ॥ स० रक्षस्सुराक्षसेषुतन्मध्यइतियावत् । अपहर्ताकश्चिद्राक्षसः । यद्वा रक्षः राक्षसः । अपहर्ता अन्यःकोपि । अत्रच अपहर्त्रीतिविपरिणतमन्वेति । तथैवदुष्कृतिश्चेति ॥ ३ ॥ ति० अनिर्वेदं अखेदं ॥ दाक्ष्यं सामर्थ्यं । अपराजयं कार्यापराङ्मुखत्वं ॥ स० अनिर्वेदं अभिसंधित्सितकार्यसाधनानौदासीन्यं ॥ ६ ॥ रामानु० विचयप्रकारमेवाह—**खेदमिति** । विचिन्वतामिति चिनोतेर्लोटिप्रथमपुरुषबहुवचनेरूपं । विचीयतामितिपाठे युष्माभिरितिशेषः ॥ स० पार्श्वद्वयस्थितान्कपीन्पृथक्पृथगन्वशासदित्याह—**अद्यापीति** । हेवनौकसोभवन्तः वनंसर्वमेवविचिन्वन्तु । पुनः। तदितरेभवन्तोपिसर्वमेववनंविचिन्वतां। "पुनरप्रथमेव्यावृत्तौ" इत्यभिधानात् ॥ शि० विचिन्वतां अन्वेषणसाधकानांकरचरणादीनां । खेदं श्रमं । त्यक्त्वा-विस्मृत्य । अद्यापीदंवनंविचिन्वन्तु ॥७॥ ति० नोन्मीलनं अनुन्मीलनं अनुद्योगइतियावत् ॥८॥ इत्येकोनपञ्चाशः सर्गः ॥४९॥

[पा०] १ क. च.—ट. सर्वं. २ ङ.—ट. काननौकसः. ३ ख. घ. समाहिताः. ४ ख. ग. ङ.—ज. ञ. वृक्षमूलेषु. ५ ङ. च. ज. ञ. परिश्रान्तान्महाप्राज्ञान्. ६ क. ख. घ.—ट. समाश्वास्य. ग. समाश्वास्यचसर्वशः. ७ क. ख. ग. ङ.—ट. दरीगिरिगुहाः. ८ छ. झ. ट. ठ. तथारक्षोपहर्ताचसीतायाश्चैवदुष्कृती. ङ. ञ. तत्ररक्षो. ९ क. ख. ग. ङ.—ट. कालश्चनो. १० क. सहसा. ११ क. निद्रांचसमुपस्थितां. १२ च.—ट. तथा. १३ ग.—ट. मनसश्चापराजयं. क. मानसंचापराजितं. १४ क. ख. घ. च.—ट. अद्यापीदंवनं. ग. अद्यान्यद्वनं. १५ ख. घ.—ट. सर्ववनमेवविचिन्वतां. क. ग. सर्ववनमेतद्विचिन्वतां. १६ छ. झ. ट. परंनिर्वेदं. १७ ख. घ. च.—ट. नोन्मीलनं. १८ क. ङ.—ट. क्रोधनो. १९ क. ख. घ. छ. ज. झ. वानराः.

हि[1]तार्थमेतदुक्तं वः क्रियतां यदि रोचते ॥ [2]उच्यतां वा क्षमं यन्नः सर्वेषामेव वानराः ॥ १० ॥
अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः ॥ [3]उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११ ॥
सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह ॥ हितं चै[4]वानुकूलं च क्रियतामस्य भाषितम् ॥ १२ ॥
पुनर्मार्गामहै शैलान्कन्दरांश्च [5]दरींस्तथा ॥ काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३ ॥
यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ॥ विचिन्वन्तु [6]वनं सर्वे गिरिदुर्गाणि [7]सर्वशः ॥ १४ ॥
ततः समुत्थाय पुनर्वानरास्ते महाबलाः ॥ विन्ध्यकानन[8]संकीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५ ॥
ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् ॥ शृङ्गवन्तं दरीमन्तमधिरुह्य च वानराः ॥ १६ ॥
तत्र [9]कोद्रवनं रम्यं सप्तपर्णवनानि च ॥ [10]व्यचिन्वंस्ते हरिवराः सीतादर्शनकाङ्क्षिणः ॥ १७ ॥
तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः ॥ न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥१८॥
ते तु दृष्टिगतं [11]कृत्वा तं शैलं बहुकन्दरम् ॥ [12]अवारोहन्त हरयो वी[13]क्षमाणाः समन्ततः ॥ १९ ॥
अवरुह्य ततो भूमिं [14]श्रान्ता विगतचेतसः ॥ [15]स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २० ॥
ते मुहूर्तं [16]समाश्वस्ताः [17]किंचिद्भग्नपरिश्रमाः ॥ पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥२१॥
हनुमत्[18]प्रमुखास्ते तु प्रस्थिताः प्लवगर्षभाः ॥ विन्ध्यमे[19]वादितस्तावद्विचेरु[20]स्ते ततस्ततः ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ॥ ५० ॥

विन्ध्यगुहादीनांदुरन्वेषतया तत्रान्वेषणेसत्येव सुग्रीवसंकेतितसमयातिपाते क्षुत्पिपासार्दितैर्हनुमदादिभिः ऋक्षबिलाख्यस्यकस्यचिन्महाबिलस्यावलोकनम् ॥ १ ॥ बिलद्वारे आर्द्रपक्षनानापक्षिदर्शनाज्जलानुमानेन तद्बिलस्यगाढान्धकारावृतत्वेनदुष्प्रवेशतयाऽन्योन्यहस्तावलंबनेन तत्प्रवेशः ॥ २ ॥ तथा योजनपरिमितदेशातिक्रमे काञ्चनमयवृक्षादिभासाविद्योतमानेऽद्भुतदेशे कस्याश्चिन्महातपस्विन्या अवलोकनम् ॥ ३ ॥ हनुमता साभिवादनं तांप्रति तादृशदेशस्यतस्याश्चयाथातथ्यविवित्सयाप्रश्नः ॥ ४ ॥

सह ताराङ्गदाभ्यां तु संगम्य हनुमान्कपिः ॥ विचिनोति स विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥
सिंहशार्दूल[21]जुष्टेषु [22]शिलाश्च सरितस्तथा ॥ विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २ ॥
आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् ॥ तेषां तत्रैव वसतां स [23]कालो व्यत्यवर्तत ॥ ३ ॥

---

तूष्णींभाव इत्यर्थः ॥ ८—१२ ॥ कन्दरान् भेदान् ॥ १३ ॥ विचिन्वन्तु वनं सर्व इति । भवन्त इति शेषः ॥ १४—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

अथ ऋक्षबिले स्वयंप्रभादर्शनं पञ्चाशे—सहेत्यादि ॥ १ ॥ नगेन्द्रस्य शार्दूलजुष्टेषु । विषमेषु विषमप्रदेशेषु । शिलाः । महाप्रस्रवणेषु सरितश्च विचिनोति स्मेति पूर्वेणान्वयः ॥ २ ॥ कलः सुग्रीवोक्तमासः । “ मासः पूर्णो बिलस्थानां ” इत्युत्तरत्राङ्गदवचनस्य

---

**स०** कोटिं अग्रभागं । “ कोटिःस्यादग्रमात्रेपि ” इतिकेशवः ॥ **शि०** दक्षिणपश्चिमां नैर्ऋत्यकोणस्थां । कोटिं शृङ्गं आसेदुः

**[ पा० ]** १ ग. यथार्थं. २ ग. च.—ट. उच्यतांहिक्षमंयत्तत्. ३ ख. ग. घ. छ. ज. झ. उवाचव्यक्तया. ४ ख. चैवानुरूपं. ५ छ. झ. ट. शिलास्तथा. ६ ट. वने. ७ छ. ज. ञ. ट. संगताः. ८ घ. संपूर्णां. ९ क.—ट. लोध्रवनं. १० ङ. छ.—ट. विचिन्वन्तो. क. ख. ग. विचिन्वन्तिस्महरयः. ११ ङ.—ज. ञ. ट. दृष्ट्वा. ग. गत्वा. १२ छ. झ. ट. अध्यारोहन्त. १३ ख. घ. वीक्षमाणास्ततस्ततः. १४ ङ—ञ. भ्रान्ताः. १५ ङ.—ज. ञ. ट. स्थितामुहूर्तं. १६ क. समायस्ताः. १७ क. किंचिद्गतपरिश्रमाः. १८ छ. झ. ञ. ट. त्प्रमुखास्तावत्. ख. त्प्रमुखास्तत्र. १९ ग. ङ.—ट. मेवादितःकृत्वा. २० ङ—ट. द्विचेरुश्चसमन्ततः. २१ ङ.—ट. जुष्टाश्च. २२ ङ. छ.—ट. गुहाश्चपरितस्तथा. च. गुहाश्चसरितस्तदा. २३ ग.—च. ज. कालोप्यत्यवर्तत.

स हि देशो दुरन्वेषो गुहागहनवान्महान् ॥ ४ ॥
तत्र वायुसुतः सर्वं विचिनोति स पर्वतम् ॥ परस्परेण हनुमानन्योन्यस्याविदूरतः ॥ ५ ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ मैन्दश्च द्विविदश्चैव सुषेणो जांबवान्नलः ॥ ६ ॥
अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् ॥
विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७ ॥
दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् ॥ क्षुत्पिपासापरीताश्च श्रान्ताश्च सलिलार्थिनः ॥
अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् ॥ ८ ॥
ततः क्रौञ्चाश्च हंसाश्च सारसाश्चापि निष्क्रमन् ॥ जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः ॥ ९ ॥
ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् ॥ विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः ॥ १० ॥
संजातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ॥ अभ्यपद्यन्नसंहृष्टास्तेजोवन्तो महाबलाः ॥ ११ ॥
नानासत्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ॥ दुर्दर्शमतिघोरं च दुर्विगाहं च सर्वशः ॥ १२ ॥
ततः पर्वतकूटाभो हनुमान्पवनात्मजः ॥ अब्रवीद्वानरान्सर्वान्कान्तारवनकोविदः ॥ १३ ॥
गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् ॥ वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् ॥१४॥
अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः ॥ जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वतः ॥१५॥
नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ॥ तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः ॥१६॥
इत्युक्त्वा तद्बिलं सर्वे विविशुस्तिमिरावृतम् ॥ अचन्द्रसूर्यं हरयो ददृशू रोमहर्षणम् ॥ १७ ॥

बिल एवान्यो मासो गत इत्यर्थो वक्ष्यते ॥ ३ ॥ ननु विचेतव्यप्रदेशेषु बहुषु विद्यमानेषु कथमत्रैव मासं क्षपितवन्त इत्याशङ्क्याह—स हीति ॥ ४ ॥ तत्रेति ॥ सङ्गमय्येत्यध्याहार्यं । वायुसुतः हनुमान् । अन्योन्यस्याविदूरतः परस्परेण संगमय्य सर्वं पर्वतं विचिनोति स्मेति संबन्धः ॥ ५ ॥ गज इत्यादि ॥ चकाराद्धनूमांश्च । गजादयः गिरिजालावृतान् देशान्मार्गित्वा ततो दक्षिणां दिशं विचिन्वन्तः तत्र विवृतं विस्तृतं । बिलं ददृशुरिति संबन्धः ॥ ६—७ ॥ दानवेन मयेन । ऋक्षबिलं नाम ऋक्षबिलमिति प्रसिद्धं । महाबिलं ददृशुरिति पुनरुक्तिर्गुणान्तरविधानाय ॥ ८ ॥ निष्क्रमन् निरक्रमन् ॥ ९ ॥ दुरतिक्रमं दुष्प्रवेशं ॥ १० ॥ संजातपरिशङ्काः किमिदं पातालं उतान्यन्मायामयमिति संदिहानाः । असंहृष्टाः सन्तः । अभ्यपद्यन् अभ्यपद्यन्त ॥ ११ ॥ नानेति श्लोको बिलविशेषणं ॥ १२ ॥ कान्तारे दुर्गमार्गे वने कोविदः समर्थः ॥ १३ ॥ गिरिजालावृतान् देशान् दक्षिणां दिशं । तादृशदेशरूपां दक्षिणां दिशमित्यर्थः ॥ १४—१५ ॥ नूनमिति । अस्तीति शेषः ॥ १६ ॥ इत्युक्त्वेति ॥ हनुमदुक्तप्रकारेण सर्वेप्युक्त्वा विविशुः । तिमिरावृतं ददृशुश्च । अचन्द्रसूर्यं चन्द्रसूर्यकिर-

तत्रैवश्वभ्रेवसतांतेषां सः अमार्गणीयः कालः रात्रिसमयः । अत्यवर्तत व्यतीतोऽभवत् ॥ ३ ॥ **ती०** दुर्गं दुर्गमं । दानवेन मयेनबिलस्यविशिष्टतांद्योतयितुंददृशुरितिपुनरभिधानं ॥ **स०** बिलंसामान्यंददृशुः । महाबिलं तदन्तरसुसाधगमनंचददृशुः । अतोनपुनरुक्तिः ॥ ८ ॥ **ति०** संजातपरिशङ्काः संजातजलसंभावनाः । अतएवसंहृष्टाः । **स०** तेजोवन्तः तेजस्विनः । "अस्मायावि—" इतिविन्यभावआर्षः । यद्वा तेजः स्वसामर्थ्यं अवन्तीतितेतथा । स्वशक्तिसंरक्षकाइत्यर्थः । विस्तरस्तुसुधागतयशोवतेतिटिप्पणीतोऽवसेयः ॥ ११ ॥ **स०** दैत्येन्द्रनिलयोपमं बलिनिलयतुल्यं ॥ १२ ॥

**[ पा० ]** १ ङ. छ. झ. ञ. ट. रहिताअन्योन्यस्या. २ ख.—च. ज. ञ. हनूमाञ्जांबवान्नलः. छ. झ. ट. हनूमाञ्जांबवानपि. क. हनूमान्पवनात्मजः. ३ ख. ग. ङ.—ट. परीतास्तु. ४ घ. ङ.—ट. श्रान्तास्तु. ५ ख. महद्बिलं. ६ ख. ग. ङ—ट. तत्र. ७ क. ख. ग. ङ.—ट. अभ्यपद्यन्तसंहृष्टाः. ८ ङ. च. ज. ञ. महासर्पसमाकीर्णं. ९ छ. झ. ट. दुर्दर्शमिव. १० क. ग. ङ.—ट. दुर्विगाह्यंच. ११ क. ग. ङ.—ट. न्मारुतात्मजः. १२ छ. ज. झ. ट. द्वानरान्घोरान्. १३ च. कोविदान. १४ ख. ग. ङ. च. ज. ञ. ट. चसर्वशः. क. छ. झ. स्ससर्वशः. १५ च. ञ. ट. बिलद्वारि.

निशाम्य तस्मात्सिंहांश्च [1]तांस्तांश्च मृगपक्षिणः ॥ प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम् ॥ १८ ॥
न तेषां [2]सज्जते [3]चक्षुर्न तेजो न पराक्रमः ॥ वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते ॥ १९ ॥
ते [4]प्रविष्टास्तु वेगेन तद्बिलं कपिकुञ्जराः ॥ [5]प्रकाशमभिरामं च ददृशुर्देशमुत्तमम् ॥ २० ॥
ततस्तस्मिन्बिले [6]दुर्गे नानापादपसंकुले ॥ अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् ॥ २१ ॥
ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ॥ परिपेतुर्बिले तस्मिन्कंचित्कालमतन्द्रिताः ॥ २२ ॥
ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ॥ आलोकं ददृशुर्वीरा निराशा जीविते [7]तदा ॥ २३ ॥
[8]ततस्तं देशमागम्य [9]सौम्यं वितिमिरं [10]वनम् ॥ ददृशुः [11]काञ्चनान्वृक्षान्दीप्त[12]वैश्वानरप्रभान् ॥ २४ ॥
सालां[13]स्तालांश्च पुन्नागान्ककुभान्[14]वञ्जुलान्धवान् ॥ चंपकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् ॥२५॥
स्तबकैः काञ्चनैश्चित्रै रक्तैः किसलयैस्तथा ॥ आपीडैश्च लताभिश्च [15]हेमाभरणभूषितान् ॥ २६ ॥
तरुणादित्यसंकाशान्[16]वैडूर्यकृतवेदिकान् ॥ विभ्राजमानान्वपुषा पादपांश्च हिरण्मयान् ॥ २७ ॥
नीलवैडूर्यवर्णाश्च पद्मिनीः [17]पतंगावृताः ॥ महद्भिः काञ्चनैः [18]पद्मैर्वृता बालार्कसन्निभैः ॥ २८ ॥
जातरूपमयैर्मत्स्यै[19]र्महद्भिश्च सकच्छपैः ॥ नलिनीस्तत्र ददृशुः प्रसन्न[20]सलिलावृताः ॥ २९ ॥
काञ्चनानि विमानानि राजतानि तथैव च ॥ तपनीयगवाक्षाणि मुक्ताजालावृतानि च ॥ ३० ॥
हैमराजतभौमानि वैडूर्यमणिमन्ति च ॥ ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः ॥ ३१ ॥
पुष्पितान्फलिनो वृक्षान्प्रवालमणिसन्निभान् ॥ काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः ॥ ३२ ॥
मणिकाञ्चनचित्राणि शयनान्यासनानि च ॥ [21]महार्हाणि च यानानि ददृशुस्ते समन्ततः ॥ ३३ ॥
हैमराजतकांस्यानां भाजनानां च [22]संचयान् ॥ अगरूणां च दिव्यानां चन्दनानां च संचयान् ॥३४॥

---

णरहितं ॥ १७ ॥ तस्मान्निर्गच्छतः सिंहान् तांस्तान् नानाप्रकारान् मृगपक्षिणश्च ॥ १८ ॥ वर्तते अयत्नपूर्वं प्रवर्तत इत्यर्थः ॥ १९ ॥ प्रकाशं निस्तमस्कं ॥ २० ॥ संग्रहेणोक्तं प्रपञ्चयति—ततस्तस्मिन्नित्यादिना ॥ अन्योन्यं संपरिष्वज्य अन्योन्यं हस्तावलंबनं कृत्वा ॥ २१ ॥ परिपेतुः जग्मुः । कंचित्कालमित्यत्यन्तसंयोगेद्वितीया ॥ २२ ॥ आलोकं प्रकाशं ॥ २३—२५ ॥ आपीडैः शेखरैः लताभिश्च । उपशोभितानिति शेषः । हेमाभरणभूषितान् फलितहेमाभरणान् ॥ २६ ॥ पादपांश्च हिरण्मयान् रजतमयांश्च वृक्षान् ॥ २७ ॥ नीलवैडूर्येत्यादि श्लोकद्वयमेकान्वयं । उक्तविशेषणविशिष्टाः पद्मिनीः उक्तविशेषणयुक्ता नलिनीश्च ददृशुरित्यन्वयः । अतो न पुनरुक्तिः ॥ २८—२९ ॥ काञ्चनानीत्यादि ॥ हैमराजतभौमानीति

---

**रामानु०** तेजः प्रभावः । “ तेजः प्रभावेदीप्तौच ” इतिविश्वः ॥ **ति०** नसज्जते नप्रतिबध्यते । अन्येतु तेषांदृष्टिर्नसज्जते तत्रत्यपदार्थेष्वितिशेषः । तिमिरावृतत्वात् । अतएवतेजःपराक्रमयोरपिकुण्ठितगमनं । यद्यपिवायोरिवगतिः तथापियतोदृष्टिस्तमसिप्रतिबद्धावर्तते अतोवेगेनपरस्परहस्तग्रहणपूर्वकंप्रविष्टाइत्यर्थः । अतएव “गृह्यहस्तैःपरस्परं” इत्यग्रेहनुमदुक्तिरित्याहुः ॥ १९ ॥ **ति०** अन्योन्यंसंपरिष्वज्य तिमिरदेशविनिर्गमजसन्तोषवशादितिशेषः । यद्वा अन्योन्यंहस्तावलंबनंकृत्वा हस्तेनपरस्परस्योरआदिसम्यग्धृत्वेतियावत् ॥ २१ ॥ **शि०** ते वानराः तस्मिन्बिलेपरिपेतुः । अतएवकंचित्कालं अतन्द्रिताः अभवन्नितिशेषः ॥ २२ ॥ **ति०** आलोकमेवददृशुर्नतुजलं । जीवितेनिराशायदाबभूवुस्तदोच्यमानलक्षणंदेशमागम्य काञ्चनान्वृक्षांश्चददृशुः । यद्वाजीवितेनिराशाबभूवुः तदाभगवत्कृपयालोकंददृशुः उच्यमानविशेषणेदेशेकाञ्चनान्वृक्षान्ददृशुः ॥ २३ ॥

**[ पा० ]** १ ख. व्याघ्रांश्चमृग. २ ख. विद्यते. ३ छ. झ. ट. दृष्टिः. ४ ख. प्रविष्टास्स. ५ छ. झ. ट. प्रकाशंचाभिरामंच. ६ छ. झ. ट. भीमे. ७ ग. छ. झ. ट. यदा. ८ ङ. च. ज. ञ. ततस्ते. ९ ङ. च. ज. ञ. सर्वे. घ. छ. झ. ट. सौम्याः. १० ग. समं. ङ. च. ज. ञ. पुनः. ११ ग. काञ्चनान्दिव्यान्. १२ घ. दीप्तान्वैश्वानर. १३ ङ.—ट. स्तालांस्तमालांश्चपुन्नागान्. क. स्तालांश्चपुन्नागान्बकुलान्. १४ घ. छ. न्बकुलान्धवान्. १५ ङ. च. ज. ञ. हेमभारविभूषितान्. १६ क.—ट. वैडूर्यमय. १७ छ. झ. ट. पतगैर्वृताः. ख. प्लवगैर्युताः. १८ ट. वृक्षैर्वृताः. १९ झ. ट. महद्भिश्चाथपङ्कजैः. २० क. ग. घ. झ. ट. सलिलायुताः. २१ ग. ङ. ज.—ट. विविधानिविशालानिददृशुः. २२ ङ. छ.—ट. राशयः.

शुचीन्य[1]भ्यवहार्याणि मूलानि च फलानि च ॥ महार्हाणि च [2]पानानि मधूनि रसवन्ति च ॥३५॥
दिव्यानामम्बराणां च महार्हाणां च संचयान् ॥ कम्बलानां च चित्राणामजिनानां च संचयान् ॥३६॥
तत्र तत्र च विन्यस्तान्दीप्तान्वै[3]श्वानरप्रभान् ॥ ददृशुर्वा[4]नराः शुभ्राञ्जातरूपस्य संचयान् ॥ ३७ ॥
[5]तत्र तत्र विचिन्वन्तो बि[6]ले त[7]स्मिन्महाबलाः ॥ ददृशुर्वानराः शूराः स्त्रियं कांचिददूरतः ॥ ३८ ॥
[8]तां दृष्ट्वा भृशसंत्रस्ताश्चीरकृष्णाजिनाम्बराम् ॥ तापसीं नियताहारां ज्वलन्तीमिव तेजसा ॥ ३९ ॥
विस्मिता हरयस्तत्र [9]व्यवातिष्ठन्त सर्वशः ॥ पप्रच्छ हनुमांस्तत्र काऽसि [10]त्वं कस्य वा बिलम् ॥ ४० ॥
ततो हनूमान्गिरिसन्निकाशः कृताञ्जलिस्तामभिवाद्य वृद्धाम् ॥
पप्रच्छ का त्वं भवनं बिलं च रत्नानि हे[11]मानि वदस्व कस्य ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

## एकपञ्चाशः सर्गः ॥ ५१ ॥

स्वयंप्रभानाम्यातापस्या हनुमन्तंप्रति तद्बिलनिर्माणादिवृत्तान्तकथनेनसह फलादिभक्षणादिनाश्रमापनोदनचोदनपूर्वकं वानराणांवमागमनादिकारणप्रश्नः ॥ १ ॥

इत्युक्त्वा हनुमांस्तत्र [12]पुनः कृष्णाजिनाम्बराम् ॥ अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ॥ १ ॥
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥ क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ॥
महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः ॥ २ ॥
इमांस्त्वेवंविधान्भावान्विविधानद्भुतोपमान् ॥ दृष्ट्वा वयं प्रव्यथिताः संभ्रान्ता [13]नष्टचेतसः ॥ ३ ॥
[14]कस्यैते काञ्चना वृक्षास्तरुणादित्यसन्निभाः ॥ शुचीन्य[15]भ्यवहार्याणि मूलानि च फलानि च ॥ ४ ॥
काञ्चनानि विमानानि राजतानि गृहाणि च ॥ तपनीयगवाक्षाणि मणिजालावृतानि च ॥ ५ ॥
पुष्पिताः फलवन्तश्च पुण्याः [16]सुरभिगन्धिनः ॥ इमे जांबूनदमयाः पादपाः कस्य तेजसा ॥ ६ ॥
काञ्चनानि च पद्मानि जातानि वि[17]मले जले ॥ कथं मत्स्याश्च [18]सौवर्णाश्चरन्ति सह कच्छपैः ॥ ७ ॥

---

शेषः । गृहमुख्यविशेषणं वा ॥ ३०—३६ ॥ शुभ्रान् निर्मलान् ॥ ३७—३८ ॥ व्यवातिष्ठन्त दूरे स्थिता इत्यर्थः ॥ ३९—४० ॥ पप्रच्छेत्यर्धस्य विवरणं—ततोहनुमानिति ॥ अस्मिन्सर्गे सार्धैकचत्वारिंशच्छ्लोकाः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

अथ स्वयंप्रभया ऋक्षबिलवृत्तान्तोक्तिरेकपञ्चाशे—इत्युक्त्वेत्यादि ॥ १ ॥ परिखिन्नाः अध्वश्रमखिन्नाः । क्षुत्पिपासापरिश्रान्तत्वेपि पिपासैव प्रवेशहेतुरित्याशयेनोक्तं—पिपासिता इति ॥ २ ॥ भावान् पदार्थान् । प्रव्यथिताः किमिदमसुरादिमायेति संजातव्यथाः । नष्टचेतसः कर्तव्यबुद्धिरहिताः ॥ ३—४ ॥ मणिजालावृतानि रत्नमयजालकानि । जालकगवाक्षयोर्भेद

---

**ति०** यानानिं शिबिकादीनि ॥३५॥ **स०** वदस्व वद “ भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषुवदः ” इत्युक्तेरात्मनेपदता । प्रकाशमानासतीवदेत्यर्थः ॥ ४१ ॥ इतिपञ्चाशःसर्गः ॥ ५० ॥

[ **पा०** ] १ झ. ञ. ट. न्यभ्यवहाराणि. २ च. माल्यानि. ङ. ज. झ. ट. यानानि. ३ ख. न्वैश्वानरोपमान्. ४ ख. वानरास्तत्रजातरूपस्य. ५ ङ. च. ज. ञ. तेपितत्र. ६ क. वने. ७ छ. झ. ट. तत्रमहाप्रभाः. ङ. च. ज. ञ. तत्रमहाप्रभां. ८ छ. झ. तांचतेददृशुस्तत्रचीर. ख. तांदृष्ट्वाहरयस्तत्रचीर. क. ग. तांदृष्ट्वावानरास्तत्रचीर. ९ ख.—ज. ञ. ट. व्यवतिष्ठन्त. १० ग. कस्यचवा. ११ क. घ.—ट. चेमानि. ख. चैतानि. १२ छ. झ. ट. चीरकृष्णाजिनांबरां. १३ नष्टचेतनाः. १४ क. ख. ग. ङ. च. ज. ञ. कस्येमे. १५ ग. ङ. च. ज.—ट. न्यभ्यवहाराणि. १६ ङ.—ट. सुरभिगन्धयः. १७ क. ख. घ. विमलोदके. १८ छ. झ. ट. सौवर्णादृश्यन्ते. क. ग. घ. सौवर्णैश्चरन्ति. ङ. च. ज. ञ. सौवर्णैःसहतिष्ठन्ति.

[1]आत्मानमनुभावं च कस्य चैतत्तपोबलम् ॥ अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि ॥ ८ ॥
एवमुक्ता हनुमता तापसी धर्मचारिणी ॥ प्रत्युवाच हनूमन्तं सर्वभूतहिते [2]रता ॥ ९ ॥
मयो नाम महातेजा मायावी [3]दानवर्षभः ॥ तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥ १० ॥
पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ॥ येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ॥ ११ ॥
स तु वर्षसहस्राणि तपस्तप्त्वा [4]महावने ॥ पितामहाद्वरं लेभे सर्वमौशनसं धनम् ॥ १२ ॥
[5]वनं विधाय बलवान्सर्वकामेश्वरस्तदा ॥ उवास सुखितः कालं कंचिदस्मिन्महावने ॥ १३ ॥
तमप्सरसि हेमायां सक्तं [6]दानवपुङ्गवम् ॥ विक्रम्यैवाशनिं गृह्य [7]जघानेशः पुरन्दरः ॥ १४ ॥
इदं च ब्रह्मणा दत्तं हेमायै [8]वनमुत्तमम् ॥ शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् ॥ १५ ॥
दुहिता मेरुसावर्णेरहं [9]तस्याः स्वयंप्रभा ॥ इदं रक्षामि भवनं हेमाया वानरोत्तम ॥ १६ ॥
मम प्रियसखी हेमा [10]नृत्तगीतविशारदा ॥ तया दत्तवरा चास्मि रक्षामि [11]भवनोत्तमम् ॥ १७ ॥
किं कार्यं कस्य वा हेतोः कान्ताराणि [12]प्रपश्यथ ॥ कथं चेदं वनं दुर्गं युष्माभि[13]रुपलक्षितम् ॥ १८ ॥
[14]इमान्यभ्यवहार्याणि मूलानि च फलानि च ॥ भुक्त्वा पीत्वा[15] च पानीयं [16]सर्वं मे वक्तु[17]मर्हथ ॥ १९ ॥
[ [18]एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ॥ हनुमान्हरिशार्दूलः प्रत्युवाच स्वयंप्रभाम् ॥ २० ॥
अर्थिनः स्म तदर्थे च चर धर्ममनुत्तमम् ॥ मृगमाणान्निराहारान्संजीवय तपोधने ॥ २१ ॥
तच्छ्रुत्वा वचनं तस्य तापसी धर्मचारिणी ॥ आदाय फलमूलानि विधिनोपजहार सा ॥ २२ ॥

उक्तः ॥ ५—७ ॥ आत्मानं त्वां । अनुभावं प्रभावं । कस्य चैतत्तपोबलं तच्चेत्यर्थः ॥ ८–९ ॥ मयो नाम त्रिपुराधिपतिः त्रिपुरे नष्टे स्वरक्षणार्थमिदं बिलं कृतवानिति मात्स्यपुराणे त्रिपुरदहनप्रस्तावेभिहितं । मायया विचित्रशक्त्या । मायावी मायायुक्तः । दानवर्षभ इत्यनेन नायमसुरतक्षा मय इति सूचितं ॥१०–१३॥ तं स्वपुत्रीं मन्दोदरीं रावणाय दत्तवन्तं । एकान्ते हेमायां सक्तं विदित्वा ईशः त्रैलोक्याधिपतिः । अशनिं वज्रं गृहीत्वा जघान ॥ १४॥ मयनाशानन्तरं इदं वनं ब्रह्मणा हेमायै दत्तं ॥ १५–१६ ॥ ममेति । सेदानीं ब्रह्मसदनं गतेत्याशयेनाह—नृत्तेति ॥ १७ ॥ किं कार्यं किं प्रयोजनं । कस्य हेतोः कस्मात्प्रयोजनात्

ति० कोमयइत्याशङ्क्यतत्प्रसिद्धिमाह—पुरेति । विश्वकर्मा शिल्पी । ह प्रसिद्धं ॥ ११ ॥ ती० औशनसंधनं विचित्रनिर्माणप्रतिपादकशिल्पशास्त्रज्ञानं । शिल्पस्योशनसाप्रणीतत्वात्तद्धनत्वव्यपदेशः ॥ ति० वरं विचित्रसृष्टिसामर्थ्यरूपं ॥ स० महत् वने इतिच्छेदः । महावनइतिपाठे वनविशेषणं । महतोवनमितिवा । अथवा आदित्यादितएवनिर्देशादनित्यताऽऽत्त्वस्यज्ञापितेति । " तस्यैवमहत्सुखत्वात्तेषां " इत्यादिवदात्त्वाभावे ऐकपद्यंज्ञेयं ॥ १२ ॥ शि० तदा वरलाभसमये । सर्वकामेश्वरः सर्वविषयनिर्माणेस्वतन्त्रः ॥ १३ ॥ ति० दानवपुङ्गवं अशनिंगृह्य गृहीत्वा । विक्रम्यैव युद्धंकृत्वैव । पुरन्दरोजघान । यद्यप्यसुरशिल्पीमयोनित्यइतिकथंहननंतस्य । तथापि यएवासुरशिल्पीपदस्थःसर्वोपिमयाख्यइतिप्रवाहनित्यतैवतस्येन्द्रवदितिनदोषः ॥ १४ ॥ ती० विचित्रनिर्माणसामर्थ्यगुणयोगादत्रब्रह्मशब्दोदानवविश्वकर्ममयवाची ॥ ति० तस्मिंश्चहतेइदंवनं शाश्वतःकामभोगः इदंगृहंच मयभुक्तायैहेमायैन्यायप्राप्तत्वाद्भगवताब्रह्मणादत्तमित्यर्थः । एतेनात्रब्रह्मशब्दोमयदानवपरइत्यपास्तं । हतेनदानासंभवात् ॥ १५ ॥ शि० मेरुसावर्णेर्दुहिताऽहं । तस्याः हेमायाः । स्वयंप्रभा तदभिधंइदंभवनं । रक्षामि वाक्यार्थस्यकर्मतयान्वयान्नद्वितीया । स्वयंप्रभाशब्दस्यमेरुसावर्णिदुहितुर्नामत्वेतु भवनमितिद्वितीयान्तमेव ॥ १६ ॥ ति० अभ्यवहाराणि अभ्यवहार्याणि ॥ १९ ॥ इत्येकपञ्चाशःसर्गः ॥ ५१ ॥

[ पा० ] १ ग.—ट. आत्मनस्त्वनुभावाद्वाकस्यवैतत्. २ घ. रतं. ३ छ. झ. ट. वानरर्षभ. ४ झ. ठ. महद्वने. ५ ग, ङ. च. छ. झ. ञ. ट. विधायसर्वंबलवान्. ६ क.—च. ज. ञ. दानवसत्तमं. ७ ङ. च. ज. ञ. ट. जघानसपुरन्दरः. ८ ङ. च. ज. ञ. भवनोत्तमं. ९ क. ग. नाम्नास्वयंप्रभा. १० घ. गीतनृत्त. ११ ङ.—ट. भवनंमहत्. १२ क.—घ. च. ज.—ट. प्रपद्यत. १३ घ. रभिलक्षितं. १४ छ. ज. झ. ट. शुचीन्यभ्यवहाराणि. क. ख. ग. ङ. च. ञ. इमान्यभ्यवहाराणि. १५ ग. च. ज. ञ. पीत्वातु. १६ क. ख. ग. सत्यं. १७ झ. मर्हसि. १८ इमेषट्श्लोकाः क. ग. पाठयोरधिकादृश्यन्ते.

प्रतिगृह्य तु ते तस्मास्तथाऽऽतिथ्यं वनेचराः ॥ क्षुधार्ता भक्षयामासुः प्रशंसन्तस्तपोधनाम् ॥ २३ ॥
ते भक्षयित्वा तत्सर्वं पीत्वा सुरभि वारि च ॥ सर्वे ददृशुरालोकान्सर्वतो वानरा गुहाम् ॥ २४ ॥
प्रसन्नवदनाश्चासन्सर्वे संहृष्टमानसाः ॥ संजातं बलवीर्यं च तत्र तेषां वनौकसाम् ॥
तर्पिता विविधैर्मूलैः फलैः शीतेन वारिणा ॥ २५ ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

हनुमता स्वयंप्रभांप्रति रामवनप्रवेशप्रभृतिस्वस्वात्मीयगुहाप्रवेशावधिनिखिलवृत्तान्तनिवेदनपूर्वकं तत्कृतोपकारप्रशंसनं ॥ १ ॥

अथ तानब्रवीत्सर्वान्विक्रान्तान्हरिपुङ्गवान् ॥ इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १ ॥
वानरा यदि वः खेदः प्रनष्टः फलभक्षणात् ॥ यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥२॥
तस्यास्तद्वचनं श्रुत्वा हनुमान्मारुतात्मजः ॥ आर्जवेन यथातत्त्वमाख्यतुमुपचक्रमे ॥ ३ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ॥ रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ ४ ॥
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ५ ॥
वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः ॥ राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६ ॥
अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम् ॥ सहैभिर्वानरैर्घोरैरङ्गदप्रमुखैर्वयम् ॥ ७ ॥
रावणं सहिताः सर्वे राक्षसं कामरूपिणम् ॥ सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८ ॥
विचित्य तु वयं सर्वे समग्रां दक्षिणां दिशम् ॥ बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः ॥ ९ ॥
विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः ॥ नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥
चारयन्तस्ततश्चक्षुर्दृष्टवन्तो वयं बिलम् ॥ लतापादपसंछन्नं तिमिरेण समावृतम् ॥ ११ ॥
अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलविस्रवैः ॥ कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥
साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः ॥ १२ ॥

॥ १८—२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

अथ हनुमता स्वागमनहेतुरुच्यते द्विपञ्चाशे—अथेत्यादि ॥१—२॥ आर्जवेन अकपटेन॥३—५॥ दक्षिणामाशां येन प्रस्थापिताः स राजास्तीति पूर्वेणा-

स० महेन्द्रवरुणोपमः महेन्द्रवरुणाभ्यांउपमा साम्यं शौर्यगांभीर्यादौ यस्यसतथा ॥ ४ ॥ शि० अङ्गदप्रमुखैःसहितावयं वयं वः रामसख्यरक्षणस्य अयः प्राप्तिर्यस्मिंस्तद्यथाभवतितथा दक्षिणांदिशंप्रस्थापिताः ॥ ६—७ ॥ ति० नाधिगच्छाम । हेइति स्वयंप्रभासंबोधनं । पारं चिन्तामहार्णवस्येतिशेषः ॥ १० ॥ ति० सलिलरेणुभिः सलिलपद्मरेणुयुक्तपक्षैरुपलक्षिताइत्यर्थः । निष्पतन्ति निष्पतिताः ॥ १२ ॥

[ पा० ] १ क.—ट. न्विश्रान्तान्हरियूथपान्. २ ग. यदिचैवंमया. ३ छ. झ. तांकथां. ४ ख. सीतयाचापि. क. ङ.—ट. वैदेह्यासह. ग. घ. वैदेह्याचैव. ५ घ. अगस्त्याचरितां. ६ क.—ट. वानरैर्मुख्यैरङ्गद. ७ झ. ट. वनंसर्वंसमुद्रं. छ. वनंसर्वंसमुद्रं. ङ. ज. ञ. वनंसर्वंसमग्रां. च. वनंसर्वंसमग्रं. ८ ग. छ. झ. ट. वयंबुभुक्षिताःसर्वेवृक्ष. ९ ख. सदाध्यान. १० ङ.—ट. महद्बिलं. ११ ङ.—ट. संपन्नं. १२ क. ख. ग. तस्मात्. १३ घ. जलैःक्लिन्नाः. ख. ग. ङ. च. ज. ञ. जलक्लिन्नानिर्यान्तिविवृताद्बिलात्. १४ क. छ. झ. ट. सलिलरेणुभिः. १५ ग. चोक्ताः.

तेषामपि हि सर्वेषामनुमानमुपागतम् ॥ [2]गच्छाम प्रविशामेति भर्तृकार्यत्वरान्विताः ॥ १३ ॥
ततो गाढं निपतिता गृह्य [3]हस्तौ परस्परम् ॥ इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥ १४ ॥
एतन्नः कार्यमेतेन कृत्येन वयमागताः ॥ त्वां चैवोपगताः सर्वे परिद्यूना बुभुक्षिताः ॥ १५ ॥
आतिथ्यधर्मदत्तानि मूलानि च फलानि च ॥ अस्माभि[4]रुपभुक्तानि बुभुक्षापरिपीडितैः ॥ १६ ॥
[5]यैस्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया ॥ ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ॥ १७ ॥
एवमुक्ता तु [6]सर्वज्ञा वानरैस्तैः स्वयंप्रभा ॥ प्रत्युवाच ततः सर्वानिदं [7]वानरयूथपान् ॥ १८ ॥
[8]सर्वेषां परितुष्टास्मि वानराणां तरस्विनाम् ॥ चरन्त्या मम धर्मेण न कार्यमिह केनचित् ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

हनुमत्प्रार्थनया स्वयंप्रभया स्वाज्ञानिमीलितलोचनानांकपीनां क्षणमात्रेणगुहोत्तारणं ॥ १ ॥ बिलाद्बहिर्गतेषुकपिषु वृक्षेषुपुष्पोद्गमदर्शनाच्छिशिरागमानुमानेनविषीदत्सु तान्प्रत्यङ्गदेन सुग्रीवस्य चण्डशासनत्वादकृतकार्याणां कालातिक्रमेण तत्समीपगमनेमरणनिर्धारणेन प्रायोपवेशस्यैवौचित्योक्तिः ॥ २ ॥ अङ्गदमातुलेनतारेण तद्वचनेनविषीदतोवानरान्प्रति स्वयंप्रभागुहायामेवनित्यवासे रामसुग्रीवभयाभावोपपादने सर्वैस्तदनुमोदनेन तथैवनिर्धारणम् ॥ ३ ॥

एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् ॥ उवाच हनुमान्वाक्यं ता[9]मनिन्दितचेष्टिताम् ॥ १ ॥
शरणं त्वां प्रपन्नाः स्मः [10]सर्वे वै [11]धर्मचारिणि ॥ यः कृतः [12]समयोऽस्माकं सुग्रीवेण महात्मना ॥ २ ॥
[13]स च कालो [14]ह्यतिक्रान्तो बिले[15] च परिवर्तताम् ॥ सा त्वमस्माद्[16]बिलाद्घोरादुत्तारयितुमर्हसि ॥ ३ ॥
[17]तस्मात्सुग्रीववचनादतिक्रान्तान्गतायुषः ॥ त्रातुमर्हसि नः सर्वान्सुग्रीव[18]भयकर्शितान् ॥ ४ ॥
महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ॥ तच्चापि न कृतं कार्यमस्माभिरिहवासिभिः ॥ ५ ॥

---

न्वयः ॥ ६—१२ ॥ अनुमानमुपागतं । जलचरसत्त्वदर्शनेन जलबुद्धिर्जातेत्यर्थः । यद्वा भर्तृकार्यत्वरान्विताः सन्तोगच्छामः । बिलद्वारमिति शेषः । बिलं प्रविशाम इति अनुमानं अङ्गीकरणं ॥ १३—१४ ॥ परिद्यूनाः परिक्षीणाः ॥ १५—१८ ॥ सर्वेषामिति । संबन्धसामान्ये षष्ठी ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

अथ बिलादुत्तीर्णानां वानराणां निर्वेदः त्रिपञ्चाशे —एवमुक्त इत्यादि ॥ १—२ ॥ बिलेचपरिवर्ततामित्यनेन बहुकालं वानरैर्बिले स्थितमिति गम्यते

---

**स०** आतिथ्यधर्मदत्तानि अतिथयइमानि आतिथ्यानिचतानि धर्मदत्तानिच । "अतिथेर्ञ्यः ।" "क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्रसाधुनि" इत्यमरः ॥ १६ ॥ **स०** "किंतेकुर्वन्तुवानराः" इतिपरोक्षनिर्देशोदेवलात्स्वस्याअपिदेवीत्वाद्युक्तः । "परोक्षप्रियाइवहिदेवाः" इतिश्रुतेः ॥ १७ ॥ **ति०** परितुष्टास्मि प्रत्युपचिकीर्षावचनेनैवेतिभावः । अत्र कतकस्तु द्विपञ्चाशसर्गसमाप्तिमाह ॥ १९ ॥ इतिद्विपञ्चाशःसर्गः ॥ ५२ ॥

**[ पा० ]** १ छ. झ. ट. अस्मिन्निपतितास्सर्वेऽप्यथकार्यं. २ क. गन्तुं. ३ झ. ञ. ट. हस्तैः. क. ग. हस्तान्परस्परं. ख. घ. हस्ते. ४ ङ.—ट. रुपयुक्तानि. ५ घ. येलया. ६ क. ग. घ. धर्मज्ञैर्वानरैः. ख. धर्मज्ञावानरैस्तु. ७ ख. घ. वानरपुङ्गवान्. ८ सर्वेषांपरितुष्टास्मीतिश्लोकात्परतः ङ. छ—ट. पाठेषुद्विपञ्चाशसर्गसमाप्तिर्नदृश्यते किंतुएतत्कोशरीत्यादृश्यमानत्रिपञ्चाशसर्गे इत्युक्त्वातद्बिलंश्रीमत्प्रविवेशस्वयंप्रभेत्येतदनन्तरंदृश्यते. ९ छ. झ. मनिन्दितलोचनां. १० ट. सर्वेच. छ. सर्वेते. ११ क. झ. धर्मचारिणीं. १२ ङ.—ट. समयोऽस्मासु. १३ क. ख. ग. ङ.—ज. ञ. ट. सतु. १४ क. ख. ङ.—ट. व्यतिक्रान्तो. १५ क. बिलेऽस्मिन्. १६ छ. झ. ट. द्बिलादस्मानुत्तारयितुं. १७ ङ. अस्मान्सुग्रीव. १८ क.—ट. भयशंकितान्.

एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ॥ ६ ॥
[[1] इदं दैवतराजेन पुरा शक्रेण संयुगे ॥ असुरार्थं विमुक्तेन तदा वज्रेण पातितम् ॥ ७ ॥
दुर्धर्षं तु दुरासादं नानारत्नसमन्वितम् ॥ महाप्राज्ञेन रत्यर्थं निर्मितं विश्वकर्मणा ॥ ८ ॥
एवं दैवविसृष्टे तु बिलेऽस्मिन्वज्रदारिते ॥] जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥ ९ ॥
तपसस्तु प्रभावेन नियमोपार्जितेन च ॥ सर्वानेव बिलादस्मादुद्धरिष्यामि[2] वानरान् ॥ १० ॥
[3]निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः ॥ नहि निष्क्रमितुं शक्यमनिमीलितलोचनैः ॥ ११ ॥
[4]ततः संमीलिताः सर्वे सुकुमाराङ्गुलैः करैः ॥ सहसापिदधुर्दृष्टिं हृष्टा [5]गमनकाङ्क्षया ॥ १२ ॥
वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा ॥ निमेषान्तरमात्रेण बिलादुत्तारि[6]तास्तया ॥ १३ ॥
[7]ततस्तान्वारान्सर्वांस्तापसी धर्मचारिणी ॥ [8]निस्सृतान्विषमात्तस्मात्समाश्वास्येदमब्रवीत् ॥ १४ ॥
एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलतां[9]ताकुलः॥ एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥ १५ ॥
स्वस्ति वोऽस्तु गमिष्यामि भवनं [10]वानरर्षभाः ॥ इत्युक्त्वा तद्बिलं श्रीमत्प्रविवेश स्वयंप्रभा ॥१६॥
ततस्ते ददृशुर्घोरं सागरं वरुणालयम् ॥ अपारमभिगर्जन्तं घोरैरूर्मिभिरा[11]वृतम् ॥ १७ ॥
मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ॥ तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः॥१८॥
विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे ॥ उपविश्य [12]महात्मानश्चिन्तामापेदिरे तदा ॥ १९ ॥
ततः पुष्पातिभाराग्राँल्लताशतसमावृतान् ॥ द्रुमान्वासन्तिकान्दृष्ट्वा बभूवुर्भयशङ्किताः ॥ २० ॥
ते वसन्तमनुप्राप्तं [13]प्रतिबुद्ध्वा परस्परम् ॥ नष्टसंदेश[14]कालार्था निपेतुर्धरणीतले ॥ २१ ॥
ततस्तान्कपि[15]वृद्धांस्तु शिष्टांश्चैव वनौकसः ॥ वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥ २२ ॥
स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः ॥ युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥ २३ ॥
शासनात्कपिराजस्य वयं सर्वे विनिर्गताः ॥ मासः पूर्णो बिलस्थानां हरयः किं न बुध्यते ॥ २४॥

॥ ३—१३ ॥ विषमात् संकटप्रदेशात् ॥१४—१८॥ पादे दक्षिणपार्श्वे । दक्षिणपश्चिमकोटावित्यर्थः । "हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुंधरा" इति भेषजकल्पोक्तिः ॥ १९ ॥ पुष्पातिभाराग्रान् पुष्पैरतिभाराणि अग्राणि येषां तान् । वासन्तिकान् वसन्तफलिनश्चूतादीन् । ये वसन्ते फलन्ति ते शिशिरे पुष्प्यन्ति। भयशङ्किताः सुग्रीवाद्भयविषयशङ्कावन्तः ॥ २० ॥ वसन्तं अनुप्राप्तं प्रत्यासन्नं। तदानीं हि शिशिरः । तथाहि । शरत्कालान्ते मार्गशीर्षे मासि सेनां सन्निधाप्य पौषमासमवधिं कृत्वा प्रस्थापितवान् । स पौषो माघश्चातीतः । फाल्गुन एव प्रवृत्त इति । तेन वसन्तः प्रत्यासन्न एव न प्राप्तः

**स०** अङ्गुलीनांसमूहाआङ्गुलानि । सुकुमाराणि आङ्गुलानियेषांतैः । एतेनादारुत्वादसंख्याव्ययादित्वात्कथंषजचावितिनिरस्तं ॥ १२ ॥ **रामानु०** धर्मचारिणी यान् बिलादुत्तारयामास तान् समाश्वास्य इदमब्रवीदितिसंबन्धः ॥ **शि०** तया स्वयंप्रभयैव । बिलादुत्तारिताः । उवाएवार्थौ । च अनन्तरं । धर्मचारिणी निस्सृतान्वानरान्समाश्वास्येदमब्रवीत् । श्लोकद्वयमेकान्वयि ॥१३–१४॥ **ति०** प्रस्रवणः किष्किन्धासमीपप्रस्रवणादन्योऽयमित्याहुः । अत्युच्चत्वात्ततोपितस्यदर्शनमित्यन्ये ॥ यत्रेच्छा तत्रगन्तव्यमितितात्पर्यं ॥ १५ ॥ **शि०** वासन्तिकान् वसन्तकालिकानिवद्रुमान् । वासन्तिकशब्द आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । एतेन तद्देशस्य प्रभावातिशयःसूचितः ॥ २० ॥ **ति०** नष्टः संदेशकाले राजसंदिष्टमासरूपेकाले अनुष्ठेयोऽर्थोयेषांते ॥ २१ ॥ **ति०** शिष्टान्

[ **पा०** ] १ इदमर्धपञ्चकं ग. पाठे. दृश्यते. २ ङ.—ट. बिलात्तस्मात्तारयिष्यति. ३ ङ. च. छ. ञ. निमीलयन्तु. ४ ङ. च. ज. ततस्तुमीलिताः. छ. झ. ञ. ट. ततोनिमीलिताः. ग. ततःसुमीलिताः. क. ततस्तेवानराःसर्वे. ५ क.—घ. गमनकाङ्क्षिणः. ६ ग. स्तदा. ७ च. ज. सर्वांस्तुतान्वानरांश्चतापसी. ङ. छ. झ. ट. उवाचसर्वांस्तांस्तत्रतापसी. ग. बिलादुत्तारयामाससर्वान्वैधर्मचारिणी. ञ. उत्तार्यसर्वांस्तांस्तत्रतापसी. ८ घ. निर्गतान्. ९ क. ख. ङ.—ट. लतायुतः. १० ख. वानरोत्तमाः. ११ क. ङ.—ट. राकुलं. १२ क.—ङ. ज. ञ. महाभागाः. १३ ख. घ. प्रतिबुद्धाः. ग. छ. झ. ञ. ट. प्रतिवेद्य. च. ज. प्रतिपद्य. क. प्रतिबुध्य. १४ क. कार्यार्थाः. १५ ङ.—ट. वृद्धांश्च.

वयमाश्वयुजे मासि कालसंख्याव्यवस्थिताः ॥ प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥२५॥
भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः ॥ हितेष्वभिरता भर्तुर्निसृष्टाः सर्वकर्मसु ॥ २६ ॥
कर्मस्वप्रतिमाः सर्वे दिक्षु विश्रुतपौरुषाः ॥ मां पुरस्कृत्य निर्याताः पिङ्गाक्षप्रतिचोदिताः ॥ २७ ॥
इदानीमकृतार्थानां मर्तव्यं नात्र संशयः ॥ हरिराजस्य संदेशमकृत्वा कः सुखी भवेत् ॥ २८ ॥
तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् ॥ प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ २९ ॥
तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः ॥ न क्षमिष्यति नः सर्वानपराधकृतो गतान् ॥३०॥
अप्रवृत्तौ च सीतायाः पापमेव करिष्यति ॥ तस्मात्क्षममिहाद्यैव प्रायोपविशनं हि नः ॥
त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥ ३१ ॥
ध्रुवं नो हिंसिता राजा सर्वान्प्रतिगतानितः ॥ वधेनाप्रतिरूपेण श्रेयान्मृत्युरिहैव नः ॥ ३२ ॥
न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः ॥ नरेन्द्रेणाभिषिक्तोस्मि रामेणाक्लिष्टकर्मणा ॥ ३३ ॥

॥ २१—२४ ॥ वयमाश्वयुजे मासीति कालसंख्याव्यवस्थिताः कालसंख्यया नियमिताः । वयं आश्वयुजे मासि हनुमच्चोदितेन सुग्रीवेण पञ्चदशरात्रसंख्यया नियम्य समाहूताः । ततो मार्गशीर्षे लक्ष्मणचोदितेन तेन दशरात्रसंख्यया समाहूताः । ततः सीतान्वेषणे पौषमासमवधिं कृत्वा तेन प्रेषिताः । एवमाश्वयुजमासमारभ्य कालसंख्याव्यवस्थितानामस्माकं कालविस्मरणं न युक्तमित्यर्थः । अन्ये त्वाहुः—आश्वयुजे मासि दशम्यामुत्थितायामितिवत्सामीपिकाधिकरणविवक्षया सप्तमी। तेन "कार्तिके समनुप्राप्ते त्वं रावणवधे यत" इत्युक्तकालातिक्रमणप्रयुक्तरामकोपदर्शनात् कार्तिकान्तो विवक्षितः । सोपि चातीतः समागणावधिभूतमार्गशीर्षमासः । अपिचेत्याभ्यां पदाभ्यां तदनन्तरभूतौ पौषमाघौ समुच्चीयेते । अतश्च फाल्गुन एव प्राप्त इति भाव इत्याहुः। अत उत्तरं किं कार्यं॥२५॥ प्रत्ययं विश्वासं । नीतिमार्गे विशारदाः प्रगल्भाः । निसृष्टाः दक्षा इति यावत्॥ २६—२८ ॥ प्रायाय अन्तगमनाय उपवेशनं शयनं प्रायोपवेशनं ॥ २९॥ अप्रवृत्तौ अवार्तायां । प्रायोपविशनमिति गुणाभाव आर्षः ॥ ३०—३१ ॥ त्वां यौवराज्ये कृतवान्सुग्रीवः

वृद्धेभ्योऽन्यान् ॥ २२ ॥ ति० कालात्ययमेवाह—वयमिति । आश्वयुजे अतीतप्रायेइतिशेषः । "कार्तिकेसमनुप्राप्ते त्वंरावणवधे यत" इत्युक्तेः । ततःपञ्चदशरात्रकालसंख्यया प्रवर्तितदूतैः व्यवस्थिताः मिलिताः । एवंचामान्तमानेनाश्विनस्योत्तरे दीपोत्सवामायुतेपक्षे सर्वसेनागमनंकिष्किन्धायां । रामस्यक्रोधस्तु तत्रैवपक्षे कार्तिकसंनिधावपि तदुद्यमाभावकृतः । ततः कार्तिकेऽवधिरन्वेषणस्य । ततोमार्गशुक्लेइदंवचनं । प्रायस्तद्वर्षे पौषः क्षयमासः । "कार्तिकादित्रयेनान्यतः" इत्युक्तेः । अतो मार्गशुक्लएव आम्रादीनांपुष्पोद्गमः उत्पाततोवा । तादृशरीत्या पुष्पोद्गमंदृष्ट्वापि वसन्तासन्नतानुमानेन भयोपपत्तिः । कतकादयस्तु अन्वेषणेऽवधित्वेनदत्तःपौषोमासः । आश्वयुजइत्यस्य तत्प्रत्यासन्नकार्तिकान्तेइत्यर्थः । कालसंख्येति । कार्तिकोत्तरं पञ्चदशरात्रसंख्याकालेनावधिना वानरानयनायदूतप्रेषणं । ततःपूर्णिमान्तमानेन मार्गशुक्लेन सर्ववानरागमनं । ततःपौषाद्यदिने दिक्ष्वन्वेषणाय वानरप्रस्थानं । तत्रपौषे माघकृष्णीयकिंचिद्दिनसहितेऽतीते इदंवाक्यमित्याहुः । तेषां सीतानयनोत्तरं सीतांप्रति द्वादशमासाः रावणावधिरितिस्पष्टमेव । पंपायांचैत्रमासे आगमनमित्यस्योक्तत्वात् । ततःपूर्वफाल्गुनेसीतापहारइतिच स्पष्टमेव । एवंच माघकृष्णे तच्छुक्लादौवा हनूमतःसीतासमीपगमने हनूमन्तंप्रति "वर्ततेदशमोमासोद्वौतुशेषौप्लवङ्गम" इतिसीतोक्तिविरोधः । किंच हनूमतोलङ्काप्रवेशदिने प्रदोषसमयएव पूर्णकल्पचन्द्रोदयवर्णनंच विरोधइत्याहुः ॥ २५ ॥ स० सर्वकर्मसु कर्तव्यत्वेनोपस्थितेषु प्रत्ययं प्रभुविश्वासं । यस्मैहितेषु अभिरताः तस्माद्भर्तुर्निसृष्टाइति यत्तच्छब्दाध्याहारेणयोजनायां "चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः" इत्यनुकूलितं भवति । यद्वा हनुमदितरेषां हिताभिरतेरभावमावेदयति भर्तुरितिषष्ठी ॥ २६ ॥ ती० प्रायोपविशनं । "प्रायश्चानशनेमृत्यौ" इतिकोशः ॥ ति० पुत्रादित्यक्त्वाप्रायोपवेशनं गन्तुंकर्तुंक्षमंयुक्तमित्यन्वयः ॥ ३१ ॥ शि० ननु "विषवृक्षोपिसंवर्ध्य स्वयंछेत्तुमसांप्रतं" इतिन्यायेन युवराजत्वेनाभिषेचितंत्वां सुग्रीवःकथंहनिष्यतीत्यतआह—नेति

[ पा० ] १ ञ. किमेतत्कार्यं. २ च. ञ. निर्विष्टाः. घ. निर्दिष्टाः. ३ ग. कर्मस्वप्रतिघाताश्च. क. ख. कर्मस्वप्रतिमाःशूराः. ४ क. ख. विश्रान्तपौरुषाः. ५ क. ख. पिङ्गाक्षेशप्रचोदिताः. ६ झ. ट. अस्मिन्नतीते. ७ ङ. च. ज. ञ. स्वयंकृते. ८ छ. झ. ट. गन्तुंप्रायोपवेशनं. ख. ग. ङ. च. ज. ञ. हितंप्रायोपवेशनं. क. प्रायोपविशनंहितम्. ९ क. ध्रुवंवो. ख. ग. यावन्नोघातयेद्राजा. १० घ.—ट. हिंसते.

स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम् ॥ घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः ॥ ३४ ॥
किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे ॥ इहैव प्रायमासिष्ये पुण्ये सागररोधसि ॥ ३५ ॥
एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् ॥ सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥ ३६ ॥
तीक्ष्णः प्रकृत्या सुग्रीवः प्रियासक्तश्च राघवः ॥ [समीक्ष्याकृतकार्यांस्तु तस्मिंश्च समये गते] ॥
अदृष्टायां तु वैदेह्यां दृष्ट्वा चैव समागतान् ॥ ३७ ॥
राघवप्रियकामार्थं घातयिष्यत्यसंशयम् ॥ न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः ॥ ३८ ॥
[प्रधानभूताश्च वयं सुग्रीवस्य समागताः] ॥ इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य वा ॥
नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥ ३९ ॥

प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे ॥
अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥ ४० ॥
इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयकम् ॥
इहास्ति नो नैव भयं पुरन्दरान्न राघवाद्वानरराजतोऽपि वा ॥ ४१ ॥
श्रुत्वाङ्गदस्यापि वचोनुकूलमूचुश्च सर्वे हरयः प्रतीताः ॥
यथा न हिंस्येम तथा विधानमसक्तमद्यैव विधीयतां नः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुःपञ्चाशः सर्गः ॥ ५४ ॥

अङ्गदादिभिस्तारमतानुमोदने हनुमता इतरवानरभेदनपूर्वकमङ्गदंप्रतियुक्त्युपन्यासेनभीषणम् ॥ १ ॥ तथा सुग्रीवस्य शुभगुणत्वादिहेतूक्त्या ततोभयाभावाद्युपपादनपूर्वकं सुग्रीवसमीपंप्रति गमनचोदना ॥ २ ॥

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ॥ अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १ ॥

---

कथं हिंस्यादित्यत्राह—न चाहमिति ॥ ३२—३४ ॥ मे जीवितान्तरे जीवितावधौ । व्यसनं पश्यद्भिः सुहृद्भिः किं सुहृदो मद्व्यसनप्रदर्शनेन क्लेशयित्वा मम किं प्रयोजनमित्यर्थः ॥ ३५—३८ ॥ सीतामन्विष्य तस्याः प्रवृत्तिं वृत्तान्तमुपलभ्य वीरं तं गच्छाम । नोचेदिहैव यमक्षयं यमगृहं गमिष्यामः ॥ ३९—४१ ॥ अङ्गदस्याप्यनुकूलं तारस्य वचनं श्रुत्वेत्यन्वयः । विधानं कार्यं । कर्मणि ल्युट् । असक्तं अविलम्बं ॥ ४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

अथ हनुमता अङ्गदमतभेदनपूर्वकमङ्गदस्य सुग्रीवसमीपगमनाय नियोजनं चतुःपञ्चाशे—तथेत्यादि ॥

---

॥ ३३ ॥ शि० जीवितान्तरे जीवनावधिमध्ये । मेव्यसनं राजहस्तान्मरणं । पश्यद्भिः सुहृद्भिःकिं कर्तव्यमितिशेषः । नकिमपीत्यर्थः । एतेन मत्सुहृदामप्यधिकःखेदोभविष्यतीति सूचितं ॥ ३५ ॥ स० पुरन्दरादित्युक्त्याकैमुत्यंसूच्यते ॥ ४१ ॥ इतित्रिपञ्चाशःसर्गः ॥ ५३ ॥

ति० ताराधिपतिवर्चसि तारे तथाब्रुवति। तुशब्दादङ्गदे प्रतिषेधाकरणात्तदनुमन्यमानेसति । अथ अनन्तरं । अङ्गदेन राज्यं

[ पा० ] १ क. ग. घ. छ. झ. ट. प्रियारक्तश्च. २ इदमर्धं. ङ.—ट. पाठेषुदृश्यते. ३ क. ख. ङ.—ट. अदृष्टायांच. ४ क. ख. ग. दृष्ट्वास्मांश्चसमागतान्. घ. दृष्ट्वाचास्मान्समागतान्. ५ ख. घ. ङ.—ट. कामाय. ६ ञ. सापराधानां. ख. ग. घ. त्वपराद्धानां. ७ इदमर्धं. ङ.—ट. पाठेषुदृश्यते. ८ क. छ. झ. मन्वीक्ष्य. ९ ट. मुपलभ्यच. १० ङ. ज. रोचतेवचः. ११ ङ.—ट. पुष्पोदक. १२ क.—ट. पेयं. १३ ङ. च. ज. पुरंदराद्भयं. १४ क.—ट. हन्येम.

बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् ॥ चतुर्दशगुणं मेने हनुमान्वालिनः सुतम् ॥ २ ॥
आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः ॥ शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३ ॥
बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः ॥ शुश्रूषमाणं तारस्य शुक्रस्येव पुरन्दरम् ॥ ४ ॥
[3]भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविदां वरम् ॥ अभिसंधातुमारेभे हनुमानङ्गदं ततः ॥ ५ ॥
स चतुर्णामुपायानां तृतीयमुपवर्णयन् ॥ भेदयामास तान्सर्वान्वानरान्वाक्यसंपदा ॥ ६ ॥
तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् ॥ भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥ ७ ॥
त्वं समर्थतरः पित्रा युद्धे तारेय वै धुरम् ॥ दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥
नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव ॥ नाज्ञाप्यं विसहिष्यन्ति पुत्रदारान्विना त्वया ॥ ९ ॥
त्वां नैते [11]ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते ॥ [12]यथायं जाम्बवान्नीलः सुहोत्रश्च [13]महाकपिः ॥ १० ॥

राज्यं हृतं मेने राज्यं कर्तुं सामर्थ्यमस्तीति मेन इत्यर्थः ॥ १ ॥ अष्टाङ्गया " ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहोपोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः " इत्युक्ताष्टाङ्गयुक्तया । चतुर्बलसमन्वितं बाहुबलमनोबलोपायबलबन्धुबलयुक्तं । चतुर्दशगुणं " देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानिता दाक्ष्यमूर्जः संवृतमन्त्रता ॥ अविसंवादिता शौर्यं शक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षत्वमचापलम्" ॥ इत्युक्तचतुर्दशगुणयुक्तं ॥ २—३ ॥ तारस्य शुश्रूषमाणं । नटस्य शृणोतीतिवत्कारकशेषत्वात्षष्ठी । शुक्रस्येव पुरंदरमिति पुरंदरशब्दसन्निधानादत्र शुक्रशब्दो बृहस्पतिपरः । यद्वा कस्यांचिदवस्थायां हितमुपदिशतः शुक्रस्य वचनं पुरंदरः श्रुतवानित्यवगम्यते । गुरोरिव पुरंदरमिति क्वचित्पाठः ॥ ४ ॥ अभिसंधातुं अनुकूलयितुं ॥ ५ ॥ चतुर्णां सामादीनां । तृतीयं भेदं । " साम दानं च भेदश्च दण्डश्चेति यथाक्रमम् " इति क्रमनियमात् ॥ ६ ॥ कोपरूप उपायः कोपोपायः दण्डः तत्समन्वितैः ॥ ७ ॥ पित्रा पितुः ॥ ८ ॥ आज्ञाप्यं आज्ञापनं । भावे कृत्यप्रत्ययः । पुत्रदारान् पुत्रदारैर्विरहिताः । त्वयेति कर्तरि तृतीया । अस्य आज्ञाप्यमित्यनेन संबन्धः ॥ ९ ॥ अयं जाम्बवान्नीलः सुहोत्रश्च एते त्वां यथा नानुयुञ्जेयुः नानुवर्तेरन् । तथाहमपि नानुवर्ते हि । त इमे सर्वे सामादिभिः सुग्रीवादपक-

सुग्रीवीयंकपिराज्यं हृतमितिमेने । तद्राज्यं स्वयंप्रभाराज्यमित्यर्थइत्यन्ये ॥ १ ॥ **स०** शुक्लपक्षत्वेनादिः कृष्णपक्षस्य । समग्रःशुक्लपक्षइत्यर्थः । तस्मिन् ॥ ३ ॥ **ति०** शुक्रस्येवपुरन्दरं विपरीतोपदेशग्रहे उपमैषा ॥ **स०** शुश्रूषमाणं आकर्णयन्तं । तारस्यवचइतिशेषः । कदापि नैतद्घटतइति सूचयितुमभूतोपमितिमाह—**शुक्रस्येवपुरन्दरमिति** ॥ शुक्रस्यवाक्यंशुश्रूषमाणंपुरन्दरमिवेत्यन्वयः ॥ ४ ॥ **ति०** अभिसंधातुं तारादिभ्योभेदयितुं ॥ **शि०** अङ्गदंअभिसन्धातुं भर्तुरर्थेसंयोजयितुं ॥ ५ ॥ **ति०** वाक्यसंपदा भेदजननक्षमन्यायोपेतेन " हीनाश्रयोनकर्तव्यः कर्तव्योमहदाश्रयः " इत्यादिवाक्यसमूहेन ॥ **स०** चतुर्णां सामदानभेददण्डानां द्वितीयउपायो दानं । तमुपवर्णयन् हेतौशतृप्रत्ययः । रामकार्येसाधिते राज्यादिप्राप्तिर्भवतीतिवर्णयित्वा तान्अङ्गदानुवर्तिनोभेदयामास स्वानुकूलांश्चकारेतियावत् ॥ द्वितीयोभेदइति नागोजिभट्टीयव्याख्यानंतु " सामदानेभेददण्डावित्युपायचतुष्टयं " इति क्वचित्पुस्तकसंपुट्यां " भेददण्डौसामदाने" इत्युभयथाप्यमरपाठे भेदस्य द्वितीयत्वानुक्तिविरोधात् इहभेदयामासेति द्वितीयस्यभेदस्य भेदनहेतुत्वासंभवाच्चोपेक्ष्यं ॥६॥ **ति०** भीषणमेवस्तुतिपूर्वंकरोति—त्वमिति । त्वंपित्रासुग्रीवेणयुद्धेसमर्थतरः । यद्वा त्वं पित्रासदृशइतिशेषः । अतएव युद्धेसमर्थतरइत्यर्थः । दृढंधारयितुंशक्तः । अस्य यदिसर्वेकपयस्त्वामनुवर्त्स्यन्तीतिशेषः ॥ ८ ॥ **ति०** कपिराज्यं किष्किन्धायांवा ऋक्षबिलेवा । नचतदस्तीत्याह—नित्यमिति । स्वभावादितिभावः । अस्थैर्यैकारणान्तरमप्याह—पुत्रदारंविनेति । पुत्रदाराणां किष्किन्धावर्तिनां सुग्रीवायत्तत्वात्त्वयासहबिलेऽवस्थाने तद्वियोगस्यस्पष्टत्वात् । निगृह्यस्थापनमप्यशक्यमित्याह—त्वयाज्ञाप्यं त्वत्कर्तृकमाज्ञापनं नसहिष्यन्ति । त्वत्तोप्यधिकबलत्वादिति-

**[ पा० ]** १ ग. बुद्ध्याप्यष्टाङ्गया. २ क. ख. गुरोरिव. ३ क. भर्तुरर्थपरिश्रान्तं. ४ क. ग. घ. च. ज. विशारदं ङ. छ. झ. ञ. ट. विशारदः. ५ ख. ङ.—झ. द्वितीयं. ६ क. ग. घ. भिन्नेषुसर्वेषु. ७ ङ.—ट. विविधैर्वाक्यैः. ८ क. ङ.—ट. ध्रुवं. ९ घ. हरयो. १० क.—झ. ट. पुत्रदारंविना. ञ. पुत्रदारैर्विना, ११ ङ. छ. झ. ञ, ट, ह्यनुरञ्जेयुः. ग. ह्यनुजीवेयुः. १२ ख. यथाच. १३ ङ. च. ज. ञ. महाबलः.

न ह्यहं ते इमे सर्वे सामदानादिभिर्गुणैः ॥ दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११ ॥
विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः ॥ आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥
यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् ॥ एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणे ॥ १३ ॥
स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा ॥ लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥ १४ ॥
लक्ष्मणस्य तु नाराचा बहवः सन्ति तद्विधाः ॥ वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥१५॥
अवस्थाने यदैव त्वमासिष्यसि परंतप ॥ तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः ॥ खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः॥१७॥
स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः ॥ तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥१८॥
न च जातु न हिंस्युस्त्वां घोरा लक्ष्मणसायकाः ॥ अपवृत्तं जिघांसन्तो महावेगा दुरासदाः ॥१९॥
अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम् ॥ आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥२०॥
धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः ॥ शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति॥ २१ ॥
प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् ॥ तस्यापत्यं च नास्त्यन्यत्तस्मादङ्गद गम्यताम्॥ २२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

र्षितुं न शक्याः ॥ १०—११ ॥ बलीयसः प्रबलस्य । दुर्बलेन समं विगृह्य आसनमप्यवस्थानमपि कर्तव्यमाहुः । नतु दुर्बलस्य बलीयसा । तस्मात् आत्मरक्षाकरः स्वक्षेमकाम इति यावत् । दुर्बलः बलीयसा न विगृह्णीत विगृह्य नासीत ॥ १२ ॥ स्वतो बलाभावेपि दुर्गबलमस्तीत्याशङ्क्याह—यां चेति ॥ यामिमां गुहां धात्रीं रक्षकां मन्यसे । एतद्बिलमिति ताराच्छ्रुतं । एतत् ऋक्षबिलं । विदारणे विषये लक्ष्मणबाणानामीषत्कार्यं अयत्नसाध्यमित्यर्थः ॥ १३ ॥ पुरा बिलवासिनं मयमुद्दिश्याशनिं वज्रं क्षिपतेन्द्रेण स्वल्पं कृतं द्वारमात्रं कृतं । लक्ष्मणस्तु निशितैर्बाणैः पत्रपुटमिव भिन्द्याद्धि ॥ १४ ॥ तद्विधाः तादृशाः । अपरिच्छिन्नवैभवा इति यावत् । गिरीणामपि दारणाः बिलस्य किमुतेति भावः ॥ १५ ॥ अवस्थाने बिले । यद्वा विगृह्यावस्थाने आसिष्यसि स्थास्यसि । विगृह्यावस्थानं यदाध्यवसिष्यसीत्यर्थः ॥ १६—१८ ॥ लक्ष्मणसायकाः अपवृत्तं वृत्तहीनं स्वकार्याकरमित्यर्थः । त्वां न हिंस्युरिति न हिंस्युरेवेत्यर्थः ॥ १९ ॥ आनुपूर्व्यात् क्रमप्राप्तेः ॥ २०—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥ ५४ ॥

भावः ॥ ९ ॥ स० इमां गुहां । इमां स्वयंप्रभांवा । धात्रीं एकत्र रक्षयित्रीं । अपरत्र धारयित्रीं । एतत् परिदृश्यमानंबिलं । मन्यसे इतराशक्यस्थानंमन्यसे । एतत् विदारणं बुद्धिस्थंबिलविदारणं । लक्ष्मणबाणानां लक्ष्मणबाणैः । ईषत् कार्यमितिद्वेपदे । अल्पकार्यमित्यर्थः । तेननखलप्रसक्तिः । " स्वल्पंहिकृतं " इत्युत्तरग्रन्थानुकूलमिदंव्याख्यानं । खलभावआर्षइतिव्याख्यानमैकपद्याश्रयेणतस्यप्रतिकूलमितिमन्तव्यं ॥ १३ ॥ ति० पुरा पूर्वं । माययाभूतलान्तर्निर्मितैतत्पुरवर्तिमयवधार्थमशनिं तत्प्रदेशभुवि क्षिपतेन्द्रेण स्वल्पमेवकृतं मयवधमात्रंकृतं नतुपुरंभग्नं । लक्ष्मणस्तु निशितैर्बाणैरेतत्पुरमपिपत्रपुटमिवभिन्द्यात् ॥ स० स्वल्पं द्वारमात्रं । पत्रपुटं पुटति शब्दंकरोतीतितथा । पत्रंचतत्पुटंच । शुष्कपर्णमितियावत् । पुटपत्रमितिभाव्यमितितुदत्तोत्तरं । " बिलंवःशुष्कवर्णवत् " इतिसंग्रहरामायणोक्तेः ॥ १४ ॥ ति० तद्विधाइत्यस्यविवरणं वज्राशनीत्यादि । वज्रं इन्द्रकरस्थं । अशनिर्मेघस्थः । यद्वातद्विधाः वालिहन्तृबाणसदृशाः ॥ १५ ॥ ति० सर्वत्रात्रलक्ष्मणनामग्रहणंतस्यक्रूरस्वभावत्वात् । ईदृशानां रामालक्ष्यत्वाच्च ॥ १९ ॥ ति० धर्मराजः धर्ममार्गवर्तीराजा तथाप्रीतिकामएवत्वयि नतुत्वद्वधकामः ॥ शि० धर्मराजः सद्धर्मैः शोभमानः ॥ २१ ॥ इतिचतुःपञ्चाशःसर्गः ॥ ५४ ॥

[ पा० ] १ क. ग. नचतेसर्वे. २ क. ग. ङ.—ट. दण्डेनन. ख. घ. नदण्डेन. ३ च. छ. झ. ञ. ट. बलीयसा. ४ छ. झ. ञ. ट. विदारणं. ५ क. ङ.—ट. लक्ष्मणस्यच. ६ छ. झ. ट. दारकाः. ७ ङ. छ. झ. ट. अवस्थानं. ८ च. ज. दुःखाद्दुःखतरंगत्वाकिंकरिष्यन्तिदुर्गताः. ९ क. ग. ज. झ. अत्युग्रवेगानिशिताघोराः. १० ङ. रामलक्ष्मण. ११ च.—ञ. अपावृत्तं. १२ छ. झ. ट. धर्मराजः. १३ च.—झ. ट. सत्वांजातुननाशयेत्. १४ ट. तस्यापत्यंतु.

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

हनुमदुक्तसुग्रीवस्यगुणवत्त्वमसहमानेनाङ्गदेन सुग्रीवदोषोद्भावनेन तद्गर्हणपूर्वकं वानरान्प्रति स्वस्यप्रायोपवेशनाभ्यनुज्ञानेन प्रायोपवेशनम् ॥ १ ॥ तथाभूतेऽङ्गदे सबाष्पमोचनं सुग्रीवगर्हणपूर्वकं स्वयमपि प्रायोपविष्टैः सकलकपिवरैः रामवनप्रवेशादिस्वप्रायोपवेशावधिकसर्ववृत्तान्तोद्घोषणेन गिरिदरीपरिपूरणम् ॥ २ ॥

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् ॥ स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १ ॥
स्थैर्यमात्ममनःशौचमानृशंस्यमथार्जवम् ॥ विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥
भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् ॥ धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥३॥
कथं स धर्मं जानीते येन भ्रात्रा [1]महात्मना ॥ युद्धायाभिनियुक्तेन [2]बिलस्य पिहितं मुखम् ॥ ४ ॥
सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः ॥ विस्मृतो राघवो येन स [3]कस्य तु कृतं स्मरेत् ॥ ५ ॥
लक्ष्मणस्य [4]भयाद्येन नाधर्मभयभीरुणा ॥ आदिष्टा मार्गितुं सीतां [5]धर्ममस्मिन्कथं भवेत् ॥ ६ ॥
तस्मिन्पापे कृतघ्ने तु [6]स्मृतिहीने चलात्मनि ॥ आर्यः को विश्वसेज्जातु तत्कुलीनो [7]जिजीविषुः ॥ ७ ॥
राज्ये [8]पुत्रः प्रतिष्ठाप्यः [9]सगुणो [10]निर्गुणोऽपि वा ॥ कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥८॥
[11]भिन्नमन्त्रोपराद्धश्च हीनशक्तिः कथं ह्यहम् ॥ किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ॥ ९ ॥
उपांशुदण्डेन हि मां [12]बन्धनेनोपपादयेत् ॥ शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १० ॥

अथ हरीणां प्रायोपवेशः पञ्चपञ्चाशे—श्रुत्वेत्यादि ॥ १ ॥ स्थैर्यं स्थिरबुद्धिता । आत्ममनःशौचं आत्मशुद्धिः मनसः शौचं अन्तःकरणशुद्धिश्चेत्यर्थः । धैर्यं गाम्भीर्यम् ॥ २ ॥ मनःशौचाभावमुपपादयति—भ्रातुरिति ॥ स कथं धर्मं जानीत इति वक्ष्यमाणमाकृष्यते । जीवत इत्यनेन भ्रातुर्मरणानन्तरं तद्भार्यापरिग्रहः कुलधर्म इत्यवगम्यते ॥ ३ ॥ आनृशंस्याभावमुपपादयति—युद्धायेति ॥ युद्धायाभिनियुक्तेन द्वारान्निर्गतस्य शत्रोः युद्धाय वालिना नियुक्तेनेत्यर्थः ॥ ४ ॥ आर्जवाभावमुपपादयति—सत्यादिति ॥ पाणिगृहीतः पाणौ गृहीतः ॥ ५ ॥ कथं तर्हि सेनामानीतवान्सुग्रीव इत्याशङ्क्याह—लक्ष्मणस्येति ॥ नाधर्मभयभीरुणा भयशब्दोत्र भयहेतुपरः । अधर्मरूपभयहेतोर्भीरुणा न च । किंतु लक्ष्मणस्य भयात् । लक्ष्मणदण्डनिमित्तभयादित्यर्थः ॥ ६—७ ॥ तव यौवराज्यस्थापनं किं विस्मृतोसीत्यत्राह—राज्य इति ॥ पुत्रः जनिष्यमाणः स्वपुत्रः ॥ ८ ॥ भिन्नमन्त्रः प्रकाशितविगृह्यावस्थानमन्त्रः । अपराद्धः कृतापराधः। यद्वा पितृहिंसनेन संजातापराधः ॥ ९ ॥ उपांशुदण्डेन रहस्यदण्डरूपेण । उपपादयेत् प्रापयेत् ॥ १० ॥

**ति०** ज्येष्ठस्यभ्रातुर्भार्यां धर्मेणमातरं धर्ममार्गेणवर्तमानांज्येष्ठभ्रातृपत्नींतांमातृतुल्यां । जीवतोममसमक्षं । अनेन "देवराच्चसुतोत्पत्तिं" इत्यतोपिधर्मत्वंवारितं । यद्वा जीवतोमहिषीमिति महिषयुद्धकालिकस्वीकारपरं । यःस्वीकरोति कथं स धर्मंजानीते इत्यन्वयः । एतेन हनूमदुक्तधर्मराजत्वंप्रत्याख्यातं । एतद्वचोऽङ्गदस्यकेवलरोषमूलं त्रैवर्णिकातिरिक्तधर्मास्मरणपूर्वकं ॥ **स०** धर्मेणमातरं ज्येष्ठभ्रातृपत्नीत्वरूपधर्मप्रयोज्यमातृत्ववतीं ॥ ३ ॥ **ति०** 'धर्ममस्मिन्' इतिपाठे धर्मं धर्मधीमूलंप्रवर्तनमित्यर्थः ॥ ६ ॥ **ति०** स्मृतिभिन्ने स्मृतिर्मन्वादीनां भिन्ना त्यक्ता येन । तत्कुलीनः तज्ज्ञातिकोटिप्रविष्टः ॥ ७ ॥ **ति०** सुग्रीवःसगुणो निर्गुणोवास्तु नमे तद्विचारेणकिंचित् । अपितु शत्रुकुलीनं मांपुत्रंराज्येप्रतिष्ठाप्य कथंसुग्रीवो जीवयिष्यति नकथमपीत्यर्थः ॥ **स०** शत्रुकुलीनं शत्रोर्वालिनःकुलंदेहः तत्रभवस्तस्मादुत्पन्नः । "कुलात्खः" । "कुलंगोत्रेदेहेपि" इतिविश्वः ॥ ८ ॥ **ति०** भिन्नोबिलप्रवेशरूपोमन्त्रोयस्यसः । एवंमन्त्रस्ययस्यकस्यापिमुखाच्छ्रवणेऽवश्यंभाविनिस्पष्टमपराद्धश्चभवामि । हीनशक्तिः सुग्रीवापेक्षयाहीनबलः । हनुमदुक्तरीत्यासहायबलहीनश्च ॥ ९ ॥ **स०** उपांशुदण्डेन लोकाविदितशिक्षया । बन्धनेन कारागारस्थापनादिना । शठोगूढद्वेषी । घोरः असह्यव्यापारः । नृशंसोघातकः । यद्यप्यर्थतएकताऽमीषां । तथापि त्रिवारंवदिष्यामीति हनूमतो

**[ पा० ]** १ क.—ट. दुरात्मना. २ ग. घ. ङ. च. ज. बिलस्यापिहितं. ३ च. ञ. कस्यसुकृतं. ४ ग. च.—ट. भयेनेह. ५ झ. धर्मस्तस्मिन्. ञ. ट. धर्मस्त्वस्मिन्. ६ छ. झ. स्मृतिभिन्ने. ७ ङ.—ट. विशेषतः. ८ ग. ङ.—ट. पुत्रंप्रतिष्ठाप्य. ९ ग. ङ. च. ज. ञ. सद्गुणो. १० ङ—ट. विगुणोपिवा. ११ ङ. च. ज. ञ. भिन्नमन्त्रोविरुद्धश्च. १२ क. बाधनेन.

बन्धनाद्वाऽवसादान्मे श्रेयः प्रायोपवेशनम् ॥ अनुजानीत मां सर्वे गृहं गच्छन्तु वानराः ॥११॥
अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् ॥ इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ॥ १२ ॥
अभिवादनपूर्वं तु राघवौ बलशालिनौ ॥ अभिवादनपूर्वं तु राजा कुशलमेव च ॥
वाच्यस्तातो यवीयान्मे सुग्रीवो वानरेश्वरः ॥ १३ ॥
आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ॥ मातरं चैव मे तारामाश्वासयितुमर्हथ ॥ १४ ॥
प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ॥ विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् ॥१५॥
एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ॥ विवेश चाङ्गदो भूमौ रुदन्दर्भेषु दुर्मनाः ॥ १६ ॥
तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ॥ नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः ॥ १७ ॥
सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् ॥ परिवार्याङ्गदं सर्वे व्यवसन्प्रायमासितुम् ॥ १८ ॥
मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ॥ उपस्पृश्योदकं तत्र प्राङ्मुखाः समुपाविशन् ॥ १९ ॥
दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ॥ मुमूर्षवो हरिश्रेष्ठा एतत्क्षममिति स्म ह ॥ २० ॥
रामस्य वनवासं च क्षयं दशरथस्य च ॥ जनस्थानवधं चैव वधं चैव जटायुषः ॥ २१ ॥
हरणं चैव वैदेह्या वालिनश्च वधं रणे ॥ रामकोपं च वदतां हरीणां भयमागतम् ॥ २२ ॥
स संविशद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः ॥
बभूव सन्नादितनिर्दरान्तरो भृशं नदद्भिर्जलदैरिवोल्बणैः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

बन्धनाद्वावसादान्म इति वेति प्रसिद्धौ । बन्धनरूपावसादात् ॥ ११—१२ ॥ राघवौ कुशलं वाच्यावित्यनुषङ्गः ॥ १३—१४ ॥ तपस्विनी शोचनीया ॥ १५—१६ ॥ तस्य संविशतः तस्मिन् संविशति । संवेशः शयनं ॥ १७—१८ ॥ तत्र विन्ध्ये । उदक्तीरं समुद्रस्योत्तरतीरं । एतत् प्रायोपवेशनं क्षममिति मत्वेति शेषः ॥ १९—२० ॥ जनस्थानवधं जनस्थानस्थरक्षोवधं ॥ २१ ॥ आगतं भयं प्रायोपवेशनरूपभयनिमित्तं च । वदतां वदत्सु च । स महीधरो भृशं सन्नादितनिर्दरान्तरो बभूवेत्युत्तरेणान्वयः ॥ २२—२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

निश्चयजननाय शठाद्युक्तिर्युक्ता ॥ १० ॥ **स०** अहमहमितिद्विरुक्तिः प्रतिजानामि गमिष्यामीत्याख्यातद्वययोगादुपपन्ना । यद्वा अहमिति मान्तमहङ्कारवद्वाच्यव्ययं । अहं अहन्तावान् अभिमानीतियावत् ॥ १२ ॥ **ति०** राजा सुग्रीवः । कुशलमेववाच्य इत्यनुकर्षः । नत्विदानीं दुःखवशादुक्तमित्यर्थः ॥ **ति०** अथमातुःकुशलविज्ञापनाशेषतयाऽऽरोग्यपूर्वकलविशेषाभिधित्सयाच पुनःसुग्रीवेकुशलविज्ञापनमाह—वाच्यस्तातइति ॥ १३ ॥ **ति०** निन्दन्तः । अङ्गदपक्ष्याइतिशेषः । व्यवसन् व्यवास्यन् ॥ **शि०** वालिनंप्रशंसन्तः वाली अतीवभाग्यवान् युद्धेरामसंमुखेमृतइतिवदन्तः ॥ १८ ॥ **ती०** उत्तरीयंसमाहिताइतिकर्तरिनिष्ठा । उत्तरीयंसंवसितवन्तइत्यर्थः । उदक्तीरंसमाश्रिताइतिचपाठः ॥ **ति०** हरिश्रेष्ठाअपि एतत्प्रायोपवेशनमेवास्माकमयक्षमं युक्तइति मन्यन्ते स्मेतिशेषः । स्वामिनिम्रियमाणे तंपरित्यज्यास्माकंगमनमयुक्तमिति तत्क्षमत्वव्यवसायः ॥ २० ॥ **ती०** हरीणांभयमागतं संपातिरूपंभयनिमित्तंप्राप्तं । एतच्चानन्तरसर्गादौस्पष्टीभविष्यति ॥ **स०** रामकोपं सुग्रीवोपरि । हरीणांतेषांसुग्रीवादागतंभयं वदतामित्यन्वयः ॥ २२ ॥ **ती०** भयनिमित्तागमनेहेतुमाह—**ससंविशद्भिरिति** ॥ संनादितनिर्दरान्तरत्वस्य भयनिमित्तसंपात्यागमनहेतुत्वात् ॥ २३ ॥ इतिपञ्चपञ्चाशःसर्गः ॥ ५५ ॥

**[ पा ]** १ क. ख. ग. ङ.—ट. बन्धनाच्चा. २ ङ.—ट. अनुजानन्तु. ३ क.—घ. गृहान्. ४ ङ.—ट. नगमिष्याम्यहं. ५ क. घ. पूर्वंहि. ६ च.—ट. राजाकुशलमेवच । अभिवादनपूर्वंतुराघवौबलशालिनौ. ७ ङ. च. ज. ञ. वाच्यःपिता. ८ क.—च. ज. ञ. विनष्टंमामिहश्रुत्वा. ९ क. ख. घ. एतावद्वचनंचोक्त्वावृद्धानप्यभिवाद्यच. १० क.—घ. संविवेशाङ्गदो. ११ ङ.—ट. दुर्मुखः. १२ क. सुग्रीवंचापि. १३ क. ख. घ. छ. ञ. व्यवास्यन्. ग. व्यतिष्ठन्. १४ ख. झ. ट. तद्वाक्यं वालिपुत्रस्य. १५ ख. घ.—ट. सर्वेप्राङ्मुखाः. क. विन्ध्येप्राङ्मुखाः. १६ ङ.—ट. तथा. १७ क. ख. एवंवदद्भिर्बहुभिः. १८ ख. झ. निर्झरान्तरो. १९ ङ.—ट. रिवांबरं.

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

कपिकुलकोलाहलाद्विन्ध्यकन्दराद्विनिर्गतेनसंपातिना कपिकुलावलोकनेन चिरतराहारपरिकल्पनहर्षाद्विधिप्रशंसनपूर्वकं क्रमेण सर्ववानरभक्षणप्रतिज्ञानम् ॥ १ ॥ तदाकर्णनखिन्नेनाङ्गदेन हनूमन्तंप्रति रामकार्याकरणेन प्राणविमोक्षणाद्रामोपकाराय रावणान्मारणाधिगमाच्च क्रमेणात्मगर्हणजटायुःप्रशंसनपूर्वकमेतावद्विपत्तिनिमित्तत्वोत्कीर्तनेन कैकेयीगर्हणम् ॥ २ ॥ तदाकर्णननिर्विण्णेनसंपातिनाऽङ्गदंप्रति स्वस्य जटायुरग्रजत्वनिवेदनेन तन्मरणप्रकारप्रश्नपूर्वकं स्वस्यसूर्यकिरणनिर्दग्धपक्षत्वोक्त्या पर्वतादवतारणप्रार्थना ॥ ३ ॥

[1]उपविष्टास्तु ते सर्वे यस्मिन्प्रायं गिरि[2]स्थले ॥ हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १ ॥
संपातिर्नाम नाम्ना तु [3]चिरंजीवी विहङ्गमः ॥ भ्राता जटायुषः श्रीमान्प्र[4]ख्यातबलपौरुषः ॥ २ ॥
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ॥ उपविष्टान्हरीन्दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३ ॥
विधिः किल नरं लोके विधानेनानुवर्तते ॥ यथाऽयं विहितो भक्ष्यश्चिरान्मह्य[5]मुपागतः ॥ ४ ॥
परं पराणां भक्षिष्ये वानराणां मृतं मृतम् ॥ [6]उवाचेदं वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः ॥ अङ्गदः परमायस्तो हनुमन्तमथाब्रवीत् ॥ ६ ॥
पश्य [7]सीतापदेशेन साक्षा[8]द्वैवस्वतो यमः ॥ इमं देशम[9]नुप्राप्तो वानराणां विपत्तये ॥ ७ ॥
रामस्य [10]न कृतं कार्यं [11]राज्ञो न च वचः कृतम् ॥ हरीणामियमज्ञाता विपत्तिः सहसाऽऽगता ॥ ८ ॥
वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा ॥ गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥
तथा सर्वाणि भूतानि तीर्यग्योनिगतान्यपि ॥ प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान्यथा वयम् ॥
अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः ॥ १० ॥
[12]तेन तस्यो[13]पकारार्थं त्यजतात्मानमात्मना ॥ प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा ॥ ११ ॥

---

अथ संपातिसंवादः षट्पञ्चाशे—उपविष्टा इत्यादि ॥ उपचक्रमे प्राप्तुमुपक्रान्तः ॥ १ ॥ संपातिरित्यादि श्लोकद्वयमेकान्वयं ॥ २—३ ॥ विधिः दैवं । विधानेन योगक्षेमसंपादनेन । यथा यस्मात्कारणात् ॥ ४ ॥ पराणां वानराणां मध्ये मृतंमृतं परं वानरं भक्षिष्य इत्येवं वच उवाचेत्यन्वयः ॥ ५ ॥ परमायस्तः परमोद्विग्न इत्यर्थः ॥ ६—७ ॥ अज्ञाता अचिन्तिता ॥ ८—९ ॥ स्नेहकारुण्ययन्त्रिताः स्नेहकारुण्याभ्यां

**स०** विधिः दैवं कर्मफलंवा । विधानेनापूर्वकर्मानुरोधेन । नरमनुवर्तते । सामान्येनोक्तंस्वस्मिन्निगमयन्नवगमयति—**यथेति** । चिरादुपोषितायेतिशेषः । विहितोमह्यं मद्योग्यः । भक्ष्यः कपिपिशितरूपः । यद्वा मह्यमितिचतुर्थीद्वितीयार्थे । विहितोयोग्योभक्ष्योमामुपागतइत्यन्वयः ॥ ४ ॥ **रामानु०** पराणां श्रेष्ठानां । वानराणांमध्ये परं वानरं मृतंमृतं मारयित्वामारयित्वा भक्षिष्येइत्येवंवचउवाचेतिसंबन्धः ॥ पूर्वत्र “ हरीणांभयमागतं ” इतिवचनस्य परत्र “ पश्यसीतापदेशेन ” इत्याद्यङ्गदनिर्वेदवचनस्यच स्वयंमृतभक्षणेऽनुपपन्नत्वान्मारयित्वामारयित्वेति व्याख्यातं ॥ **ति०** यतः परंपराणां पङ्क्तिउपविष्टानांवानराणांमध्ये मृतंमृतंक्रमाद्भक्षिष्ये । तस्मादितिपूर्वेणसंबन्धः ॥ ५ ॥ **स०** सीतापदेशेन सीताव्याजेनप्राप्तप्रायोपवेशानामित्यर्थः । वानराणांविपत्तये साक्षाद्वैवस्वतोयमः अयंगृध्ररूपी इमंदेशमनुप्राप्तः । गृध्रापदेशेनेतिपाठे सुगमोर्थः । शनैश्चरव्यावृत्तये**यमइति** । यमलभ्रमभ्रंशाय **वैवस्वतइति** ॥ ७ ॥ **स०** पूर्वंपश्येति हनुमन्मात्रंसंबोध्योक्तमिति तइतिवक्तव्येवइत्युक्तिः अङ्गदस्याङ्गस्मरणाभावेनेतिज्ञेयं ॥ यद्वा पूर्वंपश्येत्युक्तिर्मुख्यत्वाच्छ्रोतृषुहनुमतःसंभवति । अत्रमुख्यामुख्योभयविवक्षयावइत्युक्तिः ॥ ९ ॥ **ति०** रामस्यप्रियंकुर्वन्तीत्यनेन तस्मिन्सर्वप्रेमास्पदत्वंसूचयतासर्वात्मत्वंसूचितं ॥ सार्वात्म्यमेवद्रढयति—**अन्योन्यमिति** । स्नेहकारुण्ययन्त्रिताः । रामेइतिशेषः । सर्वस्यरामत्वात्तदीयस्नेहेनैव परस्परोपकारकरणमित्यर्थः ॥ १० ॥ **शि०** तिर्यग्योनिगतानि जटायुःप्रभृतीनि । प्राणां-

**[ पा० ]** १ ख. उपविष्टांस्तुतान्सर्वांस्तस्मिन्प्रायंगिरेस्तटे । गृध्रराजोहरीन्प्रेक्ष्यप्रख्यातबलपौरुषः. २ घ. गिरेस्तटे. ३ ग.— ञ. चिरजीवी. ४ ङ.—ट. न्विख्यातबल. ५ क. ख. ग. मिहागतः. ६ ख. च. ज. झ. ञ. उवाचैतद्वचः. ग. घ. उवाचैवंवचः. ङ. छ. ट. उवाचतद्वचः. ७ ङ.—ज. ञ. ट. गृध्रापदेशेन. ८ ख. द्वैवस्वतंयमं. ९ ख. मनुप्राप्तं. १० छ. झ. ट. कार्यंनकृतंनकृतंराजशासनं. ११ ङ. च. छ. ञ. राज्ञश्चनवचः. १२ क. ग. च.—ट. ततस्तस्योप. १३ ङ. कारार्थे.

राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः ॥ कान्ताराणि प्रपन्नाः स न च पश्याम मैथिलीम् ॥ १२ ॥
स सुखी गृध्रराजस्तु रावणेन हतो रणे ॥ मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम् ॥ १३ ॥
जटायुषो विनाशेन राज्ञो दशरथस्य च ॥ हरणेन च वैदेह्याः संशयं हरयो गताः ॥ १४ ॥
रामलक्ष्मणयोर्वास अरण्ये सह सीतया ॥ राघवस्य च बाणेन वालिनश्च तथा वधः ॥ १५ ॥
रामकोपादशेषाणां राक्षसानां तथा वधः ॥ कैकेय्या वरदानेन इदं हि विकृतं कृतम् ॥ १६ ॥

तदसुखमनुकीर्तितं वचो भुवि पतितांश्च समीक्ष्य वानरान् ॥
भृशचलितमतिर्महामतिः कृपणमुदाहृतवान्स गृध्रराट् ॥ १७ ॥

तं तु श्रुत्वा तदा वाक्यमङ्गदस्य मुखोद्गतम् ॥ अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ १८ ॥
कोऽयं गिरा घोषयति प्राणैः प्रियतमस्य मे ॥ जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥ १९ ॥
कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः ॥ नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥
इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम् ॥ २० ॥
यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः ॥ अतिदीर्घस्य कालस्य तुष्टोऽस्मि परिकीर्तनात् ॥ २१ ॥
तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ॥ भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ॥ २२ ॥

---

बद्धाः । अन्योन्यं प्रत्येकं प्रत्येकं ॥ १०—१२ ॥ परमां गतिं मुक्तिमित्यर्थः ॥ १३—१४ ॥ रामलक्ष्मणयोरित्यादि ॥ रामवनवासमारभ्य प्रायोपवेशपर्यन्तं यदस्ति तत्सर्वमिदं विकृतं कैकेय्या वरदानेन कृतं हीति संबन्धः । इत्यङ्गदोब्रवीदितिसंबन्धः ॥ १५—१६ ॥ समीक्ष्य ज्ञात्वेत्यर्थः । ज्ञानं च वचनश्रवणं वानराणां दर्शनं च । अस्य श्लोकस्यानन्तरं सर्गसमाप्तिर्भवितुमर्हति ॥ १७ ॥ तीक्ष्णतुण्डः तीक्ष्णमुखः ।

---

स्त्यक्त्वापि यथारामस्यप्रियंकुर्वन्ति तथावयं करिष्यामइतिशेषः ॥ अन्योन्यमुपकुर्वन्ति शिष्टाः । ततस्तस्यरामस्योपकारार्थं आत्मना स्वस्वप्रयत्नेन आत्मानंदेहंत्यजत ॥ स० स्नेहयन्त्रिताः उत्तमेषुस्नेहो भक्तिः । मध्यमेषुस्नेहः प्रीतिः । अधमेषु कारुण्यं कृपा । त्यजतेतितृतीयान्तं जटायुषोविशेषणं ॥ आत्मानं शरीरं । आत्मना मनसा ॥ १०–११ ॥ ति० ननु प्राणत्यागेन कथंरामस्यसंतोषोतआह—प्रियमिति । ह्रियतः जटायुषा प्राणांस्त्यजता प्रियंकृतमिति रामस्य मतमितिशेषः । तथाऽस्मन्मरणेनापि रामस्तथा मंस्यतीतिभावः ॥ ११ ॥ स० सामान्यतस्तिर्यक्स्वामित्वंसुग्रीवस्येति सुग्रीवभयान्मुक्तइति जटायुषंप्रति वचनमुचितमितिभावः । यद्वा स्वेषांसुग्रीवाद्भयंयथा तथा सर्वेषामपि भयंतस्मादिति भ्रान्तिपरवशतयाऽङ्गदेनैवमुक्तमितिर्मतव्यं ॥ सुग्रीवभयात् सुग्रीवस्य भयं स्वकार्याकरणे यस्मात्सतथा रामः तस्मात् । मुक्तः शरीरात् । परमांगतिंगतइत्यन्वयः । अनेन सुग्रीवोपि परतन्त्रइति भीतोस्मान्भीषयतीतिसूच्यते ॥ १३ ॥ ति० जटायुषोविनाशेन द्रागितिशेषः । यदिपुनर्मुहूर्तमपि युद्धेरावणंनिरुन्ध्यात्तदा रामदृग्गोचरोरावणः सीतां नहरेदितिभावः । राज्ञोदशरथस्यच द्राग्विनाशेन । यदि पक्षमात्रमपि राजजीवनं स्यात्तदा रामंप्रत्यानयेदेवेतिभावः । वैदेहीहरणंतु स्पष्टमेव वानराणांप्राणसंशयकारणं ॥ १४ ॥ रामानु० तदसुखमिति । श्रुत्वेतिशेषः । सगृध्रराडितिसम्यक् । अन्यथा वृत्तभङ्गःस्यात् । केषुचित्कोशेष्वस्यश्लोकस्यानन्तरं सर्गकरणंदृश्यते केषुचित्सूर्यांशुदग्धपक्षत्वादित्यस्यानन्तरंदृश्यते । प्रायेण सर्गसमाप्तिद्योतकवृत्तभेदसद्भावात्तदसुखमितिश्लोकानन्तरं सर्गकरणमुपपन्नमितिप्रतीयते ॥ १७ ॥ स० गृध्रस्य स्वानुजमरणश्रवणतोऽङ्गस्मरणं नास्तीतिसूचयितुं कविः पुनः तीक्ष्णतुण्डोवचनमब्रवीदितिवदति—तन्त्विति । यद्वा पूर्ववानरान्प्रत्युदाहृतवानिति अत्रतु अङ्गदस्यमुखोद्गतंश्रुत्वा वचनमब्रवीदित्युक्त्या राजपुत्रत्वेनाङ्गदमात्रंप्रत्युक्तिरिति नपुनरुक्तिः ॥ १८ ॥ ति० कोघोषयति समयाप्रष्टव्यइतिशेषः ॥ १९ ॥ स० रावणस्य ऋषिकुलजत्वेनाभ्यर्हितत्वाद्राक्षसगृध्रयोरितियुक्तं ॥ ति० अवतारितुमिच्छेयं । आत्मानमितिशेषः ॥ २० ॥ ति० अवतारणफलमाह—यवीयसइति कनिष्ठस्येत्यर्थः ॥ २१ ॥ ति० श्रोतुमिच्छेयं । युष्मत्समीपमागत्येतिशेषः ॥ २२ ॥ ति० तस्येति । अन्वयस्तुयस्यरामःप्रियःपुत्रः स दशरथो

[ पा० ] १ च. मरणेगताः. २ क. ख. घ.—ट. र्वासमरण्ये. ३ क. वधस्तथा. ४ क. रामकोपाच्चसर्वेषां. ५ ङ.—ट. रक्षसांच. ६ ङ. छ. झ. ट. इदंच. ७ ङ. च. छ. झ. ञ. ट. निरीक्ष्य. ८ छ. झ. ञ. ट. चकितमतिः. ९ ग. ङ.—ट. गृध्रराजः. १० च. ज. ततः. ग. इतिश्रुत्वा. ११ छ. झ. ट. तथा. १२ छ. ज. महाखगः. १३ क. ग. ङ.—ट. प्रियतरस्यमे. १४ ङ.—ज. ञ. चिरायाद्य. १५ क.—ट. परितुष्टोस्मिकीर्तनात्.

[1]तस्यैव च मम भ्रातुः सखा दशरथः कथम् ॥ यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः ॥२३॥
सूर्यांशुदग्धपक्षत्वान्न [2]शक्नोम्युपसर्पितुम् ॥ इच्छेयं पर्वतादस्मा[3]दवतर्तुमरिन्दमाः ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

अङ्गदेन संपातेःपर्वतादवतारणपूर्वकं तंप्रति रामवनप्रवेशादिस्वप्रायोपवेशान्तनिखिलवृत्तान्तनिवेदनम् ॥ १ ॥

शोकाद्भ्रष्टस्वरमपि [4]श्रुत्वा ते हरियूथपाः ॥ श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १ ॥
ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः ॥ चक्रुर्बुद्धिं तदा रौद्रीं सर्वान्नो भक्षयिष्यति ॥ २ ॥
सर्वथा प्रायमासीनान्यदि नो भक्षयिष्यति ॥ कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥३॥
एतां बुद्धिं ततश्चक्रुः सर्वे ते वानरर्षभाः ॥ अवतार्य गिरेः शृङ्गाद्गृध्रमाहाङ्गदस्तदा ॥ ४ ॥
[9]बभूवर्क्षरजा नाम वानरेन्द्रः प्रतापवान् ॥ ममार्यः [10]पार्थिवः [11]पक्षिन्धार्मिकस्तस्य चात्मजौ ॥ ५ ॥
सुग्रीवश्चैव वाली च [12]पुत्रावोघबलावुभौ ॥ लोके विश्रुतकर्माभूद्राजा वाली पिता मम ॥ ६ ॥
राजा कृत्स्नस्य जगत इक्ष्वाकूणां [13]महारथः ॥ रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥ ७ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या [14]चापि भार्यया ॥ पितुर्निदेशनिरतो धर्म्यं पन्थानमाश्रितः ॥
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ८ ॥
रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् ॥ ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥ ९ ॥

" वक्त्रास्ये वदनं तुण्डं " इत्यमरः ॥ १८—२४ ॥ अत्र "कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः" "सखा दशरथः कथं " इत्येवमनुवादात्पूर्वमिदमप्यङ्गदेनोक्तमिति ध्येयम् ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

अथ संपातिप्रश्नोत्तरं सप्तपञ्चाशे—शोकादित्यादि॥ कर्मणा हिंसाकर्मणा ॥१॥ रौद्रीं आत्मत्यागाध्यवसायरूपत्वेन क्रूरां ॥ २—४ ॥ आर्यः पितामहः । आत्मजौ औरसौ ॥ ५ ॥ ओघबलौ ओघसङ्ख्याकपुरुषबलौ । ओघसङ्ख्या च पूर्वोक्ता ॥६—८॥ रामस्य तु पितुर्मित्रमिति कथनात् मैत्रीप्रकारं तु न जानामीत्युक्तं भवति

ममभ्रातुस्तस्यैवजटायुषःसखा । अतस्तत्स्नेहात्प्रयतमानस्य तस्यजनस्थानवासिनः तस्य प्रसिद्धविक्रमस्य । जटायुषोविनाशः कथमभवदिति तस्यविनाशं श्रोतुमिच्छेयमिति । कथंसखा इत्यन्वयस्तुनोचितः । तदुत्तरस्याग्रेऽभावात् ॥ **शि०** यस्यरामःपुत्रः स ममभ्रातुःसखा दशरथः कथंलोकान्तरंगतइतिशेषः ॥ २२-२३ ॥ **ति०** अवतर्तुं अवतारयितुं ॥ **स०** अवतर्तुं अवतरितुं । आगमशासनमनित्यमितिवा तृ इतिह्रस्वान्तधातोरनिट्कत्वाद्वा तद्रूपं । विस्तृतंचैतत्तत्रताराथेत्यनुव्याख्यानव्याख्यासुधापरिमले । ततोनुसन्धेयमिति ॥ २४ ॥ इतिषट्पञ्चाशःसर्गः ॥ ५६ ॥

**ति०** भ्रष्टस्वरं भक्षणवचनस्वरापेक्षया भ्रष्टस्वरमित्यर्थः । तेनस्वरेण यद्यपि सनिश्चितशोकः परितुष्टोस्मीतिश्रद्धेयवचनोभवति । तथापि नश्रद्दधुः यतस्तस्यकर्मणाशङ्किताः । भक्षणार्थं वञ्चनमेवकरोतीति बुद्ध्येतिभावः ॥ **स०** कर्मणा मृतान्भक्षयिष्यामीतिव्याहरणेन ॥ १ ॥ **ति०** सिद्धिं मरणरूपां ॥ ३ ॥ **ति०** एतांबुद्धिं भक्षणाभीष्टत्वबुद्धिं ॥ ४ ॥ **ति०** पार्थिवः, वानराणामितिशेषः ॥ ५ ॥ **ति०** घनबलौ बहुबलौ ॥ ६ ॥

**[ पा० ]** १ ख. तस्यचैव. २ क. ग. ङ. छ. झ. ञ. ट. शक्नोमिविसर्पितुं. ख. शक्नोम्यपसर्पितुं. घ. शक्तोस्मिविसर्पितुं. ३ घ. दवतर्तुंप्लवंगमाः. ४ क. ग. ङ.—ट. श्रुत्वावानरयूथपाः. ५ ग. क्रूरां. ६ च. सर्वांश्च. ७ ग. तदाचक्रुः. ८ ङ.—ट. हरियूथपाः. ९ क. ग. घ. च.—झ. ट. बभूवर्क्षरजोनाम. १० ग. पूर्वकः. ११ क. ख. ङ.—ट. पक्षिन्धार्मिकौतस्य. ग. ख्यातोधार्मिकः. १२ क. पुत्रौदेवबलौमतौ. ख. पुत्रौदेवबलान्वितौ. ग. पुत्रौतुल्यबलावुभौ. छ. झ. ट. पुत्रौघनबलावुभौ. १३ घ. महाबलः. १४ ग. ङ.—ट. सह.

रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् ॥ परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ १० ॥
एवं गृध्रो हतस्तेन रावणेन बलीयसा ॥ संस्कृतश्चापि रामेण [1]गतश्च गतिमुत्तमाम् ॥ ११ ॥
ततो मम पितृव्येण सुग्रीवेण महात्मना ॥ चकार राघवः सख्यं सोऽवधीत्पितरं मम ॥ १२ ॥
मम पित्रा [2]विरुद्धो हि सुग्रीवः सचिवैः सह ॥ निहत्य वालिनं रामस्ततस्तमभिषेचयत् ॥ १३ ॥
स राज्ये स्थापितस्तेन सुग्रीवो [3]वानराधिपः ॥ राजा वानरमुख्यानां [4]येन प्रस्थापिता वयम् ॥ १४॥
एवं राम[5]प्रयुक्तास्तु मार्गमाणास्ततस्ततः ॥ वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥ १५ ॥
ते वयं [6]दण्डकारण्यं विचित्य सुसमाहिताः ॥ अज्ञानात्तु प्रविष्टाः स्म [7]धर्मिण्या विवृतं बिलम् ॥१६॥
मयस्य मायाविहितं तद्बिलं च विचिन्वताम् ॥ व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ॥१७॥
ते वयं कपिराजस्य सर्वे वचनकारिणः ॥ [8]कृतां संस्थामतिक्रान्ता भयात्प्राय[9]मुपास्महे ॥ १८ ॥
क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे ॥ गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥१९॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

अङ्गदंप्रतिसंपातिना परस्परबलपरीक्षणाय जटायुषासह सूर्यमण्डलसमीपगमने सौरातपसंतप्तस्यजटायुषःपरिरक्षणाय स्वेन तदुपरिस्वपक्षप्रसारणे स्वस्यसौरातपनिर्दग्धपक्षतया विन्ध्यगिरौ पतननिवेदनम् ॥ १ ॥ अङ्गदेन सीतावृत्तान्तपरिज्ञानंपृष्टेनतेन कदाचन रावणेननीयमानायाःकस्याश्चित्तरुण्याः स्वस्यपरिज्ञाननिवेदनेनसह तयारामनामोत्कीर्तनेन तस्याः सीतात्वनिर्धारणोक्तिः ॥ २ ॥ तथा तंप्रति स्वस्य दूरदर्शित्वोपपादनपूर्वकं लङ्कायाः शतयोजनोत्तरस्थत्वकथनेनसह तत्र तदानीं सीतायारावणस्यचावस्थाननिवेदनम् ॥ ३ ॥ संपातिना जटायुषेजलदानाय स्वस्य समुद्रप्रापणंप्रार्थितैर्वानरैस्तस्य समुद्रप्रापणेन पुनःपूर्वतनदेशं प्रत्यानयनम् ॥ ४ ॥

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ॥ [10]सबाष्पो वानरान्गृध्रः प्रत्युवाच [11]महास्वनः ॥ १ ॥
यवीयान्मम स भ्राता जटायुर्नाम वानराः ॥ यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २ ॥
वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये ॥ न हि मे [12]शक्तिरस्त्यद्य भ्रातुर्वैरविमोक्षणे ॥ ३ ॥
पुरा वृत्रवधे वृत्ते [13]परस्परजयैषिणौ ॥ आदित्य[14]मुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥ ४ ॥

---

॥ ९–१३ ॥ अभिषेचयत् अभ्यषेचयत् ॥ १४–१७ ॥ संस्थां व्यवस्थां ॥ १८—१९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

अथ संपातिना सीतास्थानकथनमष्टपञ्चाशे— इत्युक्त इत्यादि ॥ १ ॥ आख्यात भूते लोट् ॥ २—३ ॥ पुरेति परस्परवेगातिशयख्यापनपराविति त्यर्थः । आदित्यमुपयातौ सूर्यसमीपंगतौ स्वः ॥ ४ ॥

---

ति० स्थापयित्वा भूमावितिशेषः ॥ १० ॥ ति० निरुद्धः निरुद्धराज्यः ॥ १३ ॥ इतिसप्तपञ्चाशःसर्गः ॥ ५७ ॥

ती० सबाष्पंधारयन्क्रुद्धइतिपाठे क्रोधोरावणविषयः ॥ ति० त्यक्तजीवितैःत्यक्तजीवितनाशभयैः ॥ १ ॥ ति० आख्यात आख्यातवन्तः ॥ २ ॥ स० पूर्वंशक्तियुक्तस्यतवेदानीमशक्तिःकुतइत्यतोनिमित्तमाह—पुरेति । पुरावृत्रवधे इतिकालविशेषकथनार्थमेव नतुवृत्रवधस्यप्रकृतोपयोगकथनमिति मानसमायसनीयं । स्वइत्युत्तमपुरुषद्विवचनमेकत्र । अपरत्र स्मेतिपाठः । तस्यचावसीदतीत्यनेनान्वयः । ततोलङर्थकता । यदि बहुपुस्तकसंपुटीषु स्वरितिवर्तेत तदा स्वरन्तरिक्षंगृह्यते । अन्तरिक्षादिपदमपरिक्षिपन्परिक्षि-

[ पा० ] १ ङ.—ट. जगाम. २ छ. झ. ञ. ट. निरुद्धोहि. ३ ख. घ.—ट. वानरेश्वरः. क. ग. प्लवगेश्वरः. ४ छ. झ. ट. तेन. ५ ख. प्रयुक्ताश्च. ६ घ. दण्डकारण्ये. ७ क. ख. घ.—ट. धरण्याविवृतं. ग. धरण्यांविवृतं. ८ ग. कृतसंस्थां. ९ ङ.—ज. ञ. मुपाश्रिताः. झ. ट. मुपासिताः. १० ख. घ. च. सबाष्पान्. क. सबाष्पनयनान्गृध्रः. ११ ग. महाबलः. १२ ख. घ. शक्तिरद्यास्ति. १३ क.—ट. सचाहंचजयैषिणौ. १४ ख. मुपयातौस्म.

आवृत्याऽऽकाश[1]मार्गे तु जवेन [2]स्म गतौ भृशम् ॥ मध्यं [3]प्राप्ते दिनकरे जटायुरवसीदति ॥ ५ ॥
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् ॥ पक्षाभ्यां [4]छादयामास स्नेहात्परमवि[5]ह्वलः ॥ ६ ॥
[6]निर्दग्धपक्षः पतितो [7]विन्ध्येहं वा[8]नरर्षभाः ॥ अहमस्मिन्वसन्भ्रातुः प्रवृत्तिं नोपलक्षये ॥ ७ ॥
जटायुषस्त्वेवमुक्तो भ्रात्रा संपातिना तदा ॥ युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥ ८ ॥
जटायुषो यदि भ्राता श्रुतं ते गदितं मया ॥ आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९ ॥
[9]अदीर्घदर्शनं [10]तं वै रावणं [11]राक्षसाधिपम् ॥ अन्तिके यदि वा दूरे यदि जानासि शंस नः ॥ १० ॥
ततोऽब्रवीन्महातेजा [12]ज्येष्ठो भ्राता जटायुषः ॥ आत्मानुरूपं वचनं वानरान्संप्रहर्षयन् ॥ ११ ॥
निर्दग्धपक्षो गृध्रोऽहं [13]हीनवीर्यः प्लवङ्गमाः ॥ [14]वाङ्मात्रेण तु रामस्य करिष्ये [15]साह्यमुत्तमम् ॥ १२ ॥
जानामि वारुणाँल्लोकान्विष्णोस्त्रैविक्रमानपि ॥ [16]महासुरविमर्दान्वाऽप्यमृतस्य च मन्थनम् ॥ १३ ॥
रामस्य [17]यदिदं कार्यं कर्तव्यं प्रथमं मया ॥ [18]जरया च हृतं तेजः प्राणाश्च शिथिला मम ॥ १४ ॥

---

आवृत्त्या मण्डलगत्या । स्मशब्दस्य अवसीदतीत्यनेन संबन्धः ॥५॥ छादयामास आच्छादयं ॥ ६—९ ॥ अदीर्घदर्शनं आगाम्यनर्थानवेक्षकं ॥ १०—१२ ॥ वारुणान् लोकान् । अतलवितलादिलोकान् । त्रैवि-

पंश्च स्वःपदं कविरवगमयाञ्चकार भूम्यांमङ्गलं गगनगमनान्तरायापनुत्त्यै कृतमिति । स्वश्शब्दस्यमङ्गलार्थकत्वंतु स्वश्शब्दस्यमङ्ग-लार्थत्वादादौ स्वरव्ययमिति प्रयोगइत्यमरभानुदीक्षितव्याख्यातोऽवसेयं ॥ तत्पक्षे वसन्ददर्शेत्यादिवत्क्रियाप्रबन्धे लडिति लडेव लङर्थइतिबोध्यं । जयैषिणौ परस्परंस्पर्धयाराज्यंपणंकृत्वा वेगेनजयाभिलाषौ उपयातौ । प्रातरितिशेषः । भ्रातरंयवीयांसं परमवि-ह्वलः मरिष्यतीतिचञ्चलचेताः । स्नेहात्पक्षाभ्यामाच्छादयामासं । आच्छादयां आसं इतिपदद्वयं । नित्ययोगादामन्तेनास्तेराच्छादि-तवानिति तदर्थः ॥ यत्तु नागोजिभट्टेन पुरा पूर्वं वृत्रवधेवृत्तेसति जटायुरहंच जयैषिणौ वृत्रवधेनेन्द्रस्यातिप्रबलत्वंनिर्णीय तज्जयै-षिणौभूत्वा प्रथममाकाशमार्गेण स्वर्गंगतौ ततोगरुडवद्भृशं जवेन तंविजित्य प्रत्यावर्त्याऽऽदित्यंदर्पादुपयातौस्वः । अथ तमुपयात-योरावयोर्मध्ये जटायुस्सवितरिमध्यंप्राप्तेऽवसीदतिस्मेतिकतकः ॥ अन्येतु—जयैषिणौ परस्परजयैषिणौ येनोत्पत्य आदित्यःप्रथमं-प्राप्यते सआवयोःप्रबलइति प्रतिज्ञापूर्वमितिशेषइत्याहुः । तेषामावृत्येतिपदस्य इन्द्रप्रसङ्गस्यचासंगतिरित्युक्तं । तदिदमाभाणकंना-तिवर्तते “ गुणादोषायन्ते ” “आत्मदोषंनपश्यति” इति । कतकमतमेवतन्मतमितिभाति पुनःस्वमतानुपन्यासाददूषितत्वाच्च । तच्चसौवासौवसंमतप्रामाण्यकभारतविरुद्धं । तथाहि वनपर्वणिसंपातिवाक्ये— “संपातिर्नामतस्याहं ज्येष्ठोभ्राताजटायुषः । अन्यो-न्यस्पर्धयाऽऽरूढावावामादित्यसंसदम् । ततोदग्धाविमौपक्षौ नदग्धौतुजटायुषः ” इति । भारतानुयायिवाल्मीकिरामायणसंग्रह-रूपसंग्रहरामायणेच—“ अरुणस्यसुतावावां तरुणत्वे ( ति )नगर्वितौ । निजराज्यंपणंकृत्वा पर्यैक्षावहिवेगिताम् । आवामनुग-तौसूर्यमुदयन्तमथोदये । आमध्याह्नगतेः शौर्यात्ततो मोहोमहानभूत् । ” इत्युक्तेः । प्रत्यावर्तनंपतत्रिधर्मः । इन्द्रकथायाश्च कालविशेषप्रतिपत्तिजनकतामात्रेणोक्तिसंभवाद्दूषणस्यालग्नत्वादन्यपक्षएव श्रेयानितिदिक् । **शि०** छादयामास अतिशोकेनवि-क्षिप्तचित्तत्वात्परोक्षक्रियानिर्देशः ॥ ४—६ ॥ **स०** यदि जटायुषोभ्रातेतिगदितं तर्हि मयाश्रुतं । रामसेवानुबन्धिनस्तत्संभा-ष्यत्वेन तववचनस्यश्राव्यत्वमितिभावः । यदि तस्य तवयवीयसोभ्रातुर्घातकस्य रक्षसोनिलयंजानासि तर्ह्याख्याहीत्यन्वयः । तस्येत्युक्त्या नइवतवापि तत्स्थानंतद्वधश्च ज्ञीप्सितमीप्सितश्चेतिसूचयति ॥ ९ ॥ **स०** यदिद्वयस्य दूरेअन्तिकेइति पदद्वयेनान्व-यः ॥ १० ॥ **रामानु०** त्रैविक्रमान् त्रिविक्रममितान् । गोबलीवर्दन्यायेन त्रिविक्रमशब्द उपरितनलोकमात्रवाची ॥ **ति०** वारुणाँल्लोकान् जलप्रधानाँल्लोकान् । अमृतस्यमन्थनंच अनेनच ब्रह्माहरादिक्षणमारभ्यैतत्क्षणपर्यन्तंसर्ववृत्तान्तज्ञत्वं स्वस्यनिवे-दितं ॥ **स०** त्रयश्चते विक्रमाश्च त्रिविक्रमाः त्रयः पादविक्षेपाः तदाक्रान्ताः भूरादिलोकास्त्रैविक्रमाः । विष्णोर्वामनस्य । यद्वा

**[ पा० ]** १ घ. ङ. छ. झ. ट. मार्गेण. च. मार्गंतु. ख. मार्गेच. २ छ.—ट. स्वर्गतौ. ३ ग. प्राप्तेसवितरि. ख. प्राप्तेतुसू-र्येच. ङ.—ट. प्राप्तेतुसूर्येतु. ४ च. ज. छादयाम्येवं. ङ. ञ. छादयाम्येनं. ५ क. ख. ग. ङ.—ट. विह्वलं. ६ झ. निर्दग्ध-पत्रः. ७ ख. विन्ध्येस्मिन्. ८ क.—घ. वानरोत्तमाः. ९ च.—ट. अदीर्घदर्शिनं. १० क. ख. घ. ङ. तंवा. ग. तत्र. ११ क.—च. ज. ञ. राक्षसेश्वरं. छ. झ. ट. राक्षसाधमं. १२ क. ग. ङ. च. छ. झ. ञ. ट. भ्राताज्येष्ठो. १३ ग. ङ.—ट. गतवीर्यः. १४ ङ.—ट. वाङ्मात्रेणापि. १५ ग. ङ. च. ज. ञ. प्रियमुत्तमं. १६ छ. झ. ट. देवासुरविमर्दांश्चह्यमृतस्य विमन्थनं. ख. देवासुरविमर्दांश्चाप्यमृतस्य. ङ. च. ज. ञ. देवासुरविमर्दान्वाह्यमृतस्यापिमन्थनं. १७ ग. दर्शितं. १८ ग. जरयातु. क. ख. घ. जरयापहृतं.

तरुणी रूपसंपन्ना सर्वाभरणभूषिता ॥ ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५ ॥
क्रोशन्ती रामरामेति लक्ष्मणेति च भामिनी ॥ भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥१६॥
सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् ॥ असिते राक्षसे भाति यथा वा तडिदम्बुदे ॥ १७ ॥
तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् ॥ श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८ ॥
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ॥ अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९ ॥
इतो द्वीपे[2] समुद्रस्य संपूर्णे शतयोजने ॥ तस्मिँल्लङ्कापुरी रम्या निर्मिता विश्वकर्मणा ॥ २० ॥
जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः[3] ॥ [ प्रासादैर्हेमवर्णैश्च महद्भिः सुसमा कृता ][4] ॥
प्राकारेणार्कवर्णेन महता सुसमावृता[5] ॥ २१ ॥
तस्यां वसति वैदेही दीना कौशेयवासिनी ॥ रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ २२ ॥
जनकस्यात्मजां राज्ञस्तत्र[6] द्रक्ष्यथ मैथिलीम् ॥ लङ्कायामथ गुप्तायां सागरेण समन्ततः ॥ २३ ॥
संप्राप्य सागरस्यान्तं[7] संपूर्णं[8] शतयोजनम् ॥ आसाद्य दक्षिणं तीरं[9] ततो द्रक्ष्यथ रावणम् ॥ २४ ॥
तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ॥ ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २५ ॥
आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः ॥ द्वितीयो बलिभोजानां[10] ये च वृक्षफलाशिनः[11] ॥२६॥
भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह ॥ श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥२७॥
बलवीर्योपपन्नानां रूपयौवनशालिनाम् ॥ षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥
वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ॥ २८ ॥

क्रमान् त्रिविक्रममितानुपरितनलोकानित्यर्थः । महासुरविमर्दान् देवासुरसंग्रामान् ॥ १३—१५ ॥ अपविध्यन्ती छेदयन्ती ॥ १६—१८ ॥ अध्यास्ते । "अधिशीङ्स्थासां कर्म" इति नगर्याः कर्मत्वं ॥ १९—२४ ॥ विक्रमध्वं । वेः पादविहरणे" इत्यात्मनेपदं । ज्ञानेन दिव्यज्ञानेन ॥ २५ ॥ दूरस्थदर्शनं भवतः कुतो जातं तत्राह—आद्य इत्यादिना ॥ कुलिङ्गानां भूमिप्रत्यासन्नगगनचारिणां । धान्यजीविनः पक्षिविशेषाः कुलिङ्गाः । ये चान्ये धान्यजीविन इति वचनात् । बलिभोजानां काकानां ॥ २६ ॥ भासाः जलवायसाः । "भासस्तु जलवायसः" इति निघण्टुः । श्येनविशेषा इत्यप्याहुः ॥ २७ ॥ वैनतेयात् गरुडात् । नः अस्माकं । जन्मउत्पत्तिः । तेन तस्य या सप्तमी गतिः सैवास्माकमपीत्यर्थः । नन्वारण्यकाण्डे—"द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च । तस्माज्जातोहमरुणात्संपातिस्तु ममाग्रजः" इति

विष्णोर्लोकान् श्रीभागातिरिक्तान् श्वेतद्वीपादीन् । त्रैविक्रमान् त्रिविक्रमाक्रान्तान् । अतोनैकदेशान्वयक्लेशः ॥ १३ ॥ **रामानु०** तस्याउत्तमंकौशेयं असितेराक्षसे शैलाग्रेसूर्यप्रभेवभाति । अंबुदइवासिते राक्षसे विद्युद्यथा तथाभातीतियोजना ॥ १७ ॥ **स०** रामस्य रामेतिनाम्नः । परिकीर्तनात् उच्चारात् । क्लेशसमये पतिनामग्रहणस्यादोषत्वात् । 'भार्या पतेरपि' इत्यस्य स्वस्थचेतस्कभार्यापरत्वात् । नित्यापरोक्षीकृताध्यक्षत्वेन 'दूराद्धूतेच' इति प्रकृतिभावाभावाद्रामरामेतिसंभवति । अनेन प्रकृतिभावाभावेन सीताप्रकृतिभावाभावोपि ध्वन्यते । स्मृतिमात्रत्वेनानाह्वानरूपत्वाद्वा तच्छास्त्रागोचरत्वात्प्रकृतिभावाभावः । "तद्दूरे तद्वन्तिके" इत्येकतरनिष्कर्षस्यदुष्करत्वाद्वा नप्रकृतिभावःप्रगृह्यसंज्ञायां "प्लुतप्रगृह्याः—" इत्यादिना ॥ १८ ॥ **स०** कुबेरनगरीत्वाद्विश्वकर्मनिर्माणं युक्तम् ॥ २० ॥ **स०** राक्षसीभिरिति । अनेनाधुनापि नमर्यादाविपर्यासइतिद्योत्यते ॥ २२ ॥ **कतक०** लङ्कायामभिगुप्तायामित्यादिश्लोकद्वयं प्रक्षिप्तं ॥ २३—२४ ॥ **स०** ज्ञानेन ज्ञायतेऽनेनेतिज्ञानं दिव्यंचक्षुः । पश्यामि जानामि । **ति०** देवयोनित्वेन दिव्यज्ञानेन यूयंतांदृष्ट्वा प्रत्यागमिष्यथेत्यपि पश्यामि । अतोनिस्संशयंगच्छतेतिशेषः ॥ २५ ॥ **ति०** अथ स्वस्यदेवयोनित्वप्रदर्शनशेषतया पक्षिमार्गानाह—आद्यइति ॥ पन्थाः आकाशमार्गः ॥ २६ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. यथाविद्युदिवांबरे. २ क. ख. ङ.—ट. द्वीपे. ३ ख. काञ्चनवेदिभिः. ४ ङ.—ट. पुस्तकेष्विदमर्धंदृश्यते. ५ ङ. च. ज.—ट. चसमन्विता. ग. सुसमाहिता. ६ ङ.—ट. राज्ञस्तस्यां. ७ ग. छ. ञ. ट. सागरस्यान्ते. ८ ग. ङ. च. छ. ञ. ट. संपूर्णेशतयोजने. ९ क. ङ.—ज. ञ. ट. कूलं. १० ग. बलिपुष्टानां. ङ. च. ट. बलिभोज्यानां. ११ ङ.—ट. फलाशनाः.

इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ॥ अस्माकमपि सौवर्णं दिव्यं चक्षुर्बलं तथा ॥ २९ ॥
तस्मादाहारवीर्येण निसर्गेण च वानराः ॥ आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ॥ ३० ॥
अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः ॥ विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ॥ ३१ ॥
गर्हितं तु कृतं कर्म येन स्म पिशिताशिना ॥ प्रतीकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत् ॥ ३२ ॥
उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ॥ अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ॥ ३३ ॥
समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् ॥ प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३४ ॥
ततो नीत्वा तु तं देशं तीरं नदनदीपतेः ॥ निर्दग्धपक्षं संपातिं वानराः सुमहौजसः ॥ ३५ ॥
पुनः प्रत्यानयित्वा च तं देशं पतगेश्वरम् ॥ बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः ॥ ५९ ॥

जांबवता संपातिंप्रति रावणेन सीताहरणावगमप्रकारप्रश्नः ॥ १ ॥ स्वस्याहारानयनाय समुद्रंगतवता तत्रकेनचिद्रक्षसानीयमानां कांचन काञ्चनप्रभांतरुणीं दृष्टवता पश्चान्महर्षिवचसा तयोःसीतारावणभावंज्ञातवता सुपार्श्वनाम्नास्वपुत्रेण स्वस्मै एतद्वृत्तान्तनिवेदननिवेदनम् ॥ २ ॥

ततस्तदमृतास्वादं गृध्रराजेन भाषितम् ॥ निशम्य मुदिता हृष्टास्ते वचः प्लवगर्षभाः ॥ १ ॥

---

वचनेन जटायुषोक्तेनेदं विरुद्धमिति चेन्न वैनतेयादित्यस्य विनतापुत्रादरुणादित्यर्थ इत्यदोषात् । वैनतेयगतिरित्यत्र वैनतेययोररुणगरुडयोर्गतिरित्यर्थः । अनेन दिव्यज्ञानहेतुर्जन्मोत्कर्ष उक्तः ॥ २८ ॥ न केवलं दिव्यज्ञानं दिव्यचक्षुरप्यस्तीत्याह—इहस्थ इति ॥ अपिशब्दो भिन्नक्रमः चक्षुरित्यनेन संबध्यते । सौवर्णमित्यनेन विशेषणेनातिदूरदर्शित्वमुक्तं ॥ २९ ॥ आहारवीर्येण चक्षुष्याहारबलेनेत्यर्थः । निसर्गेण सौवर्णत्वनिबन्धनस्वभावेन ॥ ३० ॥ वृत्तिः भक्ष्यग्रहणं । चरणयोधिनां कुक्कुटानां । पादमूले पादविकीर्णप्रदेशे । वृत्तिः जीवनं ॥ ३१ ॥ येन पिशिताशिना गर्हितं कर्म सीतापहरणरूपं कृतं । मे भ्रातुर्हेतोः प्रतीकार्यं तस्य वैरं कृतं प्रतिकृतं भवेत् । भवद्भिरिति शेषः । अयं श्लोकः चरणयोधिनामित्यनन्तरं निवेशनीयइत्याहुः ॥ ३२ ॥ एवं प्रासङ्गिकं परिसमाप्य प्रकृतमाह—उपाय इति ॥ गमिष्यथेत्यत्र किष्किन्धामितिशेषः ॥ ३३ ॥ नेतुमिच्छामि मामिति शेषः । भवद्भिरिति करणे तृतीया ॥ ३४ ॥ तीरं देशं तीरप्रदेशमित्यर्थः । तं देशं संपात्यावासभूतं देशं । पुनः प्रत्यानयित्वा प्रवृत्तिं वृत्तान्तं । उपलभ्य ते वानराः हृष्टा बभूवुः ॥ ३५—३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥५८॥

---

अथ ततस्तदमृतास्वादमित्यारभ्य पञ्च सर्गाः प्रक्षिप्ताः । सर्वकोशेष्वदर्शनात् तान्विनापि कथासं-

---

**ति०** ननु कथंलङ्कास्थासीतेति त्वयाज्ञातं तत्राह—इहस्थइति । सौपर्णं सुपर्णलिङ्गकचक्षुष्मतीविद्यासिद्धिजं । साचविद्या बह्वृचब्राह्मणे तृतीयपञ्चिकायामुक्ता ॥ **शि०** इहस्थोऽहंरावणंजानकींच प्रपश्यामि । तत्रहेतुः यथासौपर्णंचक्षुर्बलंचदिव्यंतथाऽस्माकमपिदिव्यं ॥ २९ ॥ **ति०** साग्रात् किंचिदधिकात् योजनशतात् ॥ ३० ॥ **ति०** अस्माकंतु निसर्गेण जातिस्वभावेन । दूरतःदूरवर्तिदर्शनबलसंपादकेनभक्ष्यविशेषेण वृत्तिर्विहिता । धात्रेतिशेषः ॥ कुक्कुटादीनांतु स्वावासवृक्षमूलएव तावद्दूरदृष्टिमात्रसंपादिकाच वृत्तिर्विहिता ॥ ३१ ॥ इत्यष्टपञ्चाशःसर्गः ॥ ५८ ॥

**ति०** तत् वदतः अनुवदन्तः । हृष्टाबभूवुरित्यर्थः ॥ वदतइत्यत्र नुमभावआर्षः ॥ **स०** अमृतस्वादं अमृतवन्मधुरं ।

[ **पा०** ] १ ख. ग. ङ.—ट. सौपर्णं. २ ङ. च. छ. झ. ञ. ट. वृक्षमूलेतु. ३ गर्हितंतुकृतंकर्मेतिश्लोकः क.—ट. पाठेषु. इहस्थोहंप्रपश्यामीति २९ तमश्लोकात्पूर्वंदृश्यते. ४ झ. पिशिताशिनः. ५ घ. ङ. च. झ. ञ. ट. भ्रातृकृतं. ६ ट. महत्. ७ ख. अधिगम्यतु. ८ ख. च. छ. भविष्यथ. ९ क. ख. ग. ङ.—ट. तीरे. १० ज. वानरास्ते. ११ ङ.—ट. तंपुनःप्रापयित्वाचतंदेशं. १२ ङ. च. ज. ञ. तत्रसंहृष्टास्ते. घ. चाभवन्हृष्टास्ते. ग. छ. झ. ट. वदतोहृष्टास्ते.

जाम्बवान्वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः ॥ भूतलात्[1]सहसोत्थाय [2]गृध्रराजमथाब्रवीत् ॥ २ ॥
क्व सीता केन वा दृष्टा को वा [3]हरति [4]मैथिलीम् ॥ तदाख्यातु भवान्सर्वं गतिर्भव वनौकसाम् ॥३॥
को दाशरथिबाणानां वज्रवेगनिपातिनाम् ॥ स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥ ४ ॥
स हरीन्[5]प्रीतिसंयुक्तान्सीताश्रुतिसमाहितान् ॥ पुनराश्वासयन्प्रीत इदं वचनमब्रवीत् ॥ ५ ॥
श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् ॥ येन चापि ममाख्यातं यत्र वा[6]ऽऽयतलोचना ॥ ६ ॥
अहमस्मिन्गिरौ दुर्गे बहुयोजनमायते ॥ चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥
तं मामेवं [7]गतं पुत्रः सुपार्श्वो नाम नामतः ॥ आहारेण यथाकालं बिभर्ति पततां वरः ॥ ८ ॥
तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः ॥ मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥९॥
स कदाचित्क्षुधार्तस्य [8]ममाहाराभिकाङ्क्षिणः ॥ [9]गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १० ॥
स मया वृद्धभावाच्च कोपाच्च परिभर्त्सितः ॥ क्षुत्पिपासापरीतेन कुमारः पततां वरः ॥ ११ ॥
[10]स मामाहारसंरोधात्पीडितं [11]प्रीतिवर्धनः ॥ अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ १२ ॥
अहं तात यथाकाल[12]मामिषार्थी खमाप्लुतः ॥ महेन्द्रस्य गिरेर्द्वारमावृत्य [13]च समास्थितः ॥ १३ ॥
[14]ततः सत्त्वसहस्राणां सागरान्तरचारिणाम् ॥ पन्थानमेकोऽध्यवसं सन्निरोद्धुमवाङ्मुखः ॥ १४ ॥
तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् ॥ [15]स्त्रियमादाय गच्छन्वै भिन्नाञ्जन[16]चयप्रभः ॥ १५ ॥

घट्टनात् पूर्वोक्तार्थविरोधस्फोरकत्वाच्च । तथापि ते | व्याख्यास्यन्ते—तत इत्यादि ॥ हृष्टाः रोमाञ्चाञ्चि-

वदता उ इतिपदं । यस्यगृध्रराजस्य वदता वाग्मिता । ततः तेनगृध्रराजेनभाषितंवचः निशम्य तेप्लवगर्षभाः हृष्टाः । उ विस्मयइत्यर्थः । प्रायः प्रायोपवेशिनांहर्षोत्कर्षःक्वापिनावलोकितइतिदैवगतिर्विचित्रेति विसिस्मिरे इतिभावः । यद्वा वदतेतितृतीयैकवचनं गृध्रराजपदेनान्वेति । निशम्यतत्रसंहृष्टाइतिपाठे नायासः । वदतइतिपदेवा वदशब्दात्तृतीयान्तात्तसिः । तस्य गृध्रराजेनेत्यनेनान्वयः । वदतइति षष्ठीशेषेसती तृतीयार्थेवा ॥ १ ॥ **ति०** अब्रवीत् लङ्कायांसीतादर्शनं त्वदेकसाक्षिकमन्यसाक्षिकमपिवेतिदार्ढ्यायापृच्छदित्यर्थः । भूतलादुत्थाय प्रायोपवेशंत्यक्त्वेत्यर्थः ॥ **शि०** वानरश्रेष्ठः वानरेभ्योऽधिकवयस्कः । गृध्रराजानं समासान्तविधेरनित्यत्वाट्टजभावः ॥२॥ **रामानु०** अथजांबवान् लूनपक्षःकन्दरान्तर्गतःसन्संपातिर्दूरवृत्तं सीतापहरणादिकं केनप्रकारेणावगतवानिति मत्वा विशेषतोऽवगन्तुंपृच्छति—**क्वसीतेत्यादिना** ॥ **वि०** सीतांकोहरतिस्म । ह्रियमाणाच केनदृष्टा त्वयाऽन्येनापिवा । हृताच क्ववावर्ततेइतिसर्वं भवानाख्यातु । सामान्यतःश्रुत्वा प्रायोपवेशादुत्थितानां विशिष्यवदत्वित्यर्थः ॥ ३ ॥ **स०** सीताप्रतिकृतिंनेताऽनङ्गस्मरणइत्याह—कइति । स्वयमिति दाशरथिबाणपदेनेव लक्ष्मणमुक्तपदेनाप्यन्वेति ॥ स्वयंदाशरथिः स्वेच्छयैवदाशरथिर्दशरथापत्यंरामः । तस्य बाणानामित्यत्रैवान्वयोवा । यद्वा दाशरथिपदेन रामरामानुजयोर्ग्रहणं। स्वयंलक्ष्मणमुक्तानांस्वयंलक्ष्मणं स्वस्वनाम रामेतिलक्ष्मणेतिच मुक्तंशिल्पिभिर्येषु तेतथा । “ लक्ष्मणंलाञ्छनेनाम्नि ” इतिविश्वः ॥ ४ ॥ **रामानु०** सीताश्रुतिसमाहितान् सीतावृत्तान्तश्रवणेनसमाहितान् ॥ **ति०** प्रतिसंमुक्तान् त्यक्तप्रायोपवेशान् । सीताश्रुतिसमाहितान् सीताविषयवृत्तान्तश्रवणेसावधानान् पुनराश्वासयन् अन्यसाक्षिकताप्रदर्शनेनभूयःस्वोक्तार्थंप्रत्याययन् ॥ ५ ॥ **ति०** वैदेह्याहरणंयथामेमयाश्रुतं येनचममाख्यातं यत्रसाऽऽयतलोचनावर्ततेइतिश्रुतं तदपि इह इदानीं । श्रूयतां ॥ ६ ॥ **ति०** क्षीणःप्राणोबलंपराक्रमश्चयस्यसः ॥ ७ ॥ **स०** गन्धर्वाः चित्ररथाद्याः । तीक्ष्णकामाः तीक्ष्णः समयासमयपरीक्षांविनाऽऽयास्यन्कामःस्त्रीवाञ्छायेषांतेतथा । “ स्त्रीकामावैगन्धर्वाः ” इतिब्राह्मणात् । ततः ततोप्याधिक्येन । तीक्ष्णा बहुवाराहारहेतुःक्षुधा क्षुत्येषांतेतथा ॥ टाबन्तःक्षुधाशब्दः ॥ ९ ॥ **रामानु०** क्षुधार्तस्यमम । समीपमितिशेषः ॥ **शि०** अहनि अहोनिमित्तेसूर्ये आगतेसतीतिशेषः । सूर्योदयकालइत्यर्थः । गतः पुत्रः सायमनामिषः प्राप्तः आगतः ॥ १० ॥ **ति०** यतएवं अतः स मम प्रीतिवर्धनः मया आहारसंरोधात्पीडितः दुर्वचनेनखेदंप्रापितःसन् । मामनुमान्य क्षमापयित्वा । यथातत्त्वं

[ **पा०** ] १ ख. घ. सहसोत्पत्य. २ क. ख. घ. ङ. छ. झ. ट. गृध्रराजानमब्रवीत्. ग. च. ज. ञ. गृध्रराजंतमब्रवीत्. ३ ग. जानाति. ४ क. जानकीं. ५ छ. झ. ट. न्प्रतिसंमुक्तान्. ६ क. ख. ग. ङ. च. झ. ञ. ट. चायतलोचना. ७ ख. च. छ. ज. ञ. ट. गतःपुत्रः. ८ क.—च. ज. ञ. ममचाहारकाङ्क्षिणः. ९ क. ख. ङ.—ट. गतःसूर्ये. १० क. ग. ङ.—ट. समयाहारसंरोधात्पीडितः. ११ ख. ग. प्रीतिवर्धनं. १२ ङ. मामिषार्थे. १३ ङ.—ट. सुसमाश्रितः. ग. चसमाश्रितः. १४ क. ख. घ.—ट. तत्रसत्व. १५ ग. नारीमादाय. १६ क.—ट. चयोपमः.

सोह[1]मभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः ॥ तेन साम्ना विनीतेन पन्थान[2]मभियाचितः ॥ १६ ॥
[3]न हि सामोपपन्नानां प्रहर्ता विद्यते [4]कंचित् ॥ नीचेष्वपि जनः कश्चित्किमङ्ग बत मद्विधः ॥ १७ ॥
स यातस्तेजसा व्योम संक्षिपन्निव [5]वेगतः ॥ अथाहं [6]खेचरैर्भूतैरभिगम्य सभाजितः ॥ १८ ॥
दिष्ट्या [7]जीवसि तातेति [8]ह्यब्रुवन्मां महर्षयः ॥ कथंचित्सकलत्रोसौ गतस्ते स्वस्त्यसंशयम् ॥
एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः ॥ १९ ॥
स च मे रावणो राजा रक्षसां प्रतिवेदितः ॥ [9]हरन्दाशरथेर्भार्यां रामस्य जनकात्मजाम् ॥ २० ॥
भ्रष्टाभरणकौशेयां [10]शोकवेगपराजिताम् ॥ रामलक्ष्मणयोर्नाम [11]क्रोशन्तीं मुक्तमूर्धजाम् ॥ २१ ॥
एष कालात्यय[12]स्तावदिति [13]कालविदां वरः ॥ [14]एतमर्थं समग्रं मे [15]सुपार्श्वः प्रत्यवेदयत् ॥ २२ ॥
तच्छ्रुत्वाऽपि हि मे बुद्धिर्नासीत्काचित्पराक्रमे ॥ [16]अपक्षो हि कथं पक्षी कर्म [17]किंचिदुपक्रमे ॥ २३ ॥
यत्तु [18]शक्यं मया कर्तुं वाग्बुद्धि[19]गुणवर्तिना ॥ श्रूयतां तत्प्रवक्ष्यामि भवतां पौरुषाश्रयम् ॥ २४ ॥
वाङ्मतिभ्यां [20]तु सर्वेषां करिष्यामि प्रियं हि वः ॥ यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः ॥ २५ ॥

---

ताः । बभूवुरिति शेषः ॥ १—१७ ॥ सभाजितः पूजितः ॥ १८ ॥ असौ सकलत्रः सरक्ष्यवर्गः । अतः कथंचित् गतः । अतस्ते स्वस्त्यासीत् असंशयं । इति मां महर्षयोऽब्रुवन्नितियोजना ॥ १९ ॥ मेमया । प्रतिवेदितः ज्ञातः । सुपार्श्ववचनमिदं ॥ २०—२१ ॥ कालात्ययः कालातिक्रमहेतुः । रावणदर्शनमितिभावः ॥ २२—२४ ॥ सर्वेषां वः युष्माकं । वाङ्मतिभ्यां प्रियं करिष्यामि हि । दाशरथेर्यत्कार्यं तन्ममैव

---

इदं वक्ष्यमाणं । वचनमब्रवीत् ॥ १२ ॥ **ति०** तौस्त्रीपुरुषौ । कृतनिश्चयः इमावेव हत्वा पितुरभ्यवहारार्थंनेष्यामीति कृतनिश्चयइत्यर्थः । ततस्तेनविनीतेनसता साम्नैव पन्थानमभियाचितोस्मि । अतएवासौत्यक्तइतिशेषः ॥ १६ ॥ **ति०** दिष्ट्याजीवति सीतेतिपाठः । दिष्ट्यासीता त्वदृष्टिपथंप्राप्ता जीवतिस्म । त्वया तद्धननस्येषत्करत्वात् । एवं पूजयित्वा मांमहर्षयोऽब्रुवन् । असौत्वयादृष्टःपुरुषः सकलत्रःकथंचित्कुशलीगतः । अतोसंशयंतेस्वस्त्यस्तु इतिकतकः । अन्येतु दिष्टयाजीवसितातेतिपाठः । हेतात त्वंदिष्ट्या रावणंप्राप्यापि जीवसीत्यब्रुवन् । यतोसौ सकलत्रः अतोसंशयं त्वां संशयमप्रापय्य गतः अतस्ते स्वस्तिजातमित्यर्थमाहुः ॥ **स०** हेतात वत्स असौ स्वस्ति क्षेमेण । कथंचित्रामोपेक्षितः गतः अधुनाऽध्वनिवर्ततइत्याहुः । सकलत्रइति । कलत्रेण दुर्गस्थानेनलङ्कयासहितः सकलत्रः । अभूदितिशेषः । कथंचित्रावणेनायुध्यतेतिवा । त्वंजीवसीतिमांप्रतिमहर्षयोऽब्रुवन् । इतिअब्रुवन्नित्येतत्सदृशाद्यसंहितनिर्देशाः विवक्षाभावात्साधवोज्ञेयाः । यद्वा कथंचित्सकलत्रः तेनस्वेनैवकलत्रत्वेसंमततत्कइत्यर्थोलभ्यते । 'उभयथापि महर्षयः' ' सिद्धैः परमशोभनैः ' इत्यत्रोत्तरत्रचोक्तेर्वक्ष्यमाणत्वान्महत्त्वादिमतांकथमेतेषांसीतायांरावणकलत्रत्वबुद्धिः परबोधनंचकथमितिनिरस्तं ॥ " कलत्रंश्रोणिभार्ययोः । दुर्गस्थानेनृपादीनां " इतिविश्वः ॥ १९ ॥ **ति०** अतोऽहं भ्रष्टाभरणत्वादिगुणांरामभार्यांपश्यन् स्थितइत्येषतावन्मेकालात्ययः कालातिपातहेतुरितिसमग्रंएतदर्थंवाक्यविदांवरःसुपार्श्वः मेप्रत्यवेदयत् ॥ २१—२२॥ **स०** पराक्रमंश्रुतवतोपिते कुतोनपराक्रमे मतिरुदितेत्यतआह—**अपक्षइति** । पूर्वंपक्षी इदानीमपक्षो हि यतः कथंचित्कर्मसमारभे प्रारंभंकुर्यां । आरभेदितिपाठे पारोक्षिकयुक्तिरितिमन्तव्यं । परस्मैपदितातु चान्द्री ॥ २३ ॥ **स०** वाग्बुद्धिगुणवर्तिना वाक्चबुद्धिश्चतयोर्गुणायेषांतेआर्याःताननुवर्तितुंशीलमस्यास्तीति सतथा । तेनमयाकर्तुंयच्छक्यं तत्रतत् श्रूयतां । पौरुषाश्रयं पौरुषस्यपराक्रमस्यआश्रयोयस्मिंस्तत् । यद्वा वाग्बुद्धिगुणवर्तिना वाग्बुद्धिहेतुकोगुणउपकारः तन्मात्रानुवर्तिना । **शि०** वाग्बुद्धिगुणवर्तिना वचसाबुद्धिगुणेन समीचीनोपदेशादिनाचवर्तनशीलेनमया ॥ २४ ॥

**[ पा० ]** १ ग. ङ. छ. झ. ञ. ट. मभ्यवहारार्थं. २ ङ.—ट. मनुयाचितः. ३ ङ. च. ज. ञ. नच. ४ ङ.—ट. भुवि. ५ क.—ट. वेगितः. ६ क. ग. झ.—ट. खेचरैः. ७ क. ङ. छ. ट. जीवतिसीतेति. ८ क. ङ. च. छ. झ. ञ. ट. अब्रुवन्. ९ छ. झ. ञ. ट. पश्यन्दाशरथेः. १० च. सीतांशोकपरायणां. ज. सीतांशोकपराजितां. ११ ख. विक्रोशन्तींमुहुर्मुहुः. १२ छ. झ. ट. स्तातइति. च. ज. स्तावद्विद्धि. १३ क. ग. झ. ञ. ट. वाक्यविदांवरः. छ. वाक्यविशारदः. १४ क.—ट. एतदर्थं. १५ क. पुत्रेणोक्तंवनौकसः. १६ ख. घ. अपक्षोहं. १७ ङ. छ. झ. ञ. ट. किंचित्समारभेत्. च. ज. किंचित्समारभे. १८ ग. कामंमयाशक्यं. १९ ख. वशवर्तिना. २० क. ङ.—ट. हिसर्वेषां.

[1]ते भवन्तो मतिश्रेष्ठा बलवन्तो [2]मनस्विनः ॥ [3]प्रेषिताः कपिराजेन देवैरपि दुरासदाः ॥ २६ ॥
रामलक्ष्मण[4]बाणाश्च [5]निशिताः कङ्कपत्रिणः ॥ त्रयाणामपि लोकानां [6]पर्याप्तास्त्राणनिग्रहे ॥ २७ ॥
कामं खलु दशग्रीवस्तेजोबलसमन्वितः ॥ भवतां तु समर्थानां न किंचिदपि दुष्करम् ॥ २८ ॥
तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः ॥ न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

अङ्गदादीन्प्रतिसंपातिना स्वस्यसीतावृत्तान्तपरिज्ञानकारणनिवेदनारंभः ॥ १ ॥ सूर्यकिरणनिर्दग्धपक्षतया मोहाद्विन्ध्यशिखरेपतितेन षड्रात्रानन्तरं मोहादुत्तीर्णेनसंपातिना तस्यदेशस्य विन्ध्यगिरित्वप्रत्यभिज्ञानम् ॥ २ ॥ ततो गिरिशिखरात्कथंचिच्चिरपरिचितस्य निशाकरनाम्नोमहर्षेराश्रममवतीर्य तच्चरणप्रणामिनं संपातिंप्रति महर्षिणा दग्धपक्षतया कथंचित्संपातित्वप्रत्यभिज्ञानेन तत्पक्षदाहहेतुप्रश्नः ॥ ३ ॥

ततः कृतोदकं स्नातं [7]तं गृध्रं [8]हरियूथपाः ॥ उपविष्टा गिरौ [9]दुर्गे परिवार्य समन्ततः ॥ १ ॥
तमङ्गदमुपासीनं तैः सर्वैर्हरिभिर्वृतम् ॥ जनितप्रत्ययो हर्षात्संपातिः पुनरब्रवीत् ॥ २ ॥
कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम ॥ [10]तत्त्वं संकीर्तयिष्यामि यथा जानामि [11]मैथिलीम् ॥३॥
[12]अस्य विन्ध्यस्य शिखरे पतितोस्मि [13]पुरा वने ॥ [14]सूर्यातपपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ ४ ॥
लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव ॥ वीक्षमाणो दिशः सर्वा नाभिजानामि किंचन ॥ ५ ॥
ततस्तु सागराञ्शैलान्नदीः सर्वाः सरांसि च ॥ [15]वनान्युदधिवेलां च [16]समीक्ष्य मतिरागमत् ॥ ६ ॥

---

॥ २५—२८ ॥ कालसङ्गेन कालविलम्बेन ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

ततः कृतोदकमित्यादि ॥ १ ॥ जनितप्रत्ययः जनितविश्वासो यथा भवति तथाऽब्रवीदितियोजना । वानरदर्शनरूपस्वकार्यतो जनितविश्वास इत्यर्थः ॥ २—४ ॥ विह्वलन्निव मूर्च्छन्निव ॥ ५—६ ॥

---

**स०** कपिराजेन सुग्रीवेण । प्रहिताः प्रेषिताः । देवैरपिदुरासदाः । अतोमनस्विनः सीतान्वेषणमानसाः । भवतेतिशेषः ॥२६॥ **स०** निशिताः शाणोल्लीढाः । विहिताइतिपाठेदधातेर्हिरितिहौ विहिताःकृताइत्यर्थः । विहिताः विशिष्टहितकराः विगतहिताश्च । साध्वसाधूनामितिवा । त्राणेनसहितोनिग्रहः त्राणनिग्रहः तस्मिन् । यद्वा त्रयाणांलोकानांमध्येविहिताः द्वेषिणः लोकानामित्यावर्तते । तेषांत्राणनिग्रहेपर्याप्ताः त्राणनिरोधेसमर्थाइतिवा ॥२७॥ **स०** भवतांतुसमर्थानामित्यत्र तुशब्देन स्वयंसमर्थानां तत्रापिरामानुगृहीतानांदुष्करंनेतिविशेषंद्योतयति ॥२८॥ **ति०** सज्जन्ते अलसाभवन्ति ॥ **शि०** बुद्धिनिश्चयः । बुद्धिजनितनिश्चयविशिष्टः सीतादर्शनोद्योगइत्यर्थः ॥ क्रियतां । कालसङ्गेन कालविलंबेन । अलंनक्रियतामित्यर्थः ॥ २९ ॥ इत्येकोनषष्टितमःसर्गः ॥ ५९ ॥

**शि०** कृतंउदकं उदकक्रिया येनतं ॥ १ ॥ **ती०** जनितप्रत्ययः निशाकरमुनिनोक्तप्रकारेण रामदूतवानरागमनदर्शनात्पक्षप्ररोहाच्च निशाकरोक्तार्थेजनितविश्वासः ॥ २ ॥ **स०** निश्शब्दंकृत्वा नविद्यतेशब्दोयस्मिंस्तन्निश्शब्दंकरणं । तदुत्तरकालःक्त्वाप्रत्ययार्थः । ततश्चाशब्दाभिन्नकरणानन्तरकरणाश्रया भवन्तोभवन्त्विति ॥ **ती०** स्ववृत्तान्तकथनं सीतावृत्तान्तकथनोपयुक्तमितिद्योतयितुं यथाजानामिमैथिलीमित्युक्तं ॥ ३ ॥ **स०** कपिप्रवरत्वेनानघेत्यङ्गदमात्रसंबोधनं युक्तं ॥ ४ ॥ **ति०** विह्वलन्निव परमार्तएवसन् ॥ ५ ॥ **रामानु०** सागरानित्यत्र सागरमित्यर्थः । विन्ध्यप्रदेशपतितस्य सकलसागरदर्शनस्यानुपपन्नत्वात् । मतिः प्रत्यभिज्ञा ॥ ६ ॥

[ **पा०** ] १ क. ग. ङ.—ट. तद्भवन्तो. २ ट. यशस्विनः. ३ क.—घ. सहिताः. ङ.—ट. प्रहिताः. ४ च. ज. बाणाहि. ५ ङ.—ज. ञ. ट. विहिताः. ६ ग. पर्याप्ताःशत्रुनिग्रहे. ७ ङ. च. ज. ञ. गृध्रंच. ग. गृध्रंतं. ८ ग. हरिपुङ्गवाः. ९ ङ.—ट. रम्ये. १० ङ.—ट. तथ्यं. ११ ख. जानकीं. १२ ख. अहं. १३ छ. झ. ट. पुराऽनघ. क. महावने. १४ ग. ङ.—ट. सूर्यतापपरीताङ्गः. १५ ङ. च. ज. ञ. वनान्यपिचदेशांश्च. छ. झ. ट. वनानिचप्रदेशांश्च. १६ ङ.—ट. निरीक्ष्यमतिरागता.

हृष्टपक्षिगणाकीर्णः [1]कन्दरान्तरकूटवान् ॥ दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति [2]निश्चयः ॥ ७ ॥
आसीच्चात्राश्रमं पुण्यं सुरैरपि सुपूजितम् ॥ ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपा भवत् ॥ ८ ॥
अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा [3]विना ॥ वसतो मम [4]धर्मज्ञाः स्वर्गते तु निशाकरे ॥ ९ ॥
[5]अवतीर्य च विन्ध्याग्रात्कृच्छ्रेण विषमाच्छनैः ॥ तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १० ॥
तमृषिं द्रष्टुकामोस्मि दुःखेनाभ्यागतो भृशम् ॥ जटायुषा मया [6]चैवं बहुशोधिगतो हि सः ॥११॥
तस्याश्रमपदाभ्याशे ववुर्वाताः सुगन्धिनः ॥ वृक्षो [7]नाऽपुष्पितः कश्चिद[8]फलो वा न [9]विद्यते ॥१२॥
उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः ॥ द्रष्टुकामः [10]प्रतीक्षेहं भगवन्तं निशाकरम् ॥ १३ ॥
[11]अथापश्यमदूरस्थमृषिं ज्वलिततेजसम् ॥ कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४ ॥
तमृक्षाः सृमरा व्याघ्राः सिंहा [12]नागाः सरीसृपाः ॥ परिवार्योपगच्छन्ति [13]धातारं प्राणिनो यथा ॥१५॥
ततः प्राप्तमृषिं ज्ञात्वा तानि सत्वानि वै ययुः ॥ प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥१६॥
ऋषिस्तु दृष्ट्वा [14]मां प्रीतः प्रविष्टश्चाश्रमं पुनः ॥ मुहूर्तमात्रा[15]न्निष्क्रम्य ततः कार्यमपृच्छत ॥ १७ ॥
सौम्य वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते ॥ अग्निदग्धाविमौ [16]पक्षौ त्वक्चैव व्रणिता तव ॥१८॥
[17]गृध्रौ द्वौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे ॥ गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९ ॥
[18]ज्येष्ठो हि त्वं तु संपाते जटायुरनुजस्तव ॥ मानुषं [19]रूपमास्थाय गृह्णीतां चरणौ मम ॥ २० ॥
किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् ॥ [20]दण्डो वायं [21]कृतः केन सर्वमाख्याहि पृच्छतः ॥२१॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

निश्चयः अभूदिति शेषः ॥७॥ भवत् अभवत् ॥ ८ ॥ वर्षसहस्राणि गतानीति शेषः ॥९—१७॥ विकल एव वैकल्यं । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । तस्य भावो वैकल्यता । व्रणिता संजातव्रणा । ते नावगम्यत इत्यत्र त इति भिन्नं पदं । हे सौम्य ते रोम्णां वैकल्यतां दृष्ट्वा नावगम्यते । स्वरूपमिति शेषः । रोमविकलत्वहेतुः—अग्निदग्धाविति । दृश्येते इति शेषः । व्रणितेत्यत्र दृश्यत इति शेषः ॥१८—२१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

**ति०** कन्दराण्युदरेयस्य सचासौकूटवान् श्रृङ्गवान् ॥ ७ ॥ **स०** आश्रमं आश्रमः । "आश्रमोस्त्री" इत्यमरः । उग्रतपेतिलुप्तप्रथमाकप्रातिपदिकनिर्देशः । आगमशासनस्यानित्यत्वादडभावोवा संधिरार्षइतिवा । अथवा सुरैरपिपूजितं भवत्सत् आश्रममासीदित्यन्वयः । उग्रतपाऋषिर्यस्मिन्नासीदित्यावृत्त्यान्वयः ॥ ८ ॥ **ति०** तमृषिंद्रष्टुकामोस्मि द्रष्टुकामोऽभूवमित्यर्थः । अतएवदुःखेन तदभ्याशमभ्यागतः । ननुतद्वासोत्रेतित्वयाकथंज्ञातमतआह—जटायुषेति । अधिगतः प्राप्तः सेवितइत्यर्थः ॥ ११ ॥ **स०** सुगन्धिनः गन्धएषामस्तितेगन्धिनः । शोभनाश्चतेगन्धिनश्चेतिविग्रहः । योग्यतयाशोभनत्वंगन्धेज्ञेयं । एतेन कथमनित्यत्वंकर्मधारयाद्व्रिनिरितिशङ्काद्वयंपरास्तं ॥ १२ ॥ **ति०** उदङ्मुखमुपावृत्तं समुद्रेस्नात्वोदङ्मुखतयाप्रत्यावृत्तं ॥ १४ ॥ **ति०** तस्यस्वसेवायोग्यत्वप्रदर्शनायतिर्यग्योनिसेव्यत्वं तपोमहिमजंदर्शयति—**तमृक्षाइति** ॥ **ती०** धातारं पोषकं ययुः प्रापुः ॥ १५ ॥ **ति०** शरीरके अल्पेशरीरे ॥ प्राणाः चाद्विक्रमबलेअपि । तेदग्धकल्पाः ॥ १८ ॥ **ति०** अवितः ज्ञातः ॥ २० ॥ **ती०** किं कीदृशं । व्याधिसमुत्थानं षष्ठीतत्पुरुषः । अयंदण्डोव्रणकरःप्रहारः खेनधृतः केनकृतः । **स०** अथवा व्याधेःसमुत्थानंयस्मात्तत् रोगकारणं । अयं दण्डः पक्षक्षतिरूपः ॥ २१ ॥ इतिषष्टितमःसर्ग ॥ ६० ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. कन्दरोदरकूटवान्. २ क. ख. ग. ङ.—ट. निश्चितः. ३ ङ. च. छ. झ. ञ. ट. गिरौ. ग. वने. ४ च.—ट. धर्मज्ञे. ५ ग. अवतीर्यतु. ६ ख. चापि. ७ क.—घ. च. छ. झ. ञ. ट. नापुष्पितः. ८ ग. दफलोत्र. ९ क.—ट. दृश्यते. १० क.—ट. प्रतीक्षेच. ११ ग. छ. ज. झ. ट. अथपश्यामिदूरस्थं. ङ. अथापश्यमहंरम्यं. १२ क. ङ. छ. झ. ञ. ट. नानासरीसृपाः. १३ ख. ग. ङ. छ.—ट. दातारं. १४ क. ग. ङ. च. छ. झ. ञ. ट. मांतुष्टः. ख. मांतत्र. १५ ङ. च. छ. झ. ञ. ट. निर्गम्य. १६ ङ.—ट. पक्षौप्राणाश्चापिशरीरके. १७ क. ङ. द्वौगृध्रौ. १८ छ. झ. ट. ज्येष्ठोऽवितस्त्वं. ङ. ञ. ज्येष्ठस्त्वंतुस. १९ क. ख. वपुरास्थाय. २० क. दण्डोयंवा. घ. दग्धोवायं. २१ ख. छ. झ. ट. धृतः. घ. हृतः.

## एकषष्टितमः सर्गः ॥ ६१ ॥

संपातिना निशाकरमुनिंप्रति विस्तरेण स्वपक्षदाहकारणाभिधानपूर्वकं गिरिशिखराद्भुविपतनेन बलपक्षविहीनजर्जरनिजकलेबरविमोक्षणप्रतिज्ञानम् ॥ १ ॥

ततस्तद्दारुणं कर्म दुष्करं साहसात्कृतम् ॥ आचचक्षे मुनेः सर्वं सूर्यानुगमनं तदा ॥ १ ॥
भगवन्व्रणयुक्तत्वाल्लज्जया व्याकुलेन्द्रियः ॥ परिश्रान्तो न शक्नोमि वचनं प्रतिभाषितुम् ॥ २ ॥
अहं चैव जटायुश्च संघर्षाद्दर्पमोहितौ ॥ आकाशं पतितौ वीरौ जिज्ञासन्तौ पराक्रमम् ॥ ३ ॥
कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् ॥ रविः स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४ ॥
अथावां युगपत्प्राप्तावपश्याव महीतले ॥ रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५ ॥
क्वचिद्वादित्रघोषांश्च ब्रह्मघोषांश्च शुश्रुवः ॥ गायन्तीश्चाङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६ ॥
तूर्णमुत्पत्य चाकाशमादित्यपथमाश्रितौ ॥ आवामालोकयावस्तद्वनं शाद्वलसन्निभम् ॥ ७ ॥
उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः ॥ आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८ ॥
हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहान्नगः ॥ भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९ ॥
तीव्रः स्वेदश्च खेदश्च भयं चासीत्तदावयोः ॥ समाविशति मोहश्च तमो मूर्च्छा च दारुणा ॥१०॥
न दिग्विज्ञायते याम्या नाग्नेयी न च वारुणी॥ युगान्ते नियतो लोको हतो दग्ध इवाग्निना ॥११॥
मनश्च मे हतं भूयः सन्निवर्त्य तु संश्रयम् ॥ यत्नेन महता ह्यस्मिन्पुनः संधाय चक्षुषी ॥
यत्नेन महता भूयो रविः समवलोकितः ॥ १२ ॥

ततस्तदित्यादि ॥ १—२ ॥ पतितौ प्राप्तौ ॥ ३—९ ॥ मोहः चित्तविभ्रमः । मूर्च्छा इन्द्रियैः सह मनस उपप्लवः । तमः अज्ञानं ॥ १० ॥ याम्येत्यादिकं दिगन्तराणामुपलक्षणं । नियतो लोकः नियतसन्निवेशो लोकः । युगान्ते अग्निना दग्धो हत इव । अदृश्यतेति शेषः ॥ ११ ॥ संश्रयं आश्रयभूतं

ति० तद्दारुणंकर्म इन्द्रेणयुद्धरूपं । अनेनदुष्करं सहसा दर्पात्कृतं प्रथममाचचक्षे । तथा तदनन्तरकृतंसूर्यानुगमनंसर्वं प्रकृतविन्ध्यपतनप्रयोजनत्वेनाचचक्षे ॥ स० दारुणंपणंनिधाय दर्पादुत्सर्पणरूपंक्रूरंकर्म । दुष्करं अनन्यसाध्यं ॥ १ ॥ ति० व्रणयुक्तत्वात् इन्द्रयुद्धेवज्रप्रहारजव्रणयुक्तत्वात् परिश्रान्तः । तथापक्षनाशफलकानुचितकर्मकरणजलज्जयाआकुलेन्द्रियश्चाह प्रतिभाषितुंनशक्नोमि । तथापि कथञ्चिद्ब्रवीमीतिशेषः ॥ स० व्रणयुक्तत्वात् । तपनतापनजनितव्रणयुक्तत्वात् । लज्जया अन्योन्यस्पर्धयेदंकार्यंकृतमितिलज्जया । वचनं सामान्यवचनमुद्दिश्यनशक्नोमि । परिभाषितुंव्यक्तंवक्तुंनशक्नोमीति किम्वित्यध्याहृतेनान्वयः ॥ परिभाषितुं सम्यग्वक्तुंनशक्नोमि । वचनंमन्दवचनं शृणुष्वेतिशेषोवा । उच्यतइतिवचनमभिप्रायस्तं परिभाषितुंनशक्नोमीतिवा ॥ २ ॥ ति० संघर्षात् पतनविषयस्पर्धातः । गर्वमोहितौ इन्द्रजयगर्वमोहितौ ॥ स० गर्वमोहितौ अहमहीनवेगइत्यहन्ताविष्टचित्तौ ॥३॥ शि० अस्तंमहागिरिंरविः यावत्स्यात् यायात् । तावदेव अनुयातव्यः आवाभ्यांप्राप्यः ॥ ४ ॥ शि० शाद्वलैः बालतृणैः । संवृतं आच्छादितमिववनमालोकयामः ॥ महातरवोदूर्वादलवद्दृश्यन्तेइत्यर्थः ॥७॥ स० उपलैः अल्पशिलाभिः । पर्वताअपिखर्वतयादृश्यन्तइतिभावः । सूत्रैः कटिसूत्रप्रायाभिः । आपगाभिः नदीभिः ॥ ८ ॥ स० नागाः गजाः । वक्रतया प्रायःस्थितेःसर्पावा ॥ ९ ॥ स० मोहोवैचित्यं । समाविशति आविशत् मां । ततः तंजटायुषं दारुणामूर्छाच आविशति आविशदित्यन्वयः । एवंच नपुनरुक्तिः तद्द्वयात्सामान्यविशेषभावाश्रयणंचनेतिज्ञेयं ॥ नकेवलंमां अपितु तंचेति चःसमुच्चये ॥ १० ॥

[ पा० ] १ क. घ. च.—ट. सहसाकृतं. २ ख. ग. घ. छ. झ. ञ. ट. तथा. ३ ग. झ. ञ. ट. चाकुलेन्द्रियः. क. ख. ङ. च. ज. त्वाकुलेन्द्रियः. ४ ख. ग. ङ.—ट. परिभाषितुं. ५ ङ.—ट. संघर्षाद्गर्व. ६ ख. आकाशपतनात्. ७ छ. झ. ट. दूरात्. ८ घ. कृत्वा. ९ छ. झ. ञ. अप्यावां. १० ङ. च. छ. झ. ञ. ट. द्वादित्रघोषश्चक्वचिद्भूषणनिस्स्वनः । गायन्तीः स्माङ्गनाः. ११ क. च.—ट. पदमास्थितौ. ख.—ङ. पथमास्थितौ. १२ क. ख. घ. ञ. शाद्वलसस्थितं. च. छ. ज. ट. शाद्वलसंवृतं. १३ ङ. च. ज.—ट. सुमहागिरिः. छ. सुमहान्गिरिः. १४ ख. घ. शोकश्चमोहोमूर्च्छाच. क. ङ. च. ज. ञ. शोकश्चमोहान्मूर्च्छाच. ग. शोकश्चमोहान्मूर्च्छाति. छ. झ. ट. मोहश्चततो. १५ छ. ट. नचदिग्ज्ञायते. १६ ङ—ट. नचाग्नेयी-नवारुणी. १७ ख. हतदग्धइवा. १८ क. ग. च. ञ. महताप्यस्मिन्. ख. महताब्रह्मन्. १९ ङ.—ट. न्मनस्संधाय. २० ङ. च. ज. ट. भास्करः प्रति लोकितः.

तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३ ॥
जटायुर्मामनापृच्छ्य[1] निपपात महीं ततः[2] ॥ तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम् ॥ १४ ॥
पक्षाभ्यां[3] च मया गुप्तो जटायुर्न प्रदह्यते[4] ॥ प्रमादात्तत्र निर्दग्धः पतन्वायुपथादहम् ॥ १५ ॥
आशङ्के तं निपतितं जनस्थाने जटायुषम् ॥ अहं[5] तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥ १६ ॥
राज्येन[6] हीनो भ्राता च पक्षाभ्यां विक्रमेण च ॥ सर्वथा मर्तुमेवेच्छन्पतिष्ये शिखराद्गिरेः ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ॥ ६२ ॥

संपातिना वानरान्प्रति निशाकरेण ध्यानादेष्यत्सीताहरणादिवृत्तान्तपरिज्ञानेन स्वंप्रति पुनःपक्षप्ररोहस्य भविष्यत्वाभिधानपूर्वकं वानरेभ्यः सीतावृत्तान्तनिवेदनाय स्वस्य देहत्यागप्रतिषेधननिवेदनम् ॥ १ ॥

एवमुक्त्वा मुनिश्रेष्ठमरुदं दुःखितो भृशम्[7] ॥ अथ ध्यात्वा मुहूर्तं[8] तु भगवानिदमब्रवीत् ॥ १ ॥
पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः ॥ प्राणाश्च[9] चक्षुषी चैव विक्रमश्च बलं च ते ॥ २ ॥
पुराणे सुमहत्कार्यं भविष्यति मया श्रुतम् ॥ दृष्टं मे तपसा चैव श्रुत्वा च [10]विदितं मम ॥ ३ ॥
राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः[11] ॥ तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४ ॥
अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति ॥ अस्मिन्नर्थे[12] नियुक्तः सन्पित्रा सत्यपराक्रमः ॥ ५ ॥
नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति ॥ राक्षसेन्द्रो जनस्थानादवध्यः[13] सुरदानवैः ॥ ६ ॥
सा[14] च कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली ॥ न भोक्ष्यति महाभागा [15]दुःखे मग्ना यशस्विनी ॥ ७ ॥

---

चक्षुरिन्द्रियं सन्निवर्त्य स्वेन विप्रयुज्य । भूयो भृशं हतं मे मनः महतायत्नेन अस्मिन् चक्षुषि पुनः संधाय महता यत्नेन भूयो रविः समवलोकित इति संबन्धः ॥१२—१३॥ निपपात महीं महीं प्रति निपपातेत्यर्थः । पतन्तं दृष्ट्वा अहमाकाशात् पूर्वाधिष्ठिताकाशप्रदेशात् । आत्मानं तूर्णं मुक्तवान् । जटायुषो रक्षणार्थं तदुपरि सत्वरमागच्छमित्यर्थः ॥ १४ ॥ प्रमादात् सूर्यो धक्ष्यतीति बुद्ध्यवधानाभावात् ॥ १५—१७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

---

अस्मिन्नर्थे अरण्यगमने ॥ १-६ ॥ काम्यन्त इति कामैः अपेक्षणीयैः । प्रलोभ्यन्ती प्रलोभ्यमाना ॥७॥

---

ति० पृथ्व्यत्र जंबूद्वीपावच्छिन्नाबोध्या ॥ १३ ॥ इत्येकषष्टितमःसर्गः ॥ ६१ ॥

ति० पक्षप्रपक्षौ सूक्ष्मपक्षमहापक्षौ ॥ प्राणाः पुष्टप्राणाः । चक्षुषी उद्भूतशक्तिके ॥२॥ ति० पुराणे नारदादिभिरुच्यमानेभविष्यरामचरितरूपेपुराणे ॥ श्रुत्वाविदितं तपसादृष्टंच ॥३॥ स० ॥ सुरदानवैः सुरैस्सहितादानवास्तैः । एतेन "येषां च विरोधः शाश्वतिकः" इत्येकवद्भावाभावःकथमितिनिरस्तं ॥ ६ ॥ स० प्रलोभ्यन्ती प्रलोभ्यमाना । प्रलोभयितुंयोग्याःप्रलोभ्याः तद्वदाचरन्ती । वस्तुतस्तु नप्रलोभनीयेत्यर्थः । अदुःखमग्ना भोज्याभावप्रयोज्यदुःखरहिता । नित्यतृप्तत्वात्तस्यदुरन्नत्वाद्वाऽभोजनमितिमन्तव्यं । भोक्ष्यति भोक्ष्यते ॥ ७ ॥

[ पा० ] १ घ. मनादृत्य. २ च. ज. प्रति. ३ ख. घ. पक्षाभ्यांतु. ४ क. ङ.—ट. प्रदह्यत. ५ क. अहंनिपतितो. ६ क. ग. ङ.—ट. राज्याच्च. ७ छ. झ. ट. भृशदुःखितः. ८ ङ. च. छ. ञ. ट. मुहूर्तंच. ९ ख. घ. छ. झ. ट. चक्षुषी चैवप्राणाश्च. क. चक्षुषीचैवतेप्राणाः. १० क. विदितंमया. ११ छ. झ. ट. वर्धनः. १२ ख.—ट. तस्मिन्नर्थे. १३ ख. छ. झ. ट. जनस्थानेअवध्यः. १४ क. साचप्रलोभितातेन. १५ छ. झ. दुःखभग्ना. क.—च. ज. ञ. ट. दुःखमग्ना.

परमान्नं[1] तु वैदेह्या ज्ञात्वा दास्यति वासवः ॥ यदन्नममृतप्रख्यं सुराणामपि[2] दुर्लभम् ॥ ८ ॥
तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति ॥ अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९ ॥
यदि जीवति मे भर्ता लक्ष्मणेन[3] सह प्रभुः ॥ देवत्वं गच्छतोर्वापि तयोरन्नमिदं त्विति ॥ १० ॥
एष्यन्त्यन्वेषकास्तस्या[4] रामदूताः प्लवङ्गमाः ॥ आख्येया राममहिषी[5] त्वया तेभ्यो विहङ्गम ॥ ११ ॥
सर्वथा[6] हि न गन्तव्यमीदृशः क्व गमिष्यसि ॥ देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२ ॥
नोत्सहेयमहं[7] कर्तुमद्यैव त्वां सपक्षकम् ॥ इहस्थस्त्वं[8] तु लोकानां[9] हितं कार्यं करिष्यसि ॥ १३ ॥
त्वयापि खलु तत्कार्यं[10] तयोश्च नृपपुत्रयोः ॥ ब्राह्मणानां सुराणां[11] च मुनीनां वासवस्य च ॥ १४ ॥
इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ॥ नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेवरम् ॥
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

ज्ञात्वा अनशनमितिशेषः ॥ ८–१३ ॥ नृपपुत्रयोः तत्प्रयोजनं त्वयापि कार्यं कर्तव्यं । ब्राह्मणादीनां च कार्यमिति संबन्धः ॥ १४–१५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

---

**ति०** परमान्नं पायसं ॥ वासवोदास्यति । स्वपुरुषद्वारेतिशेषः ॥ इन्द्रात् इन्द्रपुरुषात् नतुरावणपुरुषादिति विज्ञाय अभूतलस्पर्शिलादिरूपैर्देवचिह्नैः । रामआगत्यैनंहत्वात्वांनयिष्यति । संवत्सरतृप्तिकरमिदमन्नंभुक्त्वा देवकार्यसिद्धये मनुष्यभावंधृतवत्या प्राणाधर्तव्याः । देवैरपि मनुष्यभावे आहारंविनाजीवितुंनशक्यतेइत्यादिवचनैश्चनिश्चितेत्यर्थः । निर्वपिष्यति दास्यति । ननु त्रेतायामस्थिप्राणवासस्योक्तत्वाज्जीवितुंशक्यतएवेतिचेन्न । तथासत्यपि क्षीणतायांदेहवैरूप्ये रावणस्यानुरागभङ्गेन तत्पुण्याक्षये तस्यवधोनस्यादिति रूपलावण्याद्यहानाय तद्दानेनादोषात् । रावणस्यतु तथैवरूपादिदर्शनेन मद्दत्ताहाराग्रहणेपि वन्यफलाद्याहारं करोतीतिबुद्ध्या तस्यां नामनुष्यत्वनिश्चयः । एतेनाहारंविनापि पूर्वरूपादिसत्वज्ञानेन तस्य तस्याममनुष्यत्वबुद्धौ तत्संबन्धाद्रामेपि तत्त्वबुद्धौ रामतोरावणवधोनस्यादित्यपास्तं ॥ **स०** नित्यतृप्तापि वासवसेवांनलङ्घयाञ्चकारेत्याह—**परमान्नामति** । ज्ञात्वा सेवाभवत्वितिज्ञात्वेतिशेषः । सर्वान्सुपर्वणोविहाय व्यवहारसिद्ध्यै इन्द्रस्यप्रतिकृतिप्रविष्टत्वात्पायसप्रदोवासवइति चोक्तिर्युक्तिमतीति वासवग्रहणेनद्योतयतिकविरित्यवधेयं । सीताप्रतिकृतित्वमात्रतएव सेवेत्यप्यवसेयं । तदन्नंप्राप्य । इन्द्रादितिपञ्चमी हेतौ । इन्द्रहेतुकमिदंदास्यतीतिप्रकृतंदानंविज्ञाय ज्ञात्वा निर्वपिष्यति ॥ ८–९ ॥ **ति०** उत्सहेयं यदित्वयादेवकार्यायेहस्थातव्यंस्यादिति शेषः । पक्षवत्त्वेहिचापल्याद्गन्तव्यमेवेतोन्यत्रत्वयेतिभावः ॥ **शि०** इहस्थस्त्वं लोकानांहितं सीतावृत्तान्तबोधनरूपं । कार्यंकरिष्यसि । एतेन पक्षप्राप्तौ तवनिश्चलास्थितिर्नभवितेति सूचितं ॥ १३ ॥ **ति०** दृष्टतत्वार्थदर्शनः दृष्टंसिद्धं तत्वार्थदर्शनं यस्य समहर्षिरेवं भाव्यर्थमब्रवीत् । अतोहेतोरहमपि भ्रातरौरामलक्ष्मणौद्रष्टुमिच्छामि । यदि महर्षिरेवंमांप्रति नावक्ष्यत्तदा प्राणांश्चिरंधारयितुं नेच्छे नैच्छं । अपितुकलेवरंत्यक्ष्ये इत्यैवैच्छमित्यर्थइतिकतकः । अन्येतु निशाकरवाक्यमेवेदं अहंपदार्थोपिसएवेत्याहुः ॥ १५ ॥ इतिद्विषष्टितमःसर्गः ॥ ६२ ॥

[ **पा०** ] १ ङ. च. ज.—ट. परमान्नंच. २ ग. सुराणामति. ३ छ. झ. ट. लक्ष्मणोवापिदेवरः. क. ख. भ्रात्रासौमित्रिणासह. ४ ङ.—ट. एष्यन्तिप्रेषितास्तत्र. ५ ग. ङ. च. ज. ञ. रामभार्याहि. ६ क. ख. ग. च.—ट. सर्वथातु. ७ क. ग.—छ. झ. ञ. ट. उत्सहेयमहं. ८ ट. स्त्वंच. झ. स्त्वंहि. ९ क. ग. ङ. च. ज. ञ. लोकानामिदं. १० ङ. च. ज. ञ. कर्तव्यं. ११ छ. झ. ट. गुरूणांच.

# त्रिषष्टितमः सर्गः ॥ ६३ ॥

वानरैःसह संभाषणसमयएव यथामुनिवचनं प्ररूढाभिनवपक्षेणसंपातिना वानरान्प्रति हर्षात्स्वपक्षप्ररोहप्रदर्शनपूर्वकं तस्यदृष्टान्तीकरणात्तत्कार्यसिद्धिनिवेदनेन गतिपरीक्षणाय नभसि समुड्डीनम् ॥ १ ॥ वानरैर्हर्षाद्दक्षिणसमुद्राभिमुख्येन प्रस्थानम् ॥ २ ॥

[1]एतैरन्यैश्च बहुभिर्वाक्यैर्[2]वाक्यविदां वरः ॥ मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स [3]स्वमाश्रमम् ॥ १ ॥
कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैः ॥ अहं विन्ध्यं समारुह्य भवतः [4]प्रतिपालये ॥ २ ॥
अद्य त्वेतस्य कालस्य साग्रं वर्षशतं गतम् ॥ देशकालप्रतीक्षोस्मि हृदि कृत्वा मुनेर्वचः ॥ ३ ॥
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ॥ मां निर्दहति संतापो [5]वितर्कैर्बहुभिर्वृतम् ॥ ४ ॥
[6]उत्थितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये ॥ बुद्धिर्या तेन मे दत्ता [7]प्राणानां रक्षणाय तु ॥
सा मेऽपनयते दुःखं दीप्तेवाग्निशिखा तमः ॥ ५ ॥
बुध्यता च मया वीर्यं रावणस्य दुरात्मनः ॥ पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिलीं कथम् ॥ ६ ॥
तस्या विलपितं श्रुत्वा तौ च सीताविनाकृतौ ॥ न मे दशरथस्नेहात्पुत्रेणोत्पादितं प्रियम् ॥ ७ ॥
तस्य त्वेवं ब्रुवाणस्य संपातेर्वानरैः सह ॥ उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् ॥ ८ ॥
स दृष्ट्वा स्वां तनुं [9]पक्षैरु[8]द्गतैर[10]रुणच्छदैः ॥ प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ॥ ९ ॥
[11]ऋषेर्निशाकरस्यैव [12]प्रभावादमितात्मनः ॥ आदित्यरश्मिनिर्दग्धौ [13]पक्षौ मे पुनरुत्थितौ ॥ १० ॥
यौवने वर्तमानस्य ममासीद्यः पराक्रमः ॥ तमे[14]वाद्यानुगच्छामि बलं पौरुषमेव च ॥ ११ ॥
सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ॥ पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः ॥ १२ ॥
इत्युक्त्वा [15]स हरीन्सर्वान्संपातिः [16]पतगोत्तमः ॥ उत्पपात गिरेः [17]शृङ्गाज्जिज्ञासुः खगमो गतिम् ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा [18]प्रीतिसंहृष्टमानसाः ॥ बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ १४ ॥

---

एतैरित्यादि ॥ १–२॥ पूर्वं निशाकरमुनिप्रयाणानन्तरं अष्टौ वर्षसहस्राणि व्यतीतानीत्युक्तवान् अतः साग्रं वर्षशतं गतमित्येतदष्टवर्षसहस्रोपलक्षणं ॥ ३ ॥ वितर्कैः विविधविचारैः ॥ ४–८ ॥ अरुण-

---

**ति०** मांप्रशस्य भाविदेवकार्यसाधकत्वेनस्तुत्वा । अभ्यनुज्ञाप्य आमन्त्र्य ॥ **शि०** अनुज्ञाप्य वृत्तान्तंबोधयितुं नियुज्य ॥ १ ॥ **स०** देशकालौप्रतीक्षतइति देशकालप्रतीक्षः । कर्मण्यण् । देशकालयोःप्रतीक्षायस्यसइतिवा ॥ ३ ॥ **स०** महाप्रस्थानं अनिवर्त्यमार्गं ॥ **ति०** संतापः पक्षादिहीनजीवनजः ॥ **शि०** संतापः मुनिवियोगजनितखेदः ॥ ४ ॥ **स०** निवर्तये क्रियासंबन्धेलट्सार्वकालिकइतिसंभवत्यतीतार्थता । न्यवर्तयमितितदर्थः ॥ ५ ॥ **ति०** रावणस्यवीर्यंबुध्यता मत्पुत्रवीर्यादल्पमितिजानता ॥ ६ ॥ **स०** यद्वा अरुणाश्चतेछदाश्च । तैः । पक्षैः विहायोगमनसहायैः । "पक्षःसहायेपि" इत्यमरः ॥ ९ ॥ **स०** निशाकरस्य तन्नामकस्य । राजर्षेः राजासन्नपिऋषिधर्मोपेतइतिसतथा । तस्य । यद्वा निशाकरस्यमुनेः राजर्षेः रामस्यच एतत्पक्षेअमितौजसइतिसमुचितार्थं पूर्वार्थेगौणंराजर्षेरित्यपीतिमन्तव्यं । राजभिःपूजितऋषिः राजर्षिस्तस्य । प्रसादात् उपदेशकथाकर्णनजनितात् ॥ १० ॥ **ति०** गतिंजिज्ञासुः उत्थितपक्षैःप्राग्वत्खगतिंविज्ञातुमिच्छुः । विक्रमसाध्येऽभ्युदये सीताधिगमनरूपे । उन्मुखाः ॥१४॥

[ **पा०** ] १ क. एतैश्चान्यैश्च. २ ख—ट. वाक्यविशारदः. ३ छ. झ. ट. स्वमालयं. ४ क. ख. प्रतिलक्षये. ५ ग. छ. विविधैः. ६ ङ.—ञ. उदितां. ७ ङ.—ट. प्राणसंरक्षणेमम. क. ग. घ. प्राणसंरक्षणायतु. ८ झ. संहतैः. ९ क. ग. पत्रैः. १० क. रुणप्रभैः. ११ ख. घ.—ट. निशाकरस्यराजर्षेः. ग. निशाकरस्यचमुनेः. क. निशाकरस्यमहर्षेः. १२ ग. ङ.—ट. प्रसादादमितौजसः. क. प्रभावादमितौजसः. १३ ङ.—ट. पक्षौपुनरुपस्थितौ. १४ ग. घ. च.—ट. वाद्यावगच्छामि. ख. वाद्यतुगच्छामि. क. वाद्याधिगच्छामि. १५ क.—घ. च. झं. ञ. ट. तान्हरीन्. १६ क. ख. घ. पततांवरः. १७ क. शृङ्गात्संपातिःखगतिस्तदा. १८ ग. प्रियसंहृष्ट.

अथ पवनसमानविक्रमाः प्लवगवराः प्रतिलब्धपौरुषाः ॥
अभिजिदभिमुखा[1] दिशं ययुर्जनकसुतापरिमार्गणोन्मुखाः ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुःषष्टितमः सर्गः ॥ ६४ ॥

दुस्तरसमुद्रदर्शनेन विषीदत्सुकपिषु अङ्गदेन कपिवीरसमुदायंप्रति योजनशतोल्लङ्घने सामर्थ्यप्रश्ने केनाप्युत्तराप्रदाने पुनस्तद्बलपराक्रमप्रशंसनपूर्वकं तान्प्रति प्लवने स्वस्वशक्तिनिवेदनचोदना ॥ १ ॥

आख्याता गृध्रराजेन समुत्पत्य प्लवङ्गमाः ॥ संगम्य[2] प्रीतिसंयुक्ता[3] विनेदुः[4] सिंहविक्रमाः[5] ॥ १ ॥
संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम्[6] ॥ हृष्टाः[7] सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २ ॥
अभिक्रम्य[8] तु तं देशं ददृशुर्भीमविक्रमाः ॥ कृत्स्नं लोकस्य महतः प्रतिबिम्बमिव स्थितम् ॥ ३ ॥
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ॥ सन्निवेशं ततश्चक्रुर्[9]हरिवीरा महाबलाः ॥ ४ ॥
सत्त्वैर्[10]महद्भिर्विकृतैः[11] क्रीडद्भिर्विविधैर्जले[12] ॥ व्यात्तास्यैः[13] सुमहाकायैरूर्मिभिश्च समाकुलम् ॥ ५ ॥
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः ॥ क्वचित्पर्वत[14]मात्रैश्च जलराशिभिरावृतम् ॥ ६ ॥
संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ॥ रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ७ ॥
आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ॥ विषेदुः सहसा[15] सर्वे कथं कार्यमिति ब्रुवन् ॥ ८ ॥
विषण्णां[16] वाहिनीं दृष्ट्वा सागरस्य[17] निरीक्षणात् ॥ आश्वासयामास हरीन्भयार्तान्हरिसत्तमः ॥ ९ ॥
तान्विषादेन महता विषण्णान्वानरर्षभान् ॥ उवाच मतिमान्[18]काले वालिसूनुर्महाबलः ॥ १० ॥

---

च्छदैः अरुणबर्हिष्पत्रैः ॥ ९–१४ ॥ अभिजिदभिमुखाः अभिजिन्मुहूर्तप्रतीक्षकाः ॥ १५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

एवं प्रक्षिप्ताः पञ्च सर्गा गताः । एवं कृतोदकं संपातिं स्वस्थानमानीय प्रकृतकार्याय वानरा गता इत्याह—आख्याता इति ॥ समुत्पत्य हर्षेण तत्र लङ्घनं कृत्वा । संगम्य पुनरन्योन्यं समेत्य विनेदुः ॥ १ ॥ हरयः संपातेर्वचनं श्रुत्वा सीतादर्शनकाङ्क्षिणः सन्तः रावणक्षयं रावणनिलयभूतं लङ्काद्वीपमुद्दिश्य सागरं तन्मार्गभूतं सागरं । आजग्मुरिति संबन्धः ॥ २ ॥ प्रतिबिम्बमिव प्रतिनिधिमिव । इदं तटविशेषणं । सर्वलोकस्थसमस्तवस्तुसंपूर्णमित्यर्थः। "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः ॥ ३ ॥ सन्निवेशं स्थानं ॥ ४–९ ॥ विषादेन विषादकारणेन

---

**ति०** प्रतिलब्धंप्राप्तंपौरुषंपौरुषप्रवृत्तिकालोयैस्ते । अभिजिदभिमुखां अभिजिन्नक्षत्रसंमुखां । दिशं दक्षिणां । यद्वा अभिजित् बाहुलकात्कर्मणिक्विप् । अभिजेतव्योरावणः संमुखोयस्यांतांदिशं ॥ १५ ॥ इतित्रिषष्टितमःसर्गः ॥ ६३ ॥

**ति०** आख्याताः आख्यातसीतावृत्तान्ताः ॥ १ ॥ **ति०** रावणक्षयं रावणनाशंरावणगृहंचोद्दिश्योक्तंवचनंश्रुत्वा ॥ २ ॥ **ति०** यत्रमहतोलोकस्यसचन्द्रार्कग्रहस्य कृत्स्नंप्रतिबिंबंस्थितंतंसमुद्रंददृशुः । प्रतिबिंबमवस्थितंइतिप्राचीनःपाठः । प्रतिबिंबमिवस्थितमित्याधुनिकपाठोनयुक्तः । कृत्स्नलोकप्रतिबिंबभावाप्रसिद्धेः ॥ ३ ॥ **ति०** प्रसुप्तमिवचान्यत्र निस्तरङ्गप्रदेशे । अन्यतः अन्यत्र । पर्वतमात्रैः तत्सदृशैः । जलराशिभिः ऊर्मिभिः ॥ ६ ॥

**[ पा० ]** १ ग. छ.—ट. दभिमुखां. २ ङ.—ञ. संगताः. ३ ख. प्रीतिसंघुष्टाः. ४ ङ. ज. निनेदुः. ५ क. ख. ग. भीमविक्रमाः. ६ घ. रावणालयं. ७ ख. प्रहृष्टाःसागरंजग्मुः. ८ क. ख. ग. अतिक्रम्यतु. ङ.—झ. ट. अभिगम्यतु. ञ. अभिसंगम्य. ९ क. ग. घ. श्चक्रुःसहितावानरोत्तमाः. १० ङ. ञ. सर्पैः. ११ ख. घ. विविधैः. १२ ख. घ. विकृतैर्जले. १३ क. घ.—ज. व्यात्तास्यैः. १४ क. त्पर्वतसंकाशैः. १५ ङ. छ.—ट. सहिताःसर्वे. क. सर्वेदुद्रुवुश्चततस्ततः. १६ क. विद्रुतां. १७ क. सागरस्यचवीक्षणात्. १८ क. वचनंकाले.

न [1]विषादे मनः कार्यं विषादो [2]दोषवत्तमः ॥ विषादो हन्ति [3]पुरुषं बालं क्रुद्ध इवोरगः ॥ ११ ॥
[4]विषादो यं प्रसहते विक्रमे [5]पर्युपस्थिते ॥ तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १२ ॥
तस्यां रात्र्यां व्यतीतायामङ्गदो [6]वानरैः सह ॥ हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ १३ ॥
सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ ॥ वासवं परिवार्येव मरुतां वाहिनी स्थिता ॥ १४ ॥
कोऽन्यस्तां वानरीं सेनां [8]शक्तः स्तम्भयितुं भवेत् ॥ अन्यत्र वालितनयादन्यत्र च हनूमतः ॥ १५ ॥
ततस्तान्हरिवृद्धांश्च तच्च सैन्यमरिंदमः ॥ अनुमान्याङ्गदः श्रीमान्वाक्यमर्थवदब्रवीत् ॥ १६ ॥
क इदानीं महातेजा लङ्घयिष्यति सागरम् ॥ कः करिष्यति सुग्रीवं सत्यसंधमरिंदमम् ॥ १७ ॥
को वीरो योजनशतं [9]लङ्घयेच्च प्लवङ्गमाः ॥ इमांश्च यूथपान्सर्वान्[10]मोक्षयेत्को महाभयात् ॥ १८ ॥
कस्य [11]प्रभावाद्दारांश्च पुत्रांश्चैव गृहाणि च ॥ इतो निवृत्ताः [12]पश्येम सिद्धार्थाः सुखिनो वयम् ॥१९॥
कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् ॥ [13]अभिगच्छेम संहृष्टाः सुग्रीवं च [14]महाबलम् ॥ २० ॥
यदि कश्चित्[15]समर्थो वः सागरप्लवने हरिः ॥ स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥ २१ ॥
अङ्गदस्य वचः श्रुत्वा न कश्चित्किंचिदब्रवीत् ॥ स्तिमितेवाभवत्सर्वा [16]तत्र सा हरिवाहिनी ॥ २२ ॥
पुनरेवाङ्गदः प्राह तान्हरीन्हरिसत्तमः ॥ सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः ॥ २३ ॥
[17]व्यपदेश्यकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ॥ न हि वो गमने [18]सङ्गः [19]कदाचित्कस्यचित्क्वचित् ॥
ब्रुवध्वं यस्य या शक्तिः [20]प्लवने प्लवगर्षभाः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

॥ १०—११ ॥ विषादो यं प्रसहते अभिभवति । न सिद्ध्यतीत्यनन्तरं इतिकरणंबोध्यं ॥ १२—२३ ॥ सङ्गः प्रतिहतिः । ब्रुवध्वमित्यार्षो निर्देशः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

**ति०** विषादंप्रसहते प्रसह्यविषादेप्रवर्तते । तेजसाहीनस्य विषादवशादितिभावः ॥ १२ ॥ **ति०** व्यपदेशकुले विगतोपदेशः कलङ्कोयस्मात्तादृशेकुलेपूजिताः राज्ञामहाबलत्वेनसत्कृताः ॥ २४ ॥ इतिचतुष्षष्टितमःसर्गः ॥ ६४ ॥

[ पा० ] १ क.—घ. विषादेननः. २ ङ. छ. झ. ञ. ट. दोषवत्तरः. ३ क. पुरुषान्भीमरूपइवोरगः. ४ क. ख. घ. च. झ. ट. योविषादंप्रसहते. ङ. ज. योविषादंनसहते. ञ. यंविषादोनसहते. ५ ङ.—ट. समुपस्थिते. ६ क. ग. हरिभिःसह. ख. वानरर्षभः. ७ क. यथा. ८ ङ. शक्तोभर्त्सयितुं. ९ क.—ज. ञ. ट. लङ्घयेत. १० च.—ट. मोचयेत्. ११ क. ख. ग. ङ. च. झ. ञ. ट. प्रसादाद्दारांश्च. १२ क. घ. ङ. पश्यामः. १३ क. अभिगच्छाम. १४ ङ.—ट. वनौकसं. १५ क. घ. समर्थोयः. १६ च.—ट. सातत्र. १७ झ. व्यपदेशकुले. १८ क. शक्तिः. १९ ख. घ. कदाचिदपिकस्यचित्. ङ. च. ज.—ट. कदाचित्कस्यचिद्भवेत्. ग. सर्वेषांचकदाक्वचित्. २० क. गमनेचप्लवङ्गमाः. ख. ग. घ. गमनेप्लवगर्षभाः.

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

अङ्गदचोदनया गजादिजांबवदन्तयूथपेषु एकैकेनोत्तरोत्तरं दशयोजनाधिक्यक्रमेण दशयोजनादिनवतियोजनपर्यन्तं प्लवने स्वस्वशक्तिनिवेदनम् ॥ १ ॥ अङ्गदेन जांबवन्तंप्रति स्वस्य शतयोजनप्लवनेपि शक्तिनिवेदनपूर्वकं प्रतिनिवर्तनेशक्तिसंदेहकथनम् ॥ २ ॥ अङ्गदंप्रति जांबवता लौकिकरीत्यनुसारेण प्रतिनिवर्तनादिषु शक्तिकथनेन प्रशंसनपूर्वकं तस्य स्वामित्वोक्त्या भृत्यकार्यैप्रयतनस्यानौचित्योक्तिः ॥ ३ ॥ अङ्गदेन जांबवन्तंप्रति गत्यन्तराभावेनपुनःप्रायोपवेशनस्यैव शरणीकरणीयत्वोक्तिपूर्वकं प्रकृतकार्यसिद्ध्युपायचिन्तनप्रार्थने तेन तंप्रति तदङ्गीकारेण हनुमतश्चोदना ॥ ४ ॥

ततोऽङ्गदवचः श्रुत्वा सर्वे ते वानरोत्तमाः ॥ स्वं स्वं गतौ समुत्साहमाहुस्तत्र यथाक्रमम् ॥ १ ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ मैन्दश्च द्विविदश्चैव सुषेणो जांबवांस्तथा ॥ २ ॥
आबभाषे गजस्तत्र प्लवेयं दशयोजनम् ॥ गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ॥ ३ ॥
गवयो वानरस्तत्र वानरांस्तानुवाच ह ॥ त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः ॥ ४ ॥
शरभस्तानुवाचाथ वानरान्वानरर्षभः ॥ चत्वारिंशद्गमिष्यामि योजनानां प्लवङ्गमाः ॥ ५ ॥
वानरस्तु महातेजा अब्रवीद्गन्धमादनः ॥ योजनानां गमिष्यामि पञ्चाशत्तु न संशयः ॥ ६ ॥
मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह ॥ योजनानां परं षष्टिमहं प्लवितुमुत्सहे ॥ ७ ॥
ततस्तत्र महातेजा द्विविदः प्रत्यभाषत ॥ गमिष्यामि न संदेहः सप्ततिं योजनान्यहम् ॥ ८ ॥
सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान्कपिसत्तमान् ॥ अशीतिं योजनानां तु प्लवेयं प्लवगेश्वराः ॥ ९ ॥
तेषां कथयतां तत्र सर्वांस्ताननुमान्य च ॥ ततो वृद्धतमस्तेषां जांबवान्प्रत्यभाषत ॥ १० ॥
पूर्वमस्माकमप्यासीत्कश्चिद्गतिपराक्रमः ॥ ते वयं वयसः पारमनुप्राप्ताः स्म सांप्रतम् ॥ ११ ॥
किंतु नैवं गते शक्यमिदं कार्यमुपेक्षितुम् ॥ यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२ ॥
सांप्रतं कालभेदेन या गतिस्तां निबोधत ॥ नवतिं योजनानां तु गमिष्यामि न संशयः ॥ १३ ॥
तांस्तु सर्वान्हरिश्रेष्ठाञ्जाम्बवान्पुनरब्रवीत् ॥ न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥ १४ ॥

गतौ गमनविषये । यद्यपि गजादयोपि शतयोजनलङ्घने शक्ताः । "भूतले सागरे वापि शैलेषु च वनेषु च । पातालस्यापिमध्ये वा न ममाच्छिद्यते गतिः" इति सुग्रीवसंनिधौ वानरयूथपैः स्वस्वशक्तेः ख्यापितत्वात् । "नहिवो गमने सङ्गः कदाचित्कस्यचित्कचित्" इति पूर्वमङ्गदोक्तेश्च । तथापि रावणाधिष्ठितलङ्काप्रवेशसीतान्वेषणादिकं दुष्करमन्येनेति तत्साधकहनुमत्प्रोत्साहनाय तथोक्तवन्त इति ध्येयम् ॥ १—९ ॥ तेषां कथयतां तेषु कथयत्सु सत्सु ॥ १०—१४ ॥

**स०** विंशतिंयोजनानि । " विंशत्याद्याः सदैकत्वे " इत्यमरादेकवचनोपपत्तिः । एवमुत्तरत्रापिज्ञेयं ॥ ३ ॥ **स०** तेषांकथयतांसतां । तेषामितिनिर्धारणेषष्ठी । तेषांवृद्धतमइति तेषांद्वयस्यान्वयः ॥ १ ॥ **स०** वयमिति । यद्यपि "अस्मदोद्वयोश्च" इत्यत्रसविशेषणत्वेतुप्रतिषेधइति बहुवचनप्रतिषेधोस्ति । तथापि विधेयविशेषणतावरणेन " शैवावयं—पञ्चाक्षरीजपपराः " इत्या-

**[ पा० ]** १ छ. झ. ट. अथाङ्गदवचः. ख. तदाङ्गदवचः. क. अङ्गदस्यवचः. २ ङ.—ट. तेसर्वेवानरर्षभाः. ३ ङ—ट. मूचुस्तत्र. ४ ङ.—ज. ञ. त्रिंशत्तुच. ५ क.—घ. छ. झ. ट. शरभोवानरस्तत्रवानरांस्तानुवाचह. ६ ङ.—ट. नसंशयः. ७ छ. झ. झ. वानरांस्तु. क. वानरांस्तान्महा. ८ छ. झ. ट. महातेजाःसत्ववान्कपिसत्तमः. ङ. च. ज. ञ. महातेजाःप्रोक्तवान्कपिसत्तमः' क. ग. हरिश्रेष्ठःप्रोक्तवान्हरिसत्तमः. ९ ख. छ. झ. ट. प्रतिजानेहंयोजनानांपराक्रमे. १० ग. ङ. च. ज. ञ. वानर्षभाः. क. घ. प्लवगोत्तमाः. ११ ङ.—ज. ञ. वृद्धतरस्तेषां. ग. घ. वृद्धतमस्तत्र. १२ छ. झ. ट. सांप्रतंकालमस्माकं. ज. संप्राप्ता कालभेदेन. १३ क.—ट. तांश्च. १४ ख. घ. न्कपिश्रेष्ठान्. १५ क. छ. झ. ट. ञांबवानिदमब्रवीत्.

मया[1] महाबलेश्चैव यज्ञे विष्णुः सनातनः ॥ प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमम्[2] ॥ १५ ॥
स इदानीमहं[3] वृद्धः प्लवने मन्दविक्रमः ॥ यौवने[4] च तदासीन्मे[5] बलमप्रतिमं परैः[6] ॥ १६ ॥
संप्रत्येतावतीं[7] शक्तिं गमने तर्कयाम्यहम् ॥ नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति ॥ १७ ॥
अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा ॥ अनुमान्य महाप्राज्ञं[8] जांबवन्तं महाकपिः[9] ॥ १८ ॥
अहमेतद्गमिष्यामि योजनानां शतं महत् ॥ निवर्तने तु मे शक्तिः[10] स्यान्न वेति न निश्चिता[11] ॥ १९ ॥
तमुवाच हरिश्रेष्ठं[12] जांबवान्वाक्यकोविदः ॥ ज्ञायते गमने शक्तिस्तव हर्यृक्षसत्तम[13] ॥ २० ॥
कामं शतं[14] सहस्रं वा नह्येष विधिरुच्यते ॥ योजनानां भवाञ्शक्तो गन्तुं प्रतिनिवर्तितुम् ॥ २१ ॥
न हि प्रेषयिता तात[15] स्वामी प्रेष्यः कथंचन ॥ भवताऽयं जनः सर्वः प्रेष्यः प्लवगसत्तम ॥ २२ ॥
भवान्कलत्रमस्माकं स्वामिभावे व्यवस्थितः ॥ स्वामी कलत्रं सैन्यस्य गतिरेषा परंतप ॥
तस्मात्कलत्रवत्तात[16] प्रतिपाल्यः सदा भवान् ॥ २३ ॥
अपिचैतस्य[17] कार्यस्य भवान्मूलमरिंदम ॥ मूलमर्थस्य संरक्ष्यमेष[18] कार्यविदां नयः ॥
मूले हि सति सिध्यन्ति गुणाः[19] पुष्पफलोदयाः ॥ २४ ॥
तद्भवानस्य कार्यस्य साधने[20] सत्यविक्रम ॥ बुद्धिविक्रमसंपन्नो हेतुरत्र परंतप ॥ २५ ॥
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ॥ भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने ॥ २६ ॥
उक्तवाक्यं महाप्राज्ञं[21] जांबवन्तं महाकपिः ॥ प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः ॥ २७ ॥
यदि नाहं गमिष्यामि नान्ये[22] वानरपुङ्गवाः ॥ पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥ २८ ॥

---

त्रयाणां विक्रमाणां समाहारः त्रिविक्रमं ॥ १५–१९ ॥ हर्यृक्षसत्तमेति । ऋक्षत्वं वानरावान्तरजातिः । अतः सुग्रीवादेः ऋक्षराजत्वमिति ॥ २० ॥ भवान् योजनानां शतं सहस्रं वा गन्तुं प्रतिनिवर्तितुंच कामं शक्तः । एष विधिः भृत्यैः स्वामिप्रस्थापनं । नोच्यते न विधीयते ॥ २१ ॥ तदेव विवृणोति—नहीति ॥ ॥ २२ ॥ कलत्रं रक्षणीयं वस्तु ॥ २३–३३ ॥

---

दिवत्समाधिरवधेयः ॥ ११ ॥ **स०** जांबवतोबलस्खलनहेतुस्त्रिविक्रमक्रमणमिव तद्भ्रमणकालेमेरुसंताडनंजान्वोः पुराणान्तरोक्तमनुसंधेयमितिमन्दविक्रमइतिवदन्कविः सूचयामासेतिबोध्यं ॥ १५ ॥ **स०** महाकपिं महान्कपिर्यस्यसतथा नियामकत्वेनमहाकपिसुग्रीववानिति जांबवान्महाकपिरित्यर्थः ॥ १८ ॥ **ती०** हरिश्रेष्ठइतिजांबवतोव्यपदेशोहरिसाधर्म्यात् । अल्पमन्तरमृक्षाणांहरीणांच । अतएवासौहर्यृक्षसत्तमेत्यङ्गदंसंबोधयति । सजातीयस्यहिनिर्धारणंभवति । "ननिर्धारणे" इतिषष्ठीसमासस्यनिषेधेपि मुनिप्रयोगात्साधुत्वं । सप्तमीसमासोवा । **स०** हर्यक्षसत्तम हरिणीपिङ्गेअक्षिणीयेषांकपीनां तेषुसत्तमः । यद्वा हर्यक्षः सिंहइवसत्तमः श्रेष्ठः ॥ २० ॥ **ति०** भवान्कलत्रं कलत्रवद्दृढस्वीयत्वबुद्ध्यायावत्स्वप्राणबलंपरिपाल्यइत्यर्थः । स्वामिभावे स्वामित्वे । एतेन लोकेकलत्रस्यभर्तासंसारव्यवहारविषयेआज्ञाप्यस्तत्प्रभुत्वंचकलत्रस्येतिदर्शितं । तस्मात्स्वामी सैन्यस्यकलत्रवत्परिपाल्यः । स्वामिनाच कलत्रेणभर्तेवसैन्यमाज्ञाप्यं । एषागतिः लोकस्येतिशेषः ॥ **शि०** कलत्रं स्त्रीवद्रक्ष्यः । किंच कंसुखंलातिददातितदेवत्रं रक्षाकर्तृ । सुखदाता त्राताचेत्यर्थः । सामान्येनपुंसकं ॥ २३ ॥ **ति०** गुणाः गुणभूताः अप्रधानभूताइतियावत् ॥ २४ ॥

**[ पा० ]** १ छ. झ. ट. मयावैरोचनेयज्ञेप्रभविष्णुः. २ ङ. छ. झ. ञ. त्रिविक्रमः. ३ क. घ. ज. इदानींमहावृद्धः. ४ ट. यौवनंच. ५ क. ग. यदासीन्मे. घ. यथासीन्मे. ६ छ. झ. ट. परं. ७ छ. झ. ट. त्वेतावदेवाद्यशक्यंमेगमनेस्वतः. ग. ङ. च. त्वेतावतीशक्तिर्गमने. ८ क. ग. ङ.—ट. महाप्राज्ञो. ९ ङ.—ट. महाकपिं. १० क. शक्तिर्नस्यादितिमतिर्मम. ११ ख. ग. घ. छ. झ. ट. निश्चितं. १२ च. छ. हरिश्रेष्ठो. १३ ठ. हर्यक्षसत्तम. १४ क. ङ.—ट. शतसहस्रंवा. १५ च. ज. स्वामीप्रेष्यान्प्रेष्यःकथंचन. १६ घ. त्रस्तान्कलत्रवत्तत्र. क. ख. तस्मात्कलत्रवत्तत्र. ग. भवान्कलत्रवत्तत्र. ट. यस्मात्कलत्रवत्तात. तस्मात्कलत्रवत्तात. अपिचैतस्यकार्यस्य. इत्यनयोरर्धयोःपौर्वापर्यं क. ङ.—ट. पाठेषुदृश्यते. १७ छ. झ. ट. वैतस्य. १८ च. छ. ज. मेवं. १९ ङ.—ट. गुणाःसर्वे. क.—घ. गुणाःपुष्पफलादयः. २० क. ङ.—ट. साधनं. २१ ख. ग. ङ. च. ज. झ. ट. महाकपिं. २२ क. ख. घ.—ट. नान्योवानरपुङ्गवः.

न ह्यकृत्वा हरिपतेः संदेशं तस्य धीमतः ॥ तत्रापि गत्वा प्राणानां [1]पश्यामि परिरक्षणम् ॥ २९ ॥
स हि प्रसादे चात्यर्थं [2]कोपे च हरिरीश्वरः ॥ अतीत्य तस्य संदेशं विनाशो गमने भवेत् ॥ ३० ॥
[3]तद्यथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः ॥ तद्भवानेव दृष्टार्थः संचिन्तयितुमर्हति ॥ ३१ ॥
सोऽङ्गदेन [4]तदा वीरः प्रत्युक्तः प्लवगर्षभः ॥ जांबवानु[5]त्तरं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३२ ॥
[6]अस्य ते वीर कार्यस्य न किंचि[7]त्परिहीयते ॥ एष संचोदयाम्येनं यः कार्यं साधयिष्यति ॥ ३३ ॥

ततः [8]प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ॥
संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

## षट्षष्टितमः सर्गः ॥ ६६ ॥

जांबवता हनुमन्तंप्रति तस्यवायोरञ्जनायांसंभवप्रकारनिरूपणेनसह हनुमन्नामलाभस्य ब्रह्मादिभ्योवरलाभस्यचनिरूपणेन तत्प्रभावप्रशंसनपूर्वकं कपिकुलविपदपनोदनाय जलधितरणचोदना ॥ १ ॥

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ॥ जांबवान्समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ॥ १ ॥
वीर वानरलोकस्य सर्व[9]शास्त्रविशारद ॥ [10]तूष्णीमेकान्तमाश्रित्य हनुमन्किं न जल्पसि ॥ २ ॥
हनुमन्हरिराजस्य सुग्रीवस्य समो ह्यसि ॥ रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३ ॥
अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः ॥ गरुत्मानिति विख्यात उत्तमः सर्वपक्षिणाम् ॥ ४ ॥
बहुशो हि मया दृष्टः सागरे स महाबलः ॥ [11]भुजगानुद्धरन्पक्षी [12]महावेगो महायशाः ॥ ५ ॥

---

प्रतीतं प्रख्यातं ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

अनेकेत्यादि ॥ १–३ ॥ अरिष्टनेमिनः काश्यपस्य । नकारान्तत्वमार्षं ॥ ४–५ ॥

---

ति० यतोभवान्दृष्टार्थः बुद्धिमत्त्वाच्चिरवृद्धत्वाच्च अपरोक्षीकृतसमस्तकृत्याकृत्यतत्त्वार्थइत्यर्थः ॥ ३१ ॥ ति० एकान्तमाश्रित्येति । यूथाद्बहिःक्वचिदितिशेषः ॥ ३४ ॥ इतिपञ्चषष्टितमःसर्गः ॥ ६५ ॥

ति० वीरवानरेति । वानरलोकस्यवीरेत्यन्वयः । निर्धारणेषष्ठी । यद्वा हेवीरवानर लोकस्यकृत्यमुद्दिश्य किंनजल्पसीत्यन्वयः ॥ २ ॥ स० सुग्रीवस्यसमोसि । इतिसंमतमितिशेषः । नकेवलंममतत्समइतिसंमतं । किंतु रामलक्ष्मणयोश्चापीतिसमुच्चयः । रामस्योत्तमत्वेन लक्ष्मणस्याधमत्वेनात्युक्तिनैच्योक्तिप्रसक्तिर्नैवंव्याख्यान इतिमन्तव्यं । सुग्रीवस्यसमइति राजत्वेनबहुमानार्थमुक्तिः । स्तुतिसमयत्वाद्रामलक्ष्मणयोश्चापि समइत्युक्तिर्युक्तेतिवा ॥३॥ स० अरिष्टनेमिनः अरिष्टनेमेः कश्यपस्य । यद्यप्यरिष्टनेमिशब्दः प्रथमाष्टकषष्ठाध्यायषोडशवर्गीयप्रथमर्चद्वितीयार्धे " स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः " इति तथाऽष्टमाष्टकाष्टमाध्यायषट्त्रिंशत्प्रथमर्चतृतीयपादे "अरिष्टनेमिंपृतनाजमाशुं" इतिगरुडएवायंशब्दःश्रुतः । व्याख्यातंचैतदृग्द्वयं तथापरैः तथापि गरुडेतार्क्ष्यतार्क्ष्यपुत्रशब्दवदयं पितापुत्रयोरुभयोरपि वाचकइति कश्यपस्येत्युक्तिःसंभवति ॥ यद्वा अरिष्टोऽहिंसितश्चासौनेमःप्रकाशश्च सोस्यास्तीत्यरिष्टनेमी कश्यपस्तस्य । अतइन् । नकर्मधारयादितिसमाहितंप्राक् । " नेमःकीलेऽवधौगर्तेप्रकाशे " इतिविश्वः ॥ ४ ॥ ति० महाबलइति । एकत्र बलंशारीरं परत्राऽऽन्तरमितिभेदः ॥ स० महाबलः महत्बलं उड्डीनमितियावत् । यस्यसतथेत्यन्यतरस्यार्थः । तेन पुनरुक्तिरिव शारीरान्तरत्वाश्रयणंचनेतिज्ञेयं । महाबलः महारूपवान्महास्थौल्यवान्वा । " बलंचन्द्रेरसेरूपेस्थेमनिस्थौल्यसै-

[ पा० ] १ छ. झ. ञ. ट. नपश्ये. २ च. ज. कोपेपिचहरीश्वरः. ३ ङ. च. ज. ञ. तत्तदा. झ. ट. तत्तथा. ४ क. ग.—च. ज. ञ. तथा. ५ घ. ङ. च. ज. झ. ञ. नुत्तमं. ६ ङ.—ट. तस्य. ७ ङ. छ. झ. ञ. ट. त्परिहास्यसे. ८ क. प्रवीरं. ९ ख. झ. ट. त्रविदांवर. १० ख. तूर्णमेकान्त. ११ क. ग.—च. ज. ञ. भुजङ्गान्. १२ ङ.—ट. महाबाहुर्महाबलः.

पक्षयोर्[1]यद्बलं तस्य तावद्भुजबलं तव ॥ विक्रमश्चापि वे[2]गश्च न[3] ते तेनावहीयते ॥ ६ ॥
बलं बुद्धिश्च तेजश्च सत्त्वं च [4]हरिपुङ्गव ॥ वि[5]शिष्टं सर्वभूतेषु किमात्मानं न [6]बुध्यसे ॥ ७ ॥
[7]अप्सराऽप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ॥ अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८ ॥
विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि ॥ [8]अभिशापादभू[9]त्तात वानरी कामरूपिणी ॥ ९ ॥
दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ॥ कपित्वे चारुसर्वाङ्गी कदाचित्कामरूपिणी ॥ १० ॥
मानुषं विग्रहं कृत्वा [10]रूपयौवनशालिनी ॥ वि[11]चित्रमाल्याभरणा [12]महार्हक्षौमवासिनी ॥
अचरत्पर्वतस्याग्रे प्रावृडम्बुदसन्निभे ॥ ११ ॥
तस्या वस्त्रं विशालाक्ष्याः [13]पीतं रक्तदशं शुभम् ॥ स्थितायाः पर्वतस्याग्रे [14]मारुतोपहरच्छनैः ॥ १२ ॥
स ददर्श [15]ततस्तस्या वृत्तावूरू [16]सुसंहतौ ॥ स्तनौ च पीनौ सहितौ [17]सुजातं चारु चाननम् ॥ १३ ॥
तां [18]विशालायतश्रोणीं तनुमध्यां [19]यशस्विनीम् ॥ दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः ॥ १४ ॥
स तां भुजाभ्यां [20]दीर्घाभ्यां पर्यष्वजत मारुतः ॥ मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् ॥ १५ ॥
सा तु तत्रैव संभ्रान्ता [21]सुवृत्ता वाक्यमब्रवीत् ॥ एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥ १६ ॥
अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ॥ न त्वां हिंसामि सुश्रोणि माऽभूत्ते [22]शुभगे भयम् ॥ १७ ॥
[23]मनसाऽस्मि गतो यत्त्वां परिष्वज्य [24]यशस्विनीम् ॥ वीर्यवान्बुद्धि[25]संपन्नस्तव पुत्रो भविष्यति ॥ १८ ॥

---

पक्षयोरिति ॥ अत्र समानपदमध्याहार्यं । विक्रमादिकं तेन गरुत्मता समानं । नावहीयते न न्यूनं भवति । तेनेति पञ्चम्यर्थे तृतीया ॥ ६ ॥ विशिष्टं श्रेष्ठं ॥ ७ ॥ अप्सरेति निर्देश आर्षः ॥ ८—११ ॥ रक्तदशं रक्ताग्रं ॥ १२–१४ ॥ तां गतात्मा तद्गतचित्तः । तां पर्यष्वजतेति संबन्धः ॥ १५–१६ ॥ न हिंसामि पातिव्रत्यान्न प्रच्यावयामि ॥ १७ ॥ न केवलं पातिव्रत्यभङ्गाभावः श्रेयोपि भविष्यतीत्याह—वीर्यवानिति

---

न्ययोः ” इतिविश्वः ॥ ५ ॥ **ति०** भुजवीर्यबलंतवेतिप्राचीनपाठे तस्यपक्षयोर्यद्बलं तवचयद्भुजवीर्यबलं उभयंतुल्यमितिशेषः ॥ ६ ॥ **ति०** विशिष्टमात्मानं अभिजनबलपराक्रमवैभवविशिष्टमात्मानं । किंनसज्जसेसमुद्रलङ्घनायकिंनसज्जीकरोषीत्यर्थः ॥ ७ ॥ **ति०** सुसंहतौ सुसंश्लिष्टौ । सहितौपरस्परसंसक्तौ ॥ १३ ॥ **स०** काममोहितत्वादिप्रदर्शनं देवकार्यार्थमेववायोरितिज्ञातव्यं ॥ १४ ॥ **स०** पर्यष्वजत आलिलिङ्ग । गतात्मा गर्भरूपेणतद्गतस्वांशः । सतां सद्भिःअनिन्दितां तामित्यन्वयः । कृद्योगलक्षणाषष्ठी । एतेन तामितिनपुनरुक्तमिव । तांगतात्मा तांपर्यष्वजतेति नक्लिष्टान्वयीत्यपिबोध्यं । सतीमितिवाक्वचित्पाठः ॥ **ति०** मन्मथाविष्टसर्वाङ्गः कामाक्रान्तकृत्स्नज्ञानकर्मेन्द्रियः । अतएव तांगतात्मा तद्गर्भप्रविष्टात्मतेजाबभूव । देवत्वाद्विनापियोनिसंबन्धं निजतेजःप्रवेशनमितिबोध्यं ॥ १५ ॥ **ति०** त्वांनहिंसामि योनिसंबन्धेन तावकमेकपत्नीव्रतं ननाशयामि । अनेन बलात्पर-

**[ पा० ]** १ क. भुजयोस्तद्बलं. झ. ट. भुजवीर्यबलं. २ क. ङ.—ट. तेजश्च. ३ ङ. ज. तेनतेनापहीयते. क. छ. झ. ञ. ट. नतेतेनापहीयते. ४ ख. ग. घ. हरिसत्तम. ५ क. ग. विशिष्टः. ६ ङ. च. छ. झ. ञ. ट. सज्जसे. ७ ख. घ. आसीदप्सरसां. ८ ज. अत्रिशापादभूत्. ९ च. छ. झ. ट. त्तातकपिले. क. ख. ग. ङ. ञ. त्तावद्वानरी. १० ग. यौवनोत्तमशालिनी. ११ विचित्रमाल्याभरणा. अचरत्पर्वतस्याग्रे. इत्यर्धयोःपौर्वापर्यं क.—घ. पाठेषुदृश्यते. १२ च.—ट. कदाचित्क्षौमधारिणी. ङ. कदाचित्कामचारिणी. १३ छ. ट. पीतरक्तदशं. १४ क.—घ. च. ज. ञ. ट. मारुतोपाहरत्. १५ ग. तदा तस्याः. १६ क. सुसंस्थितौ. १७ ङ. च. ज. ञ. सुजातौ. १८ झ. ट. बलादायतश्रोणीं. १९ च. ज. ञ. मनस्विनीं. २० क.—घ. पीनाभ्यां. २१ छ. ज. झ. सुव्रता. ञ. संवृता. २२ ङ.—ट. मनसोभयं. २३ क. ग. मारुतोस्मिगतोयस्त्वां. २४ ङ. छ. झ. ञ. ट. यशस्विनि. २५ क. ख. ग. संपन्नःपुत्रस्तव.

महासत्त्वो महातेजा महाबलपराक्रमः ।। लङ्घने प्लवने चैव [1]भविष्यति मया समः ।। १९ ।।
एवमु[2]क्त्वा ततस्तुष्टा जननी ते महाकपे ।। गुहायां त्वां महाबाहो प्रजज्ञे [3]प्लवगर्षभम् ।। २० ।।
[4]अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।। फलं चेति जिघृक्षुस्त्वमु[5]त्प्लुत्याभ्युद्गतो दिवम् ।।२१।।
शतानि त्रीणि गत्वाऽथ योजनानां महाकपे ।। तेजसा तस्य निर्धूतो न विषादं [6]गतस्ततः ।। २२ ।।
[7]तावदापततस्तूर्णमन्तरिक्षं महाकपे ।। क्षिप्तमिन्द्रेण ते वज्रं [8]क्रोधाविष्टेन धीमता ।। २३ ।।
तदा शैलाग्रशिखरे वामो हनुरभज्यत ।। ततो हि नामधेयं ते हनुमानिति [9]कीर्त्यते ।। २४ ।।
ततस्त्वां [10]निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् ।। त्रैलोक्ये भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः ।। २५ ।।
संभ्रान्ताश्च सुराः सर्वे त्रैलोक्ये [11]क्षोभिते सति ।। प्रसादयन्ति [12]संक्रुद्धं मारुतं भुवनेश्वराः ।। २६ ।।
प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ।। अशस्त्रवध्यतां तात समरे सत्यविक्रम ।। २७ ।।
वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च ।। सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ।।
स्वच्छन्दतश्च मरणं ते[13] भूयादिति वै [14]प्रभो ।। २८ ।।
स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।। मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः ।। २९ ।।
[ [15]ईदृशस्य हि ते तात वर्णयामः कथं बलम् ।। कार्यं च लोकसंमान्यं कर्तुं शक्तस्त्वमेव हि ।। ३० ।।
[16]भवाञ्जीवातवेऽस्माकमञ्जनागर्भसंभवः ] ।। त्वं हि वायुसुतो वत्स प्लवने [17]चापि तत्समः ।। ३१ ।।
वयमद्य गतप्राणा [18]भवान्नस्त्रातु सांप्रतम् ।। [19]दाक्ष्यविक्रमसंपन्नः पक्षिराज इवापरः ।। ३२ ।।
त्रिविक्रमे मया तात सशैलवनकानना ।। त्रिस्सप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ।। ३३ ।।

।। १८–२१ ।। शतानि त्रीणि एतदनेकशतयोजनानामुपलक्षणं । "बहुयोजनसाहस्रं क्रामत्येषः" इत्युत्तरकाण्डे वक्ष्यमाणत्वात् ।। २२–३२ ।। पृथिवीत्यनेनाण्डकटाहमध्य उक्तः । तस्याः त्रिस्सप्तकृत्वः क्रमणं मध्यप्रदेशे । यद्वा यावती महाबलिभूमिः तावती पृथिवी अत्रविवक्षिता । तस्याः प्रदक्षिणं तद्बहिःप्रदेशेन संगच्छते । यद्वा क्रमणानन्तरं जाम्बवान् विजयघोषणार्थं पृथिवीमात्रप्रदक्षिणं कृतवानितिप्रसिद्धिः ।

पुरुषेणालिङ्गनादावपि नपातिव्रत्यभङ्गः किंतु योनिभोगेनैवेतिसूचितं ।। १७ ।। **स०** महासत्वः महत् शुद्धं सत्त्वंगुणोयस्यसतथा । चतुर्मुखात्मकत्वाद्युक्तंवायोःसत्वात्मकत्वं । लङ्घने समुद्रोपरिप्लवने । अप्लवने समुद्राद्युपर्यपिमन्दगमने ।। १९ ।। **ति०** ततस्तुष्टा मनसामहादैवततेजस्संक्रमकथनात् ।। २० ।। **ति०** उदयकालिकभास्करस्याम्रफलवद्रक्तवृत्तत्वात्फलबुद्धिविषयत्वं । यथा जातमात्राजादिबालानां प्राचीनवासनयास्तनपानादौप्रवृत्तिस्तथैवास्य जातमात्रस्य वानरोचितफलादानप्रवृत्तिरिति बोध्यं ।। २१ ।। **ति०** तस्य रवेः । तेजसा निर्धूतः क्षिप्तोपि । ततः वायुबलवत्त्वान्नविषादंगतः ।। **शि०** योजनानांशतानित्रीणि "अङ्कानांवामतोगतिः" इति न्यायेन शताधिकत्रिसहस्राणिगत्वा । शतानित्रीणीत्यस्य त्रिशतपरत्वेनव्याख्यानंतु "बहुयोजनसाहस्रं" इत्युत्तरकाण्डेवक्ष्यमाणं विरुध्येत । अनेकशतयोजनानामुपलक्षणमिति भूषणोक्तिस्तु नयुक्ता । त्रीणीत्यस्यवैयर्थ्यापत्तेः ।। २२ ।। **स०** कोपाविष्टेन शरणागतराहुकार्यसाधनसंभृतकोपेन ।। २३ ।। **स०** हनुः गण्डाधोभागः । हनुमान् हनुर्हनूर्वाऽस्यास्तीति सतथा । "हनूमान्हनुमानपि" इति द्विरूपकोशः ।। २४ ।। **स०** गन्धवहः पुत्रघातेनस्वहिंसावहः । प्रभञ्जनः प्रकर्षेणभञ्जयति कोपेनेदानींजनानिति प्रगतंभञ्जनंयस्मादितिवासतथा । गन्धवहः पुत्रसंबन्धवहः । गन्धनंहिंसेत्युक्तेर्गन्धोपिहिंसा ।।२५।। **ति०** वज्रस्यनिपातेन । चाद्गिरौनिपातेनच ।। २८ ।। **स०** क्षेत्रजःपुत्रः । औरसः आलिङ्गनसमये उरस्संबन्धेनजातः । "नमेहृषीकाणि-

**[ पा० ]** १ ख. घ. भविष्यतिहिमत्समः. २ ज. मुक्तातुसातुष्टा. ३ च.—ट. प्लवगर्षभ. ४ क. अभ्युद्यन्तं. ५ ट. मुत्पत्याभ्युत्थितोदिवं. ६ क. ख. ग. ङ. च. ज. ञ. ततोगतः. ७ छ. झ. ञ. त्वामप्युपगतंतूर्णं. ग. च. ज. ट. तत्राप्युपगतस्तूर्णं. ख. अथाप्युपगतस्तूर्णं. ८ ङ.—ज. ञ. ट. कोपाविष्टेनचेतसा. झ. कोपाविष्टेनतेजसा. ९ ङ.—ज. ञ. ट. कीर्तितं. १० च. ञ. विक्षतं. ११ क. ङ. च. छ. झ. ञ. ट. क्षुभिते. १२ ख. झ. तंक्रुद्धं. १३ च.—ट. तत्रस्यादिति. १४ ख. घ. विभो. १५ इदमर्धत्रयं ङ. च. ज. पाठेषुदृश्यते. १६ ङ. भवान्वीरतमोस्माकं. १७ ख. वापि. १८ ख. घ.—ञ. भवानस्मासु. क. वानराःसाधुसांप्रतं. १९ ङ. च. ज. ञ. दक्षोविक्रम. ख. ग. घ. ताक्ष्यविक्रम.

[1]तथा चौषधयोऽस्माभिः संचिता देवशासनात् ॥ नि[2]ष्पन्नममृतं याभिस्तदा[3]सीन्नो [4]महद्बलम् ॥ ३४ ॥
[5]स इदानीमहं वृद्धः परिही[6]नपराक्रमः ॥ सांप्रतं [7]कालमस्माकं भवान्सर्व[8]गुणान्वितः ॥ ३५ ॥
तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि ॥ त्वद्वीर्यं [9]द्रष्टुकामेयं [10]सर्ववानरवाहिनी ॥ ३६ ॥
उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् ॥ परा हि सर्वभूतानां हनुमन्या गतिस्तव ॥ ३७ ॥
विषण्णा हरयः सर्वे हनूमन्किमुपेक्षसे ॥ विक्रमस्व [11]महावेगो वि[12]ष्णुस्त्रीन्विक्रमानिव ॥ ३८ ॥
[13]ततस्तु वै जांबवता प्रचोदितः प्रतीतवेगः पवनात्मजः कपिः ॥
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं [14]महदात्मनस्तदा ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

अन्यत्सर्वमतिरोहितार्थं ॥ ३३—३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

पतन्त्यसत्पथे " इति ब्रह्मणउक्तेर्वायोर्लोकानुकरणमिदमिति मन्तव्यं ॥ २९ ॥ **ति०** याभिः सागरेप्रक्षिप्यामृतंनिर्मथ्यं निर्मथनेनलभ्यं ॥ ३४ ॥ **ति०** सांप्रतंकालमितिसप्तम्यर्थेद्वितीया । अस्माकमितिनिर्धारणेषष्ठी । अस्मिन्कालेऽस्माकंमध्ये भवानेवसर्वगुणान्वितइत्यर्थः ॥ ३५ ॥ **स०** लङ्घयस्वमहार्णवं । स्वार्थेणिच् । णिचा महार्णवंव्यसनसमुद्रं कपीँल्लङ्घयस्वेति जांबवदाशयइतिसूचयति । या तवगतिः समुद्रतरणं सा नकेवलंकपिमोदनमात्रफला । अपितु सर्वभूतानां परा पूरयित्री । अभिमतस्येति शेषः । हेहनुमन् या तवगतिः रामाख्यादेवता साः सर्वभूतानांपरा हि यतोतस्तत्सेवार्थमुत्तिष्ठतियोजनावा ॥ ३७ ॥ **ति०** विषण्णाः अर्थस्यस्यासाध्यत्वाद्दीनाः । किमुपेक्षसे तानितिशेषः ॥ ३८ ॥ **ति०** कपीनामृषभेण । कपिशब्दोत्रच्छत्रिन्यायेन ऋक्षसाधारणः । रूपं समुद्रतरणोचितमहाविग्रहं । प्रकृतेस्तद्वश्यत्वाद्रूपमहत्त्वस्वल्पत्वकरणं नानुपपन्नं । एवं जांबवताहनुमदभिजनपराक्रमादिज्ञापनं तस्यसहजबलाविर्भावाय । तथाज्ञापनंहि तस्यतदाविर्भावकारणमितिदैवकृतःसमयः । यद्यपीतरदिक्त्रयप्रेषितवानराणामपि सप्तसमुद्रपरवर्त्युदयास्ताचलादिपर्यन्तगमनमुपदिष्टं । तथापि तन्मार्गेसमुद्रमध्ये विंशतित्रिंशदादियोजनेषु पर्वतानांसत्त्वात्तदवलंबेनप्लवने नतथाकष्टं । इहतु निरवलंबशतयोजनप्लवनमन्यासाध्यमितिभावः । अत्रत्या मध्यपर्वतास्तु राक्षसैर्भङ्क्त्वा मज्जितादुर्गसिद्धये । प्लवाश्चमज्जिताः । अतएवात्र सुग्रीवेण ते नोक्ताः । अतएव चत्वारिंशेसर्गे पूर्वदिक्प्रेषितवानरान्प्रति समुद्रान्तरगतदेशमुपक्रम्य " गिरिभिर्येचगम्यन्ते प्लवनेनच " इत्युक्तं ॥ **स०** नकेवलंजांबवदुक्तिमात्रेण । किंतु कपीनामृषभेण सुग्रीवेणचोदितः । यद्वा ऋषभेण श्रेष्ठेन वृद्धत्वेनमाननीयेनचोदितः । कपीनां कपिःसुग्रीवः इनः स्वामी यस्यास्सातां कपिवीरवाहिनींप्रहर्षयन्नित्यन्वयः । पूर्वपद्यात् विष्णुः इवेतिचानुवर्तते । तेनच पवनः आत्मजःपुत्रोयस्यसः विष्णुः त्रिविक्रमः । रूपमिव रूपंचकारेति दृष्टान्तदार्ष्टान्तिकभावःकथितः पुनरुक्तिपरिहारोपि जातइत्यवसेयं ॥ " अवर्धतोच्चैर्हनुमान्महाद्रौ " इत्याद्युक्तेः रूपंमहच्चकार स्वीकृतवानित्यर्थः ॥ ३९ ॥ इतिषट्षष्टितमःसर्गः ॥ ६६ ॥

**[ पा० ]** १ क. ग.—च. ज.—ट. तदा. २ छ. झ. निर्मथ्यममृतं. ३ ङ. छ. झ. ञ. ट. तदानींनो. ४ क. ग. महाबलं. ५ ज. इदानीमस्म्यहंवृद्धः. ६ क. परिक्षीणपराक्रमः. ७ क. गतिरस्माकं. ८ ङ. च. ज. ञ. गुणाधिकः. ९ ङ.—ट. द्रष्टुकामाहि. १० क. ग. ङ.—ट. सर्वावानर. ११ छ. झ. ट. महावेग. १२ क. ख. ग. च. ज. यथाविष्णुस्त्रिविक्रमे. ञ. यथाविष्णुस्त्रिविक्रमः. १३ क. छ. झ. ट. ततःकपीनामृषभेणचोदितः. ग. ततस्तुवैजांबवताभिचोदितः. १४ ङ.—ट. पवनात्मजस्तदा.

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

जलधिलङ्घनाय पृथुतरशरीरंपरिगृहीतवताहनुमता वानरनिकरभयापसारणाय निजप्रभावप्रशंसनपूर्वकं महेन्द्रगिरिशिखरारोहणेन सागरतरणोद्यमनं ॥ १ ॥

तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् ॥ वीर्येणापूर्यमाणं च सहसा वानरोत्तमम् ॥ १ ॥
सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः ॥ विनेदुस्तुष्टुवुश्चापि हनुमन्तं महाबलम् ॥ २ ॥
प्रहृष्टा विस्मिताश्चैव वीक्षन्ते स्म समन्ततः ॥ त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः ॥ ३ ॥
संस्तूयमानो हनुमान्व्यवर्धत महाबलः ॥ समाविध्य च लाङ्गूलं हर्षाच्च बलमेयिवान् ॥ ४ ॥
तस्य संस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः ॥ तेजसापूर्यमाणस्य रूपमासीदनुत्तमम् ॥ ५ ॥
यथा विजृम्भते सिंहो विवृद्धो गिरिगह्वरे ॥ मारुतस्यौरसः पुत्रस्तथा संप्रति जृम्भते ॥ ६ ॥
अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ॥ अम्बरीषमिवादीप्तं विधूम इव पावकः ॥ ७ ॥
हरीणामुत्थितो मध्यात्संप्रहृष्टतनूरुहः ॥ अभिवाद्य हरीन्वृद्धान्हनुमानिदमब्रवीत् ॥ ८ ॥
अरुजत्पर्वताग्राणि हुताशनसखोऽनिलः ॥ बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९ ॥
तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः ॥ मारुतस्यौरसः पुत्रः प्लवने नास्ति मत्समः ॥ १० ॥

---

जृम्भमाणं वर्धमानं ॥ १—६ ॥ आदीप्तमम्बरीषमिव स्थितं जृम्भमाणस्य तस्य मुखं विधूमः पावक इव अशोभत। अम्बरीषं भ्राष्ट्रं। "क्लीबेम्बरीषं भ्राष्ट्रो ना" इत्यमरः ॥ ७—८ ॥ अनिलः गमनशीलः। "अन प्राणने" इत्यस्मादौणादिक इलप्रत्ययः ॥ ९ ॥ शीघ्रवेगस्य शीघ्राः वैनतेयादयः तेषां वेग इव वेगो यस्य सः तस्य। तत्साम्यमसहमानस्ततोप्याधिक्यमाह—शीघ्रगस्येति। यद्वा शीघ्रवेगस्य अतएव शीघ्रगस्य ॥ १० ॥

---

ति० अथगृहीतमहाविग्रहस्यहनुमतोवानरबलाश्वासनाय निजबलप्रख्यापनपूर्वं समुद्रलङ्घनाय महेन्द्रपर्वतारोहणमाह—तमिति। स० जृंभमाणं एधमानकायं शतयोजनंक्रमितुं एकपातेनगन्तुं। वेगेनापूर्यमाणमित्यनेन वेगकर्तृकपूरणकर्मीभूतमित्यर्थउक्तः। तेन वेगस्यस्वाभाविकतयोद्बोधःसूचितोभवति। सहसेत्यनेनालोचनां सूचयति। तेन कपयः सहसाः हसेनहासेनसहिताइतिवा ॥ १ ॥ स० त्रिविक्रमं कृतोत्साहं कृते त्रिविष्टपादिव्यापनव्यापारे उत्साहोयस्यसतथातं ॥ ३ ॥ स० लाङ्गूलं वालं। समाविध्य विलोल्य। कपिजातिस्वभावोऽयं ॥ ४ ॥ ति० अंबरीषं भ्राष्ट्रं। तदुपमं। अतएव दीप्तं प्रज्वलत्। अङ्गारवर्णप्रतप्तभ्राष्ट्रोपममितियावत् ॥ स० अंबरीषोपमं अंबरीषेणसूर्येणोपमा यस्यसतथा। "अंबरीषः" इत्यौणादिकसूत्रेणनिपातितःशब्दः। "अंबरीषंरणेभ्राष्ट्रे क्लीबंपुंसिनृपान्तरे। नरकस्यप्रभेदेच किशोरेभास्करेपिच। आम्रातकेऽनुपातेच" इतिमेदिनी। "अंबरीषोनृपान्तरे। मार्ताण्डेखण्डपरशौ" इतिविश्वः ॥ भ्राष्ट्रमितिव्याख्या भाष्ट्रकालिन्नस्तदनुरूपत्वायोगाद्विशेषाभिधानानालोचनमूलेत्युपेक्ष्या ॥ शि० तस्य हनूमतः विधूमःपावकइव दीप्तंमुखं अंबरीषोपमं सूर्यसदृशंयथाभवतितथा अशोभत। अंबरीषशब्दार्थस्तु अंबरिणां आकाशवतांनक्षत्रगणानां ईषः तेजसापराभूतत्वंयस्मादिति अंबरिणः सर्वेलोकानाकाशचारीणोवा ईषति स्वतेजसाप्राप्नोतीतिवा ॥ ७ ॥ ति० आरुजन् अत्यन्तंभिन्दमानः हुताशनस्यसखा उच्यमानगुणोयोवायुर्गमनशीलोऽनिलोस्ति ॥ स० आकाशगोचरः आकाशरूपिण्यां गवि चरतीतिसतथा। अनिष्टत्यच्। आकाशोगोचरोविषयोगम्यत्वेनयस्यसतथा ॥ शि० ननिलीयतइत्यनिलः निस्यइत्यर्थः ॥ ९ ॥ ति० प्लवनेनगुणेनतत्समोस्मि ॥ स० शीघ्रवेगस्य शीघ्रंद्रुतंवेगःप्रवाहोयस्यसतथा। तस्य सरिदादेःसकाशात् शीघ्रगः शीघ्रंगच्छतीतिसतथा। "वेगो जवेप्रवाहेच" इतिविश्वः। यद्वा अहंशीघ्रवेगस्येत्येकंपदं। अहमित्यभिमन्यमानवाचिनाऽभिमानीगृह्यते। तथाच अहमा रुद्रेण शीघ्रवेगंमनः। तस्य सकाशाच्छीघ्रगस्तस्य ॥ १० ॥

[ पा० ] १ ङ.—ट. वेगेनापूर्यमाणं. २ च.—ट. विनेदुर्विस्मिताश्चापि. ३ क. ख. घ.—ज. ञ. ट. तेवीक्षन्ते. ४ च. ज. त्रिविक्रमे. छ. झ. ञ. ट. त्रिविक्रमं. ५ ङ. ञ. न्प्रावर्धत. ६ ग. महाकपिः. ७ ङ.—ट. हर्षाद्बलमुपेयिवान्. ८ ख. ग. सर्वैर्वानर. ९ घ. ङ. छ. झ. ञ. ट. विवृते. च. ज. वितते. १० ग. तथाऽजृंभतवीर्यवान्. क. तथाप्रतिविजृंभते. ११ क. ख. घ. छ. झ. अंबरीषोपमंदीप्तं. १२ क. कपीन्. ख. ततोवृद्धान्. १३ झ. आरुजन्पर्वताग्राणि. १४ ङ. छ. झ. ञ. ट. तत्समः.

[1]उत्सहेयं हि विस्तीर्णमालिखन्तमिवाम्बरम् ॥ मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११ ॥
[2]बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे ॥ [3]समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२ ॥
ममोरुजङ्घवेगेन भविष्यति समुत्थितः ॥ [4]समुच्छ्रितमहाग्राहः समुद्रो वरुणालयः ॥ १३ ॥
पन्नगाशनमाकाशे पतन्तं [5]पक्षिसेविते ॥ वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥ १४ ॥
उदयात्प्रस्थितं [6]वाऽपि ज्वलन्तं रश्मिमालिनम् ॥ अनस्तमितमादित्यम[7]भिगन्तुं समुत्सहे ॥ १५ ॥
ततो भूमिमसंस्पृश्य पुनरागन्तुमुत्सहे ॥ प्रवेगेनैव महता भीमेन प्लवगर्षभाः ॥ १६ ॥
[9]उत्सहेयमतिक्रान्तुं सर्वानाकाशगोचरान् ॥ [10]सागरं शोषयिष्यामि दारयिष्यामि मेदिनीम् ॥ १७ ॥
[11]पर्वतांश्चूर्णयिष्यामि प्लवमानः प्लवङ्गमाः ॥ हरि[12]ष्याम्यूरुवेगेन प्लवमानो महार्णवम् ॥ १८ ॥
लतानां विविधं पुष्पं पादपानां च सर्वशः ॥ [13]अनुयास्यन्ति मामद्य प्लवमानं विहायसा ॥
भविष्यति हि मे पन्थाः [14]स्वातेः पन्था इवाम्बरे ॥ १९ ॥

विस्तीर्णमिति मेरुविशेषणं । वानरसेनाभयनिवृत्त्यर्थं स्वोत्कर्षमपि स्वयं निवेदयति ॥ ११—१३ ॥ पन्नगाशनं स्वोचिताहारलाभाय निरवधिकत्वरासंपन्नं । यद्वा आहारग्रहणत्वरया सर्वेषां भयावहं पतन्तं नतु वर्तमानं । आकाशे स्वोचितक्षेत्रे । पक्षिसेवित इति स्वपरिकरसंपत्तिरुच्यते । वैनतेयं विनतापुत्रं । अनेन कौमारावस्थायां बलवेगोत्कर्षः सूच्यते । अहं तस्यापिप्राणदातुः पुत्रः । परिगन्तुं परितोगन्तुं प्रदक्षिणीकर्तुं । सहस्रशः एकयत्नेन सहस्रशः । परिगन्तुं शक्तः आजानसिद्धसामर्थ्योस्मि ॥ १४ ॥ उदयात् प्रस्थितं उदयगिरेर्निर्गच्छन्तं । आदित्यं स्वस्थानात्प्राप्य तेन सह गन्तुं प्रारभ्य ततःपूर्वमेवास्तगिरिमासाद्यानस्तमितं ज्वलन्तं रश्मिमालिनमादित्यमभिगन्तुं प्रत्युद्गन्तुं । समुत्सहे । ज्वलन्तमित्यनेन मध्याह्न एवाभिगमनं सूच्यते ॥ १५ ॥ ततः सूर्यप्रत्युद्गमनानन्तरं । भूमिमसंस्पृश्य कुत्राप्यविश्रम्य । भीमेन महता प्रवेगेन प्रारब्धवेगेनैव पुनरागन्तुं पुनरप्येकवारं सूर्यमभिगन्तुमुत्सहइत्यर्थः । शतयोजनस्थां लङ्कां गन्तुं किमुतेति भावः ॥ १६ ॥ आकाशगोचरान् ग्रहनक्षत्रादीन् ॥ १७—१८ ॥ पुष्पमिति

**ति०** मेरुंगिरिमसङ्गेन मध्येविश्रामायक्वचित्क्षणमपि स्थितिराहित्येनैव सहस्रशः परिगन्तुमुत्सहे एकेनैववेगेनसहस्रवारंप्रदक्षिणंकर्तुं शक्नोमीत्याशयः ॥ ११ ॥ **ति०** समुत्थितः अतिक्रान्तवेलः ॥ **स०** वरुणालयः अब्धिः ॥ समुद्रः मुद्रया उत्तरणायकरिष्यमाणसेतुरेखाचिह्नेन सहवर्ततइति सतथा । तथाहिसंग्रहरामायणे—" सेतुंविधातुंहरिवाहिनीनां पुरैवकुर्वन्निव लक्ष्मरेखां " इति । एतेन नान्यतराधिक्यशङ्का वरुणालयइत्यस्य शुद्धयौगिकत्वाश्रयणेनपरिहारश्चास्वारस्यान्नयुक्तौ ॥ १३ ॥ सहस्रशःपरिगन्तुं । एतेन गम्यमुद्दिश्य तदेकपातवेगेन बहुवारं तत्प्रदेशंगत्वा पुनरायातुमहंक्षमइतिवैनतेयादाधिक्यंद्योतयति । "वैनतेयगतिःपरे"ति संपात्युक्तिस्तु पक्षिजात्यपेक्षयेति नतद्विरोधइतिज्ञेयं ॥ **ति०** पक्षिसेविते आकाशे वैनतेयगतिःपदेत्युक्तस्य पदेस्थित्वाततोऽधःपतन्तंपन्नगाशनंवैनतेयमुपर्यधोभ्रमणेनसहस्रशःपरिगन्तुंशक्तः । पन्नगाशनंपतन्तमितिपदद्वयेन आमिषार्थः पवनवेगातिशयःसूच्यते ॥ **ति०** पक्षिसेवितं पक्षिराजं । वैनतेयं आकाशेपतन्तमहमपि सहस्रशःपरिगन्तुंशक्तः । तस्यैकपातं यावदहंसहस्रवारंपतितुंशक्तइतियावत् ॥ १४ ॥ **स०** प्रवेगेन एकपातेन । भीमेन द्विषतां अभीमेनसतामित्यकारप्रश्लेषाप्रश्लेषाभ्यामर्थद्वयंज्ञेयं ॥ १६ ॥ **शि०** उत्सहेयमिति । आकाशगोचरान् अतिक्रान्तुंउत्सहे । सागरान्शोषयिष्यामि शोषयितुमुत्सहे । शोषणपूर्वकोत्साहोधात्वर्थः । एवमुत्तरत्रापि तत्तद्धात्वर्थपूर्वकउत्साहोर्थः । अतएव नशोषादिप्रतिज्ञावाक्यत्वमेतस्य ॥ १७ ॥ **ति०** लतानांविविधंपुष्पं पादपानांच पुष्पंहरिष्यामीत्यन्वयः । तच्चपुष्पं वायुवेगेनाहृतंमामनुयास्यति ॥ १९ ॥

[ **पा०** ] १ ङ. च. ज. ट. उत्सहेयंतु. २ घ. ङ. च. ज. ञ. वायुवेग. ३ क. समंप्लावयितुं. ४ संमूर्च्छित. झ. ञ. ट. समुत्थित. ५ छ. झ. पक्षिसेवितं. ६ क.—च. ट. चापि. ७ ङ.—ट. महंगन्तुं. ८ ङ. छ. झ. ट. मसंस्पृष्ट्वा. ९ ख. उत्सहेयमभि. क. ङ. उत्सहेयमति. १० ङ.—ट. सागराञ्शोषयिष्यामि. क. ग. घ. सागरान्क्षोभयिष्यामि. ११ क. ग. घ. पर्वतान्कंपयिष्यामि. १२ क. ग. हरिष्येचोरुवेगेन. १३ क. ख. ग. छ. झ. ञ. ट. अनुयास्यति. १४ ख. ग. वायोः.

चरन्तं घोरमाकाशमुत्पतिष्यन्तमेव[1] वा ॥ द्रक्ष्यन्ति निपतन्तं च सर्वभूतानि वानराः ॥ २० ॥
[2]महामेघप्रतीकाशं मां[3] च द्रक्ष्यथ वानराः ॥ दिवमावृत्य गच्छन्तं [4]ग्रसमानमिवाम्बरम् ॥ २१ ॥
विधमिष्यामि जीमूतान्कम्पयिष्यामि पर्वतान् ॥ सागरं क्षोभ[5]यिष्यामि प्लवमानः समाहितः ॥ २२ ॥
[6]वैनतेयस्य सा शक्तिर्मम या मारुतस्य वा ॥ २३ ॥
[ [7]महासंनहनोपेतौ महान्तौ पुरुषर्षभौ ॥ ऋश्यमूकं पुनः शैलं प्लवेयं रामलक्ष्मणौ ॥
नूनं नेष्यामि वैदेहीं रामस्य महिषीं प्रियाम् ॥ २४ ॥ ]
[8]ऋते सुपर्णराजानं मारुतं वा [9]महाजवम् ॥ [10]न तद्भूतं प्रपश्यामि [11]यन्मां प्लुतमनुव्रजेत् ॥ २५ ॥
निमेषान्तरमात्रेण निरालम्बनमम्बरम् ॥ सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २६ ॥
भविष्यति हि मे रूपं प्लवमानस्य [12]सागरे ॥ [13]विष्णोर्विक्रममाणस्य पुरा[14] त्रीन्विक्रमानिव ॥ २७ ॥
बुद्ध्या [15]चाहं प्रपश्यामि मनश्चेष्टा च मे तथा ॥ अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ॥ २८ ॥
मारुतस्य समो वेगे गरुडस्य समो जवे ॥ अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥ २९ ॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः ॥ विक्रम्य सहसा हस्तादमृतं तदिहानये ॥
लङ्कां [16]वाऽपि समुत्क्षिप्य गच्छेयमिति मे मतिः ॥ ३० ॥

---

जात्येकवचनं ॥ १९ ॥ स्वातेःपन्थाः परिपूर्णतारा- | च्छायापथः ॥ २०—२२ ॥ मम[illegible] शक्तिः सा

---

**ति०** स्वातेःपन्थाइति । स्वातिपथश्छायापथइत्युच्यते । सतु प्रकीर्णबहुनक्षत्रः । ममपन्थाअपि प्रकीर्णबहुपुष्पकः । चरन्तंमार्गमध्येइत्याकाशंप्रत्युत्पतिष्यन्तमेव ॥ २० ॥ **ति०** निपतन्तं परेपारेइतिशेषः । द्रक्ष्यन्ति । अनेनोत्पतनपतनयोरेकका-लत्वोक्त्याऽतिवेगःसूचितः ॥ २१ ॥ **ति०** वैनतेयस्यवेति । त्रयाणामेवैषांसर्वभूतातिशायिनीशक्तिर्नान्यस्येतिभावः ॥ **स०** वैनतेयस्येति । साम्येन वायोरुक्तिरुचिता । वैनतेयस्यनैच्येपि पामरापेक्षया दृष्टान्तीकरणमितिज्ञेयं ॥ अत्रोत्तरत्रच मम मारुतस्य वायोरपिसकाशात् वैनतेयस्य । वावेति अप्यर्थे । गरुडस्यापि अशक्तिः शक्त्यभावएवेतिवा ॥ २३ ॥ सुपर्णराजानं समासान्त-विधिरनित्यः । सुपर्णराजस्य अनाः चेष्टावा यस्मात्सतथा तंमारुतमृतइत्युभयत्र वायुरेकएव निदर्शनमित्यवसेयं ॥ ऋतेशब्दयोगे द्वितीयोपपत्तिस्तु—ज्ञानसूर्यमृतइत्यनुव्याख्यासुधातइव शब्देन्दुशेखरादितइवास्मत्कृततत्वसंख्यानटिप्पणीतोऽवसेया ॥ २५ ॥ **ति०** विद्युदुपमया शैघ्र्येणबहुदेशव्याप्तिर्ध्वन्यते । **स०** निरालंबनं निराधारंयथाभवतितथा निपतिष्यामि । यद्वा निरालंबनमं-बरमिति गगनस्वरूपनिरूपणं ॥ घनाद्विद्युदिवेत्यनेन गगनस्यनीरदवन्नीलतां स्वस्यप्रकाशमानतांच सूचयामासेत्यवधेयं ॥ २६ ॥ **ति०** "सतांहिसन्देहपदेषुवस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इतिन्यायेनाह—बुद्ध्येति । निश्चयात्मकान्तःकरणेनेत्यर्थः । तथामे मनश्चेष्टा मनोव्यापारोऽनुमानरूपः । किंपश्यसि किंविषयाचतेमनश्चेष्टेत्यत्राह—**द्रक्ष्यामीति** ॥ **स०** अहंवैदेहींद्रक्ष्यामि । तथामे मम मनश्चेष्टा मनस्संबन्धिव्यापारोस्ति । अतः प्लवङ्गमाः प्रमोदध्वमित्यन्वयः । ननु मनः संशयंसंपादयति ननिश्चयं । अतःकथं प्रमोदध्वमित्युक्तिरित्यतआह—बुद्ध्येति । अहं बुद्ध्या निश्चयहेतुभूतान्तःकरणविशेषेण । प्रपश्यामि विजानामि । यथोक्तं तृतीयस्कन्धगतस्य "मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः । चतुर्धादृश्यतेभेदो वृत्त्यालक्षणरूपया" इति श्लोकस्यतात्पर्ये "बुद्धिरध्यवसानाय संशयंकुरुतेमनः । अभिमानेत्वहङ्कारश्चित्तंस्मरणकारणं" इतिस्कान्द इति । अहमहमिति द्विरभिधानं पृथक्पृथगन्वयाद्युक्तं । समाकर्षेणान्वयेसुकरे द्विर्वचनेनाहमेवद्रक्ष्यामि नान्यस्तथाविधोस्तीतिसूच्यते ॥ २८ ॥ **ति०** वेगजवौ पर्यायौ । अयुतमित्यनेनाप्रमेयबलत्वंप्रकाश्यते नतु परिच्छेदः । वस्तुतस्तदभावात् । रावणोपिवक्ष्यति—"नमारुतेरस्तिगति-प्रमाणं" इति ॥ **ती०** वेगेमारुतस्यसमः । अहमितिशेषः । अमितबलपराक्रमशाली हनूमान्वस्तुतः स्वोक्तविशेषणवि-शिष्टोपि दुःखसागरमग्नवानरवाहिनीसंतोषार्थमेतादृशान्यौद्धत्यवचनान्युक्तवान् । "प्रहृष्टाहरयस्तत्र समुदैक्षन्तविस्मिताः" इतिवचनात् "ज्ञातीनांविपुलःशोकस्त्वयातात प्रणाशितः" इति जांबवद्वचनाच्चेत्यवगन्तव्यं ॥ २९ ॥ **ति०** वासवहस्तेस्व-र्गिभोग्यममृतं ब्रह्मणोहस्तेच योगिभोग्यममृतं । तदानयनवचोत्युक्त्यलङ्कारपरं ॥ समुत्क्षिप्य स्वस्थानादुत्पाटनपूर्व-

**[ पा० ]** १ क. ग. च.—ट. मेवच. २ ख. घ. ट. महामेरु. ३ ख. घ.—ट. मांद्रक्ष्यध्वंप्लवंगमाः. ४ क. प्रसन्तमिवा. ५ च.—ट. शोषयिष्यामि. ६ ग.—छ. झ. ञ. वैनतेयस्यवा. ७ इदमर्धत्रयं ख. पाठेदृश्यते. ८ क. ग. जानेसुपर्णमात्मान. ९ क. ग.—ट. महाबलं. ख. महौजसं. १० ग. घ. नतुभूतं. क. ख. नहिभूतं. ११ क. ख. योमां. १२ क.—ट. सागरं. १३ ग. ङ.—झ. ट. विष्णोःप्रक्रममाणस्य. १४ क. ग. छ. झ. ञ. ट. तदा. १५ ङ. च. ज. ञ. त्वहं. १६ क. ग. घ. चापि

तमेवं वानरश्रेष्ठं गर्जन्तम[1]मितौजसम् ॥ प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः ॥ ३१ ॥
[2]तस्य तद्वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ उवाच परिसंहृष्टो जाम्बवान्[3]हरिसत्तमम् ॥ ३२ ॥
वीरकेसरिणः पुत्र [4]हनुमन्मारुतात्मज ॥ ज्ञातीनां विपुलः शोकस्त्वया तात [5]विनाशितः ॥ ३३ ॥
तव कल्याणरुचयः कपिमुख्याः [6]समागताः ॥ [7]मङ्गलं कार्यसिद्ध्यर्थं करिष्यन्ति समाहिताः ॥ ३४ ॥
ऋषीणां च प्रसादेन कपिवृद्धमतेन च ॥ गुरूणां च प्रसादेन [8]प्लवस्व त्वं महार्णवम् ॥ ३५ ॥
स्थास्यामश्चैकपादेन यावदागमनं तव ॥ त्वद्गतानि च सर्वेषां जीवितानि वनौकसाम् ॥ ३६ ॥
[9]ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ॥ [10]नेयं मम मही वेगं लङ्घने धारयिष्यति ॥ ३७ ॥
एतानीह नगस्यास्य शिलासंकटशालिनः ॥ शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ॥ ३८ ॥
[11]एषु वेगं [12]करिष्यामि महेन्द्रशिखरेष्वहम् ॥ नानाद्रुमविकीर्णेषु धातुनिःष्यन्दशोभिषु ॥ ३९ ॥
एतानि [13]मम निष्पेषं पादयोः प्लवतां वराः ॥ प्लवतो धारयिष्यन्ति योजनानामितः शतम् ॥ ४० ॥
[14]ततस्तं मारुतप्रख्यः स हरिर्मारुतात्मजः ॥ आरुरोह [15]नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ४१ ॥
वनं [16][illegible]विधैर्वृक्षैर्मृगसेवितशाद्वलम् ॥ लताकुसुमसंबाधं नित्यपुष्पफलद्रुमम् ॥ ४२ ॥
[17]सिंहशार्दूलच[illegible] तं मत्तमातङ्गसेवितम् ॥ मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसंकुलम् ॥ ४३ ॥
महद्भि[18]रुच्छ्रितं [19]शृङ्गैर्महेन्द्रं स महाबलः ॥ विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः ॥ ४४ ॥

---

मारुतस्य वैनतेयस्य वेति संबन्धः ॥ २३—३५ ॥ स्थास्यामश्चैकपादेन।तथा सत्वराः स्मेत्यर्थः ॥३६–३७॥ शिलासंकटशालिनः शिलातुङ्गप्रदेशभूयिष्ठस्य । "संकटो दन्तुरे तुङ्गे विपद्रोगविशेषयोः" इति विश्वः ॥ ३८—४२ ॥ वृतमित्यादि ॥ सलिलोत्पीडैः सलिलप्रवाहैः संकुलम् ॥ ४३—४६ ॥

---

कंगृहीत्वा । यद्वाततःपरतोपिगच्छेयं ॥ स० सवज्रस्यवासवस्य इन्द्रस्य स्वयंभुवोब्रह्मणश्च हस्तात्सहसा झटिति । अमृतं देवान्नं । इह मह्यां । आनये आनेष्यामि । सवज्रस्येत्यनेन पूर्वंक्षिप्तंमदुपरिनकार्यकारिजातमितिस्मारयति । ब्रह्मणो हस्तात् विक्रम्य पराक्रमं कृत्वा । सहसाअ[illegible]तं स्वयं निस्सहायः । भुवः कर्मणिषष्ठी । भूमिमानये । इह एतत्काले भुवः भूप्रदेशानितिवा । बहुवचनमाद्यर्थे । भूम्यादिकंवा ॥ ३० ॥ ति० वेगवन्निति संबुद्धिः ॥ ३३ ॥ ति० त्वत्संबन्धिन्यांकल्याणवृद्धौ रुचिरभिलाषोयेषांते । यद्वा तवकल्याणंवाञ्छितारः ॥ स० अर्थसिद्ध्यर्थं रामरामासंदर्शनार्थसिद्ध्यर्थं । मङ्गलानि मङ्गलहेतून् ॥३४॥ स० ऋषीणां रावणोपद्रुततत्संहारकामानामृषीणां । कपिवृद्धाः कपिषुबहुवयस्काः तेषांमतेन तद्बोधितलग्नादिसंमत्या ॥ ३५ ॥ स० एकपादेन । अनेन तीव्रं त्वदागमनेनभाव्यमिति सूचयन्तीतिसूच्यते । त्वद्गतानि प्रेमविशेषादुक्तिर्लोके प्राणरूपत्वाद्वनूमतिवास्तविकीतिज्ञेयं ॥ ति० एकपादेनस्थास्यामः त्वरयाप्रियंश्रोतुमेकपादेनस्थित्वा तपश्चरिष्यामइत्यर्थः ॥ ३६ ॥ स० महेन्द्रस्य तन्नामपर्वतस्याग्रेषु महेन्द्रशिखरेषुवेगंगमिष्यामि तानिमहेन्द्रस्यशृङ्गाणिस्थिराणि महान्तिचेत्यन्वयः । महान्ति परिमाणतः । पूज्यानीतिवा । स्थिराणि मद्वेगसहनशक्तिमन्ति । औत्सुक्यातिशयवशेन महेन्द्रस्यशिखराणीत्युक्तिःपुनरितिज्ञेयं ॥ शिलासंकटशालिनः शिलानांसंकटाः उन्नतप्रदेशाः तैःशालन्तेशोभन्तइतितेतथा । "सङ्कटोदन्तुरेतुङ्गे" इतिनिघण्टुः । संकटं समूहोवा ॥ ३८—३९ ॥ ती० सलिलोत्पीडसंकुलं तत्रतत्रनिस्सृतनिर्झरसलिलसंकुलं ॥ ४३ ॥ ती० उच्छ्रितोमहाबलोहनूमान् महेन्द्रस्यमहद्भिरशृङ्गैर्विचचार शृङ्गाच्छृङ्गान्तरंजगाम ॥ ४४ ॥

[ पा० ] १ छ. झ. ट. मप्रितप्रभं. २ क. ख. ग. ङ.—ट. तच्चास्यवचनंश्रुत्वा. घ. तच्छ्रुत्वावचनंतस्य. ३ ङ.—ट. न्प्लवगेश्वरः. क.—घ. न्हरिसत्तमः. ४ ख.—ट. वेगवन्मारुता. ५ क. ग. ङ.—ट. प्रणाशितः. ६ क. समाहिताः. ७ ख. छ. झ. ट. मङ्गलान्यर्थसिद्ध्यर्थं. ८ छ. झ. ट. संप्लवत्वं. ९ छ. झ. ततश्च. क. ततस्स. १० क. च.—झ. ट. कोपिलोकेनमेवेगं प्लवने. ११ ठ. येषु. १२ ङ.—ट. गमिष्यामि. १३ ख. ङ.—ट. ममवेगंहिशिखराणिमहान्तिच. १४ ङ.—ट. ततस्तु. १५ क. गिरिश्रेष्ठं. १६ ख. ग. ङ.—ट. नानाविधैःपुष्पैः. १७ ङ.—ट. शार्दूलसहितं. १८ ङ. छ. झ. ञ. ट. रुच्छ्रितः. १९ ग. ङ. छ.—ट. महेन्द्रस्य.

[1]पादाभ्यां पीडितस्तेन महाशैलो [2]महात्मनः ॥ [3]रराज सिंहाभिहतो [4]महान्मत्त इव द्विपः ॥ ४५ ॥
मुमोच सलिलोत्पीडान्विप्रकीर्णशिलोच्चयः ॥ वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः ॥ ४६ ॥
नाग[5]गन्धर्वमिथुनैः पानसंसर्गकर्कशैः ॥ [6]उत्पतद्भिश्च विहगैर्विद्याधरगणैरपि ॥ ४७ ॥
त्यज्यमानमहासानुः [7]संनिलीनमहोरगः ॥ चलशृङ्गशिलोद्घातस्तदाभूत्स महागिरिः ॥ ४८ ॥
नि[8]:श्वसद्भिस्तदार्तैस्तु भुजङ्गैरर्धनिःसृतैः ॥ सपताक इवाभाति स तदा धरणीधरः ॥ ४९ ॥
ऋषिभिस्त्राससंभ्रान्तैस्त्यज्यमानः शिलोच्चयः ॥ [9]सीदन्महति कान्तारे सार्थहीन इवाध्वगः ॥ ५० ॥
स वेगवान्वेगसमाहितात्मा हरिप्रवीरः [10]परवीरहन्ता ॥
[11]मनः समाधाय महानुभावो जगाम लङ्कां मनसा [12]मनस्वी ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां
किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

इति किष्किन्धाकाण्डः समाप्तः ॥ ४ ॥

---

पानसंसर्गकर्कशैः पानसंसर्गदृढैः । "कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढं" इत्यमरः । पानप्रवृत्तौ दृढाभिनिवेशैरित्यर्थः ॥ ४७ ॥ उद्घातः समूहः ॥४८—४९॥ सार्थहीनः । अभूदिति शेषः ॥ ५० ॥ वेगसमाहितात्मा वेगविषये समर्पितमनाः । मनः समाधाय मनः समाहितं कृत्वा ॥५१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे मुक्ताहा... किष्किन्धाकाण्डव्याख्याने सप्तषष्टितमःसर्गः ॥ ६७ ॥

इत्थं शठारिगुरुवर्यपदारविन्दसेवारसाधिगतसर्वरहस्यबोधः । गोविन्दराजविबुधः प्रमुदे बुधानां कैष्किन्धकाण्डविषयां विततान टीकाम् ॥ १ ॥

---

ति० ररास स्ववर्तिप्राणिशब्देनेतिशेषः ॥ ४५ ॥ स० पानेन संसर्गे परस्पररतौ कर्कशैः आसक्तैः ॥ ति० पानेसंसर्गेचकर्कशैः अत्यासक्तैः । गन्धर्वाणांतथात्वंच स्वभावः ॥ ४७ ॥ शि० धरणीधरः समहेन्द्रःनिश्वसद्भिः भीत्यानिश्वासंप्राप्नुवद्भिः । अतएवार्धनिस्सृतैः कथमिदंजातमितिदर्शनायनिस्सारितोर्ध्वभागैः । भुजगैः सपताकः पताकाभिस्सहितइवाभाति ॥ ४९ ॥ ती० सार्थहीनः सहायहीनः । अध्वगः पथिकइव । अभूदितिशेषः ॥ ५० ॥ इतिसप्तषष्टितमःसर्गः ॥ ६७ ॥

[ पा० ] १ ङ.—ट. बाहुभ्यां. २ क. ग. ङ.—ट. महात्मना. ३ क. ङ. झ. ट. ररास. ४ क. ख. ग. ङ.—ज. ञ. महामत्तइव. ५ ख. ङ. च. ज. झ. ञ. नानागन्धर्व. ६ क. च.—ट. उत्पतद्भिर्विहङ्गैश्च. ७ क. ख. स्कन्धलीनमहोरगः. ८ ख. निष्पतद्भिस्तदार्तैस्तु. ग. ङ.—ट. निश्वसद्भिस्तदार्तैस्तु. ९ क. आसीन्महति. १० ख. पवनात्मजःकपिः. ११ क. ततः. १२ ङ.—ज. हनूमान्.

---

इदं किष्किन्धाकाण्डम् कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३४ सन १९१२.

# SRIMAD VĀLMIKI RĀMĀYANA

A CRITICAL EDITION

## With the commentary of Sri Govindaraja

AND

Extracts from many other commentaries and Readings.

---

SUNDARAKĀNDA 5.

EDITED AND PUBLISHED

BY

**T. R. Krishnacharya,**

Proprietor, Madhva Vilâs Book Depot, Kumbakonam.

*Printed by B. R. Ghanekar for the proprietor,*

*at the "Nirnaya-sagar" Press, 23, Kolbhat Lane,*

**BOMBAY.**

---

**1912.**

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीयव्याख्यानसमलंकृतम् ।

तथा

तिलकप्रभृत्यनेकापूर्वव्याख्यानोद्धृतैः
गोविन्दराजीयानुक्तापूर्वविषयैश्च संवलितम् ।



## सुन्दरकाण्डम् ५.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण**

अनेकेषां विदुषां साहाय्येन नानादेशीयकोशानुसारेण

संशोध्य

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८३४ परिधाविनामसंवत्सरे ।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

## श्रीमद्गोविन्दराजीयव्याख्यासमलंकृतम् ।

## सुन्दरकाण्डम् ५

श्रीरामचन्द्राय नमः ॥

### प्रथमः सर्गः ॥ १ ॥

सीतान्वेषणाय लङ्काजिगमिषया महेन्द्रगिरिशिखराज्जलधिमुल्लङ्घयताहनुमता मध्येसमुद्रं तच्चोदनया जलमध्यादभ्युद्गच्छतःस्वशिखरे स्वस्यविश्रममर्थयतोमैनाकगिरेः स्वकरतलसंस्पर्शनेन संमाननं ॥ १ ॥ तथा देवैः स्वबलपरीक्षणाय वरदानपूर्वकं प्रेषितया राक्षसरूपधारिण्यासुरसया स्वनिगरणाय बहुयोजनपरिमाणनिजवदनव्यादाने स्वतनुतनूकरणपूर्वकं तदुदरप्रवेशेन तदहिंसयैव बहिर्निर्गमनं ॥ २ ॥ तथा सिंहिकाख्ययामहाराक्षस्या स्वच्छायाग्रहणपूर्वकं स्वग्रसनाय बहुयोजनविस्तीर्णनिजमुखव्यादाने स्वशरीरसंकोचनपूर्वकं तन्मुखप्रवेशेन तदुदरविदारणेन तदसुहरणपूर्वकंबहिर्निर्गमनं ॥ ३ ॥ तथा राक्षसजनासंभ्रमाय स्वशरीरतनुकरणेन लङ्काबहिस्स्थलंबगिरिशिखरे निपतनं ॥ ४ ॥

**ततो रावणनीतायास्सीतायाश्शत्रुकर्शनः ॥ इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १ ॥**

तत्त्वज्ञानसमुच्चयो घनदयासारस्य सारो महान्निष्कर्षः कमलानिवासचरणद्वन्द्वानुरागस्मृतेः ॥ अक्लेशः परिपाक एष जगतामक्षय्यपुण्यावलेरस्माकं निधिरक्षयो विजयते श्रीमाञ्शठारिर्गुरुः ॥ १ ॥ श्रीरामायणभूषायै प्रवृत्तो रामभक्तितः ॥ व्याख्यां सुन्दरकाण्डस्य तिलकं कलयाम्यहम् ॥ २ ॥ उक्तं परत्वासाधारणं समस्तकल्याणगुणाकरत्वं किष्किन्धाकाण्डे । अत्र सर्वसंहर्तृत्वमुच्यते । वक्ष्यति हि तत् "ब्रह्मा स्वयंभूः" इत्यादिना । यद्वा पूर्वस्मिन्काण्डे सर्वथा मित्रसंरक्षणं कार्यमित्युक्तं । अत्र दूतेन पतिव्रतया चैवं वर्तितव्यमित्यर्थः प्रतिपाद्यते । यद्वा पूर्वत्र सर्वरक्षणप्रवृत्तस्य विष्णोराचार्यरूपपुरुषकारलाभ उक्तः । अधुना आचार्यकृत्यमुच्यते । तत्र प्रथमे सर्गे शिक्षणीयशिष्यान्वेषणमुपपाद्यते । तत इत्यादि । ततः जाम्बवत्प्रोत्साहनानन्तरं । चारणाः सङ्गचारिणो देवगायकाः तैराचरिते पथि आकाशे । रावणनीतायास्सीतायाः पदं स्थानमन्वेष्टुमियेष । शत्रुकर्शनः तदन्वेषणविरोधिनिरसनसमर्थः । यद्वा चारणाचरिते पथि गत्वा सीतायाः पदमन्वेष्टुमियेष । यद्वा यथापाङ्क्तमेवान्वयः । आकाशेपि पदन्यासान्वेषणसमर्थोयमिति बुद्धिचातुर्यातिशय उच्यते । अनेन शिष्यस्थानान्वेषणपरगुरुस्वरूपमुच्यते । ततः मुद्राप्रदानपूर्वकभगवदनुज्ञालाभानन्तरं शत्रुकर्शनः । "गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते" इत्युक्तरीत्या अज्ञाननिवर्तनशीलो गुरुः । चारयन्ति आचारयन्ति धर्मानिति चारणाः पूर्वाचार्याः तैराचरिते पथि । "महाजनो येन गतस्स पन्थाः" इत्युक्तसदाचारे स्थित इति शेषः । रावयति असत्प्रलापा-

श्रीरामोजयति ॥ **रामानु०** श्रीमत्सुन्दरकाण्डेव्याख्येयानिव्याक्रियन्ते । पूर्वस्मिन्काण्डेमनसागमनंकृतमित्युक्तं । इदानींकायेनापिगमनंकर्तुमैच्छदित्याशयेनाह—ततइति ॥ अत्रगन्तुमितिपदमध्याहर्तव्यं । शत्रुकर्शनोहनुमान् रावणनीतायाःसीतायाः पदं निवासस्थानं अन्वेष्टुं चारणाचरितेपथि वर्त्मनि गन्तुमियेषेतियोजना । **शि०** चारणैः आचरिते अतिसंचारविशिष्टे ॥ १ ॥

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन्कर्म वानरः ॥ समुदग्रशिरोग्रीवो गवांपतिरिवाऽऽबभौ ॥ २ ॥
अथ वैडूर्यवर्णेषु शाद्वलेषु महाबलः ॥ धीरस्सलिलकल्पेषु विचचार यथासुखम् ॥ ३ ॥
द्विजान्वित्रासयन्धीमानुरसा पादपान्हरन् ॥ मृगांश्च सुबहून्निघ्नन्प्रवृद्ध इव केसरी ॥ ४ ॥
नीललोहितमाञ्जिष्ठपत्रवर्णैस्सितासितैः ॥ स्वभावविहितैश्चित्रैर्धातुभिस्समलंकृतम् ॥ ५ ॥
कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः ॥ यक्षकिन्नरगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥ ६ ॥
स तस्य गिरिवर्यस्य तले नागवरायुते ॥ तिष्ठन्कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७ ॥
स सूर्याय महेन्द्राय पवनाय स्वयंभुवे ॥ भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८ ॥
अञ्जलिं प्राङ्मुखः कृत्वा पवनायात्मयोनये ॥ ततोभिववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९ ॥
प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ॥ ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १० ॥
निष्प्रमाणशरीरस्सँल्लिलङ्घयिषुरर्णवम् ॥ [प्रगृह्य बलवान्बाहू लङ्कामभिमुखः स्थितः ] ॥
बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११ ॥

---

न्कारयतीति रावणः अविवेकः तेन नीतायाः स्ववशं प्रापितायाः सीतायाः अनादिभगवत्परतन्त्रचेतनस्य । सीताशब्देनायोनिजत्वोक्तेः । स्त्रीलिङ्गेन पारतन्त्र्योक्तेश्च । स्त्रीप्रायमितरत्सर्वमिति ह्युक्तं । पदं स्थानं संसारमण्डलमन्वेष्टुं । सात्त्विकसंभाषणादिचिह्नं वा । तथोक्तं " विष्णोः कटाक्षश्चाद्वेष आभिमुख्यं च सात्त्विकैः । संभाषणं षडेतानि त्वाचार्यप्राप्तिहेतवः " इति । यद्वा पदं व्यवसायमन्वेष्टुं कस्य चेतनस्य भगवत्प्राप्तावध्यवसाय इत्यन्वेष्टुं । इयेष । " पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमरः । अत्रैकादशसहस्रश्लोका गताः । द्वादशसहस्रस्यादिमोयं श्लोकः । अत्र गायत्र्याः द्वादशमक्षरं प्रयुक्तं । तदवलोकनीयं विद्वद्भिः ॥ १ ॥ निष्प्रतिद्वन्द्वं यथा भवति तथा दुष्करं चिकीर्षन् समुदग्रशिरोग्रीवः समुन्नतशिरोग्रीवः । गवां पतिः वृषभः ॥ २ ॥ शाद्वलानांसलिलकल्पत्वं वैडूर्यवर्णतया ॥ ३ ॥ केसरीव बभाविति शेषः ॥ ४ ॥ नीलेति अत्र यच्छब्दोध्याहार्यः । यदेवंविधं तलं तत्र तिष्ठन्नित्यन्वयः । पत्रवर्णैः पत्रश्यामैः । " पलाशो हरितो हरित् " इति हलायुधः । सितासितैः कल्माषैः । स्वभावविहितैः स्वतस्सिद्धैः ॥ ५–७ ॥ स्वयंभुवे चतुर्मुखाय । भूतेभ्यः देवयोनिभ्यः ॥ ८ ॥ आत्मयोनये स्वकारणभूताय । दक्षिणः समर्थः । हनुमान् प्राङ्मुखःसन् आत्मयोनये पवनाय । अञ्जलिं कृत्वा ततो दक्षिणां दिशं गन्तुं ववृध इत्यन्वयः । हिः पादपूरणे । अञ्जलिं प्राङ्मुखः कुर्वन्निति पाठस्त्वयुक्तः शतृप्रत्ययेन प्राङ्मुखत्वविशिष्टाञ्जलिकरणदक्षिणदिग्गमनोद्योगयोरेककालिकत्वप्रतीत्या विरोधात् । नहि प्राङ्मुखस्यैव सतो दक्षिणदिग्गमनोद्योगो युज्यते ॥ ९ ॥ रामवृद्ध्यर्थं रामप्रयोजनार्थं ॥ १० ॥ निष्प्रमाणशरीरः निर्मर्यादशरीरः । बाहु-

---

**रामानु०** निष्प्रतिद्वन्द्वं प्रतिद्वन्द्वान्निष्क्रान्तं । प्रतिबन्धकरहितमित्यर्थः ॥ २ ॥ **रामानु०** वैडूर्यवर्णेषु हरितत्वसंवलितशौक्ल्यविशिष्टतयावैडूर्यवर्णत्वं । शाद्वलानांसलिलकल्पत्वं शैत्यमार्दवादिना ॥ ३ ॥ **स०** सूर्याय स्वस्यविद्योपदेष्टृत्वाल्लोकदृष्टया । महेन्द्राय व्यवहारसिद्ध्यर्थंप्रकृतसीताप्रतिकृतिसंनिहितत्वात् । यथोक्तंभगवत्पादैः—" तस्यास्तुतांप्रतिकृतिंप्रविवेशशक्रः " इत्यादि । पवनाय पितृत्वात् । स्वयंभुवे सर्वगुरुत्वात्स्वस्यवरदानाद्वा । भूतेभ्यः विघ्ननिवारकेभ्योदेवेभ्यः । अञ्जलिं हस्तद्वयमेलनं ॥ ८ ॥ **स०** वृद्ध्यर्थंस्वपितृत्वोपाधिना पुनरपिवायुंप्रणमति । अञ्जलिमिति । स्वयोनये स्वकारणाय । अथवा आत्मैवयोनिःस्वोत्पत्तिकारणं यस्य तस्मैरामायेतिवा ॥ ९ ॥ **स०** रामंवृद्ध्यर्थं रामयशोवृद्ध्यर्थं । योववृधे सप्लवङ्गप्रवरैर्दृष्टइत्यन्वयः । तेन नपौनरुक्त्यं । अथवा अरामवृद्ध्यर्थमितिच्छेदः । अर्थस्तु नविद्यतेरामोयेषांस्वपक्षीयत्वेन तेअरामाः । यद्वा अरामाः रामविरुद्धाः । तेषांवृद्ध्यर्थं छेदनार्थं । 'वृधु हिंसायां ' इतिधातुव्याख्यानात् । यद्वा वृद्धिरभिवृद्धिः तस्याअर्थोनिवृत्तिस्तमुद्दिश्य । 'अर्थोऽभिधेयरैवस्तुप्रयो-

**[ पा० ]** १ क. च. छ. ज. ञ. वीरः. २ क. च.—झ. न्भीमान्. ३ क. ङ. छ.—ट. पद्मवर्णैः. ४ ङ. झ. ञ. ट. स्वभावसिद्धैर्विमलैः. ५ ङ. झ. ञ. ट. दैवकल्पैस्स. ६ क. तिष्ठन्हरिवरः. ७ झ. कुर्वन्. ८ ङ.—ट. ततोहि. ९ क. सिद्ध्यर्थं. १० इदमर्धं च. छ. ज. पाठेषुदृश्यते.

स चचालाचलश्चापि मुहूर्तं कपिपीडितः ॥ तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥ १२ ॥
तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना ॥ सर्वतः संवृतश्शैलो बभौ पुष्पमयो यथा ॥ १३ ॥
तेन चोत्तमवीर्येण पीड्यमानस्स पर्वतः ॥ सलिलं संप्रसुस्राव मदं मत्त इव द्विपः ॥ १४ ॥
पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः ॥ रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ १५ ॥
मुमोच च शिलाश्शैलो विशालास्समनश्शिलाः ॥ मध्यमेनार्चिषा जुष्टो धूमराजीरिवानलः ॥१६॥
गिरिणा पीड्यमानेन पीड्यमानानि सर्वतः ॥ गुहाविष्टानि भूतानि विनेदुर्विकृतैस्स्वरैः ॥ १७ ॥
स महासत्त्वसन्नादश्शैलपीडानिमित्तजः ॥ पृथिवीं पूरयामास दिशश्चोपवनानि च ॥ १८ ॥
शिरोभिः पृथुभिस्सर्पा व्यक्तस्वस्तिकलक्षणैः ॥ वमन्तः पावकं घोरं ददंशुर्दशनैश्शिलाः ॥ १९ ॥
तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः ॥ जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥ २० ॥
यानि चौषधजालानि तस्मिञ्जातानि पर्वते ॥ विषघ्नान्यपि नागानां न शेकुश्शमितुं विषम् ॥ २१ ॥
[अपरे तु महाकाया वमन्तोऽग्निं स्वतेजसा ॥ कन्दरेभ्यो विनिष्पेतुः कपिपादनिपीडिताः ॥ २२ ॥
गिरेराक्रममाणस्य तरवस्तरुणाङ्कुराः ॥ मुमुचुः पुष्पवर्षाणि व्यक्तमुत्पलगन्धिनः ॥ २३ ॥
गैरिकाञ्जनसंजुष्टा हरितालसमावृताः ॥ व्यदीर्यन्त गिरेस्तस्य शिलास्ताः समनश्शिलाः ॥ २४ ॥
सचन्दनारुणस्ताम्रश्चित्रः काननधातुभिः ॥ क्षिप्तः शिखिनिभैर्दीप्तैर्दीप्तगैरिकधातुभिः] ॥ २५ ॥
भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः ॥ २६ ॥
त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैस्सह ॥ पानभूमिगतं हित्वा हैममासवभाजनम् ॥
पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २७ ॥
लेह्यानुच्चावचान्भक्ष्यान्मांसानि विविधानि च ॥ आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥२८॥
कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः ॥ रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २९ ॥

---

भ्यामित्युक्तिर्वानरस्य चतुर्भिः संचारात् ॥ ११ ॥ चापीत्येकमव्ययमप्यर्थकं । अशातयत् अगच्छत् । स्वार्थे णिच् ॥ १२-१४ ॥ रीतीः रेखाः । काञ्चनाञ्जनरजतगर्भासु शिलासु विदीर्यमाणासु दृश्यमानास्तास्ता भेदधारा इत्यर्थः ॥ १५ ॥ समनश्शिलाः धातुविशेषसहिताः । मध्यमेनार्चिषा मध्यमया ज्वालया । पार्श्वज्वाला हि न धूमनिवर्तिका ॥ १६ ॥ विकृतैः विकृतिमद्भिः दैन्यव्यञ्जकैरित्यर्थः ॥ १७ ॥ सत्त्वसन्नादः भूतसन्नादः ॥ १८ ॥ स्वस्तिकंनाम फणोपरि दृश्यमानार्धचन्द्रकं । ददंशुरिति दंशनं कोपव्यापारः ॥ १९ ॥ बिभिदुः भिन्नाः ॥ २० ॥ यानीति अत्र तानीत्यध्याहार्यं । शमितुं शमयितुं ॥ २१-२५ ॥ भिद्यत इत्यर्धमेकं ॥ उत्पेतुरित्यनुषज्यते ॥ २६ ॥ त्रस्ता इत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ आसवभाजनं मद्यपात्रं । पात्राणि भोजनपात्राणि । आर्षभाणि चर्माणि ऋषभचर्मपिनद्धानि खेटकानि । त्सरुः मुष्टिबन्धनं ॥ २७-२८ ॥ कृतकण्ठगुणाः कृतकण्ठस्रजः । क्षीबाः मत्ताः । रक्ताक्षाः मधुपानात् । पुष्कराक्षाः स्वभावत इत्यर्थः ॥ २९ ॥

---

जननिवृत्तिषु ' इत्यमरः ॥ १० ॥ रामानु० अशातयत् अपातयदित्यर्थः । अत्राप्यचलःकर्ता । ति० अशातयत् पर्वतःकर्ता चलनंकरणं ॥ १२ ॥ रामानु० पुष्पौघेणेत्यत्र ' कुमतिच ' इतिणत्वं । पुष्पमयोयथा पुष्पमयइव ॥ १३ ॥ ति० मुमोच निपीडनात् । अतएव मध्यमेनमध्यभागेन अर्चिषाज्वालयाजुष्टोयोऽनलस्तस्यधूमराजिरिव बभावित्यर्थः । यस्येत्यध्याहारः ।

[ पा० ] १ ङ. झ. ञ. ट. श्वाशु. क. ख. च. छ. श्वारु. २ झ. सवृतः. ३ ज. सलिलंच. ४ ङ. च. ज.—ट. मदमत्तः. ५ ङ.—ट. हरिणा. ६ क. च. छ. ज. ञ. सर्वशः. ७ ट. सत्वानि. ८ ङ.च. छ. झ. ञ. ट. महान्सत्व. ९ क. शब्देनोपवनानिच. १० ङ. झ. ट. पृथुभिर्नागाः. ११ इमेचत्वारःश्लोकाः च. छ. ज. पाठेषुदृश्यन्ते. १२ क. ख. ङ. च. छ. झ. ञ. मासनभाजनं.

हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ॥ विस्मितास्सस्मितास्तस्थुराकाशे रमणैस्सह ॥ ३० ॥
दर्शयन्तो महाविद्यां विद्याधरमहर्षयः ॥ [1]सहितास्तस्थुराकाशे [2]वीक्षांचक्रुश्च पर्वतम् ॥ ३१ ॥
शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ॥ चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥३२॥
एष पर्वतसंकाशो हनुमान्मारुतात्मजः ॥ तितीर्षति [3]महावेगस्समुद्रं [4]मकरालयम् ॥ ३३ ॥
रामार्थं वानरार्थं च चिकीर्षन्कर्म दुष्करम् ॥ समुद्रस्य परं पारं दुष्प्रापं [5]प्राप्तुमिच्छति ॥ ३४ ॥
इति [6]विद्याधराः श्रुत्वा वचस्तेषां [7]महात्मनाम् ॥ तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ ३५ ॥
दुधुवे च स रोमाणि चकम्पे [8]चाचलोपमः ॥ [9]ननाद सुमहानादं सुमहानिव तोयदः ॥ ३६ ॥
[10]आनुपूर्व्येण [11]वृत्तं च लाङ्गूलं [12]रोमभिश्चितम् ॥ उत्पतिष्यन्विचिक्षेप पक्षिराज इवोरगम् ॥ ३७ ॥
तस्य लाङ्गूलमाविद्ध[13]मात्तवेगस्य पृष्ठतः ॥ ददृशे गरुडेनेव [14]ह्रियमाणो महोरगः ॥ ३८ ॥
बाहू संस्तम्भयामास महापरिघसन्निभौ ॥ [15]ससाद च कपिः कट्यां चरणौ संचुकोच च ॥ ३९ ॥
संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम् ॥ तेजस्सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥ ४० ॥
मार्गमालोकयन्दूरादूर्ध्वं प्रणिहितेक्षणः ॥ रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ४१ ॥
पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ॥ निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥
वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् ॥ ४२ ॥
यथा राघवनिर्मुक्तश्शरश्श्वसनविक्रमः ॥ गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ॥ ४३ ॥
न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ॥ अनेनैव हि वेगेन गमिष्यामि सुरालयम् ॥४४॥
यदि वा त्रिदिवे सीतां न [16]द्रक्ष्याम्यकृतश्रमः ॥ बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥ ४५ ॥

पारिहार्यं वलयं । तस्थुः तस्थुश्च ॥ ३० ॥ दर्शयन्तः प्रयोजयन्तः । महाविद्यां अणिमाद्यष्टमहासिद्धिं । विद्याधरमहर्षयः विद्याधराः महर्षय इवेत्युपमितसमासः । " उपमितंव्याघ्रादिभिःसामान्याप्रयोगे " इत्यनुशासनात् । विद्याधरश्रेष्ठा इत्यर्थः । विद्याधरा महर्षयश्चेति द्वन्द्वसमासो न युक्तः । इति विद्याधराः श्रुत्वेत्युपरितनश्लोके विद्याधराणामेवोपादानात् ॥ ३१ ॥ सा पुनरत्राकाशस्थितिः । शुश्रुवुः विद्याधरा इति शेषः । इति विद्याधराः श्रुत्वेत्युपसंहारात् ॥ ३२–३३ ॥ समुद्रं तितीर्षतीत्युक्तं तस्य प्रयोजनकथनायोक्तमनुवदति—रामार्थमिति ॥ ३४–३६ ॥ आनुपूर्व्येण वृत्तं क्रमेण वृत्तं ॥ ३७–३८ ॥ लङ्घनोद्योगकालिकावस्थां वर्णयति बाहू इत्यादिना । बाहू संस्तम्भयामास निश्चलीचकार । कट्यां ससाद शरीरं संचुकोचेत्यर्थः । चरणौ संचुकोच च ॥ ३९ ॥ संहृत्य संकोच्य ॥४०॥ प्राणान् उच्छ्वासरूपान् । प्राणनिरोधो व्योमोत्पतनार्थं ॥ ४१–४३ ॥ हिशब्दःपादपूरणे ॥ ४४ ॥ अकृतश्रमः अप्राप्तश्रमः । राक्षसराजानमित्यत्र टजभावआर्षः ।

धूमराजिरिवेतिहस्वपाठः ॥ १६ ॥ **ति०** पारिहार्यशब्दः श्रेष्ठवाचीति । एतदग्रे ' दर्शयन्तइत्यादि विमलेंबरे ' इत्यन्तंश्लोकद्वयंप्रक्षिप्तंक्वचिदितिचकतकः ॥ ३० ॥ **शि०** महाविद्यांमहाविद्याजनितां निरवलंबनस्थितिरूपांस्वशक्तिंदर्शयन्तः । **स०** महाविद्याःअणिमाद्याः ॥ ३१ ॥ **रामानु०** महावेगमितिक्रियाविशेषणं ॥ ३३ ॥ **स०** परंपारं खगमनोद्दिष्टं ॥ ३४ ॥ **रामानु०** वीर्यवान्वीर्यमाविवेशेत्यभिधानात् पूर्वंविद्यमानमेववीर्यंविशेषतोऽधिष्ठितवानित्यवगम्यते । तेजस्सत्त्वयोरप्येवंद्रष्टव्यं । तेजः पराभिभवनसामर्थ्यं । सत्त्वं बलं । वीर्यं आकाशायंभिनिष्क्रमणसामर्थ्यं ॥४०॥ **रामानु०** राघवशरदृष्टान्तेनस्वस्याविलंबितत्वाप्रति-

**[ पा० ]** १ ख. सस्मितास्तस्थुः. ज. सभार्यास्तस्थुः. क. विस्मितास्तस्थुः. २ च. छ. ज. वीक्षमाणाश्च. ३ च. छ. तितीर्षुस्समहावेगं. ज. तितीर्षुस्सुमहावेगं. ४ ङ. झ. ञ. ट. वरुणालयं. ५ क. द्रष्टुमिच्छति. ६ ङ. झ. ञ. ट. विद्याधरावाचः श्रुत्वातेषां. ७ क. ङ.—ट. तपस्विनां. ८ ङ. झ. ट. चानलोपमः. ९ ङ. झ. ञ. ट. ननादच. १० ङ.—ट. आनुपूर्व्याच. ११ ङ. झ. ञ. ट. वृत्तंतल्लाङ्गूलं. १२ क. ङ. च. छ. झ. ञ. ट. लोमभिश्चितं. १३ क. ख. ङ.—ञ. मतिवेगस्य. १४ ख. ह्रियमाणइवोरगः. क. च. छ. ज. ह्रियमाणोयथोरगः. १५ ङ. छ. झ. ट. आससाद. १६ क. ख. ङ.—ट. द्रक्ष्यामिकृतश्रमः.

सर्वथा कृतकार्योहमेष्यामि सह सीतया ॥ आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ॥ ४६ ॥
[1]एवमुक्त्वा तु हनुमान्[2]वानरान्वानरोत्तमः ॥ उत्पपाताथ वेगेन वेगवानविचारयन् ॥
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥ ४७ ॥
समुत्पतति [3]तस्मिंस्तु वेगात्ते नगरोहिणः ॥ संहृत्य विटपान्सर्वान्समुत्पेतुः समन्ततः ॥ ४८ ॥
स मत्तको[4]यष्टिभकान्पादापान्पुष्पशालिनः ॥ उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥ ४९ ॥
[5]ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः ॥ प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥ ५० ॥
[6]तमूरुवेगोन्मथिताः सालाश्चान्ये [7]नगोत्तमाः ॥ अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ५१ ॥
सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः ॥ हनुमान्पर्वताकारो बभूवाद्भुतदर्शनः ॥ ५२ ॥
सारवन्तोथ ये वृक्षा न्यमज्जँल्लवणाम्भसि ॥ भयादिव महेन्द्रस्य पर्वता वरुणालये ॥ ५३ ॥
स नानाकुसुमैः कीर्णः कपिः साङ्कुरकोरकैः ॥ शुशुभे मेघसंकाशः खद्योतैरिव पर्वतः ॥ ५४ ॥
विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ॥ [8]अवशीर्यन्त सलिले निवृत्ताः [9]सुहृदो यथा ॥ ५५ ॥
लघुत्वेनोपपन्नं [10]तद्विचित्रं सागरेऽपतत् ॥ द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५६ ॥
ताराचितमिवाकाशं प्रबभौ स महार्णवः ॥ ५७ ॥
[11]पुष्पौघेणानुबद्धेन [12]नानावर्णेन वानरः ॥ बभौ मेघ [13]इवाकाशे विद्युद्गणविभूषितः ॥ ५८ ॥
तस्य वेग[14]समाधूतैः पुष्पैस्तोयमदृश्यत ॥ [15]ताराभिरभिरामाभिरुदिताभिरिवाम्बरम् ॥ ५९ ॥
तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ ॥ पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥ ६० ॥

आनयिष्यामि आनेष्यामि ॥ ४५—४७ ॥ तस्मिन् हनुमति । वेगात्समुत्पततिसति नगरोहिणः शैलरुहावृक्षाः । विटपान् संहृत्य आदाय समुत्पेतुरित्यर्थः ॥ ४८ ॥ संग्रहेणोक्तं विवृणोति—स मत्तेत्यादिना ॥ कोयष्टिभकः कोयष्टिः ॥ ४९—५० ॥ तमूरुवेगेति पाठः । ऊरुवेगेन उन्मथिताः सालाः सालवृक्षाः । अन्ये नगोत्तमाः अन्ये वृक्षश्रेष्ठाः । सैन्याः सेनायां समवेताः पुरुषाः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः ॥ ५१—५२ ॥ सारवन्तः स्थिरांशवन्तः । "सारो बले स्थिरांशे च" इत्यमरः ॥ ५३ ॥ मेघसंकाशः स कपिरित्यन्वयः । खद्योतैः रात्राविति शेषः ॥ ५४ ॥ अवशीर्यन्त अवाशीर्यन्त । आगमशासनस्यानित्यत्वाददभावः । स्थितवन्त इत्यर्थः । निवृत्ताः बन्धूननुगम्य निवृत्ताः सुहृत्पक्षे सलिल इति सामीप्येसप्तमी । "ओदकान्तात्स्निग्धो बन्धुमनुव्रजेत्" इत्युक्तेः ॥ ५५ ॥ लघुत्वेनोपपन्नं लघुत्वेन युक्तं ॥ ५६ ॥ तारेत्यर्धमेकं वाक्यं ॥ ५७ ॥ अनुब-

हतत्वामोघत्वादिकंसूचितवान् ॥४३॥ **ति०** मत्ताःकोयष्टिभाःयेषुतान् । **स०** यद्वा कोयष्टिभिः भा शोभायस्यतत्कोयष्टिभं । तच्चतत्कं शिरःप्रदेशश्च । तेनसहितान् ॥ ४९ ॥ **रामानु०** तस्यवेगेनविमुक्ताःदूरगमनहेतुभूतवेगेनहेतुनाविमुक्ताःगतसंबन्धाः अवशीर्यन्त । आगमशासनस्यानित्यत्वाददभावः । पुष्पाणिमुक्त्वासलिलेअवशीर्यन्तेत्यनेनप्रस्थितेभ्यःसुहृद्भ्योनिवृत्तानामश्रुमोक्षणपूर्वकंशोकसागरेनिमग्नानांसुहृदांसमाधिर्ध्वन्यते ॥ ५५ ॥ **रामानु०** हनुमन्तमनुद्रुताःसारवन्तोवृक्षाःप्रथमंसागरेपतिताःअल्पसाराःततोप्यधिकंगत्वाजलेविशीर्णाइत्युक्त्वापुष्पाण्यप्यतिलघुत्ववत्तयामहद्दूरंगत्वापतितानीत्याह—लघुत्वेनेति ॥ ५६ ॥ **ति०** सर्ववर्णानां विद्युत्सुसत्त्वान्नानावर्णपुष्पौघानबद्धस्यसविद्युद्गणमेघोपमा ॥ ५८ ॥ **रामानु०** बाह्वोःपञ्चशाखत्वात्पञ्चास्यपन्नगदृष्टान्तः

**[ पा० ]** १ क. इत्येवमुक्त्वा. २ ख. वानरान्वानरर्षभः. झ. वानरोवानरोत्तमः. ३ ङ.—ट. वेगात्तु. ख. वेगेन. क. वेगात्तुतस्मिंस्ते. ४ ठ. कोयष्टिमकान्. ५ ङ.—ट. ऊरुवेगोत्थिताः. ६ क. तदूरु. ७ क. नगादयः. ८ ख. ङ.—ट. व्यवशीर्यन्त. ९ घ. च. छ. ज. बान्धवायथा. १० क. तन्निवृत्तं. ११ ङ.—ट. पुष्पौघेणसुगन्धेन. १२ ख. नानागन्धेन. १३ क. घ.—ट. इवोद्यन्वै. १४ ख. ङ.—ट. समुद्धूतैः. १५ ङ. झ. ट. ताराभिरिवरामाभिः.

पिबन्निव बभौ [1]चापि सोर्मि[2]जालं महार्णवम् ॥ पिपासुरिव चाकाशं ददृशे स महाकपिः ॥ ६१ ॥
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः ॥ [3]नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥ ६२ ॥
पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले ॥ चक्षुषी संप्रकाशेते [4]चन्द्रसूर्याविवोदितौ ॥ ६३ ॥
मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ ॥ सन्ध्यया समभिस्पृष्टं [5]यथा तत्सूर्यमण्डलम् ॥ ६४ ॥
लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते ॥ अम्बरे वायुपुत्रस्य शक्रध्व[6]ज इवोच्छ्रितः ॥ ६५ ॥
[7]लाङ्गूलचक्रेण महा[8]ञ्शुक्लदंष्ट्रोऽनिलात्मजः ॥ व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥ ६६ ॥
स्फिग्देशे[9]नाभिताम्रेण रराज स महाकपिः ॥ महता दारितेनेव गिरिर्गैरिकधातुना ॥ ६७ ॥
तस्य वानरसिंहस्य प्लवमानस्य सागरम् ॥ कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥ ६८ ॥
[10]खे यथा निपतन्त्युल्का ह्युत्तरान्ताद्विनिस्सृता ॥ दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः ॥६९॥
पतत्पतङ्गसंकाशो व्यायतः शुशुभे कपिः ॥ प्रवृद्ध इव मातङ्गः कक्ष्यया बध्यमानया ॥ ७० ॥
उपरिष्टाच्छरीरेण च्छायया चावगाढया ॥ सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ॥ ७१ ॥
यंयं देशं समुद्रस्य जगाम स महाकपिः ॥ [11]स स तस्योरुवेगेन सोन्माद इव लक्ष्यते ॥ ७२ ॥
सागरस्योर्मिजा[12]लानामुरसा शै[13]लवर्ष्मणाम् ॥ [14]अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ॥ ७३ ॥
कपिवातश्च बलवान्मेघवातश्च निस्सृतः[15] ॥ सागरं [16]भीमनिर्घोषं कम्पयामासतुर्भृशम् ॥ ७४ ॥
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि ॥ पुप्लुवे [17]कपिशार्दूलो विकिरन्निव रोदसी ॥ ७५ ॥

द्धेन व्याप्तेन ॥ ५८—६० ॥ अर्णवं पिबन्निव आकाशं पिपासुरिवेत्याभ्यामस्य महानुद्योगस्सूच्यते । लङ्घनवेगेन सहसा क्षीयमाणे सागरविस्तारे स पीयमान इव भवति एवमंबरं च । ततोतिवेगेन गच्छन्स महार्णवं पिबन्निव बभौ तथा आकाशमपीत्याहुः ॥ ६१—६२ ॥ पिङ्गे पिङ्गलवर्णे । पिङ्गाक्षाणां वानराणां मुख्यस्य । परिमण्डले मण्डलाकारे । चन्द्रसूर्याविलभूतोपमा ॥ ६३ ॥ तत्सूर्यमण्डलं सन्ध्यासूर्यमण्डलं ॥ ६४ ॥ समाविद्धं उन्नतीकृतं ॥ ६५–६६ ॥ स्फिग्देशेन वालमूलप्रदेशेन ॥ ६७ ॥ गर्जति अगर्जत् ॥ ६८ ॥ सानुबन्धा सपुच्छा । उल्का हि पुच्छयुक्ता निपतति ॥ ६९ ॥ पतङ्गः सूर्यः । व्यायतो दीर्घः । प्रवृद्ध इव दीर्घ इव । कक्ष्यायां बध्यमानायां हि मातङ्गो दीर्घो भवति ॥ ७० ॥ नौर्जलावगाढेनाधोभागेन व्योमावगाढेन चोर्ध्वभागेन गच्छति । अयं च उपरिगतशरीरेणाधोजलावगाढच्छायया चैकाकारस्सन् मारुतपूरितकटा नौरिवासीत् ॥ ७१ ॥ सोन्माद इव समुद्धर्षइव समुद्धतजल इत्यर्थः ॥ ७२ ॥ शैलवर्ष्मणां शैलतुल्यानां । "वर्ष्मदेहप्रमाणयोः" इति सज्जनः ॥ ७३—७४ ॥ विकिरन्निव विभजन्निव ।

॥ ६० ॥ **ति०** विवृतवक्त्रत्वात्पिबन्निवेति । अधोवक्त्रत्वेइयमुत्प्रेक्षा । ऊर्ध्ववक्त्रत्वेआकाशंपिपासुरिवेति । **ती०** अर्णवसमीपगमनवेलायामुदार्धिपिबन्निवबभौ । उपरिगमनावस्थायामाकाशंपिपासुरिवददृशे ॥ ६१ ॥ **स०** कक्षान्तरगतःबाहुमूलमध्यगतः । 'बाहुमूलेउभेकक्षौ' इत्यमरः ॥ **ति०** जीमूतइतिसप्तम्यन्तमितिकतकः ॥ ६८ ॥ **रामानु०** उल्कापातोपमयारावणस्यभाव्यशुभंसूच्यते ॥ ६९ ॥ **रामानु०** कक्ष्या इभमध्यबन्धनं । 'कक्ष्याप्रकोष्ठेहर्म्यादेःकाञ्च्यांमध्येभबन्धने ।' इत्यमरः ॥ ७० ॥ **ती०** सोन्मादइव समुद्रःअपस्मारीवलक्ष्यते भ्रमणफेनजलोद्गमनघोषादिमत्त्वादियमुपमा ॥ ७२ ॥ **रामानु०** ऊर्मिजालानामित्यत्र 'नलोकाव्यय—'इतिषष्ठ्यानिषेधेपिकृषिप्रयोगात्साधुत्वं । उरसा । उरश्शब्देनोरोवेगजनितोवायुर्लक्ष्यते ॥ ७३ ॥ **स०**

[ **पा०** ] १ ख. श्रीमान्. २ क. ख. च. छ. ज. ञ. सोर्मिमालं. ३ घ. नयनेच. ४ च. छ. ज. चन्द्रसूर्याविवांबरे. क. घ. ङ. झ. ञ. ट. चन्द्रसूर्याविवस्थितौ. ५ ख. यथासूर्यस्यमण्डलं. ङ.—ट. यथास्यात्सूर्यमण्डलं. ६ घ. ङ. च. ज.—ट. ध्वजमिवोच्छ्रितं. छ. ध्वजमिवोत्थितं. ख. ध्वजइवोत्थितः. ७ ङ.—ट. लाङ्गूलचक्रोहनुमान्. ८ क. ञ्शुक्लदंष्ट्रोमहाकपिः. ९ ङ. झ. नातिताम्रेण. १० क. यथातु. ११ क. घ.—ट. सतुतस्याङ्गवेगेन. १२ घ. च. ज. ञ. जालानिउरसा. ख. मालानामुरसा. १३ क. घ. च.—ञ. शैलवर्ष्मणा. १४ क. अभिघ्नन्सुमहावेगः. १५ ङ.—ट. निर्गतः. १६ ङ.—ट. भीमनिर्ह्रादं. १७ क. हरिशार्दूलो.

मेरुमन्दरसंकाशा[1]नुद्धतान्स महार्णवे ॥ [2]अतिक्रामन्म[3]हावेगस्तरङ्गान्गणयन्निव ॥ ७६ ॥
तस्य वेगस[4]मुद्भूतं [5]जलं सजलदं तदा ॥ अम्बरस्थं वि[6]बभ्राज शारदाभ्रमिवाततम् ॥ ७७ ॥
तिमिनक्रझषाः कूर्मा दृश्यन्ते वि[7]वृतास्तदा ॥ वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ॥ ७८ ॥
[8]प्लवमानं समीक्ष्याथ [9]भुजङ्गास्सागरालयाः ॥ व्योम्नि तं कपिशार्दूलं [10]सुपर्ण इति मेनिरे ॥ ७९ ॥
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ छाया वानरसिंहस्य [11]जले [12]चारुतराऽभवत् ॥ ८० ॥
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ॥ तस्य सा शुशुभे छाया वि[13]तता लवणाम्भसि ॥ ८१ ॥
शुशुभे स महातेजा महाकायो महाकपिः ॥ वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥ ८२ ॥
येनासौ याति बलवा[14]न्वेगेन कपिकुञ्जरः ॥ तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ८३ ॥
[15]आपाते पक्षिसंघानां पक्षिराज इव व्रजन् ॥ हनुमान्मेघजालानि प्रकर्षन्मारुतो यथा ॥ ८४ ॥
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ॥ कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे ॥ ८५ ॥
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव [16]लक्ष्यते ॥ ८६ ॥
प्लवमानं तु तं दृष्ट्वा [17]प्लवङ्गं त्वरितं तदा ॥ [18]ववर्षुः पुष्पवर्षाणि देवगन्धर्वदानवाः ॥ ८७ ॥
तताप न हि तं सूर्यः प्लवन्तं [19]वानरोत्तमम् ॥ सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥ ८८ ॥
ऋषयस्तुष्टुवुश्चैनं प्लवमानं वि[20]हायसा ॥ जगुश्च देवगन्धर्वाः प्रशंसन्तो [21]महौजसम् ॥ ८९ ॥
नागाश्च तुष्टुवुर्यक्षा रक्षांसि [22]विबुधाः खगाः ॥ [23]प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ॥ ९० ॥

---

रोदसी द्यावापृथिव्यौ ॥ ७५ ॥ अतिक्रामत् अत्यक्रामत् ॥ ७६ ॥ तस्य हनुमतः । वेगेन ऊरुवातेन । समुद्भूतं समुत्थापितं । सजलदं जलं जलदो जलं चोद्धृतमित्यर्थः ॥ ७७ ॥ तिमयो महामत्स्याः नक्राः ग्राहाः झषाः मकराः । विवृताः जलविभेदेन प्रकाशिताः ॥ ७८—७९ ॥ दशयोजनविस्तीर्णेति । ननु त्रिंशद्योजनायतत्वे चतुर्थपदेपि लङ्काप्राप्तिः स्यात् मैनाकसंवादसुरसासंवादादिकं च विरुध्येत । नहि बिम्बादधिकपरिमाणत्वं संभवतीति न शङ्कनीयं । छायाशब्दो हि नात्र प्रतिबिम्बपरः किन्त्वनातपपरः । प्रातरेव हि समुद्रतरणमुक्तं तदा तस्य छाया समुद्रे तथाप्रमाणा दृश्येतैव ॥ ८० ॥ अभ्रघनः अभ्रमूर्तिः ॥ ८१—८२ ॥ द्रोणी कटाहः ॥ ८३ ॥ आपाते मार्गे ॥ ८४—८७ ॥ रामकार्यं सीतान्वेषणं तदेवार्थः प्रयोजनं तस्य सिद्धये लाभाय तद्धेतुभूतहनुमच्छ्रमनिवर्तनायेत्यर्थः ॥ ८८—८९ ॥ रक्षांसि

---

मेरुमन्दरसंकाशान्स्थौल्यतारतम्येनतयोःसदृशान् । मेरुमन्दरइतिमहामेरोरवष्टंभपर्वतः । तत्सदृशान्वा ॥ ७६ ॥ **रामानु०** जलंसजलदमित्यनेनसमुद्भूतंजलंमेघमण्डलपर्यन्तमभूदित्यवगम्यते ॥ ७७ ॥ **ति०** छायाप्रमाणवर्णनेनतच्छरीरप्रमाणमपिवर्णितप्रायं । इयंमाध्याह्निकीच्छाया ॥८०॥ **ती०** श्वेताभ्रघनराजीव अत्रश्वेतशब्देनस्वच्छतोच्यते । घनशब्देनसान्द्रता । तथाचनिर्मलाभ्रसान्द्रपङ्क्तिरित्यर्थः ॥ **ति०** श्वेताभ्रघनराजीव श्वेताभ्रयुक्तमेघपङ्क्तिवत्तस्यच्छायाशुशुभे । शुक्लदंष्ट्रादिनानानावर्णत्वादुक्तोपमानिर्वाहः ॥ **स०** श्वेताभ्रघनराजीवच्छुभ्रमेघदीर्घपङ्क्तिरिव । छायाचसमुद्रेप्रतिफलितप्रतिबिंबः । नातपाभावः । तेनशौक्ल्यं संगच्छते । " घनःसान्द्रेदृढेदीर्घे " " छायास्यादातपाभावेप्रतिबिंबार्कयोषितोः " इत्युभयतोविश्वः ॥ ८१ ॥ **वि०** तस्य उपरीतिशेषः ॥ ८७ ॥ **स०** तत्रहनुमति । दानवाःसज्जनाः ॥ ८७ ॥ **रामानु०** सिषेवइत्यनेन पुत्रत्वेपिरामकार्यप्रवृत्तत्वात्पूज्यतैवद्योत्यते

**[ पा० ]** १ ङ. छ. झ. ट. नुद्धतान्सुमहार्णवे. २ क. घ. ङ. झ. ञ. ट. अत्यक्रामन्महा. ३ क. न्महावेगांस्तरङ्गान्. ४ क. ख. घ.—ट. समुद्धुष्टं. ५ ख. जलमध्येजलंतदा. ६ घ. ङ. छ. ज. ञ. ट. विबभ्राजे. ७ च. छ. विविधास्तदा. घ. विकृतास्तदा. ८ ङ. ज.—ट. क्रममाणं. ९ ङ. झ. ट. भुजगाःसागरंगमाः. क. च. छ. ज. भुजगाः. १० क. ङ.—ट. सुपर्णमिव. ११ ङ. झ. ट. जवे. १२ ज. वारिचरा. १३ ङ.—ट. पतिता. १४ घ. न्वेगवान्कपि. १५ ग. घ. च. आकाशे. १६ ङ.—ट. दृश्यते. १७ ग. घ. च.—ट. प्लवगं. १८ च. छ. ज. ञ. ववर्षुस्तस्यपुष्पाणि. झ. ट. ववर्षुस्तत्रपुष्पाणि. १९ क. ख. घ.—ट. वानरेश्वरं. २० ग. विहायसि. २१ ङ.—ट. वनौकसं. २२ क. ग. च. छ. ज. ञ. विविधाःखगाः. ङ. झ. ट. विविधानिच. २३ क. ख. ग. प्रेक्ष्याकाशे.

तस्मिन्प्लवगशार्दूले प्लवमाने हनूमति ॥ इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ ९१ ॥
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ॥ करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ॥ ९२ ॥
अहमिक्ष्वाकुनाथेन सगरेण[1] विवर्धितः ॥ इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति[2] ॥ ९३ ॥
तथा मया विधातव्यं विश्रमेत यथा कपिः ॥ शेषं च मयि विश्रान्तस्सुखेनातिपतिष्यति[3] ॥ ९४ ॥
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि ॥ हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९५ ॥
त्वमिहासुरसंघानां[4] पातालतलवासिनाम् ॥ देवराज्ञा गिरिश्रेष्ठ परिघस्सन्निवेशितः ॥ ९६ ॥
त्वमेषां जातवीर्याणां[5] पुनरेवोत्पतिष्यताम् ॥ पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ९७ ॥
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ॥ तस्मात्संचोदयामि[6] त्वामुत्तिष्ठ गिरिसत्तम[7] ॥ ९८ ॥
स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ॥ हनूमान्रामकार्यार्थं[8] भीमकर्मा खमाप्लुतः ॥ ९९ ॥
अस्य[9] साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः[10] ॥ मम[11] हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ॥ १०० ॥
कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् ॥ कर्तव्यमकृतं[12] कार्यं सतां मन्युमुदीरयेत् ॥ १०१ ॥
सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ॥ अस्माकमतिथिश्चैव[13] पूज्यश्च प्लवतांवरः ॥ १०२ ॥
चामीकरमहानाभ देवगन्धर्वसेवित ॥ हनुमांस्त्वयि[14] विश्रान्तस्ततश्शेषं गमिष्यति ॥
स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ॥ १०३ ॥
काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् ॥ श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ १०४ ॥

दिक्पालकरक्षस्सबन्धीनि ॥ ९० ॥ मानार्थी बहुमानार्थी । स्वयं सागरत्वादिति भावः ॥ ९१ ॥ सर्ववाच्यः सर्वप्रकारेण निन्द्यः । विवक्षतां वक्तुमिच्छतां ॥ ९२—९४ ॥ हिरण्यनाभं हिरण्यशृङ्गं । नाभिशब्दो ह्यध्यक्षवाची । शृङ्गं च पर्वतस्याध्यक्षमेव । "नाभिरध्यक्षकस्तूर्योः" इति दर्पणः ॥ ९५ ॥ परिघः अर्गलं । "परिघो मुद्गरेऽर्गले" इति दर्पणः ॥ ९६ ॥ परिघत्वमेवाह त्वमेषामिति ॥ ९७ ॥ शक्तिः अस्तीति शेषः ॥ ९८—९९ ॥ इक्ष्वाकोः कुले वंशे वर्तते शुश्रूषत इति इक्ष्वाकुकुलवर्ती तस्य । पूज्यतमास्तव मत्संबन्धादिति भावः । यद्वा त्वदुपकारकवायुपुत्रमुद्दिश्य ॥ १०० ॥ कार्यं प्रयोजनं विश्रान्त्यादि । कर्तव्यं कार्यमकृतं सतां मन्युं कोपं उदीरयेत् प्रेरयेत् उत्पादयेत् ॥ १०१—१०२ ॥ चामीकरमहानाभ स्वर्णमयमहाशृङ्ग ॥ १०३ ॥ काकुत्स्थस्यानृशंस्यं रामस्य सीताविषयां दयां ॥ १०४ ॥

॥ ८८ ॥ **ती०** सर्ववाच्यःसर्वनिन्दावाग्विषयः भविष्यामीत्यर्थः ॥ ९२ ॥ **ति०** सागरेणविवर्धितइत्युक्त्या कश्चिद्देशः सागरखातस्यापिएतत्संबद्धइतिज्ञायते ॥ ९३ ॥ **ती०** हिरण्यनाभं हिरण्यप्रधानं । हिरण्मयमित्यर्थः । 'नाभिःप्रधानेकस्तूर्यो' इतिविश्वः । **स०** हिरण्यनाभं नाम्ना । मैनाकं मेनकाहिमवत्पर्वतभार्या । तत्पुत्रं ॥ ९५ ॥ **ती०** परिघःसंनिवेशितः आयुधविशेषत्वेनसंनिवेशितः । अनेन पक्षच्छेदभयात्समुद्रप्रवेशानन्तरं पातालस्थराक्षसनिरोधार्थं देवराजेनमैनाकःस्थापितइत्यवगम्यते ॥ **स०** देवराज्ञा देवराजेननिवेशितइवासि । देवराजभयात्क्षिप्तत्वात्तेनप्रक्षिप्तइत्युत्प्रेक्षा । अतो नोत्तरग्रन्थविरोधः ॥ ९६ ॥ **ति०** ज्ञातवीर्याणां देवराजेनेतिशेषः ॥ ९७ ॥ **ति०** शक्तिस्ते अस्तीतिशेषः । तस्मात्पिहितपातालमुखएवसन्वृद्धिशक्त्यावर्धमानस्सन्नूर्ध्वमुत्तिष्ठ ॥ ९८ ॥ **ति०** उपर्येति तवोपरिप्रदेशंप्राप्नोति । तस्माद्विश्रमायत्वमुत्तिष्ठेतिपूर्वेणान्वयः । एतदुत्तरं 'हनूमान्रामकार्यार्थंभीमकर्माखमाप्लुतः । श्रमंचप्लवगेन्द्रस्यसमीक्ष्योत्थातुमर्हसि' इतिप्राचीनःपाङ्क्तःपाठः । अत्रखमाप्लुतइत्यनन्तरंकेचिच्छ्लोकाःप्रक्षिप्ताःपरैरितिकतकः ॥ ९९ ॥ **रामानु०** साहाय्यंसहायकर्म । सहकारित्वमितियावत् । ब्राह्मणादित्वात्ष्यञ् । ममइक्ष्वाकवःपूज्याहि ।

**[ पा० ]** १ झ. ट. सागरेण. २ ङ. झ. ट. तन्नार्हत्यवसादितुं. घ. नचार्हत्यवसादितुं. ३ ङ. ज.—ट. स्सुखीसोतिंतरिष्यति. च. स्सुखीसोतिगमिष्यति. घ. स्सुखेननिपतिष्यति. ४ ङ. झ. ट. सङ्घानांदेवराज्ञामहात्मना । पातालनिलयानांहिपरिघः संनिवेशितः. ५ ङ.—ट. ज्ञातवीर्याणां. ६ च. छ. ज. त्वसंबोधयामि. ७ क. ग. च. छ. ज. नगसत्तम. ख. त्वंनगोत्तम. ८ ङ. झ. ट. कार्यार्थी. ९ एतदादयः—'मैथिल्याश्चविवासनं' इत्येतदन्ताःपञ्चश्लोकाः झ. पुस्तकेनदृश्यन्ते. । ग. साहाय्यंतस्यकर्तव्यं. क. तस्यसाह्यं. १० क. वशवर्तिनः. ११ ज. ममचेक्ष्वाकवः. ग. मयाहीक्ष्वाकवः. १२ छ. ज. कर्तव्यंनतुयत्कार्यं. ग. घ. कर्तव्यंनकृतंकार्यं. १३ क. ग. मतिथिर्ह्येष. घ. मतिथिश्चैष. १४ क. हनूमांस्त्वेष.

[1]हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ॥ [2]उत्पपात जलात्तूर्णं महाद्रुमल[3]तायुतः ॥ १०५ ॥
[4]स सागरजलं भित्त्वा [5]बभूवाभ्युत्थितस्तदा ॥ यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥ १०६ ॥
स महात्मा मुहूर्तेन पर्वतस्सलिलावृतः ॥ दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥ १०७ ॥
[6]शातकुम्भनिभैश्शृङ्गैः सकिन्नरमहोरगैः ॥ आदित्योदय[7]संकाशैरालिखद्भिरिवाम्बरम् ॥ १०८ ॥
[8]तप्तजाम्बूनदैश्शृङ्गैः पर्वतस्य [9]समुत्थितैः ॥ आकाशं शस्त्रसंकाशमभवत्काञ्चनप्रभम् ॥ १०९ ॥
जातरूपमयैश्शृङ्गैर्भ्राजमानैः [10]स्वयंप्रभैः ॥ आदित्यशतसंकाशस्सोभवद्गिरिसत्तमः ॥ ११० ॥
तमुत्थितमसङ्गेन हनुमानग्रतः स्थितम् ॥ मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ १११ ॥
स [11]तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ॥ उरसा पातयामास जीमूतमिव मारुतः ॥ ११२ ॥
स [12]तदा पातितस्तेन कपिना पर्वतोत्तमः ॥ [13]बुद्ध्वा तस्य [14]कपेर्वेगं जहर्ष च [15]ननन्द च ॥ ११३ ॥
तमाकाशगतं वीरमाकाशे [16]समुपस्थितः ॥ [17]प्रीतो हृष्टमना [18]वाक्यमब्रवीत्पर्वतः कपिम् ॥
मानुषं धारयन्रूपमात्मनश्शिखरे स्थितः ॥ ११४ ॥
[19]दुष्करं कृतवान्कर्म त्वमिदं [20]वानरोत्तम ॥ निपत्य मम शृङ्गेषु [21]विश्रमस्व यथासुखम् ॥ ११५ ॥
राघवस्य कुले जातैरुदधिः परिवर्धितः ॥ स त्वां [22]रामहिते [23]युक्तं प्रत्यर्चयति सागरः ॥ ११६ ॥
कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः ॥ सोयं तत्प्रतिकारार्थी त्वत्तः संमानमर्हति ॥ ११७ ॥
त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ॥ तिष्ठ त्वं [24]कपिशार्दूल [25]मयि विश्रम्य गम्यताम् ॥ ११८ ॥

निशम्य वचनमितिशेषः ॥ १०५—१०७ ॥ शातकुम्भनिभैः स्वर्णसदृशैः । आदित्योदयसंकाशैः आदित्योदयतुल्यैरित्यर्थः । शृङ्गैरुपलक्षितः शृङ्गाणि दर्शयामासेति योजना ॥ १०८ ॥ शस्त्रसंकाशं नीलमित्यर्थः । "शस्त्रमायुधलोहयोः" इतिविश्वः ॥१०९—११०॥ निश्चितः निश्चितवान् । कर्तरिनिष्ठा ॥ १११—११२ ॥ जहर्ष विसिष्मिये ॥ ११३ ॥ प्रीतः प्रीतिद्योतकव्यापारः ॥ ११४—११६ ॥ कृते उपकारे । त्वत्प्रतिकारार्थी त्वदातिथ्यकरणापेक्षी त्वत्तः संमाननमर्हतीति त्वया तत्कृतातिथ्यपरिग्रह एवास्य संमाननमित्यर्थः ॥११७॥ चोदनाप्रकारमाह योजनानामिति ॥ प्रक्रमतामिति प्रचोदित इति पूर्वे-

मद्वृद्धिहेतुत्वात् । तवपरंपूज्यतमाः सगरविवृद्धमदन्तःप्रवेशसुखावस्थानादिफलभोक्तृत्वादितिभावः ॥ १०० ॥ **रामानु०** जीमूतइवमारुतइत्यनेनअनायासेनपर्वतंपातितवानितिद्योत्यते ॥ ११२ ॥ **रामानु०** जहर्षचननन्दचेतिपदद्वयेनकायमनसोर्विकृतिरुच्यते । अस्यवेगेनग्लानिराहित्यंबुद्ध्वाहृष्टमनाबभूवेत्यर्थः । **ति०** सादितःअवसादितः अधःकृतइतियावत् । जहर्षचननादचेतिप्राचीनःपाठः । बलवैभवंदृष्ट्वाजहर्ष । स्वोत्थानप्रयोजनावेदनाय ननाद शब्दंकृतवान् । ननन्देतित्वाधुनिककल्पितःपाठः ॥ ११३ ॥ **रामानु०** प्रीतःसुखितः । हृष्टमनाः प्रसन्नमनाः ॥ ११४ ॥ **रामानु०** विश्रमस्वेति । श्रमिरात्मनेपदीकश्चिदस्ति । तथाचोक्तंभट्टमल्लेन— "विश्राम्यतीतिविश्रान्तौक्वचिद्विश्रमतेपिच" इति ॥ ११५ ॥ **रामानु०** त्वन्निमित्तमित्यादिश्लोकद्वयमेकंवाक्यं । एषकपिःयोजनानांशतंचापिसमाप्लुतःसमापतितुमुपक्रान्तः । तवसानुषुविश्रान्तःशेषंमार्गशेषंप्रक्रमतामितित्वन्निमित्तंअहमनेनसागरेणबहुमानात्प्रचोदितः । अतःकपिशार्दूल त्वंतिष्ठ । मयिविश्रम्यगम्यतामित्यन्वयः ।

[ **पा०** ] १ ङ. झ. ट. हिरण्यगर्भो. क. हिरण्यनाभस्तद्वाक्यंनिशम्य. २ क. उत्पपाताथवेगेनजलाद्रुम. ३ ङ. झ. ट. लतावृतः. ४ ग. च. छ. ज. ञ. सागरस्यजलं. ५ ङ. झ. ट. बभूवात्युच्छ्रितस्तदा. क. बभूवावस्थितस्तदा. ६ ख. घ.—ट. शातकुंभमयैः. ७ ङ. झ. ञ. ट. संकाशैरुल्लिखद्भिः. ८ क.—ट. तस्यजांबूनदैः. ९ क. च. समुच्छ्रितैः. १० ङ. झ. ञ. ट. महाप्रभैः. ख. स्वलंकृतैः. ११ झ. तमुत्थितं. १२ घ. च. छ. तथासादितस्तेन. ङ. झ. ञ. ट. तदासादितस्तेन. क. ख. ग. तथापातितः. १३ ज. बुद्ध्वास्यसुमहावेगं. १४ च. छ. महावेगं. ङ. झ. ञ. ट. हरेर्वेगं. १५ क. ग. ङ. झ. ञ. ट. ननादच. १६ च. छ. ज. समवस्थितं. ख. ग. घ. समवस्थितः. क. समुपस्थितं. १७ ग. प्रीतिहृष्टमनाः. १८ च. छ. ज. वाक्यं पर्वतःकपिमब्रवीत्. १९ ट. दुष्कृतं. २० क. वानरर्षभ. २१ ङ. झ. ट. सुखंविश्रम्यगम्यतां. २२ ग. रामहितार्थाय. २३ घ. युक्तमभ्यर्चयति. २४ क.—ज. ञ. हरिशार्दूल. २५ क. विश्रम्यमयि.

योजनानां शतं [1]चापि कपिरेष [2]समाप्लुतः ॥ [3]तव सानुषु विश्रान्तश्शेषं [4]प्रक्रमतामिति ॥ ११९ ॥
तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु ॥ तदास्वाद्य हरिश्रेष्ठ [5]विश्रान्तोनुगमिष्यसि ॥ १२० ॥
अस्माकमपि संबन्धः कपिमुख्य त्वयाऽस्ति वै ॥ प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥ १२१ ॥
वेगवन्तः [6]प्लवन्तो ये प्लवगा मारुतात्मज ॥ [7]तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर ॥ १२२ ॥
अतिथिः किल पूजार्हः प्राकृतोपि [8]विजानता ॥ धर्मं जिज्ञासमानेन किं पुनस्त्वादृशो महान्१२३
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ॥ [9]पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ॥ १२४ ॥
पूजिते त्वयि [10]धर्मज्ञ पूजां प्राप्नोति मारुतः ॥ तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥१२५॥
पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् ॥ [11]ते हि जग्मुर्दिशः सर्वा [12]गरुडानिलवेगिनः ॥१२६॥
ततस्तेषु प्रयातेषु देवसङ्घाः [13]सहर्षिभिः ॥ भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥ १२७ ॥
ततः क्रुद्धः सहस्राक्षः पर्वतानां [14]शतक्रतुः ॥ पक्षांश्चिच्छेद वज्रेण [15]तत्र तत्र सहस्रशः ॥ १२८ ॥
स [16]मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ॥ ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥ १२९ ॥
अस्मिँल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ॥ [17]गुप्तपक्षसमग्रश्च तव पित्राऽभिरक्षितः ॥ १३० ॥
ततोऽहं मानयामि त्वां [18]मान्यो हि मम मारुतः ॥ त्वया मे [19]ह्येष संबन्धः कपिमुख्य महागुणः ॥१३१॥
[20]तस्मिन्नेवंगते कार्ये सागरस्य [21]ममैव च ॥ प्रीतिं प्रीतमनाः [22]कर्तुं त्वमर्हसि [23]महाकपे ॥ १३२ ॥
श्रमं मोक्षय [24]पूजां च गृहाण [25]कपिसत्तम ॥ प्रीतिं च [26]बहु मन्यस्व प्रीतोस्मि तव दर्शनात् ॥१३३॥
एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ॥ प्रीतोस्मि कृतमातिथ्यं मन्युरेषोपनीयताम् ॥ १३४ ॥
त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते ॥ प्रतिज्ञा च मया दत्ता न स्थातव्यमि[27]हान्तरे ॥ १३५ ॥

णान्वयः ॥ ११८—११९ ॥ तत् प्रसिद्धं । कन्दः करहाटः । मूलं पादः । तत् तस्मात् ॥ १२० ॥ प्रख्यात इति संबन्धविशेषणं । महागुणानां परिग्रहो यस्मिन्स तथा ॥ १२१—१२५ ॥ संबन्धं विवृणोति पूर्वमित्यादिना ॥ पक्षिणः पक्षवन्तः । हिः पादपूरणे ॥ १२६—१२९ ॥ समग्रः समग्रपक्षः । गुप्तसमग्रपक्षश्च यथा भवामि तथा अभिरक्षितोस्मीत्यर्थः ॥ १३०—१३३ ॥ कृतमातिथ्यं तव दर्शनादिनेति भावः । मन्युः कोपः । मत्कृता पूजानगृहीतेति कोपो निरस्यतामित्यर्थः ॥ १३४ ॥ कार्यकालः त्वरते शीघ्रं गच्छेति मां प्रेरयति । अहश्चाप्यतिवर्तते अत्र विलम्बःक्रियते चेदिदमहोतिवर्तत इत्यर्थः । इह समुद्रे ।

॥ ११८—११९ ॥ **रामानु०** हनुमतःपूज्यतमत्वेहेत्वन्तरंदर्शयति—अस्माकमपीति । संबन्धः अतिथ्यतिथिमद्भावलक्षणः । महागुणपरिग्रहः परिगृह्यतइतिपरिग्रहः । महागुणानांसतांपरिग्रहःमहागुणपरिग्रहः ॥ **ती०** महागुणपरिग्रहःमहागुणेनवायुनापरिगृह्यतइतितथा ॥ १२१ ॥ **रामानु०** किंचातिथेस्तवपूजायांकाम्यार्थसिद्धिवद्वायोरपिप्रत्युपकारसिद्धिःस्यादित्याह—त्वंहीत्यादिना ॥ १२४ ॥ **रामानु०** मोक्षय मुञ्च । 'मोक्षनिरसने' इतिचौरादिकोधातुः ॥ **ति०** मान्यस्य वायुसंबन्धात्तवपूज्यस्यममप्रीतिं कुर्वितिशेषः ॥ १३३ ॥ **ती०** मन्युःपूजानङ्गीकारनिबन्धनंदैन्यं ॥ १३४ ॥ **रामानु०** कार्यकालइति । कार्यःकरणयो-

[ पा० ] १ च. छ. ज. ञ. वापि. २ ङ. झ. ट. खमाप्लुतः. ३ च. छ. ज. ञ. तवसानुनि. ४ ङ. छ. ज. ञ. विक्रमतामिति. ५ ङ. झ. ञ. ट. विश्रान्तोथगमिष्यति. क. ग. विश्रान्तोनूत्पतिष्यति. ६ ख. घ. ञ. ट. प्लवङ्गाः. ७ ग. तेषु. ८ छ. ज. विधानतः. ९ ङ.—ज. पुत्रस्त्वंतस्य. ख. पुत्रस्तस्यच. १० ङ.—ट. धर्मज्ञे. ११ ख.—ट. तेपि. १२ क. ङ. झ. ञ. ट. गरुडाइववेगिनः. १३ ङ.—ज. ञ. सहस्रशः. ख. महर्षिभिः. ग. सुरर्षिभिः. १४ च. छ. ज. ञ. क्षयायवै. १५ घ.—ट. ततःशतसहस्रशः. ग. शतशश्चसहस्रशः. १६ क. घ. झ. मामुपागतः. १७ क. च.—झ. गुप्तपक्षःसमग्रश्च. १८ ङ. झ. ट. मान्योसिममारुते. १९ ग. ङ. झ. ञ. ट. ममैष. २० क.—ट. अस्मिन्नेवं. २१ क.—घ. च. छ. ज. ममैवहि. २२ ख. ग. च. छ. ज. कर्तुमर्हसित्वं. २३ ङ. झ. ञ. ट. महामते. २४ क. पूजांत्वं. २५ ङ. ञ. ट. हरिसत्तम. घ. कपिकुञ्जर. २६ ङ. झ. ट. ममामान्यस्य. २७ घ. ङ. झ. ञ. ट. मिहान्तरा.

इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः ॥ जगामाकाशमाविश्य वीर्यवान्प्रहसन्निव ॥ १३६ ॥
स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ॥ पूजित[1]श्चोपपन्नाभिराशीर्भि[2]रनिलात्मजः ॥ १३७ ॥
[3]अथोर्ध्वं दूरमुत्पत्य हित्वा शैलमहार्णवौ ॥ पितुः पन्थानमा[4]स्थाय जगाम विमलेऽम्बरे ॥ १३८ ॥
[5]भूयश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन् ॥ [6]वायुसूनुर्निरालम्बे जगाम विमलेऽम्बरे ॥ १३९ ॥
तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ॥ १४० ॥
देवताश्चाभवन्हृष्टास्तत्रस्थास्तस्य कर्मणा[8] ॥ काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥ १४१ ॥
उवाच वचनं धीमान्परितोषात्सगद्गदम् ॥ सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः ॥ १४२ ॥
हिरण्यनाभ शैलेन्द्र परितुष्टोस्मि ते भृशम् ॥ अभयं ते प्र[9]यच्छामि तिष्ठ[10] सौम्य यथासुखम् ॥१४३॥
साह्यं कृतं ते सुमहद्वि[11]क्रान्तस्य हनूमतः ॥ क्रमतो योजनशतं निर्भयस्य भये सति ॥ १४४ ॥
[12]रामस्यैष हि[13] दूत्येन याति [14]दाशरथेर्हरिः ॥ सत्क्रियां कुर्वता [15]तस्य तोषितोस्मि दृढं त्वया ॥१४५॥
[16]ततः प्रहर्षम[17]गमद्विपुलं [18]पर्वतोत्तमः ॥ देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥ १४६ ॥
स वै दत्तवरः शैलो बभूवावस्थितस्तदा ॥ हनुमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ॥ १४७ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ [तं [19]प्रयान्तं समुद्वीक्ष्य ह्याकाशे मारुतात्मजम् ॥]
[20]अब्रुवन्सूर्यसंकाशां सुरसां नागमातरम् ॥ १४८ ॥
अयं वातात्मजः श्रीमान्प्लवते सागरोपरि ॥ हनुमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥ १४९ ॥
राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ॥ दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा [21]नभस्समम् ॥ १५० ॥

---

अन्तरे मध्ये । मया नस्थातव्यमिति वानरसन्निधौ प्रतिज्ञा कृता ॥ १३५ ॥ प्रहसन्निव प्रसन्नमुख इवेत्यर्थः ॥ १३६—१३७ ॥ हित्वा शैलमहार्णवौ मूर्तिमन्तौ तौ हित्वेत्यर्थः । अनेन शैलवत्समुद्रोपि मूर्तिमत्तया तत्राद्दृश्यतेति सूचितं ॥ १३८—१३९ ॥ द्वितीयं समुद्रलङ्घनापेक्षया द्वितीयं तत्पर्वतजयरूपंकर्म ॥ १४०—१४३ ॥ भये सति समुद्रलङ्घनेस्य किं भवि-

---

ष्यः कालःकार्यकालः । त्वरतेत्वरयति । अहश्चाप्यतिवर्ततेलङ्काद्वीपप्रवेशयोग्यमहश्चातिवर्तते । प्रतिज्ञाचेति—‘ यथाराघवनिर्मुक्तः शरःश्वसनविक्रमः । गच्छेत्तद्वद्गमिष्यामिलङ्कांरावणपालिताम् ’ इतिप्रतिज्ञादत्ता । तस्मादिहान्तरेनस्थातव्यं ॥ १३५ ॥ **ति०** प्रहसन्निवेति । एतावत्प्लवनेपिश्रममारोप्यवृथायंप्रयासएतयोरितिप्रहासः ॥ **रामानु०** आलभ्यस्पृष्ट्वा । प्रहसन्निवेत्यत्रेवशब्दोहासप्रकर्षस्यपारमार्थ्यपरःप्रीतिसूचकः । मन्दस्मितंकुर्वन्नित्यर्थः ॥ १३६ ॥ **ति०** भूयऊर्ध्वंततोपिबहूर्ध्वंतंगिरिंअधःप्रदेशवर्तिनमवलोकयन् ॥ १३९ ॥ **रामानु०** साह्यंसहायकर्मसहकारित्वमितियावत् । तेत्वयानिर्भयस्यभयेसतिअतिविस्तृतसमुद्रोपर्याकाशगमनेसमुद्रपतनादिभयनिमित्तसंभावनायामपिनिर्भयस्य ॥१४४॥ **रामानु०** बभूवावस्थितस्तदा तस्मिन्कालेस्वस्थोभूदित्यर्थः । प्रतिप्रयाणवेलायापि ‘ पर्वतेन्द्रंसुनाभंचसमुपस्पृश्यवीर्यवान् ’ इतिमैनाकावस्थानाभिधानात् । सागरं मैनाकाधिष्ठितसागरप्रदेशं ॥ १४७ ॥ **रामानु०** श्रीमान्अत्रश्रीशब्देनातिदूरसमुद्रलङ्घनेप्युपर्युपरिबलाभिवृद्धिप्रयुक्तासुषमोच्यते ॥१४९॥ **स०** रक्षसामयंराक्षसस्तं । करालंक्रूरं । पिङ्गलवर्णयुक्तेअक्षिणीयस्यतं । वक्त्रं मुखं । अर्धर्चादिनिविष्टइतिवक्त्रशब्दःपुँल्लिङ्गः । अतोनभस्स्पृशमित्युपपन्नं । अतएवार्धर्चादिगणोक्तप्रपञ्चनपरे ‘ वक्त्रनेत्रारण्यगाण्डीवानिनपुंसकेच ’ इतिलिङ्गानुशासने चशब्देनपुँल्लिङ्गत्वमप्यनुशिष्टं ।

[ **पा०** ] १ ख. श्चोपहाराभिः. २ घ. ङ. झ. ञ. ट. रभिनन्दितः. ३ च. छ. ज. अतऊर्ध्वंसमुत्पत्य. ग. ङ. झ. ञ. ट. अथोर्ध्वंदूरमाप्लुत्य. क. ख. अथोर्ध्वंदूरमुत्प्लुत्य. ४ ख. ङ—ट. मासाद्य. ५ ख. ग. घ. ततश्चोर्ध्वगतिं. झ. ततश्चोर्ध्वगतिं. ६ ङ.—ट. वायुसूनुर्निरालंबो. ख. वायुपुत्रोनिरालंबो. ७ घ. ङ. झ. ट. कपिकुञ्जरः. ८ च. ज. कर्मणि. ९ घ. प्रदास्यामि. १० झ. ञ. ट. गच्छसौम्य. ११ ग. ङ. झ. द्विश्रान्तस्य. १२ क. च. छ. ज. रामस्यैव. १३ ङ. झ. ञ. ट. हितायैव. १४ ङ. झ. ञ. ट. दाशरथेःकपिः. १५ क. ग.—ट. शक्त्या. १६ ङ. झ. ट. सतत्प्रहर्षं. १७ क. ख. छ.—ट. मलभत्. १८ ञ. पर्वतोभृशं. १९ इदमर्धं च. छ. ज. पाठेषुदृश्यते. २० घ. अब्रुवन्देवसंकाशां. २१ ग.—झ. ट. नभस्स्पृशं. ञ. दिवस्पृशं.

बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ।। त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ।। १५१ ।।
एवमुक्ता तु सा देवी दैवतैर[1]भिसत्कृता ।। समुद्रमध्ये सुरसा[2] बिभ्रती राक्षसं वपुः ।। १५२ ।।
विकृतं च विरूपं च सर्वस्य च भयावहम् ।। प्लवमानं हनूमन्तमावृत्येदमुवाच ह ।। १५३ ।।
मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ ।। अहं त्वां भक्षयिष्यामि प्रविशेदं[3] ममाननम् ।। १५४ ।।
[वरं[4] एष पुरा दत्तो मम धात्रेति सत्वरा ।। व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः]।।१५५।।
एवमुक्तः सुरसया प्राञ्जलिर्वानरर्षभः[5] ।। प्रहृष्टवदनः श्रीमानिदं[6] वचनमब्रवीत् ।। १५६ ।।
रामो दाशरथिर्[7]नाम प्रविष्टो दण्डकावनम् ।। लक्ष्मणेन सह भ्रात्रा वैदेह्या[8] चापि[9] भार्यया ।।१५७।।
अन्यकार्य[10]विषक्तस्य बद्धवैरस्य राक्षसैः ।। तस्य[11] सीता हृता भार्या रावणेन यशस्विनी[12] ।। १५८ ।।
तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ।। कर्तुमर्हसि रामस्य साह्यं विषयवासिनी ।। १५९ ।।
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ।। आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ।।१६०।।
एवमुक्ता हनुमता सुरसा कामरूपिणी ।। अब्रवीन्नातिवर्तेन्मां[13] कश्चिदेष वरो मम ।। १६१ ।।
तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् ।। बलं जिज्ञासमाना[14] वै नागमाता हनूमतः ।। १६२ ।।

---

ष्यतीत्यस्माकं भये सतीत्यर्थः ।। १४४–१५७ ।। अन्यत्कार्यविषक्तस्य मारीचमृगग्रहणव्यासक्तस्य ।। १५८ ।। विषयवासिनी रामराज्यवासिनी ।। १५९—१६० ।। नातिवर्तेन्मां ममाननमप्रविश्य न गच्छेत् । अतिवर्तेदित्यत्र परस्मैपदमार्षं । अत्र इतिकरणं द्रष्टव्यं । " अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम " इत्यस्यानन्तरं " तद्दृष्ट्वा व्यादितं वक्त्रं वायुपुत्रः सुबुद्धिमान् " इत्यादिश्लोकाद्रष्टव्याः । मध्ये तं प्रयान्तमित्यादयः केचन श्लोकाः प्रक्षिप्ताः असङ्गताश्च । शतयोजनायतत्वे वानरैर्लङ्कावासिभिश्च ज्ञातः स्यादिति विरोधात् । त इमे प्रक्षिप्तश्लोकाः ।। " तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् । बलं जिज्ञासमाना वै नागमाता हनूमतः ।। प्रविश्य वदनं मेद्य गन्तव्यं वानरोत्तम । वर एष पुरा दत्तो मम धात्रेति सत्वरा ।। व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः । एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ।। अब्रवीत्कुरु वै वक्त्रं येन मां विषहिष्यसे । इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायतः ।। दशयोजनविस्तारो बभूव हनुमांस्तदा । तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् ।। चकार सुरसा चास्यं विंशद्योजनमायतम् । हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ।। चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् । बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः ।। चकार सुरसा वक्त्रं षष्टियोजनमायतम् । तथैव हनुमान्वीरस्सप्ततीयोजनोच्छ्रितः ।। चकार सुरसा वक्त्रमशीतीयोजनोच्छ्रितम् । हनुमानचलप्रख्यो नवतीयोजनोच्छ्रितः ।। चकार सुरसा वक्त्रं शतयोजनमायतं" इति । प्रकृतं विलिख्यते— तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः सुबुद्धिमान् । सुसं-

---

अथवा ' यथावाचानिशादिशा' इत्यादिवत्स्पृक्छन्दस्य हलन्तत्वाट्टाबन्तताम् आश्रित्यनभसःस्पृशायस्यतदिति ।।१५०।। **ति०** बलंज्ञानबलमुपायबलंच । पराक्रमंचज्ञातुमिच्छामहे । तदेवविवृणोति—त्वामितिभयस्यचभयावहमितिपाठेसर्वलोकभयस्यापीत्यर्थः ।। **स०** बलंशारीरं । मैनाकाविश्रमेणैवज्ञातत्वाद्भूयइत्युक्तं । इच्छामहेइच्छामः । केनचिदुपायेनत्वांविजेष्यतिवाकिंवाविषादंदैन्यंगमिष्यतीतिविचारयामः । यद्वाबलं तुभ्यमस्मद्दत्तवरबलं अस्यहनुमतःपराक्रमंचज्ञातुमिच्छामः । यद्युपायेनत्वांविजेष्यतितर्हितत्पराक्रमोविज्ञातः । यदिविषादंगमिष्यतितदास्मद्वरबलंविज्ञातंभवेदिति ।। १५१ ।। **शि०** अन्यकार्यविषक्तस्यदेवादिकार्यसाधनासक्तस्य ।। १५८ ।। **ती०** विषयवासिनि रामराज्यवासिनि । त्रैलोक्यनाथत्वाद्रामस्येतिभावः ।। १५९ ।।

**[ पा० ]** १ ख. दैवतैश्चापि. घ. देवैस्तैरभि. च. छ. ज. देवैरपिच. २ क. सहसा. ३ क. प्रविशस्व. ४ ग. ङ.—ट. पाठेषुअयंश्लोकोदृश्यते. ५ ग. छ. ज. ञ. प्राञ्जलिःपवनात्मजः. ६ ख. श्रीमान्सुरसांवाक्यमब्रवीत्. ७ क. ख. दाशरथिः श्रीमान्. ८ च. छ. ज. ञ. सीतया. ९ चैव. ट. सह. १० ङ.—ञ. अस्यकार्य. ११ ग. ततःसीता. घ. तस्यभार्याहृतादेवी. १२ क. तपस्विनी. १३ ग. नातिवर्तेथाः. च. छ. ज. नातिवर्तेत. १४ ङ.—ट. मानासा.

[1]प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ॥ वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥
व्यादाय [2]वक्त्रं विपुलं स्थिता सा मारुतेः पुरः ॥ १६३ ॥
एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ॥ अब्रवीत्कुरु वै वक्त्रं येन मां [3]विषहिष्यसे ॥ १६४ ॥
इत्युक्त्वा सुरसां क्रुद्धो [4]दशयोजनमायतः ॥ दशयोजनविस्तारो [5]बभूव हनुमांस्तदा ॥ १६५ ॥
[6]तं दृष्ट्वा मेघ[7]संकाशं दशयोजनमायतम् ॥ चकार [8]सुरसा चास्यं विंशद्योजनमायतम् ॥ १६६ ॥
[9]तां दृष्ट्वा विस्तृतास्यां तु वायुपुत्रः सुबुद्धिमान् ॥ [10]हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ॥१६७॥
चकार [11]सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् ॥ बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः ॥ १६८ ॥
चकार सुरसा वक्त्रं षष्टियोजनम[12]आयतम् ॥ [13]तथैव हनुमान्वीरः सप्ततीयोजनोच्छ्रितः ॥ १६९ ॥
चकार सुरसा [14]वक्त्रमशीतीयो[15]जनायतम् ॥ हनुमान[16]चलप्रख्यो नवतीयोजनोच्छ्रितः ॥ १७० ॥
चकार सुरसा वक्त्रं शतयोजनमायतम् ॥ १७१ ॥
तद्दृष्ट्वा व्यादितं [17]त्वास्यं [18]वायुपुत्रः सुबुद्धिमान् ॥ दीर्घजिह्वं सुरसया [19]सुघोरं नरकोपमम् ॥
[20]सुसंक्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः ॥ १७२ ॥
[21]सोभिपत्याशु तद्वक्त्रं निष्पत्य च [22]महाजवः ॥ अन्तरिक्षे स्थितः श्री[23]मानिदं वचनमब्रवीत् ॥१७३॥
प्रविष्टोस्मि हि ते वक्त्रं दाक्षायणि नमोस्तु ते ॥ गमिष्ये यत्र वैदेही [24]सत्यश्चासीद्वरस्तव ॥ १७४ ॥
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ॥ अब्रवीत्सुरसा देवी स्वेन रूपेण [25]वानरम् ॥ १७५ ॥
अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ॥ [26]समानयस्व वैदेहीं राघवेण महात्मना ॥ १७६ ॥
तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ साधुसाध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥ १७७ ॥
स सागरमनाधृष्यमभ्येत्य वरुणालयम् ॥ जगामाकाशमाविश्य वेगेन ग[27]रुडोपमः ॥ १७८ ॥
सेविते वारिधाराभिः पतगैश्च निषेविते ॥ चरिते कैशिकाचार्यैरैरावतनिषेविते ॥ १७९ ॥

---

क्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः ॥१६१–१७३॥ | दक्षस्यापत्यं दाक्षायणी । तत्त्वं च पूर्वं वरप्रदा-

ति० विंशद्योजनमायतमित्यनन्तरं 'तद्दृष्ट्वाव्यादितंत्वास्यं' इतिप्राचीनःपाठः । 'तांदृष्ट्वा' इत्यादयः 'शतयोजनमायतं' इत्यन्ताःश्लोकास्तुप्रक्षिप्ताइतिकतकः ॥ १६६ ॥ **रामानु०** व्यादितं व्यात्तं । इडागमस्त्वार्षः । अतिविस्तृतंवक्त्रंसूक्ष्मरूपेणप्रविश्याक्लेशेन । निर्गन्तुमयंसमीचीनःसमयइति ज्ञानयोगात्सुबुद्धिमानिति विशेषणं ॥ १७२ ॥ **रामानु०** दाक्षायणीत्यनुवादात्स्ववरप्रदानकथनसमये हनुमन्तमुद्दिश्यस्वकीयंदाक्षायणीत्वमपितयैवकथितमित्यवगन्तव्यं । सत्यंचासीद्वरंतव त्वदास्यंप्रविश्यनिर्गमनाद्ब्रह्मणादत्तोवरःसत्यआसीदित्यर्थः । वरशब्दस्य नपुंसकत्वमार्षं ॥ १७४ ॥ **रामानु०** समानयस्व संगमय ॥ १७६ ॥ **रामानु०** कैशिकंरागविशेषः तदाचार्यैः तुंबुरुप्रभृतिभिरित्यर्थः । ऐरावतनिषेविते ऐरावतमितिऋजुदीर्घमिन्द्रधनुरुच्यते । तेननिषेवितेयुक्ते । 'इन्द्रायुधंत्विन्द्रधनुस्तद्दीर्घमृजुरोहितम् । ऐरावतंचविद्युत्तुचञ्चलाचपला' इतिवैजयन्ती ॥ १७९ ॥

**[ पा० ]** १ ङ. झ. ट. निविश्य. २ घ.—ट. विपुलंवक्त्रं. ३ घ. ङ. झ. ञ. ट. विषहिष्यसि. ४ ङ. झ. ञ. ट. दशयोजनमायतां. घ. पञ्चयोजनमायतः. ५ ङ. झ. ञ. ट. हनूमानभवत्तदा. ६ इदमर्धं. झ. पाठेनदृश्यते. ७ च. छ. ज. गिरिसंकाशं. ८ क. ख. ङ.—ज. ट. सुरसाप्यास्यं. ९ तांदृष्ट्वाविस्तृतास्यांतुइत्यर्धमारभ्यनवार्धानि झ. पाठेनदृश्यन्ते. १० क. अतःपरंहनूमांस्तुत्रिंशद्योजनं. ११ घ. सुरसाचास्यं. क. सुरसाप्यास्यंचत्वारिंशत्तथायतं. १२ ग.—ज. ञ. ट. मुच्छ्रितं. १३ ङ. ञ. ट. तदैव. १४ क. वक्त्रंयोजनाशीतिमायतं. १५ घ. ञ. योजनोच्छ्रितं. १६ ङ. ञ. ट. ननलप्रख्यः. १७ ख. वक्त्रं. क. घ. चास्यं. १८ क. झ. वायुपुत्रस्स. ख. वायुपुत्रस्तु. १९ घ. सुघोरनरकोपमं. ङ.—झ. सुभीमं. २० ख.—ट. ससंक्षिप्यात्मनः. क. संक्षिप्यचात्मनः. घ. ङ. झ. ञ. ट. पाठेषु. सुसंक्षिप्यात्मनःकायमित्यर्धस्यस्थाने. ससंक्षिप्यात्मनःकायंजीमूतइवमारुतः । तस्मिन्मुहूर्तेहनुमान्बभूवाङ्गुष्ठमात्रकः. इत्येकःश्लोकोदृश्यते. २१ ङ.—ट. सोभिपद्याथ. ग. सन्निपत्याशु. २२ ङ.—ट. महाबलः. २३ क. ख. घ. श्रीमान्प्रहसन्निदमब्रवीत्. २४ ख. घ. सत्यंचास्तुवचस्तव. क. सत्यश्चास्तुवरस्तव. २५ ग. वातजं. २६ क. ग.—ट. समानयच. २७ घ. गरुडोयथा.

सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ॥ विमानैः संपतद्भिश्च विमलैः समलंकृते ॥ १८० ॥
वज्राशनिसमाघातैः पावकैरुपशोभिते ॥ कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरलंकृते ॥ १८१ ॥
वहता हव्यमत्यर्थं सेविते चित्रभानुना ॥ ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥ १८२ ॥
महर्षिगणगन्धर्वनागयक्षसमाकुले ॥ विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १८३ ॥
देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे ॥ विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ॥ १८४ ॥
बहुशः सेविते वीरैर्विद्याधरगणैर्वरैः ॥ जगाम वायुमार्गे तु गरुत्मानिव मारुतिः ॥ १८५ ॥
[हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा ॥ १८६ ॥
कालागरुसवर्णानि रक्तपीतसितानि च ॥ कपिनाऽऽकृष्यमाणानि महाभ्राणि चकाशिरे ॥ १८७ ॥
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ प्रावृषीन्दुरिवाभाति निष्पतन्प्रविशंस्तदा] ॥ १८८ ॥
प्रदृश्यमानस्सर्वत्र हनुमान्मारुतात्मजः ॥ भेजेऽम्बरं निरालम्बं लम्बपक्ष इवाद्रिराट् ॥ १८९ ॥
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ॥ मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १९० ॥
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ॥ इदं हि मे महत्सत्वं चिरस्य वशमागतम् ॥ १९१ ॥
इति संचिन्त्य मनसा छायामस्य समाक्षिपत् ॥ छायायां गृह्यमाणायां चिन्तयामास वानरः ॥ १९२ ॥
समाक्षिप्तोस्मि सहसा पङ्गूकृतपराक्रमः ॥ प्रतिलोमेन वातेन महानौरिव सागरे ॥ १९३ ॥
तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्ततः कपिः ॥ ददर्श स महत्सत्वमुत्थितं लवणाम्भसि ॥ १९४ ॥

---

नकथनसमये तयैव कथितमित्यनुवादात्कल्प्यते ॥ १७४—१७८ ॥ आकाशगमनमतिदुष्करमित्यमुमर्थं कथयितुं आकाशस्वरूपं वर्ण्यते सेवित इत्यादिना श्लोकसप्तकेन ॥ कैशिकाचार्यैः कैशिके रागविशेषे आचार्यैः विद्याधरविशेषैरित्यर्थः ॥१७९–१८०॥ वज्राशनिसमाघातैः पावकैः वज्राशनिसमाघातैर्हेतुभिर्जातैः पावकैः ॥ १८१ ॥ हव्यं वहता देवेभ्यो हव्यवहनार्थं गतेन । चित्रभानुना वह्निना ॥ १८२ ॥ विश्वे विश्वगते व्यापक इत्यर्थः ॥ १८३ ॥ देवराजगजाक्रान्ते ऐरावतभिन्नदिग्गजाक्रान्ते । विताने वितानतुल्ये । वितत इति वितानविशेषणं ॥१८४—१९० ॥ दीर्घस्य कालस्य दीर्घकाले गते सति । अद्य आशिता आशित्री भुक्तवती । भविष्यामि ॥ १९१ ॥ समाक्षिपत् सम्यग्गृहीतवती ॥ १९२ ॥ पङ्गूकृतपराक्रमः कुण्ठितगतिः । प्रतिलोमेन प्रतिकू-

ति० पतगोरगाः पक्षिसर्पाः ॥ १८० ॥ **रामानु०** वज्राशनिसमाघातैःवज्राशन्योःसमःतुल्यःआघातःअभिघातःयेषांतैः ॥ १८१ ॥ **ती०** आकाशस्यैकोनपञ्चाशदग्निसंबन्धमुक्त्वातत्प्रधानभूतचित्रभानुसंबन्धमाह वहतेति ॥ **ति०** वज्राशनिसमस्पर्शैः तद्वत्प्राणहरैः । पावकैःपञ्चाग्निभिरिवस्वर्गजिद्भिरधिष्ठिते ॥ **स०** स्वर्गजिद्भिःप्राप्तस्वर्गैः । धनजिते स्वर्जितेइत्यादाविवजिधातुःप्राप्त्यर्थकः ॥ १८१ ॥ **स०** नक्षत्राणिपुंनक्षत्राणि । तारागणःअश्विन्यादिसमूहः ॥ १८२ ॥ **रामानु०** विविक्तइति । विश्वेविशतीति विश्वःव्यापकइत्यर्थः ॥ १८३ ॥ **रामानु०** वितानेउल्लोचभूते । 'अस्त्रीवितानमुल्लोचः' इत्यमरः । हनुमान्मेघजालानीत्यादिसार्धश्लोकद्वयंप्रमादाल्लिखितं ॥ १८४ ॥ **ति०** महानौर्यथापङ्गूकृतपराक्रमास्तब्धगतिःप्रतिलोमेनवातेनक्रियते । गम्यदेशगतिनिरोधएवात्रस्तब्धगतित्वं । यद्वातेनयथाविपरीतगतिवारणाययन्त्रैःस्तब्धगतिःकार्यतेतथाऽहंकेनचित्स्तब्धगतिःकृतः ॥ १९३ ॥

[ पा० ] १ ग. च. छ. ज. संपतद्भिश्चविमलैर्विमानैः. घ. विमानैर्निष्पतद्भिश्चविविधैः. २ झ. ट. समस्पर्शैः. ३ ङ. झ. ट. पावकैरिव. ४ ङ. झ. ट. रधिष्ठिते. च. छ. ज. ञ. रधिश्रिते. ५ क. ख. घ.—ट. मत्यन्तं. ६ घ. कृष्णवर्त्मना. ७ क. ख. घ. गणनिषेविते. ८ क. देवगन्धर्व. ९ ग. ङ.—ट. विमले. १० क. घ. ङ. झ. ञ. ट. गणैर्वृते. ११ ख. च. छ. ज. वायुमार्गेण. ङ. झ. ञ. ट. वायुमार्गेच. क. घ. वायुवेगेन. १२ क. वानरः. १३ इमानिपञ्चार्धानि क. ख. घ.—ट. पाठेषुदृश्यन्ते. १४ ङ—ट. पक्षयुक्तइवाद्रिराट्. १५ क. ग. प्लवमानंहि. १६ घ. अथैवदीर्घकालस्य. १७ ङ.—ट. इदंममहासत्वं. १८ क.—घ. संगृहीतायां. १९ क. मारुतिः. २० ङ. झ. ञ. ट. स्तदाकपिः. क. ग. घ. च. छ. ज. स्ततस्ततः. २१ ख. ददर्शच. ग. ददर्शसहसासत्वं.

तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् ॥ कपिराजेन कथितं सत्वमद्भुतदर्शनम् ॥
छायाग्राहि महावीर्यं तदिदं नात्र संशयः ॥ १९५ ॥
स तां बुद्ध्वाऽर्थतत्वेन सिंहिकां मतिमान्कपिः ॥ व्यवर्धत महाकायः प्रावृषीव बलाहकः ॥१९६॥
तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ॥ वक्रं प्रसारयामास पातालान्तरसन्निभम् ॥ १९७ ॥
घनराजीव गर्जन्ती वानरं समभिद्रवत् ॥ १९८ ॥
स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् ॥ कायमात्रं च मेधावी मर्माणि च महाकपिः ॥ १९९ ॥
स तस्या विवृते वक्रे वज्रसंहननः कपिः ॥ संक्षिप्य मुहुरात्मानं निष्पपात महाबलः ॥ २०० ॥
आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ॥ ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ॥२०१॥
ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ॥ उत्पपाताथ वेगेन मनस्संपातविक्रमः ॥ २०२ ॥
तां तु दृष्ट्या च धृत्या च दाक्षिण्येन निपात्य च ॥ स कपिप्रवरो वेगाद्ववृधे पुनरात्मवान् ॥२०३॥
हृतहृत्सा हनुमता पपात विधुराम्भसि ॥ [स्वयंभुवैव हनुमान्सृष्टस्तस्या निपातने ] ॥ २०४ ॥
तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ॥ भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥२०५॥
भीममद्य कृतं कर्म महत्सत्त्वं त्वया हतम् ॥ साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ॥ २०६ ॥
यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ॥ धृतिर्दृष्टिर्मतिर्दाक्ष्यं स्वकर्मसु न सीदति ॥ २०७ ॥

---

लेन ॥ १९३—१९४ ॥ तदिदं छायाग्राहि कपिराजेन कथितं नात्र संशय इति योजना ॥ १९५—१९७ ॥ समभिद्रवत् समभ्यद्रवत् ॥१९८॥ कायमात्रं देहप्रमाणं ॥ १९९ ॥ मुहुस्संक्षिप्य संनिकर्षानुगुणं संकुच्य ॥ २००—२०१ ॥ ततः तेन रूपेण मनस्संपातविक्रमः मनोवेगतुल्यगतिः ॥ २०२ ॥ दृष्ट्या दूरादेव दर्शनेन। धृत्या अस्य नियमनजननधाष्टर्येन। दाक्षिण्येन पाटवेन ॥ २०३ ॥ विधुरा आर्ता ॥ २०४—२०५ ॥ अरिष्टं शुभं यथा भवति तथा। यस्य सिंहिकारूपसत्त्वस्य। दृष्टिः आयतिक्षमसूक्ष्मेक्षणं। मतिः अर्थतत्त्वनिश्चयः। क्रियावत्त्वं दाक्ष्यं यथा तव तथा यस्य चत्वारि सन्ति तत्त्वया हतं। तान्येव चत्वार्याह—धृतिरिति। या धृतिः स्वकर्मसु स्वानुकूलकार्येषु नावसीदति। या दृष्टिर्नावसीदति। या मतिर्नावसीदति। यद्दाक्ष्यं नावसीदति एतानि चत्वारि यस्य सन्ति तत्त्वया हतमिति योजना

---

स० कायमात्रं कायस्य स्वदेहस्य मात्रा परिमाणं यस्यतत्। स्वशरीरकबलीकरणयोग्यमितियावत्। मर्माणि सन्धिस्थानानि ॥ १९९ ॥ स० आत्मानंआत्मीयंवपुः। कंपयतिशत्रूनितिकपिः। कंपेर्नलोपश्चेतिनलोपः। कुडिकेभ्यइतीलं ॥ २०० ॥ रामानु० अथवानरःमनस्संपातविक्रमःमनोगमनसमानगतिःसन्तीक्ष्णैर्नखैःतस्याममर्माण्युत्कृत्यततःआस्यात्वेगेनोत्पपात। आस्यपिधानात्पूर्वमेवोत्पपातेत्यर्थः ॥ २०२ ॥ ति० ननुप्रथमप्रवृत्तवेगस्यसुरसादिःकुण्ठीभावेसतिकथंपुनराकाशगमनंतत्राह—आत्मवान्। वायोरिवस्वाधीनएवतद्गमनविषयोयत्नः। प्रथमंत्वाकाशमार्गप्राप्तिमात्रायमहेन्द्रपर्वतालंबनमितरजनप्रतारणायवेत्याहुः। अत्रकविरुत्प्रेक्षते—तस्याच्छायाग्रहणमात्रेणभक्षणादिशक्तिमत्याःसिंहिकायानिपातने निपातनिमित्तं रावणनाशायस्वात्मपरामवत्स्वरूपोहनुमान्सृष्टः। ति० महत्सत्वं महाबलाराक्षसीरावणवदशक्यसंहारा। त्वयासंहृतेत्यर्थः। अरिष्टं बाधारहितं। 'रिष हिंसायां' ॥ २०६ ॥ स० यस्यपुरुषस्यदृष्टिःअपरोक्षज्ञानं। मतिःपरोक्षज्ञानं दाक्ष्यंदक्षत्वं ॥ २०७ ॥

[ पा० ] १ ङ.—ट. कपिराज्ञायथाख्यातं. क. ख. घ. कपिराज्ञायदाख्यातं. २ घ. महासत्वं. ३ ग.—च. झ. ञ. ट. तालांबरसंनिभं. क. पातालतलसंनिभं. ४ घ. मेघराजीव. ५ ङ.—ट. विकृतं. ६ ग. ङ.—ट. विकृते. ७ क. च. छ. ज. पुनरात्मानं. ८ क. ङ. झ. ञ. ट. निपपातमहाकपिः. छ. ज. निष्पपातमहाकपिः. ९ क. गृह्यमाणं. १० च. छ. ज. निहत्यसः. ङ. झ. ट. निपात्यसः. ११ ङ. छ. ञ. ट. कपिप्रवीरोवेगेनववृधे. १२ ख. ग. लवणांभसि. १३ इदमर्धं ग.—ट. पाठेषुदृश्यते. १४ च. छ. ज. ञ. वानरेणाथ. ग. वानरेन्द्रेण. १५ क.—घ. छ. ज. प्लवगर्षभं. १६ च. छ. ज. भीममत्यद्भुतंकर्म. क. भीममद्यमहत्कर्म.

स तैः संभावितः पूज्यः प्रतिपन्नप्रयोजनः ॥ जगामाकाशमाविश्य पन्नगाशनवत्कपिः ॥ २०८ ॥
प्राप्तभूयिष्ठपारस्तु सर्वतः प्रतिलोकयन् ॥ योजनानां शतस्यान्ते वनराजिं ददर्श सः ॥ २०९ ॥
ददर्श च पतन्नेव विविधद्रुमभूषितम् ॥ द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ २१० ॥
सागरं सागरानूपं सागरानूपजान्द्रुमान् ॥ सागरस्य च पत्नीनां मुखान्यपि विलोयकन् ॥ २११ ॥
स महामेघसंकाशं समीक्ष्यात्मानमात्मवान् ॥ निरुन्धन्तमिवाकाशं चकार मतिमान्मतिम् ॥२१२॥
कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः ॥ मयि कौतूहलं कुर्युरिति मेने महाकपिः ॥ २१३ ॥
ततः शरीरं संक्षिप्य तन्महीधरसन्निभम् ॥ पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ २१४ ॥
तद्रूपमतिसंक्षिप्य हनुमान्प्रकृतौ स्थितः ॥ त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥ २१५ ॥

स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् ॥
परैरशक्यः प्रतिपन्नरूपः समीक्षितात्मा समवेक्षितार्थः ॥ २१६ ॥
ततस्स लम्बस्य गिरेस्समृद्धे विचित्रकूटे निपपात कूटे ॥
सकेतकोद्दालकनालिकेरे महाद्रिकूटप्रतिमो महात्मा ॥ २१७ ॥
ततस्तु संप्राप्य समुद्रतीरं समीक्ष्य लङ्कां गिरिवर्यमूर्ध्नि ॥
कपिस्तु तस्मिन्निपपात पर्वते विधूय रूपं व्यथयन्मृगद्विजान् ॥ २१८ ॥

॥ २०६—२०७ ॥ संभावितः पूजितः । प्रतिपन्नप्रयोजनः प्राक्प्रतिभासितकार्यसारः । सच स्त्रीत्वे दोषे समानेपि सुरसाया जयप्रतिपत्तिः सिंहिकाया वधप्रतिपत्तिश्च ॥ २०८ ॥ प्राप्तभूयिष्ठपारः प्राप्तप्रायतीरः ॥ २०९ ॥ मलयोपवनानि लङ्कामलय इति दक्षिणतीरे स्थितमलयः तस्योपवनानि ॥ २१० ॥ सागरस्य पत्नीनां नदीनां त्रिकूटोत्पन्नानां आत्मानं स्वशरीरं । मतिं चकार मेन इति यावत् ॥ २११—॥ २१२ ॥ कथं मेन इत्यत्राह कायवृद्धिमिति ॥ २१३ ॥ पुनः प्रकृतिमापेदे पुनर्निजाकारं प्राप्तवान् ॥ २१४ ॥ उक्तं शरीरसंक्षेपं दृष्टान्तार्थमनुवदति—तद्रूपमिति ॥२१५॥ प्रतिपन्नरूपः प्रतिपन्नस्वभावशरीरः । अभूदितिशेषः । समीक्षितात्मा समीक्षितदेहः । समवेक्षितार्थः निरूपितकार्यः । पूर्वोक्तोपसंहारश्लोक एषः ॥ २१६ ॥ लम्बस्य लम्बमानस्येव स्थितस्य अविज्ञाताग्रस्येत्यर्थः । विचित्रकूटे विविधाश्चर्यसमूहे । "कूटस्त्वस्त्रियां पुञ्जपालयोः" इति दर्पणः । उद्दालकाः श्लेष्मातकाः ॥ २१७ ॥ व्यथयन्मृगद्विजानित्यादिविशेषं वक्तुमुक्तमर्थमनुवदति—ततस्त्विति ॥ समुद्रतीरं तीरोपर्याकाशं । विधूय

स० प्राप्तभूयिष्ठपारः प्राप्तप्रायं भूयिष्ठपारं महालङ्काद्वीपतीरंयेनसः ॥ २०९ ॥ ति० पतन्नेवगच्छन्नेवमलयोपवनानि । अनेनोत्तरतीरइवदक्षिणतीरेपिमलयाख्यःपर्वतोस्तीतिगम्यते ॥ २१० ॥ ती० वीतमोहःनिवृत्तविद्यः ॥ २१४ ॥ रामानु० चारुनानाविधरूपधारीतत्तत्कार्यानुगुण्येनपरिगृहीतरमणीयस्थूलसूक्ष्मादिरूपः । परैःसिंहिकादिभिः । अशक्यःअप्रधृष्यः । सःपरंसमुद्रतीरमासाद्यसमीक्षितात्मा समालोकितातिप्रमाणस्वशरीरः समवेक्षितार्थःसमालोचितकार्यः प्रतिपन्नरूपः अङ्गीकृतनिजशरीरः अभूदितिशेषः । ती० समवेक्षितार्थःआलोचितानन्तरकार्यः । प्रतिपन्नरूपःअङ्गीकृतपृषदंशदेहः ॥११६ ॥ इतिप्रथमःसर्गः ॥१॥

[ पा० ] १ क. संपूजितःपूज्यैः. क. ज.—झ. ट. संपूजितःपूज्यः. २ ङ. झ. ञ. ट. प्रविलोकयन्. च. प्रविलोकयन्. ३ क. ङ. च. छ. झ. ञ. ट. सागरानूपान्. ४ ख. ग. मुखान्यभि. ५ ख. मात्मना. ६ घ. संनिरुद्धमिवा. ७ घ. दृष्ट्वैवमम. ८ ङ. ट. महामतिः. ९ ग. च. छ. ज. तद्रूपमपि. १० घ. बलियज्ञहरो. क. बलवीर्याधिको. ११ ख. ङ. झ. ट. रशक्यं. १२ क. सचित्रकूटे. १३ ङ.—ट. नारिकेले. १४ ख.—छ. झ. ञ. ट. महाभ्रकूट.

स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ॥
निपत्य तीरे च महोदधेस्तदा ददर्श लङ्काममरावतीमिव ॥ २१९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः ॥ २ ॥

हनुमता लङ्काया राक्षसगणरक्षणादिनिरीक्षणेनेतरदुराधर्षत्वादिचिन्तनपूर्वकं बिडालतुल्यपरिमाणकवपुषासता चन्द्रोदयसमये लङ्काप्रवेशनं ॥ १ ॥

स सागरमनाधृष्यमतिक्रम्य महाबलः ॥ [1]त्रिकूटशिखरे लङ्कां [2]स्थितां स्वस्थो ददर्श ह ॥ १ ॥
ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् ॥ [3]अभिवृष्टः स्थितस्तत्र बभौ पुष्पमयो [4]यथा ॥ २ ॥
योजनानां [5]शतं श्रीमांस्तीर्त्वाऽप्युत्तमविक्रमः ॥ अनिश्श्वसन्कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३ ॥
शतान्यहं योजनानां क्रमेयं सुबहून्यपि ॥ किं पुनस्सागरस्यान्तं संख्यातं शतयोजनम् ॥ ४ ॥
स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः ॥ जगाम वेगवाँल्लङ्कां लङ्घयित्वा महोदधिम् ॥ ५ ॥
शाद्वलानि च नीलानि गन्धवन्ति वनानि च ॥ [6]गण्डवन्ति च मध्येन जगाम नगवन्ति च ॥६॥
शैलांश्च [7]तरुसंछन्नान्वनराजीश्च पुष्पिताः ॥ अभिचक्राम तेजस्वी हनुमान्प्लवगर्षभः ॥ ७ ॥
स तस्मिन्नचले तिष्ठन्वनान्युपवनानि च ॥ स नगाग्रे [8]च तां लङ्कां ददर्श पवनात्मजः ॥ ८ ॥
सरलान्कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् ॥ [9]प्रियालान्मुचुलिन्दांश्च कुटजान्केतकानपि ॥ ९ ॥
प्रियङ्गून्गन्धपूर्णांश्च नीपान्स[10]प्तच्छदांस्तथा ॥ [11]असनान्कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १० ॥
पुष्प[12]भारनिबद्धांश्च तथा मुकुलितानपि ॥ पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ११ ॥
हंसकारण्डवाकीर्णा वापीः [13]पद्मोत्पलायुताः ॥ आक्रीडान्विविधान्रम्यान्विविधांश्च जलाशयान्॥१२॥

---

रूपं पूर्वरूपं विहाय । वृत्तमुपजातिः ॥२१८—२१९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

---

स सागरमित्यादि ॥ १—३ ॥ समुद्रलङ्घने कुतो ग्लानिं नाध्यगच्छदित्यत्राह—शतानीति ॥ ४—५॥ गण्डवन्ति स्थूलोपलवन्ति । नामैकदेशे नामग्रहणेन गण्डशब्देन गण्डशैल उच्यते ॥ ६—७ ॥ स तस्मिन्नित्यर्धे ददर्शेत्यपकृष्यते ॥ ८ ॥ सरलान् यूपसरलान् । कर्णिकारान्परिव्याधान् । खर्जूरान् कण्टकच्छदान् । प्रियालान् धनुःपटान् । मुचुलिन्दान् जम्बीरान् ॥ ९ ॥ प्रियङ्गून् फलिनः । गन्धपूर्णान् नीपान् असनान् । कोविदारान् चमरिकान् ॥१०—११ ॥ आक्रीडान् सर्वसाधारणक्रीडास्थानानि ॥१२॥

---

**स०** स्वस्थउत्तरत्रकथंकर्तव्यमितिचित्तवैक्लब्यरहितः ॥ १० ॥ **रामानु०** समुद्रलङ्घनेकुतःश्रमंनाध्यगच्छत्तत्राह—शतान्यहमिति । अहंसुबहून्यपियोजनानांशतानिक्रमेयं । शतयोजनसंख्याकंसागरस्यान्तंकिंपुनरित्यमन्यतेतिशेषः ॥ ४ ॥ **रामानु०** अत्र शैलशब्दःशृङ्गपरः । लंबाख्यगिरेरुपरितनस्योच्यमानत्वात् ॥ ७ ॥ वनानि स्वतएवजातवृक्षसमूहान् । उपवनानिस्थापितवृक्ष-

[ **पा०** ] १ क. घ. ङ. झ. ञ. ट. त्रिकूटस्यतटे. २ क. ग. घ. ङ. झ. ञ. ट. स्थितःस्वस्थो. ३ ग. ङ. झ. ञ. ट. अभिवृष्टस्ततस्तत्र. ४ ङ. झ. ञ. ट. हरिः. ५ च. छ. ज. शतंतीर्त्वातथाप्युत्तम. ६ क. ङ. झ. ञ. ट. मधुमन्तिच. ग. च. छ. गजवन्तिच. ७ घ. छ. तरुसंपन्नान्. ८ ग. ङ.—ट. स्थितांलङ्कां. ९ ग. बकुलान्मु. १० क. ख. न्सप्तच्छदानपि. ११ ग. पनसान्को. १२ छ. ज. भारपिनद्धांश्च. ग. भारातिभारांश्च. क. भारातिबद्धांश्च. १३ झ. ञ. ट. पद्मोत्पलावृताः.

संततान्विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः ॥ उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३ ॥
समासाद्य च लक्ष्मीवाँल्लङ्कां रावणपालिताम् ॥ परिघाभिः सपद्माभिः सोत्पलाभिरलंकृताम् ॥१४॥
सीतापहरणार्थेन रावणेन सुरक्षिताम् ॥ समन्ताद्विचरद्भिश्च राक्षसैरुग्रधन्विभिः ॥ १५ ॥
काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् ॥ गृहैश्च ग्रहसंकाशैः शारदाम्बुदसन्निभैः ॥ १६ ॥
पाण्डुराभिः प्रतोलीभिरुच्चाभिरभिसंवृताम् ॥ अट्टालकशताकीर्णां पताकाध्वजमालिनीम् ॥ १७ ॥
तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविचित्रितैः ॥ ददर्श हनुमाँल्लङ्कां दिवि देवपुरीमिव ॥ १८ ॥
गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैः शुभैः ॥ ददर्श स कपिश्रेष्ठः पुरमाकाशगं यथा ॥ १९ ॥
पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा ॥ प्लवमानामिवाकाशे ददर्श हनुमान्पुरीम् ॥ २० ॥
वप्रप्राकारजघनां विपुलाम्बुनवाम्बराम् ॥ शतघ्नीशूलकेशान्तामट्टालकवतंसकाम् ॥
मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा ॥ २१ ॥
द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२ ॥
कैलासशिखरप्रख्यामालिखन्तीमिवाम्बरम् ॥ डीयमानामिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३ ॥

उद्यानानि राजयोग्यानि । सर्वर्तुफलपुष्पितैः सर्वर्तुषु फलपुष्पाण्येषां संजातानि तैः ॥ १३ ॥ समासाद्य ददर्शेति क्रियाभेदाल्लङ्कापदावृत्तिः । लक्ष्मीवान् जयहेतुकान्तिमान् । उत्पलानि पद्मव्यतिरिक्तानि सरसिजानि ॥ १४ ॥ सीतापहरणं अर्थः प्रयोजनं यस्य तेन । सुरक्षितत्वे हेतुरयं । विचरद्भिश्चेत्यत्र चकारो भिन्नक्रमः । राक्षसैश्च सुरक्षितां ॥ १५ ॥ ग्रहसंकाशैः नवग्रहतुल्यैः ॥ १६ ॥ पाण्डुराभिः सुधालिप्तभूमिकत्वात्सिताभिः । प्रतोलीभिः वीथीभिः । अट्टालकाः अट्टाः । पताकाध्वजमालिनीं लतादिरेखाविचित्रितपटविशिष्टाः पताकाः । मत्स्यमकराद्याकारा ध्वजाः । व्रीह्यादित्वादिनिः ॥ १७ ॥ लतापङ्क्तयः लताकाररेखाः ॥ १८—२० ॥ वप्रेत्यादावपि ददर्श हनुमान्कपिरित्यनुवर्तते । वप्रं प्राकारमूलिकः । प्राकारः सालः । विपुलाम्बु परिघारूपं नवाम्बरं यस्यास्सा । शतघ्नी यन्त्रविशेषः । वतंसः अवतंसः । भागुरिमतेनाल्लोपः । वस्तुतो विश्वकर्मणा निर्मितां विचार्यमाणे केनापि मनसा निर्मितामिव स्थितामित्युत्प्रेक्षा ॥२१॥ उत्तरं द्वारमासाद्य । चिन्तयामास मनसा निरूपयामास । वैदेहीदर्शनोपायमिति शेषः ॥ २२ ॥ डीयमानां गच्छन्तीं । डीङ् विहायसागतौ इत्यस्मा-

षण्डानि । सनगंवृक्षसहितंयदग्रंतस्मिन्स्थितांलङ्कांचददर्श ॥ ८ ॥ **ती०** अट्टालकशताकीर्णां प्राकारवेदिकोपरियुद्धार्थपरिकल्पितमञ्चविशेषशतसंकुलां । ददर्शहनुमाँल्लङ्कामितिपुनर्दर्शनाभिधानंविशेषान्तरविवक्षयोपमानान्तरविवक्षयावा ॥ **स०** पताकासौभाग्यं तस्याध्वजः सूचकसचेलयष्टिविशेषः । तेनमालतेशोभतेसातथा ॥ अभिधानंतूक्तं । **ति०** गिरिमूर्धस्थत्वादेवाकाशेप्लवमानामिव । लङ्कांद्रष्टुर्हनूमतइवतद्वर्णनप्रसक्तस्यकवेरप्याश्चर्यमग्नतयाददर्शेतिपुनरुक्तिर्नदोषाय । विस्मयेनपुनःपुनर्ददर्शेतिवातात्पर्यं ॥१७—२०॥ **रामानु०** वप्रं चयः । प्राकाराधारवेदिकेतियावत् । ‘ स्याच्चयोवप्रमस्त्रियां ’ इत्यमरः । अट्टालकाःवतंसःकर्णाभरणंयस्यास्सातां । **ति०** विपुलांबुःसमुद्रोवनानिचांबरंवासोयस्यास्तां । **स०** विश्वकर्मणानिर्मितामपिमनसेवकृतां मनोमयसदृशीं ॥२१॥ **ति०** कैलासोनिलयःस्थानंयस्यअलकाद्वारस्यतत्प्रख्यंउत्तरद्वारं । उच्छ्रितैर्भवनोत्तमैःअंबरमालिखन्तमिव । आकाशंध्रियमाणमिवआकाशधारणं कुर्वदिव ॥ **स०** कैलासरूपोयोनिलयःरुद्रभवनंतत्प्रख्यंतत्सदृशं । यद्वाकैलासनिलयोभवस्तत्प्रख्यं हरस्यापिकेवलंशुभ्ररूपत्वात् । एतादृशंद्वारमासाद्येतिपूर्वेणान्वयः । आलिखन्तं आलिखत् । ‘तदशिष्यं’ इतिलिङ्गस्यातन्त्रत्वोक्तेः । **रामानु०** आलिखन्तमिति लिङ्गव्यत्ययः ॥ डीयमानामिवउद्गच्छन्तीमिव । डीयमानत्वादिविशेषणविशिष्टा या तस्यालङ्कायाःमहतींगुप्तिंसागरंचरावणंघोरं

[ पा० ] १ छ. ज. संततैर्विविधैः. २ ज. विहायसिचरद्भिश्च. ३ क.—ट. गिरिसंकाशैः. ४ च. ज. समाकीर्णां. ५ ङ. झ. ञ. ढ. ध्वजशोभितां. घ. ध्वजशालिनीं. ६ ञ. ट. विराजितैः. ७ ङ. झ. ञ. ट. देवोदेवपुरीमिव. ८ क. ग. च. रम्यां. ९ ग. सददर्शकपिःश्रीमान्. क. ख. घ.—ट. ददर्शसकपिःश्रीमान्. १० ङ. ञ. ट. पुरीमाकाशगामिव. ११ घ.—ट. हनुमान्कपिः. १२ घ. विपुलांबुधरांबरां. ङ. झ. ञ. ट. विपुलांबुवनांबरां. १३ ग. मनसैवतदालङ्कां. १४ क. ख. ङ. च. छ. झ. ञ. ट. कैलासनिलयप्रख्यमालिखन्तमिवा. १५ ङ. झ. ट. ध्रियमाणमिवाकाशं. ख. पिबन्तीमिवचाकाशं.

संपूर्णां राक्षसैर्घोरैर्नागैर्भोगवतीमिव ॥ अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥ २४ ॥
दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टिशपाणिभिः ॥ रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥ २५ ॥
तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः ॥ रावणं च रिपुं घोरं चिन्तयामास वानरः ॥ २६ ॥
आगत्यापीह हरयो भविष्यन्ति निरर्थकाः ॥ नहि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥ २७ ॥
इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् ॥ प्राप्यापि स महाबाहुः किं करिष्यति राघवः ॥२८॥
अवकाशो न सान्त्वस्य राक्षसेष्वभिगम्यते ॥ न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥ २९ ॥
चतुर्णामेव हि गतिर्वानराणां महात्मनाम् ॥ वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ ३० ॥
यावज्जानामि वैदेहीं यदि जीवति वा नवा ॥ तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥३१॥
ततः स चिन्तयामास मुहूर्तं कपिकुञ्जरः ॥ गिरिशृङ्गे स्थितस्तस्मिन्रामस्याभ्युदये रतः ॥ ३२ ॥
अनेन रूपेण मया न शक्या रक्षसां पुरी ॥ प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३३ ॥
उग्रौजसो महावीर्या बलवन्तश्च राक्षसाः ॥ वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥ ३४ ॥
लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया ॥ प्रवेष्टुं प्राप्तकालं मे कृत्यं साधयितुं महत् ॥ ३५ ॥
तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः ॥ हनुमांश्चिन्तयामास विनिश्चित्य मुहुर्मुहुः ॥ ३६ ॥
केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ॥ अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ३७ ॥
न विनश्येत्कथं कार्यं रामस्य विदितात्मनः ॥ एकामेकश्च पश्येयं रहिते जनकात्मजाम् ॥ ३८ ॥
भूताश्चार्था विपद्यन्ते देशकालविरोधिताः ॥ विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३९ ॥

च्छानत्र् ॥ २३—३० ॥ एवं विचार्य नायमेतद्विचारकाल इत्यनुशेते—यावदिति ॥ यावत् यदा । जीवति वा न वेति वैदेहीं जानामि । तत्रैव काले तां जनकात्मजां दृष्ट्वा चिन्तयिष्यामि । यद्वा यावच्छब्दोवधारणे । जानाम्येव जीवति वा नवेति जानाम्येव । यदि जीवति तदा तां जनकात्मजां दृष्ट्वा तत्रैव तत्काल एव । चिन्तयिष्यामीत्यन्वयः ॥ ३१ ॥ चिन्तयामास वैदेहीदर्शनोपायमिति शेषः ॥ ३२—३४ ॥ लक्ष्यालक्ष्येति लक्ष्यशरीरत्वे राक्षसा गृह्णीयुः । अलक्ष्यशरीरत्वे सर्वा लङ्का न विचेतुं शक्या । कृत्यं साधयितुं प्रवेष्टुं कृत्यसाधनाय प्रवेष्टुं । प्राप्तकालं युक्तं ॥३५॥ विनिश्चित्य सीतान्वेषणप्रकारं विनिश्चित्य । मुहुर्मुहुस्तमेव चिन्तयामासेत्यर्थः ॥३६—३७॥ एकश्च पश्येयमिति अत्रापि कथमित्यनुषञ्जनीयं । रहिते एकान्ते ॥३८॥ पण्डितेन मुहुर्मुहुर्विचार्य कार्याणि कर्तव्यानि नतु पण्डितमानिना सकृद्विचार्य कर्तव्यानि तथासति

रिपुंचनिरीक्ष्यज्ञात्वावानरश्चिन्तयामासेतिसंबन्धः ॥ २३ ॥ **रामानु०** आगत्यापीति । अत्रापिशब्देनदुस्तरसागरलङ्घनपूर्वकमागमनमेवदुर्घटमितिसूच्यते ॥ २७ ॥ **रामानु०** सःसालगिरिभूविदलनादिषुदृष्टपराक्रमइत्यर्थः ॥ **स०** राघवःकिंकरिष्यतीत्येतल्लङ्काक्षुत्यर्थं । नतुरामस्यासामर्थ्याभिप्रायं । **ति०** अविषमांनविद्यतेविषमायतस्तां ॥२८॥ **रामानु०** सान्त्वस्यावकाशाभाव आसुरप्रकृतित्वात् । दानस्यावकाशाभावोऽर्थोपचितत्वात् । भेदस्यावकाशाभावो बलदर्पितत्वात् । युद्धस्यावकाशाभावो बुद्धिपराक्रमयुक्तत्वात् ॥ २९ ॥ **स०** आगत्यापीति पूर्वमङ्गीकृत्य सर्वेषामागमनमुक्तं । वस्तुतस्तदपि नसंभवतीत्याह—चतुर्णामिति ॥३०॥ **ति०** रामस्याभ्युदयं तदभ्युदयरूपसीतान्वेषणोपायं ॥ ३२ ॥ **रामानु०** विनिश्श्वस्यमुहुर्मुहुरित्यनेन समुद्रलङ्घनादपि लङ्काप्रवेशस्यदुष्करत्वंद्योत्यते ॥ ३६ ॥ **ती०** पृषदंशकमात्रः पृषान्मूषिकान्दशतीतिपृषदंशोमार्जारः । ' ओतुर्बिडालोमार्जारःपृषदंशकआखुभुक् ' इत्यमरः ॥ **शि०** वृषदंशकमात्रःवृषाणांमूषकाणांदंशकोमार्जारःतन्मात्रः । " वृषोगव्याखुधर्मयोः " इतिहैमः

**[ पा० ]** १ ट. राक्षसैर्वीरैः. २ घ. पुष्टां. ३ घ. शूलमुद्गरपाणिभिः. ४ ग. आगताश्चापि. ५ ग. सुरासुरैः. ६ ङ. झ. ञ. ट. इमांत्वविषमां. ७ क. ख. घ.—ट. लंकांदुर्गां. ८ ङ. च. छ. ञ. ट. सुमहाबाहुः. ९ सान्नस्तु. १० क. ग. ष्वधिगम्यते. ११ ङ. ञ. ट. तरस्विनां. १२ ञ. तदैव. १३ ख. ङ. झ. ञ. ट. गिरेःशृङ्गे. १४ च. छ. ज. स्थितःश्रीमान्. १५ ङ. झ. त्रामस्याभ्युदयंततः. १६ ङ.—ट. महौजसो. १७ झ. विनिश्श्वस्य. १८ क. रामस्याक्लिष्टकर्मणः. १९ झ. ञ. मेकस्तु. २० ग. च. ज. ञ. भूतार्थाश्च. २१ ङ. झ. विनश्यन्ति.

अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते ॥ [1]घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥४०॥
न विनश्येत्कथं कार्यं वैक्लब्यं न कथं भवेत् ॥ लङ्घनं च समुद्रस्य कथं नु [2]न वृथा भवेत् ॥ ४१ ॥
मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः ॥ भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥ ४२ ॥
न हि शक्यं क्वचित्स्थातुमविज्ञातेन राक्षसैः ॥ अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४३ ॥
वायुरप्यत्र [3]न ज्ञातश्चरेदिति मतिर्मम ॥ न [4]ह्यस्त्यविदितं किंचिद्राक्षसानां बलीयसाम् ॥ ४४ ॥
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ॥ विनाशमुपयास्यामि भर्तुरर्थश्च [5]हीयते ॥ ४५ ॥
तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः ॥ [6]लङ्कामधिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४६ ॥
रावणस्य पुरीं [7]रात्रौ प्रविश्य सुदुरासदाम् ॥ [8]विचिन्वन्भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४७ ॥
इति [9]संचिन्त्य हनुमान्सूर्यस्यास्तमयं [10]कपिः ॥ आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ ४८ ॥
सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः ॥ वृषदंशक[11]मात्रः सन्बभूवाद्भुतदर्शनः ॥ ४९ ॥
प्रदोषकाले हनुमांस्तूर्ण[12]मुत्प्लुत्य वीर्यवान् ॥ प्रविवेश पुरीं रम्यां [13]सुविभक्तमहापथाम् ॥ ५० ॥
प्रासादमालावितता स्तम्भैः [14]काञ्चनराजतैः ॥ शातकुम्भमयैर्जालैर्गन्धर्वनगरोपमाम् ॥ ५१ ॥
[15]सप्तभूमाष्टभूमैश्च स ददर्श महापुरीम् ॥ [16]तलैः स्फटिकसंकीर्णैः कार्तस्वरवि[17]भूषितैः ॥ ५२ ॥

---

दोषः स्यादित्याह—भूताश्चेति ॥ भूताश्चार्थाः सम्यगुपायप्रयोगान्निष्पन्नप्राया अप्यर्थाः । विक्लवं अधीरं अविमृश्यकारिणं । दूतमासाद्य देशकालविरोधितास्सन्तः । सूर्योदये तमो यथा तम इव तद्दूतस्याविमृश्यकारित्वेन सद्य एव विपद्यन्ते । नश्यन्तीत्यर्थः ॥ ३९ ॥ न केवलं कार्यहानिः किन्तु स्वाम्यादीनां बुद्धिशून्यतापि स्यादित्याह—अर्थेति ॥ अत्रापि विक्लवं दूतमासाद्येत्यनुवर्तते । अर्थानर्थान्तरे अर्थानर्थयोः प्रयोजनसाधनयोः कार्याकार्ययोः । अन्तरे विषये । निश्चिता राज्ञा सचिवैश्च निर्णीता । बुद्धिः । विक्लवं दूतमासाद्य न शोभते अनर्थकारिणी भवतीत्यर्थः । इदमेव समर्थयते—घातयन्तीति ॥ ४० ॥ प्रागुक्तदोषाः स्वस्मिन्कथं न स्युरिति चिन्तयति—न विनश्येदिति ॥ कार्यं रामकार्यं । कथं केनोपायेन न विनश्येत् । किमद्यापराह्ण एव लङ्काप्रवेष्टव्या उत रात्रौ । किमनेनैव महता रूपेण प्रवेष्टव्या उत ह्रस्वेन रूपेणेत्यर्थः । वैक्लब्यं ममापाण्डित्यं कथं न भवेत् ॥ ४१ ॥ अपराह्णे प्रवेशेदोषमाह—मयीति ॥ ४२ ॥ महता रूपेण प्रवेशं निराचष्टे—न हीति ॥ ४३—४४ ॥ स्वेन रूपेण स्वाभाविकमहता रूपेण ॥ ४५ ॥ परिशेषाद्रात्रौ ह्रस्वरूपेणैव प्रवेष्टव्यमित्याह—तदहमिति ॥ ४६—४८ ॥ स्वेन रूपेण वृषदंशकमात्रः बिडालप्रमाणः ॥ ४९ ॥ प्रविवेश प्रवेष्टुमुपक्रान्तः । चतुर्थे सर्गे प्रवेशस्य वक्ष्यमाणत्वात् । लङ्कादर्शनं तु त्रिकूटदर्शनस्थित्या ॥ ५० ॥ काञ्चनराजतैः स्तम्भैः शातकुम्भमयैर्जालैश्च उपलक्षितां । गन्धर्वनगरोपमामिति । गन्धर्वनगरं नाम नानारत्नमयगोपुरप्रासादादियुक्तनगरादिवद्भासमानमभ्रचित्रं तद्वदाश्चर्यावहामित्यर्थः । यथोक्तं "अनेन रत्नाकृति खे विराजते पुरं पताकाध्वजतोरणान्वितम् । यदा तदा हस्तिमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा" इति ॥५१॥ सप्तभूमाष्टभूमैश्चेति । भूमिशब्देनआसनशयनादियो-

॥ ३९ ॥ **रामानु०** अभ्रंलिहत्वातिविचित्रत्वाभ्यांगन्धर्वनगरौपम्यं ॥ स्फटिकसंकीर्णैःकार्तस्वरविभूषितैश्चतलैरुपलक्षितैः सप्तभौमाष्टभौमाः भूमिषुभवन्तीतिभौमानिस्थलानि । सप्त भौमानियेषांतेसप्तभौमाः । एवमष्टभौमाः । सप्तभौमाश्चाष्टभौमाश्चतैः प्रासादैरितिशेषः । तैरुपलक्षितांपुरींददर्शेतियोजना ॥ ५१—५२ ॥

**[ पा० ]** १ घ. ङ. झ. ट. घातयन्तीह. २ ख. घ. ङ. झ. ञ. ट. नभवेद्वृथा. ३ ग. ङ. च. छ. झ. ञ. नाज्ञातः. ४ ङ. झ. ट. ह्यत्राविदितं. ५ झ. ञ. ट. हास्यति. ६ क. ख. ग. ङ. च. ज. झ. ट. लङ्कामभि. ७ च. छ. ज. ञ. रम्यां. ८ ङ.—ट. प्रविश्यभवनं. ९ ङ. च. झ. ञ. ट. निश्चित्य. १० क. च. छ. ज. हरिः. ११ क. ङ. झ. ञ. ट. मात्रोथ. १२ क. घ. च.—ट. मुत्पत्य. १३ ङ. च. छ. ञ. ट. प्रविभक्त. १४ ङ. झ. ञ. ट. काञ्चनसंनिभैः. १५ झ. सप्तभौमाष्टभौमैश्च. १६ ङ.—ट. स्थलैः. १७ च. छ. ज. ञ. परिष्कृतैः.

वैडूर्यमणिचित्रैश्च मुक्ताजालविभूषितैः ॥ तलैः शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥ ५३ ॥
काश्चनानि विचित्राणि तोरणानि च रक्षसाम् ॥ लङ्कामुद्द्योतयामासुः सर्वतः समलङ्कृताम् ॥ ५४ ॥
अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः ॥ आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५५ ॥
स पाण्डुरोद्विद्धविमानमालिनीं महार्हजाम्बूनदजालतोरणाम् ॥
यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैः समावृताम् ॥ ५६ ॥
चन्द्रोपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ॥
जोत्स्नावितानेन वितत्य लोकमुत्तिष्ठते नैकसहस्ररश्मिः ॥ ५७ ॥
शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ॥
ददर्श चन्द्रं स हरिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ ५८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ॥ ३ ॥

लङ्काभिमानिन्यामहाराक्षस्या निशि लङ्कांप्रविशतोहनुमतः प्रत्यक्षीभूय साधिक्षेपंप्रतिषेधनपूर्वकं स्वपाणितलेन ताडनं ॥ १ ॥ ततोहनुमता नारीतिकरुणया वाममुष्टिनामन्दंताडने पतितविह्वलयातया तंप्रति कपिना स्वपराजयेसति लङ्का-विनाशप्रतिपादकब्रह्मवचननिवेदनेन नगरान्तःप्रवेशाभ्यनुज्ञानं ॥ २ ॥

स लम्बशिखरे लम्बे लम्बतोयदसन्निभे ॥ सत्त्वमास्थाय मेधावी हनुमान्मारुतात्मजः ॥ १ ॥

---

ग्यं तलमुच्यते । सप्त भूमयो येषां ते सप्तभूमाः । "कृष्णोकपाण्डुसंख्यापूर्वाया भूमेरजिष्यते" इत्यच् समासान्तः । एवमष्टभूमाः । सप्तभूमादिशब्देन तादृशाः प्रासादविशेषा उच्यन्ते । यद्वा प्रासादैरिति शेषः । तैरुपलक्षितां ॥ ५२—५४ ॥ विषण्णः हृष्टश्चेति । अचिन्त्या दुष्प्रवेशेति च विषण्णः । यतोद्भुताकारा अतो विस्मयनीयतया हृष्टः ॥ ५५ ॥ स इति पूर्वश्लोकेनायमेकान्वयः । सुधाधवलनिम्नोन्नतविमानाकारभवनमालिनीमित्यर्थः ॥ ५६ ॥ इदानीं चन्द्रोदयकाल इत्याह—चन्द्रोपीति ॥ मध्यगतः सन्निधानात्तारागणमध्यगतः । तारागणैरिति सहयोगे तृतीया । ज्योत्स्नावितानेन लोकं वितत्य व्याप्य । उत्तिष्ठते आविर्भवति स्म । "उदोनूर्ध्वकर्मणि" इत्यात्मनेपदं ॥ ५७—५८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

---

लम्बे लम्बाख्ये । लम्बशिखरे लम्बगिरिशिखरे इति

---

**रामानु॰** सपाण्डुरेत्यस्यदृष्ट्वेति पूर्वेणसंबन्धः । पाण्डुरोद्विद्धविमानमालिनीं सुधाधौतोन्नतसप्तभूमगृहमालिनीं । "विमानोस्त्रीदेवयानेसप्तभूमेचसद्मनि" इतिवैजयन्ती ॥ ५६ ॥ **ति॰** मध्यगतःखमध्यगतः । अनेकसहस्रेत्यनेनपूर्णत्वं । अनेकेत्यस्यैवसहस्रेत्यनेनविवरणं । उत्तिष्ठते आर्षस्तङ् । ज्योत्स्नावितानेनलोकान्वितत्यआवार्यसम्यगवलोकनसाधनतयाअस्यहनूमतःसाचिव्यंसाहाय्यंकुर्वन्निव ॥ **ति॰** ननुखमध्यगतस्यप्रदोषेउदयोष्टम्यांनतदापूर्णत्वं । पूर्णस्यतुनखमध्यगतस्योदयइतिचेन्न । शुक्लैकादश्यांखमध्यसमीपगतत्वेनमध्यगतत्वोपचारात् । पूर्णत्वंचपूर्णकल्पत्वेनव्यवहृतं । यद्वानेकन्यूनाः सहस्रंरश्मयोयस्येतिमध्यमपदलोपितत्पुरुषगर्भोबहुव्रीहिः । अतएवरात्रिशेषेहनूमत्यशोकवनिकास्थेसीतासविधेरावणस्यागमनकालेदीपिकावर्णनंकृतं । तेनहितदाचन्द्रास्तानुमानं । साचेयंमार्गशीर्षस्य । फाल्गुनेलङ्कांप्रविष्टायाःसीतायाः "वर्ततेदशमोमासोद्वौतुशेषौप्लवङ्गम" इतिहनूमन्तंप्रतिवचनात् । हरणदिनएवचसीतायालङ्काप्रवेशनंरामभयादितिस्पष्टमेव । **रामानु॰** सागरमैनाकदिवाकरादिवच्चन्द्रोपिसाचिव्यंकुर्वन्प्रादुरभूदित्यपिशब्देनावगम्यते ॥ ५७ ॥ इतिद्वितीयःसर्गः ॥ २ ॥

**रामानु॰** पूर्वसर्गोक्तलङ्काप्रवेशोपक्रमंविस्तरेणाह । सलंबशिखरइत्यादिना । सः सागराक्रेशतरणेनप्रसिद्धः । महासत्वःसमुद्र-

**[ पा॰ ]** १ ङ. झ. ट. तैस्तैःशुशुभिरे. २ घ. भवनान्यपि. ३ ङ. छ. ज. झ. ट. पाण्डराविद्ध. ४ झ. ट. सुपालितां. क. दुरासदां. ५ ङ.—ट. लोकानुत्तिष्ठते. ६ क.—ट. कपिप्रवीरः.

निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ॥ रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २ ॥
शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम् ॥ सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३ ॥
[1]सुपुष्टबलसंघुष्टां यथैव विटपावतीम् ॥ चारुतोरणनिर्यूहां [2]पाण्डुरद्वारतोरणाम् ॥ ४ ॥
भुजगाचरितां गुप्तां [3]शुभां भोगवतीमिव ॥ तां सविद्युद्घनाकीर्णां [4]ज्योतिर्मार्गनिषेविताम् ॥ ५ ॥
[5]मन्दमारुतसंचारां [6]यथेन्द्रस्यामरावतीम् ॥ शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥ ६ ॥
किङ्किणीजालघोषाभिः पताकाभिरलङ्कृताम् ॥ आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥ ७ ॥
विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः ॥ ८ ॥
जाम्बूनदमयैर्द्वारैर्वैडूर्य[7]कृतवेदिकैः ॥ [8]वज्रस्फटिकमुक्ताभिर्[9]मणिकुट्टिमभूषितैः ॥
तप्तहाटकनिर्यूहै राजतामलपाण्डुरैः ॥ ९ ॥
वैडूर्यकृतसोपानैः स्फाटिकान्तरपांसुभिः ॥ चारुसंजवनोपेतैः खमिवोत्पतितैः शुभैः ॥ १० ॥
क्रौञ्चबर्हिणसंघुष्टै राजहंसनिषेवितैः ॥ तूर्याभरणनिर्घोषैः सर्वतः [10]प्रतिनादिताम् ॥ ११ ॥
वस्वोकसाराप्रतिमां [11]तां वीक्ष्य नगरीं ततः ॥ [12]खमिवोत्पतितुं कामां जहर्ष हनुमान्कपिः ॥ १२ ॥
तां समीक्ष्य पुरीं [13]रम्यां राक्षसाधिपतेः शुभाम् ॥ अनुत्तमा[14]मृद्धियुतां चिन्तयामास [15]वीर्यवान् ॥१३॥
नेयमन्येन नगरी शक्या धर्षयितुं बलात् ॥ रक्षिता रावणबलैरुद्यतायुध[16]धारिभिः ॥ १४ ॥
कुमुदाङ्गदयोर्वापि सुषेणस्य [17]महाकपेः ॥ प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५ ॥

---

चाहुः । यद्वा लम्बे लम्बमान इव स्थिते । लम्बशिखरे त्रिकूटशिखरे । सत्त्वं व्यवसायं । धैर्यमिति यावत् । विवेश प्राप ॥ १—३ ॥ विटपावतीं अलकां । निर्यूहो मत्तवारणः । पाण्डुरद्वारतोरणां पाण्डुरे द्वारतोरणे यस्यास्तां ॥४—७॥ विस्मयाविष्टहृदयः । अभूदिति शेषः ॥ ८ ॥ पुनर्हर्षहेतूनाह—जाम्बूनदमयैरित्यादिना ॥ जाम्बूनदमयैर्द्वारैरित्यादौ सहयोगे तृतीया । वज्रस्फटिकमुक्ताभिरित्यत्रापि कृतवेदिकैरिति संबध्यते । राजतामलपाण्डुरैः अवयवैः ॥९॥ स्फाटिकान्तरपांसुभिः स्फटिकमयाङ्गणपांसुभिः । संजवनं चतुश्शालं ॥ १०—११ ॥ वस्वोकसारा अलका । यद्वा वस्वोकसारा पूर्वदिगवस्थिताशक्रपुरी । "वस्वोकसारा शक्रस्य पूर्वस्यां दिशि वै पुरी" इतिपुराणवचनात् ॥ १२—१४ ॥ प्रसिद्धेयमिति । इयं लङ्का विदिता

---

लङ्घनादावप्रतिहतशक्तिः । हनुमान्लंबेलंबमानाकारे । लंबतोयदसंनिभेलंबशिखरे लंबपर्वतशिखरे । मेधावीतत्कालोचितकर्तव्यविषयप्रज्ञायुक्तःसन् । सत्वमास्थाय लङ्काप्राप्तिमात्रोपयुक्तलङ्घनशक्तिमास्थायनिशिविवेशेतिसंबन्धः ॥ **ति०** लंबशिखरेउन्नतशिखरेलंबेलंबाख्यपर्वते ॥ १—२ ॥ **रामानु०** सागरोपमनिर्घोषांसागरनिर्घोषोपमनिर्घोषां । विटपावतींअलकां । 'क्षयःपुण्यजनानांस्यादलकाविटपावती' इतिवचनात् । तोरणस्यनिर्यूहःतोरणनिर्यूहः । चारुःतोरणनिर्यूहोयस्यास्तां । प्राकारशब्देनप्राकारसमीपोलक्ष्यते । 'अद्वारेणमहाबाहुःप्राकारमभिपुप्लुवे' इत्युपरिवक्ष्यमाणत्वात् ॥ २—८ ॥ **ति०** चण्डमारुतानांपरिवहादिनांशब्दोयस्यांतादृशींअमरावतीमिवस्थितां । अत्रामराःसन्त्यस्यामित्यमरावतीद्यौः । असंज्ञायामपि 'मतौबह्वचः' इत्यार्षोदीर्घः नत्विहेन्द्रपुर्यमरावती । उक्तलक्षणाभावात् । लङ्कायाउक्तसादृश्यंचसालङ्काररा क्षसवत्त्वाद्बलवद्घोषबाहुल्याच्चेतिकतकः ॥ **शि०** अमरावतींयथा संपत्त्याइन्द्रपुरीसदृशीं ॥ ६ ॥ **शि०** अन्येन रामभिन्नेनजनेन । बलात्पराक्रमात्धर्षयितुंनशक्या ॥ १४ ॥ **रामानु०** प्रसिद्धा दुष्प्रवेशत्वेनप्रसिद्धाइयंनगरीकुमुदाङ्गदयोःमहाकपेःसुषेणस्यापिमैन्दद्विविदयोरपिभूमिःविषयोभवेत् । **ति०**

[ **पा०** ] १ च. छ. ज. पाठेषु. सुपुष्टबलसंघुष्टामित्यर्धस्यस्थाने. सुपुष्टबलसंघुष्टांगुप्तांरक्षोगणैर्भृशं । वस्वोकसारप्रतिमांयथैव विटपावतीं । इत्येकःश्लोकोदृश्यते. ङ. झ. सुपुष्टबलसंपुष्टां. ग. सुदुर्गांराक्षसैर्गुप्तां. क. सुपुष्पफलसंयुक्तां. २ ञ. पाण्डुरध्वजतोरणां. ३ च. छ. ञ. गुहां. ४ ग. ङ.—ट. ज्योतिर्गण. ५ ख. ग. ङ.—ट. चण्डमारुतनिर्ह्रादां. ६ क. ङ. झ. ञ. ट. यथाचाप्यमरावतीं. ग. च. छ. ज. यथावदमरावतीं. ७ ञ. कृततोरणैः. ८ ख. ङ. झ. ञ. ट. मणिस्फटिक. ९ क. च. छ. ज. कुट्टिमवेदिकैः. १० ङ. झ. ट. परिनादितां. ११ क. ग.—ट. समीक्ष्य. १२ क. ख. ङ. छ. ट. खमिवोत्पतितांलङ्कां. १३ क. ख. ङ. झ. ञ. ट. लङ्कां. १४ क. ङ. झ. ञ. ट. मृद्धिमतीं. च. छ. ज. मृद्धियुक्तां. १५ क. वानरः. १६ ङ. झ. ट. पाणिभिः. १७ क. ख. महात्मनः.

विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः ॥ ऋक्षस्य केतुमा[1]लस्य मम चैव गतिर्भवेत् ॥ १६ ॥
स[2]मीक्ष्य तु म[3]हाबाहू राघवस्य पराक्रमम् ॥ ल[4]क्ष्मणस्य च विक्रान्तमभवत्प्रीतिमान्कपिः ॥ १७ ॥
तां रत्नवसनोपेतां गोष्ठागारा[5]वतंसकाम् ॥ यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥ १८ ॥
तां नष्टतिमिरां [6]दीप्तैर्भास्वरैश्च म[7]हागृहैः ॥ नगरीं राक्षसेन्द्रस्य द[8]दर्श स महाकपिः ॥ १९ ॥
अथ सा हरिशार्दूलं प्रविशन्तं म[9]हाबलम् ॥ नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २० ॥
सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता ॥ स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ २१ ॥
पु[10]रस्तात्कपिवर्यस्य वायुसूनोरतिष्ठत ॥ मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥ २२ ॥
कस्त्वं केन च कार्येण इह प्राप्तो वनालय ॥ कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३ ॥
[11]न शक्यं खल्वियं लङ्का प्रवेष्टुं वानर त्वया ॥ रक्षिता रावणबलैरभिगुप्ता समन्ततः ॥ २४ ॥
अथ तामब्रवीद्वीरो हनुमानग्रतः स्थिताम् ॥ कथयिष्यामि ते[12] तत्त्वं यन्मां त्वं परिपृच्छसि ॥ २५ ॥
का त्वं विरूपनयना पुरद्वा[13]रेऽवतिष्ठसि ॥ किमर्थं चापि मां रु[14]द्ध्वा निर्भर्त्सयसि दा[15]रुणा ॥ २६ ॥
हनुमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ॥ उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७ ॥
अहं राक्षसराजस्य रावणस्य महात्मनः ॥ आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८ ॥
न श[16]क्या मामवज्ञाय प्रवेष्टुं न[17]गरी त्वया ॥ अद्य प्रा[18]णैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९ ॥

भवेत् ॥ १५ ॥ गतिस्तु सुग्रीवस्य कुशपर्वणः केतुमालस्य मम चैव भवेत् । पूर्वं नीलादीनामेव गतिरुक्ता । अत्र त्वन्येषामित्युक्तिश्चिन्ताप्रकारविशेषः ॥ १६—१७ ॥ तां रत्नेत्यत्र ददर्शेत्यपकृष्यते । नत्वेकं वाक्यं श्लोकद्वयं तच्छब्दद्वयप्रयोगात्प्रथमे श्लोके स्त्रीसाम्योक्तेश्च ॥ १८—२३ ॥ अभिगुप्ता समावृतेत्यर्थः ।

प्रसिद्धाप्रकर्षेप्र सिद्धगतिका ॥ १५ ॥ **रामानु०** अत्रइयमित्यनुषज्यते । गतिः विषयः भवेत् । ममचे-...पिपश्चान्निर्देशेनसर्वोत्तरेणापिहनुमतास्वस्यनैच्यमनुसंहितमित्यवगम्यते ॥ **ति०** कुशपर्वणइति । कुशपर्वसदृशलोमवतइत्यर्थकमृक्ष...यविशेषणं । अतिदीर्घकठोरलोमावृतत्वात्कपिमुख्यस्येतिविशेषणंच । तस्यैवममचैवगतिः अस्यामितिशेषः ॥ १६ ॥ **रामानु०** विक्रा...न्तंविक्रमं । भावेनिष्ठा । प्रीतिमानभवत् । रामलक्ष्मणाभ्यामनायासेनजेतुंशक्येतिमत्वाप्रीतिमानभूदित्यर्थः ॥ **स०** सर्वेषामेषां विन...रामावलंबेनेयंजेतुंनशक्येत्येतत्प्रसंगात्स्मारितंरामलक्ष्मणयोर्विक्रमंस्मृत्वातुतोषेत्याह—समीक्ष्येति ॥ १७ ॥ **रामानु०** तामिति...। अत्रददर्शेत्यपकृष्यते । यद्वाएकस्यतच्छब्दस्यप्रसिद्धिपरत्वेनश्लोकद्वयमेकंवाक्यं ॥ **ति०** रत्नवसनोपेतां रत्नप्राकारवाससंच । गो...ष्ठान्यगाराणिचावतंसोयस्यास्तां । गोष्ठंगोशाला । इदंवाजिशालादेरप्युपलक्षणं । यन्त्राणिप्राकारोपरिस्थापितानिक्षेपण्यादीनि । त...द्धहस्तनीं ॥ १८ ॥ **ति०** तांप्रसिद्धांलङ्कांभास्वरैश्चमहाग्रहैः । चाचन्द्रकिरणैः ॥ १९ ॥ **रामानु०** स्वेनरूपेणअधिदेवतारूपेण ॥...२० ॥ **रामानु०** अतिष्ठततस्मैस्वात्मानंप्रदर्शितवती । ‘ प्रकाशनस्थेयाख्ययोश्च ’ इत्यात्मनेपदं ॥ २२ ॥ **रामानु०** ...तवप्राणाःयावद्धरन्तिध्रियन्तेतावत्यत्तत्वं तत्कथयस्वकथय । “धृङ्अवसाने” विकरणादिप्रत्ययआर्षः । यावत्प्राणान्हरामिते इ...तिवापाठः ॥ २३ ॥ **रामानु०** नशक्यमिति । लिङ्गसामान्येनपुंसकं । तथाचोक्तं भगवताभाष्यकारेण—‘ श्वमांसेनापिशक्यं-क्षुत्...प्रतिपहन्तुंइति । रावणबलैःसमन्ततःअभिगुप्तासमन्ततःसंवृता । अतएवरक्षिता ॥ **शि०** किंच अभितःचतुर्दिक्षुगुप्ताः राक्षसविजा...तीयनिरीक्षणार्थमलक्ष्यरूपेणस्थितताराक्षसायस्यास्सा ॥ **स०** त्वांहत्वाऽन्तर्गच्छेयमित्याशापितवमास्त्वितिवाह—अभिगुप्तेति । अह...अन्ततःमृत्योस्सकाशादभिगुप्ताआसंअस्मि । अतोनत्वयावध्या ॥ २४ ॥ **ति०** अथतयापृष्टोहनुमांस्तांप्रतितत्प्रश्नोत्तरकथनं प्रति...ज्ञायसुरसावदेषापूज्यावासिंहिकावद्वध्यावेतिनिर्णेतुंपृच्छति—कात्वमिति ॥ २६ ॥ **रामानु०** आज्ञाप्रतीक्षा आज्ञानुवर्तिनी

[ **पा०** ] १ ङ. झ. ञ. ट. कपिमुख्यस्य. २ ङ.—ज. ञ. ट. समीक्ष्यच. ३ ङ. झ. ञ. ट. महाबाहोः. ४ च. छ. ज. लक्ष्मणस्यापि. ५ ङ. झ. ञ. ट. रावतंसिकां. ६ ख. ङ. झ. ञ. ट. दीप्तैः. च. छ. ज. दीप्तांभास्वरैः. क. दीप्तैर्भास्वरैर्भवनैः शुभैः. ७ झ. महाग्रहैः. ८ ङ.—ञ. सददर्श. क. घ. ददर्शहनुमान्कपिः. ९ ङ. झ. ञ. ट. महाकपिं. १० क.—ट. पुरस्तात्तस्यवीरस्य. ११ क.—ङ. नशक्या. ञ. अशक्यं. १२ ङ. ञ. ट. यत्तत्वं. क. तत्त्वेन. झ. तत्तत्वं. १३ क.—ट. द्वारेऽवतिष्ठसे. १४ क. ख. च. छ. ज. क्रुद्धा. ङ. ञ. ट. क्रोधान्निर्भर्त्सयसि. १५ क. ङ.—ट. दारुणे. १६ क. ग. ङ.—ञ. शक्यं. १७ ङ. ञ. ट. नगरीमिमां. क. वानरत्वया. १८ च. छ. ज. प्राणान्परित्यज्य.

अहं हि नगरी[1] लङ्का स्वयमेव प्लवंगम ॥ सर्वतः परिरक्षामि ह्येतत्ते[2] कथितं मया ॥ ३० ॥
लङ्काया वचनं श्रुत्वा हनुमान्मारुतात्मजः[3] ॥ यत्नवान्स[4] हरिश्रेष्ठः स्थितः[5] शैल इवापरः ॥ ३१ ॥
स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुङ्गवः ॥ आबभाषेऽथ मेधावी सत्त्ववान्[6]प्लवगर्षभः ॥ ३२ ॥
द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् ॥ [निर्विशङ्कमिमं[7] लोकं पश्यन्त्यास्तव सांप्रतम्] ॥
इत्यर्थमिह[8] संप्राप्तः परं कौतूहलं हि मे ॥ ३३ ॥
वनान्युपवनानीह लङ्कायाः काननानि च ॥ सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ ३४ ॥
तस्य तद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ॥ भूय[9] एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ ३५ ॥
मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् ॥ न शक्यमद्य[10] ते द्रष्टुं पुरीयं वानराधम ॥ ३६ ॥
ततः स कपिशार्दूलस्[11]तामुवाच निशाचरीम् ॥ दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७ ॥
ततः कृत्वा महानादं सा वै लङ्का भयावहम्[12] ॥ तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८ ॥
ततः स कपिशार्दूलो[13] लङ्कया ताडितो भृशम् ॥ ननाद सुमहानादं वीर्यवान्पवनात्मजः[14] ॥ ३९ ॥
ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः ॥ मुष्टिनाऽभिजघानैनां हनुमान्क्रोधमूर्च्छितः ॥ ४० ॥
स्त्री चेति मन्यमानेन नातिक्रोधस्स्वयं कृतः ॥ ४१ ॥
सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥ पपात सहसा भूमौ विकृताननदर्शना ॥ ४२ ॥
ततस्तु हनुमान्प्राज्ञस्तां[15] दृष्ट्वा विनिपातिताम् ॥ कृपां चकार तेजस्वी मन्यमानः स्त्रियं[16] तु ताम् ॥ ४३ ॥
ततो वै भृशसंविग्ना[17] लङ्का सा गद्गदाक्षरम् ॥ उवाच गर्वितं वाक्यं हनुमन्तं प्लवङ्गमम् ॥ ४४ ॥
प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ॥ समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः ॥ ४५ ॥
अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम ॥ निर्जिताऽहं त्वया वीर विक्रमेण महाबल ॥ ४६ ॥
इदं[18] तु तथ्यं[19] शृणु[20] वै ब्रुवन्त्या मे हरीश्वर ॥ स्वयंभुवा[21] पुरा दत्तं वरदानं यथा मम ॥ ४७ ॥

---

अतो न रक्षितेत्यनेन पुनरुक्तिः ॥ २४—३३ ॥ उपवनानि गृहोद्यानानि । काननानि शून्यारण्यानि ॥ ३४ ॥ भूयः अतिशयेन । परुषाक्षरमित्यन्वयः ॥ ३५ ॥ शक्यमित्येतदव्ययं । तदाह कालिदासः— " शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् । अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः " इति । पुरीरूपं वस्तु शक्यमिति शक्यपुर्योस्सामानाधिकरण्यं वा ॥ ३६ ॥ यास्ये यास्यामि । इत्युवाचेति संबन्धः ॥ ३७ ॥ वेगिता संजातवेगा ॥ ३८—३९ ॥ संवर्तयामास संकोचयामास ॥ ४०—४४ ॥ समये स्त्रीवधवर्जनव्यवस्थायां । सत्त्ववन्तः धैर्यवन्तः ॥ ४५ ॥ अहं त्वित्यर्धं भिन्नं वाक्यं । एकवाक्यत्वे

---

॥ २८ ॥ **रामानु०** स्वयमेवसर्वतःसर्वंपरिरक्षामीतिसंबन्धः ॥ ३० ॥ **रामानु०** इत्यर्थंएतदर्थं ॥ ३३ ॥ **स०** वानराधमेति संबोधितेनापि भद्रेइतिसंबोधनं समर्थेनसता कार्यतएवप्रतीकारःकार्यो नवाचेतिदर्शयितुं ॥ ३७ ॥ **स०** क्रोधःमूर्च्छितः मध्यमावस्थांप्राप्तोयस्मिन् । अनुद्रिक्तइतियावत् । एवंचेदेवपूर्वोत्तरग्रन्थस्वारस्यंभवति ॥ ४० ॥ **स०** कृपांचकार पुनर्नतताड ॥ ४४ ॥ **स०** सत्ववन्तः निश्चयवन्तः । ' सत्वमात्मत्वेव्यवसायेच ' इतिविश्वः ॥ ४५ ॥

**[ पा० ]** १ ङ. नगरींलङ्कां. २ ङ. छ.—ट. अतस्ते. ३ च. छ. ज. हनुमान्पवनात्मजः. घ. हनुमान्कपिकुञ्जरः. ४ घ. वीर्यवान्स. ५ घ. स्थितोगिरिरिवा. ६ घ. वीर्यवान्. ७ इदमर्धं. क. ग. च. छ. ज. ञ. पाठेषुदृश्यते. क. निर्विशङ्कमिमांलङ्कां. ८ ग. एतदर्थं. ९ क. भृशमेवपुनः. ख. ग. भूयएवहिसावाक्यं. १० ङ. ञ. ट. शक्याद्यद्य. ११ ङ.—ट. हरिशार्दूलः. १२ झ. ञ. ट. भयंकरं. क. च. छ. ज. भयानकं. १३ च.—ट. हरिशार्दूलो. १४ ङ. झ. ञ. ट. वीर्यवान्मारुतात्मजः. च. छ. ज. वीर्यवान्प्लवगर्षभः. १५ ङ. झ. ञ. न्वीरस्तां. १६ ख. च. ज.—ट. स्त्रियंच. ङ. स्त्रियंकपिः. ग. स्त्रियंत्विमां. १७ ग.—ट. भृशमुद्विग्ना. १८ ग. ङ. छ.—ट. इदंच. १९ ख. सत्यं. २० ग. ङ. छ. झ. ञ. ट. शृणुमेब्रुवन्त्यावै. २१ क. ग.—च. झ. ञ. ट. स्वयंस्वयंभुवादत्तं.

यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् ॥ तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ॥ ४८ ॥
स हि मे समयस्सौम्य प्राप्तोऽद्य तव दर्शनात् ॥ स्वयंभूविहितस्सत्यो न तस्यास्ति व्यतिक्रमः ॥ ४९ ॥
सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः ॥ राक्षसां चैव सर्वेषां विनाशः समुपागतः ॥ ५० ॥
तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् ॥ विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि ॥ ५१ ॥
प्रविश्य शापोपहतां हरीश्वरः [1]शुभां पुरीं [2]राक्षसमुख्यपालिताम् ॥
यदृच्छया [3]त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः ॥ ४ ॥

वामपादनिक्षेपपूर्वकमद्वारेणलङ्कांप्रविष्टवताहनुमता नगरान्तर्नानागीतवादित्रश्रवणेनसह विचित्रतरगृहाणां नानाविधायुधाकारधारिरावणमूलबलादीनांचावलोकनं ॥ १ ॥

स निर्जित्य पुरीं [4]श्रेष्ठां लङ्कां तां कामरूपिणीम् ॥ विक्रमेण महातेजा हनुमान्[5]कपिसत्तमः ॥
अद्वारेण [6]महाबाहुः [7]प्राकारमभिपुप्लुवे ॥ १ ॥
[8][ निशि लङ्कां महासत्वो विवेश कपिकुञ्जरः ] ॥ प्रविश्य नगरीं लङ्कां कपिराजहितंकरः ॥
[9]चक्रेऽथ पादं सव्यं च [10]शत्रूणां स तु मूर्धनि ॥ २ ॥
प्रविष्टः सत्वसंपन्नो निशायां मारुतात्मजः ॥ स महापथमास्थाय [11]मुक्तापुष्पविराजितम् ॥ ३ ॥

---

दृढशब्दस्य पुनरुक्तिः ॥ ४६–४७ ॥ वरदानस्वरूपमाह —यदेति ॥ अत्र रावणस्य दिग्विजये नन्दिकेश्वरादिभिर्लङ्कायाः सद्यो विनाशशापे दत्ते सा ब्रह्माणं [illegible]त्वा प्रार्थयामास । विनाशो मे माभूदिति । स च [illegible]थ्यै वरमदात् । तव सद्यो विनाशो न भविष्यति । यदा तु वानरस्त्वामभिभविष्यति तदा तु विनाशो भविष्यतीति कथोन्नीयते ॥४८—५१॥ शापो नन्दिके[illegible]रादिकृतः । यदृच्छयेत्यस्य गत इति संबन्धः । यदृच्छयाऽत्र प्राप्तस्त्वमित्यर्थः ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने तृतीयः सर्गः ॥३॥

---

अद्वारेणेत्यनेन लङ्कापरिभवो राक्षसैर्न ज्ञातुं शक्य इति द्योत्यते ॥ १ ॥ चक्र इति । शत्रुदेशप्रवेशे प्रथमं सव्यपादः कार्यः स तु शत्रोर्मूर्ध्नि कृतो भवेदिति राजशास्त्रं । अनेन प्रथमं सव्यं पादं लङ्कायां कृतवानित्यर्थः सिद्धः । तदाह बृहस्पतिः “ प्रयाणकाले च गृहप्रवेशे विवाहकालेपि च दक्षिणाङ्घ्रिम् । कृत्वाग्रतः

---

[illegible]ती० रावणाधिक्षेपप्रक्षुभितनन्दिकेश्वरशापात्सद्यःप्राप्तोपिविनाशः स्वयंभूवरप्रसादाद्वानरास्कन्दनपर्यन्तं प्रतिबद्धइति कथात्रानुसंधेया ॥ ४९ ॥ ति० शापोपहतां सत्यसंकल्पभगवद्वचनेन नन्दिकेश्वरशापेनचप्रापितनाशकालां हरीश्वरस्त्वंप्रविश्ययदृच्छया सर्वत्ररावणान्तःपुरपर्यन्तं यथासुखंगतःसन् सतीं अप्रच्युतपातिव्रत्यांजानकींविमार्ग अन्वेषय । अनेनचवचनेन सीताऽकल्मषा[illegible]त्रपुरेवर्ततइत्युपदिष्टम् ॥ ५२ ॥ इतितृतीयः सर्गः ॥ ३ ॥

रामानु० “ग्रामंवानगरंवापिपत्तनंवापरस्यहि । विशेषात्समयेसौम्यनद्वारेणविशेन्नृपः” इत्युक्तप्रकारेणअद्वारेणप्रविष्टवान् ॥१॥ [illegible]स० कपिराजहितंकरः कपीश्वरसुग्रीवायहितकारीत्यर्थः । हितशब्दोपपदात्करोतेः खश्विधायकाभावेपिप्रामाणिकप्रयोगानुसारेणतस्योह्यत्वात् । अतएवकाशिकायां भगंदरइतिरूपसिद्धये ‘भगेचदारेः’ इत्युक्तं ॥२॥ रामानु० महापथं आस्थाय गम्यत्वेना-

[ पा० ] १ क.—ट. पुरींशुभां. २ च. छ. ज. राक्षसराज. ३ क. ग. तां. ४ घ. ङ. झ. ञ. ट. लङ्कांश्रेष्ठां. ५ छ.—ट. न्कपिकुञ्जरः. क. न्मारुतात्मजः. ६ झ. ञ. ट. महावीर्यः. ङ. महाकायः. ७ ञ. प्राकारंचसपुप्लुवे. ग. ङ.—झ. ट. प्राकारमवपुप्लुवे. ८ ङ.—ट. पाठेष्विदमर्धंदृश्यते. ९ छ. ज. चक्रेच. १० क. शत्रूणामपि. ११ क. घ. ङ. झ. ञ. ट. मुक्तपुष्प.

[ [1]सेवितां राक्षसैर्भीमैर्बलिभिः शस्त्रपाणिभिः ] ॥ ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः॥४॥
हसितोत्कृष्टनिनदैस्तूर्यघोष[2]पुरस्सरैः ॥ वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः ॥
[3]गृहमेधैः पुरी रम्या बभासे द्यौरिवाम्बुदैः ॥ ५ ॥
प्रजज्वाल [4]तदा लङ्का रक्षोगणगृहैः शुभैः ॥ ६ ॥
सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ॥ वर्धमानगृहैश्चापि सर्वतः [5]सुविभूषिता ॥
गृहमुख्यैः पुरी [6]रम्या बभासे द्यौरिवाम्बुदैः ॥ ७ ॥
तां चित्रमाल्याभरणां कपिराजहितंकरः ॥ [7]राघवार्थं चरञ्श्रीमान्ददर्श च ननन्द च ॥ ८ ॥
भवनाद्भवनं गच्छन्ददर्श पवनात्मजः ॥ विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ९ ॥
शुश्राव [8]मधुरं गीतं त्रिस्थानस्वरभूषितम् ॥ स्त्रीणां [9]मदसमृद्धानां दिवि चाप्सरसामिव ॥ १० ॥
शुश्राव काञ्चीनिनदं नूपुराणां च निस्वनम् ॥ सोपाननिनदांश्चैव भवनेषु महात्मनाम् ॥
आस्फोटितनिनादांश्च क्ष्वेलितांश्च ततस्ततः ॥ ११ ॥
शुश्राव जपतां तत्र मन्त्रान्रक्षोगृहेषु वै ॥ १२ ॥
स्वाध्यायनिरतांश्चैव यातुधानान्ददर्श सः ॥ रावणस्तवसंयुक्तान्गर्जतो राक्षसानपि ॥ १३ ॥
राजमार्गं समावृत्य स्थितं [10]रक्षोबलं महत् ॥ ददर्श मध्यमे गुल्मे [11]रावणस्य चरान्बहून् ॥ १४ ॥
दीक्षिताञ्जटिलान्मुण्डान्गोजि[12]नाम्बरधारिणः ॥ दर्भमुष्टिप्रहरणानग्निकुण्डायुधां[13]स्तथा ॥ १५ ॥

शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालः " इति ॥ २—४ ॥ तूर्यघोषपुरस्सरैः हसितोत्कृष्टनिनदैः हसितानामुत्कृष्टस्वरैः युक्तेत्यर्थः । वज्राङ्कुशनिकाशैः वज्रमङ्कुशो यस्य सः वज्राङ्कुशः ऐरावतः तत्तुल्यैः तद्वच्छुभ्रैरित्यर्थः । वज्राङ्कुशतुल्यसंस्थानैर्वा । वज्रजालविभूषितैः वज्रो रत्नविशेषः । गृहमेधैः गृहश्रेष्ठैः । " उपमितं व्याघ्रादिभिः—" इत्युपमितसमासः ॥ ५—६ ॥ पद्मस्वस्तिकसंस्थितैः पद्मस्वस्तिकनामभ्यां संस्थानविशेषाभ्यां संस्थितैः । वर्धमानगृहैः वर्धमाननाम्ना संस्थानेन संस्थितैः गृहैः । तल्लक्षणानि वराहमिहिरसंहितायां व्यक्तानि विस्तरभयान्न लिख्यन्ते ॥ ७—९ ॥ त्रिस्थानस्वरभूषितं त्रिस्थानेषु उरःकण्ठशिरस्सु भवैः स्वरैर्भूषितं । ते च मन्द्रमध्यताराः ॥ १० ॥ सोपाननिनदांश्च मणिहेमकृतानां सोपानानां नूपुरादिताडनेन ये निनादाः संभवन्ति तान् । आस्फोटितनिनादान् व्यत्यस्तकरतलाभ्यां भुजाग्रास्फालनशब्दान् । क्ष्वेलितान् सिंहनादान् ॥ ११ ॥ [मन्त्रान् ऋग्वेदादीन् ॥ १२ ॥ स्वाध्यायनिरतान् ब्रह्मभागपाठनिरतान् ॥ १३ ॥ मध्यमे गुल्मे मध्यस्थितसैन्यसमाजे । चरान् स्वजनवृत्तान्तजिज्ञासया प्रधानप्रेरितान् प्रणिधीन् ॥ १४ ॥ गोजिनाम्बरधारिणः वृषभचर्मरूपवस्त्रधारिणः । दर्भमुष्टि-

वलंब्यप्रविष्टइतिसंबन्धः ॥ ३ ॥ **रामानु०** हसितोद्घुष्टनिनदैः हसितोच्चध्वनिभिः । गृहमुख्यैरितिपाठः ॥५॥ **ति०** स्वस्तिकाख्यगृह आकृत्याचतुरश्राः । " चतुश्शालाचतुर्द्वारासर्वतोभद्रसंज्ञिता । पश्चिमद्वाररहितामध्यावर्ताह्यानना । दक्षिणद्वाररहितावर्धमान धनप्रदा । प्राग्द्वाररहिता स्वस्तिकाख्यापुत्रधनप्रदा ' इत्युक्तेः पद्मस्वस्तिकवर्धमानाख्यगृहाः प्रभुगृहभेदाइत्यर्थः ॥ ७ ॥ ति दीक्षितजटिलमुण्डाः गृहिवनियतयः । गोजिनंगवाजिनं तद्वाससः । अंबरवाससः विवाससः । ननुलङ्कायाभारतखण्डा हिर्भावेनकर्मभूमित्वाभावात्कथंतत्ररक्षसांदीक्षितत्वमितिचेन्न । नित्यकर्मस्वन्यदेशेप्यधिकारात् । रावणादेस्तपोमाहात्म्यात्तत्रकाम्य कर्मसिद्धिरपीत्यन्यत् । 'यथालष्टुरमेन्द्रमेवसोममाजह्रे' इत्यादिशतपथोक्तरीत्या । एतेनदेवानामीषद्विकृतानपियज्ञान्दर्शयतीति भाष्यरीत्याचाङ्गवैकल्येप्यनुष्ठितात्कर्मणोवृत्रोत्पत्तिरूपकामनासिद्धिस्तथाप्रकृतेदेशरूपाङ्गवैकल्येपितत्सिद्धिः । रक्षसामपिदेवयो-

**[ पा० ]** १ इदमर्धं क. च. छ. ज. पाठेषु. २ ङ. छ.—ट. पुरस्कृतैः. ३ क. ग. घ. गृहमुख्यैः. ४ ख. पुरी. ५ क. ख. घ.—ट. विभूषितै. ६ क. घ. च. छ. ज. ञ. भूयो. ७ ख. ङ.—ज. ञ. ट. राघवार्थं. ८ ङ.—ज. ञ. ट. रुचिरं. ९ ङ.—झ. ट. मदनविद्धानां. १० क. ख. ग. ङ.—ज. ञ. ट. रक्षोगणं. ११ क. ख. ग. ङ.—ट. राक्षसस्य. १२ च. छ. झ. जिनांबरवाससः. १३ ख. स्तदा.

कूटमुद्गरपाणींश्च दण्डायुधधरानपि ॥ एकाक्षानेक[1]कर्णांश्च [2]लम्बोदरपयोधरान् ॥ १६ ॥
करालान्भुग्नवक्रांश्च विकटान्वामनांस्तथा ॥ धन्विनः खङ्गिनश्चैव शतघ्नीमुसलायुधान् ॥ १७ ॥
परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ॥ नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ १८ ॥
[3]नातिगौरान्नातिकृष्णान्[4]नातिकुब्जान्न वामनान् ॥ विरूपान्बहुरूपांश्च सुरूपांश्च सुवर्चसः ॥
[5]ध्वजीन्पताकिनश्चैव ददर्श विविधायुधान् ॥ १९ ॥
शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः ॥ क्षेपणीपाशहस्तांश्च ददर्श स [6]महाकपिः ॥ २० ॥
[7]स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् ॥ नानावेषसमायुक्तान्यथा[8]स्वैरगतान्बहून् ॥
तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् ॥ २१ ॥
शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ॥ रक्षोधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः ॥ २२ ॥
स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् ॥ राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् ॥ २३ ॥
पुण्डरीकावतंसाभिः [9]परिघाभिरलंकृतम् ॥ प्राकारावृतमत्यन्तं ददर्श स महाकपिः ॥ २४ ॥
त्रिविष्टपनिभं दिव्यं दिव्यनादवि[10]नादितम् ॥ वाजिहेषित[11]संघुष्टं नादितं [12]भूषणैस्तदा ॥ २५ ॥
रथैर्यानैर्विमानैश्च [13]तथा हयगजैः शुभैः ॥ वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः ॥ २६ ॥

हरणान् । " यथा वज्रं हरेः पाणौ तथा विप्रकरे कुशः " इतिस्मरणादिति भावः । अग्निकुण्डायुधान् जयार्थं होमशीलान् ॥ १५ ॥ कूटमुद्गरपाणीन् कूटो नामायस्कारकूटसदृश आयुधविशेषः । " कूटोऽस्त्री पुञ्जमायाद्रिशृङ्गायोघनवेश्मसु । छले बाणान्तरे दम्भे भग्नशृङ्गवृषे तु ना " इति शब्दरत्नाकरे । मुद्गरो द्रुघणः । " मुद्गरो द्रुघणो घनः " इति वैजयन्ती ॥ १६ ॥ करालान् भीमान् । " करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च " इति भागुरिः । भुग्नवक्रान् कुटिलवक्त्रान् । " आविद्धं कुटिलं भुग्नं " इत्यमरः । विकटान् विषमाङ्गान् । शतघ्नी शतशङ्कुर्योगदा । " अयःकण्टकसञ्छन्ना शतघ्नी परिकीर्तिता " इति वैजयन्ती । मुसलं आयसोरत्निप्रमाणको दण्डः । "मुसलं त्वायसो दण्डो धार्योऽरत्निप्रमाणकः " इति शब्दरत्नाकरे ॥ १७ ॥ परिघः दण्डविशेषः । नातिदीर्घातिह्रस्वकानित्यत्र हकारोपरि रकारोच्चारणं वृत्तभङ्गपरिहाराय । एवं ध्वजिन इति वक्तव्ये ध्वजीनित्युक्तिश्च छन्दोभङ्गपरिहारायैव ॥ १८—१९ ॥ पट्टिशः तीक्ष्णधारो लोहदण्डः । " पट्टिशोऽयोदीर्घदण्डस्तीक्ष्णधारः क्षुरोपमः " इति निघण्टुः । क्षेपणी क्षेपणीयः ॥२०॥ वेषः अलङ्कारः । यथास्वैरगतान् यथेष्टचारिणः ॥ २१ ॥ शतसहस्रमेव शतसाहस्रं स्वार्थे अण् । आरक्षं गुल्मं । अन्तःपुराग्रतः अन्तर्नगराग्रतः । रक्षोधिपतिनिर्दिष्टं मध्यमगुल्मभूतं रावणमूलबलं ददर्शेत्यर्थः ॥ २२ ॥ स तदेत्यादिश्लोकद्वयमेकान्वयं ॥ सः कपिः । तत् आरक्षं दृष्ट्वा सः राक्षसेन्द्रस्य गृहं ददर्शेत्यन्वयः । क्रियाभेदात्तच्छब्दद्वयं ॥ २३—२४ ॥ त्रिविष्टपेत्यादि ॥ यानैः शिबिकादिभिः । विमानैः व्योमयानैः । हयगजैरित्यत्र गजशब्दः द्विदन्तगजपरः । अतो न वारणैरित्यनेन पुनरुक्तिः । मृगपक्षिभिश्च भूषितमित्यन्वयः । रक्षिभिर्यातुधानैर्गुप्तमिति संबन्धः। आविवेश जगाम । गृहप्रवेशस्य दूरे वक्ष्यमाणत्वात्

[illegible]त्वात् ॥ १५ ॥ **ती०** द्वितीयस्तच्छब्दःप्रसिद्धिपरः ॥ २३—२४ ॥ **ति०** विचित्रवर्णादिमत्त्वादद्भुतलंहयानां । हयगजैः [illegible]याकारैर्गजैः । स्वल्पगजैरितियावत् । **स०** वाजिशब्दसमभिव्याहाराद्धेषितशब्दोध्वनिमात्रपरः ॥ २५—२६ ॥

**[ पा० ]** १ ङ. झ. वर्णांश्च. २ ख. ङ. झ. ट. चलदेकपयोधरान्. ग. च. छ. ज. ञ. लंबकर्णपयोधरान्. क. चललं-[illegible]पयोधरान्. ३ अतिगौरान्महाकृष्णानतिकुब्जातिवामनान्. ४ ख. ग. घ. न्नातिकुब्जातिवामनान्. ५ क. च. छ. ज. ञ. पताकध्वजिनश्चैव. ख. ङ. झ. ञ. ट. ध्वजिनःपताकिनश्चैव. ग. खङ्गिनःपाशिनश्चैव. ६ च. महान्कपिः. ७ क. च. छ. स्रग्विणस्त्वनु. ८ ख. ङ.—ट. स्वैरचरान्. घ. स्वैरंगतान्. ९ क. ख. घ.—ट. परिघाभिःसमावृतं. १० ग. विभूषितं. ११ ङ. झ. ट. संघुष्टमद्भुतैश्चहयैस्तथा. १२ च. छ. ज. ञ. भूषणस्वनैः. १३ च. छ. ज. ञ. तथाद्भुतहयैः.

भूषितं रुचिरद्वारं मत्तैश्च मृगपक्षिभिः ॥ रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः ॥
राक्षसाधिपतेर्गुप्तमाविवेश महाकपिः ॥ २७ ॥
सहेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् ॥
परार्ध्यकालागरुचन्दनाक्तं स रावणान्तःपुरमाविवेश ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ॥ ५ ॥

सितकिरणे गगनाङ्गणमलङ्कुर्वाणेनानावस्थाकारगुणकराक्षसस्त्रीपुरुषकुलमवलोकयतोऽनवलोकयतश्च सतींसीतां हनुमतोदुःखोदयः ॥ १ ॥

ततः स मध्यं गतमंशुमन्तं ज्योत्स्नावितानं महदुद्वमन्तम् ॥
ददर्श धीमान्दिवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १ ॥
लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् ॥
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथाभियान्तम् ॥ २ ॥
या भाति लक्ष्मीर्भुवि मन्दरस्था तथा प्रदोषेषु च सागरस्था ॥
तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३ ॥
हंसो यथा राजतपञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः ॥
वीरो यथा गर्वितकुञ्जरस्थश्चन्द्रो विबभ्राज तथाऽम्बरस्थः ॥ ४ ॥

॥ २५—२७ ॥ हेम अन्यत्र जातं सुवर्णं । जाम्बूनदं जम्बूनद्यां जातं । चक्रवालं प्राकारमण्डलं । रावणान्तःपुरं रावणान्तर्नगरं ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

ततः स मध्यमित्यादि ॥ दिवि आकाशे । मध्यं गतं आकाशमध्यगतमित्यर्थः । लङ्काप्रवेशे चन्द्रोदयोक्तेः रावणनगरप्रवेशे अर्धरात्र इति सूच्यते । उत्तरश्लोके अभियान्तमित्यनेनाभिगमनमुच्यते । दक्षिणां दिशं गच्छतोभिमुखत्वासंभवात् । किन्तु गमनमात्रं । सप्तदशे सर्गेपि प्रजगाम नभश्चन्द्र इति प्रकर्षेण गमनवचनं नभोमध्यातीतत्वमाचष्टे । अंशुमन्तमिति चन्द्र एवोच्यते । भानुमन्तं दीप्तिमन्तं । वृषं श्वेतं । अस्मिन्सर्गे च्छेकानुप्रासः नतु यमकं अर्थभेदाभावात् । तदुक्तं काव्यप्रकाशे । "भिन्नार्थानां त्र्यादीनां वर्णानां विवृत्तिर्यमक"मिति ॥ १ ॥ पापानि दुःखानि ॥ २ ॥ भुवि मन्दरो लक्ष्मीवान् । प्रदोषेषु सागरः तोयेषु पद्मं श्रीमत् । तद्वत्तदानीं चन्द्रो विशिष्टलक्ष्मीको बभूवेत्यर्थः । अत्रान्यस्यान्यत्रासंबन्धान्मन्दरादिलक्ष्मीरिवास्य लक्ष्मीरिति सादृश्याक्षेपान्निदर्शनालङ्कारः । तदुक्तं काव्यप्रकाशे निदर्शनायाम् "अभिमान्यस्तु संबन्ध उपमापरिकल्पक" इति ॥ ३ ॥ राजतपञ्जरस्थः गगनगर्भस्य ज्योत्स्नाक्षालितत्वात्

ती० सहेमेतिच्छेदः । हेमसहितंजांबूनदचक्रवालसहितंस्वर्णप्राकारमण्डलयुक्तं । स० हेम्ना पीतवर्णसुवर्णेनसहितंयज्जांबूनदं श्वेतवर्णसुवर्णं ॥ २८ ॥ इतिचतुर्थः सर्गः ॥ ४ ॥

ती० यद्वातारामध्यंगतं ॥ ति० ततः अन्तःपुरप्रवेशोत्तरं । रात्रेःप्रथमयामस्यसमाप्तकल्पत्वमत्रेतिबोध्यं ॥ स० ज्योत्स्नारूपं वितानमुद्वमन्तमितिविशेषणबलादंशुमन्तमित्यस्यसूर्येरूढस्यापियोगेनचन्द्रपरता । किंचतमेवचन्द्रंसीतायारामस्यवाभानुमन्तंसूर्यमिव । विरहितापकत्वगुणयोगेनददर्शेत्यर्थः । चन्द्रपक्षेभानुमन्तंदीप्तिमन्तमित्यर्थः ॥१॥ ती० पापशब्देनपापफलंदुःखमुच्यते । लो-

[ पा० ] १ ङ. झ. ट. भूषितैः. २ क.—ट. गृहंकपिः. ३ च. ज. ञ. चन्दनाङ्कितं. ङ. झ. ट. चन्दनार्हं. ४ घ. ङ. झ. ञ. ट. मुहुरुद्वमन्तं. ५ झ. ञ. ट. धीमान्भुवि. ६ ङ. झ. ट. यथा. ख. ञ. प्रदोषकालेषुच.

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलः श्वेत इवोच्चशृङ्गः ॥
हस्तीव जाम्बूनदबद्धशृङ्गो रराज चन्द्रः परिपूर्णशृङ्गः ॥ ५ ॥
विनष्टशीताम्बुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः ॥
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवाञ्शशाङ्कः ॥ ६ ॥
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ॥
राज्यं समासाद्य यथा नरेन्द्रस्तथाप्रकाशो विरराज चन्द्रः ॥ ७ ॥
प्रकाशचन्द्रोदयनष्टदोषः प्रवृद्धरक्षःपिशिताशदोषः ॥
रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान्प्रदोषः ॥ ८ ॥
तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः स्वपन्ति नार्यः पतिभिः सुवृत्ताः ॥
नक्तंचराश्चापि तथा प्रवृत्ता विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९ ॥

मन्दरकन्दरस्थः तस्य श्वेतगिरित्वात् । गर्वितकुञ्जरस्थः नीलरूपस्य नभस उपर्यवस्थानात् । अत्र पुष्टत्वादीनां साधारणधर्माणामनुपादानाल्लुप्तोपमालङ्कारः॥४॥परिपूर्णशृङ्गः परिपूर्णकलः। अत्र शृङ्गशब्दस्य विषाणाद्यर्थभेदेपि बिम्बप्रतिबिम्बभावेनौपम्यम् ॥५॥ शीताम्बु हिमाम्बु तुषाराः पृषताः पङ्कः तमः । विनष्टाः शीताम्बुतुषारा एव पङ्का यस्मिंस्तथा । " तुषारः शीकरे हिमे " इति विश्वः । महाग्रहाणां शुक्रबृहस्पत्यादीनां ग्राहेण ग्रहणेन आच्छादनेन विनष्टः पङ्को मलं यस्य सः महाग्रहग्राहविनष्टपङ्कः । स्वतेजसा महाग्रहतिरस्कारेण व्यक्तनैर्मल्य इत्यर्थः । यद्वा महाग्रहः सूर्यः तस्य ग्राहेण किरणपरिग्रहेण विनष्टः विनाशितः पङ्कः तमः येन सः । तदा तरणिकिरणसंक्रमणेन दीप्यमानमण्डल इत्यर्थः । तदुक्तं वराहमिहिरेण । " सलिलसमे शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः " इति ॥ प्रकाशलक्ष्म्याश्रयनिर्मलाङ्कः तेजस्समृद्धियोगात्स्पष्टकलङ्कः । अतिधवले चन्द्रे परभागयोगेन कलङ्कस्याप्यौज्वल्यं भवतीत्यर्थः । शशाङ्क इति । भूच्छायामयः शशरूपः अङ्कः यस्य स तथा । " लोकच्छायामयं लक्ष्म तवाङ्के शशसन्निभं " इति हरिवंशोक्तेः । भगवान् महाप्रभाववान् ॥ ६ ॥ प्रकाशः प्रकाशमानः ॥ ७ ॥ प्रकाशेन चन्द्रोदयेन नष्टः दोषः तिमिरं यस्मिन्सः । प्रवृद्धः रक्षसां पिशिताशनानां च दोषः सञ्चाररूपो यस्मिन्स तथा । रामाभिः अभिरामैः कान्तैश्च ईरितः त्यक्तः चित्तदोषः कोपाभिमानरूपः यस्मिन् । स्वर्गप्रकाशः स्वर्गतुल्यः । तद्वदानन्दावह इत्यर्थः । भगवान् श्रीमान् । " भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु " इत्यमरः । प्रदोषः गत इति शेषः ॥ ८ ॥ तन्त्रीति स्पष्टम् ॥ ९ ॥

[illegible]काह्लादकत्वाच्चन्द्रस्यदुःखविनाशकरत्वं । यद्वासूर्यचन्द्रादीनांलोकपावनत्वादितिभावः ॥२॥ **ती०** प्रवृत्तरक्षःपिशिताशदोषः प्रवृत्तःरक्ष-[illegible]ांपिशितभक्षणरूपदोषोयस्मिन् ।पिशितभक्षणस्यदोषत्वमविहितजनहिंसाहेतुत्वात् ।स्वर्गप्रकाशःसीतान्वेषणस्यानुकूलत्वेनानन्दहेतु-[illegible]यात्प्रदोषकालस्यस्वर्गसदृशत्वोक्तिः । अतएवभगवान् पूज्यः आदरणीयइतियावत् ॥**स०**भगवान् पूर्वोक्तरीत्यामाहात्म्यवान् प्रदोषः [illegible]त्रिकालः । स्वर्गप्रकाशः स्वर्गस्थानवत्सुखकरः । कीदृशः प्रकाशचन्द्रोदयनष्टदोषः प्रकाशायजातोयश्चन्द्रोदयस्तेननष्टोदोषः [illegible]अन्धकाराख्यःयस्यसतथा । प्रवृद्धरक्षसांपिशिताशरूपःमांसभक्षणरूपोदोषो यस्मिन् । रामाभिःस्त्रीभिःअभिरामान्पतीन् प्रति ईरि-[illegible]नवचनेनचित्तदस्यचित्तंद्यतिखण्डयतीतिव्युत्पत्त्यामन्मथस्य उषःदाहः निवृत्तिरितियावत् । यस्मिन् कान्तासुरतसँल्लापजनितम-[illegible]मथोत्सववानित्यर्थः । अथवारामाभिरामाणांपरस्परमीरितरूपप्रणयकलहाख्यचित्तदोषवानित्यर्थः ॥ उषदाहे । 'घञर्थेकविधानं' [illegible]तिकः ॥ **शि०** प्रदोषेचन्द्रनियन्तृत्वमारोप्याह—प्रकाशेति । प्रकाशविशिष्टचन्द्रस्योदयेननष्टोविनाशितः दोषः स्त्रीविषयक-[illegible]पुरुषप्रत्याख्यानरूपोयेनसः । रामस्याभिरामाय सीतयासहरमणाय ईरितः चन्द्रोदयनेनप्रापितः चित्तदोषः सीताविषयकराममनोत्या-[illegible]सक्तिरूपदोषः दोषाभासोयेन । अतएव स्वर्गस्यसुखविशेषस्य प्रकाशःधर्मात्मसुप्रापकः । अतएवभगवान्समर्थः ॥ ८ ॥ **ति०** [illegible]सुपृक्ताःभेदग्रहाविषयाः । स्ववृत्ताइतिपाठेस्वंस्वीयंसहजपातिव्रत्यलक्षणंवृत्तंचारित्रंयासांताः । नक्तंचराः उलूकादयोराक्षसाश्चतथा-

[ पा० ] १ ङ. झ. ञ. ट. इवोर्ध्वशृङ्गः. २ ख. ग.—ट. विभाति. ३ ख. ग. घ. च. छ. प्रतिपूर्ण. ४ ङ. झ. ट. स्सुपृक्ताः.

मत्तप्रमत्तानि समाकुलानि रथाश्वभद्रासनसंकुलानि ॥
वीरश्रिया चापि समाकुलानि ददर्श धीमान्स कपिः कुलानि ॥ १० ॥
परस्परं चाधिकमाक्षिपन्ति भुजांश्च पीनानधिनिक्षिपन्ति ॥
मत्तप्रलापानधिकं क्षिपन्ति मत्तानि चान्योन्यमधिक्षिपन्ति ॥ ११ ॥
रक्षांसि वक्षांसि च विक्षिपन्ति गात्राणि कान्तासु च विक्षिपन्ति ॥
रूपाणि चित्राणि च विक्षिपन्ति दृढानि चापानि च विक्षिपन्ति ॥ १२ ॥
ददर्श कान्ताश्च समालभन्त्यस्तथापरास्तत्र पुनः स्वपन्त्यः ॥
सुरूपवक्त्राश्च तथा हसन्त्यः क्रुद्धाः पराश्चापि विनिश्श्वसन्त्यः ॥ १३ ॥
महागजैश्चापि तथा नदद्भिः सुपूजितैश्चापि तथा सुसद्भिः ॥
रराज वीरैश्च विनिश्श्वसद्भिर्ह्रदो भुजङ्गैरिव निश्श्वसद्भिः ॥ १४ ॥
बुद्धिप्रधानान्रुचिराभिधानान्सश्रद्दधानाञ्जगतः प्रधानान् ॥
नानाविधानान्रुचिराभिधानान्ददर्श तस्यां पुरि यातुधानान् ॥ १५ ॥
ननन्द दृष्ट्वा स च तान्सुरूपान्नानागुणानात्मगुणानुरूपान् ॥
विद्योतमानान्स तदानुरूपान्ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६ ॥
ततो वराहाः सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः ॥
प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुप्रभावाः ॥ १७ ॥

मत्ताः मधुमदक्षीबाः। प्रमत्ताः प्रस्तुतकार्यविस्मारिणः। मत्तप्रमत्तजनयोगात्कुलान्यपि तथोच्यन्ते। कुलानि गृहाणि। समाकुलानि समाकुलजनानि। वीरश्रिया वीरलक्ष्म्या। वीर इति भिन्नं पदं वा कपिविशेषणं ॥ १० ॥ परस्परं चेत्यादिश्लोकद्वयमेकान्वयं ॥ ददर्शेति संबध्यते। आक्षिपन्तीत्यादीनि शत्रन्तानि रक्षोविशेषणानि। आक्षिपन्ति अपहसन्ति। अधिविक्षिपन्ति अन्योन्यस्योपरि दधति। अधिविक्षिपन्ति अधिकं मुञ्चन्ति। अधिक्षिपन्ति भर्त्सयन्ति। विक्षिपन्ति विवृण्वन्ति। चित्राणि रूपाणि विविधान्वेषान्। विक्षिपन्ति वितन्वन्ति। चापानि चापान् विक्षिपन्ति विस्फारयन्ति ॥ ११—१२ ॥ समालभन्त्यः अङ्गरागेणानुलिंपन्त्यः। समालपन्त्य इति च पाठः। सर्वत्र व्यत्ययेन द्वितीयार्थे प्रथमा ॥ १३ ॥ महागजैरिति ॥ सा पुरीति शेषः। सुसद्भिः सुतरां सद्भिः। विनिःश्वसद्भिः युद्धयोग्यवीरालाभात् ॥ १४ ॥ बुद्धिप्रधानान् बुद्ध्या श्रेष्ठान् प्रधानबुद्धीन्वा उत्तमबुद्धीनित्यर्थः। रुचिराभिधानान् शोभनव्यवहारान्। सश्रद्दधानान् आस्तिकान्। नानाविधानान्नानाकारान्। रुचिराभिधानान् हृद्यनाम्नः ॥ १५ ॥ आत्मगुणानुरूपान् आत्मगुणानुरूपव्यवहारान् ॥ १६ ॥ वराणां श्रेष्ठानां अर्हाः वराहाः। सुविशुद्धभावाः कान्ते निर्मलहृदयाः। महानुभावाः पातिव्रत्यरूपमहाप्रभावाः। यद्वा महानुभावाः अनुभावाः कटाक्षभुज-

विहर्तुंप्रवृत्ताः ॥ ९ ॥ स० मत्ताः स्वभावतः। प्रमत्ताः मद्यादिना। तेचते अनिनःप्राणिनश्चतैःसमाकुलानि। चापिभिःधनुर्धारिभिःसमाकुलानीत्यप्यर्थः ॥ १० ॥ स० सुसद्भिः विभीषणादिभिः ॥ १४ ॥ स० जगतःस्थावरलोकस्यप्रधानंज्ञानंयेषांतेतथा तान्। अलुक्समासः। 'प्रधानंस्यात्प्रज्ञायां' इतिविश्वः। जगतः उक्तरूपस्यप्रधानान् प्रकृष्टाधानाःतदुपलक्षितजीवनोपायाःयैस्तान्। अतोनोभयत्रलिङ्गानुपपत्तिः ॥ १५ ॥ ति कांश्चित्पुनर्विरूपानपिविद्योतमानान्सुरूपानिवददर्शेत्यन्वयः ॥ स० सरूप

[ पा० ] १ क. चापिसमाक्षिपन्ति. २ क. ख. घ. —ट. विक्षिपन्ति. ३ ग. —ट. प्रलापानधिविक्षिपन्ति. क. प्रमत्तानधिविक्षिपन्ति. ४ क. गात्रेषुच. ५ छ. ज. स्पृधापराश्चापि. ६ क. च. छ. ज. ञ. सुहृद्भिः. ७ ङ. सुनिश्श्वसद्भिः. ८ ञ. दृष्ट्वास्वपतः. ९ ख. घ.—ट. विद्योतमानान्सचतान्सुरूपान्. क. ग. विद्योतयन्तीःसचताःसुरूपाददर्शकान्ताश्चपुनर्विरूपाः. १० क. महार्हाः. ११ क. विशुद्धभावाः. १२ ङ. छ.—ट. सुस्वभावाः.

श्रिया ज्वलन्तीस्त्रपयोपगूढा निशीथकाले रमणोपगूढाः ॥
ददर्श काश्चित्प्रमोदपगूढा यथा विहङ्गाः कुसुमोपगूढाः ॥ १८ ॥
अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियाङ्केषु सुखोपविष्टाः ॥
भर्तुः प्रिया धर्मपरा निविष्टा ददर्श धीमान्मदनाभिविष्टाः ॥ १९ ॥
अप्रावृताः काञ्चनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः ॥
पुनश्च काश्चिच्छशलक्ष्मवर्णाः कान्तप्रहीणा रुचिराङ्गवर्णाः ॥ २० ॥
ततः प्रियान्प्राप्य मनोभिरामान्सुप्रीतियुक्ताः प्रसमीक्ष्य रामाः ॥
गृहेषु हृष्टाः परमाभिरामा हरिप्रवीरः स ददर्श रामाः ॥ २१ ॥
चन्द्रप्रकाशाश्च हि वक्त्रमाला वक्राक्षिपक्ष्माश्च सुनेत्रमालाः ॥
विभूषणानां च ददर्श मालाः शतह्रदानामिव चारुमालाः ॥ २२ ॥
न त्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजाताम् ॥
लतां प्रफुल्लामिव साधुजातां ददर्श तन्वीं मनसाऽभिजाताम् ॥ २३ ॥
सनातने वर्त्मनि सन्निविष्टां रामेक्षणान्तां मदनाभिविष्टाम् ॥
भर्तुर्मनः श्रीमदनुप्रविष्टां स्त्रीभ्यो वराभ्यश्च सदा विशिष्टाम् ॥ २४ ॥
उष्णार्दितां सानुसृतास्रकण्ठीं पुरा वरार्होत्तमनिष्ककण्ठीम् ॥

क्षेपादयः सुप्रभावाः शोभनवैभवाः ॥ १७ ॥ प्रमदोपगूढाः हर्षोपगूढाः विहङ्गाः विहङ्गीः ॥ १८ ॥ निविष्टाः ऊढाः पाणिगृहीता इत्यर्थः । "निवेशः शिबिरोद्वाहन्यासे" इति विश्वः ॥ १९ ॥ अप्रावृताः अनवकुण्ठिताः। काञ्चनराजिवर्णाः कनकरेखाकाराः । तपनीयवर्णाः तप्तकाञ्चनवर्णाः । शशलक्ष्मवर्णाः चन्द्रपाण्डुराः । कान्तप्रहीणाः विरहिण्यः ॥ २० ॥ प्रियान्प्राप्य अभिसृत्य । सुप्रीतियुक्ताः मनोभिरामाः रामाः प्रसमीक्ष्य गृहेषु रामाश्च ददर्श । अभिसारिकाः कुलपालिकाश्च ददर्शेत्यर्थः ॥ २१ ॥ वक्त्रनेत्रदर्शनं मानुषीत्वराक्षसीत्वविवेकार्थं । आभरणदर्शनं स्वदृष्टसीताभरणतुल्याभरणदर्शनार्थं ॥२२॥ परमाभिजातां अत्यन्ताभिरामां । साधुजातां सुरूपां । मनसाभिजातां अयोनिजामित्यर्थः॥२३॥ सनातने अविच्छिन्ने वर्त्मनि पातिव्रत्यधर्मे । रामेक्षणे अन्तो निश्चयो यस्यास्तां श्रीमत् सीताचिन्तनश्रीमत् । विशिष्टां उत्कृष्टां ॥ २४ ॥ सानुसृतास्रकण्ठीं अनुगतास्रेण अनुगतबाष्पेण कण्ठेन सह वर्तमानां । पुरा रामपार्श्वा-

...मानरूपान् । आत्मगुणानांशौर्यादीनांअनुरूपान्अनुकूलाकृतिमतः । सुरूपान्सुन्दरान् ॥ १६ ॥ **ति०** यथाविहङ्गाःविहङ्गीरेवेत्यर्थः । इन्द्रनीलमणिमयोर्ध्वगेहेषुनीलतमस्सदृशेषुशयनात्तत्सादृश्यं ॥ **शि०** विहगेनपक्षिविशेषेणउपगूढाःविहङ्गाइवददर्श । अत्युन्नतप्रासादेषुशयनादीदृगुपमानोपमेयभावः ॥ **स०** प्रमदोपगूढाःविहगीभिरुपगूढाःविहङ्गायथाभवन्तितथाएताददर्श ॥१८॥ **रामानु०** वक्राणिअक्षिपक्ष्माणियासांताः। 'डाबुभाभ्यामन्यतरस्यां' इतिडाप् । सीतामन्वेषमाणस्यहनुमतःस्त्रीणांमुखनयनादिदर्शनंमानुषीत्वराक्षसीत्वविभागपरिज्ञानार्थं । आभरणदर्शनंरामोक्तसीताभरणस्वरूपनिरूपणार्थं । एतच्च "तांसमीक्ष्यविशालाक्षींराजपुत्रीमनिन्दिताम् । तर्कयामाससीतेतिकारणैरुपपादयन् । वैदेह्यायानिचाङ्गेषुतदारामोऽन्वकीर्तयत् । तान्याभरणजालानिशाखाशोभीन्यलक्षयत्' इति । राजपुत्रीत्वविशालाक्षीत्वाभरणदर्शनैःसीतात्वनिर्णयस्योपरिवक्ष्यमाणत्वादवगम्यते ॥ **ती०** परमाभिरामाश्च ददर्शेतिसंबन्धः । पूर्वोक्ताःनियतभर्तृकाः । अभिसारिकासमभिव्याहारात्उत्तरार्धेनस्वगृहप्राप्तरमणावाराङ्गनाउच्यन्ते ॥ **ति०** वक्राक्षिपक्ष्माइतिपाठेऽक्षिपदमधिकं । वक्रपक्ष्माइत्येवोचितं । पक्ष्मसुवक्रत्वमपिकिमित्यपिचिन्त्यं ॥ २२ ॥ **रामानु०** साधुजातामित्येतल्लताविशेषणं । मनसाभिजातां 'यस्मात्तुधर्षिताचाहमपापाचाप्यनाथवत् । तस्मात्तववधार्थंवैउत्पत्स्येऽहंपुनः" इत्युक्तप्रकारेणस्वसंकल्पेनावतीर्णामित्यर्थः ॥ २३ ॥ **स०** मदनाभिविष्टां तामिवविद्यमानां । मदनोमन्मथःअभि-

[ **पा०** ] १ ङ. झ. स्त्रियोज्वलन्तीः. २ ङ. झ. ञ. ट. विहङ्गाविहगोपगूढाः. ३ झ. ञ. प्रियाङ्कसुसुखोप. ४ ङ. ट. पराः. ५ ङ. झ. ञ. ट. मदनोपविष्टाः. ६ झ. ञ. ट. सुमनोभिरामाः. ७ ङ. झ. ञ. ट. वक्राःसुपक्ष्माश्च. ८ ग. ङ झ. ट. रामेक्षणीतां. ९ ङ.—ज. स्त्रीभ्योपराभ्यश्च. झ. ञ. ट. स्त्रीभ्यःपराभ्यश्च.

सुजातपक्ष्मामभिरक्तकण्ठीं वने प्रनृत्तामिव नीलकण्ठीम् ॥ २५ ॥
अव्यक्तरेखामिव चन्द्ररेखां पांसुप्रदिग्धामिव हेमरेखाम् ॥
क्षतप्ररूढामिव बाणरेखां वायुप्रभिन्नामिव मेघरेखाम् ॥ २६ ॥
सीतामपश्यन्मनुजेश्वरस्य रामस्य पत्नीं वदतां वरस्य ॥
बभूव दुःखाभिहतश्चिरस्य प्लवङ्गमो मन्द इवाचिरस्य ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ॥ ६ ॥

हनुमता पुनर्लङ्काभरणायमानाद्भुततररावणभवनमेत्य तत्समीपस्थप्रहस्तादिनानानामकराक्षसगृहेषु सीतान्वेषणपूर्वकं रावणगृहप्रवेशनं ॥ १ ॥

स निकामं विमानेषु विषण्णः कामरूपधृक् ॥ विचचार पुनर्लङ्कां लाघवेन समन्वितः ॥ १ ॥
आससादाथ लक्ष्मीवात्राक्षसेन्द्रनिवेशनम् ॥ प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २ ॥

---

वस्थानकाले वरार्होत्तमनिष्ककण्ठीं वरार्हः उत्तमश्चनिष्कः कण्ठे यस्याः तां उरःकण्ठसंबन्धी भूषणविशेषो निष्कः । अभिरक्तकण्ठीं स्निग्धकण्ठीम् ॥ २५ ॥ अव्यक्तरेखां अव्यक्तस्वरूपां चन्द्ररेखां चन्द्रकलामिव स्थितां । अत्यन्तकृशत्वे कान्तिहीनत्वे च दृष्टान्तोयं । पांसुप्रदिग्धां पांसुकलुषितां हेमरेखां कनककशलाकामिव स्थितां । स्वतःशुद्धस्वभावस्य आगन्तुकमालिन्ये दृष्टान्तोयं । क्षतप्ररूढां क्षतेन प्ररूढां औषधादिना समाहितां । अन्तःशल्यदोषवतीं बहिस्समाहितां । बाणरेखां बाणक्षतिमिव स्थितां । अन्तर्वेदनातिशये दृष्टान्तोयं । वायुप्रभग्नामिव मेघलेखां पुनरसमाधेयशैथिल्ये दृष्टान्तोयं ॥ २६ ॥ चिरस्यापश्यन् चिरकालं निरीक्ष्याप्यपश्यन् । अचिरस्य अचिरेण सपदीत्यर्थः । मन्दो मुग्ध इव दुःखाभिहतो बभूव । "मुग्धो मन्दो विवर्णश्च" इति हलायुधः ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

स निकाममित्यादि ॥ विमानेषु विषण्णः विमानेषु सीतामदृष्ट्वा विषण्ण इत्यर्थः । लाघवेनवेगे

---

निविष्टः उदरेयस्यास्तांमदनमातरं ॥ २४ ॥ स० उष्णार्दितां रामविरहतप्तां । अनुस्रुतंअस्रंअश्रुयस्य सचासौकण्ठश्चतेनसहवर्तत इतितथातां । सानुस्रुतास्रकण्ठीमित्यादिस्थानत्रयेपिङीबार्षः । यद्वा 'स्वाङ्गाच्च' इतिसूत्रस्थचशब्दसूचिता'ङ्गगात्रकण्ठेभ्यइतिवक्तव्यं' इतिवृत्तिकृदुक्तेर्ङीष् । नचभाष्यानुक्तेरप्रामाणिकाइतिप्रामाणिकाः 'अप्रामाणिकाएव' इतिभट्टोजिनागोजिभट्टोक्तेःकथमितिशङ्क्यं । अनुवृत्त्यैवङीषिसिद्धेचशब्दस्यवैयर्थ्यादेवमादिरूपाणांदुरुपपादनत्वावर्णनाच्च 'अप्रतिषिद्धमनुमतं' इत्युक्तेर्महाभाष्यकारस्यम[illegible]तमितिसूचितत्वात्कवेर्महत्त्वाच्च । अश्रुकण्ठामितिवापाठइतिनागोजिभट्टोक्तिरनुप्रासभङ्गभीरुभिरनादरणीया ॥ अभिरक्तकण्ठींसुस्वरां । नीलकण्ठीं मयूरीं ॥ २५ ॥ इतिपञ्चमःसर्गः ॥ ५ ॥

स० विमानेषुसप्तभौमाष्टभौमादिप्रासादेषु।विचचार विचारयामास॥रामानु०सःलङ्कायामन्विष्टायामपिवैदेह्याअदर्शनेनविषण्णः[illegible] विचचारपुनर्लङ्कामितिसम्यक् । कपिर्लङ्कामितिपाठेपिवैदेह्याअन्वेषणेनविषण्णस्यहनुमतोऽन्वेषणकर्तृत्वाभिधानात्पुनरन्वेषणंकृतव[illegible]नित्ययमर्थोलभ्यते॥१॥रामानु० आससादाथलक्ष्मीवात्राक्षसेन्द्रनिवेशनंइतिरावणभवनंप्रविष्टस्यहनुमतः पुनरपिरावणभवनप्राप्त्य[illegible]भिधानान्मध्येलङ्कान्वेषणाभिधानाच्चपूर्वंरावणभवनंप्रविष्टोहनुमांस्तदानींजाग्रद्बहुरक्षस्संकीर्णतयासीतान्वेषणावसरोऽयंनभवतीतिम-

[ पा० ] १ ग. मभिराम. २ ख. ग. झ. ञ. ट. प्रवृत्तामिव. ३ क. ङ.—झ. ट. चन्द्रलेखां. ४ ङ. झ. ट. वर्णरेखां. ५ ग. घ. ङ. ट. प्रभग्नामिव. ञ. प्रभुग्नामिव. क. प्रणुन्नामिव. ६ ग. ङ. झ. ट. दुःखोपहतः ७ क. ग.—ट. विचरन्काम. ८ क. ग.—ट. कपिर्लङ्कां. ९ क. ङ. झ. ञ. ट. आससादच. घ. आससादस.

रक्षितं राक्षसै[1]र्घोरैः सिंहैरिव महद्वनम् ॥ समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३ ॥
रूप्यकोपहितैश्चित्रैस्तोरणै[2]र्हेमभूषितैः ॥ विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचि[3]रैर्वृतम् ॥ ४ ॥
ग[4]जास्थितैर्महामात्रैः शूरै[5]श्च विगतश्रमैः ॥ उपस्थितमसंहार्यै[6]र्हयैः स्यन्दनयायिभिः ॥ ५ ॥
सिंहव्याघ्रतनुत्राणैर्दान्तकाञ्चनराजतैः ॥ घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६ ॥
बहुरत्नसमाकीर्णं परार्ध्यासन[7]भाजनम् ॥ महारथ[8]समावासं महारथमहास्वनम् ॥ ७ ॥
दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः ॥ विविधैर्बहुसाहस्रैः [9]परिपूर्णं समन्ततः ॥ ८ ॥
विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम् ॥ मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥ ९ ॥
मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् ॥ व[11]राभरणसंह्रादैः समुद्रस्वननिस्वनम् ॥ १० ॥
तद्राजगुणसंपन्नं [12]मुख्यैश्चागुरुचन्दनैः ॥ [13]महाजनैः समाकीर्णं सिंहैरिव महद्वनम् ॥ ११ ॥
भेरीमृदङ्गाभिरुतं शङ्खघोषनि[14]र्नादितम् ॥ नित्यार्चितं [15]पर्वहुतं पूजितं राक्षसैः सदा ॥ १२ ॥

॥ १—२ ॥ चकाशे जहर्षेत्यर्थः ॥ ३ ॥ रूप्यकोपहितैः रजतनिर्मितैः । कक्ष्याभिः प्रकोष्ठैः ॥ ४ ॥ असंहार्यैः अवध्यैः । स्यन्दनयायिभिः स्यन्दनवाहकैः ॥ ५ ॥ सिंहव्याघ्रतनुत्राणैः सिंहव्याघ्रचर्मपरिवृतैरित्यर्थः ॥ ६ ॥ महारथसमावासं महारथानां रक्षसामाकरं । महारथमहास्वनं महतां रथानां महान् स्वनः यस्मिन् ॥ ७—८ ॥ अन्तपालैः बाह्यरक्षिभिः ॥ ९ ॥ राक्षसेन्द्रनिवेशनं राक्षसेन्द्राः राक्षसश्रेष्ठाः निविशन्ते समीपे निवसन्त्यस्मिन्निति राक्षसेन्द्रनिवेशनमित्यर्थः । अन्यथा वक्ष्यमाणवेश्मपदेन पुनरुक्तिःस्यात् । संह्रादः शब्दः । समुद्रस्वनवन्निस्वनतीति समुद्रस्वननिस्वनम् । पचाद्यच् ॥ १० ॥ तत् प्रसिद्धं राजगुणसंपन्नं राजोपचारैर्धूपादिभिः संपन्नं । अगुरुचन्दनैरित्यत्रापि संपन्नमिति संबध्यते ॥ ११ ॥ पर्वसु हुतं होमो

ततोनिष्क्रम्यपुनर्लङ्कांविचित्यराक्षसेन्द्रनिवेशनमाससादेत्यवगम्यते ॥ २ ॥ **ती०** चकाशे विस्मयादुल्ललासेत्यर्थः । चचारक-
…अरइतिपाठः । **रामानु०** भवनमितस्ततोनिरीक्षमाणस्सप्नर्कवर्णभवनप्राकारतेजस्संबन्धात्सप्रकाशोऽभूदित्यर्थः ॥ **स०** चकाशे
…भावादितिभावः॥ ३ ॥ **ति०** चकाशे चन्द्रसाहित्याद्व्यक्तान्वेषणक्रियोबभूवेत्यर्थः॥ **स०** रूप्यस्ययत्कंउदकंतेनउपहितैःलिखितैः।रूप्य
…दिनाहतसुवर्णप्राद्यं । 'रूप्यंस्यादाहतेस्वर्णे' इतिविश्वः । कक्ष्याभिः प्रकोष्ठापरपर्यायरक्षकनिवासस्थानैः ॥४॥ **स०** महामात्रैः
…ष्ठैः । असंहार्यैःउपसंहर्तुमशक्यवेगैरितिहयविशेषणंवा ॥ **रामानु०** महामात्रैःप्रधानैः । 'महामात्राःप्रधानानि' इत्यमरः
॥ … ॥ **रामानु०** महारथसमावापमितिपाठेपिमहारथानांरथिकविशेषाणांआवापं आवासभूतमित्यर्थः ॥ **ति०** महतांरथाना-
…पः स्थानंसमन्ताद्यस्मिंस्तत् ॥ **स०** एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम् । अस्त्रशस्त्र(शस्त्रशास्त्र)प्रवीणश्चसमहारथउ-
…ति ' इत्युक्तलक्षणानांयस्समावापः उपवेशनवेदिका सयस्मिन् । ' आवापःपरिक्षेपालवालयोः ' इतिविश्वः । महारथानांउक्त-
…णानामपिशत्रूणां महत् असनं गतिनिवृत्तिर्यस्मिन् । ' असनंयात्रानिवृत्तिः ' इतिविश्वः ॥ ७ ॥ **रामानु०** दृश्यैः दर्शनीयैः ।
…मोदारैः अतिमहद्भिः । ' उदारोदातृमहतोः ' इत्यमरः ॥ ८ ॥ **रामानु०** राक्षसेन्द्रनिवेशनं राक्षसेन्द्राणांनिवेशनानियस्मि-
… ॥ **स०** वराभरणनिर्ह्रादैःकरणैःसमुद्रस्वननिस्वनं तद्ध्वनिसदृशध्वनिमत् ॥ १० ॥ **रामानु०** राजगुणाः छत्रचामरादयःतैः
…नं समृद्धं ॥ ११ ॥ **ति०** पर्वसुसुतःसोमोयस्मिन्यज्ञार्थेतत्पर्वसुतं । राक्षसैःसदापूजितं स्वपूजनीयदेवताकं ॥ **रामानु०**
…र्यार्चितं । गन्धपुष्पादिभिर्नित्यमार्चितं । पर्वसु हुतंहोमोयस्मिंस्तत्पर्वहुतं । रावणस्याहिताग्नित्वात्तद्गृहेदर्शपूर्णमासादिहोमसद्भावः ।
…याहिताग्नित्वंयुद्धकाण्डेप्रसिद्धं । पूजितंराक्षसैस्सदा स्वामिगृहत्वाद्राक्षसैस्सदानमस्कृतं । ' पूजानमस्यापचितिः ' इत्यमरः ।

[ पा० ] १ ग. घ. ङ. च. ज. ट. राक्षसैर्भीमैः. २ घ.—ट. तोरणैर्हेमभूषणैः. क. तोरणैस्सुविभूषितैः. ३ ङ. झ. रुचि-
…र्तं. ४ च. छ. ञ. गजस्थितैः. ५ ग. च. ज. शूरैश्चापगतश्रमैः. ६ ख. ग. घ. हयस्यन्दन. ७ ङ. झ. ञ. ट. भूषितं.
… ख. घ. ङ. झ. ञ. ट. समावापं. ९ क.—च. ज.—ट. महासनं. १० क. परिकीर्णे. ११ ख. महाभरण. क. ग. च. छ.
महाभरणनिर्ह्रादैः. १२ क.—ङ. झ. ञ. ट. मुख्यैश्चवरचन्दनैः. १३ क. ग.—ट. महाजनसमाकीर्णं. १४ क. ख. ग.
.— ट. विनादितं. १५ घ. ङ. झ. ट. पर्वसुतं.

समुद्रमिव गम्भीरं [1]समुद्रमिव निस्स्वनम् ॥ महात्मनो [2]महद्वेश्म महारत्नपरिच्छदम् ॥
महा[3]रत्नसमाकीर्णं ददर्श स महाकपिः ॥ १३ ॥
विराजमानं वपुषा गजाश्वरथसंकुलम् ॥ लङ्काभरणमित्येव सोमन्यत महाकपिः ॥ १४ ॥
चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५ ॥
गृहाद्गृहं राक्षसानामुद्यानानि [4]च वानरः ॥ वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ १६ ॥
अ[5]वप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ॥ ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ १७ ॥
अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम् ॥ विभीषणस्य च [6]तदा पुप्लुवे स महाकपिः ॥ १८ ॥
महोदरस्य च [7]गृहं विरूपाक्षस्य चैव हि ॥ विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च ॥
[8]वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ॥ १९ ॥
शुकस्य च [9]महातेजाः सारणस्य च धीमतः ॥ तथा चेन्द्रजितो वेश्म [10]जगाम हरियूथपः ॥ २० ॥
जम्बुमालेः सुमालेश्च जगाम हरिसत्तमः ॥ रश्मिकेतोश्च भवनं [11]सूर्यशत्रोस्तथैव च ॥ २१ ॥
वज्रकायस्य [12]च तथा पुप्लुवे स महाकपिः ॥ [13]धूम्राक्षस्य च संपातेर्भवनं मारुतात्मजः ॥ २२ ॥
वि[14]द्युद्रूपस्य भीमस्य [15]घनस्य विघनस्य च ॥ २३ ॥
[16]शुकनासस्य [17]वक्रस्य शठस्य वि[18]कटस्य च ॥ [19]ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ २४ ॥
युद्धोन्मत्तस्य [20]मत्तस्य ध्वजग्रीवस्य [21]नादिनः ॥ वि[22]द्युज्जिह्वेन्द्रजिह्वानां तथा हस्तिमुखस्य च ॥ २५ ॥
करालस्य पि[23]शाचस्य शोणिताक्षस्य चैव हि ॥ [24]क्रममाणः क्रमेणैव हनुमान्मारुतात्मजः ॥ २६ ॥
तेषु तेषु महार्हेषु भवनेषु महायशाः ॥ तेषामृद्धिमतामृद्धिं ददर्श स [25] महाकपिः ॥ २७ ॥
सर्वेषां समतिक्रम्य भवनानि समन्ततः ॥ [26]आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥ २८ ॥
रावणस्योपशायिन्यो ददर्श हरिसत्तमः ॥ विचरन्हरिशार्दूलो राक्षसीर्वि[27]कृतेक्षणाः ॥
शूलमुद्गरहस्ताश्च शक्तितोमर[28]धारिणीः ॥ २९ ॥

यस्मिंस्तत् पर्वहुतम् ॥ १२ ॥ समुद्रमिव निस्स्वनं निश्शब्दं । रावणभीत्या जनकोलाहलरहितमित्यर्थः । समुद्रस्वनमिति तु बाह्यकक्ष्यापेक्षया ॥ १३—१४ ॥ रावणस्य रावणगृहस्य ॥ १५—२४ ॥ विद्युज्जिह्वेन्द्रजिह्वानामिति बहुवचनं तन्नाम्नां बहूनां सत्त्व ॥ २५—२८ ॥ उपशायिन्यः पर्यायशायिन्य

नित्यार्चितंसर्वसुखमूर्जितमितिवापाठः । पर्वयुतमितिपाठेपर्वशब्देनोत्सवउच्यते ॥ १२ ॥ **रामानु०** समुद्रमिवनितरांस्वन निस्वनं । पचाद्यच् ॥ **ति०** परिच्छदः अलङ्कारः ॥ १३ ॥ **स०** लङ्कायाआभरणरूपमिदमित्यमन्यत ॥ १४ ॥ **रामानु** राक्षसानां रावणभ्रातृकुमारामात्यादीनांगृहाद्गृहं । उद्यानानिचचारेतियोजना ॥ १६ ॥ **ति०** विद्युज्जिह्वेन्द्रजिह्वानामितिबहुवच मार्षं । तयोरित्यर्थः ॥ २५ ॥ **स०** उपशायिन्यः शयनस्थानंपर्यायेणरक्षयित्र्योयास्ताइत्यर्थः । ' उपशायोविशायश्चपर्यायश

[ पा० ] १ क. घ. समुद्रस्वननिस्स्वनं. झ. समुद्रसमनिस्स्वनं. २ च. छ. ज. महावेश्म. ३ ख. महाजनसमा ४ ङ. झ. ञ. ट. चसर्वशः. क. घ. वनानिच. ५ क. अवप्लुतो. ६ क. घ.—ट. तथा. ७ घ.—ट. तथा. ८ झ. बहुदंष्ट्र ९ क. ग.—ट. महावेगः. १० ग. पुप्लुवे. ११ घ. सूर्यकेतोः. १२ भवनं. १३ क. धूम्राक्षस्यैवसदनंसंपातेः. ख. धूम्राक्षस्यापि. ग. ङ. छ. झ. ञ. ट. धूम्राक्षस्याथ. १४ ज. यूपनेत्रस्य. १५ क. प्रघसस्यघनस्यच. च. छ. ज. प्रघस्यप्र सस्यच. १६ छ. शुभनाभस्य. क.—च. ज.—ट. शुकनाभस्य. १७ ङ. च. छ. झ. ट. चक्रस्य. ञ. शक्रस्य. ख. ग. वज्रस १८ ङ. च. झ. ट. कपटस्यच. क. घ. विशठस्यच. १९ ख. ग. ङ. च. छ. झ. ट. ह्रस्वकर्णस्य. घ. ह्रस्वदंष्ट्रस्यकण्ठस्य. ह्रस्वकर्णस्यवीरस्य. २० घ. भवनं. २१ ङ. च. ज.—ट. सादिनः. २२ ङ. झ. ट. विद्युज्जिह्वद्विजिह्वानां. २३ च. — विशालस्य. २४ च.—ट. प्लवमानः. २५ क. हनुमान्कपिः. २६ क. आससादच. २७ क. घ. विकृताननाः. २८ ङ.— ट. धारिणः.

ददर्श विवि[1]धान्गुल्मांस्तस्य रक्षःपतेर्गृहे ॥ राक्षसांश्च महाकायान्नाना[2]प्रहरणोद्यतान् ॥ ३० ॥
रक्ताञ्श्वेतान्सि[3]तांश्चैव ह[4]रींश्चापि महाजवान् ॥ कुलीनान्रूपसंपन्नान्गजान्परगजारुजान् ॥ ३१ ॥
निष्ठि[5]तान्गजशिक्षायामैरावतसमान्युधि ॥ निहन्तॄन्परसैन्यानां गृहे तस्मिन्ददर्श सः ॥ ३२ ॥
क्षरतश्च यथा मेघान्स्रवतश्च यथा गिरीन् ॥ मेघस्तनितनिर्घोषान्दुर्धर्षा[6]न्समरे परैः ॥ ३३ ॥
सहस्रं [7]वाहिनीस्तत्र जाम्बूनदपरिष्कृताः ॥ हे[8]मजालपरिच्छन्नास्तरु[9]णादित्यसन्निभाः ॥
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३४ ॥
शिबिका विविधाकाराः स कपिर्मारुतात्मजः ॥ लतागृहाणि चित्राणि चि[10]त्रशालागृहाणि च ॥ ३५ ॥
क्रीडागृहाणि चान्यानि दारुपर्वतकानपि[11] ॥ [12]कामस्य गृहकं र[13]म्यं दिवागृहकमेव च ॥
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३६ ॥
स मं[14]न्दरगिरिप्रख्यं मयूरस्थानसंकुलम् ॥ ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् ॥ ३७ ॥
[15]अनेकरत्नसंकीर्णं निधिजा[16]लं समन्ततः ॥ धीरनिष्ठितक[17]र्मान्तं गृहं भूतपतेरिव ॥ ३८ ॥
अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च ॥ वि[18]रराजाथ तद्वेश्म रश्मिवानिव रश्मिभिः ॥ ३९ ॥
जाम्बूनदमयान्येव शयनान्यासनानि च ॥ भाजनानि च मु[19]ख्यानि ददर्श हरियूथपः ॥ ४० ॥
मध्वासवकृतक्लेदं मणिभाजनसंकुलम् ॥ [20]मनोरममसंबाधं कुबेरभवनं यथा ॥ ४१ ॥
नूपुराणां च [21]घोषेण काञ्चीनां निनदेन च ॥ मृदङ्ग[22]तलघोषैश्च घोषवद्भिर्वि[23]नादितम् ॥ ४२ ॥

रावणे शयाने जाग्रतीरित्यर्थः ॥ २९—३० ॥ सि... तान् बद्धान् । "षिञ् बन्धने" इत्यस्मात् क्तः । हरी... न् अश्वान् । परगजानारुजन्ति पीडयन्तीति परगज... रुजान् ॥ ३१—३२ ॥ क्षरतश्चेति श्लोकः पूर्वोक्त... गजविशेषकः । क्षरतः किंचिद्वर्षतः । स्रवन्मदत्वे दृष्टा... न्तः । स्रवतः निर्झरिणः ॥ ३३ ॥ वाहिनीः सेन... ाः । पदातीनित्यर्थः । जाम्बूनदं जम्बूनदीप्रभवं स्वर्ण... । हेम केवलस्वर्णं । उभयविधस्वर्णमयाभरणयुक्ता इत्य... र्थः ॥ ३४ ॥ शिबिका इत्यादि ॥ दारुपर्वतकान् क्रीडापर्वतकान् । कामस्य गृहकं रतिगृहं । दिवागृहकं दिवाविनोदस्थानं । रावणस्य निवेशन इति पाठः ॥ ३५—३६ ॥ स इत्यादि ॥ मयूरस्थानं क्रीडामयूरविश्रमस्थानं । कपोतानामिव मयूराणामपि स्थानानि शिलाभिः कल्प्यन्त इति प्रसिद्धं । धीरनिष्ठितकर्मान्तं धीरैः कृतकल्पकर्मकं । भूतपतेः प्रमथाधिपस्य ॥ ३७—३८ ॥ रश्मिवान् सूर्यः ॥ ३९—४० ॥ मध्वासवकृतक्लेदं मध्वासवैः मधुविकारमद्यैः । कृतक्लेदं कृतसेकं ॥ ४१ ॥ घोषवद्भिः नादवद्भिः । नादश्च दीर्घशब्दस्य विराम-

नार्य... कौ ' इत्यमरः ॥ २९ ॥ **रामानु०** गुल्मान् सेनाः । ' गुल्मारुक्स्तंबसेनाश्च ' इत्यमरः ॥ ३० ॥ **वि०** सहस्रंवाजिनः अने... कानश्वान् ॥ ३४ ॥ **वि०** हेमजालैरविच्छिन्नाः सर्वतोभूषिताइतिशिबिकाविशेषणं ॥ ३५ ॥ **ति०** दारुनिर्मिताःक्रीडापर्वताः दारु... पर्वतकानि । क्लीबलमार्षं ॥ ३६ ॥ **शि०** भूतपतेःब्रह्मणः ॥ **ति०** निधिजालंनिधिजालवदित्यर्थः । धीरनिष्ठितकर्माङ्गं धीरैः निश्च... यस्थिरचित्तैःनिष्ठितंनिर्वर्तितंकर्मणः निधिरक्षादिकर्मणःअङ्गंमहिषादिबलिरूपंयस्मिन् । कश्चित्तुकर्मान्तमितिपठित्वा । धीरैः निष्ठि... तस्यअनुष्ठितस्यकर्मणःतपोरूपस्यअन्तंफलरूपं इत्यर्थमाह । भूतपतेःमहेश्वरस्ययक्षेश्वरस्यवा ॥ ३८ ॥ इतिषष्ठःसर्गः ॥ ६ ॥

[... पा० ] १ ग. हनुमान्गुल्मान्राक्षसानांपतेर्गृहे. २ ङ. प्रहरणोदितान्. ३ क. ग.—ट. न्सितांश्चापि. ४ ग. हरीनश्वान्. घ. ... हारितांश्च. ५ ङ. झ. ट. शिक्षितान्. ६ ज. न्संगरे. ७ क. ग. च. छ. ज. ञ. वाजिनस्तत्रजांबूनदपरिष्कृतान्. ८ घ. ङ. झ. ... हेमजालैरविच्छिन्नाः. ट. हेमजालैःपरिच्छिन्नाः. ९ ग. च. छ. ज. स्तरुणादित्यवर्चसः. १० क. ग. घ. चन्द्रशाला. ११ ... ङ.—ट. पर्वतकानिच. क. ग. घ. पर्वतकान्यपि. १२ ख. ङ. झ. कामस्यचगृहं. १३ च. छ. ज. दिव्यं. १४ क. ग. ङ. ... ज. ञ. ट. मन्दरतलप्रख्यं. झ. मन्दरसमप्रख्यं. १५ क.—ट. अनन्तरत्ननिचयं. १६ ग. जालनिरन्तरं. ख. जालसमावृतं. १७ ... ङ. झ. ञ. ट. कर्माङ्गं. १८ ङ.—ट. विरराजच. १९ क.—ट. शुभ्राणि. २० क. ग. मनोहरं. २१ च. छ. ज. नादेन. ... झ. ञ. ट. निस्वनेनच. २२ ग. तालघोषैश्च. ङ. च. छ. झ. ञ. ट. तलनिर्घोषैः. २३ क. निनादितं.

प्रासादसंघातयुतं स्त्रीरत्नशतसंकुलम् ॥ सुव्यूढकक्ष्यं हनुमान्प्रविवेश महागृहम् ॥ ४३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ॥ ७ ॥

ग्रन्थकृतारावणभवनतद्गतपुष्पकविमानयोर्वर्णनं ॥ १ ॥

स वेश्मजालं बलवान्ददर्श व्यासक्तवैडूर्यसुवर्णजालम् ॥
यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम् ॥ १ ॥
निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः ॥
मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २ ॥
गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ॥
सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥
तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि ॥
महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥ ४ ॥
ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम् ॥
रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥

समयसंभवो ध्वनिः ॥ ४२ ॥ व्यूढकक्ष्यं विशालप्रकोष्ठं ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

स वेश्मजालमित्यादि ॥ व्यासक्तवैडूर्यसुवर्णजालं वैडूर्यघटितसुवर्णमयजालकरन्ध्रं ॥ १ ॥ निवेशनानां शालाः । गृहान्तःशालाः । प्रधानैर्मुख्यैः शङ्खायुधचापैः शालन्ते प्रकाशन्त इति प्रधानशङ्खायुधचापशालाः । पचाद्यच् । वेश्मादिषु हर्म्यप्रासादादिषु । चन्द्रशालाः शिरोगृहाणि ॥ २ ॥ नानावसुराजितानि नानारत्नराजितानि ॥ ३ ॥ प्रयत्नाभिसमाहितानि प्रयत्नेन यथायोगं स्थापितानि । मयेनेति विश्वकर्मा लक्ष्यते महीतले निर्मितानि । इवशब्देन मयस्य निर्मातृत्वव्याजमात्रं । रावणप्रयत्नेनैव निर्मितानीत्यर्थः । अन्यानि गृहाणि विश्वकर्मनिर्मितानि । इमानि मयं व्याजीकृत्य स्वयमुपायप्रदर्शनमुखेन निर्मितानि । पूर्वगृहेभ्यो विशेष उच्यते ॥ ४ ॥ तदन्तर्वर्तिपुष्पकविमानं दर्शयति—तत इति ॥ अप्रतिरूपरूपं असमसौन्दर्यं । प्रकीर्णं दैवाच्च्युतं । रजसा पुष्परजसा

रामानु० नानाविधानिकर्माणियासांताःनानाविधकर्माणःशालाश्चनानाविधकर्मशालाः । कक्ष्याश्चनानाविधकर्मशालाः पाठः । निवेशनानांविविधाश्चशालाइतिपाठेप्रधानभवनानांसंबन्धिनीःविविधाःशालाइत्यर्थः । प्रधानशङ्खायुधचापशालाः प्रधानैर्मुख्यैःशङ्खैरायुधैश्चापैश्चशालन्तइतिप्रधानशङ्खायुधचापशालाःताः । पचाद्यच् । वेश्मान्यद्रयइववेश्माद्रयस्तेषु । वेश्मादिष्विति पाठे आदिशब्देनप्रासादादयउच्यन्ते । चन्द्रशालाःशिरोगृहाणि । 'चन्द्रशालाशिरोगृहं' इत्यमरः ॥ ति० चन्द्रशालाः चन्द्रकान्तैर्निबद्धशालावा ॥ २ ॥ ति० वसु धनं । स्वबलेत्यत्रस्वशब्दोरावणवाची । कुबेराद्रावणेनलङ्कायाआच्छिद्यगृहीतलात् । स्वशब्दोहनुमद्वाची । स्वबलेनार्जितानिलब्धप्रवेशानि ॥ ३ ॥ ति० विश्वकर्मकृतान्यपिमाययाविचित्ररचनादक्षेणमयेननिर्मितानीव ॥ स० प्रयत्नाभिसमाहितानि प्रयत्नेन विश्वकर्मणइतिशेषः ॥ ४ ॥ रामानु० वैश्रवणंनिर्जित्यगृहीतंपुष्पकंवर्ण्यतेततइत्यादिना । ततः गृहदर्शनानन्तरं । आत्मबलानुरूपं आत्मनोप्रतिबलस्यसदृशं । गृहोत्तममितिपुष्पकमुच्यते । पुष्पकस्यापिगृहलक्षणसद्भावात् । एतच्चपुष्पाह्वयमित्यनेनव्यक्तीभविष्यति । रजसा पुष्परजसा ॥ तटिद्भिरिवस्थितैर्नारीप्रवेकैःअंभोदवद्दीप्यमानमिस्थितमितिसंबन्धः । वाह्यमानं उह्यमानं । आर्षःस्वार्थेणिच् । अतएवसंप्रसारणाभावः । यद्वाहंसप्रवेकैर्वाह्यमानं स्वामिनेतिशेषः यथेति । युक्तीकृतमेघचित्रं समूहीकृतनानावर्णमेघचित्रमित्यर्थः ॥ ति० नानावर्णैरयुक्तोपितद्युक्तःकृतो युक्तीकृतः । सचासौच

[ पा० ] १ घ.प्रासादशतसंबाधं. २ क.गृहोत्तमं. ३ ग.च.छ.प्रयत्नेनसमाहितानि. ४ घ.ददर्शाद्भुतमेघ. ५ घ.गुणानुरू

महीतले स्वर्ग[1]मिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम् ॥
नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम् ॥ ६ ॥
नारीप्रवेकै[2]रिव दीप्यमानं तडिद्भिरम्भोदवद[3]र्च्यमानम् ॥
हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतां[4] विमानम् ॥ ७ ॥
यथा नगाग्रं बहु[5]धातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् ॥
ददर्श युक्ती[6]कृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम् ॥ ८ ॥
मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्ष[7]वितानपूर्णाः ॥
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम्[8] ॥ ९ ॥
कृतानि वेश्मानि च पाण्डुराणि तथा सुपुष्पा[9]ण्यपि पुष्कराणि ॥
पुनश्च पद्मानि सकेसराणि धन्यानि[10] चित्राणि तथा वनानि ॥ १० ॥
पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विवर्ध[11]मानम् ॥
वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥ ११ ॥
कृताश्च वैडूर्यमया विहङ्गा रूप्यप्रवालैश्च तथा विहङ्गाः ॥
चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२ ॥
प्रवालजाम्बू[12]नदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः ॥
कामस्य साक्षादिव भान्ति पक्षाः कृता विहङ्गाः सुमुखाः सुपक्षाः ॥ १३ ॥
निर्युज्य[13]मानास्तु गजाः सुहस्ताः सकेसराश्चोत्पलपत्रहस्ताः ॥
बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४ ॥

...रीप्रवेकैः नारीश्रेष्ठैः ।"प्रवेकानुत्तमोत्तमा" इत्यमरः । ...वशब्दो वाक्यालंकारे । अर्च्यमानं सर्वैरिति शेषः । ...सप्रवेकैर्वाह्यमानं सुकृतां पुण्यकृतां विमानमिव ...स्थितमित्यन्वयः । युक्तीकृतमेघचित्रं पुञ्जीकृतमेघचित्रं ...चित्रमेघसङ्घातसदृशमित्यर्थः । विमानरत्नं पुष्पकं ॥ ५—८ ॥ महीति ॥ यत्रेति शेषः । यत्र विमाने । पर्व...राजिपूर्णामही कृता चित्ररूपेण लिखिता । एवमुत्त...त्रापि बोध्यं । अत्र पूर्वपूर्वं प्रत्युत्तरोत्तरस्य विशेषण...त्वादधिकालङ्कारः ॥ ९ ॥ कृतानीति ॥ अत्रापि ...त्रेत्यध्याहार्यं । पुष्कराणि पुष्करिण्यः ॥ १० ॥ पुष्पाह्वयं पुष्पकं । उच्चमानं अधिकमानं । सर्वत्र ददर्शेत्यन्वयः ॥ ११ ॥ यत्रेति शेषः । नानावसुभिः नानारत्नैः । जात्यानुरूपाः जात्या सदृशाः । स्पष्टजातिस्वभावा इत्यर्थः ॥ १२ ॥ प्रवालजाम्बूनदकृतानि पुष्पाणि पक्षेषु येषां ते प्रवालजाम्बूनदपुष्पपक्षाः । सलीलमावर्जितजिह्मपक्षाः सलीलमालम्बितवक्रपक्षाः । कामस्य पक्षा इव कामस्य सहाया इव ॥ १३ ॥ नियुज्यमानाः स्वयमेवात्मानं नियोजयन्तः । कर्मकर्तरि यक् । यत्र विमाने । पद्मिनि पद्माकरे । स्वयमेवोत्पलपत्राभिषेककर्मणि प्रवर्तमानाः । सुहस्ताः

...मेघश्चतद्वद्विचित्रं ॥ ५—८ ॥ ति० यत्रपुष्पके मही अनेकजनानामाधारस्थानं पर्वतराज्यापूर्णं । पर्वतादयश्चात्रमणिस्वर्णा...निर्मिताः । नत्विदंचित्ररूपमितिभ्रमितव्यं । अनन्तवानरसेनायानिर्बाधंतत्रावस्थानस्यवक्ष्यमाणत्वात् । किंचस्वामीच्छानुसारेण ...कोचविकासौतस्यवक्ष्यतिस्वेच्छयाहनुमद्देहवत् । वितानंसमूहः । एकावल्यत्रालङ्कारः ॥ ९ ॥ रामानु० महीत्यादि । यत्रेति शेषः। ददर्शेत्यनुषज्यते । महीकृतेत्यारभ्यपद्मिनिपद्महस्तेत्यन्तमेकंवाक्यं । यत्रमह्यादयोलक्ष्म्यन्ताःपदार्थाःकृताःतत्पुष्पाह्वयंनाम

[ पा० ] १ च. छ. ज. स्वर्गमिवावतीर्णं. २ घ. प्रवेकैरभि. ३ ङ. झ. ञ. ट. रंभोधरमर्च्यमानं. ४ ग. ङ. छ.—ञ. सुकृतं. ५ क. बहुधाविचित्रं. ६ ङ—झ. ञ. ट. युक्तीकृतचारुमेघचित्रंविमानंबहु. ७ ग. वृक्षसमूहपूर्णाः. ८ ग. केसरजालपूर्णं. घ. केसररत्नपूर्णं. ९ क.—ट. सुपुष्पाअपिपुष्करिण्यः. १० ङ. झ. ञ. ट. वनानिचित्राणिसरोवराणि. च. छ. ज. वनानिचारूणितथापराणि. ग. वनानिचित्राणितथापराणि.. ११ ङ. झ. ञ. ट. विघूर्णमानं. १२ घ. जांबुनदजातपक्षाः. १३ क. ख. ग. ङ.—ट. नियुज्यमानाश्च.

इतीव तद्गृहमभिगम्य शोभनं सविस्मयो नगमिव चारुशोभनम् ॥
पुनश्च तत्परमसुगन्धि सुन्दरं हिमात्यये नगमिव चारुकन्दरम् ॥ १५ ॥
ततः स तां कपिरभिपत्य पूजितां चरन्पुरीं दशमुखबाहुपालिताम् ॥
अदृश्य तां जनकसुतां सुपूजितां सुदुःखितः पतिगुणवेगनिर्जिताम् ॥ १६ ॥
ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः ॥
अपश्यतोऽभवदतिदुःखितं मनः सुचक्षुषः प्रविचरतो महात्मनः ॥ १७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

शोभनशुण्डादण्डाः । सकेसराः कृतजलावगाहत्वेनालग्नकिञ्जल्काः । उत्पलपत्रहस्ताः उत्पलपत्रवर्षिणः । गजाश्च कृताः तदभिषिच्यमाना पद्महस्ता अतएव सुहस्ता लक्ष्मीश्च कृता बभूवेत्यर्थः ॥ १४ ॥ इवशब्दो वाक्यालंकारे । तद्गृहं तस्य रावणस्य गृहं । सविस्मयः अभूदिति शेषः । नगं पर्वतमिव स्थितं । शोभनं शोभमानं । चारुशोभनं चारुमङ्गलं । इतीवेत्येकनिपातो वा प्रकारार्थः । इतीव तद्गृहं अभिगम्य अभिगत्य । अद्भुतदर्शनात्पुनश्चाभिगम्य सविस्मयोभूदिति योजना । रुचिरावृत्तमिदं । "चतुर्ग्रहैरिह रुचिरा जभस्जगाः" इति लक्षणात् ॥१५॥ अदृश्य अदृष्ट्वा । ऋषिनिपातनान्नञ्पूर्वेपि ल्यप् । सुदुःखितः अभूदिति शेषः । पतिगुणवेगनिर्जितां भर्तृगुणजवेन वशीकृतां ॥ १६ ॥ बहुविधभावितात्मनः बहुविधं यथा भवति तथा चिन्तितात्मनः । कृतात्मनः निशितबुद्धेः । सुवर्त्मनः सदाचारसंपन्नस्य । सुचक्षुषः दूरसूक्ष्मादिदर्शनेषु अप्रतिहतनयनतेजसः । महात्मनः महाधैर्यस्य ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

---

महाविमानंददर्शेतिसंबन्धः । महीकृता महीनिर्मिता । एवमुत्तरत्रापिकृतशब्दार्थः । वेश्मोत्तमानामितिपञ्चम्यर्थेषष्ठी । वेश्मोत्तमेभ्योप्युच्चमानं । यद्वापूर्वंगृहोत्तमंत्वप्रतिरूपरूपमितिपुष्पकस्यगृहोत्तमत्वप्रतिपादनेनसजातीयत्वान्निर्धारणेषष्ठी । तेषांमध्येउच्चमानं उन्नतमितियावत् । अपिचेतिनिपातसमुदायोविशेषणान्तरसमुच्चयपरः । जात्यानुरूपाः आरट्टजलवनायुजत्वादिविशिष्टाश्वाकारसदृशाः । प्रवालजांबूनदमयानिपुष्पाणिपक्षेषुयेषांतेतथोक्ताः । सलीलमावर्जितजिह्मपक्षाः सलीलमानमितवक्रपक्षाः । कामस्यसाक्षात्पक्षाइव मदनस्यसाक्षात्सहायाइव कामोद्दीपकाइतियावत् । नियुज्यमानाःस्वयमेवव्याप्रियमाणाः । कर्मकर्तरियक् । सकेसराः पद्माकरविहारिगजाकारनिर्माणात्सकेसरत्वं । पद्मिनि पद्माकरे ॥ १४ ॥ स० हिमात्ययेवसन्ते । हिमशब्देनतद्युक्तमासचतुष्टयग्रहणात् ॥ १५ ॥ स० दृश्यस्वभावोदृश्यता । नविद्यतेदृश्यतायस्यास्सातथा । तामुद्दिश्यदुःखितोऽभूदितिवा । पतिगुणवेगनिर्जितां पत्युःरामस्ययोगुणवेगःगुणप्रवाहःतेननिर्जितां । पत्यारामेणकर्त्रा गुणवेगेन ज्याकर्षणवेगेन धनुर्भङ्गद्वारानिर्जितांनितरां प्राप्तां ॥ १६ ॥ रामानु० बहुविधभावितात्मनः बहुविधभावितमनसः । बहुविधचिन्तान्वितस्येतियावत् । कृतात्मनःकृतप्रयत्नस्य । 'आत्मादेहेधृतौयत्नेस्वभावपरमात्मनोः' इतिवैजयन्ती । सुवर्त्मनःशोभननीतिमार्गवर्तिनइत्यर्थः । सुचक्षुषःसकृदालोकनेनद्रष्टव्यंसर्वंकरतलामलकवत्साक्षात्कर्तुंक्षमस्य ॥ ति० बहुविधभावितात्मनः नानाप्रकारेणसर्वजगत्पूजितस्वभावस्य । स्वभाववाच्यात्मशब्दः । कृतात्मनःशिक्षितान्तःकरणस्य । सचक्षुषः श्रुतिस्मृतिन्यायरूपचक्षुस्सहितस्य ॥ स० बहुविधभावितात्मनः बहुप्रकारंध्यातरामरूपस्वामिकस्य ॥ १७ ॥ इतिसप्तमःसर्गः ॥ ७ ॥

[ पा० ] १ ग. मुपगम्य. २ ङ. झ. ञ. ट. चारुकन्दरं. ३ ग. ततस्तां. ४ च. छ. ज. सूर्जितां. ५ क. घ.—ज. ट. बाहुनिर्जितां. ६ घ.—ट. सुदुःखितां. ७ ख. ङ. झ. ञ. ट. सचक्षुषः.

## अष्टमः सर्गः ॥ ८ ॥

ग्रन्थकृताविस्तारेणपुनः पुष्पकविमानवर्णनं ॥ १ ॥

स तस्य मध्ये भवनस्य [1]संस्थितं महद्विमानं [2]मणिवज्रचित्रितम् ॥
प्रतप्तजाम्बूनद[3]जालकृत्रिमं ददर्श वीरः[4] पवनात्मजः कपिः ॥ १ ॥

[5]तदप्रमेयाप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा ॥
दिवं [6]गतं वायुपथप्रतिष्ठितं व्यराजतादित्यपथस्य [7]लक्ष्मवत् ॥ २ ॥

न तत्र किंचिन्न कृतं प्रयत्नतो न तत्र किंचिन्न [8]महार्हरत्नवत् ॥
न ते विशेषा नियताः सुरेष्वपि न तत्र किंचिन्न महाविशेषवत् ॥ ३ ॥

तपःसमाधानपराक्रमार्जितं मनःसमाधानविचार[9]चारिणम् ॥
अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषदर्शनम् ॥ ४ ॥

मनस्समाधाय तु शीघ्रगामिनं [10]दुरावरं मारुततुल्यगामिनम् ॥
महात्मनां पुण्यकृतां [11]महर्द्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥

---

पूर्वोक्तविमानवर्णनं विस्तृणीते—स तस्येत्यादि ॥ प्रतप्तजाम्बूनदजालकृत्रिमं निष्टप्तस्वर्णविशेषकृतकृत्रिमपक्ष्यादिकं ॥ १ ॥ अप्रतिमेयाप्रतिकारकृत्रिमं अपरिच्छेद्याप्रतिक्रियकृत्रिमं । तत्र हेतुमाह—कृतमिति ॥ स्वयं निर्मात्रा विश्वकर्मणा इदं साधु सुन्दरमिति श्लाघापूर्वं कृतं। सर्वत्राप्रतिहतसंचारं चैतदित्याह—दिवं गतं आकाशगतं । वायुपथप्रतिष्ठितं वायुमार्गभूतान्तरिक्षस्थितं । मध्ये भवनस्य संस्थितमिति पूर्वमुक्तत्वात् भूतलप्रत्यासन्नान्तरिक्षस्थितमित्यर्थः । आदित्यपथस्य लक्ष्मवत् । लक्ष्म लक्षणं व्यावर्तकं व्यराजत चचकाश इत्यर्थः ॥ २ ॥ ते विशेषाः तद्विमानस्थितविशेषाः । सुरेष्वपि सुरालयेष्वपि ॥ ३ ॥ तपस्समाधानेत्यादि पञ्चश्लोकी कुलकं ॥ सर्वत्र ददर्शेति संबन्धः । तपस्समाधानपराक्रमार्जितं तपस्समाधानेन तपोनुष्ठानेन पराक्रमेण च अर्जितं । मनस्समाधानविचारचारिणं समाधानमभिसंधानं । कर्मणि चैतत् । विचारो विविधा गतिः । मनोभिसंहितविविधगतिचारिणं । अनेकसंस्थानविशेषनिर्मितं अनेकैस्संस्थानविशेषैः विमानगोपुरादिसन्निवेशैः निर्मितं । ततस्ततस्तुल्यविशेषदर्शनं तत्र तत्र तुल्यं विशेषदर्शनं यस्मिन् ॥४॥ मनस्समाधाय मन एकाग्रीकृत्य। स्वयं मनस्वीति यावत् । दुरावरं दुर्वारं महर्द्धिनां महर्द्धीनां । "अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्" इत्युक्तरीत्या वृत्तभङ्गभिया ह्रस्वोच्चारणं । अग्र्यमुदां इन्द्रादीनां

---

ति० मणिरत्नैः मणिश्रेष्ठैःचित्रितं । प्रतप्तजांबूनदजालानां तन्मयगवाक्षाणांकृत्रिमंकृतिःयस्मिंस्तत् ॥ १ ॥ ति० अप्रमेयप्रतिकारकृत्रिमं अप्रमेयैः अपरिच्छेद्यसौन्दर्यादिभिः प्रतिकारैःप्रतिमादिभिःकृत्रिमंनिर्वृत्तचित्रशोभं । पाठान्तरंत्वसांप्रदायिकमिति कतकः ॥ २ ॥ ती० तुल्यविशेषदर्शनं तुल्यानांरमणीयत्वेनसदृशानांविशेषाणांदर्शनंयस्मिंस्तत् । सर्वतोरमणीयमित्यर्थः ॥ स० मनस्समाधानविचारचारिणं । अन्तरुपविष्टानांमनस्समाधानंयथाभवतितथा विचारवत् पक्षिसंचारवत्चरतीतितथातं ॥ शि० तपस्समाधानाभ्यांकृच्छ्रचान्द्रायणादिदेवविशेषध्यानाभ्यांजातेनपराक्रमेणआर्जितं रावणेनप्राप्तं ॥ ४ ॥ ति० मनस्समाधाय स्वामिनोनुरुध्य तु शीघ्रगामित्वादिधर्मकं । दुरासदंपापिभिरितिशेषः । दुरावरमितिपाठे शत्रुभिर्दुर्निवारमित्यर्थः । महर्द्धिनां दीर्घाभावश्छान्दसः । एवंतुल्यगामिनमित्यत्रपुंस्त्वं । विमानशब्दोर्धर्चादिर्वा । अग्र्यमुदांमहासुखानांपुण्यकृतामेवआलयंआस्पदं ।

[ पा० ] १ क. ग. घ. ङ. झ. ञ. ट. संस्थितो. २ क. घ.—ट. मणिरत्नचित्रितं. ३ क. जालसन्ततं. ४ ङ. झ. ज. ट. श्रीमान्पवनात्मजः. ५ ग. ङ. झ. ञ. ट. तदप्रमेयप्रतिकार. ६ ङ. झ. ञ. ट. गतेवायुपथे. ७ ङ. झ. ट. लक्ष्मतत्. ८ ङ. ञ. महार्घरत्नवत्. ९ क. विशेषचारिणं. ङ. झ. ञ. ट. विशेषनिर्मितं. १० ङ. झ.—ञ. ट. दुरासदं. ११ च.—छ. महर्षिणामुदारमग्र्यंमरुतामिवालयं घ. मनस्विनां. ज. महर्षिणां.

विशेषमालम्ब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमण्डितम् ॥
मनोभिरामं शरदिन्दुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा ॥ ६ ॥
वहन्ति [1]यं कुण्डलशोभितानना महाशना व्योमचरा निशाचराः ॥
विवृत्तविध्वस्तविशाललोचना महाजवा भूतगणाः सहस्रशः ॥ ७ ॥
[2]वसन्तपुष्पोत्करचारुदर्शनं वसन्तमासादपि [3]कान्तदर्शनम् ॥
[4]स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीरसत्तमः ॥ ८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ॥ ९ ॥

सीतान्वेषणाय रावणगृहस्थाल्पद्भुतपुष्पकविमानमारूढवताहनुमता तत्रप्रसुप्तनानावस्थापन्ननानाजातीयनारीनिकराव-लोकनं ॥ १ ॥

तस्यालयवरिष्ठस्य मध्ये वि[5]पुलमायतम् ॥ ददर्श [6]भवनश्रेष्ठं हनुमान्मारुतात्मजः ॥ १ ॥
अर्धयोजनविस्तीर्णमायतं [7]योजनं हि तत् ॥ भवनं राक्षसेन्द्रस्य बहुप्रासादसंकुलम् ॥ २ ॥
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ॥ सर्वतः परिचक्राम हनुमानरिसूदनः ॥ ३ ॥

॥ ५ ॥ विशेषमालम्ब्य विशेषसंस्थितं विशेषं गृहीत्वा विशेषेण संस्थितं । सविशेषविशेषणसंस्थितमिति यावत् । सविशेषसंस्थानविशेषविशिष्टमित्यर्थः । कूटानां विचित्रत्वबहुत्वे विशेषणद्वयेन दर्शयति—विचित्रेत्यादिना । विचित्रकूटं शिखरं गिरेर्यथा । कूटं अवान्तरशृङ्गं । शिखरं महाशृङ्गमिति प्रयोगादवधार्यते ॥ ६ ॥ यं यत् । आर्षो व्यत्ययः । महाशनाः । महाकाया इत्यर्थः । व्योमचाराः व्योमचरसदृशसंस्थानाः । विवृत्तविध्वस्तविशाललोचनाः विवृत्तानि वर्तुलानि विध्वस्तानि भुग्नानि विशालानि लोचनानि येषां ते तथा । महाजवाः महाजवा इव स्थिताः । भूतगणाः गोपुरवाहका इव प्रतिमारूपेण स्थिताः । अन्यथा रावणान्तःपुरे पुरुषसञ्चारायोगात् कामगस्य विमानस्य वहनासंभवाच्च । यद्वा शिबिकावाहका इव भूतगणा अधोभागे वहन्ति । तद्द्वारैव कामगत्वमपि । चेतनप्रेरणं विना अचेतनसंचारस्यात्यन्तमनुचितत्वा[च्च] ॥ ७ ॥ उत्करः समूहः ॥ ८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्या[ने] सुन्दरकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥

तस्येत्यादि ॥ आलयवरिष्ठस्य पुष्पकस्य ॥ १ ॥ तद्भवनं कियत्प्रमाणमित्यत्राह—अर्धयोजनेति ॥ २ ॥ सर्वतः पुष्पकादन्यत्र सर्वत्र । पुष्पकारोहणस्य पश्चा[द्]

इवशब्दएवार्थे । अत्रतस्याचेतनत्वेपितदभिमानिदेवतायाश्चितत्वादितिबोध्यं ॥ ५ ॥ रामानु० वहन्तीत्यनेनश्लोकेनविमान[स्य]राक्षसवाह्यत्वंप्रतीयते । कामगस्यदिव्यस्यतन्नोपपद्यते । एतद्विरोधपरिहारार्थंवहतेर्धातोःरक्षणार्थत्वस्वीकारोपिनोपपद्यते । अन्तःपुरमध्येविमानरक्षणार्थराक्षसावस्थानायोगात् । अतोत्रसमाधानंविद्वद्भिश्चिन्त्यं ॥ ती० वहन्ति वहन्तीव इवशब्दोत्राध्याहार्यः तथाचविमानेनिर्मिताःनिशाचराकाराःप्रतिमाःवहन्तीवेत्यर्थः । अन्यथाकामगमस्यान्तःपुरेविद्यमानस्यराक्षसवहनरक्षणयोरयोगात् स० विवृत्तविध्वस्तविशाललोचनाः वि विरुद्धं स्वामिविरुद्धं वृत्तं चरित्रं विध्वस्तं येषां ते तथा । तेचतेविशाललोचनाश्चेतितथा ॥ ७ ॥ इत्यष्टमःसर्गः ॥ ८ ॥

रामानु० 'तस्यालयवरिष्ठस्य' 'सतस्यमध्येभवनस्यसंस्थितं' इतिपुष्पकाधारत्वेनप्रकृतस्यगृहश्रेष्ठस्य । भवनश्रेष्ठं पुष्पकाख्यं ॥ १ ॥ रामानु० सर्वतःपरिचक्राम रावणभवनपर्यन्तवर्तितद्भ्रातृकुमारामात्यादिभवनेषुपरितश्चचारेत्यर्थः । उत्तरश्लोके

[ पा० ] १ च. झ. ञ. यत्कुण्डल. २ च. छ. ज. प्रतप्तचामीकरचारु. क. वसन्तपुष्पोद्गम. ३ ङ. झ. ञ. ट. चारुदर्शनं. ४ च. छ. ज. सुपुष्पकं. ५ च. छ. ज. ञ. विपुलमास्थितं. ङ. झ. ट. विमलमायतं. ६ च. ज. भवनं. ७ क. ग. ङ.—ट. योजनंमहत्.

उत्तमं राक्षसावासं हनुमानवलोकयन् ॥ आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥ ४ ॥
चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च ॥ परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५ ॥
राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् ॥ आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥ ६ ॥
तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् ॥ वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७ ॥
या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने ॥ सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥ ८ ॥
या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ॥ तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ९ ॥
तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् ॥ बहुनिर्यूहसंकीर्णं ददर्श पवनात्मजः ॥ १० ॥
ब्रह्मणोर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा ॥ विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥
परेण तपसा लेभे यत्कुबेरः पितामहात् ॥ ११ ॥
कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ १२ ॥
ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः ॥ सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १३ ॥

---

क्ष्यमाणत्वात् ॥ ३ ॥ राक्षसेन्द्रनिवेशनं पुष्पकमध्यस्थालयादन्यन्मूलस्थानं । राक्षसीभिरित्यादिश्लोकद्वये आससादेति संबध्यते । रावणस्य निवेशनमिति पुनरुपादानमपूर्वविशेषणविवक्षया । नक्रः कुम्भीरः । तिमिङ्गिलः महामत्स्यः । झषः केवलमत्स्यः ॥४—९॥ तस्य हर्म्यस्येत्यादि ॥ पूर्वमुक्तार्थस्यापि पुनरुपन्यासः पुष्पकस्य मध्ये रावणस्य निवासभवनमन्यदस्तीत्यस्यार्थस्य स्पष्टीभावार्थम् । निर्यूहः मत्तवारणः ॥ १० ॥ [ब्रह्म]णोर्थे कृतं यत्कुबेरस्तपसा लेभे तद्वेश्म ददर्शेति [...]ग संबन्धः ॥ ११ ॥ कुबेरमित्यादि ॥ ईहामृगसमायुक्तैः वृकप्रतिकृतियुक्तैः कार्तस्वरहिरण्मयैः कार्तस्वरं सुवर्णं । हिरण्यं रजतं । "कृताकृतं हेम रूप्यं हिरण्यमभिधीयते" इति रजतस्यापि हिरण्यत्वाभिधानात् । जालवातायनैः जालानि तिर्यगूर्ध्वविन्यस्तफलकघटितानि । वातायनानि केवलानि रन्ध्राणि । अर्थवैशद्यार्थमेकार्थे शब्दद्वयप्रयोगो वा । महानीलाः सिंहलद्वीपोद्भवनीलरत्नानि । महाधनैः महामूल्यैः । निस्तुलाभिः सुवृत्ताभिः । तलेन निर्मितेनेति शेषः । आदित्यतरुणोपमं तरुणादित्योपमं । एतदन्ते लेभे तद्राक्षसेश्वर इति संबध्यते । अन्यथा कूटागारै-

---

[...]णगृहप्राप्तेरभिधानात् ॥ ३ ॥ **ती०** रावणस्यनिवेशनं निवेश्यन्तेपरिगृह्यन्तेपत्न्योत्रेतिनिवेशनं । रावणस्थानमित्यर्थः ॥ ६ ॥ [**रा**]**मानु०** हनुमताप्राप्तरावणभवनस्यराक्षसभवनानांचसर्वोत्तरतांदर्शयितुंतत्समृद्धिमनुसंधत्ते—याहिवैश्रवणइत्यादिश्लोकद्वयेन । [...]वणेन्द्रयोर्ग्रहणमितरदिक्पालानामप्युपलक्षणं । 'रावणस्यगृहेसर्वा नित्यमेवानपायिनी' इत्यभिधानात् सर्वदिक्पालानामैश्वर्यमे[...]त्रावणभवनेसर्वदावर्ततइत्यवगम्यते ॥ **स०** हरिवाहने 'त्वक्केशवालरोमाणिसुवर्णाभानियस्यतु । हरिःसवर्णतोश्वस्तुपीत[...]यसप्रभ'इतिशालिहोत्रोक्तलक्षणोपेतोयोश्वःसहरिरित्युच्यते । सवाहनंयस्यतस्मिन् । यद्वाहरिवाहनेसूर्ये । 'हरिवाहनइत्युक्तिः [...]पतिविवस्वतोः' इतिविश्वः । अनपायिनी अविश्लेषा ॥ ८ ॥ **रामानु०** तद्विशिष्टा ततोप्यधिका । रक्षोगृहेषुरावणभ्रातृपु[...]त्यादिराक्षसगृहेषु । अत्रऋद्धेःसर्वशब्देनाविशेषितत्वात्कुबेराद्येकैकदिक्पालैश्वर्यंरक्षसांगृहेषुप्रत्येकंवर्ततइत्यर्थः ॥ ९ ॥ **ति०** [...] सन्नीकशयनगृहमितिकतकः । वेश्म पुष्पकाख्यमितितीर्थः । अत्रतीर्थव्याख्याज्यायसी ॥ १० ॥ **रामानु०** कुबेरमित्यार[भ्य ...]र्वतस्समलङ्कृतमित्यन्तमेकंवाक्यं । अतोवक्ष्यमाणेनकूटागारशब्देननपौनरुक्त्यं । ईहामृगसमायुक्तैः कृत्रिमवृकयुक्तैः । कार्त[स्वर]हिरण्मयैः सुवर्णरजतमयैः । 'कृताकृतंहेमरूप्यंहिरण्यमभिधीयते' इतिरजतस्यापिहिरण्यत्वाभिधानात् । ज्वलनार्कप्रती[...]मित्यारभ्य आरुरोहमहाकपिरित्यन्तमेकंवाक्यं । जालवातायनैर्युक्तं कुड्योपरिभागेऽलङ्कारार्थंस्वस्तिकसर्वतोभद्राद्याकारेणय[...]तयाकृतंजालं । वायुसंचारार्थंकृतोगवाक्षोवातायनं । इन्द्रनीलमहानीलेति । "क्षीरमध्येक्षिपेन्नीलंक्षीरंचेन्नीलतांव्रजेत् । इन्द्र[नील]मितिख्यातमितिचागस्त्यभाषितम्' इतिरत्नशास्त्रोक्तलक्षणमिन्द्रनीलं । 'सिंहलाकारसंभूतामहानीलाइतिस्मृताः' इत्युक्ता [महा]नीलाइतितयोर्भेदः । विद्रुमेणमहाधनैर्मणिभिःनिस्तुलाभिर्मुक्ताभिश्चकरणैःविचित्रेणतलेनाभिविराजितमितिसंबन्धः । आदि-

**[ पा० ]** १ च. छ. ज. राक्षसेन्द्रस्यह्यावासमवलोकयन्. २ ग. तिमिमीनसमाकुलं. ३ ङ. ञ. समाधूतैः. ४ क. याच. [...] ङ.—ट. रम्यानित्यं. क. लक्ष्मीर्नित्यं. ६ ग. लक्ष्मीरक्षोगृहेष्विह. ट. लक्ष्मीरक्षोगृहेष्वपि. ७ ङ. झ. ञ. ट. संयुक्तं. [...] ङ. च. छ. ज. विधिवद्विश्व. ९ घ. श्रेष्ठंरत्न. १० क. वरेण. ११ क. ख. स्वरविभूषितैः. १२ ट. सुकृतंराजतस्तंभैः. क. [...] घ. च. ञ. सुकृतैराजतस्तंभैः.

मेरुमन्दरसंकाशैरुल्लिखद्भिरिवाम्बरम् ॥ कूटागारैः [1]शुभाकारैः सर्वतः समलंकृतम् ॥ १४ ॥
ज्वलनार्कप्रतीकाशं सुकृतं विश्वकर्मणा ॥ हेमसोपानसंयुक्तं चारुप्रवरवेदिकम् ॥ १५ ॥
जालवातायनै[2]र्युक्तं काञ्चनैः स्फाटिकैरपि ॥ इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥
विद्रुमेण विचित्रेण मणिभिश्च महाधनैः ॥ [3]निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥ १७ ॥
चन्दनेन च रक्तेन तपनीयनिभेन च ॥ सुपुण्यगन्धिना [4]युक्तमादित्यतरुणोपमम् ॥ १८ ॥
[5]कूटागारैर्वराकारैर्विविधैः समलंकृतम् ॥ विमानं पुष्पकं दिव्यमारुरोह महाकपिः ॥ १९ ॥
तत्रस्थः [6]स तदा गन्धं पानभक्ष्यान्नसंभवम् ॥ दिव्यं संमूर्च्छितं जिघ्रद्रूपवन्तमिवानिलम् ॥ २० ॥
स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ॥ इत एहीत्युवाचेव तत्र यत्र स रावणः ॥ २१ ॥
[7]ततस्तां प्रस्थितः शालां ददर्श महतीं [8]शुभाम् ॥ रावणस्य मनःकान्तां कान्तामिव वरस्त्रियम् ॥२२॥
मणिसोपानवि[9]कृतां हेमजालवि[10]भूषिताम् ॥ स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् ॥ २३ ॥
[11]मुक्ताभिश्च प्रवालैश्च रूप्यचामीकरैरपि ॥ विभूषितां मणिस्तम्भैः [12]सुबहुस्तम्भभूषिताम् ॥ २४ ॥
समैर्ऋजुभिरत्युच्चैः समन्तात्सुविभूषितैः ॥ स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव ॥ २५ ॥
महत्या [13]कुथयाऽऽस्तीर्णां पृथिवीलक्षणाङ्कया ॥ पृथिवीमिव विस्तीर्णां [14]सराष्ट्रगृहमालिनीम् ॥ २६ ॥
नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ॥ पराध्यास्तरणोपेतां [15]रक्षोधिपनिषेविताम् ॥ २७ ॥
धूम्रामगरुधूपेन विमलां हंसपाण्डुराम् ॥ चित्रां [16]पुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥ २८ ॥
[17]मनःसंह्लादजननीं वर्णस्यापि प्रसाधिनीम् ॥ तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव ॥२९॥
इन्द्रियाणीन्द्रियार्थैस्तु पञ्च पञ्चभिरुत्तमैः ॥ तर्पयामास मातेव तदा रावण[18]पालिता ॥ ३० ॥

---

रित्यनेन पुनरुक्तिः स्यात् ॥ १२—१९ ॥ जिघ्रत् अजिघ्रत् ॥ २०—२१ ॥ दन्तान्तरितरूपिकां दन्तैः व्यवहितरूपिकां । अन्तरान्तराकृतदन्तफलकामिति यावत् । सुबहुस्तम्भभूषितां अवान्तरबहुस्तम्भभूषितां । सुबहुस्तम्भभूषितैरिति पाठे सुबहुस्तम्भैः स्तम्भदार्ढ्यकारिपट्टैरलंकृतामित्यर्थः । अत्युच्चैः अत्यन्तोन्नतैः । दिवं आकाशं । कुथया आस्तरणेन । पृथिवीलक्षणाङ्कया सरित्समुद्रगिरिवनादिभिः पृथिवीलक्षणैर[ङ्कि]तया । कल्माषीं शबलवर्णां वसिष्ठधेनुमिव । सर्वे[ष्टप्रदत्वे]न मप्रदत्वेन कल्माषीसादृश्यं । वर्णस्यापि प्रसाधि[नीं] वर्णोत्कर्षकरीमित्यर्थः । तां शोकनाशिनीमिति ततस्तामिति वर्तमाने पुनस्तच्छब्द उपसंहारार्थः तां प्रति प्रस्थितः ददर्शेति वासंबन्धः ॥ २२—२[९] इन्द्रियाणीति ॥ हनुमत इति शेषः ॥ ३० ॥

---

त्यतरुणोपमं तरुणादित्योपमं । उपसर्जनस्यपरनिपातआर्षः ॥१२—१९॥ **ति०** यत्तु पुष्पकस्यैव साशाला । ततइत्यस्य तदन[न्तर]मित्यर्थइति तच्चिन्त्यं । प्रस्थितइतिपदास्वारस्यात् अर्धयोजनविस्तीर्णमित्यादिना मूलालयप्रदर्शनोपक्रमाच्च । मूलालयंदृष्ट्वा त[त्र]स्थंपुष्पकमन्विष्य तत्स्थएव रावणशयनगृहं तद्गृहवर्त्मनुमाय पुष्पकादवरुह्य तंप्रतिस्थितस्तांददर्शेत्येवन्याय्यमितिकतकः । य[था]त्यादिनोक्ताव्याख्यैवयुक्तेति ममभाति । ' अवतीर्यविमानाच्चहनुमान्मारुतात्मजः ' इत्यग्रे उपसंहारात् ॥ २२ ॥ **ती०** सु[बहु]स्तंभभूषितामित्यत्रबहुत्वविधानायस्तंभानुवादान्नपौनरुक्त्यं ॥ **स०** बहूनांशत्रूणांस्तंभःजडीभावःतेनविभूषितां यदाशयाप्रवृत्ता[थ]

[ **पा०** ] १ ङ. झ. ञ. ट. शुभागारैः. २ ङ. झ. युक्तंच. ३ ञ. वर्तुलाभिश्च. ४ क. ग. घ. युक्तंतरुणादित्यसंनि[भं]. ५ च. छ. ज. कूटागारैर्महागारैःसर्वतः. ६ ङ. झ. ञ. ट. सर्वतो. क. घ. सततं. ७ घ. ततःसंप्रस्थितः. ८ ङ.—ट. शि[वां]. ९ ख. सुकृतां. १० ग.—ट. विराजितां. क. समावृतां. ११ ङ.—ट. मुक्तावज्रप्रवालैश्च. १२ क. सुगन्धैःसुविभूषितां. [.] बहुस्तंभविभूषितां. घ. सुबहुस्तंभशोभितां. १३ घ. च. छ. ज. ञ. कुथयाकीर्णां. १४ झ. ट. सराष्ट्रगृहशालिनीं. ग. सुरा[ग्र]ग्राममालिनीं. १५ च. छ. ज. रक्षोधिपतिसेवितां. १६ ङ. झ. ञ. ट. पत्रपुष्पोपहारेण. १७ ङ. झ. ञ. ट. मनसोमोदजननं. १८ च. छ. ज. सेविता.

स्वर्गोयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ॥ सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥ ३१ ॥
प्रध्यायत इवापश्यत्प्रदीपांस्तत्र काञ्चनान् ॥ धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥ ३२ ॥
दीपानां च प्रकाशेन तेजसा रावणस्य च ॥ अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत ॥ ३३ ॥
ततोपश्यत्कुथासीनं नानावर्णाम्बरस्रजम् ॥ सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३४ ॥
परिवृत्तेऽर्धरात्रे तु पाननिद्रावशं गतम् ॥ क्रीडित्वोपरतं रात्रौ सुष्वाप बलवत्तदा ॥ ३५ ॥
तत्प्रसुप्तं विरुरुचे निःशब्दान्तरभूषणम् ॥ निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ ३६ ॥
तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः ॥ अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३७ ॥
प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये ॥ पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥ ३८ ॥
इमानि मुखपद्मानि नियतं मत्तषट्पदाः ॥ अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनःपुनः ॥ ३९ ॥
इति चामन्यत श्रीमानुपपत्त्या महाकपिः ॥ मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ ४० ॥
सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता ॥ शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥ ४१ ॥
स च ताभिः परिवृतः शुशुभे राक्षसाधिपः ॥ यथा ह्युडुपतिः श्रीमांस्ताराभिरभिसंवृतः ॥ ४२ ॥
याश्च्यवन्तेम्बरात्ताराः पुण्यशेषसमावृताः ॥ इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा ॥ ४३ ॥
ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ॥ प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४४ ॥

---

स्वर्गोयमिति ॥ सामान्यतः स्वर्गोयं । तत्रापि देवलोकः त्रयस्त्रिंशद्देवानां लोकः । तत्रापीन्द्रस्य पुरी अम[illegible]ती । परा सिद्धिः ब्रह्मणः स्थानमित्युत्तरोत्तरो[illegible]ः ॥ ३१ ॥ प्रध्यायत इव निश्चलतया [illegible]ष्ट्ध्यानयुक्तानिव । धूर्तान् अक्षधूर्तान् । देवनेन [illegible]न ॥ ३२ ॥ प्रदीप्ता शाला दग्धेति अभ्यमन्यत [illegible]३ ॥ कुथासीनं कुथशयितं । नानावर्णाम्बरस्रज[illegible] । हलन्तस्य स्रक्छब्दस्य भागुरिमतेन टाबन्त[illegible]जन्तत्वोपपत्तिः ॥ ३४—३५ ॥ निःशब्दान्तर[illegible]णं निःशब्दविशेषाणि भूषणानि यस्य ॥ [illegible]अथान्तरं रन्ध्रेप्यपरव्यवधानयोः । अवकाशावसरयोरवसानविनार्थयोः । विशेषमध्यतादर्थ्येषु " इति दर्पणः ॥ अतिनिद्रापरवशत्वेन निश्चलाङ्गतया निःशब्दभूषणमित्यर्थः ॥ ३६—३७ ॥ अत्र वदनानीत्यनुषज्यते । तासां वदनानि क्षपाक्षये दिवसे पद्मानीव प्रबुद्धानि भूत्वा रात्रौ पुनः संवृतपत्राणि सङ्कुचितपत्राणि पद्मानीव बभुः ॥ ३८ ॥ प्रार्थयन्ति प्रार्थयेरन् । मधुरसलुब्धतया अत्र पुनःपुनः पतेयुरित्यर्थः । व्यत्ययेन परस्मैपदं । अनुदात्तत्वेनात्मनेपदत्वात् । नियतं नूनं । उपपत्त्या युक्त्या । उपपत्तिमेवाह—मेन इति । तानि मुखानि । गुणतः सौरभादिगुणैः । सलिलोद्भवैः पद्मैः ॥ ३९—४३ ॥ प्रभा कान्तिः ।

---

[illegible]जडीभवन्तीत्यर्थः । " स्तंभौस्थूणाजडीभावौ " इत्यमरः ॥ २४ ॥ **ती०** प्रत्यायतइतिपाठेझटितिप्रकाशसंभारात्प्रत्यागच्छ[illegible]न् । काञ्चनान् काञ्चनस्तंभगतानित्यर्थः ॥ ३२ ॥ **ति०** प्रदीप्ता अग्निज्वालाज्वालिता । अनेनाग्निमोऽग्निदाहस्सूचितः [illegible]३ ॥ **ति०** निद्रितत्वात्संवृतानि संवृतपक्ष्माणि । तादृशानिचतानि दान्तानि ग्लानानि । मीलिताक्षीणि अतिसंवृतपक्ष्माणि । [illegible]देवलोकादेरिवसंवृतमीलितयोरपिभेदोबोध्यः । यद्वासंवृतदान्तानीत्यस्यैवव्याख्यानंनिमीलिताक्षीणीति । यद्वा संवृतत्वमोष्ठयोः

**[ पा० ]** १ ङ. झ. ञ. ट. देवलोकोयमिन्द्रस्यापि. ग. देवलोकोयंगान्धर्वीयं. २ च. छ. ज. गान्धर्वीयंपरासिद्धि[illegible]त्यमभ्यत. क. गान्धर्वीयंपुरीवास्यादित्यमन्यत. ग. इन्द्रस्येयंपुरीवास्यादित्यमन्यत. ३ च. नानाभरणभूषितं. छ. ज. [illegible]राभरणभूषितं. ४ क. नानारत्नविभूषितं. ५ ङ. झ. ञ. ट. प्रसुप्तं. ६ ङ. च. झ. ञ. ट. भूषितं. ७ ङ. झ. दान्तानि. [illegible] ङ. च. छ. झ. ट. मीलिताक्षीणि. ९ क. ञ. क्षपात्यये. १० घ.—छ. झ. ञ. ट. इतिवामन्यत. ११ क. संहताः. [illegible]२ घ. सर्वाइति.

[1]व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः ॥ पानव्यायामकालेषु नि[2]द्रापहृतचेतसः ॥ ४५ ॥
व्यावृत्ततिलकाः काश्चित्काश्चिदुद्भ्रान्तनूपुराः ॥ पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥ ४६ ॥
[3]मुक्ताहारावृताश्चान्याः [4]काश्चिद्विस्रस्तवाससः ॥ [5]व्याविद्धरशनादामाः किशोर्य इव वाहिताः ॥४७॥
[6]सुकुण्डलधराश्चान्या विच्छिन्नमृदितस्र[7]जः ॥ गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ४८ ॥
चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुत्कटाः[8] ॥ हंसा इव बभुः सुप्ताः स्तनमध्येषु योषिताम् ॥ ४९ ॥
अपरासां च वैडूर्याः कादम्बा इव पक्षिणः ॥ हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥ ५० ॥
हंसका[9]रण्डवाकीर्णाश्चक्रवाकोपशोभिताः ॥ आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥ ५१ ॥
किङ्किणीजा[10]लसंकोशास्ता [11]हैमविपुलाम्बुजाः ॥ भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः ॥ ५२ ॥
[12]मृदुष्वङ्गेषु कासांचित्कुचाग्रेषु च संस्थिताः ॥ बभूवुर्भूषणानीव शुभा भूषणरा[13]जयः ॥ ५३ ॥
अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः ॥ उपर्युपरि वक्त्राणां व्याधूयन्ते पुनःपुनः ॥ ५४ ॥
ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः ॥ नानावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे ॥ ५५ ॥

वर्णः रूपं । प्रसादः प्रसन्नता ॥ ४४ ॥ पानव्यायामकालेषु पानानन्तरं भाविरतिव्यापारसमयेषु । व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः विपर्यस्तगुरुपीनस्रजः प्रकीर्णवरभूषणाश्च सत्यः निद्रापहृतचेतसः विरेजुः ॥ ४५ ॥ व्यावृत्ततिलकाः उन्मृष्टतिलकाः । उद्भ्रान्तनूपुराः स्वस्थानानवस्थितनूपुराः ॥ ४६ ॥ मुक्ताहारावृताः मुक्ताहारैरावृताः । छिन्नमुक्ताहारा इत्यर्थः । व्याविद्धरशनादामाः छिन्नकाञ्चीगुणाः । किशोर्यः प्रथमवयस्कावडबाः । वाहिताः मार्गश्रमनिवृत्त्यर्थं भूमौ प्रवेष्टनं कारिताः । सर्वत्र रेजुरित्यन्वयः ॥ ४७—४८ ॥ चन्द्रांशुकिरणाभाः अंशुः सूर्यः । "अथांशुः स्यान्मयूखे सवितर्यपि" इति दर्पणः । चन्द्रसूर्ययोः किरणानामाभेवाभा येषां ते तथा । उत्कटाः स्थूलाः ॥४९—५१॥ अथासां नदीसमाधिं दर्शयति—किङ्किणीति ॥ किङ्किणीजालसंकोशाः किङ्किणीजालान्येव संकोशा मुकुलानि यासां ताः । एतत्स्थाने सत्कोशा इति पाठान्तरदर्शनात्संकोशशब्दो मुकुलवाचीत्यवगम्यते । भावाः शृङ्गारचेष्टाः त एव ग्राहाः नक्रा यासां ताः । सुप्तिदशायामपि वासनावशाद्भावाभिव्यञ्जकसंस्थानवत्त्वाद्भावग्राहा इत्युक्तं । यशस्तीराः यशश्शब्देन यशोहेतुभूता पर्यन्तप्रसृतप्रभोच्यते । सैव तीरं यासां ताः॥५२॥ संस्थिताः लग्नाः भूषणराजयः । भ्रमराणीव भ्रमरा इव । व्यत्यय आर्षः । कामुका इव । बभूवुः । "भ्रमरः कामुके भृङ्गे" इति दर्पणः । केचित्तु भूषणानीति पाठं कल्पयित्वा भूषणराजयः भूषणविमर्दकृतरेखाः । [illegible]स्तभूषणानामपि कासांचिद्भूषणानीव बभूवु[illegible] इत्याहुः ॥ ५३ ॥ मुखमारुतकम्पिताः अंशुका[illegible] सूक्ष्मवस्त्रदशाः । उपर्युपरि वक्त्राणां वक्त्राण्युपर्युप[illegible] "धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु" इति [illegible]तीयाभाव आर्षः। व्याधूयन्त इति श्यन्नार्षः। धून[illegible] क्र्यादित्वात् ॥५४॥ ता इति विधेयत्वात्स्त्रीलिङ्ग[illegible] नानावर्णसुवर्णानां नानाविधशोभनवर्णानां ॥ ५५ ॥

स० पद्मगन्धीनि 'उपमानाच्च' इतीत्वं ॥ ३७ ॥ ति० व्यावृत्ताःकचाःपीनस्रजश्चयासांताश्च ॥ ४५ ॥ ति० अकुण्डल[illegible] कुण्डलधरणरहिताः गलितकुण्डलाइतियावत् ॥ विच्छिन्नाःआमृदिताश्चस्रजोयासांताः ॥ ४८ ॥ ति० अंशवःप्रभाः किरण[illegible] धाराः । अंशवःसूक्ष्मरश्मयः । किरणाःस्थूलरश्मयइत्यन्ये । शि० सुप्ताहंसाइवबभुः ॥ ४९ ॥ ति० किङ्किणीजालसंका[illegible] न्मुकुलितनयनाः तत्स्थानेचनद्यांमुकुलितकुमुदानि । हेमविपुलांबुजत्वेनवक्त्रनिगरणं । उपमानेतुननिगरणं । किङ्किणीजालसंब[illegible] इतिपाठेकिङ्किणीजालसंबाधत्वमुभयत्रापिस्पष्टमेव । शब्दवत्त्वसाधर्म्यात्किङ्किणीशब्देनलहरीणामप्युक्तेः । भावाविलासाएव[illegible] मिकस्फुरतभावोवाग्राहोयासांताः । यशःअतिगुणवत्त्वकृतयशएवतीरंयासांताः । यशश्शब्देनलक्षणयाकान्तिरित्यन्ये । सुप्तान[illegible]

[पा०] १ ङ. च. ञ. ट. व्यावृत्तकुचपीन. झ. व्यावृत्तकचपीन. २ ङ.—ट. निद्रोपहृत. ३ ख. घ. ङ. झ. ञ. मुक्ताहारवृताः. ४ क. ख. ग. ङ.—ट. काश्चित्प्रस्रस्त. घ. काश्चित्प्रहृत. ५ क. ग. व्यावृत्तरशना. ६ ङ. झ. ञ. ट. अकुण्डलधराः. ७ ङ.—ज. ञ. ट. विच्छिन्नामृदित. ८ ङ. झ. ञ. दुद्गताः. ९ ङ. झ. ञ. ट. कारण्डवोपेताः. १० छ. ज. जालसंबाधाः. ग. ङ. झ. ञ. ट. जालसंकाशाः. ११ क. वक्त्रकनकांबुजाः. १२ क. मृदुष्वंशेषु. १३ ङ. राशयः.

ववल्गु[1]श्चात्र कासांचित्कुण्डलानि शुभार्चिषाम् ॥ मुख[2]मारुतसंसर्गान्मन्दं मन्[3]दं सुयोषिताम् ॥५६॥
शर्करासव[4]गन्धैश्च प्रकृत्या सुरभिः सुखः ॥ तासां वदननिःश्वासः सिषेवे रावणं तदा ॥ ५७ ॥
रावणाननशङ्काश्च काश्चिद्रावणयोषितः ॥ मु[5]खानि स्म सपत्नीनामुपाजिघ्रन्पुनः पुनः ॥ ५८ ॥
अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ॥ अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥ ५९ ॥
बाहूनुपनिधायान्याः पारिहार्यविभूषितान् ॥ अं[6]शुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ॥ ६० ॥
अन्या वक्षसि चान्यस्यास्तस्याः काश्चित्पुनर्भुजम् ॥ अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भु[7]जौ ॥६१॥
ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः ॥ परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥ ६२ ॥
[ [8]अन्योन्यस्याङ्गसंस्पर्शात्प्रीयमाणाः सुमध्यमाः ॥ एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः ॥६३॥ ]
अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा ॥ मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥ ६४ ॥
लतानां माधवे मासि फुल्लानां वायुसेवनात् ॥ अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥ ६५ ॥
व्य[9]तिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् ॥ आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥ ६६ ॥
उचितेष्वपि सुव्यक्तं न तासां योषितां तदा ॥ विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् ॥ ६७ ॥
रावणे सु[10]खसंविष्टे ताः स्त्रियो विविधप्रभाः ॥ ज्वलन्तः काञ्चना दीपाः प्रे[11]क्षन्तानिमिषा इव ॥६८॥
[12]राजर्षिपितृदैत्यानां गन्धर्वाणां च योषितः ॥ [13]राक्षसानां च याः कन्या[14]स्तस्य कामवशं गताः ॥६९॥

ववल्गुरिति ॥ उपधानपरिसरे घनमणिखचिततया लम्बमानानि कुण्डलानि मन्दं मन्दं चेलुरित्यर्थः ॥५६—५८॥ रावणे अत्यर्थं सक्तमनसः । अस्वतन्त्राः पाननिद्रापरवशाः ताः सपत्नीभिराघ्रातमुखाः । वरस्त्रियः तदा मुखाघ्राणसमये सपत्नीनां प्रियमेवाचरन् रावणोऽजिघ्रदिति बुद्ध्या स्वयमप्यजिघ्रन्नित्यर्थः । अथवा कथं सपत्न्योपि सह स्वपन्तीत्याशङ्क्याह—अत्यर्थमिति ॥ ५९ ॥ पारिहार्यो वलयः । अंशुकानि उपनिधायेत्यनुषज्यते ॥ ६० ॥ अन्या वक्षसि अन्यस्या इत्यादिश्लोकद्वये शिश्यिर इत्येतद्वचनविपरिणामेन यथायोगं संबध्यते उपनिधायेति च ॥ ६१—६३ ॥ मालेव पुष्पमालेव । मत्तषट्पदस्थानीयाः केशाः ॥ ६४ ॥ लतानामित्यादिश्लोकद्वयमेकान्वयं ॥ तद्रावणस्य स्त्रीवनं लतानां वनमिवासीदिति संबन्धः। विशेषणान्युभयत्र योज्यानि। वायुसेवनाद्धेतोः अन्योन्यमालाग्रथितं अन्योन्यमालारूपेण ग्रथितं सुखमुखमारुतसेवनादन्योन्यमालाग्रथितमिति स्त्रीपक्षे । संसक्तकुसुमोच्चयं । अन्योन्यसंसक्तनीवीकं संसक्तकुसुमसमूहं चेत्यर्थः । व्यतिवेष्टितसुस्कन्धं अन्योन्यपरिवेष्टितांसं अन्योन्यपरिवेष्टितप्रकाण्डं च । अन्योन्यं भ्रमरैश्चिकुरैराकुलं भ्रमरैः भृङ्गैराकुलं च । "भ्रमरश्चिकुरे भृङ्गे" इति विश्वः ॥ ६५—६६॥ उचितेषु स्थानेषु स्थितानामपि भूषणाङ्गाम्बरस्रजां साधारण्यादेकतामापन्नानामिति भावः । विवेकः सुव्यक्तमाधातुं न शक्यः । अन्योन्यसंग्रथितत्वेन सुप्तत्वात् । इमा अस्या भूषणाङ्गाम्बरस्रजः इमा अपरस्या इति विवेकः कर्तुं न शक्य इत्यर्थः ॥ ६७ ॥ सुखसंविष्टे सुखसुप्ते । काञ्चनाः काञ्चनदीपस्तम्भस्था दीपाः अनिमिषास्सन्तः प्रैक्षन्तेव । अनेन रावणस्य जाग्रद्दशायां दीपैरपि ताः स्त्रियो निश्चलं द्रष्टुमशक्या इति गम्यते ॥ ६८ ॥ अथ सीतयैकया अकाम्यत्वं वक्तुं सर्वस्त्रीकाम्यत्वमाह—

...इवबभुः ॥ ५२ ॥ ति० शर्करासवः आसवविशेषः । तद्योगात्तद्गन्धः । प्रकृत्याचसुरभिः । यद्वाप्रकृत्याअसुरभिरपि वायुरिति ...ः । तासांवदननिश्वासःतद्युक्तः । अर्शआद्यजन्तं । अतएवशर्करासवगन्धःरावणंसिषेवे ॥ ५७ ॥ ति० राजर्षयोविप्रदैत्याश्च ।

[ पा० ] १ ग. श्चारु. क. स्तत्र. २ च. छ. ज. मारुतसंक्षोभात्. ग. घ. मारुतसंसर्गैर्मन्दं. क. ङ. झ. ञ. ट. मारुतसंसर्गैर्मन्दं. ३ झ. ञ. ट. मन्दंच. क. च. छ. ज. मन्दंस. ४ क. घ.—ट. गन्धस्स. ग. गन्धाढ्यः. ५ ग. च.—झ. ट. मुखानिच. ६ क. अंशुकानीव. ७ ग. ङ.—ट. कुचौ. ८ अयंश्लोकः क.—ट. पाठेषुदृश्यते. ९ ङ.—ट. प्रतिवेष्टित. १० ङ. च. छ. ज. सुखसंसुप्ते. ११ ख. ङ. झ. ट. प्रेक्षन्तोऽनिमिषाइव. क. च. छ. ज. ञ. प्रेक्षन्तेऽनिमिषाइव. १२ ङ. झ. ट. राजर्षिविप्र. १३ क.—ट. रक्षसांचाभवन्कन्याः. १४ क. स्तथा.

युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः ॥ समदा मदनेनैव मोहिताः काश्चिदागताः ॥ ७० ॥
न तत्र काश्चित्प्रमदाः प्रसह्य वीर्योपपन्नेन गुणेन लब्धाः ॥
न चान्यकामापि न चान्यपूर्वा विना वरार्हां जनकात्मजां ताम् ॥ ७१ ॥
न चाकुलीना न च हीनरूपा नादक्षिणा नानुपचारयुक्ता ॥
भार्याऽभवत्तस्य न हीनसत्त्वा न चापि कान्तस्य न कामनीया ॥ ७२ ॥
बभूव बुद्धिस्तु हरीश्वरस्य यदीदृशी राघवधर्मपत्नी ॥
इमा यथा राक्षसराजभार्याः सुजातमस्येति हि साधुबुद्धेः ॥ ७३ ॥

राजर्षीत्यादिना श्लोकत्रयेण ॥ तस्य कामवशं गताः तं प्रति यः कामः तस्य वशंगताः । तं कामयित्वा स्वयमेवागतास्ताः न तु तेन कामयित्वा हृता इत्यर्थः ॥ ६९ ॥ हृताश्च काश्चन श्रूयन्ते तत्र कथमित्यत्राह—युद्धेति ॥ तासु हृतासु तासां संबन्धिभिस्सह युद्धं भविष्यतीति युद्धं कामयित्वानेन हृताः नतु ताः कामयित्वा हृताः ॥ ७० ॥ अमुमेवार्थं विवृणोति—न तत्रेति ॥ तत्र तासु काश्चिदपि प्रमदाः प्रसह्य वीर्येण न लब्धाः । किंतु स्वसंवादेनैवेत्यर्थः । वीर्योपपन्नेन रावणेन न लब्धाः अपि तु गुणेन लब्धाः । अन्यकामा च काचित्तत्र नास्ति । अन्यपूर्वा च न । अन्यत्रासक्ता च न काचिदित्यर्थः ॥ ७१—७२ ॥ राघवधर्मपत्नी ईदृशी यदि स्वयंवरात्पूर्वमेवास्य धर्मपत्नी चेत् । अस्य सुजातं सुकृतं । इयमसाध्वी बुद्धिः कापेयत्वप्रमादकृता न तु स्वयं तस्य बुद्धिरिति द्योतयितुं साधुबुद्धेरित्युक्तं । एवं प्रमादोपस्थितबुद्ध्या पश्चात्तापोभूदित्याह—पुनश्चेति । यद्वा इमाःराक्षसराजभार्याःयथा स्वभर्त्रा विशिष्टास्सकलभोगयुक्ताश्च तथा राघवधर्मपत्नी ईदृशी यदि स्वभर्त्रा सहिता भोगयुक्ता च यदि तदाऽस्य रावणस्य सुजातं शोभनं जन्मेति साधुबुद्धेः परसमृद्धिपरस्य हरीश्वरस्य स्वयमाधिपत्यार्हस्य बुद्धिर्बभूव । अयं रावणः राघवधर्मपत्नीं यदि प्रत्यर्पयेत्तदास्य

अस्यब्रह्मराक्षसत्वादस्तिविप्रकन्याविवाहेऽधिकारः । कामवशंगतास्सत्यस्तस्ययोषितोऽभवन् । अनेनतासामप्यनुरागःसूचितः ॥ ६९ ॥ तनि० रावणःस्त्रीभिःसहयथासंततसंश्लेषेणतिष्ठति । एवंरामःसीतयासंश्लेषेणतिष्ठतिचेद्रावणस्यैश्वर्यमविच्छिन्नं[illegible] साधुबुद्धेः शत्रूणामपिहितमन्वेषयतः ॥ स० साधुबुद्धेःदेवावतारादिषुसम्यग्बुद्धिमतःहरीश्वरस्यहनुमतःइतिवक्ष्यमाणाबुद्धिर्बभूव[illegible]र्थ तदेवव्यनक्ति—यदीति । इमाःपुरतस्सुप्ताःराक्षसराजभार्याःलङ्कायांयथावर्तन्ते तथाराघवधर्मपत्नीसीतापि यदीदृशी एतत्पुरगता[illegible]ताः तत्तर्ह्यस्यअत्रसुप्तस्यरावणस्य सुजातंराक्षसत्वनिर्गमेनशोभनजन्म शिशुपालत्वावस्थायांभगवदङ्गप्रवेशकारणंजन्म हि प्रसिद्धं भव[illegible]त्यर्थः । युद्धेरामेणहतस्सन्शिशुपालत्वंप्राप्यजयोभवतीतिभावः। विस्तरस्तुतीर्थव्याख्यानेद्रष्टव्यः॥ ती० यद्वा राघवधर्मपत्नी य[illegible] रावणेनबलादानीताइमाराक्षसराजभार्याः तथायदि सुग्रीवेणबलाद्धृतायदि तदा हरीश्वरस्यसुग्रीवस्य सुजातंहीतिसाधुबुद्धेः स[illegible]द्धि-त्रिबुद्धेः अस्यहनुमतः ईदृशीबुद्धिर्बभूवेत्यन्वयः । यद्वा इमाराक्षसराजभार्यायथारावणेनाहृताइत्यर्थः । राघवधर्मपत्नी ईदृशीय[illegible]तेः अनेनाहृतायदि तदा अस्य रावणस्य सुजातंकिं सम्यग्भविष्यतिकिं । नभविष्यत्येवेति हरीश्वरस्यबुद्धिर्बभूव । " मम दयितत[illegible] हृतावनान्ताद्रजनिचरेण तदा विमथ्य सा । कथय मम रिपुं तमद्य वै प्लवगपते यमसादनं नयामि " इति रामवाक्याद्रावणस्य[illegible] सम्यग्भविष्यतीत्यर्थः । यद्वा इमाराक्षसराजभार्यायथामयादृष्टाइतिशेषः । राघवधर्मपत्नी ईदृशीयदि मयादृष्टायदीत्यर्थः । [illegible] अस्यमम सुजातंजन्मसफलमितिहरीश्वरस्यबुद्धिर्बभूव। "यश्चमासान्निवृत्तोग्रे दृष्टासीतेतिवक्ष्यति । मत्तुल्यविभवोभोगैः सुखंसवि[illegible]ष्यति । ततःप्रियतरोनास्ति ममप्राणाद्विशेषतः " इतिसुग्रीववचनात् प्रभोःसुग्रीवस्य प्रियसंवादकत्वेन ममजन्म सफलमितिभावः[illegible]दा-यद्वा इमाराक्षसराजभार्याः यथामयादृष्टाः राघवधर्मपत्नी ईदृशीयदि दृष्टायदि अस्यसीतायाअदर्शनहेतुना सुग्रीवरामादिभयात्[illegible]तद्-योपवेशनायोद्युक्ताङ्गदादिवानरसमानस्येत्यर्थः । सुजातमितिबुद्धिर्बभूव । "अप्रवृत्तौचसीतायाः पापमेवकरिष्यति । तस्मात्क्षमा[illegible]धा हायैव प्रायोपविशनंहिनः । त्यक्त्वापुत्रांश्चदारांश्च धनानिचगृहाणिच " इतिसीताऽदर्शनव्यथिताङ्गदादीनां पुनर्जीवितलाभात्[illegible]त्वा-जातमितिभावः । यद्वा इमाराक्षसराजभार्या यथाजीवन्तीत्यर्थः । राघवधर्मपत्नी ईदृशी जीवतियदि तदा अस्य रामस्य सुजात[illegible] मितिबुद्धिर्बभूव । " ज्ञायतांसौम्यवैदेही यदिजीवतिवानवा । नह्यहंजीवितुंशक्तस्तामृतेजनकात्मजां " इतिसीताजीवितसंशयव्यथितस्यरामस्य सीताजीवितनिश्चयेसति स्वजीवितलाभात्सुजातमितिभावः । यद्वा हेराक्षसराज इमाःस्त्रियो यथाभार्याः एवं राघवधर्मपत्नी ईदृशीयदि अस्यतव सर्वसंपत्समृद्धियुक्तपुत्रपौत्रादिसहितस्यास्यतवेत्यर्थः । सुजातंहिकिंसम्यग्भविष्यतीति रावणस्यहि-

[ पा० ] १ क. ग. दङ्गनाः. २ ग. घ. च.—ट. जनकात्मजांतु. ३ ङ. झ. ट. महाराक्षसराज.

**पुनश्च सोऽचिन्तयदार्तरूपो ध्रुवं विशिष्टा गुणतो हि सीता ॥**
**अथायमस्यां कृतवान्महात्मा लङ्केश्वरः कष्टमनार्यकर्म ॥ ७४ ॥**
**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे नवमः सर्गः ॥ ९ ॥**

---

शोभनं जन्म स्यादिति बुद्धिर्जातेत्यर्थः ॥७३॥ किंच चिन्तान्तरमाह—पुनश्चेति ॥ अथ सः हनुमान् सीता गुणतः पातिव्रत्यादिगुणतः ध्रुवं विशिष्टा हि । अस्यां एतद्विषये । महात्मा महाकुलप्रसूतोपि अयं लङ्केश्वरः । अनार्यकर्म अपहरणरूपं कर्म कृतवान् । कष्टमिति । आर्तरूपः अत्यन्तमार्तः । "प्रशंसायां रूपप्" पुनश्चाचिन्तयत् । वैदेह्याः दृढव्रतत्वात्पातिव्रत्यभङ्गो न भवेदेव । अपि तु मिथ्यापवादमेवोत्पादितवानिति भृशं दुःखितस्सन् चिन्तितवानित्यर्थः । यद्वा बभूवेत्यादि । राक्षसराजपत्नीवत्सीता स्वभर्त्रा संगता चेत्सीतापहरणं न कृतवांश्चेत्तदास्य सुजातमित्युक्तं । तत्र निरतिशयसौन्दर्यादिशालिन्या मैथिल्याः रक्षस्स्त्रीसाम्यं चिन्तयता मया हीनोपमा कृतेति पश्चात्तापयुक्तस्सन् अचिन्तयत् । हि यस्मात्सीता गुणतः विशिष्टा अतः आर्तस्वरूपस्सन्नचिन्तयत् । मया हीनोपमैव कृतेत्यचिन्तयत् । अथ अथापि अस्यां सीतायां । अनार्यकर्म धर्षणरूपं कर्म । कृतवान् । कष्टं सर्वमिदं लङ्कैश्वर्यं भ्रष्टं भविष्यतीत्यचिन्तयच्चेत्यर्थः । यद्वा राघवधर्मपत्नी यथा रावणेन बलादानीता तथा राक्षसराजभार्याः बलात्सुग्रीवेण बन्दीकृताश्चेदस्य हरीश्वरस्य सुग्रीवस्य सुजातं हीति साधुबुद्धेः सन्मन्त्रिबुद्धेः अस्य हनुमतः बुद्धिर्बभूवेत्यर्थः । यद्वा । इमा राक्षसराजभार्याः यथा रावणेनुरक्ताः ईदृशी राघवधर्मपत्नी यदि एवमनुरक्ता चेत् अस्य सुजातमिति साधुबुद्धेरपि बुद्धिर्बभूव ऐश्वर्यातिशयदर्शनविस्मयादिति भावः । अतएव वक्ष्यति—अहो वीर्यमित्यादिना । एवंहठादुक्त्वानुशयितवानित्याह—पुनश्चेति ॥ हि यस्मात्सीता गुणतः पातिव्रत्येन विशिष्टा सर्वोत्कृष्टा अतः आर्तरूपः किं मया व्याहृतमित्यनुतप्तः सन् । अस्यामनार्यकर्म कृतवानित्यचिन्तयत् ॥ ७४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

---

[illegible]पदेष्टव्यमितिबुद्धिर्बभूव । "तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः । परदारान्महाप्राज्ञनोपरोद्धुंत्वमर्हसि" इतिहितोपदेशस्यवक्ष्य[illegible]त्वात् । यद्वा एतासांमध्ये सीतानास्तीतिनिश्चिनोति—बभूवेति । इमाराक्षसराजभार्याः यथा यादृग्रूपवत्यइत्यर्थः । यदि किमि[illegible] । राघवधर्मपत्नी ईदृशी किं ईदृग्रूपवतीकिं । किंतुत्रिलोकसुन्दरीत्यर्थः । अतएवात्र नास्तीतिशेषः । इत्यस्यहरीश्वरस्यसुजातं [illegible]वतंयथातथाबुद्धिर्बभूव ॥ **ति०** अथ सीताप्येतत्स्त्र्यन्तर्गता नवेति विकल्प्याद्ये रावणस्यभद्रमेवेति बुद्धिर्हनुमतोजातेत्याह—[illegible]वेति । साधुबुद्धेर्हरीश्वरस्य इतिबुद्धिर्बभूव । इमामहाराक्षसराजभार्याःयथातद्भुक्ताः राघवधर्मपत्न्यपि ईदृशी एतदन्तर्गता एतद्भु[illegible]च्चयदिस्यात् तदाऽस्य रावणस्यसुजातंभद्रमेवभवति । रावणभुक्तेति मयानिवेदितेसति सीतायांमृतायामिव राघवस्योपेक्षणाद्रा[illegible]वधयत्नाप्रसक्तेरितिभावः ॥ **शि०** इमाराक्षसराजभार्या यथा स्वपतिस्मरणादिषुनिरताः । ईदृशी तथारामस्मरणादिनिरता [illegible]दि राघवधर्मपत्नी । तत्स्मरणादीनांविघ्नोनकृतःस्यादित्यर्थः । तदा अस्य रावणस्यसुजातं कल्याणमेवेत्यर्थः । इतिसाधुबुद्धेर्हरीश्व[illegible]बुद्धिः निश्चयोबभूव ॥ ७३ ॥ **ति०** यदीत्यनेन सूचितमस्यपक्षस्यात्यन्तासंभावितत्वमाह—पुनश्चेति । पक्षान्तरंचसोचिन्त[illegible] विचारेणनिश्चितवानित्यर्थः । चिन्ताप्रकारः हिप्रसिद्धमेतत् । यत्सीतादेवीगुणतःपातिव्रत्यादिगुणैर्विशिष्टा । अथ यतइत्यर्थे । [illegible]महात्मामहाबलोलङ्केश्वरः । निरवधिकैश्वर्यवैशिष्ट्यमनेनसूचितं । ईदृशःअस्यांजानक्यांअनार्यकर्म अपहरणरूपंकर्म । आत्तरूपः [illegible]गृहीतमायारूपःसन्कष्टं सक्लेशंयथाभवतितथाकृतवान् । यद्येषाऐश्वर्यादौसरागास्यात्तदास्वरसतएवनयनंस्यात्नचतदस्ति । [illegible]साभिस्तद्विक्रोशनादेवरावणेनक्लेशपूर्वनयनस्यचानुभवादित्याशयः । आर्तरूपइतिपाठे आर्तसंजातपीडंरूपंयस्येत्यर्थं हनुमद्विशेषणं । [illegible]न्तरपीडासूचकरूपइत्यर्थः ॥ **स०** समहात्माहनूमान् पुनश्चैवमचिन्तयत् । हियस्मात् गुणतः पातिव्रत्यादिगुणैः सीता [illegible]शिष्टाश्रेष्ठा । अथ तस्मात् अस्यांसीतायांतद्विषये । अयं रावणः अनार्यकर्म अपहरणादिजुगुप्सितंकर्म कृतवान् । अतोमृत्वा आर्तरूपस्सन् ध्रुवंकदाप्यनिवर्त्यतयाशाश्वतंकष्टं पञ्चकष्टाख्यंतमः यातीतिशेषः । रावणदेहे जीवद्वयसमावेशात्सज्जीवस्यपूर्वश्लो[illegible]केगतिरुक्ता द्वितीयस्यत्वत्रेतिविवेकः ॥ ७४ ॥ इतिनवमस्सर्गः ॥ ९ ॥

[ पा० ] १ दात्तरूपो.



## दशमः सर्गः ॥ १० ॥

हनुमता पुष्पकविमाने नानालङ्कारोपशोभितशयनोत्तमशायिनो नानाभरणादिविभूषितवपुषोरावणस्यावलोकनं ॥ १ ॥ तथातत्पादमूलेवीणावेणुमृदङ्गादिनानावाद्यैस्सहसंसुप्तनानावस्थापन्ननारीनिकरनिरीक्षणं ॥ २ ॥ तथा तासांमध्येऽद्भुतशयनशायिमन्दोदरींदृष्टवतातेन तदद्भुतरूपेणतस्यांसीतात्वबुद्ध्या हर्षेण पुच्छचुंबनादिकापेयचेष्टाविष्करणं ॥ ३ ॥

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् ॥ अवेक्षमाणो हनुमान्ददर्श शयनासनम् ॥ १ ॥
दान्तकाञ्चनचित्राङ्गैर्वैडूर्यैश्च वरासनैः ॥ महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २ ॥
तस्य चैकतमे देशे सोऽग्र्यमालाविभूषितम् ॥ ददर्श पाण्डुरच्छत्रं ताराधिपतिसन्निभम् ॥ ३ ॥
जातरूपपरिक्षिप्तं चित्रभानुसमप्रभम् ॥ अशोकमालाविततं ददर्श परमासनम् ॥ ४ ॥
वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः ॥ गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ५ ॥
परमास्तरणास्तीर्णमाविकाजिनसंवृतम् ॥ दामभिर्वरमाल्यानां समन्तादुपशोभितम् ॥ ६ ॥
तस्मिञ्जीमूतसंकाशं प्रदीप्तोत्तमकुण्डलम् ॥ लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ७ ॥
लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना ॥ सन्ध्यारक्तमिवाकाशे तोयदं सतडिद्गणम् ॥ ८ ॥
वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम् ॥ सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥ ९ ॥
क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् ॥ प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥ १० ॥
पीत्वाऽप्युपरतं चापि ददर्श स महाकपिः ॥ भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ११ ॥
निश्श्वसन्तं यथा नागं रावणं वानरर्षभः ॥ आसाद्य परमोद्विग्नः सोपासर्पत्सुभीतवत् ॥ १२ ॥

शयनासनं शयनस्यासनं खट्वामित्यर्थः । दान्तानि दन्तविकारभूतानि । काञ्चनानि काञ्चनमयानि च । अतएव चित्राणि नानावर्णानि अङ्गानि येषां तैः प्रान्ते दन्तमयैः ततः परं काञ्चनमयैः । सर्वत्र वैडूर्यनिर्मितैरित्यर्थः । महाधनैः महामूल्यैः वरासनैः शयनावरोहणकाले विश्रमाय स्थापितैः । उपपन्नं आवृतं ॥ १—२ ॥ एकतमे देशे शिरोभाग इत्यर्थः ॥ ३ ॥ उक्तमेवपर्यङ्कं पुनर्वर्णयन्नाह—जातरूपेत्यादिना ॥ चित्रभानोः सूर्यस्य ॥ ४—५ ॥ आविकाजिनं ऊर्णायुचर्म तेनपर्यङ्कस्योपरि फलका संधीयते । वरमाल्यानां अशोकातिरिक्तपुष्पाणां ॥ ६ [illegible] महारजतवाससं हेमचित्रितवाससं । महारजतं हेम[illegible] महारजनवासससमिति पाठे कुसुम्भरागरञ्जितवस्त्र[illegible]त्यर्थः ॥ ७—८ ॥ सवृक्षवनगुल्माढ्यं सवृक्षै[illegible]गुल्मैश्चाढ्यं प्रसुप्तं निश्चलमित्यर्थः ॥ ९—१२ [illegible]

रामानु० शयनासनं आस्यतेऽस्मिन्नित्यासनं । शयनासनंपर्यङ्काधारधिष्ण्यमितियावत् ॥ ती० शयनासनं शयनंचतदा[illegible]नंच शयनासनंपर्यङ्कं । उभयोपकारादुभयव्यपदेशः । यद्वा आस्यतेअस्मिन्नित्यासनं । शयनस्यासनं शयनासनं । शयनगृह[illegible]त्यर्थः ॥ १ ॥ ति० वरासनैः स्त्रीशयनपल्यङ्कैः ॥ २ ॥ रामानु० तत्रैवप्रदेशे परमासनंचददर्शेत्याह—जातरूपपरिक्षिप्त[illegible]त्यादिनाश्लोकत्रयेण । परमासनंपर्यङ्कं ॥ ति० यद्वायत्सन्निधानेशोकाभावस्तादृशमालायुतं ॥ ४ ॥ ति० ननुसंभोगगृहेतत्र[illegible] निद्राणस्यकथंवालव्यजनवीजनं कथंचहनुमतस्ताभिरदर्शनमितिचेन्न । यन्त्रनिर्मितस्त्रीप्रतिमादिभिस्तत्रापितत्संभवात् ॥ ५[illegible] ति० रावणस्यतटित्स्थानीयंसौवर्णवासः ॥ ८ ॥ ति० सवृक्षवनगुल्माढ्यं पुष्पसहितवृक्षवनगुल्माढ्यंमन्दरमिवस्थितं । बाह[illegible] स्यवृक्षाः । नासादयोगुल्माः ॥ स० सुरूपिणंसुन्दरं । कथमस्येत्यतउक्तंकामरूपिणमिति ॥ ९ ॥ ति० परमोद्विग्नःअयंपा[illegible] देवींहृतवानित्येतत्समीपेऽवस्थानमनुचितमितिमत्वाखिन्नचित्तःअपासर्पत् । सुभीतवत्सुभीतोयथाभयहेतोःपिशाचादेःसंमु[illegible] स्थातुमशक्तोपसर्पतितद्वत् ॥ स० परमाःमहाबलाअपिउद्विग्नाःयेनसतथा । अतोभीतवदित्युपपन्नं ॥ शि० परमोद्विग्नःभविष्[illegible]

[ पा० ] १ ग. च. छ. ज. रम्यं. २ क.—घ. च. छ. ज. महासंस्तरणोपेतैः. ३ तस्यचैकतमेदेशे. जातरूपपरिक्षिप्त इतिश्लोकयोःपौर्वापर्यं क. ग. घ. पाठेषुदृश्यते. ४ झ. ञ. दिव्यमालोपशोभितं. ट. दिव्यमाल्योपशोभितं. च. छ. [illegible] सोम्यमाल्य. ५ ग. राभरणैर्मुख्यैः.

अथारोहणमासाद्य वेदिकान्तरमाश्रितः ॥ सुप्तं राक्षसशार्दूलं प्रेक्षते स महाकपिः ॥ १३ ॥
शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम् ॥ गन्धहस्तिनि संविष्टे यथा प्रस्रवणं महत् ॥ १४ ॥
काञ्चनाङ्गदनद्धौ च ददर्श स महात्मनः ॥ विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १५ ॥
ऐरावतविषाणाग्रैरापीडनकृतव्रणौ ॥ वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ ॥ १६ ॥
पीनौ समसुजातांसौ सङ्गतौ बलसंयुतौ ॥ सुलक्षणनखाङ्गुष्ठौ स्वङ्गुलीतललक्षितौ ॥ १७ ॥
संहतौ परिघाकारौ वृत्तौ करिकरोपमौ ॥ विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ ॥ १८ ॥
शशक्षतजकल्पेन सुशीतेन सुगन्धिना ॥ चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलंकृतौ ॥ १९ ॥
उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ ॥ यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥ २० ॥
ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ ॥ मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव ॥ २१ ॥
ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ॥ शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥२२॥
चूतपुन्नागसुरभिर्वकुलोत्तमसंयुतः ॥ मृष्टान्नरससंयुक्तः पानगन्धपुरस्सरः ॥ २३ ॥
तस्य राक्षससिंहस्य निश्चक्राम महामुखात् ॥ शयानस्य विनिश्श्वासः पूरयन्निव तद्गृहम् ॥ २४ ॥
मुक्तामणिविचित्रेण काञ्चनेन विराजितम् ॥ मुकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् ॥ २५ ॥
रक्तचन्दनदिग्धेन तथा हारेण शोभिना ॥ पीनायतविशालेन वक्षसाभिविराजितम् ॥ २६ ॥

अथ अपसर्पणानन्तरं । आरोहणं सोपानं । आसाद्य अधिरुह्य । वेदिकान्तरं सोपानपर्वमध्यं ॥१३॥ यस्यगन्धेनान्ये हस्तिनोभीता भवन्ति स गन्धहस्ती । प्रस्रवणं निर्झरं ॥१४॥ निक्षिप्तौ प्रसारितौ ॥१५॥ विष्णुचक्रपरिक्षतौ । विष्णुः उपेन्द्रः ॥ १६ ॥ सङ्गतौ देहानुरूपौ सं॥१७॥ संहतौ दृढसंधिबन्धौ । विक्षिप्तौ शयने निहि- [illegible] पञ्चाङ्गुलिमत्तया पञ्चशीर्षावित्युक्तं । एतदन्तस्य [illegible]णीत्यनेनान्वयः । अत्र द्विभुजत्वैकमुखत्वोक्तिः स्त्रीणां कामनीयत्वाय ॥ १८—१९ ॥ यक्षादीन् रावयितुं शीलमनयोरस्तीति तथा ॥ २० ॥ ददर्शेति पुनरभिधानं विशेषणान्तरविवक्षया ॥ २१ ॥ परिपूर्णाभ्यां दीर्घवृत्ताभ्यामित्यर्थः ॥ २२ ॥ निश्वासस्य चूतादिसुरभित्वं तदधिवासितरसावल्यादिमधुसेवनात् । मृष्टान्नरससंयुक्तः षड्रसपदार्थगन्धयुक्तः । पानगन्धपुरस्सरः पीयत इति पानं मधु तद्गन्धयुक्तः ॥ २३—२४॥ अपवृत्तेन स्थानात्किंचिच्चलितेन ॥२५—२६॥

[illegible]र्यध्वंसहेतुकोद्वेगविशिष्टःसन्नपासर्पत् । एतेनहनुमतोदयालुत्वातिशयःसूचितः ॥ १२ ॥ रामानु० आरोहणमासाद्यवे- [illegible]न्तरमाश्रितः सोपानमार्गेणान्यवेदिकामारूढइत्यर्थः ॥ १३ ॥ स० गन्धहस्तिनिसंविष्टं गन्धहस्तिनामत्तगजेननित- [illegible]ष्टंअध्यारूढं प्रस्रवणंगिरिमिवस्थितं ॥ १४ ॥ कृतव्रणौ कृतव्रणकिणौ । वज्रचक्रयोरप्यसाध्यमृत्युरितिभावः ॥ स० [illegible]चक्रपरिक्षतौ विष्णोरुपेन्द्रस्ययच्चक्रंसैन्यंदेवगणस्तेनपरिक्षतौ विविधायुधजालेनपरिक्षतौ । तेनसुदर्शनस्यामोघत्वमक्षुण्णं । [illegible]क्रंसैन्यरथाङ्गयोः’ इतिविश्वः । भगवच्चक्रादन्यदिदंवा ॥ १६ ॥ शि० रुषितौ क्रुद्धौ ॥ ति० ददर्श अत्यादरेणददर्श । [illegible]पुनरुक्तिः । महाही महासर्पौ ॥ अत्रद्विभुजत्वकथनाद्युद्धादिकालएवविंशतिभुजत्वंदशशीर्षत्वंचेतिबोध्यं ॥ २१ ॥ ती० भु- [illegible]यामितिद्विभुजत्वं महामुखादितिवक्ष्यमाणमेकमुखत्वंचरावणस्यकामरूपत्वात्संगच्छते ॥ २२ ॥ ति० बकुलोत्तमसंयुतः [illegible]बकुलगन्धयुतः । अयंपुरुषविशेषश्वासधर्मइतिकतकः । पानंमधु । राक्षसत्वादेववामाचारेणपूजाकरणान्मधुपानं ॥ २३ ॥ [illegible] विराजतामुकुटेन । उपलक्षितमितिशेषः । शोभिनाहारेण शोभनहारवता वक्षसा उपलक्षितमितिशेषः ॥ २५—२६ ॥

[ पा० ] १ च. वेदिकांपरमांश्रितः. २ ङ. झ. ञ. ट. क्षीबं. ३ ख. च. छ. ज. राक्षसराजानं. ४ ङ. झ. ञ. ट. [illegible]नंशुभं. ५ ङ. झ. ञ. ट. हस्तिनिसंविष्टं. ६ च. छ. ज. सुमहात्मनः. क. घ. समहाकपिः. ७ क. ग. घ. रापीडित. च. [illegible] ज. रुत्पीडन. ८ क. ग. घ. संहतौ. ९ ग. सलक्षण. १० क. ङ.—ट. स्वङ्गुलीयकलक्षितौ. ११ ङ. झ. ट. संवृतौ. [illegible]२ घ. संहतौपरिघाकारौ उत्तमस्त्रीविमर्दितौ । समौचविपुलौशुद्धौ गन्धोत्तमनिषेवितौ. १३ ग. विभूषितौ. १४ ग. च. [illegible]. ज. स्तत्र. १५ ट. रुषिताविव. १६ ङ. झ. ट. पूर्णाभ्यामुभाभ्यां. १७ ङ—ट. राक्षसराजस्य. १८ क. पूरयामास. [illegible]९ क. ख. घ. ङ. झ. ञ. ट. विराजता. २० ङ. झ. ञ. ट. विराजता.

पाण्डरेणापविद्धेन क्षौमेण क्षतजेक्षणम् ॥ महार्हेण सुसंवीतं पीतेनोत्तमवाससा ॥ २७ ॥
माषराशिप्रतीकाशं निश्श्वसन्तं भुजङ्गवत् ॥ गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् ॥ २८ ॥
चतुर्भिः काञ्चनैर्दीपैर्दीप्यमान[1]चतुर्दिशम् ॥ प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव[2] ॥ २९ ॥
पादमूलगताश्चापि ददर्श सुमहात्मनः ॥ पत्नीः स प्रियभार्यस्य तस्य रक्षःपतेर्गृहे ॥ ३० ॥
शशिप्रकाशवदनाश्चारुकुण्डलभूषिताः ॥ अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ३१ ॥
नृत्तवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः ॥ वराभरणधारिण्यो निषण्णा[4] ददृशे हरिः ॥ ३२ ॥
वज्रवैडूर्यगर्भाणि श्रवणान्तेषु योषिताम् ॥ ददर्श तापनीयानि कुण्डलान्यङ्गदानि च ॥ ३३ ॥
तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः ॥ विरराज[3] विमानं तन्नभस्तारागणैरिव ॥ ३४ ॥
मदव्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः ॥ तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥ ३५ ॥
अङ्गहारै[5]स्तथैवान्या कोमलैर्नृत्तशालिनी ॥ विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥ ३६ ॥
काचिद्वीणां[7] परिष्वज्य प्रसुप्ता संप्रकाशते ॥ महानदीप्रकीर्णेव नलिनी पोतमाश्रिता ॥ ३७ ॥
अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा ॥ प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ॥ ३८ ॥
पटहं चारुसर्वाङ्गी पीड्य शेते शुभस्तनी ॥ चिरस्य रमणं लब्ध्वा[9] परिष्वज्येव भामिनी[6] ॥ ३९ ॥
काचिद्वंशं परिष्वज्य सुप्ता कमललोचना ॥ रहः[8] प्रियतमं गृह्य सकामेव[10] च कामिनी ॥ ४० ॥
विपञ्चीं परिगृह्यान्या नियता नृत्तशालिनी ॥ निद्रावशमनुप्राप्ता सहकान्तेव भामिनी[11] ॥ ४१ ॥
अन्या कनक[12]संकाशैर्मृदुपीनैर्मनोरमैः ॥ मृदङ्गं परिपीड्याङ्गैः प्रसुप्ता मत्तलोचना ॥ ४२ ॥
भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी[13] ॥ पणवेन सहा[14]निन्द्या सुप्ता मदकृतश्रमा ॥ ४३ ॥
डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा ॥ प्रसुप्ता तरुणं वत्समु[15]पगूह्येव भामिनी ॥ ४४ ॥

अपविद्धेन पर्यस्तेन । क्षौमेण उत्तरीयरूपेण ॥ २७—२८ ॥ विद्युद्गणैरिव विद्युत्समूहैरिव । रावणं तस्य पत्नीश्च ददर्शेत्यन्वयः ॥ २९ ॥ रक्षःपतेर्गृह इति परशेषः ॥ ३०—३१ ॥ राक्षसेन्द्रस्य भुजं अङ्कं गच्छन्तीति राक्षसेन्द्रभुजाङ्कगाः । उत्सङ्गोपवेशनालिङ्गनाभ्यां लालिता इत्यर्थः । वराभरणधारिण्यइति द्वितीयार्थे प्रथमा । निषण्णाः शयानाः । ददृश इत्यात्मनेपदमार्षं ॥३२॥ श्रवणान्तेष्वङ्गददर्शनं बाहूनुपधाय शयनात् ॥ ३३—३५ ॥ अङ्गहारः नृत्तविशेषादङ्गविक्षेपविशेषः । तथोक्तं भरतशास्त्रे "अङ्गानां योग्यदेशेषु हरणेन यथोचितम् । अङ्गनिर्वर्तनीयत्वादङ्गहारस्तथोच्यते" इत्यादि । कोमलैः सुकुमारैः । नृत्तशालिनी सुषुप्त्यवस्थायामपि वासनाबलेन नृत्तसन्निवेशविशिष्टा स्थितेत्युच्यते ॥ ३६ ॥ महानदीप्रकीर्णा महानदीप्रसृता । नलिनी समूलनाल[illegible] पद्मजालकं । पोतं यानपात्रं । वीणां परिष्वज्य प्र[illegible] काचित् नद्यां प्लवमाना यदृच्छया पोतसं[illegible]नैः नलिनीव प्रकाशत इत्यर्थः ॥ ३७ ॥ मड्डुकेन व[illegible] ॥ विशेषेण ॥ ३८—३९ ॥ वंशं वेणुं ॥ ४० ॥ वि[illegible]ञ्ची सप्ततन्त्री । षट्तन्त्री वीणा ॥ ४१—४२ ॥ प[illegible]वेन मर्दलेन ॥ ४३ ॥ यथा पूर्वा तथैवासक्त[illegible]ण्डिमान्या तं डिण्डिमं परिगृह्य परिष्वज्य । प्रसुप्[illegible] कथमिव । तरुणं वत्समुपगूह्येव । डिण्डिमः पण[illegible]दः । यद्वा अन्या भामिनी डिण्डिमं परिगृह्यावल[illegible]

**ति०** विमानं मञ्चकविशेषः । पुष्पकमित्यन्ये । विराजत व्यराजत ॥ ३४ ॥ **ति०** मदव्यायामेन रतिजेन ॥ ३५ ॥ **ति**[illegible] विन्यस्तशुभसर्वाङ्गी विशेषेणन्यस्तंशुभंयेषुधात्रा तादृशानिसर्वाण्यङ्गानियस्यास्सा ॥ **शि०** विन्यस्तानि विधिनानिर्मितानि [illegible]

**[ पा० ]** १ ङ. झ. ञ. ट. दीप्यमानं. २ ग. घ. च. छ. ज. विद्युल्लतैरिव. ३ ङ. झ. ञ. ट. विराजत. ४ घ. निषण्णा[illegible] ५ ग. घ. स्तथाचान्याः. ६ क. ग.—ट. कामिनी. ७ ख. ङ. झ. ञ. ट. काचिद्वीणां. ८ ङ. झ. ञ. ट. वरंप्रियतम[illegible] ९ क. लब्ध्वा. १० ग. ङ. ञ. ट. सकामेवहि. ११ क. घ. कामिनी. १२ घ. कनकवर्णाङ्गीमृदु. क. कनकवर्णाभैर्मृदु[illegible] १३ घ. शुभोदरी. १४ ग. च. छ. ज. सहैवान्या. १५ क. ख. मुपगृह्यैव.

काचिदाडम्बरं नारी भुजसंभोगपीडितम् ॥ कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता ॥ ४५ ॥
कलशीमपविध्यान्या प्रसुप्ता भाति भामिनी ॥ वसन्ते पुष्पशबला मालेव परिमार्जिता ॥ ४६ ॥
पाणिभ्यां च कुचौ काचित्सुवर्णकलशोपमौ ॥ उपगूह्याबला सुप्ता निद्राबलपराजिता ॥ ४७ ॥
अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना ॥ अन्यामालिङ्ग्य सुश्रोणीं प्रसुप्ता मदविह्वला ॥ ४८ ॥
आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः ॥ निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव ॥४९॥
तासामेकान्तविन्यस्ते शयानां शयने शुभे ॥ ददर्श रूपसंपन्नामपरां स कपिः स्त्रियम् ॥ ५० ॥
मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् ॥ विभूषयन्तीमिव तत्स्वश्रिया भवनोत्तमम् ॥ ५१ ॥
गौरीं कनकवर्णाङ्गीमिष्टामन्तःपुरेश्वरीम् ॥ कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥ ५२ ॥
स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः ॥ तर्कयामास सीतेति रूपयौवनसंपदा ॥ ५३ ॥
हर्षेण महता युक्तो ननन्द हरियूथपः ॥ [ दृष्ट्वा सीतेति हृष्टोऽभूद्दीनश्चारित्रदर्शनात् ] ॥ ५४ ॥

आस्फोटयामास चुचुम्ब पुच्छं ननन्द चिक्रीड जगौ जगाम ॥
स्तम्भानरोहन्निपपात भूमौ निंदर्शयन्स्वां प्रकृतिं कपीनाम् ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ॥ ११ ॥

युक्तिपर्यालोचनयामन्दोदर्यांसीतात्वबुद्धिविधूननपूर्वकं पानभूमिंगतवताहनुमता परितोरावणं प्रसुप्तानां नानावस्थायुक्तनानास्त्रीणामवलोकनेनसह नानाविधपानपात्राद्यवलोकनं ॥ १ ॥ तथा परदारदर्शनेन स्वस्य दुरिताशङ्कनपूर्वकंपुनः स्वस्य वशीकृतमनस्कत्वादिहेतुभिस्तत्पराकरणं ॥ २ ॥ तथापानभूमौ सीतायाअदर्शने ततोन्यत्र तदन्वेषणोपक्रमः ॥ ३ ॥

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ॥ जगाम चापरां चिन्तां सीतां प्रति महाकपिः ॥ १ ॥

तथैव आसक्तडिण्डिमा आलिङ्गितान्यडिण्डिमा ... रमणमुपगूह्य वत्सं पुत्रं परिगृह्यैव प्रसुप्ता । ... डिण्डिमं परिगृह्य वादनार्थं परिगृह्य। तथैव वाद... एव आसक्तडिण्डिमा अन्या तरुणं वत्समुप... प्रसुप्ता ॥ ४४ ॥ आडम्बरं तूर्यभेदं । भुजसं...पीडितं भुजपरिणाहपीडितं भुजपरिश्लेषपीडितं ॥४५॥ अपविध्य पर्यस्य । अनेन सलिलसंबन्धः ...ते । परिमार्जिता सलिललवसंमार्जिता । अप... कलशनिर्गलितगन्धोदकसिक्ता काचित् । वसन्ते ...निपरिहाराय सलिललवसमुक्षिता मालेव बभावि... । पुष्पशबलेत्यनेन कलशस्थजलस्य कुङ्कुमादिर...सेकत्वमुच्यते । सर्वाभरणभूषितत्वं वा । इयं च ...वणस्य करकधारिणीति गम्यते ॥ ४६—४८ ॥

आतोद्यानि । "ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकं" इत्यमरः ॥ ४९—५१ ॥ किमिव गौरीमित्यत्राह—कनकवर्णाङ्गीमिति । इष्टां रावणस्येति शेषः ॥ ५२—५३ ॥ हर्षेणेत्यर्धं ॥ हर्षेण युक्तः ननन्द उत्तरोत्तरमानन्दमवापेत्यर्थः ॥ ५४ ॥ तदेवोपपादयति—आस्फोटयामासेति ॥ चिक्रीड ननर्तेति यावत् । स्वां प्रकृतिं स्वासाधारणं चापल्यं ॥ ५५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

---

तां बुद्धिं मन्दोदर्यां सीताबुद्धिं । अवस्थितो बभूव

---

१ ...यापितानिवाशुभाङ्गानियस्यास्सा ॥ ३६ ॥ ती० जगौ हर्षान्मन्दगानंकृतवानित्यर्थः ॥ ५५ ॥ इतिदशमः सर्गः ॥ १० ॥

[ पा० ] १ ङ. झ. ञ. ट. मथतां. २ क. ख. ग. ङ.—ट. चस्वश्रिया. ३ ख. ग. ङ.—झ. ट. कनकवर्णाभां. ४ ग. ...। तांदृष्ट्वास. ५ ग. हर्षेणचसमायुक्तो. ६ क. ननाद. ७ इदमर्धं ङ.—ज. ञ. ट. पाठेषुदृश्यते. ८ क. च. छ. ज. निदर्शयानः.

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ॥ न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुम् ॥
नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ॥ २ ॥
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥ अन्येयमिति निश्चित्य पानभूमौ चचार सः ॥ ३ ॥
क्रीडितेनापराः क्लान्ता गीतेन च तथा पराः ॥ नृत्तेन चापराः क्लान्ताः पानविप्रहतास्तथा ॥ ४ ॥
मुरवेषु मृदङ्गेषु पीठिकासु च संस्थिताः ॥ तथास्तरणमुख्येषु संविष्टाश्चापराः स्त्रियः ॥ ५ ॥
अङ्गनानां सहस्रेण भूषितेन विभूषणैः ॥ रूपसँल्लापशीलेन युक्तगीतार्थभाषिणा ॥ ६ ॥
देशकालाभियुक्तेन युक्तवाक्याभिधायिना ॥ रताभिरतसंसुप्तं ददर्श हरियूथपः ॥ ७ ॥
तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः ॥ गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥ ८ ॥
स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयम् ॥ करेणुभिर्यथाऽरण्ये परिकीर्णो महाद्विपः ॥ ९ ॥
सर्वकामैरुपेतां च पानभूमिं महात्मनः ॥ ददर्श हरिशार्दूलस्तस्य रक्षःपतेर्गृहे ॥ १० ॥
मृगाणां महिषाणां च वराहाणां च भागशः ॥ तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ॥ ११ ॥
रौक्मेषु च विशालेषु भाजनेष्वर्धभक्षितान् ॥ ददर्श हरिशार्दूलो मयूरान्कुक्कुटांस्तथा ॥ १२ ॥
वराहवार्ध्राणसकान्दधिसौवर्चलायुतान् ॥ शल्यान्मृगमयूरांश्च हनुमानन्ववैक्षत ॥ १३ ॥

स्वस्थचित्तो बभूव ॥ १—२ ॥ त्रिदशेष्वपीत्यनन्तरं अन्येयमित्यर्धं ॥ पानभूमौ ततोन्यत्रेत्यर्थः ॥ ३ ॥ क्रीडितेनेत्याद्यपराः स्त्रिय इत्यन्तमेकं वाक्यं । ददर्शेत्यनुषज्यते । क्रीडितेन क्रीडया । भावे निष्ठा । विप्रहताः क्लान्ता इत्यर्थः ॥४॥ संस्थिताः उपधानीकृत्य शयिताः । संविष्टाः सुप्ताः ॥५॥ तत्र सीताया अदर्शनात्पुनरपि रावणस्थानमागत्य ददर्शेत्याह—अङ्गनानामिति ॥ रूपसँल्लापशीलेन स्वसौन्दर्यवर्णनशीलेन । रावणविषयरूपप्रशंसाशीलेन वा । युक्तगीतार्थभाषिणा युक्तं उपपन्नं गीतार्थं भाषितुं शीलमस्येति युक्तगीतार्थभाषी तेन । देशकालाभियुक्तेन देशकालाभिज्ञेनेत्यर्थः । अङ्गनानां सहस्रेण रताभिरतसंसुप्तमित्यन्वयः । रतशब्देन बाह्यसुरतमुच्यते । अभिरतशब्देन करणबन्धादिकमुच्यते । रताभिरतश्चासौ संसुप्तश्च तं तथा । स्नातानुलिप्तादिवत्समासः । क्रीडाखेदेन सुप्तमित्यर्थः । रावणमिति शेषः ॥ ६—८ ॥ परिकीर्णः परिवृतः ॥ ९ ॥ पानभूमेः पुनर्दर्शनोक्तिस्तत्रत्यपदार्थकथनाय ॥ १० ॥ भागशः पिण्डशः ॥ ११ ॥ दी- मयूरादिशब्दाः मयूरादिविकारमांसपराः ॥ १[illegible] वार्ध्राणसाः छागविशेषाः । "त्रिपिबंत्विन्द्रिय[illegible]

**रामानु०** अत्रपुनरपिपानभूमौ स्त्रीणांरावणस्यचदर्शनाभिधानात्क्षणमन्यत्रान्विष्य विशेषेणमार्गितुं पुनःपानभूम्[illegible] दृष्टवानित्यवगम्यते ॥ ४ ॥ **ती०** युक्तगीतार्थभाषिणा युक्तं उपपन्नंयथातथा गीतस्य भरतशास्त्रस्यार्थंभाषितुंशीलमस्येति[illegible] तेन । भरतशास्त्रार्थव्याख्यानचतुरेणेत्यर्थः ॥ ६ ॥ **रामानु०** मयूरान्कुक्कुटानितिस्वरूपेणनिर्देशात्तत्तदाकारविशिष्टतयाते[illegible] इत्यवगम्यते ॥ १२ ॥ **ती०** वार्ध्राणसःपक्षिविशेषः । 'कृष्णग्रीवोरक्तशिराःश्वेतपक्षोविहङ्गमः । सवैवार्ध्राणसःपक्षी '[illegible]

**[ पा० ]** १ क. रामादुपस्थातुं. २ क. ग. नराणामपि. ३ ञ. पानभूमिंददर्शसः. ङ.—झ. ट. भूयस्तत्रचचार[illegible] पानभूमौहरिश्रेष्ठःसीतासंदर्शनोत्सुकःइत्यर्धमधिकंचदृश्यते. ४ ग. ङ. ज.—ट. मुरजेषु. ५ झ. चेलिकासु. ६ ख. च. छ[illegible] तदास्तरण. ग. कुथास्तरण. ७ देशकालाभियुक्तेनेत्यर्धानन्तरं क. ग. ङ.—ट. पाठेषु रताधिकेनसंयुक्तां ददर्शहरियूथ[illegible] अन्यत्रापिवरस्त्रीणांरूपसँल्लापशायिनाम् । सहस्रंयुवतीनांतुप्रसुप्तंसददर्शह । देशकालाभियुक्तंतु युक्तवाक्याभिधायित[illegible] इतिचत्वार्यर्धानिअधिकानिदृश्यन्ते. एषांतिलकव्याख्यानंचदृश्यते. तथाहि । देशकालाभियुक्तेन तद्विषयपरिज्ञानकुश[illegible] युक्तवाक्यस्यदेशकालोचितवाक्यस्याभिधानशीलेन । एतत्सर्वं निद्रोद्भ्रमवशादेवबोध्यं । रताधिकेन उत्तमक्रीडावता संयुक्तां[illegible] भूमिं ददर्श । अन्यत्रापीत्यादिश्लोकद्वयंनव्याःप्रमादान्नपठन्ति । अन्यत्रापि पानभूमिभिन्नेरावणशयनगृहे । बहिस्स्थांपानभू[illegible] दृष्ट्वा पुनरभ्यन्तरे शयनस्थानआगत्यान्वेषणं । रूपविषयोयःसँल्लापो वर्णनं तत्पूर्वं शयानानां युवतीनांवरस्त्रीणां सहस्रमुच्यमान[illegible] गुणंददर्श । तत् पूर्वदृष्टं. ८ क. ङ. झ. ट. रताविरतसंयुक्तं. ९ ञ. तथा. १० झ. ट. भोजनेष्वप्यभक्षितान्. ङ. भोजने ष्वथभक्षितान्. ११ ङ. झ. ञ. ट. वराहवार्ध्रीणसकान्. ज. वराहयूथान्दयितान्. क. ग. वराहगृध्रान्सुकृतान्. १२ च. छ. ञ. शल्यकान्मृगमायूरान्.

[1]क्रकरान्विविधान्सिद्धांश्चकोरानर्धभक्षितान् ॥ [2]महिषानेकशल्यांश्च [3]च्छागांश्च कृतनिष्ठितान् ॥
लेह्यानुच्चावचान्पेयान्भो[4]ज्यानि विविधानि च ॥ १४ ॥
तथाम्ललवणोत्तंसैर्विविधै रागषाडबैः ॥ हारनूपुरकेयूरैरपविद्धैर्महाधनैः ॥ १५ ॥
पानभाजनविक्षिप्तैः [5]फलैश्च विविधैरपि ॥ कृतपुष्पोपहारा भू[6]रधिकं पुष्यति श्रियम् ॥ १६ ॥
[7]तत्रतत्र च विन्यस्तैः [8]सुश्लिष्टैः शयनासनैः ॥ पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते ॥ १७ ॥
बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ॥ मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् ॥ १८ ॥
दिव्याः प्रसन्ना विविधाः सुराः [9]कृतसुरा अपि ॥ शर्करासव[10]माध्वीकपुष्पासवफलासवाः ॥ १९ ॥
[11]वासचूर्णैश्च विविधैर्दृष्टास्तैस्तैः पृथक्पृथक् ॥ सन्तता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः ॥ २० ॥
हिरण्मयैश्च [12]विविधैर्भाजनैः स्फाटिकैरपि ॥ जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता ॥ २१ ॥

---

यूपस्याग्रचरं तथा । रक्तवर्णं च राजेन्द्र च्छागं वार्ध्राणसं विदुः " इति स्मृतेः ॥ पक्षिविशेषइत्यन्ये । खड्गमृगइत्यपरे । " वार्ध्राणसः खड्गमृगः " इतिहलायुधः । दधिसौवर्चलायुतान् दधिसौवर्चलाभ्यांसंस्कृतानित्यर्थः । सौवर्चलं रुचकाख्योलवणविशेषः । " सौवर्चलेक्षरुचके " इत्यमरः । शल्यान् श्वाविधः । " श्वावित्तुशल्यः " इत्यमरः । मृगमयूरादीनां पुनःकथनं प्रदेशभेदात् ॥ १३ ॥ क्रकरान् पक्षिविशेषान् । " कृकणक्रकरौ समौ " इत्यमरः । सिद्धान् पक्कान् । एकशल्यान् मत्स्यविशेषान् । कृतनिष्ठितान् पर्याप्तप-[illegible] । "युगपर्याप्तयोः कृतं" इत्यमरः॥१४॥ आम्लल-[illegible]सैः आम्लप्रधानैः लवणप्रधानैश्च । रागषाडबैः [illegible]क्तैः षाडबैः । रागः श्वेतसर्षपः । "रागस्सिद्धा-[illegible]ः " इतिसूदशास्त्रं । षाडबाः षड्रससंयोग-[illegible]भोज्यविशेषाः । प्रदीपे त्वन्यथोक्तं " सिताम-[illegible]धुरो द्राक्षादाडिमजो रसः । विरलश्वेत्कृतो [illegible]सान्द्रश्चेत्षाडबः स्मृतः " इति ॥ १५—१७ ॥

कुशलसंयुक्तैः समर्थसूदसंयोजितैः ।एवंभूतैः मांसैः सह दृष्टा इति वक्ष्यमाणेनान्वयः ॥ १८ ॥ दिव्याः अमृतमथनोद्भूतवारुणीजातीयाः । प्रसन्नाः निष्कल्मषाः । कृतसुराः कृत्रिमसुराः । कृत्रिमसुरा एवाह—शर्करेति । शर्करासवाः शर्करया कृताः । माध्वीकाः मधुना कृताः । पुष्पासवाः पुष्पमकरन्दकृताः । फलासवाः फलरसकृताः । तथोक्तमर्णवे —" पानकं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् । मधूत्थं शीधुमाध्वीकं मैरेयं नारिकेलजं " इति ॥ १९ ॥ वासचूर्णैः अधिवासचूर्णैः सह दृष्टाः हनुमतेतिशेषः । बहुप्रकारैर्मांसैः सह सुराः वासचूर्णैः सह हनुमता तत्र पानभूमौ दृष्टा इति संबन्धः । तैस्तैरित्याद्युत्तरशेषः । तैस्तैर्मांसविशेषैस्सुराविशेषैर्वासचूर्णैश्च पृथक्पृथक् संततेति संबन्धः । बहुसंस्थितैः बहुसंस्थानैः ॥ २० ॥ हिरण्मयैरिति अत्रापि संततेति पूर्वेणान्वयः । हिरण्मयैः रजतमयैः । " कृताकृतं हेमरूप्यं हिरण्यमभिधीयते " इति वचनात् । तैस्तैः पृथक्पृथक् संतता बहुसंस्थितैर्माल्यैर्हिरण्मयैः स्फाटिकैरपि

---

[illegible]धर्मोक्तिः । छागविशेषोवा ' त्रिपिबंत्विन्द्रियक्षीणंश्वेतंवृद्धमजापतिं । वार्ध्राणसंचतंप्राहुर्याज्ञिकाःश्राद्धकर्मणि ' इतिस्मर-[illegible] त्रिपिबं पानकालेमुखपर्यन्तंकर्णयोर्लंबमानत्वात् त्रिभिः मुखेनकर्णाभ्यांचपिबतीतित्रिपिबं । खड्गमृगोवा । ' वार्ध्रा-[illegible]मृग' इतिहलायुधः ॥ १३ ॥ **ती०** कृसरानितिपाठेतिलादिमिश्रितौदनान् ॥ १४ ॥ **स०** संयुक्तैःसम्यग्रचितैः । दातृ-[illegible]युक्तैरितिवा । ' पर्याप्तिक्षेमपुण्येषुकुशलंशिक्षितेत्रिषु ' इत्यमरः ॥ दिव्याःमनोहराः । प्रसन्नाःदर्शनमात्रेपिपासाज-[illegible]सुराः स्वतएवसमुद्राद्युत्पन्नाः । कृतसुराःमादकरसैर्नूतनतयाकृताः ॥ **ती०** मार्द्वीकाइतिपाठे द्राक्षाफलविकारा । ' मृ-

[ पा० ] १ ङ. झ. ट. कृकलान्विविधाञ्छागान्शशकानर्ध. च. छ. ज. क्रकरान्विविधाञ्छागान्. २ छ. ज. ञ. [illegible]षांश्चानेक. ३ ङ. झ. ट. छेदाश्च. ४ ङ. झ. ञ. ट. भोज्यान्युच्चावचानिच. ५ च. छ. ज. विमलैर्विविधैरपि. ६ ङ. ज.—ट. [illegible]धिकां. ७ क. ख. ततस्तत्र. ८ ग. संश्लिष्टैः. झ. ञ. सुश्लिष्टशयनासनैः. ९ च. छ. ज. कृतसुरास्तथा. १० क. घ.—ट. [illegible]ध्वीकाः. ११ क. वासचूर्णाश्चविविधाः. १२ ङ. झ. ञ. ट. कलशैर्भाजनैः. च. छ. ञ. सुकृतैःकरकैः. क—घ. करकैर्भाजनैः.

राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ॥ [1]पानश्रेष्ठं तदा भूरि कपिस्तत्र ददर्श सः ॥ २२ ॥
सोपश्यच्छातकुम्भानि शीधोर्मणिमयानि च ॥ [2]राजतानि च पूर्णानि भाजनानि महाकपिः ॥२३॥
[3]क्वचिदर्धावशेषाणि क्वचित्पीतानि[4] सर्वशः ॥ क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह ॥ २४ ॥
क्वचिद्भक्ष्यांश्च विविधान्क्वचित्पानानि[5] भागशः ॥ क्वचिद[6]न्नावशेषाणि पश्यन्वै विचचार ह ॥ २५ ॥
क्वचित्प्रभिन्नैः करकैः क्वचिदालोलितैर्घटैः ॥ क्वचित्संपृक्तमाल्यानि जलानि च फलानि च ॥ २६ ॥
शयनान्यत्र नारीणां शुभ्राणि[7] बहुधा पुनः ॥ परस्परं समाश्लिष्य काश्चित्सुप्ता[8] वराङ्गनाः ॥ २७ ॥
काचिच्च[9] वस्त्रमन्यस्याः [10]स्वपन्त्याः परिधाय च ॥ [11]आहृत्य चाबलाः सुप्ता निद्राबलपराजिताः ॥ २८ ॥
तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम् ॥ नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ॥२९॥
चन्दनस्य च शीतस्य शीधोर्मधुरसस्य च ॥ विविधस्य च माल्यस्य [12]धूपस्य विविधस्य च ॥
बहुधा [13]मारुतस्तत्र गन्धं विविधमुद्वहन् ॥ ३० ॥
[14]रसानां चन्दनानां च धूपानां चैव मूर्छितः ॥ प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा ॥ ३१ ॥
श्यामा वदातास्[15]तत्रान्याः काश्चित्कृष्णा वराङ्गनाः ॥ काश्चित्काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये ॥३२॥
तासां निद्रावशत्वाच्च मदनेन विमूर्च्छितम् ॥ पद्मिनीनां प्रसुप्तानां रूप[16]मासीद्यथैव हि ॥ ३३ ॥
एवं सर्वमशेषेण रावणान्तःपुरं कपिः ॥ ददर्श [17]सुमहातेजा न ददर्श च जानकीम् ॥ ३४ ॥
निरीक्षमाणश्च तदा ताः स्त्रियः स महाकपिः ॥ जगाम महतीं चिन्तां[18] धर्मसाध्वसशङ्कितः ॥३५॥

भाजनैस्संतता जाम्बूनदमयैरन्यैः करकैश्चामिसंवृता भूमिः शुशुभ इति संबन्धः ॥ २१—२२ ॥ शीधोः मद्यस्य ॥ २३ ॥ पानानि पानपात्राणि ॥ २४ ॥ क्वचिद्भक्ष्यानित्यादिनिद्राबलपराजिता इत्यन्तमेकं वाक्यं ॥ क्वचित्प्रभिन्नैरित्यादिषु सहयोगे तृतीया हेतौतृतीया वा । प्रभिन्नत्वादालोलितत्वाच्च संपृक्तमाल्यानि माल्यमिश्राणीत्यर्थः । परस्परमित्यादि पश्यन्वै विचचारेति पूर्वेणान्वयः ॥ २५—२८ ॥ गात्रजं गात्रस्थं । मन्दमनिलं प्राप्येव अत्यर्थं न स्पन्दत इत्यन्वयः ॥ २९ ॥ चन्दनस्येत्यादि उद्वहन् प्रववावित्यपकृष्यते ॥ ३० ॥ रसादीनां सुरभिर्गन्धः विमाने मूर्च्छितः व्याप्तः सन् प्रववौ चचार ॥ ३१ ॥ वदाताः अवदाताः । भागुरिमतेनाल्लोपः । शुभ्रा इत्यर्थः ॥ ३२ ॥ चकारोप्यर्थकः । निद्रापरवशानामपि [illegible] रूपं प्रसुप्तानां पद्मिनीनां रूपमिव रम्यमासीदि[illegible] ॥ ३३—३४ ॥ धर्मसाध्वसशङ्कितः धर्मलोप[illegible]

[illegible]ह्रीकागोस्तनीद्राक्षा ' इत्यमरः ॥ शि० दिव्याःवृक्षकोटरादिद्वारावरुणादिप्रेषिताःसुराः ॥ १९ ॥ ति० शून्यानि पतिशून्य[illegible] अतएवपरस्परंसमाश्लिष्येति ॥ २७ ॥ ति० अपहृत्य बलाद्गृहीत्वा । उपगुह्य प्रावृत्य । उपगम्य तच्छयनस्थानंप्राप्य [illegible] पश्यन्विचचारेतिसंबन्धः ॥ २८ ॥ रामानु० चन्दनस्य अनुलेपनचन्दनस्य । धूपस्य गृहाधिवासार्थधूपस्य । स्नानानांचन्द[illegible] स्नानार्हचन्दनानां । धूपानां केशाधिवासधूपानां । मारुतःएतेषांविविधंगन्धमुद्वहन्प्रववौ । अतएवसुरभिः घ्राणतर्पणः गन्[illegible] विमानेपुष्पके । मूर्च्छितःव्याप्तइतिसंबन्धः ॥३१॥ ति० ततोनिरीक्षणानन्तरं । ' नेक्षेतनग्नांपरस्त्रियं ' इतिशास्त्रस्मरणा[illegible] शेषः । तदेवाह—धर्मेति । धर्मलोपनिमित्तंयत्साध्वसंभयंतेनशङ्कितःभीतइत्यर्थः ॥ ३५ ॥

[ पा० ] १ क. ङ. झ. ञ. ट. पानश्रेष्ठांतथाभूमिं. २ ञ. तानितानिच. ३ ख. क्वचिदल्पावशेषाणि. ४ ङ. झ. [illegible] त्पीतान्यशेषतः. ५ ङ. झ. ट. त्पानंविभागतः. ञ. त्पानंविभागशः. च. छ. ज. त्पानानिसर्वशः. ६ ख. ङ.—ट. क्वचि[illegible] वशेषाणि. ७ क.—ट. शून्यानि. ८ क. सुप्ताःपुनःपुनः. ९ ङ. च. छ. झ. ञ. ट. काचिच्चवस्त्रमन्यस्याअपहृत्योपगुह्[illegible] उपगम्याबलासुप्तानिद्राबलपराजिता. १० ग. घ. अपहृत्योपगूह्यतां. ११ ग. ज. उपगम्याबलाः. १२ क. ग. ङ. झ. ञ. [illegible] पुष्पस्य. १३ क. ङ.—ट. मारुतस्तस्य. १४ ट. रसानांचधनानांच. क. ख. ग. ङ.—ञ. स्नानानांचन्दनानांच. ग. पानान[illegible] चन्दनानांच. १५ क. स्तास्तत्र. १६ क. मासीत्तदद्भुतं. १७ ख. ङ. झ. ञ. ट. समहातेजाः. ग. चमहातेजाः. च. ज[illegible] सुमहावीरः. १८ क. ख. ङ. झ. ञ. ट. शङ्कां.

परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ॥ इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥ ३६ ॥
न हि मे परदाराणां दृष्टिर्विषयवर्तिनी ॥ अयं चात्र मया दृष्टः परदारपरिग्रहः ॥ ३७ ॥
तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः ॥ निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनी ॥ ३८ ॥
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ॥ न हि मे मनसः किंचिद्वैकृत्यमुपपद्यते ॥ ३९ ॥
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ॥ शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥ ४० ॥
नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ॥ स्त्रियो हि स्त्रीषु दृश्यन्ते सदा संपरिमार्गणे ॥४१॥
यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्ग्यते ॥ न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥ ४२ ॥
तदिदं मार्गितं तावच्छुद्धेन मनसा मया ॥ रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥ ४३ ॥
देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान् ॥ अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ॥ ४४ ॥
तामपश्यन्कपिस्तत्र पश्यंश्चान्या वरस्त्रियः ॥ अपक्रम्य तदा वीरः प्रध्यातुमुपचक्रमे ॥ ४५ ॥
स भूयस्तु परं श्रीमान्मारुतिर्यत्नमास्थितः ॥ आपानभूमिमुत्सृज्य तद्विचेतुं प्रचक्रमे ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकादशः सर्गः ॥ ११ ॥

---

च्छङ्कितः ॥ ३५ ॥ परदारावरोधस्य परदाररूपान्तः-[illegible] ॥ ३६ ॥ मे दृष्टिः कदाचिदपि परदाराणां [illegible]वर्तिनी नहि । परदारसंबन्धिविषयपरा नही- [illegible] तथाप्ययं परदारपरिग्रहः दृष्टः इदमसङ्गत-[illegible]ः ॥ ३७ ॥ निश्चितैकान्तचित्तस्य नियतैकरू-[illegible]स्य ॥ ३८ ॥ वैकृत्यं विकारः । उपपद्यते [illegible]ति ॥ ३९ ॥ शुभाशुभास्ववस्थासु शुभकरणाशु-[illegible]णेषु विषये । इन्द्रियाणां प्रवर्तने मन एव हेतुः [illegible]स्थितं न तदभिलाषि जातमित्यर्थः ॥ ४० ॥ ननु परदारदर्शनमपि परिहरणीयं तत्किमर्थं कृतं तत्राह—नान्यत्रेति ॥ अन्यत्र स्त्रीव्यतिरिक्ते । संपरिमार्गणे कर्तव्ये स्त्रीष्वेव हि स्त्रियो दृश्यन्ते ॥ ४१ ॥ योनिः जातिः । सजातीयइत्यर्थः ॥ ४२—४३ ॥ अपश्यत अपश्यत् ॥ ४४—४५ ॥ तत् रावणान्तःपुरं ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

---

[illegible] धर्मलोपंदर्शयति—परदारेति । परदारावरोधस्य । दारशब्दःस्त्रीसामान्यवाची । अवरोधशब्दःस्वधर्मयुक्तकुलस्त्रीवाची । [illegible] । अनेननग्नप्रायत्वंसूचितं । तत्समयेवसनानांविपर्यासात् । किंचपरदाराएवपरिग्रहो भार्यायस्यसःअतिपापीरावणश्चदृष्टः । [illegible]दर्शनमपिधर्मलोपकारीतिभावः ॥ ३७ ॥ ति० अथपुनर्विचारेणतदलोपबुद्धिरप्युत्पन्नेत्याह—तस्येति । अन्याचिन्ता [illegible]न्ताविरोधिनी । निश्चितेप्रमाणप्रतिपन्ने । एकान्तेसिद्धान्तेतद्विषयज्ञानेचित्तं । अतएवसाचिन्ताकार्यनिश्चयदर्शिनी [illegible]थाकर्तव्यनिर्णयसमर्था ॥ ८ ॥ इत्येकादशः सर्गः ॥ ११ ॥

[ पा० ] १ क. ग. घ. च. ज.—ट. ननु. २ घ. मूलं. ३ च. छ. स्त्रियाःसंपरिमार्गणे. ४ ख. ङ.—ट. शक्यं. ५ ग. [illegible]. च. छ. ज. नात्र. ख. नापि. ६ क. नैवपश्यति. ७ ख. ग. ङ.—ट. प्रस्थातुं. ८ ङ. छ.—ट. भूयस्सर्वतःश्रीमान्. [illegible] भूयस्तांपुरींश्रीमान्. घ. ज. भूयस्तत्परःश्रीमान्. ९ च. छ. ज. पानभूमिंसमुत्सृज्यविचेतुंचप्रचक्रमे. १० क. ग. घ. झ. ञ. ट. तांविचेतुं.

# द्वादशः सर्गः ॥ १२ ॥

पुनरपिहनुमता रावणगृहे लतागृहचित्रगृहादिनानास्थानेष्वन्वेषणेपि सीतायाअदर्शनेन तस्यारावणेनप्रमापणादिसंभावनया स्वयत्नस्यवैफल्यशङ्कया अकृतकार्यतयासुग्रीवाद्यवलोकनस्यातिजुगुप्सितत्वशङ्कयाच निर्वेदाधिगमः ॥ १ ॥ तथा निर्वेदस्यानर्थसाधनत्वाध्यवसायेन अनिर्वेदस्यश्रेयस्साधनत्वनिर्धारणेनच पुनरप्यन्वेषणेसमुद्यमः ॥२॥ तथा चतुरङ्गुलदेशमात्रानवशेषीकरणेनपुनरन्वेषणेपि सीतायाअदर्शनेनविषादाधिगमः ॥ ३ ॥

स तस्य मध्ये भवनस्य मारुतिर्लतागृहांश्चित्रगृहान्निशागृहान् ॥
जगाम सीतां प्रति दर्शनोत्सुको न चैव तां पश्यति चारुदर्शनाम् ॥ १ ॥
स चिन्तयामास ततो महाकपिः प्रियामपश्यन्रघुनन्दनस्य ताम् ॥
ध्रुवं हि सीता म्रियते यथा न मे विचिन्वतो दर्शनमेति मैथिली ॥ २ ॥
सा राक्षसानां प्रवरेण जानकी स्वशीलसंरक्षणतत्परा सती ॥
अनेन नूनं प्रतिदुष्टकर्मणा हता भवेदार्यपथे परे स्थिता ॥ ३ ॥
विरूपरूपा विकृता विवर्चसो महानना दीर्घविरूपदर्शनाः ॥
समीक्ष्य सा राक्षसराजयोषितो भयाद्विनष्टा जनकेश्वरात्मजा ॥ ४ ॥
सीतामदृष्ट्वा ह्यनवाप्य पौरुषं विहृत्य कालं सह वानरैश्चिरम् ॥
न मेस्ति सुग्रीवसमीपगा गतिः सुतीक्ष्णदण्डो बलवांश्च वानरः ॥ ५ ॥
दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः ॥ न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६ ॥
किंनु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः ॥ गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ॥ ७ ॥
ध्रुवं प्रायमुपैष्यन्ति कालस्य व्यतिवर्तने ॥ ८ ॥

निशागृहान् रात्रिनिवासयोग्यगृहान्। "गृहाः पुंसि च भूम्न्येव" इति पुँल्लिङ्गत्वं । पश्यति अपश्यत् ॥ १ ॥ यथा यस्मात्कारणात् । विचिन्वतो मे मैथिली दर्शनं नैति तस्मात् म्रियते ममार । यद्वा अथवा नेति वाक्यं पठनीयं । तदा अपश्यन्निति हेतुगर्भं । अदर्शनान्मृता वा अथवा दर्शनं नैति । कुत्रचिद्गहने प्रदेशे स्थितावेत्यर्थः ॥२॥ प्रतिदुष्टकर्मणा अतिदुष्टकर्मणा । वीप्सायां प्रतिः । "प्रतिप्रतिनिधौ वीप्सालक्षणादौ" इत्यमरः । परे उत्कृष्टे । आर्यपथे सन्मार्गे ॥ ३ ॥ विरूपाणि न्यूनाधिकानि रूपाणि शरीरावयवाः यासां ताः । विकृताः विकृतवेषाः । विवर्चसोनिस्तेजस्काः। महाननाः अतिविशालमुखाः । दीर्घाणि विरूपाणि दर्शनानि चक्षूंषि यासां ताः । राक्षसराजयोषितः रावणस्याज्ञाकारिणीःस्त्रियः ॥४॥ पौरुषं शत्रुविषयपराक्रमं । चिरं कालं विहृत्य [illegible] क्रम्येत्यर्थः । एवंभूतस्य मे सुग्रीवसमीपगा त[illegible] पगामिनी । गतिः मार्गः । नास्ति। सुग्रीवसमी[illegible]त्यर्थः ममायोग्येत्यर्थः । तत्र हेतुमाह—सुतीक्ष्णेति [illegible]या इति—शेषः ॥ ५—६ ॥ किंन्विति साम[illegible]ति। निर्वेदोक्तिः । विशेषतश्चाह—गत्वेति । इत्युक्त[illegible] शेषः । वदस्व न इत्युक्तः किं प्रवक्ष्यामि । [illegible] किन्त्विति पाठः । पूर्ववदर्धत्रयमेकं वाक्यं । कि[illegible]ः। ति पूर्वस्माद्विशेषोक्तिः । मां वानराः वदस्व न [illegible]दिति वक्ष्यन्ति तदा अदृष्ट्वा किं प्रवक्ष्यामीति यो[illegible] ॥ ७ ॥ तर्हि अत्रैव कालविलम्बः क्रियतां तत्रा[illegible] ध्रुवमिति ॥ कालस्य व्यतिवर्तने असमदागमनका[illegible]

ति० नम्रियतेनजीवतिस्म । ध्रुवंनुसीताम्रियतेइतिक्वचित्पाठः । तत्रहेतुःयथेति । यतइत्यर्थः ॥ २ ॥

[ पा० ] १ ङ.—ट. संस्थितोलता. घ. संश्रितोलता. २ क. ग. घ. च. छ. ज. ध्रुवंतु. ङ. झ. ञ. ट. ध्रुवंनसी[illegible] म्रियते. ३ क. ग.—च. ज.—ट. बाला. ४ च. छ. प्रतिष्ठिता. ५ घ. समाजसंगतिः. ६ ङ. झ. ट. मुपासिष्ये[illegible]. ख. मुपेष्यामि.

किं[1] वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः ॥ गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९ ॥
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ॥ अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥ १० ॥
करोति सफलं जन्तोः कर्म यत्[2]तत्करोति सः ॥ तस्माद[3]निर्वेदकृतं यत्नं चेष्टेऽहमुत्तमम् ॥ ११ ॥
भूय[4]स्तावद्विचेष्यामि देशान्रावणपालितान् ॥ भूय[5]स्तत्र विचेष्यामि न यत्र विचयः कृतः ॥
आपानशाला [6]विचितास्तथा पुष्पगृहाणि च ॥ १२ ॥
चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ॥ निष्कुटान्तररथ्याश्च विमानानि च सर्वशः ॥ १३ ॥
इति संचिन्त्य भूयोपि विचेतुमुपचक्रमे ॥ भूमीगृहांश्चैत्यगृहान्गृहातिगृ[7]हकानपि ॥ १४ ॥
उत्पतन्निपतंश्चापि तिष्ठन्गच्छ[8]न्पुनः पुनः ॥ अपा[9]वृण्वंश्च द्वाराणि कपाटान्य[10]वघाटयन् ॥ १५ ॥
प्रविशन्निष्पतंश्चापि प्रपतन्नु[11]त्पतन्नपि ॥ स[12]र्वमप्यवकाशं स विचचार महाकपिः ॥ १६ ॥
चतुरङ्गुलमात्रोपि नावकाशः स विद्यते ॥ रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः ॥ १७ ॥
प्राकारान्तर[13]र[14]थ्याश्च वेदिकाश्चैत्यसंश्रयाः ॥ [15]दीर्घिकाः पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १८ ॥
राक्षस्यो विविधाकारा विरूपा विकृतास्तथा ॥ दृष्टा हनुमता तत्र न तु सा[16] जनकात्मजा ॥ १९ ॥
रूपेणाप्रतिमा लोके वरा[17] विद्याधरस्त्रियः ॥ दृष्टा हनुमता तत्र न तु राघवनन्दिनी ॥ २० ॥
[18]नागकन्या वरारोहा पूर्णचन्द्रनिभाननाः ॥ दृष्टा हनुमता तत्र न तु [19]सीता सुमध्यमा ॥ २१ ॥
प्रमथ्य राक्षसेन्द्रेण [20]नागकन्या ब[21]लाद्धृताः ॥ दृष्टा हनुमता तत्र न सा जनकनन्दिनी ॥ २२ ॥

---

तीते । प्रायमुपैष्यन्ति । जाम्बवत्प्रभृतयइतिशेषः ॥ ८ ॥ सामान्येन निर्वेदं प्रतिवक्ति—किं वेति ॥ समुद्रलङ्घनरूपं महत्कर्म कृतवन्तं मां ते किं वक्ष्य- ...किमपि वक्ष्यन्ति । यद्वा मद्वृत्तान्तं प्रशंसन् ...न् तदुत्साहकोङ्गदस्तदुपश्रृण्वन्तोन्ये च मां ...जुगुप्सितं वक्ष्यन्ति । " किं पृच्छायां जुगु- ...इत्यमरः ॥ ९ ॥ चिरं निर्वेदे कार्यहानिः ...ते मत्वा अनिर्वेदमवलम्बते—अनिर्वेद इति ...। अनिर्वेद उत्साहः तत्कृतं तत्प्रयुक्तं । यत्नं ...रोमीत्यर्थः । यत्करोति जन्तुरिति सिद्धम् । ...नबन्धि तत्सर्वं कर्म सः अनिर्वेद एव । सफलं ...त्यन्वयः ॥ ११ ॥ आपानेति । एता विचिताः अथापि पुनर्विचेष्यामीत्यनुषज्यते ॥ १२ ॥ निष्कुटाः गृहारामाः । अन्तररथ्याः अवान्तरवीथ्यः ॥ १३ ॥ भूमीगृहान् भूमीबिलगृहान् । चैत्यगृहान् चतुष्पथमण्डपान् । गृहातिगृहकान् गृहानतीत्य दूरे स्वैरविहारार्थं निर्मितान्गृहान् ॥ १४ ॥ उत्पतन्निपतन् पूर्वमुच्चस्थानान्यधिरुह्य ततोवरोहन् । अवघाटयन् पाटयन् ॥ १५ ॥ निष्पतन् निर्गच्छन् । प्रपतन्नुत्पतन् बिलगृहादीनि नीचस्थानानि प्रथममधिरुह्य ततःसमुद्गच्छन् ॥१६—१७॥ प्राकारान्तररथ्याः प्राकारमध्यवर्तिवीथ्यः । वेदिकाश्चैत्यसंश्रयाः चैत्यवृक्षमूलपीठिकाबन्धाः ॥ १८—२१ ॥ प्रमथ्य प्रसह्य । बलाद्धृता नागकन्या इत्यभिधानादत्र बन्दीकृतानां ग्रहणं । पूर्व-

---

...चैत्यगृहान् बुद्धायतनानि । गृहातिगृहकानपि गृहानतीत्यानतिदूरेस्वैरविहारार्थंनिर्मितगृहान् ॥ ति० गृहातिगृहकाःगृहो...तिकतकः । स० भूमीगृहान् भूविवरस्थगृहान् । चैत्यगृहान् देवायतनानि । अपावृण्वन् अपगतावरणानिकुर्वन् ॥१४॥ ...पथवृत्तिवृक्षः ॥ १८ ॥ स० राघवंनन्दयतीतिराघवनन्दिनीसीता ॥ २० ॥

...पा० ] १ क. ग. किंमां. २ क. घ. ङ. झ. ट. यच्चकरोति. ख. यच्चकरोतिच. ३ क. ङ. दनिर्वेदकरं. ४ ख.—ट. ...टांश्चविचेष्यामि. ५ क. घ.—ट. पाठेष्विदमर्धंदृश्यते. ६ क. विविधास्तथा. ७ ख. गृहकानिच. ८ क. ख. ग. ङ. ञ. ...ःक्वचित्. ९ च. छ. ज. अपावृतानि. १० क. ग.—ट. न्यवघट्टयन्. ११ ङ.—झ. ट. त्पतन्निव. १२ क. सर्वानप्यव-...ांश्च. १३ ङ.—झ. ट. वीथ्यश्च. १४ क. ग. संश्रिताः. १५ क.—ट. श्वभ्राश्च. १६ क. ग. सीतासुमध्यमा. १७ झ. ञ. ...राः. १८ घ. राजकन्याः. १९ ङ.—ट. साजनकात्मजा. २० ग. देवकन्याः. ख. राजकन्याः. २१ च. छ. बलात्कृताः.

सोपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः ॥ विषसाद मुहुर्धीमान्हनुमान्मारुतात्मजः ॥ २३ ॥
उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ॥ व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागमत् ॥ २४ ॥
अवतीर्य विमानाच्च हनुमान्मारुतात्मजः ॥ चिन्तामुपजगामाथ शोकोपहतचेतनः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

## त्रयोदशः सर्गः ॥ १३ ॥

पुष्पकविमानात्प्राकारंपरिक्रान्तवताहनुमता प्रायस्सर्वत्रान्वेषणेपिसीतायाअदर्शने तत्रानेकहेतूत्प्रेक्षणपूर्वकं रामेतत्वनिवेदनानिवेदनपक्षयोर्महानर्थोत्प्रेक्षणं ॥ १ ॥ तथा सीतानवलोकनशोकेन स्वप्राणविमोक्षणरावणमारणाद्यनेकविकल्पान्परिकल्पयतातेनदैवादशोकवनिकावलोकनं ॥ २ ॥ तथा स्वेनतस्याअनन्वेषितत्वनिर्धारणेन तत्रान्वेषणनिर्धारणपूर्वकं रामादीन्प्रति सकलसुरनिकरान्प्रतिच सप्रणामंस्वान्वेषणस्यसाफल्यसिद्धिप्रार्थनं ॥ ३ ॥

विमानात्तु सुसंक्रम्य प्राकारं हरियूथपः ॥ हनुमान्वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १ ॥
संपरिक्रम्य हनुमान्रावणस्य निवेशनात् ॥ अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २ ॥
भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् ॥ न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३ ॥
पल्वलानि तटाकानि सरांसि सरितस्तथा ॥ नद्योनूपवनान्ताश्च दुर्गाश्च धरणीधराः ॥
लोलिता वसुधा सर्वा न तु पश्यामि जानकीम् ॥ ४ ॥
इह संपातिना सीता रावणस्य निवेशने ॥ आख्याता गृध्रराजेन न च पश्यामि तामहम् ॥ ५ ॥
किंनु सीताऽथ वैदेही मैथिली जनकात्मजा ॥ उपतिष्ठेत विवशा रावणं दुष्टचारिणम् ॥ ६ ॥
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ॥ बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ॥ ७ ॥

---

श्लोके ऊढानां नागकन्यानामित्यपुनरुक्तिः ॥ २२–२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

---

विमानादित्यादि । इदानीं विमानादवतरणोक्त्या मध्ये विमानमधिरूढ इत्यवगम्यते । वेगवत्त्वे दृष्टान्तमाह—विद्युदिति ॥ १ ॥ संपरिक्रम्य प्राकारमिति शेषः । अब्रवीत् स्वयमितिशेषः ॥२॥ लोलि[illegible] अति[illegible] शोन्विष्टेत्यर्थः॥३॥ सरितः क्षुद्रनद्यः। अनूपव[illegible]दसमीजलप्रायवनप्रदेशाः ॥ ४—५ ॥ सीता अय[illegible]भातिः वैदेही जन्मभूमिप्रयुक्तातिशयवती । मैथिली अ[illegible] यत प्रधानकुलोत्कर्षवती । अथशब्दस्समुच्चये । प[illegible]न्येन जनकात्मजा दुष्टचारिणं रावणं विवशा काम[illegible]इति सती उपतिष्ठेत किंनु । नेत्यर्थः॥६॥ अथास्या [illegible]यद्रा हेतूनुत्प्रेक्षते—क्षिप्रमित्यादिना ॥ रामब[illegible]

---

ति० अवतीर्य विमानएवैतत्सर्वदर्शनमितितत्वं ॥ २५ ॥ इतिद्वादशः सर्गः ॥ १२ ॥

रामानु० जनकात्मजेत्यनेन ' कर्मणैवहिसंसिद्धिमास्थिताजनकादयः ' इतिप्रसिद्धजनकसंबन्धकृतवैशिष्ट्यं । एवंगु[illegible]ष्टदेवीदुष्टचारिणंरावणंउपतिष्ठेतकिंनु मित्रत्वेनप्राप्नुयात्किंनु । नप्राप्नुयादेवेत्यर्थः । " उपाद्देवपूजासंगतिकरणमित्रकरणप[illegible] वक्तव्यं ' इत्यात्मनेपदं ॥ ६ ॥ तर्ह्यदर्शनंकुतः तत्रहेतूनुत्प्रेक्षते । क्षिप्रमिति । एतेपक्षाः दुःखातिशयात्संपातिवचनवि[illegible] मूलकाः । बिभ्यतःकराद्भ्रष्टेतिशेषः । रामबाणानां । आघातादितिशेषः । शेषेषष्ठीवा । स० यद्यपिसंपातिनालङ्कायांसीत[illegible]त्यभिधानादेवमाद्युत्प्रेक्षानशक्याकर्तुं । तथापिसंपात्युक्तरीत्याऽन्वेषणेपियतोनदृश्यतेअतस्तद्वचनमेवविचारणीयमितिमतिः[illegible]

[ पा० ] १ ख. घ. ङ. झ. ञ. ट. विषसादमहाबाहुः. ग. विषादमगमद्वीरो. क. च. छ. ज. विषादमगमद्धीम[illegible] २ ङ.—ट. पुनरुपागतः. ३ क. विमानाग्राद्धनुमान्. ४ ख. सर्वाङ्गसुन्दरीं. ५ क.—ङ. झ. ञ. ट. नच. ६ ङ. झ[illegible] सादृश्यतेतुकिं. ७ ङ.—झ. ट. रावणेनहताबलात्.

अथवा ह्रियमाणायाः पथि सिद्धनिषेविते ॥ मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् ॥ ८ ॥
रावणस्योरुवेगेन भुजाभ्यां पीडितेन[1] च ॥ तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ॥ ९ ॥
उपर्युपरि वा नूनं सागरं क्रमतस्तथा ॥ विवेष्टमाना पतिता समुद्रे जनकात्मजा ॥ १० ॥
अहो क्षुद्रेण वाऽनेन रक्षन्ती शीलमात्मनः ॥ अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ॥ ११ ॥
अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ॥ अदुष्टा दुष्टभावाभिर्भक्षिता[3] सा भविष्यति ॥ १२ ॥
संपूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् ॥ रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता ॥ १३ ॥
हा राम लक्ष्मणेत्येवं हायोध्ये चेति मैथिली ॥ विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ॥ १४ ॥
अथवा निहिता मन्ये रावणस्य निवेशने ॥ नूनं लालप्यते सीता पञ्जरस्थेव शारिका ॥ १५ ॥
जनकस्य सुता सीता रामपत्नी सुमध्यमा ॥ कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् ॥ १६ ॥
विनष्टा वा प्रणष्टा वा मृता वा जनकात्मजा ॥ रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ॥ १७ ॥
निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ॥ कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ॥ १८ ॥
अस्मिन्नेवं गते कार्ये प्राप्तकालं क्षमं च किम् ॥ भवेदिति मतं[10] भूयो हनुमान्[11]प्रविचारयत् ॥ १९ ॥
यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितः ॥ गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥ २० ॥
ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति ॥ [12]प्रवेशश्चैव [13]लङ्काया राक्षसानां च दर्शनम् ॥ २१ ॥

रामबाणेभ्यः ॥ ७ ॥ सागरं प्रेक्ष्य भीतं हृदयं सागरे पतितमिति मन्ये । हृदयस्य भयस्थानत्वेन तन्मूलतया तच्छरीरं लक्ष्यते ॥ ८ ॥ पीडितेन पीडनेन ॥ ९ ॥ उपर्युपरि सागरं सागरस्य सन्निहितोपरिप्रदेशे । " उपर्यध्यधसस्सामीप्ये " इति द्विर्वचनं । " धिगुपर्यादिषु त्रिषु " इति द्वितीया ॥ १० ॥ ...ति खेदे ॥ ११ ॥ दुष्टभावाभिः सापत्न्यप्रयु...भिः ॥ १२—१३ ॥ न्यस्तदेहा त्यक्तदेहा । ...ति भवेदित्यर्थः ॥१४॥ निहिता भूगृहादौ गूढं ...ता । लालप्यते मुहुर्मुहुः प्रलपति ॥ १५ ॥ एवं ...मानापि सीता रावणस्य वशं न व्रजेदित्याह—...ते ॥ कथं व्रजेत् । न व्रजेदेवेत्यर्थः ॥ १६ ॥

ननु किं चिन्तया गत्वा यथावृत्तं निवेद्यतामित्याशङ्क्य तदनुचितमित्याह—विनष्टेति ॥ विनष्टा भूगृहादौ स्थापनेनादर्शनं गता । " णश अदर्शने " इति धातोर्निष्ठा । प्रणष्टा समुद्रपतनादिना त्यक्तजीविता । " उपसर्गादसमासेपि णोपदेशस्य " इति णत्वं । मृता रामविरहदुःखासहिष्णुतया स्वयं मृता ॥ १७ ॥ निवेद्यमाने वक्ष्यमाणो दोषः स्यात् । दोषः स्यादनिवेदने । यथावृत्तानिवेदने स्वामिवञ्चनदोषः स्यात् । विषमं परस्परविरुद्धं ॥ १८ ॥ हनुमान् अस्मिन्कार्ये एवंगते एवं विषमत्वं प्राप्ते सति । किंप्राप्तकालं कालोचितं । क्षमं समर्थं च भवेदिति मतं पक्षं । भूयः प्रविचारयत् ॥ १९—२० ॥ पुरुषार्थाभाव-

...सायुक्तेतिज्ञेयं ॥ ७ ॥ **ति०** रामपरोक्षंतथाभयायोगात्पक्षान्तरं—अथवेति । हृदयंपतितं मनउत्क्रान्तं । मनउत्क्रमणस्यैव ...ात् ॥ ८ ॥ **स०** अबन्धुःअसंनिहितबन्धुः ॥ ११ ॥ **स०** रिपुभिर्योधयितुंशक्यायोध्यः । सनभवतीत्ययोध्यः । तस्य ...। हायोध्येत्युपपन्नं ॥१४॥ **ति०** नन्वनेनविचारेणालं यथानुभूतंनिवेद्यतां तत्राह—विनष्टेति । अस्यक्वचिद्वर्तत इतिशेषः । ...दर्शने ' इतिधात्वनुसारादृष्टासतीक्वचिदस्तीतिवक्तुं अशक्यं अक्षमं । सर्वतोन्विष्टत्वात् प्रणष्टा प्रगतंनष्टंअदर्शनंयस्यास्सा ...ः । एतदपिनवक्तुंक्षमं । स्वयमदृष्टत्वात् ॥ एवंमृतेत्यपिवक्तुंनशक्यं । तत्साधकदृढतरप्रमाणाभावात् । तस्माद्रामस्या...पिवक्तुंनशक्यं । दृश्यदेशेमाययाऽदर्शनंविनाशः । अदृश्यदेशेऽवस्थापनंप्रणाशइतितुतीर्थः ॥ १७ ॥ **ति०** प्राप्तकालं

**[ पा० ]** १ क. ख. ङ. पीडनेनच. २ ग. पापेन. ३ क. झ. ट. भक्षितावा. ४ ङ. ञ. ट. भामिनी. ५ ज. रहो...तेहिता. ६ ङ. झ. ट. भृशं. ७ ङ. झ. ट. लालप्यतेबाला. क. घ. च. छ. ञ. लालप्यतेमन्दं. ग. विलपतेमन्दं. ८ क. ङ.—ट. कुलेजाता. ९ च. छ. ज. सुधार्मिका. १० ग. ङ.—ट. मतिं. ११ ग. ङ. ज. झ. ञ. न्प्रविचारयन्. न्विचचारह. क. न्प्रव्यचारयत्. १२ च. छ. ज. प्रवेशश्चापि. १३ क. ञ. लङ्कायां.

कि[1] मां वक्ष्यति सुग्रीवो हरयो वा[2] समागताः ॥ [3]किष्किन्धां स[4]मनुप्राप्तं तौ वा दशरथात्मजौ ॥२२॥
गत्वा तु यदि काकुत्स्थं वक्ष्यामि [5]परमप्रियम् ॥ न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ॥ २३ ॥
[6]परुषं दारुणं क्रूरं तीक्ष्णमिन्द्रियतापनम् ॥ सीतानिमित्तं दुर्वाक्यं श्रुत्वा स नभविष्यति ॥ २४ ॥
तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ॥ भृशानुरक्तो मेधावी नभविष्यति लक्ष्मणः ॥ २५ ॥
विनष्टौ भ्रातरौ श्रुत्वा भरतोपि मरिष्यति ॥ भरतं च मृतं दृष्ट्वा श[7]त्रुघ्नो नभविष्यति ॥ २६ ॥
पुत्रान्मृतान्समीक्ष्याथ नभविष्यन्ति मातरः ॥ कौसल्या च सुमित्रा च कैकेयी च न संशयः ॥२७॥
कृतज्ञः सत्यसन्धश्च सुग्रीवः प्लवगाधिपः ॥ रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् ॥ २८ ॥
दुर्मना व्यथिता दीना निरानन्दा तपस्विनी ॥ पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ॥२९॥
[8]वालिजेन तु दुःखेन पीडिता शो[9]ककर्शिता ॥ [10]पञ्चत्वं च गते राज्ञि ताराऽपि नभविष्यति ॥ ३० ॥
मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च ॥ कुमारो[11]प्यङ्गदः कस्माद्धारयिष्यति जीवितम् ॥ ३१ ॥
भर्तृजेन तु [12]दुःखेन [13]ह्यभिभूता वनौकसः ॥ शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥ ३२ ॥
सान्त्वेनानुप्रदानेन मानेन च यशस्विना ॥ लालिताः [14]कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः ॥३३॥
न वनेषु न शैलेषु [15]न निरोधेषु वा पुनः ॥ क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ॥ ३४ ॥
सपुत्रदाराः सामात्या भर्तृव्य[16]सनपीडिताः ॥ शैलाग्रेभ्यः पतिष्यन्ति [17]समेत्य विषमेषु च ॥ ३५ ॥
विषमुद्बन्धनं वाऽपि प्रवेशं ज्वलनस्य वा ॥ उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ॥ ३६ ॥
घोरमारोदनं मन्ये गते मयि भविष्यति ॥ इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ॥ ३७ ॥
सोहं नैव गमिष्यामि किष्किन्धां नगरीमितः ॥ [18]न च शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥३८॥
मय्यगच्छति चेहस्थे धर्मात्मानौ [19]महारथौ ॥ आशया तौ धरिष्येते वानराश्च [20]मनस्विनः ॥ ३९ ॥
हस्तादानो मुखादानो नियतो वृक्षमूलिकः ॥ वानप्रस्थो भविष्यामि ह्य[21]दृष्ट्वा जनकात्मजाम् ॥ ४० ॥
सागरानूपजे देशे बहुमूलफलोदके ॥ [22]चितां कृत्वा प्रवेक्ष्यामि [23]समिद्धमरणीसुतम् ॥ ४१ ॥

माह—ममेदमिति ॥ २१—२२ ॥ निवेद्यमाने दोषः स्यादित्येतदुपपादयति—गत्वेत्यादिना ॥ अप्रियमिति च्छेदः ॥ २३ ॥ परुषं श्रवणकटुकं । दारुणं भयंकरं । क्रूरं उग्रं । तीक्ष्णं असह्यम् । इन्द्रियतापनं इन्द्रियक्षोभकं । सीतानिमित्तं सीताविषयं ॥ २४ ॥ पञ्चत्वगतमानसं मरणे कृतनिश्चयं ॥ २५—३२ ॥ मानेन प्रत्युत्थानादिना ॥ ३३ ॥ निरोधेषु गृह... वृतप्रदेशेषु ॥ ३४—३५ ॥ प्रचरिष्यन्ति करिष्य... त्यर्थः । शस्त्रं शस्त्रपतनं ॥ ३६ ॥ आरोदनं आ... न्ताद्रोदनं ॥ ३७—३९ ॥ हस्तादानः हस्तप... भोजी । मुखादानः मुखपतितभोजी । वृक्षमू... वृक्षमूलवासी ॥ ४० ॥ बहुमूलफलोदक इति

कालोचितं किंक्षमं किंवक्तुंयुक्तंभवेदिति भूयोमतिं तद्विषयंपक्षंविचारयन्नभूदितिशेषः ॥ १९ ॥ स० सत्यसंधः ... तिशेषः । यद्वा मनसासीतांसंबोध्यवदति—सतीति । असंधः अनिष्पन्नस्वप्रतिज्ञः । अथवा अनुवादेन सीतायाअनान... णांस्त्यक्ष्यामीतिवादऊह्यः । ततश्च सत्यसन्धइति यथावस्थितमन्वेति ॥ २८ ॥ स० हस्तादानः हस्तेयत्पतितंदैवात् त...

[ पा० ] १ क.—ट. किंवा. २ ङ. झ. ञ. ट. वापिसंगताः. क. च. छ. ज. वामहाबलाः. ३ ङ. झ. ञ. ट. कि...न्धामनुसंप्राप्तं. ४ क. ग. घ. च. छ. ज. समनुप्राप्तौ. ५ ङ. झ. ञ. ट. परुषंवचः. ६ ङ.—ट. तीक्ष्णंक्रूरमिन्द्रि... ७ क. घ. शत्रुघ्नोपिमरिष्यति. ८ क. च. छ. ज. वालिनोमृतिदुःखेन. ९ क. ग. दुःखकर्शिता. १० ङ. झ. ञ. ट. पञ्च... मागताराज्ञी. क. च. छ. ज. पञ्चत्वंचगताराज्ञी. ११ ङ. झ. ञ. ट. प्यङ्गदस्तस्माद्विजहिष्यतिजीवितं. च. छ. ज. प्यङ्गदोवा... स्तस्मात्सनभविष्यति. १२ घ. शोकेन. १३ ख.—ङ. झ. ञ. ट. अभिभूताः. १४ ङ.—ट. कपिनाथेन. १५ च. छ. निरोधेषुचवानराः. १६ क. च. छ. ज. कर्शिताः. १७ ङ.—झ. समेषु. १८ क.—ट. नहि. १९ ग. महाबलौ. २० ङ. झ. ञ. ट. तरस्विनः. २१ ख. ग. ङ.—ट. अदृष्ट्वा. २२ ङ. झ. ञ. ट. चितिं. २३ घ. प्रदीप्तं.

उपविष्टस्य वा सम्यग्लिङ्गिनीं[1] साधयिष्यतः ॥ शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥ ४२ ॥
इदं[2] महर्षिभिर्दृष्टं निर्याणमिति मे मतिः ॥ सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ॥ ४३ ॥
सुजातमूला सुभगा कीर्तिमाला यशस्विनी ॥ प्रभग्ना चिर[3]रात्रीयं मम सीतामपश्यतः ॥ ४४ ॥
तापसो वा भविष्यामि नियतो वृक्षमूलिकः ॥ नेतः[4] प्रतिगमिष्यामि ताम[5]दृष्ट्वाऽसितेक्षणाम् ॥ ४५ ॥
यदीतः[6] प्रतिगच्छामि सीतामनधिगम्य ताम् ॥ अङ्गदः सह[7] तैः सर्वैर्वानरैर्नभविष्यति ॥ ४६ ॥
विनाशे बहवो दोषा जीवन्[8]भद्राणि पश्यति ॥ तस्मात्[9]प्राणान्धरिष्यामि ध्रुवो[10] जीवितसंगमः ॥ ४७ ॥
एवं बहुविधं दुःखं मनसा धारयन्[11]मुहुः ॥ नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ॥ ४८ ॥
[ ततो[12] विक्रममासाद्य धैर्यवान्कपिकुञ्जरः ॥ ] रावणं वा वधिष्यामि दशग्रीवं महाबलम् ॥
काम[13]मस्तु हृता सीता प्रत्याचीर्णं भविष्यति ॥ ४९ ॥
अथ[14] वैनं समुत्क्षिप्य उपर्युपरि सागरम् ॥ रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ५० ॥

पकथनं । अरणीसुतं अरण्युत्पन्नं ॥ ४१ ॥ उपविष्टस्य प्रायोपविष्टस्य । लिङ्गिनीं लिङ्गं संन्यासः अनशनं तद्वती लिङ्गिनी तां । साधयिष्यतः । लिङ्गिनमिति कचित्पाठः । तत्र लिङ्गं शरीरं तद्वान् लिङ्गी आत्मा तं साधयिष्यतः । शरीरादात्मानं मोचयिष्यत इत्यर्थः । श्वापदानि श्वापदाः व्याघ्रादयः ॥ ४२ ॥ न चैवमात्मत्यागे दोष इत्याह—इदमिति । निर्याणं मारणं । आपः अपः ॥ ४३ ॥ सुजातमूला । आदौ लङ्काधिदेवताजयेन शोभनप्रारम्भा । सुभगा चन्द्रोदयेन रम्या । कीर्तिमाला मम कीर्तिमयमाला । यशस्विनी हनुमतो लङ्काप्रवेशरात्रिरिति लोके विख्याता । चिररात्री जागरणेन दीर्घभूता रात्रिः । प्रभग्ना समाप्ता । एवं कल्याणीयं रात्रिः सीतामपश्यतो मे व्यर्थैव जातेत्यर्थः । "कृदिकारादक्तिन" इति दीर्घः ॥ ४४ ॥ आत्मत्यागापेक्षया तापसभाव एव ज्यायानित्याह—तापस इति ॥ वाशब्दोऽवधारणे । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इतिविश्वः ॥ ४५ ॥ मा भूत्सुग्रीवसमीपगमनं अङ्गदादिभिस्संयुज्यतामित्याशङ्क्याह—यदीत इति ॥ ४६ ॥ बहवो दोषाः पूर्वोक्तास्सर्वविनाशादयः । संगमः श्रेयस्संगमः ॥ ४७—४८ ॥ प्रत्याचीर्णं प्रत्याचरितं प्रतिकृतमिति यावत् ॥ ४९ ॥ पशुं पशुपतेरिवेति पशुपतेः अग्नेः ।

[illegible] ॥ ४० ॥ **ति०** लिङ्गिनीमितिपाठे प्राणलिङ्गिनींचितिंचैतन्यमित्यर्थः ॥ **स०** लिङ्गिनंसाधयिष्यतः केवललिङ्गदेहवि[illegible]मानंकुर्वतः स्थूलदेहंत्यजतइतियावत् ॥ ४२ ॥ **ति०** सीतामपश्यतोमम यशस्विनी यशस्संपादिका । मृतस्यख्याति[illegible] सुजातमूला सुजातकारणवती । कीर्तिरूपामाला । जीवतःसा कीर्तिः । चिररात्रायेत्यव्ययं । चिरायेत्यर्थः । चिरायभग्ना [illegible]तकलयंगतेत्यर्थः ॥ **ती०** सुभगा सीतान्वेषणसौकर्यापादकचन्द्रिकयामनोहरा । कीर्तिमाला कीर्तनंकीर्तिः सीतान्वेषण[illegible]णीति सर्वत्रक्रियमाणाकीर्तिरेव मालायस्यास्सा । यशस्विनी हनुमल्लङ्काप्रवेशरात्रिरिति ख्यातिमती । चिररात्रिः चिर[illegible]शिष्टारात्रिः । दीर्घरात्रिरितियावत् । अनेन रामकार्यसहायेच्छया रात्रिरपिवर्धितवतीत्यवगम्यते ॥ **शि०** चिररात्राय [illegible]ऽसीतामपश्यतोमम सुजातमूला सुजातं रामसुग्रीवसंबन्धहेतुकवार्ताहरत्वेननिष्पन्नं मूलंयस्यास्सा । सुभगा शोभनैश्वर्य[illegible] यशस्विनी मुद्रिकादानोपलक्षितरामप्रीतिपात्रत्वहेतुकातियशोविशिष्टाकीर्तिमाला प्रभग्ना । अतः तापसः विचारपरः [illegible]ामि । तांसीतामदृष्ट्वा इतोनप्रतिगमिष्यामि ॥ श्लोकद्वयमेकान्वयि ॥ **स०** सुजातमूला सद्वंशप्रभवा सुभगा सुन्दरी यशस्विनी [illegible]ा तांचिररात्राय बहुकालमपश्यतोममकीर्तिमालाप्रभग्ना ॥ ४४ ॥ **ति०** एवमगमनेनिश्चिते मरणजीवितयोःकिंश्रेयस्त[illegible]विनाशइति । दोषाबहवःप्रागुक्ताः । चिरंमदगमने सीताविनाशनिश्चयेन रामादयोनस्युरेव । आत्मघातादयश्च । जी[illegible]मात्मा भद्रकंप्राप्नोति वक्ष्यमाणनानाविधोपायाश्रयणेन । तस्मात्प्राणान्धरिष्यामि । यतोमयिजीवतिसति संगमः रामा[illegible]ध्रुवः संभावितइत्यर्थः । काव्यलिङ्गमत्रालङ्कारः ॥ तीर्थस्तु अत्रजीवितसंगमइतिपाठंकल्पयामास । **स०** जीवितसंगमः

[ **पा०** ] १ ख. छ.—ञ. सम्यग्लिङ्गिनं. २ क. ग.—ट. इदमप्यृषिभिर्दृष्टं. ३ झ. ञ. ट. चिररात्राय. ४ क. च. छ. ज. प्रति. ५ च. छ. ज. ञ. मदृष्ट्वायतेक्षणां. ६ क. ग. ङ.—ञ. यदितुप्रति. ध. यदिप्रतिगमिष्यामि. ७ ग. ङ. झ. ञ. ट. इतस्सर्वैः. क. घ. च. छ. ज. सहितैः. ८ ङ. झ. ञ. ट. जीवन्प्राप्नोतिभद्रकं. ९ ग. घ. च. छ. ज. त्प्राणान्हिरक्ष्यामो. १० ख. झ. ञ. ट. ध्रुवोजीवति. क. ध्रुवंजीवति. ठ. श्रेयोजीवितसंगमः. ११ ङ. झ. ट. धारयन्बहु. १२ इदमर्धं ङ.—ट. पाठेषुदृश्यते. १३ क. घ. च. छ. ज. ञ. रामपत्नीहृतायेनप्रत्याचीर्णं. १४ ख. घ. ञ. अथचैनं.

इति चिन्तां[1] समापन्नः सीतामनधिगम्य ताम् ॥ ध्यानशोकपरीतात्मा चिन्तयामास वानरः ॥५१॥
यावत्सीतां[2] हि पश्यामि रामपत्नीं यशस्विनीम् ॥ तावदेतां पुरीं लङ्कां विचिनोमि पुनःपुनः ॥५२॥
संपातिवचनाच्चापि रामं यद्यानयाम्यहम् ॥ अपश्यन्राघवो भार्यां निर्दहेत्सर्ववानरान् ॥ ५३ ॥
इहैव नियताहारो वत्स्यामि नियतेन्द्रियः ॥ न मत्कृते विनश्येयुः सर्वे ते नरवानराः ॥ ५४ ॥
अशोकवनिका चेयं[3] दृश्यते या महाद्रुमा ॥ इमामधिगमिष्यामि[4] न हीयं विचिता मया ॥ ५५ ॥
वसुरुद्रांस्तथाऽऽदित्यानश्विनौ[5] मरुतोपि[6] च ॥ नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ॥ ५६ ॥
जित्वा तु राक्षसान्सर्वानिक्ष्वाकुकुलनन्दिनीम्[7] ॥ संप्रदास्यामि रामाय यथा[8] सिद्धिं तपस्विने ॥५७॥
स मुहूर्तमिव ध्यात्वा चिन्तावग्रथितेन्द्रियः[9] ॥ उदतिष्ठन्महातेजा[10] हनूमान्मारुतात्मजः ॥ ५८ ॥

नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ॥
नमोस्तु रुद्रेन्द्रयमानिलेभ्यो नमोस्तु[11] चन्द्रार्कमरुद्गणेभ्यः[12] ॥ ५९ ॥

स[13] तेभ्यस्तु नमस्कृत्य[14] सुग्रीवाय च मारुतिः ॥ दिशः सर्वाः समालोक्य ह्यशोकवनिकां[15] प्रति ॥६०॥
स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् ॥ उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥ ६१ ॥
ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला ॥ अशोकवनिका चिन्त्या[16] सर्वसंस्कारसंस्कृता ॥ ६२ ॥
रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान् ॥ भगवानपि सर्वात्मा[17] नातिक्षोभं प्रवाति[18] वै ॥ ६३ ॥

पशुं अजमिव । " इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने " इति श्रुतेः । अनेन सुप्रापत्वमुक्तं ॥ ५० ॥ प्रथमं चिन्ता विचारः । ततो ध्यानं ज्ञातव्यविषयनिरंतरप्रत्ययः । ततश्चिन्तेति दुरन्तचिन्तोच्यते ॥५१॥ चिन्ताप्रकारमाह—यावदिति ॥ ५२ ॥ यदि पूर्वमेव संपातिवचनप्रामाण्येन रामोत्रानीयेत तदा महान्प्रमादः स्यादित्याह—संपातीति ॥ ५३—५६ ॥ सिद्धिं तपःफलं ॥ ५७—५८ ॥ " सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः " इत्युक्तरीत्या अभिमतलाभत्वरया सर्वान्नमस्करोति—नमोस्त्विति॥५९॥ स तेभ्यस्त्वित्यादिश्लोकद्वयमेकान्वयं ॥ नमस्कृत्यालोकनरूपक्रियाभेदात्तच्छब्दद्वयं । नमस्कृत्य अशोकवनिकां प्रति उद्दिश्य सर्वा दिशस्समालोक्य अशोकवनिकां परिच्छेत्तुं तस्यास्सर्वा दिशो दृष्ट्वा तां स मनसा गत्वा उत्तरं चिन्तयामासेति योजना । अशोकशब्दः संक्षेपेव्याख्यातः ॥ ६०—६१ ॥ रक्षोबहुला रक्षकराक्षसबहुला । वनाकुला जलावृता द्रुमषण्डमण्डिता वा । सर्वसंस्कारैः कर्षणतृणनिरसनादिभिः स[illegible]कृता कृतातिशयाधाना । अशोकवनिका ध्रुवं [illegible]न्त्या भविष्यति । अवश्यमन्वेषणीया भवेदित्यर्थः ॥ [illegible]६२॥ अत्र अशोकवनिकायां । विहिताः नियुक्ताः । स[illegible]त्मा सर्वमाप्नोतीति सर्वात्मा वायुः । सोपि नाति[illegible]क्षोभं प्रवाति । अतिकम्पनपूर्वकं नात्र संचरतीत्यर्थः ॥ [illegible]३॥

जीवितेनसंगमः श्रेयः श्रेयस्साधनं ॥ ४७ ॥ ति० चिन्तया विग्रथितानि संबद्धानि व्याकुलानि इन्द्रियाणियस्यसः ॥ [illegible]८ ॥ ती० सुग्रीवायचेत्यत्र नमश्चक्रइति करोतेर्विपरिणामः । अशोकवनिकांगतः मनसेतिशेषः ॥ अशोकवनिकांप्रतीतिपाठे [illegible]मालोकयदित्यालोकयतेर्विपरिणामः । अन्यथा तच्छब्दोतिरिच्यते ॥ ति० स्वामित्वात्सूर्यांशत्वाच्च सुग्रीवनतिः ॥ ति० [illegible] अत्र

[ पा० ] १ क. ग. ङ. च. झ. ञ. ट. चिन्तासमापन्नः. २ क. ख. ङ. झ. ञ. ट. त्सीतांन. ग. च. छ. ज. त्स[illegible]तु. ३ क.—ट. चापिमहतीयंमहाद्रुमा. ४ ख. इमामभि. ५ क. ग.—ट. वसून्रुद्रान्. ६ क. ञ. मरुतोपिवा. [illegible] क. ग.—ट. राक्षसान्देवीमिक्ष्वाकु. ८ घ.—ट. सिद्धीमिव. क. स्वसिद्धिमिवयोगिने. ९ क. ग. चिन्तयाग्रथिते. ख. [illegible]ट. चिन्ताविग्रथिते. १० क. ग. ङ.—ट. न्महाबाहुः. ११ ग. घ. नमश्च. १२ ङ. झ. ञ. ट. चन्द्राग्नि. १३ ग. इतिते[illegible]ऽञ्जलिंकृत्वा. क. इतितेभ्यो. ञ. सतुतेभ्यो. १४ क. ख. ङ.—झ. ट. नमस्कृत्वा. १५ च. छ. ज. ञ. सोशोकवनिकांगतः. ख. घ. ङ. झ. ट. सोशोकवनिकांप्रति. १६ ङ.—ट. पुण्या. १७ ङ.—ट. विश्वात्मा. १८ घ. ञ. ट. प्रवात्यसौ. [illegible] ख. झ. प्रवायति.

संक्षिप्तोऽयं मयाऽऽत्मा च रामार्थे रावणस्य च ॥ [1]सिद्धिं मे संविधास्यन्ति देवाः सर्षिगणास्त्विह ॥६४॥
ब्रह्मा स्वयंभूर्भगवान्देवाश्चैव दिशन्तु मे ॥ सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत् ॥ ६५ ॥
वरुणः पाशहस्तश्च सोमादित्यौ तथैव च ॥ अश्विनौ च महात्मानौ मरुतः शर्व एव च ॥ ६६ ॥
सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः ॥ दास्यन्ति मम [6]ये चान्ये ह्यदृष्टाः पथिगोचराः ॥ ६७ ॥

तदुन्नसं पाण्डुरदन्तमव्रणं शुचिस्मितं पद्मपलाशलोचनम् ॥
द्रक्ष्ये तदार्यावदनं कदान्वहं प्रसन्नताराधिपतुल्यदर्शनम् ॥ ६८ ॥
क्षुद्रेण पापेन नृशंसकर्मणा सुदारुणालङ्कृतवेषधारिणा ॥
बलाभिभूता ह्यबला तपस्विनी कथं नु मे दृष्टिपथेऽद्य सा भवेत् ॥ ६९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ॥ १४ ॥

अशोकवनिकाप्राकारावस्थानेन वनरामणीयकावलोकनपूर्वकं वनंप्रविष्टेन शाखाचालनात्पुष्पादिशातनेन वृक्षाद्वृक्षान्तरोत्प्लवनेन सर्वतः सीतांचिन्वताहनुमता मध्येवनं काञ्चनवेदिकामण्डलमध्यवर्तिन्याः काञ्चनवृक्षपरिवृतायाः कस्याश्चित्काञ्चनमयशिंशुपाया दर्शनं ॥ १ ॥ तद्देशे रमणीयतरनदींप्रति सन्ध्योपास्त्याद्यर्थं सीतायाआगमनसंभावनेन तद्दिदृक्षया शिंशुपारोहणेन पर्णनिबिडविटपाग्रे निलीयावस्थानं ॥ २ ॥

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् ॥ [11]अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥ १ ॥
स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः ॥ पुष्पिताग्रान्वसन्तादौ ददर्श विविधान्द्रुमान् ॥ २ ॥

---

एवंभूतप्रदेशे भवतः कथं गमनमित्याशङ्क्याह—संक्षिप्त इति ॥ मया अयमात्मा देहः । रामार्थे रामप्रयोजनसिद्ध्यर्थं । रावणस्य चार्थे रावणादृश्यत्वार्थं च । संक्षिप्तः अल्पीकृतः । एवं मया कार्यानुकूलो [...]कृतः कार्यसिद्धिं तु देवा विधास्यन्तीत्याह—[...]मिति । संविधास्यन्ति ददत्वित्यर्थः ॥६४—६५॥ [...]रुद्रः ॥ ६६ ॥ उक्तमर्थं पुनः संग्रहेणाह—[...] सर्वाणि भूतानीति ॥ भूतानां प्रभुः उक्तब्रह्म[...]धिपतिः । परिशेषाद्विष्णुरित्यवगम्यते । पन्थाः [...]रः येषां ते पथिगोचराः मार्गवर्तिनः ॥ ६७ ॥ [...]तस्मात्कारणात् । उन्नता नासिका यस्य तदुन्नसं । "उपसर्गाच्च" इति समासान्तोच्प्रत्ययः नसादेशश्च । अव्रणं अनवद्यं । तत् अभिज्ञातव्यत्वेन रामेण निवेदितं ॥ ६८ ॥ सुदारुणालंकृतवेषधारिणा सुदारुणत्वेऽप्यापातप्रसन्नवेषधारिणा ॥ ६९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

इवशब्दो वाक्यालंकारे । प्राकारं अशोकवनिकाप्राकारं । तस्य वेश्मनः रावणस्य गृहात् । अवप्लुतः प्राप्तः ॥ १ ॥ संहृष्टसर्वाङ्गः पुलकितसर्वाङ्गः ।

---

[...]क्षोबहुलेत्युत्प्रेक्षया चन्द्रास्तःसूचितः । अन्यथा तत्प्रकाशेन निश्चयएवस्यात् ॥ ६२ ॥ **शि०** रामार्थेरावणस्यवनिकायां [...]मात्मादेहःसंक्षिप्तः प्रवेशितः । मेसिद्धिंतु सर्षिगणादेवादिशंतु । किंच संक्षिप्तशब्दस्यलघूकृतइत्यर्थः । रावणस्य समा[...]भूतार्थेन्वयः । सविशेषणानामित्यस्यतु नविषयः । अर्थस्यविशेष्यत्वात् । रावणसंबद्धार्थशब्दस्यविनाशपरत्वं । वनिका[...]णार्थमित्यध्याहारोवा ॥ **ति०** रावणस्य अर्थेइत्यनुकर्षः । रावणकर्तृकदर्शनपरिहारायेत्यर्थः ॥ ६४ ॥ **ति०** भूतानांप्रभुः [...]ः । दास्यन्ति । तेषामप्यस्यार्थस्येष्टत्वादितिभावः । पूर्वंप्रार्थना इदानींतु तन्निश्चयः ॥ ६७ ॥ इतित्रयोदशः सर्गः ॥१३॥ [...]० मुहूर्तमिवध्यात्वा मुहूर्तंध्यात्वेव ॥ १ ॥ **शि०** वसन्तादौचैत्रे । किंच वसन्तआदीयते नित्यंप्रतीयते यस्यांतस्यांभूमौ ॥

[पा० ] १ ङ. झ. ट. सिद्धिंदिशन्तुमेसर्वे. क. कार्यसिद्धिंप्रयच्छन्ति. २ ङ. झ. ञ. ट. न्देवाश्चैवतपस्विनः. क. च. छ. ज. न्वेदाश्चैव. ३ क. सोमसूर्यौ. ख. इन्द्रादित्यौ. ४ झ. ञ. सर्वएवच. ५ क. ग. च. छ. ज. दास्यन्तिसिद्धिं. ६ ग. च. छ. [...]. येचान्येभूताश्च. घ. ङ. झ. ञ. येचान्येप्यदृष्टाः. ७ क. च. छ. ज. समुन्नसं. ८ ङ. झ. ञ. तुल्यवर्चसं. ९ ङ.—ट [...]नेन. १० नृशंसमूर्तिना. ११ क. अवप्लुत्य.

सालानशोकान्भव्यांश्च चम्पकांश्च सुपुष्पितान् ॥ उद्दालकान्नागवृक्षांश्चूतान्कपिमुखानपि ॥ ३ ॥
अथाम्रवणसंछन्नां लताशतसमावृताम् ॥ ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् ॥ ४ ॥
स प्रविश्य विचित्रां तां विहगैरभिनादिताम् ॥ राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम् ॥ ५ ॥
विहगैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् ॥ उदितादित्यसंकाशां ददर्श हनुमान्कपिः ॥ ६ ॥
वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः ॥ कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् ॥ ७ ॥
प्रहृष्टमनुजे काले मृगपक्षिसमाकुले ॥ मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम् ॥ ८ ॥
मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् ॥ सुखप्रसुप्तान्विहगान्बोधयामास वानरः ॥ ९ ॥
उत्पतद्भिर्द्विजगणैः पक्षैः सालाः समाहताः ॥ अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥ १० ॥
पुष्पावकीर्णः शुशुभे हनुमान्मारुतात्मजः ॥ अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥ ११ ॥
दिशः सर्वाः प्रधावन्तं वृक्षषण्डगतं कपिम् ॥ दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥ १२ ॥
वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः ॥ रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३ ॥
तरस्विना ते तरवस्[११]तरसाऽभिप्रकम्पिताः ॥ कुसुमानि विचित्राणि ससृजुः [१२]कपिना तदा ॥ १४ ॥
निर्धूतपत्रशिखराः शीर्ण[१३]पुष्पफलद्रुमाः ॥ निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥ १५ ॥
हनूमता वेगवता कम्पितास्ते नगोत्तमाः ॥ [१४]पुष्पपर्णफलान्याशु मुमुचुः पुष्पशालिनः ॥ १६ ॥
विहङ्गसङ्घैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः ॥ बभूवुरगमाः सर्वे मारुतेनेव निर्धुताः ॥ १७ ॥
[१५]निर्धूतकेशी युवतिर्यथा मृदितवर्णका ॥ [१६]निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥ १८ ॥

---

वसन्तादौ " पौर्णमास्या मासान् संपाद्य " इति पक्षमनुसृत्य फाल्गुनपौर्णमासीप्रपूर्वदिनत्वेन वसन्तादावित्युक्तं ॥ २ ॥ सालान् सर्जकान् । भव्यान् शुभानित्यशोकविशेषणं । यद्वा भवं रुद्रमर्हन्तीति भव्यान् रुद्रप्रियपुष्पान् वृक्षविशेषान् । उद्दालकान् बहुवारकान् । नागवृक्षान् नागकेसरवृक्षान् । कपिमुखान् मर्कटकान् ॥ ३—४ ॥ काञ्चनैः काञ्चनमयैरिव स्थितैः ॥ ५ ॥ चित्रकाननां चित्रावान्तरवनां । चम्पकवनं चूतवनमित्येवंविधवनवतीं ॥ ६ ॥ पुष्पाण्युपगच्छन्तीति पुष्पोपगाः पुष्पसंपन्नाः तैः । फलोपगैः फलसंपन्नैः ॥ ७ ॥ प्रहृष्टमनुजे काले वसन्ते । वसन्तस्य प्रचुरमन्मथत्वात्प्रहृष्टमनुजत्वं ॥ ८—९ ॥ सालाः वृक्षाः । " अनोकहः कुटस्सालः " इत्यमरः । पुष्पवृष्टयः पुष्पवृष्टीः ॥ १४ ॥ धूर्ताः अक्षधूर्ताः ॥ १५—१६ ॥ ...स्कृता ... मात्राश्रयाः पुष्पादीनामनाश्रयाइत्यर्थः । ... अगमाः अगम्याः असेव्या इत्यर्थः । निर्धुताः ... ताः ॥ १७ ॥ मृदितवर्णका मृष्टाङ्गरागा । "अ...

ति० वसन्तादौ वसन्तादिसर्वर्तुषु संनिहितैःपुष्पैःपुष्पिताम्रान् ॥ २ ॥ ति० कपिमुखान् कपिमुखाकारफलवतः । ... णमेतत् ॥ ३ ॥ राजतैः रजतादिसंस्कृतैस्तद्वर्णैर्वा ॥ ५ ॥ ति० उदितादित्यसंकाशां पुष्पैरितिशेषः ॥ ६ ॥ ति० काले... स्मिन् । मृगादीन्मदेनाकुलयति तां ॥ ७ ॥ ति० सर्वाभिधावन्तमिति संधिरार्षः । वसन्तइतिमेनिरइति अन्यस्येहवनेऽ... प्रवेशत्वाद्वसन्तएव वृक्षसंचारोचितंकपिरूपमास्थाय चरतीतिमेनिरइत्यर्थः । एतेन द्रष्टॄणांतस्मिन्विमतिनिवृत्तिरीश्वरानुग्र... सूचितं ॥ स० वसन्तइतिमेनिरे सर्ववृक्षपत्रादिशातनात् ' वसन्तेसर्वसस्यानां जायतेपत्रशातनं ' इतिवचनात् पुष्पाव... त्युक्तिस्वारस्यात् ॥ १२ ॥ ति० निपीतः शुभदन्तयुक्तओष्ठोयस्यास्सा । स० निष्पीताः अत्यन्तमन्तर्गमिताः आच्छादि...

[ पा० ] १ ख. झ. ञ. ट. तथाम्रवणसंपन्नाँल्लताशतसमन्वितान्. ङ. च. छ. ज. तथाम्रवणसंछन्नाँल्लतागृहसम... २ ङ. च. ञ. ट. विहङ्गैः. ३ ङ. झ. ञ. ट. हनुमान्बली. ४ ङ. झ. प्रहृष्टमनुजां. ५ घ. बहुपक्षि. ख. मृगद्विजमदाकुलां... समाकुलां. क. मदाकुले. ङ. झ. ट. मदाकुलां. ७ ङ. झ. ट. पक्षैर्वातैः. ८ ञ. समावृताः. ९ च. छ. ज. ञ. सर्वादिशोऽभिधावन्तं. ख. ग. सर्वादिशोविधावन्तं. घ. ङ. झ. ट. दिशः सर्वाभिधावन्तं. १० ग. सुभूषिता. ११ ङ. झ. ट. स्तरसाबहु... पिताः. घ. स्तरसाहिप्रकंपिताः. १२ क. च. छ. ज. कपिनोद्धताः. १३ ग. जीर्णपत्रफल. ञ. शीर्णपत्र. १४ ङ. झ. ट. पुष्पपत्र. १५ ग. घ. ङ. झ. ञ. ट. विधूत. १६ ङ. झ. ञ. ट. निपीत.

तथा लाङ्गूलहस्तैश्च चरणाभ्यां च मर्दिता ॥ बभूवाशोकवनिका प्रभग्नवरपादपा ॥ १९ ॥
महालतानां दामानि व्यधमत्तरसा कपिः ॥ यथा प्रावृषि विन्ध्यस्य मेघजालानि मारुतः ॥ २० ॥
स तत्र मणिभूमीश्च राजतीश्च मनोरमाः ॥ तथा काञ्चनभूमीश्च ददर्श विचरन्कपिः ॥ २१ ॥
वापीश्च विविधाकाराः पूर्णाः परमवारिणा ॥ महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२ ॥
मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः ॥ काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३ ॥
फुल्लपद्मोत्पलवनाश्चक्रवाकोपकूजिताः ॥ नत्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४ ॥
दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः ॥ अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥ २५ ॥
लताशतैरवतताः संतानकसमावृताः ॥ नानागुल्मावृतघनाः करवीरकृतान्तराः ॥ २६ ॥
ततोऽम्बुधरसंकाशं प्रवृद्धशिखरं गिरिम् ॥ विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७ ॥
शिलागृहैरवततं नानावृक्षैः समावृतम् ॥ ददर्श हरिशार्दूलो रम्यं जगति पर्वतम् ॥ २८ ॥
ददर्श च नगात्तस्मान्नदीं निपतितां कपिः ॥ अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९ ॥
जले निपतिताग्रैश्च पादपैरुपशोभिताम् ॥ वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३० ॥
पुनरावृत्ततोयां च ददर्श स महाकपिः ॥ प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१ ॥
तस्यादूरात्स पद्मिन्यो नानाद्विजगणायुताः ॥ ददर्श हरिशार्दूलो हनुमान्मारुतात्मजः ॥ ३२ ॥
कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा ॥ मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ ३३ ॥
विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् ॥ प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ ३४ ॥
काननैः कृत्रिमैश्चापि सर्वतः समलङ्कृताम् ॥ ३५ ॥
ये केचित्पादपास्तत्र पुष्पोपगफलोपगाः ॥ सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः ॥ ३६ ॥

---

गसमालम्भो वर्णकश्च विलेपनं " इत्युक्तेः । निष्पी- [illegible]ोष्ठी निष्पीततयाशुभदन्ततुल्योष्ठी ॥ १८—१९ ॥ [illegible]लतानां दामानि प्रतानानि ॥ २०—२३ ॥ [illegible] दात्यूहाः ॥ २४—२५ ॥ संतानकाः [illegible]स्तैस्समावृताः । घनाः निबिडाः । नानागु- [illegible]श्च ताः घनाश्चेति समासः । करवीरकृतान्त- [illegible]वीरैः कृतविशेषाः ॥ २६—२७ ॥ जगति [illegible]रम्यं एतत्सदृशं रम्यं किंचिन्नास्तीत्यर्थः । [illegible]दर्शेत्यन्वयः ॥ २८ ॥ अथ नद्याः कुपितया निर्गतया सखीसान्त्वनेन पुनरागतया साम्यं दर्शयति —ददर्श चेति ॥ २९—३० ॥ पुनरावृत्ततोयां वृक्षाग्रप्रतिहत्या पुनःपर्वताभिमुखतोयप्रवाहां । उपमाने उपमेये चान्वयाय ददर्शेति पदद्वयं ॥ ३१ ॥ तस्य पर्वतस्य । पद्मिन्यः पद्मिनीः ॥ ३२ ॥ कृत्रिमां क्रियया निर्वृत्तां निर्मितामित्यर्थः ॥ ३३—३५ ॥ सच्छत्राः सवितानाइत्यर्थः । सवितर्दिकाः सवेदिकाः । सौवर्णवेदिकाः वितर्दिकारोहणार्थं सुवर्णमयसोपान-

---

[illegible]शुभदन्ता याभ्यांतौ ओष्ठौयस्यास्सा ॥ १८ ॥ **रामानु०** जगतिपर्वतं । जगतीशब्दस्यह्रस्वभावआर्षः । जगती भूमिः [illegible]त् । तत्प्राधान्याज्जगतिपर्वतमित्युक्तं । यद्वा जगतिपर्वतइतिसंज्ञा ॥ **ति०** जगति लोकेरम्यं सुन्दरवस्तुभ्योपि परम- [illegible]र्थस्तु—जगतीपर्वतमित्यर्थः । मृत्पर्वतइतियावदितिव्याचक्षाण उपेक्ष्यएव । **शि०** पर्वतं पर्वभिः अनेकग्रन्थिभिः

[illegible]स०] १ च.—ञ. हस्तैस्तु. २ ङ. झ. ञ. ट. तथैवाशोक. ३ ख. ङ. च. झ. ञ. ट. वनपादपा. ४ ङ. झ. ञ. ट. [illegible]षिवेगेन. च. छ. ज. प्रावृट्प्रवृद्धानि. ५ ख. ग. ङ. ञ. ट. विचरन्ददृशेकपिः. ६ ग. घ. ङ. झ. ञ. ट. बुद्धपद्मोत्पल. [illegible].—ट. श्चक्रवाकोपशोभिताः. ८ ख. छ. ज. शुभाभिः. ९ क. रुपसंवृताः. घ. रभिसंस्कृताः. १० क.—घ. च. छ. [illegible]कसमावृताः. ११ क. ग.—ट. वनाः. १२ ङ. झ. ञ. ट. वृक्षसमावृतं. १३ क. रजतपर्वतं. १४ घ. तोयांतां. [illegible] क. अस्तत्र. १६ क. च. छ. ज. गणावृताः. १७ ङ.—ञ. वापि. १८ ख. ञ. निर्मितांविश्व.

लताप्रतानै[1]र्बहुभिः पर्णैश्च बहुभिर्वृताम् ॥ काञ्चनीं शिंशुपामेकां ददर्श [2]हनुमान्कपिः ॥
वृतां [3]हेममयीभिस्तु वेदिकाभिः समन्ततः ॥ ३७ ॥
सोपश्यद्भूमिभागांश्च [4]गर्तप्रस्रवणानि च ॥ सुवर्णवृक्षानपरान्ददर्श शिखि[5]सन्निभान् ॥ ३८ ॥
तेषां द्रुमाणां प्रभया मेरोरिव [6]दिवाकरः ॥ अमन्यत तदा वीरः काञ्चनोस्मीति [7]वानरः ॥ ३९ ॥
[8]तां काञ्चनैस्तरुगणैर्मारुतेन च वीजिताम् ॥ किङ्किणीशतनिर्घोषां दृष्ट्वा [9]विस्मयमागमत् ॥ ४० ॥
स पुष्पिताग्रां [10]रुचिरां तरुणाङ्कुरपल्लवाम् ॥ तामारुह्य [11]महाबाहुः शिंशुपां पर्णसंवृताम् ॥ ४१ ॥
इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् ॥ इतश्चेतश्च दुःखार्तां [12]संपतन्तीं यदृच्छया ॥ ४२ ॥
अशोकवनिका चेयं दृढं रम्या दुरात्मनः ॥ [13]चम्पकैश्चन्दनैश्चापि बकुलैश्च विभूषिता ॥ ४३ ॥
इयं च नलिनी रम्या द्विजसङ्घनिषेविता ॥ इमां सा [14]राममहिषी नूनमेष्यति जानकी ॥ ४४ ॥
सा रामा [15]राममहिषी राघवस्य प्रिया [16]सती ॥ वनसंचारकुशला [17]नूनमेष्यति जानकी ॥ ४५ ॥
अथवा मृगशावाक्षी वनस्यास्य विचक्षणा ॥ वनमेष्यति [18]सार्येह रामचिन्ता[19]नुकर्शिता ॥ ४६ ॥
रामशोकाभिसंतप्ता सा देवी वामलोचना ॥ [20]वनवासे रता नित्यमेष्यते वनचारिणी ॥ ४७ ॥
वनेचराणां सततं नूनं स्पृहयते [21]पुरा ॥ रामस्य दयिता [22]भार्या जनकस्य सुता सती ॥ ४८ ॥
संध्याकालमनाः श्यामा [23]ध्रुवमेष्यति [24]जानकी ॥ नदीं चेमां [25]शिवजलां सन्ध्यार्थे वरवर्णिनी ॥४९॥
तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा ॥ शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य संमता ॥ ५० ॥
यदि जीवति सा देवी ताराधिपनिभानना ॥ आगमिष्यति साऽवश्यमिमां [26]शिवजलां नदीम् ॥५१॥

---

वेदिकायुक्ताः ॥ ३६—३९ ॥ काञ्चनैस्तरुगणैः उपलक्षितां तां शिंशुपां । किङ्किणीशतनिर्घोषां किङ्किण्यः क्षुद्रघण्टिकाः तासां निर्घोषो यस्याः । यद्वा किङ्किणीभिः शतमनन्ताः निर्घोषा यस्याः सा तां ॥ ४० ॥ स पुष्पिताग्रामित्याद्यासर्गसमाप्त्येकं वाक्यं ॥ ४१ ॥ इतो द्रक्ष्यामि इमामारुह्य द्रक्ष्यामि । ल्यब्लोपे पञ्चमी ॥ ४२ ॥ दुरात्मनः रावणस्य ॥ ४३—४५ ॥ अथवेति पक्षान्तरे । विचक्षणा तापापनोदनचतुरा । अस्य वनस्य अशोकवनस्य । इह वनं नलिनीपरिसरवर्तिवनं । रामचिन्तानुकर्शिता सती एष्यति । रामविश्लेषजनिततापापनोदनार्थमेतद्वनप्रदेशमागमिष्यतीत्यर्थः । सा आर्येति[illegible] ॥ ४६ ॥ एष्यते एष्यति ॥ ४७ ॥ व[illegible] स्पृहयते वनेचरेभ्यस्स्पृहयते ॥ ४८ ॥ संध्याका[illegible] यस्यास्सा संध्याकालमनाः संध्योपासनतत्पर[illegible] संध्यार्थे एष्यति प्रतिदिनमितिशेषः ॥ ४९—[illegible]

---

तन्यतेवर्ध्यते सतं ॥ २८ ॥ शि० मेरोरिव द्रुमाणांप्रभयोपलक्षितोमहाकपिः अहंकाञ्चनोस्मीत्यमन्यत ॥ ३९ ॥ ति० [illegible] दिनरात्र्योःसन्धिरूपानुष्ठानकालोयस्यकर्मणस्तत्रमनोयस्यास्सातथा । सन्ध्यार्थे सन्ध्याकालक्रियमाणस्नानाद्यर्थे । पूर्ववदे[illegible] कस्यैवार्थस्यावृत्तिः । रात्रिशेषे हनुमतोस्यवचसःप्रवृत्तेः सन्ध्याशब्देनात्रप्रातःकालोविवक्षितः । तत्रकर्तव्यस्नानादौचास्त्ये[illegible] मप्यधिकारइति कथंस्त्रीणांसन्ध्यावन्दनमितिपरास्तंवेदितव्यं । किंच सम्यग्भगवद्ध्यानस्यैव सन्ध्यापदार्थत्वेनास्त्येव तत्रस्त्रि[illegible] कारः । गायत्रीमन्त्रेण तदर्थस्मरणपूर्वकध्यानेतु द्विजस्यैवाधिकारइत्यन्यत् ॥ ४९ ॥ इतिचतुर्दशः सर्गः ॥ १४ ॥

[ पा० ] १ घ. च. छ. ज. लतावितानैः. २ क. ङ.—ट. समहाकपिः. ३ च. हेममयीभिश्च. ४ ङ. झ. ञ. [illegible] स्रवणानिच. ५ घ. गिरिसंनिभान्. ६ क. घ. ङ. ट. महाकपिः. ७ ङ. झ. ट. सर्वतः. ८ ग. ङ. झ. ञ. ट. तान्को[illegible] क्षमणान्मारुतेनप्रकंपितान् । किङ्किणीशतनिर्घोषान्दृष्ट्वा. ९ क. च. छ. ज. मागतः. १० क. च. छ. ज. हनुमांस्तर[illegible] ११ क. ग.—ट. महावेगः. १२ झ. ञ. संतपन्तीं. १३ ग. ङ.—ट. चन्दनैश्चंपकैश्चापि. १४ क. ख. ग. ङ. च. छ. ञ. ट. राजमहिषी. १५ ङ.—ट. राजमहिषी. १६ ख.—ङ. ञ. ट. सदा. १७ घ.—ट. ध्रुवं. १८ ङ. झ. ञ. सार्येह. घ. साध्वीह. १९ ङ.—ट. सुकर्शिता. २० ख.—ट. वनवासरता. २१ क. सदा. २२ ङ. झ. ञ. चार्या. [illegible]ट. नूनं. २४ ग. मैथिली. २५ ख. घ.—ट. शुभजलां. क. शीतजलां. २६ ख. ग. ङ.—ट. शीतजलां.

एवं तु मत्वा हनुमान्महात्मा प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ॥
अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पर्णघने निलीनः ॥ ५२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः ॥ १५ ॥

शिंशुपाविटपाग्रावस्थानेनैव सर्वतश्चक्षुषीचालयताहनुमताऽत्यद्भुताकारचैत्यप्रासादगताया ग्रन्थकृदुपवर्णितगुणावस्थोपलक्षितायाःसीतायाअवलोकनं ॥ १ ॥ अथबहुहेतुभिस्तस्याःसीतात्वनिर्धारणं ॥ २ ॥

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ॥ अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ १ ॥
सन्तानकलताभिश्च पादपैरुपशोभिताम् ॥ दिव्यगन्धरसोपेतां सर्वतः समलङ्कृताम् ॥ २ ॥
तां स नन्दनसंकाशां मृगपक्षिभिरावृताम् ॥ हर्म्यप्रासादसंबाधां कोकिलाकुलनिस्वनाम् ॥ ३ ॥
काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम् ॥ बह्वासनकुथोपेतां बहुभूमिगृहायुताम् ॥ ४ ॥
सर्वर्तुकुसुमै रम्यां फलवद्भिश्च पादपैः ॥ पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥ ५ ॥
प्रदीप्तामिव तत्रस्थो मारुतिः समुदैक्षत ॥ निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥ ६ ॥
विनिष्पतद्भिः शतशश्चित्रैः पुष्पावतंसकैः ॥ आमूलपुष्पनिचितैरशोकैः शोकनाशनैः ॥ ७ ॥
पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम् ॥ कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥ ८ ॥
स देशः प्रभया तेषां प्रदीप्त इव सर्वतः ॥ पुन्नागाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा ॥
विवृद्धमूला बहवः शोभन्ते स्म सुपुष्पिताः ॥ ९ ॥
शातकुम्भनिभाः केचित्केचिदग्निशिखोपमाः ॥ नीलाञ्जननिभाः केचित्तत्राशोकाः सहस्रशः ॥ १० ॥
नन्दनं विविधोद्यानं चित्रं चैत्ररथं यथा ॥ अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यं श्रिया वृतम् ॥ ११ ॥

पर्णघने इति पर्णसमूहे । महात्मा स हनुमान् । पुष्पिता-[illegible]विशिष्टां तामारुह्य इतो द्रक्ष्यामीत्यारभ्य [illegible]ष्यति सावश्यमिमां शिवजलां नदीमित्यन्तेन [illegible]र उक्तः एवमुक्तप्रकारेणमत्वा । मनुजेन्द्रपत्नीं [illegible]णः अवेक्षमाणः मार्गमाणः । सुपुष्पिते [illegible] निलीनश्च सन् सर्वं ददर्शेत्यन्वयः ॥ ५२ ॥ [illegible] श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे [illegible]तिलकाख्याने सुन्दरकाण्डव्याख्याने चतुर्दशः [illegible] ॥ १४ ॥

तत्रस्थः शिंशुपास्थः। मैथिलींमार्गमाणः मैथिली-[illegible]द्धेतोः। "लक्षणहेत्वोः क्रियायाः" इति शानच् । [illegible]णः विविधं चक्षुर्विक्षिपन् । महीं चावेक्षमाणः सर्वां तां अशोकवनिकां अन्ववैक्षतेत्यन्वयः ॥ १—३ ॥ बह्वासनैः कुथैः आस्तरणैश्चोपेतां । भूमिगृहाणि बिलगृहाणि ॥ ४ ॥ सर्वर्तुकुसुमैः पादपैः रम्यामित्यन्वयः । सूर्योदयप्रभां उद्यत्सूर्यप्रभां ॥ ५ ॥ विहगैः निष्पत्रशाखां क्रियमाणामिव स्थितां । युगपत्पातिपक्षिपक्षविहतपत्रतया पत्ररहितशाखामिव स्थितामित्यर्थः ॥ ६ ॥ पुष्पावतंसकैः चञ्चुपुटलग्नपुष्पालंकृतैरित्यर्थः । आमूलेति आमूलं पुष्पैर्निचितैः व्याप्तैः । पुन्नागादौ तथा दृष्टं ॥ ७ ॥ पुष्पभारः पुष्पसमूहः स एवातिभारो येषां तैः । अशोकैरित्यादावुपलक्षणे तृतीया । अशोकादिभिरुपलक्षितां समुदैक्षतेति पूर्वेणान्वयः ॥ ८—१० ॥ पुनरशोकवनं विविधोपभानदर्शनेन वर्णयति—नन्दनमित्यादिना श्लोकच-

[ पा० ] १ झ. ञ. ट. गत्वा. २ ग. पुत्रीं. ३ घ. समीक्षमाणस्सर्वत्र. क. वीक्षमाणस्तुतत्रस्थो. ४ ग. ङ.—ट. रम्यैः. ङ. झ. ञ. ट. समूलंपुष्परचितैः. क. ग. च. छ. ज. समूलंपुष्पविचितैः. ख. आमूलपुष्पोपचितैः. ६ ङ. झ. ट. शिखप्रभाः. ख. ङ. झ. ञ. ट. विबुधोद्यानं. ८ ख. अभिवृद्धमिवा. ९ क. ग. ङ. झ. ञ. ट. श्रियायुतं.

द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् ॥ पुष्परत्नशतैश्चित्रं पञ्चमं सागरं यथा ॥ १२ ॥
सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ॥ नानानिनादैरुद्यानं रम्यं मृगगणैर्द्विजैः ॥ १३ ॥
अनेकगन्धप्रवहं पुण्यगन्धं मनोरमम् ॥ शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ॥ १४ ॥
अशोकवनिकायां तु तस्यां वानरपुङ्गवः ॥ स ददर्शाविदूरस्थं चैत्यप्रासादमुच्छ्रितम् ॥ १५ ॥
मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ॥ प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् ॥ १६ ॥
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ॥ विमलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ॥ १७ ॥
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥ उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ॥
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ १८ ॥
मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ॥ पिनद्धां धूमजालेन शिखामिव विभावसोः ॥ १९ ॥
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ॥ सपङ्कामनलंकारां विपद्मामिव पद्मिनीम् ॥ २० ॥
व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीम् ॥ ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥ २१ ॥
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ॥ शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ॥ २२ ॥
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ॥ स्वगणेन मृगीं हीनां श्वगणाभिवृतामिव ॥ २३ ॥
नीलनागाभया वेण्या जघनं गतयैकया ॥ नीलया नीरदापाये वनराज्या महीमिव ॥ २४ ॥

तुष्टयेन ॥ उद्यानं अशोकवनं । अत्र ददर्शेत्यपकृष्यते । नन्दनं इन्द्रक्रीडावनं । विविधोद्यानं विविधवृक्षषण्डं । चैत्ररथं कुबेरक्रीडावनं । नन्दनमतिवृत्तमिव अतिक्रम्य स्थितमिव । चैत्ररथं यथा चैत्ररथमिव चित्रमित्यन्वयः ॥ ११ ॥ आकाशसाम्ये साधारणधर्ममाह—पुष्पेति । एवं सागरौपम्ये पुष्परत्नेति ॥१२—१४॥ चैत्यप्रासादं चैत्यं बुद्धमन्दिरं तदाकारं प्रासादं ॥१५—१६॥ प्रांशुभावत्वात् दीर्घस्वभावत्वात् ॥१७॥ मलिनसंवीतां मलिनवस्त्रेणावृतां मलिनैरङ्गैः संवीतां वा । शुक्लपक्षादावित्यनेन वर्धिष्णुत्वं द्योतितं ॥ १८ ॥ मन्दं प्रख्यायमानेन इदं तदिति कथंचित्प्रत्यभिज्ञायमानेन रूपेणोपलक्षितां । पिनद्धामिति मलिनसंवीतत्वे उपमा । पिनद्धां बद्धां ॥ १९ ॥ उत्तरीयराहित्यं द्योतयितुमेकेनेत्युक्तिः । सपङ्कां भूमेराविर्भवन्तीमिव स्थितां । अनलंकारां पङ्कं निवर्त्य अलंकुर्वतोसन्निधानादलंकाररहितां । रामागमनेप्ययमाश्रयो नोत्सादयितुमर्हतीत्येवं मन्यमानां । विपद्मामिवपद्मिनीं पद्मरहितां सरसीमिव ॥ २० ॥ ग्रहेण क्रूरग्रहेण । द्वितीय इव वाक्यालंकारे ॥२१॥ कृशां दीनामिति पुनःपुन कार्श्यदैन्ययोरतिशयप्रदर्शनाय । अत्र उपवा कृशामनशनेनेत्युक्त्या पूर्वकाण्डान्ते इन्द्रदत्तपा शनवृत्तान्तः कल्पित इति तत्रैवोक्तं ॥ २२— नीलनागाभया कृष्णसर्पतुल्यया । नीरदापाये

स० एकेनसंवीतां उत्तरीयवस्त्रस्यसुग्रीवसंनिधौप्रक्षिप्तत्वात् ॥ २० ॥ शि० अङ्गारकेणग्रहेणपीडितांरोहिणीमिवपी ति० अङ्गारकेणेव तत्तुल्येनग्रहेणकेतुना पीडितांरोहिणीमिव ॥ २१ ॥ शोकध्यानपरां शोकेन रामविरहजन्येन ध्यानप ध्यानसक्तां ॥ २२ ॥ स० एकया अत्रिगुणितया ॥ ति० जघनं पृष्ठभागं गतया प्राप्तया । एकया हरणदिनकृतैकसंस्क यद्वा पुरोभागीयवेणीद्वयराहित्येन पृष्ठलंबया एकयावेण्या । नीलनागाभया नीलसर्पतुल्यया वेण्या उपलक्षितां । अनेन को

[ पा० ] १ क. तद्द्वितीयमिवाकाशं. २ क. ङ.—ट. गणद्विजैः. ३ क. घ.—ट. मनोहरं. ४ ख. घ. ङ. झ. रू मूर्जितं. ग. च. छ. ज. मुत्तमं. ५ ङ. झ. ञ. ट. निर्मलं. ६ ग. चन्द्रलेखामिवावृतां. ७ क.—ट. मन्दप्रख्याय. ८ च. छ ज. पद्मिनीमिवश्रियं. ९ ङ.—ट. पीडितां. १० ङ. झ. ञ. ट. परिक्षीणां. ग. परिक्लिन्नां. घ. व्यसनानामकोविदां ११ ग. घ. ङ. ट. नित्यदुःख. १२ क. ग. जनं. १३ ङ. झ. ञ. ट. श्वगणेनावृतामिव. ग. श्वगणेनसमावृतां. १४ प्रतिलंबया.

सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ॥ तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥
तर्कयामास सीतेति कारणैरुपपादिभिः ॥ २५ ॥
ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥ यथारूपा हि दृष्टा वै तथारूपेयमङ्गना ॥ २६ ॥
पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥ कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥ २७ ॥
तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥ सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ॥२८॥
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ भूमौ सुतनुमासीनां नियतामिव तापसीम् ॥ २९ ॥
निश्श्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥ शोकजालेन महता विततेन न राजतीम् ॥ ३० ॥
संसक्तां धूमजालेन शिखामिव विभावसोः ॥ तां स्मृतीमिव संदिग्धामृद्धिं निपतितामिव ॥ ३१ ॥
विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥ सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ॥
अभूतेनापवादेन कीर्तिं निपतितामिव ॥ ३२ ॥
रामोपरोधव्यथितां रक्षोहरणकर्शिताम् ॥ अबलां मृगशावाक्षीं वीक्षमाणां ततस्ततः ॥ ३३ ॥
बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा ॥ वदनेनाप्रसन्नेन निश्श्वसन्तीं पुनः पुनः ॥ ३४ ॥
मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् ॥ प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ ३५ ॥
तस्य संदिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु ॥ आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥३६॥
दुःखेन बुबुधे सीतां हनुमाननलङ्कृताम् ॥ संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ ३७ ॥

॥ २४ ॥ उपपादिभिः उपपादनशीलैः । मन्दप्रख्यायमानेनेत्यारभ्य सीतां समीक्ष्य उपपादिभिः कारणैस्सीतेति तर्कयामासेत्यन्वयः ॥ २५ ॥ एवं लिङ्गैः सीतेति विचार्य प्रत्यभिज्ञयापि तथा तर्कयामासेत्याह ह्रियमाणेति ॥ इति तर्कयामासेति शेषः ॥ २६ ॥ ...ाननामित्यारभ्य विद्यां प्रशिथिलामिवेत्यन्त... ...यं । सुभ्रूं सुभ्रुवं । उवङ्भाव आर्षः । कुर्व... ...हि दश मासान् स्नानेन विना मलिनापि दिशः वितिमिराः कुर्वन्तीमिति प्रभातिशयोक्तिः ... सुप्रतिष्ठितां सुप्रतिष्ठितपादतलां ॥ २८— ...नराजतीं नराजन्तीं ॥ ३० ॥ तां प्रसिद्धां । ...मन्वाद्युक्तिं । संदिग्धां संदिग्धार्थां । ऋद्धिं निपतितां क्षीणां ॥ ३१ ॥ विहतां अविश्वासबहुलां । प्रतिहतां अलब्धकार्यां । सोपसर्गां सविघ्नां । सकलुषां सकालुष्यां । भावप्रधानो निर्देशः । अभूतेन असत्येन ॥ ३२ ॥ रामोपरोधव्यथितां रामप्राप्तिनिरोधेन व्यथितां ॥ ३३—३५ ॥ पुनः सीताशब्दोऽव्यवहितानुस्मरणार्थः । आम्नायानां वेदानां । अयोगेन असंबन्धेन । प्रशिथिलां अप्राप्तप्रतिष्ठां । विद्यां वेदबाह्यविद्यां । यद्वा आम्नायानां अभ्यासानामभावेन प्रशिथिलां अस्थिरपदां विद्यामिव सीतां निरीक्ष्य तस्य हनुमतो बुद्धिः संदिदिहे इत्यन्वयः । कार्श्यमालिन्यादिना तिरोहितरूपत्वादिति भावः ॥ ३६ ॥ संस्कारः शब्दव्युत्पत्तिः तेन हीनां अत एव विवक्षितादर्थान्तरंगतां विपरीतार्थामित्यर्थः । संस्कारहीनतया प्रतिपिपादयिषितार्थवक्तुमशक्नुव-

...रणमेवेतिसूचितं ॥ **शि०** जघनं पृष्ठान्तदेशंगतया । एकया केशविन्यासाभावेनजटीभूतया ॥ २४ ॥ **स०** व्यसना... ...विदां कदाप्यदृष्टव्यसनां ॥ २५ ॥ **ति०** नीलकण्ठीं सौभाग्यसूचकेन्द्रनीलमणिमयकण्ठस्थभूषणप्रभया तद्वर्णकण्ठां । ...तां सुप्रति... सर्वावयवसंस्थानां ॥ २८ ॥ **ती०** चन्द्रप्रभामिवेति सर्वानन्दकरत्वमुक्तं । भुजगेन्द्रवधूमिवेति दुष्प्रधर्षत्वं । ...वविभावसोरिति पातिव्रत्यं ॥ २९ ॥ **स०** रामोपरोधव्यथितां रामाभिः राक्षसस्त्रीभिः यउपरोधः इतस्ततोगमनप्रति... ...नव्यथितां ॥ ३३ ॥ **ति०** दुःखबोध्यत्वेहेतुः अनलङ्कृतामिति । संस्कारेणेति स्नानानुलेपनादिरङ्गसंस्कारः । वाचो ...ज्ञानादिजःसंस्कारः । देव्या अर्थान्तरगतत्वं देशान्तरगतत्वं । वाचस्तु विवक्षितार्थादन्यार्थबोधकत्वं । वाचोऽर्थो यथा-

[ **पा०** ] १ ङ. झ. ञ. ट. विलोक्य. २ ग. च. ज. ह्रियमाणातुसा. ३ घ. क्रूररूपिणा. ४ ञ. सादृष्टा. ङ. झ. ट. ...सा. ५ ग. तेजसास्वेन. ६ झ. ट. नीलकण्ठीं. ७ ङ. झ. ट. रक्षोगणनिपीडितां. ८ घ. वीक्षमाणामितस्ततः. ९ घ. ...लमेघैः. १० ङ. झ. ञ. ट. बुद्धिस्तथा. ११ ग. निरीक्ष्यतां. ङ.—ट. निरीक्ष्यच.

तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ॥ तर्कयामास सीतेति कारणैरुपपादिभिः ॥ ३८ ॥
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ॥ तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ॥३९॥
सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ ॥ मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ॥
श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च ॥ ४० ॥
तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥ ४१ ॥
तत्र यान्यवहीनानि तान्यहं नोपलक्षये ॥ यान्यस्या नावहीनानि तानीमानि न संशयः ॥ ४२ ॥
पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् ॥ उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः ॥ ४३ ॥
भूषणानि च मुख्यानि दृष्टानि धरणीतले ॥ अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥ ४४ ॥
इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ॥ तथाऽपि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥ ४५ ॥
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ॥ प्रनष्टाऽपि सती याऽस्य मनसो न प्रणश्यति ॥ ४६ ॥
इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ॥ कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ ४७ ॥

न्तीमविवक्षितमर्थं बोधयन्तीं वाचमिव । सम्यग्व्युत्पत्त्यभावादर्थान्तरंगतां व्युत्पत्त्यनन्तरं स्वार्थं प्रतिपादयन्तीमिव स्थितामित्यर्थः ॥ ३७—३८ ॥ शाखायां शोभन्त इति शाखाशोभीनि भर्तृविरहकाले भूषणधारणस्यानुचितत्वात् स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीत्यर्थः ॥ ३९ ॥ कर्णवेष्टौ कुण्डले । "कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनं" इति सज्जनः । श्वदंष्ट्रः त्रिकर्णकाख्यः पुष्पाकारःकर्णपार्श्वभूषणविशेषः । "त्रिकर्णकः श्वदंष्ट्रश्च" इत्यभिधानरत्नमाला । हस्तेषु हस्तावयवेषु । श्यामानि विरहतापौष्ण्यवशाच्छ्यामीभूतानि । तथा चिरयुक्तत्वात् चिरधृतत्वात् । संस्थानवन्ति हस्तेषु तत्तदाभरणसंस्थानानि दृश्यन्त इत्यर्थः ॥ ४० ॥ तान्येवेत्यर्धमेकं वाक्यं ॥ ४१ ॥ तत्र ऋश्यमूके । यान्यवहीनानि पतितानि तान्यहं नोपलक्षये । अत्रेति शेषः । अस्याः सीतायाः सकाशाद्यानि नावहीनानि न पतितानि । तानीमानि तत्तुल्यत्वात् ॥ ४२ ॥ प्लवङ्गमैः सुग्रीवादिप्लवङ्गमैः । यदुत्तरीयं दृष्टं यानि भूषणानि दृष्टानि तानि सर्वाण्यनयैव अपविद्धानि पातितानि । नगासक्तमित्यनेन पतनदशायामुत्तरीयाग्रं वृक्षे किंचित्सक्तमिति द्योत्यते ॥ ४३—४४ ॥ इतरत् उत्सृष्टं । तदुत्तरीयं यथा यादृशवर्णयुक्तं यथा श्रीमत् इदं इदानीं धार्यमाणं । तद्वर्णं तथा श्रीमत् नूनमिति योजना ॥ ४५ ॥ या रामस्य प्रिया सती महिषीति कृत्वा प्रनष्टापि अस्य रामस्य मनसः सकाशात् न प्रणश्यति सदा मनसा दृष्टा भवतीत्यर्थः । सा कनकवर्णाङ्गी इयं मया परिदृश्यमानेत्यर्थः ॥ ४६ ॥ रामः कारुण्यादिभिश्चतुर्भिः यत्कृते परितप्यते तदच्छेदे । कारुण्यादीनां परितापहेतुत्वं विभज्य दर्श[illegible] स्त्रीति ॥ आपत्काले स्त्रियो रक्षणीयाः तत्र [illegible]ले [illegible] कारुण्यात्परितप्यते । आनृशंस्यमक्रूरत्वं । आ[illegible] रक्षणैकस्वभावत्वमिति यावत् । तस्मात् आश्रि[illegible] रक्षितेति परितप्यते । "अर्धो वा एष आ[illegible] यत्पत्नी" इत्युक्तरीत्या आत्मार्धभूता पत्नी [illegible]

व्याकरणाद्यभ्यासदुःखेनव्युत्पत्तिंसंपाद्यबुध्यते तद्वत्सीताकष्टेनबुबुधे ॥ ३७ ॥ स० उपपादिभिः अनुमापकैः ॥ ३८ ॥ इदानीं सीतात्वोपपादकमाह—वैदेह्याइति । तदा स्वप्रस्थानसमये । गात्रशोभीनीतिपाठः कतकसंमतः । येष्वङ्गेषुयान्या[illegible] जालान्यकीर्तयत् तान्याभरणजालानि तत्तद्गात्रशोभीन्यलक्षयदिति प्रत्यभिज्ञाप्रामाण्यंसिद्धं ॥ तीर्थस्तु—शाखाशो[illegible] पाठंप्रकल्प्य रामविश्लेषसमये भूषणधारणस्यानुचितत्वाद्वैदेह्याभूषणानिस्वाङ्गेभ्यउन्मुच्यशाखायांन्यस्तानीतिगम्यतइतिव्या[illegible] तदुत्तरश्लोकयोर्हस्तेष्विति तथा श्यामानिचिरयुक्तत्वादिति पदस्वरसविरुद्धं । किंचैवं तदङ्गेरामोक्ताभरणाभावादसीतात्वमे[illegible] ॥ ३९ ॥ ति० अथकस्मिन्गात्रेकिमाभरणंदृश्यतेतत्राह—सुकृताविति । सुसंस्थितौ कर्णरूपाङ्गेसुप्रतिष्ठितौ उपलक्षयेइति[illegible] यानिरामेणोक्तानि तथैवसुस्थितान्युपलक्षये ॥ ४० ॥ ति० चिरयुक्तत्वात्चिरकालमसंस्कृतदेहस्थितत्वेनश्यामान्यपि तथा[illegible]

[ पा० ] १ क. ङ. झ. ञ. ट. रुपपादयन्. २ घ. ङ. झ. ट. गात्रशोभीनि. क. च. छ. ज. शाखाशोभीनिलक्षये. ३ च. छ. ज. सुसंस्कृतौकर्णवेष्टौ. ४ क. च. छ. ज. ञ. श्वदंष्ट्रौचापिसंस्थितौ. ५ क. ग. च. ज. अनयैवप्रमुक्तानि. ६ तथाप्यनूनं. ग. च. छ. ज. ञ. तथाहिनूनं. ७ ग. घ. ङ. झ. ट. यस्य. ८ ङ. झ. ञ. ट. श्चतुर्भिरिहतप्यते.

स्त्री प्रनष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः ॥ पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ४८ ॥
अस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम् ॥ रामस्य च यथा रूपं तस्येयमसितेक्षणा ॥ ४९ ॥
अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ॥ तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥५०॥
दुष्करं कृतवान्रामो हीनो यदनया प्रभुः ॥ धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५१ ॥
दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् ॥ सीतां विना महाबाहुर्मुहूर्तमपि जीवति ॥ ५२ ॥
एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः ॥ जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

शोकेन परितप्यते । प्रिया नष्टेति मदनेन परितप्यत इति योजना ॥ ४७—४८ ॥ अथानयोरन्योन्याभिरूप्यानुगुण्यमाह—अस्या इति ॥ अस्याः सीतायाः । रूपं शरीरं अङ्गप्रत्यङ्गसौष्ठवं च यथा यथाविधं । तथाविधमेव रामस्यापि रूपं अङ्गप्रत्यङ्गसौष्ठवं च । तथा रामस्य रूपमङ्गप्रत्यङ्गसौष्ठवं च यथा यथाविधं । तथाविधमेवास्यारूपमङ्गप्रत्यङ्गसौष्ठवं च । अतः इयमसितेक्षणा तस्य योग्येति शेषः ॥ ४९ ॥ तथानयोरन्योन्यस्यानुरागमाह—अस्या इति ॥ अस्या [illegible]नस्तस्मिन्रामे प्रतिष्ठितं । तेन हेतुना इयं [illegible]पि जीवति । तस्य च मनोऽस्यां प्रतिष्ठितं तेन [illegible]न स मुहूर्तमपि जीवति । तयोरन्योन्यंमनोनिवे[illegible]वे मुहूर्तजीवनमपि न घटत इति भावः ॥५०॥ [illegible]ति शैले रामस्य सीताविरहक्लेशातिशयं [illegible]स्य हन्त वसिष्ठशिष्यः कस्याश्चित्स्त्रियाः कृते [illegible]मभूदिति विनिन्द्य परिहसितवान् स्वयं विरक्त[illegible] संप्रत्यस्या वैलक्षण्यातिशयदर्शनेन विशेषज्ञ[illegible]तद्विरहे रामस्य देहधारणं सर्वात्मना अशक्य[illegible]ह—दुष्करमिति ॥ दुष्करं कृतवान्रामः । इमां [illegible]य समाधानपरो रामः प्रकाममशक्यं कृत्यमक[illegible] हीनो यदनया प्रभुः । अनया विना देहं [illegible]वस्थित इति यत्तदत्यन्तमशक्यं । प्रभुः गजाश्वादिकं शिक्षयितुं राज्यं पालयितुं च जानाति । न प्रणयधारायां प्रथमांशमपि भुक्तवान् । धारयत्यात्मनो देहं । किमिदं याचितकं शरीरं धारयति स्वस्यैव हि देहोयं देहं भोगायतनं हीदं न दुःखायतनं "दिह उपचये" इत्यस्माद्धातोः "इगुपधे"त्यादिना कः । तेनायमर्थो लभ्यते । सीताशरीरस्य परतन्त्रतया तत्त्यक्तुमयुक्तं नतु स्वाधीनशरीरस्य धारणं युक्तमितिभावः । विशेषज्ञेनापि कथमिदं त्यक्तुं शक्यं तत्राह—न शोकेनावसीदति ॥ ५१ ॥ उक्तमर्थं किंचिद्विशेषान्तरेण दर्शयति—दुष्करंकुरुतइति ॥ ५२ ॥ एवं दृष्ट्वा मलिनसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपतिव्रताधर्मयुक्तां सीतां दृष्ट्वा । हृष्टःसन् मनसा रामं जगाम सस्मार । तं प्रभुं बुद्धिस्थं रामं । प्रशशंस च । पुनः प्राग्युपयुक्तपतिव्रतोक्तधर्मनिष्ठत्वदर्शनात् भाग्योत्तरो रामइत्यस्तौषीत् । यद्वा एतादृशसौन्दर्यवतीं सीतांदृष्ट्वा एतद्विरहितस्यमहाञ्शोकः प्राप्तः अतः युक्तमेवकृतवान्राम इत्यस्तौषीत् ॥ ५३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

---

[illegible]विन्ति रामोक्तसंनिवेशवन्ति ॥ ४१ ॥ स० अङ्गप्रत्यङ्गसौष्ठवं अङ्गानिहस्ताद्यवयवाः । प्रत्यङ्गानिअङ्गुल्यादीनि । तेषांसौष्ठवं [illegible]मीचीन्यं ॥ ४९ ॥ स० मुहूर्तशब्दएतावत्कालोपलक्षकः ॥ अन्यथानजीवेदित्याशयः ॥ ५२ ॥ इतिपञ्चदशः सर्गः ॥ १५ ॥

[ पा० ] १ ञ. विभुः. २ ग. घ. विनासीतां. ३ ट. तथा.

# षोडशः सर्गः ॥ १६ ॥

हनुमता सीतायाः शुभशीलादिप्रशंसनेनसह खरविराधादिनिधनस्य तद्धेतुकत्वानुसन्धानपूर्वकं तद्दुरवस्थादर्शनेन परिशोचनं ॥ १ ॥

प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुङ्गवः ॥ गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥ १ ॥
स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः ॥ सीतामाश्रित्य तेजस्वी हनुमान्विललाप ह ॥ २ ॥
मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ॥ यदि सीताऽपि दुःखार्ता कालो हि दुरतिक्रमः ॥३॥
रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः ॥ नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ४ ॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् ॥ राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ५ ॥

प्रशस्तव्यां प्रशंसितव्यां रामं सीतां च । प्रशस्येति अस्या देव्या इत्यादिनोभयोरपि प्रशंसितत्वात् ॥ १ ॥ सीतामाश्रित्य सीतां विषयीकृत्य ॥ २ ॥ गुरुविनीतस्य गुरुभिः शिक्षितस्य । गुरुप्रिया रामप्रिया । कालो हि दुरतिक्रमः कालो दुरतिक्रमएवेत्ययमर्थः सिद्धोभवतीत्यर्थः । हिशब्दोऽवधारणे । अव्ययानामनेकार्थत्वात् । जगद्रक्षकरामलक्ष्मणगुप्तायास्सीताया अपि यदीदृशं दुःखं प्राप्तं तदा कालोदुरतिक्रमएवेतिभावः ॥ ३ ॥ व्यवसायज्ञा स्वयत्नं विहाय तद्व्यवसायमेव प्रेक्षमाणा "एतद्व्रतंमम अप्यहंजीवितं जह्यां" इत्येवं रामव्यवसायंजानन्तीत्यर्थः । लक्ष्मणस्य च धीमतः । रामे मायामृगानुसारिण्यपि मारीचोयमिति तदानीमपि निश्चितवतो लक्ष्मणस्य । यद्वा सर्वेश्वरादप्याश्रितसंरक्षणे समुद्युक्तस्य । नात्यर्थं क्षुभ्यते । अत्यर्थमिति क्षोभाभावविशेषणं । क्षोभविशेषणत्वे यत्किंचित्क्षोभः प्राप्तः स्यात् । सत्तानाशकाले प्राप्तेपि क्षोभलेशरहितेत्यर्थः । देवी रामेण शिरसा वोढव्यवाल्लभ्यवती । गङ्गेव जलदागमे । क्षोभहेतौ सत्यपि यथा गङ्गा न क्षुभ्यतेतथेत्यर्थः ॥ ४ ॥ तुल्यशीलवयोवृत्तां शीलं स्वभावः । "अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितं" इति प्रक्रियया तुल्यस्वभावां । तुल्यवयस्कां षोडशवार्षिकस्य द्वादशवार्षिकी तुल्या । अन्यथा वैरस्यापत्तेः शास्त्रविरोधाच्च । अतएव विष्णुः । "वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणो वरः । त्र्यष्टवर्षोष्टवर्षां वा वयोमात्रावरा च या" इति । तुल्यवृत्तां । "दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितं" इति रामवृत्तं । "पापानां वा शुभानां वा वधार्हाणां प्लवंगम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति" इत्युक्तवत्यास्सीताया वृत्तेन [illegible] स्थितं तुल्य। तुल्यशब्दोनुरूपपरः । रामानुरूपशीलवयश्चारि[illegible]

ति० चिन्तापरः सीताविषयदुःखेनेतिभावः ॥ स० सीतामयिकथंविश्वासेनवदेदितिध्यानपरः ॥ १ ॥ सीतामाश्रित्य [illegible] मुद्दिश्यतेजस्वी दर्शनानन्तरंकथंमैथिलींपश्येयमितिचिन्तारहितइतितेजस्वी ॥ शि० सीतां सीतादुःखं आश्रित्य अवलं[illegible] विललाप विविधमुवाच ॥ ति० लक्ष्मणस्यगुरुप्रिया । गुरोःरामस्यपत्नीत्वात्तद्वदेवपरमोपास्यत्वेनाभीष्टा । रामपत्न्यपियदिदु[illegible] तर्हि कालोदुरतिक्रमइति हि निश्चितमित्यर्थः । दुःखोपायघटकत्वस्य कालएवप्रसिद्धत्वादितिभावः । ननु नदुःखंसुखंवाक[illegible] जन्यं कर्मानुष्ठानवैफल्यापत्तेः । तत्सापेक्षकालजन्यत्वेपीश्वरावतारसीतारामयोः कर्माभावात्कथं दुःखमितिचेन्न । वस्तुतस्तु [illegible] दुःखाभावेपि लोकानुग्रहाय गृहीतमनुष्यदेहयोस्तेषांमनुष्यत्वाभावबुद्धिप्रतिबन्धाय नटवद्व्यवहारमभिनयतोः सुखदुःखादिक[illegible] सुखविकासाद्यभिनयेन तन्मायामोहितस्यैव देवांशस्यहनुमतोऽभिनीतकार्यदर्शनेन तत्कारणानुमानाद्दुःखार्तत्वाद्युक्तेः सामञ्ज[illegible] यथाच परेणोद्बोधनंविना हनूमतःस्वबलपराक्रमांशेमोहः तथाऽनयोर्भगवत्स्वरूपत्वे इदानींतस्यमोहइति वक्तुंशक्यत्वात् । भगवदिच्छयैव तस्यतयोःस्वरूपज्ञानेपि नकिंचिदवद्यं ॥ स० यद्वा गुरुविनीतस्य बहुनम्रस्य लक्ष्मणस्य गुरुप्रिया ज्येष्ठभ्रातृ[illegible] मान्या । यद्वा गुरुविनीतस्य ब्रह्मादेर्लक्ष्मणस्यचेति व्यधिकरणषष्ठ्यौ । सर्वमान्या यदिसीतादुःखार्ता सेवाभूत् । हि यतः [illegible] कालोहिदुरतिक्रमः । देव्यादेवेनच स्वसमयावनाय कालोदुरतिक्रमः अनुलङ्घ्यस्वपराक्रमइव दर्शितइतिभावः । यद्वा सुख[illegible] यद्दुःखार्तवदात्मानंदर्शयामास सहि ततः कालः रावणमृत्युः दुरतिक्रमः अनुलङ्घ्यः रावणेनेतिशेषः ॥ शि० सीतायदिदुःख[illegible] तर्हि कालः परमात्मसंकेतः दुरतिक्रमः ॥ ३ ॥ ति० नन्वेवंविधदुःखातिशये जीवनहानिरेवस्यादतआह—रामस्येति । स[illegible] क्ष्मणोरामः एवंविधेदुर्गेस्थितामपिमां दिव्यास्त्रैः समुद्रमपियेनकेनाप्युपायेनोल्लङ्घ्यात्रायास्यतीति तस्यव्यवसायज्ञा पराक्रमज्ञा ॥ ४

[ पा० ] १ घ. मेधावी.

तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम् ॥ जगाम मनसा रामं वचनं चेदमब्रवीत् ॥ ६ ॥
अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः ॥ रावणप्रतिमो वीर्ये कबन्धश्च निपातितः ॥ ७ ॥
विराधश्च हतः सङ्ख्ये राक्षसो भीमविक्रमः ॥ वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः ॥ ८ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ९ ॥
खरश्च निहतः सङ्ख्ये त्रिशिराश्च निपातितः ॥ दूषणश्च महातेजा रामेण विदितात्मना ॥ १० ॥
ऐश्वर्यं वानराणां च दुर्लभं वालिपालितम् ॥ अस्या निमित्ते सुग्रीवः प्राप्तवाँल्लोकसत्कृतम् ॥ ११ ॥
सागरश्च मया क्रान्तः श्रीमान्नदनदीपतिः ॥ अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥ १२ ॥
यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् ॥ अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३ ॥
राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ॥ त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात्कलाम् ॥ १४ ॥
इयं सा धर्मशीलस्य मैथिलस्य महात्मनः ॥ सुता जनकराजस्य सीता भर्तृदृढव्रता ॥ १५ ॥
उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते ॥ पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥ १६ ॥
विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः ॥ स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥ १७ ॥
धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः ॥ इयं सा दयिता भार्या राक्षसीवशमागता ॥ १८ ॥
सर्वान्भोगान्परित्यज्य भर्तृस्नेहबलात्कृता ॥ अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् ॥ १९ ॥
संतुष्टा फलमूलेन भर्तृशुश्रूषणे रता ॥ या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २० ॥

---

त्यर्थः । तुल्याभिजनलक्षणां अभिजनः कुलं लक्षणं सामुद्रिकं सार्वभौमलक्षणवतो भार्याया: यैस्सामुद्रिकलक्षणैर्भाव्यं तैर्युक्तामित्यर्थः । एवंविधत्वाद्राघवो वैदेहीमर्हति वैदेही राघवमर्हति । लोके सौन्दर्यादिमतः सौन्दर्यादिसर्वसहिता न लभ्यते । सौन्दर्यादिमत्ता न [illegible] सौन्दर्यादिसर्ववान् । अनयोस्तु सर्वं संपन्नमिति [illegible] विस्मयते । असितेक्षणेत्यधिकविशेषणदानाद्रामापेक्षया [illegible] सीताया नयनसौन्दर्यमधिकमित्युच्यते । अतएव [illegible] रामो वक्ष्यति । "न जीवेयंक्षणमपि विना तामसि[illegible]क्षणां" इति ॥ ५—६ ॥ अस्या हेतोरिति "सर्व[illegible]साम्नस्तृतीया च" इति षष्ठी । अनया हेतुनेत्यर्थः [illegible] ७—१० ॥ अस्या निमित्ते "निमित्तकारणहेतुषु [illegible] सर्वासां प्रायदर्शनं" इतिषष्ठी सप्तम्यर्थे । अस्यां [illegible] निमित्ते सत्यामित्यर्थः ॥ ११—१२ ॥ परिवर्तयेत् [illegible] अधरोत्तरां कुर्यात् । अस्याः कृते एतदर्थं । जगच्चापि न केवलं मेदिनीं सर्वलोकानपि परिवर्तयेदित्यर्थः ॥ १३ ॥ राज्यंवेति राज्यमुत्कृष्टं वा सीता उत्कृष्टा वा इति विचार्यमाण इति शेषः । कलां लेशं ॥ १४ ॥ भर्तृदृढव्रता भर्तरि दृढव्रता ॥ १५ ॥ केदारपांसुभिः यज्ञक्षेत्रपांसुभिः ॥ १६ ॥ आर्यशीलस्य श्रेष्ठस्वभावस्य ॥ १७—१८ ॥ सर्वान् भोगान् भुज्यन्ते इति भोगाः शुकसारिकाकन्तुकप्रभृतिभोगसाधनानि मातृप्रभृतींश्च । परित्यज्य परि विशेषेण पुनस्तत्राशालेशं विनैव त्यक्त्वा । अयं च परित्यागो न स्ववशेनेत्याह—भर्तृस्नेहबलात्कृता । अभिमतविषयस्नेहातिरेकस्तदितरमखिलमपि त्याजयति हि । त्यक्तेषु स्मरणाभावेपि गन्तव्यदेशीयदुःखं वा किं स्मरति नेत्याह—अचिन्तयित्वा दुःखानि । रामातिरिक्तवस्त्वनुभवे हि दुःखानुभवसंभावनेति भावः । प्रविष्टा निर्जनं वनं भोगस्यैकान्तस्थलमिति ह्यस्या हृदिलग्न-

---

ति० [illegible] रोऽयंप्रद्युम्नहतादन्यएव । महेन्द्रपदेन तत्तुल्येप्रद्युम्नेलक्षणावा ॥ ८ ॥ ति० यच्छेषतया एवंप्राशस्त्यंदर्शितं तस्यकालस्य दुरतिक[illegible]त्वमाह—इयंसेति । राक्षसीवशमागता । कालप्राबल्यादितिभावः ॥ १८ ॥ ति० भर्तृशुश्रूषणापरा । सन्नन्तात्स्वार्थे णिनि[illegible] ण्यासश्रन्थ—' इतियुच् ॥ २० ॥

[ पा० ] १ घ. हेमाङ्गां. २ ग. च. छ. ज. वानरेन्द्राणां. ३ झ. ञ. ट. लोकविश्रुतः. ४ क. चेयमवेक्षिता. ५ ङ. झ. ञ. ट. जनकस्य. ६ ङ. झ. ञ. ट. मैथिलराजस्य. ७ च. छ. ज. मनस्विनः. क. ग. यशस्विनः. ८ झ. ञ. ट. कष्टानि. ९ ग. विजनं. १० ङ. झ. ट. शुश्रूषणापरा. ञ. शुश्रूषणेपरा.

सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी ॥ सहते यातनामेतामनर्थानामभागिनी ॥ २१ ॥
इमां तु शीलसंपन्नां द्रष्टुमर्हति राघवः ॥ रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२ ॥
अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति ॥ राजा राज्यपरिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥ २३ ॥
कामभोगैः परित्यक्ता हीना बन्धुजनेन च ॥ धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ॥ २४ ॥
नैषा पश्यति राक्षस्यो नेमान्पुष्पफलद्रुमान् ॥ एकस्थहृदया नूनं राममेवानुपश्यति ॥ २५ ॥
भर्ता नाम परं नार्या भूषणं भूषणादपि ॥ एषा तु रहिता तेन भूषणार्हा न शोभते ॥ २६ ॥
दुष्करं कुरुते रामो हीनो यदनया प्रभुः ॥ धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७ ॥
इमामसितकेशान्तां शतपत्रनिभेक्षणाम् ॥ सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥ २८ ॥

क्षितिक्षमा पुष्करसंनिभाक्षी या रक्षिता राघवलक्ष्मणाभ्याम् ॥
सा राक्षसीभिर्विकृतेक्षणाभिः संरक्ष्यते संप्रति वृक्षमूले ॥ २९ ॥
हिमहतनलिनीव नष्टशोभा व्यसनपरम्परयाऽतिपीड्यमाना ॥
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥ ३० ॥
अस्या हि पुष्पावनताग्रशाखाः शोकं दृढं वै जनयन्त्यशोकाः ॥
हिमव्यपायेन च मन्दरश्मिरभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१ ॥

मितिभावः ॥ १९—२० ॥ यातनां तीव्रवेदनां । अनर्थानामभागिनी आपदामनर्हेत्यर्थः ॥ २१ ॥ प्रपां पानीयशालिकां । "प्रपा पानीयशालिका" इत्यमरः ॥ २२—२३ ॥ कामेति । काम्यन्त इति कामाः ते च ते भोगाश्च स्रक्चन्दनादयः तैः ॥ २४ ॥ नैषा पश्यति राक्षस्यः राक्षसीर्न पश्यति । नेमान् पुष्पफलद्रुमान् । रामविरहक्लेशातिशयेन राक्षसीदर्शनवत्सुपुष्पफलवतां द्रुमाणामपि दर्शनमस्या असह्यमित्यर्थः । एकस्थहृदया एकाग्रचित्ता । राममेवानुपश्यति ध्यायतीत्यर्थः । रामागमनसंभावनावती दिशोवलोकयतीति वार्थः । यद्वा निरन्तरेण रामानुभवेन परिसरवर्ती कोपि पदार्थो न दृष्टिपथं गच्छतीत्यर्थः ॥२५—२७॥ असितः केशान्तः यस्यास्तां । केशानामग्रे नैल्यं स्त्रीणां दुर्लभं । अतस्तदेवाह— असितकेशान्तां गुडालकावृतस्यापि व्यामोहकरीं । शतपत्रनिभेक्षणां । यद्यपीयमसितेक्षणा तथापि संस्थानविशेषे उपमेयं । कमलपत्राक्षस्यापि व्यामोहदायिनीं । सुखार्हां रामोत्सङ्गे स्थातुमर्हां । दुःखितां राक्षसीमध्ये स्थितां दृष्ट्वा ममापि व्यथितं मनः । शाखामृगस्य ममापि मनो व्यथितं किमुत परमदयालो रामस्येति भावः । शोकहर्षयोरपदस्य ममापि मनो व्यथितं किं पुनः कामिन इति वा ॥ २८—२९ ॥ हिमहतेति विशेषणेन नलिन्याः पूर्वं बहुकालशोभितत्वंसिद्धं तद्वन्नष्टशोभा द्वादशवर्षं निष्प्रतिबन्धं भोगान्भुञ्जानाया आगन्तुको हि विश्लेषः तेनहिनष्टशोभेत्युक्तं ॥ [illegible] व्यसनपरम्परया विरह इव संश्लेषोपि मध्ये [illegible] संपन्नां । [illegible] गत्यनिवृत्तः व्यसनमेव नैरन्तर्येणवृत्तं । आ[illegible]मित्यर्थः । [illegible] माना अतिक्रम्यपीड्यमाना । आश्रयानुरूप[illegible]त्रवाचि नमनुभवतीत्यर्थः । सहचररहितेव चक्रवाक[illegible]खायाः कालमवगम्य दुःखं सोढुमसमर्था । चक्रवाक[illegible]स्पर्शात् नायमर्थो लभ्यते । साहि रात्रिविरामकालं [illegible]पितव- दुःखं सोढुमदक्षेति प्रसिद्धं । जनकसुता एवं [illegible] ॥ भविष्यतीति ज्ञात्वा न संवर्धिता केवलंसुखसं[illegible]शृण्व- त्यर्थः । कृपणां दशां प्रपन्ना । पूर्वोक्तनलि[illegible]दर्श- नोपमानं भवितुमर्हति । किंचिदुक्तिमात्रं । [illegible]परिहा- नसापरिच्छेद्यां दुर्दशां प्राप्तेत्यर्थः ॥ ३० ॥ [illegible] पायेन वसन्तेन । नैकसहस्ररश्मिरभ्युत्थितः [illegible] रश्मिः सूर्यापेक्षया मन्दकरः । चन्द्र इति [illegible]

[ पा० ] १ ख. ग. ङ. झ. ञ. ट. द्रष्टुमिच्छति. २ ग. नूनमस्याःपुनः. ३ घ. ट. भार्याःशोभनं. ङ. झ. नार्याःशे[illegible] क. ग. [illegible]का- [illegible]ल- ख. नार्याभूषणादपिभूषणं. ४ क. घ.—ट. एषाहि. ५ क. ग. ङ.—ट. शोभनार्हा. ६ क. ग.—ज. ञ. ट. ज्ञात्वा. ७ [illegible]ः झ. ट. संनिभेक्षणा.. ८ क. संरक्षिता. ९ क. ख. ग. ङ.—ट. निपीड्यमाना. १० ग. घ. दृढंसंजनयन्त्यशोकाः. ११ [illegible] घ. दिनव्यपायेन. च. छ. ज. हिमव्यपायेनतु. १२ ङ. झ. ञ. ट. शीतरश्मिः. [illegible] च.

इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव निविष्टबुद्धिः ॥
संश्रित्य तस्मिन्निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ॥ १७ ॥

नभोमध्यंगतेचन्द्रे हनुमता परितःसीतामासीनानांघोरतरविकृतनानाकृतीनांराक्षसीनांदर्शनम् ॥ १ ॥ तथा तन्मध्यगतायाःसीतायाअवलोकनजहर्षेण सबाष्पविमोचनं मनसारामलक्ष्मणयोःप्रणामपूर्वकं शिंशुपाग्रेगूढतयाऽवस्थानम् ॥ २ ॥

ततः कुमुदषण्डाभो निर्मलो निर्मलं स्वयम् ॥ प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥ १ ॥
साचिव्यमिव कुर्वन्स प्रभया निर्मलप्रभः ॥ चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् ॥ २ ॥
स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् ॥ शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥ ३ ॥
दिदृक्षमाणो वैदेहीं हनुमान्मारुतात्मजः ॥ स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४ ॥
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ॥ अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् ॥ ५ ॥
अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् ॥ ध्वस्तकेशीं तथाऽकेशीं केशकम्बलधारिणीम् ॥ ६ ॥
लम्बकर्णललाटां च लम्बोदरपयोधराम् ॥ लम्बोष्ठीं चुबुकोष्ठीं च लम्बास्यां लम्बजानुकाम् ॥ ७ ॥
ह्रस्वदीर्घां तथा कुब्जां विकटां वामनां तथा ॥ करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ॥ ८ ॥

---

शोकं जनयतीतिवचनविपरिणामेन संबन्धः ॥ ३१—३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दराकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

---

[illegible]म प्रकर्षेण जगाम । आकाशपरभागं प्राप्त [illegible] १—२ ॥ शोकभारैर्न्यस्तामिव आक्रान्ता[illegible]ां । अतएव भारैर्न्यस्तां नावमिव स्थितां [illegible] ॥ कर्णौ प्रावरणे शिरस आच्छादकौ [illegible]ा कर्णप्रावरणा तां । शङ्कुवत्कर्णौ यस्यास्तां शङ्कुकर्णां । मस्तकोच्छ्वासनासिकां ऊर्ध्वमुखनासिकामित्यर्थः ॥ ५ ॥ अतिकायोत्तमाङ्गीं । अत्रातिकायशब्देन महत्त्वमुच्यते । महाशिरस्कामित्यर्थः । ध्वस्तकेशीं स्वल्पकेशीं । अकेशीं अनुत्पन्नकेशीं । केशकम्बलधारिणीं कम्बलरूपकेशधारिणीं ॥ ६ ॥ लम्बे कर्णललाटे यस्यास्सा लम्बकर्णललाटा तां । चुबुके ओष्ठः यस्याः सा चुबुकोष्ठी तां ॥ ७ ॥ ह्रस्वदीर्घां अधःकाये ऊर्ध्वकाये च क्वचित् ह्रस्वां क्वचिद्दीर्घामित्यर्थः । कुब्जां स्थगुमतीं । विकटां स्थूलजङ्घां । करालां दन्तुरां । " करालो दन्तुरे तुङ्गे " इत्यमरः ।

---

[illegible] तस्मिञ्शिंशुपावृक्षएव निषसाद । तद्रात्रिशेषंपरदिनंच स्थितइत्यर्थः । एवंच सरावणान्तःपुरा सर्वापिलङ्का यामत्रयेण [illegible]नदिनरात्रावेव विचिता । तुर्येयामेऽशोकवनिकाप्रवेशइतिबोध्यं ॥ ३२ ॥ इतिषोडशः सर्गः ॥ १६ ॥
[illegible] नभसोनिर्मलत्वं स्वच्छनीलवर्णत्वं । नभसोनीलत्वंप्रतीत्या कविसंप्रदायेनचबोध्यं ॥ **स०** कुमुदषण्डाभः कुमुदानांश्वेतो[illegible]ण्डःसमूहः तस्याभेवाभायस्येतिवा तस्य आसम्यक् भा कान्तिर्यस्मादितिवा । " सितेकुमुदकैरवे " इत्यमरः । निर्मलं [illegible]नीलमिवोदकमित्यनेन गगनेनैल्यमपिध्वनितं । आकाशेनैल्यंच " आकाशोनीलिमोदेति " इतिश्रुतेः ॥ १ ॥ **ति०** [illegible]नादौप्रभया स्वकान्त्यासाचिव्यंसाहाय्यकमिव दिवाक्वचिदेकान्तप्रदेशेस्थितत्वान्निद्राव्याकुलत्वाच्चनसम्यग्राक्षसीनांसीता[illegible]ां । रात्रौचन्द्रोदयेसतितुपुनस्समीपदेशआगत्यस्थितस्यसम्यक्सर्वदर्शनं ॥ २ ॥ **ति०** शोकभारैः न्यस्तां अधोनीतामिव [illegible]नामिव ॥ ३ ॥ **शि०** कर्णावेवप्रावरणौ शरीराच्छादकौयस्यास्तां ॥ ५ ॥ **स०** अतिकायोत्तमाङ्गीं कायं मध्यदेहं [illegible]वर्तमानशीर्षोपेतां ॥ ६ ॥

[illegible]पा० ] १ छ. इत्येवसर्वं. २ ट. सुजातबुद्धिः. ग. विनम्रबुद्धिः. ङ. झ. तुजातबुद्धिः. ३ क. च. छ. ज. ञ. निशीथे. [illegible]. ञ. ट. निर्मलोदयः. ५ क. ग. अकर्णांशङ्कुकर्णांच. ६ ग. अतिदीर्घोत्तमाङ्गीं. ७ ग. लंबोरुं. ८ घ. लंबनासिकां. ९ झ. [illegible]ांदीर्घां. १० क.—ट. दीर्घांचकुब्जांच. ११ ग. करालीं.

विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः ॥ कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९ ॥
वराहमृगशार्दूलमहिषाजशि[2]वामुखीः ॥ गजोष्ट्रह[3]यपादीश्च निखातशिरसोपराः ॥ १० ॥
एकहस्तैकपादाश्च ख[4]रकर्ण्यः श्वकर्णिकाः ॥ गोक[5]र्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः ॥ ११ ॥
[6]अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः ॥ गजसन्निभनासाश्च ललाटोच्छ्वासनासिकाः ॥१२॥
हस्तिपादा महापादा गोपादाः पादचूडिकाः ॥ अतिमात्रशिरोग्रीवा अतिमात्र[7]कुचोदरीः ॥ १३ ॥
अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखास्तथा ॥ अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः ॥ १४ ॥
हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः ॥ शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ॥ १५ ॥
[9]कराला धूम्रकेशीश्च राक्षसीर्विकृताननाः ॥ पिबन्तीः सततं पानं [10]सदा मांससुराप्रियाः ॥ १६ ॥
मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः ॥ ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः ॥
स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् ॥ १७ ॥
तस्याधस्ताच्च [11]तां देवीं राजपुत्रीमनिन्दिताम् ॥ [12]लक्षयामास लक्ष्मीवान्ह[13]नुमाञ्जनकात्मजाम् ॥१८॥
निष्प्रभां शोकसंतप्तां मलसंकुलमूर्धजाम् ॥ क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव ॥ १९ ॥
चारित्र्यव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ भूषणैरुत्तमैर्हीनां भर्तृवात्सल्य[14]भूषणाम् ॥ २० ॥
राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥ वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव ॥ २१ ॥
चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ॥ क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् ॥ २२ ॥
[15]सीतां भर्तृवशे युक्तामयुक्तां [16]राक्षसीवशे ॥ अशोकवनिकामध्ये शोकसागरमाप्लुताम् ॥ २३ ॥
ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥ ददर्श [17]हनुमान्देवीं [18]लतां कुसुमितामिव ॥ २४ ॥
सा मलेन च दिग्धाङ्गी वपुषा चाप्यलंकृता ॥ मृणाली पङ्कदिग्धेव वि[19]भाति न विभाति च ॥२५॥

---

भुग्नवक्त्रां निम्नवक्त्रां । विकृताननां नासिकौष्ठविरहिताननामित्यर्थः । एतदन्तस्य पूर्वेण ददर्शेत्यनेनान्वयः ॥ ८ ॥ विकृता इत्यादेरुत्तरेण ददर्शेत्यनेनान्वयः । एता एकाक्ष्यादिराक्षसीभ्योन्याः । विकृताः विकृतवेषाः ॥ ९ ॥ निखातशिरसः गात्रान्तरवर्तिशिरसः ॥ १० ॥ हरिकर्णीः कपिकर्णीः ॥ ११—१२ ॥ पादे चूडिका यासां ताः पादचूडिकाः । "शिखा चूडा केशपाशी" इत्यमरः ॥ १३—१५ ॥ राक्षसीर्विकृतानना इत्यत्र पुनः राक्षसीपदमविस्मरणार्थं ॥ १६—१७ ॥ लक्ष्मीवान् सीतादर्शनजनितशोभायुक्तः ॥ १८ ॥ च्युतां स्थानाच्चलितां ॥ १९ [illegible] ॥ चारित्र्यव्यपदेशाढ्यां पतिव्रताधर्माचरणख्याति[illegible] भर्तृदर्शनेन दुर्गतां दरिद्रां । भर्तृदर्शनरहिता[illegible]द्धामिव भर्तृवात्सल्यभूषणां वात्सल्यपदमत्र स्नेहम[illegible]हि कृते ॥ २०—२१ ॥ पयोदान्ते वर्षान्ते । चन्द्र[illegible]रिक्षीणां स्पष्टास्पष्टत्वद्योतनायेदं विशेषणं । अस[illegible] ॥१२॥ उद्वर्तनादिसंस्काराराहित्यात् । अयुक्तां अनार[illegible]तिहतां त्रीं । वल्लकीं वीणां ॥ २२ ॥ सीतामित्यादिपर[illegible]काले । राक्षसीवशे अयुक्तां अनवस्थितां । तद्वचनान्य[illegible]मुच्यते न्तीमित्यर्थः ॥ २३ ॥ लतां कुसुमितामिव त[illegible]आह ।

ति० पयोदान्ते वर्षान्ते । अनेन दुःखस्यात्यल्पावशिष्टत्वंसूच्यते ॥ २२ ॥ ती० लतामकुसुमामिव आभर[illegible]अतिम[illegible]जातां । रादितिभावः ॥ २४ ॥ [illegible] स० [illegible] १० ॥ [illegible] ञ. [illegible] था. [illegible] क.

[ पा० ] १ क. महाप्रास. २ ग.—ट. शिवामुखाः. ३ घ. ङ. झ. ञ. ट. हयपादाश्च. च. छ. ज. शिववक्त्राश्च, [illegible] हयवक्त्राश्च. ४ ग. घ. खरकर्णाश्वकर्णिकाः. ५ छ. ज. गोकर्णाहस्तिकर्णाश्चहरिकर्णास्तथा. ६ ङ. झ. ट. अतिना[illegible] श्चिचतिर्यक्स्वासाअनासिकाः. ७ ग. कृशोदरीः. ट. कुचोदराः. ८ ङ. छ. झ. ञ. ट. जिह्वाननास्तथा. ९ झ. ञ. ट. [illegible] धूम्रकेशिन्यो. १० झ. ञ. ट. सुरामांससदाप्रियाः. ११ क. वैदेहीं. १२ क. दर्शयामास. १३ घ. ञ. हनूमान्मारुतात्[illegible] १४ क. ख. घ.—ट. भूषितां. १५ ङ. झ. ञ. ट. सतांभर्तृहिते. च. छ. ज. सतांपतिहिते. ग. सदाभर्तृहिते. १६ क. ग[illegible] ङ. झ. रक्षसांवशे. १७ ङ. झ. ञ. ट. हनुमांस्तत्र. १८ ङ. ट. लतामकुसुमामिव. १९ क. ग. ङ. झ. ट. विभातिचनभाति[illegible]

मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् ॥ संवृतां मृगशावाक्षीं ददर्श हनुमान्कपिः ॥ २६ ॥
तां देवीं दीनवदनामदीनां भर्तृतेजसा ॥ रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ॥ २७ ॥
तां दृष्ट्वा हनुमान्सीतां मृगशावनिभेक्षणाम् ॥ मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः ॥ २८ ॥
दहन्तीमिव निश्श्वासैर्वृक्षान्पल्लवधारिणः ॥ संघातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् ॥२९॥
तां क्षमां सुविभक्ताङ्गीं विनाभरणशोभिनीम् ॥ प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ॥ ३० ॥
हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् ॥ मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् ॥ ३१ ॥
नमस्कृत्वा स रामाय लक्ष्मणाय च वीर्यवान् ॥ सीतादर्शनसंहृष्टो हनुमान्संवृतोऽभवत् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः ॥ १८ ॥

शिंशुपाविटपाग्रगेनहनुमता अपररात्रेप्रबुध्यमदनपरवशतयाप्रमदाशतेनसह सीतासमीपमागच्छतोरावणस्यावलोकनम् ॥ १ ॥ ततः सीतासमीपमागतस्यरावणस्यचेष्टादेःस्फुटावगमाय उच्चशाखाग्रादवरोहणेनाधश्शाखाग्रेनिगूढमवस्थानम् ॥२॥

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ॥ विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाऽभवत् ॥ १ ॥
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ॥ शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥ २ ॥
अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः ॥ प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३ ॥
विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् ॥ स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४ ॥
भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः ॥ न स तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥ ५ ॥

---

नीयामित्यर्थः ॥ २४—२५ ॥ मलिनेनेत्यादिश्लोकद्वयमेकं वाक्यं ॥ २६—२७ ॥ तामित्यादिश्लोकत्रयमेकं परो[illegible]॥ २८—२९ ॥ क्षमां क्षमामिव स्थितां । मलां [illegible]ध्यवसानादभेदोक्तिः । तां दृष्ट्वा तां प्रेक्ष्येत्यादिना [illegible]षणविशेष्यभेदान्न पौनरुक्त्यं । दूरप्रयुक्त[illegible]रणार्थं वा पुनरुक्तिः ॥ ३० ॥ राघवं नम[illegible] उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीय[illegible]स्करोति देवानित्यादाविव द्वितीया ॥ ३१ ॥ [illegible] राक्षस्यदर्शनाय शिंशुपापर्णैर्गूढोऽभूत् ॥ ३२ ॥ [illegible]श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

---

विप्रेक्षमाणस्य विचिन्वतश्च विप्रेक्षमाणे विचिन्वति च तस्मिन्नित्यर्थः । "यस्य च भावेन भावलक्षणं" इत्यर्थे षष्ठी ॥ १ ॥ विरात्रे अपररात्रे "अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इत्यत्र चकारादव्ययादुत्तरस्य रात्रिशब्दस्य समासान्तोच् प्रत्ययः । ब्रह्मरक्षसां ब्राह्मणत्वविशिष्टरक्षसां । ब्रह्मघोषान् वेदघोषान् ॥ २—४ ॥ नियुक्तः प्रेरितः

---

[illegible] क्षामां कृशां ॥ ३० ॥ ती० अत्रतांतामितितच्छब्दावृत्त्यातत्तदवस्थाभेदस्यवर्णितत्वादपौनरुक्त्यं ॥ ३१ ॥ इति [illegible] सर्गः ॥ १७ ॥

[illegible] वस्तुतस्तुमदनेसत्यपिमदोत्कटोन । अतएवतस्यांसीतायांनियुक्तः नितरांयुक्तः विनीतइत्यर्थः । अतएवराक्षसः तंकामं गूहितुंनशशाकेतिकाकुः ॥ ति० भृशंनियुक्तः गाढाभिनिवेशितचित्तः । कामं कामवेगं । ईदृशेषुतीर्थस्यान्यथायोजनं [illegible]व । रक्षसस्तमोगुणाविष्टस्यभगवन्मायामोहितस्याकृत्येष्वेवप्रवृत्तेः । तथाक्रियमाणंभगवद्ध्यानमपिपापभोगोत्तरंजन्मान्तरेउत्त[illegible]येतिबोध्यं । अतएवऋक्षाश्वमेधनाम्नोराज्ञोदानस्तावकऋङ्मन्त्रः "नयुष्मेवाजबन्धवनिनित्सुश्चनमर्त्यः । अवद्यमधिदीधरत्"

[ पा० ] १ ङ. महीनां. २ ग. नागकन्यामिव. ३ ग. ततस्ततः. ४ घ. ङ. झ. ञ. ट. तांक्षामां. क. च. छ. ज. तां[illegible]ं. ग. सीतांसमविभक्ताङ्गीं. ५ क. च. छ. ज. तथाश्रूणि. ६ क. घ. च. ज.—ट. नमस्कृत्वाच. ७ ङ. ज. झ. ट. ब्रह्म[illegible]षान्स. ८ घ. ङ. च. झ. ञ. ट. प्राबोध्यत. ९ ग. विबुध्यच. १० ङ. झ. ञ. ट. महाभागो. ११ ङ. झ. ट. नतु.

स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् ॥ तां नगैर्बहुभिर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६ ॥
वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् ॥ सदामदैश्च विहगैर्विचित्रां परमाद्भुताम् ॥ ७ ॥
ईहामृगैश्च विविधैर्जुष्टां दृष्टिमनोहरैः ॥ वीथीः संप्रेक्षमाणश्च मणिकाञ्चनतोरणाः ॥ ८ ॥
नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् ॥ अशोकवनिकामेव प्राविशत्संततद्रुमाम् ॥ ९ ॥
अङ्गनाशतमात्रं तु तं व्रजन्तमनुव्रजत् ॥ महेन्द्रमिव पौलस्त्यं देवगन्धर्वयोषितः ॥ १० ॥
दीपिकाः काञ्चनीः काश्चिज्जगृहुस्तत्र योषितः ॥ वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥११॥
काञ्चनैरपि भृङ्गारैर्जह्रुः सलिलमग्रतः ॥ मण्डलाग्रान्बृसीं चैव गृह्यान्याः पृष्ठतो ययुः ॥ १२ ॥
काचिद्रत्नमयीं स्थालीं पूर्णां पानस्य भामिनी ॥ दक्षिणा दक्षिणेनैव तदा जग्राह पाणिना ॥ १३ ॥
राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् ॥ सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥ १४ ॥
निद्रामदपरीताक्ष्यो रावणस्योत्तमाः स्त्रियः ॥ अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥ १५ ॥
व्याविद्धहारकेयूराः समामृदितवर्णकाः ॥ समागलितकेशान्ताः सस्वेदवदनास्तथा ॥ १६ ॥
घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः ॥ स्वेदक्लिष्टाङ्गकुसुमाः सुमाल्याकुलमूर्धजाः ॥ १७ ॥
प्रयान्तं नैर्ऋतपतिं नार्यो मदिरलोचनाः ॥ बहुमानाच्च कामाच्च प्रिया भार्यास्तमन्वयुः ॥ १८ ॥
स च कामपराधीनः पतिस्तासां महाबलः ॥ सीतासक्तमना मन्दो मदाञ्चितगतिर्बभौ ॥ १९ ॥
ततः काञ्चीनिनादं च नूपुराणां च निस्स्वनम् ॥ शुश्राव परमस्त्रीणां स कपिर्मारुतात्मजः ॥२०॥

॥ ५—७ ॥ वीथीः उद्यानवीथीः ॥ ८—९ ॥ महेन्द्रं देवगन्धर्वयोषितइव व्रजन्तं तं । अङ्गनाशतमात्रं अनुव्रजत् अन्वव्रजत् ॥ १० ॥ तालवृन्तानि व्यजनानि ॥ ११ ॥ भृङ्गारैः कनकालुकाभिः । "भृङ्गारः कनकालुका" इत्यमरः । मण्डलाग्रान् असिविशेषान् । "मण्डलाग्रो नतार्थकः" इति वैजयन्ती । बृसीं आस्तरणं । गृह्य गृहीत्वा ॥ १२ ॥ पानस्य पूर्णां पीयत इति पानं मधु तस्य पूर्णां तेन पूर्णां । "पूरणगुण—" इत्यादिना सुहितार्थयोगे षष्ठीसमासनिषेधज्ञापकादत्र षष्ठी । स्थालीं पात्रीं ॥ १३—१५ ॥ व्याविद्धाः व्यत्यस्ततया न्यस्ताः । समामृदितवर्णकाः संमृष्टानुलेपनाः । "अ[illegible]ङ्गरा[illegible] ॥ समालम्भो वर्णकश्च विलेपनं" इति निघण्टुः [illegible] ॥ १८ ॥ मदेनाञ्चिता गतिर्यस्य स मदाञ्चि[illegible]

इति । तस्यार्थः—वाजमित्यन्ननाम । अन्नदानेनयेसर्वेषांबन्धवःतेषांसंबोधनं । हेवाजबन्धवः युष्मेयुष्मास्वधि । सप्तम्य[illegible]रवासेति [illegible]भन्ये । धिः । निनित्सुश्चन निन्दनेच्छाशीलोपिमर्त्योऽवद्यं नदीधरत् नधारयति । भगवदनुसन्धानेनैवनिष्पापत्वादिति । एवंच[illegible]ाथस्याहं निन्दावरुद्धभावेनध्यानमपिनरकभोगोत्तरंजन्मान्तरेउत्तमफलाय । अतएवास्यमरणोत्तरंचतुर्थचतुर्युग्यांचेदिराजकुलेजन्म [illegible]स्नातस्य विंशतिचतुर्युग्यांरामावतारइतिहरिवंशोक्तेः । तावत्पर्यन्तंचैतत्पापफलभोगइत्यर्थायातमितिबोध्यं ॥ शि० मदनेन म[illegible] विदि- रापानादिना मदोत्कटः उत्कटदैन्यविशिष्टोपिराक्षसः । यतस्तस्यांसीतायां । भृशं अत्यन्तं । नियुक्तः संस्थापितचित्तः । [illegible] सीतागोपनविषयकं कामं इच्छां । आत्मनि मनसि । गूहितुं नियमितुं । नशशाक ॥ स० मदनेन तस्यांसीतायांनियुक्तः[illegible]रूपवि- पूर्वमेव । मदोत्कटः व्यक्तमदः । तं मदनं । गूहितुं निग्रहीतुं ॥ ५ ॥ ति० अङ्गनाः । शतमात्रमित्यवधारणेइतिक[illegible]रंभणका- देवादियोषितोमहेन्द्रमिव पौलस्त्यं अनुव्रजन् । अडभावआर्षः ॥ स० अङ्गनाशतमेवाङ्गनाशतमात्रं देवगन्धर्वयोषितो[illegible]औपयिकी मिवपौलस्त्यं अनुव्रजदभूत् ॥ १० ॥ ती० भृङ्गाराः धत्तूरकुसुमसदृशजलपात्राणि ॥ ति० मण्डलाग्रावृत्तपर्यन्ताः बृसीः [illegible]पुरुषार्थ- विशेषान् । तपस्विनामिमेतृणादिना । अस्यतुस्वर्णेनेतिविशेषः ॥ स० बृसीः ऋषिपुत्रत्वाद्रावणस्यऋष्यासनवत्त्वं ॥ १२ [illegible]ासेतस्यै-

[ पा० ] १ ग. ङ.—ट. नगैर्विविधैः. २ ग. ङ. ट. मत्तैश्च. ३ क. ङ. झ. ञ. ट. परमाद्भुतैः. ४ क. ग. घ. च.[illegible]ातएव विविधैर्वृतां. ५ ख. ङ. झ. ञ. ट. तोरणां. ६ ख. झ. ञ. ट. अङ्गनाःशतमात्रंतु. ७ ख. झ. ञ. ट. मनुव्रजन्. ८[illegible]भिषि- काञ्चनीश्चापिजगृहुः. ९ ङ. झ. ञ. ट. काञ्चनैश्चैव. १० ग. ङ.—ट. मण्डलाग्राबृसीश्चैव. क. घ. मण्डलाग्रानसींश्चैव. ११[illegible]पयि- वहन्त्यःपृष्ठतो. १२ क.—ङ. छ. झ. ञ. ट. पात्रीं. १३ ङ. झ. ञ. ट. भ्राजतीं. १४ क. परिजग्राह. १५ च. [illegible] झ. ञ. वदनांबुजाः. १६ ख. घ.—ञ. समाल्याकुल. १७ च.—ट. प्रियभार्याः.

तं चाप्रतिमकर्माणमचिन्त्यबलपौरुषम् ॥ द्वारदेशमनुप्राप्तं ददर्श हनुमान्कपिः ॥ २१ ॥
दीपिकाभिरनेकाभिः समन्तादवभासितम् ॥ गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ २२ ॥
कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् ॥ समक्षमिव कन्दर्पमपविद्धशरासनम् ॥ २३ ॥
मथितामृतफेनाभमरजो वस्त्रमुत्तमम् ॥ सलीलमनुकर्षन्तं विमुक्तं सक्तमङ्गदे ॥ २४ ॥
तं पत्रविटपे लीनः पत्रपुष्पघनावृतः ॥ समीपमिवं संक्रान्तं निध्यातुमुपचक्रमे ॥ २५ ॥
अवेक्षमाणस्तु ततो ददर्श कपिकुञ्जरः ॥ रूपयौवनसंपन्ना रावणस्य वरस्त्रियः ॥ २६ ॥
ताभिः परिवृतो राजा सुरूपाभिर्महायशाः ॥ तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥ २७ ॥
क्षीबो विचित्राभरणः शङ्कुकर्णो महाबलः ॥ तेन विश्रवसः पुत्रः स दृष्टो राक्षसाधिपः ॥ २८ ॥
वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः ॥ तं ददर्श महातेजास्तेजोवन्तं महाकपिः ॥ २९ ॥
रावणोऽयं महाबाहुरिति संचिन्त्य वानरः ॥ [ सोऽयमेव पुरा शेते पुरमध्ये गृहोत्तमे ॥ ]
अवप्लुतो महातेजा हनुमान्मारुतात्मजः ॥ ३० ॥
स तथाप्युग्रतेजाः सन्निर्धूतस्तस्य तेजसा ॥ पत्रगुह्यान्तरे सक्तो हनुमान्संवृतोऽभवत् ॥ ३१ ॥
स तामसितकेशान्तां सुश्रोणीं संहतस्तनीम् ॥ दिदृक्षुरसितापाङ्गामुपावर्तत रावणः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

॥१९—२०॥ द्वारदेशं अशोकवनद्वारदेशं ॥ २१ ॥ गन्धतैलं गन्धवासिततैलं ॥ २२ ॥ समक्षं प्रत्यक्षं । अपविद्धशरासनं अधृतशरासनं ॥ २३ ॥ मथितामृतफेनाभं मथितं तक्रं अमृतं धारोष्णं तयोर्यत्फेनं तदाभं । "निरम्बु घोलं मथितं धारोष्णं त्वमृतंपयः" इत्युभयत्र वैजयन्ती । विमुक्तं स्वस्थानात्प्रचलितं । सक्तं वस्त्रं सलीलं यथा भवति तथा अनुकर्षन्तमित्यर्थः ॥ २४ ॥ पत्रविटपे पत्रवति विटपे । लीनः । पत्रपुष्पघनावृतः पत्रपुष्पसमूहावृतः । इवो वाक्यालंकारे । यद्वा दूरे समागतमपि समीपे संक्रान्तमिव स्थितं । तं निध्यातुं उपचक्रमे । "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणं" इत्यमरः ॥ २५—२६ ॥ प्रमदावनं अन्तःपुरोद्यानं ॥ २७ ॥ क्षीबः मत्तः । शङ्कुकर्णः गर्वेण स्तब्धकर्ण इत्यर्थः ॥ २८—२९ ॥ अवप्लुतः अवरूढः । रावणचेष्टास्सर्वा द्रष्टुं पूर्वस्थानादधःशाखां समाश्रित इत्यर्थः ॥ ३० ॥ सः हनुमान् । तथा पूर्वोक्तरीत्या । उग्रतेजास्सन्नपि । तस्य रावणस्य । तेजसा निर्धूतः सन् । पत्रगुह्यान्तरे पत्रगूढप्रदेशे । संवृतोऽभवत् गूढोऽभवत् ॥ ३१—३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

---

अपविद्धशरासनं त्यक्तेक्षुचापं । कन्दर्पमिवस्थितं ॥२३॥ ति० अमृतंपयः । मथितपयःफेनवच्छुक्लाआभायस्यतत् । सपुष्पं पुष्पसहितं । विमुक्तं विशिष्टमुक्तावन्तं । सपुष्पमवकर्षन्तमित्येवपाठः । तीर्थस्तु एतद्योजनाशक्त्यासलीलमवकर्षन्तमितिपाठमाहेति ॥ २४ ॥ स० क्षीबः मत्तः । शङ्कुकर्णः तन्नामकोयोवनपालस्तेनदृष्टः ॥ २८ ॥ स० सोयंरावणः पुरमध्ये प्रासादगृहे "गृहोपरिगृहंपुरं" इतिविश्वः । शेतेपुरा अशेत ॥ ३० ॥ ति० यद्यपिससमुद्रलङ्घनकर्ता समारुतात्मजः उग्रतेजाः । तथापि तस्यरावणस्यतेजसानिर्धूतः तस्यपुरोऽवस्थातुमशक्नुवन् पत्रे पत्रबहुले । अतएव गुह्यान्तरे शाखान्तरे । सक्तः स्थितः । संवृतः स्वल्पशरीरतयासंवृतः गुप्तोऽभवत् । सर्वमायातिरस्कारकमायावतस्तस्यदृश्यमेमाययाऽल्पशरीरादिमत्त्वेनस्थातुमशक्यत्वात्पूर्णं ॥ ३१ ॥ इत्यष्टादशः सर्गः ॥ १८ ॥

[ पा० ] १ ङ. झ. ञ. ट. सपुष्पमवकर्षन्त. घ. च. छ. ज. सपुष्पमनु. २ ङ. च. ज.—ट. पुष्पशतावृतः. घ. पुष्पवृतः. ३ क. ख. घ.—ट. मुपसंक्रान्तं. ४ ध. प्रध्यातुं. ङ. झ. ट. विज्ञातुं. ५ ङ.—ट. तदा. ६ इदमर्धं क. ङ.—ट. पुस्तकेषु दृश्यते. ७ क. ख. ङ. ज. झ. ट. सनिर्धूतः. ८ ङ. झ. ञ. ट. पत्रेगुह्यान्तरे. ९ ङ.—ट. मतिमान्. १० क. च. ज. केशान्तां. ११ ङ.—ट. रसितापाङ्गीं.

# एकोनविंशः सर्गः ॥ १९ ॥

ग्रन्थकृतानानावस्त्वौपम्येन बहुधोपवर्णितांसीतांप्रति रावणेनप्रलोभनोपक्रमः ॥ १ ॥

तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता ॥ रूपयौवनसंपन्नं भूषणोत्तमभूषितम् ॥ १ ॥
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ॥ प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २ ॥
ओच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ ॥ उपविष्टा विशालाक्षी रुदन्ती वरवर्णिनी ॥ ३ ॥
दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः ॥ ददर्श सीतां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४ ॥
असंवृतायामासीनां धरण्यां शंसितव्रताम् ॥ छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५ ॥
मलमण्डनचित्राङ्गीं मण्डनार्हाममण्डिताम् ॥ मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६ ॥
समीपं राजसिंहस्य रामस्य विदितात्मनः ॥ संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७ ॥
शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् ॥ दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥ ८ ॥
वेष्टमानां तथाऽऽविष्टां पन्नगेन्द्रवधूमिव ॥ धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९ ॥
वृत्तशीलकुले जातामाचारवति धार्मिके ॥ पुनःसंस्कारमापन्नां जातामिव च दुष्कुले ॥ १० ॥
अभूतेनापवादेन कीर्तिं निपतितामिव ॥ आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ११ ॥
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् ॥ पूजामिव परिक्षीणामाशां प्रतिहतामिव ॥ १२ ॥
आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव ॥ दीप्तामिव दिशं काले पूजामपहृतामिव ॥ १३ ॥

तस्मिन्नित्यादिश्लोकद्वयमेकान्वयं ॥ ततः रावणागमनानन्तरं । तस्मिन्नेव काले तदागमनानन्तरकाल एव । भूषणोत्तमभूषितं रूपयौवनसंपन्नं रावणं ततो दृष्ट्वैव तत्र दूरदेश एव दृष्ट्वा प्रावेपतेतिसंबन्धः ॥ १—५ ॥ मलमण्डनचित्राङ्गीं मलरूपमण्डनेन चित्राङ्गीं । मलावृतामप्याश्चर्यावहदेहामित्यर्थः । मृणाली पङ्कदिग्धेवेत्यत्र येत्यध्याहार्यं ॥ ६—८ ॥ आविष्टां मणिमन्त्राद्यभिभूतां । धूप्यमानां संतप्यमानां । धूमः केतुरिव धूमकेतुः केतुना ग्रहेणेत्यर्थः । यद्वा ग्रहेण ग्राहकेण आच्छादकेनेति धूमकेतुर्विशिष्यते ॥ ९ ॥ वृत्तं दृढं शीलं स्वभावो यस्य तत् तच्च तत् कुलं च तस्मिन् । आचारवति समयाचारवति । धार्मिके यज्ञादिधर्मप्रधाने एवंभूते कुले जातां । संस्कारमापन्नां विवाहरूपसंस्कारमापन्नां । अतः संस्कारद्वारा दुष्कुले पुनर्जातामिव स्थितां । कुमाराणामुपनयनमिव कुमारीणां विवाहो द्वितीयं जन्म । "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत[illegible]" इ[illegible] स्मृतेः ॥ १०—११ ॥ सन्नां क्षीणां । [illegible] विमानितां अवमानितामित्यर्थः । अवमाने [illegible] अवमन्तरि श्रद्धा मन्दीभवति । पूजामिव प[illegible] स्वल्पपूजाद्रव्यामित्यर्थः । प्रतिहतां निष्फलां [illegible] आयतीं धनलाभं । विध्वस्तां मन्दीभूतां । [illegible] अननुष्ठितां । दीप्तां दाहयुक्तां । काले उत्पात[illegible] पूजामपहृतामिव । अत्र पूजाशब्देन पूजाद्रव्य[illegible]

ति० मलेनमण्डनस्थानेषुदिग्धाङ्गीं रूषिताङ्गीं । चित्राङ्गीमितिपठित्वा मलरूपेणमण्डनेन चित्राङ्गीं कर्बुरामित्यर्थंतीथ[illegible] संन्यासित्वादुचितैवतस्यमलेपिमण्डनत्वबुद्धिः । ईदृशींयांददर्श सा पङ्कदिग्धामृणालीवविभातिनविभातिच ॥ स्वरूपशोभय[illegible] लावराच्चविभाति नविभातिचेत्यर्थः ॥ ६ ॥ ति० वृत्तमाचारः । शीलं सत्स्वभावः । तद्युते विहितकर्मानुष्ठानवतिचकु[illegible] तादृशएवकुले पुनःसंस्कारं पाणिग्रहणसंस्कारमापन्नामपि दुष्कुलेजातां उत्पन्नां तत्रैवप्राप्तसंस्कारामिवचमलिनांस्थितां[illegible] धार्मिके एतादृशेपितृकुलेजाता । सैवदुष्कुले वृत्तादिरहितेविवाहाख्यसंस्कारेणपुनर्जाताचेत्सायथावर्तेत तथाविद्यमानां ॥[illegible]

[ पा० ] १ घ. ह्यनिन्दिता. २ क. ख. घ. ङ. छ.—ट. ऊरुभ्यामुदरंछाद्य. ३ क. घ.—ट. दीनां. ४ ख. ङ. [illegible] ट. मण्डनदिग्धाङ्गीं. ५ क. ख. विभातिचनभातिच. ६ क. शोकध्यानपरायणां. ७ क. ख. घ.—ज. ञ. ट. वेष्टमाना[illegible] ८ झ. ट. वृत्तशीलेकुले. ९ ख. विनाशितां. १० क. ख. ङ. ज. झ. ट. प्रज्ञामिव. ११ ङ.—ञ. पूजामपहृतामिव. [illegible] पूजांप्रतिहृतामिव.

पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ॥ प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ॥ १४ ॥
वेदीमिव परामृष्टां शान्तामग्निशिखामिव ॥ पौर्णमासीमिव निशां राहुग्रस्तेन्दुमण्डलाम् ॥ १५ ॥
उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् ॥ हस्तिहस्तपरामृष्टामाकुलां पद्मिनीमिव ॥ १६ ॥
पतिशोकातुरां शुष्कां नदीं विस्रावितामिव ॥ परया मृजया हीनां कृष्णपक्षनिशामिव ॥ १७ ॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ॥ तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १८ ॥
गृहीतामालितां स्तम्भे यूथपेन विनाकृताम् ॥ निःश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥ १९ ॥
एकया दीर्घया वेण्या शोभमानामयत्नतः ॥ नीलया नीरदापाये वनराज्या महीमिव ॥ २० ॥
उपवासेन शोकेन ध्यानेन च भयेन च ॥ परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥ २१ ॥
आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव ॥ भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २२ ॥
समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् ॥
अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ॥ २० ॥

रावणेन सीतांप्रति प्रलोभनाय चाटुवचनोपन्यासपूर्वकंस्वाङ्गीकरणप्रार्थना ॥ १ ॥

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् ॥ साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ १ ॥
मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् ॥ अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २ ॥

---

॥ १३ ॥ विध्वस्तां हिमादिहतां । तमोध्वस्तां तमःसंवृतां । उपक्षीणां स्वल्पजलामित्यर्थः ॥ १४ ॥ क्लिष्टां शूद्रादिभिरितिशेषः ॥ १५ ॥ उत्कृष्टपर्णकयुक्ता भग्नपत्रकमलां ॥ १६ ॥ विस्रावितां रोधोभङ्गेन अन्यनिर्गमितजलामित्यर्थः । मृजया उद्वर्तनशोधनेन ॥ १७ ॥ सुजाताङ्गीं सुन्दराङ्गीं ॥ आलितां बद्धां ॥ १९—२० ॥ अल्पाहारां स्वल्पाहारामित्यर्थः । यद्वा अल्पाहारां मितभोजित्वमुत्तमस्त्रीलक्षणमुच्यते ॥ २१ ॥ रघुमुख्यस्य दशग्रीवपराभवं भावेन मनसा । आयाचमानां प्रार्थयन्तीमिव स्थितां ॥ २२ ॥ समीक्षमाणां रक्षकं समीक्षमाणां । सुपक्ष्मेति । अन्ते ताम्रं मध्ये शुक्लमस्या लोचनमित्युच्यते ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

---

साकारैः सेङ्गितैः । "आकाराविङ्गिताकृती" इत्यमरः । न्यदर्शयत स्वाभिप्रायमिति शेषः । सीतायै स्वाभिप्रायं प्रकाशितवानित्यर्थः ॥ १ ॥ अद-

---

[illegible] परामृष्टां वेदवेदिरहितपतितैराक्रान्तां ॥ १५ ॥ **ति०** गृहीतां धृतां । पश्चात्स्तंभे लाडितां बद्धां ॥१९॥ **ति०** अल्पाहारां [illegible]हारां । अज्ञातयाऽन्नस्यग्रहीतुमशक्यत्वात् । देवराजतःपायसलाभेनतदनपेक्षणाच्च ॥ **स०** शोकेन रामविश्लेषजेन । [illegible]युः । भयेन रावणजन्येन । अल्पाहारां पत्युच्छिष्टंविनान्यस्यस्वीकारायोग्यत्वाच्छरीरयात्रार्थं नीरस्याशितानशितत्वो-[illegible]यादोषत्वात् । पत्युर्नारायणावतारत्वेनतत्रतत्सांनिध्यविशेषात्तद्ग्रहोयुक्तः । उपेन्द्रावतारत्वाद्रामस्य इन्द्रस्यतदग्रजत्वात्त-[illegible]शनंगौरवतःस्वान्नत्वाच्चभोजनंयुक्तमितिमन्तव्यं ॥ **शि०** अल्पः अतिसूक्ष्मः वायुरित्यर्थः । आहारोयस्यास्तां ॥ २१ ॥ [illegible]स्ववधार्थमेव । नतुतेनकिंचित्प्रयोजनमितिभावः ॥ २३ ॥ इत्येकोनविंशः सर्गः ॥ १९ ॥

[illegible]० परिवृतां राक्षसीभिरितिशेषः ॥ १ ॥ **ती०** वस्तुतस्तु पुत्रसमभृत्यदर्शनविषयेभयादिकंनोचितमितिभावः । **ति०** नेतु-

[पा० ] १ ङ. झ. ट. तमोग्रस्तेन्दु. २ क. घ. च.—ट. माकुलामिवपद्मिनीं. ३ क. घ. शोकाकुलां. ४ ख. ङ. झ. ट. [illegible]डितां. क. गृहीतांबलिनास्तंभे. ५.क. सीतां. ६ ङ. झ. ञ. ट. परिवृतां.

कामये त्वां विशालाक्षि बहुमन्यस्व मां प्रिये ॥ सर्वाङ्गगुणसंपन्ने सर्वलोकमनोहरे ॥ ३ ॥
नेह केचिन्मनुष्या वा राक्षसाः कामरूपिणः ॥ व्यपसर्पतु ते सीते भयं मत्तः समुत्थितम् ॥ ४ ॥
स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः ॥ गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥ ५ ॥
एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि ॥ कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ॥६॥
देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये ॥ प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥ ७ ॥
एकवेणी धराशय्या ध्यानं मलिनमम्बरम् ॥ अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ॥ ८ ॥
विचित्राणि च माल्यानि चन्दनान्यगुरूणि च ॥ विविधानि च वासांसि दिव्यान्याभरणानि च ॥९॥
महार्हाणि च पानानि शयनान्यासनानि च ॥ गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि ॥१०॥
स्त्रीरत्नमपि मैवं भूः कुरु गात्रेषु भूषणम् ॥ मां प्राप्य हि कथं नु स्यास्त्वमनर्हा सुविग्रहे ॥ ११ ॥
इदं ते चारु संजातं यौवनं व्यतिवर्तते ॥ यदतीतं पुनर्नैति स्रोतः शीघ्रमपामिव ॥ १२ ॥
त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृक् ॥ न हि रूपोपमा त्वन्या तवास्ति शुभदर्शने ॥१३॥

---

र्शनं अदृश्यत्वं ॥ २ ॥ मां दृष्ट्वा भीतिर्न कर्तव्येत्याह—कामय इति ॥ ३ ॥ अन्ये च भयहेतवोत्र न सन्तीत्याह—नेहेति ॥ ४ ॥ परदारेच्छा दोष इत्याशङ्क्याह—स्वधर्म इति ॥ संप्रमथ्य बलात्कृत्य ॥५॥ कामं अत्यन्तं । यथाकामं यथेच्छं ॥ ६ ॥ प्रणयस्व स्नेहंकुरु ॥ ७ ॥ एकवेणी असीमन्तितवेणी । धराशय्या भूशयनं । औपयिकानि युक्तानि । " युक्तमौपयिकं " इत्यमरः ॥ ८—१० ॥ मां प्राप्य हीति । हिः पादपूरणे अप्यर्थो वा । हे सुविग्रहे मां प्राप्यापि कथमनर्हा स्याः ॥ ११—१२ ॥ उपरतः निवृत्तः । अत्रेतिकरणं द्रष्टव्यं । उत्तरोत्तरं सातिशयं रूपं सिसृक्षुर्विधाता त्वां सृष्ट्वा इतः परं सातिशयं रूपं स्रष्टुं न शक्यत इति धिया सृष्टेरुपरत इति मन्य

---

मिच्छसि तत्किमितिशेषः ॥ २ ॥ ती० वस्तुतस्तु त्वांकामये ईश्वरीत्वेनेतिशेषः । अतोमांबहुमन्यस्व ॥ ३ ॥ ती० नेहेति
मनुष्याराक्षसावा । त्वद्भयकर्तारइतिशेषः । वस्तुतस्तु सर्वैश्वर्यास्तवनकुत्रापिभयशङ्केतिभावः । ति० किमिदानीमदतिरिक्त ॥
न्तरजंतवभयं उतममस्पर्शेधर्महानिजं । नाद्यइत्याह—नेहेति । मत्तः मदागमनात्समुत्थितं पुरुषान्तरागमनसंभावन
व्यपसर्पतु । अन्येषामभावात् ॥४॥ ति० नान्त्यइत्याह—स्वधर्मइति । तंस्वधर्ममाह—गमनंवेति । आनुकूल्यंसंप्रा स्वाससेति
संप्रमथ्य बलात्कृत्य । एवंस्वधर्मत्वान्ममनाधर्मः । बलात्कारेचास्वतन्त्रत्वात्त्वयाअपिनदोषइतिभावः ॥ ५ ॥ ती० मन्ये ।
दाराभिमर्शःस्वधर्मः तथापि नाहंत्वामकामयमानांस्प्रक्ष्यामीत्याह—स्वधर्मइत्यादिश्लोकद्वयेन । कामं अत्यर्थं
यथेच्छं । मेशरीरेकामः । तवेतिशेषः । मयितवेच्छाप्रवर्ततामितिभावः । स्वधर्मइत्यादिश्लोकद्वयस्यवास्तवार्थस्तु— थस्याहं
नविश्वसनीयइत्यतआह—स्वधर्मइत्यादि । यद्यपिरक्षसांपरदाराहरणादि स्वधर्मःस्वभावः । मेशरीरेकामं अत्यर्थं । ज्ञातस्य
यथेच्छं कामःप्रवर्ततांनाम मन्मथविकारोस्तुनाम । तथाप्येतत्सर्वंममेष्टदेवतायांत्वयिनघटतइतिशेषः । अतएव अका विदि-
भृत्यत्वकामनारहितां । यद्वा अकामां विष्णुकामांत्वां । नस्प्रक्ष्यामि त्वदाज्ञांविना पूजांकर्तुमपिबिभेमीतिशेषः ॥ ति रूपवि-
एवमपि । बलात्कारपक्षे तवममचदोषाभावेपितस्यपक्षस्यरसाभाससंपादकत्वात् । अतएवमकामां अनेनप्रकारेणमयिकाम रंभणका-
मद्भिन्नेच्छावर्तींच । नच ननु । स्प्रक्ष्यामि । एवंचैतदकामांत्वामितिपाठे एतत् रक्षोधर्मत्वं । एवंच एवमेव मदुक्तरी औपयिकी
तथाप्युक्तप्रकारेण त्वामकामां नस्प्रक्ष्यामीत्यर्थः । नन्वेवंसतिदुस्सहाकामपीडातवस्यात्तत्राह—काममिति । कामः पुरुषार्थ-
यथाकामं यथेच्छं । कामं तद्विषयेच्छां । प्रवर्ततां प्रवर्तयत्वित्यर्थः ॥ ६ ॥ ती० वस्तुतस्तु विचित्राणीत्यादिश्लोकद्वयमे सेतस्यै-
मांप्राप्य भृत्यत्वेनेतिशेषः । माल्यादीनिलभ प्राप्नुहीतिसंबन्धः ॥ ९—१० ॥ ती० वस्तुतस्तु त्वत्पूजाक्षमंमदीयम् अतएव
च्छतीतिखिद्यति—इदंतइति । ते तवभृत्यस्य । ममेतिशेषः । यौवनं दार्ढ्यावस्था । यत् यतः । भृत्यस्यममायुः व्यर्थं भिषि-

[ पा० ] १ ख. ङ. च. ज.—ट. सर्वदैव. २ च. ज. ञ. चैवमकामां. ङ. झ. ट. चैवमकामांत्वां. घ. त्वेत पियि-
३ ङ. झ. ट. नच. ४ ङ. अधश्शय्या. ५ क. ख. घ. यानानिशयनानिच. ६ क.—ट. स्त्रीरत्नमसि. ७ घ.—ट. झ.
क. कथंस्यास्त्वमनाहारा. ८ ङ.—ट. स्रोतस्विनामिव. ९ ख. ङ. झ. ट. विश्वकृत्. १० क. ङ.—ट. ह्यन्या.

त्वां समासाद्य वैदेहि रूपयौवनशालिनीम् ॥ [1]कः पुमानतिवर्तेत साक्षादपि पितामहः ॥ १४ ॥
यद्यत्पश्यामि ते गात्रं शीतांशुसदृशानने[2] ॥ तस्मिंस्तस्मिन्पृथुश्रोणि चक्षुर्मम निबध्यते ॥ १५ ॥
भव मैथिलि [3]भार्या मे मोहमेनं[4] विसर्जय ॥ बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ॥
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ १६ ॥
लोकेभ्यो यानि रत्नानि संप्रमथ्याहृतानि वै[5] ॥ तानि[6] मे भीरु सर्वाणि राज्यं चैतदहं[7] च ते ॥१७॥
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् ॥ जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥ १८ ॥
नेह[8] पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् ॥ पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥ १९ ॥
असकृत्संयुगे भग्ना मया विमृदितध्वजाः ॥ अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ॥ २० ॥
इच्छया[9] क्रियतामद्य प्रतिकर्म तवोत्तमम् ॥ २१ ॥
[10]संप्रभाण्यवसज्यन्तां तवाङ्गे [11]भूषणानि च ॥ साधु पश्यामि ते रूपं संयुक्तं[12] प्रतिकर्मणा ॥ २२ ॥
प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने ॥ भुङ्क्ष्व भोगान्यथाकामं पिब भीरु रमस्व च ॥ २३ ॥
यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च ॥ [13]ललस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च ॥
[14]मत्प्रसादाल्ललन्त्याश्च [15]ललन्तां बान्धवास्तव ॥ २४ ॥
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे [16]यशश्च मे ॥ किं करिष्यसि रामेण सुभगे चीर[17]वाससा ॥ २५ ॥
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ॥ व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६ ॥

इत्यर्थः ॥ १३ ॥ कः अतिवर्तेत न कोपीत्यर्थः ॥ १४—१९ ॥ विमृदितध्वजाः भग्नध्वजाः । प्रत्यनीकेषु शत्रुषु मध्ये ॥ २० ॥ प्रतिकर्म अलंकारः । "प्रतिकर्म प्रसाधनं" इत्यमरः ॥ २१ ॥ अवसज्यन्तां अर्प्यन्तां । प्रतिकर्मणा संयुक्तं पश्यामि पश्येयं ॥ २२ ॥ दाक्षिण्येन सरलत्वेन । भुङ्क्ष्व अनुभव । "दक्षिणे सरलोदारौ" इत्यमरः ॥२३॥ ललस्व प्रीतिं कुरु । "लल ईप्सायाम्" इति धातुः ॥ २४ ॥ एवमात्मानं प्रशस्य रामं निन्दति—किं करिष्यसीत्यादिना ॥२५॥ निक्षिप्तविजयः त्यक्तविजय इत्यर्थः ।

कृत्वा[म] तवपूजार्थमनुज्ञांदेहीतिशेषः ॥ १२ ॥ **ति॰** कोनातिवर्तेत क्षुभ्येतेत्यर्थः । कःपुमानतिवर्तेतेतिपाठे कामवशतामतिक्रम्य ...र्थः ॥ **ती॰** वस्तुतस्तु मदाराधनेतवबुद्धिःकथंस्यादतआह—त्वामिति । त्वां लक्ष्मीं । "सीतालक्ष्मीर्भवान्विष्णुः" ...णत्वात् । समासाद्य साक्षात्पितामहोपिनातिवर्तेत अनाराधितुंनशक्नुयात् । पुमांस्तुकोवाऽतिवर्तेतेत्यर्थः ॥ १४ ॥ ...दिति । गात्रं अवयवविशेषं । तस्मिंस्तस्मिन्नवयवविशेषेचक्षुर्निबध्यते । इष्टदेवतायास्तवदर्शनस्यमुक्तिसाधकत्वादिति ...॥१५ ॥ **ती॰** वस्तुतस्तु मैथिलि भार्या भयाकान्त्या आर्याश्रेष्ठाभव । एनंमोहं मयिशत्रुत्वशङ्कां । विसर्जय । मेमम ...मयाअग्रमहिषीमन्दोदरी तस्याश्चममचभव ईश्वरीतिशेषः । **शि॰** हे भवमैथिलि भवति भावयति नितरां स्वपतिं ... सैवमैथिली । तत्संबोधनं । अग्रस्यसर्वोत्कृष्टस्यरामस्यमहिषीत्वं ममबह्वीनामुत्तमस्त्रीणां भार्या सेव्याभव । अतएव तं ...मेमोहं वैचित्यं । विसर्जय त्याजय ॥१६॥ **ती॰** लोकेभ्यइत्यस्यवास्तवार्थस्तु इष्टदेवतायैदेव्यै रावणस्त्वात्मात्मीयसमर्पणं —**लोकेभ्यइतिश्लोकद्वयेन** । अहमित्यनेनात्मसमर्पणं । रत्नानीत्यादिनाऽऽत्मीयसमर्पणमिति ज्ञेयं ॥ १७ ॥ **ति॰** ... । वस्तुतस्तु मां लक्ष्मींसंपदमित्यर्थः ॥२१॥ **ती॰** वस्तुतस्तु मत्प्रसादात् मयिप्रसादोऽनुग्रहः । तस्मात् । तवललन्त्याः ...सत्याः बान्धवाश्चरमन्तामितिसंबन्धः ॥ २४ ॥ **रामानु॰** ऋद्धिं संपदं । श्रियं भां ॥ २५ ॥ **ती॰** ऋद्धिमित्यादी- ...र्थस्तु—सरामाऽहंतेअखिलसंपत्समृद्धिंददामि । मांरामेणसहसंयोजयेत्याशङ्क्यनाहंसंपदाद्यर्थी किंतुमोक्षकामी । अतो ...त्वत्पादाब्जंनत्यजामीत्यभिप्रायेणाह—**ऋद्धिंममेत्यादिश्लोकचतुष्टयेन** । हेसुभगे ममऋद्ध्यादिकंपश्य । निक्षि- ...स्वतस्सिद्धविजयइत्यर्थः । वनगोचरः वनंजलंगोचरंनिवासस्थानंयस्यसः । नारायणइत्यर्थः । अतएवगतश्रीः गताप्राप्ता

...॰ ] १ ङ. झ. ट. कःपुनर्नातिवर्तेत. घ. च. छ. ञ. कःपुमान्नातिवर्तेत. २ ख. शीतांशुसमदर्शने. ३ क. मेभार्या. ...ज. झ. ट. मेतं. ५ ख. झ. ञ. ट. संप्रमथ्याहृतानिमे. क. ङ.—ज. संप्रमथ्यहृतानिमे. ६ ख. घ. ङ. झ. ट. ...॰. ७ झ. ट. चैवददामिते. ८ च. छ. ज. ञ. नैव. ९ क. ङ. च. ज. ट. इच्छमां. १० ङ. छ. झ. ञ. ट. सुप्रभाण्यव. ... सुप्रभाण्यपि. ११ ङ.—ट. भूषणानिहि. १२ ङ.—ट. सुयुक्तं. १३ घ. रमस्व. १४ क. घ. मत्प्रभावात्. १५ ङ. ज. ...॰. ललतांबान्धवस्तव. १६ ङ.—ट. यशस्विनि. १७ ङ. झ. ट. चीरवासिना.

न हि वैदेहि रामस्त्वां द्रष्टुं वाऽप्युपलप्स्यते ॥ पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ॥ २७ ॥
न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः ॥ हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ॥ २८ ॥
चारुस्मिते चारुदति चारुनेत्रे विलासिनि ॥ मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ॥ २९ ॥
क्लिष्टकौशेयवसनां तन्वीमप्यनलङ्कृताम् ॥ त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ॥ ३० ॥
अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः ॥ यावत्यो मम सर्वासामैश्वर्यं कुरु जानकि ॥ ३१ ॥
मम ह्यसितकेशान्ते त्रैलोक्यप्रवराः स्त्रियः ॥ तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ॥ ३२ ॥
यानि वैश्रवणे सुभ्रु रत्नानि च धनानि च ॥ तानि लोकांश्च सुश्रोणि मां च भुङ्क्ष्व यथासुखम् ॥३३॥
न रामस्तपसा देवि न बलेन न विक्रमैः ॥ न धनेन मया तुल्यस्तेजसा यशसाऽपि वा ॥ ३४ ॥

पिब विहर रमस्व भुङ्क्ष्व भोगान्धननिचयं प्रदिशामि मेदिनीं च ॥
मयि लल ललने यथासुखं त्वं त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ ३५ ॥
कुसुमिततरुजालसंततानि भ्रमरयुतानि समुद्रतीरजानि ॥
कनकविमलहारभूषिताङ्गी विहर मया सह भीरु काननानि ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

स्थण्डिलशायी भूतलशायी ॥२६॥ वाशब्दोऽवधारणे । द्रष्टुमपि नोपलप्स्यत एवेत्यर्थः । दर्शनमात्रफलमपि दर्शनं नप्राप्स्यसीत्यर्थः । पुरोऽग्रे बलाका येषां ते पुरोबलाकाः तैः । अनेन मेघानामतिविपुलतोच्यते । महामेघेष्वेव बलाकासंचारवर्णनात् ॥ २७ ॥ हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिवेति वैधर्म्यदृष्टान्तः । अत्र कीर्तिशब्देन भार्या लक्ष्यते । हिरण्यकशिपुरिन्द्रहस्तगतां भार्यां पुनः प्राप्तवानित्येतच्छ्रीभागवते प्रसिद्धम् । " व्यलुम्पन्राजशिबिरममरा राज्यकाङ्क्षिणः । इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् " इत्यादिप्रह्लादवचनात् ॥ २८—३० ॥ ऐश्वर्यं अन्तःपुरैश्वर्यं । स्वामिनीत्वं कुरु प्राप्नुहीत्यर्थः ॥ ३१—३२ ॥ भुङ्क्ष्व स्वाधीनं कुरु ॥ ३३—३४ ॥ पिब मद्यमिति शेषः । विहर संचर । विहारशब्दस्य संचारेपि प्रयोगात् ॥ ३५—३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

श्रीर्लक्ष्मीर्येन । अतएव प्रतिभक्तसंरक्षणव्रतशीलः । अतएव पितृवाक्यपरिपालनायस्थण्डिलशायीयोरामः । अची विवृत्य
च्छेदः । पीतांबरधारिणेत्यर्थः । एतादृशेनतेनरामेणसहवात्वं इदानींविद्यमानैश्वर्याद्यपेक्षयानकिमपिकरिष्यसीति श यस्यासौ
अतोजीवतिमयिसतीतिशेषः । रामस्त्वांद्रष्टुमपिनोपलप्स्यते । नचममहस्तात्त्वांराघवःप्राप्तुमर्हति । मद्वधानन्तरंरामस्त्व नि यस्य
पलप्स्यतेप्राप्तुमप्यर्हतीतिभावः ॥ ति० उपलभ्यते व्यत्ययेनश्यन्प्रत्ययः । समर्थोभवतीत्यर्थः । उपलप्स्यतइतिपाठे स यस्य
ष्यतीत्यर्थः ॥ २५—२७ ॥ ती० हिरण्यकशिपुरिति । पुराकिलहिरण्यकशिपोर्भार्यांहृत्वानारदमुखेनप्रार्थितस्तस्यैपुनः चित्र-
भागवतेकथाऽस्ति । तथाच भार्याहरणमेवकीर्तिहरणमितिभावः ॥ स० हिरण्यकशिपुः इन्द्रहस्तगतां इन्द्राधीनांकीर्तिं तमाङ्ग-
स्वरिपुहिरण्यकशिपोर्भार्यामपहृतवानितिकीर्तिंयथानप्राप्तुमर्हति तथेत्यर्थः । इन्द्रनीतांकयाधूंहिरण्यकशिपुःपुनरपीन्द्रंनिर्जि मेचकेन
वानित्यप्रसिद्धेः । नारदएवतांतस्यैदत्तवानितिभावः ॥ २८ ॥ शि० अनलङ्कृतांत्वां त्वद्दुःखमित्यर्थः । दृष्ट्वा स्वेषुदारे
प्रीतिं । नोपलभामि । अतिदुःखितंमनःक्वापिनप्रवर्ततइत्यर्थः । एतेन रावणस्यदयालुत्वंसूचितं ॥ स० अनलङ्कृताम नसेप्रात-
स्वभार्यासुरतिं नोपलभामि नोपलभे । अलङ्कृतांपुनर्दृष्ट्वातत्ररतिंनोपलभइतिकिंवक्तव्यमित्यर्थः । एतेनसौन्दर्यातिशयो करिष्यति
ती० क्लिष्टकौशेयेत्यस्यवास्तवार्थस्तु त्वांममेष्टदेवतांदृष्ट्वा स्वेषुधनेषुदारेषुचरतिंनोपलभामि । इष्टदेवतायास्तवदर्शनमात्रेणा यथापरि-
ऽहंसर्वतोनिवृत्तोस्मीतिभावः ॥ ३० ॥ ती० नरामइत्यस्यवास्तवार्थस्तु—रामः तपआदिनामयातुल्योनभवति । किंतु ख. ङ.
कषड्गुणैश्वर्यसंपन्नोभगवाञ्श्रीरामोमत्तोप्यधिकएवेतिभावः ॥३४॥ ती० मयि लल रमस्व । वस्तुतस्तु मयिभृत्येसति लल वीक्षते.
ती० मयासह । वस्तुतस्तु सह एकदैव । मया संवर्धितानीतिशेषः । काननानिविहर ॥ ३६ ॥ इतिविंशः सर्गः ॥ २० ॥ १ ङ.

[ पा० ] १ च. द्रष्टुमप्युपलप्स्यते. ङ. झ. ञ. ट. द्रष्टुंवाप्युपलभ्यते. क. ख. द्रष्टुंवाप्युपपद्यते. २ क. सर्वगुणो ४ क.
३ ङ. झ. ट. प्रवरस्त्रियः. ४ ङ. झ. ट. मया. ५ क. रूपेण. ङ. झ. ट. बलेनच. ६ क. ख. यशसापिच.

# एकविंशः सर्गः ॥ २१ ॥

सीतयारावणंप्रति मध्येतृणप्रक्षेपेण साम्नाहितोपदेशपूर्वकं रामगुणानुवर्णनेनतस्मैस्वप्रत्यर्पणेन तेनसहमैत्रीविरोधसंपादनयोः क्रमेणशुभाशुभफलहेतुत्वोक्तिः ॥ १ ॥

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ॥ आर्ता दीनस्वरा दीनं प्रत्युवाच शनैर्वचः ॥ १ ॥
दुःखार्ता रुदती सीता वेपमाना तपस्विनी ॥ चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ॥ २ ॥
निवर्तय मनो मत्तः स्वजने क्रियतां मनः ॥ न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् ॥ ३ ॥
अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ॥ कुलं संप्राप्तया पुण्यं कुले महति जातया ॥ ४ ॥
एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ॥ राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ॥ ५ ॥
नाहमौपयिकी भार्या परभार्या सती तव ॥ साधुधर्ममवेक्षस्व साधु साधुव्रतं चर ॥ ६ ॥
यथा तव तथाऽन्येषां दारा रक्ष्या निशाचर ॥ आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥ ७ ॥
अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ॥ नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥ ८ ॥
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ॥ तथाहि विपरीता ते बुद्धिराचारवर्जिता ॥ ९ ॥

---

तस्येत्यादि ॥ १ ॥ तृणमिति रावणस्य साक्षात्संभाषणानर्हत्वात्तृणव्यवधानकरणम् । प्रत्युवाचेति पुनरभिधानं वचनप्रकारविशेषकथनार्थं । दुःखार्तायाअपि शुचिस्मितत्वाभिधानं वस्तुस्वभावेन सस्मितवत्प्रतीयमानत्वात् ॥२—३॥ एकः पतिर्यस्यास्सा एकपत्नी । "नित्यं सपत्न्यादिषु" इति ङीप् ॥४॥ पृष्ठतः ...नादृत्येत्यर्थः ॥ ५ ॥ सती अहं तव औपयिकी ...भार्या न किन्तु परिहार्या । साधूनां सतां धर्मं ...रम । साधूनांव्रतं साधुव्रतं । साधु सम्यक् । चर ॥६॥ आत्मानमुपमां कृत्वा यथा तव दारा रक्ष्यास्तथान्येषां दारा रक्ष्याः । तस्मात् स्वेषु दारेषु रम्यतां ॥७॥ अतुष्टं अतृप्तं निकृतिप्रज्ञं निकृतौ शाठ्ये प्रज्ञा यस्य तं । पराभवं आयुरैश्वर्यादिक्षयरूपं ॥८॥ इह अतिविशालेपि दुर्जनसंकुले देशे । सन्तः त्वामनर्थान्निवारयन्तः । न सन्ति वा नसन्ति किं सन्त्येव । श्रीविभीषणप्रभृतीनां संभवान्न सन्तीति कथं वक्तुं शक्यं । सतो वा नानुवर्तसे । "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"

---

...तृणमन्तरतःकृत्वेति । परपुरुषमुखंनिरीक्ष्यवार्तानकर्तव्येतिमर्यादयावा तृणवदलक्षीकृत्यवा अस्मद्वक्ष्यमाणवचनंतृण...यंनलक्षीकरोतीतिबुद्ध्यावा " सश्लाघ्यःसगुणीधन्यःसकुलीनःसबुद्धिमान् । सशूरःसचविक्रान्तोयंत्वंदेविनिरीक्षसे " ...क्षपातार्होमाभूदितिवा स्वामिनातृणमादायकाकासुरनिरासवदनेनतृणेनैतन्निरासःकार्यइतिवा अचेतनंचेतनंकृत्वासंबो...ध्यवदामीतिबुद्ध्यावा आसन्नस्यास्यव्यवधानेनभाव्यमितिबुद्ध्यावा पशुसमानस्यतवेदमेवभोग्यमितिबुद्ध्यावा रामविरोधेन ...बन्धोनशिष्यतीतिनिवेदनायवा तृणंमध्येस्थापयित्वा ॥ **स०** प्रत्युवाचेतिपूर्वंप्रतिज्ञातं । तत्रेत्थंकारमाह—तृणमन्तरतः... ...वाचेति । अतोनपुनर्वचनं ॥ २ ॥ **ति०** क्रुद्धोक्त्यामनःपदादेःपौनरुक्त्यंनदोषभाक् । वर्णनीयमयीभावाच्चकवेरपि ...षाय ॥ **स०** युक्तः योग्यः । सिद्धिं मोक्षं ॥ ३ ॥ **स०** एकपत्न्या एकःपतिर्यस्यास्सा रामकृतयज्ञफलभोक्त्री । पति...वत् । तया । विगर्हितं विनिन्दितं । तर्हि कदापिगर्हितंत्वयानानुष्ठितंकिमित्यतस्तथैवेत्याह—**मयेति** । मयायदकारि ...मत्पतिंविष्णुमुद्दिश्यैवाकारीतिविगर्हितंनकार्यमितिभावः ॥ ४ ॥ **ति०** पृष्ठतःकृत्वा परावृत्यस्थित्वा ॥ ५ ॥ **ती०** ...अहंतव त्वया भार्या भर्तव्यान किंतुपरभार्या परेणरामेणभार्या भर्तव्या ॥ **स०** औपयिकी उपभोगयोग्यान । तत्रहेतुः ...**ति** । तत्रापिनस्वैरिणीत्युदीरयति—**सतीति** । साधूनांसतांधर्मं धर्मशास्त्राद्याशंसितं । अवेक्षस्व । साधुव्रतं साधोः ...पतिव्रतायाममव्रतं परित्यजनंचर । " वोतोगुणवचनात् " इति साधुस्साधुः ॥ ६ ॥ **स०** दाराः रक्ष्याः शीलतःसंरक्ष-

[ **पा०** ] १ क. घ. ङ. छ.—ट. ततःशनैः. २ क. चिन्तयित्वा. ३ च. ज. क्रियतांहितत्. क. ख. घ. झ. प्रीयतांमनः. घ. ङ. च. ज.—ट. युक्तस्त्वंसिद्धिमिव. ५ क. अनार्यं. ६ घ. तपस्विनी. ७ घ. ङ. च. ज.—ट. रावणं. ८ घ. ङ. ...ज.—ट. रक्ष्यादाराः. ९ ङ. झ. ट. चपलेन्द्रियं, १० ख. झ, ञ. ट. यथाहि.

वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः ॥ राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ॥ १० ॥
अकृतात्मानमासाद्य राजानमनये रतम् ॥ समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ ११ ॥
तथेयं त्वां समासाद्य लङ्का रत्नौघसंकुला ॥ अपराधात्तवैकस्य नचिराद्विनशिष्यति ॥ १२ ॥
स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः ॥ अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ॥ १३ ॥
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ॥ दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥ १४ ॥
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ॥ अनन्या राघवेणाहं भास्करेण प्रभा यथा ॥ १५ ॥
उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ॥ कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥ १६ ॥
अहमौपयिकी भार्या तस्यैव वसुधापतेः ॥ व्रतस्नातस्य धीरस्य विद्येव विदितात्मनः ॥ १७ ॥

---

इत्युक्तरीत्या प्रणिपातमन्तरेण न ते उपदिशन्ति । त्वं च तत्पादेषु कदाचिदपि न प्रणतवानसि । कथमिदं भवती जानातीत्याशङ्क्याह—तथाहीति । तथाहि विपरीता ते बुद्धिः तव बुद्धिवैपरीत्यमेव तव शिष्टाननुवर्तनं सूचयतीत्यर्थः । परबुद्धेरप्रत्यक्षत्वात् कथं मदीया बुद्धिस्त्वया ज्ञायत इत्यत्राह—आचारवर्जितेति । आचारवर्जिता तव दुरनुष्ठानमेव तव बुद्धिं द्योतयतीति भावः ॥ ९ ॥ वच इति पूर्वश्लोके रावणस्याभाव उपन्यस्तः । अनेन राक्षसाभावपक्ष उपन्यस्यते । मिथ्याप्रणीतात्मा मिथ्यास्निग्धात्मा । स्नेहीति भावयन्निवेति यावत् । त्वं विचक्षणैस्साधुभिरुक्तं पथ्यं हितं वचः राक्षसानामभावाय न प्रतिपद्यसे नाङ्गीकरोषि वा । राक्षसेषु स्नेहं भावयन् तद्विनाशमेव हृदि कृत्वा साधु वचनं न शृणोषीत्यर्थः ॥ १०—१२ ॥ रावणादीर्घदर्शिन इत्यत्र रावणेति संबुद्धिः ॥ १३ ॥ निकृताः त्वया वञ्चिताः ॥ १४ ॥ शक्येति । अनेन रावणोक्तप्रलोभनानामुत्तरमुच्यते । ऐश्वर्येण अन्तःपुरस्त्रीणामीश्वरत्वेन । धनेन आभरणादिना वा । लोभयितुं वञ्चयितुं । अहं न शक्या । अत्र हेतुमाह—अनन्येति । अहं नित्यानपायिनी । राघवेण रघुकुलावतीर्णेन विष्णुना । अनन्या अविभक्ता । यत्र यत्र कुले विष्णुरवतरति तत्र तत्रावतीर्णा लक्ष्मीरित्यर्थः । तृतीयया तत्परतन्त्रा चास्मीति द्योत्यते । न केवलं तस्य परतन्त्राहं प्रत्युत तस्याप्यतिशयावहेति दृष्टान्तेन द्योतयति—भास्करेणेति । प्रभा हि भास्करस्याप्यतिशयमावहति तथैव हि मारीचो भवन्तं प्रति निवेदितवान् । "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति । किं तद्धितवचनमपि मोहेन विस्मृतोसीति तत्त्वमाह ॥ १५ ॥ लोकनाथस्य सर्वैर्ब्रह्मादिदेवगणैः स्वस्वपदप्राप्तये नाथ्यमानस्य याच्यमानस्य । "नाथृ याच्ञायाम्" इति धातुः । तस्य रामस्य । सत्कृतं भुजं दक्षिणं भुजमित्यर्थः । उपधाय उपधानीकृत्य । तेन तत्परिष्व[illegible]कत्वं गम्यते । एवं श्लाघिताहं अन्यस्य ततो भो[illegible] मानस्य कस्यचिदनामधेयस्य क्षुद्रस्य त्वादृ[illegible]ते शेषः । असत्कृतं कथं नामोपधास्यामि । नकथंचि[illegible]नेत्यर्थः । ॥ १६ ॥ अहं तु शीलवयोवृत्ता तस्यैव तु[illegible] विवृत्य योवृत्तस्य वसुधापतेः औपयिकी उचिता [illegible] यस्यासौ "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति भूमि[illegible]नि यस्य लक्ष्मीदेव्युचितेति हृदयम् । कथमिव । व्रत[illegible] यस्य वेदव्रतैः स्नातस्य । धीरस्य धीमतः ब्राह्मणस्य [illegible] चित्रतात्मनः आत्मज्ञानवतः । विद्येव योगाभ्यास[illegible] तत्प्राङ्-

---

णीयाः । आत्मानं स्वं । उपमां निदर्शनं । स्वदारधर्षणंदुर्मर्षणंममयथा तथाऽन्येषामित्यत्र ॥७॥ स०भुजमित्यनेन मत्प[illegible]मिचकेन मनयातवभुजानांछेदः " येभैष्म्याःपरिरंभणंचकमिरेतेषांभुजांश्चिच्छिदुः" इत्याद्युक्तेःभावीतिद्योतयति ॥१६॥ ति० [illegible]नसेप्रातयोग्या । व्रतस्नातस्य ब्रह्मचर्यव्रतपूर्वकंकृतसमावर्तनस्य । यथाशास्त्रंमत्पाणिग्रहणंकृतवतः । विदितात्मनः ज्ञातस्वतत्वस्वज्ञा[illegible]करिष्यति साधनस्यचतस्यैवाहंयोग्या । विप्रस्य विद्येव ब्रह्मविद्येव । ब्रह्मविद्यायथा ब्राह्मणस्यैवासाधारणंस्वंन्यायप्राप्तं तद्वत् । संन[illegible]यापरिवाधिकाराद्ब्रह्मविद्यायांब्राह्मणस्यैवाधिकारइतिभावः । अन्येतु विप्रपदंत्रैवर्णिकपरं । त्रैवर्णिकस्यैवब्रह्मविद्यायामधिकारः [illegible]ख. ङ. धीरस्येतिक्वचित्पाठइत्याहुः ॥ स० विदितात्मनः अवगतभगवत्तत्वस्य । व्रतस्नातस्य ब्रह्मचर्यादिव्रतसंकल्पपूर्वंस्नातस्य । [illegible]क्षते. क्तस्यविप्रस्य विद्येव उपनिषदादिविद्येव । विप्रस्येत्यनेनोत्तरवर्णद्वयापेक्षयापृथग्जातेरेवमुख्याधिकारः यथाऽहंतथामुख्यातस्य [illegible] १ ङ.

[ पा० ] १ क. घ. विविधानिच. २ ख. ङ. झ. ट. तथैव. ३ ङ. झ. ट. यथाप्रभा. ४ ख. लोककान्तस्य. ५ [illegible] ४ क. ट. तस्यैवचधरापतेः. ६ ख. च. छ. ञ. विप्रस्य. घ. वीरस्य. ङ. झ. ट. विद्येवविप्रस्य.

साधु रावण रामेण मां समानय दुःखिताम् ॥ वने वाशितया सार्धं करेण्वेव गजाधिपम् ॥ १८ ॥
मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता ॥ वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः ॥
विदितः स हि धर्मज्ञः शरणागतवत्सलः ॥ १९ ॥
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ॥ २० ॥
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥ २१ ॥
एवं हि ते भवेत्स्वस्ति संप्रदाय रघूत्तमे ॥ अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण ॥ २२ ॥
वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् ॥ त्वद्विधं तु न संक्रुद्धो लोकनाथः स राघवः ॥ २३ ॥
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् ॥ शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ॥ २४ ॥

---

द्येव ॥ १७ ॥ पथिचोरं पानीययाचकवद्रावणमर्थयते—साध्विति ॥ साधु रावण मद्वियोगेन त्वत्क्रौर्यमधिकंजातमितिभावः । एवमुत्कटक्रौर्यं प्रति याचनात् स्वस्यातिशयोव्यज्यते । रामेण सर्वाङ्गसुन्दरेण मां तस्यानन्यार्हां तद्वियोगे जीवितं धारयितुमशक्तां। नच सीतेत्यादि । समानय संगमय । तत्र हेतुः—दुःखितामिति । करेण्वा गजवध्वा । वाशितया यौवनं गतया । "वाशितायुवतिःप्रोक्ता कलभःकरिपोतकः" इतिवचनात् । यद्वा वासितयेतिपाठः । वने वासितया बद्धया । अत्र विभक्तिव्यत्यासःकार्यः । वने वासितां करेणुं गजाधिपेनेति । वस्तुतस्तु यथान्यास एवान्वेति । रामेणसंगमनंनाम रामाह्वानं । ...तुरपि रामस्थानं तेन नेतुमीष्टे किंत्वत्र रामम...णमेव । अतएव करेण्वा गजाधिपमित्युक्तं ॥ एवं रावणे जननीत्वप्रतिपत्तिं विहाय ...संगतानि जल्पति देवी खिन्ना सती कोय...भावः कथमस्य कोप्युपदेष्टा सेत्स्यतीति इह ...वासन्तीत्यादिना विचिन्त्य दयावती स्वयमे...ति मातृत्वप्रयुक्तवात्सल्येन—मित्रमिति ॥ ...णं गच्छेत्युक्ते तत्र रावणस्सहेत दुर्मानितया ...द्ध्यनुसारेणमित्रमित्याह । किंच शरणागतं ...नं मन्यते देवी देवश्च । अतएव रामो ...। "मित्रभावेन संप्राप्तं न त्यजेयं कथंचन" ...मं च तथाह । मित्रमिति । रामः मित्रं कर्तुं युक्तमित्यर्थः । मित्रशब्दापेक्षया औपयिकमिति नपुंसकनिर्देशः । स्थानंपरीप्सता मार्गचोरस्यापि भूमौ पदानि स्थापयित्वा चौर्यं कर्तव्यं । तवापि यदि स्थानमभीप्सितं तर्हि तमेव भजेत्यर्थः । शरणागतिदैन्यादपि मरणमेववरमितियदिमन्यसे तदानीं तद्भञ्जनंकर्तव्यमित्याह—वधं चानिच्छता घोरं तव सम्यङ्मरणं न दास्यति । त्वां संस्थाप्य त्वत्समक्षं त्वत्सन्तानजान् हिंसित्वा ततस्ते चित्रवधं करिष्यति तं यदि नेच्छसि तदा प्रत्तव्य इत्यर्थः । त्वया तत्प्रतीकारावलोकनेन त्वयाऽवश्यं तच्छरणागतिः कर्तव्या । एवं स रक्षक इत्यत्र किं प्रमाणं तत्राह—असौ निरन्तरप्रत्ययेनास्या रामः प्रत्यक्ष इवभासते । रावणस्यापि मायामृगानुसरणसमये तदाकारदर्शनजभयेन "वृक्षे वृक्षे च पश्यामि" इत्युक्तरीत्या पुरःस्थित इव भासते । पुरुषर्षभः मत्कृतापराधेन कथं मामङ्गीकरिष्यतीत्येवं त्वया नचिन्तनीयं । आनुकूल्यलेशे सति सर्वमपराधं विसरिष्यति पुरुषधौरेयत्वात् । मित्रकरणप्रकारमाह—प्रसादयस्वेति । त्वं चेत्यनेनाहमपि प्रसादयिष्यामीति सिद्धम् । प्रयतो भूत्वा मनःकालुष्यंत्यक्त्वेत्यर्थः । निर्यातयितुं प्रत्यर्पयितुं ॥ १९—२१ ॥ संप्रदाय स्थितायेति शेषः ॥ २२ ॥ उत्सृष्टं इन्द्रमुक्तं वज्रं अन्तकश्च त्वद्विधं वर्जयेत् । राघवस्त्वद्विधं न वर्जयेदिति संबन्धः ॥ २३ ॥ महास्वनं महानादं । नादो नाम स्वरावयवविशेषः

---

...यति ॥ १७ ॥ **ति०** करेण्वासाकंगजाधिपमिव । उपमानोपमेयवाक्ययोर्वैषम्यंतुक्रुद्धविरहिण्युक्तित्वान्नदोषावहं । **स०** ...वातुर्द्विकर्मकइतिरामंमांसमानयेतिवक्तव्यं । तथापि रामेणेतितृतीयया सहयोगःसार्वकालिकः त्वयासंमेलनंतु लोकदृष्ट्ये...यितुं । गजाधिपेनकरिणीमिवेतिदार्ष्टान्तिकानुगुण्यार्थंवक्तव्यं । तथापीत्थमुक्त्यातद्दांपत्यमक्लृप्तमितिद्योतयति ॥ १८ ॥

[ **पा०** ] १ च. छ. ज. ञ. विदितस्तवधर्मात्मा. ङ. झ. ट. विदितःसर्वधर्मज्ञः. क. विदितस्सहिधर्मात्मा. २ क. ख. ग. ...यितुं. ३ ङ. झ. ट. कुर्वाणःपरांप्राप्स्यतिचापदं. ४ क. ग. ङ.—ट. नतु.

इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ॥ इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः ॥ २५ ॥
रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः ॥ असंपातं करिष्यन्ति पतन्तः कङ्कवाससः ॥ २६ ॥
राक्षसेन्द्रमहासर्पान्स रामगरुडो महान् ॥ उद्धरिष्यति वेगेन वैनतेय इवोरगान् ॥ २७ ॥
अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिन्दमः ॥ असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥२८॥
जनस्थाने हतस्थाने निहते रक्षसां बले ॥ अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ॥ २९ ॥
आश्रमं तु तयोः शून्यं प्रविश्य नरसिंहयोः ॥ गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम ॥ ३० ॥
न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ॥ शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव ॥ ३१ ॥
तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् ॥ वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः ॥ ३२ ॥
क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह ॥ तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥३३॥

गिरिं कुबेरस्य गतोपधाय वा सभां गतो वा वरुणस्य राज्ञः ॥
असंशयं दाशरथेर्न मोक्ष्यसे महाद्रुमः कालहतोऽशनेरिव ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

॥ २४ ॥ रामलक्ष्मणलक्षणाः रामलक्ष्मणनामाङ्काः ॥ २५ ॥ असंपातं अनवकाशं ॥ २६ ॥ राक्षसेन्द्रमहासर्पानिति रूपकोक्तमेवोपमयाप्याह—वैनतेय इति ॥ २७ ॥ न चापि मम हस्तात्त्वां प्राप्तुमर्हतीत्युक्तस्योत्तरमाह—अपनेष्यतीति ॥ २८ ॥ एतत् युद्धं विना चौर्येणापहरणं ॥ २९ ॥ गोचरं गतयोः बाह्यदेशं गतयोः ॥ ३०—३१ ॥ तस्य ते असमर्थतया चोरवृत्तेस्तव । ताभ्यां रामलक्ष्मणाभ्यां । विग्रहे सति युद्धे सति । युगग्रहणं संयुगे जयग्रहणं । अस्थिरं असंभावितं । यद्वा युगग्रहणं युद्धारम्भः अस्थिरं अध्रुवं किंतु ताभ्यां प्रसह्य वधस्ते सिद्ध इति दृष्टान्तेनाह—वृत्रस्येवेति । वृत्रस्य एकस्य बाहोर्द्वाभ्यामिन्द्रस्य बाहुभ्यां सह विग्रहे सति निग्रह इव जय इव । वृत्रस्यैकेन बाहुना इन्द्रस्य द्वयोर्बाह्वोरिव एकेन त्वया तयोर्द्वयोर्जयो न शक्य इत्यर्थः … शेषः स: नाथ इति पदच्छेदः ॥ ३३ ॥ अपधाय … नेत्यर्थः । … म्य । कुबेरस्य गिरिं कैलासं । "कैलासःस्थान … विवृत्य इत्यमरः ॥ ३४ ॥ इति श्रीगोविन्दराज… यस्यासौ श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सु…नि यस्य ण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

---

ति० उद्धरणशैघ्र्येउपमा—वैनतेयइति। स० राक्षसेन्द्रमहासर्पान् रामलक्षणोगरुडउद्धरिष्यति। तत्रदृष्टान्तः। वैनतेय… यामुत्पन्नःगरुडातिरिक्तःकश्चित्पक्षी उरगान् दुर्बलसर्पानिव ॥ २७ ॥ ती० कुबेरस्यगिरिं गन्धमादनं । अपधाय अ… पुरीमितिपाठे कुबेरस्यपुरीमित्येतदुपरितनलोकानामुपलक्षणं । वरुणस्यसभामित्यनेनाधस्तनलोकानामुपलक्षणं । तत्वदृष्ट्या… वचनंतंरावणमुद्दिश्यसीतयोक्तानांपरुषवाक्यानामयमाशयः । रावणेनदेवींप्रतितत्वदृष्ट्यासौम्यरूपाण्येववाक्यान्युक्तानि… तथापि बाह्यदृष्ट्यापरुषवाक्यवत्प्रतीयमानत्वेनदेव्यपितत्वदृष्टिंसंगोप्य बाह्यदृष्टिमनुसृत्य परुषवाक्यैरेवतस्योत्तरमाहेति ॥ … तस्त्वंअशनेस्संबन्धान्महाद्रुमइवदाशरथेस्संबन्धात्विमोक्षसेप्राणानितिशेषः । विमोक्ष्यसइतिपाङ्कःपाठइतिकतकः ॥ … इत्येकविंशः सर्गः ॥ २१ ॥

[ पा० ] १ क. ङ.—ट. लक्षिताः. २ ङ. ज. झ. ट. निहनिष्यन्तः. ३ ङ. झ. ट. नसंशयः. ४ घ. … ४ क. ५ ग. स्तयोः. ६ क.—ट. गतोथवालयं. ७ ङ. झ. ट. दाशरथेर्विमोक्षसे.

## द्वाविंशः सर्गः ॥ २२ ॥

सीतयागर्हितेनरावणेन तांप्रति सकोपाटोपंस्वसंकेतितकालस्यमासद्वयात्मकशेषावसाने मारणोक्तिः ॥ १ ॥ ततोरावणस्त्रीभिर्वक्रनेत्रादिसंज्ञयासमाश्वासितयासीतया पुनर्बहुधारावणगर्हणम् ॥ २ ॥ ततोघोरतरविकृतनानाकृतीनामेकाक्ष्यादिराक्षसीनां तर्जनसान्त्वनादिनासीतावशीकरणनियोजनपूर्वकं पुनस्सरोषंसीतातर्जनोद्यतस्यरावणस्य धान्यमालिनीनामकतत्पत्न्या सपरिष्वङ्गंसान्त्वनपूर्वकमन्यतोपसरणम् ॥ ३ ॥ ततोरावणेन स्त्रीजनैस्सहनिजगृहप्रवेशनम् ॥ ४ ॥

सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः[1] ॥ प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥ १ ॥
यथायथा सान्त्वयिता वश्यः स्त्रीणां तथातथा ॥ यथायथा प्रियं वक्ता परिभूतस्तथातथा ॥ २ ॥
संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः ॥ द्रवतोऽमार्गमासाद्य हयानिव सुसारथिः ॥ ३ ॥
वामः कामो मनुष्याणां यस्मिन्किल निबध्यते ॥ जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥४॥
एतस्मात्कारणान्न त्वां घातयामि वरानने ॥ वधार्हामवमानार्हां मिथ्याप्रव्रजिते[2] रताम् ॥ ५ ॥
परुषाणीह वाक्यानि यानियानि ब्रवीषि माम् ॥ तेषुतेषु वधो युक्तस्तव मैथिलि दारुणः ॥ ६ ॥
एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः ॥ क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७ ॥
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः ॥ ततः शयनमारोह मम त्वं वरवर्णिनि ॥ ८ ॥
ऊर्ध्वं द्वाभ्यां तु[3] मासाभ्यां भर्तारं मामनिच्छतीम् ॥ मम त्वां प्रातराशार्थमारभन्ते[4] महानसे ॥९॥
तां तर्ज्यमानां[5] संप्रेक्ष्य राक्षसेन्द्रेण जानकीम् ॥ देवगन्धर्वकन्यास्ता विषेदुर्विकृतेक्षणाः ॥ १० ॥

सीताया इत्यादि ॥ १ ॥ सान्त्वयिता अनुनेता ॥ २ ॥ संनियच्छति निरुणद्धि । द्रवतः धावतः । अमार्गमितिच्छेदः ॥ ३ ॥ वामः प्रतिकूलः । मनुष्याणां प्राणिनां । अनुक्रोशः कृपा । परिभवादिप्रदाताभ्यां ष्याणां प्रतिकूलः कामः यस्मिञ्जने निबध्यते अलंकृतत्वे क्रोशः स्नेहश्च जायते किल ॥ ४ ॥ चैत्यं इम जिते कपटेन वन्यवृत्तिभाजि । रामे रतां अत्यन्तभ —६ ॥ क्रोधसंरम्भसंयुक्तः क्रोधप्रणयाभ्यां ३१ ॥ ७ ॥ ते मया योऽवधिः कृतः "मासान्द्वादशभामिनि" इत्यारण्यकाण्डोक्तोद्वादशमासात्मकोऽवधिः कल्पितः । अत्र द्वौ मासाववशिष्टौ । तौ द्वौ मासौ । मे मया । रक्षितव्यौ प्रतीक्षणीयौ । ततः तस्मात्कारणात् । मम शयनमारोहेत्यन्वयः ॥८॥ प्रातराशार्थं मासद्वयान्तर्गतरात्रिसमाप्त्यनन्तरं हिंसायां कालविलम्बंविना प्रातःकालिकाशनार्थमित्यर्थः । आरभन्ते आलभन्ते । रलयोरभेदः । "आलम्भस्स्पर्शहिंसयोः" इत्यमरः । महानसे पाकशालायां

एकाक्ष्यौ इन्द्रियं हारोशक्य वामदक्षेषु निर्भाग्यं दाभिप्राये अपरत्रच ति० प्रति सीताता [ ज. अ. ८ ङ. विदध

सीतायाइत्यस्यवास्तवार्थस्तु राक्षसाधिपः सीतायाःपरुषं अतएवविप्रियंवचनंश्रुत्वा प्रत्युवाचेतिसंबन्धः ॥१॥ ती० वस्तुवतायांसमुत्थितः कामः इच्छा समुत्पन्नाभक्तिरित्यर्थः । मेक्रोधं राक्षसजातेर्ममसर्वदाविद्यमानंनैजंक्रोधं । क्रोधशक्रोधाद्यरिषड्वर्गउच्यते । तंनियच्छतीतिसंबन्धः ॥ ३ ॥ ती० एतस्मादित्यादिश्लोकद्वयस्यवास्तवार्थस्तु ननुमद्वधोयुक्तः त्वंसंभाष्यइत्यत्राह—एतस्मादिति । एतस्मात्कारणात् त्वद्भर्तृकारणात् । प्रव्रजिते मत्स्वामिनिरामेइतिशेषः । रतांत्वां त्वां । नघातयाम्येव । वधार्हामवमानार्हामपिस्त्रियंघातयामीतिमिथ्येतिसंबन्धः ॥ ५–६ ॥ स० उत्तरं उत्तरत्रक्रिय सीतामुत्तरं सीतायाः मुत् संतोषातिशयोयस्माद्वचनात् मासद्वयावधिप्रदात्तत् । "व्यवधानेनयद्दुःखंतद्दुःखंनैवचि- " इत्युक्तेरितिभावः ॥ ७ ॥ स० द्वौमासौरक्षितव्यौ । "वर्ततेदशमोमासोद्वौतुशेषौप्लवङ्गम" इतिसीतावचनाद्दशममावर्तमानत्वेपिमासत्वेनावशिष्टौतुद्वावेव । उर्वरितदिनानांतुमासत्वाभावादनुक्तिः । सीतासंगौत्सुक्येनाल्पदिनानामगणने ॥ ती० एवमुक्त्वेत्यादिश्लोकत्रयस्यवास्तवार्थस्तु क्रोधसंरंभसंयुक्तइत्यनेन राक्षसस्वभावोवर्णितः । पतिवियोगदुःखिाररहितांप्रत्याह—**द्वौमासावित्यादिश्लोकद्वयेन** । हे मे लक्ष्मीस्सीते मयायोऽवधिःकृतः "मासान्द्वादशभामिनि ।" इतियःसमयःप्रार्थितः तन्मध्यतःपरंरक्षितव्यौ प्रतीक्षणीयौ द्वौमासावेव द्वाभ्यांमासाभ्यामूर्ध्वंन । ततः तदनन्तरं

[ पा० ] १ ङ.—ट. राक्षसेश्वरः. २ ङ. झ. ट. प्रव्रजने. क. प्रव्राजने. ३ क.—ट. द्वाभ्यामूर्ध्वंतु. ४ झ. ट. प्रातराशाच्छेत्स्यन्तिखण्डशः. ५ ङ. झ. ट. भर्त्स्यमानां.

ओष्ठप्रकारैरपरा वक्रनेत्रैस्तथाऽपराः ॥ सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११ ॥
ताभिराश्वासिता सीता रावणं राक्षसाधिपम् ॥ उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम् ॥१२॥
नूनं न ते जनः कश्चिदस्ति निःश्रेयसे स्थितः ॥ निवारयति यो न त्वां कर्मणोस्माद्विगर्हितात् ॥१३॥
मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः ॥ त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसाऽपि कः ॥१४॥
राक्षसाधम रामस्य भार्याममिततेजसः ॥ उक्तवानसि यच्छापं क्व गतस्तस्य मोक्ष्यसे ॥ १५ ॥
यथा दृप्तश्च मातङ्गः शशश्च सहितो वने ॥ तथा द्विरदवद्रामस्त्वं नीच शशवत्स्मृतः ॥ १६ ॥
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे ॥ चक्षुषोर्विषयं तस्य न तावदुपगच्छसि ॥ १७ ॥
इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले ॥ क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥ १८ ॥
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ॥ कथं व्याहरतो मां ते न जिह्वा व्यवशीर्यते ॥ १९ ॥
असंदेशात्तु रामस्य तपसश्चानुपालनात् ॥ न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा ॥ २० ॥
नापहर्तुमहं शक्या तस्य रामस्य धीमतः ॥ विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१ ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च ॥ अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम् ॥ २२ ॥
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ॥ विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३ ॥
नीलजीमूतसंकाशो महाभुजशिरोधरः ॥ सिंहसत्त्वगतिः श्रीमान्दीप्तजिह्वाग्रलोचनः ॥ २४ ॥

॥ ९—१० ॥ ओष्ठप्रकारैः रुरुदिषतामोष्ठेषु भङ्गस्फुरणादयो ये विकारास्ते ओष्ठप्रकाराः ओष्ठभङ्गादिरूपसंज्ञादिभिरित्यर्थः । एवं वक्रनेत्रैः वक्रनेत्रसंज्ञादिभिरित्यर्थः ॥ ११ ॥ वृत्तशौण्डीर्यगर्वितं वृत्तं पातिव्रत्यं तस्य शौण्डीर्यं बलं तेन गर्वितमिति क्रियाविशेषणं ॥ १२ ॥ ते निःश्रेयसे स्थितः कश्चिज्जनः नास्ति । यः अस्माद्विगर्हितात्कर्मणस्त्वां निवारयति स चापि नास्ति । नूनमिति योजना । तवेष्टप्रापकः अनिष्टनिवारकश्च नास्तीत्यर्थः ॥ १३—१४ ॥ तस्य मोक्ष्यसे तस्मान्मोक्ष्यसे ॥ १५ ॥ यथा मातङ्गः शशश्च । सहितः युयुत्सादिना संगतः । तथान्योन्यसंगतो रामस्त्वं च । अत्र रावणः स्वस्य मातङ्गसाम्यमुक्तमिति भ्राम्येदिति परिहरति—तथेति । तत्र गज इव रामः । शश इव त्वं ॥ १६ ॥ इक्ष्वाकुनाथं क्षिपन् मायामृगव्याजेन दूरं निस्सारयन् । इह स्वजनेषु न तावदुपगच्छसि । यद्युपगच्छसि तदा तत्प्रभावं वेत्स्यसीत्यर्थः ॥ १७—१९ ॥ रामस्य भर्तुः । असंदेशात् अपकारिषु शपेथा इति संदेशाभावात् । तपसः पातिव्रत्यरूपस्य । कुर्मि करोमि । उत्त्वविकरणप्रत्ययलोपावार्षौ । भस्मार्ह भस्मीकरणार्ह । तेजसा पातिव्रत्यप्रभावेन ॥ २० ॥ तस्य रामस्य तस्मात् रामात् । विधिः चौर्येणापहरणं । विहितः दैवेने[illegible]ते शेषः ॥ २१ ॥ बलैस्समुदितेन बलेन सर्वश्रेष्ठेनेत्यर्थः । अपोह्य रामं मृगच्छद्मनापवाह्य ॥ २२ ॥ [illegible] विवृत्य विवर्त्य ॥ २३ ॥ सिंहस्येव बलगमने यस्यासौ सिंहसत्त्वगतिः । जिह्वाग्रं लोचने च दीप्ता[illegible]नि यस्य सोयं दीप्तजिह्वाग्रलोचनः । कोपेन चलं [illegible] यस्य तत् चलाग्रंचतत् मुकुटंच तेन प्रांशुः दीर्घः [illegible] चित्रमाल्यवत्त्वेपि रक्तमाल्यवत्त्वं तत्प्राचुर्यादुक्तं [illegible] तप्ताङ्गदविभूषणः तप्तशब्देन तेजिष्ठत्वमुक्तं । [illegible] मेचकेन

ते तव भर्तारं अनिच्छतींमामनङ्गीकुर्वाणां मममांमदीयराज्यलक्ष्मींचप्राप्स्यसीतिशेषः । त्वांप्रार्थयइतिशेषः । ममभ[illegible]नसेप्रातराशार्थं आलभन्तेपशून् तान्भक्षयेतिशेषः । शयनमारोह शयनंकुर्वित्यर्थः ॥ १० ॥ ति० ओष्ठप्रकारैः वराकोऽयंकिं[illegible]करिष्यति नभेतव्यमित्येवौष्ठाग्रोत्क्षेपणैः ॥ ११ ॥ ति० यत्पापं ममशयनमारोहेत्यादिरूपं । क्वगतोमोक्ष्यसे तत्साध्यसमूलनाशस्यान[illegible]त्वयापरि-

[ पा० ] १ क. घ.—ट. नेत्रैर्वक्रैस्तथा. २ ङ. झ. ट. कश्चिदस्मिन्निश्रेयसिस्थितः. ३ क.—ट. यत्पापं. ४ क[illegible]ख. ङ. झ. ञ. सहितौ. ५ ङ. झ. ट. चक्षुषोविषये. ६ ङ. झ. ट. यावत्. ७ ङ. च. झ. ट. विकृते. ८ च. यन्मामनार्या[illegible]ीक्षते. ९ ङ. झ. नजिह्वापापशीर्यति. क. ग. च. छ. ज. जिह्वापापनशीर्यते. ञ. ट. जिह्वापापनशीर्यति. १० ख. त्वया. [illegible] ११ ङ. च. ज.—ट. कस्माच्चिद्दारचौर्यं. १२ क. परुषं. १३ ग. च. छ. ज. ञ. सिंहसंहननः. ख. सिंहसत्वगतोवीरोदीप्त. १[illegible]४ क. ग. घ. ङ. झ. ञ. ट. जिह्वोग्रलोचनः.

चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः ॥ रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५ ॥
श्रोणीसूत्रेण महता मेचकेन सुसंवृतः ॥ अमृतोत्पादनद्धेन भुजगेनेव मन्दरः ॥ २६ ॥
ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ॥ शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥ २७ ॥
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः ॥ रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८ ॥
स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान् ॥ श्मशानचैत्यप्रतिमो भूषितोपि भयङ्करः ॥ २९ ॥
अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः ॥ उवाच रावणः सीतां भुजङ्ग इव निश्श्वसन् ॥ ३० ॥
अनयेनाभिसंपन्नमर्थहीनमनुव्रते ॥ नाशयाम्यहमद्य त्वां सूर्यः संध्यामिवौजसा ॥ ३१ ॥
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः ॥ संदिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ३२ ॥
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ॥ गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम् ॥ ३३ ॥
हस्तिपाद्यश्वपाद्यौ च गोपादीं पादचूलिकाम् ॥ एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥ ३४ ॥
अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् ॥ अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम् ॥ ३५ ॥
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् ॥ यथा मद्वशगा सीता क्षिप्रं भवति जानकी ॥
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ॥ ३६ ॥
प्रतिलोमानुलोमैश्च सामदानादिभेदनैः ॥ आवर्जयत वैदेहीं दण्डस्योद्यमनेन च ॥ ३७ ॥
इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ॥ काममन्युपरीतात्मा जानकीं पर्यतर्जयत् ॥ ३८ ॥
उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी ॥ परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् ॥ ३९ ॥
मया क्रीड महाराज सीतया किं तवानया ॥ विवर्णया कृपणया मानुष्या राक्षसेश्वर ॥ ४० ॥
नूनमस्या महाराज न दिव्यान्भोगसत्तमान् ॥ विदधात्यमरश्रेष्ठस्तव बाहुबलार्जितान् ॥ ४१ ॥

---

नीलेन । अमृतोत्पादनद्धेन अमृतोत्पादनार्थं नद्धेन । ताभ्यां प्रसिद्धाभ्याम् ॥ २४—२७ ॥ तरुणेत्यादि ॥ अलंकृतत्वे कल्पकसाम्यं । भयंकरत्वेपुनश्चैत्यसाम्यं । चैत्यं श्मशानवृक्षः । श्मशानमण्डपो वा । सीताया अत्यन्तभयंकरत्वज्ञापनाय रावणवर्णनं कृतं ॥ २८—३१ ॥ इत्युक्त्वेत्यादि ॥ प्रधानाप्रधानभूते द्वे एकाक्ष्यौ । अतो न पुनरुक्तिः । अथवा अक्षं इन्द्रियं । एकाक्षीं एकैकेन्द्रियां । श्रोत्रनासादावेकमात्रवतीत्यर्थः ॥ ३२—३६ ॥ प्रतिलोमानुलोमैः प्रतिकूलानुकूलाचरणैः । सामदानादिभेदनैः सामदानमुख्यैर्भेदैः । प्रथमप्रयुक्तसामदानैरित्यर्थः । आवर्जयत वशीकुरुत ॥ ३७—३८ ॥ धान्यमालिनी रावणस्य कनिष्ठपत्नी । इदं मन्दोदर्या अप्युपलक्षणं । उत्तरत्र वानरान्प्रति हनुमद्वचने तथा वक्ष्यमाणत्वात् ॥ ३९—४० ॥ अस्याः सीतायाः । अमरश्रेष्ठो ब्रह्मा । दिव्यान् भोगान्न विदधाति । अस्या दिव्यभोगे

---

हारोशक्य इत्यर्थः ॥ १५ ॥ ति० ताभ्यां प्रसिद्धपराक्रमाभ्यां । भुजद्वयमेवसर्वदा । युद्धादौस्वेच्छयादशभुजत्वमितिद्विवचनं ॥ वासदक्षेषु भुजत्वजात्यैकवचनमित्यन्ये ॥ २७ ॥ स० अनयेन स्त्रीवधतन्नासिकाछेदाद्यन्यायेन । अभिसंपन्नं युक्तं । अर्थहीनं निर्भाग्यं । एतादृशंराममनुव्रतेसीतेत्वां नाशयामि । सन्ध्यां सन्ध्याकालिकंतमः ॥ ३१ ॥ स० पुनरेकाक्षीमित्युपादानं व्यक्तिभेदाभिप्राये । अथवा पूर्वमेकाक्षीमितिमैथिलीविशेषणं । एकस्मिन्नामेअक्षिणीयस्याःसा तामित्यर्थः । एकमक्षियस्यास्सेत्येकत्र । अपरत्रच एकस्मिन्भागेअक्षिणीयस्यास्सापि निर्नासिकाव्यवधानमक्षिद्वयमेकस्मिन्प्रदेशेवर्ततइतिनैकाक्षीमितिपुनरुक्तं ॥ ३४ ॥ ति० प्रति गर्जत प्रत्यगर्जत् ॥ ३८ ॥ उपगम्य समीपमागम्य । ततः अतिसंतर्जनंदृष्ट्वासीतायांदययेतिशेषः ॥ स० परिष्वज्य सीतात्राणनिवारणार्थमालिङ्ग्य ॥ ३९ ॥ शि० अमरश्रेष्ठाइति । अस्याराज्यभोगोब्रह्मणानलिखितइत्यर्थः । आदराद्बहुवचनं ॥

[ पा० ] १ च. ज. विराजितः. २ क. ङ.—ट. अमृतोत्पादनेनद्धो. ३ क.—च. ज.—ट. भुजङ्गेनेव. ४ क. च. छ. ज. ञ. द्वाभ्यां. घ. सताभ्यांपरिपीनाभ्यां. ५ ख. फुल्लपल्लव. ६ ङ. झ. संददर्श. ७ क. घ. ङ. च. ज.—ट. जिह्वानखामपि. ८ ङ. झ. ट. समेत्यवा. ९ क. ग.—ज. आवर्तयत. १० ङ. झ. ञ. ट. प्रतिगर्जत. ११ क.—ट. देवाभोगसत्तमान् । विदधात्यमरश्रेष्ठाः.

अकामां कामयानस्य शरीरमुपतप्यते ॥ इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ॥ ४२ ॥
एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ॥ प्रहसन्मेघसंकाशो राक्षसः स न्यवर्तत ॥ ४३ ॥
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ॥ ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् ॥ ४४ ॥
देवगन्धर्वकन्याश्च नागकन्याश्च सर्वतः ॥ परिवार्य दशग्रीवं विविशुस्तद्गृहोत्तमम् ॥ ४५ ॥
स मैथिलीं धर्मपरामवस्थितां प्रवेपमानां परिभर्त्स्य रावणः ॥
विहाय सीतां मदनेन मोहितः स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

## त्रयोविंशः सर्गः ॥ २३ ॥

रावणचोदनया एकजटादिभीराक्षसीभिः पृथक्पृथक् सीतांप्रति रावणप्रशंसनपूर्वकंतद्भार्याभावस्वीकरणचोदना ॥ १ ॥

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः ॥ संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १ ॥
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ॥ राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २ ॥
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्च्छिताः ॥ परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३ ॥
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ॥ दशग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥ ४ ॥
ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् ॥ आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५ ॥
प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः ॥ मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६ ॥
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः ॥ नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७ ॥
तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः ॥ तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥
मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे ॥ ८ ॥
ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ विवर्त्य नयने कोपान्मार्जारसदृशेक्षणा ॥ ९ ॥
येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जिताः ॥ तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ १० ॥
ततस्तु प्रघसा नाम राक्षसी क्रोधमूर्च्छिता ॥ भर्त्सयन्ती तदा घोरमिदं वचनमब्रवीत् ॥ ११ ॥

---

भार्यं नास्तीत्यर्थः ॥ ४१—४५ ॥ सर्गार्थं संग्रहेण दर्शयति—स इति ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

प्रजापतीनामिति । “ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ” इति षट् प्रजापतयः । तेषां चतुर्थः

---

ति० अमरश्रेष्ठाइन्द्रादयः । दैवहतेयमदृष्टहीनेत्यर्थः ॥ ४१ ॥ ति० समुत्क्षिप्तः अन्यतोपसारितः । प्रहसन् धान्यमा[illegible]लिन्योचितव्यवहारदर्शनेनावशप्राप्तस्त्रीप्रहारापकीर्तिपरिहारेणचप्रसन्नइत्यर्थः ॥ स० समुत्क्षिप्तः बलात्परिवर्तितः । अत[illegible]एवप्रहसन् ॥ ४३ ॥ ति० प्रविशुः प्रविविशुः ॥ ४५ ॥ इतिद्वाविंशःसर्गः ॥ २२ ॥

ति० शत्रूनूरावयति हाहाशब्दंकारयति सशत्रुरावणः ॥ १ ॥ ति० नबहुमन्यसे मोहादितिशेषः ॥ ४ ॥ ति० त[illegible]यपुत्रइत्यनेन कुलीनत्वंसूचितं ॥ ८ ॥ स० अष्टौवसवः । एकादशरुद्राः । द्वादशादित्याः । द्वावश्विनौ । आहत्यत्रयस्त्रिंशद्देवाः [illegible] द्वादशा-

[ पा० ] १ क. ङ. झ. ट. भास्करसंकाशं. २ ङ.—ज. ञ. कन्याश्चताःस्त्रियः. ग. ङ. झ. ट. कन्याश्चता[illegible]तः. क. कन्याश्चशोभनाः. ख. कन्याश्चसर्वशः. ३ क. ग. च. छ. ज. ञ. ट. विविशुस्तागृहोत्तमं. ङ. झ. प्रविशुस्तागृहोत्तमं. [illegible] ४ च. प्रतिपद्यवीर्यवान्. क. ज. ञ. प्रविवेशवीर्यवान्. ङ. झ. ट. प्रविवेशरावणः. ५ क. परुषंपरुषावाचो. ६ च. छ. ज. ञ[illegible] पाठेषु ततोहरिजटेत्यर्धस्यस्थाने. ततोहरिजटानाम राक्षसीक्रोधमूर्छिता । भर्त्समानातदाघोरमिदंवचनमब्रवीत् इत्यर्धद्वयंदृश्यते.

वीर्योत्सिक्तस्य शूरस्य संग्रामेष्वनिवर्तिनः ॥ बलिनो वीर्ययुक्तस्य भार्यात्वं किं न लप्स्यसे ॥ १२ ॥
प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः ॥ सर्वासां च महाभागां त्वामुपैष्यति रावणः ॥१३॥
समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् ॥ अन्तःपुरं समुत्सृज्य त्वामुपैष्यति रावणः ॥ १४ ॥
अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत् ॥ १५ ॥
असकृद्देवता युद्धे नागगन्धर्वदानवाः ॥ निर्जिताः समरे येन स ते पार्श्वमुपागतः ॥ १६ ॥
तस्य सर्वसमृद्धस्य रावणस्य महात्मनः ॥ किमद्य राक्षसेन्द्रस्य भार्यात्वं नेच्छसेऽधमे ॥ १७ ॥
ततस्तु दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् ॥ १८ ॥
यस्य सूर्यो न तपति भीतो यस्य च मारुतः ॥ न वाति स्मायतापाङ्गे किं त्वं तस्य न तिष्ठसि ॥ १९ ॥
पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् ॥ शैलाश्च सुभ्रूः पानीयं जलदाश्च यदेच्छति ॥ २० ॥
तस्य नैर्ऋतराजस्य राजराजस्य भामिनि ॥ किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि ॥ २१ ॥
साधु ते तत्त्वतो देवि कथितं साधु भामिनि ॥ गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ॥२२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

## चतुर्विंशः सर्गः ॥ २४ ॥

रावणचोदनया राक्षसीभिस्तर्जितयासीतया ताःप्रति भर्तुरन्यस्यापरिग्रहविषये शच्यरुन्धतीप्रभृतिपतिव्रतानांदृष्टान्तीकरणपूर्वकं स्वस्यमारणेपिरामान्यपुरुषापरिग्रहविषये दृढप्रतिज्ञानम् ॥ १ ॥ ततःशिंशुपास्थेहनुमति गूढंतूष्णींशृण्वति नानाराक्षसीभिर्नानापरुषभाषणैर्नानाविधायुधोद्यमनेनच भीषणपूर्वकंसंतर्जने सीतयादुःखाद्रोदनम् ॥ २ ॥

ततः सीतामुपागम्य राक्षस्यो विकृताननाः ॥ परुषं परुषा नार्य ऊचुस्तां वाक्यमप्रियम् ॥ १ ॥
किं त्वमन्तःपुरे सीते सर्वभूतमनोहरे ॥ महार्हशयनोपेते न वासमनुमन्यसे ॥ २ ॥
मानुषी मानुषस्यैव भार्यात्वं बहु मन्यसे ॥ प्रत्याहर मनो रामान्न त्वं जातु भविष्यसि ॥ ३ ॥

---

पुलस्त्यः ॥ ६—१२ ॥ सर्वासां मध्ये प्रियां बहुमतां । महाभागां च भार्यां मन्दोदरीं त्यक्त्वा त्वामुपैष्यति ॥ १३—१७ ॥ यस्य यस्मात् । तस्य न तिष्ठसि तस्मै न तिष्ठसे । प्रकाशनार्थेप्यार्षत्वात्परस्मैपदं षष्ठी च ॥ १९ ॥ शैलाश्च जलदाश्च पानीयं रावणः यदेच्छति तदा मुञ्चन्तीति विपरिणम्यते॥२०—१२॥ साधु ते कथितं साधु गृहाणेति साधुशब्दद्वयस्य निर्वाहः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

न त्वं जातु भविष्यसितस्येति शेषः ॥ ३—

---

दित्यमध्यप्रविष्टस्यविष्णोःस्वरूपस्यराक्षसीभिरज्ञानादेवमुक्तं ॥ १० ॥ **स०** वीर्योत्सिक्तस्य वीर्योन्मत्तस्यसकाशादपिवीर्ययुक्तस्य । नलिप्ससे नेच्छसि ॥ १२ ॥ **स०** यस्यसकाशाद्भीतः तस्य वशेइतिशेषः ॥ १८ ॥ **स०** सुस्रुवुः मुमुचुः । आर्षोविसर्गलोपः ॥ १९ ॥ **ति०** भार्यार्थे भार्यात्वनिमित्तं ॥ २० ॥ **स०** अधुते रावणेनानिराकृते सत्कृतेइतियावत् । सात्वंगृहाणेतिवा ॥२१॥ तेत्रयोविंशःसर्गः ॥ २३ ॥

**स०** परुषमपिसरुषापित्रापुत्रंप्रत्युदीरितं शठ तर्हिनपठेत्येवमादिवाक्यमन्ततोगत्वाप्रायःप्रियपर्यवसायिदृष्टमित्यतोप्रियमित्युक्तं ॥ १ ॥ **ति०** प्रत्याहर निवर्तय । एवं त्वदभीष्टंरामसंगमरूपंवस्तु । जातु कदाचिदपि । अतःपरंनभविष्यति । अत्ररामागमन-

[ पा० ] १ झ. ठ. लिप्ससे. २ ग. रत्नेनशोभितं. ३ घ. झ. ट. तदुत्सृज्य. ४ झ. ट. असकृद्धीमवीर्येण. ५ झ. ट. किम ६ ङ. झ. ट. यस्यस. ७ क. झ. ञ. ट. तिष्ठसे. ८ च. वृष्टीश्च. ९ झ. ञ. ट. शैलाःसुस्रुवुः पानीयं. ठ. शैलाः सुस्रुवुःपानीयं. १० क. च. छ. निश्चितं. ११ क. ग.—ट. सीतांसमस्तास्ताः. १२ ङ. झ. ञ. ट. परुषानर्हां. १३ ख. ङ. झ. ञ. ट. ऊचुस्तद्वाक्यं. ग. घ. च. छ. ज. ऊचुस्तावाक्यं. १४ झ. मनोरमे. १५ घ. वासंबहुमन्यसे. १६ झ. ट. रामान्नैवंजातु.

त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् ॥ भर्तारमुपसंगम्य विहरस्व यथासुखम् ॥ ४ ॥
मानुषी मानुषं तं तु राममिच्छसि शोभने ॥ राज्याद्भ्रष्टमसिद्धार्थं विक्लवं त्वमनिन्दिते ॥ ५ ॥
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा ॥ नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६ ॥
यदिदं लोकविद्विष्टमुदाहरथ संगताः ॥ नैतन्मनसि वाक्यं मे किल्बिषं प्रतिभाति वः ॥ ७ ॥
न मानुषी राक्षसस्य भार्या भवितुमर्हति ॥ कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८ ॥
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ॥ तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥ ९ ॥
यथा शची महाभागा शक्रं समुपतिष्ठति[3] ॥ अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥ १० ॥
लोपामुद्रा यथाऽगस्त्यं सुकन्या च्यवनं यथा ॥ सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥११॥
सौदासं मदयन्तीव केशिनी सगरं यथा ॥ नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥
तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ॥ १२ ॥
सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्च्छिताः ॥ भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः ॥१३॥
अवलीनः स निर्वाक्यो हनुमाञ्शिंशुपाद्रुमे ॥ सीतां संतर्जयन्तीस्ता राक्षसीरशृणोत्कपिः ॥ १४ ॥
तामभिक्रम्य संक्रुद्धा वेपमानां समन्ततः ॥ भृशं संलिलिहुर्दीप्तान्प्रलम्बान्दशनच्छदान् ॥ १५ ॥
ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान् ॥ नेयमर्हति भर्तारं रावणं राक्षसाधिपम् ॥ १६ ॥
संभर्त्स्यमाना भीमाभी राक्षसीभिर्वरानना ॥ सा बाष्पमुपमार्जन्ती शिंशुपां तामुपागमत् ॥ १७ ॥
ततस्तां शिंशुपां सीता राक्षसीभिः समावृता ॥ अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ॥१८॥
तां कृशां दीनवदनां मलिनाम्बरधारिणीम्[11] ॥ भर्त्सयांचक्रिरे सीतां[12] राक्षस्यस्तां[13] समन्ततः ॥ १९ ॥
ततस्तां[14] विनता नाम राक्षसी भीमदर्शना ॥ अब्रवीत्कुपिताकारा कराला[15] निर्णतोदरी ॥ २० ॥
सीते पर्याप्तमेतावद्भर्तुः[16] स्नेहो निदर्शितः ॥ सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ॥ २१ ॥
परितुष्टास्मि भद्रं ते मानुषस्ते कृतो विधिः ॥ ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि [illegible] ॥२२॥

४ ॥ मानुषीति हेतुगर्भं । मानुषी त्वं मानुषं तमिच्छसि ॥ ५—६ ॥ किल्बिषं पापावहं ॥ ७—८ ॥ सुवर्चलेत्यादि बहुदृष्टान्तप्रदर्शनं स्वस्य पातिव्रत्यदार्ढ्यद्योतनाय ॥ ९—१३ ॥ अवलीनः छन्नः । राक्षसीरशृणोत् राक्षसीवाक्यान्यशृणोदित्यर्थः ॥ १४—१५ ॥ नेयमर्हतीत्यत्रेतिकरणं बोध्यं । अस्य ऊचुरित्यनेनसंबन्धः ॥ १६ ॥ संभर्त्स्यमानेत्य[illegible]ति । सां भर्त्स्यमानेतिपाठे भर्त्सनोपगमनरूपक्रियाभे[illegible]दात्तच्छब्दद्वयं । तां हनुमदधिष्ठितां शिंशुपां ॥ १७—[illegible]—१९ ॥ निर्णतोदरी उन्नतोदरी ॥ २० ॥ अतिकृतं [illegible] अतिमात्रकृतं ॥ २१ ॥ मानुषो विधिः कृतः । म[illegible]नुष्यजात्युचितपातिव्रत्यप्रकटनं कृतं एतावत्काल[illegible]मित्यर्थः

स्यतववातत्रगमनस्यप्रसक्त्यभावादितिभावः ॥ यद्वा अतःपरंजातुकदाचिदप्येवंभावश्चेत् भवती नभविष्यति मारयामइत्य[illegible]र्थः ॥३॥ ति० नेत्राभ्यां उपलक्षितेतिशेषः ॥ ६ ॥ स० एतत् युष्मद्वाक्यं मेकिल्बिषंप्रति पापसाधनपरपुरुषसंसर्गप्रति मनउत[illegible]पादनंप्रति नप्रतितिष्ठति ॥ ७ ॥ ति० सुवर्चला सूर्यपत्नी । सूर्याभिमुखपुष्पवतीकाचिदोषधिरित्यन्यः ॥ ९ ॥ स० दुस्समयगम[illegible]नायानेकनिदर्शनान्याह—यथेति ॥ १० ॥ स० भैमीदमयन्तीतिसामानाधिकरण्यं ॥१२॥ स० साभर्त्स्यमानेतिपदमेकं । सां [illegible]हिंसामुद्दिश्यभर्त्स्यमाना साभर्त्स्यमाना । "सातुर्हिंसायां" इतिविश्वः । यासेत्यन्वयः । उपेत्यनेनातिसामीप्यंसूचयति ॥१७॥ स[illegible] विधिः

[ पा० ] १ क. ख. त्रैलोक्यमनु. २ क. ङ. च. ज.—ट. प्रतितिष्ठति. ३ क. ख. घ. च. छ. ज. ञ. सम[illegible]तिष्ठति. ४ क. ख. घ. च. छ. ज. ञ. तामतिक्रम्य. ५ क. ख. घ. च.—ट. संरब्धाः. ६ क. ख. च. ज. प्रलंबदशन. ७ क[illegible]च. छ. ज. ञ. ऊचुःपरमसंक्रुद्धाः. ८ क. ख. ग. ङ. छ.—ट. साभर्त्स्यमाना. घ. साभर्त्स्यमानावैदेही. ९ क. ङ. झ. ट. व[illegible]ङ्गना. १० क. स्वबाष्पसवमार्जन्ती. घ. ङ. झ. ञ. ट. साबाष्पमपमार्जन्ती. ११ क. ङ.—ट. वासिनीं. १२ घ. ङ. झ. ट. [illegible]मीमाः. १३ क. घ. झ. ट. राक्षस्यस्ताः. १४ ङ. झ. ट. ततस्तु. १५ ख. च. ञ. कराली. १६ ङ.—ञ. ञ. ट. स्नेहःप्रदर्शितः.

रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ॥ [1]विक्रान्तं रूपवन्तं च सुरेशमिव वासवम् ॥ २३ ॥
दक्षिणं त्यागशीलं च सर्वस्य [2]प्रियदर्शनम् ॥ २४ ॥
मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ॥ दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ॥ २५ ॥
अद्य प्रभृति [3]सर्वेषां लोकानामीश्वरी भव ॥ अग्नेः स्वाहा यथा देवी शचीवेन्द्रस्य शोभने ॥ २६ ॥
किं ते रामेण वैदेहि कृपणेन गतायुषा ॥ एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि ॥
अस्मिन्मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ॥ २७ ॥
अन्या तु विकटा नाम लम्बमानपयोधरा ॥ अब्रवीत्कुपिता सीतां मुष्टिमुद्यम्य [4]गर्जती ॥ २८ ॥
[5]बहून्यप्रियरूपाणि वचनानि सुदुर्मते ॥ अनुक्रोशान्मृदुत्वाच्च [6]सोढानि तव मैथिलि ॥ २९ ॥
न च नः कुरुषे वाक्यं हितं [7]कालपुरस्सरम् ॥ ३० ॥
आनीतासि समुद्रस्य पारमन्यैर्दुरासदम् ॥ रावणान्तः[8]पुरं घोरं प्रविष्टा चासि मैथिलि ॥ ३१ ॥
रावणस्य गृहे [9]रुद्धामस्माभिस्तु सुरक्षिताम् ॥ न त्वां शक्तः परित्रातुमपि साक्षात्पुरन्दरः ॥ ३२ ॥
कुरुष्व हितवादिन्या वचनं मम मैथिलि ॥ अलम[10]श्रुप्रपातेन त्यज शोकमनर्थकम् ॥ ३३ ॥
भज प्रीतिं प्रहर्षं च [11]त्यजैतां [12]नित्यदैन्यताम् ॥ सीते राक्षसराजेन [13]सह क्रीड यथासुखम् ॥ ३४ ॥
[14]जानासि हि यथा भीरु स्त्रीणां यौवनमध्रुवम् ॥ यावन्न ते व्यतिक्रामेत्तावत्सुखमवाप्नुहि ॥ ३५ ॥
उद्यानानि च रम्याणि पर्वतोपवनानि च ॥ सह राक्षसराजेन चर त्वं मदिरेक्षणे ॥ ३६ ॥
स्त्रीसहस्राणि ते [15]सप्त वशे स्थास्यन्ति सुन्दरि ॥ रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ॥ ३७ ॥
उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि ॥ यदि मे व्याहृतं वाक्यं न यथावत्करिष्यसि ॥ ३८ ॥
ततश्चण्डोदरी नाम राक्षसी क्रो[16]धमूर्च्छिता ॥ भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् ॥ ३९ ॥
इमां [17]हरिणलोलाक्षीं [18]त्रासोत्कम्पिपयोधराम् ॥ रावणेन हृतां दृष्ट्वा दौर्हृदो मे [19]महानभूत् ॥ ४० ॥
[20]यकृत्प्लीहमथोत्पीडं हृदयं [21]च सबन्धनम् ॥ [22]अन्त्राण्यपि तथा शीर्षं [23]खादेयमिति मे मतिः ॥ ४१ ॥

॥ २२—२८ ॥ सोढानि रावणेनेति शेषः ॥ २९ ॥ कालपुरस्सरं कालानुरूपं ॥ ३०—३३ ॥ प्रीतिं रावणविषयप्रीतिं । प्रहर्षं कालकृतमनोविकासं ॥ ३४—३७ ॥ उत्पाट्य वा उत्पाट्यैव ॥ ३८ —३९ ॥ दौर्हृदः इच्छा ॥ ४० ॥ कुक्षिदक्षिणभागस्थः कालखण्डाख्यो मांसपिण्डो यकृत् । " स्नायुस्त्रियां कालखण्डयकृती तु समे इमे " इत्यमरः । प्लीहा तु गुल्माख्यो वामभागस्थो मांसपिण्डविशेषः ।

करणं । मानुषः मनुष्यजात्युचितः । तेनेतिशेषः । अमानुषः देवादिगोचरोवा । अमानुषः राक्षससंबन्धी अविधिः अननुष्ठानं । कृतः । तेनतुष्टास्मि सहसाहस्तगतयानभाव्यमितिलयेत्थंकृतमितितुष्टास्मीत्यर्थोवा । " सभाराजाऽमनुष्यपूर्वा " इतिसूत्रवृत्तावमनुष्यशब्दोरक्षःपिशाचादीनाहेत्युक्तेः ॥ २२ ॥ **स०** आपतन्तं शत्रूणामुपरीतिशेषः ॥ २३ ॥ **स०** गतायुषा अस्मदाहाररूपत्वाद्गतायुष्ट्वमितिभावः ॥ सर्वास्त्वांभक्षयिष्यामहइत्युक्त्यानैकापिलत्पक्षपातिनीवर्ततइतिद्योतयति ॥ २७ ॥ **ति०** तर्जती तर्जयन्ती ॥ २८ ॥ **स०** दैन्यं स्वार्थेष्यञ् । दैन्यतां दीनतां ॥ **रामानु०** प्रीतिं स्नेहं । प्रहर्षं आनन्दं । नित्यदैन्यतां

[ पा० ] १ ङ. झ. ट. विक्रान्तमापतन्तं. २ क. ख. घ.—ट. प्रियवादिनं. ३ ङ.—ट. लोकानांसर्वेषामीश्वरी. ४ ङ. झ. ञ. ट. तर्जती. ५ ख. घ. झ. ट. बहून्यप्रतिरूपाणि. ६ च. छ. ज. ञ. प्रोक्तानि. ७ क. ख. घ.—ट. कालपुरस्कृतं. ८ ङ. झ. ञ. ट. पुरेघोरे. ९ क. ख. ङ. झ. ञ. ट. रुद्धाअस्माभिस्त्वभिरक्षिता. १० घ.—ट. मश्रुनिपातेन. ११ झ. त्यजन्तीं ङ. छ. ज. ट. त्यजतां. १२ ख. निजदैन्यतां. १३ ङ. झ. ट. परिक्रीड. १४ झ. ट. जानीमहेयथा. १५ ङ. झ. ञ. ट. देविवशे. १६ क. ङ. च. ज.—ट. क्रूरदर्शना. १७ ङ. झ. ट. हरिणशाबाक्षीं. १८ क. ख. घ.—झ. ट. त्रासोत्कंप. १९ ख. ङ. झ. ट. महानयं. २० ङ. च. ज.—ट. यकृत्प्लीहंमहत्क्रोडं. क. यकृत्प्लीहमथोत्क्रत्य. २१ च. छ. ज. स्नायुबन्धनं. २२ झ. ट. गात्राण्यपि. २३ ङ.—ज. ञ. खादयामीति.

ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् ॥ कण्ठमस्या नृशंसायाः पीडयाम किमास्यते ॥ ४२ ॥
निवेद्यतां ततो राज्ञे मानुषी सा मृतेति ह ॥ नात्र कश्चन संदेहः खादतेति स वक्ष्यति ॥ ४३ ॥
ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत् ॥ विशस्येमां ततः सर्वाः समान्कुरुत पीलुकान् ॥४४॥
विभजाम ततः सर्वा विवादो मे न रोचते ॥ पेयमानीयतां क्षिप्रं लेह्यमुच्चावचं बहु ॥ ४५ ॥
ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ॥ अजामुख्या यदुक्तं हि तदेव मम रोचते ॥ ४६ ॥
सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी ॥ मानुषं मांसमास्वाद्य नृत्यामोथ निकुम्भिलाम् ॥ ४७ ॥
एवं संभर्त्स्यमाना सा सीता सुरसुतोपमा ॥ राक्षसीभिः सुघोराभिर्धैर्यमुत्सृज्य रोदिति ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ॥ २५ ॥

राक्षसीगणसंतर्जनमसहमानयासीतयाऽशोकशाखालंबनेन रामलक्ष्मणादीन्प्रत्याक्रोशनपूर्वकमश्रुधाराविसर्जनेन बहुधापरिदेवनम् ॥ १ ॥

तथा तासां वदन्तीनां परुषं दारुणं बहु ॥ राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ १ ॥
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी ॥ उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ २ ॥
न मानुषी राक्षसस्य भार्या भवितुमर्हति ॥ कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ३ ॥
सा राक्षसीमध्यगता सीता सुरसुतोपमा ॥ न शर्म लेभे दुःखार्ता रावणेन च तर्जिता ॥ ४ ॥
वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः ॥ वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५ ॥
सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् ॥ चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥६॥

नकारान्तस्य प्लीहन्शब्दस्य अकारान्तत्वमार्षं । "अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंसि " इत्यमरः । वत्पीडं तस्योपरि स्थितं मांसं । हृदयं पद्मकोशप्रतीकाशं मांसं । बन्धनं तस्य धारणमधोमांसं । उत्क्रोडमिति पाठे उत्क्रोडोहृदयस्य स्थानं । अन्त्रं पुरीतत् ॥ ४१—४३ ॥ पीलुकान् मांसखण्डान् ॥ ४४ ॥ पेयं लेह्यं चास्या उपदंशत्वेनोच्यते ॥ ४५—४६ ॥ निकुम्भिला नाम लङ्कायाः पश्चिमद्वारप्रदेशवासिनी भद्रकाली ॥४७॥ रोदिति अरुदत् ॥४८॥इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्यानेचतुर्विंशःस[illegible]ः॥२४॥

तासां वदन्तीनां तासु वदन्तीषु ॥ १ ॥ [illegible] मनस्विनी पातिव्रत्ये दृढमनाः ॥ २ ॥ खादत भक्षयत [illegible] ॥ ३ ॥ शर्म सुखं ॥ ४ ॥ कोकैः ईहामृगैः । " को[illegible]कस्त्वीहामृगो वृकः " इत्यमरः ॥ ५ ॥ अशोकस्य [illegible] हनुमद-

नित्यंदैन्यंयस्यास्सानित्यदैन्या तस्याभावोनित्यदैन्यताताम् ॥ २४ ॥ ति० प्रघसावाक्यं विशस्येमामिति । मध्ये-[illegible] कण्ठमस्या इत्यादिततस्त्वजामुखीत्यन्तंश्लोकद्वयंप्रक्षिप्तमितिकतकः ॥ ४४ ॥ ति० शूर्पणखेयमन्या ॥ ४६ ॥ इतिचतुर्विंशःसर्गः [illegible] ॥ २४ ॥
स० परुषं बहिःक्रूरं । दारुणं अन्तः ॥ १ ॥ ति० शर्मनलेभेइव । शोकार्तेव ॥ ती० सीताविलापस्यवास्तवार्थस्तु [illegible] श्रीरामवियोगेन घोरराक्षसपुरावस्थानेन विरूपराक्षसीसमागमेनच विविधप्रलापादिकमितिज्ञेयं । अस्मिन्काण्डेयत्रयत्रसीताप्रला[illegible]स्तत्रतत्रैवमेवोहनीयः ॥ ४ ॥ स० आत्मनः स्वस्य अङ्गं विशन्तीमहाङ्गेष्ववान्तराङ्गानिनिवेशयन्तीव ॥ ति० आत्मनोङ्ग[illegible] विशन्तीव भीत्यातिसंकुचितशरीराकमठवदभूदित्यर्थः ॥ ५ ॥ शि० अशोकस्य अशोकसदृशाशिंशुपायाः । अशोकशब्दआचारक्वि[illegible]बन्तप्रकृ-

[ पा० ] १ एतदाद्यर्धचतुष्टयं झ. पाठेनदृश्यते. २ ङ. च. झ. ञ. ट. सर्वान्समान्. ३ ङ. झ. ञ. ट. पिण्डका[illegible] ४ ङ. झ. ञ. ट. माल्यंचविविधंबहु. क. माल्यानिविविधानिच. ५ ङ.—ट. यदुक्तंवै. ६ ङ. च. ज.—ट. मासाद्य. ७ [illegible] ङ. च. ज.—ट. निर्भर्त्स्यमाना. ८ राक्षसीभिर्विरूपाभिः. ९ क. ङ. झ. ट. अथ. १० ख. ङ.—ट. शोकार्ता. ११ झ. रा[illegible]णेनेव. १२ क. सिंहैरिवा. १३ क. दुःखार्ताभर्तारं. १४ क. गतमानसा. घ. ज. सक्तमानसा.

सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः ॥ चिन्तयन्ती न शोकस्य तदाऽन्तमधिगच्छति ॥ ७ ॥
सा वेपमाना पतिता प्रवाते कदली यथा ॥ राक्षसीनां भयत्रस्ता वि[1]वर्णवदनाऽभवत् ॥ ८ ॥
तस्याः सा [2]दीर्घविपुला वेपन्त्या सीतया तदा ॥ ददृशे [3]कम्पिनी वेणी व्यालीव परिसर्पती ॥ ९ ॥
सा निःश्वसन्ती [4]दुःखार्ता शोकोपहतचेतना ॥ आर्ता व्यसृजदश्रूणि मैथिली वि[5]ललाप ह ॥ १० ॥
हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च ॥ हा श्वश्रु मम कौसल्ये हा सुमित्रेति भामिनी ॥ ११ ॥
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ॥ अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥१२॥
[6]यत्राहमेवं क्रूराभी राक्षसीभिरिहार्दिता ॥ जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ १३ ॥
एषाऽल्पपुण्या कृपणा विनशिष्याम्यनाथवत् ॥ समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४ ॥
भर्तारं तमपश्यन्ती राक्षसीवशमागता ॥ सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ १५ ॥
तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् ॥ धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ १६ ॥
सर्वथा तेन हीनाया रामेण विदितात्मना ॥ तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम [7]जीवितम् ॥ १७ ॥
कीदृशं तु [8]मया पापं पुरा जन्मान्तरे कृतम् ॥ येनेदं प्राप्यते [9]दुःखं मया घोरं सुदारुणम् ॥ १८ ॥
जीवितं त्यक्तुमिच्छामि शोकेन महता वृता ॥ राक्षसीभिश्च रक्ष्यन्त्या रामो नासाद्यते मया ॥ १९ ॥
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ॥ न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥२०॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

धिष्ठितशिंशुपासन्निहितस्य ॥ ६ ॥ अन्तं अवधिं । अधिगच्छति अध्यगच्छत् ॥ ७ ॥ राक्षसीनां राक्षसीभ्यः ॥ ८ ॥ सीतयेति व्यत्ययेन षष्ठ्यर्थे तृतीया । परिसर्पती परिसर्पन्ती । नुमभावआर्षः ॥ ९ ॥ दुःखार्ता राक्षसीवचनश्रवणजदुःखार्ता । आर्ता रामविरहार्ता ॥ १० ॥ सुमित्रेत्यत्र संबुद्धावाप एकारादेशाभाव आर्षः ॥ ११ ॥ लोकप्रवाद इत्यादिश्लोकद्वयमेकं वाक्यं ॥ अकाले अप्राप्तकाले । दुर्लभ इत्यत्र इतिकरणं बोध्यं । यत्र यतः ॥ १२—१३ ॥ पूर्णा पदार्थैरिति शेषः ॥ १४—१५ ॥ मम धनं सर्वेषां स्वं भविष्यतीत्याह—तमिति ॥ तं "बहवो नृप कल्याणगुणाः पुत्रस्य सन्तिते" इति प्रसिद्धं । आत्मगुणाननुक्त्वा विग्रहगुणानाह—पद्मदलपत्राक्षं दलतीति दलं विकसितपद्माक्षमित्यर्थः । यद्वा दलतीति दलं गर्भपत्रं । विस्पष्टार्थमेकार्थे शब्दद्वयं वा । सिंहविक्रान्तगामिनं विक्रान्तं विक्रमः गमनं तद्वत् गच्छतीति तथा ॥ १६—१७ ॥ पुरा जन्मान्तरे पूर्वजन्मनि । घोरं सुदारुणं अत्यन्तघोरमित्यर्थः ॥ १८ ॥ रक्ष्यन्त्या रक्ष्यमाणया ॥ १९ ॥ परवश्यतां भर्तृपरतन्त्रतां । परस्वभूतं शरीरं न स्वेच्छया त्यक्तुं शक्यमित्यर्थः । आत्मच्छन्देन मदिच्छया ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

तिकर्तृकविबन्तः । इवार्थस्तुशब्दोवा ॥ **ती०** हनुमदधिष्ठितशिंशुपामूलंप्राप्तायास्सीतायाअशोकशाखालंबनाभिधानादशोकशाखाःशिंशुपाशाखाश्चपरस्परंसंमिलितावर्तन्तइत्यवगम्यते ॥ ६ ॥ **स०** भयत्रस्ता भयैः घोरैरायुधादिभिः । त्रस्ता भीता । "भयं प्रतिभये घोरे" इतिविश्वः ॥ ८ ॥ **स०** अनाथवत् अनाथेव । आर्षःपुंवद्भावः ॥ १४ ॥ इतिपञ्चविंशःसर्गः ॥ २५ ॥

[ पा० ] १ क. विषण्णवदना. २ ङ. झ. ट. दीर्घबहुला. ३ ङ. झ. ट. कंपिता. ४ झ. शोकार्ताकोपोपहतचेतना. ५ क. घ. ङ. झ. ट. विललापच. ६ क. घ.—छ. झ. ञ. ट. यत्राहमाभिः. ७ ङ. झ. ञ. ट. जीवनं. ८ ङ.—ट. महापापं मयादेहान्तरे. ९ ङ. ज.—ट. घोरंमहादुःखं. ङ. ट. घोरंमहद्दुःखं.

# षड्विंशः सर्गः ॥ २६ ॥

राक्षसीसंतर्जनमसहमानयासीतया ताःप्रति स्वस्यचित्राहिंसयामारणेपि रावणानङ्गीकरणेदृढप्रतिज्ञानपूर्वकं स्वानयनाय रामानागमने बहुकारणविकल्पनेनबहुधाविलापः ॥ १ ॥

प्रसक्ताश्रुमुखीत्येवं ब्रुवन्ती जनकात्मजा ॥ अधोमुखमुखी बाला विलप्तुमुपचक्रमे ॥ १ ॥
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती ॥ उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ २ ॥
राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा ॥ रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ ३ ॥
राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् ॥ चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ ४ ॥
न हि मे जीवितैरर्थो नैवार्थैर्न च भूषणैः ॥ वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५ ॥
अश्मसारमिदं नूनमथवाऽप्यजरामरम् ॥ हृदयं मम येनेदं न दुःखेनावशीर्यते ॥ ६ ॥
धिङ्मामनार्यामसतीं याऽहं तेन विना कृता ॥ मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥ ७ ॥
का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना ॥ भर्तारं सागरान्ताया वसुधायाः प्रियंवदम् ॥८॥
भिद्यतां भक्ष्यतां वाऽपि शरीरं विसृजाम्यहम् ॥ न चाप्यहं चिरं दुःखं सहेयं प्रियवर्जिता ॥ ९ ॥
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ॥ रावणं किं पुनरहं कामयेयं विगर्हितम् ॥ १० ॥
प्रत्याख्यातं न जानाति नात्मानं नात्मनः कुलम् ॥ यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥११॥
छिन्ना भिन्ना विभक्ता वा दीप्तेवाग्नौ प्रदीपिता ॥ रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥१२॥
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ॥ सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ १३ ॥

उन्मत्ता चित्तविभ्रमवती । "उन्मादश्चित्तविभ्रमः" इत्युक्तेः । प्रमत्ता अनवधाना । "प्रमादोनवधानता" इत्यमरः । भ्रान्तचित्ता अनवस्थितचित्ता । उपावृत्ता श्रमापनोदनार्थं वेष्टिता । किशोरीव बडबेव ॥ २ ॥ प्रमत्तस्य अनवहितस्य ॥ ३–४ ॥ मे जीवितैर्जीवनैः कोप्यर्थो नास्ति । केवलजीवितस्यानपेक्षितत्वेप्यर्थसहितत्वेन तदपेक्षा स्यात् नेत्याह—नैवार्थैर्न च भूषणैः भूषणैरर्थैश्च सहितैर्जीवनैर्मे नार्थः । कुत इत्यत्राह—वसन्त्या इति । राक्षसीमध्यवासाद्रामविरहाच्च सर्वोपकरणसहितमपि जीवितं नापेक्षितमित्यर्थः ॥ ५—१० ॥ प्रत्याख्यातं प्रत्याख्यानं । भावे निष्ठा । आत्मानं स्वस्वरूपं ॥११॥ छिन्ना द्विखण्डतया कृता । भिन्ना दलिता । विभक्ता अवयवशः कृता । दीप्तेव अग्नौ प्रदीपिता वा ॥ १२ ॥ एवं पातिव्रत्यदार्ढ्यमुक्त्वा रामस्यानागमने का[illegible] बहुधा शङ्कते—ख्यात इत्यादिना ॥ प्राज्ञः दो[illegible]षवत्यपि गुणदर्शी । "न तेऽम्बा मध्यमा माता [illegible]ति गर्हितव्या कथंचन" इत्युक्तं । कृतज्ञः "कथंचिदुपका[illegible]ण कृतेनैकेन तुष्यति" इत्युक्तरीत्या स्वाश्रितैः कृतं [illegible]किंचित्कारं सर्वदा मनसि कुर्वन्नित्यर्थः । सानुक्रोशः कि[illegible]चित्कारकरणे "भृशं भवति दुःखितः" इत्युक्तरी[illegible]त्या तेषां व्यसने सति अतिदुःखितः राघवः । जनि[illegible]वार्जितानां गुणान्तराणामुपसंग्रहणमिदं । सद्वृत्तः [illegible] परसमृद्ध्येकप्रयोजनः । ख्यातः एवं शत्रुगोष्ठ्यामपि [illegible]प्रसिद्धः । निरनुक्रोशः शङ्के अस्यामप्यवस्थायां सुखप्र[illegible]दानाभावान्नृशंसमाशङ्के । मद्भाग्यसंक्षयात् । मद्भाग[illegible]यविपर्य-

ति० असतीं असतीवत्परगृहस्थां । जीवामि जीवितंरक्षामीत्यर्थः । पाकंपचतीतिवत्प्रयोगः ॥ ७ ॥

[ पा० ] १ ख. ङ.—ञ. त्वेवं. २ ङ.—ट. अधोगतमुखी. ३ ङ. च. ज.—ट. चदारुणं. ४ क. नहि. ५ क[illegible]घ.—ट. जीवितेनार्थो. ६ क. ख. घ. महाबलं. ७ ङ. च. ज. झ. ट. नदुःखेनविशीर्यते. क. दुःखेननविशीर्यते. ८ [illegible]झ. ट. जीवामि. ९ ङ. झ. ट. पापजीविका. १० ङ. झ. ट. निशाचरं. ११ क. ङ. झ. ञ. ट. प्रत्याख्यानं. १२ ङ. [illegible]झ. ट भिन्नाप्रभिन्ना. १३ ङ. झ. दीप्तावाग्नौ. १४ क. च. ज. ञ. सुवृत्तो.

राक्षसानां सहस्राणि जनस्थाने चतुर्दश ॥ [2]येनैकेन निरस्तानि स मां किं नाभिपद्यते ॥ १४ ॥
निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा ॥ समर्थः खलु मे भर्ता रावणं हन्तुमाहवे ॥ १५ ॥
विराधो दण्डकारण्ये येन राक्षसपुङ्गवः ॥ रणे रामेण निहतः स [3]मां किं नाभिपद्यते ॥ १६ ॥
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा ॥ न तु राघवबाणानां [4]गतिरोधीह विद्यते ॥ १७ ॥
किंनु तत्कारणं येन रामो दृढपराक्रमः ॥ रक्षसापहृतां भार्यामिष्टां[5] नाभ्यवपद्यते ॥ १८ ॥
इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः ॥ जानन्नपि हि तेजस्वी धर्षणं[6] मर्षयिष्यति ॥ १९ ॥
हृतेति योऽधिगत्वा[7] मां राघवाय निवेदयेत् ॥ गृध्रराजोपि स रणे रावणेन निपातितः ॥ २० ॥
कृतं कर्म महत्तेन मां [8]तथाऽभ्यवपद्यता ॥ तिष्ठता [9]रावणद्वन्द्वे वृद्धेनापि जटायुषा ॥ २१ ॥
यदि मामिह जानीयाद्वर्तमानां [10]स राघवः ॥ अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ २२ ॥
[11]विधमेच्च पुरीं लङ्कां शोषयेच्च महोदधिम् ॥ रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ २३ ॥
ततो निहतनाथानां राक्षसीनां गृहे गृहे ॥ यथाहमेवं रुदती तथा भूयो न संशयः ॥ २४ ॥
अन्विष्य रक्षसां लङ्कां कुर्याद्रामः सलक्ष्मणः ॥ न हि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ॥ २५ ॥
चिताधूमाकुलपथा गृध्रम[12]ण्डलसंकुला ॥ [13]अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ॥ २६ ॥
अचिरेणैव कालेन प्राप्स्याम्ये[14]वं मनोरथम् ॥ दुष्प्रस्थानोयमा[15]ख्याति सर्वेषां वो विपर्ययम्[16] ॥ २७ ॥
[17]यादृशानीह दृश्यन्ते लङ्कायामशुभानि वै ॥ [18]अचिरेण तु कालेन भविष्यति हतप्रभा ॥ २८ ॥
नूनं लङ्का हते पापे रावणे [19]राक्षसाधमे ॥ [20]शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥ २९ ॥

येणैवं वैपरीत्यं जातं ॥ १३ ॥ एकमात्रसहायः स किं करिष्यतीत्यत्राह—राक्षसानामिति ॥ जनस्थाने रक्षसां चतुर्दश सहस्राणि एकेन येन रामेण निरस्तानि घातितानि सः नाभिपद्यते न रक्षति ॥ १४ ॥ प्रबलो रावणः कथं निरस्य इत्यत्राह—निरुद्धेति ॥ १५ ॥ सामर्थ्यं निदर्शयति—विराध इति ॥ १६ ॥ अस्तु-रामःसमर्थः तथापि समुद्रमध्यस्थालङ्कादुष्प्रधर्षेत्याशङ्क्याह—काममिति ॥ गतिरोधि गतिप्रतिबन्धकं । किंचिदिति शेषः ॥ १७ ॥ एतत्फलितमाह—किंन्विति ॥१८॥ लक्ष्मणपूर्वज इत्यनेन निरनुक्रोशत्वादिप्रसक्त्यभावस्सूच्यते । मर्षयिष्यतीत्यत्र काकुरनुसंधेया ॥१९॥ इहास्तीत्यज्ञाने हेतुमाह—हृतेति ॥२०॥ प्रसङ्गादाह—कृतमिति ॥ अभ्यवपद्यता रक्षता । रावणद्वन्द्वे रावणद्वन्द्वयुद्धे ॥ २१—२३ ॥ अहं यथा एवं रुदती रुदन्त्यस्मि । तथा निहतनाथानां राक्षसीनां गृहे गृहे भूयः भूरि । रुदन्त्यो भविष्यन्तीत्यर्थः ॥ २४ ॥ रक्षसां लङ्कामन्विष्य कुर्यात् । रिपुनाशनमिति शेषः ॥ २५—२६ ॥ दुष्प्रस्थानः दुर्मार्गः दुराचार इति यावत् ॥ २७ ॥ अशुभानि अशुभसूचकानि । हतप्रभेत्यत्र लङ्केत्यनुकर्षः । लङ्का अचिरेण कालेन हतप्रभा भविष्यतीत्यत्र यादृशानि सूचकानि स्युः इह लङ्कायां तादृशान्यशुभानिदृश्यन्त इत्यन्वयः ॥ २८ ॥ दुर्धर्षेति लङ्काविशेषणं ॥ २९ ॥

शि० सः रामः मां नाभ्यवपद्यते किमर्थमितिशेषः ॥ १६ ॥ ति० रावणवधेतिष्ठता रावणवधार्थयतता ॥ २१ ॥ स० दुष्प्रस्थानः दुस्साध्यप्रस्थानः । अनिवर्त्यइतियावत् ॥ २७ ॥ ति० शोषं ऐश्वर्यादेरितिशेषः ॥ २९ ॥

[ पा० ] १ क. घ.—ट. जनस्थानेसहस्राणि. २ च. झ. ट. एकेनैव. ३ क. ख. च. ज. ट. मांनाभ्यवपद्यते. ४ झ. ट. गतिरोधोभविष्यति. च. ज. ञ. गतिरोधोत्रदृश्यते. ५ ङ. झ. मिष्टांयोनाभिपद्यते. ख. च. छ. ट. मिष्टांनाभ्युपपद्यते. ६ क. घ.—छ. झ. ञ. ट. धर्षणां. ७ ङ. झ. ट. मांयोधिगत्य. क. च. छ. ज. ञ. योभिगत्वामां. ८ च. ज. झ. ट. तदा. ९ क. ङ. झ. ट. रावणवधे. १० ङ. ज. झ. ट. हिराघवः. ११ ङ. झ. ट. निर्दहेच्च. १२ ङ.—ट. मण्डलमण्डिता. १३ ख. ङ. झ. ट. अचिरेणैवकालेन. १४ ङ. झ. ट. म्येनं. १५ ङ. झ. ट. माभाति. १६ ङ. झ. ट. विपर्ययः. १७ ग. ङ. च. ज. झ. ट. यादृशानितु. १८ क. ख. घ. ङ. च. ज.—ट. अचिरेणैव. १९ क. घ.—ट. राक्षसाधिपे. २० ङ. झ. ञ. ट. शोषमेष्यति.

पुण्योत्सवसं[1]मुत्था च नष्टभर्त्री स[2]राक्षसी ॥ भविष्यति पुरी लङ्का नष्टभर्त्री यथाऽङ्गना ॥ ३० ॥
नूनं राक्षसकन्यानां रु[3]दन्तीनां गृहे गृहे ॥ श्रोष्यामि नचिरादेव दुःखार्तानामिह ध्वनिम् ॥ ३१ ॥
सान्धकारा हतद्योता हतराक्षसपुङ्गवा ॥ भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ ३२ ॥
यदि ना[4]म स शूरो मां रामो र[5]क्तान्तलोचनः ॥ जानीयाद्व[6]र्तमानां हि रावणस्य निवेशने ॥ ३३ ॥
अनेन तु नृशंसेन रावणेनाधमेन मे ॥ समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३४ ॥
[ स[7] च मे विहितो मृत्युरस्मिन्दुष्टेन वर्तते ॥ ] अकार्यं ये न जानन्ति नैर्ऋताः पा[8]पकारिणः ॥
अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम् ॥ ३५ ॥
नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ॥ ध्रुवं मां प्रातरा[9]शार्थे राक्षसः कल्पयिष्यति ॥३६॥
साऽहं कथं क[10]रिष्यामि तं विना प्रियदर्शनम् ॥ रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता ॥ ३७ ॥
यदि कश्चित्प्रदाता मे वि[11]षस्याद्य भवेदिह ॥ क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३८ ॥
नाजानाज्जीवतीं रामः स मां ल[12]क्ष्मणपूर्वजः ॥ जानन्तौ तौ न कुर्यातां नोर्व्यां हि म[13]म मार्गणम् ३९
नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः ॥ देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ ४० ॥
धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ मम पश्यन्ति ये ना[14]थं रामं राजीवलोचनम् ॥ ४१ ॥
अथवा न हि तस्यार्थो धर्मकामस्य धीमतः ॥ मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥ ४२ ॥
दृश्यमाने भवेत्प्रीतिः सौहृदं ना[15]स्त्यपश्यतः ॥ नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥४३॥

पुण्योत्सवेभ्यस्समुत्था निकृत्तपुण्योत्सवेत्यर्थः । सराक्षसी राक्षसीजनमात्रयुक्तेत्यर्थः । इयं लङ्कापुरी । नष्टभर्त्री सराक्षसी अर्थात् हतराक्षसा । नष्टभर्त्री अङ्गना यथा अङ्गनेव पुण्योत्सवसमुत्था भविष्यतीत्यन्वयः ॥३०—३२॥ स रामः रावणस्य निवेशने मां वर्तमानां जानीयाद्यदि तदा लङ्का निर्दग्धा भविष्यतीति पूर्वेण संबन्धः ॥ ३३ ॥ समयः द्वादशमासात्मकः संकेतः । तस्य कालः आगतः सन्निहितः । मासद्वयमात्रपरिशेषादिति भावः ॥ ३४ ॥ पापकारिणः ये नैर्ऋताः अधर्माद्धेतोः अकार्यं न जानन्ति । तैर्महोत्पातस्संभविष्यति ॥ ३५ ॥ एतदेव विवृणोति—नैत इति ॥ ३६—३७ ॥ पतिनेति नाभाव आर्षः ॥ ३८ ॥ जीवतीं जीवन्तीं । न न कुर्यातां कुर्यातामेव । तदाह वामनः—“ संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ” इति ॥ ३९—४१ ॥ धर्मकामस्य तस्य कामान[illegible]क्षिण [illegible] इत्यर्थः । मया भार्यया कोर्थः । परमात्मन[illegible] उत्कृष्टस्वभावस्य ॥ ४२ ॥ सौहृदं नास्त्यपश्यत[illegible] अदृश्यमाने प्रीतिर्न भवति । तस्माददृश्यायां म[illegible] रामस्य किं प्रीतिर्नासीदित्यर्थः । एवमाशङ्कितं प्र[illegible]तिषेधति—नाशयन्तीति । कृतघ्नाः प्रथममुत्पन्नां प्री[illegible]तं नाशयन्ति । न तु रामो नाशयिष्यति । मयिप्री[illegible]मितिशेषः

**ति॰** पुण्योत्सवसमृद्धाच । अद्येतिशेषः ॥३०॥ **ति॰** अस्मिन्काले दुष्टेन रावणेन । सकालोमेमृत्युर्विहितः । व[illegible]र्ततइत्यर्थः । ननुततःपरमपित्वीलात्त्वांनहिंस्युस्तत्राह—अकार्यमिति ॥ ३५ ॥ **ति॰** ननुत्वज्जीवनाभावनिश्चयप्रमाणोपलंभंविना[illegible]कथंरामेणदेहस्त्यक्तइत्यतःपक्षान्तरमाह—**अथवेति** । धर्मकामस्यहिभार्ययाऽर्थः अयंतुनतथा । तदेवाह—धीमतः आत्मानात्म[illegible]विवेकवतः । अतएवपरमात्मनः परमात्मब्रह्मात्मनास्थितस्यजीवन्मुक्तस्यतस्यमयानार्थः । अनेनवैराग्यादप्रवृत्तिरितिसूचितं ॥ ४[illegible]२ ॥ **ती॰** यद्वा सौहृदं स्नेहं । अपश्यतःपुंसः । दृश्यमानेपि सुहृदीतिशेषः । प्रीतिर्नभवेत् किमुतादृश्यमाने ॥ **स॰** [illegible]सौहृदमिति । “ हृद्भगसिन्धवन्ते ” इत्यादिनोभयपदवृद्ध्यभावआर्षः ॥ अवृत्तच्छित्तेस्तथैवपठितुंसुशकंवा ॥ ४३ ॥

[ पा॰ ] १ क. घ. च. झ. ञ. ट. समृद्धाच. २ क. ख. घ. ङ. च. ज.—ट. सराक्षसा. ३ घ. च. झ. ट[illegible] रुदतीनां. ४ क. च. छ. ज. ञ. रामःसशूरोमामिह. ५ घ. राजीवलोचनः. ६ ङ.—ज. वर्तमानांमां. झ. वर्तमानांयां. [illegible]७ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ८ क. ग. घ. च. छ. ज. पापचारिणः. ९ झ. राशार्थे. १० क. ग. छ. चरिष्यामि. १[illegible] च. छ. ज. विषमद्य. १२ घ. ङ. झ. ट. भरतपूर्वजः. १३ ङ.—ट. परिमार्गणं. १४ ग. ङ. च. ज.—ट. वीरं. १५ ङ[illegible] झ. ट. नास्त्यदृश्यतः.

किंतु[1] मे न गुणाः केचित्किंवा भाग्यक्षयो[2] मम ॥ याऽहं सीदामि रामेण हीना मुख्येन भामिनी ॥ ४४ ॥
श्रेयो[3] मे जीवितान्मर्तुं विहीनाया [4]महात्मनः ॥ रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥ ४५ ॥
अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशिनौ ॥ भ्रातरौ हि नरश्रेष्ठौ संवृत्तौ[5] वनगोचरौ ॥ ४६ ॥
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना ॥ छद्मना सादितौ[6] शूरौ[7] भ्रातरौ रामलक्ष्मणौ ॥ ४७ ॥
साऽहमेवं गते[8] काले मर्तुमिच्छामि सर्वथा ॥ न च मे विहितो मृत्युरस्मिन्दुःखेऽपि[9] वर्तति ॥ ४८ ॥
धन्याः खलु महात्मानो मुनयस्त्यक्तकिल्बिषाः[10] ॥ जितात्मानो [11]महाभागा येषां न स्तः प्रियाप्रिये ४९
प्रियान्न संभवेद्दुःखमप्रियादधिकं भयम्[12] ॥ ताभ्यां हि [13]ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ ५० ॥
साऽहं त्यक्ता [14]प्रियेणेह रामेण विदितात्मना ॥ प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ ५१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ॥ २७ ॥

सीतांसंतर्जयन्तीराक्षसीःप्रति स्वापात्प्रबुद्धयात्रिजटाख्ययाराक्षस्या स्वेनसीताराघवयोः स्वबन्धोरावणस्यच क्रमेणाभ्युदयानभ्युदयसूचकाद्भुतस्वप्नदर्शननिवेदनेन सभर्त्सनंसीतातर्जनप्रतिषेधनपूर्वकं दूरेतासामपसारणम् ॥ १ ॥ तथा तासां प्रार्थनया ताःप्रति स्वस्यस्वाप्निकार्थदर्शनप्रकारनिरूपणपूर्वकं सीतायाविजयाशंसकशुभशकुनप्रदर्शनम् ॥ २ ॥

इत्युक्ताः सीतया घोरा[15] राक्षस्यः क्रोधमूर्च्छिताः ॥ [16]काश्चिज्जग्मुस्तदाख्यातुं रावणस्य तरस्विनः[17] ॥ १ ॥
ततः सीतामुपागम्य राक्षस्यो घोरदर्शनाः ॥ पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥

---

॥ ४३ ॥ नगुणाः दुष्कृतानि ॥ ४४ ॥ मर्तुमिति भावार्थे तुमुन् । मरणमित्यर्थः । महात्मनः रामाद्विहीनायाः महात्मना रामेण हीनायाः । तृतीयार्थे पञ्चमी ॥ ४५ ॥ न्यस्तशस्त्रौ संवृत्तौ किमिति संबन्धः ॥ ४६ ॥ सादितौ हतौ ॥ ४७ ॥ वर्ततिवर्तमाने ॥ ४८ ॥ महात्मानः महाधैर्याः । त्यक्तकिल्बिषाः त्यक्तपापाः । जितात्मानः जितान्तःकरणाः । महाभागाः महाभाग्याः ॥ ४९ ॥ प्रियान्न संभवेद्दुःखं किंतु सुखमेव भवेदित्यर्थः । प्रियात् अनुकूलवस्तुनः । अप्रियात् प्रतिकूलवस्तुनः । अधिकं भयं अधिकं दुःखं । ताभ्यां । प्रियाप्रियाभ्यां । नमस्तेषां त एव सर्वोत्तमा इत्यर्थः ॥ ५० ॥ साहं तद्विलक्षणाहं । केवलप्रियपरेत्यर्थः । प्रियेण त्यक्ता अप्रियं प्राप्ता । प्राणांस्त्यक्ष्यामीत्यर्थः ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

तत् मरणाध्यवसायं ॥ १ ॥ एकार्थं पूर्वोक्तवचनैरेकाभिधेयं । अनर्थार्थं अनर्थफलकं । एकाक्ष्यादयः पूर्वोक्तार्थमेव परुषवचनं पुनरब्रुवन्नित्यर्थः ॥ २ ॥

---

**ति०** मयि तदुपेक्षाहेतवःकेचनअगुणाः दोषाःस्युः । अयमपिपक्षोनयुक्तः । स्वापरिज्ञातस्वापचाराभावात् । तस्मात्प्राग्भवीयदुष्कर्मजोभाग्यक्षयएवहेतुरित्याह—किंवेति ॥ ४४ ॥ **ति०** भाग्यक्षयनिश्चयस्यकर्तुमशक्यत्वात्पक्षान्तरं—**अथवेति** ॥ ४६ ॥ **ति०** इदमप्यसंभावितं । रक्षोभिःकृतवैरेणक्षत्रियेणतत्त्यागायोगात् । अतःपक्षान्तरं—**अथवेति** ॥ ४७ ॥ इतिषड्विंशःसर्गः ॥ २६ ॥

**स०** तत् सीताव्यवसितंमरणं ॥ १ ॥ **स०** एकार्थं रावणसंगमरूपैकाभिधेययुक्तं । अनर्थः राक्षसविनाशरूपः अर्थः प्रयो-

[ पा० ] १ ङ. झ. ञ. ट. किंवामय्यगुणाः. २ क. ग.—ट. क्षयोहिमे. क. ग. घ. ङ. झ. ञ. ट. याहिसीतावरार्हेणहीनारामेणभामिनी. ३ क. श्रेयोहि. ४ ख. घ. च. ज. झ. महात्मना. ५ क. ग.—ट. चरन्तौ. ६ ख. ग. ङ.—ट. घातितौ. ७ क. घ. वीरौ. ८ ङ.—ट. मेवंविधे. ९ ङ. झ. ञ. ट. दुःखेऽतिवर्तति. १० क. ग. ट. मुनयःसत्यसंमताः. ११ घ. महात्मानो. १२ ङ.—ट. भवेत्. १३ झ. तेवियुज्यन्ते. १४ ङ. झ. ट. प्रियेणैव. १५ ग. ङ. झ. ट. घोरं. १६ घ. स्थिताःकाश्चिद्गताःकाश्चिद्रावणायनिवेदितुं. १७ ङ. झ. ञ. ट. दुरात्मनः.

अद्येदानीं तवानार्ये सीते पापविनिश्चये ॥ राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ ३ ॥
सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ॥ राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥ ४ ॥
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ॥ जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५ ॥
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ राक्षसानामभावाय भर्तुरस्या भवाय च ॥ ६ ॥
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः ॥ सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः ॥
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि ॥ ७ ॥
तासां श्रुत्वा तु वचनं राक्षसीनां मुखाच्च्युतम् ॥ उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ॥ ८ ॥
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥ युक्तां हंससहस्रेण स्वयमास्थाय राघवः ॥
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥ ९ ॥
स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता ॥ सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ॥
रामेण संगता सीता भास्करेण प्रभा यथा ॥ १० ॥
राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ॥ आरूढः शैलसंकाशं चचार सहलक्ष्मणः ॥ ११ ॥
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ॥ शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ॥ १२ ॥
ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ॥ भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥ १३ ॥
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ॥ चन्द्रसूर्यौ मया दृष्टा पाणिना परिमार्जती ॥ १४ ॥
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ॥ सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः ॥१५
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ॥ [ शुक्लमाल्यांबरधरो लक्ष्मणेन सहागतः ॥
ततोन्यत्र मया दृष्टो रामः सत्यपराक्रमः ] ॥ १६ ॥
इहोपयातः काकुत्स्थः सीतया सह भार्यया ॥ १७ ॥

---

अद्य अस्मिन्दिने । इदानीं अस्मिन्क्षणे । भक्षयिष्यन्तीत्यब्रुवन्निति पूर्वेण संबन्धः ॥ ३ ॥ त्रिजटा विभीषणपुत्री । शयानेत्यनेन स्वप्नवृत्तान्तकथनत्वरोच्यते ॥ ४—६ ॥ निशीत्यनन्तरमितिकरणं द्रष्टव्यं ॥ ७ ॥ काले उषःकाले यस्स्वप्नः तत्संश्रितं ॥ ८ ॥ आगतः लङ्कामिति शेषः ॥९—१०॥ महागजमारूढ इति शिबिकात इति शेषः । तथोक्तं स्वप्नाध्याये— "आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । विष्ठानुलेपो रुदितं मृतं च स्वप्नेष्वगम्यागमनं च धन्यं" इति ॥११॥ चचार सीतां प्रतीति शेषः ॥१२॥ ततस्तस्य नगस्याग्र इति ॥ अत्र द्वादशसह[illegible]स्रश्लोकागताः त्रयोदशसहस्रादिमोयं श्लोकः । गाय[illegible]त्र्यास्त्रयोदशमक्षरमत्र बोध्यम् ॥ १३ ॥ चन्द्रसूर्यौ[illegible] पाणिना परिमार्जतीति । अत्र स्वप्नाध्यायवचनं । "[illegible] आदित्यमण्डलं वातु चन्द्रमण्डलमेव वा । स्वप्ने[illegible] गृह्णाति हस्ताभ्यां राज्यं संप्राप्नुयान्महत् इति ॥ १४[illegible]—१७ ॥

जनं यस्यतादृशं । परुषं परुषवाक्यमब्रुवन् ॥ २ ॥ स० अद्येत्युक्तौ श्वःप्रातःपर्यन्तमितिभ्रमोमाहिभूदितीदानीमित्युक्तं[illegible] ॥ ३ ॥ ति० प्रबुद्धेत्यनेन तावत्पर्यन्तंसुप्तवतीतिगम्यते ॥४॥ ती० कालेप्रातःकाले । स्वप्नसंश्रितं प्रातःकालदृष्टस्वप्नद्रष्टार्थविषय[illegible]कं । अनेन स्वप्नस्यशीघ्रफलदत्वंसूचितं ॥७॥ ती० एतेन लङ्कायामेवरामस्यसीतादर्शनंसूचितं ॥९॥ शि० सीता स्वर्गगङ्गासदृशी । सी[illegible]ता वैदेही। सार्धश्लोकएकान्वयी । एकःसीताशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । " सीता लाङ्गलपद्धतिवैदेहीस्वर्गगङ्गासु[illegible]" इतिमेदिनी ॥ १० ॥ ति० शुक्लमाल्यांबरधरोरामोलक्ष्मणेनसहेहागतइत्यन्वयः । अन्यत्र स्वप्नान्तरे ॥ १६ ॥

[ पा० ] १ घ. ह्न्तेदानीं. २ छ. ज. ञ. भक्षयिष्यामो. ३ ङ. झ. ट. वृद्धाप्रबुद्धा. ४ क. ग. घ. जयायच[illegible] ५ क. ग. ङ.—ट. मुखोद्गतं. ६ ग. घ. ङ. छ. झ. ञ. ट. वाजिसहस्रेण. ७ क. च. छ. ञ. शुक्लांबरधरोवीरो. ८ क.[illegible]ख. ङ. च. ज.—ट. समागतः. ९ ङ. च. छ. झ. ञ. ट. श्वेतपर्वतं. १० ट. यथाप्रभा. ११ ङ. झ. ञ. ट. पुनर्दृष्टः. [illegible]२ ग. ङ. झ. ञ. ट. चकास. च. छ. ज. जगाम. १३ ङ. झ. ट. ततस्तुसूर्यसंकाशौ. क. च. छ. ज. ततस्तु. १४ [illegible]—ट. पाणिभ्यां. १५ इदमर्धद्वयं क. ग.—ट. पाठेषुदृश्यते.

लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् ॥ आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् ॥
उत्तरां दिशमालोक्य[1] जगाम पुरुषोत्तमः ॥ १८ ॥
एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ॥ लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया[2] ॥ १९ ॥
[ साण्डं[3] त्रिभुवनं सर्वं सर्वतः सचराचरम् ॥ सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ॥ २० ॥
क्षीरोदधिजले मध्ये श्वेतः शैलः समुच्छ्रितः ॥ तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ॥
तस्य पृष्ठे स्थितः श्रीमान्रामो राजीवलोचनः ॥ २१ ॥
ततः सीता समुत्पत्य भर्तुरङ्काश्रिता तदा ॥ बाहुभ्यां संपरिष्वज्य संपूर्णं चन्द्रमण्डलम् ॥ २२ ॥
ततोऽन्यत्र मया दृष्टो रामो राजीवलोचनः ॥ आसीनः प्राङ्मुखः श्रीमानासने परमाद्भुते ॥ २३ ॥
अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः ॥ सब्रह्मर्षिगणैः सर्वैः सर्वतीर्थजलेन च ॥ २४ ॥
शुक्लमाल्यांबरधरा शुक्लमाल्यानुलेपना ॥ साधु सा तत्र सुश्रोणी रराज जनकात्मजा ॥ २५ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे ॥ २६ ॥
पुनरेव मया दृष्टो रामो रमयतांवरः ॥ विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ॥ २७ ॥
परं ब्रह्म परं तत्वं परं ज्ञानं परं तपः ॥ परं बीजं परं क्षेत्रं परं कारणकारणम् ॥ २८ ॥
शङ्खचक्रगदः श्रीमान्पुण्डरीकायतेक्षणः ॥ श्रीवत्सवक्षा नित्यश्रीरजेयः शाश्वतो ध्रुवः ॥ २९ ॥
एवंभूतो महातेजा रामः कमललोचनः ॥ सर्वलोकेश्वरः श्रीमान्ससर्ज रघुनन्दनः ॥ ३० ॥

ततोमरेन्द्राः पितरो मुनीन्द्रा गन्धर्वविद्याधरपन्नगेन्द्राः ॥
कृताभिषेकं परिवार्य रामं प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥ ३१ ॥
ततस्तु सर्वाप्सरसः प्रहृष्टा नृत्यन्ति गायन्ति समेत्य तत्र ॥
वाद्यं प्रकुर्वन्ति समेत्य शङ्खा वंशाश्च वीणा मुरजाश्च भेर्यः ॥ ३२ ॥ ]

न[4] हि रामो महातेजाः शक्यो जेतुं सुरासुरैः ॥ राक्षसैर्वाऽपि[5] चान्यैर्वा स्वर्गः पापजनैरिव ॥ ३३ ॥

अयमिह स्वप्नक्रमः । शिबिकास्थितो रामो दृष्टः । श्वेतपर्वतस्था सीता च । ततः शिबिकाया गजमारुह्य लक्ष्मणेन सह पर्वतमभ्येत्य ततस्सीतां गजस्कन्धेधिरोप्य लङ्काया उपरि स्थित्वा ताभ्यां सहाष्टर्षभयुक्तेन रथेनेहागत्य स्वं देशं प्रति ताभ्यां पुष्पकमधिरुह्यागत इति अन्ये श्लोकाः प्रक्षिप्ताः । तेन ते न व्याख्याता इत्याहुः । लक्ष्मणेन सह भ्रात्रेति ॥ एतत्पादस्यानन्तरं, सीतया सह वीर्यवान् ॥ आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् । उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥ एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः । लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ इति पाठक्रमः । विमाने पुष्पके स्थितः । साण्डं त्रिभुवनमित्यारभ्य रामः सत्यपराक्रम इत्यन्तो ग्रन्थः प्रक्षिप्तः प्रकृतासंगतश्च । विष्णुरेव स्वयंभूत्वेति प्रक्षिप्तवचनस्य विष्णुपराक्रम इत्यनेन विरोधात्

ति० अत्रमध्ये 'साण्डंत्रिभुवनं' इत्यादयोबहवःश्लोकाः रामानुजसंप्रदायपुस्तकेषुदृश्यन्ते । तेप्रक्षिप्ताइतिकतकादयोऽन्येच ॥ १९ ॥ स० विष्णुःउपेन्द्ररूपीसन् ॥ २७ ॥ स० तत्स्वरूपंनिरूपयति—**परंब्रह्मेति** । कीदृशंब्रह्म परंतत्वं अत्यन्तानारोपितरूपं । परंज्ञानं उत्तमज्ञानस्वरूपं । परंतपः फलरूपं । परंबीजं अतिशयेननिमित्तकारणं । परंक्षेत्रं मुख्याश्रयः । कारणकारणं प्रकृतिकालादिरूपकारणानामपिकारणं ॥ २८ ॥ नित्यश्रीः अनपायलक्ष्मीवान् । अत्रसाण्डंभुवनमित्याद्येतदन्तंश्लोकजातंप्रक्षिप्तमितिकतकप्रभृतयः । अस्माभिस्तुगङ्गाजलमिश्ररथ्योदकवदुपादेयतयाव्याख्यातं ॥ २९ ॥

[ पा० ] १ ङ. झ. ट. मालोच्यप्रस्थितः. २ घ. च. छ. ज. ञ. वीर्यवान्. ३ साण्डंत्रिभुवनमित्यारभ्यवीणामुरजाश्चभेर्यइत्यन्ताःश्लोकाः च. छ. ज. ञ. पाठेषुदृश्यन्ते. ४ च. छ. ननु. ५ क. च. छ. रक्षसांवापिलोकेन. ग. रक्षसांवापिलोकैर्वा.

रावणश्च मया दृष्टः [१]क्षितौ तैलसमुक्षितः ॥ रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः ॥ ३४ ॥
विमानात्पुष्पकादद्य रावणः [२]पतितो भुवि ॥ कृष्यमाणः स्त्रिया [३]दृष्टो मुण्डः [४]कृष्णाम्बरः पुनः ॥३५॥
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ॥ पिबंस्तैलं हसन्नृत्यन्भ्रान्तचित्ताकुलेन्द्रियः ॥
गर्दभेन ययौ शीघ्रं दक्षिणां दिशमा[५]स्थितः ॥ ३६ ॥
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः ॥ पतितोऽवाक्छिरा भूमौ गर्दभाद्भयमोहितः ॥ ३७ ॥
सहसोत्थाय संभ्रान्तो भयार्तो मदविह्वलः ॥ [६]उन्मत्त इव दिग्वासा दुर्वाक्यं प्रलपन्बहु ॥ ३८ ॥
दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम् ॥ मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः ॥
[ [७]प्रस्थितो दक्षिणामाशां प्रविष्टः कर्दमह्रदम् ] ॥ ३९ ॥
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ॥ काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति ॥ ४० ॥
एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः ॥ रावणस्य सुताः सर्वे [९]दृष्टास्तैलसमुक्षिताः ॥ ४१ ॥
वराहेण दशग्रीवः शिंशुमारेण चेन्द्रजित् ॥ उष्ट्रेण कुम्भकर्णश्च [१०]प्रयातो दक्षिणां दिशम् ॥ ४२ ॥
एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ॥ शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥
शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलङ्कृतः ॥ ४३ ॥
आरुह्य [११]शैलसंकाशं मेघस्तनितनिस्स्वनम् ॥ चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ॥
चतुर्भिः सचिवैः सार्धं [१२]वैहायसमुपस्थितः ॥ ४४ ॥
समाजश्च [१३]मया दृष्टो गीतवादित्रनिःस्वनः ॥ पिबतां रक्तमाल्यानां [१४]रक्षसां रक्तवाससाम् ॥ ४५ ॥
लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा ॥ सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥ ४६ ॥
लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता ॥ दग्धा रामस्य दूतेन वानरेण तरस्विना ॥ ४७ ॥
पीत्वा तैलं [१५]प्रनृत्ताश्च प्रहसन्त्यो महास्वनाः ॥ लङ्कायां [१६]भस्मरूक्षायां [१७]प्रविष्टा राक्षसस्त्रियः ॥ ४८ ॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ॥ रक्तं निवसनं गृह्य प्रविष्टा [१८]गोमयह्रदे ॥ ४९ ॥
अपगच्छत [१९]नश्यध्वं [२०]सीतामाप स राघवः ॥ घातयेत्परमामर्षी [२१]सर्वैः सार्धं हि राक्षसैः ॥
[ [२२]रावणं राघवो घोरे भार्याहर्तारमाहवे ] ॥ ५० ॥

॥ १८—३३ ॥ पिबन्निति । तैलसमुक्षित इत्यनेन तैलमित्युपस्थाप्यते । करवीरकृतस्रज इत्याकारान्तत्वमार्षं । हलन्ताद्वा इत्यापो विधानात् स्रक्छब्दस्याबन्तत्वेन वा निर्वाहः ॥ ३४—४२ ॥ एवं रावणविनाशसूचकमुक्त्वा विभीषणस्य राज्यप्राप्तिसूचकमाह—एकस्तत्र मया दृष्टः श्वेतच्छत्र इत्यादिना ॥ ४३ ॥ वैहायसं विमानं ॥ ४४—४९ ॥ अपगच्छत अपसरत । नश्यध्वं अदर्शनं प्राप्नुत । आत्मनेपद-

**स०** करवीरकृतस्रजइतिरावणविशेषणं । करवीरैः रक्तकरवीरपुष्पैः कृतास्रजामालायस्यसतथा । " टापंचैव " इत्याद्युक्तेः । विमानविशेषणत्वेतु पृथक्साक्षादपशकुनत्वाप्रतीत्यस्वारस्यं । नचनागोजिभट्टेन टापंचैवेत्यादेःशब्देन्दुशेखरेऽनङ्गीकृतत्वेनकथमेतदितिवाच्यं । बहुप्रयोगविप्लवापत्तेःसाहसमात्रंतदित्यवधेयं । रक्तमाल्यानुलेपनइत्युत्तरग्रन्थानुगुण्याच्च ॥ ३४ ॥ **स०** स्त्रियासह मुण्डस्तया कृष्यमाणइत्यन्वयः । सुवासिनीकर्षणस्यहर्षहेतुत्वात् । अतउभयत्रतथाविधतायुक्ता । अपशकुनान्तरलाभाच्च । अथवा स्त्रियानीलवासोदन्तादिमत्या ॥ ३५ ॥

**[ पा० ]** १ ङ. झ. ञ. ट. मुण्डस्तैल. २ ङ. झ. ट. पतितःक्षितौ. ३ झ. ट. मुण्डोदृष्टः. ४ क. च. छ. ज. ञ. कृष्णांबरावृतः. ५ ङ. च. ज.—ट. माश्रितः. ६ ङ. झ. ट. उन्मत्तरूपो. ७ इदमर्धं क. ङ.—ट. पाठेषुदृश्यते. ८ ङ. झ. ट. महाबलः. ९ क. ग.—ट. मुण्डास्तैल. १० क. घ. च. छ. ञ. ट. प्रयातादक्षिणां. ११ घ. ङ. च. ज. ञ. मेघसंकाशं. १२ क. राघवंसमुपस्थितः. १३ झ. ञ. ट. महान्वृत्तो. १४ घ. नर्दतां. १५ क. ङ. छ.—ट. प्रमत्ताश्च. ग. घ. प्रनृत्यन्ति. १६ घ. भस्मदिग्धायां. १७ क. ग.—ट. सर्वाराक्षसयोषितः. १८ क. घ. ङ. झ. ट. गोमयह्रदं. १९ क. घ.—ट. पश्यध्वं. २० ङ. झ. ट. सीतामाप्नोति. ग. सीतांसंप्राप्य. २१ झ. ट. युष्मान्सार्धं. २२ इदमर्धं क. पाठेदृश्यते.

प्रियां बहुमतां भार्यां वनवासमनुव्रताम् ॥ भर्त्सितां तर्जितां वाऽपि नानुमंस्यति राघवः ॥ ५१ ॥
तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् ॥ अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ५२ ॥
यस्यामेवंविधः स्वप्नो दुःखितायां प्रदृश्यते ॥ सा दुःखैर्विविधैर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ॥ ५३ ॥
भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया ॥ राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥ ५४ ॥
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ अलमेषा परित्रातुं राक्षस्यो महतो भयात् ॥ ५५ ॥
अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये ॥ विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ॥ ५६ ॥
छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् ॥ अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ॥ ५७ ॥
अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् ॥ राक्षसेन्द्रविनाशं च विजयं राघवस्य च ॥ ५८ ॥
निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम् ॥ दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् ॥ ५९ ॥
ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः ॥ अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ॥ ६० ॥
करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः ॥ वेपमानः सूचयति राघवं पुरतः स्थितम् ॥ ६१ ॥

पक्षी च शाखानिलयः प्रहृष्टः पुनःपुनश्चोत्तमसान्त्ववादी ॥
सुस्वागतां वाचमुदीरयानः पुनःपुनश्चोदयतीव हृष्टः ॥ ६२ ॥

मार्थ । सीतामाप सीतामचिरेणाप्स्यतीत्यर्थः । सर्वैः राक्षसैस्सार्धं घातयेत् । व इति सिद्धं । अपगच्छत नश्यध्वमित्युक्तेः । रावणमित्यध्याहारो वा ॥ ५० ॥ नानुमंस्यति न सहिष्यत इत्यर्थः ॥ ५१ ॥ अभियाचाम अभयमिति शेषः ॥ ५२—५३ ॥ किं विवक्षया अस्माभिस्तदा भर्त्सिता कथं प्रसन्ना भविष्यतीति वक्तुमिच्छया किं । शङ्का न कर्तव्येत्यर्थः ॥ ५४ ॥ कुत इत्यत आह—प्रणिपातप्रसन्ना हीति ॥ ५५ ॥ स्वप्रदर्शनकथनेन सीतायाः शोभनं भावीत्यभिधाय शरीरलक्षणप्रदर्शनेनापि शुभं भावीत्याह—अपिचेति ॥ लक्षणं दुःखप्राप्तिहेतुभूतं रेखोपरेखादिकं ॥ ५६ ॥ तर्हि कुतस्तादृशदुःखानुभव इत्यत्राह—छायेति ॥ छायावैगुण्यमात्रं उपलक्षय इत्यनुषज्यते । वैहायसं विमानं । उपस्थितां प्राप्तां । दिव्यभोगार्हामिति यावत् । अन्वयस्तु छायावैगुण्यमात्रं तूपलक्षये अतः अदुःखार्हां दिव्यभोगार्हामिमां दुःखं उपस्थितमिति शङ्क इति । अत्र छायावैगुण्यं नाम कान्तिवैकल्यं । "छायात्वनातपेकान्तौ" इत्यमरः । यद्वा छायात्राऽनातपः तद्वैगुण्यं तस्य विषमत्वं । सर्वलक्षणलक्षिताया अपि छायावैगुण्यमेतावद्दुःखकरमासीदिति भावः ॥ ५७—५८ ॥ इदानीं रामवार्ताश्रवणसूचकमाह—निमित्तभूतमिति ॥ चक्षुरिति अदक्षिणमित्येतदत्राप्यनुषज्यते । हृषितो वा हृष्ट इव पुलकित इव । पद्मपत्रमित्यनेन रोगादिदृष्टहेत्वन्तरराहित्यमुक्तं । अकस्मात् दृष्टहेत्वन्तरं विना ॥ ५९—६१ ॥ एवं देहनिमित्तमुक्त्वा शाकुनमप्याह—पक्षीति ॥ पक्षी पिङ्गलिका । शाखानिलयः प्रहृष्टः । पुनःपुनश्चोत्तमसान्त्ववादी भूयोभूयो मधुरवादी । उत्तरोत्तरमुत्तमसान्त्वस्वरवादी वा । सुस्वागतां शोभनबन्ध्वागमनमिति यावत् । "बन्धुस्वस्वजनास्समाः" इत्यमरः । वाचं स्वरमुदीरयानः चोदयतीव रामागमनं कथयतीव । यद्वा पूर्वोक्तराघव एव कर्म । राघवमुपपादयतीवेत्यर्थः । आचार्यास्तु पक्षावस्य स्त इति पक्षी गरुत्मान् । भूम्नि प्रशंसायां च मत्वर्थीयः । तदुक्तम्—"भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने । संसर्गेस्तिविवक्षायां भवन्ति मतुबादयः" इति ॥ तथाच पक्षौ विस्तार्य प्रदक्षिणं सञ्चरन् । शाखानिलयः कुसुमितपल्लवितशाखायां दृढतरं स्थितः ।

ति० किंविवक्षया कुत्सितभर्त्सनादिवचनेच्छया । अलमितिशेषः । तत्रहेतुः राघवादिति ॥ ५४ ॥ ति० सुस्वागतां शोभनस्वागतंप्राप्तिर्यस्यां तादृशींवाचं । चोदयतीव शोभनप्राप्तिंसूचयतीव ॥ ६२ ॥ इतिसप्तविंशःसर्गः ॥ २७ ॥

[ पा० ] १ ङ. झ. ट. वाक्यैश्च. २ क. ग. च. ज.—ट. यस्याह्येवंविधः. घ. यस्यास्त्वेवंविधः. ३ क. ग. च. झ. ञ. ट. दुःखितायाः. ४ क.—ट. दुःखैर्बहुभिः. ५ घ. च. छ. ज. हृषितोबाहुः. ६ ङ. झ. ट. वेपन्कथयतीवास्याः. ७ क. ख. ग. ङ.—ट. शाखानिलयंप्रविष्टः.

आर्द्रतरतरुभाग एव शाखात्वव्यपदेशः । प्रदक्षिणभ्रमणं आर्द्रशाखावरोहणं दृढतरावस्थानं च शुभशंसीत्यर्थः । प्रहृष्टः तत्र फलभोजनादिना सन्तुष्टः । पुनःपुनश्चोत्तमसान्त्ववादी उत्तरोत्तरं सान्त्ववचनं कुर्वन्निव स्थितः । मा शुचः सद्यः समागमिष्यति ते भर्ता नायमवसरश्शोकस्य इत्येवं सान्त्वयन्निव स्थितः । तदुपरि सुस्वागतां वाचमुदीरयानः । एतावन्मात्रं न भवति तस्य संतापातिरेक इति कथयन्निव स्थितः । विरहक्लिष्टायास्सुस्वागतवचनं हि नाम प्रतियोगिनः संतापातिशयकथनमेव । उक्तं हि—" तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव । ग्लपयति यथा शशाङ्कं न तथाहि कुमुद्वितीं दिवसः "इति ॥ पुनः पुनश्चोदयतीव प्रियागमने निश्चिते मज्जनालंकरणादिकं किमर्थं न करोषीत्येवं सीतां चोदयतीवेत्युत्प्रेक्षा । हृष्टः नायिकागमनकालिकहर्षः स्वस्यैवेत्येतद्वैलक्षण्यं हृषिततनूरुहैस्सूचयन्निव स्थितः । इदंहि रामायणमुत्तमं काव्यं । तथाहि—काव्यं तावत्त्रिविधं उत्तमं मध्यममधमं चेति।यत्र वाच्यातिशायिव्यङ्ग्यं तदुत्तमं। सएव ध्वनिरित्युच्यते । यत्र वाच्यानतिशायिव्यङ्ग्यं तन्मध्यमं काव्यं । तदेव गुणीभूतव्यङ्ग्यमित्युच्यते । यत्र व्यङ्ग्यमेव नास्ति तदधमं । तदेव चित्रमित्युच्यते । व्यङ्ग्यं च पदगतं वाक्यगतं प्रबन्धगतं चेति त्रिविधं भवति । एतत्काण्डरूपप्रबन्धेन अनादिभगवत्संबन्धवतश्चेतनस्योज्जीवने प्रवृत्तस्याचार्यस्य प्रवृत्तिरभिव्यज्यते । उक्तश्चायमर्थस्ततो रावणनीताया इति श्लोके । अत्र लङ्कापदेन शरीरं द्योतितं । एकाक्षीप्रभृतय इन्द्रियाणि । रावणकुम्भकर्णावहंकारममकारौ । इन्द्रजित्प्रभृतयः कामक्रोधलोभमोहमदमात्सर्यदम्भादयः ।तादृशलङ्कानिरुद्धसीतासदृशश्चेतनः। तस्य भगवज्ज्ञानोपदेष्ट्राचार्यतुल्यो मारुतिः । तादृशाचार्यलक्षणमनेन श्लोकेन सूच्यते । पक्षी । पक्षिशब्देन गमनसाधनत्वात् ज्ञानकर्मणी उच्येते । तदुक्तं —"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां नियता परमा गतिः " इति । ज्ञानकर्मणोरङ्गाङ्गिभावेनात्र समुच्चयो विवक्षितः । " ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन " इति श्रुतेः । अनेनाचार्यशब्दनिर्वचनमुक्तं । " आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि । स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते " इति ॥ शाखाशब्देन वेदशाखा उच्यन्ते । निलयशब्देन तदेकपरत्वं । त्यागे प्रत्यवायश्रवणात् । तदुक्तं शिक्षायां—" अधीतमपि योवेदं विमुञ्चति नराधमः । भ्रूणहा स तु विज्ञेयो वियोनिमभिगच्छति " इति ॥ किंच निलय इत्यनेन तदर्थविषयकश्रवणमनननिदिध्यासनरूपतदनुष्ठानान्युच्यन्ते । अनेनाचार्यलक्षणमुक्तं । तथाहुः—" आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयश्शुचिः ॥ गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवंलक्षणसंपन्नो गुरुरित्यभिधीयते " इति ॥ प्रहृष्टः सदा संतुष्टहृदयः । अनेन सर्वदा सेवनीयत्वमुक्तं । तथोक्तं —"आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः " इति ॥ पुनःपुनश्चोत्तमसान्त्ववादी । उत्तमः " उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः " इत्युक्तः परमात्मा । तद्विषयं सान्त्वं शिष्येभ्यो वदतीत्युत्तमसान्त्ववादी । "त्वं मेहं मे कुतस्तत्तदपि कुत इदं वेदमूलप्रमाणादेतच्चानादिसिद्धादनुभवविभवात्तर्हि साक्रोश एव । क्वाक्रोशः कस्य गीतादिषु मम विदितः कोत्र साक्षी सुधीस्स्याद्धन्त त्वत्पक्षपाती स इति नृकलहे मृग्यमध्यस्थवत्त्वं " इत्युक्तरीत्या भगवति मनुष्याणां कलहे । " यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः " इति सान्त्ववादशील इत्यर्थः । पुनः पुनरित्यनेन कर्षकः कदाचिन्न फलितमित्येतावता यथा कृषिं न परित्यजति पुनःपुनस्तत्रैव प्रवर्तते । तथाचार्योपि कदाचित्स्ववचनाश्रवणेपि न निवर्तते इत्युक्तं । अनेनाचार्यस्य भगवतोप्यतिशय उक्तः । स हि पार्थाय गीतामुपदिश्य पुनराश्वमेधिके तेन पूर्वोक्तमर्थं विस्मृत्य पुनः पृष्टेनाहं वक्ष्यामीत्युक्तवान् " नूनमश्रद्दधानोसि दुर्मेधाश्चासि पाण्डव " इत्यादिना । किंच सुस्वागतां वाचमुदीरयानः । सुष्ठु संप्रदायाविच्छेदो यथा तथाचार्यपरंपरया स्वस्मै आगतां वाचं अष्टाक्षरादिमन्त्रराजरूपां निर्हेतुक्यैव दयया समूदीरयन् । 'आचार्याणामसावसावित्या भगवत्त' इति गुरुपरम्पराया अनुसन्धेयत्वमनेन सूचितम् । पुनःपुनश्चोदयतीव । उक्तार्थस्यानुष्ठानाय चोदनां दर्शयति । अन्यथा शुष्कदेशोप्यनर्थक एव स्यात् । अत एवाहुर्निगमान्ताचार्याः—स्खालित्ये शासितारमिति । हृष्टः । एतेन शिष्यशि-

[ ततस्सा ह्रीमती बाला भर्तुर्विजयहर्षिता ॥ अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ] ॥ ६३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

## अष्टाविंशः सर्गः ॥ २८ ॥

सीतयारावणराक्षसीगणकृतसंतर्जनाद्यसहिष्णुतयाबहुधाविलापपूर्वकं वेण्युद्बन्धनादसुविमोक्षणनिश्चयेनशिंशुपाशाखावलंबने तदङ्गेष्वनुभूतपूर्वशुभशकुनप्रादुर्भावः ॥ १ ॥

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्ता ॥
सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना[2] गजराजकन्या ॥ १ ॥
सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च ॥
कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ २ ॥
सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः ॥
यत्राहमेवं परिभर्त्स्यमाना जीवामि [3]किंचित्क्षणमप्यपुण्या ॥ ३ ॥
सुखाद्विहीनं बहुदुःखपूर्णमिदं तु नूनं हृदयं स्थिरं मे ॥
[4]विशीर्यते यन्न सहस्रधाऽद्य वज्राहतं शृङ्गमिवाचलस्य ॥ ४ ॥
नैवास्ति [5]दोषं मम नूनमत्र वध्याहमस्याप्रियदर्शनस्य ॥
भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥ ५ ॥
नूनं ममाङ्गान्यचिरादनार्यः [6]शस्त्रैः शितैश्छेत्स्यति राक्षसेन्द्रः ॥
तस्मिन्ननागच्छति लोकनाथे गर्भस्थजन्तोरिव शल्यकृन्तः ॥ ६ ॥

---

क्षणं स्वप्रयोजनमाचार्यस्येत्युक्तम् ॥ ६२-६३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

---

यत्र येन । किंचिज्जीवामि कुत्सितं जीवामि ॥ ३—४ ॥ नन्वात्महनने महान्दोषः स्यादित्याशङ्क्याह —नैवेति ॥ दोषं दोषः । आर्षं नपुंसकं । अत्र आत्महनने कथमदोष इत्याशङ्क्य रावणकृतान्मरणादात्मनैव मरणं श्रेय इत्याह—वध्येति । अप्रियदर्शनस्य अस्य रावणस्य । दुर्मरणत्वाविशेषेपि दुष्टराक्षसेन मरणमतिकष्टमितिभावः । तर्हि तदनुप्रवेशेनात्मा रक्ष्यतां "सर्वत आत्मानं गोपायेत्" इति श्रुतेरित्याशङ्क्याह—भावमिति । अस्य अस्मिन्रावणे । भावं हृदयं अनुप्रदातुं नालं न शक्ता । रामस्वत्वादस्य न ह्यन्यस्य स्वमन्योन्यस्मै दातुमर्हतीति भावः । अनर्हश्चायं भावोन्यप्रदानस्येत्यमुमर्थं दृष्टान्तमुखेनाह —द्विज इति । मन्त्रं वेदं । अद्विजाय शूद्राय ॥ ५ ॥ अनागच्छति मासद्वयादर्वागिति शेषः । गर्भस्थजन्तोः निरुद्धनिर्गमस्य गर्भस्थजन्तोः । शल्यकृन्तः

---

स० तद्वक्त्रः प्रातराशायकुरुतेत्यादिरूपंवचः । अप्रियार्ता उत्तरत्रकिंभविष्यतीतिभाव्यप्रियेणार्ता ॥ १ ॥ स० विसृष्टा मात्रादिभिर्नैर्घृण्यादिनाशकुन्तलादिवत्त्यक्ता ॥ २ ॥ स० यत्र अस्यां दुर्दशायां । अपुण्या शीघ्रमरणप्रापकपुण्यरहिता ॥ ३ ॥ ति० नन्वात्मघातेऽतिदोषात्सोयुक्तइत्याशङ्क्य सत्यंविचित्रवधाद्बिभेमीत्याह—**तस्मिन्निति**। तस्मिन्रामे अनागच्छतिसति ममाङ्गानि जीवन्त्याएवछेत्स्यन्ति । निरुद्धायाविशसनेदृष्टान्तः **गर्भेति** । शल्यं शस्त्रं तेनकृणत्तीतिशल्यकृन्तः आंबष्टवैद्यः । आर्षत्वात्साधु । सयथागर्भस्थजन्तुंव्याधिरूपंजीवन्तंकृणत्ति तद्वत् ॥ एतच्छ्लोकद्वयंकतकेनेत्थंव्याख्यातं—अन्यायप्राप्तवधेपिममदोषोनेत्याह—**नैवेति** । यद्यप्यस्याहंवध्याभवामि । ममदोषोन । एवंभावाप्रदानेनपातिव्रत्यरक्षणात्सर्वदोषनिस्तारइत्यर्थः । किंचमरणप्राप्तिःपाक्षि-

[ पा० ] १ अयंश्लोकः. ङ—ट. पाठेषुदृश्यते. २ क. झ. सिंहाविपन्ना. ३ क. ङ. झ. यस्मात्क्षणं. ४ क. घ.—ट. विदीर्यते. ५ क. ग. ङ.—ट. नूनंममदोषं. ६ ङ. झ. ञ. ट. शरैःशितैः.

दुःखं बतेदं मम दुःखिताया मासौ चिराधाधिगमिष्यतो द्वौ ॥
बद्धस्य वध्यस्य तथा निशान्ते राजापराधादिव तस्करस्य ॥ ७ ॥
हा राम हा लक्ष्मण हा सुमित्रे हा राममातः सह मे जनन्या ॥
एषा विपद्याम्यहमल्पभाग्या महार्णवे नौरिव मूढवाता ॥ ८ ॥
तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ॥
नूनं विशस्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥ ९ ॥
नूनं स कालो मृगरूपधारी मामल्पभाग्यां लुलुभे तदानीम् ॥
यत्रार्यपुत्रं विससर्ज मूढा रामानुजं लक्ष्मणपूर्वजं च ॥ १० ॥
हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र ॥
हा जीवलोकस्य हितः प्रियश्च वध्यां न मां वेत्सि हि राक्षसानाम् ॥ ११ ॥
अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे ॥
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥ १२ ॥

नापितः ॥ ६ ॥ चिरायदुःखिताया मम द्वौ मासौ वधस्यावधिभूतौ अधिगमिष्यतः । इदं दुःखं बत । कस्य दुःखमिव । राजापराधात् बद्धस्य तथा निशान्ते वध्यस्य तस्करस्येव दुःखं । यथेति पाठे इवशब्दो वाक्यालंकारे ॥ ७ ॥ मूढो वात्यारूपो वातो यस्यास्सा मूढवाता । वात्याहतेत्यर्थः । "मूढस्तन्द्रितवात्ययोः" इतिविश्वः ॥८॥ मृगस्य रूपं धारयता सत्त्वेन जन्तुना । मम कारणात् मन्निमित्तं । विशस्तौ हिंसितौ । द्वौ सिंहर्षभाविव द्वौ सिंहाविव द्वौ वृषभाविवेत्यर्थः । वैद्युतेन अशनिना ॥९॥ लुलुभे प्रलोभयामास । यत्र यस्मिन्काले । विससर्जेति सृजेर्लिड्युत्तमपुरुषैकवचनं । रामानुजं लक्ष्मणपूर्वजं च । परस्परस्य सदृशाविस्युक्तपरस्परसादृश्यात् । बाल्यात्प्रभृति सुस्निग्धतया च परस्परनिरूपकभूतौ ॥ १०—११ ॥ अनन्यदेवत्वं आश्रयणीया देवतान्यास्ति सा रक्षिष्यतीति बुद्धिर्मे नास्ति । "नारायणमुपागमत्" इत्यत्राप्यप्राधान्येन सह पत्न्येति ह्युक्तं । नारायणमाराधयतो रामस्यपरिचारिकास्मीत्यर्थः । इयं क्षमा च । रावणपरुषाक्षराणि राक्षसीनां तर्जनभर्त्सनादीनि राममधुरालापश्रवणकुतूहलेन ह्यहं क्षान्तवती । भूमौ च शय्या । तवाङ्के समुपाविशमित्येवंविधभोगःकदाचिदपि किं सेत्स्यतीत्याशया हि मया भूमौ शयनं क्रियते । नियमश्च धर्मे । रक्षकलत्रधर्मोपि तस्मिन्नेवेति मनीषया हि मया स्थितं । "न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा" इत्युक्तिरपि तं दृष्ट्वैव । पतिव्रतात्वं एतद्व्रतं ममेत्युक्तं व्रतं विना मम किञ्चिद्व्रतं नास्तीत्यर्थः । पत्युर्व्रतमेव व्रतं यस्यास्सा पतिव्रता तस्या भावः पतिव्रतात्वं । विफलं ममेदं अमोघमपि मोघमासीत् । कस्येवेति चेत्तत्राह—कृतं कृतघ्नेष्विव मानुषाणां । "आत्मानं मानुषं मन्ये" इत्युक्तरीत्या मानुषत्वं रामस्याप्यस्ति । अतस्तदितरमानुषाणां मध्ये कृतघ्नेषु कृतं कार्यमिव । अस्य किं मूलमिति चेत्

कीत्याह—**तस्मिन्निति** । अनागच्छत्येववधप्रसक्तिर्नान्यथेतिभावः । अनागमनपक्षेप्राप्तविशसनेदृष्टान्तः **गर्भस्येति** ॥ ६ ॥ **ति०** चिरायभर्तृवियोगदुःखितायामेइदंविशसनदुःखमपिबतागमिष्यति । यतोद्वौमासौविशसनावधिभूतौकतिपयदिनावधिकावप्यभिगमिष्यतः शीघ्रंगमिष्यतःकिल । तत्रवधप्राप्तौदृष्टान्तः बद्धस्येति । तस्करस्यवधइवेतिशेषः । **स०** दुःखितायामम । द्वौमासौ यद्यपि चिरायबहुव्यवधानरूपौ । तथापि ममदुर्दैववशात्तावभिगमिष्यतः शीघ्रमागमिष्यतः ॥ ७ ॥ **स०** मूढाऽहंविससर्जेत्यन्वयः । प्रलापकालत्वाल्लिट्संभवति 'सुप्तोऽहंकिलविललाप' 'बहुजगदपुरस्तात्तस्यमत्ताकिलाऽहं' इत्यादिवत् **ति०** अहंविससर्ज अपरोक्षेपिचित्तविक्षेपादिनापारोक्ष्यमारोप्यलिट् ॥ १० ॥ **ति०** हारामेत्यादौ हेराममांहा अहंशोचेइत्यर्थः । हाजीवममप्राणरूप । हितो हितकरः प्रियश्चेत्यस्य त्वमितिशेषः ॥ ११ ॥ **ति०** धर्मोरक्षतीतिसर्वाविवादसिद्धमपिमांप्रतिनिष्फलमित्याह—अनन्यदेवत्वमिति । पत्येकदेवत्वमित्यर्थः । इयंक्षमा शापेनसंहारशक्तावप्येवंपीडासहनरूपा । पत्यतिरिक्तेकामासक्तिराहित्यं पतिव्रतात्वं । कृतं

[ पा० ] १ क.—घ. च.—ट. यथा. २ ङ. झ. ट. जनन्यः. ३ च. छ. मन्दवाता. ४ ङ. झ. ञ. ट. यत्रार्यपुत्रौ.

[1]मोघो हि धर्मश्चरितो मयाऽयं तथैकपत्नीत्वमिदं [2]निरर्थम् ॥
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया संगमने निराशा ॥ १३ ॥
पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ॥
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं [3]रंस्यसे वीतभयः कृतार्थः ॥ १४ ॥
अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ॥
मोघं चरित्वाऽथ तपो व्रतं च त्यक्ष्यामि धिग्जीवित[4]मल्पभाग्या ॥ १५ ॥
सा [5]जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वाऽपि ॥
विषस्य दाता न हि मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य ॥ १६ ॥
इतीव [6]देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती ॥
प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥ १७ ॥
शोकाभितप्ता बहुधा विचिन्त्य सीताऽथ [7]वेण्युद्ग्रथनं गृहीत्वा ॥
उद्बध्य वेण्युद्ग्रथनेन शीघ्रमहं गमिष्यामि यमस्य मूलम् ॥ १८ ॥
उपस्थिता सा मृदु[8]सर्वगात्रा शाखां गृहीत्वाऽथ नगस्य तस्य ॥ १९ ॥
तस्यास्तु रामं [9]प्रविचिन्तयन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्याः ॥
[10]शोकानिमित्तानि तथा बहूनि धैर्यार्जितानि प्रवराणि लोके ॥
प्रादुर्निमित्तानि तदा बभूवुः पुराऽपि सिद्धान्युपलक्षितानि ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

ममेदं तस्मिन्न काचिन्न्यूनता । ममैव दुष्कृतमत्र हेतुः ॥ १२—१३ ॥ पितुर्निदेशं आज्ञां नियमेन अविच्छेदेन कृत्वा चरितव्रतः चरितवन्यवृत्तिव्रतः वनान्निवृत्तश्च सन् । स्त्रीभिस्तु मत्तोपि विलक्षणाभिः स्त्रीभिः त्वं रंस्यसे । वीतभयः गतवनवासभयः । कृतार्थः निष्पन्नसर्वपुरुषार्थः। मद्विनाशेन पुनर्बह्वीरूढ्वा रंस्यस इति भावः ॥ १४ ॥ त्वयि जातकामा अतएव त्वयि निबद्धभावा निबद्धहृदया । विनाशाय त्वयि निबद्धभावेति दुःखातिरेकोक्तिः। तपः अनशनं। व्रतं नियमं । अल्पभाग्या जन्मान्तरसुकृतरहिता । इदानीमनुष्ठितानां तपोव्रतादीनां जन्मान्तरफलत्वेन मोघत्वोक्तिः । अतएवाल्पभाग्येत्युक्तं ॥ १५ ॥ वेश्मनि राक्षसस्य । एवं सम्यञ्चरणकारी क्रूरस्यास्य गृहे कथं लभ्येतेति भावः ॥ १६ ॥ वेण्युद्ग्रथनं वेणीबन्धनं । यमस्य मूलं यमस्य समीपं । अत्रेतिकरणं बोध्यं । इति विचिन्त्य नगोत्तमां शिंशुपामाससाद। शिंशुपां तामुपागमदिति पूर्वमुक्तं । तस्य सामीप्येन गमनमद्योच्यते । पुष्पितं शुभसूचनं। यद्वा पुष्पितमाससाद अग्निप्रवेशं कुर्वन्तीवेत्यर्थः ॥ १७—१८ ॥ उपस्थितेत्यर्धमेकं वाक्यं ॥ नगस्य शाखां गृहीत्वा उपस्थिता ॥ १९ ॥ स्वं च कुलं विचिन्तयन्त्या इत्यनेन दुर्मरणाद्भीतत्वं व्यज्यते । शोकानिमित्तानि शुभसूचकानीत्यर्थः । धैर्यार्जितानि आर्जितधैर्याणि । धैर्यकराणीत्यर्थः । लोके प्रवराणि लोके प्रसिद्धानीत्यर्थः । प्रवरं हि प्रसिद्धं भवति । प्रादुर्बभूवुरित्यन्वयः । पुरापि सिद्धान्युपलक्षितानि पूर्वमपि फलव्याप्तत्वेन दृष्टानि । तान्युत्तरसर्गे विवरिष्यति ॥ २० ॥ इति श्रीगोविन्दराजविरचिते

---

उपकृतं ॥ १२ ॥ ति० वेश्मनिराक्षसस्येत्येतदनन्तरंइतीवदेवीत्यादिरेकःश्लोकःप्रक्षिप्तः ॥ १६ ॥ वि० शोकाभितप्तेत्यादिसार्धश्लोकमेकंवाक्यं । शोकाभितप्तासीताबहुधाविचिन्त्यवेण्युद्ग्रथनंगृहीत्वा वेण्युद्ग्रथनेनउद्बध्य उद्बंधनंकृत्वायमस्यमूलंसमीपंगमिष्यामीतिनगस्यशाखांगृहीत्वाउपस्थिताअवस्थितेतिसंबन्धः ॥१८॥ ति० विशोकानि विशोककराणि ॥ २० ॥ अष्टाविंशःसर्गः ॥ २८ ॥

[ पा० ] १ क. ग.—ट. मोघंहि. २ ग. घ. ङ. झ. ट. निरर्थकं. ३ क. ङ.—ट. स्संरस्यसे. ४ ङ. झ. ट. मल्पभाग्यां. ५ ङ. झ. ट. संजीवितं. ६ क. ख. ग. सीता. ७ झ. ट. वेणीग्रथनं. ८ क. ख. ग. ङ.—ट. सर्वगात्री. ९ ङ. झ. ञ. ट. परिचिन्तयित्वा. १० ङ. झ, तस्याविशोकानितदा. क. ग. शोकापनोदानितदा.

# एकोनत्रिंशः सर्गः ॥ २९ ॥

ग्रन्थकृता विशिष्यसीतायाःशुभशकुनप्रतिपादनम् ॥ १ ॥ सीतया शुभशकुनानांपुरोपलब्धफलकशकुनसाजात्याच्छुभफलावश्यंभावनिर्धारणेन हर्षाधिगमः ॥ २ ॥

तथागतां तां व्यथितामनिन्दितां व्यपेतहर्षां परिदीनमानसाम् ॥
शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपजीविनः ॥ १ ॥
तस्याः शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम् ॥
प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम् ॥ २ ॥
भुजश्च चार्वञ्चितपीनवृत्तः परार्ध्यकालागरुचन्दनार्हः ॥
अनुत्तमेनाध्युषितः प्रियेण चिरेण वामः समवेपताशु ॥ ३ ॥
गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोः संहतयोः सुजातः ॥
प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात्स्थितमाचचक्षे ॥ ४ ॥
शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवामलाक्ष्याः ॥
वासस्स्थितायाः शिखराग्रदत्याः किंचित्परिस्रंसत चारुगात्र्याः ॥ ५ ॥

श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

---

तथागतां रहस्यं च प्रकाशं चेत्युक्तरीत्या सर्वं यथावत्साक्षात्कृतवतो मुनेरपि तथाशब्दप्रयोगादित्थमिति परिच्छिद्य वक्तुमशक्यदुःखां । तां धर्मिस्वरूपातिरिक्तयत्किंचिदतिशयरहितां । व्यथितां । "आशंसायां भूतवच्च" इति निष्ठा । तथाच पूर्वोक्तं सर्वं धर्मिस्वरूपमात्रं । इतःपरमेव व्यसनानि भविष्यन्तीति मन्यमानां । "समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी" इत्युक्तं भोगजातं सर्वमकिंचित्करमासीत् । दुःखमेव निरूपकमासीत् । अनिन्दितां रामविरहे यथा स्थातव्यं तथा स्थितां । एवमनवस्थाने निन्दितैव भवति । व्यपेतहर्षां हर्षः पूर्वमस्यां वसित्वा गत इति न ज्ञातामित्यर्थः । व्यपाभ्यामुपसर्गाभ्यां तथा प्रतीयते । परिदीनमानसां हर्षे समागतेप्याश्रयरहितां । परीत्यनेनतथाऽवगम्यते । शुभां गुणाधिकविषयविरहकृतविकृतित्वेन तद्दशाया एव नीराजना कर्तव्येत्येवंस्थितां । निमित्तानि शुभानि भेजिरे । निमित्तानि तद्विषये शुभानि सूचयित्वा स्वसत्तां लेभिरे । नरं श्रिया जुष्टमिवोपजीविनः । अर्थिनो हि लक्ष्मीकटाक्षवद्विषये किंचित्कृत्य स्वप्रयोजनं लभन्ते । इमानि तु साक्षाल्लक्ष्मीविषये किंचित्कृत्य निमित्तस्वामित्वं लेभिर इत्यर्थः ॥ १ ॥ शुभनिमित्तान्येवाह—तस्या इत्यादिना ॥ अरालं वक्रं । कृष्णविशालशुक्लं मध्ये कनीनिकायां कृष्णं सर्वतो विशालं शुभ्रं च । अभिताम्रं अभितस्ताम्रं । प्रान्तरक्तमित्यर्थः । "प्रान्तरक्ते च नेत्रे" इति पद्मिनीलक्षणात् ॥ २—३ ॥ तयोः सुलक्षणवत्तया प्रसिद्धयोः ऊरुः वाम इत्यनुषज्यते । सुजातः सुन्दरः ॥ ४ ॥ शिखराग्रदत्याः वृत्ताग्रदन्तयुक्तायाः । "शिखरं निस्तुलं वृत्तं" इत्युत्पलमाला । शिखरं दाडिमफलबीजमित्यन्ये नैघण्टुकाः । यद्वा शिखराकाराग्रदन्तायाः "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" इति दन्तस्य दत्रादेशः । वासः वस्त्रं । परिस्रंसत पर्यस्रंसत । अडभाव आर्षः । ऊरुकम्पा-

स० उपसेविनः योगविभागाददन्तादिनिः । उपसेवितुंशीलमेषामित्यर्थे "सुप्यजातौ" इतिणिनिः ॥ १ ॥ स० संहतयोः मांसलत्वेनश्लिष्टयोः । तयोरूर्वोर्मध्ये ऊरुःप्रस्पन्दमानः रामंपुरस्स्थितमाचचक्षे । शकुनप्रस्तावाद्वामइत्यनुक्तावप्येकवचनेनैकइति प्रतीयते । सचमानान्तरेणवामएवेत्यवसेयं ॥ ४ ॥ ति० शिखरं दाडिमबीजं तदग्रतुल्यदन्त्याः । "शिखरंशैलवृक्षाग्रेकक्षाग्र-

[ पा० ] १ घ. पुरापिसिद्धानि. २ ङ. झ. ट. जुष्टमिवोपसेविनः. ३ ङ. झ. ट. राज्यावृतं. ४ ग. शुभाङ्ग्याः. ५ ङ. —ट. वृत्तपीनः. ६ च. छ. ज. ञ. संगतयोः. झ. संहतयोस्तु. ७ ङ. झ. मिवातुलाक्ष्याः. ८ क. परिस्पन्दत.

एतैर्निमित्तैरपरैश्च सुभ्रूः संबोधिता प्रागपि साधु सिद्धैः ॥
वातातपक्लान्तमिव प्रनष्टं वर्षेण बीजं प्रतिसंजहर्ष ॥ ६ ॥
तस्याः पुनर्बिम्बफलाधरोष्ठं स्वक्षिभ्रु केशान्तमरालपक्ष्म ॥
वक्त्रं बभासे सितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७ ॥
सा वीतशोका व्यपनीततन्द्री शान्तज्वरा हर्षविबुद्धसत्त्वा ॥
अशोभतार्या वदनेन शुक्ले शीतांशुना रात्रिरिवोदितेन ॥ ८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

## त्रिंशः सर्गः ॥ ३० ॥

शिंशुपाग्रावस्थानेनैवनिखिलसीतावृत्तान्तमवगतवताहनुमता सीतायाआश्वासनानाश्वासनपक्षयोर्गुणदोषविमर्शनपूर्वकं समुचितसमयेसमाश्वासननिर्धारणम् ॥ १ ॥

हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः ॥ सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥ १ ॥
अवेक्षमाणस्तां देवीं देवतामिव नन्दने ॥ ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २ ॥
यां कपीनां सहस्राणि सुबहून्ययुतानि च ॥ दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३ ॥
चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता ॥ गूढेन चरता तावदवेक्षितमिदं मया ॥ ४ ॥

---

दिति भावः । स्थितायाः तिष्ठन्त्या इति वस्त्रस्रंसनानुगुणावस्थोक्तिः । यद्वा वासस्स्रंसनं कान्तागमनसूचकमिति भावः । शिखरदन्तत्वे सामुद्रिकम्— "स्निग्धास्समानुरूपास्सुपङ्क्तयः शिखरिणः श्लक्ष्णाः । दन्ता भवन्ति यासां तासां पादे जगत्सर्वं " इति ॥ "यासां शिखरिणो दन्ता दीर्घं जीवन्ति ताः स्त्रियः " इति च ॥ ५ ॥ अपरैः पूर्वोक्तशकुनैः । संबोधिता सद्यः कान्तागमवार्ता भविष्यतीति बोधिता । वातातपक्लान्तं सम्यग्वातातपसंशोषितं । प्रनष्टं भूमावदर्शनं गतं । यद्वा प्रनष्टं प्रकर्षेण कृशीभूतं । बीजं वर्षेणेव प्रतिसंजहर्ष । बीजस्य प्रहर्षो नाम अङ्कुरादिभावेन स्थूलीभूय बहिर्निर्गमः ॥ ६ ॥ स्वक्षिभ्रु शोभनाक्षिभ्रूयुक्तं । केशाः अन्ते यस्य तत् केशान्तं । उपरिभागप्रकीर्णालकमित्यर्थः । सितशुक्लदंष्ट्रं अत्यन्तशुक्लदन्तं । एकार्थे शब्दद्वयप्रयोगोतिशयज्ञापनाय । यथा मुग्धमनोज्ञ इति । नीरन्ध्रत्वेन संसक्तशुक्लदंष्ट्रमिति वार्थः । " षिञ् बन्धने " इत्यस्माद्धातोर्निष्ठा ॥ ७ ॥ व्यपनीततन्द्री निरस्तजाड्या । हर्षविवृद्धसत्वा हर्षविकसितचित्ता । शुक्ले शुक्लपक्षे ॥ ८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनत्रिंशस्सर्गः ॥ २९ ॥

---

विक्रान्तः पराक्रमशाली । सीतायास्त्रिजटायाश्च सर्वं सर्ववृत्तान्तं । तर्जनं तर्जनवचनं ॥ १ ॥ चिन्तां चिन्तयामास चिन्तां चकार ॥ २ ॥ यामिति सर्ववानराभिलषितोर्थो मयैकेन लब्ध इति विस्मितवान् ॥ ३ ॥ इदं वक्ष्यमाणं । तावत् कार्त्स्न्येन

---

गृहकोटिषु । पक्वेदाडिमबीजेच " इतिविश्वः ॥ ५ ॥ ति० सितशुक्लदंष्ट्रं स्फटिकादिसितपदार्थवच्छुक्लादंष्ट्रायत्रतत् । ती० सितशुक्लदंष्ट्रं पङ्क्तिबद्धधवलदन्तमित्यर्थः ॥ ७ ॥ इत्येकोनत्रिंशःसर्गः ॥ २९ ॥

ती० विश्रान्तः विगतव्यापारः ॥ स० सीतायागर्जितं विलापरूपं । त्रिजटायास्स्वप्नकथनरूपं । राक्षसीनांसीतातर्जनरूपमितिविवेकः ॥ १ ॥ स० चिन्तां चिन्तनीयं । चिन्तयामास । देवींतां चिन्तां तदीयचिन्तांचावेक्षमाणश्चिन्तयामासेत्यन्वयोवा

[ पा० ] १ ङ—ट. संचोदिता. २ क. ङ.—ट. फलोपमोष्ठं. ३ क. शुक्लदन्तं. ४ ङ.—ट. तन्द्रा. ५ क. ख. ग. ङ. झ. ञ. ट. विबुद्धसत्त्वा. ६ क. घ. ङ. झ. ञ. ट. विक्रान्तः. ७ ङ. झ. राक्षसानां. ८ च. छ. ञ. ट. तर्जितं. ङ. झ. गर्जितं.

राक्षसानां विशेषश्च पुरी चे[1]यमवेक्षिता ॥ राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५ ॥
[2]युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः ॥ समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥ ६ ॥
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ॥ अदृष्टदुःखां दुः[3]खार्तां दुःखस्यान्तमगच्छतीम् ॥ ७ ॥
[4]यद्यप्यहमिमां देवीं शोकोपहतचेतनाम् ॥ अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ ८ ॥
गते हि मयि तत्रेयं राजपुत्री यशस्विनी ॥ परित्राणम[5]विन्दन्ती जानकी जीवितं त्यजेत् ॥ ९ ॥
[6]मया च स महाबाहुः पूर्णचन्द्रनिभाननः ॥ समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ १० ॥
निशाचरीणां प्रत्यक्ष[7]मनर्हं चापि भाषणम् ॥ कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ ११ ॥
अनेन रात्रिशेषेण यदि नाश्वास्यते मया ॥ सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ १२ ॥
रामश्च यदि पृच्छेन्मां किं मां सीताऽब्रवीद्वचः ॥ किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमाम् ॥ १३ ॥
सीतासंदेशरहितं मामितस्त्वरया गतम् ॥ निर्दहेदपि काकुत्स्थः क्रु[8]द्धस्तीव्रेण चक्षुषा ॥ १४ ॥
यदि [9]चोद्योजयिष्यामि [10]भर्तारं रामकारणात् ॥ व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५ ॥
अन्तरं त्वहमासाद्य राक्षसीनामि[11]हं स्थितः ॥ शनै[12]राश्वासयिष्यामि सन्तापबहुलामिमाम् ॥ १६ ॥
अ[13]हं ह्यतितनुश्चैव वानरश्च विशेषतः ॥ वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७ ॥
यदि वाचं [14]प्रदास्यामि द्विजातिरिव संस्कृताम् ॥ रावणं मन्यमाना मां सीता भीता भविष्यति ॥
वानरस्य विशेषेण कथं स्यादभिभाषणम् ॥ १८ ॥
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ॥ मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥ १९ ॥

॥ ४—५ ॥ समाश्वासयितुं युक्तं न्याय्यं ॥ ६ ॥ आश्वासयामि " वर्तमानसामीप्ये वर्तमानवद्वा " इति लट् ॥ ७—८ ॥ दोषवत्त्वमुपपादयति—गते हीति ॥ ९ ॥ समाश्वासयितुं न्याय्यः सीतासंदेशकथनेनेति शेषः ॥ १०—१२ ॥ सीताब्रवीद्वच इत्यत्रेतिकरणं द्रष्टव्यं ॥ १३—१४ ॥ भर्तारं सुग्रीवं । व्यर्थं अनाश्वास्य गमने तदागमनपर्यन्तं देव्याः प्राणानवस्थानादिति भावः ॥१५॥ राक्षसीनां अन्तरं अवकाशं विच्छेदं वा राक्षस्यसन्निधानसमयमित्यर्थः ॥ १६ ॥ अतितनुः अतिसूक्ष्मतनुः । संस्कृतां प्रयोगसौष्ठवलक्षणसंस्कारयुक्तां ॥ १७ ॥ गीर्वाणभाषया व्यवहारे दोषमाह—यदीति ॥ १८॥ अथमानु-

॥२॥ ति० राक्षसानांविशेषः तारतम्यमैश्वर्यादिकृतं ॥५॥ ति० अप्रमेयस्य अपरिच्छेद्यस्वरूपस्यापरिच्छेद्यगुणस्यच ॥ स० सर्वसत्वदयावतइति । सर्वेअरिहिंसाविषयेसत्ववान् बलवांश्चासौदयावांश्चतस्य । सर्वबलवान्सर्वदयावांस्तस्येतिवा सर्वे प्राणिषुदयावांस्तस्येतिवा । समाश्वासयितुं मयायुक्तमितिशेषः ॥६॥ स० आश्वासयामीतिवर्तमानसामीप्याल्लृडर्थेलट् । अथवा कि[illegible]प्रबन्धेलडित्युक्तेर्धात्वर्थमात्रेलड्वन्योग्येऽर्थेलृडर्थेभविष्यतीतिलटउपपत्तेः । अन्तं पारं । नाधिगच्छन्ती । यद्वा दुःखस्य कर्म[illegible]षष्ठी । दुःखं नश्यन्तंबध्नन्तं क्षणेक्षणेदुःखंनूतनयन्तमितियावत् । तंरावणं प्रकारंवा । अधिगच्छतीं प्राप्नुवन्तीं । रामाश्वासनपर[illegible]याशेषेणचार्थोपयतस्तीर्थस्योत्तरश्लोकइव इतरेषांतदुत्तरश्लोकःसाधकइत्युभयव्याकरणे समूले इतिज्ञेयं ॥ ७ ॥ स० यद्यपिराव[illegible]णमरणेनदेवताप्रयोजनंभविष्यतीति नसर्वात्मनावैयर्थ्यं । तथापि सीतावाप्तिरूपैहिकफलालाभाद्वैयर्थ्यमेवेतिभावः ॥१५॥ ति० [illegible]मानुषीं मनुष्यशरीरसाध्यां । संस्कृतां व्याकरणसंस्कारवतीं ॥ स० वाचंचोदाहर्तव्यांविकल्प्यैकांनिश्चिनोति—अहंहीति । मानु[illegible]षींसंस्कृतांवा वाचं । संस्कृतायाविकल्पकोटौप्रथमतोनिर्देशस्यमुख्यत्वेनन्याय्यत्वेपि मानुष्याएवभाषायाःसीतयासहभाष्यत्वेन[illegible]निर्धार्यमाणत्वात् तस्याएवादौनिवेशोयुक्तइतिनानौचिती ॥ १७ ॥ स० सीताभीतेति । रावणस्यविश्रवस्सुतत्वेनगीर्वाणवाणीत[illegible]तद्भ्रमःसंभा-

[ पा० ] १ ङ. झ. ट. चेयंनिरीक्षिता. २ ङ. झ. ट. यथा. ३ झ. दुःखस्यनद्यन्तमधिगच्छतीं. ४ [illegible] ङ. झ. ट. यदिह्यहंसतीमेनां. क. घ. च. छ. ज. ञ. यदिह्यहमिमामेवं. ५ ङ.—ट. मपश्यन्ती. क. ग. मजानन्ती. ६ ङ. झ. [illegible]ट. यथाच. ७ क. ग. घ. च. छ. ज. ञ. मक्षमंचापि. ङ. झ. ट. मक्षमंचाभिभाषितं. ८ ङ. झ. ट. क्रोधतीव्रेण. च. [illegible]. ज. ञ. कुपितस्तीक्ष्णचक्षुषा. ९ ङ. झ. ञ. ट. वोद्योजयिष्यामि. १० क. ग. घ. सुग्रीवं. ११ झ. ट. मवस्थितः १२ [illegible]. झ. ट. राश्वासयाम्यद्य. १३ क. ख. ग. ङ.—ट. ह्यतितनुः. १४ ञ. ट. प्रवक्ष्यामि.

सेयमालोक्य मे रूपं जानकी भाषितं तथा ॥ रक्षोभिस्[1]त्रासिता पूर्वं भूयस्त्रासं गमिष्यति ॥ २० ॥
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ॥ [2]जानमाना विशालाक्षी रावणं कामरूपिणम् ॥ २१ ॥
सीतया च कृते शब्दे सहसा राक्षसीगणः ॥ नानाप्रहरणो घोरः समेयादन्तकोपमः ॥ २२ ॥
ततो मां संपरिक्षिप्य सर्वतो विकृताननाः ॥ वधे च ग्रहणे चैव कुर्युर्यत्नं [3]यथाबलम् ॥ २३ ॥
[4]गृह्य शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् ॥ [5]दृष्ट्वा विपरिधावन्तं [6]भवेयुर्भयशङ्किताः ॥२४॥
मम रूपं च संप्रेक्ष्य वने विचरतो महत् ॥ राक्षस्यो भयवित्रस्ता भवेयुर्[7]विकृताननाः ॥ २५ ॥
ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि ॥ राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ॥ २६ ॥
ते [8]शूलशक्तिनिस्त्रिंशविविधायुधपाणयः ॥ आपतेयुर्विमर्देऽस्मिन्[9]वेगेनोद्विग्नकारिणः ॥ २७ ॥
[10]संरुद्धैस्तैः सुपरितो विधमन्[11]रक्षसां बलम् ॥ शक्नुयां न तु संप्राप्तुं परं पारं महोदधेः ॥ २८ ॥
मां वा [12]गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः ॥ स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ॥ २९ ॥
हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् ॥ विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ॥ ३० ॥
उद्देशे नष्टमार्गेऽस्मिन्राक्षसैः परिवारिते ॥ सागरेण परिक्षिप्ते गुप्ते वसति जानकी ॥ ३१ ॥
विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे ॥ नान्यं पश्यामि रामस्य [13]साहाय्यं कार्यसाधने ॥ ३२ ॥
विमृशंश्च न पश्यामि यो हते मयि वानरः ॥ शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ॥ ३३ ॥
कामं हन्तुं समर्थोस्मि सहस्राण्यपि रक्षसाम् ॥ न तु [14]शक्ष्यामि संप्राप्तुं परं पारं महोदधेः ॥ ३४ ॥
असत्यानि च युद्धानि संशयो मे न रोचते ॥ कश्च निस्संशयं कार्यं कुर्यात्प्राज्ञः ससंशयम् ॥३५॥
प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ एष दोषो महान्हि स्यान्मम सीताभिभाषणे ॥ ३६ ॥

षभाषया व्यवहर्तव्यत्वं निश्चिनोति—अवश्यमिति ॥ अत्र वाक्यस्य मानुषत्वं कोसलदेशवर्तिमनुष्यसंबन्धित्वं विवक्षितं । तादृग्वाक्यस्यैव देवीपरिचितत्वात् ॥ १९ ॥ एवं मानुषभाषया व्यवहर्तव्यत्वं निश्चित्य संप्रति तयापि भाषयानेन वानररूपेण पुरः स्थित्वाभिभाषणे दोषोस्तीति विचारयति—सेयमिति ॥ २० ॥ जानमाना जानाना । मुमागम आर्षः ॥ २१—२३ ॥ प्रशाखाः उपशाखाः । विपरिधावन्तं मामिति शेषः ॥ २४—२६ ॥ उद्विग्नकारिणः उद्वेगकारिणः ॥ २७ ॥ तैः परितः संरुद्धः । अतएव रक्षसां बलं विधमन् प्रहरन् । अहं महोदधेः परं पारं प्राप्तुं न शक्नुयामित्यन्वयः ॥ २८ ॥ अगृहीतार्था अविदितरामसंदेशार्था ॥ २९—३० ॥ उद्देशे प्रदेशे । नष्टमार्गे अदृष्टमार्गे । उक्तविशेषणे उद्देशे वसतीत्यन्वयः ॥ ३१ ॥ सहाय एव साहाय्यः तं । कार्यसाधने सीतादर्शननिवेदनलक्षणकार्यसाधने ॥ ३२ ॥ यो लङ्घयेत तं न पश्यामीत्यन्वयः ॥ ३३—३४ ॥ असत्यानि अनिश्चितजयापजयानि । क्लेशस्तु भूयानिति भावः । ततो नैतन्मम मतमित्याह—संशय इति । संशयः संशयितार्थः । स च सङ्ग्रामः अथापि तथाकरणे स एव कार्यहन्ता बुद्धिहीनो निन्दाभाजनं चेत्याशयेनाह—कश्चेति । प्राज्ञः कः ससंशयं कार्यं निःसंशयं निर्विचारं कुर्यात् ॥ ३५ ॥ अनभिभाषणे रामसंदेशानिवेदने । एष दोषः पूर्वोक्तसीतासंत्रासा-

वितइति तेन भीतिभवनंयुक्तमितिभावः ॥१८॥ ति० नतुशक्ष्यामि युद्धश्रान्त्येतिभावः ॥ शि० नशक्ष्यामि सीतामरणशङ्कयाक्षीणशक्तिर्भविष्यामीतितात्पर्यं ॥३४॥ ति० किंचयुद्धेजयोपिसंदिग्धइत्याह—असत्यानीति ॥ स० असत्यानि अनिश्चितजयकानि ।

[ पा० ] १ ङ. झ. ट. त्रासमुपैष्यति. २ क. शङ्कमाना. ङ.—ट. जानानामां. ३ ङ. झ. ट. महाबलाः. ४ ख. ङ. झ. ञ. ट. तंमांशाखाः. ५ ङ.—ट. दृष्ट्वाच. क. दृष्ट्वामां. ६ ङ. झ. ट. भवेयुःपरिशङ्किताः. क. भवेयुर्भयशङ्किनः. घ. भवेच्छङ्कितविह्वलः. ७ ङ.—ट. विकृतस्वराः. ८ ङ.—ट. शूलशर. क. ग. घ. शूलाशनि. ९ झ. ञ. ट. वेगेनोद्विग्नकारणात्. १० क.—ङ. संक्रुद्धस्तैस्तु. ११ क. च.—ट. त्राक्षसं. १२ ङ.—ट. रावृत्य. १३ ख. घ. सहायं. १४ ङ. च. ज.—ट. शक्ष्याम्यहंप्राप्तुं.

भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ॥ विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३७ ॥
अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते ॥ [ यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥ ]
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ३८ ॥
न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ॥ लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ३९ ॥
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत वा ॥ इति संचिन्त्य हनुमांश्चकार मतिमान्मतिम् ॥४०॥
राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् ॥ नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् ॥ ४१ ॥
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ॥ शुभानि धर्मयुक्तानि वचनानि समर्पयन् ॥ ४२ ॥
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन्गिरम् ॥ श्रद्धास्यति यथा हीयं तथा सर्वं समादधे ॥ ४३ ॥
इति स बहुविधं महानुभावो जगतिपतेः प्रमदामवेक्षमाणः ॥
मधुरमवितथं जगाद वाक्यं द्रुमविटपान्तरमास्थितो हनूमान् ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रिंशस्सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ॥ ३१ ॥

शिंशुपास्थेनहनुमता मानुषभाषाश्रयणेन रामजननप्रभृतिस्वीयसीतादर्शनावधिसकलवृत्तान्तप्रतिपादनम् ॥ १ ॥ तच्छ्रवणेनहर्षविस्मयापन्नयासीतया सर्वतश्चक्षुश्चालनेनशिंशुपाशाखायां हनुमतोऽवलोकनम् ॥ २ ॥

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः ॥ संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १ ॥

क्रोशतन्निमित्तराक्षसागमनादिः । सीताभिभाषणे वानररूपेण पुरःस्थित्वाभिभाषणे ॥ ३६ ॥ भूताश्चार्थाः निष्पन्नार्थाः । विक्लवं अविवेकिनं । दूतमासाद्य देशकालविरोधिताः सन्तः सूर्योदये तमो यथा विनश्यति तथा विनश्यन्तीति संबन्धः ॥३७॥ अत्र विक्लवं दूतमासाद्येत्यनुषज्यते । अर्थानर्थान्तरे कार्याकार्यविषये । निश्चितापि स्वामिना सचिवैः सह निश्चितापि । बुद्धिः विक्लवं दूतमासाद्य न शोभते । अकिंचित्कराभिभवतीत्यर्थः । एतदेवोपपादयति—घातयन्तीति ॥ ३८ ॥ प्रागुक्ता दूतदोषास्स्वस्मिन्यथा न स्युस्तथा कर्तव्यमित्याह—न विनश्येदिति ॥ कार्यं स्वामिकार्यं कथं केन प्रकारेण । न विनश्येत् । वैक्लव्यं बुद्धिहीनता । मम कथं न भवेत् । समुद्रलङ्घनं कथं न वृथा भवेत् । तथा कर्तव्यमिति शेषः ॥ ३९ ॥ कथमिति अथ सीतेत्यध्याहार्यं । हनुमान् मे वाक्यं सीता कथं केन प्रकारेण । शृणुयात्कथं नोद्विजेतेति विचार्य मतिमान् प्रशस्तमतिः । मतिं तत्कालोचितकर्तव्यविषयां । चकार निष्पादयामास ॥ ४० ॥ स्वबन्धुं राममनुकीर्तयन् "लक्षणहेत्वोः—"इति हेत्वर्थे शतृप्रत्ययः। नैनामुद्वेजयिष्यामि एनां मद्रूपप्रदर्शनमन्तरेण रामस्य कीर्तनेनैवानुद्विग्नांकरिष्यामीत्यर्थः । तद्बन्धुगतमानसां स चासौ बन्धुश्च तद्बन्धुः रामः तद्गतमानसां ॥ ४१—४३ ॥ जगतिपतेरिति दीर्घाभाव आर्षः । जगादेति वक्ष्यमाणसर्गार्थसंग्रहः ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिंशः सर्गः ॥३०॥

चिन्तां चिन्तयित्वा चिन्तां कृत्वा । कर्तव्यमर्थं

यद्वा राक्षसानांमायिकत्वान्मायामयानि ॥ ३५ ॥ शि० भूताः सिद्धप्रायाः ॥ ३७ ॥ स० सुबन्धुं कदाप्यवियोगिबान्धवं । तद्बन्धुः सः तद्रूपीबन्धुः । रामः तद्गतचेतनां तस्यरामस्यबन्धुराप्तःकोवाऽऽगच्छेदितितद्गतमानसांवा ॥ ४१ ॥ स० जगतिपतेः भूपतेः । "ङ्यापोःसंज्ञाछन्दसोः" इतिसंज्ञात्वात् "जाह्नविसूर्यकन्ययोः" इत्यादिवद्ध्रस्वः । अजगतिपतेरितिवाच्छेदः । अजस्य चतुर्मुखस्य गतिः उदरतोनिस्सरणं सद्गतिर्वाययासा अजगतिः रमा तस्याःपतिस्तस्येतिवा ॥ ४४ ॥ इतित्रिंशःसर्गः ॥ ३० ॥

स० चिन्तांचिन्तयित्वेतिपूर्ववत् । संश्रवे संश्रूयतेशब्दोयत्रससंश्रवः अन्यानाकलनेनसीताऽऽकलनंयस्मिन् । समीपप्रदेशे

[ पा० ] १ ग. ञ. भूतार्थाहिविपद्यन्ते. ङ—झ. ट. भूताश्चार्थाविरुध्यन्ति. २ इदमर्धं ख. पाठेदृश्यते. ३ क. ख. घ. च. छ. ज. ञ. विनश्येदिदंकार्यं. ४ ख. ङ.—ट. कथंमम. ५ क. मतिमुत्तमां. ६ ङ. झ. ट. सुबन्धुमनु. ७ ङ. झ. ट. गतचेतनां. ८ ङ. झ. ञ. ट. यथासीतातथा. ९ ङ. झ. ट. महामतिः.

राजा दशरथो नाम रथकुञ्जरवाजिमान् ॥ पुण्यशीलो [1]महाकीर्तिर्ऋजुरासीन्महायशाः ॥ २ ॥
राजर्षीणां [2]गुणश्रेष्ठस्तपसा चर्षिभिः समः ॥ चक्रवर्तिकुले जातः पुरन्दरसमो बले ॥ ३ ॥
अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः ॥ मुख्यश्चेक्ष्वाकुवंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥ ४ ॥
पार्थिव[3]व्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः ॥ पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ५ ॥
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ॥ रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ६ ॥
रक्षिता स्वस्य [4]धर्मस्य [5]स्वजनस्य च रक्षिता ॥ रक्षिता जीवलोकस्य धर्मस्य च परन्तपः ॥ ७ ॥
तस्य सत्याभिसंधस्य वृद्धस्य वचनात्पितुः ॥ सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥ ८ ॥
तेन तत्र महारण्ये मृगयां परिधावता ॥ राक्षसा निहताः शूरा बहवः कामरूपिणः ॥ ९ ॥
जनस्थानवधं श्रुत्वा [6]हतौ च खरदूषणौ ॥ ततस्त्वमर्षापहृता जानकी रावणेन तु ॥
वञ्चयित्वा वने रामं मृगरूपेण मायया ॥ १० ॥
स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ॥ आससाद वने मित्रं सुग्रीवं नाम वानरम् ॥ ११ ॥
ततः स वालिनं हत्वा रामः [7]परपुरञ्जयः ॥ [8]प्रायच्छत्कपिराज्यं तत्सुग्रीवाय [9]महाबलः ॥ १२ ॥
सुग्रीवेणापि संदिष्टा हरयः कामरूपिणः ॥ दिक्षु सर्वासु तां देवीं विचिन्[10]वन्ति [11]सहस्रशः ॥ १३ ॥
अहं संपातिवचनाच्छतयोजनमायतम् ॥ [12]अस्या हेतोर्विशालाक्ष्याः [13]सागरं वेगवान्प्लुतः ॥ १४ ॥
यथारूपां यथावर्णां [14]यथालक्ष्मीं च निश्चिताम् ॥ अश्रौषं राघवस्याहं सेयमासादिता मया ॥ १५ ॥
विररा[15]मैवमुक्त्वासौ वाचं वानरपुङ्गवः ॥ जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ॥ १६ ॥
ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ॥ उन्नम्य वदनं भीरुः [16]शिंशुपावृक्षमैक्षत ॥ १७ ॥

---

निश्चित्येत्यर्थः । संश्रवे सम्यक् श्रूयतेस्मिन्निति संश्रवः । समीपं समीपे व्याजहार । यद्वा पाठ्ये गेये च मधुरमिति संश्रवे श्रवणे मधुरं ज्ञानप्रसरणद्वारा इन्द्रियेभ्यो निस्सृत्य विषयान्गृहीत्वा तदनन्तरं हि रसो जायते लोके अत्र न तथा यत्र शब्दसंसर्गो जायते तत्र रसो जायत इत्यतिशयोक्तिः । मधुरं ज्ञानमपि तद्द्वारा रसजनकं वाक्यं पूर्वापरनिरूपणं विना स्वयं रसजनकं वैदेह्याः वैदेहीनिमित्तं । कुलानुरोधेन देहेनिस्स्पृहायाः देहमपि दत्त्वा रसावहत्वमुच्यते ॥ १ ॥ वितरणविक्रमादिजनितत्वेन कीर्तियशसोर्भेदोवगन्तव्यः ॥ २—४ ॥ पार्थिवव्यञ्जनैः राजलक्षणैः ॥ ५—७ ॥ तस्य पितुर्वचनाद्वनं प्रव्राजितः गतः । स्वार्थे णिच् ॥ ८ ॥ मृगयां परिधावता मृगयामुद्दिश्य परिधावता । अनेन लीलया खरादिवधः सूच्यते ॥ ९ ॥ जनस्थानवधं जनस्थानरक्षोवधं । अमर्षेणापहृता अमर्षापहृता । मृगरूपेण मृगसौन्दर्येण प्रशस्तमृगेण वा । “ प्रशंसायां रूपप् ” ॥ १०—१४ ॥ यथारूपां यादृशशरीरां । यथावर्णां यादृशरूपाम् । यथालक्ष्मीं यादृशकान्तिं । राघवस्य राघवात् ॥ १५—१६ ॥ सुकेशी नीलसूक्ष्मकेशी ।

---

॥ १ ॥ ति० मायया मृगरूपेण मारीचेनकरणेन । रामंवञ्चयित्वेत्यर्थः ॥ १० ॥ ति० तस्याहेतोः तदन्वेषणहेतोः ॥ १४ ॥ ति० केशसंवृतं असंस्कारतःप्रकीर्णत्वात् ॥ १७ ॥

[ पा० ] १ ङ—ट. महाकीर्तिरिक्ष्वाकूणांमहायशाः. क. ग. महाकीर्तिःप्रादुरासीन्महायशाः. २ क. गुणैःश्रेष्ठः. ३ क. व्यञ्जनोपेतः. ४ क. ग. ङ.—ट. वृत्तस्य. ५ ख. स्वजनस्याभि. क. ङ.—ज. ञ. ट. स्वजनस्यापि. ६ ङ.—ट. निहतौ. ७ घ. सत्यपराक्रमः. ८ ङ. च. झ. ञ. ट. आयच्छत्कपिराज्यंतुसुग्रीवाय. ९ ङ.—झ. ट. महात्मने. १० ङ. झ. ट. विचिन्वन्तः. ११ क. ततस्ततः. १२ घ.—ट. तस्याहेतोः. १३ ङ.—ट. समुद्रं. १४ ङ. झ. ट. यथालक्ष्मवतींचतां. च. ज. ञ. यथालक्ष्मींविनिश्चितां. क. यथालक्ष्मींचतामपि. १५ क. घ. ङ. झ. ट. मुक्त्वास. ग. च. छ. ज. ञ. मुक्त्वातु. १६ ङ. ज.—ट. शिंशुपामन्ववैक्षत.

निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रदिशश्च वीक्ष्य ॥
स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती ॥ १८ ॥
सा तिर्यगूर्ध्वं च तथाप्यधस्तान्निरीक्षमाणा तमचिन्त्यबुद्धिम् ॥
ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं सूर्यमिवोदयस्थम् ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकत्रिंशस्सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ॥ ३२ ॥

सीतया शिंशुपायांदृष्टस्यहनूमतःस्वाप्नत्वबुद्ध्या स्वप्नेवानरदर्शनस्यानर्थहेतुतया दैवंप्रति रामादिकुशलप्रार्थना ॥ १ ॥ पुनःकारणाभावात्स्वप्नाद्यभावनिर्धारणेन ब्रह्मादीन्प्रति हनुमदुक्तस्ययाथार्थ्यसिद्धिप्रार्थना ॥ २ ॥

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा ॥ वेष्टितार्जुनवस्त्रं तं विद्युत्संघातपिङ्गलम् ॥ १ ॥
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् ॥ फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥ २ ॥
[ सोऽथ दृष्ट्वा हरिश्रेष्ठं विनीतवदवस्थितम् ॥ ] मैथिली चिन्तयामास विस्मयं परमं गता ॥ ३ ॥
अहो भीममिदं रूपं वानरस्य दुरासदम् ॥ दुर्निरीक्ष्यमिति ज्ञात्वा पुनरेव मुमोह सा ॥ ४ ॥
विललाप भृशं सीता करुणं भयमोहिता ॥ रामरामेति दुःखार्ता लक्ष्मणेति च भामिनी ॥ ५ ॥
रुरोद बहुधा सीता मन्दं मन्दस्वरा सती ॥ ६ ॥

---

वक्रिम्णः पूर्वमुक्तत्वात् ॥ १७—१८ ॥ पार्श्वे आकाशं भूमिं चावेक्षमाणा । अधस्तादित्यनेन यथा भूमिं भित्त्वा कश्चिन्नरः रामनामानि कीर्तयेत्तथान्यत्रापीत्यपिना संभावनोच्यते । शिंशुपावृक्षस्याधस्तात्तिर्यगूर्ध्वमिति वा । तमचिन्त्यबुद्धिं ददर्श । तद्वपुरवलोकनात्पूर्वं तस्यहृदयमेवं परिच्छिनत्ति स्म । इह लङ्कायां प्रविश्यावरोधाराममध्यप्रवेशेनायं निपुणतरमतिरिति निश्चितवतीत्यर्थः । पिङ्गाधिपतेरमात्यं स्वरविशेषेणायं वानरः । तत्रापि न स्वतन्त्रः । किन्तु स्वसजातीयस्य राज्ञः कस्यचिदमात्योयं । तद्राज्यकार्यमेतद्धस्तगतमिति निश्चितवती । वातात्मजं रामप्राणहेतुभूतमत्प्राणनहेतुत्वेन सर्वप्राणिप्राणनहेतुत्वेन वायुपुत्रोयमित्यवगतवती । सूर्यमिवोदयस्थं रामदिवाकरस्योदयसूचकमुदयगिरिस्थमरुणमिव स्थितं । सूरः सूर्यः । "सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः। "सूरसूतोरुणोनूरुः" इत्युक्तेस्सूरस्य संबन्धी सूर्यः । दिगादित्वाद्यत् । भवतापि संबन्धः विशेष एव । यद्वा सूर्यशब्देन तत्संबन्ध्यरुणो लक्ष्यते "सूर्योरुणे च सूर्ये च" इति निघण्टुरस्तीत्याहुः । औचित्यादत्र सूर्योरुणः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकत्रिंशः सर्गः ॥३१॥

---

ततः शाखान्तरे लीनमित्यादिश्लोकद्वयमेकान्वयं ॥ दृष्ट्वा पूर्वं सामान्यतो दृष्ट्वा भयाच्चलितमानसा सती विशेषतो ददर्श । वेष्टितार्जुनवस्त्रं वेष्टितधवलवस्त्रं । तं पूर्वोक्तं ॥ १—५ ॥ रुरोदेत्यर्धं ॥ मन्दं राक्षस्यः श्रुत्वा किमिदमिति विचारयिष्यन्तीति भयेनेति भावः

---

**स०** पिङ्गाधिपतेः पिङ्गाक्षस्वामिनः ॥ १९ ॥ इत्येकत्रिंशःसर्गः ॥ ३१ ॥

**ति०** लीनंदृष्ट्वा स्फुरन्तंदृष्ट्वा । चलितमानसा दृष्टरूपोऽयमपिमायामृगोवेतिचलितचित्ता ॥ **स०** विद्युतांसंघातः समूहः । सद्वपिङ्गलस्तं ॥ १ ॥ **स०** विनीतवत् स्वार्थेवतिः । विनीताःसन्त्यस्येतिविनीतवान् । सचासाववस्थितश्च तंवा । अथवा विनीतं विनीतिः तद्वांश्चासाववस्थितश्चतं । यद्वा विनीतं विशिष्टनीतंवदतीतिसविनीतवदः विनीतवाग्मी । सचासौ वस्थितश्चतं ॥ ३ ॥ **ति०** वानरस्य निर्धारणेषष्ठी । जातावेकवचनं । वानराणांमध्ये इदंसत्वं जीवः । भीमं प्राकृतप्राणिभयावहं । अतएवतैर्दुरासदं

**[ पा० ]** १ ख. निरीक्षमाणातथाप्यधस्तात्तमचिन्त्य. २ क. ग. ङ.—ट. पाठेष्विदमर्धंदृश्यते. ३ ङ.—ट. सत्वं. ४ झ. ट. मिदंमला. ५ क. ङ. च. छ. झ. ञ. ट. सहसासीता.

सा तं दृष्ट्वा [1]हरिश्रेष्ठं विनीतव[2]दुपस्थितम् ॥ मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥ ७ ॥
सा वीक्षमाणा पृथुभुग्नवक्त्रं शाखामृगेन्द्रस्य यथोक्तकारम् ॥
ददर्श [3]पिङ्गाधिपतेरमात्यं वातात्मजं बुद्धिमतां वरिष्ठम् ॥ ८ ॥
सा तं समीक्ष्यैव भृशं [4]विसंज्ञा गतासुकल्पेव बभूव सीता ॥
चिरेण संज्ञां प्रतिलभ्य [5]भूयो विचिन्तयामास विशालनेत्रा ॥ ९ ॥
[6]स्वप्ने मयाऽयं विकृतोऽद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः ॥
स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञः ॥ १० ॥
[7]स्वप्नोपि नायं न हि मेस्ति निद्रा शोकेन दुःखेन च पीडितायाः ॥
सुखं हि मे नास्ति [8]यतोस्मि हीना तेनेन्दुपूर्णप्रतिमाननेन ॥ ११ ॥
रामेति रामेति [9]सदैव बुद्ध्या विचिन्त्य वाचा ब्रुवती तमेव ॥
[10]तस्यानुरूपां च कथां [11]तमर्थमेवं प्रपश्यामि तथा शृणोमि ॥ १२ ॥
अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा ॥
विचिन्तयन्ती सततं तमेव तथैव पश्यामि तथा शृणोमि ॥ १३ ॥
मनोरथः स्यादिति चिन्तयामि तथाऽपि बुद्ध्या च वितर्कयामि ॥
किं कारणं तस्य हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं माम् ॥ १४ ॥

॥ ६—७ ॥ वीक्षमाणा विचारयन्ती । ददर्श पुनरनुकूलोयं स्यादिति ददर्शेत्यर्थः । भुग्नवक्त्रं वक्रमुखं । यथोक्तकारं आज्ञाकरं ॥ ८ ॥ विसंज्ञा मूर्च्छिता । गतासुकल्पा मृतप्राया । इवशब्दो वाक्यालङ्कारे । चिरेण संज्ञां प्रतिलभ्य कालेनैव प्रबोधकेन प्रबुद्धवतीत्यर्थः । विकृतवानरवेषदर्शनेन मूर्च्छिता पुनः कालेन प्रबुद्धेत्यर्थः ॥ ९ ॥ स्वप्ने स्वप्नस्थाने । स्वप्ने वानरदर्शनं बन्धुविनाशकरमिति भावः ॥ १० ॥ एवं दर्शनस्य स्वप्नत्वं संभाव्य पुनर्याथार्थ्यमाह—स्वप्नोपीति ॥ स्वप्नाभावे हेतुमाह—नहि मेस्ति निद्रेति । निद्राभावे हेतुः—शोकेनेत्यादिः । एवं प्रतिबन्धकेन निद्राभावमुक्त्वा सुखरूपहेत्वभावाच्च न निद्रेत्याह—सुखंहीति । इन्दुपूर्णप्रतिमाननेन पूर्णेन्दुप्रतिमाननेन ॥ ११ ॥ सदैव बुद्ध्या विचिन्त्य तमेव राममेव । वाचा ब्रुवती । तस्यानुरूपां विचिन्तितस्याभिवदनस्यानुरूपां । कथां तथा शृणोमि । तमर्थं कथार्थमेवं प्रपश्यामि । एवं उक्तप्रकारेण जानामीत्यन्वयः । तदर्थामिति पाठे अयमर्थः । तस्यानुरूपां रामकीर्तनस्यानुरूपां । तदर्था स रामोर्थोभिधेयो यस्याः तां ॥ १२ ॥ उक्तमर्थं विवृणोति—अहं हीति ॥ १३ ॥ प्रथमं इदं रामनामकथयितृदर्शनं मनोरथः अभिलाषमात्रमिति चिन्तयामि । तथापि तथा चिन्तायां सत्यामपि । बुद्ध्या वितर्कयामि मनोरथो न भवतीति विचारयामि । किं कारणमिति चेत् तस्य मनोरथस्य रूपं नास्ति । अयं वानरस्तु सुव्यक्तरूपश्च मां वदति च । तस्मान्मनोरथो न भवेदेवेत्यर्थः

दुर्निरीक्ष्यंचेतिमत्वा पुनरपिमायैवेयमितिभयान्मुमोह ॥ ४ ॥ **ति०** यथोक्तकारं कामाज्ञाकरं । यद्वा यथोक्तवेष्टितार्जुनवस्त्राद्याकारं । छान्दसोह्रस्वः ॥ **स०** यथोक्तकारं वेष्टितार्जुनवस्त्राकारंवा । उपसर्गाणांचधातुलीनार्थबोधकत्वेनाङ्गिकलोपिकारशब्दएवाकारवाची ॥ ८ ॥ **शि०** तं हनूमन्तं । समीक्ष्य रावणत्वेनवितर्क्य । गतासुकल्पा विपन्नाचेष्टारहिताबभूव । चिरेणकिंचिद्विलंबतः संज्ञांप्रतिलभ्यचिन्तयामास ॥ ९ ॥ **ति०** दृश्यमानोऽयंस्वप्नोमयाविकृतएवदृष्टः । कुतस्तत्राह—**शाखामृगइत्यादि** । एवंदु-

[ **पा०** ] १ ङ. झ. ट. हरिवरं. २ च. छ. झ. ञ. ट. दुपागतं. ३ ग. घ. च.—ट. पिङ्गप्रवरंमहार्हं. क. कीशप्रवरंमहार्हं. ४ ङ. ट. विपन्ना. ५ क. ग. च.—ट. चैवं. ख. चित्तेसाचिन्तयामास. ६ क. ख. ग. ङ.—ट. स्वप्नो. ७ ख. स्वप्नोनचायं. ८ ग.—छ. झ. ञ. ट. यतोविहीना. ९ ख. विचिन्त्यबुद्ध्यासदैव. १० ङ. झ. ट. तस्यानुरूपंचकथांतदर्थां. ११ ख. तदर्थंतमेवपश्यामि.

नमोस्तु वाचस्पतये सवज्रिणे स्वयंभुवे चैव हुताशनाय च ॥
अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथाऽस्तु नान्यथा ॥ १५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

जानतापिहनुमता तन्मुखाच्छ्रवणेच्छया सीतांप्रति सुरस्त्रीत्वादिनानाविकल्पैःप्रश्नपूर्वकमनेकहेतुभिःसीतात्वनिर्धारणोक्तिः ॥ १ ॥ सीतयाहनुमन्तंप्रति रावणकर्तृकस्वापहरणान्तनिखिलवृत्तान्तकथनपूर्वकं रावणसंकेतितस्वजीवनकालेमासद्वयस्यावशिष्टत्वोक्त्या तदनन्तरंस्वेनैव स्वजीवितत्यागप्रतिज्ञानम् ॥ २ ॥

सोवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः ॥ विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ १ ॥
तामब्रवीन्महातेजा हनूमान्मारुतात्मजः ॥ शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ २ ॥
का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि ॥ द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिते ॥ ३ ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ॥ पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ ४ ॥
सुराणामसुराणां[2] वा नागगन्धर्वरक्षसाम् ॥ यक्षाणां किन्नराणां वा का त्वं भवसि शोभने ॥ ५ ॥
का त्वं भवसि रुद्राणां मरुतां वा वरानने ॥ वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ ६ ॥
किंनु चन्द्रमसा हीना पतिता विबुधालयात् ॥ रोहिणी ज्योतिषां श्रेष्ठा श्रेष्ठसर्वगुणान्विता[3] ॥ ७ ॥
का त्वं भवसि कल्याणि त्वमनिन्दितलोचने ॥ ८ ॥
कोपाद्वा यदि वा मोहाद्भर्तारमसितेक्षणे ॥ वसिष्ठं कोपयित्वा त्वं नासि कल्याण्यरुन्धती ॥ ९ ॥
को नु पुत्रः पिता भ्राता भर्ता वा ते सुमध्यमे ॥ अस्माल्लोकादमुं लोकं गतं त्वमनुशोचसि ॥ १० ॥

---

॥ १४ ॥ अनेनोक्तं सत्यमस्त्विति देवताः प्रार्थयते—नम इति ॥ हुताशनाय च अग्नये च ॥ १५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

---

सः राक्षसीषु सुप्तासु लब्धावसर इत्यर्थः । कृपणः सीतादौस्थ्यदर्शनेन दीनः । जानन्नपि वैदेह्यैव वाचयितुमब्रवीत् ॥ १—३ ॥ तव नेत्राभ्यां आनन्दाश्रुयोगार्हाभ्यां । किमर्थं कस्य कुलच्छेदाय । यद्वा किमर्थं किं चेतसि कृत्वा । पुण्डरीकेत्यादि हन्तैतत्सौन्दर्यं प्रणयिना रामेण दृष्टमासीदिति भावः ॥ ४ ॥ सुराणामित्यादिषु निर्धारणे षष्ठी । का त्वं कस्य संबन्धिनीत्यर्थः ॥ ५—७ ॥ हे कल्याणि त्वं का । अनिन्दितलोचने त्वं का भवसीति योजना ॥ ८ ॥ वसिष्ठं कोपयित्वेत्यत्रापि पतिता विबुधालयादित्यनुषज्यते । नासीत्यत्र काकुरनुसंधेया ॥ ९ ॥ अमुं लोकं गतं । यमिति शेषः । परलोकं गतं यं पुत्रं पितरं भ्रातरं भर्तारं वानुशोचसि स क इत्यर्थः । गता त्वमित्यपि पाठः । तस्मात् स्वर्गादमुं मनुष्यलोकं गता या

---

स्वप्नंमत्वा स्वस्तिप्रार्थयते । जनकस्य तद्वंश्यस्य ॥ १० ॥ **ति०** एवंहनुमद्वचसोऽवास्तवत्वंनिर्णायानाप्तप्रणीतत्वेनमिथ्यार्थकत्वस्यापिसंभवात्तद्व्यावृत्तयेदेवान्प्रणमति—**नमोस्त्विति** । वाचस्पतित्वेनवाचस्सत्यत्वसंपादनयोग्यता। वज्रिणोपि बृहस्पतितःसत्यवाग्रूपशब्दपारायणग्रन्थरूपमन्त्रलाभात्तदुपासकत्वेनवाचःसत्यत्वसंपादनयोग्यता । स्वयंभुवे सत्यादिरूपब्रह्मणे । वागधिष्ठातृदेवतात्वाच्चाग्नयेनतिः ॥ १५ ॥ इतिद्वात्रिंशःसर्गः ॥ ३२ ॥

**ती०** कृपणः दीनः । सीतादैन्यात्स्वयंकृपणइत्यर्थः । अत्रराक्षसीनांनिद्राजाड्यात्त्रिजटास्वप्नश्रवणजन्यभयानन्तरमात्मत्राणायसीतैकशरणत्वेनोपेक्षणाच्चदैवानुग्रहाच्चसीताहनुमतोरयमप्रत्यूहःसंलापइत्यनुसन्धेयं ॥ अस्यार्थस्याष्टपञ्चाशत्सर्गेऽङ्गदाग्रेहनुमतैव “ ततस्ताःसहिताःसर्वाः ” इत्यादिनावक्ष्यमाणत्वादिति ॥ **ति०** अत्यूर्ध्वशाखातःसीतासंमुखशाखायामवतीर्य । द्रुम-

[ पा० ] १ ग. पद्मपत्रविशालाक्षि. घ. कात्वंपद्म. ज. कासिपद्म. २ क. ख. ङ.—ट. मसुराणांच. ३ ङ. झ. ट. गुणाधिका.

रोदनादतिनिश्श्वासाद्भूमिसंस्पर्शनादपि ॥ न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात् ॥ ११ ॥
व्यञ्जनानि च ते यानि लक्षणानि च लक्षये ॥ महिषी भूमिपालस्य राजकन्याऽसि मे मता ॥१२॥
रावणेन जनस्थानाद्बलादपहृता यदि ॥ सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ १३ ॥
यथा हि तव वै दैन्यं रूपं चाप्यतिमानुषम् ॥ तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ॥१४॥
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ॥ उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् ॥ १५ ॥
पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः ॥ स्नुषा दशरथस्याहं शत्रुसैन्यप्रतापिनः ॥ १६ ॥
दुहिता जनकस्याहं वैदेहस्य महात्मनः ॥ सीता च नाम नाम्नाऽहं भार्या रामस्य धीमतः ॥ १७ ॥
समा द्वादश तत्राहं राघवस्य निवेशने ॥ भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी ॥ १८ ॥
तत्र त्रयोदशे वर्षे राज्येनेक्ष्वाकुनन्दनम् ॥ अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ १९ ॥
तस्मिन्संभ्रियमाणे तु राघवस्याभिषेचने ॥ कैकेयी नाम भर्तारं देवी वचनमब्रवीत् ॥ २० ॥
न पिबेयं न खादेयं प्रत्यहं मम भोजनम् ॥ एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ २१ ॥
यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम ॥ तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः ॥ २२ ॥

त्वमनुशोचसि । तस्यास्ते को वा पुत्रादिरिति योजना ॥ १० ॥ देवीं देवस्त्रियं । संज्ञावधारणात् संज्ञायते अनयेति संज्ञा लक्षणं । राजलक्षणनिश्चयादित्यर्थः ॥११॥ व्यञ्जनानि स्तनजघनादीनि । "व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेपि च" इति विश्वः । लक्षणानि शुभावर्तरेखादिसामुद्रिकलक्षणानि ॥ १२—१३ ॥ यथा यादृशं ॥ १४ ॥ द्रुमाश्रितं द्रुममूलाश्रितं । सोवतीर्येति द्रुमावतरणस्य पूर्वमुक्तत्वात् । यद्वा पूर्वमग्रादवतरणमुक्तमिति ज्ञेयं ॥ १५ ॥ शत्रुसैन्यप्रतापिनः शत्रुषु जीवत्सु न मे श्वशुरो जीवितवान् । स चेदिदानीं वर्तेत कथमहमेतादृशीमवस्थां प्राप्नुयामिति भावः ॥ १६ ॥ सीता च नामेत्यत्र नामशब्दः प्रसिद्धौ ॥ १७ ॥ अहं एतादृशावस्था अहं । तत्र मम श्वशुरगृहे । द्वादश समाः द्वादश संवत्सरान् । अत्यन्तसंयोगे द्वितीया । तेनाविच्छिन्नैकरूपभोगभोक्तृत्वमुच्यते । मानुषानित्यनेन नात्मनो मानुषत्वं स्वाभाविकमिति सूच्यते । भोगान् भुञ्जाना अनुभवन्ती । काम्यन्त इति कामाः भोगोपकरणानि स्रक्चन्दनादीनि । तेषां समृद्धं समृद्धिः । भावे निष्ठा । तदस्यास्तीति सर्वकामसमृद्धिनी । "अत इनिठनौ" इति इनिप्रत्ययः । अभवमिति शेषः ॥ १८—१९ ॥ संभ्रियमाणे संभारान् संपादयति सति राघवस्याभिषेचने रामाभिषेकनिमित्तं । देवी महिषी ॥ २० ॥ भुज्यत इति भोजनं खाद्यं पेयं च । रामो यद्यभिषिच्यते तदा मम संबन्धियत् भोजनं तन्न पिबेयं न खादेयं । एषः अयमभिषेकः । जीवितस्यान्तश्च ॥ २१ ॥ तत्पूर्वोक्तं यद्वरदानरूपं वाक्यं तन्न वितथं

शब्दस्तदवयवपरः । अतएवाग्रेद्रुमाश्रितइतिवक्ष्यति ॥ १ ॥ **ति०** रोदनादिति । अश्रुसंबन्धोभूस्पर्शोदेवानांनास्तीतिश्रुतं । तद्दृत्वात्वांनमन्ये । किंचराज्ञोरामस्यसंज्ञावधारणात् नामग्रहणात् ॥ ११ ॥ **ती०** व्यञ्जनानि संस्थानविशेषविशिष्टतयोत्तमस्त्रीलव्यञ्जकानिस्तनजघनादीनि ॥ १२ ॥ अनुक्तेपित्वत्स्वरूपनिश्चयोममास्तीतिप्रौढ्याह—यथाहीति ॥ १४ ॥ **स०** द्रुमाश्रितं द्रुमशब्देन तच्छायाग्राह्या । अथवा यःपूर्वंद्रुममाश्रितस्तंप्रत्युवाचेति ॥ १५ ॥ **स०** अमानुषान् देवभोगसमान् ॥ १८ ॥ **स०** सोपाध्यायः सपुरोहितः ॥ १९ ॥ **स०** अभिषेचनं अभिषेकसाधनं तस्मिन् ॥ २० ॥ **स०** अहं प्रत्यहं निरन्तरं । ममभोजनंभोज्यंयद्वर्तते तन्नपिबेयं नखादेयं । कुतएतदित्यतआह—एषइति । एषइतिबुद्ध्याविवेकेनाभिषेकेऽन्वेति । अथवा एषमेजीवितस्यान्तः एतच्चममभोजनं पालनं । तत्किमित्युक्ते यदिरामोऽभिषिच्यते तर्ह्येषः अभिषेकः मेजीवितस्यान्तः । यदिनाभिषिच्यते तर्हि एतत् ममभोजनं पालनमिति । यदि नाभिषिच्यत इतिपदानामावृत्त्याऽन्वयः । "भुजपालनाभ्यवहारयोः" इति

**[ पा० ]** १ ख. व्यञ्जनानीह, क. ग. घ. च. छ. झ. ञ. ट. व्यञ्जनानिहि. २ क. ङ. च. ज.—ट. द्बलात्प्रमथिता. ३ क. रामसत्कथयाश्रितं. ४ घ. राजसिंहस्य. ५ ङ. झ. ट. प्रणाशिनः. क. ख. घ. प्रमाथिनः. ६ ङ. झ. ट. सीतेतिनाम्नाचोक्ताहं. ७ ङ.—ट. ततस्त्रयोदशे. ८ क. रामं. ९ ङ. झ. ट. भर्तारमिदं.

स राजा सत्यवाग्देव्या वरदानमनुस्मरन् ॥ मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् ॥ २३ ॥
ततस्तु[1] स्थविरो राजा सत्ये[2] धर्मे व्यवस्थितः ॥ ज्येष्ठं यशस्विनं पुत्रं रुदन्राज्यमयाचत ॥ २४ ॥
स पितुर्वचनं श्रीमानभिषेकात्परं प्रियम् ॥ मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥ २५ ॥
दद्यान्न प्रतिगृह्णीयान्न[3] ब्रूयात्किंचिदप्रियम् ॥ अपि जीवितहेतोर्वा[4] रामः सत्यपराक्रमः ॥ २६ ॥
स विहायोत्तरीयाणि महार्हाणि महायशाः ॥ विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ॥२७॥
साऽहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी ॥ न हि मे तेन हीनाया वासः स्वर्गेपि रोचते ॥ २८ ॥
प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः ॥ पूर्वजस्यानुयात्रार्थे द्रुमचीरैः[5]रलङ्कृतः ॥ २९ ॥
ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः ॥ प्रविष्टाः स्म पुरा[6]ऽदृष्टं वनं गम्भीरदर्शनम् ॥ ३० ॥
वसतो दण्डकारण्ये तस्याहममितौजसः ॥ रक्षसाऽपहृता भार्या रावणेन दुरात्मना ॥ ३१ ॥

द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः ॥
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

कार्यं चेत्तदा रामो वनं गच्छतु ॥ २२ ॥ देव्यास्संबन्धि स्वकृतं वरदानं स्मृत्वा कैकेय्याः वचनं श्रुत्वा मुमोह ॥ २३—२४ ॥ अभिषेकात्परं प्रियं पितुर्वचनं विवासयाचनारूपं पूर्वं मनसा आसाद्य अङ्गीकृत्य । अथ वाचा प्रतिगृहीतवान् । मनःपूर्वकमङ्गीकृतवानित्यर्थः ॥ २५—२६ ॥ उत्तरीयाणि वासांसि । जनन्यै कौसल्यायै । मां समादिशत् तन्निकटे त्वया स्थातव्यमित्युक्तवानित्यर्थः ॥ २७ ॥ अग्रतः प्रस्थाने हेतुमाह—न हीति ॥ २८ ॥ प्रागेव यद्यपि रामानन्तरमेव लक्ष्मणेन द्रुमचीरादिस्वीकारः तथापि तस्य त्वरातिशयव्यञ्जनाय तथोक्तिः । महाभागः अहं सर्वं करिष्यामीति प्रतिज्ञानुसारेण सर्वविधकैङ्कर्यकरणोचिताभिषेकविघ्नहेतुभाग्यसंपन्नः । सौमित्रिः सृष्टस्त्वं वनवासायेत्युक्तवत्याः गर्भे संजातः । मित्रनन्दनः स लक्ष्मणः सर्वविधकैङ्कर्यकर्तेत्यनुकूलैरभिनन्दनीयः पूर्वजस्येत्यादि । रामकैङ्कर्यानुरूपत्वेन द्रुमचीरादीनामलंकरणत्वमित्यर्थः ॥ २९ ॥ पुरादृष्टं पूर्वमदृष्टं । अत्र गम्भीरशब्देन दुष्प्रवेशत्वं । दर्शनशब्देन स्वरूपमप्युच्यते ॥ ३०—३१ ॥ द्वौ मासौ द्विमासरूपः कालः । मे जीवितानुग्रहः जीवितानुग्राहकः जीवितधारणानुकूलःकृतः । त्यक्ष्यामि स्वयमेवेति भावः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

धातुव्याख्यानात् ॥ २१ ॥ **स०** अभिषेकात्परं प्रियं रावणादिदुष्टनिग्रहशिष्टपरिपालनरूपावतारफलकारणत्वात् ॥ २५ ॥ **ति०** सीतारामंस्तौति—दद्यादिति ॥ २६ ॥ **स०** उत्तरीयाणि । उपलक्षणमेतत् । परिधानवस्त्राण्यपीत्यर्थः ॥ २७ ॥ **स०** भर्तुः दशरथस्य । पुरा अयोध्यानिर्गमात्प्राक् । अदृष्टं ॥ ३० ॥ **स०** द्वौमासौ तत्परिमितःकालः । जीवितानुग्रहः जीवनार्थमनुग्रहरूपः । ततः रावणात् ॥ ३२ ॥ इतित्रयस्त्रिंशःसर्गः ॥ ३३ ॥

**[ पा० ]** १ ख. झ. ट. ततस्तं. २ क. ग. ङ. च. छ. झ. ट. सत्यधर्मे. ख. घ. सत्यधर्मेव्यवस्थितः. ३ क. ग. ङ.—ट. गृह्णीयात्सत्यंब्रूयान्नचानृतं. ४ क.—ट. हेतोर्हि. ५ च.—ट. कुशचीरैः. ६ घ. दुराधर्षं.

# चतुस्त्रिंशः सर्गः ॥ ३४ ॥

हनुमता स्वप्रश्नस्यसमुचितोत्तरदानेन सीतायाःस्वस्मिन्नाश्वाससंभावनया तांप्रति स्वस्यरामदूतत्वनिवेदनपूर्वकं क्रमेण रामलक्ष्मणकर्तृककुशलप्रश्नाभिवादननिवेदनम् ॥ १ ॥ हनुमता समीपोपसर्पणेनाभिवादने सीतयातस्मिन्रावणत्वबुध्या गर्हणम् ॥ २ ॥ हनुमता पुनःसीतांप्रति रामगुणानुवर्णनादिपूर्वकं स्वस्यसुग्रीवसचिवत्वहनुमन्नामकत्वाद्युक्त्या स्वस्मिन्रावणत्वशङ्कात्यागेनस्ववचनस्यश्रद्धेयत्वप्रार्थना ॥ ३ ॥

तस्यास्तद्वचनं श्रुत्वा हनुमान्हरियूथपः ॥ दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १ ॥
अहं रामस्य संदेशाद्देवि दूतस्तवागतः ॥ वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत् ॥ २ ॥
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥ ३ ॥
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ॥ कृतवाञ्छोकसंतप्तः शिरसा तेऽभिवादनम् ॥ ४ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः ॥ प्रीतिसंहृष्टसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ५ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा ॥ एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६ ॥
तया समागते तस्मिन्प्रीतिरुत्पादिताऽद्भुता ॥ परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ ७ ॥
तस्यास्तद्वचनं श्रुत्वा हनुमान्हरियूथपः ॥ सीतायाः शोकदीनायाः समीपमुपचक्रमे ॥ ८ ॥
यथा यथा समीपं स हनुमानुपसर्पति ॥ तथा तथा रावणं सा तं सीता परिशङ्कते ॥ ९ ॥

---

दुःखात् दुःखाभिभूतायाः उत्तरोत्तरं दुःखं प्राप्तायाः ॥१॥ तव दूतः त्वां प्रति प्रेषितो दूतः ॥२॥ वेद वेत्ति। वेदविदां वेदार्थज्ञानवतां ॥३—४॥ प्रीतिसंहृष्टसर्वाङ्गी प्रीत्यापुलकितसर्वाङ्गी ॥५॥ दुःखबाहुल्येपि रामदर्शनप्रत्याशया कृच्छ्रेणजीवन्त्याः देव्याः जीवनफलस्य लब्धत्वात्तत्संवादिनीं गाथां स्तौति—कल्याणीति ॥ कल्याणी सत्यार्था । मा प्रतिभाति मां प्रतिभाति । वर्षशतादपीत्यन्ते इतिकरणं बोध्यम् ॥ ६ ॥ तया सीतया । तस्मिन् हनुमति विषये । अद्भुता प्रीतिरुत्पादिता । परस्परेणेत्यादिकं वक्ष्यमाणस्य सर्गस्य संग्रहः ॥ ७ ॥ उपचक्रमे गन्तुमिति शेषः । प्रापेतिवार्थः ॥ ८ ॥ रावणं परिशङ्कते रामकुशलकथनेन

---

**ति०** दुःखाद्दुःखाभिभूतायाइत्यलुगार्षः । दुःखपरंपराखिन्नायाइत्यर्थः ॥ **स०** यद्वा दुःखेनातन्तीतिदुःखान्तास्तेषामिवयद्दुःखं तेनाभिभूतायाः । यद्वा दुःखात् सान्त्वमुत्तरमब्रवीदित्यन्वयः । दुश्चखंचतयोःसमाहारः द्वन्द्वैकवद्भावोवा उत्तरपदलोपिसमासान्तंवा । तस्मात् सीताएवंक्लिश्यतीतिदुःखात् स्वागमनप्रयोजनंजातमितिखात् सुखात् । "दुर्दुःखमितिसंप्रोक्तंखंसुखंचोच्यतेबुधैः" इतिवचनाद्दुःखशब्दउभयवाची ॥ १ ॥ **ती०** तवागतः समीपमितिशेषः ॥ **स०** रामस्यसन्देशादागतइतितवदूतः ॥ २ ॥ **ती०** ब्राह्ममस्त्रंयोवेद । अनेनसर्वास्त्रपारगत्वमुक्तं । तदस्त्रदेवतायाब्रह्मणःसर्वजगत्समष्टित्ववत्तदस्त्रस्यापिसर्वास्त्रसमष्टित्वात् वेदांश्चेत्यनेन सर्वकर्ममार्गपरत्वं । वेदविदांवरइत्यनेन ज्ञानमार्गपरत्वमुक्तं ॥ **स०** योब्राह्ममस्त्रं वेदांश्च वेदेत्यन्वयः । यद्वा वेदवेदेतिद्विरभिधानेन उभयोरपिमुख्यतामभिप्रैति । यद्वा वेदान् व्याख्येयानृगादीन् । वेदवेदान् भारतादीन्व्याख्यानरूपान्विदन्ति तेतथा । तेषु वरइति । "इतिहासपुराणःपञ्चमोवेदानांवेदः" इत्युक्तेः ॥ ३ ॥ **स०** प्रीतिसंहृष्टसर्वाङ्गी अन्तःसंभृततोषइतिसूचकरोमाञ्चितसर्वावयवा ॥ ५ ॥ **स०** जीवन्तंनरं आनन्दःवर्षशतादेतीतिलौकिकी लोकसिद्धागाथा या सेयं मा मांप्रति कल्याणी कल्याणसूचिका प्रतिभाति । बत हर्षः विस्मयोवा । "जीवन्नरोभद्रशतानिपश्यति" इत्युक्तेः । अस्यस्वविषयेसीतयोदाहृतत्वाज्जीवन्तीं स्त्रियमितिवक्तव्यं । तथापि नरंजीवन्तमित्युक्तिः सर्वाअपियोषितःपुरुषेपरतन्त्राः । तत्राप्यहं सदातन्मात्रायत्तमङ्गलेतिसूचयितुमिति मन्तव्यं ॥ ६ ॥ **ति०** तस्मिन् तस्मिन्काले रामलक्ष्मणकुशलवचश्श्रवणकाले । तयोः रामलक्ष्मणयोःसमागमकालइव । सीतायास्तेनवचसा अद्भुता अचिन्त्यस्वरूपाप्रीतिरुत्पादिता । किंच तयोः सीताहनुमतोः । तस्मिन्समागमेपरस्परस्यअद्भुता प्रीतिरुत्पादिता । देवीदृष्टेतिहनुमतःप्रीतिः । रामदूतोदृष्टइतिदेव्याःप्रीतिः । अतस्तौविश्वस्तौभूत्वा परस्परेणालापंचक्रतुः ॥ ७ ॥ **ति०** तद्व-

[ **पा०** ] १ ङ. झ. ट. रामस्सत्वां. २ ङ. झ. ट. प्रतिसंहृष्ट. ३ क. ख. ग. प्रतिभातिमे. ४ ग. ङ.—झ. तयोःसमागमे. ५ ङ. झ. ट. शोकतप्तायाः. ६ घ. हनूमान्ससमीपमुप. क. समीपंतां.

अहो धिग्दुष्कृतमिदं कथितं हि यदस्य मे ॥ रूपान्तरमुपागम्य स एवायं हि रावणः ॥ १० ॥
तामशोकस्य शाखां सा विमुक्त्वा शोककर्शिता ॥ तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥११॥
हनुमानपि दुःखार्तां तां दृष्ट्वा भयमोहिताम् ॥ अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् ॥
सा चैनं भयवित्रस्ता भूयो नैवाभ्युदैक्षत ॥ १२ ॥
तं दृष्ट्वा वन्दमानं तु सीता शशिनिभानना ॥ अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ॥ १३ ॥
मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम् ॥ उत्पादयसि मे भूयः संतापं तन्न शोभनम् ॥ १४ ॥
स्वं परित्यज्य रूपं यः परिव्राजकरूपधृत् ॥ जनस्थाने मया दृष्टस्त्वं स एवासि रावणः ॥ १५ ॥
उपवासकृशां दीनां कामरूप निशाचर ॥ संतापयसि मां भूयः संतप्तां तन्न शोभनम् ॥ १६ ॥
अथवा नैतदेवं हि यन्मया परिशङ्कितम् ॥ मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥ १७ ॥
यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते ॥ पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे ॥
गुणान्रामस्य कथय प्रियस्य मम वानर ॥ १८ ॥
चित्तं हरसि मे सौम्य नदीकूलं यथा रयः ॥ १९ ॥
अहो स्वप्नस्य सुखता याऽहमेवं चिराहृता ॥ प्रेषितं नाम पश्यामि राघवेण वनौकसम् ॥ २० ॥
स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् ॥ पश्येयं नावसीदेयं स्वप्नोपि मम मत्सरी ॥ २१ ॥
नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् ॥ न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥ २२ ॥
किंनु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम् ॥ उन्मादजो विकारो वा स्यादियं मृगतृष्णिका ॥२३॥

संजातरावणमायास्मरणा पुनः शङ्कितवतीत्यर्थः ॥९॥ मे मया । अस्य पुरतः यत्कथितं तत् दुष्कृतं अनुचितं कृतं । इदं अनालोच्य कथनं । धिक् । अहो इति खेदे । खेदहेतुमाह—रूपान्तरमिति । वर्तत इति शेषः ॥ १० ॥ यद्यपि पूर्वं शिंशुपाशाखावलम्बनमुक्तं तथापि शिंशुपाशाखा अशोकसंवलितेति क्वचिच्छिंशुपेत्युच्यते क्वचिदशोक इति । अतो न कश्चिद्दोषः ॥ ११ ॥ भयवित्रस्ता भयहेतुना वित्रस्ता ॥ १२—१३ ॥ मायावी स्वतएव मायावान् । "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । इदानीं मायां प्रविष्टः आश्रितः । स्वयं रावणस्सन् मम सन्तापमुत्पादयसीति यदि उत्पादयसीति यत् तत्सन्तापोत्पादनं ते न शोभनं । तवाप्यभीष्टविरहसन्तापो भविष्यतीत्यर्थः ॥ १४—१६ ॥ हनुमन्तं रावणमाशङ्क्य तज्जनितमनःप्रसादमालोच्य तां शङ्कां निराचष्टे— अथवेति ॥ मया यत् परिशङ्कितं एतन्नैवं हि नैवमेव । कुत इत्यत आह—मनस इति ॥ १७—१९ ॥ इह रामदूतागमनमत्यन्तासंभावितमिति मत्वा पुनर्बहुधा शङ्कते—अहो इत्यादिना ॥ २० ॥ स्वप्नेऽपि यद्यहं वीरं । राक्षसीमध्यवासकृतं दुःखं स्वप्नदृष्टोपि निवर्तयितुं क्षम इति वीर्यातिशयोक्तिः । राघवं सहलक्ष्मणं । विश्लेषदशायामुभयोर्दर्शनात् स्वप्नदर्शनेप्युभयोर्दर्शनं भवेत् । यद्वा तदानीमुभयोर्विश्लेषात्तौ किं परस्परं संयुक्तौ न वेति शङ्कते—पश्येयं नावसीदेयं । एवमुभयोस्स्वप्ने दर्शनेपि महद्दुःखं निवर्तेत । कथंचिज्जीवितं धारयेयं । स्वप्नोपि मम मत्सरी । मद्दशां विज्ञाय राम इव स्वप्नोपि मयि मात्सर्यं करोति ॥ २१—२२ ॥ एवं यथार्थस्वप्नपक्षौ निरस्य पुनश्चतुरो विभ्रमपक्षानुत्प्रेक्षते—किंनु स्यादिति ॥ चित्तमोहः रामक्षेमवार्ताश्रवणकुतूहलकन्दलितनिरन्तरचि-

चन्तं कल्याणीत्यादिसीतावचनं ॥ ८ ॥ ति० चित्तमोहः निरन्तररामध्यानजनितस्तत्प्रेषितदूतदर्शनसंभाषणादिविषयोभ्रमः । वातगतिः भूतावेशादिजनितोभ्रमः । उन्मादोविरहिणांपित्तोद्रेकरूपावस्थाविशेषजोभ्रमः । मृगतृष्णिका तद्वत्प्रत्यक्षोभ्रमः ॥ स० चित्तमोहः सर्वदारामध्यानात्तद्वत्तेनसहसंभाषणादिरूपोमनोविकारः । वातगतिः पिशाचव्यापारः । ऊषरभूमौजलवत्प्रतीतंमृग-

[ पा० ] १ ङ. ज. झ. ट. धिग्धिकृतमिदं. २ ङ. झ. ट. शाखांतु. घ. साशाखां. ३ ख. ग. दुःखार्तस्तां. ४ च.—ट. भयसंत्रस्ता. ५ क. ङ. छ.—ट. नैनमुदैक्षत. ६ ग. ङ—ट. रूपवान्. ७ ङ. झ. ट. एवहि. ८ ख. घ. ङ. झ. ट. संतापंतन्नशोभनं. ९ घ. ब्रूहिरामकथांहिमे. १० ख. जातश्चा. क. ग. घ. प्रियश्चा.

अथवा नायमुन्मादो मोहोप्युन्मादलक्षणः ॥ संबुध्ये चाहमात्मानमिमं चापि वनौकसम् ॥ २४ ॥
इत्येवं बहुधा सीता संप्रधार्य बलाबलम् ॥ रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम् ॥ २५ ॥
एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा ॥ न प्रतिव्याजहाराथ वानरं जनकात्मजा ॥ २६ ॥
सी[1]तायाश्चिन्तितं बुद्ध्वा हनुमान्मारुतात्मजः ॥ श्रोत्रानुकूलैर्वचनैस्तदा तां [2]संप्रहर्षयत् ॥ २७ ॥
आदित्य इव तेजस्वी लोककान्तः शशी यथा ॥ राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा ॥२८॥
विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः ॥ सत्यवादी मधुरवाग्देवो वाचस्पतिर्यथा ॥ २९ ॥
रूपवान्सुभगः श्रीमान्कन्दर्प इव मूर्तिमान् ॥ [3]स्थानक्रोधः प्रहर्ता च श्रेष्ठो लोके महारथः ॥३०॥
बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः ॥ ३१ ॥
अपकृष्याश्रमपदान्मृगरूपेण राघवम् ॥ शून्ये येनापनीतासि तस्य द्रक्ष्यसि [4]यत्फलम् ॥ ३२ ॥
[5]नचिराद्रावणं संख्ये यो वधिष्यति वीर्यवान् ॥ रोषप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः ॥ ३३ ॥
तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः ॥ त्वद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत् ॥ ३४ ॥
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ अभिवाद्य महाबाहुः [6]स त्वां कौशलमब्रवीत् ॥ ३५ ॥
रामस्य च सखा देवि सुग्रीवो नाम वानरः ॥ राजा वानरमुख्यानां स त्वां कौशलमब्रवीत् ॥३६॥
नित्यं स्मरति रा[7]मस्त्वां ससुग्रीवः सलक्ष्मणः ॥ दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता ॥ ३७ ॥

न्तासंततिपरिणतिविशेषरूपः कोपि मनसो विभ्रम इत्यर्थः। असत्यश्चित्तसंकल्पो वा। वातगतिः उपवासादिप्रयुक्तधातुक्षोभजो वातविकाररूपो भ्रमः। तदध्यारोपो वा यथा त्वरूपस्य वायोः पांसुपुञ्जरूपविशेषोध्यारोपः। उन्मादजो विकारो वा। उन्मादो नाम विरहिणां कश्चिदवस्थाविशेषः। तज्जो विकारो भ्रमः। मृगतृष्णिका अन्यस्यान्यरूपेणावभासः। चित्तमोहोन्मादावप्रकृतिस्थप्रतिभासविशेषौ। वातगतिमृगतृष्णिके तु प्रकृतिस्थस्य ॥ २३ ॥ अनन्तरोक्तचतुष्टयं निराकरोति—अथवेत्यादिना ॥ अथवा अयं वानरतद्भाषणादिप्रतिभासः। उन्मादो न। मोहोप्युन्मादलक्षणः उन्मादस्य लक्षणमिव लक्षणं यस्य स तथोक्तः। अतः उन्मादनिराकरणेनैव सोपि निराकृत इत्यर्थः। अनयोर्निराकरणमितरपक्षद्वयनिराकरणस्योपलक्षणं कुत इत्यत आह—संबुध्य इति। अहं आत्मानमिमं वनौकसं चापि संबुध्ये सम्यग्जानामि॥ २४ ॥ बलाबलं मोहत्वादीनामबलत्वं रावणत्वस्य बलवत्त्वं च ॥ २५—२६ ॥ संप्रहर्षयत् संप्राहर्षयत् ॥ २७ ॥ राजेति। कुबेरस्य सर्वलोकराजत्वमुक्तं। "राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे" इति ॥ २८ ॥ सत्यमधुरवाक्त्वं बृहस्पतेर्वाचस्पतित्वादेव॥२९॥रूपवान् सौन्दर्यवान्।सुभगः रमणीयः। श्रीमान् कान्तिमान्। स्थाने क्रोधस्थाने क्रोधः यस्यासौ स्थानक्रोधः। प्रहर्ता क्रोधविषयेप्रहर्ता। आदित्य इवेत्यादिनोक्तैर्विशेषणैर्विशिष्टो राम इतियोज्यं ॥ ३० ॥ लोकः महात्मनो यस्य बाहुच्छायां अवष्टब्धः आश्रितः। तं मृगरूपेण प्रशस्तमृगेण हेतुना। आश्रमपदादपकृष्य शून्ये येनापनीतासि तस्य रावणस्य

तृष्णा। तद्द्वयमपिकिंभ्रमविशेषइत्यर्थः ॥ २३ ॥ **स०** उन्मादस्यलक्षणमिवलक्षणंयस्यपिशाचस्यसतथा एतेन। नपुनरुक्तिर्नेवातगतेरसंग्रहश्च। मोहोनेति उन्मादलक्षणोपिनेतितत्रावृत्तिः। संबुध्ये परीक्षयाजानामि ॥ २४ ॥ **ती०** बलाबलं बलं रक्षसां कामरूपधारणंबलं। अबलं रामदूतस्यापिवानरस्यात्रागमनासामर्थ्यंअबलंसंप्रधार्येत्यर्थः ॥ २५ ॥ **ति०** निश्चितं रावणत्वनिश्चयं। श्रोत्रानुकूलैर्वचनैः रामगुणकथनरूपैः। विश्वासार्थं 'गुणान्रामस्यकथय' इतिसीतोक्तेरितिभावः। संप्रहर्षयन् वक्ष्यमाणंवचःकथयामासेतिशेषः ॥ २७ ॥ **ति०** स्थानक्रोधे उचितक्रोधविषये। क्रोधौचित्येप्रहर्तेतियावत् ॥ **स०** स्थानक्रोधी उचितस्थलेकोपी। प्रहर्ता वैरिहन्ता। स्थानक्रोधप्रहर्तेतिपाठे कोपयोग्यस्थानेशिक्षाकर्तेत्यर्थः ॥ ३० ॥ इतिचतुस्त्रिंशःसर्गः ॥ ३४ ॥

[ पा० ] १ ग. ङ.—ट. सीतायानिश्चितं. २ ग. समहर्षयत् क. झ. ट. संप्रहर्षयन्. ३ झ. स्थानक्रोधे. ठं. स्थानक्रोधी. ४ ङ. झ. ट. तत्फलं. ५ .—ट. अचिरात्. ६ क. ख. ग. सोपि. ७ ङ.—ट. तेरामः.

नचिराद्द्रक्ष्यसे रामं लक्ष्मणं च महाबलम्[1] ॥ मध्ये वानरकोटीनां सुग्रीवं[2] चामितौजसम् ॥ ३८ ॥
अहं सुग्रीवसचिवो हनुमान्नाम वानरः ॥ प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ॥ ३९ ॥
कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः ॥ त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ॥ ४० ॥
नाहमस्मि तथा [3]देवि यथा मामवगच्छसि ॥ विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

सीतया रामसुग्रीवसख्यप्रकाररंरामलक्ष्मणलक्षणंचपृष्टेनहनुमता तदङ्गलक्षणनिरूपणेनसह सविस्तररंरामसुग्रीवसख्यप्रभृतिस्वीयसीतादर्शनान्तवृत्तवृत्तान्तकथनपूर्वकं प्रभञ्जनादञ्जनायांस्वजननादिप्रतिपादनम् ॥ १ ॥

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् ॥ उवाच वचनं सान्त्वमिदं[4] मधुरया गिरा ॥ १ ॥
क ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ॥ वानराणां नराणां च कथमासीत्समागमः ॥ २ ॥
यानि रामस्य लिङ्गानि[5] लक्ष्मणस्य च वानर ॥ तानि भूयः[6] समाचक्ष्व न मां शोकः समाविशेत् ॥ ३ ॥
कीदृशं तस्य संस्थानं रूपं रामस्य[7] कीदृशम् ॥ कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ ४ ॥
एवमुक्तस्तु वैदेह्या हनुमान्मारुतात्मजः ॥ ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ५ ॥
जानन्ती बत[8] दिष्ट्या मां वैदेहि परिपृच्छसि ॥ भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥ ६ ॥
यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै ॥ लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥७॥
रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः[9] ॥ रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥ ८ ॥
तेजसाऽऽदित्यसंकाशः क्षमया पृथिवीसमः ॥ बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ ९ ॥

यत्फलं मरणरूपं तत् द्रक्ष्यसीति योजना । यद्वा बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः असावादित्य इव तेजस्वीत्येवं योजना ॥ ३१—४० ॥ वञ्चनार्थं परिगृहीतवेष इति मां यथावगच्छसि तथा नास्मीत्यर्थः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

लिङ्गानि चिह्नानि ॥ ३ ॥ संस्थानं अवयवसंनिवेशः। रूपं आकारः वर्णः कान्तिर्वा ॥४—५॥ बतेत्यामन्त्रणे। जानन्ती त्वं दिष्ट्या मां परिपृच्छसीति संबन्धः ॥ ६ ॥ लक्षितानि त्वया दृष्टानि । मे मत्तः ॥ ७ ॥ रामः सर्वाङ्गसुन्दरः । कमलपत्राक्षः कान्तिप्रवाहे आवर्त इव अत्यन्तमाकर्षकनयनशोभः । तादृशनयनसौन्दर्यसीमाभूमिमाह—सर्वसत्त्वमनोहरः । तिर्यग्जातितया विटपाद्विटपं प्लवतो ममापि चित्तापहारकः अविशेषज्ञस्यापि मनोहर इत्यर्थः। रूपदाक्षिण्यसंपन्नः रूपमित्येतद्विग्रहगुणानामुपलक्षणं दाक्षिण्यमित्यात्मगुणानामुपलक्षणं देहगुणैरात्मगुणैश्चान्यून इत्यर्थः । संपन्नः प्रसूतः । इदं सर्वं नागन्तुकं किंतु औत्पत्तिकमित्यर्थः । अत्युत्कटं वदसि किमेवंविधोपरोप्यस्ति न वेत्यपेक्षायामाह—जनकात्मजे इति । भवती च तादृशीत्यर्थः ॥ ८ ॥ संग्रहेणोक्तान्गुणान्विवृणोति

**तनि०** गुरुकुलवासायोग्यानांवानराणांवसिष्ठशिष्याणांचईदृशसमागमःकथंजातः । शास्त्रवश्यानामेवगुरुकुलवासयोग्यत्वात् । रमयतीतिरमन्तेयोगिनइतिचरामः । रामत्वमेवाह—**कमलपत्राक्षइति** । सर्वसत्वमनोहरइति । तत्रवानरजातीयमच्चित्तापकर्षणमेवप्रमाणमितिध्वन्यते । तर्ह्येवंविधःपुमान्विद्यतेकिमितिचेन्नेत्याह—जनकात्मजइति । "तुल्यशील" इत्यादिना

[**पा०**] १ क. ग. घ. च. छ. झ. ञ. ट. महारथं. २ ग. च. छ. ज. ञ. सुग्रीवममितौजसं. ३ च. मातर्यथा. ४ घ. सौम्यमिदं. ५ क. ख. घ. ङ. झ. ट. चिह्नानि. ६ ग. घ. ङ.—ज. भूयस्त्वमाचक्ष्व. ७ ङ.—ट. तस्यच. ८ ख. यदिदिष्ट्या. ९ ङ.—ट. पूर्णचन्द्रनिभाननः. ख. ग. घ. सर्वभूतमनोहरः. क. सर्वभूतहितेरतः.

रक्षिता जीवलोकस्य [1]स्वजनस्याभिरक्षिता ॥ रक्षिता स्वस्य [2]वृत्तस्य धर्मस्य च परन्तपः ॥ १० ॥
रामो भामिनि लोक[3]स्य चातुर्वर्ण्यस्य रक्षिता ॥ मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥११॥
अर्चिष्मान[4]र्चितोत्यर्थं ब्रह्मचर्यव्रते स्थितः ॥ साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ १२ ॥
[5]राजविद्याविनीतश्च ब्राह्मणाना[6]मुपासिता ॥ श्रु[7]तवाञ्शीलसंपन्नो विनीतश्च परन्तपः ॥ १३ ॥
यजुर्वेदविनीतश्च वेद[8]विद्भिः सुपूजितः ॥ धनुर्वेदे च वेदेषु वेदाङ्गेषु च निष्ठितः ॥ १४ ॥
विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः ॥ गूढजत्रुः सुताम्राक्षो [9]रामो देवि जनैः श्रुतः ॥ १५ ॥
दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् ॥ [10]समः समविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥१६॥
त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः ॥ त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः ॥१७॥
त्रिवलीमांस्त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान् ॥ चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुस्समः ॥ १८ ॥

—तेजसेत्यादिना ॥ ९—११ ॥ ब्रह्मचर्यव्रते स्थितः गृहस्थस्यास्य ब्रह्मचर्यं नाम ऋतोरन्यत्र स्त्रीसङ्गमत्यागः । तदाह मनुः—"षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाद्याश्चतस्रश्च विवर्जयेत्" ॥ प्रचारज्ञः प्रयोगज्ञः । ऐहिकामुष्मिकानां कर्मणां । प्रचारं गतिं हेतुफलभावव्यवस्थां तत्त्वतो जानातीत्यर्थ इत्यप्याहुः ॥ १२ ॥ राजविद्याविनीतश्च चतस्रो राजविद्याः । "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः" इत्युक्ताः । तासु विनीतः शिक्षितः । श्रुतवान् अवधृतवान् । शीलसंपन्नः सदाचारसंपन्नः । पूर्वं यज्ञादिकर्मानुष्ठातृत्वमुक्तमिति न पुनरुक्तिः ॥ १३ ॥ वेदेषु यजुर्व्यतिरिक्तवेदेषु । अनेन स्वस्य यजुर्वेदत्वं सूचितं ॥ १४ ॥ एवमात्मगुणानभिधाय विग्रहगुणानाशास्ते—विपुलांस इत्यादिना ॥ गूढजत्रुः अस्पष्टभुजसन्ध्यस्थिः ॥ १५ ॥ समः अन्यूनातिरिक्तदेहप्रमाणः ॥ १६ ॥ त्रिस्थिर इति त्रिषु स्थानेषु स्थिरः । तथोक्तं सामुद्रिके—"उरश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिराः" इति । त्रिप्रलम्बः त्रिषु प्रलम्बः । "दीर्घभ्रूबाहुमुष्कस्तु चिरजीवी धनी नरः" इति वचनात् । अन्यत्र तु । "त्रयश्च यस्य विद्यन्ते प्रलम्बा मेढ्रबाहवः" इति । त्रिसमः त्रिषु समः । "केशाग्रं वृषणं जानु समा यस्य स भूपतिः" इति वचनात् । त्रिषु चोन्नतः । तदाह वराहमिहिरः—"उन्नतकुक्षिः क्षितिपः परिमण्डलोन्नतनाभयः क्षितिपाः । हृदयं न वेपनं पृथु समोन्नतं मांसलं च नृपतीनां" इति ॥ त्रिताम्रः त्रिषु ताम्रः । "श्लिष्टाङ्गुलीरुचिरताम्रनखौ सुपार्ष्णी पादौ करावपि सुरक्तनखाग्ररेखौ" इति वचनात् । "नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिस्सुखी" इति च । त्रिषु स्निग्धः । "स्निग्धा भवन्ति वै येषां पादरेखाः शिरोरुहाः । तथा लिङ्गमणिस्तेषां महाभाग्यं विनिर्दिशेत्" इति सामुद्रिकवचनात् । त्रिषु गम्भीरः । अत्र वररुचिः—"स्वरः सत्त्वं च नाभिश्च गम्भीरः शस्यते बुधैः" इति । ब्राह्मे तु—"स्वरे गतौ च नाभौ च गम्भीरस्त्रिषु शस्यते" इति । नित्यश इति सर्वत्र विशेषणीयं । तेन रोगाद्युपाधिकृतरागादिनिवृत्तिः ॥ १७ ॥ त्रिवलीमान् उदरे वलित्रयवान् । कण्ठवलित्रयवान्वा । अत्र गर्गः—"स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता । न

भवत्येवप्रसिद्धा नपुमान्कश्चिदितिभावः ॥ **ती०** प्रसूतइत्यनेन गुणानामुत्पत्तिविशिष्टत्वमवगम्यते ॥ ८ ॥ **ति०** लोकस्य सर्वस्यकर्ता हर्ताभर्ताचेतिशेषः । अनेनसृष्टिस्थितिसंहारकर्तृत्वरूपंब्रह्मलक्षणंरामस्योक्तंगूढं । एवंज्ञानंतत्क्षणंभगवतैवस्वमायातिरस्करिणीनिरासादितिबोध्यं । लोकस्यमर्यादानां वर्णाश्रममर्यादानांकर्ता । भगवदवतारत्वात् । कारयिता कालात्मना अवतीर्णरूपेणचातुर्वर्ण्यरक्षिताच ॥ **स०** चातुर्वर्ण्यस्य स्वार्थेष्यञ् ॥ ११ ॥ **ति०** अर्चिष्मान् आदित्यरूपःसन्नर्चितः । त्रैवर्णिकैरितिशेषः । ब्रह्मचर्यव्रते गृहस्थोचितपर्वादिवर्जनपूर्वकमृतुगमनलक्षणेस्थितः । वस्तुतस्तु गार्हस्थ्येप्यस्खलितरेताः । मनस्संकल्पेनैवदेव्यारतिप्रीतेःसंतानस्यचसंपादनमितिभावः ॥ **स०** यद्वा स्वरतत्वाद्भोगार्थमनपेक्षितस्त्रीसङ्गादिरितिब्रह्मचर्यव्रतंवा ॥ १२ ॥ **स०** विशिष्ययजु-

[ **पा०** ] १ क. घ.—ट. स्वजनस्यचरक्षिता. २ क. धर्मस्यवृत्तस्यच. ३ ख. लोकेऽस्मिंश्चातुर्वर्ण्यस्य. ४ ख. घ. नर्चितो नित्यं. ५ ङ.—ट. राजनीत्यांविनीतश्च. ६ ङ. ज. झ. ट. मुपासकः. ७ क. च. छ. ज. ञ. ट. ज्ञानवाञ्शीलसंपन्नः. ८ क. ज. वेदविद्भिश्च. ९ ङ.—ट. रामोनाम. ख. देविरामो. १० घ. ङ. झ. ट. समश्चसुविभक्ताङ्गः.

**चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः ॥ महोष्ठहनुनासश्च पञ्चस्निग्धोष्टवंशवान् ॥ १९ ॥**
**दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान् ॥ षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ॥ २० ॥**

घातिदीर्घा चतुरङ्गुला च ग्रीवा सुदीर्घा भवतीह धन्या " इति ॥ त्र्यवनतः त्रीण्यवनतानि निम्नानि यस्यासौ त्र्यवनतः । तानि स्तनचूचुकपादरेखाः । अत्र मिहिरः—" पीनोपचितैर्निम्नैः क्षितिपतयश्चूचुकैः स्तनैः सुखिनः । स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निस्वानां" इति ॥ चत्वारि व्यङ्गानि ह्रस्वानि यस्यासौ चतुर्व्यङ्गः । अत्र वररुचिः—"ग्रीवा प्रजननं पृष्ठं ह्रस्वं जङ्घा च पूज्यते " इति । यद्वा चत्वारो व्यङ्गाः विकलाः यस्य सः चतुर्व्यङ्गः । ते च सिराविकलः पादः रोमान्तरविकलो रोमकूपः दैर्घ्यविकलो मेढ्रः मांसविकलो बस्तिः । अत्र नारदः—" पादैः प्रस्वेदरहितैः सिराहीनश्च पार्थिवः । एकरोमा भवेद्राजा द्विरोमा पण्डितो भवेत् ॥ त्रिरोमा चतूरोमा च भवेद्भाग्यविवर्जितः । समपादोपविष्टस्य गुल्फं स्पृशति मेहनम् ॥ यस्येश्वरं तं जानीयात्सुखिनं चैव मानवम् । निर्मांसः संहतो बस्तिर्येषां तेसुखभागिनः " इति । त्रिशीर्षवान् त्रिभिर्लक्षणैर्युक्तं शीर्षं तदस्यास्तीति त्रिशीर्षवान् । तानि लक्षणान्यावर्ताः । " आवर्तत्रयरुचिरं यस्य शिरः स क्षितिभृतांनेता " इति कथनात् । यद्वा त्रिप्रकारं समवृत्तंछत्राकारं विशालंच शीर्षमस्यास्तीति त्रिशीर्षवान् । अत्र नारदः—" समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकछत्रां महीं भुङ्क्ते दीर्घमायुश्च विन्दति " ॥ चतस्रः कलाः वेदाः यस्य चतुष्कलः । अत्र शरीरलक्षणप्रकरणे कलाशब्दस्तत्सूचकरेखापरः । अत्र नन्दी—" मूलेङ्गुष्ठस्य वेदानां चतस्रस्तिस्र एव वा । एका द्वे वा यथायोगं रेखा ज्ञेया द्विजन्मनां " इति ॥ चतुर्लेखः ललाटे पादयोः पाण्योश्चतस्रो लेखा रेखा यस्य स चतुर्लेखः । "ललाटे यस्य दृश्यन्ते चतुस्त्र्येकरेखिकाः । शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिस्तथा" इति कात्यायनः । " यस्य पादतले वज्रध्वजशङ्खाङ्कुशोपमाः । रेखास्सम्यक्प्रकाशन्ते मनुजेन्द्रं तमादिशेत् " इति नारदः । " पाणौ चतस्रो रेखाश्च यस्य तिष्ठन्त्यभङ्गुराः " इतिब्रह्मा । चत्वारः किष्कवः यस्य स चतुष्किष्कुः । चतुर्विंशत्यङ्गुलात्मको हस्तः किष्कुः । षण्णवत्यङ्गुलोत्सेध इत्यर्थः । " षण्णवत्यङ्गुलोत्सेधो यः पुमान्स दिवौकसः " इतिब्राह्मपुराणवचनम् । चतुस्समः चत्वारः समा यस्य स चतुस्समः । ते च बाहुजानूरुगण्डाः । तदुक्तं ब्रह्माण्डे—" बाहुजानूरुगण्डाश्च चत्वार्यथ समानि च " इति ॥ १८ ॥ चतुर्दशसमद्वन्द्वः चतुर्दशसंख्यानि समानि द्वन्द्वानि यस्य सः । तथात्र सामुद्रिकं । " भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः " इति । चत्वारो दंष्ट्राकारा दन्ता यस्य स चतुर्दंष्ट्रः । तदाह मिहिरः—" स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः " इति । चतुर्गतिः चतुर्णां सिंहशार्दूलगजवृषभाणां गतिरिव गतिर्यस्य सः । " गजसिंहगती वीरौ शार्दूलवृषभोपमौ " इति बालकाण्डोक्तेः । महोष्ठहनुनासश्च ओष्ठस्य महत्त्वं बन्धुजीवबिम्बफलारुणमांसलत्वं हनोस्तु परिपूर्णमांसलत्वं नासिकाया दीर्घतुङ्गत्वं । तथाच संहिता । " बन्धुजीवकुसुमोपमोधरो मांसलो रुचिरबिम्बरूपधृत् । पूर्णमांसलहनुस्तु भूमिपस्तुङ्गतुण्डरुचिराकृतिस्तथा " इति ॥ तुण्डशब्देन नासिकोच्यते । पञ्चस्निग्धः पञ्च स्निग्धाः अवयवाः यस्य सः । ते च वाक्यवक्त्रनखलोमत्वचः केशनेत्रदन्तत्वक्पादतलानि वा । अत्र वररुचिः—" चक्षुस्स्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् । त्वचःस्नेहेन शयनं पादस्नेहेन वाहनं " इति ॥ " स्निग्धनीलमृदुकुञ्चितास्तथा मूर्धजाः सुखकराः समं शिरः " इति मिहिरः । पूर्वं त्रिषु स्निग्ध इत्युक्तेः अत्र पञ्चस्निग्ध इतीदं मतभेदमाश्रित्योक्तं । अष्टवंशवान् अष्टौ वंशाः आयतावयवा यस्य सः आयताष्टावयव इत्यर्थः । अत्र सामुद्रिकं । " पृष्ठवंशः शरीरं च हस्तपादाङ्गुली करौ । नासिका चक्षुषी कर्णौ प्रजनो यस्य चायताः " इति ॥ प्रजनस्यायतत्वमार्जवं ॥ १९ ॥ दशपद्मः दशपद्माकारावयवाः यस्य सः दशपद्मः । " मुखने-

वेदग्रहणेन रामोयाजुषइतिसूचयति ॥ १४ ॥ ती० द्विशुक्लवान् द्वौशुक्लौ शुद्धौ मातृपितृवंशौयस्यसः । तदुक्तं " द्वौशुक्लौतुशुभौ शुद्धौवंशौमातुःपितुस्तथा " इति । ननुत्रिसमस्त्रिषुचोन्नतः । 'त्रिषुस्निग्धस्त्रिभिर्व्याप्तः' इत्युक्तंप्राक् । इहतुचतुस्समःषडुन्नतःपञ्च

[1]सत्यधर्मपरः श्रीमान्संग्रहानुग्रहे रतः ॥ देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ २१ ॥
भ्राता च तस्य द्वैमात्रः सौमित्रि[2]रपराजितः ॥ [3]अनुरागेण रूपेण [4]गुणैश्चैव तथाविधः ॥
[ स [5]सुवर्णच्छविः श्रीमान्रामः श्यामो महायशाः ]॥ २२ ॥
[6]तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ ॥ विचिन्वन्तौ महीं कृत्स्ना[7]मस्माभिरभिसंगतौ ॥ २३ ॥
त्वामेव मार्गमाणौ तौ विचरन्तौ वसुन्धराम् ॥ ददर्शतुर्मृगपतिं पूर्वजेनावरोपितम् ॥ २४ ॥
ऋश्यमूकस्य [8]पृष्ठे तु बहुपादपसंकुले ॥ भ्रातुर्भयार्तमासीनं सुग्रीवं [9]प्रियदर्शनम् ॥ २५ ॥
[10]वयं तु हरिराजं तं सुग्रीवं सत्यसङ्गरम् ॥ [11]परिचर्यास्महे राज्यात्पूर्वजेनावरोपितम् ॥ २६ ॥
ततस्तौ चीरवसनौ धनुः[12]प्रवरपाणिनौ ॥ ऋश्यमूकस्य शैलस्य रम्यं देशमुपागतौ ॥ २७ ॥
स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः ॥ [13]अवप्लुतो गिरेस्तस्य शिखरं भयमोहितः ॥ २८ ॥
ततः स शिखरे तस्मिन्वानरेन्द्रो व्यवस्थितः ॥ तयोः समीपं मामेव प्रेषयामास सत्वरम् ॥ २९ ॥
तावहं पुरुषव्याघ्रौ सुग्रीववचनात्प्रभू ॥ रूपलक्षणसंपन्नौ कृताञ्जलिरुपस्थितः ॥ ३० ॥

त्रास्यजिह्वोष्ठतालुस्तननखाः करौ। पादौ च दशपद्मानि पद्माकाराणि यस्य च" इति। दश बृहत् दशबृहदवयवा यस्य सः। ते च —" उरः शिरो ललाटं च ग्रीवा बाहूंसनाभयः। पार्श्वपृष्ठस्वराश्चेति विशालास्ते शुभप्रदाः " इति सामुद्रिकं। ब्राह्मे तु " शिरोललाटे श्रवणे ग्रीवा वक्षश्च हृत्तथा। उदरं पाणिपादौ च पृष्ठं दश बृहन्ति च " इति। त्रिभिर्व्याप्तः " त्रिभिर्व्याप्तिश्च यस्य स्यात्तेजसा यशसा श्रिया " इति ब्राह्मोक्तरीत्या त्रिभिर्व्याप्तः। द्विशुक्लवान् द्वौ दन्तनेत्रे शुक्ले यस्य सः द्विशुक्लवान्। षडुन्नतः षट् उन्नता अवयवा यस्य सः। ते च—" कक्षः कुक्षिश्च वक्षश्च घ्राणं स्कन्धो ललाटिका। सर्वभूतेषु निर्दिष्टा उन्नताङ्गाः शुभप्रदाः " इति वररुचिः। अत्र मतभेदेनोक्तेर्न पुनरुक्तिः। मतभेदश्रवणं च रामस्य सकलशास्त्रोक्तमहापुरुषलक्षणपरिपूर्णत्वद्योतनाय। नव तनुः नव तनवः सूक्ष्मा यस्य। तानि च—केशश्मश्रुनखलोमत्वगङ्गुलिपर्वशेफोबुद्धिदर्शनानि। " सूक्ष्माण्यङ्गुलिपर्वाणि केशलोमनखत्वचः। शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविनः " इति वररुचिः। त्रिभिर्व्याप्नोति त्रिभिः पूर्वाह्णमध्याह्नापराह्णैः कालैः धर्मार्थकामान् व्याप्नोति अनुतिष्ठतीति। तदुक्तं ब्राह्मे।"धर्मार्थकामाः कालेषु त्रिषु यस्य स्वनिष्ठिताः" इति ॥ २० ॥ संग्रहानुग्रह इति। संग्रहः अर्जनं। अनुग्रहः फलदानं ॥२१॥ द्वैमात्रः सपत्नीपुत्रः ॥२२—२३ ॥ मृगपतिं सुग्रीवं। पूर्वजेन वालिना। अवरोपितं राज्यादिति शेषः ॥ २४—२६ ॥ पाणिनाविति

स्निग्धःत्रिभिर्व्याप्नोतीत्युच्यते। सत्यं मतभेदमाश्रित्योक्तत्वान्नदोषः। अन्येषामप्येवंविधानांसकलशास्त्रोक्तमहापुरुषलक्षणानामेक सकलगुणारामोराम एवलक्ष्यमितिसूचनाय ॥ **ति०** नवतनुः नवसुसूक्ष्मः। तानिच—" सूक्ष्माण्यङ्गुलिपर्वाणिकेशरोमनखत्वचः। शेफश्चयेषांसूक्ष्माणितेनरादीर्घजीविनः " इतिप्रोक्तंषट्कं। मृदुश्मश्रुत्वंसूक्ष्मदृष्टित्वंसूक्ष्मबुद्धित्वंचेतिनवसूक्ष्मत्वं। दृष्टेःसौक्ष्म्यं रत्नपरीक्षान्तसूक्ष्मदर्शनचातुर्यं। बुद्धेःसूक्ष्मत्वं तत्त्वसाक्षात्कारसमर्थत्वं। त्रिभिर्व्याप्नोति धर्मार्थकामैःकालंयथोचितंव्याप्नोति। त्रिवर्गसेवीत्यर्थः ॥ २० ॥ **ति०** संग्रहानुग्रहे संग्रहः धनबलादीनां। अनुग्रहः ताभ्यांप्रजारक्षणं। तदुभयनिष्ठः ॥ २१ ॥ **रामानु०** द्वैमात्रः द्वयोर्मात्रोरपत्यंपुमान्द्वैमात्रः। " मातुरुत्संख्यासंभद्रपूर्वायाः " इत्यण्प्रत्ययः। उकाराभावआर्षः। सुमित्रापत्यस्यलक्ष्मणस्यद्वैमातुरत्वंजन्मप्रभृतिरामवत्कौसल्ययासंवर्धितत्वात्। **ति०** द्वैमात्रः राममात्रपेक्षयाद्वितीयामाता। तस्याअपत्यमित्यर्थः। भिन्नोदरभ्रातेत्यर्थः। वैमात्रइतिपाठान्तरं ॥ २२ ॥ **रामानु०** परिचर्य परिचर्यांकृत्वा। आस्महे तिष्ठामइत्यर्थः ॥ **ति०** परिचर्यामहे। तङ्व्यनावार्षौ ॥ परिचरामइत्यर्थः ॥ **स०** परिचर्यामहे सुग्रीवमुद्दिश्ययापरिचर्यासेवातद्रूपेमहेउत्सवेइत्यर्थः। स्थिताइतिशेषः। द्वितीयाषष्ठ्यर्थेवा ॥ २६ ॥ **स०** धनुःप्रवरपाणिनौ पणोव्यवहारएवपाणः। धनुःप्रवराभ्यांपाणोऽनयोरस्तीतितथा। धनुःप्रवरपाणिनां नौ नायकावित्यर्थइतिवा। " नेतानश्वसमाख्यातः " इतिनानार्थपदमञ्जर्यां। नान्तोवायंशब्दः ॥ २७ ॥

[ **पा०** ] १ ङ. ज.—ट. सत्यधर्मरतः. २ ङ. झ. ट. रमितप्रभः. ३ च. छ. ञ. अनुकारेण. ४ ख. गुणैरपि. ङ. झ. ट. गुणैश्चापि. ५ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ६ ग. उभौतौ. ७ घ.—ट. मस्माभिःसहसंगतौ. ८ झ. ट. मूलेतु ९ ख. घ. प्रियवादिनं. १० ङ. झ. ट. वयंच. ११ क.—ट. परिचर्यामहे. १२ ग. घ. प्रवरधारिणौ. १३ क. ग.—ट. अभिप्लुतो.

तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ ॥ पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ ॥ ३१ ॥
निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने ॥ तयोरन्योन्यसंलापाद्भृशं प्रीतिरजायत ॥ ३२ ॥
ततस्तौ प्रीतिसंपन्नौ हरीश्वरनरेश्वरौ ॥ परस्परकृताश्वासौ कथया पूर्ववृत्तया ॥ ३३ ॥
ततः स सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः ॥ स्त्रीहेतोर्वालिना भ्रात्रा निरस्तमुरुतेजसा ॥ ३४ ॥
ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः ॥ लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् ॥ ३५ ॥
स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः ॥ तदासीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान् ॥ ३६ ॥
ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया ॥ यान्याभरणजालानि पातितानि महीतले ॥ ३७ ॥
तानि सर्वाणि रामाय आनीय हरियूथपाः ॥ संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ॥ ३८ ॥
तानि रामाय दत्तानि मयैवोपहृतानि च ॥ स्वनवन्त्यवकीर्णानि तस्मिन्विगतचेतसि ॥ ३९ ॥
तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तव ॥ तेन देवप्रकाशेन देवेन परिदेवितम् ॥ ४० ॥
पश्यतस्तानि रुदतस्ताम्यतश्च पुनः पुनः ॥ प्रादीपयन्दाशरथेस्तानि शोकहुताशनम् ॥ ४१ ॥
शयितं च चिरं तेन दुःखार्तेन महात्मना ॥ मयाऽपि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः ॥४२॥
तानि दृष्ट्वा महाबाहुर्दर्शयित्वा मुहुर्मुहुः ॥ राघवः सहसौमित्रिः सुग्रीवे संन्यवेदयत् ॥ ४३ ॥
स तवादर्शनादार्ये राघवः परितप्यते ॥ महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ ४४ ॥
त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् ॥ तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥ ४५ ॥
तवादर्शनशोकेन राघवः प्रविचाल्यते ॥ महता भूमिकम्पेन महानिव शिलोच्चयः ॥ ४६ ॥
काननानि सुरम्याणि नदीः प्रस्रवणानि च ॥ चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे ॥ ४७ ॥
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः ॥ समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ ४८ ॥
सहितौ रामसुग्रीवावुभावकुरुतां तदा ॥ समयं वालिनं हन्तुं तव चान्वेषणं तथा ॥ ४९ ॥
ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः ॥ किष्किन्धां समुपागम्य वाली युद्धे निपातितः ॥५०॥
ततो निहत्य तरसा रामो वालिनमाहवे ॥ सर्वर्क्षहरिसङ्घानां सुग्रीवमकरोत्पतिम् ॥ ५१ ॥
रामसुग्रीवयोरैक्यं देव्येवं समजायत ॥ हनुमन्तं च मां विद्धि तयोर्दूतमिहागतम् ॥ ५२ ॥

नान्तत्वमार्षं ॥ २७—३५ ॥ अत्यर्थं निष्प्रभ इति आत्मवद्रामस्यापि दुःखहेतुश्रवणादिति भावः। यद्वा रामापेक्षया अत्यन्तनिष्प्रभः । रामः सीताविरहेण निष्प्रभोभूत् सुग्रीवस्तु तयोस्साहित्यादर्शनाद्रामक्लेशदर्शनाच्चात्यर्थं निष्प्रभोभूत् ॥ ३६—३७ ॥ आनीय हरियूथपा इति पूर्वं सुग्रीवेणानयनमुक्तं तद्धरियूथपद्वारेत्यत्रोच्यते । गतिं रावणस्थानं ॥ ३८ ॥ दत्तानि सुग्रीवेणेति शेषः। मयैवोपहृतानि पूर्वं पतनकाल इतिशेषः । इदानीं हरियूथपैरानीतत्वोक्तेः। स्वनवन्ति आकाशात्पतनकाले ॥ ३९—४१ ॥ शयितं मूर्च्छितं ॥ ४२ ॥ सुग्रीवे संन्यवेदयत् सुग्रीवहस्ते न्यस्तवानित्यर्थः ॥ ४३ ॥ अग्निपर्वतो नाम मेरुशिखरवर्ती कश्चिद्गिरिः। उक्तंच भारते। "अत्र माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा । नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ" इति ॥४४—५१॥ ननु वानराणां नराणां च कथमासीत्समागम इति

**स०** त्वन्नाशजं त्वदनुपलंभजं। "नाशो निधनानुपलंभयोः" इतिविश्वः ॥ ३५ ॥ **स०** ताभ्यां रामलक्ष्मणाभ्यां। छत्रिन्यायेनेयमुक्तिः ॥ हरीश्वरः वाली ॥ ५० ॥ **स०** ऐक्यं मत्यैक्यं ॥ ५२ ॥

**[ पा० ]** १ क. ग.—ट. संभाषात्. २ ख. घ. ङ. झ. ट. तत्रतौ. ३ क. ग.—ट. कीर्तिसंपन्नौ. ४ ङ. ज. झ. निरस्तंपुरु. ५ क. ग. घ. त्वन्नाशजनितं. ६ क. ग.—ज. तच्छ्रुत्वा. ७ क.—घ. च.—ट. महार्हाणिदर्शयित्वा. ८ क. ग.—झ. संन्यवेशयत. ९ क. घ. ङ. झ. ञ. ट. परिचाल्यते. ज. प्रतिचाल्यते. १० ख. हत्वा. ११ ङ. च. छ. झ. ञ. ट. प्रति. १२ क.—घ. च. छ. ज. ञ. युधि. १३ ङ.—ट. मुपागतं.

स्वराज्यं प्राप्य सुग्रीवः समानीय हरीश्वरान् ॥ त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥५३॥
आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसा ॥ अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम् ॥ ५४ ॥
ततस्ते मार्गमाणा वै सुग्रीववचनातुराः ॥ चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ ५५ ॥
अङ्गदो नाम लक्ष्मीवान्वालिसूनुर्महाबलः ॥ प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥ ५६ ॥
तेषां नो विप्रनष्टानां विन्ध्ये पर्वतसत्तमे ॥ भृशं शोकपरीतानामहोरात्रगणा गताः ॥ ५७ ॥
ते वयं कार्यनैराश्यात्कालस्यातिक्रमेण च ॥ भयाच्च कपिराजस्य प्राणांस्त्यक्तुं व्यवस्थिताः ॥५८॥
विचित्य वनदुर्गाणि गिरिप्रस्रवणानि च ॥ अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं समुद्यताः ॥५९॥
दृष्ट्वा प्रायोपविष्टांश्च सर्वान्वानरपुङ्गवान् ॥ भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः ॥ ६० ॥
तव नाशं च वैदेहि वालिनश्च वधं तथा ॥ प्रायोपवेशमस्माकं मरणं च जटायुषः ॥ ६१ ॥
तेषां नः स्वामिसंदेशान्निराशानां मुमूर्षताम् ॥ कार्यहेतोरिवायातः शकुनिर्वीर्यवान्महान् ॥ ६२ ॥
गृध्रराजस्य सोदर्यः संपातिर्नाम गृध्रराट् ॥ श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् ॥ ६३ ॥
यवीयान्केन मे भ्राता हतः क्व च निपातितः ॥ एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः ॥६४॥
अङ्गदोकथयत्तस्य जनस्थाने महद्वधम् ॥ रक्षसा भीमरूपेण त्वामुद्दिश्य यथातथम् ॥ ६५ ॥
जटायुषो वधं श्रुत्वा दुःखितः सोरुणात्मजः ॥ त्वां शशंस वरारोहे वसन्तीं रावणालये ॥ ६६ ॥
तस्य तद्वचनं श्रुत्वा संपातेः प्रीतिवर्धनम् ॥ अङ्गदप्रमुखास्तूर्णं ततः संप्रस्थिता वयम् ॥ ६७ ॥
विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तरम् ॥ त्वद्दर्शनकृतोत्साहा हृष्टास्तुष्टाः प्लवङ्गमाः ॥ ६८ ॥
अङ्गदप्रमुखाः सर्वे वेलोपान्तमुपस्थिताः ॥ चिन्तां जग्मुः पुनर्भीतास्त्वद्दर्शनसमुत्सुकाः ॥ ६९ ॥

वामदक्षिणहस्तवैषम्यमप्यविजानानां शाखायाश्शाखामाप्लुत्य जीवतां तिरश्चां वसिष्ठशिष्यतया निरतिशयाचारसंपन्नयोश्चक्रवर्तिपुत्रयोश्च कथं समागमो जात इति पृष्टे तस्य किमुत्तरमुक्तमित्यत्राह—रामसुग्रीवयोरिति ॥ रामसुग्रीवयोरैक्यमेवं समजायत । एवमिति प्रत्यक्षनिर्देशः । स्वानुजे विद्यमानेपि यथाहं सुग्रीवदूतोन्तःपुरकार्यसमाधानायागतः । तथा तयोरैक्यं मैत्री जातेत्यर्थः । यद्वा एवं समजायत अहमप्येवं दृष्टवान् । न योग्यतामवगच्छामीत्यर्थः ॥५२—५४॥ सुग्रीववचनातुराः सुग्रीवाज्ञाभीताः । सुग्रीववचनानुगा इति च पाठः ॥ ५५ ॥ त्रिभागबलसंवृतः तृतीयांशेन बलेन सैन्येन संवृत इत्यर्थः । वृत्तिविषये पूरणार्थत्वं संख्याशब्दस्येष्यते ॥ ५६ ॥ विप्रनष्टानां बिले अदर्शनं गतानां ॥५७॥ कालस्य सुग्रीवकल्पितमासस्य । कपिराजस्य सुग्रीवात् ॥ ५८—५९ ॥ दृष्ट्वेत्यादिश्लोकद्वयमेकं वाक्यं ॥ परिदेवनकर्माह—तवेति ॥ ६०—६१ ॥ स्वामिसंदेशात् मासादूर्ध्वमनागतानां भयमित्येवंरूपात् । तेषां कार्यहेतोः ॥ ६२—६७॥ हृष्टाः उत्साहवन्तः । तुष्टाः आनन्दवन्तः ॥ ६८ ॥ वेलोपान्तं वेला सिन्धुपूरः तस्यो-

**ति०** त्रिभागबलसंवृतः सेनायास्त्रिष्वंशेषुएकांशसेनावृतइत्यर्थः ॥ ५६ ॥ **ति०** कार्यहेतोः कार्यसिध्यर्थमिवायातः । दैवादितिशेषः । **स०** कार्यहेतोः अस्मद्भक्षणाख्यकार्येण । इहायातः अस्मत्समीपंप्राप्तः ॥ ६२ ॥ **ति०** आख्यातुमित्यसमानकर्तृकेपितुमुन्नार्षः ॥ **स०** आख्यातुं आख्यापयितुं । तेनसमानकर्तृकत्वोपपत्तिः ॥ ६४ ॥ **स०** महद्वधं महतोजटायुषोवधः महद्वधः तं । परोपकारेप्राणत्यागान्महत्त्वं ॥६५॥ **स०** वरारोहाभ्यांसहिता सवरारोहा । तस्यास्संबुद्धिः । अतोनसइत्यस्याधिक्यं ॥६६॥

[ **पा०** ] १ झ. ट. स्वराज्यं. २ ङ. झ. ञ. ट. स्वानानीयमहाकपीन्. ३ क. ग. च. छ. ज. ञ. हरयश्चमहौजसः. ख. घ. सुग्रीवेणवनौकसः. ङ. झ. ट. सुग्रीवेणमहौजसः. ४ ङ. झ. ट. त्यक्तुमुपस्थिताः. ५ क. ख. घ. च.—ट. त्यक्तुंव्यवस्थिताः. ६ क.—ट. तथावधं. ७ क. ख. च. छ. ज. ञ. ट. रिहायातः. ८ ग. सचविनाशितः. ९ झ. ञ. ट. यथार्थतः. १० झ. ट. ठ. त्वामाहसवरारोहे. ११ क.—च. ज. ञ. प्रमुखास्सर्वे. १२ झ. ट. प्रस्थापितावयं. १३ घ.—ट. मुपागताः. १४ ग. जग्मुर्महात्मानः. ख. ङ. छ. झ. ट. जग्मुःपुनर्भीमां.

[1]तथाऽहं [2]हरिसैन्यस्य सागरं प्रेक्ष्य सीद[3]तः ॥ [4]व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः ॥ ७० ॥
लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला ॥ रावणश्च मया दृष्टस्त्वं च शोक[5]परिप्लुता ॥ ७१ ॥
एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते ॥ अभिभाषस्व मां देवि दूतो दाशरथेरहम् ॥ ७२ ॥
तं मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ॥ सुग्रीवसचिवं देवि बुध्यस्व पवनात्मजम् ॥ ७३ ॥
कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः ॥ गुरोराराधने युक्तो लक्ष्[6]मणश्च सुलक्षणः ॥ ७४ ॥
तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः ॥ अहमेकस्तु संप्राप्तः सुग्रीववचनादिह ॥ ७५ ॥
मयेयमसहायेन चरता कामरूपिणा ॥ दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा ॥ ७६ ॥
दिष्ट्याऽहं हरिसैन्यानां त्वन्नाशमनुशोचताम् ॥ अपनेष्यामि संतापं [7]तवाभिगमशंसनात् ॥ ७७ ॥
दिष्ट्या हि [8]मम न व्यर्थं देवि [9]सागरलङ्घनम् ॥ प्राप्स्याम्यहमिदं [10]दिष्ट्या त्वद्दर्शनकृतं यशः ॥ ७८ ॥
राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते ॥ स[11]मित्रबान्धवं हत्वा रावणं राक्षसाधिपम् ॥ ७९ ॥
[12]माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः ॥ ततो गच्छति गोकर्णं पर्वतं केसरी हरिः ॥ ८० ॥
स च दे[13]वर्षिभिर्दिष्टः पिता मम महाकपिः ॥ तीर्थे नदीपतेः पुण्ये शंबसादनमुद्धरत्[14] ॥ ८१ ॥
[15]तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि ॥ हनुमानिति विख्यातो लोके स्वेनैव कर्मणा ॥ ८२ ॥
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः ॥ [16]अचिराद्राघवो देवि त्वामितो नयिताऽनघे ॥ ८३ ॥
एवं विश्वासिता सीता हेतुभिः शोककर्शिता ॥ उपपन्नैरभिज्ञानैर्दूतं [17]तमवगच्छति ॥ ८४ ॥
अतुलं च गता हर्षं प्रहर्षेण च जानकी ॥ नेत्राभ्यां वक्रपक्ष्मभ्यां मुमोचानन्दजं [18]जलम् ॥ ८५ ॥
[19]चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ॥ अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ ८६ ॥
हनुमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा ॥ अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥ ८७ ॥
एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि ॥ किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ॥ ८८ ॥

पान्तं । "वेलाम्बुधेस्तीरवृद्ध्योः कालमर्यादयोरपि" इति दर्पः ॥ ६९—७२ ॥ रामकृतोद्योगं रामकृतोत्साहं ॥ ७३ ॥ गुरोः ज्येष्ठस्य । आराधने शुश्रूषणे । रतः लक्ष्मणश्च कुशली ॥ ७४—७५ ॥ विचयैषिणा अन्वेषणेच्छुना ॥ ७६ ॥ तवाभिगमशंसनात् त्वत्समीपप्राप्तिकथनात् ॥ ७७—७९ ॥ बुध्यस्व पवनात्मजमिति पवनात्मजत्वमुक्तं तत्कथं वानरस्येत्यपेक्षायामाह—माल्यवानिति ॥ गच्छति अगच्छत् ॥ ८० ॥ सः गोकर्णं गतः । देवार्षिभिः तत्रत्यैः । दिष्टः नियुक्तः । शंबसादनं तीर्थोपद्रवकारिणमसुरं शंबसादनाख्यं । उद्धरत् उदहरत् । देवर्षिप्रार्थनया अवधीदित्यर्थः ॥ ८१ ॥ हरिणः हरेः केसरिणः । क्षेत्रे पत्न्यां अञ्जनायां । जातः पितुर्देशान्तरगमनकाले जातः । अनेनान्यक्षेत्रे कथमन्येनोत्पादनमिति शङ्का पराकृता ॥ ८२ ॥ नयिता नेता ॥ ८३ ॥ अवगच्छति अवा-

ति० कामरूपिणा । अनेनरावणान्तःपुराद्यन्वेषणसामर्थ्यं सूचितं ॥ ७६ ॥ ति० सर्वमुत्तरं सर्वप्रत्युत्तरमाख्यातमित्यन्वयः ॥ किंकरोमीति । वर्तमानसामीप्येलटौ । प्रतियामि प्रतियास्ये रामसमीपं । किंकरोमि किंकरिष्ये । कथंवारोचते चिकीर्षितमितिशेषः ॥ ८८ ॥

[ पा० ] १ क. ङ. झ. ट. अथाहं. २ क. च. ज. ञ. हरिसैन्यानां. ३ क. च. छ. ज. ञ. सीदतां. ४ ग. व्यवधूयचसर्वांस्तान्. ५ ग. च. छ. ट. शोकनिपीडिता. ६ ङ.—ट. लक्ष्मणःशुभलक्षणः. ७ ङ. झ. तवाधिगमशासनात्. ८ ङ. च. ज. झ. ट. नममव्यर्थं. ९ घ. सागरस्यचलङ्घनं. ङ.—ट. सागरस्येहलङ्घनं. १० ङ. झ. ट. देवि. ११ ङ. झ. सपुत्रबान्धवं. १२ ख. छ. ज. कौरवोनाम. क. कुञ्जरोनाम. १३ ग. देवार्षिनिर्दिष्टः. १४ क.—च. ज. झ. ट. मुद्धरन्. १५ ङ. झ. ट. यस्याहं. १६ ङ. झ. ट. अचिरात्त्वामितोदेविराघवोनयिताध्रुवं. १७ ग. ङ. ञ. ट. तमधिगच्छति. १८ ग. पयः. १९ च. छ. ज. ञ. सातस्यवचनंश्रुत्वाताम्रशुक्लायतेक्षणा. अशोभतविशालाक्षी. क. चारुतच्चाननंदेव्याःपुण्डरीकायतेक्षणं.

हतेऽसुरे संयति शंबसादने कपिप्रवीरेण महर्षिचोदनात् ॥
ततोस्मि वायुप्रभवो हि मैथिलि प्रभावतस्तत्प्रतिमश्च वानरः ॥ ८९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ॥ ३६ ॥

हनुमता स्वस्मिन्नाश्वासदार्ढ्याय सीतायैश्रीरामाङ्गुलीयकदानम् ॥ १ ॥ तल्लाभहृष्टयासीतया हनुमच्छ्लाघनपूर्वकंराम-लक्ष्मणकुशलादिप्रश्नः ॥ २ ॥ हनुमता सीतांप्रत्येतावत्पर्यन्तंरामस्यानागमनात्स्वस्मिन्प्रीतिशङ्काजातकोपापनोदनाय रामानागमनस्य सीतावस्थानस्थानापरिज्ञानहेतुकत्वाभिधानम् ॥ ३ ॥ तथातस्यां रामस्यतद्विषयकप्रीत्यतिशयनिश्चयजननाय सशपथंरामशोकावस्थानप्रतिपादनपूर्वकं तत्प्राप्तयेरामप्रयत्नातिशयाभिधानेन तत्समाश्वासनम् ॥ ४ ॥

भूय एव महातेजा हनुमान्मारुतात्मजः ॥ अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १ ॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः ॥ रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ २ ॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ॥ समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥
[ इत्युक्त्वा प्रददौ तस्यै सीतायै वानरोत्तमः ] ॥ ३ ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् ॥ भर्तारमिव संप्राप्ता जानकी मुदिताऽभवत् ॥ ४ ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ॥ अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ ५ ॥
ततः सा ह्रीमती बाला भर्तृसंदेशहर्षिता ॥ परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ ६ ॥

गच्छत् ॥ ८४—८८ ॥ देवीनियुक्तार्थकरणे स्वस्य शक्तिरस्तीति द्योतयितुं स्वमाहात्म्यमाह—हत इति ॥ ततः असुरवधोपकारात् ॥ ८९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥३५॥

इत्थं संदेशकथनादिना देवीं विश्वास्याभिज्ञानाङ्गुलीयकदानेन दृढं विश्वासयति—वानरोहमित्यादिना ॥ २—३ ॥ गृहीत्वा देशान्तरादागतं बन्धुं दृष्ट्वेव स्वयं गृहीतवती । प्रेक्षमाणा वर्तमानार्थेन शानचा दत्तदृष्टिं न विचालितवतीत्युच्यते सा पूर्वं रावणत्वेन शङ्कितवती । भर्तुःकरविभूषणं पाणिग्रहणकाले हस्तस्पृष्टमाभरणं । करविभूषणमित्यनेन भोगातिशयात् प्रणयकोपे प्रवृत्ते परस्परमालोकनभाषणादिविरहदशायां काङ्क्षिते भाषणे मानातिशयेन मौने कृते रामोङ्गुलीयकं भूमौ च्यावयति स्म । तदा व्याजेन च्युतमङ्गुलीयकमिति सीतयाभिहिते प्रणयकोपशैथिल्यात् परस्परसंश्लेषो भूयोप्यभूत् । एवं घटकभूतं करविभूषणं भर्तारमिव संप्राप्तां अङ्गुलीयकदर्शनात्तस्य कान्तस्य करं स्मृतवती । तत्स्मृत्या बाहुं तत्स्मरणेन तद्विग्रहं । एवं भावनाप्रकर्षेण तं पुरस्थितमिव मत्वा तमालिङ्गितवती । जननीबुद्ध्या मुनिस्संप्राप्तेत्याह । जननीकृतभोगस्यावर्ण्यत्वात् । जानकी शोकहर्षाभ्यां क्लेष्टुमनर्हे कुले जाता । मुदिताऽभवत् इयमिदानीं मुदिता उदर्के किं भविष्यतीति न जान इत्याहर्षिः ॥ ४—५ ॥ प्रियं कृत्वा संमानं कृत्वा

ति० नहिरावणआत्मानंकथमपिकपिपुत्रइतिब्रूयादितिकपित्वनिश्चयायपुनःस्वजन्मानुवादः । ततः शंबसादनासुरवधप्रीतमहर्षेः प्रसादतइत्यर्थः । स० ततः मत्पितुस्तद्धननार्थंगमनानन्तरं । वायुप्रभवोस्मि तदवकाशे वायुनाजातोस्मि ॥ ८९ ॥ इति पञ्चत्रिंशःसर्गः ॥ ३५ ॥

ति० असि शीघ्रमेवभविष्यसि ॥ स० दुःखं तमआदिस्थं फलंयेषांते दुःखफलाः राक्षसाः । क्षीणाःदुःखफलायस्यानिमित्तेन सातथा । दुःखरूपंयत्फलं तत्क्षीणंयस्यांसावा । एष्यन्निश्चयेनेदंवचनं ॥ ३ ॥ ति० ह्रीमती अङ्गुलीयसांनिध्येभर्तृसांनिध्यादिवकिंचिल्लज्जावती । स० ह्रीमती पत्यौयद्रत्यौन्नत्यंकविरपिमापश्यदितिलज्जावती । प्रियंकृत्वा रावणादिविकल्पंविधूयप्रेमास्पदमेवकृत्वा

[ पा० ] १ क. पाठेइदमर्धंदृश्यते. २ घ. ङ. झ. ञ. ट. बभूवहर्षोदग्रं. च. ख. बभूवहर्षितोदग्रं. ३ छ. राहुमुक्तेन्दुमण्डलं. ४ क. छ. झ. श्रीमती. ५ क.—ट. भर्तुस्संदेश. ६ क. श्रुत्वा. ७ क. ग. च. ज. ञ. प्राशंसत.

विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ॥ येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ७ ॥
शतयोजनविस्तीर्णः सागरो मकरालयः ॥ विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ ८ ॥
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ॥ यस्य ते नास्ति संत्रासो रावणान्नापि संभ्रमः ॥ ९ ॥
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् ॥ यद्यपि प्रेषितस्तेन रामेण विदितात्मना ॥ १० ॥
प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ॥ पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ ११ ॥
दिष्ट्या च कुशली रामो धर्मात्मा सत्यसङ्गरः ॥ लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥१२॥
कुशली यदि काकुत्स्थः किंनु सागरमेखलाम् ॥ महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥१३॥
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे ॥ ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥ १४ ॥
कच्चिन्न व्यथितो रामः कच्चिन्न परितप्यते ॥ उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ १५ ॥
कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति ॥ कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥ १६ ॥
द्विविधं त्रिविधोपायमुपायमपि सेवते ॥ विजिगीषुः सुहृत्कच्चिन्मित्रेषु च परन्तपः ॥ १७ ॥

॥ ६ ॥ विक्रान्तइत्यादिपदत्रयेण तद्व्यत्क्रमेण ज्ञानशक्तिबलान्युच्यन्ते । इदं राक्षसपदमिति प्रज्ञोक्ता । त्वयैकेनेति सामर्थ्यं । प्रधर्षितमिति विक्रमः ॥ ७—८ ॥ प्राकृतं क्षुद्रं । संभ्रमः व्यग्रता ॥ ९ ॥ यद्यपीतिनिपातसमुदायो यस्मादित्यर्थे । अव्ययानामनेकार्थत्वात् ॥ १०—१२ ॥ अथ प्रणयरोषेण दूतसन्निधौ रामं गर्हते—कुशलीति ॥ काकुत्स्थः परपरिभवासहकुलेजातः । अनेन परपरिभव एव परिहरणीयः न स्वीय इति नियमोस्ति किं । किंनु सागरमेखलां महीं दहति । अत्र काकुत्स्थः दहति किंनु न दहतीत्यर्थः । सागरमेखलामिति विशेषणेन द्रवद्रव्यस्यैकेन कठिनद्रव्यस्यचैकेन बाणेन भवितव्यं किं । सागरं सलिलमेव तैलं कृत्वा महीं दग्धुं समर्थो न किमित्यर्थः । यद्वा स्वपत्नीं वा सुरक्षितपरिधानाङ्करोतीति भावः । अनादिकृतमर्यादा मही कथं दग्धुं शक्येत्यत्राह—युगान्तेति । महीमर्यादा तन्नयनरागपर्यन्तैवेति भावः । किं न सागरमेखलामित्यपि पाठः । काकुत्स्थः कुशली यदि तदा महीं किं न दहति । शक्तश्चेद्दहत्येव । न दहति अतो न शक्त इत्यर्थः ॥ १३ ॥ पक्षान्तरमाह—अथवेति ॥ १४ ॥ न व्यथितः न कृशः । उत्तराणि कार्याणि मत्प्राप्तिसाधकानि कच्चित्कुरुते ॥ १५ ॥ न दीनः कच्चित्संभ्रान्तः सन् कार्येषु न मुह्यति कच्चिदित्यन्वयः । पुरुषकार्याणि पुरुषेण कर्तव्यानि ॥ १६ ॥ तान्येवाह—द्विविधमिति ॥ परन्तपो रामः मित्रेषु विषये सुहृत्सन् द्विविधं सामदानरूपमुपायमपि । सेवते कच्चित् । चकारेणामित्रास्समुच्चीयन्ते । अमित्रेषु विषये

मलावा ॥ ६ ॥ ति० विक्रान्तः शूरः । समर्थः देशकालोचितकृत्यचतुरः । प्राज्ञः धर्मार्थविषयकसर्वशास्त्रार्थतत्त्वज्ञः । पदं स्थानं ॥ ७ ॥ ति० संत्रासः समुद्रादितिशेषः । स० प्राकृतं साधारणं । यतः मेइतिशेषः । यतः मेसंभ्रमः भयं । तस्माद्रावणादपिनसंत्रासः ॥ ९ ॥ ति० यदि यस्मात् ॥ ती० यद्यपीत्यवधारणे । मयासमभिभाषितुंअर्हसेयद्यपि अर्हस्येवेत्यर्थः । कुतः विदितात्मनारामेणप्रेषितइतिसंबन्धः ॥ यद्वा अप्यवधारणे । यदि यस्मात् । विदितात्मनारामेणप्रेषितः । तस्मान्मयासमभिभाषितुं अर्हस्येवेतिसंबन्धः ॥ १० ॥ शि० कोपेन रावणापराधज्ञानजनितक्रोधेन । महीं लङ्काभूमिं । किंनुदहति ॥ १३ ॥ ति० ननु-केवलंमहीमेवेतिकिमुच्यतेइत्याशयेनपक्षान्तरं—अथवेति । तथाशक्तिमन्तौयदि तर्हिंकिमितितूष्णींतिष्ठतःतत्राह—ममैवेति । दुःखानां दुःखहेतुपापानां । विपर्ययः नाशः । नाद्यापिसंवृत्तइत्यर्थः ॥ १४ ॥ ति० ममदुःखक्षयः ईषत्करः अपितु तस्यसुखावस्थानमेवमृग्यमित्याशयेनाह—कच्चिदिति । उत्तराणिकार्याणि मद्विमोचनफलानि ॥१५॥ ति० द्विविधं सौम्यासौम्यरूपप्रकारद्वयवत् ॥ त्रिविधोपायं धर्मार्थकामलक्षणत्रिविधपुरुषार्थानांप्राप्त्युपायभूतमुपायं सामाद्युपायमपिसेवतेकच्चित् । तथा मित्रेषुच विजिगीषुसुहृत्कच्चित् । विजिगीषुसुहृदिति बहुव्रीहिस्तत्पुरुषश्चेतिकतकः । सुहृत्परंतपोरामोविजिगीषुःसन् त्रिविधोपायं सामदानभेदरूपमुपायंदण्डोपायंच । मित्रेषुच चादमित्रेषुच द्विविधंयथाभवतितथा सेवतेकच्चित् । मित्रेषुसामदाने अमित्रेषुभेददण्डौचेत्येवंविभज्यप्रयुङ्क्तेकच्चिदित्यर्थइतितीर्थः ॥ स० त्रिविधोपायं धर्मार्थकामसाधनरूपं । तज्ज्ञानरूपासाधारणकारणकस्यमोक्षस्यसाधारण-

[ पा० ] १ क. ग. ङ.—ट. रावणादपि. २ क. ङ. झ. ट. यद्यसि. च. छ. ज. ञ. यदसि. ३ क. ग. च. ज. झ. ञ. दिष्ट्यास. ४ क. धर्मवत्सलः. ख. ग. ञ. सत्यवत्सलः. ५ क.—ट. व्यथते. ६ झ. विजिगीषुसुहृत्कच्चित्. ७ झ. परंतप.

कच्चिन्मित्राणि लभते मित्रैश्चाप्यभिगम्यते ॥ कच्चित्कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः ॥ १८ ॥
कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः ॥ कच्चित्पुरुषकारं च दैवं च प्रतिपद्यते ॥ १९ ॥
कच्चिन्न विगतस्नेहः [1]प्रसादान्मयि राघवः ॥ कच्चिन्मां व्यसनादस्मान्मोक्षयिष्यति [2]वानर ॥ २० ॥
सुखानामुचितो नित्यमसुखानाम[3]नूचितः ॥ दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति ॥ २१ ॥
कौसल्यायास्तथा कच्चित्सुमित्रायास्तथैव च ॥ अभीक्ष्णं श्रूयते कच्चित्कुशलं भरतस्य च ॥ २२ ॥
मन्निमित्तेन मानार्हः कच्चिच्छोकेन [4]राघवः ॥ कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ॥२३॥
कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः ॥ ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥ २४ ॥
वानराधिपतिः श्रीमान्सुग्रीवः कच्चिदेष्यति ॥ मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥ २५ ॥
कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्धनः ॥ अस्त्रविच्छरजालेन राक्षसान्विधमिष्यति ॥ २६ ॥
रौद्रेण कच्चिदस्त्रेण ज्वलता निहतं रणे ॥ द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम् ॥ २७ ॥

कच्चिन्न तद्धेमसमानवर्णं तस्याननं पद्मसमानगन्धि ॥
मया विना शुष्यति शोकदीनं जलक्षये पद्ममिवातपेन ॥ २८ ॥
धर्मोपदेशात्[5]त्यजतश्च राज्यं मां चाप्यरण्यं नयतः [6]पदातिम् ॥
नासीद्व्यथा यस्य न भीर्न शोकः कच्चिच्च धैर्यं हृदये करोति ॥ २९ ॥
न चास्य माता न पिता [7]च नान्यः स्नेहाद्विशिष्टोस्ति मया समो वा ॥
[8]तावत्त्वहं दूत जिजीविषेयं यावत्प्रवृत्तिं शृणुयां प्रियस्य ॥ ३० ॥

विजिगीषुस्सन् त्रिविधोपायं दानभेददण्डान् । सेवते प्रयुङ्क्ते कच्चित् । सुहृत्सु कदाचिदपि भेददण्डौ न कार्यौ । शत्रुषु नसामेति भावः । योजनान्तरे विजिगीषुसुहृत्पदयोः प्रयोजनं मृग्यं ॥ १७ ॥ अभिगम्यते लभ्यते । मित्रस्य कंचिदुपकारं कृत्वा स्वयमुपकारं मित्रादपेक्षते कच्चिदित्यर्थः । कल्याणमित्रः पुरस्कृतमित्र इत्यर्थः ॥ १८ ॥ आशास्ति आशास्ते । पुरुषकारं स्वबलं । एकैकस्यानर्थहेतुत्वादिति भावः ॥ १९—२० ॥ अनूचित इति दीर्घ आर्षः । उत्तरं उत्कृष्टं ॥ २१—२२ ॥ मन्निमित्तेन मया हेतुना । अन्यमनाः कार्यान्तरासक्तः ॥ २३ ॥ ध्वजिनीं सेनां ॥ २४—२७ ॥ हेमशब्देन तद्वर्ण उच्यते । अभेदेन हेमवत्स्पृहणीयमित्यर्थः । मया विनेति जलक्षयस्थानं । शोकदीनमित्यातपस्थानं ॥ २८ ॥ धर्मोपदेशात् धर्मोद्देशार्थं । धर्ममुद्दिश्येत्यर्थः । यद्वा धर्मव्याजाद्धेतोः । राज्यत्यागाद्व्यथा नासीत् । अरण्यसञ्चाराद्भीर्नासीत् । मत्पादसञ्चाराच्छोको नासीत् । सः तादृशधैर्ययुक्तो रामो मद्विश्लेषेपि हृदये धैर्यं करोति कच्चित् ॥ २९ ॥ धैर्याकरणे हेतुमाह—न चास्येति ॥ प्रवृत्तिं मदानयनवार्तां । प्रणयरोषपक्षे किमेष पितृवचनपरिपालनाय वनं प्राप्तः न । किन्तु ममैव हिंसायै इति भावः । रामस्यैव दोषः न ममेति सीतयोक्ते वयमेव किं सम्यक् स्थितवन्तः रामविश्लेषानन्तरक्षणे न तनुस्त्यक्ता हीत्येवं हनुमदाशयं ज्ञात्वाह—नचास्येति ॥ रामस्य मात्रादयः अन्योबन्धुश्च स्नेहाद्विशिष्टा न भवन्ति । लोके कस्यचिन्माता पिता भ्रातेत्येवं स्नेहो विसृत्वरो भवति । नचैवं रामस्य मात्रादिषु संभावितः । सर्वोपि मय्येकमार्गः कृतः । यावत्प्रि-

साधनसाध्यकोटौनिवेशोनसमञ्जसइतित्रयाणांग्रहणं ॥ सुहृदितिमित्रपक्षे । इतरत्रविजिगीषुरिति ॥ १७ ॥ **स०** लभते स्वयं प्राप्नोति । कल्याणमित्रः कल्याणंगूढद्वेषरहितंमित्रंयस्यसतथा । मित्रैः स्वोपद्रवपरिहाराय चापीति धानुष्कचूडामणिरितिपुरस्कृतः ॥ १८ ॥ **रामानु०** अनुचितएवानौचितः । 'प्रज्ञादिभ्यश्च' इतिस्वार्थेऽण्प्रत्ययः । उत्तरं उत्कृष्टं ॥ **स०** अनूचितः अनुचितः । यद्वा अनुहीनं उचितं उचितत्वं । भावप्रधानोनिर्देशः । यस्येति । 'अनुहीने' इतिविश्वः ॥ २१ ॥ **स०** कुशलं क्षेमवार्ता । कैकेय्याभरतसांनिध्यादप्रश्नः ॥ २२ ॥ **स०** अन्यमनाःस्त्र्यन्तरविवाहासक्तचित्तः ॥ २३ ॥ **स०** प्रवृत्तिं पुनर्वार्ता ॥ ३० ॥

[ पा० ] १ क.—ट. विवासान्मयि. २ ग. ङ.—ट. राघवः. ३ च. छ. मनौचितः. ४ क. ख. ग. ङ.—ट. रामेण. ५ ङ. झ. ट. स्त्यजतस्स्वराज्यं. ६ छ. झ. ञ. ट. पदातेः. ७ क. ग. ङ. च. छ. झ. ञ. ट. नचान्यः. ८ तावद्ध्यहं.

इतीव देवी वचनं महार्थं तं वानरेन्द्रं मधुरार्थमुक्त्वा ॥
श्रोतुं पुनस्तस्य वचोभिरामं रामार्थयुक्तं विरराम रामा ॥ ३१ ॥
सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः ॥ शिरस्यञ्जलिमाधाय वाक्यम्[1]उत्तरमब्रवीत् ॥ ३२ ॥
न[2] त्वामिहस्थां जानीते रामः कमल[3]लोचने ॥ तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ३३ ॥
श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः ॥ चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ॥ ३४ ॥
विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम् ॥ करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥३५॥
तत्र यद्यन्तरा मृत्युर्यदि देवाः सहासुराः ॥ स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥ ३६॥
तवादर्शनजेनार्ये शोकेन स[4] परिप्लुतः ॥ न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ३७ ॥
मल[5]येन च विन्ध्येन मेरुणा मन्दरेण च ॥ दर्दुरेण च ते देवि शपे मूलफलेन च ॥ ३८ ॥
यथा सुनयनं वल्गु बिम्बोष्ठं चारुकुण्डलम् ॥ मुखं द्रक्ष्यसि रामस्य पूर्णचन्द्रमिवोदितम् ॥ ३९ ॥
क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ ॥ शतक्रतुमिवासीनं ना[6]कपृष्ठस्य मूर्धनि ॥ ४० ॥

---

यस्य प्रवृत्तिं शृणुयां शृणोमि । तावज्जिजीविषेयं जीवेयं । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं जीवनमिहाभिधीयते । रामः "न मांसं राघवो भुङ्क्ते" इत्युक्तरीत्या भोजनं, "अनिद्रः सततं रामः" इति निद्रां च हित्वा समुद्रं बद्धा समागच्छन् तापार्ते प्रपां गते तस्यां भिन्नपानीयपात्रायां सत्यामिव मयि नष्टायां न जीवेत् । अतस्तदागमनपर्यन्तं मया जीवितव्यं परतन्त्रशरीरत्वात् । तदागमनानन्तरमपि यदि जीविष्यामि तदेत्थं वदेदिति भावः । एतावत्पर्यन्तं वानरेति संबोध्य संप्रति दूतेत्याह—रामविषयप्रणयरोषस्य दूतपर्यन्तं व्यापनात् । तेन प्रहितः खलु भवानपीति भावः । प्रणयरोषाभावपक्षेपि—न चास्येति ॥ अस्य माता चास्मिन्स्नेहात् मत्तः न विशिष्टा मया न समा च । यथाहमस्मिन् स्निग्धा तथानान्यइत्यर्थः । एतदेवोत्तरार्धेन समर्थयति—तावदिति ॥ ३० ॥ इतीव पूर्वं कतिपयानर्थान्विविच्योक्तवान् । संप्रति प्रणयधारासूक्ष्ममृषीणामपदं हि तत इतीवेत्याह—देवी । वल्लभाया व्यवहारो बहिष्ठानां न प्रतिभाति हि । वचनं महार्थं न केवलं बहिष्ठानां देशिकानामस्माकमपीत्यर्थः । महार्थमित्युक्तेः । तं वानरेन्द्रं । सुग्रीवस्य शेषत्वेभिषिक्तत्वेपि पारतन्त्र्ये हनुमानभिषिक्त इत्यर्थः । मधुरार्थं माधुर्येण मध्ये हनुमान्न वक्तुमारभतेति भावः । उक्त्वा स तदीयाश्च तयाभिवर्धन्ते तथोक्त्वा । श्रोतुं पुनस्तस्य वचोभिरामं स्ववचनानुरूपोत्तरं श्रोतुं । रामार्थयुक्तं रामप्रयोजनयुक्तं रामरूपाभिधेययुक्तं वा । विरराम स्वयं चिरभाषणात्स्वामिन्यां भाषमाणायां मध्ये भृत्येनोक्त्ययोगाच्च तूष्णींभूतस्यावकाशप्रदानमकरोत् । रामा पारंपर्यं विना साक्षाद्वचःसौन्दर्यदर्शनं रामेण न लब्धं हीति मुनिः खिद्यति ॥ ३१—३२ ॥ रामः न जीवेयं क्षणमपि विना तामसितेक्षणामित्यध्यवसायी । कथं नागच्छेत् । कमललोचने त्वन्नयनसौन्दर्यं दर्पणतलेपि किंन दृष्टवती भवती । एतत्सौन्दर्यवतीं कथं त्वां विना स तिष्ठेत् । तेन अनेन हेतुना । आशु त्वां नानयति । शचीं पुरन्दर इव । अनुह्लादहस्तगतां शचीमिन्द्रः कंचित्कालमविज्ञाय ज्ञानानन्तरं यथा आनीतवान् तथेति भावः ॥ ३३ ॥ मह्यं मम । व्यत्ययेन षष्ठ्यर्थे चतुर्थी ॥ ३४ ॥ समुद्रं कथमतिक्रमिष्यतीत्यत्राह—विष्टम्भयित्वेति ॥ विष्टम्भयित्वा स्तब्धं कृत्वेत्यर्थः ॥ ३५ ॥ स्थास्यन्ति प्रतिबन्धकतयेति शेषः ॥ ३६—३७ ॥ गिरीणां स्वजीवनस्थानत्वात्तैः शपति—मलयेनेति ॥ दर्दुरो नाम मलयपरिसरवर्ती चन्दनप्रभवः कश्चित्पर्वतः ॥ ३८ ॥ यथेति तथा शप इति पूर्वेणान्वयः ॥ ३९ ॥ नाकपृष्ठो नाम

---

ती० नागराजस्य ऐरावतस्य । नाकपृष्ठस्येतिपाठे स्वर्गोपरीत्यर्थः ॥ ति० प्रस्रवणेगिरौविद्यमानमपि । इहद्रक्ष्यसीत्यर्थः । नागपृष्ठस्यमूर्धनि ऐरावतोपरिस्थितमिन्द्रमिवमत्पृष्ठगंरामंद्रक्ष्यसीत्यर्थः । शि० नागाः गजाः पृष्ठे पार्श्वेइत्यर्थः । यस्यतस्य ॥ ४० ॥

[ पा० ] १ क. हनूमान्वाक्यमब्रवीत्. २ क. त्वामिहस्थांनजानीते. ३ ग. ङ.—ट. कमललोचनः. ४ ङ. झ. ट. परिपूरितः. ५ ग.—ट. मन्दरेणचतेदेविशपेमूलफलेनच । मलयेनचविन्ध्येनमेरुणादर्दुरेणच. ६ ख. च. छ. नागराजस्य. झ. ञ. ट. नागपृष्ठस्य.

न मांसं राघवो भुङ्क्ते न चापि मधु सेवते ॥ वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥ ४१ ॥
नैव दंशान्न मशकान्न कीटान्न सरीसृपान् ॥ राघवोपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥ ४२ ॥
नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ॥ नान्यच्चिन्तयते किंचित्स तु कामवशं गतः ॥४३॥
अनिद्रः सततं रामः सुप्तोपि च नरोत्तमः ॥ सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते ॥ ४४ ॥
दृष्ट्वा फलं वा पुष्पं वा यद्वाऽन्यत्सुमनोहरम् ॥ बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥ ४५ ॥

स देवि नित्यं परितप्यमानस्त्वामेव सीतेत्यभिभाषमाणः ॥
दृढव्रतो राजसुतो महात्मा तवैव लाभाय कृतप्रयत्नः ॥ ४६ ॥
सा रामसंकीर्तनवीतशोका रामस्य शोकेन समानशोका ॥
शरन्मुखे साम्बुदशेषचन्द्रा निशेव वैदेहसुता बभूव ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

---

इन्द्रस्यासाधारणस्वर्गस्थानविशेषः ॥ ४० ॥ न मांसमिति "दृङ्मनःसङ्गसङ्कल्पजागराः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" इति दशावस्थास्वरतिरनेनोच्यते । मांसाद्यभोजनं अरत्या ततः पूर्वं तद्भोजनोक्तेः । वन्यं वने भवं कन्दमूलादिकं । सुविहितं वानप्रस्थयोग्यत्वेन विहितं । भक्तं अन्नं । पञ्चमं प्रातःसङ्गवमध्याह्नापराह्णसायंरूपेषु कालेषु पञ्चमकालिकं शरीरधारणमात्रोपयुक्तं भुङ्क्त इत्यर्थः ॥ ४१ ॥ अथ मनःसङ्गावस्थामाह—नैवेति ॥ दंशास्तु वनमक्षिकाः तान् । मशकांश्चेत्यनेन दंशमशकापरिज्ञानमुक्तं । कीटसरीसृपोक्त्या उपरिशरीरं चरतामनिवृत्तिरुच्यते । तत्र हेतुः त्वद्गतेनान्तरात्मना । परकायप्रविष्टस्य कथं त्यक्तशरीरविकृतिज्ञानं । तत्र स्थितः खलु तत्रत्यपीडां ज्ञास्यतीति भावः ॥ ४२—४३ ॥ तथास्य जागरावस्थामाह—अनिद्र इति ॥ अनिद्रः सततं रामः निद्रया सर्वदा कालक्षेपार्होपि संततमनिद्रोभूत् । सुप्तोपिचेत्यनेन परगतार्थानुसंधानाभाव उच्यते । नरोत्तमः अभिमतविश्लेषे तथावस्थानमेव हि पुरुषोत्तमत्वस्य लक्षणमिति भावः । सीतेति अप्राकृतसौन्दर्याद्यनुसंधानेन वासनावशाद्विलपति । मधुरां वाणीं । वासनावशाद्विलपत्यपिशब्दस्वभावाद्रसनाजलस्यन्दिनी भवतीत्यर्थः । प्रतिबुध्यते क्लेशहीनदशाविगमात्पुनरपि बाधकोद्दीपनसंदर्शनेन बाधार्हः स्थित इत्यर्थः ॥ ४४—४६ ॥ रामसद्भावातिशङ्कया कश्चिच्छोकः सीतायाः रामविरहेण कश्चिच्छोकः । तत्राद्यो हनुमदुक्त्या निवृत्तः द्वितीयस्तु वर्तत इत्याह—रामस्य शोकेन समानशोका तद्विरहकृतत्वेन तत्तुल्यशोका । अधिकशोकस्तु निवृत्त इति भावः । यद्वा रामसंकीर्तनेन वीतशोकापि नैव दंशान्न मशकानित्यादिश्रवणेन रामतुल्यशोका प्रकाशाप्रकाशशरन्मुखनिशेवाभूदित्यर्थः ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

---

**ती०** भक्तं अन्नं पञ्चमं पञ्चानामन्नानांपूरणं । वानप्रस्थाहिमूलफलादिकंपञ्चधाकृत्वादेवपित्रतिथिभूतेभ्यस्तद्भागान्दत्वा पञ्चमं स्वयंभुञ्जते । यद्वा षोडशारण्यवासिनइत्युक्तवानप्रस्थभोज्यस्यपञ्चमांशंभुङ्क्ते । अनेनरामस्याल्पाहारतोक्ता ॥ **ति०** पञ्चमं कालं प्राप्येतिशेषः । यद्वा प्रातस्सायंसायंप्रातरितिकालचतुष्टयंत्यक्त्वा पञ्चमेप्रातःकालइत्यर्थः । दिनद्वयमतीत्यभुङ्क्तइत्यर्थः । **शि०** मांसं सुग्रीवसंसर्गेणवनेपि प्राप्तराज्यभोगं । नभुङ्क्ते नकरोति । वन्यं फलादिरूपंअन्नं पञ्चमं पूर्वभोज्यापेक्षयापञ्चमं ॥ ४१ ॥ **ति०** स्त्रीमनोहरं स्त्रीसंनिधानेमनोहरं । स्त्रीणांमनोहरंवा । श्वसन् दीर्घोच्छ्वासंत्यजन् ॥ ४५ ॥ **ती०** नमांसंराघवोभुङ्क्तेइत्युक्तशोकेनहेतुना समानशोका ॥ **ति०** नमांसंराघवोभुङ्क्तेइत्युक्तेनरामशोकेन समानशोका । शरत् लुप्तषष्ठीकं । शरदोनिशेव प्रकाशाप्रकाशयुक्ताशरन्निशेवहर्षशोकवतीबभूव ॥ ४७ ॥ इतिषट्त्रिंशःसर्गः ॥ ३६ ॥

[ **पा०** ] १ ङ. ज. झ. ट. नचैव. २ ख. देविसतु. ३ क. रात्रौ. ४ क. ग. घ. ङ. ज. झ. ट. यच्चान्यत्स्त्रीमनोहरं. च. छ. ञ. यद्वान्यत्स्त्रीमनोहरं. ५ क. शोचंस्त्वां. ट. स्मरंस्त्वां. ६ क. ङ. झ. ट. धृतव्रतो. ७ ङ. झ. शरन्मुखेनांबुद. च. छ. ञ. शरन्मुखेसांबुदचन्द्रशेषा.

## सप्तत्रिंशः सर्गः ॥ ३७ ॥

स्ववियोगहेतुकरामशोकातिरेकश्रवणखिन्नयासीतया सत्वरंरामसमानयनंचोदितेनहनुमता सीताशोकासहनेनतांप्रति तस्याःस्वपृष्ठारोपणेनरामसमीपप्रापणोक्तिः ॥ १ ॥ सीतया हनुमतोऽणुरूपतयास्वप्रापणासंभावनाशङ्कयोपहासे हनुमता तस्याःप्रत्ययजननाय मेरुतुल्यपरिमाणकपृथुतरशरीरपरिग्रहणम् ॥ २ ॥ सीतयातंप्रति बहुहेतूपन्यासेनतेनसहगमनस्यानौचित्यप्रतिपादनपूर्वकं सत्वरंरामस्यैवसमानयनचोदना ॥ ३ ॥

सीता[1] तद्वचनं श्रुत्वा पूर्णचन्द्रनिभानना ॥ हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ॥ १ ॥
अमृतं विषसंसृष्टं[2] त्वया वानर भाषितम् ॥ यच्च नान्यमना रामो यच्च शोकपरायणः ॥ २ ॥
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ॥ रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥ ३ ॥
विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम ॥ सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥ ४ ॥
शोकस्यास्य[3] कदा[4] पारं राघवोऽधिगमिष्यति ॥ प्लवमानः परिश्रान्तो[5] हतनौः सागरे यथा ॥ ५ ॥
राक्षसानां वधं[6] कृत्वा सूदयित्वा च रावणम् ॥ लङ्कामुन्मूलितां[7] कृत्वा कदा द्रक्ष्यति मां पतिः ॥ ६ ॥
स वाच्यः संत्वरस्वेति यावदेव न पूर्यते ॥ अयं संवत्सरः कालस्तावद्धि मम जीवितम् ॥ ७ ॥
वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम ॥ रावणेन नृशंसेन समयो यः कृतो मम ॥ ८ ॥
विभीषणेन च भ्रात्रा मम निर्यातनं प्रति ॥ अनुनीतः प्रयत्नेन न च तत्कुरुते मतिम्[8] ॥ ९ ॥
मम प्रतिप्रदानं हि रावणस्य न रोचते ॥ रावणं मार्गते सङ्ख्ये मृत्युः कालवशं गतम् ॥ १० ॥
ज्येष्ठा कन्याऽनला[9] नाम विभीषणसुता कपे ॥ तया ममेदमाख्यातं[10] मात्रा[11] प्रहितया स्वयम् ॥ ११ ॥
[ [12]अविन्ध्यो नाम मेधावी विद्वान्राक्षसपुङ्गवः । द्युतिमाञ्शीलवान्वृद्धो रावणस्य सुसंमतः ॥
रामक्षयमनुप्राप्तं रक्षसां प्रत्यचोदयत् ॥ न च तस्य स दुष्टात्मा शृणोति वचनं हितम् ॥ १२ ॥ ]
[13]असंशयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः ॥ अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥ १४ ॥
उत्साहः पौरुषं सत्त्वमानृशंस्यं कृतज्ञता ॥ विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥ १५ ॥
चतुर्दश सहस्राणि राक्षसानां जघान यः ॥ जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥ १६ ॥
न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः ॥ अहं तस्य[14] प्रभावज्ञा शक्रस्येव पुलोमजा ॥ १७ ॥
शरजालांशुमाञ्छूरः कपे रामदिवाकरः ॥ शत्रुरक्षोमयं तोयमुपशोषं नयिष्यति ॥ १८ ॥

---

यच्च नान्यमना इत्यमृतत्वे हेतुः । यच्छोकपरायण इति विषसंसृष्टत्वे ॥ २ ॥ रामवियोगो न स्वबुद्धिकृत इत्याह—ऐश्वर्य इति ॥ कृतान्तः दैवं ॥ ३ ॥ विधिः दैवं । असंहार्यः अनिवार्यः ॥ ४—७ ॥ दशमोमासः दशममासान्तः ॥ ८ ॥ निर्यातनं प्रत्यर्पणं ॥ ९—१४ ॥ लोकोत्तरेषु कार्येषु स्थेयान् प्रयत्न उत्साहः । पौरुषं तादृक्कार्यकरणं । सत्त्वं बलं । आनृशंस्यं अक्रूरत्वं । कृतज्ञता उपकारज्ञत्वं । विक्रमः शौर्यं । प्रभावः शक्तिः ॥ १५—१६ ॥ तुलयितुं चालयितुं ॥ १७—

---

शि० ऐश्वर्येव्यसनेवाविद्यमानंपुरुषं रज्ज्वाबद्ध्वेवकृतान्तःकालःपरिकर्षति । एतेन रावणविध्वंसोऽवश्यंभवितेतिसूचितं ॥ ३ ॥
ति० कन्या अजातपुरुषसंबन्धा । एतत् विभीषणानुनयनं । इदमेवाग्रे रामश्रुतंविभीषणस्यनिश्शङ्कपरिग्रहाभिषेकयोर्बीजं ॥ ११ ॥
ति०व्यसनैः व्यसनदातृभीराक्षसैः । तुलयितुं उपमितुं । तस्यतत्वंचममप्रत्यक्षमेवेत्याह—अहंतस्येति । तद्रूपत्वादितिगूढं ॥ १७ ॥

[ पा० ] १ क. ग. ङ. च. छ. झ. ञ. ट. सासीतावचनं. घ. सीताचवचनं. २ ङ. च. छ. झ. ञ. ट. विषसंपृक्तं. ख. घ. विषसंस्पृष्टं. ३ च. छ. ञ. शोकस्यच. ४ ङ. झ. ट. कथं. ५ ङ. च. छ. झ. ञ. ट. परिक्रान्तो. ६ क—घ. क्षयं. ७ ङ. झ. ट. मुन्मथितां. ८ घ. मनः. ९ ङ. झ. ञ. कन्याकला. १० झ. ममैतदाख्यातं. ११ च. छ. ट. मात्राऽभिहितया १२ इदंश्लोकद्वयं ङ—ट. पाठेषुदृश्यते. १३ क.—घ. झ. ट. आशंसेयं. १४ ग. ङ. च. छ. झ. ञ. ट. तस्यानुभावज्ञा.

इति संजल्पमानां तां रामार्थे शोककर्शिताम् ॥ अश्रुसं[1]पूर्णनयनामुवाच वचनं कपिः ॥ १९ ॥
[2]कृत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः ॥ चमूं प्रकर्षन्महतीं हर्यृक्षगणसंकुलाम् ॥ २० ॥
अथवा मोचयिष्यामि त्वामद्यैव [3]वरानने ॥ अस्माद्दुःखादुपारोह मम पृष्ठमनिन्दिते ॥ २१ ॥
त्वां तु पृष्ठगतां कृत्वा संतरिष्यामि सागरम् ॥ शक्तिरस्ति हि मे वोढुं लङ्कामपि सरावणाम् ॥२२॥
अहं प्रस्रवणस्थाय राघवायाद्य मैथिलि ॥ प्रापयिष्यामि शक्राय ह[4]व्यं हुतमिवानलः ॥ २३ ॥
[5]द्रक्ष्यस्यद्यैव वैदेहि राघवं सहलक्ष्मणम् ॥ व्यवसायसमायुक्तं विष्णुं दैत्यवधे यथा ॥ २४ ॥
त्वद्दर्शनकृतोत्साहमाश्रमस्थं महाबलम् ॥ पुरन्दरमिवासीनं [6]नाकराजस्य मूर्धनि ॥ २५ ॥
पृष्ठमारोह मे देवि मा विकाङ्क्षस्व शोभने ॥ योगमन्विच्छ रामेण शशाङ्केनेव रोहिणी ॥ २६ ॥
कथय[7]न्तीव चन्द्रेण सूर्येण च महार्चिषा ॥ मत्पृष्ठम[8]धिरुह्य त्वं [9]तराकाशमहार्णवौ ॥ २७ ॥
न हि मे संप्रयातस्य त्वामितो नयतोऽङ्गने ॥ अनुगन्तुं गतिं शक्ताः सर्वे लङ्कानिवासिनः ॥ २८ ॥
यथैवाहमिह प्राप्तस्तथैवाह[10]मसंशयः ॥ यास्यामि पश्य वैदेहि त्वामुद्यम्य वि[11]हायसम् ॥ २९ ॥
मैथिली तु हरिश्रेष्ठाच्छ्रुत्वा वचनमद्भुतम् ॥ [12]हर्षविस्मितसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ३० ॥
हनुमन्दूरमध्वानं कथं [13]मां वोढुमिच्छसि ॥ तदेव खलु ते मन्ये कपित्वं हरियूथप ॥ ३१ ॥
कथं वाऽल्पशरीरस्त्वं मामितो नेतुमिच्छसि ॥ सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ ॥ ३२ ॥
[14]सीताया वचनं श्रुत्वा हनुमान्मारुतात्मजः ॥ चिन्तयामास लक्ष्मीवान्नवं परिभवं कृतम् ॥ ३३ ॥
न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा ॥ तस्मात्पश्यतु वैदेही यद्रूपं मम [15]कामतः ॥ ३४ ॥
इति संचिन्त्य हनुमांस्तदा प्लवगसत्तमः ॥ दर्शयामास वैदेह्याः स्वरूपमरिमर्दनः ॥ ३५ ॥
स तस्मात्पादपाद्धीमानाप्लुत्य प्लवगर्षभः ॥ ततो वर्धितुमारेभे सीताप्रत्ययकारणात् ॥ ३६ ॥
मेरुमन्दरसंकाशो बभौ दीप्तानलप्रभः ॥ अग्रतो व्यवतस्थे च सीताया वानरोत्तमः ॥ ३७ ॥

---

२४ ॥ नाकराजस्य मूर्धनि । नाकपृष्ठसंज्ञस्य मूर्धनि । नगराजस्येति पाठे मेरोरित्यर्थः ॥ २५ ॥ मा विकाङ्क्षस्व मोपेक्षिष्ठाः ॥ २६ ॥ चन्द्रेण कथयन्तीव चन्द्रेण भाषमाणेव तरेत्यन्वयः ॥२७—२९॥ हर्षविस्मितसर्वाङ्गी हर्षेण पुलकितसर्वाङ्गी ॥ ३०—३३ ॥ न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा । तस्मात्पश्यतु वैदेही यद्रूपं मम कामतः ॥ इति पाठः । अन्यथा पाठे वक्ष्यमाणेन विरोधः स्यात् ॥ ३४ ॥ स्वरूपं स्वस्य शरीरं ॥ ३५ ॥ एतदेवाह—स तस्मादिति ॥ अयं श्लोको वर्धनार्थं वृक्षादवरोहणं दर्शयति स्म । अनेन सोवतीर्य द्रुमादिति पूर्वं द्रुमाग्रात्सीतासमीपस्थशाखायामवतरणमुक्तं । अत्र भूमाविति बोध्यं ॥ ३६ ॥ अग्रतोऽव्यवतस्थे । संभाषणाय

---

**ति०** नगराजस्य श्रेष्ठस्यप्रस्रवणगिरेरित्यर्थः ॥२५॥ **ति०** कथयन्तीव संगतव्योरामइतिवचनंकथयन्तीव । शशिनारोहिणीवसंगमिष्यसीत्यन्वयः । एतद्वचनसमकालमेवरामसमीपंप्रापयिष्यामीत्यर्थः । यथातद्वचने नप्रयासः एवमनायासेनत्वांनयामीत्यर्थोवा । **स०** त्वत्पृष्ठारोहणेकिंफलमित्यतआह—कथयन्तीति । त्वंमत्पृष्ठारोहिणीति रोहिणी अतिसुखात्मकत्वाच्छशीरामः । यद्वा शशी रामः'नक्षत्राणामहंशशी'इतिश्रीभगवदुक्तेः । कथयन्तीवसंगमिष्यसि । रामेणसंगतव्यमित्यालापनसमयएवसंगमिष्यसि । अनेनातित्वरायोत्यते ॥ २७ ॥ **ती०** पादपात् पादपमूलात् । आप्लुत्य शरीरवर्धनवेगकृतशाखाभङ्गध्वनिनाराक्षस्योज्ञास्यन्तीतिमत्वा

**[ पा० ]** १ ग.—ट. संपूर्णवदनां. २ ङ. झ. ट. श्रुत्वैवच. क. घ. च. छ. ज. ञ. श्रुत्वैवतु. ३ ङ. च. छ. झ. ञ. ट. सराक्षसात्. क. ख. हिराक्षसात्. घ. ज. सरावणात्. ४ घ. हुतंहव्यं. ५ क. क्षिप्रंद्रक्ष्यसि. ६ ख. ग. ङ. च. छ. झ. ञ. ट. नगराजस्य. ७ क. ग. घ. च. छ. ज. ञ. ट. पौलोमीवमहेन्द्रेणसूर्येणेवसुवर्चला. ङ. झ. कथयन्तीवशशिनासंगमिष्यसिरोहिणी. ८ ङ.—ट. मधिरोहत्वं. ९ ग. घ. ङ. झ. ट. तराकाशंमहार्णवं. १० ग. ङ.—ट. मसंशयं. ११ ख. घ. विहायसा. १२ घ. सासीतास्मितपूर्वंहि. १३ ङ. झ. ट. मांनेतुं. १४ घ. ङ. झ. ट. सीतायास्तुवचः. १५ क. काङ्क्षतः.

हरिः पर्वतसंकाशस्ताम्रवक्त्रो महाबलः ॥ वज्रदंष्ट्रनखो भीमो वैदेहीमिदमब्रवीत् ॥ ३८ ॥
सपर्वतवनोद्देशां साट्टप्राकारतोरणाम् ॥ लङ्कामिमां सनाथां वा नयितुं शक्तिरस्ति मे ॥ ३९ ॥
तदवस्थाप्यतां बुद्धिरलं देवि विकाङ्क्षया ॥ विशोकं कुरु वैदेहि राघवं सहलक्ष्मणम् ॥ ४० ॥
तं दृष्ट्वा भीमसंकाशमुवाच जनकात्मजा ॥ पद्मपत्रविशालाक्षी मारुतस्यौरसं सुतम् ॥ ४१ ॥
तव सत्त्वं बलं चैव विजानामि महाकपे ॥ वायोरिव गतिं चापि तेजश्चाग्नेरिवाद्भुतम् ॥ ४२ ॥
प्राकृतोऽन्यः कथं चेमां भूमिमागन्तुमर्हति ॥ उदधेरप्रमेयस्य पारं वानरपुङ्गव ॥ ४३ ॥
जानामि गमने शक्तिं नयने चापि ते मम ॥ अवश्यं संप्रधार्याशु कार्यसिद्धिर्[3]महात्मनः ॥ ४४ ॥
अयुक्तं तु कपिश्रेष्ठ मम[4] गन्तुं त्वया[5]ऽनघ ॥ वायुवेगसवेगस्य वेगो मां मोहयेत्तव ॥ ४५ ॥
अहमाकाशमापन्ना[6] ह्युपर्युपरि सागरम् ॥ प्रपतेयं हि ते पृष्ठाद्भयाद्वेगेन[7] गच्छतः ॥ ४६ ॥
पतिता सागरे चाहं तिमिनक्रझषाकुले ॥ भवेयमाशु विवशा यादसामन्नमुत्तमम् ॥ ४७ ॥
न[8] च शक्ष्ये त्वया सार्धं गन्तुं शत्रुविनाशन ॥ कलत्रवति संदेहस्त्वय्यपि स्यादसंशयः ॥ ४८ ॥
ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीमविक्रमाः ॥ अनुगच्छेयुरादिष्टा रावणेन दुरात्मना ॥ ४९ ॥
तैस्त्वं परिवृतः शूरैः शूलमुद्गरपाणिभिः ॥ भवेस्त्वं संशयं प्राप्तो मया वीर कलत्रवान् ॥ ५० ॥
सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः ॥ कथं शक्ष्यसि संयातुं[9] मां चैव परिरक्षितुम् ॥५१॥
युध्यमानस्य रक्षोभिस्तव[10] तैः क्रूरकर्मभिः ॥ प्रपतेयं हि ते पृष्ठाद्भयार्ता कपिसत्तम ॥ ५२ ॥
अथ रक्षांसि भीमानि महान्ति बलवन्ति च ॥ कथंचित्सांपराये त्वां जयेयुः कपिसत्तम ॥ ५३ ॥
अथवा युध्यमानस्य पतेयं विमुखस्य ते ॥ पतितां च गृहीत्वा मां नयेयुः पापराक्षसाः ॥ ५४ ॥
मां वा हरेयुस्त्वद्धस्ताद्विशसेयुरथापि वा ॥ अव्यवस्थौ हि दृश्येते युद्धे जयपराजयौ ॥ ५५ ॥
अहं वाऽपि विपद्येयं रक्षोभिरभितर्जिता ॥ त्वत्प्रयत्नो हरिश्रेष्ठ भवेन्निष्फल एव तु ॥ ५५ ॥
कामं त्वमसि पर्याप्तो निहन्तुं सर्वराक्षसान् ॥ राघवस्य यशो हीयेत्त्वया शस्तैस्तु राक्षसैः ॥ ५७ ॥
अथवाऽऽदाय रक्षांसि न्यसेयुः[11] संवृते हि माम् ॥ यत्र ते नाभिजानीयुर्हरयो नापि राघवौ[12] ॥
आरम्भस्तु[13] मदर्थोऽयं ततस्तव निरर्थकः ॥ ५८ ॥

---

वृक्षमूलगतो बभूवेत्यर्थः ॥ ३७—३९ ॥ अवस्थाप्यतां निश्चलीक्रियतां । विकाङ्क्षया उपेक्षया ॥ ४०–४३ ॥ संप्रधार्या विचारणीया ॥ ४४ ॥ स्वप्रापणे प्रधानं दोषं हृदि कृत्वा आपाततो दोषमाह—अयुक्तमिति ॥ ४५ ॥ उपर्युपरि सागरमिति । " उपर्यध्यधसस्सामीप्ये " इति द्विवचनं । 'धिगुपर्यादिषु'इति द्वितीया ॥ ४६ ॥ यादसां जलजन्तूनां ॥ ४७ ॥ कलत्रवति रक्ष्यवति त्वयि संदेहः स्यात् । मयि रक्ष्यायां त्वयि विपत्संदेहः स्यादित्यर्थः ॥ ४८ ॥ एतदेव प्रपञ्चयति—ह्रियमाणामित्यादिना ॥ ४९ ॥ त्वं तैः परिवृतो भवेः । कलत्रवान् रक्ष्यवान् । त्वं संशयं प्राप्तश्च भवेरिति योजना ॥ ५० ॥ संयातुं सम्यग्योद्धुं ॥ ५१ ॥ पूर्वश्लोकोक्तं समर्थयति—युध्यमानस्येत्यादिना ॥ ५२ ॥ सांपराये युद्धे ॥ ५३ ॥ विमुखस्य युद्धपरवशस्येत्यर्थः ॥ ५४—५७ ॥ संवृते गूढ-

---

ऽन्यत्रापसृतवानित्यर्थः ॥ ३६ ॥ ति० कलत्रवति स्त्रियासहगन्तरि । संदेहः राक्षसानामितिशेषः । स० कलत्रवति मद्रूपकल-

[ पा० ] १ क.—ट. दृष्ट्वाचलसंकाशं. २ ङ.—झ. ट. गतिश्चापि. ३ ङ. झ. सिद्धिरिवात्मनः. क. च. छ. ञ. सिद्धिरिहात्मनः. ४ ग. ङ.—ट. मयागन्तुं. ५ ग. ङ.—ट. त्वयासह. ६ क. ग. ङ.—ट. मासक्ता. ७ ङ.—ट. द्भूयोवेगेन. ८ च. छ. ज. नाहंशक्ष्ये. ९ क. संयोद्धुं. १० क. ग. ङ. च. छ. झ. ञ. ट. रक्षोभिस्ततस्तैः. घ. रक्षोभिस्समस्तैः. ११ ग. च. छ. नयेयुः. १२ क. ख. ग. ङ.—ट. राघवः. १३ क. प्रयत्नस्तुमदर्थाय.

त्वया हि सह रामस्य महानागमने गुणः ॥ ५९ ॥
मयि जीवितमायत्तं राघवस्य महात्मनः ॥ भ्रातॄणां च महाबाहो तव राजकुलस्य च ॥ ६० ॥
तौ निराशौ मदर्थं तु शोकसंतापकर्शितौ ॥ सह सर्वर्क्षहरिभिस्त्यक्ष्यतः प्राणसंग्रहम् ॥ ६१ ॥
भर्तृभक्तिं पुरस्कृत्य रामादन्यस्य वानर ॥ न स्पृशामि शरीरं तु पुंसो वानरपुङ्गव ॥ ६२ ॥
यदहं गात्रसंस्पर्शं रावणस्य बलाद्गता ॥ अनीशा किं करिष्यामि विनाथा विवशा सती ॥ ६३ ॥
यदि रामो दशग्रीवमिह हत्वा सबान्धवम् ॥ मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥ ६४ ॥

श्रुता हि दृष्टाश्च मया पराक्रमा महात्मनस्तस्य रणावमर्दिनः ॥
न देवगन्धर्वभुजङ्गराक्षसा भवन्ति रामेण समा हि संयुगे ॥ ६५ ॥
समीक्ष्य तं संयति चित्रकार्मुकं महाबलं वासवतुल्यविक्रमम् ॥
सलक्ष्मणं को विषहेत राघवं हुताशनं दीप्तमिवानिलेरितम् ॥ ६६ ॥
सलक्ष्मणं राघवमाजिमर्दनं दिशागजं मत्तमिव व्यवस्थितम् ॥
सहेत को वानरमुख्य संयुगे युगान्तसूर्यप्रतिमं शरार्चिषम् ॥ ६७ ॥
स मे हरिश्रेष्ठ सलक्ष्मणं पतिं सयूथपं क्षिप्रमिहोपपादय ॥
चिराय रामं प्रति शोककर्शितां कुरुष्व मां वानरमुख्य हर्षिताम् ॥ ६८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

प्रदेशे ॥५८—५९॥ तवराजकुलस्य सुग्रीवराजकुलस्य॥६०—६२॥ अनीशा स्वयं किंचित्कर्तुमसमर्था। विनाथा विगतस्वामिका । विवशा विचेष्टा ॥ ६३—६४ ॥ प्रथमहिशब्दो गुणप्रसिद्धौ । द्वितीयो निरसमत्वप्रसिद्धौ ॥ ६५—६७ ॥ हर्षितां हर्षमासादितां । उत्तरोत्तरहर्षवतीमित्यर्थः । अनया भक्तिकया उपायान्तरं स्वरूपविरुद्धं भगवत्प्राप्तौ स एवोपाय इति दर्शितः ॥ ६८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तत्रिंशस्सर्गः ॥ ३७ ॥

---

न्नवतिरामे । त्वयि त्वद्विषये । असंशयंयथातथा संदेहः परपुरुषेणसहैकाऽऽयातेतिसंदेहः ॥ ४८ ॥ **ती०** ननुरावणाङ्गसंस्पर्शः कथंस्यादित्यतआह—भर्तुरिति । यस्मात्कारणात्भर्तुर्भक्तिपुरस्कृत्य भर्तुर्भक्त्यालक्ष्मणःप्रस्थापितः । तस्माद्रावणस्यगात्रसंस्पर्शंबलाद्गतेतिसंबन्धः । हासीतेलक्ष्मणेतिमारीचवाक्यंश्रुत्वा रामानर्थशङ्कयाभर्तृभक्त्यालक्ष्मणप्रस्थापनात्प्राप्तोऽयमनर्थोकामकृतइतिभावः । अनीशा स्वयंकिंचित्कर्तुमशक्नुवती । विवशा विचेष्टा । विनाथा विगतस्वामिका असंनिहितनाथेत्यर्थः ॥ ६२—६३ ॥ **ति०** तत्तस्यसदृशं स्वमहिम्नासगणंशत्रुंहत्वामन्नयनं । सगणरावणवधार्थमेवावतारात् तस्यचमद्गमनेऽसंभवात् । एवंचस्वकार्यानिष्पत्त्यागतायामपिकुध्येदितिगूढं ॥ ६४ ॥ **ति०** तादृशबलंचतस्यमयासुविदितमित्याह—श्रुताश्चेति । विश्वामित्रयज्ञादौकृताः वालिवधादयश्चश्रुताः । अन्येदृष्टाः ॥ **स०** रणावमर्दिनः रणेवैर्यवमर्दी । रणेअवन्तिरक्षयन्तिआगच्छन्तिस्वानितिवा रणावाः । तान्मर्दीतिवा ॥ ६५ ॥ **स०** वासवतुल्यविक्रमं वासवोपितुल्यविक्रमः योग्यतानुसारिपराक्रमोयेनसतथा । इतरोर्थःस्फुटः ॥ ६६ ॥ **स०** सयूथपं ससुग्रीवं । कपिश्रेष्ठ वानरवीरेति प्रलापकालत्वाद्द्विरुक्तिः । यद्वा रामंप्रतिशोककर्शितां नरवीरेणरामेणहर्षितां कुरुष्वेत्यर्थः ॥ ६८ ॥ इतिसप्तत्रिंशःसर्गः ॥ ३७ ॥

[ **पा०** ] १ ङ.—ट. राघवस्यामितौजसः. २ क.—घ. ज.—ट. भर्तुर्भक्तिं. ३ ङ. झ. ट. नाहंस्प्रष्टुंस्वतोगात्रमिच्छेयं वानरोत्तम. च. छ. ज. ञ. मयापुनःपुमानन्योनयुक्तःस्प्रष्टुमात्मना. ४ ग.—ट. गताबलात्. ५ क. ख. घ.—ट. सराक्षसं. ६ ङ. झ. ट. प्रियं. ७ क.—ज. ट. वानरवीर.

## अष्टत्रिंशः सर्गः ॥ ३८ ॥

हनुमता रामप्रत्यायनायाभिज्ञानंयाचितयासीतया तंप्रति काकासुरवृत्तान्तस्याभिज्ञानत्वेननिवेदनचोदना ॥ १ ॥ तथा हनुमन्तंप्रति रामलक्ष्मणयोःक्रमेणाभिवादनकुशलप्रश्ननिवेदनचोदनपूर्वकं मासद्वयस्यसंकेतसमयावशिष्टत्वेप्येकमासपर्यन्तमेव स्वेनप्राणधारणप्रतिज्ञानेनसहाभिज्ञानान्तरत्वेनतस्मिन्स्वचूडामणिदानम् ॥ २ ॥

ततः स कपिशार्दूलस्तेन वाक्येन हर्षितः ॥ सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥ १ ॥
युक्तरूपं त्वया देवि भाषितं शुभदर्शने ॥ सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥ २ ॥
स्त्रीत्वं न तु समर्थं हि सागरं व्यतिवर्तितुम् ॥ मामधिष्ठाय विस्तीर्णं शतयोजनमायतम् ॥ ३ ॥
द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते ॥ रामादन्यस्य नार्हामि संस्पर्शमिति जानकि ॥ ४ ॥
एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः ॥ का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ॥ ५ ॥
श्रोष्यते चैव काकुत्स्थः सर्वं निरवशेषतः ॥ चेष्टितं यत्त्वया देवि भाषितं मम चाग्रतः ॥ ६ ॥
कारणैर्बहुभिर्देवि रामप्रियचिकीर्षया ॥ स्नेहप्रस्कन्नमनसा मयैतत्समुदीरितम् ॥ ७ ॥
लङ्काया दुष्प्रवेशत्वाद्दुस्तरत्वान्महोदधेः ॥ सामर्थ्यादात्मनश्चैव मयैतत्समुदीरितम् ॥ ८ ॥
इच्छामि त्वां समानेतुमद्यैव रघुबन्धुना ॥ गुरुस्नेहेन भक्त्या च नान्यथैतदुदाहृतम् ॥ ९ ॥
यदि नोत्सहसे यातुं मया सार्धमनिन्दिते ॥ अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि तत् ॥१०॥
एवमुक्ता हनुमता सीता सुरसुतोपमा ॥ उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ॥ ११ ॥
इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं तु मम प्रियम् ॥ शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पुरा ॥ १२ ॥

तच्छ्रुत्वा तेन वाक्येन हर्षितः वाक्यमुवाच ॥१॥ युक्तरूपं युक्ततरमित्यर्थः । प्रशंसायां रूपप् । प्राशस्त्यंचात्र प्रकृत्यर्थवैशिष्ट्यं । स्त्रीस्वभावस्य भीरुत्वादेः । साध्वीनां पतिव्रतानां । विनयस्य वृत्तस्य ॥ २ ॥ विस्तीर्णं मामधिष्ठाय शतयोजनमायतं सागरं व्यतिवर्तितुं तर्तुं । स्त्रीत्वं न समर्थं हि । स्त्री न समर्थेत्यर्थः । यद्वा सागरस्य शतयोजनं आयतं विस्तीर्णं च मामधिष्ठायापि स्त्रीत्वं व्यतिवर्तितुं अपगन्तुं । न समर्थं हि । सागरस्य शतयोजनं यावत्तावदायतं तथा विस्तीर्णं च मामधितिष्ठन्त्या अपि तव स्त्रीत्वं भीरुत्वं नापगच्छतीत्यर्थः ॥ ३—५ ॥ त्वया चेष्टितं उद्बन्धनादिकं । भाषितं रावणं तृणीकृत्य फणितं । मम प्रत्युत्तरत्वेन कथितं च ॥ ६ ॥ बहुभिः कारणैः बहुभिरुपायैः । स्नेहप्रस्कन्नमनसा स्नेहशिथिलमनसा ॥ ७ ॥ लङ्कायाइति दुष्प्रवेशलङ्काप्रवेशे दुस्तरसागरतरणे च मम शक्तिरस्तीति ज्ञापयितुमेवमुक्तमित्यर्थः ॥ ८ ॥ रघुबन्धुना रघुवंश्येन । "सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनास्समाः" इत्यमरः। रघुवंश्यानां बन्धुना तत्कीर्तिसंपादकेनेत्यथः । समानेतुं संगमयितुं । इच्छामि ऐच्छं ॥ ९—१० ॥ बाष्पप्रग्रथिताक्षरं बाष्पेण विच्छिताक्षरं । एकान्तवृत्तान्तस्मरणाद्बाष्पः ॥ ११ ॥ इदमित्यादिश्लोकद्वयमेकान्वयं ॥ चित्रकूटस्य पादे चित्रकूटप्रत्यन्तपर्वते । मन्दाकिन्या अदूरे सिद्धैराश्रिते प्राज्यमूलफलोदके

**ती०** यद्वा स्त्रीत्वमित्यत्र स्त्रीइतिच्छेदः । समर्थमितिलिङ्गव्यत्ययआर्षः । स्त्रीभूता त्वं सागरंव्यतिवर्तितुंनसमर्थासीत्यर्थः । स्त्रीणांभीरुस्वभावत्वात्तत्तुभूषणमेवेतिभावः । सागरस्यनिवर्तितुमितिपाठे सागरस्ययादृक्छतयोजनंतावदायतंविस्तीर्णमपिमामधिष्ठायनिवर्तयितुं उपगन्तुं स्त्री त्वं नसमर्थं नसमर्थेतियोजना ॥ ३ ॥ **ति०** ईदृशंवचनं त्वयासहनयास्यामीत्येतद्वचनंत्वद्भिन्नाईदृश्यामापदिईदृशंवचनंकाब्रूयात् ॥ ५ ॥ **ति०** चेष्टितं व्यापारः विलापादिरूपः । कारणैर्बहुभिरुपपन्नंयत्त्वयाममाग्रतोभाषितं तत् रामाग्रेउच्यमानगुणकेनमयाईरितं । काकुत्स्थोनिरवशेषतःश्रोष्यतइत्यन्वयइतिकतकः ॥ ६—७ ॥ **स०** श्रेष्ठं झटितिरामस्यसंदेहनिवर्तकत्वात् ॥ १२ ॥

[ **पा०** ] १ ङ.—ट. तोषितः. २ घ. स्त्रीस्वभावानां. ३ ङ. झ. ट. स्त्रीत्वान्नत्वंसमर्थासि. ४ क.—ट. संसर्गमिति. ५ ङ.—ट. भाषितंचममाग्रतः. ६ ङ. झ. ट. रघुनन्दिना. ७ च. छ. ज. ञ. साकं. ८ क. ग. घ. च. छ. तदा. ङ. ज.—ट. पदे.

तापसाश्रमवासिन्याः प्राज्यमूलफलोदके ॥ तस्मिन्[1]सिद्धाश्रमे देशे मन्दा[2]किन्या ह्यदूरतः ॥ १३ ॥
तस्योपवन[3]षण्डेषु नानापुष्पसुगन्धिषु ॥ विहृत्य सलिल[4]क्लिन्ना तवाङ्के समुपाविशम् ॥ १४ ॥
ततो मांससमायुक्तो वायसः पर्यतुण्डयत् ॥ तमहं लोष्टमुद्यम्य वारयामि स्म वायसम् ॥ १५ ॥
दारयन्स च मां काकस्तत्रैव परिलीयते ॥ न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः ॥ १६ ॥
उत्कर्षन्त्यां च रशनां क्रुद्धायां मयि [5]पक्षिणि ॥ [6]स्रस्यमाने च वसने ततो दृष्टा त्वया ह्यहम् ॥ १७ ॥
[7]त्वयापहसिता चाहं क्रुद्धा संलज्जिता तदा ॥ भक्षगृध्नेन काकेन दारिता त्वामुपागता ॥ १८ ॥
[8]आसीनस्य च ते श्रान्ता पुनरुत्सङ्गमाविशम् ॥ क्रुध्यन्ती च प्रहृष्टेन त्वयाऽहं परिसान्त्विता ॥ १९ ॥
बाष्पपूर्णमुखी मन्दं चक्षुषी परिमार्जती ॥ लक्षिताहं त्वया नाथ वायसेन प्रकोपिता ॥ २० ॥
[9]परिश्रमात्प्रसुप्ता च [10]राघवाङ्केऽप्यहं चिरम् ॥ पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः ॥
स तत्र पुनरेवाथ वायसः समुपागमत् ॥ २१ ॥
ततः सुप्तप्रबुद्धां मां रामस्याङ्कात्समुत्थिताम् ॥ वायसः [11]सहसाऽऽगम्य वि[12]ददार स्तनान्तरे ॥ २२ ॥
पुनः पुनरथोत्पत्य विददार स मां भृशम् ॥ ततः समुक्षितो रामो मुक्तैः शोणितबिन्दुभिः ॥ २३ ॥
वायसेन ततस्तेन बलवत्क्लिश्यमानया ॥ [13]स मया बोधितः श्रीमान्सुखसुप्तः परन्तपः ॥ २४ ॥

---

तस्मिन्देशे तापसाश्रमवासिन्याः तापसाश्रमे वसन्त्या मम इदं वक्ष्यमाणं श्रेष्ठमभिज्ञानं प्रियंप्रति त्वं ब्रूया इति योजना ॥ १२—१३ ॥ रामाय सीतया वक्तव्यं वचनं हनुमन्तं प्रत्युच्यते—तस्येत्यादि ॥ १४ ॥ मांससमायुक्तः मांसप्रतिलुब्धः । "आयुक्तकुशलाभ्यां च—" इत्यत्र आयुक्तशब्दस्य तात्पर्यपरतया व्याख्यानात् । लोष्टं मृत्पिण्डं । पर्यतुण्डयत् पर्यखण्डयत् । स्तनान्तर इति शेषः । "तुडि तोडने" इत्ययं धातुश्चौरादिकः ॥ १५ ॥ परिलीयते अन्तर्हितो भवति स्म । बलिभोजनः काकः ॥ १६ ॥ उत्कर्षन्त्यां च रशनां काकोत्सारणार्थमिति शेषः ॥१७॥ भक्षगृध्नेन भक्षलोलुपेन । दारिता विदारिता । त्वामुपागता पुनरुत्सङ्गमाविशमित्येताभ्यां काकोत्सारणार्थमङ्कादुत्थानमनुधावनं च कृतं देव्येत्यवगम्यते ॥१८—१९॥ बाष्पेति रामाङ्के केवलं स्थितास्मि । तदा काको मां किंचिददारयत् । तं दृष्ट्वा तत्पलायनार्थं स्वयमायासं कुर्वन्तीं तदशक्त्या रुदन्तीं मां रामः परिहासपूर्वकं सान्त्वितवानित्यर्थः । अनेन स्वरक्षणे स्वयं प्रवृत्तश्चेदीश्वर उपेक्षते स्वयमप्रवृत्तौ स रक्षतीति द्योतितम् ॥२०—२३॥ सः निखिललोकविदितनिरतिशयसौन्दर्यप्रसिद्धः । मया बोधितः । मयैवाहंहता स्वापकालिकश्रीविशेषाननुभवात् । लोके कश्चित्संचारदशायां सुन्दरइव भाति शयने दुर्लक्षणादिभिर्दोषादृश्यन्ते न तथायं । श्रीमान् स्वापकालिकश्रीरुच्यते । सुख-

---

ती० तवाङ्केसमुपाविशमिति । ननुहनुमन्तमुद्दिश्याभिज्ञानंवक्तुमुपक्रान्तादेवीरामंसंबोध्यकिमर्थंकथयतीतिचेत् सत्यं । मद्यमभिज्ञानंवक्तुमुपक्रान्तात्वामेवाभिमुखीकृत्यएवमुक्तरंप्रादादितिहनुमतारामायवाचयितुमितिनदोषः ॥ १४ ॥ ति० सः त्वदनुभवसिद्धः । समायुक्तः विकाराभियुक्तःसन् पर्यतुण्डयत् । स्तनान्तरइतिशेषः । यद्वा मांससमायुक्तः मांसेच्छायुक्तइत्यर्थः ॥ १५ ॥ ति० तत्रैवपरिलीयते वार्यमाणोपिनदेशान्तरंगच्छतिस्म । नचमांसात् मांसविदारणात् । भक्षार्थी उपारमत् । यद्ययंवस्तुतोनमांसार्थीत्युच्यते तदेत्थंयोज्यं । सवायसः मांसात् भक्षार्थीव । इवाध्याहारः । ल्यब्लोपेपञ्चमी । मांसमुपगृह्यभक्षार्थीव । यद्वा मांसभोजनेभक्षार्थीवपुनःपुनर्विलेखनान्नविरराम ॥ १६ ॥ ति० त्वयिस्वपति मयिजाग्रत्यामित्यर्थः । सुप्तप्रबुद्धां राघवाङ्केसुप्त्वाततःप्रबुद्धां । अतएव राघवाङ्कादुत्थितां । वायसःपुनरागम्यस्तनान्तरे विरराद व्यलिखत् ॥ २२ ॥

[ पा० ] १ क. ङ. झ. ट. सिद्धाश्रिते. २ ङ. झ. ट. मन्दाकिन्याविदूरतः. क. च. छ. ञ. मन्दाकिन्यास्त्वदूरतः. ३ झ. खण्डेषु. ४ क. ग. ङ. झ. सलिलेक्लिन्नोममाङ्केसमुपाविशः. ५ ख. ङ. च. ज.—ट. पक्षिणे. ६ ङ. झ. ञ. ट. स्रंसमाने. ७ क. ग.—ट. त्वयाविहसिता. ८ ङ. ज. झ. ट. ततःश्रान्ताऽहमुत्सङ्गमासीनस्यतवाविशं. ९ ङ. झ. परिश्रान्ताचसुप्ताहे. १० क. ग. ङ.—ट. राघवाङ्केऽस्म्यहं. ११ ग. च. छ. ञ. समुपागम्य. १२ क. विररादस्तनौभृशं. झ. विररादस्तनान्तरे. १३ क. च. छ. मयाप्रबोधितः.

स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा ॥ आशीविष इव क्रुद्धः श्वसन्वाक्यमभाषत ॥ २५ ॥
केन ते नागनासोरु विक्षतं वै स्तनान्तरम् ॥ कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ २६ ॥
वीक्षमाणस्ततस्तं वै वायसं समुदैक्षत ॥ नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम् ॥ २७ ॥
पुत्रः किल स शक्रस्य वायसः पततां वरः ॥ धरान्तरगतः शीघ्रं पवनस्य गतौ समः ॥ २८ ॥
ततस्तस्मिन्महाबाहुः कोपसंवर्तितेक्षणः ॥ वायसे कृतवान्क्रूरां मतिं मतिमतां वरः ॥ २९ ॥
स दर्भं संस्तराद्गृह्य ब्राह्मेणास्त्रेण योजयत् ॥ स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ॥ ३० ॥
स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति ॥ ततस्तं वायसं दर्भः सोम्बरेऽनुजगाम ह ॥ ३१ ॥
अनुसृप्तस्तदा काको जगाम विविधां गतिम् ॥ लोककाम इमं लोकं सर्वं वै विचचार ह ॥ ३२ ॥
स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः ॥ त्रींल्लोकान्संपरिक्रम्य तमेव शरणं गतः ॥ ३३ ॥

सुप्तः तत्त्वानुगुणैव हि सुप्तिरपि । परन्तपः शयनमेव सकलशत्रुनिवर्तनक्षममित्यर्थः । सुप्तः श्रीमान् । लोके स्थानगमनशयनादिदशायां रूपवानिवलक्ष्यतेकश्चित् । संशयने प्रकाशितप्रच्छन्नदोषतयाजुगुप्सितोभवति । अयंतु शयनावस्थायामेवनीराजनाकर्तव्या दृष्टिदोषपरिहारायेत्येवंस्थितः ॥ २४ ॥ वितुन्नां दारितां ॥ २५ ॥ पञ्चवक्त्रेण व्यात्तमुखेन । " पचि विस्तारे " इत्यस्मात्पचाद्यच् । कार्यातिशयद्योतनार्थं वा पञ्चसङ्ख्याकवक्त्रोक्तिः । नागनासोरु नागहस्तोरु । कुपितपञ्चवक्त्रक्रीडासमं तवस्तनविदारणमितिभावः ॥ २६—२७ ॥ ननु वायसमात्रे किमर्थमस्त्रं मुक्तमित्याशङ्क्याह—पुत्रः किलेति ॥ इदं रक्षणानन्तरं तेनैवोक्तमिति ज्ञेयं । किलेति प्रसिद्धौ । इन्द्रपुत्रत्वेन प्रसिद्धो जयन्त एव वायसरूपेणागत इत्याहुः । वायसरूपोन्यः पुत्र इत्यप्याहुः ॥ २८—२९ ॥ संस्तरात् आस्तरणात् । गृह्य गृहीत्वा । अस्त्रेण अस्त्रमन्त्रेण । योजयत् अयोजयत् । अभिमन्त्रितवानित्यर्थः । द्विजं काकं ॥ ३०—३१ ॥ अनुसृप्तः अनुसृतः । विविधां गतिं विविधं स्थानं । लोककामः लोकयितृकामः । रक्षकापेक्षीत्यर्थः ॥ ३२ ॥ भगवद्व्यतिरिक्ता बान्धवाभासा न रक्षका इत्याह—स पित्रेति । सः पुरुषकारभूतायामपि कृतापराधः । सः आर्द्रापराधः । पित्रा च परित्यक्तः अस्त्रक्षतिभीततया प्रथमं पितरं रक्षकं गतः तेन त्रैलोक्याधिपतिना च त्यक्तः । "इन्द्रो महेन्द्रस्सुरनायकोवा" इति तस्यासमर्थत्वोक्तेः । परित्यक्तः त्यागोपि नापाततः बुद्धिपूर्वं त्यक्तः । " त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्" इति न्यायात् । यद्वापरित्यक्तः भार्यापुत्रादिभिस्सह त्यक्तः । चकारेण माता समुच्चीयते । न केवलं हितपरेण पित्रा प्रियपरयामात्रा च परित्यक्तः । " सीता नारी जनस्यास्य योगक्षेमं विधास्यति " इति स्वरक्षकभूतायामपि सापराधत्वादिति भावः । पित्रपेक्षया मातुर्वात्सल्यातिशयात्तामेव प्रथमं गच्छति स्म ततः पितरं । पित्रा त्यागवचनान्मात्रा त्यागः सिद्ध एवेति चकारेण सूचितम् । पितृभ्यां त्यागेपि बान्धवा न त्यज्यन्ति । किं पितरौ सर्वथा त्यक्ष्यत इति तैरपि त्यक्त इत्याह—सुरैश्च । " कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे " इति रामनयने रक्ते तेपि बिभ्यति हि । एवं पूर्वसजातीयैस्त्यक्तत्वेपि परिगृहीतपक्षिरूपसजातीयैः किं त्यक्त इत्यपेक्षायां तथेत्याह—चकारेण । " पक्षिणोपि प्रयाचन्ते सर्वभूतानुकम्पिनं " इति पक्षिणामपि शरण्यत्वात् । स्वनायकगरुडस्वामित्वाच्च पक्षिभिरपि परित्यक्तः । स महर्षिभिः । पित्रादिबन्धूनामरक्षकत्वेपि आनृशंस्यप्रधाना महर्षयो रक्षिष्यन्तीति गतः । तैरपि प्रकामं दूरदर्शिभिः परित्यक्तः ।

**ति०** तदा स्तनयोर्वितुन्नांमांदृष्ट्वाक्रुद्धः । अनेन पूर्वपर्यायेकेवलंरामःकाकचेष्टाबुद्ध्यापरिहासमेवकृतवानितिसूचितं ॥ २५ ॥ **ति०** शक्रपुत्रः जयन्तः । सतुवायसः । वायसरूपधारीत्यर्थः । धरान्तरंगतः भूमिबिलंप्राप्तः । शीघ्रगतौ पवनस्यसमः । धरान्तरचारित्वंतु पवनादस्यविशेषः । नहिवायुस्तत्संचारीतिकतकः । ननुसावधानजनशरीरस्यकाककर्तृकविदारणंलोकेनदृष्टमिति कोऽयमीदृशःकाकइतिहनुमतःशङ्कांदूरीकुर्वतीआह—**पुत्रइति** । शक्रस्यपुत्रः । एतेन रामपराक्रमपरीक्षार्थंशक्रप्रेरणयैवायमागत

[ पा० ] १ क.—ट. समवैक्षत. २ झ. दर्भसंस्तरात्. ३ ग. ङ. झ. ट. ब्रह्मणोस्त्रेण. ४ क. ङ.—ट. त्राणकामः. ५ ङ. झ. ट. सर्वैश्च. ६ ङ. झ. ट. परमर्षिभिः.

स तं निपतितं भूमौ शरण्यः शरणागतम् ॥ वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥ ३४ ॥
न शर्म लब्ध्वा लोकेषु तमेव शरणं गतः ॥ ३५ ॥
परिद्यूनं विषण्णं च स तमायान्तमब्रवीत् ॥ मोघं कर्तुं न शक्यं तु ब्राह्ममस्त्रं तदुच्यताम् ॥ ३६ ॥
हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोब्रवीत् ॥ ततस्तस्याक्षि काकस्य हिनस्ति स स दक्षिणम् ॥
दत्त्वा स दक्षिणं नेत्रं प्राणेभ्यः परिरक्षितः ॥ ३७ ॥
स रामाय नमस्कृत्वा राज्ञे दशरथाय च ॥ विसृष्टस्तेन वीरेण प्रतिपेदे स्वमालयम् ॥ ३८ ॥
मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम् ॥ कस्माद्यो मां हरत्त्वत्तः क्षमसे तं महीपते ॥ ३९ ॥
स कुरुष्व महोत्साहः कृपां मयि नरर्षभ ॥ त्वया नाथवती नाथ ह्यनाथा इव दृश्यते ॥ ४० ॥

---

आनृशंस्यविषयव्यवस्थास्तीति तैस्त्यक्त इत्यर्थः । एतदङ्गीकारे वयमपि संसर्गदोषेण नश्येम । अस्माभिस्त्यागेऽनन्यगतिकत्वाद्राम एनं स्वीकरिष्यतीति तैस्त्यक्तः महर्षिभिः " यो विष्णुं सततं द्वेष्टि तं विद्यादन्त्यरेतसं " इति विष्णुद्वेषेण चण्डालत्वात् । " चण्डालः पक्षिणां काकः " इत्युक्तेश्च । चण्डालो नास्मद्वाटमागच्छेदिति त्यक्तः । एवं रक्षकान्तरादर्शनात् " नष्टगजो घटमप्यन्वेषते " इति न्यायेन स्वैरविवृतद्वारान्सर्वान्गृहान्गत इत्याह—त्रींल्लोकान्संपरिक्रम्य परिक्रम्य एतदेव नवकृत्वो गतः । संपरिक्रम्य गृहस्थैरविज्ञाततया कवाटमूलेषु लीनश्चेत्यर्थः । अपि कदाचित्कृपैषामुत्पद्येतेति मत्वा पुनःपुनर्गत इत्यर्थः । अमुं निष्कास्य कवाटबन्धनं सर्वैः कृतमित्यर्थः । ततः किं कृतमित्यत्राह—तमेव शरणं गतः । रक्षकत्वेन प्राप्तापेक्षया हिंसकत्वेन स्थितस्य मुखमेव शीतलमित्यवस्थितः । अतस्तमेव शरणं गतः । " यदिवारावणस्स्वयं " इत्येवं स्थितो हि रामः तमेव सर्वलोकशरण्यमेव । तमेव दोषो यद्यपि न त्यजेयमिति स्थितं । शरणं गतः निवासं गतः । न तूपायतया गतः । " निवासवृक्षः साधूनां " इत्युक्तेः ॥ ३३ ॥ स तमिति ॥ सः रक्षणैकस्वभावः । तं प्रातिकूल्यैकनिरतं भूमौ निपतितं देवजातितया भूमिमस्पृशन्तमपि भूमौ पतितं । भूमौ दुष्पुत्रे पितरि शिक्षमाणे स यथा मातुः पादयोः पतति तथापतत् । शरण्यः सर्वावस्थास्वपि शरणवरणार्हः । शरणागतं अनन्यगतिकतया स्वमुपागतं । वधार्हमपि रामसिद्धान्तेनापि वधार्हं । काकुत्स्थः कृपया पर्यपालयत् कुलोचितस्वभावेन रक्षितवान् । कृपया अस्मदाद्यारब्धं कार्यं प्रबलकर्मणा न समाप्यते । तथा तेनारब्धमपि कृपया न पूर्यत इति भावः ॥ ३४—३५ ॥ परिद्यूनं परितप्तं । तदुच्यतामित्यनन्तरं । " हिनस्तु दक्षिणाक्षि त्वच्छर इत्यथ सोब्रवीत् " इत्यर्धमनुसन्धेयम् ॥ ३६—३७ ॥ दशरथाय स्वलोकस्थतया पूर्वमेव मित्रभूताय ॥ ३८ ॥ समुदीरितं प्रमुक्तं । हरत् अहरत् ॥ ३९ ॥ सः परदुःखं दृष्ट्वा न सहामहे इत्युक्तवान् । त्वं महोत्साहः एतदनुष्ठानपर्यन्तं कुर्वन् मयि अत्यन्तदुःखितायां कृपां परदुःखासहिष्णुत्वं । प्रकाशयितुमर्हसि । नरोत्तम एवंनकरोषिचेत्तव नरोत्तमत्वस्यहानिरेवस्यात् । तस्मादेतद्वचनमनुष्ठानपर्यन्तंकृत्वा मां जीवयित्वा तवनरोत्तमत्वं परिपालयेतिभावः । अनाथाइव अनाथेव । आर्षो गुणाभावः । आनृशंस्यं परो धर्मः । नावारोपणानन्तरं वेतनाभ्य-

---

इतिध्वनितं । वायसः तदन्तर्गतः ॥ २८ ॥ **ति०** दर्भसंस्तरात् । एकमितिशेषः ॥ ३० ॥ **स०** ब्राह्ममस्त्रं दर्भान्तर्गर्भितं । तदुच्यतां एतेनवध्यमुच्यतां भार्गववदितिभावः । **रामानु०** तदुच्यतामितिप्रश्नानन्तरं हिनस्तिस्सदक्षिणमितिवचनादस्त्रलक्ष्यत्वेनदक्षिणाक्षिप्रदानपरंप्रतिवचनंकाकेनकृतमित्यवगम्यते ॥ ३६ ॥ **ति०** सः दक्षिणाक्षि अस्यसंहार्यंभवत्वित्युक्तः । परिरक्षितः परिरक्षितवान् । आत्मानमितिशेषः । **स०** प्राणेभ्यः प्राणार्थं दत्वास्थितः । परिरक्षितः रामेणेतिशेषः ॥ ३७ ॥ **ती०** एवंहनुमतेरामैकसंवेद्यमभिज्ञानमभिधायदुःखावेशाद्राममेवबुद्धिस्थंसंबोध्यसोपालंभंप्रार्थयते—**मत्कृतइत्यादिनासार्धचतुष्टयेन । ति०** कस्मात्क्षमसेइत्यवान्तरवाक्यान्तेइत्युक्तवतीतिब्रूहीतिवाक्यशेषोद्रष्टव्यइतिकतकः ॥ ३९ ॥ **शि०** अनाथा-

**[ पा० ]** १ क. ग. ङ.—ट. विवर्णंच. २ झ. ट. पतमानंतमब्रवीत्. ३ घ. च.—ञ. मोघमस्त्रं. ४ घ. च.—ञ. ब्राह्मंकर्तुं. ५ ख. काकमात्रेतद्ब्रह्मास्त्रं. झ. ट. काकमात्रेऽपि. ६ ङ. झ. ञ. माऽहरत्त्वत्तः. ७ क. त्वंकुरुष्व. ८ ग. ङ. झ. ञ. ट. महोत्साहां. ९ ख. घ. च. अनाथेवहि.

आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः[1] ॥ ४१ ॥
जानामि त्वां महावीर्यं महोत्साहं महाबलम् ॥ अपारपारमक्षोभ्यं गाम्भीर्यात्सागरोपमम् ॥
भर्तारं ससमुद्राया[2] धरण्या वासवोपमम् ॥ ४२ ॥
एवमस्त्रविदां श्रेष्ठः सत्यवान्बलवानपि[3] ॥ किमर्थमस्त्रं रक्षस्सु न योजयति[4] राघवः ॥ ४३ ॥
न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ॥ रामस्य समरे वेगं शक्ताः प्रतिसमाधितुम्[5] ॥४४॥
तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ॥ किमर्थं न शरैस्तीक्ष्णैः क्षयं नयति राक्षसान् ॥ ४५ ॥
भ्रातुरादेशमादाय लक्ष्मणो वा परन्तपः ॥ कस्य हेतोर्न मां वीरः परित्राति महाबलः ॥ ४६ ॥
यदि तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ[6] ॥ सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ ४७ ॥
ममैव दुष्कृतं किंचिन्महदस्ति[7] न संशयः ॥ समर्थावपि तौ यन्मां[8] नावेक्षेते परन्तपौ ॥ ४८ ॥
वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम् ॥ अथाब्रवीन्महातेजा[9] हनुमान्मारुतात्मजः ॥ ४९ ॥
त्वच्छोकविमुखो रामो देवि सत्येन[10] मे शपे ॥ रामे दुःखाभिपन्ने[11] च लक्ष्मणः परितप्यते ॥ ५० ॥

थेनवत्संश्लेषदशायां तवात्यन्ताभिमतोधर्मःक इति मयापृष्टे परदुःखं चेत्तदसहिष्णुत्वमेव परमो धर्म इति ममाभिमतं तथैवमत्स्वभाव इतित्वयारहस्योद्भेदनंकृतं । त्वत्तएव नतु दूतमुखेन मया श्रुतः । इदं श्रवणमात्रपर्यवसायिजातं नत्वनुष्ठानपर्यवसायीतिराभंपृच्छेतिभावः । एवं पृच्छन्त्याःसीतायाःप्रत्युत्तरं दिशतोरामस्यच कोभिप्राय इतिचेदुच्यते । एतस्य संश्लेषस्यविच्छेदोभवतिचेत् किंकरिष्यामीति कातरतया पृष्टवती । सोपि मद्विरहक्लेशेन काम्यन्तीं त्वां न कदाचिदपि पश्येयमित्युक्तवान् । अयमर्थोप्यरण्यकाण्डे अप्यहं जीवितं जह्यामिति श्लोकप्रघट्टिकादौ दर्शितः ॥ ४०—४१ ॥ अपारपारं दुरधिगमपारं असीममित्यर्थः । दुरधिगमगुणसीममित्यर्थो वा ॥ ४२—४३ ॥ प्रतिसमाधितुं प्रतिबद्धुं ॥ ४४ ॥ संभ्रमः भाववृत्तिः ॥ ४५—४६ ॥ उपेक्षतः उपेक्षेते । यदि तौ संगताविति शेषः ॥ ४७ ॥ समर्थौ विरोधिवर्गमुन्मूल्य मद्रक्षणानुगुणशक्तिमन्तौ । परन्तपौ इतःपूर्वंप्रतिपक्षनिर्दहनंकुर्वन्तौ । एवंभूतावपि तौ मां प्राणपर्यन्तं रक्षणप्रवृत्त्यर्हदशां प्राप्तां मां नावेक्षेते इति यत् न कटाक्षयतइतियत् अस्यनिमित्तं तयोर्वा मयि वा किंचिद्भवितुमर्हति । तत्र तद्विषये तादृशनिमित्तप्रसक्तिर्नास्ति सामर्थ्यपरन्तपत्वादिदर्शनात् । परिशेषान्ममैव पापं अस्य निमित्तं भवितुमर्हति । यद्वा ममैव “ द्विषन्तः पापकृत्यां ” इत्युक्तरीत्या अन्यतो नागतमित्यर्थः । किंचित् नहि वयं सर्वज्ञाः अस्माभिरज्ञातं किंचिद्भवितुमर्हति । महत् प्रारब्धफलतयाऽनुभवं विना दुष्परिहरं । अस्ति न संशयः । कार्ये सति कारणे किमस्ति संदेहः । यद्वा किंचिदनिर्वचनीयं । महद्दुष्कृतमस्तीत्यनेन “ किं त्वामन्यत वैदेहः ” इत्यादिनोक्तो भगवदपचारः । उक्तंहि “ कीदृशं तु मया पापं पुरा देहान्तरे कृतं ” इति । देहान्तरे बालशरीरे ॥ ४८ ॥ साश्रु यथा तथा भाषितं उक्तं ॥ ४९ ॥ त्वच्छोकविमुखः त्वच्छोकेन विमुखः विषयान्तरपराङ्मुखः ।

इवदृश्यते ममतनुरितिशेषः ॥ ४० ॥ **शि०** ननुतवरक्षणेममनकिंचित्प्रयोजनमित्यतआह—आनृशंस्यमिति । आनृशंस्यं निर्हेतुककृपा परोधर्मः इतित्वत्तएवमयाश्रुतं । एतेन प्रयोजनाभावेपिस्वकृपयापालयेतिसूचितं ॥ ४१ ॥ **रामानु०** अपारपारं “ पार कर्मसमाप्तौ ” इतिधातोर्निष्पन्नत्वादत्रपारशब्देनकर्मसमाप्तिरुच्यते । अपाराः पाराः कर्मसमाप्तयोयस्यसतथोक्तः । निरवधिकापदानइत्यर्थः ॥ ४२ ॥ **ति०** प्रतिसमीहितुं प्रतिभटतयास्थित्वानिरोद्धुमित्यर्थः । प्रतिसमाधितुमितिपाठान्तरं । तत्रार्षत्वंशरणं ॥ ४४ ॥ **ति०** ममसंभ्रमइतिपाठे ममप्राप्तयेसंभ्रमइत्यर्थः ॥ ४५ ॥

**[ पा० ]** १ ङ. झ. ट. श्रुतं. २ घ. सागरान्तायाः. ३ ङ. झ. ट. बलवान्सत्त्ववानपि. ख. ग. घ. च. छ. ज. ञ. सत्ववान्. ४ ट. मोचयसि. ५ ङ. झ. ट. प्रतिसमीहितुं. ६ ङ. च. ज. झ. ट. वाय्विन्द्र. ७ ग. मन्येमहदस्ति. ८ क. यन्मामुपेक्षेतां. ग. यन्मांनावेक्षेतां. ९ ख. तदाऽब्रवीत्. १० क. ख. घ. ङ. च. ज.—ट. सत्येनते. ११ क. ङ. झ. ञ. ट. दुःखाभिपन्नेतु. ग. घ. दुःखाभिभूतेच.

कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥ इमं मुहूर्तं दुःखानां द्रक्ष्यस्यन्तमनिन्दिते ॥ ५१ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रौ महाबलौ ॥ त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ ५२ ॥
हत्वा च समरे क्रूरं रावणं सहबान्धवम् ॥ राघवस्त्वां विशालाक्षि नेष्यति स्वां पुरीं प्रति ॥ ५३ ॥
ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबलः ॥ सुग्रीवो वाऽपि तेजस्वी हरयोपि समागताः ॥ ५४ ॥
इत्युक्तवति तस्मिंश्च सीता सुरसुतोपमा ॥ उवाच शोकसंतप्ता हनुमन्तं प्लवङ्गमम् ॥ ५५ ॥
कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी ॥ तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ॥ ५६ ॥
स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः ॥ ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम् ॥ ५७ ॥
पितरं मातरं चैव संमान्याभिप्रसाद्य च ॥ अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः ॥ ५८ ॥
आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम् ॥ अनुगच्छति काकुत्स्थं भ्रातरं पालयन्वने ॥ ५९ ॥
सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ॥ पितृवद्वर्तते रामे मातृवन्मां समाचरन् ॥ ६० ॥
ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः ॥ वृद्धोपसेवी लक्ष्मीवाञ्शक्तो न बहु भाषिता ॥ ६१ ॥

---

प्रत्युत त्वय्येव दत्तचित्त इत्यर्थः ॥ ५० ॥ इमं मुहूर्तं अस्मिन्मुहूर्ते । सप्तम्यर्थे द्वितीया ॥ ५१—५५ ॥ मनस्विनी लोकभर्तारं सुषुवे । लोके स्त्रियः इहलोकपरलोकयोः स्वरक्षणार्थं पुत्रान् सुवते नैवं मेश्वश्रूः । मनस्विनी विपुलमनस्का । सर्वलोकरक्षकः पुत्रो मे भवेदिति व्रतमनुष्ठाय लोकोपकाराय पुत्रं सूतवती । एवंभूतः कौसल्यासंकल्पः कथं मोघस्स्यात् । अहमत्र लोके न किमन्तर्भूता । तं ममार्थे सुखं पृच्छ । अस्मद्रक्षणं न मया प्रार्थ्यं तच्चिन्ता तस्यैव । अस्मत्त्वरातु विलम्बासहिष्णुतया । तस्मात्तत्सत्ता चेन्मद्रक्षणस्य न कापि हानिः । अतस्तत्सत्तैवास्माभिराशास्यते । तेन तस्य सुखमस्ति किमितिमया पृष्टमिति वद । एवंच लोकवदस्माभिश्च तस्मात्किंचिदपेक्षितंचेत् लोकैर्यत्कार्यं तत्कार्यं मयापि कार्यमित्याह—शिरसा चाभिवादय । अहं तं शिरसा प्रणतवत्यस्मीति तमभिवादय । प्रणिपातंकुर्वित्यर्थः । कथं नायिका नायकं शिरसा प्रणमेदितिचेत् आचारप्रधानजनककुलनन्दिन्यैवमनुष्ठितमिति किमत्र प्रमाणं प्रष्टव्यं । प्रणयरोषेणैवमाहेति चेन्न । हनुमद्वचनेन तस्य शान्तत्वात् । ननु ममार्थे मत्कार्यसिद्ध्यर्थं तं प्रणमेत्यर्थः किंनस्यादिति चेत्, ममार्थ इत्यस्योभयत्रान्वयात् । पूर्वमत्र मया पृष्टमिति पृच्छेत्यर्थस्यावश्यकत्वादत्रापि मया प्रणतमिति प्रणमेत्यस्य स्वरसत्वात् ॥ ५६ ॥ स्रजश्चेति ॥ सन्तीति शेषः । स्रगादयः सन्ति पृथिव्यां दुर्लभमैश्वर्यमप्यस्ति । तथा पितरं मातरं चैव संमान्य सुमित्रा येन सुप्रजाः सः राममनु प्रव्रजितः ॥५७—५८॥ आनुकूल्येन भक्त्येत्यर्थः ॥५९॥ समा-

---

**शि०** यस्मात्कथंचिद्भवतीदृष्टा मयेतिशेषः । अतः इमंमुहूर्तं आरभ्येतिशेषः । दुःखानामन्तंद्रक्ष्यसि । किंच दुःखानामन्तं विध्वंसकं इमं आगामिनंमुहूर्तंद्रक्ष्यसि अतःपरिशोचितुंकालः समयोन ॥ ५१ ॥ **तनि०** लोकेस्त्रियःस्वजीवनदशायांपोषकंपरत्रोत्तारकंचपुत्रमभिलषन्ति । कौसल्यातु विपुलमनस्कतयासर्वलोकरक्षकंपुत्रंप्रार्थ्यव्रताचरणेनलब्धवती तत्प्रार्थनाविकलाकिं । अहं लोकशब्दान्तर्भूतानभवामिकिं । जलसमीपस्थितसस्यस्यशुष्कतावत्सर्वावस्थास्वप्यनुसृतायाममरक्षणेतत्प्रार्थनासंकुचिताकिं । तंममार्थेसुखंपृच्छ । ममरक्षणंनप्रार्थनीयं तस्यमनसितिष्ठत्येव । किंतु त्वयातस्यसुखजनकेनभाव्यं । तस्यावस्थाने अस्मद्रक्षणं भविष्यतीतितदेवाशास्यते । शिरसाचाभिवादय । अग्निसाक्षिकंगृहीतपाणिनाचरक्षणंकार्यं तन्नक्रियते । इतरसाधारण्येनवारक्षणं क्रियतां । तैर्यत्क्रियते तन्मयाप्यभिवादनंक्रियतेइत्यस्मदर्थमभिवादनंकुरु ॥ **ति०** ममार्थे मत्प्रतिनिधित्वेनेत्यर्थः ॥ ५६ ॥ **ति०** लक्ष्मणःपूर्वंमारीचवधायगतेरामेतत्पृष्ठगमनायसम्यक्कृतपारुष्यइतिज्ञात्वातस्यविमोचनप्रवृत्त्युपेक्षामाभूदितिविशिष्यकुशलप्रश्नं ब्रूहीत्याह—स्रजश्चेति । दुर्लभमित्यत्र त्यक्त्वेत्यनुकर्षः ॥ ५७ ॥

**[ पा० ]** १ ङ. झ. ट. दुःखानामन्तंद्रक्ष्यसिशोभने. २ ङ. झ. ट. लोकान्भस्मी. ३ क.—ट. स्वांपुरींप्रतिनेष्यति. ४ घ. इत्युक्तासाहनुमता. ५ ख.—ट. सीतापुनरथाब्रवीत्. ६ इदमर्धं ख.—ट. पाठेषुनदृश्यते. ७ क. ग. च. छ. विसृज्य. ८ घ. संमान्याभिप्रणम्यच. ग. परित्यज्यप्रसाद्यच. ९ क. घ. च. छ. ज. ञ. भाषितुं.

राजपुत्रः प्रियः श्रेष्ठः सदृशः श्वशुरस्य मे ॥ मम प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ॥ ६२ ॥
नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान् ॥ यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरेत् ॥ ६३ ॥
स ममार्थाय कुशलं वक्तव्यो वचनान्मम ॥ मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ॥ ६४ ॥
यथा हि वानरश्रेष्ठ दुःखक्षयकरो भवेत् ॥ त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम ॥ ६५ ॥
राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ॥ इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ॥ ६६ ॥
जीवितं धारयिष्यामि मासं दशरथात्मज ॥ ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ॥ ६७ ॥
रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ॥ त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ॥ ६८ ॥
ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् ॥ प्रदेयो राघवायेति सीता हनुमते ददौ ॥ ६९ ॥
प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् ॥ अङ्गुल्या योजयामास नह्यस्य प्राभवद्भुजः ॥ ७० ॥
मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ॥ सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ॥ ७१ ॥
हर्षेण महता युक्तः सीतादर्शनजेन सः ॥ हृदयेन गतो रामं शरीरेण तु विष्ठितः ॥ ७२ ॥

चरन् परिचरन् ॥ ६०—६२ ॥ यस्यां धुरि यस्मिन्कार्यनिर्वाहइत्यर्थः । आर्यं श्वशुरं दशरथं नानुस्मरेत् । पितृवत्सम्यग्रक्षकत्वादिति भावः ॥६३—६४॥ रामः यथा दुःखक्षयकरो भवेत्तथा वक्तव्यमित्यर्थः । कार्यनिर्योगे कार्यसंघटने । प्रमाणं व्यवस्थापकः ॥ ६५ ॥ त्वत्समारम्भात् त्वदुत्साहात् ॥ ६६ ॥ ऊर्ध्वं मासात् । रावणकृतमासद्वयावधिं न सहिष्य इति भावः ॥ ६७ ॥ निकृत्या वञ्चनेन । पातालादिव कौशिकीं । अत्रेतिकरणं द्रष्टव्यं । इदं च ब्रूया इति पूर्वेणान्वयः । कौशिकः इन्द्रः तत्संबन्धिनी श्रीः कौशिकी तामिव । एवं ब्रह्मपुराणे श्रूयते । पुरा वृत्रवधे ब्रह्महत्याभिभूतं निश्श्रीकमिन्द्रं भगवान्नारायणो देवैस्सह वैष्णवेनाश्वमेधेन निष्कल्मषं कृत्वा त्रैलोक्यराज्येऽभिषिच्य पुरातनीं पौरंदरीं श्रियमुपाह्वयत् । ततोऽशरीरवाक्याद्रवाक्षतीर्थवर्तिनीं तामुपश्रुत्य स देवदेवो देवाश्च तत्र जग्मुः । ततस्तान् दृष्ट्वा सा श्रीः पातालं प्रविवेश । तत्र प्रवेष्टुमशक्नुवन्तो देवाः पुनरप्यशरीरं वाक्यं युष्मासु सर्वलक्षणसंपन्नस्तां प्रतिनेतुमर्हतीत्युपश्रुत्य तमेव पुरुषोत्तमं प्रार्थयामासुः । स तत्र प्रविश्य पातालात्तां समुद्धृत्य तैस्सह शक्राय प्रादादिति ॥ महाभारते तु उतथ्यस्य भार्यां यमुनायां स्नान्तीं वरुणो हृत्वा पातालमनयत् । तामुतथ्यो नारदेन याचित्वा तामलब्ध्वा कुपितः पातालह्रदशोषेण तामवापेति श्रूयते । सा कौशिकीति केचित्कथयन्ति ॥ ६८—६९ ॥ मणिरत्नं मणिश्रेष्ठं । अङ्गुल्या योजयामास । चूडामणेरधिष्ठानस्य पृष्ठे या केशसरणिः तत्राङ्गुलिं प्रावेशयदित्यर्थः । एवं तनीयसी किमङ्गुलिरित्यत्राह—नहीति । अस्य हनुमतः भुजः न प्राभवत् न स्थूलोभवत् । न तदानीं स महाकायः भुजश्च न स्थूलः तेनाङ्गुलिस्तनीयसीत्यर्थः । एतेन देव्यैप्रदर्शितं महद्रूपंविहाय पुरप्रवेशकालिकं सूक्ष्मरूपमङ्गीकृतवानित्यवगम्यते ॥ ७० ॥ प्रणतः नम्रगात्रः ॥ ७१—७२ ॥

**ति०** रावणदत्तावध्यवशिष्टंकिंचिदधिकंमासद्वयमपिनसहिष्यइतिभावः । तत्समाप्तौत्वदनागमनेऽनार्योऽनार्यमेवाचरेत् । अतोऽर्वागेवमरणंज्यायइतिशीघ्रमागमनायैवमुक्तिरितिबोध्यं । निकृत्या राक्षसीकर्तृकनिग्रहेण । उपरुद्धां पातालादिवकौशिकीं पातालमग्नांभुवंभगवानिवत्रातुमर्हसि । गायत्र्याःसांख्यायनगोत्रत्वद्भ्रूःकौशिकीतिकतकः ॥ ६८ ॥ **ति०** ननुतदासूक्ष्मरूपत्वात्तत्रभुजासञ्जनमेवोचितमतआह—नहीति । अस्यभुजःसूक्ष्मोपि नप्राभवत् । तद्रन्ध्रे नप्राविशदित्यर्थः । निषेधस्यप्रसक्तिमूलकत्वात् प्रसक्तेश्वसूक्ष्मरूपएवसंभवात् । पूर्वंदेव्यैप्रदर्शितंमहद्रूपंविहाय सूक्ष्मरूपेणैवस्थितइतिगम्यतइतितीर्थः । कतकस्तु—अङ्गुल्यायोजयामाससूक्ष्मवासोबद्धं अङ्गुल्यांदृढंबबन्धेत्यर्थः । अस्यबन्धनेभुजोनप्राभवत् व्यक्ततयासर्वानुभवप्रसङ्गाद्गोपणीयत्वात्स्वभुजोनोचितोऽभूदित्यर्थइत्याह ॥ ७० ॥

**[ पा० ]** १ क. ग.—ट. मत्तः. २ ङ. झ. ट. मनुस्मरत्. ३ ङ. झ. ट. निर्वाहे. ४ क. मासमात्रंनृपात्मज. ५ क. मासादूर्ध्वंन. ६ क. ज. अङ्गुल्यां. ७ ङ. झ. ट. रामंलक्ष्मणंचसलक्षणं.

मणिवरमुपगृह्य तं महार्हं जनकनृपात्मजया धृतं प्रभावात् ॥
[1]गिरिरिव पवनावधूतमुक्तः सुखितमनाः प्रतिसंक्रमं प्रपेदे ॥ ७३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

सीतया चूडामणिग्रहणेनप्रयाणोन्मुखंहनुमन्तंप्रति रामलक्ष्मणादिषुस्वकुशलप्रश्ननिवेदनचोदनपूर्वकं सत्वरंस्वानयनाय रामप्रोत्साहनचोदना ॥ १ ॥ हनुमता रामलक्ष्मणयोः सुग्रीवादीनांच दुस्तरसागरतरणेशङ्कमानांसीतांप्रति वानरप्रभाववर्णनेन कैमुत्येनतेषांतरणसमर्थनपूर्वकं राघवयोः स्वपृष्ठारोपणेनसागरतारणप्रतिज्ञानादिना समाश्वासनम् ॥ २ ॥

मणिं दत्त्वा ततः सीता हनुमन्तमथाब्रवीत् ॥ अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥ १ ॥
[2]मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति ॥ वीरो जनन्या मम च राज्ञो दशरथस्य च ॥ २ ॥
स भूयस्त्वं समुत्साहे चोदितो हरिसत्तम ॥ [3]अस्मिन्कार्यसमारम्भे प्रचिन्तय यदुत्तरम् ॥ ३ ॥
त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम ॥ हनुमन्यत्नमास्थाय दुःखक्षयकरो भव ॥
तस्य चिन्तयतो यत्नो दुःखक्षयकरो भवेत् ॥ ४ ॥
स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रमः ॥ शिरसाऽऽवन्द्य वैदेहीं गमनायोपचक्रमे ॥ ५ ॥
ज्ञात्वा संप्रस्थितं देवी वानरं [6]मारुतात्मजम् ॥ बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ॥ ६ ॥
[7]कुशलं हनुमन्ब्रूयाः सहितौ रामलक्ष्मणौ ॥ ७ ॥
सुग्रीवं च सहामात्यं वृद्धान्सर्वांश्च वानरान् ॥ ब्रूयास्त्वं वानरश्रेष्ठ कुशलं धर्मसंहितम् ॥ ८ ॥
[8]यथा स च महाबाहुर्मां तारयति राघवः ॥ अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ ९ ॥

---

पवनावधूतमुक्तः महावातकम्पितः तेन रहितश्चेत्यर्थः । प्रतिसंक्रमं प्रतिप्रयाणं । प्रपेदे प्राप्तुमुद्युक्तः ॥ ७३ ॥ इति गोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

अभिज्ञातं सम्यग्ज्ञातं ॥ १ ॥ त्रयाणामिति "अधीगर्थदयेशां कर्मणि" इति षष्ठी । विवाहकाले शिरोमणिदातृत्वात्पित्रोर्ग्रहीतृत्वाच्च मम स्मरणमिति भावः । पाणिग्रहणोत्सवे मम श्वशुराभ्यां प्रथमं शिरोभूषणतया एष दत्तः । अतः त्रीनस्मान् युगपत्स्मरिष्यतीत्यर्थ इत्याह कश्चित् । तदनुचितं "मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले तथा बद्धमधिकं मूर्ध्नि शोभते" इत्युपरि वक्ष्यमाणत्वाद्विवाहकाले रामजनन्या अनागमनाच्च ॥ २—३ ॥ कार्यनिर्योगे कार्यसंघटने । प्रमाणं व्यवस्थापकः । चिन्तयतस्तस्य । तवेति शेषः ॥ ४ ॥ आवन्द्येति पदच्छेदः ॥ ५—६ ॥ धर्मसंहितं धर्मसहितं धर्मपुरस्सरं कुशलंब्रूया इत्यर्थः ॥ ८ ॥ दुःखाम्बुसंरोधात् अम्बूनि संरुध्यन्ते अनेनेत्यम्बुसंरोधः जलधिः ।

---

**स०** प्रभावात् सर्वदासमीपवर्तिनोपिपदार्थस्येतरादृश्यत्वप्रापकसामर्थ्यविशेषात् ॥ **ति०** प्रभावात् सामर्थ्यविशेषात् । राक्षसीभिर्यथानज्ञायते तथाधृतं । गिरिवरपवनावधूतमुक्तः पर्वतश्रेष्ठोर्ध्वभागीयपवनकंपितः पश्चात्तेनकंपेनमुक्तः । सइवसुखितमनाः । अयमपि पूर्वंसीतायाअदर्शनेनदुःखवशात्कंपितः । ततस्तद्दर्शनेनततःकंपान्मुक्तः । अतःसुखितमनाः । प्रतिसंक्रमं लङ्कादुर्गप्राकारंप्राप्तुं प्रपेदे यत्नमारभतेत्यर्थः ॥ ७३ ॥ इत्यष्टत्रिंशःसर्गः ॥ ३८ ॥

**ती०** त्रयाणांसंस्मरिष्यतीति । पाणिग्रहणकालेममजननी इमंमणिंदशरथसंनिधौ जनकहस्तादादायशिरोभूषणतयामह्यंदत्तवती । अतोममजननीं दशरथं जनकं मांच स्मरिष्यतीत्यर्थः ॥ २ ॥ **स०** वानरात्मजं केसरिपुत्रं वानरंच । ब्रह्मजातत्वेपिजांबवानिव कश्यपा-

**[ पा० ]** १ ग. ङ.—ट. गिरिवरपवना. २ च. ज.—ट. मणिंदृष्ट्वातु. ख. ग. मणिंतुरामोवैदृष्ट्वा. ३ क. तस्मिन्. ४ ङ. झ. ट. समुत्साहे. ५ ङ. ज.—ट. चिन्तययोयत्नः. ६ ठ. वानरात्मजं. ७ ङ. झ. ट. हनूमन्कुशलंब्रूयाः. ८ क. ख. ग. ङ. झ. ञ. ट. यथाचस.

जीवन्तीं मां यथा रामः संभावयति [1]कीर्तिमान् ॥ [2]तत्तथा हनुमन्वाच्यं वाचा धर्ममवाप्नुहि ॥ १० ॥
नित्यमुत्साह[3]युक्ताश्च वाचः श्रुत्वा [4]त्वयेरिताः ॥ वर्धिष्यते दाशरथेः पौरुषं मदवाप्तये ॥ ११ ॥
मत्संदेशयुता वाचस्त्वत्तः श्रुत्वैव राघवः ॥ [5]पराक्रमविधिं वीरो विधिवत्संविधास्यति ॥ १२ ॥
[6]सीताया वचनं श्रुत्वा हनुमान्मारुतात्मजः ॥ शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ १३ ॥
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ॥ यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥ १४ ॥
न हि पश्यामि मर्त्येषु [7]नासुरेषु सुरेषु वा ॥ यस्तस्य [8]क्षिपतो बाणान्स्थातुमुत्सहतेऽग्रतः ॥ १५ ॥
अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमम् ॥ स हि सोढुं रणे शक्तस्तव हेतोर्विशेषतः ॥ १६ ॥
[9]स हि सागरपर्यन्तां महीं [10]शासितुमीहते ॥ त्वन्निमित्तो हि रामस्य जयो जनकनन्दिनि ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा सम्यक्सत्यं सुभाषितम् ॥ जानकी बहुमेनेऽथ वचनं चेदमब्रवीत् ॥ १८ ॥
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनःपुनः ॥ [11]भर्तृस्नेहान्वितं वाक्यं सौहार्दादनुमानयत् ॥ १९ ॥
यदि वा मन्यसे वीर वसैकाहमरिन्दम ॥ कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ २० ॥
मम चे[12]दल्पभाग्यायाः सान्निध्यात्तव वानर ॥ अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ॥ २१ ॥
[13]गते हि हरिशार्दूल [14]पुनरागमनाय तु ॥ प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ २२ ॥
तवादर्शनजः शोको भूयो मां परितापयेत् ॥ दुःखाद्दुःखपरामृष्टां दीपयन्निव वानर ॥ २३ ॥
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ॥ सुमहांस्त्वत्सहायेषु हर्यृक्षेषु [15]हरीश्वर ॥ २४ ॥
कथं नु खलु दुष्पारं [16]तरिष्यन्ति महोदधिम् ॥ तानि हर्यृक्षसैन्यानि तौ वा [17]नरवरात्मजौ ॥ २५ ॥
त्रयाणामेव भूतानां [18]सागरस्यास्य लङ्घने ॥ शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ २६ ॥

---

समाधातुं राममनुकूलयितुं ॥ ९ ॥ जीवन्तीं संभावयति जीवन्तीं करोतीत्यर्थः । तत्तथा अव्ययमेतत् । वचनस्य प्रयोजनमाह—वाचेति । वाचाधर्मं वाचिकधर्मं ॥ १० ॥ तमेवधर्ममुपपादयति द्वाभ्यां—नित्यमित्यादि ॥ ११—१५ ॥ पर्जन्यं इन्द्रं । "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः ॥ १६ ॥ जयः भविष्यतीति शेषः ॥१७॥ सम्यक् सोपपत्तिकं । सत्यं परमार्थं । सुभाषितं श्रुतिमधुरं ॥ १८ ॥ वचनं चेदमब्रवीदित्युक्तं विवृणोति—ततस्तमिति ॥ भर्तृस्नेहान्वितं आत्मनि यो भर्तुः स्नेहस्तेनान्वितं । स्वविषयभर्तृस्नेहप्रकाशकमिति यावत् । अनुमानयत् अन्वमानयत् । वक्ष्यमाणोक्तिरूपं संमानवचनमब्रवीदित्यर्थः ॥ १९—२२ ॥ दुःखाद्दुःखपरामृष्टां पूर्वदुःखादधिकेन दुःखेन स्पृष्टां । दीपयन्निव वर्धयन्निवेत्यर्थः ॥ २३ ॥ अयं वक्ष्यमाणः । तिष्ठतीव मूर्तीभूतइत्यर्थः

---

त्मजत्वेपिसर्पादिवद्वानेतिसूचयितुंपदद्वयं । यद्वा नरेष्वात्माधैर्यंयस्यनरात्मा दशरथः । तस्माज्जायतइतिसतथा । तंरामं प्रतिगन्तुमुपचक्रमेवेत्यन्वयः ॥ ६ ॥ **ति०** वमतः बाणान्विसृजतइत्यर्थः ॥ १५ ॥ **ति०** महींसाधितुमर्हति जेतुमुद्युङ्क्तइत्यर्थः ॥१७॥ **स०** अल्पभाग्यायाममम तवसांनिध्यादस्यमहतःशोकस्यमोक्षणं त्यागः ॥ २१ ॥ **स०** पुनरागमनायसंदेहेसति मम प्राणानांसंदेहः स्यादित्यर्थः ॥ २२ ॥ **ती०** दुःखंदुःखपरामृष्टामितिपाठे दुःखंमां दीपयन् ज्वलयन्निवपरितापयेदितिसंबन्धः ॥ २३ ॥ **ति०** त्वत्सहायेष्विति । साक्षात्साधकस्यतवसहायभूतेषु मिलितेषुहर्यृक्षेषुहरीश्वरः सुग्रीवः । कथमुदधिंतरिष्यति । सैन्यानिकथंतरिष्यन्ति । तौवाकथंतरिष्यतइत्यर्थः ॥ २४—२५ ॥

**[ पा० ]** १ क. राघवः. २ क. ख. ग. ङ. च. ज. झ. ट. तत्त्वया. ३ ङ. झ. ट. युक्तस्य. ४ क. ख. ग. ङ.—ट. मयेरिताः. ५ क. झ. ञ. ट. पराक्रमेमतिं. ङ. पराक्रमेगतिं. ६ ख. ङ. झ. ट. सीतायास्तद्वचः. ७ क. ख. च. छ. ज. ञ. नासुरेष्वमरेषुवा. ग. घ. नामरेष्वसुरेषुच. ८ ङ. झ. ट. वमतो. ९ ख. ग. सतु. १० ग. शासितुमर्हति. ङ. झ. ट. साधितुमर्हति. ११ क. ग. घ. छ. भर्तुःस्नेहान्वितं. १२ ङ. झ. ट. चैवाल्पभाग्यायाः. च. छ. ज. ञ. वाल्पभाग्यायाः. १३ ङ. झ. ट. ततोहि. ख. ततस्तु. १४ ग. पुनश्चागमनायतु. १५ झ. हरीश्वरः. १६ क. ख. ग. छ. झ. ञ. तरिष्यति. १७ क. दशरथात्मजौ. १८ ङ.—ट. सागरस्येह.

तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे ॥ किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥ २७ ॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने ॥ पर्याप्तः परवीरघ्न यशस्यस्ते फलोदयः ॥ २८ ॥
बलैः समग्रैर्यदि मां रावणं जित्य संयुगे ॥ विजयी स्वपुरीं यायात्तत्तु मे स्याद्यशस्करम् ॥ २९ ॥
शरैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ॥ मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ ३० ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ॥ भवेदाहवशूरस्य तथा त्वमुपपादय ॥ ३१ ॥
तदर्थोपहितं वाक्यं सहितं हेतुसंहितम् ॥ निशम्य हनुमाञ्शेषं वाक्यमुत्तरमब्रवीत् ॥ ३२ ॥
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ॥ सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ ३३ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः ॥ क्षिप्रमेष्यति वैदेहि राक्षसानां निबर्हणः ॥ ३४ ॥
तस्य विक्रमसंपन्नास्सत्त्ववन्तो महाबलाः ॥ मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥ ३५ ॥
येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः ॥ न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ ३६ ॥
असकृत्तैर्महोत्साहैः ससागरधराधरा ॥ प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ ३७ ॥
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ॥ मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ ३८ ॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ॥ न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ ३९ ॥
तदलं परितापेन देवि शोको व्यपैतु ते ॥ एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ ४० ॥
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ॥ त्वत्सकाशं महासत्त्वौ नृसिंहावागमिष्यतः ॥ ४१ ॥
तौ हि वीरौ नरवरौ सहितौ रामलक्ष्मणौ ॥ आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ ४२ ॥
सगणं रावणं हत्वा राघवो रघुनन्दनः ॥ त्वामादाय वरारोहे स्वपुरं प्रतियास्यति ॥ ४३ ॥
तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ॥ नचिराद्द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥ ४४ ॥
निहते राक्षसेन्द्रेऽस्मिन्सपुत्रामात्यबान्धवे ॥ त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ ४५ ॥
क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि ॥ रावणं चैव रामेण निहतं द्रक्ष्यसेऽचिरात् ॥ ४६ ॥

॥ २४—२६ ॥ समाधानं परिहारं ॥ २७ ॥ अहमेव साधयिष्यामीत्याशङ्क्याह—काममिति ॥ हे परवीरघ्न त्वं अस्य कार्यस्य सर्वराक्षसवधपूर्वकमत्प्रापणरूपस्य । परिसाधने कामं पर्याप्तः शक्तः । एवं चेत्फलोदयः शक्तिसमृद्धिः । ते यशस्यः तव यशस्करः । नतु ममेति भावः ॥ २८ ॥ तर्हि तव किं यशस्यमित्याकाङ्क्षायामाह—बलैरिति ॥ जित्य जित्वा । मां गृहीत्वेति शेषः । यायात् राम इतिच शेषः ॥ २९ ॥ एतन्नकेवलंमम रामस्यापीत्याह—शरैरिति ॥ ३० ॥ तस्य अनुरूपं विक्रान्तं यथा भवेत्तथा उपपादय कुरु ॥ ३१ ॥ अर्थोपहितं अर्थयुक्तं । सहितं परस्परसंगतं । हेतुसंहितं युक्तियुक्तं । शेषं पूर्वमनुक्तं । उत्तरं वाक्यमब्रवीत् ॥ ३२—३४ ॥ मनःसंकल्पसंपाताः मनोव्यापारतुल्यगमनाः ॥ ३५ ॥ न सज्जते न विलंबते ॥ ३६—३७ ॥ प्रत्यवरः हीनः । पूर्वं चतुर्णामेवात्र गतिरिति विचारप्रकारमात्रमुक्तं । अत्र तु परमार्थः । यद्यपि बले हनुमानधिकः तथापि वेगे सुग्रीवसन्निहिता नीलादयः सर्वे तुल्या एवेति नानृतोक्तिः ॥ ३८—३९ ॥ एकोत्पातेन एकयत्नेन ॥ ४०-४१ ॥ विधमिष्यतः दहिष्यतः ॥ ४२—४३ ॥ कालकाङ्क्षिणी भव दिवसगणनायां तत्परा भवेत्यर्थः । नचिरात् अचिरात् ॥ ४४—४६ ॥ पुनरब्रवीदिति । दार्ढ्याय

ननुभवत्वेवंहरीणामागमनं । राघवयोःकथंतत्राह—ममेति । महासंघौ महासमुदाययुक्तौ ॥४१॥ इत्येकोनचत्वारिंशःसर्गः ॥३९॥

[ पा० ] १ ख. घ. त्वमस्मिन्. क. एतस्मिन्. २ ङ. झ. ञ. ट. समग्रैर्युधि. ३ घ. ङ. झ. ट. स्वपुरं. क. स्वांपुरीं. ग. स्वंपुरं. ४ ग. ङ. झ. ट. तत्तस्यसदृशंभवेत्. ५ क. ख. ग. ङ. झ. ट. बलैस्तु. ६ ङ.—ट. प्रश्रितं. ७ ख. हनुमाञ्श्रेष्ठं. ८ क. संपन्नाः. ९ ङ. छ.—ञ. स्वपुरीं. घ. च. ट. स्वांपुरीं. ख. स्वंपुरं. १० क.—ट. राक्षसेन्द्रेचसंपुत्रा. ११ च. छ. ज. ञ. क्षिप्रमेष्यसिशोकस्यपरंपारंचमैथिलि. १२ ङ. झ. ट. द्रक्ष्यसिमैथिलि. १३ ङ. झ. ट. द्रक्ष्यसेनिहतंबलात्. ख. विहतं.

एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः ॥ गमनाय मतिं कृत्वा [१]वैदेहीं पुनरब्रवीत् ॥ ४७ ॥
तमरिघ्नं कृतात्मानं क्षिप्रं द्रक्ष्यसि राघवम् ॥ लक्ष्मणं च धनुष्पाणिं लङ्काद्वार[२]मुपस्थितम् ॥
[ [३]सुग्रीवसहितं शूरं वानरैः परिवारितम् ] ॥ ४८ ॥
नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ॥ वानरा[४]न्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥ ४९ ॥
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु ॥ नर्दतां कपि[५]मुख्यानामार्ये यूथान्यनेकशः ॥ ५० ॥
स तु मर्मणि घोरेण ताडितो मन्मथेषुणा ॥ न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ५१ ॥
मा[६] रुदो देवि शोकेन मा भूत्ते [७]मनसोऽप्रियम् ॥ [८]शचीव पत्या [९]शक्रेण भर्त्रा नाथवती ह्यसि ॥५२॥
रामाद्विशिष्टः कोन्योस्ति कश्चित्सौमित्रिणा समः ॥ अग्निमारुतकल्पौ तौ भ्रातरौ [१०]तव संश्रयौ ॥ ५३ ॥
नास्मिंश्चिरं वत्स्यसि देवि देशे रक्षोगणैर[११]ध्युषितेतिरौद्रे ॥
न ते चिरादागमनं प्रियस्य क्षमस्व मत्सङ्गमकालमात्रम् ॥ ५४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकोनचत्वारिंशस्सर्गः ॥ ३९ ॥

---

## चत्वारिंशः सर्गः ॥ ४० ॥

सीतयाहनुमन्तंप्रति श्रीरामे तेनस्वस्यमनश्शिलयातिलकरचनायाः प्रत्यभिज्ञानत्वेननिवेदनचोदनम् ॥ १ ॥ तथा स्वचरणप्रणामपूर्वकंप्रयाणोद्यतंहनुमन्तंप्रति श्रीरामे स्वीयदुरवस्थानिवेदनचोदनपूर्वकमाशीर्वचनेन गमनाभ्यनुज्ञानम् ॥ २ ॥

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः ॥ उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १ ॥
त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर ॥ अर्धसंजातसस्येव वृष्टिं प्राप्य वसुन्धरा ॥ २ ॥
यथा तं पुरुषव्याघ्रं गात्रैः शोकाभि[१२]कर्शितैः ॥ संस्पृशेयं [१३]सकामाऽहं तथा कुरु दयां मयि ॥ ३ ॥
अभिज्ञानं च रामस्य [१४]दद्या हरिगणोत्तम ॥ क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातनीम् ॥ ४ ॥
मनश्शिलायास्तिलको गण्डपार्श्वे निवेशितः ॥ त्वया प्रनष्टे तिलके [१५]तंकिल स्मर्तुमर्हसि ॥ ५ ॥

---

पुनरुक्तिः ॥ ४७—४९ ॥ शैलाम्बुदेति द्रक्ष्यसीति शेषः ॥५०–५१॥ मा रुदः रोदनं मा कुरु ॥५२—५३॥ मत्सङ्गमकालमात्रं मम रामेण सङ्गमकालमात्रं ॥ ५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

श्रुत्वेत्यादि ॥ १ ॥ अर्धसंजातसस्या अर्धोत्पन्नसस्या ॥ २—३ ॥ काकस्यैकाक्षिशातनीं क्षिप्तां इषीकां इषीकतृणरूपमभिज्ञानं पूर्वोक्तं दद्याः । अन्यच्च वक्ष्यामीति भावः । तदेवाह—मन इति ॥ तिलके पूर्वतिलके प्रनष्टे सति । गण्डपार्श्वे गण्डस्थले गण्डशैलपार्श्वे वा । मनश्शिलायास्तिलकः मनश्शिलाकृततिलकः । तत् मनश्शिलातिलकनिर्माणं । स्मर्तुमर्हसि । इदमप्यभिज्ञानं दद्या इति योजना ॥ ४—

---

ति० अर्धसंजातानिअर्धवयःप्राप्तानि । ततःपरंजलाभावादासन्नशोषाणिसस्यानियस्याःसा । यथादैवात्संपन्नवृष्ट्यासंपन्नसस्या भवति तथाऽहमपि प्राप्तजीवितनाशा मृतोपमा त्वद्दर्शनाद्धृतजीवितेतिभावः ॥ २ ॥ ति० स्मर्तुमर्हसीति मयोक्तमितिब्रूहीतिशेषः

[ पा० ] १ क. ख. च. छ. ज. ञ. मैथिलीं. २ ङ. झ. ट. मुपागतं. ३ इदमर्धं ग. पाठेदृश्यते. ४ क. च. छ. ज. न्वानरेन्द्रेणक्षिप्रं. ५ च. छ. ज. ञ. मुख्यानामचिराच्छ्रोष्यसिध्वनिं. ख. घ. मुख्यानांनचिराच्छ्रोष्यसिस्वनं. ग. मुख्यानांमध्ये यूथा. ६ ङ. छ. झ. ट. रुदमादेविशोकेन. क. ज. ञ. अलंतेदेविशोकेन. ७ ङ. झ. ट. मनसोभयं. ८ क. घ. ङ. च. ज.—ट. शचीवभर्त्रा. ९ च. ज. ञ. शक्रेणपत्या. ङ. झ. ट. शक्रेणसङ्गमेष्यसिशोभने. १० क. च. छ. ज. ञ. रणसंश्रयौ. ११ ग. च. छ. ज. ञ. रध्युषितेहि. १२ घ. पीडितैः. १३ च. छ. ज. समासक्ता. १४ ख. घ. दत्तं. १५ झ. तंकिल.

स वीर्यवान्कथं सीतां हृतां समनुमन्यसे ॥ वसन्तीं रक्षसां मध्ये महेन्द्र[1]वरुणोपमः ॥ ६ ॥
एष चूडामणिर्दिव्यो मया सु[2]परिरक्षितः ॥ एतं दृष्ट्वा प्रहृष्यामि व्यसने त्वामिवानघ ॥ ७ ॥
एष निर्यातितः श्रीमान्मया ते वारिसंभवः ॥ अतः परं न शक्ष्यामि जीवितुं शोकलालसा ॥ ८ ॥
असह्यानि च दुःखानि वाचश्च हृदयच्छिदः ॥ [3]राक्षसीनां सुघोराणां त्वत्कृते मर्षयाम्यहम् ॥ ९ ॥
धारयिष्यामि मासं तु जीवितं शत्रुसूदन ॥ मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज ॥ १० ॥
घोरो राक्षसराजोयं दृष्टिश्च न सुखा मयि ॥ त्वां च श्रुत्वा वि[4]षज्जन्तं न जीवेयम[5]हं क्षणम् ॥ ११ ॥
वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम् ॥ [6]तथाऽब्रवीन्महातेजा हनुमान्मारुतात्मजः ॥ १२ ॥
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ रामे दुः[7]खाभिभूते तु लक्ष्मणः परितप्यते ॥ १३ ॥
[8]कथंचिद्भवती दृष्टा न कालः [9]परिशोचितुम् ॥ इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ॥ १४ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रौ[10]वरिन्दमौ ॥ त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ १५ ॥
[11]हत्वा तु समरे [12]क्रूरं रावणं [13]सहबान्धवम् ॥ [14]राघवौ त्वां विशालाक्षि स्वां पुरीं [15]प्रापयिष्यतः ॥ १६ ॥
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ प्रीतिसंजननं तस्य भूयस्त्वं दातुमर्हसि ॥ १७ ॥
साब्रवीद्दत्तमेवेति मयाभिज्ञानमुत्तमम् ॥ एतदेव हि रामस्य दृष्ट्वा [16]मत्केशभूषणम् ॥
श्रद्धेयं हनुमन्वाक्यं तव वीर भविष्यति ॥ १८ ॥
स तं मणिवरं गृह्य श्रीमान्प्लवगसत्तमः ॥ प्रणम्य शिरसा देवीं गमनायोपचक्रमे ॥ १९ ॥
तमुत्पातकृतोत्साहमवेक्ष्य हरिपुङ्गवम् ॥ वर्धमानं महावेगमुवाच जनकात्मजा ॥
अश्रुपूर्णमुखी दीना [17]बाष्पगद्गदया गिरा ॥ २० ॥
हनुमन्सिंहसंकाशौ भ्रातरौ रामलक्ष्मणौ ॥ सुग्रीवं च सहामात्यं सर्वान्ब्रूया ह्यनामयम् ॥ २१ ॥
यथा च स महाबाहुर्मां तारयति राघवः ॥ अस्माद्दुःखांबुसंरोधात्त्वं समाधातुमर्हसि ॥ २२ ॥
इमं च [18]तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ॥
ब्रूयास्तु रामस्य गतः समीपं [19]शिवश्च तेऽध्वाऽस्तु हरिप्रवीर ॥ २३ ॥

---

६ ॥ प्रहृष्यामीति । अस्य चूडामणेस्त्वया बहुशो लालितत्वेन त्वत्स्मारकत्वादितिभावः ॥ ७ ॥ वारिसंभवः । रत्नं हि रत्नाकरे उत्पद्यते । अतःपरं मासात्परं ॥ ८—१० ॥ विषज्जन्तं विलम्बमानं ॥ ११—१३ ॥ इमं मुहूर्तं अस्मिन्मुहूर्ते ॥ १४—२२ ॥ शिवः अव्याहत इत्यर्थः ॥ २३ ॥

---

॥ ५ ॥ **ति०** दिव्यएषचूडामणिः एतावत्कालंसुपरिरक्षितः । एतंव्यसनेत्वामिवदृष्ट्वाप्रहृष्यामि । एतत्संनिधानेरक्षोऽभिभवासंभवादितिभावः ॥ ७ ॥ **ती०** त्वत्कृते त्वत्प्राप्त्याशया ॥ ९ ॥ **स०** मासादूर्ध्वमित्युक्तिस्तुकालेधिकेसत्यपितीव्रागमनाभिप्रायेणवा दिनेषुसत्स्वप्यात्मघाताभिप्रायेणवेतिज्ञातव्यं ॥ १० ॥ **ति०** यतोऽयंघोरस्तस्यदृष्टिश्च । चाद्बुद्धिः नसुखा अवधिकालादूर्ध्वकृतविनाशनिश्चया । अतस्तत्पूर्वमेवमरणौचित्यादवधिकालस्याधिकत्वेपिमासादूर्ध्वमेवनजीविष्यामि । किंचत्वां विषज्जन्तं विलम्बंकुर्वन्तं । यदिश्शृणुयां तदा तथाश्रुत्वामासादर्वागेवक्षणमपिनजीवेयमित्युक्तमितिब्रूहीतिशेषः ॥ **स०** विषज्जन्तं असक्तमिवविद्यमानं ॥ ११ ॥ **ति०** त्वच्छोकविमुखः त्वत्स्थित्यपरिज्ञानजशोकेनत्वदुद्धारप्रवृत्तिविमुखः । नतुज्ञात्वेति सत्येनतेशपे ॥१३॥ **ति०** त्वंसमाधातुमित्यस्य तथेत्यादिः । समाधानं संविधानं । अथापिसमहाबाहुरितिपाठे यथेत्यपिपूरणीयमेव । यद्यपिश्रुतवृत्तान्तःस्वयमेवयतिष्य-

[ **पा०** ] १ क. ख. घ. च.—ट. वरुणोपम. २ क. ङ. ट. संपरि. ३ ङ. झ. ट. राक्षसैस्सहसंवासं. ४ घ. विपन्नंतु. ५ ङ. झ. ट. मपिक्षणं. ६ क. ख. ग. ङ.—ट. अथाब्रवीत्. घ. ततोऽब्रवीत्. ७ क. ग.—च. ज. झ. ट. शोकाभिभूते. ८ क. ग. ङ.—ट. दृष्टाकथंचिद्भवती. ९ ङ. झ. ट. परिदेवितुं. १० घ.—ट. वनिन्दितौ. ११ घ. छित्त्वातु. १२ क. ग. घ. च. छ. ज. ञ. घोरं. ङ. झ. ट. रक्षो. १३ क. ङ.—ट. बान्धवैः. १४ क. ग. च. छ. ज. ञ. राघवस्त्वां. १५ ङ. झ. ट. प्रतिनेष्यतः. क. च. छ. ज. ञ. प्रतिनेष्यति. ग. प्रापयिष्यति. १६ ङ. झ. ट. यत्नेनभूषणं. १७ क. ग. च. ज. ञ. बाष्पसंदिग्धया. १८ क. ग. ञ. शोकंममतीव्रवेगं. १९ घ. शिवश्चपन्थास्तु.

स राजपुत्र्या [1]प्रतिवेदितार्थः कपिः कृतार्थः परिहृष्टचेताः ॥
[2]अल्पावशेषं प्रसमीक्ष्य कार्यं दिशं ह्युदीचीं मनसा जगाम ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

हनुमता रावणेनसह साक्षात्संभाषणादिनातदीयबलाध्यवसायादिपरिज्ञानस्यावश्यकत्वनिर्धारणपूर्वकंवनभञ्जनस्य तद्दर्शनोपायत्वनिर्धारणेनाशोकवनभञ्जनम् ॥ १ ॥

स च वाग्भिः प्रशस्ताभिर्गमिष्यन्पूजितस्त[3]या ॥ तस्माद्देशादपक्रम्य चिन्तयामास वानरः ॥ १ ॥
अल्पशेषमिदं कार्यं दृष्टेयमसितेक्षणा ॥ त्रीनुपायानतिक्रम्य चतुर्थ इह लक्ष्यते ॥ २ ॥
न साम रक्षस्सु गुणाय कल्पते न दानमर्थोपचितेषु [4]युज्यते ॥
न भेदसाध्या बलदर्पिता जनाः पराक्रमस्[5]त्वेव ममेह रोचते ॥ ३ ॥
न चास्य कार्यस्य पराक्रमादृते विनिश्चयः कश्चिदिहोपपद्यते ॥
हतप्रवीरा हि रणे हि राक्षसाः कथंचिदीयुर्यदिहाद्य मार्दवम् ॥ ४ ॥
कार्ये कर्मणि नि[6]र्दिष्टे यो बहून्यपि साधयेत् ॥ पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥ ५ ॥
न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः ॥ यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥ ६ ॥

---

अल्पावशेषं अल्पावशिष्टं । प्रसमीक्ष्य विचार्य॥२४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

" अभिगम्य तु वैदेहीं निलयं रावणस्यच " इत्युक्तकार्यद्वये सीतादर्शनरूपं कार्यं जातं । इदं कार्यं रावणनिलयपरिज्ञानरूपं । अल्पशेषं अल्पावशिष्टं । सान्तःपुरलङ्कायाः सम्यक्परिज्ञातत्वेपि राक्षसबलाबलरावणहृदयाद्यपरिज्ञानात्कार्यस्याल्पशेषत्वोक्तिः । इह राक्षसबलाबलरावणहृदयपरिज्ञानरूपकार्ये । त्रीनुपायानतिक्रम्य सामदानभेदानतिक्रम्य । चतुर्थो लक्ष्यते साधनतया दण्ड एवदृश्यतइत्यर्थः ॥ २ ॥ उपपत्तिपूर्वकमेतदेव विवृणोति—न सामेति ॥ " अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः । पराजयश्च संग्रामे तस्माद्युद्धं विसर्जयेत् " इति युद्धस्याव्यवस्थितफलकत्वेपि " सर्वं बलवतः पथ्यं " इति न्यायेन सर्वातिशायिबलपराक्रमस्य मम पराजयप्रसङ्ग एव नास्तीत्यभिप्रायेणाह—पराक्रम इति । मम तु इह रक्षोविषये पराक्रम एव रोचत इति संबन्धः ॥ ३—४ ॥ " अभिगम्य तु वैदेही निलयं रावणस्य च " इत्यनुज्ञातस्यातिरिक्तकार्यकरणे दोषमाशङ्क्य परिहरति—कार्य इति ॥ कार्ये विहिते कर्तव्ये । बहूनि कार्याणि ॥ ५ ॥ अल्पस्यापि कर्मणः एको

---

ति तथापि त्वमपियथामांशीघ्रंतारयसि तथासंविधानंकुर्वित्यर्थः ॥२२॥ **ति०** तत्कार्यं लङ्कागमनप्रयोजनं । अल्पशेषं । देवीदर्शनरूपस्यमहतःप्रधानकृत्यस्यनिष्पन्नत्वात्परबलार्दनरूपस्यानुषङ्गिकत्वादल्पशेषत्वमित्याशयः ॥२५ ॥ इतिचत्वारिंशःसर्गः ॥४०॥

**ति०** अस्यकार्यस्य परबलाशयपरिज्ञानरूपस्य । सर्वातिशायिपराक्रमवतोममपराजयएवनास्तीत्याशयेनाह—पराक्रमादृते इति । विनिश्चयः निश्चितोपायः । स्वबलप्रकाशनेप्रयोजनान्तरमप्यस्तीत्याह—हतेति । अद्य हताःप्रवीराः श्रेष्ठायेषांतेराक्षसाः यत् यस्मात् इह भाविनिरणे । मार्दवं एकेनैवैवंपराक्रमःकृतः तादृशैरनेकैःकथमस्माकंजयाशेतिरणप्रवृत्तिराहित्यंप्राप्नुयुः । अतः पराक्रमात्परबलस्यमनोभङ्गरूपंकार्यंसिध्यतीत्याशयः । **शि०** इह अस्मिन्समये । राक्षसाःकथंचित् केनाप्युपायेनयदिहतप्रवीराः तर्हिमार्दवं किंचिन्नम्रतां । ईयुः । एतेन नम्रीभूययदिसीतांरामायसमर्पयेत् तर्हिराक्षसकुलविध्वंसो नभवेदितिसूचितं । तेनहनुमतो दयालुत्वंव्यक्तं ॥४॥ **ति०** उक्तमेवविवृणोति—**नहीति**।यस्तु स्वल्पस्यापिकर्मणोतिशयितयत्नेनसिद्धिहेतुर्भवति असावेकोमुख्यः

**[ पा० ]** १ घ. ट. प्रतिपादितार्थः. २ क.—ट. तदल्पशेषं. ३ च. स्तदा, ४ क. ग. घ. च. छ. ज. वर्तते. ५ ख, ग. ङ. झ. ट. स्त्वेष. ६ ङ. च. छ. झ. ञ. ट. निर्वृत्ते. क. संवृत्ते.

इहैव तावत्कृतनिश्चयो ह्यहं यदि व्रजेयं प्लवगेश्वरालयम् ॥
परात्मसंमर्दविशेषतत्त्ववित्ततः कृतं स्यान्मम भर्तृशासनम् ॥ ७ ॥
कथं नु खल्वद्य भवेत्सुखागतं[1] प्रसह्य युद्धं मम राक्षसैः सह ॥
तथैव खल्वात्मबलं च सारवत्समानयेन्मां च रणे दशाननः ॥ ८ ॥
ततः समासाद्य रणे दशाननं समन्त्रिवर्गं सबलप्रयायिनम्[2] ॥
हृदि स्थितं तस्य मतं बलं च वै सुखेन मत्वाऽहमितः पुनर्व्रजे ॥ ९ ॥
इदमस्य नृशंसस्य नन्दनोपममुत्तमम् ॥ वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम् ॥ १० ॥
इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः ॥ अस्मिन्भग्ने ततः कोपं करिष्यति दशाननः ॥ ११ ॥
ततो महत्साश्वमहारथद्विपं बलं समादेक्ष्यति[3] राक्षसाधिपः ॥
त्रिशूलकालायसपट्टसायुधं ततो महद्युद्धमिदं भविष्यति ॥ १२ ॥
अहं तु तैः संयति चण्डविक्रमैः समेत्य रक्षोभिरसह्यविक्रमः[4] ॥
निहत्य तद्रावणचोदितं बलं सुखं गमिष्यामि कपीश्वरालयम् ॥ १३ ॥
ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः ॥ ऊरुवेगेन महता द्रुमान्क्षेप्तुमथारभत् ॥ १४ ॥
ततस्तु[5] हनुमान्वीरो बभञ्ज प्रमदावनम् ॥ मत्तद्विजसमाघुष्टं नानाद्रुमलतायुतम् ॥ १५ ॥

हेतुस्साधकोन किमुत महतः कर्मण इति भावः । बहुधा बहुभिर्हेतुभिः ॥ ६ ॥ पूर्वोक्तसमर्थनायाह—इहैवेति ॥ अहमिहैव परात्मसंमर्दविशेषतत्त्ववित् परात्मनोर्युद्धतारतम्यतत्त्ववित् । कृतनिश्चयः कृतबलाबलनिश्चयः सन् यदि प्लवगेश्वरालयं व्रजेयं ततः भर्तृशासनं सीतादर्शनरावणनिलयसम्यक्परिज्ञानविषयं शासनं । तावत्साकल्येन कृतं स्यात् । अन्यथा राक्षसबलाबलं कीदृशमितिभर्त्रापृष्टे निरुत्तरः स्यामिति भावः ॥ ७ ॥ युद्धं कथं सुखागतं सुखेन प्राप्तं भवेत्तथा कर्तव्यमित्यर्थः । युद्धस्य फलमाह—तथैवेत्यादिना सार्धश्लोकेन ॥ तथैव खलु युद्धकरणे खलु । स दशाननः । रणे आत्मबलं स्वपक्षबलं मां च । सारवत् मानयेत्परिच्छिन्द्यात् ॥ ८ ॥ बलप्रयायिना सेनान्या सह वर्तत इति सबलप्रयायी तं । तस्य हृदिस्थितं मतं सीताविषयाध्यवसायं बलं च मत्वा । सुखेन इतः अस्मात्स्थानात् । पुनः व्रजे व्रजिष्यामि ॥ ९ ॥ नेत्रमनःकान्तं वर्तत इति शेषः ॥ १०—१२ ॥ समादेक्ष्यति नियोजयिष्यति । इदं अव्यवहितोत्तरकालिकं ॥ १२ ॥ कपीश्वरालयमित्यनन्तरमितिकरणं द्रष्टव्यं । इति चिन्तयामासेत्यन्वयः ॥१३॥ ततः तेन चिन्तितेन हेतुना ॥ १४ ॥ प्रमदावनं अन्तःपुरवनं । "प्रमदावनमन्तःपुरोचितं" इत्यमरः

साधकोहेतुर्नभवति । अपितु योह्यर्थं प्रयोजनं । अल्पेनयत्नेन बहुधाकर्तुंवेद सएवार्थसाधने समर्थः ॥ ६ ॥ ति० एवंनिश्चितार्थो युद्धप्रवृत्तिप्रकारंचिन्तयति—**कथंन्विति** । अद्यखलु ममेहागतं आगमनं । सुखागतं सुखफलकमागमनंकथंभवेत् । तथा राक्षसैः सहप्रसह्यस्वयमेवबलात्कृत्ययुद्धंच कथंममभवेत् । तथा तथैवकरणेसति । सारवत् ऊर्जितंस्वबलंमांच सदशाननः कथंमानयेत् श्लाघयेत् । यद्वा तथैवयुद्धकरणेखलु दशाननः आत्मबलंमांचसारवत्संमानयेत् सम्यक्परिच्छिन्द्यादित्यर्थेनयुद्धफलमुक्तं ॥ ८ ॥ ति० ततोमद्बलवशादेवमांरणेसमासाद्यवर्तमानं सबलं सयायिनं ससारथिं । अन्तर्भावितण्यर्थाद्यातेर्णिनौ यापयितायायी सारथिः । तेनसहितंरावणंज्ञात्वा हृदिस्थितंतस्यमतं अभीष्टंबलंच । सुखेन अक्लेशतोमत्वा ज्ञात्वा । पुनरितोव्रजे व्रजिष्ये । सबलप्रयायिनमित्याधुनिककल्पितःपाठः ॥ ९ ॥ शि० इदंवनं अस्य रावणस्य । मनःकान्तं मनःप्रियं । अस्तीतिशेषः ॥ १० ॥ शि० इदंवनं शुष्कंवनमनलइवविध्वंसयिष्यामि । यदितु एतच्छ्लोकघटकस्य इदमित्यस्य स्वप्रवेशिनोजनस्योद्दीपनद्वारा इंकामंददातीतितथाइत्यर्थः तदापूर्वस्यापीहैवान्वयः । एवंच पूर्वत्रास्तेरध्याहारस्य न प्रयोजनं ॥ ११ ॥

[ पा० ] १ ग. घ. सुखावहं. २ ङ. च. झ. ट. सबलंसयायिनं. घ. सबलंसबान्धवं. ३ क. ङ.—ट. समानेष्यति. ४ ङ. झ. ञ. ट. रभङ्गविक्रमः. घ. रसह्यविक्रमैः. ५ ग. ङ. झ. ट. ततस्तद्धनुमान्.

तद्वनं मथितैर्वृक्षैर्भिन्नैश्च सलिलाशयैः ॥ चूर्णितैः पर्वताग्रैश्च बभूवाप्रियदर्शनम् ॥ १६ ॥
नानाशकुन्तविरुतैः प्रभिन्नैः सलिलाशयैः ॥ ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतम् ॥
न बभौ तद्वनं तत्र दावानलहतं यथा ॥ १७ ॥
व्याकुलावरणा रेजुर्विह्वला इव ता लताः ॥ १८ ॥
लतागृहैश्चित्रगृहैश्च नाशितैर्महोरगैर्व्यालमृगैश्च निर्धुतैः ॥
शिलागृहैरुन्मथितैस्तथा गृहैः प्रनष्टरूपं तदभून्महद्वनम् ॥ १९ ॥
सा विह्वलाऽशोकलताप्रताना वनस्थली शोकलताप्रताना ॥
जाता दशास्यप्रमदावनस्य कपेर्बलाद्धि प्रमदावनस्य ॥ २० ॥
स तस्य कृत्वाऽर्थपतेर्महाकपिर्महद्व्यलीकं मनसो महात्मनः ॥
युयुत्सुरेको बहुभिर्महाबलैः श्रिया ज्वलंस्तोरणमाश्रितः कपिः ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

हनुमताऽवभञ्जने संभ्रान्तपक्षिकुलकोलाहलैर्वृक्षभङ्गरवैश्च प्रबुद्धाभीराक्षसीभिःसीतांप्रति हनुमत्स्वरूपादिप्रश्नः ॥ १ ॥ सीतया कैतवेनस्वस्यतदपरिज्ञानोक्तौ राक्षसीभीरावणायतन्निवेदनम् ॥ २ ॥ रावणचोदितैरशीतिसंख्याकैःकिङ्करनामकै राक्षसैस्तोरणस्थंहनुमन्तंप्रति युद्धायाभियानम् ॥ ३ ॥ हनुमता रामादिजयोद्घोषणेनसह स्वनामनिर्देशेनस्वस्यरामदूतत्वोद्घोषणपूर्वकं सकलकिङ्कर राक्षससंहरणम् ॥ ४ ॥

ततः पक्षिनिनादेन वृक्षभङ्गस्वनेन च ॥ बभूवुस्त्राससंभ्रान्ताः सर्वे लङ्कानिवासिनः ॥ १ ॥

---

॥ १५ ॥ पर्वताग्रैः क्रीडापर्वताग्रैः ॥ १६—१७ ॥ व्याकुलावरणाः आवरणादुपन्नाव्याकुलाः । विह्वलाः स्त्रिय इव ॥ १८ ॥ व्यालमृगैः श्वापदादिहिंस्रमृगैः । निर्धुतैः पीडितैः । गृहैः केवलगृहैः ॥ १९ ॥ शोच्यत इति शोकः । प्रतानं विततिः । अशोकं अशोच्यं लताप्रतानं यस्यास्सा अशोकलताप्रताना । दशास्यप्रमदावनस्य भोगवर्धनेन रावणवनितारक्षकस्य । प्रमदावनस्य अन्तःपुरोद्यानस्य । सा वनस्थली तृणगुल्मलतादिविशिष्टप्रदेशः । कपेर्बलाद्धि विह्वला लुलिता शोकलताप्रताना च जाता । यद्वा शोकलताश्शोकरताः । रलयोरभेदः । अप्प्रतानाः अप्सु प्रतानाः कमलकह्लारादयोऽस्यां सा शोकलताप्रताना । म्लानजलजेति यावत् । दशास्यप्रमदावनस्य रावणप्रमदावनस्य । "ङ्यापोस्संज्ञाच्छन्दसोर्बहुलम्" इति बहुलवचनाद्ध्रस्वाभावः । दशास्यप्रमदावनस्य वनस्थलीयत्र शिलापुत्रकस्य शरीरमितिवदुपचारात्षष्ठी । प्रमदावनस्य सीतारूपप्रमदापालकस्य । वनस्थली कपेर्बलाद्विह्वला शोकलताप्रताना च जाता । अशोकलतेत्युपलक्षणं ॥ २० ॥ अर्थपतेः राज्ञो रावणस्य । मनसः व्यलीकं अप्रियं पीडनं वा । "अलीकं त्वप्रियाकार्यवैलक्ष्यानृतपीडने" इति निघण्टुः।युयुत्सुः योद्धुमिच्छुः । तोरणं उद्यानबहिर्द्वारं । "तोरणोस्त्री बहिर्द्वारं" इत्यमरः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

उतशब्दो वार्थे । "उताप्यर्थविकल्पयोः"

---

ति० पर्वताग्रैः उपलक्षितमितिशेषः ॥ १६ ॥ शि० विह्वलाः अशोकलताप्रतानाः विस्तृताशोकलताःयस्यांसा वनस्थली । प्रमदस्य उत्कृष्टमदस्य अवनंरक्षणंयस्मिंस्तस्य । नित्यमदविशिष्टस्येत्यर्थः । दशास्यप्रमदावनस्य रावणस्त्रीसमूहस्य । कपेर्बलात् शोकरूपलताप्रतानःलताविस्तारोयस्यांसा जाता ॥ २० ॥ इत्येकचत्वारिंशःसर्गः ॥ ४१ ॥

[ पा० ] १ ख. घ. बभूवाद्भुतदर्शनं. ङ. च. ट. बहुधाप्रियदर्शनं. झ. बहुधाप्रियदर्शनैः. २ ङ. झ. ट. लतायुतैः. ३ ङ.—ट. सादितैर्व्यालैर्मृगैरार्तरवैश्चपक्षिभिः. ४ क. व्याघ्रमृगैश्च. ५ ङ. झ. ट. ततस्सकृत्वाजगतीपतेर्महान्कपिः. ६ ग. बहुभिर्निशाचरैः. ७ क. ग.—च. झ. ञ. ट. माश्रितः.

वि[1]द्रुताश्च भयत्रस्ता विनेदु[2]र्मृगपक्षिणः ॥ रक्षसां च निमित्तानि क्रूराणि प्रतिपेदिरे ॥ २ ॥
ततो गतायां निद्रायां राक्षस्यो विकृताननाः ॥ तद्वनं दद[3]शुर्भग्नं तं च [4]वीरं महाकपिम् ॥ ३ ॥
स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाबलः ॥ चकार सुमहद्रूपं राक्षसीनां भयावहम् ॥ ४ ॥
ततस्तं गिरिसंकाशमतिकायं म[5]हाबलम् ॥ राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजाम् ॥ ५ ॥
कोयं कस्य कुतो वाऽयं किंनिमित्तमिहागतः ॥ कथं त्व[6]या सहानेन संवादः कृत इत्युत ॥ ६ ॥
आचक्ष्व नो विशालाक्षि मा भूत्ते सुभगे भयम् ॥ संवादमसितापाङ्गे त्वया किं कृतवानयम् ॥७॥
अथाब्रवीत्तदा साध्वी सीता स[7]र्वाङ्गसुन्दरी ॥ रक्षसां भीम[8]रूपाणां विज्ञाने म[9]म का गतिः ॥ ८ ॥
[10]यूयमेवाभिजानीत योऽयं यद्वा करिष्यति ॥ अहिरेव ह्यहेः पादान्विजानाति न संशयः ॥ ९ ॥
[11]अहमप्यस्य भीताऽस्मि [12]नैनं जानामि कोन्वयम् ॥ वेद्मि राक्षसमेवैनं कामरूपिणमागतम् ॥१०॥
वैदेह्या वचनं श्रुत्वा राक्षस्यो विद्रुता दि[13]शः ॥ स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुम् ॥११॥
रावणस्य समीपे तु राक्षस्यो विकृताननाः ॥ विरूपं वानरं भीम[14]माख्यातुमुपचक्रमुः ॥ १२ ॥
अशोकवनिकामध्ये राजन्भीमवपुः कपिः ॥ सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३ ॥
न च तं जानकी सीता हरिं हरिणलोचना ॥ अस्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति ॥ १४ ॥
वासवस्य भवेद्दूतो दूतो वैश्रवणस्य वा ॥ प्रेषितो वाऽपि रामेण सीतान्वेषणकाङ्क्षया ॥ १५ ॥
[15]तेन त्वद्भुत[16]रूपेण यत्तत्तव मनोहरम् ॥ नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥ १६ ॥
न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः ॥ यत्र सा जानकी सीता[17] स तेन न विनाशितः ॥१७॥
जानकीरक्षणार्थं वा श्रमाद्वा नोप[18]लभ्यते ॥ अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥ १८ ॥
चारुपल्लव[19]पुष्पाढ्यं यं सीता स्वयमास्थिता ॥ प्रवृद्धः शिंशुपावृक्षः स च तेनाभिरक्षितः ॥ १९ ॥
तस्योग्र[20]रूपस्योग्र त्वं दण्डमाज्ञातुमर्हसि ॥ सीता संभाषिता येन [21]तद्वनं च विनाशितम् ॥ २० ॥

---

इत्यमरः । संवादो वा कथं कृत इति पप्रच्छुरिति पूर्वेण संबन्धः । कः किंनामकः । कस्य कस्य संबन्धी पुरुषः । कुतः कस्माद्देशादागतः । किंनिमित्तं किं प्रयोजनमुद्दिश्य । संवादं किं कृतवान् किमुद्दिश्य कृतवान् । सर्वस्यापि पप्रच्छुरितिपूर्वेणान्वयः ॥६—८॥ अयं यः यादृशः । यद्वा कार्यं करिष्यति तद्यूयमेवाभिजानीतेति संबन्धः ॥ ९ ॥ नैनं जानामीति । "विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । मित्रस्य चार्थेप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि" इति स्मरणादसत्योक्तिः ॥ १० ॥ दिशः दिक्षु । वनस्यपार्श्वेष्वित्यर्थः । विद्रुताः विलीनाः । निवेदितुं निवेदयितुं ॥११—१५॥ प्रमृष्टं भग्नमित्यर्थः ॥१६—१९॥ हे उग्र त्वं आज्ञातुं आज्ञापयितुं ॥२०

---

ति० पप्रच्छुः तस्यानिर्निद्रतयाऽवस्थानंमलेतिभावः ॥ ५ ॥ ति० त्वयाऽनेनकथंसंवादःकृतइतिचपप्रच्छुः । यद्यपितानिद्रिताः । वनभङ्गध्वनिनाजागरिताइतिसंवादज्ञानस्यैवाभावात्कथंप्रश्नोनिरवसरः । तथापि निद्रामध्येकिञ्चिज्जागरेणेषत्संवादश्रवणेपि देवमाययापुनर्निद्रेतितत्प्रश्नोपपत्तिरित्याहुः । सीतायास्तद्दर्शनेपिनिर्भयप्रसन्नमुखतयाऽवस्थानादर्शनादयंकश्चिदेतत्परिचितएतद्वृत्तान्तज्ञानार्थमेवप्रायेणागतइतिसंभाव्यानयासंवादकरणंचसंभाव्य तत्प्रश्ननिर्वाहइतिकतकः ॥ ६ ॥ ति० कागतिः कउपायः ॥८॥ ति० ननिवेदयितुमिच्छति । प्रायेणेयंतंजानातीतितासामाशयः ॥ १४ ॥ ति० उद्देशः प्रदेशः ॥ १७ ॥

[ पा० ] १ क. विद्राविताश्वसंत्रस्ताः. २ ङ. झ. ट. निषेदुः. ३ घ. ददृशुर्भिन्नं. ४ च. भीमं. ५ च. ज. ञ. महामार्तिं. ६ च. छ. ज. ञ. त्वयानेनपुनः. ७ क.—ट. सर्वाङ्गशोभना. ८ क.—ट. कामरूपाणां. ९ ङ. झ. ट. कागतिर्मम. १० घ. ङ. झ. ट. यूयमेवास्यजानीत. क. ग. यूयमेवात्र. च. छ. ज. ञ. यूयमेवहि. ११ ङ. झ. ट. अहमप्यति. १२ ङ. झ. ट. नैवजानामिकोप्ययं. १३ क. ख. दृढं. ङ. झ. ट. द्रुतं. ग. भयात्. १४ ङ. झ. ट. भीमंरावणायन्यवेदिषुः. क. भीमंव्याख्यातुमुप. १५ ङ. झ. ट. तेनैवाद्भुत. १६ क. ञ. वीर्येण. १७ ङ. झ. ट. देवी, १८ क. ङ. ज—ट. लक्ष्यते. १९ क. घ. ङ. झ. ट. पत्राढ्यं. च. छ. ज. ञ. शोभाढ्यं. २० ङ. छ. झ. ञ. रूपस्योग्रं. २१ ग. ङ.—ट. वनंतेन.

मनःपरिगृहीतां तां तव रक्षोगणेश्वर ॥ कः सीतामभिभाषेत यो न स्यात्त्यक्तजीवितः ॥ २१ ॥
राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः ॥ हुताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ॥ २२ ॥
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नास्रबिन्दवः ॥ दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥२३॥
आत्मनः सदृशाञ्छूरान्किंकरान्नाम राक्षसान् ॥ व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥ २४ ॥
तेषामशीतिसाहस्रं किंकराणां तरस्विनाम् ॥ २५ ॥
निर्ययुर्भवनात्तस्मात्कूटमुद्गरपाणयः ॥ महोदरा महादंष्ट्रा घोररूपा महाबलाः ॥
युद्धाभिमनसः सर्वे हनुमद्ग्रहणोन्मुखाः ॥ २६ ॥
ते कपीन्द्रं समासाद्य तोरणस्थमवस्थितम् ॥ अभिपेतुर्महावेगाः पतङ्गा इव पावकम् ॥ २७ ॥
ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ॥ आजघ्नुर्वानरश्रेष्ठं शरैश्चादित्यसन्निभैः ॥ २८ ॥
मुद्गरैः पट्टिशैः शूलैः प्रासतोमरशक्तिभिः ॥ परिवार्य हनूमन्तं सहसा तस्थुरग्रतः ॥ २९ ॥
हनुमानपि तेजस्वी श्रीमान्पर्वतसन्निभः ॥ क्षितावाविध्य लाङ्गूलं ननाद च महास्वनम् ॥ ३० ॥
स भूत्वा सुमहाकायो हनुमान्मारुतात्मजः ॥ धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ३१ ॥
तस्यास्फोटितशब्देन महता सानुनादिना ॥ पेतुर्विहङ्गा गगनादुच्चैश्चेदमघोषयत् ॥ ३२ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ॥ राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ३३ ॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ॥ हनुमाञ्शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ३४ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ॥ शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥ ३५ ॥
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् ॥ समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥३६॥
तस्य सन्नादशब्देन तेऽभवन्भयशङ्किताः ॥ ददृशुश्च हनूमन्तं संध्यामेघमिवोन्नतम् ॥ ३७ ॥

---

—२१॥ संवर्तितेक्षणः परिवर्तितेक्षणः ॥२२—२३॥ नाम प्रसिद्धौ । किंकर इति प्रसिद्धानित्यर्थः ॥ २४ ॥ किंकराणां संख्यां निर्दिशति—तेषामिति ॥ २५ ॥ सर्व इति विशेष्यं । कूटो नाम अयस्कारकूटसदृश आयुधविशेषः । मुद्गरः द्रुघणः ॥ २६ ॥ अवस्थितं युद्धाय सन्नद्धमित्यर्थः ॥ २७ ॥ परिघैः परिघपातनैः । काञ्चनाङ्गदैः काञ्चनपटैः ॥ २८ ॥ पट्टिशो नाम लोहदण्डः तीक्ष्णधारः क्षुरोपमआयुधविशेषः । अत्रेत्थंभूतलक्षणे तृतीया । प्रासः कुन्तः । तोमरः आयुधविशेषः ॥ २९ ॥ श्रीमानिति तात्कालिकहर्षकृतकान्तिरुच्यते ॥ ३० ॥ धृष्टमिति क्रियाविशेषणं ॥ ३१ ॥ सानुनादिना सप्रतिध्वनिना । यद्वा अनुनादिनः पर्वतगुहादयः तत्सहितेन । यद्वा सानुषु प्रतिध्वनिंकुर्वता । उच्चैश्चेदमघोषयदिति । स हनुमान इदं वक्ष्यमाणं वचनमुच्चैरघोषयत् ॥ ३२ ॥ घोषणवचनमाह—जयतीत्यादि ॥ अभिपालितः वालिवधेन ॥३३॥अक्लिष्टकर्मण इत्यनेन स्वदास्यं न कर्मकृतं किंतु स्वरूपप्रयुक्तमित्युच्यते॥३४॥ प्रतिबलं समानबलं । प्रहरतः राक्षसानितिशेषः । प्रहारमात्रेणवा हनुमद्विशेषणं ॥ ३५ ॥ मिषतां पश्यतां । अनादरे षष्ठी ॥ ३६ ॥ संध्यामेघमिवेति रक्तवर्णत्वात् ॥ ३७ ॥

---

**ती०** सीतयासहसंभाषणस्यापराधत्वंसाधयन्ति—**मनःपरिगृहीतामिति** । राजपरिग्रहसंभाषणंपुंसोपराधइतिभावः । **ति०** त्यक्तजीवितः त्यक्तजीविताशः ॥ २१ ॥ **स०** आत्मनःसदृशान् स्वदूतत्वयोग्यान् ॥ २४ ॥ तेषांसंख्या अशीतिसाहस्रमित्यन्वयः । **शि०** तेषामिति । किङ्कराणांमध्येअशीतिसाहस्रंकिङ्करास्तस्माद्भवनान्निर्ययुः ॥ २५ ॥ **ति०** क्षितावाविध्यलाङ्गूलमिति स्वभावोक्तिरलङ्कारः ॥ ३० ॥

[ **पा०** ] १ घ. ङ. झ. ट. सदृशान्वीरान्. २ क.—ङ. झ. ञ. ट. कपिंतं. ३ ख. ग. ङ. झ. ट. शरैरादित्य. च. छ. ज. ञ. शरैरशनि. ४ क. ख. ग. ङ. च. ज.—ट. तोमरपाणयः. ५ ङ. झ. ट. पुच्छमास्फोट. ६ क. ख. च. छ. ज. ञ. दुच्चैर्घोषमघोषयत्. ७ क. राघवेणानु. ८ ट. ददृशुस्ते.

स्वामिसंदेशनिःशङ्कास्ततस्ते राक्षसाः कपिम् ॥ चित्रैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ ३८ ॥
स तैः परिवृतः शूरैः सर्वतः स महाबलः ॥ आससादायसं भीमं परिघं तोरणाश्रितम् ॥
स तं परिघमादाय जघान रजनीचरान् ॥ ३९ ॥
स पन्नगमिवादाय स्फुरन्तं विनतासुतः ॥ विचचाराम्बरे वीरः परिगृह्य च मारुतिः ॥
[ सूदयामास वज्रेण दैत्यानिव सहस्रदृक् ] ॥ ४० ॥
स हत्वा राक्षसान्वीरान्किंकरान्मारुतात्मजः ॥ युद्धकाङ्क्षी पुनर्वीरस्तोरणं समुपाश्रितः ॥ ४१ ॥
ततस्तस्माद्भयान्मुक्ताः कतिचित्तत्र राक्षसाः ॥ निहतान्किंकरान्सर्वान्रावणाय न्यवेदयन् ॥ ४२ ॥
स राक्षसानां निहतं महद्बलं निशम्य राजा परिवृत्तलोचनः ॥
समादिदेशाप्रतिमं पराक्रमे प्रहस्तपुत्रं समरे सुदुर्जयम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

## त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

किङ्करहननानन्तरं तोरणाच्चैत्यप्रासादमाप्लुतेनहनुमता तत्प्रासादभञ्जनम् ॥ १ ॥ तद्रक्षिभीराक्षसैर्युद्धाय तदभियानम् ॥ २ ॥ हनुमता प्रासादस्तंभोत्पाटनेनतद्भ्रामणे तदुद्गताग्निना प्रासाददहनम् ॥ ३ ॥ हनुमता प्रासादरक्षकराक्षसहनन-पूर्वकमन्तरिक्षस्थित्वा सवानरबलेनसुग्रीवेण लङ्काभङ्गस्यभविष्यत्त्वोद्घोषणम् ॥ ४ ॥

ततः स किंकरान्हत्वा हनुमान्ध्यानमास्थितः ॥ १ ॥
वनं भग्नं मया चैत्यप्रासादो न विनाशितः ॥ तस्मात्प्रासादमप्येवं भीमं विध्वंसयाम्यहम् ॥ २ ॥
इति संचिन्त्य मनसा हनुमान्दर्शयन्बलम् ॥ चैत्यप्रासादमाप्लुत्य मेरुशृङ्गमिवोन्नतम् ॥
आरुरोह हरिश्रेष्ठो हनुमान्मारुतात्मजः ॥ ३ ॥
आरुह्य गिरिसंकाशं प्रासादं हरियूथपः ॥ बभौ स सुमहातेजाः प्रतिसूर्य इवोदितः ॥ ४ ॥

---

ततस्तत इति । अनेनास्य समीपं सहसा गन्तुमशक्ता इत्यवगम्यते॥३८–३९॥ सपन्नगमिति सपरिघत्वमात्रे दृष्टान्तः । परिगृह्य परिघमिति शेषः । स्फुरन्तं पन्नगमादाय विनतासुतइव स वीरो मारुतिः परिघं परिगृह्याम्बरे विचचारेति संबन्धः ॥४०–४१॥ तस्माद्भयान्मुक्ताः दूरस्था इत्यर्थः ॥४२–४३॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

ध्वंसनफलमाह—दर्शयन् बलमिति । बलदर्शनार्थमित्यर्थः । ध्वंसनप्रकारमाह—चैत्येति ॥ चैत्यं देवायतनं तद्रूपः प्रासादः चैत्यप्रासादः तं । आप्लुत्य तोरणाल्लङ्घयित्वा । हरिश्रेष्ठो हनुमान्मारुतात्मज इत्यस्योत्तरश्लोकेनान्वयः ॥ ३ ॥ हरियूथपत्वेप्यहरिर्भविष्यतीति तद्व्यावृत्त्यर्थं हरिश्रेष्ठ इत्युक्तं । प्रतिसूर्यः द्वितीयसूर्यइत्यर्थः । अनेनसूर्योदयस्सूचितः

---

ति० स्वामिनोरामस्यसंदेशेननामग्रहणेन कस्यायंभटइतिसंदेहरहिताः । किंच स्वामिसंदेशेनरावणाज्ञयाऽतिघोरेणाप्यनेनयोद्धव्यमेवेतिनिश्चयात्पक्षान्तरशङ्कारहिताः । प्रहरणैः आयुधैः । अभिपेतुः प्राहरन्नित्यर्थः ॥ ३८ द्विचत्वारिंशःसर्गः ॥ ४२ ॥
ति० ध्यानं विचारः ॥ १ ॥ ति० चैत्यप्रासादः रक्षःकुलदेवताप्रासादः । एवं प्रमदावनवत् ॥ २ ॥

[ पा० ] १ इदमर्धं ङ. झ. ञ. ट. पाठेषुदृश्यते. २ ख. घ.—च. झ. ञ. ट. न्वीरःकिंकरान्. ३ ङ. च. छ. झ. ञ. ट. युद्धाकाङ्क्षी. ४ ङ. च. झ. ट. महावीरः. ५ क. ङ. झ. ट. समवस्थितः. ङ. च. छ. ज. ञ. समुपस्थितः. ६ ग. ङ.—ट. महाबलं. ७ क. ख. ग. ङ. च. छ. झ. ञ. ट. हनुमान्ध्यानं. ज. हनुमान्द्वारं. ८ ग. ङ. झ. ट. मयैवमिमं. क. ग. घ. च. छ. मप्येवमिमं. ९ घ. इवोत्थितः.

[1]संप्रधृष्य च दुर्धर्षं चैत्यप्रासादमुत्तमम् ॥ हनुमान्प्रज्वलँल्लक्ष्म्या पारियात्रोपमोऽभवत् ॥ ५ ॥
स भूत्वा सुमहाकायः प्रभावान्मारुतात्मजः ॥ धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ६ ॥
तस्यास्फोटितशब्देन महता श्रोत्रघातिना ॥ पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ ७ ॥
अस्त्रविज्जयतां रामो लक्ष्मणश्च महाबलः ॥ राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ८ ॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ॥ हनुमाञ्शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ९ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ॥ शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥ १० ॥
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् ॥ समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥ ११ ॥
एवमुक्त्वा [2]विमानस्थश्चैत्यस्थान्हरियूथपः ॥ ननाद भीमनिर्ह्रादो रक्षसां जनयन्भयम् ॥ १२ ॥
तेन [3]शब्देन महता चैत्य[4]पालाः शतं ययुः ॥ गृहीत्वा विविधानस्त्रान्प्रासान्खड्गान्परश्वधान् ॥
विसृजन्तो महाकाया मारुतिं पर्यवारयन् ॥ १३ ॥
ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ॥ आजघ्नुर्वानरश्रेष्ठं बाणैश्चादित्यसन्निभैः ॥ १४ ॥
आवर्त इव गङ्गायास्तोयस्य विपुलो महान् ॥ परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः ॥ १५ ॥
ततो वातात्मजः क्रुद्धो भीमरूपं [5]समास्थितः ॥ १६ ॥
प्रासादस्य महान्तस्य स्तम्भं हेमपरिष्कृतम् ॥ उत्पाटयित्वा वेगेन हनुमान्पवनात्मजः ॥
ततस्तं भ्रामयामास शतधारं महाबलः ॥ १७ ॥
तत्र चाग्निः समभवत्प्रासादश्चाप्यदह्यत ॥ १८ ॥
दह्यमानं ततो दृष्ट्वा प्रासादं हरियूथपः ॥ स राक्षसशतं हत्वा वज्रेणेन्द्र इवासुरान् ॥
अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥ १९ ॥
मादृशानां सहस्राणि विसृष्टानि महात्मनाम् ॥ बलिनां वानरेन्द्राणां सुग्रीववशवर्तिनाम् ॥ २० ॥
अटन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ २१ ॥
दशनागबलाः केचित्केचिद्दशगुणोत्तराः ॥ केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ २२ ॥
सन्ति चौघबलाः [6]केचित्केचिद्वायुबलोपमाः ॥ अप्रमेयबलाश्चा[7]न्ये तत्रासन्हरियूथपाः ॥ २३ ॥
ईदृग्विधैस्तु [8]हरिभिर्वृतो दन्तनखायुधैः ॥ शतैः शतसहस्रैश्च कोटीभिरयुतैरपि ॥
आगमिष्यति सुग्रीवः सर्वेषां वो निषूदनः ॥ २४ ॥

---

॥ ४ ॥ संप्रधृष्य आक्रम्य । पारियात्रोनाम कुलपर्वतः ॥ ५—११ ॥ चैत्यस्थान् चैत्यपालान् ॥ १२—१६ ॥ पवनात्मजः भ्रामयामासेत्यन्वयः । शतधारं धारा कोटिः । वज्रवत्स्थितमित्यर्थः । यद्वा शतधा अरमिति च्छेदः । अरं शीघ्रं ॥ १७ ॥ अग्निः समभवत् । भ्रामितस्तम्भैः स्तम्भान्तरसंघट्टनादिति भावः ॥ १८—१९ ॥ राक्षसानामुत्साहभङ्गं कारयितुमाह—मादृशानामित्यादि ॥ २०–२२ ॥ ओघबलाः

---

**स०** शतं बहवः ॥ १३ ॥ **ति०** परिक्षिप्येत्यंशे तोयस्यावर्तइवेतिदृष्टान्तः ॥ १५ ॥ **रामानु०** महान्तस्य महाग्रस्य । अत्युन्नतशिखरस्येत्यर्थः । महार्हस्येतिवापाठः ॥ १७ ॥ **स०** अग्निःप्रासादस्तंभान्तरसंघर्षाद्वा वायुसूनुकरपरिभ्रमणरूपमथनतो वाग्निःसमभवदितिभावः । समदह्यत समग्रग्रामदाहस्यभाविनइयंनान्दीतिभावः ॥ १८ ॥ **ती०** ओघबलाः ओघसंख्यासंख्यातगजबलाः ॥ २३ ॥

[ **पा०** ] १ ङ. झ. ट. धर्षयित्वा. २ ग. ङ.—ट. महाकायश्चैत्यस्थोहरिपुङ्गवः. ३ ङ. झ. ट. नादेन. ४ क. पालाश्चते. ५ च. ज. ञ. समाश्रितः. ६ ग. घ. ङ. झ. ट. केचित्सन्तिवायुबलोपमाः. क. केचिच्छतगुणोत्तराः. वैनतेयबलाःकेचित्केचिद्वायुबलोपमाः. ७ क. ङ. च. ज.—ट. बलाःकेचितत्रासन. ८ ग. घ. कोटिभिर्बहुभिर्वृतः. ङ. झ. ञ. ट. कोटिभिश्चायुतैरपि.

नेयमस्ति पुरी लङ्का न यूयं न च रावणः ॥ यस्मादिक्ष्वाकुनाथेन बद्धं वैरं महात्मना ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

हनुमता रावणचोदनयासमागतवतःप्रहस्तात्मजस्यजंबुमालिनोवधः ॥ १ ॥

संदिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली ॥ जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ॥ १ ॥
रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः ॥ महान्विवृत्तनयनश्चण्डः समरदुर्जयः ॥ २ ॥
[ दग्धत्रिकूटप्रतिमो महाजलदसंनिभः ॥ महाभुजशिरस्स्कन्धो महादंष्ट्रो महाननः ॥ ३ ॥
महाजवो महोत्साहो महासत्वोरुविक्रमः ॥ आजगामातिवेगेने वज्राशनिसमस्वनः ॥ ४ ॥ ]
धनुः शक्रधनुःप्रख्यं महद्रुचिरसायकम् ॥ विस्फारयानो वेगेन वज्राशनिसमस्वनम् ॥ ५ ॥
तस्य विस्फारघोषेण धनुषो महता दिशः ॥ प्रदिशश्च नभश्चैव सहसा समपूर्यत ॥ ६ ॥
[ उद्गच्छन्निव चादित्यः प्रभाभिरिव लोहितः ॥ लोहिताङ्गेन महता कवचेनाभिसंवृतः ॥
तिष्ठतिष्ठेति सहसा हनूमन्तमथाब्रवीत् ॥ ७ ॥ ]
रथेन खरयुक्तेन तमागतमुदीक्ष्य सः ॥ हनुमान्वेगसंपन्नो जहर्ष च ननाद च ॥ ८ ॥
तं तोरणविटङ्कस्थं हनुमन्तं महाकपिम् ॥ जम्बुमाली महाबाहुर्विव्याध निशितैः शरैः ॥ ९ ॥
अर्धचन्द्रेण वदने शिरस्येकेन कर्णिना ॥ बाह्वोर्विव्याध नाराचैर्दशभिस्तं कपीश्वरम् ॥ १० ॥
तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम् ॥ शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिना ॥ ११ ॥
तत्तस्य रक्तं रक्तेन रञ्जितं शुशुभे मुखम् ॥ यथाऽऽकाशे महापद्मं सिक्तं चन्दनबिन्दुभिः ॥ १२ ॥

---

ओघाख्यसंख्याकबलाः ॥ २३—२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

विवृत्तनयनः मण्डलीकृतनयनः ॥ २—४ ॥ रुचिरसायकं रुचिरसायकार्हं । विस्फारयानः विस्फारयमाणः । ज्याकर्षणं कुर्वन्नित्यर्थः । वज्राशनिसमस्वनमिति विस्फारणक्रियाविशेषणं ॥ ५ ॥ नभस्समपूर्यत दिशः प्रदिशश्च समपूर्यन्तेति विपरिणामेनानुषङ्गः ॥ ६—८ ॥ तोरणविटङ्कं तोरणस्य कपोतपालिका । "कपोतपालिकायां तु विटङ्कं पुन्नपुंसकं" इत्यमरः । स्तम्भोपरि तिर्यङ्निहितदार्वित्यर्थः ॥ ९ ॥ एकेनेत्येतदर्धचन्द्रस्यापि विशेषणं । अर्धचन्द्राकाराग्रशरेणेत्यर्थः । कर्णिना कर्णवच्छरेण ॥ १० ॥ अम्बुजं रक्तपद्मं । भास्कररश्मिना विद्धं अतएव फुल्लमित्यर्थः ॥ ११ ॥ रक्तं स्वतएव रक्तं । रक्तेन शोणितेन । महापद्मं रक्तोत्पलं । चन्दनबिन्दुभिः

---

शि० नास्ति नङ्क्ष्यतीत्यर्थः ॥ २५ ॥ इतित्रिचत्वारिंशःसर्गः ॥ ४३ ॥

स० स्रग्वी सुवर्णमालः । "प्रहस्तपुत्रस्त्विहजंबुमालीप्राभञ्जनिंप्राप्यसुवर्णमाली" इति संग्रहरामायणोक्तेः ॥ २ ॥ ति० समपूर्यत । दिगादिसमुदायापेक्षमेकवचनं ॥ स० नभः आकाशं । दिशःप्रदिशश्चयदात्मिकास्तत्संमपूर्यत । "साक्षिसिद्धमेव गगनंतद्भागाएवदिशोनद्रव्यान्तरं" इतिसुधोक्तेः ॥ ६ ॥ ति० कर्णी अङ्कुशाकाराग्रशरविशेषः ॥ १० ॥

[ पा० ] १ क. ङ.—ट. यस्त्वखिक्ष्वाकुवीरेण. २ इदंश्लोकद्वयं क. पाठेदृश्यते. ३ इदमर्धत्रयं क. ग. पाठयोर्दृश्यते. ४ ङ. झ. ट. महातेजाविव्याध. ५ घ. दशभिस्तुस्तनान्तरे. ६ ङ. झ. ञ. ट. काञ्चनबिन्दुभिः.

चुकोप बाणाभिहतो राक्षसस्य महाकपिः ॥ १३ ॥
ततः पार्श्वेतिविपुलां ददर्श महतीं शिलाम् ॥ तरसा तां समुत्पाट्य चिक्षेप बलवद्बली ॥
तां शरैर्दशभिः क्रुद्धस्ताडयामास राक्षसः ॥ १४ ॥
विपन्नं कर्म तद्दृष्ट्वा हनुमांश्चण्डविक्रमः ॥ सालं विपुलमुत्पाट्य भ्रामयामास वीर्यवान् ॥ १५ ॥
भ्रामयन्तं कपिं दृष्ट्वा सालवृक्षं महाबलम् ॥ चिक्षेप सुबहून्बाणाञ्जम्बुमाली महाबलः॥ १६ ॥
सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे ॥ उरस्येकेन बाणेन दशभिस्तु स्तनान्तरे ॥ १७ ॥
स शरैः पूरिततनुः क्रोधेन महता वृतः ॥ तमेव परिघं गृह्य भ्रामयामास वेगितः ॥ १८ ॥
अतिवेगोतिवेगेन भ्रामयित्वा बलोत्कटः ॥ परिघं पातयामास जम्बुमालेर्महोरसि ॥ १९ ॥
तस्य चैव शिरो नास्ति न बाहू न च जानुनी ॥ न धनुर्न रथो नाश्वास्तत्रादृश्यन्त नेषवः ॥२०॥
स हतस्तरसा तेन जम्बुमाली महाबलः ॥ पपात निहतो भूमौ चूर्णिताङ्गविभूषणः ॥ २१ ॥
जम्बुमालिं च निहतं किंकरांश्च महाबलान् ॥ चुक्रोध रावणः श्रुत्वा कोपसंरक्तलोचनः ॥ २२ ॥

स रोषसंवर्तिततात्रलोचनः प्रहस्तपुत्रे निहते महाबले ॥
अमात्यपुत्रानतिवीर्यविक्रमान्समादिदेशाशु निशाचरेश्वरः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

**हनुमता रावणप्रेषितमन्त्रिपुत्रसप्तकहननम् ॥ १ ॥**

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः ॥ निर्ययुर्भवनात्तस्मात्सप्त सप्तार्चिवर्चसः ॥ १ ॥
महाबलपरीवारा धनुष्मन्तो महाबलाः ॥ कृतास्त्रास्त्रविदां श्रेष्ठाः परस्परजयैषिणः ॥ २ ॥

---

रक्तचन्दनबिन्दुभिः ॥ १२ ॥ चुकोपेत्यर्धं ॥ राक्षसस्य राक्षसविषये ॥ १३—१६ ॥ पञ्चभिर्भुज इत्यादौ विव्याधेत्यध्याहारः ॥ १७—१९ ॥ नाश्वा इति अश्वशब्देनात्र खरा उच्यन्ते । रथेन खरयुक्तेनेति पूर्वमुक्तत्वात् ॥ २०—२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

भवनात्तस्मात् रावणभवनात् । सप्तार्चिवर्चसइत्यत्र सप्तार्चीति इकारान्तत्वमार्षं ॥ १ ॥ कृतास्त्राः शिक्षि-

**ति०** काञ्चनबिन्दुभिःरक्ताशोकपुष्परसबिन्दुभिः । सिक्तंमहापद्मं महत्तरंरक्तपद्ममिवेत्यभूतोपमेयं ॥ "अशोकःकाञ्चनाह्वयः" **स०** काञ्चनबिन्दुभिः सुवर्णरसबिन्दुभिः । अभूतोपमेयं ॥ १२ ॥ **स०** राक्षसस्यबाणाभिहतः । एकदेशान्वयः ससंबन्धिकत्वायुक्तः । यद्वा बाणाभिहतोराक्षसस्यचुकोपेत्यन्वयः । हनुमत्कोपसहनासुशकत्वाद्यप्रतीत्यप्रवृत्तेःषष्ठी । साचशैषिकीतिकर्मणि ॥१३॥ **ति०** ताडयामास बिभेद ॥१४॥ **ति०** विपन्नं व्यर्थीकृतं ॥१५॥ **स०** जंबुमालेः रूढः इकारान्तोनकारान्तश्चेतिजंबुमालेरिति साधु ॥ १९ ॥ **स०** नाश्वाः अश्वभिन्नाः अश्वसदृशावाखराः । ते नादृश्यन्त । नञर्थस्यनशब्दस्यतद्भिन्नतत्सदृशार्थकता स्वपरसाधारण्येनदृष्टा । अथवा विभाषानुवृत्तेर्नलोपाभावान्नाश्वाइतिसंभवति । तेनखरयुक्तयानत्वमुक्तमुपपन्नं ॥२०॥ **स०** चूर्णिताङ्गः चूर्णीकृतशाखः चूर्णीकृतावयवोराक्षसोपि ॥२१॥ **स०** क्रोधसंरक्तलोचनः पूर्वंकिङ्करनाशात् । पुनर्जंबुमालिनंनिहतंश्रुत्वा पूर्वापेक्षयाबहुकोपंकृतवानित्यर्थः ॥२२॥ **स०** वीर्यं वैरिपराक्रमः । तदतिक्रम्यपराक्रमोयेषांतान् ॥२३॥ इतिचतुश्चत्वारिंशःसर्गः ॥४४॥

**स०** सप्तार्चाः प्रतिमारूपाः कालीकरालीइत्याद्याः अस्यसन्तीतिसप्तार्ची वह्निः । तद्वद्वर्चोयेषांतेतथा । यद्वा इकारान्तोर्चिशब्दोर्चिश्शब्दपर्यायः । सप्तअर्चयोर्चींषि शिखाअस्यसोमिः । "अर्चिर्मयूरशिखयोः" इतिविश्वः । "इकारान्तोप्यस्ति" 'अग्नेर्भ्राजन्तेअर्चयः' इतीतिभानुदीक्षितलेखात् ॥ १ ॥ **स०** परस्परजयैषिणः परस्परमुत्कर्षापेक्षाः ॥ २ ॥

[ **पा०** ] १ ग. झ. जववद्बली. २ क. ग. शिरस्येकेन. ३ ख. मारुतिः. क. ङ. झ. ञ. ट. वेगितः. ४ क. ग. ङ.—ट. महारथः. ५ ग. निपपातहतो. ६ ङ.—ट. चूर्णिताङ्गइवद्रुमः. ७ ख. महारथान्. क. महाजवान्. ८ झ. ठ. क्रोधसंरक्त.

हेमजालपरिक्षिप्तैर्ध्वजवद्भिः पताकिभिः ॥ तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥
तप्तकाञ्चनचित्राणि चापान्यमितविक्रमाः ॥ विस्फारयन्तः संहृष्टास्तडिद्वन्त इवाम्बुदाः ॥ ४ ॥
जनन्यस्तु ततस्तेषां विदित्वा किंकरान्हतान् ॥ बभूवुः शोकसंभ्रान्ताः सबान्धवसुहृज्जनाः ॥ ५ ॥
ते परस्परसंघर्षात्तप्तकाञ्चनभूषणाः ॥ अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितम् ॥ ६ ॥
सृजन्तो बाणवृष्टिं ते रथगर्जितनिःस्वनाः ॥ वृष्टिमन्त इवाम्भोदा विचेरुर्नैर्ऋताम्बुदाः ॥ ७ ॥
अवकीर्णस्ततस्ताभिर्हनुमाञ्शरवृष्टिभिः ॥ अभवत्संवृताकारः शैलराडिव वृष्टिभिः ॥ ८ ॥
स शरान्मोघयामास तेषामाशुचरः कपिः ॥ रथवेगं च वीराणां विचरन्विमलेऽम्बरे ॥ ९ ॥
स तैः क्रीडन्धनुष्मद्भिर्व्योम्नि वीरः प्रकाशते ॥ धनुष्मद्भिर्यथा मेघैर्मारुतः प्रभुरम्बरे ॥ १० ॥
स कृत्वा निनदं घोरं त्रासयंस्तां महाचमूम् ॥ चकार हनुमान्वेगं तेषु रक्षस्सु वीर्यवान् ॥ ११ ॥
तलेनाभ्यहनत्कांश्चित्पादैः कांश्चित्परन्तपः ॥ मुष्टिनाभ्यहनत्कांश्चिन्नखैः कांश्चिद्व्यदारयत् ॥ १२ ॥
प्रममाथोरसा कांश्चिदूरुभ्यामपरान्कपिः ॥ केचित्तस्य निनादेन तत्रैव पतिता भुवि ॥ १३ ॥
ततस्तेष्ववसन्नेषु भूमौ निपतितेषु च ॥ तत्सैन्यमगमत्सर्वं दिशो दश भयार्दितम् ॥ १४ ॥
विनेदुर्विस्वरं नागा निपेतुर्भुवि वाजिनः ॥ भग्ननीडध्वजच्छत्रैर्भूश्च कीर्णाऽभवद्रथैः ॥ १५ ॥
स्रवता रुधिरेणाथ स्रवन्त्यो दर्शिताः पथि ॥ विविधैश्च स्वरैर्लङ्का ननाद विकृतं तदा ॥ १६ ॥
स तान्प्रवृद्धान्विनिहत्य राक्षसान्महाबलश्चण्डपराक्रमः कपिः ॥
युयुत्सुरन्यैः पुनरेव राक्षसैस्तमेव वीरोभिजगाम तोरणम् ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

ताम्रा: ॥ आर्षः सन्धिः । कृतास्त्राणामस्त्रविदां च श्रेष्ठा इति वा । ज्ञानशिक्षे उभे अप्येषां स्त इति भावः । परस्परजयैषिणः प्रत्येकं हनुमज्जयैषिण इत्यर्थः ॥ २ ॥ हेमजालपरिक्षिप्तैः सुवर्णजालविनिर्मितैः । स्वासाधारणचिह्नयुक्तं ध्वजं । केवलचित्रवस्त्रालंकृता पताका । तोयदस्वननिर्घोषैः तोयदस्वनतुल्यनिर्घोषवद्भिः ॥३—८॥ स शरान् मोघयामास । यथा शराः स्वस्मिन्न पतन्ति तथा चकारेत्यर्थः । रथवेगं च मोघयामासेत्यन्वयः । यथा रथवेगास्स्वप्रहाराय न भवन्ति तथा समचरदित्यर्थः ॥ ९—१० ॥ वेगं संहारोद्योगं ॥ ११ ॥ पादैः कांश्चिदिति बहुवचनं वानराणां द्विपात्सु चतुष्पात्सु च ग्रहणात् ॥ १२—१४ ॥ नीडं ध्वजावयवविशेषः ॥ १५ ॥ स्रवन्त्यः नद्यः । विकृतं यथा तथा ननाद प्रतिध्वानवती बभूव ॥ १६—१७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥४५॥

---

**स०** एकजिह्वाः ध्वजाः । द्विजिह्वाः पताकाः ॥ ३ ॥ **शि०** सिंहावलोकनन्यायेननिहतकिङ्करगृहवृत्तान्तमाह—**जनन्यइति** ॥ ५ ॥ **ति०** तोरणस्थमवस्थितं तत्रस्थितं निश्चलमित्यर्थः ॥ ६ ॥ **स०** राक्षसानांशरवर्षेणकार्ष्ण्येनचमेघसमता । पूर्वमखण्डतः शरसारगमनादेकवचनंवृष्टिमिति प्रत्येकंपृथक्पृथगच्छनाद्वृष्टिभिरितिबहुवचनंचसंभवतः ॥ ७ ॥ **ति०** संवृताकारः अदृश्यइति यावत् ॥ ८ ॥ **ति०** नीडं रथस्थंरथ्यधिष्ठानस्थानं ॥ १५ ॥ इतिपञ्चचत्वारिंशःसर्गः ॥ ४५ ॥

**[ पा० ]** १ ग. धनुष्यमित. २ ख. घ.—ट. जनन्यस्तास्ततस्तेषां. ३ ङ. ज. झ. ट. परस्परसंघर्षात्तप्त. ४ ङ. झ. ट. प्रावृट्कालइवांभोदाः. ५ क.—ट. रथवेगांश्च. ६ ङ. झ. ट. तलेनाभिहनत्. ७ ग. घ. पद्भ्यांकांश्चित्. ८ ग. ङ. छ.—ट. मुष्टिभिश्चाहनत्. ९ ङ. झ. ट. मपरानपि. १० क. ग. विस्वराः. ११ क. ख. ङ.—ट. स्तदेव.

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

हनुमता रावणप्रहितसेनापतिपञ्चकस्य पञ्चताप्रापणम् ॥ १ ॥

हतान्मन्त्रिसुतान्बुद्ध्वा वानरेण महात्मना ॥ रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥ १ ॥
स विरूपाक्षयूपाक्षौ दुर्धरं चैव राक्षसम् ॥ प्रघसं भासकर्णं च पञ्च सेनाग्रनायकान् ॥ २ ॥
संदिदेश दशग्रीवो वीरान्नयविशारदान् ॥ हनुमद्ग्रहणव्यग्रान्वायुवेगसमान्युधि ॥ ३ ॥
यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः ॥ सवाजिरथमातङ्गाः स कपिः शास्यतामिति ॥ ४ ॥
यत्तैश्च खलु भाव्यं स्यात्तमासाद्य वनालयम् ॥ कर्म चापि समाधेयं देशकालविरोधिनम् ॥ ५ ॥
[ वानरोयमिति ज्ञात्वा न हि शुध्यति मे मनः ॥ नैवाहं तं कपिं मन्ये यथेयं प्रस्तुता कथा ॥६॥ ]
न ह्यहं तं कपिं मन्ये कर्मणा प्रतितर्कयन् ॥ सर्वथा तन्महद्भूतं महाबलपरिग्रहम् ॥
भवेदिन्द्रेण वा सृष्टमस्मदर्थं तपोबलात् ॥ ७ ॥
सनागयक्षगन्धर्वा देवासुरमहर्षयः ॥ युष्माभिः सहितैः सर्वैर्मया सह विनिर्जिताः ॥ ८ ॥
तैरवश्यं विधातव्यं व्यलीकं किंचिदेव नः ॥ तदेव नात्र संदेहः प्रसह्य परिगृह्यताम् ॥ ९ ॥
नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः ॥ दृष्टा हि हरयः पूर्वं मया विपुलविक्रमाः ॥ १० ॥
वाली च सहसुग्रीवो जाम्बवांश्च महाबलः ॥ नीलः सेनापतिश्चैव ये चान्ये द्विविदादयः ॥ ११ ॥
नैवं तेषां गतिर्भीमा न तेजो न पराक्रमः ॥ न मतिर्न बलोत्साहौ न रूपपरिकल्पनम् ॥ १२ ॥
महत्सत्त्वमिदं ज्ञेयं कपिरूपं व्यवस्थितम् ॥ प्रयत्नं महदास्थाय क्रियतामस्य निग्रहः ॥ १३ ॥
कामं लोकास्त्रयः सेन्द्राः ससुरासुरमानवाः ॥ भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे ॥ १४ ॥
तथापि तु नयज्ञेन जयमाकाङ्क्षता रणे ॥ आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ॥ १५ ॥
ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ॥ समुत्पेतुर्महावेगा हुताशसमतेजसः ॥ १६ ॥

संवृताकारः अन्तर्मनाः । मतिं चिन्तां ॥१–३॥ इति वक्ष्यमाणप्रकारेण ॥ ४ ॥ तमेवाह—यत्तैरित्यादिना ॥ यत्तैः यतमानैः । अप्रमत्तैरिति यावत् । यतेः कर्तरि क्तः । समाधेयं परिहर्तव्यं । देशकालविरोधिनं देशकालविरोधीत्यर्थः ॥ ५—६ ॥ महद्भूतं मन्य इत्यनुषज्यते । इन्द्रेण वा अन्यैर्वेति शेषः । वाशब्दस्य विकल्पार्थस्य प्रयोगात् ॥ ७—८ ॥ व्यलीकं अप्रियं ॥ ९ ॥ नावमान्यो भवद्भिश्च हरिर्धीरपराक्रम इति ॥ अत्र त्रयोदशसहस्रश्लोका गताः। अयं चतुर्दशसहस्रस्यादिः । धीति गायत्र्याश्चतुर्दशाक्षरं ॥ १०—११ ॥ गतिः वेगः । रूपपरिकल्पनं यथेष्टरूपग्रहणं ॥ १२ ॥ महदिति ॥ इत्थं महत्सत्त्वं किमपि कपिरूपं सत् व्यवस्थितमिति ज्ञेयमित्यर्थः

**ती०** संवृताकारः गूढाकारः । अन्तस्संजातशङ्क इत्यर्थः । उत्तमांमतिं धैर्यं ॥ १ ॥ **ती०** किंचात्रदेशकालाविरुद्धंकर्मकार्यमित्याह—**कर्मचेति**। देशकालविरोधिनंदेशकालविरोधीत्यर्थः । आर्षोलिङ्गविभक्तिव्यत्ययः । कर्म समाधेयं परिहर्तव्यं । देशकालाविरोधितमितिपाठे समाधेयं कर्तव्यं । अत्रहेतुमाह—नहीति ॥ ५ ॥ **ती०** अस्मदर्थं अस्मन्निग्रहार्थं ॥ **स०** अस्मदर्थं अस्माकमर्थनिवृत्तिमुद्दिश्य ॥ ७ ॥ **स०** वालीति । जांबवानपिकपिमध्येबहुस्थलेगणितइतिनानुपपत्तिः ॥ ११ ॥ **ती०** नैवंतेषामित्यादौसर्वत्रईदृक्छब्दोऽध्याहर्तव्यः । तथाचेत्थंयोजना तेषां वाल्यादिनां । हनुमतोभीमागतिस्तेजआदिकंचयथा तथा ईदृङ्नास्तीतिसंबन्धः । रूपपरिकल्पनंयथेप्सितरूपपरिग्रहणं ॥ १२ ॥ **ति०** प्रयत्नमित्यार्षक्लिबत्वं ॥ १३ ॥ **ति०** कामं यद्यपीत्यर्थः

**[ पा० ]** १ ङ. झ. ट. दुर्धर्षं. २ क.—ट. हनुमद्ग्रहणे. ३ क.—ट. कालाविरोधितं. ४ अयंश्लोकः ङ. झ. पाठेषुदृश्यते. ५ ख. ग. ङ. च. छ. झ. ट. गन्धर्वदेवासुर. ६ क. युधि. ७ ख. नावमान्यश्चयुष्माभिः.

रथैर्मत्तैश्च मातङ्गैर्वाजिभिश्च महाजवैः ॥ शस्त्रैश्च विविधैस्तीक्ष्णैः सर्वैश्चोपचिता बलैः ॥ १७ ॥
ततस्तं ददृशुर्वीरा दीप्यमानं महाकपिम् ॥ रश्मिमन्तमिवोद्यन्तं स्वतेजोरश्मिमालिनम् ॥ १८ ॥
तोरणस्थं महोत्साहं महासत्त्वं महाबलम् ॥ महामतिं महावेगं महाकायं महाबलम् ॥ १९ ॥
तं समीक्ष्यैव ते सर्वे दिक्षु सर्वास्ववस्थिताः ॥ तैस्तैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ २० ॥
तस्य पञ्चायसास्तीक्ष्णाः शिताः पीतमुखाः शराः ॥ शिरस्युत्पलपत्राभा दुर्धरेण निपातिताः ॥२१॥
स तैः पञ्चभिराविद्धः शरैः शिरसि वानरः ॥ उत्पपात नदन्व्योम्नि दिशो दश विनादयन् ॥ २२ ॥
ततस्तु दुर्धरो वीरः सरथः सज्यकार्मुकः ॥ किरञ्शरशतैस्तीक्ष्णैरभिपेदे महाबलः ॥ २३ ॥
स कपिर्वारयामास तं व्योम्नि शरवर्षिणम् ॥ वृष्टिमन्तं पयोदान्ते पयोदमिव मारुतः ॥ २४ ॥
अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः ॥ चकार कदनं भूयो व्यवर्धत च वेगवान् ॥ २५ ॥
स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः ॥ निपपात महावेगो विद्युद्राशिर्गिराविव ॥ २६ ॥
ततः स मथिताष्टाश्वं रथं भग्नाक्षकूबरम् ॥ विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः ॥ २७ ॥
तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि ॥ संजातरोषौ दुर्धर्षावुत्पेततुररिन्दमौ ॥ २८ ॥
स ताभ्यां सहसोत्पत्य विष्ठितो विमलेऽम्बरे ॥ मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः ॥ २९ ॥
तयोर्वेगवतोर्वेगं विनिहत्य महाबलः ॥ निपपात पुनर्भूमौ सुपर्णसमविक्रमः ॥ ३० ॥
स सालवृक्षमासाद्य तमुत्पाट्य च वानरः ॥ तावुभौ राक्षसौ वीरौ जघान पवनात्मजः ॥ ३१ ॥
ततस्तांस्त्रीन्हताञ्ज्ञात्वा वानरेण तरस्विना ॥ अभिपेदे महावेगः प्रसह्य प्रघसो हरिम् ॥ ३२ ॥
भासकर्णश्च संक्रुद्धः शूलमादाय वीर्यवान् ॥ एकतः कपिशार्दूलं यशस्विनमवस्थितम् ॥ ३३ ॥
पट्टिशेन शिताग्रेण प्रघसः प्रत्ययोधयत् ॥ भासकर्णश्च शूलेन राक्षसः कपिसत्तमम् ॥ ३४ ॥
स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः ॥ अभवद्वानरः क्रुद्धो बालसूर्यसमप्रभः ॥ ३५ ॥
समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम् ॥ जघान हनुमान्वीरो राक्षसौ कपिकुञ्जरः ॥
[ गिरिशृङ्गविनिष्पिष्टौ तिलशस्तौ बभूवतुः ] ॥ ३६ ॥

---

॥ १३—१७ ॥ स्वतेजोरश्मिमालिनं स्वतेजसा सूर्यं । रश्मिमन्तमिवेत्यत्र उपमा । अत्र रूपकमिति भिदा ॥ १८ ॥ उत्साहः लोकोत्तरकार्येषु स्थेयान्प्रयत्नः । महासत्त्वं महाध्यवसायं । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । द्वितीयबलशब्दश्शक्तिवचनः । "बलं रूपेस्थनि स्थौल्ये शक्तिरेतश्चमूषु च" इति वैजयन्ती ॥१९—२०॥ तीक्ष्णाः क्रूराः । शिताः निशिताः । पीतमुखाः समीचीनायसनिर्मितत्वेन पीतरेखाग्राः । उत्पलपत्राभाः उत्पलपत्राणि यथा निपात्यन्ते तथा निपातिता इत्यर्थः॥२१—२३॥ वारयामास स्ववेगेन प्रापयामासेत्यर्थः ॥२४॥ कदनं युद्धं ॥ २५ ॥ विद्युद्राशिः अशनिः ॥ २६ ॥ कूबरः युगन्धरः ॥२७–२९॥ वेगं विनिहत्य परिहृत्य

॥ १४ ॥ स० रश्मिमन्तं रश्मिवंतं । यवादिरयं ॥ स्वतेजोरश्मिमालिनं सु अत्यन्तंअतेजसोरश्मिमालिनोयेन भवन्तिसतथा ॥१८॥ ति० दिक्षुसर्वास्ववस्थिताःद्राक्तत्समीपमागन्तुंचकिताइतिभावः ॥ २० ॥ ती० पीतमुखाः शत्रुशोणितरञ्जिताइत्यर्थः । उत्पलपत्राभाः तद्वर्णाः ॥ ती० पीतमुखाः फलभागेस्वर्णरूषिताः । उत्पलपत्राभाएव नतुतत्पीडार्हाइत्यर्थः ॥ स० पीतमुखाः पायितपानीयमुखाः ॥ २१ ॥ ति० ताभ्यां कर्तृभ्यां । मुद्गराभ्यां करणाभ्यांहतः ॥ २९ ॥ इतिषट्चत्वारिंशःसर्गः ॥ ४६ ॥

[ पा० ] १ छ. ज. रथैश्चमत्तनागैश्च. ङ. च. झ. ञ. ट. रथैर्मत्तैश्चनागैश्च. २ क. ङ.—ञ. निशितैः. ३ क. पेतुस्सहस्रशः. ४ क. ग. ङ. झ. ट. शतैर्नैकैः. ५ घ. हन्यमानस्ततः. ६ क. घ. ङ. च. झ. ञ. ट. निनदं. ७ क. ख. ततस्तं. ८ ङ.—ट. तौजातरोषौ. ९ क. ङ.—ट. निहत्यसमहाबलः. १० ङ.—ट. सुपर्णइववेगितः. ११ ङ. च. छ. झ. ट. अभिगम्य. १२ ङ.—ञ. बली. १३ ग. ङ.—ट. मवस्थितौ. १४ इदमर्धं ङ.—ट. पाठेपुदृश्यते.

ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु ॥ बलं तदवशेषं च नाशयामास वानरः ॥ ३७ ॥
अश्वैरश्वान्गजैर्नागान्योधैर्योधान्रथै रथान् ॥ स कपिर्नाशयामास सहस्राक्ष इवासुरान् ॥ ३८ ॥
हतैर्नागैश्च तुरगैर्भग्नाक्षैश्च महारथैः ॥ हतैश्च राक्षसैर्भूमी रुद्धमार्गा समन्ततः ॥ ३९ ॥
ततः कपिस्तान्ध्वजिनीपतीन्रणे निहत्य वीरान्सबलान्सवाहनान् ॥
समीक्ष्य वीरः परिगृह्य तोरणं कृतक्षणः काल इव प्रजाक्षये ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

हनुमता रावणसुतस्याक्षकुमारस्यक्षपणम् ॥ १ ॥

सेनापतीन्पञ्च स तु प्रमापितान्हनूमता सानुचरान्सवाहनान् ॥
समीक्ष्य राजा समरोद्धतोन्मुखं कुमारमक्षं प्रसमैक्षताग्रतः ॥ १ ॥
स तस्य दृष्ट्यर्पणसंप्रचोदितः प्रतापवान्काञ्चनचित्रकार्मुकः ॥
समुत्पपाताथ सदस्युदीरितो द्विजातिमुख्यैर्हविषेव पावकः ॥ २ ॥
ततो महद्बालदिवाकरप्रभं प्रतप्तजाम्बूनदजालसंततम् ॥
रथं समास्थाय ययौ स वीर्यवान्महाहरिं तं प्रति नैर्ऋतर्षभः ॥ ३ ॥
ततस्तपःसंग्रहसञ्चयार्जितं प्रतप्तजाम्बूनदजालशोभितम् ॥
पताकिनं रत्नविभूषितध्वजं मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४ ॥
सुरासुराधृष्यमसङ्गचारिणं रविप्रभं व्योमचरं समाहितम् ॥
सतूणमष्टासिनिबद्धबन्धुरं यथाक्रमावेशितशक्तितोमरम् ॥ ५ ॥

---

॥३०—३९॥ ध्वजिनीपतीन् सेनापतीन् । कृतक्षणः दत्तावसरः । अभूदिति शेषः ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

समीक्ष्य विज्ञाय ॥ १ ॥ द्विजातिमुख्यैः हविषा उदीरितः अभिवर्धितः पावक इवेत्यन्वयः ॥ २–३ ॥ ततो महदित्यनेनोक्तं विस्तरेणाह—ततस्तपस्संग्रहेत्यादिना ॥ तपस्संग्रहसञ्चयार्जितं तपोनुष्ठानसमूहसंपादितं ॥ ४ ॥ समाहितं सज्जीकृतं । अष्टासिनिबद्धबन्धुरं अष्टासिभिर्निबद्धं अतएव बन्धुरं सुन्दरं । "बन्धुरं सुन्दरे नम्रे" इति विश्वः । यद्वा अष्टासिभिर्निबद्धं बन्धुरं यस्य स तथा । बन्धुरं फलकासंघाट इत्याहुः । अन्ये घण्टा इत्यप्याहुः । तदानीं अष्टासिश्चासौ निबद्धबन्धुरश्चेतिं समासः । यथाक्रमावेशितशक्तितोमरं पङ्क्तितया स्थापितशक्तितोमरं

---

ति० प्रमापितान् मारितान् । समरोद्धतोन्मुखं समरोद्धतश्चासौसमरायोन्मुखश्चतं । आक्षं समक्षमवस्थितं । अक्षाख्यंकुमारं निशाम्य दृष्ट्वा । प्रसमैक्षत दृष्टयायुद्धार्थमाज्ञापयामासेत्यर्थः ॥ स० समरोद्धतोन्मुखं समरोद्धताः वैरिणः तदुन्मुखः तदभिमुखः तं । आक्षं अक्षाणां नेत्राणामिन्द्रियाणामयं विषयआक्षः तं। नेत्रविषयमितियावत् ॥ १ ॥ ति० सदसि यज्ञशालायां ॥ २ ॥ ति० महान्सइत्यन्वयः ॥ ३ ॥ ति० अष्टसुदिक्षु असिभिःसहनिबद्धाबन्धुरारथफलकायस्मिंस्तं ॥ शि० असङ्गचारिणं निरालंब-

[ पा० ] १ घ. हयैर्नागैश्चमत्तैश्च. २ ङ.—ट. तथैववीरः. क.—घ. तदेववीरः. ३ ङ.—ट. निशम्य. ४ झ. प्रसमैक्षताक्षं. ५ क. समुत्पपाताशु. ६ ग. ङ.—ट. महान्बाल. ७ ङ.—ट. जालचित्रितं. ८ ङ—ट. तडित्प्रभं.

विराजमानं [1]प्रतिपूर्णवस्तुना सहेमदाम्ना शशिसूर्यवर्चसा ॥
दिवाकराभं रथमास्थितस्ततः स निर्जगामामरतुल्यविक्रमः ॥ ६ ॥
स पूरयन्खं च महीं च साचलां तुरङ्गमातङ्गमहारथस्वनैः ॥
बलैः समेतैः स हि तोरणस्थितं समर्थमासीनमुपागमत्कपिम् ॥ ७ ॥
स तं समासाद्य हरिं हरीक्षणो युगान्तकालाग्निमिव प्रजाक्षये ॥
अवस्थितं विस्मित[2]जातसंभ्रमः समैक्षताक्षो बहुमानचक्षुषा ॥ ८ ॥
स तस्य वेगं च कपेर्महात्मनः पराक्रमं चारिषु [3]पार्थिवात्मजः ॥
[4]विधारयन्स्वं च बलं [5]महाबलो [6]हिमक्षये सूर्य इवाभिवर्धते ॥ ९ ॥
स जातमन्युः प्रसमीक्ष्य विक्रमं स्थिरं स्थितः संयति दुर्निवारणम् ॥
समाहितात्मा हनुमन्तमाहवे प्रचोदयामास शरैस्त्रिभिः शितैः ॥ १० ॥
ततः कपिं तं प्रसमीक्ष्य गर्वितं जितश्रमं शत्रु[7]पराजयोर्जितम् ॥
अवैक्षताक्षः समुदीर्णमानसः स बाणपाणिः प्रगृहीतकार्मुकः ॥ ११ ॥
स हेमनिष्काङ्गदचारुकुण्डलः समाससार[8]ाशुपराक्रमः कपिम् ॥
तयोर्बभूवाप्रतिमः समागमः सुरासुराणामपि संभ्रमप्रदः ॥ १२ ॥
ररास भूमिर्न ततापभानुमान्ववौ न वायुः प्रचचाल चाचलः ॥
कपेः कुमारस्य च वीक्ष्य संयुगं ननाद च द्यौरुदधिश्च चुक्षुभे ॥ १३ ॥
ततः स वीरः सुमुखान्पतत्रिणः सुवर्णपुङ्खान्सविषानिवोरगान् ॥
समाधिसंयोगविमोक्षतत्त्वविच्छरानथ त्रीन्कपि[9]मूर्ध्न्यपातयत् ॥ १४ ॥
स तैः शरैर्मूर्ध्नि समं [10]निपातितैः क्षरन्नसृग्दिग्धवि[11]वृत्तलोचनः ॥
नवोदितादित्यनिभः शरांशुमान्व्यराजतादित्य इवांशुमालिकः ॥ १५ ॥

॥ ५ ॥ प्रतिपूर्णवस्तुना समग्रोपकरणेन । शरधनुःकवचादीन्युपकरणानि । प्रतिपूर्णमस्तिनेति पाठे अस्तिना धनेनेत्यर्थः । हेमदाम्ना हेममयाश्वादिबन्धनरज्जुना । शशिसूर्यवर्चसा । दामसु किञ्चित्सितवर्णं किञ्चित्सूर्यवत्पीतवर्णमित्यर्थः । प्रतिपूर्णवस्तुना शशिसूर्यवर्चसा हेमदाम्ना च विराजमानमित्यन्वयः । यद्वा क्वचिच्छशिवर्चसा क्वचित्सूर्यवर्चसा च विराजमानमित्यन्वयः । वितानादिषु शशिवर्चसा हेममयरथाङ्गेषु सूर्यवर्चसा । दिवाकराभमित्याकाशचारित्वे दृष्टान्तः । अतो न रविप्रभमित्यनेन पुनरुक्तिः । तच्छब्दद्वयं च पूर्वानुस्मरणार्थं ॥ ६ ॥ सः अक्षः । हिः प्रसिद्धौ ॥ ७ ॥ हरीक्षणः सिंहप्रेक्षणः । प्रजाक्षये अवस्थितं प्राणिनाशे प्रवृत्तं । विस्मितश्चासौ जातसंभ्रमश्च विस्मितजातसंभ्रमः ॥ ८ ॥ विधारयन् निर्धारयन् । विचारयन्निति च पाठः ॥ ९—१२ ॥ न ततापभानुमान् । सूर्योदयः पूर्वं सूचितः सः न ततापेत्युच्यते ॥ १३ ॥ समाधिसंयोगविमोक्षतत्त्ववित् समाधिः लक्ष्यवेदनं संयोगः शरसंधानं विमोक्षः तद्विसर्गः तेषां तत्त्ववित् यथार्थवित् ॥१४॥ रक्तसिक्तत्वे दृष्टान्तो नवोदितेति । शराचितत्वे

गमनशीलं । अतएव व्योमचरं । समाहितं सम्यक्संस्थापितं ॥ ५ ॥ ति० विस्मितंचतंजातसंभ्रमंच । बालोऽयंमांयोद्धुमिच्छतीतिविस्मयः । रावणपुत्रत्वाच्च तत्रजातादरत्वं ॥ ८ ॥ ति० निष्कं उरोभूषणं । आशुपराक्रमः तीक्ष्णपौरुषइतियावत् । समागमः युद्धं । संभ्रमप्रदः भयप्रदः ॥ १२ ॥ ती० अक्षयुद्धसमयेसूर्योदयाभावाद्देशान्तरस्थोपिसूर्यः एतज्ज्ञात्वानततापेतिभावः ॥ ति० भूमिः भूमिस्थप्राणिजातं । ररास । वीर्यप्रवृत्तंसंयुगंवीक्ष्येतिशेषः ॥१३॥ ति० अताडयत् अपातयत् ॥१४॥ ति० असृग्दिग्धश्चा-

[ पा० ] १ क. ख. परिपूर्णवस्तुना. २ क. ङ.—ट. जातसंभ्रमं. ३ ङ. च. झ. ञ. ट. रावणात्मजः. ४ क. ख. ङ.—ट. विचारयन्. ५ ग. बलोत्कटो. ६ ख. ङ.—ट. युगक्षये. ७ ग.—ट. पराजयोचितं. क. पराजयोद्यतं. ८ दाशुनिशाचरः. ९ ङ. झ. ञ. ट. मूर्ध्न्यताडयत्. १० झ. निपातैः. ११ झ. विवृत्तनेत्रः.

ततः स पिङ्गाधिपमन्त्रिसत्तमः समीक्ष्य तं राजवरात्मजं रणे ॥
उदग्रचित्रायुधचित्रकार्मुकं जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६ ॥
स मन्दराग्रस्थ इवांशुमालिको विवृद्धकोपो बलवीर्यसंयुतः[1] ॥
कुमारमक्षं सबलं सवाहनं ददाह नेत्राग्निमरीचिभिस्तदा[2] ॥ १७ ॥
ततः स बाणासनचित्रकार्मुकः[3] शरप्रवर्षो युधि राक्षसांबुदः ॥
शरान्मुमोचाशु हरीश्वराचले बलाहको वृष्टिमिवाचलोत्तमे ॥ १८ ॥
ततः कपिस्तं रणचण्डविक्रमं विवृद्धतेजोबलवीर्यसंयुतम्[4] ॥
कुमारमक्षं प्रसमीक्ष्य संयुगे ननाद हर्षाद्घनतुल्यविक्रमः[6] ॥ १९ ॥
स बालभावाद्युधि वीर्यदर्पितः प्रवृद्धमन्युः क्षतजोपमेक्षणः ॥
समाससादाप्रतिमं कपिं रणे गजो महाकूपमिवावृतं तृणैः ॥ २० ॥
स तेन बाणैः प्रसभं निपातितैश्चकार नादं घननादनिस्स्वनः ॥
समुत्पपाताशु[7] नभः स मारुतिर्भुजोरुविक्षेपणघोरदर्शनः ॥ २१ ॥
समुत्पतन्तं समभिद्रवद्बली स राक्षसानां प्रवरः प्रतापवान् ॥
रथी रथिश्रेष्ठतमः किरञ्शरैः पयोधरः शैलमिवाश्मवृष्टिभिः ॥ २२ ॥
स ताञ्शरांस्तस्य हरिर्विमोक्षयंश्चचार वीरः पथि वायुसेविते ॥
शरान्तरे मारुतवद्विनिष्पतन्मनोजवः संयति चण्डविक्रमः[9] ॥ २३ ॥
तमात्तबाणासनमाहवोन्मुखं खमास्तृणन्तं [10]विशिखैः शरोत्तमैः[11] ॥
अवैक्षताक्षं बहुमानचक्षुषा जगाम चिन्तां च स मारुतात्मजः ॥ २४ ॥
ततः शरैर्भिन्नभुजान्तरः कपिः कुमारवीरेण[12] महात्मना नदन् ॥
महाभुजः कर्मविशेषतत्त्वविद्विचिन्तयामास रणे पराक्रमम् ॥ २५ ॥
अबालवद्बालदिवाकरप्रभः करोत्ययं कर्म महन्महाबलः ॥
न चास्य सर्वाहवकर्मशोभिनः[13] प्रमापणे मे मतिरत्र जायते ॥ २६ ॥

दृष्टान्तः आदित्यइवांशुमालिक इति ॥ १५ ॥ आपूर्यत व्यवर्धत ॥ १६ ॥ मन्दराग्रस्थः मन्दरो नाम भूमध्यपर्वतः । तदग्रे मध्याह्ने वर्तत इत्यौप्रयोक्तिः ॥ १७ ॥ बाणासनचित्रकार्मुकः बाणाः अस्यन्ते क्षिप्यन्तेनेनेति बाणासनः बाणविमोक्षकचित्रकार्मुक इत्यर्थः ॥ १८—२२ ॥ विमोक्षयन् शरीरे असंयोजयन् । लाघवातिशयेनेति भावः ॥ २३ ॥ आस्तृणन्तं आच्छादयन्तं । विशिखैः विविधशिखैः । चिन्तां जगाम कथमेतादृशमेनं वधिष्यामीत्येवं ॥ २४ ॥ इदमेवोपपादयति ततश्शरै-

सौविवृत्तनेत्रश्च । विवृत्तलोचनइतिपाठे अवसरोचितचक्षुरित्यर्थः । नवोदितादित्यसंनिभः रक्तवर्णइत्यर्थः । शरांशुमान् स्वमस्तकस्थशररूपांशुमान् । अंशुमालाभृत्सूर्यइव व्यराजत ॥ १५ ॥ **रामानु०** मन्दराग्रस्थः मन्दरोनामसालग्रामपर्वतोत्तरभागेभारतखण्डमध्येवर्तमानःकश्चनपर्वतः । तदग्रस्थः । अनेनोत्तरायणेमध्याह्नगतत्वमुक्तंभवति ॥ १७ ॥ **रामानु०** बाणासनचित्रकार्मुकः बाणानामसनं बाणान्क्षिपत् चित्रंचकार्मुकंयस्यसतथोक्तः । बाणासनचक्रकार्मुकइतिपाठे बाणान्क्षिपत् चक्राकारंकार्मुकं यस्यसः ॥ **ति०** बाणासनमेवशक्रकार्मुकंयस्यसः ॥ १८ ॥ **ति०** चिन्ताप्रकारः **अबालवदिति०** । सर्वाहवकर्मशालिन-

**[ पा० ]** १ ङ.—ट. संवृतः. २ क. मरीचिभिःकपिः. ३ ख.—ट. शक्रकार्मुकः. ४ ख. ज.—ट. प्रवृद्ध. ५ क.—ट. सायकैः. ६ क.—ट. तुल्यनिस्वनः. ७ ङ. छ. झ. ट. समुत्सहेनाशुनभस्समारुजन्. ८ ख. घ. स्तस्यविमोचयन्कपिश्चचार. ९ ख. ङ.—ट. भीमविक्रमः क. घ. चेन्द्रविक्रमः. १० ङ.—ट. विविधैः. ११ क. ख. घ. शरोत्करैः. १२ क. ख. ग. ङ.—ट. कुमारवर्येण. १३ ङ.—ट. कर्मशालिनः.

अयं महात्मा च महांश्च वीर्यतः समाहितश्चातिसहश्च संयुगे ॥
असंशयं कर्मगुणोदयादयं सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७ ॥
पराक्रमोत्साहविवृद्धमानसः समीक्षते मां [1]प्रमुखागतः स्थितः ॥
पराक्रमो ह्यस्य मनांसि कम्पयेत्सुरासुराणामपि [2]शीघ्रगामिनः ॥ २८ ॥
न खल्वयं नाभिभवेदुपेक्षितः पराक्रमो ह्यस्य रणे विवर्धते ॥
[3]प्रमापणं त्वेव ममास्य रोचते न [4]वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥ २९ ॥
इति प्रवेगं तु परस्य तर्कयन्स्वकर्मयोगं च विधाय वीर्यवान् ॥
चकार वेगं तु महाबलस्तदा मतिं च चक्रेऽस्य वधे महाकपिः ॥ ३० ॥
स तस्य [5]तानष्टहयान्महाजवान्समाहितान्भारसहान्विवर्तने ॥
जघान वीरः पथि वायुसेविते तलप्रहारैः पवनात्मजः कपिः ॥ ३१ ॥
ततस्तलेनाभिहतो महारथः स तस्य पिङ्गाधिकमन्त्रिनिर्जितः ॥
[6]प्रभग्ननीडः परिमुक्तकूबरः पपात भूमौ हतवाजिरम्बरात् ॥ ३२ ॥
स तं परित्यज्य महारथो रथं सकार्मुकः खड्गधरः खमुत्पतन् ॥
तपोभियोगादृषिरुग्रवीर्यवान्विहाय देहं मरुतामिवालयम् ॥ ३३ ॥
ततः कपिस्तं विचरन्तमम्बरे पतत्रिराजानिलसिद्धसेविते ॥
समेत्य तं मारुततुल्यविक्रमः क्रमेण जग्राह स पादयोर्दृढम् ॥ ३४ ॥
स तं समाविध्य सहस्रशः कपिर्महोरगं गृह्य इवाण्डजेश्वरः ॥
मुमोच वेगात्पितृतुल्यविक्रमो महीतले संयति वानरोत्तमः ॥ ३५ ॥
स भग्नबाहूरुकटीशिरोधरः क्षरन्नसृङ्निर्मथितास्थिलोचनः ॥
[7]स भग्नसंधिः प्रविकीर्णबन्धनो हतः क्षितौ वायुसुतेन राक्षसः ॥
महाकपिर्भूमितले निपीड्य तं चकार रक्षोधिपतेर्महद्भयम् ॥ ३६ ॥
महर्षिभिश्चक्र[8]चरैर्महाव्रतैः समेत्य भूतैश्च सयक्षपन्नगैः ॥
सुरैश्च सेन्द्रैर्भृशजातविस्मयैर्हते कुमारे स कपिर्निरीक्षतः ॥ ३७ ॥

रित्यादिना ॥ २५—२६ ॥ अतिसहः अतिसोढा । कर्मगुणोदयात् युद्धकर्मोत्कर्षाभिवृद्धेः ॥२७—२९॥ परस्य शत्रोः । प्रवेगंतर्कयन् आलोचयन् । स्वकर्मयोगं विधाय युद्धक्रमं च सङ्कल्प्य । पूर्वमश्वान् हत्वा ततो रथं भङ्क्ष्यामीति निश्चित्येत्यर्थः ॥ ३० ॥ विवर्तने सव्यापसव्यभ्रमणेपि । भारसहान् रथभारसहान् ॥ ३१ ॥ तलेनाभिहतः अतएव पिङ्गाधिपमन्त्रिनिर्जितः हनुमता निर्जित इत्यर्थः । प्रभग्ननीडः प्रभग्नरथाङ्गः । कूबरः युगन्धरः । वाजिरिति इकारान्तत्वमार्षं ॥ ३२ ॥ मरुतामालयमुत्पतन् ऋषिरिव अभवदिति शेषः ॥ ३३—३४ ॥ गृह्य इवेत्यत्र गुणाभावआर्षः ॥ ३५ ॥ प्रविकीर्णबन्धनः प्रविकीर्णकक्ष्यादिबन्धनः । प्रभिन्नसंधिरितिसंधिबन्धभङ्गस्योक्तत्वात् ॥ ३६ ॥ चक्रचरैः ज्योतिश्चक्रचरैः । नभश्चक्र-

सर्वप्रकाराहवकर्मशालिनः । अत्र अस्मिन्काले । अस्यप्रमापणेमेमतिर्नजायते । प्रमापणेमारुतिरत्रजायतेइतिपाठे अयंजनइतिवत्स्वस्यैवहनुमतोमारुतिरितिनिर्देशः ॥ २६ ॥ ति० स्वकर्मयोगं स्वस्यकर्मणियोगं ज्ञानबलविशेषावस्थानलक्षणमुपायं ॥ ३० ॥ शि० विवर्तने अनेकविधमण्डलगमने । समाहितान् प्राप्तशिक्षानित्यर्थः ॥ ३१ ॥ इतिसप्तचत्वारिंशःसर्गः ॥ ४७ ॥

[ पा० ] १ ग. ङ. झ. ञ. ट. प्रमुखोग्रतः. २ ख.—ट. शीघ्रकारिणः. ३ ङ.—झ. ट. प्रमापणंह्यस्यममाद्य. ४ ख. छ. झ. घ. ङ. झ. ट. वधेतदानीं. क. च. छ. ज. वधेदुरात्मनः. ५ ङ. छ. ज. झ. ट. तानष्टवरान्महाहयान्. ६ ख. ङ. च. ट. संभग्ननीडः. ७ ङ.—ट. संभिन्नसन्धिः क. ग. प्रभिन्नसन्धिः. ८ ङ. झ. ट. चक्रचरैःसमागतैः. घ. चक्रचरैर्महाबलैः.

निहत्य तं वज्रिसुतोपमप्रभं कुमारमक्षं क्षतजोपमेक्षणम् ॥
तमेव वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

इन्द्रजिता हितोपदेशपूर्वकरावणप्रेरणया रणायहनुमन्तंप्रत्यभियानम् ॥ १ ॥ हनुमता लाघवातिशयेनेन्द्रजिद्बाणादीनांमोघीकरणे इन्द्रजिताब्रह्मास्त्रेण तद्बन्धनम् ॥ २ ॥ अस्त्रमोचनशक्तस्यापि रावणदर्शनादिप्रयोजनायास्त्रमनुवर्तमानस्यहनुमतोराक्षसैरावणसमीपप्रापणम् ॥ ३ ॥

ततः स रक्षोधिपतिर्महात्मा हनूमताऽक्षे निहते कुमारे ॥
मनः समाधाय तदेन्द्रकल्पं समादिदेशेन्द्रजितं सरोषम् ॥ १ ॥
त्वमस्त्रविच्छस्त्रविदां वरिष्ठः सुरासुराणामपि शोकदाता ॥
सुरेषु सेन्द्रेषु च दृष्टकर्मा पितामहाराधनसंचितास्त्रः ॥ २ ॥
तवास्त्रबलमासाद्य नासुरा न मरुद्गणाः ॥ न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः ॥ ३ ॥
न कश्चित्त्रिषु लोकेषु संयुगे नगतश्रमः ॥ भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ॥
देशकालविभागज्ञस्त्वमेव मतिसत्तमः ॥ ४ ॥
न तेऽस्त्यशक्यं समरेषु कर्मणा न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे ॥
न सोस्ति कश्चित्त्रिषु संग्रहेषु वै न वेद यस्तेऽस्त्रबलं बलं च ते ॥ ५ ॥
ममानुरूपं तपसो बलं च ते पराक्रमश्चास्त्रबलं च संयुगे ॥
न त्वां समासाद्य रणावमर्दे मनः श्रमं गच्छति निश्चितार्थम् ॥ ६ ॥

---

चरैर्वा ॥ ३७—३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

मनः समाधाय धैर्यं कृत्वेत्यर्थः ॥ १ ॥ अस्त्रवित् ब्रह्मास्त्रवित् । संचितास्त्रः संचितास्त्रविशेषः ॥ २ ॥ तव अस्त्रबलमासाद्य असुराः न नश्यन्तीत्यर्थः ॥ ३ ॥ त्रिषु लोकेषु तव संयुगे नगतश्रमः अप्राप्तश्रमः कश्चिन्न । "सुप्सुपा" इति समासः । सर्वेप्राप्तश्रमाइत्यर्थः । हरिहयादयोपि श्रमंप्राप्नुवन्तीत्यर्थः । मतिसत्तमः मतिश्रेष्ठइत्यर्थः ॥ ४ ॥ समरेषु कर्मणा पुरुषकारेण । ते अशक्यं नास्तीत्यर्थः । तथा मतिपूर्वमन्त्रणे विवेकपूर्वविचारे । अकार्यं अज्ञातकार्यं । ज्ञातुमशक्यं कार्यं नास्तीत्यर्थः । संग्रहेषु संगृह्यन्ते भोग्यतया स्वीक्रियन्ते भोक्तृभिरिति संग्रहाः लोकाः । तेषु त्रिष्वपि यस्तवास्त्रबलं शारीरं बलं च न वेद स नास्ति । सर्वलोकप्रख्यातशस्त्रास्त्रबलसंपन्नस्त्वमित्यर्थः ॥ ५ ॥ रणावमर्दे रणसंकटे । निश्चितार्थं निश्चितजयरूपार्थं । त्वां आसाद्य विचिन्त्य । मे मनः श्रमं न

---

स० समाधाय पुत्रशोकोपहतंमनःपुनःकार्यगौरवाद्धैर्येणैकाग्रंविधाय । इन्द्रकल्पं इन्द्रोपमंकपिंप्रति इन्द्रजितंसमादिदेश । अनेनानायासेनहनुमज्जयेसमर्थइतिभ्रमेणसमादिदेशेतिभावःसूचितोभवति । इन्द्रकल्पं इन्द्रसमसमरेकल्पो दक्षइतीन्द्रजितोविशेषणंवा । एतत्पक्षेकल्पशब्दः । प्राक्पक्षेप्रत्ययइतिविवेकः ॥ ति० मनःसमाधाय पुत्रनाशखिन्नमपिचेतोधीरतयाऽप्रकाशितभयंप्रतिष्ठाप्य ॥ १ ॥ स० सुरेश्वरंसमाश्रिताःकेप्यन्ये नशेकुरित्यन्वयः ॥ ३ ॥

[ पा० ] १ ङ. झ. ञ. ट. सुतोपमंरणे. २ क. ख. ग. ङ.—ट. तदेव. ३ ख. झ. ञ. ट. सदेवकल्पं. ४ क. ङ. ट. सरोषः. ५ क. ख. घ. ङ. ज.—ट. च्छस्त्रभृतां. ६ ङ. च. छ. झ. ञ. ट. त्वदस्त्र. ७ ङ. झ. ट. ससुरास्समरुद्गणाः. ८ ङ.—ट. देशकालप्रधानश्च.

निहताः किंकराः सर्वे जम्बुमाली च राक्षसः ॥ अमात्यपुत्रा वीराश्च पञ्च सेनाग्रयायिनः ॥ ७ ॥
बलानि सुसमृद्धानि साश्वनागरथानि च ॥ सहोदरस्ते दयितः कुमारोक्षश्च सूदितः ॥ ८ ॥
न हि तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ॥ ९ ॥

इदं हि दृष्ट्वा मतिमन्महद्बलं कपेः प्रभावं च पराक्रमं च ॥
त्वमात्मनश्चापि समीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम् ॥ १० ॥
बलावमर्दस्त्वयि सन्निकृष्टे यथागते शाम्यति शान्तशत्रौ ॥
तथा समीक्ष्यात्मबलं परं च समारभस्वास्त्रविदां वरिष्ठ ॥ ११ ॥
न वीर सेनागणशोच्यवन्ति न वज्रमादाय विशालसारम् ॥
न मारुतस्यास्य गतेः प्रमाणं न चाग्निकल्पः करणेन हन्तुम् ॥ १२ ॥

गच्छति विषादंनगच्छतीत्यर्थः ॥ ६—८ ॥ त्वयि मे यस्सारः उत्कर्षप्रत्ययः । सः तेषु नास्त्येवहीति योजना ॥ ९ ॥ इदं किङ्कराध्यक्षकुमारान्तमारकं मतिमत् प्रशस्तमतियुक्तं । बलं शारीरं । प्रभावं अन्तःशक्तिं । पराक्रमं पौरुषं ॥ १० ॥ शान्तशत्रौ शमितशत्रौ । शत्रुशमनस्वभाव इति यावत् । "वा दान्तशान्त—" इत्यादिना निपातनाण्णिलोप इडभावश्च । त्वयि संनिकृष्टे कपेरासन्ने सति । यथा बलावमर्दः सेनाक्षयः । शाम्यति । तथा आत्मबलं परं परबलं च समीक्ष्य समारभस्व । बलनाशात्पूर्वमेव शत्रुशान्तिं कुर्वित्यर्थः ॥ ११ ॥ हे वीर गणशोचि गणानां शोचयितरि । शोचतेर्ण्यन्तात्क्विप् । एकदाऽनेकप्रहर्तरीत्यर्थः । एवंभूते हनुमति निमित्ते सेनाः नावन्ति न रक्षन्ति । युगपदनेकविनाशके सेना अप्रयोजिकेत्यर्थः । अतः सेनाभिः सह मा गच्छेत्यर्थः । उपायान्तरं प्रतिषेधति—न वज्रमिति । अल्पसारं हनुमद्विषये जीर्णसारं । वज्रं वज्राख्यमायुधविशेषं । आदाय न विश । तत्समीपमिति शेषः । तत्र हेतुमाह —न मारुतस्येति । अस्य गतिप्रमाणं मारुतस्य नास्ति । मारुतादप्यतिशयितगतिप्रमाण इत्यर्थः । अतस्तरसा यया कयापि दिशा समागम्य प्रहर्तरि न वज्रं किञ्चित्करमिति भावः । यदि समीपमागमिष्यति तदा मुष्ट्यादिभिरेव निहन्यत इत्याशङ्क्याह —न चेति । अग्निकल्पो हनुमान् करणेन मुष्ट्या-

शि० ननुतर्हिंममापिवधःस्यादित्यतआह—नेति । मे ममसंबन्धीयस्सारोबलं त्वय्यस्ति सः तेषुनिहतेषुनैव । एतेनातिप्रबलत्वात्तववधोनभविष्यतीतिध्वनितं ॥ ति० यद्वा मेसारः सर्वजगज्जयसामर्थ्यं स त्वय्येव त्वत्साहाय्यनिमित्तएव । नतुतेषु नतुतत्साहाय्यनिमित्तकइत्यर्थः ॥ स० सारोबलं यस्त्वयि । स तेषुपूर्वविनाशितेषुनेतिमे मह्यंरोचतइतिवा भातीतिवा क्रमाच्चतुर्थीषष्ठीवाऽऽश्रयणीयेतिशेषोध्येयः ॥ ९ ॥ स० बलावमर्दैः अस्मदीयैस्सह त्वयिसंनिकृष्टे हनुमत्समीपंप्राप्तेसति । शान्तशत्रुः नाशिताक्षादिः शाम्यति शान्तोभवति मृतोभवतीतियावत् । तथा आत्मबलं परबलंचसमीक्ष्यारभस्व ॥ ११ ॥ स० हनुमद्बलाकर्णनदीप्तहृदयःसेनादिसत्त्वभ्रमतोनसाहसंकुर्वितिसुतंप्रति शंसति—नेति । हेवीर आरब्धान्तगामिन् । गणशः सङ्घीभूताःसेनाः न नोपयुक्ताः । तत्रहेतुश्च्यवन्तीति । स्वामिनंगमयित्वा पलायन्ते । उत्वमार्षं । विशालसारंवज्रमादायापिनप्रयोजनं । मारुतस्य हनुमतः । गतेः प्रमाणं इयत्ता । न नास्ति । करणेन सेनादिरूपेण । अग्निकल्पोऽयं नच नशक्यइतिशेषः । यद्वा नवीर नविद्यतेवीरोयस्मादन्यइतिनवीरः तत्संबुद्धिः । सेनाः गणशः अ च्यवन्ति नच्यवन्ति स्वस्थलाद्रणाङ्गणंप्रतिनोपसर्पन्ति । "अमानोनाःप्रतिषेधे" इत्यनुशिष्टं अ इत्यव्ययं । ततश्च अ च्यवन्तीतिपदद्वयं । अथवा नसेनाइत्यनेनाक्षेपोज्ञायते । अतःसमासोपपत्तिः । विशालसारंवज्रं तन्नामकायुधमादायापिन नगच्छतस्तवकृत्यं । अतद्रोचरइति भावः । यद्वा हेनवीरगणश स्वसंघसुखद सेनाउच्च्यवन्ति परिसर्पन्ति । नवच्च्यवन्ति उच्च्यवन्तीत्यत्र एकचकारद्विचकारपदयोरुच्चरणवैलक्षण्यावश्यंभावात्कथमेवंपदमितिवाच्यं । "असिद्धवदत्राभात्" इतिसूत्रमहाभाष्ये "नव्यञ्जनपरस्यैकस्यवानेकस्यवोच्चारणेश्रवणंप्रतिविशेषोस्ति" इत्युक्तेः । इदंप्रकारस्तुभाष्यदीपिकायुक्तिवाख्यायामस्मत्कृतायांविस्तरतउदश्चितस्ततोनुसंधेयः । कुतःसेनाप्रयोजनंनास्तीत्यतआह—नेति । विशालसारंवज्रमादायन नायाति । एकवचनेनएकंवज्रमादायनायाति किंतु बहुवज्रा-

[ पा० ] १ ग. ज. ञ. सेनाग्रनायकाः. ङ. झ. ट. सेनाग्रगामिनः. २ ग. मेमनसस्सारो. ३ ङ—ट. निरीक्ष्य. ४ ङ. च. छ. झ. ञ. बलावमर्दैः. ५ ङ. च. छ. झ. ञ. शान्तशत्रुः. ६ क. ग. ङ.—ञ. मारुतस्यास्तिगतिप्रमाणं.

तमेवमर्थं प्रसमीक्ष्य सम्यक्स्वकर्मसाम्याद्धि समाहितात्मा ॥
स्मरंश्च दिव्यं धनुषोऽस्त्रवीर्यं व्रजाक्षतं कर्म समारभस्व ॥ १३ ॥
न खल्वियं मतिः श्रेष्ठा यत्त्वां संप्रेषयाम्यहम् ॥
इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥ १४ ॥
नानाशस्त्रैश्च संग्रामे वैशारद्यमरिन्दम ॥ अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ १५ ॥
ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ॥
चकार भर्तारमदीनसत्त्वो रणाय वीरः प्रतिपन्नबुद्धिः ॥ १६ ॥

दिना । हन्तुं न शक्यः । अग्नितुल्ये मुष्टयादिप्रहाराप्रवृत्तेरितिभावः ॥ १२ ॥ तर्हि कथं कर्तव्यं तत्राह—तमिति ॥ तं पूर्वोक्तमर्थं एवं । सम्यक् । प्रसमीक्ष्य विचार्य । स्वकर्मसाम्यात् स्वकार्यसिद्ध्यर्थं । फलस्यापि हेतुत्वात्पञ्चमी । साम्यं समत्वं । अन्यूनातिरिक्तत्वं । समाहितात्मा एकाग्रचित्तः । दिव्यं धनुस्संबन्धि अस्त्रवीर्यं अस्त्रबलं । स्मरन् व्रज । अस्त्रबलं विना स निगृहीतुमशक्यः । तेन तन्मन्त्रं स्मरन्नेव गच्छेतिभावः ॥ १३ ॥ अहं त्वां संप्रेषयामीति यत् इयं मतिः न श्रेष्ठा खलु । नोचितेत्यर्थः । इयं मतिः त्वत्प्रेषणविषया मतिः । राजधर्माणां राजनीतिस्वरूपधर्माणां । क्षत्रस्य तदनुष्ठातुः क्षत्रियस्य च मता उचिता । यद्यपि बालस्य प्रेषणमनुचितं तथापि स्वीयेषु सत्सु प्रधानगमनं नीतिशास्त्रविरुद्धमिति त्वां प्रेषयामीति भावः ॥ १४ ॥ नानाशस्त्रैः वैशारद्यं प्रहरणसामर्थ्यं । अवश्यं बोद्धव्यं स्मर्तव्यमित्यर्थः । रणे विजयश्च काम्यः प्रार्थनीयः । जयार्थं सर्वाण्यस्त्राणि स्मर्तव्यानीत्यर्थः ॥ १५ ॥ दक्षसुतप्रभावः दक्षसुता

नादायायातो वासवापेक्षयायमतिशयितबलइत्यवलेपोनकार्यइतिभावः । यथोक्तंसंग्रहे—" नन्वेकवज्रोरिपुमेतिवज्रीदशास्यघोरानखनामवज्राः " इति । योमारुतः अग्निकल्पः अग्निसदृशः । आवम्येनन । " अग्निर्वैदेवानामवमः " इतिश्रुतेः । अतः करणेन कस्य आत्मनः । रणेन युद्धेन अस्मज्जातियुद्धेन । मायामयेनेतियावत् । यद्वा कशब्दःकुत्सितवाची । कपटेत्यत्रकापथ्यंकुत्सितपथवत्त्वंचविवक्ष्यतइतिश्लेषकविसंप्रदायात् । केनकुत्सितेनरणेनहन्तुंन नहन्तुंयोग्यइत्यर्थः । केनापिकरणेनहन्तुंनशक्यइति । अलसारं पर्याप्तबलं । वज्रमिव वज्रंदृढंहनुमन्तं । आदायविश लङ्कामितिशेषः । हेअलस न्यायमार्गेणयुद्धंकर्तुमसमर्थ । अरं अलं अत्यन्तं । रलयोरभेदात् । वर्जनात् वैरिवर्जनाद्वज्रोहरिः तद्वान् । अर्शआद्यच् । तंहनुमन्तमादायेतिपूर्ववत् । यत्तुनागोजिभट्टेनतत्रावतेस्त्रायतिसमानार्थत्वेनपञ्चमीप्राप्तौसप्तमीत्वार्षी । अलतेर्धातोःपर्याप्त्यर्थत्वेनपर्याप्तसारमितिव्याख्यातुंयोग्यं । कुण्ठेत्यर्थस्यततोऽलाभादितितीर्थोपरिसाहसंकृतं तत्तु प्रथमपक्षेतदुक्त्यैव द्वितीयपक्षे कुण्ठधारमित्युक्त्यैवनयुक्तं । तथाहि । शब्देन्दुशेखरे " ततश्चसंबन्धसामान्येषष्ठ्यैवसमासः । भीत्रार्थानामिति हेतुत्वप्रकारकबोधेतृतीयाबाधनार्थंविभक्तिप्रकरणे नकृतं । कारकत्वप्रयुक्तकार्यानापत्तेरितिभावः । किंचहेतुत्वाविवक्षायांसंबन्धित्वेनविवक्षयाषष्ठीसूत्रारंभेपिबोध्या । अभ्युच्चयेनाहेत्यादि" । क्तिचेत्यादाविवगणशोचीतिनिमित्तसप्तम्युपपत्तेः । मारुतस्येति । किंचिद्भूतमित्युक्तिस्तु तद्बलासहिष्णुतयेतिज्ञेयं ॥ १२ ॥ **ति०** स्वकर्मसाम्यात् स्वेनैवकर्मणःप्रकृतकार्यस्यसाम्यात्सिद्धेःसंपादनीयत्वात्त्वं समाहितात्मा समाहितचित्तोभूत्वा अस्यविषये दिव्यं धनुषोवीर्यं दिव्यास्त्रमोक्षसामर्थ्यंस्मरन् निश्चिन्वन्व्रज गच्छ ॥ **स०** एवं एवंविधं तंहनुमन्तं अर्थं त्वत्प्रयोजनंचप्रसमीक्ष्य स्वकर्मसाम्यात् स्वव्यापारानुगुण्यात् । समाहितात्मा अस्यहनुमतः अस्यधनुषोवीर्यंचस्मरन् व्रज । तेकर्म व्यापारः अक्षतं फलपर्यवसायियथास्यात्तथासमारभस्व ॥ १३ ॥ **स०** मतिश्रेष्ठ बुद्ध्यावरिष्ठ । यदित्यव्ययंतृतीयार्थे । ययामत्या त्वांप्रेषयिष्यामिइयंमतिर्नेत्यर्थः । अथवासंप्रेषयिष्यामीतियत् इयंप्रेरणा न नोचितेत्यर्थः । इयंप्रेरणविषयामतिः राज्ञांधर्माः राजधर्माःएषांसन्तीतिराजधर्माः तेषामस्माकं । क्षत्रियस्यचमता उचिता नान्येषामितिभावः । अतोनातिप्रसक्तिः । एतेन स्वस्यक्षत्रियत्वाभावेपिक्षत्रधर्मानुष्ठानात्पुत्रप्रेषणंयुक्तमितिसूचयति ॥ १४ ॥ अथराज्ञःक्षत्रियस्यचकृत्यमाह—**नानेति** । नानाशास्त्रेषु धर्मार्थनीत्यादिशास्त्रेषु संग्रामेच वैशारद्यं संपाद्यमितिशेषः । यस्यरणेविजयःकाम्योभवति तेनोक्तं नानाशास्त्रंअवश्यंबोद्धव्यमेवेत्यर्थः । यद्वा परस्यनानाशास्त्रेषुयद्वैशारद्यमस्ति तद्योद्धावश्यमेवबोद्धव्यं । बुद्ध्वापिरणेस्वस्यविजयःप्रार्थ्यएव । अहंजेष्याम्येवेतिबुद्ध्यायुद्धमारभ्यमेव । नतुतादृशशत्रोरपिनिवर्तितव्यमित्यर्थः । केचित्तु नानाशस्त्रैरितियोद्धव्यमितिचपठित्वा नानाशस्त्रकरणकसंग्रामेवैशारद्यंसामर्थ्यंतवास्ति अतस्त्वयाऽवश्यंयोद्धव्यमेव रणेजयश्चप्रार्थनीयएवेतिव्याचक्षते ॥ १५ ॥ **स०** दक्षःसुतोयेषांप्रचेतसांब्रह्मणइतिवा तत्प्रभावः तत्स-

[ पा० ] १ ख. सामर्थ्यसमीहितात्मा. २ ख. घ. ङ. च. ज.—ट. धनुषोस्त्रवीर्यं. ३ झ.—ठ. मतिश्रेष्ठ. ४ ङ. झ. ञ. ट. नानाशास्त्रेषु. ५ ख. च. छ. योद्धव्यं. ६ ङ. झ. ट. मतित्वरेण.

ततस्तैः खगणैरिष्टैरिन्द्रजित्प्रतिकूजितः ॥ युद्धोद्धतः कृतोत्साहः संग्रामं प्रत्यपद्यत ॥ १७ ॥
श्रीमान्पद्मपलाशाक्षो राक्षसाधिपतेः सुतः ॥ निर्जगाम महातेजाः समुद्र इव पर्वसु ॥ १८ ॥
स पक्षिराजोपमतुल्यवेगैर्व्यालैश्चतुर्भिः सिततीक्ष्णदंष्ट्रैः ॥
रथं समायुक्तमसङ्गवेगं समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १९ ॥
स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः ॥ रथेनाभिययौ क्षिप्रं हनूमान्यत्र सोऽभवत् ॥ २० ॥
स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ॥ निशम्य हरिवीरोऽसौ संप्रहृष्टतरोऽभवत् ॥ २१ ॥
सुमहच्चापमादाय शितशल्यांश्च सायकान् ॥ हनुमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २२ ॥
तस्मिंस्ततः संयति जातहर्षे रणाय निर्गच्छति बाणपाणौ ॥
दिशश्च सर्वाः कलुषा बभूवुर्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २३ ॥
समागतास्तत्र तु नागयक्षा महर्षयश्चक्रचराश्च सिद्धाः ॥
नभः समावृत्य च पक्षिसङ्घा विनेदुरुच्चैः परमप्रहृष्टाः ॥ २४ ॥
आयान्तं सरथं दृष्ट्वा तूर्णमिन्द्रजितं कपिः ॥ विननाद महानादं व्यवर्धत च वेगवान् ॥ २५ ॥
इन्द्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः ॥ धनुर्विस्फारयामास तडिदूर्जितनिस्स्वनम् ॥ २६ ॥
ततः समेतावतितीक्ष्णवेगौ महाबलौ तौ रणनिर्विशङ्कौ ॥
कपिश्च रक्षोधिपतेश्च पुत्रः सुरासुरेन्द्राविव बद्धवैरौ ॥ २७ ॥
स तस्य वीरस्य महारथस्य धनुष्मतः संयति संमतस्य ॥
शरप्रवेगं व्यहनत्प्रवृद्धश्चचार मार्गे पितुरप्रमेये ॥ २८ ॥
ततः शरानायततीक्ष्णशल्यान्सुपत्रिणः काञ्चनचित्रपुङ्खान् ॥
मुमोच वीरः परवीरहन्ता सुसन्नतान्वज्रनिपातवेगान् ॥ २९ ॥
ततस्तु तत्स्यन्दननिस्स्वनं च मृदङ्गभेरीपटहस्वनं च ॥
विकृष्यमाणस्य च कार्मुकस्य निशम्य घोषं पुनरुत्पपात ॥ ३० ॥

देवाः । तथोक्तं विष्णुपुराणे— "मनसा त्वेव भूतानि पूर्वं दक्षोऽसृजत्तथा । देवानृषीन्सगन्धर्वानुरगान्पक्षिणस्तथा" इति ॥ १६ ॥ युद्धोद्धतः कृतोत्साह इति पाठः ॥ १७-१८ ॥ पक्षिराजोपमतुल्यवेगैः पक्षिराजोपमैः अन्योन्यतुल्यवेगैश्च । व्यालैः हिंस्रपशुभिः । सिंहैरिति यावत् । सिंहाश्च रक्षसां वाहनानि भवन्ति । "सर्पहिंस्रपशू व्यालौ" इत्यमरः ॥ १९—२० ॥ ज्यास्वनमित्यत्र ज्या इति लुप्तषष्ठीविभक्तिकं पृथक्पदं । कार्मुकस्येत्यत्र स्वनमिति वा अध्याहारः ॥ २१—२२ ॥ संयति युद्धे । जातहर्षे जातोत्साहे ॥ २३ ॥ चक्रचराः सञ्चारिणः ॥ २४—२५ ॥ तडिदूर्जितनिस्स्वनं । अत्र तडिच्छब्देन तत्सङ्घातोऽशनिरुच्यते । विद्युत्सङ्घातनिस्स्वनमिति पूर्वमुक्तत्वात् । अशनिवद्दृढनिस्स्वनमित्यर्थः ॥ २६ ॥ सुरासुरेन्द्राविव समेतावित्यन्वयः ॥ २७ ॥ शरप्रवेगं व्यहनत् चचार चेत्यन्वयः ॥ २८—३० ॥

मानपराक्रमः । दक्षसुतानांनारदेननाशितत्वादेवमेवार्थोबोध्यः ॥ १६ ॥ स० इन्द्रकल्पः इन्द्रादपिसमर्थः ॥ १९ ॥ ति० तडिदूर्जितनिस्स्वनं तडिन्निभमूर्जितस्वनंच ॥ २६ ॥ रामानु० सुपत्रिणः पत्रिणः प्रशस्तपत्राः । शोभनाश्चतेपत्रिणश्चेतिविग्रहः

[ पा० ] १ ङ. झ. ट. विशालाक्षो. २ घ. ङ. झ. ट. पर्वणि. ३ क. ख. पक्षिराजानिलतुल्य. ४ ङ. झ. ट. सतुतीक्ष्ण. ५ ङ. च. झ. ट. मसह्यवेगः. ६ क. विशारदः. ७ ङ. झ. ट. इन्द्रजिच्चापमादाय. ८ ग. च. छ. ज. ञ. ट. मभिप्रेक्ष्य. ९ क. विविधाः. १० क. घ. स्त्रस. ११ ङ. झ. ट. ननादच. घ. ननादसुमहावेगं. १२ ङ. झ. ट. माश्रितः. १३ ग. ङ. झ. ट. रप्रमेयः. १४ ग. ज. ञ. तीक्ष्णवेगान्. १५ क.—च. ज.—ट. सुसंततान्. १६ ङ.—ट. वज्रसमानवेगान्. १७ क. ख. घ. च. छ. ज. ञ. सतस्य. १८ क. सशङ्खभेरी.

शराणामन्तरेष्वाशु व्यवर्तत महाकपिः ॥ हरिस्तस्याभिलक्ष्यस्य मोघयँल्लक्ष्यसंग्रहम् ॥ ३१ ॥
शराणामग्रतस्तस्य पुनः समभिवर्तत ॥ प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३२ ॥
तावुभौ वेगसंपन्नौ रणकर्मविशारदौ ॥ सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३३ ॥
हनूमतो वेद न राक्षसोन्तरं न मारुतिस्तस्य महात्मनोन्तरम् ॥
परस्परं निर्विषहौ बभूवतुः समेत्य तौ देवसमानविक्रमौ ॥ ३४ ॥
ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च संपतत्सु ॥
जगाम चिन्तां महतीं महात्मा समाधिसंयोगसमाहितात्मा ॥ ३५ ॥
ततो मतिं राक्षसराजसूनुश्चकार तस्मिन्हरिवीरमुख्ये ॥
अवध्यतां तस्य कपेः समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ॥ ३६ ॥
ततः पैतामहं वीरः सोस्त्रमस्त्रविदां वरः ॥ संदधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३७ ॥
अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् ॥ निजग्राह महाबाहुर्मारुतात्मजमिन्द्रजित् ॥ ३८ ॥
तेन बद्धस्ततोस्त्रेण राक्षसेन स वानरः ॥ अभवन्निर्विचेष्टश्च पपात च महीतले ॥ ३९ ॥
ततोथ बुद्ध्वा स तदस्त्रबन्धं प्रभोः प्रभावाद्विगतात्मवेगः ॥
पितामहानुग्रहमात्मनश्च विचिन्तयामास हरिप्रवीरः ॥ ४० ॥
ततः स्वायम्भुवैर्मन्त्रैर्ब्रह्मास्त्रमभिमन्त्रितम् ॥ हनूमांश्चिन्तयामास वरदानं पितामहात् ॥ ४१ ॥
नँ मेऽस्य बन्धस्य च शक्तिरस्ति विमोक्षणे लोकगुरोः प्रभावात् ॥
ईत्येव मत्वा विहितोस्त्रबन्धो मयाऽऽत्मयोनेरनुवर्तितव्यः ॥ ४२ ॥
स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च ॥
विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म ॥ ४३ ॥
अस्त्रेणापि हि बद्धस्य भयं मम न जायते ॥ पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥ ४४ ॥

---

अभिलक्ष्यस्य लक्ष्यवेधने प्रसिद्धस्य । लक्ष्यसंग्रहं लक्ष्यसंग्रहणं लक्ष्यविषयदृष्टिमिति यावत् । मोघयन् वितथयन् ॥३१॥ समभिवर्तत समभ्यवर्तत उत्पपात चेत्यन्वयः ॥ ३२ ॥ मनोग्राहि मनआकर्षकं ॥ ३३ ॥ अन्तरं छिद्रं ॥ ३४ ॥ अमोघेषु शरेषु संपतत्स्वपि लक्ष्ये लक्ष्यभूते हनुमति । विहन्यमाने स्वयं तेभ्यो विमुच्यमाने सति । हन्तेर्गत्यर्थात्कर्मकर्तरि लटश्शानजादेशः। समाधिसंयोगसमाहितात्मा सम्यगाधीयत इति समाधिः लक्ष्यं तस्मिन् संयोगे शरसंधाने समाहितात्मा अप्रमत्तचित्तः । स महात्मा इन्द्रजित् । महतीं चिन्तां जगाम ॥ ३५ ॥ अवध्यतां तस्य कपेस्समीक्ष्य निग्रहार्थं कथं निगच्छेत् नीचतां गच्छेदिति मतिं चकार ॥ ३६—३७ ॥ निजग्राह बबन्ध ॥ ३८—४० ॥ ब्रह्मास्त्रमभिमन्त्रितं । विज्ञायेति शेषः ॥ ४१ ॥ लोकगुरोः प्रभावात् अस्य बन्धस्य मोक्षणे मे शक्तिर्नास्तीत्येवं मत्वा एवं विहितः इन्द्रजिता अनेन प्रकारेण कृतः । आत्मयोनेरस्त्रबन्धः मया अनुवर्तितव्य इत्यन्वयः ॥ ४२ ॥ पितामहानुग्रहं विमोक्षहेतुभूतमनुग्रहं ॥ ४३ ॥ स्वस्यादित्यग्रासानन्तरं पितामहमहेन्द्राभ्यामनिलेन च रक्षितत्वान्न

---

॥ ३९ ॥ शि० शरेषुसंपतत्सुसत्सु अतएव लक्ष्ये हनुमति । विहन्यमाने ताड्यमानेसत्येव नतुप्राणैर्वियुक्तेसतीत्यर्थः । महात्मा अतिप्रयत्नवान् । समाधिसंयोगेनअतिविचारकालप्राप्त्यासमाहितःएकाग्रीकृतः आत्मामनोयेनसः । हन्तेस्ताडनार्थकत्वंतु " मालाहतइवद्विपः " इत्यादौप्रसिद्धं । तुशब्दएवार्थे ॥ ३५ ॥ स० पितामहमहेन्द्राभ्यांरक्षितस्यममभयंनजायते । अत्रयद्यपि

[ पा० ] १ क. घ. ज. मन्तरेष्वेव. २ छ.—ञ. व्यावर्तत. ३ घ. ङ. छ. झ. ञ. ट. मोक्षयन्. ४ घ. मनोग्राहं. ५ क. ग. घ. मद्भुतं. ६ ख. विशारदः. ७ क.—घ. नमेस्त्रबन्धस्य. ख. घ. नमेस्त्रबद्धस्य. ८ ख. घ. ङ. च. ज.—ट. इत्येवमेवं. ९ ग. घ. ज. ममात्मयोनेः.

ग्रहणे चापि रक्षोभिर्महान्मे[1] गुणदर्शनः ॥ राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥ ४५ ॥
स निश्चितार्थः परवीरहन्ता समीक्ष्यकारी विनिवृत्तचेष्टः ॥
परैः प्रसह्याभिगतैर्निगृह्य ननाद तैस्तैः परिभर्त्स्यमानः ॥ ४६ ॥
ततस्तं[3] राक्षसा दृष्ट्वा निर्विचेष्टमरिन्दमम् ॥ बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥ ४७ ॥
स रोचयामास परैश्च बन्धं प्रसह्य वीरैरभिनिग्रहं च ॥
कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४८ ॥
स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् ॥ अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते ॥ ४९ ॥
अथेन्द्रजित्तु[6] द्रुमचीरबद्धं विचार्य वीरः कपिसत्तमं तम् ॥
विमुक्तमस्त्रेण जगाम चिन्तां नान्येन बद्धो ह्यनुवर्ततेऽस्त्रम् ॥ ५० ॥
अहो महत्कर्म कृतं निरर्थकं न राक्षसैर्मन्त्रगतिर्विमृष्टा ॥
पुनश्च नास्त्रे विहतेऽस्त्रमन्यत्प्रवर्तते संशयिताः स्म सर्वे ॥ ५१ ॥
अस्त्रेण हनुमान्मुक्तो नात्मानमवबुध्यत ॥ कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ॥ ५२ ॥
हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः[10] ॥ समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥ ५३ ॥
अथेन्द्रजित्तं प्रसमीक्ष्य मुक्तमस्त्रेण बद्धं द्रुमचीरसूत्रैः[11] ॥
व्यदर्शयत्तत्र महाबलं तं हरिप्रवीरं सगणाय राज्ञे ॥ ५४ ॥
तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् ॥ राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ ५५ ॥
कोऽयं कस्य कुतो वाऽत्र[12] किं कार्यं को व्यपाश्रयः[13] ॥ इति राक्षसवीराणां तत्र संजज्ञिरे[14] कथाः ॥५६॥

मे भयमित्यर्थः ॥ ४४ ॥ गुणदर्शनः गुणपर्यवसायी । संवादः ॥ ४५—४६ ॥ शणवल्कैः शणत्वग्भिः । संहतैः सज्जीकृतैः । द्रुमचीरैः वल्कलैः ॥ ४७ ॥ राक्षसेन्द्रः कौतूहलात् मां द्रष्टुं व्यवस्येदिति निश्चितार्थस्सन् बन्धनादिकं रोचयामासेति संबन्धः ॥ ४८—४९ ॥ अन्येनशणवल्कलादिना । बद्धः अस्त्रं नानुवर्तते । नास्त्रेण बद्ध इव वर्ततइत्यर्थः ॥ ५० ॥ मन्त्रगतिः ब्रह्मास्त्रमन्त्रपद्धतिः । न विमृष्टा नपर्यालोचितेत्यर्थः । बन्धान्तरेण सहानवस्थानरूपं ब्रह्मास्त्रस्वभावमनालोच्य शणबन्धादिकं राक्षसैः कृतमिति भावः । अस्त्रेविहते ब्रह्मास्त्रे प्रतिहते । अन्यदस्त्रं नप्रवर्तते न प्रभवतीत्यर्थः । तदेव ब्रह्मास्त्रं प्रयुज्यतामित्याशङ्क्याह—पुनश्चेति । पुनर्नप्रवर्तते प्रयुक्तं ब्रह्मास्त्रं पुनर्न प्रभवतीत्यर्थः । सर्व इत्यनन्तरमितिकरणं बोध्यं । इति चिन्तां । जगामेति पूर्वेण संबन्धः ॥५१॥ नावबुध्यत नावधृतवान् ॥ ५२—

इन्द्रजितोभयं इन्द्ररक्षितस्यापिभवेत् । तथापि " इन्द्रोवृत्रंहत्वामहानास " इत्युक्त्यावृत्रहननलब्धमहत्त्वगुणविशिष्टेनेन्द्रेणरक्षितस्यवरदानेनलोकदृष्ट्यासंरक्षितस्यभयंनेत्युक्तिर्युक्तेतिबोध्यं । आभ्यांसमुच्चिताभ्यामित्यर्थकरणे नचाशङ्कानचोत्तरं ॥ ४४ ॥ ति० इममर्थमिन्द्रजिदपिज्ञातवानित्याह—अथेति । अस्त्रेणविमुक्तं विचार्य ज्ञात्वा । अन्येनबद्धोपिहनुमानस्त्रमनुवर्तते अस्त्रेणबद्धइव वर्ततइत्यपिविचार्य चिन्तामाजगामेतिसंबन्धः । नान्येनबन्धोह्यनुवर्ततेऽस्त्रमितिपाठे चिन्तास्वरूपमिदं । राक्षसैःस्वकृतबन्धनवशात्खेदंजगामेत्यर्थः ॥५०॥ ति० चिन्तामाह—अहोइति । पाठान्तरेचिन्तान्तरमिदं । मयाकृतंमहत्कर्म निरर्थकृतंराक्षसैः । यतस्तैर्मन्त्रगतिर्नविमृष्टा नविचारिता । अन्यबन्धेमन्त्रबन्धोनश्यतीतिनज्ञातमित्यर्थः । पुनरस्त्रंतदेवप्रयोज्यंतत्राह । अस्त्रेब्राह्मेविहते पुनरन्यदस्त्रं तदस्त्रप्रयोगान्तरं । नप्रवर्तते । अतःसर्वेवयंसंशयिताः संशयितजयाएव । मुक्तोऽयंसर्वानपिहन्यादितिभावः ॥ ५१ ॥ ति० अवबुध्यतेरन्तर्भावितण्यर्थतयानावबोधयतिस्म अस्त्रमोक्षंनप्रकाशयतिस्मेत्यर्थः ॥ ५२ ॥ ती० अत्र रावणपुरे ।

[ पा० ] १ ग. ङ. च. झ. ञ. ट. महन्मेगुणदर्शनं. २ ग. निशाचरैस्तैः. ३ ङ. च. झ. ञ. ट. ततस्ते. ४ क.—घ. च. ज. ञ. बन्धनं. ५ ङ. झ. ञ. ट. रभिगर्हणंच. ६ ङ. च. छ. झ. ट. अथेन्द्रजित्तं. ७ ख. घ. ङ. झ. ट. चिन्तामन्येन. ८ ङ.—झ. ट. निरर्थं. ९ घ. ङ. झ. ट. मवबुध्यते. १० ङ. झ. ट. कालमुष्टिभिः. ११ ग. च. छ. ज. ञ. द्रुमचीरवल्कैः. १२ क.—ट. वापि. १३ ङ. ट. कोभ्युपाश्रयः. १४ ङ. झ. ट. दृष्ट्वासंजज्ञिरे.

हन्यतां दह्यतां वाऽपि भक्ष्यतामिति चापरे ॥ राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥ ५७ ॥
अतीत्य मार्गं सहसा महात्मा स तत्र रक्षोधिपपादमूले ॥
ददर्श राज्ञः परिचारवृद्धान्गृहं महारत्नविभूषितं च ॥ ५८ ॥
स ददर्श महातेजा रावणः कपिसत्तमम् ॥ रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५९ ॥
राक्षसाधिपतिं चापि ददर्श कपिसत्तमः ॥ तेजोबलसमायुक्तं [1]तपन्तमिव भास्करम् ॥ ६० ॥
स रोषसंवर्तिततास्रदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य ॥
अथोपविष्टान्कुलशीलवृद्धान्समादिशत्तं प्रति [2]मन्त्रिमुख्यान् ॥ ६१ ॥
यथाक्रमं तैः स [3]कपिर्विपृष्टः कार्यार्थमर्थस्य च मूलमादौ ॥
निवेदयामास हरीश्वरस्य दूतः सकाशादहमागतोस्मि ॥ ६२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

## एकोनपञ्चाशः सर्गः ॥ ४९ ॥

हनुमता रावणसमृद्धिनिरीक्षणेनाश्चर्यपरवशतया तस्यबलवदधर्माभावे सशक्रसुरलोकशासनोत्प्रेक्षणम् ॥ १ ॥

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः ॥ हनुमान्रोषताम्राक्षो रक्षोधिपमवैक्षत ॥ १ ॥
भ्राजमानं महार्हेण काञ्चनेन विराजता ॥ मुक्ताजालावृतेनाथ मुकुटेन महाद्युतिम् ॥ २ ॥
वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ॥ हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३ ॥
महार्हक्षौमसंवीतं रक्तचन्दन[4]रूषितम् ॥ स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४ ॥
[5]विवृतैर्दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः ॥ दीप्ततीक्ष्ण[6]महादंष्ट्रैः प्रलंबदशनच्छदैः ॥ ५ ॥
शिरोभिर्दशभिर्वीरं भ्राजमानं महौजसम् ॥ नानाव्यालसमाकीर्णैः शिखरैरिव मन्दरम् ॥ ६ ॥

---

५७ ॥ परिचारवृद्धान् अमात्यवृद्धान् ॥ ५८—६१ ॥ कार्यार्थं कर्तव्यार्थं । अर्थस्य कर्तव्यार्थस्य । मूलं निमित्तं प्रेषयितारमित्यर्थः । अनयोर्विपृष्ट इत्यनेन संबन्धः । श्लोकान्त इतिकरणंबोध्यं । वक्ष्यमाणसंग्रहोयं ॥ ६२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

कर्मणा तस्य विस्मितः युद्धार्थं रावणेनागन्तव्यमिति मया यत्नः कृतः स तु नीतिज्ञ आसनस्थ एव इन्द्रजिन्मुखेन मां निबध्यानीतवानित्यानयनकर्मणा जातविस्मय इत्यर्थः ॥ १—२ ॥ वज्रसंयोगसंयुक्तैः वज्रकीलनेन संबद्धैः । अत्र भ्राजमानमित्यनुषज्यते ॥ ३ ॥ भक्तिभिः पङ्क्तिभिः । इत्थंभूतलक्षणे तृतीया । यथा पङ्क्तयो भवन्ति तथानुलिप्त इत्यर्थः ॥ ४–६ ॥

---

कोव्यपाश्रयः कोवाश्रयः ॥ ५६ ॥ **ति०** मन्त्रीन् मन्त्रिणइत्यर्थः ॥ **स०** मन्त्रएषामस्तीतिमत्वर्थे तद्धिताइतिबहुवचनज्ञापितेकारप्रत्ययेसति मुख्यमन्त्रीन् ॥ ६१ ॥ **ति०** कार्यं कर्तव्यं । अर्थः तत्प्रयोजनंच । समाहारद्वन्द्वः । अर्थस्यमूलं उक्तप्रयोजनप्रवर्तकं । उत्तराशयस्तु दूत्यंकृत्यं प्रेरकःसुग्रीवइति ॥ ६२ ॥ इत्यष्टचत्वारिंशःसर्गः ॥ ४८ ॥

**कतक०** तस्य इन्द्रजितः । यत्तुरावणस्येति तन्न । तेन हनूमतिकस्यापिकर्मणोकृतत्वात् ॥ **स०** तस्य रावणस्य । कर्मणा स्वयंमहाराजइतिसाक्षादसंभाष्य मन्त्रिमुखेनवाचयामासेत्येवंरूपकर्मणेत्यर्थः ॥ १ ॥ **ति०** भक्तिभिः शैवत्रिपुण्ड्रवद्रचनाविशेषैः ॥ ४ ॥ **ति०** विचित्रं आश्चर्यभूतैः । दशनच्छदैः प्रलंबं लंबदशनच्छदं तं ॥ ५ ॥ **स०** शिरोभिर्दशभिरित्यनेन हनुमद्भीषणा-

**[ पा० ]** १ च. छ. ज. ञ. ज्वलन्तमिव. २ ङ.—ट. मुख्यमन्त्रीन्. ३ ङ. झ. ट. कपिश्चपृष्टः. ४ ख. ङ. भूषितं. ५ ङ. झ. ट. विचित्रंदर्शनीयैश्च. ६ ङ. झ. ट. महादंष्ट्रप्रलंबं.

नीलाञ्जनचयप्रख्यं हारेणोरसि राजता ॥ पूर्णचन्द्राभवक्त्रेण सबलाकमिवाम्बुदम् ॥ ७ ॥
बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः ॥ भ्राजमानाङ्गदैः पीनैः पञ्चशीर्षैरिवोरगैः ॥ ८ ॥
महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते ॥ उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने ॥ ९ ॥
अलंकृताभिरत्यर्थं प्रमदाभिः समन्ततः ॥ वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥ १० ॥
दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा ॥ मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥ ११ ॥
सुखोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः ॥ कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥ १२ ॥
सचिवैर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः ॥ अन्वास्यमानं रक्षोभिः सुरैरिव सुरेश्वरम् ॥ १३ ॥
अपश्यद्राक्षसपतिं हनुमानतितेजसम् ॥ विष्ठितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४ ॥
स तैः संपीड्यमानोपि रक्षोभिर्भीमविक्रमैः ॥ विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५ ॥
भ्राजमानं ततो दृष्ट्वा हनुमान्राक्षसेश्वरम् ॥ मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १६ ॥
अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ॥ अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७ ॥
यद्यधर्मो न बलवान्स्यादयं राक्षसेश्वरः ॥ स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८ ॥
अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः ॥ तेन बिभ्यति खल्वस्माल्लोकाः सामरदानवाः ॥ १९ ॥
अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ॥ इति चिन्तां बहुविधामकरोन्मतिमान्हरिः ॥
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ॥ ५० ॥

प्रहस्तेन रावणप्रेरणयाहनुमन्तंप्रति तत्स्वरूपप्रश्नेनसह वनभञ्जनराक्षसहननप्रयोजनप्रश्नः ॥ १ ॥ हनुमता प्रहस्तस्या-लक्ष्यीकरणेनरावणंप्रत्येव वनभञ्जनाक्षादिराक्षसक्षपणयोः क्रमेणतद्दर्शनात्मरक्षणार्थत्वोक्तिः ॥ २ ॥ तथातंप्रति रामदूत-त्वादिनिजतत्त्वनिवेदनेनसह स्वस्यब्रह्मवरात्तदस्त्रावश्यत्वनिवेदनपूर्वकं तद्दर्शनार्थमस्त्रानुवर्तनोक्तिः ॥ ३ ॥

ततमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतः स्थितम् ॥ कोपेन महताऽऽविष्टो रावणो लोकरावणः ॥ १ ॥

---

पूर्णचन्द्राभवक्त्रेण पूर्णचन्द्रतुल्यनायकरत्नेन । वक्त्रं नायकरत्नं अभितोलग्नमुक्तामणिमण्डलं ॥ ७ ॥ केयूरं भुजोपरिधार्यमाणमाभरणं अङ्गदं बाहुमध्यस्थाभरणं ॥ ८—१० ॥ मन्त्रिभिः प्रशस्तमन्त्रैः । अतस्सचिवैरित्यपुनरुक्तिः ॥ ११—१७ ॥ अयं रावणकृतः अधर्मः बलवान्नस्याद्यदि । तदायं राक्षसेश्वरः सशक्रस्य सुरलोकस्यापि रक्षिता स्यात् ॥ १८ ॥ तेन कर्मभिः कृतेन पूर्वोक्तेनाधर्मेण हेतुना ॥१९-२०॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

बाणः महाबलिसुतः । अनेन तेनापि किञ्चित्

---

र्थेयुद्धकालइव रूपविशेषग्रहणमितिसूचयति ॥ ६ ॥ ती० मन्त्री बुद्धिसहायः ॥ ११ ॥ सचिवः कार्यसहायः ॥ १३ ॥ ति० सर्वसंपत्तिमतोप्यधर्मवतोमहान्दोषइत्याह—यदीति । बलवान् एवंविधसमृद्धावप्युन्मूलनक्षमोऽधर्मोयद्यस्मिन्नस्यात्तदाऽयंराक्षसेश्वरः शक्रस्यसुरलोकस्यापि विष्णुवद्रक्षितास्यात् । यद्वा अधर्मइत्यर्शआद्यजन्तं । अयंबलवान्राक्षसेश्वरः यद्यधर्मवान्नस्यात् तदा शक्रस्येत्यादिप्राग्वत् ॥ १८ ॥ ती० क्रूरैः भीषणैः । नृशंसैः परद्रोहाचरणशीलैः । तेन पूर्वोक्तेनाधर्मेणच । ति० केनबिभ्यतीति-पाठे के न इतिपदच्छेदः ॥ १९ ॥ इत्येकोनपञ्चाशःसर्गः ॥ ४९ ॥

[ पा० ] १ ख. ङ. च. ज.—ट. सबलार्कमिवा. २ ख. घ. ङ. भूषितैः. ३ ङ.—झ. ट. मानाङ्गदैर्भीमैः. ४ ङ.—ट. चित्रिते. ५ घ.—ट. उपोपविष्टं. ६ ङ. झ. ट. दर्पितं. ७ ङ.—ट. शुभदर्शिभिः. ख. ग. बहुबुद्धिभिः. क. हितबुद्धिभिः. ८ ङ. झ. ट. आश्वास्यमानं. ९ ग. घ. नमितौजसं. १० ङ. झ. ट. सर्वेबिभ्यति. ११ क. बहुविधांचकारमतिमान्. १२ क. च. छ. ज. समुद्वीक्ष्य. १३ क.—ट. रोषेण.

शङ्काहतात्मा दध्यौ स कपीन्द्रं तेजसा वृतम् ॥ किमेष भगवान्नन्दी भवेत्साक्षादिहागतः ॥ २ ॥
येन शप्तोस्मि कैलासे मया संचालिते पुरा ॥ सोयं वानरमूर्तिः स्यात्किस्विद्बाणोपि वाऽसुरः ॥३॥
स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् ॥ कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४ ॥
दुरात्मा पृच्छ्यतामेष कुतः किं वाऽस्य कारणम् ॥ वनभङ्गे च कोस्यार्थो राक्षसीनां च तर्जने ॥५॥
मत्पुरीमप्रधृष्यां वाऽऽगमने किं प्रयोजनम् ॥ आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥६॥
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ॥ समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥७॥
यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम् ॥ तत्त्वमाख्याहि मा भूत्ते भयं वानर मोक्ष्यसे ॥ ८ ॥
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य च ॥ चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् ॥
विष्णुना प्रेषितो वाऽपि दूतो विजयकाङ्क्षिणा ॥ ९ ॥
न हि ते वानरं तेजो रूपमात्रं तु वानरम् ॥ तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे ॥ १० ॥
अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥ अथवा यन्निमित्तं ते प्रवेशो रावणालये ॥ ११ ॥
एवमुक्तो हरिश्रेष्ठस्तदा रक्षोगणेश्वरम् ॥ अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा ॥ १२ ॥
धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥ जातिरेव मम त्वेषा वानरोऽहमिहागतः ॥ १३ ॥
दर्शने राक्षसेन्द्रस्य दुर्लभे तदिदं मया ॥ वनं राक्षसराजस्य दर्शनार्थे विनाशितम् ॥ १४ ॥
ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ॥ रक्षणार्थं तु देहस्य प्रतियुद्धा मया रणे ॥ १५ ॥
अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ॥ पितामहादेव वरो ममाप्येषोऽभ्युपागतः ॥ १६ ॥
राजानं द्रष्टुकामेन मयाऽस्त्रमनुवर्तितम् ॥ विमुक्तो ह्यहमस्त्रेण राक्षसैस्त्वभिपीडितः ॥ १७ ॥

---

शप्तमिति गम्यते । अत्रेतिकरणं द्रष्टव्यं ॥ ३—४ ॥ दुरात्मा पृच्छ्यतामिति । अस्य विवरणं कुत इत्यादि । कुतः कस्माद्देशादागतः । किं वास्य कारणं । अस्य कः प्रेरकः ॥ ५ ॥ मत्पुरीं प्रतीति शेषः । आयोधने युद्धे । किं कार्यं किं प्रयोजनं ॥ ६—७ ॥ यदि वैश्रवणस्येत्यादेः दूतो विजयकाङ्क्षिणेत्यन्तस्य तत्त्वमाख्याहीति पूर्वेण संबन्धः ॥ ८—९ ॥ यन्निमित्तं कृत्वा ते प्रवेशः तन्निमित्तं कथयस्वेति पूर्वेण संबन्धः ॥ १०—११ ॥ रक्षोगणेश्वरमित्यनेन प्रष्टारं प्रहस्तं पृष्ठतः कृतवानिति गम्यते ॥ १२ ॥ एषा वानरता ॥ १३ ॥ राक्षसेन्द्रस्य तवेति शेषः ॥ १४ ॥ प्रतियुद्धाः प्रतिप्रहृताः ॥ १५ ॥ ममापीति तवेवेत्यर्थः ॥ १६ ॥ तर्हि कथं बद्धोसीत्याशङ्क्याह—राजानमिति । पीडितः बद्धस्सन् । अस्त्रेण विमुक्तः ।

---

ति० नन्दी वानरमुखएवप्रमथगणाधिपः । स० यद्यपिमारुतिरितिइन्द्रजितंप्रतिरावणेनोक्तत्वान्नेयंशङ्कासंभवति । तथापि नन्दिबाणाभ्यांस्वस्यपराभूतत्वाद्भयेनतच्छङ्कायुक्तेतिज्ञेयं ॥२॥ ती० शप्तः मन्मुखसदृशमुखैस्तवनाशोभविष्यतीतिशप्तः ॥ ३ ॥ स० दुर्मतिः दुरित्यव्ययंदुःखवाचि । एवमस्मदीयदुःखेमतिर्यस्यसतथा ॥६॥ स० भद्रंतइत्युक्तिरुत्तरत्ररक्षःक्षयोनकार्यइतिसुमुखीकरणार्थं ॥ ७ ॥ ति० चाररूपं चाराणांप्रच्छन्नवेषत्वाच्छद्मकृतवानररूपं ॥ ९ ॥ ति० वानरमितीदमर्थेऽणन्तं ॥ १० ॥ ति० एषा वानराकृतिः । ममजातिरेव जन्मकृतैव । अतोवानरएवाहमिहागतः । राक्षसेन्द्रस्य तव दर्शनेदर्शननिमित्तं । इहागतइत्यर्थः । तदिदंतवदर्शनंदुर्लभं प्रकारान्तरेणाशक्यलाभंइतिज्ञात्वातवदर्शनार्थेवनंविनाशितं ॥ १३—१४ ॥ ति० इदानींयुद्धप्रयोजनमाह—रक्षणार्थमिति । प्रतियुद्धाः मयाप्रतिभटतयास्थित्वाकृतयुद्धाः । स० प्रति स्वयुद्धंप्रति युद्धं मयाकृतंयेषांतेतथा ॥ १५ ॥ ति० नन्वेवं भाविबन्धाद्यपर्यालोच्यकथंयुद्धंकृतंतत्राह—अस्त्रैरिति । अस्त्रैः ब्रह्मास्त्रान्तैः । पाशैः यमपाशान्तैः । एवंचेतरपाशकथापिदूरापास्तेत्युक्तं । देवासुरैः मिलितैरपीत्यर्थः ॥ १६ ॥ ती० ननुतवास्त्रबन्धाभावेकिमितिब्रह्मास्त्रेणबद्धोराक्षसैःपीड्यसइत्यतआह—राजानमिति । अस्त्रमुक्तोपि कार्यवशाद्बुद्धिपूर्वकमेवाहमेभिःपीड्ये । एतन्ममाकिञ्चित्करमितिभावः

[ पा० ] १ ङ. झ. ञ. ट. प्रहसिते. २ ङ. झ. ञ. ट. राक्षसानांच. ३ च. ज. ञ. कपिरूपमिदं. ४ क. ख. ङ. झ. ट. यन्निमित्तस्ते. ५ घ. ङ. झ. ट. देषवरोममापिहिसमागतः. ६ ङ. झ. ट. विमुक्तोप्यहमस्त्रेण. च. छ. ज. ञ. विमुक्तोस्म्यहमेस्त्रण. ७ घ. राक्षसैरति. ङ. झ. ट. राक्षसैस्त्वभिवेदितः. क. ख. ग. छ. ज. राक्षसैस्त्वतिपीडितः.

केनचिद्राजकार्येण संप्राप्तोस्मि तवान्तिकम् ॥ दूतोऽहमिति विज्ञेयो राघवस्यामितौजसः ॥ १८ ॥
श्रूयतां चापि वचनं मम पथ्यमिदं प्रभो ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ॥ ५१ ॥

हनुमता रावणंप्रति रामवनागमनप्रभृतिस्वीयसीतादर्शनावधिसकलवृत्तान्तनिवेदनम् ॥ १ ॥ तथा राममहिमानुवर्णनपूर्वकं तस्मैसीतायाःप्रत्यर्पणानर्पणयोर्निजजीवितलाभतदभावकारणत्वोत्कीर्तनम् ॥ २ ॥

तं समीक्ष्य महासत्त्वं सत्त्ववान्हरिसत्तमः ॥ वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १ ॥
अहं सुग्रीवसंदेशादिह प्राप्तस्तवालयम् ॥ राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ॥ धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३ ॥
राजा दशरथो नाम रथकुञ्जरवाजिमान् ॥ पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः ॥ पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ॥ ५ ॥
लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ॥ रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ६ ॥
तस्य भार्या वने नष्टा सीता पतिमनुव्रता ॥ वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥

हिशब्दोवधारणे । ब्रह्मास्त्रस्य साधनान्तरासहत्वादिति भावः ॥ १७ ॥ अस्तु सर्वमेतन्मद्दर्शनार्थं मद्दर्शनं वा किमर्थं तत्राह—केनचिदिति ॥ १८—१९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

समीक्षणोक्तिक्रियाभेदात्तच्छब्दद्वयं ॥ १ ॥ अहमिति ॥ अहं रामदूत एव संदेशस्तु सुग्रीवस्येति भावः । सुग्रीवसंदेशात् सुग्रीवसंदेशाद्धेतोः । संदेशप्रापणार्थमित्यर्थः । "संदेशवाग्वाचिकं स्यात्" इत्यमरः । इह लङ्कायां । भ्राता भ्रातृवद्धितकरः । अब्रवीत् अप्राक्षीत् । यद्यपि सुग्रीवेण न संदिष्टं तथापि दूतोक्तं सर्वं स्वाम्युक्तमेवेत्याशयेनोक्तं ॥ २ ॥ समादेशं संदेशरूपमिति वाक्यविशेषणं । इह अस्मिँल्लोके । अमुत्र परलोके । क्षमं अभ्युदयसाधनं ॥ ३—५ ॥ धर्म्यं धर्मादनपेतं । " धर्मपथ्यर्थन्यायादनपेते "

॥ १७ ॥ **स०** अमितौजसइत्यनेन अन्यथाराघवोघातयेदेवेतिसूचयति । **ति०** रामकार्येणेतिपाङ्क्तःपाठः । रामस्यतवचकःसंबन्धस्तत्राह—**दूतइति** ॥१८॥ **ति०** ननुरामदूतेनापिसीतान्वेषणमेवकार्यं एवंप्रयासेनमद्दर्शनेकिंफलंतत्राह—श्रूयतामिति । वचनं सन्देशवचनं । पथ्यं तवक्षेमकरं । त्वद्दर्शने नपुण्यावाप्तिर्मम । किंतुतुभ्यंहितंवक्तव्यमितीयानायासइतिभावः ॥ १९ ॥ इतिपञ्चाशःसर्गः ॥ ५० ॥

**ति०** सुग्रीवसंदेशकथनव्याजेनसामदण्डान्यतरविषयत्वनिश्चयायन्यायानुसारीनवेतिजिज्ञासति—तमित्यादि ॥ **स०** अव्यग्रः निर्भीः ॥ १ ॥ **ति०** भ्रातेतिस्नेहप्रकाशिकालोकोक्तिः । **स०** हेराक्षसेभ राक्षसश्रेष्ठ । वालिरावणयोर्भ्रातृसौहार्दात्तत्प्रकाशिकामृदूक्तिर्भ्रातेति । हरीशः कुशलमब्रवीत् त्वत्कुशलमुद्दिश्य पृच्छेतिमामब्रवीत् । राक्षसेभहरीशः नश्शृणोषितेनोक्तंचेत्तवहननमनायासेनकृत्वासीतांनेष्यतीत्यान्तरङ्गिकोऽर्थः राक्षसेभस्य हरीशः महासिंहइत्येकपदतायांज्ञेयः । तथाभ्रातेत्यनेन त्वद्राज्यग्रहणेपियोग्यतातस्यास्तीतिसूचयति ॥ २ ॥ **स०** कपिभ्योऽनृतवरत्वबलेनवा रामरूपबलिष्ठाश्रयणेनवा समादेशमित्युक्तिः । **रामानु०** रावणहृदयपरिज्ञानार्थं तत्कालोदितप्रतिभयासुग्रीवसंदेशंकल्पयित्वावदति—**भ्रातुरिति** । समादेशं संदेशं । सुग्रीवसंदेशस्यरामप्रयोजनपरत्वात्संदेशोपयोगितयारामसुग्रीवयोःसख्यादिकं राजादशरथइत्यारभ्य भ्रमताचमयादृष्टागृहेतेजनकात्म-

**[ पा० ]** १ ङ.—ट. द्रामकार्येण. २ ङ. झ. ट. आगतोस्मि. ३ घ. राघवस्यमहात्मनः. ४ ङ. झ. ट. श्रूयतामेववचनं. ५ ख. घ. स्तवान्तिकं. ङ. झ. ट. स्तवान्तिके. क. स्त्वदन्तिकं. ६ झ. ञ. ट. राक्षसेश. ठ. राक्षसेभ. ७ ङ. झ. ट. धर्मार्थसहितं. ८ झ. ट. प्रियतरः. ९ ङ. झ. ट. सह. घ. चैव. १० ङ. झ. ट. जनस्थानेभ्रष्टासीतेतिविश्रुता.

स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः ॥ ऋश्यमूकमनुप्राप्तः सुग्रीवेण समागतः ॥ ८ ॥
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ॥ सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥ ९ ॥
ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ॥ सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥ १० ॥
त्वया विज्ञातपूर्वश्च वाली वानरपुङ्गवः ॥ रामेण निहतः सङ्ख्ये शरेणैकेन वानरः ॥ ११ ॥
स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसङ्गरः ॥ हरीन्संप्रेषयामास दिशः सर्वा हरीश्वरः ॥ १२ ॥
तां हरीणां सहस्राणि शतानि नियुतानि च ॥ दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥ १३ ॥
वैनतेयसमाः केचित्केचित्तत्रानिलोपमाः ॥ असङ्गगतयः शीघ्रा हरिवीरा महाबलाः ॥ १४ ॥
अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ॥ सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १५ ॥
समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ॥ भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ १६ ॥
तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः ॥ परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७ ॥
न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ॥ मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १८ ॥
कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् ॥ शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९ ॥
न चापि त्रिषु लोकेषु राजन्विद्येत कश्चन ॥ राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ २० ॥
तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च ॥ मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥ २१ ॥
दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् ॥ उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥ २२ ॥

इति यत्प्रत्ययः ॥ ६—७ ॥ सुग्रीवेण मयेतिशेषः । यद्वा लोके वक्तारः स्वात्मानमन्यमिव निर्दिशन्त्यौद्धत्यातिशयात् । यद्वा अत्रानुवादात् पूर्वंसुग्रीवेणैवं वक्तव्यमिति पठितं तथैव हनुमान्पठतीति समादेशप्राधान्यादन्यवाक्यमपि तथोच्यत इति केचित्प्राहुः। यद्वा सुग्रीवसंदेशस्य रामप्रयोजनपरत्वात्संदेशोपयोगितया रामसुग्रीवयोस्सख्यादिकं दर्शयति—राजा दशरथ इत्यादिना ॥ ८—११ ॥ सत्यसङ्गरः सत्यप्रतिज्ञः । "कर्बुरे च प्रतिज्ञाजिसंविदापत्सु सङ्गरः" इत्यमरः ॥ १२ ॥ अधश्चोपरि चाम्बरे पाताले भूमौ आकाशे चेत्यर्थः ॥१३॥ असङ्गगतय इति शीघ्रत्वे हेतुः ॥ १४॥ औरसस्सुतः क्षेत्रजत्वव्यावृत्तये औरसपदं । सीतायास्तु कृते सीतालाभाय । तां दिदृक्षुरिति योज्यं ॥ १५—१६ ॥ एवं सुग्रीवसंबन्धं प्रतिपाद्य सुग्रीवसंदेशं वदति—तद्भवानित्यादिना ॥ दृष्टधर्मार्थः शास्त्रेण विदितधर्मार्थस्वरूपइत्यर्थः । तपःकृतपरिग्रहः तपसि विषये कृतस्वीकारः । यद्वा तपसा स्वयं कृतपरिग्रहः । स्वारसिकतपस्कइति यावत् । हेतुगर्भे विशेषणे ॥ १७ ॥ धर्मविरुद्धेषु धर्मशास्त्रविरुद्धेषु। धर्मविरुद्धत्वेपि यत्सौख्यावहं तत्कार्यमित्यत्राह—बह्वपायेष्विति । बहुहानिकरेष्वित्यर्थः । अपायाः कथंचित्परिह्रियन्त इत्याशङ्क्याह—मूलघातिष्विति । स्वविनाशकरेष्वित्यर्थः । कर्मसु परदारापहारेषु । न सज्जन्ते नोद्युक्ता भवन्ति ॥ १८ ॥ रामकोपानुवर्तिनां रामकोपानुसारेण निर्गतानामित्यर्थः ॥ १९ ॥ व्यलीकं अप्रियं । "व्यलीकं त्वप्रियेऽनृते" इत्यमरः ॥ २० ॥ तत् तस्मात् अधर्मावहत्वाद्रामापराधस्य परिहर्तव्यत्वाच्च । त्रिकालहितं भूतभविष्यद्वर्तमानकालहितं । दारुणाधर्मस्य स्वपूर्वपुरुषविनाशकत्वेन तत्परिहारस्य भूतकालहितत्वं मन्यस्व । मत्वा प्रतिदीयतामिति योज्यं ॥ २१ ॥ जानकीहरणे किं मानं तत्राह—दृष्टा हीति ॥ यत्सीतादर्शनं दुर्लभं इतरवानरालभ्यं। तल्लब्धं। तर्हि सा नीयतामित्यत्राह —उत्तरमिति । सीतादर्शनोत्तरं यच्छेषं कर्म

जेत्यन्तेनप्रतिपादयन्नुतद्भवानित्यादिनाकृत्वासुखमवाप्नुयादित्यन्तेनसुग्रीवसंदेशंवदति ॥ ३ ॥ ति० तांमार्गमाणःसरामः ऋश्यमूकं प्राप्तः सुग्रीवेणसंगतश्च । अनेनैवज्ञायते नेदंसुग्रीवसंदेशवाक्यं । तदाहिमयाचैवसुसंगतइतिवदेत् ॥ ८ ॥ ती० त्वयाविज्ञातपूर्वश्चवालीतिमर्मोक्तिः सतेननिहतइतिरामोत्कर्षश्चप्रतिपादितइतिज्ञेयं ॥ ११ ॥ असङ्गगतयः आलंबरहितगतिविशिष्टाः ।

[ पा० ] १ क. ङ.—ट. सतेन. २ ङ. झ. ट. मर्थानुयायिच. क.—घ. मर्थानुपातिच.

लक्षितेयं मया सीता तथा शोकपरायणा ॥ गृह्य यां नाभिजानासि पञ्चास्यामिव पन्नगीम् ॥ २३ ॥
नेयं जरयितुं शक्या सासुरैरमरैरपि ॥ विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥
तपस्संतापलब्धस्ते योऽयं धर्मपरिग्रहः ॥ न स नाशयितुं न्याय्यमात्मप्राणपरिग्रहः ॥ २५ ॥
अवध्यतां तपोभिर्यां भवान्समनुपश्यति ॥ आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६ ॥
सुग्रीवो न हि देवोऽयं नासुरो न च राक्षसः ॥ न दानवो न गन्धर्वो न यक्षो न च पन्नगः ॥२७॥
[ मानुषो राघवो राजन्सुग्रीवश्च हरीश्वरः ॥ ] तस्मात्प्राणपरित्राणं कथं राजन्करिष्यसि ॥ २८ ॥
न तु धर्मोपसंहारमधर्मफलसंहितम् ॥ तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥ २९ ॥

सीतानयनं तत्र राघवो निमित्तं । आज्ञप्तस्यैव मया कर्तव्यत्वादितिभावः ॥ २२ ॥ दृष्टयापिमद्वशंवदया सीतया रामः किंकरिष्यतीत्याशङ्क्याह—लक्षितेयमिति ॥ तथेति वाचामगोचरत्वोक्तिः । नेयं तव वश्या प्रत्युत पन्नगीव तव प्राणहारिणीतिभावः ॥ २३ ॥ ओजसा अमरपक्षे प्रतापेन । अन्नपक्षे जाठराग्निना ॥ २४ ॥ तपःकृच्छ्रलब्धमिष्टं महज्जीवनं वृथामानाशयेत्याह—तप इति ॥ तपस्संतापः तपश्चर्या । ओदनपाकं पचतीतिवन्निर्देशः । तेन लब्धः । परिगृह्यत इति परिग्रहः फलं धर्मपरिग्रहः धर्मफलं । तादृशो योयमात्मप्राणपरिग्रहः आत्मनः प्राणानां च परिग्रहः स्वीकारः । जीवनमिति यावत् । स नाशयितुं न न्याय्यं न युक्तं । अव्ययमेतत् । तपःक्लेशलब्धं तद्व्यतिरिक्तधर्मफलभूतं च यज्जीवनमायुः तन्न विनाशयेत्यर्थः । चकाराभावादित्थमेव योजना ॥ २५ ॥ सर्वावध्यस्येह मे कोयमायुर्विनाशक इत्याशङ्क्य परिहरति—अवध्यतामिति ॥ तपोभिरार्जितां सासुरैर्देवैर्या आत्मनोऽवध्यतां भवान् समनुपश्यति । तत्रापि अवध्यतायां सत्यामपि । अयं वक्ष्यमाणः । हेतुः भवद्वधहेतुरस्ति । महान् अपरिहार्यः ॥ २६ ॥ तमेव हेतुमाह—सुग्रीव इति ॥ न च राक्षस इति पाठस्सम्यक् । न च मानुष इति पाठे प्रतिषेधप्रसक्तिरपि नास्तीत्युच्यते । "तृणभूता हि मे सर्वे प्राणिनो मानुषादयः" इत्युत्तरश्रीरामायणे मनुष्यादिभिरवध्यत्वस्याप्रार्थितत्वात् । नच तिर्यञ्च इति न प्रसज्य च प्रतिषिध्यतइतिभावः ॥ २७ ॥ तस्मात् सुग्रीवात् ॥ २८ ॥ ननु किमनेनोपदेशेन कृतानि मया पापानि तैश्चावश्यंफलप्रदैर्भवितव्यमित्याशङ्क्याह—न त्विति॥

आकाशगामिनइत्यर्थः ॥ १४ ॥ **स०** पञ्चास्यामित्यनेन आस्यस्थानीयानि रामोलक्ष्मणोराजाऽहंचेतिचत्वारिस्वयंसीतेत्येकंचेति पञ्चआस्यानियस्यास्सा तां । विस्तृतमुखींवा ॥ २३ ॥ **शि०** जरयितुं गोपयितुमित्यर्थः ॥ २४ ॥ **स०** तपस्संतापेनलब्धोयोधर्मपरिग्रहः धर्मसंचयः । यद्वा धर्मेचार्थेचेतिधर्मसाधनीभूतःपरिग्रहोमन्दोदरी । सुभार्यायाःपुण्यलभ्यत्वात् । नाशयितुं पूर्वत्रः बिफलीकर्तुं परत्रविधवीकर्तुं । आत्मप्राणपरिग्रहः बहुकालवर्तिप्राणपरिग्रहणवान् । अन्यथा त्वत्प्राणपरिग्रहः प्राणवियोजकइत्यर्थ- ॥ २५ ॥ **शि०** अयंसुग्रीवोराघवश्चदेवादिर्न । किंतु सुग्रीवोहरीश्वरः राघवश्चमानुषः । एतेनाभ्यांतवाभयदानंनास्तीतिसूचितं ॥ २७ ॥ **ती०** ननुमहतापूर्वसंचितेनैवधर्मेणममत्राणंभविष्यतीत्याशंक्यरोगराज्यादिवद्धर्माधर्मफलयोःसंभूयानुभवसिद्धेरात्मत्राणसिद्धिः । उताधर्मबाधेनधर्मफलानुभवश्चेतिद्वेधाविकल्प्याद्यस्यासंभवमाह—नत्विति । धर्मोपसंहारं धर्मस्यफलविनाश्यत्वात् धर्म उपसंह्रियतइतिधर्मोपसंहारं धर्मफलंसुखंतत् अधर्मफलसंहितंनभवति । अधर्मेणसहभोग्यंनभवतीत्यर्थः । तीव्रतपःपरदारापहरणभवदीयधर्माधर्मफलयोर्वध्यत्वावध्यत्वयोःजीवनतदभावयोःसहावस्थानविरोधात् । रोगराज्यादिवत्संभूयानुभवोनसंभवतीतिभावः । द्वितीयंदूषयति—**तदेवेति** । तत् धर्मफलमेवान्वेति धर्मफलंधर्मफलेनसहतिष्ठतीतियावत् । धर्मोनाधर्मनाशनः अधर्मबाधेनधर्मफलानुभवोनघटतइतिभावः । यद्वा ननुयेभ्योऽवध्यत्वंनप्रार्थितं तेभ्योपिपूर्वोपार्जितोमहासुकृतसंचयएवरक्षिष्यतीत्याशङ्क्यएवंचेत्तुल्यन्यायतयात्वत्कृतःअधर्मनिचयोपित्वांनाशयिष्यतीत्याह—नत्विति । धर्मोपसंहारंधर्मस्यफलविनाश्यत्वात्धर्मउपसंह्रियतेअनेनेति धर्मोपसंहारंधर्मफलंसुखं । तत् अधर्मसंहितं विरुद्धकारणकत्वादुःखसंहितंनभवतीत्यर्थः । किंतु तदेवफलमन्वेति सुखमेवफलत्वेनानुवर्तते । तुश्चार्थे । तेनाधर्मफलमपि धर्मफलसहितंनभवति अधर्मफलत्वेनानुवर्ततइतिलभ्यते । नत्वधर्मंधर्मो नाशयिष्यतीत्याशङ्क्याह—धर्मश्चेति । अत्रनअनुवर्तते । धर्मः अधर्मनाशनोनभवति । पूर्वकृतोधर्मः इदानींकृताधर्मनाशनोनभवतीत्यर्थः । चकारादेवमधर्मोपि धर्मनाशनोनभवतीतिलभ्यते । धर्माधर्मावनुभवैकविनाश्याविितिभावः ॥ **ति०** ननुतपोबलान्मे-

**[ पा० ]** १ ङ. झ. ट. गृहे. २ क. ग. घ. ङ. झ. ट. सोयं. ३ च. छ. ज. ञ. तपोवीर्याद्भवान्. ४ ङ. झ. ट. नयक्षो. ५ क.—घ. मानुषः. ६ क.—घ. नराक्षसो. ङ. झ. ट. पाठेष्विदमर्धंनदृश्यते. ७ ङ.—ट. पाठेष्विदमर्धंदृश्यते. ८ घ. च. संयुतं.

प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ॥ फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥ ३० ॥
जनस्थानवधं बुद्धा बुद्धा वालिवधं तथा ॥ रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः ॥ ३१ ॥
कामं खल्वहमप्येकः सवाजिरथकुञ्जराम् ॥ लङ्कां नाशयितुं शक्तस्तस्यैष तु न निश्चयः ॥ ३२ ॥
रामेण हि प्रतिज्ञातं हर्यृक्षगणसन्निधौ ॥ उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ॥ ३३ ॥
अपकुर्वन्हि रामस्य साक्षादपि पुरन्दरः ॥ न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥ ३४ ॥
यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे ॥ कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ॥ ३५ ॥
तदलं कालपाशेन सीताविग्रहरूपिणा ॥ स्वयं स्कन्धावसक्तेन क्षेममात्मनि चिन्त्यताम् ॥ ३६ ॥
सीतायास्तेजसा दग्धां रामकोपप्रपीडिताम् ॥ दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ॥ ३७ ॥
स्वानि मित्राणि मन्त्रींश्च ज्ञातीन्भ्रातृन्सुतान्हितान् ॥ भोगान्दारांश्च लङ्कां च मा विनाशमुपानय ॥ ३८ ॥

तुशब्द उक्तशङ्काव्यावर्तकः । धर्मः उपसंह्रियतेनेनेति धर्मोपसंहारं धर्मफलं । फलेन धर्मस्योपसंह्रियमाणत्वात् । क्लीबत्वमार्षं । तत् अधर्मफलसंहितं न भवति । कुत इत्यत्राह—तदेव फलमन्वेतीति । धर्मफलमेवानुवर्तते । नन्वधर्मे च विद्यमानेकथंतत्फलाननुवृत्तिस्तत्राह—धर्मश्चाधर्मनाशनइति । च उक्तशङ्कानिवृत्त्यर्थः । विरोधिनि धर्मे जाग्रति कथमधर्मवार्तापीत्यर्थः । "धर्मेण पापमपनुदति" इति श्रुतेः । यद्वा व्यत्ययो वा किं न स्यात्तत्राह—धर्मश्चेति । चोवधारणे । धर्म एवाधर्मनाशनः तथा श्रुतेः । न त्वधर्मः प्रमाणाभावादितिभावः । ननु यदिधर्मोधर्मनाशनः तर्हि प्राथमिक एवधर्मः आधुनिकानधर्मान्निवर्तयेदित्याशङ्क्याह—प्राप्तमिति ॥ तावच्छब्दः कात्स्न्र्यवाची । कृत्स्नं धर्मफलं फलमस्येति । तथाच क्षिप्रं धर्ममाचर अन्यथा सद्यस्ते विनाशो भविष्यतीति भावः । अत्र कर्तव्यत्वेन विधीयमानो धर्मस्सीताप्रदानपूर्वकरामविषयशरणागतिरेव । शूरस्याशौर्यप्रवृत्त्या धर्मफलं सर्वं क्षीणमिति हनुमतावगतमिति मन्तव्यम् ॥ २९—३० ॥ मा भूद्धर्मापेक्षा कार्योपस्थितिरवेक्ष्यतामित्याह—जनस्थानेति ॥ रामसुग्रीवसख्यं चेति परोक्षनिर्देशस्य गतिःपूर्वमुक्ता ॥ ३१ ॥ कामं अत्यन्तं । अहं सुग्रीवः । तन्नाशनं । तस्य रामस्य । निश्चयः निश्चयविषयः ॥ ३२ ॥ कथमित्यत्राह—रामेणेति ॥ हर्यृक्षगणसन्निधौ वृद्धसभायांप्रतिज्ञातमनतिक्रमणीयमितिभावः ॥३२—३४॥ कालरात्रीति काचिच्छक्तिरिति वदन्ति । "समी च कालरात्रिश्च भैरवी गणनायिका" इत्यमरशेषः ॥ ३५ ॥ कालपाशेन यमपाशेन । अतस्सीतां रामाय देहीति हृदयं ॥ ३६ ॥ अट्टः अट्टालः । प्रतोलिका वीथिका ॥ ३७ ॥ मन्त्रीन् मन्त्रिणः । इकारान्तत्व-

सर्वतोजयोभविष्यतीत्यतआह—नत्विति । यःपुमान् अधर्मफलसंहितबलवत्तयाफलोन्मुखाधर्मसंबद्धस्तंपुरुषं धर्मोपसंहारमपि धर्मोपसंग्रहवन्तमपि । नत्वन्वेति धर्मफलमितिशेषः । किंतु तदेवफलं फलोन्मुखाधर्ममेवान्वेति । ननुधर्मफलादधर्मनाशोभविष्यतीत्यत्राह—धर्मश्चेति । उत्कटोऽधर्मोत्तरभावीधर्मोऽधर्मस्यनाशनः । चादुत्कटाधर्मोधर्मनाशकः । एवंचास्याधर्मस्यत्वत्कृतसफलधर्मापेक्षयोत्कटत्वादुत्तरकालत्वाच्चायमेवत्वयाप्राक्संचितस्यसकलधर्मस्यनाशकइतिभावः ॥ **स०** अधर्मफलसंयुतः उत्कटोत्तरभावी योऽधर्मः परदारधर्षणादिरूपःतत्फलं आसन्ननाशादिकंतेनसंयुतःपुमान् धर्मोपसंहारं धर्मस्योपसंहारस्तिरोधानंयेनकार्यरूपेण । कार्यनिष्पत्त्यनन्तरंकारणनिवृत्तेःसर्वत्रदृष्टत्वात् । तादृशंतदेवफलं धर्मफलंनत्वन्वेति रक्षकत्वेननप्राप्नोति । उपसंहरति—**धर्मइति** । अतोधर्मः अधर्मनाशनोनभवतीत्यर्थः । तवतुसीताधर्षणरूपादत्युत्कटोत्तरकालभाविकर्मफलस्यनाशोनकेनापीतिनात्मरक्षायांस्वयमक्षमइतिभावः ॥ २९ ॥ **ती०** ननुमहतःपुण्यफलानुभवस्यसमाप्त्यनन्तरंअधर्मफलानुभवोभविष्यतीत्यत्राह—प्राप्तमिति । धर्मफलं तावत्साकल्येन । प्राप्तं भुक्तं । अस्याधर्मस्य सीताहरणरूपस्य ॥ ३० ॥ **ती०** एषः हनुमत्कर्तृकलङ्काविनशस्तु । तस्य रामस्य । ननिश्चयः नसंमतइत्यर्थः ॥ **ति०** नन्वेवंकटुवादिनस्तवकोरक्षकइतिचेत्तत्राह—काममिति । यथेष्टमित्यर्थः । तर्हि कुतस्तन्नाशंनकरोषीत्यत्राह—तस्य । यस्याहंदूतस्तस्यरामस्य एषः मत्कर्तृकलङ्कानाशविषयोनिश्चयोन । स्वाम्याज्ञांविना तदा

**[ पा० ]** १ ङ. ब. ज.—ट. वालिनश्चवधं. २ च. तस्यैवतुविनिश्चयः. ग. तस्यैवतुनसंशयः. ३ क. ङ.—ट. हे. ४ ख. ग. ङ. च. झ. ट. क्षेमं. ५ ग. ङ. च. ज. झ. ट. प्रदीपितां.

सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम ॥ रामदासस्य दूतस्य वानरस्य विशेषतः ॥ ३९ ॥
सर्वांल्लोकान्सुसंहृत्य सभूतान्सचराचरान् ॥ पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ ४० ॥
देवासुरनरेन्द्रेषु यक्षरक्षोगणेषु च ॥ विद्याधरेषु सर्वेषु गन्धर्वेषूरगेषु च ॥
सिद्धेषु किन्नरेन्द्रेषु पतत्रिषु च सर्वतः ॥ ४१ ॥
सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः ॥ यो रामं प्रतियुध्येत विष्णुतुल्यपराक्रमम् ॥ ४२ ॥
सर्वलोकेश्वरस्यैवं कृत्वा विप्रियमुत्तमम् ॥ रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४३ ॥

देवाश्च दैत्याश्च निशाचरेन्द्र गन्धर्वविद्याधरनागयक्षाः ॥
रामस्य लोकत्रयनायकस्य स्थातुं न शक्ताः समरेषु सर्वे ॥ ४४ ॥
ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ॥
इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् ॥ ४५ ॥

मार्षे ॥ ३८ ॥ रामदासस्येत्यनेन रामसामर्थ्यपरिज्ञानमुक्तं । दूतस्येत्यनेन हितोपदेशाधिकारः । वानरस्येति माध्यस्थ्यं ॥ ३९ ॥ लोकान् भूरादीन् । सभूतान् पृथिव्यप्तेजोवाय्वाकाशरूपपञ्चमहाभूतयुक्तान् । सचराचरान् चतुर्मुखद्वारा सृष्टजङ्गमयुक्तान् । संहृत्य प्रलयावसाने रुद्रद्वारा स्वयं च संहृत्य । पुनः कल्पादौ तथैव "धाता यथापूर्वमकल्पयत्" इति श्रुत्युक्तरीत्या स्रष्टुं समर्थः । तत्र प्रमाणमाह—महायशा इति । "न तस्येशे कश्चन तस्य नाम महद्यशः" इति हि श्रुतिः । श्रुतिस्मृतिषु तथाप्रसिद्ध इत्यर्थः ॥ ४०—४४ ॥ मा भूवन् शक्तास्सामान्यदेवाः ईश्वरास्त्वशक्ताः स्युरित्याशङ्क्याह—ब्रह्मेति ॥ अत्र विशेषणान्तरोपादानं तेषां सामर्थ्यविशेषद्योतनार्थं पतत्प्रकर्षत्वपरिहाराय व्युत्क्रमेण योजनीयं । इन्द्रः परमैश्वर्यवान् । "इदि परमैश्वर्ये" इत्यस्माद्धातोः "ऋज्रेन्द्राग्र—" इत्यादिना निपातनात्साधुत्वं । त्रैलोक्याधिपतिरपि त्रातुं न शक्त इत्यर्थः । तस्य त्रैलोक्याधिपतित्वेपि परनिरसनसामर्थ्याभावादशक्ततेत्यत्राह—महेन्द्रइति । वृत्रहननप्रसिद्धसामर्थ्योपि न शक्तः । "योवृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वं" इति श्रौतनिर्वचनं । स्वयं चतुरोपि सहायसंपत्त्यभावान्न शक्त इत्यत्राह—सुरनायकइति । स्वतुल्यत्रयस्त्रिंशत्कोटिसुरगणसहायोपि न शक्त इत्यर्थः । मा भूत्क्षुद्र इन्द्रश्शक्तः सर्वसंहारकोरुद्रस्तु शक्तस्स्यात्तत्राह—रुद्र इति । संहारकाले प्रजाः रोदयतीति रुद्रः । "रोदेर्णिलुक् च" इति रप्रत्ययः । कालवि-

नुष्ठानमशक्यमितिभावः । **स०** तस्यैवतुविनिश्चयइतिपाठे तदाज्ञायांसत्यामित्यर्थः ॥३२॥ **ति०** विशेषतः निष्कृष्योच्यमानंवचनमित्यर्थः । रामदासस्येत्यादिविशेषणत्रयेण राममहिमवेत्तृत्वं स्वस्यपरोक्तवाक्यानुवादपूर्वंहितोपदेशाधिकारः नररक्षोतिरिक्तजात्यन्तरत्वेनापक्षपाततोन्यायवक्तृत्वंचसूचितं ॥ ३९ ॥ **ती०** रुतंशब्दंवेदात्मानंब्रह्मणेकल्पादौरातीतिवा रुद्रः । यद्वा रुता नादेन सकलंजगदिदंद्रावयति रञ्जयतीति नादात्मकत्वाद्रुद्रः । यद्वा रुता नादेनप्रणवरूपेणवेदरूपेणवा दापयति इष्टमर्थंगमयतीतिवा रुद्रः । यद्वा रुतंसंसारदुःखहेतुंवाद्रावयतीतिरुद्रः। तदुक्तं "मद्दुःखंदुःखहेतुंवातद्द्रावयतियःप्रभुः । रुद्रइत्युच्यतेतस्माच्छिवंपरमकारणं" इति । एवंव्युत्पत्तियुक्तरुद्रत्वशत्रुभस्मीकरणसमर्थफाललोचनयुक्तत्वत्रिपुरान्तकत्वादिधर्मविशिष्टोमहेश्वरोवा । **ति०** ब्रह्मास्वयंभूरित्यनेन हिरण्यगर्भःसर्वादिरुक्तः । चतुराननः ततः प्राप्तस्रष्टृत्वाधिकारः । त्रिनेत्रस्त्रिपुरान्तकोरुद्रोवेत्यनेन संहाराधिकारी । सुरनायकोमहेन्द्रः महैश्वर्यवानिन्द्रः । उपेन्द्रोविष्णुः पालनाधिकारी । एवंत्रिमूर्तिभिरपि रक्षानसिध्यति । रामस्यैवत्रिमूर्तित्वात् । **स०** ब्रह्मेत्यादिपादत्रयेपित्रिवारमुक्तिर्दार्ढ्याय भट्टिकाव्ये "जहिहिजहीहिजहाहिरामभार्यां" इतिवत् । यद्वा ब्रह्मा बृहस्पतिः । "ब्रह्मापितन्नजानाति" इतिगीताभाष्यप्रमेयदीपिकायांब्रह्माबृहस्पतिरितिव्याख्यानात् । अस्वयंभूः स्वयंभूभिन्नः । स्वयंभूसदृशोवायुः । चतुराननोविरिञ्चिः । वाशब्दःसर्वत्रान्वेति । रुद्रः क्रूरोयमः । त्रिनेत्रोरुद्रः । त्रिपुरान्तेनरुद्रेणकंशिरोयस्यदक्षस्यविनायकस्यवा । इन्द्रः शचीपतिः । अमहेन्द्रः वृत्रहेतरः तत्सदृशः कामः । सुरनायकः सुरसेनानायकःषण्मुखः ॥ ४५ ॥ इत्येकपञ्चाशःसर्गः ॥ ५१ ॥

**[ पा० ]** १ क. घ.—ट. नागेषुगन्धर्वेषुमृगेषुच. २ घ. सिद्धेषुचमृगेन्द्रेषु. क. नागेन्द्रेषुचसर्वेषुकिन्नरेषुपतत्रिषु. ३ क. ख. ग. सर्वलोकेषु. ४ क. ग.—ट. लोकेश्वरस्येह. ५ क. ग. ङ.—ट. विप्रियमीदृशं.

स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः ॥
दशाननः कोपविवृत्तलोचनः समादिशत्तस्य वधं महाकपेः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

हनुमत्परुषभाषणश्रवणरुष्टेनरावणेन तस्यवधाज्ञापनेविभीषणेनदूतवधस्यशास्त्रनिन्दितत्वोक्त्यातत्प्रतिषेधनम् ॥ १ ॥

तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ॥ आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १ ॥
वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ॥ निवेदि[1]तवतो दौ[2]त्यं नानुमेने विभीषणः ॥ २ ॥
[3]तं रक्षोधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् ॥ विदित्वा चिन्तयामास [4]कार्यं कार्यविधौ स्थितः ॥३॥
निश्चितार्थस्ततः साम्नाऽऽपूज्य शत्रुजिदग्रजम् ॥ उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४ ॥

शेषे संहारकोपीदानीमप्राप्तकालत्वादशक्त इत्यत्राह—त्रिनेत्र इति । निटिलनयनदहनज्वालाविलोपितमदनोपीत्यर्थः । काकतालीयत्वशङ्काव्युदासायाह—त्रिपुरान्तकइति । प्रबलतरमहासुरसंहारकोपीत्यर्थः । मा भूत्तस्य शक्तिः " ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठाय " इत्युक्तरीत्या रुद्रस्यापि पिता ब्रह्मा शक्तस्स्यात् तत्राह —ब्रह्मेति । बृंहतीति ब्रह्मा । " बृंहेरम् नलोपश्च " इति मनिन् अमागमो नकारलोपश्च । रुद्रपिता स्वयं कर्मवश्यःकथं शक्नुयात्तत्राह—स्वयंभूरिति । कर्मवश्यत्वेपीतरसाधारण्येनानुत्पन्नः स्वयंभूः। स्वयंभूत्वेपि सहायसंपत्त्यभावात्कथंत्रायेतेत्यत्राह—चतुराननइति । युगपदेवसर्ववेदोच्चारणसंपादितातिशयोपि नशक्तः। प्रत्येकमशक्तत्वेपि किं संभूयागताश्शक्नुवन्ति तत्राह—न शक्ता इति । बहुवचनेनायमर्थो लभ्यते । वधमर्हतीति वध्यः । दण्डादित्वाद्यः । रामस्य वध्यो रामवध्यः । तं त्रातुं न शक्ताः । स्थानविन्निग्रहस्य चेत्युचितवधार्हस्य त्राताकः । युधि युद्धे । न शक्ताः किन्तुशरणं गत्वा त्रातुं शक्ता इत्यर्थः । अत्र " हिरण्यगर्भस्समवर्तताग्रे । न सन्नचासीच्छिव एव केवलः । इन्द्रो मायाभिः पुरुरूप ईयते " इति परदेवतात्वेन प्रसक्तात्रिकादधिकत्वमुक्तं । रामइत्यनेन वेदान्तोदितानां सद्ब्रह्मादिसामान्यशब्दानां हिरण्यगर्भशिवेन्द्रादिविशेषशब्दानां च व्यक्तिविशेषपरत्वं व्यञ्जितं । त्रातृत्वेन प्रसक्तप्रधानदेवतानिराकरणप्रकरणे विष्णोरनुपादानात्पारिशेष्याद्राम एव विष्णुरिति प्रतिपादितं । अस्माच्छ्लोकात्परं स सौष्ठवेति श्लोकः । तस्य तद्वचनमिति श्लोकस्तु उत्तरसर्गादिः । अत्र स प्रमादाल्लिखितः ॥ ४५—४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

---

तस्य तद्वचनं श्रुत्वेति श्लोकस्सर्गस्य प्रथमः ॥ १ ॥ दौत्यं दूतकर्म । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । तन्निवेदितवतः उक्तवतः । नानुमेने वधमित्यनुवर्तनीयं । निवेदितमतौ दूत्यमिति पाठान्तरं । मन्यत इति मतिः कार्यं । निवेदितमतौ निवेदितकार्यांशे यथार्थवादित्वेनावध्ये हनुमति दूत्यं दूतसंबन्धितया रावणादिष्टं वधं । " दूतवणिग्भ्यां चेति वक्तव्यं " इति भावकर्मणोर्विहितो यप्रत्ययः अर्थानुगुण्यात्संबन्धमात्रे गमयितव्यः ॥ २ ॥ तच्च कार्यं दूतवधरूपकार्यं । कार्यं अनन्तरानुष्ठेयं । कार्यविधौ कार्यकरणे । स्थितः निश्चितार्थः । साध्वसाधुविवेकनिश्चितकार्य इत्यर्थः ॥ ३ ॥ आपूज्येति च्छेदः ॥ ४ ॥

ती० निवेदितमतौ मन्यतइतिमतिःकार्यं । निवेदितस्वागमनकार्येहनुमति । अनेनास्ययथादिष्टानुवादित्वेनापराधित्वादवध्य-

[ पा० ] १ च. छ. निवेदितमतौ. २ ख. ग. दौत्ये. ३ क. घ. सरक्षोधिपतिं. ४ क. कार्याकार्यविधौ.

क्षमस्व रोषं त्यज राक्षसेन्द्र प्रसीद मद्वाक्यमिदं शृणुष्व ॥
वधं न कुर्वन्ति परावरज्ञा दूतस्य सन्तो वसुधाधिपेन्द्राः ॥ ५ ॥
राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ॥ तव चासदृशं वीर कपेरस्य प्रमापणम् ॥ ६ ॥
धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ॥ परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७ ॥
गृह्यन्ते यदि रोषेण त्वादृशोपि विपश्चितः ॥ ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८ ॥
तस्मात्प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद ॥ युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् ॥ ९ ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ॥ रोषेण महताऽऽविष्टो वाक्यमुत्तरमब्रवीत् ॥ १० ॥
न पापानां वधे पापं विद्यते शत्रुसूदन ॥ तस्मादेनं वधिष्यामि वानरं पापचारिणम् ॥ ११ ॥
अधर्ममूलं बहुरोषयुक्तमनार्यजुष्टं वचनं निशम्य ॥
उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतांवरिष्ठः ॥ १२ ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र धर्मार्थयुक्तं वचनं शृणुष्व ॥
दूता न वध्याः समयेषु राजन्सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३ ॥
असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ॥
न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४ ॥
वैरूप्यमङ्गेषु कशाभिघातो मौढ्यं तथा लक्षणसन्निपातः ॥
एतान्हि दूते प्रवदन्ति दण्डान्वधस्तु दूतस्य न नः श्रुतोपि ॥ १५ ॥
कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः ॥
भवद्विधः कोपवशे हि तिष्ठेत्कोपं नियच्छन्ति हि सत्त्ववन्तः ॥ १६ ॥
न धर्मवादे न च लोकवृत्ते न शास्त्रबुद्धिग्रहणेषु चापि ॥
विद्येत कश्चित्तव वीर तुल्यस्त्वं ह्युत्तमः सर्वसुरासुराणाम् ॥ १७ ॥

परावरज्ञाः त्याज्योपादेयविवेकयुक्ताः ॥ ५ ॥ प्रमापणं मारणं ॥ ६ ॥ भूतानामिति निर्धारणे षष्ठी । भूतानां मध्ये ॥ ७ ॥ शास्त्रविपश्चित्त्वं विविधं पश्यतीति विपश्चित् तस्य भावः विपश्चित्त्वं शास्त्रविषये विविधज्ञानोपेतत्वमितियावत् ॥ ८ ॥ दूतदण्डः दूतयोग्यदण्डः ॥ ९—१२ ॥ सर्वेषु सर्वत्र सर्वदेशेषु सर्वजातिष्वित्यर्थः ॥ १३ ॥ न केवलं दूतोयं अक्षादिवधेन शत्रुश्च तथाच हन्तव्य इत्याशङ्क्याह— असंशयमिति ॥ दूतवध्यां दूतवधं । स्त्रियां भावे क्यप् । हन्तेर्वधादेश आर्षः ॥ १४ ॥ लक्षणसन्निपातः दूतयोग्याङ्कनसंबन्धः । नः अस्माभिः ॥ १५ ॥ धर्मार्थविनीतबुद्धिः धर्मार्थयोरशिक्षितबुद्धिः । परावरप्रत्ययनिश्चितार्थः उत्कृष्टापकृष्टपरिज्ञाननिश्चितार्थः । अस्मिन्विषये इदं कार्यं परं इदमवरमिति विवेकनिश्चितकार्यइत्यर्थः । नियच्छन्ति निगृह्णन्ति । सत्त्ववन्तः व्यवसायवन्तः ॥ १६ ॥ धर्मवादे धर्मशास्त्रे । लोकवृत्ते

त्वमुक्तं ॥ २ ॥ **शि०** तस्मात् मदुक्तहेतोः । प्रसीद प्रसादंकुरु ॥ ९ ॥ **ति०** मौण्ड्यं मुण्डनं । लक्षणसंनिपातः दूतयोग्याङ्कनसंबन्धइतितीर्थः । वैरूप्यादीनामेकैकंवा । तथालक्षणानांसंनिपातः सर्वानुष्ठानंवेत्यर्थइत्यन्ये । नोस्माकंश्रुतोपिनास्ति । दर्शनंतु। दूरापास्तमितिभावः ॥ **शि०** अङ्गेषुवैरूप्यं नासिकाच्छेदादिनाविरूपकरणं । कशाभिघातः कशयातोत्रेण अभिघातः ताडनं मौण्ड्यं भ्रुकुट्यादिमुण्डनं । लक्षणसंनिपातः ताम्रखण्डदाहादिनाललाटादौचिह्नकरणं । एतान्दण्डान्दूतेप्रवदन्ति ॥ **स०** मौढ्य-

**[ पा० ]** १ क. ङ. च. झ. ञ. ट. मेवाक्यं. २ ङ. झ. ट. विचक्षणाः. ३ च. ज.—ट. कोपेन. ४ झ. ट. तस्मादिमं. ५ क. छ.—ट. पापकारिणं. ६ क. ग. घ. च. छ. झ. ञ. ट. बहुदोषयुक्तं. ७ ग. घ. ङ. झ. ट. धर्मार्थतत्वं. ८ झ. ञ. ट. मौण्ड्यं. ९ ङ. झ. ट. श्रुतोस्ति. १० ग. प्रत्ययदर्शितार्थः. ११ क. घ. ङ. झ. ट. नगच्छन्ति. १२ क. घ. च. छ. ज. धर्मवादेषुच.

[ पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ॥
त्वयाऽप्रमेयेन सुरेन्द्रसंघा जिताश्च युद्धेष्वसकृन्नरेन्द्राः ॥ १८ ॥
इत्थंविधस्यामरदैत्यशत्रोः शूरस्य वीरस्य तवाजितस्य ॥
कुर्वन्ति वीरा मनसाऽप्यलीकं प्राणैर्विमुक्ता न तु भोः पुरा ते ॥ १९ ॥ ]
न चाप्यस्य कपेर्घाते कंचित्पश्याम्यहं गुणम् ॥ तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥२०॥
साधुर्वा यदि वाऽसाधुः परैरेष समर्पितः ॥ ब्रुवन्परार्थं परवान्न दूतो वधमर्हति ॥ २१ ॥
अपि चास्मिन्हते राजन्नान्यं पश्यामि खेचरम् ॥ इह यः पुनरागच्छेत्परं पारं महोदधेः ॥ २२ ॥
तस्मान्नास्य वधे यत्नः कार्यः परपुरञ्जय ॥ भवान्सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २३ ॥
अस्मिन्विनष्टे न हि दूतमन्यं पश्यामि यस्तौ नरराजपुत्रौ ॥
युद्धाय युद्धप्रिय दुर्विनीतावुद्योजयेद्दीर्घपथावरुद्धौ ॥ २४ ॥
[ अस्मिन्हते वानरयूथमुख्ये सर्वापवादं प्रवदन्ति सन्तः ॥
न हि प्रपश्यामि गुणं यशो वा लोकापवादो भवति प्रसिद्धः ॥ २५ ॥
मूढैः प्रगल्भैरपि दुर्विनीतैर्यैर्वानरोऽयं पुरुषैर्विसृष्टः ॥
तेषां वधार्थं कुरु वीर यत्नं शीघ्रं विनाशाय निशाचरेन्द्र ॥ २६ ॥
कुरुष्व तावत्परमप्रयत्नं धर्मं समास्थाय सुरेन्द्रशत्रो ॥
देवेषु सर्वेषु सवासवेषु दैत्येषु सर्वेषु सदानवेषु ॥ २७ ॥
कृत्वा प्रयत्नं सुदृढं सुशीघ्रं मद्वाक्यमेवं मनसा प्रगृह्य ॥
तौ राजपुत्रौ विनिगृह्य वीरौ जयं परं प्राप्स्यसि राक्षसेन्द्र ॥ २८ ॥
पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ॥
त्वया मनोनन्दन नैर्ऋतानां युद्धायतिर्नाशयितुं न युक्ता ॥ २९ ॥

लौकिकाचारे। शास्त्रबुद्धिग्रहणेषु शास्त्रशब्देन शास्त्रार्थ उच्यते । शास्त्रार्थज्ञानतद्धारणेष्वित्यर्थः ॥ १७–१९ ॥ न केवलं दूतस्य वधे शास्त्रविरोधः गुणमपि न कंचित्पश्यामि अतः एतत्प्रेषकेष्वेव वधरूपो दण्डः पात्यतामित्याह—न चेत्यादि ॥ २० ॥ साधुर्वेति । समर्पितः प्रेषितः ॥ २१ ॥ अस्मिन्हतेसति वृत्तान्तनिवेदकाभावाद्रामलक्ष्मणयोरिहागमनाभावेन तव शत्रुक्षयो न स्यात् । विमुक्तेस्मिन् एतन्निवेदितवृत्तान्तयोस्तयोरिहागमनादयत्नेन तव शत्रुनाशो भवेदित्यभिप्रेत्याह—अपि चेत्यादिना ॥ इह परं पारं इह विद्यमानं महोदधेः परं पारं इदं दक्षिणकूलमित्यर्थः ॥ २२—२३ ॥ दीर्घपथावरुद्धौ दूरमार्गेण निरुद्धगमनावित्यर्थः । एतच्छ्लोकानन्तरं पराक्रमोत्साहमनस्विनांचेति श्लोकः । ततो हिताश्चेति श्लोकः । अथ तदेकदेशेनेति श्लोकः । अथ निशाचराणामिति सर्गान्तश्लोकः । अयमेव पाठक्रमः समीचीनः । अन्ये

मितिपाठे धुत्तूरादिभोजनेनमुग्धताप्रापणं ॥ १५ ॥ ति० युद्धप्रियेतिसंबोधनेन रणपराक्रमविजयकीर्ती तवेष्टेकिल । तेउभेअप्येतद्विनाशे नश्यतइत्याशयः । रावणस्यरजःप्रकृतित्वात्तत्प्रकृत्यनुसारेणयुद्धादिव्यापारेणप्रलोभनं । तत्प्रीत्यर्थमेवदुर्विनीतावित्याद्युक्तिः ॥ २४ ॥ ति० हेनैर्ऋतानांमनोनन्दन सुरासुराणामपिदुर्जयेनत्वया पराक्रमेयउत्साहस्तत्र प्रशस्तमनोवतांनैर्ऋतानांमनः युद्धायप्रवृत्तं निर्नाशयितुंनयुक्तं । नैर्ऋतानामित्यत्रमनइत्यत्रचतन्त्रं । यद्वा तादृशानांनैर्ऋतानांमनोनन्दन तादृशेनत्वया युद्धायतिः युद्धागमः । नाशयितुंनयुक्तमित्यर्थः ॥ शि० हेनन्दन राक्षसाभिरामदातः । युद्धाय समुत्सुकमितिशेषः । नैर्ऋतानांमनः निर्ना-

[ पा० ] १ इदंश्लोकद्वयं क. ट. पाठयोर्दृश्यते. २ क. च. ज. किंचित्. ३ घ. अस्मिन्हतेमहाराजनान्यं. ४ क. ख. घ.—ज. भूतमन्यं. ५ इमेचत्वारःश्लोकाः ग. पाठेदृश्यन्ते. ६ ग. शूरेणवीरेणनिशाचरेन्द्रसुरासुराणामपि. ७ ग. ङ. ट. युद्धायनिर्नाशयितुंनयुक्तं.

हिताश्च शूराश्च समाहिताश्च कुलेषु जाताश्च महागुणेषु ॥
मनस्विनः शस्त्रभृतां वरिष्ठाः कोट्यग्रतस्ते सुभृताश्च योधाः ॥ ३० ॥
तदेकदेशेन बलस्य तावत्केचित्तवादेशकृतोभियान्तु ॥
तौ राजपुत्रौ विनिगृह्य मूढौ परेषु ते भावयितुं प्रभावम् ॥ ३१ ॥
निशाचराणामधिपोनुजस्य विभीषणस्योत्तमवाक्यमिष्टम् ॥
जग्राह बुद्ध्या सुरलोकशत्रुर्महाबलो राक्षसराजमुख्यः ॥ ३२ ॥
[ किं वा परं ब्रह्म परं त्वसह्यं सर्वस्य बीजं जगतोस्य विष्णोः ॥
यद्देवदेवस्य परं च तेजस्तदेव तेजः कपिरेष वीरः ॥ ३३ ॥
वधाय मे वैष्णवतेज एव निस्संशयोऽयं कपिरूपधारी ॥
इत्येवमेतद्बहुधा विचिन्त्य रक्षोधिपः क्रोधवशं जगाम ॥ ३४ ॥
क्रोधं च जातं हृदये निरुध्य विभीषणोक्तं वचनं सुपूज्य ॥
उवाच रक्षोधिपतिर्महात्मा विभीषणं शस्त्रभृतांवरिष्ठम् ॥ ३५ ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रावणाज्ञया राक्षसगणैर्हनुमद्वालस्य पटवेष्टनतैलसेचनपूर्वकमग्निज्वालया संदीपनेनसवाद्यघोषंलङ्कासंचारणम् ॥ १ ॥ राक्षसीभिस्तद्वृत्तान्तं निवेदितयासीतया सशपथमग्निंप्रति हनुमददाहप्रार्थनम् ॥ २ ॥ [ हनुमद्वालसंदीपनश्रवणखिन्नां सीतांप्रति विभीषणभार्ययासरमया हनुमत्कृतलङ्कादहननिवेदनेन समाश्वासनम् ॥ ३ ॥ ] हनुमता पुरद्वारारोहणेन पृथुतरनिजशरीरकृशीकरणाद्वालबन्धविश्लथनपूर्वकं पुनःशतीरपृथूकरणम् ॥ ४ ॥ तथा तत्रत्यपरिघेण तद्रक्षिणांरक्षसांक्षपणम् ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा दशग्रीवो महाबलः ॥ देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १ ॥
सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ॥ अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥ २ ॥
कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ॥ तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३ ॥
ततः पश्यन्त्विमं दीनमङ्गवैरूप्यकर्शितम् ॥ समित्रज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ॥ ४ ॥

---

प्यत्र सर्गे श्लोकाः कल्पिता दृश्यन्ते ॥ २४—३० ॥ तत् तस्मात्कारणात् । एकदेशेनेति सहयोगे तृतीया । बलस्य सैन्यस्य ॥ ३१—३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

देशकालहितं देशकालोचितमिति विभीषणवचनविशेषणं ॥ १ ॥ दूतवध्या दूतवधः ॥ २—३ ॥ समित्रेति । मित्राणि आप्ताः । समसुखदुःखा वा । सहाया वा । ज्ञातयः भ्रात्रादयः । बान्धवाः संबन्धिनः । सुहृज्जनाः स्निग्धजनाः ॥ ४ ॥

---

शयितुंत्वयानयुक्तं ॥ २९ ॥ ती० समाहिताः दानमानाभ्यांवशीकृताइत्यर्थः । सुभृताः सद्भृत्याः । योधाश्च वर्तन्तेखल्विति-शेषः ॥ ३० ॥ इतिद्विपञ्चाशः सर्गः ॥ ५२ ॥

[ पा० ] १ झ. ञ. कोपप्रशस्ताःसुभृताश्च. घ. कोट्यायुतास्तेसुहृदश्च. २ झ. ञ. ट. कृतोद्ययान्तु. क. ग. च. कृतोपयान्तु. ३ झ. ञ. ट. राजपुत्रावुपगृह्य. ४ घ. युद्धे. ५ घ. शत्रुर्दशाननो. ६ इदंश्लोकत्रयं ग. पाठेदृश्यते. ७ ङ. सतस्यवचनं. ८ ख.—ट. महात्मनः. ९ ग. घ. च. ज. ञ. दण्डेन. १० झ. ट. पश्यन्त्वमुं. ११ ङ. झ. ट. सुमित्रज्ञातयः. ख समित्राज्ञातयः. च. ज. मित्राणिज्ञातयः. घ. स्वमित्रज्ञातयः.

आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् ॥ लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्शिताः ॥ वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासकैः पटैः ॥ ६ ॥
संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः ॥ शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः ॥
तैलेन परिषिच्याथ तेऽग्निं तत्राभ्यपातयन् ॥ ७ ॥
लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानपातयत् ॥ रोषामर्षपरीतात्मा बालसूर्यसमाननः ॥ ८ ॥
लाङ्गूलं संप्रदीप्तं तु द्रष्टुं तस्य हनूमतः ॥ सहस्त्रीबालवृद्धाश्च जग्मुः प्रीता निशाचराः ॥ ९ ॥
स भूयः सङ्गतैः क्रूरै राक्षसैर्हरिसत्तमः ॥ निबद्धः कृतवान्वीरस्तत्कालसदृशीं मतिम् ॥ १० ॥
कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः ॥ छित्त्वा पाशान्समुत्पत्य हन्यामहमिमान्पुनः ॥११॥
यदि भर्तृहितार्थाय चरन्तं भर्तृशासनात् ॥ बध्नन्त्येते दुरात्मानो न तु मे निष्कृतिः कृता ॥१२॥
सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ॥ किंतु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् ॥ १३ ॥
लङ्का चारयितव्या वै पुनरेव भवेदिति ॥ रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः ॥ १४ ॥
अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये ॥ १५ ॥
कामं बद्धस्य मे भूयः पुच्छस्योद्दीपनेन च ॥ पीडां कुर्वन्तु रक्षांसि न मेऽस्ति मनसः श्रमः ॥१६॥

---

प्रदीप्तेन लाङ्गूलेन युक्तो हनुमान् सचत्वरं सर्वं पुरं परिणीयतां परितो नीयतां । इत्याज्ञापयदित्यन्वयः ॥ ५—७ ॥ अपातयत् लाङ्गूलभ्रामणेन अद्रावयदित्यर्थः ॥ ८—१० ॥ न मे शक्ताः न मे पर्याप्ता इत्यर्थः । मम निग्रहे नसमर्थाइतियावत् ॥ ११ ॥ भर्तृहितार्थाय रामहितार्थाय । चरन्तं प्रवर्तमानं । मामितिशेषः । भर्तृशासनात् रावणशासनात् । यदि बध्नन्ति । तावता मे निष्कृतिः प्रतिक्रिया । नकृता । इदं बन्धनमकिंचित्करमिति भावः ॥ १२ ॥ रामस्यप्रीत्यर्थमिदंविषहिष्ये । रावणादिवधस्य स्वेनैवकर्तव्यत्वेनरामाभिमतत्वाद्राक्षसानामहमीदृशं बन्धनाकर्षणादिरूपंपरिभवंसहिष्यइतिभावः । रामस्यप्रीत्यर्थमित्यत्र च्छन्दोभङ्गआर्षः ॥ १३ ॥ लङ्का रात्रौ दुर्गकर्मविधानतः दुर्गकर्मविधानाद्धेतोः । नहिसुदृष्टा नैवसुदृष्टा । यद्वा दुर्गकर्मविधानतः नगरगुप्तिविशेषज्ञानपूर्वकमित्यर्थः । नदृष्टेतिहेतोर्मया लङ्का पुनश्चारयितव्याभवेत् । विचरित्वा द्रष्टव्या भवेदित्यर्थः । अयं च प्रातःकालः नतूषःकालः । प्रातःकालेपि तथाऽव्यवहारोपपत्तेः ॥ १४—१५ ॥ मनसः श्रमइति०

ति० आरण्यकायथाशुष्कमिन्धनमासाद्यहुताशनमुत्पादयन्ति तथा जीर्णपटवेष्टितलाङ्गूलंतैलेपरिषिच्य तत्रतेग्निमुपपादयन् उदपादयन्नित्यर्थइतिकतकः । हुताशनइतिपाठे वृद्ध्यौदृष्टान्तोऽयं । उपपादयन्नित्यस्यसमयोजयन्नित्यर्थइत्यन्ये ॥ ७ ॥ तान् बध्वानेतॄन् ॥ ८ ॥ ति० यदितांवधरूपांचिकीर्षुस्तदासर्वान्हनिष्याम्येवेत्याह—सर्वेषामिति । यदिपर्याप्तस्तर्हिंकियतांशात्रवधस्तत्राह—रामस्येति ॥ १३ ॥ ति० निशाक्षयइत्यनेन सीतासंभाषणार्थकतिपयदिनवासोगम्यते । तथाहि—फाल्गुनेरावणेनसीतापहारः । आश्विनशुक्लसमाप्तौहनुमत्प्रेरणयापक्षावधिदानेनवानरान्प्रतिदूतप्रेषणं । ततःकार्तिकशुक्लप्रतिपद्यन्वेषणार्थंवानरप्रस्थानं। मार्गशुक्लदशम्यांसंपातिदर्शनं । तदासुग्रीवदत्तमासावधेर्गतत्वस्यवानरैरुक्तिः । अत्रएकादश्यांहनुमतोलङ्कागमनं । तद्रात्रिशेषेसीतादर्शनं । ततोद्वादश्यांदिनेस्थित्वारात्रौसीतायाःसम्यग्दर्शनं । तद्रात्रिशेषेतत्ररावणागमनं । तत्ररावणेन " मासान्द्वादशभामिनि " इतिस्वदत्तावधौमासद्वयावशेषवचनेकतिपयदिनाधिक्यंतुमासत्वानवच्छिन्नत्वेनाल्पान्तरत्वान्नविवक्षितं । ततस्त्रयोदश्यांप्रातःसीतयासहकथालापः । तद्दिनएवाशोकवनिकाभङ्गादि । चतुर्दश्यामक्षान्तवधोलङ्कादाहश्चपूर्णिमायांवा । पूर्ववासन्तिकवृक्षाणांपुष्पितत्वोक्तिस्तु तद्वर्षेक्षयमासेनोपपादिता उत्पातेनच । लक्ष्मणस्यसुग्रीवनिकटेप्रेषणसमयेरामेणमासचतुष्टयरूपकृतावधेरपगमोक्तिस्तु

[ पा० ] १ क. ख. ग. ङ.—ट. कोपकर्कशाः. घ. क्रोधमूर्च्छिताः. २ क. ख. ग. ङ. झ. ट. वेष्टन्तेतस्यलाङ्गूलं. ३ क. ङ. झ. ट. तत्रोपपादयन्. घ. तत्रावपातयन्. ख. तत्राप्यपातयन्. च. ञ. तत्रप्रदीपयन्. ४ ख. सतुरोषपरीतात्मा. क. रोषामर्षपरीताक्षः. ५ ख. दृष्ट्वासर्वे. क. च. छ. ज. ञ. दृष्टातस्यमहात्मनः. ६ क. छ.—ट. प्रीतिं. ७ क. संगतैर्वीरैः. ८ क. ख. घ. च. छ. ज. ञ. भर्तुर्हितार्थाय. ९ ङ. झ. ट. निबध्नन्ते. १० क. रामस्यकार्यार्थं. क. रामप्रियार्थंतु. ११ क. ख. ङ—ट. चारयितव्यामे. १२ क. ङ. झ. कुर्वन्ति.

ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम् ॥ परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ॥ १७ ॥
शङ्खभेरीनिनादैस्तं घोषयन्तः स्वकर्मभिः ॥ राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ॥ १८ ॥
अन्वीयमानो रक्षोभिर्ययौ सुखमरिन्दमः ॥ हनुमांश्चारयामास राक्षसानां महापुरीम् ॥ १९ ॥
अथापश्यद्विमानानि विचित्राणि महाकपिः ॥ संवृतान्भूमिभागांश्च सुविभक्तांश्च चत्वरान् ॥२०॥
वीथीश्च गृहसंबाधाः कपिः शृङ्गाटकानि च ॥ तथा रथ्योपरथ्याश्च तथैव गृहकान्तरान् ॥
गृहांश्च मेघसंकाशान्ददर्श पवनात्मजः ॥ २१ ॥
चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ घोषयन्ति कपिं सर्वे चारीक इति राक्षसाः ॥ २२ ॥
स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात् ॥ तं प्रदीपितलाङ्गूलं हनुमन्तं दिदृक्षवः ॥ २३ ॥
दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः ॥ राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम् ॥ २४ ॥
यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥ लाङ्गूलेन प्रदीप्तेन स एष परिणीयते ॥ २५ ॥
श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ वैदेही शोकसंतप्ता हुताशनमुपागमत् ॥ २६ ॥
मङ्गलाभिमुखी तस्य सा तदाऽऽसीन्महाकपेः ॥ उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ २७ ॥
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥ यदि चास्त्येकपत्नीत्वं शीतो भव हनूमतः ॥ २८ ॥
यदि किंचिदनुक्रोशस्तस्य मय्यस्ति धीमतः ॥ यदि वा भाग्यशेषो मे शीतो भव हनूमतः ॥२९॥
यदि मां वृत्तसंपन्नां तत्समागमलालसाम् ॥ स विजानाति धर्मात्मा शीतो भव हनूमतः ॥ ३० ॥
यदि मां तारयेदार्यः सुग्रीवः सत्यसङ्गरः ॥ अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः ॥ ३१ ॥
ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ॥ जज्वाल मृगशाबाक्ष्याः शंसन्निव शिवं कपेः ॥ ३२ ॥

त्यनन्तरमितिकरणं बोध्यं ॥ १६ ॥ संवृताकारं गूढस्वभावं । महाकपिमिति बुद्ध्या महत्त्वं । कपिकुञ्जरमिति सजातीयश्रैष्ठ्यं ॥ १७ ॥ स्वकर्मभिः आस्फोटनसिंहनादैरित्यर्थः । तां पुरीं घोषयन्तः । अत्यन्तसंयोगे द्वितीया । चारयन्ति स्म तमिति शेषः ॥ १८ ॥ चारयामास शोधयामास ॥ १९ ॥ चत्वरान् गृहबहिरङ्गणानि ॥ २० ॥ शृङ्गाटकानि चतुष्पथानि । रथ्याः महावीथीः । उपरथ्याः अवान्तरवीथीः । गृहकान्तरान् गृहकाणि क्षुद्रगृहाणि अन्तराणि प्रच्छन्नद्वाराणि । अन्तर्द्वाराणीत्यर्थः । "तोरणोऽस्त्री बहिर्द्वारं प्रच्छन्नद्वारमन्तरं" इति वैजयन्ती । अक्लीबत्वमार्षं ॥ २१ ॥ चत्वरेषु चतसृणां रथ्यानां संभेदेषु । चतुष्केषु चतुस्स्तम्भमण्डपेषु । चार एव चारीकः । स्वार्थे कप्रत्ययः । आर्षो दीर्घः ॥ २२—२३ ॥ शंसुः शशंसुः । आर्षो द्विर्वचनाभावः ॥ २४ ॥ परिणीयते परितो नीयते ॥२५॥ उपागमत् उपासितवती ॥ २६ ॥ तस्य हनुमतः । मङ्गलाभिमुखी अदाहपरा । प्रयता शुद्धिमती । "पवित्रः प्रयतः पूतः" इत्यमरः ॥ २७ ॥ पतिशुश्रूषादिपदं तत्फलपरं । शीतो भव तेनेति शेषः । एकपत्नीत्वं पातिव्रत्यं ॥ २८ ॥ किंचिदनुक्रोश इति समस्तंपदं । तस्य रामस्य । भाग्यशेषः । इदानीं निरन्तरदुःखानुभवात् भाग्यप्रसक्तिरेवनास्तीतिमन्यमानाया इदं वचनं ॥ २९ ॥ मम पातिव्रत्यं यदि हनुमान् जानाति तदा शीतो भवेत्याह—यदि मामिति ॥ ३० ॥ यदि मां तारयेदिति । मत्तारणे इदमेव ज्ञापकमिति भावः ॥ ३१ ॥ ततः सीतोपगमात् । कपेरनलः कपिवालाग्निः । मृगशाबाक्ष्याः सीतायाः । शुभं शंसन्निव प्रदक्षिणशिखो जज्वालेत्यन्वयः ॥३२॥

प्रागुपपादितरहस्येतिदिक् । पुच्छस्योद्दीपनेनचेत्यस्योत्तरश्लोकेनान्वयः ॥ १५ ॥ ति० स्वकर्मभिः राजद्रोहिणोदुष्टस्यैवंदण्डइत्येवमादिभिः । घोषयन्तः । पूर्ववृत्तान्तस्यसर्वान्प्रतिप्रकटंप्रतिपादनंघोषणं ॥ १८ ॥ ति० एकपत्नीत्वं पातिव्रत्यं । शीतोभव हुता-

[ पा० ] १ क. ङ.—ट. रथ्याश्च. २ क. घ. पुरींसर्वे. ३ ङ. झ. ट. चारइत्येव. ४ क. घ. मुपासिता. ५ क. ग. घ. च. छ. कश्चिदनुक्रोशः. ६ क. ग. घ. च. छ. ज. अस्माद्दुःखान्महाबाहुश्शीतो.

हनुमज्जनकश्चापि पुच्छानलयुतोऽनिलः ॥ ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ॥ ३३ ॥
[ तां तदा परमोद्विग्नां सीतां शोकाभिकर्शिताम् ॥ हनूमति गृहीते तु रक्षोभिर्भीमविक्रमैः ॥
उवाच सरमा वाक्यं तामाश्वासयितुं तदा ॥ ३४ ॥
मा शुचो देवि वैदेहि हनूमन्तं महाकपिम् ॥ ३५ ॥
हत्वा तु रक्षिणः सर्वान्राक्षसांस्तत एव सः ॥ पुरीं लङ्कां दहति स साक्षादिव हुताशनः ॥
भवनाद्भवनं गच्छन्नसावत्यन्तवीर्यवान् ॥ ३६ ॥
प्रासादवरसंस्थाश्च गवाक्षस्थाश्च योषितः ॥ वह्निप्रदीप्तनयनास्तथा क्रन्दन्ति दुःखिताः ॥ ३७ ॥
एता वरविशालाक्ष्यो वह्निज्वालासमावृताः ॥ अपश्यन्त्यः क्वचित्स्थातुं सर्वतोऽग्निसमावृताः ॥
वह्नावभ्युत्पतन्त्याशु कर्तव्यं नैव जज्ञिरे ॥ ३८ ॥
अभिधावन्ति सहसा क्रोशन्त्यः सह बालकैः ॥ अवकुण्ठानि कृत्वा स्म वासोभिर्विष्ठितास्तदा ॥३९॥
स्तंभै राजतसौवर्णैः प्रवालमणिचारुभिः ॥ दृश्यन्तेऽग्निसमासक्ता वह्नौ वह्निरिवोद्यताः ॥
प्रासादमाला बहुधा अग्निदग्धाः पतन्ति हि ॥ ४० ॥
अर्चिषेव हिरण्यानां प्रभाभिः कृष्णवर्त्मनः ॥ दीप्यमाना इवाभाति लङ्केयं कालपर्यये ॥ ४१ ॥
क्वचिद्दग्धाः प्रदेशास्तु क्वचिद्दग्धा विनाशिताः ॥ बहुभौमा विभान्ति स्म गृहाणां भूमयः शुभाः ॥४२॥
कान्ताभिः सह वित्रस्ता दृश्यन्ते राक्षसास्तदा ॥ हाहेत्युच्चैर्वदन्ति स्म त्रातारं नाभिजज्ञिरे ॥ ४३ ॥
संप्रदीप्तां पुरीं लङ्कां हनुमद्वीर्यधर्षिताम् ॥ अन्तःपुराणि सर्वाणि दृष्ट्वा दुद्रुविरे तदा ॥ ४४ ॥
क्वचित्कुङ्कुमवर्णाभाः क्वचित्किंशुकसंनिभाः ॥ क्वचिन्मलिनसंकाशाः शिखा वह्नेश्चकाशिरे ॥ ४५ ॥
धूमेन संवृताः केचिद्गृहोद्देशाः सुशोभनाः ॥ वर्षाकाले तु संप्राप्ते घनैरिव नभस्स्थलम् ॥ ४६ ॥
देवि व्यपैतु ते त्रासो हनूमन्तं प्रति प्रिये ॥ दग्ध्वैव लङ्कां सुमहान्व्योम्नि वीरः प्रकाशते ॥
दीर्घैर्घनांबुसंरोधैर्मुक्तचन्द्रइवामलः ॥ ४७ ॥
एतच्छ्रुत्वाऽभवत्प्रीता सीता शशिनिभानना ॥ निर्वृतिं परमां प्राप्ता बाला स्वस्थाऽभवत्तदा ॥४८॥ ]
दह्यमाने च लाङ्गूले चिन्तयामास वानरः ॥ प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ॥ ४९ ॥
दृश्यते च महाज्वालः करोति न च मे रुजम् ॥ शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः ॥५०॥
अथवा तदिदं व्यक्तं यद्दृष्टं प्लवता मया ॥ रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ॥ ५१ ॥
यदि तावत्समुद्रस्य मैनाकस्य च धीमतः ॥ रामार्थं संभ्रमस्तादृक्किमग्निर्न करिष्यति ॥ ५२ ॥

---

अनिलश्च पुच्छानलयुतोपि प्रालेयानिलशीतलः हिममारुतवच्छीतलस्सन् । देव्याः सीतायाः । स्वास्थ्यकरः सुखकरः । ववौ । अस्मात्परं दह्यमाने च लाङ्गूल इति श्लोकः । अनयोः श्लोकयोर्मध्ये केचन श्लोकाः कतिपयकोशेषु दृश्यन्ते । बहुकोशेष्वदर्शनादर्थाधिक्याभावाच्च ते अनादरणीयाः ॥ ३३—४९ ॥ रुजं पीडां । शिशिरस्येव संपातः शिशिरस्य चन्दनोशीरादेः संपातः संघट्ट इव स्थितः । अत्यन्तशीतल इत्यर्थः । एतेन हेतुविशेषं न पश्यामीत्युक्तं ॥ ५० ॥ हेतुविशेषान्निश्चिनोति—अथवेत्यादिना ॥ प्लवता मया सरितां पतौ । आर्षं घिसंज्ञाकार्यं । समुद्रमध्ये । पर्वतः पर्वतरूपं यदाश्चर्यं अद्भुतरूपं वस्तु दृष्टं । तद्वदिदमग्नेः शैत्यं रामप्रभावात्संजातं व्यक्तं निश्चितं ॥ ५१ ॥ एतदेवोपपादयति—यदीति ॥ संभ्रमः

---

शनेतिशेषः । अस्याःसीताछायात्वेपिस्वस्मिंस्तदभेदबुद्धिसत्त्वान्नैतदुक्त्यसंगतिः ॥ २८ ॥ **रामानु०** हनुमज्जनकइति । अस्मात्परतोदह्यमानेचलाङ्गूलेइतिश्लोकः । अनयोःश्लोकयोर्मध्येसरमावाक्यभूताःकेचनश्लोकाःकतिपयकोशेषुदृश्यन्ते । बहुकोशेष्वदर्शनादर्थौचित्याभावाच्चतेअनादरणीयाः ॥ ३३ ॥ **ति०** ननुसमुद्रप्रेरणेनमैनाकोत्थानंयुज्यते अग्नेस्तुस्वभाववैपरीत्यंकुतस्तत्राह-

[ **पा०** ] १ तांतदापरमोद्विग्नामित्यारभ्य बालास्वस्थाऽभवत्तदेत्यन्ताःश्लोकाः घ. पाठेदृश्यन्ते.

सीतायाश्चानृशंस्येन तेजसा राघवस्य च ॥ पितुश्च मम सख्येन न मां दहति पावकः ॥ ५३ ॥
भूयः स चिन्तयामास मुहूर्तं कपिकुञ्जरः ॥ [कथमस्मद्विधस्येह बन्धनं राक्षसाधमैः ॥
प्रतिक्रियाऽस्य युक्ता स्यात्सति मह्यं पराक्रमे ॥ ५४ ॥
ततश्छित्त्वा च तान्पाशान्वेगवान्वै महाकपिः ॥] उत्पपाताथ वेगेन ननाद च महाकपिः ॥ ५५ ॥
पुरद्वारं ततः श्रीमाञ्शैलशृङ्गमिवोन्नतम् ॥ विभक्तरक्षःसंबाधमाससादानिलात्मजः ॥ ५६ ॥
स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥ ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् ॥ ५७ ॥
विमुक्तश्चाभवच्छ्रीमान्पुनः पर्वतसन्निभः ॥ वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ॥ ५८ ॥
स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ॥ रक्षिणस्तान्पुनः सर्वान्सूदयामास मारुतिः ॥ ५९ ॥
स तान्निहत्वा रणचण्डविक्रमः समीक्षमाणः पुनरेव लङ्काम् ॥
प्रदीप्तलाङ्गूलकृतार्चिमाली प्रकाशतादित्य इवार्चिमाली ॥ ६० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

हनुमता लङ्कादहनस्यकार्यशेषत्वनिर्धारणेन स्ववालानलेनविभीषणभवनर्जं समग्रलङ्कादहनम् ॥ १ ॥ देवगन्धर्वादिभिर्लङ्कादहकदर्शनेन सविस्मयंहर्षाधिगमः ॥ २ ॥

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः ॥ वर्धमानसमुत्साहः कार्यशेषमचिन्तयत् ॥ १ ॥
किं नु खल्ववशिष्टं मे कर्तव्यमिह सांप्रतम् ॥ यदेषां रक्षसां भूयः संतापजननं भवेत् ॥ २ ॥
वनं तावत्प्रमथितं प्रकृष्टा राक्षसा हताः ॥ बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३ ॥
दुर्गे विनाशिते कर्म भवेत्सुखपरिश्रमम् ॥ अल्पयत्नेन कार्येस्मिन्मम स्यात्सफलः श्रमः ॥ ४ ॥

---

त्वरा । किमग्निर्न करिष्यति संभ्रममिति शेषः । रामार्थं मैनाकस्य संभ्रमो यदि स्यादग्नेस्तादृशस्संभ्रमः कुतो न भविष्यतीत्यर्थः ॥ ५२ ॥ आनृशंस्येन दयया ॥ ५३ ॥ स चिन्तयामास अनन्तरकर्तव्यमितिशेषः ॥ ५४ ॥ चिन्तितमेवाह—उत्पपातेति ॥ ५५ ॥ विभक्तरक्षस्संबाधं निवृत्तरक्षस्संचारं ॥ ५६ ॥ अवशातयत् अवाशातयत अच्यावयदित्यर्थः ॥ ५७—५९ ॥ निहत्वा निहत्य । ल्यबभावआर्षः । लाङ्गूलकृतार्चिमाली लाङ्गूले कृतज्वालामालः । अर्चिमाली तेजःपुञ्जवानादित्य इव । प्रकाशत प्राकाशत । अनित्यत्वादडभावः । अर्चीतीकारान्तत्वमार्षं ॥ ६० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

कृतमनोरथः पर्याप्तमनोरथः ॥१—२॥ बलैकदेशः सेनैकदेशः । क्षपितः नाशितः । दुर्गविनाशनं पुरविनाशनं । शेषं अवशिष्टं ॥ ३ ॥ कर्मपूर्वोक्तं वनभङ्गादिकं । समुद्रलङ्घनं दूत्यं वा । सुखपरिश्रमं सफलायासं । शक्यमेतदित्याह—अल्पयत्नेनेति । अस्मिन्कार्ये

---

यदीति ॥ तावदितिवाक्यालङ्कारे । रामार्थं रामोपकारार्थं । तादृक्संभ्रमोयदि आदरपूर्वकंत्वरायदि । तदा समेणनित्यमुपासितोऽग्निः रामोपकारार्थं कथमपिशैत्यंकिंनकरिष्यतीत्यर्थः ॥ ५२ ॥ ति० प्रतिक्रिया लङ्कादहनरूपा । मह्यं मम ॥ ५४ ॥ शि० उत्पपात ननादच । क्रियाभेदात्कपिरितिनपौनरुक्त्यं ॥ ५५ ॥ स० विभक्तरक्षस्संबाधं नानाधिकारनियुक्तराक्षसनिबिडं ॥५६॥ स० रक्षिणः तोरणरक्षिणः ॥ ५९ ॥ इतित्रिपञ्चाशःसर्गः ॥ ५३ ॥

स० कर्म समुद्रतरणादिरूपं । सुखपरिश्रमं सुखयतीतिसतथा श्रमोयस्यतत् । अल्पयत्नेन पावकसंपादनाद्यायासरहितयत्नेन । मम स्वामिनइतिशेषः । श्रमः मत्प्रेषणरूपः । सफलः कीर्तिरूपफलसहितइत्यर्थः ॥ ति० अस्मिन् सीतान्वेषणप्रवृत्तिरूपे । कार्ये-

[ पा० ] १ क. ख. ग. ङ. छ. ज. ञ. ट. संचिन्तयामास. २ इदमर्धत्रयं. ङ.—ट. पाठेषुदृश्यते.

यो ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः ॥ अस्य संतर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥ ५ ॥
ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः ॥ भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ ६ ॥
गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ॥ वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ ७ ॥
अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ॥ अग्निं तत्र स निक्षिप्य श्वसनेन समो बली ॥ ८ ॥
ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ मुमोच हनुमानग्निं कालानलशिखोपमम् ॥ ९ ॥
वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ॥ शुकस्य च महातेजाः सारणस्य च धीमतः ॥
तथा चेन्द्रजितो वेश्म ददाह हरियूथपः ॥ १० ॥
जम्बुमालेः सुमालेश्च ददाह भवनं ततः ॥ ११ ॥
रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ॥ ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२ ॥
युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः ॥ विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३ ॥
करालस्य पिशाचस्य शोणिताक्षस्य चैव हि ॥ कुम्भकर्णस्य भवनं मकराक्षस्य चैव हि ॥ १४ ॥
यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च ॥ नरान्तकस्य कुम्भस्य निकुम्भस्य दुरात्मनः ॥ १५ ॥
वर्जयित्वा महातेजा विभीषणगृहं प्रति ॥ क्रममाणः क्रमेणैव ददाह हरिपुङ्गवः ॥ १६ ॥
तेषुतेषु महार्हेषु भवनेषु महायशाः ॥ गृहेष्वृद्धिमतामृद्धिं ददाह स महाकपिः ॥ १७ ॥
सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् ॥ आससादाथ लक्ष्मीवान्रावणस्य निवेशनम् ॥ १८ ॥
ततस्तस्मिन्गृहे मुख्ये नानारत्नविभूषिते ॥ मेरुमन्दरसंकाशे सर्वमङ्गलशोभिते ॥ १९ ॥
प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम् ॥ ननाद हनुमान्वीरो युगान्तजलदो यथा ॥ २० ॥
श्वसनेन च संयोगादतिवेगो महाबलः ॥ कालाग्निरिव जज्वाल प्रावर्धत हुताशनः ॥ २१ ॥
प्रदीप्तमग्निं पवनस्तेषु वेश्मस्वचारयत् ॥ अभूच्छ्वसनसंयोगादतिवेगो हुताशनः ॥ २२ ॥
तानि काञ्चनजालानि मुक्तामणिमयानि च ॥ भवनान्यवशीर्यन्त रत्नवन्ति महान्ति च ॥ २३ ॥
तानि भग्नविमानानि निपेतुर्वसुधातले ॥ भवनानीव सिद्धानामंबरात्पुण्यसंक्षये ॥ २४ ॥

---

कृते सतीति शेषः ॥ ४ ॥ केनोपायेनेदं सुकरमित्याशङ्क्य तमाह—योहीति ॥ यः अग्निः । अतिशीतलतया मम महोपकारं कृतवान् अस्य संतर्पणं न्याय्यमित्यर्थः ॥ ५ ॥ अत्र बन्धविस्रंसनाय पूर्वं तनुसंकोचे कृतेपि कार्यार्थमग्निवर्तिः स्थापितेति बोध्यं । सविद्युदिव तोयद इति सर्वतआवृत्यसञ्चारे दृष्टान्तः ॥ ६–९ ॥ वज्रदंष्ट्रस्येत्यादि सार्धश्लोकः ॥ १० ॥ जम्बुमालेरित्यर्धं ॥ ११ ॥ रश्मिकेतोरित्यादिपञ्चश्लोकी ॥ १२—१५ ॥ प्रतिवर्जयित्वेति संबन्धः ॥ १६ ॥ भवनेष्विति गृहविशेषणं समृद्धिमत्परं । ऋद्धिं मणिमुक्ताप्रवालादिकां ॥ १७—१८ ॥ सर्वमङ्गलशोभिते सर्वमङ्गलद्रव्ययुक्ते ॥ १९—२० ॥ श्वसनेनेति । पूर्वं रावणादिभीतावग्न्यनिलौ इदानीं राक्षसक्षयं देवबलोदयं च प्रत्यासन्नं विदित्वा निश्शङ्कावभूतामिति

---

योमयाकृतःश्रमः सत्वल्पेनयत्नेन स्वल्पयत्नेनसाध्येनकरिष्यमाणलङ्कादाहेन सफलोभविष्यति ॥ ४ ॥ **ति०** तोयदः सन्ध्यातोयदः । हनुमतोरक्तवर्णत्वात् ॥ ६ ॥ **ति०** प्रहस्तस्यप्रधानमन्त्रित्वादादौतद्गृहेग्निप्रक्षेपः । प्रथमंतत्संभावनस्यौचित्यात् ॥ ८ ॥ **स०** कालानलशिखोपमं हनुमल्लाङ्गूलसंसर्गमाहात्म्येनजलाद्यशाम्यज्वालत्वेनैतदुपमता ॥ ९ ॥ **स०** प्रतिगृहंक्रमेणक्रममाणइत्यन्वयः । विभीषणगृहंवर्जयित्वा । अनेनविभीषणसाधुत्वमिवअन्योन्यसंलग्नतायामपिसद्मनांदाहतदभावयोर्हनुमदिच्छानुसारिप्रवृत्तिरग्नेश्चद्यो-

[ पा० ] १ क. ग. घ. सर्वेशः. २ ङ. झ. ट. तत्रविनिक्षिप्य. क.—घ. च. छ. तत्रैव. ३ ग. ङ.—ट. विशालस्य. ४ क. ग. ङ.—ट. महात्मनः. ५ ग. महाबाहुः. ६ घ. राक्षसानांच. ७ ङ—झ. ट. नानामङ्गल. ८ क. संदीप्तःप्रावर्धत.

संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् ॥ स्वगृहस्य परित्राणे भग्नोत्साहगतश्रियाम् ॥
नूनमेषोग्निरायातः कपिरूपेण हा इति ॥ २५ ॥
क्रन्दन्त्यः सहसा पेतुस्तनन्धयधराः स्त्रियः ॥ काश्चिदग्निपरीतेभ्यो हर्म्येभ्यो मुक्तमूर्धजाः ॥ २६ ॥
पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामिन्य इवाम्बरात् ॥ २७ ॥
वज्रविद्रुमवैदूर्यमुक्तारजतसंहितान् ॥ विचित्रान्भवनान्धातून्स्यन्दमानान्ददर्श सः ॥ २८ ॥
नाग्निस्तृप्यति काष्ठानां तृणानां हरियूथपः ॥ नाग्नेर्नापि विशस्तानां राक्षसानां वसुन्धरा ॥ २९ ॥
क्वचित्किंशुकसंकाशाः क्वचिच्छाल्मलिसन्निभाः ॥ क्वचित्कुङ्कुमसंकाशाः शिखा वह्नेश्चकाशिरे ॥ ३० ॥
हनूमता वेगवता वानरेण महात्मना ॥ लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ॥ ३१ ॥
ततस्तु लङ्कापुरपर्वताग्रे समुत्थितो भीमपराक्रमोग्निः ॥
प्रसार्य चूडावलयं प्रदीप्तो हनूमता वेगवता विसृष्टः ॥ ३२ ॥
युगान्तकालानलतुल्यवेगः समारुतोग्निर्ववृधे दिविस्पृक् ॥
विधूमरश्मिर्भवनेषु सक्तो रक्षःशरीराज्यसमर्पितार्चिः ॥ ३३ ॥

भावः ॥ २१—२४ ॥ स्वगृहस्य परित्राणे भग्नोत्साहगतश्रियामिति पाठः । स्वगृहस्य परित्राणे भग्नोत्साहोर्जितश्रियामिति पाठे उत्साहश्च ऊर्जितश्रीश्च उत्साहोर्जितश्रियौ भग्ने उत्साहोर्जितश्रियौ येषामिति विग्रहः । स्वगृहस्य परित्राणे भग्नोत्साहानां श्रीमतां राक्षसानामिति वार्थः । हा इति "निपात एकाजनाङ्" इति प्रकृतिभावः ॥ २५ ॥ काश्चित् स्त्रियः हर्म्येभ्यः पेतुरिति संबन्धः । सुकेशवंश्यानां जननमात्रे रुद्रेण मातृतुल्यत्ववरप्रदानेपि तदितरेषु तदभावात् स्तनन्धयधरत्वं । अन्यजातीयाश्च राक्षसास्तत्र सन्त्येव ॥ २६ ॥ अम्बरात् पतन्त्यः अभ्रेभ्यो मेघेभ्यः पतन्त्यः सौदामिन्यः तडित इव रेजिरे ॥ २७ ॥ भवनानिति पुंल्लिङ्गत्वमार्षं । धातून् सुवर्णादीन् । "धातुस्तु गैरिके स्वर्णे" इति दर्पः । स्यन्दमानान् स्यन्दतः । अग्नितप्तत्वेन द्रवीभूतस्वर्णादीनित्यर्थः ॥ २८ ॥ काष्ठानां तृणानां चेति संबन्धसामान्ये षष्ठी । काष्ठैस्तृणैश्चेत्यर्थः । "पूरणगुण—" इत्यादिना षष्ठी वा । अग्निः काष्ठैस्तृणैश्च न तृप्यति । हरियूथपः अग्नेः न तृप्यति अग्निना न तृप्यति । अग्निप्रक्षेपणेन न तृप्यतीत्यर्थः । एवं वसुन्धराविशस्तानां राक्षसानां विशस्तैः राक्षसैः । न तृप्यतीति योज्यं । अनेन राक्षसशवाकीर्णा भूरभूदित्यर्थः ॥ २९ ॥ शिखाः ज्वालाः ॥ ३० ॥ ननु एतावत्पर्यन्तमल्पबलतयास्थितस्य हनुमतः कथमेतादृशी शक्तिरित्यत्राह—रुद्रेण त्रिपुरं यथेति । "विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरे" इत्युक्तरीत्या विष्णवाप्यायिततेजसा रुद्रेण त्रिपुरं यथा दग्धं तथानेनेति भावः ॥ ३१ ॥ लङ्कापुरपर्वताग्रे लङ्कापुराधारत्रिकूटशिखरे । तद्वर्तित्वात्तस्यास्तथानिर्देशः । पर्वताग्रस्थलङ्कापुर इति परनिपातो वा । चूडावलयं ज्वालाजालमित्यर्थः । तत् प्रसार्य । विस्तार्य । प्रदीप्तः विसृष्टः । गृहेष्विति शेषः ॥ ३२ ॥ दिविस्पृक् अभ्रंलिहः "हलदन्तात्सप्तम्याः" "ङेरलुग्वक्तव्यः" इति सप्तम्या अलुक् । रक्षश्शरीराज्यसमर्पितार्चिः

त्यते ॥ १६ ॥ **रामानु०** नाग्निरिति । "तृणानांचयथातथा । हनुमान्राक्षसेन्द्राणांवधेकिंचिन्नतृप्यति । नहनूमद्विशस्तानांराक्षसानांवसुन्धरा" इतिपाठः ॥ **स०** यथाग्निर्नतृप्यति तथा हनुमान्राक्षसानांवह्निनावधेसतिकिंचिन्नतृप्यति स्वल्पंवानतृप्यति । यद्वा एवंबहुवधेसत्यपिकिंचिदिदमितिनतृप्यति ॥ **शि०** यथाकाष्ठादीनां दाहेइतिशेषः । अग्निःकिंचिन्नतृप्यति । तथा राक्षसेन्द्राणांवधेहनुमान्नतृप्यति । सकलराक्षसवधमिच्छतीत्यर्थः । तेनसीतादुःखदर्शनासहिष्णुत्वंव्यञ्जितं । हनूमद्विशस्तानांराक्षसानां धारणे इतिशेषः । वसुन्धराचनतृप्यति । निहतसर्वराक्षसधारणमाकाङ्क्षतीत्यर्थः । तेनपतिवियोगजनितस्वसुतादुःखहेतुकदुःखाक्रान्तत्वं

[ पा० ] १ ङ. च. ज.—ट. स्वेस्वेगृहपरित्राणे. २ क. च. झ. ञ. ट. भग्नोत्साहोज्झितश्रियां. ३ क. घ. ङ. झ. ट. परीताङ्ग्यो. ४ घ. संनिभान्. ५ च.—ट. तृणानांचयथातथा. एतदनन्तरं क.—घ. च. झ. ट. पाठेषु हनूमान्राक्षसेन्द्राणां वधेकिंचिन्नतृप्यति. इत्यर्धमधिकंदृश्यते. ६ च.—ट. नहनूमद्विशस्तानां. ७ छ. झ. ट. वेगवतोपसृष्टः. ८ ङ.—ट. तुल्यरूपः. ९ घ. गगनेषु.

[ स तामत्यर्थतो वह्निर्लङ्कां राक्षससंकुलाम् ॥ ज्वालामालापरिक्षेपैरदहन्मारुतात्मजः ॥ ३४ ॥
तेन शब्देन वित्रस्ता धर्षितास्तेन चाग्निना ॥ अभिपेतुस्तदा घोरा हनूमन्तं निशाचराः ॥ ३५ ॥
तं प्रदीप्तैश्च शूलाग्रैः प्रासैः खड्गैः परश्वधैः ॥ हनूमन्तं महावेगैरक्षिपन्नैर्ऋतर्षभाः ॥ ३६ ॥
ते राक्षसा भीमबला नानाप्रहरणान्विताः ॥ निहत्य च स तांस्तत्र दिवमेवोत्पपात ह ॥ ३७ ॥
स च विक्रम्य सहसा संक्रामंश्च गृहाद्गृहम् ॥ लङ्कामादीपयामास वायुपुत्रः प्रतापवान् ॥ ३८ ॥
स लाङ्गूलोपसक्ताग्निर्मुक्तो मृत्युगृहादिव ॥ लङ्कां पर्यदहत्कृत्स्नां खे ग्रहः संपतन्निव ॥ ३९ ॥
तोरणेषु गवाक्षेषु रम्येषु शिखरेषु च ॥ तिष्ठन्ति स्म प्रपश्यन्ति राक्षसाः प्लवगोत्तमम् ॥ ४० ॥

हुताशनज्वालसमावृता सा हतप्रवीरा हतसर्वशोभना ॥
हनूमतः क्रोधबलाभिभूता बभूव कालोपहतेव लङ्का ॥ ४१ ॥
ससंभ्रमत्रस्तविशस्तराक्षसां समुज्ज्वलज्वालहुताशनाङ्किताम् ॥
ददर्श लङ्कां हनुमान्महामनाः स्वयंभुवः कोपहतामिवावनिम् ॥ ४२ ॥
गृहाग्र्यशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ॥
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवार्चिमाली ॥ ४३ ॥ ]
आदित्यकोटीसदृशः सुतेजा लङ्कां समाप्तां परिवार्य तिष्ठन् ॥
शब्दैरनेकैरशनिप्ररूढैर्भिन्दन्निवाण्डं प्रबभौ महाग्निः ॥ ४४ ॥
तत्राम्बरादग्निरतिप्रवृद्धो रूक्षप्रभः किंशुकपुष्पचूडः ॥
निर्वाणधूमाकुलराजयश्च नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ४५ ॥
वज्री महेन्द्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणानिलो वा ॥
रुद्रोग्निरर्को धनदश्च सोमो न वानरोयं स्वयमेव कालः ॥ ४६ ॥
किं ब्रह्मणः सर्वपितामहस्य सर्वस्य धातुश्चतुराननस्य ॥
इहागतो वानररूपधारी रक्षोपसंहारकरः प्रकोपः ॥ ४७ ॥

---

रक्षश्शरीराण्येवाज्यानि तैस्समर्पितार्चिः उत्थापितज्वालः ॥ ३३—४३ ॥ समाप्तां निःशेषां । अशनिप्ररूढैः अशनिवन्निष्ठुरैः । अण्डं ब्रह्माण्डं ॥ ४४ ॥ अम्बरात् अम्बरपर्यन्तं । किंशुकपुष्पचूडः तत्तुल्यशिखः । निर्वाणधूमाकुलराजयः पूर्वपूर्वदग्धभवनाग्निनिर्वाणसमयोत्थितधूमैर्व्याप्तपङ्क्तयः । अतएव नीलोत्पलाभाः निर्वाणधूमानां नीलवर्णत्वादितिभावः । अभ्राः मेघाः । पुँल्लिङ्गत्वमार्षं ॥४५॥ अथ रक्षोवचनं—वज्रीत्यादि ॥ महेन्द्रः । वज्रीत्यादिविशेषणं सामर्थ्यविशेषद्योतनार्थं । उत्तरत्राप्येवमेवगतिः । यमकालयोर्मूर्तिभेदान्नपुनरुक्तिः । रक्षोपसंहारकरइत्यत्र आर्षस्सलोपः । प्रकोपः प्रकोपकृतमूर्तिविशेषः ॥४६॥ किं वैष्णवमिति । अत्राद्यो वाशब्दोवधारणे । "वा स्याद्विकल्पोपमयोरेवार्थे चसमुच्चये " इतिविश्वः । द्वितीयो वितर्के । अनन्तं त्रिविधपरिच्छेदरहितं । अव्यक्तं चक्षुराद्यगोचरं । अचिन्त्यं केवलमनसोप्यविषयं ।

---

तस्यास्सूचितं ॥ २९ ॥ **ती०** सतामिति । वह्निः ज्वालामालापरिक्षिप्तैः ज्वालासमूहानांप्रसारणैः । लङ्कामत्यर्थमदहदितिसंबन्धः ॥३४॥ **ती०** सः हनुमान् ॥३७॥ **ती०** सचेति । संक्रामन् गच्छन् ॥ ३८ ॥ **ती०** सइति । लाङ्गूलोपसक्ताग्निः लाङ्गूलोस्थितोग्निः । मृत्युगृहान्मुक्तइवतथाऽतिभीकरइत्यर्थः ॥ ३९ ॥ **ती०** हुताशनेति । कालोपहतेव प्रलयकालोपहतेव ॥ ४१ ॥ **शि०** गृहाग्र्यशृङ्गाग्रतले गृहाग्र्याणां गृहश्रेष्ठानां शृङ्गाग्र्यतले परप्रासादभूमौ । प्रतिष्ठितः अर्चिमालीआदित्यइव प्रदीप्तलाङ्गूलकृतार्चिमालीवानरराजसिंहः व्यराजत । अतएव निर्देशादर्चिशब्दोप्यस्तीतिप्रतीयते ॥ ४३ ॥

[ पा० ] १ सतामत्यर्थतोवह्निरित्यादयः व्यराजतादित्यइवार्चिमालीत्यन्ताःश्लोकाः च. छ. ज. पाठेदृश्यन्ते. २ क. घ. ङ. झ. ञ. ट. समस्तां. ३ ख. घ. रशनिप्रकाशैः. ४ ङ—ट. लोकस्यधातुः.

किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः ॥
अनन्तमव्यक्तमचिन्त्यमेकं स्वमायया सांप्रतमागतं वा ॥ ४८ ॥
इत्येवमूचुर्बहवो विशिष्टा रक्षोगणास्तत्र समेत्य सर्वे ॥
सप्राणिसङ्घां सगृहां सवृक्षां दग्धां पुरीं तां सहसा समीक्ष्य ॥ ४९ ॥
ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ॥
सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ॥ ५० ॥
हा तात हा पुत्रक कान्त मित्र हा जीवितं भोगयुतं सुपुण्यम् ॥
रक्षोभिरेवं बहुधा ब्रुवद्भिः शब्दः कृतो घोरतरः सुभीमः ॥ ५१ ॥
हुताशनज्वालसमावृता सा हतप्रवीरा परिवृत्तयोधा ॥
हनूमतः क्रोधबलाभिभूता बभूव शापोपहतेव लङ्का ॥ ५२ ॥
स संभ्रमत्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् ॥
ददर्श लङ्कां हनुमान्महामनाः स्वयंभुकोपोपहतामिवावनिम् ॥ ५३ ॥
भङ्क्त्वा वनं पादपरत्नसंकुलं हत्वा तु रक्षांसि महान्ति संयुगे ॥
दग्ध्वा पुरीं तां गृहरत्नमालिनीं तस्थौ हनूमान्पवनात्मजः कपिः ॥ ५४ ॥
त्रिकूटशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ॥
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवांशुमाली ॥ ५५ ॥
स राक्षसांस्तान्सुबहूंश्च हत्वा वनं च भङ्क्त्वा बहुपादपं तत् ॥
विसृज्य रक्षोभवनेषु चाग्निं जगाम रामं मनसा महात्मा ॥ ५६ ॥
ततो महात्मा हनुमान्मनस्वी निशाचराणां क्षतकृत्कृतार्थः ॥
रामस्य नाथस्य जगत्त्रयाणां श्रीपादमूलं मनसा जगाम ॥ ५७ ॥
ततस्तु तं वानरवीरमुख्यं महाबलं मारुततुल्यवेगम् ॥
महामतिं वायुसुतं वरिष्ठं प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ५८ ॥
भङ्क्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे ॥ दग्ध्वा लङ्कापुरीं रम्यां रराज स महाकपिः ॥ ५९ ॥

एकं अद्वितीयं । यद्वैष्णवं सुतेजः पूज्यं धाम तदेव स्वमायया स्वासाधारणयाश्चर्यशक्त्या । कपिरूपमेत्य सांप्रतमागतं वा इतियोजना । वैष्णवमिति स्वार्थे अण् । विष्णुशरीरान्तर्वर्तीतिवार्थः ॥ ४७ ॥ विशिष्टाः ज्ञानाधिकाः ॥४८—५०॥ युगपदेव शोके दूराह्वाने च हाशब्दो वर्तते । हा जीवितमित्यत्र संबुद्ध्यलोप आर्षः । हतमितिशेषइत्यन्ये । "अभितःपरितस्समयानिकषाहाप्रतियोगे" इति द्वितीया वा । दरिद्रैरशोच्यत्वाद्विशिनष्टि—भोगयुतं सुपुण्यमिति । सुखाढ्यं सुकृतैकफलं चेत्यर्थः । घोरतरः तीव्रतरः । अतएव सुभीमः भयङ्करः ॥ ५१ ॥ परिवृत्तयोधा परिवृत्तभटा ॥ ५२ ॥ हनुमान्महामना इतिपाठः । हनुमान्महात्मेति पाठे विषमवृत्तं वा । स्वयंभुकोपोपहतां प्रलये भगवता दग्धामित्यर्थः ॥ ५३ ॥ रत्नशब्दः श्रेष्ठवाची । तस्थौ संकल्पितकार्यस्य परिसमाप्तत्वादुपरतोद्योगो भूदित्यर्थः ॥ ५४—५५ ॥ जगाम रामं मनसेति । कृतकृत्यत्वाद्रामं गन्तुमियेषेत्यर्थः ॥ ५६—५७ ॥ वरिष्ठमिति । बलवतामिति शेषः

रामानु० रराजसमहाकपिरित्यतःपरमुत्तरसर्गादिभूतो " लङ्कांसमस्तांसंदीप्य " इत्ययंश्लोकःकेषुचित्कोशेषुप्रमादाल्लिखितः ॥ ५९ ॥ इतिचतुःपञ्चाशः सर्गः ॥ ५४ ॥

[ पा० ] १ ख. सुभृशंसुशब्दं. २ ङ. झ. जीवितेशाङ्गहतं. ३ ख. द्रवद्भिः. ४ ङ. झ. रोषोपहतां. ५ ग. महाद्रि. ६ अयंश्लोकः क. घ. पाठयोर्दृश्यते.

तत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥ ६० ॥
तं दृष्ट्वा वानरश्रेष्ठं हनुमन्तं महाकपिम् ॥ कालाग्निरिति सञ्चिन्त्य सर्वभूतानि तत्रसुः ॥ ६१ ॥
देवाश्च सर्वे मुनिपुङ्गवाश्च गन्धर्वविद्याधरनागयक्षाः ॥
भूतानि सर्वाणि महान्ति तत्र जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ६२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

लङ्कायानिश्शेषभस्मीभावावलोकनेन सीतायाअपिदाहसंभावनयाऽऽत्मधिक्कारपूर्वकंसशोकंबहुधाचिन्तयताहनुमतासिद्धचारणभाषणश्रवणादिना तस्यादाहाभावनिर्धारणेन हर्षाधिगमः ॥ १ ॥

लङ्कां समस्तां संदीप्य लाङ्गूलाग्निं महाबलः ॥ निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ १ ॥
संदीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् ॥ अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास वानरः ॥ २ ॥
तस्याभूत्सुमहांस्त्रासः कुत्सा चात्मन्यजायत ॥ लङ्कां प्रदहता कर्म किंस्वित्कृतमिदं मया ॥ ३ ॥
धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ॥ निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ४ ॥
क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ॥ क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ५ ॥
वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ॥ नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ६ ॥
यः समुत्पतितं क्रोधं क्षमयैव निरस्यति ॥ यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ७ ॥
धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ॥ अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥ ८ ॥
यदि दग्धा त्वियं लङ्का नूनमार्यापि जानकी ॥ दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ९ ॥
यदर्थमयमारम्भस्तत्कार्यमवसादितम् ॥ मया हि दहता लङ्कां न सीता परिरक्षिता ॥ १० ॥
ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः ॥ तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ ११ ॥
विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते ॥ लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १२ ॥

---

॥ ५८—६१ ॥ परामित्यस्य विवरणं—अतुल्यरूपामिति । अस्मिन्सर्गे एकपञ्चाशच्छ्लोकाः । ततो महात्मेति श्लोकः स राक्षसानिति श्लोकोक्तार्थकतया बहुकोशेष्वदर्शनाच्च प्रक्षिप्तः । बहुकोशेष्वेतत्सर्गसमाप्तिविपर्ययः उत्तरसर्गारम्भविपर्ययश्च दृश्यते ॥६२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

लाङ्गूलाग्निं समुद्रे निर्वापयामासेत्यन्वयः ॥१—२॥ कुत्सा निन्दा ॥ ३—८ ॥ जानक्यपि यदि दग्धेत्यन्वयः ॥ ९—१० ॥ इदं कार्यं अन्वेषणपूर्वकरावणनिलयपरिज्ञानसीतादर्शनतन्निवेदनरूपं महत्कार्यं । ईषत्कार्यं ईषदवशिष्टकार्यं । असमग्रप्रायमेवकृतमासीत् । रामनिवेदनमात्रावशेषं कृतमासीदित्यर्थः । किंत्विदानीं क्रोधाभिभूतेन क्रोधान्धेन । मया तस्य कार्यस्य । मूलक्षयःकृतः न संशयः । विफलीकृतमित्यर्थः ॥ ११ ॥ सीतानाशे तत्तथैव सएव तु कुत

---

ति० उक्तकुत्सितकार्यमूलंकोपएवेतिनिश्चित्यतद्रहितान्स्तौति—धन्याइति । दुःखातिशयादेवमहात्मपदपौनरुक्त्यंनदोषाय ॥४॥ ति० क्रुद्धःपापंनकुर्याद्यइतिपाठे क्रुद्धोयःकश्चित्पापंकुर्यान्न । नञ्विकाकुः । अपितुकुर्यादेव । अकरणमशक्यमेवेत्यर्थः । तदेवदर्शयति—क्रुद्धोहन्यादिति ॥५॥ शि० सीतामचिन्तयित्वा विस्मृत्य अन्यत्रानीत्वेत्यर्थः । अग्निदं अग्नयेददाति अग्निंददातिव·

[ पा० ] १ ङ. झ. ञ. ट. कामं. २ ङ. छ.—ञ. धन्याःखलुमहात्मानो. ३ च. झ. ञ. ट. लङ्कात्वियंसर्वा.

यदि तद्विहतं कार्यं मम प्रज्ञाविपर्ययात् ॥ इहैव प्राणसंन्यासो ममापि ह्यद्य रोचते ॥ १३ ॥
किमग्नौ निपताम्यद्य आहोस्विद्बडबामुखे ॥ शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम् ॥ १४ ॥
कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः ॥ तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १५ ॥
मया खलु तदेवेदं रोषदोषात्प्रदर्शितम् ॥ प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १६ ॥
धिगस्तु राजसंभावमनीशमनवस्थितम् ॥ ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १७ ॥
विनष्टायां तु सीतायां तावुभौ विनशिष्यतः ॥ तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥ १८॥
एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः ॥ धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १९ ॥
इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् ॥ भविष्यन्ति प्रजाः सर्वाः शोकसंतापपीडिताः ॥ २० ॥
तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः ॥ रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥ २१ ॥
इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे ॥ पूर्वमप्युपलब्धानि साक्षात्पुनरचिन्तयत् ॥ २२ ॥
अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ॥ न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥ २३ ॥
नहि धर्मात्मनस्तस्य भार्याममिततेजसः ॥ स्वचारित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥ २४ ॥
नूनं रामप्रभावेन वैदेह्याः सुकृतेन च ॥ यन्मां दहनकर्माऽयं नादहद्धव्यवाहनः ॥ २५ ॥
त्रयाणां भरतादीनां भ्रातॄणां देवता च या ॥ रामस्य च मनःकान्ता सा कथं विनशिष्यति ॥२६॥
यद्वा दहनकर्माऽयं सर्वत्र प्रभुरव्ययः ॥ न मे दहति लाङ्गूलं कथमार्यां प्रधक्ष्यति ॥ २७ ॥
पुनश्चाचिन्तयत्तत्र हनुमान्विस्मितस्तदा ॥ हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २८ ॥
तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि ॥ अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २९ ॥
स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम् ॥ शुश्राव हनुमान्वाक्यं चारणानां महात्मनाम् ॥ ३० ॥
अहो खलु कृतं कर्म दुष्करं हि हनूमता ॥ अग्निं विसृजताऽभीक्ष्णं भीमं राक्षसवेश्मनि ॥ ३१ ॥

इत्यत्राह—विनष्टेति ॥ १२ ॥ विहतं यदि सीतानाशाद्विनष्टं यदि । प्राणसंन्यासः प्राणत्यागः ॥ १३—१५ ॥ कपित्वं कापेयं । अनवस्थितं चापलात्मकमित्यर्थः ॥ १६ ॥ राजसंभावं रजोगुणनिबन्धनचेष्टाविशेषं । अनीशं नियामकरहितं । स्वतन्त्रमिति यावत् । अनवस्थितं कुर्वत्स्वभावं । ईश्वरेणापि रक्षणसमर्थेनापि । रागात् मात्सर्यात् । "रागोनुरागे मात्सर्ये रक्तवर्णे कुसुम्भके" इतियादवः । यद्वा रागात् रजोगुणात् । आग्रहादिति यावत् ॥ १७—२१ ॥ निमित्तान्युपपेदिरे शुभशंसिनिमित्तानि प्रादुर्बभूवुरित्यर्थः ॥ २२ ॥ एवं लोकदृष्ट्याऽनर्थमाशङ्क्य तत्त्वदृष्ट्या समाधत्ते—अथवेत्यादिना ॥ नाग्निरग्नौ प्रवर्तते । अग्निरग्निं न दहतीत्यर्थः ॥ २३—२४ ॥ दहनकर्मा भस्मीकरणस्वभावः । यत्प्रभावादयं मां

सुमात्रेक्षिपतिवासतं ॥ ८ ॥ ति० बडबामुखेअग्नावित्यन्वयः । दद्मि ददामि ॥ स० अग्नौ सन्निहितलङ्काग्नौ । बडबामुखे समुद्रान्तर्गतेवाऽग्नौ । बडबामुखेऽग्नावित्यन्वयेनिरर्थकताऽऽहोस्वितः । यदिप्राचीनप्राणन्यासेन समुच्चयायतदित्युच्यतेतर्हिकिमित्यस्यपूर्वार्धेविकल्पसूचकत्वेनाहोस्विदित्यस्योत्तरार्धेऽन्वयस्यवक्तव्यतयाआहोइत्यस्यवैयर्थ्यस्यदुर्वारत्वापत्तेः ॥ १३ ॥ स० तदेव कपित्वं सीतयापूर्वोक्तं । अनवस्थितं अव्यवस्थितं ॥ १६ ॥ स० त्रयाणांभरतादीनां । भरतस्यराज्येऽधिकृतत्वात्प्रथमतउक्तिः । तज्ज्यैष्ठ्यपक्षे नानुपपत्तिः । देवता तद्वत्पूज्या ॥ २६ ॥ ती० देवीप्रभावात्सिन्धौमद्विश्रान्तिनिमित्तगिरिदर्शनहेतुनापिदेवीमग्निर्नदहतीत्याह—पुनश्चेति ॥ तत्र तस्मिन्समये । विस्मितोहनुमान् जलमध्ये सागरान्तर्देशे । हिरण्यनाभस्यगिरेःप्रदर्शनं पुनरचिन्तयत् । एतेन पर्वतादीनामपिसर्वेषांरामाज्ञावशवर्तित्वंसूचितं । तेन सीतायानाग्नेर्भीतिरितिसूचितं ॥ २८ ॥ स० सहनुमान् । धारकत्वाद्धर्मोभगवान्रामः । तत्परिग्रहं भार्यां । चिन्तयन् देव्याविषयेचारणानां शुश्राव । वचइतिशेषः । धर्मपरिग्रहं रक्षकधर्मसंपत्तिंवा ॥ ३० ॥

[ पा० ] १ झ. ञ. शरीरमिह. २ ग. च. छ. झ. ञ. ट. मसंशयः. ३ ङ. झ. ञ. ट. असौविनिर्दहेत्. ग. अथसा. ४ झ. ञ. ट. हनुमांस्तत्र.

प्रपलायितरक्षस्स्त्रीबालवृद्धसमाकुला ॥ जनकोलाहलाध्माता क्रन्दन्तीवाद्रिकन्दरे ॥ ३२ ॥
दग्धेयं नगरी सर्वा साट्टप्राकारतोरणा ॥ जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३३ ॥
इति शुश्राव हनुमान्वाचंताममृतोपमाम् ॥ बभूव चास्य मनसो हर्षस्तत्कालसंभवः ॥ ३४ ॥
स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ॥ ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥ ३५ ॥
ततः कपिः प्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा ॥
प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

*हनुमता शिंशुपामूलमेत्य सीतांप्रत्यभिवादनसमाश्वासनसमापृच्छनपूर्वकं सागरोत्तरतीरगमनायारिष्टगिरिसमारोहणम् ॥ १ ॥ तथा स्वचरणनिपीडनात्तद्गिरिवरस्य रसातलप्रवेशनेनततस्समुत्पतनम् ॥ २ ॥*

ततस्तु शिंशुपामूले जानकीं पर्यवस्थिताम् ॥ अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १ ॥
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ॥ भर्तृस्नेहान्वितं वाक्यं हनुमन्तमभाषत ॥ २ ॥
[ यदि त्वं मन्यसे तात वसैकाहमिहानघ ॥ क्वचित्सुसंवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥
मम चैवाल्पभाग्यायाः सांनिध्यात्तव वानर ॥ शोकस्यास्याप्रमेयस्य मुहूर्तं स्यादपि क्षयः ॥ ४ ॥
गते हि हरिशार्दूल पुनः संप्राप्तये त्वयि ॥ प्राणेष्वपि न विश्वासो मम वानरपुङ्गव ॥ ५ ॥
अदर्शनं च ते वीर भूयो मां दारयिष्यति ॥ दुःखाद्दुःखतरं प्राप्तां दुर्मनश्शोककर्शिताम् ॥ ६ ॥
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ॥ सुमहत्सु सहायेषु हर्यृक्षेषु महाबलः ॥ ७ ॥
कथं नु खलु दुष्पारं संतरिष्यन्ति सागरम् ॥ तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥
त्रयाणामेव भूतानां सागरस्यातिलङ्घने ॥ शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९ ॥
तदत्र कार्यनिर्बन्धे समुत्पन्ने दुरासदे ॥ किं पश्यसि समाधानं त्वं हि कार्यविशारदः ] ॥ १० ॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने ॥ पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥

---

नादहत् स तामेव कथं दहतीत्यर्थः ॥ २५—३२ ॥ विस्मयोऽद्भुत एव न इति । अयं विस्मयः अद्भुत एव । अद्भुतमाश्चर्यं । कल्याणं चेत्युणादिवृत्तिः । यद्वा विस्मयः आश्चर्यं अद्भुतः अभूतपूर्वइत्यर्थः । अद्भुतः अद्भुतरसः । तस्य स्थायीभावोविस्मयः । तथाच अद्भुत एव अद्भुतरसतां प्राप्त एव । महानयं विस्मयः । न विस्मयमात्र इत्यर्थः ॥ ३३—३४ ॥ निमित्तैः दक्षिणाक्षिस्पन्दादिभिः । दृष्टार्थैः दृष्टफलसंवादैः । कारणैः सीतापातिव्रत्यरामप्रभावादिभिः । ऋषिवाक्यैः चारणवाक्यैः ॥ ३५ ॥ पूर्वं चारणवाक्यैर्विदित्वा पुनः प्रत्यक्षं दृष्ट्वा ततः प्रतिप्रयाणाय मतिं चकार । प्रतियास्यामीति संकल्पितवानित्यर्थः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

प्रस्थितं प्रस्थानोद्युक्तं ॥ २—१० ॥ वनभङ्गाक्षवधादिना हनुमतश्शक्तिं विज्ञाय असौ रामाय निवेद्य स्वयमेव सकलराक्षससंहारपूर्वकं मम नेता मा भूदित्यभिप्रायेणाह—काममिति ॥ अस्य

---

स० प्राप्तमनोरथार्थः प्राप्तसीतादर्शनरूपमनोरथफलः ॥ ३६ ॥ इतिपञ्चपञ्चाशःसर्गः ॥ ५५ ॥

[ पा० ] १ ग. ङ. झ. ञ. ट. लङ्का. २ घ. विस्मयोदात्तभाषिणां. ३ अयंश्लोकः ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ४ झ. स्नेहान्विता. ५ यदित्वंमन्यसेइत्यादयः त्वंहिकार्यविशारदइत्यन्ताःश्लोकाः छ. झ. ञ. ट. पाठेषुदृश्यन्ते.

शरैः सुसंकुलां कृत्वा लङ्कां परबलार्दनः ॥ मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १२ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ॥ भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १३ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ॥ निशम्य हनुमांस्तस्या वाक्यमुत्तरमब्रवीत् ॥ १४ ॥
[देवि हर्यृक्षसैन्यानामीश्वरः प्लवतांवरः ॥ सुग्रीवः सत्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ १५ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः ॥ क्षिप्रमेष्यति वैदेहि सुग्रीवः प्लवगाधिपः ॥ १६ ॥
तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ ॥ आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ १७ ॥
सगणं राक्षसं हत्वा नचिराद्रघुनन्दनः ॥ त्वामादाय वरारोहे स्वां पुरीं प्रतियास्यति ॥ १८ ॥
समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ॥ क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ॥ १९ ॥
निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे ॥ त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी] ॥ २० ॥
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ॥ यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥ २१ ॥
एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः ॥ गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ २२ ॥
[राक्षसान्प्रवरान्हत्वा नाम विश्राव्य चात्मनः ॥ समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ॥२३॥
नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ॥ दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥
प्रतिगन्तुं मनश्चक्रे पुनर्मध्येन सागरम् ॥ २४ ॥]
ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ॥ आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ॥ २५ ॥
तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ॥ सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः ॥ २६ ॥
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः ॥ उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः ॥ २७ ॥
तोयौघनिस्स्वनैर्मन्द्रैः प्राधीतमिव पर्वतम् ॥ प्रगीतमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥ २८ ॥
देवदारुभिरत्युच्चैरूर्ध्वबाहुमिव स्थितम् ॥ प्रपातजलनिर्घोषैः प्राकुष्टमिव सर्वतः ॥ २९ ॥

---

कार्यस्य सर्वराक्षसवधपूर्वकमत्प्रापणरूपकार्यस्य । बलोदयः सत्त्वप्रकर्षः । सैन्योत्थापनं वा । ते यशस्यः यशस्करः । नतु रामस्येति भावः ॥ ११ ॥ तर्हि रामस्य किं यशस्करमित्यत्राह—शरैरिति । तत् स्वपराक्रमेण मन्नयनं । तस्य काकुत्स्थस्य । सदृशं । एतदेव ममाभिलषितं । अन्यथा मे कथं वीरपत्नीत्वमिति भावः ॥ १२ ॥ तच्च त्वदायत्तमेवेत्याह—तद्यथेति ॥ विक्रान्तं विक्रमणं ॥ १३-२४ ॥ अरिष्टं अरिष्टाख्यं ॥ २५ ॥ अथैनं गिरिं चतुर्दशधोत्प्रेक्षते—तुङ्गेत्यादिना ॥ पद्मकाः पद्मवर्णवृक्षाः । परिधानालेख्यस्थानीयतया विशेषणमिति बोध्यं । सपरिधानमिव स्थितमितिशेषः । उत्तरार्धे सोत्तरीयत्वोत्प्रेक्षणात् ॥ २६ ॥ शुभैः तरुणैः । करैः अंशुभिः हस्तैश्च । बोध्यमानमिव स्थितं । तत्र ज्ञापकमाह—उद्धूतैरिति । उद्धूतैः उद्गतैः । लोचनैरिव स्थितैः धातुभिः उन्मिषन्तं पश्यन्तमिव स्थितं ॥ २७ ॥ तोयौघनिःस्वनैः गिरिनदीघोषैः । मन्द्रैः गंभीरैः । प्राधीतमिव प्राध्येतुं प्रवृत्तमिव । आदिकर्मणि कर्तरि क्तः । अधीयानमिवेत्यर्थः । प्रस्रवणस्वनैः पर्वतमूलाद्बहिः प्रवहन्ति जलानि प्रस्रवणानि तेषां स्वनैः । प्रगीतमिव गातुं प्रवृत्तमिव गायन्तमिवेत्यर्थः । आदिकर्मणि कर्तरि क्तः ॥ २८ ॥ ऊर्ध्वबाहुमिवेति तपोविशेष उच्यते । प्रपातजलनिर्घोषैः प्रपाताः भृगवः । "प्रपातस्त्वतटो भृगुः" इत्यमरः । तेषां जलानि

---

ति० प्रपातजलनिर्घोषैः प्रपातेभ्यः भृगुदेशेभ्यः पतज्जलशब्दैः । प्राकुष्टमिव आरब्धाक्रोशमिव । सर्वत्रादिकर्मणिकर्तरिक्तः

[ पा० ] १ क. ग. तत्त्वमेवोपपादय. २ झ. ञ. ट. हनुमान्वीरो. ३ देविहर्यृक्षसैन्यानामित्यादयः शशाङ्केनेवरोहिणीत्यन्ताःश्लोकाः झ. ञ. ट. पाठेषुदृश्यन्ते. ४ च.—ठ. प्रवरैर्युतः. ५ ख. ग. घ. झ. ट. विनिर्जित्यशोकं. ६ राक्षसान्प्रवरानित्याद्यर्धपञ्चकं झ. ञ. ट. पाठेषु दृश्यते. ७ ख. ग. घ. सुखैः. ८ क.—घ. च.—ट. सर्वतः. ९ क. ग. च. छ. झ. ञ. ट. विस्पष्टंनाना. १० ग. घ. च. झ. ञ. ट. रुद्धूतैः. ११ ध. प्रघुष्टमिव.

वेपमानमिव श्यामैः कम्पमानैः शरद्घनैः ॥ वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः ॥ ३० ॥
निश्श्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः ॥ नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ॥ ३१ ॥
मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः ॥ जृम्भमाणमिवाकाशे शिखरैरभ्रमालिभिः ॥ ३२ ॥
कूटैश्च बहुधाकीर्णैः शोभितं बहुकन्दरैः ॥ सालतालाश्वकर्णैश्च वंशैश्च बहुभिर्वृतम् ॥ ३३ ॥
लतावितानैर्विततैः पुष्पवद्भिरलंकृतम् ॥ नानामृगगणाकीर्णं धातुनिष्यन्दभूषितम् ॥ ३४ ॥
बहुप्रस्रवणोपेतं शिलासंचयसंकटम् ॥ महर्षियक्षगन्धर्वकिन्नरोरगसेवितम् ॥ ३५ ॥
लतापादपसंघातं सिंहाध्युषितकन्दरम् ॥ व्याघ्रसङ्घसमाकीर्णं स्वादुमूलफलद्रुमम् ॥ ३६ ॥
तमारुरोह हनुमान्पर्वतं पवनात्मजः ॥ रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ ३७ ॥
तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु ॥ सघोषाः समशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥ ३८ ॥
स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ॥ दक्षिणादुत्तरं पारं प्रार्थयँल्लवणाम्भसः ॥ ३९ ॥
अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ॥ ददर्श सागरं भीमं मीनोरगनिषेवितम् ॥ ४० ॥
स मारुत इवाकाशं मारुतस्यात्मसंभवः ॥ प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥ ४१ ॥
स तदा पीडितस्तेन कपिना पर्वतोत्तमः ॥ ररास सह तैर्भूतैः प्रविशन्वसुधातलम् ॥
कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ॥ ४२ ॥
तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः ॥ निपेतुर्भूतले रुग्णाः शक्रायुधहता इव ॥ ४३ ॥
कन्दरान्तरसंस्थानां पीडितानां महौजसाम् ॥ सिंहानां निनदो भीमो नभो भिन्दन्स शुश्रुवे ॥ ४४ ॥

तेभ्यः पतन्तो निर्झरा इत्यर्थः । तेषां निर्घोषैः । प्राक्रुष्टमिव आक्रोशन्तमिव । पूर्ववत् क्तः ॥ २९ ॥ शरदि ये घना भवन्ति ते शरद्घनाः । शरत्कालपुष्पिणस्सप्तच्छदादयः तैः शुभ्रीभूतैः । जरया कम्पमानमिव स्थितमित्यर्थः । शरद्घनैरितिपाठे बहुवार्षिकवृक्षैरित्यर्थः । शरवणैरिति वार्थः । तकारान्तोप्यस्ति । शरवणे जातस्य कृपाचार्यस्य शारद्वत इति नामदर्शनात् । कीचकैः कीचकाख्यैर्वेणुभिः । तदाहामरः–"वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इति ॥ ३० ॥ आशीविषोत्तमैः निश्श्वसन्तमिव सर्पश्रेष्ठनिश्श्वासैर्निश्श्वसन्तमिव । अमर्षात् हनुमति क्रोधादित्यर्थः । नीहारकृतगम्भीरैः नीहारपूर्णैः गम्भीरैश्च । गह्वरैः गुहाभिः ध्याननिरुद्धेन्द्रियस्थानीयैः । ध्यायन्तमिव स्थितं । निरुद्धेन्द्रियद्वारा ध्यानारूढमिवस्थितमित्यर्थः ॥ ३१ ॥ मेघपादनिभैः मेघावरोहनिभैः । पादैः प्रत्यन्तपर्वतैः । प्रक्रान्तमिव गन्तुमुद्युक्तमिव । पूर्ववत् क्तः । जृम्भमाणमिव गात्रभङ्गं कुर्वाणमिव । अभ्रमालिभिः मेघमालावद्भिः ॥ ३२ ॥ बहुधाकीर्णैः हनुमत्पादस्पर्शेन शिथिलैरित्यर्थः ॥ ३३ ॥ धातुनिष्यन्दः धातुस्रावः ॥ ३४–३५ ॥ लतापादपानां संघातो यस्मिन्निति व्यधिकरणबहुव्रीहिः ॥ ३६ ॥ रामदर्शनशीघ्रेण रामदर्शनत्वरावता ॥ ३७ ॥ चूर्णीकृतास्समशीर्यन्त । यथा चूर्णीकृता भवन्ति तथा समशीर्यन्तेत्यर्थः ॥ ३८ ॥ दक्षिणात् दक्षिणपारात् । प्रार्थयन् गन्तुमिति शेषः ॥ ३९–४० ॥ स हरिशार्दूल इति संबन्धः । पितृतुल्यवेगवत्त्वं सूचयति—मारुतस्येति ॥ ४१ ॥ तैर्भूतैः तत्रत्यजन्तुभिः ॥ ४२ ॥ रुग्णाः शीर्णा इति यावत् । शक्रायुधहताः वज्रहताः ॥ ४३ ॥ नभो भिन्दन् भिन्दन्निव । महत्तायां तात्पर्यं ॥ ४४ ॥

इत्याहुः ॥ २९ ॥ शरद्घनैः सप्तपर्णादिशारदवृक्षसंघैः ॥ ३० ॥ ति० धातुनिष्यन्दैः धातुनिर्गमैर्भूषितं ॥ ३४ ॥ शिलासंचयेन शिलासमूहेन संकटं नीरन्ध्रं ॥ ३५ ॥

[ पा० ] १ घ. मेघजालनिभैः. २ झ. सालतालैश्चकर्णैश्च. ३ झ. ट. गणैःकीर्णं. ४ क. घ. च. ज.—ट. संबाधं. ५ ख.—ट. सिंहाधिष्ठित. ६ च. छ. झ. ञ. ट. व्याघ्रादिभिस्समाकीर्णं. ७ ग. फलोदकं. ८ च.—ट. भीमोरग. ९ छ.—ट. विविधैर्भूतैः. ख. विहतैः. १० क. घ. झ. ट. प्राविशद्वसुधातलं. ११ च.—ट. भग्नाः. १२ घ. च. झ. ञ. ट. कन्दरोदर.

स्रस्तव्याविद्धवसना व्याकुलीकृतभूषणाः ॥ विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् ॥ ४५ ॥
अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः ॥ निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः ॥ ४६ ॥
किन्नरोरगगन्धर्वयक्षविद्याधरास्तदा ॥ पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः ॥ ४७ ॥
स च भूमिधरः श्रीमान्बलिना तेन पीडितः ॥ सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ ४८ ॥
दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः ॥ धरण्यां समतां यातः स बभूव धराधरः ॥ ४९ ॥
स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् ॥ कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ॥ ५० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

लङ्कातटात्पुनरुत्प्लवनेन मध्येमार्गंमैनाकसंस्पर्शनपूर्वकमागच्छताहनुमता महेन्द्राचलावलोकनेन बन्धुकुलहर्षणायोच्चैर्गर्जनं ॥ १ ॥ जांबवता तच्छ्रवणेत सरभससमुत्थितवानरगणान्प्रति हर्षोद्घोषणहेतुना हनुमतः कृतकार्यत्वोक्तिः ॥ २ ॥ ततोमहेन्द्रशिखरमवतीर्णेनहनुमता जांबवदादिवृद्धाभिवादनपूर्वकं सर्वान्प्रति संग्रहेण सीतादर्शननिवेदनं ॥ ३ ॥ अङ्गदेन हनुमत्प्रशंसनपूर्वकं विस्तरेण सीतादर्शनवृत्तान्तशुश्रूषया सर्वैःसह महेन्द्राचलविशालशिलतलेसमुपवेशनम् ॥ ४ ॥

[ आप्लुत्य च महावेगः पक्षवानिव पर्वतः ॥ ] सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् ॥
तिष्यश्रवणकादम्बमभ्रशैवालशाद्वलम् ॥ १ ॥
पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् ॥ ऐरावतमहाद्वीपं स्वातीहंसविलोलितम् ॥ २ ॥
वातसंघातजातोर्मि चन्द्रांशुशिशिराम्बुमत् ॥ भुजङ्गयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ ३ ॥
हनुमान्मारुतगतिर्महानौरिव सागरम् ॥ अपारमपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४ ॥
ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन् ॥ हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ५ ॥

स्रस्तानि व्याविद्धानि च वसनानि यासां ताः स्रस्तव्याविद्धवसनाः ॥ ४५ ॥ निपीडितशिरोग्रीवाः शिथिलपतितशिलातलैरिति शेषः ॥ ४६—४७ ॥ सवृक्षशिखरोदग्रः सवृक्षैः शिखरैः उदग्रः श्रेष्ठः ॥ ४८—४९ ॥ कल्लोलास्फालवेलान्तं तरङ्गैरास्फाल्यमानतीरोपान्तं ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

उत्पपात नभो हरिरित्युक्तं तल्लङ्घनं रूपकेण चतुर्भिर्वर्णयति—सचन्द्रेत्यादिना ॥ कारण्डवः जलकुक्कुटः। कादम्बः कलहंसः "कादम्बः कलहंसस्स्यात्" इत्यमरः । अभ्रशैवालशाद्वलं मेघस्य शैवालत्वेन पर्यन्तस्थशाद्वलत्वेन च रूपणं ॥ १ ॥ लोहिताङ्गः अङ्गारकः स एव महाग्रहः महाग्राहः यस्य तं । ऐरावतस्याभ्रमातङ्गत्वेनाभ्रगामित्वात्तत्र संभवः । विलोलितं अवगाढं ॥ २ ॥ वातसङ्घातजातोर्मय एव चन्द्रांशवः तैः शीतलजलवत् भुजङ्गादीनांकमलोत्पलत्वेनरूपणं तत्तद्वर्णभेदेन ॥ ३ ॥ अत्र गगनस्यार्णवत्वेन चन्द्रादीनां तदवयवकुमुदादित्वेन च रूपणात्सावयवरूपकं । तस्य नौरिवेत्युपमया तिलतण्डुलवत्संसृष्टिः ॥ ४ ॥ अथ तदेवोत्प्रेक्षया वर्णयति—

ति० व्यवेष्टन्त कुण्डलीकृतशरीराअजायन्त । व्यचेष्टन्तेतिपाठे पीडयाअलुठन्नित्यर्थः ॥ ४६ ॥ ति० कल्लोलैरास्फाल्यते स्पृश्यते तादृशोवेलान्तःतीरप्रान्तोयस्यतं सागरंलिलङ्घयिषुः नभउत्पपातेतिसंबन्धः ॥ ५० ॥ इतिषट्पञ्चाशःसर्गः ॥ ५६ ॥
स० गगनार्णवमितिनपुंसकत्वमार्षं । नपुंसकोवार्णवशब्दः । "अस्मदीयंगुणार्णवं" इत्यनुव्याख्यानसुधायांपूर्वमाचारक्विबन्ततामाश्रित्यानन्तरंपचाद्यचिअर्णवमितित्रिलिङ्गःसाधुरित्युक्तेः । गगनार्णवःप्रसिद्धार्णवइव । नपुनःसएवेतिआचारक्विबन्ततादिकमुपपन्नं ॥ ४ ॥

[ पा० ] १ घ. व्यावेष्टन्तमहोरगाः. च. छ. ज. ञ. व्यचेष्टन्तमहोरगाः. २ ख. ग. च.—ट. स्तथा. ३ छ. ज. ञ. गिरेः. ४ इदमर्धं छ.—ट. पाठेषुदृश्यते. ५ झ. ट. विलासितं. ञ. विलोडितं. ६ घ. च.—ट. जालोर्मिं.

मारुतस्यात्मजः श्रीमान्कपिर्व्योमचरो महान् ॥ [ अपारमपरिश्रान्तश्चाम्बुधिं समगाहत ॥ ]
हनुमान्मेघजालानि विकर्षन्निव गच्छति ॥ ६ ॥
पाण्डरारुणवर्णानि नीलमाञ्जिष्ठकानि च ॥ हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७ ॥
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ८ ॥
विविधाभ्रघनापन्नगोचरो धवलाम्बरः ॥ दृश्यादृश्यतनुर्वीरस्तदा चन्द्रायतेम्बरे ॥ ९ ॥
तार्क्ष्यायमाणो गगने बभासे वायुनन्दनः ॥ दारयन्मेघबृन्दानि निष्पतंश्च पुनः पुनः ॥ १० ॥
नदन्नादेन महता मेघस्वनमहास्वनः ॥ प्रवरान्राक्षसान्हत्वा नाम विश्राव्य चात्मनः ॥ ११ ॥
आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् ॥ अर्दयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥
आजगाम महातेजाः पुनर्मध्येन सागरम् ॥ १२ ॥
पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् ॥ ज्यामुक्त इव नाराचो महावेगोऽभ्युपागतः ॥ १३ ॥
स किंचिदनुसंप्राप्तः समालोक्य महागिरिम् ॥ महेन्द्रं मेघसंकाशं ननाद हरिपुङ्गवः ॥ १४ ॥
स पूरयामास कपिर्दिशो दश समन्ततः ॥ नदन्नादेन महता मेघस्वनमहास्वनः ॥ १५ ॥
स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥ ननाद हरिशार्दूलो लाङ्गूलं चाप्यकम्पयत् ॥ १६ ॥
तस्य नानद्यमानस्य सुपर्णचरिते पथि ॥ फलतीवास्य घोषेण गगनं सार्कमण्डलम् ॥ १७ ॥
ये तु तत्रोत्तरे तीरे समुद्रस्य महाबलाः ॥ पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः ॥ १८ ॥
महतो वायुनुन्नस्य तोयदस्येव गर्जितम् ॥ शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः ॥ १९ ॥
ते दीनमनसः सर्वे शुश्रुवुः काननौकसः ॥ वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् ॥ २० ॥
निशम्य नदतो नादं वानरास्ते समन्ततः ॥ बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः ॥ २१ ॥
जाम्बवान्सहरिश्रेष्ठः प्रीतिसंहृष्टमानसः ॥ उपामन्त्र्य हरीन्सर्वानिदं वचनमब्रवीत् ॥ २२ ॥
सर्वथा कृतकार्योसौ हनूमान्नात्र संशयः ॥ नह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् ॥ २३ ॥
तस्य बाहूरुवेगं च निनादं च महात्मनः ॥ निशम्य हरयो हृष्टाः समुत्पेतुस्ततस्ततः ॥ २४ ॥

ग्रसमान इवेत्यादिना ॥ ५—६ ॥ व्यक्ताव्यक्तवाचित्वेन अरुणशब्दयोः कथंचिदपौनरुक्त्यमुन्नेयं । यद्वा "अरुणःकृष्णलोहितः" इत्यमरशेषः । महाभ्राणिचकाशिरे हनुमत्संपर्कादित्यर्थः । अन्यथा वाजपेयशरद्वर्णनवदभ्रवर्णनस्यासंगतत्वापातः । हनुमतस्तेजस्वीत्यनेन मेघानांनानावर्णत्वापत्तिः सूर्येन्दुसंपर्कवत् ॥ ७—८ ॥ विविधेष्वभ्रघनेषु मेघसंघातेषु । आपन्नगोचरः प्राप्तविषयः । लब्धमार्ग इति यावत् । धवलाम्बरः शुक्लवासाः । दृश्यादृश्यतनुः मेघान्तःप्रवेशनिष्क्रमणाभ्यामितिभावः । चन्द्रायते चन्द्रइवाचरति । तार्क्ष्यइवाचरन् तार्क्ष्यायमाणः । उभयत्र "उपमानादाचारे" "कर्तुः क्यङ् सलोपश्च" इति क्यङ् ॥ ९—१२ ॥ सुनाभं मैनाकं ॥ १३ ॥ किंचिदनुसंप्राप्तः मैनाकात्परं कंचित्प्रदेशं प्राप्तः ॥ १४—१५ ॥ लालसः साभिलाषः । तं देशं सुहृदावाससमीपप्रदेशं ॥ १६ ॥ नानद्यमानस्य पुनःपुनर्भृशं नदत इत्यर्थः । फलतीव दलतीव ॥ १७—१८ ॥ वातनुन्नस्य वातसंघट्टितस्य । घोषं ऊरुवेगमिति ऊरुवेगजन्यं घोषमित्यर्थः ॥ १९ ॥ ते दीनमनस इति । अनिष्टश्रवणशङ्कयेति भावः ॥ २०—२३ ॥ निशम्य ज्ञात्वेत्यर्थः । यद्वा दृष्ट्वा चेत्यध्याहार्यं । अन्यथा बाहूरुवेगपदानन्वयात् ॥२४॥

[ पा० ] १ इदमर्धं झ. ट. पाठयोर्दृश्यते. २ ग. च. निष्क्रामंश्च. ३ झ. ट. स्तथा. ४ झ. ञ. ट. सबभौ. ५ झ. ट. अर्दयित्वामहावीरान्. छ. ज. दर्शयित्वा. ६ च.—ट. वेगोऽभ्युपागमत्. ७ च.—ट. सकिंचिदारात्संप्राप्तः. ख. ग. शीघ्रंतदनुसंप्राप्तः. ८ ग. घ. हनुमान्मेघ. ९ झ. ट. ननादसुमहानादं. १० च.—ट. सुपर्णाचरिते. ११ ख. ग. च.—ट. कूले. १२ च. छ. झ. ञ. ट. निस्वनं. १३ ख. मूरुवेगाद्धनूमतः. १४ क.—घ. दीनवदनाः. १५ ङ. च. छ. झ. ञ. समुत्पेतुर्यतस्ततः. क. ख. घ. समुत्पेतुस्समन्ततः.

ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ॥ प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः ॥ २५ ॥
ते प्रीताः पादपाग्रेषु गृह्य शाखाः[1] सुविष्ठिताः ॥ वासांसीव[2] प्रशाखाश्च समाविध्यन्त वानराः ॥ २६ ॥
गिरिगह्वरसंलीनो यथा गर्जति मारुतः ॥ एवं जगर्ज बलवान्हनूमान्मारुतात्मजः ॥ २७ ॥
तमभ्रघनसंकाशमापतन्तं महाकपिम् ॥ दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥ २८ ॥
ततस्तु वेगवांस्[3]तस्य गिरेर्गिरिनिभः कपिः ॥ निपपात महेन्द्रस्य शिखरे पादपाकुले ॥ २९ ॥
हर्षेणापूर्यमाणोसौ रम्ये पर्वतनिर्झरे ॥ छिन्नपक्ष इवाकाशात्पपात धरणीधरः ॥ ३० ॥
ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः ॥ हनुमन्तं महात्मानं परिवार्योपतस्थिरे ॥ ३१ ॥
परिवार्य च ते सर्वे परां प्रीतिमुपागताः ॥ प्रहृष्टवदनाः सर्वे तम[4]रोगमुपागतम् ॥ ३२ ॥
उपायनानि चादाय मूलानि च फलानि च ॥ प्रत्यर्चयन्[5]हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ ३३ ॥
[विनेदु[6]र्मुदिताः केचित्केचित्किलिकिलास्तथा ॥ हृष्टाः पादपशाखाश्च आनिन्युर्वानरर्षभाः] ॥ ३४ ॥
हनुमांस्तु गुरून्वृद्धाञ्जाम्बवत्प्रमुखांस्तदा ॥ कुमारमङ्गदं चैव सोवन्दत महाकपिः ॥ ३५ ॥
स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ॥ दृष्टा सीतेति[7] विक्रान्तः संक्षेपेण[8] न्यवेदयत् ॥ ३६ ॥
निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् ॥ रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ॥
हनुमानब्रवी[9]द्धृष्टस्तदा तान्वानरर्षभान् ॥ ३७ ॥
अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ॥ रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता ॥ ३८ ॥
एकवेणीधरा बाला[10] रामदर्शनलालसा ॥ उपवासपरिश्रान्ता जटिला मलिना कृशा ॥ ३९ ॥
ततो दृष्टेति वचनं महार्थममृतोपमम् ॥ निशम्य मारुतेः[11] सर्वे मुदिता वानरा भवन् ॥ ४० ॥

समुत्पेतुरित्युक्तं विवृणोति—ते नगाग्रादिति ॥ नगाग्रात् वृक्षाग्रात् समपद्यन्त संघीभूताः ॥ २५ ॥ प्रीता इति हेतुगर्भं विशेषणं । यथा मनुष्याः दूरस्थस्वकीयानयनाय वासांसि धून्वन्ति तथा वानराश्चान्योन्याह्वानाय पुष्पितशाखाः गृहीत्वा प्रशाखाः प्राग्रशाखाः । समाविध्यन्त पर्यभ्रामयन् ॥ २६—२७ ॥ अभ्रघनसंकाशं अभ्रसमूहतुल्यं ॥ २८ ॥ निपपात निर्भरमाक्रान्तवान् ॥ २९ ॥ पपातेति अच्छिन्नपक्षस्य पातासंभवाच्छिन्नपक्षइत्युक्तं ॥ ३०—३१ ॥ प्रहृष्टवदनाः प्रसन्नमुखाः । आसन्निति शेषः । अरोगं कुशलिनमित्यर्थः ॥ ३२ ॥ उपायनानि उपहारान् ॥ ३३—३४ ॥ कुमारमङ्गदं चेति । स्वामित्वादिति भावः ॥ ३५—३९ ॥ भवन् अभवन् ।

**ति०** अभ्रं मेघः । तदुपरियोमेघस्तत्संकाशं । अत्युन्नतमेघसमूहसदृशमित्यर्थमन्ये । स्वजीवनदातृत्वेन स्वपूज्यत्वात्प्राञ्जलयः ॥ २८ ॥ **ति०** ततोगिरेः अरिष्टाख्याद्गिरेः । प्लुतःकपिः तस्यमहेन्द्रस्यगिरेःशिखरेनिपपात । अनेनाविश्रममागमनंध्वनितं ॥ २९ ॥ **ति०** पर्वतनिर्झरे निर्झरप्रवर्तकेशिखरेइत्यर्थमेके । श्रमनिवृत्तये जलएवपतितइत्यन्ये ॥ **स०** छिन्नपक्षः धरणीधरः पर्वतइवपपात । अनेन मान्द्याभावःसूच्यते । छिदितिभावेसंपदादिक्किबन्तः । छित् छिदा न ययोस्तौछिन्नौ । नशब्दोनिषेधार्थकः । तस्यछिच्छब्दानन्तरत्वं जनइत्यादिवद्बोध्यं । ततश्च अच्छिन्नौपक्षौयस्यसः । एवंचेत् हर्षापूर्यमाणता विवक्षितस्थलाभोविजयेनागमनंचेतिबह्वर्थलाभोभवतीतिबोध्यं ॥ ३० ॥ **स०** परां पूर्वप्रीतितोप्युत्कृष्टां । संतोषातिशयेनसर्वइतिद्विरुक्तिः । सर्वे रुद्रे । लुप्तोपमेयं । तेदूताः त्रिपुरंहत्वाआयातेरुद्रेइतिवा । "सर्वोह्येषरुद्रः" इतिश्रुतेः । "सर्वःशर्वःकालजरःशिवः" इतिनामनिधानात् ॥ ३२ ॥ **ति०** शाखानयनं हनूमतआसनार्थं ॥ ३४ ॥ **स०** ताभ्यां जांबवदङ्गदाभ्यां । यद्यपिजांबवत्प्रमुखान्गुरून्वृद्धानित्युक्त्या तैरितिसुभाषं । तथापि कार्यनिविष्टताद्वयोरेवातिशयेनेतिताभ्यामित्युपपद्यते । देवीदृष्टेतिपौर्वापर्येदेवी-

[ **पा०** ] १ ङ. च. झ. ञ. ट. शाखामवस्थिताः. क. ख घ. शाखास्सुपुष्पिताः. २ घ. ङ. झ. ञ. ट. वासांसिचप्रकाशानि. क. वासांसिचमहार्हाणिदुधुवुर्वानरर्षभाः. च. छ. ज. वासांसिचमहाप्रीत्या. ३ ङ. झ. ट. वेगवान्वीरो. ४ ङ. झ. ट. तमागतमुपागमन्. ५ ख. प्रत्यर्पयन्हरिश्रेष्ठं. ६ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ७ ग. घ. च.—ट. देवीति. ८ क. संग्रहेण. ९ ङ. झ. ट. नब्रवीत्पृष्टः. घ. नब्रवीद्धृष्टस्समेतान्वानरर्षभान्. १० ख. दीना. ११ क. ग. मारुतेर्वाक्यं.

क्ष्वेलन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः ॥ चक्रुः किलिकिलामन्ये प्रतिगर्जन्ति चापरे ॥४१॥
केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ॥ अञ्चितायतदीर्घाणि लाङ्गूलानि प्रविव्यधुः ॥ ४२ ॥
अपरे च हनूमन्तं वानरा वारणोपमम् ॥ आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति स्म हर्षिताः ॥ ४३ ॥
उक्तवाक्यं हनूमन्तमङ्गदस्तमथाब्रवीत् ॥ सर्वेषां हरिवीराणां मध्ये वचनमुत्तमम् ॥ ४४ ॥
सत्त्वे वीर्ये न ते कश्चित्समो वानर विद्यते ॥ यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥ ४५ ॥
[जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम ॥ त्वत्प्रसादात्समेष्यामस्सिद्धार्था राघवेण ह] ॥ ४६ ॥
अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः ॥ दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ॥
दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम् ॥ ४७ ॥
ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः ॥ परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः ॥ ४८ ॥
[उपविष्टा गिरेस्तस्य शिलासु विपुलासु च ॥] श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥ ४९ ॥
दर्शनं चापि लङ्कायाः सीताया रावणस्य च ॥ तस्थुः प्राञ्जलयः सर्वे हनुमद्वदनोन्मुखाः ॥ ५० ॥
तस्थौ तत्राङ्गदः श्रीमान्वानरैर्बहुभिर्वृतः ॥ उपास्यमानो विबुधैर्दिवि देवपतिर्यथा ॥ ५१ ॥
हनूमता कीर्तिमता यशस्विना तथाङ्गदेनाङ्गदबद्धबाहुना ॥
मुदा तदाध्यासितमुन्नतं महन्महीधराग्रं ज्वलितं श्रियाऽभवत् ॥ ५२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

महेन्द्रगिरौ सर्ववानरमध्ये जांबवत्पृष्टेन हनुमता वानरान्प्रति लङ्कागमनकाले मैनाकावलोकनादिस्वपुनरागमनान्तसकलवृत्तान्तनिवेदनम् ॥ १ ॥

ततस्तस्य गिरेः शृङ्गे महेन्द्रस्य महाबलाः ॥ हनुमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥ १ ॥

---

अनित्यत्वादडभावः ॥ ४० ॥ क्ष्वेलन्ति सिंहनादं कुर्वन्ति । नदन्ति अव्यक्तशब्दं कुर्वन्ति । गर्जन्ति वृषभनादं कुर्वन्ति । किलिकिलां स्वजात्युचितकिलिकिलाशब्दं ॥ ४१ ॥ अञ्चितायतदीर्घाणि अत्र दीर्घपदसन्निधानादायतपदं स्थूलपरं । प्रविव्यधुः लाङ्गूलान्युद्धृत्य भूमावताडयन्नित्यर्थः ॥ ४२ ॥ संस्पृशन्ति आलिङ्गन्तीत्यर्थः ॥ ४३—४४ ॥ अवप्लुत्यविस्तीर्णमित्यङ्गदेतरव्यावृत्तिः । पुनरागत इत्यङ्गदव्यावृत्तिः ॥ ४५—५१ ॥ कीर्तिमतेति हनुमद्विशेषणं । यशस्विनेत्यङ्गदविशेषणं । भृत्यकीर्त्या स्वामिनः कीर्तिः । अन्यथा पौनरुक्त्यात् । यद्वा बुद्धिमत्त्वजन्या कीर्तिः । शौर्यजन्यं यशः ॥ ५२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तपञ्चाशःसर्गः ॥ ५७ ॥

---

कार्यवृत्तान्तं कार्यविषयवृत्तान्तं सीतादर्शनविषय-

विलोकितानवेतिशङ्कास्यात् सा माहिभूदितिदृष्टेपिपूर्वमुक्तिरितिज्ञेयं ॥ ३६ ॥ ति० आयताञ्चितदीर्घाणि आयामोविस्तारः । स्थौल्यमित्यन्ये ॥ ४२ ॥ इतिसप्तपञ्चाशःसर्गः ॥ ५७ ॥

[ पा० ] १ ङ. प्लवन्त्यन्ये. २ च. ञ. महास्वनाः. ३ च. छ. ज. वानराः. ४ ङ.—ट. आयताञ्चित. ५ ङ. झ. ट. श्रीमन्तंवानरोत्तमं. च. छ. ज. वानराःप्रशशंसिरे. ६ क. ग.—ट. वाचमनुत्तमां. ७ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. ८ इदमर्धं ङ.—ट. पाठेषुदृश्यते. ९ ख. हनूमद्वचनोन्मुखाः.

[1]प्रीतिमत्सूपविष्टेषु वानरेषु महात्मसु ॥ तं ततः [2]प्रीतिसंहृष्टः [3]प्रीतिमन्तं महाकपिम् ॥
जाम्बवान्कार्यवृत्तान्तमपृच्छदनिलात्मजम् ॥ २ ॥
कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ॥ तस्यां वा स कथंवृत्तः क्रूरकर्मा दशाननः ॥ ३ ॥
तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ॥ [[4]संमार्गिता कथं देवी किंच सा प्रत्यभाषत ॥ ]
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ॥ ४ ॥
यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ॥ रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः ॥ ५ ॥
स नियुक्तस्ततस्तेन संप्रहृष्टतनूरुहः ॥ [5]प्रणम्य शिरसा देव्यै सीतायै प्रत्यभाषत ॥ ६ ॥
प्रत्यक्षमेव भवतां महेन्द्राग्रात्खमाप्लुतः ॥ उदधेर्दक्षिणं पारं काङ्क्षमाणः समाहितः ॥ ७ ॥
गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् ॥ काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥ ८ ॥
स्थितं पन्थानमावृत्य मेने विघ्नं च तं नगम् ॥ ९ ॥
उपसंगम्य तं दिव्यं काञ्चनं नगसत्तमम् ॥ कृता मे मनसा बुद्धिर्भेत्तव्योयं मयेति च ॥ १० ॥
[6]प्रहतं च मया तस्य लाङ्गूलेन महागिरेः ॥ शिखरं सूर्यसंकाशं व्यशीर्यत सहस्रधा ॥ ११ ॥
व्यवसायं च तं बुद्ध्वा स होवाच महागिरिः ॥ पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ॥ १२ ॥
पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः ॥ मैनाक इति विख्यातं निवसन्तं महोदधौ ॥१३॥
पक्षवन्तः पुरा पुत्र बभूवुः पर्वतोत्तमाः ॥ छन्दतः पृथिवीं चेरुर्बाधमानाः समन्ततः ॥ १४ ॥
श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः ॥ चिच्छेद भगवान्पक्षान्वज्रेणैषां सहस्रशः ॥ १५ ॥
अहं तु [7]मोक्षितस्तस्मात्तव पित्रा महात्मना ॥ मारुतेन तदा वत्स [8]प्रक्षिप्तोस्मि महार्णवे ॥ १६ ॥
रामस्य च मया साह्ये वर्तितव्यमरिन्दम ॥ रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः ॥ १७ ॥
एतच्छ्रुत्वा वचस्तस्य मैनाकस्य महात्मनः ॥ कार्यमावेद्य तु गिरेरुद्यतं च मनो मम ॥ १८ ॥
तेन चाहमनुज्ञातो मैनाकेन महात्मना ॥ स चाप्यन्तर्हितः शैलो मानुषेण वपुष्मता ॥
शरीरेण महाशैलः शैलेन च महोदधौ ॥ १९ ॥

वृत्तान्तं ॥ २ ॥ कथं केन प्रकारेण । कथंवृत्तः कीदृग्व्यापारः ॥ ३ ॥ तत्त्वकथनस्य प्रयोजनमाह—श्रुतार्था इत्यादि ॥ ४ ॥ तत्र रामसन्निधौ । योऽर्थो वक्तव्यः वक्तुमर्हः । यच्च रक्षितव्यं गोप्तव्यं तत् । आत्मवान् बुद्धिमान् । भवान्व्याकरोतु ॥ ५—६ ॥ प्रत्यक्षमेवेति इदं न वक्तव्यमेवेति भावः । आप्लुतः आप्लुतोस्मि । पारं गन्तुमिति शेषः । समाहितः एकाग्रः । इत्येतद्भवतां प्रत्यक्षमेवेति संबन्धः ॥ ७ ॥ विघ्नरूपमिव । वस्तुतो न तथेतिभावः । पश्यामीत्यादौ व्यत्ययेन लट् । शिखरं विघ्नरूपमिवाभवत् तत् पश्यामीति योजना ॥ ८ ॥ मेने इति लिट्युत्तमपुरुषैकवचनं । परोक्षत्वाद्यभावेपि च्छान्दसं । अमनिषीत्यर्थः ॥ ९ ॥ गमनदशायामुरसा पातयामासेति सूचितं विवृणोति—भेत्तव्योयमित्यादिना ॥१०—१२॥ पितृव्यं चेति । पितृव्यत्वे हेतुमाह—सखायमिति । पितृसखत्वात् पितृव्यत्वव्यपदेश इत्यर्थः ॥ १३ ॥ छन्दतः यथेच्छं ॥ १४—१५ ॥ मोक्षणप्रकारमाह—प्रक्षिप्तोस्मि महार्णव इति ॥१६॥ साह्ये साहाय्ये । साहाय्यकरणे हेतुमाह—रामो धर्मभृतां श्रेष्ठ इति ॥१७॥ उद्यतं उद्युक्तं ॥ १८ ॥ अनुज्ञातः

**ति०** सशैलोमानुषेणवपुष्मता प्रशस्तेनशरीरेण । महाशैलोन्तर्हितः । शैलेनशिलारूपेणचमहोदधावन्तर्हितइत्यन्वयः ॥ **स०** शैलः मैनाकः । मानुषेणशरीरेणान्तर्हितोभूत् । ततश्चमहाशैलः वपुष्मतामानुषदेहान्तर्धानाधिकरणेन । शैलेन पर्वतरूपदेहेन

**[ पा० ]** १ इदमर्धं क.—ट. पाठेषुदृश्यते. २ ङ. छ. ज. झ. ट. प्रतिसंहृष्टः. ३ ङ. च. ज.—ट. प्रीतियुक्तं. ४ इदमर्धं ङ.—ट. पाठेषुदृश्यते. ५ ख. ङ. च.—ट. नमस्यञ्शिरसा. ६ ङ. झ. ट. प्रहृतस्य. ७ ङ.—ट. मोचितस्तस्मात्. ८ ङ. झ. ट. प्रक्षिप्तोवरुणालये. घ. प्रक्षिप्तोस्मिमहोदधौ. ९ क. ख. ग. ङ.—ट. मयातस्य. १० ङ. झ. ट. उद्धृतंवै.

उत्तमं जवमास्थाय शेषं पन्थानमास्थितः ॥ ततोऽहं सुचिरं कालं वेगेनाभ्यगमं पथि ॥ २० ॥
ततः पश्याम्यहं देवीं सुरसां नागमातरम् ॥ समुद्रमध्ये सा देवी वचनं मामभाषत ॥ २१ ॥
मम भक्षः प्रदिष्टस्त्वममरैर्हरिसत्तम ॥ अतस्त्वां भक्षयिष्यामि विहितस्त्वं चिरस्य मे ॥ २२ ॥
एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः ॥ विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयन् ॥ २३ ॥
रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥ लक्ष्मणेन सह भ्रात्रा सीतया च परन्तपः ॥२४॥
तस्य सीता हृता भार्या रावणेन दुरात्मना ॥ तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥
कर्तुमर्हसि रामस्य साहाय्यं विषये सती ॥ २५ ॥
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥२६॥
एवमुक्ता मया सा तु सुरसा कामरूपिणी ॥ अब्रवीन्नातिवर्तेत कश्चिदेष वरो मम ॥ २७ ॥
एवमुक्तः सुरसया दशयोजनमायतः ॥ ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु ॥ २८ ॥
मत्प्रमाणानुरूपं च व्यादितं तु मुखं तया ॥ तद्दृष्ट्वा व्यादितं चास्यं ह्रस्वं ह्यकरवं वपुः ॥ २९ ॥
तस्मिन्मुहूर्ते च पुनर्बभूवाङ्गुष्ठमात्रकः ॥ अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् ॥ ३० ॥
अब्रवीत्सुरसा देवी स्वेन रूपेण मां पुनः ॥ अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ॥ ३१ ॥
समानय च वैदेहीं राघवेण महात्मना ॥ सुखी भव महाबाहो प्रीताऽस्मि तव वानर ॥ ३२ ॥
ततोऽहं साधु साध्वीति सर्वभूतैः प्रशंसितः ॥ ततोन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा ॥ ३३ ॥
छाया मे निगृहीता च न च पश्यामि किंचन ॥ ३४ ॥
सोहं विगतवेगस्तु दिशो दश विलोकयन् ॥ न किंचित्तत्र पश्यामि येन मेऽपहृता गतिः ॥ ३५ ॥
ततो मे बुद्धिरुत्पन्ना किं नाम गगने मम ॥ ईदृशो विघ्न उत्पन्नो रूपं यत्र न दृश्यते ॥ ३६ ॥
अधोभागे न मे दृष्टिः शोचता पातिता मया ॥ ततोऽद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् ॥ ३७ ॥
प्रहस्य च महानादमुक्तोऽहं भीमया तया ॥ अवस्थितमसंभ्रान्तमिदं वाक्यमशोभनम् ॥ ३८ ॥
क्वासि गन्ता महाकाय क्षुधिताया ममेप्सितः ॥ भक्षः प्रीणय मे देहं चिरमाहारवर्जितम् ॥३९॥

अस्मीति शेषः । वपुष्मता पुष्कलवपुषा । मानुषेणशरीरेणान्तर्हितः । शैलेन तु शरीरेण महोदधौ सागरोपरि स्थित इति शेषः । "स वै दत्तवरः शैलोबभूवावस्थितस्तथा" इति प्रथमसर्गोक्तेः । प्रतिप्रयाणे च—"पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान्" इत्युक्तं । "हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि" इति रामेण चोक्तं ॥ १९—२४ ॥ विषये सती स्वराज्ये वसन्ती ॥ २५–२७ ॥ अर्धगुणविस्तारः । अत्रार्धशब्दः एकदेशवाची । किंचिदधिकविस्तारोभवमित्यर्थः । एवमेवार्थः । प्रथमसर्गोक्तशतयोजनविस्तारस्तु विरुद्धः तद्ग्रन्थःकल्पितश्चेत्युक्तं ॥ २८ ॥ व्यादितं व्यात्तं ॥ २९ ॥ ह्रस्वत्वं विशेषयति—अङ्गुष्ठमात्रक इति ॥ ३०–३१ ॥ समानय संयोजय ॥ ३२ ॥ साधु साध्वीति दीर्घश्छान्दसः ॥ ३३–३६ ॥ सलिलेशयां सलिले स्थितां ॥ ३७ ॥ अवस्थितं दृढभूतं । असंभ्रान्तं अव्यग्रं ॥३८–३९॥

महोदधावन्तर्हितोऽभूत् ॥ १९ ॥ ती० ततोर्धगुणविस्तारः ततोदशयोजनात्अर्धस्यपञ्चयोजनस्यगुणः आवृत्तिः तद्विस्तारोदशयोजनविस्तारः । प्रथमसर्गेदशयोजनविस्तारोच्चयानुगुण्येनैवंव्याख्यातं ॥ २८ ॥ शि० साध्वीतिदीर्घआर्षइतिभट्टाः । विस्मयार्थेकार-

[ पा० ] १ ङ. च. ज.—ट. शेषमध्वानं. २ ङ. झ. ट. वचनंचेदमब्रवीत्. ३ ग. ङ.—ट. ततस्त्वां. ४ ङ. झ. ट. स्त्वंहिमेसुरैः. ५ ग. घ. च. छ. ज. ञ. विषण्णवदनो. ६ ख. सीतयाचापिभार्यया. ७ ग. घ. च. छ. ज. ञ. ततोद्विगुण. ८ ङ.—ट. मत्प्रमाणाधिकंचैव. ९ ख. च.—ट. पुनः. १० ङ.—ट. संमितः. ११ घ. अथसाव्याहरच्छ्रेष्ठा. १२ ङ. च. ज.—ट. मेविहता. १३ ङ. झ. ञ. ट. शोचतः. १४ च. छ. ज. तदा.

बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः ॥ आस्यप्रमाणादधिकं तस्याः कायमपूरयम् ॥ ४० ॥
तस्याश्चास्यं महद्भीमं वर्धते मम भक्षणे ॥ न च मां साधु बुबुधे मम वा निकृतं कृतम् ॥ ४१ ॥
ततोऽहं विपुलं रूपं संक्षिप्य निमिषान्तरात् ॥ तस्या हृदयमादाय प्रपतामि नभःस्थलम् ॥ ४२ ॥
सा विसृष्टभुजा भीमा पपात लवणाम्भसि ॥ मया पर्वतसंकाशा निकृत्तहृदया सती ॥ ४३ ॥
शृणोमि खगतानां च सिद्धानां चारणैः सह ॥ राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता ॥४४॥
तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन् ॥ गत्वा चाहं महाध्वानं पश्यामि नगमण्डितम् ॥४५॥
दक्षिणं तीरमुदधेर्लङ्का यत्र च सा पुरी ॥ अस्तं दिनकरे याते रक्षसां निलयं पुरम् ॥
प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ॥ ४६ ॥
तत्र प्रविशतश्चापि कल्पान्तघनसन्निभा ॥ अट्टहासं विमुञ्चन्ती नारी काऽप्युत्थिता पुरः ॥ ४७ ॥
जिघांसन्तीं ततस्तां तु ज्वलदग्निशिरोरुहाम् ॥ सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ॥
प्रदोषकाले प्रविशं भीतयाऽहं तयोदितः ॥ ४८ ॥
अहं लङ्कापुरी वीर निर्जिता विक्रमेण ते ॥ यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥ ४९ ॥
तत्राहं सर्वरात्रं तु विचिन्वञ्जनकात्मजाम् ॥ रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् ॥ ५० ॥
ततः सीतामपश्यंस्तु रावणस्य निवेशने ॥ शोकसागरमासाद्य न पारमुपलक्षये ॥ ५१ ॥
शोचता च मया दृष्टं प्राकारेण समावृतम् ॥ काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् ॥ ५२ ॥
स प्राकारमवप्लुत्य पश्यामि बहुपादपम् ॥ ५३ ॥
अशोकवनिकामध्ये शिंशुपापादपो महान् ॥ तमारुह्य च पश्यामि काञ्चनं कदलीवनम् ॥ ५४ ॥
अदूरे शिंशुपावृक्षात्पश्यामि वरवर्णिनीम् ॥ श्यामां कमलपत्राक्षीमुपवासकृशाननाम् ॥ ५५ ॥
तदेकवाससंवीतां रजोध्वस्तशिरोरुहाम् ॥ शोकसन्तापदीनाङ्गीं सीतां भर्तृहिते स्थिताम् ॥ ५६ ॥

तस्याः आस्यप्रमाणादधिकं यथा तथा कायं आत्मदेहं। अपूरयं अवर्धयं । मयि वृद्धे साप्यवर्धिष्टेत्यर्थः। अयं कामरूपीति मां । साधु सम्यक् । न बुबुधे न ज्ञातवती । मम कृतं निकृतं मया कृतां निकृतिं वा नबुबुधे ॥ ४०-४१ ॥ निकृतिमेव दर्शयति—ततोहमिति ॥ ४२ ॥ विसृष्टभुजा विसृष्टसन्धिकभुजा ॥ ४३ ॥ हतेत्यनन्तरमितिकरणंबोध्यं ॥४४॥ कृत्यमात्ययिकं स्मरन् प्राणान्तिकं तत्कर्म विचिन्तयन्नित्यर्थः ॥ ४७ ॥ भीतया तया नार्या । अशेषत इत्यनन्तरमितिकरणं द्रष्टव्यं ॥ ४८-४९ ॥ सर्वरात्रं सर्वां रात्रिं । "अहः सर्व—" इत्यादिना समासान्तोच् । अत्यन्तसंयोगे द्वितीया । तत्र लङ्कायां । विचिन्वन् अनन्तरं रावणान्तःपुरमपि गतःसन् सुमध्यमां नापश्यं ॥ ५०—५१ ॥ विकृष्टेन विप्रकृष्टेन । अतिदीर्घेणेति यावत् ॥ ५२ ॥ बहुपादपं अनेकपादपप्रमाणमिति प्राकारविशेषणं ॥ ५३ ॥ शिंशुपापादपः अस्तीतिशेषः ॥ ५४ ॥ शिंशुपावृक्षात् शिंशुपावृक्षस्य । श्यामां यौवनमध्यस्थां । तदेकवाससंवीतां येन वाससा हृता तेनैकवाससा संवीतां । यद्वा तेन तत्कालदृष्टेन पूर्वदृष्टेन एकेन वाससा संवीतां । वेषान्तरनिस्स्पृहामित्यर्थः । मानसिकत्वकायिकत्व-

प्रश्लेषेतुनार्षकल्पना ॥ **स०** साध्वी अहंप्रीतास्मीत्यन्वयोवा ॥३३॥ **ती०**तद्विकृतंकिमित्यतआह—ततोहमिति । हृदयमादाय हृदयंनिकृत्य ।प्रपतामि प्रापतं॥४२॥**ति०** आत्ययिकं जातकालविलंबं॥**स०** महदध्वानं महताकालेन गम्यमध्वानं ॥४५॥**ति०**सर्वरात्रं

**[ पा० ]** १ ख. वर्धितश्चास्मि सुमहांस्तस्याः. २ घ. ममापिविकृतं. क. मयाचविकृतं. ३ ङ. झ. ट. खगतानांचवाचः सौम्यामहात्मनां. ४ क. ख. घ. च.—ट. गत्वाचमहदध्वानं. ५ ङ. झ. ट. निलयंपुरीं. घ. प्राविशंपुरं. ६ ङ. च. ज. झ. घनसप्रभा. ७ ख. भीमा. ८ ग. तत्राहमर्धरात्रेतु. क. तत्राहमर्धरात्रंतु. ९ ग. ङ.—ट. प्राकारेणाभिसंवृतं. १० घ. च, विचित्रेण. ११ क.—ट. अदूराच्छिंशुपा.

राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् ॥ मांसशोणितभक्षाभिर्व्याघ्रीभिर्हरिणीमिव ॥ ५७ ॥
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ ५८ ॥
भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥
कथंचिन्मृगशावाक्षी तूर्णमासादिता मया ॥ ५९ ॥
तां दृष्ट्वा तादृशीं नारीं रामपत्नीं[2] यशस्विनीम् ॥ तत्रैव शिंशुपावृक्षे पश्यन्नहमवस्थितः ॥ ६० ॥
ततो हलहलाशब्दं काञ्चीनूपुरमिश्रितम् ॥ शृणोम्यधिकगम्भीरं रावणस्य निवेशने ॥ ६१ ॥
ततोऽहं परमोद्विग्नः[3] स्वं[4] रूपं प्रतिसंहरन् ॥ अहं तु शिंशुपावृक्षे पक्षीव गहने स्थितः ॥ ६२ ॥
ततो रावणदाराश्च रावणश्च महाबलः ॥ तं देशं[5] समनुप्राप्ता यत्र सीताऽभवत्स्थिता ॥ ६३ ॥
तद्दृष्ट्वाऽथ[6] वरारोहा सीता रक्षोमहाबलम्[7] ॥ संकुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥ ६४ ॥
वित्रस्तां परमोद्विग्नां वीक्षमाणां ततस्ततः[8] ॥ त्राणं किंचिदपश्यन्तीं वेपमानां तपस्विनीम्[9] ॥ ६५ ॥
तामुवाच दशग्रीवः सीतां परमदुःखिताम् ॥ अवाक्छिराः प्रपतितो बहुमन्यस्व मामिति ॥ ६६ ॥
यदि चेत्त्वं तु दर्पान्मां नाभिनन्दसि गर्विते ॥ द्वौ[10] मासावन्तरं सीते पास्यामि रुधिरं तव ॥६७॥
एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ॥ उवाच परमक्रुद्धा सीता वचनमुत्तमम् ॥ ६८ ॥
राक्षसाधम रामस्य भार्याममिततेजसः ॥ इक्ष्वाकुकुलनाथस्य[11] स्नुषां दशरथस्य च ॥
अवाच्यं वदतो जिह्वा कथं न पतिता तव ॥ ६९ ॥
किंचिद्वीर्यं तवानार्य यो मां भर्तुरसंनिधौ ॥ अपहृत्यागतः पाप तेनादृष्टो महात्मना ॥ ७० ॥
न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे ॥ यज्ञीयः[12] सत्यवादी च रणश्लाघी च राघवः ॥७१॥
जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥ जज्वाल सहसा कोपाच्चितास्थ इव पावकः ॥ ७२ ॥
विवर्त्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ॥ मैथिलीं हन्तुमारब्धः स्त्रीभिर्हा हा कृतं तदा ॥ ७३ ॥
स्त्रीणां मध्यात्समुत्पत्य तस्य भार्या दुरात्मनः ॥ वरा मण्डोदरीनाम तया स प्रतिषेधितः ॥ ७४ ॥

---

भेदेन शोकसंतापयोर्भेदः ॥ ५५—५७ ॥ सामयेति आमयः खेदः तेन सह वर्तत इति सामया । मर्तव्ये मरणे । "कृत्यल्युटो बहुलं" इति साधुः ॥ ५८—५९ ॥ पश्यन् परामृशन् ॥ ६०—६१ ॥ गहने पर्णगूढप्रदेशे । पर्णघने निलीन इत्यधस्तादप्युक्तेः ॥ ६२—६४ ॥ परमोद्विग्नां अतीवोद्भ्रान्तहृदयां । ततस्ततः वीक्षमाणां नानादिक्षु वीक्षमाणां । त्राणमित्यनुषज्यते ॥ ६५ ॥ अवाक्छिराः अवनतमूर्धा । प्रपतितः भूमावितिशेषः ॥ ६६ ॥ द्वौ मासौ अन्तरमवधिः । ततः पास्यामीति योज्यं ॥ ६७—६९ ॥ किंचिद्वीर्यं कुत इत्यत्राह—यो मामिति । भर्तुरसंनिधौ तेन भर्त्रा अदृष्टःसन् यो मामपहृत्यागतः तस्य तव किंचिद्वीर्यमिति योज्यं ॥ ७०—७१ ॥ घोरत्वसिद्धये चितास्थइत्युक्तं ॥ ७२ ॥ आरब्धः रावण इति शेषः । हा हा कृतं हा हेत्येतत्कृतं ॥ ७३ ॥ समुत्पत्य रावणसमीपं गतेति शेषः । मण्डोदरी मण्डनभूतोदरी । "मडि भूषायाम्" इत्यस्माद्धातोः पचाद्यच् । मन्दोदरी

---

सर्वारात्री । अल्पशेषायांरात्रावशोकवनिकायादर्शनादेवमुक्तिः ॥ ५० ॥ **रामानु०** परिरभ्य वितत्रासेतिशेषः ॥ ६४ ॥ **ति०** सादृश्यसंभावनापिदूरापास्तेत्याह—**दास्येपीति । स०** अस्यदास्ये दासत्वे । नयुज्यसे युक्तोनभवसि । अपिना मूलरूपेपि द्वार्बहिरवस्थानमेवनान्तर्दास्येयोग्यइतिसूचयति ॥ ७१ ॥ **ति०** चितास्थपावकत्वेनास्पृश्यतासूचिता ॥ ७२ ॥ **ति०** यद्वा

**[ पा० ]** १ क. ङ.—ट. हरिणींयथा. २ क.—घ. च. छ. ज. ञ. रामपत्नीमनिन्दितां. ३ ग. च. छ. ज. ञ. सहसोद्विग्नः. ४ ग. च.—ट. स्वरूपंप्रत्यसंहरं. ५ ख. देशमभिसंप्राप्ता. ६ क. ख. घ. ङ. च. ज.—ट. तंदृष्ट्वाथ. ७ क. ख. घ. ङ. च. ज.—ट. रक्षोगणेश्वरं. ८ क. ङ. झ. ञ. ट. वीक्षमाणामितस्ततः. ९ ख. मनस्विनीं. १० ङ. झ. ट. द्विमासानन्तरं. ११ ङ. झ. ञ. ट. इक्ष्वाकुवंश. १२ घ.—ट. अजेयःसत्यवाञ्छूरो. ग. धार्मिकःसत्यवादीच.

उक्तश्च मधुरां वाणीं तया स मदनार्दितः ॥ सीतया तव किं कार्यं महेन्द्रसमविक्रम ॥
[ [१]मया सह रमस्वाद्य मद्विशिष्टा न जानकी ] ॥ ७५ ॥
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च ॥ सार्धं प्रभो [२]रमस्वेह सीतया किं करिष्यसि ॥ ७६ ॥
ततस्ताभिः समेताभिर्नारीभिः स महाबलः ॥ [३]प्रसाद्य सहसा नीतो भवनं स्वं निशाचरः ॥७७॥
याते तस्मिन्दशग्रीवे राक्षस्यो विकृताननाः ॥ सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥७८॥
तृणवद्भाषितं तासां गणयामास जानकी ॥ गर्जितं च त[४]दा तासां सीतां प्राप्य निरर्थकम् ॥७९॥
वृथागर्जितनिश्चेष्टा [५]राक्षस्यः पिशिताशनाः ॥ रावणाय शशंसुस्ताः सीता[६]ध्यवसितं महत् ॥ ८० ॥
ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः ॥ [७]परिक्षिप्य समन्तात्तां निद्रावशमुपागताः ॥ ८१ ॥
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता ॥ विलप्य करुणं दीना [८]प्रशुशोच सुदुःखिता ॥ ८२ ॥
तासां मध्यात्समुत्थाय त्रिजटा वाक्यमब्रवीत् ॥ ८३ ॥
आत्मानं खादत क्षिप्रं न सीतां[९] विनशिष्यति ॥ [११]जनकस्यात्मजा साध्वी स्नुषा दशरथस्य च ॥८४॥
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ [१२]रक्षसां च विनाशाय भर्तुरस्या जयाय च ॥ ८५ ॥
[१३]अलमस्मात्परित्रातुं राघवाद्राक्षसीगणम् ॥ अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ८६ ॥
य[१४]स्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते ॥ सा दुःखैर्विविधैर्मुक्ता [१५]सुखमाप्नोत्यनुत्तमम् ॥८७॥
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ [ [१६]अलमेषा परित्रातुं राक्षस्यो महतो भयात् ] ॥ ८८॥
ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता ॥ अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ ८९ ॥
तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ॥ चिन्तयामास वि[१७]क्रान्तो न च मे निर्वृतं मनः ॥९०॥

वा । दडयोरभेदः । दम्भो दाडिममित्यादिवत् । यद्वा मन्दत्वं चाल्पत्वं । "मूढाल्पापटुनिर्भाग्या मन्दा" इत्यमरः । सूक्ष्मोदरीत्यर्थः । मन्दा स्थूलपिपीलिकेत्याचक्षते । तस्या इव कृशमस्या उदरमित्यर्थः । ननु पूर्वं धान्यमालिन्या प्रतिषिद्ध इत्युक्तं । संप्रति मण्डोदर्येत्युच्यते । विप्रतिषिद्धमिदं । मैवं । उभाभ्यामपि प्रतिषिद्धत्वेनान्यतरोक्तावविरोधात् । मण्डोदर्यादिनामपरिज्ञानं च हनुमतस्तदीयव्यवहारात् ॥ ७४—७६ ॥ ताभिः देवकन्याभिः । अनेन मण्डोदर्यादिवदन्यासामपि निवारयितृत्वमुक्तं ॥ ७७ ॥ क्रूरैः क्रूरशब्दैः । सुदारुणैः अर्थतोपि क्रूरैः ॥ ७८ ॥ तृणवत् गणयामासेत्यन्वयः ॥ ७९ ॥ वृथागर्जितनिश्चेष्टाः वृथागर्जितेन निर्व्यापाराः ॥ ८० ॥ ततस्ताइति । तूष्णीं रक्षतेति रावणोक्ता इति शेषः । परिक्षिप्य परिवार्य ॥ ८१ ॥ सुदुःखिता प्रशुशोच । उत्तरोत्तरं दुःखितवतीत्यर्थः ॥ ८२—८५ ॥ अलं शक्ता । "अलं भूषणपर्याप्तिशक्तिवारणवाचकं" इत्यमरः । परित्रातुं एषेति शेषः ॥ ८६—८७ ॥ अपराधिजनप्राणत्राणे हेतुमाह—प्रणिपातेति ॥ ८८ ॥ ततः त्रिजटावाक्यानन्तरं । भर्तुर्विजयहर्षिता त्रिजटाकथितस्वप्नसूचितरामविजयहर्षिता । तत् त्रिजटास्वप्नवाक्यं । शरणं हि व इत्यत्रेतिकरणं द्रष्टव्यं ॥८९॥ नच

मन्दोदर्याएवनामान्तरंधान्यमालिनीत्युक्तं ॥ ७४ ॥ **स०** राक्षसीगणं राघवात्परित्रातुं अलं समर्था । प्रसादितासीतेति शेषः । तस्मादभियाचाम प्रार्थयाम ॥ ८६ ॥ **शि०** ननुस्वप्नस्यमिथ्यात्वात्कितद्दर्शनेनसीताभर्तृविजयादीत्यतआह—**यदीति ।** दुःखितायाएवंविधःस्वप्नोयदिदृश्यते तर्हि सादुःखिता दुःखैर्विमुक्तासतीसुखमाप्नोति । एतेन स्वप्नस्यमिथ्यात्वेपितद्दर्शनजनितफल•

**[ पा० ]** १ इदमर्धं ङ. च. ज.—ट. पाठेषुदृश्यते. २ क. ङ. झ. ट. रमस्वेति. ३ ङ. झ. ट. उत्थाप्य. ४ ङ. झ. ट. तथा. ५ घ. ट. राक्षस्योविकृताननाः. ६ क.—घ. ङ. झ. ट. सीताव्यवसितं. ७ ङ. च. ज.—ट. परिक्लिश्य. ८ ग. प्ररुरोद. घ. प्रचुक्रोश. ९ क. ख. खादतानार्यानसीतांभक्षयिष्यत. १० ङ. झ. ट. सीतामसितेक्षणां. ११ ङ. झ. ट. जनकस्यात्मजांसाध्वींस्नुषांदशरथस्यच. १२ क. राक्षसानांविनाशायराघवस्यजयायच. घ. राक्षसानामभावाय. १३ क. अलमेषापरित्रातुं. १४ ग. ङ.—ट. यदिह्येवंविधः. १५ घ. सुखंप्राप्नोत्यनुत्तमं. १६ इदमर्धं ङ.—ट. पाठेषुदृश्यते. १७ ङ. झ. ट. विश्रान्तो.

संभाषणार्थं च मया जानक्याश्चिन्तितो विधिः ॥ इक्ष्वाकूणां हि वंशस्तु ततो मम पुरस्कृतः ॥ ९१ ॥
श्रुत्वा तु गदितां वाचं राजर्षिगणपूजिताम् ॥ प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ॥ ९२ ॥
कस्त्वं केन कथं चेह प्राप्तो वानरपुङ्गव ॥ का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ॥ ९३ ॥
तस्यास्तद्वचनं श्रुत्वा ह्यहमप्यब्रवं वचः ॥ ९४ ॥
देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः ॥ सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥ ९५ ॥
तस्य मां विद्धि भृत्यं त्वं हनुमन्तमिहागतम् ॥ भर्त्राहं प्रेषितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ९६ ॥
इदं च पुरुषव्याघ्रः श्रीमान्दाशरथिः स्वयम् ॥ अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥ ९७ ॥
तदिच्छामि त्वयाऽऽज्ञप्तं देवि किं करवाण्यहम् ॥ रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरं ॥९८॥
एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ॥ आह रावणमुत्साद्य राघवो मां नयत्विति ॥९९॥
प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् ॥ राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ १०० ॥
अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः ॥ मणिर्येन महाबाहू रामस्त्वां बहुमन्यते ॥ १०१ ॥
इत्युक्त्वा तु वरारोहा मणिप्रवरमद्भुतम् ॥ प्रायच्छत्परमोद्विग्ना वाचा मां संदिदेश ह ॥ १०२ ॥
ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ॥ प्रदक्षिणं परिक्राममिहाभ्युद्गतमानसः ॥ १०३ ॥
उत्तरं पुनरेवेदं निश्चित्य मनसा तया ॥ [ ज्ञात्वा संप्रस्थितं सीता मामुवाच तपस्विनी ॥ ]
हनुमन्मम वृत्तान्तं वक्तुमर्हसि राघवे ॥ १०४ ॥
यथा श्रुत्वैव नचिरात्तावुभौ रामलक्ष्मणौ ॥ सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ १०५ ॥
यद्यन्यथा भवेदेतद्द्वौ मासौ जीवितं मम ॥ न मां द्रक्ष्यति काकुत्स्थो म्रिये साऽहमनाथवत् ॥ १०६ ॥
तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत ॥ उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥ १०७ ॥
ततोऽवर्धत मे कायस्तदा पर्वतसन्निभः ॥ युद्धकाङ्क्षी वनं तच्च विनाशयितुमारभे ॥ १०८ ॥
तद्भग्नं वनषण्डं तु भ्रान्तत्रस्तमृगद्विजम् ॥ प्रतिबुद्धा निरीक्षन्ते राक्षस्यो विकृताननाः ॥ १०९ ॥
मां च दृष्ट्वा वने तस्मिन्समागम्य ततस्ततः ॥ ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥ ११० ॥

मे निर्वृतं किन्तुदुःखितमित्यर्थः ॥ ९० ॥ विधिः उपायः ॥ ९१—१०१ ॥ वाचा मां संदिदेशेति । स्वरामैकवेद्यं प्रागुक्तं काकासुरवृत्तान्तं तिलकनिर्माणादिकं च संदिष्टवतीत्यर्थः ॥ १०२॥ परिक्रामं पर्यक्रामं । इहाभ्युद्गतमानसः इहाभ्युद्गते इहाभ्यागमने मानसं यस्य स तथा ॥१०३—१०५॥ एतत् उपयानं । यद्यन्यथा भवेत् यदि नोपेयातामित्यर्थः । तदा द्वौ मासौ मम जीवितं । ततः परं जीवामीत्यर्थः । न मां द्रक्ष्यसि मासद्वयाभ्यन्तरे मां न द्रक्ष्यति चेत् तदा म्रिय इति योज्यं । मासशब्दोत्र पक्षपरः । " पक्षा वै मासाः " इति श्रुतेः ॥ १०६ ॥ उत्तरं अनन्तरं । अनन्तरं अनन्तरकर्तव्यं उत्तरकार्यमित्यर्थः ॥१०७–

स्यसत्यत्वंध्वनितं । मतान्तरेस्वप्रस्यापिसत्यत्वमित्यन्यदेतत् ॥ ८७ ॥ स० सर्वैः पुरस्कृतः प्रधानीकृतः । इक्ष्वाकोर्यत्कुलंसंततिरूपंगृहं तस्यवंशः गृहाधारस्थूणावेणुस्थानीयोरामः मम मया स्तुतः ॥ ९१ ॥ स० अभिज्ञानं स्मृतिजनकं ॥ ९७॥ रामानु० त्वया आज्ञप्तमिच्छामि त्वत्कर्तृकमाज्ञापनमिच्छामीत्यर्थः । किंशब्दःक्षेपे । रामलक्ष्मणयोःपार्श्वंत्वांनयामि । उत्तरंकिं एवमेवंवदे-

[ पा० ] १ ग.—ट. इक्ष्वाकुकुलवंशस्तुस्तुतो. २ च. छ. ज. ञ. क्वच. ३ ख. ङ.—ट. अहमपि. ४ ङ.—ट. संप्रहितस्तुभ्यं. घ. संप्रेषितस्तुभ्यं. ५ छ. झ. ञ. ट. मुत्पाट्य. ६ क.—ट. मुत्तमं. ७ क. ग. घ. च. छ. ज. परिक्रम्यइहा. क. परिक्रम्यइहाभ्यागत. ८ ङ. छ. झ. ञ. ट. उत्तरंपुनरेवाह. ख. उक्तोहंपुनरेवेदं. ९ क. ग.—ट. तदा. १० इदमर्धं क. पाठेदृश्यते ११ ग. ङ. च. छ. झ. ञ. ट. यदन्यथा. १२ च. छ. ज. ञ. मनुत्तमं. १३ क. ख. ततोहंवातवेगेनतदा. १४ ङ. झ. युद्धाकाङ्क्षी. १५ घ. ङ. झ. ट. तस्य. १६ क. भग्नपादपषण्डंतु. १७ घ. वनद्विजं. १८ ङ. च. झ. ञ. ट. प्रतिबुध्य १९ घ. न्समागत्य. २० क. गत्वातास्त्वरिताः.

राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना ॥ वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ १११ ॥
[1]दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः ॥ वधमाज्ञापय क्षिप्रं यथाऽसौ [2]विलयं व्रजेत् ॥ ११२ ॥
तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशं[3]दुर्जयाः ॥ राक्षसाः किंकरा नाम रावणस्य मनोनुगाः ॥ ११३ ॥
तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ॥ मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥ ११४ ॥
तेषां तु [4]हतशेषा ये ते गत्वा लघुविक्रमाः ॥ निहतं च [5]महत्सैन्यं रावणायाचचक्षिरे ॥ ११५ ॥
ततो मे बुद्धिरुत्पन्ना चैत्यप्रासाद[6]माक्रमम् ॥ तत्रस्थान्राक्षसान्हत्वा शतं स्तम्भेन वै पुनः ॥
ललामभूतो ल[7]ङ्कायाः स वै विध्वंसितो मया ॥ ११६ ॥
ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥ राक्षसैर्बहुभिः सार्धं घोररूपै[8]र्भयानकैः ॥ ११७ ॥
तमहं [9]बलसंपन्नं राक्षसं रणकोविदम् ॥ परिघेणातिघोरेण सूदयामि सहानुगम् ॥ ११८ ॥
तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान्महाबलान् ॥ पदातिबलसंपन्नान्प्रेषयामास रावणः ॥ ११९ ॥
परिघेणैव तान्सर्वान्नयामि यमसादनम् ॥ १२० ॥
मन्त्रिपुत्रान्हताञ्छ्रुत्वा समरे लघुविक्रमान् ॥ पञ्च सेनाग्रगाञ्छूरान्प्रेषयामास रावणः ॥ १२१ ॥
तानहं सहसैन्यान्वै सर्वानेवाभ्यसूदयम् ॥ १२२ ॥
ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ बहुभी राक्षसैः सार्धं प्रेषयामास [10]रावणः ॥ १२३ ॥
तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥ सहसा खं [11]समुत्क्रान्तं पादयोश्च गृहीतवान् ॥
[12]चर्मासिनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ १२४ ॥
तमक्षमागतं भग्नं निशम्य स दशाननः ॥ [13]तत इन्द्रजितं नाम द्वितीयं रावणः सुतम् ॥
व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् ॥ १२५ ॥
तच्चाप्यहं बलं सर्वं तं च राक्षसपुङ्गवम् ॥ नष्टौजसं रणे कृत्वा परं हर्षमुपागमम् ॥ १२६ ॥
महतापि महाबाहुः प्रत्ययेन महाबलः ॥ प्रेषितो [14]रावणेनैव सह वीरैर्मदो[15]त्कटैः ॥ १२७ ॥
सोविषह्यं हि मां बुद्ध्वा [16]स्वबलं चावमर्दितम् ॥ ब्राह्मेणास्त्रेण स तु मां प्राबध्नाच्चातिवेगितः ॥ १२८ ॥
[17]रज्जुभिश्चाभि बध्नन्ति ततो मां तत्र राक्षसाः ॥ रावणस्य समीपं च गृहीत्वा [18]मामुपानयन् ॥ १२९ ॥
दृष्ट्वा [19]संभाषितश्चाहं रावणेन दुरात्मना ॥ पृष्टश्च लङ्कागमनं राक्षसानां च [20]तं वधम् ॥ १३० ॥
तत्सर्वं च [21]मया तत्र सीता[22]र्थमिति जल्पितम् ॥ १३१ ॥

---

११५ ॥ ततो मे बुद्धिरुत्पन्ना वक्ष्यमाणकार्यविषयेत्यर्थः । तादृशं बुद्धिकार्यमाह—चैत्येत्यादिना । चैत्यप्रासादं नगरमध्यस्थप्रासादं । ललामभूतः अलंकारभूतः ॥ ११६—११८ ॥ पदातिबलसंपन्नान् पदातिप्रभृ-

---

त्याज्ञापनरूपमुत्तरंकिमित्यर्थः ॥ **ति०** उत्तरं समुद्रोत्तरकूलस्थं ॥ ९८ ॥ **ति०** तस्यदुर्बुद्धितेतिबहुव्रीहेस्तल् । नपुनर्व्रजेत् स्वदेशमितिशेषः ॥ ११२ ॥ **रामानु०** शूलमुद्गरपाणिनामित्यत्र दीर्घाभावआर्षः ॥ ११४ ॥ **ति०** चैत्यप्रासादं विनाशयितुमितिशेषः ॥ ११६ ॥ **रामानु०** चर्मासिनमित्यत्र इन्नन्तत्वमार्षं ॥ १२४ ॥ **रामानु०** द्वितीयं प्रेषितपुत्रापेक्षयाद्वितीयं ॥ १२५ ॥

**[ पा० ]** १ ङ. झ. ट. त्तस्यदुर्वुद्धितारार्जस्तव. ग. तस्यदुर्बुद्धिनोराजंस्तव. २ ङ. झ. ट. नपुनर्व्रजेत. ३ ङ. झ. ट. बहुदुर्जयाः. ४ ङ.—ट. हतशिष्टाये. ५ क. ग. ङ.—ट. मयासैन्यं. ६ ग. ङ.—ट. मुत्तमं. ७ ग. ङ.—झ. ट. लङ्कायामयाविध्वंसितोरुषा. ८ ग. भयावहैः. ङ. दुरासदैः. ९ क. सबलंसार्थं. १० क. ग. ङ.—ट. संयुगे. ११ ङ.—ट. समुद्यन्तं. १२ ङ. झ. ञ. तमासीनं. १३ ङ.—ट. ततश्चेन्द्रजितं. १४ क. रावणेनैषमहावीर्योमदोत्कटः. १५ ङ.—ट. मदोद्धतैः. १६ क. ग.—ट. स्वसैन्यंच. १७ ग. रज्जुभिश्चबबन्धुस्ते. १८ ङ. छ. झ. ञ. ट. मामुपागमन्. १९ ग. घ. संभाषितस्तेन. २० क.—घ. तद्वधं. २१ क. ग. ङ.—ट. रणेतत्र. २२ ङ.—ट. सीतार्थमुप. घ. सीतार्थमभि.

[1]अस्याहं दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो ॥ मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ १३२ ॥
रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ॥ सोहं [2]दूत्येन रामस्य [3]त्वत्सकाशमिहागतः ॥ १३३ ॥
[[4]शृणु चापि समादेशं यदहं प्रब्रवीमि ते ॥ राक्षसेश हरीशस्त्वां वाक्यमाह समाहितम् ॥१३४॥ ]
सुग्रीवश्च [5]महातेजाः स त्वां कुशलमब्रवीत् ॥ धर्मार्थकामसहितं हितं पथ्यमुवाच च ॥ १३५ ॥
वसतो ऋश्यमूके मे पर्वते विपुलद्रुमे ॥ राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥ १३६ ॥
तेन मे कथितं [6]राज्ञा भार्या मे रक्षसा हृता ॥ तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ॥१३७॥
मया च कथितं तस्मै वालिनश्च वधं प्रति ॥ तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ १३८ ॥
वालिना हृतराज्येन सुग्रीवेण [7]महाप्रभुः ॥ [8]चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥ १३९ ॥
तेन[9] वालिनमु[10]त्पाद्य शरेणैकेन संयुगे ॥ वानराणां महाराजः कृतः स प्लवतां प्रभुः ॥ १४० ॥
[11]तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह ॥ तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥१४१॥
क्षिप्रमानीयतां सीता दीयतां [12]राघवाय च ॥ यावन्न हरयो वीरा विधमन्ति बलं तव ॥ १४२ ॥
वानराणां [13]प्रभावो हि न केन विदितः पुरा ॥ देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः ॥१४३॥
इति वानरराजस्त्वामाहेत्यभिहितो मया ॥ मामैक्षत [14]ततः क्रुद्धश्चक्षुषा प्रदहन्निव ॥ १४४ ॥
तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्र[15]कर्मणा ॥ मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥ १४५ ॥
ततो विभीषणो नाम तस्य भ्राता [16]महामतिः ॥ तेन [17]राक्षसराजोसौ याचितो मम कारणात् ॥१४६॥
नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः ॥ राजशास्त्रव्यपेतो हि मार्गः [18]संसेव्यते त्वया ॥ १४७॥
दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ॥ दूतेन वेदितव्यं च [19]यथार्थं हितवादिना ॥ १४८ ॥
सुमहत्यपराधेपि दूतस्यातुलविक्रम ॥ विरूपकरणं दृष्टं न वधोस्तीति शास्त्रतः ॥ १४९ ॥
विभीषणेनैवमुक्तो रावणः संदिदेश तान् ॥ राक्षसानेतदेवास्य लाङ्गूलं दह्यतामिति ॥ १५० ॥
ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः ॥ वेष्टितं शणवल्कैश्च [20]जीर्णैः कार्पासजैः पटैः ॥१५१॥

तिसैन्यसंपन्नान् ॥ ११९—१३१ ॥ अस्याः सीतायाः । विसंधिरार्षः ॥ १३२—१३४ ॥ धर्मार्थकामसहितमिति तत्र धर्मसाहित्यात् हितं परत्र उपकारकं । अर्थसाहित्यात्पथ्यं । इहोपकारकं चेत्यर्थः ॥ १३५—१३८ ॥ सुग्रीवश्चेत्यादिना सुग्रीवोक्तं कियदनूद्य संप्रति शेषं स्वयं वक्ता सन्नाह—वालिनेति ॥ १३९—१४३ ॥ इदं वचस्सुग्रीवोक्तमेव मयोक्तमित्याह—इतीति ॥ १४४—१४६ ॥ नैवमिति । कर्तव्यमिति शेषः । राजशास्त्रं राजधर्मशास्त्रं ॥१४७॥ वेदितव्यं वक्तव्यमित्यर्थः ॥१४८—

**रामानु०** अहंप्राप्तः अहंहनुमान् इत्यहंशब्दस्यनिर्वाहः ॥ १३२ ॥ **स०** समोऽहितेनशत्रुणेतिसमाहितः । पूर्वंवालिमुखतःसख्येपिइदानींरामसाहाय्येनशत्रुंत्वामित्यर्थः ॥ १३४ ॥ **रामानु०** सुग्रीवेण मयेतिशेषः ॥ १३९ ॥ **रामानु०** वानराणांमहाराजःकृतः । अहमितिशेषः ॥ १४० ॥ **रामानु०** तेन साहाय्यस्यास्माभिःकर्तव्यत्वेन । प्रस्थापितः दूतइतिशेषः ॥ **शि०** तेन मया ॥ १४१ ॥ **रामानु०** विधमन्ति । " यावत्पुरानिपातयोर्लट् " इतिलृडर्थेलट् ॥ १४२ ॥ **रामानु०** येहिनिमन्त्रिताः युद्धसाहाय्यार्थमाहूताः । देवतानांसकाशंगच्छन्ति तेषांवानराणांप्रभावः पुराकेननविदितः । त्वयाविज्ञातएवेतिभावः ॥ **स०** निमन्त्रिताः आज्ञप्ताः । अनेनराजाज्ञाभावादेवनैतावत्कालपर्यन्तमत्रागताइतिध्वन्यते ॥ **ति०** वानराणामिति । राघवाणामितिपाठे

**[ पा० ]** १ ङ. झ. ट. तस्यास्तु. घ. अस्याःसंदर्शनाकाङ्क्षी. २ क. घ.—ट. दौत्येन. ३ क. ख. घ. त्वत्समीपमुपागतः. ४ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. ५ ङ.—ट. महाभागस्त्वांकौशलं. ६ क.—ट. राजन्भार्या. ७ ङ.—झ. ट. सहप्रभुः. घ. समंप्रभुः. ८ ग. कृत्वाग्निसाक्षिकं. ९ क. तेनवालीविनिहतोराघवेणमहाजिरे। राज्यंचसुमहत्प्राप्तंसुग्रीवेणमहात्मना. १० ख. ग. घ. मुत्साद्य. ङ. च. ज.—ट. माहत्य. ११ क. घ. तत्र. १२ ग.—ट. राघवस्यच. १३ ङ. झ. ट. प्रभावोयं. १४ ख. ग. ङ.—ट. ततोरुष्टश्चक्षुषा. घ. रुषाविष्टश्चक्षुषा. १५ घ. क्रूरकर्मणा. १६ घ. महाद्युतिः. १७ ग. ङ. छ. झ. ञ. ट. राक्षसराजश्च. १८ ङ. झ. ञ. ट. संलक्ष्यते. १९ ग. ङ. झ. ट. यथाभिहितवादिना. २० ग.—ञ. पटैःकार्पासकैस्तथा.

राक्षसाः सिद्धसन्नाहास्ततस्ते चण्डविक्रमाः ॥ तदाऽदह्यन्त मे पुच्छं निघ्नन्तः काष्ठमुष्टिभिः ॥१५२॥
बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ॥ [न मे पीडा भवेत्काचिद्दिदृक्षोर्नगरीं दिवा] ॥१५३॥
ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् ॥ अघोषयन्राजमार्गे नगरद्वारमागताः ॥ १५४ ॥
ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ॥ विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः ॥१५५॥
आयसं परिघं गृह्य तानि रक्षांस्यसूदयन् ॥ ततस्तन्नगरद्वारं वेगेनाप्लुतवाहनम् ॥ १५६ ॥
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ॥ दहाम्यहमसंभ्रान्तो युगान्ताग्निरिव प्रजाः ॥ १५७ ॥
[ ततो मे ह्यभवत्रासो लङ्कां दग्धां समीक्ष्य तु ॥ ] विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते ॥
लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १५८ ॥
दहता च मया लङ्कां दग्धा सीता न संशयः ॥ रामस्य हि महत्कार्यं मयेदं वितथीकृतम् ॥ १५९ ॥
इति शोकसमाविष्टश्चिन्तामहमुपागतः ॥ १६० ॥
अथाहं वाचमश्रौषं चारणानां शुभाक्षराम् ॥ जानकी न च दग्धेति विस्मयोदन्तभाषिताम् ॥ १६१ ॥
ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ॥ अदग्धा जानकीत्येवं निमित्तैश्चोपलक्षिता ॥ १६२ ॥
दीप्यमाने तु लाङ्गूले न मां दहति पावकः ॥ हृदयं च प्रहृष्टं मे वाताः सुरभिगन्धिनः ॥ १६३ ॥
तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ॥ ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः ॥ १६४ ॥
पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः ॥ १६५ ॥
ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः ॥ प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ॥ १६६ ॥
ततः पवनचन्द्रार्कसिद्धगन्धर्वसेवितम् ॥ पन्थानमहमाक्रम्य भवतो दृष्टवानिह ॥ १६७ ॥
राघवस्य प्रभावेन भवतां चैव तेजसा ॥ सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ॥ १६८ ॥

---

१५२ ॥ यन्त्रितस्य आवृतस्य ॥ १५३ ॥ नगरद्वारमागतास्सन्तः राजमार्गे अघोषयन्निति योजना ॥ १५४—१५६ ॥ अट्टं वलभिः ॥ १५७—१६० ॥ विस्मयोदन्तभाषितां भाषितविस्मयोदन्तां । उक्ताद्भुतवार्तामित्यर्थः । विस्मयवृत्तान्तव्यवहृतामिति वा ॥ १६१ ॥ निमित्तैश्चोपलक्षिता शकुनादिभिश्च सीता न दग्धेति ज्ञातेत्यर्थः ॥ १६२ ॥ हृदयं प्रहृष्टं । आसीदितिशेषः । सुरभिगन्धिनः आसन्नितिशेषः ॥ १६३ ॥ दृष्टार्थैः दृष्टफलैः । निमित्तैः शकुनैः । कारणैः नेत्रस्फुरणादिभिः । महागुणैः फलव्याप्तैः । सिद्धार्थैः अबाधितार्थैः । तत्र हेतुत्वेन ऋषिपदोपादानं ॥ १६४ ॥ पुनरित्यर्धमेकं वाक्यं । विसृष्टः प्रेषितोस्मि ॥ १६५ ॥ तत्र लङ्कासमीपे । सामीप्ये सप्तमी । तत्र वर्तमानं अरिष्टं पर्वतं ॥ १६६ ॥ भवतो दृष्टवानिह । भवतः युष्मान् । इह समुद्रतीरे ॥ १६७ ॥ भवतां चैव तेजसा भवदनुग्रहेणेत्यर्थः । सुग्रीवस्य च कार्यार्थं स्वामिकार्यस्यावश्यकर्तव्यत्वादिति भावः । कार्यार्थं कार्यवस्तु । क्लीबत्वमार्षं । अस्यानुवादवाक्यविस्तरस्य प्रयोजनं

---

मनुष्योसमर्थइतिनमन्तव्यमितिभावः ॥ १४३ ॥ ति० उपलक्षितं तददहनमितिशेषः । निमित्तैः शुभसूचकैः ॥ १६२ ॥ स० गन्धएषामस्तीतिगन्धिनः । सुरभयश्चतेगन्धिनश्चेतिविग्रहः । सुरभिलंगन्धेसप्तघटिकाभोजनमित्यत्रेवार्थादन्वेति ॥ १६३ ॥ इत्यष्टपञ्चाशःसर्गः ॥ ५८ ॥

[ पा० ] १ क. ग. ङ. झ. ञ. ट. तदाऽदीप्यन्त. २ इदमर्धं ङ.—ट. पाठेषुदृश्यते. ३ घ. माश्रिताः. ४ इदमर्धं क. ख. पाठयोर्दृश्यते. ५ क. ख. नसीतापरिरक्षिता. ६ च. छ. ज. ञ. रामस्येदंमयाकार्यंभूयोवा. ७ ङ. झ. ट. विफलीकृतं. ८ ङ. झ. ट. ततोहं. ९ घ. गगनेऽश्रौषं. १० क. ग. घ. विस्मयोदात्तभाषिणां. ११ ङ. झ. ट. श्चोपलक्षितं. १२ ङ. झ. ट. दृष्टार्थैरभवं. १३ ङ. झ. ट. श्वसन. १४ च. छ. ज. दृष्टवानहं.

एतत्सर्वं मया तत्र यथावदुपपादितम् ॥ अत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ॥ १६९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः ॥ ५९ ॥

हनुमता वानरान्प्रति सीतादुरवस्थानिवेदनपूर्वकं तदसहिष्णुतया जांबवदादिपराक्रमप्रशंसनेन तत्साहाय्यात्कैमुत्येन स्वस्य रावणादिहननसामर्थ्यनिवेदनपूर्वकं सीतापुरस्करणेन रामदर्शनस्यौचित्योक्तिः ॥ १ ॥

एतदाख्याय तत्सर्वं हनुमान्मारुतात्मजः ॥ भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १ ॥
सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः ॥ शीलमासाद्य सीताया मम च प्रवणं मनः ॥
[ आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः ] ॥ २ ॥
तपसा धारयेल्लोकान्क्रुद्धो वा निर्दहेदपि ॥ सर्वथाऽतिप्रवृद्धोसौ रावणो राक्षसाधिपः ॥
तस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ ३ ॥
न तदग्निशिखा कुर्यात्संस्पृष्टा पाणिना सती ॥ जनकस्यात्मजा कुर्याद्यत्क्रोधकलुषीकृता ॥ ४ ॥

---

वानराणां श्रवणकुतूहलातिशयप्रकाशनं ॥१६८-१६९
इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

तदेतदाख्याय उत्तरं वचनं वक्तुमुपचक्रामेत्यन्वयः ॥ १ ॥ अथ संप्रत्येव रावणं जित्वा सीतया सहैवास्माभिः प्रतियातव्यमिति हृदि निधायाह—सफल इति। संभ्रमः त्वरा । उत्साह इतियावत् । कुतस्साफल्यमित्याशङ्क्य सीतापातिव्रत्योपलम्भादित्याह—शीलमिति । शीलं वृत्तं। पातिव्रत्यमिति यावत् । अहं तु प्रागेव तदेकशरण इत्याह—मम चेति । प्रवणं प्रह्वं तत्परमिति यावत् । सीताचारित्रस्य न किंचिदसाध्यमस्तीति भावः ॥ २ ॥ तर्हि तं दुरात्मानं रावणं स्पृशन्तमेव किमिति नादहदित्याशङ्क्य तस्यापि तपःसंपत्तिसद्भावादित्याह—तपसेत्यादिना ॥ यद्वा रावणतपःकथनद्वारा सीतायाः पातिव्रत्यातिशयमाह—तपसेत्यादिना ॥ तपसा अतिप्रवृद्ध इत्यन्वयः । कोपप्रसादाभ्यां सर्वलोकनिग्रहानुग्रहसमर्थोसौ रावणस्सर्वथा महातपस्संपन्नः । अतएव सीतास्पर्शेप्यविनाशित इत्यर्थः ॥ ३ ॥ तर्हि सीताशीलं दुर्बलमस्माकं किमुपकरिष्यतीत्याशङ्क्य नेत्याह—न तदिति ॥ सीताशीलमेव बलीयस्त्वादुपकरिष्यतीत्यर्थः । क्रोधकलुषीकृतेतिवचनाद्भर्तृमुखेन वैरनिर्यातनं वीरपत्नीधर्मः । अन्यथा महालाघवं भर्तुरित्यद्यापि पारतन्त्र्यपालनाय तादृक्क्रोधाकरणाद्रावणो जीवतीति गम्यते। एतदेवोक्तं प्राक्—"असंदेशात्तु रामस्य तपसश्चानुपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह

---

स० उत्तरं उत्तमं ॥ १ ॥ ति० संभ्रमः आदरः । उत्साह इत्यर्थः । ममम‍नः प्रीणितं तुष्टं । प्रवणमितिपाठेपि प्रवणं संतोषप्रवणमित्यर्थः ॥ स० राघवोद्योगः सीतावृत्तान्तज्ञानोत्साहः । सुग्रीवस्यसंगमः सुग्रीवेणसहसख्यंच। सीतायाःशीलं पातिव्रत्यादिसद्वृत्तं । आसाद्य प्राप्य । दृष्ट्वासफलइतिज्ञातः । एतादृश्याःस्त्रियाअन्यस्याःक्वाप्यभावेनास्याविषयेबहुलायासोपियत्नःकर्तव्य एवेतिभावः । ति० सदृशं पतिव्रतानामरुन्धत्यादीनांसदृशमित्यर्थः । स० आर्यायाः पार्वत्याः । सदृशंशीलंसीतायाः । अथवा आर्यायाः सीतायाः । शीलं सीतायाएवसदृशमित्यनन्वयालङ्कारः ॥ २ ॥ ति० तर्हिरावणंकिमितिनादहदित्यतआह—सर्वथेति । अतिप्रकृष्टः महातपस्संपन्नइत्यर्थः ॥ स० सर्वथा सर्वप्रकारेण । तपोबलादिनातिप्रकृष्टः अभिवृद्धः । कथमेवंज्ञायतइत्यतआह—यस्येति । सर्वथा रावणतपोबलेनसीतायाःकोपातिशयानुदयात्तस्यजीवनमितिफलितार्थः ॥ ३ ॥ ति० नैतावतासीताशीलंदुर्बलमित्याशङ्क्यमित्याह—नेति । यत्क्रुद्धासीताकुर्यात् तत् स्पृष्टाऽग्निशिखापिनकुर्यात् । इयंतुभर्तुःपराक्रमकीर्तये नाद्यापिक्रुध्यतीति

[ पा० ] १ ग. ङ. झ. ट. तत्र. च. छ. ज. ञ. अतोयत्कर्मशेषंनः. क. मयायन्नकृतंकर्मतत्सर्वंकर्तुमर्हथ. २ ठ. संगमः. ३ ङ. झ. ट. प्रीणितं. ४ ङ.—ट. पाठेष्विदमर्धंदृश्यते. ५ ङ. च. झ. ट. न्क्रुद्धावा. ६ ङ. झ. ट. प्रकृष्टोसौ. ७ क. ग. घ. ङ. झ. ट. यस्य. च. छ. ज. ञ. यस्यसंस्पृशतो.

जाम्बवत्प्रमुखान्सर्वाननुज्ञाप्य महाहरीन् ॥ अस्मिन्नेवंगते कार्ये भवतां च निवेदिते ॥
न्याय्यं स सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ५ ॥
अहमेकोपि पर्याप्तः सराक्षसगणां पुरीम् ॥ तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥ ६ ॥
किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ॥ कृतास्त्रैः प्लवगैः शूरैर्भवद्भिर्विजयैषिभिः ॥ ७ ॥
अहं तु रावणं युद्धे ससैन्यं सपुरस्सरम् ॥ सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ८ ॥
ब्राह्ममैन्द्रं च रौद्रं च वायव्यं वारुणं तथा ॥ यदि शक्रजितोस्त्राणि दुर्निरीक्षाणि संयुगे ॥ ९ ॥
तान्यहं विधमिष्यामि निहनिष्यामि राक्षसान् ॥ भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ॥१०॥
मयाऽतुला विसृष्टा हि शैलवृष्टिर्निरन्तरा ॥ देवानपि रणे हन्यात्किं पुनस्तान्निशाचरान् ॥
[भवतामननुज्ञातो विक्रमो मे रुणद्धि माम्] ॥ ११ ॥
सागरोप्यतियाद्वेलां मन्दरः प्रचलेदपि ॥ न जाम्बवन्तं समरे कम्पयेदरिवाहिनी ॥ १२ ॥
सर्वराक्षससङ्घानां राक्षसा ये च पूर्वकाः ॥ अलमेको विनाशाय वीरो[3] वालिसुतः कपिः ॥ १३ ॥
पनसस्योरुवेगेन नीलस्य च महात्मनः ॥ मन्दरोप्यवशीर्येत किं पुनर्युधि राक्षसाः ॥ १४ ॥
सदेवासुरयक्षेषु गन्धर्वोरगपक्षिषु ॥ मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १५ ॥
अश्विपुत्रौ महाभागावेतौ प्लवगसत्तमौ ॥ एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ १६ ॥
पितामहवरोत्सेकात्परमं दर्पमास्थितौ ॥ अमृतप्राशिनावेतौ सर्ववानरसत्तमौ ॥ १७ ॥
अश्विनोर्माननार्थं हि सर्वलोकपितामहः ॥ सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥ १८ ॥
वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् ॥ सुराणाममृतं वीरौ पीतवन्तौ प्लवङ्गमौ ॥ १९ ॥
एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् ॥ लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ॥ २० ॥
मयैव निहता लङ्का दग्धा भस्मीकृता पुनः ॥ राजमार्गेषु सर्वत्र नाम विश्रावितं मया ॥ २१ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ॥ राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २२ ॥
अहं कोसलराजस्य दासः पवनसंभवः ॥ हनुमानिति सर्वत्र नाम विश्रावितं मया ॥ २३ ॥
अशोकवनिकामध्ये रावणस्य दुरात्मनः ॥ अधस्ताच्छिंशुपावृक्षे साध्वी करुणमास्थिता ॥ २४ ॥
राक्षसीभिः परिवृता शोकसंतापकर्शिता ॥ मेघलेखापरिवृता चन्द्रलेखेव निष्प्रभा ॥ २५ ॥
अचिन्तयन्ती वैदेही रावणं बलदर्पितम् ॥ पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २६ ॥

तेजसा ” इति ॥ ४ ॥ एवं स्थिते युष्मदनुमत्या भृत्यविजयोपि स्वामिन एवेति कृत्वा सीतारामपदावलम्बादहमेव रावणं निर्जित्य सीतापुरस्कारेणैव राघवौ द्रक्ष्यामीत्याह—जाम्बवदिति ॥ ५ ॥ न चाशक्तिशङ्का कार्येति बहुधा प्रपञ्चयन्नाह—अहमित्यादिना ॥ ६—९ ॥ अभ्यनुज्ञातः अभ्यनुज्ञानात् । पञ्चम्यास्तसिः । मे विक्रमः तं रावणं रुणद्धि हन्तीत्यर्थः ॥ १०—११ ॥ अतियात् आर्षं ह्रस्वत्वं ॥ १२ ॥ पूर्वकाः तेषामितिशेषः ॥ १३—२० ॥ दग्धत्वेप्यङ्गारावस्था भवति सापि नास्तीत्याह—भस्मीकृतेति ॥ २१ ॥ नामविश्रावणमेवाह—जयतीति ॥ जयति सर्वोत्कर्षेण वर्तते । तदुक्तं हरिणा—“ जयिर्जयाभिभवयोराद्येर्थेसावकर्मकः । उत्कर्षप्राप्तिराद्यार्थो द्वितीयेर्थे सकर्मकः ” इति ॥ २२—२३ ॥ अथ सीतादुर्दशाविमर्शेपि संप्रत्यसौ समानेतव्येत्याशयेन तद्दशां दर्शयति—अशोकेत्यादिना ॥ २४—२६ ॥

भावः । अक्रुद्धायाअपिस्पर्शमात्रेणप्राप्तोनाशस्तु रावणतपसानिवारितइतिज्ञेयं ॥ ४ ॥ ति० कृतास्त्रैः देवांशत्वादस्त्रप्रयोगसमर्थैः ॥ ७ ॥ स० युद्धेरावणं युद्धेलोकरावणं ॥ ८ ॥

[ पा० ] १ क. ग. ङ. च. झ. ञ. ट. शक्तैः. २ ङ. झ. ट. पाठेष्विदमर्धंदृश्यते. ३ क. तेषांवालिसुतः. ४ झ. ट. प्लवगस्योरुवेगेन. ५ ग. ङ. झ. ट. महावेगौ. च. छ. ज. ञ. महावीर्यौयौतौ. ६ क. मत्तौच. ग. मत्तौतौ. ७ ङ.—ट. पुरी.

अनुरक्ता हि वैदेही रामं सर्वात्मना शुभा ॥ अनन्यचित्ता रामे च पौलोमीव पुरन्दरे ॥ २७ ॥
तदेकवासस्संवीता रजोध्वस्ता तथैव च ॥ शोकसंतापदीनाङ्गी सीता भर्तृहिते रता ॥ २८ ॥
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ॥ २९ ॥
एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ ३० ॥
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ कथंचिन्मृगशाबाक्षी विश्वासमुपपादिता ॥ ३१ ॥
ततः संभाषिता चैव सर्वमर्थं च दर्शिता ॥ रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ ३२ ॥
नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा ॥ यन्न हन्ति दशग्रीवं स महात्मा कृतागसम् ॥
निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ॥ ३३ ॥
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता ॥ प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ ३४ ॥
एवमास्ते महाभागा सीता शोकपरायणा ॥ यदत्र प्रतिकर्तव्यं तत्सर्वमुपपद्यताम् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकोनषष्टितमस्सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

अङ्गदेनापि स्वस्वीयपराक्रमप्रशंसनेन रावणादिरक्षःक्षपणपूर्वकं सीतासमानयनस्य कर्तव्यत्वोक्तौ जांबवता सयुक्त्युपन्यासं तत्प्रतिषेधनं ॥ १ ॥

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत ॥ १ ॥
[अहमेकोपि पर्याप्तः सराक्षसगणां पुरीम् ॥ तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥ २ ॥

---

पौलोमीव पुरन्दर इति । नहुषनिर्बन्ध इतिभावः ॥ २७—२८ ॥ प्रमदावने अशोकवनिकायां ॥ २९—३०॥ विनिवृत्तार्था त्यक्तप्रयोजना । रावणप्रलोभनवाक्यैरवशीकृतेत्यर्थः ॥ ३१ ॥ सर्वमर्थं रामोद्योगादिकं । दर्शिता बोधिता ॥ ३२ ॥ नियत इति ॥ समुदाचारः चारित्रमिति यावत् । नन्वेवंमाहात्म्या सीता स्वयमेव रावणं किमिति न हन्तीत्याशङ्क्याह—यन्न हन्तीति ॥ दशग्रीवं न हन्तीतियत् तत्र कारणं स दशाननः महात्मा महानुभावः । शापनिबन्धनदुर्मरणाभावादिति भावः । अतस्तस्य वधे रामस्तु राम एव निमित्तमात्रं भविष्यति । तथा तस्योत्कर्षात् । सीता तु निमित्तकारणमिति शेषः । भर्त्रैव वैरनिर्यातनं वीरपत्नीधर्मः अन्यथा भर्तुर्महल्लाघवमिति मनीषया नस्वयं हन्ति नत्वसामर्थ्यादिति भावः ॥ ३३—३४॥ फलितमुपसंहरति—एवमिति ॥ उपपद्यतां अनुष्ठीयतां ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९॥

---

तस्येत्यादि ॥ १—३ ॥ वानरा इति संबोधनं

---

ति० रामेण रामप्रीत्या ॥ २७ ॥ शि० प्रमदानामवनंअतिरक्षायस्मिन् । पुरुषागम्येत्यर्थः ॥ २९ ॥ स० दशग्रीवं नहन्तियस्मात्स महात्मा । अनेन सीता रामकीर्त्यैरावणवधमुदास्ते इत्युक्तंभवति ॥ ३३ ॥ इत्येकोनषष्टितमःसर्गः ॥ ५९ ॥

[ पा० ] १ झ. रामे. २ झ. अनन्यचित्तारामेण. ३ ग. ङ. च. ज.—ट. हिमोदये. ४ ङ. झ. ट. प्रकाशिता. ग. चदर्शितं. च. ज. ञ. प्रदर्शिता. ५ ग. प्रमुदिताभृशं. ६ ङ. च. ज.—ट. मुपकल्प्यतां. ७ ग. ततस्तद्वचनंश्रुत्वा. एतदर्धानन्तरं झ. पाठे. अश्विपुत्रौमहावेगौबलवन्तौप्लवङ्गमौ । पितामहवरोत्सेकात्परमंदर्पमास्थितौ । अश्विनोर्माननार्थंहिसर्वलोकपितामहः । सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा । वरोत्सेकेनमत्तौचप्रमथ्यमहतींचमूम् । सुराणाममृतंवीरौपीतवन्तौमहाबलौ । एतावेवहिसंक्रुद्धौसवाजिरथकुञ्जराम् । लङ्कांनाशयितुंशक्तौसर्वेतिष्ठन्तुवानराः । इतिचत्वारःश्लोकाअधिकादृश्यन्ते । एतएवश्लोकाःअस्मदीयपुस्तकेएकोनषष्टितमेऽध्यायेहनुमद्वाक्ये षोडशश्लोकानन्तरंदृश्यमानत्वात् अत्रनास्माभिर्मुद्रिताः. ८ एतदर्धपञ्चकं झ. पाठेदृश्यते.

किंपुनः सहितैर्वीरैर्बलवद्भिः कृतात्मभिः ॥ कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ॥
वायुसूनोर्बलेनैव दग्धा लङ्केति नः श्रुतम् ॥ ३ ॥]
अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः ॥ समीपं गन्तुमस्माभी राघवस्य महात्मनः ॥ ४ ॥
दृष्टा देवी न चानीता इति तत्र निवेदनम् ॥ अयुक्तमिव पश्यामि भवद्भिः ख्यातविक्रमैः ॥ ५ ॥
न हि नः प्लवने कश्चिन्नापि कश्चित्पराक्रमे ॥ तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः ॥ ६ ॥
[जित्वा लङ्कां सरक्षौघां हत्वा तं रावणं रणे ॥ सीतामादाय गच्छामः सिद्धार्था हृष्टमानसाः ॥७॥]
तेष्वेवं हतवीरेषु राक्षसेषु हनूमता ॥ किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ॥ ८ ॥
[रामलक्ष्मणयोर्मध्ये न्यस्याम जनकात्मजाम् ॥ किं व्यलीकैस्तु तान्सर्वान्वानरान्वानरर्षभान् ॥९॥]
वयमेव हि गत्वा तान्हत्वा राक्षसपुङ्गवान् ॥ राघवं द्रष्टुमर्हामः सुग्रीवं सहलक्ष्मणम् ॥ १० ॥]
तमेवं कृतसंकल्पं जाम्बवान्हरिसत्तमः ॥ उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ ११ ॥
[नैषा बुद्धिर्महाबुद्धे यद्ब्रवीषि महाकपे ॥ विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् ॥ १२ ॥
नानेतुं कपिराजेन नैव रामेण धीमता ॥ कथंचिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् ॥ १३ ॥
राघवो नृपशार्दूलः कुलं व्यपदिशन्स्वकम् ॥ प्रतिज्ञाय स्वयं राजा सीताविजयमग्रतः ॥
सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति ॥ १४ ॥
विफलं कर्म च कृतं भवेत्तुष्टिर्न तस्य च ॥ वृथा च दर्शितं वीर्यं भवेद्वानरपुङ्गवाः ॥ १५ ॥
तस्माद्गच्छाम वै सर्वे यत्र रामः सलक्ष्मणः ॥ सुग्रीवश्च महातेजाः कार्यस्यास्य निवेदने ॥ १६ ॥]

न तावदेषा मतिरक्षमा नो यथा भवान्पश्यति राजपुत्र ॥
यथा तु रामस्य मतिर्निविष्टा तथा भवान्पश्यतु कार्यसिद्धिम् ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

## एकषष्टितमः सर्गः ॥ ६१ ॥

महेन्द्रपर्वतात्किष्किन्धागमनाय गगनमुत्पतितैरङ्गदादिभिः मध्येमार्गंदधिमुखरक्षितेसुग्रीवस्यप्रियतमेमधुवनेऽवतरणम् ॥ १ ॥ सर्ववानरैरङ्गदानुज्ञया यथेच्छं मधुफलोपभोगे वृक्षक्षोभमधुफलविध्वंसनरुष्टेनदधिमुखेन बलात्प्रतिषेधने तैर्नखदशनादिभिस्तत्परिपीडनं ॥ २ ॥

ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः ॥ अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १ ॥
प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरस्सराः ॥ महेन्द्राद्रिं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २ ॥

---

॥ ४–१६ ॥ अथ जाम्बवानङ्गदवाक्यं बहु मन्यमानस्सुहृद्भावेन प्रतिषेधति—नतावदिति ॥ अक्षमा अयुक्ता न किन्तु युक्तैवेत्यर्थः । यद्यपिसम्यगुक्तं समर्थैश्चापि रामाज्ञानुसारेण कर्तव्यं न स्वातन्त्र्येणेत्यर्थः ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

सभाज्यमानं संपूज्यमानं । वहन्त इव दृष्टिभिरिति । प्रीतिपूर्वकानिमिषदर्शनाद्दृष्टिष्वारोप्य नयन्त

---

ति० अगृह्णन्त युक्तियुक्तत्वेनामन्यन्त ॥ १ ॥ स० प्रीतिमन्तः हर्षयुक्ताः । नागमनकालइवचिन्तायुक्ताइत्यर्थः । पुप्लुवुः

[ पा० ] १ झ. निवेदितुं. २ झ. ख्यातपौरुषैः. ३ झ. वःप्लवने. ४ अयंश्लोकः झ. पाठेदृश्यते. ५ झ. हतशेषेषु. ६ इदंश्लोकद्वयं झ. पाठेदृश्यते. ७ एतेश्लोकाः झ. पाठेदृश्यन्ते. ८ ङ.—ट. महेन्द्राग्रात्समुत्पत्य.

मेरुमन्दरसंकाशा मत्ता इव महागजाः ॥ छादयन्त इवाकाशं महाकाया महाबलाः ॥ ३ ॥
सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् ॥ हनुमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४ ॥
राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः ॥ समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५ ॥
[1]प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः ॥ सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६ ॥
प्लवमानाः [2]खमाप्लुत्य ततस्ते काननौकसः ॥ नन्दनोपममासेदुर्वनं [3]द्रुमलतायुतम् ॥ ७ ॥
यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् ॥ अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८ ॥
यद्रक्षति [4]महावीर्यः [5]सदा दधिमुखः कपिः ॥ मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९ ॥
ते तद्वनमुपागम्य बभूवुः परमोत्कटाः ॥ वानरा वानरेन्द्रस्य [6]मनःकान्ततमं महत् ॥ १० ॥
ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् ॥ कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ ११ ॥
ततः कुमारस्तान्वृद्धाञ्जाम्बवत्प्रमुखान्कपीन् ॥ अनुमान्य ददौ तेषां [7]निसर्गं मधुभक्षणे ॥ १२ ॥
[ते[8] निसृष्टाः कुमारेण धीमता वालिसूनुना ॥ हरयः समपद्यन्त द्रुमान्मधुकराकुलान् ॥ १३ ॥
भक्षयन्त सुगन्धीनि मूलानि च फलानि च ॥ जग्मुः प्रहर्षं ते सर्वे बभूवुश्च मदोत्कटाः ॥ १४ ॥]
ततश्चानुमताः सर्वे [9]संप्रहृष्टा वनौकसः ॥ [10]मुदिताः प्रेरिताश्चापि प्रनृत्यन्तोऽभवंस्ततः ॥ १५ ॥

गायन्ति केचित्प्रणमन्ति केचिन्नृत्यन्ति केचित्प्रहसन्ति केचित् ॥
पतन्ति केचिद्विचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित् ॥ १६ ॥
परस्परं केचिदुपाश्रयन्ते परस्परं केचिदुपाक्रमन्ते ॥
परस्परं केचिदुपब्रुवन्ते परस्परं केचिदुपारमन्ते ॥ १७ ॥
द्रुमाद्द्रुमं केचिदभिद्रवन्ते क्षितौ नगाग्रान्निपतन्ति केचित् ॥
महीतलात्केचिदुदीर्णवेगा महाद्रुमाग्राण्यभिसंपतन्ति ॥
[ [11]धावन्ति केचित्सुपतन्ति केचिन्महाबला वानरयूथमुख्याः ] ॥ १८ ॥
गायन्तमन्यः प्रहसन्नुपैति हसन्तमन्यः प्ररुदन्नुपैति ॥
रुदन्तमन्यः प्रणुदन्नुपैति नुदन्तमन्यः प्रणदन्नुपैति ॥ १९ ॥

इवेत्युत्प्रेक्षा ॥ ४ ॥ अर्थनिर्वृत्तिं अर्थसिद्धिं । समाधाय निश्चित्य संकल्प्य वा । समृद्धार्थाः सिद्धकार्याः । कर्मसिद्धिभिः कार्यसिद्धिभिः । उन्नताः इतरेभ्य उत्कृष्टाः ॥ ५ ॥ रामप्रतीकारे रामप्रत्युपकारे । पुप्लुवुरिति पूर्वेणसंबन्धः ॥६—९॥ परमोत्कटाः परमोत्सुकाः ॥१०॥ मधुपिङ्गलाः मधुवत्पिङ्गलवर्णाः वानराः ॥ ११ ॥ अनुमान्य अनुमतिं कारयित्वा । निसर्गं विसर्जनं । अनुमतिमिति यावत् ॥ १२—१४ ॥ पूर्वमेव सीतादर्शनात्प्रहृष्टाः ततः मधुवनभङ्गे अङ्गदेनानुमतास्सन्तस्ततो मुदिताः तत्प्रेरिताः प्रनृत्यन्तोऽभवन् ॥ १५ ॥ मधुवनभङ्गाभ्यनुज्ञानकृतं वानरहर्षविकारमेव वर्णयति सर्गशेषेण—गायन्ति केचित्प्रणमन्ति केचिन्नृत्यन्ति केचित्प्रहसन्ति केचित् । पतन्ति केचिद्विचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित् । इति पाठः । प्रणमन्ति अवाक्छिरसः पतन्ति । पतन्ति ऊर्ध्वपादाः पृष्ठेन पतन्ति ॥१६—१९॥

वनंप्रतीतिशेषः ॥ २ ॥ ति० रामप्रतीकारे रामकर्तव्येरावणप्रतीकारे । निश्चितार्थाः अभूवन्नितिशेषः ॥ ६ ॥ ति० हर्षमुदो र्बाह्यान्तरत्वकृतोभेदः ॥ १५ ॥ ति० तत्रबाह्यमानन्दसूचकमाह—गायन्तीति ॥ १६ ॥ स० परुषाणि क्रूराणि । उवाच ।

[ पा० ] १ क. घ. प्रियाख्यानपराः. २ ख. ग. घ. खमुत्पत्य. क. समुत्पत्य. ३ ग.—ट. द्रुमशतायुतं. ४ ख. ग. ङ. झ. ट. महावीरः. ५ ज. सोयं. ६ ङ. झ. ञ. ट. मनःकान्तंमहावनं. ग. च. छ. ज. मनःकान्तंमहद्वनम्. घ. मनःकान्ततरंमहत्. ७ ख. प्लवतांमधुभक्षणे. ८ इदंश्लोकद्वयं ङ.—ट. पाठेषुदृश्यते. ९ च.—ट. सुसंहृष्टाः. १० ग. मुदिताश्चततकेचित्प्रनृत्यन्तितथापरे. क. घ.—छ. झ. ञ. ट. मुदिताश्चततस्तेचप्रनृत्यन्तिततस्ततः. ११ इदमर्धं क. पाठेदृश्यते.

समाकुलं तत्कपिसैन्यमासीन्मधुप्रपानोत्कटसत्त्वचेष्टम् ॥
न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव तृप्तः ॥ २० ॥
ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ॥
समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥ २१ ॥
स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवीरवृद्धः ॥
चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ २२ ॥
उवाच कांश्चित्परुषाणि धृष्टमसक्तमन्यांश्च तलैर्जघान ॥
समेत्य कैश्चित्कलहं चकार तथैव साम्नोपजगाम कांश्चित् ॥ २३ ॥
स तैर्मदात्संपरिवार्य वाक्यैर्बलाच्च तेन प्रतिवार्यमाणैः ॥
प्रधर्षितस्त्यक्तभयैः समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ २४ ॥
नखैस्तुदन्तो दशनैर्दशन्तस्तलैश्च पादैश्च समापयन्तः ॥
मदात्कपिं तं कपयः समग्रा महावनं निर्विषयं च चक्रुः ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ॥ ६२ ॥

हनुमतादधिमुखप्रतिषिद्धवानरान्प्रति प्रतिषेधकप्रतिषेधनप्रतिज्ञानपूर्वकं निश्शङ्कमधुपाननियोगे पुनर्वानरैः सवनक्षोभं यथारुचि मधुपानादिषुप्रवर्तनम् ॥ १ ॥ वानरैर्मधुपानजमदपरवशतयोन्मत्तवन्नृत्तादिनानाचेष्टाविष्करणम् ॥ २ ॥ वानरैस्ताडनादिनापीडितैर्वनपालैर्दधिमुखे तन्निवेदने तेनतैस्सह वानरान्प्रत्यायोधनम् ॥ ३ ॥ अङ्गदेन दधिमुखस्य सताडनंभूमौ निष्पेषणं ॥ ४ ॥ दधिमुखेन वनपालैःसह सुग्रीवे मधुवनधर्षणादिनिवेदनाय किष्किन्धामेत्य रामादिसंनिधौ सुग्रीवचरणयोःप्रणामः ॥ ५ ॥

तानुवाच हरिश्रेष्ठो हनुमान्वानरर्षभः ॥ अव्यग्रमनसो यूयं मधु सेवत वानराः ॥
अहमावारयिष्यामि युष्माकं परिपन्थिनः ॥ १ ॥
श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥ प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु ॥ २ ॥
अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् ॥ ३ ॥
अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ॥ ४ ॥

---

मधुप्रपानोत्कटसत्त्वचेष्टं मत्तचित्तचेष्टं ॥२०—२४॥ निर्विषयं निर्गतमधुमूलादिभोग्यवस्तुकं । चक्रुरित्यर्थः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

तान् दधिमुखकलहव्याकुलितान् । अन्ये तु तानुवाचेत्यादिना पूर्वसर्गोक्तं संक्षेपेणानूद्य उपरि गच्छतीत्याचक्षते । अपरे तु सर्गमुखे केचिच्छ्लोकाः पतिता इत्याहुः ॥ १—२ ॥ अङ्गेति संबोधने निपातः ॥ ३ ॥ अङ्गदस्य स्वामिनः मुखाद्वचनं

ततोप्यधमान्कांश्चित् तलैः करचरणतलैः । स्वसमैः कलहंचकार । स्वतःप्रबलानङ्गदादीन् साम्नाजगाम ॥ २३ ॥ ति० समापयन्तः मृतकल्पंकुर्वन्तः ॥ २५ ॥ इत्येकषष्टितमःसर्गः ॥ ६१ ॥

[ पा० ] १ क. घ. तैःपरिभक्ष्यमाणं. २ झ. ट. परुषाण्यभीतं. ३ घ. झ. ञ. ट. मैदादप्रतिवार्यवेगैः. क. च. छ. ज. मैदाच्चाप्रतिवार्यवेगैः. ४ झ. ट. तेकपयः. ५ झ. ट. समन्तान्महावनं. क. ग. घ. समग्राबलाद्वनं. ख. समग्रामधोर्वनं.

पूजयित्वाऽङ्गदं सर्वे वानरा वानरर्षभम् ॥ जग्मुर्मधुवनं यत्र नदीवेगा इव द्रुतम् ॥ ५ ॥
ते प्रविष्टा मधुवनं पालानाक्रम्य वीर्यतः ॥ अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् ॥
पपुः सर्वे मधु तदा रसवत्फलमाददुः ॥ ६ ॥
उत्पत्य च ततः सर्वे वनपालान्समागतान् ॥ ताडयन्ति स्म शतशः सक्तान्मधुवने तदा ॥ ७ ॥
मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते ॥ पिबन्ति सहिताः सर्वे निघ्नन्ति स्म तथा परे ॥ ८ ॥
केचित्पीत्वाऽपविध्यन्ति मधूनि मधुपिङ्गलाः ॥ मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ॥ ९ ॥
अपरे वृक्षमूले तु शाखां गृह्य व्यवस्थिताः ॥ अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते ॥ १० ॥
उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत् ॥ क्षिपन्ति च तदाऽन्योन्यं स्खलन्ति च तथापरे ॥ ११ ॥
केचित्क्ष्वेलां प्रकुर्वन्ति केचित्कूजन्ति हृष्टवत् ॥ हरयो मधुना मत्ताः केचित्सुप्ता महीतले ॥ १२ ॥
कृत्वा केचिद्धसन्त्यन्ये केचित्कुर्वन्ति चेतरत् ॥ कृत्वा केचिद्वदन्त्यन्ये केचिद्बुध्यन्ति चेतरत् ॥ १३ ॥
येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ॥ तेपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥ १४ ॥
जानुभिस्तु प्रकृष्टाश्च देवमार्गं प्रदर्शिताः ॥ अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः ॥ १५ ॥
हनूमता दत्तवरैर्हतं मधुवनं बलात् ॥ वयं च जानुभिः कृष्टा देवमार्गं च दर्शिताः ॥ १६ ॥
ततो दधिमुखः क्रुद्धो वनपस्तत्र वानरः ॥ हतं मधुवनं श्रुत्वा सान्त्वयामास तान्हरीन् ॥ १७ ॥

हनुमदुक्तं श्रुत्वा ॥ ४ ॥ जग्मुर्मधुवनमिति प्रदेशभेदविवक्षया । यद्वा दधिमुखनिवारणेन भीतानां हनुमदङ्गदाभ्यां पुनरनुज्ञापनेन पुनर्जग्मुरित्यर्थः ॥ ५ ॥ वीर्यतः बलात् । अतिसर्गात् अङ्गदाभ्यनुज्ञानात् । दृष्ट्वा श्रुत्वा च मैथिलीं दर्शनश्रवणाभ्यां च हेतुना । वनपालानाक्रम्य आक्षिप्य ॥ ६ ॥ सक्तान् वनपालने रतान् ॥ ७ ॥ मधूनि मधुपटलानि । द्रोणमात्राणि द्रोणप्रमाणानि आढकप्रमाणानि । घ्नन्तिस्म पीतावशिष्टानि मधुपटलानि भिन्दन्तिस्म ॥ ८ ॥ अपविध्यन्ति अवक्षिपन्ति । मधूच्छिष्टेन सिक्थकेन । "मधूच्छिष्टं तु सिक्थकं" इत्यमरः । उत्कटाः मत्ताः ॥ ९-१० ॥ हृष्टवत् हर्षयुक्तमिति क्रियाविशेषणं । हृष्टार्हमितिवार्थः । क्षिपन्ति उत्क्षिप्य पातयन्ति । स्खलन्ति पादेन नुदन्तीत्यर्थः ॥ ११ ॥ क्ष्वेलां सिंहनादं । "क्ष्वेला तु सिंहनादः स्यात्" इत्यमरः । कूजन्ति पक्षिवच्छब्दायन्ते ॥ १२ ॥ अन्ये अवाच्यं किंचिद्ग्राम्यं कर्म कृत्वा हसन्ति । इतरत्तद्विलक्षणं ग्राम्यं कर्म केचित्कुर्वन्ति । केचिदन्यद्ग्राम्यं कर्म कृत्वा अस्माभिरिदं कृतमिति वदन्ति उच्चारयन्ति । केचिदितरद्बुध्यन्ति एवं करिष्यामीति संकल्पयन्तीत्यर्थः ॥ १३—१४ ॥ जानुभिःप्रकृष्टाः । जानून्यवलम्ब्य कृष्टा इत्यर्थः । देवमार्गं अपानद्वारं । देवशब्दो वायुवाची । उपनिषदि वायुलोके देवलोकशब्दप्रयोगात् । दर्शिताः दर्शनं कारिताः । दृशेरुपसंख्यानादणि कर्तुः कर्मत्वं । "ण्यन्तात्कर्तुश्च कर्मणः" इति तस्यैवाभिधेयत्वं च ॥ १५—१७ ॥

ति० अतिसर्गात् अङ्गदानुज्ञानात्मधु पपुः रसवत्फलंचाददुः भक्षणार्थमितिशेषः ॥ ६ ॥ स० मधूनिपीत्वा अपविध्यन्ति तत्करण्डमितिशेषः ॥ ९ ॥ स० इतरत् अप्रदर्शनीयावयवप्रदर्शनादि ॥ १३ ॥ ति० जानुभिःप्रघृष्टाः जानुषुगृहीत्वाआकृष्टाः । देवमार्गंदर्शिताः पादौगृहीत्वोर्ध्वंप्रक्षिप्ताइत्यर्थः । कर्णावङ्गुलिभिर्धृत्वोर्ध्वीकृताइतिवार्थ इत्यन्ये ॥ स० जानुभिश्चप्रघृष्टाः पश्चात्ताडिताःसन्तोदेवमार्गंसुरवर्त्मंदर्शिताः पश्चाज्जानुसंताडनेमुखोर्ध्वीभवनेनाकाशावलोकनस्यजायमानत्वादेवमुक्तिः । पायुद्वारंवा । कपीनांहेलनसमयेगुदप्रदर्शनस्यभागवतदशमोत्तरार्धेबलरामद्विविदप्रस्तावेअन्यत्रापिबहुशोदृष्टत्वात् ॥ १५ ॥

[ पा० ] १ ख. ग. ङ. झ. नदीवेगइवद्रुमं. २ ङ. झ. ट. शक्तितः. ३ ज. अतिगर्वाच्च. ग. तेनिसर्गाच्च. घ. निसर्गाच्चापि. ख. निसर्गाच्चापिहरयो. ४ ग. ङ. झ. ट. तेताडयन्तःशतशः. ५ पिबन्तिसहिताइत्यर्धस्यस्थाने क.—ट. पाठेषु. पिबन्तिकपयःकेचित्संघशस्तत्रहृष्टवत् । घ्नन्तिस्मसहिताःसर्वेभक्षयन्तितथापरे । इत्येकःश्लोकोदृश्यते. ६ ग. घ. ङ. ज.—ट. मूलेषु. ७ ङ. च. ज.—ट. शाखागृह्य. ८ ङ. झ. ञ. ट. उन्मत्तवेगाः. ९ ख. हसन्तिच. १० झ. ञ. ट. धृष्टाःकेचित्. ११ ग. ङ. झ. ट. जानुभिश्चप्रघृष्टाश्च. १२ क. ग.—च. ज.—ट. देवमार्गंचदर्शिताः. १३ ङ. झ. ट. जानुभिर्घृष्टाः.

[1]इहागच्छत गच्छामो [2]वानरान्बलदर्पितान् ॥ बलेन वारयिष्यामो [3]मधु भक्षयतो वयम् ॥ १८ ॥
श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः ॥ पुनर्वीरा मधुवनं तेनैव [4]सहसा ययुः ॥ १९ ॥
मध्ये चैषां दधिमुखः प्रगृह्य [5]तरसा तरुम् ॥ समभ्यधावद्वेगेन ते च सर्वे प्लवङ्गमाः ॥ २० ॥
ते शिलाः पादपांश्चापि [6]पर्वतांश्चापि वानराः ॥ गृहीत्वाभ्यगमन्क्रुद्धा यत्र ते कपिकुञ्जराः ॥ २१ ॥
ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् ॥ त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः ॥ २२ ॥
वृक्षस्थांश्च तलस्थांश्च वानरान्बलदर्पितान् ॥ अभ्यक्रामंस्ततो वीराः पालास्तत्र सहस्रशः ॥ २३ ॥
[ [7]बलान्निवारयन्तश्च आसेदुर्हरयो हरीन् ॥ संदष्टोष्ठपुटक्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ २४ ॥ ]
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुङ्गवाः ॥ अभ्यधावन्त [8]वेगेन हनुमत्प्रमुखा[9]स्तदा ॥ २५ ॥
[10]तं सवृक्षं महाबाहुमापतन्तं महाबलम् ॥ [11]आर्यकं प्राहरत्तत्र बाहुभ्यां कुपितोऽङ्गदः ॥ २६ ॥
[12]मदान्धश्च न वेदैनमार्यकोयं ममेति सः ॥ अथैनं निष्पिपेषाशु [13]वेगवद्वसुधातले ॥ २७ ॥
[14]स भग्नबाहूरुभुजो विह्वलः शोणितोक्षितः ॥ [15]मुमोह सहसा वीरो मुहूर्तं कपिकुञ्जरः ॥ २८ ॥
स समाश्वस्य सहसा संक्रुद्धो राजमातुलः ॥ वानरान्वारयामास दण्डेन मधुमोहितान् ॥ २९ ॥
स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः ॥ उवाचैकान्त[16]माश्रित्य भृत्यान्स्वान्समुपागतान् ॥ ३० ॥
[17]एते तिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः ॥ सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥ ३१ ॥
सर्वं चैवाङ्गदे दोषं श्रावयिष्यामि पार्थिवे ॥ अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ ३२ ॥
इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः ॥ पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३३ ॥
स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः ॥ घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ ३४ ॥
वध्या ह्येते दुरात्मानो नृपाज्ञा[18]परिभाविनः ॥ अमर्षप्रभवो रोषः सफलो नो भविष्यति ॥ ३५ ॥
एवमुक्त्वा दधिमुखो वनपालान्महाबलः ॥ जगाम [19]सहसोत्पत्य वनपालैः समन्वितः ॥ ३६ ॥
निमेषान्तरमात्रेण स हि प्राप्तो वनालयः ॥ सहस्रांशु[20]सुतो धीमान्सुग्रीवो यत्र वानरः ॥ ३७ ॥
रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च ॥ समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३८ ॥
[21]संनिपत्य [22]महावीर्यैः सर्वैस्तैः परिवारितः ॥ हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३९ ॥

---

गच्छाम इति तैः साहित्येन बहुवचनं । आत्मनि बहुवचनं वा ॥ १८—३३ ॥ गतायुष इत्यधिक्षेपवचनं ॥३४॥ अमर्षप्रभवः अक्षमाजन्यः। रोषस्य तज्जन्यत्वं च यो यस्मै न सहते तस्मै क्रुध्यतीति प्रसिद्धं ॥३५—३६ ॥ निमेषान्तरमात्रेण निमेषावकाशमात्रेण । वनालयः वानरः ॥ ३७ ॥ समप्रतिष्ठां समतलां ।

---

ति० एतागच्छतअग्रेइतिशेषः । गच्छामः । वयमप्यागच्छामइत्यर्थः ॥ १८ ॥ ति० आर्यकः सुग्रीवमातुलत्वात्पूज्यः ॥ २६ ॥

[ पा० ] १ ङ. झ. ट. एतागच्छत. २ ङ. ज.—ट. वानरानतिदर्पितान्. ३ ङ. झ. ट. प्रभुञ्जानान्मधूत्तमं. ४ ङ. च. झ. ञ. ट. सहिताः. ५ छ. ञ. सुमहातरुं. ६ ङ. झ. ट. पाषाणानपि. ७ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ८ ख. ग. च. ज. संक्रुद्धाहनु. ९ ख. ग. च. ज. स्ततः. १० ङ. झ. ट. सवृक्षंतं. ११ ङ. झ. ट. वेगवन्तंविजग्राहबाहुभ्यां. १२ ङ. झ. ट. मदान्धोनकृपांचक्रेआर्यकोयं. १३ ङ. झ. ट. वेगेनवसुधातले. १४ ङ. झ. ट. सभग्नबाहूरुमुखो. ग. भग्नबाहुश्चविमुखो. ख. च. ज. ञ. सभग्नबाहुर्विमुखो. १५ ङ. झ. ट. प्रमुमोहमहावीरो. च. ज. मुमोहसमहावीर्यो. १६ ङ. झ. ट. मागत्य. ख. ज. ञ. मागम्य. १७ ग. झ. एतागच्छत. क. इहागच्छत. १८ घ. ङ. च. ज.—ट. परिपन्थिनः. १९ ख. सहसोपेत्य. २० ख. ग. सुतःश्रीमान्. २१ झ. ञ. संनिपत्य. २२ ख. ङ. झ. ट. महावीरः.

स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् ॥ सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥४०॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

दधिमुखे सुग्रीवे मधुवनवृत्तान्तंनिवेदयति लक्ष्मणेन सुग्रीवंप्रति दधिमुखवचनार्थप्रश्नः ॥ १ ॥ सुग्रीवेणलक्ष्मणंप्रति तन्निवेदनपूर्वकं मधुवनधर्षणहेतुनासीतादर्शननिर्धारणोक्तिः ॥ २ ॥ तथा दधिमुखसमाश्वासनपूर्वकंतंप्रत्यङ्गदादीनांशीघ्रप्रेषणचोदना ॥ ३ ॥

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः ॥ दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १ ॥
उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम ॥ अभयं ते भवेद्वीर सर्वमेवाभिधीयताम् ॥ २ ॥
[ किं संभ्रमाद्धितं कृत्स्नं ब्रूहि यद्वक्तुमर्हसि ॥ कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥ ३ ॥ ]
स तु विश्वासितस्तेन सुग्रीवेण महात्मना ॥ उत्थाय सुमहाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ४ ॥
नैवर्क्षरजसा राजन्न त्वया नापि वालिना ॥ वनं निसृष्टपूर्वं हि भक्षितं तच्च वानरैः ॥ ५ ॥
[ न्यवारयमहं सर्वान्सहैभिर्वनचारिभिः ॥ अचिन्तयित्वा मां हृष्टा भक्षयन्ति पिबन्ति च ॥ ६ ॥ ]
एभिः प्रधर्षिताश्चैव वानरा वनरक्षिभिः ॥ मधून्यचिन्तयित्वेमान्भक्षयन्ति पिबन्ति च ॥ ७ ॥
शिष्टमत्रापविध्यन्ति भक्षयन्ति तथा परे ॥ निवार्यमाणास्ते सर्वे भ्रुवौ वै दर्शयन्ति हि ॥ ८ ॥
इमे हि संरब्धतरास्तथा तैः संप्रधर्षिताः ॥ वारयन्तो वनात्तस्मात्क्रुद्धैर्वानरपुङ्गवैः ॥ ९ ॥
ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभ ॥ संरक्तनयनैः क्रोधाद्धरयः प्रविचालिताः ॥ १० ॥

जगतीं भूमिं ॥ ३८—४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

उद्विग्नहृदयः भीतहृदयः । मातुलस्यापि पादपतनं स्वामित्वानुसारेण ॥ १—४ ॥ न निसृष्टपूर्वं यथेच्छभोगाय न दत्तपूर्वं । वानरैः अङ्गदप्रमुखैः । अन्यथा सुग्रीववाक्ये अङ्गदानुवादविरोधात् । भक्षितमिति वनैकदेशमधुपटलविषयं ॥ ५—६ ॥ अचिन्तयित्वा अगणयित्वा । मधूनीति फलानामुपलक्षणं । भक्षयन्ति पिबन्ति चेत्युक्तेः । यद्वा मधून्येव भक्षयन्ति भक्षवत्कुर्वन्तीत्यर्थः ॥ ७ ॥ शिष्टं अवशिष्टं मधुपटलं । अत्र मधुवने । अपविध्यन्ति ध्वंसयन्ति । भक्षयन्ति मधुपटलमित्यर्थः ॥ ८ ॥ हिशब्दः पादपू-

ति० तौ सर्ववानरपूज्यौ चरणावित्यन्वयः ॥ ४० ॥ इतिद्विषष्टितमःसर्गः ॥ ६२ ॥

स० अभयंप्रदास्यामि प्रमादादपराधेप्रसक्तेपीतिशेषः ॥ २ ॥ स० संभ्रमात्किं किंप्रयोजनं । यद्वक्तुमर्हसितद्ब्रूहि । कस्मात्संभ्रमः किंसंभ्रमस्तस्मात् । इदं पादयोःपतनं । यतस्त्वंअर्हसि योग्योसि । अर्हतइत्यर्हः सइवाचरतीतिव्युत्पत्त्या पूज्योसीत्यर्थइतिवा ॥ ३ ॥ शि० समहाप्राज्ञः महाप्राज्ञासहितः । प्राज्ञाशब्दःस्वार्थिकाणन्तः । ङीबभावस्त्वजादित्वात् ॥ ४ ॥ ति० एभिः हनुमदाद्यैः प्रधर्षणायामारब्धायां वनपालकैर्वारितं । ममापि । अपिनाइतरान्पालकानचिन्तयन् अचिन्तयन्तः

[ पा० ] १ ख. ङ. झ. ट. सुग्रीवस्याशुतौ. २ ग. ङ. झ. ट. प्रदास्यामि. ३ ख.—ङ. ज. झ. ञ. सत्यमेवा. ४ अयंश्लोकः ङ. च. ज.—ट. पाठेषुदृश्यते. ५ ङ. झ. ट. ससमाश्वासितः. ६ घ. सहसाप्राज्ञो. क. ख. ङ. च. ज. झ. ट. समहाप्राज्ञो. ७ ख. ङ. च. ज. झ. ट. निसृष्टपूर्वंतेनाशितंतत्तु. क. निसृष्टपूर्वंहिमथितंतत्तु. ८ अयंश्लोकः घ. ङ. च. ज.—ट. पाठेषुदृश्यते. ९ झ. प्रधर्षणायांचवारितंवनपालकैः. ङ. च. ज. ञ. ट. प्रधृष्यमाणाश्चवारिताः. १० ङ. झ. मामप्यचिन्तयन्देवभक्षयन्तिवनौकसः. ट. मामप्यचिन्तयित्वाते. च. मधून्यचिन्तयित्वाते. ११ च. ज.—ट. भ्रुकुटिंदर्शयन्तिहि. १२ छ. ज. ञ. संरब्धनयनैःक्रूरैरस्मदीयाःप्रधर्षिताः. १३ झ. ट. संप्रधर्षिताः.

पाणिभिर्निहताः केचित्केचिज्जानुभिराहताः ॥ प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥ ११ ॥
एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि ॥ कृत्स्नं मधुवनं चैव प्रकामं तैः प्रभक्ष्यते ॥ १२ ॥
एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् ॥ अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ १३ ॥
किमयं [1]वानरो राजन्वनपः प्रत्युपस्थितः ॥ कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥ १४ ॥
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ॥ लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १५ ॥
आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः ॥ अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥
विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः ॥ १६ ॥
नैषामकृत[2]कृत्यानामीदृशः [3]स्वादुपक्रमः ॥ [4]आगतैश्च प्रमथितं यथा मधुवनं हि तैः ॥
धर्षितं च वनं कृत्स्नमुपयुक्तं च वानरैः ॥ १७ ॥
वनं [5]यदाऽभिपन्नास्ते साधितं कर्म [6]वानरैः ॥ १८ ॥
[ [7]वारयन्तो भृशं प्राप्ताः पाला जानुभिराहताः ॥ तथा न गणितश्चायं कपिर्दधिमुखो बली ॥
पतिर्मम वनस्यायमस्माभिः स्थापितः स्वयम् ॥ १९ ॥ ]
दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ॥ २० ॥
[8]कार्यसिद्धिर्मतिश्चैव तस्मिन्वानरपुङ्गवे ॥ व्यवसायश्च [9]वीर्यं च श्रुतं चापि प्रतिष्ठितम् ॥ २१ ॥
जाम्बवान्यत्र नेता [10]स्यादङ्गदश्च महाबलः ॥ हनूमांश्चाप्यधिष्ठाता [11]न तस्य गतिरन्यथा ॥ २२ ॥
अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल ॥ [12]वारयन्तश्च सहितास्तथा जानुभिराहताः ॥ २३ ॥
एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह ॥ नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ॥ २४ ॥
दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः ॥ अभिगम्य तथा[13] सर्वे पिबन्ति मधु वानराः ॥२५॥
न चाप्यदृष्ट्वा वैदेहीं [14]विश्रुताः पुरुषर्षभ ॥ [15]वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः ॥ २६ ॥
ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः ॥ श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् ॥
प्राहृष्यत भृशं रामो लक्ष्मणश्च [16]महाबलः ॥ २७ ॥

---

रणे। संप्रधर्षणचिह्नस्य दृश्यमानत्वाभिप्रायेण प्रसिद्धिपरो वा ॥ ९—१५ ॥ अङ्गदप्रमुखैरिति । अत्र विशिष्यानुवादाद्दधिमुखवाक्ये वानरपुङ्गवैरित्यत्रापि विशेषपरत्वं बोध्यं ॥ १६ ॥ वनं प्रमथितं भग्नं । धर्षितं आक्रान्तं । मधु च भक्षितं । यथा येन कारणेन । एषामकृतकृत्यानामीदृश उपक्रमो न स्यादिति मन्य इति योजना ॥ १७ ॥ कृतकृत्यत्वं विशेषयति—वनमित्यादिना ॥ १८—२५ ॥ वनमिति । मधुवनधर्षणमेव सीतादर्शने लिङ्गमिति भावः । दत्तवरं दिव्यमित्यनेन ऋक्षरजसे ब्रह्मणा दत्तमित्यवग-

---

॥ ७ ॥ **शि०** देवमार्गंदर्शिताः प्रक्षेपेणप्रापिताः ॥ ११ ॥ **ती०** सहैववसतोलक्ष्मणस्यकंचनार्थमभिनिर्दिश्यदुःखितोवाक्यमब्रवीदितिप्रश्नकरणाद्दधिमुखेनवनभङ्गादिकंस्वजात्युचितभाषयोक्तमित्यवगन्तव्यं । उपांशूक्तमितिवाद्रष्टव्यं ॥ १३ ॥ **ति०** यत् यतः । वनमभिपन्नाः नाशयितुंप्रवृत्ताः ॥ १८ ॥ **स०** स्ववेदनावेदनवागपि रामकार्यसूचकत्वान्मधुरवाक् ॥ २४ ॥ इतित्रिषष्टितमःसर्गः ॥ ६३ ॥

[ **पा०** ] १ क. वनपोराजन्वानरः. २ ङ. झ. ट. मकृतकार्याणां. ३ ङ. झ. ट. स्याद्यतिक्रमः. ४ च. ज. आत्मेच्छातः प्रहृष्टैश्चहतंमधुवनं. ५ झ. यदभिपन्नाः. ६ ङ. झ. ट. तद्ध्रुवं. ७ इदमर्धत्रयं ख. ग. ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ८ ङ. झ. ट. कार्यसिद्धिर्हनुमति. ख. ग. घ. हनूमतःकार्यसिद्धिर्मतिश्चहरिपुङ्गवे. क. यदतःकार्यसंसिद्धिः. ९ क. च. छ. ज. ञ. वीर्यंचसूर्येतेजइवध्रुवं. १० क. स्याद्युवराजस्तथाङ्गदः. ११ ङ.—ट. नतत्र. क. ग. नह्यस्य. १२ ख. घ. च. छ. ज. वारितास्सहिताःपालास्तथा. ञ. पातिताःसहिताःपालास्तथा. क. वानरास्तुहताःपालास्तथा. ङ. झ. ट. पातितावनपालास्तेतथा. १३ क. ङ.—ट. यथा. १४ घ. विश्रान्ताः. क. विश्रुताःप्लवगर्षभाः. १५ घ. एतन्मधुवनंदिव्यं. १६ क. ख. घ. ङ. च. ज.—ट. महायशाः.

श्रुत्वा दधिमुखस्येदं सुग्रीवस्तु प्रहृष्य च ॥ वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥ २८ ॥
प्रीतोस्मि सोहं यद्भुक्तं वनं तैः कृतकर्मभिः ॥ मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥ २९ ॥
[ गच्छ शीघ्रं मधुवनं संरक्षस्व त्वमेव हि ॥ शीघ्रं प्रेषय सर्वांस्तान्हनुमत्प्रमुखान्कपीन् ॥ ३० ॥ ]
इच्छामि शीघ्रं हनुमत्प्रधानाञ्शाखामृगांस्तान्मृगराजदर्पान् ॥
द्रष्टुं कृतार्थान्सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ ३१ ॥
प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा ॥
अङ्गैः संहृष्टैः कर्मसिद्धिं विदित्वा बाह्वोरासन्नां सोतिमात्रं ननन्द ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुःषष्टितमः सर्गः ॥ ६४ ॥

दधिमुखेन सुग्रीवसमीपात्पुनर्मधुवनमेत्य अङ्गदक्षमापणपूर्वकं तंप्रति शीघ्रागमनविषयकसुग्रीवचोदनानिवेदनम् ॥ १ ॥ हनुमताऽङ्गदादिभिःसह सुग्रीवसमीपमेत्य श्रीरामंप्रति सप्रणामंसीताकुशलनिवेदनं ॥ २ ॥

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः ॥ राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ १ ॥
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ ॥ वानरैः सहितैः शूरैर्दिवमेवोत्पपात ह ॥ २ ॥
स यथैवागतः पूर्वं तथैव त्वरितं गतः ॥ निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥
स प्रविष्टो मधुवनं ददर्श हरियूथपान् ॥ विमदानुत्थितान्सर्वान्मेहमानान्मधूदकम् ॥ ४ ॥
स तानुपागमद्वीरो बद्ध्वा करपुटाञ्जलिम् ॥ उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५ ॥

---

म्यते ॥ २६—२७ ॥ द्वितीयसुग्रीवशब्दस्य शोभनग्रीव इत्यवयवार्थो विवक्षितः । क्रियाभेदेनापुनरुक्तिर्वा ॥ २८—३० ॥ हनुमत्प्रधानान् हनुमत्प्रमुखान् । कृतार्थान् कृतकृत्यान् । प्रयत्नं प्रयासं । तेभ्यः श्रोतुमिच्छामीत्यन्वयः ॥ ३१ ॥ अथ प्रत्युपकारार्थं सुग्रीवः स्वोद्योगसाफल्यदर्शनात् भृशं ननन्देत्याह—प्रीतिस्फीताक्षाविति । प्रीत्या संतोषेण । संप्रहृष्टौ रोमस्विति शेषः । हृषितरोमाणावित्यर्थः । "हृषेर्लोमसु" इति विकल्पादिडभावः । एवं अङ्गैः संहृष्टैरित्यत्रापि द्रष्टव्यं । कर्मसिद्धिं बाह्वोरासन्नां हस्तप्राप्तां । विदित्वा । निश्चित्येत्यर्थः । जागतं वैश्वदेवीवृत्तं । "पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" इति लक्षणात् ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने त्रिषष्टितमस्सर्गः ॥ ६३ ॥

---

सहितैः स्नेहातिरेकेणान्योन्यं युक्तैः । वानरैः सहितैरिति पाठः ॥ १—३ ॥ विमदानित्यत्र हेतुमाह—मेहमानानिति । मेहमानान् मेहयतः । मूत्रयत इत्यर्थः । एतेन मूत्रणान्मधूनि जीर्णानीति गम्यते । अतएव विमदत्वं । मधूनि च उदकानि च । मधूदकमिति द्वन्द्वैकवद्भावः । उदकानि चात्र अनुपानत्वेन पीतानि । तदाह बाहटः—"अनुपानं हिमं वारि यवगोधूमयोर्हितं । दध्नि मद्ये बिसे क्षौद्रे कोष्णं पिष्टमयेषु च" इति ॥ ४ ॥ करपुटाञ्जलिं करतलयोरञ्जलिं । सम्यक्संयुक्तकरतलाञ्जलिमिति० मधुपरिणामभूतमुदकं मधूदकं ॥ ४ ॥

[ पा० ] १ ङ. झ. ट. धर्षितंमर्षणीयंच. ग. च. छ. ज. ञ. अमर्षणीयमेतेषां. ख. मर्षणीयंचमेतेषां. २ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ३ ख. ङ. झ. प्रष्टुं. ४ क. प्रवृत्तिं. ५ क. ङ.—ठ. प्रहृष्टैःकार्यसिद्धिं. ६ ग. ङ. झ. ट. रासन्नामतिमात्रं. ७ ङ.—ट. सहितः. ८ ख. ङ.—ट. नुद्धतान.

सौम्य रोषो न कर्तव्यो [1]यदेभिरभिवारितः ॥ अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥
[ [2]श्रान्तो दूरादनुप्राप्तो भक्षयस्व स्वकं मधु ॥ ६ ॥ ]
युवराजस्त्वमीशश्च वनस्यास्य महाबल ॥ मौर्ख्यात्पूर्वं कृतो [3]दोषस्तं भवान्क्षन्तुमर्हति ॥ ७ ॥
[ [4]यथैव हि पिता तेऽभूत्पूर्वं हरिगणेश्वरः ॥ तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम ॥ ८ ॥ ]
आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ॥ इहो[5]पयातं सर्वेषामेतेषां वनचारिणाम् ॥ ९ ॥
[6]स त्वदागमनं श्रुत्वा सहैभिर्हरियूथपैः ॥ [7]प्रहृष्टो न तु रुष्टोसौ वनं श्रुत्वा प्रधर्षितम् ॥ १० ॥
[8]प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ॥ शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ॥ ११ ॥
श्रुत्वा दधिमुख[9]स्येदं वचनं श्लक्ष्णमङ्गदः ॥ अब्रवीत्तान्हरिश्रेष्ठो वाक्यं वाक्यविशारदः ॥ १२ ॥
शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः ॥ [[10]अयं च हर्षादाख्याति तेन जानामि हेतुना ॥]
तत्क्षणं नेह नः स्थातुं कृतेऽकार्ये परन्तपाः ॥ १३ ॥
पीत्वा मधु यथाकामं [11]विश्रान्ता वनचारिणः ॥ किं शेषं गमनं तत्र सुग्रीवो [12]यत्र मे गुरुः ॥ १४ ॥
सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः ॥ तथाऽस्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ॥ १५ ॥
नाज्ञापयितुमीशोऽहं युवराजोस्मि यद्यपि ॥ अयुक्तं कृतकर्माणो यूयं धर्षयितुं [13]मया ॥ १६ ॥
ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचन[14]मव्ययम् ॥ प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १७ ॥
एवं वक्ष्यति को राजन्प्रभुः सन्वानरर्षभ ॥ ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १८ ॥
तव चेदं सुसदृशं वाक्यं नान्यस्य कस्य चित् ॥ सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥१९॥

---

त्यर्थः ॥ ५ ॥ एभिः वानरैः । अभिवारितः अभिवारितोऽसीति यत् अत्रार्थे रोषो न कर्तव्यः । भवन्त इति पूजायां बहुवचनं । नच हनुमदादिकमादाय बहुवचनं उत्तरश्लोकेपि युवराजस्त्वमित्युक्तेः । अज्ञानात्क्रोधात् । अज्ञानप्रयुक्तक्रोधादित्यर्थः । अभिवारितमिति पाठे लिङ्गव्यत्यय आर्षः । केचित्तु अज्ञानात् क्रोधाच्च भवन्तः प्रतिषेधिता इत्येतत् परिवारितं परिवारणं प्रति । रोषो न कर्तव्य इति योजयन्ति ॥ ६ ॥ क्रोधाद्वारणे कृते कुतो रोषो न कर्तव्यस्स्यादित्याशङ्क्य क्रोधस्याज्ञानकृतत्वादित्याह—युवराज इति ॥ दोषः निवारणरूपापराधः ॥ ७—८ ॥ उपयातं आगमनं ॥ ९—१२ ॥ अयं वृत्तान्तः अस्मदागमनवृत्तान्तः ॥१३॥ किं शेषं न किंचिदपि शिष्टमित्यर्थः । किन्तु मे गुरुः सुग्रीवो यत्र वर्तते तत्र गमनमेवशेषमित्यर्थः । " किंशेषं गमनं तच्च सुग्रीवो यत्र मे गुरुः " इति पाठे अस्माकं गमनं किंशेषं किंचिच्छेषं । तच्च गमनशेषं च सुग्रीवो यत्र तत्र गमनमिति संबन्धः ॥ १४ ॥ विनयपूर्वकं सर्वसंमेलनं समर्थयते—सर्व इति ॥ तथास्मि कर्ता आह्वानं करिष्यामीत्यर्थः । कर्तव्ये कार्ये भवद्भिः अहं परवान् । भवद्भिर्यथा नियुक्तं तथा करिष्यामि । गन्तव्यमित्युक्ते गमिष्यामः स्थातव्यमित्युक्ते स्थास्याम इत्यर्थः ॥१५॥ युवराजत्वाद्भवानेव कर्तव्याकर्तव्यनियन्तेत्यत आह—नाज्ञापयितुमिति ॥ ईशः स्वतन्त्रः । कृतकर्माणः कृतोपकाराः । यूयं मया धर्षयितुं अनादर्तुं परतन्त्रीकर्तुमिति यावत् । अयुक्तं अयुक्ता इत्यर्थः । आर्षमव्ययमेतत् । शक्यमितिवत्सामान्योपक्रमान्नपुंसकैकत्वनिर्देश इत्यप्याहुः ॥१६—१७॥ अहमिति मन्यते गर्विष्ठो भवतीति यावत् ॥ १८ ॥ सन्नतिः

---

ति० तत् तस्मात् । अकार्ये वनविध्वंसनरूपे । कृतेसति इहस्थातुं । नोस्माकं नक्षमं नयुक्तं ॥ १३ ॥

[ पा० ] १ ङ. झ. ट. यदेभिःपरिवारणं. ख. यदेभिर्नविचारितं. क. यदेभिरविचारितं. २ इदमर्धं ङ.—ट. पाठेषु दृश्यते. ३ ङ. झ. ट. रोषस्तद्भवान्. क. ख. घ. च. छ. ज. दोषस्तद्भवान्. ४ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. ५ क. ख. घ.—ट. यानं. ६ क. राजात्वामागतं. ङ. झ. ट. भवदागमनंश्रुत्वासहैभिर्वनचारिभिः. ७ क. संप्रहृष्टोनरुष्टस्तु. ८ क. मांचाब्रवीत्पितृव्यस्ते. ९ क. ख. ङ. झ. ट. स्यैतद्वचनं. १० इदमर्धं ख. ङ.—ट. पाठेषुदृश्यते. ११ ङ. झ. ट. विक्रान्ताः. १२ ङ. झ. ट. यत्रवानरः. १३ ङ. झ. ट. बलात्. च. छ. ज. रुषा. १४ ङ.—ट. मुत्तमं.

सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः ॥ स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ २० ॥
त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् ॥ कचिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते ॥ २१ ॥
एवं तु वदतां तेषामङ्गदः प्रत्यभाषत ॥ [1]बाढं गच्छाम इत्युक्त्वा [2]खमुत्पेतुर्महाबलाः ॥ २२ ॥
उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः ॥ कृत्वाऽऽकाशं निराकाशं [3]यन्त्रोत्क्षिप्ता इवाचलाः ॥ २३ ॥
[ [4]अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥ ] ते[5]ऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः ॥
विनदन्तो महानादं घना वातेरिता यथा ॥ २४ ॥
अङ्गदे समनुप्राप्ते सुग्रीवो वानराधिपः ॥ उवाच [6]शोकोपहतं रामं कमललोचनम् ॥ २५ ॥
समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः ॥ नागन्तुमिह शक्यं तै[7]रतीते समये हि नः ॥
[ [8]अङ्गदस्य प्रहर्षाच्च जानामि शुभदर्शन ॥ २६ ॥ ]
न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते ॥ युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥ २७ ॥
यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः ॥ [9]भवेत्स दीनवदनो [10]भ्रान्तविप्लुतमानसः ॥ २८ ॥
पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम् ॥ न मे मधुवनं हन्याद[11]दृष्टः प्लवगेश्वरः ॥ २९ ॥
कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत ॥ दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ ३० ॥
[12]न ह्यन्यः कर्मणो हेतुः साधनेस्य हनूमतः ॥ [13]हनूमति हि सिद्धिश्च मतिश्च [14]मतिसत्तम ॥
व्यवसायश्च [15]वीर्यं च सूर्ये तेज इव ध्रुवम् ॥ ३१ ॥
जाम्बवान्यत्र नेता स्यादङ्गदश्च [16]बलेश्वरः ॥ हनुमांश्चाप्यधिष्ठाता न [17]तस्य गतिरन्यथा ॥ ३२ ॥

विनयः ॥ १९ ॥ कृतक्षणाः कृतावसराः । अवसरप्रतीक्षा इति यावत् ॥ २०—२१ ॥ बाढमित्यङ्गीकारे । इतिशब्दः काकाक्षिन्यायेन पूर्वापरयोरन्वेति । एवं तेषां वदतां तेषु वदत्सु । अङ्गदः बाढमिति प्रत्यभाषत । गच्छाम इत्युक्त्वापि उत्पपात ॥ २२ ॥ निराकाशं निरवकाशम् ॥ २३ ॥ तेम्बरमिति अत्र जग्मुरित्यध्याहार्यं ॥ २४—२६ ॥ विनिपातिते विघ्निते ॥ २७ ॥ अकृतकृत्यानां अकृतकार्याणां । ईदृशः मधुवनभङ्गरूपः । उपक्रमः उद्योगः । यदि स्यात्तदाङ्गदो दीनवदनत्वादिविशिष्टो भवेत् ॥ २८ ॥ पिता चासौ पितामहश्च । पित्रा ब्रह्मणा ऋक्षरजसे दत्तं पितृपैतामहं । प्लवगेश्वरः अङ्गदः ॥ २९ ॥ हे राम कौसल्या सुप्रजाः सुप्रजावती । "नित्यमसिच्प्रजामेधयोः" इत्यसिच्प्रत्ययः । एवं देव्यवस्थानज्ञानेन भवतस्सत्तालाभादिदानीं कौसल्या सुप्रजावती अभूदिति शेषः ॥ ३०—३१ ॥ यत्र कार्ये ।

**ती०** ननुमधुवनधर्षणमात्रेणकथंकार्यसिद्धिः कापेयादिनापिसंभवादित्याशङ्क्यसत्यमन्येषांतादृशत्वेपि अङ्गदस्तुनैतादृशइत्याशयेनाह—यद्यपीत्यादिश्लोकद्वयेन । अकृतकृत्यानामन्येषांवानराणां ईदृशउपक्रमः मधुवनभङ्गहर्षव्यापारोयद्यपिस्यात् । तथापि तत्राङ्गदस्तु दीनवदनो भ्रान्तविप्लुतमानसश्चभवेत् । कुतः पितृपैतामहं पितृपितामहपरंपरागतं । मेमधुवनं जनकात्मजामदृष्ट्वानहन्यात् ॥ २८–२९ ॥ **ती०** हेराम कौसल्यासुप्रजाः । सीतायाःस्थितिपरिज्ञानेनभवतःसत्तालाभात् इदानींकौसल्यासुपुत्रवत्यभूदितिभावः ॥ ३० ॥ **ति०** अस्यकर्मणःसाधने तद्विधोहेतुरपरोनभवेत् नास्ति । इहहनूमति एतत्कार्यसाधिकासिद्धिः ब्रह्मवरजन्यामतिश्चास्ति । हि यतः । व्यवसायः उद्यमः ॥ ३१ ॥ **ति०** नेता प्रधानः । अधिष्ठाता कार्यकरणोद्योगवान् ॥ ३२ ॥

[ **पा०** ] १ ङ. झ. ट. साधुगच्छाम. २ च. छ. उत्पपातमहीतलात्. ख. घ. खमुत्पेतुर्महीतलात्. ३ ङ. ज.—ट. यन्त्रोत्क्षिप्ताइवोपलाः. क. ख. ग. छ. यन्त्रोत्क्षिप्ताइवानलाः. ४ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ५ च. छ. ज. ञ. तेऽङ्गदं पुरतःकृत्वा. ६ ङ.—ट. शोकसंतप्तं. ७ ङ.—ट. रतीतसमयैरिह. ८ इदमर्धं ङ.—ट. पाठेषुदृश्यते. ९ क. ङ. झ. ट. भवेत्तुदीनवदनो. ख. ग. घ. भवेयुर्दीनवदनाभ्रान्तविप्लुतमानसाः. १० छ. ज. श्रान्तविप्लुत. ११ ङ. झ. दृष्ट्वाजनकात्मजां. १२ क. घ.—ट. नह्यस्यकर्मणोहेतुस्साधनेतद्विधोभवेत्. ग. नह्यस्यसाधकोहेतुस्साधनेतद्विधोभवेत्. १३ क. च. छ. ज. ञ. हनूमतिमतिश्चैवकर्मसिद्धिश्चसत्तम. १४ क. रघुसत्तम. १५ क. ख. ग. ङ. छ.—ट. शौर्यंचश्रुतंचापिप्रतिष्ठितं. १६ ख.—ठ. हरीश्वरः. १७ ङ. च. छ. झ. ञ. ट. तत्र.

मा भूश्चिन्तासमायुक्तः संप्रत्यमितविक्रम ॥ ३३ ॥
[ [1]यदा हि दर्पितोदग्राः संगताः काननौकसः ॥ नैषामकृतकार्याणामीदृशः स्यादुपक्रमः ॥
वनभङ्गेन जानामि मधूनां भक्षणेन च ॥ ३४ ॥ ]
ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे ॥ हनुमत्कर्मदृप्तानां [2]नर्दतां काननौकसाम् ॥
किष्किन्धामुपयातानां सिद्धिं कथयतामिव ॥ ३५ ॥
ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः ॥ आयताञ्चितलाङ्गूलः सोभवद्धृष्टमानसः ॥ ३६ ॥
आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः ॥ अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥ ३७ ॥
तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च [3]मुदान्विताः ॥ निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ ३८ ॥
हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः ॥ नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ ३९ ॥
[ [4]दृष्टा देवीति हनुमद्वदनादमृतोपमम् ॥ आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥ ४० ॥ ]
[5]निश्चितार्थस्ततस्तस्मिन्सुग्रीवः पवनात्मजे ॥ लक्ष्मणः प्रीतिमान्प्रीतं बहुमानादवैक्षत ॥ ४१ ॥
प्रीत्या च [6]रममाणोथ राघवः परवीरहा ॥ बहुमानेन महता हनुमन्तमवैक्षत ॥ ४२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रामेण सीतावृत्तान्तंपृष्टेनहनुमता तंप्रति शिंशुपामूले राक्षसीमध्यस्थित्यादितद्वृत्तान्तकथनपूर्वकं तदुक्ताभिज्ञाननिवेदनेन सह तत्सन्देशकथनम् ॥ १ ॥

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् ॥ प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् ॥ १ ॥
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च ॥ प्रवृत्तिमथ सीतायाः प्रवक्तु[7]मुपचक्रमुः ॥ २ ॥
रावणान्तःपुरे रोधं [8]राक्षसीभिश्च तर्जनम् ॥ रामे समनुरागं च [9]यश्चायं समयः कृतः ॥
[10]एतदाख्यान्ति ते सर्वे हरयो रामसन्निधौ ॥ ३ ॥

नतो मन्त्री । बलेश्वरः सेनापतिः । अधिष्ठाता संरक्षक इत्यर्थः । तस्य कार्यस्य । गतिः सिद्धिः । अन्यथा विपरीता । न भवेत् । संप्रति चिन्तासंयुक्तो मा भूः ॥ ३२—३४ ॥ सिद्धिं कथयतामिव । उत्साहेनेति शेषः ॥ ३५ ॥ आयताञ्चितलाङ्गूलः आयतः दीर्घीकृतः अञ्चितः माल्यवच्छृङ्गे समास्थापितः ॥ ३६—३७ ॥ प्रहृष्टाः सञ्जातपुलकाः ॥३८॥ नियतामिति । अक्षतत्वेप्यनियतत्वे वैयर्थ्यं नियतत्वेपि क्षतत्वे च तथा । ततः आवश्यकमुभयं संग्रहेण दर्शयति ॥ अस्मिन्सर्गे सार्धैकोनचत्वारिंशच्छ्लोकाः ॥ ३९—४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने चतुष्षष्टितमः सर्गः ॥ ६४ ॥

प्रवृत्तिं वार्तां ॥ २ ॥ रोधं निरोधं । यश्चायं समयः कृतः । मासद्वयादूर्ध्वं हनिष्यामीति यः

ति० नियतां पातिव्रत्यसंपन्नां । अक्षतां शरीरेणकुशलिनीं ॥ ३९ ॥ शि० परमया लक्ष्म्यापि परयासीतयेत्यर्थः ॥ उपेतो मनसासंयुक्तः । राघवश्च महता प्रशंसनीयेन । बहुमानेनावैक्षत ॥ ४२ ॥ इतिचतुष्षष्टितमःसर्गः ॥ ६४ ॥

ति० रामसंनिधौ स्थिताइतिशेषः ॥ ३ ॥

[ पा० ] १ इदमर्धत्रयं ङ.—ट. पाठेषुदृश्यते. २ घ.—ट. नदतां. ३ ङ. झ. ट. मदान्विताः. ४ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. ५ क. घ.—ट. निश्चितार्थंततस्तस्मिन्सुग्रीवंपवनात्मजे । लक्ष्मणःप्रीतिमान्प्रीतो. ६ झ. ञ. ट. परमोपेतो. ७ ख. ङ. झ. मुपचक्रमे. ८ क. राक्षसीनांच. ९ ङ. झ. ट. यथाच. १० ङ. च. झ. एतदाख्यायते.

वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ क्व सीता वर्तते देवी कथं च मयि वर्तते ॥
एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ४ ॥
रामस्य गदितं श्रुत्वा हरयो रामसन्निधौ ॥ चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ॥ ५ ॥
श्रुत्वा तु वचनं तेषां हनुमान्मारुतात्मजः ॥ प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ॥ ६ ॥
[ [1]तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा ॥ दत्त्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत् ॥७॥]
समुद्रं लङ्घयित्वाऽहं शतयोजनमायतम् ॥ अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ॥ ८ ॥
तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥ दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ॥ ९ ॥
तत्र दृष्टा मया सीता रावणान्तःपुरे सती ॥ संन्यस्य त्वयि जीवन्ती रामा राम मनोरथम् ॥ १० ॥
दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ॥ ११ ॥
दुःखमासाद्यते देवी [2]तथाऽदुःखोचिता सती ॥ १२ ॥
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ एकवेणीधरा दीना [4]त्वयि चिन्तापरायणा ॥ १३ ॥
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥
देवी कथंचित्काकुत्स्थ त्वन्मना मार्गिता मया ॥ १४ ॥
इक्ष्वाकुवंशविख्यातिं शनैः [5]कीर्तयताऽनघ ॥ [6]सा मया नरशार्दूल [7]विश्वासमुपपादिता ॥ १५ ॥
ततः संभाषिता देवी सर्वमर्थं च दर्शिता ॥ [8]रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ १६ ॥
नियतः समुदाचारो भक्तिश्चास्यास्[9]तथा त्वयि ॥ १७ ॥
एवं मया महाभागा दृष्टा जनकनन्दिनी ॥ उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ १८ ॥
अभिज्ञानं च मे दत्तं यथा वृत्तं तवान्तिके ॥ चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ १९ ॥
[10]विज्ञाप्यश्च नरव्याघ्रो रामो वायुसुत त्वया ॥ [11]अखिलेनेह यद्दृष्टमिति मामाह जानकी ॥ २० ॥

संकेतो रावणेन कृत इत्यर्थः । मासशब्दःपक्षपर इत्युक्तं प्राक् । तमिति शेषः ॥ ३—५ ॥ प्रणामश्च सीतायाः स्मरणकृत इति बोध्यं । सीताया दर्शनं यथेति । येन प्रकारेण सीतादर्शनं जातं तेन प्रकारेणोवाचेत्यन्वयः ॥ ६—७ ॥ दिदृक्षया नतु श्रोतुमिच्छया । मार्गमाण इत्यर्थः ॥ ८ ॥ तत्र लङ्घने कृते सति ॥ ९ ॥ हे राम रामा सीता । त्वयि मनोरथं स्वाभिलाषं । संन्यस्य जीवन्ती । त्वदभिलाषेण धृतजीवितेत्यर्थः ॥ १०—११ ॥ दुःखमित्यर्धं । आसाद्यते आसीदति । आर्षो यत् ॥ १२ ॥ एकवेणीधरा त्रिधा विभागं विना बद्धः केशपाशः एकवेणीत्युच्यते ॥ १३ ॥ अधःशय्या स्थण्डिलशायिनी । मर्तव्ये मरणे कृतनिश्चया ॥ १४—१५ ॥ सर्वमर्थं च दर्शिता सुग्रीवसख्यप्रभृतिसर्वमर्थं च बोधिता ॥ १६ ॥ समुदाचारः परपुरुषाचिन्तकत्वादिः । त्वयि भक्तिश्च । वर्तत इति शेषः ॥ १७ ॥ तपसा अनशनेन ॥ १८ ॥ अभिज्ञानं चिह्नभूतं वाक्यं । तवान्तिके पूर्वं यथा येन प्रकारेण जातं तथा दत्तमित्यर्थः । तदेव दर्शयति—चित्रकूट इति । सदस्यवक्तव्यत्वात्सूचनोक्तिः ॥ १९ ॥ अखिलेनेति । रावणागमनादिकमित्यर्थः

**शि०** सीताक्ववर्तते । मयिकथं केनभावेनवर्तते । वैदेहीं प्रति वैदेहीसंबन्धि । एतत्सर्वं यूयमाख्यात केनभावेनेत्युक्त्या द्रुतंस्वकर्तृकरावणवधाभावजनितसीतामर्षविषयकसंभावनासूचिता ॥ ४ ॥ **ति०** तीरे दक्षिणसमुद्रसंबन्धिद्वीपसंनद्धतीरे ॥ ९ ॥

**[ पा० ]** १ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. २ क. ख. ङ. ज.—ट. मापद्यते. ३ ङ. झ. ञ. ट. त्वयावीरसुखोचिता. क. ख. घ. तवादुःखोचितासती. च. त्वयाऽदुःखोचिता. ४ क. त्वच्चित्तात्वत्परायणा. ५ ख. च. छ. ज. ञ. कीर्तयतामया. ६ ख. साचमेराजशार्दूल. ७ ङ. झ. शनैर्विश्वासितातदा. ८ ख. रामसुग्रीवयोःसख्यं. ९ ङ. झ. स्सदा. १० ङ. झ. ट. विज्ञाप्यःपुनरप्येषरामो. ११ ङ. च. झ. अखिलेनयथादृष्टमिति.

अयं चास्मै प्रदातव्यो यत्नात्सुपरिरक्षितः ॥ ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २१ ॥
एष चूडामणिः श्रीमान्मया सुपरिरक्षितः ॥ मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ॥ २२ ॥
त्वया प्रनष्टे तिलके तं किल स्मर्तुमर्हसि ॥ एष निर्यातितः श्रीमान्मया ते वारिसंभवः ॥ २३ ॥
एतं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ॥ जीवितं धारयिष्यामि मासं दशरथात्मज ॥
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥ २४ ॥
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी ॥ रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥ २५ ॥
एतदेव मयाख्यातं सर्वं राघव यद्यथा ॥ सर्वथा सागरजले संतारः प्रविधीयताम् ॥ २६ ॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ॥
देव्या चाख्यातं सर्वमेवानुपूर्व्याद्वाचा संपूर्णं वायुपुत्रः शशंस ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

## षट्षष्टितमः सर्गः ॥ ६६ ॥

रामेण सीताप्रेषितचूडामणेर्वक्षसि निक्षेपेणसकरुणंबहुधाविलापपूर्वकं हनुमन्तंप्रति पुनः सीतावचननिवेदनचोदना ॥१॥

एवमुक्तो हनुमता रामो दशरथात्मजः ॥ तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः ॥ १ ॥
तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः ॥ नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला ॥ तथा ममापि हृदयं मणिरत्नस्य दर्शनात् ॥ ३ ॥
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे ॥ वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥ ४ ॥

---

॥ २० ॥ सुग्रीवस्योपशृण्वतः सुग्रीवे समीपे शृण्वति सति । एवं एष चूडामणिरित्यारभ्य रक्षसां वशमागतेत्यन्तवक्ष्यमाणप्रकारेण । वचनानि रामं प्रति मयोक्तवचनानि । ब्रुवता त्वया । अयं मणिरित्यर्थः । प्रदातव्यः ॥ २१—२४ ॥ मृगीवोत्फुल्ललोचना । त्रासातिशयादिति भावः ॥ २५ ॥ सन्तीर्यतेनेनेति संतारः सेतुः ॥ २६ ॥ ताविति । पूर्ववद्वैश्वदेवीवृत्तम् । समुद्रतरणे सुरसानिरसनादिकं अक्षवधलङ्कादहनादिकं सजातीयेभ्यः पूर्वमुक्तमपि प्रभुसंनिधावात्मश्लाघायां पर्यवस्येदिति नोक्तमिति ध्येयम् । *स्ववृत्तान्तं सर्वमाख्यातवानिति सामान्येनवक्तुंयुक्तत्वेप्यङ्गदसन्निधौ प्रपञ्चनं गोप्यविशेषगोपनार्थं । अत्र त्वप्रपञ्चनं अकथनीयाकथनार्थं चेति ज्ञेयं ॥२७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥६५॥

---

यथा वत्सला वत्से स्नेहवती धेनुः । वत्सस्य स्नेहात् वत्सविषयकस्नेहात् । स्रवत्येव द्रवत्येव । तथा मणिरत्नस्य मणिश्रेष्ठस्य । दर्शनान्मम हृदयं द्रवति ॥१–३॥ मणेरागतिमाह—मणिरत्नमिति ॥ मे श्वशुरेण जनकेन । वधूकाले वधूप्रतिग्रहकाले । विवाहकाल इत्यर्थः । यथा शोभते तथा बद्धमित्यन्वयः ॥४॥

---

**शि०** एवंवचनानिउपश्शृण्वतःसुग्रीवस्यसमीपेब्रुवतात्वया यत्नात् त्वत्प्रयत्नंविज्ञाय । सुपरिरक्षितः स्वदेहइतिशेषः । अयंवृत्तान्तसमूहः त्वयाप्रदातव्यःवक्तव्यइत्यर्थः ॥ २१ ॥ **स०** स्मरस्व स्मर । स्व स्वतन्त्रेतिरामसंबोधनंवा ॥ २२ ॥ **ति०** मासात् विद्यमानाद्दशममासादूर्ध्वमित्यर्थः ॥२४॥ **ति०** संतारः सन्तारोपायः । प्रविधीयतां प्रविचार्यतां ॥२६॥ इतिपञ्चषष्टितमःसर्गः ॥६५॥

**ति०** वत्सस्येत्यत्रापिदर्शनादितिसंबध्यते । तथास्नेहात्स्रवतीत्यनुकर्षः ॥ ३ ॥ **ति०** वधूकाले वधूत्वसंपादकेकाले । सीतामातृहस्ताद्गृहीत्वादशरथहस्तेदत्तं । तच्चतस्मिन्काले यथाधिकंशोभते तथामूर्ध्निबद्धमित्यर्थः ॥ **स०** वधूकरणकालेवैदेह्यामूर्ध्निबद्धंयथाअधिकंअशोभत तथाइदानीमपिशोभते । कालतस्तत्प्रकाशतिरोधानंनास्तीतिमहत्त्वंरत्नस्यध्वन्यते ॥ ४ ॥

[ **पा०** ] १ घ. च. छ. ज. ञ. ट. इदंचास्मैप्रदातव्यमेतत्सुपरिरक्षितं. २ घ. च. छ. ज. ञ. मयातेपरिरक्षितः. ३ क. ख. घ.—ट. स्तिलकंतत्स्मरस्वेतिचाब्रवीत्. ४ क. घ. ङ. झ. ञ. ट. एतं दृष्ट्वा. ५ क. घ. एतदेवं. ६ च.—ट. रुरोदसहलक्ष्मणः. ७ ख. मणिवरं. ८ घ. च.—ट. मणिश्रेष्ठस्य.

अयं हि जलसंभूतो मणिः सज्जनपूजितः ॥ यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥
इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनम् ॥ अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥ ६ ॥
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ॥ अस्याद्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ ७ ॥
किमाह सीता वैदेही ब्रूहि सौम्य पुनःपुनः ॥ पिपासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ॥ ८॥
इतस्तु किं दुःखतरं यदिमं वारिसंभवम् ॥ मणिं पश्यामि सौमित्रे वैदहीमागतं विना ॥ ९ ॥
चिरं जीवति वैदेही यदि मासं धरिष्यति ॥ क्षणं सौम्य न जीवेयं विना तामसितेक्षणाम् ॥१०॥
नय मामपि तं देशं यत्र दृष्टा मम प्रिया ॥ न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११ ॥
कथं सा मम सुश्रोणी भीरुभीरुः सती सदा ॥ भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥१२॥
शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः ॥ आवृतं वदनं तस्या न विराजति राक्षसैः ॥ १३ ॥
किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे ॥ एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ १४ ॥
मधुरा मधुरालापा किमाह मम भामिनी ॥ मद्विहीना वरारोहा हनुमन्कथयस्व मे ॥
[ दुःखाद्दुःखतरं प्राप्य कथं जीवति जानकी ] ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

हनुमता रामचोदनया काकासुरवृत्तान्तादिप्रतिपादकसीतावचनानां विस्तरेणानुवादः ॥१॥ तथा तांप्रति स्वेनार्थरूपाभिज्ञानयाचने तयाचूडामणिरूपार्थाभिज्ञानदाननिवेदनपूर्वकं रामादिषु कुशलप्रश्ननिवेदनचोदनादिरूपतद्वचनानुवादः ॥ २ ॥

एवमुक्तस्तु हनुमान्राघवेण महात्मना ॥ सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ १ ॥

जनकेनापि कुतस्तल्लब्धं तत्राह—अयं हीति ॥ ५ ॥ "मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति" इति सीतयोक्तप्रकारेण स्मरति—इममिति । इमं दृष्ट्वा तातस्य दशरथस्य । वैदेहस्य जनकस्य । दर्शनमद्यावगतः प्राप्तोस्मि । तदा ताभ्यां तस्या मूर्ध्नि बद्धत्वादिति भावः । इह वैदेहग्रहणं सीताजनन्या अप्युपलक्षणं । सीतावाक्ये "वीरो जनन्या मम च" इत्युक्तेः । तत्र त्रयाणां संस्मरिष्यतीति त्रयग्रहणं बहुमात्रोपलक्षणं । इह वैदेहस्यापि स्मरणोक्तेः ॥ ६—८ ॥ आगतं मणिमित्यन्वयः ॥ ९—११ ॥ भीरुभीरुः अत्यन्तभीरुः ॥ १२-१३ ॥ तत्त्वतः संकोचेन न किंचिद्गोपनीयमिति भावः ॥१४॥ मधुरा सुन्दरी । मधुरालापा । येन तद्वचनानुवादेपि भवद्वचनं मधुरं भवतीत्यर्थः ॥ १५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

पूर्वं संकुचितं विस्तृणीते—सुखेत्यादिना ॥

ति० परासुं मूर्च्छितंमां ॥ ८ ॥ ति० यदिमासंधरिष्यति जीविष्यति । तदा चिरंजीवति जीविष्यतीत्यर्थः । तांविना यथाऽहंनजीवेयं तथामांविना सापिनजीविष्यतीत्यर्थः ॥ स० यदिवैदेहीचिरंजीवति तर्हि मासंधरिष्यति । यदिमासंधरिष्यति तर्ह्येव चिरंजीवतीतितज्जीवनंमज्जीवनव्याप्तं । व्यतिरेकेणाप्याह—**क्षणमिति** । तामसितेक्षणांविना क्षणमहंनजीवेयंयथा तथा इयंसीतापिमांविना नजीवा नविद्यतेजीवोयस्याःसेतियोजना । यद्वा वैदेहीयदिमासंधरिष्यतिप्राणान् तर्हि चिरंजीवति । वार्ताज्ञानानन्तरंमयात्वतथाजीवितुमशक्यमित्याह—**क्षणमिति** ॥ १० ॥ स० प्रवृत्तिं वार्तां । निराहारत्वादिप्रवृत्तिंवा ॥ ११ ॥ इतिषट्षष्टितमःसर्गः ॥ ६६ ॥

[ पा० ] १ च. छ. ज. इदंहिजलसंभूतंमणिप्रवरमुत्तमं. २ ख. घ. झ. प्रवरपूजितः. ३ च. छ. ज. दत्तं. ४ क. ख. च. छ. झ. ञ. तथा. ५ ख. झ. ञ. ट. परासुमिव. ६ छ. स्रवन्ती. ७ झ. ञ. यमिमं. ८ ख. झ. वीर. ९ च.—झ. तदा. १० छ. झ. ञ. आवृतो. ११ झ. सांप्रतं. १२ क. छ. ज. झ. ट. कथयस्वमे. १३ इदमर्धं झ. ट. पाठयोर्नदृश्यते. १४ ख. राघवेणैवमुक्तस्तुहनूमान्मारुतात्मजः । वाक्यमुत्तरमव्यग्रस्तमुवाचप्रहृष्टधीः.

इदमुक्तवती देवी जानकी पुरुषर्षभ ॥ पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २ ॥
सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता ॥ वायसः सहसोत्पत्य विरराद[1] स्तनान्तरे ॥ ३ ॥
पर्यायेण च[2] सुप्तस्त्वं देव्यङ्के भरताग्रज ॥ पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥ ४ ॥
पुनःपुनरुपागम्य[3] विरराद[4] भृशं किल ॥ ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥ ५ ॥
वायसेन च तेनैव सततं बाध्यमानया ॥ बोधितः किल देव्या त्वं सुखसुप्तः परन्तप ॥ ६ ॥
तां तु दृष्ट्वा महाबाहो दारितां[5] च स्तनान्तरे ॥ आशीविष इव क्रुद्धो निःश्वसन्नभ्यभाषथाः[6] ॥ ७ ॥
नखाग्रैः केन ते भीरु दारितं[7] तु स्तनान्तरम् ॥ कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ ८ ॥
निरीक्षमाणः सहसा वायसं समवैक्षथाः[8] ॥ नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९ ॥
सुतः किल स शक्रस्य वायसः पततां वरः ॥ धरान्तरचरः शीघ्रं पवनस्य गतौ समः ॥ १० ॥
ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः ॥ वायसे त्वं कृथाः क्रूरां मतिं मतिमतां वर ॥ ११ ॥
स[9] दर्भं संस्तराद्गृह्य ब्रह्मास्त्रेण ह्ययोजयः[10] ॥ स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् ॥ १२ ॥
क्षिप्तवांस्त्वं[11] प्रदीप्तं हि दर्भं तं वायसं प्रति ॥ ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम[12] ह ॥ १३ ॥
स[13] पित्रा च परित्यक्तः सुरैश्च[14] समहर्षिभिः ॥ त्रीँल्लोकान्संपरिक्रम्य त्रातारं नाधिगच्छति ॥ १४ ॥
पुनरेवागतस्त्रस्तस्त्वत्सकाशमरिन्दम[15] ॥ स[16] तं निपतितं भूमौ शरण्यः शरणागतम् ॥
वधार्हमपि काकुत्स्थ कृपया पर्यपालयः ॥ १५ ॥
मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥ भवांस्तस्याक्षि[17] काकस्य हिनस्ति स्म स दक्षिणम् ॥ १६ ॥
रामं[18] त्वां स नमस्कृत्य राज्ञे[19] दशरथाय च ॥ विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् ॥ १७ ॥

उभावपि पर्यायेण सुप्ताविति त्वया सार्धमित्युक्तं ॥ ३—६ ॥ दारितां विदारितां ॥ ७—१८ ॥

**शि०** पक्षी वायसः । देव्याः व्यथां स्पर्शादिनाऽस्वास्थ्यं । पुनःपुनर्जनयति । पुनःपुनर्जनयतीत्यनेन अयंरावणवधयोग्योस्तिनवेतिपरीक्षार्थमागतइतिव्यक्तं ॥ ४ ॥ **शि०** विददार विदारणानुकूलव्यापारंचकार । ततोनन्तरंशोणितेन रुधिरबिन्दुना । समुक्षितइवत्वं तस्याः तथा । बोधितः । शोणितोक्षितसादृश्यंचात्यरुणबिन्दुविशिष्टसीतापटविशेषाच्छादितत्वेन । समुक्षितशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । प्रातिभासिकंव्याख्यानंतुहेयमेव । अप्राकृताङ्गस्यरुधिरस्रावहेतुभूतविदारितत्वस्यासंभवात् । अतएव " योवेत्तिभौतिकंदेहंरामस्यपरमात्मनः । ससर्वस्माद्बहिष्कार्यःश्रौतस्मार्तविधानतः " इत्यादिसंगच्छते । प्रमाणेरामस्येत्युपलक्षणंसीतायाः ॥ ५ ॥ **ति०** रादितं दारितमित्यर्थः ॥ **स०** पञ्चवक्त्रेण अङ्गुलिरूपपञ्चमुखेनहस्तेन । कःपुमान् । सरोषेणभोगिना तद्रूपयात्वयाक्रीडति । पञ्चवक्त्रेण विस्तृतमुखेनेतिवा ॥ ८ ॥ **स०** निरीक्षमाणः समन्तात्पश्यन् । नखैः पादनखैः ॥ ९ ॥ **स०** चिक्षेप चिक्षेपिथ । " त्वंदेव शक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविरादधेऽजः " इत्यादाविवयुष्मच्छब्दप्रयोगेपि प्रथमपुरुषःसंभवति । " त्वमग्नेप्रथमोमातरिश्वन " इतिऋग्भाष्यटीकायामेतद्भागवतवाक्योदाहरणेनतथैवोक्तेः ॥ १३ ॥ **स०** भीतैः त्वत्तः । नाधिगच्छति नप्राप्तवान् ॥ १४ ॥ **स०** तत्र त्रायकशून्यकाले । धरण्यां क्षितौ अनाथतयानिपतितं । भूमौ " भूमिःक्षितौस्थानमात्रे " इत्यनुशासनात्स्थानमात्रंप्रकृत्यर्थः । सप्तम्यर्थश्चोद्देश्यत्वं । स्वाश्रयार्थमितिभावः । शरणागतं शरणायस्वरक्षणायआगतं त्वामितिशेषः । **शि०** सीताङ्गस्पर्शमात्रेणतत्कल्याणप्रकटनमपहायकोपप्रकटनद्वाराकिमर्थंकृतमितितुनभ्रमितव्यं । प्रार्थनयैवपरमकल्याणंक्रियतइतिस्वाभाविकपरमात्मरीतेः । तथाहि "करुणावानपिव्यक्तंशक्तःस्वाम्यपिदेहिनां । अप्रार्थितोनगोपायेदितितत्प्रार्थनामतिः " इतिपुराणं ॥ १५ ॥ **स०** हिनस्तिस्म अहिनः ॥ १६ ॥

[ **पा०** ] १ झ. ट. विददारस्तनान्तरं. २ क. ख. च. छ. ज. प्रसुप्तस्त्वं. ३ क.—ट. ततःपुनः. ४ ग. झ. ञ. ट. विददार. ५ ख. घ. तद्व्रणंच. ६ झ. ट. ततोवाक्यंत्वमूचिवान्. ७ ध. छ.—झ. रादितंवैस्तनान्तरे. ख. दारितासिस्तनान्तरे. ८ क. च. छ. ज. समुदैक्षत. झ. ट. समुदैक्षथाः. ख. ग. समवैक्षथ. ९ ख. च. ज.—ट. सदर्भसंस्तराद्गृह्य. १० ज.—ट. न्ययोजयः. ११ ग. च.—ट. सत्वंप्रदीप्तंचिक्षेप. १२ क. च. ज. ञ. दर्भोभिजगामतं. १३ ज. झ. ट. भीतैश्चसंपरित्यक्तः. १४ क. ख. ग. च.—ट. सुरैस्सर्वैश्चवायसः. १५ क. ख. ग. च. छ. ज. ञ. पुनरेवागतस्त्रस्तत्वत्समीपं. १६ च.—ज. ञ. ततस्तंपतितं. क. ग. घ. सत्वंनिपतितं. झ. ठ. त्वंतंनिपतितंभूमौधरण्यां. १७ क.—घ. च. ज.—ट. ततस्तस्याक्षि. १८ घ. रामतुभ्यं. क. च. छ. ज. ततोरामंनमस्कृत्य. झ. ञ. ट. वायसस्त्वांनमस्कृत्य. १९ क. ख. ग. च.—ट. राज्ञोदशरथस्यच.

एवमस्त्रविदां श्रेष्ठः [1]सत्त्ववाञ्छीलवानपि ॥ किमर्थमस्त्रं रक्षस्सु न [2]योजयति राघवः ॥ १८ ॥
[3]न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ॥ [4]न च सर्वे रणे शक्ता रामं प्रतिसमासितुम् ॥१९॥
[5]तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ॥ क्षिप्रं [6]सुनिशितैर्बाणैर्हन्यतां युधि रावणः ॥ २० ॥
भ्रातुरादेश[7]माज्ञाय लक्ष्मणो वा परन्तपः ॥ स किमर्थं नरवरो न मां रक्षति राघवः ॥ २१ ॥
शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ २२ ॥
ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ॥ [8]समर्थौ सहितौ [9]यन्मां नावेक्षेते परंतपौ ॥ २३ ॥
वैदेह्या वचनं श्रुत्वा करुणं [10]सांश्रु भाषितम् ॥ पुनरप्यहमार्यां तामिदं वचनमब्रवम् ॥ २४ ॥
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते ॥ २५ ॥
कथंचिद्भवती दृष्टा न [11]कालः परिशोचितुम् ॥ इमं [12]मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ॥२६॥
तावुभौ नरशार्दूलौ राज[13]पुत्रावनिन्दितौ ॥ त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ २७ ॥
हत्वा च समरे रौद्रं रावणं सहबान्धवम् ॥ राघवस्त्वां [14]वरारोहे [15]स्वां पुरीं नयते ध्रुवम् ॥ २८ ॥
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ प्रीतिसंजननं तस्य प्रदातुं [16]त्वमिहार्हसि ॥ २९ ॥
[17]सोऽभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् ॥ मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल ॥ ३० ॥
प्रतिगृह्य मणिं [18]दिव्यं तव हेतो रघूद्वह ॥ शिरसा [19]तां प्रणम्यार्यामहमागमने त्वरे ॥ ३१ ॥
गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ विवर्धमानं च हि मामुवाच जनकात्मजा ॥ ३२ ॥
अश्रुपूर्णमुखी दीना [20]बाष्पसंदिग्धभाषिणी ॥ ममोत्पतनसंभ्रान्ता शोकवेगसमाहता ॥ ३३ ॥
[ [21]मामुवाच ततः सीता सभाग्योसि महाकपे ॥ यद्द्रक्ष्यसि महाबाहुं रामं कमललोचनम् ॥
लक्ष्मणं च महाबाहुं देवरं मे यशस्विनम् ॥ ३४ ॥
सीतयाऽप्येवमुक्तोऽहमब्रवं मैथिलीं तथा ॥ पृष्ठमारोह मे देवि क्षिप्रं जनकनन्दिनि ॥ ३५ ॥
यावत्ते दर्शयाम्यद्य ससुग्रीवं सलक्ष्मणम् ॥ राघवं च महाभागे भर्तारमसितेक्षणे ॥ ३६ ॥
साऽब्रवीन्मां ततो देवी नैष धर्मो महाकपे ॥ यत्ते पृष्ठं सिषेवेऽहं स्ववशा हरिपुङ्गव ॥ ३७ ॥
पुरा च यदहं वीर स्पृष्टा गात्रेषु रक्षसा ॥ तत्राहं किं करिष्यामि कालेनोपनिपीडिता ॥ ३८ ॥
गच्छ त्वं कपिशार्दूल यत्र तौ नृपतेः सुतौ ॥ इत्येवं सा समाभाष्य भूयः संदेष्टुमास्थिता] ॥३९॥

प्रतिसमासितुं प्रतिमुखं स्थातुं ॥ १९—२४ ॥ त्वच्छोकविमुखः त्वच्छोकेन कार्यान्तरविमुखः ॥ २५—२७ ॥ नयते नेष्यते । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ २८—२९ ॥ साभिवीक्ष्य दिश इति । दिगवलोकनं राक्षस्यो दृष्ट्वा रावणाय वक्ष्यन्तीति भयेन । वेण्यामुद्ग्रथ्यत इति वेण्युद्ग्रथनं । वेणीधार्यमित्यर्थः । मुक्त्वा वस्त्रादिति वस्त्राञ्चलेन ग्रथितं मणिं मुक्त्वा ततः ददावित्यर्थः ॥ ३०—

ति० अतःपरंपरिशोचितुं नकालःतवयोग्यइतिशेषः । चिरंलङ्कायामासितुंनकालोयोग्यइतिपाठान्तरेऽर्थः ॥ ति० इदंमुहूर्तं अस्मिन्नेवमुहूर्तेइत्यर्थः ॥ २६ ॥ इतिसप्तषष्टितमः सर्गः ॥ ६७ ॥

[ पा० ] १ क. च. छ. ज. ञ. सत्त्ववान्बलवानपि. २ क. ग. घ. च.—ट. योजयसि. ३ झ. ट. नदानवानगन्धर्वाः. ४ ख. घ. झ. ञ. ट. तवरामरणेशक्तास्तथाप्रतिसमासितुं. ५ ख. ग. च.—ट. तववीर्यवतः. ६ झ. ट. सुनियतैः. ७ ग. घ. मादाय. ८ घ. समर्थावपितौ. ९ झ. ट. यन्मांनरक्षेते. क. च. छ. ज. यन्मामुपेक्षेते. १० च.—ट. साधुभाषितं. ११ ख. घ. कालश्चिरमासितुं. १२ क. च.—ट. इदंमुहूर्तं. १३ च. छ. ज. ञ. पुत्रौमहाबलौ. झ. ट. पुत्रौपरंतपौ. १४ ग. विशालाक्षिस्वांपुरींप्रतिनेष्यति. ख. महाभागे. १५ झ. ट. स्वपुरीं. १६ क. ग. च.—ट. तत्त्वमर्हसि. १७ च. छ. ज. ञ. सासमीक्ष्य. १८ छ. झ. ट. दोर्भ्यांतव. क. ख. ग. च. ज. ञ. देव्यास्तव. १९ ग. घ. च. छ. झ. ञ. ट. संप्रणम्यैनां. २० झ. ट. बाष्पगद्गद. २१ मामुवाचेत्यादयः भूयःसंदेष्टुमास्थितेत्यन्ताःश्लोकाः झ. ञ. ट. पाठेषुदृश्यन्ते.

हनुमन्सिंहसंकाशावुभौ तौ रामलक्ष्मणौ ॥ सुग्रीवं च सहामात्यं सर्वान्ब्रूया ह्यनामयम् ॥ ४० ॥
यथा च स महाबाहुर्मां तारयति राघवः ॥ अस्माद्दुःखाम्बुसंरोधात्[1]त्वं समाधातुमर्हसि ॥ ४१ ॥

[2]इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ॥
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ ४२ ॥
एतत्तवार्या [3]नृपराजसिंह सीता वचः प्राह विषादपूर्वम् ॥
एतच्च बुद्ध्वा [4]गदितं मया त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

हनुमता श्रीरामंप्रतिराघवयोर्वानराणांच दुस्तरसागरतरणेसीताशङ्कायां तन्निवर्तकस्ववचनाद्यनुवादपूर्वकं स्वकृतसीतासमाश्वासननिवेदनेनसह सीताकुशलनिवेदनम् ॥ १ ॥

अथाहमुत्तरं देव्या पुनरुक्तः [5]ससंभ्रमः ॥ तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य वै ॥ १ ॥
एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया ॥ यथा [6]मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २ ॥
यदि वा मन्यसे वीर वसैकाहमरिन्दम ॥ कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥
मम चाप्यल्पभाग्यायाः सान्निध्यात्तव [7]वीर्यवन् ॥ अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥४॥
गते हि त्वयि विक्रान्ते पुनरागमनाय वै ॥ प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ ५ ॥
[8]तवादर्शनजः शोको भूयो मां परितापयेत् ॥ [9]दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६ ॥
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ॥ सुमहांस्त्वत्सहायेषु [10]हर्यृक्षेषु हरीश्वर ॥ ७ ॥
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ॥ तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥
त्रयाणामेव भूतानां [11]सागरस्यास्य लङ्घने ॥ शक्तिः स्याद्वैनतेयस्य [12]तव वा मारुतस्य वा ॥ ९ ॥
तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे ॥ किं पश्यसि समाधानं [13]ब्रूहि [14]कार्यविदां वर ॥ १० ॥
काममस्य त्वमेवैकः कार्यस्य परिसाधने ॥ पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥
बलैः समग्रैर्यदि मां हत्वा रावणमाहवे ॥ विजयी [15]स्वां पुरीं रामो [16]नयेत्तत्स्याद्यशस्करम् ॥ १२ ॥

---

४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

हे नरव्याघ्र तव स्नेहात् । मयीति शेषः । सौहार्दात् सुहृद्भावात् । आप्तत्वादिति यावत् । अनुमान्य संमान्य । उत्तरं ततः परं । उत्तरं कार्यं वा । पुनर्देव्याहमुक्त इत्यन्वयः । ससंभ्रमः गमनत्वरान्वित इत्यर्थः ॥ १—३ ॥ शोकविपाकस्य शोकवृद्धेरित्यर्थः ॥ ४—९ ॥ कार्यनिर्योगे कार्यगतौ । दुरतिक्रमे

---

[ पा० ] १ झ. ञ. ट. संरोधात्तत्त्वमाख्यातुमर्हसि. क. च. ज. संरोधात्तत्समाधातुमर्हसि. २ ग. घ. झ. ञ. ट. इदंच. ३ झ. ञ. ट. नृपसंयतासा. ४ झ. ञ. ट. गदितोयथात्वं. क. च. छ. ज. गदितंप्रियायाः. ५ घ. झ. ट. ससंभ्रमं. ६ च. छ. ज. ञ. मांप्राप्नुयात्. ७ झ. ञ. ट. वानर. ८ झ. ट. तवादर्शनजंचापिभयंमां. ग. तवादर्शनतश्चापिशोकोमां. घ. तवादर्शनजश्चापिशोकोमां. ९ ग. दुःखाद्दुःखाभिभूतांमांदुःखितां. ख. च. छ. दुःखाद्दुःखाभिभूतांचदुःखितां. घ. दुःखाद्दुःखतरंयातांदुःखितांदुःखसागरे. १० ग. हर्यृक्षप्रवरेषुच. क. ख. च. छ. ज. ञ. हर्यृक्षेषुनसंशयः. झ. हर्यृक्षेषुअसंशयः. ११ झ. ञ. ट. सागरस्येह. १२ घ. च. झ. ञ. ट. वायोर्वातवचानघ. १३ क. ग. त्वंहि. १४ झ. ट. वाक्यविदां. १५ झ. ट. स्वपुरीं. १६ च. छ. ज. नयेन्मांतद्यशस्करं.

यथाऽहं तस्य वीरस्य वनादुपधिना हृता ॥ रक्षसा तद्भयादेव तथा नार्हति राघवः ॥ १३ ॥
बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ॥ मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ॥ भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ॥ निशम्याहं ततः शेषं वाक्यमुत्तरमब्रवम् ॥ १६ ॥
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतांवरः ॥ सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ १७ ॥
तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः ॥ मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥ १८ ॥
येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः ॥ न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९ ॥
असकृत्तैर्महाभागैर्वानरैर्बलदर्पितैः ॥ प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ २० ॥
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ॥ मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥२१॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ॥ न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥२२॥
तदलं परितापेन देवि मन्युर्व्यपैतु ते ॥ एकोत्पातेन वै लङ्कामेष्यन्ति हरियूथपाः ॥ २३ ॥
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ॥ त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४ ॥
अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम् ॥ लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ २५ ॥
नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ॥ वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥ २६ ॥
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु ॥ नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥ २७ ॥
निवृत्तवनवासं च त्वया सार्धमरिन्दमम् ॥ अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥
ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसादिता ॥
जगाम शान्तिं मम मैथिलात्मजा तवापि शोकेन तदाऽभिपीडिता ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां सुन्दरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

॥ सुन्दरकाण्डः समाप्तः ॥

---

दुर्निर्वहे ॥ १०—२२ ॥ मन्युः दैन्यं । "मन्यु-दैन्ये क्रतौ क्रुधि" इत्यमरः ॥ २३—२८ ॥ तव शोकेनापि नैवं दशानित्यादिमदुक्त्या श्रुतेन । तदा मम पुरस्तादभिपीडिता । अदीनभाषिणा मया । शिवाभिः इष्टाभिः वाग्भिः । अभिप्रसादिता शान्तिं दुःखनिवृत्तिं जगाम ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

इत्थं कौशिकवंशमौक्तिकमणिर्गोविन्दराजाभिधो वात्स्यश्रीशठकोपदेशिकपदद्वन्द्वैकसेवारतः ॥ पूर्वाचार्यकृता विलोक्य विविधा व्याख्या मुहुर्जानकीकान्तस्याप्रतिमाज्ञयैव तिलकं सौन्दर्यकाण्डेऽव्यधात् ॥ १ ॥

---

[ पा० ] १ च. छ. ज. ञ. शरैस्तु. २ ग. च. छ. झ. ञ. तत्त्वमेवोपपादय. ३ झ. ट. स्तवदर्थे. ४ ख. झ. ट. सदृशाः. ५ ख. च. छ. ज. ञ. महाभागैःससागरधराधरा. ६ घ. ङ. झ. ट. बलसंयुतैः. ७ घ. चन्द्रसूर्याविवांबरे. ८ च. छ. ज. ञ. त्वत्समीपं. ९ ङ.—ट. धनुष्मन्तं. १० घ.—ट. मुपागतं. ११ झ. ट.उवाह. १२ ख. वियोगशोकेनतथा.

---

इदं किष्किन्धाकाण्डं कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम्। शकाब्दाः १८३४ सन १९१२.

# SRIMAD VĀLMĪKI RĀMĀYAṆA

A CRITICAL EDITION

## With the commentary of Sri Govindarāja

AND

Extracts from many other commentaries and Readings.

---

YUDDHAKĀṆDA 6.



EDITED AND PUBLISHED

BY


## T. R. Krishnacharya,

Proprietor, Madhva Vilâs Book Depot, Kumbakonam.





*Printed by R. Y. Shedge for the proprietor,*

*at the "Nirnaya-sagar" Press, 23, Kolbhat Lane,*

**BOMBAY.**

---

1913.

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीयव्याख्यानसमलंकृतम् ।

तथा

तिलकप्रभृत्यनेकापूर्वव्याख्यानोद्धृतैः

गोविन्दराजीयानुक्तापूर्वविषयैश्च संवलितम् ।



## युद्धकाण्डम् ६.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण**

अनेकेषां विदुषां साहाय्येन नानादेशीयकोशानुसारेण

संशोध्य

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३४ परिधाविनामसंवत्सरे ।

॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

## श्रीमद्गोविन्दराजीयव्याख्यासमलंकृतम् ।

## युद्धकाण्डम् ६

श्रीरामचन्द्राय नमः ॥

### प्रथमः सर्गः ॥ १ ॥

हनुमन्मुखादवगतसीतावृत्तान्तेनश्रीरामेण हनुमन्तंप्रतिप्रशंसनपूर्वकं तत्कृतसीतान्वेषणाद्युपकारप्रत्युपकारतयासर्वस्वदानप्रतिनिधिभूतस्वात्मप्रदानरूपपरिष्वङ्गकरणम् ॥१॥ तथा सुग्रीवसंनिधौहनुमन्तंप्रति सागरस्यदुस्तरतयासीतान्वेषणादिप्रयासस्यनिष्फलत्वोक्तया सागरतरणोपायानधिगमेनपरिचिन्तनम् ॥ २ ॥

श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम्[1] ॥ रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १ ॥
कृतं हनुमता कार्यं सुमहद्भुवि दुर्लभम्[2] ॥ मनसाऽपि यदन्येन न शक्यं धरणीतले ॥ २ ॥
न हि तं परिपश्यामि यस्तरेत महार्णवम्[3] ॥ अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३ ॥

---

श्रीरामचन्द्राय नमः ॥ आचार्यं शठकोपदेशिकवरं प्राचार्यपारंपरीमप्यानम्य सनारदं कुशलवाचार्यं मुनीनां वरम् । पूर्वाचार्यकृता विलोक्य बहुधा व्याख्याः सतां प्रीतये कुर्वे संप्रति युद्धकाण्डविवृतिं श्रीमत्किरीटाभिधाम् ॥ उक्तं पुरुषकारभूताया लक्ष्म्याः कृत्यं सुन्दरकाण्डे । अथोपायकृत्यं वक्तुं षष्ठः काण्ड आरभ्यते । तत्र स्वामिना कृतकार्ये भृत्ये एवं वर्तितव्यमित्यमुमर्थमुपदेष्टुं सुग्रीवादीनामुत्साहं वर्धयन् समाहृतसीतावृत्तान्तं हनुमन्तं रामः सत्करोति प्रथमे सर्गे—श्रुत्वेति । अत्र गायत्र्यक्षरं ...रः । यथावत् यथावस्थितप्रकारेण । अभिभाषितं उक्तं । उत्तरं प्रियश्रवणोत्तरकालार्हं ॥ १ ॥ अथ " प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च न कदाचन पुत्रकाः " इति वचनात्कर्मान्ते दासं स्तौति—कृतमित्यादिना । अत्र महदित्यनेन सागरतरणमुच्यते । सुमहदित्यनेन लङ्काप्रवेशः । दुर्लभमित्यनेन लङ्काधर्षणं । मनसापि न शक्यमित्यनेन पुनर्निर्गमः । प्रथमं सागर एव न तर्तुं शक्यः । तीर्त्वापि तं लङ्का न प्रवेष्टुं । प्रविश्यापि न धर्षयितुं । धर्षयित्वापि न ततो निर्गन्तुमिति भावः ॥ २ ॥ महत्त्वमुपपादयति—न हीति ॥ गरुडवायू मिलित्वा तरेतां । अयं त्वेक एवातरदित्यर्थः ॥ ३ ॥

---

श्रीरामाय नमः ॥ **स०** मारुतेरीरितंश्रुत्वाराघवःश्लाघापूर्वकमन्यत्तस्मैदातुमचक्षाणःस्वात्मानमेवददावित्याह—श्रुत्वेत्यादिना ॥ ...हनुमतोयथावत्सम्यगभिभाषितं वचनं । अवाक्यं निश्शब्दंयथाभवतितथाश्रुत्वा उत्तरं प्रत्युत्तररूपं तत्कालोचिततयोत्तममब्रवीत् ॥ १ ॥ **स०** सुमहतांमहात्मनांदेवानां या भूः स्वर्गादिरूपंस्थानं । तस्यामपिदुर्लभं असाध्यं । यत्कार्यं सीतासंदर्शनरूपं । तत् धरणीतलेहनुमताकृतं । अन्येन हनुमतोभिन्नेन । नशक्यं कर्तुमितिशेषः ॥ २ ॥ तरेत तरेत् । अन्यत्र अन्यं

[ पा० ] १ क.—घ. ज. दनुभाषितं. २ ख. घ. दुष्करं. ३ ङ. झ. ट. महोदधिं.

देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ॥ ४ ॥
[ यो वीर्यबलसंपन्नो द्विषद्भिरनिवारितः ] ॥ प्रविष्टः सत्वमाश्रित्य श्वसन्को नाम निष्क्रमेत् ॥ ५ ॥
को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम् ॥ यो वीर्यबलसंपन्नो न समः स्याद्धनूमतः ॥ ६ ॥
भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ॥ स्वयं विधाय स्वबलं सदृशं विक्रमस्य च ॥ ७ ॥
यो हि भृत्यो नियुक्तः सन्भर्त्रा कर्मणि दुष्करे ॥ कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥ ८ ॥
नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् ॥ भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥ ९ ॥
नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः ॥ भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥ १० ॥
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता ॥ न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ ११ ॥
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ॥ वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ १२ ॥

सुमहत् मनसापि न शक्यमित्येतद्द्वयमप्युपपादयति—देवदानवेत्यादिना सार्धश्लोकेन ॥ सत्त्वं बलं । आश्रित्य श्वसन् जीवन् । निष्क्रमेत् निष्क्रामेत् । लङ्कां प्रविश्य स्वबलेन पुनर्निर्गच्छन् हनुमतोऽन्यःकोपि नास्तीत्यर्थः ॥ ४—५ ॥ दुर्लभत्वमुपपादयति—को विशेदिति ॥ ६ ॥ न केवलं स्वामिनियुक्तकार्यकरणेन भृत्यकार्यं निर्व्यूढमनेन किन्त्वनियुक्तप्रकृतकार्यानुकूलकार्यान्तरकरणेनापि महत्कार्यं संसाधितमित्याह—भृत्येति ॥ विक्रमः अतिशक्तिः । " विक्रमस्त्वतिशक्तिता " इत्यमरः । विक्रमस्य सदृशं स्वबलं अशोकवनिकाभङ्गादिकं पौरुषं । स्वयं आत्मना स्वामिनियोगं विना । विधाय सुग्रीवस्य भृत्यकार्यं भृत्येन कर्तव्यं । महत् अधिकं कृतमित्यर्थः ॥ ७ ॥ हनुमत उत्तमभृत्यत्वं दर्शयितुमुत्तममध्यमाधमभृत्यानां क्रमेण लक्षणमाह—यो हीत्यादिना ॥ यो भृत्यः भर्त्रा स्वामिना । दुष्करे कर्मणि नियुक्तः तत् कृत्वा । अनुरागेण स्वामिभक्त्यतिशयेन । तदपेक्षितमनियुक्तमपि कार्यं कुर्यात् । तं पुरुषोत्तमं उत्तमभृत्यं । आहुः ॥ ८ ॥ भर्त्रा नियुक्तः यो भृत्यः युक्तः उत्साहयुक्तः समर्थश्च । नृपतेः स्वामिनः । प्रियं परं कार्यं स्वामिनिर्दिष्टादधिकं कार्यं । न कुर्यात् । तं मध्यमं नरं मध्यमभृत्यं । आहुः । " भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्योऽभृत्यस्समर्थोपि तमाहुर्मध्यमं नरं " इति पाठान्तरं । तत्र त्वयमर्थः । यस्तु भृत्यस्समर्थोपि परं कार्यं नकुर्यात् उक्तमात्रमेव कुर्यात्स भृत्योऽभृत्यः उक्तानुष्ठानात् भृत्यः अधिकाकरणादभृत्यः । ततस्तं मध्यममाहुरिति ॥ ९ ॥ समाहितः कार्यान्तराव्यग्रः । युक्तः समर्थश्च यो भृत्यो नियुक्तोपि नृपतेः कार्यं नृपतेः उक्तमात्रमपि कार्यं । सम्यङ्न कुर्यात् तं पुरुषाधमं अधमभृत्यं । आहुः ॥ १० ॥ उक्तेषु त्रिविधभृत्येषूत्तमभृत्योयमित्याह—तदिति ॥ तत् उत्तमभृत्यलक्षणलक्षितत्वात् । नियुज्यतेस्मिन्निति नियोगः कार्यं तस्मिन्नियुक्तेन उत्तमभृत्येन कृत्यं कर्तव्यं कार्यं हनुमता कृतं । किंचात्मा स्वयं लघुतां न नीतः । राक्षसैरपराजितत्वात् । सुग्रीवश्चापि तोषितः उक्तकार्यातिरिक्तकार्यकरणात् ॥ ११ ॥ न केवलं सुग्रीवतोषणं धर्मपरिरक्षणं चास्माकमासीदित्याह—अहमिति ॥ धर्मतः धर्मे । सप्तम्यर्थे तसिः । धर्मतः परिरक्षिताः धर्मे स्थापिताः । धर्मेस्थापनं चात्राधर्मान्मोचनं । यदि हनुमता सीता न दृश्येत तदाहं तावदात्मानं जह्यां । ततो लक्ष्मणादयश्च । तत आत्महानिरूपोऽधर्मस्सर्वेषां स्यादिति भावः । यद्वा वैदेहीदर्शनरूपेण धर्मेण उपकारेण सर्वे वयं परिरक्षिताः निरपवादाः कृताः स्मेति भावः ॥

॥ ३ ॥ स० देवदानवयक्षाणामितिकर्तरिषष्ठी ॥ ४ ॥ ती० योवीर्यबलसंपन्नोपि हनुमतःसमोनस्यात् सकोवालङ्कांविशेत्यन्वयः ॥ स० नकेवलंप्रविष्टस्यनिष्क्रमणंदुर्घटं प्रवेशोपिनशक्यइत्याह—कइति । यश्चवीर्यबलेनसंपन्नइतिप्रसिद्धोभवेत् सोपिहनूमतोनसमः । योहनूमान् नोस्माकं । वीर्यबलसंपद्रूपस्तस्यहनूमतइतिवा ॥ ६ ॥ रामानु० कुर्यात्तदनुरागेणेतिपाठः । धातूनामनेकार्थत्वादत्रानुरागशब्दोनुबन्धवचनः । तदनुबन्धेन प्रकृतकार्यानुबन्धेन । अनियुक्तमपिकार्यं यःकुर्यादित्यर्थः । "भृत्यस्तु यःपरंकार्यंकुर्यात्" इत्यधिककार्याकर्तुर्मध्यमभृत्यत्वाभिधानादेवंव्याख्यातं । तदनसूयुर्यइतिपाठेयच्छब्दोतिरिच्यते ॥८॥ ति० अशुद्धात् ।

[ पा० ] १ इदमर्धं च. छ. पाठयोर्दृश्यते. २ क. ग.—ट. जीवन्कोनाम. ३ च. छ. एवं. ४ ख. तदनुसारेण.

इदं तु मम दीनस्य मनो भूयः प्रकर्षति ॥ यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥ १३ ॥
एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः ॥ मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ॥ १४ ॥
इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे ॥ हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥ १५ ॥
ध्यात्वा पुनरुवाचेदं वचनं रघुनन्दनः ॥ हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ॥ १६ ॥
सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् ॥ सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥ १७ ॥
कथं नाम समुद्रस्य दुष्पारस्य महांभसः ॥ हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः ॥ १८ ॥

॥ १२ ॥ एवं निरतिशयानन्दकरं वचनं कथयतो हनुमतः तत्सदृशप्रत्युपकारालाभात् खिद्यते—इदं त्विति ॥ प्रकर्षति व्याकुलयति संतापयति वा । कुर्मि करोमि ॥ १३ ॥ स च संतापस्सर्वस्वदानरूपेण प्रत्युपकारेण विना न शाम्यति । तस्य सर्वस्वदानस्य मया क्रियमाणः परिष्वङ्गएव प्रतिनिधिर्भवत्वित्याह—एष इति । तुशब्दोवधारणे । इमं प्रत्युपकारार्हं कालं प्राप्य मया दत्तोयं परिष्वङ्ग एव सर्वस्वभूतोस्तु । सर्वस्वदानसदृशोस्त्विति संबन्धः । एषः स्वानुभवसिद्धः । इच्छागृहीताभिमतोरुदेहत्वेन स्वस्य निरवधिकभोग्यतया स्थितः । लोके स्वस्य स्वं हि स्वामि मताय दिशतिसर्वस्वभूतः । एतद्व्यतिरिक्तप्रदाने इदं न दत्तमिति न्यूनता स्यात् । एतत्प्रदाने तु सर्वं दत्तं । एतद्विग्रहस्य सर्वाश्रयत्वात् परिष्वङ्गो हनूमतः । अमृताशिनो हि तृणकबलादिकं न देयं । स्नेहो मे परमो राजन्नित्येतद्विग्रहे प्रेमवतः स एव दातव्यः । मया कालमिमं प्राप्य दत्तः । अयं किञ्चिदपि मत्तोनपेक्षमाणो वर्तते । कदा मयाऽस्मै किंचिद्दत्तं स्यादिति सोत्कण्ठेन मया स्थितं । संप्रत्यप्रतिषेधसमयलाभाद्दत्तवानस्मि । तस्य महात्मनः महास्वभावस्य । महोदारस्येत्यर्थः । देहद्वयमुपकृतवतः किमेकदेहप्रदानमुचितमितिभावः । वेण्युद्ग्रथनसमये सीतां संरक्ष्य दत्त्वा अवगाह्यार्णवं स्वप्स्य इति दशायां रामदेहं च सीतासंदेशवचनेनाजीवयद्धि । एवं देहद्वयंदत्तवतः किमेकदेहदानमुचितमितिभावः ॥१४॥ प्रीतिहृष्टाङ्गः प्रीत्या पुलकितगात्रः । महात्मानमित्यादिविशेषणानि परिष्वङ्गहेतवः ॥ १५ ॥ एवं हनुमन्तं स्तुत्वा सागरस्य दुस्तरत्वं विचार्य विषण्णस्सन् प्रयासकृतं सीतान्वेषणं निरर्थकमितिमन्वान आह—ध्यात्वेति ॥एवकारो भिन्नक्रमः । ध्यात्वा दुस्तरं सागरं सर्ववानरवाहिनीसहितोहं कथं संतरिष्यामीति संचिन्त्य । सुग्रीवस्योपश्रृण्वतः सुग्रीवे उपश्रृण्वत्येव । व्यत्ययेन सप्तम्यर्थे षष्ठी ॥ १६ ॥ सर्वथा सर्वप्रकारेण समुद्रतरणान्तःपुरप्रवेशादिना । सुकृतंतावत् सुष्ठु कृतमेव । परिमार्गणं अन्वेषणं । किंतु सागरं समासाद्य सागरस्य दुस्तरत्वमालोच्य । पुनर्नष्टं मनो मम । सीतावृत्तान्तश्रवणेन हृष्टमपि मे मनः पुनर्नष्टं प्रकृतं विषादं पुनः प्राप्तमित्यर्थः ॥ १७ ॥ विषादमेव प्रकटयति—कथमिति ॥ दुष्पारस्य दुष्प्रापतीरस्य । " पार—तीर कर्मसमाप्तौ " इत्यस्माद्धातोः खच्

र्ममंप्राप्येत्यर्थः । एतेन स्वाम्याज्ञापालनेनभृत्यस्यधर्मोपिसूचितः ॥ १२ ॥ **ति०** सर्वस्वभूतः भगवद्देहस्यशुद्धानन्दरूपत्वात्स्वालिङ्गनस्यसर्वस्वभूतत्वंबोध्यं । आनन्दएवहिभगवतःसर्वस्वं । " आनन्दएवहिमाययारामादिदेहत्वेनभासते " इतिगीताभाष्यविष्णुसहस्रनामभाष्ययोर्भगवत्पादैःस्पष्टमेवोक्तं । ब्रह्माण्डपुराणादिषुचैवंपरिष्वङ्गद्वाराब्रह्मानन्दार्पणमेवहनुमतेकृतमितिबोधितं । तस्यहनूमतः उत्तमभृत्यस्यहनूमतः ॥ **स०** एतत्कालोचितमिदमित्यालोच्यदत्तवान्वानरेन्द्रायराघवेन्द्रइत्याह—एषइत्यादिना । सर्वस्वभूतः सहभोगहेतुत्वात्कृतोपकारसमग्रफलरूपः । एषः परिष्वङ्गः अङ्गालिङ्गनरूपः । इमंकालं एतादृशंसमयं । प्राप्य । महात्मनः तस्यहनुमतोदत्तः । मयारमयामहात्मनोममचसर्वस्वभूतः एषोपि इमं अकालं सायुज्यसूचकस्यतस्येदानीमयोग्यत्वात्तत्कालभिन्नंकालंप्राप्यापि मयादत्तइतिवा । तुशब्दस्तुरमामारुतयोर्विशेषद्योतकः । अनेनकृपापारवश्यंद्योत्यते ॥ **शि०** इमं दानयोग्यंकालंप्राप्यसर्वस्वभूतः ममसर्वधनत्वंप्राप्तः । एषपरिष्वङ्गः ममालिङ्गनं । महात्मनोहनूमतोदत्तोस्तु । एतेनपरिष्वङ्गातिरिक्तंहनुयोगिवस्त्वन्तरंनास्तीतिसूचितं । तेन रामपरिष्वङ्गप्राप्तेःपरमपुरुषार्थत्वंसूचितं ॥ १४ ॥ **ति०** समागताः मिलिताः ॥ १८ ॥

[ पा० ] १ च. छ. ज. दत्तश्चास्तु. क. ख. घ. दत्तश्चास्य. २ ङ. झ. ट. कृतवाक्यं. ३ ख.—ट. रघुसत्तमः. ४ च. ञ. चास्य. ५ ङ. च. छ. झ. ञ. ट. समागताः.

यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम ॥ समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ १९ ॥
इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः ॥ हनुमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः ॥ २ ॥

सुग्रीवेणरामंप्रति समाश्वासनपूर्वकंमध्येसमुद्रं सेतुबन्धनिर्धारणपूर्वकंतदुपायचिन्तनप्रार्थना ॥ १ ॥ तथातंप्रति वानरपराक्रमादिप्रशंसनपूर्वकं शुभशकुननिवेदनेनशत्रुजयनिर्धारणोक्तिः ॥ २ ॥

तं तु शोकपरिद्यूनं रामं दशरथात्मजम् ॥ उवाच वचनं श्रीमान्सुग्रीवः शोकनाशनम् ॥ १ ॥
किं त्वं[1] संतप्यसे वीर[2] यथाऽन्यः प्राकृतस्तथा ॥ मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् ॥ २ ॥
संतापस्य च ते स्थानं न हि पश्यामि राघव ॥ प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ३ ॥
मतिमाञ्छास्त्रवित्प्राज्ञः पण्डितश्चासि राघव ॥ त्यजेमां पापिकां[3] बुद्धिं कृतात्मेवार्थदूषणीम् ॥ ४ ॥

---

प्रत्ययः । महाम्भसः अगाधजलस्य । समाहिताः संगताः ॥ १८ ॥ सर्वथेति श्लोकोक्तं विवृणोति—यदीति ॥ वैदेह्या वृत्तान्तः गदितो यद्यपि गदित एव । हरीणां समुद्रपारगमने उत्तरं किं उत्तरकालोचितं साधकं किं । न किमपीत्यर्थः । इवशब्दो वाक्यालंकारे ॥ १९ ॥ ध्यानमुपागमत् सागरतरणोपायचिन्तामकरोदित्यर्थः । शत्रुनिबर्हणमहाबाहुपदाभ्यां सागरशोषणादिकमेवोपायमचिन्तयदिति द्योत्यते ॥ २० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

---

एवं शोकसंभ्रान्तं राममवलोक्य समदुःखतया तच्छोकमसहमानः सुग्रीवः “ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोपि हितान्वेषी ब्रूयात्कल्याणभाषितं” इति नीतिशास्त्रमनुस्मरन् शोकनिवारकंवचनमुवाचेत्याह—तंत्विति ॥ तुशब्दः पूर्वस्माद्वैलक्षण्यपरः । तंतुशोकपरिद्यूनं रामःप्रीतिसमायुक्तइति प्रीतियुक्तत्वदशायामेव शोकपरिद्यूनं शोकपरितप्तं । दशरथात्मजं महाराजपुत्रत्वेनशोकलेशानर्हं । रामं । श्रीमान् “ शुचिता त्यागिता शौर्यं समानसुखदुःखता । अनुरागश्च दाक्षिण्यं सत्यता च सुहृद्गुणाः ” इति कामन्दकोक्तरीत्या मित्रगुणसंपन्न इत्यर्थः । शोकनाशनं रामहृदयान्तर्गतशोकनिवर्तनक्षमं । वचनमुवाच ॥ १ ॥ प्राकृतः क्षुद्रः । मैवं भूः प्राकृत इव मा भूः ॥ २ ॥ निमित्ताभावमुपपादयति—संतापस्यचेति ॥ चोवधारणे । संतापस्य स्थानमेव निमित्तमेव । नपश्यामि । एतावत्पर्यन्तं सीतानुपलम्भनरूपं निमित्तमासीत् इदानीं तु नास्तीत्यर्थः । स्थानं अवकाशः । “ अवकाशे स्थितौ स्थानं ” इत्यमरः । प्रवृत्तौ सीतावृत्तान्ते । “ वार्ता प्रवृत्तिर्वृत्तान्तः ” इत्यमरः ॥ ३ ॥ त्वद्गुणपर्यालोचनायामपि न शोकावकाश इत्याह—मतिमानित्यादिना ॥ मतिमान् आगामिगोचरज्ञानवान् । शास्त्रवित् नीतिशास्त्रज्ञः । प्रज्ञास्यास्तीति प्राज्ञः । “ प्रज्ञादिभ्यश्च ” इत्यण्प्रत्ययः । ऊहापोहज्ञ इत्यर्थः । पण्डा निर्णयात्मकं ज्ञानं सास्य संजातेति पण्डितः । परिच्छेत्तेत्यर्थः । पापिकां पापयुक्तां । अनुत्साहकारिणीमितियावत् । इमां बुद्धिं त्यज । कृतात्मा योगी । अर्थदूषणीं मोक्षरूपपुरुषार्थनिवर्तिकां बुद्धिमिव

---

**शि०** अशोकसंभ्रान्तः वास्तवशोकसंभ्रान्तिरहितः । रामः हनूमन्तमित्युक्त्वा ध्यानं सीताप्राप्त्युपायविषयकचिन्तां । उपागमत् प्राप्नोत् ॥ २० ॥ इतिप्रथमःसर्गः ॥ १ ॥

**ती०** अर्थदूषणीं अपवर्गदूषणीं । बुद्धिमिव विषयेषूपादेयत्वबुद्धिमिव । यद्वा अर्थदूषणीं प्रयोजनहानिकरीं । पापिकां भ्रात्मिकां कलुषितांबुद्धिंत्यजेत्यर्थः ॥ **ति०** पण्डितः विचारपूर्वसिद्धान्तप्रतिष्ठापनसमर्थः ॥ **स०** प्राज्ञः प्रकृष्टा कार्यकारित

**[ पा० ]** १ ङ. झ. ट. त्वयातप्यसे. २ ख. नाथ. ३ ङ. झ. ट. प्राकृतां.

समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् ॥ लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ॥ ५ ॥
निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ॥ सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ ६ ॥
इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः ॥ त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ ७ ॥
एषां हर्षेण जानामि तर्कश्चास्मिन्दृढो मम ॥ ८ ॥
विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ॥ रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ॥ ९ ॥
सेतुरत्र यथा बध्येद्यथा पश्येम तां पुरीम् ॥ तस्य राक्षसराजस्य तथा त्वं कुरु राघव ॥ १० ॥
दृष्ट्वा तां तु पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् ॥ हतं च रावणं युद्धे दर्शनादुपधारय ॥ ११ ॥
अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये ॥ लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १२ ॥
सेतुर्बद्धः समुद्रे च यावल्लङ्कासमीपतः ॥ सर्वं तीर्णं च वै सैन्यं जितमित्युपधारय ॥ १३ ॥
इमे हि समरे शूरा हरयः कामरूपिणः ॥ शक्ता लङ्कां समानेतुं समुत्पाट्य सराक्षसाम् ॥ १४ ॥
तदलं विक्लवा बुद्धी राजन्सर्वार्थनाशिनी ॥ पुरुषस्य हि लोकेऽस्मिञ्शोकः शौर्यापकर्षणः ॥ १५ ॥

॥ ४ ॥ नापि सागरदुस्तरत्वं संतापनिमित्तमित्याह—समुद्रमिति ॥ न क्रमन्त इति नक्राः गजग्राहिमत्स्याः। महानक्रसमाकीर्णमपि समुद्रं लङ्घयित्वा लङ्कामारोहयिष्यामः। सेनामिति शेषः। ते रिपुं रावणं। हनिष्यामश्च। समुद्रलङ्घनलङ्कारोहणशत्रुवधार्थं न संतापः कार्य इत्यर्थः ॥ ५ ॥ एवं कारणाभावाच्छोकस्य नावकाश इत्युक्तं। सत्यपि कारणे स त्याज्य इत्याह—निरुत्साहस्येति ॥ शोकपर्याकुलात्मनः शोकव्याकुलमनसः। अतएव निरुत्साहस्य। सर्वार्थाः सर्वप्रयोजनानि। व्यवसीदन्ति नश्यन्ति। सः शोकं व्यसनं चाप्नोति। शोकादनुत्साहः। अनुत्साहाद्दैन्यं। दैन्यादर्थनाशः। अर्थनाशाच्चापत्प्राप्यत इत्यर्थः। तस्माच्छोकस्त्याज्य इति भावः ॥ ६ ॥ नापि सहायानुपपत्तिश्शोकनिमित्तमित्याह—इम इति ॥ शूराः पराक्रमशालिनः। समर्थाः उपायकुशलाः। नः अस्माकं संबन्धिनः। सर्वे इमे हरियूथपाः त्वत्प्रियार्थं पावकमपि प्रवेष्टुं कृतोत्साहाः। किमुतान्यत्कर्तुमिति भावः ॥ ७ ॥ कुत एषामुत्साहस्त्वयावगत इत्याह—एषामिति अर्धमेकं वाक्यं ॥ एषां यूथपानां। हर्षेण मुखप्रसादानुमानेन जानामि। एषां उत्साहमितिशेषः। अस्मिन् उत्साहे। मम दृढः अप्रशिथिलः। तर्कश्चास्ति ॥ ८ ॥ फलितमाह—विक्रमेणेति ॥ पापकर्माणं सीताहरणरूपपापकर्मयुक्तं। ते रिपुं रावणं हत्वा सीतां विक्रमेण यथा समानेष्ये तथा त्वमुत्साहं कर्तुमर्हसि ॥ ९ ॥ तथा त्वं कर्तुमर्हसीत्युक्तं विशिनष्टि—सेतुरिति ॥ अत्र समुद्रे। सेतुर्यथा बध्येत यथा तां पुरीं पश्येम तथा त्वं कुरु। तथोपायं चिन्तयेत्यर्थः ॥ १० ॥ दर्शनमात्रेण किं सेत्स्यति तत्राह—दृष्ट्वेति ॥ तां पुरीं दृष्ट्वा दर्शनादेव हेतोः रावणं हतमवधारय ॥ ११ ॥ सेतुर्बध्य इति कोयं निर्बन्ध इत्याशङ्क्या(वश्यकत्व)न्यथा अशक्यत्वमन्वयव्यतिरेकाभ्यामाह—अबद्ध्वेत्यादिश्लोकद्वयेन ॥ अबद्ध्वा सागर इत्यादि स्पष्टं। लङ्कासमीपतः लङ्कासमीपे। यावत् यावत्काले। सेतुर्बद्धो भवति तावत्काले। सर्वं सैन्यं तीर्णं जितं चेत्युपधारय। कर्तरि निष्ठा ॥ १२—१३ ॥ तरणमात्रेण जयित्वे हेतुमाह—इमे हीति ॥ १४ ॥ उपसंहरति—तदिति ॥ तत् उक्तरीत्या शोकनिमित्तासंभवात्। विक्लवा शोक-

आज्ञा यस्यसतथा। पण्डितः आगमजज्ञानोवा ॥ ४ ॥ **रामानु०** शोकाक्रान्तस्यतवदर्शनेनममाप्युत्तरकर्तव्यंनस्फुरति। तस्माच्छोकं परित्यज। यथाममोत्साहोभवेत्तथायत्नंकुर्विंतिभावः ॥ **स०** यथारिपुंहत्वासीतां विक्रमेण पराक्रमेण। वेर्गरुडस्यक्रमइवक्रमस्तेन समानेष्ये। तथेत्युत्साहंकर्तुमर्हसि। यथाऽहंसमानेष्ये तथात्वमुत्साहंममप्रोत्साहनंकर्तुमर्हसीतिवा ॥ ९ ॥ **ती०** तीर्णंजितमिति कर्तरिनिष्ठा। अत्रावधारणचकाराभ्यांराक्षससैन्यकृतविघ्नबाहुल्येसत्यपिअप्रतिहतंतरिष्यतिजेष्यतिचेत्युक्तंभवति ॥ १३ ॥ **ति०** तत्

[ पा० ] १ क. ग. रावणं. २ ङ. झ. ट. सर्वतो. ख. छ. ज. सर्वेते. ३ घ. सेतुमत्रयथाबद्ध्वा. ४ ङ. च. छ. झ. ट. देवधारय. ५ क. च. ञ. नासादितुं. ६ ङ. झ. ट. मेसैन्यं. ७ ख. ग. छ. धार्यतां. ८ झ. ट. तथाहिसमरेवीराः. ९ झ. ञ. तदलंविक्लबांबुद्धिंराजन्सर्वार्थनाशनीं. १० ख. ग. च. छ. ज. न्सर्वविनाशिनी.

यत्तु कार्यं मनुष्येण शौण्डीर्यमवलंबता ॥ [ तदलंकरणायैव कर्तुर्भवति सत्वरम् ॥ ]
अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा ॥ १६ ॥
शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ॥ विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः ॥१७॥
त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः ॥ मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि ॥ १८ ॥
न हि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव ॥ गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १९ ॥
वानरेषु समासक्तं न ते कार्यं विपत्स्यते ॥ अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥ २० ॥
तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ॥ निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥२१॥
लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः ॥ सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २२ ॥
[ लङ्घिते तत्र तैः सैन्यैर्जितमित्येव निश्चिनु ॥ ] सर्वं तीर्णं च मे सैन्यं जितमित्युपधारय ॥२३॥
इमे हि हरयः शूराः समरे कामरूपिणः ॥ तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ २४ ॥
कथंचित्संतरिष्यामस्ते वयं वरुणालयम् ॥ हतमित्येव तं मन्ये युद्धे संमितिनन्दन ॥ २५ ॥

परवशा । अतएव सर्वार्थनाशिनी बुद्धिः अलं मा भूत् । "अलं भूषणपर्याप्तिशक्तिवारणवाचकं" इत्यमरः । तत्र हेतुमाह—पुरुषस्येति । शौर्यापकर्षणः शौर्यनाशनः ॥ १५ ॥ न केवलं शोकत्यागः स्वत्वावलम्बनं च कार्यमित्याह—यत्त्विति ॥ शौण्डीर्यं शौर्यं । "शौण्डी गर्वे" इति धातोरौणादिके ईरन्प्रत्यये शौण्डीरश्शूरः अस्य भावश्शौण्डीर्यं तत् । अवलम्बता अवलम्बमानेन । शौर्यप्रधानेनेत्यर्थः । मनुष्येण पुरुषेण । यत्कार्यं संपाद्यं तत्सत्त्वं धैर्यं बलं वा । तेजसा पराक्रमेण सह अस्मिन्काले आतिष्ठ अवलम्बस्व ॥ १६ ॥ ननु नायं शोकस्सागरतरणादिनिमित्तकः किंतु सीतानवलोकनादिनिमित्त इत्यत्राह—शूराणामिति ॥ विनष्टे अन्तर्हिते । "णश अदर्शने" इति धातोर्निष्ठा ॥ १७ ॥ पुनश्च रामं प्रोत्साहयति—त्वमिति ॥ इह इदानीं ॥ १८ ॥ न हि तिष्ठेत् स्थातुं नशक्नुयात् ॥ १९ ॥ वानरेषु समासक्तं वानरमूलमित्यर्थः । न विपत्स्यते न विनङ्क्ष्यति ॥२०॥ उपसंहरति—तदिति ॥ आलम्ब्यालं । नालम्बस्वेत्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः । क्रोधस्यालम्ब्यत्वे हेतुमाह—निश्चेष्टा इति । निश्चेष्टाः निरुद्योगाः । क्षत्रियाः मन्दाः मन्दभाग्याः । चण्डस्य चण्डात् । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः ॥ २१ ॥ एवं सेतुबन्धेन सर्वार्थसिद्धेः शोको न कार्य इत्युक्त्वा सेतुबन्धोपायो विचार्यतामित्याह—लङ्घनार्थमिति ॥ लङ्घनार्थं लङ्घनहेतुं । "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धनुश्शास्त्रे वस्तुहेतुनिवृत्तिषु" इति वैजयन्ती ॥ २२ ॥ सेतुबन्धोपाये निर्णीते ततः परं सुकरमित्याह—सर्वमिति ॥ २३ ॥ उक्तेर्थे पूर्वोक्तं हेतुमनुवदति—इमे हीति ॥ विधमिष्यन्ति धक्ष्यन्ति ॥ २४ ॥ मा भूत्सेतुबन्धः प्रकारान्तरेणापि समुद्रं तीर्त्वा शत्रून् हनिष्यामीत्याह—कथंचिदिति ॥ कथंचित् केनाप्युपायेन । नन्दतीति नन्दनः । नन्द्यादित्वात् ल्युः । समित्यां युद्धे नन्दन युद्धोत्सुकेतिया-

तस्मात् विक्लबां सर्वार्थनाशिनींबुद्धिमवलंब्यालं । हि यतः शौर्यापकर्षणः तन्नाशकः ॥ १५ ॥ ति० मन्दाः शत्रुविषयक्रोधहीनाः ॥ २१ ॥ ती० सर्वमित्यर्धमेकंवाक्यं । अत्रयावत्तावच्छब्दावध्याहार्यौ । जितमितिभावेनिष्ठा । मेसैन्यंयावत्तीर्णंतावत्तेमजितमित्युपधारय । लङ्घितेतस्यतैस्सैन्यमितिक्वचित्पाठः । तस्यार्थः । समुद्रेलङ्घितेतैर्वानरैस्तस्यरावणस्यसैन्यंजितमित्युपधारयेत्यर्थः ॥ २३ ॥ इतिद्वितीयःसर्गः ॥ २ ॥

[ पा० ] १ झ. शौटीर्यमवलंब्यतां. २ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ३ ङ. झ. ट. तत्त्वं. ४ ङ. च. छ. जेतुंत्वमर्हसि. झ. ट. जेतुंसमर्हसि. ५ ख. च. छ. ञ. आनयिष्यामितेसीतां. ६ इदमर्धं क, ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ७ ख. ग. झ. त्ववधार्यतां. च. छ. त्युपधार्यतां. ८ घ. शूराविक्रान्ताः. ९ ङ. झ. ट. कथंचित्परिपश्यामिलङ्घितं. क.—घ. कथंचित्परिपश्यामस्त्वंवयं. १० ङ. झ. ट. शत्रुनिबर्हण.

किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् ॥ निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥२६॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ॥ ३ ॥

श्रीरामेणहनुमन्तंप्रति स्वस्यसेतुबन्धाद्यन्यतमोपायेनवानराणांसागरतारणसामर्थ्योक्तिपूर्वकं लङ्कायादुर्गादिभिःपरिरक्षण-प्रकारप्रश्नः ॥१॥ हनुमता तंप्रति विस्तरेणतत्प्रकारनिवेदनेनसहस्वकृतसंक्रमादिविध्वंसननिवेदनपूर्वकं स्वस्याङ्गदादिकतिपय-वीरसाहित्येन बाहुप्लवनेनैव लङ्कागमनपूर्वकं सर्वराक्षसविध्वंसनशक्तिनिवेदनेन तदर्थमाज्ञाप्रार्थनम् ॥ २ ॥

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवित् ॥ प्रतिजग्राह काकुत्स्थो हनुमन्तमथाब्रवीत् ॥ १ ॥
तपसा सेतुबन्धेन सागरोच्छोषणेन वा ॥ सर्वथा सुसमर्थोसि सागरस्यास्य लङ्घने ॥ २ ॥
कति दुर्गाणि दुर्गाया लङ्काया ब्रूहि तानि मे ॥ ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥ ३ ॥
बलस्य परिमाणं च द्वारदुर्गक्रियामपि ॥ गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ॥ ४ ॥
यथासुखं यथावच्च लङ्कायामसि दृष्टवान् ॥ सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥ ५ ॥
श्रुत्वा रामस्य वचनं हनूमान्मारुतात्मजः ॥ [ प्रणम्य शिरसा रामं प्राञ्जलिः सुसमाहितः ॥ ]
वाक्यं वाक्यविदांश्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६ ॥
श्रूयतां सर्वमाख्यास्ये दुर्गकर्म विधानतः ॥ गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥ ७ ॥

वत् ॥ २५ ॥ निमित्तानुसारेणापि भवतो जयसिद्धिरित्याह—किमुक्त्वेति ॥ सर्वथा सेतुं बद्ध्वा अबद्ध्वा वा । निमित्तानि नेत्रस्फुरणादीनि । मनो मे संप्रहृष्यतीति मनःसंप्रहर्षश्च कार्यसिद्धिनिमित्तमिति भावः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

एवं मानुषभावनानुसारेण समुद्रस्य दुस्तरत्वेन शोकापन्नोपि सुहृदुपदेशेन प्रतिष्ठापितधैर्यो रामः नीतिशास्त्रानुसारेण संहार्यशत्रुदुर्गस्वरूपशोधनाय पृच्छति—सुग्रीवस्येत्यादिना ॥ सारग्राहित्वमाह—परमार्थविदिति । हेतुमत् युक्तियुक्तं । वचः श्रुत्वा प्रतिजग्राह ॥ १ ॥ तपसा तपःप्रभावेन । तरसेति पाठे तरसा वेगेन । लङ्घने तरणे ॥ २ ॥ एवमुपायचिन्तनेन समुद्रस्य दुस्तरत्वमविगणय्य दुर्गस्वरूपं पृच्छति–कतीति ॥ दुर्गायाः दुष्प्रापायाः । लङ्कायाः कति दुर्गाणि कति दुर्गप्राकाराः । सन्तीत्यर्थः । जलगिरिस्थलात्मकानि दुर्गाणि । तत् दुर्गविशेषवत्त्वं । मे ब्रूहि । पूर्वमेवोक्तमित्यत्राह—ज्ञातुमिति । तत्पूर्वं श्रुतं सर्वं । दर्शनादिव प्रत्यक्षत इव । विशदं ज्ञातुमिच्छामि । बलस्य सेनायाः । परिमाणं इयत्तां । द्वारदुर्गक्रियां द्वारेषु दुर्गक्रियां कीलखननजलौघप्लवनकरणादिभिः दुर्गमत्वकरणं । गुप्तिकर्म प्राकारपरिघादिनिर्माणं । सदनानि गृहाणि । ज्ञातुमिच्छामीति पूर्वेणान्वयः ॥ ३–४ ॥ यथासुखं निश्शङ्कं । यथावत् तत्त्वेन । लङ्कायां पूर्वोक्तं सर्वं दृष्टवानसि । तत्त्वेन दृष्टप्रकारेणैव । आचक्ष्व व्यक्तं वद । सर्वथा द्रष्टुं वक्तुं च ॥ ५ ॥ अथाब्रवीत् कार्त्स्न्येनाब्रवीत् । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोअथ" इत्यमरः ॥ ६ ॥ दुर्गकर्मविधानतः दुर्गकर्म प्राकारपरिखाखननादि । तद्विधानतः तन्निर्माणेन गुप्तेति संबन्धः । राक्षसाः स्निग्धाः स्वामिनि भक्ताः तेजसासंपादितामितिशेषः । विभागं तत्र तत्र

स० परमार्थः अवतारमुख्यार्थः रावणमारणादिः तद्वत् । तद्घटकमितियावत् ॥ १ ॥ ति० तपसा तपःकार्यसंकल्पसिद्ध्या । अतएवसकलस्वपुरवर्तिप्राणिनांब्रह्मलोकनयनंवक्ष्यमाणंसंगच्छते । सेतुबन्धेन गङ्गायांगाङ्गेयेनशरैरिव । सागरोच्छोषणेन दिव्या-

[ पा० ] १ ख. संप्रसीदति. २ ख. इतितस्यवचः. च. छ. तस्यतद्वचनं. ३ ङ. झ. ट. लङ्कायास्तद्ब्रवीष्वमे. क. ख. ग. च. छ. ज. ञ. लङ्कायास्तद्ब्रवीहिमे. ४ च. छ. ञ. श्रोतुमिच्छामि. ५ ग. ङ. च. ज. लङ्कायां. ६ इदमर्धं क. ख. पाठयोर्दृश्यते.

राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा ॥ परां समृद्धिं लङ्कायाः सागरस्य च भीमताम् ॥
विभागं च बलौघस्य निर्देशं वाहनस्य च ॥ ८ ॥
एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्त्वतः ॥ ९ ॥
हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला ॥ महती रथसंपूर्णा रक्षोगणसमाकुला ॥
वाजिभिश्च सुसंपूर्णा सा पुरी दुर्गमा परैः ॥ १० ॥
दृढबद्धकवाटानि महापरिघवन्ति च ॥ द्वाराणि विपुलान्यस्याश्चत्वारि सुमहान्ति च ॥ ११ ॥
तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च ॥ आगतं परसैन्यं तु तत्र तैः प्रतिहन्यते ॥ १२ ॥
द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः ॥ शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥१३॥
सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः ॥ मणिविद्रुमवैडूर्यमुक्ताविरचितान्तरः ॥ १४ ॥
सर्वतश्च महाभीमाः शीततोयवहाः शुभाः ॥ अगाधा ग्राहवत्यश्च परिखा मीनसेविताः ॥ १५ ॥
द्वारेषु तासां चत्वारः संक्रमाः परमायताः ॥ यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः ॥ १६ ॥
त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति ॥ यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः ॥ १७ ॥

विभज्य स्थापनं । बलौघस्य चतुरङ्गबलसमूहस्य । निर्दिश्यते इयत्तया परिच्छिद्यतेऽनेनेति निर्देशः संख्या तं ॥ ७-८ ॥ एवमित्यर्धं ॥ एवमुक्त्वा उक्तरीत्या वक्ष्यमाणं संग्रहेण प्रतिज्ञाय ॥ ९ ॥ हृष्टप्रमुदिता अत्यन्तहृष्टजना ॥ १० ॥ दृढेति आयसकीलादिभिर्दृढघटितकवाटानि । महापरिघवन्ति महार्गलवन्ति । "अर्गले काचके वंशे योगे प्राकारगोपुरे । अस्त्रे घटे मुद्गरे च परिघः परिपठ्यते" इतिनिघण्टुः । सुमहान्ति उन्नतानि ॥ ११ ॥ तत्र तेषु द्वारेषु । इषूपलयन्त्राणि शरशिलाक्षेपकयन्त्राणि । बलवन्ति दृढानि महान्ति विपुलानि सन्तीति शेषः । तैः यन्त्रैः । तत्र द्वारेषु । प्रतिहन्यते प्रतिबध्यते ॥ १२ ॥ संस्कृताः सज्जीकृताः । शिताः तीक्ष्णाः । कालायसमयाः अयस्सारमयाः । क्लीबभाव आर्षः । "अनोश्मायस्सरसां जातिसंज्ञयोः" इति समासान्तः । शतं घ्नन्तीति शतघ्न्यः मुद्गरविशेषाः । "अमनुष्यकर्तृके च" इति ठक् । शतशः बहुशः । रचिताः स्थापिताः ॥ १३ ॥ तस्याः प्राकारो दुष्प्रधर्षणः दुरारोह इत्यर्थः । मणयः पद्मरागाः ॥ १४ ॥ सर्वतः प्राकारमभितः परिखाः सन्तीति शेषः । शीततोयत्वेन दुष्प्रवेशत्वमुक्तं ॥ १५ ॥ द्वारेषु द्वारसमीपप्रदेशेषु । सामीप्ये सप्तमी । तासां परिखानां संबन्धिनः । परिखोपरिक्लृप्ता इत्यर्थः । संक्रमाः दारुफलकनिर्मितसंचारमार्गाः । "संक्रमः क्रमणे सम्यग्द्वारसंचारयन्त्रके" इति विश्वः । परमायताः अतिविपुलाः । यन्त्रैः संक्रमावकीर्यकैः । महद्भिरिति यन्त्रविशेषणं । गृहपङ्क्तिभिः रक्षिजनावासस्थानपङ्क्तिभिः । उपेताः सन्तीतिशेषः ॥१६॥ संक्रमाणामुपयोगमाह—त्रायन्त इति ॥ तत्र द्वारप्रदेशेषु । परसैन्यागमेसति संक्रमाः त्रायन्ते पुरीमिति शेषः । कथमित्यत्राह—यन्त्रैरिति । यन्त्रैः संक्रमफलकविक्षेपयन्त्रैः । परिखासु परिखोपरि । समन्ततः अवकीर्यन्ते क्षिप्यन्ते । सर्वथा परिखाजलोपरि फलका निक्षिप्यन्ते । शत्रुसैन्यागमेतु ता उत्क्षिप्यन्ते । तेन दुर्गपरिखाजलेन प्राकारसमीपगमनं न शक्यत इति श्लोकतात्पर्यं ॥ १७ ॥

स्वबलतइतिशेषः ॥ सर्वथा सर्वप्रकारस्यलङ्घनोपायस्यविद्यमानत्वादित्याशयः ॥ २ ॥ **स०** स्निग्धाः रावणेपरस्परंचस्नेहवन्तः । तथाश्रृणु । स्निग्धाइत्यनेन भेदनोपायासाध्यत्वंसूचयति ॥ ८ ॥ **ती०** शतघ्नीनाम सकृत्प्रयोगाच्छतमारिकाःचतुर्वितस्तिप्रमाणा मुद्गरविशेषाः ॥ "शतघ्नीचचतुर्हस्तागदितालोहकण्टकी" इतिवैजयन्ती ॥ १३ ॥ **स०** परसैन्यागमेसति । अनेनगमनमेवदुर्घटमितिसूचयति ॥ १७ ॥

[ पा० ] १ ङ. झ. ट. तलवित्. २ ङ. च. छ. झ. ञ. ट. गणनिषेविता. ३ ख. ग. ङ. ज.—ट. प्रतिसैन्यंतैस्तत्रप्रतिनिवार्यते. क. घ. च. छ. परसैन्यंतैस्तत्रप्रतिनिवार्यते. ४ ट. सौवर्णस्सुमहान्. झ. सौवर्णस्तुमहान. घ. ससौवर्णमयस्तस्याः. ५ ङ. च. छ. झ. ञ. ट. शीततोयामहाशुभाः. ६ घ. मीनसंकुलाः.

एकस्त्वकम्प्यो बलवान्संक्रमः सुमहादृढः ॥ काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च शोभितः ॥ १८ ॥
स्वयं प्रकृतिसंपन्नो युयुत्सू राम रावणः ॥ उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ १९ ॥
लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा ॥ नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम् ॥ २० ॥
स्थिता पारे समुद्रस्य दूरपारस्य राघव ॥ नौपथोपि च नास्त्यत्र निरादेशश्च सर्वतः ॥ २१ ॥
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ॥ वाजिवारणसंपूर्णा लङ्का परमदुर्जया ॥ २२ ॥
परिखाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ॥ शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥ २३ ॥
अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् ॥ शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ॥ २४ ॥
नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् ॥ चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ॥ २५ ॥
प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् ॥ चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः ॥ २६ ॥
न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् ॥ रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ॥ २७ ॥
शतशोथ सहस्राणि मध्यमं स्कन्धमाश्रिताः ॥ यातुधाना दुराधर्षाः साग्रकोटिश्च रक्षसाम् ॥२८॥

तेषु संक्रमेषु। एकः उत्तरद्वारस्थः। बलवान् स्थौल्यवान्। सुमहादृढः अत्यन्तवृद्धसंघटनः । अतएवाकम्प्यः । स्तम्भैः संक्रमाधारार्थं परिखासु स्थापितैः स्तम्भैः । वेदिकाभिः रक्षिजनाधारार्थाभिर्वितर्दिकाभिः ॥१८॥ प्रकृतिसंपन्नः द्यूतादिव्यसनरूपविचाररहितः । अप्रमत्तः सावधानः । बलानां सैन्यानां । अनुदर्शने प्रतिदिनमवलोकननिमित्तं । उत्थितः जागरूकः । स्वयं युयुत्सुः सर्वदा युद्धोद्यतः । तिष्ठतीतिशेषः ॥ १९ ॥ लङ्का पुनः लङ्का तु । निरालम्बा टङ्कच्छेदमसृणीकृतत्रिकूटशिखरस्थितत्वादारोहणालम्बनरहिता । देवदुर्गा देवैरपि दुष्प्रापा । लङ्का नादेयादिरूपेण चतुर्विधदुर्गं च चतुर्विधदुर्गप्राकारवतीत्यर्थः । नादेयं नद्यां भवं । जलदुर्गमित्यर्थः । पार्वतं पर्वतस्थं । वनानां समूहो वन्या तत्संबन्धि वान्यं । कृत्रिमं क्रियया निर्वृत्तं। प्राकारपरिखादिमत् स्थलमित्यक्षरार्थः ॥ २० ॥ दूरे पारं यस्य सः दूरपारः तस्य। विशालस्येत्यर्थः । पारे दक्षिणतीरे स्थिता । अत्र समुद्रे । नौपथः नौसंचारश्च नास्ति । अतएव सर्वतः निरादेशश्च । आदेशो वार्तासंचारः तद्रहितः अयं देश इत्यर्थः ॥ २१ ॥ वनगिरिदुर्गवत्त्वमाह—शैलाग्र इति ॥२२॥ कृत्रिमदुर्गवत्त्वमाह—परिखा इति ॥ २३ ॥ विभागं च बलौघस्येति रामप्रश्नस्योत्तरमाह—अयुतमिति ॥ अत्र लङ्कायां । सर्वे पूर्वद्वारस्थाः। अयुतं दशसहस्रं । अग्रे सेनाग्रे युध्यन्त इत्यग्रयोधिनः । खड्गैरग्रयोधिनः सर्वे अयुतसंख्याकाः सर्वेपितथाविधा इत्यर्थः ॥ २४ ॥ अत्र लङ्कायां । चतुरङ्गेण सैन्येन सह रक्षसां नियुतं दक्षिणद्वारमाश्रितं । तत्र चतुरङ्गबलेषु । योधाः पदातयः । अनुत्तमाः अत्यन्तशूराः । भवन्तीत्यर्थः ॥ २५ ॥ सर्वे पश्चिमद्वारवासिनः । सर्वास्त्रकोविदाः समस्तास्त्रज्ञाः ॥ २६ ॥ अश्ववाहाश्चेति चकारेण गजवाहास्समुच्चीयन्ते । कुलपुत्राः सत्कुलप्रसूताः । विश्वसनीया इति यावत्। सुपूजिताः रावणेन बहुमताः । किंकरा इति शेषः ॥ २७ ॥ अथेति कार्त्स्न्ये । शतशः सहस्राणि अनेकसहस्राणि । दुराधर्षाः यातुधानाः राक्षसाः । मध्यमं स्कन्धं नगरमध्यमस्थानं । आश्रिताः ।

**शि०** बलवान् बहुसेनाविशिष्टः । सुमहादृढः शैथिल्यसंसर्गरहितइत्यर्थः । अतएवाकंप्यः परैःकंपयितुमशक्यः । काञ्चनैः स्तंभैर्वेदिकाभिश्चशोभितः एकःसंक्रमोस्तीतिशेषः । एतेन तेनैवरावणोनिर्गच्छतिप्रविशतिचेतिसूचितं ॥ १८ ॥ **शि०** प्रकृतिं स्वस्वभावं । आपन्नः मद्यपानादावपिस्वभावपरिणामरहितइत्यर्थः ॥ १९ ॥ **स०** निरालंबा अंबरलंबिनीतिनिरालंबेव निरालंबा नितरां दृढाइतियावत् । आलंबः पर्वतशिखरादिरूपआश्रयोयस्यास्सा । देवदुर्गा देवानामपिदुस्साधगमना । निरालंबादेव प्रतीयमानाश्रयाभावादेव दुर्गेतिवा । दुर्गा दुष्टांगतिमापन्नोदुःखंप्राप्तोवातस्याभयावहेतिवा ॥ २० ॥ **स०** निरुद्देशः वृथाभूमिः । निरादेशइतिपाठे आज्ञांविनागम्यप्रदेशः । नास्तीत्युभयत्रान्वेति ॥ २१ ॥

[ **पा०** ] १ झ. ञ. ट. प्रकृतिमापन्नो. २ क. ख. च. छ. ज. ञ. लङ्कापुरीनिरा. ३ क. ग.—ट. नौपथश्चापि. ४ ङ. झ. ट. निरुद्देशश्च. ५ घ. शतकोटिश्च.

ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः ॥ दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ॥ २९ ॥
बलैकदेशः क्षपितो राक्षसानां महात्मनाम् ॥ ३० ॥
येन केन च मार्गेण तराम वरुणालयम् ॥ हतेति नगरी लङ्का वानरैरवधार्यताम् ॥ ३१ ॥
अङ्गदो द्विविदो मैन्दो जाम्बवान्पनसो नलः ॥ नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ ३२ ॥
प्लवमाना हि गत्वा तां रावणस्य महापुरीम् ॥ सपर्वतवनां भित्त्वा सखातां सप्रतोरणाम् ॥
सप्राकारां सभवनामानयिष्यन्ति राघव ॥ ३३ ॥
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् ॥ मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः ॥ ४ ॥

सुग्रीवेणरामचोदनयातदुक्तप्रकारेणवानरसैन्यानांसुमुहूर्तेलङ्कांप्रतिप्रस्थानायाज्ञापनम् ॥ १ ॥ सुग्रीवादिभिर्हनुमदङ्गदारूढाभ्यांरामलक्ष्मणाभ्यांसहरामोक्तप्रकारेणसर्वतःसेनारक्षणपूर्वकंलङ्कांप्रतिप्रस्थानम् ॥ २ ॥ प्रयाणसमयेलक्ष्मणेनरामंप्रति स्वपरजयापजयसूचकशुभाशुभशकुनप्रदर्शनपूर्वकंसमाश्वासनम् ॥ ३ ॥ रामेणसुग्रीवादिभिःसह क्रमेणमलयाद्यतिक्रमेण महेन्द्रगिरिमेत्यतच्छिखरारोहणेनसागरावलोकनम् ॥ ४ ॥ हनुमदंसादवतीर्यसमुद्रवेलावनमुपगतेनरामेणसुग्रीवंप्रतिसेनासंनिवेशननियोजनपूर्वकंसागरतरणोपायनिर्धारणायमन्त्रचोदना ॥ ५ ॥

श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः ॥ ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ १ ॥
यां निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः ॥ क्षिप्रमेनां मथिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २ ॥

---

सर्वसंख्यामाह—साग्रेति । रक्षसां साग्रकोटिः पूर्णकोटिः । अत्र लङ्कायां अस्तीति शेषः ॥ २८ ॥ एवं दुर्गप्राकारवर्णनेन लघूनां भीतिर्मा भूदिति स्वकृतं दर्शयति—ते मयेति ॥ परिखा इत्यादावपि तच्छब्दोनुसंधेयः ॥२९॥ बलैकदेश इत्यर्धमेकान्वयं॥ बलैकदेशः सेनाचतुर्थांश इत्यर्थः । महात्मनां महाकायानां ॥ ३० ॥ तपसा सेतुबन्धेनेत्येवं रामोक्तमेव सम्यगित्याह–येनेति ॥ मार्गेण उपायेन।तराम तरिष्यामः । व्यत्ययेन लोट् । वरुणालयं समुद्रं ॥ ३१॥ पक्षान्तरमाह–अङ्गद इत्यादिसार्धश्लोकद्वयेन ॥ अङ्गदादयः प्लवमानाः समुद्रं लङ्घितवन्तः । सखातां सपरिखां । सप्रतोरणां सबहिर्द्वारां आनयिष्यन्ति। बलशेषेण किं। उक्ताङ्गदादिव्यतिरिक्तबलशेषेण किं प्रयोजनमिति योजना ॥ ३२—३३ ॥ सर्वसंग्रहं । संगृह्यत इति संग्रहः बलानां मध्ये सर्वसारभूतं बलं अङ्गदादिकं आज्ञापय । एवं प्लवमाना इत्याद्युक्तरीत्या आज्ञापयेत्यर्थः । युक्तेन यात्रायोग्येन ॥ ३४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

---

एवं लङ्काया दुर्गकर्मबलपरिमाणादौ हनुमता कथिते रामः कियन्मात्रमिदमिति न्यक्कृत्य तदानीमेव दण्डयात्रामाज्ञापयति—श्रुत्वेति ॥ महातेजाः महाबलः । सत्यपराक्रमः अमोघविक्रमः । आभ्यां निर्भयत्वे हेतुरुक्तः । अब्रवीत् सुग्रीवमिति शेषः ॥ १ ॥ निवेदयसे हनुमन्मुखेन निवेदयसि । मथिष्यामि

---

ति० परिखाश्चावपूरिताः शिलेष्टकादिभिरितिशेषः ॥ चेनबलैकदेशक्षयोपिकृतइत्यर्थः ॥ २९ ॥ ति० एवमिति । एवं प्रधानैरेवकार्यसाधनमिष्टंचेत्क्षिप्रमिदानीमेवानयतेत्याज्ञापय । यदि बलानांसर्वसंग्रहं बलसंमेलनमुद्दिश्य बलानामपिपारनयनमिष्टं तदा युक्तेन यात्रोचितेनमुहूर्तेनप्रस्थानं स्वयात्रामभिरोचय ॥ ३४ ॥ इतितृतीयःसर्गः ॥ ३ ॥

स० "किंतस्यशत्रुहननेकपयःसहायाः" इत्याद्युक्तप्रकारेणस्वमतमावेदयति—यदिति । यदित्यव्ययं यामित्यर्थे । यांलङ्काम-

[ पा० ] १ क. ध. दुरात्मनां. २ ख. लङ्कांवैसप्र. ङ. झ. ट. सखातांचसतोरणां. क. सपताकांसतोरणां. ज. सखातां सप्रतोलिकां. ३ घ. ज. मैथिलीं. ४ क. ख. दनुभाषितं. ५ ङ. झ. ट. यन्निवेदयसे. ६ ङ. झ. ट. ठ. वधिष्यामि.

अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचये ॥ युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥ ३ ॥
अस्मिन्मुहूर्ते विजये प्राप्ते मध्यं दिवाकरे ॥ सीतां हृत्वा तु मे जातु काऽसौ यास्यति यास्यतः ॥४॥
सीता श्रुत्वाऽभियानं मे आशामेष्यति जीविते ॥ जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वा विषमिवातुरः ॥५॥
उत्तराफल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ॥ अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ६ ॥
[ मुहूर्तेन च युक्तेन प्रस्थानमभिरोचय ॥ ] निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति च ॥
निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥ ७ ॥
उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम ॥ विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ८ ॥

शरैर्ध्वंसयिष्यामि ॥ २ ॥ कुत इत्यत्राह—युक्त इति । युक्तः यात्रार्हः । तत्र हेतुः । विजयः विजयावहः । विजयावहत्वे हेतुमाह—दिवाकरः । मध्यं दिने मध्यं प्राप्तः । अभिजिन्मुहूर्त इत्यर्थः । तदुक्तं विद्यामाधवीये—“ आर्द्रोरगमित्रमखावसुजलविश्वाभिजिद्विरिश्चेन्द्राः । ऐन्द्राग्निमूलवरुणार्यमभगतारा दिवा मुहूर्ताः स्युः ” इति ॥ नन्वभिजिन्मुहूर्ता दक्षिणयात्रासु निषिद्धाः । यथा ज्यौतिष्करत्नाकरे—“ भुक्तौ दक्षिणयात्रायां प्रतिष्ठायां द्विजन्मनि । आधाने च ध्वजारोहे मृत्युदः स्यात्सदाभिजित् ” इति ॥ उच्यते । लङ्का हि दक्षिणपूर्वस्यां किष्किन्धायाः । अतो नेयं दक्षिणयात्रेति नोक्तदोषः ॥ ३ ॥ मुहूर्तविशेषे प्रयाणस्य फलं दर्शयति—अस्मिन्निति ॥ दिवाकरे मध्यं प्राप्ते विजयाख्ये अस्मिन्मुहूर्ते यास्यतो मे यास्यति मयि । असौ रावणः । सीतां हृत्वा जातु कदाचित् क यास्यति । यत्र कुत्रापि यान्तं तं हनिष्यामीत्यर्थः । सीतां हृत्वा तु मे यात्विति पाठे यातु राक्षसः । “ नैर्ऋतो यातुरक्षसी ” इत्यमरः । यद्वा यातु गच्छतु । क यास्यतीत्यन्वयः ॥ ४ ॥ अद्यैव सागरतरणोपायचिन्तां विना निर्गमस्य फलमाह—सीतेति ॥ मे अभियानं प्रस्थानं । सीता श्रुत्वा जीविते आशामेष्यति । श्रवणं च त्रिजटादिभ्य इति ज्ञेयं । निर्गमं विना केवलं विचाराकुलेष्वस्मासु जीविते सा निराशा स्यादिति भावः । कथमिव । विषं पीत्वा आतुरः पीडितः । पुरुषः जीवितान्ते प्राणात्यये प्राप्ते । अमृतं स्पृष्ट्वेव ॥ ५ ॥ तर्हि कदाऽस्माभिः प्रस्थाप्यं तत्राह—उत्तरेति ॥ अद्य दिने उत्तराफल्गुनीनक्षत्रं वर्तते । श्वः उत्तरदिने । हस्तेन योक्ष्यते । चन्द्र इति शेषः । हस्तो रामस्य निधनतारा । उत्तराफल्गुनी तु साधनतारा । अतोऽद्यैव सर्वानीकसमावृताः सन्तः अभिप्रयाम गच्छेम । अत्रोत्तराफल्गुनीत्यनेन स दिवसः फाल्गुनपौर्णमासीत्यवगम्यते । इदमुत्तरत्र प्रतिपादयिष्यते ॥ ६ ॥ यानि निमित्तानि धन्यानि तानि प्रादुर्भवन्ति । अतो रावणं निहत्य सीतामानयिष्यामि । जानकीमिति विशेषणेन जनकप्रीत्यर्थं चावश्यं सा आनेतव्येति व्यज्यते ॥ ७ ॥ उपरिष्टात् उपरि । स्फुरमाणमिदं मम नयनं । मनोरथं मनोरथविषयभूतं जयं । समनुप्राप्तं सम्यक्समीपे प्राप्तं । शंसतीव । स्पष्टं बोधयतीत्यर्थः । तथोक्तं ज्योतिश्शास्त्रे—“ नेत्रस्याधस्स्फुरणमसकृत्सङ्गरे भङ्गहेतुर्नेत्रोपान्ते

तिदुर्गमांनिवेदयसे कथयसि । तामेतांक्षिप्रमेववधिष्यामि । प्रकृत्यन्तरस्येदंरूपं । वधिष्यामीत्यनेन लङ्कानाशेऽन्यनैरपेक्ष्यंसूचयति ॥ तेतुभ्यमितिहनुमन्तंप्रत्युक्तिः ॥ २ ॥ ति० सुग्रीवप्रयाणमितिषष्ठीतत्पुरुषः ॥ स० राजत्वात्सुग्रीवंकटाक्षीकृत्याह—अस्मिन्निति । अस्मिन् अभिजिन्नामकेमुहूर्ते प्रयाणमितोस्मन्निर्गममभिरोचये । अभिरोचयेतिपाठे अनुमोदस्वेत्यर्थः । सुग्रीवप्रयाणमित्यैकपद्येनहनुमदाभिमुख्येनवचनमित्यङ्गीकारे “ अभिप्रयामसुग्रीवसर्वानीकसमावृताः ” इत्यग्रिमग्रन्थानानुगुण्यंस्फुटं ॥ मध्यं नभोमध्यं । दिवाकरोयतःप्राप्तः तस्मात् विजये विजयप्रदेमुहूर्ते । युक्तः निर्गमइतिशेषः । युक्तोमुहूर्तोविजयइतिप्रथमान्तपाठःस्फुटार्थः ॥ ३ ॥ ति० आतुरः जीवितान्ते जीवितनाशप्राप्तौ । अमृतं अमृतत्वसाधनंदिव्यौषधं । स्पृष्ट्वा द्रवरूपममृतंपीत्वाच यथाजीविताशामेति तद्वत् ॥ ५ ॥ ति० ममताराबलमस्तीत्याह—उत्तरेति । पुनर्वसुजातस्यहस्तोवधतारा। उत्तराचसीतायाजन्मतारा । बद्धजन्मतारायांतन्मोचनार्थयात्रायामवश्यंतन्मुक्तिरितिभावः । अद्यामान्तमानेनमार्गशीर्षकृष्णाष्ट-

[ पा० ] १ क. च.—ट. मभिरोचय. २ ङ. ट. प्राप्तोमध्यंदिवाकरः. ३ ङ. झ. ट. हत्वातुतद्यातु. ४ ख.—ङ. झ. ञ. ट. जीवितः. ग. च. छ. वेगितः. ५ ङ. झ. पीत्वाऽमृतं. ६ इदमर्धं ख. च. छ. पाठेषुदृश्यते. ७ ङ. झ. ट. पश्यामि. क. ख. सौम्यानि. ८ क. ख. छ. ञ. प्रादुर्भवन्तिमे. ९ ख. च. छ. ञ. संख्येह्यानयिष्यामि.

ततो वानरराजेन लक्ष्मणेन च पूजितः ॥ उवाच रामो धर्मात्मा पुनरप्यर्थकोविदः ॥ ९ ॥
अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् ॥ वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ १० ॥
फलमूलवता नील शीतकाननवारिणा ॥ पथा मधुमता चाशु सेनां सेनापते नय ॥ ११ ॥
दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् ॥ राक्षसाः परिरक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ॥ १२ ॥
निम्नेषु वनदुर्गेषु वनेषु च वनौकसः ॥ अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥ १३ ॥
यच्च फल्गु बलं किंचित्तदत्रैवोपयुज्यताम् ॥ एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुध्यताम् ॥ १४ ॥
सागरौघनिभं भीममग्रानीकं महाबलाः ॥ कपिसिंहाः प्रकर्षन्तु शतशोथ सहस्रशः ॥ १५ ॥
गजश्च गिरिसंकाशो गवयश्च महाबलः ॥ गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥ १६ ॥
यातु वानरवाहिन्या वानरः प्लवतां वरः ॥ पालयन्दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १७ ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ॥ यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥ १८ ॥
यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् ॥ अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १९ ॥
अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ॥ सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ २० ॥

हरति नयनं नेत्रमूले च मृत्युः । नेत्रस्योर्ध्वे हरति सकलं मानसं दुःखजातं वामे चैवं फलमविकलं दक्षिणे वैपरीत्यं " इति ॥ एवं वचने विद्यमाने दक्षिणनयनमिति व्याख्यानं चिन्त्यं ॥ ८ ॥ पूजितः युक्तमिति श्लाघितः । अर्थकोविदः नीतिशास्त्रनिपुणः ॥ ९ ॥ नीतिशास्त्रमनुस्मरन् सेनासंविधानं दर्शयति—अग्र इति ॥ १० ॥ मार्गमवेक्षितुं यात्विति सुग्रीवं प्रत्युक्तमात्रेण सन्निहितं नीलं प्रत्याह—फलेति ॥ ११ ॥ मार्गशोधनप्रकारमाह दूषयेयुरिति । विषादिनेति शेषः । परिरक्षेथा इत्यात्मनेपदमार्षं । उद्यतः सावधान इत्यर्थः ॥ १२ ॥ शोधनान्तरमाह —निम्नेष्विति ॥ निम्नेषु गर्तप्रदेशेषु वनदुर्गेषु वनैःजलैः दुर्गेषु दुर्गमप्रदेशेषु । " जीवनं भुवनं वनं " इत्यमरः । वनेषु काननेषु च । निहितं रन्ध्रे प्रहारार्थं स्थापितं । बलं परसैन्यं । वनौकसः वानराः । अभिप्लुत्य अभित उत्प्लुत्य । पश्येयुः ॥ १३ ॥ शोधनान्तरमाह—यदिति ॥ यत्किंचिद्बलं फल्गु असारं । तत् अत्रैव किष्किन्धायामेव । उपयुज्यतां स्थाप्यतां । किंचिदित्यनेन तादृशं बलमत्र दुर्लभमिति सूचितं । अत्र युक्तिवक्ति—एतदिति । एतत् घोरं कृत्यं विक्रमेण प्रयुध्यतां । आर्षः शतृप्रत्ययः । विक्रमेण शक्त्या । ये युध्यन्ते तेषामेव नान्येषामित्यर्थः । विक्रमेणोपयुज्यतामिति पाठे विक्रमेणोपयुज्यमानानां । विक्रमयुक्तानामित्यर्थः । क्रियापदत्वे संप्रधारणायां लोङ्डिदितव्यः ॥ १४ ॥ अथ " यतश्च बलमाशङ्की ततो विस्तारयेद्बलं " इत्युक्तरीत्या बहवो बलिनोग्रे सेनां कर्षन्त्वित्याह—सागरेति ॥ सागरौघनिभं सागरस्य प्रवाहो यदि भवेत्तत्तुल्यमित्यर्थः । शतशोथ सहस्रशः । शतशः सहस्रशश्च संघीभूयेत्यर्थः ॥ १५ ॥ " अथ सेनाबलाध्यक्षौ सर्वदिक्षु निवेशयेत् " इत्युक्तरीत्या निवेशयति—गज इति ॥ गवामग्रे दृप्ताः वृषभा इवेति संबन्धः ॥ १६ ॥ दक्षिणं पश्चिमपार्श्वमित्यर्थः । " यतश्च भयमाशङ्कि तां प्राचीं परिकल्पयेत् " इति कामन्दकोक्तेः । प्लवतां वानराणां ॥ १७ ॥ गन्धहस्ती मत्तगजः । तरस्वी बलवान् । सव्यं प्राचीभागं । अधिष्ठितः अधिष्ठाता । कर्तरि क्तः ॥ १८ ॥ मध्यगमनप्रयोजनमाह—अभिहर्षयन्निति । "प्रहर्षयेद्बलं व्यूह्य " इत्युक्तेः । ईश्वरः इन्द्रः । तथैवौचित्यात् । गवां पतिमिवेश्वर इति वा पाठः ॥ १९ ॥ अङ्गदेन संयातु अङ्गदमारुह्य संयात्वित्यर्थः । सार्वभौ-

म्यांकृष्णसप्तम्यांवा । मार्गशीर्षपूर्णिमोत्तरंतदन्यतरस्मिन्नुत्तराऽलाभात् । अभिप्रयामेतिप्रश्नेलोट् ॥ ६ ॥ ति० यच्चफल्गु निस्सारंबलं बालवृद्धादिलक्षणंयुद्धानर्हंतदत्रैवोपपद्यतांतिष्ठतु । हियस्मात्एतन्नःकृत्यं युद्धरूपं घोरं । अतोविक्रमेणविक्रमोपपन्नबलेन प्रयुज्यतां । यात्रेतिशेषः ॥ १४ ॥ ती० यस्यमदगन्धादितरेहस्तिनोद्रवन्ति सगन्धहस्ती ॥ १८ ॥

[ पा० ] १ ङ. ट. झ. ट. सुपूजितः. २ घ. उवाचवचनंरामो. ३ ङ. झ. ट. पथिरक्षेथाः. ४ क. ख. ग. ङ. छ. झ. ञ. ट. प्रयुज्यतां. ५ झ. ट. पतिः.

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ ऋक्षराजो [1]महासत्त्वः कुक्षिं रक्षन्तु ते त्रयः ॥ २१ ॥
[ [2]पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥ जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ] ॥ २२ ॥
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ॥ व्यादिदेश [3]महावीर्यान्वानरान्वानरर्षभः ॥ २३ ॥
ते वानरगणाः सर्वे समुत्पत्य [4]युयुत्सवः ॥ गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २४ ॥
ततो वानरराजेन लक्ष्मणेन च पूजितः ॥ जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २५ ॥
शतैः शतसहस्रैश्च कोटीभिरयुतैरपि ॥ वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥
तं यान्तमनुयाति स्म महती हरिवाहिनी ॥ २६ ॥
[5]दृप्ताः प्रमुदिताः सर्वे [6]सुग्रीवेणाभिपालिताः ॥ आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवंगमाः ॥
क्ष्वेलन्तो [7]निनदन्तस्ते जग्मुर्वै दक्षिणां दिशम् ॥ २७ ॥
भक्षयन्तः सुगन्धीनि मधूनि च फलानि च ॥ उद्वहन्तो महावृक्षान्मञ्जरीपुञ्जधारिणः ॥ २८ ॥
अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च ॥ [8]पततश्चाक्षिपन्त्यन्ये [9]पातयन्त्यपरे परान् ॥ २९ ॥
रावणो नो निहन्तव्यः सर्वे च रजनीचराः ॥ इति गर्जन्ति हरयो राघवस्य समीपतः ॥ ३० ॥
पुरस्तादृषभो वीरो नीलः कुमुद एव च ॥ पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह ॥ ३१ ॥
मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च ॥ बहुभिर्बलिभिर्भीमैर्वृताः शत्रुनिबर्हणाः ॥ ३२ ॥
हरिः शतबलिर्वीरः कोटीभिर्दशभिर्वृतः ॥ सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ ३३ ॥
कोटीशतपरीवारः केसरी पनसो गजः ॥ [10]अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ॥ ३४ ॥

मेन उत्तरदिग्गजेन । भूतेशः यक्षेशः । द्रविणाधिपतिः धनाधिपतिः। अत्र त्वं च शिबिकामारुह्य आवाभ्यामागच्छेति सिद्धम् ॥ २० ॥ ऋक्षराजः जाम्बवद्भ्राता । कुक्षिं पश्चाद्भागं । जाम्बवान् सुषेणः वेगदर्शी चेति त्रयः महासत्त्वः ऋक्षराजश्च कुक्षिं रक्षन्त्वित्यन्वयः ॥ २१—२२ ॥ व्यादिदेश रामोक्तं सर्वं कुरुतेत्याज्ञापयामास ॥ २३ ॥ पुप्लुविरे प्लुतगतिं चक्रिरे ॥ २४ ॥ पूजितः पुरस्कृत इत्यर्थः । धर्मात्मा नीतिरूपधर्मज्ञ इत्यर्थः ॥ २५ ॥ ययौ राम इतिशेषः । हरिवाहिनी पूर्वोक्तबलवानरभिन्ना ॥ २६ ॥ गच्छतामवस्थाविशेषान् दर्शयति—दृप्ता इत्यादिना ॥ दृप्ताः गर्विताः । आप्लवन्तः मण्डलाकारं भ्रमन्त इत्यर्थः । गर्जन्तः मेघध्वनिं कुर्वन्तः । घनगर्जितमिति प्रसिद्धिः । क्ष्वेलन्तः सिंहनादं कुर्वन्तः । “ क्ष्वेला तु सिंहनादः स्यात् ” इत्यमरः । निनदन्तः अव्यक्तं शब्दायमानाः । “ णद अव्यक्ते शब्दे ” इति धातुः । भक्षयन्तः पिबन्तः । उद्वहन्तः विलासार्थं हस्ते धारयन्तः ॥ २७—२८ ॥ सहसा । तरसा । निर्वहन्ति उद्वहन्ति । क्षिपन्ति पातयन्ति । अन्ये पतन्तः सन्तः। परान् पातयितृन् । आक्षिपन्ति। प्रतीकारकरणासामर्थ्येन परिभाषणं कुर्वन्तीत्यर्थः । अपरे शक्ताः । परान् पातयितॄन् । पातयन्ति ॥ २९ ॥ नः अस्माभिरित्यर्थः ॥ ३० ॥ अत्र पूर्वं रामेण मार्गरक्षणाय ये नीलादयो नियुक्ताः ततोन्ये कुमुदादयस्तु रामभक्त्युत्साहेन स्वयमेव प्रवृत्ता इति ज्ञेयं । ऋषभोदक्षिणपार्श्वरक्षणाय नियुक्तो भक्त्या पराक्रमातिशयेन च अत्रापि रक्षणं कृतवानिति ज्ञेयं ॥ ३१ ॥ मध्ये त्विति । जग्मुरिति शेषः ॥ ३२ ॥ अवष्टभ्य अधिष्ठाय ॥ ३३ ॥ गजस्याग्रभागनियुक्तस्यापि पार्श्वरक्षणं भक्त्यतिशयात् । अत्र कार्यकरणा-

ति० अयमृषभोदक्षिणपार्श्वविनियुक्तादन्योनीलसहकारी ॥ ३१ ॥ ति० सर्वांवाहिनीमवष्टभ्यैकोररक्ष । समन्ततोभ्रमन्सन्रक्षतिस्मेत्यर्थः ॥ ३३ ॥ ति० केसर्यादीनांचतुर्णांद्वौद्वौतत्र्यबलस्यदक्षिणंवामंचैकैकंपार्श्वमभिरक्षतइत्यर्थइतिकतकः । एषगजः

[ पा० ] १ ङ.—ट. महाबाहुः. २ अयंश्लोकः क. ख. च. छ. पाठेषुदृश्यते. ३ ग. ङ. च. छ. झ. ञ. ट. महावीर्यो वानरान्. ४ ङ. च. छ. झ. ट. महौजसः. ५ क.—ट. हृष्टाः. ६ क. ख. च. छ. ञ. सुषेणपरिपालिताः. ७ ङ. च. झ. ञ. ट. निनदन्तश्च. क.—घ. ज. विनदन्तस्ते. ८ क.—ट. पतन्तश्चोत्पतन्त्यन्ये. ९ घ. ङ. ट. पातयन्तःपरे. १० ङ. ज. झ. ट. अर्कश्चबहुभिःपार्श्वं. ग. ऋक्षश्चातिबलः.

सुषेणो जाम्बवांश्चैव ऋक्षैश्च बहुभिर्वृतौ ॥ सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ ३५ ॥
तेषां सेनापतिर्वीरो नीलो वानरपुङ्गवः ॥ संपतन्पततां श्रेष्ठस्तद्बलं पर्यपालयत् ॥ ३६ ॥
दरीमुखः प्रजङ्घश्च रम्भोऽथ रभसः कपिः ॥ सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवङ्गमान् ॥ ३७ ॥
एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः ॥ अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् ॥
सरांसि च सुफुल्लानि तटाकानि वनानि च ॥ ३८ ॥
रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ॥ वर्जयन्नगराभ्याशांस्तथा जनपदानपि॥ ३९ ॥
सागरौघनिभं भीमं तद्वानरबलं महत् ॥ उत्ससर्प महाघोषं भीमघोष इवार्णवः ॥ ४० ॥
तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ॥ तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ॥ ४१ ॥
कपिभ्यामूह्यमानौ तौ शुशुभाते नरोत्तमौ ॥ महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ ॥ ४२ ॥
ततो वानरराजेन लक्ष्मणेन च पूजितः ॥ जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥४३॥
तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा ॥ उवाच परिपूर्णार्थः स्मृतिमान्प्रतिभानवान् ॥४४॥
हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ॥ समृद्धार्थः समृद्धार्थामयोध्यां प्रति यास्यसि॥ ४५॥
महान्ति च निमित्तानि दिवि भूमौ च राघव ॥ शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥ ४६ ॥

रकेसर्यादयश्च पूर्वं नियुक्ता एवेत्याहुः । अत्र पूर्वनियुक्तानां गन्धमादनादीनामप्युपलक्षणं । एकं पार्श्वं सव्यं पार्श्वं । अभिरक्षतीत्यस्य प्रत्येकमभिसंबन्धः । व्यत्ययेनलट् ॥ ३४ ॥ ऋक्षैरावृतत्वं जाम्बवत एव । तत्संबन्धात् सुषेणस्यापि । जघनं पश्चाद्भागम् ॥३५॥ संपतन् । मार्गशोधनाय पुरो गच्छन्नपि पर्यपालयत् । सेनापतित्वात्सर्वतो ररक्षेत्यर्थः ॥ ३६—३७ ॥ अपश्यन् दूरादिति शेषः । सुफुल्लानि सुफुल्लपद्मकह्लाराणि ॥ ३८ ॥ भीतवत् भीतं । कर्तरि क्तप्रत्ययः । वर्जयत् दूरतः परिहरत् । उत्ससर्प जगामेति संबन्धः । सागरौघनिभमिति विपुलतायां साम्यं । भीमघोष इवार्णव इति घोषे ॥ ३९—४० ॥ दाशरथेः पार्श्व इति । तन्मुखोल्लासायेति भावः ॥ ४१ ॥ हनुमदङ्गदाभ्यामूह्यमानौ रामलक्ष्मणौ । महाग्रहाभ्यां शुक्रबृहस्पतिभ्यां । संस्पृष्टौ संयुक्तौ । चन्द्रसूर्याविव शुशुभाते । अत्र उपमाने चतुर्ग्रहसंयोगस्य बहुजनविनाशहेतुत्वात् हनुमदङ्गदाभ्यां रामलक्ष्मणयोगस्य महासेनाविनाशकत्वं गम्यत इत्यलंकारेण वस्तुध्वनिः । संस्पृष्टपदेन हनुमदङ्गदयोर्लाघवातिशयकथनात् पदगतवस्तुना वस्तुध्वनिः ॥ ४२ ॥ पुनः सुदूरगमनसूचनायाह—तत इति ॥ ४३ ॥ परिपूरणार्थः परिपूर्णमनोरथः । स्मृतिमान् निमित्तशास्त्रार्थस्मरणवान् । प्रतिभानवान् तात्कालिकबुद्धिमान् ॥ ४४ ॥ वक्ष्यमाणनिमित्तश्रवणे श्रद्धामुत्पादयितुं प्रथमं तत्फलं दर्शयति—हृतामिति ॥ रावणं हत्वा वैदेहीमवाप्स्यसीतिक्रमः ॥ ४५ ॥ कुतोयं निश्चय इत्यत्राह—महान्तीति ॥ महान्ति दुर्लभानि । दिवि भूमौ च यानि शुभानि निमित्तानि सर्वाणि तवार्थसिद्धये पश्यामि । अर्थसिद्धिकराणि पश्यामीत्यर्थः ॥ ४६ ॥

पूर्वभागनियुक्तादन्यइतितीर्थः ॥ ३४ ॥ ति० महद्भ्याग्रहाभ्यां राहुकेतुभ्यां । संस्पृष्टौ अर्धभागेस्पृष्टौचन्द्रभास्कराविव । महद्भ्यामर्धसंस्पृष्टावितिपाठान्तरं । स० ग्रहाभ्यां शुक्रबृहस्पतिभ्यां । "कविकाव्ययुतज्योत्स्नाकान्तवत्सव्यरोचत" इत्युक्तेः । लक्ष्मणपक्षेचन्द्रोनिदर्शनं । रामपक्षेभास्करः । ततश्चकविकाव्याभ्यांसकान्तिश्चन्द्रइव वाहनसाहित्येनसकान्तिर्लक्ष्मणः । सूर्यप्रकाशाभिभूतप्रकाशस्तयोरिवरामप्रकाशाभिभवोवाहनरुचोरितिनिदर्शनविवेकोद्रष्टव्यः ॥ ४२ ॥

[ पा० ] १ क. ख. घ. ऋक्षैर्बहुभिरावृतः. २ ङ. झ. ट. संयतश्चरतां. क. च छ. समन्तात्पततां. ३ घ. ङ. झ. ट. वलीमुखः. ४ घ. ङ. झ. ट. जंभोथ. ५ ख. शरभः. ६ क. ख. ग. ङ.—ट. गच्छन्ति. ७ घ. मददर्पिताः. ८ ङ. झ. ट. अपश्यन्त. ९ ङ. झ. ट. गिरिशतायुतं. क. ख. ग. च. छ. ञ. द्रुमशतायुतं. घ. द्रुमलतावृतं. १० क. ग. ङ. झ. ट. वराणिच. ख. घ. च. छ. ञ. महान्तिच. ज. सरांसिच. ११ क. ख. ग. च.—झ. ट. निस्ससर्प. १२ क. च. उवाच चमहाप्राज्ञः, १३ ग. वचनंप्रतिभानवान्.

अनुवाति शुभो वायुः सेनां मृदुहितः सुखः ॥ पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः ॥ ४७ ॥
प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः ॥ उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गतः ॥ ४८ ॥
ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ॥ अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ४९ ॥

सुखःसुखकरः । शीत इत्यर्थः । मृदुहितः मृदुः मार्दवयुक्तः । हितः अनुकूल इत्यर्थः । शुभः भाविशुभसूचकः वायुः सेनां अनुवाति अनुसृत्य वाति । पूर्णवल्गुस्वराः अन्यूनापरुषस्वराःसन्तः प्रवदन्ति ॥ ४७॥ भौमनिमित्तान्युक्त्वा दिव्यनिमित्तान्याह—त्वामनुगतः । तवानुकूलदिशि स्थित इत्यर्थः । यद्वा अनुगतः पश्चाद्भागं गतः । पुरः शुक्रस्य यात्रासु प्रतिषेधादिति भावः । तथोक्तं ज्यौतिषे—“ प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । अपि शक्रेण सदृशो हतसैन्यो निवर्तते ” इति ॥ उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गत इत्यनेनावतारकाले जातकफलसूचनवद्रामस्यानुकूलं गोचारफलं दर्शयति विपरीतफलं राक्षसानां च । तथाहि किष्किन्धातः आग्नेयदिग्वर्तिनीं लङ्कां प्रति गच्छतो रामस्यानुकूलः शुक्र इत्युच्यते । सूर्यस्थराशेः पुरोराशिस्थो हि भवति शुक्रः । सूर्यश्च तदानीं मीनस्थः । उत्तराफल्गुनी ह्यद्येति प्रयाणदिनकथनात् । फाल्गुनपौर्णमास्यां हि रामस्य दण्डयात्रेति पूर्वमुक्तं । तदाच शुक्रो मेषस्थः । अतो रामस्य कर्कटराशेर्मेषो हि दशमोनुकूलः । पूर्वोक्तदिग्वर्तिनीं लङ्कां प्रति गच्छतो रामस्य पश्चात्स्थितत्वाच्च शुक्रोऽनुकूल एव । शुक्रानुकूल्योक्तिर्बृहस्पत्याद्यानुकूल्योपलक्षणं । सह्यवतारकाले कर्कटकस्थः । तदपेक्षयाष्टत्रिंशद्वर्षयुद्धयात्राकालः । तथाच त्रिरावृत्त्या षट्त्रिंशद्वर्षेषु गतेषु रामस्याष्टत्रिंशद्वर्षे युद्धारम्भे गुरोः सिंहस्थितिः सिद्धा । गुरुर्द्वितीयता रामस्यानुकूला । शनिश्चावतारकाले तुलावर्गोत्तमस्थः । द्वितीयावृत्तौ तुलावृश्चिकयोः पञ्चवर्षेण गतयोः सार्धवर्षद्वयेनातीतेन धनुरतीत्य तदानीं मकरस्थितियोग्योपि कथंचिद्धनुर्वर्गोत्तमस्थ एव शनिः । राहुस्तु अवतारकाले सिंहस्थः । ततोष्टत्रिंशद्वर्षेस्मिन्कटकस्थितियोग्योप्यतिचारादिभिर्मिथुनस्थः । तत्सप्तमे धनुषि केतुः । उक्तं चात्रापि—“ मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ” इति । धूमाकारः केतुर्धूमकेतुः । तथाच धनुषि शनिकेतू रामस्य षष्ठस्थावनुकूलौ । अङ्गारकस्तु रामरावणयुद्धप्रसङ्गे, “ आक्रम्याङ्गारकस्तस्थौ विशाखे अपि चाम्बरे ” इत्युक्त्या विशाखाचतुर्थपादे वृश्चिकराशौ तिष्ठति । रामस्य पञ्चमाङ्गारकत्वफलमिदं । यदेतद्ब्रह्मास्त्रबन्धरुधिरमोहादि, बुधस्य प्रतिमासं रोहिणीस्थत्वयोगेपि रामरावणयुद्धप्रसङ्गे, “ प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् । समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः ” इत्युक्तं प्रजानामशुभावहत्वमतिचारवशादेव । स च रामस्य दशमस्थोऽनुकूलः । चन्द्रश्च उत्तराफल्गुनीस्थत्वात्कन्यास्थः । अतस्तृतीयचन्द्रो रामस्यानुकूलः । सूर्यो नवमस्थो रामस्यानुकूलः । राहुस्तु मिथुनस्थत्वाद्द्वादशस्थ इति किंचिद्बाधकः । राक्षसानामिदं सर्वं विपरीतं । तथाहि—राक्षसानां हि नक्षत्रं मूलं । तथाच धनू राशिः । तदपेक्षया पञ्चमस्थः शुक्रः प्रतिकूलः । जन्मराशिस्थौ शनिकेतू च प्रतिकूलौ । राहुस्तु सप्तमस्थः किंचिदनुकूलः । द्वादशस्थाङ्गारकश्च प्रतिकूलः । गुरुस्तु नवमस्थोनुकूलः । चतुर्थस्थः सूर्यः पञ्चमस्थो बुधश्च नानुकूलौ । दशमस्थश्चन्द्रः किंचिदनुकूलः । एवं प्रायेण ग्रहगोचारफलं राक्षसानां विपरीतमेवेति ॥ ४८ ॥ ब्रह्मराशिः अधीतसर्ववेद इत्यर्थः । विशुद्धः पापग्रहासंयुक्तः । इदं द्वयमपि भार्गवविशेषणं । परमर्षयः सप्तर्षयः । दक्षिणां दिशं प्रति गताः । प्रदक्षिणं तिष्ठद्गुप्रभृतित्वात्साधुः । आवर्तमाना इति शेषः

ती० मृदुहितसुखपदैःक्रमेणमान्द्यशैत्यसौरभ्याण्युच्यन्ते ॥ ४७ ॥ ती० ब्रह्मराशिरित्यस्यपादस्यपूर्वशेषंविहायान्योर्थउच्यते । ब्रह्मराशिरित्यत्रब्रह्मराशिशब्देन “ तत्रासतेमहात्मानऋषयोयेऽग्निहोत्रिणः । भूतारंभकृतंब्रह्मशंसन्तोऋत्विगुद्यताः । प्रारभन्ते लोककामास्तेषांपन्थाःसदक्षिणः ” इतिश्रीविष्णुपुराणोक्तेःपितृयाणमार्गस्थालोकाभिवृद्धिकामामहर्षयउच्यन्ते । तेषांराशिः संघः । विशुद्धः प्रसन्नः । परमर्षयः सप्तर्षयः । ध्रुवं औत्तानपादिं प्रदक्षिणंयथातथा आवर्तमानाइतिशेषः । प्रकाशन्तइतिसंबन्धः । सप्तर्षिसंनिवेशप्रकारस्तु—“ पूर्वभागेतुभगवान्मरीचिरुपरिस्थितः । वसिष्ठश्चसभार्योस्मात्पुरस्तादङ्गिरामुनिः । ततोत्रि-

[ पा० ] १ क. च. ज. स्वराश्चामी.

त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः ॥ पितामहवरोस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५० ॥
विमले च प्रकाशेते विशाखे निरुपद्रवे ॥ नक्षत्रवरमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५१ ॥
नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते ॥ मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ ५२ ॥
सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ॥ काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ॥ ५३ ॥
प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च ॥ प्रवान्त्यभ्यधिकं गन्धान्यथर्तुकुसुमा द्रुमाः ॥ ५४ ॥
व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो ॥ देवानामिव सैन्यानि सङ्ग्रामे तारकामये ॥ ५५ ॥
एवमार्य समीक्ष्यैतान्प्रीतो भवितुमर्हसि ॥ इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् ॥ ५६ ॥
अथावृत्य महीं कृत्स्नां जगाम महती चमूः ॥ ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ॥ ५७ ॥
कराग्रैश्चरणाग्रैश्च वानरैरुत्थितं रजः ॥ भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् ॥ ५८ ॥
सपर्वतवनाकाशां दक्षिणां हरिवाहिनी ॥ छादयन्ती ययौ भीमा द्यामिवाम्बुदसंततिः ॥ ५९ ॥

॥ ४९ ॥ पुरोहितः विश्वामित्रः । "सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः" इति बालकाण्डोक्तरीत्या विश्वामित्रसृष्टसप्तर्ष्यन्तर्गतवसिष्ठो वा । पितामहवरः पितामहेषु कूटस्थेषु श्रेष्ठः । इक्ष्वाकूणां प्रधानकूटस्थ इत्यर्थः ॥ ५० ॥ निरुपप्लवे क्रूरग्रहानाक्रान्ते । विशाखे इति द्विवचनं नक्षत्रद्वयात्मकत्वात् । विशाखाख्यं नक्षत्रवरमित्यर्थः । विशाखाया इक्ष्वाकुनक्षत्रत्वंज्यौतिषदर्पणे दर्शितं—"अश्विन्यां यदि केतुः" इत्यारभ्य "इक्ष्वाकुकुलनाथस्तु ह्यन्यतो यदि भवेद्विशाखास्थस्तु" इति ॥ ५१ ॥ स्वानुकूल्यमुक्त्वा परप्रातिकूल्यमाह—नैर्ऋतमिति ॥ नैर्ऋतं नैर्ऋतदैवतं । नैर्ऋतानां राक्षसानाम् । किं तन्नैर्ऋतं तस्य पीडा केनेत्याकाङ्क्षायामाह—मूल इति । मूलवता अन्तिकवता । "मूलं वशीकृतौ स्वीये शीर्षे तारान्तिकादिषु" इति वैजयन्ती । तेन धूमकेतुना स्पृष्टो मूलः मूलनक्षत्रं । धूप्यते संताप्यते । "धूप संतापे" इति धातुः ॥ ५२ ॥ ततः किमित्यत्राह—सर्वमिति ॥ एतन्नक्षत्रपीडनमेव राक्षसानां विनाशाय सर्वं अशुभसूचकनिमित्तजातं । समुपस्थितमित्यर्थः । तदेवोपपादयति—काल इति । कालगृहीतानां मृत्युगृहीतानां नक्षत्रं । काले अन्तकाले । ग्रहपीडितं भवति ॥५३॥ पुनरपि विजयसूचकान्याह—प्रसन्ना इत्यादिना ॥ द्रुमाः यथर्तुकुसुमाः ऋतुमनतिक्रम्य जातानि कुसुमानि येषां ते तथोक्ताः । अकालकुसुमोत्पत्तिर्ह्युत्पातः । स इदानीं नास्तीत्यर्थः । तथोक्तं वराहमिहिरेण—"शीतोष्णानां विपर्यासः फलपुष्पमकालजम् । अशोष्याणां विशोषश्च फलं षाण्मासिकं भवेत्" इति ॥ ५४ ॥ व्यूढानि कृतव्यूहानि । तारकस्य तारकासुरस्य आमयो वधो यस्मिन् सः तारकामयः तस्मिन् । यद्वा तारकायाः बृहस्पतिपत्न्याः आमयो मनोव्याधिः यस्मिन् । तादृशसंग्रामसंज्ञेयं । तथोक्तं श्रीविष्णुपुराणे—एवंच तयोरतीवोग्रः संग्रामस्तारकानिमित्तस्तारकामयो नामाभवदिति ॥ ५५ ॥ आश्वास्याब्रवीत् आश्वासनपूर्वकमब्रवीत् । अनेन प्रथमसर्गान्तोक्तः श्लोकोनुवृत्त इति ज्ञायते ॥ ५६ ॥ पुनरपि सेनायाः दूरगमनमाह—अथेति ॥ ऋक्षवानरशार्दूलैः ऋक्षशार्दूलैः वानरशार्दूलैश्च । शार्दूलशब्दः श्रेष्ठवाची ॥ ५७ ॥ अन्तर्दधे आच्छादयामास ॥ ५८ ॥ हरिवाहिनी दक्षिणां महीं अम्बुदसंततिर्द्यामिव छादयन्ती ययाविति संबन्धः ॥ ५९ ॥

स्तस्य चासन्नः पुलस्त्यः पुलहः क्रतुः" इति ॥ ४९ ॥ **ति०** सपुरोहितः भगवद्विश्वामित्रसृष्टस्वर्गसमीपवर्तिसप्तर्षिमण्डलमध्यवर्तिवसिष्ठसहितइत्यर्थः ॥ ईदृशस्त्रिशङ्कुरस्माकंपितामहोस्माकंपुरोभाति । तस्यदक्षिणदिक्स्थत्वात् । पितामहःपुरोस्माकमितिपाङ्कःपाठः इतिकतकः ॥ ५० ॥ **स०** मूलवता सीताहरणजन्यपापरूपकारणवता ॥ ५२ ॥ **ति०** गन्धाः अजन्तः । गन्धवन्तो वायवोऽधिकानप्रवान्ति मन्दंवान्तीत्यर्थः ॥ ५४ ॥

[ **पा०** ] १ च. छ. नक्षत्रमपि. क. ङ. झ. ञ. ट. नक्षत्रमति. २ ङ. झ. ट. प्रवान्तिनाधिकागन्धाः. ३ ङ. च. छ. झ. ट. हरिवाहिनी. ४ क. ख. च. छ. ञ. वानरगोपुच्छैः. ५ ङ. च. छ. झ. ट. दंष्ट्रायुधैरपि. ६ क. ख. महासेना. ग. ययौभूमिं. च. छ. ञ. महींभीमा.

उत्तरन्त्यां[1] च सेनायां संततं बहुयोजनम् ॥ नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत् ॥ ६० ॥
सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् ॥ समान्भूमिप्रदेशांश्च वनानि फलवन्ति च ॥
मध्येन च समन्ताच्च तिर्यक्चाधश्च साऽविशत् ॥ ६१ ॥
समावृत्य महीं कृत्स्नां जगाम महती चमूः ॥ ६२ ॥
ते हृष्टमनसः[2] सर्वे जग्मुर्मारुतरंहसः ॥ हरयो राघवस्यार्थे समारोपितविक्रमाः ॥ ६३ ॥
हर्षवीर्यबलोद्रेकान्[3]दर्शयन्तः परस्परम् ॥ यौवनोत्सेकजान्दर्पान्विविधांश्चक्रुरध्वनि ॥ ६४ ॥
तत्र केचिद्द्रुतं जग्मुरुत्पेतुश्च तथाऽपरे ॥ केचित्किलकिलां चक्रुर्वानरा[4] वनगोचराः ॥ ६५ ॥
प्रास्फोटयंश्च पुच्छानि सन्निजघ्नुः पदान्यपि ॥ भुजान्[5]विक्षिप्य शैलांश्च[6] द्रुमानन्ये बभञ्जिरे ॥ ६६ ॥
आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः ॥ महानादान्[7]विमुञ्चन्ति क्ष्वेलामन्ये प्रचक्रिरे ॥ ६७ ॥
ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः ॥ जृम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः ॥ ६८ ॥
शतैः[8] शतसहस्रैश्च कोटीभिश्च सहस्रशः ॥ वानराणां तु घोराणां[9] श्रीमत्परिवृता[10] मही ॥ ६९ ॥
सा स्म याति दिवारात्रं महती हरिवाहिनी ॥ हृष्टा[11] प्रमुदिता सेना सुग्रीवेणाभिरक्षिता[12] ॥ ७० ॥
वानरास्त्वरितं[13] यान्ति सर्वे युद्धाभिनन्दिनः ॥ प्रमोक्षयिषवः[14] सीतां मुहूर्तं क्वापि नासत[15] ॥ ७१ ॥

संततं निरन्तरं यथा भवति तथा उत्तरन्त्यां । विपरीतवत् वैपरीत्यवत् । भावप्रधानो निर्देशः । बहुयोजनं च यथा भवति तथा सस्यन्दुः ॥ ६० ॥ सरांसीत्यादिसार्धश्लोक एकान्वयः ॥ यथायोग्यं च संबन्धः । सरांसि शीतलसलिलतया मध्येनाविशत् । पर्वतान् द्रुमाकीर्णतया तिर्यगाविशत् । समान् भूमिप्रदेशान् समन्तादाविशत् । वनानि फलवत्तया अध आविशत् ॥ ६१ ॥ समावृत्येत्यर्धं ॥ ६२ ॥ मारुतरंहसः वायुवेगाः । समारोपितविक्रमाः अभिवृद्धविक्रमा इत्यर्थः । उद्रेकशब्दोतिशयवाची । दर्पान् दर्पजव्यापारान् ॥ ६३—६४ ॥ तान्विवृणोति—तत्रेत्यादिना ॥ किलकिलेति वानरशब्दानुकरणं ॥ ६५ ॥ प्रास्फोटयन् भूमावनास्फालयन् । सन्निजघ्नुः । भूमाविति शेषः । भुजान् विक्षिप्य प्रसार्य । द्रुमान् शैलांश्च बभञ्जिरे ॥ ६६ ॥ गिरिगोचराः गिरिचराः । क्ष्वेलां सिंहनादं ॥ ६७ ॥ ममृदुः मर्दनं चक्रुः ॥ ६८ ॥ श्रीमद्यथा भवति तथा परिवृता आसीदिति संबन्धः ॥ ६९ ॥ सेना इनेन स्वामिना सहिता ॥ ७० ॥ प्रमोक्षयिषवः मोचयितुमिच्छवः । सनि द्विर्वचनाभाव आर्षः । " मोक्ष निरसने " इत्यस्माद्धातोः सन्

ति० सर्वाणिनदीस्रोतांसि विपरीतवत् वैपरीत्येन । सस्यन्दुः । यथाऽभ्रेषुधावत्सुचन्द्रोधावतीव तद्वत्सेनागतिर्नदीप्रवाहेषुभ्रान्त्याभातिस्मेत्यर्थइतिकतकः । वस्तुतोनदीषुवानराणांप्रवाहाभिमुखंतरणेतैराहतानिजलानिविपरीतवहनानीत्यर्थः ॥ ६० ॥ ति० साविशत् अयंद्वितीयोवासइतिप्रतीयते ॥ ६१ ॥ स० समारोपितविक्रमाः त्वदपेक्षयाममबलमधिकमितिपरस्परमारोपितपराक्रमाः । उत्साहविशेषवन्तइतियावत् ॥ ६३ ॥ ति० श्रीमत् लुप्ततृतीयान्तं । श्रीमद्भिरित्यर्थः ॥ अयंतृतीयोवासः । स० श्रीमत्परिवृता श्रीमद्भिः सुघोराणांवानराणांमध्ये श्रीमद्भिःपरिवृता । श्रीमत्परिवृता श्रियंराक्षससंपदंमथ्नन्तीतिश्रीमथः । तैः परिवृतेति सुघोराणांवानराणांमहीजातेतिवा ॥ ६९ ॥ ति० दिवारात्रं मध्यरात्रएवयाममात्रंवासइत्याशयः ॥ स० दिवारात्रं अहोरात्रं । याममात्रवासइत्याशयः । उत्तरत्रदिवेतिशेषइतिचनागोजिभट्टः । अखण्डाहोरात्रमित्यर्थःस्वरसः । " मुहूर्तंक्कापिनावसन् " इत्युत्तरग्रन्थस्वारस्यात् । शेषंविनान्वयसंभवाच्च ॥ ७० ॥ ति० प्रमोक्षयिषवः मोक्षशब्दात्तत्करोतीतिणौसनि आर्षेअभ्यासलोपेउप्रत्ययेचरूपं । प्रमोचयितुमिच्छावन्तइत्यर्थः ॥ नावसन् दिवेतिशेषः ॥ ७१ ॥

[ पा० ] १ ग. ङ. झ. उत्तरन्त्याश्चसेनायाः. २ ङ. च. झ. ञ. ट. हृष्टवदनाः. ३ झ. हर्षवीर्यबलोद्रेकान्. ४ क. ख. ञ. वारणोपमाः. ५ क. ख. भुजैरुत्क्षिप्य. ६ ख. शैलेन्द्रान्. ७ ङ. झ. ट. नादान्प्रमुञ्चन्ति. ख. नादान्विमुञ्चन्तः. च. ञ. नादान्प्रमुञ्चन्तः. ८ ङ. झ. ट. ततःशत. ९ क. ख. ग. ङ. च. झ. ञ. ट. सुघोराणां. १० क. ख. ज. ञ. यूथैःपरिवृता. ११ ख. ग. ङ. झ. ट. प्रहृष्टमुदिताःसर्वेसुग्रीवेणाभिपालिताः. १२ क. घ. च. छ. पालिता. १३ क.—ट. त्वरिताः. १४ क. ख. ग. च. छ. ज. ञ. मुमोक्षयिषवः. १५ ङ. झ. ट. नावसन्. ख. नासते.

ततः पादपसंबाधं नानामृगसमायुतम् ॥ सह्यपर्वतमासेदुर्मलयं च महीधरम् ॥ ७२ ॥
काननानि विचित्राणि नदीप्रस्रवणानि च ॥ पश्यन्नतिययौ रामः सह्यस्य मलयस्य च ॥ ७३ ॥
बकुलांस्तिलकांश्चूतानशोकान्सिन्धुवारकान् ॥ करवीरांश्च तिमिशान्भञ्जन्ति स्म प्लवङ्गमाः ॥ ७४ ॥
अङ्कोलांश्च करञ्जांश्च प्लक्षन्यग्रोधतिन्दुकान् ॥ जम्बूकामलकान्नीपान्भञ्जन्ति स्म प्लवङ्गमाः ॥ ७५ ॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ॥ वायुवेगप्रचलिताः पुष्पैरवकिरन्ति तान् ॥ ७६ ॥
मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः ॥ षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ ७७ ॥
अधिकं शैलराजस्तु धातुभिः सुविभूषितः ॥ ७८ ॥
धातुभ्यः प्रसृतो रेणुर्वायुवेगविघट्टितः ॥ सुमहद्वानरानीकं छादयामास सर्वतः ॥ ७९ ॥
गिरिप्रस्थेषु रम्येषु सर्वतः संप्रपुष्पिताः ॥ केतक्यः सिन्धुवाराश्च वासन्त्यश्च मनोरमाः ॥ ८० ॥
माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः ॥ चिरिबिल्वा मधूकाश्च बकुलाः प्रियकास्तथा ॥ ८१ ॥
स्फूर्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ॥ चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः ॥ ८२ ॥
मुचुलिन्दार्जुनाश्चैव शिंशुपाः कुटजास्तथा ॥ धवाः शाल्मलयश्चैव रक्ताः कुरवकास्तथा ॥ ८३ ॥
हिन्तालास्तिमिशाश्चैव चूर्णका नीपकास्तथा ॥ नीलाशोकाश्च वरणा अङ्कोलाः पद्मकास्तथा ॥
प्लवमानैः प्लवङ्गैस्तु सर्वे पर्याकुलीकृताः ॥ ८४ ॥

॥ ७१ ॥ ततः दिवारात्रान्ते ॥ ७२ ॥ सह्यस्य मलयस्य च काननानीत्यन्वयः । सह्यमलयौ नाम मार्गवर्तिनौ कौचित्पर्वतौ ॥७३॥ बकुलान् केशरवृक्षान् । तिलकान् क्षुरकवृक्षान् । चूताः प्रसिद्धाः अशोकाश्च । सिन्धुवारकान् निर्गुण्डीवृक्षान् । करवीराः प्रसिद्धाः । तिमिशान् नेमिवृक्षान् ॥ ७४ ॥ अङ्कोलान् निकोचकवृक्षान् । करञ्जान् नक्तमालवृक्षान् । प्लक्षान् जटीवृक्षान् । न्यग्रोधान् वटान् । तिन्दुकान् स्फूर्जकवृक्षान् । जम्बूकामलकाः प्रसिद्धाः । नीपाः कदम्बाः ॥ ७५ ॥ प्रस्तरेषु शिलासु । स्थिता इति शेषः । वायुवेगः वानरसेनावेगजवायुवेगः ॥ ७६—७७ ॥ वानराणां धातुरेणुरूषितत्वं वक्तुं पर्वतस्य धातुमत्तामाह— अधिकमिति ॥ अर्धमेकं वाक्यं । शैलराजः सह्यः ॥ ७८ ॥ विघट्टितः उत्थापितः ॥ ७९ ॥ गिरिप्रस्थेत्यादिसार्धपञ्चश्लोक्येकान्वया ॥ पुष्पिता इत्येतत्सर्वविशेषणं । अतस्तस्य बहुशः प्रयोगः । वसन्ते पुष्प्यन्तीति वासन्त्यः । इदं माधवीविशेषणं । "कालात्साधुपुष्प्यत्पच्यमानेषु" इत्यण् । गन्धैः पूर्णाः गन्धपूर्णाः । कुन्दाः । चिरिबिल्वाः नक्तमालाः । मधूकाः गुडपुष्पाः । वञ्जुलाः वानीराः । प्रियकाः बन्धूकाः ॥ ८०—८१ ॥ स्फूर्जकाः तिन्दुकवृक्षाः । नागवृक्षाः नागकेसराः । पाटलयः पाटलाः । कोविदाराः चमरकाः ॥ ८२ ॥ मुचुलिन्दाः खर्जूरविशेषाः । अर्जुनाः ककुभाः । शिंशुपाः पिच्छिलाः । कुटजाः जयवृक्षाः । धवाः धुन्धुरवृक्षाः । शाल्मलयः मोचाः । "पिच्छिला पूरणी मोचा चिरायुः शाल्मलिर्द्वयोः" इत्यमरः ॥ ८३ ॥ हिन्तालाः तालविशेषाः । चूर्णकाः आमलकविशेषाः । नीपकाः कदम्बाः । वरणाः वारुणाः । पद्मकाः सुगन्धिपुष्पा वृक्षविशेषाः । एवंभूतावृक्षाः प्लवमानैः प्लवंगैः पर्याकुलीकृता इत्यन्वयः ॥ ८४ ॥

ति० प्रीयमाणैः उक्तपुष्पदर्शनेनेतिशेषः ॥ ८४ ॥

[ पा० ] १ ख. ग. ज. झ. ट. नानावनसमायुतं. ङ. नानावनसमन्वितं. २ ख. ग. ङ. झ. ट. सह्यपर्वतमासाद्यवानरास्तं समारुहन्. ३ ङ. च. झ. ट. पश्यन्नपि. क. छ. ञ. पश्यन्नभि. ४ क. ख. ग. ङ. ज. झ. ट. चंपकांस्तिल. ५ ङ. झ. ट. अशोकांश्च. ६ झ. ट. न्यग्रोधपादपान्. ७ क.—छ. ञ. जंबुकामलकान्नागान्. ट. जंबुकामलपुन्नागान्. ८ क. ख. च. ऊरुवेगैः. ९ घ. च. ज. गां. १० ग. झ. धातुभिस्तु. ११ झ. ट. वेगेनघट्टितः. १२ क. ख. च. छ. ञ. स्फूर्जाःकुन्दाश्च. १३ ख. ङ. झ. ञ. ट. रञ्जकास्तिलकाः. १४ झ. ञ. ट. पाटलिकाश्चैव. १५ ख. ङ. झ. ट. सरलाअङ्कोलाः. १६ ङ. झ. ट. प्रीयमाणैः.

वाप्यस्तस्मिन्गिरौ शीताः पल्वलानि तथैव च ॥ चक्रवाकानुचरिताः कारण्डवनिषेविताः ॥
प्लवैः क्रौञ्चैश्च संकीर्णा वराहमृगसेविताः ॥ ८५ ॥
ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः ॥ व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः ॥ ८६ ॥
पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा ॥ वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः ॥८७॥
तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा ॥ ८८ ॥
स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः ॥ अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः ॥८९॥
फलान्यमृतगन्धीनि मूलानि कुसुमानि च ॥ बुभुजुर्वानरास्तत्र पादपानां मदोत्कटाः ॥ ९० ॥
द्रोणमात्रप्रमाणानि लम्बमानानि वानराः ॥ ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः ॥ ९१ ॥
पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः ॥ विधमन्तो गिरिवरान्प्रययुः प्लवगर्षभाः ॥ ९२ ॥
वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः ॥ अन्ये वृक्षान्प्रपद्यन्ते प्रपतन्त्यपि चापरे ॥ ९३ ॥
बभूव वसुधा तैस्तु संपूर्णा हरियूथपैः ॥ यथा कमलकेदारैः पक्वैरिव वसुन्धरा ॥ ९४ ॥
महेन्द्रमथ संप्राप्य रामो राजीवलोचनः ॥ अध्यारोहन्महाबाहुः शिखरं द्रुमभूषितम् ॥ ९५ ॥
ततः शिखरमारुह्य रामो दशरथात्मजः ॥ कूर्ममीनसमाकीर्णमपश्यत्सलिलाकरम् ॥ ९६ ॥
ते सह्यं समतिक्रम्य मलयं च महागिरिम् ॥ आसेदुरानुपूर्व्येण समुद्रं भीमनिस्स्वनम् ॥ ९७ ॥
अवरुह्य जगामाशु वेलावनमनुत्तमम् ॥ रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ९८ ॥
अथ धौतोपलतलां तोयौघैः सहसोत्थितैः ॥ वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ९९ ॥

वाप्य इत्यादि जलाशया इत्यन्तमेकं वाक्यं ॥ जलाशयाः जलपूर्णा इति वापीविशेषणं । अत्रापि पर्याकुलीकृता इत्यनुषज्यते । कारण्डवाः जलकुक्कुटाः । प्लवैः जलकाकैः । क्रौञ्चैः प्रसिद्धैः । तीरवनमृगानाह—वराहेत्यादिना । तरक्षुभिः मृगादनैः । व्यालैः दुष्टगजैः । सौगन्धिकैः कह्लारैः । वारिजैरिति । एवमिति शेषः ॥ ८५—८७ ॥ तस्य सानुष्वित्यर्धमेकं वाक्यं ॥ कूजन्ति चुकूजुः । तत्सैन्यदर्शनादिति भावः ॥ ८८ ॥ अत्र जले वापीजले । प्लावयन्ति सिञ्चन्ति ॥ ८९ ॥ शैलमारुह्येत्युत्तरशेषः । अमृतगन्धीनि अमृतस्वादूनि । मदोत्कटाः मदमत्ताः ॥९०॥ द्रोणमात्रप्रमाणानि द्रोणं शिवद्वयं तत्प्रमाणमधुपूर्णानि । मधूनि मधुपटलानि । मधुपिङ्गलाः मधुवत्पिङ्गलवर्णाः ॥ ९१ ॥ विधमन्तः दहन्तः । "ध्मा शब्दाग्निसंयोगयोः" इति धातुः ॥ ९२ ॥ अन्ये वृक्षेभ्यः वृक्षेभ्योन्यत्र । अत्रापि ययुरित्यनुषज्यते ॥ ९३ ॥ इवशब्दो वाक्यालंकारे । अन्ये तु । तत्र तदानीं पक्वैः कलमकेदारैः पक्वशालिक्षेत्रैः । संपूर्णा वसुन्धरेव यथा भवेत् तथा तैर्हरिपुङ्गवैः संपूर्णा वसुधा बभूवेति योजयन्ति । अपरेतु कलमकेदारैर्यथा कलमकेदारसदृशैः हरिपुङ्गवैः संपूर्णा वसुधा वसुन्धरेव कलमकेदारभूरिव बभूवेत्याहुः । उपमानद्वित्वं व्यञ्जयितुमुपमावाचकद्वयं प्रयुञ्जते कवयः । यथा "उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव संप्रणीताः । आलोकयामास हरिः पतन्तीर्नदीः स्मृतीर्वेदमिवाम्बुराशिं" इति ॥ ९४ ॥ अथ सह्यमलयातिक्रमणानन्तरं । राजीवलोचन इति समुद्रदर्शनाय महेन्द्रशिखरारोहणकुतूहलित्वमुक्तं ॥ ९५—९७ ॥ वेलावनस्योन्नतत्वादवरुह्येत्युक्तं । रमयतां श्रेष्ठ इत्यनेन समुद्रसंभ्रमप्रदर्शनेन लक्ष्मणादिरञ्जकत्वं व्यञ्जितं

ति० तत्रानुक्तमपि वासत्रयमन्यद्बोध्यं । आग्निवेश्योक्तेः । तेसर्वेवानराः आनुपूर्व्येण सेनासंनिवेशक्रमेण ॥ ९७ ॥

[ पा० ] १ झ. ट. रम्याः. २ क. ख. पीतोदकास्तत्र. ३ क. ख. घ. ङ. च. ज.—ट. बभञ्जुर्वानराः. ४ झ. ट. पिबन्तःस्वस्थास्ते. ५ ग. ज. झ. ट. नदन्तो. ६ ख. ट. प्रपिबन्त्यपि. ७ च. झ. ट. आरुरोहमहाबाहुः. ८ क. ख. ग. च. ज. ञ. सलिलाशयं. झ. ट. सलिलाकुलं.

एते वयमनुप्राप्ताः सुग्रीव वरुणालयम् ।। इहेदानीं विचिन्ता सा या नः पूर्वं समुत्थिता ।। १०० ।।
अतः परमतीरोऽयं सागरः सरितां पतिः ।। न चायमनुपायेन शक्यस्तरितुमर्णवः ।। १०१ ।।
तदिहैव निवेशोस्तु मन्त्रः प्रस्तूयतामिति ।। यथेदं वानरबलं परं पारमवाप्नुयात् ।। १०२ ।।
इतीव स महाबाहुः सीताहरणकर्शितः ।। रामः सागरमासाद्य वासमाज्ञापयत्तदा ।। १०३ ।।
सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गव ।। संप्राप्तो मन्त्रकालो नः सागरस्यास्य लङ्घने ।। १०४ ।।
स्वांस्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत् ।। गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः ।।१०५।।
रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः ।। सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ।। १०६ ।।
विरराज समीपस्थं सागरस्य च तद्बलम् ।। मधुपाण्डुजलः श्रीमान्द्वितीय इव सागरः ।। १०७ ।।
वेलावनमुपागम्य ततस्ते हरिपुङ्गवाः ।। विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ।। १०८ ।।
तेषां निविशमानानां सैन्यसन्नाहनिस्स्वनः ।। अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ।। १०९ ।।
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।। त्रिधा निविष्टा महती रामस्यार्थपराऽभवत् ।।११०।।
सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।। वायुवेगसमाधूतं पश्यमाना महार्णवम् ।। १११ ।।
दूरपारमसंबाधं रक्षोगणनिषेवितम् ।। पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ।। ११२ ।।
चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये ।। हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः ।। ११३ ।।
चन्द्रोदयसमुद्भूतं प्रतिचन्द्रसमाकुलम् ।। चण्डानिलमहाग्राहैः कीर्णं तिमितिमिङ्गिलैः ।। ११४ ।।

।। ९८—९९ ।। चिन्ता समुद्रतरणोपायचिन्ता ।। १०० ।। अतीरः अविद्यमानतीरः । जलप्राय इतियावत् । अनुपायेन उपायं विनेत्यर्थः । प्रसज्यप्रतिषेधे नञ्समासः ।। १०१ ।। मन्त्रः कार्यविचारः । प्रस्तूयतां आरभ्यतां । इति वक्ष्यमाणप्रकारेण ।। १०२ ।। इतिवेत्यनेन सेनानिवेशनियोगे सागरतरणोपायविचारः अहृदयो हेतुः । वस्तुतस्तु सीताहरणक्लेश एव हेतुरिति व्यज्यते ।। १०३—१०४ ।। कुतः कुतश्चिद्धेतोः । शूराः वानराः गच्छन्तु सर्वतः सञ्चरन्तु । किमर्थमित्यत्राह—ज्ञेयमिति । नः अस्माकं । भयं भयनिमित्तं । छन्नं ज्ञेयं तत्र तत्र निलीनैः शत्रुभिः प्रायशः प्रहारसंभवादिति भावः ।। १०५ ।। द्रुमायुते द्रुमैर्युक्ते । मिश्रणार्थाद्योतेर्निष्ठा ।। १०६ ।। सागरस्य समीपस्थं तद्बलं मधुपाण्डुजलः मधुवत्पिङ्गलजलः । द्वितीयः सागर इव विरराजेत्युत्प्रेक्षा ।। १०७—१०८ ।। अन्तर्धाय स्थित इति शेषः ।। १०९ ।। त्रेधा त्रिप्रकारैः वलयत्रयाकारेणेति यावत् । वानरगोपुच्छभल्लूकभेदेन त्रेधेति वा ।। ११० ।। पश्यमाना पश्यन्ती सती । हृष्टा अभूदिति शेषः ।। १११ ।। दूरं पारं यस्य दूरपारं विशालमित्यर्थः । असंबाधं संबाधरहितं । अक्षोभ्यमित्यर्थः । रक्षोगणनिषेवितं समुद्रे रक्षांसि वसन्तीति प्रसिद्धिः ।। ११२ ।। चण्डनक्रैः करणैः ग्रहः ग्रहणं यस्य स तथोक्तः तं । " सूर्यादौ ग्रहणे युद्धे पूतनादावनुग्रहे । उपरागे च निर्बन्धे स्वर्भानौ च ग्रहः स्मृतः " इति निघण्टुः ।। दिवसक्षये क्षपादौ सन्ध्यायामित्यर्थः । घोरं वर्धमानत्वाद्भयङ्करं ।।११३।। समुद्भूतं उल्ललितं । प्रतिवीचि प्रतिबिम्बितचन्द्रत्वात् प्रतिचन्द्रैः समाकुलं । चण्डानिलमहाग्राहैः चण्डानिलसदृशवेगमहाग्राहैरित्यर्थः । तिमयः शतयोजनायता महामत्स्याः । तानपि भक्षयितुं क्षमास्तिमिङ्गिलाः । तिमीन्गिरतीति व्युत्पत्तेः । " गॄ निग-

ती० वासमाज्ञापयदित्यस्येहैवनिवेशोस्त्वित्युक्तनिवेशनप्रकारविशेषविधानार्थत्वान्नपुनरुक्तिः ।। १०३ ।। ती० वानराणांध्वजिनी ऋक्षगोलाङ्गूलानामपिवानरावान्तरजातीयत्वात्सर्वेषामपिवानरत्वोक्तिः ।। ११० ।। स० क्षपादौ क्षपायाआदिर्मुख्यः अधिपतिरितियावत् । तस्मिंश्चन्द्रमसिसति ।। ११३ ।।

[ पा० ] १ ग—च. झ. ञ. ट. सागरस्येह. २ ग. नचकश्चित्कुतश्चन. क. ख. नचकश्चिदितो. ३ क.—ङ. ज. झ. ञ. भयंचनः. ४ ङ. ज. झ. ट. निविष्टाश्च. क. ख. निविष्टाःपरमंपारं. च. निविष्टास्ते. ५ झ. ट. चण्डनक्रग्राहघोरं. घ. झषनक्रमहं. ६ ख. घ.—ज. समाधूतं.

दीप्तभोगैरिवाकीर्णं भुजङ्गैर्वरुणालयम् ॥ अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् ॥
सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम् ॥ ११५ ॥
मकरैर्नागभोगैश्च विगाढा वातलोलिताः ॥ उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ॥ ११६ ॥
अग्निचूर्णमिवाविद्धं भास्वराम्बु महोरगम् ॥ सुरारिविषयं घोरं पातालविषमं सदा ॥ ११७ ॥
सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् ॥ सागरं चाम्बरं चेति निर्विशेषमदृश्यत ॥ ११८ ॥
संपृक्तं नभसाऽप्यम्भः संपृक्तं च नभोम्भसा ॥ तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ॥ ११९ ॥
समुत्पतितमेघस्य वीचिमालाकुलस्य च ॥ विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ॥ १२० ॥
अन्योन्यमाहताः सक्ताः सस्वनुर्भीमनिस्स्वनाः ॥ ऊर्मयः सिन्धुराजस्य महाभेर्य इवाहवे ॥१२१॥
रत्नौघजलसन्नादं विषक्तमिव वायुना ॥ उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥ १२२ ॥
ददृशुस्ते महोत्साहा वाताहतजलाशयम् ॥ अनिलोद्धूतमाकाशे प्रवल्गन्तमिवोर्मिभिः ॥ १२३ ॥

रणे " इति धातुः । स्रोचि इति लत्वं । तदुक्तं पुराणे —" अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तिमिङ्गिलगिलोप्यस्ति तद्गिलोप्यस्ति सागरे " इति ॥ ११४ ॥ दीप्तभोगैः शिरोरत्नकान्त्या प्रकाशितफणैरिव स्थितैः । महासत्त्वैः जलगजशिंशुमारादिभिः । सुदुर्गं यादोभिः । दुर्गमार्गं दुर्गमं । नौपथसञ्चारायोग्यमित्यर्थः । योगरूढिभ्यां वरुणावासवरुणालयपदद्वयनिर्वाहः ॥ ११५ ॥ तदानीं सागरमुत्प्रेक्षते— मकरैरिति ॥ नागभोगैः सर्पकायैः । विगाढाः प्रविष्टाः । वातलोलिताः वायुचलिताः । अतएव प्रवृद्धाः जलराशयः तरङ्गाः । उत्पेतुश्च निपेतुश्च । उत्पत्य निपेतुरिति भावः ॥ ११६ ॥ अथ सागराम्बरयोः सर्वथा साम्यं वर्णयति— ग्निचूर्णमित्यादिना ॥ रात्रौ सागरस्य सलिलशीकराः अग्निचूर्णा इव दृश्यन्त इति प्रसिद्धिः । अतो भास्वराण्यम्बूनि शीकररूपाणि यस्य तथोक्तं । अतएवाविद्धं आकीर्णं । अग्निचूर्णमिव सागरे दृश्यते । अम्बरं च कीर्णैर्नक्षत्रैस्तथा दृश्यते । भास्वराम्बु विमलतुहिनं च । महान्त उरगा यस्मिन् तन्महोरगं । इदमप्युभयत्रापि समानं । आकाशे गन्धर्वादीनामिव नागानामपि सञ्चारसम्भवात् । राह्वादिरूपोरगसंभवाद्वा । सुरारयः असुरा राक्षसाश्च तेषां विषयं आवासभूतं । इदमप्युभयत्र तुल्यं । पातालविषमं पातालवत् गम्भीरं । इदमप्युभयत्र तुल्यं । घोरं भयङ्करं । इदमप्युभयत्र तुल्यं । एवमुक्तविशेषणविशिष्टं सागरं सागरः । अम्बरप्रख्यं अम्बराभं । उक्तविशेषणविशिष्टमम्बरं च सागरोपममदृश्यतेत्याकृष्य योजना । न केवलं साम्यं सर्वथा साम्यं चेत्याह—सागरमिति ॥ क्लीबत्वमार्षं ॥ ११७—११८ ॥ प्रकारान्तरेणापि उक्तं साम्यं दर्शयति—संपृक्तमिति ॥ संपृक्तं संसृष्टं । तुल्यवर्णमितियावत् । हिशब्दो हेतौ । तादृग्रूपे अन्योन्यतुल्यरूपे । तारारत्नसमाकुले सागराम्बरे दृश्येते स्म ॥ ११९ ॥ समुत्पतितेति । मेघवीचिमालयोर्बिम्बप्रतिबिम्बभावेनोपमानत्वं ॥ १२०॥ प्रथमं सक्ताः अथ आहता इत्यन्वयः ॥१२१॥ रत्नौघेत्यादिश्लोकद्वयं ॥ रत्नौघजलयोः सन्नादो यस्मिन् । अनेन वेगवद्वायुजनितक्षोभातिशयादन्तर्गतरत्नानामुद्गमनमवगम्यते । वायुना विषक्तमिव वायुना एकीभूतमिव । यादोगणसमाकुलं यादांसि जलजन्तवः तेषां गणेन समाकुलं । वाताहतजलाशयं जलाशयः समुद्रः वाताहतश्चासौ जलाशयश्चेति कर्मधारयः तं ऊर्मिभिः आकाशे वल्गन्तमिव स्थितं । एतन्निरूपणार्थमेव अनिलोद्धतमिति पुनरुक्तिः ॥१२२

स० तारारत्नसमाकुले एकंनभस्तारासमाकुलं । अपरं रत्नसमाकुलमितिते । तारारत्नैः नक्षत्रश्रेष्ठैः तथा तारारत्नैः मुक्ताश्रेष्ठैरितिनागोजिभट्टः । तत्पक्षे " तारःशुद्धमौक्तिके " इतिविश्वोक्तेःस्त्रीलिङ्गस्ताराशब्दस्तद्वाचीमृग्यः । तारेषुमुक्तासुआरत्नैः अतिश्रेष्ठैरितितद्विनेयैःक्लिष्टकल्पनयासमाधेयं ॥ १२० ॥ इतिचतुर्थःसर्गः ॥ ४ ॥

[पा०] १ ख. भुजगैर्भुजगालयं. २ ङ. झ. ट. प्रहृष्टाः. ३ ख. ग. ङ. च. ज.—ट. विषयं. ४ ख. ग. ङ. च. ज.—ट. अन्योन्यैराहताः. ५ ख. सस्वरंभीमविक्रमाः. ६ ङ. छ. झ. ट. इवांबरे. ७ क. ख. ग. ङ.—ट. महात्मानो. ८ ङ. झ. ट. प्रलपन्तमिवो.

ततो विस्मयमापन्ना ददृशुर्हरयस्तदा ॥ भ्रान्तोर्मिजलसन्नादं प्रलोलमिव सागरम् ॥ १२४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ॥ ५ ॥

समुद्रवेलावलोकनाद्युद्दीपकसमुद्दीपितविरहशोकेनरामेण लक्ष्मणंप्रति सीतामुद्दिश्यसपरिशोचनंबहुधाविलापः ॥ १ ॥ तथा लक्ष्मणसमाश्वासितेनतेन सायंसन्ध्योपासनम् ॥ २ ॥

सा तु नीलेन विधिवत्स्वारक्षा सुसमाहिता ॥ सागरस्योत्तरे तीरे साधु सेना निवेशिता ॥ १ ॥
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुङ्गवौ ॥ विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २ ॥
निविष्टायां तु सेनायां तीरे नदनदीपतेः ॥ पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३ ॥
शोकश्च किल कालेन गच्छता ह्यपगच्छति ॥ मम चापश्यतः कान्तामहन्यहनि वर्धते ॥ ४ ॥
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति वा ॥ एतदेवानुशोचामि वयोस्या ह्यतिवर्तते ॥ ५ ॥
वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ॥ त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥६॥

—१२३॥ ततइति विशेषाभिधानार्थत्वान्न पुनरुक्तिः । भ्रान्तोर्मिजलसन्नादमिति । घूर्णिततरङ्गजलसन्नादो यस्मिन् तं प्रलोलमिव उद्भ्रान्तमिव ॥ १२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

एवं कृतज्ञत्वमित्रानुरोधित्वपरीक्ष्यकारित्वमहोत्साहत्वादयःशरण्यत्वौपयिका रामगुणा दर्शिताः । अथ रामस्य कारुण्यरूपं प्रधानगुणं दर्शयितुं सर्गान्तरमारभते—सा त्विति ॥स्वारक्षा आसमन्ताद्रक्षन्तीत्यारक्षाः शोभनाः आरक्षाः यस्याः सातथोक्ता । विधिवत् नीतिशास्त्रोक्तरीत्या । सुसमाहिता निराकुला । निवेशिता ॥ १ ॥ दिशमिति जात्येकवचनं । दिश इत्यर्थः । "उभसर्वतसोः—" इत्यादिना द्वितीया । सर्वत इति सप्तम्यर्थे तसिः । दिशां सर्वेषु प्रदेशेष्वित्यर्थः ॥ २—३ ॥ समुद्रवेलावनाद्युद्दीपकदर्शनादुद्भूतं विरहशोकं सोढुमशक्नुवन् सौमित्रिं प्रत्याह—शोकश्चेत्यादिना ॥ प्रथमश्चकारोऽवधारणे । द्वितीयस्त्वर्थः । शोकः इष्टवस्त्वन्तरवियोगजनितः शोकः । गच्छता कालेन अपगच्छति । किलेत्यैतिह्ये । गच्छत्येवेति प्रसिद्धमिति लौकिका वदन्ति । कान्तामपश्यतो मम तु शोकः । अहन्यहनि वर्धते । लौकिकशोकविलक्षणोमम शोक इतिभावः ॥ ४ ॥ ननु शत्रुहृताया दूरे स्थितायास्तस्याः प्रत्याहरणसमर्थस्य तव किं शोकेनेत्याशङ्क्य न तद्विषयोयं शोकः किंतूपभोगयोग्यस्य प्रियावयसो वैफल्यानुस्मरणादित्याह—न म इति ॥ प्रिया दूरे स्थितेति मे न दुःखं । सुग्रीवेण प्रस्थानेन तस्य निवर्त्यत्वात् । प्रबलरक्षसा हृतेति मे दुःखं नास्ति । तस्य तच्छिरःकृन्तनापनोद्यत्वात् । एतदेवानुशोचामि । इदमेकमेव शोकनिमित्तं । वयोस्या ह्यतिवर्तते गतं यौवनं न प्रत्याहर्तुं शक्यमितिभावः । अत्र यौवनमतिवर्तत इति नार्थः । नित्ययौवनत्वात्तस्याः । किंतु वयोतिवर्तते । व्यर्थतयैवयातीतिभावः । मानुषभावानुसारेण चेदं वचनं ॥ ५ ॥ प्रियास्पृष्टद्रव्यस्पर्शस्य विनोदहेतुत्वात्तत्संपादनार्थं वायुं प्रार्थयते—वाहीति ॥ हे वात मेकान्ता यतः यत्र वसति तत्र वाहि गच्छ । तत्रगत्वाकिंकरणीयमित्यत्राह—तामिति । न चैतदन्यतः सेत्स्यतीति सदृष्टान्तं दर्शयति—दृष्टिसमागमः चन्द्रे यथा चन्द्राधीनः । तथा मे तद्गात्रसंस्पर्शोपि । त्वयि त्वदधीनः । तथा तदवलोकितं चन्द्रं पश्यन्

स० सासेनात्वित्यन्वयः । असाधुसा असाधूनां सा हिंसायस्येति । तदर्थंसुरिपुनाशिका ॥ १ ॥ ति० नन्वचिरात्प्रत्याहरिष्यामःकिंशोकेनेत्यत्रतत्रैवविघ्नशङ्कयादुःखमित्याह—नमेइति । प्रियादूरेस्थितेतिमेदुःखंनास्ति । स्त्रीधर्मदिवसवत् । तथाहृतेत्यपि नदुःखं । प्रबलदुष्कर्मवशंप्राप्तत्वात् । अपितस्यावयः प्राणावस्थितिकालः । अतिवर्तते । मासद्वयमात्रंजीवनमित्युक्तेः । तत्रापि

[ पा० ] १ झ. ञ. ट. जाल. २ क. ख. प्रालोलमिव. ३ ग. च. विधिनास्वारक्षा. ख. विधिवत्सुरक्षा.

**तन्मे दहति गात्राणि विषं पीतमिवाशये ॥ हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ॥ ७ ॥**
**तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ॥ रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ८ ॥**
**अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना ॥ [1]कथंचित्प्रज्वलन्कामः [2]स मा सुप्तं जले दहेत् ॥ ९ ॥**
**बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् ॥ यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १० ॥**
**केदारस्येव केदारः सोदकस्य निरूदकः ॥ उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११ ॥**
**कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम् ॥ विजित्य शत्रून्द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥ १२ ॥**
**कदा [3]नु चारुबिम्बोष्ठं तस्याः पद्ममिवाननम् ॥ ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥ १३ ॥**
**[4]तस्यास्तु संहतौ पीनौ स्तनौ तालफलोपमौ ॥ कदा नु खलु सोत्कम्पौ [5]श्लिष्यन्त्या मां भजिष्यतः १४**

तत्प्रणालिकया तां दृष्टवानस्मि । तद्वत् तदङ्गस्पृष्टं त्वां स्पृशन् तामेव स्पृष्टवान्भवेयमित्यर्थः ॥ ६ ॥ न केवलं वयोतिवर्तनस्मरणमेव व्यथाहेतुः किंतु कारणान्तरमप्यस्तीत्याह—तदिति ॥ तद्वचनं मे आशये हृदये । स्थितं सत् । सदा स्मर्यमाणंसदित्यर्थः । पीतं विषमिव गात्राणि प्रत्यवयवं । दहति । किं तद्वचनं तत्राह—हा नाथेति । सा सर्वान्भोगान्परित्यज्य मया सहागता । ह्रियमाणा सती रावणेन हरणसमये "न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा" इत्युक्तरीत्या पातिव्रत्याग्निना भस्मीकर्तुं समर्थापि "तत्तस्य सदृशं भवेत्" इत्युक्तरीत्या हा नाथेति मन्नाथत्वमेव पुरस्कृत्य मां यदब्रवीत् तन्मे गात्राणि दहति । एतेन रामशोकः सीताविषयकारुण्यमित्यवगम्यते । परदुःखदुःखित्वं हि कारुण्यं ॥ ७ ॥ अथ संतापो जलप्रवेशं विना न शाम्यतीति वक्तुं तस्याग्नित्वं सावयवं रूपयति—तद्वियोगेति ॥ मदनाग्निवर्धकत्वेन वियोगस्येन्धनरूपत्वं । संततत्वेन चिन्तायाः ज्वालात्वरूपणं । रात्रिंदिवमिति । "अचतुर—" इत्यादिना सूत्रेण साधुत्वं । शीतलाशीतलकालाविशेषेण दह्यत इत्यर्थः ॥ ८ ॥ सौमित्रे कान्तासारकेण भवता विना अर्णवमवगाह्य स्वप्स्ये । अनेन लक्ष्मणस्य शेषावतारत्वमुक्तं । अर्णवशयनं हि शेषिणैव किं प्रयोजनमित्यत्राह—कथंचिदिति । इदानीं प्रज्वलन् स कामः जले सुप्तं मां कथंचिद्दहेत् कृच्छ्राद्दहेत् मन्दीभवेदित्यर्थः ॥ ९ ॥ एवं दुःसहदुःखाक्रान्तस्यापि मम जीवनधारणशक्तिस्तया सह एकधरण्याश्रयणात्तज्जीवनप्रवृत्त्युपलम्भाच्च जायत इत्याह—बह्वित्यादिना श्लोकद्वयेन ॥ अहं सा वामोरूश्च एकां धरणिमाश्रिताविति यत् एतद्बहु भूरि जीवनसाधनं । अतः एतेन कामयानस्य विरहिणो मम जीवितुं शक्यं । एकशय्याश्रयणन्यायेन कामिनोरेकधरण्याश्रयणमपि जीवनसाधनं भवतीत्यभिप्रायः ॥ जीवन्तीं तां शृणोमीति यत् तेन । निरूदकः निरुदकः । केदारः वप्रं । सोदकस्य केदारस्य उपस्नेहेन उपक्लेदेनेव जीवामि ॥ १०—१२ ॥ रसायनं शरीरसिद्धिकरमौषधविशेषं । आतुरः रोगी । "आतुरोभ्यमितोभ्यान्तः" इत्यमरः ॥ १३ ॥ संहतौ श्लिष्टौ ॥ १४—

बहुदिवसात्ययात् ॥ **शि०** एतदेवानुशोचामि । एतेनप्रबलेनैतद्दुःखेनपूर्वंदुःखंतिरोहितमितिसूचितं ॥ ५ ॥ **शि०** त्वयि सीतास्पर्शविशिष्टे । मेगात्रसंस्पर्शः चन्द्रेदृष्टिसमागमः चक्षुस्संयोगः । यथाचन्द्रेदृष्टिसमागमस्तापशामकः तथा सीतास्पर्शवतित्वयि ममस्पर्शोपितापशामकइत्यर्थः ॥ **ती०** यद्वा यतोयत्र कान्तावर्तते तत्र वाहि संचर । स्वात्मानंस्पृशन्तंवायुंप्रत्येवमुक्तं । मद्गात्रसंस्पर्शस्तस्याःसिध्येदितिभावः ॥ ६ ॥ **ती०** "कथंचित्प्रज्वलन्कामःसमासुप्तेजनेदहेत्" इतिपाठे जने सुप्तेसति कथंचित्प्रज्वलन्कामः । समादहेत् । सः कामः । तंजनं नबाधेतेत्यर्थः । तस्माद्भवताविना त्वांविहाय । अर्णवमवगाह्यस्वप्स्ये इतिसंबन्धः ॥ **ति०** सौमित्रे भवताविनाऽहमेकएकार्णवमवगाह्यस्वप्स्ये । एवंसतिप्रज्वलन्कामः जलेसुप्तंनदहेत् । जलस्याग्निविरोधित्वात् । मनोमूलकामस्यसुप्तौ मनउपरमेणोपरमाच्चेतिभावः । भवताविनेत्युक्तिरेकाकित्वेननिद्राप्राप्त्यै ॥ **शि०** भवताविनेत्युक्त्या जाग्रदेवत्वंतिष्ठेतिसूचितं । तेनत्वद्विनोममन्निकटेनागच्छत्वितिहेतुःसूचितः । तेनसीतातिरिक्तविषये तदानींदिदृक्षाभावः सूचितः । **स०** भवताविना तवशीतबाधाभवेदित्यर्थः ॥ ९ ॥

[ **पा०** ] १ झ. ट. एवंचप्रज्वलन्. २ ङ. च. झ. ट. नमांसुप्तं. ३ ङ. झ. ट. सुचारु. ४ ग. च. छ. झ. ट. तौतस्याः सहितौ. क. ख. ज. तौतस्याःसंहितौ. ५ क—ट. हसन्त्या.

सा नूनमसितापाङ्गी रक्षोमध्यगता सती ॥ मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५ ॥
कथं जनकराजस्य दुहिता सा मम प्रिया ॥ राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १६ ॥
कदाऽविक्षोभ्यरक्षांसि सा विधूयोत्पतिष्यति ॥ विधूय जलदान्नीलाञ्शशिरेखा शरत्स्विव ॥ १७ ॥
स्वभावतनुका नूनं शोकेनानशनेन च ॥ भूयस्तनुतरा सीता देशकालविपर्ययात् ॥ १८ ॥
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् ॥ सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ १९ ॥
कदा नु खलु मां साध्वी सीता सुरसुतोपमा ॥ सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजंपयः ॥ २० ॥
कदा शोकमिमं घोरं मैथिली विप्रयोगजम् ॥ सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा ॥ २१ ॥
एवं विलपतस्तस्य तत्र रामस्य धीमतः ॥ दिनक्षयान्मन्दरुचिर्भास्करोस्तमुपागमत् ॥ २२ ॥
आश्वासितो लक्ष्मणेन रामः संध्यामुपासत ॥ स्मरन्कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ॥ ६ ॥

रावणेन मन्त्रिणः प्रति हनुमत्कृतलङ्कादहनादिदुष्करकर्मानुवादपूर्वकं सैन्यैस्सहरामागमनसंभावनया तत्प्रतीकाराय मन्त्रिनियोजनम् ॥ १ ॥

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ॥ राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥
अब्रवीद्राक्षसान्सर्वान्ह्रिया किंचिदवाङ्मुखः ॥ १ ॥
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ॥ तेन वानरमात्रेण दृष्टा सीता च जानकी ॥ २ ॥
प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः ॥ आविला च पुरी लङ्का सर्वा हनुमता कृता ॥ ३ ॥

---

१६ ॥ अविक्षोभ्यरक्षांसीत्येकं पदं । अविक्षोभ्याणि दुराधर्षाणि रक्षांसि ॥ १७ ॥ देशकालविपर्ययात् देशकालयोर्व्यत्यासात् । सुखावहयोर्देशकालयोरपगमात्तद्विरुद्धयोरुपगमाच्चेत्यर्थः ॥ १८ ॥ सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसमिति । सीतां प्रत्याहृत्य कदा नु शोकमुत्स्रक्ष्यामीत्यर्थः । आस्यं व्यादाय स्वपितीतिवत्साधुः ॥ १९—२० ॥ शुक्लेतरं मलिनं ॥ २१—२२ ॥ उपासत उपास्त । भ्रातुरपि लक्ष्मणस्य पुरतो रघुनाथस्यैवंविधवचनप्रयोगस्तस्य सर्वविधसेवकत्वात् । अतो नानौचित्यं ॥२३॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

एवं रामवृत्तान्तमुक्त्वा हनुमन्निर्गमकालानन्तरकालिकं रावणवृत्तान्तं वक्तुमुपक्रमते—लङ्कायामिति ॥ घोरं दुर्दर्शम् । शक्रेणेव शक्रतुल्येन । "इवेन सह नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्" इति विभक्तेरलोपः ॥ १ ॥ वानरमात्रेण वानरजातीयेन । वानरेष्वल्पेनेति यावत् ॥ २ ॥ चैत्यः प्रासादः नगरप्रधानभूतः प्रासादः ।

---

**स०** दिनक्षयात् अहःक्षयात् । मन्दवपुः मन्दरश्मिः ॥२२॥ **रामानु०** उपासत उपास्त । वचनव्यत्ययआर्षः । उपागमदिति वापाठः ॥ **ती०** स्मरन्निति हेतौशतृप्रत्ययः । सीतास्मरणाद्धेतोः शोकाकुलीकृतः ॥ २३ ॥ इतिपञ्चमःसर्गः ॥ ५ ॥

**स०** महात्मनाशक्रेणेवेत्यनेन हनुमत्कृतकर्मणः "इन्द्रोवृत्रंहत्वामहानास" इत्युक्तरीत्यामहेन्द्रकृतिसाध्यत्वेपिरावणसुतजितेन्द्रप्रयत्नाविषयत्वंसूचयति ॥१॥ **ति०** वानरमात्रेण एकेननिरायुधेनचेत्यर्थः ॥२॥ **शि०** चैत्यः देवविशेषाविष्टःप्रासादः ॥३॥

[ **पा०** ] १ क. ग. ङ. च. ज.—ट. ममचप्रिया. ख. परमप्रिया. २ ङ. झ. ट. अविक्षोभ्यानिरक्षांसि. ३ ङ. ज. झ. ट. लेखा. क. ख. च. छ. ञ. लेखेवशारदी. ४ ङ. झ. ट. मेसाध्वी. ख. सासाध्वी. ५ क.—च. झ. ञ. ट. न्मन्दवपुः. ६ क. ग. ङ. च. झ. ञ. ट. मुपागतः. ७ क. ख. ग. मुपाविशत्. ८ ख. सर्वं. ९ ख. च. छ. आकुलाच.

किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम् ॥ उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेत् ॥४॥
मन्त्रमूलं हि विजयं [1]प्राहुरार्या मनस्विनः ॥ तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥ ५ ॥
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ॥ तेषां तु समवेतानां [2]गुणदोषौ वदाम्यहम् ॥ ६ ॥
[3]मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये ॥ मित्रैर्वापि समानार्थैर्बान्धवैरपि[4] वा हितैः ॥ ७ ॥
सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् ॥ दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ ८ ॥
एकोर्थं विमृशेदेको धर्मे प्रकुरुते मनः ॥ एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ९ ॥
गुणदोषावनिश्चित्य त्यक्त्वा धर्म[5]व्यपाश्रयम् ॥ करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः ॥ १० ॥
यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ॥ एवं [6]मन्त्रा हि विज्ञेया उत्तमाधममध्यमाः ॥ ११ ॥
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ॥ मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥ १२ ॥
[7]बह्वयोपि मतयो भूत्वा [8]मन्त्रिणामर्थनिर्णये ॥ पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमः स्मृतः ॥ १३ ॥
अन्योन्यं मतिमास्थाय यत्र संप्रतिभाष्यते ॥ न चैकमत्ये श्रेयोस्ति मन्त्रः सोधम उच्यते ॥ १४ ॥
तस्मात्सुमन्त्रितं साधु भवन्तो [9]मतिमत्तमाः ॥ [10]कार्यं संप्रतिपद्यन्तामेतत्कृत्यं मतं मम ॥ १५ ॥
[11]वानराणां हि वीराणां[12] सहस्रैः परिवारितः ॥ रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ॥ १६ ॥

आविला दाहेन आकुला ॥ ३ ॥ अनन्तरं किं वा युक्तं यन्नः समर्थं हितं । "समर्थस्त्रिषु शक्तिस्थे संबन्धार्थे हितेपि च" इत्यमरः । यत्कृतं अनुष्ठितं । सुकृतं स्वनुष्ठितं । भवेत् फलवद्भवेत् । तादृशं किं उच्यतां करिष्यामि । वो भद्रमस्त्वित्यन्वयः ॥ ४ ॥ बलवतस्तव किं मन्त्रेणेत्याशङ्क्य सर्वेषामपि विजयस्य मन्त्रमूलत्वान्मयापि मन्त्रः करणीय इत्याह—मन्त्रमूलमिति ॥ ५ ॥ मन्त्रस्य करणीयत्वेपि स्वयमेव संमन्त्र्यतां किं बहुभिरित्याशङ्क्य बहुभिः सह मन्त्रयितुरेवोत्तमत्वं वक्तुं प्रतिज्ञापूर्वकं क्रमेण मन्त्रयितृभेदानाह—त्रिविधा इत्यादिना ॥ समवेतानां संकीर्णस्वरूपाणां । लक्षणज्ञानं विना विवेक्तुमशक्यानामित्यर्थः । गुणदोषौ उत्तमलक्षणं गुणं अधमलक्षणं दोषं । मध्यमलक्षणं मिश्रणं ॥ ६ ॥ हितसंयुक्तैः हितपरैः । समानार्थैः समानसुखदुःखैः । कर्मारम्भान् आरम्भणीयकर्माणि । दैवे दैवसमाश्रयणे । कुरुते ॥ ७—८ ॥ धर्मे पूर्वोक्तदैवसमाश्रयणे । मनः मनःपूर्वं यत्नं ॥९॥ गुणदोषौ हिताहिते । अनिश्चित्य दैवव्यपाश्रयं त्यक्त्वा करिष्यामीत्युपक्रम्य यः कार्यमुपेक्षेत् उपेक्षेत न समाप्नुयात् ॥ १०—११ ॥ उक्तत्रैविध्यं मन्त्रेप्यतिदिशति—ऐकमत्यमिति ॥ ऐकमत्यं एकां मतिं उपागम्य । शास्त्रदृष्टेन स्वभ्यस्तशास्त्रेण । राजदन्तादित्वात्परनिपातः । तद्रूपेण चक्षुषा उपलक्षिताःमन्त्रिणः यत्र मन्त्रे निरताः तं उत्तममन्त्रमाहुः ॥ १२ ॥ यत्र मन्त्रे । मन्त्रिणां मतयः बह्व्यः बहुधा भूत्वापि । अर्थनिर्णये अर्थनिर्णयरूपफलविषये । एकतां प्राप्ता भवन्ति स मन्त्रो मध्यमः स्मृतः । नीतिज्ञैरितिशेषः ॥ १३ ॥ यत्र मन्त्रे । मन्त्रिभिः अन्योन्यं मतिं स्वां स्वां बुद्धिं । आस्थाय प्रधानीकृत्य । संप्रतिभाष्यते व्यवह्रियते । अनेनोत्तममन्त्रव्यावृत्तिरुक्ता । मध्यममन्त्रव्यावृत्त्यर्थमाह—न चेति । ऐकमत्ये तेषां मन्त्रिणां श्रेयश्च प्रीतिश्च नास्ति स मन्त्रोधम उच्यते ॥ १४ ॥ सुमन्त्रितं सुनिश्चितं । साधु समीचीनं । कार्यं संप्रतिपद्यन्तां ऐकमत्येन जानन्तु । एतत् ऐकमत्येन सुनिश्चितं कार्यं । मम कृत्यं अतिशयेन कर्तव्यं ॥ १५ ॥ गतं तु गतमेव किं मन्त्र-

[ पा० ] १ ङ. च. छ. झ. ञ. ट. प्रवदन्तिमनस्विनः. २ क.—घ. च. छ. ज. गुणंदोषं. ३ ङ. झ. मन्त्रिभिर्हि संयुक्तः. ४ क. ख. ञ. ट. बान्धवैर्वासमाहितैः. ५ ख. ङ.—ट. दैवव्यपाश्रयं. ६ क. ख. ङ. च. झ. ञ. ट. मन्त्रोपिविज्ञेयउत्तमाधममध्यमः. ७ ङ. झ. ट. बह्वीरपिमतीर्गत्वामन्त्रिणामर्थनिर्णयः । पुनर्यत्रैकतांप्राप्तः. ८ ख. च. छ. मन्त्रिणो मन्त्रनिर्णये. ९ क. ख. ग. च. छ. ञ. मन्त्रिसत्तमाः. ङ. ज. झ. ट. मतिसत्तमाः. १० कार्यंसंप्रतिपद्यन्तामित्यर्धस्यस्थाने क. च. छ. पाठेषु. इतीमंमन्त्रयन्राजाकार्यंतत्प्रतिपद्यते । तस्मात्संमन्त्र्यतांसर्वैरेतत्कृत्यंमतंमम ॥ इतिश्लोकोदृश्यते. ११ च. छ. सवानराणां. १२ ङ. झ. ट. धीराणां.

तरिष्यति च सुव्यक्तं राघवः सागरं सुखम् ॥ तरसा युक्तरूपेण सानुजः सबलानुगः ॥
समुद्रमुच्छोषयति वीर्येणान्यत्करोति वा ॥ १७ ॥
[ खरो येन हतः संख्ये तस्य वीर्येण लक्ष्यते ॥ १८ ॥ ]
अस्मिन्नेवंगते कार्ये विरुद्धे वानरैः सह ॥ हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ॥ ७ ॥

राक्षसैरावणंप्रति कुबेरविजयादितदपादानप्रशंसनपूर्वकं रामस्यततोप्यल्पबलत्वोक्त्या कैमुत्येनतत्पराजयस्यसुकरत्वोक्तिः ॥ १ ॥ तथेन्द्रजिदपादानप्रशंसनपूर्वकं रामविजयायतन्नियोजनोक्त्या समाश्वासनम् ॥ २ ॥

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः ॥ ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ॥
द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः ॥ १ ॥
राजन्परिघशक्त्यृष्टिशूलपट्टिशसंकुलम् ॥ सुमहन्नो बलं कस्माद्विषादं भजते भवान् ॥ २ ॥
त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि ॥ कैलासशिखरावासी यक्षैर्बहुभिरावृतः ॥
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ३ ॥
स महेश्वरसख्येन श्लाघमानस्त्वया विभो ॥ निर्जितः समरे रोषाल्लोकपालो महाबलः ॥ ४ ॥

---

करणे इतः किं नश्छिन्नमित्यत आह—वानराणामिति॥ अभ्येति अभ्येष्यति । "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमाननिर्देशः । उपरोधकः उपरोद्धुं । क्रियार्थायां क्रियायां ण्वुल् ॥१६॥ सागरे विद्यमाने कथमस्मानुपरोत्स्यति तत्राह—तरिष्यतीति सार्धश्लोकः ॥ उच्छोषयति उच्छोषयिष्यति । अन्यत्सेतुबन्धादिकं वा । करोति करिष्यति ॥ १७—१८ ॥ अस्मिन् लङ्कानिरोधनरूपे कार्ये । एवंगते उक्तरीत्या प्रवृत्ते । वानरैः सह विरुद्धे विरोधे च प्राप्ते । भावे निष्ठा । पुरादिषु हितं यत्तत्सर्वं संमन्त्र्यतामित्यर्थः ॥ १९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

---

एवं रावणवचनमाकर्ण्य अविदितरघुनाथप्रभावा मदोद्धता राक्षसास्तद्बलवर्णनपूर्वकं रावणं प्रशंसन्ति—इत्युक्ता इत्यादिना । सार्धश्लोक एकान्वयः । द्विषत्पक्षं द्विषद्बलं । "पक्षो मासार्धके पार्श्वे गृहे सूर्यविरोधयोः । केशादेः परितो वृन्दे बले सखिसहाययोः" इति विश्वः ॥ १ ॥ परिघः परितो हननक्षमो गदाविशेषः । "परिघः परिघातनः" इत्यमरः । शक्तिः दीर्घयष्टिः । ऋष्टिः असिः । "खड्गे तु निस्त्रिंशचन्द्रहासासिऋष्टयः" इत्यमरः । शूलं प्रसिद्धं । पट्टिशः खड्गविशेषः । तैः संकुलं व्याप्तं । बलमस्ति समग्रबले एवं विद्यमाने कस्माद्धेतोः भवान् विषादं भजत इति योजना । अत्र सुमहन्नो बलमित्यत्र बलं नास्तीति प्रामादिका भाव्यनर्थसूचिकाखिलोक्तिः ॥ २ ॥ तिष्ठतु सैन्यं त्वमेक एव समस्तशत्रुविद्रावणक्षम इत्याशयेनाह—त्वयेत्यादिना ॥ सार्धश्लोक एकान्वयः । भोगवतीं सर्पराजनगरीं । कदनं

---

ति० प्रथमान्तपाठे सगरस्यगोत्रापत्यंसागरइति रामविशेषणं ॥ तदा सागरमितिद्वितीयान्तमन्यत्पदमध्याहार्यं ॥ १७ ॥ इतिषष्ठःसर्गः ॥ ६ ॥

ति० तत्रादौदुर्मन्त्रिणांदुर्मन्त्रमाह—**इत्युक्ताइति**। यतोनीतिबाह्याः अतएवाबुद्धयः तेराक्षसाः द्विषत्पक्षस्यरामसुग्रीवादेर्बलमविज्ञाय ज्ञात्वापिमोहादविगणय्यवा प्राञ्जलयस्सन्तोरावणमूचुः॥१॥**ति०** तदेवप्रपञ्चयते—**सइति**। सः धनदः। महेश्वरसख्येन हेतुना स्वयंश्लाघमानोपि लोकपालोपि त्वयासमरेरोषान्निर्जितः ॥ **स०** श्लाघमानः अहंत्र्यंबकसखः मत्सदृशोऽन्योनास्तीत्यात्मा-

[ पा० ] १ इदमर्धं घ. पाठेदृश्यते. २ क. ग. ङ. च. तस्मिन्नेवंगते. झ. ट. तस्मिन्नेवंविधे. ३ घ. निरुद्धे. ४ क. ग. संमन्त्र्यतामिति. ५ घ. अविज्ञायात्मनःपक्षं. ६ ङ. झ. कुन्तलं.

[1]विनिहत्य च यक्षौघान्विक्षोभ्य च विगृह्य च ॥ त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ५ ॥
मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता ॥ दुहिता तव भार्यार्थे दत्ता राक्षसपुङ्गव ॥ ६ ॥
दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो[2] दुरासदः ॥ विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ॥ ७ ॥
निर्जितास्ते महाबाहो नागा गत्वा रसातलम् ॥ वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः ॥ ८ ॥
अक्षया बलवन्तश्च शूरा लब्धवराः पुनः ॥ त्वया संवत्सरं युद्ध्वा[4] समरे दानवा विभो ॥ ९ ॥
स्वबलं समुपाश्रित्य नीता वशमरिन्दम ॥ मायाश्चाधिगतास्तत्र बहवो[5] रक्षसाधिप ॥ १० ॥
[ निर्जिताः[6] समरे रोषाल्लोकपाला महाबलाः ॥ देवलोकमितो गत्वा शक्रश्चापि विनिर्जितः ॥ ] ॥ ११ ॥
शूराश्च बलवन्तश्च वरुणस्य सुता रणे ॥ निर्जितास्ते महाबाहो[7] चतुर्विधबलानुगाः ॥ १२ ॥
मृत्युदण्डमहाग्राहं शाल्मलिद्रुममण्डितम् ॥ कालपाशमहावीचिं यमकिङ्करपन्नगम् ॥ १३ ॥
[ महाज्वरेण[8] दुर्धर्षं यमलोकमहार्णवम् ॥ ] अवगाह्य त्वया राजन्यमस्य बलसागरम् ॥
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः ॥ १४ ॥
सुयुद्धेन च ते सर्वे लोकास्तत्र विलोलिताः[9] ॥ १५ ॥
क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः ॥ आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १६ ॥
तेषां वीर्यगुणोत्साहैर्न[10] समो राघवो रणे ॥ प्रसह्य ते त्वया राजन्हताः परमदुर्जयाः[11] ॥ १७ ॥
तिष्ठ वा किं महाराज श्रमेण तव वानरान् ॥ अयमेको महाबाहुरिन्द्रजित्क्षपयिष्यति[12] ॥ १८ ॥
अनेन हि महाराज माहेश्वरमनुत्तमम् ॥ इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ॥ १९ ॥
शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलम् ॥ गजकच्छपसंबाधमश्वमण्डूकसंकुलम् ॥ २० ॥

युद्धं ॥ ३—४ ॥ विमानं पुष्पकं ॥ ५ ॥ दुहिता मन्दोदरी । यद्यपि मयेनाभिजात्यभ्रमाद्दत्तेत्युत्तरे वक्ष्यति तथाप्यत्र प्रशंसायां भयाद्दत्तेत्युक्तं ॥ ६ ॥ दानवेन्द्रः मधुः । कुम्भीनसी रावणभगिनी । सुखमावहतीति सुखावहः भर्ता ॥ ७ ॥ जटी सर्पविशेषस्य नाम । त्वया भोगवतीमित्यत्र तक्षकादिभिन्नकर्कोटकादिजयोक्तिरिति न पौनरुक्त्यं ॥ ८ ॥ अक्षया इत्यादिश्लोकद्वयमेकान्वयं ॥ लब्धवराः ब्रह्मणेति शेषः । अक्षयाः चूर्णीकरणेपि पुनरुत्पत्तिमत्त्वेन क्षयरहिता इत्यर्थः । दानवाः कालकेयाः । तत्र कालकेयसकाशात् । बहवः बह्वयः । "वोतो गुणवचनात्" इति पक्षे ङीषभावः ॥ ९—११ ॥ चतुर्विधबलानुगाः रथगजतुरगपदातिभेदेन चतुर्विधानि बलानि पृष्ठगानि येषां ते तथा ॥ १२ ॥ मृत्युदण्डेत्यादिश्लोकद्वयमेकान्वयं ॥ मृत्युदण्डः यमदण्डः स एव महाग्राहः महानक्रः यस्मिन् । शाल्मलयः कण्टकशाल्मलिवृक्षाकारायुधविशेषाः त एव द्रुमाः तैर्मण्डितं । मृत्युः यमः । प्रतिषेधितः युद्धादपक्रामितः ॥ १३—१४ ॥ सुयुद्धेनेत्यर्धं ॥ सुयुद्धेन स्वल्पयुद्धेनेत्यर्थः । विलोलिताः द्राविताः ॥ १५ ॥ क्षत्रियैः अनरण्यप्रभृतिभिः ॥ १६ ॥ न समो राघव इति । तेभ्योपि निहीनबलः सुखेन निग्राह्य इति भावः ॥ १७—१८ ॥ माहेश्वरं महेश्वरप्रीतिकरं ॥ १९ ॥ शक्तितोमरेत्यादिश्लोकत्रयमेकान्वयं ॥ २०—

नंश्लाघमानः ॥ ४ ॥ ति० नजयमात्रं अपितुसर्वस्वापहारोपीत्याह—**विनिपात्येति** । इदंविमानं पुष्पकं ॥ ५ ॥ ति० शाल्मलिद्रुमैः यातनावृक्षैः मण्डितं । सागरोपिद्वीपेषुवृक्षमण्डितोभवति ॥ १३ ॥ ति० एवंदिव्यंजयमुक्त्वाभौमंजयमाहुः—**क्षत्रियैरिति** ॥ १६ ॥

[ पा० ] १ क. ख. ग. ङ. च. ज—ट. विनिपात्यच. २ क. ख. ग. ङ. ज. झ. ट. महाबाहोवीर्यो. ३ घ. महाबलः. ४ घ. युध्वाविभोरत्नाकरेतदा. ५ च. छ. झ. ट. बह्वयोवैराक्षसाधिप. ६ अयंश्लोकःप्राचीनकोशेषुनदृश्यते. ७ क. ग. महाभागाश्चतुर्विध. ख. च. ञ. महाराज. ङ. झ. ट. महाभाग. ८ इदमर्धं ङ—ट. पाठेषुदृश्यते. ९ क. ख. घ.—ट. सुतोषिताः. १० क. ग. गुणोत्सेकैः. ११ ङ. च. छ. झ. ञ. ट. समरदुर्जयाः. १२ क. ख. ङ.—ट. महाराजइन्द्रजित्.

रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम् ॥ रथाश्वगजतोयौघं पदातिपुलिनं महत् ॥ २१ ॥
अनेन हि समासाद्य देवानां बलसागरम् ॥ गृहीतो दैवतपतिर्लङ्कां चापि प्रवेशितः ॥ २२ ॥
पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा ॥ गतस्त्रिविष्टपं राजन्सर्वदेवनमस्कृतः ॥ २३ ॥
तमेव त्वं महाराज विसृजेन्द्रजितं सुतम् ॥ यावद्वानरसेनां तां सरामां नयति क्षयम् ॥ २४ ॥
राजन्नापदयुक्तेयमागता प्राकृताज्जनात् ॥ हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ॥ ८ ॥

प्रहस्तादिभीरावणंप्रत्यात्मश्लाघनपूर्वकं रामादिवधप्रतिज्ञानेन समाश्वासनम् ॥ १ ॥

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा ॥ १ ॥
देवदानवगन्धर्वाः पिशाचपतगोरगाः ॥ न त्वां धर्षयितुं शक्ताः किं पुनर्वानरा रणे ॥ २ ॥
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता ॥ न हि मे जीवतो गच्छेज्जीवन्स वनगोचरः ॥ ३ ॥
सर्वां सागरपर्यन्तां सशैलवनकाननाम् ॥ करोम्यवानरां भूमिमाज्ञापयतु मा भवान् ॥ ४ ॥
रक्षां चैव विधास्यामि वानराद्रजनीचर ॥ नागमिष्यति ते दुःखं किंचिदात्मापराधजम् ॥ ५ ॥
अब्रवीत्तु सुसंक्रुद्धो दुर्मुखो नाम राक्षसः ॥ इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६ ॥
अयं परिभवो भूयः पुरस्यान्तःपुरस्य च ॥ श्रीमतो राक्षसेन्द्रस्य वानरेण प्रधर्षणम् ॥ ७ ॥
अस्मिन्मुहूर्ते हत्वैको निवर्तिष्यामि वानरान् ॥ प्रविष्टान्सागरं भीममम्बरं वा रसातलम् ॥ ८ ॥

---

॥ २१ ॥ दैवतपतिः इन्द्रः ॥ २२—२३ ॥ विसृज प्रेषय । यावन्नयति नेष्यति ॥ २४ ॥ अयुक्ता असंभाविता । प्राकृतात् क्षुद्रात् हनुमतः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

---

एवं मन्त्रिभिः सहसंमन्त्र्य भूयोभिहिते सकलसचिवप्रधानः प्रहस्तः स्वाभिमतमर्थं राज्ञे निवेदयति— तत इति ॥ १—२ ॥ हनुमतः पौरुषं प्रत्यक्षतो दृष्ट्वा कथमेवमुच्यत इत्यत्राह—सर्वे इति ॥ विश्वस्ताः परिभवितुमस्मान् कोपि न शक्त इति विश्वस्ताः विस्रब्धाः । प्रामादिकशत्रुपरिभवो न न्यूनतामापादयतीतिभावः ॥ ३—४ ॥ आत्मापराधः सीताहरणरूपो व्यतिक्रमः ॥ ५ ॥ हि यस्माद्वानरेण कृतमिदं कर्म सर्वेषां नः प्रधर्षणरूपं । भूयः तदुपरि पुरस्यान्तःपुरस्य च परिभवरूपं । अथच राक्षसेन्द्रस्य प्रधर्षणरूपं । अतो न क्षमणीयमित्यर्थः ॥ ६—७ ॥ ततः किं करिष्यसीत्यत आह—अस्मिन्निति ॥ ८—९ ॥

---

**स०** दैवतपतिः इन्द्रः । लङ्कायां तत्रापिकारागृहइतिशेषः । सागरमित्यर्धर्चादिः । अतोमहदितिपूर्वश्लोकस्थविशेषणंयुक्तं । "दीप्तानलार्कद्युतिमप्रमेयं" इत्यत्रप्रमेयदीपिकायामप्रमेयत्वस्यद्युताविवमहदित्यस्यबहुव्रीहिघटकपुलिनपदार्थेवान्वयः । अतो नपुंसकत्वोपपत्तिः । महान्तमितिलिङ्गविपर्यासोवा । दैवतशब्दग्रहणेनतेषांनपुंसकत्वंध्वन्यते ॥ २२ ॥ **ति०** पितामहस्य चतुर्मुखस्यरुद्रस्य । यदिज्यातोलब्धवरः तन्नियोगात् तदाज्ञया । सर्वस्यजगतःप्रजापतिःपिता । भगवांश्चतुर्मुखरुद्रःपितामहः । भगवान्हिरण्यगर्भःप्रपितामहः । अतएवादित्यरुद्रवसुप्रधानाःसर्वश्राद्धदेवताःसर्वयज्ञदेवताः । ससुरासुरसर्वप्रजोपास्यस्यसर्वस्वभूताश्चेतिकतकः । शंबरंवृत्रंहन्ति सः ॥ **स०** सर्वदेवनमस्कृतइत्युपहासः ॥ २३ ॥ इतिसप्तमःसर्गः ॥ ७ ॥

**रामानु०** जीवतइत्यनादरेषष्ठी ॥ ३ ॥ **रामानु०** करोमि अचिरादेवकरिष्यामि । "वर्तमानसामीप्येवर्तमानवद्वा" इतिभविष्यदर्थेलट् ॥ **स०** करोमीत्यनेनलट्प्रयोगेण विलंबासहत्वंसूचयति ॥ ४ ॥ **स०** शौर्यमदेनरजनीचरेत्युक्तिः ॥ ५ ॥ **ति०** भूयः पुनः । पुरस्य अन्तःपुरस्यचायंपरिभवोदाहरूपोनक्षमणीयइत्यनुषङ्गः । वानरेन्द्रप्रधर्षणं तज्जंराक्षसेन्द्रस्यदुःखं । अह-

**[ पा० ]** १ ग. घ. च. छ. ज. ञ. लङ्कायांच. २ ङ. छ. झ. ञ. ट. नीलांबुदप्रख्यः. ३ झ. ट. पुनर्मानवौ. ४ घ. वीरांश्चरजनीचरान्. ५ ङ. झ. ट. वानरेन्द्रप्रधर्षणं. ६ ङ. झ. ट. गत्वैको.

ततोऽब्रवीत्सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः ॥ प्रगृह्य परिघं घोरं मांसशोणितरूषितम्[1] ॥ ९ ॥
किं[2] वो हनुमता कार्यं कृपणेन तपस्विना ॥ रामे तिष्ठति दुर्धर्षे ससुग्रीवे[3] सलक्ष्मणे ॥ १० ॥
अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम् ॥ आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ॥ ११ ॥
इदं ममापरं वाक्यं शृणु राजन्यदीच्छसि ॥ उपायकुशलो ह्येव जयेच्छत्रूनतन्द्रितः ॥ १२ ॥
कामरूपधराः शूराः सुभीमा भीमदर्शनाः ॥ राक्षसा[4] वा सहस्राणि राक्षसाधिप निश्चिताः ॥ १३ ॥
काकुत्स्थमुपसंगम्य बिभ्रतो[5] मानुषं वपुः ॥ सर्वे ह्यसंभ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ॥ १४ ॥
प्रेषिता भरतेन[6] स भ्रात्रा तव यवीयसा ॥ [ तवागमनमुद्दिश्य कृत्यमात्ययिकं त्विति ॥[7] ]
स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति ॥ १५ ॥
ततो वयमितस्तूर्णं शूलशक्तिगदाधराः ॥ चापबाणासिहस्ताश्च त्वरितास्तत्र याम[8] ह ॥ १६ ॥
आकाशे गणशः स्थित्वा हत्वा तां हरिवाहिनीम् ॥ अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम् ॥ १७ ॥
एवं चेदुपसर्पेतामनयं रामलक्ष्मणौ ॥ अवश्यमपनीतेन जहतामेव जीवितम् ॥ १८ ॥
कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान् ॥ अब्रवीत्परमक्रुद्धो रावणं लोकरावणम् ॥ १९ ॥
सर्वे भवन्तस्तिष्ठन्तु महाराजेन सङ्गताः ॥ अहमेको हनिष्यामि राघवं सहलक्ष्मणम् ॥
सुग्रीवं[9] च हनूमन्तं सर्वानेव च वानरान् ॥ २० ॥
ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः ॥ क्रुद्धः परिलिहन्[10]वक्त्रं जिह्वया वाक्यमब्रवीत् ॥ २१ ॥
स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः ॥ एकोऽहं भक्षयिष्यामि तान्[11]सर्वान्हरियूथपान् ॥ २२ ॥
स्वः[12]स्थाः क्रीडन्तु निश्चिन्ताः पिबन्तो[13] मधुवारुणीम्[14] ॥ २३ ॥

कृपणेन गूढसंचारप्रकटितभयेन । तपस्विना शोच्येन ॥ १०—११ ॥ तद्वाक्यं किमित्याकाङ्क्षायामुपायप्रतिपादकं वाक्यं वक्तुमादावुपायं प्रशंसति—उपायेति ॥ १२ ॥ विवक्षितमुपायमेवाह—कामरूपेत्यादिना ॥ निश्चिताः निश्चितवन्तः । राक्षसा वा सहस्राणीति । सहस्रशब्दस्य संख्येयपरत्वेपि शब्दस्वाभाव्यान्नपुंसकत्वं । किमिति ब्रूयुस्तत्राह—प्रेषिता इति ॥ अस्यान्ते इतिकरणं द्रष्टव्यं ॥ १३–१५ ॥ ते वयं तत्र समीपे याम । यामेति लोटि रूपं ॥ १६–१७ ॥ एवं कृते किं स्यादित्यत्राह—एवं चेदिति ॥ रामलक्ष्मणौ अनयं अस्मत्कृतकैतवापरिज्ञानेन विश्वासं यद्युपसर्पेतां ततस्तेन अपनीतेन अपनयेन । जीवितं जहतामेव । जह्यातामेवेत्यर्थः ॥ १८–१९ ॥ सर्वे इत्यादि सार्धश्लोकमेकं वाक्यं ॥ २० ॥ तत इत्यादिसार्धश्लोकत्रयमेकान्वयं ॥ २१–२२ ॥ मधुवारुणीं मधुरूपां वारुणीं । रणकुञ्जरं रणाप्रधृष्यं । स्वःस्था इत्यमङ्गलोक्तिः

मेकएवगत्वाभीत्यासागरादीनपिप्रविष्टान्वानरान्हत्वा निवर्तयिष्यामि प्रधर्षणदुःखंनिवर्तयिष्यामि ॥ ७—८ ॥ **रामानु०** निवर्तिष्यामि निवर्तिष्ये ॥ ८ ॥ **रामानु०** तपस्विना तपस्व्याहारभूतफलाशिनेत्यर्थः ॥ **ती०** कृपणेन दीनेन । प्रकाशसंचारेभयाद्रात्रौकृतकार्येणवा । तपस्विना शोच्येन । हनुमताकिं । अलक्ष्यस्यतस्यहननेन नप्रयोजनमितिभावः । कृपणादिशब्दानांपारुष्यमात्रेतात्पर्यं । नत्वर्थे । मातृगाम्यादिगालिदानवत् । तर्हिकोहन्तव्यस्तत्राह—रामेतिष्ठति अहतेतिष्ठतिसतिकिमनेनहतेनेत्यर्थः ॥ १० ॥ **ती०** अद्यराममित्यस्यवास्तवार्थस्तु लक्ष्मणंरामंविनेतिशेषः । सुग्रीवंहत्वा आगमिष्यामीतिसंबन्धः ॥ ११ ॥ **ती०** विवृतं स्पष्टं । वपुः धृत्वेतिशेषः ॥ १४ ॥ **ति०** सृक्कां ओष्ठप्रान्तं ॥ २१ ॥

[ **पा०** ] १ ङ. च. छ. झ. ञ. ट. दूषितं. २ ङ—ट. किंनो. ३ ङ. झ. ट. सुग्रीवेपि. ४ क. ज. रक्षसांवै. घ. च. छ. झ. ञ. ट. राक्षसानां. ५ झ. ञ. ट. विवृतं. ६ च. छ. ञ. ट. भरतेनैव. ७ इदमर्धंप्राचीनकोशेषुनदृश्यते. ८ छ. ञ. ट. यामते. ९ क. ङ. छ—ट. सुग्रीवंसहनूमन्तंसर्वांश्चैवात्र. १० ङ. झ. ट. परिलिहन्सृक्कां. ११ क. ङ. झ. ट. तांसर्वांहरिवाहिनीं. १२ स्वस्थाःक्रीडन्त्वित्यर्धात्पूर्वं क. छ. पाठयोः ततोमहोदरःक्रुद्धोरावणंवाक्यमब्रवीत् इत्यर्धमधिकंदृश्यते. १३ क.—घ. छ.—ट. पिबन्तु. १४ ङ. झ. ट. मधुवारुणं.

अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणम् ॥ अ[1]ङ्गदं च हनूमन्तं रा[2]मं च रणकुञ्जरम् ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ॥ ९ ॥

विभीषणेनरावणंप्रति रामवधप्रतिज्ञानेनसायुधग्रहणंसरभससमुत्थितनिकुंभादिनिवारणपूर्वकं रामपराक्रमप्रशंसनेन तस्मिन्दण्डस्यदुष्करत्वोक्त्या वैपरीत्येऽनर्थप्राप्तिकथनपूर्वकं रामायसीताप्रत्यर्पणचोदना ॥ १ ॥ ततःसायंरावणेन विभीषणादिसर्वजनविसर्जनपूर्वकंस्वगृहंप्रतिगमनम् ॥ २ ॥

ततो निकुम्भो रभसः सूर्यशत्रुर्महाबलः ॥ सुप्तघ्नो य[3]ज्ञहा रक्षो म[4]हापार्श्वो महोदरः ॥ १ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ॥ इन्द्रजिच्च महातेजा बलवान्रावणात्मजः ॥ २ ॥
प्रहस्तोथ विरूपाक्षो वज्रदंष्ट्रो महाबलः ॥ धू[5]म्राक्षश्चातिकायश्च दुर्मुखश्चैव राक्षसः ॥ ३ ॥
परिघान्पट्टिशान्प्रासाञ्शक्तिशूलपरश्वधान् ॥ चापानि च सबाणानि खड्गांश्च वि[6]पुलाञ्शितान् ॥ ४ ॥
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः ॥ अब्रुवन्रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५ ॥
अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम् ॥ कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ॥ ६ ॥
तान्गृहीतायुधान्सर्वान्वारयित्वा विभीषणः ॥ अब्रवीत्प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ॥ ७ ॥
अप्युपायैस्त्रिभिस्तात योर्थः प्राप्तुं न शक्यते ॥ तस्य विक्रमकालांस्तान्युक्तानाहुर्मनीषिणः ॥ ८ ॥
प्रमत्तेष्वभियुक्तेषु दैवेन प्र[7]हृतेषु च ॥ विक्रमास्तात सिध्यन्ति परीक्ष्य विधिना कृताः ॥ ९ ॥

---

॥ २३–२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टमः सर्गः ॥ ८ ॥

अथ निकुम्भमतमेवानुसरन्तः सर्वेपि प्रधाना अहमहमिकया समुत्थाय शत्रुवधोद्युक्ताः । तमुद्योगं नीतिशास्त्रज्ञो विभीषणः प्रतिषिद्धवानित्याह । तत इत्यादि श्लोकषट्कमेकं वाक्यं ॥ आदौ निकुम्भोपादानं निकुम्भमतानुसरणसूचनार्थं ॥१–४॥ समुत्पत्य आसनेभ्यः समुत्थाय ॥५॥ प्रधर्षितेत्यनन्तरमितिकरणं द्रष्टव्यं ॥ ६ ॥ क्रियाभेदात्तानित्यस्य न पुनरुक्तिः ॥ ७ ॥ प्रहस्तादीनां प्रधानानां संनिहितत्वाद्रावणिं वा रावणं वा प्रत्युक्तिः । मध्ये कचित्सचिवान्प्रति वोक्तिः । विक्रमस्य नायमवसर इति दर्शयितुं सामान्येन विक्रमकालानाह—अप्युपायैरिति ॥ तातेत्यभिमुखीकरणाय संबोधनं । त्रिभिः सामदानभेदरूपैः । उपायैरपि योर्थः लब्धुं न शक्यते तस्य सिद्धये । तान् नीतिशास्त्रप्रसिद्धान् । विक्रमकालान् युक्तानाहुः । तदुक्तं कामन्दकेन—"सामादीनामुपायानां त्रयाणां विफले नये । विनयेन्नयसंपन्नो दण्डं दण्ड्येषु दण्डभृत्" इति ॥ तथाच नायं दण्डस्य काल इत्युक्तं ॥ ८ ॥ न केवलं दण्डस्याकालिकत्वं दण्ड्यत्वं च ते शत्रोर्नास्तीत्यभिप्रायेणाह—प्रमत्तेष्विति ॥ प्रमत्तेषु अनवधानेषु । विषयासक्तेष्वित्यर्थः । अभियुक्तेषु ज्ञानिषु । विरक्तेष्विति यावत् । यद्वा सामन्तैराक्रान्तेषु । दैवेन भाग्येन । प्रहृतेषु क्षीयमाणसंपत्स्वित्य-

---

ति० कतकरीत्यात्रसर्गाविच्छेदः ॥ २४ ॥ इत्यष्टमः सर्गः ॥ ८ ॥

ति० कौंभकर्णिरेवायंनिकुंभः परैःसहितस्तंपुनराह ॥ शि० निकुंभादिनामत्वेनबहूनांसत्त्वान्नपौनरुक्त्यं ॥ १ ॥ ति० विपुलांबुभान् निर्मलजलकान्तीन् ॥ स० विपुलांबुभान् घनजलप्रकाशान् ॥ ४ ॥ स० अभियुक्तेषु आग्रहवत्सु । प्रमत्तेष्वभियुक्तेष्वितिपदमेकंवा । प्रमत्तानां परप्रतिभटानां इषुभिरभियुक्तेषु । दैवेनप्रहतेषु अदृष्टशून्येषु । सिध्यन्ति फलोपलंभकाभवन्ति ॥९॥

[ पा० ] १ क.—ट. साङ्गदंच. २ ङ. झ. ट. सर्वांश्चैवात्रवानरान्. घ रामंचखरसूदनं. ३ ङ.—ट. यज्ञकोपश्च. ४ घ—छ. झ. ञ. ट. महापार्श्वमहोदरौ. ५ ख. ङ. च. झ. ञ. ट. धूम्राक्षोथनिकुंभश्च. ६ क. ख. ग. विपुलाञ्शुभान्. ङ. झ. ञ. ट. विपुलांबुभान्. ७ ठ. प्रहृतेषु.

अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम् ॥ जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ ॥ १० ॥
समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम् ॥ कृतं हनुमता कर्म दुष्करं तर्कयेत वा ॥ ११ ॥
बलान्यपरिमेयानि वीर्याणि च निशाचराः ॥ परेषां सहसाऽवज्ञा न कर्तव्या कथंचन ॥ १२ ॥
किं च राक्षसराजस्य रामेणापकृतं पुरा ॥ आजहार जनस्थानाद्यस्य भार्यां यशस्विनः ॥ १३ ॥
खरो यद्यतिवृत्तस्तु रामेण निहतो रणे ॥ अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम् ॥ १४ ॥
अयशस्यमनायुष्यं परदाराभिमर्शनम् ॥ अर्थक्षयकरं घोरं पापस्य च पुनर्भवम् ॥ १५ ॥
एतन्निमित्तं वैदेही भयं नः सुमहद्भवेत् ॥ आहृता सा परित्याज्या कलहार्थे कृतेन किम् ॥ १६ ॥
न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना ॥ वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ॥ १७ ॥
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम् ॥ पुरीं दारयते बाणैर्दीयतामस्य मैथिली ॥ १८ ॥
यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी ॥ नावस्कन्दति नो लङ्कां तावत्सीता प्रदीयताम् ॥ १९ ॥

र्थः । चकाराद्बालवृद्धादिषु । विधिना नीतिशास्त्रोक्तरीत्या । परीक्ष्य मन्त्रिभिर्विचार्य । कृताःविक्रमाः विग्रहाः सिध्यन्ति । नान्यत्रेत्यर्थः । यथाह कामन्दकः— "बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंयुतः ॥ अदेशस्थो बहुरिपुर्युक्तोऽकालेन यश्च सः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलं" इति ॥ ९ ॥ रामस्तु न तादृश इत्याह—अप्रमत्तमिति ॥ अप्रमत्तं सावधानं । तुशब्दोऽवधारणे । बले स्थितं स्थिरबलमित्यर्थः । जितरोषं अकाले रोषरहितमित्यर्थः । इच्छथेति । पूर्वं रावणंप्रतिवचनं । अत्र सर्वान्प्रतीति बहुवचनं ॥ १० ॥ राम इदानीं दैवानुपहत इत्यत्र उदाहरणमाह—समुद्रमिति ॥ ११ ॥ परेषां रामादीनां ॥१२॥ अनपराधिनि निष्कारणवैरकरणमप्यपरमनुचितमित्याह—किं चेत्यादि ॥ खरवध एव प्रथमापराध इत्याशङ्क्याह—खर इति ॥ दुर्वृत्ततया स्ववधप्रवृत्तखरवधे रामस्य नापकारगन्धोपीति भावः । निहतो यदि तत्र को दोष इति शेषः । दोषाभावमाह—अवश्यमिति ॥ १३—१४ ॥ प्रथमं रामेणापकृतत्वेप्यनेकदोषमूलं सीतापहरणं न कार्यमित्याह—अयशस्यमिति ॥ पुनर्भवं जन्मान्तरं । मूल्यन्तरमितियावत् ॥ १५ ॥ एवं सामान्यतः परदाराभिमर्शनस्यानर्थहेतुत्वमुक्त्वा प्रकृते तद्दर्शयति—एतदिति ॥ एतस्मान्निमित्तादित्यर्थः । "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति पञ्चम्यर्थे प्रथमा । अयशस्यत्वादिहेतोर्वैदेह्याः सकाशात्सुमहद्भयं भवेत् । तर्हि किमिदानीं कर्तव्यं तत्राह—आहृतेति ॥ उत्तमं वस्तु कथं त्यक्तव्यं तत्राह—कलहार्थे कृतेन किमिति । कलहार्थे विषये कृतेन कर्मणा किमित्यर्थः । "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रवस्तुहेतुनिवृत्तिषु" इति वैजयन्ती ॥ १६ ॥ बहुदोषप्रदर्शनपूर्वकं सीताप्रदानस्यावश्यकर्तव्यतामाह—न नः क्षममित्यादिना ॥ १७ ॥ यावद्दारयते दारयिष्यति । "यावत्पुरानिपातयोर्लट्" इतिभविष्यदर्थे लट् । राम इति शेषः ॥ १८ ॥ यावत् यदा । तावत्

जितरोषमित्यनेन पापाभावाद्दैवोपहतत्वाभावउक्तः । इतरविशेषणत्रयेणान्योपरुद्धत्वाभावः । राक्षसाभिमुख्येनेच्छतेत्युक्तिः । अतएवोपरिनिशाचराइतिसंबोधनं ॥ ति० प्रकृतोविक्रमानर्हएवकालइत्याह—अप्रमत्तमिति । विजिगीषुं अनेनशत्र्वन्तरराहित्यं । बले दैवबले स्थितं । जितरोषमित्यनेन मौर्ख्यराहित्यं । दुराधर्षत्वेन दिव्यास्त्रसंपद्युक्ता ॥ १० ॥ ती० यस्मात्तस्मादित्यध्याहार्यं । यस्मादवश्यंप्राणिनांप्राणारक्षितव्याः तस्मादितिव्यक्तं । स्वयमेवरामंहन्तुंप्रवृत्तःखरस्तुनिहतोयदि । एतेन पुराराक्षसराजस्यकिमपकृतं नापकृतमित्यर्थः ॥ १४ ॥ ती० पुनस्तदुपरिपापस्यच भवं उत्पत्तिस्थानं ॥ १५ ॥ ति० एतन्निमित्तं एतस्मा-

[ पा० ] १ क. ङ. च. छ. झ. ञ. ट. गतिंहनुमतोलोकेकोविद्यात्तर्कयेतवा. २ ङ. झ. सरामेणहतो. ३ क. ख. च. छ. ज. ञ. वैदेह्याभयं. ४ क. च. छ. ञ. पुनस्त्याज्या. ५ ङ. झ. ट. नतुक्षमं. ६ घ. रामोदीयतां.

विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः ॥ रामस्य दयिता पत्नी स्वयं न यदि दीयते ॥ २० ॥
प्रसादये त्वां बन्धुत्वात्कुरुष्व वचनं मम ॥ हितं पथ्यमहं ब्रूमि दीयतामस्य मैथिली ॥ २१ ॥
पुरा शरत्सूर्यमरीचिसन्निभान्नवाग्रपुङ्खान्सुदृढान्नृपात्मजः ॥
सृजत्यमोघान्विशिखान्वधाय ते प्रदीयतां दाशरथाय मैथिली ॥ २२ ॥
त्यजस्व कोपं सुखधर्मनाशनं भजस्व धर्मं रतिकीर्तिवर्धनम् ॥
प्रसीद जीवेम सपुत्रबान्धवाः प्रदीयतां दाशरथाय मैथिली ॥ २३ ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ॥ विसर्जयित्वा तान्सर्वान्प्रविवेश स्वकं गृहम् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः ॥ १० ॥

विभीषणेन रावणगृहमेत्यतंप्रति सीतानयनकालप्रभृतिलङ्कायामनर्थसूचकदुर्निमित्तप्रादुर्भावनिवेदनपूर्वकं तत्प्रायश्चित्तत्वेन रामायसीताप्रत्यर्पणचोदना ॥ १ ॥ रावणेन विभीषणंप्रति रामस्यालक्ष्यत्वोक्त्या तद्वचनानादरणेनगृहंप्रति तद्विसर्जनम् ॥ २ ॥

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः ॥ राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १ ॥
शैलाग्रचयसंकाशं शैलशृङ्गमिवोन्नतम् ॥ सुविभक्तमहाकक्ष्यं महाजनपरिग्रहम् ॥ २ ॥

---

तदा । नावस्कन्दति न रुणद्धि ॥ १९ ॥ शूरा इति । विनश्येयुरिति व्यत्ययेन योजनीयं । स्वयं न यदि दीयत इति पाठः ॥ २० ॥ ब्रूमि ब्रवीमि । अस्य अस्मै ॥ २१ ॥ अग्रं शल्यं पुङ्खं शरमूलं नवे अग्रपुङ्खे येषां ते । अतएव सुदृढान् पुरा सृजति स्रक्ष्यति । दशरथस्यायं दाशरथः । "तस्येदम्" इति संबन्धार्थे अण् । संबन्धश्चात्र पुत्रत्वं । दाशरथाय दाशरथये ॥ २२ ॥ रतिः सुखं ॥ २३ ॥ विभीषणेति । सर्वं प्रातरालोचयिष्याम इति विभीषणप्रमुखान् विसृज्येत्यर्थः ॥ २४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

अथ हितपरो विभीषणः सत्त्वोत्तरकाले रावणस्योपदेष्टुं तद्गृहं गत इत्याह—तत इत्यादि ॥ प्रविवेश महाद्युतिरित्यन्तमेकं वाक्यं । ततः प्रत्युषसीत्यनेन लङ्कादाहानन्तरमेकमहो गतमित्यवगम्यते । प्राप्तधर्मार्थनिश्चयः सीताप्रदानमेवास्माकं धर्मोर्थश्चेति कृतनिश्चयः । भीमकर्मा । परमार्थतो रावणस्य हितत्वेप्यनभिमतार्थविज्ञापनरूपसाहसकरणात् भीमकर्मेत्युक्तिः । राक्षसाधिपतेः अग्रजस्य । आलयं निवासभूतं । वेश्म प्रविवेशेति संबन्धः । शैलाग्रचयसंकाशं गिरिशिखरचयसदृशं । अनेकशृङ्गयुक्तत्वादितिभावः । शैलशृङ्गमिवोन्नतमित्यौन्नत्ये दृष्टान्तः । सुविभक्तमहाकक्ष्यं सुष्ठु विभक्तमहाप्रकोष्ठं । "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः । महा-

---

त्कारणात् ॥ १६ ॥ शि० यदिस्वयंरामस्यपत्नीनदीयते तर्हि लङ्काविनश्येत् । अतोदीयतां ॥ २० ॥ इतिनवमःसर्गः ॥ ९ ॥

ती० "राक्षसाधिपतेर्वेश्मप्रविवेशविभीषणः" इतिपाठेतु उत्तरषट्कस्यैतत्प्रपञ्चार्थत्वात् "अग्रजस्यालयंवीरःप्रविवेशमहाद्युतिः" इत्यनेनापौनरुक्त्यं । "राक्षसाधिपतेर्वेश्मभीमकर्माविभीषणः" इतिपाठे राक्षसाधिपतेरग्रजस्यालयं नित्यनिवासभूतं वेश्मेत्यन्वयः । अस्मिन्पाठेतु वेश्मालययोरपौनरुक्त्यं । "आकेशग्रहणान्मित्रमहितेभ्योनिवारयेत्" इतिन्यायेनसर्वात्मनाहितमेववक्तव्यमित्यभिप्रेत्यरावणानभिमतहितोपदेशप्रवृत्तत्वाद्भीमकर्मेत्युक्तिः ॥ स० भीमकर्मा वैरिणां । भीमंरावणंप्रति कर्म

[ पा० ] १ ङ. ज.—ट. दीयतांपत्नी. २ क. ख. ग. ङ. झ. ट. तथ्यंत्वहं. च. छ. ज. ञ. तथ्यमहं. घ. तथ्यंत्वहंब्रूयां. ३ ख. ङ. च. छ. ञ. ट. शरान्सूर्य. ४ ज. पुङ्खान्विशिखान्. ख. पुङ्खान्सुशितान्. ५ ख. ङ. च. छ. ञ. ट. त्वमोघान्निशितान्. ६ झ. ट. त्यजाशुकोपं. ७ घ. गृहंशुभं. ८ ख. घ. प्रविवेश.

मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् ॥ राक्षसैश्चाप्तपर्याप्तैः सर्वतः परिरक्षितम् ॥ ३ ॥
मत्तमातङ्गनिश्वासैर्व्याकुलीकृतमारुतम् ॥ शङ्खघोषमहाघोषं तूर्यनादानुनादितम् ॥ ४ ॥
प्रमदाजनसंबाधं प्रजल्पितमहापथम् ॥ तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ॥ ५ ॥
गन्धर्वाणामिवावासमालयं मरुतामिव ॥ रत्नसञ्चयसंबाधं भवनं भोगिनामिव ॥ ६ ॥
तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मिवान् ॥ अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७ ॥
पुण्यान्पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ॥ शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८ ॥
पूजितान्दधिपात्रैश्च सर्पिर्भिः सुमनोक्षतैः ॥ मन्त्रवेदविदो विप्रान्ददर्श सुमहाबलः ॥ ९ ॥
स पूज्यमानो रक्षोभिर्दीप्यमानः स्वतेजसा ॥ आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १० ॥
स राजदृष्टिसंपन्नमासनं हेमभूषितम् ॥ जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११ ॥
स रावणं महात्मानं विजने मन्त्रिसन्निधौ ॥ उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२ ॥
प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः ॥ देशकालार्थसंवादी दृष्टलोकपरावरः ॥ १३ ॥

जनैः विद्वद्भिः परिगृह्यत इति महाजनपरिग्रहं । तदधिष्ठितमित्यर्थः । महामात्रैः प्रधानैः । " महामात्राः प्रधानाः स्युः" इत्यमरः । आप्तपर्याप्तैः कार्यकरणदक्षैरिति महामात्रविशेषणं । व्याकुलीकृतमारुतं चक्रवातीकृतवायुं । शङ्खघोषमहाघोषं शङ्खघोषेण महान् घोषो यस्य तथोक्तं । तूर्यनादानुनादितं तूर्यनादेन सञ्जातप्रतिध्वनिं । प्रजल्पितमहापथं सञ्जातमहाकलकलमहामार्गं । तप्तकाञ्चननिर्यूहं द्रुतकनकमयमत्तवारणं । "निर्यूहो मत्तवारणः" इत्यमरः । भूषणोत्तमैः तोरणवितानप्रभृतिभिर्भूषितं । गन्धर्वाणामिवावासं । तौर्यत्रिकमुखरितत्वादितिभावः । मरुतां देवानां । आलयमिव । निरवधिकैश्वर्यसंपन्नत्वादितिभावः। रत्नसंचयैः संबाधं संपूर्णम् । अतएव भोगिनां सर्पाणां । भवनमिव स्थितं । तेजोविस्तृतरश्मिवान् तेजः शरीरकान्तिस्तदेव विस्तृतरश्मिरस्यास्तीति तथा । महाद्युतिः महाप्रभः । अभ्रमिवेत्युपमया तद्भवनं विभीषणस्य तेजोपहारकमितिव्यज्यते । एवं गृहोत्कर्षवर्णनं रावणस्यानीत्या सर्वमेकपदे नष्टमिति ज्ञापनाय ॥ १—७ ॥ पुण्यान् पुण्यकरान् । पुण्याहघोषान् पुण्याहमन्त्रघोषान् । विजयसंश्रितान् विजयफलकानित्यर्थः । उदाहृतान् उच्चारितान् ॥ ८ ॥ दधिपात्रैः दधियुक्तपात्रैः । मन्त्रवेदविदः मन्त्रब्राह्मणविदः । मन्त्राः कर्मसु विनियुक्ता इषेत्वेत्यादयः । कर्मचोदना ब्राह्मणानि ॥ ९ ॥ पूज्यमानः श्लाघ्यमानः ॥ १० ॥ दृष्टिसंपन्नं दृष्ट्या निवेदितमित्यर्थः । समुदाचारं जयशब्दप्रयोगादिसमुदाचारं । जगाम आरुरोह ॥ ११ ॥ विजने मन्त्रिव्यतिरिक्तजनरहिते । हेतुनिश्चितं हेतुभियुक्तिभिर्निश्चितं ॥ १२ ॥ प्रसाद्य स्तुतिवचनेन प्रसन्नं कृत्वा । सान्त्वेनोवाचेत्यन्वयः । उपस्थितक्रमः ज्ञातवचनक्रमः । देशकालार्थसंवादी देशकालप्रयोजनानुसारी । दृष्टलोकपरावरः लोके ये परावरे उत्कृष्टापकृष्टे ते दृष्टे ज्ञाते येन तथोक्तः । रामस्य धार्मिकत्वं रावणस्याधार्मिकत्वं च जानातीत्यर्थः

हितबोधनरूपंयस्येतिवा ॥ १ ॥ **स०** मत्तमातङ्गनिश्वासैरित्यनेन गजानांबाहुल्येनतच्छ्वासप्राचुर्येणतिरोगच्छतिवायुरितिभावः ॥ १४ ॥ **ती०** निर्यूहो द्वारं " निर्यूहःशिखरेद्वारे " इतिविश्वः । **ति०** प्रजल्पितमहापथं । आदिकर्मणिक्तः । प्रातःकालत्वात्प्रारब्धजल्पमहामार्गं ॥५॥ **ती०** गन्धर्वाणामिवालयं तौर्यत्रिकमुखरितत्वात् । आलयंमरुतामिवऐश्वर्यातिशयात् । भवनंभोगिनामिव परैःप्रवेष्टुमशक्यत्वात् । आलयापेक्षयातमित्युक्तिः ॥ ६ ॥ **ती०** तेजोविस्तृतरश्मिवान् तेजः स्वशरीरस्थं तेनविस्तृताः विसृता विश्रुतावा रश्मयोयस्य । अनेनपाठत्रयंसूचितं । **ति०** तेजोविस्तृतरश्मिवान् तेजोभिर्विस्तृतारश्मयोयेषांसन्ति । तादृशमणिमानित्यर्थः । **स०** तेजोविस्तृतरश्मिमान् तेजः विस्तृतंयेषुतेरश्मयोऽस्यसन्तीतितथा । रश्मिमान् रश्मिवान् ॥ ७ ॥

[ **पा०** ] १ घ. मैहामात्यैः. २ ङ. झ. ट. राक्षसैराप्त. घ. राक्षसैश्चापि. ३ क—ङ. झ. ट. तूर्यसंबाधनादितं. ज. तूर्यसंघानुनादितं. च. छ. ञ. तूर्यसन्नाद. ४ क. संजल्पित. ५ क. बहुरत्नसमाकीर्णं. ६ क. पूजितान्घृतपात्रैश्चस्रग्गन्धैः. च. छ. पूजितांस्तिलपात्रैश्च. ७ क. घ. संपूज्यमानः. ८ ङ. झ. ञ. ट. दीप्यमानं. ९ ख. आस्थानस्थं. १० क. महाबाहुंववन्दे.

यदाप्रभृति वैदेही [1]संप्राप्तेमां पुरीं तव ॥ तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४ ॥
सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः ॥ मन्त्र[2]संधुक्षितोप्यग्निर्न सम्यगभिवर्धते ॥ १५ ॥
अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ॥ [3]सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६ ॥
गवां पयांसि स्कन्नानि विमदा वीर[4]कुञ्जराः ॥दीनमश्वाः प्रहेषन्ते न[5] च ग्रासाभिनन्दिनः ॥ १७॥
खरोष्ट्राश्वतरा राजन्भिन्नरोमाः स्रवन्ति नः ॥ न स्वभावेऽवतिष्ठन्ते विधानैरपि चिन्तिताः ॥ १८॥
वायसाः सङ्घशः क्रूरा व्याहरन्ति समन्ततः ॥ समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥ १९ ॥
गृध्राश्च परिलीयन्ते पुरीमुपरि पिण्डि[6]ताः ॥ उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ २० ॥
क्रव्यादानां मृगाणां च पु[7]रद्वारेषु [8]सङ्घशः ॥ श्रूयन्ते वि[9]पुला घोषाः [10]सविस्फूर्जथुनिःस्वनाः ॥२१॥
तदेवं [11]प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् ॥ रोच[12]ते यदि वैदेही राघवाय प्रदीयताम् ॥ २२ ॥
इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया ॥ तत्रापि च महाराज न [13]दोषं कर्तुमर्हसि ॥ २३ ॥

॥ १३ ॥ प्रथमं रावणसंवादाय दुर्निमित्तानि दर्शयति—यदेति ॥ यदाप्रभृति यत्कालमारभ्य । क्रियाविशेषणमिदं । एवं तदाप्रभृतीत्यपि । अशुभानि निमित्तानि अशुभसूचकनिमित्तानि ॥ १४ ॥ सस्फुलिङ्गः अग्निकणसहितः । सधूमार्चिः धूमाकुलज्वालासहितः । सधूमकलुषोदयः धूमेन कलुषः उदयः आविर्भावो धूमकलुषोदयः तेन सहितः सधूमकलुषोदयः । शान्तः शान्तो ज्वलन्नित्यर्थः । मन्त्रसन्धुक्षितः मन्त्रवद्भिर्हविर्भिर्योजितः ॥ १५ ॥ अग्नयस्तिष्ठन्त्यत्रेत्यग्निष्ठाः महानसाः तेषु । अग्निशालासु अग्निहोत्रशालासु । ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु । सरीसृपाणि सर्पाः । लिङ्गव्यत्यय आर्षः । हविष्येषु देवताभ्यो देयेषु आज्यपुरोडाशादिषु ॥ १६ ॥ स्कन्नानि शुष्काणि "स्कन्दिर्गतिशोषणयोः" इति धातोर्निष्ठा । "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति नत्वं । वीरकुञ्जराः मत्तगजाः । प्रहेषन्ते हेषारवं कुर्वन्ति । हेषा अश्वशब्दः ॥ १७ ॥ अश्वतराः महाखराः । भिन्नरोमाः स्वस्थानात् भिन्नरोमाणः गलितरोमाणः ऊर्ध्वरोमाणो वा । अकारान्तत्वमार्षं । स्रवन्ति अश्रूणि मुञ्चन्ति । विधानैः चिकित्साभिः । चिन्तिताः अनुसंहिताः । चिकित्सिता अपीत्यर्थः । स्वभावे प्रकृतौ । नावतिष्ठन्ते प्रकृतिस्था न भवन्तीत्यर्थः ॥ १८ ॥ संघशो व्याहरन्ति संघशः समवेता इति च संबन्धः ॥ १९ ॥ पुरीमुपरि उपर्युपरिगृहेष्वित्यर्थः । पिण्डिताः मण्डलीभूताः सन्तः । परिलीयन्ते श्लिष्यन्ति । सन्ध्ये द्वे, अत्यन्तसंयोगे द्वितीया। शिवाः जम्बुकाः । उपपन्नाः नगरसमीपं प्राप्ताः ॥ २० ॥ क्रव्यादानां मांसभक्षकाणां । मृगाणां श्वादीनामित्यर्थः । सविस्फूर्जथुनिःस्वनाः विस्फूर्जथुः अशनिघोषः तद्रूपस्वनसहिताः ॥ २१ ॥ एवमुपस्थितदुर्निमित्तजातस्य प्रायश्चित्तं सीताप्रदानमेवेत्याह—तदेवमिति ॥ तत् दुर्निमित्तदर्शनात् । तत्सूच्ये कार्ये पराजये । एवं लङ्कादहनादिरूपेण प्रस्तुते प्रसक्ते सति । क्षमं अशुभनिवारणसमर्थं । इदं प्रायश्चित्तम् । इदंशब्दार्थमाह—वैदेहीति ॥ २२ ॥ एवमनभिमतभाषणेन राजा कुप्यतीति समाधत्ते—इदमिति ॥ मोहात् कार्यतत्त्वापरिज्ञानात् । लोभात् जीवनलोभाद्वापि । यदि व्याहृतं । तत्रापि तथापि । मयि

ति० अग्निर्मथनादिनोत्पत्तिकाले सधूमकलुषोदयः धूमकलुषोयउदयस्तत्सहितः । उत्पत्त्यनन्तरंप्रणयनकालेसस्फुलिङ्गःसधूमार्चिः । स० मन्त्रसंघहुतः विहितमन्त्रसमूहहुतोप्यग्निः सधूमार्चिः सस्फुलिङ्गः सधूमकलुषोदयः । मन्त्रसङ्घहुतइत्यनेन कर्त्रादिवैगुण्यनिमित्तोनाग्नेरयंभावः । किंतु नोऽनर्थसूचकइतिसूचयति ॥ १५ ॥ ति० नवग्रासाभिनन्दिनः । अनेनकृतभोजनाअपिबुभुक्षिताइति सूच्यते ॥ १७ ॥ स० वायसाःसमन्ततोव्याहरन्ति । तेचसाधारणाःकेचनेत्याह—क्रूराःसङ्घशइति । नकेवलंव्याहरन्ति । किंतु संघशः विमानाग्रेषुसमवेताश्चदृश्यन्ते । रामरामास्पर्शमात्रमाहात्म्येनास्मन्नेत्रशातनंजातं लंचजागृहीतिसूचयितुमदानेचभा-

[ पा० ] १ क.—घ. च.—ट. संप्रासेह. २ ङ. झ. ट. मन्त्रसंघहुतो. ३ छ. सरीसृपाश्च. ४ ङ. छ. झ. ञ. ट. वरकुञ्जराः. ५ झ. नवग्रासाभि. ६ ङ. ज. झ. ञ. पीडिताः. घ. विष्ठिताः. ७ ग. ङ. ज. झ. पुरीद्वारेषु. ८ क. घ. छ. ञ. सर्वशः. ९ क. घ. तुमुलाघोषाः. १० क. ख. ग. ङ. झ. ट. सविस्फूर्जित. घ. तत्रस्फूर्जित. ११ ग. निश्चिते. १२ क. ख. ञ. रोचतेवीर. ग. ङ. झ. ट. रोचयेवीर. १३ क. दोषंगन्तुं.

अयं च दोषः सर्वस्य जनस्यास्योपलक्ष्यते ॥ रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च ॥ २४ ॥
श्रावणे चास्य मन्त्रस्य निवृत्ताः सर्वमन्त्रिणः ॥ अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम् ॥ २५ ॥
संप्रधार्य यथान्यायं तद्भवान्कर्तुमर्हति ॥ २६ ॥
इति स मन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान् ॥ रावणं राक्षसश्रेष्ठं पथ्यमेतद्विभीषणः ॥ २७ ॥

हितं महार्थं मृदु हेतुसंहितं व्यतीतकालायतिसंप्रतिक्षमम् ॥
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ २८ ॥
भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम् ॥
सुरैः सहेन्द्रैरपि सङ्गतः कथं ममाग्रतः स्थास्यति लक्ष्मणाग्रजः ॥ २९ ॥
इतीदमुक्त्वा सुरसैन्यनाशनो महाबलः संयति चण्डविक्रमः ॥
दशाननो भ्रातरमाप्तवादिनं विसर्जयामास तदा विभीषणम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः ॥ ११ ॥

रावणेन मन्त्रकरणायसभाप्रवेशः ॥ १ ॥ रावणाज्ञयादूताहूतैराक्षसैर्नानायानैरावणसभाप्रवेशः ॥ २ ॥ रथारोहणेनसभामागतेनविभीषणेन रावणप्रणामपूर्वकं तन्नियोगेनपरमासने समुपवेशनम् ॥ ३ ॥

स बभूव कृशो राजा मैथिलीकाममोहितः ॥ असंमानाच्च सुहृदां पापः पापेन कर्मणा ॥ १ ॥

---

दोषं अपराधं । कर्तुं नार्हसि ॥ २३ ॥ अयं दोषः पूर्वोक्तदुर्निमित्तसूचितोऽनर्थः । सर्वस्योपलक्ष्यते । संबन्धसामान्ये षष्ठी । सर्वेणापि लक्ष्यत इत्यर्थः ॥ २४ ॥ प्रहस्तादिषु विद्यमानेषु भवतैव किमुच्यते तत्राह—श्रावणे चेति ।। तेषां त्वच्चित्तमात्रानुसारित्वादितिभावः । श्रावणे त्वां प्रति विज्ञापने च । त्वं पुनः कथं वक्तुं प्रगल्भसे तत्राह—अवश्यमिति ॥ भ्रातृत्वादिति भावः ॥ २५ ॥ संप्रधार्येत्यर्धं ॥ यथान्यायं यथायोग्यं । संप्रधार्य मनस्येव निश्चित्य । तत् संप्रधारितं कार्यं ॥ २६ ॥ इत्येतदूचिवानित्यन्वयः । ऊचिवान् उक्तवान् । "क्वसुश्च" इति लिटः क्वस्वादेशः ॥ २७ ॥ महार्थं प्रयोजनव्याप्तं । मृदु सान्त्वपूर्वं । हेतुसंहितं युक्तियुक्तं । व्यतीतकालायतिसंप्रतिक्षमं व्यतीतकालः भूतकालः । आयतिः भविष्यत्कालः । संप्रति वर्तमानकालः । तत्र क्षमं । अकीर्तिनाशकत्वेन सीतापहरणप्रायश्चित्तत्वेनवाप्यतीतकालक्षमं । सुखवर्धकत्वेन वर्तमानकालक्षमं । धर्मावहत्वेनायतिक्षमं । उपस्थितज्वरः प्राप्तक्रोध इत्यर्थः । प्रसङ्गवान् परिगृहीतार्थेभिनिवेशवान् ॥ २८ ॥ भयं भयजनकं पुरुषं । रामो युद्धेन सीतां प्राप्स्यतीति पूर्वं विभीषणोक्तस्य परिहारमाह—सुरैरिति । कथं तिष्ठति स्थास्यति । स्थातुमेव न शक्तः कुतो योत्स्यति कुतस्तरां सीतां प्राप्स्यतीति भावः ॥ २९ ॥ राघवं तृणीकृत्य कथमेवमाहेत्याशङ्क्य तन्निदानं दर्शयति—इतीति ॥ नाशनः हिंसकः । चण्डविक्रमः उग्रविक्रमः । आप्तवादिनं युक्तवादिनं ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

अथ परेद्युर्विभीषणाद्युपदेशेतिचिन्ताव्याकुलस्य

---

व्यनर्थंसूचयितुंचैवमितिभावः ॥ १९ ॥ शि० ननुत्वदुक्तमसंमतंअस्यारंभेसर्वेषांनिवृत्तत्वात् सज्जनहिंसावत् । इदमयुक्तंसर्वासंमतत्वाद्विषभक्षणवदित्यतआह—प्रापणइति । अस्यमन्त्रस्य प्रापणे बोधने । सर्वेमन्त्रिणोनिवृत्ताः त्वद्भयादपगताः । एतेन निवृत्तानामपिमदुक्तंसंमतमेवेतिसूचितं । तेनोहितानुमानयोर्बाधस्वरूपासिद्ध्यादिग्रस्तत्वंध्वनितं । ननुस्वासंमतंबुद्ध्वैवगताःनतुमद्भयादित्यतआह—यत्दृष्टंस्वतोज्ञातं अथवाश्रुतं अन्यतोज्ञातं । तन्मयावाच्यं भवत्संनिधौनिवेदनीयं ॥ २५ ॥ इतिदशमःसर्गः ॥ १० ॥

[ पा० ] १ ख. घ. ङ. झ. ट. प्रापणे. २ ङ. च. झ. ञ. ट. इत्येवमुक्त्वा.

[ अतीव कामसंपन्नो वैदेहीमनुचिन्तयन् ॥ ] अतीतसमये काले तस्मिन्वै युधि रावणः ॥
अमात्यैश्च सुहृद्भिश्च मन्त्रकालममन्यत ॥ २ ॥
स हेमजालविततं मणिविद्रुमभूषितम् ॥ उपगम्य विनीताश्वमारुरोह महारथम् ॥ ३ ॥
तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् ॥ प्रययौ राक्षसश्रेष्ठो दशग्रीवः सभां प्रति ॥ ४ ॥
असिचर्मधरा योधाः सर्वायुधधरास्तथा ॥ राक्षसा राक्षसेन्द्रस्य पुरतः संप्रतस्थिरे ॥ ५ ॥
नानाविकृतवेषाश्च नानाभूषणभूषिताः ॥ पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्ततः ॥ ६ ॥
रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः ॥ अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः ॥ ७ ॥
गदापरिघहस्ताश्च शक्तितोमरपाणयः ॥ परश्वधधराश्चान्ये तथाऽन्ये शूलपाणयः ॥ ८ ॥
ततस्तूर्यसहस्राणां संजज्ञे निस्वनो महान् ॥ तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे ॥ ९ ॥
स नेमिघोषेण महान्सहसाऽभिविनादयन् ॥ राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः ॥ १० ॥
विमलं चातपत्राणां प्रगृहीतमशोभत ॥ पाण्डरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा ॥ ११ ॥
हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे ॥ चामरव्यजने चास्य रेजतुः सव्यदक्षिणे ॥ १२ ॥
ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः ॥ राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ॥ १३ ॥
राक्षसैः स्तूयमानः सञ्जयाशीर्भिररिन्दमः ॥ आससाद महातेजाः सभां सुविहितां शुभाम् ॥ १४ ॥

रावणस्य निर्णयहेतुमन्त्रकरणाय सभाप्राप्तिं दर्शयति —स बभूवेत्यादि ॥ पापः पापी । "गुणवचनेभ्यो मतुपो लुगिष्टः" इति मतुपो लुक् । असंमानात् अनादरात् । सुहृदां विभीषणादीनां । कर्तरि षष्ठी । विभीषणोक्ते तूष्णींस्थितत्वेन प्रहस्तादीनामप्यनादरः सिद्ध एव । पापेन कुत्सितेन सीतापहरणरूपेण कर्मणा । हेतौ तृतीया । मैथिलीकाममोहितइति हेतुगर्भविशेषणं । तथाच मैथिलीविषयकाममोहात् सुहृदनादरात् पापहेतुसीताहरणाच्च कृशः । चिन्ताकुलो बभूवेत्यर्थः ॥ १ ॥ तस्मिन्काले मन्त्रयोग्यकाले । अतीतसमये अतीतावसरे सति । युधि च सत्यां युद्धे च प्राप्ते सति । अमात्यैश्च सुहृद्भिश्च मन्त्रस्य प्राप्तकालममन्यत । मुनिहृदयं तु कालेऽतीतसमये रावणायुःकालेऽतीते सति । युधि अमात्यादिभिः सहात्मानं । प्राप्तकालं प्राप्तमृत्युं । अमन्यतेति । वै प्रसिद्धौ ॥ २ ॥ हेमजालविततं स्वर्णमयगवाक्षव्याप्तं । स्वर्णसमूहनिर्मितमिति वा । विनीताश्वं शिक्षिताश्वयुक्तं । उपगम्य प्रदक्षिणीकृत्य ॥ ३ ॥ सभां मन्त्रशालां ॥ ४ ॥ चर्म खेटः ॥ ५ ॥ ततः रावणालयात् । नानाविकृतवेषाः नानाविधतया विशिष्य कृतालंकाराः । राक्षसा इति शेषः ॥ ६ ॥ आक्रीडद्भिः धारामण्डलगमनादिकं कुर्वद्भिः ॥ ७ ॥ अत्र प्रतिपदमन्य इत्यनुषञ्जनीयं । अनूत्पेतुरिति च ॥ ८ ॥ ततः स्वालयात् ॥ ९ ॥ नेमिः रथचक्रधारा ॥ १० ॥ विमलमिति । भासा विमलमित्यर्थः ॥ ११ ॥ हेममञ्जरिगर्भे हेमसूत्रगर्भे । इकारान्तत्वमार्षं । शुद्धस्फटिकविग्रहे शुद्धस्फटिकसदृशाकारे । चामरव्यजने चामररूपव्यजने । सव्यदक्षिणे सव्यदक्षिणयोः । "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः ॥ १२–१३ ॥ सुविहितां सुष्ठुनिर्मितां ॥ १४ ॥

स० अतीतसमये अतीतोभवतिसमयःद्वादशमासात्मकःसीताप्राप्तौसंकेतरूपोयस्मिंस्तस्मिन्काले । अनुचिन्तयन् तत्प्राप्तिमितिशेषः । युधि युद्धविषये । अमात्यादिभिःसहप्राप्तकालंयोग्यमालोचनमित्यमन्यत । युधि युद्धे । अतीतसमये विभीषणोक्तदिशाप्रतिबद्धेसतिकाले । तत्कालेमन्त्रणं प्राप्तकालं योग्यमित्यमन्यतेतिवा । ती० वास्तवार्थेसबभूवेत्यादिश्लोकद्वयमेकंवाक्यं । अतीव कामसंपन्नः अतएवपापेनकर्मणा अथापिमैथिलीमनुचिन्तयन् । स्वेष्टदेवतात्वेनेतिशेषः । अतएव मैथिलीकाममोहितः मैथिलीभृत्योभविष्यामीतिचसंबन्धः ॥ भयमोहितः सुहृदामसंमानाच्चकृशोबभूव । मन्त्रकालंचामन्यतेतियोजना ॥ २ ॥ स० विनीताश्वं

[ पा० ] १ इदमर्धं क. ङ.—ट. पाठेषुदृश्यते. २ ग. ङ. ज.—ट. प्राप्तकालं. ३ घ. महान्दिशोदशविलोकयन्. ४ ङ—ट. निनादयन्. ५ ख. ङ. झ. ट. चातपत्रंच. ६ घ. हेमरत्नविचित्रेच. ७ क. ख. ग. ङ. च. झ. ञ. ट. तस्य. ८ घ. स्तूयमानोसौजया. ९ क. ख. च. ज. ञ. विरचितां. १० ङ. छ. झ. ट. तदा.

सुवर्णै[1]रजतस्थूणां विशुद्धस्फटिकान्तराम् ॥ विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् ॥ १५ ॥
तां पिशाचशतैः षड्भिरभिगुप्तां सदा[2] शुभाम् ॥ प्रविवेश महातेजाः सुकृतां विश्वकर्मणा ॥ १६ ॥
तस्यां[3] तु वैडूर्यमयं प्रियकाजिनसंवृतम् ॥ महत्सोपाश्रयं भेजे रावणः परमासनम् ॥ १७ ॥
ततः शशासेश्वरवद्भूतांल्लघुपराक्रमान् ॥ समानयत मे क्षिप्रमिहैतान्राक्षसानिति ॥ १८ ॥
कृत्यमस्ति म[4]हज्जातं समर्थ्यमिह नो म[5]हत् ॥ १९ ॥
रा[6]क्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः ॥ अनुगेहमवस्थाय विहारशयनेषु च ॥
उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ॥ २० ॥
ते र[7]थान्रुचिरानेके दृप्तानेके पृथग्घयान् ॥ ना[8]गानन्येऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २१ ॥
सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः ॥ संपतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् ॥ २२ ॥
ते वाहनान्यवस्थाप्य यानानि विविधानि च ॥ सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव ॥ २३ ॥
राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः ॥ पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन् ॥ २४ ॥
ते समेत्य सभायां वै राक्षसा राजशासनात् ॥ यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २५ ॥
मन्त्रिणश्च यथा[9] मुख्या निश्चयार्थेषु पण्डिताः ॥ अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ॥
स[10]मेयुस्तत्र शतशः शूराश्च बहवस्तदा ॥ २६ ॥

सुवर्णेत्यादिश्लोकद्वयमेकान्वयं ॥ विशुद्धस्फटिकान्तरां निर्मलस्फटिकनिर्मितमध्यप्रदेशां । रुक्मपट्टोत्तरच्छदां कनकमयपट्टवस्त्रास्तरणां ॥ १५—१६ ॥ वैडूर्यमयं वैडूर्यप्रचुरं । प्रियकाजिनसंवृतं प्रियकमृगस्याजिनेन संवृतं । "प्रियको लोमभिर्युक्तो मृदूचमसृणैर्घनैः" इति वैजयन्ती । सोपाश्रयं सावष्टम्भं । सोपधानमिति यावत् ॥ १७ ॥ ईश्वरवत् राजार्हं । इह सभायां । एतान् एतन्नगरस्थान् । इति शशासेत्यन्वयः । तमेव प्रकारमाह—कृत्यमित्यर्धेन ॥ महद्यथा तथा समर्थ्यं यत्नेन निर्वाह्यं । जातं प्राप्तं । महत्कृत्यमस्तीति शशास । महद्भ्यो रामादिभ्यो जातमिति वा । महदित्यनेन तदानीं चारमुखेन रामादेः समुद्रतीरगमनं रावणो ज्ञातवानितिगम्यते ॥ १८—१९ ॥

राक्षसा इत्यादि सार्धश्लोकः । विहरमाणानीति शेषः । विहारो विहारस्थलं । विहारादिषु आस्थाय विहरमाणानि रक्षांसि । अभीतवत् अभीताः । चोदयन्तः चोदनार्थं लङ्कायामनुगेहं परिचक्रमुरित्यन्वयः ॥ २०—२१ ॥ गरुत्मद्भिः पक्षिभिः ॥ २२ ॥ वाहनानि शिबिकादीनि । यानानि अश्वादीनि । अवस्थाप्य बहिर्निक्षिप्य ॥ २३ ॥ अन्ये पुरोहितादयः । पीठेषु सुवर्णादिकृतासनेषु । अन्ये श्रोत्रियाः । बृसीषु दर्भमयासनेषु । केचित्पुत्रादयः । भूमौ सामान्यास्तरणमात्रयुक्तायां भूमौ ॥ २४ ॥ क्रियाभेदात्तच्छब्दद्वयं । उपतस्थुः समीपे तस्थुः । यथार्हं यथाक्रमम् ॥ २५ ॥ मन्त्रिणश्चेत्यादिसपादश्लोकः ॥ यथा यथाक्रमं । यथामुख्या इत्येकंपदं वा । मुख्याननतिक्रम्य

विनीताश्चायस्यतं ॥ ३ ॥ **रामानु०** ईश्वरवत् ईशानवत् । **स०** लघुपराक्रमान् शीघ्रपराक्रमान् । यद्वा परानुद्दिश्य आसम्यक् क्रमःपादविक्षेपःपराक्रमः । लघुःपराक्रमोयेषांतान् । जङ्घालानित्यर्थः ॥ १८ ॥ **रामानु०** कृत्यमिति । एकोमहच्छब्दः क्रियाविशेषणं । इहमहज्जातंकृत्यमस्ति । तत् महत् भूरियथातथा समर्थ्यं समर्थनीयं । कर्मणिघञ् । समर्थ्यमिहनोभवेदितिवा पाठः । पूर्वश्लोकान्तरस्थमितिकरणमत्रद्रष्टव्यं । इतिशशासेतिसंबन्धः ॥ १९ ॥ **रामानु०** रथान्तचराः रथमध्यस्थिताः । जग्मुरित्यर्थः । हयानित्यत्राप्यधिरुरुहुरितिसंबध्यते । जग्मुरेकेपदातयः केचित्पदातयस्सन्तोजग्मुरितिसंबन्धः ॥ २१ ॥ **ति०** बृसी वृत्तासनं ॥ २४ ॥ **ति०** निश्चितार्थेषु । भावेनिष्ठा । आहिताग्न्यादिः । अर्थनिश्चयेष्वित्यर्थः । अमात्याः उपमन्त्रिणः

**[ पा० ]** १ घ. ङ. झ. ट. रजतास्तीर्णां. च. छ. ञ. रजताकीर्णां. २ ङ. झ. ञ. ट. सदाप्रभां. ३ ङ. झ. ञ. ट. तस्यास्स. क. ग. छ. तस्यांस. ख. तस्यांवैडूर्यरचितं. ४ झ. ट. महज्जानेकर्तव्यमितिशत्रुभिः. ५ क. ग. छ. ज. भवेत्. ६ ज. राक्षसावचनंश्रुत्वा. ७ ङ. झ. ट. रथान्तचराएकेदृप्तानेकेदृढान्हयान्. ८ क. ग. ङ.—ट. नागानेके. ९ घ. महामुख्याः १० घ. समेतास्तत्र.

सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै ॥ रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र सङ्घशः ॥
[ राक्षसा राक्षसश्रेष्ठं परिवार्योपतस्थिरे ] ॥ २७ ॥

ततो महात्मा विपुलं सुयुग्यं वरं रथं हेमविचित्रिताङ्गम् ॥
शुभं समास्थाय ययौ यशस्वी विभीषणः संसदमग्रजस्य ॥ २८ ॥
स पूर्वजायावरजः शशंस नामाथ पश्चाच्चरणौ ववन्दे ॥
शुकः प्रहस्तश्च तथैव तेभ्यो ददौ यथार्हं पृथगासनानि ॥ २९ ॥
सुवर्णनानामणिभूषणानां सुवाससां संसदि राक्षसानाम् ॥
तेषां परार्ध्यागरुचन्दनानां स्रजश्च गन्धाश्च ववुः समन्तात् ॥ ३० ॥
न चुक्रुशुर्नानृतमाह कश्चित्सभासदो नैव जजल्पुरुच्चैः ॥
संसिद्धार्थाः सर्व एवोग्रवीर्या भर्तुः सर्वे ददृशुश्चाननं ते ॥ ३१ ॥
स रावणः शस्त्रभृतां मनस्विनां महाबलानां समितौ मनस्वी ॥
तस्यां सभायां प्रभया चकाशे मध्ये वसूनामिव वज्रहस्तः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः ॥ १२ ॥

कुंभकर्णादिषुसभामागतेषु रावणेनप्रहस्तंप्रति विशेषतोनगररक्षाचोदना ॥ १ ॥ तथा स्वकृतसीतानयनाद्यनुवादेनसह रामस्यसेनाभिःसहसागरतीरागमननिवेदनपूर्वकं तद्वधोचितमन्त्रकरणचोदना ॥ २ ॥ कुंभकर्णेन सक्रोधंरावणंप्रति सुहृद्भिः सहमंत्रपूर्वकंसीताहरणस्यकर्तव्यत्वोक्त्या तद्वैपरीत्यस्यानौचित्योक्तिपूर्वकं दर्पाद्रामवधप्रतिज्ञानेनसमाश्वासनम् ॥ ३ ॥

स तां परिषदं कृत्स्नां समीक्ष्य समितिंजयः ॥ प्रचोदयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १ ॥

स्थिताः । अनव्ययत्वमार्षं । निश्चयार्थेषु अर्थनिश्चयेषु । अमात्याः कर्मणि सहायाः । मन्त्रिणः बुद्धिसहायाः । यद्वा अमा सह तिष्ठन्तीत्यमात्याः । "अव्ययात्त्यप्" । आप्ता इत्यर्थः । बुद्धिदर्शनाः । बुद्धिचक्षुषः शूरा इत्युत्तरशेषः । अन्यथा क्रियापदपौनरुक्त्यं ॥ २६ ॥ सुखाय क्षेमाय । क्षेमं विचारयितुं । "क्रियार्थोपपदस्य" इत्यादिना चतुर्थी ॥ २७ ॥ युग्याः अश्वाः । युगं वहन्तीति "तद्वहति रथयुगप्रासङ्गम्" इति यत् ॥ २८ ॥ नाम शशंस । अभिवादनमकरोदित्यर्थः । शुकः प्रहस्तश्चेति । ववन्दाते इत्यर्थः ॥२९॥ स्रजश्च गन्धाः स्रजां गन्धाः ॥ ३० ॥ न चुक्रुशुः न घोषं चक्रुः । न जजल्पुः नाक्रमोक्तीश्चक्रुः । सभासदः सभागताः । संसिद्धेत्यर्धे वृत्तभेदश्चिन्त्यः ॥३१॥ समितौ सङ्घे "सङ्घे सभायां समितिः" इत्यमरः । सभायां आस्थानमण्डपे ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

अथ सर्वमेलनानन्तरं नगररक्षाविधानपूर्वकं स्वाभिमतानुसारेण रावणो मन्त्रमर्थयते—स तामित्यादि ॥ समितौ युद्धे जयतीति समितिंजयः । "संज्ञायां भृतॄवृजि—" इत्यादिना खचि मुमागमः । तां पूर्वो-

॥ २६ ॥ ति० नामग्रहणपूर्वकंनमस्कारःकार्यइतिसदाचारः । व्यग्रचित्ततयाराज्ञःस्वागमनज्ञापनायवा ॥ स० ददौ रावणः । दृष्ट्यासूचयामासेतिभावः ॥ २९ ॥ स० संसिद्धार्थाः पूर्णमनोरथाः । भेदनोपायाविषयाइतिभावः ॥ ३१ ॥ स० प्रभया देहकान्त्या ॥ ३२ ॥ इत्येकादशःसर्गः ॥ ११ ॥

[ पा० ] १ इदमर्धं प्राचीनकोशेषुनदृश्यते. २ च. छ. ञ. वरार्हजांबूनदचित्रितांगं. क. वरार्हमेकंसुविचित्रितांगं. ३ क. घ. ञ. छ. ञ. रथं. ४ क. ङ. च. छ. झ. ञ. ट. स्रजांच. ५ ङ. झ. ट. प्रबोधयामास.

सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः ॥ योधानधिकरक्षायां तथा व्यादेष्टुमर्हसि ॥ २ ॥
स प्रहस्तः प्रणीतात्मा चिकीर्षन्राजशासनम् ॥ विनिक्षिपद्बलं सर्वं बहिरन्तश्च मन्दिरे ॥ ३ ॥
ततो विनिक्षिप्य बलं पृथङ्नगरगुप्तये ॥ प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च ॥ ४ ॥
निहितं बहिरन्तश्च बलं बलवतस्तव ॥ कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्तु ते ॥ ५ ॥
प्रहस्तस्य वचः श्रुत्वा राजा राज्यहिते रतः ॥ सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः ॥ ६ ॥
प्रियाप्रिये सुखं दुःखं लाभालाभौ हिताहिते ॥ धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७ ॥
सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा ॥ मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८ ॥
स सोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः ॥ भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम् ॥ ९ ॥
अहं तु खलु सर्वान्वः समर्थयितुमुद्यतः ॥ कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १० ॥
अयं हि सुप्तः षण्मासान्कुम्भकर्णो महाबलः ॥ सर्वशस्त्रभृतां मुख्यः स इदानीं समुत्थितः ॥ ११ ॥
इयं च दण्डकारण्याद्रामस्य महिषी प्रिया ॥ रक्षोभिश्चरिताद्देशादानीता जनकात्मजा ॥ १२ ॥
सा मे न शय्यामारोढुमिच्छत्यलसगामिनी ॥ त्रिषु लोकेषु चान्या मे न सीतासदृशी मता ॥ १३ ॥
तनुमध्या पृथुश्रोणी शारदेन्दुनिभानना ॥ हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता ॥ १४ ॥

क्तां । कृतविद्याः अभ्यस्तधनुर्विद्याः । चतुर्विधाः रथिकहस्तिपकसादिपदातिरूपेण चतुर्विधाः । अधिकरक्षायां पूर्वापेक्षया सावधानरक्षायां । यथा स्युः यथा जागरूकाः स्युः । तथा व्यादेष्टुमर्हसि । अत्र इतिकरणं बोध्यं ॥ २ ॥ सः सर्वेषु विद्यमानेष्वपि रावणविस्रम्भपात्रभूतः । प्रणीतात्मा निश्चितबुद्धिः । मन्दिरे रावणगृहे । विनिक्षिपत् विन्यक्षिपत् व्यधात् ॥ ३ ॥ प्रमुखे अग्रे ॥ ४ ॥ अविमनः स्वस्थहृदयः यदभिप्रेतं तत्कुरुष्व । तत् अभीष्टं ते अस्तु-सिध्यतु ॥ ५ ॥ सुखेप्सुः कामपुरुषार्थेच्छुः । न विजयेच्छुः ॥ ६ ॥ मन्त्रणीयं वक्तुमनास्तेषामाभिमुख्यं संपादयितुं प्रथमं तान् प्रशंसति—प्रियाप्रिये इति ॥ धर्मकामार्थकृच्छ्रेषु धर्मकामार्थसङ्कटेषु विषये । धर्मादिष्विदानीं को वा सेव्य इति संदेहे तदनुष्ठानफलभूते । प्रियाप्रिये सुखदुःखसाधने वस्तुनी । सुखं दुःखं लाभालाभौ । लाभ इष्टप्राप्तिः अलाभः तन्नाशः तौ च । हिताहिते । हितं उत्तरकालफलवत् । अहितं तदितरत् ते च । वेदितुमर्हथ । प्रियाप्रियादिफलस्वरूपनिर्धारणाय धर्मादिसंदेहं निराकर्तुं समर्था इत्यर्थः ॥ ७ ॥ कथमर्हाम इत्यपेक्षायांतत्कार्यमुखेन दर्शयति—सर्वेति ॥ ८ ॥ इदानीमपि तथैवास्त्वित्याह—स सोमेति ॥ ग्रहाः सोमभिन्नाः सूर्यादयः । मरुद्भिः सोमादिभिन्नैर्देवैः ॥ ९ ॥ पूर्वोक्तस्यैवार्थस्य पुनरपि वक्ष्यमाणत्वात्तत्र पुनः कथने हेतुं दर्शयति—अहमिति ॥ तुरवधारणे । सर्वान् वः समर्थयितुं ज्ञापयितुं । उद्यतएव पूर्वमेवोद्यतः । किंतु कुम्भकर्णस्य स्वप्नाद्धेतोः इममर्थं नाचोदयं तस्य नावेदयं । अतः कथ्यत इत्यर्थः ॥ १० ॥ कुम्भकर्णस्य स्वप्नादित्युक्तमेव स्पष्टयति—अयमिति ॥ षण्मासानित्यत्यन्तसंयोगे द्वितीया । इदानीं समुत्थितः । अतः पूर्वं नावेदयमित्यर्थः ॥ ११ ॥ उत्तरत्र सीताप्रत्यर्पणं विना रामजयो विचार्यतामिति वक्तुकामस्तस्या दुस्त्यजत्वं दर्शयितुं तामेव स्तौति—इयमित्यादिना ॥ रक्षोभिश्चरितादेशात् जनस्थानादित्यर्थः । सा मयाऽनीतेत्युक्तिरजानन्तं कुम्भकर्णं प्रति ॥ १२ ॥ अलसगामिनी मन्दगामिनी । त्यज तामनिच्छन्तीं परिगृहाणेतरामित्यत्राह—त्रिष्विति ॥ १३ ॥ असदृशत्वमुपपादयति—तनुमध्येत्यादिना ॥ हेमबिम्बनिभा स्वर्णप्रतिमातुल्या ।

स० मन्दिरे गृहरूपनगरे । यद्वा मन्दिररक्षणानन्तरंपुररक्षणमितिपूर्वंमन्दिरइत्युक्तिः । एतेनागच्छद्द्वयवैपुल्यंद्योत्यते ॥ ३ ॥ ति० राजहितैषिणः प्रहस्तस्येत्यन्वयः ॥ ६ ॥ स० षण्मासान् । विशेषणसमासः । षडितिभिन्नंवापदं । "कालाध्वनोः—"

[ पा० ] १ ङ.—ट. योधानगररक्षायां. क. योधान्नगररक्षार्थं. ख. योधान्नगररक्षार्थैः. २ ग. ङ. छ.—ट. विनिक्षिप्यबलं. ३ ङ. झ. ट. सर्वंनगर. ४ क. विहितंचमयासर्वंबलवन्बलतस्तव. ५ क. ख. च—ट. मस्त्विते. ६ ज. प्रहस्तवचनं. ७ क. ङ—ट. राज्यहितैषिणः. ८ क. ग. ङ—ञ. सुखेदुःखेलाभालाभे. ९ ख. ग. ङ. ज—ट. श्चरितोद्देशात्. १० ङ. झ. ञ. ट. तथा.

सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ ॥ दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः ॥ १५ ॥
हुताग्नेरर्चिसंकाशामेनां सौरीमिव प्रभाम् ॥ [ दृष्ट्वा सीतां विशालाक्षीं कामस्य वशमेयिवान् ] ॥१६॥
उन्नसं वदनं वल्गु विपुलं चारु लोचनम् ॥ पश्यंस्तदाऽवशस्तस्याः कामस्य वशमेयिवान् ॥ १७॥
क्रोधहर्षसमानेन दुर्वर्णकरणेन च ॥ शोकसंतापनित्येन कामेन कलुषीकृतः ॥ १८ ॥
सा तु संवत्सरं कालं मामयाचत भामिनी ॥ प्रतीक्षमाणा भर्तारं राममायतलोचना ॥ १९ ॥
तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम् ॥ श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि ॥ २०॥
कथं सागरमक्षोभ्यमुत्तरन्ति वनौकसः ॥ बहुसत्त्वझषाकीर्णं तौ वा दशरथात्मजौ ॥ २१ ॥
अथवा कपिनैकेन कृतं नः कदनं महत् ॥ दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथामतिः ॥ २२ ॥
मानुषान्मे भयं नास्ति तथाऽपि तु विमृश्यताम् ॥ तदा देवासुरे युद्धे युष्माभिः सहितोऽजयम् ॥

सौम्या रम्या मायेव प्रतिक्षणमपूर्ववदाश्चर्यावहवस्तुवत् स्थिता ॥ १४ ॥ क्रमेणारोक्ष्यतीत्याशङ्क्य मन्मथो विलम्बं नसहत इत्याह—सुलोहितेति ॥ सुप्रतिष्ठितौ समतलौ दृष्ट्वा । स्थितस्येति शेषः । शरीरजः कामः ॥ १५ ॥ सोपि निगृह्यतामित्याशङ्क्याह—हुतेत्यादि ॥ अर्धमेकं वाक्यं । अर्चिश्शब्दस्य इकारान्तत्वमार्षं । सौरीमिवप्रभामित्यस्य दृष्ट्वेत्यादिशेषपूरणेन संबन्धः ॥ १६ ॥ उन्नसं उन्नतनासिकं । "उपसर्गाच्च" इति नसादेशः । अवशः विवशः तदधीनः कथं निगृह्णीयामिति भावः । वल्गु सुन्दरं ॥ १७ ॥ कामवश्यत्वमेव विवृणोति—क्रोधेति ॥ क्रोधहर्षयोः समानेन क्रोधे हर्षे चैकरूपेण । दुर्वर्णकरणेन वैवर्ण्यकारिणा । शोकसंतापनित्येन शोके मनोव्यथायां संतापे शरीरपीडायां च नित्येन अनपायेन कामेन । कलुषीकृतः व्याकुलचित्तोस्मि ॥ १८ ॥ यद्येवं सा प्रसह्यापि शय्यामारोप्यतां तत्राह—सा त्विति ॥ संवत्सरं कालं संवत्सररूपं कालं । संवत्सराभ्यन्तरे रामो यदि नागतः तदा तथा करिष्यामीत्ययाचतेत्यर्थः । इदं चारोप्योक्तं । वस्तुतो रावणेनैव तथा प्रतिज्ञानादिति भावः ॥ १९ ॥ चारुनेत्राया इति प्रतिश्रवणहेतुः । नयनसौन्दर्यपारवश्येन तद्वचनमङ्गीकृतवानस्मीतिभावः । अध्वनि दीर्घमार्गे ॥ २० ॥ कथमेनामुपलप्स्यसे तामुपनेतुमुपागते सपरिकरे दाशरथावित्यत आह—कथमिति ॥ उत्तरन्ति उत्तरिष्यन्ति । सत्त्वानि झषव्यतिरिक्तजन्तवः ॥ २१ ॥ तर्हि किमिदानीं विचार्यं तत्राह—अथवेति ॥ यस्य यथा मतिः तथा ब्रूतेत्यर्थः ॥ २२ ॥ विभीषणमतव्यावृत्त्यर्थं स्वमतमाह—मानुषादिति ॥ सपादश्लो-

इतिद्वितीया ॥ ११ ॥ **शि०** ननुतर्हिकिमर्थंसंरोध्यतइत्यतआह—हुतेति । सौरींप्रभामिव एनांसीतां लब्ध्वेतिशेषः । तस्याःसीतायावदनंपश्यन् अवशःस्वतन्त्रोपियोरामः कामस्य तत्प्राप्तिविषयकोत्कटेच्छायाः । वशमेयिवान् सरामःक्रोधंकोपंहर्षंयतिवर्धयति तेनसीतानिरोधेन समानंजीवनंयस्यतेन । दुर्वर्णस्य रामशरीरवैवर्ण्यस्य करणंयस्मिंस्तेन । शोकसंतापयोःनित्यंनियमेनस्थितिर्येनतेनकामेन कलुषीकृतः व्याप्तः । एतेन रामदुःखप्राप्तयेएवसीतानिरोधइतिध्वनितं । सार्धश्लोकद्वयमेकान्वयि ॥ **ति०** अवशोस्वाधीनएव तस्यावदनंपश्यन्नेयिवान् प्राप्तवान् । यत्किंचिद्विषयनिमित्तकक्रोधहर्षकालयोरपिसमानेन तावप्यभिभूयान्तःप्रवृत्तेन । दुर्वर्णकरणेन कान्तिनाशकेन । तदप्राप्तिजयोःशोकसंतापयोः नित्येन नित्यप्रवर्तकेन ॥ १६—१८ ॥ ननुस्वनगरेस्थितायांतस्यांकिमित्येवंदुःखभोगोतआह—सात्विति । सातु संवत्सरंकालं तत्समाप्तिपर्यन्तं । रामंप्रतीक्षमाणा ममास्पर्शमयाचत । मयापि तथास्त्विति प्रतिज्ञातं । बलात्कारेशापान्मरणभियास्वेनैवकृतंसमयंतयाचितत्वेनब्रूतइत्यत्रवस्तुतत्वं । नहिसीतैवंयाचितुमर्हतीति । अतएव पूर्वं " सामेनशय्यामारोढुमिच्छत्यलसगामिनी " इतिसामान्येनैवोक्तं ॥ **शि०** ननुभर्तारंविनासाकथंजीवतीत्यतआह—सेति । भर्तारंप्रतीक्षमाणासा सीता संवत्सरं वर्षपर्यन्तं । कालं स्वजीवनसमयं मामयाचत अवदत् । **ती०** तर्ह्यादितआरभ्यप्रतिकूलयासीतयाकिंप्रयोजनंसात्यज्यतामित्याशंक्य " सामेनशय्यामारोढुमिच्छत्यलसगामिनी " इत्यवशादागतसत्यवचनसूचितंतदनुरागाभावंसंगोप्यस्वकृतस्यावधेस्तत्प्रार्थनापूर्वकत्वमारोप्याह—सात्वित्यादि । कालं अवधित्वेनायाचत ॥ १९ ॥ **स०** कामात् स्वप्रतिज्ञापरिपालननिमित्तसीतास्पर्शाभावजनितात् अहंश्रान्तः सततमध्वनियातो हयइव । रंभापुञ्जकस्थलीशापनिमित्तमरणभयात्तदस्पर्शइतिगूढोभिप्रायः ॥ २० ॥ **ति०** अतःकार्यगतयोदुर्ज्ञेयाः । तस्माद्यस्ययथामति यद्भाति तद्ब्रूत ॥ २२ ॥

**[ पा० ]** १ इदमर्धं क.—ट. पाठेषुनदृश्यते. २ क. ख. ग. ङ. झ. ञ. ट. स्तदवशः. घ. स्तद्वदनंतस्याः. ३ क. ङ—ट. मक्षोभ्यंतरिष्यन्ति. ४ झ. ञ. यथामति. ५ ङ. झ. ट. मानुषान्नो. ६ क. तथादेवासुरांश्चापियुष्माभिः.

ते मे भवन्तश्च तथा सुग्रीवप्रमुखान्हरीन् ॥ २३ ॥
परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ ॥ सीतायाः पदवीं प्राप्तौ संप्राप्तौ वरुणालयम् ॥ २४ ॥
अदेया च यथा सीता वध्यौ दशरथात्मजौ ॥ भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ॥२५॥
न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित् ॥ सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम ॥ २६ ॥
तस्य कामपरीतस्य निशम्य परिदेवितम् ॥ कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥ २७ ॥
[ संप्रधार्यैव तत्कार्यं करणीयं त्वया विभो ॥ संप्रधार्य सहामात्यैः पूर्वमेव यथातथम् ] ॥ २८ ॥
यदा तु रामस्य सलक्ष्मणस्य प्रसह्य सीता खलु सा इहाहृता ॥
सकृत्समीक्ष्यैव सुनिश्चितं तदा भजेत चित्तं यमुनेव यामुनम् ॥ २९ ॥
सर्वमेतन्महाराज कृतमप्रतिमं तव ॥ विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ ३० ॥
न्यायेन राजकार्याणि यः करोति दशानन ॥ न स संतप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३१ ॥
अनुपायेन कर्माणि विपरीतानि यानि च ॥ क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३२ ॥
यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति ॥ पूर्वं चापरकार्याणि न स वेद नयानयौ ॥ ३३ ॥

क्रमेकं वाक्यं । मानुषात् भयाभावे हेतुमाह—तदेति । अजयमिति च्छेदः । लङुत्तमैकवचनं । इन्द्रं जितवतो मे मनुष्यः कियानितिभावः । ते मे भवन्तश्च तथा । ते देवासुरे युद्धे जेतारो भवन्तः । तथा सहायभूताः । वर्तन्त इत्यर्थः । सुग्रीवप्रमुखान्हरीनित्युत्तरशेषः ॥ २३ ॥ प्राप्तौ ज्ञातवन्तौ । वरुणालयं समुद्रं संप्राप्तौ । प्राप्तुतां नाम का नः क्षतिरितिभावः ॥ २४ ॥ विमृश्यतामित्युक्तं विमर्शप्रकारं दर्शयति—अदेयेति ॥ मन्त्रो मन्त्र्यतां मन्त्रः क्रियतामित्यर्थः । सुनीतं सुनिश्चितं ॥ २५ ॥ मा भूद्रामस्य समुद्रतरणे तव जये वा शक्तिः तत्सहायस्यान्यस्य कस्यचित्स्यात्तत्राह—नहीति ॥ वानरैः सह सागरं तीर्त्वा । आगन्तुमिति शेषः । रामादन्यस्य शक्तिं न पश्यामि। अतो मम निश्चयेन जय इत्यन्वयः ॥२६॥ कामपरीतस्य कामेन विपरीतस्य । कामातुरतया विपरीतबुद्धेरित्यर्थः। परिदेवितं परिदेवनं । तद्वदसंगतभाषणमित्यर्थः ॥२७—२८॥ "मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये । सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् " इत्युक्तोत्तममन्त्रयितृभावे "एकोर्थं विमृशन्नेको धर्मे प्रकुरुते मनः । एकः कार्याणि कुरुते तमाहुर्मध्यमं नरं"इत्युक्तमध्यममन्त्रयितृभावेपि नावस्थितोसीत्याह—यदेति ॥ यदा सकृत्समीक्ष्यैव स्वयमेव विचार्य। रामस्य सीता इहाहृता तदैव चित्तं कर्तृ यमुना यामुनं पर्वतमिव सुनिश्चितं सुनिश्चयम् भजेत खलु । स एवास्माभिः सह विचारकालः । इदानीं विचारणं गते जले सेतुबन्धनमिति भावः॥२९॥ तदा कृते किं स्यादित्यत्राह—सर्वमिति॥ कृतमिति कर्मणि निष्ठा । एतत्कृतं सर्वं मन्त्रकर्म । अस्य कर्मणः सीताहरणरूपस्य । आदावेव यदि विधीयेत तदा अप्रतिमं समञ्जसं स्यादित्यर्थः ॥ ३० ॥ आदौ विचार्य कृतस्य साफल्यप्रदर्शनपुरःसरमविचार्यकृतस्य फलवैपरीत्यं दर्शयति श्लोकद्वयेन—न्यायेनेति ॥ न्यायेन विचारणेन ॥ ३१ ॥ अनुपायेन क्रियमाणानि कर्माणि विपरीतानि विपर्यस्तानि यानि तानि च दुष्यन्ति दोषवन्ति च भवन्ति । न केवलं निष्फलानि प्रत्युतानर्थकराण्यपिभवन्तीत्यर्थः । अप्रयतेषु अशुचिषु अपात्रेषु । दीयमानानीति शेषः ॥ ३२ ॥ अकालकृतं मन्त्रकरणमनुचितमित्याह—य इति ॥ पूर्वकार्याणि पूर्वं कर्तव्यानि मन्त्रकर्माणि । अपरकार्याणि उत्तरकालकर्तव्यकर्मारम्भान् । पूर्वं मन्त्रवि-

ती० नहिशक्तिमित्यस्यवास्तवार्थस्तु । अन्यस्यशक्तिंनपश्यामि । रामंविनेतिशेषः । एवंनिश्चयेसतिममजयोनेत्यन्वयः ॥ २६ ॥ ति० यदा सलक्ष्मणस्यरामस्यसीतासकृत्समीक्ष्यैव तात्कालिकापातविचारंकृत्वैवप्रसह्यहृता । तदैव तेचित्तं यमुना यामुनंह्रदमिव सुनिश्चितंभजेत निश्चयभजनार्हं । यथायमुनापृथिव्यामवतारसमयएव स्वह्रदंपूरयति कालान्तरेतुसमुद्रंगतत्वात्तज्जलस्यतत्पूरणासंभवः । एवमस्माभिःसहविचारस्यसएवकालः । इदानींत्वनर्थनिश्चयोजातएवेतिविचारोनिष्फलइतिक्रोधजाव्यङ्ग्योक्तिः ॥ २९ ॥

[ पा० ] १ घ. त्वतुं. २ अयंश्लोकः. घ. पाठेदृश्यते. ३ घ. पश्चात्सुखीहिभवतिप्रभो.

चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् ॥ क्षिप्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ ३४ ॥
त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् ॥ दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम् ॥ ३५ ॥
तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः ॥ अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥ ३६ ॥
अहमुत्सादयिष्यामि शत्रूंस्तव विशांपते ॥ यदि शक्रविवस्वन्तौ यदि पावकमारुतौ ॥
तावहं योधयिष्यामि कुबेरवरुणावपि ॥ ३७ ॥
गिरिमात्रशरीरस्य महापरिघयोधिनः ॥ नर्दतस्तीक्ष्णदंष्ट्रस्य बिभियाद्वै पुरन्दरः ॥ ३८ ॥
पुनर्मां स द्वितीयेन शरेण निहनिष्यति ॥ ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥ ३९ ॥

वधेन वै दाशरथेः सुखावहं जयं तवाहर्तुमहं यतिष्ये ॥
हत्वा च रामं सह लक्ष्मणेन खादामि सर्वान्हरियूथमुख्यान् ॥ ४० ॥
रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः ॥
मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

चारात्पूर्वं ॥ ३३ ॥ इदानीमसमीक्ष्यकारिणो बलमपि निरर्थकमित्याह—चपलस्येति ॥ यद्वा प्राप्तामप्यनीतिं बलेन समीकरिष्यामीत्यत्राह—चपलस्येति ॥ कृत्येषु क्षिप्रं चपलस्य असमीक्ष्यकारिणः । बलमधिकमाभिमुख्येन जेतुमशक्यम् । समीक्ष्य विचार्य । अन्ये शत्रवः । खं रन्ध्रम् प्रपद्यन्ते । असमीक्ष्यकरणरूपावसरं लब्ध्वा अभिभवन्तीत्यर्थः । द्विजाः हंसाः । अलङ्घ्यस्यक्रौञ्चस्य क्रौञ्चाख्यपर्वतस्य । लङ्घनाय खं रन्ध्रंयथाप्रपद्यन्ते तद्वदित्यर्थः । क्रौञ्चस्यौन्नत्येनालङ्घ्यत्वात् । सुब्रह्मण्यशक्तिविदारणकृतरन्ध्रेण हंसास्तमतिक्रम्य गच्छन्तीति प्रसिद्धिः ॥ ३४ ॥ सापायं च त्वत्कृतं कर्मेत्याह—त्वयेति ॥ महत् दुष्करं । सापायमित्यर्थः । अप्रतिचिन्तितं अनालोचितं । इदं सीताहरणरूपंकार्यं । सापायत्वमेवाह—दिष्ट्येति ॥ ३५ ॥ सर्वमेतन्महाराजेत्युपक्रम्योक्तमुपसंहरति—तस्मादिति ॥ तर्हि का गतिरित्यपेक्षायां मयि जीवति कस्ते भार इत्याह—अहमिति । अनघेति । त्वं तु निर्व्यसनोभवेत्यर्थः । समीकरिष्यामि नीत्यनीती तुल्ये करिष्यामीत्यर्थः ॥ ३६ ॥ तदेवाह—अहमिति सार्धश्लोकः ॥ विशांपते प्रजानां पते । अतिमानुषवैभवौ तौ कथं जय्यौ तत्राह—यदीति । तौ दशरथात्मजौ । शक्रविवस्वन्तौ यदि स्यातां तथापीत्यर्थः ॥ ३७ ॥ स्वस्य योधनसामर्थ्यविशेषं दर्शयति—गिरीति ॥ गिरिमात्रशरीरस्य गिरिप्रमाणदेहस्य । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच्प्रत्ययः । पञ्चम्यर्थे षष्ठी ॥ ३८ ॥ शरवर्षिणो रामस्य पुरतः कथं स्थातुं शक्तस्तत्राह—पुनरिति ॥ सः रामः । पुनर्मां प्रथममेकेन शरेण निहत्य पुनरपि द्वितीयेन शरेण मां हनिष्यति । ततः तावदेवेत्यर्थः । अत्राश्लीलमपि ध्वन्यते । मां द्वितीयेन शरेणावश्यंनिहनिष्यति । तस्य रामस्य । ततः तस्माद्धननात् । कर्तरिषष्ठी । रुधिरं स्वरुधिरं । पास्यामि । कामं अत्यर्थं । आश्वस निश्वसेति ॥ ३९ ॥ आत्मानमरक्षन्परघातीवीरो न श्लाघ्य इति न्यायेन परवत्स्वस्यापि वधे न कोप्यतिशय इत्यत्राह—वधेनेति ॥ अत्राप्यर्थान्तरं । वधेन स्वविनाशेन । दाशरथेः सुखावहं जयं तव सकाशादाहर्तुं यतिष्ये । रामं हत्वा रामं गत्वा । "हन हिंसागत्योः" इति धातुः । खादामि किं जीवामि किमिति काकुरनुसन्धेया ॥ ४० ॥ रमस्वेति । अत्राप्यर्थान्तरं । मया रामे विषये अक्षयं यथा भवति तथा गमिता प्रापिता सीता रामस्य वशगा भविष्यति । रमस्वेत्यादौ काकुः ॥ ४१ ॥ इति श्रीगो-

---

ती० पुनरित्यादिश्लोकत्रयस्यवास्तवार्थस्तु । रणमूर्धनिस्वकर्तव्यंविज्ञापयति । पुनरितिशेषः । सः रामः । मामेकेनशरेणप्रहृत्य पुनर्द्वितीयेनशरेणनिहनिष्यति । ततः ततःप्रागेव तस्य रामस्यसंबन्धिवानराणामितिशेषः । रुधिरंपास्यामिकाममाश्वस ॥ ३९ ॥ ती० मयारामेविषये यमक्षयंगमितेसति सीता अवशं अस्य विष्णुरूपरामस्यवशमागमिष्यतीतिसंबन्धः ॥४१॥ इतिद्वादशःसर्गः ॥१२॥

[ पा० ] १ ङ. झ. ट. छिद्रमन्ये. २ छ. ञ. मुत्पाटयिष्यामि. ३ क. च. छ. ञ. शितशूलधरस्यच.

## त्रयोदशः सर्गः ॥ १३ ॥

महापार्श्वेन कुंभकर्णवचनाकर्णनकुपितरावणप्रहर्षणाय सदृष्टान्तोपन्यासं बलात्कारेणसीतोपभोगचोदना ॥ १ ॥ रावणेन सश्लाघंतंप्रति स्वकृतपुञ्जिकस्थलीहठोपभोगलब्धब्रह्मशापस्यहठोपभोगप्रतिबन्धकत्वनिवेदनपूर्वकं रामजयेकुंभकर्णादिनियोजनसूचकतद्वचनोत्तरतयास्वपराक्रमवर्णनपूर्वकमितरनैरपेक्ष्येण स्वस्यरामादिपराजयसामर्थ्योक्तिः ॥ २ ॥

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः ॥ मुहूर्तमनुसंचिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥
यः खल्वपि वनं प्राप्य मृगव्यालसमाकुलम् ॥ न पिबेन्मधु संप्राप्तं स नरो बालिशो भवेत् ॥ २ ॥
ईश्वरस्येश्वरः कोस्ति तव शत्रुनिबर्हण ॥ रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३ ॥
बलात्कुक्कुटवृत्तेन वर्तस्व सुमहाबल ॥ आक्रम्याक्रम्य सीतां वै तथा भुङ्क्ष्व रमस्व च ॥ ४ ॥
लब्धकामस्य ते पश्चादागमिष्यति यद्भयम् ॥ प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ॥ ५ ॥

विन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

---

अथ रावणस्य दुर्मन्त्रिमतानुसारित्वमाह—रावणमित्यादि ॥ क्रुद्धं कुम्भकर्णोक्तनयापरिज्ञानवचनेनेत्यर्थः । मुहूर्तमनुसंचिन्त्य रावणक्रोधनिवारणोपायं विचार्येत्यर्थः ॥ १ ॥ खलुर्वाक्यालंकारे । दुष्करं सीताहरणं श्रमेण कृत्वा तत्संभोगमकुर्वाणस्त्वं क्षौद्राकाङ्क्षयाऽतिगहनं वनं प्रविश्य तदपिबन्नइवमूढोसीतिभावः ॥ २ ॥ शत्रुषु विद्यमानेष्वधर्मावहमिदंकथं कुर्यामित्यत्राह—ईश्वरस्येति ॥ सर्वनियन्तुस्तव को वा नियन्तास्ति । अतो धर्मान्न भेतव्यमितिभावः । शत्रून् मूर्धस्वाक्रम्य तांस्तृणीकृत्येत्यर्थः । अर्थान्तरं तु रामस्येश्वरः कोस्ति । स निग्रहीतुं न शक्य इत्यर्थः । शत्रून् रामं । पूजायां बहुवचनं । दशस्वपि मूर्धस्वाक्रम्य शिरसाप्रणम्येत्यर्थः । वैदेह्या सह रमस्व वैदेह्यां यथा स्वभर्ता रमते तथा त्वमपि स्वदारेषु रमस्व । वैदेह्या सह रामं प्रणम्येति वा योजना ॥ ३ ॥ किं करोमि सा हि न मामभिलषतीत्यत्राह—बलादिति ॥ कुक्कुटवृत्तेन कुक्कुटवृत्त्या । भावे क्तः । कुक्कुटो वञ्चनामार्गेण स्वदयितामाक्रमते । तथा त्वमपीत्यर्थः । कुक्कुटानां कामुककुक्कुटसङ्गे कोपो जातिधर्मः । तथा सीतामनुभव । यथा कुक्कुटाःसुखिनः तद्वदित्यर्थः । यथाह वात्स्यायनः—"क्रुद्धामाक्रम्य भोगस्तु कौक्कुटः सोपि सौख्यदः" इति । भुङ्क्ष्व भोगं भज । रमस्व निर्विचारो भवेत्यर्थः । मुनिहृदयं तु कुक्कुटवृत्तेनान्यत्र वर्तस्व सीतां तु बलात् भुङ्क्ष्व रक्ष । "भुज परिपालनाभ्यवहारयोः" इति धातुः । आत्मनेपदमार्षं ॥ ४ ॥ एतन्निमित्तमागामि भयमनिवार्यं कथमेवं क्रियतामित्यत्राह—लब्धेति ॥ एवं लब्धकामस्य ते पश्चात् कामलाभानन्तरं । यत् भयमागमिष्यति । प्राप्तं तदानी-

स० मुहूर्तमनुसंचिन्त्य अप्रियोक्तौममविप्रियं तत्प्रियोक्तौसर्वप्रियहानिः । कथंकर्तव्यमितिध्यात्वा ॥ १ ॥ स० प्रथमतः सीतानयनंनकर्तव्यं । कृतंचेत्सीताननुभवोभवतोनयोग्यइतिप्रोत्साहयति—यइति ॥२॥ स० "साकिंनरम्यासचकिंनरन्तागरीयसीकेवलमीश्वरेच्छा" इत्यादिवदीश्वरेच्छानुसारितावेतरस्य नतवेत्याह—ईश्वरस्येति ॥ ३ ॥ शि० ननुमांप्रत्यतिकुपितायाः सीतायाःकथंप्रसादोभविष्यतीत्यतआह—बलादिति । कुक्कुटानांतच्छब्दानांवृत्तंवर्तनंयस्मिंस्तेन । उषःकालेइत्यर्थः । बलात् हठात् । आक्रम्याक्रम्य तच्चरणौगृहीत्वागृहीत्वा । सीतांप्रवर्तस्व स्वापराधक्षमापणेनियोजयस्व । अतएतांलङ्कासंपत्तिं भुङ्क्ष्व रमस्वच ॥ ती० अनङ्गीकारेकथमनुभवइत्यत्राह—बलादिति । रमस्वसहवैदेह्येत्यादिसार्धश्लोकस्यवास्तवार्थस्तु—कुक्कुटवृत्तेनेत्यत्र कुक्कुटवृत्ते न इतिच्छेदः । हेमहाबल रावण वैदेह्याकिं । अतआक्रम्याक्रम्यवा प्रकारान्तरेणवा तांवैदेहीं नभुङ्क्ष्व नरमस्वच । कुक्कुटवृत्ते कुक्कुटव्यापारे । चापल्येइतियावत् । नवर्तस्व किंतु बलाच्छत्रून्मूर्धस्वाक्रम्यरमस्वेतिसंबन्धः ॥ ४ ॥ शि० ननुसीतासमर्पणेपिरामप्रसादेसंशयएवेत्यतआह—लब्धेति । पश्चात् सीताप्राप्त्यनन्तरकाले लब्धःकामः इच्छाविषयीभूतस्वदारप्राप्तिः येनतस्य रामस्य रामात् । भयंतुभ्यंकिं किमर्थं । आगमिष्यति प्राप्स्यति नप्राप्स्यतीत्यर्थः । अतः अप्राप्तकालं अप्राप्तःनिवृत्तइत्यर्थः । कालःकोप.

[ पा० ] १ क. ख. ग. ङ.—ट. व्यालनिषेवितं. २ ग.—छ. झ. ञ. ट. संप्राप्य. ३ घ. त्वकुक्कटवद्वृत्तिंवर्तयस्वमहाबल. ४ ङ. झ. ट. प्रवर्तस्वमहाबल. ५ क. ख. आक्रम्यसीतांवैदेहींलंभुङ्क्ष्वचरमस्वच. ६ ङ. छ. ज. झ. ट. तांभुंक्ष्वचरमस्वच. ७ क. ख. ङ.—ट. किंभयं. ८ ङ. झ. प्रतिविधास्यसे.

**कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः ॥ प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६ ॥**
**उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् ॥ समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय[1] ॥ ७ ॥**
**इह प्राप्तान्वयं सर्वाञ्शत्रूंस्तव[2] महाबल ॥ वशे शस्त्रप्रतापेन करिष्यामो न संशयः ॥ ८ ॥**
**एवमुक्तस्तदा राजा महापार्श्वेन रावणः ॥ तस्य संपूजयन्वाक्यमिदं वचनमब्रवीत् ॥ ९ ॥**
**महापार्श्व निबोध[3] त्वं रहस्यं किंचिदात्मनः ॥ चिरवृत्तं तदाख्यास्ये यदवाप्तं मया पुरा ॥ १० ॥**
**पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् ॥ चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११ ॥**

मागतं । अप्राप्तकालं प्राप्तकालमित्यस्य "प्राप्तापन्ने च द्वितीयया" इति समासः । तथा न भवतीत्यप्राप्तकालं । आगामीतियावत् । प्रतिसहिष्यसि अभिभविष्यसीत्यर्थः ॥ ५ ॥ तिष्ठतु भवान् त्वद्भ्रातृपुत्रावेव प्रतिपक्षप्रतिषेधे शक्तावित्याह—कुम्भकर्ण इति ॥ ६ ॥ विभीषणमतं खण्डयति—उपप्रदानमिति ॥ अकुशलैः युद्धासमर्थैः । कृतं दानादिकं । अतिक्रम्य त्यक्त्वा । दण्डेन बलात्कारेण । अर्थेषु प्रयोजनेषु । सिद्धिं रोचय ॥ ७ ॥ रामादयो यत्र वर्तन्ते तत्र गत्वा योद्धव्यमित्युक्तं निकुम्भादिमतं दूषयन्नाह—इहेति ॥ इह लङ्कापरिसरे । शस्त्रप्रतापेन शस्त्रबलेन । वशे करिष्यामः । निग्रहिष्याम इत्यर्थः ॥ ८ ॥ संपूजयन् स्वचित्तानुगुणमुक्तमिति श्लाघयन्नित्यर्थः ॥ ९ ॥ महापार्श्वेति संबोधनं ॥ प्रमुदितोऽस्मीति शेषः । चिरवृत्तं रहस्यं किंचित् । अस्तीति शेषः । यत्पुरा मयावाप्तं तदाख्यास्य इति योजना ॥ १० ॥ गच्छन्तीं । पितामहवन्दनायेति शेषः । पुञ्जिकस्थला नाम काचिदप्सराः । चञ्चूर्यमाणां भीत्या निलीय गच्छन्तीं । "लुपसदचर—" इत्यादिना भावगर्हायां यङ् । संचरणात्मकस्य भावस्य गर्हा निलयनं । "चरफलोश्च" इति नुक् । "उत्परस्यातः" इत्युकारः । अग्निशिखामिवेति तेजोविशेषोक्तिः । यद्वा द्रावकत्वोक्तिः । अत एवोक्तं—"अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्" इति । संचार्यमाणामिति

समयोयस्यतं । प्राप्तंरामं सर्वं स्वापराधजातं प्रतिसहिष्यसि साहयिष्यसि ॥ ५ ॥ **शि०** ननुप्रसादनेपियदितत्कोपशान्तिर्नभवेत् तदा किंकर्तव्यमित्यतआह—कुंभकर्णइत्यादिभिः । कुंभकर्णइन्द्रजिच्च सवज्रं वज्रसहितं वज्रिणं वज्रस्वामिनमिन्द्रमपि । प्रतिषेधयितुंशक्तौ । एतेन तवापराधसत्त्वेकुंभकार्णदीनांबलमकिञ्चित्करंभविष्यतीतिध्वनितं ॥ ६ ॥ **शि०** तवशत्रून् बलं तत्सैन्यंच शस्त्रप्रपातेन करिष्यामः हनिष्यामः ॥ ८ ॥ **स०** ननूत्तरकाण्डेरंभानिमित्तंनलकूबरशापःपरदाराणांबलात्सङ्गेश्रूयते । यथोक्तं—"एतस्मिन्नन्तरेतत्रदिव्याभरणभूषिता । सर्वाप्सरोवरारंभापूर्णचन्द्रनिभानना" इत्यारभ्य—"नलकूबरमासाद्य—" इत्याद्युक्त्वा "उत्ससर्जतदाशापंराक्षसेन्द्रायदारुणं । अकामातेनयस्मात्त्वंबलाद्भद्रेप्रधर्षिता । तस्मात्सयुवतीमन्यांनाकामामुपयास्यति" इत्यादि । तथाभारतेवनपर्वणिरामोपाख्यानेसीतांप्रतित्रिजटावाक्यं—"नलकूबरशापेनरक्षिताह्यसिनन्दिनि । शापोह्येषपुरापापोवधूंरंभांपरामृशन्" इति। तथाचकथमत्रपुञ्जकस्थलीनिमित्तंब्रह्मशापोत्कीर्तनं। नचपूर्वंरंभानिमित्तशापः अनन्तरंपुञ्जकस्थलीकृतःशापइत्येकस्यैवशापद्वयाङ्गीकारेबाधकाभावइतिवाच्यं । तथात्वे नलकूबरशापेनतदनन्तरभाविपुञ्जकस्थलीधर्षणकालेतच्छिरस्स्फोटापत्तेः । ब्रह्मशापानन्तररंभासंभोगेतुसुतरां। तस्यदुर्निवारत्वात् । तस्मात्कथमत्रेतिचेदुच्यते । कल्पेकल्पेअवान्तरवैचित्र्यस्यबहुलमुपलंभात्कल्पान्तरवृत्तांब्रह्मशापकथांसमाधौसमीक्ष्यकविरवादीदिति । अथवा नलकूबरशापस्यपतिव्रताधर्षणविषयत्वेन स्वैरिणीविषयत्वाभावेननपुञ्जकस्थलीसंगात्तच्छिरसःसहस्रधाभेदः । यथोक्ततत्रैवोत्तररामायणे—"तेननिस्सीमतांप्रीतिमापुःसर्वाः पतिव्रताः ।" इति । अन्यथापतिव्रताइतिनस्यात् स्याच्चस्त्रियइति । यद्वा रंभानिमित्तशापस्यकामनारहितस्त्रीबलात्कारविषयत्वं । पुञ्जकस्थल्याअन्तःकामोवर्ततइतिज्ञायते । अतोनतन्मरणमभूत् । यथोक्ततत्रैव—"नाकामामुपयास्यसि" इति । अत्रचञ्चूर्यमाणां रावणलज्जयास्वाङ्गेनिलीयमानामिवेति । प्रसह्येत्युक्तिस्तु स्त्रीस्वभावेनलज्जयाऽनङ्गीकारप्रदर्शनादितिज्ञेयं । यत्तुनागोजिभट्टेन क्वचिदेवमेवकुबेरपुत्रनलकूबरशापोपिरंभानिबन्धनःश्रूयते । तत्रोपपत्तिश्चिन्त्या । अस्यप्रथमत्वेतस्यांबलात्कारासंभवात् । तस्यप्रथमत्वे अस्यांबलात्कारासंभवादितिकेचित् । नलकूबरशापस्यतपोबलेनाकिंचित्करत्वादयमेवशापोब्रह्मास्त्रवदप्रतिक्रियःपाश्चात्यइत्यन्येइत्युक्तं । तत्रनलकूबरशापेनेत्युक्तभारतवचनेतस्यैवपुरस्करणं । "तस्मिन्नुदाहृतेशापेज्वलिताग्निसमप्रभे । देवदुन्दुभयोनेदुः पुष्पवृष्टिश्चखाच्च्युता । पितामहमुखाश्चैवसर्वेदेवाःप्रहर्षिताः । ज्ञात्वालोकगतिंसर्वे" इत्यत्रैवोत्तरकाण्डेब्रह्माद्यनुमत्याशापस्यदुष्परिहारत्वेव "श्रुत्वातुसदशग्रीवस्तंशापंरोमहर्षणं । नारीषुमिथुनीभावंनाकामास्वभ्यरोचयत्" इत्यनेनशापेनैवाकामकामिनीसंभोग-

[ पा० ] १ ङ. ज. झ. ट. रोचये. २ ट. बलंशस्त्र. ३ ख. ङ. झ. ट. प्रवदतोरहस्यं.

सा प्रसह्य मया भुक्ता कृता विवसना ततः ॥ स्वयंभूभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२ ॥
तस्य तच्च तदा मन्ये ज्ञातमासीन्महात्मनः ॥ अथ संकुपितो [1]देवो मामिदं वाक्यमब्रवीत् ॥ १३ ॥
अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि ॥ तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ १४ ॥
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् ॥ [2]नारोपये बलात्सीतां वैदेहीं शयने शुभे ॥ १५ ॥
सागरस्येव मे वेगो मारुतस्येव मे गतिः ॥ नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६ ॥
[3]यस्तु सिंहमिवासीनं सुप्तं गिरिगुहाशये ॥ क्रुद्धं मृत्युमिवासीनं [4]प्रबोधयितुमिच्छति ॥ १७ ॥
न मत्तो [5]निशितान्बाणान्द्विजिह्वानिव पन्नगान् ॥ रामः पश्यति संग्रामे तेन मामभिगच्छति ॥ १८ ॥
क्षिप्रं वज्रोपमैर्बाणैः शतधा कार्मुकच्युतैः ॥ राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९ ॥
तच्चास्य बलमादास्ये बलेन महता वृतः ॥ [6]उदयन्सविता काले नक्षत्राणामिव प्रभाम् ॥ २० ॥
न वासवेनापि सहस्रचक्षुषा युधाऽस्मि शक्यो वरुणेन वा पुनः ॥

पाठे परिचारिकादर्शितमार्गामित्यर्थः ॥ ११ ॥ विवसना कृता सा मया भुक्तेत्यन्वयः ॥ १२ ॥ तत् धर्षणं । मन्य इत्यनेन शापमात्रं मया श्रुतं । धर्षणश्रवणं तु मया ऊहितमिति गम्यते ॥ १३ ॥ अद्यप्रभृति एतत्क्षणमारभ्य । क्रियाविशेषणमेतत् । तदा गमनकाले एव फलिष्यति विशीर्णो भविष्यति । इति एवंप्रकारस्य शापस्य शापादित्यर्थः । प्रसभं नारोप इत्यन्वयेन बलादित्यनेन पौनरुक्त्यात् । किंतु प्रसभं शापस्येत्यन्वयः । वैदेहीमित्यनेन महाकुलप्रसूततया तच्छापादपि भीतोऽस्मीत्यवगम्यते ॥ १४—१५ ॥ एवं न युक्ता बलात्कर्तुं सीतेत्युक्त्वा अस्माभिः सह कुम्भकर्णेन्द्रजितौ योत्स्यत इति महापार्श्ववचनस्यासहायशूरे मयि विद्यमाने किमन्येनेति परिहारमाह—सागरस्येति ॥ एतत् वेगगतिमत्त्वं । आसादयति सेनामिति शेषः । स्वार्थण्यन्तो वा । तेन अवेदनेन ॥ १६ ॥ स्वप्रभावावेदनेनाहितमाह—यस्त्विति ॥ सुप्तं सिंहमिवासीनं सिंहमिव स्थितमित्यर्थः । मृत्युमित्यत्रापि सुप्तमित्यनुषज्यते । अन्यथा प्रबोधयितुमिच्छतीत्यनेनानन्वयः । क्रुद्धं क्रोधार्हं । यथा सुप्तं सिंहं मृत्युं वा प्रबोधयितुमिच्छन् पुरुषोऽनभिज्ञ एव । तद्वत् तूष्णीं स्थितं मां प्रकोपयन्नामोपीति भावः ॥ १७ ॥ रामो मत्पराक्रमं न वेत्त्येव तत्तिष्ठतु मद्बाणवेगं वा जानाति नैवेत्याह—नेति ॥ लेलिहानतादशां द्योतयितुं द्विजिह्वानित्युक्तं ॥ १८ ॥ आदीपयिष्यामि सन्तापयिष्यामि । उल्काभिः निर्गतज्वालकाष्ठैः । कुञ्जरपलायनार्थमुल्काः प्रदर्शयन्तीति प्रसिद्धिः ॥ १९ ॥ एवं रामं पलाययित्वा तस्य सेनां हनिष्यामीत्याह—तच्चेति ॥ आदास्ये खण्डयिष्ये । " दो अवखण्डने " इति धातुः ॥ २० ॥ देवानामप्यजय्योस्मि कथं मनुष्यादीनां जय्यो भविष्यामीत्याशयेनाह—न वासवेनेति ॥ सहस्रचक्षुषेति तस्याभिमानातिशयोक्तिः । युधा

विरुचिताच्चकथंसंगच्छतइतिविचार्यं । अतएवतेनकेचिदन्येचेत्युक्तमितिमन्तव्यं ॥ ११ ॥ **शि०** अभुक्ता एकादश्याद्युपवासयुक्ता सा पुञ्जकस्थली मया विवसना दूरगमनदर्शनजनितकोपादुत्तरीयरहिताकृता ॥ १२ ॥ **ति०** तच्च ममचरितं । महात्मनस्तस्य मन्ये निश्चितं । ज्ञातमासीत् । मन्यइतितिङन्तप्रतिरूपकमव्ययं । " मन्येशङ्केध्रुवंप्रायोनिश्चयार्थाअमीमताः " इतिकतकः ॥ १३ ॥ **रामानु०** अथेत्यादि । " तदातेशतधामूर्धाफलिष्यतिनसंशयः " इत्यनेनरावणविषयेरंभानिबन्धननलकूबरशापेविद्यमानेपितस्यप्राकृतदेवत्वात्तत्पुत्रत्वाच्चतच्छापमनादृत्यपुञ्जिकस्थलायामपिप्रवृत्तंरावणंपश्चात्पितामहःशप्तवान् । अतएव रावणोप्यनुल्लङ्घनीयंपितामहवाक्यमेवोक्तवानित्यवगम्यते । शापस्यभीतः शापाद्भीतः ॥ १४—१५ ॥ **शि०** अन्यांनारीं तत्समीपं । बलात् हठात् । यदिगमिष्यसि । इतीति । इतिहेतोः तस्यशापस्य शापाद्भीतः हठप्रार्थनायामियमपिशापंदास्यतीतिभयंप्राप्तोहं शुभेशयने तद्योग्यपर्यङ्केबलान्नारोपये भूमावेवसातिष्ठतीत्यर्थः । नन्वेवंचेद्रामायसमर्पयेत्यतआह—सागरस्येति । एतेन रामाय दानेमेदौर्बल्यप्रख्यातिर्भविष्यतीत्यतोनदास्यामीतिसूचितं ॥ १६ ॥ इतित्रयोदशःसर्गः ॥ १३ ॥

[ **पा०** ] १ ङ. झ. ट. वेधाः. २ ङ.—ट. नारोहये. ३ ख. ग. ङ.—ट. कोहि. ४ क. ख. ङ. ट. संबोधयितुं. ५ क.—ञ. निर्गतान्. ६ ङ. झ. ट. उदितः.

मया त्वियं बाहुबलेन निर्जिता पुरी पुरा वैश्रवणेन पालिता ॥ २१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रयोदशस्सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ॥ १४ ॥

विभीषणेन रावणंप्रति कुंभकर्णादीनांयुधिरामाग्रेऽवस्थानस्यापिदुश्शकत्वोक्तिपूर्वकं रामायसीताप्रत्यर्पणचोदना ॥ १ ॥

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि ॥
विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ॥ १ ॥
वृतो हि बाह्वन्तरभोगराशिश्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः ॥
पञ्चाङ्गुलीपञ्चशिरोतिकायः सीतामहाहिस्तव केन राजन् ॥ २ ॥
यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः ॥
दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ ३ ॥
यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ॥
वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ ४ ॥
भित्त्वा न तावत्प्रविशन्ति कायं प्राणान्तिकास्तेऽशनितुल्यवेगाः ॥
शिताः शरा राघवविप्रमुक्ताः प्रहस्त तेनैव विकत्थसे त्वम् ॥ ५ ॥

---

युद्धेन न शक्योस्मि । जेतुमिति शेषः । उत्तरार्धेन कुबेरेणापि न जेतुं शक्य इति सिद्धं । अत्र वंशस्थवृत्तं ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

---

एवं दुर्मन्त्रिभिः प्रभुचित्तानुसारेण कथिते तदसहमानो विभीषणः परमार्थं हितमुपदिशति—निशेति ॥ स कुम्भकर्णस्येत्यत्र स इति च्छेदः । गर्जितानि निरर्थकवचनानि । अर्थयुक्तं कर्तव्यार्थबोधयुक्तं ॥ १ ॥ अदेया न यथा सीतेति रावणवचनं प्रति वक्तुं सीतामहित्वेन रूपयति—वृत इति ॥ बाह्वन्तरं वक्षः तदेव भोगराशिः फणापरिणाहो यस्य स तथा । यद्वा बाह्वन्तरे वक्षसि भोगराशिः सौख्यसंपत् सैव बाह्वन्तरभोगराशिः तिर्यक्प्रसारितयोर्बाह्वोर्यदन्तरं तत्प्रमाणो भोगराशिः शरीरपरिणाहो यस्येत्यावृत्त्या रूपकनिर्वाहः । चिन्तैव विषं विरोधिप्राणहरत्वात् । तत् यस्य सः चिन्ताविषः । सुस्मितं स्वाभाविकमन्दस्मितं । तदेव शुभ्रत्वेन कामुकहृदयहारित्वेन च तीक्ष्णा दंष्ट्रा यस्य सः सुस्मिततीक्ष्णदंष्ट्रः । चिन्तावशेन वदनोपधानीकृतपाणेः पञ्चाङ्गुल्य एव पञ्चशिरोरूपातिकायो यस्य सः पञ्चाङ्गुलीपञ्चशिरोतिकायः । सीतामहाहिः स्पर्शमात्रेण मारकाहिः । तव त्वया । केन हेतुना वृतः । सर्वथा त्यक्तव्य एवेति भावः । राजन्निति सान्त्वोक्तिः ॥ २ ॥ न केवलं तवैवानर्थहेतुः सीता किंतु तावकीनस्य सर्वस्येत्याह—यावदिति ॥ "यावत्पुरानिपातयोर्लट्" । इति लट् । तावदिति शेषः ॥ ३—४ ॥ तावच्छब्दो वाक्यालंकारे । प्राणान्ते भवाः प्राणान्तिकाः प्राणहारिण इत्यर्थः । साक्षाद्राजानं प्रत्युक्तेरयुक्तत्वात्प्रहस्तं प्रति प्राणहरत्वोक्तिः । विकत्थसे आत्मानं श्लाघसे । "कत्थ श्लाघायां" इति धातुः ॥ ५ ॥

---

**स०** अर्थयुक्तं सदभिप्रायगर्भं ॥ १ ॥ **ति०** सुस्मितं अनुचितकृत्यदर्शनादिजंस्मितं । केनवृतः बद्धः । कण्ठेइतिशेषः । **स०** सुस्मितं रामवार्ताज्ञानानन्तरंवृत्तं । पञ्चाङ्गुलीरूपपञ्चशिरोविशिष्टश्चासौ अतिकायश्चेतिसतथा । "निचकर्तशिरान्द्रौणिः" इत्यादिप्रयोगादकारान्तोपिशिरशब्दोवर्ततइतिपक्षेपञ्चशिरइत्यन्तंभिन्नंसदहिविशेषणं ॥ २ ॥ **रामानु०** यावन्नगृह्णन्तिशिरांसिबाणाइत्यतःपरंकेषुचित्कोशेषुदृश्यमानः भित्त्वानतावत्प्रविशन्तिकायमितिश्लोकः प्रहस्तोद्देशेनप्रवृत्तस्यतीक्ष्णानतायत्तवेत्यस्यानन्तरंद्रष्टव्यः ।

न कुम्भकर्णेन्द्रजितौ न राजा तथा महापार्श्वमहोदरौ वा ॥
निकुम्भकुम्भौ च तथातिकायः स्थातुं न शक्ता युधि राघवस्य ॥ ६ ॥
जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तः सवित्राऽप्यथवा मरुद्भिः ॥
न वासवस्याङ्कगतो न मृत्योर्नभो न पातालमनुप्रविष्टः ॥ ७ ॥
निशम्य वाक्यं तु विभीषणस्य ततः प्रहस्तो वचनं बभाषे ॥
न नो भयं विद्म न दैवतेभ्यो न दानवेभ्यो ह्यथवा कुतश्चित् ॥ ८ ॥
न यक्षगन्धर्वमहोरगेभ्यो भयं न संख्ये पतगोत्तमेभ्यः ॥
कथं नु रामाद्भविता भयं नो नरेन्द्रपुत्रात्समरे कदाचित् ॥ ९ ॥
प्रहस्तवाक्यं त्वहितं निशम्य विभीषणो राजहितानुकाङ्क्षी ॥
ततो महात्मा वचनं बभाषे धर्मार्थकामेषु निविष्टबुद्धिः ॥ १० ॥
प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यथाऽर्थजातम् ॥
ब्रवीथ रामं प्रति तन्न शक्यं यथा गतिः स्वर्गमधर्मबुद्धेः ॥ ११ ॥
वधस्तु रामस्य मया त्वया वा प्रहस्त सर्वैरपि राक्षसैर्वा ॥
कथं भवेदर्थविशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥ १२ ॥
धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रभवस्य राज्ञः ॥
प्रहस्त देवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १३ ॥

तर्हि कुम्भकर्णादयो रामं वारयिष्यन्तीत्यत्राह—न कुम्भकर्णेति ॥ इदमपि प्रहस्तं प्रति वचनं ॥ ६ ॥ राज्ञः असामर्थ्यं विशिष्य दर्शयति—जीवन्निति ॥ रामस्य रामात् । विभक्तिव्यत्ययः । जीवन्न विमोक्ष्यसे प्राणपर्यन्तं न त्वां रामो विमोक्ष्यतीति भावः । अङ्कगतोपि पुत्रभावेनाङ्कस्थितोपीत्यर्थः । मृत्योरित्यत्रापि अङ्कगत इत्यनुषज्यते । नभः पातालं वाऽनुप्रविष्टः न मोक्ष्यस इति योजना ॥ ७ ॥ अस्माकं कुतश्चित् भयं न विद्म । विसर्गलोपश्छान्दसः । एवं सामान्येनोक्त्वा विशिष्य दर्शयति—न दैवतेभ्य इत्यादिना । भयं न विद्म इति सर्वत्रान्वेति ॥ ८ ॥ पतगोत्तमेभ्यः गरुडेभ्यः । नरेन्द्रपुत्रात् मानुषबालादित्यर्थः । कथं नो भवितेत्यपि ध्वन्यते ॥ ९ ॥ महात्मा महाबुद्धिः । धर्मार्थकामेषु । स्वामिन इति शेषः ॥ १० ॥ महोदरोक्तत्वेन पूर्वमनुक्तमप्यनेनावगम्यते पूर्वमुक्तमिति । अर्थजातं यथा ब्रवीथ तथा रामं प्रति तत्कार्यजातं न शक्यं । कर्तुमिति शेषः । अधर्मबुद्धेः स्वर्गं प्रति गतिर्यथा न शक्या तथैवेत्यर्थः ॥ ११ ॥ अशक्यत्वमेव विशदयति—वधस्त्विति ॥ अर्थविशारदस्य कार्यदक्षस्य । रामस्य वधः । अप्लवस्य नौरहितस्य । महार्णवं तर्तुं तरितुं । शक्तिरिति शेषः । शक्तिरिव कथं भवेत् न कथंचिदपि संभवतीत्यर्थः । एतेन वध्यौ दशरथात्मजावित्युक्तस्योत्तरमुक्तं ॥ १२ ॥ उक्तमर्थं कैमुतिकन्यायेन द्रढयति—धर्मेति ॥ धर्मप्रधानस्य । "अप्यहं जीवितं जह्यां" इत्युक्तरीत्या धर्मविरोधे तृणीकृतसकलेतरपुरुषार्थस्य महारथस्य रणे आत्मानं सारथिं च रक्षन् शत्रुसंहारक्षमो महारथः तस्य । "आत्मानं सारथिं चाश्वान्रक्षन्युध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः" इत्युक्तेः ॥ इक्ष्वाकुवंशप्रभवस्य जन्मसिद्धनिरतिशयपराक्रमस्य । राज्ञः सकलप्रकृतिमण्डलरञ्जकस्य । तथाविधस्य विराधकबन्धवालिप्रभृतिव-

अन्यथाप्रकरणविरोधःस्यात् ॥ ५ ॥ स० युधि तदात्वद्धननावसरे । राघवस्य पुरतइतिशेषः । राघवकर्तृकयुधीतिवा ॥ ६ ॥ स० तर्तुं तरितुं । धात्वन्तरस्यैतद्रूपं । आगमशासनस्यानित्यत्वाद्वा " आर्धधातुकस्य—" इतिनेट् । तेनतर्तुमितिसाधु ॥१२॥

[ पा० ] १ क. ङ. ज. झ. ञ. राजंस्तथा. २ क. ख. ग. ङ. झ. ञ. समर्थायुधि. ३ क.—ङ. ज. ञ. कदाचित्. ४ क. ख. ग. ङ. ज. झ. ञ. महार्थं. ५ ख. ङ. ज. झ. ब्रवीत. घ. प्रब्रूत. ६ ङ. झ. पुरोसदेवाश्च.

तीक्ष्णा नता यत्तव कङ्कपत्रा दुरासदा राघवविप्रमुक्ताः ॥
भित्त्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम् ॥ १४ ॥
न रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्णोऽस्य सुतो निकुम्भः ॥
न चेन्द्रजिद्दाशरथिं प्रसोढुं त्वं वा रणे शक्रसमं समर्थाः ॥ १५ ॥
देवान्तको वाऽपि नरान्तको वा तथाऽतिकायोऽतिरथो महात्मा ॥
अकम्पनश्चाद्रिसमानसारः स्थातुं न शक्ता युधि राघवस्य ॥ १६ ॥
अयं हि राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमैर्भवद्भिः ॥
अन्वास्यते राक्षसनाशनार्थे तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७ ॥
अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन ॥
बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥ १८ ॥
यावद्धि केशग्रहणात्सुहृद्भिः समेत्य सर्वैः परिपूर्णकामैः ॥
निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥ १९ ॥
संहारिणा[1] राघवसागरेण प्रच्छाद्यमानस्तरसा भवद्भिः ॥

धविदितवैभवस्य । शक्तस्य कार्यदक्षस्य । रामस्य कृत्येषु रणव्यापारेषु विषये । देवाश्च मूढा भवन्ति । अविदिततदीयव्यापारा भवन्तीत्यर्थः । किं पुनर्भवादृशा इति भावः ॥ १३ ॥ तीक्ष्णाः तीक्ष्णाग्राः । झटितिभेदनक्षमा इत्यर्थः । नताः नतपर्वाणः ऋजव इत्यर्थः । सपदि भित्त्वा निर्गन्तुं क्षमा इतिभावः । कङ्कपत्राः कङ्कानां पत्राण्येव पत्राणि येषां ते तथोक्ताः । कङ्कपक्षनिबद्धत्वेन महावेगा इत्यर्थः । अतएव दुरासदाः ॥ १४ ॥ न रावण इति । रावणादयः सर्वेपि न समर्था इति योज्यं ॥ १५ ॥ अतिरथः अतिशयितरथः । महात्मा महाशरीरः । अद्रिसमानसारः गिरितुल्यबलः । "सारो बले स्थिरांशे च" इत्यमरः । देवान्तकादयो रावणपुत्राश्च राघवस्य युधि स्थातुं न शक्ताः ॥ १६ ॥ अमित्रप्रतिमैः कार्यतो रिपुतुल्यैः । नाम्ना मित्रैः भवद्भिः त्वत्प्रमुखैः । व्यसनाभिभूतः सप्तव्यसनैराक्रान्तः । प्रकृत्या तीक्ष्णः उग्रः । असमीक्ष्यकारी अविमृश्यकारी । अयं राजा राक्षसनाशनार्थं अन्वास्यते अनुस्त्रियते । अस्य राजत्वासमीक्ष्यकारित्वव्यसनाभिभूतत्वान्यपुरस्कृत्य तीक्ष्णत्वमेव पुरस्कुर्वन्तो भवन्तोभिभवन्ति । सर्वराक्षसविनाशं न जानन्तीति भावः । सप्तव्यसनस्वरूपमुक्तं कामन्दकेन—"वाग्दण्डयोस्तु पारुष्यमर्थदूषणमेव च । पानं स्त्री मृगया द्यूतं व्यसनं सप्तधा प्रभोः" इति ॥ १७ ॥ एवं प्रहस्तप्रमुखान्मन्त्रिमुख्यान्निर्भर्त्स्य संप्रति कर्तव्यमुपदिशति—अनन्तेति ॥ अनन्तभोगेन अपरिच्छिन्नकायेन । सहस्रमूर्ध्ना अतएव भीमेन । न केवलं भीमत्वमात्रं महाबलेन नागेन । शेषेणेत्यर्थः । परिक्षिप्तं परिवेष्टितं । रामद्वेषो महासर्पवेष्टनतुल्य इति भावः ॥ १८ ॥ ननु समयोतीतः किं कुर्म इत्यत्राह—यावदिति ॥ परिपूर्णकामैः । अवाप्तसर्वाभीष्टैरित्यर्थः । राजतो लब्धकामैः राजकार्येऽवश्यं यतितव्यमिति भावः । सर्वैः सुहृद्भिः समेत्य ऐकमत्यं प्राप्येति यावत् । राजा भीमबलैः भूतैः गृहीतः पुरुष इव निगृह्य बलात्कृत्य । यावत्केशग्रहणात् शत्रुभिः केशग्रहणपर्यन्तं । परिरक्षितव्यः । आकेशग्रहणान्मित्रमकृत्येभ्यो निवर्तयेदिति प्रसिद्धिं दर्शयति हिशब्दः । यद्वा आकेशग्रहणान्निगृह्य परिरक्षितव्यः । अकार्यप्रवृत्तोऽयं राजा केशेष्वाकृष्यापि निवारणीय इत्यर्थः ॥ १९ ॥ संहारिणा विनाशकेन । राघवसागरेण लक्ष्मणसमुद्रेण । प्रच्छाद्यमानः । ततः काकुत्स्थपातालमुखे रामबडबा-

ति० यावत्तेकायंभित्त्वाबाणाःपुनस्तदिषुधिंनप्रविशन्ति तेनैवहेतुनातावत्हेप्रहस्त त्वंविकत्थसेवृथात्मश्लाघांकरोषि । रावणस्यपुरस्तादितिशेषः ॥ १४ ॥ ति० सुवारिणा सुचरित्ररूपवारिमता । राघवसागरेण ॥ शि० सुवारिणा वियोगजनितदुःखरूपजलवता ॥ २० ॥ इतिचतुर्दशःसर्गः ॥ १४ ॥

[ पा० ] १ क, ग. ङ. झ. ञ. सुवारिणा.

युक्तस्त्वयं तारयितुं समेत्य काकुत्स्थपातालमुखे पतन्सः ॥ २० ॥
इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य ॥
सम्यग्घि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददाम पत्नीम् ॥ २१ ॥
परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम् ॥
तथा स्वपक्षेप्यनुमृश्य बुद्ध्या वदेत्क्षमं स्वामिहितं च मन्त्री ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः ॥ १५ ॥

इन्द्रजिता विभीषणभाषणाधिक्षेपेणस्वात्मश्लाघनपूर्वकं कैमुत्येनरामपराजयस्य सुशकत्वोक्तिः ॥१॥ विभीषणेन तद्गर्हणपूर्वकं रामायसोपायनंसीताप्रत्यर्पणेन तत्प्रसादसंपादनचोदना ॥ २ ॥

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य ॥
ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयोधमुख्यः ॥ १ ॥
किं नाम ते तात कनिष्ठवाक्यमनर्थकं चैव सुभीतवच्च ॥
अस्मिन्कुले योपि भवेन्न जातः सोपीदृशं नैव वदेन्न कुर्यात् ॥ २ ॥

भिमुखे । "पातालं बडवाग्नौ च" इति नानार्थरत्नमाला । पतन् सोयं राजा तरसा आरम्भकाल एव। तारयितुं भवद्भिर्हस्तप्रदानेनोत्तारयितुं युक्तः अर्हः । अत्र प्रच्छाद्यमानः पतन्निति प्रयोगौ वर्तमानसामीप्यात् । लक्ष्मणः प्रथमं ग्रहीष्यति ततो रामः अतो न जीवितुं शक्यं । अतः प्रथममेव राजा निवर्तनीय इतिभावः । सुवारिणेति पाठान्तरं । तत्र सागरपक्षे सुजलेनेत्यर्थः । राघवपक्षे वारः स्यन्दनः । शोभनो वारः सुवारः सोस्यास्तीति सुवारी तेन । "सूर्यादिदिवसे वृन्दे कुन्दवृक्षे परिक्रमे । मद्यपात्रे स्यन्दने च वारो वरुणसेनयोः" इति निघण्टुः ॥ २० ॥ मा दिशतु रामाय राजा वैदेहीं वयमेव बलाद्धि ददामः यदि हितमाकाङ्क्षितमित्याह—इदमिति ॥ स्वमतं स्वस्य सिद्धान्तभूतं । इदंशब्दार्थमाह—नरेन्द्रेति ॥ २१ ॥ वयमपि सम्यगेव ब्रूमः शत्रुर्हन्तव्य इति तत्राह—परस्येति ॥ मन्त्री परस्य शत्रोः । वीर्यं स्वबलं स्वराजबलं च बुद्ध्वा स्वराजपरराजयोर्बलं परीक्ष्येत्यर्थः । तथैव बलाबलपरीक्षावत् । परस्य स्थानं संपदां साम्यं क्षयं वृद्धिं च बुद्ध्वा । तथा परस्येव स्वपक्षेपि बुद्ध्या सूक्ष्मदृष्ट्या । स्थानक्षयवृद्धीः अनुमृश्य आलोच्य । क्षमं युक्तं । स्वामिहितं च वदेत् । परस्य क्षये स्ववृद्धौ यानं परस्यवृद्धौ स्वस्य क्षये संधिं परस्य स्वस्य च साम्ये आसनंच स्वामिने कथयेदित्यर्थः । अत्र प्रकृते परस्य वृद्धेः रावणस्य नगरदहनतनयनाशादिना क्षयस्य दर्शनाच्च सीताप्रदानेन सन्धिरेव साधुरिति मन्त्रिभिर्भवत्स्वामिने निवेदनीयमितिभावः ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

अथेन्द्रजितो दुर्बुद्धिमुपन्यस्य दूषयति—बृहस्पतेरिति ॥ ततो विभीषणवचनानन्तरं । तत्र राक्षसेषु । यत्नेन निशम्य । असह्यतयेति भावः ॥ १ ॥ हे तात ते कनिष्ठवाक्यं । अनर्थकं प्रयोजनशून्यं । अनुष्ठातुरभावादिति भावः। सुभीतवत् सुभीतिमत् । किंनाम कीदृशं जुगुप्सितमित्यर्थः । नामशब्दः कुत्सनद्योतकः "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इतिवैजयन्ती । तदेवोपपादयति—अस्मिन्निति । आद्योऽपिशब्दः प्रश्ने । अपि ननु । अस्मिन् कुले पौलस्त्यवंशे । यो जातो न भवेत् । अन्यस्मिन् कुले

स० नचकुर्यात्चिन्तामितिवा बलाद्गृहीतसुदानमितिवाशेषः ॥ २ ॥
[ पा० ] १ ङ. झ. ञ. ददातुमैथिलीं. २ ङ. झ. यूथमुख्यः.

सत्त्वेन वीर्येण पराक्रमेण शौर्येण धैर्येण च तेजसा च ॥
एकः कुलेस्मिन्पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ॥ ३ ॥
किं नाम तौ राक्षस राजपुत्रावस्माकमेकेन हि राक्षसेन ॥
सुप्राकृतेनापि मतौ निहन्तुं शक्यौ कुतो भीषयसे स्म भीरो ॥ ४ ॥
त्रिलोकनाथो ननु देवराजः शक्रो मया भूमितले निविष्टः ॥
भयार्दिताश्चापि दिशः प्रपन्नाः सर्वे तथा देवगणाः समग्राः ॥ ५ ॥
ऐरावतो विस्वरमुन्नदन्स निपातितो भूमितले मया तु ॥
विकृष्य दन्तौ तु मया प्रसह्य वित्रासिता देवगणाः समग्राः ॥ ६ ॥
सोहं सुराणामपि दर्पहन्ता दैत्योत्तमानामपि शोकदाता ॥
कथं नरेन्द्रात्मजयोर्न शक्तो मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ ७ ॥
अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद्वचनं निशम्य ॥
ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ॥ ८ ॥
न तात मन्त्रे तव निश्चयोस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः ॥
तस्मात्त्वया ह्यात्मविनाशनाय वचोर्थहीनं बहु विप्रलप्तम् ॥ ९ ॥

---

यो जातः सोपि ईदृशं न वदेत्। न कुर्यात् ईदृग्वचनार्थं नानुतिष्ठेत्। ईदृग्वचनं वक्तृश्रोत्रोरुभयोरपि निन्दनीयं। यद्वा हे तात कनिष्ठ। ते वाक्यं किं नाम। जुगुप्सितमित्यर्थः। जुगुप्सितत्वमेवाह—अस्मिन्निति। न कुर्यात् नचिन्तयेत्। अत्र करोतिश्चिन्ताक्रियायां वर्तते मुख्यस्य करणार्थस्यासंभवात् सर्वधात्वर्थेषु करोत्यर्थस्य संभवाच्च ॥ २ ॥ एतद्वाक्यमेतत्स्वभावस्य सदृशमित्याह—सत्त्वेनेति ॥ सत्त्वेन बलेन। वीर्येण प्रभावेन। "वीर्यं बले प्रभावे च" इत्यमरः। पराक्रमेण उद्योगेन। "शौर्योद्योगौ पराक्रमौ" इत्यमरः। शौर्येण साहसिक्येन। धैर्येण स्थैर्येण। तेजसा गर्वेण। पराभिभवासहनेनेतियावत्॥३॥ एवं रावणं प्रत्युक्त्वा विभीषणं निर्भर्त्सयति—किंनामेत्यादिना ॥ राक्षसेति हीनसंबोधनमाग्रहकृत्यं। तौ राजपुत्रौ किं नाम न किंचिदपि। अतिदुर्बलावित्यर्थः। कुत इत्यत्राह—अस्माकमेकेनेति। अस्माकं मध्ये सुप्राकृतेन अतिक्षुद्रेणापि। एकेन राक्षसेन एतौ निहन्तुं शक्यौ हि। अतः भीरो कुतोस्मान् भीषयसे स्वयंभीतोऽस्मान् भीषयसे। नास्माकंकिंचिद्भयमितिभावः ॥ ४ ॥ भयाभावे पूर्ववृत्तं संवादयति—त्रिलोकेति ॥ नन्वित्यामन्त्रणे। त्रिलोकनाथ इत्यैश्वर्यमुक्तं। देवराजइति सैन्यसामग्री दर्शिता। मया हेतुना। भूमितले निविष्टः स्थितः। निवेशितइत्यर्थइत्यन्ये ॥ ५ ॥ उन्नदन् उद्घुष्यन्। विकृष्य उत्पाट्य। ताभ्यां सर्वे देवगणाः वित्रासिताः हेतुभेदेन देवानां भयान्तरमत्रोक्तमिति न पुनरुक्तिः ॥ ६ ॥ स्ववृत्तप्रदर्शनफलमाह—सोहमिति ॥ मनुष्ययोरिति देवासुरव्यावृत्तिः। प्राकृतयोरिति इन्द्रव्यावृत्तिः। नरेन्द्रात्मजयोरिति बाल्योक्तिः। कथं न शक्तोस्मि अतः कुतो भीषयसे इति पूर्वेणान्वयः ॥ ७ ॥ इन्द्रकल्पस्येत्यादिविशेषणत्रयेण पूर्वोक्तस्य यथार्थत्वमुक्तं। शस्त्रभृतां वरिष्ठ इत्यनेनाभीरुत्वमुक्तं। महार्थमित्यनेन वक्ष्यमाणार्थस्येन्द्रजिता दुर्ज्ञेयत्वमुक्तं ॥ ८ ॥ न तातेति अनेन निकृष्टवयस्त्वमुक्तं। बालत्वेपि कस्यचित्सुमतिः संभवति सापि

---

स० कुतइतिद्वितीयान्तात्कुशब्दात्तसिः। कुं लङ्काभूमिं। एतौ प्राप्तौ तौमानुषराजपुत्रौनिहन्तुंशक्यौ। किंनाम भीषयसेस्मकुतो भीषयसे। एतौकिंनाम किंपदार्थौ। अलक्ष्यतयैवमुक्तिः ॥४॥ ति० भूमितलेनिविष्टः स्वर्गात्प्रच्याव्यभूमौबन्दीकृत्यस्थापितः ॥ स० त्रिलोकनाथइति। विशेषणसमासोऽयं। लोकानांनाथोलोकनाथः। त्रयाणांलोकनाथस्त्रिलोकनाथः। सप्तघटिकाभोजनमितिवद्वा। भयार्पिताः भयमर्पितंयेषुते भयायैवार्पिताइतिवा। सर्वाङ्गीणभयाइतिवा। दिशःप्रपन्नाः। यदेदृशीदशात्रिदशेश्वरत्रिदशानां काकथारघुनाथपोतयोरितिभावः ॥ ५ ॥ स० माययेन्द्रजयेपि वास्तवतत्सामर्थ्याभावादिन्द्रकल्पस्येत्युक्तिः ॥ ८ ॥

[ पा० ] १ ङ. झ. मानुषराजपुत्रौ. २ झ.—ट. भयार्पिताः. ३ ङ. झ. ट. निस्स्वनं. ४ ग. ङ. झ. शोककर्ता.

पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोसि शत्रुः ॥
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १० ॥
त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत्त्वाम् ॥
बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११ ॥
मूढः प्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा ॥
मूर्खस्त्वमत्यन्तसुदुर्मतिश्च त्वमिन्द्रजिद्बालतया ब्रवीषि ॥ १२ ॥
को ब्रह्मदण्डप्रतिमप्रकाशानर्चिष्मतः कालनिकाशरूपान् ॥
सहेत बाणान्यमदण्डकल्पान्समक्षमुक्तान्युधि राघवेण ॥ १३ ॥
धनानि रत्नानि विभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ॥
सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥ १४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

नास्तीत्याह—अद्यापीति । अविपक्वबुद्धिः अपरिणतबुद्धिः । निश्चयाभावं दर्शयति—तस्मादिति । विप्रलप्तं विप्रलपितं ॥ ९ ॥ न केवलं स्वाज्ञानस्य स्वविनाश एव फलं किंतु पितृविनाशोपीत्याह—पुत्रेति ॥ हे इन्द्रजित् त्वं पुत्रप्रवादेन पुत्रप्रसिद्ध्या । इत्थंभावे तृतीया । मित्रस्य मुखमिव मुखं यस्य सः तथोक्तः । मित्रवद्भासमान इत्यर्थः । शत्रुरसि । शत्रुत्वमेवोपपादयति—यस्येति । त्वं यस्य रावणस्य ईदृशं पुत्रमित्रविनाशपर्यन्तं । राघवतो रामात् । विनाशं निशम्य मन्मुखाच्छ्रुत्वा । मोहादनुमन्यसे तस्य रावणस्य त्वं शत्रुरसीत्यर्थः । मोहादित्यनेन मित्रमुखत्वमुपपादितं । अनुमन्यस इत्यनेन शत्रुत्वं ॥ १० ॥ एवमनुमोदनस्य दण्डमाह—त्वमेवेति ॥ त्वमेव वध्यः दण्ड्यः किमित्यर्थः । किंतु यस्त्वां इह सभायां । आनयत् प्रावेशयच्च । स एव वध्यः ॥ ११ ॥ सुदुर्मतिश्चेति चशब्ददर्शितान् दोषानाह—मूढः इति ॥ मूढः कृत्याकृत्यविवेकशून्यः । प्रगल्भः धृष्टः । पण्डितंमन्य इति यावत् । अविनयोपपन्नः अशिक्षित इत्यर्थः । तीक्ष्णस्वभावः क्रूरप्रकृतिः । दुरात्मा दुष्टान्तःकरणः । मूर्खः अविमृश्यकारी । अत्यन्तसुदुर्मतिः । प्रहस्तो दुर्मतिः महापार्श्वादिः सुदुर्मतिः त्वमत्यन्तसुदुर्मतिरित्यर्थः । त्वमेवंभूतोसि अतस्त्वं बालतया ब्रवीषि इति संबन्धः ॥ १२ ॥ दुर्मतित्वे हेतुमाह—क इति ॥ ब्रह्मदण्डप्रतिमप्रकाशान् ब्रह्मदण्डसदृशप्रभान् । ब्रह्मदण्डो नाम युगान्तसमुत्थितोग्निवर्णो धूमकेतुरित्येके । ब्रह्मशाप इत्यन्ये । अर्चिष्मतः ज्वालावतः । "अर्चिर्हेतिः शिखा स्त्रियां" इत्यमरः । कालनिकाशरूपान् अन्तकसदृशरूपान् । समक्षमुक्तान् समीपे मुक्तान् ॥ १३ ॥ कृतस्याकृत्यस्य प्रायश्चित्तं राजानं प्रत्याह—धनानीति ॥ रत्नानि श्रेष्ठवस्तूनि । "रत्नं स्वजातिश्रेष्ठेपि" इत्यमरः । धनानि द्रव्याणि ॥ १४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

---

स० ब्रह्मदण्डप्रतिमः ब्राह्मणशापसदृशःप्रकाशस्तेजोयेषांते तान् । कालः कालाभिमानीयमभृत्यः । नितरांकाशतइतिनिकाशोऽग्निः । तद्वद्रूपंयेषांतान् । समीक्ष्य लक्षीकृत्य ॥ १३ ॥ स० रत्नानिधनानि श्रेष्ठधनानि । "रत्नंश्रेष्ठमणावपि" इतिविश्वः मणीन् हीरादीन् ॥ १४ ॥ इतिपञ्चदशःसर्गः ॥ १५ ॥

[ पा० ] १ ज. मन्यार्थसुदुर्मतिश्च. २ ख.—ङ. झ. सुभूषणानि.

## षोडशः सर्गः ॥ १६ ॥

रावणेनविभीषणंप्रतिसगर्हणंभ्रातृत्वाभावेवधार्हत्वोक्तिः ॥ १ ॥ विभीषणेनतदसहिष्णुतयागदापाणिनासतासचिवचतुष्टयेनसहगगनोत्पतनेनरावणंप्रतिशोचनपूर्वकंरामसमीपगमनम् ॥ २ ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ॥ अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ १ ॥
वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा ॥ न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २ ॥
जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ॥ हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥
प्रधानं साधनं वैद्यं धर्मशीलं च राक्षस ॥ ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४ ॥
नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ॥ प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५ ॥
श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् ॥ पाशहस्तान्नरान्दृष्ट्वा शृणु तान्गदतो मम ॥ ६ ॥

इत्थं हितमुक्तवन्तं विभीषणं प्रति रावणस्य परुषभाषणं षोडशे—सुनिविष्टमिति ॥ सुसन्निवेशं अर्थानुसंधानविरहेपि श्रवणमात्रेणात्यन्तप्रीतिजनकं । तेनार्थस्याननुकूलत्वेपि श्रवणस्यापरित्याज्यत्वमुक्तं । सुनिविष्टं उक्तवन्तमिति क्रियाविशेषणं वा । तेन मनस्यलग्नं चेदनादरणीयं वा स्यात् । मनसि सम्यग्लग्नं यथा भवति तथा उक्तवन्तं । हितं न केवलं श्रवणप्रियं । अतिदुर्दशानिस्तरणोपायतया पथ्यं । श्रवणकटुत्वेपि पथ्यत्वपर्यालोचनया अपरित्याज्यं । वाक्यं यावद्वक्तव्यार्थपूर्णं । उक्तवन्तं । "नासंवत्सरवासिने प्रब्रूयात्" इत्युक्तरीत्या गुरूपसदनयुक्तस्य पादयोः पतितस्य वक्तव्यस्य दुरवस्थां दृष्ट्वोक्तवन्तं विभीषणं । अन्येन चेदुक्तं परित्याज्यं । साक्षादनुजतया प्रत्यासन्नेनोक्तं कथं त्याज्यं । परुषं वाक्यमब्रवीत् । श्रवणसमनन्तरं स्थितोस्मि गतसंदेह इति वा वक्तव्यं । त्वया महोपकारः कृत इति स्तोत्रं वा कर्तव्यं । सदृशप्रत्युपकाराभावेनानुतापो वा कर्तव्यः । तद्विहाय शत्रून्प्रति वक्तव्यमुक्तवान् । अब्रवीदित्यनेन यथा सुनिविष्टमुक्तं तथा मनसि सुलग्नं यथा भवति तथा व्यक्तमुक्तवान् । एवमुक्तवन्तं प्रत्यपि परुषोक्तौ हेतुद्वयमाह—रावण इत्यादि । रावयति रोदयतीति रावणः परहिंसायां जगद्विदितः । रौतीति रवणः स एव रावणः । स्वार्थेणप्रत्ययः । अस्थाने पदं दत्वा स्वयमप्याक्रन्दन्नित्यर्थः । कालचोदितः । भ्राता रामं शरणं गच्छेत्युक्तवान् कालस्तन्न कर्तव्यमिति स्वयं द्विधा भज्येयमिति । अतः स्वप्रकृत्यनुगुणं कालमनुसृतवानितिभावः ॥ १ ॥ परुषमेवाह—वसेदिति ॥ सपत्नेन बाह्यशत्रुणा । मित्रप्रवादेन मित्रवदवभासमानेनेत्यर्थः । शत्रुसेविना शत्रुपक्षपातिना । सहजशत्रुणेत्यर्थः । शत्रुसर्पसहवासादपि सहजशत्रुसहवासः सुदूरं परिहर्तव्य इति भावः । अतस्त्वया अस्मान्नगरात् सद्यो गन्तव्यमितिद्योत्यते ॥ २ ॥ अत्र शत्रुसेवित्वे हेतूंस्त्रिभिर्दर्शयति—जानामीत्यादिभिः । सर्वलोकेषु सर्वजनेषु मध्ये । शीलं स्वभावं । शीलमेवाह—हृष्यन्तीति । अस्मद्व्यसनेन लब्धहर्षस्त्वमेवं गर्जसीति भावः ॥ ३ ॥ ज्ञातयः । प्रधानं स्वजातिश्रेष्ठं । साधनं कार्यसाधकं । वैद्यं विद्वांसं । प्राधान्यादिष्वेकैकगुणयोगेपि ज्ञातयोवमन्यन्ते । न बहु मन्यन्ते अवसरे परिभवन्ति चेत्यर्थः ॥ ४ ॥ एवं ज्ञातीनां ज्ञातिषु व्यसने हर्षः उत्कर्षेऽसूया चेति शीलद्वयमुक्तं । अथ भयावहत्वरूपं शीलान्तरमाह—नित्यमिति ॥ प्रतिच्छन्नहृदयाः गूढाभिप्रायाः । अतएव नित्यमन्योन्यसंहृष्टाः बहिःस्नेहवन्त इवस्थिताः । घोराः क्रूरकर्माणः । अतएव व्यसनेषु सत्सु आततायिनः द्रोहकारिणः । अतस्त्वमस्मासु व्यसने प्रहर्तुमिच्छसीतिभावः ॥ ५ ॥ उक्तं ज्ञातीनां भयावहत्वं हस्ति-

ती० सुनिविष्टं सुष्ठुविनीतिनिष्ठमितियावत् ॥ १ ॥ ति० सपत्नेनापिसहवसेत् । नतुमित्रप्रवादेन मित्रपदव्यवहार्येण । शत्रुसेविना शत्रुपक्षपातिना । वसेत् । सपत्नेचित्तस्यद्वेषकोट्यैवप्रतिष्ठा । मित्रप्रवादेतु द्वेष्यत्वेनस्निग्धत्वेनचेतिपरमदुःखमितितत्सहवासनिषेधः । शत्रुसेविनेत्यनेनास्यभगवद्भक्तत्वंसूचितं ॥ २ ॥ ति० ज्ञातयः ज्ञातिरूपाः । आततायिनः " अग्निदोगरदश्चैव

[ पा० ] १ ङ. ज.—ट. साधकं. घ. सुकृतं. २ ङ. झ. ञ. ट. ज्ञातयोप्यव. ३ ङ. झ. पुरा. ४ ङ. छ. झ. ञ. ट. शृणुष्वगदतो.

नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः॥ घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः॥७॥
उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ॥ कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८ ॥
विद्यते गोषु संपन्नं विद्यते ब्राह्मणे दमः ॥ विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९ ॥
ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः ॥ [1]ऐश्वर्यमभिजातश्च ज्ञातीनां मूर्ध्न्यवस्थितः ॥ १० ॥
यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ॥ न श्लेषमु[2]पगच्छन्ति तथाऽनार्येषु [3]संगतम् ॥ ११ ॥
यथा मधुकरस्तर्षाद्रसं विन्दन्न वि[4]द्यते ॥ तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ १२ ॥
[ य[5]था मधुकरस्तर्षात्काशपुष्पं पिबन्नपि ॥ रसमत्र न विन्देत तथाऽनार्येषु सौहृदम् ] ॥ १३ ॥
यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः ॥ दूषयत्यात्मनो देहं तथाऽनार्येषु सौहृदम् ॥ १४ ॥
यथा [6]शरदि मेघानां सिञ्चतामपि गर्जताम् ॥ न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम् ॥ १५ ॥

---

गीतेन संवादयति—श्रूयन्त इत्यादिना ॥ कचित्पद्मवने । पाशहस्तान् पाशाः गजग्रहणरज्जवः ते हस्तेषु येषां ते तथोक्तान् । स्वबन्धनोद्युक्तानिति यावत् । नरान् ज्ञातिगजगोप्तॄन् गजग्राहिपुरुषान् दृष्ट्वा हस्तिभिः गीताः पठिताः । श्लोकाः श्रूयन्ते । वक्तृपरम्परया तान् श्लोकान् । गदतः वदतः । मम मत्तः । शृणु ॥ ६ ॥ तानेव त्रीञ्श्लोकानुपादत्ते—नाग्निरित्यादिना ॥ नः अस्माकं । अग्निः आश्रयाशोपि न भयावहः । अन्यानि लोकविलक्षणानि अग्नितोपि क्षणान्नाशकराणि । शस्त्राणि आयुधानि च । न भयावहानि । पाशाः मरणादप्यतिदुस्सहपारवश्यक्लेशकराश्च न भयावहाः । किंतु घोराः निर्दयाः । स्वार्थप्रयुक्ताः स्वप्रयोजनपराः । ज्ञातयः भयावहाः । अग्न्यादिभ्योप्यधिकं ज्ञातिभ्यो भयमित्यर्थः ॥ ७ ॥ उक्तं ज्ञातिभयातिरेकं सयुक्तिकमुपपादयति—उपायमिति ॥ अस्माकं ग्रहणे एते ज्ञातिरूपा हस्तिनः । उपायं वक्ष्यन्ति । अत्रोपायकथने संशयो नास्ति । अतः कृत्स्नादग्न्यादिभयात् ज्ञातिभयं सुकष्टं । प्रकृष्टं भयमित्यर्थः । इदमस्माभिः विदितं ज्ञातं च ॥ ८ ॥ स्निग्धेषु ज्ञातिषु कुतो भयसंभावनेत्याशङ्क्याह—विद्यत इति ॥ गोसंपत्त्याद्युपादानं दृष्टान्तार्थं । गोषु संपन्नं संपत्तिः । तद्धेतुत्वमित्यर्थः । विद्यते अस्ति । “विद सत्तायां” इति धातुः । दमः इन्द्रियनिग्रहः । चापल्यं चञ्चलत्वं । ज्ञातितः ज्ञातिषु । भयं भयकरत्वं ॥ ९ ॥ प्रधानं साधनमिति श्लोकोक्तं निदर्शयति—तत इति ॥ अहं लोकसत्कृतः ऐश्वर्यं अभिजातः प्राप्तः । रिपूणां मूर्ध्न्यवस्थितश्चेतियत् इदं ततः ज्ञातीनामसहिष्णुत्वात् तव नेष्टं ॥ १० ॥ चिरं सह वसति विभीषणे कथमकार्यमाशङ्कस इत्यपेक्षायामनार्यस्य चिरसंवासोऽप्रयोजक इत्याह—यथेति ॥ पुष्करपर्णेषु पद्मपत्रेषु पतितास्तोयबिन्दवः यथा श्लेषं ऐक्यं । नोपगच्छन्ति तथा अनार्येषु दुष्टेषु विषये । संगतं संबन्धः । श्लेषं स्नेहबन्धं । नोपयातीत्यर्थः ॥ ११ ॥ त्वदुपजीविनस्त्वयि कथं स्नेहबन्धाभाव इत्यत्राह—यथेति ॥ यथा मधुकरः तर्षात् अभिलाषात् । रसं मकरन्दं । विन्दन् पिबन् । तत्र रसाधारे पुष्पे । न विद्यते न तिष्ठति । रसप्रदानोपकारंजानन् तत्र न स्निह्यतीत्यर्थः । त्वमपि तथा मधुकरइव । अनार्येषु दुर्जनेषु । सौहृदं तथा हि । उपजीव्यविषये न जायतइत्यर्थान्तरन्यासः ॥ १२—१३ ॥ तथापि कृतस्नेहः कुतोपलभ्यते तत्राह—यथेति ॥ अनार्येषु सौहृदं गजस्नानवत्तैरेव दुष्यत इत्यर्थः ॥ १४ ॥ दृष्टोपि स्नेहो न फलपर्यव-

---

शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैवषडेतेआततायिनः ” ॥ ५ ॥ **रामानु०** सौम्येत्याक्षेपोक्तिः ॥ १० ॥ **ति०** काशपुष्पंपिबतोपिरसालाभः तथाऽनार्येषुसौहृदंकुर्वतःफलालाभइतिभावः ॥ १३ ॥ **ति०** यथागर्जतांसिञ्चतामपिमेघानांसंबन्धे पृथिव्याअंबुसंक्लेदः अंबुव्याप्तता । नभवति तथा अनार्येषुसौहृदं निष्फलमितिभावः । यद्वा वर्षासुगर्जतांसिञ्चतामपिमेघानांशरदिनांबुसंक्लेदः तथाऽनार्येषुसौहृदं अल्पकालस्थायीत्यर्थः ॥ **ती०** शरदिसिञ्चतां जललवान्मुञ्चतांमेघानांयथार्द्रीभावोनभवति । मेघाइवानार्याः

**[ पा० ]** १ क.—ङ. छ.—ञ. रिपूणांमूर्धनिस्थितः. २ ङ. झ. ट. मभिगच्छन्ति. ३ क.—ङ. छ.—ञ. सौहृदं. ४ ङ. छ. झ. तिष्ठति. घ. ज. सज्जते. ५ अयंश्लोकः क. ग. ङ. छ. झ. ञ. ट. पाठेषुदृश्यते. ६ ख. शारदमेघानां.

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ॥ अस्मिन्मुहूर्ते नभवेत्त्वां तु धिक्कुलपांसनम् ॥ १६ ॥
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ॥ उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १७ ॥
अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ॥ अन्तरिक्षगतः श्रीमान्भ्रातरं राक्षसाधिपम् ॥ १८ ॥
स त्वं भ्राताऽसि मे राजन्ब्रूहि मां यद्यदिच्छसि ॥ १९ ॥
ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ॥ इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ॥ २० ॥
सुनीतं हितकामेन वाक्यमुक्तं दशानन ॥ न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २१ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ॥ अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २२ ॥
बद्धं कालस्य पाशेन सर्वभूतापहारिणा ॥ न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा ॥ २३ ॥
दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः ॥ न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २४ ॥
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ॥ कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २५ ॥
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ॥ आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥ २६ ॥

---

सायीत्याह—यथेति ॥ शरदि सिञ्चतां वर्षतां । मेघानां संबन्धी अम्बुसंक्लेदः अम्बुसेचनं । यथा न भवति तथानार्येषु सौहृदं । शरन्मेघवर्षणवदनार्येषु सौहृदमनुपकारकमित्यर्थः ॥ १५ ॥ एवं सामान्येन विनिन्द्य साक्षादपि निन्दति—अन्य इति ॥ अन्यः अनुजादन्यः । एवंविधं अतिपरुषं । एतत् पूर्वोक्तं । वाक्यं ब्रूयात् वदेच्चेत् । अस्मिन्मुहूर्तेस्मिन्क्षणएव । नभवेत् विनश्येत् । नाशयेयमितियावत् । त्वां तु भ्रात्राभासं । धिक् त्यक्ष्यामीत्यर्थः । कुलपांसनं राक्षसकुलावद्यकरं ॥ १६ ॥ न्यायवाद्यपि इति पूर्वोक्तरीत्या । परुषमुक्तस्सन् उत्पपात संतप्तसिकतामयभूमिस्थितइव उद्गतः ॥ १७ ॥ एवमाकाशे उत्पतन्नपि पुनस्तस्मिन्ननुतापेनापिनामसमुद्भवेत्समीची मतिरिति हितोपदेशे प्रावर्ततेत्याह—अब्रवीदिति ॥ अन्तरिक्षगतः श्रीमान् । "परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति समुत्थितस्य का नाम श्रीः । उच्यते । प्रतिकूलनिवृत्तिपूर्वकानुकूलरामविषयाभिमुख्यश्रीसमेत इत्यर्थः ॥ १८ ॥ स त्वमित्यर्धमेकं वाक्यं ॥ स त्वं परुषवादी त्वं । भ्रातासि प्रतिवक्तुमनर्होसि । अतो यद्यदिच्छसि तद्वद ॥१९॥ तर्हि किमर्थमुद्गतोसि प्रतिवचनाभावात् क्षमापि क्रियतां तत्राह—ज्येष्ठ इति ॥ ज्येष्ठस्त्वं पितृसमः मान्यः । किंतु धर्मपथे न स्थितोसि । अतस्त्वदुक्तमनृतं परुषं न क्षमामि न क्षमे ॥ २० ॥ स्ववाक्याश्रवणे निमित्तं सामान्यतो दर्शयति—सुनीतमिति ॥ २१ ॥ प्रियवादिन इत्युपलक्षणं प्रियश्रोतारश्च ॥ २२ ॥ तर्ह्यश्रोतारं प्रति किमर्थं वदसि तत्राह—बद्धमिति ॥ सर्वभूतापहारिणा निर्दयेनेत्यर्थः । नोपेक्षेयं नोपेक्षेय । शरणं गृहं ॥ २३—२४ ॥ शौर्यबलास्त्रशालिनो मे कुतो विपदाशङ्केत्यत्राह—शूरा इति ॥ कालाभिपन्नाः मृत्युगृहीताः । सीदन्ति शीर्यन्ति । वालुकाः सिकताः ॥ २५ ॥ मर्षयतु । भवानितिशेषः ॥ २६ ॥

---

आपाततउपकुर्वन्तइवप्रतीयमानाअपिवस्तुतोनोपकुर्वन्तीत्यर्थः ॥ १५ ॥ ति० परुषंवाक्यं पूर्वोक्तं । लङ्कावस्थानेप्येतैस्सहनाशस्य दुर्वारत्वात्ज्येष्ठोप्यसौ "उत्पथंप्रतिपन्नस्यकार्याकार्यमजानतः । गुरोरप्यवलिप्तस्यपरित्यागोविधीयते" इतिशास्त्रबलात्सर्वथापरित्याज्यएवेत्यालोच्यतत्सभांहित्वाखमुत्पपातचतुर्भिर्मन्त्रिभिः ॥ १७ ॥ रामानु० अत्रश्रीशब्देनसोपाधिकप्रतिकूलसंबन्धपरित्यागपूर्वकनिरुपाधिकस्वामिसंबन्धावलंबनरूपाश्रीरुच्यते ॥ १८ ॥ ति० अथसभासदांज्येष्ठत्यागेनाधर्मोयमितिशङ्कानिवृत्त्यर्थमाह—स त्वंभ्रातेइत्यादि । ज्येष्ठत्वादिगुणकोपिनधर्मपथेस्थितः परदारापहरणादिरूपानेकाधर्मशालित्वात् । "पतितैःसहसंव्यवहारोनविद्यते" इतिस्मृतेः । "पतितमाचार्यंज्ञातिंवाद्रष्टुंनगच्छेत् । नचास्मादुपयुञ्जीत । यदृच्छासंनिपातेउपसंगृह्यतूष्णींव्रजेत्" इतिस्मृतेश्चाग्रजस्यापितेइदंपरुषंवाक्यंनक्षमामि । अतःपरमिहस्थित्वेतिशेषः ॥ १९—२० ॥ ति० यदुक्तमप्रियमिवहितं तद्भवान्मर्षयतु क्षमतां । मयाविनासुखीभवेतिव्यङ्ग्योक्तिः ॥ २६ ॥

[ पा० ] १ घ. ङ. छ. झ. ञ. ट. योनस्त्वेवं. क. योन्यश्चैवं. २ ख. ङ. झ. ट. पांसन. ३ ङ. छ. झ. ञ. क्षमाम्यग्रजस्यते. क. क्षमाम्यग्रतस्तव. ४ ङ. झ. मुपेक्षेत्वां. ५ क. ख. सैकतमंभसि.

स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २७ ॥
[ नूँनं न ते रावण कश्चिदस्ति रक्षोनिकायेषु सुहृत्सखा वा ॥
हितोपदेशस्य स मन्त्रवक्ता यो वारयेत्त्वां स्वयमेव पापात् ॥ २८ ॥]
निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर ॥
पॅरीतकाला हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ॥ १७ ॥

मन्त्रिचतुष्टयेनसहगगनेऽभ्यागच्छन्तंगदापाणिंविभीषणंदृष्टवतासुग्रीवेण हनुमदादीन्प्रति तत्प्रदर्शनपूर्वकं तदागमनस्वरामादिहननेच्छामूलकत्वोक्तिः ॥ १ ॥ सागरोत्तरतीरमागतवताविभीषणेन सुग्रीवादीन्प्रति स्ववृत्तान्तनिवेदनेनसहस्वागमननिदाननिवेदनपूर्वकं श्रीरामेतन्निवेदनप्रार्थना ॥ २ ॥ सुग्रीवेणरामंप्रति तन्निवेदनपूर्वकंविभीषणेदोषनिर्धारणेन तस्यवधार्हत्वोक्तिः ॥ ३ ॥ रामेणविभीषणस्वीकरणे स्वस्वाभिप्रायनिवेदनंचोदितैरङ्गदादिभिर्विभीषणेदोषसंभावनया परीक्षामन्तराग्रहणनिषेधे हनुमताऽङ्गदादिपक्षप्रतिक्षेपपूर्वकं तस्यनिर्दोषत्वनिर्धारणेनग्राह्यत्वोक्तिः ॥ ४ ॥

**इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ॥ आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १ ॥**

स्वस्तीत्यर्धं ॥ २७—२९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

---

एवमष्टभिः सर्गैः—" आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः " इत्युक्तेषु शरणागत्यङ्गेषु प्रपित्सोर्विभीषणस्यानुकूल्यसंकल्पप्रातिकूल्यवर्जने दर्शिते । पुनः पुनरुपदेशादिना महाविश्वासो दर्शितः । अथ कार्पण्यप्रदर्शनपूर्वकं शरणागतिस्वरूपं दर्शयितुमुपक्रमते—इत्युक्त्वेत्यादिना ॥ तत्र रावणेन तिरस्कारे सत्यस्य देश एवास्माभिस्त्याज्यः । परमधार्मिकश्रीरामाश्रयस्तु कर्तव्य इति धार्मिकस्य विभीषणस्य धर्मे मतिरासीदित्यृषिः प्रस्तौति—इतीति ॥ इत्युक्त्वा " प्रदीयतां दाशरथाय मैथिली " इति कर्तव्यसौकर्यं " यावन्न गृह्णन्ति शिरांसि बाणाः " इत्यकरणे प्रत्यवायं चोक्त्वा । परुषं सस्त्रीकजनसुखावहस्य मलयमारुतस्य विरहिणि दुःखकरत्ववद्विभीषणोदितं हितं । आश्रयदोषेण परुषं । वाक्यं हितपरिपूर्णं । उक्त्वा हितज्ञो भ्राता भ्रातरमापन्नं परित्यजेत्यपयशो यावता शक्यं परिमार्ष्टुं तावत्पर्यन्तमुक्त्वा । परुषत्वे हेतुः रावणमिति । प्रबलदुर्बलविचारमन्तरेण सर्वरावकस्य शत्रुबलोपवर्णने परुषं भवत्येव । रावणानुजः रावणानुजत्वेपि सत्त्वोत्तरतया कथनीयं हितमुक्तवानित्यृषिः स्तौति । हितकथने ज्येष्ठभावोप्यप्रयोजकः । अत एवोक्तं मनुना—"पितॄनध्यापयामास शिशुराङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ अज्ञं हि बालमित्याहुः पितेत्येव च मन्त्रदं " इति । आजगाम रावणगोष्ठ्यां स्वस्य संबन्धाभावेन रामगोष्ठ्याः स्वगृहत्वेनाजगामेत्युक्तं नतुजगामेति । मुहूर्तेन " वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसं " इति न्यायेनाङ्गारनिकरपरिक्षिप्तेवर्त्मनिपदन्यासवत् रावणसदनावस्थित्यनर्हत्वं विगलितबन्धनरज्जोर्वत्सस्य मातुरूधःस्पर्शमन्तरेण मध्यदेशादर्शनवदतिवेगागमनं चोक्तं । यत्ररामः । रामापेक्षया तद्देशसंबन्धस्य प्राप्यत्वमुक्तं । " सुभगश्चित्रकूटोसौ गिरिराजोपमो गिरिः । यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने " इतिवत् रामस्य लक्ष्मणो व्यावर्तकइति सलक्ष्मण

**रामानु०** परीतकालाः परीतः प्रत्यासन्नः कालोमृत्युर्येषांतेतथोक्ताः । **ती०** यद्वा परीतः परिवृतः कालः मृत्युरिवअहिः तेनगतान्यायूंषियेषांतेतथोक्ताः ॥ २९ ॥ इतिषोडशःसर्गः ॥ १६ ॥

**[ पा० ]** १ ङ. झ. ट. परान्तकालेहि. ज. परेतकल्पाहि.

इत्युक्तं । यद्वा पुरुषकारसान्निध्यमनेनोच्यते । अनेन श्लोकेन भगवद्विमुखानां देशस्य त्याज्यत्वं तत्संबन्धिदेशस्य परमप्राप्यत्वं चोक्तं । यद्वा " सा काशीति न चाकशीति " इत्याद्युक्तरीत्या भगवद्देशस्यापि भागवताभिमानाभावे परित्याज्यत्वाल्लक्ष्मणसान्निध्यमुक्तं । ननु विश्रवःपितामहवरप्रदानविभवविदितनिखिलधर्मवृन्देन " विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः " इति तत्र तत्र धार्मिकतया प्रशंसितेन विभीषणेन " ज्येष्ठो भ्राता पितृसमः " इति पितृवदनुवर्तनीयो ज्येष्ठभ्राता बाल्यात्प्रभृति परिपोषकश्च सन्रावणः सपदि सन्निहिते शत्रौ क्षुद्रबुद्धिनेव दूरं कथं परित्यक्तः । त्यजतु नाम कथंचित् । अथापि न युक्तमभिगन्तुं तस्य प्रहर्तारं । अभिगच्छतु नाम नोचितमस्यस्थानमभिलषितुं । अभिलषतु नाम नौपयिकमस्यवधोपायंनिर्देष्टुं । अत्र केचित् । रावणस्य निरवधिकदोषदूषितत्वात् "गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते" इति स्मरणाद्विभीषणेन त्यक्तो रावण इत्याहुः । त्र्यन्तगुरवस्तु–' पितामहवरप्रसादेन लब्धविज्ञानत्वाद्रामं सर्ववेदान्तवेद्यं सर्वलोकेश्वरभूतं सर्वलोकशरण्यं मुक्तप्राप्यं नारायणाख्यं परं ब्रह्म लोकानुजिघृक्षयावतीर्णमिति निर्विचिकित्समवगच्छति । यथा मन्दोदरीप्रभृतयः । एवं तत्त्वज्ञानसंपन्नस्य विशेषसामान्यधर्मप्राबल्यदौर्बल्यविवेकेन सामान्यधर्मपरित्यागो विशेषधर्मपरिग्रहश्चोपपद्यते । ज्येष्ठभ्रात्रनुवर्तनंहि त्रैवर्गिकफलसाधनतयाज्येष्ठानुवर्तनद्वारा परमात्माराधने पर्यवसानस्य वक्तव्यत्वात् मोक्षपर्यवसानेपि परमात्मोपासनाङ्गत्वाच्च सामान्यधर्मः । रामानुवर्तनं तु साक्षात्परमात्मसमाराधनत्वात् यज्ञादिधर्मसाध्यत्वेन प्रधानत्वाच्च विशेषधर्मः । उभयोश्चाप्यविरोधे सत्युभयमप्यनुवर्तनीयं । विरोधेतुसामान्यधर्मं परित्यज्य विशेषधर्मोनुवर्तनीयः । अतो विभीषणोपि इयन्तं कालं कृतं रावणानुवर्तनमपरित्यज्यैव मम रामानुवर्तनमपि किं सिद्ध्येदित्याशया तस्मै हितं पुनःपुनरुपदिदेश । एवमपि तस्यासुरप्रकृतितयाऽनपनोद्यं रामवैरमितिनिश्चित्यातःपरं एतदनुवर्तने स्वात्मविनाशकं रामविषयकं वैरं मय्यपि स्यादिति भीतःसन् " वरं हुतवहज्वाला " इत्यादिन्यायेनात्यन्तदुःसहां तत्संगतिं तत्याज । विशेषधर्मं रामानुवर्तनं चाङ्गीचकारे- त्यतोयं परो धर्म एवेति कृतघ्नशङ्का दूरोत्सारिता । नाप्ययं राज्यकाङ्क्षया रामंशरणमुपजगाम तदपेक्षाया अदर्शनात् । तथाहि शरणागतिसमये " त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः " इत्यन्यविषयवैराग्यस्य तेन कण्ठरवेणोक्तत्वात् । पश्चाद्रामाय विज्ञापने क्रियमाणे " परित्यक्ता मया लङ्का मित्राणि च धनानि च । भवद्गतं मे राज्यं च जीवितं च सुखानि च " इति सर्वविधपुरुषार्थत्वेन त्वामेवाहमुपेयिवानितिकथनाच्च । " अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवं । राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते " इत्यनाकाङ्क्षितराजत्वकरणोक्तिः कूलंकषरामप्रीतिसागरपरीवाहरूपानुषङ्गिकभोगप्रदानपरा । यथाहुः—" आयुरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः " इति ॥ अतो यदुक्तं हनुमता " राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः " इति । यच्च रामेणोक्तं " राज्यकाङ्क्षी विभीषणः " इति तत्सर्वं रामभक्त्याविलाशयस्य सुग्रीवस्य व्यामोहप्रशमनाय नीतिशास्त्रोक्तराजवृत्तान्तप्रदर्शनमात्रपरमिति मन्तव्यम् । हनुमद्रामवाक्यस्य विभीषणवाक्यस्य चान्योन्यविरोधप्रसङ्गे " अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः " इतिन्यायेन विभीषणवाक्यस्य प्राबल्यात् । अतएव " राजानं त्वां करिष्यामि " इति ब्रुवतो रामस्य प्रतिवचनमनुक्त्वा परिचरणमात्रमेव विभीषणः प्रार्थयामास " राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे । करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् " इति । तस्यानुमत्यभावेपि बलाद्राज्यस्वीकार उत्तरकाण्ड उक्तः—" यावत्प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण । राक्षसेन्द्र महावीर्य लङ्कास्थस्त्वं धरिष्यसि ॥ शापितस्त्वं सखित्वेन कार्यं ते मम शासनम् । प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि " इति । इत्थमनन्यप्रयोजनत्वादेवास्मै रामः कुलधनं श्रीरङ्गनाथं ददौ । धर्मसंस्थापनार्थमेवावतीर्णस्य रामस्य नियोगेनावशिष्टां राक्षसजातिं सन्मार्गे प्रवर्तयितुं तस्य राज्याङ्गीकरणं । इदमप्याज्ञानुविधायित्वात् कैङ्कर्यकोटावन्तर्भूतमिति विभीषणतात्पर्यं । अतो यथावद्विदितधर्मो लक्ष्मणोपि " अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः " इति सोपाधिकपितरं दशरथं परित्यज्य निरुपाधिकसकलविधबन्धुं

तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् ॥ गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ २ ॥
[ स हि मेघाचलप्रख्यो महेन्द्रसमविक्रमः ॥ सर्वायुधधरो वीरो दिव्याभरणभूषितः ॥ ३ ॥
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः ॥ तेऽपि सर्वायुधोपेता भूषणैश्चापि भूषिताः ] ॥ ४ ॥
तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः ॥ वानरैः सह दुर्धर्षश्चिन्तयामास बुद्धिमान् ॥ ५ ॥
चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह ॥ हनुमत्प्रमुखान्सर्वानिदं वचनमुत्तमम् ॥ ६ ॥

राममेव "अग्रतस्ते गमिष्यामि पन्थानमकुतोभयम्। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते" इति रामपरिचरणमेव फलं प्रार्थयामास। "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः" इति राघवं शरणमुपागतश्च । तथा विभीषणोपि सोपाधिकबन्धुं भ्रातरं परित्यज्य कैङ्कर्यापेक्षयैव सर्वविधसहजबन्धुं रामं शरणं गत इति बोध्यम् । अतएव रामप्राप्त्यपेक्षया रावणपरित्यागवेलायामन्तरिक्षगतः श्रीमानिति प्रशंसितः । स तु नागवरः श्रीमान् लक्ष्मणो लक्ष्मसंपन्न इतिवत्। तस्मान्नाधर्मशङ्का विभीषणे । ननु यद्येवं तर्हि "ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया । तावुभौ मम नाशाय प्रसुप्तौ पुरुषर्षभौ ॥ जीवन्नपि विपन्नोस्मि नष्टराज्यमनोरथः । प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणःकृतः" इति नागपाशबन्धनसमये स्वस्य राज्यनाशकृतनिर्वेदः कथमुपपद्यत इति चेन्न । तत्रापि प्रतिष्ठाशब्दस्य रामकैङ्कर्यपरत्वात् । नष्टराज्यमनोरथ इत्यत्रापि राज्यशब्दो "भवद्गतं मे राज्यं च" इत्युक्तकैङ्कर्यसाम्राज्यपरः । एतेन "राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः" इति सुग्रीववचनं तु तदाशयाज्ञानकृतमिति न कश्चिद्दोष' इति प्राहुः । अतएव चतुरशीतौ वक्ष्यति विभीषणः—"यदाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् । तत्तथाऽनुष्ठितं वीर त्वद्वाक्यसमनन्तरम्" इति॥ १॥ रावणसमीपादुत्पतनसमय एव सुग्रीवादयो विभीषणमपश्यन्नित्याह—तमिति ॥ तं दवाग्नेर्निर्गत्य शीतलह्रदे पतितुमिवागच्छन्तं मेरुशिखराकारं उन्नत पीवरत्वरत्नबहुलत्वादिभिर्मेरुशिखरतुल्यं । किंच प्रतिपक्षत्यागलाभेन स्थिरतया स्थितत्वं प्रकाशमानत्वं पारतन्त्र्यज्ञापकत्वं। तेन रामस्य शृङ्गलाभः रावणस्य शृङ्गभङ्गश्चोच्यते । दीप्तामिव शतह्रदां । तेजिष्ठत्वगगनसंचाराभ्यां विद्युद्दृष्टान्तः । रामभक्तावानरा नास्मान्प्रवेशयिष्यन्तीतिकम्पः, अप्रवेशे जीवनं न सिध्यतीति त्वरा चेत्येतद्द्वयं तेन गम्यते । गगनस्थमिति दूरत एव ददृशुरिति भावः ॥ २–४ ॥ अथ सुग्रीवो लङ्कापुरीदेशादागमनमायुधसन्नाहं च दृष्ट्वा प्रहर्तुमेवागच्छतीति विचार्य तमर्थं वानरैः सह चिन्तयामासेत्याह—तमिति ॥ तं अत्यन्ताभिनिवेशेन शीघ्रमागतं । आत्मपञ्चमं आत्मना पञ्चत्वसङ्ख्यापूरकमित्यर्थः । अनलशरभसंपातिप्रघसनामभिश्चतुर्भी राक्षसैर्युक्तमिति यावत् । अनलादिगतसङ्ख्यापूरण एव विभीषणस्य प्राधान्यमुक्तं । रामविषयप्रेमास्पदत्वं तु समानं । सुग्रीवः गगनस्थदर्शनार्थं शीघ्रं शिर उन्नम्य दर्शनेन तात्कालिकग्रीवासौन्दर्यमृषिःस्तौति । वानराधिपः । शीघ्रमुत्थाय दर्शनं वानरसेनायाअपि स्वस्यैव रक्षकत्वेन रामविषयप्रीतेश्च राघवार्थे पराक्रान्ता इत्युक्तेभ्यो वानरेभ्योपि स्वस्यैव निरवधिकप्रीतिमत्ताज्ञापकत्वेन च । दुर्धर्षः शरणागतस्यापि पश्चादाकृष्टपादत्वापादकत्वेन अनभिभवनीयः स्थितः । बुद्धिमान्वानरैः सह चिन्तयामास । स्वयं समर्थत्वेपि तानप्यनुसृत्य चिन्तनं कार्यगौरवात् । चारो वा शत्रुर्वेति चिन्तयामास । आगमनमुखविकासादिना निर्दुष्टत्वनिश्चयेपि रामविषयप्रेमपारवश्येन चिन्तितवानितिबुद्धेः प्राशस्त्यं ॥५॥ विभीषणे सपरिकरे सविधस्थे मन्त्रविलम्बो न युक्त

**तनि०** गगनस्थं रावणगोष्ठीतोनिर्गमनसमयएवददृशुः । महीस्थाः भूमौपरितोरक्षणनियुक्ताः । आकाशस्थमपिददृशुरितिजागरूकत्वातिरेकः । यद्वा महीस्थाः तत्रतत्रवृक्षादिषुस्थितास्सर्वे तदात्वएवगगनस्थंदृष्ट्वारामंपर्यवारयन् । वानराधिपाः । अत्यन्तंसावधानतयाविद्यमानत्वाद्वानरानपिऋषिःस्तौति—**वानराधिपाइति** । ददृशुः एकोदृष्ट्वाऽन्यस्मैनदर्शितवान् । किंतुयुगपदेवसर्वेददृशुः । अनेननकेवलंप्रतिकूलसमूहान्निर्गमनमेवविभीषणस्यप्रयोजनं किंत्वनुकूलकटाक्षविषयत्वंलब्धमित्युक्तं ॥ २ ॥ **तनि०** मुहूर्तं

[ **पा०** ] १ क. ख. च. छ. प्रदीप्तमिवतेजसा. घ. दीप्यमानमिवश्रिया. २ इदंश्लोकद्वयं क. ख. घ. च.—ट. पाठेषु दृश्यते. ३ क. च. छ. झ. ञ. ट. वज्रायुधसमप्रभः. घ. महेन्द्राचलविक्रमः. ४ क. ख. घ. च. छ. ञ. ट. वरायुधधरो. ५ ख. च. छ. ञ. ट. भूषणोत्तमभूषिताः. ६ ख. च. छ. वचनमब्रवीत्.

एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः ॥ राक्षसोऽभ्येति पश्यध्वमस्मान्हन्तुं न संशयः ॥ ७ ॥
सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः ॥ सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ८ ॥
शीघ्रं व्यादिश नो राजन्वधायैषां दुरात्मनाम् ॥ निपतन्तु हताश्चैते धरण्यामल्पतेजसः ॥ ९ ॥
तेषां संभाषमाणानामन्योन्यं स विभीषणः ॥ उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ १० ॥
उवाच च महाप्राज्ञः स्वरेण महता महान् ॥ सुग्रीवं तांश्च संप्रेक्ष्य सर्वान्वानरयूथपान् ॥ ११ ॥

इति झटिति मनसा निश्चित्य सचिवादीन्प्रति निर्णीतमाह—चिन्तयित्वेति ॥ चिन्ताया निर्णयान्तत्वादत्र चिन्तयित्वेतिनिर्णयवाची । नायं चारो नापि दूतः अपितु बाधक एवेति निश्चित्य ॥ ६ ॥ स्वनिर्णीतार्थमाह—एष इति ॥ एषः बाधकतैकान्तक्रौर्यसंपन्नः । सर्वायुधोपेतः । मनःस्थितक्रौर्यानुकूलहिंसापरिकरसंपूर्णः । अनुकूलस्य प्रतिकूलतानिश्चयवत् रामविषयप्रेमान्धतया एकायुधस्य बहुत्वनिश्चयः । एकायुधग्रहणचातुर्यदर्शनेन सर्वायुधग्रहणेष्वपि नैपुण्यं ज्ञायत इति वा तथोक्तं । स्वामिपीडने ब्रह्मास्त्रसदृशशरणागतिरेतस्य हस्ते विद्यत इतिवा । उत्पपात गदापाणिरित्यत्र सर्वायुधोपलक्षणमित्यन्ये । राक्षसः सर्पजातिरितिवत् क्रौर्यातिशयोक्तिः । पश्यध्वं पश्यत । अस्मान्हन्तुं । अस्मासु कस्यचिद्धनने हि शेषं जीविष्यति मूलभूतरामहनने सर्वविनाश इति बहुवचनार्थः ॥७॥ वानराश्च सुग्रीववाक्यानुसारेणोद्योगं चक्रुरित्याह—सुग्रीवस्येत्यादिश्लोकद्वयेन ॥ अल्पतेजस इति । अस्मद्बलस्य गजकबलप्राया इत्यर्थः ॥८—९॥ तेषामिति । अनादरे चेयं षष्ठी । वदन्तु नामैते वानरा यत्किंचित् । सर्वज्ञः परमकारुणिकः सर्वलोकशरण्यो रामो मामवश्यं रक्षिष्यत्येवेति महाविश्वासेन तेषामन्योन्यभाषणमनादृत्य प्रहरणोद्यतानामपि तेषामाभिमुख्येनाजगाम । आगत्यापि निर्विशङ्कः सन् सर्वेषामात्मानं प्रकाशयन्नाकाशे एव स्थितवानित्यर्थः । अत्र खस्थो व्यतिष्ठतेति द्विःप्रयोगो निर्भयत्वेन निष्कम्पावस्थानसूचनार्थः ॥ १० ॥ अथ पुरुषकारलेशमनपेक्ष्य सर्वानपि प्रतिबन्धिनो निवार्य मां रक्षिष्यतीति महाविश्वासशाल्यपि विभीषणः सहसा रामं शरणं नोपजगाम । किंतु दूरत एवस्थितः प्रातिकूल्यप्रवृत्तानेव सुग्रीवादीन्पुरुषकारभूतान्कृत्वोवाचेत्याह—उवाचचेति ॥ उवाच च चकारेण स्वीकारे स्वागमनमेव पर्याप्तं वचनमप्युक्तवान् । पद्भ्यामभिगमाच्चेत्यागमनमपि भारायेति मन्यमानस्य तदुपरि वाक्यं क्षते क्षारवत् । महाप्राज्ञ इत्यनेनान्तरङ्गपुरुषकारेणैव कृपालुरपि राजा शरणमुपगन्तव्य इतिपरिज्ञानं वानराणां मत्प्रतिकूलसंरम्भोपि नमद्द्वेषकृतः किंतु रामभक्तिप्रकर्षकारितः । अतोगुणएवायमिति जानन्यदि रामपरिचारका एते नाङ्गीकुर्युः किं रामाङ्गीकारेण। अतो रामाङ्गीकारादप्येतदन्तर्भाव एव ममपुरुषार्थ इति ज्ञानं च विवक्षितं । स्वरेण महतेति । पुरुषकारभूतानां सर्वेषां सर्वलोकशरण्यस्य च स्वार्तरवश्रवणाय महास्वरप्रयोगः । रामविषये चैवंविधार्तरवोच्चारणं भाग्याधिकस्यैवेति विव-

अल्पकालेन रावणः उत्तरकूलेऽनावृतेस्थितंरामंशीघ्रंहत्वा आगन्तव्यमितिप्रेषितवान् मन्त्रेणविलंबेकृतेअयमतिशेतइतिझटितिनिश्चितवान् । तुशब्दोनिश्चयानन्तरंपूर्वावस्थापेक्षयावैलक्षण्यंद्योतयति । तानुवाच प्रेमपरवशानुवाचह । स्वामिपरिकरसमवायप्रकारआश्चर्यकरइतिऋषिरभिनन्दतिहेति। हनुमत्प्रमुखान् गौरवकालेजांबवत्प्रमुखानितिवक्तव्यं । मन्त्रविचारकालेतु बुद्धिमत्त्वप्राधान्याद्धनुमत्प्रमुखानित्युक्तिः । सर्वान् रामविषयप्रेमातिशयःसर्वेषामविशेषइतिसर्वानित्युक्तिः । इदंवचनं । अर्थमन्तरेणापिवचनसंनिवेशस्यश्रुतिप्रियत्वमभिनन्दतिऋषिः । उत्तमं सर्वोत्तमं ॥ ६ ॥ **तनि०** सुग्रीवस्य साहसकृत्यनिर्वाहकस्य । वचःश्रुत्वा अनुमतिंलब्ध्वा । सालानुद्यम्यशैलांश्च शैलवृक्षतारतम्यानादरेणसहसाहस्तसुलभान्स्वीकृत्य । आदरातिशयेनप्रत्येकमुभयपरिकरत्वमुक्तं । रामकैंकर्यानुकूलवृत्तेर्लक्ष्मणस्ययुगपच्छत्रचामरग्रहणवत् राक्षसहननंहिरामकैङ्कर्यं । इदंवचनं स्वशेषत्वसिद्धयेसुग्रीवानुमतिमप्यनवेक्ष्यतेषांवधनिश्चयोपपादकंवचनमब्रुवन् । गुणप्रधानभावमौचित्यंवाऽनपेक्ष्यसर्वेऽब्रुवन् । अस्वतन्त्राणामनुमतिविलंबे स्वतंत्रप्रहारेचपारतन्त्र्यहानिःस्यात् । सायथानभवतितथाशीघ्रमाज्ञापय । नः वधोद्युक्तानस्मान् । वधोद्युक्तायूयं किंममानुमत्येत्यत्राह—राजन्निति । राजाज्ञाखल्वनुवर्तनीयेतिभावः । वधायगृहीलाबद्धाश्चेदत्रस्थित्वाकथंभिदनर्थंकुर्युः । अतोवधायैवानुमतिर्देया । एषांदुरात्मनामाकारेणैवदौरात्म्यंदृश्यतेखलु । निपतन्तुहताः सर्वेहताःपतन्तु यथापुनराकाशंनोत्पतन्ति तथाभूमावेवनिपातयिष्यामइतिभावः । युद्धेजयाजयौपाक्षिकावित्यतआह—अल्पतेजसः । अल्पबलाः । अस्मद्बलस्यगजकबलप्रायाइतिभावः

[ पा० ] १ ख. ग. ध. निपतन्तिहतायावत्. २ झ. ट. मल्पचेतनाः. ३ क. ख. घ. च.—ट. खस्थएवविभीषणः.

रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ॥ तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ १२ ॥
तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् ॥ रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ॥१३॥
तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ॥ साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १४ ॥
स च न प्रतिजग्राह रावणः कालचोदितः ॥ उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १५ ॥
सोऽहं परुषितस्तेन दासवच्चावमानितः ॥ त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १६ ॥
सर्वलोकशरण्याय राघवाय महात्मने ॥ निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥ १७ ॥

क्षया महानित्युक्तिः । यथोक्तं लक्ष्मीतन्त्रे—"आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः । मामेव शरणं प्राप्य मामेवान्ते समश्नुते" इति ॥ ११ ॥ अत्र प्रथमं स्वदोषान्पुरस्करोति—रावण इति ॥ "रावणंलोकरावणं" इति न्यायेन रावयतीति व्युत्पत्तिसंभवान्नामैव क्रूरमित्यर्थः । न केवलं नामैव क्रूरं व्यापारोपि नृशंस इत्याह—दुर्वृत्त इति । जातिरपि तथाविधेत्याह—राक्षसइति । केवलं स्वयमेवक्रूरः क्रूरानेकपरिकरसमवेतश्चेत्याह—राक्षसेश्वर इति । रावणस्यैवंविधत्वे तव किमायातमित्यत्राह—तस्याहमिति । यद्यहमग्रजः स्यां तर्हितदाज्ञानुवर्तित्वेन धनदवत्तद्दोषैर्न लिप्येयं । अनुजत्वेन तन्मनीषिताः सर्वे दोषास्तदाज्ञया मया कृता इतिभावः ॥ १२ ॥ राघवस्य तु प्रियापहारनिरोधादिभिः समाश्रितहननाच्च विशेषतस्तेनापकृतमित्याह—तेनेति ॥१३॥ अस्त्वेवं ततः किमित्यत्राह—तमिति ॥ हेतुभिर्वाक्यैः हेतुप्रतिपादकैर्वाक्यैः । न्यदर्शयं अबोधयं । बोधितमेवार्थमाह—साध्विति । निर्यात्यतां प्रत्यर्प्यतां ॥ १४ ॥ विपरीतः मुमूर्षुः ॥ १५ ॥ एवमीश्वरस्य निर्हेतुककरुणाकृतेन रावणावमानेन प्रयोजनान्तरवैमुख्यं जातं । ततश्च परमपुरुषार्थभूतरामप्राप्त्यर्थं राममेव शरणमुपगतोस्मीत्याह—सोहमिति ॥ अत्र पुत्रान्दारानिति, "परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति वक्ष्यमाणानां लङ्काराज्यादीनामुपलक्षणं । अत्र फलान्तरानिर्देशाद्राक्षसानां वधे साह्यमित्यादिवचनस्य स्वेनैव वक्ष्यमाणत्वाच्च रामपरिचरणस्यैव फलत्वपक्षो युक्तः ॥ १६ ॥ एवं शरण्यस्य विज्ञाप्यमर्थमुक्त्वा तद्विज्ञापनाय पुरुषकारभूतान्प्रार्थयते—सर्वलोकशर-

॥ ८—९ ॥ **ती०** राक्षसेश्वरइत्यनेन भृत्यसंबन्धप्रयुक्तदोषवत्त्वमुच्यते । तस्याहमनुजोभ्रातेत्यनेन स्वस्यरावणसंबन्धनिबन्धनदोषवत्त्वमुक्तंभवति । अनेन " उपायेनैवसिध्यन्तिह्यपायाविविधास्तथा " इतिगर्वहानिस्तदैन्यंकार्पण्यमुच्यतइत्युक्तगर्वहानिलक्षणंकार्पण्यरूपमङ्गंप्रदर्शितं ॥ १२ ॥ **तनि०** पूर्वोक्तदोषाःप्रायश्चित्तनिवर्त्याः । नक्षमामीत्युक्तभागवतापचारोप्यस्तीत्याह—तेनेति । तेन उक्तसकलदोषवता । हृता " अनन्याराघवेणाहं " " जलान्मत्स्याविवोद्धृतौ " इत्याद्युक्तरीत्यारामविश्लेषानर्हा । हृता सीतागर्भवासादिक्लेशाभावेनपरमपदादजहत्स्वभावतयाऽत्यन्तसौकुमार्या । जनस्थानात् पुष्पापचयादिभोगानामेकान्तस्थानतया अयोध्यातउत्कृष्टत्वेनसंमतात् । जटायुषंहत्वा । " ममप्राणाहि " इत्युक्तरीत्याऽत्यन्ताभिमतंजटायुषमवधीत् । यदिसीतयासह जटायुषमपिकारागारेनिवेशितवान् तदामोचनंस्यात् । तथानकृतं । स्वस्यसपरिवारस्यविनाशार्थमेवंकृतवान् । रुद्धाच प्रमादाद्धरणेपिपश्चात्तापेनपुनर्नत्यक्ता । किंतूच्छ्वासनिश्श्वासासंचारस्थलेरुद्धा । विवशा न्यस्तपाणिपादाचलनेनरामविश्लेषदुःखेन आश्वासकान्तराभावेनचस्वबलहानिंप्रकाशयन्तीस्थिता । रामभोगपरंपरयाहृष्टामेतादृशावस्थांकृतवान् । राक्षसीभिःसुरक्षिता विकृतभयङ्करवेषवचोभिःएकाक्ष्येककर्णीप्रभृतिभिः आश्वासकनवव्याकरणपण्डितस्यापियथानप्रवेशस्तथारक्षिता ॥ १३ ॥ **तनि०** सीताहरणसमकालमेवागमनंममोचितं । तथाऽकृत्वातस्यहितंवक्तुंविलंबितोऽहमेवपापीयानित्याह—अहमिति । तं उक्तद्रोहयुक्तं । अहं पापिष्ठंज्ञात्वापि हितवक्ता । विविधैः सामादिभिर्वाक्यैःपूर्णार्थैः । हेतुभिः खरवधादिभिर्लिङ्गैः । अबोधयं सुप्तमिवप्राबोधयं । बोधितमर्थमाह—साधुनिर्यात्यतांसीतेति । निर्यातनं प्रतिदानं । साधु अनुतापाकिञ्चन्यादिप्रदर्शनेन । सीतारामाय तदीयएववस्तुनितसैदत्तेपिस्वकीयंदत्तमितिमन्वानाय । पुनःपुनः तस्येच्छाभावेपिमद्वचःकुर्याद्वेतिप्रत्याशयाप्रलपितं ॥ **ती०** निर्यात्यतां प्रत्यर्प्यतां । अनेन " चराचराणिभूतानिसर्वाणिभगवद्वपुः । ततस्तदानुकूल्यंमेकर्तव्यमितिनिश्चयः " इत्युक्तमानुकूल्यसंकल्परूपमङ्गंप्रदर्शितं ॥ १४ ॥ **ती०** दासवच्चावमानितः अनेनईश्वरस्यनिर्हेतुककरुणापरिपाकभूतेनैवरावणावमानेनप्रयोजनान्तरवैमुख्यंजातं । ततश्च परमपुरुषार्थरूपरामप्राप्त्यर्थेराममेवशरणमुपगतोस्मीत्याह—त्यक्त्वेति । त्यक्त्वापुत्रांश्चदारांश्चेत्यनेन प्रातिकूल्यवर्जनरूपमङ्गंप्रदर्शितं । राघवंशरणंगतइत्यनेनात्मनिक्षेपरूपमङ्गंप्रदर्शितं ॥ १६ ॥ **ती०** सर्वलोकशरण्याय अधिकारिभेदमन्तरेणसुरनरवानरतिर्य-

[ पा० ] १ ख. वाक्यैर्बहुभिर्वा.

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः ॥ लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १८ ॥
रावणस्यानुजो भ्राता विभीषण इति श्रुतः ॥ चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ १९ ॥
मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि ॥ वानराणां च भद्रं ते परेषां च परंतप ॥ २० ॥
अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः ॥ शूराश्च निकृतिज्ञाश्च तेषु जातु न विश्वसेत् ॥ २१ ॥
प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम् ॥ अनुप्रविश्य सोस्मासु भेदं कुर्यान्न संशयः ॥ २२ ॥

ण्यायेति ॥ शरणे रक्षणे साधुः शरण्यः । "तत्र साधुः" इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इतिनिरुक्तिः । अनालोचितकुलविद्यावृत्तादिविशेषाशेषलोकशरण्यायेत्यर्थः । अतः संचितविविधापराधस्य रावणस्यापि युष्माकमिवात्रांशोस्ति किमुत तत्संबन्धिनः । परंतु रुच्यभावादेव स स्वांशं न लब्धवान् । मम त्वाभिमुख्येनागतस्य दुरपनोदोंशलाभ इतिभावः । अत्र शरण्याङ्गभूतं सुलभत्वपरत्वरूपं गुणद्वयं प्राधान्येन दर्शयति—राघवाय महात्मन इति । सुलभत्वेप्यनिष्टानां लोष्टानां उत्कर्षेप्यसुलभानां मेरुप्रभृतीनां चानुपादेयत्वादुभयमप्यपेक्षितं । "यत्तदनिर्देश्यं" इत्यादिवेदान्तगोचरस्य परब्रह्मणःसकलमनुजतिर्यङ्नयनसाक्षात्कारक्षममनुजावतारात् केयमन्या सौलभ्यकाष्ठेतिभावः । महात्मने । एवमवतारेप्यजहत्स्वभावतया निखिलहेयप्रत्यनीकत्वे सति ज्ञानशक्त्याद्यनन्तकल्याणगुणैकतानाय निवेदयत । अत्र प्रत्यक्षस्य स्वागमनस्य निवेदने प्रयोजनाभावात् स्वापराधपरिपूर्तिः इहामुत्रफलभोगविरागः शरणागतिलक्षणनिरपायोपायपरिग्रहः रामकैङ्कर्याभिलाषः तत्परिचारकान्तर्भावश्चेत्येतेऽर्था विज्ञापनीया इत्यर्थः । क्षिप्रमित्यनेन यावच्छरण्यः स्वयमेव परिग्रहिष्यति ततः पूर्वमेव विज्ञापनेन युष्माभिः सुहृत्कार्यमाचरणीयमितिभावः ।

विभीषणं । रावणवन्नाहं प्रतिकूलः किंतु विभीषणस्तु धर्मात्मेत्यनुकूल एव । उपस्थितं अतिहीनस्याप्युपगमनमेव हि रामाङ्गीकारे बीजमितिभावः ॥ १७ ॥ अथ सुग्रीवो रामप्रेमातिशयजनिताद्व्यामोहात् । "अतिस्नेहः पापशङ्की" इति न्यायेन तस्य सर्वशक्तित्वमपि विस्मृत्य शरणागतवत्सलो रामः शरणागतिशब्दश्रवणमात्रेण गूढहृदयमेनं परिगृह्णीयात् । ततः क्रूरहृदयोयं रामे किमिव पापमाचरेदित्यस्थानभयशङ्काव्याकुलितः शीघ्रं रामसमीपं गत्वा स्वसमानहृदयं लक्ष्मणमपि सहायीकृत्य विभीषणो निग्राह्य इति विज्ञापयामासेत्याह—एतदिति ॥ तुशब्देन पूर्वोक्तविशेष उच्यते । लघुविक्रमः शीघ्रगमनः । संरब्धं प्रेमभरात्त्वरितोदिताक्षरं ॥ १८–१९ ॥ मन्त्रः कार्याकार्यविचारः । व्यूहः सेनास्कन्दनिवेशः । नयः विचार्य निश्चितानामुपायानां स्वस्वविषयेप्रयोगः । चारः गूढप्रेषणं । वानराणां परेषां राक्षसानां च मन्त्रादिषु विषये युक्तः अवहितः । भवितुमर्हसि । वानराणां मन्त्रादीन्प्रयोजय । शत्रूणां मन्त्रादींस्तु सम्यग्जानीहि । एवं सति तव भद्रं भविष्यतीत्यर्थः ॥ २० ॥ अस्त्वेवं ततः किमित्याशङ्क्य प्रकृतं विज्ञापयति—अन्तर्धानेति ॥ अन्तर्धानगताः अदृश्यचारिणः । निकृतिज्ञाः कपटोपायवेदिनः ॥ २१ ॥ विश्वासे वा

कस्थावरान्तानांसर्वेषांसमाश्रयणीयाय । राघवाय " अन्येपिसन्त्येवनृपाःपृथिव्यांमांधातुरेतेतनयाःप्रसूताः । किंत्वर्थिनामर्थितदानदीक्षाकृतव्रतश्लाघ्यमिदंकुलंतत् " इत्यादिवचनैःप्रसिद्धवैभवेरघुवंशेऽवतीर्णाय । अनेनार्थिनांप्रार्थनावैफल्यंनास्तीतिद्योतितं । महात्मने परमात्मने । मां राममेवसर्वविधबन्धुत्वेनाश्रितं । क्षिप्रं । क्षिप्रमित्यनेन शीतलसुरभिसलिलंपद्माकरंदृष्टवतस्तृषितस्येव विलंबासहत्वंद्योत्यते । निवेदयत विज्ञापयत । " वाचाधर्ममवाप्नुहि " इतिन्यायेनाक्लेशेनभवतांमहानुपकारःसेत्स्यतीतिभावः । सर्वलोकशरण्यायेत्यनेनश्लोकेन " अप्रार्थितोनगोपायेदितितत्प्रार्थनामतिः । गोपायिताभवत्येवंगोप्तृत्ववरणंस्मृतं " इत्युक्तंगोप्तृत्ववरणरूपमङ्गंप्रदर्शितं । उपस्थितं समीपंप्राप्यस्थितं । अनेन " रक्षिष्यत्यनुकूलान्नइत्येवंसुदृढामतिः । सविश्वासोभवेच्छात्रसर्वदुष्कृतिनाशनः " इत्युक्तंविश्वासरूपमङ्गंप्रदर्शितं । ननुइक्ष्वाकुवंशस्यराज्ञोरामभद्रस्यसर्वलोकशरण्यत्वंपरत्वंचविभीषणेनकथमुक्तमितिचेदुच्यते । " परमापद्गतस्यापिधर्मेममतिर्भवेत् । ययामेजायतेबुद्धिर्येषुयेष्वाश्रमेषुच । सासाभवतुधर्मिष्ठातंतंधर्मंचपालयेत् " इतिप्रार्थितेनब्रह्मणा " धर्मिष्ठत्वंतथावत्सतथाचैतद्भविष्यति " इतिदत्तवरत्वेनरामंसकलजगद्रक्षणार्थमिक्ष्वाकुवंशेऽवतीर्णंपरमधर्मि-

**[ पा० ]** १ क. संरब्धतरं. संरब्धमिदमब्रवीदित्यनन्तरं. प्रविष्टःशत्रुसैन्यंहीतिश्लोकः ग. ङ. च. ज. झ. ट. पाठेषुदृश्यते. अयंश्लोकःअस्मिन्नेवसर्गेराक्षसोजिह्मयाबुद्ध्येतिश्लोकानन्तरंविद्यतइतिनात्रमुद्रितः. २ अयंश्लोकः ग. ङ. च. ज. झ. ट. पाठेषु. प्रकृत्याराक्षसेन्द्रस्येतिश्लोकानन्तरंदृश्यते. ३ ङ. झ. तेषां.

अथवा स्वयमेवैष च्छिद्रमासाद्य बुद्धिमान् ॥ अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि ॥ २३ ॥
मित्राटवीबलं चैव मौलं भृत्यबलं तथा ॥ सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २४ ॥
प्रकृत्या राक्षसेन्द्रस्य भ्राताऽमित्रस्य ते प्रभो ॥ आगतश्च रिपोः पक्षात्कथमस्मिन्हि विश्वसेत् ॥२५॥
रावणेन प्रणिहितं तमवेहि विभीषणम् ॥ तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २६ ॥
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमुपागतः ॥ प्रहर्तुं मायया च्छन्नो विश्वस्ते त्वयि राघव ॥२७॥
प्रविष्टः शत्रुसैन्यं हि प्राज्ञः शत्रुरतर्कितः ॥ निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥ २८ ॥
वध्यतामेष दण्डेन तीव्रेण सचिवैः सह ॥ रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २९ ॥
एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः ॥ वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ ३० ॥
सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महायशाः ॥ समीपस्थानुवाचेदं हनुमत्प्रमुखान्हरीन् ॥ ३१ ॥

किमयंकरिष्यतीत्याशङ्क्य भेदं दण्डं वा करिष्यतीत्याह—प्रणिधिरिति ॥ प्रणिधिः चारः । " यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः " इत्यमरः । भेदं मित्रभेदं ॥ २२ ॥ अपिः संभावनायां ॥ २३ ॥ शत्रुसकाशादागतस्यास्य परिग्रहे शत्रोर्बलक्षयः अस्माकं बलवृद्धिश्च स्यादित्याशङ्क्य द्विषद्बलव्यतिरिक्तमेव बलं ग्राह्यमित्याह—मित्रेति ॥ मित्रबलं मित्रसंबन्धिबलं । अटवीबलं आटविकजनरूपं बलं । मौलं परंपरागतं सैन्यं । भृत्यबलं तादात्विकभृतिप्रदानोपजीवि बलं ॥ २४ ॥ न केवलं द्विषद्बलत्वमात्रं अन्येप्यपरिग्राह्यताहेतवः सन्तीत्याह—प्रकृत्येति ॥ प्रकृत्या जात्येत्यर्थः ॥ २५ ॥ नन्वयं शरणागतः कथं परित्याज्य इत्याशङ्क्य शरणागतिलक्षणमायोपायेन विश्वासमुत्पाद्य त्वयि प्रहर्तुं प्रवृत्तत्वान्नास्यापरिग्राह्यत्वमात्रं किंतु सहायैः सह वध्यत्वमित्याह—रावणेनेत्यादिश्लोकद्वयमेकं वाक्यं । प्रणिहितं प्रणिधिकर्मणा नियुक्तं । अस्य शरणागतिर्विप्रलम्भकृतेति भावः । क्षमवतां युक्तव्यापारवतां । क्षमं हितं । " क्षमं शक्ते हिते त्रिषु " इत्यमरः ॥ २६ ॥ प्रणिधिरप्येष नः किं करिष्यतीत्यत्राह—राक्षस इति ॥ संदिष्टः रावणेनेति शेषः । प्रहर्तुं संदिष्ट इति संबन्धः ॥ २७ ॥ यदा शाठ्यं दृश्यते तदाऽसौ हन्यतां तत्राह—प्रविष्ट इति ॥ प्राज्ञ इति हेतुगर्भं विशेषणं । प्राज्ञत्वादतर्कितः अस्मज्जिघांसयाऽयमागत इति तैरविचारितः । अतएव तेषां सैन्यं प्रविष्टः सन् । कदाचित् अन्तरं छिद्रं लब्ध्वा हन्यादित्यर्थः । प्रविष्टोप्येकाकी कथं बहून्हनिष्यतीत्याशङ्क्य छिद्रसहितस्य युज्यत इति दृष्टान्तमुखेन प्रकटयति—उलूक इति ॥ २८ ॥ तर्हि किं कर्तव्यं तत्राह—वध्यतामिति ॥ वध्यतां केवलनिरसने कृते मारीचवदनर्थकारी स्यादिति भावः । तीव्रेण दण्डेन । वालिवदेकेन बाणेन न हन्तव्यः । किंतु शिरसि वर्तिं कृत्वा दीपारोपण कार्यं । सचिवैः सह प्रथमं तेषां शिरांसि छित्त्वा विभीषणहस्ते दत्त्वा ततोयं वध्यतां । तत्र हेतुमाह—रावणस्येत्यादि ॥ २९ ॥ एवं सुग्रीवो विभीषणविषयवक्तव्यमुक्त्वा अतः परमनेन यत्किंचिदुक्तं चेदुत्तरं वक्ष्याम इति तूष्णींस्थित इत्याह—एवमुक्त्वेति ॥ ३० ॥ अथ शरणागतवत्सलो रामः सुग्रीवस्य संरम्भप्रतिक्षेपाय यत्किंचिद्व्याजमपेक्षमाणो विभीषणस्य विश्वासातिरेकेण किंचिद्विलम्बेपि भावं निवेदयतेति वदतस्तस्य तदन्तर्भावापेक्षां च सम्यगालोच्य प्रतिक्षेपकमुखेनैव तदानयनं कर्तुकामो हनुमदादीनुवाचेत्याह—सुग्रीव-

रूपंपरमपुरुषंनारायणंज्ञात्वातथोक्तवानितिसर्वंसमञ्जसम् ॥ १७ ॥ **ति०** मित्रेणाटविकेन आरण्यकेन प्रेषितंबलंमित्राटविबलं । मौलं आप्तबन्धुप्रहितंबलं । " मूलंवशीकृतौस्त्रीये " इतिकोशः ॥ २४ ॥ **स०** तस्यबलिष्ठस्यकथंनिग्रहइत्यतआह—**क्षमवतांवरेति** । क्षमाःशक्ताएषांसन्तीति क्षमवन्तः तेषुवर । एतेन त्वत्सेनानायकैरस्माभिरपितन्निग्रहःसुसाध्यः किमुत्वयेतिसूचयति । " क्षमंयुक्तेक्षमान्विते । वाच्यवच्छक्तहितयोःक्षमाभूमितितिक्षयोः " इतिविश्वः । एतेन तितिक्षार्थक्षमशब्दमङ्गीकृत्य ह्रस्वलः स्यार्षत्ववर्णनंपरास्तं । सतिगत्यन्तरेतस्यायुक्तत्वात्क्षमाकथनस्यकथाऽसंगतत्वाच्च ॥ २६ ॥ **शि०** संरब्धः ईषत्कोपविशिष्ट-

**[ पा० ]** १ च. छ. ञ. वीर्यवान्. २ क. ख. ग. च. छ. मित्रादपिबलं. झ. मित्राटविबलं. ३ ङ. झ. ञ. मौलभृत्यबलं. ४ क. घ.—ट. राक्षसोह्येष. ५ क. पार्श्वात्कथं. ङ. च. झ. साक्षात्कथं. ६ ङ. च. झ. ञ. ट. मिहागतः. क.—घ. मुपस्थितः. ७ क. ख. ग. ङ.—ट. त्वयिचानघ. घ. त्वयिमानद. ८ क.—घ. च. ज. ञ. प्राप्तः.

यदुक्तं कपिराजेन रावणावरजं प्रति ॥ वाक्यं हेतुमदर्थ्यं च भवद्भिरपि तच्छ्रुतम् ॥ ३२ ॥
सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता ॥ समर्थेनापि संदेष्टुं शाश्वतीं भूतिमिच्छता ॥ ३३ ॥
इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः ॥ सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ३४ ॥
अज्ञातं नास्ति ते किंचित्त्रिषु लोकेषु राघव ॥ आत्मानं सूचयञ्जानन्पृच्छस्यस्मान्सुहृत्तया ॥ ३५ ॥
त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः ॥ परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च ॥३६॥
तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव ॥ हेतुतो मतिसंपन्नाः समर्थाश्च पुनः पुनः ॥ ३७ ॥
इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः ॥ विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३८ ॥
शत्रोः सकाशात्संप्राप्तः सर्वथा शङ्क्य एव हि ॥ विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः ॥३९॥
छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः ॥ प्रहरन्ति च रन्ध्रेषु सोनर्थः सुमहान्भवेत् ॥ ४० ॥
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह ॥ गुणतः संग्रहं कुर्याद्दोषतस्तु विवर्जयेत् ॥ ४१ ॥

स्येति ॥ ३१ ॥ रामः सुग्रीववचनोपलालनपूर्वकमन्यानपि सचिवान् स्वं स्वं मतं पृच्छति—यदुक्तमित्यादिश्लोकद्वयेन ॥ हेतुमत् युक्तियुक्तं । अर्थ्यं अर्थः प्रयोजनं तस्मादनपेतं ॥ ३२ ॥ न ह्येकेन सुहृदोपदिष्टे सत्यन्यैस्तूष्णीं स्थातव्यं । अपि तु बुद्धिमता समर्थेन । शाश्वतीं भूतिमिच्छता श्रेयस्कामेन । सुहृदा सुहृदन्तरेणापि । अर्थकृच्छ्रेषु कार्यसङ्कटेषु । उपदेष्टुं युक्तमेव । अतो यूयमपि वदतेत्यर्थः ॥ ३३—३४ ॥ सोपचारप्रशंसावाक्यमेवाह—अज्ञातमिति ॥ अत्र सर्वज्ञ इत्युक्ते प्रायिकत्वशङ्का स्यादिति तन्निवृत्त्यर्थं व्यतिरेकोक्तिः । त्रिषु लोकेषु कृतकमकृतकं कृतकाकृतकमित्युक्तेषु । आत्मानं सुहृत्तया सूचयन्नस्मान् पृच्छसीत्यन्वयः । अयं वानराणां सुहृदितीमां कीर्तिं लोके ख्यापयितुं तवायं प्रश्न इत्यर्थः । पूजयन्निति पाठे तु अस्मान् प्रत्येकं मानयन्नस्मान् पृच्छसीत्यर्थः । प्रत्येकं माननाभिप्रायेणैवात्मानमित्येकवचनप्रयोगः । यद्वा आत्मानं आत्मस्वभावं । जानन् राजनीतिमिति यावत् । पूजयन् पालयन् । यद्वा । सुहृत्तया शोभनहृदयतया हेतुना । आत्मानं स्वं । पूजयन् । कार्यविचारेषु अस्मदपेक्षया स्वयमेव शोभनहृदय इति स्वप्रभावमभिव्यञ्जयितुमितिभावः । अस्मन्मतानि पूर्वपक्षीकृत्य स्वमतमेवसिद्धान्तयितुमितिभावः ॥ ३५ ॥ स्वपूजनार्थमस्मान्पृच्छसीत्यत्र हेतुमाह—त्वमिति ॥ सत्यव्रतः शरणागतरक्षणव्रतस्य सापराधरावणादिष्वपि विफलीकर्तुमशक्यत्वात् । परीक्ष्यकारी सर्वज्ञः सन्नपि सम्यग्घेतुभिर्विमृश्याचरणशीलः । सुहृत्सु निसृष्टात्मा सुहृत्परतन्त्रीकृतात्मस्वरूपः । पूर्वश्लोके सुहृत्त्वमात्रमुक्तं । अत्र तु सुहृत्परतन्त्रत्वमितिभेदः ॥ ३६ ॥ तस्मात् भवत उक्तगुणत्वात् । तावत् क्रमेण । हेतुतः युक्तिभिः । ब्रुवन्तु ॥ ३७ ॥ सुग्रीवानन्तरमङ्गदस्य युवराजतयाप्रधानत्वात् प्रथममङ्गदोजगादेत्याह—इत्युक्तइति ॥ विभीषणपरीक्षार्थं तदुपायप्रतिपादकमितिशेषः ॥ ३८ ॥ असौ शरणागतोपि शत्रोः सकाशात्प्राप्तत्वादनुकूलो नेति शङ्क्य एव । अतः सहसा परीक्षामन्तरेण विश्वासयोग्यो न कर्तव्यः किंतु परीक्ष्य प्रवेष्टव्य इति सुग्रीववचनाद्विशेषः ॥ ३९ ॥ विश्वासकरणे अनिष्टमाह—छादयित्वेति॥ शठबुद्धयः कुटिलबुद्धयः । आत्मभावं स्वाभिप्रायं । छादयित्वा स्वाभिप्रायसूचकेङ्गितादिकमपि स्थगयित्वेत्यर्थः । चरन्ति यावद्रन्ध्रलाभं स्वैरसंचारं कुर्वन्ति । रन्ध्रेषु अनवधानेषु सत्सु । प्रहरन्ति हिंसन्ति ॥ ४० ॥ त्यागोपादानोपयुक्तं परीक्षाप्रकारमाह—अर्थानर्थाविति ॥ अर्थानर्थौ गुणदोषौ । विनिश्चित्य कस्मिंश्चित्कर्मणि नियोगेन निश्चित्य । व्यवसायं त्यागसंग्रहोचिताध्यवसायं । भजेत । तत्र गुणतः गुणनिश्चयेन । संग्रहं अङ्गीकारं कुर्यात् ।

॥ ३० ॥ ति० तर्क्यएव शङ्क्यएव । विश्वासनीयः विश्वासप्रयुक्तव्यवहारार्हः । सहसानकर्तव्यः । अपितु शनैरित्यर्थः ॥ ३९ ॥

[ पा० ] १ ङ. झ. सुहृदामर्थ. क. सुहृदाह्यति. च. छ. ज. सुहृदांह्यर्थ. २ ङ. झ. ट. समर्थेनोप. ३ च. ञ. सोपचारमिदंवाक्यं. ४ ङ. झ. ञ. ट. मूचुःप्रिय. ५ क.—ट. पूजयन्राम. ६ ख. घ. ङ. च. झ. ञ. ट. पुनस्तथा. ७ क. महत्. ८ क. ख. घ.—ट. तर्क्यएव. ग. त्याज्यएव. ९ च. झ. ञ. ट. विश्वासनीयः. १० क. सोनर्थस्तत्कृतोभवेत. ११ क. घ. च. ञ. ट. भजेदिह. १२ क. ख. घ.—ट. विसर्जयेत्.

यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् ॥ गुणान्वाऽपि बहून्ज्ञात्वा संग्रहः क्रियतां नृप ॥४२॥
शरभस्त्वथ निश्चित्य सार्थ्यं वचनमब्रवीत् ॥ क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥ ४३ ॥
प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना ॥ परीक्ष्य च ततः कार्यो यथान्याय्यं परिग्रहः ॥ ४४ ॥
जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ॥ वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४५ ॥
बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ॥ अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४६ ॥
ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः ॥ वाक्यं वचनसंपन्नो बभाषे हेतुमत्तरम् ॥ ४७ ॥
वचनं नाम तस्यैष रावणस्य विभीषणः ॥ पृच्छ्यतां मधुरेणायं शनैर्नरवरेश्वर ॥ ४८ ॥
भावमस्य तु विज्ञाय ततस्तत्त्वं करिष्यसि ॥ यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥ ४९ ॥
अथ संस्कारसंपन्नो हनूमान्सचिवोत्तमः ॥ उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥ ५० ॥
न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् ॥ अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥ ५१ ॥
न वादान्नापि सङ्घर्षान्नाधिक्यान्न च कामतः ॥ वक्ष्यामि वचनं राजन्यथार्थं रामगौरवात् ॥ ५२ ॥

दोषतः दोषनिश्चयेन तु विसर्जयेत् ॥ ४१ ॥ ननु सर्वात्मना गुणी दोषी वा दुर्लभः अतः कथं संग्रहत्यागव्यवस्थितिरित्यत्राह—यदीति ॥ तस्मिन् विभीषणे । महान्दोषो यदि स्यात् तदा असौ अविशङ्कितं अविशङ्कं त्यज्यतां । बहून्गुणान् ज्ञात्वा संग्रहः क्रियतां वा । स्वल्पदोषवत्त्वेपि बहुगुणो ग्राह्यः । स्वल्पगुणवत्त्वेपि बहुदोषस्त्याज्य इति भावः ॥ ४२ ॥ विनियोगं विना गुणदोषपरिज्ञानं न संभवति सहसा विनियोगे च मन्त्रहानिः स्यादिति पूर्वास्वरसाच्छरभ आह—शरभस्त्विति ॥ तुशब्दः पूर्वस्माद्वैलक्षण्यपरः । साध्यं साध्यार्थकं । अनेनाङ्गदपक्षस्यासाध्यार्थत्वं द्योतितं । अस्मिन् विभीषणविषये । प्रतिविधीयतां प्रेष्यतां ॥ ४३ ॥ प्रणिधाय चारंप्रेषयित्वा । सूक्ष्मबुद्धिनाचारेण यथावन्नीतिशास्त्रोक्तरीत्या परीक्ष्य ततो यथान्याय्यं न्यायादनपेतं न्याय्यं । निर्णीतार्थमनतिक्रम्य । परिग्रहः विभीषणपरिग्रहः । कार्यः ॥४४॥ नियोगेन चारेण वा नायं परीक्ष्यः अविस्रम्भहेतूनां बहूनां संभवादिति जाम्बवान्पक्षान्तरमुपक्षिपति—जाम्बवानिति ॥ गुणवत् युक्तिमत् । दोषवर्जितं अनपायमितिपूर्वोक्तमतद्वयव्यावृत्तिः ॥ ४५ ॥ बद्धवैरात् दृढवैरात् । पापात् पापकर्मणः । अदेशे दूरतयासांप्रतिकभयाभावेन आगमनप्रयोजनरहिते । अकाले स्वामिपरित्यागानर्हकाले ॥ ४६ ॥ सर्वथा शङ्क्यत्वेपि सुकरोपायेन गुणदोषपरीक्षया अकरणे सुखोपनतमित्रहानिः स्यादिति मैन्दो मतान्तरमाह—तत इति ॥ हेतुमत्तरं अतिशयेन हेतुयुक्तं ॥ ४७ ॥ मधुरेण वचसा रावणस्य वचनमयं विभीषणः शनैः पृच्छ्यतामिति संबन्धः । पृच्छ्यतामित्यत्र अज्ञातपुरुषमुखेनेति शेषः । उत्तरत्र तथैव हनुमताऽनुवादात् ॥ ४८ ॥ भावमिति । एवंविधपरीक्षणेनास्य तत्त्वतो भावं विज्ञाय यदि दुष्टः तदा तदनुरूपं अदुष्टश्चेत्तदनुरूपं च बुद्धिपूर्वं परीक्षापूर्वकं करिष्यसीत्यर्थः ॥४९॥ एवं सुग्रीवेणदानीं वध्यत्वं प्रतिपादितं । अङ्गदादिभिस्तु गुणदोषपरीक्षापूर्वकं परिग्रहपरित्यागौ सिद्धान्तितौ । अथ सचिवोत्तमो हनुमान् सुग्रीवमतं राजमतत्वादत्यन्ताविचारमूलत्वाच्चोपेक्ष्य अङ्गदादिमतमेकैकानुवादपूर्वकं दूषयित्वा इदानीमेव दोषाभावस्य निर्णेतुं शक्यत्वात् सहसैव परिग्राह्य इति सिद्धान्तयति सर्गशेषेण—अथेति ॥ संस्कारसंपन्नः शास्त्राभ्यासदृढतरसंस्कारयुक्तः । लघु अविस्तृतं ॥ ५० ॥ भवत उपदेशार्थं न मम प्रवृत्तिः भवतः सर्वप्रकारोत्कृष्टत्वात् केनाप्याकारेणातिशयितस्य कस्यचिदभावादित्याह—न भवन्तमिति ॥ ५१ ॥ वादात् तर्ककौशलात् । संघर्षात् सचिवेषु स्पर्धावशात् । आधिक्यात् अहं

ति० अदेशकाले स्वामिसंदेशंविहायरिपुदेशआगमनेनानुचितदेशप्राप्तत्वं । स्वामिनःसंकटकाले तत्प्रहाणानौचित्यादनुचितकालप्राप्तः । अतः शङ्क्यतां । सर्वथाशङ्काविषयत्वेनत्यागार्हएवायमितिभावः । ती० अदेशे शत्रुसमीपदेशे । अकाले रात्रौ । यद्वा अकाले स्वामिपरित्यागानर्हकाले ॥ ४६ ॥

[ पा० ] १ च. छ. ञ. सुगुणान्दुर्गुणान्. २ ग. वीरोवचनं. क. ख. ङ. झ. ट. सार्थवचनं. ३ ङ. झ. ट. अनुजोनामतस्यैष.

अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव ॥ तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥ ५३ ॥
ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते ॥ सहसा विनियोगो हि दोषवान्प्रतिभाति मा ॥५४॥
चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव ॥ अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ॥ ५५ ॥
अदेशकाले संप्राप्त इत्ययं यद्विभीषणः ॥ विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति ॥
स एष देशः कालश्च भवतीति यथातथा ॥ ५६ ॥
पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि ॥ दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ॥
युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ॥ ५७ ॥
अज्ञातरूपैः पुरुषैः स राजन्पृच्छ्यतामिति ॥ यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥ ५८ ॥
पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान्वचः ॥ तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥ ५९ ॥

मतिमान् वाग्मीचेत्याधिक्याभिमानात् । कामतः स्वैरभाषणेच्छातः । विभीषणपक्षपाताद्वा । तर्हि किमर्थं प्रवृत्तिस्तत्राह—गौरवादिति । मयि त्वत्कृतात्संमानात् ॥ ५२ ॥ पूर्वोक्तेषु चतुर्षु मतेषु प्रथममङ्गदमतं दूषयति—अर्थानर्थेति ॥ अर्थानर्थयोर्निमित्तं निर्णयोपायः । सचिवैः अङ्गदेन तादात्विकसंरम्भपरिहाराय नामानुक्तिर्बहुवचनं च । यदुक्तं तत्र दोषं प्रपश्यामि । कुतः क्रिया एवंप्रकारेण क्रिया । नोपपद्यतेहि ॥५३॥ अनुपपत्तिमेव दर्शयति—ऋत इति ॥ नियोगात् राजकार्येषु नियोगात् । ऋते विना । "अन्यारादितरर्ते—" इत्यादिना पञ्चमी । सामर्थ्यं साधुत्वं । सहसा विनियोगः गुणदोषपरीक्षामन्तरेण कुत्रचिन्महति राजकार्ये विनियोजनं । मा मां प्रति । दोषवान् भाति । तथाच सत्यां गुणदोषपरीक्षायां नियोगः । नियोगे सति गुणदोषपरीक्षणमित्यन्योन्याश्रयः । अतोनुपपन्नमङ्गदमतमितिभावः ॥ ५४ ॥ अथ शरभमतं प्रयोजनाभावेन खण्डयति—चारेति ॥ अत्रेतिशब्दोध्याहर्तव्यः । चारप्रणिहितं चारप्रणिधानं । युक्तमिति तव सचिवैर्यदुक्तं शरभेण यदुक्तमित्यर्थः । तत्र तस्मिन्मते । अर्थस्य चारप्रयोजनस्य । दूरतिरोहितदर्शनादेरसंभवात् चारप्रणिधानलक्षणं । कारणं उपायः । न युज्यत इत्यर्थः । अत्यासन्ने स्वचक्षुर्विषये सम्यक्परिदृश्यमाने व्यवधानरहिते नभस्स्थलावस्थायिनि चास्मिन् पररन्ध्रादितत्त्वदर्शनलक्षणचारप्रयोजनाभावादयमुपायो न युज्यत इतिभावः । चारणं नोपपद्यत इतिपाठेतु चारयितव्यस्यान्तःपुरसमाजतीर्थादिरूपस्य विषयस्याभावाच्चारसंचारणं न घटतइत्यर्थः ॥ ५५ ॥ अदेशकाले संप्राप्त इत्यस्य जाम्बवन्मतस्यासारत्वात्तन्निराकरणेन सर्वं निराकृतप्रायमिति तत्स्वरूपासिद्ध्या दूषयति—अदेशेति सार्धश्लोकएकान्वयः । अयं विभीषणः । अदेशकाले संप्राप्तइति यत् । तत्र तद्विषये । यथातथा याथातथ्येन । स एष देशः कालश्च भवतीति मे यथामति इयं विवक्षास्ति तां निबोधेत्यन्वयः ॥५६॥ विवक्षितमेव सोपपत्तिकं विशदयति—पुरुषादित्यादिसार्धश्लोकेन ॥ पुरुषात् अधमपुरुषाद्रावणात् । पुरुषं उत्तमपुरुषं भवन्तं । प्राप्य मनसा विमृश्य । तथा दोषगुणावपि युवयोर्विमृश्य । तथा । रावणे दौरात्म्यं राक्षसकुलविनाशहेतुभूतसीतापहरणतत्प्रत्यर्पणानपेक्षित्वादिकं । त्वयि विक्रमं खरदूषणप्रमुखराक्षसवधादिकं वालिवधपूर्वकसुग्रीवराज्यप्रदानं अतिदुस्तरसमुद्रतरणोद्योगं च । दृष्ट्वा । तस्य बुद्धितः बुद्धेः सदृशं तस्य आगमनं युक्तमिति संबन्धः । यदा प्रतिकूले दोषदर्शनमनुकूले गुणज्ञानं च स एव देशः कालश्चभवति । इदं तथ्यमिति भावः ॥ ५७ ॥ मैन्दमतं प्रतिक्षिपतिश्लोकत्रयेण—अज्ञातेति ॥ अज्ञातरूपैः अपरिचितस्वरूपस्वभावैः । समीक्षिता सम्यक्परीक्षिता । प्रेक्षा युक्तिरूपा बुद्धिः ॥ ५८ ॥ कचिद्गुणवत्यपि मित्रे दोषदृष्टिहेतुत्वेनानैकान्तोयं गुणदोषनिर्णयोपाय इत्याह—पृच्छ्यमान इति ॥ बुद्धिमानपि पुमान् अपरिचितैः पृच्छ्यमानः सन् अविश्वासादेवैते पृच्छन्ति कस्मिन्वचस्युक्ते को वानर्थः समापद्यत इति प्रतिवचनरूपंवच-

[ पा० ] १ क. सचिवैस्सह. २ क. ङ. छ. झ. ट. भातिमे. ३ ङ. झ. ट. एषदेशश्चकालश्च. ४ ख. घ. दोषगुणावुभौ. ५ घ. च. छ. युक्तमागतमस्यापिविमृशानस्यबुद्धितः. ६ ङ. झ. ट. ह्यत्र. ञ. चात्र. ७ ग. च. बुद्धिमान्नरः.

अशक्यः सहसा राजन्भावो वेत्तुं परस्य वै ॥ अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ॥ ६० ॥
न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता ॥ प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥ ६१ ॥
अशङ्कितमतिः स्वस्थो न शठः परिसर्पति ॥ न चास्य दुष्टा वाक्चापि तस्मान्नास्तीह संशयः ॥ ६२ ॥
आकारश्छाद्यमानोपि न शक्यो विनिगूहितुम् ॥ बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ६३ ॥
देशकालोपपन्नं च कार्यं कार्यविदां वर ॥ सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥६४ ॥
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् ॥ वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥
राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ॥ ६५ ॥
एतावत्तु पुरस्कृत्य युज्यते तत्र संग्रहः ॥ यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति ॥
त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

उद्दिश्य । सहसा विविधां शङ्कां प्राप्नुयात् । तथासति सुखागतं स्वस्मिन्दोषराहित्येन विश्वासोपगतमपि मित्रं मिथ्या पृष्टं सत् तेन प्रश्नेन हेतुना । प्रदुष्येत । दुष्टं भवेदित्यर्थः ॥ ५९ ॥ कचिन्निष्प्रयोजनश्चायमुपाय इत्याह—अशक्य इति ॥ भृशं अत्यर्थं । स्वस्मिन्नैपुण्यं पश्यतापि मिथ्या प्रष्ट्रा अन्तःस्वभावैः अन्तर्हितस्वाभिप्रायैः । परस्य गीतैः भाषितैः । पराभिप्रायः सहसा ज्ञातुमशक्य इत्यर्थः । छद्मना प्रष्टुर्गूढमभिप्रायं ज्ञात्वा । "अहृदयवाचामहृदया एव प्रतिवाचो भवन्ति" इति न्यायेन परेणापि स्वाभिप्रायानाविष्करणादितिभावः ॥ ६० ॥ एवं पूर्वोक्तेषु पक्षेषु दोषानुद्भाव्य संप्रत्यात्मना परीक्ष्य कक्षीकृतं पक्षमुपक्षिपति—न त्वित्यादिना ॥ ब्रुवतः बहुव्याहरतोस्य ॥ ६१ ॥ एवमस्येङ्गिताकाराभ्यामदुष्टत्वमुक्त्वा चेष्टाभाषणाभ्यां च तद्दर्शयति—अशङ्कितेति ॥ शठः गूढविप्रियकारी ॥ ६२ ॥ ननु परमवञ्चकःपुरुषो भावं निगूहयति कथंतेनविश्वासइत्यत्राह—आकारइति ॥ आकारः मुखविकारः ॥ ६३ ॥ एवं दोषाभावमुक्त्वा गुणमुचितज्ञत्वरूपंदर्शयितुं नीतिमर्यादां दर्शयति—देशेति ॥ देशकालोपपन्नं देशकालाभ्यां युक्तं । प्रयोगेण उचितपुरुषप्रयोगेण । अभिसंहितं युक्तं । उचितेषु देशकालपुरुषेषु प्रयुक्तमित्यर्थः । कार्यं क्रिया । स्वफलं स्वोचितफलं । क्षिप्रं अप्रतिबन्धं । कुरुते कर्तरीति शेषः ॥ ६४ ॥ एतेनाप्येवमेवकार्यं प्रयुक्तमित्याशयेनाह—उद्योगमितिसार्धश्लोक एकान्वयः ॥ ६५ ॥ फलितमाह—एतावदिति सार्धश्लोकेन ॥ स्ववचनं निगमयति—यथाशक्तीति । यथाशक्ति बुद्धिशक्तिमनतिक्रम्य । आर्जवं निर्दोषत्वं । मद्वाक्यं श्रुत्वा यत्कर्तव्यमकर्तव्यं वा तस्य सर्वस्य त्वं तु त्वमेव । प्रमाणं प्रमातेत्यर्थः ॥६६॥ इति श्रीगोविन्द-

---

**ति०** किंचतस्यशत्रुत्वेतदभिप्रायश्चारैरपिदुर्ज्ञेयइत्याह—अशक्यमिति । परस्यशत्रोर्भावश्चारेण सहसा द्राक् । प्रश्नमात्रेणवेत्तुं ज्ञातुं । अशक्यएव । अज्ञातेनपृष्टउत्तरस्यैवादानात् । शत्रुप्रहितत्वेनज्ञातेप्रत्युतदण्डस्यापिप्रसङ्गात् ॥ नन्वेवंजगतिचारप्रेषणनैष्फल्यप्रसङ्गइतिचेन्न । बहुकालंतत्रस्थितौतद्वचनैस्तद्व्यवहारैस्तत्प्रसङ्गेहर्षामर्षादिभिश्चतस्यशत्रुमित्रत्वज्ञानायतत्प्रेषणसंभवात् । यदेव मतःअन्तरेणेति । "अन्तरेणस्वरैर्भिन्नैर्नैपुण्यंपश्यतांभृशं" इतिप्राचीनःपाठः ॥ अन्तरेण व्यवहारमध्ये । भिन्नैस्स्वरैः विलक्षणस्वरैः कण्ठध्वनिभिः नैपुण्यं । सदसदन्यतरत्वनिश्चयं । पश्यतां कुरुतां । भवानितिशेषः । तत्रबाष्पकण्ठत्वेभीत्यापूर्वापरासंगतकथनेचासन् अन्यथासन्नितिनिश्चीयतामित्याशयः ॥ ६० ॥ **ति०** ननुत्वयैवप्रथमंपरीक्ष्यतामितिचेन्मयापरीक्षितएवेत्याह—नत्वस्येति । दुष्टभावता वचनचेष्टादिभिर्दुष्टान्तःकरणता । नलक्ष्यते । प्रसन्नवदनताचदृश्यते ॥ ६१ ॥ **स०** प्रयोगेण प्रकृष्टयोगेनोपायेनदैवरूपेणाभिसंहितं संबद्धं । यद्वा प्रयोगोनुष्ठानं । स्वात्मानमेवसफलंकुरुतइतिवा । क्षिप्रंप्रयोगेणाभिसंहितं अदीर्घसमीक्षयाकृतंकर्तारं सफलं सविशरणं । नष्टमितियावत् । देशकालोपपन्नंचकार्यंसफलंकुरुते विभीषणकार्यंचदेशकालोपपन्नमितिसफलमेवेतिभावः ॥ ६४ ॥ **स०** तवोद्योगं रावणमारणविषयं । मिथ्यावृत्तं असदाचारं । वालिनः रावणादपिबलिनः ।

**[ पा० ]** १ ङ. झ. ट. अन्तरेणस्वरैर्भिन्नैर्नैपुण्यंपश्यतां. २ क. प्रसन्नमदनश्चापि. ३ ख. ग. ङ. झ. ञ. ट. दुष्टवागस्ति. ४ झ.—ठ. सफलं. ५ क.—ङ. झ. ञ. ट. वालिनंचहतं. ६ घ. ङ. छ. झ. ट. विद्यतेतस्य. ७ ग. च. ञ. तस्य. क. ख. ज. त्वस्य.

# अष्टादशः सर्गः ॥ १८ ॥

रामेणसुग्रीवंप्रति विभीषणस्यमित्रभावेनप्राप्तत्वरूपहेतुना त्यागानर्हत्वोक्तौ सुग्रीवेणतंप्रतिसप्रणामंतस्मिन्दोषोद्भावनेन तन्निग्रहप्रार्थना ॥ १ ॥ रामेणतंप्रति विभीषणस्यनिर्दोषत्वसमर्थनपूर्वकं शरणागतरक्षणस्यावश्यंकर्तव्यत्वे कपोतोपाख्यान-स्यदृष्टान्तीकरणेनसह कण्डुमुनिवचनस्यप्रमाणीकरणेन शत्रुत्वेपिशरणागतरक्षणस्यस्वव्रतत्वोक्त्या तस्याअभयप्रदानोक्तिपूर्वकं तदानयनचोदना ॥ २ ॥

**अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ॥ प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १ ॥**
**ममापि तु विवक्षाऽस्ति काचित्प्रति विभीषणम् ॥ श्रोतुमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः ॥२॥**
**मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ॥ दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥ ३ ॥**

राजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

---

एवं सुग्रीवादिभिः स्वस्वमते प्रतिपादिते स्वाभिमतमपि रामो वक्तुं प्रारभते—अथेति ॥ वायुसुतस्य वचनमिति शेषः । प्रसन्नात्मा सुग्रीवादिवाक्यैः कलुषीकृते मनसि सति हनुमद्वाक्येन प्रसन्नमनाः । दुर्धर्षः पूर्वपक्षैरक्षोभ्यः । तत्रहेतुमाह–श्रुतवानिति । वसिष्ठादिभ्यः श्रुतकपोतकण्डूपाख्यानादिमान् । आत्मनिस्थितं चित्तावस्थितं ॥ १ ॥ सर्वमतप्रतिक्षेपरूपेण स्ववाक्येन किमेते व्याकुलितमनसो भवेयुरिति शङ्कया रामःसचिवानुपच्छन्दयति—ममापीति ॥ तुशब्दः पक्षान्तरवद्धनुमत्पक्षमपि व्यावर्तयति । ममापि विभीषणंप्रति काचिद्युष्मत्पक्षैः सह परिगणनायोग्या विवक्षा अस्ति । अतः तत्सर्वं मद्विवक्षितं वा तु साध्यरूपं सर्वमर्थजातं । श्रेयसि स्थितैः अस्मच्छ्रेयोनिरतैः । भवद्भिः युष्माभिः । श्रोतुमिच्छामि । भवद्भिः श्रुत्वा परीक्षणं कार्यमितिममेच्छास्तीत्यर्थः ॥ २ ॥ एवं सचिवाननुगुणीकृत्य स्वस्वभावकथनव्याजेन स्वविवक्षितुं सहेतुकं दर्शयति—मित्रभावेनेति ॥ मतान्तरेषु सदोषत्वान्न परिग्राह्य इति हेतुसाध्ये अपि दुष्टे । मारुतिमतेतु परिग्राह्यत्वरूपे साध्येसमीचीनेपि निर्दोषत्वादिति हेतुरसमीचीनः । किंतु शरणागतोहमितिवाक्यप्रयोक्तृत्वमेव तत्र मुख्यहेतुरित्यभिप्रायेण मित्रभावेनेति हेतुनिर्देशः । मित्रभावेन वास्तवमित्रत्वाभावेपि मित्रत्वाभिनयमात्रेणापीत्यर्थः । मित्रभावः शरणागतत्वं । राघवं शरणं गतः शरण्यं शरणं गत इति पूर्वोत्तरत्र च तस्यैव कथनात् । अन्यत्रापि—"विदितः स हि धर्मज्ञः शरणागतवत्सलः" इति शरणागतिशब्देनोपक्रम्य "तेन मैत्री भवतु ते यदि जीवितुमिच्छसि" इति मैत्रीशब्देन परिसमापनात् । यद्वा । मित्रशब्दः स्वाभिप्रायेण शरणागते गौरवारोपाद्युज्यते । न त्यजेयं त्यक्तुं न शक्नोमि । सर्वशक्तेरपि मम शरणागतशब्दश्राविणःपरित्यागे शक्तिसंभावनामपिन पश्यामीत्यर्थः । कथंचन दृष्टादृष्टानर्थशतानुबन्धित्वे तत्परिग्रहस्य सुहृदामनभिमतत्वे मत्प्राणपरित्यागे प्रस्तुतेपीत्यर्थः । दोषो यद्यपि तस्य स्यात् । यद्यपि सुग्रीवादिभिरुक्ता दोषा नास्मिन्सन्ति । सन्तु वाततोपि भूयांसः । अथाप्यशक्यमहं कथं करोमीत्यर्थः । स्याच्छब्दः दुष्टोपि शरणागतशब्दप्रयोक्ता मया परिगृहीत इति मम महद्यशो भवेदित्येवमर्थः । अदुष्टपरिग्रहे गुणो मन्दः । दुष्टपरिग्रहे तु मम शरणागतरक्षणधर्म उत्तेजितोभवतीतिभावः । करुणयादुष्टपरिग्रहे शिष्टगर्हास्यादित्यत्राह—सतामेतदिति । एतद्दुष्टस्यापि शरणागतस्यसंग्रहणं । सतां शिष्टानां । अगर्हितं गर्हितादन्यत् । पूजितमित्यर्थः । पूजितत्वं च कपोतोपाख्यानादिभिः प्रपञ्चयिष्यते । एवंच शास्त्रेषु दोषाणां परित्यागहेतुत्वोक्तिः शरणागतव्यतिरिक्तविषयेति विषयव्यवस्थाऽभिप्रेता । अतएव

---

निष्कंपप्रवृत्तावयंहेतुः । राज्यं रावणसाम्राज्यं । ज्येष्ठमारणकनिष्ठाभिषेचनयोःसुग्रीवनिदर्शनेननिश्चित्यरावणमारणस्वस्थापनार्थमयमायातइतिनाचातुरीतस्येतिभावः ॥ ६५ ॥ इतिसप्तदशःसर्गः ॥ १७ ॥

स० अयंहनुमदुक्तप्रकारेणनिर्दोषएवयद्यपि । यदितस्यदोषः त्यागहेतुःस्यात् तर्हि तस्यैवदोषःवधरूपःस्यात् नास्माकंकश्चन ।

[ पा० ] १ ङ. झ. ट. ममापिच. २ ग. घ. मेतद्विगर्हितं.

दोषाधिक्येनवधार्हस्यापि शरणागतस्यरक्षणमेवकार्यमितिश्रुतिराह—तस्मादपिवध्यं प्रपन्नं न प्रतिप्रयच्छन्तीति । आचार्ययोजना । मित्रस्य स्नेहिनो भावो मित्रत्वं । तेन आशालेशमात्रेण । अद्वेषमाभिमुख्यमात्रंवाऽस्मदङ्गीकारे प्रयोजकं न तु पूर्णभक्तिरिति भावः । तथोक्तं—"त्वामामनन्ति कवयः करुणामृताब्धे ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः । एतेषु केन वरदोत्तरकोसलस्थाः पूर्वं सदूर्वमभजन्त हि जन्तवस्त्वां" इति ॥ यद्वा मित्रभावेन मित्रक्रियया । "भावो लीलास्वभावयोः । जन्त्वभिप्रायचेष्टासु भूतौ विद्वत्पदार्थयोः । क्रियायामात्मनि" इति नानार्थरत्नमाला । मित्रभावनयेतियावत् । अहृदयशरणोक्त्येत्यर्थः । तदप्युक्तं—"शरणवरणवागियं योदिता न भवति बत सापि धीपूर्विका" इति । शरणागतभावेनेति वक्तव्ये मित्रभावेनेत्युक्तिः स्वाश्रयणाय कतिचित्पदानि कुर्वत्यपि स्वसदृशबुद्धिकारिणोभगवतोभिप्रायेण । देव्यापि शरणागतिमभिदधत्या "तेन मैत्री भवतु ते यदि जीवितुमिच्छसि" इत्युक्तं । यद्वा मित्रभावेन मित्रत्वेन हेतुना । "सुहृदं सर्वभूतानां" इत्युक्तरीत्या अस्मदीयसहजसौहार्दपुरस्कृत्येत्यर्थः । यद्वा मित्रभावेन आनुकूल्यसंकल्पादिपूर्वकमित्यर्थः । यद्वा मितात्त्रायतइति मित्रं । ईश्वरोपकारं परिच्छिद्य तत्सदृशोपकारप्रवृत्तस्य भावेनेत्यर्थः । यद्वा विश्वसनीयस्थलं मित्रं । "तन्मित्रं यत्र विश्वासः" इत्युक्तत्वात् । विश्वासिनो भावेनेत्यर्थः । संप्राप्तं "तस्याशालेशमात्रेण ह्रीरेषाहिममातुला" इत्युक्तरीत्या मम तन्निवासगमने प्राप्तेपि स्वयमेव प्राप्तं कथं त्यजेयं । संप्राप्तं सम्यक्प्राप्तं । पादुके द्वारि विन्यस्य देववन्दनकारिन्यायेनान्यत्रचित्तप्राप्तिमन्तरेण "परित्यक्ता मया लङ्का मित्राणि च धनानि च" इति विरोधिनिवृत्तिपूर्वकं प्राप्तमित्यर्थः । यद्वा संप्राप्तं माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायण इति न्यायेन मयि त्यक्तसकलविधबन्धुभावमाचरन्तं । यद्वा मदन्तरङ्गानुचरपुरस्कारेण प्राप्तं । यद्वा संप्राप्तं लङ्कायां स्थित्वा राघवं शरणं गतोस्मीत्युक्तंचेत् अतन्द्रितचमूपतीत्याद्युक्तन्यायेन मम तत्र गन्तव्यतायामपि तस्यागमनेन पङ्गोरुपरि गङ्गानिपतनवदस्मत्प्रयोजनमेवकृतं । संप्राप्तं प्राप्तिरेवास्माकमपेक्षिता । न तु स्तुत्यर्चनध्यानप्रणामादिः । समित्यनेन मानसवाचिककायिकरूपपूर्णप्रपदनमुच्यते । न त्यजेयं त्यक्तुं न शक्नोमि । सर्वशक्तेरपि मम शरणागतशब्दश्राविणः परित्यागे शक्तिसंभावनामपि न पश्यामीत्यर्थः । संप्राप्तं न त्यजेयं, "शरणागतसत्त्वमालिनीयं वृषशैलेशकृषीवलं धिनोति" इत्युक्तरीत्या रक्षापेक्षां प्रतीक्षमाणोहं कथं संप्राप्तं त्यजेयं । न त्यजेयं तत्संबन्धेन रावणविषयाकारापेक्षी कथं तमेव त्यजेयं । अतएवहि घण्टाकर्णपक्षपातेन तदनुजस्यापि मुक्तिं ददौ । अतएव च मालाकारविषयपक्षपातेन । "युष्मत्सन्ततिजातानां दीर्घमायुर्भविष्यति" इत्युक्तवान् । न त्यजेयं । आगमनमात्रेण श्लाघनीये त्यागसंभावना कुतः । संभावनायां लिङ् । त्यागसंभावनायां खलु साधनोद्योगः । तस्य त्यागे स्वसत्ताचेत् साधनोद्योगः स्यात् । सैव न निर्वहति कथमुद्योगः तत्स्वीकाराभावे स्वसत्ता न सिद्ध्यति चेत् तत्स्वीकारेऽसत्सत्ता न सिद्ध्यतीत्यसत्त्यागः स्यात् स कथमुपपद्यत इति चेत्तत्राह—कथंचन । "अप्यहं जीवितं जह्यां" इत्युक्तरीत्या नवप्रसववात्सल्येन वत्सला गौः पूर्ववत्सानिव युष्मानपि त्यक्ष्यामि न त्वाश्रितं । यद्वा कथंचन सर्वदेशसर्वकालसर्वावस्थास्वपीत्यर्थः । यद्वा कथंचन शरणागतस्य गुणाभावेपि दोषप्राचुर्येपि तत्परिग्रहस्य सर्वानभिमतत्वेपि दृष्टादृष्टानिष्टशतानुबन्धित्वेपि मत्प्राणपरित्यागे प्रस्तुतेपीत्यर्थः । किंच दोषो यद्यपि तस्य स्यात् । अस्मदभिप्रायेण दोषो नास्त्येव अस्थानभयशङ्किनो भवतोभिप्रायेण तस्य दोषोस्ति चेत्स्यात् । अङ्गीकारेऽव्ययमिदं । दोषभोग्यत्वरूपवात्सल्यैकस्वभावस्य मे आश्रितदोषो ह्युपादेयइतिभावः । सुकुमारस्य राजकुमारस्य सुगन्धिमूलमृल्लेशवदस्य दोषभोग्यत्वं । यद्वा दोषो यद्यपि स्यात् । तस्य शरणागतस्य नदोषः । "यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्युक्तरीत्या दोषो न श्लिष्येदित्याशयः । यद्वा दोषो यद्यपि स्यात् । स तस्य हि शरणागतिरूपनिरतिशयगुणशालिनो दोषो न त्याज्यकोटिमाटीकते । सुगन्धिमूलमृल्लेशवत् । यद्वा दोषो यद्यपि तस्य दोषोस्ति चेत्तत्संबन्धी खलु दोषः । स तस्मादपि श्लाघ्यः स्यात् । प्रार्थनायां लिङ् । अस्माभिः प्रार्थितःखलु । गुणवान्रक्षितश्चेत् गुणवत्ताप्रतिकरः । दोषवान्रक्षितश्चेदतिशयोस्माकमिति भावः ।

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च ॥ ततः शुभतरं वाक्यमुवाच हरिपुङ्गवः ॥ ४ ॥
सुदुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः ॥ ५ ॥
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ॥ को नाम स भवेत्तस्य यमेष न परित्यजेत् ॥ ६ ॥
वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च ॥ ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् ॥
इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७ ॥
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च ॥ न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८ ॥
अस्ति सूक्ष्मतरं किंचिद्यदत्र प्रतिभाति मे ॥ प्रत्यक्षं लौकिकं वाऽपि विद्यते सर्वराजसु ॥ ९ ॥

---

यद्वा दोषो यद्यपि असद्बधापेक्षया तस्य स्यात् तस्यापेक्षितफलसिद्धिः स्यात् । कपोतोपाख्यानानुगुणेयं योजनेति श्रीवत्साङ्कमिश्रा आहुः । कथं तर्ह्येतन्महामन्त्रिणो निन्दन्तीत्यत्राह—सतामेतदगार्हितं । एतत् आश्रितदोषाङ्गीकरणं । सतां अगार्हितं अनिन्दितं । अस्मत्पक्षपातिनामस्थानभयशङ्किनां निन्दितत्वेपि परमार्थदर्शिनां कपोतादीनांच न निन्दितमिति भावः। यद्वा एवं दुष्टापरित्यागे प्रत्यवायपरिहारो वा पुरुषार्थसिद्धिर्वा पापक्षयो वेति चेन्नैतदित्याह—सतामिति । सद्गोष्ठीष्वसद्गर्हापरिहारएव फलं स्वमारणोद्योगवतामपि रक्षकाः कपोतादयः तेषामगर्हितं । यद्वा दुष्टजनपरिग्रहस्य शिष्टगर्हितत्वाच्छास्त्रनिन्दितत्वाच्चायुक्तमित्याशङ्क्य सत्यमेतद्दुष्टजनत्याज्यत्ववचनं सामान्यविषयं । तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीत्येवमादिशरणागतापरित्यागविषयविशेषशास्त्रस्य सद्भावात् । दुष्टस्यापि शरणागतस्य संरक्षणे शिष्टगर्हणा नास्ति प्रत्युत श्रेय एवेत्याह—सतामेतदगार्हितमिति । एतत् दुष्टशरणागतपरिग्रहणं । सतां सामान्यविशेषशास्त्रविदां । अगार्हितं गार्हितादन्यत् । पूजनीयमित्यर्थः । सर्वशक्तेः काचिदशक्तिः । सर्वज्ञस्य किंचिदज्ञानं च मित्रभावेनेति श्लोकेन दर्शितमिति गोविन्दयतिनः प्रत्यवदन् ॥ ३ ॥ अथ सुग्रीवो रामप्रकृतिमाकर्ण्य अतिसाहसमेतदित्यन्तं भीतभीतः प्राह—सुग्रीव इति ॥ आभाष्य अनूद्य । शुभतरं नीतिशास्त्ररहस्यमूलत्वात्स्वामिविषयप्रेमातिशयनिबन्धनत्वाच्च शुभतरं । वाक्यमुवाच । अत्र लक्ष्मणमित्युक्तत्वादुपसंहारे सहलक्ष्मण इत्युक्तत्वाच्चोभयोरपि वचनमुभावपिप्रति प्रतिवचनं च बोध्यम् ॥ ४ ॥ सुदुष्ट इत्यर्धमेकं वाक्यं ॥ अस्माभिः पूर्वमुक्तैश्छिद्रान्वेषित्वादिदोषैर्युक्तो भवतु वा मा वा कृतघ्नः स एष रजनीचरः । किं किमर्थं । परित्याज्यएवेत्यर्थः ॥ ५ ॥ कृतघ्नतामेवाह—ईदृशमिति ॥ यं बन्धुं । एष व्यसने प्राप्ते न परित्यजेत्स कस्तस्य भवेत् नकोपीत्यर्थः । भ्रातरं परित्यजन् सर्वानपि परित्यजेदेवेति भावः । ईदृशं व्यसनं । लङ्कादहनपुत्रवधादिकमारभ्य समुद्रतीरनिवेशपर्यन्तं व्यसनमित्यर्थः ॥ ६ ॥ अथ सूक्ष्मधर्मानभिज्ञस्य सुग्रीवस्य नीतिमर्यादयैवोत्तरं वक्तुमारभते—वानराधिपतेरिति सार्धश्लोकः ॥ ईषदुत्स्मयमानः धर्मरहस्यमिदं मम परमशक्तिं शरणागतसंरक्षणव्रतं च सम्यगपरिज्ञाय यत्किंचिद्वदत्ययमिति मन्दस्मयंकुर्वन् ॥ ७ ॥ प्रथमं तद्वचनमुपलालयति—अनधीत्येति ॥ ८ ॥ सूक्ष्मतरं किंचित् अर्थस्वरूपमितिशेषः । तदेवार्थस्वरूपं विशिनष्टि—प्रत्यक्षमिति । प्रत्यक्षं दृष्टं । लौकिकं लोकसिद्धं । यत्सर्वेष्वपि राजसु विद्यते मे प्रतिभाति च तत्सूक्ष्मतरं किंचिद्धर्मस्वरूपमस्तीतिसंबन्धः ॥ ९ ॥

---

यद्यपितस्यदोषःस्यात् तथापि नत्यजेयमितिवा ॥ ३ ॥ **रामानु०** दुष्टत्वादुष्टत्वयोर्माद्योयमितिवदन्तंरामंप्रत्युभयथापित्याज्यइतिसोपपत्तिकमाह—सुदुष्टइत्यादिना । सुदुष्टोवाप्यदुष्टोवा एषरजनीचरः । किं किमर्थं । अनेनसाध्यंप्रयोजनंकिमपिनास्तीत्यर्थः ॥ ५ ॥ **ती०** यद्वा योविभीषणः ईदृशंव्यसनंप्राप्तंभ्रातरंपरित्यजेत् त्यक्तवान् । सएषः यं कमित्यर्थः । सएषविभीषणः कंनपरित्यजेत् । तस्यकोनामभवेत् । एवंविधमेनंकोवापरिगृह्णीयादित्यर्थः । **ति०** तस्यास्यकोनामसभवेत् । यमेष संकटेनपरित्यजेत् । तस्मादस्मानपिसंकटेत्यक्ष्यत्येव । विश्वासघातिकृतघ्नत्वादित्यर्थः ॥ ६ ॥ **ति०** सर्वानुदीक्ष्यसुग्रीवस्योत्तरकक्ष्याचालनसामर्थ्यंसर्वेहरीननुभाव्य तथालक्ष्मणमुदीक्ष्येषदुत्स्मयमानोबालत्वेनमद्वृत्तापरिज्ञानात्तवाप्येतदेवसंमतमितीषद्धासंकुर्वन्नि-

[ पा० ] १ ग. ङ. झ. ट. उदीक्ष्यतु. २ ग. ङ. झ. ट. यथाचप्रतिभातिमा. ३ क. ङ. झ. ञ. ट. चापि. ४ ङ. झ. ट. वर्तते.

**अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः ॥ व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १० ॥**
**अपापास्तत्कुलीनाश्च मानयन्ति स्वकान्हितान् ॥ एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥ ११ ॥**
**यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च ॥ तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु ॥**
**न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः ॥ १२ ॥**
**पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १३ ॥**
**अव्यग्राश्च प्रहृष्टाश्च न भविष्यन्ति संगताः ॥ प्रणादश्च महानेष ततोस्य भयमागतम् ॥**
**इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १४ ॥**

---

तदेवार्थस्वरूपमाह—अमित्रा इति ॥ तत्कुलीनाः ज्ञातयः । प्रातिदेश्याः समनन्तरदेशाधिपाश्च । व्यसनेषु समुपस्थितेषु प्रहर्तारः अमित्राः शत्रवःकीर्तिताः । तस्माद्व्यसनप्रहर्तृज्ञातित्वात् ॥१०॥ व्यसनिनं रावणं परित्यज्यागमने कारणान्तरमस्तीत्याह—अपापा इति ॥ अपापास्तत्कुलीना नरेन्द्राः । हितान् हितपरान् । स्वकान् ज्ञातीन् मानयन्त्येव । तेषामपि नरेन्द्राणां शोभनो गुणवानेष ज्ञातिः प्रायः शङ्कनीयः । लोके पापभूयिष्ठतया शोभनोपि प्रायेण शङ्कनीयः । पापिनस्तु नरेन्द्रस्य तादृशो ज्ञातिः शङ्कनीय इति किमु वक्तव्यम् । अतोयं रावणेन शङ्कितस्तेन सह विरुध्यैवागत इत्यर्थः ॥ ११ ॥ एवं रावणपरित्यागे हेतुमुक्त्वा स्वापरित्यागे हेतुं वक्तुं प्रतिजानीते—यस्त्विति ॥ अरिबलस्य विभीषणस्य । दोषः को नाम स भवेत्तस्येत्यादिनोक्तः । तत्र विषये । यथाशास्त्रं नीतिशास्त्रमनतिक्रम्य । इदमुत्तरं—न वयमिति । न वयं तत्कुलीनाः राक्षसराज्यानर्हाः । अस्माकं तद्राज्ये आकाङ्क्षाभावात् । मम रावणस्येव तस्मिन्नरित्वशङ्काप्रसक्तिर्नास्ति । अतो नास्मांस्त्यक्ष्यतीति भावः । किंच राक्षसो विभीषणस्तु राज्यकाङ्क्षी अस्मन्मुखेन रावणं घातयति । अतः स्वकार्यविघातभयादपिनास्माकमपकारं करोतीत्यर्थः ॥ १२ ॥ ननु मूर्खा राक्षसाः कथमेवं विमृश्यकारिण इत्याशङ्क्य नायं नियम इत्याह—पण्डिता इति ॥ अर्धमेकं वाक्यं । राक्षसा अपीत्यर्थः ॥ १३ ॥ पुनरप्यस्य रावणेन विरुध्यागमनमेव प्रतिपादयन् परिग्राह्यत्वं निगमयति—अव्यग्रा इति सार्धश्लोकेन ॥ ते ज्ञातयः अव्यग्राः प्रहृष्टाश्च सन्तः कदाचिदप्यन्योन्यसंगताः न भविष्यन्ति न भवन्तीति । अनेनैव हेतुना ज्ञातयोवसरे भेदं गमिष्यन्ति गच्छन्ति । अस्य च भीतस्यैव महान् प्रणादः श्रूयते । अतो बलीयसो रावणात् अस्य भयमागतं तेन च भयेनात्मत्राणार्थमागत इति

---

तिहोवाच ॥ ७ ॥ **ति०** तदर्थरूपंप्रतिपादयितुंतदुपयुक्तांलोकस्थितिमाह—**अमित्राइति** । राज्ञांअमित्राः शत्रवः । द्विधाकीर्तिताः । तत्कुलीनाज्ञातयः प्रातिदेश्याः आसन्नदेशवासिनश्चेति । तेद्विविधाअपि स्वावरोधिज्ञातेःस्वविरोधिनः आसन्नदेशवर्तिनश्च । व्यसनेषु आध्यात्मिकादित्रिप्रकारकष्टेषु । तस्यप्रहर्तारोभवन्तीतिप्रसिद्धं । अस्तुकिंततइत्यत्राह—तस्मादिति । नानाप्रकारस्वपीडाप्रवृत्तज्ञातिभयात्स्वत्राणार्थमिहागतः । यद्वा तस्मात् व्यसनप्रहर्तृज्ञातित्वात् । व्यसनिनंरावणंप्रहर्तुमयंविभीषणइहागतइत्यर्थः ॥ **शि०** तत्कुलीनाः स्वकुलप्रसूताः । प्रातिदेश्याः तत्समीपदेशवासिनश्च । अमित्राः समयविशेषेशत्रवःकीर्तिताः । अतएव व्यसनेषु दुःखसमयेषु । प्रहर्तारोभवन्ति । तस्मात् ज्ञातिरूपरिपुभयात् अयमिहागतः । एतेनभ्रातृनिष्ठप्रीतिविषयत्वेयद्ययमिहागच्छेत् तदास्मिन्कृतघ्नत्वादिदोषसंभावनासंभवेत् । अयंतुपापाचरणशीलः स्वबन्धुनास्वविपरीताचरणवत्तयाऽयंनिस्सारित इतिनदोषवानितिसूचितं ॥ १० ॥ **ती०** प्रवादश्चमहानेषइतिपाठेतु ज्ञातिभ्योभयागमनेअपवादश्च "घोराःस्वार्थप्रयुक्ताश्चज्ञातयोनोभयावहाः" इतिहस्तिगीतादिरूपोलोकप्रवादोस्तीत्यर्थः ॥ **ति०** उक्तहेत्वनुवादपूर्वंग्राह्यत्वमुपसंहरति—अव्यग्राइतिसार्धेन । तेज्ञातयः अव्यग्राः अनाकुलाः । निश्चयवन्तइतियावत् । प्रहृष्टाः अन्योन्यंसंतुष्टाश्च । सौभ्रात्रात्संगताः परस्परमिलिताभविष्यन्तीतिसर्वलोकप्रसिद्धं । तेभ्योन्येतूक्तविपरीताइतिप्रागुक्तरीत्यापापमूलराज्यलोभादिनाभेदंगमिष्यन्ति । ततोऽनन्तरं । अस्य ज्ञातिवर्गस्य । एषः लोकप्रसिद्धः । प्रणादः युद्धरूपकोलाहलः । भवति । अन्योन्यस्यान्योन्यतोभयंचागतंभवतीतिलोकस्थितिर्यतः तस्मादयमेतावत्कालमनपगतसौभ्रात्रोपिकेनचिन्निमित्तेनाप्राप्तवैरःशरणमागतोग्राह्यएवेतिकतकव्याख्या । तीर्थस्तु नैषततोस्येतिपठित्वा अस्य भीतस्येव एषमहान्प्रणादःश्रूयते । अतस्ततोबलवतोरावणादस्यविभीषणस्यभयमागतमित्यात्मत्राणार्थमागतःपरिग्राह्यएवेत्यर्थः ।

[ **पा०** ] १ क. ग. घ. प्रतुष्टास्तेन. ङ. झ. ट. प्रहृष्टाश्चते.

**न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ॥ मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ॥ १५ ॥**
**एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः ॥ उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥ १६ ॥**
**रावणेन प्रणिहितं तमवेमि विभीषणम् ॥ तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ १७ ॥**
**राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः ॥ प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वाऽनघ ॥१८॥**
**लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह ॥ रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ १९॥**
**एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ॥ वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २० ॥**
**[3]सुग्रीवस्य तु तद्वाक्यं रामः श्रुत्वा विमृश्य च ॥ ततः शुभतरं वाक्यमुवाच हरिपुङ्गवम् ॥ २१ ॥**

परिग्राह्योयमित्यर्थः ॥ १४ ॥ ननु दुष्टोपि ज्येष्ठोनुवर्तनीय एवेत्याशङ्क्य यद्यप्ययं धर्मः तथापि न सर्वत्र संभवतीत्याह—न सर्वे इति ॥ "मद्विधा वा पितुः पुत्राः" इति भूतार्थकथनत्वान्नात्मप्रशंसादोषः । यथा "कृपावानविकत्थनः" इत्युक्तलक्षणेन धीरोदात्तेन दुष्यन्तेन "सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इत्युक्तं । यथा च हनुमता "पन्नगाशनमाकाशे पतन्तं पक्षिसेविते । वैनतेयमहं शक्तः परिगन्तुं सहस्रधा" इति ॥ दण्डिना च काव्यादर्शे प्रथमपरिच्छेदे । "स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः । अपि त्वनियमो दृष्टस्तथा त्वन्यैरुदीरणात्" इति ॥ यद्वा पूर्वश्लोकार्थस्य भरतेति प्रसङ्गं परिहरति—सर्वे इति । तातेति सान्त्वोक्तिः । सर्वे भ्रातरः भरतोपमा न भवन्ति । कैकेयीवरप्राप्तं पित्रा दत्तमपि राज्यं परित्यज्य वनं गतं मामनुसृत्य तत्रैव राज्यं त्वमेव गृहाण । अहं त्वद्दास्यं करिष्यामीति वदन्भरतादन्यः कश्चिदस्ति किमिति भावः । एवंविधप्रसक्त्यभावाल्लक्ष्मणस्यानुपादानं । अत्र दृष्टान्तमाह—मद्विधा इत्यादिना । मद्विरहमात्रेण लोकान्तरं गतः पिता । तत्तुल्यपितृमानस्मत्सदृशः कश्चिदस्ति किमित्यर्थः। यद्वा मद्विधाः पितुः पुत्राः सन्तु वा मा वा भरतसमा भ्रातरस्त्वत्समाः सुहृदश्च न सन्तीत्यर्थः। सुहृदो वा भवद्विधाः। वर्षरात्रसमये स्थितेन मयाऽत्यन्तकुपितेन लक्ष्मणेन चात्यन्तं परुषमुक्तेपि अस्मासु प्रेमातिशयमेव प्रकटयन् त्वत्समः कोवास्तीति भावः। यद्वा मद्विधा वा पितुः पुत्रा न भवन्ति । निरतिशयपितृवात्सल्यभूतोस्मत्तुल्यो नास्तीत्यर्थः॥१५॥ अथ सुग्रीवो नीतिमुखेन विभीषणस्य त्याज्यतां प्रतिपादयितुमशक्तः परिग्रहे चाविदितभावोयं रामे कमनर्थमुत्पादयिष्यतीति प्रेमवशेन व्याकुलो विभीषणशरणागतेरेकस्याः सलक्ष्मणेन स्वेन क्रियमाणं शरणागतिद्वयं प्रबलमभिमन्यमानः शरणागतिपूर्वकं विभीषणनिग्रहं प्रार्थयते—एवमित्यादिचतुःश्लोकैः ॥ १६—१७ ॥ राक्षस इत्यादि ॥ अत्र मयि लक्ष्मण इति स्वस्य लक्ष्मणस्य चानर्थकथनं स्वव्यसनादपि स्वाश्रितव्यसनं रामस्यात्यन्तारुन्तुदमिति तत्प्रदर्शनेन विभीषणापरिग्रहसमर्थनार्थं ॥ १८—१९ ॥ मौनमुपागमत् । प्रणयरोषादितिभावः ॥ २० ॥ अथ रामः स्वस्य सर्वशक्तित्वप्रदर्शनेन सुग्रीवस्यातिशङ्कां-

इतरत्तुप्राग्वदेवव्याख्येयमित्याह ॥ १४ ॥ **ति०** ननुभरतादिष्वेतद्दोषादर्शनाद्भ्रातॄणामीदृशभेदासंभवोतआह—नसर्वेइति । राज्यादीच्छयाप्राप्तसौभ्रात्रत्यागस्याभावोभरतादन्येपरमदुष्करः । तेनपितृदत्तराज्यत्यागात् । लक्ष्मणादेस्तुतदप्रसक्त्यानतदुक्तिः । मद्विधावापुत्राः सुखलिप्सयापितृवाक्यलङ्घनरहिताः । सुहृदोवाभवद्विधाः । त्यक्त्वापिसर्वसौख्यंसर्वाकारेणसर्वबलेनसर्वयत्नेनच मित्रकार्यसाधकःसुहृत्परमदुर्लभइतिभावः । अत्रभूतार्थकथनरूपत्वान्नात्मप्रशंसादोषोभगवतः । "स्वगुणाविष्क्रियादोषोनास्तिभूतार्थशंसने" इतिदण्ड्युक्तेः ॥ **स०** भ्रातृषुसौभ्रात्रंदुर्मिलमितिनवक्तुंयुक्तं । भरतेभक्तिभरितता त्वयि त्वदनुभूतैववर्ततइत्यतः काचित्कएवैवंभावोभ्रात्रादिष्वित्याह—नेति । सर्वेभ्रातरोभरतोपमानभवन्ति । स लोकविलक्षणइतिभावः । लक्ष्मणस्यच स्वसमखेदमोदत्वेनसहैवावस्थानाद्राज्यप्राप्तेरहन्ताहेतोरभावेनचानुक्तिर्नतुसौहार्दावमर्देनेतिहृदयं । भ्रातृप्रस्तावे पितापुत्राचारोक्तिः प्रसङ्गसङ्गत्या । सर्वेभ्रातरोभरतोपमानेत्यनेन मारिततारारमणस्यमर्मोत्कीर्तनंमन्यमानस्तंसुमुखीकर्तुंसुहृदइत्याद्युक्तिश्चेतिज्ञेयं ॥१५॥ **स०** विश्वस्तेत्वयिवा तथा विश्वस्तेमयिवा । त्वयिविश्वस्तेमयिवा मयिविश्वस्तेत्वयिवा । एतेन मन्नाशस्तवेवतवनाशोममसंतापकरइतिस्वाम्यर्थंस्वार्थंचायंनसंग्राह्यइतिभावः ॥ १८ ॥ **स०** लक्ष्मणेवाप्रहर्तुमागतः । त्वयिराजत्वान्मयिधूर्वोढृत्वात्प्रहरणंन दुस्सहं । लक्ष्मणप्रहरणंतुतवेवममापिदुस्सहमितिभावः । सचिवैः चतुर्भिः ॥ १९ ॥ **ति०** मौनमुपागमत् त्रिवाचोक्तं । अतोधिकंप्रभौनवक्तुंयुक्तमित्याशयेनेतिशेषः ॥ २० ॥ **ती०** सुग्रीवस्यवाक्यंश्रुत्वा तद्विमृश्य । अस्यायमर्थः प्रथमतःकृतविभीषण-

**[ पा० ]** १ ख.—ट. निशाचरं. २ ङ. झ. ट. विश्वस्तेमयि. ३ ङ. झ. ञ. ट. ससुग्रीवस्य.

सुदुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः ॥ सूक्ष्ममप्यहितं कर्तुं [2]ममाशक्तः कथंचन ॥ २२ ॥
पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान् ॥ अङ्गुल्यग्रेण तान्हन्यामिच्छन्हरिगणेश्वर ॥ २३ ॥
श्रूयते हि कपोतेन शत्रुः शरणमागतः ॥ अर्चितश्च यथान्यायं [3]स्वैश्च मांसैर्निमन्त्रितः ॥ २४ ॥
स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ॥ कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः ॥ २५ ॥

निवार्य शरणागतरक्षणरूपस्य स्वव्रतस्य । धर्मशास्त्रसिद्धत्वात्तस्यापरित्याज्यतां प्रतिपादयति—सुग्रीवस्य त्वित्यादिना ॥ विमृश्य मयि प्रेमातिशयेनैवमुक्तमिति विचार्य ॥ २१ ॥ सुग्रीवस्य भयं निवर्तयति—सुदुष्ट इति ॥ स एष रजनीचरः सुदुष्टो वा अदुष्टो वा भवतु किं करिष्यति । तदेव विवृणोति—सूक्ष्ममिति । सूक्ष्ममपीत्यनेन साक्षान्मयि मदाश्रितेषु मत्संबन्धिसंबन्धिष्वपि न शक्त इति भावः ॥ २२ ॥ कथं न शक्त इत्याकाङ्क्षायां स्वशक्तिं दर्शयति—पिशाचानिति ॥ पृथिव्यां विद्यमानानितिशेषः । त्वं तावत्सकलैः स्वबलैः सह तिष्ठ अहमेक एव पर्याप्तइत्यभिप्रायेणाह—हरिगणेश्वरेति । अङ्गुल्यग्रेण शस्त्रास्त्रादिप्रसङ्गशून्येनअङ्गुल्यन्तरनिरपेक्षेण एकस्यामप्यङ्गुल्यामंशान्तरव्यापारवर्जितेन । तत्रापि हस्तपादादिविशेषविवक्षाशून्येन अग्रमात्रेण । हन्यां हन्तुंशक्तः । नकेवलं लङ्कामात्रनिवासिनो राक्षसान् किन्तु स्थानान्तरनिवासिनोपीतिविवक्षया पृथिव्यांचैवेति निर्देशः । न केवलमेकजातीयानामेव लक्ष्यत्वं किन्तु सर्वेषामपीत्यभिप्रायेणाह—तानिति । तर्हि लङ्कामात्रनिवासिनो राक्षासान्किमिति न हंसीत्यत्राह—इच्छन्निति । इच्छाभावादेव तद्वधाभावः । न त्वशक्त्येतिभावः ॥ २३ ॥ एवमस्मादपकारशङ्का नास्तीत्युक्त्वा भवतुवाऽयमपकारी तस्मादेवापकारान्मम प्राणा गच्छन्तु वा । अथापि नायंनिग्राह्यः नापिपरित्याज्यः । किन्त्ववश्यं रक्ष्यएवेति कपोतोपाख्यानेन प्रतिपादयति—श्रूयतेहीति ॥ हीतिप्रसिद्धेयमाख्यायिकेत्यर्थः । कपोतेन धर्माधिकारशून्येन तिर्यङ्मात्रेण । एतेनाप्यनुष्ठितत्वे किमु वक्तव्यमस्माकं । कपोतेन एकेनासहायेन कृतं किमुत ससहायैरस्माभिः । शत्रुः कपोतस्य मृगयुः स्वयं भार्यापहारी वैरी । विभीषणस्त्वस्माकं नतथा । तथाप्यरक्षणे किमस्मत्पौरुषेण । शरणमागतः कपोताध्युषितद्रुमस्थलं यदृच्छयाप्राप्तः । "सोञ्जलिं शिरसा बद्ध्वा वाक्यमाह वनस्पतिम् । शरणं हि गतोस्म्यद्य देवतामिहवासिनीं" इति ॥ स्वावासवनस्पतिदेवतां प्रत्युक्तवान् नतुकपोतं । विभीषणस्तु राघवं शरणं गत इति अस्मत्कूटस्थरघुराक्षससंवादोक्तशरणागतराक्षसरक्षणं पुरस्कृत्य मांप्राप्तः । यद्वा शरणं । "शाखिनः पक्षिणां गृहं" इत्युक्तरीत्या वनस्पतिरूपं गृहं प्राप्तः । न तु शरणागतिं चक्रे । "शरणं गृहरक्षित्रोः" इत्यमरः । अर्चितश्च लुब्धकत्वात्सहजशत्रुत्वात् भार्यापहर्तृत्वाच्चापन्नोप्यसावित्युपेक्षणस्य तद्वधोपायान्वेषणस्य च कर्तव्यत्वे प्राप्तेप्यतिथिदेवत्वेनमत्वा शीतनिवारणायाभिमानीय पूजितः । वयंतु "वध्यतामेष तीव्रेण दण्डेन सचिवैः सह" इत्यनुबन्धिपर्यन्तं सम्यगर्चयामः । यथान्यायं । यावत्क्षुन्निवृत्ति सन्मित्रागम इव समग्रावृरेणान्तर्विषादलेशं विना आदृतः । यद्वा प्रियवचनादिभिः वञ्चनांविनेत्यर्थः । स्वैश्च मांसैर्निमन्त्रितः । बहिः कतिचिदाहारानानीय स्वकीयद्रव्यान्तराणि कतिपयानि शरीरैकदेशान्वा दत्त्वा नोपचचार । किन्त्वङ्गैरात्मत्वेनाभिमन्यमानैः प्राज्ञैरप्याद्यं धर्मसाधनमित्यादरणीयैः शरीरमांसैः शरभङ्ग इव । "इदमेकं महत्तपः" इति मत्वा वह्नावह्नाय पतति स्म । निमन्त्रितः भोजनार्थंनियोजितः ॥ २४ ॥ उक्तमे-

शरणागत्यपेक्षयापश्चात्कृतसुग्रीवलक्ष्मणशरणागतेदौर्बल्यंच "तस्मादपिवध्यंप्रपन्नंनप्रतिप्रयच्छन्ति" इतिश्रुत्यर्थानुसारिशरणागतरक्षणरूपस्वधर्मंचपर्यालोच्येत्यर्थः ॥ २१ ॥ ति० ममसूक्ष्ममप्यहितंकर्तुंकथंचन कथमपिशक्तःकिं नकथमपिशक्तइत्यर्थः ॥ २२ ॥ यद्येवमस्मदादिसंग्रहोव्यर्थस्तत्राह—इच्छन्निति । स्वस्यनिरतिशयमहिमानंतात्त्विकंब्रह्मभावंप्रकटीकर्तुमिच्छन्यदिस्यां तदा तथैव कुर्यां । संप्रतितुदेवभावोपेतनिजविलासैरशेषैरवध्यत्वमस्यमयैवदत्तमितितत्परिपालनायस्वदिव्यभावंस्वशक्त्यैवान्तर्धाय मानुषमर्यादायांस्थितत्वात्तद्भावप्रकटनायैवसीतावियोगप्रयुक्तरोदनवद्भवाद्दशसहायमेलनं । वस्तुतोनस्वातिरिक्तसहायान्तरापेक्षाममं । मनुष्याणांसंसारमर्यादाज्ञापनंतद्व्यवहारफलमितिभावः ॥ २३ ॥ स० सहि सोपि । अनेनापकृतोपीत्यर्थः । प्रतिजग्राह प्रतिहृतभार्यावचनश्रवणानन्तरमपिप्रीतिपूर्वकंजग्राहेतिसूचयति । सहितं हितेनसहितंयथाभवतितथेतिवा । तिर्यक्समाधानंतिर्यङ्गिदर्शने-

[ पा० ] १ ङ. च. झ. ट. सदुष्टो. २ क. ङ. च. झ. ञ. ट. ममशक्तः. ३ ख. स्वैर्मांसैरभितर्पितः.

ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ॥ शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिनीम् ॥ २६ ॥

वार्थं दृढीकुर्वन् स्वस्य कैमुत्यमाह—स हि तमिति ॥ सः कपोतः । वयमिव धर्मानुष्ठानयोग्यजातौ शरण्यवंशे वा नोत्पन्नः । तं जात्या स्वभावेन च क्षुद्रसमाचारं पक्षिणां कालसंमित इत्यखिलपक्षिजातिविरोधिनं । तस्य कपोतस्यान्तिकंप्रति यदृच्छयाभ्येत्य पतितं उपायान्तरशून्यं विपरीतानुष्ठानैकनिरतं अनुतापलेशेन वा अनुकूलवादप्रसङ्गेन वाऽनन्वितं प्रतिजग्राह । स्वात्मत्यागेनाङ्गीकृत्यावति स्म । पूर्वश्लोके शत्रुरिति सामान्येनोक्तमर्थं तद्वृत्तिप्रदर्शनेन विशिनष्टि—भार्याहर्तारमिति । एवमेव रावण आगतश्चेदस्माभिः कार्यं इत्यभिप्रायः । आगतं अस्याङ्गीकाराय कृतमुपायानुष्ठानं कपोतावासद्रुमस्थलं प्रत्यागमनमात्रमेव । तद्विना वनस्पतिदेवतां प्रत्युक्तं शरणशब्दं कपोतोनाशृणोत् । अत्र स हीत्यनेनैव कपोतानुवादे लब्धेपि पुनः कपोतग्रहणं श्येनकपोतोपाख्यानइव नायं परिगृहीतकपोतशरीरो देवो मुनिर्वा । किन्तु प्राकृतः कपोत इति ज्ञापनार्थं । अयं कपोतः प्राक्तनधर्मविशेषैर्गजेन्द्रादिवत्तिर्यक्त्वेप्येवंधर्मानुष्ठानयोग्यो बभूव । कपोत इत्यनेन तिर्यक्त्वं शास्त्रानधिकारित्वं बुद्धिमान्द्यं च सूचितं । वानरश्रेष्ठ पुनरप्येकस्तिर्यक् शत्रुं किरातं ररक्षेत्येनां कथां शृणु । वानरः कश्चिद्व्याघ्राद्भीतं स्वावासद्रुममागतं किरातं ररक्ष । तदानीं वृक्षमूलस्थो व्याघ्रस्तस्मिन्वानरे सुप्ते निषादं समीक्ष्य त्वां रक्षामि वानरं पातयेत्युवाच । ततः पापैकनिरतः किरातः स्वरक्षणकारिणं वानरं पातयामास । अनन्तरं वानरं पतितं गृहीत्वा व्याघ्रः त्वां जह्यां स्वोपकारिद्रोहिणं निषादं जहीति मनुष्यमांसलुब्धत्वादुवाच । ततो धर्मवित्स वानरः प्राणात्ययदशात्वादहृदयं तत्त्यागमङ्गीकृत्य व्याघ्रमुक्तस्तरुमारुह्य स्वस्यापकर्तारं किरातं पश्चादपि गत्यन्तराभावान्निजवासद्रुमस्थितिहेतुना शरणागत इत्यरक्षत् । भवान्वानराधिपत्ये स्थितः सन् स्वजातिधर्म इति शरणागतरक्षणं किंनावलम्बते । किं पुनर्मद्विधो जनः । कपोतचरितं पश्यतां मादृशां किं वक्तव्यं । मद्विधः शरणागतरक्षणाय समुच्छ्रितध्वजे रघुवंशे जातः । " षष्टिर्वर्षसहस्राणि लोकस्य चरता हितम् । पाण्डुरस्यातपत्रस्य छायायां जरितं मया " इत्युक्तरीत्या लोकरक्षणदीक्षितस्य दशरथस्य पुत्रः । वसिष्ठविश्वामित्रादिशिष्यः महायोगिना जनकेन कृतसंबन्धः " रामो विग्रहवान्धर्मः " इति प्रसिद्धः । " मर्यादानां च लोकस्य कर्ता कारयिता च सः " इति सर्वलोकानुकृतधर्मानुष्ठानः अहं संप्रति शरणागतहिंसां कुर्यां चेल्लोकः कीदृग्विधः स्यात् । मद्विधः मम वृत्तं पश्चाद्वक्ष्यते । सामान्येन धर्मसेतुर्नृपाणामिति मादृशानां संमतत्वेन स्थितः ' मद्विधः मादृशः शरणागतत्यागं न करोति । अवध्यवधोन्मुखानां रावणादीनां खल्वीदृशं कार्यं रोचते । जनः शरणागतत्यागकृत्कीदृशोत्पत्तिमान्स्यात् ॥ २५ ॥ ननु शास्त्रानधिकारिणस्तिरश्चोनुष्ठानमनुपादेयं न च चोदनामन्तरेण प्रकृतिमात्रेण धर्मत्वं सिध्यतीत्याशङ्क्य कण्डुमुनिगाथया विधानं दर्शयति—ऋषेरिति ॥ कण्वस्य पुत्रेणेत्यनेन महाकुलप्रसूतत्वं परमर्षिणेति यथार्थदर्शित्वं सत्यवादिनेति यथादृष्टार्थवादित्वं चोच्यते । तेन परमाप्तत्वं दर्शितं । वेदवचनादिसिद्धं । पुरा गीतां । कण्डुकल्पितेयमिति न मन्तव्यं । ऋच एव सामत्वात्पुरा विद्यमानामेवेदानीं गीयमानां गीतां एतत्कृतत्वेपि सामध्वनिवत्समस्तपापापनोदनक्षमां । धर्मिष्ठां वेदोक्तधर्मोपमेयस्मृत्युक्तप्रतिपादिकां । अनेन परमप्रयोजनत्वमुक्तं । सत्यवादिनीमितिपाठे अबाधितार्थप्रतिपादिनीं गाथां । अनेकार्थोचितसुलभाभ्यसनीयत्वाय संकुचितशब्दां शृणु । इतः पूर्वमेतद्गाथानाकर्णनेन खलु त्वमेवमाविलात्मासि एना-

नशीघ्रंभवतीतिवा भार्यापहर्तृभ्रातृग्रहणेभार्यापहर्तृसत्कारकर्तृनिदर्शनमुचितमितिवादौकपोतेतिहासोबोधितोरामेणेतिज्ञेयं । "मुनिरुवाच । धर्मनिश्चयसंयुक्तांकामार्थसहितांकथां । शृणुष्वावहितोराजन्गदतोमेमहाभुज " इत्यारभ्य पञ्चाध्याय्या शान्तिपर्वण्यापद्धर्मोक्ताकपोतव्याधकथात्रानुसन्धेया ॥ २५ ॥ स० पिपीलिकालिपिवद्यादृच्छिकलान्तचेष्टाधर्मेप्रमाणीस्यादित्यतोमहर्षिगीतां गाथांकथयति—ऋषेरिति । रामोक्तेस्तिर्यगतिर्यग्गादिविषयत्वादेवमादिनिदर्शनंयुक्तमितिभावः । "नहिपितुः पाण्डित्येनपुत्रःपण्डितोभवति " इतिन्यायेनातत्सदृशपुत्रगीतेत्यतस्तंविशिनष्टि—**परमर्षिणेति** । पितुःऋषित्वं एतस्यपरमर्षित्वमितितद्गीताकथा-

[ पा० ] १ ङ. झ. गाथापुरागीताधर्मिष्ठासत्यवादिना.

**बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ॥ न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥ २७ ॥**
**आर्तो वा यदि वा दृप्तः परेषां शरणागतः ॥ अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥२८॥**
**स चेद्भयाद्वा मोहाद्वा कामाद्वाऽपि न रक्षति ॥ स्वया शक्त्या यथासत्त्वं तत्पापं लोकगर्हितम् ॥२९॥**
**विनष्टः पश्यतस्तस्यारक्षिणः शरणागतः ॥ आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ३० ॥**

मवहितमनाः शृणु ॥ २६ ॥ अथ कण्डुगाथायां चतुःश्लोक्यामाद्यश्लोकेन पूर्णप्रपत्त्यसिद्धावपि गत्यन्तरशून्यतयाऽऽत्मनिक्षेपाभिप्रायव्यञ्जकशरणागतिशकलतुल्याञ्जलिबन्धादिमात्रविधानमपि हार्निं ननयेत् तत्करणमनुग्रहावहमित्याह—बद्धाञ्जलिपुटमिति ॥ अनुकूलबुद्धिवाग्वृत्त्यभावेप्यञ्जलिमात्रमेवालं। "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इति स्वतन्त्रस्याप्याशु दयाजननी मुद्रा खल्वियं । दीनं एवमञ्जलिबन्धमात्रं विनापि कार्पण्यद्योतनावस्थानमेवालं । याचन्तं अञ्जल्याद्यभावेपि कार्पण्यद्योतनेप्यहृदयप्रार्थनैवालं । शरणागतं । अञ्जलिबन्धादित्रयेप्यविद्यमाने रक्षकनिवासस्थलाभिगमनमेवालं । पूर्वं स्वरक्षाभरनिक्षेपरूपशरणागतिशकलान्युक्त्वा शरणागतमिति पूर्णप्रपत्तिरुक्तेतिवा स्यात् । अपि शत्रुं साक्षाच्छत्रुमपि । न हन्यात् । अयं शास्त्रार्थं ऐहिकाभ्युदयार्थो वा परलोकार्थो वा प्रत्यवायपरिहारार्थो वेत्युक्ते सति तेभ्यः प्राक्प्रयोजनान्तरमाह—आनृशंस्यार्थमिति । अघातुकत्वसिद्ध्यर्थमित्यर्थः । नृशंसोयमिति लोकापवादपरिहारार्थमितियावत् । यद्वा आनृशंस्यं सकलधर्मसारभूतो दयागुणः तद्रक्षणार्थंवा । यथोक्तं सीतया—"आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः" इति । परंतपेति कण्डुरपि कंचिद्राजानं प्रत्युक्तवानितिगम्यते । परंतप । शरणागते किं पौरुषप्रकटनेन प्रत्यर्थिषु खलु तत्कर्तव्यमितिभावः ॥२७॥ पूर्वं न हन्यादिति स्वेन क्रियमाणं हननमात्रं प्रतिषिद्धं । अत्र स्वेतरक्रियमाणशरणागतपीडायामपि शरणागते आर्तत्वदृप्तत्वविभागानालोचनेन प्राणान्हित्वा तद्रक्षणं कार्यमित्याह—आर्तो वेति ॥ आर्तः स्वाभिमतसंभवे विलम्बाक्षमतीव्रसंवेगवान्वा । शरणागमनवेलायामपि स्वापराधनिमित्तभयादिमान्वेत्यर्थः । दृप्तस्तु विलम्बाविलम्बावनादृत्य फलसिद्धिमात्रसक्तः । अस्यां वेलायां विनयस्वापराधभयशून्यो वा । मुमुक्षुपक्षे संसारजुगुप्सानुसंधानेन सद्य एव देहनिवृत्तिकाम आर्तः । दृप्तः शरीरावसाने मुक्तिकामः । यद्वा आर्किंचन्यानन्यगतित्वपुरस्सरं प्रपन्न आर्तः । स्तोभहेलनादिरूपेण शरणागतोस्मीति ब्रुवन् दृप्तः । परेषां शरणागतः स्वव्यतिरिक्तशरणागतः । यद्वा परेषामिति निर्धारणे षष्ठी । परेषां मध्ये शरणागतोरिः वैरे हृदि विद्यमानेपि शरणागतिशब्दमात्रमभिदधानः पुरुषः कृतात्मना निश्चितमनस्केन । धर्मशास्त्रविश्वासशालिनेत्यर्थः । प्राणान्परित्यज्य रक्षितव्यः । अस्थिरान्प्राणान्परित्यज्य स्थिरं शरणागतरक्षणं कर्तव्यं । कृतात्मनेति विशेषणेन विदुषोतिक्रमे दण्डभूयस्त्वमुक्तं । शरणागतरक्षणशास्त्रस्य निरवकाशत्वात् । सर्वथैवात्मानं गोपायेदिति शास्त्रस्य सावकाशत्वात्तद्व्यतिरिक्तविषयेप्यवस्थाप्यमितिभावः ॥ २८ ॥ एवं शरणागतरक्षणधर्मे चोदनामभिधाय तदरक्षणे प्रत्यवायमाह—सचेदिति ॥ भयात् तद्रक्षणे तच्छत्रुसकाशात् तस्माद्वा । किरातन्यायेन स्वस्यापि भयमुत्प्रेक्ष्य ततोहेतोः । मोहात् शास्त्रार्थापरिज्ञानात् । कामात् स्वच्छन्दवृत्तिस्वाभाव्यात् तच्छत्रुसकाशात्किंचिल्लाभापेक्षणाद्वा । स्वयाशक्त्या स्वकीयेन केनचित्सामर्थ्यप्रकारेण । स्वसहायसंपादनस्वकीयद्रव्यदानादिना शरीरत्यागपर्यन्तेनोपायकलापेनेत्यर्थः । यथासत्त्वं सत्त्वमनतिक्रम्य । शक्तौ सत्यामपि येन केनचिच्छलेन शक्तिवञ्चनामकृत्वा । तत् अरक्षणं । पापप्रत्यवायहेतुः । अनेन निरयहेतुत्वमुक्तं । न केवलं परलोकबाधकं । इह लोकेपि सर्वजनगर्हितमित्याह—लोकगर्हितमिति ॥ २९ ॥ न केवलमैहिकानर्थहेतुत्वमात्रं पूर्वसंचितसकलसुकृत-

ऽऽदर्तव्येत्यनेनसूचयति ॥ २६ ॥ **शि०** शत्रुमपि आनृशंस्यार्थं अतिक्रूरत्वनिवृत्त्यर्थमपिनहन्यात् । "मशकार्थोधूमः" इत्यादाविवार्थशब्दस्यनिवृत्त्यर्थकत्वंप्रसिद्धं । अतएवास्यार्थस्यप्रतिषेधोवक्तव्यइतिवार्तिकेअर्थशब्दस्यतथात्वंकैयटादिभिर्व्याख्यातं ॥ किंच आनृशंस्यार्थं स्वस्मिन्क्रूरतासंसर्गाभावार्थमित्यर्थः ॥ २७ ॥ **ति०** यःशरणागतोऽरक्षितोविनष्टःस्यात् सपश्यतस्तस्यरक्षिणः रक्षा-

**[ पा० ]** १ ङ. झ. ट. शरणंगतः. २ ग. च. तस्यरक्षितुः. क. ङ. छ. झ. ञ. तस्यरक्षिणः.

**एवं दोषो महानत्र प्रपन्नानामरक्षणे ॥ ३१ ॥**
**अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ॥ करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् ॥**
**धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये ॥ ३२ ॥**
**सकृदेव प्रपन्नाय तवास्मीति च याचते ॥ अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ ३३ ॥**

विनाशकमपीत्याह—विनष्ट इति ॥ यः कश्चिद्यं कंचिच्छरणमागतः । तमरक्षिणस्तस्य पश्यतः रक्षकत्वेन वृते समर्थे च तस्मिन्पश्यति । तेनारक्षणेनैव स्वशत्रुसकाशाद्विनष्टश्चेत् तस्य अरक्षकस्यसंबन्धि अनादिकालसंचितं सर्वं सुकृतमादाय गच्छति । अस्यारक्षकस्य समार्जितसकलसुकृतक्षयोभवतीत्यर्थः ॥ ३० ॥ कण्डुवचनचतुःश्लोकीतात्पर्यं संग्रहेणाह—एवं दोषो महानत्र प्रपन्नानामरक्षण इत्यर्धेन ॥ ३१ ॥ विस्तरेणाह–अस्वर्ग्यमित्यादिना ॥ अस्वर्ग्यं स्वर्गविरुद्धं । नरकहेतुभूतमित्यर्थः । अयशस्यं अकीर्तिकरं । बलवीर्यविनाशनं । ययोः शारीरबलवीर्ययोः सतोरेव शरणागतो न रक्षितः तयोर्विनाशकमित्यर्थः । अत्र अरक्षणमिति विशेष्यमनुषज्यते । एवं शरणागतरक्षणे कण्डुवचनं प्रमाणयित्वा धर्मसंस्थापनप्रवृत्तस्य ममैतदवश्यंपालनीयमित्याह—करिष्यामीति ॥ उत्तमं लोकादृतं । न केवलमकरणे प्रत्यवायबाहुल्यं करणे दृष्टादृष्टाभ्युदया बहवः सन्तीत्यपि कण्डुवचनतात्पर्यमिति रामः स्वयमाह—धर्मिष्ठमिति ॥ पापनिवर्तकधर्मोपेतत्वं विवक्षितं । फलहेतुधर्मोपेतत्वस्य स्वर्ग्यमित्यनेनैव सिद्धत्वात् । फलोदये फलप्रदानकालेसमुपस्थिते । स्वर्ग्यं । स्वर्गहेतुरित्यर्थः । अत्र प्रतिपाद्यगतं धर्मिष्ठत्वादिकं प्रतिपादकवचने समुपचर्यते ॥ ३२ ॥ एवं “ श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्संकल्पजः कामोधर्ममूलमिदं स्मृतं ” इति याज्ञवल्क्योक्तधर्मप्रमाणेषु श्रूयत इत्यनेन, तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीत्यादिना श्रुतिः । कण्डुगाथामुखेन स्मृतिः । कपोतादिना शिष्टाचारः । प्रतिपक्षनिरसनपूर्वकबलवदुपपादनेन स्वप्रियत्वं चेत्येवं चतुर्षु प्रमाणेषु प्रपन्नरक्षणरूपपरमधर्मविषयेषु दर्शितेषु संप्रति तत्र प्रमाणं पञ्चमं दर्शयति—सकृदेवेति ॥ सकृदेव एकवारमेव । उपायान्तरेष्वावृत्तिः शास्त्रार्थः प्रपत्तौ त्वनावृत्तिः “ सकृदेव हि शास्त्रार्थः कृतोयं तारयेन्नरं ” इत्युक्तेः । प्रपन्नाय गत्यर्था ज्ञानार्था इति न्यायेनात्र मानसप्रपत्तिरुच्यते । तवास्मीति तु वाचिकी । उभयोरन्यतरेण युक्तायापीत्यर्थः । यद्वा प्रपन्नायेत्युपायः कथ्यते । तवास्मीति च याचत इति तच्छेषवृत्तिलक्षणफलविशेषप्रार्थना । एवंभूतायाधिकारिणे । सर्वभूतेभ्य इति “ भीत्रार्थानां भयहेतुः ” इत्यपादानत्वं । भयहेतुतया शङ्कितेभ्यः सर्वभूतेभ्यः । अभयं भयाभावं । ददामि । अभयमेव मोक्षो नाम । “ अथ सोभयं गतो भवति आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति” इति ब्रह्मविद्याफलत्वेन श्रवणात् । एतत् तवास्मीति फलविशेषयाच्ञेति पक्षस्यानुकूलं । पक्षान्तरे त्रैवर्गिकफलानामप्येतदुपलक्षणं । स्वस्य सकलफलप्रदत्वात् । एतद्व्रतं मम व्रतवदिदं कस्यांचिदपिदशायां परित्यागायोग्यमित्यर्थः । अत्र सर्वभूतेभ्य इत्यपि चतुर्थी । प्रपन्नसंबन्धिभ्योपि सर्वभूतेभ्योभयं

र्वृतस्य समक्षमेवतस्यरक्षिणःसर्वसुकृतमादायगच्छेत् ॥ **स०** तस्यस्वरक्षणसमर्थस्याप्यरक्षितुःसुकृतं । उपलक्षणमेतत् । स्वपापंतस्मैदत्वेत्यपिग्राह्यं ॥ ३० ॥ **ति०** एतदन्ताःकण्डुगाथाः । अथरामवाक्यं—एवमिति ॥ ३१ ॥ **ति०** अस्वर्ग्यं स्वर्गप्रतिबन्धकं ॥ **स०** अस्वर्ग्यं अस्वर्गप्रापकं ॥ ३२ ॥ **ति०** अत्रवर्तमानप्रयोगेणनित्यसत्सहजधर्मत्वमभयदानस्यद्योत्यते । तदेवाह—एतन्ममव्रतमिति । नित्यपरिगृहीतःनित्यनिजप्रतिष्ठितोस्मद्धर्मइत्यर्थः । अत्रतात्कालिकमात्यन्तिकंचेत्युभयविधमप्यभयदानंप्रतिज्ञायते । तत्रात्यन्तिकंसंसारभयोपरतिरूपं । द्वितीयंतुरावणादितउत्थितमृत्युभयनिवृत्तिरूपं । इदंचोरारिग्रहनिमित्तकाभयदानस्याप्युपलक्षणं । नन्वेवंसर्वेश्वरस्यापितवनिमित्ताभयदातृत्वेवैषम्यनैर्घृण्यादिदोषप्रसङ्गस्तत्राह—सकृदिति । अनेनोभयविधाभयदानस्यसाधनमुपदिश्यते । सकृदेकयैववृत्त्याप्रपन्नाय । पदिर्गत्यर्थः । प्रकृष्टप्रतिपत्तिमते । प्रतिपत्तौप्रकर्षश्चनिरन्तरत्वं । साच तत्त्वमस्यादिवाक्यजन्याभगवतःस्वात्मत्वेनप्रतिपत्तिः । अयंच “ ज्ञानीत्वात्मैवमेमतः ” इतिगीतोक्तः । अयमेवात्यन्तिकाभयदानपात्रं । द्वितीयाभयदानसाधनमाह “ तवास्मीतिचयाचते ” इति । औपाधिकभेदमवलंब्यतवाहंसेवकस्त्वंमेस्वामी अहंशिष्यस्त्वंगुरुः अहंरक्ष्यस्त्वंरक्षकइत्येवमुपासनांकुर्वतः “ द्वितीयाद्धिभयंभवति ” इतिन्यायेनावश्यंप्राप्तभयस्यसर्वभूतेभ्योयथाभयं नभवतितथायतामीतिमेव्रतमित्यर्थः । अतथाभूतेभ्यस्तुनयच्छामीतिननैर्घृण्यादिदोषप्रसङ्गइतिभावः । **स०** सकृत् एकवारं प्रप-

आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥ विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ॥ ३४ ॥
रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः ॥ प्रत्यभाषत काकुत्स्थं सौहार्देन प्रचोदितः ॥ ३५ ॥
किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावह ॥ यत्त्वमार्य प्रभाषेथाः सत्त्ववान्सत्पथे स्थितः ॥ ३६ ॥
मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् ॥ अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ॥ ३७ ॥

ददामि । "पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदं" इत्युक्तेः ॥३३॥ एवमुक्ते सत्यसंभवद्दुत्तरं प्रशान्तप्रेमान्ध्यतया प्रसन्नमुखं विभीषणाभिमुखं सुग्रीवमालोक्य तमेव तदानयने नियुङ्क्ते—आनयैनमिति ॥ निवेदयतेति सपरिवारान्युष्मान् । पुरुषकारतया वृतवन्तमेनं यूयमेवानयत । तथा सत्येतावत्पर्यन्तमस्वीकारकृतदुःखमस्य निवर्तेत । हरिश्रेष्ठ तस्य दुःखनिवृत्तये त्वमेव गत्वानयसि चेन्मयि स्नेहवद्भ्यो हरिभ्यः श्रेष्ठं भवन्तमतिक्रम्य किमहं स्वीकरोमि । दत्तमस्याभयं मया । अस्य स्वबन्धुत्यागपूर्वकं स्वनिकर्षकीर्तनपुरःसरं चागतस्य मया मित्रभावेनैवालमिति मन्यमानेन अभयं दत्तं । शरणशब्दश्रवणकाल एवेति शेषः । कथमानयेयमित्याकुलितं समाधत्ते—विभीषणो वेत्यादिना । विभीषणो वा । "विभीषणस्तु धर्मात्मा" इति विभीषणस्वीकारो धर्मवत्स्वीकारतया नोत्कर्षाय । रावणस्य नृशंसस्येति रावणस्वीकारएवोत्कर्षःस्यादिति । विभीषणस्वीकारे तत्परिकराश्चत्वार एवरक्षिताःस्युः । रावणस्वीकारेतु लङ्कास्थाः सर्वेपि रक्षिताःस्युरितिमहाँल्लाभः । सुग्रीव । अस्माकमागतोतिशयो युष्माकं तुल्यः खलु । "एकं दुःखं सुखं च नौ" इत्युक्तेः । यदि वा रावणः स्वयं यत्संबन्धेन विभीषणेप्यतिशङ्का स एवास्तु स्वयं । सीतामपुरस्कृत्य स्वयमागतो रावणो वास्तु । यद्वा स्वयं अयं यदि विभीषणो न भवति किंतु कामरूपी रावण एव विभीषणभूमिकां परिगृह्य यद्यागतः तथाप्यस्याभयं मया दत्तं । त्वमपि रावणोयं न तु विभीषण इति विज्ञापनायापि पुनर्नागच्छेः । किंत्वानयैवेत्यर्थः ॥ ३४ ॥ अथ सुग्रीवः कचिदप्यसंभावितं रामस्य शरणागते स्वस्मिंश्च सौहार्दातिशयमालोच्य विस्मयपरवश आह—रामस्येति ॥ सौहार्देन प्रचोदितः । सर्वानपि दोषाननालोच्य विपरीतप्रवृत्तान् पूर्वसुहृदो नानाप्रकारैरनुनीय यदि वा रावणः स्वयमिति वदतो रामचन्द्रस्य कोयं सौहार्दातिशय इति विस्मयेन प्रेरित इत्यर्थः ॥ ३५ ॥ एवं विस्मयातिशयाद्वक्तुमुपक्रान्तो रामस्य स्वाभाविकान्कल्याणगुणौघानालोच्य सहजधर्मत्वादेतद्रामे नाश्चर्यकरमित्याह—किमिति ॥ धर्मज्ञ । धर्मसूक्ष्मतत्त्वज्ञस्य तव धर्मानुष्ठानं किमाश्चर्यं । लोकनाथ । भृत्यवर्गसंरक्षणं स्वामिनः किं चित्रं । सुखावह । स्वयमवाप्तसमस्तकामत्वेन परप्रयोजनैकपरायणस्य सर्वसुखकारिणस्तव शरणागतेषु समाश्रितेष्वस्मासु सुखकारित्वे कोवा विस्मयः । आर्य समीचीनं । सत्त्ववान् प्रशस्ताध्यवसायवान् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । दृढव्रतस्य व्रतपरिपालनंकिमद्भुतं । यद्वा सत्त्वं बलं सर्वशक्तेस्तव समाश्रितभयनिवारणं किमाश्चर्यं । सत्पथे स्थितः । धर्मसंस्थापनार्थमेवावतीर्णस्य शरणागतरक्षणरूपविशेषधर्मानुष्ठानं नाश्चर्यमित्यर्थः । प्रपन्नसंरक्षणे धर्मज्ञत्वादिष्वन्यतम एव गुणः पर्याप्तः । किमुत सर्वेपि समुदिता इतिभावः ॥ ३६ ॥ किमस्मत्प्रशंसनेन त्वन्मनःप्रवृत्तौ खलु विभीषणो ग्राह्यः स्यात्तत्राह—ममेति ॥ मम । "वध्यतामेष तीव्रेण दण्डेन" इत्युक्तवतोपि । न केवलमस्मिन्नर्थे मदन्तःकरणप्रवृत्तिरेकमेव प्रमाणं । प्रमाणान्तराण्यपि सन्तीत्याह—अनुमानादिति । अनुमानात् त्वया हनुमता चोक्तयुक्तिकदम्बात् । भावात् भावबोधकान्मुखप्रसादादिलिङ्गात् । सर्वतः सर्वत्र । अन्तर्बहिश्चेत्यर्थः । यद्वा अनुमानात् हृदयप्रकाशकमुखविकासादिलिङ्गात् । भावात् आर्तध्वनिप्रकाशितमृदुस्वभावात् । चशब्देन वध्यतामपीत्युक्तावस्थायां न त्यजेयमिति कालेप्येकरूपत्वं समुच्चीयते । सुपरीक्षितः संशयविपर्ययराहित्येन परीक्षितः । अन्तरात्मा अन्तःकरणं । चापीति

त्राय शरणंगताय । तेननतत्रपरीक्षापेक्षेतिसूचयति ॥ ३३ ॥ ति० लोकनाथानांराज्ञांशिखामणे ॥ ३६ ॥

[ पा० ] १ झ. सौहार्देनाभिपूरितः. २ ङ. च. झ. ट. नाथशिखामणे.

**तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ॥ विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ॥ ३८॥**
**ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः ॥**
**विभीषणेनाशु जगाम संगमं पतत्रिराजेन यथा पुरंदरः ॥ ३९ ॥**
**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टादशः सर्गः ॥ १८ ॥**

## एकोनविंशः सर्गः ॥ १९ ॥

विभीषणेन मन्त्रिभिःसहगगनादवतीर्य श्रीरामचरणप्रणामपूर्वकं तंप्रति स्ववृत्तान्तनिवेदनेनसहस्वशरणागतिनिवेदनम् ॥ १ ॥ विभीषणेन रामचोदनयातंप्रतिरावणकुंभकर्णादिपराक्रमनिवेदनपूर्वकं यथाशक्तियुद्धसाहाय्यकरणप्रतिज्ञानम् ॥ २ ॥ रामेण विभीषणपरिष्वङ्गपूर्वकंतस्य लक्ष्मणकरेणलङ्काराज्येऽभिषेचनम् ॥ ३ ॥ हनुमत्सुग्रीवाभ्यांसागरतरणोपायंपृष्टेनविभीषणेन तौप्रति रामेणसमुद्रंप्रतिशरणागतिकरणोक्तिः ॥ ४ ॥ रामेण लक्ष्मणसुग्रीवाद्यनुमत्यासमुद्रोपासनाय तत्तीरेसमास्तृतकुशोपरिशयनम् ॥ ५ ॥

**राघवेणाभये दत्ते सन्नतो रावणानुजः ॥ विभीषणो महाप्राज्ञो भूमिं समवलोकयन् ॥**
**खात्पपातावनीं हृष्टो भक्तैरनुचरैः सह ॥ १ ॥**

रामान्तःकरणसमुच्चयार्थः ॥ ३७ ॥ पूर्वमानयैनमिति नियुक्तमनुतिष्ठति—तस्मादिति ॥ क्षिप्रं पूर्वमज्ञानवशान्मया पापमाचरितं । तत्त्वविचारे त्वयं क्षणमात्रं विलम्बानर्ह इतिभावः । तुल्यो भवतु । निवेदयत मामिति पुरुषकारकरणायाभ्यर्थितानां नृशंसानामस्माकं पुरुषकारत्वं संपादयितुमेव तवायं प्रयासश्च सिद्धः । इतःपरमस्माभिः पुरुषकारव्यापारः क्रियत इत्यर्थः । एवं विभीषणस्य पुरुषार्थमर्थयित्वा तत्सख्यरूपं स्वेषां पुरुषार्थमर्थयते—विभीषण इति । महाप्राज्ञः फलसाधनोपयोगिज्ञानवान् । न केवलं ममैव सर्वेषामिदं फलं समानमिति दर्शयितुं नः सखित्वमित्युक्तं ॥ ३८ ॥ एवं सुहृत्तरसुग्रीवाभ्यनुज्ञानानन्तरं शरण्यस्य शरणागतसंगमविशेषं दर्शयति—तत इति ॥ सुग्रीववचो निशम्य ततो हरीश्वरेणाभिहितं विभीषणेन संगमं जगामेत्यन्वयः । अभिहितं हे विभीषण राघवस्तवाभयं दत्तवान् राघवमुपयाहीत्येवं सुग्रीवोक्तं । नरेश्वरः संगमं जगामेति संगमोपि कर्तुरीप्सिततमत्वकथनेन रामस्यायं लाभ इति गम्यते । न त्यजेयं कथंचनेत्यादिभिः सुग्रीवादिवाक्यरूपविरोधिनिरसनपूर्वकं श्रीविभीषणस्वीकारं प्रतिश्रुत्य कथंचित्सुग्रीवादिवाक्यजनितं विलम्बमविषह्य त्वरया रक्षितुं स्वयमेव तेन संगत इत्याह—विभीषणेनाशु जगाम संगममिति । आशु त्वरितं । आश्रितसंश्लेषे स्वयं त्वरातिशयवानितिभावः । पुरंदरो यथा पतत्रिराजेन संगमं स्वलाभममन्यत तथाऽयमपीति दृष्टान्ताभिप्रायः । यद्वा सुग्रीवस्य बुद्धिः पुनर्विपरीता चेत्कार्यहानिरिति शीघ्रं जगाम ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

---

एवं शरणस्य शरणागतसंगमरूपफलमुक्त्वा शरणागतस्य शरण्यसेवाख्यपुरुषार्थलाभमाह—राघवेणेत्यादि सार्धश्लोक एकान्वयः ॥ अभये स्वापेक्षिते सर्वभूताभये दत्ते । सन्नतः । "गुणैर्दास्यमुपागतः" इति न्यायेन पूर्वश्रुतेभ्योप्यधिकानां रामकल्याणगुणानां साक्षात्कारेण सम्यक्प्रह्वीभूताङ्गः । महाप्राज्ञः । निरपायोपायपरिग्रहेण परमपुरुषार्थलाभाद्वेदशास्त्राभ्या-

---

**स०** तुल्यः दास्येनेतिशेषः । यद्वा भ्रातृहननमुखेनराज्यप्राप्त्यासमोभवतु । "आत्मनिगुरावेकेषां" इत्यादेर्बहुवचनं ॥३८॥ **स०** हरीश्वरेणहनुमताभिहितंविभीषणेनसंगमंसख्यंजगाम मनसेतिशेषः । पतत्रिराजेन गरुडेन । पुरंदरोयथाअमृतहरणकाले सख्यंजगामतद्वत् ॥ ३९ ॥ इत्यष्टादशःसर्गः ॥ १८ ॥

**स०** सन्नतः प्रवणः । सत्स्वभावत्वात्सत्सुनतइतिवा । भूमिंसमवलोकयत् । अवतरणायेतिभावः ॥ १ ॥ **स०** हृष्टः महा-

**[ पा० ]** १ ङ. झ. समवलोकयत्.

**स तु रामस्य धर्मात्मा निपपात विभीषणः ॥ पादयोः शरणान्वेषी चतुर्भिः सह राक्षसैः ॥ २ ॥**
**अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः ॥ धर्मयुक्तं च युक्तं च सांप्रतं संप्रहर्षणम् ॥ ३ ॥**
**अनुजो रावणस्याहं तेन चाप्यवमानितः ॥ भवन्तं सर्वभूतानां शरण्यं शरणागतः ॥ ४ ॥**
**परित्यक्ता मया लङ्का मित्राणि च धनानि वै ॥ भवद्गतं मे राज्यं च जीवितं च सुखानि च ॥५॥**

सातिशयजनितप्रज्ञातिशयस्य फलमिदानींनिर्वृत्तमिति भावः । भूमिं समवलोकयन् । अन्तरङ्गसचिवसमूहसंमर्दनिरवकाशेपि रामपुरोदेशे सचिवैरेव सयूथ्यतामापन्नस्य विभीषणस्य स्वपरिषन्मध्ये दत्तं भूतलावकाशं सम्यक्पश्यन् । खादवनीं पपातेति प्राथमिकोदूरप्रणाम उच्यते । प्रणामाद्ययोग्यस्थानमाकाशं परित्यज्य पाणिपादशिरःप्रभृतिभिरष्टाङ्गैर्भूमिं प्राप्तवानित्यर्थः । नन्वपेक्षितमभयं दत्तमेव पुनः किमर्थं प्रणनामेत्यत्राह—हृष्ट इति । रामस्य स्वरूपरूपगुणानुभवजनितहर्षविवशीकृतशरीर एव प्रणतः । नतु किमपि प्रयोजनमुद्दिश्येत्यर्थः । भक्तैरनुचरैः सहेति । " राघवं शरणं गतः । निवेदयत मां"इति विभीषणस्यैकस्यैवोपायानुष्ठानश्रवणेपि तदनुबन्धिनां तद्भक्तिवशादेव रामपरिचरणं समानमित्युच्यते । उक्तं हि " पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदं" इति ॥ १ ॥ पूर्वं वाचिका प्रपत्तिः कृता संप्रति कायिकशरणागतिं प्रयुङ्क्ते—स त्विति ॥ स तु पूर्वस्माद्विलक्षणः ।संशयविपर्ययनिवृत्त्या अनुकूलत्वनिर्णयविषय इत्यर्थः । धर्मात्मा सर्वावस्थास्वप्यप्रच्युतशरणागतिधर्मनिष्ठावान् । "वध्यतामिति । शङ्क्यतामिति । न त्यजेयमिति । आनयैनमिति अस्माभिस्तुल्यो भवत्वि"ति चोक्तासु सर्वावस्थास्वप्यविचारेणैकरूपचित्त इत्यर्थः । अनेन विभीषणस्य महाविश्वास उक्तः । शरणान्वेषी कृतशरणवरणः । विभीषणः रामस्य स्वस्मिन्पक्षपातातिशयद्योतकाभिरामाकारस्य पादयोः स्तनन्धयस्य मातृस्तनवत् श्रीपादावेव स्वस्य भोग्यभूताविति पपात । अन्यैरागत्य प्रशिथिलानवयवान् सम्यग्योजयित्वा यथोत्थाप्येत तथा पपात । चतुर्भिः सह राक्षसैः । करचरणाद्यवयववत्तत्परतन्त्रैरित्यर्थः । तत्रानुकूल्यसंकल्पप्रातिकूल्यवर्जनवत्त्वमुक्तं । धर्मात्मेति महाविश्वासः शरणान्वेषीति गोप्तृत्ववरणं पपातेत्यात्मनिक्षेप इति साङ्गशरणागतिः कृता भवति ॥ २ ॥ एवं कायिकी शरणागतिरुक्ता । अथ वाचिकीं दर्शयति—अब्रवीदिति ॥ तदा पादपतनसमये । तत्र सुग्रीवादीनां सर्वेषामैकमत्यवति सदसि । रामं पूर्वं सुग्रीवादिपुरुषकारभूतान् प्रति संप्रति शरण्यमेव धर्मयुक्तं शरणागत्यङ्गानुकूलसङ्कल्पादिधर्मयुक्तं । युक्तं समर्थकारुणिकशरण्यविषयतया योग्यं । सांप्रतं संप्रहर्षणं । पूर्वं राघवं शरणं गत इत्युक्तिदशायां सुग्रीवादीनां श्रुतिकटुकं जातं । इदानीं सर्वसंप्रहर्षणं ॥ ३ ॥ अनुज इति पूर्वं निवेदयतेत्यत्र पुरुषकारभूतान्प्रत्युक्तं । इदानीं साक्षाच्छरण्यं प्रतीति नपुनरुक्तिः । पूर्वार्धेन स्वदोषख्यापनादाकिंचन्यमुक्तं । सर्वभूतानां शरण्यं रावणस्यापि शरणं भवामीति कृतसङ्कल्पं । भवन्तंज्ञानशक्त्यादिपरिपूर्णं ॥ ४ ॥ अनन्तरं प्राप्यान्तरनिरसनपूर्वकं त्वमेव प्राप्यइत्याह—परित्यक्तेति ॥ लङ्का

लाभोजातइतिप्रीतमनाः रामस्यपादयोः । अनेन नकेवलमयमंबरचरऐहिकफलावलंबी । किंतुमोक्षज्ञानानन्दाद्यर्थीचेतिसूचयति । यथोक्तंबृहदारण्यकोपनिषद्भाष्ययोः । " सुवरितिप्रतिष्ठे द्वेएतेप्रतिष्ठे द्वेएतेअक्षरे । " " स्वित्यानन्दःसमुद्दिष्टो वरिति ज्ञानमुच्यते । मोक्षदानेन तद्दानात्सुवरस्य पदद्वयम् । दक्षिणश्चेति सव्यश्च " इति । अथ अवतरणानन्तरं । चतुर्भिःसचिवैःसह सहितः । यः निपपाता नितरांपान्ति जगदिति निपाः ब्रह्माद्याः । तान्पातिस्वभावेन नफलाशयेति निपपाता । तंरामंप्रति विभीषणोऽब्रवीदिति श्लोकद्वयस्यैकान्वयः । अथवा स्वयंपादयोर्निपपात । स्वामित्वात्स्वस्यप्रथमतःप्रणामः अथ अनन्तरं । सविभीषणः चतुर्भिःसचिवैःसहनिपपात । अथवा खात्पपातेतिपूर्वं । अनन्तरं रामस्यसमीपतइतिशेषः । अथ तदनन्तरंचतुर्भीराक्षसैःसहरामस्यपादयोर्निपपात । एतंविशेषं तुशब्दउद्बोधयति ॥ अथ विभीषणस्यरामपादनिपतनानन्तरं । सरावणः चतुर्भीराक्षसैः कुंभकर्णमहापार्श्वेन्द्रजित्प्रहस्तैःसहनिपपातेतिमध्ये एष्यन्नयेनकविवचनंवा । चतुर्भिरभिहितैःसहेतरराक्षसैर्वारामप्रणिपातस्तन्निपातहेतुरितिभावः ॥ १—२ ॥ **स०** भवन्तं सर्वभूतानांशरण्यं । अनेनाग्रजस्यमहाद्रोहेणसहवासायोग्यता स्वस्यश्रीरामे भगवदवतारतामतिंचसूचयति ॥ ४ ॥ **स०** मित्राणि पूर्वंमित्रवदनुकृतानि । परित्यक्तानीतिलिङ्गवचनव्यत्यासेनवा यस्यांमित्राणि

[ पा० ] १ ङ. झ. ठ. पादयोर्निपपाताथ. २ ख. ग. ङ. च. ज.—ट. चास्म्यवमानितः. ३ ङ. झ. ट. भवद्गतंहिमेराज्यं.

तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ॥ वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ॥ ६ ॥
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥ ७ ॥
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा ॥ रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ ८ ॥
अवध्यः सर्वभूतानां [1]गन्धर्वासुररक्षसाम् ॥ राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ॥ ९ ॥
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् ॥ कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ॥ १० ॥
राम सेनापतिस्तस्य प्रहस्तो [2]यदि वा श्रुतः ॥ कैलासे येन [3]संग्रामे माणिभद्रः पराजितः ॥ ११ ॥
बद्धगोधाङ्गुलित्राणस्त्ववध्यकवचो युधि ॥ धनुरादाय यस्तिष्ठन्नदृश्यो भवतीन्द्रजित् ॥ १२ ॥
[4]संग्रामसमयव्यूहे तर्पयित्वा हुताशनम् ॥ अन्तर्धानगतः [5]शत्रूनिन्द्रजिद्धन्ति राघव ॥ १३ ॥
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः ॥ [6]अनीकस्थास्तु तस्यैते लोकपालसमा युधि ॥ १४ ॥
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् ॥ मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ॥ १५ ॥
स तैस्तु सहितो राजा लोकपालानयोधयत् ॥ १६ ॥
सह देवैस्तु ते भग्ना रावणेन [7]महात्मना ॥ १७ ॥

वासस्थानं । मित्राणि सुहृदः । धनानि तद्द्वारा समागतानि सोपाधिकानि वस्तूनि प्राप्यान्तराणि त्यक्तानीत्यर्थः । भवद्गतं त्वदधीनं । राज्यमिति सर्वपरिग्रहोपलक्षणं । जीवितमिति धारकपोषकभोग्योपलक्षणं । सुखानि ऐहिकामुष्मिकरूपाणि । इदं सर्वं भवद्गतं भवत्कैङ्कर्यान्तर्गतं भवत्कैङ्कर्यविना अन्यन्नाहमभ्यर्थयामीत्यर्थः ॥ ५ ॥ तस्य सर्वपरिग्रहत्यागपूर्वकं रामेन्यस्तभरस्य । तद्वचनं रामकैङ्कर्यमेव सकलभोग्यजातमिति वाक्यं । सान्त्वयित्वा शरणं गत इत्युक्तिसमय एव स्वीकार्योसि एतावत्पर्यन्तं विलम्बः क्षन्तव्य इति सान्त्ववचनान्युक्त्वा । लोचनाभ्यां पिबन्निव सान्त्ववचनेन तस्य हृदयमार्द्रं कृत्वा अत्यादरेण विलोकयन्नित्यर्थः ॥ ६ ॥ एवं विभीषणेन कायिककैङ्कर्ये प्रार्थिते कायिककैङ्कर्यं पश्चाद्भविष्यतीति संप्रति वाचिककैङ्कर्यं कुर्विति दर्शयति—आख्याहीति ॥ अत्र भवदीयानामित्यनुक्त्वा राक्षसानामित्युक्तेरयं राक्षसजातिर्न भवति किन्त्विक्ष्वाकुवंश्य इति रामो मेने इतिगम्यते । भ्रमरकीटन्यायेन सद्यः स्वसाम्यप्रदं हि भगवदाश्रयणवैभवं ॥ ७—८ ॥ सर्वभूतानामित्येतत् गन्धर्वादिव्यतिरिक्तपरं । राजपुत्रेति संबुद्ध्या मानुषवध्यत्वं द्योतयति ॥ ९ ॥ प्रतिबलः समानबलः ॥ १० ॥ कैलासे वर्तमान इति शेषः । माणिभद्रः कुबेरसेनापतिः यदिवा श्रुत इति । हनुमत इति शेषः ॥ ११ ॥ बद्धेति । अङ्गुलीस्त्रायत इत्यङ्गुलित्राणं अङ्गुलिकवचं । "गोधा तलं ज्याघातवारणे" इत्यमरः । अनेन निरन्तरशरसन्धायीति गम्यते । अवध्यकवचः अभेद्यकवचः । युधि अदृश्यो भवतीत्यन्वयः । हनुमद्ग्राहकत्वेन प्रसिद्धत्वात्तस्य रावणपुत्रत्वानुक्तिः ॥ ११ ॥ कुतोस्यादृश्यत्वशक्तिः अदृश्यश्च किं करोतीत्याह—संग्रामेति ॥ संग्रामसमयकृतव्यूहे । तर्पयित्वा होमैःप्रीणयित्वा ॥१३॥ महोदर इत्यादि श्लोकद्वयं ॥ अनीकस्थाः सेनापतयः । एते महोदरादयः दशकोटिसहस्राणि सन्तीति शेषः ॥ १४—१५ ॥ स तैरित्यर्धं ॥ १६ ॥ न केवलं योधनं पराजिताश्च ते लोकपाला इत्याह—सह देवैरित्यर्धमेकं वाक्यं ॥ देवैः लोकपालभिन्नैः । ते

धनानिच सालङ्कापरित्यक्तेतिवाऽन्वयः । मेराज्यं । जीवितं जीवनं । सुखानि ऐहलौकिकानि । पारलौकिकानिच । भवद्गतानि पूर्वस्मात्परित्यक्तामयालङ्केत्यावृत्तं सद्भवद्गतेतिविपरिणतेनान्वेति । परित्यक्तः आमयोरोगरूपी प्राकाराद्यङ्गभङ्गकारित्वाद्रावणः यया सालङ्का । भवद्गता । एतेन एकांमूलनगरींस्थापयित्वावा स्वस्यास्त्वितिरामेणगृहीत्वाराज्यप्रदानंनाभिप्रेतं विभीषणेनरामवदान्यताज्ञेनेतिभावः ॥ ५ ॥ ति० दशकोटिसहस्राणि । इदंच प्रधानराक्षसविवक्षया ॥ १५ ॥

[ पा० ] १ ङ. झ. ट. गन्धर्वोरगपक्षिणां. २ झ. ञ. यदिते. ३ ङ. झ. ट. समरे. ४ ख. घ.—ट. संग्रामेसुमहद्व्यूहे. ५ ङ. झ. ट. श्रीमानिन्द्र. ६ ङ. झ. अनीकपास्तु. ग. अतिकायास्तु. ७ क. घ.—ट. दुरात्मना.

[1]विभीषणवचः श्रुत्वा रामो दृढपराक्रमः ॥ अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १८ ॥
यानि कर्मापदानानि रावणस्य विभीषण ॥ आख्यातानि च तत्वेन ह्यवगच्छामि तान्यहम् ॥ १९ ॥
अहं हत्वा दशग्रीवं सप्रहस्तं स[2]बान्धवम् ॥ राजानं त्वां करिष्यामि सत्यमे[3]तद्ब्रवीमि ते ॥ २० ॥
रसातलं वा प्रविशेत्पातालं वाऽपि रावणः ॥ पितामहसकाशं वा न मे जीवन्विमोक्ष्यते ॥ २१ ॥
अहत्वा रावणं संख्ये सपुत्र[4]बलबान्धवम् ॥ अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ॥ २२ ॥
श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ॥ शिरसाऽऽवन्द्य धर्मात्मा व[5]क्तुमेवोपचक्रमे ॥ २३ ॥
राक्षसानां वधे साह्यं लङ्कायाश्च [6]प्रधर्षणम् ॥ करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥ २४ ॥
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ॥ अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥ २५ ॥
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् ॥ राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥ २६ ॥
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ मध्ये वानरमुख्यानां राजानं [7]राजशासनात् ॥ २७ ॥
तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ॥ प्रचुक्रुशुर्महात्मानं साधुसाध्विति चाब्रुवन् ॥ २८ ॥
अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् ॥ २९ ॥

लोकपालाः । महात्मना महाधैर्येण ॥ १७ ॥ अन्वीक्ष्य आलोच्य । सर्वं कर्तव्याकर्तव्यं ॥ १८ ॥ कर्मापदानानि । "अपदानं कर्मवृत्तं" इत्यमरः । करिकलभ इत्यत्रेव कर्मशब्दप्रयोगः । शौर्यकृतव्यापारा इत्यर्थः । अवगच्छामि अवधारयामीत्यर्थः ॥ १९ ॥ आलोचितमर्थमाह—अहमित्यादिना ॥ २० ॥ रसातलं भूविवरं । पातालं अधोलोकं । पितामहसकाशं स्ववरप्रदसमीपं । उपरितनलोकावधिभूतं सत्यलोकं वा । मे मत्तः ॥ २१ ॥ उक्तमर्थं व्यतिरेकमुखेन द्रढयन् सत्यमेतद्ब्रवीमि त इत्युक्तं विवृणोति—अहत्वेति ॥ सङ्ख्ये युद्धे । तैः प्रसिद्धैः । भ्रातृभिरिति हेतुविवक्षया तृतीया ॥ २२ ॥ स्वानभिमतराज्यप्रदानप्रतिज्ञानात् वन्दनपूर्वकं स्वाभिमतं कैङ्कर्यमेव प्रयोजनान्तरनिवृत्तयेऽर्थयते—श्रुत्वेत्यादिना ॥ आवन्द्येति च्छेदः ॥ २३ ॥ साह्यं साहाय्यं । सहशब्दः सहायवाची । यथाप्राणं यथाबलं ॥ २४ ॥ एवं कैङ्कर्यव्यतिरिक्तफलमनाकाङ्क्षमाणं विभीषणं परिष्वङ्गेन वशीकृत्यानुषङ्गिकमपि फलं मत्प्रदत्तमङ्गीकर्तव्यमित्यभिप्रायेण लक्ष्मणमादिशति—इतीति ॥ २५ ॥ तेन समुद्रजलेन । महाप्राज्ञं कैङ्कर्यपर्यन्तस्वशेषत्वस्वरूपज्ञं । मयि प्रसन्ने सतीत्यनेन अभिषेको विभीषणेनानाकाङ्क्षित इति गम्यते । मानद बहुमानप्रद । मत्प्रसादे सति फलप्रदस्त्वमिति भावः ॥ २६ ॥ मध्ये वानरमुख्यानामित्यनेन महत्समाजे कृतमलङ्घनीयमिति द्योत्यते । राजशासनादित्यनेनालङ्घनीयं राजशासनमिति विभीषणोऽनुमेन इति भाव्यते ॥ २७ ॥ प्रचुक्रुशुः हर्षनादं चक्रुः । महात्मानं रामं । अब्रुवन् प्राशंसन्नित्यर्थः ॥ २८ ॥ अथ समयान्तरे कुत्रचिदेकान्ते प्रदेशे हनुमत्सुग्रीवौ स्थलज्ञं विभीषणं वानरसेनातरणोपायमपृच्छतामित्याह—अब्रवीच्चेति ॥

**ति०** कर्मापदानानि युधिकर्मनिर्वर्तितशौर्याणि । तान्यहमवगच्छाम्येव । नतुतानिभयिप्रभविष्यन्तीतिभावः ॥ **स०** कर्मापदानानि अपदानानि अतिवृत्तानि अमर्यादयाकृतानि । कर्माणिचतान्यपदानानिच तानि । यद्वा कर्मणि युद्धादिरूपेऽपदानानिअतिवृत्तानिवैरिकर्मखण्डकानीतिवा । " अपदानमतीवृत्तकर्मखण्डनयोर्मतं " इतिविश्वः ॥ १९ ॥ **स०** रामप्रतिज्ञांश्रुत्वाविभीषणोपिप्रतिश्शृणोतीत्याह—**वक्तुमेवेति** । एवकारेण सर्वस्वामिनोरामस्यसाहाय्यकरणवचनमुपहास्यं । तथापि लौकिकरीत्यनुपालनार्थमिदमितिसूचयति ॥ २३ ॥ **स०** राजानं लङ्कायाः । राजशासनात् रामाज्ञायाः । रावणावरजस्यस्वावरजेनाभिषेचनंयुक्तमितिवा इदानींरावणमारणदीक्षाबन्धाद्व्यापारान्तरस्याकरणीयतयावा साक्षात्पितामहएवाभिषेकयोग्योनान्यइतिवालक्ष्मणेनाभिषेचनमितिमन्तव्यं ॥ राजशासनात् राजारावणः तच्छासनं शिक्षांतृणीकृत्येतिवा । ल्यब्लोपनिमित्तापञ्चमी ॥ २७ ॥

**[ पा० ]** १ क. ख. ग. ङ.—ट. विभीषणस्यतुवचस्तच्छ्रुत्वारघुसत्तमः. २ ङ. च. छ. झ. ञ. ट. सहात्मजं. ग. सहानुजं. ३ ङ. झ. मेतच्छृणोतुमे. ४ क. ख. घ.—ट. जनबान्धवं. ५ ङ. च. झ. ञ. ट. वक्तुमेवप्रचक्रमे. ६ क. ग.—ट. प्रधर्षणे. ७ क. ग. घ. च. छ. ज. रामशासनात्.

कथं सागरमक्षोभ्यं तराम वरुणालयम् ॥ सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ॥ ३० ॥
उपायं नाधिगच्छामो यथा नदनदीपतिम् ॥ तराम तरसा सर्वे ससैन्या वरुणालयम् ॥
एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः ॥ ३१ ॥
समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ३२ ॥
खानितः सगरेणायमप्रमेयो महोदधिः ॥ कर्तुमर्हति रामस्य ज्ञात्वा कार्यं महामतिः ॥ ३३ ॥
एवं विभीषणेनोक्तो राक्षसेन विपश्चिता ॥ आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ॥ ३४ ॥
ततश्चाख्यातुमारेभे विभीषणवचः शुभम् ॥ सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम् ॥ ३५ ॥
प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥ ३६ ॥
स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम् ॥ सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमुवाच ह ॥ ३७ ॥
विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ॥ ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते ॥ ३८ ॥
सुग्रीवः पण्डितो नित्यं भवान्मन्त्रविचक्षणः ॥ उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् ॥ ३९ ॥
एवमुक्तौ तु तौ वीरावुभौ सुग्रीवलक्ष्मणौ ॥ समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ४० ॥
किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव ॥ विभीषणेन यच्चोक्तमस्मिन्काले सुखावहम् ॥ ४१ ॥
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन्वरुणालये ॥ लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ४२ ॥

इदमर्धमेकं वाक्यं ॥ २९ ॥ दुस्तरत्वे हेतुः अक्षोभ्यमिति तत्रापि हेतुर्वरुणालयमिति ॥ ३० ॥ बुद्धिमन्तो भवन्त एव विचारयन्तीत्यत्राह—उपायं नाधिगच्छाम इति ॥ सर्वे । वयमितिशेषः ॥ ३१ ॥ समुद्रमित्यर्धं ॥ लक्ष्मणव्यावृत्तये राजेत्युक्तिः ॥ ३२ ॥ शरणवरणं व्याजीकृत्य समुद्रः प्रत्यासक्त्यतिशयात्स्वयं उपायं दिशेदित्यभिप्रायेणाह—खानितइति ॥ खानितः स्वपुत्रैरिति शेषः । न केवलमुत्पत्तिमात्रं तन्मूलं किं त्वतिशयोपि तदधीन इत्याह—अप्रमेयो महोदधिरिति । सगरेण रामकूटस्थेन । महामतिः उपकारज्ञ इत्यर्थः ॥ ३३ ॥ राक्षसेनेति स्थलज्ञतोक्ता । विपश्चितेति तात्कालिकबुद्धिमत्ता । आजगामेत्यनेन कालान्तरे देशान्तरे सुग्रीवादिप्रश्न इति गम्यते ॥ ३४ ॥ विपुलग्रीव इत्यनेन कुतूहलित्वमुक्तं । आरेभइत्यनेन आरम्भमात्र एव सूक्ष्मज्ञतया रामेण सहसा सुग्रीवविवक्षितं ज्ञातमित्युच्यते । उपवेशनं उपासनं ॥ ३५ ॥ प्रकृत्येत्यर्धमेकं वाक्यं ॥ अरोचत तदुपवेशनमित्यनुषङ्गः ॥ ३६ ॥ महातेजाः तात्कालिकहर्षप्रकाशकदेहकान्तिमान् । अन्यान्विहाय सुग्रीवं प्रति वचने हेतुःहरीश्वरमिति । सत्क्रियार्थं विभीषणमन्त्रबहुमानार्थं । क्रियादक्षः स्वयं कार्यकरणसमर्थोपि ॥ ३७—३८ ॥ पण्डितः मन्त्रसमर्थः । उभाभ्यामिति चतुर्थी । अर्थं प्रयोजनं संप्रधार्य निश्चित्य । यत्कार्यमुभाभ्यां रोचते तदुच्यतामितिसंबन्धः ॥ ३९ ॥ समुदाचारः अञ्जलिबन्धाद्युपचारः तत्संयुक्तमिति क्रियाविशेषणं ॥४०॥ अस्मिन्काले उपायमन्तरा दर्शनकाले । सुखावहं अयत्नेन कार्यसाधकं । नौआवयोः ॥ ४१ ॥ रामशरणागतेः फलं सेतुबन्धनमित्याशयेनाह—अबद्ध्वेति ॥ घोरे तिमितिमिङ्गिलादिसत्त्वाधिष्ठितत्वेन दुस्तरे । सेन्द्रैरिति । किं पुनरस्माभिरिति भावः ॥ ४२ ॥

ति० ससैन्यावरुणालयंयथातराम तथाकैरुपायैर्नदनदीपतिमभिगच्छाम । मार्गप्राप्तये तद्वदेतिशेषः ॥ ३१ ॥ ति० एवं विभीषणोक्तंश्रुत्वा यत्ररामोवर्तते तंदेशंसलक्ष्मणःसुग्रीवआजगामेतिसंबन्धः ॥ ३४ ॥

[ पा० १ ख. ग. ङ. झ. ट. उपायैरभिगच्छामः. च. छ. ञ. उपायैरधि. २ ङ. च. झ. ञ. धर्मात्मा. ३ ग. ङ.—ट. ज्ञातेःकार्यं. ४ ख. ग. ङ. च. छ. झ. ञ. ट. विभीषणेनोक्तं. ज. विभीषणेनोक्ते. ५ ङ. झ. रामस्यास्याप्यरोचत. ६ ख. ग. ङ. च. झ. ञ. ट. यत्तूक्तं.

विभीषणस्य शूरस्य यथार्थं क्रियतां वचः ॥ अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् ॥
यथा सैन्येन गच्छामः पुरीं रावणपालिताम् ॥ ४३ ॥
एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः ॥ संविवेश तदा रामो वेद्यामिव हुताशनः ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः ॥ २० ॥

रावणचोदनयासागरोत्तरतीरमेत्य रामादिवृत्तान्तावगमनपूर्वकं लङ्कांपुनरागतेनशार्दूलनाम्नाचारेणरावणे रामवृत्तान्तनिवेदनम् ॥ १ ॥ रावणप्रेषितेनपक्षिरूपधारिणाशुकनाम्नाराक्षसदूतेनान्तरिक्षस्थेनैवसता सुग्रीवे रावणसंदेशनिवेदनम् ॥ २ ॥ गगनमुद्गतैर्वानरैर्भूप्रापणपूर्वकंपीडितेनशुकेन स्वप्रार्थितरामनियोगात्तैर्विमोक्षणे पुनरन्तरिक्षमेत्यसुग्रीवंप्रति संदेशप्रार्थनम् ॥ ३ ॥ शुकंप्रतिसुग्रीवेणरावणे रामापराधात्पुत्रमित्रादिभिस्सहमारणप्रतिज्ञानरूपप्रतिसंदेशनिवेदनचोदना ॥ ४ ॥ अङ्गदेन शुकेदूतत्वनिषेधेनचारत्वसमर्थने वानरैःपुनर्ग्रहणेनबन्धनपूर्वकं तत्पीडनम् ॥५॥ शुकप्रार्थितेनरामेण तेभ्यस्तन्निवारणम् ॥६॥

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् ॥ ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ॥१॥
चारो राक्षसराजस्य रावणस्य दुरात्मनः ॥ तां दृष्ट्वा सर्वतो[2] व्यग्रं प्रतिगम्य स राक्षसः ॥
प्रविश्य[3] लङ्कां वेगेन रावणं[4] वाक्यमब्रवीत् ॥ २ ॥
एष[5] वानरऋक्षौघो लङ्कां समभिवर्तते ॥ अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ॥ ३ ॥
पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ॥ उत्तमायुधसंपन्नौ[6] सीतायाः पदमागतौ ॥ ४ ॥
एतौ सागरमासाद्य सन्निविष्टौ महाद्युती ॥ ५ ॥
बलमाकाशमावृत्य[7] सर्वतो दशयोजनम् ॥ तत्त्वभूतं[8] महाराज क्षिप्रं वेदितुमर्हसि ॥
तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम्[9] ॥ ६ ॥
उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम् ॥ ७ ॥

शूरस्य मन्त्रशूरस्य । यथार्थं परमाप्तोक्तत्वादिति भावः । नियुज्यतां प्रार्थ्यतां । यथेति । तथा नियुज्यतामिति पूर्वेणान्वयः ॥ ४३ ॥ संविवेश संवेशनमकरोत् । वेद्यामिव हुताशन इत्यनेन ज्वलिष्यमाणत्वं व्यज्यते ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनविंशःसर्गः ॥ १९ ॥

अथ विभीषणनिर्गमनानन्तरं लङ्कावृत्तान्तं प्रस्तौति —तत इत्यादिना॥ निविष्टांसमुद्रतीरस्थां। ध्वजिनीं सेनां । वीर्यवानिति दर्शनसामर्थ्योक्तिः ॥ १ ॥ चार इत्यादि सार्धश्लोकः ॥ दुरात्मनः दुर्बुद्धेः । अकाले चारप्रेषितुरित्यर्थः ॥ २ ॥ अगाधः सेनापक्षे दुष्प्रवेश इत्यर्थः । अप्रमेयः अपरिच्छेद्यः ॥ ३ ॥ पदं स्थानं प्रति । आगतौ ॥ ४ ॥ एतावित्यर्धमेकं ॥ ५ ॥ बलमिति ॥ पूर्वं सेनासन्निवेशमात्रमुक्तं । अत्र तद्विस्तार उच्यते । आकाशं अवकाशं । सर्वतः चतुःपार्श्वेषु । दशयोजनपरिमितमवकाशमावृत्य स्थितं तत्त्वभूतमिति मया सामान्यतो ज्ञातं यथार्थभूतं यथा भवति तथाज्ञातुमर्हसीत्यर्थः ॥ ६ ॥ उपप्रदान-

**ति०** सागराय सागरप्रार्थनार्थं । नियुज्यतां । स्वात्मेतिशेषः ॥ ४३ ॥ इत्येकोनविंशःसर्गः ॥ १९ ॥

**स०** सीतायाःपदं त्राणमुद्दिश्य अत्रवर्ततइतिचिह्नंज्ञात्वावा शब्दंहनुमद्बोधितंश्रुत्वावा । " पदंव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमरः ॥ ४ ॥ **स०** उपप्रदानं सीतायारामसमीपंगत्वादानं । सान्त्वं सीतादानंविनाऽमूल्यरत्नादिदानेनसमाधानं ।

**[ पा० ]** १ ङ. झ. सागराय. २ ङ. च. झ. सर्वतोऽव्यग्रां. ३ क. ग. ङ.—ट. आविश्य. ४ क. ट. राजानमिदमब्रवीत्. ५ ग. ङ. झ. ट. एषवैवानरक्षौघो. ६ ङ. झ. ट. उत्तमौरूपसंपन्नौ. ७ ख.—च. झ. ञ, ट. बलंचाकाश. ८ क. च. छ. ज. तत्वमेतन्महाराज. घ. तथाभूतं. ९ घ. ङ. च. झ. ञ. ट. मर्हन्तिवेदितुं.

शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः ॥ उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः ॥
शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् ॥ ८ ॥
सुग्रीवं ब्रूहि गत्वा त्वं राजानं वचनान्मम ॥ यथासंदेशमक्लीबं श्लक्ष्णया परया गिरा ॥ ९ ॥
त्वं वै महाराज कुलप्रसूतो महाबलश्चर्क्षरजस्सुतश्च ॥
न कश्चिदर्थस्तव नास्त्यनर्थस्तथा हि मे भ्रातृसमो हरीश ॥ १० ॥
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ॥ किं तत्र तव सुग्रीव किष्किन्धां प्रतिगम्यताम् ॥ ११ ॥
न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथंचन ॥ देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १२ ॥
स तथा राक्षसेन्द्रेण संदिष्टो रजनीचरः ॥ शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १३ ॥
स गत्वा दूरमध्वानमुपर्युपरिसागरम् ॥ संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥
सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना ॥ १४ ॥
तं प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः ॥ प्रापद्यन्त दिवं क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः ॥ १५ ॥
स तैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः ॥ गगनाद्भूतले चाशु परिगृह्य निपातितः ॥ १६ ॥
वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ॥ न दूतान्घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ॥ १७ ॥
यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते ॥ अनुक्तवादी दूतः सन्स दूतो वधमर्हति ॥ १८ ॥

मित्यर्धमेकं वाक्यं ॥ दण्डस्य त्ववकाश एव नास्तीति भावः । अत्र रामविषये ॥ ७ ॥ शार्दूलस्येत्यर्धत्रयमेकान्वयं ॥ अर्थः कर्तव्यार्थः ॥ ८ ॥ भेदप्रयोगमुपदर्शयति—सुग्रीवमिति ॥ मम वचनाद्ब्रूहि मयोक्तमिति ब्रूहि । अक्लीबं सधाष्टर्यमित्यर्थः । श्लक्ष्णया पारुष्यरहितया । परया श्राव्यया ॥ ९ ॥ वचनमेवाह—त्वमिति ॥ वचनगाम्भीर्यव्यञ्जनाय गुरुवृत्तारम्भः । हे महाराज त्वं कुलप्रसूतः । सूर्यपुत्रत्वादिति भावः । तेन निष्कारणवैरं त्वया कर्तुमनुचितमिति व्यज्यते । महाबलः अल्पबलं राममवलम्बितुं नार्हसीत्यर्थः । ऋक्षरजस्सुतः ब्रह्मपौत्रत्वेन मम बन्धुभूतोसीत्यर्थः । तव रामावलम्बने कश्चिदर्थो नास्ति । अनवलम्बने अनर्थश्च नास्ति । अफलं वैरं तव नोचितमिति भावः । वालिसंबन्धेन भ्रातृसमत्वान्मयैव प्रणयं कुर्वित्यभिप्रायेणाह—तथा हीति ॥ १० ॥ सीतापहरणमेव त्वत्कृतो महाननर्थ इत्यत्राह—अहमिति ॥ राजपुत्रस्य तवेति पदाभ्यां नरवानरयोः कः संबन्ध इत्युक्तं । धीमत इति सुग्रीवविशेषणं । तत्र हरणविषये । किं का हानिरित्यर्थः ॥ ११ ॥ आरब्धस्यान्तगमनमिति न्यायेन प्रक्रान्तं कार्यं कथं त्यज्यतामित्यत्राह—नहीति ॥ उक्तमर्थं कैमुतिकन्यायेन द्रढयति—देवैरिति । अत्र नरग्रहणात् पूर्वार्धे हरिपदं नरोपलक्षकं बोध्यं । त्वमेवामुमर्थमालोचयेतिभावः । इयं लङ्का प्राप्तुं न शक्येत्युत्तरार्धेनुषज्यते ॥ १२ ॥ अम्बरमाप्लुत्य आजगामेति शेषः ॥ १३ ॥ उपर्युपरिसागरं सागरस्याव्यवहितोपरि प्रदेशे "उपर्यध्यधसः सामीप्ये" इति द्विर्वचनं।आम्रेडितान्तत्वात् "उभसर्वतसोः" इति द्वितीया ॥१४॥ प्रापयन्तं श्रावयन्तं । प्रापद्यन्त पर्यवारयन् ॥ १५ ॥ निगृहीतः बद्धः ॥ १६—१७ ॥ दूतोप्ययुक्तकारी वध्य एवेत्याशङ्क्य नाहं तथा अयु-

भेदः मित्रभेदः । चतुर्थोपायभूतोदण्डस्तु रामसेनावलोकनानन्तरं अयमशक्यइति शार्दूलेननोपन्यस्तः ॥ ७ ॥ स० त्वंमेभ्रातृसमः वालिरावणयोःसख्यान्मदनुजसमइत्युक्तिः ॥ एवंदैवान्निस्सृतयावाण्या वालिनइवरावणस्यवधोपि रामाद्भविष्यतीतिसूच्यते ॥ १० ॥ स० सगन्धर्वैः हरिभिः बहुवचनमाद्यर्थे।इन्द्रादिभिः नारायणादिभिर्वा । देवैः । "हरिर्वातार्कचन्द्रेन्द्रोपेन्द्र"—इत्यादिविश्वः ॥ १२ ॥ ती० लोप्तुं पक्षावितिशेषः ॥ १५ ॥ स० अवतारितः रामाज्ञांविनाहनने भूपकोपास्पदतास्यादिति मन्दं-

[ पा० ] १ ङ. झ. ट. शुकंसाधु. २ क. ङ. च. झ. ट. गत्वाशु. ३ ङ. च. छ. झ. ट. कश्चनार्थः. ४ घ. राक्षसः. ५ क. ग. यथोद्दिष्टं. ६ ग. ङ. झ. प्रापयन्ततदा. क. च. छ. प्रारभन्ततदा. ७ क. ग. छ. ट. परिगृह्यावतारितः. ङ. च. झ. ञ. प्रतिगृह्यावतारितः. ८ ङ. झ. ट. संप्रधारयेत.

शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् ॥ उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् ॥ १९ ॥
स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये ॥ अन्तरिक्षस्थितो भूत्वा पुनर्वचनमब्रवीत् ॥ २० ॥
सुग्रीव सत्त्वसंपन्न महाबलपराक्रम ॥ किं मया खलु वक्तव्यो रावणो लोकरावणः ॥ २१ ॥

स एवमुक्तः प्लवगाधिपस्तदा प्लवङ्गमानामृषभो महाबलः ॥
उवाच वाक्यं रजनीचरस्य चारं शुकं तूर्णमदीनसत्त्वः ॥ २२ ॥
न मेऽसि मित्रं न तथाऽनुकम्प्यो न चोपकर्ताऽसि न मे प्रियोसि ॥
अरिश्च रामस्य सहानुबन्धः स मेसि वालीव वधार्ह वध्यः ॥ २३ ॥
निहन्म्यहं त्वां ससुतं सबन्धुं सज्ञातिवर्गं रजनीचरेश ॥
लङ्कां च सर्वां महता बलेन क्षिप्रं करिष्यामि समेत्य भस्म ॥ २४ ॥
न मोक्ष्यसे रावण राघवस्य सुरैः सहेन्द्रैरपि मूढ गुप्तः ॥
अन्तर्हितः सूर्यपथं गतो वा तथैव पातालमनुप्रविष्टः ॥
[ गिरीशपादांबुजसंगतो वा हतोसि रामेण सहानुजस्त्वम् ॥ ] २५ ॥

त्ककारीत्याशयेनाह—यस्त्विति ॥ १८ ॥ परिदेवितं परिदेवनरूपं वचनं । मा वधिष्टेति प्रत्येकोक्त्यभिप्रायेणैकवचनं । वधिष्टेतीत्यत्र आर्षः सन्धिः ॥ १९ ॥ पत्रलघुः लघुपत्रः । वानरैः प्रायेण लूनपक्ष इत्यर्थः । भये दर्शिते दर्शितेपि ॥ २० ॥ स्ववाक्यश्रवणाय सुग्रीवं प्रशंसति—सुग्रीवेति॥लोकरावण इत्यनेन प्रतिवचनानादाने मां हनिष्यतीति भावः ॥ २१ ॥ स एवमिति। लोके कश्चिदधिपतिरपि तज्जातीयो न भवति। तद्व्यावर्तनाय प्लवङ्गमानामृषभ इत्युक्तं । महाबलः तृणीकृतरावणइत्यर्थः । अदीनसत्त्वः अदीनमनस्कः । अत्र वंशस्थोपेन्द्रवज्रेन्द्रवज्रायोगादुपजातिवृत्तभेदः ॥ २२ ॥ भ्रातृसमोसीत्यस्योत्तरमाह—न मेसीति ॥ मे मित्रं नासीत्यर्थः । अनुकम्प्यः दयनीयश्च नासि । मे उपकर्ता च नासि । मे प्रियोपि नासि । अतः कथं भ्रातृसमोसीति भावः । प्रत्युत मित्रशत्रुत्वाच्छत्रुरेवासीत्याह—अरिश्चेति । ननु नोपकर्तृत्वादिना मित्रं किन्तु सख्युर्वालिनो भ्रातृत्वादित्यत आह—स मेसीति । नः अरिभूतस्त्वमपि वालीव मे वध्योसि । अरिमित्रस्याप्यरित्वादिति भावः । इदमेव मनसि कृत्वोक्तं वधार्हेति । अनेन अहं यद्यहरं भार्यामित्येतदुत्तोत्तरं ॥ २३ ॥ न हीयं हरिभिर्लङ्केत्यस्योत्तरमाह—निहन्मीति ॥ ज्ञातिवर्गः कुम्भकर्णादिः । विभीषणस्तु न ज्ञातिरिति भावः । सुतादयः किमर्थं हन्तव्या इत्यपेक्षायां राजापराधादित्याह—रजनीचरेशेति । बलेन सेनया ॥ २४ ॥ मयि लङ्कास्थे खल्वेवं करिष्यसि । स्थलान्तरं गमिष्यामीति शङ्कायामाह—न मोक्ष्यस इति ॥ राघवस्य राघवात् । पञ्चम्यर्थे षष्ठी । मूढेति संबुद्धिः । सूर्यपथं सूर्यद्वारं । गतः सन्

भुवमवतारितः ॥ १६ ॥ **ती०** पक्षलघुः पक्षैर्लघुः लूनपक्षइतियावत् ॥ **स०** पक्षलघुः कपिभिर्लुप्तालपपक्षः पूर्वंभूत्वा अनन्तरं रामाज्ञयाहरिभिरभयेदर्शिते दत्तेसति पक्षैः छिन्नप्ररूढैः लघुः शीघ्रगामीभूत्वेत्यर्थोवा । यत्तु लूनपक्षत्वे अन्तरिक्षगमनासंभवः । रामाज्ञाननुष्ठानप्रसङ्गश्चेति कैश्चिदभिहितं तत्तु शुकरूपस्यमायिकत्वेन पक्षच्छेदेपि माययापुनःप्ररोहणस्यसंभवादन्तरिक्षगमनसंभवेन रामाज्ञातः पूर्वमेव कतिपयतल्लोपनेन तदाज्ञाभङ्गस्याप्यभावेनचायुक्तमितिज्ञेयम् ॥ २० ॥ **स०** प्लवगाधिपः एवमुक्तोऽभूत् । एवमुक्तः प्लवङ्गमानामृषभःसुग्रीवः। रजनीचरस्य रावणस्य। चारं दूतं। दीनंशुकंप्रत्युवाच। प्लवगान् आधितः मनोव्यथातःपातीतिवा तथा । प्लवङ्गेषुमानः चित्तोन्नतिर्यस्यसः प्लवङ्गमानः । सचासौनविद्यते मृषा मिथ्यावचनं येषांते अमृषाः तेषांभइवभः इन्द्रइतियावत् । "भःस्यान्मयूखेशक्रेच" इति "मानश्चित्तोन्नतौ" इतिचविश्वः ॥ अदीनसत्त्वः अदीनान्तःकरणः ॥ २२ ॥ **ति०** त्वां मन्मित्ररामारिं । सर्वैःसमेत्येत्यन्वयः ॥ २४ ॥ **शि०** अतः अन्तर्हितत्वादिकंप्राप्तोपिसहानुजस्त्वं रामेणहतः ।

[ **पा०** ] १ च. छ. ठ. पक्षलघुः. २ ख.—ट. अन्तरिक्षेस्थितो. ज. अन्तरिक्षेस्थिरो. क. अन्तरिक्षगतो. ३ च. ञ. शुकोवचनं. क. भूयोवचनं. ४ ङ. च. झ. ट. शुद्धमदीन. ५ ग. ङ. झ. ट. ततोसि. घ. त्वमेव. ६ ङ. झ. ञ. सर्वैः करिष्यामि. ७ ज. भग्नां. ८ ङ.—ट. सर्वैः. ९ इदमर्धं ङ. झ. ञ. ट. पाठेषुदृश्यते.

तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् ॥ [1]त्रातारमनुपश्यामि न गन्धर्वं न चासुरम् ॥ २६ ॥
[2]अवधीर्यज्जरावृद्धमक्षमं किं जटायुषम् ॥ २७ ॥
किं नु ते रामसान्निध्ये सकाशे लक्ष्मणस्य वा ॥ हृता सीता विशालाक्षी यां त्वं गृह्य न बुध्यसे ॥२८॥
महाबलं महात्मानं [3]दुर्धर्षममरैरपि ॥ न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान्हरिष्यति ॥ २९ ॥
ततोऽब्रवीद्वालिसुतस्त्वङ्गदो हरिसत्तमः ॥ नायं दूतो [4]महाराज चारिकः प्रतिभाति मे ॥ ३० ॥
तुलितं हि बलं सर्व[5]मनेनात्रैव तिष्ठता ॥ गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते ॥ ३१ ॥
ततो राज्ञा समादिष्टाः समुत्प्लुत्य वलीमुखाः ॥ जगृहुश्च बबन्धुश्च विलपन्तमनाथवत् ॥ ३२ ॥
शुकस्तु वानरैश्चण्डैस्तत्र तैः संप्रपीडितः ॥ [6]व्याक्रोशत महात्मानं रामं दशरथात्मजम् ॥
लुप्येते मे बलात्पक्षौ भिद्येते च तथाऽक्षिणी ॥ ३३ ॥
यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् ॥ एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ॥
सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ॥ ३४ ॥
नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ॥ वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे विंशः सर्गः ॥ २० ॥

---

अन्तर्हितोपि न मोक्ष्यसे ॥ २५ ॥ त्रिदशेश्वरेपि त्रातुमनीश्वरे का वार्ता क्षुद्राणामित्याह—तस्येति ॥ तस्य रामशरविद्धस्य ॥ २६ ॥ यदि रामसहाये स्थितोसि तर्हि ते जटायुषोवस्था स्यादित्यत्राह—अवधीरिति अर्धमेकं वाक्यं । जरया वृद्धं अत एवाक्षमं असमर्थं । जटायुषमवधीरिति यत्तत्र ते किं वीर्यमिति शेषः । नाहं तादृश इति भावः ॥ २७ ॥ भार्याहरणकाले किमप्यकुर्वन्रामः किमिदानीं करिष्यतीत्यत्राह—किंन्विति ॥ ते त्वया । सन्निधिरेव सान्निध्यं । विशालाक्षीत्यनेन सीताहरणं रामस्यात्यन्तासह्यमित्युच्यते । गृह्य गृहीत्वा । न बुध्यसे भाव्यनर्थमिति शेषः ॥ २८ ॥ न बुध्यस इत्युक्तं विवृणोति—महाबलमिति ॥ महात्मानं महाबुद्धिं ॥ २९ ॥ हरिसत्तमः इङ्गितप्रेक्षणादिज्ञ इति यावत् । चारिकः चारः । स्वार्थे ठक् । दूतो हि न वध्यः चारस्तु वध्य एवेति भावः ॥ ३० ॥ तुलितं तुलया मितं । परिच्छिद्य ज्ञातमिति यावत् । ॥ ३१ ॥ राज्ञा सुग्रीवेण ॥ ३२ ॥ शुकस्त्वित्यादि सार्धश्लोक एकान्वयः ॥ चण्डैः अत्यन्तकोपनैः । पितृसंबन्धकीर्तने दया भवेदिति दशरथात्मजमित्युक्तं । पक्षौ पूर्वलुप्तशेषौ ॥ ३३ ॥ यामित्यादिसार्धश्लोक एकान्वयः ॥ रात्रिशब्दोऽहोरात्रवचनः । यां च रात्रिं यस्मिंश्च दिवसे । मरिष्यामि । यस्मिंश्च जाये अजाये "अनित्यमागमशासनं" इत्यडभावः । जातोस्मि । एतस्मिन्नन्तरे जननमरणयोर्मध्यकाले मया यदशुभं कृतं तत्सर्वं निरपराधस्य मे घातयिता त्वं उपपद्येथाः प्राप्नुहि । चेदिति प्रसिद्ध्यर्थमव्ययं ॥ ३४ ॥ नाघातयत् वधान्न्यवर्तयत् । मुच्यतां बन्धनान्मुच्यतां । निर्यापणं तु दक्षिणकूले ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने विंशः सर्गः॥२०॥

---

निहतप्रायोसि ॥ सार्धश्लोकएकान्वयी ॥ २५ ॥ **ति०** पिशाचादीनामेकैकंसमुदितंचत्रातारंनपश्यामि । अतएवनञ्पञ्चकंचरितार्थं ॥ २६ ॥ **रामानु०** चारश्चरणं । तदस्यास्तीतिचारीकः । "अतइनिठनौ" इतिठन् ॥ ३० ॥ तुलितं इयत्तयापरिच्छिन्नं ॥ ३१ ॥ इतिविंशःसर्गः ॥ २० ॥

[ पा० ] १ क. ग. ङ. छ.—ट. त्रातारंनानुपश्यामि. च. त्रातारंनाधिगच्छामि. २ ङ.—ट. अवधीस्त्वंजरावृद्धंगृध्रराजं जटायुषं. क.—घ. अवधीस्त्वंजरावृद्धंगृध्रराजमपक्षकं. ३ ङ. च. झ. ञ. ट. दुराधर्षंसुरैरपि. ४ ङ. झ. ञ. ट. महाप्राज्ञचारकः. ५ ङ. च. झ. ञ. ट. मनेनतवतिष्ठता. ६ ङ. च. झ. ञ. ट. व्याचुक्रोश.

# एकविंशः सर्गः ॥ २१ ॥

रामेण समुद्रप्रसादनायतत्तीरेसमास्तृतदर्भेषु निजभुजोपधानेननियमाच्छयनम् ॥१॥ रामे दिवसत्रयमनवारतंकुशशयनेशयानेपि समुद्रेस्वशरीरमदर्शयति कोपाद्रामेण लक्ष्मणकराद्धनुरानयनेनकतिपयशरप्रक्षेपेण जलधिजलविक्षोभपूर्वकंजलधिजिघांसया शरान्तरसन्धानायधनुराकर्षणे लक्ष्मणेन सप्रतिषेधनंधनुरालंबनम् ॥ २ ॥

ततः सागरवेलायां दर्भानास्तीर्य राघवः ॥ अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥
बाहुं भुजगभोगाभमुपधायारिसूदनः ॥ १ ॥
जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ॥ २ ॥
वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः ॥ भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३ ॥
चन्दनागरुभिश्चैव पुरस्तादधिवासितम् ॥ बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ॥ ४ ॥

एवं प्रासङ्गिकं परिसमाप्य एकान्तरितपूर्वसर्गान्तोदितकथाशेषमुपक्षिपति—तत इत्यादि सार्धश्लोक एकान्वयः ॥ ततः शुकमोक्षणानन्तरं । सागरवेलायां शर्कराप्रचुरायां । दर्भान् शिताग्रकुशान् । आस्तीर्य । राघवः सर्वशरण्यकुलप्रसूतः । महोदधेः अञ्जलिं कृत्वा । भुजगभोगाभं अहिकायवदतिमृदुलं बाहुं । उपधाय उपधानीकृत्य । प्राङ्मुखः सन् प्रतिशिश्ये । प्रतीत्यनेन तदानीं सागराभिमुखमपरः सागर इव स्थित इत्यवगम्यते । अरिसूदन इत्यनेन तादृशदशायामपि शत्रूणामधृष्यतया स्थित इत्युच्यते । अत्र विशेषणमहिम्ना अतिसुकुमारस्य कथमतिकठिनावनितलशयनं अखिलरक्षकस्य कथमन्यतो रक्षापेक्षेति वाल्मीकेः खेदो द्योत्यते ॥ १ ॥ अमुमेवार्थं प्रपञ्चयति—सार्धसप्तश्लोकैः । जातरूपमयैरित्यादि ॥ जातरूपमयैः चकाराद्रत्नमयैः । एवकारोऽयोगव्यवच्छेदार्थः । पुरा अयोध्यावासकाले । अवतारात्पूर्वं वा ॥ २ ॥ वरकाञ्चनेति परमनारीभुजविशेषणं । भुजैः हस्तैः । तदेकदेशलक्षणा । परमनारीणां सैरन्ध्रिकाणां । अनेकधा स्नानालङ्करणादिषु चन्दनागरुकुङ्कुमप्रभृतिभिः बहुप्रकारेण । अभिमृष्टं संमृष्टं ॥ ३ ॥ अधिवासितं सञ्जातगन्धं । बालसूर्येति विशेषणात् द्वितीयचन्दनशब्दो रक्तचन्दनपरः । तच्च कुङ्कुम । "कुङ्कुमं घुसृणं प्रोक्तं लोहितं रक्तचन्दनं" इतिहलायुधः । आदौ चन्दनागरुभ्यां चर्चितं अथ कुङ्कुमैरिति बोध्यं । कश्चिदाह । परमनारीणामित्यनेन सीताव्यतिरिक्ताश्च भार्याः सन्तीति तन्न । नहि बालकाण्डे कुत्रचिद्रामस्य दारान्तरोद्वाहः प्रतिपाद्यते । प्रत्युत "रामस्तु सीतया सार्धं विजहार बहूनृतून् । मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः" इति सीतया सह निरन्तरभोग एवोच्यते । अतएव सीताप्याह "समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी" इत्यत्यन्तसंयोगे द्वितीयया निरन्तरभोगं । तत्कुतोस्य दारान्तरावकाशः । ननु रामस्य दयिता भार्येति विशेषणाद्रोहिणी यथेति ताराणामन्यतमया रोहिण्यां दृष्टान्तीकरणाच्च भार्यान्तरं तस्य व्यज्यत इति चेन्न । दयितो भ्रातुरितिवदनुगमनानर्हत्वाय तथा विशेषितत्वात् किं भरतो रामस्य न दयितः । "तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु । न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः" इत्यादिविरोधात् । रामवाल्ल-

स० सागरवेलायां समुद्रतीरे । महोदधेःअञ्जलिंकृत्वा बद्ध्वा । प्राङ्मुखःसन्प्रतिशिश्ये । शयनप्रतिनिधिंकृतवान् ॥ प्रतिना निर्दोषस्यरामस्यस्वाभाविकीनिद्रानवकुंशक्येतितत्प्रतिनिधिभूतंचक्षुर्निमीलनमात्रमितिसूचयति ॥ १ ॥ स० परमनारीणां कौसल्यादीनां । परमाश्चते अरयोनभवन्तीतिनारयोब्रह्माद्याभक्ताः तेषां । अथवा स्वदत्तपारम्योवरुणस्तस्यनार्योगङ्गाद्याः तासांबाहुभिस्तरङ्गैः । स्वेष्ववतारेषु रमायाअप्यवतारबाहुविध्येन नारीणामितिबहुवचनबोधितबहुविधता संभवतीति नैककामिनीव्रततोपहतिरितिज्ञेयं ॥ शि० परमनारीणां समवेतजनकराजवेश्मस्थाङ्गनानां । भुजैः अनेकधा बहुवारं । पुरस्तात् विवाहसमये । अभिमृष्टं श्रमापनयनहेतुकनिपीडनादौस्पृष्टं । किंच नारीभुजयोःपूज्यत्वाद्बहुवचनमिति नारीशब्देनसीतैवग्राह्या । किंच अनारीणां नारीसंसर्गरहितानांनैष्ठिकानांहनुमदादीनामित्यर्थः । भुजैरभिमृष्टं । सख्यभावनयास्पृष्टं । अतएवपरमं तेषांतृप्तिकारकं । किंच यत् अरीणांभुजैर्नाभिमृष्टं तत् परं अत्युत्कृष्टं अपालकं अइतिअनधातुप्रकृतिकक्विबन्तप्रकृतिकामन्तंसामान्येनपुंसकं । दीर्घाभ-

[ पा० ] १ ङ. च. छ. झ. ञ. ट. मणिकाञ्चन. २ ङ. झ. ट. दभिसेवितं. ३ ङ. छ.—ट. प्रकाशैश्च.

**शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा ॥ तक्षकस्येव संभोगं गङ्गाजलनिषेवितम् ॥ ५ ॥**
**संयुगे युगसंकाशं शत्रूणां शोकवर्धनम् ॥ सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६ ॥**
**अस्यता च पुनः सव्यं ज्याघातविगतत्वचम् ॥ दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥ ७ ॥**

भ्यातिशयेन सौकुमार्यातिशयेन च राजगृह एवावस्थाय दिव्यसुखानुभवयोग्यावपि सीतालक्ष्मणौ राममनुगताविति हि तत्र मुनिहृदयं । रोहिणी चेयमन्या प्रसिद्धाया नित्यानुगमनासंभवात् । ननु च "हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः । अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये " इति स्नुषासाहचर्याद्रामस्य स्त्रियः पत्न्यो बह्व्यः सन्तीति गम्यते । सुन्दरकाण्डेपि " स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः " इति सीतया चोच्यते । अत्रापि भुजैः परमनारीणामभिमृष्टमनेकधेत्युक्तं । तस्माद्बह्व्यः पत्न्यो रामस्य सन्तीत्यवगम्यते । मैवं । रामस्य परमाः स्त्रिय इति रामसंबन्धिन्यः कौसल्यासीतातद्दासीप्रभृतय उच्यन्ते । पूजायां बहुवचनेन सीतैवोच्यते । ते स्नुषा इतिवत् । न हि भरतस्यानेकाः स्त्रियः सन्तीत्यत्र प्रमाणमस्ति । त्वं रंस्यस इत्यत्रापि लौकिकरीतिमनुसृत्य सीतोक्तवती । परमनारीणामित्यत्रापि अलंकर्त्रीणामित्यर्थ उक्तः । यद्वा अभिमृष्टं अभिमर्शनार्हं । आशंसायां क्तः । परमनार्यः श्रीभूमिनीलाः । आत्मानं मानुषं राम एव हि मन्यते ऋषिस्तु रामस्य विष्णुत्वं व्यक्तीकरोत्येव । जज्ञे विष्णुः सनातन इत्याह । ननु राजसूयाश्वमेधाद्यनुष्ठानान्यंथानुपपत्त्या रामस्यानेकपत्न्यः कल्प्यन्ते । कामं कल्प्यन्तां न ता इह संबध्यन्ते । तासां केवलं धर्मार्थं वृत्तानां परिस्रष्टुं रन्तुं चायोग्यत्वात् । वस्तुतो न ताः कल्प्याः सीतयैव प्रतिमया यज्ञे पत्नीकार्यनिर्वाहस्योत्तरकाण्डे दर्शितत्वात् । न च पत्नीप्रतिनिधिभावो न भट्टाचार्येण कथ्यत इति वाच्यं । " न हि वचनविरोधे न्यायः प्रभवति " इति न्यायात् । वचनं च हेमाद्रिस्मृतिनिबन्धने दर्शितं " यदि दुष्टभार्यो दूरभार्यो वा स्यात्तदा दर्भपुञ्जीलं तत्स्थाने निधायाग्निमाधाय कुर्यात् " इति । धर्मसंस्थापनार्थं प्रवृत्तस्य रामस्याचारादपरं किं नाम मानमपेक्षणीयं । वस्तुत आचार एव प्रथमं प्रमाणं श्रुत्या पूर्वाचारं प्रदर्श्यैव कर्मविधानात् । आपस्तम्बोप्यतएव धर्मज्ञसमयः प्रमाणं वेदाश्चेत्याचारमेव प्रथमं प्रमाणमाह । अतएव स्मरन्ति च स्मर्तारः " श्रुतिर्विभिन्ना स्मृतयो विभिन्ना न चानृषेर्दर्शनमस्ति किंचित् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः " इति ॥ तस्मात् " चातुर्वर्ण्यं च लोकेस्मिन्स्वे स्वे धर्मे नियोक्ष्यति " इत्युक्तरामाचार एव समीचीनं प्रमाणं तद्विरुद्धाश्च न्याया न प्रभवन्ति । यद्यपि राजसूयाश्वमेधानां महिषीवद्वावातापरिवृक्तिभ्यामपि भवितव्यं । तथापि तल्लोपे तत्कार्याननुष्ठानमेव । तस्य कर्मवैकल्याहेतुत्वात् । यथा पङ्ग्वन्धादेर्यज्ञे विष्णुक्रमाज्यावेक्षणादिलोपेन न यज्ञलोपः । तत्तन्मन्त्रोच्चारणस्यैव कार्यत्वात् । तस्मात्केवलन्यायसञ्चारेणापन्यायमार्गो नानुसरणीयः । किंतु सर्वाचारप्रवर्तकसर्वकर्मधुरन्धरभगवदवताररामचन्द्राचार एव विवेकिभिरनुवर्तनीयइति सर्वमवदातं ॥ ४ ॥ शयने हंसतूलिकामये तल्पे । गङ्गानिषेवितं गङ्गाजले वर्तमानं । तक्षकस्य संभोगं कायमिव स्थितं । सीताया उत्तमाङ्गेन शोभितं चेति योजना ॥ ५ ॥ संयुगे युद्धे । युगसंकाशं गोपुरार्गलवत्प्रतिभटनिवारकं । अतएव शत्रूणां शोकवर्धनं । सागरोन्ते यस्यासौ सागरान्तः भूमण्डलं । तस्य व्यपाश्रयं आलम्बनभूतं ॥ ६ ॥ सव्यं अप्रदक्षिणं यथाभवति तथा । अस्यता इषून् क्षिपता । स्वेनैव हेतुना ज्याघातेन करणेन विगतत्वचं ज्याकिणाङ्कितमित्यर्थः । महापरिघसन्निभं । उत्तमपरिघाख्यायुधवत् दृढं । गोसहस्रप्रदातारं करणे कर्तृत्वोपचारः । महद्भुजं भुजोत्तमं । तथैव प्रायशः पाठः । आत्वाभाव आर्षः । एवंभूतं

वस्तु संज्ञापूर्वकविधेरनित्यत्वात् । पुरस्तात् पूर्वचन्दनादिभिरभिसेवितं ॥ ३—४ ॥ स० अत्रबाहुंभुजगभोगाभमित्युपक्रम्यगोसहस्रप्रदातारमित्येतच्छ्लोकपर्यन्तंप्रतिश्लोकंविशेष्येणबाह्वादिशब्देनभवितव्यमितिदर्शयितुं बाहुंभुजगभोगाभं दक्षिणंबाहुं भुजोत्तम-

[ पा० ] १ घ. ङ. च. झ. ञ. ट. सुहृदांनन्दनं.

गोसहस्रप्रदातारमुपधाय महद्भुजम् ॥ अद्य मे मरणं वाऽथ तरणं सागरस्य वा ॥ ८ ॥
इति रामो मतिं कृत्वा महाबाहुर्महोदधिम् ॥ अधिशिश्ये स विधिवत्प्रयतो नियतो मुनिः ॥ ९ ॥
तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले ॥ नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः ॥ १० ॥
स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः ॥ उपासत तदा रामः सागरं सरितां पतिम् ॥ ११ ॥
न च दर्शयते मन्दस्तदा रामस्य सागरः ॥ प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२ ॥
समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः ॥ समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३ ॥
अवलेपः समुद्रस्य न दर्शयति यत्स्वयम् ॥ १४ ॥
प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता ॥ असामर्थ्यं फलन्त्येते निर्गुणेषु सतां गुणाः ॥ १५ ॥
आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ॥ सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् ॥ १६ ॥
न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ॥ प्राप्तुं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि ॥१७॥
अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ॥ निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः ॥ १८ ॥
महाभोगानि मत्स्यानां करिणां च करानिह ॥ भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ॥१९॥

दक्षिणं बाहुमुपधाय दक्षिणः दाक्षिण्यवान् ॥७-८॥ महाबाहुः सर्वाभयप्रदः । रामः अद्य मे तरणं वा सागरस्य मरणं वा भवत्विति मतिं कृत्वा । विधिवत् शास्त्रोक्तरीत्या । प्रयतः कायिकनियमयुक्तः । नियतः वाचिकनियमवान् । मुनिः मानसनियमोपेतश्चसन् । महोदधिमुद्दिश्याधिशिश्य इति योजना ॥९॥ सुप्तस्य शयानस्य । नियमादप्रमत्तस्य अतएवाप्रच्युतनियमस्येत्यर्थः । तिस्रो निशाः त्रीण्यहानि ॥ १० ॥ तिसृष्वपि रात्रिषूपासनमविच्छिन्नमित्याह—स इति ॥ त्रिरात्रोषितः त्रिरात्रं शयानः । तत्र समुद्रतीरे । सर्वशक्तेःकुत एवं निर्बन्ध इत्याशङ्क्य धर्मप्रवर्तनार्थमित्याशयेनाह—नयज्ञो धर्मवत्सल इति । शरणागतधर्मे प्रीतिमान् । सरितां पतिं स्वगोष्ठ्यां कान्तापुरुषकारमुखेन समाश्रयणदर्शनात्स्वयमपि तथैवाचरदिति भावः ॥ ११ ॥ नच दर्शयते आत्मानमिति शेषः । मन्दः अज्ञः । ननु रामेण सम्यक्कृता शरणागतिः कुतो नफलिता । उच्यते । अनधिकारिणा कृतत्वात् ब्राह्मणकृतराजसूयवत् । न च शरणागतावधिकारी रामः । अकिंचनो हि तत्राधिकारी ॥ १२ ॥ समुद्रस्य समुद्रविषये । संबन्धसामान्ये षष्ठी । रक्तान्ते लोचने यस्य सः रक्तान्तलोचनः । अनेन मन्दकोपत्वमुक्तं । शुभलक्षणं स्वस्य हृदयकोपमवगम्य कृतमन्दहासं ॥ १३ ॥ स्वयं न दर्शयतीति यत् अयं समुद्रस्यावलेप इत्यन्वयः ॥ १४ ॥ प्रशमः अक्रोधता । क्षमा अपराधसहिष्णुता । आर्जवं परचित्तानुसारित्वं । अकौटिल्यं वा । प्रियभाषिता प्रियवादित्वमित्येते गुणाः निर्गुणेषु असामर्थ्यं फलन्ति । असमर्थत्वबुद्धिं जनयन्तीत्यर्थः ॥१५॥ कं पुनः समर्थं निर्गुणो मन्यते तत्राह—आत्मेति ॥ आत्मप्रशंसिनं आत्मस्तुतिपरं । दुष्टं वञ्चकं । धृष्टं निर्दयमित्यर्थः । विपरिधावकं सर्वपलायनकरं । सर्वत्र सगुणेषु निर्गुणेषु च । उत्सृष्टदण्डं क्लृप्तदण्डं । लोकः अज्ञो जनः ॥ १६ ॥ बलकृता प्रथा यशः । पराक्रमकृता कीर्तिः । जयो वेत्यत्रापि न साम्ना प्राप्तुं शक्यत इत्यनुषञ्जनीयं ॥ १७ ॥ मद्बाणनिर्भिन्नैः अतएव जलोपरि प्लवद्भिः मकरैः । निरुद्धतोयं व्याप्ततोयं ॥ १८ ॥ भोगिनां महाकायानां । भूम्नि मतुप् । " भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः " इत्यमरः । नागानां सर्पाणां । महाभोगानि महाशरीराणि । क्लीबत्वमार्षं । करिणां मत्स्यानां

मितित्रिवारमुक्तिः ॥ ७ ॥ ति० अत्रत्रिदिनमुपासनयाप्रसन्नस्यसागरस्यप्रसादेनमेससैन्यस्यतरणंवापिस्यात् । ततःपरमुपेक्षणे सागरस्यमत्तोमरणमेवस्यादितिधृतिंकृत्वा निश्चित्येतियोजना ॥ ९ ॥ ति० अभिजग्मतुः अभिजग्मुः ॥ १० ॥

[ पा० ] १ च. छ. ज. ञ. भुजोत्तमं. २ ग. घ. ङ. झ. ट. धृतिं. ३ क. ग. घ. ङ. ज.—ट. शिश्येच. ४ ङ. झ. ट. प्रयतोत्रस्थितो. ५ ङ. झ. स्तिस्रोभिजग्मतुः. ६ ङ. च. झ. ञ. ट. दर्शयतेरूपंमन्दो. च. दर्शयतेमानंतदा. छ. दर्शयतेरूपंतदा. ७ क. ङ. च. छ. झ. ञ. ट. असामर्थ्यफलाह्येते. ८ ङ. च. छ. झ. ञ. निर्भिन्नैः.

सशङ्खशुक्तिकाजालं समीनमकरं शरैः ॥ अद्य युद्धेन महता समुद्रं परिशोषये ॥ २० ॥
क्षमया हि समायुक्तं मामयं मकरालयः ॥ असमर्थं विजानाति धिक् क्षमामीदृशे जने ॥ २१ ॥
न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥ २२ ॥
चापमानय सौमित्रे शरांश्चाशीविषोपमान् ॥ सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥२३॥
अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् ॥ २४ ॥
वेलासु कृतमर्यादं सहसोर्मिसमाकुलम् ॥ निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ॥ २५ ॥
महार्णवं क्षोभयिष्ये महादानवसंकुलम् ॥ २६ ॥
एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः ॥ बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥२७॥
संपीड्य च धनुर्घोरं कम्पयित्वा शरैर्जगत् ॥ मुमोच विशिखानुग्रान्वज्रानिव शतक्रतुः ॥ २८ ॥

गजाकारमत्स्यानां । छिन्नानीति लिङ्गव्यत्ययेनानुषङ्गः । करान् शुण्डादण्डान् । "मत्स्यविशेषो मकरः करिमकरो भवति तद्विशेषश्च" इति हलायुधः ॥ १९—२० ॥ क्षमैकसाराणां भवतामीदृशी फणितिरनुचितेत्याशङ्क्याह—क्षमयेति ॥ सागरशोषणेप्रवृत्तोप्येतावत्पर्यन्तं क्षमया गृहीतचरणोस्मि । "सुप्रप्रमत्तकुपितानां भावज्ञानं दृष्टं" इति न्यायेन स्वरूपं प्रकटयति—मामिति । मां इतरनैरपेक्ष्येण स्थितं । असमर्थं विजानाति कार्यकरणाक्षमं मन्यते । विजानाति मकरालयः । अयोध्याधिपतिः कोसलाधिपतिरिवस्वमात्मानं मन्यते । कतिपयमीनग्रहणगर्तं इति न जानाति । धिक् क्षमां इतःपरं क्षमां नाङ्गीकुर्मः । विनियोगकाले हि क्षमा स्वीकार्या । अद्य क्रोध एवाङ्गीकर्तव्यः । इक्ष्वाकूणां कदाचिदपि क्षमा किं त्याज्येत्यत्राह—ईदृशे जन इति ॥ ईदृशे जने प्राप्तरक्षस्सहवासदोषे ॥ २१ ॥ न दर्शयतीत्यर्धमेकं वाक्यं ॥ २२ ॥ अपि कदाचिदात्मानं दर्शयेदिति करुणया समुद्रं वाचा निर्भर्त्स्य कर्मणापि निर्भर्त्सयितुमुपक्रमते—चापमानयेति ॥ एव विलम्ब्य करणं क्रमेण निर्भर्त्स्य कार्यं कारयितुं । अन्यथा सद्य एव शोषयेत् । चापमानय निर्गुणं वशीकर्तुं सगुणमानयेत्याशयः । चापमानय अस्थानम्रत्वं निवर्तयितुं नम्रं चापमानय । समुद्रस्य शेषशय्यात्वेन तस्मिन्किंचित्सौहार्दवता लक्ष्मणेन क्षणं विलम्बः कृतः । अत आह—सौमित्र इति । सुमित्रावचनमेव कर्तव्यं ज्येष्ठवचनं तु न कर्तव्यमिति नियमोस्ति । यद्वा सौमित्रे रामे प्रमादं माकार्षीरिति मात्रोपदिष्टं मा विस्मार्षीः । अथ चापमात्रमानीतं तदाह—शरांश्चेति । लीलाप्रयोगार्हेषु केषुचिदानीतेष्वाह—आशीविषोपमानिति । दृष्टिविषाः सर्पा आशीविषा इत्युच्यन्ते । किमर्थं शरानयनमिति विलम्ब्य सौमित्रिणा पृष्ट आह—सागरमिति । एकेनैव दग्धुं सामर्थ्येपि शरानित्युक्तिस्तत्संबन्धेन सप्तसागरानपि शोषयितुमिच्छया । कोपातिशयेन स्वबलमज्ञात्वा वा तादृशोक्तिः । शोषयिष्यामीति वदतः किं शरेणेति न शङ्कनीयं । छिन्नं भिन्नं शरैर्दग्धमिति रामशराणां दाहकत्वसंभवात् । अन्तरेणापि चतुर्थभूतजगन्निर्वाहं करिष्यामीति भावः । सागरं । यद्ययं ज्ञातिविरोधमाचरति तर्हि वयमपि ज्ञातिकृत्यं कुर्म इतिभावः । सागरं शोषयिष्यामि अनेकसहस्रखातमेक एव हरिष्यामि । किं तत इत्यत्राह—पद्भ्यामिति । एकैकस्य पदद्वयं गमनसाधनमिति द्विवचनं । वानराणां हि द्वावेव पादौ द्वौ हस्तौ ग्रहणभक्षणादीनां ताभ्यामेव दर्शनात् । अनेन कृतस्य कार्यविच्छेदस्यानुरूपममुं वानरपादाभ्यामेव दर्शयिष्यामीतिभावः ॥ २३ ॥ पक्षान्तरमाह—अद्येति ॥ अर्धमेकं वाक्यं ॥ २४ ॥ पुनः पक्षान्तरमेवाह—वेलास्विति ॥ वेलासु चतुर्षु तीरेषु । कृतमर्यादं कृतव्यवस्थं । कदाचिदपि वेलामनतिवर्तमानमित्यर्थः । निर्मर्यादं करिष्यामि अव्यवस्थं करिष्यामि । भूतले प्लावयिष्यामीत्यर्थः ॥ २५ ॥ समुद्रेण चिरपरिपोषिता दानवादय एतं रक्षिष्यन्तीत्यत्राह—महार्णवमिति ॥ दानवैः सह क्षोभयिष्यामीत्यर्थः ॥२६॥ विस्फारितेक्षणः विवर्तितनयनः ॥ २७ ॥ संपीड्य दृढमुष्टिना मध्यमवलम्ब्य । कम्पयित्वा भयकम्पितं

[ पा० ] १ ङ. झ. तथा.

ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः ॥ प्रविशन्ति समुद्रस्य सलिलं त्रस्तपन्नगम् ॥ २९ ॥
तोयवेगः समुद्रस्य सनक्रमकरो महान् ॥ संबभूव महाघोरः समारुतरवस्तदा ॥ ३० ॥
महोर्मिमालाविततः शङ्खशुक्तिसमावृतः ॥ सधूमपरिवृत्तोर्मिः सहसाऽऽसीन्महोदधिः ॥ ३१ ॥
व्यथिताः पन्नगाश्चासन्दीप्तास्या दीप्तलोचनाः ॥ दानवाश्च महावीर्याः पातालतलवासिनः ॥ ३२ ॥
ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा ॥ विन्ध्यमन्दरसंकाशाः समुत्पेतुः सहस्रशः ॥ ३३ ॥
आघूर्णिततरङ्गौघः संभ्रान्तोरगराक्षसः ॥ उद्वर्तितमहाग्राहः संवृत्तः सलिलाशयः ॥ ३४ ॥

ततस्तु तं राघवमुग्रवेगं प्रकर्षमाणं धनुरप्रमेयम् ॥
सौमित्रिरुत्पत्य समुच्छ्वसन्तं मामेति चोक्त्वा धनुराललम्बे ॥ ३५ ॥
[एतद्विनापि ह्युदधेस्तवाद्य संपत्स्यते वीरतमस्य कार्यम् ॥
भवद्विधाः क्रोधवशं न यान्ति दीर्घं भवान्पश्यतु साधुवृत्तम् ॥ ३६ ॥
अन्तर्हितैश्चापि तथाऽन्तरिक्षे ब्रह्मर्षिभिश्चैव सुरर्षिभिश्च ॥
शब्दः कृतः कष्टमिति ब्रुवद्भिर्मामेति चोक्त्वा महता स्वरेण ॥ ३७ ॥]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

कृत्वा । जगत् जगत्स्थजन्तून् । वज्रानित्यभूतोपमा ॥ २८ ॥ तेजसा ज्वलन्त इत्यन्वयः । प्रविशन्ति प्राविशन् । त्रस्तपन्नगमिति क्रियाविशेषणं ॥ २९ ॥ तोयवेगः तरङ्गवितति: । मारुतरवः वातजन्यरवः । समारुतरवः वातसंघट्टनजन्यरवसहित इत्यर्थः ॥३०॥ तीरे महोर्मिमालाविततः । अन्तस्तरङ्गजालाकृष्टशङ्खशुक्तिसमावृतः । सज्वालशरप्रवेशेन सधूमः । मध्ये शराग्निशोषणेन परिवृत्तोर्मिश्चासीदित्यन्वयः ॥ ३१ ॥ व्यथिता इति । आपातालं शराः प्रविष्टा इति भावः ॥ ३२ ॥ तात्कालिकतरङ्गौन्नत्यं वर्णयति—ऊर्मय इति ॥ ३३ ॥ उक्तानुवादेन विशेषान्तरमाह—आघूर्णितेति ॥ आघूर्णितसंभ्रान्तोद्वर्तितपदान्येकार्थानि ॥ ३४ ॥ ततस्त्विति । तुशब्देन पूर्वसंधानाद्वैषम्यमुक्तं । अप्रमेयं अपरिच्छेद्यवैभवं । प्रकर्षमाणं । अमोघशरसन्धानायेति भावः । समुच्छ्वसन्तं कोपेनेति शेषः । तं राघवं । उत्पत्य झटित्यागत्य । मामेत्युक्त्वा एतादृशं धनुराकर्षणं मा कुर्वित्युक्त्वा । भयातिशयाद्वीप्सा । अनिवर्तमाने तस्मिन् धनुराललम्बे ॥ ३५—३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

---

**शि०** उदधेः एतत् विनाशनंविनापि । वीरतमस्यतव कार्यं सन्तरणं । संपत्स्यते सेत्स्यति । ननु प्राप्तक्रोधस्यकथंनिष्फलत्वमित्यतआह—भवद्विधाः भवत्सदृशाः । क्रोधवशंनयान्ति । अतः दीर्घं सार्वकालिकं । साधुवृत्तं क्रोधादिरहिततयास्वस्थितिं । भवान्पश्यतु संस्मरतु ॥ ३६ ॥ **शि०** निवारणेस्वस्वातन्त्र्यंनिवारयन्नाह—**अन्तरिति** । अन्तरिक्षे अन्तर्हितैः तिरोहिततयासंस्थितैः । महतास्वरेण कष्टमितिब्रुवद्भिर्ब्रह्मर्षिप्रभृतिः मामा एवंमाभूदित्यर्थः । इत्युक्त्वा शब्दःकृतः । किंच एको माशब्दः अस्मच्छब्दप्रकृतिकद्वितीयान्तः । एतेन तद्बोधनायैवमयानिवार्यसइतिसूचितं । तेन लक्ष्मणस्यापिकिंचिद्भयंव्यक्तम् ॥ ३७ ॥ इत्येकविंशः सर्गः ॥ २१ ॥

**[ पा० ]** १ क. घ. ज. दृप्तपन्नगं. २ ङ. च. छ. झ. समीनमकरो. ३ ङ. झ. महोर्मिजालचलितः. ४ क. ग. घ. ङ. झ. शङ्खजालसमावृतः. ५ क. घ. च. ञ. समन्ततः. ६ ङ. च. झ. ञ. सघोषोवरुणालयः. ७ ङ. च. झ. ञ. ट. विनिश्वसन्तं. ८ इदंश्लोकद्वयं ङ. च. झ. ट. पाठेषुदृश्यते

# द्वाविंशः सर्गः ॥ २२ ॥

रामेण सप्रतिज्ञानंसागरशोषणायब्रह्मास्त्राभिमन्त्रितशरसन्धानपूर्वकंधनुराकर्षणे घोरतरोत्पातप्रादुर्भावेभीतेनसागरेण गङ्गादिभिःसह नानाभूषणभूषितनिजरूपप्रकटनपूर्वकंसमुद्रमध्यादुद्गमनेनश्रीराममेत्य साञ्जलिबन्धंक्षमापणम् ॥ १ ॥ रामेण धनुस्संहितनिजशरस्यामोघत्वोक्त्यालक्ष्यप्रदर्शनंचोदितेनसागरेण स्वान्तर्वर्तिमरुकान्तारवासिपापतराभीरेषुशरमोक्षणचोदने शराग्निनातद्वधपूर्वकंतत्प्रदेशस्यमरुत्वदोषनिरसनम् ॥ २ ॥ सागरेणरामंप्रति कपिकुलमध्यवर्तिनलगुणप्रशंसनपूर्वकं तत्करेणसेतुरचनाचोदनेनपुनरन्तर्धानम् ॥ ३ ॥ नलेनरामचोदनया कपिगणाहृतनानागिरितरुभिरद्भुतसेतुरचना ॥ ४ ॥ हनुमदङ्गदांससमारूढाभ्यांराघवाभ्यां सुग्रीवादिभिस्सहसेतुमार्गेण परपारमेत्यतत्रसेनासंनिवेशनम् ॥ ५ ॥

अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः ॥ [1]अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ १ ॥
शर[2]निर्दग्धतोयस्य परिशुष्कस्य सागर ॥ मया [3]शोषितसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २ ॥
मत्कार्मुकविसृष्टेन शरवर्षेण सागर ॥ [4]पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥ ३ ॥
विचिन्वन्नाभिजानासि पौरुषं [5]वाऽपि विक्रमम् ॥ दानवालय संतापं मत्तो [6]नाधिगमिष्यसि ॥ ४ ॥
ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् ॥ संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५ ॥
तस्मिन्विकृष्टे सहसा राघवेण शरासने ॥ रोदसी संपफालेव पर्वताश्च चकम्पिरे ॥ ६ ॥

प्रथमं वानरसेनातरणाय सागरं शरणं गत्वा तस्मिन्ननागते चापमानयेति वाचा भीषयित्वा तथाप्यनाविष्कृतनिजरूपं तं शरैः प्रक्षोभ्य तावताप्यनागतस्य तस्य भीतिमुत्पादयितुं ब्रह्मास्त्रसन्धानायोपक्रमत इत्याह—अथेत्यादिना ॥ सपातालं पातालपर्यन्तमित्यर्थः ॥ १ ॥ शरनिर्दग्धतोयस्य निर्जलस्येत्यर्थः । परिशुष्कस्य भूम्यन्तर्गतजलशून्यस्य । शोषितसत्त्वस्य दग्धसत्त्वस्येत्यर्थः । ते महान् पांसुः अतिसूक्ष्मो रेणुः । उत्पद्यते । वर्तमानसामीप्ये वर्तमानप्रयोगः । महावर्षेपि पुनर्यथा जललवोपि न तिष्ठति तथा करिष्यामीतिभावः ॥ २ ॥ ननु सकलजलशोषणेन पातालमात्रपरिशोषात्तत्र गमनासंभवादाकाशेन गन्तव्यं ततो वरमिदानीं तथागमनं किं कोपेनेत्यत्राह—मत्कार्मुकेति ॥ शरवर्षेण शरजालेन सेतुस्थानीयेन । सेतुबन्धादिक्लेशो मे न भवतीतिभावः ॥ ३ ॥ पौरुषं बलं । विक्रमं पराक्रमं च । विचिन्वन् विशेषेण पर्यालोचयितुं । नाभिजानासि । "लक्षणहेत्वोः—" इति शतृप्रत्ययः । इदमज्ञानं सहवासकृतमित्याशयेन दानवालयेति संबोधनं । मत्तो भाविनं संतापं च नाधिगमिष्यसि न ज्ञास्यसि । मत्पराक्रममजानन् मत्तो भाविब्रह्मास्त्रपीडामपि न ज्ञास्यस्येवेतिभावः ॥ ४ ॥ ब्रह्मदण्डः ब्रह्मशापः । तद्वदमोघमित्यर्थः । यद्वा ब्रह्मदण्डः केतुविशेषः । तथोक्तं नारदसंहितायां—"पितामहात्मजःक्रूरस्त्रिवर्णः शिखरान्वितः । ब्रह्मदण्डाह्वयः केतुः सर्वभूतविनाशनः" इति ॥ ब्राह्मेणास्त्रेण ब्रह्मास्त्रमन्त्रेण । संयोज्य अभिमन्त्र्य । तद्धनुर्विचकर्ष ॥ ५ ॥ अथास्त्रसन्धानस्य मरुकान्तारवर्तिनां युगपद्विनाशहेतुत्वात्तत्काले तदुचितमहोत्पातान् दर्शयति—तस्मिन्नित्यादिना ॥ शरसन्धानकालिकं लोकस्यभयं दर्शयतीत्यप्याहुः । रोदसी द्यावापृथिव्यौ । संपफालेव भिन्ने इव । एकवचनमार्षं । "द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च

ती० विक्रमं जलोपरिशरसेतुबन्धनजलस्तंभनतच्छोषणादिशक्तिरूपं । विचिन्वन् विशेषेणपर्यालोचयन् । नाभिजानासि । पौरुषं शास्त्रवश्यत्वसौजन्यनिबन्धनंशरणवरणरूपंपुरुषकृत्यं । नाभिजानासि मत्तोभाविनंसन्तापंनावगमिष्यसि नज्ञास्यसि । सर्वशक्तेरपि धर्मशीलतयाशरणागतस्यमे फलप्रदानाभावे महाननर्थोभविष्यतीत्यमुमर्थंनजानासीत्यर्थः ॥ ४ ॥ स० रोदसी द्यावापृथिव्यौ । संपफाल विशीर्णे । एकवचनमार्षमितिनागोजिभट्टादयः । वस्तुतस्तु "रोदश्चरोदसीचापि दिविभूमौपृथक्पृथक् । सहप्रयोगेप्यनयोरोदःस्यादपिरोदसी" इतिविश्वोक्तेःरोदसी तन्त्रन्यायेनद्यौःपृथिवीच । पकाल विशीर्णेत्यर्थः । रोदसीत्यव्ययमप्यस्तीतिभानुदी-

[ पा० ] १ ङ. छ. झ. ट. अद्याहं. २ च. छ. निर्दग्धसत्वस्य. ३ ङ. झ. ञ. ट. निहतसत्वस्य. च. छ. शोषिततोयस्य. ४ ङ. झ. ट. परंतीरं. ५ क.—ट. नापिविक्रमं. ६ क.—घ. ङ. झ. ट. नामगमिष्यसि. च. छ. ञ. नावगमिष्यसि.

तमश्च लोकमावव्रे दिशश्च न चकाशिरे ॥ परिचुक्षुभिरे चाशु सरांसि सरितस्तथा ॥ ७ ॥
तिर्यक्च सह नक्षत्रैः संगतौ चन्द्रभास्करौ ॥ भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥ ८ ॥
प्रचकाशे तदाकाशमुल्काशतविदीपितम् ॥ अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९ ॥
पुस्फुरुश्च घना दिव्या दिवि मारुतपङ्क्तयः ॥ १० ॥
बभञ्ज च तदा वृक्षाञ्जलदानुद्वहन्नपि ॥ अरुजंश्चैव शैलाग्राञ्शिखराणि प्रभञ्जनः ॥ ११ ॥
दिविस्पृशो महामेघाः संगताः समहास्वनाः ॥ मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा ॥ १२ ॥
यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् ॥ अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् ॥ १३ ॥
शिश्यिरे चापि भूतानि संत्रस्तान्युद्विजन्ति च ॥ संप्रविव्यथिरे चापि न च पस्पन्दिरे भयात् ॥ १४ ॥
सह भूतैः सतोयोर्मिः सनागः सहराक्षसः ॥ सहसाऽभूत्ततो वेगाद्भीमवेगो महोदधिः ॥ १५ ॥
योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् ॥ तं तदा समतिक्रान्तं नातिचक्राम राघवः ॥
समुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६ ॥

रोदसी " इत्यमरः ॥ ६—७ ॥ तिर्यक्चेति श्लोकद्वयमेकान्वयं ॥ चन्द्रभास्करौ नक्षत्रैः सह तिर्यग्वक्रं यथा भवति तथा सङ्गतौ तिर्यग्जग्मतुः । भयादिति भावः । आदीप्तं ईषद्दीप्तं । मन्दरश्मित्वात्तमसावृतत्वाच्च सूर्यस्येतिभावः । समावृतं सम्यगावृतं । उल्काशतविदीपितं । उल्कालक्षणमुक्तं वराहमिहिरेण " उल्का शिरसि विशाला निपतन्ती वर्धते च तनुपुच्छा " इति । निर्घातलक्षणं तेनैवोक्तं—" पवनः पवनाभिहतो गगनादवनौ यदा समापतति । भवति तथा निर्घातः स च पापो दीर्घखगविरुतः " इति ॥ ८—९ ॥ पुस्फुरुः चेरुः । मारुतपङ्क्तयः आवहोद्वहादिवातस्कन्धाः । दिव्याः श्लाघ्याः ॥ १० ॥ उद्वहन् ऊर्ध्वंनयन् । शैलाग्रान् पर्वताग्रप्रदेशान् । शिखराणि खण्डपर्वतान् । अरुजन् अपीडयत् । बहुवचनमार्षं ॥ ११ ॥ ते वैद्युताग्नयः । तदा महाशनयोभवन् । अशनिस्वरूपं मिहिरेणोक्तं—" अशनिः स्वनेन महता युक्ता नृगजाश्वतरुपशुमुखेषु । निपतति विदारयन्ती धरातलं चक्रसंस्थाना " इति ॥ १२ ॥ यानीत्यादि श्लोकद्वयमेकं वाक्यं ॥ यानि भूतानि दृश्यानि मनुष्यादीनि । अदृश्यानि पिशाचादीनि । तानि सर्वाणि भूतानि संत्रस्तानि । अतएवोद्विजन्ति कम्पमानानि सन्ति । अशनेः समं अशनिस्वरसमं यथा तथा चुक्रुशुः तथा । भैरवस्वनं मुमुचुः । ततः शिश्यिरे सुप्तानि । सुप्तवद्भूमौ पतितानीत्यर्थः । तत्रापि संप्रविव्यथिरे चिन्तया दुःखितानि । भयान्न पस्पन्दिरे न चलितानि ॥ १३—१४ ॥ अथ समुद्रराजस्योत्थानं सूचयति—सहभूतैरित्यादिना ॥ ततो वेगात् पूर्वसर्गान्तोक्ताद्रामवेगात् । सहसा शरसन्धानसमय एव । भीमवेगोऽभूत् भीमप्रवाहवेगोऽभूत् । केवलशरमोक्षकृतात्क्षोभात् ब्रह्मास्त्रमोक्षारम्भे महान्क्षोभोऽभूदित्यर्थः ॥ १५ ॥ वेगफलं दर्शयति—योजनमित्यादिना ॥ सार्धश्लोक एकान्वयः । संप्लवात् वारिपूरेण । वेलामन्यत्र वेलां विनेत्यर्थः । अथवा संप्लवादन्यत्र प्रलयं विना । वेलां योजनं योजन-

क्षितः ॥ ६ ॥ ति० नक्षत्रैःसहतिर्यक्संगतौ यथाप्राप्तपूर्वापरमार्गप्रतिरोधाद्दक्षिणोत्तरमार्गगामिनावभूतामित्यर्थः । भास्करांशुभिरादीप्तमपितमसासंवृतं । आकाशमासीदितिशेषः । अनेनविरुद्धयोस्तेजस्तिमिरयोःसामानाधिकरण्यरूपोत्पातःसूचितः ॥ ७ ॥ वि० प्रास्फुटन् प्रचेलुः । बभञ्जचेति मारुतपङ्क्तिरितिशेषः । उद्वहन् मारुतसमूहइतिशेषः । अग्रेप्येषएवकर्ता । शैलाग्रान् पर्वतप्रदेशान् । आरुजन् अपीडयन् । बहुवचनमार्षं । शिखराणि खण्डपर्वतान् बभञ्जचेत्यन्वयः ॥ १०—११ ॥ स० तथाशब्द उपमायां । तंतथा चोरमिवस्थितं । चोरंस्वगृहेस्थापयितायथाचोरसदृशोभवति । तथा स्वदारचोरस्यरावणस्यस्वगर्भेस्थापनात्समुद्रश्चोरसदृशस्तं । द्वितीयेन तमित्यनेन समुद्रपरामर्शः । " तकारःकीर्तितश्चोरे " इतिविश्वः । एतेननपौनरुक्त्यं । समतिक्रान्तं अतिक्रान्तवेलं । अतएवोद्धतं उत्कृष्टमपितंनदनदीपतिं । रामः नातिचक्राम नावधीत् । भीषणार्थमेवास्त्रसंयोजनंनवस्तुतः । सत्य-

[ पा० ] १ ख. ग. घ. छ. झ. ट. प्रतिचुक्षुभिरे. २ च. छ. ज. ञ. प्रास्फुटंश्चपुनर्दिव्याः. ङ. झ. ट. वपुःप्रकर्षेणववुर्दिव्यमारुतपङ्क्तयः. ३ क. घ. विमानवरपङ्क्तयः. ४ ङ. च. छ. झ. ञ. ट. नुद्वहन्मुहुः. क. नुद्ववाहच. ख. नुद्वहन्तिच. ५ झ. ञ. ट. बभञ्जच. ६ ग.—छ. झ. ञ. ट. दिविचस्य. ७ ङ. च. छ. झ. ञ. ट. तथा. ८ क. ग. च. झ. तमुद्धतं.

ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः ॥ उदयन्हि महाशैलान्मेरोरिव दिवाकरः ॥ १७ ॥
पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत ॥ स्निग्धवैडूर्यसंकाशो जाम्बूनदविभूषितः ॥ १८ ॥
रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः ॥ सर्वपुष्पमयीं दिव्यां शिरसा धारयन्स्रजम् ॥ १९ ॥
जातरूपमयैश्चैव तपनीयविभूषितैः ॥ आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥ २० ॥
धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव ॥ एकावलीमध्यगतं तरलं पाण्डरप्रभम् ॥ २१ ॥
विपुलेनोरसा बिभ्रत्कौस्तुभस्य सहोदरम् ॥ आघूर्णिततरङ्गौघः कालिकानिलसंकुलः ॥ २२ ॥
[देवतानां सुरूपाणां नानारूपाभिरीश्वरः ॥ गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः ॥ २३ ॥ ]
उद्वर्तितमहाग्राहः संभ्रान्तोरगराक्षसः ॥ सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ॥
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥ २४ ॥
पृथिवी वायुराकाशमापो ज्योतिश्च राघव ॥ स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥२५॥

---

पर्यन्तं । व्यतिचक्राम अतिक्रान्तवान् । योजनमन्तर्जीर्णोऽभूदित्यप्याहुः । तं समतिक्रान्तं पलायमानं नातिचक्राम । पलायमानं प्रति शस्त्रप्रयोगरूपातिक्रमं न चकार ॥ १६ ॥ समुद्रस्य मध्यात् उन्नतात् । स्वयं सागरः समुद्राभिमानिदेवता । दिवाकर इव बभाविति शेषः ॥ १७ ॥ जाम्बूनदं जम्बूनदीप्रभवं स्वर्णं ॥ १८ ॥ रक्तमाल्यं रक्तवैकक्ष्यमाला ॥ १९ ॥ जातरूपमयैः आकरजसुवर्णप्रचुरैः । तपनीयविभूषितैः रत्नकीलनार्हद्रुतकनकविभूषितैः । रत्नानां संबन्धिभिर्भूषणोत्तमैः ॥ २० ॥ एकावली मुक्तावली । तरलं नायकरत्नं ॥ २१ ॥ आघूर्णितः चलितः । कालिका मेघपङ्क्तिः । " मेघजालेपि कालिका " इत्यमरः । तयाऽनिलेन च संकुलः क्षुभितः । मेघानिलौ समुद्रस्य सहचराविति प्रसिद्धिः ॥ २२-२३ ॥ उद्वर्तितेत्यादि सार्धश्लोक एकान्वयः ॥ उद्वर्तितः उद्भ्रामितः । समुपक्रम्य समुपागम्य । स्वसौजन्यं पुरस्कर्तुं पूर्वं आमन्त्र्य आहूय । प्रकृष्टो मूर्ध्नि कृतोऽञ्जलिः यस्यासौ प्राञ्जलिः । शरपाणिनमिति नकारान्तत्वमार्षं । स्वविरोधिनो मरुवासिनो रामेण घातयितुं स्वयं रावणभीतत्वेन तत्संहारक्षममस्य पराक्रमं परीक्षितुं च समुद्र एतावत्पर्यन्तं विलम्बितवानिति बोध्यम् ॥ २४ ॥ किं विभोस्तव मया कर्तव्यं किं गाधत्वं उत जलस्तम्भनं आहोस्वित्सेतुबन्धनानुकूल्यमित्याशङ्क्य न तावदाद्यः पक्ष इत्याह श्लोकद्व-

---

संकल्पत्वात् । नातिचक्राम स्वधैर्यान्नचचालेतिवा । अत्रपक्षेदृष्ट्वेतिशेषः ॥ १६ ॥ स० सागरः वरुणः । मेरोरिवविद्यमानात उदयाद्रेर्महाशैलात् शृङ्गात् दिवाकरइव । मेरोःधनुषोभयादुत्थितइतिवा । " मेरुर्भूधरधन्वनोः " इतिविश्वः ॥ १७ ॥ स० सर्वपुष्पमयीं यावत्पुष्पयुक्तां । शिरसिधारयन्नित्यनेन रामसत्कारार्थमितिज्ञायते । एकैकस्यदेवस्यएकैकंपुष्पंयुक्तंअयुक्तंचैकंश्रीनाराणरूपिणोरामस्य । समस्तकुसुमयुक्तायुक्तामाला । यथोक्तंभागवतेनवमे । रुक्मिणीशविजयेचप्रमाणान्तरोक्तार्थसंग्राहके । "सिन्धुः शिरस्यर्हणंप्रतिगृह्यरूपीति " " यावैचंपकसंपदाऽब्जवसतेर्दूर्वाश्रियास्वात्मनःकेतक्याविभवेनकृत्तिवसनस्यांभोजकान्त्याविधोः । सन्नीलोत्पलशोभयादिनमणेःश्रीमत्तुलस्याऽमताहेरंबस्य हरेःपरंसमुचितासामालिकाशोभते " इति । यद्वा वरुणाभरणप्रस्तावात्स्रग्वा ॥ १९ ॥ स० समुपक्रम्य पादाभ्यामागत्य । पूर्वमामन्त्र्य अहं भोरामांभोनिधिर्देवंवन्देत्वामितिसंबोध्य । शरपाणिनं बाणपाणिं । पणोग्लहः । सएवपाणःप्रज्ञादिः । शरैःपाणः रिपुप्राणरूपःसोस्यास्तीतिसतथावा तं । नचभारतेवनपर्वणि " सागरस्सुततःस्वप्नेदर्शयामासराघवं" इतिस्वप्नेरामस्यसागरआत्मानंदर्शयामासेत्युक्त्या अत्रचसमुत्थितः प्राञ्जलिरितिवचःपूर्वं अत्रच— " सागरःसमुपक्रम्यपूर्वमामन्त्र्यवीर्यवान् । अब्रवीत्प्राञ्जलिर्वाक्यं " इतिवाक्यंविरुद्धमितिवाच्यं । भागवतेनवमे " सिन्धुःशिरस्यर्हणंप्रतिगृह्यरूपीपादारविन्दमुपगम्यबभाषएतत् " इत्युक्तेः प्रत्यक्षतएवजाग्रद्दशायामेवदर्शनं । भागवतस्योत्तरत्वेनैतदनुरोधेनप्रतिशिश्यइतिपूर्वोदीरितेस्वप्नेस्वापेकृतेसतिनदनदीभर्ताराघवंस्वंदर्शयामासेतिभारतश्लोकार्थोपपत्तेः । अत्रैवयादोगणैर्वृतइत्युक्तिस्वारस्याच्च । स्वप्नेचेदेकमात्रदर्शनेनभाविकार्यसिद्धेस्तत्संवृततयागमनमनुपयुक्तं । प्रत्यक्षतस्तत्सहनयनंत्वद्रोषोष्मणायादसांदशेद-

[ पा० ] १ ङ. च. छ. झ. ञ. ट. उदयाद्रिमहाशैलात्. २ क. संकाशस्तप्तकाञ्चनकुण्डलः. ङ. च. छ. झ. ञ. ट. संकाशोजांबूनदविभूषणः. ३ क. ख. च. छ. पाटलप्रभं. ४ अयंश्लोकः क. ख. ग. च. छ. पाठेषुदृश्यते. ५ क. ख. सरूपाभिः.- ६ च. छ. प्रधानाभिस्तोयधाराभिरंबुराट्. ग. प्रधानाभिर्नानारूपाभिरंबुराट्. घ. प्रधानाभिर्नानारूपाभिरावृतः.

तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः ॥ विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥ २६ ॥
न कामान्न च लोभाद्वा न भयात्पार्थिवात्मज ॥ ग्राहनक्राकुलजलं स्तम्भयेयं कथंचन ॥ २७ ॥
विधास्ये राम येनापि विषहिष्ये ह्यहं तथा ॥ ग्राहा न प्रहरिष्यन्ति यावत्सेना तरिष्यति ॥
हरीणां तरणे राम करिष्यामि यथा स्थलम् ॥ २८ ॥
तमब्रवीत्तदा राम उद्यतो हि नदीपते ॥ अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यताम् ॥ २९ ॥
रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् ॥ महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ३० ॥
उत्तरेणावकाशोस्ति कश्चित्पुण्यतमो मम ॥ द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान् ॥३१॥
उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः ॥ आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३२ ॥

येन—पृथिवीति ॥ सौम्य प्रसन्न । अनेनाञ्जलिकरणानन्तरमेव रामः प्रसन्न इति गम्यते । पृथिव्यादयः पञ्चपदार्थाः । शाश्वतं नित्यं । मार्गं मर्यादां । आश्रिताः सन्तः स्वभावे काठिन्यतिर्यग्गमनावकाशप्रदानागाधत्वोर्ध्वज्वलनादिस्वस्वभावे तिष्ठन्ति । स्वस्वभावं नातिक्रामन्तीत्यर्थः ॥ २५ ॥ एषु कस्ते स्वभाव इत्यत आह—तदिति ॥ तत् तस्मात् । सर्वेषां पृथिव्यादीनां स्वस्वभावानतिलङ्घित्वात् । अहं अगाधः अप्लवः अलङ्घ्यश्चेति यत् एषः ममापि स्वभावः । तस्मादेवमेव मया स्थातव्यं । गाधःप्लवविषयोहमिति यत् एषः मम विकारः अन्यथाभावः । तथा मया न स्थातुं युक्तं । एतत् उक्तस्वरूपं ते प्रवदामि प्रावदं । प्रददामीति पाठेप्ययमेवार्थः । धातूनामनेकार्थत्वात् ॥ २६ ॥ द्वितीयपक्षोप्यनुपपन्न इत्याह—न कामादिति ॥ कामात् अर्थेच्छया । लोभात् लब्धवस्तुत्यागासहिष्णुतया । भयात् दण्डभयात् । पार्थिवात्मजेत्यनेन सर्वमर्यादास्थापकोसीति द्योतयति । न स्तम्भयेयं पीडाकरत्वादिति भावः ॥ २७ ॥ तृतीयं तु पक्षं कक्षीकरोमीत्याह—विधास्य इत्यादिसार्धश्लोकेन ॥ येन यथाहं विषहिष्ये शक्ष्यामि । तथा विधास्ये । किं तच्छक्यमित्यपेक्षायामाह—ग्राहेत्यादि ॥ यावत्सेना तरिष्यति तावत् ग्राहा न प्रहरिष्यन्ति । जलेपि हि केचिद्रमिष्यन्ति । हरीणां तरणे विषये । यथा स्थलं भवति यथा सेतुमार्गो भवति । तथा करिष्यामि । सेतुबन्धद्रव्यापकर्षणादिविघ्नं न करिष्यामीत्यर्थः ॥ २८ ॥ उद्यतः कृतसंधानः ॥ २९ ॥ महातेजाः स्वाभिमतलाभेन जनितकान्तिः ॥ ३० ॥ उत्तरेण समीपवर्तिन्युत्तरभागे । "एनबन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप् । ममावकाशः मध्यप्रदेशइत्यर्थः । पुण्यतमः चारुतमः । "पुण्यं तु चार्वपि" इत्यमरः । द्रुमेषु कुल्या यस्यासौ द्रुमकुल्यः । "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः ॥ ३१ ॥ उग्रे दर्शनकर्मणी येषां ते उग्रदर्शनकर्माणः । दस्यवः शत्रवः । "दस्युशात्रवशत्रवः" इत्यमरः । दस्यवः चोरा वा । आभीराः

शीतिप्रदर्शनेन देवदयोदयहेतुरितिसहनयनंयुक्तं ॥ २४ ॥ **ती०** हेपार्थिवात्मजेत्यनेन दशरथेऽवतीर्णेश्वरेत्युक्तंभवति । ईश्वरत्वादेव भयात् त्वद्भयात् रागात् त्वयिभक्त्याच वानररूपान्तरङ्गभक्तसहितत्वात्पादारविन्दरजोवहनभाग्यंमयालब्धमितिभक्त्याजलंस्तंभयेयमित्यर्थः ॥ २७ ॥ **स०** हेवरुणालय वरुणश्चासावालयोयादसामितिसतथा । तस्यसंबुद्धिः । हेवरुण । अलय मत्तोनाशरहित । अतएवामोघोबाणः कस्मिन्देशेनिपात्यतामितिप्रश्नःसंभवति । महाबाणः ब्रह्मास्त्राभिमन्त्रितः इतिशेषः । एतेन पूर्वविसृष्टानांकेवलबाणत्वाद्वा समुद्रशोषणेच्छयानत्यक्तइत्यतोवा नतत्संहारइतिबोध्यं ॥ २९ ॥ **स०** उत्तरेण तृतीयासप्तम्यर्थे । एनबन्तमव्ययंवा । ऊर्ध्वत्वेनोपलक्षितोऽवकाशोस्तीति । पुरतोविलोकने ऊर्ध्वंकिञ्चित्प्रवाहादूर्ध्वंअवकाशोस्तीतिसंबन्धः । नामाह—द्रुमकुल्यइतीति । पुण्यतमइतिलोकेख्यातोयथाभवान् तथाऽयंदेशोपिपुण्यतरइतिख्यातः । यथा भवानेतत्स्थलमङ्गलीकरणेन लोके ख्यातः दस्यूभिरस्यस्वच्छंकृतवान्सुकृतवान्रामइतिख्यातोभवेत् पुण्यतरश्चभवेत्तथोत्तरेणावकाशोस्तीतिवा ॥ ३१ ॥ **ती०** उग्रदर्श-

**[ पा० ]** १ घ. यदगाधोमहाप्लवः. २ ङ. झ. ट. रागान्नक्राकुल. घ. नगनक्राकुल. ञ. एतन्नक्राकुल. ३ क. ख. ङ.—ट. विधास्येयेनगन्तासि. ४ ज. प्रसन्नस्तुतदारामश्चाब्रवीत्तंनदीपतिं. ५ ङ. च. छ. झ. ञ. ट. रामःशृणुमेवरुणालय. ६ ङ. च. छ. झ. कश्चित्पुण्यतरो. क. कश्चित्ख्यातोमरुर्मम.

तैर्[1]स्तु संस्पर्शनं प्राप्तैर्न सहे पापकर्मभिः ॥ अमोघः क्रियतां राम[2] तत्र तेषु शरोत्तमः ॥ ३३ ॥
तस्य तद्वचनं श्रुत्वा सागरस्य स[3] राघवः ॥ मुमोच तं शरं दीप्तं वीरैः[4] सागरदर्शनात् ॥ ३४ ॥
तेन [5]तं मरुकान्तारं पृथिव्यां खलु[6] विश्रुतम् ॥ निपातितः[7] शरो यत्र दीप्ताशनि[8]समप्रभः ॥ ३५ ॥
ननाद च तदा तत्र वसुधा शल्यपीडिता ॥ तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३६ ॥
स बभूव तदा कूपो व्रण इत्यभिविश्रुतः[9] ॥ सततं चोत्थितं तोयं समुद्रस्येव दृश्यते ॥
[10]अवदारणशब्दश्च दारुणः समपद्यत ॥ ३७ ॥
[11]तस्मात्तद्बाणपातेन [12]त्वपः कुक्षिष्वशोषयत् ॥ ३८ ॥
विख्यातं त्रिषु लोकेषु मरुकान्तारमेव तत् ॥ शोषयि[13]त्वा ततः कुक्षिं रामो दशरथात्मजः ॥
वरं तस्मै ददौ विद्वा[14]न्मरवेऽमरविक्रमः ॥ ३९ ॥
पशव्य[15]श्चाल्परोगश्च फलमूलरसायुतः ॥ बहुस्नेहो बहुक्षीरसुगन्धि[16]र्विविधौषधः ॥ ४० ॥
[17]एवमेतैर्गुणैर्युक्तो बहुभिः [18]संततं मरुः ॥ रामस्य वरदानाच्च शिवः पन्था बभूव ह ॥ ४१ ॥
तस्मिन्दग्धे तदा कुक्षौ समुद्रः सरितां पतिः ॥ राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ॥ ४२ ॥
अयं सौम्य नलो नाम [19]तनुजो विश्वकर्मणः ॥ पित्रा दत्तवरः श्रीमान्[20]प्रतिमो विश्वकर्मणा ॥ ४३ ॥

---

महाशूद्राः ॥ ३२ ॥ तत्र द्रुमकुल्ये । तेषु आभीरप्रमुखेषु ॥ ३३ ॥ सागरदर्शनात् सागरमतेन । यद्वा अङ्गुल्या निर्दिश्य सागरेण प्रदर्शनात् ॥ ३४ ॥ तेन शरमोक्षणेन ॥ ३५ ॥ ननाद जलनिर्गमेनेति भावः । व्रणमुखात् व्रणमुखद्वारेण ॥ ३६ ॥ सः व्रणमुखं । व्रणकूप इत्यभिविश्रुतो बभूव । सततमिति । तस्येति शेषः । अवदारणशब्दः बाणस्येति शेषः ॥ ३७ ॥ तस्मादित्यर्धं ॥ तद्बाणपातेन तस्य बाणस्य पातेन । कुक्षिषु अवटेषु । स्थिता अपः पूर्वं पापस्पृष्टानि जलानि । तस्मात् द्रुमकुल्यात् । अशोषयत् न्यवारयदित्यर्थः ॥ ३८ ॥ पूर्वं रामबाणपातेन पृथिव्यां विश्रुतत्वमुक्तं संप्रति विरोधिनिरसनात् त्रिषु लोकेषु विख्यातत्वमाह—विख्यातमिति ॥ मरुकान्तारमेव मरुकान्तारनामैव । विख्यातं प्रसिद्धमभूदित्यर्थः । कुक्षिं समुद्रमध्यप्रदेशं । मरुकान्तारं शोषयित्वा दग्ध्वा। कथं मनुष्यत्वं भावयतो वरदानमित्यत्राह—अमरविक्रम इति । "सत्येन लोकाञ्जयति" इति न्यायेन वशीकृतसर्वलोकइत्यर्थः ॥ ३९ ॥ वरं सिद्धिमुखेन दर्शयति श्लोकद्वयेन—पशव्य इत्यादि ॥ पशव्यः पशुभ्यो हितः पशूपभोग्यबालतृणादिसमृद्ध इत्यर्थः। अल्परोगः आरम्भ एव विनष्टरोगः । रसः मधु । आयुतः समन्तायुक्तः । स्नेहः घृतं । औषधं ओषधिसमूहः । एवमेतैः एवंप्रकारैः । गुणैः भोग्यैः । युक्तः संयुतः । शिवः पन्थाः शोभनप्रदेश इत्यर्थः ॥ ४०–४२ ॥ एवं सेतुनिर्माणानुकूलं स्थास्यामीत्युक्तवान् संप्रति वरदानसन्तुष्टो वाक्सहायमाचरति—अय-

---

नकर्माणः उभे दर्शनकर्मणी येषांतेतथा ॥ ३२ ॥ स० व्रणमुखात् बाणकृतच्छिद्रादित्यर्थः ॥ ३६ ॥ स० अमरविक्रमः देवविक्रमः अप्रतिहतपराक्रमोवा ॥ ३९ ॥ स० अल्परोगः तुच्छीकृतरोगः ॥ ४० ॥ ति० पित्रादत्तवरः सर्ववस्तुनिर्माणसामर्थ्ये दत्तवरः । विश्वकर्मणस्तव प्रीतिमान् त्वद्विषयप्रीतिमान् । तेनत्वन्नामस्मरणपूर्वंकरोत्वि त्यर्थः । संसारसागरेगाधतासंपादकस्यत्वन्ना-

[ पा० ] १ ङ. तैर्नाहंस्पर्शनंपापंसहेयं. ख. ग. ञ. ट. तैर्नसंस्पर्शनंपापंसहेयं. क. घ. तैर्नसंस्पर्शनंरामसहेयं. झ. तैर्नतत्स्पर्शनंपापंसहेयं. ज. तैस्तुसंस्पर्शनंपापंसदाक्लेशकरंमहत्. २ ग. ङ. च. छ. झ. ञ. ट. रामअयंतत्रशरोत्तमः. ज. रामशितस्तत्रशरोत्तमः. क. राममरौतत्रशरोत्तमः. ३ ङ. झ. महात्मनः. ४ ख. ग. ङ. ज. झ. ट. परंसागर. ५ ख.—ट. तन्मरु. ६ झ. ट. किल. ७ ख. निपपातशरो. ८ ङ. च. छ. झ. ञ. ट. वज्राशनि. ९ ङ. च. छ. झ. ञ. ट. इत्येवविश्रुतः. १० ख. अवदारणजःशब्दो. ११ ज. तस्मिन्बाणस्यपातेन. १२ क. झ. ट. अपःकुक्षिषु. ग. घ. अपःकुक्षिमशोषयत्. १३ क. ग.—ट. शोषयित्वातुतंकुक्षिं. ख. सशोषयित्वातंकुक्षिं. १४ क. घ. च. छ. ञ. पश्चान्मरवे. १५ क. ख. ज. श्चाप्यरोगश्च. १६ च. झ. ञ. ट. विविधौषधिः. १७ ग. ङ.—ट. एवमेतैश्चसंयुक्तो. १८ ङ. च. छ. झ. ञ. ट. संयुतो. १९ क. ङ. च. छ. झ. ञ. ट. तनयो. २० ग. च. छ. झं. ञ. ट. प्रीतिमान्विश्वकर्मणः. क. घ. धृतिमान्विश्वकर्मणः.

एष सेतुं महोत्साहः करोतु मयि वानरः ॥ तमहं धारयिष्यामि तथा ह्येष यथा पिता ॥ ४४ ॥
एवमुक्त्वोदधिर्नष्टः[1] समुत्थाय नलस्तदा ॥ अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलः[2] ॥ ४५ ॥
अहं सेतुं करिष्यामि विस्तीर्णे वरुणालये[3] ॥ पितुः सामर्थ्यमास्थाय[4] तत्त्वमाह महोदधिः ॥ ४६ ॥
दण्ड एव वरो लोके पुरुषस्येति मे मतिः ॥ धिक्क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ॥ ४७ ॥
अयं हि सागरो भीमः सेतुकर्म[5]दिदृक्षया ॥ ददौ दण्डभयाद्गाधं राघवाय[6] महोदधिः ॥ ४८ ॥
मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा ॥ [ मया[7] तु सदृशः पुत्रस्तव देवि भविष्यति ॥ ]
औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा ॥ ४९ ॥
स्मारितोस्म्यहमेतेन[8] तत्त्वमाह महोदधिः ॥ न चाप्यहमनुक्तो वै प्रब्रूयामात्मनो गुणान् ॥ ५० ॥
समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये ॥ काममद्यैव[9] बध्नन्तु सेतुं वानरपुङ्गवाः ॥ ५१ ॥
ततोतिसृष्टा[10] रामेण सर्वतो हरियूथपाः ॥ अभिपेतुर्[11]महारण्यं हृष्टाः शतसहस्रशः ॥ ५२ ॥
ते नगान्नगसंकाशाः शाखामृगगणर्षभाः ॥ बभञ्जुर्[12]वानरास्तत्र प्रचकर्षुश्च[13] सागरम् ॥ ५३ ॥
ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः ॥ कुटजैरर्जुनैस्तालैस्तिलकैस्तिमिशैरपि ॥ ५४ ॥

मिति ॥ दत्तवरः मत्तुल्यः पुत्रस्ते भविष्यतीति मात्रे दत्तवरः ॥ ४३ ॥ तं सेतुं । तथा ह्येष यथा पितेति । पिता यथा यादृशशक्तिमान् तादृशोयमित्यर्थः ॥४४॥ उदधिः नष्टः अन्तर्हितः ॥ ४५ ॥ पितुः सामर्थ्यं पित्रा दत्तं सामर्थ्यं ॥ ४६ ॥ अथ वानरान्प्रत्याह—दण्ड इत्यादि श्लोकद्वयेन ॥ अतो राघवायेति परोक्षनिर्देशः । हिमवान्मन्दरो मेरुरित्यादिवत् । मध्ये कविवाक्यं वा । दण्ड एव परःसमीचीनोपायः । क्षमां सान्त्वं साम दानं वा धिक् । क्षमादयो नोपाया इत्यर्थः ॥ ४७ ॥ उक्तेर्थे हेतुमाह—अयं हीति ॥ हि यस्मात्सागरः सगरखानितः । प्रत्युपकारानभिज्ञ इत्यर्थः । दण्डभयात् सेतुकर्मदिदृक्षया गाधं ददावित्यन्वयः । सेतुकर्मदिदृक्षा च दण्डभयादेवास्य जातेत्यर्थः ॥ ४८ ॥ पूर्वोक्तस्वपितृतुल्यसामर्थ्यलाभस्य हेतुं दर्शयति—ममेति ॥ मया सदृशः पुत्रस्तव भविष्यतीत्येवंरूपो वरः । अयं चार्थः "औरसस्तस्य पुत्रोहं सदृशो विश्वकर्मण" इत्यनुवादात्सिद्धः ॥४९॥ तर्ह्येतावत्पर्यन्तं किमर्थं नोक्तवानसीत्यत्राह—स्मारित इति ॥ एतेन समुद्रेण । अनुक्तौ निमित्तान्तरमप्याह—नचेति । अनुक्तः अन्येनानुक्तः । स्वेनैवोक्तौ महाकर्मारम्भे विश्वासो न भवेदिति भावः ॥ ५० ॥ न केवलमुक्तिमात्रं समर्थश्चापीत्याह—समर्थश्चेति ॥ बध्नन्तु बन्धनाय शिलादिकमानयन्त्वित्यर्थः ॥५१॥ अतिसृष्टाः नियुक्ताः ॥ ५२ ॥ नगान् वृक्षान् । नगसंकाशाः गिरिसंकाशाः । वानराधिपतित्वेपि मनुष्यत्वं संभवति निषादस्थपत्यधिकरणपूर्वपक्षन्यायादत आह—वानरा इति । तत्र तदानीं । प्रचकर्षुः आनयन्ति स्म ॥ ५३ ॥ सेतुबन्धनसाह्यकृतां वृक्षाणां कृतार्थतां

श्रीमद्गाधतासंपादनमीषत्करमितिभावः ॥ **स०** विश्वकर्मणः तन्नामदेवतक्षाध्यक्षस्य । विश्वकर्मणः विश्वंचतत्कर्मच । तस्मात् प्रीतिमान् पितुरितिविपरिणतंसदावर्तते । पितुः यथाकर्मसुकौशलंवर्तते तथासर्वकर्मसुकुशलत्वात्तत्प्रीतिपात्रमितिभावः ॥ ४३ ॥ **स०** धारयिष्यामि विना धरासंपर्कमुपर्येवधारयिष्यामि । यथोक्तंवनपर्वणि—" नलेनस्पृश्यमानास्तेगण्डशैलाःसपर्वताः । तेरुर्वारांनिधौतस्मिंस्तूलंसूक्ष्ममयंयथा " इति ॥ ४४ ॥ **स०** अयंसागरः सगरपुत्रखानितः रामज्ञातिर्महोदधिः । दिदृक्षया स्वदिदृक्षया कृतोयोदण्डस्तद्भयात् गाधं श्लाघ्यंसेतुकर्मोद्दिश्यददौ मार्गमितिशेषः । " गाधःश्लाघ्येपिलिप्सायां " इतिविश्वः । " गायन्तिदिग्विजयिनोयमुपेत्यभूपाः " इत्यादेः ॥ ननु हनुमतियद्दूतआगतेसमुद्रोमैनाकं " अङ्गमाननीयोहिमादृशैः " इत्याद्युक्त्वा सेवार्थंप्रबोधयामासयस्स स्वयंरामउपयाते नोपयातइत्यत्यद्भुतमितिचेत्सत्यं । स्वमध्यवर्तिदुर्वृत्तिमद्रामेतरामारणदितिसुतवधोनक्रोधोदयेनविनाभवतीतिविलंबमवललंबेइतिशीघ्रंनायातोयादोभिःसहेतितात्पर्यमवधेयं ॥४८॥ **स०** उत्पेततुः उत्पेतुः । उत्पेतुश्चेतिक्व-

[ पा० ] १ ज. मुक्त्वोदधिर्यातः. २ क. च.—ट. महाबलं. ३ झ. ट. मकरालये. ४ ग.—ट. मासाद्य. ५ घ. सेतुबन्ध. ६ च. छ. राघवस्य. ७ इदमर्धं क. ख. ङ.—ट. पाठेषुदृश्यते. ८ क. ख. स्मारितोद्याहं. ९ ङ. झ. ट. तस्माद्द्यैव. १० ङ.—ट. ततोविसृष्टा. ११ ङ. छ. झ. ञ. ट. उत्पेततुर्महा. च. उत्पेतुस्ते. १२ ख. ङ.—ट. बभञ्जुःपादपांस्तत्र. १३ क. चिक्षिपुश्चहि. घ. चिक्षिपुःसागरंप्रति.

बिल्वैश्च सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः ॥ चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ॥ ५५ ॥
समूलांश्च विमूलांश्च पादपान्हरिसत्तमाः ॥ इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ॥ ५६ ॥
तालान्दाडिमगुल्मांश्च नारिकेलान्बिभीतकान् ॥ वकुलान्खदिरान्निम्बान्समाजह्रुः समन्ततः ॥५७॥
हस्तिमात्रान्महाकायाः पाषाणांश्च महाबलाः ॥ पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥ ५८ ॥
प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धतम् ॥ समुत्पतितमाकाशमुपासर्पत्ततस्ततः ॥ ५९ ॥
समुद्रं क्षोभयामासुर्वानराश्च समन्ततः ॥ [ आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ]
सूत्राण्यन्ये प्रगृह्णन्ति व्यायतं शतयोजनम् ॥ ६० ॥
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥ स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः ॥ ६१ ॥
दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथा परे ॥ ६२ ॥
वानराः शतशस्तत्र रामस्याज्ञापुरस्सराः ॥ मेघाभैः पर्वताग्रैश्च तृणैः काष्ठैर्बबन्धिरे ॥ ६३ ॥
पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥ ६४ ॥
पाषाणांश्च गिरिप्रख्यान्गिरीणां शिखराणि च ॥ दृश्यन्ते परिधावन्तो गृह्य वारणसन्निभाः ॥६५॥
शिलानां क्षिप्यमाणानां शैलानां च निपात्यताम् ॥ बभूव तुमुलः शब्दस्तदा तस्मिन्महोदधौ ॥६६॥
[ सहेलं हनुमाञ्शैलं यंयं विपुलमाक्षिपत् ॥ तंतं करेण वामेन सलीलं जगृहे नलः ॥ ६७ ॥ ]

व्यञ्जयितुं तान् परिगणयति—श्लोकद्वयेन ते सालैरित्यादिना ॥ ५४—५५ ॥ अथैषामानयनशैघ्र्यमाह—समूलानिति ॥ हरयस्तरूनित्युत्तरशेषः ॥ ५६ ॥ वृक्षेषून्मूलितेषु गुल्मादीनाजह्रुरित्याह—तालानिति ॥ तालान् क्षुद्रतालान् । खदिरान् अरिमेदकान् ॥ ५७ ॥ भूरुहेषु लुप्तेषु पाषाणपर्वतादीनाजह्रुरित्याह—हस्तीति ॥ हस्तिमात्रान् गजप्रमाणान् । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच्प्रत्ययः । यन्त्रैः शकटादिभिः ॥ ५८ ॥ उद्धतं उत्पतितं । आसीत् । समुत्पतितं सत् आकाशं ततस्ततः तत्र तत्र । उपासर्पत् प्रससार ॥ ५९ ॥ सूत्राणि शतयोजनं व्यायतं आकृष्टं यथा भवति तथा । प्रगृह्णन्ति प्रागृह्णन् । आर्जवार्थं व्यत्ययेन लकारः ॥ ६० ॥ घोरकर्मभिः युगपदनेकपर्वतानयनकर्मभिः । तथा नलक्रियानुसारेण ॥ ६१ ॥ दण्डान् सूत्रबद्धदण्डान् । वानरत्वराकरणदण्डान्वा । विचिन्वन्ति विशेषेण चयनं कुर्वन्ति । नलबद्धसेतोरुपरि शिलाश्रितवन्त इत्यर्थः ॥ ६२ ॥ बबन्धिरे सेतुप्रदेशानिति शेषः ॥ ६३ ॥ पुष्पिताग्रैरिति । मार्दवार्थमुपरि बबन्धुरित्यर्थः ॥ ६४ ॥ अथ वानराणां पर्वतानयनं वर्णयति—पाषाणांश्चेति ॥ गृह्य गृहीत्वा ॥ ६५ ॥ निपात्यतां आर्षं परस्मैपदं । तुमुलः संकुलः

चित्पाठः ॥५२॥ स० यन्त्रैः अनायासाहरणकरणैश्चक्रादिभिः । समर्थैःकौशलप्रदर्शनार्थं असमर्थैःशरीररक्षणार्थयन्त्रादिकरणमितिविवेकः ॥५८॥ ती० शतयोजनंव्यायतंसूत्राणिप्रगृह्णन्ति शतयोजनपर्यन्तव्यायामस्यन्यूनातिरिक्तत्वपरिहारार्थंसूत्राण्यगृह्णन्नित्यर्थः । स० शतयोजनमायतंदीर्घंसेतुंकर्तुं ॥ ६० ॥ शि० नलोमहासेतुंचक्रे । ससेतुःवानरैरितरैरपिक्रियते । एतेनपाषाणादिसङ्घट्टनंनलायत्तं । सामग्रीसंपादनमितरायत्तमितिसूचितं ॥ ६१ ॥ स० दण्डान् मानार्थं । विचिन्वन्ति छिद्रादिकंयथानस्यात्तथामार्गयन्ति । ति० विचिन्वन्ति आहरणीयवृक्षादिकं ॥ ती० दण्डान् प्रत्येकंबन्धनीयसेतुविभागमानदण्डान्गृह्णन्ति । विचिन्वन्ति समविषमभागंपरीक्षन्ते । यद्वा सेतुबन्धनार्थं पर्वताद्यानेतृन्वानरांस्त्वरयितुं दण्डान् दीर्घयष्टीः । प्रगृह्णन्ति । विचिन्वन्ति श्रमात्तत्रतत्र च्छायासुविलीनान्वानरानन्वेषयन्ति ॥ ६२ ॥ स० आज्ञैवपुरस्सरीयेषांते तैः । आज्ञायाःपुरस्सराः अहमहमिकयातैर्वा ।

[ पा० ] १ ख. घ.—झ. ट. बिल्वकैः. २ ङ. झ. ट. करीरान्बकुलान्निंबान्. घ. खादिरान्पाटलान्निंबान्. ३ ङ.—ट. समुत्ससर्पचाकाशमवासर्पत्ततःपुनः. ४ घ. च. छ. झ. ञ. निपतन्तःसमन्ततः. ५ इदमर्धं क. पाठेदृश्यते. ६ ख. ग. झ. ह्यायतं. ७ ङ. च. छ. झ. ञ. तदा. ८ क. ख. ङ.—ट. वानरैः. ९ क.—ट. पुरस्सरैः. १० क.—ट. पर्वताभैश्च. ११ क. घ. ङ. झ. दानवसंनिभाः. १२ क. ख. ग. ङ.—ट. तत्रपात्यतां. १३ अयंश्लोकः ख. च. छ. ञ. पाठेषुदृश्यते.

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ॥ प्रहृष्टैर्गजसंकाशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६८ ॥
द्वितीयेन [1]तथा चाह्ना योजनानि तु विंशतिः ॥ कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ६९ ॥
अह्ना तृतीयेन तथा योजनानि कृतानि तु ॥ त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ७० ॥
चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च ॥ योजनानि महावेगैः कृतानि [3]त्वरितैस्तु तैः ॥ ७१ ॥
पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः ॥ योजनानि त्रयोविंशत्सुवेलमधिकृत्य वै ॥
[[4]प्रहृष्टैर्गिरिसंकाशैस्त्वरमाणैः प्लवङ्गमैः ॥ ७२ ॥]
स वानरवरः श्रीमान्विश्वकर्मात्मजो बली ॥ बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ७३ ॥
स नलेन कृतः सेतुः सागरे मकरालये ॥ शुशुभे सुभगः श्रीमान्स्वातीपथ इवाम्बरे ॥ ७४ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७५ ॥
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ [5]ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७६ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ७७ ॥
तदचिन्त्यमसह्यं च [6]अद्भुतं रोमहर्षणम् ॥ ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् ॥ ७८ ॥

॥ ६६—६७ ॥ कृतानीति। चतुर्दशयोजनपरिमितः सेतुर्बद्ध इत्यर्थः। एवमुत्तरेष्वपि योज्यं ॥ ६८ ॥ द्वितीयेनेति। प्रतिदिनं योजनाधिक्यमुत्साहातिरेकात् ॥ ६९—७१ ॥ त्रयोविंशत् त्रयोविंशतिः। आर्षो ऽव्यत्ययः। अधिकृत्य अवधिं कृत्वा ॥ ७२ ॥ अस्य पिता यथा यादृशशक्तिविशिष्टः। तथा तादृशशक्तिविशिष्ट इत्यर्थः ॥ ७३ ॥ सुभगः शोभनमाहात्म्यवान्। स्वातीपथः छायापथः। स्वातीवीथिर्वा। सा चाकाशे सूर्यादीनां मध्यमार्गे मध्यमावीथिः। तदुक्तं वायुपुराणे—"सूर्यादीनां त्रयो मार्गा दक्षिणोत्तरमध्यमाः" इति प्रक्रम्य "तथा द्वे चापि फल्गुन्या मघा चैवार्षभी मता। हस्तश्चित्रा तथा स्वाती मध्यवीथ्यभिविश्रुता ॥ ज्येष्ठा विशाखानूराधा वीथीराजगवी मता। एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते" इति ॥७४—७५॥ नलसंबन्धी सेतुर्नलसेतुः तं ॥ ७६ ॥ निर्विघ्नसेतुबन्धेन जातं वानरहर्षं दर्शयति—आप्लवन्त इति॥ अर्धमेकं वाक्यं। आप्लवन्तः आभिमुख्येन प्लवन्तः दूरं प्लवन्तः। आसन्निति शेषः ॥ ७७ ॥ अचिन्त्यं इतःपूर्वं मनसापि चिन्तयितुमनर्हं। असह्यं कस्यापि यत्नाविषयं। अद्भुतं आश्चर्य-

**शि०** शतशोवानरैः तृणादिभिः बबन्धिरे सेतुप्रदेशाइतिशेषः ॥६३॥ **ति०** सुवेलं सामीप्येसुशब्दस्याव्ययीभावः। वेलासमीपं परपारसमीपमधिकृत्येत्यर्थः ॥ **स०** सुवेलं सुशोभनाप्राप्यावान्तरवेलायस्मिन्कर्मणितद्यथाभवतितथा। अधिकृत्येतिकेचित्। वस्तुतस्तु सुवेलंतन्नामकंपर्वतं। यद्वक्ष्यति "तेसुवेलस्यशैलस्य" इति ॥ ननुवनपर्वणि "दशयोजतविस्तारंत्रिंशद्योजनमायतं। बबन्धुर्वानराः सेतुंप्रथमेदिवसेतदा। सन्ध्यामर्वाग्द्वितीयेतुत्रिंशद्योजनविस्तरः। एवंत्रिभिर्दिनैर्वीरैःसेतुर्नवतियोजनं। चतुर्थेतुदिनेसार्धेयामेतेचवलीमुखाः। दृष्टालङ्केतिरामायशशंसुः" इतिचतुर्थेदिनेदशयोजनानीत्याहत्यशतयोजनोभवतिसेतुर्दशयोजनविस्तारश्चेतिदिनचतुष्टयेसेतुसमाप्त्युक्तेः। तथापद्मपुराणेपुष्करखण्डेत्रिंशेऽध्याये "एषसेतुर्मयाबद्धःसमुद्रेवरुणालये। त्रिभिर्दिनैःसमाप्तिंमेनीतोवानरसत्तमैः।" इतित्रिभिर्दिनैःसेतुसमाप्त्युक्तेश्च भारतेचतुर्दिन्युक्तिश्चकथं। कथंचात्रपञ्चदिन्युक्तिरितिचेन्न। हिरण्याक्षवधस्यभागवतेतृतीयस्कन्धेकर्णमूलताडनेन तथापुनस्तत्रैवदंष्ट्रयेतिकथनंयथाकल्पभेदेनेतिव्यवस्था श्रीतात्पर्येणकृता कृताच वामाङ्गुष्ठनखनिर्भिन्नेतिभागवतस्यदक्षिणाङ्गुष्ठनखनिर्भिन्नेतिपुराणान्तरस्यचवाराहादिकल्पभेदेनेति तथा भारतरामायणयोरपिविरोधसमाधिरवधेयः। अवधेयश्चपद्मपुराणाविरोधः। तथाचोक्तंस्कान्दे—उमासंहिताद्वादशाध्याये "कदाचिद्धनुषासेतुःकदाचिद्विशिखेनच। दार्वादिनाकदाचिच्चकल्पेकल्पेव्यवस्थितिः" इति। एवंदिनेष्वपिकल्पभेदेनसमाधानंज्ञेयं। अथवापञ्चषासुपुस्तकसंपुटीषुनैतेश्लोकाःसन्ति सन्तिचक्वचिदेवेत्येतेप्रक्षिप्ताइतिज्ञेयं ॥ ७४ ॥

[ **पा०** ] १ च.—झ. ट. तथैवाह्ना. २ ङ. च. छ. झ. ट. योजमानितुसागरे. ३ ङ. च. झ. ञ. ट. त्वरितैस्ततः. ग. प्लवगैस्तुतैः. ४ इदमर्धं ग. पाठेदृश्यते. ५ ददृशुरित्यर्धस्यस्थाने ख. पाठे. ददृशुर्देवगन्धर्वाःसिद्धाश्चपरमर्षयः। विस्मिताश्चतदादृष्ट्वा नलसेतुंसुदुष्करं इत्येकःश्लोकोदृश्यते. ६ घ. दुष्करं.

तानि कोटिसहस्राणि वानराणां महौजसाम् ॥ बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ॥ ७९ ॥
विशालः सुकृतः श्रीमान्सुभूमिः सुसमाहितः ॥ अशोभत महासेतुः सीमन्त इव सागरे ॥ ८० ॥
ततः पारे समुद्रस्य गदापाणिर्विभीषणः ॥ परेषामभिघातार्थमतिष्ठत्सचिवैः सह ॥ ८१ ॥
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ॥ हनुमन्तं त्वमारोह अङ्गदं चापि लक्ष्मणः ॥ ८२ ॥
अयं हि विपुलो वीर सागरो मकरालयः ॥ वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥ ८३ ॥
अग्रतस्तस्य सैन्यस्य श्रीमान्रामः सलक्ष्मणः ॥ जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ॥ ८४ ॥
अन्ये मध्येन गच्छन्ति पार्श्वतोन्ये प्लवङ्गमाः ॥ सलिले[१] प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ॥ ८५ ॥
केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८६ ॥
घोषेण[२] महता तस्य सिन्धोर्घोषं समुच्छ्रितम् ॥ भीममन्तर्दधे भीमा[३] तरन्ती हरिवाहिनी ॥ ८७ ॥
वानराणां हि सा तीर्णा वाहिनी नलसेतुना ॥ तीरे निविविशे राज्ञो[४] बहुमूलफलोदके ॥ ८८ ॥

तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः ॥
उपेत्य रामं सहसा महर्षिभिः समभ्यषिञ्चन्सुशुभैर्जलैः पृथक् ॥ ८९ ॥
जय स्वशत्रून्नरदेव मेदिनीं ससागरां पालय शाश्वतीः समाः ॥
इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥ ९० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

करं । रोमहर्षणं पुलकावहं ॥ ७८ ॥ सेतुं बध्नन्तः सेतुबन्धनसहकारिणः ॥ ७९ ॥ सुकृतः दृढतया कृतः सुकृतकरो वा । श्रीमान् ऋजुत्वेन कान्तिमान् । सुभूमिः निम्नोन्नतत्वरहितः । सुसमाहितः निर्विवरः ॥ ८० ॥ पारे दक्षिणतीरे ॥ ८१ ॥ लक्ष्मण इत्यत्र आरोहत्विति पुरुषविपरिणामः कर्तव्यः ॥ ८२ ॥ आरोहणहेतुमाह—अयमिति ॥ विपुलः शतयोजनसंपद्भ्यां गमने बहुकालविलम्बो भविष्यतीति भावः । वैहायसौ अपादचारिणौ । इति सुग्रीवः प्राहेति पूर्वेणान्वयः ॥ ८३—८४ ॥ न लेभिरे मार्गालाभात्तीर एव कंचित्कालं स्थिता इत्यर्थः ॥ ८५ ॥ केचिदित्यर्धमेकं वाक्यं ॥ वैहायसं विहायःसंबन्धि गतं गमनं येषां ते तथोक्ताः । सुपर्णाः गरुडाः ॥ ८६ ॥ अन्तर्दधे तिरश्चकार ॥ ८७ ॥ वानराणां राज्ञो वाहिनीत्यन्वयः । राज्ञेति पाठे राज्ञा सुग्रीवेण सहेत्यर्थः । तीरे दक्षिणतीरे ॥ ८८ ॥ इत्थमकुण्ठदशकण्ठकण्ठाटवीत्रुटननिदर्शनभूतं सेतुनिर्माणनैपुण्यमालोक्य समुपजातमानन्दसन्दोहमा रावणनिबर्हणादनुद्घाटनीयमप्यन्तर्नियन्तुमशक्नुवन्तस्तादृशहर्षप्रकर्षबलात्कारेण देवा यथोचितं राममपूजयन्नित्याह—तदित्यादिना श्लोकद्वयेन ॥ दुष्करं रामादन्यैर्मनसापि कर्तुमशक्यं पृथक्प्रत्येकं समभ्यषिञ्चन् ॥ ८९ ॥ जयेति च्छेदः । स्वशत्रून् आश्रितशत्रूणामेवास्य शत्रुत्वादिति भावः । नरदेवसत्कृतं नरैश्च देवैश्च सत्कृतं । अपूजयन् अस्तुवन् । स्तुतिर्हि वाचिका पूजा ॥ ९० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वाविंशः सर्गः ॥२२॥

---

**रामानु०** सुग्रीवेणसमन्वितोजगामेत्यनेन सुग्रीवस्यापिविहायसागमनंद्योत्यते ॥ ८४ ॥ **ति०** नरदेवाः ब्राह्मणाः ॥ ९० ॥ इतिद्वाविंशः सर्गः ॥ २२ ॥

**[ पा० ]** १ घ. ज. झ. ट. सलिलं. २ क.—घ. च.—ट. महताघोषंसागरस्य. ३ घ. हन्त. ४ घ. सिन्धोर्बहुमूल. क. ग. ङ.—ट. राज्ञाबहुमूल.

# त्रयोविंशः सर्गः ॥ २३ ॥

तीर्णार्णवेनरामेण लक्ष्मणंप्रति घोरतरसमरसूचकोत्पातप्रदर्शनपूर्वकमुत्साहेन सेनयाविभीषणसुग्रीवादिभिस्सहलङ्कांप्रति प्रस्थानम् ॥ १ ॥

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ॥ सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥ १ ॥
परिगृह्योदकं शीतं वनानि फलवन्ति च ॥ बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २ ॥
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ॥ निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३ ॥
वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा ॥ पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४ ॥
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः ॥ क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५ ॥
रक्तचन्दनसंकाशा सन्ध्या परमदारुणा ॥ ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६ ॥
दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः ॥ प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७ ॥
रजन्यामप्रकाशस्तु संतापयति चन्द्रमाः ॥ ८ ॥
कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः ॥ ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ॥ ९ ॥

एवं रामो नलसेतुना तीर्णमहार्णवो महासमरसूचकान्महोत्पातान्दृष्ट्वा चिरप्रार्थिताभीष्टसिद्धिर्भविष्यतीति सन्तुष्टो दृष्टानि निमित्तानि निमित्तज्ञाय लक्ष्मणाय दर्शयति—निमित्तानीति ॥ निमित्तज्ञत्वे लक्ष्मणादप्याधिक्यं दर्शयितुं लक्ष्मणपूर्वज इत्युक्तं । संपरिष्वङ्गश्चिरप्रार्थितसमरस्यासन्नत्वात् । निमित्तापेक्षणस्यावश्यकत्वमुक्तं कामन्दके—"निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत्" इति ॥ १ ॥ शीतमुदकं शीतोदकवत्प्रदेशं । वनानि जलसमीपस्थानि । परिगृह्य वासार्थं स्वीकृत्य । व्यूह्य गरुडरूपेण सन्निवेश्य । तथा व्यक्तीभविष्यति ॥ २ ॥ लोकक्षयकरं । क्षुद्रजनक्षयकरं । विशिष्य प्रवीराणां निबर्हणं विनाशकं । भयमिति युद्धमुच्यते ॥ ३ ॥ भयदर्शने लिङ्गान्याह—वाता इत्यादि ॥ महीरुहाः पतन्ति अकस्मादितिभावः । अत्रात्यन्तानिष्टकरो भूकम्पः संध्याकालिक इति ज्ञेयं । तथोक्तं वसिष्ठेन—"यामत्रयाच्च भूकम्पो द्विजातीनामरिष्टदः। अरिष्टदः क्षितीशानां संध्ययोरुभयोरपि" इति ॥ ४ ॥ क्रव्यादसंकाशाः वृकवर्णाः श्येनादिसंस्थाना इति वा । परुषाः दुर्दर्शाः । रूक्षा इति यावत् । परुषस्वनाः श्रुतिकटुस्वनाः । अतएव क्रूराः भयंकराः । मिश्रं उदकमिति शेषः । क्रूरमिति क्रियाविशेषणं । अत्र मिहिरः—"दिव्युल्कापतनं चैव दिवा नक्षत्रदर्शनम्। दिवाऽशनिस्तथा काष्ठतृणरक्तप्रवर्षणं" ॥ ५ ॥ रक्तचन्दनं कुङ्कुमं । रक्तचन्दनतुल्यमेघवतीत्यर्थः। परमदारुणा भवतीति शेषः। अग्निमण्डलं अग्निपिण्डः॥६॥ दीनाः दीनाकृतयः। जनयन्तः सूचयन्तः ॥ ७ ॥ रजन्यामिति अर्धमेकं वाक्यं। अप्रकाशः निष्प्रभः । संतापयति । शीतस्य संतापकरणं ह्युत्पात इति भावः ॥ ८ ॥ कृष्णा रक्ताश्चांशवः पर्यन्ते यस्य सः तथोक्तः । सर्वान्ते कृष्णमण्डलः तदनन्तरं रक्तमण्डल इत्यर्थः । सुलोहितः मध्ये अत्यन्तरक्तवर्णः। लोकक्षये प्रलये उदितः परिवेष इव स्थितः। रूक्षः क्रूरः। अप्रशस्तः अप्रसिद्धः। इतः पूर्वमदृष्ट इत्यर्थः। परिवेषः दृश्यत इति शेषः। अत्र वर्णत्रयकथनेन मण्डलत्रयकथनात्सायंकालिकत्वाच्च परिवेषस्य नृपक्षयकरत्वं सूच्यते। तथाह काश्यपः—"द्विमण्डलश्चमूपघ्नो नृपघ्नो यस्त्रिमण्डलः" इति । "दिनकरपरिवेषः पूर्वयामे तु पीडा दिनकरपरिवेषो वृष्टियुद्धं द्वितीये । दिनकरपरिवेषं क्षेममाहुस्तृतीये

स० भयं तत्साधनं । निबर्हणं नाशश्च । योग्यतयाभयं ऋक्षवानराणां । रक्षसांचनिबर्हणमित्यन्वेतव्यं । अन्यथा सर्वज्ञस्य रामस्यनिमित्तोपन्यासोनिर्मरणवानरऋक्षविषयेमोघःस्यात् । अथवा "तारापिता तान्निरुजश्चकार" इतितद्गन्धमादनानिलोज्जीविताःप्रह्मवराच्चजीविताश्चेत्येतत्पूर्वतनींमृतिंविवक्षित्वा प्रबर्हणवचनमर्हतिऋक्षवानरपक्षेपि ॥ ३ ॥ स० परुषस्वराः प्रखरस्वराः ।

[ पा० ] १ ङ. झ. प्रबर्हणं. २ ठ. परुषस्वराः.

आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ १० ॥
रजसा महता चापि नक्षत्राणि हतानि च ॥ युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ ११ ॥
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ॥ शिवाश्चाप्यशिवान्नादान्नदन्ति सुमहाभयान् ॥ १२ ॥
शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः ॥ भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १३ ॥
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् ॥ अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ १४ ॥
इत्येवमुक्त्वा धर्मात्मा धन्वी संग्रामहर्षणः ॥ प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १५ ॥
सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः ॥ प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे ॥ १६ ॥
राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् ॥ हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

दिनकरपरिवेषः सर्वनाशश्चतुर्थे " इति ॥ ९ ॥ नीलं लक्ष्म छिद्ररूपं । तदाह वराहः—" अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः । चन्द्रार्कमण्डलच्छिद्रं दृष्ट्वा जनपदक्षयः " इति ॥ यद्वा नीलं लक्ष्म चन्द्र इव कलङ्को दृश्यते । एतदेवौत्पातिकं नैल्यमधिकृत्य यदादित्यस्य रोहितं रूपमित्यारभ्य यत् कृष्णं तदन्नस्येत्युच्यते ॥ १० ॥ रजसा मालिन्येन । युगान्तं प्रलयं ॥ ११ ॥ नीचैः दुर्बलैः । अधिकबलानां दुर्बलैः परिभवोऽप्युत्पात इति । शिवाः गोमायवः । " स्त्रियां शिवा भूरिमायगोमायुः " इत्यमरः । नादान् नदन्ति नादान्कुर्वन्तीत्यर्थः ॥ १२ ॥ उक्तोत्पातफलमाह—शैलैरिति ॥ मांसशोणितकर्दमा मांसशोणितरूपकर्दमवती ॥ १३ ॥ क्षिप्रं सत्वरं । जवेन वेगेन ॥ १४ ॥ पुरतः प्रतस्थ इति उत्साहातिशयोक्तिः । विभुः समर्थः ॥ १५ ॥ निश्चिताः निश्चयवन्तः । अत्र प्रस्थानं शीतोदकफलवद्वनपरिग्रहार्थं परिगृह्योदकमित्यादिना प्रथमं तस्य कर्तव्यतया अभिहितत्वात् ॥ १६ ॥ धृतानां धैर्यवतां । कर्मचेष्टाभिः युद्धकर्मादिविषयचेष्टाभिः लाङ्गूलोत्थापनादिभिः । तुतोषेत्यनेन इदं दुर्गप्रदेशं दृष्ट्वा वानरा निरुत्साहा भवेयुरिति पूर्वं राममनसि स्थितमित्यवगम्यते ॥ १७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

---

अतएवपरुषाः श्रोत्रोल्बणाः । क्रूराः मनउद्वेजकाः ॥५॥ **शि०** क्षिप्रमभियाम । एतेन स्वविजयसूचकसुशकुनोपि रामेणावलोकितइति व्यञ्जितं ॥ १४ ॥ **ति०** रामः जनरमणः रामइत्यन्वयः ॥ **स०** अरामः पुत्रत्वेनतत्सदृशःतद्भिन्नोलक्ष्मणः । पुरतोरामः । अपुरतः तत्पश्चाल्लक्ष्मणः ॥ सरैः मुक्ताहारादिभिर्नविद्यतेमाशोभाइदानींयस्येतिवा सरामः इदानींदूरितभार्यत्वेनारामः सर्वाभिरामोपिरिपूर्णाममनोहरइतिवा अरामः । धर्मात्मेतिक्वचित्पाठोव्याख्यातृसाहसासहः ॥१५॥ **ति०** धृतानां निश्चितबुद्धीनां ॥१६॥ **स०** राघवस्य स्वस्यप्रियार्थं भार्यार्थं । यत्कर्म अन्वेषणरूपं तदनुरूपाभिश्चेष्टाभिः । रघुनन्दनोरामस्तुतोष । राघवशब्देन मुखतोगृहीतस्यपुनारघुनन्दनपदेनग्रहणं " अनुग्रहार्थंसत्कृषेरवापसलक्ष्मणोत्वंमुनितोहिकेवलं " इत्यादिवत्संभवति । राघवस्य लक्ष्मणस्य । प्रियार्थं प्रीत्यावहप्रयोजनमुद्दिश्य । यत्कर्म तदनुरूपचेष्टाभिः रघुनन्दनोरामः । राघवस्य रामस्य । रघुनन्दनोलक्ष्मणइतिवा ॥ **ति०** कर्मचेष्टाभिः कर्मणा धैर्येणपरंप्रतिप्रस्थानलक्षणेन । चेष्टाभिः कायव्यापारैश्च तुतोषेत्यन्वयः ॥ १७ ॥ इतित्रयोविंशः सर्गः ॥ २३ ॥

**[ पा० ]** १ क. ख. च. छ. नक्षत्राण्यावृतानिच. २ च.—झ. ट. विमुक्तैः. ३ क. च. छ. अभियामो. ४ च. छ. झ. ञ. ट. सर्वैर्हरिभिरावृताः. ५ झ. ञ. ट. ठ. धन्वीसरामःसंग्रामधर्षणः. ६ ङ.—ञ. सुग्रीवास्सर्वेते. ७ ङ. झ. ञ. ट. धृतानांद्विषतां. ८ क. ख. रावणस्यवधार्थंतुगच्छतांवीर्यशालिनां. ९ ङ. झ. ञ. ट. सुतरांवीर्यं.

## चतुर्विंशः सर्गः ॥ २४ ॥

लङ्कासमीपंगतैरन्तर्गतराक्षससेनाक्रोशमसहमानैर्वानरैरुच्चैरुद्घोषणम् ॥ १ ॥ रामेणलक्ष्मणंप्रति लङ्कावर्णनम् ॥ २ ॥ तथा सुरक्षितंसेनासंनिवेशनपूर्वकं वानरेभ्योबन्धाच्छुकराक्षसमोक्षणम् ॥ ३ ॥ शुकेन रावणमेत्यतंप्रति वानरकृतस्वबन्धादिनिवेदनपूर्वकं रामपराक्रमप्रशंसनेन तस्मैसीताप्रत्यर्पणस्य रणस्यवा करणचोदना ॥ ४ ॥ तेन शुकंप्रत्यात्मश्लाघनपूर्वकं रामेणस्वस्याजय्यत्वादिप्रलपनम् ॥ ५ ॥

सा वीरसमिती राज्ञा विरराज व्यवस्थिता ॥ शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १ ॥
प्रचचाल च वेगेन त्रस्ता चैव वसुन्धरा ॥ पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २ ॥
ततः शुश्रुवुराकुष्टं लङ्कायां काननौकसः ॥ भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥ ३ ॥
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः ॥ अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् ॥ ४ ॥
राक्षसास्तु प्लवङ्गानां शुश्रुवुश्चापि गर्जितम् ॥ नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५ ॥
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ॥ जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६ ॥
अत्र सा मृगशावाक्षी रावणेनोपरुध्यते ॥ अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ ७ ॥
दीर्घमुष्णं च निश्वस्य समुद्वीक्ष्य च लक्ष्मणम् ॥ उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८ ॥
आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण ॥ मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९ ॥

अथ रावणस्य वानरसेनागमनश्रवणं—सेत्यादि ॥ राज्ञा रामेण । व्यवस्थिता शीतोदकादिकं परिगृह्य स्थिता । वीरसमितिः वीरसङ्घः । "सङ्घे सभायां समितिः" इत्यमरः । शशिना व्यवस्थिता कृतमर्यादा ॥ १ ॥ सागरवर्चसा सागरवदपरिच्छिन्नेनेत्यर्थः ॥ २ ॥ ततः सेनानिवेशानन्तरं । निष्कोलाहले सतीत्यर्थः । आकुष्टं सेनाक्रोशं । भावे क्तः । भेरीमृदङ्गसंघुष्टमिति समुच्चयः ॥ ३ ॥ घोषवत्तरं राक्षसघोषादधिकघोषवत् । क्रियाविशेषणं ॥ ४ ॥ दृप्तानां पूर्णानां । आकाशस्यैव शब्दाश्रयत्वादम्बर इत्युक्तं । यद्वा "प्लवगसैन्यमुलूकजिताजितं" इतिवदम्बरशब्दस्तत्पर्यायं नभश्शब्दं लक्षयित्वा श्रावणमासमाह ॥ ५ ॥ चिह्नयुक्तो ध्वजः । केवलचेला पताकेति भिदा । चेतसा उपलक्षितः मनसा जगाम । सस्मारेत्यर्थः ॥ ६ ॥ स्मरणप्रकारमाह—अत्रेति ॥ एतच्छ्लोकान्ते प्रकारवचनमितिकरणं द्रष्टव्यं । सा साकेते सकलभोगार्हा । मृगशावाक्षी । मृगानुसरणसमये यद्धरिणदर्शनकुतूहलेन मृगशिशुवत्तरलतरं विलोचनयुगलं तदेवाद्यापि मनसि परिवर्तते । तदाह । यद्वा मृगशावे मारीचमये अक्षिणी यस्या इति विग्रहः ॥७॥ अद्य युद्धयात्रासमये कान्तास्मरणव्यसनमनुचितमिति तन्नियमितवानिति सूचयति दीर्घमुष्णं च निश्वस्येत्यनेन । तत्कालहितं युद्धयात्रासमये हितं । शोकविस्मारकनगरशोभावर्णनरूपं वचनं । यद्वा अङ्गदः सह नीलेनेत्यादि वाक्यं तत्कालहितं । तत्साहचर्यादाढ्यं नगरमितिवत् आलिखन्तीमित्यादिकं सर्वं वाक्यजातं तत्कालहितमित्युक्तं ॥ ८ ॥ आलिखन्तीं स्पृशन्तीं । उत्थितां उन्नतां । नगाग्रे

शि० सागरवर्चसा सागरस्यसगरवंशोद्भवस्यरामस्यवर्चस्तेजोयस्मिन् । किंचसागरात् सागरतरणात् लब्धंवर्चोयेनतेन । वेगेनोपलक्षितेनबलौघेन । त्रस्तत्वादिविशिष्टावसुंधरा प्रचचाल ॥ स० सागरस्यवर्चोयेनसः । तेनबलौघेन सेनासङ्घेन । वसुंधरा वेगेनपीड्यमानात्रस्तेवप्रचचाल ॥ २ ॥ स० दूयमानेनेति मनःपदेनचेतःपदेनाप्यन्वेति । ततश्च दूयमानेनचेतसासहितांसीतां दूयमानेनमनसाजगामेत्यन्वयःकृतोज्ञेयः । "वृद्धोयूना—" इत्यादिवत्सहेतिलाभः । दूयमानेनमनसाविशिष्टां । वैशिष्ट्यंतृतीयार्थ इतिवा ॥ ६ ॥ ति० आत्मनस्तत्कालहितं लङ्कादर्शनकालेआत्मनःप्रीतिकरं । दिव्यपुरीदर्शनजसंतोषद्योतकमितियावत् ॥ ८ ॥

[ पा० ] १ क. ख. ग. ङ. च. झ. ट. राक्षसास्तत्प्लवंगानां. २ ख. ग. ङ. झ. ञ. ट. शुश्रुवुस्तेपि.

विमानैर्बहुभिर्लङ्का संकीर्णा भुवि राजते ॥ विष्णोः पदमिवाकाशं छादितं पाण्डुरैर्घनैः ॥ १० ॥
पुष्पितैः शोभिता लङ्का वनैश्चैत्ररथोपमैः ॥ नानापतङ्गसंघुष्टैः फलपुष्पोपगैः शुभैः ॥ ११ ॥
पश्य मत्तविहंगानि प्रलीनभ्रमराणि च ॥ कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ॥ १२ ॥
इति दाशरथी रामो लक्ष्मणं समभाषत ॥ १३ ॥
बलं च तद्वै विभजञ्शास्त्रदृष्टेन कर्मणा ॥ शशास कपिसेनाया बलमादाय वीर्यवान् ॥ १४ ॥
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १५ ॥
तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ॥ आश्रित्य दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १६ ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ॥ तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वं समाश्रितः ॥ १७ ॥
मूर्ध्नि स्थास्याम्यहं युक्तो लक्ष्मणेन समन्वितः ॥ १८ ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ॥ १९ ॥
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ॥ पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥ २० ॥
सुविभक्तमहाव्यूहा महावानररक्षिता ॥ अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा ॥ २१ ॥
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ॥ आसेदुर्वानरा लङ्कां विमर्दयिषवो रणे ॥ २२ ॥

त्रिकूटशिखरे ॥ ९ ॥ विष्णोः आदित्यस्य । पदं स्थानं । आकाशमध्यमिति भावः । विमानं अनेकतलप्रासादः ॥ १० ॥ फलभूतानि पुष्पाणि यासां ताः फलपुष्पाः मल्लिकादयः ताभिरुपगम्यन्त इति तथा । अतो न पुष्पितैरित्यनेन पौनरुक्त्यं । सङ्घुष्टं सङ्घोषः । भावे क्तः । नानाविधानि पतङ्गसङ्घुष्टानि येषां तैः ॥११॥ मत्तविहंगानि । विहंगशब्दोत्र कोकिलपरः । अनेन सदा फलवत्त्वमुक्तं । प्रलीनभ्रमराणि मधुपानपरवशतया निष्पन्दभ्रमराणि । अनेन सदा पुष्पवत्त्वमुक्तं । कोकिलाकुलं षण्डं पुष्पसमूहो येषां तानि कोकिलाकुलषण्डानि । अनेन सदा पल्लवितत्वमुक्तं । कोकिलानां पल्लवप्रियत्वात् । वनानीत्यनुषञ्जनीयं । दोधवीति पुनः पुनः कम्पयति । " धूञ् कम्पने " इत्यस्माद्यङ्लुक् ॥ १२ ॥ इतीत्यर्धमेकं वाक्यं ॥१३॥ शास्त्रदृष्टेन नीतिशास्त्रज्ञानेन । कर्मणा प्रयोगेण । बलं सेनां । विभजन् व्यूहयन् । व्यूहहेतोः शशास । कपिसेनाया इत्याद्युत्तरशेषः॥१४॥ शासनप्रकारमाह—कपिसेनाया इत्यादि ॥ अङ्गदो नीलेन सह स्वबलमादाय कपिसेनायाः उरसि उरःस्थाने । तिष्ठेदित्यन्वयः ॥ १५ ॥ वानरौघसमावृतः कपिसमूहसहितः ॥ १६ ॥ गन्धहस्ती मत्तगजः ॥ १७ ॥ मूर्ध्नीत्यर्धमेकं वाक्यं ॥ युक्तः सावधानः ॥ १८ ॥ वानरः इति वेगदर्शिविशेषणं । ऋक्षमुख्यपदं वानराणामप्युपलक्षणं । महात्मानः महाबुद्धयः । कुक्षिं कुक्षिस्थानं ॥ १९ ॥ जघनं चरमभागं पुच्छमिति यावत् । कपिराजः सुग्रीवः । पश्चार्धमिति । " अपरस्यार्धे पश्चभावो वक्तव्यः " इत्यपरशब्दस्य पश्चादेशः । अर्धशब्दोंशवाची । पश्चिमां दिशमित्यर्थः ॥ २० ॥ सुविभक्तमहाव्यूहा सुष्ठु कृतगरुडव्यूहा । उत्तरत्र शार्दूलवचने " गारुडं व्यूहमाश्रित्य " इति वक्ष्यमाणत्वात् । साभ्रसंप्लवा समेघसंचारा ॥ २१ ॥ आसेदुः आसादितुमुद्युक्ताः । विमर्दयिषवः मर्दयि-

**रामानु०** विष्णोःपदं विष्णुपादभूतं ॥ **ति०** विष्णोः व्यापनशीलस्यवायुमयस्यब्रह्मणः । पदं प्रचारस्थानमाकाशमिव ॥ **स०** आकाशं पूर्वप्रकाशमानं । विष्णोः पदं आकाशं । पाण्डुभिर्घनैर्मेघैः छादितमिव ॥ १० ॥ **स०** पुष्पितैःशोभिता एकत्र । नानापतगसंघुष्टफलपुष्पोपगैर्वनैरपत्र ॥ ११ ॥ **ति०** विभजत् व्यभजत् ॥ १४ ॥ **ति०** नीलेनसहउरसि उच्यमानपुरुषव्यूहस्योरसि ॥ १५ ॥ **ति०** जांबवदादयस्त्रयोपिऋक्षाः ॥ १९ ॥ **ति०** जघनं पश्चार्धं । लोकस्य भूलोकस्य । पश्चार्धं पश्चिमदिशं । तेजसा

**[ पा० ]** १ ङ. झ. ञ. ट. संकीर्णारचितापुरा. क.—घ. च. छ. संकीर्णाहिविराजते. २ ङ. झ. ट. नानापतगसंघुष्ट. फलपुष्पोपगैः. ३ क. वनान्युपवनानिच. ४ ख. ङ. च. छ. झ. ट. तत्रविभजच्छास्त्र. घ. तद्विभक्तंवैशास्त्र. ५ क. ख. ङ.—ट. कपिसेनांतांबलादादाय. ६ क.—छ. झ. ञ. ट. आश्रितो. ज. आस्थितो. ७ ङ.—ट. मृषभोनामवानरः. ८ क. ख. घ. च. छ. ज. ञ. पार्श्वमधिष्ठितः. ङ. झ. ट. पक्षमधिष्ठितः. ९ क. ग. ङ.—ट. यत्तो.

शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ॥ इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः ॥ २३ ॥
ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ॥ सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ॥ २४ ॥
रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः ॥ मोचयामास तं दूतं शुकं रामस्य शासनात् ॥ २५ ॥
मोचितो रामवाक्येन वानरैश्चाभिपीडितः ॥ शुकः परमसंत्रस्तो रक्षोधिपमुपागमत् ॥ २६ ॥
रावणः प्रहसन्नेव शुकं वाक्यमभाषत ॥ किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ॥
कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ॥ २७ ॥
ततः स भयसंविग्नस्तथा राज्ञाऽभिचोदितः ॥ वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ २८ ॥
सागरस्योत्तरे तीरे ब्रुवंस्ते वचनं तथा ॥ यथासंदेशमक्लिष्टं सान्त्वयं श्लक्ष्णया गिरा ॥ २९ ॥
क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रैः प्लवङ्गमैः ॥ गृहीतोस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः ॥ ३० ॥
नैव संभाषितुं शक्याः संप्रश्नोत्र न लभ्यते ॥ प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ॥ ३१ ॥
स च हन्ता विराधस्य कबन्धस्य खरस्य च ॥ सुग्रीवसहितो रामः सीतायाः पदमागतः ॥ ३२ ॥
स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् ॥ एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥ ३३ ॥
ऋक्षवानरसङ्घानामनीकानि सहस्रशः ॥ गिरिमेघनिकाशानां छादयन्ति वसुंधराम् ॥ ३४ ॥
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च ॥ नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३५ ॥
पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु ॥ सीतां वाऽस्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥ ३६ ॥

तुमिच्छवः । सनि द्वित्वाभाव आर्षः ॥ २२ ॥ शिखरैः साधनैः । विकिराम चूर्णयाम । मनांसि दधिरे निश्चयं चक्रुरित्यर्थः ॥ २३—२६ ॥ सितौ बद्धौ । "षिञ् बन्धने" इत्यस्माद्धातोर्निष्ठा । तत्र हेतुमाह—लूनपक्षश्च दृश्यस इति । चो हेत्वर्थः । यस्माल्लूनपक्षो दृश्यसे तस्मात् सिताविति संबन्धः । अनेकचित्तानां चञ्चलचित्तानामित्यर्थः । अनेन पुनः पुनर्बन्धविसर्जने ध्वन्येते । तेषां वानराणां वशमागतो न कच्चिदित्यन्वयः ॥ २७ ॥ संविग्नः संभ्रान्तः । तथापि चोदितः मत्संदेशस्य किमुत्तरं सुग्रीवेण दत्तं वदेति चोदित इत्यर्थः ॥ २८ ॥ सान्त्वयं असान्त्वयं । सुग्रीवमितिशेषः ॥ २९ ॥ लोप्तुं विनाशयितुं ॥ ३० ॥ अत्र वानरेषु । विषये सप्तमी । तीक्ष्णाः क्रूराः । उक्तेरेवावकाशो नास्ति । प्रत्युक्तेः का कथेति भावः । रावणप्रसादार्थं मध्ये राक्षसाधिपेतिसंबुद्धिः । त्वत्तोप्येतेऽतिशयिता इति ज्ञापनार्थं वा ॥ ३१ ॥ वक्ष्यमाणयोः सीताप्रदानयुद्धयोर्मध्ये सीताप्रदानस्य साधिष्ठत्वं दर्शयितुं रामपराक्रमं वर्णयति—स चेति ॥ तदव्याहतपराक्रमस्य भूयः संदर्शनादस्मानेवत्र्यं हनिष्यत्येवेति भावः ॥ ३२ ॥ निर्धूय तृणीकृत्य । एष इत्यतिसन्निहितत्वमुच्यते ॥ ३३ ॥ सङ्घानामनीकानीत्यनेन सङ्घारब्धत्वोक्त्या महानीकत्वं सूचितं ॥ ३४ ॥ इदानीं तव वचनावकाशाभावेपि पुनः प्रकारान्तरेण गच्छेत्याशङ्क्याह—राक्षसानामिति ॥ संधिः योगमात्रं ॥ ३५ ॥ संप्रति कर्तव्यमुपदिशति—पुरेति ॥ पुरा आयान्ति आयास्यन्ति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । एकतर-

घृतः प्रचेताइव ॥ २० ॥ स० विमुच्यतां बन्धनात् । पूर्वविमुच्यतामित्युक्तिस्ताडनादिविमोचनविषयिणी । इयंतुलङ्कांप्रतिगन्तुं मुच्यतामित्येतत्परेतिमुक्त्युक्तिविवेकः ॥ २४ ॥ स० निपीडितः प्राक् । परमसंत्रस्तः पुरस्सरकपयस्ताडयेयुरितिवा इयदालस्यं कृतंइतिरावणः क्रुद्धोहनिष्येदितिवातथा । अतएव पुनर्मायया लूनपक्षत्वमुच्यमानंयुज्यते ॥ इतः परं रामाज्ञानन्तरं असन्त्रस्तः कपिपीडनभयरहितः ॥ २६ ॥ ति० प्रहसन्नेव लूनपक्षत्वादिविकृताकारंदृष्ट्वाप्रहासः । स० कपिपीडाईदृशी अहोइतिहासः ॥ २७ ॥ ति० सागरस्योत्तरेतीरेस्थिता श्लक्ष्णयागिरा वानरान्सान्त्वयन् अक्लिष्टंतेवचनं यथासंदेशंतथाऽब्रुवं ॥ २९ ॥ ति० विराधादि-

[ पा० ] १ घ. शुकमत्रविसर्जय. २ ङ. च. छ. झ. ञ. ट. रामस्यतुवचः. ३ ख.—ट. वानरैश्चनिपीडितः. ४ क. ख. ग. ङ.—ट. वाक्यमुवाचह. ५ ङ. च. छ. झ. ट. स्तेनराज्ञा. ६ घ. रावणंराक्षसाधिपं. ७ झ. तीरेऽब्रवंते. ८ झ. सान्त्वयन्. ९ ङ. झ. ञ. ट. दृष्टमात्रः. १० ङ. झ. नते. ११ ङ. झ. ट. युद्धंवापिप्रदीयतां.

शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥ रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३७ ॥
यदि मां प्रति युद्ध्येरन्देवगन्धर्वदानवाः ॥ नैव सीतां [1]प्रयच्छामि सर्वलोकभयादपि ॥ ३८ ॥
कदा नामाभिधावन्ति राघवं मामकाः शराः ॥ वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३९ ॥
कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः ॥ शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ ४० ॥
तच्चास्य बलमादास्ये बलेन महता वृतः ॥ ज्योतिषामिव सर्वेषां प्रभामुद्यन्दिवाकरः ॥ ४१ ॥
सागरस्येव मे वेगो मारुतस्येव मे गतिः ॥ न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४२ ॥
न मे तूणीशयान्बाणान्सविषानिव पन्नगान् ॥ रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ॥४३॥
न जानाति पुरा वीर्यं मम युद्धे स राघवः ॥ ४४ ॥
मम चापमयीं वीणां शरकोणैः प्रवादिताम् ॥ ज्याशब्दतुमुलां घोरामार्तभीतमहास्वनाम् ॥ ४५ ॥
नाराचतलसन्नादां तां ममाहितवाहिनीम् ॥ अवगाह्य महा[2]रङ्गं वादयिष्याम्यहं रणे ॥ ४६ ॥
न वासवेनापि सहस्रचक्षुषा यथाऽस्मि शक्यो वरुणेन वा स्वयम् ॥
यमेन वा धर्षयितुं शराग्निना [3]महाहवे वैश्रवणेन [4]वा पुनः ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्विंशः सर्गः॥ २४ ॥

---

मित्युक्तंविशदयति—सीतामिति ॥ ३६—३७ ॥ सर्वलोकभयात् सर्वलोकेभ्यो भयात् ॥ ३८ ॥ स्वमनोरथं दर्शयति—कदेत्यादिना ॥ ३९ ॥ तूणीशयैः चिरात्समराभावेन केवलतूणीरस्थैः। गणशः सङ्घशः। उल्काभिः निर्गतज्वालाकाष्ठैः। ताभिः कुञ्जरमभिद्रावयन्तीति प्रसिद्धिः ॥ ४० ॥ तत् बलं "स च हन्ता विराधस्य" इत्यादिना भवदुक्तबलं। आदास्ये तिरस्करोमीत्यर्थः ॥ ४१—४३ ॥ न जानातीत्यर्धं ॥ पुरा न जानाति इतःपरं ज्ञास्यतीत्यर्थः ॥ ४४ ॥ अथ रूपकव्याजेन युद्धस्यात्मनो विनोदनकरत्वमाह—ममेत्यादिना ॥ ममाहितवाहिनीमेव महारङ्गं विपुलनृत्तशालां। अवगाह्य प्रविश्य। शरैरेव कोणैः वीणावादनदण्डैः। प्रवादितां शब्दितां। ज्याशब्द एव तुमुलः तुमुलस्वनो यस्यास्तां। आर्तभीतमहास्वनां आर्तभीतशब्देन तत्स्वनो लक्ष्यते। एवं नाराचतलशब्देनापि तत्स्वनः। आर्तभीतानां स्वन एव महास्वनो यस्यास्तां। नाराचतलस्वन एव सन्नादो यस्यास्तां। घोरां अन्यैर्वादयितुमशक्यां। मम चापमयीं वीणामिति व्यस्तरूपकं। रणे रणस्वजने। शृण्वतीति शेषः। वीणाया मन्द्रमध्यतारभेदेन स्वरत्रयसंभवादत्रापि स्वरत्रयमुक्तं ॥ ४५—४६ ॥ न वासवेनेति सहस्रचक्षुष्ट्वं गर्वहेतुत्वेनोक्तं। दिग्विजये वरुणपुत्रैरेव युद्धकरणात् स्वयमित्युक्तं। वासवादिभिः शराग्निना यथा धर्षयितुं न शक्योस्मीति योजना ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

---

हन्तेत्यनेन तवापिहन्तेतिसूचितं पदं स्थानं। अन्विष्यागतः ॥ ३२ ॥ **स०** चक्षुषेत्येकवचनेन अल्पबलेशुकेकोपेनसमग्रचक्षुषां विनियोगे भवेद्भस्मीभूतःस्इतितज्जीवनेच्छारावणस्याधुनास्तीतिद्योत्यते ॥ ३७ ॥ **स०** सर्वलोकः सर्वज्ञः हरोवाहरिर्वाहिरण्यगर्भोवा। तस्माद्भयादपि नैवप्रदास्यामीत्यन्वयः। सर्वलोकभयात् पुत्रादिलोकनाशभयादपीतिवा ॥ ३८ ॥ **रामानु०** सागरस्य जगदाप्लवनोद्यतस्य ॥ ४२ ॥ इतिचतुर्विंशःसर्गः ॥ २४ ॥

[ **पा०** ] १ क. ख. ग. ङ. च. झ. ञ. प्रदास्यामि. २ ङ. झ. ट. नदीमहित. ३ घ. नवैश्रवेणापिमृधेस्वयंभुवा. ४ क. च. छ. ञ. वास्वयं.

# पञ्चविंशः सर्गः ॥ २५ ॥

विभीषणेन रावणप्रेरणया रामसेनागणनाद्यर्थंप्रहितयोः कपिरूपधारणेनकपिसेनाप्रविष्टयोः शुकसारणनाम्नो राक्षसयोर्ग्रहणेन रामेप्रत्यर्पणम् ॥ १ ॥ स्वप्रार्थनया रावणे संदेशनिवेदनचोदनपूर्वकं राममोचिताभ्यांशुकसारणाभ्यां रावणमेत्य तंप्रति विभीषणकृतस्वग्रहणादिनिवेदनम् ॥ २ ॥ तथा वानरसेनाया अपरिच्छेद्यत्वनिवेदनपूर्वकं रामप्रभाववर्णनेनसीताप्रदानपूर्वकं तेनसन्धिविधानम् ॥ ३ ॥

सबले सागरं तीर्णे रामे दशरथात्मजे ॥ अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १ ॥
समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् ॥ अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २ ॥
सागरे [1]सेतुबन्धं तु न श्रद्दध्यां [2]कथंचन ॥ अवश्यं चापि संख्येयं तन्मया वानरं बलम् ॥ ३ ॥
भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ ॥ परिमाणं च वीर्यं च ये च [4]मुख्याः प्लवङ्गमाः ॥ ४ ॥
मन्त्रिणो ये च रामस्य सुग्रीवस्य च [3]संमताः ॥ ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ५ ॥
स च सेतुर्यथा बद्धः सागरे सलिलार्णवे ॥ [5]निवेशं यद्यथा तेषां वानराणां महात्मनाम् ॥ ६ ॥
रामस्य व्यवसायं च वीर्यं प्रहरणानि च ॥ लक्ष्मणस्य च [6]वीर्यं च तत्त्वतो ज्ञातुमर्हथः ॥ ७ ॥
कश्च सेनापतिस्तेषां वानराणां [7]महौजसाम् ॥ [8]एतज्ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ॥ ८ ॥
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ॥ हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९ ॥
ततस्तद्वानरं सैन्यमचिन्त्यं रोमहर्षणम् ॥ संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥ १० ॥

अथ शुकसारणप्रेषणं पञ्चविंशे—सबल इत्यादि ॥ दशरथात्मजइति मनुष्यत्वोक्तिः । श्रीमानिति मदातिशयोक्तिः । शुकः पूर्वस्मादन्यः । सारणसाहित्यात् ॥ १ ॥ समग्रं विशालं । दुस्तरं तरितुमशक्यं । सागरं कर्म । वानरं वानरसंबन्धि बलं कर्तृ । तीर्णं अतरत् । कर्तरि क्तः । सेतुबन्धनं रामेण कृतमिति शेषः ॥ २ ॥ सेतुबन्धनं रामेण कृतं । कथंचन आप्तपुरुषोदितत्वेपि । अपिच तथापि । संख्येयं ज्ञातव्यं ॥ ३ ॥ भवन्तावित्यादि चतुःश्लोक्येकान्वया ॥ तस्माद्भवन्तौ अनुपलक्षितौ परैरविज्ञातौ सन्तौ । वानरं सैन्यं प्रविश्य । परिमाणं वानराणामियत्तां । तेषां वीर्यं बलपरिच्छेदं । ये प्लवङ्गमाःमुख्याः प्रधानभूताः तान् । ये रामस्य सुग्रीवस्य च संमता मन्त्रिणः । ये नासीरभटाः पूर्वमभिवर्तन्ते । ये च प्लवङ्गमाः वस्तुतः शूराः तान्सर्वान् । सागरे सगरखानिते । सलिलार्णवे लवणजलसमुद्रे । स सेतुः वानरतरणार्थसेतुश्च । यथा येन प्रकारेण बद्धः तं प्रकारं । तेषां निवेशं निवासं । उत्पत्तिस्थानं वा । क्लीबत्वमार्षं । यद्यथा यादृशप्रकारः । रामस्य व्यवसायं कर्तव्यविषयनिश्चयं । वीर्यं बलं । प्रहरणानि आयुधानि । लक्ष्मणस्य व्यवसायं बलं च । तत्त्वतः पारमार्थ्येन । ज्ञातुमर्हथ इत्यन्वयः ॥ ४—९ ॥ नाध्य-

ति० अमात्यत्वेनविशेषणादयंशुकोऽन्यः । पूर्वप्रेषितशुकोक्तवृत्तान्तज्ञानपूर्वकंप्रेषणाच्चेतिकतकादयः ॥ स० चारात्प्राचीनादयमन्योऽमात्यत्वेनोक्तेः । अथवाऽयंसएव । परिचितसैन्यकत्वात् । अमात्यस्यात्याप्तत्वेन प्रथमप्रतिपत्त्यर्थंप्रेषणस्यौचित्यात् । अतएव पक्षीभूयप्रतिपक्षिसेनाप्रवेशोपिसंभवति । नचचारः इत्युक्त्याऽयमन्यइतिवाच्यं । चतुर्दशश्लोके "राक्षसेन्द्रस्यमन्त्रिणौ । लङ्कायाः समनुप्राप्तौचारौ" इत्युक्तेर्मन्त्रिणोपिचारतासंभवात् । छत्रिन्यायेनवाऽमात्यत्वोक्तिरिति भवतुचारएवायं । "अवश्यंचापिसंख्येयं" इत्युत्तरत्रसेनासंख्यारूपादिविशेषविवित्सानुज्ञानात्सामान्यतस्तज्ज्ञानिनासहान्यप्रेषणस्यन्याय्यत्वात् ॥ १ ॥ ति० सागरे सेतुबन्धनंनश्रद्दध्यां । समुद्रस्यविराडुदरत्वेनजीवव्रातैरशक्यबन्धनत्वाज्जीवविशेषत्वाच्चरामस्येत्याशयः । रामोपिविराडेवनान्यइति बुद्धिस्तु रजस्तमःप्रधानत्वान्नतस्येतिदिक् ॥ ३ ॥ स० सागरे सगरपुत्रखातत्वात्तत्संबन्धिनि । अर्णवशब्दोरूढः समुद्रइत्येतन्मात्रार्थकः । सलिलार्णवे जलसमुद्रेइत्यर्थः । "सल गतौ" इलजन्तः । तथाचसलिलानि गच्छन्ति अर्णांसिसन्त्यत्रेतिसवा ।

[ पा० ] १ ख. ङ. च. छ. झ. ञ. ट. सेतुबन्धंतं. २ ज. कदाचन. ३ ङ. ज. झ. ट. संगताः. ४ ख. च. छ. मुख्याः. ५ ङ. झ. ट. निवेशंचयथा. घ. प्रवेशश्चयथा. ज. निवेशश्चयथा. ६ ग. ङ. च. छ. झ. ञ. ट. वीरस्य. ७ ङ. झ. महात्मनां. ८ ङ. झ. तच्चज्ञात्वा.

[1]संस्थितं पर्वताग्रेषु निर्दरेषु गुहासु च ॥ समुद्रस्य च तीरेषु वनेषूपवनेषु च ॥ ११ ॥
तरमाणं च तीर्णं च तर्तुकामं च सर्वशः ॥ निविष्टं निविशच्चैव भीमनादं महाबलम् ॥
तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ॥ १२ ॥
तौ ददर्श महातेजाः [2]प्रच्छन्नौ च विभीषणः ॥ आचचक्षेऽथ रामाय गृहीत्वा शुकसारणौ ॥ १३ ॥
[3]तस्येमौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ ॥ लङ्कायाः समनुप्राप्तौ चारौ परपुरंजय ॥ १४ ॥
तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा ॥ कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ॥ १५ ॥
आवामिहागतौ सौम्य रावणप्रहितावुभौ ॥ परिज्ञातुं बलं [4]कृत्स्नं तवेदं रघुनन्दन ॥ १६ ॥
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः ॥ अब्रवीत्प्रहसन्वाक्यं सर्वभूतहिते रतः ॥ १७ ॥
यदि दृष्टं बलं [5]कृत्स्नं [6]वयं वा सुपरीक्षिताः ॥ यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ॥१८॥
अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः ॥ विभीषणो वा कार्त्स्न्येन [7]भूयः संदर्शयिष्यति ॥ १९ ॥
[8]न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति ॥ न्यस्तशस्त्रौ गृहीतौ वा न दूतौ वधमर्हथः ॥ २० ॥
[9]पृच्छमानौ विमुञ्चैतौ चारौ रात्रिंचरावुभौ ॥ शत्रुपक्षस्य सततं विभीषण विकर्षणौ ॥ २१ ॥
प्रविश्य नगरीं लङ्कां भवद्भ्यां धनदानुजः ॥ वक्तव्यो रक्षसां राजा यथोक्तं [10]वचनं मम ॥ २२ ॥
यद्बलं च समाश्रित्य सीतां मे हृतवानसि ॥ तद्दर्शय यथाकामं ससैन्यः सहबान्धवः ॥ २३ ॥
श्वः काल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् ॥ [11]राक्षसं च बलं पश्य शरैर्विध्वंसितं मया ॥ २४ ॥
[12]क्रोधं भीममहं मोक्ष्ये [13]ससैन्ये त्वयि रावण ॥ श्वः काल्ये वज्रवान्वज्रं दानवेष्विव वासवः ॥२५॥

---

गच्छेतां नाज्ञासिष्टां ॥ १० ॥ अज्ञानहेतुमाह सार्धश्लोकद्वयेन—संस्थितमिति ॥ निर्दरेषु दलितपर्वतप्रदेशेषु । उपवनेषु आरामेषु । "आरामः स्यादुपवनं" इत्यमरः ॥ ११—१२ ॥ अथ विभीषणः ददर्श आचचक्षे चेत्यन्वयः ॥ १३ ॥ लङ्काया इति पञ्चमी । परपुरं जयतीति परपुरंजयः । " संज्ञायां भृतवृजिधारिसहितपिदमः " इति खच् ॥ १४—१६ ॥ दशरथात्मजः महापुरुषप्रसूतत्वेन सहजकारुण्यः । प्रहसन् रावणबुद्धिमान्द्यस्मरणात् प्रहासः । सर्वभूतहिते रतः रिपूणामपि वत्सलः ॥ १७ ॥ यथोक्तं रावणेन यथोक्तं । छन्दतः यथेच्छातः ॥ १८ ॥ अथेति पक्षान्तरे । भूयः अतिशयेन ॥ १९ ॥ दूतौ युवामितिशेषः ॥ २० ॥ विभीषणं प्रत्याह—पृच्छमानाविति ॥ सततं पृच्छमानत्वदशायामपि शत्रुपक्षस्य विकर्षणौ बाधकाविति यावत् ॥ २१ ॥ पुनर्दूतौ प्रत्याह—प्रविश्येति ॥ २२ ॥ यथाकामं यथेच्छं । शरणं वाऽऽगच्छेति भावः ॥ २३ ॥ श्वः काल्ये परेद्युः प्रातःकाले ॥ २४ ॥ क्रोधं मोक्ष्ये क्रोधकार्यं

---

तस्मिन् ॥ ६ ॥ स० बलार्णवं अर्णवशब्दस्यनपुंसकतातुपूर्वंव्युत्पादितानुसंधेया ॥ १२ ॥ ति० प्रहसन् सेतुबन्धनेनजनस्थाने निरपेक्षंखरादिवधेनचनमद्बलज्ञानंवृत्तमितिप्रहासः ॥ १७ ॥ ति० वयमितिरामेणनिर्देशः सुग्रीवादिसहितस्यस्वस्य । सुसमाहिताः ज्ञातबलाः ॥ स० सुसमीक्षिताः अतिसम्यगवलोकिताः । वयंवासुसमाहिताइतिपाठे सुसमाहिताः स्वस्थचित्ताः प्रतिभटभीतिरहिताइतियावत् । दृष्टमितिविपरिणतंसदृष्टाइत्यन्वेति । " अस्मदोद्वयोश्च " इतिवयमितिसंभवति । ननुनसंभवतिसविशेषणत्वादितिचेन्न । " नचविदितवेद्याअपिवयं " " शैवावयंनखलुतत्रविचारणीयंपञ्चाक्षरीजपपरानितरां " इत्यादिवद्विधेयविशेषणत्वाददोषः । असुसमाहिताः रावणंसगणंतृणीकृत्यानवधानेनैवस्थिताइतिवा । प्रतिगम्यतां स्वस्वामिसंनिधिं ॥ १८ ॥ ति० न्यस्तशस्त्रत्वाद्येकैकमप्यवधेहेतुःकिमुसमुदितमितिभावः ॥ २० ॥ ती० सततंपृच्छमानौ अभयंपृच्छन्तौ ॥ २१ ॥

[ पा० ] १ ङ.—ट. तत्स्थितं. २ ख. ग.—ट. प्रतिच्छन्नौ. ३ ङ. ट. तस्यैतौ. ४ ङ. झ. सर्वतदिदं. ५ क. ग. ङ. झ. ट. सर्वं. ६ क. ग. च. छ. ञ. ट. ठ. वयंवासुसमीक्षिताः. ङ. झ. वयंवासुसमाहिताः. घ. वयंसाधुसमीक्षिताः. ७ ङ. झ. ट. पुनः. ८ च. छ. ञ. नचात्मग्रहणं. क. ख. नचात्र. ९ ङ. झ. ञ. ट. प्रच्छन्नौच. १० च. छ. ञ. वचनान्मम. ११ ख. राक्षसंस्वबलं. ग. राक्षसंस्वजनं. क. घ. ङ. झ. ट. रक्षसांचबलं. च. छ. रक्षसांस्वबलं. १२ क.—घ. च. ज. ञ. घोरंरोषमहं. १३ ग. बलंधारयरावण.

इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ॥ जयेति प्रतिनन्द्यैतौ राघवं धर्मवत्सलम् ॥
आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ॥ २६ ॥
विभीषणगृहीतौ तु वधार्हौ राक्षसेश्वर ॥ दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ॥ २७ ॥
एकस्थानगता यत्र चत्वारः पुरुषर्षभाः ॥ लोकपालोपमाः शूराः कृतास्त्रा दृढविक्रमाः ॥ २८ ॥
रामो दाशरथिः श्रीमाँल्लक्ष्मणश्च विभीषणः ॥ सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ॥ २९ ॥
एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ॥ उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ॥ ३० ॥
यादृशं तस्य रामस्य रूपं प्रहरणानि च ॥ वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ ३१ ॥
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ॥ बभूव दुर्धर्षतरा सेन्द्रैरपि सुरासुरैः ॥ ३२ ॥
[ व्यक्तः सेतुस्तथा बद्धो दशयोजनविस्तृतः ॥ शतयोजनमायामस्तीर्णा सेना च सागरम् ॥ ३३ ॥
निविष्टो दक्षिणे तीरे रामः स च नदीपतेः ॥ तीर्णस्य तरमाणस्य बलस्यान्तो न विद्यते ॥ ३४ ॥ ]
प्रहृष्टरूपा ध्वजिनी वनौकसां महात्मनां संप्रति योद्धुमिच्छताम् ॥
अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

करिष्य इत्यर्थः । वज्रवान् अभ्यस्तवज्र इत्यर्थः ॥ २५ ॥ इतीत्यादि सार्धश्लोक एकान्वयः ॥ प्रतिनन्द्य अभिष्टुत्य ॥ २६ ॥ मुक्तौ आवामिति शेषः । धर्मात्मना दूतवधमनिच्छतेत्यर्थः । अमिततेजसेत्यनेन अस्मत्त्यागे भीतिहेतुता न शङ्क्येत्यर्थः ॥ २७ ॥ एकस्थानेत्यादि श्लोकत्रयमेकान्वयं ॥ यत्र एकस्थानं ऐकमत्यं । एकप्रदेशं वा गताः एते शक्ताः । पुरीं लङ्कामित्याद्यन्वयः । कृतास्त्राः शिक्षितास्त्राः । छत्रिणो गच्छन्तीतिवदयं निर्देशः । सुग्रीवस्याकृतास्त्रत्वात् । उत्पाट्य उद्धृत्य । संक्रामयितुं अन्यत्र क्षेप्तुं । सर्वे एतच्चतुष्टयभिन्नाः ॥ २८—३० ॥ यादृशमिति । प्रहरणादिकं यादृशं तदवलोकने राम एको वधिष्यतीति मन्यावहे इत्यर्थः ॥ ३१ ॥ नन्वसहायशूरोपि रामः सेनाहननादनुत्साहः स्यात् तत्क्रियतामित्यत्राह—रामलक्ष्मणेति ॥ सुग्रीवेण च अङ्गदादिना च सहिता सा अपरिच्छिन्ना । हरिवाहिनी चपलकपिसेना । रामलक्ष्मणगुप्ता रामेण रामस्य दक्षिणो बाहुरिति रामदक्षिणबाहुभूतेन लक्ष्मणेन च गुप्ता सती । सुग्रीवस्य रक्ष्यकोटावेवान्वयः न तु रक्षककोटौ । तन्मन्त्रिणा हनुमतैव—" जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः " इत्युक्तेः । दुर्धर्षतरा बभूव । तरसा मनसापि धर्षयितुमशक्येत्यवगम्यते । न केवलं मनुष्यादिभिः किन्तु सुरैरपि । न केवलं सुरैरेव किन्तु सुरासुरैः विरोधं विहाय कृतसौहार्दैरपि । न केवलमनायकैस्तैः किन्तु सेन्द्रैरपि । स्वस्वातन्त्र्यं विहाय नायकाज्ञानुवर्तिभिरित्यर्थः ॥ ३२—३४ ॥ महात्मनां दृढमनस्कानां । संप्रति सद्य एव । योद्धुमिच्छतां । प्रहृष्टरूपा हर्षद्योतकाकारयुक्ता । भवतीति शेषः । अतस्तद्विरोधेनालं । शमः क्रोधनिवृत्तिः । विधीयतां क्रियतां । मैथिली प्रदीयतां च ॥ ३५ ॥ इति श्रीगो-

---

विभीषणगृहीताविलनेन तत्त्यागस्तवमहतेऽनर्थायेतिसूचितं ॥ स० ननु "वधंनकुर्वन्तिपरावरज्ञादूतस्य" इत्यारभ्य "युक्तायुक्तं विनिश्चित्यदूतदण्डोविधीयताम् । विभीषणवचःश्रुत्वा" इत्यन्तेनग्रन्थेनविभीषणकृतदूतघातप्रतिषेधबोधनावगतेःअत्रपुनः "विभीषणगृहीतौतुवधार्थं " इत्युक्तिःकथमितिचेत्सत्यं । शङ्करस्तत्त्यागेकपयोमयीतितथाऽऽत्मानंदर्शयामासेतियुक्ततोक्तेर्ज्ञेया । मरिष्यन्नयनस्यपरिभ्रमन्नरएवयमदूतइतिनीतेरभावादारभ्याऽतथाकार्यपितथेतिवा ॥ २७ ॥ स० तेत्रयइति । रावणज्ञातपराक्रमलाद्धनुमदनुक्तिः ॥ ३१ ॥ रामानु० प्रहृष्टरूपा अत्यन्तंप्रहृष्टा । प्रशंसायांरूपप् ॥ ३५ ॥ इतिपञ्चविंशःसर्गः ॥ २५ ॥

[ पा० ] १ क. ङ. च. छ. झ. ट. प्रतिनन्द्यैनं. ख. चप्रणम्यैनं. २ ङ. झ. वधार्थं. ३ ङ. झ. ञ. लोकपालसमाः. ४ ङ. झ. ट. तद्धि. ५ क.—ट. सर्वैरपि. ६ इदंश्लोकद्वयं औत्तराहपाठएवदृश्यते. ७ क. ख. ग. ङ. च. छ. झ. ञ. ट. प्रहृष्टयोधा. ८ ख. महात्मनासंप्रतियोद्धुमिच्छता.

## षड्विंशः सर्गः ॥ २६ ॥

वानरबलावलोकनाय शुकसारणाभ्यांसहोच्चप्रासादमारूढंरावणंप्रति सारणेन पृथक्पृथङ्नामनिर्देशेनतत्तद्बलपराक्रमवर्णनपूर्वकं नीलाङ्गदादिप्रधानयूथनाथप्रदर्शनम् ॥ १ ॥

तद्वचः पथ्यमक्लीबं सारणेनाभिभाषितम् ॥ निशम्य रावणो राजा प्रत्यभाषत सारणम् ॥ १ ॥
यदि मामभियुञ्जीरन्देवगन्धर्वदानवाः ॥ नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ २ ॥
त्वं तु सौम्य परित्रस्तो हरिभिर्निर्जितो भृशम् ॥ प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे ॥
को हि नाम सपत्नो मां समरे जेतुमर्हति ॥ ३ ॥
इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ आरुरोह ततः श्रीमान्प्रासादं हिमपाण्डरम् ॥
बहुतालसमुत्सेधं रावणोथ दिदृक्षया ॥ ४ ॥
ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्च्छितः ॥ पश्यमानः समुद्रं च पर्वतांश्च वनानि च ॥
ददर्श पृथिवीदेशं सुसंपूर्णं प्लवङ्गमैः ॥ ५ ॥
तदपारमसंख्येयं वानराणां महद्बलम् ॥ आलोक्य रावणो राजा परिपप्रच्छ सारणम् ॥ ६ ॥
एषां वानरमुख्यानां के शूराः के महाबलाः ॥ के पूर्वमभिवर्तन्ते महोत्साहाः समन्ततः ॥ ७ ॥
केषां शृणोति सुग्रीवः के वा यूथपयूथपाः ॥ सारणाचक्ष्व तत्त्वेन के प्रधानाः प्लवङ्गमाः ॥ ८ ॥
सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः ॥ आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तांस्तु वनौकसः ॥ ९ ॥
एष योभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ॥ यूथपानां सहस्राणां शतेन परिवारितः ॥ १० ॥
यस्य घोषेण महता सप्राकारा सतोरणा ॥ लङ्का प्रवेपते सर्वा सशैलवनकानना ॥ ११ ॥

विन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

अथ रावणाय सारणेन वानरयूथपतीनां वीर्यादिकथनपूर्वकं तत्प्रदर्शनं षड्विंशे—तदिति ॥ अक्लीबं अकातरं। प्रत्यभाषत अनिन्ददित्यर्थः ॥१॥ अभियुञ्जीरन् युद्ध्येरन् । सर्वलोकभयात् सर्वलोकेभ्यो भयात् ॥ २ ॥ त्वमित्यादिसार्धश्लोकः ॥ सपत्नः शत्रुः ॥ ३ ॥ इत्युक्त्वेत्यादिसार्धश्लोकः ॥ ततः तस्मात्पूर्वस्थानात् । बहुतालसमुत्सेधं अनेकतालवृक्षतुल्यौन्नत्यं । यद्वा विततागुष्ठमध्यमामितस्तालः । तदाह सज्जनः—"प्रादेशतालगोकर्णवितस्त्यश्च यथाक्रमम् । भवन्ति विततागुष्ठप्रदेशिन्यादिभिः सह" इति ॥ अत्र द्वितीयो रावणशब्दो रावयतीति व्युत्पत्त्या क्रियानिमित्तकः । दिदृक्षया वानरबलदिदृक्षया ॥४॥ चराभ्यां चाराभ्यां । क्रोधमूर्च्छितः क्रोधेन व्याप्तः । पृथिवीदेशं त्रिकूटाधःप्रदेशं ॥ ५ ॥ अपारं उत्तरावधिरहितं ॥ ६ ॥ एषामिति । इयं निर्धारणेषष्ठी ॥ ७ ॥ केषामिति । वचनमिति शेषः । प्रधानाः सेनापतयः ॥ ८ ॥ वचनं निशम्येति शेषः ॥ ९ ॥ त्रिभिर्नीलं वर्णयति–एष इत्यादि ॥ य एष इत्यन्वयः ।

---

शि० हरिभिर्भृशंपीडितः अतएवपरित्रस्तस्त्वंसीतायाःप्रतिप्रदानं साधुमन्यसे । एतेन रामबलवर्णनंभीतिहेतुकमितिसूचितं ॥ ३ ॥ ति० सहस्रेणशतेन लक्षेणेत्यर्थः ॥ १० ॥

[पा० ] १ ङ. झ. ट. सत्यमक्लीबं. २ क. ख. ग. ङ. च. छ. झ. पर्यभाषत. ३ क. ख. ग. ङ. च. छ. झ. ञ. ट. सीतामहंदद्यां. ४ क. ङ. च. छ. झ. ञ. ट. हरिभिःपीडितो. ग. हरिभिर्निहतो. ख. हरिभिस्तर्जितो. ५ ङ. झ. समुद्रंतं. ६ ङ. च. झ. ञ. ट. मसह्यंच. घ. मसंबाधं. ७ ङ. झ. महाबलं. ८ घ.—छ. झ. ञ. ट. केवानरामुख्याःके. ९ ख. ग. ङ. छ. झ. ट. मेसर्वेकिंप्रभावाःप्लवङ्गमाः. क. घ. च. ञ. मेसर्वे. १० ङ. च. छ. झ. ञ. ट. आबभाषेथ. ११ क. ख. ग. ङ. च. झ. ञ. ट. मुख्यांस्तत्र. घ. मुख्यांस्तत्रप्लवङ्गमान्. १२ क. ख. ङ. च. छ. झ. ञ. ट. सहस्रेणशतेन. १३ ङ. झ. ट. प्रतिहता.

सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः ॥ बलाग्रे तिष्ठते वीरो नीलो नामैष[1] यूथपः ॥ १२ ॥
बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान् ॥ लङ्कामभिमुखः क्रोधादभीक्ष्णं च विजृम्भते ॥१३॥
गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः ॥ स्फोटयत्यभिसंरब्धो[2] लाङ्गूलं च पुनः पुनः ॥
यस्य लाङ्गूलशब्देन स्वनन्ति[3] प्रदिशो दश ॥ १४ ॥
एष वानरराजेन सुग्रीवेणाभिषेचितः ॥ यौवराज्ये[4]ऽङ्गदो नाम त्वामाह्वयति संयुगे ॥ १५ ॥
वालिनः सदृशः पुत्रः सुग्रीवस्य[5] सदा प्रियः ॥ राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा ॥ १६ ॥
एतस्य सा मतिः सर्वा यद्दृष्टा जनकात्मजा ॥ हनूमता वेगवता राघवस्य हितैषिणा ॥ १७ ॥
बहूनि[6] वानरेन्द्राणामेष यूथानि वीर्यवान् ॥ परिगृह्याभियाति त्वां स्वेनानीकेन दुर्जयः[7] ॥ १८ ॥
अनु वालिसुतस्यापि बलेन महता वृतः ॥ वीरस्तिष्ठति संग्रामे सेतुहेतुरयं नलः ॥ १९ ॥
ये तु विष्टभ्य गात्राणि क्ष्वेलयन्ति नदन्ति च ॥ उत्थाय[8] च विजृम्भन्ते क्रोधेन[9] हरिपुङ्गवाः ॥२०॥
एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः[10] ॥ अष्टौ शतसहस्राणि दशकोटिशतानि च ॥ २१ ॥
य एनमनुगच्छन्ति वीराश्चन्दनवासिनः[11] ॥ एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २२ ॥
श्वेतो रजतसंकाशश्चपलो भीमविक्रमः ॥ बुद्धिमान्वानरो[12] वीरस्त्रिषु लोकेषु विश्रुतः ॥ २३ ॥
तूर्णं सुग्रीवमागम्य पुनर्गच्छति सत्वरः[13] ॥ विभजन्वानरीं सेनामनीकानि प्रहर्षयन् ॥ २४ ॥

तिष्ठते तिष्ठति ॥ १०—१२ ॥ अथाङ्गदं वर्णयति—बाहू इत्यादिना स्वेनानीकेन दुर्जय इत्यन्तेन ॥ बाहू प्रगृह्य उत्क्षिप्य । अभि उद्दिश्य मुखं यस्यासावभिमुखः । विजृम्भते जृम्भणं करोति ॥ १३ ॥ पद्मकिञ्जल्कसन्निभः पद्मकेसरवत्पीतवर्ण इत्यर्थः । स्फोटयति भूमौ ताडयति । अभिसंरब्धः कुपितः । प्रस्वनन्तीत्यन्वयः ॥ १४ ॥ अभिषेचितः अभिषिक्तः । आह्वयति आह्वयते । स्पर्धाविषयेऽप्यात्मनेपदाभाव आर्षः ॥ १५ ॥ पराक्रान्तः पराक्रमितुमुद्यतः ॥१६॥ एतस्येति ॥ हनूमता सीता दृष्टेति यत्सा मतिः एतस्य अङ्गदस्य । एतद्बुद्धिमूलं हनुमतः सीतादर्शनमितिभावः । अङ्गदपुरस्कारेण हनुमतः समागमात् ॥१७॥ स्वेनानीकेनेति दुर्जयत्वकारणोक्तिः । अतो न पुनरुक्तिः ॥ १८ ॥ अनु वालीति । एतस्योत्तरार्धं वीरस्तिष्ठति संग्राम इति । वालिसुतस्य अनु पश्चात् । सेतुहेतुः सेतुकर्ता । संग्रामे संग्रामनिमित्तं ॥ १९ ॥ नलपरिवारानाह—ये त्वित्यादिना मर्दितुमित्यन्तेन ॥ श्लोकत्रयमेकान्वयं । विष्टभ्य उन्नम्य । क्ष्वेलयन्ति सिंहनादं कुर्वन्ति । नदन्ति गर्जन्ति । उत्थाय आसनादिति शेषः । विजृम्भन्ते कोपेन गात्रविनामं कुर्वन्ति । य एवंविधा वानराः ये च चन्दनवासिनः चन्दनवनवासिनः । एते एनं नलमनुगच्छन्तीति संबन्धः । चन्दनवानरा इति पाठे मध्यमपदलोपिसमासः । चन्दनवासिनो वानरा इति । एषैवेति सन्धिरार्षः । आशंसते प्रार्थयते ॥२०—२२॥ अथ द्वाभ्यां श्वेताख्यं वानरं वर्णयति—श्वेत इत्यादि ॥ अन्वर्थनामेत्याह—रजतेति । चपलः युद्धचपलः । अनीकानि पुनर्गच्छतीत्यन्वयः । विभजन् निबिडां सेनां भित्त्वा गच्छन्नित्यर्थः । अत्र चपल इत्यनेन अद्यैव लङ्कां ध्वंसयामीति निवेदनार्थं गत्वा तेन सान्त्वितः

स० चन्दनवासिनः तन्नामकगिरिविशेषवासिनः । अथवा चन्दनभूयिष्ठत्वान्मलयः । तत्रवासिनोवा । एषैव एषएव । संधिरार्षः । एषा याप्रसिद्धात्वदावासभूता तांलङ्कां मर्दितुमितिवा ॥२२॥ शि० श्वेतंवर्णयति—श्वेतइति । वानरींसेनांविभजन्सन् योवानरः सुग्रीवमागम्यतूर्णंपुनर्गच्छति । सवानरः त्रिषुलोकेषुविश्रुतः । श्वेतः तदभिधः । यत्तच्छब्दाध्याहारस्तु अन्यतरवानरशब्दसार्थक्याय । यदितु वानं रचनाविशेषं राति बोधयतीत्यर्थः इतिव्युत्पाद्यते तदानाध्याहृतिः । अर्धचतुष्टयमेकान्वयि ॥ २३—२४ ॥

[ पा० ] १ घ. नाममहाबलः. २ ग. ङ. च. छ. झ. ञ. ट. त्यतिसंरब्धो. ३ ख. घ. च. छ. ज. ट. स्वनन्तीवदिशोदश. ४ ग. ङ. झ. ट. युवराजोऽङ्गदो. ५ घ. सुग्रीवस्यचसंमतः. ६ ख. बहूनां. ७ ङ. झ. ट. मर्दितुं. ८ च. ञ. आस्थाय. ९ ख. क्रोधेनमहतावृताः. १० क. ख. घोरावानराश्चण्डविक्रमाः. ११ ग. ज. चण्डाश्चन्दन. ख. धीराश्चन्दन. १२ क. ग. घ. ङ. झ. ट. न्वानरःशूरः. ख. च. छ. ञ. न्वानरश्रेष्ठः. ज. न्वानरवरः. १३ ख. ग. ङ. च. झ. ञ. ट. वानरः.

यः पुरा गोमतीतीरे रम्यं पर्येति पर्वतम् ॥ नाम्ना सं[1]कोचनो नाम नानानगयुतो गिरिः ॥ २५॥
तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः ॥ योसौ श[2]तसहस्राणां सहस्रं परिकर्षति ॥ २६ ॥
यस्य वाला बहुव्यामा दीर्घा लाङ्गूलमाश्रिताः॥ताम्राः पीताः सिताः श्वेताः प्रकीर्णा[3]घोरकर्मणः ॥२७॥
अदीनो रो[4]षणश्चण्डः संग्राममभिकाङ्क्षति ॥ [5]एषोप्याशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २८ ॥
यस्त्वेष सिंहसंकाशः कपिलो [6]दीर्घलोचनः ॥ निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा ॥ २९ ॥
विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम् ॥ राजन्सततमध्यास्ते [7]रम्भो नामैष यूथपः ॥ ३० ॥
शतं शतसहस्राणां त्रिंशच्च हरिपुङ्गवाः ॥ [8]यमेते वानराः शूराश्चण्डाश्चण्डपराक्रमाः ॥
परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥ ३१ ॥
यस्तु कर्णौ विवृणुते जृम्भते च पुनःपुनः ॥ न च संविजते मृत्यो[9]र्न च युद्धाद्विधावति ॥ ३२ ॥
प्रकंपते च रोषेण तिर्यक्च पुनरीक्षते ॥ प[10]श्यँल्लाङ्गूलमपि च क्ष्वेलते च महाबलः ॥ ३३ ॥
म[11]हाजवो वीतभयो रम्यं साल्वेयपर्वतम् ॥ राजन्सततमध्यास्ते शरभो नाम यूथपः ॥ ३४ ॥
एतस्य बलिनः सर्वे विहारा नाम यूथपाः ॥ राजञ्शतसहस्राणि चत्वारिंशत्तथैव च ॥ ३५ ॥
यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति ॥ मध्ये वानरवीराणां सुराणामिव वासवः ॥ ३६ ॥
भेरीणामिव सन्नादो यस्यैष श्रूयते महान् ॥ घोषः शाखामृगेन्द्राणां संग्राममभिकाङ्क्षताम् ॥ ३७॥
एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् ॥ युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः ॥ ३८ ॥
एनं शतसहस्राणां शतार्धं पर्युपासते ॥ यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः ॥ ३९ ॥
यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् ॥ स्थि[12]तां तीरे समुद्रस्य द्वितीय इव सागरः ॥४०॥
एष [13]दर्दरसंकाशो विनतो नाम यूथपः ॥ पिबंश्चरति [14]पर्णासां नदीनामुत्तमां नदीम् ॥ ४१ ॥

पुनर्गच्छतीत्यवगम्यते ॥ २३—२४ ॥ चतुर्भिः कुमुदं वर्णयति—यः पुरेत्यादि ॥ पुरेत्यनेनास्य सुग्रीवसमीप एव वसतीति गम्यते । पर्येति परितः संचरति । नाम्ना संकोचनो नाम यः प्रसिद्धः तं पर्वतमित्यन्वयः ॥ २५ ॥ तत्र गोमतीतीरे । परिकर्षति आनयति ॥ २६ ॥ घोरकर्मणो यस्य लाङ्गूलमाश्रिताः वालाः रोमाणि । दैर्घ्यस्यावधिमाह—बहुव्यामा इति । " व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरं " इत्यमरः ॥ २७ ॥ अदीन इत्यत्र य इत्युपस्कार्यं ॥ २८ ॥ अथ सार्धैस्त्रिभी रम्भं वर्णयति—यस्त्वेष इत्यादि ॥ २९—३१ ॥ अथ शरभं वर्णयति—यस्तु कर्णावित्यादि ॥ संविजते बिभेति ॥ ३२—३५ ॥ अथ पनसं वर्णयति—यस्तु मेघ इत्यादिना ॥ ३६—३८ ॥ एनं पनसं । येषां यूथपानां यूथानि च भागशः स्वस्वांशासङ्करेण । एनं पर्युपासत इति संबन्धः ॥ ३९ ॥ विनतं वर्णयति—यस्त्वित्यादि ॥ प्रवल्गन्तीं उत्साहेन प्लवमानां । समुद्रस्य पारे स्थितां । अतएव द्वितीयः सागर इव स्थितामिति शेषः । विनतविशेषणं वा । दर्दरो नाम गङ्गासमीपस्थः पर्वतः । पर्णासां पर्णासाख्यां नदीं ।

[ पा० ] १ ङ. च. झ. ञ. ट. संरोचनो. २ ङ. झ. ट. शतसहस्राणिसहर्षे. ज. शतसहस्रंचवानरान्परि ३ ङ. च. झ. ञ. ट. घोरदर्शनाः. ४ ङ.—ट. वानरश्चण्डः. ५ क.—ट. एषैवाशंसते. ६ क.—ट. दीर्घकेसरः. ७ ग. ङ. झ. ट. संरंभो नामयूथपः. ८ ङ. झ. ट. यंयान्तंवानराघोराः. ९ ङ. च. झ. ट. नंचसेनांप्रधावति. क. ख. ग. ज. नंचयूथाद्विधावति. १० झ. ञ. ट. पश्यलाङ्गूलविक्षेपंक्ष्वेडत्येष. ङ. च. पश्यलाङ्गूलविक्षेपैःक्ष्वेडत्येष. ११ घ. च. ज. महाबलो. ङ. झ. ट. महौजसावीत. १२ ख. घ. च. ञ. स्थितस्तीरे. १३ ग. पर्वतसंकाशो. घ. मन्दरसंकाशो. १४ ङ. झ. ट. योवेणां. ग. वेणांयो.

षष्टिः शतसहस्राणि बलमस्य प्लवङ्गमाः ॥ ४२ ॥
त्वामाह्वयति युद्धाय क्रोधनो नाम यूथपः ॥ विक्रान्ता बलवन्तश्च यथा यूथानि भागशः ॥ ४३ ॥
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः ॥ अवमत्य सदा सर्वान्वानरान्बलदर्पितान् ॥ ४४ ॥
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते ॥ एनं शतसहस्राणि सप्ततिः पर्युपासते ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४५ ॥
एते दुष्प्रसहा घोरा बलिनः कामरूपिणः ॥ यूथपा यूथपश्रेष्ठा एषां यूथानि भागशः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ॥ २७ ॥

रावणंप्रतिसारणेनपृथक्पृथङ्नामनिर्देशेनतत्तत्पराक्रमादिप्रशंसनपूर्वकमृक्षवानरादियूथाध्यक्षप्रदर्शनम् ॥ १ ॥

तांस्तु तेहं प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् ॥ राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥ १ ॥
स्निग्धा यस्य बहुव्यामा बाला लाङ्गूलमाश्रिताः ॥ ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २ ॥
प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः ॥ पृथिव्यां चानुकृष्यन्ते हरो नामैष यूथपः ॥ ३ ॥

---

॥ ४०—४१ ॥ विनतसेनासङ्ख्यामाह—षष्टिरिति ॥ षष्टिः शतसहस्राणि प्लवङ्गमाः अस्य विनतस्य बलं सेनेत्यर्थः ॥ ४२ ॥ एकेन क्रोधनमाह—त्वामिति ॥ उत्तरार्धे अस्येत्यध्याहार्यं । यथायूथानि यथायूथं । अमभावश्छान्दसः । भागशः भागत्वेन स्थिता वानराः विक्रान्ता बलवन्तश्चेति योजना ॥ ४३ ॥ शेषेण गवयं वर्णयति—यस्त्वित्यादिना ॥ गैरिकं रक्तवर्णधातुविशेषः । "धातुर्मनश्शिलाद्यद्रेर्गैरिकं तु विशेषतः" इत्यमरः । तद्वर्ण इवाभा यस्येति विग्रहः । गैरिकवर्ण इवाभातीति गैरिकवर्णाभमिति वा । पुष्यति युद्धहर्षादभिवर्धयतीत्यर्थः ॥ ४४—४५ ॥ उपसंहरति—एत इति ॥ यूथपाः अङ्गदादयः । यूथपश्रेष्ठाः सुग्रीवादयः । एषां यूथपानां यूथानि भागशः पृथक् । विद्यन्त इति शेषः ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

पुनरुक्तेभ्योप्युत्कृष्टान्प्रधानयूथपतीन्वक्तुं प्रतिजानीते—तांस्त्वित्यादि ॥ ये राघवार्थे पराक्रान्ताः सन्तः जीवितं न रक्षन्ति तान् यूथपान् ते तुभ्यं प्रवक्ष्यामीत्यन्वयः ॥ १ ॥ द्वाभ्यां हरं वर्णयति—वाला इति ॥ वालाः रोमाणि । बहुव्यामाः बहुव्यामप्रमाणाः । व्यामो नाम प्रसारितबाहुद्वयप्रमाणं । प्रगृहीताः उत्क्षिप्ताः । प्रकीर्णाः विरलाः । सूर्यस्य मरीचय इव मेघेषु शक्रचापादिरूपेण प्रसृता रश्मय इव । प्रकाशन्ते । कदाचित् पृथिव्यामनुकृष्यन्ते । एष यूथपो

---

**कतक०** अत्रसर्गच्छेदोपाङ्गः । वृत्तभेदाभावादेकप्रकरणत्वाच्च ॥ ४६ ॥ इतिषड्विंशःसर्गः ॥ २६ ॥
**ति०** स्निग्धाइत्यादिहरवर्णनमितिकतकः । तारस्येत्यन्ये ॥ २ ॥

[ **पा०** ] १ ख. ग. च. वानरास्तेमहाबलाः. घ. यूथपास्तुप्लवङ्गमाः. २ ङ. ज. झ. क्रथनोनाम. ३ ग. एषांयूथानि. घ. यस्ययूथानि क. च. छ. ज. यथायूथविभागशः. ४ क. ख. ङ. च. झ. ञ. ट. न्बलदर्पितः. ५ ख. दनुवर्तते. ६ ज. एषत्वाशङ्कते. ७ ङ. च. छ. झ. ञ. ट. वीरायेषांसङ्ख्यानविद्यते. ८ क. ङ. झ. ञ. ट. श्रेष्ठास्तेषां. ९ ङ. छ. झ. ञ. ट. तेसंप्रवक्ष्यामि. १० ङ. झ. ट. दीर्घलाङ्गूलमाश्रिताः. ११ क. च. ञ. तारोनाम. १२ ङ. झ. ट. वानरः.

यं पृष्ठतोऽनुगच्छन्ति शतशोथ सहस्रशः ॥ द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥
यूथपा हरिराजस्य किङ्कराः समुपस्थिताः ॥ ४ ॥
एष कोटिसहस्रेण वानराणां महौजसाम् ॥ आकाङ्क्षते त्वां संग्रामे जेतुं परपुरंजय ॥ ५ ॥
नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥ असिताञ्जनसंकाशान्युद्धे सत्यपराक्रमान् ॥
असंख्येयाननिर्देश्यान्परं पारमिवोदधेः ॥ ६ ॥
पर्वतेषु च ये केचिद्विषमेषु नदीषु च ॥ एते त्वामभिवर्तन्ते राजन्नृक्षाः सुदारुणाः ॥ ७ ॥
एषां मध्ये स्थितो राजन्भीमाक्षो भीमदर्शनः ॥ पर्जन्य इव जीमूतैः समन्तात्परिवारितः ॥ ८ ॥
ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् ॥ सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ९ ॥
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् ॥ भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमैः ॥ १० ॥
स एष जाम्बवान्नाम महायूथपयूथपः ॥ प्रक्रान्तो गुरुवर्ती च संप्रहारेष्वमर्षणः ॥ ११ ॥
एतेन साह्यं सुमहत्कृतं शक्रस्य धीमता ॥ दैवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १२ ॥
आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः ॥ मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १३ ॥
राक्षसानां च सदृशाः पिशाचानां च लोमशाः ॥ एतस्य सैन्या बहवो विचरन्त्यग्नितेजसः ॥ १४ ॥
यं त्वेनमभिसंरब्धं प्लवमानमिव स्थितम् ॥ प्रेक्षन्ते वानराः सर्वे स्थिता यूथपयूथपम् ॥ १५ ॥
एष राजन्सहस्राक्षं पर्युपास्ते हरीश्वरः ॥ बलेन बलसंपन्नो दंभो नामैष यूथपः ॥ १६ ॥
यः स्थितं योजने शैलं गच्छन्पार्श्वेन सेवते ॥ ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १७ ॥

हरो नाम ॥ २—३ ॥ यमित्यादि सार्धश्लोक एकान्वयः ॥ यं हरं । हरस्य हरिराजकिङ्करत्वेन तदीया अपि यूथपा हरिराजकिंकरा एवेति न विरोधः ॥ ४—५ ॥ ऋक्षसेना वर्णयति—नीलानित्यादि ॥ अनिर्देश्यान् प्रत्येकं निर्देष्टुमशक्यान् । परं पारमिवोदधेः समुद्रस्यापरं तीरमिव स्थितमित्यर्थः ॥ ६ ॥ विषमेषु निम्नोन्नतप्रदेशेषु ॥ ७ ॥ पर्जन्यः वर्षदेवता ॥ ८—९ ॥ यवीयान् कनिष्ठः । अयमिति शेषः । विशिष्टः अधिकः ॥ १० ॥ गुरुवर्ती गुरुशुश्रूषकः ॥ ११ ॥ दैवासुरे देवासुरयुद्धे ॥ १२ ॥ जाम्बवतः सैनिकान्वर्णयति द्वाभ्यां—आरुह्येत्यादि ॥ पर्वताग्राणीत्यर्थात्सिद्धं । मुञ्चन्ति च्यावयन्ति । नोद्विजन्ति न बिभ्यति । राक्षसानां पिशाचानां च सदृशा इत्यन्वयः ॥ १३—१४ ॥ द्वाभ्यां दम्भं वर्णयति—यं त्विति ॥ अभिसंरब्धं कुपितं । प्लवमानमिव सदा प्लवमानमिव स्थितं प्रेक्षन्ते । आश्चर्येणेति शेषः । बलेन पर्युपास्ते बलेन प्रीणयतीत्यर्थः ॥ १५—१६ ॥ त्रिभिः सन्नादनं वर्णयति—यः स्थितमिति ॥ यो गच्छन् योजने योजनदूरे । स्थितं शैलं पार्श्वेन गच्छति । अस्य गमनकाले एकपदप्रक्षेपदशायां एकयोजनपरिमितः पर्वतः पार्श्वस्थो भवति । योजनायतशरीर इत्यर्थः । कायेनोर्ध्वं गतः सन् योजनं प्राप्नोति । योजनोन्नतकायइत्यर्थः । अतएव चतुष्पादेषु यस्मात् परमं परं रूपं शरीरं । न विद्यते ।

शि० जीमूतैः कृष्णमेघैः । समन्तात्परिवारितः पर्जन्यः इन्द्रइव यःस्थितः ॥ ८ ॥ स० अस्य धूम्रस्य । यवीयान् कनिष्ठः । रूपेण ऋक्षाकारेण । विशिष्टः उत्तमः । एतेन जांबवतइव धूम्रस्यापिब्रह्मजातत्वंज्ञायते । बालकाण्डेअंशावतरणप्रस्तावेगुणज्येष्ठत्वाज्जांबवतएवोक्तिः । सौहार्दाद्भ्रातेववा ॥ १० ॥ रामानु० संप्रहारेषु युद्धेषु । "संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः" इत्यमरः ॥ ति० गुरुवर्ती सद्गुरूपासकः । अनेन सर्वेसिद्धिमत्त्वमुक्तं । स० गुरुवर्ती ज्येष्ठानुवर्ती । अमर्षणः परपराभवासहिष्णुः ॥ ११ ॥

[ पा० ] १ अयंश्लोकःप्राचीनकोशेषुनदृश्यते. औत्तराहपाठएवदृश्यते. २ ङ. झ. ट. द्विषयेषु. ३ घ. ङ. झ. ट. राजाभीमाक्षो. ४ ख. च. छ. ज. ञ. बलीपश्यैनं. ५ ख. ङ. च. छ. झ. ञ. ट. पराक्रमे. ६ क.—ट. प्रशान्तो. ७ ख. च. छ. विपुलान्नादान्. घ. विविधाकारान. ८ ङ. झ. ट. न्त्यमितौजसः. ९ क. च. यूथपयूथपाः. १० ङ. झ. बलसंयुक्तो. ११ ज. ऋषभोनामयूथपः. घ. ङ. झ. ञ. रंभोनामैष. १२ घ. संस्थितं.

थस्मान्न परमं रूपं चतुष्पादेषु विद्यते ॥ श्रुतः सन्नादनो नाम वानराणां पितामहः ॥ १८ ॥
येन युद्धं पुरा दत्तं रणे शक्रस्य धीमता ॥ पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ १९ ॥
यस्य विक्रममाणस्य शक्रस्येव पराक्रमः ॥ एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः ॥ २० ॥
तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् ॥ २१ ॥
यस्य वैश्रवणो राजा जम्बूमुपनिषेवते ॥ यो राजा पर्वतेन्द्राणां बहुकिन्नरसेविनाम् ॥ २२ ॥
विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप ॥ तत्रैष वसति श्रीमान्बलवान्वानरर्षभः ॥ २३ ॥
युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः ॥ वृतः कोटिसहस्रेण हरीणां समुपस्थितः ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २४ ॥
यो गङ्गामनु पर्येति त्रासयन्हस्तियूथपान् ॥ हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥ २५ ॥
एष यूथपतिर्नेता गच्छन्गिरिगुहाशयः ॥ गजान्योधयते वन्यान्गिरींश्चैव महीरुहान् ॥ २६ ॥
हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु ॥ उशीरबीजमाश्रित्य पर्वतं मन्दरोपमम् ॥
रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् ॥ २७ ॥
एनं शतसहस्राणां सहस्रमनुवर्तते ॥ वीर्यविक्रमदृप्तानां नर्दतां बलशालिनाम् ॥ २८ ॥
स एष नेता चैतेषां वानराणां महात्मनाम् ॥ २९ ॥
स एष दुर्धरो राजन्प्रमाथी नाम यूथपः ॥ वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३० ॥

शक्रस्य रणे शक्रस्यासुरैः सह युद्धे । येनासुरेभ्यो युद्धं दत्तं तदा पराजयश्चासुरेभ्यो न प्राप्तः सोयं सन्नादन इति श्रुतो नाम ॥ १७—१९ ॥ कस्यायं पुत्र इत्यत्राह—यस्येति ॥ विक्रममाणस्य पराक्रमं कुर्वतः । यस्य पराक्रमः शक्रस्येव । तत्पराक्रमसदृशपराक्रम इत्यर्थः ॥ २० ॥ किमर्थमुत्पादित इत्यत्राह—तदेत्यर्धं ॥ तदा प्रसिद्धे ॥ २१ ॥ क्रथनं वर्णयति सार्धैस्त्रिभिः—यस्येत्यादिना । यस्य गिरेः वैश्रवणः कुबेरो राजा । योगिरिः जम्बूं जम्बूवृक्षं । उपनिषेवते । जम्बूयुक्त इत्यर्थः । यः ते भ्रातुः कुबेरस्य विहारसुखदः । तत्र पर्वते । युद्धेष्वकत्थनः क्रथनो नामैषः यूथपो वसतीति संबन्धः ॥ २२—२४ ॥ यो गङ्गामित्यादि सार्धश्लोकसप्तकं प्रमाथिविषयं । हस्तिनां वानराणां च अन्योन्यं पूर्ववैरमनुस्मरन् यः गङ्गामनु गङ्गासमीपे । "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया । हस्तियूथपान् त्रासयन् पर्येति परितश्चरति । अत्रेयं पौराणिकी कथा—पुरा किल शम्बसादनो नामासुरो गजरूपेण मुनीन् बाधमानस्तैर्मुनिभिश्चोदितेन केसरिणा हनुमत्पित्रा हतः । तत्संतुष्टैर्मुनिभिर्महापराक्रमो हनुमान् पुत्रस्ते भविष्यतीति केसरिणे वरो दत्तः। ततःप्रभृति हस्तिनां वानराणां च परस्परं वैरमभूदिति ॥ २५ ॥ गच्छन्नेव गमनकाल एव । रिपूणां नाशयिता । गिरिगुहायां शेते वर्तत इति गिरिगुहाशयः । गजानिति । गजैर्वृक्षान् वृक्षैर्गजांश्च हन्तीत्यर्थः ॥ २६ ॥ हैमवतीमनु गङ्गासमीपे । स्थितं उशीरबीजाख्यं पर्वतमाश्रित्य रमत इतियोजना । हरिवाहिनीमुख्यत्वेपि भिन्नजातीयत्वभ्रमव्युदासार्थं वानरश्रेष्ठ इत्युक्तं ॥ २७ ॥ वीरस्य भावो वीर्यं । उत्साह इत्यर्थः । विक्रमः परान्प्रत्यभिभवः । बलशालिनां वानराणामित्यर्थसिद्धं । शतसहस्राणां सहस्रं सहस्रलक्षमित्यर्थः ॥ २८ ॥ नेता नायकः ॥ २९ ॥ प्रमाथिनं वर्णयति—स एष इति ॥ दुर्धरः दुर्धर्षः । प्रमाथी नाम प्रमाथिनामकः । वातेनोद्धतं मेघमिव यमेनमनुप-

रामानु० यस्यविक्रममाणस्येत्यारभ्यस्वेनानीकेनमर्दितुमित्यन्तंक्रथनाख्यवानरविषयं ॥ २० ॥

[ पा० ] १ ङ. झ. ट. यस्मात्तुपरमंरूपंचतुष्पात्सुनविद्यते. छ. ज. यस्मान्नभैरवं. २ घ. ङ. ज. झ. ट. तदा. ३ ङ. झ. ट. रमते. ४ घ. ङ. च. झ. ट. न्गजयूथपान्. ५ ङ. झ. ट. गजान्नोधयते. ज. गर्जन्योधयते. ६ ख. ङ. च. छ. झ. ट. वन्यानारुजंश्च. ग. घ. वन्यानुरूंश्चैव. ७ क.—ट. मभिवर्तते. ८ क. घ. ङ. च. झ. ट. बाहुशालिनां. ९ घ. एषदुर्मर्षणोराजन्.

अनीकमपि संरब्धं वानराणां तरस्विनाम् ॥ उद्धूतमरुणाभासं पवनेन समन्ततः ॥
विवर्तमानं [1]बहुधा [2]यत्रैतद्बहुलं रजः ॥ ३१ ॥
एतेऽसितमुखा घोरा गोलाङ्गूला महाबलाः ॥ शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम् ॥ ३२ ॥
गोलाङ्गूलं [3]महावेगं गवाक्षं नाम यूथपम् ॥ परिवार्याभिवर्तन्ते लङ्कां मर्दितुमोजसा ॥ ३३ ॥
भ्रमराचरिता यत्र [4]सर्वकामफलद्रुमाः ॥ यं [5]सूर्यस्तुल्यवर्णाभमनु पर्येति पर्वतम् ॥ ३४ ॥
यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः ॥ यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः ॥३५॥
सर्वकामफला वृक्षाः [6]सदा [7]फलसमन्विताः ॥ मधूनि च महार्हाणि यस्मिन्पर्वतसत्तमे ॥ ३६ ॥
तत्रैष रमते राजन्रम्ये काञ्चनपर्वते ॥ मुख्यो वानरमुख्यानां केसरी नाम यूथपः ॥ ३७ ॥
षष्टिर्गिरि[8]सहस्राणां रम्याः काञ्चनपर्वताः ॥ तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् ॥ ३८ ॥
तत्रैते कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः ॥ [9]निवसन्त्युत्तमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः ॥३९॥
सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ॥ सर्वे वैश्वानरसमा [10]ज्वलिताशीविषोपमाः ॥ ४० ॥
सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसन्निभाः ॥ महापर्वतसंकाशा महाजीमूतनिस्वनाः ॥ ४१ ॥

---

श्यसि एष प्रमाथीति संबन्धः ॥ ३० ॥ यत्र अनीके । समन्ततः पवनेनोद्धूतं अरुणाभासं अरुणकान्तिबहुलमेतद्रजः । बहुधा विवर्तमानं भवति । संरब्धं तत् तरस्विनां वानराणामनीकमपि पश्यसि । तदप्यस्य प्रमाथिनइत्यर्थः ॥ ३१ ॥ गवाक्षमाह श्लोकद्वयेन—एत इति ॥ असितमुखाः गोलाङ्गूलाः सेतुबन्धनं दृष्ट्वा उत्साहेन शतं शतसहस्राणि च सन्तः गवाक्षं नाम स्वयूथपतिं परिवार्य लङ्कां ओजसा स्वतेजसा । मर्दितुमभिवर्तन्ते । अत्र यूथपत्यपेक्षया यूथानां बलोत्साहाधिक्यं व्यज्यते ॥ ३२—३३ ॥ अथ चतुर्भिः केसरिणं वर्णयति—भ्रमरेति ॥ यत्र पर्वते । सर्वकामफलाः सर्वैः काम्यन्त इति सर्वकामाः सर्वाभीष्टार्थाः तान् फलन्तीति सर्वकामफलाः ते च ते द्रुमाश्च सर्वकामफलद्रुमाः । भ्रमरैः आचरिताःव्याप्ताः भवन्ति । अनेन वृक्षाणां सर्वापेक्षितप्रदत्वं सदा पुष्पितत्वं चोक्तं । यं पर्वतं सूर्यः तुल्यवर्णाभं तुल्यप्रकारकान्तिकं यथा तथा । अनु समीपे । पर्येति संचरति । दृश्यते हि सूर्यस्तत्सन्निधाने काञ्चनवर्णः । यस्मिन्पर्वतसत्तमे सर्वकामफलाः सर्वैः काम्यमानफलाः । अनेन स्वादुफलत्वमुक्तं । सदा फलसमन्विताः सर्वकालं फलयुक्ता इत्यर्थः । काञ्चनपर्वते मेरौ ॥ ३४—३७ ॥ अथ शतबलिवानरसेनाश्लाघनपूर्वकं वर्णयति—षष्टिरित्यारभ्य हरिरित्यन्तेन ॥ गिरिसहस्राणां षष्टिरस्ति । ते रम्याः काञ्चनपर्वता भवन्ति । गिरिवरः मेरुः । अस्ति ह्यस्तगिरेः पूर्वतश्चापरो मेरुः ॥ ३८—३९ ॥ वैश्वानरसमाः । वैश्वानरः अग्निः तद्वदुग्रा इत्यर्थः । ज्वलिताशीविषाः कुपितसर्पाः । आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः । "आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोः" इत्यमरः । पृषोदरादित्वात् सलोपः । तद्वत्कोपना इत्यर्थः ॥४०॥ अञ्चितलाङ्गूलाः उदञ्चितलाङ्गूलाः । मत्तेत्यादिना महाकायत्वमुक्तं । पर्वतसंकाशाइत्यनेन

---

**स०** गवाक्षक्षमतामाह—एतइति । गोलाङ्गूलाः असितमुखाइतिपृथग्विद्यमानत्वात्सामान्यतःकपयः । अन्यतरस्ययौगिकत्वेनविशेषणत्वंवा । स्वेषांलङ्काप्राप्तिसाधनंसेतुबन्धनंदृष्ट्वाहृष्टास्सन्तोगोलाङ्गूलंस्वजातिंगवाक्षं परिवार्य लङ्कांमर्दितुमभिवर्तन्ते ॥३२—३३ ॥ **ती०** यंकाञ्चनपर्वतं । यस्यकाञ्चनपर्वतस्य । यस्मिन् काञ्चनपर्वते । अस्ताद्रिसमीपवर्तिनि सावर्णिनिवासमेरौ ॥ ३४ ॥

[ **पा०** ] १ क. घ.—छ. झ. ञ. ट. बहुशो. २ ख. येनैतत्. ३ ङ. झ. ट. महाराज. ४ झ. सर्वकालफल. ५ च. छ. सूर्यःशतवर्णाभं. ६ ङ. झ. ट. सर्वे. ७ ख. च. छ. ञ. पुष्पसमन्विताः. ८ ख. घ. ङ. च. झ. ट. गिंरिसहस्राणि. ९ झ. ट. निवसन्त्यन्तिमगिरौ. घ. च. छ. ञ. निवसन्त्युत्तरगिरौ. १० ग. ङ. च. छ. झ. ञ. ट. ज्वलदाशीविषोपमाः.

वृत्तपिङ्गलरक्ताक्षा भीमभीमगतिस्वराः ॥ मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते ॥ ४२ ॥
एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् ॥ जयार्थी नित्यमादित्यमुपतिष्ठति बुद्धिमान् ॥ ४३ ॥
नाम्ना पृथिव्यां विख्यातो राजञ्शतबलीति यः ॥ एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥४४॥
विक्रान्तो बलवाञ्शूरः पौरुषे स्वे व्यवस्थितः ॥ रामप्रियार्थं प्राणानां दयां न कुरुते हरिः ॥४५॥
गजो गवाक्षो गवयो नलो नीलश्च वानरः ॥ एकैक एव यूथानां कोटीभिर्दशभिर्वृतः ॥ ४६ ॥
तथाऽन्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ॥ न शक्यन्ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ॥ ४७॥

सर्वे महाराज महाप्रभावाः सर्वे महाशैलनिकाशकायाः ॥
सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ॥ २८ ॥

शुकेनरावणंप्रति सारणानुक्तानांहनुमदादिवानरवीराणां रामलक्ष्मणादीनांच प्रभावादिप्रशंसनपूर्वकं पृथङ्नामनिर्देशेन प्रदर्शनम् ॥ १ ॥ तथा लक्षकोट्यादिसर्वसंख्यालक्षणकथनपूर्वकं वानरसेनासु तावत्संख्यापर्याप्तिनिवेदनम् ॥ २ ॥

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् ॥ बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ॥ १ ॥
स्थितान्पश्यसि यानेतान्मत्तानिव महाद्विपान् ॥ न्यग्रोधानिव गाङ्गेयान्सालान्हैमवतानिव ॥ २ ॥
एते दुष्प्रसहा राजन्बलिनः कामरूपिणः ॥ दैत्यदानवसंकाशा युद्धे देवपराक्रमाः ॥ ३ ॥
एषां कोटिसहस्राणि नव पञ्च च सप्त च ॥ तथा शङ्खसहस्राणि तथा बृन्दशतानि च ॥ ४ ॥

दार्ढ्यमुक्तं ॥ ४१ ॥ भीमभीमाः भीमप्रकाराः । प्रकारः सादृश्यं । भीमसदृशाः ईषद्भीमा इत्यर्थः । "प्रकारे गुणवचनस्य" इति द्विर्भावः । तादृशगमनस्वराः ते वानराः । ते तव । लङ्कां समीक्ष्य मर्दयन्तीव तस्थुः मर्दयन्तीव तिष्ठन्ति । आर्षो लिङ्गव्यत्ययः ॥ ४२ ॥ उपतिष्ठति उपतिष्ठते ॥ ४३ ॥ एषैवेति संधिरार्षः ॥ ४४ ॥ पौरुषे पराक्रमे । प्राणानां प्राणेषु ॥ ४५-४७ ॥ प्रविध्वस्तविकीर्णशैलां प्रविध्वस्ताः चूर्णिताः विकीर्णा विक्षिप्ताः शैलाः यस्याः सा तां तथा ॥ ४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

एवं सारणेनोक्तं श्रुत्वाशुकस्तेन कार्त्स्न्येनानुक्तेः स्वयं तत्सर्वं दर्शयत्यष्टाविंशे सर्गे—सारणस्येति ॥ शुकः सारणस्य वचः श्रुत्वा तेन कार्त्स्न्येनानुक्तेः स्वयं तत्सर्वं बलं आदिश्य अङ्गुल्या निर्दिश्य । रावणं । अथ कार्त्स्न्येन । अब्रवीत् । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः । सविनयोक्तिद्योतनाय राक्षसाधिपमित्युक्तं ॥ १ ॥ न्यग्रोधान् वटान् । गाङ्गेयान् गङ्गातटरुहान् । हैमवतान् हिमवत्पर्वतोद्भवान् ॥ २ ॥ दैत्यदानवसंकाशाः दैत्यदानवतुल्यबलाः ॥ ३ ॥ शङ्खबृन्दादिस्वरूपमुत्तरत्र स्वयमेव वक्ष्यति । बृन्दशतादिसंख्याः सन्तीति शेषः

**ति०** तेवानराः । ते तव । लङ्कांसमीक्ष्य मर्दयन्तीव मर्दयन्तइवतिष्ठन्ति ॥ **शि०** एके प्रधानाः । सर्वेयेनिवसन्ति तेसर्वे लङ्कांमर्दयन्तीव । अतएव समीक्ष्यतस्थुः । एतेनलिङ्गव्यत्ययआर्षः इत्युक्तिश्चिन्त्या ॥ ४२ ॥ इतिसप्तविंशःसर्गः ॥ २७ ॥ **स०** बलं रामबलं रामसेनां । तत्सर्वं स्वेनतेनापिज्ञातंसर्वमादिश्य । रामेणोक्तंवचश्चादिश्य विज्ञाप्य । स्थितस्यसारणस्यवचः श्रुत्वा स्थितंरावणंप्रति शुकोऽथवाक्यमब्रवीत् ॥ १ ॥ **ति०** गाङ्गेयान् गङ्गातटोत्पन्नान् । अनपत्येपिढगार्षः ॥ २ ॥ **ति०** एषां

[ **पा०** ] १ ङ. च. झ. ञ. ट. वृत्तपिङ्गलनेत्राहिमहाभीमगतिस्वनाः. २ घ. भीमतरस्वनाः. ३ क. ग. ज. मिमर्दयिषवोलङ्कांसर्वेतिष्ठन्त्युदीक्ष्यते. ४ ङ. छ. झ. ञ. वीर्यवान्. ५ घ. पर्यवस्थितः. ६ क. ग. च. छ. ज. ञ. स्फीतान्. ७ ङ.—ट. शङ्कुसहस्राणि.

एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा ॥ हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५ ॥
यौ तौ पश्यसि तिष्ठन्तौ [1]कुमारौ देवरूपिणौ ॥ मैन्दश्च द्विविदे[2]श्चोभौ ताभ्यां नास्ति समो युधि ॥६॥
ब्रह्मणा [3]समनुज्ञातावमृतप्राशिनावुभौ ॥ आशंसेते [4]युधा लङ्कामेतौ मर्दितुमोजसा ॥ ७ ॥
[[5]यावेतावेतयोः पार्श्वे स्थितौ पर्वतसन्निभौ ॥ सुमुखोऽसुमुखश्चैव मृत्युपुत्रौ पितुःसमौ ॥
प्रेक्षन्तौ नगरीं लङ्कां कोटिभिर्दशभिर्वृतौ ॥ ८ ॥]
यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् ॥ यो बलात्क्षोभयेत्क्रुद्धः समुद्रमपि वानरः ॥ ९ ॥
एषोऽभिगन्ता [6]लङ्काया वैदेह्यास्तव च प्रभो ॥ एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ १० ॥
ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः ॥ हनुमानिति विख्यातो लङ्घितो येन सागरः ॥११॥
[7]कामरूपी हरिश्रेष्ठो [8]बलरूपसमन्वितः ॥ अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ १२ ॥
उद्यन्तं भास्करं दृष्ट्वा [9]बालः किल [10]पिपासितः ॥ त्रियोजनसहस्रं तु [11]अध्वानमवतीर्य हि ॥ १३ ॥
आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति ॥ इति [12]संचिन्त्य मनसा [13]पुरैष बलदर्पितः ॥ १४ ॥
अनाधृष्यतमं देवमपि [14]देवर्षिदानवैः ॥ अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १५ ॥

॥ ४ ॥ सुग्रीवसचिवाः सुग्रीवसहायाः । " मन्त्री सहायः सचिवः " इत्यमरः । देवगन्धर्वैः देवेभ्योगन्धर्वेभ्यश्चेत्यर्थः । उत्पन्नाः कामरूपिणइति कामरूपित्वेनोत्पन्ना इत्यर्थः । पूर्वं कामरूपित्वमुक्तं तस्येदानीमौत्पत्तिकत्वमुच्यत इति न पुनरुक्तिः ॥ ५ ॥ कुमारौ युवानौ । देवेति रावणंप्रति संबुद्धिः । रूपिणौ प्रशस्तरूपौ । प्रशंसायां मत्वर्थीय इनिप्रत्ययः । यौ पश्यसि तौ मैन्दश्च द्विविदश्चेत्युच्येते इत्यर्थः ॥ ६ ॥ युधि ताभ्यां समो नास्तीत्यत्र हेतुं दर्शयति—ब्रह्मणेति ॥ समनुज्ञातौ सन्तौ अमृतप्राशिनावित्यर्थः ॥ ७—८ ॥ हनुमन्तं वर्णयति—यं त्वित्यादिना ॥ प्रभिन्नं मत्तं । " प्रभिन्नो गर्जितो मत्तः " इत्यमरः ॥ ९ ॥ अभिगन्तेति । वैदेहीपक्षे अभिगमनं अन्वेषणं । रावणपक्षे दर्शनं ॥ १० ॥ ज्येष्ठ इति । अत्र एष इत्यध्याहार्यं । केसरिणः पुत्रः तस्य क्षेत्रजः पुत्रः ॥ ११ ॥ बलरूपसमन्वितः प्रशस्तबलसमन्वितः । प्रशंसायां रूपप् प्रत्ययः । यथा सततगः । सततग इव । सततगः वायुः ॥ १२ ॥ बालः बाल्यावस्थः । किलेत्यैतिह्ये । पिपासितः स्तन्यापेक्षः । क्षुधित इति यावत् । त्रियोजनसहस्रं त्रियोजनसहस्रपरिमाणं । " द्विगोर्नित्यं " इति प्रमाणप्रत्ययस्य लुक् । हनुमत्पितुः केसरिणः कनकाचलवासित्वात्तस्य चात्युन्नतत्वादादित्यस्य तच्छिखरस्य च मध्यमाद्वा त्रिसहस्रयोजनपरिमित इत्युक्तं । अतएव अवतीर्येत्युक्तं नतूत्पत्येति । यद्वा आदित्यस्य भूमेरुपरि लक्षयोजनान्तरत्वात् त्रियोजनसहस्रमित्येतदनेकसहस्रोपलक्षणं ॥ १३ ॥ आहरिष्यामि भक्षयिष्यामि । " इति संचिन्त्य मनसा पुरैष बलदर्पितः " इत्यनन्तरं त्रियोजनसहस्रमित्यर्धं योज्यं ॥ १४ ॥ देवं सूर्यं । भास्कर उदयतेऽस्मिन्निति भास्करोदयनः तस्मिन्गिरौ । हनुः तालुप्रदेशः । अनासाद्येत्यत्र तत्तेजसेत्युपस्कार्यं । तेजसा तस्य निर्धूत इति किष्कि-

कोटीतिसुग्रीवसचिवसंख्या । सर्वबलसंख्यांतुसर्गान्तेवक्ष्यति ॥ ४ ॥ **ति०** समनुज्ञाताइत्यत्र "लोपःशाकल्यस्य" इतिलोपः ॥ **स०** यथा सम्यक् । " निवृत्तिमार्गःकथितआदौभगवतायथा " इतिभागवतश्लोकमुदाहृत्य " यथायोग्याखिलज्ञता " इत्यनुव्याख्यासुधायां " यथेतिभिन्नंपदंसम्यग्वाचि " इत्युक्तेः ॥ ७ ॥ **स०** ज्येष्ठइत्यनेनान्येप्यवरजाःसन्तीतिज्ञायते ॥ वातात्मजः वातस्यवायोः आत्मजः औरसः ॥ ११ ॥ **स०** बुभुक्षितः भक्षणेच्छावानित्यर्थः । त्रियोजनसहस्रं । उपलक्षणमेतत् । अवतीर्य मातुरुत्सङ्गात् मे मम । क्षुत् नप्रतियास्यति भूमिस्थफलादिभिरिशेषः । तस्मादादित्यमाहरिष्यामीतिनिश्चित्यपुप्लुवे ॥१३—१४॥ **स०** अनासाद्यपतितः इन्द्रवज्रादितिशेषः ॥ १५ ॥

**[ पा० ]** १ ङ. झ. ट. समानौ. २ ङ. झ. ट. द्विविदश्चैव. च. छ. ञ. द्विविदश्चेति. ३ झ. समनुज्ञाताअमृत. ४ ङ.—ट. यथालङ्कां. ५ अयंश्लोकःप्राचीनकोशेषुनदृश्यतेऔत्तराहपाठएवदृश्यते. ६ ग.—ट. लङ्कायां. ७ ङ. छ. झ. ट. कामरूपो. ८ च. ञ. बलवीर्य. ९ ख. च. छ. बाल्येकिल. १० घ. ङ. झ. ञ. बुभुक्षितः. ११ घ. मधिरुह्यच. १२ क. घ.—छ. झ. ञ. ट. निश्चित्य. १३ ङ. झ. पुप्लुवेबल. १४ ङ.—ट. देवर्षिराक्षसैः.

पतितस्य कपेरस्य हनुरेका शिलातले ॥ किंचिद्भिन्ना दृढहनोर्हनुमानेष तेन वै ॥ १६ ॥
सत्यमागमयोगेन ममैष विदितो हरिः ॥ नास्य शक्यं बलं रूपं प्रभावो वाऽपि भाषितुम् ॥ १७ ॥
एष आशंसते लङ्कामेको मर्दितुमोजसा ॥ [येनैं जाज्वल्यतेऽसौ वै धूमकेतुस्तवाद्य वै ॥
लङ्कायां निहितश्चापि कथं विस्मरसे कपिम् ॥ १८ ॥]
यैश्चैषोनन्तरः शूरः श्यामः पद्मनिभेक्षणः ॥ इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः ॥ १९ ॥
यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते ॥ यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ २० ॥
यो भिन्द्याद्गगनं बाणैः पर्वतानपि दारयेत् ॥ यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ॥ २१ ॥
यस्य भार्या जनस्थानात्सीता चापहृता त्वया ॥ स एष रामस्त्वां योद्धुं राजन्समभिवर्तते ॥ २२ ॥
यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः ॥ विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २३ ॥
एषोस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः ॥ नये युद्धे च कुशलः सर्वशास्त्रविशारदः ॥ २४ ॥
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली ॥ रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २५ ॥

न्धाकाण्डोक्तेः । यद्यप्युत्तरकाण्डे इन्द्रवज्रेण पतनमुक्तं । तथापि तदपि हेत्वन्तरमिति ज्ञेयं ॥ १५–१६ ॥ कथमियं कथा त्वया विदितेत्यत्राह—सत्यमिति ॥ आगमः आप्तवाक्यं तदेव योग उपायः तेन । यद्वा आप्तवाक्यश्रवणेन मम मया रूपं वपुः भाषितुं न शक्यं । कामरूपदर्शनादितिभावः ॥ १७—१८ ॥ अथ रामं वर्णयति—यश्चैष इत्यादिना ॥ अनन्तरः अन्तरं अवकाशः तद्रहितः । स्कन्धारूढत्वेन पूर्वोक्तहनुमतोत्यन्तसन्निहितइत्यर्थः । शूरः हनुमदारूढत्वेन प्रकटितशौर्यः । श्यामः कनकमयशिखरारूढकालाम्बुदकमनीयविग्रहः । पद्मनिभेक्षणः दिव्यविग्रहमहातटाकस्थविकसितकमललोभनीयविलोचनः । अनरण्यादिवदयं न मन्तव्यः । किंत्विक्ष्वाकूणां मध्ये अतिरथः अतिशयितरथः । अपराजितरथइत्यर्थः । अत्र न वयमेव प्रमाणं । लोके विख्यातपौरुषः खरवधादिना ख्यातं भवद्वैरिवालिवधेन विशेषेण ख्यातं पौरुषं यस्य तथोक्तः ॥ १९ ॥ न केवलं पौरुषं धर्मोप्यस्यैव स्वमित्याह—यस्मिन्निति ॥ यस्मिन्धर्मो न चलति जाबालिप्रभृतिभिराकुलितोप्यप्रकम्पितः यो धर्मं नातिवर्तते भरतसीतादिभिः कृतेपि प्रतिबन्धे पितृवचनमुनिप्रतिज्ञाधर्मं नातिवर्तते । खरयुद्धेऽपसर्पणं बाणपातावकाशलाभार्थं । छद्मना वालिवधस्त्वन्यथानुपपत्त्यावश्यमाश्रितविषयप्रतिज्ञाया निर्वोढव्यतया च । न केवलं पौरुषधर्मौ अस्त्रबलं चास्यैवेत्याह—य इति । ब्राह्ममस्त्रं ब्रह्मास्त्रमत्रं । वेदांश्च वेद जानाति । ब्रह्मास्त्रमत्रस्य वेदान्तर्गतत्वेपि प्राधान्यात्पृथगुक्तिः । वेदविदां वेदार्थविदां वरः उपदेष्टृभ्यो वसिष्ठादिभ्योप्युत्कृष्टः ॥ २० ॥ उक्तं पौरुषमेव प्रपञ्चयति—यो भिन्द्यादित्यादि ॥ गगनं गगनस्थविमानादि । आदिशब्देन पातालादिकमुच्यते ॥ २१ ॥ संप्रति कोपोद्भवे मूलमाह—यस्य भार्येति ॥ २२ ॥ अथ लक्ष्मणं वर्णयति—यस्यैष इत्यादिना ॥ दक्षिणे रामस्येति शेषः । शुद्धजाम्बूनदप्रभः स्वर्णवर्णः । ताम्राक्षः त्वद्विषयकोपेनेति भावः ॥ २३ ॥ सर्वेति । शास्त्रशब्दो नीतिशास्त्रव्यतिरिक्तपरः ॥ २४ ॥ प्राणो बहिश्चर इत्यनेन प्राणसंरक्षकत्वमुच्यते

स० वज्रशिलातलताडनाद्धनुभङ्गेनभाव्यं । तथापि किंचिद्भिन्नेतिहनोर्दृढिमेतिदृढहनोरित्युक्तं ॥ तेननिमित्तेन हनुमानिति गीयतइतिशेषः ॥ मतुबर्थश्चप्राशस्त्यं । तदेवदार्ढ्यमितिभावः ॥ १६ ॥ ति० धूमकेतुरग्निः । येनजाज्वल्यते प्रज्वलितःकृतः । त्वत्तेजोरुद्धोपि यत्पुच्छंप्राप्य प्रज्वलितः ॥ १८ ॥ ति० यस्य दर्शितस्यहनुमतोऽनन्तरः समीपवर्ती ॥ १९ ॥ ति० गगनं बाणैर्भिन्द्यात् सर्वदुष्करमपितस्यसुकरमितितात्पर्यं ॥ २१ ॥

[ पा० ] १ क. ग. ङ.—ट. वासु. २ ङ. झ. ट. मथितुं. ३ अयंश्लोकः क. ख. ङ.—ट. पाठेषुदृश्यते. ४ ङ. ज. झ. ट. यस्यैषो. ५ ख. ङ.—ट. विश्रुतपौरुषः. ६ ज. भिन्द्यान्मेदिनीं. ७ ङ. च. झ. ञ. ट. मेदिनींवापि. ८ घ. नीलजीमूतमूर्धजः. ९ ङ. छ.—ट. एषोहिलक्ष्मणोनामभ्रातुःप्रियहितेरतः. ख. सएष. १० ख. प्रभुः. क. सखा. ११ ङ. छ. झ. ट. शस्त्रभृतांवरः. १२ घ. विक्रान्तोबलवान्वशी. ङ. झ. ट. विक्रान्तश्चजयीबली. ख. च. छ. ज. विक्रान्तोबलसंयुतः.

न ह्येष राघवस्यार्थे जीवितं परिरक्षति ॥ एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २६ ॥
[1]यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति ॥ रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २७ ॥
श्रीमता राजराजेन लङ्कायामभिषेचितः ॥ [2]त्वामेव प्रतिसंरब्धो युद्धायैषोऽभि[3]वर्तते ॥ २८ ॥
यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् ॥ सर्वशाखामृगेन्द्राणां भर्तारं[4]मपराजितम् ॥ २९ ॥
तेजसा यशसा बुद्ध्या [5]ज्ञानेनाभिजनेन च ॥ यः कपीनतिबभ्राज हिमवानिव पर्वतान् ॥ ३० ॥
किष्किन्धां यः समध्यास्ते गुहां सगहनद्रुमाम् ॥ दुर्गां पर्वत[6]दुर्गस्थां प्रधानैः सह यूथपैः ॥ ३१ ॥
यस्यैषा काञ्चनी माला शोभते शतपुष्करा ॥ कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥३२॥
एतां च मालां तारां च कपिराज्यं च शाश्वतम् ॥ सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥३३॥
शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ॥ शतं कोटिसहस्राणां [7]शङ्ख इत्यभिधीयते ॥ ३४ ॥
शतं [8]शङ्खसहस्राणां [9]महाशङ्ख इति स्मृतः ॥ [10]महाशङ्खसहस्राणां शतं [11]बृन्दमिति स्मृतम् ॥ ३५ ॥
शतं बृन्दसहस्राणां महाबृन्दमिति स्मृतम् ॥ महाबृन्दसहस्राणां शतं [12]पद्ममिति स्मृतम् ॥ ३६ ॥
शतं पद्मसहस्राणां महापद्ममिति स्मृतम् ॥ महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ ३७ ॥
शतं खर्वसहस्राणां [13]महाखर्वमिति स्मृतम् ॥ महाखर्वसहस्राणां समुद्रमभिधीयते ॥ ३८ ॥
शतं समुद्रसाहस्रमोघ इत्यभिधीयते ॥ शतमोघसहस्राणां महौघ इति वि[14]श्रुतः ॥ ३९ ॥
एवं कोटिसहस्रेण [15]शङ्खानां च शतेन च ॥ [16]महाशङ्खसहस्रेण तथा बृन्दशतेन च ॥ ४० ॥

॥ २५—२६ ॥ पक्षं पार्श्वं । रक्षोगणेति । चतुर्णामेव रक्षसां गणतुल्यविक्रमत्वात्तथोक्तं । राजा त्वद्राज्यस्येतिशेषः । अत्र हीति गायत्र्याः षोडशाक्षरं ॥ २७ ॥ राजत्वं कुत इत्यत्राह—श्रीमतेति ॥ श्रीमता अवाप्तसमस्तकामत्वेनलङ्काराज्यानभिलाषिणेत्यर्थः । राजराजेन विभीषणादिराजत्वानिर्वाहे स्वस्य राजराजत्वं न निर्वहेदिति मन्वानेन । लङ्कायां निमित्ते । लङ्कायां राजेतिवान्वयः ॥ २८ ॥ अथ सुग्रीवं वर्णयति—मध्ये रामविभीषणयोर्मध्ये। अचलं निश्चलं ॥ २९ ॥ बुद्ध्या ऊहापोहरूपज्ञानेन । ज्ञानेन शास्त्रजन्यज्ञानेन । अभिजनेन कुलेन । अतिबभ्राज अतिशय्य बभ्राज ॥ ३० ॥ गहनं वनं । दुर्गां प्राकारादिना दुर्गमां । पर्वतदुर्गस्थां पर्वतरूपदुर्गे स्थितां ॥ ३१ ॥ शतपुष्करा शतपद्मा । कान्ता काम्यमाना । लक्ष्मीः वीरलक्ष्मीः । तद्धारणे कदाचिदपि पराजयो न भवतीति सदा वाली तां वहति स्मेति प्रसिद्धिः । तद्धारणादेव हि रामस्तदनभिमुख एव वालिनं हतवान् ॥ ३२ ॥ प्रतिपादितः प्रापितः ॥ ३३ ॥ उक्तानुक्तसकलवानरसंख्यां वक्तुं प्रथमतः संख्यामेव दर्शयति—शतमित्यादिना ॥ शतपर्यन्तसंख्यायाः स्फुटत्वात्तदूर्ध्वसंख्या अत्र संकीर्त्यन्ते । शतसहस्राणां लक्षाणां शतं कोटिरित्याहुः ॥ ३४—॥ ३९ ॥ एवं कोटिसहस्रेणेत्याद्यवान्तरसंख्याभेद-

**स०** रक्षोगणपरिक्षिप्तः रक्षसांगणाःयस्यासौतथा । तेनत्वयापरिक्षिप्तः बहिर्निष्कासितः । रक्षोगणैर्वर्जितइतिवा । राजराजेन राजश्रेष्ठेन । लङ्कायांराजा. सन्नभिषेचितइत्यन्वयः । एतेन तत्वतस्तेन त्वं तुच्छीकृतइत्यवेहीतिसूचयति ॥ **ति०** यस्य प्राग्वर्णितस्यरामस्यसव्यंपक्षमाश्रित्यतिष्ठतीत्यन्वयः ॥ **शि०** रक्षोगणैःपरिक्षिप्तः त्यक्तः । एषविभीषणः अतएव एषः लङ्काराज्यविषयकेच्छावान् असौविभीषणः त्वांप्रतियुद्धाय संरब्धोभिवर्तते ॥ २७—२८ ॥ **स०** प्रतिसंरब्धः प्रतिना मनःपूर्वकतांसौहार्दत्यागपूर्वकतांवासंरंभस्यद्योतयति ॥ २८ ॥ इत्यष्टाविंशःसर्गः ॥ २८ ॥

**[ पा० ]** १ ग. ङ. झ. ट. यस्य. २ ङ.—ट. त्वामसौ. ३ घ. तिष्ठते. ४ ङ.—ट. ममितौजसं. ५ ख. घ. ङ. ज. झ. ट. बलेनाभि. ६ ङ. झ. ट. दुर्गम्यां. ७ ख.—ङ. झ. ञ. ट. शङ्कुरित्यभिधीयते. ८ क.—ट. शङ्कुसहस्राणां. ९ ख. ङ.—ट. महाशङ्कु. १० क.—ट. महाशङ्कु. ११ ख.—ट. बृन्दमिहोच्यते. १२ ङ. च. झ. ञ. ट. पद्ममिहोच्यते. १३ क. च. ञ. महाखर्वमिहोच्यते. १४ झ. ट. विश्रुतं. १५ ङ. च. झ. ञ. ट. शङ्कूनांच. १६ क.—च. झ. ञ. ट. महाशङ्कु.

महाबृन्दसहस्रेण तथा पद्मशतेन च ॥ महापद्मसहस्रेण तथा खर्वशतेन च ॥ ४१ ॥
समुद्रेण शतेनैव महौघेन तथैव च ॥ [1]एष कोटिमहौघेन समुद्रसदृशेन च ॥ ४२ ॥
विभीषणेन [2]सचिवै राक्षसैः परिवारितः ॥ सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थ[3]मभिवर्तते ॥
महाबलवृतो नित्यं महाबलपराक्रमः ॥ ४३ ॥
इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम् ॥
ततः प्रयत्नः परमो विधीयतां यथा जयः स्यान्न परैः [4]पराजयः ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः ॥ २९ ॥

शुकसारणकृतशत्रुपक्षप्रशंसनमसहमानेनरावणेन सभर्त्सनं तद्विसर्जनपूर्वकं यथावच्छयनासनादिरामाचरणावगमाय शार्दूलादिचारवरप्रेषणम् ॥ १ ॥ वेषान्तरधारणेनवानरसेनामध्यप्रविष्टैर्विभीषणदृष्टनिवेदितैर्वानरमुष्टिपिष्टैः कृपयाराम-विमोचितैः शार्दूलादिभिः पुनारावणसमीपगमनम् ॥ २ ॥

शुकेन तु [5]संमाख्यातांस्तान्दृष्ट्वा हरियूथपान् ॥ समीपस्थं च रामस्य भ्रातरं स्वं विभीषणम् ॥ १ ॥
लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् ॥ सर्ववानरराजं च सुग्रीवं भीमविक्रमम् ॥ २ ॥
[[6]गजं गवाक्षं गवयं मैन्दं द्विविदमेव च ॥ अङ्गदं चैव बलिनं वज्रहस्तात्मजात्मजम् ॥ ३ ॥
हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम् ॥ सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम् ॥ ४ ॥]
किंचिदाविग्नहृदयो [7]जातक्रोधश्च रावणः ॥ भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ५ ॥
अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ ॥ रोषगद्गदया वाचा संरब्धः परुषं वचः ॥ ६ ॥
न तावत्सदृशं नाम सचिवैरुपजीविभिः ॥ विप्रियं [8]नृपतेर्वक्तुं निग्रहप्रग्रहे प्रभोः ॥ ७ ॥
रिपूणां प्रतिकूलानां युद्धार्थमभिवर्तताम् ॥ उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ८ ॥

---

कीर्तनंअवान्तरसेनापतिभेदात् ॥४०—४१॥ समुद्र-सदृशेन सागरसदृशेन ॥४२॥ सचिवैः राक्षसैरुपलक्षितेन विभीषणेन परिवारितः सुग्रीवः त्वामभि त्वां-प्रति। युद्धार्थं वर्तते ॥४३॥ ज्वलितग्रहोपमां क्रूरग्रहोपमां। यथा ते जयो न स्यात् प्रत्युत परैः पराजय एव स्यात् तथा यत्नः क्रियतामिति ध्वन्यते ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

---

अथ रावणेन चारप्रेषणादिप्रतिपाद्यत एकोन-त्रिंशे—शुकेनेत्यादिश्लोकत्रयं ॥ सर्ववानरराजंचेत्यत्र चकारो हनुमदादिसमुच्चयार्थः । आविग्नहृदयः भीत-हृदयः । तथापि जातक्रोधः परस्तवाकर्णनेन कुपित इत्यर्थः । कथान्ते वचनान्ते ॥ १—५ ॥ रोषगद्गदया कोपस्खलितया । संरब्धः कुपितः ॥६॥ तावत् प्रथमतः । निग्रहप्रग्रहे निग्रहानुग्रहयोः । प्रभोः शक्तस्य । नृपतेः विप्रियं वक्तुं न सदृशं नाम । नामेति नीति-शास्त्रप्रसिद्धिः ॥ ७ ॥ विप्रियपदोक्तं विशदयति—रिपूणामिति ॥ अभिवर्ततां अभिवर्तमानानां । अप्र-

---

**ति०** भर्त्सयामास स्वकीयभीताकारगोपनार्थोयंव्यापारः ॥५॥ **स०** रिपूणां शत्रूणां । ननु ''रिपोरपिगुणावाच्याः'' इत्याद्युक्तेस्तत्स्तुतिर्युक्तेत्यतोवक्ति—**प्रतिकूलानामिति** । विरुद्धाचरणवतामित्यर्थः । स्तुतिस्तु अप्रतिकूलशत्रुजातीयविषयेतिभावः । तत्राह—युद्धार्थमिति । अप्रस्तवे तद्विषयकप्रश्नाभावे । स्तवं गुणकीर्तनं । वक्तुंसदृशंनामसदृशंकिल काकुः । यद्वा उभाभ्यामेवाप्रस्तवे

[ **पा०** ] १ क. ख. च. छ. ट. एवंकोटि. २ ङ.—ट. वीरेणसचिवैःपरि. ३ ङ. झ. ट. मनुवर्तते. ४ ङ. च. छ. झ. ञ. ट. पराभवः. ५ ङ. झ. ञ. ट. समादिष्टान्दृष्ट्वा. ६ इदंश्लोकद्वयं क. ख. च. छ. ञ. पाठेषुदृश्यते. क. ख. च. छ. ञ. नीलंसेनापतिंचैवनलंगवयमेवच. ७ ज्ञ. घ. च. छ. ञ. जातामर्षश्च. ८ च. ञ. नृपतेःकर्तुं.

[1]आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः ॥ सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ॥
गृहीतो वा न विज्ञातो भारो ज्ञानस्य वोह्यते ॥ ९ ॥
ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥ १० ॥
किंतु मृत्योर्भयं नास्ति वक्तुं मां परुषं वचः ॥ यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥ ११ ॥
अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ॥ [3]राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥ १२ ॥
हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसकौ ॥ यदि पूर्वोपकारैस्तु न क्रोधो मृदुतां व्रजेत् ॥ १३ ॥
अपध्वंसत गच्छध्वं सन्निकर्षादितो मम ॥ न हि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम् ॥ १४ ॥
हतावेव कृतघ्नौ तौ मयि स्नेहपराङ्मुखौ ॥ १५ ॥
एवमुक्तौ तु सव्रीडौ तावुभौ शुकसारणौ ॥ रावणं जयशब्देन प्रतिनन्द्याभिनिस्सृतौ ॥ १६ ॥
[4]अब्रवीत्तु दशग्रीवः समीपस्थं महोदरम् ॥ उपस्थापय मे शीघ्रं [5]चारान्नीतिविशारदान् ॥
महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १७ ॥

स्तवे अनवसरे। स्तवं वक्तुं सदृशं नाम सदृशं किमु। युद्धारम्भसमयो हि परस्तुत्यनर्ह इति भावः ॥ ८ ॥ यद्यस्मात् राजशास्त्राणां सारं प्रतिपाद्यसारभूतं। अनुजीव्यं अनुजीविकृत्यं । न गृह्यते न ज्ञायते। अतः वां युवाभ्यां गुरवः महान्तः। वृद्धाः ज्ञानवयश्शीलसंपन्नाः । आचार्याः नीतिशास्त्रोपदेष्टारः। वृथा पर्युपासिताः । तदुपासनफलादर्शनान्निरर्थकमाराधिताइत्यर्थः । ननु चिरोपासितगुरोरज्ञानं नसाम्प्रतं तत्राह—गृहीतो वेति । गृहीतोवार्थः । न विज्ञातः न विशेषेण ज्ञातः। विस्मृत इत्यर्थः। तर्हि कथं ज्ञातृत्वप्रवाद इत्यत्राह—भार इति । ज्ञानस्य भारः ऊह्यते वा। जातमपि ज्ञानं नानुष्ठानपर्यवसायीत्यर्थः। यद्वा ज्ञानस्य भार ऊह्यते । ज्ञानभारभरणाभिमान एव क्रियते न तु तत्कार्यमित्यर्थः ॥ ९ ॥ आवयोरज्ञत्वे कथमेतावत्पर्यन्तमस्मन्मत्यनुसारेण तव राज्यभरणं तत्राह—ईदृशैरिति ॥ ईदृशैः एवं नीतिशास्त्रलेशानभिज्ञैरित्यर्थः। धरामि राज्यमिति शेषः। "धृञ् धारणे" इति भौवादिको धातुः। धरामि जीवामीति वा ॥ १० ॥ मां परुषं वचो वक्तुं युवयोर्मृत्योःसकाशात् भयं नास्ति किंतु। वक्तुं उद्यतयोर्युवयोरिति शेष इत्यध्याहुः । परुषोक्तिमात्रे कुतो मृत्युरित्यत्राह—यस्येति। शासतो मे जिह्वैव शुभाशुभं प्रयच्छति । शासने प्रवृत्तस्य मे जिह्वाचलनमेव मृत्युं श्रेयो वा प्रयच्छतीत्यर्थः ॥ ११ ॥ राजदोषः राजकोपः। दहनस्पृष्टवनपादपस्थितिसंभवादप्यसंभाविता राजदोषस्पृष्टजनस्थितिरिति भावः। तिष्ठन्ते तिष्ठन्ति ॥ १२ ॥ स्वमनः प्रत्याह—हन्यामिति ॥ १३ ॥ अपध्वंसत स्थानात्प्रच्यवध्वं । परस्मैपदं बहुवचनं चार्षं। गच्छध्वं गच्छत। सन्निकर्षात् दृष्टिविषयात् ॥ १४ ॥ हतावित्यर्धं ॥ कृतघ्नत्वस्नेहपराङ्मुखत्वे एव तयोर्वधइति भावः ॥ १५ ॥ प्रतिनन्द्य प्रशस्य। अभिनिस्सृतौ निर्गतौ ॥ १६ ॥ चारा-

स्तवंवक्तुंसदृशंनाम नान्येषामितिवा। स्तवशब्दार्थीभूतगुणकीर्तनस्यनपुंसकताविवक्षया "अजानतामहिमानंतवेदं" "उदीचामातः स्थानेयकपूर्वायाः" "मातुरुत्संख्यासंभद्रपूर्वायाः" इत्यादिवच्चस्तवमित्युक्तिःसंभवतीतिमन्तव्यमितिकेचित्। वस्तुतस्तु "संबन्धमनुवर्तिष्यते" इतिभाष्याल्लिङ्गानामतन्त्रत्वाद्वा ॥८॥ ती० आचार्याः उपनयनपूर्वकंसाङ्गवेदाध्यापकाः । गुरवः पित्रादयः। वृद्धाः ज्ञानवयोवृद्धाः। स० गुरुर्निषेककृन्मुख्यः। तद्भ्रात्राद्याअमुख्याअपिगुरवइतिगुरवइत्युक्तिः ॥ वां युवाभ्यां। वृथापर्युपासिताः। तयोर्गुरुमुखतोऽभ्यसनं स्वसाक्षिसिद्धमित्येवमुक्तिः। वांयुवाभ्यांसारंन्यायः। अनुजीव्यं ग्राह्यं नगृह्यते नगृहीतं। 'न्यायेचनीरेचघनेचसारं'इतिविश्वः ॥ ९ ॥ स० अपध्वंसत गच्छध्वं इतिबहुवचनंतु एवमन्येचेत्परुषंवदिष्यन्ति तर्हि तेषामप्ययमेवदण्डइतिसूचनाय। उभयत्रपदव्यत्यासोरावणपदव्यत्यासाय ॥ १४ ॥ ति० प्रतिनन्द्याभिनिस्सृतौ अयमेवतयोःराक्षसत्वप्रापकशापस्यान्तइत्यन्यत्रस्पष्टं ॥ १६ ॥

[ पा० ] १ ग. ङ. झ. ट. आचार्यो. २ ङ. च. झ. ञ. ट. वाह्यते. ३ ङ. झ. ञ. ट. राजदण्डपरामृष्टाः. ४ क. ख. घ. च. छ. ज. ट. अब्रवीत्स. ५ क.—ङ. छ. झ. ञ. ट. चारानितिनिशाचरः.

ततश्चाराः संत्वरिताः प्राप्ताः पार्थिवशासनात् ॥ उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा ॥१८॥
तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः ॥ चारान्प्रत्यायिताञ्शूरान्भक्तान्विगतसाध्वसान् ॥१९॥
इतो गच्छत रामस्य व्यवसायं परीक्षथ ॥ मन्त्रिष्वभ्यन्तरा येऽस्य प्रीत्या तेन समागताः ॥ २० ॥
कथं स्वपिति जागर्ति किमन्यच्च करिष्यति ॥ विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः ॥ २१ ॥
चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः ॥ युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २२ ॥
चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम् ॥ शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २३ ॥
ततस्ते तं महात्मानं चारा राक्षससत्तमम् ॥ कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ॥ २४ ॥
ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ ॥ प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ॥ २५ ॥
प्रेक्षमाणाश्चमूं तां च बभूवुर्भयविक्लवाः ॥ ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २६ ॥
विभीषणेन तत्रस्था निगृहीता यदृच्छया ॥ शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥ २७॥
मोचितः सोपि रामेण वध्यमानः प्लवङ्गमैः ॥ आनृशंस्येन रामस्य मोचिता राक्षसाः परे ॥ २८ ॥
वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः ॥ पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २९ ॥
ततो दशग्रीवमुपस्थितास्तु ते चारा बहिर्नित्यचरा निशाचराः ॥
गिरेः सुवेलस्य समीपवासिनं न्यवेदयन्भीमबलं महाबलाः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

नुपस्थापयेत्यब्रवीदित्यन्वयः ॥ १७—१८ ॥ प्रत्यय एव प्रत्यायः तं प्राप्ताः प्रत्यायिताः तान् । विश्वसनीयानित्यर्थः । विगतसाध्वसान् विगतशत्रुभयान् ॥ १९ ॥ व्यवसायं कर्तव्यनिश्चयं । परीक्षथ परीक्षध्वं । शिथिलव्यवसायश्चेदमुं भीषयाम इति भावः । अस्य रामस्य मन्त्रिषु ये अभ्यन्तराः । अन्तरङ्गभूता इत्यर्थः । तेन रामेण प्रीत्या सङ्गताः । मित्रभूता इत्यर्थः । तानपि परीक्षध्वं । तच्छैथिल्ये तान् भेत्स्याम इत्याशयः ॥ २० ॥ कथं स्वपिति किमेकः स्वपिति उत जाग्रद्भिरनेकैरावृतः स्वपिति । आद्ये सुप्ते युद्धं प्रवर्तयिष्याम इति हृदयं । कथंजागर्ति किं चिन्ताकुलः उतानाकुल इत्यर्थः । आद्ये व्याक्षिप्तं प्रहरिष्यामीत्याकूतं । किमन्यच्च करिष्यति । किं कंचित्कालंविलम्ब्य नगरमुपरोत्स्यति उत सद्य इति। आद्ये क्रमेण वञ्चयिष्यामीति तात्पर्यं । निपुणं प्रच्छन्नमिति यावत् । क्रियाविशेषणमिदं । सर्वं उक्तं स्वापादिकं । अशेषतः सर्वप्रकारेण विज्ञायागन्तव्यं । अशेषतः अशेषैश्चारैरिति वार्थः । अशेषत इत्युत्तरशेषो वा ॥२१॥ उक्तमाशयं विवृणोति—चारेणेति ॥ पण्डितैः निपुणैः । वसुधाधिपैः । चारेण चारद्वारेण । अशेषतो विदितः शत्रुः युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते॥ २२॥ चाराः शार्दूलमग्रतः कृत्वा प्रधानीकृत्य । राक्षसेश्वरं रावणं । प्रदक्षिणं चक्रुः ॥ २३ ॥ कृत्वा प्रदक्षिणमित्यनुवादो मध्ये विलम्बाभावद्योतनार्थः ॥ २४ ॥ प्रच्छन्नाः वेषान्तरधारिणः ॥ २५॥ भयविक्लवाः भयेन दीनाः । धर्मात्मना राक्षसेन्द्रेण विभीषणेनेत्यर्थः ॥२६॥ निगृहीताः तर्जिताइत्यर्थः । ग्राहितः ग्रहणं प्रापितः ॥ २७ ॥ मोचितः प्रहारादितिशेषः ॥ २८ ॥ अर्दिताः पीडिताः । विक्रान्तैरित्यत्र विक्रममात्रोक्तेर्लघुविक्रमैरित्यत्र जवमात्रे विक्रमस्य विशेष्यते ॥ २९ ॥ बहिर्नित्यचराः परराष्ट्रेषु वृत्तान्तज्ञानाय सदा संचारशीलाः । समी-

---

**स०** अस्य रामस्य । मन्त्रेषु आलोचनेषु अभ्यन्तराः अन्तरङ्गाः ये केइत्यर्थः । यच्छब्दः " यतश्चोदेतिसूर्यः " इतिवत्प्रश्नार्थः । समागताः साहाय्यार्थमिलिताः ॥ २० ॥ **स०** शार्दूलातिरिक्ताराक्षसाविभीषणेनदृष्टाअपि यदृच्छया विभीषणाज्ञांविनैवगृहीताः शार्दूलस्तु अयमत्यन्तपापइतिकपिभिर्ग्राहितः ॥ २७ ॥ **स०** भीमबलं भीमंभयंकरं बलं शारीरंसैन्यंवा यस्यतंरामं ।

[ पा० ] १ ङ. झ. ञ. ट. न्धीरान्विगत. छ. ञ्शक्तान्विगत. २ ङ. झ. ट. परीक्षितुं. ३ झ. ञ. ट. ठ. मन्त्रेष्वभ्यन्तराः. ४ क. ङ. च. झ. ट. किमद्यच. ५ ङ.—ट. मोक्षितः. ६ ङ. झ. ट. रामेणमोक्षिताः.

# त्रिंशः सर्गः ॥ ३० ॥

शार्दूलेनरावणंप्रति निजबलेगरुडव्यूहरचनयारामस्यसुवेलाचलसमीपेऽवस्थाननिवेदनपूर्वकंप्रविष्टमात्रस्यस्वस्यविभीषणेन निवेदनेवानरैर्बलाद्ग्रहणेनसर्वतःसंचारणपूर्वकं रामसमीपप्रापणादिनिवेदनम् ॥ १ ॥ तथारावणचोदनया सुग्रीवस्य जांबवदादियूथनाथानांचपृथक्पितृनामादिनिवेदनम् ॥ २ ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ॥ सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥
चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ॥ जातोद्वेगोऽभवत्किंचिच्छार्दूलं वाक्यमब्रवीत् ॥२॥
अयथावच्च ते वर्णो दीनश्चासि निशाचर ॥ नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ॥ ३ ॥
इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयत् ॥ तदा राक्षसशार्दूलं शार्दूलो भयविह्वलः ॥ ४ ॥
न ते चारयितुं शक्या राजन्वानरपुङ्गवाः ॥ ५ ॥
विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ॥ नापि संभाषितुं शक्याः संप्रश्नोत्र न लभ्यते ॥ ६ ॥
सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः ॥ प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते ॥ ७ ॥
बलाद्गृहीतो रक्षोभिर्बहुधाऽस्मि विचालितः ॥ जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् ॥ ८ ॥
परिणीतोस्मि हरिभिर्बलवद्भिरमर्षणैः ॥ परिणीय च सर्वत्र नीतोऽहं रामसंसदम् ॥ ९ ॥
रुधिरादिग्धसर्वाङ्गो विह्वलश्चलितेन्द्रियः ॥ हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः ॥ १० ॥
राघवेण परित्रातो जीवामीति यदृच्छया ॥ ११ ॥
एष शैलैः शिलाभिश्च पूरयित्वा महार्णवम् ॥ द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥ १२ ॥

---

पवासिनमिति पुंस्त्वमार्षं ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

अथ शार्दूलादिचारवचनं त्रिंशे—तत इति ॥ सुवेले सुवेलसमीपे । सामीप्ये सप्तमी । सुवेलस्य समीप इति पूर्वमुक्तत्वात् ॥ १ ॥ चाराणां चारेभ्यः ॥ २ ॥ अयथेति । शत्रुगृहीतत्वेन तेषां स्वरूपं किं न ज्ञातमिति भावः ॥ ३ ॥ अनुशिष्टः पृष्टः । उदीरयत् अडभाव आर्षः ॥ ४ ॥ चारयितुं चारविषयीकर्तुं । न शक्याः चारसंचारविषया न भवन्तीत्यर्थः ॥ ५ ॥ संप्रश्नः परीक्षणं । अत्र वानरेषु ॥ ६ ॥ प्रविष्टमात्रे प्रविष्ट एव । अचारिते चाराविषयीकृते ॥ ७ ॥ रक्षोभिः विभीषणसचिवैः । विचालितः भुवि परिवर्तितः ॥ ८ ॥ परिणीतः परितो नीतः । सर्वतः परिणीय सर्वेषां निकटे चारोयमिति घोषणपूर्वकं परिणीयेत्यर्थः । रामसंसदं रामसभां । विह्वलः मूर्च्छितः । मूर्च्छानिवृत्तावपि चलितेन्द्रियः ॥ ९ ॥ याचमानः त्राणमिति शेषः । परित्रात इत्यनुवादात् ॥ १० ॥ राघवेणेत्यर्धं ॥ जीवामीति यदृच्छया । इदानीं जीवनं यादृच्छिकमित्यर्थः । यद्वा इतीति स्वशरीरप्रदर्शनं । अयथावच्च ते वर्णो दीनश्चासि निशाचरेति ह्युक्तं ॥ ११ ॥ द्वारमाश्रित्य तिष्ठतीति

---

न्यवेदयन् । वानरैरुपद्रुताअपिजीवन्तीतिमहाबलाइत्युक्तं ॥ ३० ॥ इत्येकोनत्रिंशः सर्गः ॥ २९ ॥

**शि०** शार्दूलंकिंचिदब्रवीच्च । किंचिदिति जातोद्वेगइत्यत्रान्वयिवा ॥ २ ॥ **स०** भयविह्वलः कपिभयविह्वलः शुकसारणवत्किमुक्तौ किंभविष्यतीति भयविह्वलोवा ॥ ४ ॥ **स०** संप्रश्नः पर्यनुयोगः ॥ ६ ॥ **स०** विचारिते विचारणे प्रक्रान्तेसतीति शेषः ॥ ७ ॥ **ति०** विचारितः बहुप्रकारगत्याचालितः ॥ **स०** रक्षोभिः विभीषणसंबन्धिभिः । रक्षोभिः सहागतैस्सहेतिवा ।

[ **पा०** ] १ घ. ज. ततस्तदक्षोभ्य. २ ख. ग. राघवेणसुरक्षिताः. घ. राघवेणाभिरक्षिताः. ३ क. ख. ङ. च. झ. ञ. तस्मिन्विचारिते. ज. तस्मिन्निवासिते. ग. तस्मिन्नवारिते. ४ झ. ञ. विचारितः. ५ च.—ट. रुधिरस्राविदीनाङ्गो. ६ ङ. झ. ट. मामेतिच. ७ ङ. झ. ञ. ट. शैलशिलाभिस्तु.

गरुडव्यूहमास्थाय सर्वतो हरिभिर्वृतः ॥ मां विसृज्य महातेजा लङ्कामेवाभिवर्तते ॥ १३ ॥
पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु ॥ सीतां [1]वाऽस्मै प्रयच्छाशु [2]सुयुद्धं वा प्रदीयताम् ॥ १४ ॥
मनसा [3]तं तदा प्रेक्ष्य तच्छ्रुत्वा राक्षसाधिपः ॥ शार्दूलं सुमहद्वाक्यमथोवाच स रावणः ॥ १५ ॥
यदि मां प्रति [4]युध्येरन्देवगन्धर्वदानवाः ॥ नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ १६ ॥
एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् ॥ [5]चारिता भवता सेना केऽत्र शूराः प्लवङ्गमाः ॥ १७ ॥
कीदृशाः किंप्रभाः सौम्य वानरा ये दुरासदाः ॥ कस्य पुत्राश्च पौत्राश्च तत्त्वमाख्याहि [6]राक्षस ॥१८॥
तथाऽत्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् ॥ अवश्यं [7]बलसंख्यानं कर्तव्यं युद्धमिच्छताम् ॥ १९॥
तथैवमुक्तः शार्दूलो रावणेनोत्तमश्चरः ॥ इदं वचनमारेभे वक्तुं रावणसन्निधौ ॥ २० ॥
अथर्क्षरजसः पुत्रो युधि [8]राजा सुदुर्जयः ॥ गद्गदस्याथ पुत्रोऽत्र जाम्बवानिति विश्रुतः ॥ २१ ॥
गद्गदस्यैव पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः ॥ कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम् ॥ २२ ॥
सुषेणश्चापि धर्मात्मा पुत्रो धर्मस्य वीर्यवान् ॥ सौम्यः सोमात्मजश्चात्र राजन्दधिमुखः कपिः ॥२३॥

वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ १२—१३ ॥ पुराप्राकारमायाति आयास्यतीत्यर्थः । "यावत्पुरानिपातयोर्लट्" । एकतरं द्वयोरेकं । "एकाच्च प्राचां" इति तरप् । एकतरमित्युक्तं विवृणोति—सीतामिति ॥ १४ ॥ मनसा प्रेक्ष्य आलोच्य । तं शार्दूलमुवाचेत्यन्वयः ॥ १५ ॥ सीतास्मैप्रदीयतामित्यस्योत्तरमाह—यदीति ॥ युध्येरन् तथापि सीतां न प्रदास्यामि । सर्वलोकेभ्यो भयादपि न प्रदास्यामीतियोजना ॥ १६ ॥ एवं प्रथमपक्षस्यानुपपत्त्या द्वितीयपक्षंकरिष्यमाणः तत्र ज्ञातव्यविशेषं पृच्छति—एवमित्यादि श्लोकत्रयं ॥ भवता सेना चारिता चारविषयीकृता । सम्यग्दृष्टेत्यर्थः । अत्र सेनायां । के शूराः ॥ १७ ॥ ये दुरासदाः ते कीदृशाः कीदृशाकाराः । किंप्रभाः किंप्रभावाः । कस्य पुत्राः कस्य पौत्राश्च । तत्त्वं तेषां वानराणां भावं । आख्याहि ॥ १८ ॥ कथने किं प्रयोजनमित्यत्राह—तथेति ॥ तथा एवमाख्याते सति । तेषां बलाबलं ज्ञात्वा अत्र वानरेषु । प्रतिपत्स्यामि प्रतिपत्स्ये । कर्तव्यं ज्ञास्यामीत्यर्थः ॥ १९—२० ॥ अथेत्युत्तरवचनारम्भे । द्वितीयोथशब्दः पादपूरणे । राजा सुग्रीवः । पाश्चालीन्यायेन गद्गदेन पोषितत्वात्तत्पुत्रो जाम्बवान् । तस्य ब्रह्मणो जृम्भारम्भसंभूतत्वात् ॥ २१ ॥ अन्यः पुत्रः धूम्रः । जाम्बवान् धूम्रश्चेति गद्गदस्य द्वौ पुत्रावित्यर्थः । यस्य पुत्रेणैकेन महता रक्षसां अक्षादीनां कदनं हननं । कृतं । स केसरी शतक्रतोर्गुरुः बृहस्पतिः तस्य पुत्रः । सापेक्षत्वेपि गमकत्वात्समासः ॥ २२ ॥ धर्मस्य देवतायाः । ननु, "वरुणो जनयामास सुषेणं नाम वानरं" इति बालकाण्डोक्तं । सत्यमुक्तं । स एवात्र धर्मशब्देनोच्यते । शार्दूलो वा भयाकुलोन्यथा श्रुतवान् । अन्योयं सुषेण इत्यप्याहुः ।

वानरैरितिशेषः ॥ ८ ॥ स० गरुडव्यूहमास्थाय प्रस्थानसमयत्वात् । साक्षाद्गरुडारोहेज्ञातभगवत्त्वोरावणःप्रपन्नश्चेदवतारव्यापारानिष्पादनंस्यादिति व्यूहमिषेणतंविरचय्य तत्रस्थितइतिध्वनिः ॥ १३ ॥ स० सुव्रतेत्यनेन अनृतभाषणेप्रत्यवेयामितिपरिज्ञानमस्तीतिसूच्यते ॥ १८ ॥ स० गद्गदस्य द्वितीयजन्मनि । नचैवंवचनेकिंकल्पकमितिवाच्यं । देवानामुत्पत्तेर्नानाविधायाभारतभागवतादौप्रोक्तिरेवेत्यवेहि । अत्रापि "जांबवाञ्जृंभमाणस्यममवक्त्रादजायत" इत्येकत्रनिर्भ्रातृकस्यैकस्यब्रह्मजत्वजल्पनं अन्यत्रधूम्रानुजत्वेनगद्गदपुत्रत्वजल्पनंचकल्पयिष्यतोऽमुमर्थमितिज्ञेयं । "गद्गदोजांबवतःक्षेत्रद्वारापिता । यद्यपि "जांबवाञ्जृंभमाणस्यममवक्त्रादजायत" इतिभगवन्मुखादस्योत्पत्तिःश्रुता । तथापिजृंभणसमयेउद्गतायाभगवच्छक्तेर्गद्गदक्षेत्रमाविश्यतेनरूपेणपरिणामाददोषः' इतिनागोजिभट्टकल्पनमल्पीकरोतिशक्तिक्षेत्रापेक्षयेतिमन्तव्यं । हनुमतःकेसरिक्षेत्रजत्ववचनवत्क्वाप्यवचनाच्च ॥ २१ ॥

[ पा० ] १ ङ. झ. ञ. ट. वापि. च. छ. चापि. २ ङ. छ. झ. ञ. ट. युद्धंवापि. ३ ङ. झ. ञ. ट. तत्तदा. ४ ग. ङ. झ. ट. युध्यन्तेदेव. ५ ख. ङ. छ.—ट. चरिता. ६ ङ. छ. झ. ट. सुव्रत. ७ ङ. झ. ट. खलुसंख्यानं. ८ ङ. छ. झ. ट. राजसु.

सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः ॥ मृत्युर्वानररूपेण नूनं सृष्टः स्वयंभुवा ॥ २४ ॥
पुत्रो हुतवहस्याथ नीलः सेनापतिः स्वयम् ॥ अनिलस्य च पुत्रोत्र हनुमानिति विश्रुतः ॥ २५ ॥
नप्ता शक्रस्य दुर्धर्षो बलवानङ्गदो युवा ॥ मैन्दश्च द्विविदश्चोभौ बलिनावश्विसंभवौ ॥ २६ ॥
पुत्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २७ ॥
दश वानर कोट्यश्च शूराणां युद्धकाङ्क्षिणाम् ॥ श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ॥ २८ ॥
पुत्रो दशरथस्यैष सिंहसंहननो युवा ॥ दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २९ ॥
नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन ॥ विराधो निहतो येन कबन्धश्चान्तकोपमः ॥ ३० ॥
वक्तुं न शक्तो रामस्य नरः कश्चिद्गुणान्क्षितौ ॥ जनस्थानगता येन यावन्तो राक्षसा हताः ॥ ३१ ॥
लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः ॥ यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३२ ॥
श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसंभवौ ॥ वरुणस्य च पुत्रोऽन्यो हेमकूटः प्लवङ्गमः ॥ ३३ ॥
विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः ॥ विक्रान्तो बलवानत्र वसुपुत्रः सुदुर्धरः ॥ ३४ ॥
राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः ॥ परिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३५ ॥
इति सर्वं समाख्यातं तवेदं वानरं बलम् ॥ सुवेलेऽधिष्ठितं शैले शेषकार्ये भवान्गतिः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

एवमन्यत्रापि ज्ञेयं ॥ २३ ॥ मृत्युरेव स्वयंभुवा सुमुखादिवानररूपेण सृष्टः । सुमुखादयो मृत्युतुल्या इत्यर्थः । यद्वा सुमुखादयो मृत्युपुत्रा इत्यर्थः ॥ २४ ॥ अनिलस्य पुत्रः औरसः । एवं तत्र तत्र पितृद्वयनिर्देशो बीजित्वक्षेत्रित्वाभ्यामिति मन्तव्यं ॥ २५ ॥ नप्तेति । अत्र नप्तृशब्दोर्थसामर्थ्यात्पौत्रे वर्तते ॥ २६—२७ ॥ वानरकोट्य इत्यत्र वानरेत्यविभक्तिकनिर्देशः । " सुपां सुलुक्—" इत्यादिना षष्ठ्या लुक् । वानराणामित्यर्थः । शेषं जन्मस्थानादि । नोत्सहे न शक्नोमि ॥ २८ ॥ सिंहसंहननः रमणीयावयवसन्निवेशवान् । " वराङ्गरूपोपेतो यः सिंहसंहननो हि सः " इत्यमरः ॥ २९—३० ॥ ये जनस्थानगताः ते यावन्तः ते सर्वेपि हता इत्यर्थः । " यावत्तावच्च साकल्ये " इत्यमरः ॥ ३१ ॥ चशब्देन दशरथस्य पुत्र इत्याकृष्यते । मातङ्गानामिवर्षभः गजश्रेष्ठ इव स्थितः ॥ ३२—३३ ॥ सुदुर्धरः सुदुर्धरनामा ॥ ३४ ॥ लङ्कां रामात् परिगृह्य तस्य हिते रतो विभीषणस्तव भ्रातेत्यन्वयः ॥ ३५ ॥ गतिः प्रमाणं । अत्र वानरजन्मोक्ते प्रायशो बालकाण्डोक्तविरोधादेतत्सर्गं विनापि पूर्वोत्तरकथासंघट्टनाच्च सर्गोयं कल्पित इत्याहुः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिंशस्सर्गः ॥ ३० ॥

---

ती० नन्वत्रसर्गेधर्मस्यपुत्रःसुषेणः वैवस्वतपुत्रौशरभगन्धमादनावित्युच्यते । बालकाण्डेतु " वरुणोजनयामाससुषेणंनामवानरम् । शरभंजनयामासपर्जन्यस्तुमहाबलम् । धनदस्यसुतःश्रीमान्वानरोगन्धमादनः " इतित्रयाणामन्यतउत्पत्तिरुक्ता । सत्यं । सुषेणादिसंज्ञावतामनेकेषामपिसत्त्वान्नविरोधः ॥ ३६ ॥ इतित्रिंशःसर्गः ॥ ३० ॥

[ पा० ] १ क. ख. घ.—छ. झ. ञ. ट. तावन्तो. २ घ. ङ. छ. झ. ट. वेगवानत्र.

# एकत्रिंशः सर्गः ॥ ३१ ॥

रावणेनमन्त्रिमुखात्ससैन्यरामस्यसुवेलाचलागमनश्रवणान्मन्त्रिभिस्सहालोच्यकर्तव्यनिर्धारणेन तद्विसर्जनम् ॥ १ ॥ तथा स्वचोदनयाविद्युज्जिह्वेनमायानिर्मितरामशिरश्शरासनसदृशशिरश्शरासनप्रदर्शनेन सीताविमोहनम् ॥ २ ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ॥ सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥
चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ॥ जातोद्वेगोऽभवत्किंचित्सचिवानिदमब्रवीत् ॥ २ ॥
मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः ॥ अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥ ३ ॥
तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागमन्द्रुतम् ॥ ततः स मन्त्रयामास सचिवै राक्षसैः सह ॥ ४ ॥
मन्त्रयित्वा स दुर्धर्षः क्षमं यत्समनन्तरम् ॥ विसर्जयित्वा सचिवान्प्रविवेश स्वमालयम् ॥ ५ ॥
ततो राक्षसमाहूय विद्युज्जिह्वं महाबलम् ॥ मायाविदं महामायः प्राविशद्यत्र मैथिली ॥ ६ ॥
विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः ॥ मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥ ७ ॥
शिरो मायामयं गृह्य राघवस्य निशाचर ॥ त्वं मां समुपतिष्ठस्व महच्च सशरं धनुः ॥ ८ ॥
एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः ॥ [दर्शयामास तां मायां सुप्रयुक्तां स रावणे ॥]
तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणम् ॥ ९ ॥
अशोकवनिकायां तु सीतादर्शनलालसः ॥ नैर्ऋतानामधिपतिः संविवेश महाबलः ॥ १० ॥
ततो दीनामदैन्यार्हां ददर्श धनदानुजः ॥ अधोमुखीं शोकपरामुपविष्टां महीतले ॥ ११ ॥
भर्तारमेव ध्यायन्तीमशोकवनिकां गताम् ॥ उपास्यमानां घोराभी राक्षसीभिरितस्ततः ॥ १२ ॥
[ राक्षसीभिर्वृतां सीतां पूर्णचन्द्रनिभाननाम् ॥ उत्पातमेघजालाभिश्चन्द्ररेखामिवावृताम् ॥ १३ ॥
भूषणैरुत्तमैः कैश्चिन्मङ्गलार्थमलंकृताम् ॥ चरन्तीं मारुतोद्धूतां क्षिप्तां पुष्पलतामिव ॥ १४ ॥
हर्षशोकान्तरे मग्नां विषादस्य विलक्षणाम् ॥ स्तिमितामिव गाम्भीर्यान्नदीं भागीरथीमिव ॥ १५ ॥]
उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् ॥ इदं च वचनं धृष्टमुवाच जनकात्मजाम् ॥ १६ ॥

अथ सीतामोहनमेकत्रिंशे । कथासंघटनाय पूर्वसर्गोक्तमनुवदति—तत इति ॥ स्पष्टः ॥ १ ॥ चाराणां चारेभ्यः । जातोद्वेगः जातसंभ्रमः । सचिवान् मन्त्रिणः समीपस्थान् ॥ २ ॥ हे राक्षसाः अयं नो मन्त्रकालः संप्राप्तः इति हेतोः मन्त्रिणः समायान्त्विति इदं वाक्यमब्रवीदिति पूर्वेण संबन्धः । यद्वा इदमब्रवीदित्यस्य वाक्यान्तस्थेनेतिशब्देन संबन्धः । राक्षसा इत्युत्तरशेषः । अथवा हे मन्त्रिणः भवन्तः आयान्तु समीपमिति सचिवानब्रवीत् । राक्षसा इति मन्त्रिविशेषणं । सचिवै राक्षसैरित्यनुवादात् । सुसमाहिताः नीतिकुशला इत्यर्थः ॥ ३—४ ॥ समनन्तरं रामस्य समीपागमनानन्तरं । यत् क्षमं कर्तुमुचितं तन्मन्त्रयित्वेति योजना ॥ ५—७ ॥ गृह्य गृहीत्वा ॥ ८ ॥ तस्य तस्मिन् ॥ ९ ॥ लालसः साभिलाषः ॥ १०—११ ॥ उपास्यमानां अनुव्रतां ॥ १२–१५ ॥ प्रहर्षं नाम कीर्तयन् प्रहर्षवार्तां कीर्तयन्निव । नामे-

**रामानु॰** ततस्तमक्षोभ्यबलमित्यनुवादःपूर्वसर्गादौचकृतः । 'पूर्वमेवमयासृष्टोजांबवानृक्षपुङ्गवः । जृंभमाणस्यसहसाममवक्त्रादजायत " इतिजृंभमाणपितामहवक्त्रादुत्पन्नत्वेनप्रसिद्धस्यजांबवतःपूर्वसर्गेगद्गदपुत्रत्वेनाभिधानाद्विरोधःस्फुरति । पूर्वसर्गमन्तरेणापिकथासंगच्छते । तथापि स्थितस्यगतिश्चिन्तनीयेतिन्यायेन पूर्वसर्गोव्याख्यातः ॥ **शि॰** शार्दूलवचनश्रवणानन्तरकालिकंरावणंप्रतिचारान्तराणांवचनमाह—**ततइति** । नृपतेः रावणस्य । चराः चाराः ॥ १ ॥ **ती॰** प्रहर्षंनामकीर्तयन् हेसीतेइतिसंबोधयन् ॥ **स॰** प्रहर्षं रामपराजयजं । नाम नाम्ना । अर्थतस्तत्परमार्थे । प्रहर्षन् प्रहर्षयन् । नाम सीतायाः हेसीतेइति ।

**[ पा॰ ]** १ ख. ग. च. छ. ञ. ट. लङ्कायांनृपतेश्चराः. २ ग. रामबलंमहत्. ३ क. ग. ङ.—ट. मन्त्रयित्वातु. ४ इदमर्धं घ.—ट. पाठेषुदृश्यते. ५ ख. च. छ. ञ. प्रददौवरभूषणं. ६ घ. प्रविवेश. ७ ङ.—ट. मदीनार्हां. ८ क. ग.—ञ. राक्षसीभिरदूरतः. ९ इदंश्लोकत्रयं प्राचीनकोशेषुनदृश्यते । औत्तराहपाठएवदृश्यते.

सान्त्व्यमाना मया भद्रे यमु[1]पाश्रित्य वल्गसे ॥ खरहन्ता स ते भर्ता राघवः समरे हतः ॥ १७ ॥
छिन्नं ते सर्वतो मूलं दर्प[2]स्ते विहतो मया ॥ व्यसनेनात्मनः सीते मम भार्या भविष्यसि ॥ १८ ॥
विसृ[3]जेमां मतिं मूढे किं मृतेन करिष्यसि ॥ भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम ॥ १९ ॥
अल्पपुण्ये निवृत्तार्थे मूढे पण्डितमानिनि ॥ शृणु भर्तृवधं सीते घोरं वृत्रवधं यथा ॥ २० ॥
समायातः समुद्रान्तं मां हन्तुं किल राघवः ॥ वानरेन्द्रप्रणीतेन महता बलेन वृतः ॥ २१ ॥
स[4] निविष्टः समुद्रस्य पीड्य तीरमथोत्तरम् ॥ बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ २२ ॥
अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम् ॥ सुखसंसुप्तमासाद्य चारितं प्रथमं चरैः ॥ २३ ॥
तत्प्रहस्तप्रणीतेन बलेन महता मम ॥ बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः ॥ २४ ॥
पट्टिशान्परिघांश्च[5]क्रान्दण्डान्खड्गान्महायसान् ॥ बाणजालानि शूलानि भास्वरान्कूटमुद्गरान् ॥२५॥
यष्टीश्च तोमराञ्शक्तीश्चक्राणि मुसलानि च ॥ उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥ २६ ॥
अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ॥ असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥ २७ ॥
विभीषणः समुत्पत्य निगृहीतो यदृच्छया ॥ दिशः[6] प्रव्राजितः सैन्यै[7]र्लक्ष्मणः प्लवगैः सह ॥ २८ ॥

त्यपरमार्थे ॥ १६ ॥ वल्गसे जल्पसि । मां निष्ठुरमवद इत्यर्थः ॥ १७ ॥ मूलं आधारभूतं । सर्वतः कात्स्न्र्येन व्यसनेन निमित्तेन । प्रार्थनां विनेत्यर्थः ॥१८॥ मृतेन रामेण । भवस्वेत्यात्मनेपदमार्षं ॥१९॥ निवृत्तार्थे एतावत्पर्यन्तं निवृत्तपुरुषार्थे । पण्डितमानिनि । "क्यङ्मानिनोश्च" इति ह्रस्वत्वं ॥ २० ॥ समुद्रान्तं समुद्रतीरं । प्रणीतेन आनीतेन ॥ २१ ॥ स रामः समुद्रस्योत्तरं तीरं महता बलेन पीड्य पीडयित्वा । दिवाकरे अस्तं प्रयाति सति निविष्टः ॥२२॥ कात्स्न्र्येऽथशब्दः । अध्वनि परिश्रान्तं अतएव स्थितं । अर्धरात्रे सुखसंसुप्तं बलं प्रथममासाद्य चारैश्चारितमभूत् ॥ २३ ॥ यत्र बले । रामः सलक्ष्मणोवस्थितः । तदस्य बलं प्रहस्तप्रणीतेन महता बलेन हतं ॥ २४ ॥ पट्टिशानित्यादिश्लोकद्वयं ॥ पट्टिशान् असिविशेषान् । परिघान् अर्गलानि । चक्रान् क्षुद्रचक्राणि । महायसान् महायसनिर्मितान् । दण्डविशेषणमेतत् । कूटमुद्गरान् अयःकीलकीलितगदाः । यष्टीः केवलदण्डान् । तोमरान् स्थूलाग्रगदाः । प्रासान् क्षेपणीः । चक्राणि महाचक्राणि । पट्टिशादीनुद्यम्योद्यम्य वानरेषु निपातिताः । त इति शेषः ॥ २५—२६ ॥ प्रमथ्नाति प्रहरतीति प्रमाथिः तेन । कृतहस्तेन शिक्षितहस्तेन कर्त्रा । महासिना करणेन । असक्तं अविलम्बितंयथा भवति तथा । छिन्नमित्यन्वयः ॥ २७ ॥ विभीषणः समुत्पत्य गतोपि निगृहीत इत्यर्थः । प्रव्राजितः पला-

अहंरावणइतिस्वनामवा कीर्तयन् ॥ १६ ॥ **शि०** ननुतवोक्तस्यसत्यत्वे अहंतल्लोकमेवगमिष्यामीत्यतआह—व्यसनेनेति मूढे हेप्राप्तनिरोधे । आत्मनोव्यसनेन पतिवियोगदुःखेनोपलक्षितात्वं एनां तल्लोकगमनविषयां । मतिंविसृज । मृतेन लोकान्तरं गतेनपत्या त्वंकिंकरिष्यसि । तत्प्राप्तिर्नभविष्यतीत्यर्थः । अतोममभार्याः स्त्रियः । भविष्यसि प्राप्स्यसि । तासांसेव्यासतीतत्रैव निवत्स्यसीत्यर्थः ॥ तदेवभङ्ग्यन्तरेणाह—भवस्वेति । हेभद्रे । अल्पपुण्ये अल्पानांक्षुद्राणामपिपुण्यंपवित्रत्वंयया यन्नामस्मरणादिनाक्षुद्राअपिपूताभवन्तीत्यर्थः । तत्संबोधनं । ननिवृत्तोर्थोयस्याः । सर्वार्थसंपन्नेत्यर्थः । तत्संबोधनं । मूढे प्राप्तनिरोधे । पण्डितान्मन्यतेसत्करोतितच्छीला । तत्संबोधनं । ममभार्याणां ईश्वरी पूज्या त्वंभवस्व ॥ १८—२० ॥ **स०** चक्राणि अस्त्राणि । "चक्रंसेनारथाङ्गयोः । राष्ट्रास्त्रयोरपि" इतिविश्वः ॥ **स०** नपुंसकशेषे निपातितानीतिवस्तुतोवक्तव्यं । सर्वस्यैतस्यावास्तविकतांकविरवगमयांबभूवैवंनिर्देशेनेतिमन्तव्यम् ॥ निपातनस्यप्रधानकर्मत्वादुद्यमनस्यावान्तरकर्मत्वादेतत्कर्मकर्मीभूतपरिघादिपदोत्तरंप्रथमयाभवितव्यमितित्यदादिष्वनियमादित्येतइतिशेषः ॥ उक्तंचमनोरमायां "उक्तंचहरिणा । प्रधानेतरयोर्यत्रद्रव्यस्यक्रिययोः पृथक् । शक्तिर्गुणाश्रयातत्रप्रधानमनुरुध्यते । प्रधानविषयाशक्तिःप्रत्ययेनाभिधीयते । यदागुणेतदातद्वदनुक्तापिप्रतीयते" इतीति ॥ २६ ॥ **स०** कृतहस्तेन शिक्षितकरेण । असक्तं यथामहासिनाशिरश्छिन्नं ॥ यथानिद्राभङ्गोभवेद्द्रवेच्चशिरश्छेदः तथा-

[ **पा०** ] १ ङ. झ. ट. यमाश्रित्यविमन्यसे. क. घ. यमुपाश्रित्यवर्तसे. २ ख. ङ. झ. ट. दर्पश्चनिहतो. क. ग. घ. च. छ. ज. ञ. दर्पस्तेनिहतो. ३ क. ग. ङ. झ. ट. विसृजैतां. ख. घ. च. छ. ञ. विसृजैनां. ४ झ. संनिविष्टः. ५ ङ. झ. ट. श्चक्रानृष्टीन्दण्डान्महायुधान्. ६ घ. ङ. झ.—ट. दिशं. ७ ङ. झ. सैन्यैर्लक्ष्मणः. ख. च. छ. ञ. सैन्यैर्लक्ष्मणश्चप्लवङ्गमैः.

सुग्रीवो ग्रीवया सीते भग्नया प्लवगाधिपः ॥ निरस्तहनुकः शेते हनुमान्राक्षसैर्हतः ॥ २९ ॥
जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि ॥ पट्टिशैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा ॥ ३० ॥
मैन्दश्च द्विविदश्चोभौ निहतौ वानरर्षभौ ॥ निश्वसन्तौ रुदन्तौ च रुधिरेण परिप्लुतौ ॥
असिना व्यायतौ छिन्नौ मध्ये ह्यरिनिषूदनौ ॥ ३१ ॥
अनुतिष्ठति मेदिन्यां पनसः पनसो यथा ॥ ३२ ॥
नाराचैर्बहुभिश्छिन्नः शेते दर्यां दरीमुखः ॥ कुमुदस्तु महातेजा निष्कूजः सायकैः कृतः ॥ ३३ ॥
अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः ॥ पतितो रुधिरोद्गारी क्षितौ निपतिताङ्गदः ॥ ३४ ॥
हरयो मथिता नागै रथजातैस्तथाऽपरे ॥ शायिता मृदिताश्चाश्वैर्वायुवेगैरिवाम्बुदाः ॥ ३५ ॥
प्रहृताश्चापरे त्रस्ता हन्यमाना जघन्यतः ॥ अभिद्रुतास्तु रक्षोभिः सिंहैरिव महाद्विपाः ॥ ३६ ॥
सागरे पतिताः केचित्केचिद्गगनमाश्रिताः ॥ ऋक्षा वृक्षानुपारूढा वानरीं वृत्तिमाश्रिताः ॥ ३७ ॥
सागरस्य च तीरेषु शैलेषु जवनेषु च ॥ पिङ्गलास्ते विरूपाक्षैर्बहुभिर्बहवो हताः ॥ ३८ ॥
एवं तव हतो भर्ता ससैन्यो मम सेनया ॥ क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः ॥ ३९ ॥
ततः परमदुर्धर्षो रावणो राक्षसाधिपः ॥ सीतायामुपशृण्वन्त्यां राक्षसीमिदमब्रवीत् ॥ ४० ॥
राक्षसं क्रूरकर्माणं विद्युज्जिह्वं त्वमानय ॥ येन तद्राघवशिरः संग्रामात्स्वयमाहृतम् ॥ ४१ ॥
विद्युज्जिह्वस्ततो गृह्य शिरस्तत्सशरासनम् ॥ प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥ ४२ ॥
तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् ॥ विद्युज्जिह्वं महाजिह्वं समीपपरिवर्तिनम् ॥ ४३ ॥
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ॥ अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥४४॥
एवमुक्तं तु तद्रक्षः शिरस्तत्प्रियदर्शनम् ॥ उप निक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ४५ ॥
रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ॥ त्रिषु लोकेषु विख्यातं सीतामिदमुवाच च ॥ ४६ ॥

---

यितः ॥ २८ ॥ ग्रीवया उपलक्षित इति शेषः ॥२९॥ जानुभ्यां जानुनोः । निहतः । अथ पट्टिशैश्छिन्नः जाम्बवान् निकृत्तः पादपइवाभूत् ॥ ३० ॥ व्यायतौ दीर्घशरीरौ । मध्ये कटिस्थाने ॥ ३१ ॥ अनुतिष्ठति शेते । पनसः पनसफलं । तथा खण्डित इत्यर्थः ॥ ३२ ॥ निष्कूजः निश्शब्दः ॥ ३३ ॥ राक्षसैरासाद्य शरैश्छिन्नः निपतिताङ्गदोऽङ्गदः क्षितौ पतितः ॥ ३४ ॥ शायिताः शयानाः । अपरे हरयः वायुवेगैरम्बुदा इव नागै रथजातैश्च मृदिताः ॥ ३५ ॥ त्रस्ताः अत एवाभिद्रुताः । जघन्यतः पृष्ठतः । हन्यमानाः अपरे हरयः सिंहैः द्विपा इव प्रहृताः ॥ ३६—॥ ३७ ॥ पिङ्गलाः वानराः । विरूपाक्षैः वानरैः ॥ ३८—३९ ॥ राक्षसीं समीपवर्तिनीं कांचित् ॥ ४०—४१ ॥ ततः राक्षसीं प्रत्याज्ञापनवचनश्रवणानन्तरमेव ॥ ४२—४३ ॥ पश्चिमामवस्थां । मरणमित्यर्थः ॥ ४४ ॥ उप समीपे । अन्तरधीयत अपागच्छत् ॥ ४५ ॥ चिक्षेप आचकर्ष । विद्युज्जिह्वहस्तादित्यर्थः । त्रिषु लोकेषु विख्यातं । वैष्णवत्वादि-

---

सक्तताहेतुर्हस्तइवासिरितिकृतत्वंमहत्त्वंचोभयोर्युज्यते ॥ **शि०** कृतहस्तेन हस्तेकृतेनमहासिना ॥ २७ ॥ **शि०** पनसः विदीर्णपक्वपनसफलमिव पनसोनुश्वसिति ॥ ३२ ॥ **शि०** अङ्गदः अङ्गदविशिष्टः । अङ्गदः शरैश्छिन्नः ॥ ३४ ॥ **शि०** वानरैः व्यतिमिश्रिताः विभक्ताः । ऋक्षाः वृक्षानुपारूढाः ॥ ३७ ॥ **ति०** अन्तरधीयत अपागच्छत् । स्त्रीगोष्ठ्यांस्थातुमयुक्तत्वधियेति भावः ॥ **शि०** अन्तरधीयतेत्यनेन सीतादर्शनमात्रेणतस्यदयोत्पन्नेतिसूचितं ॥ **स०** अन्तरधीयत । अन्तर्धानंतु पतिव्रता-

**[ पा० ]** १ ख. ङ. झ. ट. परीवृतौ. ज. समुक्षितौ. २ ङ.—ट. अनुश्वसिति. ३ ख. निष्प्राणश्चमहामतिः. ४ क. ख. घ.—ट. निपतितोऽङ्गदः. ५ ग.—ट. नागैरथजालैः. ख. नागैःशरजालैः. च. नागैरस्त्रजालैः. ६ क.—ट. शयानामृदिताः. ७ क.—घ. च. छ. ज. प्रसृताश्चापरे. ङ. झ. प्रसृताश्चपरे. ८ ङ. झ. ट. वानरैर्व्यतिमिश्रिताः. ९ ङ. झ. ट. विरूपाक्षैराक्षसैर्बहवो. १० ग. ङ. झ. ट. विख्यातंरामस्यैतदितिब्रुवन्. ख. घ. विख्यातंरामस्येदमितिब्रुवन्.

इदं तत्तव रामस्य कार्मुकं ज्यासमायुतम् ॥ इह प्रहस्तेनानीतं हत्वा तं निशि मानुषम् ॥ ४७ ॥
स विद्युज्जिह्वेन सहैव तच्छिरो धनुश्च भूमौ विनिकीर्य रावणः ॥
विदेहराजस्य सुतां यशस्विनीं ततोऽब्रवीत्तां भव मे वशानुगा ॥ ४८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ॥ ३२ ॥

सीतया मायानिर्मितशिरसिसादृश्याद्रामशिरस्त्वप्रत्यभिज्ञानेन शोकाद्बहुधाविलापः ॥ १ ॥ अत्रान्तरे प्रहस्तप्रहितदूताह्वानेन रावणापयाने मायाशिरसोऽन्तर्धानम् ॥ २ ॥ राक्षसैरावणप्रेरणया रणभेरीवादनेनसेनासंनाहनम् ॥ ३ ॥

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् ॥ सुग्रीवप्रतिसंसर्गमाख्यातं च हनूमता ॥ १ ॥
नयने मुखवर्णं च भर्तुस्तत्सदृशं मुखम् ॥ केशान्केशान्तदेशं च तं च चूडामणिं शुभम् ॥ २ ॥

तिभावः ॥ ४६—४७ ॥ विद्युजिह्वेत्यत्र तलोप आर्षः । सहैव युगपदेव । विनिकीर्य शिरोधनुश्च युगपत्सीतायाःपुरतः स्थापयित्वेत्यर्थः । विद्युज्जिह्वः शिरः प्रक्षिप्तवान् स्वयं धनुरिति ज्ञेयं । वशानुगेत्यनन्तरमितिकरणं द्रष्टव्यं ॥ ४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

अथ सीताप्रलापो द्वात्रिंशे—सा सीतेत्यादिश्लोकत्रयमेकं वाक्यं ॥ हनुमता पूर्वं कथितं । सुग्रीवप्रतिसंसर्गं रामस्य सुग्रीवप्रतिसंबन्धं । रावणमुखाच्छ्रुत्वेतिशेषः । यद्वा दृष्ट्वा ज्ञात्वेत्यर्थः । ज्ञानं च सुग्रीवप्रतिसंबन्धस्य स्मरणं । अन्यत्र साक्षात्कारः ॥ १ ॥ नयने इति द्वितीया । भर्तुः सदृशं । भर्तुर्मुखसदृशमित्यर्थः । इदं नयनादावप्यन्वेति । केशान्तदेशं

शापभीत्या ॥ ४५ ॥ स० विद्युजिह्वेन । विद्युज्जिह्वस्यैवेदंनामान्तरंवा । "अपिमाषंमषंकुर्याच्छन्दोभङ्गंनकारयेत्" इतिवाद्युकारलाघवमवगन्तव्यं ॥ ती० "उपसृत्यततःसीतां"इत्यारभ्यसर्गसमाप्तिपर्यन्तस्यवास्तवार्थस्तु—रावणोदेवींस्पष्टंदेवतात्वेनज्ञात्वापिरामहस्ताद्वधेच्छुरपिरावणोरामेणसहवैरंसंपाद्यमृतइतीतरराक्षसवञ्चनायदेवीमोहनार्थमिवश्रीराममायाशिरआदिकंप्रदर्श्य रामवधशङ्कयामोहितांदेवींरहसिप्रियवचनैःसमाश्वासयति—उपसृत्यततःसीतामित्यारभ्यसर्गसमाप्तिपर्यन्तेन । उपसृत्य समीपंप्राप्य । प्रहर्षन् प्रहर्षयन् । दुष्टवचनं इतरराक्षसदृष्ट्यादुष्टमित्यर्थः ॥ सान्त्व्यमानेति । रामस्यकापिहानिर्नास्तीतिमयासान्त्व्यमानापि यंराममाश्रितंउद्दिश्यवग्लसे दुःखेनधावसीत्यर्थः । खरहन्तासतेभर्ता समरेहतोथकिं । नहतएवेत्यर्थः । अतोदुःखंमाप्राप्नुहीतिशेषः । ममदुःखेनतवकाहानिरित्याशङ्क्याह—छिन्नमिति । हेसीते आत्मनस्तवव्यसनेनहेतुनातेत्वयातेममत्वदीयभृत्यस्यममेत्यर्थः । दर्पमयालक्ष्म्यासहसर्वतः सर्वप्रकारेणनिहतः । मूलंचलक्ष्म्यागमननिमित्तमपिछिन्नं । अतः भार्या भर्तव्याभविष्यसि । रामेणैवेतिशेषः । अतोदुःखंमाप्राप्नुहीत्यर्थः । विसृज्येत्यादिसार्धश्लोकएकंवाक्यं । हेभद्रे हेअमूढे सर्वज्ञे । एतां मिथ्याकल्पितरामविपद्विषयिणीं । मतिं विसृज्य ममभद्रार्याणांचईश्वराभव । अल्पपुण्ये निवृत्तार्थे नष्टपुरुषार्थेपण्डितमानिनिमूढेमृते मृतकल्पे । एतादृशविशेषणविशिष्टेमयि कृपयेतिशेषः । किंयद्यर्थे । एवंनकरिष्यसियदि दुःखंनत्यजसीत्यर्थः । तर्ह्यहंसद्योमरिष्यामीतिशेषः । नन्वेताराक्षस्यःकिमितिरामविपत्तिंकथयन्तीत्याशङ्क्य तदसहमानःकुपितआह—शृण्विति । भर्तृवधं भर्तृवधविषयवचनमित्यर्थः । त्वंशृणु । अहंत्वेतादृशमिथ्यावचनंश्रोतुंनसहइतिशेषः । रामवधविषयराक्षस्युक्तिरसंगतेतिदर्शयितुंराक्षस्युक्तिंस्वयमनुवदति । " समायातःसमुद्रान्तंमांहन्तुंकिलराघवः " इत्यारभ्य " क्षतजार्द्ररजोध्वस्तमिदंचास्याहृतंशिरः " इत्यन्तेन "मांत्रातुंकिलराघवइत्यत्रकिलशब्दो " वानरेन्द्रप्रणीतेनेत्यारभ्य " एवंतवहतोभर्तासंसैन्योममसेनया " इत्यन्तंसर्वत्रयोज्यः । तर्हिराक्षस्युक्तिः सर्वात्मनामिथ्याकिमित्याशङ्क्य नहि त्वन्मोहनार्थंराक्षसैर्माययारामशिरआदिकंकल्पितमित्याशयेनाह—क्षतजार्द्रमिति । देव्यास्तच्छिरोदिदृक्षायां तदानेतुंराक्षसस्याह्वाने राक्षसींनियोजयतिततःपरमदुर्धर्षइत्यादिना । अग्रतःकुर्विति । " अवस्थांपश्चिमांभर्तुः " इत्याद्युक्तिः इतरराक्षसवंचनायज्ञातव्या । सविद्युजिह्वेनेत्यस्यवास्तवार्थस्तु मेवशानुगेत्यत्रावशानुगेतिच्छेदः । हेमे लक्ष्मीः । अवशानुगा अस्य विष्णोःरामस्य वशमनुगच्छतीत्यवशानुगाभवेति ॥ ४८ ॥ इत्येकात्रिंशःसर्गः ॥ ३१ ॥

ति० हनुमताख्यातंसुग्रीवप्रतिसंसर्गं सुग्रीवरामसंबन्धं रावणकल्पितवानरवधस्योपपादकं । स्मृत्वेतिशेषः ॥ १ ॥

[ पा० ] १ ग. ज. ज्यासमन्वितं. ङ. च. छ. झ. ञ. ट. ज्यासमावृतं. २ घ. ङ. ज. विनिकीर्यमाणः. ३ ग. सुग्रीवप्रीतिसंसर्गं.

एतैः सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता ॥ विजगर्हेऽत्र कैकेयीं क्रोशन्ती कुररी यथा ॥ ३ ॥
सकामा भव कैकेयि हतोऽयं कुलनन्दनः ॥ कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४ ॥
आर्येण [१]किं ते कैकेयि कृतं रामेण विप्रियम् ॥ यन्मया[२] चीरवसनस्त्वया प्रस्थापितो वनम् ॥
[ इदानीं[३] स हि धर्मात्मा राक्षसैश्च कथं हतः ॥ ५ ॥ ]
एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी ॥ जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६ ॥
सा मुहूर्तात्समाश्वास्य[४] प्रतिलभ्य च चेतनाम् ॥ तच्छिरः समुपाघ्राय विललापायतेक्षणा ॥ ७ ॥
हा हताऽसि महाबाहो वीरव्रतमनुव्रत ॥ इमां ते पश्चिमावस्थां गताऽसि विधवा[५] कृता ॥ ८ ॥
प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते ॥ सुवृत्त साधुवृत्तायाः संवृत्तस्त्वं ममाग्रतः ॥ ९ ॥
दुःखादुःखं[६] प्रपन्नाया मग्नायाः शोकसागरे ॥ यो हि मामुद्यतस्त्रातुं सोपि त्वं विनिपातितः ॥१०॥
सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव ॥ वत्सेनेव[७] यथा धेनुर्विवत्सा वत्सला कृता ॥ ११ ॥

ललाटं ॥ २ ॥ अभिज्ञानैः चिह्नैः । "प्रज्ञानं चाप्यभिज्ञानं" इत्यमरः । अभिज्ञाय तदेव शिर इति प्रत्यभिज्ञायेत्यर्थः । अत्र रामविषये ॥ ३ ॥ हे कैकेयि सकामा भव । संपूर्णकामाभवेत्यर्थः । कः काम इत्यत्राह—हत इति । कलहशीलया कलहस्वभावया । कलहप्रयोजनयेतियावत् । त्वया सर्वं कुलं रघुवंशः । उत्सादितं भवति । तथा कुलनन्दनोयं रामो हतः । प्रव्राजनव्याजेन रामहननमेव त्वया संकल्पितं तदिदानीं विपरीतफलं ते जातं । कुलतन्तुभूतरामहननेन तदेकपराः सर्वे भरतादयो हता एव । कलह एव ते प्रयोजनं फलितमितिभावः ॥ ४ ॥ हेत्वन्तराभावादिदमेव रामवनप्रव्राजने हेतुरित्याह—आर्येणेति ॥ आर्येण सर्वप्रियकारिणेत्यर्थः । यत् येन कारणेन । मया सह चीरवसनो रामः प्रस्थापितः तादृशं विप्रियं किं कृतं ॥ ५ ॥ तपस्विनी शोचनीया । जगतीं भूमिं । जगाम । मूर्च्छितेत्यर्थः । बाला मृदुबुद्धिरित्यर्थः ॥ ६ ॥ समाश्वास्य उच्छ्वासं प्राप्य । चेतनांज्ञानं । आयतेक्षणा अश्रुमिश्रत्वेन शिरोवलोकनार्थं विस्तृतविलोचनेत्यर्थः ॥ ७ ॥ वीरव्रतं शत्रुमहत्वा न निवर्तिष्य इति संकल्पं । अनुव्रत अनुप्राप्त । गतास्मि दृष्टवत्यस्मि । "गत्यर्था ज्ञानार्थाः" इति न्यायात् । अतो विधवा कृता ॥ ८ ॥ प्रथमं भर्तुर्मरणं भार्यादोषनिमित्तकं भवति तत्त्वत्र न पश्यामीत्याह—प्रथममिति ॥ प्रथमं भर्तुर्मरणं नार्या वैगुण्यं वैगुण्यहेतुकं । सुवृत्तस्त्वं साधुवृत्ताया ममाग्रतः संवृत्तः मृतः । कथमिदं संगच्छत इति भावः । अस्मिन्पक्षे न सुवृत्तपदस्वारस्यं । यद्वा भवन्मरणस्य मद्दोष एव हेतुरित्याह—प्रथममिति ॥ विगुण एव वैगुण्यं । स्वार्थे ष्यञ् । प्रथमं भर्तृमरणं भार्यादोषनिमित्तकमिति सुप्रसिद्धं । अतो हे सुवृत्त साधुवृत्त । साधुवृत्तायाः सम्यग्जीवनवत्याः । ममाग्रतस्त्वं मृतोसि । मद्वैगुण्यहेतुकं त्वन्मरणमितिभावः । सुवृत्तेत्यनेन त्वद्वैगुण्यहेतुकं न भवतीति ज्ञापितं ॥ ९ ॥ स्वस्य वैगुण्यसद्भावे निदर्शनमाह—दुःखादिति ॥ दुःखादुःखं अत्यन्तदुःखं । प्रपन्नायाः वनप्रस्थानं प्रथमं दुःखं तस्मादपिदुःखं रावणेनापहरणं तत् प्राप्तायाइत्यर्थः । संप्रति भर्तृमरणेन शोकसागरे निमग्नायाः । इयं च षष्ठी "यस्य च भावेन भावलक्षणम्" इत्यस्मिन्नर्थे । शोकसागरे मग्नायाः शोकसागरे मग्नायां मयि । दुःखादुःखं प्रपन्नायाः प्रपन्नायां सत्यां । यो मां त्रातुमुद्यतः स त्वमपि विनिपातित इति संबन्धः ॥ १० ॥ न केवलं ममैवदुःखं

**ती०** प्रथमंभर्तृमरणं नार्यावैगुण्यं दुश्चारित्रहेतुकमुच्यते । तथासति साधुवृत्तायाममाग्रतःसंवृत्तःममापचारंविनैवकथंमृतोसीत्यर्थः ॥ **ति०** नार्याभर्तुर्मरणं प्रथमंवैगुण्यं मुख्योऽनर्थः । यत्तु भर्तुःप्रथमंमरणंनार्यावैगुण्यं दुश्चरित्रमूलमित्यर्थइति तन्न । एवंहिसर्वविधवानामसतीत्वापत्तेः ॥ ९ ॥ **रामानु०** वत्सेनेवत्वया धेनुर्यथा धेनुरिव सेति यथेवशब्दयोर्निर्वाहः ॥ ११ ॥

**[ पा० ]** १ क. ख. ग. ङ. ज.—ट. किंनुकैकेय्याः. २ ख. घ. यद्वृद्धाच्चीरवसनस्त्वयाप्रव्राजितो. ङ.—ञ. यन्मयाचीरवसनंदत्वाप्रव्राजितो. ३ इदमर्धं. क. ख. च. छ. पाठेषुदृश्यते. ४ क. ग. ङ. झ. ञ. समाश्वस्य. ५ घ. विधिनाकृता. ६ ङ. झ. ट. महद्दुःखं. ७ क. ग. ङ. झ. ट. वत्सलातेयथाधेनुः.

आदिष्टं दीर्घमायुस्ते यैरचिन्त्यपराक्रम ॥ अनृतं वचनं तेषामल्पायुरसि राघव ॥ १२ ॥
अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव ॥ पचत्येनं यथा कालो भूतानां प्रभवो ह्ययम् ॥ १३ ॥
अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित् ॥ व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४ ॥
तथा त्वं संपरिष्वज्य रौद्रयाऽतिनृशंसया ॥ कालरात्र्या मेमाच्छिद्य हृतः कमललोचन ॥ १५ ॥
उपशेषे महाबाहो मां विहाय तपस्विनीम् ॥ प्रियामिव समाश्लिष्य पृथिवीं पुरुषर्षभ ॥ १६ ॥
अर्चितं सततं यत्तद्गन्धमाल्यैर्मया तव ॥ इदं ते मत्प्रियं वीर धनुः काञ्चनभूषणम् ॥ १७ ॥
पित्रा दशरथेन त्वं श्वशुरेण ममानघ ॥ सर्वैश्च पितृभिः सार्धं नूनं स्वर्गे समागतः ॥ १८ ॥

मातुश्चेत्याह—सेति ॥ सा मम श्वश्रूः कौसल्या वत्सला धेनुर्यथा धेनुरिव । त्वया हतेन पुत्रेण वत्सेनेव विवत्सा कृता ॥ ११ ॥ यैः ब्राह्मणैः । दीर्घमायुरित्यादिष्टं उपदिष्टं । तेषां वचनमनृतमासीत् । अनृतत्वे हेतुमाह—अल्पायुरसीति । अचिन्त्यपराक्रमेत्यनेन ते पराक्रमं दृष्ट्वा तैरुक्तं नतु शास्त्रं दृष्ट्वेति गम्यते ॥ १२ ॥ अथवा तेषामनृतवादित्वं नास्त्येव किंतु तवैवभाग्यविपर्यासात्तेषामपिप्रज्ञानष्टेति पक्षान्तरमवलम्बते—अथवेति ॥ प्रभवत्यस्मादिति प्रभवः । भूतानां कारणभूतः । अयं कालः परमात्मा । यथा येन प्रकारेण । एनं पचनविषयभूतं । पचति पक्वकर्माणं करोति । तथा प्राज्ञस्य भविष्यदर्थवेदिनोपि । सतः सत्पुरुषस्य । प्रज्ञा । तव त्वयि विषये । नश्यति नष्टेत्यर्थः । यद्वा पूर्वमचिन्त्यपराक्रमेति तव कथं विपत्तिरित्यभिप्रायेण संबोधितं । तत्र पक्षान्तरमाह—अथवेति ॥ एनं रामं । येन प्रकारेण कालः पचति । तथास्य प्राज्ञस्यापि प्रज्ञा नश्यति । अतो विपत्तिरियमिति भावः ॥ १३ ॥ हि यस्माद्व्यसनानां वर्जने प्रतिरोधे । कुशलोसि । अतः अदृष्टं अचिन्तितं सौप्तिकत्वेनादृष्टं वा मृत्युं । कस्मादापन्नः कथमापन्नोसीत्यर्थः ॥ १४ ॥ रौद्रया क्रूरया । कालरात्र्या यस्यां रात्रौ समुद्रतीरे निविष्टोसि तया रात्र्या । संपरिष्वज्य । मम मत्तः । आच्छिद्य अपहृत्य । तथा हृतोसीति संबन्धः । यद्वा मयेति पाठः । रौद्रया अतिनृशंसया । अत्यन्तनिर्दयया कालरात्र्या कर्त्र्या । मया करणभूतया । संपरिष्वज्य आच्छिद्य बलात्कृत्य । तथा हृत इति । कालरात्रिर्नाम सर्वभूतापहारिणी काचन शक्तिः । यद्वा मया कालरात्र्येति व्यस्तरूपकं । संपरिष्वज्य त्वमाच्छिद्य बलाद्धृतोसीति । घोरवैधव्यलक्षणयुक्तत्वेन क्रूराया मे परिष्वङ्ग एव तेऽन्तहेतुरासीदित्यर्थः । शिरश्छेदादेरश्लीलत्वेन तथेत्युक्तं । कमललोचनेति हेतुगर्भं । कमललोचनत्वात् त्वं कालरात्र्या हृतोसि । परिकरानुप्राणितरूपकालङ्कारः ॥ १५ ॥ तपस्विनीं शोचनीयां । प्रियां मत्तः प्रियां । पुरुषर्षभेत्यनेन दक्षिणस्य शठत्वमनुचितमिति द्योत्यते ॥ १६ ॥ मया सह । तव त्वया । यदर्चितं तत्ते धनुः इदं एतादृशं जातमित्यर्थः ॥१७॥ सर्वैः पितृभिः सार्धं स्थितेन दशरथेन । समा-

स० प्राज्ञस्यापिसतस्तव बुद्धिमत्त्वेनसंप्रतिपन्नस्यापितवप्रज्ञा नश्यत्यथवा नष्टाकिमित्यर्थः । अव्ययानामनेकार्थत्वादथवेतिकिमर्थः । एतादृशस्यापिबुद्धिभ्रंशईशायत्तइत्याह—पचतीति ॥ हियतःभूतानांकालःप्रभवः उत्पादकः । भूतानांकालः संहारकश्च । ततएनं भूतसङ्घं । पचति पाचयति । तत्तत्कर्मानुरोधेनबुद्धिभ्रंशंवा सद्बुद्धिंवा दत्वातत्तत्फलंभोजयति । अथवा अथवेतिश्लोकः पूर्वोक्तपक्षएवपक्षान्तरमाश्रित्यप्रवृत्तः । प्राज्ञस्यापिसतःदैवज्ञसङ्घस्यतवविषये प्रज्ञा नश्यति नष्टा । अतस्तद्वचनानृतीभवनमुचितं । तन्नाशेनिमित्तमाह—पचतीति । एनंदैवज्ञं भूतानांप्रभवःकालः प्रभवोस्यास्तीत्यच् प्रभवत्यस्मिन्निति वा उत्पत्तिकालः । तथा यथावचनमनृतंभवेत्तथा पचति परिपाकंनयति । तस्यातिसूक्ष्मत्वादितिभावः । पूर्वंदैवज्ञैरितिबहुवचनं अत्रप्राज्ञस्येत्येकवचनंच वक्तारोबहुलाः प्रज्ञातुत्वदेकोच्छ्रायविषयेतिसंभवतः ॥ १३ ॥ स० प्रियामिव मदपेक्षया । पृथिवींनारीं तद्रूपांरमणीं । आलिङ्ग्येतिशेषः । यद्वा प्रियां तपस्विनीं नारींभार्यांमामिव पृथिवीं पितृपितामहादिपालितामपिविहाय । इह रक्षोरक्षितक्षितौ शेषइत्यर्थः ॥ १६ ॥ स० सर्वैःपितृभिः पितामहादिभिःसार्धं । स्थितेन त्वदपेक्षयापूर्वंगतत्वात् । पित्रा श्वशुरेणदशरथेन

[ पा० ] १ ङ. झ. ट. उद्दिष्टं. २ ङ.—ट. दैवज्ञैरपिराघव. ३ ख. मयात्वं. ४ ग.—छ. झ. ञ. ट. मयाच्छिद्य. ५ क.—ट. कमललोचनः. ६ ख. च. छ. क्वचशेषे. ङ. झ. ट. इहशेषे. ७ क.—घ. च. छ. ज. ञ. शुभांनारीं. ङ. झ. ट. यथानारीं. ८ क.—ङ. ज.—ट. यत्नाद्गन्ध. च. छ. पत्न्यागन्ध. ९ ङ. झ. ट. भूषितं.

दिवि [1]नक्षत्रभूतस्त्वं महत्कर्मकृतां प्रियम् ॥ पुण्यं राजर्षिवंशं त्वमात्मनः [2]समवेक्षसे ॥ १९ ॥
किं मां न प्रेक्षसे राजन्किं मां न प्रतिभाषसे ॥ बालां [3]बाल्येन संप्राप्तां भार्यां मां सहचारिणीम् ॥२०॥
संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया ॥ स्मर [4]तन्मम काकुत्स्थ नय मामपि दुःखिताम् ॥२१॥
[5]कस्मान्मामपहाय त्वं गतो गतिमतां वर ॥ अस्माल्लोकादमुं लोकं त्यक्त्वा [6]मामपि दुःखिताम् ॥२२॥
कल्याणै[7]रुचितं यत्तत्परिष्वक्तं मयैव तु ॥ क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ॥ अग्निहोत्रेण संस्कारं केन त्वं तु न लप्स्यसे ॥ २४ ॥
प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् ॥ [8]परिप्रक्ष्यति कौसल्या लक्ष्मणं शोकलालसा ॥ २५ ॥

गत इति संबन्धः ॥१८॥ महत्कर्मकृतां महाकर्मकृतां । आत्वाभाव आर्षः । प्रियं कर्मफलत्वेन काङ्क्षणीयं । पुण्यं आत्मनो राजर्षिवंशं इक्ष्वाकुप्रमुखं । दिवि नक्षत्रभूतः विमानस्थः सन् समवेक्षसे पश्यसि ॥ १९ ॥ बालां बाल्येन संप्राप्तां । बाल्य एव त्वयोढामित्यर्थः । भार्यां सदा भर्तुं योग्यां । मां एतादृशावस्थामापन्नां सहचारिणीं । मां किं न प्रेक्षसे किं न प्रतिभाषस इति संबन्धः ॥ २० ॥ मम पाणिं गृह्णता त्वया चरिष्यामि सहचरिष्यामीति यत् संश्रुतं प्रतिज्ञातं । तत् स्मर । स्मृत्वा मामपि त्वत्समीपं नय ॥ २१ ॥ त्यक्त्वा त्वां विहाय । दुःखितां मामपि प्रेयसीमपि मां । अपहाय अस्माल्लोकात् अमुं लोकं परलोकं । कस्माद्धेतोः गतोसि ॥ २२ ॥ यदित्यर्थे यत्तदित्यपि प्रयुज्यते । कल्याणैः मङ्गलैः । शुभैश्चन्दनादिभिर्वा सुवर्णाभरणैर्वा । उचितं अभ्यस्तं । यत्तच्छरीरं मयैव परिष्वक्तं नान्यया । एतदद्य क्रव्यादैः श्येनादिभिः । विपरिकृष्यते । अत्र मयैवेत्यनेन रामस्य दारान्तरं नास्तीति गम्यते ॥ २३ ॥ वनवासनिवृत्त्यनन्तरं त्वं । आप्तदक्षिणैः पर्याप्तदक्षिणैः । अग्निष्टोमादिभिर्यज्ञैः । इष्टवान् कृतदेवपूजनो भूत्वा । अग्निहोत्रेण यज्ञीयवह्निना । संस्कारं केन हेतुना न लप्स्यसे । अत्र वनवासात्पूर्वमग्न्याधानाद्यभावात्तन्निवृत्त्यनन्तरमाधानाग्निष्टोमादिकमनुष्ठाय पश्चात्क्रमप्राप्तायुरवसाने यज्ञीयाग्निभिः संस्कारं प्राप्तुं योग्यस्त्वं कथमेवं मध्ये मरणंप्राप्तोसीतिभावः । अनेन वनवासात्पूर्वं रामेण यज्ञादिकं नानुष्ठितमिति सूच्यते । अयमर्थोऽयोध्याकाण्डे सम्यक्प्रतिपादितः ॥ २४ ॥ प्रव्रज्यां प्रवासं । "व्रजयजोर्भावे क्यप्" इति क्यप् । उपपन्नानां प्राप्तानां । त्रयाणां रामादीनां मध्ये एकं लक्ष्मणमागतं । शोकलालसा शोकमन्दा । कौसल्या परिप्र-

स्वर्गेसमागतः मिलितः । "पितामहाद्याश्चपितरोनामकीर्तिताः" इत्यैतरेयभाष्योक्तेःपितामहादीनांपितृशब्दवाच्यतासंभवति ॥ अनघेत्यनेनपुण्यलभ्यस्वर्गगतियोग्यतांसूचयति ॥ १८ ॥ **स०** दिविनक्षत्रभूतस्त्वं महत्कर्मकृतं महतांकर्म महत्कर्म तत्कृतं महात्मनांपुण्यकर्मफलत्वेनप्राप्यं राजर्षिवंशं इक्ष्वाकुवंशं । किमुपेक्षसे । बहुकर्मकृत्वाऽस्माकमिक्ष्वाकुवंशसंभवःस्यादितिकाङ्क्षितं वंशं किमुपेक्षसे । उपेक्ष्यगतइतियावत् । दिविनक्षत्रभूतं प्रकाशमानमितियावत् । महत्कर्मकृतंपुण्यं राजर्षिवंशं पित्रादिकंयथा राम ईक्षसे पश्यसि । तत्रगतः । तथापुण्यं आत्मनोममराजर्षिवंशं जनकवंशं । किमुपेक्षसे मदनयनेनेतिवा ॥ यत्तु—नागोजिभट्टेन—दिविनक्षत्रभूतं त्रिशङ्कोस्तथात्वाच्छत्रिन्यायेनवंशस्यतथात्वं । महता पितृवचनपरिपालनरूपेणकर्मणा कृतं तथापुण्यमासाद्यात्मनःप्रियंपुण्यं राजर्षिवंशं उपेक्षसे त्यक्त्वागच्छसि । एतदन्याय्यमित्यर्थइतिव्याख्यातं । तत्तु—स्वर्गगमनौचितीसाधकमेवभवतीतिप्रकृतानुपयुक्तं । यन्महत्कर्मकृतं भुवितद्वंशस्यातिरिक्तक्षत्रभूतं क्षत्रजात्युत्पन्नसंबद्धं क्षत्रभूसंबद्धं नेतिकिंवक्तव्यं । दिव्यपितादृशं तत्राप्येतत्सदृक्षःक्षत्रियोनास्ति तन्नक्षत्रभूतं क्षत्रभूयिष्ठंनेतिवा । दशरथादिभिरिन्द्रादिसाहितीकरणादितिभावः । एतादृशंपुण्यंराजर्षिवंशमुपेक्षसे । तेपियुष्मद्बलमाश्रिताइतिनातिशेते तत्रत्यइतिनन्याय्यंतत्रगमनमितिभावइतिवा ॥ १९ ॥ **स०**त्वामपहाय अगतिमतां अगतिरितिमतां गतिरहितेतिसंमतां । मां रमारूपिणीं मां । दुःखितां तद्वद्विद्यमानां । कस्मात्त्यक्त्वा गतइत्यन्वयः । दुःखातिशयाद्वा पुनरुक्तिः । "परिहासेप्रलापेचवागनर्थापिदृश्यते" अनर्थां निरर्थां । चरितार्थत्वेनानधिकार्थेतिदीपिकाव्याख्यानात् ॥ २२ ॥ **स०** त्रयाणां त्वमहंलक्ष्मणश्चेत्येतेषांमध्ये । एकमागतंलक्ष्मणं जीवन्तं कौसल्यापरिप्रक्ष्यति

**[ पा० ]** १ क. ङ. झ. ट. नक्षत्रभूतंचमहत्कर्मकृतंतथा. २ क. ङ. झ. ट. समुपेक्षसे. ३ घ.—ट. वालेन. ४ ङ. झ. तन्नाम. ५ ज. कस्मान्ममविहाय. ६ ट. मामिव. क. मामिह. ७ ङ. झ. ट. रुचिरंगात्रंपरिष्वक्तं. च. छ. ज. रुचिरंयत्तत्. ८ ङ. च. झ. ट. परिप्रेक्षति.

स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते ॥ तव चाख्यास्यते नूनं निशायां राक्षसैर्वधम् ॥ २६ ॥
सा त्वां सुप्तं हतं श्रुत्वा मां च रक्षोगृहं गताम् ॥ हृदयेनावदीर्णेन नभविष्यति राघव ॥ २७ ॥
मम हेतोरनार्याया ह्यनर्हः[1] पार्थिवात्मजः ॥ रामः सागरमुत्तीर्य सत्त्ववान्[2]गोष्पदे हतः ॥ २८ ॥
अहं दाशरथेनोढा मोहात्स्वकुलपांसनी ॥ आर्यपुत्रस्य रामस्य भार्या मृत्युरजायत ॥ २९ ॥
नूनमन्यां[3] मया जातिं वारितं दानमुत्तमम् ॥ याऽहमद्येह[4] शोचामि भार्या सर्वातिथेरपि[5] ॥ ३० ॥
साधु पातय[6] मां क्षिप्रं रामस्योपरि रावण ॥ समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१ ॥
शिरसा मे शिरश्चास्य कायं कायेन योजय ॥ रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः ॥ ३२ ॥
[ मुहूर्तमपि[7] नेच्छामि जीवितुं पापजीविता ॥ श्रुतं मया वेदविदां ब्राह्मणानां पितुर्गृहे ॥
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ ३३ ॥
क्षमा यस्मिन्दमस्त्यागः सत्यं धर्मः कृतज्ञता ॥ अहिंसा चैव भूतानां तमृते का गतिर्मम ] ॥३४॥
इति[8] सा दुःखसंतप्ता विललापायतेक्षणा[9] ॥ भर्तुः शिरो धनुस्तत्र[10] समीक्ष्य च पुनः पुनः ॥ ३५ ॥
एवं लालप्यमानायां सीतायां तत्र राक्षसः ॥ अभिचक्राम भर्तारमनीकस्थः कृताञ्जलिः ॥ ३६ ॥
विजयस्वार्यपुत्रेति सोभिवाद्य प्रसाद्य च ॥ न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३७ ॥
अमात्यैः संहितैः[11] सर्वैः प्रहस्तः[12] समुपस्थितः ॥ तेन दर्शनकामेन वयं[13] प्रस्थापिताः प्रभो ॥ ३८ ॥
नूनमस्ति महाराज राजभावात्क्षमान्वितम् ॥ किंचिदात्ययिकं कार्यं तेषां त्वं दर्शनं कुरु ॥ ३९ ॥

---

क्ष्यति ॥ २५ ॥ सः लक्ष्मणः । परिपृच्छन्त्यास्तस्याः ते मित्रबलस्य वधं तववधं चाख्यास्यते ॥ २६ ॥ सुप्तं हतं सुप्तत्वदशायां हतमित्यर्थः । अवदीर्णेन भिन्नेन । हृदयेनोपलक्षिता सा नभविष्यति न जीविष्यति ॥ २७ ॥ अनार्यायाः दुश्शीलायाः । मम हेतोः मन्निमित्तं । अनर्हः एतादृशसौप्तिकवधानर्हः । सागरमुत्तीर्य गोष्पदे हतः खरतरखरादीन्हत्वा क्षुद्रेण प्रहस्तेन हत इत्यर्थः ॥ २८ ॥ स्वकुलपांसनी स्वकुलदूषणी । अहं मोहात् अज्ञानात् । दाशरथेनोढास्मि । अतो रामस्य भार्यैव मृत्युरजायत ॥२९॥ मया अन्यां जातिं प्राप्य । यद्वा अन्यां जातिं अन्यस्मिञ्जन्मनि । उत्तमं दानं वारितं । कन्यादानं वारितमित्यर्थः । तत्र हेतुमाह—येति । सर्वे अतिथयो यस्य तस्य सर्वातिथेः । सर्वरक्षितुरित्यर्थः । सर्वातिथिपूजकस्येति वाऽर्थः । भार्यापि याहं इह जन्मनि अद्य भोगकाल एव शोचामि ॥ ३० ॥ समानय योजय । उत्तमं कल्याणं पतिसंयोगरूपं ॥ ३१—३४ ॥ शिरः धनुश्च । तत्र पुरोदेशे ॥ ३५ ॥ लालप्यमानायां प्रलपन्त्यां । भर्तारं रावणं । अनीकस्थः द्वाररक्षी । ननु लौकिकीषु काचिदिव सीता भर्तृशिरस्साक्षात्कारेपि चिरं रुदित्वा विलप्य कथं जीवितं धारयति स्म । उच्यते । अनयोर्दिव्यदम्पत्योः परस्परसत्त्वैव जीवितधारणे निमित्तं नतु ज्ञानाज्ञाने । अतो भर्तुर्जीवितवैकल्याभावात्सा जीवति स्म ॥ ३६ ॥ अनुप्राप्तं द्वारीति शेषः ॥ ३७ ॥ वयमितिभयेन बहुवचनं बहूनामन्तःपुरे समागमासंभवात् ॥ ३८ ॥ प्रहस्तेन प्रेषितोपि

---

प्रश्नंकरिष्यति । " दिशंप्रव्राजितःसर्वैर्लक्ष्मणःप्लवगैःसह " इतिलक्ष्मणस्यजीवत्वोक्तेरियमुक्तिर्युक्ता ॥ परिप्रेक्षति द्रक्ष्यतीत्यर्थइतिनागोजिभट्टः । तत्रपरस्मैपदितेक्षधातोर्निर्वाह्या । एवं "सतस्याःपरिपृच्छन्त्याः" इत्यनुक्तानुवादास्वारस्यंचपरिहार्यं ॥ २५ ॥ ति० आर्यपुत्रशब्दोयद्यपिस्त्रीभिर्भर्तरिप्रयुज्यतेप्रायेण । तथापि पूजामात्रेसामान्यतःप्रयोगोपिबोध्यः ॥ स० अर्यपुत्र स्वामिपुत्र । " स्यादर्यःस्वामिवैश्ययोः " इत्यमरः । अरयः अपुत्रायेनेतिवा । तेनआर्यपुत्रेति पतिंप्रतिभार्यासंबोधनस्यैवसर्वत्रसत्त्वेनकथमेव-

[ पा० ] १ ङ. ज. झ. ट. अनघः. २ क.—ट. वीर्यवान्. ३ क. ग. घ. ज. नूनंमन्येमयाजाते. ४ ख.—ट. मद्यैव, ५ ख.—ट. सर्वातिथेरिह. ६ ख. ङ.—ट. घातयमां. ७ इदंश्लोकद्वयंप्राचीनकोशेषुनदृश्यते. औत्तराहपाठएवदृश्यते. ८ ङ. च. छ. झ. ट. इतीवदुःख. ञ. इतिदुःखेनसंतप्ता. ९ ख. ग. घ. विललापाकुलेन्द्रिया. १० ग. ङ.—ट. धनुश्चैवददर्श जनकात्मजा. क. ख. घ. धनुस्तत्रसमीक्ष्यजनकात्मजा. ११ घ. ङ. झ. ञ. ट. सहितः. १२ ङ. झ. प्रहस्तस्त्वामुपस्थितः. १३.—ट. अहंप्रस्थापितःप्रभो. घ. स्वयंप्रस्थापितःप्रभो.

एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् ॥ अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ४० ॥
स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः ॥ सभां प्रविश्य विदधे विदित्वा रामविक्रमम् ॥४१॥
अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमम् ॥ जगाम रावणस्यैव निर्याणसमनन्तरम् ॥ ४२ ॥
राक्षसेन्द्रस्तु तैः सार्धं मन्त्रिभिर्भीमविक्रमैः ॥ समर्थयामास तदा रामकार्यविनिश्चयम् ॥ ४३ ॥
अविदूरस्थितान्सर्वान्बलाध्यक्षान्हितैषिणः ॥ अब्रवीत्कालसदृशो रावणो राक्षसाधिपः ॥ ४४ ॥
शीघ्रं भेरीनिनादेन स्फुटकोणाहतेन मे ॥ समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥ ४५ ॥
ततस्तथेति प्रतिगृह्य तद्वचो बलाधिपास्ते महदात्मनो बलम् ॥
समानयंश्चैव समागमं च ते न्यवेदयन्भर्तरि युद्धकाङ्क्षिणि ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

मायाकल्पितशिरोदर्शनेनदूयमानांसीतांप्रति विभीषणभार्ययासरमया हेतूपन्यासेनसमाश्वासनम् ॥ १ ॥

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी ॥ आससादाथ वैदेहीं प्रियां प्रणयिनीं सखीम् ॥ १ ॥
मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् ॥ आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २ ॥
सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया ॥ रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३ ॥

---

कथमनवसरे समागतोसीत्याशङ्क्याह—नूनमिति ॥ राजभावात् राजत्वाद्धेतोः । क्षमान्वितं तदानीमेव कर्तव्यत्वेपि तव राजभावात् क्षमया त्वदाज्ञाप्रतीक्षणेनान्वितं । आत्ययिकं आतिपातिकं किंचित्कार्यमस्ति नूनं । तत्तस्मात्तेषां प्रहस्तादीनां दर्शनं कुर्वित्यन्वयः ॥ ३९—४० ॥ सः रावणः । रामविक्रमं विदित्वा सभां प्रविश्य आत्मनः सर्वं कृत्यं मन्त्रिभिः सह समर्थ्य निश्चित्य । विदधे । प्रकृतकार्यमिति शेषः ॥ ४१ ॥ निर्याणं निर्गमनं ॥ ४२ ॥ समर्थ्येत्युक्तं विवृणोति—राक्षसेन्द्र इति ॥ रामकार्यविनिश्चयं रामविषये स्वकृत्यनिश्चयं ॥ ४३—४४ ॥ स्फुटकोणाहतेन उल्बणवादनदण्डाहतिजनितेन । कार्ये कारणोपचारः । वक्तव्यं च न कारणमिति । युद्धार्थं निर्यातेति पुरे प्रवदन्ति चेद्बलाध्यक्षाः तदानीं देव्याः सन्निधौ कथितं स्वकीयं रामसैन्यवधवृत्तान्तवाक्यमसत्यमिति तस्याः विदितं स्यादिति भावः ॥४५॥ आत्मनः आत्मनां । भर्तरि विषये ॥ ४६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥३२॥

---

अथ सरमा सीतां समाश्वासयति त्रयस्त्रिंशे—सीतामिति ॥ मोहितां रामविषयविपरीतज्ञानवतीं । सरमा विभीषणभार्या । प्रणयिनीं स्नेहवतीं ॥ १—२ ॥ ननु राक्षस्यास्तस्याः कथं सख्यमाश्वासनं

---

मितिशङ्कानवकाशः ॥ ३७ ॥ **ती०** स्फुटकोणाहतेन उल्बणवादनदण्डहतेन । नचवक्तव्यंकारणंदेव्याःपुरतः । स्वोक्तरामहननविषयवाक्यमसत्यमितिसीताज्ञास्यतीतिशङ्कया वक्तव्यंचनकारणमित्युक्तं । "सासीतातच्छिरोदृष्ट्वातच्चकार्मुकमुत्तमम्" इत्यारभ्य "इतिसादुःखसंतप्ताविललापायतेक्षणा" इत्यन्तानांसीताप्रलापवाक्यानांवास्तवार्थेऽयमाशयः । सीतापिरामशिरआदिकंमायाकल्पितमितिज्ञात्वापितत्सत्यमितिमत्वेवमिथ्याप्रलापादिनाराक्षसान्वञ्चयितुंबहुविधंप्रलपति ॥ ४५ ॥ द्वात्रिंशःसर्गः ॥ ३२ ॥

**ति०** सीतांत्विति । विभीषणपत्नीयंसरमा । सातुसीतायांभक्तिमती । साहिरावणेनज्ञातसात्विकभावाऽतिभर्त्सनेननाशमाशङ्क्य सीताश्वासनार्थंसंदिष्टेतिबोध्यं । प्रणयिनी स्नेहवती । सखीसरमेत्यन्वयः ॥ १ ॥ **रामानु०** साहीति । विभीषणभार्यायाःसर

[ **पा०** ] १ घ. सतुपूर्वसमामन्त्र्य. २ ख. ग. घ. च. छ. ञ. संमन्त्रयामास. ३ ङ. झ. ञ. ट. स्फुटं. ४ ङ. च. छ झ. ञ. ट. तद्वचस्तदैवदूताःसहसामहद्बलं. ५ ख. ग. ङ. च. छ. झ. ट. समागतंच. ६ क. च. छ. ञ. आससादाशु. ७ च. छ. प्रियांप्रियकरीं. ज. प्राणप्रणयिनीं. ङ. झ. ञ. ट. प्रियांप्रणयिनीसखी. ८ ख. कमललोचनां. ९ ज. हिता.

सा ददर्श ततः सीतां सरमा नष्टचेतनाम् ॥ उपावृत्योत्थितां ध्वस्तां बडबामिव पांसुलाम् ॥ ४ ॥
तां समाश्वासयामास सखीस्नेहेन सुव्रता ॥ ५ ॥
समाश्वसिहि वैदेहि माभूत्ते मनसो व्यथा ॥ उक्ता यद्रावणेन त्वं प्रत्युक्तं च स्वयं त्वया ॥
सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् ॥ ६ ॥
लीनया गगने शून्ये भयमुत्सृज्य रावणात् ॥ तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियम् ॥ ७ ॥
स संभ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसाधिपः ॥ तच्च मे विदितं सर्वमभिनिष्क्रम्य मैथिलि ॥ ८ ॥
न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः ॥ वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ९ ॥

वेत्यत्राह—सा हीति ॥ हि यस्माद्रावणादिष्टा रक्षन्ती सा आत्मना रक्ष्यमाणया मित्रं सखी कृता । अत इत्यर्थः । रक्षन्ती । तत्रतत्रावसरे सीताया योगक्षेमविधानं कुर्वतीत्यर्थः । रावणादिष्टा योगक्षेमे रावणेनादिष्टा । सानुक्रोशा सदया । अनेन सख्यकरणे हेतुरुक्तः । दृढव्रता दृढप्रतिज्ञा । अनेन सख्यस्याप्रच्युतिर्दर्शिता ॥ ३ ॥ आसादनानन्तरं तदवस्थादर्शनमाह—सेति ॥ नष्टचेतनां विपरीतज्ञानवतीं । उपावृत्य लुठित्वा । ध्वस्तां धूल्युपहतां । बडबां अश्वस्त्रियं । पांसुलां पांसुमतीं ॥ ४ ॥ तामिति पूर्वं करस्पर्शादिना समाश्वासनमुक्तं । इदानीं रावणवृत्तान्तप्रदर्शनेनेति ज्ञेयं ॥ ५ ॥ स्वयं साक्षात् । प्रत्युक्तं प्रलापरूपं । सखीस्नेहेन सखीविषयस्नेहेन । प्रतिश्रुतं । प्रतिरुपसर्गमात्रं ॥ ६ ॥ तदानीमसन्निहितया त्वया कथं श्रुतमित्यत्राह—लीनयेति ॥ लीनया छन्नया । गगने कुत्रचित्तरुरन्ध्रे । गहन इति पाठे आवृत इत्यर्थः । शून्ये निर्जने । कथं घोराद्रावणाद्भयं त्यक्तं तत्राह—तवेति । तव हेतोः त्वन्निमित्तं । मे जीवितमपि न प्रियं । तत्र हेतुर्विशालाक्षीति । तव नयनसौन्दर्यं पश्यन्त्या मे कथं त्वत्पीडा सोढव्येति भावः । ननुबिभीषणभार्या कथं सीतारक्षणे रावणेन नियोगार्हा। नियोगे वा कथं तस्याः रावणभयाद्गूढावस्थानं । उच्यते । विभीषणावस्थानकाले सीतायोगक्षेमपरामर्शायान्तरङ्गभूता सरमा नियुक्ता । तन्निर्गमनादिदानीमन्तरङ्गवार्ताश्रवणे भीतासीदिति न विरोधः। नियोगश्च दासीमुखेन। अदर्शनं च स्नुषात्वादिति बोध्यं । अन्येयं सरमेत्येके ॥ ७ ॥ मे मया । यत्कृते यन्निमित्तं । अभिनिष्क्रम्य बहिर्निर्गम्य ॥ ८ ॥ मा भूदसदवगमः उपपत्तिश्च तत्र नास्तीत्याह—न शक्यमिति ॥ सौप्तिकं सुप्तौ मरणं । न केवलमशक्यत्वं रामस्य पुरुषधौरेय-

मायाः "रक्षन्तीरावणादिष्टा" इतिसीतारक्षणेरावणनियोगःप्रतीयते । उपरि "सखीस्नेहेनतद्भीरुमयासर्वंप्रतिश्रुतम् । लीनयागहने शून्येभयमुत्सृज्यरावणात्" इतिरावणभयाद्गूढावस्थानेनरावणोक्तवाक्यश्रवणंचप्रतीयते । विभीषणभार्यायारावणेननियोगोनुचितइवप्रतिभाति । रावणनियुक्तत्वेतद्भयाद्गूढावस्थानमनुपपन्नमितिप्रतीयते । अत्रपरिहारोविद्वद्भिश्चिन्तनीयः ॥ ती० ननुविभीषणभार्यायाःसरमायाःकथंसख्यमाश्वासनंवातत्राह—साहीति । हियस्माद्रावणादिष्टा सीतांरक्षन्तीसा आत्मनारक्ष्यमाणयासीतया मित्रं सखीकृता । "ज्येष्ठाकन्याऽनलानामविभीषणसुताकपे । तयाममेदमाख्यातंमात्राप्रहितयास्वयं" इतिसुन्दरकाण्डेसीतयोक्तत्वादत्रापिसानुक्रोशेत्युक्तत्वाच्चविभीषणभार्यायाःसरमायाःसीतायाःसखीत्वंतत्समाश्वासनंचयुक्तमितिभावः ॥ ३ ॥ स० ननु विभीषणभार्यात्वेनत्वंतरवतस्तेननविश्वसनीयेति कथंसंकथनंश्रुतंभवत्येत्यतआह—लीनयेति । शून्ये जनैः । गहने इतरापरिज्ञातस्थाने । रावणाद्भयमुत्सृज्य क्रूरोपिरावणोरमणरिपुरपियोषितःकिंकरोतीतिभीतिंत्यक्त्वा । निलायनंतुभावत्वाद्रावणस्यलज्जयेति भावः । रावणादिष्टेतिपूर्वोक्तस्वारस्यंचेत्थंचेद्भविष्यति ॥ ति० ननुविभीषणस्यविरुद्धकोटौगतत्वात्तत्पत्न्यात्वयारावणसंनिधौस्थित्वा कथंश्रुतंतत्राह—लीनयेति । गहने अशोकवनमध्ये । पूर्वमस्यमायाकृतवृत्तान्तंश्रुतवत्या त्वद्रक्षणरूपकार्यार्थमागत्यलीनया गुप्तंस्थितया । रावणाद्भयमुत्सृज्यस्थितया सर्वंश्रुतं । नहिमेरावणाद्भयं तेनैवतवरक्षणेनियुक्तत्वात्तज्ज्ञातित्वाच्च । ततोऽन्यैवैषासरमेत्यन्ये ॥ ७ ॥ स० ससंघातः ससमूहः । निष्क्रान्तः प्रहस्ताहूतः । यत्कृते यदर्थं । तत्सर्वं अभिनिष्क्रम्य बहिर्गत्वा । मे मयाविदितं ॥८॥ ति० सौप्तिकं सुप्तिकालयुद्धं । तत्रहेतुः—विदितात्मनः । जितनिद्रालस्यादिदोषचित्तस्येत्यर्थः । पुरुषव्याघ्रे सर्वातिशायिशौर्यवति । अतएवतस्मिन्वधोनोपपद्यते ॥ स० अत्यन्तावश्यकत्वादनन्तरंवदिष्यामीत्यादौधववार्ताजीवातुंसीतायावदिष्यन्तीततोप्यादौमोहमपहन्तीत्याह—नशक्यमिति । सौप्तिकं स्वापसमयव्यापारः । तत्रनिमित्तमाह—**विजितेति** । विजितात्मनः जित-

[ पा० ] १ ङ. च. छ. झ. ञ. ट. सखीसीतां. ख. सखींसीतां. २ ख.—ट. पांसुषु. ३ ङ. झ. ट. सुव्रतां. ४ झ.—ठ. गहने. ५ ङ. झ. ट. मेरावणाद्भयं. ६ क. सुसंभ्रान्तश्च. ठ. ससंघातश्च. ७ ङ. झ. ट. तत्रमे. ८ झ. ठ. विजितात्मनः.

न[1] त्वेव वानरा हन्तुं शक्याः पादपयोधिनः ॥ सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ १० ॥
दीर्घवृत्तभुजः श्रीमान्महोरस्कः प्रतापवान् ॥ धन्वी संहननोपेतो धर्मात्मा भुवि विश्रुतः ॥ ११ ॥
विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च ॥ लक्ष्मणेन सह भ्रात्रा कुलीनो[2] नयशास्त्रवित् ॥ १२ ॥
हन्ता परबलौघानामचिन्त्यबलपौरुषः ॥ न हतो राघवः श्रीमान्सीते शत्रुनिबर्हणः ॥ १३ ॥
अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना ॥ इयं प्रयुक्ता रौद्रेण माया मायाविदा[3] त्वयि ॥ १४ ॥
शोकस्ते विगतः सर्वः कल्याणं त्वामुपस्थितम् ॥ ध्रुवं त्वां भजते लक्ष्मीः प्रियं[4] प्रीतिकरं शृणु ॥१५॥
उत्तीर्य[5] सागरं रामः सह वानरसेनया ॥ सन्निविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १६ ॥
दृष्टो मे परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः ॥ स हि तैः सागरान्तस्थैर्बलैस्तिष्ठति रक्षितः ॥ १७ ॥
अनेन प्रेषिता[6] ये च राक्षसा लघुविक्रमाः[7] ॥ राघवस्तीर्ण इत्येव प्रवृत्तिस्तैरिहाहृता ॥ १८ ॥
स[8] तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः ॥ एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥ १९ ॥
इति ब्रुवाणा सरमा राक्षसी सीतया सह ॥ सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ २० ॥
दण्डनिर्घातवादिन्याः श्रुत्वा भेर्या महास्वनम् ॥ उवाच सरमा सीतामिदं मधुरभाषिणी ॥ २१ ॥
सन्नाहजननी ह्येषा भैरवा[9] भीरु भेरिका ॥ भेरीनादं च गम्भीरं शृणु तोयदनिस्वनम् ॥ २२ ॥
कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः ॥ हृष्यन्ते तुरगारूढाः प्रासहस्ताः सहस्रशः ॥ २३ ॥

तया वधयोग्यतापि नास्तीत्याह—वधश्चेति ॥ ९ ॥ एवं वानरवधोऽप्यनुपपन्न इत्याह—न त्विति ॥ स्वबलाद्रामबलाच्च न वानरा हन्तुं शक्या इत्यर्थः ॥१०॥ न केवलं बलादिना सौभाग्यलक्षणादिभिरप्यतदर्हो राम इत्याह श्लोकत्रयेण—दीर्घेत्यादिना ॥ श्रीमान् कान्तिमान् । प्रतापवान् तेजिष्ठः । संहननोपेतः शोभनावयवसंस्थानः । लक्ष्मणेन सह रक्षितेत्यन्वयः ॥ ११—१२ ॥ श्रीमान् विजयश्रीमान् ॥ १३ ॥ कथं तर्हि शिरःप्रभृतिप्रापणं तत्राह—अयुक्तेति ॥ अयुक्तबुद्धिकृत्येन अनर्हबुद्धिव्यापारेण । मायाशिरोदर्शनबुद्धेस्तत्कृत्यस्य चात्मलाघवहेतुत्वादितिभावः ॥ १४ ॥ भजते भविष्यत्सामीप्ये लट्प्रयोगः । प्रियं प्रियवचनं ॥ १५ ॥ सन्निविष्टः स्थितः ॥ १६ ॥ सागरान्तस्थैः सागरतीरस्थैः ॥ १७ ॥ तीर्णः तीर्णवान् । प्रवृत्तिर्वार्ता ॥ १८ ॥ एष मन्त्रयत इति सान्निध्यद्योतनाय ॥ १९ ॥ सीतया सह शुश्रावेत्यन्वयः । सर्वोद्योगेन सर्वप्रयत्नेन । जनितमिति शेषः । शब्दं सिंहनादं ॥२०॥ दण्डनिर्घातवादिन्याः दण्डाहत्या शब्दायमानायाः ॥ २१ ॥ भेरिका ताड्यत इति शेषः । तोयदनिस्वनं तोयदनिस्वनतुल्यं ॥ २२ ॥ कल्प्यन्ते आकल्प्यन्ते । अलङ्क्रियन्त इत्यर्थः । युज्यन्ते रथवाजिनः । रथेषु वाजिनो युज्यन्त इत्यर्थः । रथेत्यविभक्तिकनिर्देशो वा । हृष्यन्ते हर्षव्यापारं कुर्वन्ति

मनस्कस्य । विदितात्मनइतिपाठे विदितः अयंफलिष्यतीतिज्ञातः आत्मा यत्नोयेनसतथेत्यर्थः । पुरुषव्याघ्रे जाग्रति वधश्च स्वप्नो वा जाग्रत्कालिकोवानोपपद्यते ॥ ९ ॥ **स०** देवर्षभेन नारायणेनसुराइव वानराःरामेण हि यतःसुरक्षिताः अतोनहन्तुंशक्याइत्यन्वयः ॥ १० ॥ **स०** प्रियं प्रियवचनं । तेत्वांभजते । सर्वेपिप्रियवक्तारोभविष्यन्तीतिभावः ॥ ते तवविषये । प्रियंममवचनंश्शृणु । त्वांध्रुवंभजते धवइतिशेषः । लक्ष्मीश्चभजते ॥ हेभवति तेप्रियवचनमितिनागोजिभट्टव्याख्यानंमूलकोशेषुपञ्चषेषुभवतिपाठादर्शनात् । " श्रुवःश्च " इतिश्रादेशे श्शृणुशब्दोलघ्वादिरितिभवतीकारगौरवानापादकइतिचासमञ्जसम् ॥ १५ ॥ **ति०** दृष्टोमे मयादृष्टइत्यर्थः । स्वगृहवत्यूर्ध्वगृहमारुह्येतिशेषः । खेचरीत्वाद्बहिर्निर्गत्येतिशेषोवा । सागरान्तस्थैः सागरतीरस्थैः । स्वमहिम्नारक्षितस्तिष्ठति ॥ **स०** परिपूर्णार्थः अलक्ष्यीकृतरक्षोध्यक्षत्वात् । सहितैः मिलितैः सक्षेमैर्वा । तिष्ठतियः सदृष्टः ॥ १७ ॥ **स०** यदर्थंरावणःप्रहस्ताहूतोगतः तन्मेविदितमित्युक्तं तदिदानीमावेदयति—**अनेनेति** । प्रवृत्तिः वार्ता ॥ १८ ॥

[ **पा०** ] १ घ. नहितेवानराः. २ क.—घ. च. छ. ञ. कुशलीनय. ३ ग. ङ.—ञ. मायाविना. ४ ङ. च. झ. ञ. ट. प्रियंतेभवतिशृणु. ५ ख. उत्तीर्यराघवःश्रीमान्सागरंसहसेनया. ६ ख. घोराराक्षसाः. ७ घ. बलविक्रमाः. ८ घ. एतांश्रुत्वा. ९ घ. भीमनादिनी.

तत्रतत्र च सन्नद्धाः संपतन्ति पदातयः ॥ आपूर्यन्ते राजमार्गाः सैन्यैरद्भुतदर्शनैः ॥
वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः ॥ २४ ॥
शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा ॥ रथवाजिगजानां च भूषितानां च रक्षसाम् ॥ २५ ॥
[ संभ्रमो रक्षसामेष हृषितानां तरस्विनाम् ॥ ] प्रभां विसृजतां पश्य नानावर्णां समुत्थिताम् ॥
वनं निर्दहतो घर्मे यथा रूपं विभावसोः ॥ २६ ॥
घण्टानां शृणु निर्घोषं रथानां शृणु निःस्वनम् ॥ हयानां हेषमाणानां शृणु तूर्यध्वनिं यथा ॥२७॥
उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् ॥ संभ्रमो रक्षसामेष तुमुलो रोमहर्षणः ॥ २८ ॥
श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् ॥ २९ ॥
रामः कमलपत्राक्षोऽदैत्यानामिव वासवः ॥ विनिर्जित्य जितक्रोधस्त्वामचिन्त्यपराक्रमः ॥
रावणं समरे हत्वा भर्ता त्वाधिगमिष्यति ॥ ३० ॥
विक्रमिष्यति रक्षस्सु भर्ता ते सहलक्ष्मणः ॥ यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ॥ ३१ ॥
आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम् ॥ अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥३२॥
अश्रूण्यानन्दजानि त्वं वर्तयिष्यसि शोभने ॥ समागम्य परिष्वज्य तस्योरसि महोरसः ॥ ३३ ॥

॥ २३ ॥ तत्रतत्रेति सार्धश्लोकः ॥ संपतन्ति सङ्गीभवन्ति । सैन्यैः सेनासमवेतरथगजतुरगपदातिभिः । अद्भुतदर्शनैः अलंकारविशेषैरिति शेषः । वेगवद्भिर्नदद्भिश्चेति पाठः ॥ २४ ॥ शस्त्राणामित्यादिश्लोकद्वयं॥ प्रसन्नानां निर्मलानां । चर्मणां फलकानां । भूषितानां अतएव प्रभां विसृजतां उत्पादयतां । उत्थितां ऊर्ध्वं प्रसृतां । रूपं तेजः । नानौषधीवनदाहेन नानावर्णत्वं सिद्धं । पश्येत्यत्रापि प्रभैव कर्म । यद्वा विसृजतामिति च्छेदः । तां प्रसिद्धां प्रभां पश्य । विसृज शोकमिति शेषः ॥२५–२६॥ घण्टानां गजघण्टानां । रथानां निस्स्वनं । नेमिसंघट्टनजं । हेषं आणानामिति च्छेदः । आङ्पूर्वात् "अण शब्दे" इत्यस्माद्धातोः पचाद्यच् । आणानां शब्दायमानानां । हेषं शब्दं । स्त्रीलिङ्गाभावः आर्षः । निस्स्वनमिति वा अनुवर्त्यते । तूर्यध्वनिंयथा तूर्यध्वनिमिव ॥ २७ ॥ संभ्रमः सन्नाहः । तुमुलः सान्द्रः । दृश्यत इति शेषः ॥२८॥ ध्रुवं त्वां भजते लक्ष्मीरित्युपक्रान्तमुपसंहरति—श्रीरिति ॥ शोकघ्नी श्रीः विजयलक्ष्मीः भजति । भविष्यत्सामीप्ये लट्प्रयोगः॥२९॥राम इत्यादिसार्धश्लोक एकान्वयः । कमलपत्राक्षः । "श्रीर्न त्यजति रक्ताक्षं" इति सामुद्रिकोक्तरीत्याऽवश्यं श्रीरुपतिष्ठति । तत्रापि श्रेष्ठे तत्रापि चक्षुषी इति नयनसौभाग्यलक्षणमव्यभिचारीति भावः। न केवलं सौभाग्यलक्षणेन श्रीः प्रभावादपीत्याह—अदैत्यानामिति।अदैत्यानां देवानां मध्ये। वासव इव स्थितः । सर्वश्रेष्ठ इत्यर्थः । अचिन्त्यपराक्रमः एकेन शरेण मरुकान्तारवासिसकलदस्युवारणादप्रमेयपराक्रमः । तर्हि तादृशः किमिदानीं विलम्बत इत्यत्राह—जितक्रोध इति । रावणस्याभिमुखमनागमनात् क्रोधावकाशमलभमानास्तिष्ठतीति भावः। दैत्यानामिति द्वितीयार्थे षष्ठी वा । दैत्यान् वासव इव रावणं समरे हत्वा विनिर्जित्य शत्रुगृहादपनीय । त्वामभिगमिष्यतीति योजना ॥ ३० ॥ विष्णुना उपेन्द्रेण ॥ ३१ ॥ एवं शंसन्त्यास्ते किं फलं तत्राह—आगतस्येति ॥ चिरप्रवासादागतस्य दयितादर्शने कोपि विकासो भवेत्स मया द्रष्टव्य इति भावः ॥ ३२ ॥ महोरस इत्यत्र समासान्तविधेरनित्यत्वात्

ति० "वनंनिर्दहतोघर्मे" इत्यादि "राक्षसेन्द्रानुयायिनां" इत्यन्तंश्लोकद्वयंप्रक्षिप्तमितिकतकः ॥ २६ ॥ रामानु० दैत्यानामित्यत्रापि समरशब्दोयोजनीयः ॥ ३० ॥

[ पा० ] १ क. ग. ङ. च. छ. झ. ञ. सहस्रशः. २ ज. चर्मिणांवर्मिणां. ३ च. छ. हृषितानांच. ङ. झ. ञ. ट. राक्षसेन्द्रानुयायिनां. ४ इदमर्धं ङ.—ट. पाठेषुदृश्यते. ५ घ. च. छ. प्रभामिव. ६ ङ. च. ट. नेमिनिस्स्वनं. ७ ङ. च. छ. झ. ट. तुमुलंरोमहर्षणं. ८ ख. वैदेहि. ९ ख. घ. ङ. च.—झ. ञ. ट. अवजित्य. १० क.—ट. स्तमचिन्त्य. ११ ख. हन्ता. १२ ङ. च. छ. ञ. अस्राण्यानन्द. १३ ख. ग. ङ.—ट. जानकि. १४ क.—ट. मरिष्वक्ता.

अचिरान्मोक्ष्यते सीते देवि ते जघनं गताम् ॥ धृतामेतां बहून्मासान्वेणीं रामो महाबलः ॥ ३४ ॥
तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् ॥ मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ॥ ३५ ॥
रावणं समरे हत्वा नचिरादेव मैथिलि ॥ त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ॥ ३६ ॥
समागता त्वं वीर्येण मोदिष्यसि महात्मना ॥ सुवर्षेण समायुक्ता यथा सस्येन मेदिनी ॥ ३७ ॥
गिरिवरमभितोऽनुवर्तमानो हय इव मण्डलमाशु यः करोति ॥
तमिह शरणमभ्युपेहि देवं दिवसकरं प्रभवो ह्ययं प्रजानाम् ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

सरमयासीतांप्रति रामे स्वेनसंदेशप्रापणप्रार्थने सीतयातस्यानौचित्यबुध्या स्वविषयेरावणाध्यवसायावगतयेतत्प्रेषणं ॥ १ ॥ रावणाध्यवसायाधिगमेनपुनरागतयासरमया सीतांप्रति रावणमात्राऽविन्ध्यनाम्नामन्त्रिणाचतंप्रतिबहुधारामायसीताप्रत्यर्पणचोदनेपि तस्यतदनर्पणेदृढाध्यवसायनिवेदनम् ॥ २ ॥ तथा रामेण रावणहननपूर्वकमयोध्यांप्रतितदानयननिवेदने तत्रोपश्रुतितयावानरसेनासंनाहभेरीशङ्खरवप्रादुर्भावः ॥ ३ ॥

अथ तां जातसंतापां तेन वाक्येन मोहिताम् ॥ सरमा ह्लादयामास पृथिवीं द्यौरिवाम्भसा ॥ १ ॥
ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखीवचः ॥ उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २ ॥
उत्सहेयमहं गत्वा त्वद्वाक्यमसितेक्षणे ॥ निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्तितुम् ॥ ३ ॥

---

कबभावः । समागम्य परिष्वज्य स्थितस्य तस्योरसि अश्रूणि वर्तयिष्यसीति योजना ॥ ३३ ॥ जघनं गतां नितम्बावलम्बिनीं । बहून्मासान् धृतां बहुमासैर्धृतां। अत्यन्तसंयोगेद्वितीया । रामवियोगात्प्रभृति बद्धामेतां वेणीं । मोक्ष्यते मोक्षयिष्यति । आर्षमात्मनेपदं ॥ ३४ ॥ निर्मोकं त्वचं । निर्मोकदृष्टान्तेन शोकाश्रुणो निःशेषनिवृत्तिरुच्यते । अश्रुमूलं शोकं त्यक्ष्यसीति भावः ॥ ३५ ॥ समग्रः संपूर्णमनोरथः ॥ ३६ ॥ सस्येन समायुक्ता मेदिनी सुवर्षेण यथा तथा महात्मना रामेण समायुक्ता त्वं वीर्येण तच्छौर्येण । मोदिष्यसि ॥ ३७ ॥ अथानिष्टनिवारणाय इष्टप्राप्तये च सूर्यनमस्कारं विदधाति—गिरिवरमिति॥ यः देवः । गिरिवरं मेरुं । अभितः परितः । "अभितः परितः—" इत्यादिना द्वितीया । अनुवर्तमानः आनुकूल्येन चरन् । प्रादक्षिण्येन चरन्नित्यर्थः । हयोश्च इव मण्डलं मण्डलगतिं आशु त्रिंशन्मुहूर्तेनैव करोति । देवं द्योतमानं । दिवसकरं शरणं रक्षणं । अभ्युपेहि गच्छ । वरणीयत्वे हेतुमाह—प्रभव इति। अयं दिवसकरः। प्रजानां देवतिर्यङ्मनुष्यस्थावराणां । प्रभवः कारणं । हिः प्रसिद्धौ । वर्षादिद्वारा जगदाप्यायक इत्यर्थः । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इत्युक्तेः ॥ न पुनरत्र जगत्कारणत्वोक्तिः । अश्वोपमानेन स्वातिरिक्तपुरुषप्रेर्यत्वाभिधानात् । "भीषास्माद्वातः पवते, भीषोदेति सूर्यः" इति श्रुतेः ॥३८॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

अथ सरमया रावणाशयपरिज्ञानं चतुस्त्रिंशे—अथ तामित्यादि ॥ अथेति प्रथमश्लोकेन पूर्वसर्गोक्तानुवादः। तेन वाक्येन ह्लादयामासेत्यन्वयः। यद्वा तेन वाक्येन रावणवाक्येन ॥ १ ॥ सख्याः सीतायाः । सखी सरमा ॥ २ ॥ कुशलं कुशलप्रतिपादकं । त्वद्वा-

---

ति० कुलदैवतं शरणमभ्युपैहि । हि यतः । अयंप्रजानां सुखदुःखहान्योरितिशेषः । प्रभवः ॥३८॥ इतित्रयस्त्रिंशःसर्गः ॥३३॥

[ पा० ] १ ङ.—ट. धृतामेकां. क. धृतामेवं. २ ङ. च. छ. झ. ञ. ट. सभाजितालंरामेण. ३ क. ख. ङ. झ.—ट. मभितोविवर्तमानो. ४ क. ग. ङ.—ट. देवि. ५ क. घ. ङ. झ. ट. महींदग्धामिवांभसा.

न हि मे क्रममाणाया निरालम्बे विहायसि ॥ समर्थो गतिमन्वेतुं पवनो गरुडोपि वा ॥ ४ ॥
एवं ब्रुवाणां तां सीता सरमां पुनरब्रवीत् ॥ मधुरं श्लक्ष्णया वाचा पूर्वं शोकाभिपन्नया ॥ ५ ॥
समर्था गगनं गन्तुमपि वा त्वं रसातलम् ॥ अवगच्छाम्यकर्तव्यं कर्तव्यं ते मदन्तरे ॥ ६ ॥
मत्प्रियं यदि कर्तव्यं यदि बुद्धिः स्थिरा तव ॥ ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥७॥
स हि मायाबलः क्रूरो रावणः शत्रुरावणः ॥ मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८ ॥
तर्जापयति मां नित्यं भर्त्सापयति चासकृत् ॥ राक्षसीभिः सुघोराभिर्या मां रक्षन्ति नित्यशः ॥९॥
उद्विग्ना शङ्किता चास्मि न स्वस्थं च मनो मम ॥ तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता ॥ १० ॥
यदि नाम कथा तस्य निश्चितं वाऽपि यद्भवेत् ॥ निवेदयेथाः सर्वं तत्परो मे स्यादनुग्रहः ॥ ११ ॥
सा त्वेवं ब्रुवतीं सीतां सरमा वल्गुभाषिणी ॥ उवाच वदनं तस्याः स्पृशन्ती बाष्पविक्लबम् ॥१२॥

क्यमित्यन्वयः । निवर्तितुमुत्सहेयं समर्थेत्यर्थः ॥ ३ ॥ बहुदूरं कथं गन्तुमर्हसीत्यत्राह—न हीति ॥ क्रममाणायाः गच्छन्त्याः ॥ ४ ॥ मधुरं मधुरार्थकं । श्लक्ष्णयेति वाङ्माधुर्योक्तिः । पूर्वं शोकाभिपन्नया संप्रति हृष्टयेत्यर्थः ॥ ५ ॥ संदेशमाहरिष्यामीति वदन्तीं सरमां प्रति न गन्तव्यमित्युक्ते सख्यहानिः, रामं प्रति प्रेषणं तत्तस्य सदृशं भवेदिति स्थितायाः सीताया न युक्तं अतो व्याजेन निपुणं परिहरति—समर्थेति ॥ मदन्तरे मद्विषये । अन्यैरकर्तव्यं कर्तुमशक्यं कार्यं त्वया कर्तव्यं कर्तुं शक्यमित्यवगच्छामि । यद्वा मद्विषये ते कर्तव्यं अवश्यकरणीयं जानामीत्यर्थः ॥ ६ ॥ रावणं गत्वा स किं करोतीति ज्ञातुमिच्छामि । त्वत्कर्तृकं रावणज्ञानमिच्छामीत्यर्थः ॥७॥ तस्य ज्ञानस्य किं प्रयोजनमित्यत्राह—स हीति ॥ पीतमात्रा सद्यः पीता । वारुणी मद्यं ॥ ८ ॥ तर्जापयति तर्जनंकारयति । भर्त्सापयति भर्त्सनं कारयति । आत्वपुगागमावार्षौ । या राक्षस्यो मां रक्षन्ति ताभिस्तर्जापयतीति संबन्धः । नासाग्रे अङ्गुलिन्यासनयनभ्रामणदन्तदर्शनप्रभृतिमुखचेष्टाभिर्भीजननं तर्जनं । हनिष्यति दहिष्यतीत्यादि वाचा भीजननं भर्त्सनं ॥ ९ ॥ कुत उद्विग्नेत्यत्राह—तद्भयाच्चेति । कुतः शङ्कितेत्यत्राह—अशोकवनिकां गतेति ॥ १० ॥ तस्य रावणस्य । यदि नाम कथा यदि वार्तास्ति । यच्च तस्य निश्चितं अध्यवसाय इति यावत् । तत्सर्वं निवेदयेथाः । ततश्च मे परोनुग्रहः उपकारः । कृतःस्यात् । याहिनामेतिपाठः सम्यक् ॥ ११ ॥ वल्गु सुन्दरं यथा तथा भाषितुं शीलमस्या अस्तीति वल्गुभाषिणी । बाष्पविक्लबं बाष्पव्याकुलं ।

ति० पूर्वंशोकाभिपन्नया आश्वासनात्पूर्वंजातेनशोकेनेषद्युक्तया ॥५॥ ति० अथसीताशूर्पणखायाइवास्याअपिरामसमीपगमनमनुचितमितिविचार्यतत्सामर्थ्यश्लाघापूर्वंतामुचितकृत्येनियोजयति—समर्थेति । स० हेमदन्तरे मयिअन्तरंअन्तरात्मा मनः प्राणोवायस्याः सातत्संबुद्धिः ॥ ६ ॥ स० यच्चासकृत् आसः उपवेशनं तंकरोतीतिकृत् । सदामत्समीपवर्ति रक्षः । राक्षसीभिः मध्येमध्येस्वप्रेषिताभिः । भर्त्सापयति एतावत्कालेनापिसीतानमद्वशंप्रापितात्वच्छिक्षयावाअनुनयेनवेतिपरुषभाषणेनतर्जयति । तत्रापिसुघोराभीराक्षसीभिः साक्षान्मामपितर्जापयति भर्त्सयति । योमांरक्षति वनावनौस्थापयित्वारक्षति सरावणःकिंकरोति । यद्वा योमामसकृद्रक्षति तंजनंतर्जापयति । पूर्ववदुदीरितं । अवाचिकीभीषिकातर्जनं वाचिकीतुसाभर्त्सनमितिनागोजिभट्टः । तत्र तद्बुद्धिरेवशरणं । "भर्त्सतर्ज संतर्जने" इत्यमरव्याख्यानेभानुदीक्षितः । तर्हिदुर्जनतर्जनेनेवानशनेनपीडितायास्तवकिमाधारेणजीवधारणमित्यतोवाह—नित्यशइति । सदासुखोयस्त्वदुक्तः सरामएवमांरक्षतीतिवा । पुगागमस्तु " बहुलमेतन्निदर्शनं " अदन्तधातुनिदर्शनमित्यर्थः । बाहुलकादन्येपिबोध्याः । तद्यथा अपपर्णत् । विष्कदर्शनेइत्यादि इतिकौमुद्युक्तेःशाकटायनरीत्यासंभवति ॥ ९ ॥ स० याऽहंप्राक्नोद्विग्ना नशङ्किताच कस्माच्चिदपि । ममनः स्वस्थं । तादृश्यप्यहं तद्भयात् रावणकर्तृकभीतिहेतोः । अशोकवनिकांगता प्राप्ता । अतश्चोद्विग्नेत्यन्वयः । यद्वा त्वत्सान्त्वनतःपूर्वंतद्भयादशोकवनिकांगतोद्विग्ना । रामक्षेमश्रवणसमनन्तरंतु इतरत्पूर्ववत् । तथापि सकपटीतिपुनर्वार्ताश्रवणेच्छेतिभावः ॥ १० ॥ स० तस्य रावणस्य । कथा युद्धसंनाहकथा । मद्विषयनिग्रहानुग्रहकथावा । तस्यनिश्चितंवापियद्भवेत्तत्सर्वंनिवेदयेथाः ज्ञात्वा मामावेदयेथाः । तन्निवेदनंमेमदुपरिवरोनु-

[ पा० ] १ क. ङ.—ट. सरमामिदमब्रवीत्. २ झ. पूर्वंशोक. ३ घ. गन्तुमसि. ४ ङ. झ. अवगच्छाय. ५ घ. मिच्छाम्यहं. ६ झ. ञ. ठ. योमांरक्षति. ७ ङ. ज.—ट. साप्येवं. ८ ङ. च. छ. झ. ञ. ट. मृदुभाषिणी.

एष ते यद्यभिप्रायस्तदा गच्छामि जानकि ॥ गृह्य शत्रोरभिप्रायमुपावृत्तां च पश्य माम् ॥ १३ ॥
एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः ॥ शुश्राव कथितं तस्य रावणस्य समन्त्रिणः ॥ १४ ॥
सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः ॥ पुनरेवागमत्क्षिप्रमशोकवनिकां तदा ॥ १५ ॥
सा प्रविष्टा पुनस्तत्र ददर्श जनकात्मजाम् ॥ प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६ ॥
तां तु सीता पुनः प्राप्तां सरमां वल्गुभाषिणीम् ॥ परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥१७॥
इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः ॥ क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥ १८ ॥
एवमुक्ता तु सरमा सीतया वेपमानया ॥ कथितं सर्वमाचष्ट रावणस्य समन्त्रिणः ॥ १९ ॥
जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः ॥ अविद्धेन च वैदेहि मन्त्रिवृद्धेन बोधितः ॥ २० ॥
दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली ॥ निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतम् ॥ २१ ॥
लङ्घनं च समुद्रस्य दर्शनं च हनूमतः ॥ वधं च रक्षसां युद्धे कः कुर्यान्मानुषो भुवि ॥ २२ ॥
एवं स मन्त्रिवृद्धैश्चाविद्धेन बहु भाषितः ॥ न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ २३ ॥
नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिलि ॥ सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्तते ॥ २४ ॥

---

वदनं स्पृशन्ती परिमृजन्ती ॥ १२ ॥ तदा गच्छामीतिपाठः । गृह्य ज्ञात्वा । उपावृत्तां च पुनरागतामेव । पश्य तत्र सन्देहो नास्तीत्यर्थः ॥ १३—१५ ॥ स्वामेव आत्मानमेव । सरमामित्यर्थः । आत्मवाचिनः स्वशब्दस्य आबन्तत्वमार्षं । भ्रष्टपद्मां पद्मासनहीनामित्यर्थः ॥ १६ ॥ सुस्निग्धं स्नेहयुक्तं यथा तथा ॥ १७ ॥ सुखमासीनेत्यन्वयः ॥ १८ ॥ वेपमानया किंवा भयं वक्ष्यतीति कम्पमानया ॥ १९ ॥ जनन्या कैकसीनाम्न्या । अविद्धेन अविद्धाख्येन मन्त्रिवृद्धेनच । राक्षसेन्द्रस्त्वन्मोक्षार्थं बृहद्वचनं बोधितः ॥ २० ॥ तदेव वचनं दर्शयति—दीयतामिति ॥ जनस्थाने यदद्भुतं खरवधादिकं कृतं तदेव पर्याप्तं प्रमाणान्तरनिरपेक्षं । निदर्शनं दृष्टान्तः । करिष्यमाणस्य रामपराक्रमस्येति शेषः ॥ २१ ॥ तिष्ठतु रामः तद्भृत्यो हनुमानेव सर्वान्राक्षसाञ्जेतुं समर्थ इत्याशयेन तत्पराक्रमं वर्णयति—लङ्घनमिति ॥ दर्शनं सीतादर्शनं । मानुषः मनुष्यसंबन्धी पुरुषः । कः कुर्यात् । “ तस्येदं ” इत्यण् । स्वदूतमुखेनानेककार्यकारी रामो देव एवेतिभावः ॥ २२ ॥ अविद्धेन तन्नाम्ना । मन्त्रिवृद्धैरिति पूजायां बहुवचनं । बह्विति क्रियाविशेषणं ॥ २३ ॥ हि यस्मात्सामात्यस्य एष निश्चयो वर्तते इति तस्मात् युद्धे अमृतः सन् त्वां मोक्तुं नोत्सहतीति । इतिर्हेतौ इति निश्चय इत्यन्वय इत्येके । इति मन्य इत्यपरे । इह मैथिलीति केषुचित्पाठः

---

ग्रहःस्यादितिशेषः ॥ ११ ॥ **ति०** उपावर्तामि परावृत्त्याऽऽगच्छामि ॥ १३ ॥ **स०** स्वामेव आत्मीयामागतिं । “ आत्मीयायामिति । आत्मज्ञातिधनेषुतुस्त्रीत्वमेवनास्तीतिभावइति ” मनोरमोक्तेरात्मवाचकत्वेस्वशब्दस्यस्त्रीलिङ्गत्वासंभवात् । स्विकायामित्यादिश्रीहर्षादिप्रयोगाणामात्मीयत्वसंज्ञात्वादिनानिर्वाहस्यतत्रैवोक्तेश्च । “ अर्थान्तरेतुनस्त्री ” इतिकौमुदीवाक्यंधृत्वाआत्मज्ञातिधनेष्वित्यर्थइतितत्त्वसुबोधिन्यभिधानाच्च । भ्रष्टपद्मां कमलंकन्दुकीकृत्यखेलनसमयेहस्तविच्युतलतादिलीननालीकां । श्रियं लक्ष्मीमिव ॥ १६ ॥ **ति०** बृहद्वचः सर्वथाहितत्वाद्वचसोबृहत्त्वं । तदुक्त्वा चोदितोबोधितः ॥ २० ॥ **स०** पूर्वंमन्त्रिवृद्धेनेत्येकवचनमुपलक्षकमपरमन्त्रिवृद्धानामितिज्ञापयितुमत्रमन्त्रिवृद्धैरितिबहुवचनं । तत्रैकवचनेन एकएवाविन्ध्यउपपादनप्रकारभेदादितिःपाशानित्यादिवद्बहुवचनमितिवा । तत्रमान्यत्वान्मातुःपुरस्करणं । तस्याआलोचनकार्यानियुक्तत्वेनात्रवृद्धमन्त्रिपुरस्करणमितिविवेकः ॥ २३ ॥ **स०** नोत्सहति । चुरादिरयमाधृषीयःपरस्मैपदेवर्तते । “ सएवायंनागःसहतिकलभेभ्यःपरिभवं ” इत्यादिप्रयोगात् । सामात्यस्य अविन्ध्यादिव्यतिरिक्तमन्त्रिसहितस्य ॥ २४ ॥

[ **पा०** ] १ क.—ट. स्तस्माद्गच्छामि. २ ङ. झ. ट. मुपावर्तामिमैथिलि. ३ ग. कथितंतस्य. ४ ख. घ. च. छ. तामेव. ५ ङ. झ. ञ. ट. प्रियभाषिणीं. घ. प्रियवादिनीं. ६ ङ. झ. अतिस्निग्धेन. ७ ङ. झ. युधि. ८ ङ. च. छ. झ. ञ. ट. मन्त्रिवृद्धैश्चमात्राचबहुबोधितः.

तदेषा निश्चिता बुद्धिर्मृत्युलोभादुपस्थिता ॥ भयान्न शक्तस्त्वां मोक्तुमनिरस्तस्तु संयुगे ॥
राक्षसानां च सर्वेषामात्मनश्च वधेन हि ॥ २५ ॥
निहत्य रावणं संख्ये सर्वथा निशितैः शरैः ॥ प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे ॥ २६ ॥
एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः ॥ श्रुतो वानरसैन्यानां कम्पयन्धरणीतलम् ॥ २७ ॥
श्रुत्वा तु तद्वानरसैन्यशब्दं लङ्कागता राक्षसराजभृत्याः ॥
नष्टौजसो दैन्यपरीतचेष्टाः श्रेयो न पश्यन्ति नृपस्य दोषे ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणभूषणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रामसेनारणभेरीशङ्खरवश्रवणखिन्नेनरावणेन सभायांमन्त्रिणःप्रति तदानीमपितेषामौदासीन्यस्यानौचित्योक्त्यागर्हणम् ॥ १ ॥ माल्यवतारावणंप्रति शास्त्रोदितनीतिप्रदर्शनपूर्वकं विपत्सूचकापशकुननिवेदनेन रामेणसंधानविधानम् ॥ २ ॥

तेन शङ्खविमिश्रेण भेरीशब्देन राघवः ॥ उपयाति महाबाहू रामः परपुरंजयः ॥ १ ॥
तं निनादं निशम्याथ रावणो राक्षसेश्वरः ॥ मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २ ॥
अथ तान्सचिवांस्तत्र सर्वानाभाष्य रावणः ॥ सभां सन्नादयन्सर्वामित्युवाच महाबलः ॥
जगत्संतापनः क्रूरो गर्हयन्राक्षसेश्वरः ॥ ३ ॥

---

॥ २४ ॥ एतादृशाध्यवसायस्य किं निमित्तमित्यपेक्षायां मरणलोभ एवेत्याह—तदेषेत्यादिसार्धश्लोकः ॥ तत् तस्येत्यर्थः । राक्षसानामात्मनश्च वधेन अनिरस्तः अनिराकृतः । केवलभयात्त्वां मोक्तुं न शक्तः । नोत्सहत इत्यर्थः ॥ २५ ॥ कथं तर्हि मे निर्गमनमित्यत आह—निहत्येति ॥ एतत्सर्वं तव नेत्रसौभाग्यलक्षणादित्यभिप्रायेणाह—असितेक्षण इति ॥ २६ ॥ सरमोक्तस्योपश्रुतिनिमित्तं दर्शयन्नेव कथाशेषं दर्शयति—एतस्मिन्निति ॥ अत्र भेर्यादिशब्दो भेर्यादिशब्दपरः । वानरसैन्यानामपि भेर्यादिकमस्तीति किष्किन्धाकाण्डे दर्शितं ॥ २७ ॥ श्रुत्वेति ॥ श्रेयो न पश्यन्ति नृपस्य दोष इति । रावणस्य दोषे निमित्तभूते जीवनभूतमात्मनः श्रेयो न पश्यन्ति ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

अथ माल्यवदुपदेशः पञ्चत्रिंशे—तेनेति ॥ शङ्खविमिश्रेण शङ्खशब्दविमिश्रेण । उपयाति उपाययौ ॥ १ ॥ ध्यानमास्थाय किं मयेदानीं कर्तव्यमिति ध्यानं कृत्वेत्यर्थः ॥ २ ॥ आभाष्य संबोध्य । सभां आस्थानमण्डपं । उदीक्षणाशयमुद्घाटयति—गर्हयन्निति । गर्हयन्नुवाच गर्हात्मिकांवाचमुवाचेत्यर्थः

---

**स०** मृत्युलोभात् मृत्युदेव्याएवुवियमानाद्गार्ध्यात् ॥ २५ ॥ इतिचतुस्त्रिंशःसर्गः ॥ ३४ ॥

**स०** नादिना प्रतिध्वनिमता। नादिना नवियन्तेआदिनोराक्षसायेनतादृशेन । "आदिनोराक्षसाःप्रोक्ताः" इतिभागवतदशमस्कन्धतात्पर्यात् । परपुरं वैरिनगरं । महाबाहूरामउपयाति । जयश्च तमुपयाति । पुरमितिशेषोवा । एतत्पक्षे परपुरञ्जयइतिसमस्तं ॥ १ ॥ **ति०** अगर्हयन्निति च्छेदः ॥ ३ ॥ **स०** अस्यरामस्य । सागरस्यतरणविक्रमं बलेनसहितंपौरुषंचेतियदुक्तवन्तः तच्छ्रुत-

[ पा० ] १ घ. ङ. झ. तदेषांसुस्थिरा. क. ख. च. छ. ज. ञ. तदेषासुस्थिरा. २ ग. ट. दवस्थिता. ३ घ. ङ. झ. ट. वैसर्वसैन्यानां. ४ ख.—ङ. झ. ञ. ट. तंवानरसैन्यनादं. ५ ङ. च. छ. झ. ञ. ट. हतौजसो. क. ख. घ. भ्रष्टौजसो. ६ घ. परीतचित्ताः. ७ ख. च. छ. ज. दोषैः. ग. ङ. झ. ञ. दोषात्. ८ ङ. झ. ट. नादिना. ९ च. ञ. सचिवानिदमब्रवीत्. १० क. ख. च. ञ. गर्हयन्हितवादिनः.

तरणं सागरस्यापि विक्रमं बलसंचयम् ॥ यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् ॥ ४ ॥
भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ॥ तूष्णीकानीक्षतोऽन्योन्यं विदित्वा रामविक्रमम् ॥ ५ ॥
ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः ॥ रावणस्य वचः श्रुत्वा मातुः पैतामहोऽब्रवीत् ॥ ६ ॥
विद्यास्वभिविनीतो यो राजा राजन्नयानुगः ॥ स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ॥ ७ ॥
संदधानो हि कालेन विगृह्णंश्चारिभिः सह ॥ स्वपक्षवर्धनं कुर्वन्महदैश्वर्यमश्नुते ॥ ८ ॥
हीयमानेन कर्तव्यो राज्ञा संधिः समेन च ॥ न शत्रुमवमन्येत ज्यायान्कुर्वीत विग्रहम् ॥ ९ ॥
तन्मह्यं रोचते संधिः सह रामेण रावण ॥ यदर्थमभियुक्ताः स्म सीता तस्मै प्रदीयताम् ॥ १० ॥
यस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः ॥ विरोधं मा गमस्तेन संधिस्ते तेन रोचताम् ॥ ११ ॥
असृजद्भगवान्पक्षौ द्वावेव हि पितामहः ॥ सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥ १२ ॥

॥ ३ ॥ गर्हाप्रकारमाह श्लोकद्वयेन—तरणमिति ॥ तूष्णीकान् तूष्णींशीलान् । "शीले को मलोपश्च" इति कप्रत्ययोमलोपश्च । "तूष्णींशीलस्तु तूष्णीकः" इत्यमरः । निरुत्साहानित्यर्थः ॥ ४—५ ॥ पितामहस्य पुत्रः पैतामहः पितृव्य इत्यर्थः । कैकसी सुमालिपुत्रीत्युत्तररामायणेभिधानान्माल्यवतस्तद्भ्रातृत्वाच्च पितामहशब्दस्य नियतसापेक्षत्वान्नासामर्थ्यदोषः । पितेत्यर्थइत्येके । वृद्धो मातामहोऽब्रवीदिति क्वचित्पाठः ॥ ६ ॥ नीतिमार्गपर्यालोचनायां बलवता रामेण संधिः करणीय इत्यभिप्रायेण प्रथमं नयस्य श्रेयोहेतुत्वं दर्शयति—विद्येति ॥ विद्यासु आन्वीक्षिकीत्रयीवार्तादण्डनीत्याख्यासु चतसृषु विद्यासु । अभिविनीतः अभितः शिक्षितः । अतएव नयानुगः नीतिशास्त्रानुसारी योराजा सः चिरं ऐश्वर्यं ईश्वरत्वं । शास्ति अधितिष्ठति । तमिममर्थं विशदमुक्तवान्कामन्दकः—"आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः । तद्विद्भिस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥ आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥ विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम् । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति" इति ॥ ७ ॥ नयानुग इत्युक्तं तत्र नयस्वरूपमाह—संदधान इति ॥ कालेन स्वबलक्षयकालेन । संदधानः संधानं कुर्वन् । स्वबलवृद्धिकालेन विगृह्णन् । विग्रहं कुर्वन् । ऐश्वर्येच्छुना कालानुरूपं संधिविग्रहौ कार्यावित्यर्थः । एवं कुर्वतः फलमाह—स्वपक्षेति ॥ ८ ॥ संधेर्विग्रहस्य च कालं विविच्य दर्शयति—हीयमानेनेति ॥ हीयमानेन हीयमानबलेन । समेन समबलेन च राज्ञा स्वशत्रुणा सह संधिः कर्तव्यः । ज्यायान् अधिकबलस्तु । शत्रुं नावमन्येत नोपेक्षेत । किंतु तेन सह विग्रहं कुर्वीत । हीयमानः समः संधिं कुर्यात् । अधिको विग्रहं कुर्यादित्यर्थः ॥ ९ ॥ अस्त्वेवं प्रस्तुते किमुपन्यस्तं तत्राह—तदिति ॥ तत् तस्मात् । एवं नीतिशास्त्रस्थितेः हीयमानस्य तव बलवता रामेण संधिर्मह्यं रोचत इत्यर्थः । बलवता संधिर्दानेन विना न फलति । तच्च सीताप्रत्यर्पणादेव सेत्स्यतीत्याह—यदर्थमिति । यदर्थं अभियुक्ताः स्म विरुद्धाः स्म । सा सीता तस्मै रामाय प्रदीयतां ॥ १० ॥ कथं रामस्य बलवत्त्वं तत्राह—यस्येति ॥ देवाश्च ऋषयश्च देवर्षयः । ते तुभ्यं । रामस्य देवबलवत्त्वात् बलवत्त्वमित्यर्थः ॥ ११ ॥ देवादीनां रामजयकाङ्क्षित्वे को हेतुरित्याशङ्क्य देवादीनां धर्मपक्षपातित्वाद्धर्मस्य रामाश्रयत्वादित्यभिप्रेत्याह—असृजदित्यादिना ॥ भगवान् सर्वज्ञः पितामहः । हि यस्मात् । सुराणां असुराणां च । पक्षौ अवलम्बभूतौ । द्वावेव धर्माधर्मौ । असृजत् । अतः धर्माधर्मौ तदाश्रयौ सुरासुराश्रयौ । असुरशब्देनात्रासुरप्रकृतयो राक्षसादयश्च

मितिगर्हयन् । गर्हणंचोक्तस्याप्यनुक्तप्रायीकरणं ॥ ४ ॥ स० अद्य आरामविक्रमं रामविषयेवनेमयाकृतंभार्याहरणविक्रमं । विदित्वा ज्ञात्वापि । तूष्णीकान् तूष्णींस्थितान् निरुत्साहानितियावत् । अन्योन्यंईक्षतः ईक्षमाणान् । वेद्मि । इदंकिमितिशेषः । रामविक्रमं रामस्यविक्रमं लङ्काभूमिकापादविक्षेपं तन्मात्रमितियावत् । युद्धमुखमनवलोक्यैवंभावोनक्वाप्यवलोकितइतिभावः ॥५॥

[ पा० ] १ ङ. च. झ. ट. सागरस्यास्य. २ ङ. च. छ. झ. ञ. ट. बलपौरुषं. ३ ग. ङ. झ. ट. इतिमातामहोऽब्रवीत्. ४ ङ. छ. झ. ञ. स्वपक्षेवर्धनं. ५ च. छ. ञ. सन्धिस्तवरामेण. ६ ङ. झ. ट. मभियुक्तोसि. ७ क.—ट. तस्य.

धर्मो हि श्रूयते पक्षो ह्यमराणां महात्मनाम् ॥ अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ॥ १३ ॥
धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम् ॥ अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते ॥ १४ ॥
तत्त्वया चरता लोकान्धर्मो विनिहतो महान् ॥ अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ॥ १५ ॥
स प्रमादाद्विवृद्धस्तेऽधर्मोऽभिग्रसते हि नः ॥ विवर्धयति पक्षं च सुराणां सुरभावनः ॥ १६ ॥
विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया ॥ ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ॥ १७ ॥
तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः ॥ तपसा भावितात्मानो धर्मस्यानुग्रहे रताः ॥ १८ ॥

विवक्षिताः ॥ १२ ॥ अनयोः कतरः केषां पक्ष इत्यत्राह—धर्मो हीति ॥ महात्मनामिति हेतुगर्भविशेषणं । महास्वभावानामित्यर्थः । समीचीनप्रकृतीनामितियावत् । अमहात्मनामित्यसुरादिविशेषणं चार्थसिद्धं । तथाच धर्मस्य देवपक्षत्वाद्रामस्य तदाश्रयत्वाद्देवादयो रामपक्षपातिन इतिभावः ॥ १३ ॥ एवं देवादिपक्षपाताद्रामस्य बलीयस्त्वमुपपाद्य धर्मस्य प्राबल्यादपि तदाह—धर्म इति । अत्र यदेतिशेषः । धर्मः अधर्मं यदा ग्रसते अभिभवति । तदा कृतं युगं अभूत् भवति । पुरुषेषु प्रवर्तते । आर्षः कालव्यत्ययः । अधर्मो यदा धर्मं ग्रसते तदा तिष्यः कलिः । प्रवर्तते । "तिष्यः कलौ च पुष्ये च" इत्यमरः ॥ १४ ॥ ततः किमित्यपेक्षायां त्वय्यधर्मेण कलेः प्रवेशात्कृतापेक्षया कलेर्दुर्बलत्वादस्मदपेक्षया रामो बलवानित्याह—तदिति ॥ लोकान् चरता दिग्विजयार्थमिति शेषः । विनिहतः । परदारपरिग्रहार्थमिति शेषः । अस्मदिति पञ्चमीबहुवचनं । परे शत्रवो रामादयो धार्मिकाः । यद्वा कृतं युगमिति शब्दसमुदायेन शुभं लक्ष्यते । तिष्य इत्यनेनाशुभं । यदा धर्मः अधर्मं ग्रसते तदा शुभं भवति । यदा अधर्मो धर्मं ग्रसते तदा अशुभं भवतीत्यर्थः । एवं भवतु मया किं कृतमित्यत्राह—तदिति ॥ तत् धर्माधर्मयोरेवंरूपत्वात् । त्वया शुभहेतुर्धर्मो विनिहतः अशुभहेतुरधर्मश्च परिगृहीतः । तेन पराजयरूपाशुभहेत्वधर्मकृद्भ्योऽस्मत् जयरूपशुभहेतुधर्मपराः परे बलिन इत्यर्थः ॥ १५ ॥ अधर्मं स्वीकृत्य धर्मे निहते तेषां सुराणां बलवत्त्वं कथमित्याशङ्क्याधर्मस्याश्रयनाशकत्वादित्यभिप्रायेणाह—स इति ॥ सः अधर्मः । ते प्रमादात् अविमृश्यकरणात् । विवृद्धः । नः अस्मान् । ग्रसते नाशयति । सुरभावनः सुरानुकूलः सन् सुराणां पक्षं विवर्धयति ॥ १६ ॥ स्वकृतस्याधर्मस्य सुरपक्षवृद्धिहेतुत्वं कथमित्याशङ्क्य ऋषीणामुद्वेगजननद्वाराऽधर्मप्रवर्तकत्वादित्याह—विषयेष्विति ॥ विषयेषु प्रसक्तेन अतएव यत्किञ्चित्कारिणा देवर्षिप्रमुखानां कन्यापत्नीहरणादिकं कुर्वता । ऋषीणामुद्वेगः मनस्तापः । जनितः कृतः ॥ १७ ॥ अग्निकल्पत्वमुपपादयति—तेषामिति । उद्वेगात्किं कृतवन्तस्तत्राह—तपसेति ॥ भावितात्मानः पूता-

**ति॰** राक्षसाः राजसाः असुरास्तामसाइतिभेदः ॥ १३ ॥ **रामानु॰** ततस्तिष्यःप्रवर्ततइतिपाठः । अत्रयदेत्यध्याहार्यं । यदा कृतंयुगमभूत् "तपःशौचंदयासत्यं" इतिश्रीभागवतोक्तप्रकारेणधर्मपादचतुष्टयविशिष्टंकृतयुगंभवति । धर्मवृद्धिर्भवतीत्यर्थः । तदा धर्मः अधर्मंग्रसते । अनेनधर्मपक्षपातिनांवृद्धिरधर्मपक्षपातिनांहानिश्चसूचिता । यदातिष्यःप्रवर्तते अधर्मगौरित्यादिनाश्रीभागवतोक्तसङ्गमदानृताद्यधर्मपादचतुष्टयविशिष्टंकलियुगंप्रवर्तते । अधर्मवृद्धिर्भवतीत्यर्थः । ततः तदा अधर्मः अभिवृद्धाधर्मः । धर्मं ग्रसते । अनेनाधर्मपक्षपातिनांवृद्धिर्धर्मपक्षपातिनांहानिश्चसूचिता ॥ **ति॰** अथतयोःकालविशेषेणाभिभवानभिवौदर्शयति—**धर्मो वैइत्यादिना** । यदाकृतंयुगमभूत्तदा तस्मादेवकालाद्धेतोःप्रवृद्धोधर्मः अधर्मंग्रसते अभिभवति । वैप्रसिद्धं । यदातिष्यः कलिः । प्रवर्तते तदा ततएवहेतोः । अधर्मोधर्मंग्रसते । कलौपादेनधर्मस्थितेः । तथाहि । सर्वदासुखसाधनंधर्मएकरूपएव । अधर्मस्त्रिधा । धर्मान्यस्तद्विरोधीतदभावश्चेति । तत्राद्यः शाक्यादिधर्ममार्गेदृष्टोधर्माभासः । द्वितीयोहत्यादिलक्षणः । अन्त्यः स्वस्वविहितनित्यधर्मलोपात्मा । कृते त्रिविधाधर्माभावएव । त्रेतादौ क्रमादेकद्वित्रिभिरधर्मैःसंवलनंधर्मस्य । एवंच कलावधर्माभिभूतपादत्रयत्वादेकपादेनधर्मस्यवृत्तिरक्षता । एवंच धर्मतोदेवत्वमधर्मतोराक्षसत्वादीतिसूचितं । नन्वधर्मस्यरक्षोसुरधर्मत्वे रक्षोसुराणां धर्मफलैश्वर्यजयादिकथमितिचेच्छृणु । देवाः केवलधर्मपराः । रक्षोसुराः काम्यराजसतामसधर्ममात्रपराः । तादृशधर्ममनुतिष्ठतोपितानुक्तत्रिप्रकाराधर्मोनमुञ्चत्येव । रजस्तमःप्रकृतित्वात् । अतोधर्मकरणेनसुखिनोपितेकाम्यत्वेनसान्ततयाधर्म-

[ पा० ] १ ङ. च. झ. ट. तदातिष्यः २ क. ख. घ. ङ. च. झ. ञ. ट. धर्मोपि. ३ क. ख. ग. ङ.—ट. त्वप्रवृद्धस्ते. ४ घ. प्रतापो.

मुख्यैर्यज्ञैर्यजन्त्येते नित्यं तैस्तैर्द्विजातयः ॥ जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते ॥ १९ ॥
अभिभूय च रक्षांसि ब्रह्मघोषानुदैरयन् ॥ दिशोपि विद्रुताः सर्वाः स्तनयित्नुरिवोष्णगे ॥ २० ॥
ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश ॥ २१ ॥
तेषु तेषु च देशेषु पुण्येष्वेव दृढव्रतैः ॥ चर्यमाणं तपस्तीव्रं संतापयति राक्षसान् ॥ २२ ॥
देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया ॥ २३ ॥
मानुषा वानरा ऋक्षा गोलाङ्गूला महाबलाः ॥ बलवन्त इहागम्य गर्जन्ति दृढविक्रमाः ॥ २४ ॥
उत्पातान्विविधान्दृष्ट्वा घोरान्बहुविधांस्तथा ॥ विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥ २५ ॥
खराभिस्तनिता घोरा मेघाः प्रतिभयंकराः ॥ शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ २६ ॥
रुदतां वाहनानां च प्रपतन्त्यस्रबिन्दवः ॥ ध्वजा ध्वस्ता विवर्णाश्च न प्रभान्ति यथा पुरा ॥२७॥
व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् ॥ प्रविश्य लङ्कामनिशं समवायांश्च कुर्वते ॥ २८ ॥
कालिकाः पाण्डुरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः ॥ स्त्रियः स्वप्नेषु मुष्णन्त्यो गृहाणि प्रतिभाष्य च २९
गृहाणां बलिकर्माणि श्वानः पर्युपभुञ्जते ॥ खरा गोषु प्रजायन्ते मूषिका नकुलैः सह ॥ ३० ॥

त्मानः । धर्मस्यानुग्रहे संवर्धने । रताः ॥ १८ ॥ मुख्यैः श्रेष्ठैः । तैस्तैः अग्निष्टोममारभ्य विश्वसृजामयनपर्यन्तैः । अग्नीनुद्दिश्य जुह्वति होमं कुर्वन्ति । देवतोद्देशेन द्रव्यत्यागो यागः । त्यक्तस्याग्नौ प्रक्षेपो होम इत्यनयोर्भेदः ॥ १९ ॥ अभिभूय अगणयित्वा । ब्रह्मघोषान् उदैरयन् । उच्चारयन्ति स्म । वेदांश्चोच्चैरधीयत इत्यस्य विवरणमिदं । तपःप्रभृतिकर्मणः फलमाह—दिश इत्यादिना ॥ सर्वा दिशःप्रतिविद्रुताः । राक्षसा इतिशेषः । उष्णगे ग्रीष्मे । स्तनयित्नुरिव मेघ इव । जातावेकवचनं ॥ २०—२२ ॥ बलिनोपि देवाः ब्रह्मदत्तवरमहिम्ना न प्रहर्तुं शक्नुयुरिति चेत्तत्राह—देवदानवेत्यादिना ॥ देवदानवयक्षेभ्य एवावध्यत्ववरो गृहीतः । न तु मानुषादिभ्य इति भावः ॥ २३ ॥ तर्हि किमायातमित्यत्राह—मानुषा इति ॥ द्वयोरपि बहुवचनं पूजायां । महाबला महासैन्याः । इह लङ्कायां ॥ २४ ॥ न केवलं परागमनेन किं त्वशुभनिमित्तदर्शनेनापि भयमुत्प्रेक्ष्यमित्याह—उत्पातानिति ॥ उत्पातान् विविधान् दिव्यान्तरिक्षभौमभेदभिन्नान् । बहुविधान् भौमादिषुप्रत्येकंविविधान् । अनुपश्यामि तर्कयामि ॥२५॥ खराभिस्तनिताः परुषगर्जिताः । घोराः विरूपाः । प्रतिभयंकराः । प्रतीत्युपसर्गमात्रं । भयंकरा इत्यर्थः ॥ २६ ॥ ध्वस्ताः धूसराः । अतएव विवर्णाः विगतवर्णाः ॥ २७ ॥ व्यालाः दुष्टाः । वाश्यन्ति वाशितं कुर्वन्ति । कुत्सितरुतं कुर्वन्तीत्यर्थः । समवायान् सङ्घान् ॥ २८ ॥ कालिकाः नीलवर्णाः स्त्रियः । पूतनाप्रमुखा इति यावत् । शक्तय इत्येके । पाण्डुरैर्दन्तैरुपलक्षिताः सत्यः । प्रतिभाष्य प्रतिकूलमाभाष्य । गृहाणि गृहस्थितवस्तूनि । मुष्णन्त्यः हसन्ति । एवं दृश्यन्त इत्यर्थः ॥ २९ ॥ बलिकर्माणि बलिकर्मसाधनानि हवींषि । नकुलैः सह । वर्तन्तइतिशेषः

फलान्तेऽधर्मफलभोगभाजइतिनदोषः ॥ १४ ॥ स० उष्णगे ग्रीष्मर्तुगतेसूर्येस्तनयित्नुर्बलाहकइवविप्रद्रुताःविप्रद्रुतानिरक्षांसि । पलायनएवपुरुषकारइतिपुंशक्तिप्रयुक्तःपुल्लिङ्गनिर्देशः । रक्षांसीतिप्रकृतत्वात् । राक्षसाइतिशेषोवा ॥२०॥ ति० धूमः उत्तिष्ठतीतिशेषः ॥ २१ ॥ स० कालिकाः ग्रामस्थाः महाकालीभद्रकालीत्यादयः । प्रतिभाष्य श्रोतृभयदायिभाषांकृत्वा । पाण्डुरैर्दन्तैः अग्रतःस्थिताःसत्यःप्रहसन्ति । दन्तानांपाण्डुरत्वोक्त्या उक्त्याचविरुद्धभाषणमोषणहसनादीनां निश्चितंमरणं । किञ्चिद्व्यवधानेनभविष्यतीतिसूचयति ॥ २९ ॥ स० श्वानः सारमेयाः । उपसेवते उपसेवन्ते नवायसाः । " पुनःश्वानोभविष्यति " " श्वानसूकरमार्जार—" इत्यादिप्रयोगादकारान्तोवाश्वानशब्दः ॥ श्वा नः अस्माकमिदमितिपर्युपसेवते । नः बलिकर्माणि श्वा उपसेवते

[ पा० ] १ ङ. झ. यजन्तेतेतैस्तैर्यत्तेद्विजातयः. २ क. ख. ग. ङ.—ट. दिशोविप्रद्रुताः. ३ ङ. झ. आवृत्य. ४ ङ.—ट. बहुविधान्बहून्. ५ ङ.—ट. रजोध्वस्ताः. ६ क. ङ. झ. ञ. यथापुरं. ७ ङ. झ. ट. लङ्कामारामे. ८ ङ.—ठ. पर्युपसेवते. ९ ख. ङ. च. छ. झ. ट. नकुलेषुच.

मार्जारा द्वीपिभिः सार्धं सूकराः शुनकैः सह ॥ किन्नरा राक्षसैश्चापि समीयुर्मानुषैः सह ॥ ३१ ॥
पाण्डुरा रक्तपादाश्च विहङ्गाः कालचोदिताः ॥ राक्षसानां विनाशाय कपोता विचरन्ति च ॥ ३२ ॥
वीचीकूचीति[1] वाश्यन्त्यः शारिका वेश्मसु स्थिताः ॥ ३३ ॥
पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिणः[2] ॥ पक्षिणश्च मृगाः सर्वे प्रत्यादित्यं रुदन्ति[3] च ॥ ३४ ॥
करालो विकटो[4] मुण्डः परुषः कृष्णपिङ्गलः ॥ कालो गृहाणि सर्वेषां कालेकालेऽन्ववेक्षते ॥ ३५ ॥
[ अहं[5] त्वेतत्प्रपश्यामि युध्यतां तु दिनेदिने ॥ क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् ॥
सर्वं नष्टप्रभं मन्ये सैन्यं त्वद्देहमाश्रितम् ॥ ३६ ॥ ]
एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च ॥ ज्ञात्वा[6] प्रधार्य कार्याणि क्रियतामायतिक्षमम् ॥ ३७ ॥
[ विष्णुं[7] मन्यामहे रामं मानुषं रूपमास्थितम् ॥ न हि मानुषमात्रोसौ राघवो दृढविक्रमः ॥ ३८ ॥
येन बद्धः समुद्रस्य[8] स सेतुः परमाद्भुतः ॥ कुरुष्व नरराजेन संधिं[9] रामेण रावण ॥ ३९ ॥ ]
[ अद्य[10] प्रतिनिविष्टेन हितमुक्तं निशाचर ॥ सीतार्थं ते महाप्राज्ञ महद्भयमुपस्थितम् ॥
तथेमान्यनिमित्तानि लक्षये राक्षसेश्वर ॥ ४० ॥ ]

इदं वचस्तत्र[11] निशम्य माल्यवान्परीक्ष्य[12] रक्षोधिपतेर्मनः पुनः ॥
अनुत्तमेषूत्तमपौरुषो बली बभूव तूष्णीं समवेक्ष्य रावणम् ॥ ४१ ॥

॥ ३० ॥ समीयुः संयन्ति । द्वीपिभिः व्याघ्रैः । मानुषैः । राक्षसा इति शेषः । मानुषाश्चात्रोत्पातजनिता एव ॥ ३१ ॥ कालचोदिताः दैवप्रेरिताः । विनाशाय विनाशसूचनायेत्यर्थः । "वाताय कपिला विद्युत्—" इत्यादिवत् । कपोताः कपोताख्या विहङ्गा इत्यन्वयः ॥ ३२ ॥ वेश्मसु मधुरसंलापार्थं पोषिताः शारिकाः । मधुरभाषणानि विहाय वीचीकूचीति क्रूरं वाश्यन्तीत्यर्थः ॥ ३३ ॥ पक्षिणः काकादयः । मृगाश्च पूर्वं निर्जिता अपि पुनः कलहैषिणः सन्तः । ग्रथिताः पुञ्जीभूताः । पतन्ति धावन्ति । प्रत्यादित्यं रुदन्ति चेत्यन्वयः ॥ ३४ ॥ करालः भयंकरः । विकटः विकटाङ्गः । विकल इति पाठे हीनाङ्ग इत्यर्थः । परुषः परुषवर्णः । कालः मृत्युः । कालेकाले सायं प्रातश्च । गृहाण्यन्ववेक्षते । अन्वीक्षमाण इव दृश्यत इत्यर्थः ॥ ३५—३६ ॥ एतानि ज्ञात्वा कर्माणि कर्तव्यानि । प्रधार्य निर्धार्य । यत् आयतिक्षमं उत्तरकालार्हं । तत्क्रियतां । कर्माणि च सीताप्रदानादीनि ॥ ३७—४० ॥ अनुत्तमेषु मन्त्रिश्रेष्ठेषु । उत्तमपौरुषो माल्यवान् । इदं वचः । तत्र सभायां । निशम्य श्रावयित्वा । अन्तर्भावितण्यर्थोयं । रावणं रावणाकारं । समवेक्ष्य इङ्गितादिदर्शनपुरःसरं दृष्ट्वा । रक्षोधिपतेर्मनः परीक्ष्य

इतिवा ॥ **रामानु०** बलिकर्माणि बलिद्रव्याणि ॥ ३० ॥ किंनराइत्यर्धंकेषुचित्कोशेषुनदृश्यते । तस्मिन्विरोधोस्ति लङ्कायांमानुषाभावात् ॥ ३१ ॥ **ति०** चीचीकूकीतिशब्दानुकारः । **स०** शारिकाः शुकवध्वः ॥ ३३ ॥ कलहैषिभिः पक्ष्यन्तरैः । निर्जिताः ग्रथिताः । पतन्ति परस्परमाबध्यपतन्ति ॥ ३४ ॥ **कतक०** "विष्णुंमन्यामहेरामं" इत्यादि " संधिंरामेणरावण " इत्यन्तं श्लोकद्वयंप्रक्षिप्तमितिप्राचीनैर्नव्याख्यातं ॥ **शि०** मानुषंरूपमास्थितं रामंविष्णुं स्वप्रतापद्वारासर्वत्रपूर्णंमन्यामहे । अतःअयंराघवःमानुषमात्रः अस्मज्ज्ञानविषयीभूतमनुष्यशरीरवान्न । प्राकृतविलक्षणःपरपुरुषइत्यर्थः ॥ ३८ ॥ **स०** सः चारैः कथितः । येनबद्धः तेनरामेणसंधिंकुरुष्व ॥ ३९ ॥ **स०** इदंवचः रावणंप्रतिनिगद्य तस्यरक्षोधिपतेर्मनःपुनःपुनःपरीक्ष्य अनिवर्तनंज्ञात्वा । रावणं समवेक्ष्य तूष्णींबभूवेत्यन्वयः । "अर्थनिबन्धनेयंसंज्ञा" इत्युक्तेः वचोरावणंनिगद्येतिद्विकर्मकता । अनुत्तमेषु असदृशेषुराक्षसेषु । यद्वा अनुत्तमेषु नीचेषुरक्षोधिपतेर्मनःपरीक्ष्यस्वयमुत्तमपौरुषइतितूष्णींबभूव ॥ ४१ ॥ इतिपञ्चत्रिंशःसर्गः ॥ ३५ ॥

**[ पा० ]** १ झ. चीचीकूचीति. २ ङ. च. झ. ञ. ट. कलहैषिभिः. घ. कलहप्रियाः. ३ क. ख. ग. ङ.—ट. रुदन्तिते. घ. रुवन्ति. ४ ङ. झ. विकलो. ५ इदमर्धत्रयं घ. पाठेदृश्यते. ६ क. ख. ग. ङ. च. छ. झ. ञ. ट. ज्ञात्वाऽवधार्य. ७ इदं श्लोकद्वयं ख. ङ. च. ञ. ट. पाठेषुदृश्यते. ८ क. घ.—छ. ञ. समुद्रेच. ९ घ. सन्धिमार्येण. १० इदमर्धत्रयं घ. पाठेदृष्यते. ११ ग. ङ. च. छ. झ. ञ. ट. स्तस्यनिगद्य. क. ख. स्तत्रनिगद्य. १२ घ. न्समीक्ष्यरक्षोधिपतेस्तदप्रियं.

[स तद्वचो माल्यवता प्रभाषितं दशाननो न प्रतिशुश्रुवे तदा ॥
भृशं जगर्हे च सुदुष्टमानसो मुमूर्षुरत्युच्चवचांस्युदीरयन् ॥ ४२ ॥]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ॥ ३६ ॥

रावणेनात्मश्लाघनेनरामवधप्रतिज्ञानपूर्वकं सोपालंभंमाल्यवद्विसर्जनम् ॥ १ ॥ तथा मन्त्रिभिस्सहमन्त्रपूर्वकं प्राच्यादिदिक्षु पुररक्षणायसैन्यैःसहप्रहस्तादिप्रेषणेनान्तःपुरप्रवेशः ॥ २ ॥

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ॥ न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १ ॥
स बद्ध्वा भ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः ॥ अमर्षात्परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २ ॥
हितबुद्ध्या यदहितं वचः परुषमुच्यते ॥ परपक्षं प्रविश्यैव नैतच्छ्रोत्रं गतं मम ॥ ३ ॥
मानुषं कृपणं राममेकं शाखामृगाश्रयम् ॥ समर्थं मन्यसे केन त्यक्तं पित्रा वनालयम् ॥ ४ ॥
रक्षसामीश्वरं मां च देवतानां भयंकरम् ॥ हीनं मां मन्यसे केन ह्यहीनं सर्वविक्रमैः ॥ ५ ॥
वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः ॥ त्वयाऽहं परुषाण्युक्तः परप्रोत्साहनेन वा ॥ ६ ॥
प्रभवन्तं पदस्थं हि परुषं कोऽभिधास्यति ॥ पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥ ७ ॥
आनीय च वनात्सीतां पद्महीनामिव श्रियम् ॥ किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥ ८ ॥

अनिवर्त्यं ज्ञात्वा तूष्णीं बभूव । उपदेशाद्विररामेत्यर्थः ॥ ४१—४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

अथ लङ्कागुप्तिकरणं षट्त्रिंशे—तत्त्विति ॥ हितमुक्तं हितं यथा भवति तथा उक्तं । न मर्षयति नामर्षयत् ॥ १ ॥ परिवृत्ताक्षः घूर्णिताक्षः ॥ २ ॥ परपक्षं प्रविश्यैव शत्रुषु स्नेहमनुसृत्यैव । हितबुद्ध्या हितमित्ययं ज्ञास्यतीति बुद्ध्या । अहितं परुषं च । यद्वच उक्तं । एतत् मम श्रोत्रं न गतमित्यन्वयः ॥ ३ ॥ भवतः परपक्षानुसारश्च न युक्त इत्याह—मानुषमिति ॥ मानुषं जात्या हीनबलं । कृपणं प्रकृत्या हीनं । एकं असहायं । शाखामृगाश्रयं क्षुद्रसहायं । पित्रा त्यक्तं निर्धनं । वनालयं राज्यहीनं । रामं केन कथंप्रकारेण । समर्थं प्रबलं । मन्यसे ॥ ४ ॥ स्वस्मिन् तद्वैपरीत्यमाह—रक्षसामिति ॥ हीनं दुर्बलं ॥ ५ ॥ एवं परप्राबल्यस्वदौर्बल्ययोरभावेपि परुषोक्तौ हेतुमाशङ्कते—वीरद्वेषेणेति ॥ वीरद्वेषेण सजातीयवीरद्वेषेण । रिपोः पक्षपातेन शत्रौ पक्षपातेन ॥ ६ ॥ परप्रोत्साहनेनेत्येतदुपपादयति—प्रभवन्तमिति ॥ प्रभवन्तं प्रभावयुक्तं । पदस्थं परिपक्वबुद्धिं । परप्रोत्साहनाभावे पण्डितस्य पदस्थविषयकपरुषवचनं नोपपद्यत इत्यर्थः ॥ ७ ॥ अस्तु त्वदुक्तं परमार्थः तथापि दुर्लभवस्तुविशेषः कथं त्याज्य इत्याह—आनीयेति ॥ किमर्थं

ती० वस्तुतस्तु—वनालयं वनंजलमुदधिः आलयः शयनस्थानंयस्यतं । वटपत्रशायिनं नारायणमित्यर्थः । अतएव पित्रा त्यक्तं जन्मादिरहितमित्यर्थः । ईश्वरस्यजन्माद्यभावादेवपित्राद्यभावः । अतएव एकं अद्वितीयं । अतएव शाखामृगाश्रयं शाखाभिर्वेदशाखाभिःमृग्यतइतिशाखामृगोवेदवेद्यः सर्वेश्वरः । सचासावाश्रयश्चेतितं । तथापि केनापिहेतुना मानुषं मनुष्यरूपेणावतीर्णं । अतएव कृपणं कृपालुं । रामंसमर्थंमन्यसेकिल । तद्युक्तमेव । केनहेतुना रक्षसामीश्वरं सर्वपराक्रमैर्हीनं मां अहीनंमन्यसेइत्यर्थः ॥ ४-५ ॥ स० सर्वविक्रमैः देवानांभयङ्करं तदहीनंचमांमन्यसे । रामविषयेतु मां हीनंकेनमन्यसइत्यन्वयः । तेन नास्मच्छब्दद्वयवैयर्थ्यं ॥५॥ ती० आनीयेति । रामहस्ताद्वधेच्छयैव वनात्सीतामानीयराघवस्यभयात्किमर्थंप्रतिदास्यामीत्यर्थः ।

[ पा० ] १ अयंश्लोकः घ. पाठेदृश्यते. २ घ. वशमेयिवान्. ३ घ. क्रोधेनकलुषीकृतः. ४ क. वचनंपुनरुच्यते. ५ क. ग. ङ. च. झ. ञ. ट. च्छ्रोत्रगतं. ६ झ. ममप्रोत्साहनेनवा. ७ ङ. झ. ञ. ट. कोऽभिभाषते. च. कोऽभिभाषितुं. ८ क. ङ. छ.—ञ. प्रोत्साहनेनवा.

वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् ॥ पश्य कैश्चिदहोभिस्त्वं राघवं निहतं मया ॥ ९ ॥
द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे ॥ स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥ १० ॥
द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् ॥ एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥ ११ ॥
यदि तावत्समुद्रे तु सेतुर्बद्धो यदृच्छया ॥ रामेण विस्मयः कोत्र येन ते भयमागतम् ॥ १२ ॥
स तु तीर्त्वाऽर्णवं रामः सह वानरसेनया ॥ प्रतिजानामि ते सत्यं न जीवन्प्रतियास्यति ॥ १३ ॥
एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् ॥ व्रीडितो माल्यवान्वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४ ॥
जयाशिषा च राजानं वर्धयित्वा यथोचितम् ॥ माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥१५॥
रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च ॥ [1]लङ्कायामतुलां गुप्तिं कारयामास राक्षसः ॥ १६ ॥
स [2]व्यादिदेश पूर्वस्यां प्रहस्तं द्वारि राक्षसम् ॥ दक्षिणस्यां महावीर्यौ महापार्श्वमहोदरौ ॥ १७ ॥
पश्चिमायामथो द्वारि पुत्रमिन्द्रजितं तथा ॥ व्यादिदेश महामायं बहुभी राक्षसैर्वृतम् ॥ १८ ॥
उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ ॥ स्वयं चात्र [3]भविष्यामि मन्त्रिणस्तानुवाच ह ॥ १९ ॥
राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् ॥ मध्यमेऽस्थापयद्गुल्मे बहुभिः सह राक्षसैः ॥ २० ॥
एवं विधानं [4]लङ्कायाः कृत्वा राक्षसपुङ्गवः ॥ कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥ २१ ॥

विसर्जयामास ततः स मन्त्रिणो विधानमाज्ञाप्य पुरस्य पुष्कलम् ॥
जयाशिषा मन्त्रिगणेन पूजितो विवेश [5]चान्तःपुरमृद्धिमन्महत् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षट्त्रिंशस्सर्गः ॥ ३६ ॥

---

केन हेतुना । राघवस्य राघवात् ॥ ८–९ ॥ द्वन्द्वे द्वन्द्वयुद्धे । युद्धे रामयुद्धे ॥ १० ॥ अत्यन्तहितपरं वृद्धं मातामहं कथमेवं परुषमुक्तवानस्मीत्यनुतापेनाह—द्विधेति ॥ राम आगत्य भयं जनयिष्यतीति त्वयोक्तं । न केवलं भयमात्रं । द्विधा भज्येयं शिरश्छेदं प्राप्नुयां । एवमपि न नमेयं । कस्यचित् । न केवलं रामस्य ततोपि शतगुणबलवतोपि द्विधा भङ्गादपि कस्यचिन्नमनमत्यन्तदुःसहमित्यर्थः । तर्हि हीयमानेनसन्धिःकार्य इति नीतिशास्त्रविरोधः स्यात्तत्राह—एष मे सहजो दोष इति । यदि दोषत्वमनुमतं तर्हि स त्याज्य एवेत्याशङ्क्याह—स्वभाव इति । नहि तिक्तो निम्बो मधुरायत इति भावः ॥ ११ ॥ अथ सेतुबन्धेन विस्मयसे चेत् तदपिकाकतालीयं । अतोमाभूत्ते भयमित्याह—यदीति ॥ तावत्समुद्रे स्वल्पसमुद्र इत्यर्थः ॥ १२ ॥ अर्णवं तीर्त्वा स्थितो राम इत्यर्थः ॥ १३ ॥ संरब्धं अहंकारयुक्तं । व्रीडित इति । स्वोपदेशवैफल्यादितिभावः ॥ १४ ॥ यथोचितमिति । प्रत्युत्थानादिनेति भावः ॥ १५ ॥ मन्त्रयित्वा कर्तव्यं विचार्य । विमृश्य निश्चित्य ॥ १६ ॥ व्यादिदेश रक्षणायेति शेषः ॥ १७—१८ ॥ भविष्यामीत्यनन्तरमितिकरणं द्रष्टव्यं ॥ १९ ॥ मध्यमे गुल्म इति गुल्मो नाम नगरमध्यचैत्यस्थानं ॥ २० ॥ विधानं रक्षणसंविधानं ॥ २१ ॥ पुष्कलं समग्रं ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥३६॥

---

स० पद्महीनामिति । केवलंपद्मेनैवएतस्यास्तस्याश्चभेदइतिभावः ॥ ८ ॥ स० द्वन्द्वे संयुगे । दैवतानीत्यनेन तेषांसामर्थ्यराहित्यंसूचयति । तत्रदार्ढ्यसूचनायपरोक्षनिर्देशः ॥ १० ॥ ती० वास्तवार्थस्तु—रामःवानरसेनयासहार्णवंतीर्त्वाजीवन्प्रतियास्यतीति तेसत्यंप्रतिजानामि । नसंदेहः । अथापि मेस्वभावोदुरतिक्रमइतिपूर्वेणसंबन्धः ॥ १३ ॥ इतिषट्त्रिंशःसर्गः ॥ ३६ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. लङ्कायास्तुतदागुप्तिं. २ क.—च. झ. ञ. ट. व्यादिदेशाच. ३ ङ. च. छ. झ. ञ. ट. गमिष्यामि. ४ ख. घ.—छ. झ. ट. लङ्कायां. ५ क.—ट. सोन्तःपुरं.

# सप्तत्रिंशः सर्गः ॥ ३७ ॥

सुग्रीवादिभिःसहमन्त्रयमाणंश्रीरामंप्रति विभीषणेन लङ्कामेत्यरावणवृत्तान्तावगमेनपुनरागतनिजामात्यनिवेदितरावणकृतलङ्कारक्षणसंविधानप्रकारनिवेदनम् ॥ १ ॥ रामेण लङ्कायाः प्रागादिद्वारत्रये क्रमेणयुद्धाय नीलाङ्गदहनुमन्नियोजनपूर्वकं स्वेनरावणाधिष्ठितोत्तरभागेलक्ष्मणेनसहावस्थाननिर्धारणेन सेनयासहलङ्काभियानम् ॥ २ ॥

[1]नरवानरराजौ तौ स च वायुसुतः कपिः ॥ जाम्बवानृक्षराजश्च राक्षसश्च विभीषणः ॥ १ ॥
अङ्गदो वालिपुत्रश्च सौमित्रिः शलभः कपिः ॥ सुषेणः सहदायादो मैन्दो द्विविद एव च ॥ २ ॥
गजो गवाक्षः कुमुदो नलोथ पनसस्तथा ॥ अमित्रविषयं प्राप्ताः समवेताः समर्थयन्[2] ॥ ३ ॥
इयं सा लक्ष्यते लङ्का पुरी रावणपालिता ॥ सासुरोरगगन्धर्वैरमरैरपि[3] दुर्जया ॥ ४ ॥
कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये ॥ नित्यं सन्निहितो ह्यत्र रावणो राक्षसाधिपः ॥ ५ ॥
[4]तथा तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् ॥ वाक्यमग्राम्यपदवत्पुष्कलार्थं विभीषणः ॥ ६ ॥
[5]अनलः [6]शरभश्चैव [7]संपातिः प्रघसस्तथा ॥ गत्वा लङ्कां महामात्याः पुरीं पुनरिहागताः ॥ ७ ॥
भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम् ॥ विधानं विहितं यच्च तदृष्ट्वा समुपस्थिताः ॥ ८ ॥
संविधानं यदाहुस्ते रावणस्य दुरात्मनः ॥ राम तद्ब्रुवतः सर्वं यथा तत्त्वेन मे शृणु ॥ ९ ॥
पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति ॥ दक्षिणं च महावीर्यौ महापार्श्वमहोदरौ ॥ १० ॥
इन्द्रजित्पश्चिमद्वारं राक्षसैर्बहुभिर्वृतः ॥ पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः ॥
नानाप्रहरणैः शूरैरावृतो रावणात्मजः ॥ ११ ॥
राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः ॥ युक्तः परमसंविग्नो [8]राक्षसैर्बहुभिर्वृतः ॥
उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ १२ ॥
विरूपाक्षस्तु महता शूलखड्गधनुष्मता ॥ बलेन राक्षसैः सार्धं मध्यमं गुल्मम[9]मास्थितः ॥ १३ ॥

---

अथ रामस्य सेनागुप्तिविधानं सप्तत्रिंशे—नरवानेत्यादिश्लोकत्रयमेकान्वयं ॥ सहदायादः सबान्धवः । "दायादौ सुतबान्धवौ" इत्यमरः । इदं विशेषणं सर्वत्र यथार्हमन्वेति । अमित्रविषयं शत्रुदेशं । समर्थयन् अमन्त्रयन् ॥ १—३ ॥ अथविचारप्रकारमेवाह—इयमित्यादिना ॥ सा हनुमता पूर्वमुक्ता ॥४॥ कार्यसिद्धिं विजयसिद्धिं । पुरस्कृत्य प्रधानीकृत्य । विनिर्णये निमित्ते मन्त्रयध्वं । विजयसाधककार्यनिर्णयाय मन्त्रः प्रवर्त्यतामित्यर्थः ॥ ५ ॥ अग्राम्यपदवत् संस्कृतपदवत् सर्वेषां स्फुटप्रतिपत्तये स्वदेशभाषापदरहितमुक्तवानित्यर्थः ॥ ६ ॥ अनल इत्यादिश्लोकत्रयं । विधानं नगररक्षणसंविधानं । ते दुरात्मनो रावणस्य यत्संविधानमाहुः तद्यथातत्त्वेन याथार्थ्येन । ब्रुवतः मे मत्तः । शृणु ॥ ७—१० ॥ पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः । बहुभी राक्षसैः प्रधानराक्षसैर्वृतः । नानाप्रहरणैः शूरैरावृतः । रावणात्मजः इन्द्रजित्पश्चिमद्वारं आसाद्य तिष्ठतीत्यनुकृष्यते ॥ ११ ॥ असंविग्नः अकम्पितहृदयः । राक्षसैः प्रधानभूतैः ॥ १२ ॥ बलेन

---

**ति०** नरेति । रामसुग्रीवौ । टजभावआर्षः ॥ १ ॥ **स०** परमसंविग्नः परंयथाभवतितथा असंविग्नः विभीः । तिष्ठतीत्यन्वयः । शुकसारणावेदितमहाबलस्मरणादन्तःकरणेभीतइतिव्याख्या स्तुतिप्रस्तावाननुगुणा । यदिवक्तव्याभीतिस्तर्हि हनुमतैकलेन

**[ पा० ]** १ ङ. च. झ. ञ. ट. नरवानरराजानौसतु. २ घ. समवेतास्तममन्त्रयन्. ३ ङ. च. झ. ञ. ट. गन्धर्वैस्सर्वैरपि. ४ ख. ङ. च. छ. झ. ञ. अथ. ५ ज. अनलश्चानिलश्चैवहरस्संपातिरेवच. ६ ङ. झ. ट. पनसश्चैव. ७ ङ. झ. ट. संपातिः प्रमतिस्तथा. ख. च. छ. ञ. संपातिर्विहगस्तथा. घ. संपातिःपनसस्तथा. ८ घ. ङ. झ. ट. राक्षसैस्सहमन्त्रवित्. ९ ङ. झ. ट. माश्रितः.

एतानेवंविधान्गुल्मान्[1]ल्लङ्कायां समुदीक्ष्य ते ।। [2]मामकाः सचिवाः सर्वे पुनः शीघ्रमिहागताः ।।१४।।
गजानां च सहस्रं च रथानामयुतं पुरे ।। हयानामयुते द्वे च साग्रकोटिश्च रक्षसाम् ।। १५ ।।
विक्रान्ता बलवन्तश्च संयुगे[3]ष्वाततायिनः ।। इष्टा राक्षसराजस्य नित्यमेते निशाचराः ।। १६ ।।
एकैकस्यात्र युद्धार्थे राक्षसस्य विशांपते ।। परिवारः सहस्राणां सहस्र[4]मुपतिष्ठते ।। १७ ।।
एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः ।। एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् ।।
लङ्कायां सचिवैः [5]सर्वां रामाय प्रत्यवेदयत् ।। १८ ।।
रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् ।। रावणावरजः श्रीमान्रामप्रियचिकीर्षया ।। १९ ।।
कुबेरं तु यदा राम रावणः [6]प्रत्ययुध्यत ।। षष्टिः शतसहस्राणि तदा निर्यान्ति राक्षसाः ।। २० ।।
पराक्रमेण वीर्येण तेजसा सत्त्वगौरवात् ।। [7]सदृशा येऽत्र दर्पेण रावणस्य दुरात्मनः ।। २१ ।।
अत्र मन्युर्न कर्तव्यो रो[8]षये त्वां न भीषये ।। समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ।। २२ ।।
तद्भवांश्चतुरङ्गेण बलेन महता [9]वृतः ।। व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् ।। २३ ।।
रावणावरजे वाक्यमेवं ब्रुवति राघवः ।। शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ।। २४ ।।

---

सेनया । राक्षसैः मुख्यैः ।। १३ ।। गुल्मान् सेनाः । " गुल्मो रुक्स्तंबसेनासु " इत्यमरः ।। १४ ।। गजानां गजयोधिनां । रथानां हयानामित्यत्राप्येवं द्रष्टव्यं । हयानां साग्रकोटिः द्वे अयुते चेत्यन्वयः । एते एतावन्तः । यद्वा गजानामित्यादिशब्दाः गजादिपराः । एवमुत्तरोत्तराधिकसङ्ख्योच्यते । हयानां द्वे अयुते । रक्षसां साग्रकोटिः पूर्णा कोटिः । एते रावणस्येष्टा अन्तरङ्गाः । स्वसेविन इत्यर्थः । आततायिनः क्रूरा इत्यर्थः ।। १५—१६ ।। अत्र राक्षसेषु । एकैकस्य राक्षसस्य । सहस्राणां सहस्रं दशलक्षसङ्ख्याविशिष्टः परिवारः । इदानीं । युद्धार्थे युद्धनिमित्तं । उपतिष्ठत इत्यन्वयः ।। १७ ।। एतामिति सार्धश्लोकः ।। तान् मन्त्रिभूतान् । दर्शनानन्तरं सचिवैः प्रयोज्यकर्तृभिः । लङ्कायां सर्वां प्रवृत्तिमित्यनुषज्यते । रामाय प्रत्यवेदयत् । सचिवैरपि तं वृत्तान्तमावेदयदित्यर्थः ।। १८ ।। राममित्यादिश्लोकत्रयं ।। उत्तरं अनन्तरवक्तव्यं ।। १९ ।। दिग्विजयकालिकबलादाधुनिकबलमधिकमिति कथयितुं पूर्वबलं परिगणयति—कुबेरमिति । निर्यान्ति निर्ययुः ।। २० ।। पराक्रमेण पराभिभवसामर्थ्येन । वीर्येण युद्धे स्वयमविकृतत्वेन । तेजसा प्रतापेन । सत्त्वगौरवात् धैर्यातिशयेनेत्यर्थः । दर्पेण च । रावणस्य अत्र ये सदृशास्तादृशा राक्षसा इति पूर्वेणान्वयः ।। २१ ।। स्वामिसन्निधौ शत्रुबलवर्णनमयुक्तमित्याशङ्क्य परिहरति—अत्रेति ।। अत्र बलवर्णने सति । मन्युः क्रोधः । न कर्तव्यः । रोषये शत्रुनिरसनाय रोषमुत्पादये । न भीषये शत्रुबलवर्णनेन न भीतिमुत्पादये । रोषोत्पादनस्य फलमाह—समर्थोहीति ।। २२ ।। तत् राक्षसबलस्य व्यूढत्वात् । महता बलेन वृतो भवानपि । चतुरङ्गेण रावणसेनावच्चतुरवयवेन । व्यूह्य विभज्य । निर्मथिष्यसि । मध्यमपुरुषत्वमार्षं । चतुरङ्गकार्यकरत्वाच्चतुरङ्गत्वमित्यन्ये ।। २३ ।। प्रतिघातार्थं प्रतिक्रियार्थं ।। २४ ।।

---

कृतस्यकर्मणोदृष्टत्वेनवक्तव्या । श्रवणापेक्षयास्वसाक्षिणःप्राबल्यात् ।। १२ ।। **स०** आततायिनः स्वयमेवसीतोपरोधापराधंकृत्वा शस्त्रपाणयइत्याततायिनः । यद्वा संयुगेयुद्धे इषवः आत्यन्ते सदासम्यक्क्षिप्यन्तेयेन तदिष्वातं धनुः । तेनतायन्तेपालयन्तिजनानिति संयुगेष्वाततायिनः । "तायृ सन्तानपालनयोः" इतिधातोः । यद्वा परदारापहर्तृसंबन्धित्वादाततायिनः । "क्षेत्रदारापहर्ता च" इत्युक्तेः । निशाचराः यूथपाः ।। १६ ।। **ति०** सर्वलङ्कायायद्वृत्तं तत्प्रत्यवेदयत् ।। १८ ।। **ति०** यस्मात्तेन तत्तद्वारेषुसर्वा सेनाविभज्यस्थापिता । तत् तस्मात् । भवानपि इदंवानरानीकंतद्वदेवविभागेनव्यूह्य व्यूहितेनचतुरङ्गेणबलेनवृतंरावणं निर्मथि-

**[ पा० ]** १ ङ. झ. ञ. ल्लङ्कायाः. २ ङ. च. झ. ट. मामकामन्त्रिणः. ३ च. ञ. ष्वपराजिताः. ४ ङ. झ. मुपतिष्ठति. ५ घ. ङ. च. झ. ञ. ट. सर्वं. ६ झ. प्रतियुध्यति. ७ ङ. झ. ट. सदृशाह्यत्र. घ. सदृशास्तेतु. ग. सदृशास्तस्य. ८ ङ. च. झ. ट. कोपये. ९ ख. ङ. झ. ञ. ट. वृतं.

पूर्वद्वारे तु लङ्काया नीलो वानरपुङ्गवः ॥ प्रहस्तप्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ॥ २५ ॥
अङ्गदो वालिपुत्रस्तु बलेन महता वृतः ॥ दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥ २६ ॥
हनुमान्पश्चिमद्वारं निपीड्य पवनात्मजः ॥ प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ॥ २७ ॥
दैत्यदानवसङ्घानामृषीणां च महात्मनाम् ॥ विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ॥ २८ ॥
परिक्रामति यः सर्वाँल्लोकान्संतापयन्प्रजाः ॥ तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ॥ २९ ॥
उत्तरं नगरद्वारमहं सौमित्रिणा सह ॥ निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ॥ ३० ॥
वानरेन्द्रश्च बलवानृक्षराजश्च वीर्यवान् ॥ राक्षसेन्द्रानुजश्चैव गुल्मो भवतु मध्यमः ॥ ३१ ॥
न चैव मानुषं रूपं कार्यं हरिभिराहवे ॥ एषा भवतु संज्ञा नो युद्धेस्मिन्वानरे बले ॥ ३२ ॥
वानरा एव नश्चिह्नं स्वजनेऽस्मिन्भविष्यति ॥ ३३ ॥
वयं तु मानुषेणैव सप्त योत्स्यामहे परान् ॥ अहमेष सह भ्रात्रा लक्ष्मणेन महौजसा ॥
आत्मना पञ्चमश्चायं सखा मम विभीषणः ॥ ३४ ॥
स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम् ॥ सुवेलारोहणे बुद्धिश्चकार मतिमान्मतिम् ॥
रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम् ॥ ३५ ॥

पूर्वद्वारेस्थित्वेति शेषः ॥ २५—२६ ॥ अप्रमेयात्मेति मायाविन इन्द्रजितोयमेवार्ह इति भावः ॥२७॥ स्वस्यचोत्तरद्वारनिरोधहेतुमाह—दैत्यदानवेत्यादिश्लोकत्रयं ॥ विप्रकारप्रियः प्रियविप्रकारः । "वा प्रियस्य" इति पूर्वनिपातः । विप्रकारः पीडा । क्षुद्रः क्षुद्रबुद्धिः । प्रजाः संतापयन् लोकान् परिक्रामतीत्यन्वयः । तस्याहमिति श्लोके यत्तच्छब्दाध्याहारेणाहंशब्दद्वयनिर्वाहः । योहं धृतः निश्चितः । सोहं प्रवेक्ष्यामीत्यन्वयः । स्वयमेव अद्वारेण । यद्वा तस्याहमित्यर्धान्तमेकं वाक्यं । उत्तरमित्यादि भिन्नं वाक्यं ॥ २८—३० ॥ गुल्मो भवतु मध्यमः । मध्यमसेना भवत्वित्यर्थः । बलवद्भ्यां रावणेन्द्रजिद्भ्यामधिष्ठितयोरुत्तरपश्चिमयोः मध्यमगुल्मो भवत्वित्यर्थः ॥ ३१ ॥ संज्ञा संकेतः । अस्य प्रयोजनमाह—वानरा इति ॥ नः अस्माकं । वानरा एवास्मिन् स्वजने चिह्नं भविष्यतीति । अस्माकं वानरत्वमेवात्मीयत्वज्ञापकंभविष्यतीत्यर्थः । यदि वानराअपि कामरूपधारणेन युद्ध्येयुः । राक्षसानामपि तादृशत्वादात्मपरविवेको न स्यात् । वानरत्वंतु जघन्यतया न ते भजिष्यन्तीति भावः । इदानीं मानुषरूपपरिग्रहप्रतिषेधसामर्थ्यादितःपूर्वं मानुषरूपं परिगृह्य स्थिता इति गम्यते ॥ ३२—३३ ॥ मानुषेण मनुष्यसंबन्धिना । रूपेणेति शेषः । विभीषणादीनामपि मानुषरूपसंस्थानसादृश्यादेवमुच्यते ॥ ३४ ॥ स राम इत्यादिसार्धश्लोक एकान्वयः ॥ कृत्यसिद्ध्यर्थं कार्यसिद्ध्यर्थं । सुवेलारोहणे विषये । बुद्धिः बुद्धिमान् । मतुब्लोप आर्षः । मतिं इच्छां । सुवेलारोहणे बुद्धिं चकार मतिमान्मतिमिति च पाठः । सुवेलारोहणबुद्धिमेव मतिं चकार । नान्यामित्यर्थः । आरोहणेच्छाहेतुमाह—रमणीयतरमिति । सौन्दर्यावलोकनमेव तदारोहणहेतुः । नतु लङ्काप्राप्तिः । अतएव लङ्कोपरोधायावरोहणं वक्ष्यति—ततस्त्विति ॥ पृथिवीं सुवेलकटकभूमिं । महात्मा महाबुद्धिः । प्रहृष्टरूपः अतिशयेन प्रहृष्टः । "प्रशंसायां रूपप्" । लङ्कां लङ्कैकदेशसुवेलं । महात्मा महाधृतिरिति द्विती-

ष्यसि ॥ २३ ॥ ति० प्रहस्तंप्रतियोद्धा प्रहस्तस्यसेनापतेःप्रतियोद्धा ॥ २५ ॥ स० स्वजने स्वजनत्वेनज्ञाने ॥ ३३ ॥ ति० सुवेलारोहणेबुद्धिंचकार । तस्यदुर्गत्वाद्रात्रौतत्रावस्थानस्यसुखत्वाच्च । मतिमान्मतिमितिपाठे मतिं अर्थनिर्धारणात्मिकांबुद्धिमित्यर्थः । ती० सुवेलारोहणे प्रवृत्ताबुद्धिर्यस्यसः सुवेलारोहणेबुद्धिः । अलुक्त्वमार्षं । मतिमान् आगामिगोचरबुद्धिमान् । मतिंचकार सुवेलारोहणेच्छांचकारेत्यर्थः । बुद्धिमितिद्वितीयान्तपाठेतु सुवेलारोहणे मतिं मननात्मिकांबुद्धिं निश्चयात्मिकांचकारेत्यर्थः । यद्वा बुद्धिं तात्कालिकरूपांमतिंचकार अर्थनिर्धारणरूपांचकारेत्यर्थः । अर्थनिर्धारणंमतिरितितज्ज्ञाः ॥ ३५ ॥

[ पा० ] १ च. छ. ज. लङ्कायां. २ घ. ङ. ज. झ. ट. प्रहस्तंप्रति. ३ घ. सह. ४ क. ख.—ट. गुल्मेभवतुमध्यमे. ५ क. ख. ग. ङ. झ. ट. वश्चिह्नं. ६ घ.—ट. अहमेव. ७ क. ग.—च. झ. ट. बुद्धिंचकार. ८ ङ. झ. ञ. ट. मतिमान्प्रभुः.

ततस्तु रामो महता बलेन प्रच्छाद्य सर्वां पृथिवीं महात्मा ॥
प्रहृष्टरूपोभिजगाम लङ्कां कृत्वा मतिं सोरिवधे महात्मा ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः ॥ ३८ ॥

सूर्येणास्ताचलारोहणे रामेण सुग्रीवादिभिः सह लङ्कावलोकनाय सुवेलाचलारोहणम् ॥ १ ॥

स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति ॥ लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १ ॥
विभीषणं च धर्मज्ञमनुरक्तं निशाचरम् ॥ मन्त्रज्ञं च विधिज्ञं च श्लक्ष्णया परया गिरा ॥ २ ॥
सुवेलं साधुशैलेन्द्रमिमं धातुशतैश्चितम् ॥ अध्यारोहामहे सर्वे वत्स्यामोत्र निशामिमाम् ॥ ३ ॥
लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः ॥ येन मे मरणान्ताय हृता भार्या दुरात्मना ॥ ४ ॥
येन धर्मो न विज्ञातो न तद्वृत्तं कुलं तथा ॥ राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥ ५ ॥
तस्मिन्मे वर्तते रोषः कीर्तिते राक्षसाधमे ॥ यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥ ६ ॥
एको हि कुरुते पापं कालपाशवशं गतः ॥ नीचेनात्मापचारेण कुलं तेन विनश्यति ॥ ७ ॥
एवं संमन्त्रयन्नेव सक्रोधो रावणं प्रति ॥ रामः सुवेलं वासाय चित्रसानुमुपारुहत् ॥ ८ ॥
पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत्समाहितः ॥ सशरं चापमुद्यम्य सुमहद्विक्रमे रतः ॥
तमन्वरोहत्सुग्रीवः सामात्यः सविभीषणः ॥ ९ ॥

---

यमहात्मशब्दार्थः । अभिजगाम । आरोहणायेति भावः ॥ ३५—३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

अथ लङ्कादर्शनार्थं सुवेलारोहणमष्टत्रिंशे—स त्वित्यादिश्लोकद्वयमेकान्वयं ॥ धर्मज्ञत्वादि सुग्रीवस्यापि विशेषणं । सुवेलो नाम लङ्कासमतुङ्गताको गिरिविशेषः । विधिज्ञं कार्यज्ञं ॥ १—२ ॥ चितं व्याप्तं । अध्यारोहामहे आरोक्ष्यामः । अयंच समुद्रतरणदिवसवृत्तान्तः पूर्वं संग्रहेणोक्तः । अद्य सविशेषमुच्यते ॥ ३ ॥ लङ्कामित्यादिश्लोकद्वयमेकान्वयं ॥ लङ्कालोकने निमित्तमाह—निलयमिति । मे भार्येति संबन्धः । मरणान्ताय मरणरूपफलाय । तत् प्रसिद्धं । वृत्तं धर्मशास्त्रविहितस्वकुलाचारः । कुलं स्वकुलातिशयः । एतत्सर्वं भार्यापहरणनिवृत्तिहेतुः तन्नासीदित्यर्थः । तर्हि केन हेतुना कृतमित्यत्राह—राक्षस्येति । तत् भार्यापहरणं ॥ ४—५ ॥ एतादृशस्य निलयदर्शने किं फलं तत्राह—तस्मिन्निति ॥ वर्तते उत्पद्यते । तर्हि तन्मात्रवधे यत्नः क्रियतामित्यत्राह—यस्येति ॥ ६ ॥ अन्यस्य दोषेणान्यवधः किमर्थंक्रियत इत्यत्राह—एक इति ॥ एकः पापं कुरुते नीचेन तेन कर्त्रा आत्मापचारेण तद्दोषेण कारणेन कुलं तत्संबन्धिनः सर्वे विनश्यन्ति ॥ ७ ॥ संमन्त्रयन् वदन् । उपारुहत् उपारुक्षत् ॥ ८ ॥ पृष्ठत इत्यादि सार्धश्लोकः ॥ समा-

---

**कतक०** एतदग्रे ततस्तुरामइतिपद्यंपठन्ति । तन्नवक्ष्यमाणसंग्रहो नाप्युक्तानुवादो नाप्यत्रप्रकरणविच्छेदइतीमंश्लोकं वृथाप्रक्षिप्यात्रसर्गच्छेदंकुर्वन्तिभ्रान्ताः ॥ ३६ ॥ इतिसप्तत्रिंशःसर्गः ॥ ३७ ॥

**स०** मरणान्ताय मरणेन रक्षःकुलस्यसहितोंतो नाशःस्वस्य तस्मै ॥४॥ **स०** वृत्तं सदाचारः अस्मद्वलिष्ठतावार्तावा । राक्षस्या राक्षससंबन्धिन्या । तत्रापिनीचया । विभीषणं सुमुखीकर्तुमियमुक्तिः ॥ ५ ॥

**[ पा० ]** १ घ. मन्त्रज्ञंचहनूमन्तं. २ ख.—च. झ. ञ. ट. नवृत्तंनकुलंतथा. ३ घ. च. छ. नात्मापराधेन. ४ ङ. झ. ञ. ट. सुवेलमासाद्य. ५ ग. व्रजन्तंलक्ष्मणः.

हनुमानङ्गदो नीलो मैन्दो द्विविद एव च ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ १० ॥
पनसः कुमुदश्चैव हरो रम्भश्च यूथपः ॥ जाम्बवांश्च सुषेणश्च [1]ऋषभश्च महामतिः ॥ ११ ॥
दुर्मुखश्च महातेजास्तथा शतबलिः कपिः ॥ एते चान्ये च बहवो वानराः शीघ्रगामिनः ॥ १२ ॥
ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः ॥ अध्यारोहन्त शतशः सुवेलं यत्र राघवः ॥ १३ ॥
[ [2]ततः सुवेलमारुह्य रामस्तैस्सह वानरैः ॥ निषसाद गिरेस्तस्य शृङ्गे समतले शुभे ॥ १४ ॥
ततः कपिगणास्सर्वे समावृत्य द्वियोजनम् ॥ सुवेलमध्यारोहंस्ते प्लवन्तो दक्षिणामुखाः ॥ १५ ॥ ]
ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ॥ ददृशुः शिखरे तस्य विषक्तामिव खे पुरीम् ॥ १६ ॥
तां शुभां प्रवरद्वारां प्राकारपरिशोभिताम् ॥ लङ्कां राक्षससंपूर्णां ददृशुर्हरियूथपाः ॥ १७ ॥
[3]प्राकारचयसंस्थैश्च तदा नीलैर्निशाचरैः ॥ ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् ॥ १८ ॥
ते[4] दृष्ट्वा वानराः सर्वे राक्षसान्युद्धकाङ्क्षिणः ॥ मुमुचुर्विविधान्नादांस्तत्र रामस्य पश्यतः ॥ १९ ॥
ततोऽस्तमगमत्सूर्यः संध्यया प्रतिरञ्जितः ॥ पूर्णचन्द्रप्रदीप्ता च क्षपा समभिवर्तते ॥ २० ॥

ततः स रामो हरिवाहिनीपतिर्विभीषणेन प्रतिनन्द्य सत्कृतः ॥
सलक्ष्मणो यूथपै[5]र्यूथसंवृतः सुवेलपृष्ठे न्यवसद्यथासुखम् ॥ २१ ॥

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥**

---

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रात्रौसुग्रीवादिभिःसहसुवेलेसुखोषितेनरामेण प्रातर्लङ्कावलोकनम् ॥ १ ॥

**तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः ॥ लङ्कायां ददृशुर्वीर वनान्युपवनानि च ॥ १ ॥**

---

हितः सावधानः ॥ ९ ॥ सामात्य इत्युक्तं विवृणोति—हनुमानित्यादिचतुःश्लोकी ॥ हनुमानिति पृथगुक्त्या रामलक्ष्मणौ पद्भ्यामेवारूढाविति गम्यते । ते प्रसिद्धाः । एते चान्ये च । वायुवेगप्रवणाः वायुवेगेन गच्छन्तः । "प्रुङ् गतौ" इति धातोर्बहुलग्रहणात्कर्तरि ल्युट् । अतएव शीघ्रगामिनः सन्तः अध्यारोहन्त ॥ १०—१५ ॥ ते रामादयः । तस्य प्रसिद्धस्य त्रिकूटस्य । खे विषक्तां आकाशे लम्बमानामिव स्थितां । पुरीं लङ्कां । सर्वतो ददृशुः ॥ १६ ॥ वानराश्च ददृशुरित्याह—तामिति ॥ स्पष्टः ॥ १७ ॥ प्राकारस्य चयः वप्रं तत्र स्थितैः । "स्याच्चयो वप्रमस्त्रियां" इत्यमरः ॥१८—१९॥ प्रतिरञ्जितः रक्तवर्णीकृतः । पूर्णचन्द्रप्रदीप्तेति । अनेन पौर्णमास्यां सुवेलारोहणमित्युक्तं । प्रथमायां युद्धारम्भ इत्याहुः । यद्वा पूर्णचन्द्रतुल्यप्रदीपवतीति वाऽर्थः । संभवन्ति हि वानरसेनायामपि प्रकाशार्थमारोपिता दीपाः ॥ २० ॥ वाहिनीपतिः वानरसेनानिर्वाहकः ॥ २१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टत्रिंशः सर्गः ॥३८॥

---

अथ लङ्कादर्शनमेकोनचत्वारिंशे—तामिति ॥ तां रात्रिमित्यत्यन्तसंयोगे द्वितीया । ददृशुः प्रातरिति

---

**स०** वायुवद्वेगप्रवणः वेगायतिर्येषांतेतथा । वायोरिववेगविस्तारवन्तइत्यर्थः । "प्रवणःक्रमनिम्नोर्व्यामायतौच" इतिविश्वः ॥१३॥ **स०** खेआकाशेविषक्तां अंबरचुंबिनीमितियावत् ॥ १६ ॥ **ति०** प्रतिरञ्जितः प्रतिप्रापितरागः । पूर्णचन्द्रप्रदीप्तात्क्षपेत्यनेन पौषशुक्लचतुर्दश्यांपूर्णिमायांवा सुवेलारोहणमितिबोध्यं । "चतुर्दश्यांसुवेलाग्रेरामःसैन्यंन्यवेशयत्" इत्यग्निवेश्योक्तेः । अत्रपूर्णचन्द्रलोक्तिःपूर्णकल्पत्वादिति ॥ २० ॥ इत्यष्टत्रिंशःसर्गः ॥ ३८ ॥

**[ पा० ]** १ ख. ग. घ. करंभश्चमहाद्युतिः. २ इदंश्लोकद्वयं क. घ. च. छ. पाठेषुदृश्यते. ३ घ. ङ. झ. ट. प्राकारवर. ४ ङ. झ. ट. तंदृष्ट्वा. ५ ङ. च. छ. झ. ट. यूथसंयुतः.

समसौम्यानि रम्याणि विशालान्यायतानि च ॥ दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २ ॥
चम्पकाशोकपुंनागसालतालसमाकुला ॥ तमालवनसंछन्ना नागमालासमावृता ॥ ३ ॥
हिन्तालैरर्जुनैर्नीपैः सप्तपर्णैश्च पुष्पितैः ॥ तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४ ॥
शुशुभे पुष्पिताग्रैश्च लतापरिगतैर्द्रुमैः ॥ लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५ ॥
विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः ॥ शाद्वलैश्च तथा नीलैश्चित्राभिर्वनराजिभिः ॥ ६ ॥
गन्धाढ्यान्यभिरम्याणि पुष्पाणि च फलानि च ॥ धारयन्त्यगमास्तत्र भूषणानीव मानवाः ॥ ७ ॥
तच्चैत्ररथसंकाशं मनोज्ञं नन्दनोपमम् ॥ वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम् ॥ ८ ॥
नत्यूहकोयष्टिभकैर्नृत्यमानैश्च बर्हिभिः ॥ रुतं परभृतानां च शुश्रुवुर्वननिर्झरे ॥ ९ ॥
नित्यमत्तविहङ्गानि भ्रमराचरितानि च ॥ कोकिलाकुलषण्डानि विहगाभिरुतानि च ॥ १० ॥
भृङ्गराजाभिगीतानि भ्रमरैः सेवितानि च ॥ कोणालकविघुष्टानि सारसाभिरुतानि च ॥ ११ ॥
विविशुस्ते ततस्तानि वनान्युपवनानि च ॥ हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः ॥ १२ ॥
तेषां प्रविशतां तत्र वानराणां महौजसाम् ॥ पुष्पसंसर्गसुरभिर्ववौ घ्राणसुखोऽनिलः ॥ १३ ॥
अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः ॥ सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥१४॥
वित्रासयन्तो विहगांस्त्रासयन्तो मृगद्विपान् ॥ कम्पयन्तश्च तां लङ्कां नादैस्ते नदतां वराः ॥
कुर्वन्तस्ते महावेगा महीं चरणपीडिताम् ॥ १५ ॥

सिद्धं । वनानि अकृत्रिमाणि । उपवनानि कृत्रिमाणि ॥ १ ॥ समानि च तानि सौम्यानि च समसौम्यानि निम्नोन्नतत्वरहितानि स्निग्धानि चेत्यर्थः । अत एव रम्याणि रमणीयानि । विशालानि विपुलानि । आयतानि दीर्घाणि । दृष्टिरम्याणि नयनाकर्षणानि । वनान्युपवनानि चेत्याकृष्यान्वयः ॥ २ ॥ चम्पकेत्यादि श्लोकचतुष्टयमेकान्वयं ॥ नागमाला नागकेसरमाला । हिन्तालैरित्यादि । उपलक्षितेतिशेषः । दिव्यैः पारिजातादिभिः । अत्राप्युपलक्षितेतिशेषः । विचित्रेत्यादि पदद्वयमपि दिव्यद्रुमविशेषणं । शाद्वलैरित्यादावप्युपलक्षणे तृतीया । लङ्काशब्दश्चात्र सुवेलपरः । उत्तरत्र वानरप्रवेशोक्तेः । शुशुभे शोभमाना दृश्यत इत्यन्वयः ॥ ३—६ ॥ तत्र वनेषु । धारयन्ति अधारयन् । अगमाः वृक्षाः ॥ ७ ॥ सर्वे ऋतवो यस्मिन् तत्सर्वर्तुकं । "शेषाद्विभाषा" इति कप्प्रत्ययः । षट्पदायुतं षट्पदैरासमन्ताद्युतं ॥ ८ ॥ वननिर्झरे नत्यूहैः कोयष्टिभकैः जलकुक्कुटविशेषैः । नृत्यमानैः नृत्यद्भिः । बर्हिणैश्च सहितानां परभृतानां रुतं शुश्रुवुरिति योजना ॥ ९ ॥ वनरामणीयकाकृष्टास्तत्रविविशुरित्याह—नित्येत्यादिना कामरूपिण इत्यन्तेन श्लोकत्रयेण ॥ विहङ्गाः वक्ष्यमाणकोकिलादिव्यतिरिक्ताः । षण्डाः वृक्षसमूहाः । विहङ्गभृङ्गसंचारस्य तन्नादस्य च वनशोभाहेतुत्वात्तत्संचारमुक्त्वा तन्नादमाह—विहगेत्यादिना । विहगानामभिरुतं येषु तानि विहगाभिरुतानि । एवमुत्तरत्रापि विग्रहः । कोणालकः खञ्जनः । सारसाभिरुतानीत्यनेन वनादीनां सरःसमीपवर्तित्वमुक्तं । हृष्टाः पुलकिताः । प्रमुदिताः सन्तुष्टाः । वीराः शत्रुवनप्रवेशेपि निर्भयाः । कामरूपिणः सूक्ष्मविपुलप्रवेशानुगुणस्थूलसूक्ष्मशरीरवन्तः॥ १०—१३ ॥ अन्येत्वित्यादिसार्धश्लोकद्वयमेकान्वयं ॥ १४—१५ ॥

ति० समसौम्यानि आयामविस्ताराभ्यांसमानि समभूतलानिच । दुष्टमृगाद्युपद्रवराहित्येनसौम्यानि । अतएवक्रीडादौरम्याणीत्यर्थइतितीर्थः । समसाम्यानीतिपाठः । समप्रदेशे साम्यसंस्थानानि । रम्याणि मृगाद्युपद्रवराहित्यादितिकतकः ॥ २ ॥ ति० वननिर्झरे निर्झरयुतेवने । राजदन्तादिः ॥९॥ ति०प्राणसमत्वेनमन्दता ॥१३॥ ति० अन्येतु वनोपवनप्रवेष्टृव्यतिरिक्ताः ।

[ पा० ] १ ङ. च. छ. झ. ञ. ट. बकुलसाल. २ ङ. ज. झ. ट. न्यतिरम्याणि. ३ क. ख. घ. ङ. च. झ. ञ. ट. बर्हिणैः. ४ ङ. झ. राजाधिगीतानि. ५ क. ख. च. छ. ञ. कुररैः. ङ. झ. ट. कुररस्वनितानिच. ६ च. ञ. ट. कोयष्टिकविघुष्टानि. क. छ. कोयष्टिकविपुष्टानि. ७ ङ. च. छ. झ. ञ. ट. प्राणसमोऽनिलः. ८ ङ. झ. ट. विहगान्ग्लापयन्तो.

रजश्च सहसैवोर्ध्वं जगाम चरणोत्थितम् ॥ १६ ॥
ऋक्षाः सिंहा वराहाश्च महिषा वारणा मृगाः ॥ तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥१७॥
शिखरं तत्रिकूटस्य प्रांशु चैकं दिविस्पृशम् ॥ समन्तात्पुष्पसंछन्नं महारजतसन्निभम् ॥ १८ ॥
शतयोजनविस्तीर्णं विमलं चारुदर्शनम् ॥ श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥
मनसाऽपि दुरारोहं किं पुनः कर्मणा जनैः ॥ १९ ॥
निविष्टा तत्र शिखरे लङ्का रावणपालिता ॥ शतयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ २० ॥
सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसन्निभैः ॥ काञ्चनेन च सालेन राजतेन च शोभिता ॥ २१ ॥
प्रासादैश्च विमानैश्च लङ्का परमभूषिता ॥ घनैरिवातपापाये मध्यमं वैष्णवं पदम् ॥ २२ ॥
यस्यां स्तम्भसहस्रेण प्रासादः समलङ्कृतः ॥ कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २३ ॥
चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् ॥ बलेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥ २४ ॥
मनोज्ञां काननवतीं पर्वतैरुपशोभिताम् ॥ नानाधातुविचित्रैश्च उद्यानैरुपशोभिताम् ॥ २५ ॥
नानाविहगसंघुष्टां नानामृगनिषेविताम् ॥ नानाकाननसंतानां नानाराक्षससेविताम् ॥ २६ ॥
तां समृद्धां समृद्धार्थो लक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ रावणस्य पुरीं रामो ददर्श सह वानरैः ॥ २७ ॥

रजश्चेत्यर्धमेकं वाक्यं ॥ चरणोत्थितं वानरपादाहतिजनितं । रजः ऊर्ध्वं जगाम । उत्थितमित्यर्थः ॥१६॥ अत्र ऋक्षादयो लङ्कावनवासिनः । भीताः दर्शनादेव भीताः । तेन शब्देन वित्रस्ताः विशेषेण त्रस्ताः । दश दिशो जग्मुः । यथायथं जग्मुरित्यर्थः ॥ १७ ॥ एवं त्रिकूटस्य प्रथमशिखरं सुवेलाख्यमुक्त्वा मध्यमशिखरं वर्णयति—शिखरं तदित्यादिना ॥ सार्धश्लोकद्वयमेकान्वयं । तत् प्रसिद्धं । प्रांशु पार्श्ववर्तिशिखरद्वयापेक्षया उन्नतं । एकं अद्वितीयं । मध्यममित्यर्थः । स्पृशतीति स्पृशं । इगुपधलक्षणः कप्रत्ययः । समन्तात्पुष्पसंछन्नं अतएव महारजतसन्निभं पृथुरजतसन्निभं । यद्वा सुवर्णसन्निभमिति स्वरूपोक्तिः । चारुदर्शनं सुन्दरदर्शनं । एवंभूतं शिखरं अदृश्यतेत्यध्याहारः ॥ १८—१९ ॥ निविष्टेत्यादिश्लोकपञ्चकमेकान्वयं ॥ २० ॥ सालेन प्राकारेण ॥ २१ ॥ प्रासादैरिति । प्रासादादिलक्षणं प्रागेव लिखितं । आतपापाये वर्षारम्भसमये । मध्यमं वैष्णवं पदमिति । त्रिविक्रमावतारे त्रिभिः पदैः सर्वलोकक्रमणे मध्यमपदेनान्तरिक्षं क्रान्तमिति आकाशं मध्यमं वैष्णवं पदमिति उच्यते ॥ २२ ॥ उल्लिखन् व्याप्नुवन् नगरमध्यचतुष्पथं चैत्यं तत्र भवश्चैत्यः राक्षसेन्द्रस्य पुरभूषणमित्यन्वयः । यः समग्रेण रक्षसां शतेन नित्यं रक्ष्यते । यश्च राक्षसेन्द्रस्य पुरभूषणं बभूव । स्तम्भसहस्रेण समलंकृतः कैलासशिखराकारः खमुल्लिखन्निव स्थितः चैत्यः स प्रासादः यस्यां दृश्यते तादृशी रावणपालितत्वादिविशेषणविशिष्टा तत्र शिखरे निविष्टा लङ्का अदृश्यतेत्यध्याहारेणान्वयः ॥२३—२४॥ एवं वानराणामग्रगतानां लङ्कादर्शनमुक्त्वा रामस्यापि तद्दर्शनमाह—मनोज्ञामित्यादिश्लोकत्रयमेकान्वयं ॥ पर्वतैः क्रीडाशैलैः । नानाधातुविचित्रैरिति पर्वतविशेषणं । उद्यानैः कृत्रिमवनैः ॥ २५ ॥ नानाकाननेति पूर्वं काननवत्त्वमुक्तं अत्र तन्नानात्वमितिभिदा ॥ २६ ॥ समृद्धां उन्नतां । समृद्धार्थो समृद्धद्रव्यां । लक्ष्मीवान् नगरदर्शनजप्रीतिविकसितकान्तिः ॥२७॥

यूथान्निष्क्रम्यलङ्कांजग्मुः ॥ १४ ॥ ति० दशयोजनेति । इदंचलङ्कारूपमहादुर्गान्तर्वर्तिरावणवासस्थानभूतान्तर्दुर्गपरं । 'शतयोजनविस्तीर्णात्रिंशद्योजनमायता' इत्यत्रैवान्यत्रस्थलेउक्तेः ॥ २० ॥ काञ्चनेन राजतेन । सालेन प्राकारेण ॥ २१ ॥ इत्येकोनचत्वारिंशः सर्गः ॥ ३९ ॥

[ पा० ] १ क. ख. ग. ङ.—ट. तस्य. २ क.—ट. दशयोजन. ३ गं. घ. च. छ. ज. तथाद्विगुणमायता. ङ. झ. ट. विंशद्योजनमायता. ४ क. ख. ग. ङ.—ट. शोभते. ५ क.—ट. शतेन. ६ ङ. झ. ञ. ट. काञ्चनवतीं. ७ ज. नानागृहसमाकीर्णां. ८ ख. ग. घ. च. छ. समृद्धार्थो.

तां महागृहसंबाधां दृष्ट्वा लक्ष्मणपूर्वजः ॥ नगरीममरप्रख्यो विस्मयं प्राप वीर्यवान् ॥ २८ ॥
तां रत्नपूर्णां बहुसंविधानां प्रासादमालाभिरलङ्कृतां च ॥
पुरीं महायन्त्रकवाटमुख्यां ददर्श रामो महता बलेन ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ॥ ४० ॥

सुवेलाचलस्थित्यालङ्कामवलोकमानेरामे पार्श्वस्थेनसुग्रीवेण लङ्कागोपुरशृङ्गेराजोपचारे रामाभिमुखावस्थितरावणावलोकनम् ॥ १ ॥ तथाकोपादुत्प्लुत्यैनरावणनिकटमेत्य तत्किरीटपातनपूर्वकं तेनसहचिरंमियुद्धकरणम् ॥ २ ॥ तथा श्रान्तेनतेन मायोपक्रमे लाघवात्पुनारामपार्श्वागमनम् ॥ ३ ॥

ततो रामः सुवेलाग्रं योजनद्वयमण्डलम् ॥ आरुरोह ससुग्रीवो हरियूथपसंवृतः ॥ १ ॥
स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन् ॥ त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा ॥
ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम् ॥ २ ॥
तस्यां गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम् ॥ ३ ॥
श्वेतचामरपर्यन्तं विजयच्छत्रशोभितम् ॥ रक्तचन्दनसंलिप्तं रत्नाभरणभूषितम् ॥ ४ ॥
नीलजीमूतसंकाशं हेमसंछादिताम्बरम् ॥ ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५ ॥
शशलोहितरागेण संवीतं रक्तवाससा ॥ सन्ध्यातपेन संवीतं मेघराशिमिवाम्बरे ॥ ६ ॥
पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः ॥ दर्शनाद्राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः ॥ ७ ॥
क्रोधवेगेन संयुक्तः सत्त्वेन च बलेन च ॥ अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ॥ ८ ॥

अमरप्रख्यः देवसदृशः ॥ २८ ॥ पुनःसंग्रहेणाह—तामिति ॥ रत्नानि श्रेष्ठवस्तूनि । संविधानं रक्षणं ॥ २९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

अथ सुग्रीवरावणयोर्द्वन्द्वयुद्धकथनं चत्वारिंशे । अत्र प्रथमश्लोकः पूर्वोक्तानुवादः—तत इति ॥ योजनद्वयमण्डलं योजनद्वयविस्तारमण्डलं ॥ १ ॥ सुन्यस्तां सुष्ठु निवेशितां ॥ २ ॥ तस्यामित्यादि सार्धश्लोकत्रयमेकान्वयं ॥ अत्र ददर्शेत्यनुषज्यते । श्वेते चामरे पर्यन्ते पार्श्वद्वये यस्य स श्वेतचामरपर्यन्तः । उभयतो वीज्यमानचामर इत्यर्थः । विजयच्छत्रं विजयसूचकछत्रं । रत्नाभरणं पद्मरागाभरणं । हेमसंछादिताम्बरं तत्र तत्र सुवर्णचित्राम्बरं । सुवर्णसूत्रिताम्बरमिति वार्थः । उत्कृष्टकिणवक्षसं उपपादितकिणवक्षसं । उत्कृष्टस्य उल्लिखितस्य किणः वक्षसि यस्य स तथेति वार्थः । शशलोहितरागेण शशरुधिरसमानरागेण । रक्तशब्दविवरणमिदं । रक्तवाससा उत्तरीयेण । संवीतं परिवीतं ॥ ३—६ ॥ "हतं च रावणं संख्ये दर्शनादवधारय" इति रामसन्निधौ पूर्वं प्रतिज्ञातमर्थं साधयितुमुत्थितः सुग्रीवइत्याह—पश्यतामित्यादिना ॥ पश्यतामित्यनादरे षष्ठी । अत्रानादरणमनुक्त्वा गमनं । सप्तम्यर्थेषष्ठीवा । दर्शनात् दर्शनमात्रात् । क्रोधवेगेन कथं मत्स्वामिनोग्रे स्वयं राजोपचारेण तिष्ठति दुरात्मेति कोपातिशयेनेत्यर्थः । सत्त्वेन मनोबलेन । बलेन कायबलेन । पुप्लुवे गोपुरमुद्दिश्येति शेषः ॥ गोपुरस्थले स्थित्वेत्य-

स० रक्तवाससा स्नेहविषयेणवस्त्रेण ॥ ६ ॥

[ पा० ] १ ङ. झ. ट. नगरींत्रिदिवप्रख्यां. २ ङ. झ. ट. उपारोहत्ससुग्रीवोहरियूथैःसमन्वितः. ३ ङ. झ. तस्य. ४ ग. ङ. च. झ. ञ. ट. रक्ताभरणभूषितं. ५ क. ग. ङ.—ट. संछन्नं. ६ क. ख. ग. च. ञ. संतप्तः.

स्थित्वा मुहूर्तं संप्रेक्ष्य निर्भयेनान्तरात्मना ॥ तृणीकृत्य च तद्रक्षः सोऽब्रवीत्परुषं वचः ॥ ९ ॥
लोकनाथस्य रामस्य सखा दासोसि राक्षस ॥ न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ॥१०॥
इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि ॥ आकृष्य मुकुटं चित्रं पातयित्वाऽपतद्भुवि ॥ ११ ॥
समीक्ष्य तूर्णमायान्तमाबभाषे निशाचरः ॥ सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥ १२ ॥
इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले ॥ कन्तुवत्तं समुत्थाय बाहुभ्यामाक्षिपद्धरिः ॥ १३ ॥

परस्परं स्वेदविदिग्धगात्रौ परस्परं शोणितदिग्धदेहौ ॥
परस्परं श्लिष्टनिरुद्धचेष्टौ परस्परं शाल्मलिकिंशुकौ यथा ॥ १४ ॥
मुष्टिप्रहारैश्च तलप्रहारैररत्निघातैश्च कराग्रघातैः ॥
तौ चक्रतुर्युद्धमसह्यरूपं महाबलौ वानरराक्षसेन्द्रौ ॥ १५ ॥
कृत्वा नियुद्धं भृशमुग्रवेगौ कालं चिरं गोपुरवेदिमध्ये ॥
उत्क्षिप्य चाक्षिप्य विनम्य देहौ पादक्रमाद्गोपुरवेदिलग्नौ ॥
अन्योन्यमाविध्य विलग्नदेहौ तौ पेततुः सालनिखातमध्ये ॥ १६ ॥
उत्पेततुर्भूतलमस्पृशन्तौ स्थित्वा मुहूर्तं त्वभिनिश्वसन्तौ ॥
आलिङ्ग्य चावल्य च बाहुयोक्त्रैः संयोजयामासतुराहवे तौ ॥ १७ ॥
संरम्भशिक्षाबलसंप्रयुक्तौ संचेरतुः संप्रति युद्धमार्गैः ॥
शार्दूलसिंहाविव जातदर्पौ गजेन्द्रपोताविव संप्रयुक्तौ ॥ १८ ॥

न्वयः । अन्तरात्मना मनसा ॥ ७—९ ॥ रामाभिप्रायेण सखा वस्तुतो दासोसीति भावः । मया मत्तः । औद्धत्यं परिहरति—पार्थिवेन्द्रस्य तेजसेति ॥ १०—११ ॥ आयान्तं सुग्रीवमितिशेषः । परोक्षं ममासन्निधाने । त्वं सुग्रीवः शोभनग्रीवः । प्रत्यक्षं तु हीनग्रीवो भविष्यसीत्यर्थः ॥ १२ ॥ तले गोपुरतले । आक्षिपत् अपातयत् । कन्तुवत्समुत्थाय कन्तुकवज्झटित्युत्पत्येत्यर्थः ॥ १३ ॥ परस्परमित्यादि श्लोकद्वयमेकान्वयं ॥ आरम्भे दृढपरीरम्भेण स्वेदसिक्तगात्रौ । ततः खरतरनखक्षतेन शोणितलिप्तशरीरौ । ततो दृढाश्लिष्टतया निरुद्धचेष्टौ निष्पन्दौ । ततः परस्परत्यागे कुसुमितशाल्मलीकिंशुकाविव स्थितौ । तौ वानरराक्षसेन्द्रौ । मुष्टिप्रहारैः । मुष्टीनां व्यथायां तलप्रहारैः । तत्पीडायां अरत्निघातैः निष्कनिष्ठमुष्टियुक्तप्रकोष्ठप्रहारैः । "अरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । तद्बाधायां कराग्रघातैः । असह्यरूपं अत्यन्तासह्यं । प्रशंसायां रूपप्प्रत्ययः । युद्धं चक्रतुः ॥ १४—१५ ॥ कृत्वेत्यादिसार्धश्लोक एकान्वयः ॥ नियुद्धं मल्लयुद्धं बाहुयुद्धं वा । "नियुद्धं बाहुयुद्धं स्यात्" इत्यमरः । गोपुरवेदिमध्ये चिरं कालं नियुद्धं कृत्वा । तत उत्क्षिप्य परस्परमूर्ध्वं क्षिप्त्वा । आक्षिप्य आकृष्य । परस्परंदेहौ विनम्य विनाम्य । पादक्रमात् पादविन्यासविशेषात् । गोपुरवेदिलग्नौ पदात्पदं पश्चाच्चलित्वा पुनर्युद्धार्थमवसरप्रतीक्षतया गोपुरवेदिकायां निश्चलंस्थिताविवत्यर्थः । आविध्य बाहुभ्यां संवेष्ट्य । विलग्नदेहौ श्लिष्टदेहौ सन्तौ । सालनिखातयोः प्राकारपरिखयोर्मध्ये पेततुः ॥ १६ ॥ लाघवातिशयेन भूतलमस्पृष्ट्वैव उत्पेततुः । ततो मुहूर्तं तूष्णीं स्थित्वा श्रमवशादभिनिश्वसन्तौ पुनरालिङ्ग्य स्वयमेव स्वशरीरमालिङ्ग्य । आवल्य आप्लुत्य । बाहुयोक्त्रैः बाहुपाशैः संयोजयामासतुः । देहाविति शेषः । निबिडं बबन्धतुरित्यर्थः ॥ १७ ॥ संरम्भेति । संरम्भः अभिनिवेशः । शिक्षा अभ्यासः । बलं शक्तिः । एतैः संप्रयुक्तौ संयुक्तौ सन्तौ संप्रति युद्धमार्गैः चातुर्येण परस्परग्रहणानुकूलक्रमैरित्यर्थः । संप्रति तदानीमित्यर्थ इत्येके । शार्दूलसिंहौ शार्दूलश्रेष्ठौ । संप्रयुक्तौ

[ पा० ] १ घ.—ट. पातयामासतद्भुवि. २ ङ. च. छ. झ. ञ. ट. किंशुकाविव. ३ क. ग. ङ.—ट. मापीड्य. ४ च. छ. ञ. ट. चापीड्य. क. ग. घ. चावध्य.

संहत्य चापीड्य च तावुरोभ्यां निपेततुर्वै युगपद्धरण्याम् ॥
उद्यम्य चान्योन्यमधिक्षिपन्तौ संचक्रमाते बहुयुद्धमार्गैः ॥ १९ ॥
व्यायामशिक्षाबलसंप्रयुक्तौ क्लमं न तौ जग्मतुराशु वीरौ ॥
बाहूत्तमैर्वारणवारणाभैर्निवारयन्तौ वरवारणाभौ ॥ २० ॥
चिरेण कालेन तु संप्रयुक्तौ संचेरतुर्मण्डलमार्गमाशु ॥ २१ ॥
तौ परस्परमासाद्य यत्तावन्योन्यसूदने ॥ मार्जाराविव भक्षार्थे वितस्थाते मुहुर्मुहुः ॥ २२ ॥
मण्डलानि विचित्राणि स्थानानि विविधानि च ॥ गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ॥२३॥
तिरश्चीनगतान्येव तथा वक्रगतानि च ॥ परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४ ॥

सन्तौ गजेन्द्रपोतौ कलभौ। संहत्य संयोज्य। उरोभ्यामन्योन्यमापीड्य धरण्यां युगपन्निपेततुः। अथ उद्यम्य उद्धृत्य। अधिक्षिपन्तौ पातयन्तौ। एवं बहुयुद्धमार्गैः बहुयुद्धप्रकारैः। संचक्रमाते संचेरतुः ॥१८—१९॥ खुरल्यां श्रमजयाय कृतोभ्यासो व्यायामः तद्रूपा या शिक्षा तद्बलेन तदतिशयेन संप्रयुक्तौ संयुक्तौ। वार्यन्ते एभिरिति वारणाः आलानस्तम्भाः। वारणवारणाभैः बाहूत्तमैः अन्योन्यमाशु निवारयन्तावपि क्लमं श्रमं। न जग्मतुः ॥२०॥ चिरेणेत्यर्धं॥ चिरेणकालेन बहुकालेन। संप्रयुक्तौ युध्यमानौ तौ। मण्डलमार्गे चक्राकारमार्गे। चेरतुः चक्रतुरित्यर्थः। अयं च वक्ष्यमाणमार्गान्तराणामप्युपलक्षणं ॥ २१ ॥ तदेव प्रपञ्चयति—तावित्यादिना ॥ परस्परमासाद्य अन्योन्यसूदने अन्योन्यहिंसने। यत्तौ यत्नवन्तौ। भक्ष्यत इति भक्षः भक्ष्यद्रव्यं। तदर्थे तन्निमित्तं। मार्जाराविव वितस्थाते विशेषेण तस्थतुः। "समवप्रविभ्यःस्थः" इत्यात्मनेपदं। भक्षग्रहणदत्तावधानौ मार्जाराविव निश्चलं तस्थतुरित्यर्थः। मुहुर्मुहुरित्यनेन मध्येमध्ये मण्डलादिसंचारो व्यज्यते ॥२२॥ मण्डलानीत्यादि चतुःश्लोक्येकान्वया ॥ मण्डलानि परिभ्रमणविशेषान्। यथाहभरतः—" एकपादप्रचारो यः स चारीत्यभिधीयते। द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥ करणानां समायोगात्खण्डमित्यभिधीयते। खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत्" इति। विचित्राणि सव्यमपसव्यं सव्यापसव्यमर्धभ्रमणमित्यादिभेदाद्भिन्नानि। स्थानानि व्याघ्रसिंहादितुल्यावस्थानानिवैष्णवादिस्थानानि। पादयोः पूर्वापरतिर्यग्विक्षेपादिका विन्यासविशेषा इतियावत्। तदाहभरतः—" वैष्णवं समपादं च वैशाखं मण्डलं तथा। प्रत्यालीढमथालीढं स्थानान्येतानि षण्नृणां" इति पञ्चेति धनुर्वेदे। एषां लक्षणादिकथने ग्रन्थगौरवं स्यादिति तन्नाद्रियते। गोमूत्रिकाणि गोमूत्रसरणिसदृशानि गमनानि। गोमूत्रशब्दात्तदाकारगमनवाचकान्मत्वर्थे ठन्प्रत्ययः। गोमूत्रिकाणां चित्रत्वं गमनागमनादिभेदात्। गतप्रत्यागतानि उपसर्पणापसर्पणानि। एते उभयगतिप्रचारभेदाः। तिरश्चीनगतानि तिर्यग्गमनानि। वक्रगतानि सव्यापसव्यसंचरणानि। परिमोक्षं स्थानचालनेन प्रहाराणां मोघकरणं। वर्जनं प्रतिप्रयोगेन परिहरणं। परिधावनं एकस्य तिष्ठतः समन्तादन्यस्य गमनागमनं। अभिद्रवणं आभिमुख्येन शीघ्रं गमनं। आप्लावं अल्पाङ्गत्वानल्पाङ्गत्वादिभिर्विनम्य गमनं। ईषद्गमनं वा। मण्डूकवद्गमनमित्यर्थः। आस्थानं च सविग्रहं विग्रहसहितमास्थानं। विगृह्य केवलासनं प्रगृह्य निर्भयावस्थानमिति वार्थः। परावृत्तं पराङ्मुखगमनं। अपावृत्तं स्थित्वैव पश्चाचलनं। अवद्रुतं जिघृक्षया शरीरं संकुच्यावनम्य गमनं। अवप्लुतं प्रतियोधिनं पादेन प्रहर्तुमधोमुखेन प्लवनं। उपन्यस्तं प्रतियोधिबाहुग्रहणार्थं स्वबाहुप्रसारणं। अपन्यस्तं प्रतियोधिग्रहणवञ्चनार्थं स्वबाह्वोरपक्षेपणं। एवं खङ्गविद्यामल्लशास्त्रादिषूपदिश्यते। तत्तन्निदर्शने नितान्तं ग्रन्थगौरवं स्यात्। अतस्तदुपेक्ष्यते ॥ २३—

ति० संवेदनं प्रेरणं ॥१९॥ स० वारयन्त्येभिःप्रतिगजानितिवारणानि कराः। वारणानांगजानां तानि तदाभैः। परवारणः मुत्तमातङ्गः ॥ २० ॥ इतिचत्वारिंशःसर्गः ॥ ४० ॥

[ पा० ] १ ङ.—ट. संहत्यसंवेद्यचतौकराभ्यांतौपेततुर्वैयुगपद्धरायां. २ ख. ङ. च. झ. ञ. ट. मार्गे. ३ झ. ञ. ठ. परवारणाभौ. ४ ग. ङ. च. छ. झ. ट. कालेनभृशंप्रयुद्धौ. क. घ. ज. ट. कालेनभृशंप्रयुक्तौ. ५ ङ. झ. ञ. ट. भक्षार्थेऽवतस्थाते.

अभिद्रवणमाप्लावमवस्थानं च सविग्रहम् ॥ परावृत्तमपावृत्तमवद्रुतमवप्लुतम् ॥ २५ ॥
उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ ॥ तौ संचेरतुरन्योन्यं वानरेन्द्रश्च रावणः ॥ २६ ॥
एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः ॥ आरब्धुमुपसंपेदे ज्ञात्वा तं वानराधिपः ॥ २७ ॥
उत्पपात तदाकाशं जितकाशी जितक्लमः ॥ रावणः स्थित एवात्र हरिराजेन वञ्चितः ॥ २८ ॥
अथ हरिवरनाथः प्राप्य संग्रामकीर्तिं निशिचरपतिमाजौ योजयित्वा श्रमेण ॥
गगनमतिविशालं लङ्घयित्वाऽर्कसूनुर्हरिवरगणमध्ये रामपार्श्वं जगाम ॥ २९ ॥
इति स सवितृसूनुस्तत्र तत्कर्म कृत्वा पवनगतिरनीकं प्राविशत्संप्रहृष्टः ॥
रघुवरनृपसूनोर्वर्धयन्युद्धहर्षं तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

रामेण रावणकरग्रहणविमोचनेनपुनरागतंसुग्रीवंप्रत्यालिङ्गनपूर्वकं पुनरपिताद्दशसाहसकरणप्रतिषेधनम् ॥ १ ॥ तथा लक्ष्मणंप्रति युद्धादिसूचकदुर्निमित्तप्रदर्शनपूर्वकं सुवेलादवतरणेनसुग्रीवेणसह रणायसेनासंनाहपूर्वकं लङ्कांप्रत्यभियानम् ॥ २ ॥ लङ्कांगतेनरामेण नीलाङ्गदहनुमतां क्रमेण प्रागादिद्वारनिरोधनचोदनपूर्वकं स्वयंलक्ष्मणेनसहरावणाधिष्ठितोत्तरद्वारनिरोधनम् ॥ ३ ॥ तथा राजनीत्यनुसारेणसंदेशनिवेदनाय रावणंप्रत्यङ्गदप्रेषणम् ॥ ४ ॥ अङ्गदेनरावणमेत्यरामसंदेशनिवेदने तन्नियोगेन राक्षसैरङ्गदग्रहणम् ॥५॥ तदुद्वहनेनैवगगनमुत्प्लुतेनाङ्गदेन स्वाङ्गविधूननेनरक्षसामधःपातनपूर्वकं पादाभिघातात्प्रासादभञ्जनेन पुनारामपार्श्वागमनम् ॥ ६ ॥

अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ॥ सुग्रीवं संपरिष्वज्य तदा वचनमब्रवीत् ॥ १ ॥

२६ ॥ एतस्मिन्नित्यादिश्लोकद्वयमेकान्वयं ॥ अन्तरे अवकाशे । मायाबलं परितोनेकरावणप्रदर्शनं । आरब्धुमुपसंपेदे कर्तुमुपचक्रमे । तं मायोपक्रमं । जितेन जयेन काशते प्रकाशत इति जितकाशी । रावणस्य मायाबलोपक्रम एव निर्माय युध्यमानस्य सुग्रीवस्य जय इति ज्ञेयं । जितक्लमः जितश्रमः । बलिना चिरं मल्लयुद्धकरणादिति भावः । अत्र प्रासादे स्थित एव रावणो वञ्चितः पुनरागमने प्रतारितः ॥ २७—२८ ॥ हरिवरनाथः क्षणेन रावणहरणार्हपरिकरनियन्ता । रामभक्तिरेव स्वयंग्रामनहेतुरिति भावः । प्राप्य संग्रामकीर्तिं । रामस्य युद्धादागतां कीर्तिं स्वयमाजहारेति भावः । निशिचरपतिं । तत्सदृशेष्वनेकेषु विद्यमानेष्वपि तांस्तूष्णीकृत्य तेनैव युद्धं कृतवानितिभावः । आजौ । रावणवन्न च्छद्मना युद्धकृत् किन्तु मर्यादयेति भावः । योजयित्वा श्रमेण इतः पूर्वं तदज्ञातेन श्रमेण योजयित्वा । योजनं हि पूर्वमसंभावितस्यैव रावणस्य श्रमफलं । आत्मनस्तु कीर्तिरितिभावः । गगनमतिविशालं लङ्घयित्वाऽर्कसूनुः स्वस्यादित्यपुत्रत्वज्ञापनायाकाशमयत्नेनालङ्घयत् । अर्कसूनुः अज्ञातगमनवेगः । हरिवरगणमध्ये विनयेन स्वातिशयमप्रकाशयन् वानरेष्वन्यतमइति स्थितः । रामपार्श्वे जगाम रावणशिरोऽनादायागतोहं कथमस्याग्रे तिष्ठेयमिति पार्श्वे स्थितः । निशिचरपतिं श्रमेण योजयित्वा जगामेत्यनेन रामस्य प्रतिज्ञाहानिर्मा प्रसांक्षीदिति रावणमहत्वैवागत इति सूचितम् । मायाप्रयोगारम्भे समागमनं स्वेनापि मायाप्रयोगे रामस्य कोपः स्यादित्याशयात् ॥ २९ ॥ रघुवरनृपसूनोः रामस्य । तरुमृगगणमुख्यैः वानरगणमुख्यैः ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

अथ लङ्कावरोध एकचत्वारिंशे—अथेति ॥ तस्मिन्

[ पा० ] १ ङ. झ. ञ. मवस्थानंसविग्रहं. २ ङ. झ. ञ. विचेरतुः. ३ ख. घ.—छ. झ. ञ. प्राप्तसंग्रामकीर्तिः. ञ. प्राप्यकीर्तिमहात्मा. ४ क.—ङ. झ. ट. हरिगणबलमध्ये. ५ ख. ङ. च. छ. झ. ट. रामोवचनं. क. घ. च. इदंवचनं.

असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम् ॥ एवं साहसकर्माणि न कुर्वन्ति जनेश्वराः ॥ २ ॥
संशये स्थाप्य मां चेदं बलं च सविभीषणम् ॥ कष्टं कृतमिदं वीर साहसं साहसप्रिय ॥ ३ ॥
इदानीं मा कृथा वीर एवंविधमचिन्तितम् ॥ त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ॥४॥
भरतेन महाबाहो लक्ष्मणेन यवीयसा ॥ शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ॥ ५ ॥
त्वयि चानागते पूर्वमिति मे निश्चिता मतिः ॥ जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥ ६ ॥
हत्वाऽहं रावणं युद्धे सपुत्रबलवाहनम् ॥ अभिषिच्य च लङ्कायां विभीषणमथापि च ॥
भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल ॥ ७ ॥
तमेवंवादिनं रामं सुग्रीवः प्रत्यभाषत ॥ तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् ॥
मर्षयामि कथं वीर जानन्पौरुषमात्मनः ॥ ८ ॥
इत्येवंवादिनं वीरमभिनन्द्य स राघवः ॥ लक्ष्मणं लक्ष्मिसंपन्नमिदं वचनमब्रवीत् ॥ ९ ॥
परिगृह्योदकं शीतं वनानि फलवन्ति च ॥ बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ १० ॥
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ॥ निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ११ ॥

---

सुग्रीवे । निमित्तानि युद्धचिह्नानि । " निमित्तं हेतुलक्ष्मणोः " इत्यमरः ॥ १ ॥ जनेश्वराः राजानः । न कुर्वन्ति अस्मादृशपरिजने विद्यमाने न कुर्वन्तीत्यादरोक्तिः ॥ २ ॥ संशये संशयपदे । त्वत्साहसेऽस्मदादीनां जीवनं दुर्लभमिति भावः ॥ ३ ॥ इदानीमित्यादि श्लोकद्वयं ॥ इदानीं अद्यप्रभृति । अचिन्तितं अविचारितं । एवंविधं साहसं मा कृथाः । कुत इत्यत्राह—त्वयीति । त्वयि किञ्चित्समापन्ने । वानरेति संबोधनं । प्राप्ते मम सीतया किं कार्यं किं प्रयोजनं । अभिनववत्सवात्सल्येन पूर्ववत्समनमिलषन्त्या वत्सलाया गोरिव नित्यानपायिनीमपि सीतामनादृत्य तदानीमाश्रिते वानरमात्रेऽत्यभिनिवेशं कुर्वतो रामस्य वात्सल्यातिशय उच्यते । सीतया । " अर्धो वा एष आत्मनो यत्पत्नी " इत्यर्धशरीरभूतया न मे किञ्चित्कार्यं । भरतेन यवीयसेति कनिष्ठत्वमुच्यते । " भ्राता स्वा मूर्तिरात्मनः " इत्युक्तभरतादिनापि न मे किञ्चित्प्रयोजनं । स्वशरीरेण वा, " आत्मानं सर्वथा रक्षेद्दारैरपि धनैरपि " इत्युक्तशरीरेण वा किं क्रियते ॥ ४—५ ॥ एतदेव प्रपञ्चयति—त्वयीत्यादिना ॥ पूर्वं त्वय्यनागते सति । इति वक्ष्यमाणप्रकारेण मे मतिः निश्चितासीत् । जानतश्चापीति विशेषणेन अस्थाने भयशङ्कित्वोक्त्या वात्सल्यातिशय उक्तः । इतिशब्दार्थमाह—हत्वेति ॥ प्रतिज्ञानिर्वाहार्थमिति भावः । अभिषिच्येति । अन्यथा शरणागतिवैफल्यादिति भावः । भरत इति । अन्यथा कुलधर्मोच्छेदादिति भावः । महाबलेत्यनन्तरमितिकरणस्यान्वयः ॥ ६—७ ॥ तमेवमित्यादिसार्धश्लोकः ॥ पौरुषं त्वद्दास्यरूपं पुरुषधर्ममित्यर्थः । अतएवहि पूर्वं रावणान्तिके दासोस्मीत्युक्तवान् । जानन्नित्यनेन दासस्य कर्मैवेदं नतु साहसमित्युच्यते ॥ ८ ॥ अथ रामस्योत्साहविशेषं दर्शयति—इत्येवमिति ॥ लक्ष्मिसंपन्नमित्यत्र " इको ह्रस्वोऽङ्यो गालवस्य " इति ह्रस्वः । लक्ष्मीरत्र निमित्तदर्शनजः सन्तोषः ॥ ९ ॥ संविभज्य तत्तद्यूथपाधीनं कृत्वा । व्यूह्य गरुडादिरूपेण स्थापयित्वा ॥ १० ॥ लोककक्षयकरं लोकक्षयसूचकं । भीमं भयंकरं । भयं भयनि-

---

ति० त्वयिकिंचित्समापन्ने दैवात्त्वापमानादिप्राप्ताविस्यर्थः । "नाश्लीलंकीर्तयेत्" इत्युक्तेरेवंवादः । स० इदानीं इतःपरं । अचिन्तितं अनालोचितं । किंचिदितिसुकुमारोक्तिः । मरणमित्यर्थः । आपन्ने प्राप्ते । किंचिदित्यस्य तदर्थतानङ्गीकारेसीतयेत्याद्युत्तरग्रन्थास्वारस्यापत्तेः । "नाश्लीलंकीर्तयेत्" इत्युक्तेस्तथोक्तिः ॥ ४ ॥ ति० भगवन्कथमेवंमयितवप्राकृतइवशङ्केत्यत्राह—जानतश्चापीति । "अतिस्नेहः पापशङ्की" इतिन्यायादितिभावः ॥ ६ ॥

[ पा० ] १ क.—ट. साहसयुक्तानि. २ ङ. झ. ट. बलंचेमंविभीषणं. ३ ङ. झ. ट. मरिंदम. ४ ङ. झ. ट. मारोप्य. ५ घ. ङ. च. झ. ट. जानन्विक्रमं. ६ ख. ङ. झ. ञ. ट. तिष्ठाम.

वाताश्च परुषा वान्ति कम्पते च वसुन्धरा ॥ पर्वताग्राणि वेपन्ते पतन्ति धरणीरुहाः ॥ १२ ॥
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः ॥ क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥१३॥
रक्तचन्दनसंकाशा सन्ध्या परमदारुणा ॥ ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ १४ ॥
आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् ॥ दीना दीनस्वरा घोरा अप्रशस्ता मृगद्विजाः ॥१५॥
रजन्यामप्रकाशश्च संतापयति चन्द्रमाः ॥ कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये ॥
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ॥ १६ ॥
आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्तते ॥
युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ १७ ॥
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ॥ शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः॥१८॥
[ शैलैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः ॥ भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १९ ॥ ]
क्षिप्रमद्य दुराधर्षां लङ्कां रावणपालिताम् ॥ अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ २० ॥
इत्येवं संवदन्वीरो लक्ष्मणं लक्ष्मणाग्रजः ॥ तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ २१ ॥
अवतीर्य च धर्मात्मा तस्माच्छैलात्स राघवः ॥ परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ २२ ॥
सन्नह्य तु स सुग्रीवः कपिराजबलं महत् ॥ कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २३ ॥
ततः काले महाबाहुर्बलेन महता वृतः ॥ प्रस्थितः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥ २४ ॥
तं विभीषणसुग्रीवौ हनुमाञ्जाम्बवान्नलः ॥ ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २५ ॥

मित्तं । न केवलं लोकस्य प्रवीराणां चेत्याह—निबर्हणमिति । विनाशसूचकमित्यर्थः ॥ ११ ॥ तदेव भयनिमित्तं प्रपञ्चयति—वाता इति ॥ पतन्ति अनिमित्तमिति शेषः ॥ १२ ॥ क्रव्यादसंकाशाः श्येनादिसदृशसंस्थानाः। परुषाः क्रूरवेषाः। क्रूराः लोकक्षयसूचकाः । मिश्रं जलमिति शेषः ॥ १३—१४ ॥ आदित्यमभि आदित्याभिमुखं । दीनाः दीनवेषाः । दीनस्वराः दैन्यसूचकस्वरवन्तः । अतएव घोराः भयंकराः । अप्रशस्ताः हीनाः शिवादयः ॥ १५ ॥ कृष्णरक्तान्तपर्यन्तः कृष्णान्तो रक्तपर्यन्तश्चेत्यर्थः । ह्रस्वः व्याममात्रः । रूक्षः भयंकरः । अप्रशस्तः अशुभकरः । सुलोहितः रक्तमध्यः । परिवेषः लोकस्य संक्षये यथा तथा । दृश्यत इति शेषः ॥ १६ ॥ आदित्येत्यादिसार्धश्लोकः ॥ लक्ष्म चन्द्रकलङ्क इवेत्यर्थः । तथैव छान्दोग्ये—"यदादित्यस्य कृष्णं रूपं" इत्यत्र उत्पातकाले तथा दृश्यत इति व्याख्यातं । नक्षत्राणि यथावत् यथाप्रकारेण न दृश्यन्ते । मलिनानि दृश्यन्त इत्यर्थः । उक्तं निमित्तजातं लोकस्य युगान्तं शंसतीवाभिवर्तत इतियोजना ॥ १७ ॥ नीचैः ह्रस्वं वेदिकास्थानं । परिपतन्ति प्राप्नुवन्ति । शिवा इति । अप्रशस्तमृगजात्युक्तावपि पुनरुक्तिरशुभाधिक्यात् ॥ १८—१९ ॥ अभियामेति वर्तमानकाले लोट् ॥ २०—२१ ॥ तस्मात् सुवेलात् । बलमित्यनेन सर्वं बलं न सुवेलमारुहदिति गम्यते ॥२२॥ राघवः ससुग्रीवः सन् । कपिराजबलं कपिश्रेष्ठानां बलं । सन्नह्य प्रोत्साह्य । काले युद्धकाले । संयुगाय युद्धाय । अभ्यचोदयत् ॥ २३ ॥ काले प्रातःकाले

**स०** अग्निमण्डलं अग्निसमूहः ॥ १४ ॥ **स०** ऋक्षराजो धूम्रः ॥ २५ ॥

[ पा० ] १ ङ. झ. ट. वाताहिपरुषं. ख. च. छ. ञ. वाताहिकलुषाः. २ क. घ. ङ. झ. ट. नदन्तिधरणीधराः. ख. च. पतन्तिचमहीरुहाः. ३ ङ. झ. प्रवर्षन्ते. ४ ख. ङ. झ. मप्रशस्तश्च. ५ च. छ. लोकक्षयइवोदितः. ६ ख. घ. ङ. च. झ. ञ. ट. प्यशुभाः. ७ अयंश्लोकः क. ख. ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ८ ख.—ट. पुरीं. ९ च. ञ. प्रवदन्वीरो. १० ख.—छ. झ. ञ. ट. तौविभीषण.

ततः पश्चात्सुमहती पृतनर्क्षवनौकसाम् ॥ प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २६ ॥
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥ जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २७ ॥
तौ तु दीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ ॥ रावणस्य पुरीं लङ्कामासेदतुररिन्दमौ ॥ २८ ॥
पताकमालिनीं रम्यामुद्यानवनशोभिताम् ॥ चित्रवप्रां सुदुष्प्रापामुच्चैः प्राकारतोरणाम् ॥ २९ ॥
तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः ॥ यथानिवेशं संपीड्य न्यविशन्त वनौकसः ॥ ३० ॥
लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् ॥ रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ ३१ ॥
लङ्कामुपनिविष्टश्च रामो दशरथात्मजः ॥ लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥
उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः ॥ ३२ ॥
नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ रावणाधिष्ठितं भीमं वरुणेनेव सागरम् ॥ ३३ ॥
सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः ॥ लघूनां त्रासजननं पातालमिव दानवैः ॥ ३४ ॥
विन्यस्तानि च योधानां बहूनि विविधानि च ॥ ददर्शायुधजालानि तत्रैव कवचानि च ॥ ३५ ॥
पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ॥ अतिष्ठत्सह मैन्देन द्विविदेन च वीर्यवान् ॥ ३६ ॥
अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ॥ ऋषभेण गवाक्षेण गजेन गवयेन च ॥ ३७ ॥
हनुमान्पश्चिमद्वारं ररक्ष बलवान्कपिः ॥ प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च संगतः ॥ ३८ ॥
मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत ॥ सह सर्वैर्हरिश्रेष्ठैः सुपर्णश्वसनोपमैः ॥ ३९ ॥
वानराणां तु षट्त्रिंशत्कोट्यः प्रख्यातयूथपाः ॥ निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ॥४०॥
शासनेन तु रामस्य लक्ष्मणः सविभीषणः ॥ द्वारेद्वारे हरीणां तु कोटिंकोटिं न्यवेशयत् ॥ ४१ ॥
पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् ॥ अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ ४२ ॥
ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ॥ गृहीत्वा द्रुमशैलाग्रान्हृष्टा युद्धाय तस्थिरे ॥ ४३ ॥

॥ २४—२५ ॥ पृतना सेना ॥ २६ ॥ कुञ्जरप्रख्याः गजतुल्याः । परवारणाः शत्रुवारकाः ॥ २७—२८ ॥ पताकेत्यादिश्लोकद्वयं पताकमालिनीमित्यत्र "ङ्यापोः संज्ञाछन्दसोर्बहुलं" इति ह्रस्वः । उद्यानं कृत्रिमवनं । चित्रवप्रां चित्रचयां । यथानिवेशं यथास्थानं । रामवचोऽन्यूनं स्वं स्वं स्थानमनतिक्रम्येत्यर्थः । संपीड्य उपरुध्य ॥ २९—३० ॥ जुगोप परपरिभवादात्मीयं बलं ररक्षेत्यर्थः । रुरोधेत्यनेन " शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशं " इत्युक्तत्रिकूटशिखरारोहणमर्थसिद्धं ॥ ३१ ॥ लङ्कामित्यादिसार्धश्लोक एकान्वयः ॥ लक्ष्मणानुचरो वीर इति पाठः । रावणो यत्र तिष्ठति तदुत्तरद्वारमासाद्य लङ्कामुपनिविष्ट इत्यन्वयः ॥ ३२ ॥ रामेणैव निरोद्धव्यत्वे हेतुमाह—नान्य इत्यादिश्लोकद्वयेन ॥ लघूनां अल्पसाराणां ॥ ३३—३४ ॥ विन्यस्तानि द्वारोपान्तवेदिकादिष्वितिशेषः ॥ ३५ ॥ मैन्देन द्विविदेन चेत्यादिना प्रतिद्वारमधिकयूथपतिगमनस्यात्रोक्तत्वात्पूर्वं रामेण ते नियुक्ता इति ज्ञेयं ॥ ३६—३८ ॥ मध्यम इति । दुर्जयरावणेन्द्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयोर्मध्ये तदुभयद्वारनिरोधकानां काकाक्षिन्यायेन साहाय्यं कर्तुं सुग्रीवः स्वयमतिष्ठदिति ज्ञेयम् । " पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् । अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः " इति वक्ष्यमाणत्वात् । सुपर्णः गरुडः ॥ ३९—४२ ॥ वानरशार्दूलाः वानरश्रेष्ठाः ।

स० उत्तरं द्वारं रावणास्थितं । जुगोप आत्मबलं । रुरोधच लङ्कां । जुगोप अन्तस्स्थितरावणाद्यन्तस्स्थितेनरूपेणजुगोप । बहीरामरूपेणरुरोधचेतिवा । अन्तरेणरामप्रेरणांरावणःकिमपिकर्तुमक्षमइत्यनेन सूच्यते ॥ ३१ ॥ रामानु० लक्ष्मणानुचरोरामइतिपाठे रमयतीतिव्युत्पत्त्यारामविशेषणं ॥ ३२ ॥ स० तत् द्वारं । परिरक्षितुं रावणादयोयथानबहिरागच्छेयुस्तथारक्षि-

[ पा० ] १ क.—ट. तौलदीर्घेण. २ क. ग. घ. च.—ट. यथानिदेशं. ३ क. ख. ङ.—ट. तथैव. ४ ङ. च. ट. सुषेणस्सह.

सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः ॥ सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ४४ ॥
दशनागबलाः केचित्केचिद्दशगुणोत्तराः ॥ केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ ४५ ॥
सन्ति चौघबलाः केचित्केचिच्छतगुणोत्तराः ॥ अप्रमेयबलाश्चान्ये तत्रासन्हरियूथपाः ॥ ४६ ॥
अद्भुतश्च विचित्रश्च तेषामासीत्समागमः ॥ तत्र वानरसैन्यानां शलभानामिवोद्यमः ॥ ४७ ॥
परिपूर्णमिवाकाशं संछन्नेव च मेदिनी ॥ लङ्कामुपनिविष्टैश्च संपतद्भिश्च वानरैः ॥ ४८ ॥
शतं शतसहस्राणां पृथगृक्षवनौकसाम् ॥ लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ॥ ४९ ॥
आवृतः स गिरिः सर्वैस्तैः समन्तात्प्लवङ्गमैः ॥ ५० ॥
अयुतानां सहस्रं च पुरीं तामभ्यवर्तत ॥ ५१ ॥
वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः ॥ संवृता सर्वतो लङ्का दुष्प्रवेशापि वायुना ॥ ५२ ॥
राक्षसा विस्मयं जग्मुः सहसाऽभिनिपीडिताः ॥ वानरैर्मेघसंकाशैः शक्रतुल्यपराक्रमैः ॥ ५३ ॥
महाञ्शब्दोऽभवत्तत्र बलौघस्याभिवर्ततः ॥ सागरस्येव भिन्नस्य यथा स्यात्सलिलस्वनः ॥ ५४ ॥
तेन शब्देन महता सप्राकारा सतोरणा ॥ लङ्का प्रचलिता सर्वा सशैलवनकानना ॥ ५५ ॥
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ॥ बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ॥ ५६ ॥
राघवः संनिवेश्यैव सैन्यं स्वं रक्षसां वधे ॥ संमन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनः पुनः ॥
आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ॥ ५७ ॥

---

शैलाग्रानिति पुंस्त्वमार्षं ॥ ४३ ॥ विकृतलाङ्गूलाः ऊर्ध्वं प्रसारितपुच्छाः । विकृतचित्राङ्गा इत्यत्र विकृतत्वं कोपरक्तमुखनेत्रत्वं । अतएव चित्रं चित्रवर्णं अङ्गं येषां ते तथोक्ता इति विग्रहः । विकृताननाः राक्षसविडम्बनाय कुटिलितमुखाः ॥ ४४ ॥ दशगुणोत्तराः शतनागबला इत्यर्थः ॥ ४५ ॥ ओघबलाः ओघसङ्ख्याकनागबलाः । शतगुणोत्तराः ओघसङ्ख्याकनागबलेभ्यः शतगुणेन उत्तराः श्रेष्ठा इत्यर्थः । अप्रमेयबलाः अपरिच्छेद्यबलाः ॥ ४६ ॥ अद्भुतः आश्चर्यभूतः । विचित्रः वानरगोपुच्छभल्लूकजुष्टतया नानावर्णः । तत्र लङ्कायां तेषां वानरसैन्यानां । समागमः आगमनं । शलभानां शरभाणां अष्टापदमृगाणां । उद्यमः समागम इव आसीत् । तथा भयंकरोऽभूदित्यर्थः । यद्वा यथा शलभानां समागमो युगपद्भवति तथेति युगपत्पतने दृष्टान्तः ॥ ४७ ॥ परिपूर्णमिति अत्र इवशब्दद्वयमपि वाक्यालङ्कारे । उपनिविष्टैः पृथिवी पूर्णा । संपतद्भिः आगच्छद्भिस्तु । आकाशं पूर्णं । भूमाववकाशाभावादिति भावः ॥ ४८ ॥ शतसहस्राणां । ऋक्षवनौकसां शतं पूर्वनियुक्तेभ्योतिरिक्तं लङ्काद्वाराण्युपाजगाम । अन्ये वानराः समन्ततः युद्धार्थमुपाजग्मुरित्यन्वयः ॥ ४९ ॥ आवृत इत्यर्धमेकं वाक्यं ॥ स गिरिः त्रिकूटः ॥ ५० ॥ अयुतानामित्यर्धं ॥ अयुतानां सहस्रं च तां पुरीमभ्यवर्ततेत्यनेन पूर्वोक्तस्य द्वारावरणस्यानन्तरं अयुतानां सहस्रं च पुरीं तां पर्यवारयदित्युच्यते ॥ ५१ ॥ दुष्प्रवेशा बभूवेत्यन्वयः ॥ ५२ ॥ अभिनिपीडिताः उपरुद्धाः । राक्षसाः । विस्मयं आश्चर्यं जग्मुः ॥ ५३ ॥ तत्र त्रिकूटशिखरे । भिन्नस्य भिन्नमर्यादस्य । सागरस्येव अभिवर्ततः अभिवर्तमानस्य बलौघस्य । सलिलस्वनो यथा स्यात् तथा महाञ्छब्दो बभूवेति योजना । अतो न यथाशब्दवैयर्थ्यं ॥ ५४ ॥ सशैलवनकाननेत्यत्र वनं उद्यानं ॥ ५५ ॥ सुग्रीवेणेति रक्ष्यसाहित्यमुच्यते ॥ ५६ ॥ राघव इत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ वधे विषये । आनन्तर्य

---

तुमित्यर्थः ॥ ३३ ॥ **स०** नचराक्षसादीनामिवमायिकइत्याह—विचित्रइति । विगतमायइत्यर्थः । "चित्राखुपर्णीगोडुंबासुभद्रादन्तिकासुच । मायायां" इतिभानुदीक्षितोदाहृताभिधानात् । विचित्रः अगगनगइतिवा । " लेख्यतिलकेषुविहायसि " इतिविश्वः ॥ ४७ ॥ **ति०** ऋक्षवनौकसांशतसहस्राणां । शतकोटिरित्यर्थः । "एवंचकोटिसंख्याःपृतनाः लङ्काद्वाराण्युपाजग्मुः । पृतनाःऋक्षेत्यत्रसंधिरार्षः ॥ ४९ ॥ **स०** रक्षसांवधे । एतेन लोकानुकृत्याएवराजनीत्यनुसरणं । नश्यणोतिरावणोतोमारणमेवनि-

**[ पा० ]** १ ख. ग. शैलानामिवसंगमः. ङ. च. छ. झ. ञ. ट. शलभानामिवोद्गमः. २ ङ. झ. ट. पृतनार्क्षवनौकसां.

विभीषणस्यानुमते राजधर्ममनुस्मरन् ॥ अङ्गदं वालितनयं समाहूयेदमब्रवीत् ॥ ५८ ॥
गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात्कपे ॥ लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ॥५९॥
[1]भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन ॥ ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा ॥ ६० ॥
नागानामथ यक्षाणां राज्ञां च रजनीचर ॥ यच्च पापं कृतं मोहादवलिप्तेन राक्षस ॥
[ [2]तस्य पापस्य संप्राप्ता व्युष्टिरद्य दुरासदा ॥ ६१ ॥ ]
नूनमद्य गतो दर्पः स्वयंभूवरदानजः ॥ यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः ॥
दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ॥ ६२ ॥
पदवीं देवतानां च महर्षीणां च राक्षस ॥ राजर्षीणां च सर्वेषां गमिष्यसि मया हतः ॥ ६३ ॥
बलेन येन वै सीतां मायया राक्षसाधम ॥ मामतिक्रामयित्वा त्वं हृतवांस्तन्निदर्शय ॥ ६४ ॥
अराक्षसमिदं लोकं कर्ताऽस्मि निशितैः शरैः ॥ न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ॥६५॥

अनन्तरकर्तव्यं । अभिप्रेप्सुः प्राप्तुमिच्छुः । संमन्त्र्य दूतः प्रेषणीय इति विचार्य । निश्चित्य अङ्गद एव प्रेषणीय इति निर्धार्य । क्रमयोगार्थतत्त्ववित् क्रमयुक्ता योगाः सामाद्युपायाः तेषामर्थः फलं तस्य तत्त्वं याथार्थ्यं वेत्तीति तथोक्तः । राजधर्ममनुस्मरन् युयुत्सया शत्रुपुरं प्रत्यागता राजानः युद्धार्थं दूतमुखेन प्रथममाह्वयन्तीत्येवं रूपं राजधर्ममनुस्मरन् । विभीषणस्यानुमते अनुमतौ सत्यां । अङ्गदं समाहूयेदमब्रवीदिति संबन्धः ॥ ५७—५८ ॥ हे सौम्य गतव्यथः गतश्रमः सन् । लङ्कां पुरीं तत्प्राकारं लङ्घयित्वा भयं त्यक्त्वा दशग्रीवं मद्वचनात् ब्रूहि मयोक्तमितिब्रूहीत्यर्थः । कपे इत्यनेन लङ्घनसामर्थ्यं द्योतयति ॥ ५९ ॥ भ्रष्टश्रीक भ्रष्टप्रायद्रविण । गतैश्वर्य गतप्रायनियन्तृत्व । संपदि भ्रष्टायामपि लोके नियन्तृत्वं संभवति । तदपिनास्तीत्यर्थः । तदुभयाभावेपि जीवनाशा संभवति सापिनास्तीत्याह—मुमूर्षो इति । तदानीमपि ज्ञानं संभवति तदपि नास्तीत्याह—नष्टचेतनेति ॥ ६० ॥ नागानां सर्पाणां । अवलिप्तेन गर्वितेन त्वया । ऋषिप्रमुखानां यत्पापं कृतं यो द्रोहः कृतः । तस्य कारणभूतः स्वयंभूवरदानजो दर्पो गतः गतप्राय इत्यन्वयः । तत्र हेतुमाह—यस्येति । दण्डधरः नियन्ता । अहं यस्य ते दण्डं धारयमाणः करिष्यमाण इत्यर्थः ॥ ६१—६२ ॥ एवंविधस्य नियमने तव किं भविष्यतीत्यत्राह—पदवीमिति ॥ पदवीं तेषु कृतं परिभवं तमपि गमिष्यसीत्यर्थः । यद्वा पदवीं लोकं । युद्धे स्थितः सन् तेषां लोकं गमिष्यसि । युद्धे स्थित्वा सर्वपापविशुद्धः सन् गतिं गमिष्यसि । ततस्तूर्णमागच्छेति भावः ॥ ६३ ॥ मायया मारीचमायया । मां अतिक्रामयित्वा अपवाह्य । ल्यबभाव आर्षः । येन बलेन यद्बलमवलम्ब्य । सीतां हृतवानसि तद्बलं निदर्शयेत्यन्वयः ॥ ६४ ॥ मैथिलीमुपादाय समर्प्य मां शरणं नाभ्येषि चेदिमं लोकमराक्षसं कर्तास्मि । शरणागतौ तु सर्वं क्षमिष्य इति भावः । मैथिलीमुपादायेत्यनेन स्वर्णस्तेये स्वर्णप्रत्यर्पणमन्तरेण प्रायश्चित्तानधिकारवत्सीताप्रत्यर्पणाभावे शरणागतौ तु नाधिकार इत्युक्तं । रावणेन शरणागतौ कृतायां विभीषणाय कोसलराज्यं दास्यामीत्यभिप्रायः ॥६५॥

श्चितमितिसूचयति ॥ ५७ ॥ ती० राजधर्ममनुस्मरन्नितिपाठे राजदन्तादित्वाद्धर्मशब्दस्यपूर्वनिपातः । ति० राजधर्ममनुस्मरन् सामादित्र्युपायसाध्येऽर्थेदण्डोनमोक्तव्यःप्रजानाशहेतुरित्येवंरूपंराजधर्ममनुचिन्तयन् । स० विभीषणस्यानुमतइति विभीषणस्यराज्याभिषेको जातइतिसन्धौ वनतदभिसन्धिसिद्धिरितितत्संमतीकरणमुचितमितिभावः । सर्वज्ञत्वंरामस्यविराजतइतिनदुश्चित्तताविभीषणस्येतिपरमार्थः ॥ ५८ ॥ ती० एवंविधस्यममनियमनेतवकिंभविष्यतीत्यत्राह—पदवीमिति । युद्धेस्थितः सन् दैवतादीनांपदवींपुण्यलोकंगमिष्यसीतिसंबन्धः । "राजभिर्धृतदण्डास्तुकृत्वापापानिमानवाः । निर्मलाःस्वर्गमायान्तिसन्तःसुकृतिनोयथा । राजात्वशासन्पापस्यतदवाप्नोतिकिल्बिषं" इतिवचनादुभयोरपिपापनिवृत्तिरूपंफलंभविष्यतीतिभावः ॥ ६३ ॥

[ पा० ] १ ङ. झ. ञ. भ्रष्टश्रीकंगतैश्वर्यंमुमूर्षुंनष्टचेतनं. २ इदमर्धं क. ख. घ. च. छ. ञ. पाठेषुदृश्यते.

धर्मात्मा रक्षसां[1] श्रेष्ठः संप्राप्तोयं विभीषणः ॥ लङ्कैश्वर्यं[2] ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम्[3] ॥ ६६ ॥
न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया ॥ शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ६७ ॥
युध्यस्व वा[4] धृतिं कृत्वा शौर्यमालम्ब्य राक्षस ॥ मच्छरैस्त्वं रणे शान्तस्ततः[5] पूतो भविष्यसि ॥६८॥
यद्वा[6] विशसि लोकांस्त्रीन्पक्षिभूतो[7] मनोजवः ॥ मम चक्षुष्पथं प्राप्य न जीवन्प्रतियास्यसि ॥ ६९ ॥
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदैहिकम् ॥ सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥७०॥
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ॥ जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ७१ ॥
सोऽतिपत्य[8] मुहूर्तेन श्रीमान्रावणमन्दिरम् ॥ ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७२ ॥
ततस्तस्याविदूरे[9] स निपत्य हरिपुङ्गवः ॥ दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ७३ ॥
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् ॥ सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७४ ॥
दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ॥ वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७५ ॥

---

शरणागत्यकरणे स्वकर्तव्यमाह—धर्मात्मेति ॥ यद्वा शरणागतौ प्राणत्राणं करिष्यामि न तु राज्यं दास्यामीत्यभिप्रायेणाह—धर्मात्मेति ॥ धर्मात्मा धर्मबुद्धिः । रक्षसां श्रेष्ठः राक्षसनायकइत्यर्थः । अयं विभीषणः । संप्राप्तः मां प्रपन्नः । तस्माल्लङ्कैश्वर्यमयं प्राप्नोति उत्तरक्षणे प्राप्स्यतीत्यर्थः । श्रीमान् तदनुगुणानुकूल्यवान् । एवं क्रियाभेदादयंशब्दद्वयोपपत्तिः ॥ ६६ ॥ एवं विभीषणस्य राज्ययोग्यतामुक्त्वा रावणस्य तदभावमाह—न हीति ॥ अधर्मेण धर्मरहितेन । अतएव पापेन पापिष्ठेन । अतएवाविदितात्मना अस्वाधीनमनस्केन । मूर्खसहायेन त्वया न शक्यमित्यन्वयः ॥ ६७ ॥ सीतामादाय शरणमागतोसि चेद्विभीषणाय राज्यं दत्त्वा त्वत्प्राणान् रक्षामि अन्यथा युध्यस्वेत्याह—युध्यस्वेति ॥ शान्तः मृतः । पूत इति । युद्धे अपरावृत्त्या मृतेः सर्वपापप्रायश्चित्तत्वादिति भावः ॥ ६८—६९ ॥ क्रियतामौर्ध्वदैहिकमिति अराक्षसकरणेन श्राद्धकर्त्रभावात्स्वयमेव जीवच्छ्राद्धं कुर्वित्यर्थः । सुदृष्टेति । म्रियमाणा हि चापलेन पुत्रकलत्रादिमुखदर्शनं कुर्वन्ति तद्वदिति भावः । मयि स्थितं मदायत्तं । अवश्यं त्वां नाशयामीत्यर्थः ॥ ७० ॥ मूर्तिमान् करचरणादिसंस्थानवान् । हव्यवाट् अग्निः ॥ ७१ ॥ अतिपत्य प्राप्य । अव्यग्रं ददर्शेत्यन्वयः । श्रीमानित्यनेन हर्षवत्त्वमुच्यते ॥ ७२—७३ ॥ उत्तमं पथ्यं । सामात्यं रावणमिति शेषः । आत्मना स्वयं । आत्मानं निवेद्य । आत्मनो वालिपुत्रत्वादिनिवेदनपूर्वकं रामवचनं कथयामासेत्यर्थः ॥ ७४ ॥ यदि ते श्रोत्रमा-

---

**ति०** शरणागतिं विनाजीवनंराज्यंचसुतरांदुर्लभमित्याह—धर्मात्मेत्यादि । इहागत्यमांशरणंप्राप्तोविभीषणइदंलङ्कैश्वर्यंअकण्टकंत्वद्रूपकण्टकरहितं । ध्रुवंप्राप्नोति । तत्प्राप्तियोग्यतांधर्मात्मेत्यादिविशेषणैर्दर्शयति । धर्मात्मा धर्मप्रधानः । नित्यंधर्मेचित्तश्च । इदमैश्वर्यस्यसाक्षान्निदानं । राक्षसश्रेष्ठेत्यनेन त्वदनन्तरंन्यायप्राप्तं तस्यराज्यमितिदर्शितं । श्रीमानित्यनेन तदैश्वर्यप्रापकाशेषलक्षणवत्त्वं । मांप्राप्येत्यनेन तत्प्रापकसमग्रसामग्रीसंपत्प्रदर्शिता ॥ ६६ ॥ **स०** मूर्खसहायेन अनेन । महान्तोनसन्तिवक्तारस्तवसमीपइतिसूच्यते । एतावत्कालपर्यन्तंराज्यभोजकादृष्टेन भुक्तंनक्तञ्चरराज्यं । इतःपरमधर्मशासकेमय्युपायातेतद्भोगयोगस्तवकथंस्यादितिभावः ॥ ६७ ॥ **ति०** शरणव्रजनेतुजीवितमेकांशेनराज्यंचतवापिदास्यामि । तदभावेतुदण्डाधिकारिणामयासर्वथावध्यस्त्वं । युद्धवधश्चपरमंहितंतवेतिपरमदयालुर्भगवांस्तदेवोपदिशति—**युध्यस्वेति** । मा मां धृतिंकृत्वा युध्यस्व । मच्छरैः पापशोधनाधिकृतस्य ममशरैः । रणेशान्तः समाप्तः । ततएवहेतोःशान्तः आजन्मकृतात्पापात्पूतोभविष्यसि दर्शननामस्मरणैःपापशोधनफलकएवायमवतारस्त्वत्वेनज्ञायते । तथाज्ञानाभावेपिमत्तोमरणेकिंचित्कालोत्तरमुत्तमक्षत्रियकुलेजन्मप्राप्तिरितिभावः ॥ ६८ ॥ **स०** और्ध्वदैहिकं मृत्यनन्तरंलोकान्तरेसुखप्रापकंदानादिकं । क्रियतां । अनुशतिकादित्वादुभयपदवृद्धिः । अनेन पुत्राअप्यसन्तइतिसर्वनाशेकर्ताकोपिनजीविष्यतीतिद्योत्यते । "प्रियैर्दत्तंप्रियंभवेत्" इतिदशरथोक्तेर्विभीषणेनकृतंसदपितवसंमतंनभवेदित्येवमुक्तिः ॥७०॥

**[ पा० ]** १ ख. ग. ङ. च. झ. ञ. ट. राक्षसश्रेष्ठः. २ ङ. झ. ट. लङ्कैश्वर्यमिदंश्रीमान्ध्रुवं. ३ क. च. छ. प्राप्तोह्यकण्टकं. ४ झ. माधृतिं. ५ ङ. झ. ट. शान्तोभविष्यसि. ६ क. ग.—ट. यद्याविशसि. ७ च. झ. ञ. ट. पक्षीभूतोनिशाचर. ङ. पक्षीभूत्वानिशाचर. ८ च. सोभिप्लुत्य. ९ क. ख. ग. ङ. झ. ट. स्तस्याविदूरेण.

आह त्वां राघवो रामः कौसल्यानन्दवर्धनः ॥ निष्पत्य प्रतियुध्यस्व नृशंस पुरुषो[1] भव ॥ ७६ ॥
हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् ॥ निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥७७॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ॥ ७८ ॥
विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि ॥ न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ॥ ७९ ॥
इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे ॥ अमर्षवशमापन्नो निशाचरगणेश्वरः ॥ ८० ॥
ततः स रोषताम्राक्षः[2] शशास सचिवांस्तदा ॥ गृह्यतामेष[3] दुर्मेधा वध्यतामिति चासकृत् ॥ ८१ ॥
रावणस्य वचः श्रुत्वा दीप्ताग्निसमतेजसः[4] ॥ जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ॥ ८२ ॥
ग्राहयामास तारेयः स्वयमात्मानमात्मवान् ॥ बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ८३ ॥
स तान्बाहुद्वये[5] सक्तानादाय पतंगानिव ॥ प्रासादं शैलसंकाश[7]मुत्पपाताङ्गदस्तदा ॥ ८४ ॥
तेऽन्तरिक्षाद्विनिर्धूतास्तस्य[8] वेगेन राक्षसाः ॥ भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ८५ ॥
ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम्[9] ॥ ददर्श[10] राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान् ॥ ८६ ॥
तत्पफाल[11] पदाक्रान्तं दशग्रीवस्य पश्यतः ॥ पुरा हिमवतः शृङ्गं वज्रिणेव[12] विदारितम् ॥ ८७॥
भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः ॥ विनद्य सुमहानादमुत्पपात विहायसम्[13] ॥८८॥
व्यथयन्राक्षसान्सर्वान्हर्षयंश्चापि वानरान् ॥ स वानराणां मध्ये तु रामपार्श्वमुपागतः ॥ ८९ ॥
रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् ॥ विनाशं चात्मनः पश्यन्निश्वासपरमोऽभवत् ॥ ९० ॥
रामस्तु बहुभिर्हृष्टैर्निनदद्भिः प्लवङ्गमैः ॥ वृतो रिपुवधाकाङ्क्षी युद्धायैवा[14]भ्यवर्तत ॥ ९१ ॥
सुषेणस्तु महावीर्यो गिरिकूटोपमो हरिः ॥ बहुभिः संवृतस्तत्र वानरैः कामरूपिभिः ॥ ९२ ॥
चतुर्द्वाराणि[15] सर्वाणि सुग्रीववचनात्कपिः ॥ पर्यक्रामत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥ ९३ ॥

गतः । मां श्रुतवानसि किमित्यर्थः ॥ ७५ ॥ राघव इत्यादिना छद्मना न योत्स्यत इत्युक्तं । कौसल्यानन्दवर्धन इत्यनेन बहुतपःप्रभावजनिततया धार्मिकत्वमुक्तं । निष्पत्य पुरान्निर्गत्य । पुरुषो भव शूरो भवेत्यर्थः । पुरुषाधमेति पाठे पुरोपरोधेप्यनिर्गमने नूनं पुरुषाधम एवासीति भावः ॥ ७६ ॥ हन्तेति अहमिति शेषः । निरुद्विग्नाः निर्भयाः ॥ ७७ ॥ उद्धरिष्यामि उन्मूलयिष्यामि । कण्टकं बाधकमित्यर्थः ॥ ७८—७९ ॥ आपन्नः प्राप्तः । बभूव ॥८०॥ दुर्मेधाः दुर्बुद्धिः । न दूतो वध्य इति शास्त्रानभिज्ञ इत्यर्थः । असकृच्छशासेत्यन्वयः । यद्वा दुर्मेधा इत्यङ्गदमेवाह ॥ ८१—८२ ॥ यातुधानगणे विषये स्वबलं दर्शयितुं । आत्मवान् धृतिमान् । स्वयं आत्मानं ग्राहयामास ग्रहीतुमनुमेने ॥ ८३—८६ ॥ पफाल व्यशीर्यत ॥ ८७ ॥ विश्राव्य विशेषेण श्रावयित्वा ॥ ८८—८९ ॥ प्रासादधर्षणात् प्रासादभञ्जनात् । पश्यन् तर्कयन् । निश्वासपरमः अधिकनिश्वासः ॥ ९० ॥ राम इति अङ्गदागमनं दृष्ट्वेति शेषः ॥ ९१ ॥ संवृतः बभूवेति शेषः । उत्तरश्लोकेनैकवाक्यत्वे हरिकपिशब्दयोःपौनरुक्त्यं स्यात् ॥ ९२ ॥ न्यूनताव्यावृ-

**स०** वनपर्वणिमार्कण्डेयोपाख्याने "इङ्गितज्ञास्ततोभर्तुश्चत्वारोरजनीचराः । चतुर्ष्वङ्गेषुजगृहुःशार्दूलमिवपक्षिणः" इत्युक्तेः 'गृह्यतांबध्यतामितिशशास' अङ्गचेष्टाभिःसूचयामास ॥ ८१ ॥ **सत्य०** राक्षसाः वचःश्रुत्वेवजगृहुः । चतुर्ष्वङ्गेषु स्कन्धभुजेषु पार्श्वद्वयवर्तिष्वितिसंभवत्यैककण्ठ्यं ॥ ८२ ॥ **ति०** युद्धायैवाभिवर्तत अभ्यवर्तत ॥ ९१ ॥

**[ पा० ]** १ क.—घ. च. ज. पुरुषाधम. २ ङ. झ. ट. रोषमापन्नः. ३ क. ख. ङ.—ट. गृह्यतामिति. ४ झ. ञ. ट. दीप्ताग्निमिवतेजसा. ५ क.—ङ. झ. ञ. ट. बाहुद्वयासक्तान्. ६ च. छ. ञ. हरिपुङ्गवः. ७ घ. शैलशृङ्गाभं. ८ ङ.—ट. तस्योत्पतनवेगेननिर्धूतास्तत्रराक्षसाः. ९ क.—ङ. मिवोच्छ्रितं. १० च. बभञ्ज. ङ. झ. ञ. ट. चक्राम. ११ ङ. झ. ट. पफालचतदाक्रान्तं. ग. घ. तत्पफालतदाक्रान्तं. १२ ख.—ट. वज्रेणेव. १३ ख. ङ. झ. ट. विहायसा. १४ ङ. झ. ञ. ट. वाभिवर्तत. १५ ङ. झ. ट. सतुद्वाराणिसंयम्य.

तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् ॥ लङ्कामुपनिविष्टानां सागरं चाभिवर्तताम् ॥ ९४ ॥
राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथा परे ॥ अपरे समरोद्धर्षाद्धर्षमेवं प्रपेदिरे ॥ ९५ ॥
कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम् ॥ ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम् ॥९६ ॥
हाहाकारं प्रकुर्वन्ति राक्षसा भयमोहिताः ॥ ९७ ॥

तस्मिन्महाभीषणके प्रवृत्ते कोलाहले राक्षसराजधान्याम् ॥
प्रगृह्य रक्षांसि महायुधानि युगान्तवाता इव संविचेरुः ॥ ९८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

राक्षसैर्वानरसेनाकृतलङ्काद्वारनिरोधनंनिवेदितेनरावणेन प्रासादारोहणेन तत्सेनावलोकनम् ॥ १ ॥ उच्चप्रदेशारोहणेन लङ्कामवलोकयतारामेण सीतास्मरणेनशोचनपूर्वकं वानरान्प्रतियुद्धचोदना ॥ २ ॥ ततोरावणचोदितराक्षसानां वानराणांच युद्धारंभः ॥ ३ ॥

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् ॥ न्यवेदयन्पुरीं रुद्धां रामेण सह वानरैः ॥ १ ॥
रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः ॥ विधानं द्विगुणं कृत्वा प्रासादं सोध्यरोहत ॥ २ ॥
स ददर्शावृतां लङ्कां सशैलवनकाननाम् ॥ असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ ३ ॥
स दृष्ट्वा वानरैः सर्वां वसुधां कबलीकृताम् ॥ कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४ ॥
स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः ॥ राघवं हरियूथांश्च ददर्शायतलोचनः ॥ ५ ॥
राघवः सह सैन्येन मुदितो नाम पुप्लुवे ॥ लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६ ॥

त्यर्थं सर्वाणीत्युक्तं । कपिः सुषेणः । पर्यक्रामत परितश्चचार । नक्षत्राणि नक्षत्रनिरूपितराशीनित्यर्थः ॥ ९३ ॥ अक्षौहिणिशतमित्यत्र " ङ्यापोः संज्ञाछन्दसोर्बहुलं " इति ह्रस्वः । अनेकाक्षौहिणीमित्यर्थः । सागरंचाभिवर्ततां सागरसमीपे वर्तमानानामित्यर्थः । राक्षसाः धीरा इति शेषः । अपरे अधीरा इत्यर्थः । उद्धर्षात् गर्वात् ॥ ९४—९५ ॥ हरिभिर्व्याप्तं प्राकारपरिखान्तरं प्राकारपरिखयोरन्तरालं । वानरीकृतं वानरप्रचुरतया कृतं । अपरमिव प्राकारं ददृशुरित्यर्थः ॥ ९६ ॥ हाहेत्यर्धं ॥ ९७—९८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

अथ युद्धारम्भो द्विचत्वारिंशे—तत इति ॥ तत्र तस्मिन्काले ॥ १ ॥ विधानं रक्षणविधिं । द्विगुणं पूर्वस्मादधिकं ॥ २ ॥ स इति । सर्वत आवृतामित्यन्वयः ॥ ३ ॥ कबलीकृतां आच्छादितां । कपिलीकृतामितिपाठे वानरवर्णेन कपिलीकृतां । क्षपयितव्याः नाशयितव्याः । एत इति शेषः ॥ ४ ॥ आयतलोचन इत्यनेन विस्मयातिशय उच्यते ॥ ५ ॥ पुप्लुवे

**ति०** शतशब्दोनन्तवाची । सागरंचाभिवर्ततां सागरपर्यन्तमभिव्याप्यवर्तमानानामित्यर्थः ॥ ९४ ॥ **शि०** अपरेराक्षसास्त्रासंजग्मुः । अपरे अन्ये । समरेहर्षात् अन्यसमरहर्षस्मरणात् । हर्षमेवोपपेदिरे । श्लोकद्वयमेकान्वयि ॥ ९४—९५ ॥ इत्येकचत्वारिंशःसर्गः ॥ ४१ ॥

**ति०** मुदितःपुप्लुवे । नामशब्दोवाक्यालङ्कारे । प्राकारसमीपमितिशेषः । रामाधिरूढवानरप्लवनंरामेउपचर्यते ॥ ६ ॥

**[ पा० ]** १ क. ख. ङ.—ट. मेवोपपेदिरे. २ छ. वानरैःकृतं. च. वानरैर्वृतं. ३ क.—ट. हाहाकारमकुर्वन्त. ४ ङ.—ट. भयमागताः. ५ ङ. च. झ. ट. सर्ववसुधां.

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ॥ जगाम [1]सहसा सीतां दूयमानेन चेतसा ॥ ७ ॥
अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा ॥ पीड्यते शोकसन्तप्ता कृशा स्थण्डिलशायिनी ॥८॥
[2]पीड्यमानां स धर्मात्मा वैदेहीमनुचिन्तयन् ॥ क्षिप्र[3]माज्ञापयामास वानरान्द्विषतां वधे ॥ ९ ॥
एवमुक्ते तु [4]वचने रामेणाक्लिष्टकर्मणा ॥ संघर्षमाणाः प्लवगाः सिंहनादै[5]रनादयन् ॥ १० ॥
शिखरैर्विकिरामै[6]नां लङ्कां मुष्टिभिरेव वा ॥ इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११ ॥
उद्यम्य गिरिशृङ्गाणि शिखराणि महान्ति च ॥ तरूंश्चोत्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः ॥१२॥
प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः ॥ राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३ ॥
ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः ॥ लङ्कामेवाभ्यवर्तन्त [7]सालतालशिलायुधाः ॥ १४ ॥
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः ॥ [8]प्राकाराग्राण्यरण्यानि ममन्थुस्तोरणानि च ॥ १५ ॥
[9]परिखाः पूरयन्ति स्म प्रसन्नसलिलायुताः ॥ पांसुभिः पर्वताग्रैश्च तृणैः काष्ठैश्च वानराः ॥ १६ ॥
ततः सहस्रयूथाश्च कोटियूथाश्च वानराः ॥ [10]कोटीशतयुताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७ ॥
काञ्चनानि [11]प्रमृद्नन्तस्तोरणानि प्लवङ्गमाः ॥ कैलासशि[12]खराभाणि गोपुराणि प्रमथ्य च ॥ १८ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ लङ्कां तामभिधावन्ति महावारणसन्निभाः ॥ १९ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ॥ राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २० ॥
इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥ २१ ॥

नाम पूर्वस्थानात् प्राकारसन्निकृष्टं प्रदेशं प्राप्त इत्यर्थः ॥ ६ ॥ दूयमानेनेति । सीतां स्मृत्वा दुःखितोभूदित्यर्थः ॥ ७ ॥ मृगशावाक्षीत्यनेन शोकानर्हत्वमुच्यते । स्थण्डिलशायिनी भूतलशायिनी ॥ ८ ॥ पीड्यमानां राक्षसीभिरिति शेषः । धर्मात्मेत्यनेन दयालुत्वमुच्यते ॥ ९ ॥ वचने आज्ञापनरूपे । सङ्घर्षमाणाः स्पर्धमानाः । अनादयन् लङ्कामितिशेषः ॥ १० ॥ विकिराम चूर्णयाम । मनांसि दधिरे निश्चयं चक्रुरित्यर्थः ॥ ११ ॥ शिखराणि पर्वतखण्डान् । शिखरं शैलखण्डमिति संग्रहकारः । तिष्ठन्ति अतिष्ठन् ॥ १२ ॥ प्रेक्षतः प्रेक्षमाणमनादृत्य । तान्यनीकानि वानरानीकानि । भागशः स्वस्वनियुक्तप्रदेशे । लङ्कां लङ्काप्राकारं । राघवप्रियकामार्थं रामप्रीतिसिद्ध्यर्थमित्यर्थः ॥ १३ ॥ त्यक्तजीविताः “आशंसायां भूतवच्च” इति क्तः ॥ १४ ॥ अरण्यानि उद्यानानि । तोरणानि बहिर्द्वाराणि । ममन्थुः बभञ्जुरित्यर्थः ॥ १५–१६ ॥ कोटीशतयुताः कोटीशतयूथयुताः ॥ १७ ॥ काञ्चनानीत्यादिश्लोकद्वयं । काञ्चनानि काञ्चनकृतानि । प्रमृद्नन्तः चूर्णयन्तः । आप्लवन्तः प्लवन्तश्च गमनागमने कुर्वन्तः ॥ १८—२० ॥ घोषयन्तः घुष्यन्तः ।

**ती०** दूयमानेन संतप्यमानेन । चेतसा उपलक्षितः । मनसाजगाम सस्मारेत्यर्थः ॥ ७ ॥ **ति०** मत्कृते मन्निमित्तं । शोकसंतप्तापिपीड्यते मदर्थंरामस्यैवंमहाक्लेशोऽजायतेतिखिन्नाभवतीत्यर्थः ॥ ८ ॥ **ती०** राघवप्रियकामार्थं प्रियविषयःकामोमनोरथः तत्सिद्ध्यर्थं राघवस्यप्रियविषयमनोरथसिद्धयेइत्यर्थः ॥ १३ ॥ **स०** त्यक्तजीविताः तावत्पर्यन्तंधैर्ययुक्ताइत्यर्थः । **वि०** त्यक्तजीविताः त्यक्तव्यजीविताः ॥१४॥ **ति०** परिखानितिपुंस्त्वमार्षं । **स०** पांशुभिः पांसुभिरितिपाठद्वयमेकार्थं । “तालव्याश्चैवदन्त्याश्चशंबशूकरपांशवः’ इत्युक्तेः ॥ १६ ॥ **ति०** कैलासशिखराग्राणि तद्वदुच्चावचानि गोपुराणि ॥ १८ ॥ **स०** कामरूपिणः वानराकारमध्यएवदीर्घाणुवैपुल्यादिस्वेच्छानुसारिरूपाः । अन्यथाप्राचीनसंकेतवैपरीत्यापत्तेः ॥ २१ ॥

**[ पा० ]** १ ख. ङ.—ट. मनसा. २ ङ. च. छ. झ. ट. निपीड्यमानां. ३ घ. ङ. झ. ट. माज्ञापयद्रामो. ४ ङ. च. झ. ट. वचसि. ५ ङ. च. झ. ञ. ट. रपूरयन्. ६ ङ. झ. ञ. ट. मैतां. ७ ङ. झ. ट. सालभूधरयोधिनः. ८ ग. ङ. च. ज.—ट. प्रासादाग्राण्यसंख्यानि. ९ ख. ङ. झ. ञ. ट. परिखान्पूरयन्तश्चप्रसन्नसलिलाशयान. १० ङ च. झ. ञ. ट. कोटीयूथशताश्चान्ये. ११ क. छ. ज. प्रमृध्नतः. १२ ङ.—ट. शिखराग्राणि.

वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ॥ निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः ॥
एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ॥ २२ ॥
पूर्वद्वारं तु कुमुदः कोटीभिर्दशभिर्वृतः ॥ आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः ॥ २३ ॥
सौहाय्यार्थं तु तस्यैव निविष्टः प्रघसो हरिः ॥ पनसश्च महाबाहुर्वानरैर्बहुभिर्वृतः ॥ २४ ॥
दक्षिणं द्वारमागम्य वीरः शतबलिः कपिः ॥ आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः ॥२५॥
सुषेणः पश्चिमद्वारं गतस्तारापिता हरिः ॥ आवृत्य बलवांस्तस्थौ षष्टिकोटिभिरावृतः ॥ २६ ॥
उत्तरं द्वारमासाद्य रामः सौमित्रिणा सह ॥ आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः ॥ २७ ॥
गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः ॥ वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥२८॥
ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः ॥ वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः॥ २९ ॥
सन्नद्धस्तु महावीर्यो गदापाणिर्विभीषणः ॥ वृतो यत्तैस्तु सचिवैस्तस्थौ तत्र महाबलः ॥ ३० ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ समन्तात्परिधावन्तो ररक्षुर्हरिवाहिनीम् ॥ ३१ ॥
ततः कोपपरीतात्मा रावणो राक्षसेश्वरः ॥ निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ ३२ ॥
एतच्छ्रुत्वा ततो वाक्यं रावणस्य मुखोद्गतम् ॥ सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः ॥ ३३ ॥
ततः प्रचोदिता भेर्यश्चन्द्रपाण्डुरपुष्कराः ॥ हेमकोणाहता भीमा राक्षसानां समन्ततः ॥ ३४ ॥
विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः ॥ राक्षसानां सुघोराणां मुखमारुतपूरिताः ॥ ३५ ॥
ते बभुः शुभनीलाङ्गाः सशङ्खा रजनीचराः ॥ विद्युन्मण्डलसन्नद्धाः सबलाका इवाम्बुदाः ॥ ३६ ॥

गर्जन्तः सिंहनादं कुर्वन्तः ॥२१॥ वीरबाहुरित्यादि-सार्धश्लोक एकान्वयः ॥ एतस्मिन्नन्तरे प्रसिद्धाः वीरबाह्वादयः प्राकारं निपीड्योपनिविष्टाः सन्तः । स्कन्धावारस्य शिबिरस्य । निवेशनं निर्माणं । चक्रुः । युद्धेन्तरान्तरा विश्रमार्थं वासस्थानं स्कन्धावारः । यद्वा व्यूहीभावेन सेनास्थापनं स्कन्धावारः ॥ २२ ॥ निवेशनप्रकारमेवाह—पूर्वद्वारमित्यादिना ॥ कुमुदः पूर्वद्वारमावृत्य तस्थौ । ईशानकोणे स्थित्वा पूर्वद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २३—२४ ॥ शतबलिः दक्षिणद्वारमावृत्य तस्थौ । आग्नेयकोणे स्थित्वा दक्षिणद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २५ ॥ सुषेणः पश्चिमद्वारं गतः आवृत्य तस्थौ । नैर्ऋतकोणे स्थित्वा पश्चिमद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २६ ॥ सुग्रीवश्चोत्तरं द्वारमावृत्य तस्थौ । "पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् । अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः" इत्युक्तप्रकारेण वायव्यकोणे स्थितस्य सुग्रीवस्य उत्तरद्वारनिरोधकत्वाभिधानादेतदनुसारेण कुमुदादीनां तत्तत्कोणावस्थितत्वेन तत्तद्वारनिरोधकत्वमिति व्याख्यातं ॥ २७—३० ॥ गजो गवाक्ष इति॥ रामपार्श्वस्थात् गवाक्षादन्यो ज्ञेयः ॥३१॥ ततः वानरसेनासन्निवेशाद्धेतोः । तदा तस्मिन्सन्निवेशकाले ॥३२॥ भीमनिर्घोषं यथा भवतितथा उद्घुष्टं । उच्चैः सिंहनादःकृत इत्यर्थः ॥३३॥ प्रचोदिताः सेनाग्रे प्रेरिताः । चन्द्रपाण्डुरपुष्कराः चन्द्रशुभ्रमुखाः । संमार्जनसंस्कारविशेषेण तासां शुभ्रत्वं । "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" इत्यमरः । कोणो वाद्यताडनदण्डः । विनेदुरित्यनुकर्षः । अथवा प्रचोदिताः सस्वनुरित्यर्थः ॥ ३४—३५ ॥ शुभनीलाङ्गाः आभरणप्रभाभिः शोभमानानि नीलानि चाङ्गानि येषां ते । अतएव विद्युन्मण्डलसन्नद्धा इति नाधिकोपमा । विद्युन्मण्डलसन्नद्धा इत्युपमानविशेषणेनोपमेयेषु राक्षसेषु सभूषणत्वं गम्यत इत्यप्याहुः ॥३६॥

[ पा० ] १ ङ.—ट. पनसस्तथा. २ घ. च.—ट. सहायार्थेतु. ३ ख. ङ.—ट. वानरैरभिसंवृतः. ४ ख. ङ.—ट. दक्षिणद्वारमासाद्य. ५ ङ. झ. ञ. ट. गत्वातारापिताबली. ६ च. झ. कोटिकोटिभिः. ७ ग. च. झ. ञ. ट. मागम्य. ८ ङ. झ. ञ. ट. भीमकोपानां. ९ ङ. छ. झ. ट. यत्र. १० ङ. च. झ. ट. तदा. ११ क.—घ. च. झ. ट. मुखेरितं. १२ ग. ङ.—ट. शुकनीलाङ्गाः. घ. शुकनीलाभाः.

निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः ॥ [1]समये पूर्यमाणस्य वेगा इव महोदधेः ॥ ३७ ॥
ततो वानरसैन्येन मुक्तो नादः समन्ततः ॥ [2]मलयः पूरितो येन ससानुप्रस्थकन्दरः ॥ ३८ ॥
[3]शङ्खदुन्दुभिसंघुष्टः सिंहनादस्तरस्विनाम् ॥ पृथिवीं चान्तरिक्षं च सागरं [4]चैवं नादयन् ॥ ३९ ॥
गजानां बृंहितैः सार्धं हयानां हेषितैरपि ॥ रथानां [5]नेमिघोषैश्च रक्षसां [6]वदनस्वनः ॥ ४० ॥
एतस्मिन्नन्तरे [7]घोरः संग्रामः [8]समवर्तत ॥ रक्षसां वानराणां च यथा देवासुरे पुरा ॥ ४१ ॥
ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः ॥ [9]निजघ्नुर्वानरान्घोराः कथयन्तः स्वविक्रमान् ॥४२॥
[10]राजा जयति सुग्रीव इति शब्दो महानभूत् ॥ ४३ ॥
राजञ्जयजयेत्युक्त्वा स्वस्वनामकथान्ततः ॥ तथा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ॥
निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिताः ॥ ४४ ॥
राक्षसास्त्वपरे भीमाः प्राकारस्था महीगतान् ॥ [11]भिण्डिपालैश्च खड्गैश्च शूलैश्चैव व्यदारयन् ॥४५॥
वानराश्चापि संक्रुद्धाः प्राकारस्थान्महीगताः ॥ राक्षसान्पातयामासुः [12]समाप्लुत्य प्लवङ्गमाः ॥ ४६ ॥
स संप्रहारस्तुमुलो मांसशोणितकर्दमः ॥ रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥ ४७ ॥

[ [13]वनौकसां तत्र भृशं निनादो लङ्कागतानां च निशाचराणाम् ॥
प्रक्ष्वेडितास्फोटितसिंहनादैर्द्वाभ्यां गताभ्यामिव सागराभ्याम् ॥ ४८ ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

सैन्याः सेनायां समवेता जनाः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः । समये प्रलये । चन्द्रोदये वा । वेगाः पूराः ॥ ३७ ॥ मलयः त्रिकूटः । सः प्रसिद्धः । सानुप्रस्थकन्दरः अनुप्रस्थं प्रस्थे प्रस्थे स्थिताः याः कन्दरास्ताभिः सह वर्तत इति विग्रहः । यद्वा सानुः वप्रः प्रस्थः तटः कन्दरा गुहेत्यर्थः । सानुः महाप्रस्थः प्रस्थः क्षुद्रतटः कन्दरः दरी तैः सह वर्तत इति ससानुप्रस्थकन्दर इत्यप्याहुः ॥ ३८ ॥ शङ्खदुन्दुभीत्यादिश्लोकद्वयं ॥ शङ्खदुन्दुभिसंघुष्टः शङ्खदुन्दुभिसंघोषयुक्तः । तरस्विनां बलवतां । सिंहनादः गजबृंहितादिभिः सह पृथिव्यादिकं नादयन् अनादयत् ॥ ३९—४० ॥ देवासुरे यथा देवासुरविरोधे देवानामसुराणामिवेत्यर्थः । यद्वा षष्ठीबहुवचनस्य "सुपां सुलुक्—" इत्यादिना शेआदेशः ॥ ४१—४२ ॥ राजेत्यर्धं ॥ स्पष्टं ॥ ४३ ॥ राजन्नित्यादिसार्धश्लोकः ॥ स्वस्वनामकथान्तत इति । नामकथां चोक्त्वा ततो निजघ्नुरित्युत्तरत्रान्वयः । नामकथानां अन्ततः अन्ते इति वा योजना । वेगिताः सञ्जातवेगाः । वेपिता इति पाठे कोपेन कम्पमाना इत्यर्थः ॥ ४४ ॥ भिन्दिपालैः गदाभेदैः ॥ ४५ ॥ समाप्लुत्य प्राकाराग्रपर्यन्तमुत्पत्य । प्लवनं प्लुतगतिं गच्छन्तीति प्लवङ्गमाः । असंज्ञायामपि खशार्षः । अनेन प्लुतगतिमत्त्वमुक्तं । अतो न वानरशब्देन पुनरुक्तिः ॥४६॥ संप्रहारः युद्धं । तुमुलः परस्परसंकुलः । मांसशोणि-

---

**ति०** समये प्रलयकाले । पूर्यमाणस्य । महामेघैरितिशेषः । वेगास्तरङ्गाः ॥ ३७ ॥ **ति०** येनातिदूरवर्तीमलयोपिपूरितः स्यात्तादृशोनादोमुक्तः ॥ ३८ ॥ **स०** गजानांबृंहितैः बृंहितशब्दोत्रध्वनिमात्रपरः । एवमुत्तरत्रापि ॥ ४० ॥ **स०** 'राजाजयतिसुग्रीव'इतिकप्युक्तिः । 'राजञ्जयजय'इतिराक्षसोक्तिः ॥ ४३—४४ ॥ अत्र 'राक्षसास्त्वपरे' इत्यर्धंप्रक्षिप्तमितिकतकः ॥ ४५ ॥ **स०** सेनाप्रत्यवहारोत्रानुक्तोपि "ततःप्रत्यवहारोभूत्सैन्यानांराघवाज्ञया । ततोनिविशमानांस्तान्सैनिकान्रावणानुगाः । अभि-

[ **पा०** ] १ घ. शशिनापूर्य. २ घ. च. ञ. सुवेलः. ३ ङ. च. झ. ञ. ट. दुन्दुभिनिर्घोषः. ४ ख. ग. ङ. च. झ. ञ. ट. चाभ्यनादयत्. घ. चव्यनादयत्. ५ ङ. —ट. नेमिनिर्घोषैः. ६ ग. घ. च. झ. ञ. ट. पदनिस्वनैः. क. ख. ज. पादनिस्वनैः. ७ ख. च. छ. ञ. सद्यः. ८ क. ख. घ.—ट. समपद्यत. ९ च. झ. ञ. ट. वानरान्सर्वान्कथय. १० "राजाजयतिसुग्रीवः" "तथावृक्षैर्महाकायाः" इत्येतयोःश्लोकयोः झ. ञ. ट. ठ. पुस्तकेषुव्युत्क्रमोदृश्यते. ११ घ.—ट. वानरान्भिण्डिपालैश्चशूलैश्चैव. १२ झ. ट. खमाप्लुत्यस्वबाहुभिः. १३ अयंश्लोकः ज. पाठेदृश्यते.

# त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

वानरराक्षसानांद्वन्द्वयुद्धम् ॥ १ ॥

युध्यतां तु ततस्तेषां वानराणां महात्मनाम् ॥ रक्षसां संबभूवाथ [1]बलकोपः सुदारुणः ॥ १ ॥
ते हयैः काञ्चना[2]पीडैर्ध्वजैश्चाग्निशिखोपमैः ॥ रथैश्चादित्यसंकाशैः कवचैश्च मनोरमैः ॥ २ ॥
निर्ययू [3]राक्षसव्याघ्रा नादयन्तो दिशो दश ॥ राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३ ॥
वानराणामपि चमूर्बृहती जयमिच्छताम् ॥ [4]अभ्यधावत तां सेनां रक्षसां [5]कामरूपिणाम् ॥ ४ ॥
एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् ॥ रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ॥ ५ ॥
अङ्गदेनेन्द्रजित्सार्धं वालिपुत्रेण राक्षसः ॥ अयुध्यत महातेजास्त्र्यम्बकेण यथाऽन्तकः ॥ ६ ॥
प्रजङ्घेन च संपातिर्नित्यं दुर्मर्षणो रणे ॥ जम्बुमालिनमारब्धो हनुमानपि वानरः ॥ ७ ॥
[6]संगतः सुमहा[7]क्रोधो राक्षसो रावणानुजः ॥ समरे तीक्ष्णवेगेन [8]मित्रघ्नेन विभीषणः ॥ ८ ॥
तपनेन गजः सार्धं राक्षसेन महाबलः ॥ निकुम्भेन महातेजा नीलोपि समयुध्यत ॥ ९ ॥
वानरेन्द्रस्तु सुग्रीवः प्रघसेन समागतः ॥ संगतः समरे श्रीमान्विरूपाक्षेण लक्ष्मणः ॥ १० ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ॥ [9]सुप्तघ्नो यज्ञकोपश्च रामेण सह संगताः ॥ ११ ॥
वज्रमुष्टिस्तु मैन्देन द्विविदेनाशनिप्रभः ॥ राक्षसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ ॥ १२ ॥
वीरः प्रतपनो घोरो राक्षसो रणदुर्धरः ॥ समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३ ॥
धर्मस्य पुत्रो बलवान्सुषेण इति विश्रुतः ॥ स विद्युन्मालिना सार्धमयुध्यत महाकपिः ॥ १४ ॥
वानराश्चापरे [10]भीमा राक्षसैरपरैः सह ॥ द्वन्द्वं [11]समीयुर्बहुधा युद्धाय बहुभिः सह ॥ १५ ॥
तत्रासीत्सुमहद्युद्धं तुमुलं रोमहर्षणम् ॥ रक्षसां वानराणां च वीराणां जयमिच्छताम् ॥ १६ ॥

तान्येव कर्दमो यस्मिन् स मांसशोणितकर्दमः । अद्भुतोपमः दुर्लभोपम इति यावत् ॥ ४७—४८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

अथ द्वन्द्वयुद्धं वर्णयति त्रिचत्वारिंशे—युध्यतां त्वित्यादि ॥ वानराणां युध्यतां वानरेषु युध्यमानेषु । बलकोपः सेनायाः कोपः । बलेत्यविभक्तिकनिर्देशः ॥ १ ॥ ते हयैरित्यादिश्लोकद्वयमेकान्वयं ॥ काञ्चनापीडैः स्वर्णमयशेखरैः । हयैरित्याद्युपलक्षणे तृतीया । राक्षसव्याघ्राः राक्षसश्रेष्ठाः । राक्षसश्रेष्ठत्वेपि जात्यन्तरत्वं संभवतीति राक्षसा इत्युक्तं ॥ २—६ ॥ दुर्मर्षणः दुःसहः । प्रजङ्घो राक्षसः । संपातिः विभीषणसचिवः । आरब्धः हन्तुमिति शेषः ॥ ७—१० ॥ अग्निकेतुरिति । सुप्तघ्नयज्ञकोपौ चेति वापाठः ॥ ११ ॥ राक्षसाभ्यां वज्रमुष्ट्यशनिप्रभाभ्यां कपिमुख्यौ मैन्दद्विविदौ । अनेन परस्परसंगतिरुक्ता ॥ १२ ॥ रणदुर्धरः रणे दुर्निग्रहः ॥ १३—१४ ॥ द्वन्द्वं द्वन्द्वत्वं । बहुधा युद्धाय शस्त्रास्त्रबाहुचरणप्रभृतिभिर्युद्धाय । बहुभिरितिराक्षसविशेषणाद्वानराश्चेत्यत्रापि बहव इति विशेषणं विज्ञेयं ॥ १५ ॥ तुमुलं

जग्मुर्गणाएकेपिशाचक्षुद्ररक्षसाम् । ततोभिपततांतेषामदृश्यानांदुरात्मनाम् । अन्तर्धानवधंतज्ज्ञश्चकारसविभीषणः ।'' इतिभारतवनपर्वोक्तोनुसन्धेयः ॥ ४८ ॥ इतिद्विचत्वारिंशःसर्गः ॥ ४२ ॥

**ति०** बलरोषः परस्परबलदर्शनजोरोषः । एतावद्दिनयुद्धेपिबहवएवतिष्ठन्तीत्येवंरोषइतिभावः ॥ १ ॥ **ति०** निर्ययुरिति । अनेनवाल्मीकिनापिप्रत्यवहारोध्वनितः ॥ ३ ॥ **ति०** शत्रुघ्नेन तदाख्यरक्षसा । मित्रघ्नेनेतिक्वचित्पाठः ॥ ८ ॥

**[ पा० ]** १ ङ. झ. ट. बलरोषः. २ ङ. झ. ट. पीडैर्गजैश्चा. ३ ख. ङ.—ट. राक्षसावीराः. ४ च. अभ्यधावत्ततस्सेनां. ५ ङ.—ट. घोरकर्मणां. ६ घ. ङ. ज. झ. ट. संगतस्तु. ७ च. छ. ञ. क्रोधाद्राक्षसो. ८ ङ. झ. ट. शत्रुघ्नेन. ९ क. ख. ग. मित्रघ्नोयज्ञकेतुश्च. ङ. झ. ट. मित्रघ्नो. १० ख. ङ. छ. झ. ञ. ट. घोराः. ११ ङ.—ट. समीयुस्सहसायुद्धाच.

हरिराक्षसदेहेभ्यः प्रभूताः केशशाद्वलाः ॥ शरीरसंघाटवहाः प्रसस्रुः शोणितापगाः ॥ १७ ॥
आजघानेन्द्रजित्क्रुद्धो वज्रेणेव शतक्रतुः ॥ अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥ १८ ॥
तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् ॥ जघान समरे श्रीमानङ्गदो वेगवान्कपिः ॥ १९ ॥
संपातिस्तु त्रिभिर्बाणैः प्रजङ्घेन समाहतः ॥ निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २० ॥
जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः ॥ बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१ ॥
तस्य तं रथमास्थाय हनूमान्मारुतात्मजः ॥ प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२ ॥
नदन्प्रतपनो घोरो नलं सोप्यन्वधावत ॥ २३ ॥
नलः प्रतपनस्याशु पातयामास चक्षुषी ॥ भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा ॥ २४ ॥
ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः ॥ सुग्रीवः सप्तपर्णेन निर्बिभेद जघान च ॥ २५ ॥
[ प्रपीड्य शरवर्षेण राक्षसं भीमदर्शनम् ॥ निजघान विरूपाक्षं शरेणैकेन लक्ष्मणः ॥ २६ ॥ ]
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ॥ सुप्तघ्नो यज्ञकोपश्च रामं निर्बिभिदुः शरैः ॥ २७ ॥
तेषां चतुर्णां रामस्तु शिरांसि निशितैः शरैः ॥ क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः ॥ २८ ॥
वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे ॥ पपात सरथः साश्वः पुराट्ट इव भूतले ॥ २९ ॥
निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् ॥ निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ॥ ३० ॥
पुनः शरशतेनाथ क्षिप्रहस्तो निशाचरः ॥ बिभेद समरे नीलं निकुम्भः प्रजहास च ॥ ३१ ॥
तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे ॥ शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ॥ ३२ ॥
वज्राशनिसमस्पर्शो द्विविदोप्यशनिप्रभम् ॥ जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ॥ ३३ ॥
द्विविदं वानरेन्द्रं तु नगयोधिनमाहवे ॥ शरैरशनिसंकाशैः स विव्याधाशनिप्रभः ॥ ३४ ॥
स शरैरतिविद्धाङ्गो द्विविदः क्रोधमूर्च्छितः ॥ सालेन सरथं साश्वं निजघानाशनिप्रभम् ॥ ३५ ॥
विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः ॥ सुषेणं ताडयामास ननाद च मुहुर्मुहुः ॥ ३६ ॥
तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः ॥ गिरिशृङ्गेण महता रथमाशु न्यपातयत् ॥ ३७ ॥
लाघवेन तु संयुक्तो विद्युन्माली निशाचरः ॥ अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः ॥३८॥
ततः क्रोधसमाविष्टः सुषेणो हरिपुङ्गवः ॥ शिलां सुमहतीं गृह्य निशाचरमभिद्रवत् ॥ ३९ ॥
तमापतन्तं गदया विद्युन्माली निशाचरः ॥ वक्षस्यभिजघानाशु सुषेणं हरिसत्तमम् ॥ ४० ॥

व्याकुलं ॥ १६ ॥ केशशाद्वलाः केशैः शाद्वलवत्यः । संघाटः काष्ठसंचयः ॥ १७ ॥ आजघान ताडयामास ॥ १८—२० ॥ रथशक्त्या रथ एव सदा वर्तमानया शक्त्या ॥ २१ ॥ आस्थाय आरुह्य ॥ २२ ॥ नदन्नित्यर्धमेकं वाक्यं ॥२३॥ रक्षसा प्रतपनेन । भिन्नगात्र इत्यस्य पूर्वेणान्वयः ॥ २४ ॥ सप्तपर्णेन सप्तपर्णवृक्षेण ॥ २५—२७ ॥ अग्निशिखोपमैः अग्निज्वालोपमैः ॥ २८ ॥ पुराट्टः पुरवलभिः ॥ २९—३० ॥ क्षिप्रहस्तः क्षिप्रकारिहस्तः । निकुम्भः प्रजहास चेति पाठः सम्यक् ॥ ३१ ॥ शिरश्चिच्छेद सारथेरित्यनन्तरं वज्राशनिसमस्पर्श इति श्लोकः । ततो द्विविदं वानरेन्द्रं त्विति श्लोकः ॥ ३२—३७ ॥ अपक्रम्य अवप्लुत्य ॥ ३८ ॥ अभिद्रवत् अभ्यद्रवत् ॥ ३९–४० ॥

ति० अट्टः क्षौममितिकतकः । विमानमित्यन्ये । स० सुराट्टः देवदत्तोदैतेयविमानः ॥ २९ ॥ स० आहवेचक्रेणविष्णुरिव समरे निकुंभस्यसारथेः शिरश्चिच्छेदेत्यन्वयः ॥ ३२ ॥

[ पा० ] १ क. ग. ङ. च. झ. ञ. ट. प्रसृताः. २ ङ. झ. ट. गदयाश्रीमान्. ३ ङ. छ. झ. ञ. ट. निजघानजवेनच. ४ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते. ५ ख. ग. ङ. ज. झ. मित्रघ्नो. ६ ङ. झ. ट. राममादीपयच्छरैः. ७ ङ. च. झ. ञ. समरेशरैः. ८ झ. ञ. सुराट्टइव. ९ ङ. छ. झ. रभिविद्धाङ्गो.

गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः ॥ [1]तां शिलां पातयामास तस्योरसि महामृधे ॥ ४१ ॥
शिलाप्रहाराभिहतो विद्युन्माली निशाचरः ॥ निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ॥ ४२ ॥
एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः ॥ द्वन्द्वे विमृदितास्तत्र दैत्या इव दिवौकसैः ॥ ४३ ॥
[2]भग्नैः खड्गैर्गदाभिश्च शक्तितो[3]मरपट्टिशैः ॥ अपविद्धैश्च भिन्नैश्च रथैः सांग्रामिकैर्हयैः ॥ ४४ ॥
निहतैः [4]कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः ॥ चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः ॥
बभूवायोधनं घोरं गोमायु[5]गणसंकुलम् ॥ ४५ ॥
कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ॥ विमर्दे तुमुले तस्मिन्देवासुररणोपमे ॥ ४६ ॥
विदार्य[6]माणा हरिपुङ्गवैस्तदा निशाचराः [7]शोणितदिग्धगात्राः ॥
पुनः सुयुद्धं तरसा समास्थिता दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥ ४७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रात्रियुद्धं ॥ १ ॥ द्वन्द्वयुद्धे अङ्गदनिहतहयसारथिनेन्द्रजिता रथत्यागेनमाययाऽन्तरिक्षेऽन्तर्हितेनसता रामलक्ष्मणावयवेषु नागमयशरवर्षणम् ॥ २ ॥

युध्यतामेव तेषां तु तदा वानररक्षसाम् ॥ रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १ ॥
अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम् ॥ संप्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥ २ ॥
राक्षसोसीति हरयो हरिश्चासीति राक्षसाः ॥ अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३ ॥
[8]जहि दारय चैहीति कथं विद्रवसीति च ॥ एवं सुतुमुलः शब्दस्[9]तस्मिंस्तमसि शुश्रुवे ॥ ४ ॥

---

अचिन्त्य अचिन्तयित्वा ॥ ४१—४२ ॥ दिवौकसैरित्यकारान्तत्वमार्षं ॥ ४३ ॥ भग्नैरित्यादि सार्धश्लोकद्वयमेकान्वयं ॥ अपविद्धैरिति रथविशेषणं । भिन्नैरिति हयविशेषणं । सांग्रामिकैः संग्रामे साधुभिः । अक्षं चक्ररन्ध्रं । युगदण्डः अश्वबन्धनदण्डः ॥ ४४—४५ ॥ कबन्धानि शिरोहीनशरीराणि । विमर्दे युद्धे ॥ ४६ ॥ दिवाकरस्येति । रात्रौ राक्षसानां बलाधिक्यादितिभावः ॥ ४७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

अथ रात्रियुद्धप्रवृत्तिश्चतुश्चत्वारिंशे—युध्यतामेवेत्यादि ॥ युध्यतां युध्यमानेषु । प्राणहारिणी वानराणामिति शेषः ॥ १—२ ॥ हरिश्चासीति राक्षसा इति । दारुणतमस्कत्वेन रक्षसामपि मोहोभूदितिभावः

---

**स०** दिवौकसैः ओकएवौकसं । प्रज्ञाद्यणूस्वार्थे । दिवंऔकसंयेषांतेतैः ॥ ४३ ॥ **शि०** आयोधनं संग्रामभूमिः । गोमायुगणैः सेवितंबभूव ॥ ४५ ॥ इतित्रिचत्वारिंशःसर्गः ॥ ४३ ॥

**स०** प्राणहारिणी "पौषपौर्णमास्यांसुवेलारोहः । समग्रपौषातिक्रमणंसेनाविभागकरणं । प्रतिपदिमध्याह्नेयुद्धप्रारंभः । बहुदिनंयुद्धकरणं । तदुपरिनिशायुद्धमितिसांधकारतयापरस्परादर्शनात् "ततोजज्ञेमहायुद्धंसंकुलंकपिरक्षसाम् । मध्याह्नेप्रथमंयुद्धं प्रारब्धंप्रतिपद्यभूत्" इतिपाद्मोक्तेः । अत्रतत्त्वंवक्ष्यामः" इतिनागोजिभट्टः । पद्मपुराणेपञ्चषेषुपुस्तकेषुएतत्पद्यादर्शनेन "अत्रयुद्धं महद्वृत्तंचैत्रशुक्लचतुर्दशीम् । अष्टचत्वारिंशद्दिनंयत्रासौरावणोहतः" इत्यन्यथादर्शनेनच तच्चिन्त्यं । चैत्रशुक्लचतुर्दशीतःप्राक्सप्तचत्वारिंशद्दिनीग्राह्या । चतुर्दश्यासहाष्टचत्वारिंशद्दिनीभवति भवतिफाल्गुनकृष्णेरात्रियुद्धमित्यन्ये ॥ १ ॥ **ति०** हत इदंहन्तेर्लो-

**[ पा० ]** १ ङ. झ. ञ. तांतूर्णीं. २ ग. ङ. च. झ. ञ. ट. भल्लैश्चान्यैर्गदा. ३ घ. च. तोमरसायकैः. ४ ग. कुञ्जरैर्मन्दरप्रख्यैस्तथा. ५ ङ. झ. ट. गणसेवितं. ६ ख. ङ.—ट. निहन्यमानाहरि. घ. निवार्यमाणाहरि. ७ क. घ. ङ. झ. ट. शोणितगन्धमूर्च्छिताः. ८ ङ. झ. ञ. ट. हतदारय. ९ ङ. च. छ. झ. ञ. ट. तस्मिन्सैन्येतु. क.—घ. ज. तस्मिन्सैन्येविशुश्रुवे.

कालाः काञ्चनसन्नाहास्तस्मिंस्तमसि राक्षसाः ॥ संप्रादृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५ ॥
तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्च्छिताः ॥ परिपेतुर्महावेगा भक्षयन्तः प्लवङ्गमान् ॥ ६ ॥
ते हयान्काञ्चनापीडान्ध्वजांश्चाग्निशिखोपमान्[1] ॥ आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन् ॥७॥
वानरा बलिनो युद्धेऽक्षोभयन्राक्षसीं चमूम् ॥ कुञ्जरान्कुञ्जरारोहान्पताकाध्वजिनो रथान् ॥
चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्च्छिताः ॥ ८ ॥
लक्ष्मणश्चापि रामश्च [2]शरैराशीविषोपमैः ॥ दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः ॥ ९ ॥
तुरङ्गखुरविध्वस्तं रथनेमिसमुत्थितम् ॥ रुरोध कर्णनेत्राणि युध्यतां धरणीरजः ॥ १० ॥
वर्तमाने [3]महाघोरे संग्रामे रोमहर्षणे ॥ रुधिरोदा महाघोरा नद्यस्तत्र प्रसुस्रुवुः ॥ ११ ॥
ततो भेरीमृदङ्गानां पणवानां च निस्वनः ॥ [4]शङ्खवेणुस्वनोन्मिश्रः संबभूवाद्भुतोपमः ॥
[5][ विमर्दे तुमुले तस्मिन्देवासुररणोपमे ॥ १२ ॥
[6]हतानां स्तनमानानां राक्षसानां च निस्वनः ॥ शस्तानां वानराणां च संब[7]भूवातिदारुणः ॥१३॥
हतैर्वा[8]नरवीरैश्च शक्तिशूलपरश्वधैः ॥ निहतैः पर्वता[9]ग्रैश्च राक्षसैः कामरूपिभिः ॥ १४ ॥
[10]शस्त्रपुष्पोपहारा च तत्रासीद्युद्धमेदिनी ॥ [11]दुर्ज्ञेया दुर्निवेशा च शोणिता[12]स्रावकर्दमा ॥ १५ ॥
सा बभूव निशा घोरा हरिराक्षसहारिणी ॥ कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ॥ १६ ॥
ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ॥ राममे[13]वाभ्यवर्तन्त [14]संसृष्टाः शरवृष्टिभिः ॥ १७ ॥
तेषामापततां शब्दः क्रुद्धानामभिगर्जताम् ॥ उद्वर्त इव सप्तानां [15]समुद्राणां प्रशुश्रुवे ॥ १८ ॥
तेषां रामः शरैःषड्भिःषड् जघान निशाचरान् ॥ निमेषान्तरमात्रेण [16]शितैरग्निशिखोपमैः ॥ १९ ॥
[17]यमशत्रुश्च दुर्धर्षो महापार्श्वमहोदरौ ॥ वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ॥ २० ॥

॥ ३—४ ॥ कालाः नीलाः । काञ्चनसन्नाहाः काञ्चनकवचाः । दीप्तौषधिवनाः दीप्ततृणज्योतिर्वनाः ॥ ५ ॥ परिपेतुः संचेरुः ॥ ६ ॥ ते वानराः । काञ्चनापीडान् सुवर्णशेखरान् ॥ ७ ॥ वानरा इत्यादिसार्धश्लोकः ॥ युद्धेक्षोभयन्नित्यत्र अक्षोभयन्निति पदच्छेदः ॥ ८ ॥ दृश्यादृश्यानि ईषद्दृश्यानीत्यर्थः ॥ ९ ॥ विध्वस्तं चूर्णितं ॥ १० ॥ रुधिरोदाः । असंज्ञायामप्युदकशब्दस्योदादेश आर्षः ॥ ११—१२ ॥ स्तनमानानां स्तनतां । शस्तानां हिंसितानां ॥ १३ ॥ हतैरित्यादिश्लोकद्वयमेकान्वयं ॥ निहतैरिति राक्षसविशेषणं । पर्वताग्रैः वानरप्रेरितैः । उपलक्षणेतृतीया । शस्त्राण्येव पुष्पोपहाराः पुष्पबलयो यस्यां सा । तत्र तदा । दुर्ज्ञेया कृच्छ्रज्ञेया । प्रतियोधिनः दुर्निवेशा दुष्प्रवेशा ॥ १४–१५ ॥ कालरात्रिः भीमरथिरात्रिः । " रात्रिर्भीमरथिर्नाम सर्वप्राणिभयावहा " इत्युक्तेः । शक्तिर्वा । " सती च कालरात्रिश्च भैरवी गणनायिका " इत्युक्तेः ॥ १६ ॥ संसृष्टाः संमिलिताः ॥ १७ ॥ उद्वर्ते अभिवृद्धौ । प्रलये वा ॥ १८ ॥ तेषां राक्षसानां मध्ये । षट् निशाचरान् । अग्निशिखोपमैः शितैः शरैः जघान ॥ १९ ॥ के ते षडित्यपेक्षायामाह—यमेति ॥ दुर्धर्षः धार्षितुमशक्यः । यमशत्रुः । महोदरमहापार्श्वौ । महाकायः वज्रदंष्ट्रः । तौ उत्तर-

टिमध्यमपुरुषबहुवचनं । हननंकुरुतेत्यर्थः ॥ ४ ॥ ति० इमौशुकसारणौचारत्वेनप्रेषिताभ्यामन्यावेवेतिबहवः । तावितिपदस्वार॰

[ पा० ] १ ङ. झ. ट. ध्वजानाशीविषोपमान्. ग. च. छ. ञ. न्गजांश्वशिखरोपमान्. २ क. ख. शरैरग्निशिखोपमैः. ३ क. घ. ङ. च. झ. ञ. तथाघोरे. ख. तदारौद्रे. ४ ङ. झ. ट. शङ्खनेमिस्वनोन्मिश्रः. ख. ट. शङ्खनेमिस्वनैर्मिश्रः. क. च. छ. ञ. शङ्खवेणुस्वनैर्मिश्रः. ५ इदमर्धं क. ख. च. छ. ञ. पाठेषुदृश्यते. ६ ङ. झ. ट. हयानां. ७ ख. ङ.—ट. संबभूवात्र. क. ग. घ. संबभौतत्र. ८ क.—ट. वानरमुख्यैश्च. ९ ख. ङ.—ट. पर्वताकारैः. १० छ. ज. पुष्पोपहारैश्च. घ. पुष्पोपहारासा. ११ घ. दुर्धर्षादुर्विभागाच. क. ख. ग. च. ज. दुर्ज्ञेयादुर्निवेशाच. १२ छ. शोणितोद्गारकर्दमा. घ. मांसशोणितकर्दमा. १३ घ. मेवाभ्यधावन्त. १४ झ. ट. संहृष्टाः. ख. संवृष्टाः. १५ क. ख. ग. ङ.—ट. समुद्राणामभूत्स्वनः. घ. समुद्राणामिवस्वनः. १६ ट. घोरैरग्नि. १७ ख. ङ.—ट. यज्ञशत्रुश्च.

ते तु रामेण बाणौघैः सर्वे मर्मसु ताडिताः ॥ युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् ॥ २१ ॥
तत्र काञ्चनचित्राङ्गैः शरैरग्निशिखोपमैः ॥ दिशश्चकार विमलाः प्रदिशश्च महाबलः ॥
[ रामनामाङ्कितैर्बाणैर्व्याप्तं तद्रणमण्डलम् ] ॥ २२ ॥
ये त्वन्ये राक्षसा भीमा रामस्याभिमुखे स्थिताः ॥ तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥२३॥
सुवर्णपुङ्खैर्विशिखैः संपतद्भिः सहस्रशः ॥ बभूव रजनी चित्रा खद्योतैरिव शारदी ॥ २४ ॥
राक्षसानां च निनदैर्हरीणां चापि निस्वनैः ॥ सा बभूव निशा घोरा भूयो घोरतरा तदा ॥२५॥
तेन शब्देन महता प्रवृद्धेन समन्ततः ॥ त्रिकूटः कन्दराकीर्णः प्रव्याहरदिवाचलः ॥ २६ ॥
गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः ॥ संपरिष्वज्य बाहुभ्यां भक्षयन्रजनीचरान् ॥ २७ ॥
अङ्गदस्तु रणे शत्रुं निहन्तुं समुपस्थितः ॥ रावणिं निजघानाशु सारथिं च हयानपि ॥ २८ ॥
वर्तमाने तदा घोरे संग्रामे भृशदारुणे ॥ इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः ॥
अङ्गदेन महाकायस्तत्रैवान्तरधीयत ॥ २९ ॥
तत्कर्म वालिपुत्रस्य सर्वे देवाः सहर्षिभिः ॥ तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ ३० ॥
प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि ॥ [ अदृश्यः सर्वभूतानां योऽभवद्युधि दुर्जयः ॥ ]
तेन ते तं महात्मानं तुष्टा दृष्ट्वा प्रधर्षितम् ॥ ३१ ॥
ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः ॥ साधुसाध्विति नेदुश्च दृष्ट्वा शत्रुं प्रधर्षितम् ॥ ३२ ॥
इन्द्रजित्तु तदा तेन निर्जितो भीमकर्मणा ॥ संयुगे वालिपुत्रेण क्रोधं चक्रे सुदारुणम् ॥ ३३ ॥
एतस्मिन्नन्तरे रामो वानरान्वाक्यमब्रवीत् ॥ ३४ ॥
सर्वे भवन्तस्तिष्ठन्तु कपिराजेन संगताः ॥ ३५ ॥
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ भवतामर्थसिद्ध्यर्थं कालेन स समागतः ॥
अद्यैव क्षमितव्यं मे भवन्तो विगतज्वराः ॥ ३६ ॥

द्वाररक्षकत्वेन पूर्वोक्तौ । उभौ शुकसारणौ चेति षट् । अत्र महाकाय इति वज्रदंष्ट्रविशेषणं । अपसृताः पलायिताः । सावशेषायुषः आयुःशेषयुक्ता इति जीवने हेतुः ॥ २०—२१ ॥ महाबलः रामः ॥ २२ ॥ पावकं समासाद्येत्यन्वयः ॥ २३—२४ ॥ पूर्वमेव घोरा सा भूयः विशिष्य घोरतरा बभूव ॥ २५ ॥ प्रव्याहरदिव प्रतिव्याहरदिवेत्यर्थः ॥ २६ ॥ भक्षयन् अभक्षयन् ॥ २७ ॥ पूर्वप्रसक्तस्याङ्गदेन्द्रजितोर्द्वन्द्वयुद्धस्य शेषं वक्तुमुपक्रमते—अङ्गदस्त्वित्यादिना ॥ २८ ॥ तत्रैव तस्मिन्देश एव ॥ २९ ॥ पूजनार्हस्य स्तुत्यर्हस्य ॥ ३० ॥ ते तानि । लिङ्गव्यत्यय आर्षः । महात्मानं महाधैर्यं । तेन अङ्गदेन । प्रधर्षितं पराजितं । दृष्ट्वा तुष्टाः ॥ ३१—३३ ॥ एतस्मिन्नित्यर्धं ॥ ३४ ॥ सर्वे इत्यर्धं ॥ ३५—३६ ॥

स्वाचारत्वेनप्रेषितावेवेमौ । राज्ञाधिकृतावपिराजसंनिधिंपरित्यज्ययुद्धेमृतावित्यन्ये ॥ २० ॥ **शि०** गोलाङ्गूलाः रजनीचरान्संपरिष्वज्य परिष्वङ्गेननिहत्य । भक्षयन् अभक्षयन् श्वादिभिरखादयन् ॥ २७ ॥ **ती०** सः इन्द्रजित् । ब्रह्मणादत्तवरस्सन् त्रैलोक्यंबाधते । किंच कालेन कालबलेन । भवतामर्थसिद्ध्यर्थंसमागतः कालबलेनभवतोजेतुंसमागतइत्यर्थः । अद्यैवममेमयाक्षमितव्यं ब्रह्मणोमान्यत्वादितिभावः । भवन्तोविगतज्वरास्तिष्ठन्त्वितिपूर्वेणसंबन्धः । **स०** तत्रहेतुमाह—सइति । सः इन्द्रजिदित्यर्थः । भवतां भवत्संबन्धीयोऽर्थःस्वस्यजयः तत्सिद्ध्यर्थं । कालेन ब्रह्मवरोज्जृंभकेन समागतः । पृथक्क्रियान्वयान्नतच्छब्दद्वयवैयर्थ्यं ।

**[ पा० ]** १ झ. ट. सर्वमर्मसु. २ च. ञ. दपसृतास्त्रस्ताः. ३ ख. च. झ. ञ. ट. निमेषान्तरमात्रेणघोरैरग्निशिखोपमैः. ४ च. झ. ञ. ट. महारथः. ५ ग.—ट. वीराः. ६ ख. ङ. च. झ. ञ. ट. समंततः. ७ ङ. झ. ट. घोरतराऽभवत्. ८ ख. प्रचचालाचलेश्वरः. ९ क. ख. ङ. च. छ. झ. ट. महामायः. १० इदमर्धंप्राचीनकोशेषुनदृश्यते. ११ ङ. च. झ. ञ. ट. पराजितं.

सोन्तर्धानगतः पापो रावणी रणकर्कशः ॥ [ [1]ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्च्छितः ॥ ]
अदृश्यो निशितान्बाणान्मुमोचा[2]शनिवर्चसः ॥ ३७ ॥
स रामं लक्ष्मणं चैव घोरैर्नागमयैः शरैः ॥ बिभेद समरे क्रुद्धः सर्वगात्रेषु [3]राक्षसः ॥ ३८ ॥
मायया संवृतस्तत्र मोहयन्राघवौ युधि ॥ अदृश्यः सर्वभूतानां कूटयोधी निशाचरः ॥
बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥ ३९ ॥
तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैः शरैः ॥ [4]सहसा निहतौ वीरौ तदा प्रैक्षन्त वानराः ॥ ४० ॥
प्रकाशरूपस्तु यदा न शक्तस्तौ बाधितुं राक्षसराजपुत्रः ॥
मायां प्रयोक्तुं समुपाजगाम बबन्ध तौ राजसुतौ [5]महात्मा ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रामेणान्तरिक्षेऽन्तर्हितेन्द्रजिदन्वेषणायाङ्गदादिवानरदशकनियोजनम् ॥ १ ॥ इन्द्रजिता वृक्षोत्क्षेपेणान्तरिक्षंप्रविष्टानामङ्गदादीनामङ्गेषु शरवर्षणेनतन्निवारणम् ॥ २ ॥ तथा नागास्त्रेण रामलक्ष्मणयोर्बन्धनम् ॥ ३ ॥ अस्त्रबन्धेन भुविशयानौराघवौपरिवार्य हनुमदादिभिः शोकेनावस्थानम् ॥ ४ ॥

स तस्य गतिमन्विच्छन्राजपुत्रः प्रतापवान् ॥ दिदेशातिबलो रामो दश वानरयूथपान् ॥ १ ॥
द्वौ सुषेणस्य दायादौ नीलं च [6]प्लवगर्षभम् ॥ अङ्गदं वालिपुत्रं च शरभं च तरस्विनम् ॥ २ ॥
वि[7]नतं जाम्बवन्तं च सानुप्रस्थं महाबलम् ॥ ऋषभं चर्षभस्कन्धमादिदेश परंतपः ॥ ३ ॥
ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् ॥ आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥ ४ ॥
तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः ॥ अस्त्रवित्[8]परमास्त्रैस्तु वारयामास रावणिः ॥ ५ ॥

---

अन्तर्धानगतः अन्तर्धानविद्यां प्राप्तः ॥३७॥ सर्वगात्रेषु सर्वावयवेषु ॥ ३८ ॥ मायया संवृतः मायया युक्तः । अतएव अदृश्यः । कूटयोधी कपटयोधी । राघवौ रघुकुलोद्भवौ रामलक्ष्मणौ । शरबन्धेन शररूपबन्धकेन । बबन्ध । वेष्टनदंशनादिना नागमयत्वं । वेदनादिना शरमयत्वं ॥३९—४०॥ मायाप्रयोगः किमर्थस्तत्राह—प्रकाशेति ॥ समुपाजगाम उपचक्रमे । बबन्ध च । महात्मा महाबुद्धिः ॥ ४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

अथ नागपाशबन्धः पञ्चचत्वारिंशे—स तस्येत्यादि ॥ गम्यत इति गतिः स्थानं ॥ १ ॥ तानेव दश यूथपान्दर्शयति—द्वावित्यादिना ॥ दायादौ पुत्रौ । "दायादौ सुतबान्धवौ" इत्यमरः ॥ २–३ ॥ मार्गमाणाः मार्गितुमित्यर्थः ॥ ४ ॥ परमास्त्रैरिषुभिः

---

समागतेन समागमेनसहवर्ततइतिससमागतइतिवालयिसतिकाचिन्तास्माकमित्यतआह—अथेति । क्षमितव्यः ब्रह्मवरोमाननीयः। पित्रापुत्रएकदावालालनीयइतिभावः ॥ ३६ ॥ ति० शरबन्धेन शरपरिणतनागपाशबन्धेन । अयंशरबन्धोभाद्रकृष्णान्त्यदिनेऽस्वित्यग्रेनिरूपयिष्यामः ॥ ३९ ॥ ति० उक्तानुवादः**प्रकाशेत्यादि** । समुपाजगाम उपचक्रमे । भ्रूभङ्गमात्रेणसर्वजगत्संहर्तुरपिभगवतोनागपाशबन्धनसहनंस्वकृतमर्यादारूपब्रह्मवरदानपालनार्थं । विरोधेनापिनित्यमात्मानंस्मरतोरावणस्यरावणेश्चपरमभक्ततयाकीर्तेर्लोकेपुत्र्यर्थंचेतितत्वं ॥ ४१ ॥ इतिचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥

[ प्रा० ] १ इदमर्धं क. ख. ङ. च. झ. ञ. ट. पाठेषुदृश्यते. २ ञ. ट. चाशनिसंनिभः. ३ ख. ङ. झ. ट. राघवौ. ४ ख. ङ. झ. ञ. ट. सहसाऽभिहतौ. ५ ख. च. झ. ञ. ट. दुरात्मा. ६ ङ.—ट. प्लवगाधिपं. ७ ख.—ङ. झ. ट. द्विविदंचहनूमन्तं. ८ क.—ट. परमास्त्रेण.

तं भीमवेगा हरयो नाराचैः क्षतविग्रहाः ॥ अन्धकारे न ददृशुर्मेघैः सूर्यमिवावृतम् ॥ ६ ॥
रामलक्ष्मणयोरेव सर्वदेहभिदः शरान् ॥ भृशमावेशयामास रावणिः समितिंजयः ॥ ७ ॥
निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ ॥ क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥ ८ ॥
तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु ॥ तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९ ॥
ततः पर्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः ॥ रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ १० ॥
युध्यमानमनालक्ष्यं शक्रोपि त्रिदशेश्वरः ॥ द्रष्टुमासादितुं वाऽपि न शक्तः किं पुनर्युवाम् ॥११॥
प्रावृताविषुजालेन राघवौ कङ्कपत्रिणा ॥ एष रोषपरीतात्मा नयामि यमसादनम् ॥ १२ ॥
एवमुक्त्वा तु धर्मज्ञौ भ्रातरौ रामलक्ष्मणौ ॥ निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३ ॥
भिन्नाञ्जनचयश्यामो विस्फार्य विपुलं धनुः ॥ भूयो भूयः शरान्घोरान्विससर्ज महामृधे ॥ १४ ॥
ततो मर्मसु मर्मज्ञो मज्जयन्निशिताञ्शरान् ॥ रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५ ॥
बद्धौ तु शरबन्धेन तावुभौ रणमूर्धनि ॥ निमेषान्तरमात्रेण न शेकतुरुदीक्षितुम् ॥ १६ ॥
ततो विभिन्नसर्वाङ्गौ शरशल्याचितावुभौ ॥ ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७ ॥
तौ संप्रचलितौ वीरौ मर्मभेदेन कर्शितौ ॥ निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८ ॥

परमास्त्ररूपैरिषुभिः ॥ ५—६ ॥ भृशं सर्वदेहभिदः शरान् रामलक्ष्मणयोरेवाधिकरणयोरावेशयामास ॥ ७ ॥ निरन्तरशरीरौ कृताविति शेषः । शरतां गतैः शरकार्यं भेदनादिकं कुर्वद्भिरित्यर्थः ॥ ८ ॥ क्षतेन जातो मार्गः क्षतजमार्गः । ननु, "न भूतसङ्घसंस्थानो देहोस्य परमात्मनः । न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा" इत्यादिभिः रामलक्ष्मणयोर्दिव्यविग्रहस्याप्राकृतत्वस्मरणात्कथं रुधिरोद्गमइति चेदत्राहुः । वस्तुतोऽनयो रुधिराभावेपि मनुष्यभावनानुरोधेन नट इव रुधिराणि दर्शयतः स्म । नन्वेवं निर्बन्धेन मनुष्यभावं भावयतः किं प्रयोजनं । शृणु । सर्वात्मना मनुष्यभावनाननुरोधे जन एवं मन्येत । नायं मर्त्यः किं तु देवः तेन तद्वदस्माकं न शक्यमनुष्ठातुं धर्मानिति । सर्वथामनुष्यभावनायांतुमहाजनानुष्ठानदर्शनेन स्वयमनुष्ठास्यतिलोक इतिरहस्यं । रावणस्य मनुष्यैकवध्यत्वेन तद्भावनेत्यप्याहुः । नागपाशबद्धतयावस्थानंतु धर्मनिरतानामपिकदाचिदापदुपतिष्ठति निवर्ततेचझटितीति लोकानां प्रदर्शनायेति । एवं मोहादिष्वपिद्रष्टव्यं ॥ ९ ॥ पर्यन्तरक्ताक्ष इत्यनेन ईषत्कोपवत्त्वं लक्ष्यते ॥ १० ॥ अनालक्ष्यं यथा भवति तथा युध्यमानं मां शक्रस्त्रिदशेश्वरोपि द्रष्टुं मायया बलान्तरेण आसादितुंवापि नशक्तः । किं पुनर्युवां मानुषावित्यर्थः ॥ ११ ॥ राघवाविति संबोधनं । अत्रापि युवामिति द्वितीयान्ततया विपरिणम्यानुषञ्जनीयम् । कङ्कपत्रिणा कङ्कपत्रवता । एष इत्यव्यवधानद्योतनाय ॥१२॥ धर्मज्ञाविति । शब्दवेधप्रयोगासहिष्णू इत्यर्थः ॥ १३ ॥ अञ्जनोपरिप्रदेशस्य धूसरत्वसंभवात् भिन्नेत्युक्तं ॥१४—१५॥ निमेषान्तरमात्रेण निमेषावकाशमात्रेण क्षणमात्रेणेत्यर्थः ॥ १६ ॥ शरशल्याचितौ शराग्रप्रोतौ कृतौ । रज्जुमुक्तौ मुक्तरज्जू । अतएव प्रकम्पितौ महेन्द्रस्य ध्वजाविव कृतौ । जगत्यां भूमौ । जगतीपती भूपती ॥ १७—१८ ॥

**रामानु०** पन्नगैःशरतांगतैः । शरकार्यंभेदनं । पन्नगकायसंवेष्टनंचकुर्वद्भिरित्यर्थः ॥ ८ ॥ **शि०** क्षतजमार्गेण रुधिरविषयकविचारेण । रामलक्ष्मणशरीरेभीतिजनकरुधिरप्रदर्शनायेत्यर्थः । तयोः रामलक्ष्मणयोरुपरिबहुरुधिरंसुस्राव माययास्रावयामास । अन्तर्भावितणिजर्थःस्रवतिः ॥ ९ ॥ **ति०** प्रापितौ बन्धनमितिशेषः ॥ १२ ॥

**[ पा० ]** १ ख. च. ञ. वारितास्तु. २ ग. ङ—ट. तक्षविक्षताः. ३ क. ख. घ.—ट. तावुभौराम. ४ च. छ. ञ. अथराक्षसवीरोसौ. ख. अथराक्षसवर्योसौ. ५ झ. प्रापिताविषु. घ. प्रावृताविषु. ख. आविद्धाविषु. ६ घ. ङ. शरैस्तीक्ष्णैः. ख. च. छ. ञ. शितैर्बाणैःप्रतोत्रैरिवकुञ्जरौ. ७ घ. विजयंधनुः. ८ घ. झ. ट. भूयएवशरान्. ९ घ. चमूमुखे. १० च. घोरं. ११ घ. शरजालाचितावुभौ. छ. शरशल्यान्वितौकृतौ. ग. ङ. च. झ. ञ. ट. शरशल्याचितौकृतौ.

तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ ॥ शरवेष्टितसर्वाङ्गावार्तौ परमपीडितौ ॥ १९ ॥
न ह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरम् ॥ नानिर्भिन्नं न चास्तब्धमाकराग्रादजिह्मगैः ॥ २० ॥
तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा ॥ असृक्सुस्रुवतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१ ॥
पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः ॥ क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥ २२ ॥
रुक्मपुङ्खैः प्रसन्नाग्रैरधोगतिभिराशुगैः ॥ नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि ॥
विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ॥ २३ ॥
स वीरशयने शिश्ये विज्यमादाय कार्मुकम् ॥ भिन्नमुष्टिपरीणाहं त्रिणतं रत्नभूषितम् ॥ २४ ॥
बाणपातान्तरे रामं पतितं पुरुषर्षभम् ॥ स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ॥ २५ ॥
रामं कमलपत्राक्षं शरबन्धपरिक्षतम् ॥ शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ॥ २६ ॥
हरयश्चापि तं दृष्ट्वा सन्तापं परमं गताः ॥ [ शोकार्ताश्चुक्रुशुर्घोरमश्रुपूरितलोचनाः ] ॥ २७ ॥
बद्धौ तु वीरौ पतितौ शयानौ तौ वानराः संपरिवार्य तस्थुः ॥
समागता वायुसुतप्रमुख्या विषादमार्ताः परमं च जग्मुः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

वीराः शेरतेऽस्मिन्निति वीरशयनं रणभूमिः । शरतल्पं वा । शरवेष्टितसर्वाङ्गौ शरभूतसर्पवेष्टितसर्वाङ्गौ । आर्तौ मनःपीडावन्तौ । परमपीडितौ शारीरकपीडावन्तौ । अभूतामिति शेषः ॥१९॥ अङ्गुलं अङ्गुलिप्रमाणं । अथवा "अङ्गुलिरङ्गुलं" इति त्रिकाण्डीस्मरणात् । अङ्गुलिप्रमाणवाच्यङ्गुलशब्दोकारान्तोप्यस्ति । तयोर्गात्रमङ्गुलमात्रेप्यवकाशे अविद्धं नाभूदिति भावः । यद्वा तयोर्गात्रं आङ्गुलं अङ्गुलसंबन्ध्यप्यन्तरमवकाशः । आकराग्रात्कराग्रपर्यन्तं । अजिह्मगैः सर्परूपशरैः । अविद्धं न बभूव । अस्तब्धं अनिश्चलं च न बभूव । अनिर्भिन्नं च न बभूव ॥ २० ॥ तीव्रं अत्यन्तं । प्रस्रवणौ गिरिविशेषौ ॥ २१ ॥ इन्द्रजित्त्वं निर्वक्ति—येनेति ॥ २२ ॥ नागास्त्रप्रयोगानन्तरं केवलशरैरपि विव्याधेत्याह—रुक्मपुङ्खैरित्यादिना ॥ प्रसन्नाग्रैः उन्मृष्टाग्रैरित्यर्थः । प्रहर्तुराकाशस्थत्वेनाधोगतिभिः । आशुगैः वक्ष्यमाणविशेषभिन्नैः । नाराचैः ऋजुवृत्ताग्रैः । अर्धनाराचैः मध्ये भिन्ननाराचतुल्यैः । भल्लैः परश्वधाग्रैः । अञ्जलिकैः अञ्जलिसदृशाग्रैः । वत्सदन्तैः वत्सदन्तसदृशाग्रैः । सिंहदंष्ट्रैः सिंहदंष्ट्रासदृशाग्रैः । क्षुरैः क्षुराग्रैः । अत्रेन्द्रजिदित्यध्याहार्यं ॥ २३ ॥ भिन्नमुष्टिपरीणाहं शिथिलमुष्टिबन्धं । तृणतत्रिषु स्थानेषु पार्श्वयोर्मध्ये च नतं । रुक्मभूषितं रुक्मपट्टबन्धं । विज्यं शरसंधानप्रसङ्गाभावाद्विगतज्यं । कार्मुकं धनुः । आदाय अवलम्ब्य । वीरशयने रणभूमौ । शिश्ये ॥ २४ ॥ बाणपातान्तरे शरतल्पे ॥ २५ ॥ शरबन्धपरिक्षतं । बन्धः क्षतश्चेति द्वयमत्र शरकार्यमुच्यते ॥ २६—२७ ॥ बद्धाविति । आदौ नागपाशबद्धौ । अथ शयानौ तु तौ वीरौ संपरिवार्य वायुसुतादयो वानरास्तस्थुः । विषादं दुःखं । जग्मुश्चेत्यन्वयः ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे युद्धकाण्डव्याख्याने रत्नकिरीटाख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

ति० आकराग्रात् कराग्रमभिव्याप्य । अध्वस्तं अक्षोभितं । स० आङ्गुलं अङ्गुलिप्रमाणं ॥ २० ॥ ति० रजोगतिभिः वायुनाविस्तीर्यमाणरजोवन्नीरन्ध्रंसंपतद्भिः ॥ २३ ॥ शि० जीविते लोकपालनेनिराशोऽभवत् ॥ २५ ॥ इतिपञ्चचत्वारिंशःसर्गः ॥ ४५ ॥

[ पा० ] १ क. ख. ग. च. छ. ज. ट. गात्रंबभूवाङ्गुलमात्रकं. घ. गात्रेबभूवान्तरमण्वपि. २ घ. क्रूरकर्मणा. ३ झ. रजोगतिभिः. ४ ङ. छ. झ. ट. माविध्य. ५ क. ख. घ.—ट. रुक्मभूषितं. ६ ख. ग. च. ज. शरण्यंरणतोषितं. ङ. झ. ट. शरण्यंरणतोषिणं. ७ इदमर्धं क. ङ.—ट. पाठेषुदृश्यते.

# षट्चत्वारिंशः सर्गः ॥ ४६ ॥

ससुग्रीवेणविभीषणेन इन्द्रजिन्नागपाशनिबद्धमुग्धरामलक्ष्मणसमीपंप्रत्यागमनम् ॥ १ ॥ विभीषणेन राघवावस्थानावलोकनेनशोचतस्सुग्रीवस्य समाश्वासनपूर्वकं कार्यान्तराय गमनम् ॥ २ ॥ राक्षसप्रहर्षणपूर्वकं लङ्कांप्रविष्टेनेन्द्रजिता रावणंप्रतिसप्रणामं स्वेनरामलक्ष्मणमारणकथनम् ॥ ३ ॥

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः ॥ ददृशुः संततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १ ॥
वृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे ॥ आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २ ॥
नीलद्विविदमैन्दाश्च सुषेणकुमुदाङ्गदाः ॥ तूर्णं हनुमता सार्धमन्वशोचन्त राघवौ ॥ ३ ॥
अचेष्टौ मन्दनिश्वासौ शोणितौघपरिप्लुतौ ॥ शरजालाचितौ स्तब्धौ शयानौ शरतल्पयोः ॥ ४ ॥
निश्वसन्तौ यथा सर्पौ निश्चेष्टौ मन्दविक्रमौ ॥ रुधिरस्रावदिग्धाङ्गौ तापनीयाविव ध्वजौ ॥ ५ ॥
तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ ॥ यूथपैस्तैः परिवृतौ बाष्पव्याकुललोचनैः ॥ ६ ॥
राघवौ पतितौ दृष्ट्वा शरजालसमावृतौ ॥ बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७ ॥
अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः ॥ न चैनं मायया च्छन्नं ददृशू रावणिं रणे ॥ ८ ॥
तं तु मायाप्रतिच्छन्नं माययैव विभीषणः ॥ वीक्षमाणो ददर्शाथ भ्रातुः पुत्रमवस्थितम् ॥ ९ ॥
तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः ॥ १० ॥
तेजसा यशसा चैव विक्रमेण च संयुतम् ॥ ११ ॥
इन्द्रजिच्चात्मनः कर्म तौ शयानौ समीक्ष्य च ॥ उवाच परमप्रीतो हर्षयन्सर्वनैर्ऋतान् ॥ १२ ॥
दूषणस्य च हन्तारौ खरस्य च महाबलौ ॥ सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥
नेमौ मोक्षयितुं शक्यावेतस्मादिषुबन्धनात् ॥ सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः ॥ १४ ॥
यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम ॥ अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी ॥ १५ ॥
कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला ॥ सोयं मूलहरोऽनर्थः सर्वेषां निहतो मया ॥ १६ ॥

अथ पूर्वसर्गोक्तमनुवदति—तत इत्यादि ॥ द्यां आकाशं । सन्ततौ व्याप्तौ ॥ १ ॥ वृष्ट्वा उपरते देव इव स्थिते राक्षसे । कृतकर्मणि कृतशरवर्षरूपकर्मणि सति । तं देशं रामस्थानं ॥ २ ॥ नीलेति नीलादयः सुग्रीवात्पूर्वमेवागताः ॥ ३ ॥ अचेष्टावित्यादिचतुःश्लोक्येकान्वया॥ अचेष्टौअतएव स्तब्धौ निश्चलौ । मध्ये मध्ये मन्दनिश्वासौ मध्ये मध्ये निश्चेष्टौ । कदाचित्सर्पाविव निश्वसन्तौ कदाचिन्मन्दचेष्टितौ च । अत्र पुनरुक्तयो दुःखातिरेकात् । यद्वा अचेष्टाविति श्लोकः पूर्वश्लोकेनान्वितः ॥ ४—८ ॥ माययैवेति । अन्तर्हितस्तुदर्शनहेतुभूतया विद्ययेत्यर्थः ॥ ९ ॥ अप्रतिद्वन्द्वं निःसमं । वरदानादन्तर्हितमित्यन्वयः । तेजसेत्यर्धं पूर्वेणान्वेति ॥ १०—११ ॥ आत्मनः कर्म नागास्त्रबन्धरूपं । शयानौ तौ च वीक्ष्येत्यन्वयः ॥ १२ ॥ सादितौ पश्यतेति शेषः ॥ १३ ॥ समागम्य सङ्घीभूय ॥ १४ ॥ यत्कृते यन्निमित्तं गात्रैः शयनमस्पृष्ट्वा चिन्तयानस्यैव मम पितुः त्रियामा याति । यत्पौरुषभयान्मम पिता शर्वर्यामेकस्मिन्नपि यामे न निद्रातीत्यर्थः ॥ १५ ॥ लङ्का लङ्कास्थजनः । आकुला नदीपक्षे आविलेत्यर्थः । लङ्कापक्षे व्यग्रे-

**स०** दूषणस्यचहन्तारावित्याद्युक्तिश्छत्रिन्यायेन । रामस्यैवतद्धन्तृत्वात् ॥ १३ ॥ **स०** यत्कृते यस्यरामस्यनिमित्तं शोकार्तस्य । त्रिया मन्दोदर्या अमा सह शयनंशय्यां गात्रैरस्पृष्ट्वैवचिन्तयानस्यममपितुः शर्वरीयाति । शार्वरीत्यपिक्वचित्पाठः । 'प्रज्ञाद्यणिशार्वर्यपि "शार्वरीशर्वरीशयौ" इतिशब्दार्णवः' इत्यमरव्याख्यायांभानुदीक्षितः । 'अमासहार्थान्तिकयोः' इतिविश्वः

[ पा० ] १ च. ञ. झ. ट. नीलश्चद्विविदोमैन्दः. २ क. ग. ज. सुमुखाङ्गदाः. ३ ग. च.—ट. शोणितेनपरिप्लुतौ. ४ ङ. छ. झ. ञ. ट. शरतल्पगौ. ५ क. ग. च.—ट. दीनविक्रमौ. ६ ङ. छ. झ. ञ. ट. यूथपैस्स्वैः. ७ ङ. छ. झ. ञ. ट. समन्वितौ. च. समाचितौ. ८ ङ.—ट. ददर्शाग्रे. ९ क. ख. घ. छ. झ. ञ. ट. न्सर्वराक्षसान्. १० ख. ङ.—ट. शमितो.

रामस्य लक्ष्मणस्यापि सर्वेषां च वनौकसाम् ॥ विक्रमा निष्फलाः सर्वे यथा शरदि तोयदाः ॥१७॥
एवमुक्त्वा तु तान्सर्वान्राक्षसान्परिपार्श्वतः ॥ यूथपानपि तान्सर्वांस्ताडयामास रावणिः ॥ १८ ॥
नीलं नवभिराहत्य मैन्दं च द्विविदं तथा ॥ त्रिभिस्त्रिभिरमित्रघ्नस्तताप प्रवरेषुभिः ॥ १९ ॥
जाम्बवन्तं महेष्वासो विद्ध्वा बाणेन वक्षसि ॥ हनूमतो वेगवतो विससर्ज शरान्दश ॥ २० ॥
गवाक्षं शरभं चैव द्वावप्यमिततेजसौ ॥ द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः ॥ २१ ॥
गोलाङ्गूलेश्वरं चैव वालिपुत्रमथाङ्गदम् ॥ विव्याध बहुभिर्बाणैस्त्वरमाणोथ रावणिः ॥ २२ ॥
तान्वानरवरान्भित्त्वा शरैरग्निशिखोपमैः ॥ ननाद बलवांस्तत्र महासत्त्वः स रावणिः ॥ २३ ॥
तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ॥ प्रजहास महाबाहुर्वचनं चेदमब्रवीत् ॥ २४ ॥
शरबन्धेन घोरेण मया बद्धौ चमूमुखे ॥ सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥ २५ ॥
एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः ॥ परं विस्मयमाजग्मुः कर्मणा तेन हर्षिताः ॥ २६ ॥
विनेदुश्च महानादान्सर्वतो जलदोपमाः ॥ हतो राम इति ज्ञात्वा रावणिं समपूजयन् ॥ २७ ॥
निष्पन्दौ तु तदा दृष्ट्वा तावुभौ रामलक्ष्मणौ ॥ वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत ॥२८॥
हर्षेण तु समाविष्ट इन्द्रजित्समितिंजयः ॥ प्रविवेश पुरीं लङ्कां हर्षयन्सर्वराक्षसान् ॥ २९ ॥
रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते ॥ सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् ॥ ३० ॥
तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः ॥ सबाष्पवदनं दीनं शोकव्याकुललोचनम् ॥ ३१ ॥
अलं त्रासेन सुग्रीव बाष्पवेगो निगृह्यताम् ॥ एवंप्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः ॥३२॥
सशेषभाग्यताऽस्माकं यदि वीर भविष्यति ॥ मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ॥ ३३ ॥
पर्यवस्थापयात्मानमनाथं मां च वानर ॥ सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ॥ ३४ ॥
एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना ॥ सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ॥ ३५ ॥
ततः सलिलमादाय विद्यया परिजप्य च ॥ सुग्रीवनेत्रे धर्मात्मा स ममार्ज विभीषणः ॥ ३६ ॥

---

त्यर्थः । सर्वेषामस्माकं मूलहरः अनर्थः अनर्थकरो रामः ॥ १६ ॥ विक्रमाः सेतुबन्धनादयः ॥ १७ ॥ परिपार्श्वतः समीपतः ॥ १८—१९ ॥ हनूमतः हनूमदर्थमित्यर्थः । संबन्धसामान्ये षष्ठी ॥ २०–२१ ॥ गोलाङ्गूलेश्वरं गवाक्षं ॥ २२—२४ ॥ निशामयत पश्यत ॥ २५ ॥ कूटयोधिनः कपटयोधिनः ॥ २६–२९ ॥ शरीरे इति प्रत्येकापेक्षया द्विवचनं । अङ्गानि करादीनि । उपाङ्गानि अङ्गुल्यादीनि । अत्रापि शरैश्चितानीति योज्यं। दृष्ट्वा स्थित इति सुग्रीवो विशेषणीयः ॥३०—३१॥ एवंप्रायाणि एवंविधानि । "प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि" इति विश्वः । नैष्ठिकः नियतः ॥ ३२ ॥ सशेषभाग्यतेति । अस्माकं भाग्यशेषं यद्यस्तीत्यर्थः ॥ ३३ ॥ पर्यवस्थापयात्मानं मनो निश्चलं कुरु । स्वात्मपर्यवस्थापनेन मां च पर्यवस्थापय । धैर्यं कारयेत्यर्थः । पर्यवस्थापने हेतुमाह—सत्येति । मृत्युकृतं अपमृत्युकृतं॥३४॥ जलक्लिन्नेन जलसिक्तेन ॥ ३५ ॥ एवममाङ्गल्यनिवृत्त्यर्थं श्रान्तिनिवृत्त्यर्थं वा नेत्रे प्रमृज्य राक्षसमाया-

---

॥ १५ ॥ **स०** अनाथमित्यनेन पलायितस्यतवराज्यमस्तिनतथाममेतिसूचयति ॥ २४ ॥ **ति०** ततः सामान्यतःप्रमार्जनानन्तरं विद्यया तिरस्करणीविद्यातिरस्कारकविद्यया परिजप्य । परिवीक्ष्येतिपाठेप्ययमेवार्थः । राक्षसमायापरिज्ञानेनधैर्यसंपादनंचैतत्प्रमार्जनस्यफलं । वस्तुतः ततस्सलिलमितिश्लोकोबहुपुस्तकेषुनास्तीतिप्रायेणप्रक्षिप्तोयं । तेनेन्द्रजितंददर्शेतितत्कार्यप्रकाशकोत्तरवाक्याभावात् ॥ ३६ ॥

[ पा० ] १ क. ग. झ. ञ. ट. लक्ष्मणस्यैव. २ ग.—च. झ. ञ. ट. तावप्यमितविक्रमौ. ३ ग. घ. च. ञ. भ्रातरौराम. ४ क. ख. घ. च. ट. न्सर्वैनैर्ऋतान्. ५ क.—ट. क्रोधव्याकुल. ६ च. छ. सशेषभाग्यमस्माकं. क. ङ. झ. ञ. ट. सभाग्यशेषतास्माकं. ७ घ. प्रहास्येतेभ्रातरौरामलक्ष्मणौ.

[1]प्रमृज्य वदनं तस्य कपिराजस्य धीमतः ॥ अब्रवीत्कालसं[2]प्राप्तमसंभ्रममिदं वचः ॥ ३७ ॥
न कालः कपिराजेन्द्र वैक्लव्यमनु[3]वर्तितुम् ॥ अति[4]स्नेहोप्यकालेऽस्मिन्मरणायोपक[5]ल्पते ॥ ३८ ॥
तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनम् ॥ हितं रामपुरोगाणां सैन्यानामनुचिन्[6]त्यताम् ॥ ३९ ॥
अथवा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः ॥ लब्धसंज्ञौ हि काकुत्स्थौ भयं नो व्यपनेष्यतः ॥४०॥
नैतत्किंचन रामस्य न च रामो मुमूर्षति ॥ न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम् ॥ ४१ ॥
तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम् ॥ [7]यावत्कार्याणि सर्वाणि पुनः संस्थापयाम्यहम् ॥४२॥
एते हि फुल्लनयनास्त्रासादागतसाध्वसाः ॥ कर्णे कर्णे प्रकथिता हरयो हरिसत्तम ॥ ४३ ॥
मां तु [8]दृष्ट्वा प्रधावन्तमनीकं सं[9]प्रहर्षितुम् ॥ त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम् ॥ ४४ ॥
समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः ॥ विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ॥ ४५ ॥
इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः ॥ विवेश नगरीं लङ्कां पितरं चाभ्युपागमत् ॥ ४६ ॥
तत्र रावणमा[10]सीनमभिवाद्य कृताञ्जलिः ॥ आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥ ४७ ॥
उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे ॥ रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ॥
उ[11]पाघ्राय स मूर्ध्न्येनं पप्रच्छ प्रीतमानसः ॥ ४८ ॥

परिज्ञानेनाप्यस्य धैर्यसंपादनाभिप्रायेण विद्याभिमन्त्रितजलेनापि ममार्जेत्याह—तत इति ॥ विद्यया राक्षसमायादर्शनहेतुमन्त्रेण । परिजप्य अभिमन्त्र्य ॥ ३६ ॥ कालसंप्राप्तं तत्कालोचितं । असंभ्रमं अव्याकुलमिति क्रियाविशेषणं ॥ ३७ ॥ वैक्लव्यं अधैर्यं । किं करोमि अतिस्नेह एवं बाधत इत्यत्राह—अतिस्नेहोपीति ॥ ३८ ॥ एवं त्यक्तव्यमुक्त्वा कर्तव्यमुपदिशति—तस्मादिति ॥ वैक्लव्यमिति स्नेहस्याप्युपलक्षणं । रामपुरोगाणां रामप्रभृतीनां । रामशरण्यानामित्यर्थः ॥ ३९ ॥ संज्ञाविपर्ययः मूर्च्छा । यावदनुवर्तते तावद्रक्ष्यतामित्यर्थः ॥ ४० ॥ एवंभूतयोः कथं संज्ञाप्राप्तिस्तत्राह—नैतदिति ॥ एतत् शस्त्रबन्धनं । रामस्य न किंचन । इदमसत्प्रायं बाधकं न भवतीत्यर्थः । अतो न मुमूर्षति । मरिष्यतीति शङ्का न कर्तव्येत्यर्थः । "आशङ्कायामुपसंख्यानं" इति म्रियतेः सन् । एतच्च जीवनलिङ्गशरीरसौभाग्येन निश्चीयत इत्याह—नहीति । गतायुषां मृतानां । या लक्ष्मीः मुखकान्तिः । दुर्लभा । सा च एनं न हास्यते । न जहातीत्यर्थः । जीवनानुकूला लक्ष्मीर्दृश्यत इत्यर्थः ॥ ४१ ॥ यावत् यावत्पर्यन्तं । सर्वाणि कार्याणि कर्तव्यानि पुनः संस्थापयामि । तावत्पर्यन्तमाश्वासयेत्यन्वयः । केचित्तु यावत्कार्याणि यावन्ति कर्तव्यानि । तानि सर्वाणीत्याहुः ॥ ४२ ॥ पर्यवस्थापनं किमर्थमित्यत्राह—एते हीति ॥ आगतसाध्वसाः प्राप्तभयविकाराः । ते च विकाराः पुलकादयः । प्रकथिताः पलायनार्थं प्रवृत्तकथा इत्यर्थः । संप्रहर्षितुमित्यनन्तरं अर्हसीत्यध्याहार्यं । प्रधावन्तं इन्द्रजिद्धर्मेणेति भावः । इदमनीकविशेषणं । गच्छामीति वाध्याहार्यं । संप्रहर्षितुं भयान्निवर्तयितुमिति यावत् । तदेवाह—त्यजन्त्विति ॥ ४३—४४ ॥ समाश्वासयत् नाहमिन्द्रजित्किंतु विभीषण इति समाश्वासयदित्यर्थः ॥ ४५ ॥ कथासंघट्टनाय पूर्वोक्तमनुवदति—इन्द्रजित्त्विति ॥ ४६ ॥ रामलक्ष्मणावित्यनन्तरमितिकरणं ज्ञेयं ॥ ४७ ॥ उत्पपात आसनादिति शेषः ॥ ४८ ॥

**स०** बलं प्राणं । सर्वाणिसैन्यानीत्युत्तरत्रोक्तेः ॥ ४२ ॥ **स०** त्रासात् तवोत्पन्नाद्भयात् आगतसाध्वसाःसन्तः कर्णेकर्णे प्रकथिताः भवन्ति ॥ ४३ ॥ **ति०** अनीकप्रत्याश्वासनार्थमांधावन्तंदृष्ट्वातुसंप्रहर्षितंप्राप्तहर्षमनीकं तद्रूपाहरयोभुक्तपूर्वांस्रजमिवत्रासंत्यजन्तु ॥ ४४ ॥

**[ पा० ]** १ क. च. ञ. ट. विमृज्य. २ क. ख. ग. ङ. झ. ञ. ट. संप्राप्तमसंभ्रान्तं. घ. संप्राप्तंसमग्रार्थं. ३ घ.—छ. झ. ञ. ट. मवलंबितुं. ४ च. छ. ञ. स्नेहस्त्वकाले. ५ क.—घ. प्रपद्यते. ६ ङ.—ट. मनुचिन्तय. ७ ख. ङ. झ. ञ. ट. यावत्सैन्यानि. ८ घ. दृष्ट्वानुधावन्तं. ९ क. ख. संप्रधार्षितं. ङ. छ.—ट. संप्रहार्षितं. १० क.—ट. मासाद्यअभिवाद्य. ११ क. घ.—ट. उपाघ्रायचतंमूर्ध्नि.

पृच्छते च यथावृत्तं [1]पित्रे सर्वं न्यवेदयत् ॥ यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ ॥ ४९ ॥
स हर्षवेगानुगतान्तरात्मा श्रुत्वा वचस्तस्य महारथस्य ॥
जहौ ज्वरं दाशरथेः [2]समुत्थितं प्रहृष्य वाचाऽभिननन्द पुत्रम् ॥ ५० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षट्चत्वारिंशः सर्गः ॥४६ ॥

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

रावणाज्ञया राक्षसीभिस्त्रिजटया सहसीतायाः पुष्पकारोपणपूर्वकं रणाङ्गणप्रापणेनरामलक्ष्मणदुरवस्थाप्रदर्शनम् ॥ १ ॥ राक्षसभटैरावणनियोगेन लङ्कायांरामलक्ष्मणनियोगोद्घोषणम् ॥ २ ॥

[3]प्रतिप्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे ॥ राघवं [4]परिवार्यार्ता ररक्षुर्वानरर्षभाः ॥ १ ॥
हनुमानङ्गदो नीलः सुषेणः कुमुदो नलः ॥ गजो गवा[5]क्षो गवयः शरभो गन्धमादनः ॥
[6]जाम्बवानृषभः स्कन्[7]धो रम्भः शतबलिः पृथुः ॥ २ ॥
व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः ॥ वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः ॥
तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ३ ॥
रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् ॥ आजुहाव ततः सीतारक्षिणी राक्षसीस्तदा ॥ ४ ॥
राक्षस्यस्त्रिजटा चैव [8]शासनात्समुपस्थिताः ॥ ता उवाच ततो हृष्टो राक्षसी राक्षसाधिपः ॥ ५ ॥
हताविन्द्रजिताऽऽख्यात वैदेह्या रामलक्ष्मणौ ॥ [9]पुष्पकं च समारोप्य दर्शयध्वं [10]हतौ रणे ॥ ६ ॥
यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठति ॥ सोऽस्या भर्ता सह भ्रात्रा [11]निरस्तो रणमूर्धनि ॥ ७ ॥
निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली ॥ मामुपस्थास्यते सीता सर्वाभरणभूषिता ॥ ८ ॥

यथावृत्तं वृत्तमनतिक्रम्य । इदमेव विवृणोति—यथा ताविति ॥ ४९ ॥ हर्षवेगः हर्षातिशयः तेनानुगतो व्याप्तः अन्तरात्मा मनो यस्य स तथोक्तः । दाशरथेः निमित्तात् । ज्वरं चिन्तासंतापं । अनया रात्र्या प्रतिपद्गतेत्यूचुः ॥ ५० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्चत्वारिंशःसर्गः ॥ ४६ ॥

अथ सीतायै वीरशयनस्थरामलक्ष्मणप्रदर्शनं सप्तचत्वारिंशे—प्रतिप्रविष्ट इत्यादि ॥ १ ॥ ये ररक्षुस्तानाह—हनुमानित्यादिना ॥ २ ॥ अन्यान्वानरानाह—व्यूढानीकाश्चेति ॥ व्यूढानीकाः कृतव्यूहसेनावन्तः । चेष्टत्सु चेष्टमानेषु ॥ ३—५ ॥ आख्यात कथयत ॥ ६ ॥ अवष्टब्धा गर्विता । निर्विशङ्का निर्विचारा । निरुद्विग्ना निःशोका । भावे निष्ठा । निरपेक्षा रामः

ती० वस्तुतस्तुसरावणः हर्षवेगानुगतान्तरात्मायः दाशरथेःसमुत्थितंज्वरंजहौ तस्यवचःश्रुत्वा तंपुत्रं इन्द्रजितं । प्रहृष्य वाचाभिनन्द्य पुत्रप्रीत्यैकेवलंतंवाङ्मात्रेणननन्द नतुपरमार्थतः । "कालज्ञोराघवःकालेसंयुगायाभ्यचोदयत्" इत्यारभ्य "इन्द्रजित्तुमहामायःसर्वसैन्यसमावृतः । विवेशनगरींलङ्कां" इत्यन्तेनवानररक्षसांप्रतिपत्प्रवृत्तंयुद्धमुक्तं ॥५०॥ इतिषट्चत्वारिंशःसर्गः ॥४६॥

ती० व्यूढानीकाः व्यूढानि गरुडादिव्यूहाकाराणि अनीकानियेषांते ॥ ३ ॥ स० राक्षस्यः इतराः । त्रिजटेति ताभ्यःपृथक्कृत्योक्तिः उत्तरत्रसामान्यतोराक्षसीरित्युक्तिश्च त्रिजटा सीतापक्षेवर्ततइतिरावणमनसिसंदेहंसूचयतः ॥ ५ ॥ शि० मैथिली सर्वाभरणभूषितासती मां लङ्कासंपत्तिं । उपस्थास्यते अत्रैवनिवत्स्यतीत्यर्थः ॥ ८ ॥

[ पा० ] १ घ. पुत्रस्तस्मै. २ ग. ङ.—ट. समुत्थंप्रहृष्टवाचा. ३ ङ.—ट. तस्मिन्प्रविष्टेलङ्कायां. घ. प्रतिप्रविष्टेलङ्कायां. ४ ङ.—ट. परिवार्याथ. ५ छ. झ. ञ. ट. गवाक्षःपनसःसानुप्रस्थोमहाहरिः. ६ घ. जांबवानृक्षराजश्चरंभः. ७ क. ख. ङ. च. झ. ञ. ट. सुन्दोरंभः. ८ क. घ.—ट. शासनात्तमुपस्थिताः. ९ ग. ङ. च. झ. ञ. ट. पुष्पकंतत्समारोप्य. १० घ. गतायुधि. ११ ङ. —ट. निहतौ.

अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् ॥ अवेक्ष्य विनिवृत्ताशा चान्यां गतिमपश्यती ॥
निरपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः ॥ राक्षस्यस्तास्तथेत्युक्त्वा जग्मुर्वै यत्र पुष्पकम् ॥ १० ॥
ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया ॥ अशोकवनिकास्थां तां मैथिलीं समुपानयन् ॥ ११ ॥
तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् ॥ सीतामारोपयामासुर्विमानं पुष्पकं तदा ॥ १२ ॥
ततः पुष्पकमारोप्य सीतां त्रिजटया सह ॥ जग्मुर्दर्शयितुं तस्यै राक्षस्यो रामलक्ष्मणौ ॥ १३ ॥
रावणोकारयल्लङ्कां पताकाध्वजमालिनीम् ॥ प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः ॥
राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १४ ॥
विमानेनापि सीता तु गत्वा त्रिजटया सह ॥ ददर्श वानराणां तु सर्वं सैन्यं निपातितम् ॥ १५ ॥
प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् ॥ वानरांश्चापि दुःखार्तान्रामलक्ष्मणपार्श्वतः ॥ १६ ॥
ततः सीता ददर्शोभौ शयानौ शरतल्पयोः ॥ लक्ष्मणं चापि रामं च विसंज्ञौ शरपीडितौ ॥ १७ ॥
विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ ॥ सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ १८ ॥
तौ दृष्ट्वा भ्रातरौ तत्र वीरौ सा पुरुषर्षभौ ॥ शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ १९ ॥
शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ ॥ दुःखार्ता सुभृशं सीता सुचिरं विललाप ह ॥ २० ॥

---

समेष्यतीत्याशारहिता ॥ ७—८ ॥ अद्येत्यादिसार्धश्लोक एकान्वयः ॥ अन्यां गतिं चापश्यती । आगमशासनस्यानित्यत्वान्नुमभावः । अन्यां मत्तोन्याम् । गम्यत इति गतिः प्राप्यं । विनिवृत्ताशा रामाद्विनिवृत्तभावा ॥ ९—१२ ॥ त्रिजटया सह सीतामारोप्य । उभयोरेव विमानारोहणमनुज्ञायेत्यर्थः । पुत्रीत्वान्निपुणतया च त्रिजटाया विमानारोहणानुज्ञा ॥ १३ ॥ इन्द्रजिता रण इत्यनन्तरमितिकरणं बोध्यं ॥ १४—१६ ॥ ततः सीतेत्यादिश्लोकद्वयं ॥ विप्रविद्धशरासनौ भ्रष्टचापौ । सायकैश्छिन्नसर्वाङ्गौ अतएव शरस्तम्बमयौ शरगुल्ममयौ । स्तम्बः समूह इत्येके । क्षितौ शरतल्पयोः शयानाविति संबन्धः ॥ १७—१८ ॥ तावित्यादिश्लोकद्वयं ॥ पावकी पावकपुत्रौ स्कन्दविशाखौ । अत्रोत्तरो वीरशब्दः कुमाराविवत्यस्य

---

**ती०** अन्यांगतिंनापश्यती अन्यां मत्तोन्यां । गम्यतइतिगतिः प्राप्यं । रामरूपंप्रियंपश्यतीतियावत् । राममवेक्ष्यविनिवृत्ताशा साक्षयंमामुपस्थास्यतइतिसंबन्धः । 'ताउवाचततोहृष्टाराक्षसीः' इत्यारभ्य'अनपेक्षाविशालाक्षीमामुपस्थास्यतेस्वयं' इत्यन्तस्यवाक्यार्थस्तु वैदेह्यारामलक्ष्मणवृत्तान्तजिज्ञासायां तद्वृत्तान्तंतस्यैकथयतेतिरावणोराक्षसीर्नियोजयति—ताउवाचेत्यारभ्यअनपेक्षाविशालाक्षीत्यन्तेन । रणेरामलक्ष्मणौ इन्द्रजितासह । युद्धायेतिशेषः । हतौ आगतावित्यर्थः । हनहिंसागत्योरितिधातोरेवमर्थः । वैदेह्या आख्यात तस्यास्तद्दर्शनेच्छायांसत्यांपुष्पकंसमारोप्यहतौ आगतौ तौ दर्शयध्वंचेत्यर्थः । तस्यैपतिदर्शनेनकिं भविष्यतितत्राह—यदाश्रयादित्यादिश्लोकद्वयेन । हे अवष्टब्धाः गर्विताःराक्षस्यः । इयंयदाश्रयात् यस्यरामस्याश्रयाद्धेतोः । मां लक्ष्मीं मदीयामितिशेषः । नोपतिष्ठति नानुभवतीत्यर्थः । अस्याभर्तारणमूर्धनिभ्रात्रासहनिहतः आगतःखलु । तंदृष्ट्वा इतःपरंनिर्विशङ्का निरुद्विग्ना एतावत्पर्यन्तंनिरपेक्षापिमैथिली सर्वाभरणभूषितासती मां मदीयांलक्ष्मींनिवेदितांलक्ष्मीमित्यर्थः । उपस्थास्यते अनुभविष्यतीत्यर्थः । ननुकथंतत्समागमंविनातस्यदर्शनमात्रेणसीतात्वदर्पितैश्वर्यमनुभविष्यतीत्यत्राह—अद्येत्यादिसार्धश्लोकेन । कालवशं कालोवशोयस्यतं लक्ष्मणंरणेप्राप्तंराममपेक्ष्य नान्यांगतिंपश्यती रामव्यतिरिक्तप्राप्यंनपश्यतीसती परमपतिव्रतेत्यर्थः । अतएवानपेक्षा अतएवविनिवृत्ताशा । एतादृश्यपि सर्ववाक्यंसावधारणमितिन्यायात् अद्यैवस्वयमेवमां मदर्पितांलक्ष्मीं उपस्थास्यतीत्यर्थः । **स०** उपस्थास्यते संगतंकरोति मित्रीकरिष्यतीतिवा तेनात्मनेपदोपपत्तिः ॥ ९ ॥ **स०** रामं लक्ष्मणमितिवक्तव्ये यल्लक्ष्मणंचैवरामंचेतिवचनंनागपाशेननतदीशस्यबन्धनंसुतरांतच्छायिनइतिद्योतयितुं ॥ १७ ॥ **ती०** विप्रविद्धशरासनौ भ्रष्टधनुष्कौ । शरस्तंबमयौ शरस्तंबःशरसमूहः तन्मयौ ॥ १८ ॥ इतिसप्तचत्वारिंशःसर्गः ॥ ४७ ॥

[ **पा०** ] १ क. ग.—ट. अनपेक्षा. २ घ. तामानाय्यतु. ३ घ. परायणां. ग. परिप्लुतां. ४ ङ. झ. ञ. ट. रावणश्चारयामास. च. छ. रावणःकारयामास. ५ ख. प्रविध्वस्तशरासनौ. ६ च. झ. ञ. ट. करुणं.

भर्तारमनवद्याङ्गी लक्ष्मणं चासितेक्षणा ॥ प्रेक्ष्य पांसुषु वेष्टन्तौ रुरोद जनकात्मजा ॥ २१ ॥
सा बाष्पशोकाभिहता समीक्ष्य तौ भ्रातरौ देवसमप्रभावौ ॥
वितर्कयन्ती निधनं तयोः सा दुःखान्विता वाक्यमिदं जगाद ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रामलक्ष्मणयोर्निधननिर्धारणेन सकरुणं बहुधाविलपन्तींसीतांप्रति त्रिजटया हेतूपन्यासाद्राघवयोर्जीवनप्रत्यायनेन समाश्वासनम् ॥ १ ॥ राक्षसीभिस्त्रिजटयासहसीतायाः पुनरशोकवनप्रापणम् ॥ २ ॥

भर्तारं निहतं दृष्ट्वा लक्ष्मणं च महाबलम् ॥ विललाप भृशं सीता करुणं शोककर्शिता ॥ १ ॥
ऊचुर्लक्षणिनो ये मां पुत्रिण्यविधवेति च ॥ तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ २ ॥
यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिणः ॥ तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ३ ॥
ऊचुः संश्रवणे ये मां द्विजाः कार्तान्तिकाः शुभाम् ॥ तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥४॥
वीरपार्थिवपत्नी त्वं ये धन्येति च मां विदुः ॥ तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५ ॥
इमानि खलु पद्मानि पादयोर्यैः किल स्त्रियः ॥ आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥ ६ ॥

विशेषणं ॥ १९—२१ ॥ सेति अत्र वीक्षणगदनरूपक्रियाभेदात्तच्छब्दद्वयं ॥२२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

अथ सीताप्रलापोष्टचत्वारिंशे—भर्तारमिति ॥ करुणं यथा तथा विललाप ॥ १ ॥ लक्षणिन इति । लक्षणशब्देनात्र लक्षणज्ञानं लक्ष्यते तदेषामस्तीति लक्षणिनः। षडुत्तरषष्टिलक्षणसामुद्रिकशास्त्रज्ञा इत्यर्थः " षष्टिष्षडुत्तरा योषिदङ्गलक्षणमीरितं " इत्युक्तेः । अतएवाविधवा विधवालक्षणरहिता । " निर्लोम हृदयं यस्याः समनिम्नत्ववर्जितम् । ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा लभेत् " इत्युक्तलक्षणेत्यर्थः । पुत्रिणी पुत्रलाभलक्षणवती । " दीर्घाङ्गुलिश्च या नारी दीर्घकेशी च या भवेत् । दीर्घमायुरवाप्नोति पुत्रैश्च सह वर्तते " इत्युक्तलक्षणवतीत्यर्थः । ज्ञानिनो लक्षणज्ञानवन्तः । अनृतवादिनः आसन्निति शेषः ॥ २ ॥ यज्वनः कृताश्वमेधादिकस्य । " यज्वा तु विधिनेष्टवान् " इत्यमरः । बहुयजमानकानि गवामयनप्रभृतीनि सत्राणि तत्कर्तासत्री तस्य महिषीं कृताभिषेकां । " कृताभिषेका महिषी " इत्यमरः । पत्नीं यज्ञसंयोगवतीं । " पत्युर्नो यज्ञसंयोगे " इति पतिशब्दस्य नकारान्तादेशः । ततो " ऋन्नेभ्यो ङीप् " इति ङीप् ॥ ३ ॥ संश्रवणे मम सम्यक् श्रवणे । मयि शृण्वन्त्यामित्यर्थः । यद्वा सम्यक् श्रवणमस्मिन्निति संश्रवणः सन्निधिः । मत्सन्निधावित्यर्थः । मात्रादिसमीप इति शेषः । कृतान्तः कालः तद्विदः कार्तान्तिकाः । " स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि " इत्यमरः । शुभां नित्यमङ्गलां । " स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् । समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा " इत्याद्युक्तलक्षणैरिति शेषः ॥ ४ ॥ त्वं वीरपार्थिवपत्नी धन्या चेति ये विदुः । विदित्वा ऊचुरित्यर्थः । तेप्यनृतवादिन इति पूर्वेणान्वयः ॥ ५ ॥ यैः पद्मैरुपलक्षिताः स्त्रियः

ती० भर्तारंनिहतमित्यादिसीताप्रलापवाक्यानांवास्तवार्थेऽयमाशयः । सर्वेश्वरीसर्वज्ञादेवीरामलक्ष्मणयोःकापिहानिर्नास्तीति ज्ञात्वापि राक्षसान्वञ्चयितुंबहुविधंप्रलपतीति । निहतं निहतमिवस्थितमित्यर्थः । 'तेद्यसर्वेहतेरामे' इत्यादिसर्वस्थलेषु रामेहते हतइवस्थितेइत्यर्थः ॥ १ ॥ ति० वीरपार्थिवपत्नीनां पूजनीयामितिशेषः । भर्तृपूजितां सुमङ्गलीं येप्राहुः ॥ ५ ॥

[ पा० ] १ ख. ग. ङ.—ट. देवसुतप्रभावौ. २ ख. ग. घ. महारथं. ३ घ. ङ. झ. ट. लक्षणिकाः. ४ ऊचुस्संश्रवणे. वीरपार्थिवपत्नी. इत्यनयोःश्लोकयोःपौर्वापर्यं झ. पाठेदृश्यते. ५ झ. ट. वीरपार्थिवपत्नीनांयेविदुर्भर्तृपूजितां. ६ क. ख. ज. पादयोर्यैःकुलस्त्रियः. ङ. च. छ. झ. ञ. ट. पादयोर्वैकुलस्त्रियः.

वैधव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्लभाः ॥ नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ७ ॥
सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः ॥ तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ ८ ॥
केशाः सूक्ष्माः समा नीला भ्रुवौ चासंगते मम ॥ वृत्ते चारोमशे जङ्घे दन्ताश्चाविरला मम ॥ ९ ॥
शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ ॥ अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥ १० ॥
स्तनौ चाविरलौ पीनौ ममेमौ मग्नचूचुकौ ॥ मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्काश्च मे चिताः ॥ ११ ॥
मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च ॥ प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥ १२ ॥
समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् ॥ मन्दस्मितेत्येव च मां कन्यालक्षणिनो द्विजाः ॥ १३ ॥
आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह ॥ कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥ १४ ॥

आधिराज्येभिषिच्यन्ते किलेत्यैतिह्ये । तानीमानि पद्मानि रेखारूपाणि दृश्यन्त इति शेषः । खल्विति प्रसिद्धौ । स्पष्टं दृश्यन्त इत्यर्थः । कथमेषां निष्फलत्वमितिभावः ॥ ६ ॥ भाग्यदुर्लभाः दुर्लभभाग्या नार्यः । यैर्लक्षणैर्वैधव्यं यान्ति तानि लक्षणानि पश्यन्ती विमृशन्ती । नपश्यामि । कुत्रापिवैधव्यहेतुर्लक्षणं न पश्यामीत्यर्थः । किंतु केवलं हतलक्षणा निष्फललक्षणास्मीत्यर्थः । तादृशलक्षणानि च सामुद्रिकोक्तानि । " परस्परं समारूढाः पादाङ्गुल्यो भवन्ति चेत् । हत्वा बहूनपि पतीन्परप्रेष्या तथा भवेत् ॥ यस्याः कनिष्ठिका भूमिं नगच्छन्त्याः परिस्पृशेत् । पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् ॥ एकरोमा राजपत्नी द्विरोमातिसुखान्विता । त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक् " इत्यादिना ॥ ७ ॥ पदि पदे मा श्रीर्येषां तानि पद्मानीत्येवं सत्यनामानि । पदश्रीकराणीत्यर्थः । यद्वा पद्मावत्त्वात् पद्मशब्दवाच्यानि । रेखारूपाणि यानि पद्मानि । सत्यनामानि अन्वर्थनामानि । पद्माशब्दादर्शआद्यचि कृते रूपं । केचित्सत्यनामानि अमोघफलानीत्याहुः । लक्षणैः ध्वजादिलक्षणैः सह यानि सत्यनामानि पद्मान्युक्तानि तानि मे वितथानि निष्फलानि भवन्तीतियोजना ॥ ८ ॥ केशा इत्यादिचतुःश्लोक्येकान्वया ॥ अहं सूक्ष्मकेशत्वादिलक्षणलक्षितास्मि । अतो मां शुभलक्षणामूचुरित्यन्वयः । समाः न्यूनाधिक्यरहिताः । असंगते परस्परमसंयुक्ते । अरोमशे रोमरहिते । वृत्ते वर्तुले । अत्र स्कान्दे—" रोमहीने शुभे स्निग्धे यज्जङ्घे क्रमवर्तुले । सा राजपत्नी भवति विशिरे सुमनोहरा " इति ॥ शङ्खे नेत्रोपान्तभूतललाटपार्श्वे । चितौ उपचितौ । एतच्छङ्खे नेत्रे इत्यत्र लिङ्गव्यत्ययेन योजनीयं । अनुवृत्तनखाः वृत्तनखाः । अङ्गुलयः पादहस्ताङ्गुलयः । तदुक्तं स्कान्दे—" स्निग्धाः समुन्नतास्तत्र वृत्ताः पादनखाः शुभाः " इति । समाः हस्तपरिमाणसदृशाः । नातिदीर्घा नातिह्रस्वा इत्यर्थः । यद्वा एकहस्तवद्धस्तान्तरेपि तुल्यपरिमाणा इत्यर्थः । अन्यूनाधिकसंख्याका इति वार्थः । अविरलौ निरन्तरौ । मग्नचूचुकौ ईषन्मग्नाग्रौ । मग्ना गम्भीरा । उत्सङ्गिनी उन्नतपर्यन्तप्रदेशः । पार्श्वोरस्काः पार्श्वे च उरस्कं च । आर्षो लिङ्गव्यत्ययः । चिताः उचिताः । मणिनिभः मणिवत्स्निग्धवर्णः । प्रतिष्ठितां द्वादशभिः दशभिः पादाङ्गुलिभिः द्वाभ्यां पादतलाभ्यां च भूमौ सुप्रतिष्ठितां ॥ ९—१२ ॥ समग्रयवं संपूर्णयवाकाररेखं । अच्छिद्रं श्लिष्टाङ्गुल्यन्तरालं । वर्णवत् अरुणवर्णं । मामूचुरित्यनुषञ्जनीयं । मन्दस्मितेत्येवेत्येवकारः अयोगव्यवच्छेदार्थः । नित्यमन्दस्मितेत्यर्थः ॥ १३ ॥ कृतान्तकुशलैः ज्यौतिषिकसिद्धान्तनिपुणैः । अत्र इतिकरणं द्रष्टव्यं । अभिषेक इत्युक्तमित्यन्वयः ।

**स०** लक्षणैः लक्षयन्तिजनानितितज्ज्ञैःकर्तृभिः । लक्षणैः करणैर्वा । उक्तानि प्रोक्तानि । द्वितीयेतज्ज्ञैरितिशेषः ॥७—८॥ **शि०** नार्यःयैर्लक्षणैर्वैधव्यंयान्ति तानिलक्षणानिपश्यन्तीअन्वेषयन्ती । तलक्षणा तलयोःपाणिपादतलयोः क्षणं उत्सवप्रदचिह्नं यस्याः सा अहं आत्मनोनैवपश्यामि । एतेन रामनिधनंनसंभवतीतिसूचितं । हएवार्थे ॥ ७ ॥ **ति०** पार्श्वंचउरस्कंच । स्वार्थेकः । तत्पार्श्वोरस्कं ॥ ११ ॥ **स०** वर्णवत् रूपवत् । "वर्णःस्तुतौरूपे" इतिविश्वः ॥ १३ ॥ **स०** पतिनापत्या । पतिरित्याख्यातः पतिरितिलाक्षणिकः । नप्रतिपदोक्तोतःपतिसूत्रागृहीतइतिपतिनेति 'पतितेपतौ' 'कृष्णस्यसखिरर्जुनः' इत्यादिवत्संभवतीतिवाज्ञेयं

**[ पा० ]** १ घ. दुर्लभैः. २ ङ. झ. ट. चासंहतेमम. ३ ङ. झ. ट. मामकौ. ४ ङ. झ. ट. पार्श्वोरस्कंचमेचितं. ५ ङ. च. छ. झ. ञ. ट. कन्यालाक्षणिकाविदुः. ग. घ. कन्यालक्षणिनोविदुः.

शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च ॥ तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ॥ १५ ॥
ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च ॥ अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यताम् ॥ १६ ॥
अदृश्यमानेन रणे मायया वासवोपमौ ॥ मम नाथावनाथाया निहतौ रामलक्ष्मणौ ॥ १७ ॥
न हि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः ॥ जीवन्प्रति निवर्तेत यद्यपि स्यान्मनोजवः ॥ १८ ॥
न कालस्यातिभारोस्ति कृतान्तश्च सुदुर्जयः ॥ यत्र रामः सह भ्रात्रा शेते युधि निपातितः ॥१९॥
न शोचामि तथा रामं लक्ष्मणं च महाबलम् ॥ नात्मानं जननीं वाऽपि यथा श्वश्रूं तपस्विनीम्॥२०॥
साऽनुचिन्तयते नित्यं समाप्तव्रतमागतम् ॥ कदा द्रक्ष्यामि सीतां च लक्ष्मणं च सराघवम् ॥२१॥
परिदेवयमानां तां राक्षसी त्रिजटाऽब्रवीत् ॥ २२ ॥
मा विषादं कृथा देवि भर्ताऽयं तव जीवति ॥ २३ ॥
कारणानि च वक्ष्यामि महान्ति सदृशानि च ॥ यथेमौ जीवतो देवि भ्रातरौ रामलक्ष्मणौ ॥२४॥
न हि कोपपरीतानि हर्षपर्युत्सुकानि च ॥ भवन्ति युधि योधानां मुखानि निहते पतौ ॥ २५ ॥
इदं विमानं वैदेहि पुष्पकं नाम नामतः ॥ दिव्यं त्वां धारयेन्नैवं यद्येतौ गतजीवितौ ॥ २६ ॥
हतवीरप्रधाना हि हतोत्साहा निरुद्यमा ॥ सेना भ्रमति संख्येषु हतकर्णेव नौर्जले ॥ २७ ॥
इयं पुनरसंभ्रान्ता निरुद्विग्ना तरस्विनी ॥ सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ २८ ॥

"चक्रवर्तिस्त्रियः पाणौ नन्द्यावर्तः प्रदक्षिणः" इत्याद्युक्तनन्द्यावर्तादिलक्षणैरिति भावः । सर्वं वितथीकृतमित्यतः परं यज्वनो महिषीं ये मामित्यधस्तनश्लोकः केषुचित्कोशेषु दृश्यते । स तु लेखकप्रमादकृतः ॥ १४ ॥ शोधयित्वा अन्विष्य । प्रवृत्तिं वृत्तान्तं । गोष्पदे इन्द्रजिन्मायामात्र इति भावः ॥ १५ ॥ ब्रह्मशिरः अस्त्रविशेषः । प्रत्यपद्यतां नन्वित्यन्वयः । परस्मैपदमार्षं । नन्विति प्रसिद्धौ । आमन्त्रणे वा । "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः । प्रलापे निर्निमित्तमामन्त्रणं संभवति ॥ १६—१७ ॥ दृश्यमानत्वे नैवं हन्तुं शक्नुयादित्याह—न हीति ॥ १८ ॥ नेति । शुभाशुभप्रापकस्य कालस्यातिभारो नास्ति । अशक्यार्थोनास्तीत्यर्थः । कृतान्तः दैवं । यत्र यतः । रामः अतिबलपराक्रमशाल्यपीति भावः ॥ १९ ॥ जननीं मन्मातरम् ॥ २० ॥ उक्तार्थे हेतुमाह—सेति ॥ समाप्तव्रतं अथ आगतं सराघवं लक्ष्मणं सीतां च कदा द्रक्ष्यामीति अनुचिन्तयत इत्यन्वयः ॥ २१ ॥ परिदेवयमानां विलपन्तीं ॥२२॥ मा विषादमित्यर्धं ॥ २३ ॥ इमौ रामलक्ष्मणौ जीवत इति यथा ज्ञातुं शक्यते तथा । महान्ति स्फुटानि । सदृशानि पूर्वानुभूततुल्यानि । दृष्टसंवादानीति यावत् । कारणानि हेतून् । वक्ष्यामीत्यन्वयः ॥२४॥ तान्येव कारणानि व्यतिरेकमुखेनाह—न हीति ॥ हर्षेण पर्युत्सुकानि । प्रसन्नानीतियावत्॥२५—२६॥ हतकर्णा हतकर्णधारा ॥ २७ ॥ निवेदितौ निवेदित-

॥ १४ ॥ ति० गोष्पदे अल्पावशिष्टसैन्ये । हताविल्यर्थः । अनेन बहुदिनयुद्धोत्तरमल्पावशिष्टेसैन्येकतिपययूथपरूपेऽयंशरबन्धइतिलभ्यते ॥ १५ ॥ स० राघवौ रामलक्ष्मणौ प्रत्यपद्यत प्रत्यपद्येतां । विश्वामित्रादितिशेषः । राघवश्चराघवश्चेत्येतद्विग्रहवाक्यैकवचनापेक्षयापृथक्पृथगन्वयोवा । विश्वामित्रोवसिष्ठोवाराघवौप्रत्यपद्यत प्रत्यपादयत् ग्राहयामासेतिवा । ननुना सर्वएतदादिविस्मृतंवामायाप्रबलेतिवाकल्पनांसूचयति ॥ १६ ॥ स० नाथौ एकोमुख्यतयारक्षकत्वेनामुख्यतयाचैकइतिनाथौ । छत्रिन्यायेनवा ॥ १७ ॥ शि० यत्र यदानिपातितोरामःशेते तदा कृतान्तःकालःसुदुर्जयः कैश्चिदपिजेतुंअशक्यः । अतएव कालस्यातिभार अतिभीतिर्नास्ति । रावणमेवाश्रित्यसर्वेनिर्भयाभविष्यन्तीतिसूचितं ॥ १९ ॥ स० जननीं जनकभार्यां । जनकोप्युपलक्ष्यते । वार्धकाद्व्रतपतित्वादेकपुत्रत्वात्तामेवशोचामीतिभावः ॥ २० ॥ शि० नामतःपुष्पकमिदंविमानं यदितौगतजीवितौ तर्हि त्वांनधारयेत् । विधवांनधारयतीत्यर्थः । एतेन धारणरूपंहेत्वन्तरंसूचितं ॥ २६ ॥ इत्यष्टचत्वारिंशःसर्गः ॥ ४८ ॥

[ पा० ] १ क.—घ. च. ञ. मुपलभ्यमे. २ झ. ञ. ट. प्रत्यपद्यत. ३ झ. सातु. ४ क. ग. ङ.—ट. धारयन्नेदं. ५ ङ.—ट. गतोत्साहा. ६ ख. ग. ङ.—ट. तपस्विनि.

सा त्वं भव सुविस्रब्धा अनुमानैः सुखोदयैः ॥ अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥२९॥
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ॥ चारित्रसुखशीलत्वात्प्रविष्टासि मनो मम ॥ ३० ॥
नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः ॥ तादृशं दर्शनं दृष्ट्वा मया चावेदितं तव ॥
इदं च सुमहच्चिह्नं शनैः पश्यस्व मैथिलि ॥ ३१ ॥
निःसंज्ञावप्युभावेतौ नैव लक्ष्मीर्वियुज्यते ॥ प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् ॥
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥ ३२ ॥
त्यज शोकं च मोहं च दुःखं च जनकात्मजे ॥ रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम् ॥ ३३ ॥
श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा ॥ कृताञ्जलिरुवाचेदमेवमस्त्विति मैथिली ॥ ३४ ॥
विमानं पुष्पकं तत्तु संनिवर्त्य मनोजवम् ॥ दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥ ३५ ॥
ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा ॥ अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥ ३६ ॥
प्रविश्य सीता बहुवृक्षषण्डां तां राक्षसेन्द्रस्य विहारभूमिम् ॥
संप्रेक्ष्य संचिन्त्य च राजपुत्रौ परं विषादं समुपाजगाम ॥ ३७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

## एकोनपञ्चाशः सर्गः ॥ ४९ ॥

नागपाशबद्धेनापिदिष्ट्याप्रबुद्धेनरामेण लक्ष्मणदुरवस्थावलोकनेनतस्य चरमावस्थाशङ्कया तंप्रतिशोचनपूर्वकंबहुधा विलापः ॥ १ ॥

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ ॥ निश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १ ॥
सर्वे ते वानरश्रेष्ठाः ससुग्रीवा महाबलाः ॥ परिवार्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥ २ ॥

---

जीवितौ ॥२८॥ अनुमानैः चिह्नैः । सुखोदयैः सुखज्ञेयैरित्यर्थः । चारित्रसुखशीलत्वात् । चरित्रमेव चारित्रं पातिव्रत्यं तदेव सुखं प्रियं शीलं स्वभावः यस्याः सा तस्याः भावश्चारित्रसुखशीलत्वं तस्मात् । यद्वा चारित्रेणाह्लादकस्वभावत्वादित्यर्थः । प्रविष्टासि मनो मम । त्वयि मम स्नेहो वर्तत इत्यर्थः ॥ २९-३० ॥ तादृशं तादृग्विधं । जीवनव्यञ्जकमिति यावत् । दृश्यते ज्ञायतेनेनेति दर्शनं सैन्यमुखप्रसादादिकं । पूर्वदृष्टं स्वप्रमिति वार्थः । शनैः पश्यस्व सावधानेन पश्येत्यर्थः ॥ ३१ ॥ न वियुज्यते न जहाति । गतायुषां अतएव गतसत्त्वानां गतप्राणानां । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । वैकृतं विकृतिः ॥ ३२ ॥ रामलक्ष्मणयोरर्थे शोकं शोककृतं मुखविकारं । मोहं विपरीतबुद्धिं । दुःखं मनोव्यथां च त्यज । अजीवितुं न शक्यं जीवितुं शक्यमेवेत्यर्थः ॥ ३३ ॥ कृताञ्जलिरित्यनेन भगवद्विषयोपदेष्टा योपि कोप्यादरणीय इत्युक्तं । इदंशब्दविवरणं एवमस्त्विति ॥ ३४ ॥ विमानमिति । संनिवर्तने प्रवेशने च त्रिजटैव कर्त्री ॥ ३५ ॥ राक्षसीभिरित्यनेन त्रिजटादर्शनायानीतेति गम्यते ॥ ३६ ॥ विहारभूमिं प्रमदावनं । संप्रेक्ष्य संचिन्त्य । प्रेक्षितप्रकारेण संचिन्त्येत्यर्थः । यद्वा भावनाप्रकर्षात्पुरःस्थितौ संप्रेक्ष्येत्यर्थः ॥ ३७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

अथ रामप्रबोधनमेकोनपञ्चाशे—घोरेणेत्यादिश्लोकद्वयमेकान्वयं ॥ नागौ यथा नागाविव निश्वस-

---

[ पा० ] १ क.—ट. वक्ष्यामिमैथिलि. २ ग. झ. ट. चोदीरितं. ३ ङ. झ. ट. इदंतुसुमहच्चित्रं. ४ ग. घ. पश्याद्यमैथिलि. ५ ङ. झ. ट. विसंज्ञौपतितावेतौनैवलक्ष्मीर्विमुञ्चति. ६ ख. ग. ङ. झ. ट. रुवाचेमामेवं. ७ ग. ज. शोकपरिप्लुतौ.

एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् ॥ स्थिरत्वात्सत्त्वयोगाच्च शरैः संदानितोपि सन् ॥ ३ ॥
ततो दृष्ट्वा सरुधिरं [1]विषण्णं गाढमर्पितम् ॥ [2]भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥ ४ ॥
किंनु मे सीतया [3]कार्यं किं कार्यं जीवितेन वा ॥ शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥५॥
शक्या सीतासमा नारी मर्त्यलोके विचिन्वता ॥ न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः ॥६॥
परित्यक्ष्याम्यहं [4]प्राणं वानराणां तु पश्यताम् ॥ यदि पञ्चत्वमापन्नः सुमित्रानन्दवर्धनः ॥ ७ ॥
किंनु वक्ष्यामि कौसल्यां मातरं किंनु कैकयीम् ॥ कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥८॥
विवत्सां वेपमानां च क्रोशन्तीं कुररीमिव ॥ कथमाश्वासयिष्यामि [6]यदा यास्यामि तं विना ॥ ९ ॥
कथं वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनम् ॥ १० ॥
मया सह वनं यातो विना तेन गतः पुनः ॥ उपालम्भं न शक्ष्यामि सोढुं बत सुमित्रया ॥ ११ ॥
इहैव देहं त्यक्ष्यामि न हि जीवितुमुत्सहे ॥ १२ ॥
धिङ्मां दुष्कृतकर्माणमनार्यं [7]यत्कृते ह्यसौ ॥ लक्ष्मणः [8]पतितः शेते शरतल्पे गतासुवत् ॥ १३ ॥
त्वं नित्यं स विषण्णं मामाश्वासयसि लक्ष्मण ॥ गतासुर्नाद्य शक्नोषि मामार्तमभिभाषितुम् ॥१४॥
येनाद्य [9]निहता युद्धे राक्षसा विनिपातिताः ॥ तस्यामेव क्षितौ वीरः स शेते निहतः परैः ॥ १५ ॥
शयानः शरतल्पेऽस्मिन्[10]स्वशोणितपरिप्लुतः ॥ [11]शरजालैश्चितो भाति भास्करोऽस्तमिव व्रजन् ॥ १६ ॥
बाणाभिहतमर्मत्वान्न शक्नोत्यभिभाषितुम् ॥ रुजा [12]चाब्रुवतोप्यस्य दृष्टिरागेण सूच्यते ॥ १७ ॥
यथैव मां वनं यान्तमनुयातो महाद्युतिः ॥ अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १८ ॥
इष्टबन्धुजनो नित्यं मां च नित्यमनुव्रतः ॥ इमामद्य गतोऽवस्थां ममानार्यस्य दुर्नयैः ॥ १९ ॥

---

न्तावित्यन्वयः । शोकपरिप्लुताः शोकपूर्णाः ॥१–२॥ स्थिरत्वात् धीरत्वात् । सत्त्वयोगात् बलयोगात् । संदानितोपि बद्धोपि । " बद्धे संदानितं मूतं " इत्यमरः ॥ ३ ॥ अर्पितं शरैरिति शेषः ॥ ४ ॥ किंत्वित्यादिश्लोकद्वयं ॥ विचिन्वता मयेति शेषः । सचिवः सहायः । साम्परायिकः युद्धे साधुः । " युद्धायत्योः सम्परायः " इत्यमरः ॥ ५—६ ॥ पञ्चत्वं मृतिं ॥ ७ ॥ किंन्वित्यादिश्लोकद्वयमेकान्वयं ॥ अहं तं लक्ष्मणं विना अयोध्यां यदा यास्यामि तदा कौसल्यां कैकयीं च किं वक्ष्यामि । सुमित्रां कथमाश्वासयिष्यामि ॥ ८—९ ॥ कथमित्यर्धं ॥ यशस्विनमित्यनेन तद्यशो मया न लब्धमिति खिद्यति ॥ १० ॥ यो मया सह वनं यातः तेन विनाऽयोध्यां गतोहं सुमित्रया कृतमुपालम्भं उक्तप्रकारं सोढुं कथं शक्ष्यामि ॥ ११ ॥ इहैवेत्यर्धं ॥ १२ ॥ दुष्कृतकर्माणं । लक्ष्मणवनानयनमेव दुष्कृतं कर्म ॥१३॥ स त्वमित्यन्वयः ॥ १४—१५ ॥ शयान इति । अयमिति शेषः । अत्र शरतल्पस्थानीयोस्तगिरिः । शरस्थाने किरणाः । शोणितस्थाने रक्तवर्णत्वं ॥ १६ ॥ रुजा व्यथा । दृष्टिरागेण वीक्षणप्रेम्णा ॥ १७ ॥ तथैव तेन प्रकारेण । मात्रादिस्नेहमविचार्येत्यर्थः । यमक्षयमित्यत्रापि यान्तमित्यनुषज्यते ॥ १८—१९ ॥

---

**स०** प्रत्यबुध्यत । तत्रनिमित्तमाह । स्थिरत्वात् प्रलयादावप्येकस्यैवस्थैर्यात् । नित्यनित्यत्वादितियावत् । सत्त्वयोगात् बलोपायात् । संदानितोबद्धःसन् । एतेनासुरमोहनायरामःस्वेच्छयैवसंदानितइतिज्ञायते ॥ ३ ॥ **स०** कौसल्यां किंनुवक्ष्यामि एतेनकौसल्यायारामइवलक्ष्मणेपिप्रेमेतिसूच्यते ॥ ८ ॥ **स०** वेपन्तीं वेपमानां कुररीमिववेपमानामित्यन्वयः ॥ ९ ॥ **ति०** शरभूतः शरैर्व्याप्तशरीरत्वाच्छररूपंप्राप्तः । तत्तद्रन्ध्रनिस्सरद्रुधिरव्याप्तशराःकिरणस्थानीयाः ॥ १६ ॥

**[ पा० ]** १ क. पतितं. २ ख. च. छ. ञ. लक्ष्मणंभ्रातरंदीनं. क. घ. लक्ष्मणंभ्रातरंरामः. ३ क. ख. घ.—ट. कार्यंलब्धया. ग. कार्यंलङ्कया. ४ क.—ट. प्राणान्वा. ५ च. झ. ञ. ट. वेपन्तीं. ६ क. ख. ग. च.—ट. यदि. ७ ङ.—ट. मत्कृते. ८ ङ. झ. पातितः. ९ ङ.—ट. बहवोयुद्धेनिहताराक्षसाःक्षितौ । तस्यामेवाद्यशूरस्त्वंशेषेविनिहतःशरैः. १० झ. सशोणितपरिप्लुतः. ११ ङ. च. झ. ञ. ट. शरभूतस्ततोभासि. १२ ङ.—ट. चाब्रुवतोयस्य.

सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे ॥ परुषं विप्रियं वाऽपि श्रावितं तु कदाचन ॥ २० ॥
विससर्जैकवेगेन पञ्चबाणशतानि यः ॥ इष्वस्त्रेष्वधिकस्तस्मात्कार्तवीर्याच्च लक्ष्मणः ॥ २१ ॥
अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः ॥ सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः ॥ २२ ॥
यन्मया न कृतो राजा राक्षसानां विभीषणः ॥ तच्च मिथ्या प्रलप्तं मां प्रधक्ष्यति न संशयः ॥ २३ ॥
अस्मिन्मुहूर्ते सुग्रीव प्रतियातुमितोऽर्हसि ॥ मत्वा हीनं मया राजन्रावणोऽभिद्रवेद्बली ॥ २४ ॥
अङ्गदं तु पुरस्कृत्य ससैन्यः ससुहृज्जनः ॥ सागरं तर सुग्रीव नीलेन च नलेन च ॥ २५ ॥
कृतं हनुमता कार्यं यदन्यैर्दुष्करं रणे ॥ ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च ॥ २६ ॥
अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च ॥ युद्धं केसरिणा संख्ये घोरं संपातिना कृतम् ॥ २७ ॥
गवयेन गवाक्षेण शरभेण गजेन च ॥ अन्यैश्च हरिभिर्युद्धं मदर्थे त्यक्तजीवितैः ॥
न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ॥ २८ ॥
यत्तु शक्यं वयस्येन सुहृदा च परंतप ॥ कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ॥ २९ ॥
मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ॥ अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ॥ ३० ॥
शुश्रुवुस्तस्य ते सर्वे वानराः परिदेवनम् ॥ वर्तयाञ्चक्रुरश्रूणि नेत्रैः कृष्णेतरेक्षणाः ॥ ३१ ॥
ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः ॥ आजगाम गदापाणिस्त्वरितो यत्र राघवः ॥ ३२ ॥
तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् ॥ वानरा दुद्रुवुः सर्वे मन्यमानास्तु रावणिम् ॥ ३३ ॥
[ निश्चेष्टौ विगतज्ञानौ रणरेणुसमुक्षितौ ॥ शयानौ शरतल्पस्थौ द्रष्टुमायाद्विभीषणः ॥ ३४ ॥
तं राक्षसेन्द्रात्मजशङ्कया ते निपातितौ राजसुतौ च दृष्ट्वा ॥
विभीषणं विव्यथिरे च दृष्ट्वा मेघा यथा वायुहताः प्लवङ्गमाः ॥ ३५ ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

विप्रियं अहितं । सुरुष्टेनापि लक्ष्मणेन श्रावितं विप्रियं परुषं वाक्यं न स्मरामीत्यर्थः ॥ २० ॥ यः कार्तवीर्यः सहस्रबाहुः एकेन वेगेन एकप्रयत्नेन । यावता कालेन पञ्चबाणशतानि विससर्ज प्रायुङ्क्त । द्विभुजोप्ययं लक्ष्मणः तावतैव कालेन तावतो बाणान् विसृजन् । इष्वस्त्रेषु विषये तस्मात्कार्तवीर्यादधिक इत्यर्थः ॥ २१ ॥ हन्यात् हन्तुं शक्तः । शकि लिङ् ॥ २२ ॥ यत् यस्मात् विभीषणो राक्षसानां राजा न कृतः । तस्मात् मिथ्याप्रलप्तं राजानं त्वां करिष्यामीति मिथ्या प्रलपितं मां प्रधक्ष्यति । दहतीत्यर्थः । आश्रुतकार्यनिर्वाहाभावेन मिथ्येत्युच्यते । आश्रुतं प्रतिज्ञातं ॥ २३ ॥ प्रतियातुं किष्किन्धामिति शेषः । हीनं त्वामिति शेषः ॥ २४–२५ ॥ कृतमित्यादिसार्धश्लोकत्रयं ॥ संपातिना वानरेण ॥ २६—२८ ॥ वयस्येन मित्रेण । सुहृदा च शोभनहृदयेन वा । चशब्दो वाशब्दार्थकः । धर्मभीरुणा धर्मो नश्यतीति भीरुणेत्यर्थः । अधर्मभीरुणेति वा पदच्छेदः ॥ २९—३० ॥ वर्तयांचक्रुः प्रवर्तयांचक्रुः । कृष्णेतरेक्षणाः रक्तेक्षणा इत्यर्थः ॥ ३१ ॥ तत इत्यादिश्लोकद्वयं ॥ ३२—३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनपञ्चाशस्सर्गः ॥ ४९ ॥

**स०** सुरुष्टेनापि येनकेनचित् । परुषं निष्ठुरं । अप्रियं । कदाचन उक्तमितिशेषः । नसंस्मरे नसंस्मरामीत्येवश्रावितं । अन्यथापरुषाप्रियश्रावणापेक्षयाऽन्तर्निगूढस्वरोषस्याल्पताप्रतीयेत । तच्चवैदिकलौकिकाननुकूलमित्येवमेवान्वयःसमञ्जसः ॥ २० ॥ इत्येकोनपञ्चाशःसर्गः ॥ ४९ ॥

[ **पा०** ] १ घ. कार्तवीर्यार्जुनादपि. २ ङ. छ. ट. सत्वहीनं. ञ. सतुहीनं. ३ ङ.—ट. त्रावणोभिभविष्यति. ४ ङ.—ट. परंमम. ५ क. ङ.—ट. येसर्वे. ६ क. ग.—ट. परिदेवितं. ७ ङ. झ. ञ. ट. वर्तयाञ्चक्रिरेश्रूणि. ८ ङ. झ. ट. त्वरितंयत्र. ९ घ. दुद्रुवुःशीघ्रं. १० इदंश्लोकद्वयं प्राचीनकोशेषुनदृश्यते.

## पञ्चाशः सर्गः ॥ ५० ॥

सुग्रीवचोदितेनजांबवता रामसमीपमागच्छतिगदापणौविभीषणे इन्द्रजिद्भ्रमेणविद्रवतांवानराणां तस्यविभीषणत्वभाषणेनसमाश्वासनपूर्वकं प्रतिनिवर्तनम् ॥ १ ॥ रामलक्ष्मणसमीपमेत्य सलिलेनतन्नयनपरिमार्जनपूर्वकंविलपतोविभीषणस्य सुग्रीवेणसमाश्वासनम् ॥ २ ॥ सुग्रीवेण स्वयंरावणवधप्रतिज्ञानपूर्वकं राघवयोः किष्किन्धाप्रापणंचोदितेनसुषेणेन तंप्रति संजीवकरण्यादिमहौषधिसमानयनाय क्षीरोदंप्रतिहनुमच्चोदनचोदना ॥ ३ ॥ अत्रान्तरेस्वयमेव सत्वरसमागतेन गरुडेन रामलक्ष्मणयोर्नागपाशविध्वंसनपूर्वकं परिष्वङ्गः ॥ ४ ॥ रामप्रश्नेननिजस्वरूपनिवेदनपूर्वकं सप्रदक्षिणंगतेगरुडे वानरैर्हर्षादुच्चैरुद्धोषणम् ॥ ५ ॥

अथोवाच महातेजा हरिराजो महाबलः ॥ किमियं व्यथिता सेना मूढवातेव नौर्जले ॥ १ ॥
सुग्रीवस्य वचः श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत् ॥ २ ॥
न त्वं पश्यसि रामं च लक्ष्मणं च महाबलम् ॥ शरजालाचितौ वीरावुभौ दशरथात्मजौ ॥
शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ ॥ ३ ॥
अथाब्रवीद्वानरेन्द्रः सुग्रीवः पुत्रमङ्गदम् ॥ नानिमित्तमिदं मन्ये भवितव्यं भयेन तु ॥ ४ ॥
विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः ॥ प्रपलायन्ति हरयस्त्रासादुत्फुल्ललोचनाः ॥ ५ ॥
अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः ॥ विप्रकर्षन्ति चान्योन्यं पतितं लङ्घयन्ति च ॥ ६ ॥
एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः ॥ सुग्रीवं वर्धयामास राघवं च निरैक्षत ॥ ७ ॥
विभीषणं तं सुग्रीवो दृष्ट्वा वानरभीषणम् ॥ ऋक्षराजं समीपस्थं जाम्बवन्तमुवाच ह ॥ ८ ॥
विभीषणोऽयं संप्राप्तो यं दृष्ट्वा वानरर्षभाः ॥ विद्रवन्ति परित्रस्ता रावणात्मजशङ्कया ॥ ९ ॥
शीघ्रमेतान्सुसंत्रस्तान्बहुधा विप्रधावितान् ॥ पर्यवस्थापयाख्याहि विभीषणमुपस्थितम् ॥ १० ॥
सुग्रीवेणैवमुक्तस्तु जाम्बवानृक्षपार्थिवः ॥ वानरान्सान्त्वयामास संनिरुध्य प्रधावतः ॥ ११ ॥
ते निवृत्ताः पुनः सर्वे वानरास्त्यक्तसंभ्रमाः ॥ ऋक्षराजवचः श्रुत्वा तं च दृष्ट्वा विभीषणम् ॥ १२ ॥
विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम् ॥ लक्ष्मणस्य च धर्मात्मा बभूव व्यथितेन्द्रियः ॥ १३ ॥
जलक्लिन्नेन हस्तेन तयोर्नेत्रे प्रमृज्य च ॥ शोकसंपीडितमना रुरोद विललाप च ॥ १४ ॥
इमौ तौ सत्त्वसंपन्नौ विक्रान्तौ प्रियसंयुगौ ॥ इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः ॥ १५ ॥

---

अथ रामस्य नागपाशविमोचनं पञ्चाशे—अथोवाचेत्यादि ॥ तादात्विकसेनापलायननिमित्तमजानानः पृच्छति—किमिति । किं किमर्थं । उवाच वानरानिति शेषः । मूढः मूर्च्छितः । विरुद्धदिग्वाय्वन्तराभिहत इत्यर्थः । वात्याहतेति यावत् ॥ १ ॥ सुग्रीवस्येत्यर्धं ॥ २ ॥ रामव्यथां विना किमन्यन्निमित्तमित्युत्तरयति—न त्वमिति ॥ अत्र काकुः । त्वं न पश्यसि किमित्यर्थः । रामं लक्ष्मणं चेत्युभावित्यन्वयः ॥ ३ ॥ स्वयमुद्घाटयति—अथेत्यादिना ॥ इदं रघुसिंहयोः शरतल्पशयनं । अनिमित्तं न भवतीति मन्ये । अन्येन भयनिमित्तेन भवितव्यमित्यर्थः । तत्र हेतुमाह—विषण्णेत्यादिना ॥ त्यक्तप्रहरणाः त्यक्तशिलाद्यायुधाः । अन्योन्यस्य अन्योन्यं । विप्रकर्षन्ति द्रुतगमनार्थमाकर्षन्ति ॥ ४–९ ॥ विप्रधावि-

---

**स०** इदं कपिपलायनं अनिमित्तं अकारणकंनमन्ये । पलायनप्रयोजकेनभयेन त्वदुक्तेतरेणभवितव्यमित्यङ्गदमब्रवीत् ॥ ४ ॥ **स०** त्रासात् नूतनभीतेः ॥ ५ ॥ **स०** वानरभीषणं इन्द्रजिद्भ्रमजनकतया ॥ ८ ॥

[ **पा०** ] १ ख. प्रौढवातेव. २ ख. किंनुपश्यसि. ३ ख. ङ.—ट. पलायन्तेत्रहरयः. ४ छ. जल्पन्ति. ५ ङ. झ. ञ. ट. राघवंचजयाशिषा. ६ क. ख. घ.—ट. द्रवन्त्यागतसंत्रासारावणात्मजशङ्कया. ७ क. वानरान्वारयामासनिवर्त्यप्रतिधावतः. ८ ख. ङ.—ट. संनिवर्त्य. ९ ङ. वानरामुक्तसाध्वसाः. च. छ. झ. ञ. ट. वानरास्त्यक्तसाध्वसाः. १० घ.—ट. व्यथितस्तदा. ११ ङ.—ट. विमृज्यच.

भ्रातुः पुत्रेण मे तेन दुष्पुत्रेण दुरात्मना ॥ राक्षस्या जिह्मया बुद्ध्या चालितावृजुविक्रमौ ॥ १६ ॥
शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ ॥ वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव ॥ १७ ॥
ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया ॥ तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ ॥ १८ ॥
जीवन्नद्य विपन्नोसि नष्टराज्यमनोरथः ॥ प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः ॥ १९ ॥
एवं विलपमानं तं परिष्वज्य विभीषणम् ॥ सुग्रीवः सत्त्वसंपन्नो हरिराजोऽब्रवीदिदम् ॥ २० ॥
राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः ॥ रावणः सह पुत्रेण स कामं नेह लप्स्यते ॥ २१ ॥
न रुजापीडितावेतावुभौ राघवलक्ष्मणौ ॥ त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे ॥ २२ ॥
तमेनं सान्त्वयित्वा तु समाश्वास्य च राक्षसम् ॥ सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह ॥ २३ ॥
सह शूरैर्हरिगणैर्लब्धसंज्ञावरिन्दमौ ॥ गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ ॥ २४ ॥
अहं तु रावणं हत्वा सपुत्रं सहबान्धवम् ॥ मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम् ॥ २५ ॥
श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् ॥ दैवासुरं महद्युद्धमनुभूतं सुदारुणम् ॥ २६ ॥
तदा स्म दानवा देवाञ्शरसंस्पर्शकोविदाः ॥ निजघ्नुः शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः ॥ २७ ॥
तानार्तान्नष्टसंज्ञांश्च परासूंश्च बृहस्पतिः ॥ विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८ ॥

तान् पलायमानान् ॥ १०—१५ ॥ दुष्पुत्रेण कपटयुद्धेन पितुरवद्यावहेन । चालितौ वञ्चितौ । ऋजुविक्रमौ अकपटविक्रमौ ॥ १६ ॥ सुप्तौ सुप्तसदृशौ । शल्यकौ कण्टकिवराहौ ॥ १७ ॥ ययोरित्यादिचतुःश्लोकी ॥ अत्र वक्तव्यं सर्वमभयप्रदाने दर्शितं ॥ १८—२१ ॥ न रुजापीडितौ इयं रुजा अनयोरात्यन्तिकहानिकरी न भवति । किंतु मोहमात्रकारिणीत्यर्थः ॥ २२—२५ ॥ अनुभूतं मया ज्ञातं । शरसंस्पर्शकोविदाः शरप्रयोगसमर्थाः । स्पर्शो दानमिति पर्यायः ॥ २६–२७ ॥ मन्त्रयुक्ताभिः मन्त्रप्रचुराभिः ।

**स०** भ्रातुः रावणस्य पुत्रेण । नोभयोः पितापुत्रयोरेवैतादृक्कूटयोधित्वं किंतु परंपरैवेदृशीत्याह—दुष्पुत्रेणेति । दुर्दुष्टःपुत्रो यस्यासौतथा ॥ १६ ॥ **स०** इमौ अलंविद्धौइमौसुप्ताविल्यन्वयः पृथक्पृथगितिनान्यतरवैयर्थ्यं । यद्वा इःकामः तस्यापिमाशोभा याभ्यांतौ । एवमपिशोभागतानेतिभावः । छत्रिन्यायेनेमावितिवा कामात्कामपालस्योत्तमत्वात्तत्त्वाल्लक्ष्मणस्यवा इमाविति संभवति । 'इःकामदेवेत्वनव्ययम्' इतिविश्वः ॥ १७ ॥ **स०** देहनाशाय स्वदेहनाशाय । यद्वा मद्देहनाशाय । एतयोरियाननर्थो यदितर्हि ममराज्याशैकत्रतिष्ठतु रावणोपितुप्राक्तनकोपेन मारयेदितिद्योतयत्यनेनेतिज्ञेयम् ॥ १८ ॥ **स०** प्रतिज्ञायतइतिप्रतिज्ञा प्रतिज्ञातोर्थःसीतापरित्यागाभावरूपः प्राप्तोयेनसतथा । सकामः मन्नाशेननिष्कण्टकराज्यप्राप्त्या । कृतः । अनयोरेवंस्वापेनेतिशेषः ॥ १९ ॥ **स०** विलपमानं विलपन्तं । पदव्यत्यासेनविलापफलकस्यविभीषणोत्प्रेक्षितस्यव्यत्यासंकविरवगमयामासेतिज्ञेयं ॥ २० ॥ **स०** गरुडाधिष्ठितौ गरुडेअधिष्ठितोगरुडवाहनोरामश्च । अधिष्ठानमधिष्ठितं गरुडस्येवाधिष्ठानंयस्येतिचान्यश्चेति गरुडाधिष्ठितौरामलक्ष्मणौ । मोहं नागपाशासादनजं । अयमेवपाठोन्याय्यः । गरुडागमनेननागपाशवियोगस्यात्रोत्तरत्रेवबहुपुराणेषुश्रवणात् । तानिचस्वावसरेवक्ष्यामः । 'नरुजापीडितावितिपठित्वा' इतितीर्थपाठस्यतदुत्प्रेक्षितत्वंसूचयन्नागोजिभट्टः स्वयंपाङ्क्ते 'गरुडाधिष्ठितौ' इतिपठित्वा 'गरुडोपासकतयाविदितौ' इतिनिर्मूलमर्थंवदंस्तादृशएवेतिसंतोष्टव्यं ॥ २२ ॥ **स०** उत्तरश्लोकद्वयमेकान्वयि । राक्षसं विभीषणं । सान्त्वयित्वा सुषेणंचसमाश्वास्यच गच्छेत्यब्रवीदितिसंबन्धः । एतेनान्यतरातिरेकशङ्कया 'सान्त्वयित्वेत्यस्यैवार्थकथनं समाश्वास्यत्विति' इतिवदतोनागोजिभट्टस्य बहुस्थलेषु द्वित्रादीनांश्लोकानामेकान्वयंब्रुवतोऽन्वयज्ञानदारिद्र्यंद्योत्यते । 'सान्त्वयित्वा गरुडानुग्रहसंभावनयेत्यर्थः । अनेनसुग्रीववाक्येनरामविषयेस्वस्यभगवदवतारत्वज्ञानंसूचितं' इतितद्वचनं 'गरुडोपासकतयाविदितौ' इति 'गरुडानुग्रहसंभावनया' इतिस्ववचनव्याहतमित्युपेक्ष्यं । तेनाभगवदवतारत्वहेतोरुपासकत्वस्यतदनुग्रहपात्रत्वस्यैवचप्रतीतेः ॥ २३—२४ ॥ **शि०** राक्षसंतंविभीषणमेवमाश्वास्य बोधयित्वा सान्त्वयित्वा तापं निरस्य सुषेणमुवाच ॥ २३ ॥ **ति०** यावल्लब्धसंज्ञौभविष्यतः तावदनयोरक्षार्थं एतौगृहीत्वाशूरैर्हरिगणैःसहकिष्किन्धांगच्छ ॥ २४ ॥ **स०** आगमनप्रयोजनस्यानिष्पत्तेःकथं कथय गन्तव्यमित्यतआह—अहंत्विति । नष्टां बल्यादिभिरदर्शनंप्रापितां श्रियं

**[ पा० ]** १ ङ. च. झ. ञ. ट. भ्रातृपुत्रेणचैतेन. २ क. ख. च. छ. ट. चालितौप्राज्यविक्रमौ. ग. ङ. झ. वञ्चितावृजुविक्रमौ. ३ ङ.—ट. ताविमौ. ४ ट. सत्वमापन्नः. ५ ङ. च. झ. ञ. ट. नेह. ६ ङ. झ. ट. गरुडाधिष्ठितावेतौ. ७ क. ख. ग. च.—ट. तमेवं. ८ क. घ. विभीषणं. ९ घ.—ट. पुरातनं. १० ग. घ. ङ. झ. ञ. ट. संस्पर्शकोविदान्.

तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् ॥ जवेन वानराः शीघ्रं संपातिपनसादयः ॥
हरयस्तु विजानन्ति [1]पार्वतीस्ता महौषधीः ॥ २९ ॥
संजीवकरणीं दिव्यां विशल्यां देवनिर्मिताम् ॥ ३० ॥
चन्द्रश्च [2]नाम द्रोणश्च क्षीरोदे सागरोत्तमे ॥ अमृतं यत्र मथितं तत्र ते परमौषधी ॥
[3]ते तत्र निहिते देवैः [4]पर्वते परमौषधी ॥ ३१ ॥
अयं वायुसुतो राजन्हनुमांस्तत्र गच्छतु ॥ ३२ ॥
एतस्मिन्नन्तरे वायुर्मेघांश्चापि सविद्युतः ॥ [5]पर्यस्यन्सागरे तोयं कम्पयन्निव [6]मेदिनीम् ॥ ३३ ॥
महता पक्षवातेन सर्वद्वीपमहाद्रुमाः ॥ [7]निपेतुर्भिन्नविटपाः [8]समूला लवणाम्भसि ॥ ३४ ॥
अभवन्पन्नगास्त्रस्ता भोगिनस्तत्रवासिनः ॥ शीघ्रं सर्वाणि यादांसि जग्मुश्च लवणार्णवम् ॥ ३५ ॥
ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् ॥ वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥ ३६ ॥
[9]तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ॥ [10]यैस्तौ सत्पुरुषौ बद्धौ शरभूतैर्महाबलौ ॥ ३७ ॥
ततः सुपर्णः काकुत्स्थौ दृष्ट्वा प्रत्यभिनन्दितः ॥ विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥ ३८ ॥
वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः ॥ सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥ ३९ ॥
तेजो वीर्यं बलं चौज उत्साहश्च महागुणः ॥ प्रदर्शनं च बुद्धिश्च स्मृतिश्च [11]द्विगुणं तयोः ॥ ४० ॥

विद्याभिः मृतसंजीविनीप्रभृतिभिः । चिकित्सति अचिकित्सत् ॥ २८ ॥ तान्यौषधानीत्यादिसार्धश्लोकः ॥ २९ ॥ संजीवकरणीमित्यर्धमेकं वाक्यं ॥ अत्रानयितुं यान्त्वित्यनुषज्यते । पूर्वोक्तक्षीरोदमध्ये संजीवकरणीं विशल्यां चानयितुं यान्त्वित्यर्थः । तयोरेवात्रोपयोगादिति भावः ॥ ३० ॥ ते कुत्र विद्येते इत्यत्राह—चन्द्रश्चेत्यादिना ॥ सागरोत्तमे क्षीरोदे । यत्र प्रदेशे अमृतं मथितं तत्र चन्द्रद्रोणाख्यौ पर्वतौ स्तः तयोस्ते महौषधी स्त इत्यर्थः । तत्रावस्थाने हेतुमाह—ते तत्रेति । पर्वते पर्वतयोः । जात्येकवचनं ॥ ३१ ॥ अयमित्यर्धं ॥ औषध्यन्तरानयने पनसादयो गच्छन्तु । संजीवविशल्यानयने तु हनुमान् गच्छत्विति विज्ञेयं ॥ ३२ ॥ मेघान् सागरतोयं च पर्यस्यन् पर्वतान्कम्पयन्निव गरुडपक्षवायुरुदभूदिति शेषः । सर्वद्वीपमहाद्रुमाः । सर्वपदं द्रुमविशेषणं । द्वीपं च लङ्का । लवणाम्भसि लवणसमुद्रे ॥ ३३—३४ ॥ भोगिनः प्रशस्तकायाः । तत्रवासिनः लङ्काद्वीपवासिनः । यादांसि जलजन्तवश्च । लवणार्णवं लवणार्णवमध्यं । भयादन्तर्मग्ना इत्यर्थः ॥ ३५—३८ ॥ व्रणाः क्षतानि । संरुरुहुः संरूढाः । अज्ञातस्वरूपा बभूवुरित्यर्थः ॥ ३९ ॥ तेजः पराभिभवनसामर्थ्यं । पराधिक्षेपासहनं वा । वीर्यं पराक्रमः । बलं शारीरं । ओजः कान्तिः । उत्साहः लोकोत्तरकार्येषु स्थिरतरप्रयत्नः । प्रदर्शनं सूक्ष्मार्थपरिज्ञानं । बुद्धिः विवेकः । स्मृतिः अनुभूतार्थाविस्मरणं । एतत् सर्वं द्विगुणं वैनतेयसंस्पर्शवशात् पूर्वतोप्यधिकं जातमित्यर्थः । अत्र धीरिति गायत्र्याः सप्तदशाक्षरं ।

संपदमिव ॥ २५ ॥ **ति०** पार्वतीपर्वतप्रतिष्ठिते । ते ओषधी । विजानन्ति । पार्वती इतिद्विवचनमार्षं ॥ ३० ॥ **ति०** यद्यपिपनसादयोजानन्ति । तथापि शीघ्रमागमनार्थंवायुसुतोयातु ॥ ३२ ॥ **ति०** एतस्मिन्नन्तरे ओषध्यानयनवार्ताकाले । सागरे तोयंपर्यस्य अतिलहरीयोगिकृत्वा पर्वतान्कंपयन्पक्षवायुरभूत् । सविद्युतोमेघाश्चासन् ॥ ३३ ॥ **स०** चन्द्रसमप्रभेइत्यनेन लोकानुकरणार्थमेवपातः आयातःसेवार्थंगरुडइतिध्वन्यते । अन्यथा मुखविकारापत्तेः ॥ ३८ ॥ **ति०** प्रदर्शनं शब्दानुमानाभ्यांपरोक्षार्थनिश्चयः । बुद्धिरपरोक्षनिश्चयः । द्विगुणा वैनतेयस्पर्शात्पूर्वतोप्यधिका । अत्रान्यैर्देवैरवतीर्यभगवतोरामस्यमूलमूर्तेराज्ञयोपकारःसंपादितः । गरुडेनतु स्वरूपतएवेतिबोध्यं ॥ ४० ॥

**[ पा० ]** १ ङ. झ. ट. पार्वतीतेमहौषधी. क. पर्वतस्थाः. २ क. ख. च. ञ. नाम्ना. ३ ग. घ. ङ. झ. ट. तौतत्रविहितौदेवैःपर्वतौतौमहोदधौ. ४ च. छ. ञ. पर्वतेतुमहोषधी. ५ ङ.—ट. पर्यस्य. ६ क. ग.—ट. पर्वतान्. ७ क. घ.—ट. निपेतुर्भग्न. ८ ङ. झ. ट. सलिले. ९ ख. ग. समागतं. १० ङ.—ट. यैस्तुतौपुरुषौबद्धौ. ग. यौतौ. ११ झ. ट. द्विगुणातयोः.

तावुत्थाप्य महावीर्यौ गरुडो वासवोपमौ ॥ उभौ तौ सस्वजे हृष्टौ रामश्चैनमुवाच ह ॥ ४१ ॥
भवत्प्रसादाद्व्यसनं रावणिप्रभवं महत् ॥ आवामिह व्यतिक्रान्तौ पूर्ववद्बलिनौ कृतौ ॥ ४२ ॥
यथा तातं दशरथं यथाऽजं च पितामहम् ॥ तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥ ४३ ॥
को भवान्रूपसंपन्नो दिव्यस्रगनुलेपनः ॥ वसानो विरजे वस्त्रे दिव्याभरणभूषितः ॥ ४४ ॥
तमुवाच महातेजा वैनतेयो महाबलः ॥ पतत्रिराजः प्रीतात्मा हर्षपर्याकुलेक्षणः ॥ ४५ ॥
अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः ॥ गरुत्मानिह संप्राप्तो युवाभ्यां साह्यकारणात् ॥४६॥
असुरा वा महावीर्या दानवा वा महाबलाः ॥ सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम् ॥ ४७ ॥
नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम् ॥ मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ॥ ४८ ॥
एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः ॥ रक्षोमायाप्रभावेन शरा भूत्वा त्वदाश्रिताः ॥४९॥
सभाग्यश्चासि धर्मज्ञ राम सत्यपराक्रम ॥ लक्ष्मणेन सह भ्रात्रा समरे रिपुघातिना ॥ ५० ॥
इमं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः ॥ सहसा युवयोः स्नेहात्सखित्वमनुपालयन् ॥ ५१ ॥
मोक्षितौ च महाघोरादस्मात्सायकबन्धनात् ॥ अप्रमादश्च कर्तव्यो युवाभ्यां नित्यमेव हि ॥ ५२ ॥

षोडशसहस्रश्लोका गताः ॥ ४० ॥ ताविति । क्रियाभेदात्तच्छब्दद्वयं ॥ ४१ ॥ व्यतिक्रान्तौ लङ्घितवन्तौ । गत्यर्थत्वात्कर्तरि क्तः ॥ ४२—४३ ॥ विरजे निर्मले ॥ ४४–४५ ॥ सखा वाहनत्वेन सहाय इति गूढोक्तिः । युवाभ्यां युवयोः । षष्ठ्यर्थे तृतीया । साह्यकारणात् साहाय्यार्थं ॥ ४६—४८ ॥ काद्रवेयाः कद्रूपुत्राः । मायाबलात् आश्चर्यशक्तिरूपबलात् ॥ ४९—५० ॥ सहसा जवेन ॥ ५१ ॥ अप्रमादश्चकर्तव्य इति ।

**ति०** यथातातंदशरथं स्वावतारोचितं कश्यपप्रजापत्यंशं । अजंचपितामहं चतुर्मुखब्रह्मांशं । मे हिरण्यगर्भात्मनस्तदंशस्य । **स०** यथादशरथंतातं पितामहं अजं आसाद्यमेहृदयंप्रसन्नंतथाभवन्तमासाद्य हृदयंप्रसीदति । प्राप्तस्वमूलरूपपितृपितामहनिदर्शनं मूलरूपेणागतगरुडानुरूपमितिबहिः । यथातातंतवपितरंकश्यपं तवपितामहंमरीचिं अजंचब्रह्माणंप्रपितामहं । आसाद्य प्राप्य आभवं सम्यङ्मङ्गलवन्तं अभवं संसाररहितं दशरथं दशसुदिक्षुरथःकायोयस्यसतं व्याप्तं । तं मे मामासाद्यतथाहृदयंप्रसीदति प्रसन्नमभूत् । सेवयाजन्मसाफल्यात् । यथातातंपितामहंचासाद्यस्थितंभवन्तमुद्दिश्यतेषांहृदयंप्रसन्नं तथाभवन्तमुद्दिश्यमेहृदयंप्रसीदतीतिवा हृदयमितिहृदयपदेनासूचयत्कविरितिज्ञेयं । 'रथःस्यात्स्यन्दनेकाये' इतिविश्वः । **शि०** यथादशरथं यथा अजंचासाद्यमे हृदयंप्रसीदति तथाभवन्तमासाद्यप्रसीदति । एतेनगरुडस्यवृद्धत्वंसूचितं ॥ ४३ ॥ **ति०** कोभवानिति । अयंप्रश्नोपिमनुष्यशरीरोचितव्यवहारएवतत्सत्यत्वप्रत्यापनार्थः । अत्ररामसमीपागमनपर्यन्तंपक्ष्याकारेणैवागत्यसंनिधिमात्रेणनागबन्धनंचनिरस्यराघवस्पर्शनाद्यर्थंपुरुषाकारेणव्यवहृतवानितिबोध्यम् । तदाह—**रूपसंपन्नइति**। दिव्यरूपसंपन्नइत्यर्थः । **स०** भवान्कइतिमनुष्यत्वस्थेम्ने । सोप्यसुरमोहायेतिज्ञेयं। रूपसंपन्नः सुरूपः नःप्रसादादेवरूपसंपत् । भवान् नएव अस्मदीयएव । कइवकः वायुवद्वेगवान्वासूर्यइव प्रकाशमानोवेति कइति मानसिकोभिप्रायः । विरजे शुद्धे 'अर्थाःपादरजोपमाः' इत्युक्तेःरजश्शब्दपर्यायोऽयंरजशब्दः ॥ ४४ ॥ **स०** तं तेइतिपूर्वमुक्तवतोगरुडस्य सेवकस्यतइत्युक्तौजिह्वाजिह्वेतीतिसूचयतियुवयोरित्युक्त्या । एवंसति सतिचच्छत्रिन्यायावकाशे नप्रत्यवेयाद्वैनतेय इतिभावोपिकवेर्ज्ञातव्यः । सखित्वंत्वत्रोत्तरत्रेव "विष्णुनाचतदाकाशेवैनतेयःसमेयिवान् । तस्यनारायणस्तुष्टस्तेनालौल्येनकर्मणा । तमुवाचाव्ययोदेवोवरदोस्मीतिखेचरम् । सवव्रेतवतिष्ठेयमुपरीत्यन्तरिक्षगः । उवाचचैनंभूयोपिनारायणमिदंवचः । अजरश्चामरश्चस्याममृतेनविनाप्यहम् । एवमस्त्वितितंविष्णुरुवाचविनतासुतम् । प्रतिगृह्यवरौतौतुगरुडोविष्णुमब्रवीत् । भगवतेपिवरंदद्मिवृणोतुभगवानपि । तंवव्रेवाहनंविष्णुर्गरुत्मन्तंमहाबलम् । ध्वजंचचक्रेभगवानुपरिस्थास्यसीतितम् । एवमस्त्विति तंदेवमुक्त्वानारायणंखगः । वव्राज" इतिभारतादिपर्वसौपर्णाख्यानेचोक्तमनुसंधेयम् । इदंसर्वंभक्तभक्तिपारवश्येनेतिमन्तव्यम् । **ति०** अहंसखेति । सखित्वात्सुग्रीवादिवद्देवसाह्यकरणार्थमागतइतिभावः ॥ ४६ ॥ **स०** श्रुत्वा देवचारमुखादितिशेषः ॥ ५१ ॥

[ **पा०** ] १ ङ. झ. ट. महातेजागरुडो. २ ङ. झ. ट. उपायेनव्यतिक्रान्तौशीघ्रंचबलिनौ. ३ क.—घ. च. छ. ञ. शीघ्रंचबलिनौ. ४ ङ. छ. झ. ञ. ट. युवयोः. ग. भवद्भ्यां. घ. तवसौभाग्यकारणात्. ५ ङ. झ. ट. वानरावा. ६ ङ. झ. ट. शरभूतास्त्वदाश्रयाः. ख. च. ञ. शरभूतास्त्वदाश्रिताः. ७ झ. विक्रान्तस्त्वरमाणो. ८ ङ. च. झ. ट. सहसैवावयोः.

प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः ॥ शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥ ५३ ॥
तन्न विश्वसितव्यं वो राक्षसानां रणाजिरे ॥ एतेनैवोपमानेन नित्यं जिह्मा हि राक्षसाः ॥ ५४ ॥
एवमुक्त्वा ततो रामं सुपर्णः सुमहाबलः ॥ परिष्वज्य सुहृत्स्निग्धमाप्रष्टुमुपचक्रमे ॥ ५५ ॥
सखे राघव धर्मज्ञ रिपूणामपि वत्सल ॥ अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथागतम् ॥ ५६ ॥
न च कौतूहलं कार्यं सखित्वं प्रति राघव ॥ कृतकर्मा रणे वीर सखित्वमनुवेत्स्यसि ॥ ५७ ॥
बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः ॥ रावणं च रिपुं हत्वा सीतां समुपलप्स्यसे ॥ ५८ ॥
इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः ॥ रामं च विरुजं कृत्वा मध्ये तेषां वनौकसाम् ॥ ५९ ॥
प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्यवान् ॥ जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥ ६० ॥
निरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः ॥ सिंहनादांस्तदा नेदुर्लाङ्गूलान्दुधुवुस्तदा ॥ ६१ ॥
ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यनादयन् ॥ दध्मुः शङ्खान्संप्रहृष्टाः क्ष्वेलन्त्यपि यथापुरम् ॥ ६२ ॥
आस्फोट्यास्फोट्य विक्रान्ता वानरा नगयोधिनः ॥ द्रुमानुत्पाट्य विविधांस्तस्थुः शतसहस्रशः ॥ ६३ ॥
विसृजन्तो महानादांस्त्रासयन्तो निशाचरान् ॥ लङ्काद्वाराण्युपाजग्मुर्योद्धुकामाः प्लवङ्गमाः ॥ ६४ ॥
ततस्तु भीमस्तुमुलो निनादो बभूव शाखामृगयूथपानाम् ॥

तत्तदवस्थानुगुणप्रत्यस्त्रप्रयोगेषु सावधानाभ्यां भवितव्यमित्यर्थः ॥ ५२ ॥ प्रकृत्येत्यादिश्लोकद्वयं ॥ एतेनैवोपमानेनेति । अनेन दृष्टान्तेन राक्षसा जिह्मा ज्ञेया इत्यर्थः ॥ ५३—५५ ॥ रिपूणामपि वत्सलेत्यनेन इन्द्रजिद्वधोपायो ज्ञात इति द्योत्यते ॥ ५६ ॥ अहं सखा ते काकुत्स्थेत्यादिनोक्तं सखित्वं कथमिति रामाशयमाशङ्क्य रहस्यत्वादिदानीं तद्विषयप्रश्नो न कर्तव्यः रावणवधानन्तरं स्वयमेव ज्ञास्यसीत्याह—न चेति ॥ सखित्वं प्रति सखित्वप्रश्नं प्रतीत्यर्थः ॥ ५७ ॥ रामस्योत्साहवर्धनाय भाविनमर्थं कथयति—बालेत्यादिना ॥ शरोर्मिभिः शरपरंपराभिः ॥ ५८ ॥ शीघ्रविक्रमः शीघ्रगतिः । क्रियाभेदेन सुपर्णपदद्वयान्वयः ॥ ५९—६० ॥ सिंहनादं नेदुः सिंहनादं चक्रुरित्यर्थः । दुधुवुः अकम्पयन् ॥ ६१ ॥ यथापुरं यथापूर्वं । ननु "पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान्हन्यां" इत्युक्तनिरवधिकशक्तिसंपन्नः सर्वज्ञो रामः कथमज्ञ इवाशक्त इवेन्द्रजिता हतो लोहिताक्तो भूमौ स्थित इवाभावयत् । उच्यते । लोके समाचारप्रवर्तनायैवं स्थितः । इन्द्रजित्पराजयेन ह्ययमर्थोवगम्यते । शुचीनां शुद्धभावानामृजूनां प्राणसन्देहदायिविपद्यपि न विनाशः । विपरीतानां पापिष्ठानां तु करतलगतापि कार्यसिद्धिर्विगलति । अतः शुचित्वार्जवादिगुणयुक्तैः पुम्भिर्भवितव्यमिति सतां धर्मनिश्चयप्रतिपत्तिर्जायते । ननु रावणवधार्थं दैवतैरर्थितो हि विष्णू रामत्वेनावतीर्णः । सत्यं, दुष्कृद्विनाशवद्धर्मसंस्थापनमपि ह्यवतारप्रयोजनं । रावणवधमात्रस्य प्रयोजनत्वे ह्येतावान्प्रयासो व्यर्थः स्यात् । अतएवोक्तं—"चातुर्वर्ण्यं च लोकेस्मिन्स्वे स्वे धर्मे नियोक्ष्यति" इति । नच धर्मोपदेशमात्रेण तत्सिद्धिः । तादृशोपदेशस्य श्रुतिस्मृतिभिरेव कृतत्वात् । स्वाचारमुखेन धर्मप्रवचनाय हि मानुषभावना च कृता । अतः स्वाचारमुखेन धर्मप्रवर्तन-

**स०** रिपूणामपिवत्सलरिपवोपियदिशरणंगताः तर्हितेष्वपिवत्सल ॥ ५६ ॥ **ति०** प्रदक्षिणंकृत्वेत्यनेनदिव्यदेवतावतारोरामइतिसर्वान्प्राकृतकपीन्प्रत्यपिबोधितं ॥ ६० ॥ **ति०** निशीथेयथाघनानां नादस्तथावानराणां नादइत्यर्थः । अत्रस्थानेदिनद्वयं युद्धावहारइत्याभिवेश्यः ॥ ६५ ॥ इतिपञ्चाशःसर्गः ॥ ५० ॥

[ **पा०** ] १ ङ. छ. झ. ट. विश्वसनीयंवो. २ ङ. झ. ट. तदारामं. ३ ख. झ. ट. यथासुखं. ४ ङ. च. झ. ञ. ट. त्समुपलप्स्यसे. ५ ख. ङ. छ. झ. ट. निरुजौ. ६ क. ङ. च. झ. ञ. ट. सिंहनादंतदानेदुर्लाङ्गूलंदुधुवुश्चते. ७ झ. ट. प्यवादयन्. ८ ख. ग. ङ.—ट. अपरेस्फोट्य. ९ ङ.—ट, जग्मुर्युद्धकामाः. १० ख. ङ. झ. ट. तेषांसुभीमस्तुमुलो.

क्षये निदाघस्य यथा घनानां नादः सुभीमो नदतां निशीथे ॥ ६५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ॥ ५१ ॥

वानराणांविषादसमये तदीयहर्षोद्घोषश्रवणविषण्णेनरावणेन राक्षसान्प्रति तद्धर्षकारणावगमचोदना ॥ १ ॥ राक्षसै रणाङ्गणमेत्यतदवगमेन रावणंप्रति राघवयोर्नागास्त्रविमोक्षणस्य तत्कारणत्वनिवेदनम् ॥ २ ॥ धूम्राक्षेण रावणचोदनया राक्षसैस्सहपश्चिमद्वारगमनम् ॥ ३ ॥

तेषां सुतुमुलं शब्दं वानराणां तरस्विनाम् ॥ नर्दतां राक्षसैः सार्धं तदा शुश्राव रावणः ॥ १ ॥
स्निग्धगम्भीरनिर्घोषं श्रुत्वा स निनदं भृशम् ॥ सचिवानां ततस्तेषां मध्ये वचनमब्रवीत् ॥ २ ॥
यथाऽसौ संप्रहृष्टानां वानराणां समुत्थितः ॥ बहूनां सुमहानादो मेघानामिव गर्जताम् ॥
व्यक्तं सुमहती प्रीतिरेतेषां नात्र संशयः ॥ ३ ॥
तथा हि विपुलैर्नादैश्चुक्षुभे वरुणालयः ॥ ४ ॥
तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ ॥ अयं च सुमहान्नादः शङ्कां जनयतीव मे ॥ ५ ॥
एतत्तु वचनं चोक्त्वा मन्त्रिणो राक्षसेश्वरः ॥ उवाच नैर्ऋतांस्तत्र समीपपरिवर्तिनः ॥ ६ ॥
ज्ञायतां तूर्णमेतेषां सर्वेषां वनचारिणाम् ॥ शोककाले समुत्पन्ने हर्षकारणमुत्थितम् ॥ ७ ॥
तथोक्तास्तेन संभ्रान्ताः प्राकारमधिरुह्य ते ॥ ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥ ८ ॥
तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ ॥ समुत्थितौ महावेगौ विषेदुः प्रेक्ष्य राक्षसाः ॥ ९ ॥
संत्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते ॥ विषण्णवदना घोरा राक्षसेन्द्रमुपस्थिताः ॥ १० ॥
तदप्रियं दीनमुखा रावणस्य निशाचराः ॥ कृत्स्नं निवेदयामासुर्यथावद्वाक्यकोविदाः ॥ ११ ॥
यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ ॥ निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ॥ १२ ॥
विमुक्तौ शरबन्धेन तौ दृश्येते रणाजिरे ॥ पाशानिव गजौ छित्त्वा गजेन्द्रसमविक्रमौ ॥ १३ ॥

मित्यादिप्रबन्धादावेवोक्तं ॥ ६२-६५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

अथ धूम्राक्षनिर्गम एकपञ्चाशे—तेषामित्यादि ॥ राक्षसैः सह शुश्रावेत्यन्वयः ॥ १ ॥ निर्घोषः ध्वनिः ॥ २ ॥ यथासावित्यादिसार्धश्लोक एकान्वयः ॥ यथा येन कारणेन । सुमहानादः समुत्थितः ततः एतेषां सुमहती प्रीतिः । अस्तीतिशेषः ॥ ३ ॥ तथा हीत्यर्धं ॥ तथा प्रसिद्धप्रकारः ॥ ४ ॥ तौ त्विति । तुशब्दश्चार्थः । तौ च बद्धौ नादश्च श्रूयते । स च प्रकृतविरुद्धो नादः । शङ्कां राजपुत्रयोः शरबन्धापगमशङ्कां । जनयतीव । इवशब्दः संभावनायां ॥५-६॥ उत्थितं हर्षकारणं ज्ञायतामित्यन्वयः॥७-९॥उपस्थिताःप्राप्ताः॥१०-११॥यौ तौ । यावित्यर्थः॥१२॥ पाशानिति । पाशान् छित्त्वा स्थितौ गजाविव भास-

ति० राक्षसैः विभीषणादिभिः ॥ १ ॥ स० स्निग्धगंभीरनिर्घोषं एतेनसीतापतिपतनकालिकदुःखशब्दोव्यावर्त्यते । निनदं निरस्तोनदोऽर्णवोयेनतं । तदपेक्षयागंभीरमितियावत् ॥ २ ॥ स० विपुलैर्नादैः लवणार्णवः चुक्षुभे फूत्कारेणोदककंपदर्शनाच्चलितोऽभूत् ॥ ४ ॥ ती० शङ्कांजनयतीव जनयत्येवेत्यर्थः ॥ ५ ॥ ति० प्राकारमधिरुह्येति । अनेनात्रावहारःसूचितः ॥ ८ ॥

[ पा० ] १ ङ. च. छ. झ. ट. महौजसां. २ ख. च. ङ. झ. ट. नर्दतां. ३ ङ. छ. झ. ट. वानराणामुपस्थितः. ४ ग. ङ. झ. ट. सुमहान्नादो. ५ ङ. झ. ट. लवणार्णवः. ६ ङ. झ. ट. एवंच. ७ ङ. च. झ. ञ. ट. चवनौकसां. ८ क. ख. ग. ङ. ज.—ट. महाभागौ.

तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः ॥ चिन्ताशोकसमाक्रान्तो विषण्णवदनोऽब्रवीत् ॥१४॥
घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः ॥ अमोघैः सूर्यसंकाशैः प्रमथ्येन्द्रजिता युधि ॥ १५ ॥
तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम ॥ संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ॥ १६ ॥
निष्फलाः खलु संवृत्ताः शरा वासुकितेजसः ॥ आदत्तं यैः सुसंग्रामे रिपूणां मम जीवितम् ॥ १७ ॥
एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा ॥ अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ॥ १८ ॥
बलेन महता युक्तो रक्षसां भीमविक्रम ॥ त्वं वधायाभिनिर्याहि रामस्य सह वानरैः ॥ १९ ॥
एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता ॥ कृत्वा प्रणामं संहृष्टो निर्जगाम नृपालयात् ॥ २० ॥
अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षमुवाच ह ॥ त्वरयस्व बलं तूर्णं किं चिरेण युयुत्सतः ॥ २१ ॥
धूम्राक्षवचनं श्रुत्वा बलाध्यक्षो बलानुगः ॥ बलमुद्योजयामास रावणस्याज्ञया द्रुतम् ॥ २२ ॥
ते बद्धघण्टा बलिनो घोररूपा निशाचराः ॥ विगर्जमानाः संहृष्टा धूम्राक्षं पर्यवारयन् ॥
विविधायुधहस्ताश्च शूलमुद्गरपाणयः ॥ २३ ॥
गदाभिः पट्टिशैर्दण्डैरायसैर्मुसलैर्भृशम् ॥ परिघैर्भिन्दिपालैश्च भल्लैः प्रासैः परश्वधैः ॥
निर्ययू राक्षसा दिग्भ्यो नदन्तो जलदा यथा ॥ २४ ॥
रथैः कवचिनस्त्वन्ये ध्वजैश्च समलङ्कृतैः ॥ सुवर्णजालविहितैः खरैश्च विविधाननैः ॥ २५ ॥
हयैः परमशीघ्रैश्च गजेन्द्रैश्च मदोत्कटैः ॥ निर्ययू राक्षसव्याघ्रा व्याघ्रा इव दुरासदाः ॥ २६ ॥
वृकसिंहमुखैर्युक्तं खरैः कनकभूषणैः ॥ आरुरोह रथं दिव्यं धूम्राक्षः खरनिःस्वनः ॥ २७ ॥
स निर्यातो महावीर्यो धूम्राक्षो राक्षसैर्वृतः ॥ प्रहसन्पश्चिमद्वारं हनूमान्यत्र यूथपः ॥
रथप्रवरमास्थाय खरयुक्तं खरस्वनम् ॥ २८ ॥
प्रयान्तं तु महाघोरं राक्षसं भीमविक्रमम् ॥ अन्तरिक्षगता घोराः शकुनाः प्रत्यवारयन् ॥ २९ ॥
रथशीर्षे महान्भीमो गृध्रश्च निपपात ह ॥ ध्वजाग्रे ग्रथिताश्चैव निपेतुः कुणपाशनाः ॥ ३० ॥

मानावित्यर्थः ॥ १३—१४ ॥ दत्तवरैः वरदत्तैः । प्रमथ्य बलात्कृत्य । बद्धौ अभूतामिति शेषः ॥ १५ ॥ संशयस्थं प्राणसंशयस्थं ॥ १६ ॥ आदत्तं आत्तं ॥ १७—१८ ॥ त्वं वधायाभिनिर्याहीत्यमङ्गलसूचकं वचः ॥ १९-२० ॥ द्वारमभिनिष्क्रम्य द्वारान्निष्क्रम्य । युयुत्सतः ममेतिशेषः । किं चिरेण किं विलम्बेन ॥ २१ ॥ रावणस्याज्ञया रावणाज्ञाकृतं धूम्राक्षवचनं श्रुत्वेत्यर्थः ॥ २२ ॥ बद्धघण्टाः शूरत्वज्ञापनाय कटिबद्धघण्टा इत्यर्थः । ते पूर्वोक्तसेनास्थाः । विविधेति । आयुधानि शूलादिभिन्नानि । अस्यार्धस्य पूर्वेणान्वयः ॥ २३ ॥ गदाभिरित्यादि । गदा प्रसिद्धा । पट्टिशः दण्डविशेषः । परिघः भिन्दिपालः । भल्लः अयोमयः शरः । प्रासैः परश्वधैः । दिग्भ्यो जलदा इवेत्यन्वयः ॥ २४ ॥ अन्ये कवचिनः । ध्वजैः विविधाननैः खरैश्च समलङ्कृतै रथैर्निर्ययुः । अन्ये हयैः अन्ये गजैश्च निर्ययुरित्यन्वयः ॥ २५—२८ ॥ शकुनाः निमित्तसूचकाः पक्षिणः ॥ २९ ॥ कुणपाशनाः गृध्राः ।

स० जीवितमादत्तं युद्धान्तरे ॥ १७ ॥ ती० बलेनेत्यस्यप्रकृतार्थःस्पष्टः । वस्तुतस्तुबलेनयुक्तस्सन् । रक्षसांच तवचेत्यध्याहार्यं एकैवेरामस्यवानरैः रामसंबन्धिवानरैःवधायत्वमभिनिर्याहीतिसंबन्धः ॥ १९ ॥

[ पा० ] १ ङ. झ. ट. चिन्तारोष. २ ख. ङ. च. झ. ञ. विवर्णवदनोभवत्. ३ ङ. झ. शराःपावकतेजसः. ४ झ. राक्षसैर्भीमविक्रमः. ङ. राक्षसैर्भीमविक्रमैः. ५ ङ.—ट. परिक्रम्यततःशीघ्रंनिर्जगाम. ६ ङ. झ. ट. भृशं. ७ ङ. लेगुडैरपि. ८ ङ.—ट. घोरानर्दन्तो. ९ च. जालरचितैः. १० ङ.—ट. कनकभूषितैः. ११ ङ. झ. ट. हसन्वैपश्चिमद्वाराद्धनूमान्यत्रतिष्ठति. च. प्रययौपश्चिमद्वारात्. १२ क. ख. ग. ङ. छ. झ. ञ. ट. भीमदर्शनं. १३ ङ.—ट. प्रत्यषेधयन्.

रुधिरार्द्रो महाञ्श्वेतः कबन्धः पतितो भुवि ॥ विस्वरं चोत्सृजन्नादं धूम्राक्षस्य समीपतः ॥ ३१ ॥
ववर्ष रुधिरं देवः संचचाल च मेदिनी ॥ प्रतिलोमं ववौ वायुर्निर्घातसमनिःस्वनः ॥ ३२ ॥
तिमिरौघावृतास्तत्र दिशश्च न चकाशिरे ॥ ३३ ॥
स तूत्पातांस्तदा दृष्ट्वा राक्षसानां भयावहान् ॥ प्रादुर्भूतान्सुघोरांश्च धूम्राक्षो व्यथितोऽभवत् ॥३४॥
मुमुहू राक्षसाः सर्वे धूम्राक्षस्य पुरःसराः ॥ ३५ ॥
ततः सुभीमो बहुभिर्निशाचरैर्वृतोभिनिष्क्रम्य रणोत्सुको बली ॥
ददर्श तां राघवबाहुपालितां महौघकल्पां बहुवानरीं चमूम् ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

धूम्राक्षसेनाभिस्सह वानराणांमहायुद्धम् ॥ १ ॥ हनुमता गिरिशृङ्गेणधूम्राक्षहननम् ॥ २ ॥

धूम्राक्षं प्रेक्ष्य निर्यान्तं राक्षसं भीमविक्रमम् ॥ विनेदुर्वानराः सर्वे प्रहृष्टा युद्धकाङ्क्षिणः ॥ १ ॥
तेषां सुतुमुलं युद्धं संजज्ञे हरिरक्षसाम् ॥ अन्योन्यं पादपैर्घोरं निघ्नतां शूलमुद्गरैः ॥ २ ॥
घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संहतैः ॥ राक्षसैर्वानरा घोरैर्विनिकृत्ताः समन्ततः ॥ ३ ॥
वानरै राक्षसाश्चापि द्रुमैर्भूमौ समीकृताः ॥ राक्षसाश्चापि संक्रुद्धा वानरान्निशितैः शरैः ॥
विव्यधुर्घोरसंकाशैः कङ्कपत्रैरजिह्मगैः ॥ ४ ॥
ते गदाभिश्च भीमाभिः पट्टिशैः कूटमुद्गरैः ॥ विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः ॥
अमर्षाज्जनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ ५ ॥
शरनिर्भिन्नगात्रास्ते शूलनिर्भिन्नदेहिनः ॥ जगृहुस्ते द्रुमांस्तत्र शिलाश्च हरियूथपाः ॥ ६ ॥
ते भीमवेगा हरयो नर्दमानास्ततस्ततः ॥ ममन्थू राक्षसान्भीमान्नामानि च बभाषिरे ॥ ७ ॥
तद्बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् ॥ शिलाभिर्विविधाभिश्च बहुभिश्चैव पादपैः ॥ ८ ॥

---

ग्रथिताः मिलिताः ॥ ३० ॥ विस्वरमिति क्रियाविशेषणं ॥ ३१ ॥ देवः पर्जन्यः । प्रतिलोमं प्रतिकूलं ॥ ३२—३४ ॥ मुमुहुरित्यर्थं ॥ पुरःसराः अग्रगाः ॥३५॥ अभिनिष्क्रम्य पुरादिति शेषः । महौघकल्पां महानोघो अस्मिन्निति महौघः सागरः तत्कल्पां । बहुवानरीं ङीबन्त्रार्षः । द्वितीयायां प्रातर्धूम्राक्षनिर्गमः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

अथ धूम्राक्षवधो द्विपञ्चाशे—धूम्राक्षमित्यादि ॥ १—२ ॥ संहतैः संगतैः । राक्षसविशेषणमेतत् ॥ ३ ॥ समीकृताः पातिताः । घोरसंकाशैः घोरकालाग्न्यादितुल्यैः । अजिह्मगैः अवक्रगैः । कङ्कपत्रैः कङ्कपत्राण्येव पत्राणि येषां ते कङ्कपत्राः तैः ॥४॥ जनितोद्धर्षाः जनितोत्साहाः ॥५॥ शूलनिर्भिन्नदेहिनः । कर्मधारयादिनिरार्षः ॥ ६ ॥ नामानि स्वनामानि

---

स० वानराणांसंहतिर्वानरी । "तस्यसमूहः" इत्यण् । बह्वीचसावानरीच बहुवानरी । तां तद्रूपांचमूं । "अनुदात्तादेः" इत्यञ्वाप्रत्ययः । तेन न—'वृद्धाच्छः' इत्यनेनछप्रत्ययः ॥ ३६ ॥ इत्येकपञ्चाशःसर्गः ॥ ५१ ॥

[ पा० ] १ ङ. झ. ट. न्नादान्धूम्राक्षस्यनिपातितः. २ ख. च. छ. समुद्रकल्पां. ३ क. ज. भुविवानरीं. ४ ग. संशितैः. ५ झ. भूमिसमीकृताः. ६ क. ग. च.—ट. राक्षसास्त्वभि. ७ ख. च. छ. ज. नर्दमानास्समन्ततः. ८ ङ. छ. झ. ञ. ट. न्वीरान्नामानि. ९ ङ.—ञ. बहुशाखैश्च.

राक्षसा मथिताः केचिद्वानरैर्जितकाशिभिः ॥ [1]वमन्रुधिरं केचिन्मुखै रुधिरभोजनाः ॥ ९ ॥
पार्श्वेषु दारिताः केचित्केचिद्राशीकृता द्रुमैः ॥ शिलाभिश्चूर्णिताः केचित्केचिद्दन्तैर्विदारिताः ॥१०॥
ध्वजैर्विमथितैर्भग्नैः [2]खरैश्च विनिपातितैः ॥ [3]रथैर्विध्वंसितैश्चापि पतितै रजनीचरैः ॥ ११ ॥
गजेन्द्रैः पर्वताकारैः पर्वताग्रैर्वनौकसाम् ॥ मथितैर्वाजिभिः कीर्णं सारोहैर्वसुधातलम् ॥ १२ ॥
वानरैर्भीमविक्रान्तैराप्लुत्याप्लुत्य वेगितैः ॥ राक्षसाः करजैस्तीक्ष्णैर्मुखेषु विनिकर्तिताः ॥ १३ ॥
विवर्णवदना भूयो विप्रकीर्णशिरोरुहाः ॥ मूढाः शोणितगन्धेन निपेतुर्धरणीतले ॥ १४ ॥
अन्ये परमसंक्रुद्धा राक्षसा भीमनिःस्वनाः ॥ तलैरेवाभिधावन्ति वज्रस्पर्शसमैर्हरीन् ॥ १५ ॥
वानरैरापतन्तस्ते वेगिता वेगवत्तरैः ॥ मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः ॥
वानरैर्हन्यमानास्ते राक्षसा विप्रदुद्रुवुः ॥ १६ ॥
सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः ॥ [6]क्रोधेन कदनं चक्रे वानराणां युयुत्सताम् ॥ १७ ॥
प्रासैः प्रमथिताः केचिद्वानराः शोणितस्रवाः ॥ मुद्गरैराहताः केचित्पतिता धरणीतले ॥ १८ ॥
परिघैर्मथिताः केचिद्भिन्दिपालैर्विदारिताः ॥ पट्टिशैराहताः केचिद्विह्वलन्तो गतासवः ॥ १९ ॥
केचिद्विनि[7]हताः शूलै रुधिरार्द्रा वनौकसः ॥ केचिद्विद्राविता नष्टाः संक्रुद्धै राक्षसैर्युधि ॥ २० ॥
विभिन्नहृदयाः केचिदेकपार्श्वेन दारिताः ॥ विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिस्सृताः ॥ २१ ॥
तत्सुभीमं महायुद्धं हरिराक्षससंकुलम् ॥ प्रबभौ शब्दबहुलं शिलापादपसंकुलम् ॥ २२ ॥
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितम् ॥ मन्दस्तनितसंगीतं युद्धगान्धर्वमाबभौ ॥ २३ ॥
धूम्राक्षस्तु धनुष्पाणिर्वानरान्रणमूर्धनि ॥ हसन्विद्रावयामास दिशस्तु शरवृष्टिभिः ॥ २४ ॥
धूम्राक्षेणार्दितं सैन्यं व्यथितं दृश्य मारुतिः ॥ अभ्यवर्तत संक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ २५ ॥
क्रोधाद्द्विगुणताम्राक्षः पितृतुल्यपराक्रमः ॥ शिलां तां पातयामास धूम्राक्षस्य रथं प्रति ॥ २६ ॥

---

॥७–११॥ वनौकसां पर्वताग्रैः वानरप्रेरितपर्वताग्रैः । तैर्मथितैः गजेन्द्रैः । सारोहैः साधिष्ठातृभिः । वसुधातलं कीर्णमभूत् ॥ १२ ॥ भीमविक्रान्तैः भीमविक्रमैः । वेगितैः संजातवेगैः । वानरैः कर्तृभिः । करजैः नखैः करणैः । आक्रम्याक्रम्य मुखेषु विनिकर्तिताः खण्डिताः । मूढाः मूर्च्छिताः ॥ १३–१४ ॥ तलैरेवाभिधावन्ति । हस्ततलान्येवायुधस्थाने कृत्वा अभ्यधावन्नित्यर्थः ॥ १५ ॥ अवपोथिताः हिंसिताः । "व्यथ हिंसायां" इति धातुः ॥१६॥ कदनं हिंसनं ॥१७॥ प्रासैरित्यादिचतुःश्लोकी॥ विह्वलन्तः विवशाः। गतासवः अभवन्निति शेषः । आन्त्रैर्विनिःसृताः विनिःसृतान्त्रा इत्यर्थः॥ १८—२२ ॥ तन्त्री वीणा । आर्षो ह्रस्वः । तया मधुरं रम्यं । हिक्का । विरम्य विरम्य कण्ठात्पवनोद्गमः । मन्दस्तनितं अशक्त्या मन्दभाषणं । तदेव संगीतं सम्यग्गानं यस्मिन् तत् तथोक्तं । युद्धगान्धर्वं युद्धसंगीतं । संगीतं नृत्तगीतवाद्यं ॥२३॥ दिशः दिशः प्रति ॥ २४ ॥ व्यथितं दुःखितं । दृश्य दृष्ट्वा । मारुतिः हनुमान् ॥ २५ ॥ पिता वायुः

---

ति० द्रुमैः राशीकृताः द्रुमप्रहारैर्हेलाराशीकृताइत्यर्थः । स० द्रुमैःराशीकृताः हलाहलासंमार्जनकार्यविनियुक्तैर्द्रुमैः ॥ १० ॥ कतक० आन्त्राणि पुरीततः ॥ २१ ॥ स० धनुर्ज्या धनुर्गुणः सैवतन्त्रिः तन्त्री वीणा । संज्ञात्वात् 'ङ्यापोःसंज्ञा—'इति ह्रस्वः । हिक्का हेषा तद्रूपतालयुक्तमितिनागोजिभट्टः । हिक्का ऊर्ध्ववातप्रवर्तितशब्दविशेषः । 'सारिकाहिक्के'त्यमरव्याख्यायां 'हिक्कअव्यक्तेशब्दे' 'गुरोश्चे'त्यकारप्रत्ययः । ऊर्ध्ववातप्रयुक्तशब्दविशेषइत्युक्तेः । मन्दस्तनितगीतं मन्दाः गजविशेषाः। तत्स्तनितरूपगीतं । "मन्दःखरगजजातिप्रभेदयोः" इतिविश्वः ॥ २३ ॥

[ पा० ] १ ङ. छ. झ. ञ. ट. प्रवेमूरुधिरं. ग. ववर्षूरुधिरं. २ ङ.—ट. खड्गैश्च. ३ क. ख. ङ.—ञ. विध्वंसिताः केचिद्व्यथितारजनीचराः. ४ च. छ. झ. ञ. विनिदारिताः. ५ ग. ङ.—ट. भीमविक्रमाः. ६ ङ. च. छ. झ. ट. रोषेण. क. कोपेन. ७ क. च. झ. ञ. हताभूमौ.

आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् ॥ रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ॥ २७ ॥
सा प्रमथ्य रथं तस्य निपपात शिला भुवि ॥ [1]सचक्रकूबरं साश्वं सध्वजं सशरासनम् ॥ २८ ॥
स भङ्क्त्वा तु रथं तस्य हनुमान्मारुतात्मजः ॥ रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ॥ २९ ॥
विभिन्नशिरसो भूत्वा राक्षसाः शोणितोक्षिताः ॥ द्रुमैः प्रव्यथिताश्चान्ये निपेतुर्धरणीतले ॥ ३० ॥
विद्राव्य राक्षसं सैन्यं हनुमान्मारुतात्मजः ॥ गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३१ ॥
तमापतन्तं धूम्राक्षो गदामुद्यम्य वीर्यवान् ॥ विनर्दमानः सहसा हनुमन्तमभिद्रवत् ॥ ३२ ॥
[2]ततः क्रुद्धस्तु वेगेन गदां तां बहुकण्टकाम् ॥ पातयामास धूम्राक्षो मस्तके तु हनूमतः ॥ ३३ ॥
ताडितः स तया तत्र गदया भीमरूपया ॥ ३४ ॥
स कपिर्मारुतबलस्तं प्रहारमचिन्तयन् ॥ धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् ॥ ३५ ॥
स [3]विह्वलितसर्वाङ्गो गिरिशृङ्गेण ताडितः ॥ पपात सहसा भूमौ विकीर्ण इव पर्वतः ॥ ३६ ॥
धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ॥ त्रस्ताः प्रविविशुर्लङ्कां वध्यमानाः प्लवङ्गमैः ॥ ३७ ॥
स तु पवनसुतो निहत्य [4]शत्रुं क्षतजवहाः सरितश्च [5]संनिकीर्य ॥
रिपुवधजनितश्रमो महात्मा मुदमगमत्[6]कपिभिश्च पूज्यमानः ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रावणाज्ञया ससैन्येनवज्रदंष्ट्रेण रणायाङ्गदाधिष्ठितदक्षिणद्वारगमनम् ॥ १ ॥ अङ्गदवज्रदंष्ट्रयो राक्षसवानरसेनाभ्यां सैन्ययोः परस्परंच युद्धम् ॥ २ ॥

धूम्राक्षं निहतं श्रुत्वा [7]रावणो राक्षसेश्वरः ॥ क्रोधेन महताऽऽविष्टो निश्वसन्नुरगो यथा ॥ १ ॥
दीर्घमुष्णं विनिश्वस्य क्रोधेन कलुषीकृतः ॥ अब्रवीद्राक्षसं [8]शूरं वज्रदंष्ट्रं महाबलम् ॥ २ ॥
गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः ॥ जहि दाशरथिं रामं सुग्रीवं वानरैः सह ॥ ३ ॥

---

॥ २६—२७ ॥ कूबरः युगंधरः । "कूबरस्तु युगंधरः" इत्यमरः ॥ २८—३१ ॥ अभिद्रवत् अभ्यद्रवत् । आगमशासनस्यानित्यत्वादडभावः ॥ ३२ ॥ बहुकण्टकां बहुकीलां ॥ ३३ ॥ ताडितः आसीदिति शेषः ॥ ३४—३५ ॥ विह्वलितानि विवशीकृतानि ॥ ३६—३७ ॥ वहन्तीति वहाः क्षतजस्यवहाः क्षतजवहाः । सन्निकीर्य उत्सार्येत्यर्थः । द्वितीयायां धूम्राक्षवधः ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

अथ वज्रदंष्ट्रयुद्धं त्रिपञ्चाशे—धूम्राक्षमित्यादि ॥ आविष्टः अभूदिति शेषः ॥ १—२ ॥ गच्छ त्वं वीर निर्याहीति ॥ इतो गच्छ पुरान्निर्याहीत्यर्थः ॥ ३ ॥

---

**ति०** धूम्रक्षवधोभाद्रशुक्लद्वितीयायामित्याहुः । **स०** रिपुवधजनितश्रमः वधश्च जनितश्रमश्च तौ । रिपूणांवधजनितश्रमौयेन सतथा । स्थितानांवधः । विद्रुतानांचश्रमइतिविवेकः ॥ ३८ ॥ द्विपञ्चाशःसर्गः ॥ ५२ ॥

**ति०** गच्छनिर्याहीत्याभ्यांसर्वथागन्तव्यमितिबोध्यते ॥ ३ ॥

[ **पा०** ] १ ङ. झ. ट. सचक्रकूबरमुखंसध्वजं. २ ङ. च. झ. ञ. ट. तस्यक्रुद्धस्यरोषेण. ३ ङ. च. झ. ञ. ट. विस्फारित. ४ क. ख. ग. ङ.—ट. शत्रून्क्षतज. ५ घ. संनिपत्य. ६ क. ख. घ. ङ. च. झ. ञ. ट. कपिभिस्सुपूज्य. ७ क. ग. राक्षसेन्द्रोनिशाचरः. ८ ङ. च. झ. ञ. ट. क्रूरं.

तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः ॥ निर्जगाम बलैः सार्धं बहुभिः परिवारितः ॥ ४ ॥
नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः ॥ पताकाध्वजचित्रैश्च [1]रथैश्च समलङ्कृतः ॥ ५ ॥
ततो विचित्रकेयूरमुकुटैश्च विभूषितः ॥ तनुत्राणि च संरुध्य सधनुर्निर्ययौ द्रुतम् ॥ ६ ॥
पताकालङ्कृतं दीप्तं तप्तकाञ्चनभूषणम् ॥ रथं प्रदक्षिणं कृत्वा समारोहच्चमूपतिः ॥ ७ ॥
यष्टिभिस्तोमरैश्चित्रैः शूलैश्च मुसलैरपि ॥ भिन्दिपालैश्च [2]पाशैश्च शक्तिभिः पट्टिशैरपि ॥ ८ ॥
खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः ॥ पदातयश्च निर्यान्ति विविधाः शस्त्रपाणयः ॥
विचित्रवाससः सर्वे दीप्ता राक्षसपुङ्गवाः ॥ ९ ॥
गजा मदोत्कटाः शूराश्चलन्त इव पर्वताः ॥ ते [3]युद्धकुशलै रूढास्तोमराङ्कुशपाणिभिः ॥ १० ॥
अन्ये [4]लक्षणसंयुक्ताः शूरा रूढा [5]महाबलाः ॥ [[6]अश्वाः परिपतन्तिस्म राक्षसैश्च प्रचोदिताः ॥११॥]
तद्राक्षसबलं [7]घोरं विप्रस्थितमशोभत ॥ प्रावृट्काले यथा मेघा नर्दमानाः [8]सविद्युतः ॥ १२ ॥
निःसृता दक्षिणद्वारादङ्गदो यत्र यूथपः ॥ तेषां निष्क्रममाणानामशुभं समजायत ॥ १३ ॥
आकाशाद्विघना[9]त्तीव्रा उल्काश्चाभ्यपतंस्तदा ॥ वमन्त्यः पावकज्वालाः शिवा [10]घोरं ववाशिरे ॥१४॥
व्याहरन्ति मृगा घोरा रक्षसां निधनं तदा ॥ समापतन्तो योधास्तु [11]प्रास्खलन्भयमोहिताः ॥ १५ ॥
एतानौत्पातिकान्दृष्ट्वा वज्रदंष्ट्रो महाबलः ॥ धैर्यमालम्ब्य तेजस्वी निर्जगाम रणोत्सुकः ॥ १६ ॥
तांस्तु [12]निष्क्रमतो दृष्ट्वा वानरा जितकाशिनः ॥ प्रणेदुः सुमहानादान्पूरयंश्च दिशो दश ॥ १७ ॥
ततः प्रवृत्तं तुमुलं हरीणां राक्षसैः सह ॥ घोराणां भीमरूपाणामन्योन्यवधकाङ्क्षिणाम् ॥ १८ ॥
निष्पतन्तो महोत्साहा भिन्नदेहशिरोधराः ॥ रुधिरोक्षितसर्वाङ्गा न्यपतञ्जगतीतले ॥ १९ ॥
केचिदन्योन्यमासाद्य शूराः परिघपाणयः ॥ चिक्षिपुर्वि[13]विधं शस्त्रं समरेष्वनिवर्तिनः ॥ २० ॥
द्रुमाणां च शिलानां च शस्त्राणां चापि निस्स्वनः ॥ श्रूयते सुमहांस्तत्र घोरो हृदयभेदनः ॥२१॥
[14]रथनेमिस्वनस्तत्र धनुषश्चापि निस्स्वनः ॥ शङ्खभेरीमृदङ्गानां बभूव तुमुलः स्वनः ॥ २२ ॥
केचिदस्त्राणि [15]संसृज्य बाहुयुद्धमकुर्वत ॥ २३ ॥
तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि ॥ जानुभिश्च हताः केचिद्भि[16]न्नदेहाश्च राक्षसाः ॥
शिलाभिश्चूर्णिताः केचिद्वानरैर्युद्धदुर्मदैः ॥ २४ ॥

बहुभिः बलाध्यक्षैरिति शेषः ॥४॥ रथैरित्यस्य संयुक्त इत्यनेनान्वयः । समलंकृतः चन्दनकुसुमादिभिरलङ्कृतः । तनुत्राणि कवचतलत्रकण्ठत्रशिरस्त्राणानि । संरुध्य संबध्य धृत्वेत्यर्थः ॥५—७॥ यष्टिभिरित्यादिसार्धश्लोकद्वयं ॥ ८—९ ॥ गजा इति । अत्र निर्यान्तीत्यनुषज्यते । गजानेव विशिनष्टि—ते युद्धेत्यादिना । तोमराङ्कुशपाणिभिः यन्तृभिः । रूढाः आरूढा इत्यर्थः ॥ १० ॥ अन्ये लक्षणसंयुक्ता इति ॥ अत्रापि गजा निर्यान्तीत्यनुषङ्गः ॥ ११—१३ ॥ विघनात् घनशून्यात् ॥ १४—१५ ॥ औत्पातिकान् अशुभसूचकान् ॥ १६ ॥ पूरयन् अपूरयंश्चेत्यर्थः । केचित्तु पूरयन् पूरयन्त इत्यर्थः, वचनव्यत्यय आर्ष इत्याहुः ॥ १७ ॥ तुमुलं रणसङ्कुलं । " तुमुलं रणसङ्कुले " इत्यमरः ॥ १८—२२ ॥ अस्त्राणि संसृज्य सर्वाण्यस्त्राणि प्रयुज्य । तदनन्तरमस्त्राभावात् बाहु-

[ पा० ] १ ङ.—ट. बहुभिःसमलंकृतः. २ क. ख. घ.—ट. चापैश्च. ३ क.—ट. कुशलारूढाः. ४ ख. लक्षणसंश्लिष्टाः. ५ क. ग. महाजवाः. ६ इदमर्धं च. पाठेदृश्यते. ७ ङ. झ. सर्वं. ८ च. छ. समन्ततः. ९ ग. झ. ञ. ट. तीव्रादुल्मुकान्यपतंस्तदा. १० च.—ट. घोराववाशिरे. ११ ख.—ट. प्रास्खलंस्तत्रदारुणं. १२ ङ. झ. ट. विद्रवतो. १३ ङ. झ. ट. विविधाञ्शस्त्रान्. १४ च. ञ. ट. स्तत्रसागरस्यचघोषवत्. ङ. झ. स्तत्रधनुषश्चापिघोषवत्. १५ ङ. झ. ट. संत्यज्य. १६ ङ.—ट. द्रुमदेहाश्च.

[1]वज्रदंष्ट्रो भृशं बाणै रणे वित्रासयन्हरीन् ॥ चचार लोकसंहारे पाशहस्त इवान्तकः ॥ २५ ॥
बलवन्तोऽस्त्रविदुषो नानाप्रहरणा रणे ॥ जघ्नुर्वानरसैन्यानि राक्षसाः क्रोधमूर्च्छिताः ॥ २६ ॥
[2]निघ्नतो राक्षसान्दृष्ट्वा सर्वान्वालिसुतो रणे ॥ क्रोधेन द्विगुणाविष्टः संवर्तक इवानलः ॥ २७ ॥
[3]तान्राक्षसगणान्सर्वान्वृक्ष[4]मुद्यम्य वीर्य[5]वान् ॥ अङ्गदः क्रोधताम्राक्षः सिंहः क्षुद्रमृगानिव ॥
चकार कदनं घोरं शक्रतुल्यपराक्रमः ॥ २८ ॥
अङ्गदाभिहतास्तत्र राक्षसा भीमविक्रमाः ॥ विभिन्नशिरसः पेतु[6]र्विकृत्ता इव पादपाः ॥ २९ ॥
रथैरश्वैर्ध्वजैश्चित्रैः शरीरैर्हरिरक्षसाम् ॥ [7]रुधिरेण च सं[8]छन्ना भूमिर्भयकरी तदा ॥ ३० ॥
हारकेयूरवस्त्रैश्च [9]शस्त्रैश्च समलङ्कृता ॥ भूमिर्भाति रणे तत्र शारदीव यथा निशा ॥ ३१ ॥
अङ्गदस्य च वेगेन तद्राक्षसबलं महत् ॥ प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुःपञ्चाशः सर्गः ॥ ५४ ॥

अङ्गदेनवज्रदंष्ट्रवधः ॥ १ ॥

[10]बलस्य च निघातेन अङ्गदस्य [11]जयेन च ॥ राक्षसः क्रोधमाविष्टो वज्रदंष्ट्रो महाबलः ॥ १ ॥
स विस्फार्य धनुर्घोरं शक्राशनि[12]समस्वनम् ॥ वानराणामनीकानि प्राकिरच्छरवृष्टिभिः ॥ २ ॥
राक्षसाश्चापि मुख्यास्ते [13]रथेषु [14]समवस्थिताः ॥ नानाप्रहरणाः शूराः प्रायुध्यन्त तदा रणे ॥ ३ ॥
वानराणां तु शूरा ये सर्वे ते प्लवगर्षभाः ॥ आयुध्यन्त शिलाहस्ताः समवेताः समन्ततः ॥ ४ ॥
तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम् ॥ राक्षसाः कपिमुख्येषु पातयांचक्रिरे तदा ॥ ५ ॥
वानराश्चापि रक्षस्सु गिरीन्वृक्षान्महाशिलाः ॥ प्रवीराः पातयामासुर्मत्तवारणसन्निभाः ॥ ६ ॥
शूराणां युध्यमानानां समरेष्वनिवर्तिनाम् ॥ तद्राक्षसगणानां च सुयुद्धं समवर्तत ॥ ७ ॥

---

युद्धमकुर्वतेत्यर्थः ॥ २३—२५ ॥ अस्त्रविदुषः अस्त्रविद्वांसः । प्रथमार्थे द्वितीया ॥ २६ ॥ निघ्नत इत्यादिश्लोकद्वयमेकान्वयं ॥ संवर्तके प्रलयकाले । तान्राक्षसगणानित्यत्र निजघानेति विपरिणामः ॥ २७—३० ॥ शारदीव यथा निशेत्यत्र इव शब्दयथाशब्दावेकार्थकौ अपिचेतिवत् । इवशब्दः पादपूरण इत्येके ॥ ३१—३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

अथ वज्रदंष्ट्रवधश्चतुःपञ्चाशे—बलस्य चेत्यादिश्लोकद्वयमेकान्वयं ॥ १—३ ॥ वानराणामिति । निर्धारणे षष्ठी ॥ ४ ॥ तत्र कपिमुख्येष्वित्यन्वयः । आयोधने युद्धे ॥ ५—६ ॥ तद्राक्षसगणानां चेति ।

---

**ति०** वज्रदंष्ट्रोथतंदष्ट्वा स्वसेनाविनाशमित्यर्थः । **स०** लोकसंहारे लोकसंहारार्थे । "चर्मणिद्वीपिनंहन्ति" इतिवत् ॥ २५ ॥ **स०** द्विगुणंयथातथाआविष्टः द्विगुणाविष्टः । क्रोधेनद्विगुणाविष्टः द्विगुणक्रोधाविष्टइतिफलितोर्थः ॥ २७ ॥ **ति०** पवनेनांबुदो यथेत्युत्तरसर्गच्छेदः । क्वाचित्कोयुक्तोवृत्तभेदप्रकरणभेदाद्यभावादितिकतकः ॥ ३२ ॥ इतित्रिपञ्चाशःसर्गः ॥ ५३ ॥

**स०** वानराणांमध्येप्लवगर्षभाः प्लवेनगच्छन्तियेतेतथा । तेषुश्रेष्ठाः । द्रुतगतिमच्छ्रेष्ठाइतियावत् ॥ ४ ॥

[ **पा०** ] १ ञ. वज्रदंष्ट्रोमहावीरोरणे. ङ. झ. वज्रदंष्ट्रोथतंदष्ट्वा. घ. च. छ. वज्रदंष्ट्रोमहाबाणैः. २ ङ. च. झ. जघ्नेतान्राक्षसान्सर्वान्दृष्ट्वोवायुसुतोरणे. ३ घ. सराक्षस. ४ ख. घ. मुत्पाट्य. ५ च. छ. ञ. वेगवान्. ६ क. ख. ग. ङ.—ट. पेतुर्निकृत्ताइव. ७ ङ. झ. ट. रुधिरौघेण. ८ च. संपन्ना. ९ ङ. झ. ट. छत्रैश्च. १० स्वबलस्यचघातेन. ज. स्वबलस्यनिघातेन. ११ च. झ. ञ. ट. बलेनच. १२ क. ङ.—ट. समप्रभं. १३ क. ग.—ट. रथैश्च. १४ छ. समुपस्थिताः.

प्रभिन्नशिरसः केचिच्छिन्नैः पादैश्च बाहुभिः ॥ शस्त्रैरर्पितदेहास्तु रुधिरेण समुक्षिताः ॥ ८ ॥
हरयो राक्षसाश्चैव शेरते गां समाश्रिताः ॥ कङ्कगृध्रबलैराढ्या गोमायुगणसंकुलाः ॥ ९ ॥
कबन्धानि समुत्पेतुर्भीरूणां भीषणानि वै ॥ १० ॥
भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले ॥ वानरा राक्षसाश्चापि निपेतुस्तत्र वै रणे ॥ ११ ॥
ततो वानरसैन्येन हन्यमानं निशाचरम् ॥ प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः ॥ १२ ॥
राक्षसान्भयवित्रस्तान्हन्यमानान्प्लवङ्गमैः ॥ दृष्ट्वा स रोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान् ॥ १३ ॥
प्रविवेश धनुष्पाणिस्त्रासयन्हरिवाहिनीम् ॥ शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः ॥ १४ ॥
बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च ॥ विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान् ॥ १५ ॥
त्रस्ताः सर्वे हरिगणाः शरैः संकृत्तकन्धराः ॥ अङ्गदं संप्रधावन्ति प्रजापतिमिव प्रजाः ॥ १६ ॥
ततो हरिगणान्भग्नान्दृष्ट्वा वालिसुतस्तदा ॥ क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत ॥ १७ ॥
वज्रदंष्ट्रोऽङ्गदश्चोभौ संगतौ हरिराक्षसौ ॥ चेरतुः परमक्रुद्धौ हरिमत्तगजाविव ॥ १८ ॥
ततः शरसहस्रेण वालिपुत्रं महाबलः ॥ जघान मर्मदेशेषु मातङ्गमिव तोमरैः ॥ १९ ॥
रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः ॥ चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः ॥ २० ॥
दृष्ट्वा पतन्तं तं वृक्षमसंभ्रान्तश्च राक्षसः ॥ चिच्छेद बहुधा सोपि निकृत्तः पतितो भुवि ॥ २१ ॥
तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः ॥ प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च ॥ २२ ॥
समापतन्तं तं दृष्ट्वा रथादाप्लुत्य वीर्यवान् ॥ गदापाणिरसंभ्रान्तः पृथिव्यां समतिष्ठत ॥ २३ ॥
साङ्गदेन गदाऽऽक्षिप्ता गत्वा तु रणमूर्धनि ॥ स चक्रकूबरं साश्वं प्रममाथ रथं तदा ॥ २४ ॥
ततोऽन्यं गिरिमाक्षिप्य विपुलं द्रुमभूषितम् ॥ वज्रदंष्ट्रस्य शिरसि पातयामास सोऽङ्गदः ॥ २५ ॥
अभवच्छोणितोद्गारी वज्रदंष्ट्रः स मूर्छितः ॥ मुहूर्तमभवन्मूढो गदामालिङ्ग्य निश्श्वसन् ॥ २६ ॥

---

ते च राक्षसगणाश्च तद्राक्षसगणाः तेषां । तच्छब्देन वानरा उच्यन्ते । युध्यमानानां सुयुद्धं समवर्ततेत्यनेन उत्तरोत्तरयुद्धाधिक्यमुच्यते ॥ ७ ॥ पादैश्च बाहुभिरित्युपलक्षणे तृतीया । अर्पितदेहाः आरोपितदेहाः । गां भूमिं । कङ्कः अवटः स च श्येनविशेषः । गृध्रः दूरदर्शी । बलः श्येनविशेषः काकश्च तैराढ्याः व्याप्ताः ॥ ८—९ ॥ कबन्धानीत्यर्धं ॥ १० ॥ पुनः केषांचित्पतनमाह—भुजेति ॥ भुजपाणिशिरस्सु छिन्नाः छिन्नकायाः छिन्नमध्यकायाः ॥ ११ ॥ निशाचरं निशाचरसंबन्धि । अणवृद्ध्यभाव आर्षः । यद्वा निशायां चरतीति योगमात्रविवक्षा ॥ १२ ॥ भयवित्रस्तान भयहेतुभ्यो वित्रस्तान् ॥ १३—१४ ॥ सप्ताष्टौ नव पञ्च चेति एकैकप्रयोगेणेति शेषः ॥ १५—१६ ॥ हरिमत्तगजौ सिंहमत्तगजौ ॥ १८—२३ ॥ सा वज्रदंष्ट्रधृता गदा । आक्षिप्ता अपहृता सः अङ्गदक्षिप्तशैलः ॥ २४—२५ ॥ शोणितोद्गारी रक्तोद्गारी ।

---

**स०** बलाः काकाः । "बलोबलिनिवायसे" इतिविश्वः ॥ ९ ॥ **शि०** तत्प्रकारमाह—बिभेदेति । तत्र एकैकबाणप्रक्षेपंसप्ताद्यन्यतमान् एकोनविंशत्संख्याकान्वाबिभेद । अर्धं पृथक् ॥ १५ ॥ **रामानु०** उदीक्षन्तं उदीक्षमाणं ॥ १७ ॥ **कतक०** हरिमत्तगजाविव । हरिरिहशार्दूलः । सिंहेनगजस्ययुद्धासंभवात् । स्वप्नेपिसिंहदर्शनेनगजानांमरणात् । **स०** योयुध्येते पुनःपुनर्युद्धमकुरुतां । हरिः सिंहः । अभूतोपमेयं । हरिःसिंहशावः । मत्तइति गजस्यतेनसहयोधनेअङ्गविस्मृतिःसूच्यतइतिवा । यद्वा 'यद्गन्धमात्राद्धरयोगजेन्द्राः' इतिभागवतोक्तेःविलक्षणगजानांहरिभिर्युद्धंसंभावितमित्युक्तिःसंभवति । हरिःशार्दूलइतिव्याख्यायां कोशःशोध्यः ॥ १८ ॥ **स०** समतिष्ठत । "समवप्रविभ्यःस्थः" इत्यात्मनेपदता ॥ २३ ॥

[ **पा०** ] १ ङ. झ. अभग्नशिरसः. २ ग. ङ. झ. ट. सुघोराराक्षसाश्चैव. ३ ङ. ट. शरवेगसमा. ४ क. ग. ङ.—ट. गृध्रबलाढ्याश्च. ५ घ.—ट. कुलसंकुलाः. ग. वृकसंकुलाः. ६ क.—ट. संकृत्तदेहिनः. ७ झ. ट. श्चोभौयोयुध्येतेपरस्परं ८ ख.—ट. महाबलं. ९ क.—ट. शरैरग्निशिखोपमैः. १० ग. शतधा. ११ ङ. छ. झ. ट. मथितःप्रापतद्भुवि. क. ख. ग. च. ज. ञ. मथितःपतितो. १२ ङ. झ. ट. अङ्गदेन. १३ ख. च.—ट. शिलाक्षिप्ता.

स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम् ॥ जघान परमक्रुद्धो वक्षोदेशे निशाचरः ॥ २७ ॥
गदां त्यक्त्वा ततस्तत्र मुष्टियुद्ध[1]मवर्तत ॥ अन्योन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ ॥ २८ ॥
रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ ॥ बभूवतुः सुविक्रान्तावङ्गारकबुधाविव ॥ २९ ॥
ततः परमतेजस्वी अङ्गदः [2]कपिकुञ्जरः ॥ उत्पाट्य वृक्षं [3]स्थितवान्बहुपुष्पफलान्वितम् ॥ ३० ॥
जग्राह चार्षभं चर्म खड्गं च विपुलं शुभम् ॥ किङ्किणीजालसंछन्नं चर्मणा च परिष्कृतम् ॥
[ [4]वज्रदंष्ट्रोथ जग्राह सोङ्गदोप्यसिचर्मणी ॥ ३१ ॥ ]
वि[5]चित्रांश्चेरतुर्मार्गान्रुषितौ कपिराक्षसौ ॥ जघ्नतुश्च तदाऽन्योन्यं [6]निर्दयं जयकाङ्क्षिणौ ॥ ३२ ॥
व्रणैः [7]सास्रैरशोभेतां पुष्पिताविव किंशुकौ ॥ युध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ ॥ ३३ ॥
निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः ॥ उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः ॥ ३४ ॥
निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः ॥ जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ॥ ३५ ॥
रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा ॥ [8]स रोषपरिवृत्ताक्षं शुभं खड्गहतं शिरः ॥ ३६ ॥
वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः ॥ [9]त्रस्ताः प्रत्यपतँल्लङ्कां वध्यमानाः प्लवङ्गमैः ॥
विषण्णवदना दीना ह्रिया किंचिदवाङ्मुखाः ॥ ३७ ॥

निहत्य तं [10]वज्रधरप्रभावः स वालिसूनुः कपिसैन्यमध्ये ॥
जगाम हर्षं महितो महाबलः सहस्रनेत्रस्त्रिदशैरिवावृतः ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

गदां अन्यां । यद्वा, जघान परमक्रुद्धो वक्षोदेशे निशाचर इत्यस्यानन्तरं, साङ्गदेन गदाक्षिप्ता गत्वा तु रणमूर्धनीत्यर्धं योज्यं ॥ २६—२७ ॥ अवर्तत अवर्तयत् ॥ २८—२९ ॥ ततः परमतेजस्वीत्यादिश्लोकद्वयमेकान्वयं ॥ वृक्षोत्पाटनार्षभचर्मखण्डग्रहणादिकमङ्गदस्योच्यमानमितरस्याप्युपलक्षणं । विचित्रांश्चेरतुर्मार्गानिति वक्ष्यमाणयुद्धस्य उभयोरविशेषेण वर्णनात् । अङ्गदेन वृक्षे गृहीते राक्षसोपि वृक्षं जग्राह । अङ्गदेन खड्गादौगृहीतेराक्षसोपि खड्गादिकं जग्राहेति भावः । आर्षभं चर्म ऋषभचर्मपिनद्धं फलकं । चर्मणा खड्गकोशेन ॥ ३०—३१ ॥ मार्गान् पूर्वोक्तमण्डलादिमार्गान् । निर्दयं जघ्नतुरित्यन्वयः ॥ ३२ ॥ सास्रैः सरुधिरैः । "अस्रमश्रुणि शोणिते" इत्यमरः । अवनीं गतौ अभूतामिति शेषः ॥ ३३ ॥ निमेषान्तरमात्रेण निमेषावकाशमात्रेण ॥ ३४ ॥ सुधौतेन शाणोल्लिखितेन । अतएव निर्मलेन । अस्य वज्रदंष्ट्रस्येत्यन्वयः । केचित्तु स जग्राहार्षभं चर्मेति पठित्वा सः वज्रदंष्ट्रः खड्गं जग्राह अङ्गदो वृक्षं जग्राहेति व्याख्याय, खड्गेनास्य महच्छिर इत्यत्र वृक्षे प्रतिहतेङ्गदोपि चर्मासी जग्राहेति अनेनावगम्यत इत्यपि वर्णयन्ति ॥ ३५—३६ ॥ विषण्णवदनाः शुष्कवदनाः ॥ तृतीयायां वज्रदंष्ट्रवधः ॥ ३७—

---

**स०** अङ्गारकोमङ्गलः ॥२९॥ **ति०** पुष्पफलैः हस्तधृतवृक्षीयैस्तैर्युतआसीत् ॥३०॥ **ति०** व्रणैः समुत्थैः तत्समुत्थितैःरुधिरैरित्यर्थः ॥ ३३ ॥ **ति०** खड्गेन आच्छिद्यगृहीतेनवज्रदंष्ट्रीयेण । **शि०** सुधौतेन शाणसंस्कृतेन । अतएव निर्मलेन ॥ ३५ ॥ **स०** शुभं प्राक् ॥ ३६ ॥ **स०** ह्रिया जीवनाशयाप्रत्यावर्तनाज्जातया लज्जया ॥ ३७ ॥ **ति०** तत्तृतीयायांवज्रदंष्ट्रवधः ॥ ३८ ॥ इतिचतुःपञ्चाशःसर्गः ॥ ५४ ॥

[ **पा०** ] १ ग. ङ.—ट. मकुर्वत. २ झ. ञ. ट. प्लवगर्षभः. ३ ङ. झ. ञ. ट. स्थितवानासीत्पुष्पफलैर्युतः. ४ इदमर्धं क. ख. घ. च. छ. पाठेषु दृश्यते. ५ ट. विचित्रान्रुधिरान्मार्गांश्चेरतुः. ङ. झ. चित्रांश्चरुचिरान्मार्गांश्चेरतुः. ६ ङ. झ. ट. नर्दन्तौ. ७ ग. समृद्धैःशोभेते. च. छ. समग्रैःशोभेतां. ङ. झ. ञ. ट. समुत्थैःशोभेतां. ८ ङ. झ. ट. तच्चतस्यपरीताक्षं. ९ च.—ट. त्रस्ताह्यभ्यद्रवँल्लङ्कां. क. ख. घ. त्रस्ताःप्रविविशुर्लङ्कां. १० ङ. च. झ. ञ. ट. वज्रधरप्रतापवान्.

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रावणप्रेरणयाऽकंपनेनरणायनिर्याणम् ॥ १ ॥ वानरराक्षससेनयोर्महायुद्धम् ॥ २ ॥

वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्रेण रावणः ॥ बलाध्यक्षमुवाचेदं कृताञ्जलिमवस्थितम् ॥ १ ॥
शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा भीमविक्रमाः ॥ अकम्पनं पुरस्कृत्य सर्वशस्त्रप्रकोविदम् ॥ २ ॥
एष शास्ता च गोप्ता च नेता च युधि संमतः ॥ भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥३॥
एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलम् ॥ वानरांश्चापरान्घोरान्हनिष्यति परंतपः ॥ ४ ॥
परिगृह्य स तामाज्ञां रावणस्य महाबलः ॥ बलं संत्वरयामास तदा लघुपराक्रमः ॥ ५ ॥
ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः ॥ निष्पेतू रक्षसां मुख्या बलाध्यक्षप्रचोदिताः ॥ ६ ॥
रथमास्थाय विपुलं तप्तकाञ्चनकुण्डलः ॥ मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः ॥
राक्षसैः संवृतो भीमैस्तदा निर्यात्यकम्पनः ॥ ७ ॥
न हि कम्पयितुं शक्यः सुरैरपि महामृधे ॥ अकम्पनस्ततस्तेषामादित्य इव तेजसा ॥ ८ ॥
तस्य निर्धावमानस्य संरब्धस्य युयुत्सया ॥ अकस्माद्दैन्यमागच्छद्धयानां रथवाहिनाम् ॥ ९ ॥
व्यस्फुरन्नयनं चास्य सव्यं युद्धाभिनन्दिनः ॥ विवर्णो मुखवर्णश्च गद्गदश्चाभवत्स्वनः ॥ १० ॥
अभवत्सुदिने चापि दुर्दिनं रूक्षमारुतम् ॥ ऊचुः खगा मृगाः सर्वे वाचः क्रूरा भयावहाः ॥११॥
स सिंहोपचितस्कन्धः शार्दूलसमविक्रमः ॥ तानुत्पातानचिन्त्यैव निर्जगाम रणाजिरम् ॥ १२ ॥
तदा निर्गच्छतस्तस्य रक्षसः सह राक्षसैः ॥ बभूव सुमहान्नादः क्षोभयन्निव सागरम् ॥ १३ ॥
तेन शब्देन वित्रस्ता वानराणां महाचमूः ॥ द्रुमशैलप्रहरणा योद्धुं समवतिष्ठत ॥ १४ ॥
तेषां युद्धं महारौद्रं संजज्ञे हरिरक्षसाम् ॥ रामरावणयोरर्थे समभित्यक्तजीविनाम् ॥ १५ ॥

३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुःपञ्चाशःसर्गः ॥ ५४ ॥

---

अथाकम्पनयुद्धं पञ्चपञ्चाशे—वज्रदंष्ट्रमित्यादि ॥ बलाध्यक्षं प्रहस्तं ॥१—२॥ शास्ता परसैन्यनिग्राहकः। गोप्ता स्वबलरक्षकः । नेता नायकः । सेनापतिरित्यर्थः । संमतः प्रसिद्धः ॥ ३—४ ॥ परिगृह्येति बलचोदनेन स्वचोदनमर्थसिद्धं मत्वेत्यर्थः ॥ ५ ॥ निष्पेतुः पुरान्निर्ययुः ॥ ६ ॥ मेघाभः मेघवत् स्थूलः । मेघस्वनमहास्वनः । सप्तम्युपमानपूर्वपदस्येत्यादिना उत्तरपदलोपस्य वैकल्पिकत्वे प्रथमस्वनपदश्रवणं ॥ ७ ॥ प्रसङ्गादाह—न हीति ॥ हि यस्मात् महामृधे महायुद्धेपि । कम्पयितुं न शक्यते अतो हेतोरकम्पनः अकम्पनशब्दवाच्यः । तेषां रक्षसां मध्ये तेजसा आदित्य इव स्थित इत्यर्थः ॥ ८—९ ॥ विवर्णः विपरीतवर्णः ॥ १० ॥ दुर्दिनं मेघच्छन्नदिनं । "मेघच्छन्नेह्नि दुर्दिनं" इत्यमरः ॥ ११ ॥ सिंहोपचितस्कन्धः सिंहस्येवोन्नतस्कन्धवान् ॥ १२—१४ ॥ समभित्यक्तजीविनां तृणीकृतशरीराणामित्यर्थः

---

**शि०** प्रोत्साहनार्थमकंपनस्यगुणानाह—एषइति ॥ ३ ॥ **स०** मुखवर्णः मुखकान्तिः । विवर्णः विगतस्तुतिः निन्द्यइतियावत् । 'वर्णःस्तुतौ' इतिविश्वः ॥ १० ॥ **स०** क्रूरभयावहाः क्रूराणामपिभयावहाः ॥ ११ ॥ **ति०** समभित्यक्ताः देहिनः आत्मानोयैस्ते । आत्मरक्षानिरपेक्षाइतियावत् । **स०** समभित्यक्तदेहिनः देहिनःप्राणाः समभित्यक्ताः त्यक्तुंसिद्धीकृताः यैस्तेतथा

**[ पा० ]** १ ग. च. झ. ञ. ट. शस्त्रास्त्रकोविदं. २ ङ. झ. ञ. ट. नसंशयः. ३ ङ. झ. ट. संप्रेरयामास. ४ ख. च. ञ. काञ्चनमण्डितं. ङ. झ. ट. काञ्चनभूषणं. ५ ख. ग. घ. अकंपनस्ततश्श्रीमानादित्यइव. क. च. छ. ञ. अकंपनस्सनाम्नाभूदादित्यइव. ६ ग. प्रास्फुरन्नयनं. ख. ङ. छ. झ. विस्फुरन्नयनं. ७ घ. ङ. झ. ट. कालेदुर्दिनं. ८ ठ. क्रूरभयावहाः. ९ ङ. झ. त्यक्तदेहिनः. छ. ट. त्यक्तदेहिनां.

सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसन्निभाः ॥ हरयो राक्षसाश्चैव परस्परजिघांसवः ॥ १६ ॥
तेषां विनर्दतां शब्दः संयुगेऽतितरस्विनाम् ॥ शुश्रुवे सुमहान्क्रोधादन्योन्यमभिगर्जताम् ॥ १७ ॥
रजश्चारुणवर्णाभं सुभीममभवद्भृशम् ॥ उद्धूतं हरिरक्षोभिः संरुरोध दिशो दश ॥ १८ ॥
अन्योन्यं रजसा तेन कौशेयोद्धूतपाण्डुना ॥ संवृतानि च भूतानि ददृशुर्न रणाजिरे ॥ १९ ॥
न ध्वजा न पताका वा चर्म वा तुरगोपि वा ॥ आयुधं स्यन्दनं वाऽपि ददृशे तेन रेणुना ॥२०॥
शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् ॥ श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे ॥ २१ ॥
हरीनेव सुसंक्रुद्धा हरयो जघ्नुराहवे ॥ राक्षसाश्चापि रक्षांसि निजघ्नुस्तिमिरे तदा ॥ २२ ॥
परांश्चैव विनिघ्नन्तः स्वांश्च वानरराक्षसाः ॥ रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम् ॥ २३ ॥
ततस्तु रुधिरौघेण सिक्तं व्यपगतं रजः ॥ शरीरशवसंकीर्णा बभूव च वसुंधरा ॥ २४ ॥
द्रुमशक्तिशिलाप्रासैर्गदापरिघतोमरैः ॥ हरयो राक्षसाश्चैव जघ्नुरन्योन्यमोजसा ॥ २५ ॥
बाहुभिः परिघाकारैर्युध्यन्तः पर्वतोपमाः ॥ हरयो भीमकर्माणो राक्षसाञ्जघ्नुराहवे ॥ २६ ॥
राक्षसास्त्वपि संक्रुद्धाः प्रासतोमरपाणयः ॥ कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः ॥ २७ ॥
अकम्पनः सुसंक्रुद्धो राक्षसानां चमूपतिः ॥ संहर्षयति तान्सर्वान्राक्षसान्भीमविक्रमान् ॥ २८ ॥
हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः ॥ विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्यतः ॥ २९ ॥
एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ॥ मैन्दश्च द्विविदः क्रुद्धाश्चक्रुर्वेगमनुत्तमम् ॥ ३० ॥
ते तु वृक्षैर्महावेगा राक्षसानां चमूमुखे ॥ कदनं सुमहच्चक्रुर्लीलया हरियूथपाः ॥

॥ १५ ॥ परस्परजिघांसवः आसन्निति शेषः ॥१६॥ विनर्दतां सिंहनादं कुर्वतां । अभिगर्जतां आभिमुख्येन गर्जनं कुर्वतां ॥ १७ ॥ अरुणवर्णेन रक्तिम्ना आभातीत्यरुणवर्णाभं ॥ १८ ॥ कौशेयोद्धूतपाण्डुना उद्धूतकौशेयपाण्डुना । आहिताग्न्यादित्वात् परनिपातः । रजसो रक्तत्वपाण्डुत्वे भूभेदादिति ज्ञेयं । संवृतानि छन्नानि । भूतानि वस्तूनि । न ददृशुः । वानरा राक्षसाश्चेति शेषः ॥ १९ ॥ उक्तं विवृणोति—न ध्वजा इति ॥ वर्मादिष्वपि नञनुवर्तनीयः ॥ २० ॥ परस्परादर्शनादिजन्यं शब्दान्तरमाह—शब्दश्चेति ॥ रूपाणि पदार्थान्तराणि ॥ २१ ॥ अदर्शनफलमाह—हरीनिति ॥ २२ ॥ प्रथमं रक्तार्द्रां अथच रणक्षोदेन पङ्किलामित्यर्थः । पङ्कानुलेपनां पङ्कानुलिप्तां । कर्मणि ल्युट् ॥ २३ ॥ शरीरशवसंकीर्णा शवभूतशरीरसंकीर्णा ॥ २४ ॥ द्रुमशैला वानरीयाः । शक्त्यादयो राक्षसीयाः ॥ २५ ॥ बाहुभिः परिघाकारैरित्यस्योत्तरार्धः, हरयो भीमकर्माणो राक्षसाञ्जघ्नुराहव इति ॥ २६ ॥ राक्षसास्त्वपीति ॥ शस्त्रैः उक्तप्रासादिभिः ॥ २७ ॥ संहर्षयति उत्साहयति ॥ २८ ॥ अभिक्रम्य अभिमुखीभूय । आच्छिद्य अपहृत्य ॥ २९—३० ॥ ते त्वित्यादिसार्ध-

॥ १५ ॥ **रामानु०** संहर्षयति समहर्षयत् । संभावयामासेत्यर्थः । तान् कपीन्निघ्नतः ॥ २८ ॥ **कतक०** नानाप्रहरणैर्भृशमित्यत्रसर्गविच्छेदःप्रमादात् ॥ ३१ ॥ इतिपञ्चपञ्चाशः सर्गः ॥ ५५ ॥

[ **पा०** ] १ घ. झ. जिघांसया. २ ङ. झ. ट. सुमहान्कोपात्. ३ ग. मभिधावतां. ४ क. ख. घ. ङ. झ. ट. कौशेयोद्धत. ५ ङ. झ. ञ. ट. ध्वजो. घ. च. ध्वजावा. ६ क. ख. च. छ. ञ. गजोवातुरगो. ङ. झ. ट. चर्मवातुरगो. ७ ख. घ. ङ. छ. झ. ञ. ट. स्यन्दनोपिवा. ८ ग. गर्जतां. ९ ख. ङ. च. झ. ञ. ट. राक्षसाराक्षसांश्चापि. १० क. निजघ्नुरितरेतरं. ११ च. छ. ञ. तेपरांश्चैवनिघ्नन्तः. ख. घ. ङ. झ. ट. तेपरांश्चविनिघ्नन्तः. १२ ख. ङ. झ. ट. ह्यपगतं. १३ ग. शतसंकीर्णा. १४ ग. घ. हरीनेव सुसंक्रुद्धाहरयोजघ्नुराहवे. १५ ग. दारयन्त्यभिनिष्क्रम्य. १६ ख. ग. ङ. झ. ञ. ट. परमक्रुद्धाः. १७ ङ. च. झ. ञ. ट. महावीराः. १८ झ. हरिपुङ्गवाः.

ममन्थू राक्षसान्सर्वे वानरा गणशो भृशम् ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

हनुमताऽकंपनवधः ॥ १ ॥ तेनरामादिभिर्हनुमच्छ्लाघनम् ॥ २ ॥

तद्दृष्ट्वा सुमहत्कर्म कृतं वानरसत्तमैः ॥ क्रोधमाहारयामास युधि तीव्रमकम्पनः ॥ १ ॥
क्रोधमूर्च्छितरूपस्तु धून्वन्परमकार्मुकम् ॥ दृष्ट्वा तु कर्म शत्रूणां सारथिं वाक्यमब्रवीत् ॥ २ ॥
तत्रैव तावत्त्वरितं रथं प्रापय सारथे ॥ यत्रैते बहवो घ्नन्ति सुबहूत्राक्षसात्रणे ॥ ३ ॥
एतेऽत्र बलवन्तो हि भीमकायाश्च वानराः ॥ द्रुमशैलप्रहरणास्तिष्ठन्ति प्रमुखे मम ॥ ४ ॥
एतान्निहन्तुमिच्छामि समरश्लाघिनो ह्यहम् ॥ एतैः प्रमथितं सर्वं दृश्यते राक्षसं बलम् ॥ ५ ॥
ततः प्रजवनाश्वेन रथेन रथिनांवरः ॥ हरीनभ्यहनत्क्रोधाच्छरजालैरकम्पनः ॥ ६ ॥
न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे ॥ अकम्पनशरैर्भग्नाः सर्व एव विदुद्रुवुः ॥ ७ ॥
तान्मृत्युवशमापन्नानकम्पनवशं गतान् ॥ समीक्ष्य हनुमाञ्ज्ञातीनुपतस्थे महाबलः ॥ ८ ॥
तं महाप्लवगं दृष्ट्वा सर्वे प्लवगयूथपाः ॥ समेत्य समरे वीराः संहृष्टाः पर्यवारयन् ॥ ९ ॥
अवस्थितं हनूमन्तं ते दृष्ट्वा हरियूथपाः ॥ बभूवुर्बलवन्तो हि बलवन्तं समाश्रिताः ॥ १० ॥
अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम् ॥ महेन्द्र इव धाराभिः शरैरभिववर्ष ह ॥ ११ ॥
अचिन्तयित्वा बाणौघाञ्शरीरे पतिताञ्शितान् ॥ अकम्पनवधार्थाय मनो दध्रे महाबलः ॥१२॥
स प्रसह्य महातेजा हनूमान्मारुतात्मजः ॥ अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीम् ॥ १३ ॥
तस्याभिनर्दमानस्य दीप्यमानस्य तेजसा ॥ बभूव रूपं दुर्धर्षं दीप्तस्येव विभावसोः ॥ १४ ॥
आत्मानमप्रहरणं ज्ञात्वा क्रोधसमन्वितः ॥ शैलमुत्पाटयामास वेगेन हरिपुङ्गवः ॥ १५ ॥
तं गृहीत्वा महाशैलं पाणिनैकेन मारुतिः ॥ स विनद्य महानादं भ्रामयामास वीर्यवान् ॥ १६॥

---

श्लोकः ॥ लीलया अनायासेन ॥३१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥५५॥

---

अथाकम्पनवधः षट्पञ्चाशे—तद्दृष्ट्वेत्यादि ॥ १–३ ॥ प्रमुखे अग्रे ॥ ४–५ ॥ प्रजवनाश्वेन वेगवदश्वेन ॥ ६–७ ॥ उपतस्थे अकम्पनसमीपमाजगाम ॥ ८–११ ॥ अकम्पनवधार्थाय अकम्पनवधरूपप्रयोजनाय ॥ १२–१३ ॥ तस्य हनुमतः ॥ १४ ॥ अप्रहरणं अनायुधं ॥ १५ ॥ महानादं विनद्य महानादं

---

ति० बलवन्तोवा वाशब्दोवैशब्दस्यार्थे ॥ ४ ॥ ति० एतान्निहन्तुमिच्छामि प्रथमतःस्वसेनारक्षणार्थं । ततःपरबलंहनिष्यामीतिशेषः । तदेवाह—एतैरिति ॥ ५ ॥

[ पा० ] १ ममन्थूराक्षसानित्यर्धस्यस्थाने क. ख. घ. च. छ. ञ. पाठेषु अकंपनसमादिष्टाविविधायुधयोधिनः । ममन्थूराक्षसास्तत्रवानरान्गणशोभृशं इत्येकश्लोकः पाठभेदेनदृश्यते. २ ङ. झ. ट. न्सर्वैर्नानाप्रहरणैर्भृशं. ३ ग. ट. तथैवत्वरितंयोद्धुं. ४ च. झ ञ. ट. एतेचबलिनोघ्नन्ति. क. घ. यत्रैतेहरयोघ्नन्ति. ५ ङ. झ. एतेचबलवन्तोवा. ६ ङ. छ. झ. ट. भीमकोपाश्च. ७ क. ख. ग. च. ञ. एतत्प्रमथितं. ८ ङ. च. झ. ञ. ट. प्रचलिताश्वेन. ९ क. ख. छ. नकंपनशरातुरान्. च. झ. ट. नकंपनशरानुगान्. १० क. ग. ङ. झ. ट. व्यवस्थितं. ११ घ. च. छ. तंदृष्ट्वा. १२ क. ख. घ.—छ. झ ट. बलवन्तमुपाश्रिताः. १३ क. ख. ग. च. मुपस्थितं. १४ ङ. झ. ट. पातितान्कपिः. १५ क. ङ.—ढ. आत्मानंत्वप्रहरणं. ख. ग. घ. आत्मानंचाप्रहरणं. १६ ङ. छ. झ. ट. गृहीत्वासुमहाशैलं.

ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम् ॥ पुरा हि नमुचिं संख्ये वज्रेणेव पुरंदरः ॥ १७ ॥
अकम्पनस्तु तद्दृष्ट्वा गिरिशृङ्गं समुद्यतम् ॥ दूरादेव महाबाणैरर्धचन्द्रैर्व्यदारयत् ॥ १८ ॥
तत्पर्वताग्रमाकाशे रक्षोबाणविदारितम् ॥ विशीर्णं पतितं दृष्ट्वा हनुमान्क्रोधमूर्च्छितः ॥ १९ ॥
सोऽश्वकर्णं समासाद्य रोषदर्पान्वितो हरिः ॥ तूर्णमुत्पाटयामास महागिरिमिवोच्छ्रितम् ॥ २० ॥
तं गृहीत्वा महास्कन्धं सोऽश्वकर्णं महाद्युतिः ॥ प्रहस्य परया प्रीत्या भ्रामयामास संयुगे ॥ २१ ॥
प्रधावन्नूरुवेगेन प्रभञ्जंस्तरसा द्रुमान् ॥ हनुमान्परमक्रुद्धश्चरणैर्दारयत्क्षितिम् ॥ २२ ॥
गजांश्च सगजारोहान्सरथान्रथिनस्तथा ॥ जघान हनुमान्धीमान्राक्षसांश्च पदातिगान् ॥ २३ ॥
तमन्तकमिव क्रुद्धं समरे प्राणहारिणम् ॥ हनुमन्तमभिप्रेक्ष्य राक्षसा विप्रदुद्रुवुः ॥ २४ ॥
तमापतन्तं संक्रुद्धं राक्षसानां भयावहम् ॥ ददर्शाकम्पनो वीरश्चुक्रोध च ननाद च ॥ २५ ॥
स चतुर्दशभिर्बाणैः शितैर्देहविदारणैः ॥ निर्बिभेद हनूमन्तं महावीर्यमकम्पनः ॥ २६ ॥
स तदा प्रतिविद्धस्तु बह्वीभिः शरवृष्टिभिः ॥ हनुमान्ददृशे वीरः प्ररूढ इव सानुमान् ॥ २७ ॥
विरराज महाकायो महावीर्यो महामनाः ॥ पुष्पिताशोकसंकाशो विधूम इव पावकः ॥ २८ ॥
ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम् ॥ शिरस्यभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥ २९ ॥
स वृक्षेण हतस्तेन सक्रोधेन महात्मना ॥ राक्षसो वानरेन्द्रेण पपात च ममार च ॥ ३० ॥
तं दृष्ट्वा निहतं भूमौ राक्षसेन्द्रमकम्पनम् ॥ व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः ॥ ३१ ॥
त्यक्तप्रहरणाः सर्वे राक्षसास्ते पराजिताः ॥ लङ्कामभिययुस्त्रस्ता वानरैस्तैरभिद्रुताः ॥ ३२ ॥
ते मुक्तकेशाः संभ्रान्ता भग्नमानाः पराजिताः ॥ स्रवच्छ्रमजलैरङ्गैः श्वसन्तो विप्रदुद्रुवुः ॥ ३३ ॥
अन्योन्यं प्रममन्थुस्ते विविशुर्नगरं भयात् ॥ पृष्ठतस्ते सुसंमूढाः प्रेक्षमाणा मुहुर्मुहुः ॥ ३४ ॥
तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः ॥ समेत्य हरयः सर्वे हनुमन्तमपूजयन् ॥ ३५ ॥
सोपि प्रहृष्टस्तान्सर्वान्हरीन्प्रत्यभ्यपूजयत् ॥ हनुमान्सत्त्वसंपन्नो यथार्हमनुकूलतः ॥ ३६ ॥
विनेदुश्च यथाप्राणं हरयो जितकाशिनः ॥ चकर्षुश्च पुनस्तत्र सप्राणानपि राक्षसान् ॥ ३७ ॥
स वीरशोभामभजन्महाकपिः समेत्य रक्षांसि निहत्य मारुतिः ॥
महासुरं भीममित्रनाशनं यथैव विष्णुर्बलिनं चमूमुखे ॥ ३८ ॥

कृत्वेत्यर्थः ॥ १६ ॥ तत इति । तत्र सः शैलेनेत्यध्याहार्यं । सहनुमान् अकम्पनं पुरन्दरो नमुचिं यथा तथा शैलेन वज्रेणेवाभिदुद्राव ॥ १७—१८ ॥ क्रोधमूर्च्छितः अभूदितिशेषः ॥ १९—२१ ॥ चरणैः चरणन्यासैः । दारयत् अदारयत् ॥ २२ ॥ पदातितया गच्छन्तीति पदातिगाः तान् ॥ २३—२६ ॥ प्ररूढः प्ररूढवृक्षः ॥ २७—२९ ॥ वानरेन्द्रेण कर्त्रा । तेन वृक्षेणहत इत्यन्वयः ॥३० ॥ क्षितिकम्पे भूकम्पे ॥ ३१—३५ ॥ प्रत्यभ्यपूजयत् भवत्साहाय्येनैव मया जितमित्येवमिति भावः ॥ ३६—

स० प्रीत्या समयेनसमीचीनायुधमुपलब्धमितिहर्षेण ॥ २१ ॥ ति० प्ररूढःसानुमानिव बहुशराचितशरीरत्वात्प्ररूढबहुवृक्षो गिरिरिवजनैर्ददृशइत्यर्थः ॥ २७ ॥ ति० सोपियथार्हमनुकूलतोऽनुकूलदर्शनवचनालिङ्गनैः संप्रत्यपूजयत् ॥ ३६ ॥ इतिषट्पञ्चाशःसर्गः ॥ ५६ ॥

[ पा० ] १ क.—घ. च. छ. ट. यथाहिनमुचिं. २ क. ख. तंशिलोच्चयमाकाशे. ३ क. ख. ग. समादाय. ४ झ. प्रगृह्यपरया. ५ ङ. झ. ट. सद्रुमंप्राण. ६ ख. संप्रेक्ष्य. ७ ङ. झ. ट. तथाविप्रकीर्णस्तुनाराचैःशितशक्तिभिः. क. तथाप्रतिविद्धाङ्गोभूरिभिःशरवृष्टिभिः. ८ ङ. झ. ट. महाबलः. ९ क.—घ. झ. भयाच्छ्रमजलैरङ्गैःप्रस्रवद्भिर्विदुद्रुवुः. ङ. भयाचसजलैरङ्गैःप्रस्रवद्भिर्विदुद्रुवुः. १० झ. ञ. ट. अन्योन्यंतेप्रमथ्नन्तो. घ. अन्योन्यंप्रेमबद्धास्ते. ११ ङ.—झ. प्रवृद्धांस्तान्सर्वान्. १२ ङ. झ. ट. विष्णुर्यथैवोरुबलं. १३ च. छ. महाहवे.

अपूजयन्देवगणास्तदा कपिं स्वयं च रामोतिबलश्च लक्ष्मणः ॥
तथैव सुग्रीवमुखाः प्लवङ्गमा विभीषणश्चैव महाबलस्तथा ॥ ३९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षट्पञ्चाशस्सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रावणचोदनयाप्रहस्तेन नरान्तकादिसचिवचतुष्टयसाहित्येन पूर्वद्वाराद्रणायनिर्याणम् ॥ १ ॥

अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः ॥ किंचिद्दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥ १ ॥
स तु ध्यात्वा मुहूर्तं तु मन्त्रिभिः संविचार्य च ॥ ततस्तु रावणः पूर्वदिवसे राक्षसाधिपः ॥
पुरीं परियय्यौ लङ्कां सर्वान्गुल्मानवेक्षितुम् ॥ २ ॥
तां राक्षसगणैर्गुप्तां गुल्मैर्बहुभिरावृताम् ॥ ददर्श नगरीं लङ्कां पताकाध्वजमालिनीम् ॥ ३ ॥
रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः ॥ उवाचामर्षतः काले प्रहस्तं युद्धकोविदम् ॥ ४ ॥
पुरस्योपनिविष्टस्य सहसा पीडितस्य वा ॥ नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारद ॥ ५ ॥
अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ॥ इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ ६ ॥
स त्वं बलमतः शीघ्रमादाय परिगृह्य च ॥ विजयायाभिनिर्याहि यत्र सर्वे वनौकसः ॥ ७ ॥
निर्याणादेव ते नूनं चपला हरिवाहिनी ॥ नदतां राक्षसेन्द्राणां श्रुत्वा नादं द्रविष्यति ॥ ८ ॥
चपला ह्यविनीताश्च चलचित्ताश्च वानराः ॥ न सहिष्यन्ति ते नादं सिंहनादमिव द्विपाः ॥ ९ ॥
विद्रुते च बले तस्मिन्रामः सौमित्रिणा सह ॥ अवशस्ते निरालम्बः प्रहस्त वशमेष्यति ॥ १० ॥
आपत्संशयिता श्रेयो न तु निस्संशयीकृता ॥ प्रतिलोमानुलोमं वा यद्वा नो मन्यसे हितम् ॥ ११ ॥

३९ ॥ चतुर्थ्यामकम्पनवधः ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

अथ युद्धाय प्रहस्तनिर्याणं सप्तपञ्चाशे—अकम्पनवधमित्यादि ॥ १ ॥ स त्वित्यादिसार्धश्लोक एकान्वयः ॥ ततः स रावणः पुरीं परिययौ । पूर्वदिवसे दिवसस्य पूर्वभागे । पूर्वाह्ण इत्यर्थः । गुल्मान् सेनाव्यूहान् ॥ २–३ ॥ काले निदेशार्हसमये ॥ ४ ॥ उप समीपे निविष्टं परसेनानिवेशो यस्य तस्य उपरुद्धस्येत्यर्थः । अतएव वाशब्दश्चार्थे । पीडितस्य च मोक्षं मोक्षोपायं ॥ ५ ॥ वहेयुरिति शकि लिङ् ॥६॥ शीघ्रमादाय । परिगृह्य स्वाधीनं कृत्वा । यत्र वनौकसो वर्तन्ते तत्र इतो निर्याहीत्यन्वयः ॥ ७ ॥ चपला धैर्यरहिता ॥ ८–९ ॥ अवशः प्रभुत्वरहितः । "वशमिच्छाप्रभुत्वयोः" इति विश्वः । हे प्रहस्त । ते तव वशमेष्यतीत्यन्वयः ॥ १० ॥ ननु युद्धे सत्यात्महानेरपि संभवात्तदकरणमेव श्रेय इत्याशङ्क्य तथात्वे शत्रुकृ-

ति० उपनिविष्टस्य अतिसमीपनिविष्टशत्रुबलस्येत्यर्थः । अतएवसहसाबलात्कारेणपीडितस्य । अन्ययुद्धात् अन्यकर्तृकयुद्धाद्धेतोः । मोक्षं उपरोधमोक्षं । न प्रपश्यामि ॥ ५ ॥ ति० ननुयुद्धेमज्जीवनेपिसंदेहात्कथंनिरालंबोवशमेष्यतीत्युच्यतेतत्राह—आपदिति । युद्धे आपत् मृतिः । संशयिता संदेहविषया । श्रेयः विजयस्तु । तवनसंशयितः नसंदेहविषयः । तवातिबलत्वाद्बहुशोदृष्टविजयत्वाच्च इन्द्रजिद्वच्छ्रेयःप्राप्तिरेवोत्कटकोटिका । किंच श्रेयोनसंदिग्धं । युद्धेजीवनेमरणेचश्रेयस्सत्त्वात् । जीवनेराज्यं । मृतावुत्तमलोकः । अतोत्रयुद्धेप्रवृत्तिरेवनिस्संशयीकृता । 'यत्रायुद्धेध्रुवोमृत्युर्युद्धेजीवितसंशयः । तमेवकालंयुद्धस्यप्रवदन्तिमनीषिणः" इत्यादिशास्त्रादितिभावः । ममत्वद्ययुद्धमेवहितंप्रतिभाति । प्रकारान्तरमस्तिचेद्ब्रूहीत्याह—प्रतिलोमेत्यादि । मनोनुकूलंवा

[ पा० ] १ ख. प्रतिययौ. २ ङ. च. छ. झ. ट. नगरींराजा. घ. महतींलङ्कां. ३ ग. ङ. झ. ट. उवाचात्महितंकाले. ४ झ. नान्ययुद्धात्. ५ च. हेतुं. ६ क. ख. घ. च. छ. ञ. मादायरथमास्थितः. ७ ङ. झ. ञ. ट. चलिता. घ. चलिष्यत्यरिवाहिनी. ८ क. ग.—छ. झ. ञ. ट. नात्र. ९ ङ. झ. ट. यत्तुनो.

रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः ॥ राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना ॥ १२ ॥
राजन्मन्त्रितपूर्वं नः कुशलैः सह मन्त्रिभिः ॥ विवादश्चापि नो वृत्तः समवेक्ष्य परस्परम् ॥ १३ ॥
प्रदानेन तु सीतायाः श्रेयो व्यवसितं मया ॥ अप्रदाने पुनर्युद्धं दृष्टमेतत्तथैव नः ॥ १४ ॥
सोहं दानैश्च मानैश्च सततं पूजितस्त्वया ॥ सान्त्वैश्च विविधैः काले किं न कुर्यां प्रियं तव ॥ १५ ॥
न हि मे जीवितं रक्ष्यं पुत्रदारधनानि वा ॥ त्वं पश्य मां जुहूषन्तं त्वदर्थे जीवितं युधि ॥ १६ ॥
एवमुक्त्वा तु भर्तारं रावणं वाहिनीपतिः ॥ उवाचेदं बलाध्यक्षान्प्रहस्तः पुरतः स्थितान् ॥ १७ ॥
समानयत मे शीघ्रं राक्षसानां महद्बलम् ॥ १८ ॥
मद्बाणशतवेगेन हतानां च रणाजिरे ॥ अद्य तृप्यन्तु मांसादाः पक्षिणः काननौकसाम् ॥ १९ ॥
इत्युक्तास्ते प्रहस्तेन बलाध्यक्षाः कृतत्वराः ॥ बलमुद्योजयामासुस्तस्मिन्राक्षसमन्दिरे ॥ २० ॥
सा बभूव मुहूर्तेन तिग्मनानाविधायुधैः ॥ लङ्का राक्षसवीरैस्तैर्गजैरिव समाकुला ॥ २१ ॥

ताया हानेर्निश्चितत्वात् युद्धकरणे तस्याः संदेहात् । " यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः " इत्युक्तरीत्या इदानीं युद्धमेव श्रेय इत्याह—आपदिति ॥ संशयिता वितार्किता । आपत् मृतिः । श्रेयः । युद्धे मृतिः श्रेयस्करीत्यर्थः । जयापजययोरव्यवस्थितत्वेन पाक्षिकजयस्यापि संभवादिति भावः । पक्षान्तरं प्रतिक्षिपति—नत्विति । निस्संशयीकृता निश्चिता । मृतिस्तु युद्धं विना शत्रुभिर्मरणं तु न श्रेयः एतन्मम मतं । त्वन्मतं तु किमित्याह—प्रतिलोमेति । प्रतिलोमं मदुक्तप्रकारविपरीतप्रकारं । अनुलोमं वा नोस्माकं यद्धितं मन्यसे तद्वदेति शेषः । वेति पक्षान्तरे । अहं तदेव श्रेयो मन्ये । त्वमन्यच्च यदि मन्यसे तद्वद । तदेवास्माकं हितमित्यर्थः ॥ ११—१२ ॥ मन्त्रसमये मया यथा निर्धारितं तत्तथा प्रवृत्तमित्याह—राजन्नित्यादिना ॥ कुशलैर्मन्त्रिभिः विभीषणादिभिः सह । नः अस्माभिः । इदं वक्ष्यमाणं मन्त्रितपूर्वं । तर्हि मन्त्रितत्वे तथा किमिति नानुष्ठितं तत्राह—विवाद इति । परस्परं समवेक्ष्य बहुमतितया आलोच्य । नः अस्माकं विवादश्चापि वृत्तः । येन विभीषणो निरगच्छदिति भावः ॥ १३ ॥ मन्त्रितमर्थमाह—प्रदानेन त्विति ॥ सीतायाः प्रदानेन तु श्रेयः । अप्रदाने तु युद्धमिति च मम व्यवसितमित्यर्थः । सर्वमरणं युद्धशब्देनोपचर्यते । यथैव व्यवसितं तथैव नः अस्माभिः । दृष्टं च ॥ १४ ॥ एवं स्वमतमुक्त्वा संप्रति त्वन्मतानुसारेण युद्धमेव करिष्यामीत्याह—सोहमित्यादिना ॥ दानैः भूषणादिप्रदानैः । मानैः त्वदधीनं जीवितमित्यादिप्रियभाषणैः । पूजितः उत्कर्षमापादितः । काले आपत्काले । किंन कुर्यां जीवितत्यागमपि कुर्यामित्यर्थः ॥ १५ ॥ उक्तमेव विशदयति —न हीति ॥ जुहूषन्तं होतुमिच्छन्तं । जुहोतेः सन्प्रत्ययः । अनेन जीवितस्य हविष्ट्वं युद्धस्याग्निरूपत्वं च गम्यते । तेन चात्महविःप्रदानस्य महाफलत्वं युद्धसङ्गतिमात्रेण स्वविनाशश्च द्योत्यते । गतानुगतिकास्तु जुहूषन्तं त्यक्तुमिच्छन्तमित्यर्थः । जुहोतेर्दानार्थत्वादित्याहुः ॥ १६—१८ ॥ हतानां काननौकसां तृप्यन्त्वित्यन्वयः । " पूरणगुण—" इत्यादिना समासप्रतिषेधेन सुहितार्थयोगे ज्ञापिता षष्ठी ॥१९—

भवतुप्रतिकूलंवा । यत्तुनोहितंमन्यसे तद्वदेतिशेषः । **स०** आपत् मृतिः परिभवभवंदुःखंवा । संशयिता । नचनिस्संशयीकृता भविष्यत्येवेति ननिश्चिता । तथापि तवशक्तितोमद्युक्तितश्च श्रेयः जयः निश्चितं । 'श्रेयः अमृतेऐहिकं मृते पारत्रिक'मिति प्रकृतानुपयुक्तंव्याख्यानं । प्रोत्साहनसमयत्वात् । **ती०** अत्र मदुक्तार्थविषये प्रतिलोमानुलोमंवा प्रतिलोमंवा अनुलोमंवा । अनयोर्यद्धितंमन्यसे तद्वदेतिशेषः । यद्वा प्रतिलोमंप्रतिकूलमितियन्मन्यसे अनुलोमं अनुकूलमितियन्मन्यसे अन्यद्वा एतद्व्यतिरिक्तं । यद्वा इतरन्मन्यसे तद्वदेतिशेषः । प्रतिलोमेत्यविभक्तिकोनिर्देशः ॥ ११ ॥ **ती०** जिहीर्षन्तं त्यक्तुमिच्छन्तं ॥ १६ ॥

[ **पा०** ] १ ग. घ. च. छ. ज. जिहीर्षन्तं. २ च. छ. ञ. प्रमुखेस्थितान्. ३ क.—घ. च. छ. ज. मद्बाणाशनिवेगेन. ४ घ. ज. मांसेनपक्षिणः. ५ ख. घ. ङ. झ. ट. काननौकसः. ६ च.—ट. तस्यतद्वचनंश्रुत्वाबलाध्यक्षाः. ७ ङ. झ. ट. महाबलाः. ८ झ. ट. भीमैर्नानाविधा. ९ क. ख. स्तैर्हिंसहैरिव.

हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यताम् ॥ आज्यगन्धप्रतिवहः सुरभिर्मारुतो ववौ ॥ २२ ॥
स्रजश्च विविधाकारा जगृहुस्त्वभिमन्त्रिताः ॥ संग्रामसज्जाः संहृष्टा धारयन्राक्षसास्तदा ॥ २३ ॥
सधनुष्काः कवचिनो वेगादाप्लुत्य राक्षसाः ॥ रावणं प्रेक्ष्य राजानं प्रहस्तं पर्यवारयन् ॥ २४ ॥
अथामन्त्र्य च राजानं भेरीमाहत्य भैरवाम् ॥ आरुरोह रथं दिव्यं प्रहस्तः सज्जकल्पितम् ॥ २५ ॥
हयैर्महाजवैर्युक्तं सम्यक्सूतसुसंयतम् ॥ महाजलदनिर्घोषं साक्षाच्चन्द्रार्कभास्वरम् ॥ २६ ॥
उरगध्वजदुर्धर्षं सुवरूथं स्वपस्करम् ॥ सुवर्णजालसंयुक्तं प्रहसन्तमिव श्रिया ॥ २७ ॥
ततस्तं रथमास्थाय रावणार्पितशासनः ॥ लङ्काया निर्ययौ तूर्णं बलेन महताऽऽवृतः ॥ २८ ॥
ततो दुन्दुभिनिर्घोषः पर्जन्यनिनदोपमः ॥ वादित्राणां च निनदः पूरयन्निव सागरम् ॥
शुश्रुवे शङ्खशब्दश्च प्रयाते वाहिनीपतौ ॥ २९ ॥
निनदन्तः स्वरान्घोरान्राक्षसा जग्मुरग्रतः ॥ भीमरूपा महाकायाः प्रहस्तस्य पुरस्सराः ॥ ३० ॥
नरान्तकः कुम्भहनुर्महानादः समुन्नतः ॥ प्रहस्तसचिवा ह्येते निर्ययुः परिवार्य तम् ॥ ३१ ॥
व्यूढेनैव सुघोरेण पूर्वद्वारात्स निर्ययौ ॥ गजयूथनिकाशेन बलेन महता वृतः ॥ ३२ ॥
सागरप्रतिमौघेन वृतस्तेन बलेन सः ॥ प्रहस्तो निर्ययौ तूर्णं कालान्तकयमोपमः ॥ ३३ ॥
तस्य निर्याणघोषेण राक्षसानां च नर्दताम् ॥ लङ्कायां सर्वभूतानि विनेदुर्विकृतैः स्वरैः ॥ ३४ ॥
व्यभ्रमाकाशमाविश्य मांसशोणितभोजनाः ॥ मण्डलान्यपसव्यानि खगाश्चक्रू रथं प्रति ॥ ३५ ॥

२१ ॥ हुताशनं तर्पयतां अग्नौ बहुधा शान्तिहोमानाचरतां । ब्राह्मणांश्च नमस्यतां गन्धपुष्पादिभिरर्चयतां संबन्धी आज्यगन्धप्रतिवहः ब्राह्मणार्चनकुसुमादिना सुरभिर्मारुतो ववौ ॥ २२ ॥ संग्रामसज्जाः संग्रामायोद्युक्ताः । राक्षसाः अभिमन्त्रिताः विजयमन्त्रेणाभिमन्त्रिताः । स्रजः जगृहुः । धारयन् अधारयंश्च ॥ २३ ॥ रावणं प्रेक्ष्य स्वामितया प्रधानं रावणमभिवन्द्येत्यर्थः ॥ २४ ॥ अथेत्यादिश्लोकत्रयं ॥ सज्जकल्पितं सज्जमुद्युक्तं सर्वायुधादिसमवेतत्वेन कल्पितमित्यर्थः । सुसंयतं नियमितं । साक्षाच्चन्द्रार्कभास्वरं चन्द्रार्कतुल्यं भास्वरं च । “ साक्षात्प्रत्यक्षतुल्ययोः ” इत्यमरः । आह्लादकत्वेन चन्द्रसाम्यं । तेजसाऽर्कसाम्यं । सुवरूथं शोभनरथगुप्तिकं । “ रथगुप्तिर्वरूथोना ” इत्यमरः । स्वपस्करं शोभनरथाङ्गं । “ अपस्करो रथाङ्गं ” इति निपातनात् सुडागमः । जालं गवाक्षं । प्रहसन्तमिव श्रिया स्वकान्त्या सर्वकान्तिमद्वस्तु परिहसन्तमिव स्थितं ॥ २५—२७ ॥ ततः आरोहणानन्तरं ॥ २८ ॥ तत इत्यादिसार्धश्लोक एकान्वयः ॥ पर्जन्यः मेघविशेषः ॥ २९ ॥ पुरस्सराः अग्रगाः ॥ ३०—३१ ॥ व्यूढेन सन्नद्धकङ्कटेन । “ व्यूढः सन्नद्धकङ्कटः ” इत्यमरशेषे ॥ ३२ ॥ कालान्तकयमोपमः काले प्रलयकाले अन्तको विनाशको यो यमस्तदुपमः ॥३३॥ तस्य प्रहस्तस्य । निर्याणघोषेण निर्गमकालिकसिंहनादेन । राक्षसानां निर्याणघोषेण च प्रयोजनेन । सर्वभूतानि विकृतैः सर्वैरुपलक्षितानि सन्ति विनेदुरिति संबन्धः ॥ ३४ ॥ अपसव्यानि अप्रदक्षिणानि । व्यभ्रमिलनेन मण्डलकरणस्याकालिकत्वमुक्तं । साभ्रकाले हि पक्षिणो मण्डलान्याचरन्ति । यद्वाऽत्र खगाः गरुडाः । अपसव्यं प्रदक्षिणं ।

**स०** धनुषासहिताः सधनुष्काः । उत्सृज्य वाजिनइतिशेषः । पादत्रादिकंवा । पुत्रदारादिकंप्रतियुद्धार्थंगच्छामइत्युक्त्वा ॥२४॥ **शि०** सागरप्रतिमानां दुरवगाहत्वेनसागरसदृशानांराक्षसानां ओघःसमूहोयस्मिंस्तेनबलेनवृतः अतएव कालान्तकयमोपमः प्रहस्तोनिर्ययौ । तत्रकालोमहाप्रलयः । अन्तकोमरणसमयः । यमःसंयमिनीपतिरितिविवेकः ॥ ३३ ॥ **ति०** अपसव्यानिमण्डलानि अपगतासव्यभागेविभ्रान्तिर्येषुमण्डलेषुभ्रामणेषुतान्यपसव्यानि प्रदक्षिणानि । गृध्रादीनांप्रदक्षिणमपिदुर्निमित्तमितिकतकः ॥३५॥

[ पा० ] १ ङ. झ. ट. वेगादुत्सृज्य. २ ग. सूतकल्पितं. ३ ज. क्सूतेनसंयुतं ख. ग. छ. क्सूतंससायकं. ४ घ. सुविस्तरं. ५ क.—ट. मेदिनीं. ६ ङ. झ. ट. क्रुद्धःकालान्तक. क. ग. घ. च. छ. ञ. तूर्णंक्रुद्धःकालान्तकोपमः. ख. तूर्णंयोद्धुंकालान्तकोपमः.

[1]वमन्त्यः पावकज्वालाः शिवा घोरं[2] ववाशिरे ॥ अन्तरिक्षात्पपातोल्का वायुश्च परुषो ववौ ॥३६॥
अन्योन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे ॥ ३७ ॥
मेघाश्च खरनिर्घोषा रथस्योपरि रक्षसः ॥ ववृषू रुधिरं चास्य सिषिचुश्च पुरस्सरान् ॥ ३८ ॥
केतुमूर्धनि गृध्रोस्य निलीनो दक्षिणामुखः ॥ तुदन्नु[3]भयतः पार्श्वे [4]समग्रामहरत्प्रभाम् ॥ ३९ ॥
सारथेर्[5]बहुशश्चास्य संग्राममवगाहतः ॥ प्रतोदो न्यपतद्धस्तात्सूतस्य हयसादिनः ॥ ४० ॥
निर्याणश्रीश्च यास्यासीद्भास्वरा वसुदुर्लभा ॥ सा ननाश मुहूर्तेन समे च स्खलिता हयाः ॥ ४१ ॥
प्रहस्तं त्वभिनिर्यान्तं प्रख्यातबलपौरुषम् ॥ युधि नानाप्रहरणा कपिसेनाऽभ्यवर्तत ॥ ४२ ॥
अथ घोषः सुतुमुलो हरीणां समजायत ॥ वृक्षानारुजतां चैव गुर्वीरागृह्णतां शिलाः ॥ ४३ ॥
नदतां राक्षसानां च वानराणां च गर्जताम् ॥ उभे प्रमुदिते सैन्ये रक्षोगणवनौकसाम् ॥ ४४ ॥
वेगितानां समर्थानामन्योन्यवधकाङ्क्षिणाम् ॥ परस्परं चाह्वयतां निनादः श्रूयते महान् ॥ ४५ ॥
ततः प्रहस्तः कपिराजवाहिनीमभिप्रतस्थे विजयाय दुर्मतिः ॥
विवृद्धवेगां च विवेश तां चमूं यथा मुमूर्षुः शलभो विभावसुम् ॥ ४६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

विभीषणेनरामंप्रति तत्प्रश्नेनरणायाभ्यागच्छतः प्रहस्तस्य याथात्म्यनिवेदनम् ॥ १ ॥ द्विविददुर्मुखजांबवत्तारैः क्रमेण नरान्तकसमुन्नतमहानादकुंभहनुनाम्नां प्रहस्तसचिवानांचतुर्णां हननम् ॥ २ ॥ नीलेन महतायुद्धेन प्रहस्तवधः ॥ ३ ॥

ततः प्रहस्तं निर्यान्तं दृष्ट्वा भीमपराक्रमम् ॥ उवाच सस्मितं रामो विभीषणम[6]रिन्दमः ॥ १ ॥

"अपसव्यंतु दक्षिणं" इत्यमरः। गरुडानां ह्यप्रदक्षिणं शोभनं । ग्रहाः चन्द्रसूर्यादयः । तत्काले ग्रहयुद्धमासीदित्यर्थः ॥ ३५—३८ ॥ तुदन्नुभयतः पार्श्वे । उभौ पक्षौ मुखेन कण्डूयमानः समग्रामहरत् प्रभां प्रहस्तस्येति शेषः । ध्वजाग्रारूढगृध्रदर्शनेन प्रहस्तमुखं विवर्णमासीदित्यर्थः ॥ ३९ ॥ सूतस्य सूतजातस्य । हयसादिनः हयप्रस्थापकस्य । प्रतोदः तोत्रं । यद्वा सूतस्य सूतकुलोत्पन्नस्य । अभ्यस्तप्रतोदधारणस्यापीत्यर्थः । हयसादिनः अश्वगतिशिक्षकस्य ॥ ४० ॥ वसुदुर्लभा अष्टवसुदुर्लभा । भास्वरा वसुदुर्लभेति पाठः । निर्याणश्रीः निर्गमकालिकश्रीः । निरुत्साहः प्रहस्तोभूदित्यर्थः । स्खलिताः चस्खलुः । कर्तरि क्तः ॥ ४१ ॥ नानाप्रहरणा शिलावृक्षादिनानाप्रहरणा ॥ ४२ ॥ आरुजतां उन्मूलयतां । आगृह्णतां आसमन्तात् गृह्णतां ॥ ४३ ॥ नदतामिति त्रिपादश्लोकः ॥ रक्षोगणवनौकसामित्युत्तरशेषः ॥ ४४—४५ ॥ कपिराजवाहिनीमभिप्रतस्थे तां चमूं विवेश च ॥४६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

अथ प्रहस्तवधोष्टपञ्चाशे—ततः प्रहस्तमित्यादि ॥

स० सूतस्यतद्वंश्यस्य । हयसादिनः हयानश्वान्सादयतिगमयतियथेष्टमितिसतथा । तादृशस्यापिसारथेः हस्तात् प्रतोदः तोत्रं न्यपतत् पपात । थं अन्नमस्यास्तीतिमत्वर्थेइकारः । 'अन्नंथ'मितिहिश्रुतिः । सारेण अरसहितेनचक्रेण थिः सारथिः । तस्येतिवा । हयैरेवानुबन्धनिमित्तैःआदिभिःराक्षसैःसहितःसतथा । तस्यसूतस्यसारथेः । "आदिनोराक्षसाःप्रोक्ताः" इतिभागवततात्पर्यात् । सूतः सुष्ठुऊतः प्रतोदोयस्यतस्येतिवा । सुदुर्लभा उत्तरत्रानेवमागमनात् ॥ ४० ॥ स० रक्षोगणवनौकसामित्यनेन रक्षोगणस्यैकैकोवनौकाःप्र्याप्तइतिध्वन्यते ॥ ४४ ॥ स० विजयायदुर्मतिः अपशकुनैरिवगतमृतैःस्वीयैर्दृष्टैःश्रुतैरपिविजयभ्रमोस्यास्तीतिदुर्मतिरितिमन्तव्यम् ॥ ४६ ॥ इतिसप्तपञ्चाशःसर्गः ॥ ५७ ॥

[ पा० ] १ च. झ. ञ. ट. वमन्तिपावक. २ क.—ट. घोराववाशिरे. ३ घ. ज. झ. ट. नदन्नुभयतः. ४ ङ. झ. ट. समग्रांश्रियमाहरत्. ५ झ. ट. रणकृतोद्यमं. ६ क. ख. ज. मरिंदमं.

क एष सुमहाकायो बलेन महता वृतः ॥ [आगच्छति महावेगः किंरूपबलपौरुषः ॥]
आचक्ष्व मे महाबाहो वीर्यवन्तं निशाचरम् ॥ २ ॥
राघवस्य वचः श्रुत्वा प्रत्युवाच विभीषणः ॥ ३ ॥
एष सेनापतिस्तस्य प्रहस्तो नाम राक्षसः ॥ लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृतः ॥
वीर्यवानस्त्रविच्छूरः प्रख्यातश्च पराक्रमे ॥ ४ ॥
ततः प्रहस्तं निर्यान्तं भीमं भीमपराक्रमम् ॥ गर्जन्तं सुमहाकायं राक्षसैरभिसंवृतम् ॥ ५ ॥
ददर्श महती सेना वानराणां बलीयसाम् ॥ अतिसंजातरोषाणां प्रहस्तमभिगर्जताम् ॥ ६ ॥
खड्गशक्त्यृष्टिबाणाश्च शूलानि मुसलानि च ॥ गदाश्च परिघाः प्रासा विविधाश्च परश्वधाः ॥ ७ ॥
धनूंषि च विचित्राणि राक्षसानां जयैषिणाम् ॥ प्रगृहीतान्यशोभन्त वानरानभिधावताम् ॥ ८ ॥
जगृहुः पादपांश्चापि पुष्पितान्वानरर्षभाः ॥ शिलाश्च विपुला दीर्घा योद्धुकामाः प्लवङ्गमाः ॥ ९ ॥
तेषामन्योन्यमासाद्य संग्रामः सुमहानभूत् ॥ बहूनामश्मवृष्टिं च शरवृष्टिं च वर्षताम् ॥ १० ॥
बहवो राक्षसा युद्धे बहून्वानरयूथपान् ॥ वानरा राक्षसांश्चापि निजघ्नुर्बहवो बहून् ॥ ११ ॥
शूलैः प्रमथिताः केचित्केचिच्च परमायुधैः ॥ परिघैराहताः केचित्केचिच्छिन्नाः परश्वधैः ॥ १२ ॥
निरुच्छ्वासाः कृताः केचित्पतिता धरणीतले ॥ विभिन्नहृदयाः केचिदिषुसंधानसंदिताः ॥ १३ ॥
केचिद्विधा कृताः खड्गैः स्फुरन्तः पतिता भुवि ॥ वानरा राक्षसैः शूलैः पार्श्वतश्चावदारिताः ॥१४॥
वानरैश्चापि संक्रुद्धै राक्षसौघाः समन्ततः ॥ पादपैर्गिरिशृङ्गैश्च संपिष्टा वसुधातले ॥ १५ ॥
वज्रस्पर्शतलैर्हस्तैर्मुष्टिभिश्च हता भृशम् ॥ वेमुः शोणितमास्येभ्यो विशीर्णदशनेक्षणाः ॥ १६ ॥

सस्मितमिति । बलवच्छत्रुदर्शनहर्षेणेतिभावः । तदेव व्यञ्जयति—अरिन्दम इति ॥ १ ॥ क एष इति । ननु प्रहस्तः पूर्वद्वारान्निर्गतः, रामस्तु उत्तरद्वारि तिष्ठति स्म, कथमस्यानेकयोजनस्थसाक्षात्कारः । उच्यते । आप्तवचनेन प्रत्यक्षतुल्येन महाकायः कश्चन गच्छतीति विदित्वा एष इत्याह । आचक्ष्व तमिति शेषः ॥ २—३ ॥ एष इत्यादिसार्धश्लोक एकान्वयः ॥ तस्य रावणस्य । असह्यतया नामाग्रहणं । संवृतशब्दोऽन्तर्भावितण्यर्थः । रावणेन लङ्कायां स्वबलस्य तृतीयभागेन संवारित इत्यर्थः । लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृत इति पाठः । रावणस्य सैन्येषु भागत्रयमस्याधीनमिति भावः । वीर्यवान् बलवान् । "वीर्यं बले प्रभावे च" इत्यमरः । शूरः रणेष्वपरावृत्तः । पराक्रमे परपरिभवने । अत्रेतिकरणं बोध्यं ॥ ४ ॥ तत इत्यादिश्लोकद्वयं ॥ भीमं भयंकरवेषं ॥ ५—६ ॥ खड्गेत्यादिश्लोकद्वयं ॥ राक्षसानामिति तृतीयार्थे षष्ठी । राक्षसैरित्यर्थः ॥७—८॥ वानरश्रेष्ठत्वेप्यवानरत्ववारणाय प्लवङ्गमा इत्युक्तं । यद्वा प्लवङ्गमाः युद्धोत्साहेन प्लवगत्या गच्छन्तः । असंज्ञायां खशार्षः ॥ ९—११ ॥ परमायुधैः चक्रैः । "चक्रं तु परमायुधं" इति निघण्टुः ॥ १२ ॥ शूलपातादिकार्यं दर्शयति—निरुच्छ्वासा इत्यादि ॥ निरुच्छ्वासाः कृताः । इषुसन्धानसंदिताः इषव एव संधानानि बन्धनरज्जवः तैः संदिताः संस्यूताः । स्फुरन्तः लुठन्तः । अवदारिताः भिन्नाः ॥१३—१४॥ संपिष्टाः चूर्णिताः । वेमुः वमनं चक्रुः ॥ १५—

**स०** त्रिभागबलसंवृतः रावणबलमध्येतृतीयभागबलेनयुक्तः । त्रिशब्दस्यतृतीयवाचकत्वंतुत्रिदशेत्येतच्छ्ब्दव्याख्यावसरेभानुदीक्षितेनोक्तं ॥ ४ ॥ **ति०** इषूणांसंधानं सम्यग्विसर्जनं तेनसादिताः खण्डिताः ॥ १३ ॥ **ति०** वमन् अवमन् । वेमुरितिपाठान्तरं

**[ पा० ]** १ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. २ ङ. झ. ट. सुप्रख्यातपराक्रमः. ३ ङ. झ. ट. पुष्पितांश्चगिरींस्तथा. ४ ङ. झ. ट. संधानसादिताः. ख. च. छ. ञ. संधानसंधिताः. ५ घ. ङ. झ. ट. वमञ्शोणित. ६ ख. मांसानि. ७ ङ. झ. ट. वदनेक्षणाः.

आर्तस्वनं च स्वनतां सिंहनादं च नर्दताम् ॥ बभूव तुमुलः शब्दो हरीणां रक्षसां युधि ॥ १७ ॥
वानरा राक्षसाः क्रुद्धा वीरमार्गमनुव्रताः ॥ विवृत्तनयनाः क्रूराश्चक्रुः कर्माण्यभीतवत् ॥ १८ ॥
नरान्तकः कुम्भहनुर्महानादः समुन्नतः ॥ एते प्रहस्तसचिवाः सर्वे जघ्नुर्वनौकसः ॥ १९ ॥
तेषामापततां शीघ्रं निघ्नतां चापि वानरान् ॥ द्विविदो गिरिशृङ्गेण जघानैकं नरान्तकम् ॥ २० ॥
दुर्मुखः पुनरुत्थाय कपिः स विपुलद्रुमम् ॥ राक्षसं क्षिप्रहस्तस्तु समुन्नतमपोथयत् ॥ २१ ॥
जाम्बवांस्तु सुसंक्रुद्धः प्रगृह्य महतीं शिलाम् ॥ पातयामास तेजस्वी महानादस्य वक्षसि ॥ २२ ॥
अथ कुम्भहनुस्तत्र तारेणासाद्य वीर्यवान् ॥ वृक्षेणाभिहतो मूर्ध्नि प्राणान्संत्याजयद्रणे ॥ २३ ॥
अमृष्यमाणस्तत्कर्म प्रहस्तो रथमास्थितः ॥ चकार कदनं घोरं धनुष्पाणिर्वनौकसाम् ॥ २४ ॥
आवर्त इव संजज्ञे उभयोः सेनयोस्तदा ॥ क्षुभितस्याप्रमेयस्य सागरस्येव निस्स्वनः ॥ २५ ॥
महता हि शरौघेण प्रहस्तो युद्धकोविदः ॥ अर्दयामास संक्रुद्धो वानरान्परमाहवे ॥ २६ ॥
वानराणां शरीरैश्च राक्षसानां च मेदिनी ॥ बभूव निचिता घोरा पतितैरिव पर्वतैः ॥ २७ ॥
सा मही रुधिरौघेण प्रच्छन्ना संप्रकाशते ॥ संछन्ना माधवे मासि पलाशैरिव पुष्पितैः ॥ २८ ॥
हतवीरौघवप्रां तु भग्नायुधमहाद्रुमाम् ॥ शोणितौघमहातोयां यमसागरगामिनीम् ॥ २९ ॥
यकृत्प्लीहमहापङ्कां विनिकीर्णान्त्रशैवलाम् ॥ भिन्नकायशिरोमीनामङ्गावयवशाद्वलाम् ॥ ३० ॥
गृध्रहंसगणाकीर्णां कङ्कसारससेविताम् ॥ मेदःफेनसमाकीर्णामार्तस्तनितनिस्स्वनाम् ॥
तां कापुरुषदुस्तारां युद्धभूमिमयीं नदीम् ॥ ३१ ॥

१६ ॥ स्वनतां नर्दतामित्यत्र कुर्वतामित्यर्थः । तुमुलः निबिडितः । रक्षसां वानराणां च ॥ १७॥ वीरमार्गं युद्धकौशलं । विवृत्तनयनाः भ्रान्तनेत्राः । कर्माणि युद्धकर्माणि । अभीतवत् भयरहितं यथा भवति तथा ॥ १८—१९ ॥ तेषामिति । इयं निर्धारणे षष्ठी । एकं मुख्यं ॥ २० ॥ उत्थाय उद्धृत्य । समुन्नताख्यं राक्षसं अपोथयत् अमारयत् । "पुथ हिंसायां" इति धातुः ॥ २१—२२ ॥ तत्र प्रहस्तसचिवेषु । सन्त्याजयत् संतत्याज । स्वार्थिको णिच्प्रत्ययः ॥ २३—२४ ॥ आवर्ते संवर्ते । प्रलय इव स्थिते तस्मिन् युद्धे क्षुभितस्य सागरस्य निस्स्वन इव सेनाया निस्वनः संजज्ञे ॥ २५ ॥ तेषु प्रहस्तप्रकर्षं प्रतिपादयितुं पुनराह—महतेत्यादि ॥ २६ ॥ निचिता व्याप्ता ॥ २७—२८ ॥ अपरिच्छिन्नवानरवधो वृत्त इति द्योतयितुं युद्धभूमिं नदीत्वेन वर्णयति—हतेत्यादिना ॥ उभयसेनाग्रयोर्हतवीराणामोघः समूह एव वप्रं तटं यस्यास्तां । भग्नायुधान्येव महाद्रुमाः भग्नाः तीरमहाद्रुमा यस्यास्तां । शोणितौघा एव महातोयानि कलुषजलानि यस्यास्तां । यमसागरगामिनीं युद्धभूमौ यमो जीवग्रहणाय सन्निधत्त इति प्रसिद्धिः । तद्रूपसागरगामिनीम् । यकृत्प्लीहशब्दौ हृदयस्य दक्षिणवामभागस्थमांसविशेषपरौ । अन्त्राणां शैवलत्वनिरूपणं स्तम्बमयत्वात् । भिन्नकायशिरसोर्मीनत्वनिरूपणं स्फुरितवत्त्वात् । अङ्गावयवाः करचरणाद्यङ्गानामवयवाः । अङ्गुल्य इत्यर्थः । त एव शाद्वलानि शाद्वलभूजन्यतृणानि यस्यास्तां।कङ्कः धवलवर्णः श्येनः । सारसो हंसविशेषः । मेदः रुधिरमण्डलं । आर्तानां स्तनितः शब्द इति यावत् । तदेव निम्नोन्नतपतनजनितस्वनो यस्यास्तां । यद्यपि रुधिरप्रवाहस्यापि स्वत एव घोषोस्ति तथापि रूपकत्वायैवमुक्तं । कापुरुषाः भीरवः तैः दुस्तारां । वृद्धिरार्षी । युद्धभूमिमयीमिति स्वार्थे मयट् । व्यस्तरूपकं । प्रावर्तयन्नित्यध्याहार्यं । यद्वा तेरुरिति वक्ष्यमाणमत्राप्यनुषज्यते । अत्र सावयवरूपकालंकारः ॥ २९—

॥१६॥ स० वृक्षेणकरणेन प्राणान् संत्याजयत् तत्याज । पूर्वार्धेयुयुधइतिसतारइत्युत्तरार्धेऽध्याहार्यं । संत्याजयत् अत्याजयदिति वा ॥ २३ ॥ ति० तत्कर्म क्षणादेवसचिवचतुष्टयमारणकर्म ॥ २४ ॥

[ पा० ] १ क. ख. ग. च. छ. वृक्षेणमहतातस्य. ङ. झ. ञ. ट. वृक्षेणमहतासद्यः. २ ज. प्राणांस्त्याजराक्षसः.

नदीमिव घनापाये हंससारससेविताम् ॥ राक्षसाः कपिमुख्याश्च तेरुस्तां दुस्तरां नदीम् ॥ ३२ ॥
यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ॥ ३३ ॥
ततः सृजन्तं बाणौघान्प्रहस्तं स्यन्दने स्थितम् ॥ ददर्श तरसा नीलो विनिघ्नन्तं प्लवङ्गमान् ॥ ३४ ॥
उद्धूत इव वायुः खे महदभ्रबलं बलात् ॥ समीक्ष्याभिद्रुतं युद्धे प्रहस्तो वाहिनीपतिः ॥
रथेनादित्यवर्णेन नीलमेवाभिदुद्रुवे ॥ ३५ ॥
स धनुर्धन्विनां श्रेष्ठो विकृष्य परमाहवे ॥ नीलाय व्यसृजद्बाणान्प्रहस्तो वाहिनीपतिः ॥ ३६ ॥
ते प्राप्य विशिखा नीलं विनिर्भिद्य समाहिताः ॥ महीं जग्मुर्महावेगा रुषिता इव पन्नगाः ॥३७॥
नीलः शरैरभिहतो निशितैर्ज्वलनोपमैः ॥ स तं परमदुर्धर्षमापतन्तं महाकपिः ॥
प्रहस्तं ताडयामास वृक्षमुत्पाट्य वीर्यवान् ॥ ३८ ॥
स तेनाभिहतः क्रुद्धो नदन्राक्षसपुङ्गवः ॥ ववर्ष शरवर्षाणि प्लवङ्गानां चमूपतौ ॥ ३९ ॥
तस्य बाणगणान्घोरान्राक्षसस्य महाबलः ॥ अपारयन्वारयितुं प्रत्यगृह्णान्निमीलितः ॥ ४० ॥
यथैव गोवृषो वर्षं शारदं शीघ्रमागतम् ॥ एवमेव प्रहस्तस्य शरवर्षं दुरासदम् ॥
निमीलिताक्षः सहसा नीलः सेहे सुदारुणम् ॥ ४१ ॥
रोषितः शरवर्षेण सालेन महता महान् ॥ प्रजघान हयान्नीलः प्रहस्तस्य मनोजवान् ॥ ४२ ॥
ततः स चापमुद्गृह्य प्रहस्तस्य महाबलः ॥ बभञ्ज तरसा नीलो ननाद च पुनः पुनः ॥ ४३ ॥
विधनुस्तु कृतस्तेन प्रहस्तो वाहिनीपतिः ॥ प्रगृह्य मुसलं घोरं स्यन्दनादवपुप्लुवे ॥ ४४ ॥
तावुभौ वाहिनीमुख्यौ जातवैरौ तरस्विनौ ॥ स्थितौ क्षतजदिग्धाङ्गौ प्रभिन्नाविव कुञ्जरौ ॥ ४५ ॥
उल्लिखन्तौ सुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरम् ॥ सिंहशार्दूलसदृशौ सिंहशार्दूलचेष्टितौ ॥ ४६ ॥
विक्रान्तविजयौ वीरौ समरेष्वनिवर्तिनौ ॥ काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोः समौ ॥ ४७ ॥
आजघान तदा नीलं ललाटे मुसलेन सः ॥ प्रहस्तः परमायत्तस्तस्य सुस्राव शोणितम् ॥ ४८ ॥

---

३१ ॥ उपमानमुखेनापि तत्तरणं दर्शयति—नदीमिति ॥ घनापाये वर्षान्ते । तां पूर्वत्र रूपकेण दर्शितां । केचित्तु अत्रोत्तरश्लोकस्थनदीपदवैयर्थ्यभयेन युद्धभूमिमयीं नदीं प्रवर्तयित्वेत्यध्याहरन्ति ॥ ३२ ॥ उक्तानां रक्षोवानराणामुपमामाह—यथेति ॥ पद्मरजोभिः ध्वस्तां वर्णान्तरं प्राप्तां । नलिनीं सरसीं यथा गजयूथपास्तरन्ति । तीर्त्वा रक्ततनवो भवन्तीति यावत् । तथा अरुणशरीरा उत्तेरुरित्यर्थः ॥ ३३ ॥ स्यन्दने रथे । स्थितं । बाणौघान् सृजन्तं मुञ्चन्तं । तरसा वेगेन । प्लवङ्गमान् विनिघ्नन्तं प्रहस्तं ददर्श ॥ ३४ ॥ उद्धूत इत्यादिसार्धश्लोकमेकं वाक्यं ॥ खे स्वदेशभूते । उद्धूतः उल्बणः । वायुः अभ्रबलं अभ्रजालमिव । युद्धे बलादभिद्रुतं आभिमुख्येनायान्तं नीलं समीक्ष्य रथेन नीलमेवाभिदुद्रुवे इति योजना ॥ ३५—३६ ॥ रुषिताः पन्नगा इव स्थिताः समाहिताः ऋजवः नीलं विनिर्भिद्य महीं जग्मुः विविशुरित्यर्थः ॥ ३७ ॥ नील इत्यादि सार्धश्लोकः ॥ ३८—॥ ३९ ॥ अपारयन् अशक्नुवन् ॥ ४० ॥ यथैवेत्यादिसार्धश्लोकः ॥ यथैवेत्यत्र एवकारोत्यन्तायोगव्यवच्छेदार्थकः । शारदमित्यनेन शरपातस्य क्षयित्वं व्यनक्ति ॥ ४१—४४ ॥ तावुभावित्यादिश्लोकत्रयमेकं वाक्यं ॥ प्रभिन्नौ मत्तौ । सिंहशार्दूलसदृशाविति बले साम्यं । विक्रान्तविजयौ सर्वत्र प्राप्तविजयौ । काङ्क्षमाणौ अभूतामिति शेषः ॥ ४५—४७ ॥ परमायत्तः

---

ति० अपारयन् वारयितुमशक्तस्सन् ॥ ४० ॥ ति० शारदंवर्षं गोवृषस्यशरत्कालेप्राबल्यंकालस्वभावात् । वर्षस्यलन्यथा । ततएव तेननातिक्लेशकरत्वस्यशरवर्षइतिसूचितं ॥ ४१ ॥

[ पा० ] १ घ. प्राहिणोद्बाणान्. २ ग. ङ. च. झ. ट. नदन्राक्षस. ३ ङ. झ. ट. गणानेवराक्षसस्यदुरात्मनः. ४ क. ख. ग. च. छ. ञ. महात्मनः. घ. दुरात्मनः. ५ ङ. झ. ट. शरवर्षान्दुरासदान्. ६ ङ. झ. ट. ततोरोषपरीतात्माधनुस्तस्यदुरात्मनः.

ततः शोणितदिग्धाङ्गः प्रगृह्य सुमहातरुम् ॥ प्रहस्तस्योरसि क्रुद्धो विससर्ज महाकपिः ॥ ४९ ॥
तमचिन्त्य प्रहारं स प्रगृह्य मुसलं महत् ॥ अभिदुद्राव बलिनं बलान्नीलं प्लवङ्गमम् ॥ ५० ॥
तमुग्रवेगं संरब्धमापतन्तं महाकपिः ॥ ततः संप्रेक्ष्य जग्राह महावेगो महाशिलाम् ॥ ५१ ॥
तस्य युद्धाभिकामस्य मृधे मुसलयोधिनः ॥ प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत् ॥ ५२ ॥
सा तेन कपिमुख्येन विमुक्ता महती शिला ॥ बिभेद बहुधा घोरा प्रहस्तस्य शिरस्तदा ॥ ५३ ॥
स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः ॥ पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ ५४ ॥
प्रभिन्नशिरसस्तस्य बहु सुस्राव शोणितम् ॥ शरीरादपि सुस्राव गिरेः प्रस्रवणं यथा ॥ ५५ ॥
हते प्रहस्ते नीलेन तदकम्प्यं महद्बलम् ॥ रक्षसामप्रहृष्टानां लङ्कामभिजगाम ह ॥ ५६ ॥
न शेकुः समरे स्थातुं निहते वाहिनीपतौ ॥ सेतुबन्धं समासाद्य विकीर्णं सलिलं यथा ॥ ५७ ॥
हते तस्मिंश्चमूमुख्ये राक्षसास्ते निरुद्यमाः ॥ रक्षःपतिगृहं गत्वा ध्यानमूकत्वमास्थिताः ॥
प्राप्ताः शोकार्णवं तीव्रं निःसंज्ञा इव तेऽभवन् ॥ ५८ ॥

ततस्तु नीलो विजयी महाबलः प्रशस्यमानः स्वकृतेन कर्मणा ॥
समेत्य रामेण सलक्ष्मणेन च प्रहृष्टरूपस्तु बभूव यूथपः ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## प्रक्षिप्तसर्गः ॥ १ ॥

प्रहस्तवधश्रवणविषण्णेनरावणेनस्वस्यैवरणायनिर्याणनिर्धारणम् ॥ १ ॥ तच्छ्रावणेनमन्दोदर्या सभामेत्यरावणंप्रतिश्रीरामप्रभावप्रशंसनपूर्वकं तेनसहसंधिकरणप्रार्थना ॥ २ ॥

[ प्रहस्तस्य वधं श्रुत्वा रावणो भ्रान्तमानसः ॥ राक्षसानादिदेशाथ राक्षसेन्द्रो महाबलः ॥ १ ॥
कार्या शत्रुषु नावज्ञा यैरिन्द्रबलसूदनः ॥ सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ २ ॥
सोहं रिपुविनाशाय विजयस्याभिवृद्धये ॥ स्वयमेवाभियास्यामि रणशीर्षमभित्वरन् ॥ ३ ॥
अद्य तद्वानरानीकं सरामं सहलक्ष्मणम् ॥ प्रधक्ष्याम्येव बाणौघैः शुष्केन्धनमिवानलः ॥ ४ ॥
अद्य संतर्पयिष्यामि पृथिवीं कपिशोणितैः ॥ रामं च लक्ष्मणं चैव प्रेषयिष्ये यमक्षयम् ॥ ५ ॥

---

परमोद्युक्तः ॥ ४८–४९ ॥ अचिन्त्य अचिन्तयित्वा ॥ ५०–५४ ॥ प्रभिन्नशिरसः प्रभिन्नाच्छिरसः । शरीरादपीति समुच्चयः । प्रस्रवणं निर्झरः ॥५५–५६॥ विकीर्णं भग्नं ॥ ५७ ॥ हत इत्यादि सार्धश्लोकः ॥ ध्यानमूकत्वं ध्यानेन वाग्व्यापारशून्यत्वं । तीव्रं घोरं । शोकार्णवं प्राप्ताः शोकार्णवे मग्ना इत्यर्थः ॥ ५८ ॥ स्वकृतेन कर्मणा रिपुवधेन प्रहृष्टरूपः अतिशयेन प्रहृष्टः । प्रशंसायां रूपप् । पञ्चम्यां प्रहस्तवधः ॥५९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

ति० ध्यानमूकत्वं ध्यानेनदेवताध्यानेनयेमूकाःमौनिनस्तेषांभावस्तत्त्वं । भयदुःखमोहैःकिमपिवक्तुंनाशक्नुवन्नित्यर्थः । तदेवाह—प्राप्ताइति । स० ध्यानमूकत्वं परावृत्त्यागमनेरावणशिक्षा । तत्रावस्थानेमरणमितिकिंकर्तव्यमितिचिन्तयामूकत्वंप्राप्ताः ॥ ५८ ॥ इत्यष्टपञ्चाशःसर्गः ॥ ५८ ॥

[ पा० ] १ क. ख. ग. च. बलीनीलं. २ ग. तूर्णंनिपातयत्. ३ क.—च. ज. ट. विभिन्नशिरसः. ४ क. ख. ग. ङ.—ट. मागताः. ५ अत्राधिकत्वेनमुद्रितंसर्गद्वयं ज. पुस्तकएवदृश्यते.

एवमुक्त्वा महातेजा रावणो लोकरावणः ॥ आगच्छत्सहसा क्रुद्धः सर्वसैन्येन संवृतः ॥ ६ ॥
संग्राममभिकाङ्क्षन्तं रावणं श्रुत्य भामिनी ॥ तदोत्थाय ययौ देवी नाम्ना मन्दोदरीति सा ॥ ७ ॥
माल्यवन्तं करे धृत्वा यूपाक्षसहिता तु सा ॥ मन्त्रिभिर्मन्त्रतत्त्वज्ञैस्तथान्यैर्मन्त्रिसत्तमैः ॥ ८ ॥
राक्षसैरावृता सर्वैर्वेत्रजर्झरपाणिभिः ॥ योषिद्भिश्चैव वृद्धाभिस्तथा कन्याभिरावृता ॥ ९ ॥
आयुधव्यग्रहस्तैश्च राक्षसैश्च समन्ततः ॥ सभां तु प्रस्थिता देवी यत्रास्ते राक्षसाधिपः ॥ १० ॥
छत्रेण ध्रियमाणेन अतिकायपुरस्सरा ॥ चामरैर्वररामाभिर्वीज्यमाना स्वलङ्कृता ॥ ११ ॥
शतार्धमार्गं विपुलं ध्वजमालोपशोभितम् ॥ उत्सारणं प्रकुर्वद्भिर्वेत्रजर्झरपाणिभिः ॥ १२ ॥
प्रविवेश सभां दिव्यां प्रभया द्योतमानया ॥ द्रष्टुं वै रावणं सा तु मयस्य दुहिता तु सा ॥ १३ ॥
प्राप्तां देवीं तदा राजा प्रियां मन्दोदरीं तदा ॥ दृष्ट्वा स संभ्रमात्तूर्णं परिष्वज्य दशाननः ॥ १४ ॥
मन्त्रिणां तु ततस्तेषामासनान्यादिदेश ह ॥ सौवर्णसुविचित्राणि सोपधानानि सर्वशः ॥ १५ ॥
तष्वासनोपविष्टेषु सुखासीनेषु मन्त्रिषु ॥ पर्यङ्के चोपविष्टा तु देवी मन्दोदरी सुखम् ॥ १६ ॥
अतिकायो महाबाहुः पितरं चाभिवाद्य तम् ॥ मातरं चाभिवाद्याथ तदाऽऽसनगतोऽभवत् ॥ १७ ॥
प्रहस्तवधसंतप्तो महाकायवधार्दितः ॥ लङ्कायाश्चाभिमर्देन कषायीकृतलोचनः ॥ १८ ॥
संग्राममभिकाङ्क्षन्स आकुलेनान्तरात्मना ॥ अब्रवीद्वचनं सोथ महागंभीरनिस्स्वनम् ॥ १९ ॥
किमागमनकार्यं ते देवि शीघ्रं तदुच्यताम् ॥ तूर्णं मम समीपं वै किमर्थं त्वमिहाऽऽगता ॥
मन्त्रिभिः सहिता चैव ब्रूहि सर्वं यथातथम् ॥ २० ॥
एवमुक्ते तु वचने देवी रावणमब्रवीत् ॥ विज्ञाप्यं शृणु राजेन्द्र याचे यत्त्वां कृताञ्जलिः ॥ २१ ॥
न हि रोषश्च कर्तव्यो वदन्त्या मम मानद ॥ शृणुष्वैकमना मह्यं वचनं वाक्यकोविद ॥ २२ ॥
श्रुता मे नगरी रुद्धा श्रुता मे राक्षसा हताः ॥ धूम्राक्षप्रमुखा वीराः प्रहस्तेन सहैव तु ॥ २३ ॥
भवन्तं युद्धकामं च गमने कृतनिश्चयम् ॥ इति संचिन्त्य राजेन्द्र ममागमनकारणम् ॥ २४ ॥
न युक्तं प्रमुखे स्थातुं युद्धे तस्य महात्मनः ॥ रामस्य च महेन्द्रेण यस्य भार्या त्वया हृता ॥
लक्ष्मणस्य च राजेन्द्र यस्य नास्ति समो युधि ॥ २५ ॥
न च मानुषमात्रोसौ रामो दशरथात्मजः ॥ एकेन येन वै पूर्वं बहवो राक्षसा हताः ॥
चतुर्दशसहस्राणि जनस्थाननिवासिनाम् ॥ २६ ॥
खरश्च निहतः सङ्ख्ये दूषणश्च महाबलः ॥ त्रिशिराश्च महाबाहुर्हतो राक्षसपुङ्गवः ॥ २७ ॥
कबन्धश्च महातेजा विराधो दण्डके तथा ॥ शरेणैकेन वाली च वानरेन्द्रो निपातितः ॥
शङ्के चैवं महाराज मारीचस्य वधादहम् ॥ २८ ॥
पितुश्च वचनाद्रामो दण्डकारण्यमाश्रितः ॥ ब्रह्मचर्यव्रते युक्तः सह भ्रात्रा वनेचरः ॥ २९ ॥
तस्य भार्या जनस्थानात्त्वयाऽऽनीताऽविजानता ॥ अकारणं कृतं तत्ते दोषाय समुपस्थितम् ॥ ३० ॥
पतिव्रतावरोधस्तु दोषमावहते सदा ॥ न मह्यं रोचते बुद्ध्या एतेषां मन्त्रिणां तथा ॥ ३१ ॥
रामभार्या सती सा तु रामाय प्रतिदीयताम् ॥ विभीषणेन चैवोक्तं पूर्वमेव महात्मना ॥ ३२ ॥
स गतस्तत्र वै राजन्नसत्कार्यं करिष्यति ॥ वस्त्राणि चैव रत्नानि प्रेषयाद्य रघूत्तमे ॥ ३३ ॥
सीतां चैव महाराज सुवर्णं वाहनानि च ॥ मणिमुक्ताप्रवालं च तथा रजतमेव च ॥ ३४ ॥
माल्यवान्गृह्य संयातु यूपाक्षश्च तथैवच ॥ अतिकायस्तथा चायं कार्याकार्यविशारदः ॥ ३५ ॥

विभीषणो गतः पूर्वमेभिस्तत्र गतैर्ध्रुवम् ॥ संधिं करिष्यति व्यक्तं राघवं प्रणिपत्य ह ॥
संमान्य मैथिलीं चास्मै प्रदास्यति विभीषणः ॥ ३६ ॥
माल्यवांश्च महामायो राक्षसानां हिते रतः ॥ राघवं याच्य शिरसा संधिं कुर्वन्तु रावण ॥ ३७ ॥
सान्त्वं भेदं तथा दानं राज्ञामेतत्त्रयं शुभम् ॥ अशुभं तु स वै युद्धं तस्माद्युद्धं विसर्जयेत् ॥
त्रिभिर्नयैर्जितं मन्ये सहितं विक्रमेण तु ॥ ३८ ॥
स्वजनस्य वधं कृत्वा पुत्रभ्रातृवधं तथा ॥ संशयं चात्मनः कृत्वा किं जयेन करिष्यसि ॥ ३९ ॥
चञ्चला युद्धसिद्धिस्तु हन्यते तेजसापि वा ॥ तस्माद्युद्धं न रोचेत संधिं कुरु दशानन ॥ ४० ॥
प्रणिपत्य महाबाहो राघवं प्रतिनन्दनम् ॥ दीयतामद्य सा सीता संधिस्ते तेन रोचताम् ॥ ४१ ॥
सांप्रतं संशयो राजन्पुरस्य सह बान्धवैः ॥ आत्मनो राक्षसश्रेष्ठ वर्तते नात्र संशयः ॥ ४२ ॥
तस्माद्राजन्ब्रवीम्येवं पुरस्याथ कुलस्य च ॥ रक्षणीयस्तवात्मा च सर्वमात्मन्यधिष्ठितम् ॥ ४३ ॥
क्षमाशीलस्तथा रामः सत्यवादी च राघवः ॥ धर्मनित्यो महाराजः शरणागतवत्सलः ॥ ४४ ॥
कुरु तेन[1]ादितः सन्धिं रामे दशरथात्मजे ॥ लक्ष्मणश्च महाबाहो नित्यं भ्रातृहिते रतः ॥ ४५ ॥
प्रहस्तेन कृतं किं नु युध्यता रक्षसा बले ॥ धूम्राक्षेण च राजेन्द्रे नित्यं समरगृद्धिना ॥ ४६ ॥
महाकायेन च तथा महामायेन रक्षसा ॥ अकंपनेन वीरेण युध्यता राक्षसेश्वर ॥ ४७ ॥
तथान्यैर्युध्यमानैश्च किं कृतं राक्षसे बले ॥ न हतो यूथपः कश्चिद्बलोद्देशोपि रावण ॥ ४८ ॥
तेषां वीर्याद्बिभेतीन्द्रः कुबेरवरुणावपि ॥ यमो वैवस्वतो येषां तथाऽन्ये देवदानवाः ॥ ४९ ॥
येषां नास्ति समो वीर्ये ते हता वानरैर्युधि ॥ न चापि वानराः शक्या हन्तुं पादपयोधिनः ॥५०॥
रक्ष्यमाणास्तु रामेण सुग्रीवेण च पालिताः ॥ तत्र ते रोचतां सन्धिः सह रामेण रावण ॥ ५१ ॥
योग्यश्च राघवो मित्रं कार्तवीर्यार्जुनो यथा ॥ मा कृथा मोघमानित्वं मा कृथाः कुलसंक्षयम् ॥५२॥
मा कृथाः पुरनाशं तु मा कृथाः पुत्रसंक्षयम् ॥ हितं सर्वं ब्रवीम्येषां कुरुष्व वचनं मम ॥ ५३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे प्रक्षिप्तः सर्गः प्रथमः ॥ १ ॥

## प्रक्षिप्तसर्गः ॥ २ ॥

रावणेनमन्दोदरींप्रति स्वपराक्रमप्रशंसनपूर्वकं रामादिवधप्रतिज्ञानेनसपरिष्वङ्गंतस्याअन्तःपुरंप्रतिप्रेषणम् ॥ १ ॥ तथा-भटान्प्रतियुद्धायरथादिसज्जीकरणचोदना ॥ २ ॥

तस्यास्तद्वचनं श्रुत्वा प्रियाया राक्षसेश्वरः ॥ उष्णं दीर्घं विनिश्श्वस्य निरीक्ष्य च सभासदः ॥
हस्ते मन्दोदरीं गृह्य वाक्यमेतदुवाच ह ॥ १ ॥
त्वया न युद्धकाङ्क्षिण्या वचो यद्बहु भाषितम् ॥ न तन्मनसि मे देवि प्रविवेशाप्रियं प्रिये ॥ २ ॥
देवाञ्जित्वा रणे पूर्वं ससुरासुरमानुषान् ॥ प्रणमे मानुषं रामं वानरान्यः समाश्रितः ॥ ३ ॥
प्रणम्य रामं काकुत्स्थं किं वक्ष्ये सर्वदेवताः ॥ कीदृशं वा भवेन्मह्यं जीवितं हततेजसः ॥ ४ ॥
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सुदारुणम् ॥ राक्षसान्मारयित्वा तु लङ्कां संपीड्य सर्वतः ॥
राघवं प्रणमे कस्माद्धीनवीर्य इवापरः ॥ ५ ॥
राघवं प्रणिपत्याहं कथं जीवितुमुत्सहे ॥ एष मे सहजो भावो नित्यं मनसि वर्तते ॥ ६ ॥

१ तेन कारणेन । आदितः प्रथमं रामेसंधिंकुर्वित्यन्वयः ॥ ४५ ॥ प्रणमे कथमितिशेषः ॥ ३ ॥

अविभज्य तदा देवि न नमेयं तु कस्यचित् ॥ त्रैलोक्ये स पुमान्नास्ति यो मया न जितो रणे ॥७॥
देवतानां बलं हत्वा देवराजो मया जितः ॥ राघवं प्रणमे कस्मान्मूर्ध्नि स्थित्वा च देहिनाम् ॥८॥
मा कुथा हृदि संतापं शमयिष्ये शुचिस्मिते ॥ हनिष्ये राघवं चैव लक्ष्मणं वानरांश्च तान् ॥ ९ ॥
सुग्रीवं च हनिष्यामि हनूमन्तं च वानरम् ॥ न तु संधिं करिष्यामि राघवेण सहैव तु ॥ १० ॥
वैदेहीं नार्पयिष्यामि राघवस्य भयादहम् ॥ सांप्रतं न च संधिं तु करिष्यति स राघवः ॥ ११ ॥
सागरं सुमहद्बध्वा लङ्कामेत्य सकाननाम् ॥ राक्षसप्रवरान्हत्वा संधिं कुर्यात्कथं प्रिये ॥ १२ ॥
न त्वहं संधिमिच्छामि कदाचिदपि भामिनि ॥ गच्छ त्वं भव विस्रब्धा सर्वमेतत्सुखोदयम् ॥१३॥
मा कृथा हृदि संतापमहं यास्ये रणाजिरम् ॥ अद्य सर्वान्वधिष्यामि शत्रून्समरमूर्धनि ॥ १४ ॥
पुत्राश्च ते महावीर्या मेघनादपुरस्सराः ॥ न तेषां मुच्यते कश्चिदपि मृत्युर्वरानने ॥ १५ ॥
अन्तःपुराय गच्छ त्वं सुखिनी भव सस्नुषा ॥ एवमुक्त्वा परिष्वज्य भार्यां प्रियमना इव ॥ १६ ॥
प्रविवेश तदा देवी स्वयं च भवनं शुभम् ॥ चिन्तयामास तं घोरं विग्रहं समुपस्थितम् ॥ १७ ॥
रावणस्तु तदा वाक्यं राक्षसानिदमब्रवीत् ॥ १८ ॥
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः ॥ अद्य क्रोधं विमोक्ष्यामि गूढं सुहृदयेशयम् ॥ १९ ॥
[२] देवाहवे यथा पूर्वं रुद्रेण निहतोऽन्धकः ॥ चिरकालेप्सितं ह्येतद्युद्धं मे राघवेण ह ॥ २० ॥
अद्य तूणीशया बाणा विमुक्ता इव पन्नगाः ॥ रामं समभिधावन्तु विषाग्निप्रतिमाः शिताः ॥ २१ ॥
सुतेजसै रुक्मपुङ्खैर्जलधौतैर्हिरण्मयैः ॥ शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ २२ ॥
वानरान्सुबहून्गृह्य राघवात्संप्रचोदितान् ॥ यमं नयामि विक्रान्तान्मम पार्श्वमुपागतान् ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे प्रक्षिप्तः सर्गो द्वितीयः ॥ २ ॥

---

## एकोनषष्टितमः सर्गः ॥ ५९ ॥

प्रहस्तनिधनश्रवणविहस्तेनरावणेन स्वयमेव महत्यासेनयासह रणायनिर्याणं ॥ १ ॥ विभीषणेनरामंप्रतिरावणानुयायिनांप्रधानरक्षसां तदीयचिह्नप्रदर्शनपूर्वकंतत्तन्नामनिर्देशः ॥ २ ॥ रावणेन स्वानुयायिनां नगररक्षणनियोजनेनविसर्जनपूर्वकं शरनिकरैः सुग्रीवादिविदारणं ॥ ३ ॥ रामेसमरोद्योगिनिसति लक्ष्मणेन प्रार्थनयातदनुज्ञासंपादनेन रावणाभियानं ॥ ४ ॥ अत्रान्तरे हनुमता रावणनिरोधनं ॥ ५ ॥ रावणकरतलाभिहतेनहनुमता स्वकरतलेन तदुरसिताडनं ॥ ६ ॥ तेन सश्लाघं मुष्ट्या हनुमत्ताडनं ॥ ७ ॥ तेन किञ्चिद्विह्वलेसतिहनुमति रावणेन नीलंप्रत्यभियानं ॥ ८ ॥ नीले रावणशिरश्शरासनादिषु लाघवेनचपलतरंसंचरमाणे रावणेचालब्धलक्ष्ये हसत्सुकपिषुरुष्टेनतेनाग्नेयास्त्रेण नीलनिपातनपूर्वकं लक्ष्मणाभिगमनं ॥ ९ ॥ लक्ष्मणेनचापच्छेदनपूर्वकंशरताडितेनरावणेनब्रह्मदत्तयाशक्त्यालक्ष्मणवक्षस्ताडनं ॥ १० ॥ रावणेपतितमूर्छितलक्ष्मणोद्धरणेप्रयतनेनाप्यशक्नुवतिलक्ष्मणशरीराकर्षणरुष्टेनहनुमतारावणोरसिमुष्टिघातनं ॥ ११ ॥ तेनसरुधिरोद्गारंमूर्छितेरावणेहनुमतालक्ष्मणस्य रामसमीपप्रापणं ॥ १२ ॥ लब्धसंज्ञेरावणेऽभ्यागच्छतिहनुमत्प्रार्थनयातमारूढेनरामेणतदभियानं ॥ १३ ॥ रामेणशरनिकरैः रावणस्यविरथीकरणपूर्वकंविह्वलताप्रापणेनतत्किरीटकूटच्छेदनं ॥ १४ ॥ रामेणरथादिसामग्रीसाहित्येनपुरागमनचोदनपूर्वकंगृहगमनायाभ्यनुज्ञातेनरावणेनलज्जयालङ्कागमनं ॥ १५ ॥

तस्मिन्हते राक्षससैन्यपाले प्लवङ्गमानामृषभेण युद्धे ॥
भीमायुधं सागरतुल्यवेगं विदुद्रुवे[1] राक्षसराजसैन्यम् ॥ १ ॥

---

अथ रावणमुकुटभङ्ग एकोनषष्टितमे—तस्मिन्हत इत्यादि ॥ १ ॥ पावकसूनुशस्तं पावकसूनुना नीलेन

---

टि० १ परिष्वज्य विससर्जेतिशेषः ॥ १६ ॥ २ तथारामोमयाद्यहन्यतइतिशेषः ॥ २० ॥
[ पा० ] १ ख. ग. च. ञ. प्रदुद्रुवे.

गत्वाऽथ रक्षोधिपतेः शशंसुः सेनापतिं पावकसूनुशस्तम् ॥
तच्चापि तेषां वचनं निशम्य रक्षोधिपः क्रोधवशं जगाम ॥ २ ॥
[1]संख्ये प्रहस्तं निहतं निशम्य शोकार्दितः क्रोधपरीतचेताः ॥
उवाच तान्नैर्ऋतयोधमुख्यानिन्द्रो यथा चामरयोधमुख्यान् [2] ॥ ३ ॥
नावज्ञा रिपवे कार्या यैरिन्द्रबलसूदनः [3] ॥ सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः [4] ॥ ४ ॥
सोहं रिपुविनाशाय विजयायाविचारयन् ॥ स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ॥ ५ ॥
अद्य तद्वानरानीकं रामं च सहलक्ष्मणम् ॥ निर्दहिष्यामि बाणौघैर्वनं दीप्तैरिवाग्निभिः ॥ ६ ॥
[ [5]अद्य संतर्पयिष्यामि पृथिवीं कपिशोणितैः ॥ रामं च लक्ष्मणं चैव प्रेषयिष्ये यमक्षयम् ॥ ७ ॥ ]
स एवमुक्त्वा ज्वलनप्रकाशं रथं तुरङ्गोत्तमराजयुक्तम् ॥
प्रकाशमानं वपुषा ज्वलन्तं समारुरोहामरराजशत्रुः ॥ ८ ॥
स शङ्खभेरीपणवप्रणादैरास्फोटितक्ष्वेलितसिंहनादैः ॥
पुण्यैः स्तवैश्चाप्यभिपूज्यमानस्तदा ययौ राक्षसराजमुख्यः ॥ ९ ॥
स शैलजीमूतनिकाशरूपैर्मांसादनैः पावकदीप्तनेत्रैः ॥
बभौ वृतो राक्षसराजमुख्यो भूतैर्वृतो रुद्र इवासुरेशः [6] ॥ १० ॥
ततो नगर्याः सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् ॥
महार्णवाभ्रस्तनितं ददर्श समुद्यतं पादपशैलहस्तम् ॥ ११ ॥
तद्राक्षसानीकमतिप्रचण्डमालोक्य रामो भुजगेन्द्रबाहुः ॥
विभीषणं शस्त्रभृतां वरिष्ठमुवाच सेनानुगतः पृथुश्रीः ॥ १२ ॥

---

शस्तं हतं । तच्चापीत्यनेन रावणेन स्वप्नेपि न तच्चिन्तितमिति सूच्यते । यद्वा शत्रोरुपचये समाश्रयः कार्यइतिनीतिः । तथापि रावणः कालचोदिततया समाश्रयणं विहाय अस्थाने क्रोधवशं गत इत्यपिशब्देन सूच्यते ॥ २—३ ॥ रिपवे रामाय । नावज्ञा कार्या उपेक्षा न कर्तव्या । क्रियाग्रहणं कर्तव्यमिति चतुर्थी । यैश्च वानरैर्हेतुभिः।मम सैन्यपालः प्रहस्तः। सानुयात्रः सानुचरः । सकुञ्जरश्च सूदितः । तेभ्योपि नावज्ञाकार्येत्यर्थः । केचित्तु रिपवे रिपुभ्यः । अवज्ञा एते कपयः किं करिष्यन्तीत्येवंरूपा । न कार्या । कुत इत्यत्राह—यैरित्यादीत्याहुः ॥ ४ ॥ अद्भुतं दुर्बलैः प्रबलविनाशनादाश्चर्यं ॥ ५—७ ॥ तुरङ्गोत्तमराजैः तुरङ्गश्रेष्ठतमैः युक्तं । प्रकाशमानं अलङ्कारैर्भासमानं । वपुषा ज्वलन्तं स्वरूपत एव प्रकाशमानं ॥८॥ आस्फोटितक्ष्वेलितसिंहनादैः आस्फोटितं भुजास्फालनं । क्ष्वेलितशब्दःशब्दमात्रपरः । आस्फोटितजनितशब्दैः सिंहनादैश्चेत्यर्थः । पुण्यैः चारुभिः ॥९॥ स इति । काठिन्यसिद्धये शैलौपम्यं । संकोचविकासार्हत्वसिद्ध्यै मेघौपम्यं । रूपं शरीरं । रुद्रस्यासुरेश्वरत्वं तामसप्रकृतित्वात् । तदुक्तं मैत्रायणीयानामुपनिषदि—" यो ह वा अस्य तामसोंशः सोसौ रुद्रः " इति ॥ १० ॥ महार्णवाभ्रस्तनितं महार्णवाभ्रयोरिव स्तनितं घोषो यस्येति तथा ॥ ११ ॥ अतिप्रचण्डं अत्यन्तकोपनं । भुजगेन्द्रबाहुः युद्धौत्सुक्येन प्रवर्धमानबाहुरित्यर्थः । पृथुश्रीः युद्धहर्षेण संजातलक्ष्मीकः । सेनानुगतः स्वामिसंरक्षणाय सर्वतः समवेतसेनापरिवृतः । शस्त्रभृतां वरिष्ठं वीरभटतारतम्यज्ञमिति

---

स० अनु यात्रा रणाजिरगमनंयस्यतदनुयात्रं सैन्यं । तेनसहितः सानुयात्रः ॥ ४ ॥ ती० वस्तुतस्तु—सहलक्ष्मणंरामं विनेतिशेषः । बाणौघैः वानरानीकंनिर्दहिष्यामीतिसंबन्धः ॥ ६ ॥ शि० रावणोभूतैर्वृतः अमरेशोरुद्रइवबभौ ॥ १० ॥

[ पा० ] १ ज. सभ्रातरंनीलहतंनिशम्यशोकार्दितःक्रोधवशाभिभूतः. २ झ. निर्जरयूथमुख्यान्. ३ ङ. झ. ट. रिन्द्रबलसादनः. ४ क. सवाहनः. ५ अयंश्लोकः ज. पुस्तकेदृश्यते. ६ झ. ञ. ट. इवामरेशः.

नानापताकाध्वजशस्त्रजुष्टं प्रासासिशूलायुधशस्त्रजुष्टम् ॥
सैन्यं गजेन्द्रोपमनागजुष्टं कस्येदमक्षोभ्यमभीरुजुष्टम् ॥ १३ ॥
ततस्तु रामस्य निशम्य वाक्यं विभीषणः शक्रसमानवीर्यः ॥
शशंस रामस्य बलप्रवेकं महात्मनां राक्षसपुङ्गवानाम् ॥ १४ ॥
योसौ गजस्कन्धगतो महात्मा नवोदितार्कोपमताम्रवक्त्रः ॥
अकम्पयन्नागशिरोभ्युपैति ह्यकम्पनं त्वेनमवेहि राजन् ॥ १५ ॥
योसौ रथस्थो मृगराजकेतुर्धून्वन्धनुः शक्रधनुःप्रकाशम् ॥
करीव भात्युग्रविवृत्तदंष्ट्रः स इन्द्रजिन्नाम वरप्रधानः ॥ १६ ॥
यश्चैष विन्ध्यास्तमहेन्द्रकल्पो धन्वी रथस्थोतिरथोतिवीरः ॥
विस्फारयंश्चापमतुल्यमानं नाम्नातिकायोतिविवृद्धकायः ॥ १७ ॥
योसौ नवार्कोदितताम्रचक्षुरारुह्य घण्टानिनदप्रणादम् ॥
गजं खरं गर्जति वै महात्मा महोदरो नाम स एष वीरः ॥ १८ ॥
योसौ हयं काञ्चनचित्रभाण्डमारुह्य सन्ध्याभ्रगिरिप्रकाशम् ॥
प्रासं समुद्यम्य मरीचिनद्धं पिशाच एषोशनितुल्यवेगः ॥ १९ ॥
यश्चैष शूलं निशितं प्रगृह्य विद्युत्प्रभं किंकरवज्रवेगम् ॥
वृषेन्द्रमास्थाय गिरिप्रकाशमायाति योसौ त्रिशिरा यशस्वी ॥ २० ॥

भावः ॥ १२ ॥ नानेति । पताकाध्वजयोर्मात्रया भेदः । प्रथमं शस्त्रशब्दउपात्तः प्रासादिभिन्नपरः । आयुधं धनुः । इन्द्रायुधमित्यादौ तथा प्रयोगात् । प्रासासिशूलायुधरूपैः शस्त्रैर्जुष्टमित्यर्थः । वज्रजुष्टमिति पाठान्तरं ॥ १३ ॥ शक्रसमानवीर्य इत्यनेन वक्ष्यमाणं न भीतिमूलमिति द्योत्यते । बलप्रवेकं बलप्रवरं । "प्रवेकानुत्तमोत्तमाः" इत्यमरः । महात्मनां महाधैर्याणां ॥ १४ ॥ महात्मा महाकायः । नवोदितार्कोपमं ताम्रवक्त्रं यस्य स तथा । बालसूर्यमुखरागतुल्योस्य मुखराग इत्यर्थः । योसौ गजस्कन्धगतो दृश्यते स गजस्कन्धगतः स्वशरीरभारान्नागशिरः कम्पयन्नुपैति । एनमकम्पनं रावणपुत्रमवेहि ॥ १५ ॥ मृगराजकेतुः सिंहध्वजः । धनुः धून्वन्नित्यनेन भुजबलाधिक्यमुच्यते । करीवेत्यनेन कायबलं । करितुल्यत्वे हेतुरुग्रविवृत्तदंष्ट्र इति । वरप्रधानः ब्रह्मदत्तान्तर्धानवरप्रधानः । अनेन वरबलमुक्तं ॥ १६ ॥ विन्ध्यादित्रयौपम्येन उन्नतत्वपरतेजोभिभावकत्वनिश्चलत्वान्युच्यन्ते । अतिरथः सहस्राश्वयुक्तत्वेनातिशयितरथः । अतिवीरः मायाबलाभावेपीन्द्रजितोप्यतिशयितवीर्यः । अतुल्यमानं अतिशयितपरिमाणं । चापं । विस्फारयन् आकर्षन्नित्यर्थः । अत्रासावित्यध्याहार्यं ॥ १७ ॥ नवार्कोदितताम्रचक्षुः नवोदितार्कताम्रचक्षुः । घण्टानिनदप्रणादं घण्टानिनदेन प्रकृष्टो नादः स्वनो यस्य तं । खरमिति क्रियाविशेषणं ॥ १८ ॥ काञ्चनचित्रभाण्डं काञ्चनमयनानाविधाश्वाभरणं । "स्याद्भाण्डमश्वाभरणे" इत्यमरः । अतएव सन्ध्याभ्रगिरिप्रकाशं सन्ध्याभ्रयुक्तगिरिप्रकाशं हयमारुह्य । मरीचिनद्धं किरणैर्बद्धं । प्रासमुद्यम्य गर्जतीति पूर्वश्लोकादनुषज्यते । एष पिशाचः पिशाचनामकः ॥ १९ ॥ किङ्करो वज्रवेगो यस्य तत् किङ्करवज्रवेगं वज्रवेगादप्यधिकवेगमित्यर्थः । वृषेन्द्रं वृषभेन्द्रं । योसौ प्रसिद्धोसावित्यर्थः । आयाति सोसौ

रामानु० नानापताकाध्वजशस्त्रजुष्टमितिपाठः । शस्त्रशब्देनपठितव्यतिरिक्तान्यायुधान्युच्यन्ते ॥ १३ ॥ ति० अयमकंपनः

[ पा० ] १ घ. शस्त्रभृतांवरिष्ठः. २ क. ख. च. ञ. रामाय. ३ क. च. ञ. ताम्रचक्षुः. ४ ङ. झ. ञ. ट. सकंपयन्. ५ ङ. झ. ट. गिरिप्रकाशः. ६ क. ख. घ.—ट. शशिप्रकाशं.

असौ च जीमूतनिकाशरूपः कुम्भः पृथुव्यूढसुजातवक्षाः ॥
समाहितः पन्नगराजकेतुर्विस्फारयन्भाति धनुर्विधून्वन् ॥ २१ ॥
यश्चैष जाम्बूनदवज्रजुष्टं दीप्तं सधूमं परिघं प्रगृह्य ॥
आयाति रक्षोबलकेतुभूतस्त्वसौ निकुम्भोऽद्भुतघोरकर्मा ॥ २२ ॥
यश्चैष चापासिशरौघजुष्टं पताकिनं पावकदीप्तरूपम् ॥
रथं समास्थाय विभात्युदग्रो नरान्तकोऽसौ नगशृङ्गयोधी ॥ २३ ॥
यश्चैष नानाविधघोररूपैर्व्याघ्रोष्ट्रनागेन्द्रमृगाश्ववक्त्रैः ॥
भूतैर्वृतो भाति विवृत्तनेत्रैः सोऽसौ सुराणामपि दर्पहन्ता ॥ २४ ॥
यत्रैतदिन्दुप्रतिमं विभाति च्छत्रं सितं सूक्ष्मशलाकमग्र्यम् ॥
अत्रैष रक्षोधिपतिर्महात्मा भूतैर्वृतो रुद्र इवावभाति ॥ २५ ॥
असौ किरीटी चलकुण्डलास्यो नगेन्द्रविन्ध्योपमभीमकायः ॥
महेन्द्रवैवस्वतदर्पहन्ता रक्षोधिपः सूर्य इवावभाति ॥ २६ ॥

प्रत्युवाच ततो रामो विभीषणमरिन्दमम् ॥ अहो दीप्तो महातेजा रावणो राक्षसेश्वरः ॥ २७ ॥
आदित्य इव दुष्प्रेक्षो रश्मिभिर्भाति रावणः ॥ सुव्यक्तं लक्षये ह्यस्य रूपं तेजःसमावृतम् ॥ २८ ॥
देवदानववीराणां वपुर्नैवंविधं भवेत् ॥ यादृशं राक्षसेन्द्रस्य वपुरेतत्प्रकाशते ॥ २९ ॥
सर्वे पर्वतसंकाशाः सर्वे पर्वतयोधिनः ॥ सर्वे दीप्तायुधधरा योधाश्चास्य महौजसः ॥ ३० ॥
भाति राक्षसराजोऽसौ प्रदीप्तैर्भीमविक्रमैः ॥ भूतैः परिवृतस्तीक्ष्णैर्देहवद्भिरिवान्तकः ॥ ३१ ॥
दिष्ट्याऽयमद्य पापात्मा मम दृष्टिपथं गतः ॥ अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम् ॥ ३२ ॥
एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान् ॥ लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ॥ ३३ ॥

---

त्रिशिरा इत्यपि पठन्ति ॥ २० ॥ पृथुव्यूढसुजातवक्षाः पृथु पीनं व्यूढं विशालं सुजातं सुन्दरं च वक्षो यस्य स तथोक्तः । समाहितः सन्नद्धः । धनुर्विस्फारयन् ज्यामवलम्ब्य कर्षन् । पुनर्लीलया विधून्वन् असौ कुम्भो भाति । अत्र यच्छब्दाप्रयोगः सन्निहितत्वादिति भाव्यं ॥ २१ ॥ जाम्बूनदवज्राभ्यामन्योन्यमिलिताभ्यां जुष्टं अतएव दीप्तं ज्वालायुक्तं । सधूमं सधूममिव स्थितं । अभेदनिर्देशः । सर्वथा सादृश्यप्रतिपत्तये । रक्षोबलकेतुभूतः रक्षोबलप्रधानभूतइत्यर्थः ॥ २२ ॥ उदग्रः उन्नतः । नगशृङ्गैः साधनैः युध्यत इति नगशृङ्गयोधी । प्रतियोद्धभावात् भुजकण्डूनिवृत्त्यर्थं नगैः सह युध्यत इति वार्थः ॥ २३ ॥ अथ त्रिभिः रावणं दर्शयति—यश्चेति ॥ विवृत्तनेत्रैः घूर्णितनेत्रैः ॥ २४—२५ ॥ नगेन्द्रः हिमवान् ॥ २६ ॥ दीप्तः कान्तिमान् । महातेजाः महाप्रतापः ॥ २७ ॥ आदित्य इव रश्मिभिः दुष्प्रेक्षः प्रेक्षितुमशक्यः । अनयोरर्थयोर्भिन्नवाक्यत्वान्न पुनरुक्तिशङ्का ॥ २८ ॥ देवेत्यर्धद्वयमेकं वाक्यं ॥ २९–३० ॥ देहवद्भिः प्रशस्तदेहैः ॥ ३१ ॥ क्रोधं विमोक्ष्यामि क्रोधं कार्यकरं करिष्यामीत्यर्थः । मम

---

पूर्वेहतादन्यइतिबोध्यं ॥ १५ ॥ स० इन्दुप्रतिमं चन्द्रसदृशं । चन्द्रसादृश्येकिञ्चित्कलङ्किताशङ्कास्यात् तांपरिहर्तुंसितमित्यप्युक्तं ॥ २५ ॥ ति० नव्यक्तंलक्षयेइत्यत्रहेतुः तेजस्समावृतमिति । रूपं सूक्ष्मावयवसंस्थानं ॥ २८ ॥ स० इदमोऽश्यश्चाहनीत्ययेतिभवति । एतद्दिनेदृष्टिपथंगतः । अद्यक्रोधंविमोक्ष्यामि त्यक्ष्यामि । दिनेपि "लृट्शेषे" इत्युक्तेः दृष्टिमार्गगमनकालतउत्तरस्मि-

[ पा० ] १ ङ. झ. ट. विस्फारयन्याति. २ ख. ग. घ. च. छ. ञ. केतुभूतस्सोऽसौ. ङ. झ. ट. केतुभूतोयोऽसौनिकुंभोऽद्भुतवीरकर्मा. ३ ग. ङ. झ. ट. विवृत्तनेत्रैर्योऽसौ. ४ घ. च. छ. झ. ट. नव्यक्तंलक्षये. ५ ख. च. छ. दानवयक्षाणां. ६ ख. च. छ. ञ. वपुर्नैतादृशं. ७ क. ख. ग. च. छ. ज. ञ. ट. लक्ष्मणानुगतः.

ततः स रक्षोधिपतिर्महात्मा रक्षांसि तान्याह महाबलानि ॥
द्वारेषु चर्यागृहगोपुरेषु सुनिर्वृतास्तिष्ठत निर्विशङ्काः ॥ ३४ ॥
इहागतं मां सहितं भवद्भिर्वनौकसश्छिद्रमिदं विदित्वा ॥
शून्यां पुरीं दुष्प्रसहां प्रमथ्य प्रधर्षयेयुः सहसा समेताः ॥ ३५ ॥
विसर्जयित्वा सहितांस्ततस्तान्मतेषु रक्षस्सु यथानियोगम् ॥
व्यदारयद्वानरसागरौघं महाझषः पूर्णमिवार्णवौघम् ॥ ३६ ॥
तमापतन्तं सहसा समीक्ष्य दीप्तेषुचापं युधि राक्षसेन्द्रम् ॥
महत्समुत्पाट्य महीधराग्रं दुद्राव रक्षोधिपतिं हरीशः ॥ ३७ ॥
तच्छैलशृङ्गं बहुवृक्षसानुं प्रगृह्य चिक्षेप निशाचराय ॥
तमापतन्तं सहसा समीक्ष्य बिभेद बाणैस्तपनीयपुङ्खैः ॥ ३८ ॥
तस्मिन्प्रवृद्धोत्तमसानुवृक्षे शृङ्गे विकीर्णे पतिते पृथिव्याम् ॥
महाहिकल्पं शरमन्तकाभं समाददे राक्षसलोकनाथः ॥ ३९ ॥
स तं गृहीत्वाऽनिलतुल्यवेगं सविस्फुलिङ्गज्वलनप्रकाशम् ॥
बाणं महेन्द्राशनितुल्यवेगं चिक्षेप सुग्रीववधाय रुष्टः ॥ ४० ॥
स सायको रावणबाहुमुक्तः शक्राशनिप्रख्यवपुः शिताग्रः ॥
सुग्रीवमासाद्य बिभेद वेगाद्गुहेरिता क्रौञ्चमिवोग्रशक्तिः ॥ ४१ ॥
स सायकार्तो विपरीतचेताः कूजन्पृथिव्यां निपपात वीरः ॥
तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टा युधि यातुधानाः ॥ ४२ ॥
ततो गवाक्षो गवयः सुदंष्ट्रस्तथर्षभो ज्योतिमुखो नभश्च ॥
शैलान्समुद्यम्य विवृद्धकायाः प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम् ॥ ४३ ॥

दृष्टिपथं गत इति पाठः ॥ ३२–३३ ॥ द्वारेषु अन्तद्वारेषु । चर्यायुक्ताः पुरद्वारेषु गोपुरपार्श्वयोः भटनिवासार्थं निर्मिता विशङ्कटा गृहाः चर्यागृहाः । सुनिर्वृताः अतिसुखिताः ॥ ३४ ॥ इहागतं मां विदित्वा इदं छिद्रं विदित्वेत्यन्वयः । प्रमथ्य ध्वंसित्वा । प्रधर्षयेयुः अभिभवेयुः ॥३५॥ सहितान् संमिलितान् । महाझषः महामत्स्यः ॥ ३६ ॥ दीप्ते इषुचापे यस्य स तथोक्तः । युधि संयुगनिमित्तं । सहसा आपतन्तं राक्षसेन्द्रं समीक्ष्य । महीधराग्रं पर्वतशृङ्गं । समुत्पाट्य हरीशः सुग्रीवः । रक्षोधिपतिं दुद्राव ॥ ३७ ॥ बहुवृक्षसानुं बहुतरुयुततटं । तपनीयं स्वर्णं ॥ ३८—३९ ॥ महेन्द्राशनिः वज्रं । औत्पातिकाशनिव्यावृत्तये महेन्द्रपदं । यद्वा महेन्द्रसंबन्धोक्तिः अभ्यासवता मुक्तत्वेनातिवेगद्योतनाय ॥ ४० ॥ शक्राशनिप्रख्यं शक्राशनितुल्यं वपुः यस्य । गुहः स्कन्दः ॥ ४१ ॥ विपरीतचेताः भ्रान्तचित्तः ॥ ४२ ॥ ज्योतिमुखः ज्योति-

न्कालेकोपत्यागः । सोपितन्मारणात्माज्ञेयः ॥ ३२ ॥ **स०** तच्छैलशृङ्गं सचासौशैलश्च तस्यशृङ्गंयस्मिंतत्सतथा । बहुवृक्षैरुपेतश्चासौसानुः स्नुः । "स्नुःप्रस्थःसानुरस्त्रियां" इत्यमरः । "शृङ्गार्धनिदाघोद्यमशल्यदृढाः" इति पुंनपुंसकाधिकारलिङ्गानुशासनाच्चप्रवृद्धोत्तमसानुवृक्षेशृङ्गे इतिद्वितीयव्याख्यानेसुलभं । प्रथमव्याख्यानेसंबन्धस्यद्विनिष्ठत्वात्सानोःशृङ्गसाहित्यवच्छृङ्गस्यतत्साहित्यमपि संभवतीतिपदंलभं । 'शृङ्गशब्दोऽर्धर्चादिरितिपुँल्लिङ्गतोपपत्तिरितिनागोजिभट्टोक्तिस्तु एतदनिभालनमूलेति प्रपञ्चार्थंतैतस्येतिवा ज्ञेयं ॥ ३८—३९ ॥ **स०** बाणं सुग्रीववधायेतिचिक्षेप ॥ ४० ॥

**[ पा० ]** १ ख. ङ. च. छ. झ. सचिवांस्ततः. २ ङ. झ. ट. विदीर्णे. ३ ङ. झ. ट. शक्राशनिस्पर्शवपुः प्रकाशं. ४ ङ. झ. तंवीक्ष्य. ५ ङ. झ. ट. सुषेण स्त्वथर्षभो. ६ क.—ट. नलश्च. ७ घ. युधिराक्षसेन्द्रं.

तेषां प्रहारान्स चकार मोघान्रक्षोधिपो बाणगणैः शितार्ग्रैः ॥
तान्वानरेन्द्रानपि बाणजालैर्बिभेद जाम्बूनदचित्रपुङ्खैः ॥ ४४ ॥
ते वानरेन्द्रास्त्रिदशारिबाणैर्भिन्ना निपेतुर्भुवि भीमकायाः ॥
ततस्तु तद्वानरसैन्यमुग्रं प्रच्छादयामास स बाणजालैः ॥ ४५ ॥
ते वध्यमानाः पतिताः प्रवीरा नानद्यमाना भयशल्यविद्धाः ॥
शाखामृगा रावणसायकार्ता जग्मुः शरण्यं शरणं स्म रामम् ॥ ४६ ॥
ततो महात्मा स धनुर्धनुष्मानादाय रामः सहसा जगाम ॥
तं लक्ष्मणः प्राञ्जलिरभ्युपेत्य उवाच वाक्यं परमार्थयुक्तम् ॥ ४७ ॥
काममार्य सुपर्याप्तो वधायास्य दुरात्मनः ॥ विधमिष्याम्यहं नीचमनुजानीहि मां प्रभो ॥ ४८ ॥
तमब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ ४९ ॥
गच्छ यत्नपरश्चापि भव लक्ष्मण संयुगे ॥ रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः ॥
त्रैलोक्येनापि संक्रुद्धो दुष्प्रसह्यो न संशयः ॥ ५० ॥

मुखः ॥ ४३—४५ ॥ ते प्रसिद्धा वानरेन्द्राः नतु क्षुद्राः । वध्यमानाः प्रथमं हिंस्यमानाः । ततः पतिताः रावणवेगेन भूमौ पतिताः । तदानीं रक्षकान्तरादर्शनान्नानद्यमानाः अतिशयेन नदन्तः । नदतेर्यङि "सन्यङोः" इत्यभ्यासदीर्घादिः । भयशल्यविद्धाः तादृशहेतुना भयरूपशल्येन विद्धाः । शाखामृगाः वनचारित्वेनैतादृशभयानभिज्ञाः । उक्तप्रकारेण सायकार्ताःसन्तः शरण्यं सर्वलोकशरणार्हं । रामं शरणं जग्मुः । एतेनार्तिरेव शरणागतिप्रयोजिका नतुदेशकालाधिकारिफलनियमा इत्युक्तं ॥ ४६ ॥ शरणागतकृत्यमुक्त्वा शरण्यकृत्यमाह—तत इति ॥ अत्र प्रपत्तेरार्तप्रपत्तिरूपतया तस्याः सद्यः फलद्योतनाय तत इत्युक्तं । प्रपत्त्युत्तरक्षण इत्यर्थः । महात्मा शरणागतितारतम्यज्ञः । धनुष्मान् प्रशस्तधनुष्कः । धनुर्युद्धसमर्थ इत्यर्थः । सहसेत्यनेन लक्ष्मणः स्वयं गमिष्यामीति तत्पूर्वमेवाश्रितत्राणत्वरया सधनुः सन् जगामेत्युक्तं । तथैव घट्टकुट्यां प्रभातमित्याह—त मिति । तं आर्तत्राणत्वरया व्रजन्तं । लक्ष्मणः रामकैङ्कर्यलक्ष्मीसंपन्नः । अनतिक्रमणाय नाथं निगलयति—प्राञ्जलिरिति । अभ्युपेत्य अभितः उपेत्य । अनेन लक्ष्मणागमनमजानन्निव नानापार्श्वेषु रामोनेकधा जगामेत्यवगम्यते । परमार्थयुक्तं न तूपचारयुक्तं । यद्वा परमार्थयुक्तं परमप्रयोजनयुक्तं । शेषिविषये कैङ्कर्यस्य शेषभूतं प्रति परमप्रयोजनत्वात् ॥ ४७ ॥ हे आर्य, अस्य दुरात्मनः परदारापहरणविषयदुर्बुद्धेः । कामं प्रकामं । वधाय सुपर्याप्तः सुशक्तोसि । तथापि नीचं भवता योद्धुमनर्हं । अहं वधिष्यामि । महाबलेन भवता नीचोयं न योद्धुमर्ह इति भावः । यद्वा अस्य वधायाहं पर्याप्तोस्मीत्यर्थः । तर्हि स्वयमेव गम्यतामित्यत्राह—अनुजानीहीति । प्रभो शेषिन् । त्वं मां शेषभूतमनुजानीहि । भवदनुज्ञामन्तरेण मे कार्यकरणं स्वरूपहानिकरमितिभावः ॥४८॥ तं विनयेनोक्तवन्तं । महातेजाः तादात्विकहर्षप्रकर्षावेदकसुषमाविशेषशाली । सति कस्मिंश्चिद्विधेयेसति । अपराक्रमः निवृत्तपराक्रमः । अब्रवीत् ॥ ४९ ॥ नीचपदसूचितमनादरं वारयति—यत्नपर इति । युद्धे यत्नपरश्चापि भव यथा युद्धपरोसि एवं यत्नपरो भव । यत्नस्यावश्यकर्तव्यत्वे हेतुमाह—रावण इति । अद्भुतपराक्रमः एवमस्त्रमाददान इवापरं संधत्ते तत्संदधान इवापरं मोक्षयतीत्यर्थः । त्रिलोक्येव त्रैलोक्यं तेन । युगपद्युद्धप्रवृत्तेनेत्यर्थः । यत्नपरत्वं दर्शयति—तस्येति ॥ चक्षुषा तस्य रावणस्य । छिद्राणि अनवधानादीनि । यत्नान्मार्गस्व अन्वेषयस्व । स्वच्छिद्राणि लक्षय काकान्पश्येतिवत् स्वस्य छिद्राणि यथा न भवन्ति

ती० सधनुरित्यत्र सइतिच्छेदः ॥ ४७ ॥

[ पा० ] १ ङ. च. झ. ट. बाणशतैः. २ क. ख. ज. पतिताग्र्यवीराः. घ. प्रथिताग्र्यवीराः. ३ ग. शरशल्यविद्धाः. क. ख. घ. हयतुल्यवेगाः. ४ झ. ट. रामंपरमार्थ.

**तस्य च्छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय[1] ॥ चक्षुषा धनुषा[2] यत्नाद्रक्षात्मानं समाहितः ॥५१॥**
**राघवस्य वचः श्रुत्वा परिष्वज्याभिपूज्य[3] च ॥ अभिवाद्य[4] ततो रामं ययौ सौमित्रिराहवम्[5] ॥ ५२ ॥**
**स रावणं वारणहस्तबाहुर्[6]ददर्श दीप्तोद्यतभीमचापम् ॥**
**प्रच्छादयन्तं शरवृष्टिजालैस्तान्वानरान्भिन्नविकीर्णदेहान् ॥ ५३ ॥**
**तमालोक्य महातेजा हनुमान्मारुतात्मजः ॥ निवार्य शरजालानि प्रदुद्राव स रावणम् ॥ ५४ ॥**
**रथं तस्य समासाद्य भुजमुद्यम्य[7] दक्षिणम् ॥ त्रासयन्रावणं धीमान्हनुमान्वाक्यमब्रवीत् ॥ ५५ ॥**
**देवदानवगन्धर्वैर्यक्षैश्च[8] सह राक्षसैः ॥ अवध्यत्वं त्वया प्राप्तं वानरेभ्यस्तु ते भयम् ॥ ५६ ॥**
**एष मे दक्षिणो बाहुः पञ्चशाखः समुद्यतः ॥ विधमिष्यति ते देहाद्भूतात्मानं[9] चिरोषितम् ॥ ५७ ॥**
**श्रुत्वा हनुमतो वाक्यं रावणो भीमविक्रमः ॥ संरक्तनयनः क्रोधादिदं वचनमब्रवीत् ॥ ५८ ॥**
**क्षिप्रं प्रहर निश्शङ्कं स्थिरां कीर्तिमवाप्नुहि ॥ ततस्त्वां ज्ञातविक्रान्तं नाशयिष्यामि वानर ॥ ५९ ॥**
**रावणस्य वचः श्रुत्वा वायुसूनुर्वचोऽब्रवीत् ॥ प्रहृतं हि मया पूर्वमक्षं स्मर सुतं तव ॥ ६० ॥**
**एवमुक्तो महातेजा रावणो राक्षसेश्वरः ॥ आजघानानिलसुतं तलेनोरसि वीर्यवान् ॥ ६१ ॥**
**स तलाभिहतस्तेन चचाल च मुहुर्मुहुः ॥ स्थित्वा मुहूर्तं तेजस्वी स्थैर्यं कृत्वा महामतिः ॥**
**आजघानाभिसंक्रुद्धस्तलेनैवामरद्विषम् ॥ ६२ ॥**
**ततस्तलेनाभिहतो वानरेण महात्मना ॥ दशग्रीवः समाधूतो यथा भूमिचलेऽचलः ॥ ६३ ॥**
**संग्रामे तं तथा दृष्ट्वा रावणं तलताडितम् ॥ ऋषयो वानराः सिद्धा नेदुर्देवाः सहासुरैः[10] ॥ ६४ ॥**
**अथाश्वास्य महातेजा रावणो वाक्यमब्रवीत् ॥ साधु वानर वीर्येण श्लाघनीयोसि मे रिपुः ॥ ६५ ॥**

---

तथा पश्येत्यर्थः । यद्वा लक्षय लक्षित्वा प्रच्छादयेत्यर्थः । एवं समाहितः सावधानः सन् । धनुषा आत्मानं रक्ष ॥ ५०—५१ ॥ अभिपूज्य प्रदक्षिणीकृत्येत्यर्थः ॥ ५२—५३ ॥ तमालोक्येति भृत्ये मयि विद्यमाने कथमसौ समासीदतीति जगामेत्यर्थः ॥ ५४—५५ ॥ भयं प्राप्तमिति शेषः ॥ ५६ ॥ पञ्चशाखः पञ्चाङ्गुलिकः । भूतात्मानं विधमिष्यति निष्क्रामयिष्यति । धातूनामनेकार्थत्वात् ॥५७–५८॥ स्थिरां कीर्तिमवाप्नुहीति सोपालम्भोक्तिः । हनुमान् रावणमुपसृत्य प्रहृतवानित्येतादृशीं किर्तिमवाप्स्यसीत्यर्थः । ज्ञातविक्रान्तं ज्ञातविक्रमं । भावे क्तः ॥५९॥ रावणवचनं ज्ञात्वा तदुचितमुत्तरमाह—प्रहृतं हीति ॥ ६० ॥ एवमुक्तइति । मर्मोद्घाटनेन संजातरोष इत्यर्थः ॥ ६१ ॥ तलेनेति । रावणेन तलेन प्रहरणात् स्वयमपि तलेनैवप्राहरदितिभावः ॥ ६२ ॥ समाधूतः कम्पितः । अभूत् । भूमिचले भूकम्पेसति । अचलः

---

**स०** छिद्राणि मर्माणि मार्गस्व परीक्षस्व । स्वच्छिद्राणि गोपय रक्ष । चक्षुषातं लक्षय । स्वसमाहितः स्वेनैवसमाहितः । समसमरेवक्तानान्योस्तीतिभावः । एतावत्युक्तिःकुतइत्यतोवाह—स्वसमाहितः सु अत्यन्तं असमोविषमः अहितो वैरीयस्यसतथा त्वमित्यर्थः ॥ ५१ ॥ **स०** वानरेभ्यःकपिभ्यः । तेभ्योऽवृतत्वाद्भरस्येतिभावः । नरेभ्यइत्यपि कपिसाम्याद्वक्तव्यं । तथापि स्वस्यैवपुरःस्थितेः स्वजातेर्ग्रहणमित्यवगन्तव्यं । वानरेभ्यइत्यत्राऽऽवृत्त्यातत्रापिपदच्छेदेन वानरेभ्योवातेभ्यइवनरेभ्योपिभयमित्यन्वयकरणेनतदुक्तिर्ज्ञेयेति अस्मत्तः कपिभ्यइत्यनुक्त्वा उक्त्वाचवानरेभ्यइतिकविर्ध्वनयाञ्चक्रे ॥ ५६ ॥ **स०** यतो येन । मुत् संतोषः । सतेबाहुः अदक्षिणः ताडनाकुशलः असमर्थइतियावत् । एषमेपंचशाखोहस्तः तेदेहेचिरोषितंभूतात्मानंप्राणं विधमिष्यति बहिर्निस्सारयति । अभूतात्मानं मुख्यप्राणमितिवा ॥ ५७ ॥ **रामानु०** ज्ञातविक्रान्तमितिवचनं सोल्लुण्ठनं । ज्ञात्वातदुचितमुत्तरमाह—**प्रहृतमिति** ॥ ६० ॥ **स०** देवाः राजानः सुरासुरैःसहनेदुः । "देवःसुरेघनेराज्ञि" इतिविश्वः ॥ ६४ ॥

**[ पा० ]** १ क.—ज. गोपय. २ ङ. झ. ट. धनुषात्मानंगोपायस्वसमाहितः. ३ क. ख. घ.—ट. संपरिष्वज्यपूज्यच. ४ क. ग. घ. ङ. झ. ट. अभिवाद्यचरामाय. ५ ङ. झ. ट. राहवे. ६ क. झ. वारणहस्तबाहुं. ७ ग. मुष्टिमुद्यम्य. ८ क.—घ. च. छ. ञ. देवदानवगन्धर्वायक्षाश्चसहराक्षसाः । अवश्यंभवताभग्नावानरेभ्यस्तुतेभयं. ९ घ. ङ. झ. ट. देहेभूतात्मानं. १० ङ. झ. ट. सुरासुरैः. क.—घ. सहासुराः.

रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् ॥ धिगस्तु मम वीर्येण यस्त्वं जीवसि रावण ॥ ६६ ॥
सकृत्तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे ॥ ततस्त्वां मामिका मुष्टिर्नयिष्यति यमक्षयम् ॥ ६७ ॥
ततो मारुतिवाक्येन क्रोधस्तस्य तदाऽज्वलत् ॥ संरक्तनयनो यत्नान्मुष्टिमुद्यम्य दक्षिणम् ॥
पातयामास वेगेन वानरोरसि वीर्यवान् ॥ ६८ ॥
हनुमान्वक्षसि व्यूढे संचचाल हतः पुनः ॥ ६९ ॥
विह्वलं तु तदा दृष्ट्वा हनुमन्तं महाबलम् ॥ रथेनातिरथः शीघ्रं नीलं प्रति समभ्यगात् ॥ ७० ॥
राक्षसानामधिपतिर्दशग्रीवः प्रतापवान् ॥ पन्नगप्रतिमैर्भीमैः परमर्मातिभेदिभिः ॥
शरैरादीपयामास नीलं हरिचमूपतिम् ॥ ७१ ॥
स शरौघसमायस्तो नीलः कपिचमूपतिः ॥ करेणैकेन शैलाग्रं रक्षोधिपतयेऽसृजत् ॥ ७२ ॥
हनुमानपि तेजस्वी समाश्वस्तो महामनाः ॥ विप्रेक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत् ॥ ७३ ॥
नीलेन सह संयुक्तं रावणं राक्षसेश्वरम् ॥ अन्येन युध्यमानस्य न युक्तमभिधावनम् ॥ ७४ ॥
रावणोपि महातेजास्तच्छृङ्गं सप्तभिः शरैः ॥ आजघान सुतीक्ष्णाग्रैस्तद्विकीर्णं पपात ह ॥ ७५ ॥
तद्विकीर्णं गिरेः शृङ्गं दृष्ट्वा हरिचमूपतिः ॥ कालाग्निरिव जज्वाल क्रोधेन परवीरहा ॥ ७६ ॥
सोश्वकर्णान्धवान्सालांश्चूतांश्चापि सुपुष्पितान् ॥ अन्यांश्च विविधान्वृक्षान्नीलश्चिक्षेप संयुगे ॥७७॥
स तान्वृक्षान्समासाद्य प्रतिचिच्छेद रावणः ॥ अभ्यवर्षत्सुघोरेण शरवर्षेण पावकिम् ॥ ७८ ॥
अभिवृष्टः शरौघेण मेघेनेव महाचलः ॥ ह्रस्वं कृत्वा तदा रूपं ध्वजाग्रे निपपात ह ॥ ७९ ॥
पावकात्मजमालोक्य ध्वजाग्रे समुपस्थितम् ॥ जज्वाल रावणः क्रोधात्ततो नीलो ननाद च ॥८०॥
ध्वजाग्रे धनुषश्चाग्रे किरीटाग्रे च तं हरिम् ॥ लक्ष्मणोथ हनूमांश्च दृष्ट्वा रामश्च विस्मिताः ॥ ८१ ॥
रावणोपि महातेजाः कपिलाघवविस्मितः ॥ अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥ ८२ ॥

---

गिरिर्यथा ॥ ६३—६५ ॥ वीर्येणेति द्वितीयाभाव आर्षः । यस्त्वं जीवसि । मया प्रहृतोपीति शेषः ॥ ६६ ॥ सकृत्तु प्रहर । शत्रुणा प्रहृते पुनरात्मनः प्रहारो विक्रमपरिपाटीमाटीकत इति हनुमतो हृदयं । इदानीमिति । पूर्वं मदनवधानाज्जीवसीतिभावः । दुर्बुद्धे प्रहारतारतम्यानभिज्ञ । किं किमर्थं । विकत्थसे श्लाघसे । "कत्थ श्लाघायां" इति धातुः । यमक्षयं यमनिलयं । "निलयापचयौक्षयौ" इत्यमरः ॥ ६७ ॥ ततः तेनेत्यर्थः । अन्यथा तदाशब्दोतिरिच्येत । अज्वलत् ववृध इत्यर्थः । वीर्यवान् बलवान् । "वीर्यं बले च" इत्यमरः ॥ ६८ ॥ हनुमानित्यर्थं ॥ व्यूढे विशाले ॥ ६९ ॥ विह्वलं मूर्च्छितं । महाबलं तदानीमपि परैरनभिभवनीयं ॥ ७० ॥ आदीपयामास आसमन्ताज्ज्वालयामास ॥ ७१ ॥ समायस्तः आयासवान् । एकेनेत्यनेन इतरेण शरवारणं गम्यते ॥ ७२ ॥ रावणं अब्रवीदिति संबन्धः । अभिधावनं । अन्येन युध्यमानं प्रत्यभिधावनमित्यर्थः । अत्रेतिकरणं द्रष्टव्यं ॥ ७३—७७ ॥ समासाद्य समीपंप्राप्य । पावकिं पावकपुत्रं ॥७८—७९॥ जज्वाल चुक्रोधेत्यर्थः ॥ ८०—८१ ॥ आहारयामास

---

रामानु० ध्वजाग्रइति । हनुमांश्चविस्मितः "नमारुतेरस्तिगतिप्रमाणं" इतिप्रसिद्धगतिलाघवोहनुमानपिसंजातविस्मयोऽभूदित्यर्थः ॥ ८१ ॥

[ पा० ] १ ङ. च. झ. ञ. ट. ममवीर्यस्य. ख. घ. ममवीर्येतयस्त्वं. २ क. च. झ. ञ. मामकोमुष्टिः. ३ घ. रोषान्मुष्टिमावृत्य. झ. ट. यत्नान्मुष्टिमावृत्य. ख. च. छ. ञ. क्रोधान्मुष्टिमावृत्य. ४ घ. ताडितोवक्षसि. ५ क.—ट. विह्वलंतं. ६ ख. घ. समभ्ययात्. ७ ङ. झ. ट. परमर्माभिभेदनैः. ८ ख. शरौघैःसमाविद्धः. ९ ङ. झ. ट. तद्विशीर्णं. १० ङ. झ. ट. कर्णद्रुमान्सालान्. ११ क. ख. च. तदात्मानं. ङ. झ. ट. ततोरूपं.

ततस्ते चुक्रुशुर्हृष्टा लब्धलक्षाः प्लवङ्गमाः ॥ नीललाघवसंभ्रान्तं दृष्ट्वा रावणमाहवे ॥ ८३ ॥
वानराणां च नादेन संरब्धो रावणस्तदा ॥ संभ्रमाविष्टहृदयो न किंचित्प्रत्यपद्यत ॥ ८४ ॥
आग्नेयेनाथ संयुक्तं गृहीत्वा रावणः शरम् ॥ ध्वजशीर्षस्थितं नीलमुदैक्षत निशाचरः ॥
ततोऽब्रवीन्महातेजा रावणो राक्षसेश्वरः ॥ ८५ ॥
कपे लाघवयुक्तोसि मायया परयाऽनया ॥ जीवितं खलु रक्षस्व यदि शक्तोसि वानर ॥ ८६ ॥
तानितान्यात्मरूपाणि सृजसि त्वमनेकशः ॥ तथापि त्वां मया युक्तः सायकोस्त्रप्रयोजितः ॥
जीवितं परिरक्षन्तं जीविताद्भ्रंशयिष्यति ॥ ८७ ॥
एवमुक्त्वा महाबाहू रावणो राक्षसेश्वरः ॥ संधाय बाणमस्त्रेण चमूपतिमताडयत् ॥ ८८ ॥
सोस्त्रयुक्तेन बाणेन नीलो वक्षसि ताडितः ॥ निर्दह्यमानः सहसा निपपात महीतले ॥ ८९ ॥
पितृमाहात्म्यसंयोगादात्मनश्चापि तेजसा ॥ जानुभ्यामपतद्भूमौ न च प्राणैर्व्ययुज्यत ॥ ९० ॥
विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः ॥ रथेनाम्बुदनादेन सौमित्रिमभिदुद्रुवे ॥ ९१ ॥
आसाद्य रणमध्ये तु वारयित्वा स्थितो ज्वलन् ॥ धनुर्विस्फारयामास कम्पयन्निव मेदिनीम् ॥९२॥

तमाह सौमित्रिरदीनसत्त्वो विस्फारयन्तं धनुरप्रमेयम् ॥
अभ्येहि मामेव निशाचरेन्द्र न वानरांस्त्वं प्रतियोद्धुमर्हः ॥ ९३ ॥
स तस्य वाक्यं प्रतिपूर्णघोषं ज्याशब्दमुग्रं च निशम्य राजा ॥
आसाद्य सौमित्रिमवस्थितं तं कोपान्वितो वाक्यमुवाच रक्षः ॥ ९४ ॥
दिष्ट्यासि मे राघव दृष्टिमार्गं प्राप्तोन्तगामी विपरीतबुद्धिः ॥
अस्मिन्क्षणे यास्यसि मृत्युदेशं संसाद्यमानो मम बाणजालैः ॥ ९५ ॥

आददे ॥ ८२ ॥ लब्धलक्षाः लब्धहर्षविषयाः । नीलमेव पश्यन्त इति वार्थः ॥ ८३ ॥ वानराणां चेति चशब्देन नीललाघवं समुच्चीयते । संभ्रमः व्यग्रता । प्रत्यपद्यत अजानात् । आग्नेयेन आग्नेयमन्त्रेण । संयुक्तं अभिमन्त्रितं ॥ ८४-८५ ॥ कपे चञ्चलप्रकृते इत्यर्थः । अतो न वानरपदेन पौनरुक्त्यं ॥ ८६ ॥ तानि तान्यात्मरूपाणि सृजसि त्वमनेकश इति । लाघवातिशयेन सृजसीव दृश्यस इत्यर्थः । ननु तानि तानीत्यनेन रावणो नीलं नानातनुपरिग्रहयुक्तं मन्यत इत्यवगम्यत इति चेन्न । कपे लाघवयुक्तोसीति पूर्वोक्तिविरोधात् । युक्तः प्रयुक्तः । अस्त्रप्रयोजितः अस्त्रमन्त्रेणाभिमन्त्रितः । जीवितं परिरक्षन्तं त्वां जीवितात् भ्रंशयिष्यतीत्यन्वयः ॥ ८७—८९ ॥ पितृमाहात्म्येति । पितृमाहात्म्यं अग्नेः पुत्रतया दयालुत्ववैभवं ॥ ९०—९१ ॥ सौमित्रिमासाद्य । वारयित्वा सुग्रीवादीन्वारयित्वा । रणमध्ये ज्वलन् स्थितः धनुर्विस्फारयामासेत्यन्वयः ॥ ९२—९३ ॥ रक्षः रक्षोरूपः । राजेत्यन्वयः ॥ ९४ ॥ अन्तगामी विनाशेच्छुः । अतएव विपरीतबुद्धिः त्वं दिष्ट्या यदृच्छया दृष्टिमार्गं प्राप्तोसि । संसाद्यमानः पीड्यमानः

**रामानु०** तानितान्यात्मरूपाणिसृजसित्वमनेकशइत्यभिधानात् ध्वजकिरीटादिषुनीलस्यवेगातिशयकृतमवस्थानंयुगपदनेकशरीरपरिग्रहकृतमितिरावणोभ्रान्तवानित्यवगम्यते ॥ ८७ ॥ **ति०** अवेहिपश्य ॥ ९३ ॥ **ती०** सतस्यवाक्यमित्यारभ्यकिंमोघविकत्थनेनेत्येतदन्तस्यप्रातीतिकार्थःस्पष्टः । वस्तुतस्तु लक्ष्मणस्यरावणेनकिमुत्तरंदत्तमतआह—सतस्येत्यादिश्लोकद्वयेन । रक्षः राजा । सतुलक्ष्मणस्यवाक्यंउग्रंज्याशब्दंचनिशम्यकोपान्वितोपिविपरीतबुद्धिरपिअन्तगाम्यपि । अवस्थितंतंसौमित्रिमासाद्य हेराघव मेपापिष्ठस्यापिमम दिष्ट्या भाग्यवशेन दृष्टिमार्गंप्राप्तोसीतिवाक्यमुवाचेतिसंबन्धः ॥ ९४ ॥ **शि०** अन्तगामी परलोकगमनशीलः । अतएवविपरीता अयोद्धव्येयोधनविषयाबुद्धिर्यस्यसः ॥ ९५ ॥

[ **पा०** ] १ क.—घ. च. छ. ञ. परयाऽनघ. ङ. झ. ट. परयासह. २ क. ख. ग. च.—ट. मुक्तः. ३ झ. मुक्तेन. ४ क. ख. च. छ. ञ. पतितंदृष्ट्वा. ५ क. ख. ङ.—ट. विंस्फारयामासराक्षसेन्द्रःप्रतापवान्. ६ ख. ग. च. छ. ज. ञ. अन्वेहि. क. ङ. झ. ट. अवेहि. ७ क. ख. घ. च.—ञ. योद्धुमर्हसि.

तमाह सौमित्रिरविस्मयानो गर्जन्तमुद्वृत्तशिताग्रदंष्ट्रम् ॥
राजन्न गर्जन्ति महाप्रभावा विकत्थसे पापकृतां वरिष्ठ ॥ ९६ ॥
जानामि वीर्यं तव राक्षसेन्द्र बलं प्रतापं च पराक्रमं च ॥
अवस्थितोऽहं शरचापपाणिरागच्छ किं मोघविकत्थनेन ॥ ९७ ॥
स एवमुक्तः कुपितः ससर्ज रक्षोधिपः सप्त शरान्सुपुङ्खान् ॥
ताँल्लक्ष्मणः काञ्चनचित्रपुङ्खैश्चिच्छेद बाणैर्निशिताग्रधारैः ॥ ९८ ॥
तान्प्रेक्षमाणः सहसा निकृत्तान्निकृत्तभोगानिव पन्नगेन्द्रान् ॥
लङ्केश्वरः क्रोधवशं जगाम ससर्ज चान्यान्निशितान्पृषत्कान् ॥ ९९ ॥
स बाणवर्षं तु ववर्ष तीव्रं रामानुजः कार्मुकसंप्रयुक्तम् ॥
क्षुरार्धचन्द्रोत्तमकर्णिभल्लैः शरांश्च चिच्छेद न चुक्षुभे च ॥ १०० ॥
स बाणजालान्यथ तानि तानि मोघानि पश्यंस्त्रिदशारिराजः ॥
विसिष्मिये लक्ष्मणलाघवेन पुनश्च बाणान्निशितान्मुमोच ॥ १०१ ॥
स लक्ष्मणश्चाशु शराञ्शिताग्रान्महेन्द्रवज्राशनितुल्यवेगान् ॥
संधाय चापे ज्वलनप्रकाशान्ससर्ज रक्षोधिपतेर्वधाय ॥ १०२ ॥
स तान्प्रचिच्छेद हि राक्षसेन्द्रश्छित्त्वा च ताँल्लक्ष्मणमाजघान ॥
शरेण कालाग्निसमप्रभेण स्वयम्भुदत्तेन ललाटदेशे ॥ १०३ ॥
स लक्ष्मणो रावणसायकार्तश्चचाल चापं शिथिलं प्रगृह्य ॥
पुनश्च संज्ञां प्रतिलभ्य कृच्छ्राच्चिच्छेद चापं त्रिदशेन्द्रशत्रोः ॥ १०४ ॥
निकृत्तचापं त्रिभिराजघान बाणैस्तदा दाशरथिः शिताग्रैः ॥
स सायकार्तो विचचाल राजा कृच्छ्राच्च संज्ञां पुनराससाद ॥ १०५ ॥
स कृत्तचापः शरताडितश्च मेदार्द्रगात्रो रुधिरावसिक्तः ॥
जग्राह शक्तिं समुदग्रशक्तिः स्वयम्भुदत्तां युधि देवशत्रुः ॥ १०६ ॥

॥ ९५ ॥ अविस्मयानः तूष्णीकुर्वन्नित्यर्थः । उद्वृत्तसिताग्रदंष्ट्रं उन्नतधवलाग्रदंष्ट्रं । न गर्जन्ति नात्मश्लाघां कुर्वन्तीत्यर्थः । पापकृतां वरिष्ठेति हेतुगर्भितविशेषणं । पापकृद्वरिष्ठत्वाद्विकत्थस इत्यर्थः ॥ ९६ ॥ जानामीति सोपहासोक्तिः । तव विजने यतिवेषेण सीतामपहृतवतः । प्रतापं शत्रुभीषणत्वं । पराक्रमं शौर्यं । "शौर्योद्योगौपराक्रमौ" इत्यमरः । मोघविकत्थनेन निष्फलश्लाघनेन ॥ ९७ ॥ निशिते अग्रधारे अग्रपार्श्वे येषां तैः ॥ ९८ ॥ पृषत्कान् बाणान् ॥ ९९ ॥ कार्मुकसंप्रयुक्तं चापसंहितं । क्षुरेति । क्षुरैः नापितशस्त्राकारैः । अर्धचन्द्रैः अर्धचन्द्राकारमुखैः । उत्तमैः कर्णिभिः कर्णिशरैः । भल्लैः उभयपार्श्वधारैः । शरान् रावणशरान् । चिच्छेद । तथापि न चुक्षुभे न कलुषितहृदयोभूत् ॥ १०० ॥ स इति ॥ त्रिदशारिराजः राक्षसराजः ॥ १०१ ॥ महेन्द्रवज्राशनितुल्यवेगान् महेन्द्रवज्रस्याशनेश्च तुल्यवेगान् ॥ १०२—१०३ ॥ शिथिलं यथा भवति तथा प्रगृह्य ॥ १०४–१०५ ॥ मेदेत्यकारान्तत्वमार्षं । समुदग्रशक्तिः समधिकसामर्थ्यः

**ति०** मेदार्द्रगात्रइतिसंधिरार्षः । अथरावणः प्राणान्तापदंप्राप्तः प्रकारान्तरेणजीवननिर्वाहमसंभाव्यब्रह्मदत्तामभोघांशक्तिंजग्राहेत्याह—**जग्राहेति** ॥ १०६ ॥

[ **पा०** ] १ घ. युधिस्थितोहं. २ क. ख. ङ. झ. ञ. ट. स्वयमुग्रशक्तिः.

स तां विधूमानलसन्निकाशां वित्रासिनीं वानरवाहिनीनाम् ॥
चिक्षेप शक्तिं तरसा ज्वलन्तीं सौमित्रये राक्षसराष्ट्रनाथः ॥ १०७ ॥
तामापतन्तीं भरतानुजोऽस्त्रैर्जघान बाणैश्च हुताग्निकल्पैः ॥
तथापि सा तस्य विवेश शक्तिर्बाह्वन्तरं दाशरथेर्विशालम् ॥ १०८ ॥
स शक्तिमाञ्शक्तिसमाहतः सन्मुहुः प्रजज्वाल रघुप्रवीरः ॥
तं विह्वलन्तं सहसाऽभ्युपेत्य जग्राह राजा तरसा भुजाभ्याम् ॥ १०९ ॥
हिमवान्मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः ॥ शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः ॥ ११० ॥
शक्त्या ब्राह्मयाऽपि सौमित्रिस्ताडितस्तु स्तनान्तरे ॥ विष्णोरचिन्त्यं स्वं भागमात्मानं प्रत्यनुस्मरत् ॥ १११ ॥

॥१०६॥ राक्षसराष्ट्रनाथः राक्षससमूहनाथः ॥१०७॥ बाह्वन्तरंवक्षः ॥ १०८॥ विह्वलन्तं मुह्यन्तं ॥ १०९॥ लक्ष्मणं भुजाभ्यामुद्धर्तुमुद्युक्तं रावणमृषिः परिहसति—हिमवानिति ॥ शक्यमित्यव्ययं । हिमवान् धैर्येण हिमवानिवेति । समस्तधीरोपमानभूतो हिमवानपि रावणस्य भुजाभ्यामुद्धर्तुं शक्यं । तदेकदेशस्य कैलासस्य पुराचालितत्वात् । मन्दरः सकलसागरप्रधानगभीरतरक्षीरोदक्षोभणक्षमोपि मन्दरो वा भुजाभ्यामुद्धर्तुं शक्यं । स्वनिर्जितैरेव निर्जरैरमृतमथने जर्झरितत्वात् । मेरुः सकलकुलाचलवलयललामभूतोपि मेरुस्तथा कर्तुं शक्यं । वायुनैव तच्छिखरस्य लङ्काया अकूपारकुक्षौ निक्षिप्तत्वात् । त्रैलोक्यं पञ्चाशत्कोटिविस्तीर्णमुत्तीर्णपरिमाणान्तरं त्रैलोक्यमपि तथा कर्तुंशक्यं । तदेकदेशधरण्या हिरण्याक्षेण कक्षीकृतत्वात् । सहामरैः त्रैलोक्यनिर्वाहकगीर्वाणैः सहितमपि तथा कर्तुं शक्यं । तदधिपतेर्निजतनुजेनैव निगृहीतत्वात् । भरतानुजः रामानुजानुजः । रामचतुर्थभागइत्यर्थः । रामचतुर्थभागोद्धरणेप्यशक्तः कथं रामेण योद्धुं शक्नोतीति भावः । अयोध्याकाण्डे पञ्चपञ्चाशे— "सीतामादाय गच्छ त्वमग्रतो भरताग्रज" इति वचनं बहुव्रीह्योक्तं । भुजाभ्यामित्यनेन हिमवदादयो द्वाभ्यामेवोद्धर्तुं शक्यं । अयं तु विंशतिभुजैरपि न शक्यत इति सूच्यते । रिपूणामप्रकम्प्योपीत्यनुवादात् सपरिकरेणापि रावणेन न शक्यमित्यपि सिद्धं । कथं तर्हि हनुमतोद्धृत इत्यत्राह—संख्य इति । दुर्हृदयैर्नोद्धर्तुं शक्य इत्यर्थः । अतएव वक्ष्यति—वायुसूनोः सुहृत्त्वेनेति । अनेन हिमवदादिभ्योपि संख्ये पतितस्य लक्ष्मणशरीरस्य गरीयस्त्वोक्ता ॥ ११० ॥ कुतोस्यैतादृशी गरीयस्तेत्यत्राह—शक्त्येति ॥ ब्राह्मया ब्रह्मसंबन्धिन्या । शक्त्या । स्तनान्तरे वक्षसि सौमि-

ति० विह्वलन्तं विकलंभवन्तं । राजा रावणः । तरसा बलेन । लक्ष्मणंभुजाभ्यांजग्राह । इन्द्रजिद्वद्वयोरपिपुनरुत्थानदर्शनादिदानीमपिपुनरुज्जीवनभयेनगृहीत्वासमुद्रेप्रक्षेपणीयः । तत्रगतेरामोसहायोनङ्क्ष्यत्येवेत्याशयेनायमारंभः । शि० शक्तिमानपिसमाहत इत्यनेन तस्यमर्यादापालकत्वंध्वनितं ॥ १०९ ॥ स० भुजाभ्यां एकैकपार्श्ववृत्तिदशकैकत्वविवक्षयाभुजाभ्यामित्युक्तिः । अन्यथाद्वाभ्यामुद्धरणाशक्तस्तनुयादेवसमग्रैर्भुजैर्यत्नमितितेपिवक्तव्याभवेयुः । तदव्यापारणेचनतस्याशाविच्छेदःस्यात् । यथोक्तमन्यत्र 'स्वबाहुभिर्नेतुमसुंसमैच्छत्' 'बलात्स्वदोर्भिःपरिगृह्यचाखिलैः' इतिच ॥ ११० ॥ ति० कुतस्तत्राह—शक्त्येति । अमोघया ब्रह्मदत्तया स्तनान्तरे आहतःसौमित्रिः विष्णोरमीमांस्यं निस्संशयविष्णुभागत्ववन्तं इयत्तयाचिन्तयितुमशक्यंवा । विष्णोर्भागमात्मानं प्रत्यनुस्मरत् अन्वस्मरत् । नहिस्त्रीयंस्वंहिनस्तीत्याशयेनब्रह्मशक्तिमूलापत्राणार्थंभगवत्तेजोंशएवाहमस्मीतिध्यातवान् । नटवदङ्गीकृतमनुष्यत्वस्येतरेषांदृढप्रतीत्यर्थं । परंनसर्वदातथाध्यानं । एवंचब्रह्मभावनयालक्ष्मणेनस्वशरीरस्यगरीयस्त्वमापादितमित्युक्तंभवति । ती० ब्राह्मया ब्रह्मदत्तया । ताडनानन्तरं स्वं आत्मानं । विष्णोः सर्वव्यापकस्य । अचिन्त्यं इयत्तयाचिन्तितुमशक्यं । भागमंशं प्रत्यनुस्मरत । तद्विपत्परिहारार्थंभगवन्तंस्वमूलकारणंविष्णुमस्मरदित्यर्थः । अन्यथासर्वदैतादृशस्मरणेविद्यमानेसतिसर्वदाऽनुवर्तमानामनुष्यबुद्धिर्बाध्येत । तस्यांचबाधितायांतयासाध्यंरावणसंहारादिरूपंकार्यं नशक्येतेत्यभिप्रायः । एतेन स्वकीयांशस्मरणेन हेतुनालक्ष्मणेन स्वशरीरस्यगरीयस्त्वमुपात्तमित्युक्तंभवति । स० विष्णोः श्रीनारायणस्य अमीमांस्यौ साकल्ये-

[ पा० ] १ ग. ज. वानरराक्षसानां. ख. घ.—छ. झ. ञ. ट. संयतिवानराणां. २ क.—ङ. छ. झ. ञ. ट. शक्तिर्भुजान्तरं. ३ च. छ. ञ. सन्पपातभूमौसरघु. ङ. झ. ट. सञ्जज्वालभूमौसरघु. ४ च. ञ. सुरासुरैः. ५ झ. नशक्यो. ६ झ. ट. समीमांस्यभागं. ङ. भागममीमांस्यं.

ततो दानवदर्पघ्नं सौमित्रिं देवकण्टकः ॥ तं पीडयित्वा बाहुभ्यामप्रभुर्लङ्घनेऽभवत् ॥
[1]अथैवं वैष्णवं भागं मानुषं देहमास्थितम् ॥ ११२ ॥
[2]अथ वायुसुतः क्रुद्धो रावणं समभिद्रवत् ॥ आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ११३ ॥
तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः ॥ जानुभ्यामपतद्भूमौ चचाल च पपात च ॥
आस्यैः सनेत्रश्रवणै[3]र्ववाम रुधिरं बहु ॥ ११४ ॥
विघूर्णमानो निश्चेष्टो रथोपस्थ उपाविशत् ॥ विसंज्ञो मूर्च्छितश्चासीन्न च स्थानं समालभत् ॥११५॥
विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम् ॥ ऋषयो [4]वानराः सर्वे नेदुर्देवाः [5]सवासवाः ॥ ११६ ॥
हनुमानपि तेजस्वी लक्ष्मणं रावणार्दितम् ॥ अनयद्राघवाभ्याशं बाहुभ्यां परिगृह्य तम् ॥ ११७ ॥
वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः ॥ शत्रूणामप्रकम्प्योपि लघुत्वमगमत्कपेः ॥ ११८ ॥

त्रिस्ताडितः सन् विष्णोर्भागं अंशभूतं अचिन्त्यं ईदृक्तया इयत्तया च चिन्तयितुमशक्यं । स्वमात्मानं स्वस्वरूपं, "स्वात्माप्येनं विगर्हते" इति तथा प्रयोगात् । स्वात्मांश इति गुरुव्यवहाराच्च । प्रत्यनुस्मरत् स्मृतवान् । स्वस्वरूपस्मरणातिरिक्तव्यापाराकरणोक्त्या स्वाभाविकमेवास्येदं गुरुत्वमित्युक्तं । यत्तु स्वकीयांशस्मरणेन हेतुना लक्ष्मणेन स्वशरीरस्य गरीयस्त्वं संपादितमित्यनेनोक्तमिति । तन्न । अपदार्थत्वादवाक्यार्थत्वाच्च । स्वरूपस्मरणस्य गरीयस्त्वं प्रति कारणताग्राहकप्रमाणाभावाच्च । यदपि विपत्परिहारार्थं भगवन्तं स्वमूलकारणं विष्णुमस्मरदित्यर्थ इति तदपि न । स्वस्यैव विष्णुरूपत्वेन विपत्परिहारान्तराभावात् । ननु मनुष्यभावना क्रियमाणा विरुध्येत यदि स्वतो गौरवं भजेत, अतो विष्णुस्मरणमिति चेन्न । मानसभावनाया अपि लौकिकैरज्ञातत्वेन एवमपि मनुष्यभावनाया अनुपायात् । अतः अपर्यनुयोज्यवस्तुस्वभावेनैव भक्ताभक्तेषु गरीयस्तागरीयस्ते । अतएवाऽचिन्त्यमित्युक्तं ॥ १११ ॥ वस्तुस्वरूपस्यैवंविधत्वात्तोलयितुमशक्तोभवदित्युपसंहरति—तत इत्यादिसार्धश्लोकएकान्वयः ॥ यतः स्वाभाविकमेव गरीयस्त्वं ततो हेतोः । लङ्घने उद्धरणे । अप्रभुः असमर्थः । अथ रणे पतनानन्तरं देवकण्टकः रावणः । मानुषंदेहमास्थितं दानवदर्पघ्नं वैष्णवं भागं सौमित्रिं । भुजाभ्यां पीडयित्वा । ततः वैष्णवभागरूपत्वाद्धेतोः लङ्घने अप्रभुरभवदित्यन्वयः । अत्रापि विशेषणसामर्थ्याद्वस्तुस्वरूपकृतमेवाकम्प्यत्वमित्युक्तं । ननु च कथमंशसंभवः विष्णुस्वरूपस्य निरवयवत्वात् । सत्यं । स्वरूपेण नांशत्वमुच्यते, किंतु गुणाविर्भावतारतम्यात् । "गुणैः षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभूत् । व्यवस्थायां चैषां ननु वरद साविष्कृतिवशाद्भवान्सर्वत्रैव त्वगणितमहामङ्गलगुणः" इत्यभियुक्तैरुक्तत्वात् । मानुषरूपत्वं चास्य मानुषसमानाकृतिकत्वं ॥ ११२–११३ ॥ जानुभ्य रथभूमावपतत् । अथ चचाल । ततः पपात अशयिष्ट । दशभिरास्यै रुधिरं ववाम । सनेत्रश्रवणैरित्यनेन नेत्रेभ्यः श्रवणेभ्यश्च रुधिरं ववामेत्युच्यते ॥ ११४ ॥ किंचित्कालं विघूर्णमानः भ्रमन् । पुनर्निश्चेष्टः सन् रथोपस्थे रथमध्ये । उपाविशत् स्थितः । ततो मूर्च्छितः अतएव विसंज्ञः संज्ञाशून्यश्चासीत् । पुनः संज्ञां लब्ध्वापि स्थानं स्थितिं । नालभत् नालभत । चचालेत्यर्थः ॥ ११५ ॥ नेदुः हर्षेणेति शेषः ॥ ११६ ॥ अभ्याशं समीपं ॥ ११७ ॥ ननु पूर्वं

नचिन्तयितुमशक्यौभागौ सव्यापसव्यभागौयस्मिन्सतं । आत्मानंमूलरूपंशेषं । प्रत्यनुस्मरत् अस्मरत् । यथोक्तमन्यत्र "सस्माररूपंनिजमेवलक्ष्मणः" इतिस्वस्मरणमात्रस्येयत्कार्यपर्याप्तत्वादितरव्याख्यानममूलत्वादुपेक्ष्यं ॥ १११ ॥ **स०** ततःक्रुद्धः लक्ष्मणाकर्षणतोतिक्रुद्धः । क्रुद्धः पूर्वमारभ्यकोपी ॥ ११३ ॥ **ति०** नेदुः संतोषादितिशेषः । सासुराः रावणस्यदेववदसुरेष्वपि क्लेशकरत्वेनतेषामपिवैरित्वात् ॥ ११६ ॥ **ति०** राघवाभ्याशमानयदित्युक्तं कथमेवंसुग्रहत्वंलक्ष्मणस्येत्यत्राह—वायुसूनोरिति । सुहृत्त्वेन सखित्वेन परमभक्त्याचलक्ष्मणःशत्रूणामप्रकंप्येपि वायुसूनोर्लघुत्वमगमत् । शत्रूणामित्यनेन लक्ष्मणोद्धरणसमयेरावणस्यानुचरैःसाहाय्यंकृतमितिगम्यते । इदंचभक्तमात्रसुग्रहत्वंभगवतोभगवदवताराणांचस्वभावसिद्धमेवेतिबोध्यं । एवंच रामलक्ष्मणयो-

**[ पा० ]** १ इदमर्धं झ. पुस्तकादिषुनदृश्यते. २ झ. ञ. ट. ततःक्रुद्धोवायुसुतः. ३ ङ. झ. ट. श्रवणैःपतात. ४ ख. च. ञ. वानरास्सिद्धाः. ५ झ. ञ. ट. श्वसासुराः.

तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि दुर्जयम् ॥ रावणस्य रथे तस्मिन्स्थानं पुनरुपागता ॥११९॥
आश्वस्तश्च विशल्यश्च लक्ष्मणः शत्रुसूदनः ॥ विष्णोर्भागममीमांस्यमात्मानं प्रत्यनुस्मरन् ॥ १२० ॥
रावणोपि महातेजाः प्राप्य संज्ञां महाहवे ॥ आददे निशितान्बाणाञ्जग्राह च महद्धनुः ॥ १२१ ॥
निपातितमहावीरां द्रवन्तीं वानरीं चमूम् ॥ राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत् ॥ १२२ ॥
अथैनमुपसंगम्य हनुमान्वाक्यमब्रवीत् ॥ मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि ॥ १२३ ॥
विष्णुर्यथा गरुत्मन्तं बलवन्तं समाहितः ॥ तच्छ्रुत्वा राघवो वाक्यं वायुपुत्रेण भाषितम् ॥
आरुरोह महाशूरो बलवन्तं महाकपिम् ॥ १२४ ॥
रथस्थं रावणं संख्ये ददर्श मनुजाधिपः ॥ १२५ ॥
तमालोक्य महातेजाः प्रदुद्राव स राघवः ॥ वैरोचनमिव क्रुद्धो विष्णुरभ्युद्यतायुधः ॥ १२६ ॥
ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिस्स्वनम् ॥ गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह ॥ १२७ ॥
तिष्ठतिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशम् ॥ क नु राक्षसशार्दूल गतो मोक्षमवाप्स्यसि ॥१२८॥
यदीन्द्रवैवस्वतभास्करान्वा स्वयम्भुवैश्वानरशंकरान्वा ॥
गमिष्यसि त्वं दश वा दिशोऽथवा तथापि मे नाद्य गतो विमोक्ष्यसे ॥ १२९ ॥

हिमवानित्यादिना लक्ष्मणस्याकम्प्यत्वमुक्तं तादृशस्य कपिना रामसमीपप्रापणं कथमित्याशङ्क्य विरोधं परिहरति—वायुसूनोरिति ॥ सुहृत्त्वेन शोभनहृदयत्वेन । अनुकूलहृदयत्वेनेत्यर्थः । हृदयानुकूल्यमेवालं भक्तिस्त्वधिकेत्याह—भक्त्या परमया चेति । चशब्दोन्वाचये । सः लक्ष्मणः । शत्रूणां रावणस्य तत्परिकराणां चेत्यर्थः । अप्रकम्प्योपि कम्पितुमशक्योपि । कपेः कपेरपि । हनुमत एकस्य लघुत्वमगमत् लघुत्वमकरोत् । अनेन लघुत्वस्य बुद्धिपूर्वकत्वमुक्तं । शत्रुमित्रयोर्दुष्प्रापत्वसुप्रापत्वे स्वरूपप्रयुक्ते अस्येति भावः । मूर्च्छितस्यापि लक्ष्मणस्य ज्ञानशक्तिप्रतिपादनेन तत्र तत्र राघवयोरज्ञानाशक्तिप्रत्यायकानि वचनानि मानुषवेषनिर्वहणपराणीति मन्तव्यानि ॥ ११८ ॥ दुर्जयमिति हेतुगर्भं । तस्य दुर्जयस्वरूपत्वाच्छक्तिस्तं त्यक्त्वा गतेति भावः । एतच्छ्लोकानन्तरमाश्वस्त इति श्लोकः । ततो रावणोपीति श्लोकः पठनीयः ॥११९॥ आश्वस्तः लब्धसंज्ञः । विशल्यः प्ररूढव्रणमुखः । अभवदिति शेषः । अकाण्डे शक्तिनिर्गमाश्वासनविशल्यत्वेषु को हेतुरत आह—विष्णोरिति । विरोधिप्रत्यनीकस्वभावत्वादिति भावः । अमीमांस्यं अचिन्त्यं । अनुस्मरन्नित्यनेन साधनानुष्ठानं किमपि न कृतवानित्युक्तं ॥ १२०—१२१ ॥ द्रवन्तीमिति । रावणस्य बाणसंधानदर्शनादिति भावः ॥ १२२ ॥ अर्हसीत्यनन्तरमितिकरणं द्रष्टव्यं ॥ १२३ ॥ विष्णुर्यथेति सार्धश्लोक एकान्वयः ॥ वायुपुत्रेण भाषितं तद्वाक्यं श्रुत्वा समाहितः सन् विष्णुर्गरुत्मन्तं यथा तथा महाकपिं हनुमन्तमारुरोहेति योजना ॥१२४॥ रथस्थमित्यर्धमेकं वाक्यं ॥ १२५ ॥ तमालोक्येत्यनुवादः अव्यवहितपूर्वकालद्योतनार्थः । अभ्युद्यतायुधः क्रुद्धो राघवः विष्णुर्वैरोचनं बलिमिव । प्रदुद्राव । साग्रहगमनमात्रे दृष्टान्तः ॥ १२६ ॥ वज्रनिष्पेषः स्फूर्जथुः । " स्फूर्जथुर्वज्रनिष्पेषः " इत्यमरः ॥१२७॥ ईदृशं लक्ष्मणप्रहाररूपं सीताहरणरूपं वा । मोक्षं मत्त इति शेषः ॥ १२८ ॥ इन्द्रादीन्वा स्वयंभ्वादी-

रज्ञानाशक्तिमत्त्वतात्पर्यतयाभासमानानिवचनानिमानुषवेषनिर्वहणमात्रपराणीतिबोध्यं । तदुक्तंभागवते—"मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलंविभोः । कुतोन्यथास्यूरमतःस्वआत्मन्सीताकृतानिव्यसनानीश्वरस्य"इति । मर्त्यशिक्षणं तत्फलकमित्यर्थः । आत्मनीश्वरस्येत्यनेन लाघवगौरवप्राप्त्योरविरोधउक्तः । **स०** वायुसूनोःसुहृत्त्वेन अनिमित्तोपकर्तृत्वेनकपेः हनुमद्विषयिण्यापरमयाभक्त्याच ॥ ११८ ॥ **ति०** पुनर्विष्णोर्भागमात्मानंस्मरन् आश्वस्तः प्राप्ताश्वासेन्द्रियग्रामः । विशल्योनीरुक्सर्वगात्रः ।

[ **पा०** ] १ झ. निर्जितं. २ क.—ट. वानराणांमहाचमूं. ३ ख.—च. झ. रावणं. ४ क. ख. ङ.—ट. गरुत्मन्तमारुह्यामरवैरिणं. ५ क. वायुपुत्रप्रभाषितं. ६ ङ. झ. ट. अथारुरोहसहसाहनूमन्तंमहाकपिं. ग. घ. ज. आरोहत्सहसाशूरो. ७ ग. ङ. झ. ट. सरावणं. ८ क. ख. ङ.—ट. निष्ठुरं. ९ घ. गतोमत्तोविमोक्ष्यसे. ङ. झ. ट. गत्वामोक्षं.

यश्चैव[1] शक्त्याऽभिहतस्त्वयाऽद्य इच्छन्[2]विषादं सहसाऽभ्युपेतः ॥
स[3] एव रक्षोगणराज मृत्युः सपुत्रदारस्य[4] तवाद्य युद्धे ॥ १३० ॥
एतेन चात्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि ॥
चतुर्दशान्यात्तवरायुधानि रक्षस्सहस्राणि निषूदितानि ॥ १३१ ॥
राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाकपिम्[5] ॥ वायुपुत्रं महावीर्यं वहन्तं राघवं रणे ॥
[रोषेण[6] महताऽऽविष्टः पूर्ववैरमनुस्मरन्] ॥ आजघान शरैस्तीक्ष्णैः कालानलशिखोपमैः ॥ १३२ ॥
राक्षसेनाहवे तस्य ताडितस्यापि सायकैः ॥ स्वभावतेजोयुक्तस्य भूयस्तेजोऽभ्यवर्धत ॥ १३३ ॥
ततो रामो महातेजा रावणेन कृतव्रणम् ॥ दृष्ट्वा प्लवगशार्दूलं कोपस्य वशमेयिवान् ॥ १३४ ॥
तस्याभिचङ्क्रम्य[7] रथं सचक्रं साश्वध्वजच्छत्रमहापताकम् ॥
ससारथिं साशनिशूलखड्गं रामः प्रचिच्छेद शरैः[8] सुपुङ्खैः ॥ १३५ ॥
अथेन्द्रशत्रुं तरसा जघान बाणेन वज्राशनिसन्निभेन ॥
भुजान्तरे व्यूढसुजातरूपे वज्रेण मेरुं भगवानिवेन्द्रः ॥ १३६ ॥
यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ॥
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ १३७ ॥

न्वा यदि गमिष्यसि यद्यपि गमिष्यसि । तथापि अद्य मत्समीपं गतस्त्वं । मे मत्तः । न विमोक्ष्यसे । दश वा दिशो वेत्यत्र एको वाकारश्चार्थः ॥ १२९ ॥ अद्य य एष त्वया शक्त्याभिहतः स एषः तव विषादमिच्छन्सन् सपुत्रदारस्य तव मृत्युः सन् सहसा अभ्युपेतः अभ्युपागतप्रायः । अचिरादागमिष्यतीत्यर्थः । यद्वा अभेदेनोच्यते । यः शक्त्याभिहतः स एवाहमागतवानस्मि । लक्ष्मणं प्राहरमिति मा गा गर्वमिति भावः ॥ १३० ॥ लक्ष्मणेनाप्रहृतः कथं त्वया प्रहृतः स्वामित्याशङ्क्य स्वपराक्रमविशेषं दर्शयति—एतेनेति ॥ एतच्छब्दः सन्निहितपरः एषोस्मीत्यादिप्रयोगात् अयं जन इति प्रयोगाच्च । मयेत्यर्थः । मृत्युशब्दापेक्षया वा एतेनेत्युक्तिः । चतुर्दशानि । चतुर्दशशब्दादर्शआद्यचि टिलोपे कृते जसि रूपं । यद्वा एतेनेति स्वाभेदेन लक्ष्मणो निर्दिश्यते ॥ १३१ ॥ राघवस्येत्याद्यर्धत्रयमेकं वाक्यं । वहन्तमिति । आत्मानं प्रहृत्य पुनरपि रामं वहतीति क्रोधादिति भावः ॥ १३२ ॥ स्वभावतेजः स्वाभाविकतेजः ॥ १३३ ॥ एयिवान् प्राप्तः ॥ १३४ ॥ अभिचङ्क्रम्य पौनःपुन्येन समीपं गत्वा ॥ १३५ ॥ वज्राशनिसन्निभेनेति । बाणस्य वज्रसाम्यमुच्यते । वज्रेण मेरुं भगवानिवेन्द्र इति प्रहर्तू रामस्येन्द्रसाम्यमित्यपुनरुक्तिः । भगवान् वीर्यवान् । "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥ १३६ ॥ यः पुरा । वज्रपातयुक्ताशनिसन्निपातादिति मध्यमपदलोपिसमासः । वज्रं इन्द्रायुधं । अशनिः औत्पातिकः । न चुक्षुभे नार्तिं प्राप्तः । नापि चचाल नार्तिनिमित्तं चलनं प्राप्तः । राजा अन्यूनराजभावश्च स्थितः । सः रामबाणाभिहतः । भृशार्त-

आसीदितिशेषः । स० विष्णोर्भागमिति । व्याख्यातमिदं ॥ १२० ॥ ति० एवंपरमक्रोधेहेतुमाह—यइति । अद्यत्वयायुद्धंगच्छन्नसौलक्ष्मणःत्वयाशक्त्यानिहतःताडितःसन्सहसाविषादंगतः । अतोऽभ्युपेत्यप्रतिज्ञाय । सएषोहंतद्दुःखशान्तयेसपुत्रपौत्रस्यतेसंख्ये मृत्युर्भविष्यामीतिशेषः । स० एषलक्ष्मणः । सः सीतापहारः । एषः लक्ष्मणविषादः । हेरक्षोगणराज सपुत्रपौत्रस्यतवअद्यमृत्युः भविष्यति ॥ १३० ॥ स० पूर्ववैरं अक्षक्षपणस्वताडनादिजनितं ॥ १३२ ॥ स० स्वभावतेजोयुक्तस्येत्यनेन वराद्युक्तिर्लोकानुसारेणेतिसूच्यते ॥ १३३ ॥ शि० कृतव्रणं व्रणायकृतःप्रयत्नोयस्मिंस्तं प्लवगशार्दूलंदृष्ट्वा क्रोधस्यप्रातीतिककोपस्यवशमिव एयिवान् । वशशब्दआचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । किंच क्रोधस्य क्रोधवतः वशंकान्तिं एयिवान् कोपवत्सदृशकान्तिमानभवदित्यर्थः

[ पा० ] १ झ. ञ. ट. यश्चैष. २ क. घ. ङ. च. झ. ञ. ट. गच्छन्विषादं. ३ ख. ग. घ. च. झ. ञ. ट. सएष. ४ ङ. झ. ञ. ट. सपुत्रपौत्रस्य. ५ ङ. झ. ट. महाबलः. ६ इदमर्धं क. ख. ङ.—ट. पाठेषुदृश्यते. ७ क.—घ. च.—झ. ट. संक्रम्य. ८ ङ. झ. शितैःशराग्रैः.

तं विह्वलन्तं प्रसमीक्ष्य रामः समाददे दीप्तमथार्धचन्द्रम् ॥
तेनार्कवर्णं सहसा किरीटं चिच्छेद रक्षोधिपतेर्महात्मा ॥ १३८ ॥
तं निर्विषाशीविषसन्निकाशं शान्तार्चिषं सूर्यमिवाप्रकाशम् ॥
गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ॥ १३९ ॥
कृतं त्वया कर्म महत्सुभीमं हतप्रवीरश्च कृतस्त्वयाहम् ॥
तस्मात्परिश्रान्त इव व्यवस्य न त्वां शरैर्मृत्युवशं नयामि ॥ १४० ॥
[1]गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम् ॥
आश्वास्य निर्याहि रथी [2]च धन्वी तदा बलं [3]द्रक्ष्यसि मे रथस्थः ॥ १४१ ॥
स एवमुक्तो हतदर्पहर्षो निकृत्तचापः स हताश्वसूतः ॥
शरार्दितः कृत्तमहाकिरीटो विवेश लङ्कां सहसा स राजा ॥ १४२ ॥
तस्मिन्प्रविष्टे रजनीचरेन्द्रे महाबले दानवदेवशत्रौ ॥
हरीन्विशल्यान्सह लक्ष्मणेन चकार रामः परमाहवाग्रे ॥ १४३ ॥

---

भृशमार्तः क्षुब्धः। चचाल। वीरोपि चापं मुमोच। स्वस्य स्वरक्ष्यत्वान्वयं त्यक्तवान् रामैकरक्ष्यत्वद्योतनाय ॥ १३७ ॥ विह्वलन्तं मूर्च्छितं। प्रसमीक्ष्य तस्यानन्यशरण्यत्वमवलोक्य। अर्धचन्द्रं अर्धचन्द्राकाराग्रं बाणं। आददे। तेन मुकुटं चिच्छेद। मानभङ्गमकरोदित्यर्थः। महात्मा महामनाः। दयालुरित्यर्थः। आभ्यांश्लोकाभ्यां भगवद्रक्षणे निमित्तं स्वयत्ननिवृत्तिरेवेत्युक्तं ॥ १३८ ॥ तं त्यक्तचापं। अतएव निर्विषाशीविषसन्निकाशं निर्विषसर्पतुल्यं। अप्रकाशं निस्तेजस्कं। अतएव शान्तार्चिषं शान्तकिरणं सूर्यमिव स्थितं। कृत्तकिरीटकूटं छिन्नकिरीटसमूहं। "मायानिश्चलयन्त्रेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियां" इत्यमरः। अतएव गतश्रियं निष्प्रभं। उवाच ॥ १३९ ॥ महत् अनितरदुष्करं। सुभीमं कर्म युद्धं कृतं। किं चाहं हतलक्ष्मणादिप्रवीरश्च कृतोस्मि। तस्मात् अनेकवीरपतनावधिकरणकरणात्। त्वं परिश्रान्तः आयुधधारणेपि श्रान्त इति व्यवस्य निश्चित्य। त्वां मृत्युवशं मृत्योरधीनतां। ननयामि। चिररणपरिश्रान्तक्रन्तनकृतापवादापनोदाय. संप्रति भवतः प्राणापहरणकर्मणो विरमामीत्यर्थः ॥ १४० ॥ रिपौ पुरो विलसति कथं गच्छेयमित्यत्राह—अनुजानामीति। रणार्दितः युद्धे श्रान्तः। रात्रिंचरराजकूटयोधिन्निति सापहासोक्तिः। आश्वास्य विश्रम्य। रथी धन्वी च सन्निर्याहि। स त्वं तदा तादृशं मे बलं रथस्थ इत्युपलक्षणं, धानुष्कश्च सन् द्रक्ष्यसीत्यन्वयः ॥ १४१ ॥ स इति। अत्र क्रियाभेदात्तच्छब्दत्रयमिति न तद्वैयर्थ्यं। सहसा मुकुटभङ्गकृतलज्जः येति भावः ॥ १४२ ॥ प्रविष्टे लङ्कामिति शेषः। दानवदेवशत्रावित्यनेन रावणनिर्गमो देवदानवहर्षहेतुरिति सूच्यते। सह लक्ष्मणेनेति। लक्ष्मणस्य पूर्वमेव विशल्यत्वेप्यादरात्पुनःकरणं। परमाहवाग्र इत्यनेन विशल्यकरणं विना सुग्रीवादीनां हरीणामन्यत्रा-

---

॥ १३४ ॥ स० सुभीमंकर्मसमरेत्वयाकृतं। अहंहतप्रवीरः हताः हतप्रायाःप्रवीराः नीलाद्यायस्यसतथाकृतः। यद्वा त्वयानिमित्तभूतेन अहं–हताःप्रवीरास्तावकाःयेनसतथाकृतइतिवा। एतेनैकलापराधेनबहूनांघातोजातइतिसूच्यते। सुभीमकर्मकर्तृत्वात्प्रहस्तादीनांसहायभूतानामभावाच्चपरिश्रान्तइतिव्यवस्य निश्चित्य त्वांनमृत्युवशंनयामि। किरीटत्रोटनेनत्वयापिशिरःकर्तनसामर्थ्यंममास्तीतिज्ञातमेवेतिभावः ॥ १४० ॥ स० इतोरणात् रणमण्डलात्। प्रयाहि। जानामि अनुजानामि। उपसर्गाश्चधातुलीनार्थद्योतकाइत्युपपद्यते अनुजानामीति। रथी सहायातानेकरथवान्। सधन्वीत्यप्येवमेव। सत्वं धन्वीतिवा। प्रेक्ष्यसि प्रेक्षिष्यसि

[ पा० ] १ ङ. झ. ट. प्रयाहिजानामि. २ झ. ञ. ट. सधन्वी. ३ क. घ.—ट. प्रेक्ष्यसि. ४ ग. रणार्दितः.

तस्मिन्[१]प्रभिन्ने त्रिदशेन्द्रशत्रौ सुरासुरा भूतगणा दिशश्च ॥
ससागरा[२]ः [३]सर्षिमहोरगाश्च तथैव भूम्यम्बुचराश्च हृष्टाः ॥ १४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ॥ ६० ॥

श्रीरामपराभूतभीतेनरावणेन सभायांमन्त्रिमध्ये स्वस्यनानाशापप्राप्तिनिवेदनेनशोचनपूर्वकं राक्षसान्प्रति कुंभकर्णप्रबोधननियोजनम् ॥ १ ॥ राक्षसैर्महताप्रयासेन कुंभकर्णप्रबोधनम् ॥ २ ॥ राक्षसैर्विनिवेदितनिखिलवृत्तान्तेनतेन रावणाज्ञयातदवलोकनायातिविपुलनिजशरीरावलोकनजभयविद्रुतकपिकुलेनसता राजमार्गैर्निर्गमनम् ॥ ३ ॥

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः ॥ भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ॥ १ ॥
मातङ्ग इव सिंहेन गरुडेनेव पन्नगः ॥ अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ २ ॥
[४]ब्रह्मदण्डप्रकाशानां विद्युत्सदृशवर्चसाम् ॥ स्मरन्राघवबाणानां विव्यथे राक्षसेश्वरः ॥ ३ ॥
स काञ्चनमयं दिव्यमाश्रित्य परमासनम् ॥ विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ॥ ४ ॥
सर्वं तत्खलु मे मोघं यत्तप्तं परमं तपः ॥ यत्समानो महेन्द्रेण [५]मानुषेणास्मि निर्जितः ॥ ५ ॥
इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् ॥ मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ॥ ६ ॥
देवदानवगन्धर्वैर्यक्ष[६]राक्षसपन्नगैः ॥ अवध्यत्वं मया प्राप्तं मानुषेभ्यो न याचितम् ॥ ७ ॥
विदितं मानुषं मन्ये रामं दशरथात्मजम् ॥ इक्ष्वाकु[७]कुलनाथेन अनरण्येन यत्पुरा ॥ ८ ॥

---

नयनासंभवः सूच्यते ॥ १४३ ॥ पूर्वसूचितं देवादिहर्षं प्रपञ्चयति—तस्मिन्निति ॥ प्रभिन्ने पराजिते । दिशः दिक्पालाः । सागराः सागरवासिनः । अम्बुचराः सागरभिन्नाम्बुचराः । हृष्टाः बभूवुरिति शेषः । षष्ठ्यां रावणमुकुटभङ्गः ॥ १४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

अथ कुम्भकर्णप्रबोधनं षष्टौ—स प्रविश्येत्यादि ॥ रामाबाणभयार्दितः किमिदानीमपि रामबाणाः पतेयुरिति भयपीडितः । व्यथितेन्द्रियः दुःखितमनस्कः ॥ १ ॥ मनोव्यथामुपपादयितुं तद्धेतुं सदृष्टान्तमनुवदति—मातङ्ग इवेति ॥ महात्मना महास्वभावेन । बलवतेत्यर्थः ॥ २ ॥ ब्रह्मदण्डेति । ब्रह्मदण्डः ब्रह्मशापः । सर्वास्त्रनिगरणक्षमो वसिष्ठदण्डो वा ब्रह्मास्त्रं वा । युगान्तकालसमुत्थितोग्निवर्णो धूमकेतुरित्येके । तत्प्रकाशानां बाणानामिति "अधीगर्थदयेशां कर्मणि" इति षष्ठी ॥ ३–४ ॥ मे मया । यत्तपस्तप्तं तत् सर्वं मोघं जातमिति शेषः ॥ ५ ॥ ब्रह्मवाक्यं तु फलितमित्याह—इदमिति ॥ त्वं मानुषेभ्यो भयं विजानीहीति यत् ब्रह्मणो घोरं वाक्यं तदिदं मामभि मां प्रति । उपस्थितं मयि फलितमित्यर्थः । यतस्तत् ब्रह्मवाक्यं । तथा । नतु मोघं भविष्यतीत्यर्थः ॥ ६ ॥ प्राप्तं याचित्वा प्राप्तं । मानुषेभ्योऽवध्यत्वं नैव याचितमित्यर्थः ॥ ७ ॥ विदितमित्यादिसार्धश्लोकद्वयमेकान्वयं । यस्त्वामित्यत्र तु आमिति छेदः । आमित्यङ्गीकारे । यस्तु पुरुषस्त्वां संग्रामे निहनिष्यति सः मद्वंशे उत्पत्स्यते । आं निश्चितं । इत्येवंप्रकारेण इक्ष्वाकुकुलनाथेन अनरण्येन यत् यस्मात् । पुरा विदितं प्रतिज्ञातं । "विदितौ ज्ञातविश्रुतौ" इति

---

॥ १४१ ॥ **ति०** अयंरावणपराभवः तन्मासीयशुक्लषष्ठ्यांसायंकाले । **स०** भूम्यंबुचराः भूमिचराः अंबुचराः मनुष्यादयोयादांसिच । प्रहृष्टाः । सर्वोपद्रवकर्तृपराभवस्यसर्वापेक्षितत्वादितिभावः ॥ १४४ ॥ इत्येकोनषष्टितमःसर्गः ॥ ५९ ॥

**स०** महेन्द्रेणसमानः मानसहितः तेनापिमानितइत्यर्थकरणेऽर्थविशेषोलभ्यते ॥ ५ ॥ **स०** अनरण्येन तन्नामकेनराज्ञा ।

**[ पा० ]** १ घ. ङ. छ. झ. ञ. ट. प्रभग्ने. २ ग. रणार्दितः. ३ घ. ङ. झ. ट. सर्वमहोरगाश्च. ४ ङ. झ. ट. ब्रह्मदण्डप्रतीकानांविद्युच्चलितवर्चसां. ५ ङ. झ. मानुषेणविनिर्जितः. ६ ग. राक्षसकिंनरैः. ७ ङ.—ट. कुलजातेन.

**उत्पत्स्यते हि मद्वंशे पुरुषो राक्षसाधम ॥ यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ॥**
**निहनिष्यति संग्रामे त्वां कुलाधम दुर्मते ॥ ९ ॥**
**शप्तोऽहं वेदवत्या च यदा सा धर्षिता पुरा ॥ सेयं सीता महाभागा जाता जनकनन्दिनी ॥ १० ॥**
**उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका ॥ [1]यथोक्तास्तपसा प्राप्तं न मिथ्या ऋषिभाषितम् ॥ ११ ॥**
**[2]एतदेवाभ्युपागम्य यत्नं कर्तुमिहार्हथ ॥ राक्षसाश्चापि तिष्ठन्तु चर्यागोपुरमूर्धसु ॥ १२ ॥**
**स [3]चाप्रतिमगम्भीरो देवदानवदर्पहा ॥ ब्रह्मशापाभिभूतस्तु कुम्भकर्णो विबोध्यताम् ॥ १३ ॥**
**[4]स पराजितमात्मानं प्रहस्तं च निषूदितम् ॥ ज्ञात्वा रक्षोबलं भीममादिदेश महाबलः ॥ १४ ॥**
**द्वारेषु यत्नः क्रियतां प्राकारश्चाधिरुह्यताम् ॥ निद्रावशसमाविष्टः कुम्भकर्णो विबोध्यताम् ॥ १५ ॥**
**सुखं स्वपिति निश्चिन्तः [5]कालोपहतचेतनः ॥ [6]नव षट् सप्त चाष्टौ च मासान्स्वपिति राक्षसः ॥ १६ ॥**

---

नानार्थरत्नमाला । तस्मात् मानुषं रामं दशरथात्मजं दशरथपुत्रत्वेन जातं । मन्ये । राक्षसाधम कुलाधमेति जातितः कुलतश्च नीचत्वमुच्यते । दुःखातिरेकादनरण्योक्तपरुषानुवादः । अन्येतु त्वामिति द्विरुक्तिरनुस्मरणार्थेत्याहुः । अपरे त्वाग्रहातिशयेन द्विरुक्तिरिति । त्वां प्रत्युत्पत्स्यत इति द्वितीयत्वांशब्दान्वय इत्येके ॥ ८—९ ॥ किं चाहं पुरा वेदवत्या शप्तोस्मि । मत्कृते तव विनाशो भविष्यतीति । कदेत्यत्राह—यदेति । सा वेदवती । यदा धर्षिता बलात्कृता । तदा । अद्य तया किं क्रियते सीता ह्येतदुपद्रवमूलमित्यत्राह—सेयमिति । सा वेदवती स्वशापनिर्वाहार्थं सीता जाता ॥ १० ॥ उमादयश्चत्वारः तपसा तपःप्रभावेन । यथोक्ताः यथोक्तवन्तः । तथा प्राप्तं सिद्धं । ऋषिभाषितं न मिथ्या भवति हि । नन्दीश्वररम्भाशापावुत्तररामायणे प्रोक्तौ । उमावरुणकन्यकाशापौ चानेनैव सिद्धौ ॥ ११ ॥ एतत् शापस्वरूपं । अभ्युपागम्य ज्ञात्वा । इह प्रकृते शत्रुविजये कार्ये । यत्नं अवधानं । कर्तुमर्हथ । चर्याः गोपुरपार्श्वस्थभटसंचारप्रदेशाः ॥ १२ ॥ ब्रह्मशापाभिभूतः ब्रह्मशापकृतनिद्रापरवश इत्यर्थः ॥ १३ ॥ किमर्थं कुम्भकर्णो विबोध्यत इत्याशङ्क्य कविराह—स पराजितमिति ॥ आदिदेश कुम्भकर्णविबोधनार्थमिति शेषः ॥ १४ ॥ द्वारेषु अवान्तरद्वारेषु । यत्नः क्रियतां, प्राकारश्चाधिरुह्यतां । वानरानारोहार्थमिति भावः । निद्रावशसमाविष्टः निद्रावशेन शयानः । सद्यः कर्तव्यत्वाय पुनरुक्तिः ॥ १५ ॥ सुखमिति । दुःखिते चिन्ताकुले अनवाप्तकामे मयि जाग्रति सतीति शेषः । न केवलमिदानीमेव सर्वदाप्येवमेवेत्याह—नवेति ।

---

यत् यः प्रोक्तइतिशेषः ॥ ८ ॥ **स०** सबलं शारीरबलसहितं । त्वां अन्यांसेनांच । "त्वत्वइतिद्वावप्यदन्तावन्यपर्यायौ" इतिकौमुद्याद्युक्तेः । आक्रोशाद्वा द्विरुक्तिः ॥ ९ ॥ **स०** यथा यतः सावेदवत्येवेयंसीता । तस्याःसीतात्वेनोत्पत्तेः रामायणएवस्पष्टमुक्तेः ॥१०॥ **ती०** उमाशापस्तु कैलासगिरिचलनवेलायां रावणतेस्त्रीनिमित्तंवधइत्येवंरूपइतिज्ञेयं । **स०** रंभानिमित्तोनलकूबरशापः । वरुणकन्यका पुञ्जकस्थली तन्निमित्तोब्रह्मशापः । यथोक्ताः कर्मणोवैवक्षिकादित्वमभ्युपेत्य "आदिकर्मणि—" इतिक्तः । भावेक्तप्रत्ययान्तेनबहुव्रीहिर्वा । तत्तद्वचनानुगुणंफलंप्राप्तं । ऋषयोज्ञानिनः ॥ ११ ॥ **स०** ब्रह्मशापाभिभूतः ब्रह्मणा इन्द्रवाक्यश्रवणानन्तरंकुंभकर्णायशापोदत्तइतितेनाभिभूतः । "तस्मात्त्वमद्यप्रभृतिमृतकल्पःशयिष्यसे" इत्यत्रैवाग्रेव्यक्तं । नचतस्यवरादेव स्वापसिद्धेःशापोव्यर्थइतिवाच्यं । सरस्वत्यास्वानुकूलंवाचयित्वाब्रह्मणिगतेसति देवैरहंवञ्चितइतिज्ञात्वा स्वच्छन्दत्वात्स्वापस्यनाहं तथाकरोमीतिनिश्चित्यपुनश्चकुंभकर्णेनप्रजाबाधेसतिकथितशापसार्थक्यसंभवात् । अभिभूतः तिरस्कृतः । यथोक्तमुत्तरकाण्डे "वरव्याजेनमोहोस्मैदीयताममितप्रभ" इति ॥ १३ ॥ **स०** रक्षः कुंभकर्णाख्यं ॥ १४ ॥ **शि०** ननुसुप्तोजनोजागर्त्येवेतिस्वयं जागरिष्यतीत्यतआह—नवेति । नवचसप्तच षोडशेत्यर्थः । तेषांयेदश तेषामष्टौ निगरणे निस्सारणेसतीत्यर्थः । मासान् अवशिष्टषण्मासानित्यर्थः । राक्षसः कुंभकर्णः । मन्त्रेक्तत्वास्वपिति अस्वपत् । अतःप्रसुप्तोऽयं इतोनवमेऽहनि जागरितेतिशेषः । तद्दिनएवस्वापावधिपूर्तिर्भवितेतितात्पर्यम् । अष्टिशब्दोभक्षणार्थकाशधातुप्रकृतिकक्तिन्नन्तः । "वर्तमानसामीप्ये" इतिभूतेलट् । अतएव "शयिताह्येषषण्मासानेकाहंजागरिष्यति" इतिषण्मासमात्रशयनप्रतिपादकवरदानवाक्येननविरोधः । वस्तुतस्तु नवाद्यन्य-

[ पा० ] १ ङ. झ. ट. यथोक्तास्तन्मयाप्राप्तं. २ ङ.—ट. एतदेवसमागम्य. ३ क.—ख. च.—झ. चाप्रतिमगांभीर्यो. ४ ग. झ. समरेजितमात्मानं. ५ क. ख. झ. ट. कामोपहतचेतनः. ६ ट. नवसप्तदशाष्टौच.

कदाचिन्नवमासान् कदाचित् षण्मासान् कदाचित्सप्तमासान् कदाचिदष्टमासांश्चानियमेन स्वपितीत्यर्थः । अतएवोत्तरकाण्डे अविशेषेण वरप्रार्थना कुम्भकर्णेन क्रियते—"स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितं" इति । उत्तरत्र रामंप्रति विभीषणवचने—"शयिता ह्येष षण्मासानेकाहं जागरिष्यति" इति वचनं तु पक्षान्तराणामप्युपलक्षकं । अन्यूनाभिप्रायं वा । सप्तमासादिस्वापासंभवेपि षण्मासस्वापः संभवत्येव । "यद्वा, नवसप्तदशाष्टौ च मासान्स्वपिति राक्षसः" इति पाठः । दशाष्टौ दशमासहानौ सत्यां नवसप्तमासान् षण्मासानित्यर्थः । अष्टिरशनं नाश इति यावत् । नवसप्तमासाः षोडशमासाः तेषु दशमासलोपे हि षण्मासा एवावशिष्यन्ते । अथवा षडहैर्मासान्त्संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्त्संपश्यन्त्यर्धमासैर्मासान्त्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान्त्संपश्यन्त्यमावास्यया मासान्संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान्संपश्यन्ति पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्तीत्युक्तमासविकल्पेषु षडहानामपि मासत्वश्रवणात्तत्प्रकारेण नवषडित्युक्तत्रिंशन्मासा अपि अशीत्युत्तरशतदिनतया अमावास्यया पौर्णमास्या वा परिगणनेन षण्मासा एव संपद्यन्त इति न कश्चिद्विरोधः । तथाहि अस्ति किंचित् उत्सर्गिणामयनं नाम सत्रं गवामयनस्य विकृतिः । तत्र प्रकृतौ द्वादशमासेष्वनुष्ठेयानां सोमयागविशेषाणां त्रिंशतोनुष्ठेयत्वान्न किंचिदहरुत्स्रष्टुं शक्यते । तद्विकृतावत्र प्रतिमासमेकस्मिन्नहनि सोमयागपरित्यागो विधीयते । तत्र कतममहस्त्यज्यतामित्यपेक्षायामुच्यते—अमावास्यया मासान्त्संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान्त्संपश्यन्ति पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्तीति । अस्यार्थः अमावास्यायामनुष्ठेयेन यागेन पूर्वमासं परिसमाप्य उत्तरस्यादिभूतमहस्त्यज्यतामिति । पौर्णमास्यामनुष्ठेयेन यागेन पूर्वमासं परिसमाप्य उत्तरस्यादिभूतमहस्त्यज्यतामिति च । अस्मिन्विधाने अर्थवादे प्रसिद्धिवाचिना हिशब्देन अमावास्याया मासान्तत्वं । उत्तरवाक्ये पौर्णमास्या मासान्तत्वं च श्रुतं । एवं अर्धमासैर्मासान्त्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान्संपश्यन्ति षडहैर्मासान्संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्त्संपश्यन्तीत्यत्रापि पक्षात्मकः षडहात्मकोपि मासोस्तीति हिशब्देन दर्शितं । ननु च षडहैरिति बहुवचननिर्देशात् पञ्चभिः षडहैरिति व्याख्यानेन त्रिंशद्दिनात्मको मास एवात्र कथ्यत इति चेन्न । अर्धमासैरित्यत्रापि तथात्वापत्तेः । तदानीं बहुर्धमासानां मासत्वस्वीकारे पक्षत्रयस्यापि मासत्वप्रसङ्गः । तत्र पक्षा वै मासा इत्युक्तरीत्या एकैकस्य पक्षस्य मासत्वस्वीकारे अत्राप्येकैकस्यैव षडहस्य मासत्वस्वीकारो युक्तः । पूर्वकल्पेष्विवात्रापि प्रसिद्धिवाचकहिशब्दप्रयोगात् । अन्यथा उत्तरानुवाके षडहैर्मासान्त्संपाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयुरिति वाक्यविरोधः स्यात् । सप्तमत्वं ह्यत्र विशिष्यते । षडहैर्मा-

---

तमान्मासान्स्वपितीत्यर्थः । वरदानवाक्येनतुनविरोधः । तस्यषण्मासाभ्यन्तरमात्रेप्रबोधाभावपरत्वात् । तदुत्तरंस्वाभाविकनिद्रायानिषेधाभावाच्च । एवमेकाहंजागरिष्यतीतिवाक्यस्यापिस्वापानन्तरकालिकैकदिनेनिश्शेषस्वापाभावपरत्वात् । तदुत्तरदिनेस्वाभाविकजागरणस्यननिषेधः । यद्दिनादारभ्यस्वपितितद्दिनादारभ्यषण्मासान्नजागर्ति । यद्दिनेजागर्ति तदुत्तरदिनेनस्वपितीतितात्पर्यम् । अतएव "स्वप्तुंवर्षाण्यनेकानिदेवदेवममेप्सितं" इतिवक्ष्यमाणोत्तरकाण्डीयतद्वरप्रार्थनस्यनानैरर्थक्यं । अतएव "तत्रनिद्रांसमाविष्टःकुंभकर्णोमहाबलः । बहून्यब्दसहस्राणिशयनान्नचबुध्यते" इतिरामंप्रत्यगस्त्यवचनंसंगच्छते । स० तत्स्वापप्रकारमाह—नवेत्यादिना । अत्रेदंबोध्यं । कुंभकर्णः षट्सप्ताष्टनवमासान्स्वपिति । उपलक्षणमेतत् । अनेकाब्दसहस्राण्यपिकदाचित्स्वपितीतिग्राह्यं । प्रबोधस्तुषण्मासादर्वाङ्नैवभवति । तदूर्ध्वंभवंश्चनियतः । कदाचित्सप्तमासानन्तरंकदाचिदष्टमासानन्तरमित्येवमादितोबोध्यं । कदाप्रबोधेपिजागरणमेकस्मिन्नेवदिनेद्वितीयदिनेपुनश्चस्वापइति । एतेनैतानिवचनानिसमाहितानि । तथाहि । "शयिताह्येषषण्मासानेकाहंजागरिष्यति" इत्यत्रैवब्रह्मवाक्यं । "स्वप्तुंवर्षाण्यनेकानिदेवदेवममेप्सितं" इतिवरप्रार्थनावाक्यं । तत्रैवोत्तरेऽगस्त्यवचनं "तत्रनिद्रांसमाविष्टःकुंभकर्णोमहाबलः । बहून्यब्दसहस्राणिशयानोनचबुध्यते" इति । मन्त्रं रामेणसह युद्धकरणेआलोचनं । इतः रामस्यलङ्कानिरोधदिवसात्पूर्वंनवमेऽहनिसुप्तः । कुंभकर्णस्वापदिनएवविभीषणस्यरामंप्रतिगमनं । ततस्त्रिदिनंसमुद्रप्रार्थना । पञ्चदिनंसेतुबन्धः । पञ्चमेसायंकालेपरपारप्राप्तिः । नवमेलङ्कासमीपगमनमितिविवेकः । यत्तुनागोजिभट्टेन एतदुत्तरं 'मन्त्रंकृत्वाप्रसुप्तोयमितस्तुनवमेऽहनि' इत्यर्धंपठ्यते तत्, यच्च तस्य इतः युद्धप्रारंभदिनात्प्राक्तनेनवमेऽहनीतिव्याख्यानं तदसंगतमेव । "अयंतेसुमहान्कालःशयानस्यमहाबल" इत्यनेनषण्मासादधिकत्वस्यसांप्रतनिद्रायांप्रतीतेः अहश्शब्दोलक्षणयामासपरोवा' इतिभाषितं तत्रमन्त्रकालेइदानींसमुत्थितः "कुंभकर्णःप्रचुक्रोधवचनंचेदमब्रवीत्" इत्यादिनाकुंभकर्णस्यजाग्रत्त्व-

**मंत्रयित्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि ॥ तं तु बोधयत क्षिप्रं कुम्भकर्णं महाबलम् ॥ १७ ॥**

सानित्यत्र मासशब्दस्य मासैकदेशलक्षणाङ्गीकारे स एव दोषः । तस्मात् षडहात्मकोपि मासोस्तीति सिद्धम् । तमिमं श्रौतं षडहमासत्वपक्षमनुस्मरन्तः षण्मासानेव वदन्ति " नव षट् सप्त चाष्टौ च मासान्स्वपिति राक्षसः " इति ॥ १६ ॥ ननु सुप्तः कथं बोधयितुं शक्य इत्याशङ्क्य इदानीमेव स्वापारम्भात्सुप्रबोधोयमित्याशयेनाह—मन्त्रयित्वेति ॥ अत्र केचित् एकाहं जागरिष्यतीति कुम्भकर्णस्य स्वापोत्सर्जनानन्तरमेकस्मिन्दिन एव प्रबोधनियमस्योक्तत्वान्मन्त्रकरणदिनसमनन्तरदिन एव कुम्भकर्णस्य स्वापारम्भः । आजगाममुहूर्तेनेत्यनेन विभीषणागमनमपि मन्त्रदिन एव, " विभीषणेनाशु जगाम संगमं " इत्यनेन तदागमनानन्तरमेव तस्य स्वीकारः । तद्दिवसप्रभृति दिवसप्रत्यये समुद्रप्रार्थनार्थं रामस्य दर्भशयनं । तदनन्तरं पञ्चदिनेषु सेतुबन्धः । सेतुबन्धपूर्तिदिवस एव सायंकाले सुवेलारोहणं । तस्यामेव रात्रौ सुग्रीवरावणयोर्द्वन्द्वयुद्धं । समनन्तरदिने तुमुलयुद्धं । तत्रैव रात्रौ नागपाशबन्धमोक्षौ । धूम्राक्षवज्रदंष्ट्राकम्पनवधश्च । अनन्तरदिने प्रहस्तवधः रावणमुकुटभङ्गश्च । एवं दिवसगणनोपपत्तिरिति वदन्ति । तच्चिन्त्यं । सुवेलारोहणरात्रौ पूर्णचन्द्रोदयवर्णनेन सुवेलारोहणदिनं पौर्णमासीति सिद्धं । रावणमरणदिनं चामावास्येति स्फुटं । एवंच त्वदुक्तरीत्या द्वितीयायामेव मुकुटभङ्गे रावणस्य दर्शपर्यन्तं विलम्ब्य युद्धकरणं चिन्त्यं । वस्तुतस्तु इतः प्रसक्तायुद्धारम्भदिनादित्यर्थः । तद्दिनमपहाय तत्पूर्वदिनापेक्षया नवमेऽहनि तत्पूर्वदिनकृतमन्त्रः प्रसुप्तः । तथाच पौर्णमास्यां सुवेलारोहणं प्रथमायां युद्धारम्भः । तत्पूर्वं नवमदिनं सप्तमी । तस्यां कुम्भकर्णःसुप्तः । रामस्य दर्भशयनारम्भश्च । षष्ठ्यां कुम्भकर्णादिभिर्मन्त्रविचारः । तस्यामेव विभीषणनिर्गम इति । इत्थं चाहुः । सीताहरणात्पूर्वं त्रयोदशसंवत्सरा गताः । चतुर्दशवर्षारम्भे सीता हृता पम्पातीरे वसन्तवर्णनात् । आषाढे वालिवधः । तदनन्तरं वर्षर्तुवर्णनात् । आश्वयुजे सीतान्वेषणसमुत्साहनमिति स्फुटं । स्वयंप्रभाबिले बहुकालो गतः । फाल्गुनशुद्धत्रयोदश्यां हनुमतो लङ्काप्रवेशः । " पुष्पिताग्रान्वसन्तादौ ददर्श विविधान्द्रुमान् " इति वसन्तादिभूतफाल्गुनमासतासूचकवृक्षाग्रपुष्पितत्वोक्त्या तथाप्रतीतेः । " स्थितः ककुद्मानिव तीक्ष्णशृङ्गः " इति श्लोके प्रतिपूर्णशृङ्ग इति पदेन प्रतिपूर्णशृङ्गवच्चन्द्रवर्णनस्य तस्यामेवसंभवात् । यस्मिन्दिने रात्रौ लङ्कायां सीतान्वेषणं तदनन्तरदिन एव प्रातर्लङ्कादाहः । " अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये " इत्युक्तत्वात् । अनन्तरं तस्मिन्नेव दिने अविलम्बेन प्रत्यागमनं । " यदि वा मन्यसे वीर वसैकाहमरिन्दम " इति सीतया पृष्टे, " एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः । गमनाय मतिं चक्रे " इत्युक्तेः । उषसि लङ्कादाहानन्तरं तस्मिन्नेव दिने मध्याह्नात्पूर्वमेवाङ्गदादिभिर्मधुवनविधमनपूर्वकं रामप्राप्तिः । अरिष्टपर्वतारोहणे तद्वर्णनव्याजेन " बोध्यमानमिवप्रीत्यादिवाकरकरैःसुखैः " इति सूर्योदयसमयमुक्त्वा अनन्तरमस्तमयानुक्तेः । तस्मिन्नेव दिवसे चतुर्दशीशेषयुक्तपौर्णमासीयुते मध्याह्ने युद्धयात्रा । " अस्मिन्मुहूर्तेसुग्रीव प्रयाणमभिरोचये । युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः " इत्युक्तेः । यस्मिन्दिनेभिजिति प्रस्थानं तत्परेद्युरेव समुद्रतीरे सेनानिवेशः । " सा स्म याति दिवारात्रं महती हरिवाहिनी " इत्यारभ्य, मुहूर्तं क्वापि नासतेत्युक्तेः । यत्र दिने लङ्कादाहस्तत्रैव दिवसे सभायां मन्त्रिभिः सह किंचिद्विचारमुक्त्वा, " विसर्जयित्वा तान्सर्वान्प्रविवेश स्वकं गृहं " इत्यन्तेन लङ्कादाहदिनवृत्तान्तं परिसमाप्य, " ततः प्रत्युषसि प्राप्ते " इत्यादिना अनन्तरदिने उषःकाले विभीषणोपदेशं द्वितीयमुक्त्वा ततो मन्त्रविचाराय रावणे कुम्भकर्णविभीषणादिभिः

स्यप्रतीतेः सांप्रतंनिद्रायाःषण्मासादधिकत्ववर्णनं मूलविरुद्धमिव तन्मूलस्वव्याख्यानविरुद्धं ॥ उक्तरीत्यानवदिनीसंभवात् । लक्षणयाऽहश्शब्दोमासपरोवेतिनिरर्थकंलक्षणाश्रयणं । नच "अद्यतेसुमहान्कालःशयानस्य" इत्यग्रिमग्रन्थविरोधादित्थमास्थीयतइतिवाच्यं । दुःखसमयत्वेनाल्पकालस्यापिबाहुल्योक्तिःप्रथमस्कन्धेभीमंप्रति "गताःसप्ताधुनामासाः" इति धर्मवचनव्याख्यातात्पर्येमासशब्देनाहान्युच्यन्ते । "अहस्तुमासशब्दोक्तंयत्रचिन्तायुतंव्रजेत् । एवंसंवत्सराद्यंचविपरीतेविपर्ययः" इतिनाममहोदधावित्युक्तेः । अथवाल्पदिन्यावेदनेपुनःस्वापमुपेयात्कुंभकर्णइतिभियाभ्राता महान्कालइत्युदाजहारेतिसंभवात् ॥ १६—१७ ॥

[ पा० ] १ मन्त्रंकृत्वा.

सभां प्रविष्टे विभीषणस्य तृतीयमुपदेशमुक्त्वा, "इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः । आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः " इत्यविच्छेदेन लङ्कादाहदिनानन्तरदिन एव समुद्रतीरे रामसकाशागमवर्णनेन च द्वितीयदिने रामेण समुद्रतीरं प्राप्तमित्यवगम्यते । समुद्रतीरप्राप्तिदिनं च शिष्टफाल्गुनपौर्णमासी । अतएव, " उत्तराफल्गुनी ह्यद्ये"ति चतुर्थसर्गश्लोके प्रस्थानदिनस्य पौर्णमासीयुक्तत्ववचनमप्यविरुद्धं । समुद्रतीरप्राप्तिदिनस्य पौर्णमासीयुक्तत्वं च, " चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये । चन्द्रोदयसमुद्भूतं प्रतिचन्द्रसमाकुलं " इति, संध्यासमय एव चन्द्रोदयप्रतिपादनात्सिद्धं । सेनानिवेशवृत्तान्तो विभीषणागमनवृत्तान्तश्च एकदिनभाव्यपि वाचः क्रमवर्तित्वात्क्रमेणोक्तः । प्रथमायां रामस्य दर्भशयनारम्भः कुम्भकर्णस्वापारम्भश्च । चतुर्थीपञ्चमीषष्ठीसप्तम्यष्टमीषु सेतुबन्धः । अष्टम्यां रात्रौ सुवेलारोहणं । यत्तु सुवेले, " पूर्णचन्द्रप्रदीपा च निशा समभिवर्तत " इति वचनं तत्पूर्णचन्द्र इव प्रदीपा यस्यां निशायामित्येवमर्थकं व्याख्येयं । सुग्रीवसेनायां भेर्यादीनामिव प्रदीपादीनामपि संभवात् । सुवेलारोहणानन्तरदिने दिवा लङ्कानिरोधः । " तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः । लङ्कायां ददृशुर्वीरा वनान्युपवनानि च " इत्युपक्रम्य युद्धवर्णनात् । तत्रैव प्रथमदिनयुद्धे रात्रौ नागास्त्रबन्धतद्विमोक्षादि । " युध्यतामेव तेषां तु तथा वानररक्षसाम् । रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी" इत्यारभ्य, "सा बभूव निशा घोरा हरिराक्षसहारिणी । ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ॥ राममेवाभ्यवर्तन्त" । "तं भीमवेगा हरयो नाराचैः क्षतविग्रहाः । अन्धकारे न ददृशुः"इत्यादिभिस्तामेव रात्रिं प्रत्यभिज्ञाप्य, "निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ । क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः " इत्यादिप्रतिपादनात् । तत्रैव निशीथे वानरहर्षनादकुपितेन रावणेन प्रेषितयोर्धूम्राक्षवज्रदंष्ट्रयोर्युद्धं तद्वधश्च । तयोर्युद्धे दिवा ज्ञापकाभावात् वानरहर्षानन्तर्यश्रवणाच्च । रात्रिशेषेण तयोर्वधानन्तरं द्वितीयदिने अकम्पनयुद्धं । तन्निर्गमनवेलायां—" अभवत्सुदिने चापि दुर्दिनं रूक्षमारुतं " इति दिवा ज्ञापकसत्त्वात् । अकम्पनवधानन्तरमेव रावणस्य पूर्वाह्न एव पुरीपर्यटनं । अकम्पनवधानन्तरं प्रहस्तयुद्धमविलम्बेन तस्मिन्नेव दिने मध्याह्ने । ननु, " अन्योन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे " इति ग्रहाणां प्रकाशप्रतिषेधेन प्रहस्तयुद्धं रात्राविति चेन्न । उत्तरत्र दिवायुद्धेषु दिवादर्शनायोग्यानामप्यर्थानां प्रतिपादनात् । यथा, रावणयुद्धे । " प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् । समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः " इत्यादि । नच सर्वरात्रमवर्ततेति पाठानुरोधाद्रात्रावेव तत्प्रतिपादनमिति वक्तुं शक्यं । तदपपाठत्वस्यान्ते वक्ष्यमाणत्वात् । तस्मिन्नेव द्वितीयदिने रावणपराजयकुम्भकर्णप्रबोधनकुम्भकर्णयुद्धानि । कालविशेषमसंकीर्त्यानन्तरमविच्छेदेन तदुक्तिपूर्वकमग्रिमकृत्ये ब्रह्मास्त्रबन्धनतद्विमोक्षरूपे कालविशेषकीर्तनात् । दृश्यते हि " सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् । अह्नः पञ्चमशेषेण वल्लभेन स्वयंभुवः " इति ॥ अत्र अह्नः पञ्चमशेषोनाम सायंकाल एव । "प्रातःसंगवमध्याह्नापराह्नाः सायमित्यमी । एकस्याह्नः पञ्च भागा विहिताः कालचिन्तकैः " इति वचनात् ॥ तस्यामेव द्वितीयायां रात्रौ ब्रह्मास्त्रविमोक्षानन्तरं पुनर्लङ्कानिरोधतद्दाहकुम्भनिकुम्भयूपाक्षशोणिताक्षप्रजंघाकम्पनमकराक्षवधाः । " ततोऽस्तंगत आदित्ये रात्रौ तस्मिन्निशामुखे । लङ्कामभिमुखाःसोल्का जग्मुस्ते प्लवगर्षभाः " इत्युक्तेः ॥ एवं परिपूर्णदिनद्वयेन मूलबलेन्द्रजिद्रावणव्यतिरिक्तेषु व्यपदिष्टराक्षसेषु हतेषु तृतीयदिनमारभ्य दिनत्रयेणेन्द्रजिद्युद्धं । " अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः " इत्युक्तत्वात् । अथ षष्ठदिने मूलबलवधः । तस्मिन्दिने सायंकालमारभ्य दिवारात्रं रावणयुद्धं । सप्तमदिने रावणवधः । अथवा सप्तमदिने रावणयुद्धं । अष्टमदिने प्रातःकाले रावणवधः । " अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् । कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः " इत्यादिसंदर्भस्योभयथापि योजयितुं शक्यत्वात् । पुच्छामावस्यायां रावणवध इति कृत्वा अमावास्यायां रावणवध इति प्रवादः । एवंसति " रामरावणयोर्युद्धं सप्तरात्रमवर्तत " इत्यादिपाठोपि सेनासहितरावणयुद्धापेक्षया संगच्छते । "मन्त्रयित्वा प्रसुप्तोयमितस्तु नवमेहनि"इति सकलकोशस्थितवचनं च संगच्छते । इतः अस्माद्दिनात् मम मुकुटभङ्गदिनादित्यर्थः । नवमेहनि एतद्दिनमपहाय एतत्पूर्वदिनापेक्षया नवमेहनि । मन्त्रयित्वा प्रसुप्तः । तत्पूर्वदिने

स तु संख्ये महाबाहुः [1]ककुदः सर्वरक्षसाम् ॥ वानरान्राजपुत्रौ च क्षिप्रमेव वधिष्यति ॥ १८ ॥
एष केतुः परः संख्ये मुख्यो वै सर्वरक्षसाम् ॥ कुम्भकर्णः सदा शेते मूढो ग्राम्यसुखे रतः ॥ १९ ॥
रामेण हि निरस्तस्य संग्रामेस्मिन्सुदारुणे ॥ भविष्यति न मे शोकः कुम्भकर्णे विबोधिते ॥ २० ॥
किं करिष्याम्यहं तेन शक्रतुल्यबलेन हि ॥ ई[2]दृशे व्यसने प्राप्ते यो न साह्याय कल्पते ॥ २१ ॥
ते तु तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः ॥ जग्मुः परमसंभ्रान्ताः कुम्भकर्णनिवेशनम् ॥ २२ ॥
ते रावणसमादिष्टा मांसशोणितभोजनाः ॥ गन्धमाल्यांस्तथा भक्ष्यानादाय सहसा ययुः ॥ २३ ॥
तां प्रविश्य महाद्वारां सर्वतो योजनायताम् ॥ कुम्भकर्णगुहां रम्यां [3]सर्वगन्धप्रवाहिनीम् ॥ २४ ॥
कुम्भकर्णस्य निश्श्वासादवधूता महाबलाः ॥ प्रतिष्ठमानाः कृच्छ्रेण यत्नात्प्रविविशुर्गुहाम् ॥२५॥
तां प्रविश्य गुहां रम्यां [4]शुभ्रां काञ्चनकुट्टिमाम् ॥ ददृशुर्नैर्ऋतव्याघ्रं शयानं भीम[5]दर्शनम् ॥ २६ ॥
ते तु तं विकृतं सुप्तं विकीर्णमिव पर्वतम् ॥ कुम्भकर्णं महानिद्रं सहिताः प्रत्यबोधयन् ॥ २७ ॥
ऊर्ध्वरोमाञ्चिततनुं श्वसन्तमिव पन्नगम् ॥ त्रासयन्तं [6]महाश्वासैः शयानं भीमदर्शनम् ॥ २८ ॥

---

मन्त्रं कृत्वा तस्मिन् दिने प्रसुप्त इत्यर्थः । ननु हनुमतो लङ्काप्रवेशकालो दशममास इत्यवगम्यते । तथाहि सीतांप्रति रावणवचनं " द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः " इति । हनुमन्तं प्रति सीतावचनं च " द्वौ मासौ तेन मे कालोजीवितानुग्रहः कृतः । वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम " इत्यादि । अतः कथमुक्तप्रक्रियासंगतिरिति चेत् । मैवं "ऊर्ध्वं मासान्न जीवेयं" " मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज " इत्यादिवचनविरोधेन तादृशवचनस्य रावणाभिप्रायविषयत्वात् । रावणो हि सीतासान्त्वनाय तथोक्तवान् । सीता तु वर्तमानमासमात्रेण चतुर्दशवर्षपूर्तिं जानन्ती, मासादूर्ध्वं न जीविष्य इति संदिदेशेति सर्वं सुस्थम् ॥ १७ ॥ स तु अहमिव न शापग्रस्त इत्यर्थः । ककुदः प्रधानं । "प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोस्त्रियां " इत्यमरः ॥ १८—२० ॥ अकाले तत्प्रबोधनमनुचितमित्यत्राह—किं करिष्यामीति ॥ साह्याय साहाय्याय ॥ २१ ॥ परमसंभ्रान्ताः कथमेनमकाले प्रबोधयिष्याम इति व्याकुलाः ॥ २२ ॥ त इति । प्रबोधशक्तिविवृद्ध्यर्थं मांसादिकं भुक्त्वा कुम्भकर्णस्य प्रबोधकालिकक्षुत्तापादिशान्तये गन्धमाल्यादिकं गृहीत्वा ययुरित्यर्थः ॥ २३ ॥ तामित्यादिश्लोकद्वयमेकान्वयं ॥ सर्वतः चतसृषु दिक्षु । सर्वगन्धप्रवाहिनीं कुम्भकर्णानुलिप्तचन्दनादिगन्धप्रवाहवतीं । कुम्भकर्णगुहां प्रविश्य निःश्वासादवधूताः सन्तः कृच्छ्रेण प्रतिष्ठमानाः अभिमुखं गच्छन्तः यत्नात्तां गुहां विविशुरिति योजना ॥ २४—२५ ॥ काञ्चनकुट्टिमां स्वर्णमयनिबद्धभूमिं ॥ २६ ॥ विकृतं निद्राकालिकविकारयुक्तं । विकीर्णं शिथिलं ॥ २७ ॥ ऊर्ध्वेत्यादिश्लोकत्रयमेकान्वयं ॥ ऊर्ध्वरोमाञ्चिततनुं ऊर्ध्वभूतरोम-

---

ति० नित्यनपुंसकंककुदमिति ॥ १८ ॥ स० एवंस्ववचनंश्रुत्वाप्यतदुद्बोधनयत्नान्यातुधानान्किञ्चित्कुटिलकटाक्षःपारोक्ष्येणाह । तेन रामेण । घोरे इतरापरिहार्थे । व्यसनेप्राप्तेपि यःकोपिमेसाह्याय कुंभकर्णप्रबोधरूपकर्मणे नकल्पते तंकिंकरिष्यामि । ममतादृशेननप्रयोजनमितिभावः । निद्रान्तरायस्यनिषिद्धत्वात्त्यजोद्बोधनमित्यतोवाह—**किंकरिष्यामीति** । यः कोपितदितरः साह्यायनकल्पते अतःकिंकरिष्यामि । कुटुंबनाशेसंभावितेतद्रक्षणार्थं "अप्यकार्यशतंकृत्वा" इतिमानमनुसृत्यसुप्तमप्युद्बोधयिष्यामीतिभावः । यः स्वयमेवालोचनकालेसन्नपिसाह्यायनकल्पते तेनोत्तरत्रसर्वनाशेकिंकरिष्यामीतिवा ॥ २१ ॥ स० परमसंभ्रान्ताः अत्रावस्थानेरावणोननुकूलान्घातयति । तत्रगमनेचोत्थापनमेवदुश्शकं । कथंचित्तस्मिञ्जातेऽस्मज्जीवनमतिदुर्घटमितिभीतियुताः ॥ २२ ॥ ति० कुंभकर्णगुहां पातालवद्देवनिर्मितंभूबिलमित्यर्थः । स० "योजनानांत्रिलक्षंहिकुंभकर्णोऽभ्यवर्धत । पूर्वं पश्चात्संचुकोचलङ्कायामुषितुंस्वयम्" इत्युक्तेरल्पेपिस्थलेवरतपोबलेननिवासस्त्रिलक्षयोजनीमितस्यापिकुंभकर्णस्येतिसर्वतोयोजनायतामितिनविरुद्धमितिज्ञेयम् ॥ २४ ॥

[ पा० ] १ झ. ककुदं. २ क.—घ. ईदृशेसंभ्रमेघोरे. ङ. च. झ. ट. ईदृशेव्यसनेघोरे. ३ च. छ. झ. ञ. ट. पुष्पगन्ध. घ. सर्वगन्धाधिवासितां. ४ ङ. ज. झ. ट. रत्नकाञ्चन. ५ ङ. च. झ. ञ. ट. भीमविक्रमं. ६ च. छ, ञ. महाकायंशयानं. ङ. झ. ट. विनिश्वासैः.

भीमनासापुटं तं तु पातालविपुलाननम् ॥ शय्यायां न्यस्तसर्वाङ्गं मेदोरुधिरगन्धिनम् ॥ २९ ॥
काञ्चनाङ्गदनद्धाङ्गं किरीटिनमरिन्दमम् ॥ ददृशुर्नैर्ऋतव्याघ्रं कुम्भकर्णं महाबलम् ॥ ३० ॥
ततश्चक्रुर्महात्मानः कुम्भकर्णाग्रतस्तदा ॥ मांसानां मेरुसंकाशं राशिं परमतर्पणम् ॥ ३१ ॥
मृगाणां महिषाणां च वराहाणां च संचयान् ॥ चक्रुर्नैर्ऋतशार्दूला राशिमन्नस्य चाद्भुतम् ॥ ३२ ॥
ततः शोणितकुम्भांश्च मद्यानि विविधानि च ॥ पुरस्तात्कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः ॥ ३३ ॥
लिलिपुश्च परार्ध्येन चन्दनेन परंतपम् ॥ दिव्यैराच्छादयामासुर्माल्यैर्गन्धैः सुगन्धिभिः ॥ ३४ ॥
धूपं सुगन्धं ससृजुस्तुष्टुवुश्च परन्तपम् ॥ जलदा इव चोन्नेदुर्यातुधानास्ततस्ततः ॥ ३५ ॥
शङ्खानापूरयामासुः शशाङ्कसदृशप्रभान् ॥ तुमुलं युगपच्चापि विनेदुश्चाप्यमर्षिताः ॥ ३६ ॥
नेदुरास्फोटयामासुश्चिक्षिपुस्ते निशाचराः ॥ कुम्भकर्णविबोधार्थं चक्रुस्ते विपुलं स्वनम् ॥ ३७ ॥

सशङ्खभेरीपणवप्रणादमास्फोटितक्ष्वेलितसिंहनादम् ॥
दिशो द्रवन्तस्त्रिदिवं किरन्तः श्रुत्वा विहङ्गाः सहसा निपेतुः ॥ ३८ ॥
यदा भृशार्तैर्निनदैर्महात्मा न कुम्भकर्णो बुबुधे प्रसुप्तः ॥
ततो मुसुण्ठीर्मुसलानि सर्वे रक्षोगणास्ते जगृहुर्गदाश्च ॥ ३९ ॥
तं शैलशृङ्गैर्मुसलैर्गदाभिर्वृक्षैस्तलैर्मुद्गरमुष्टिभिश्च ॥
सुखप्रसुप्तं भुवि कुम्भकर्णं रक्षांस्युदग्राणि तदा निजघ्नुः ॥ ४० ॥

तस्य निश्श्वासवातेन कुम्भकर्णस्य रक्षसः ॥ राक्षसा बलवन्तोपि स्थातुं नाशक्नुवन्पुरः ॥ ४१ ॥
ततः परिहिता गाढं राक्षसा भीमविक्रमाः ॥ ४२ ॥
मृदङ्गपणवान्भेरीः शङ्खकुम्भगणांस्तदा ॥ दशराक्षससाहस्रा युगपत्पर्य वादयन् ॥ ४३ ॥

व्याप्ततनुं । भीमनासापुटं भयंकरनासारन्ध्रं । मेदोरुधिरेति । पीतावशिष्टेति शेषः ॥ २८–३० ॥ अग्रतश्चक्रुः पुरतश्चिक्षिपुरित्यर्थः । परमतर्पणं अत्यन्ततृप्तिकरं ॥ ३१ ॥ राशिं चक्रुः अग्रतो राशिं चक्रुरित्यर्थः ॥ ३२ ॥ मद्यानि मद्यकुम्भानित्यर्थः ॥ ३३ ॥ लिलिपुः लेपनं चक्रुः । परार्ध्येन श्लाघ्यगन्धेन । माल्यगन्धैः माल्यचन्दनैः ॥ ३४ ॥ ततस्ततः पुनःपुनरित्यर्थः ॥ ३५ ॥ तुमुलं निरन्तरं यथातथा । युगपद्विनेदुः अमर्षिताः महता प्रयत्नेनाप्यनुत्थानाज्जातक्रोधाः सन्तः । नेदुः ॥ ३६ ॥ आस्फोटयामासुः ताडयामासुः । चिक्षिपुः शरीरं कम्पयामासुः । कुम्भेति । इत्थं कुम्भकर्णविबोधार्थं विपुलं स्वनं चक्रुरिति संग्रहः ॥ ३७ ॥ आस्फोटितं बाहुताडनजन्यशब्दः । क्ष्वेलितशब्देन गर्जितमात्रमुच्यते । सिंहनादमित्येकवद्भावः । तद्विहङ्गाः श्रुत्वा भयेन सर्वा दिशो द्रवन्तः गच्छन्तः । तत्रापि भयनिवृत्त्यदर्शनात् त्रिदिवं आकाशं । किरन्तः विशन्तः । तत्रापि भयशान्तिमलभमानाः सहसा निपेतुः भूमौ निपतन्ति स्म ॥ ३८ ॥ भृशार्तैः अत्यन्तार्तिपूर्वकैः उच्चावचैरित्यर्थः । भृशं तैरिति पाठान्तरं । महात्मा महाशरीरः । ततः तदा । मुसुण्ठी मुद्गरविशेषः ॥ ३९ ॥ गृहीत्वा प्रजघ्नुश्चेत्याह—तमिति ॥ ४० ॥ रक्षस इति विशेषणं निश्श्वासातिशयद्योतनाय ॥ ४१ ॥ तत इत्यर्धमेकं वाक्यं ॥ परिहिताः दृढीकृतपरिधानाः । आसन् । वक्ष्यमाणकार्ये सावधाना आसन्नित्यर्थः ॥ ४२ ॥ शङ्खकुम्भगणान् शङ्खकुम्भवाद्यगणान् । दशराक्षससाहस्राः दश राक्षससहस्राणि परिवारभूतानि येषां

स० त्रिदिवशत्रवः स्वर्गद्विषः नरकतमआदिगामिनः पापिनइतियावत् । तत्स्थदेवद्वेषिणइतिवा ॥ ३३ ॥

[ पा० ] १ ख. ङ. च. झ. शयनेन्यस्त. २ ङ. झ. ट. किरीटेनार्कवर्चसं. ३ झ. कुंभकर्णस्यचाग्रतः. ४ झ. ट. भूतानां. ५ झ. ट. मांसानि. ६ ठ. त्रिदिवशत्रवः. ७ ग. ससहस्रशः. ८ ख. झ. ट. शङ्खांश्चपूरयामासुः. ९ घ. च. छ. ञ. ट. भृशंतैः. १० झ. ट. गदाभिर्वृक्षस्थलैर्मुद्गर. ११ झ. राक्षसाःकुंभकर्णस्यस्थातुंशेकुर्नचाग्रतः. १२ ग. घ. ततोस्यपुरतोगाढं.

नीलाञ्जनचयाकारास्ते तु तं प्रत्यबोधयन् ॥ अभिघ्नन्तो नदन्तश्च नैव संविविदे तु सः ॥ ४४ ॥
यदा चैनं न शेकुस्ते प्रतिबोधयितुं तदा ॥ ततो गुरुतरं यत्नं दारुणं समुपाक्रमन् ॥ ४५ ॥
अश्वानुष्ट्रान्खरान्नागाञ्जघ्नुर्दण्डकशाङ्कुशैः ॥ भेरीशङ्खमृदङ्गांश्च सर्वप्राणैरवादयन् ॥ ४६ ॥
निजघ्नुश्चास्य गात्राणि महाकाष्ठकटङ्करैः ॥ मुद्गरैर्मुसलैश्चैव सर्वप्राणसमुद्यतैः ॥ ४७ ॥
तेन शब्देन महता लङ्का समभिपूरिता ॥ सपर्वतवना सर्वा सोपि नैव प्रबुध्यते ॥ ४८ ॥
ततः सहस्रं भेरीणां युगपत्समहन्यत ॥ मृष्टकाञ्चनकोणानामासक्तानां समन्ततः ॥ ४९ ॥
एवमप्यतिनिद्रस्तु यदा नैव प्रबुध्यते ॥ शापस्य वशमापन्नस्ततः क्रुद्धा निशाचराः ॥ ५० ॥
महाक्रोधसमाविष्टाः सर्वे भीमपराक्रमाः ॥ तद्रक्षो बोधयिष्यन्तश्चक्रुरन्ये पराक्रमम् ॥ ५१ ॥
अन्ये भेरीः समाजघ्नुरन्ये चक्रुर्महास्वनम् ॥ केशानन्ये प्रलुलुपुः कर्णावन्ये दशन्ति च ॥ ५२ ॥
उदकुम्भशतान्यन्ये समसिञ्चन्त कर्णयोः ॥ न कुम्भकर्णः पस्पन्दे महानिद्रावशं गतः ॥ ५३ ॥
अन्ये च बलिनस्तस्य कूटमुद्गरपाणयः ॥ मूर्ध्नि वक्षसि गात्रेषु पातयन्कूटमुद्गरान् ॥ ५४ ॥
रज्जुबन्धनबद्धाभिः शतघ्नीभिश्च सर्वतः ॥ वध्यमानो महाकायो न प्राबुध्यत राक्षसः ॥ ५५ ॥
वारणानां सहस्रं तु शरीरेऽस्य प्रधावितम् ॥ कुम्भकर्णस्ततो बुद्धः स्पर्शं परमबुध्यत ॥ ५६ ॥

स पात्यमानैर्गिरिशृङ्गवृक्षैरचिन्तयंस्तान्विपुलान्प्रहारान् ॥
निद्राक्षयात्क्षुद्भयपीडितश्च विजृम्भमाणः सहसोत्पपात ॥ ५७ ॥

---

ते तथोक्ताः ॥४३॥ ते राक्षसाः । अभिघ्नन्तो नदन्तश्च सन्तः तं प्रत्यबोधयन्नित्यनुवादः । प्रतिबोधनेपि स न संविविदे न बुबुधे । नीलाञ्जनचयाकारा इति परितः संचारित्वद्योतनायोक्तं ॥ ४४॥ गुरुतरं यत्नमुपाक्रमन् प्रबलं बोधनोपायमारेभिर इत्यर्थः ॥४५॥ तमेव यत्नं दर्शयति—अश्वानिति ॥ तस्योपरिधावनायेतिभावः । सर्वप्राणैः सर्वबलैः ॥ ४६ ॥ महाकाष्ठकटङ्करैः महाकाष्ठाग्रस्तंबैः । काष्ठाग्रस्थकशाभिरित्यर्थः । कटङ्करः स्तम्भभेद इति केचित् । सर्वप्राणसमुद्यतैः सर्वबलेन समुद्यतैः ॥४७॥ प्रबुध्यते प्राबुध्यत ॥ ४८ ॥ मृष्टकाञ्चनकोणानां मृष्टकाञ्चनं शोधितकाञ्चनं तन्निर्मिताः कोणाः वादनदण्डाः यासां ताः तथोक्ताः । आसक्तानां संहतानां ॥४९॥ शापस्य ब्रह्मशापस्य । क्रुद्धाः पूर्वमेव कुपिताः ॥ ५० ॥ पुनरपि महाक्रोधसमाविष्टाः अभवन् । पराक्रमं मुष्टिप्रहारादिकं ॥५१॥ महास्वनं महागर्जितं । प्रलुलुपुः लुप्तवन्तः । दशन्ति अदशन् ॥ ५२ ॥ उदकुम्भशतानि आदायेति शेषः ॥ ५३ ॥ कूटमुद्गरपाणयइत्यनेन तत्प्रहारपरिचयोलक्ष्यते । पातयन् अपातयन् ॥ ५४ ॥ बध्यन्ते एभिरिति बन्धनानि चर्मादीनि । रज्जवश्च बन्धनानि च तैर्बद्धाभिः । रज्जुबन्धनादिना दृढीकृताभिरित्यर्थः । शतघ्नीभिः गदाविशेषैः । वध्यमानः पीड्यमानः ॥ ५५ ॥ स्पर्शं परमबुध्यत वारणप्रधावनं केवलस्पर्शमबुध्यत । कीटादिस्पर्शोयमिति मन्यते स्म । बुद्धः विरतनिद्रः ॥ ५६ ॥ पात्यमानैः प्रबोधेप्युत्थानाय पुनः क्षिप्यमाणैः । क्षुद्भयपीडितः क्षुद्भयाभ्यां पीडितः । भयमत्राकालबोधनकृतं । क्षुद्रूपभयपीडित इति वा । विजृम्भमाणः गात्रभङ्गं कुर्वाणः । उत्पपात उदतिष्ठत्

---

**स०** प्रत्यबोधयन् प्रतिबोधयितुंयत्नंकृतवन्तः ॥ ४४ ॥ **स०** जघ्नुः अन्तर्णीतण्यर्थः । एतान्कुंभकर्णोपरिगमयामासुः । तंचदण्डादिभिर्जघ्नुः ॥ ४६॥ **ति०** महाकाष्ठानां स्थूणादीनां कटङ्करैः समूहैः । कटङ्कटैरितिपाठः । कटङ्कटः स्तंभभेद इतितीर्थः ॥ ४७ ॥ **ती०** आसक्तानां राक्षसगृहीतानां । **स०** आसक्तानां केनापिपदार्थेनासंबद्धानां । तथाचेदेव नादविशेषः ॥ ४९ ॥

[ **पा०** ] १ क. च. झ. ट. कारंतुते. २ झ. ट. नचसंबुबुधेतदा. ३ ज. महाकाष्ठोत्कटैःकरैः. ४ ङ. च. छ. झ. ट. ततोभेरीसहस्रंतु. ५ ठ. मसक्तानां. ६ झ. ट. प्रबुध्यत. ७ ङ. च. झ. ट. ततःकोप. ८ ख. सिञ्चन्तस्तस्यकर्णयोः.

स नागभोगाचलशृङ्गकल्पौ विक्षिप्य बाहू गिरि[1]शृङ्गसारौ ॥
विवृत्य वक्त्रं बडबामुखाभं निशाचरोसौ विकृतं जजृम्भे ॥ ५८ ॥
तस्य जाजृम्भमाणस्य वक्त्रं पातालसन्निभम् ॥ ददृशे मेरुशृङ्गाग्रे दिवाकर इवोदितः ॥ ५९ ॥
स जृम्भमाणोतिबलः [2]प्रतिबुद्धो निशाचरः ॥ निश्वासश्चास्य संजज्ञे पर्वतादिव मारुतः ॥ ६० ॥
रूपमुत्तिष्ठतस्तस्य कुम्भकर्णस्य तद्बभौ ॥ [3]तपान्ते सबलाकस्य मेघस्येव विवर्षतः ॥ ६१ ॥
तस्य दीप्ताग्निसदृशे विद्युत्सदृशवर्चसी ॥ ददृशाते महानेत्रे दीप्ताविव महाग्रहौ ॥ ६२ ॥
ततस्त्वदर्शयन्सर्वान्भक्ष्यांश्च विविधान्बहून् ॥ वराहान्महिषांश्चैव स बभक्ष महाबलः ॥ ६३ ॥
अर्द[4]न्बुभुक्षितो मांसं शोणितं तृषितः पिबन् ॥ मेदःकुम्भांश्च मद्यं च पपौ शक्ररिपुस्तदा ॥ ६४ ॥
ततस्तृप्त इति ज्ञात्वा समुत्पेतुर्निशाचराः ॥ शिरोभिश्च प्रणम्यैनं सर्वतः पर्यवारयन् ॥ ६५ ॥
निद्राविशदनेत्रस्तु कलुषीकृतलोचनः ॥ चारयन्सर्वतो दृष्टिं तान्ददर्श निशाचरान् ॥ ६६ ॥
स सर्वान्सान्त्वयामास नैर्ऋतान्नैर्ऋतर्षभः ॥ बोधनाद्विस्मितश्चापि राक्षसानिदमब्रवीत् ॥ ६७ ॥
किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः ॥ कच्चित्सुकुशलं राज्ञो [5]भयवानेष वा न किम् ॥ ६८ ॥
अथवा ध्रुवमन्येभ्यो [6]भयं परमुपस्थितम् ॥ यदर्थमेवं त्वरितैर्भवद्भिः प्रतिबोधितः ॥ ६९ ॥
अद्य राक्षसराजस्य भयमुत्पाटयाम्यहम् ॥ [7]पातयिष्ये महेन्द्रं वा [8]शातयिष्ये तथाऽनलम् ॥ ७० ॥

॥ ५७ ॥ विजृम्भमाणइत्युक्तं विवृणोति—स इति ॥ दैर्घ्ये नागभोगदृष्टान्तः । काठिन्ये अचलशृङ्गदृष्टान्तः । यद्वा पीनत्वे दृष्टान्तः । गिरिशृङ्गसारौ गिरिशृङ्गबलौ । " सारो बले स्थिरांशे च " इत्यमरः । विवृत्य व्यादाय । बडबा समुद्रमध्यवर्तिन्यश्वस्त्री । विकृतं भयंकरं यथा भवति तथा ॥ ५८ ॥ जाजृम्भमाणस्य । यङ्लुक्यात्मनेपदरुगागमाभावावार्षौ । मेरुशृङ्गाग्रे । मेरुरत्र सावर्णिमेरुः तदग्रस्यैव सूर्यसंबन्धसंभवात् । अत्र दिवाकरस्योदितत्वं महामेरोरुत्तरभागस्थपुर्यपेक्षया । यद्वा उदितः दृष्ट इत्यर्थः । गत्यर्थानां बुद्ध्यर्थत्वात् ॥ ५९ ॥ प्रतिबुद्धः अभूदिति शेषः । सम्यक् प्रबोधोत्र विवक्षितः ॥ ६० ॥ तस्य साभरणस्येत्यर्थः । अतः सबलाकस्येति नाधिकोपमा । विवर्षत इति नीलरूपातिशयोक्तिः ॥ ६१ ॥ विद्युत्सदृशवर्चसीइति निद्राविरामकालिकचाञ्चल्योक्तिः । महाग्रहौ शन्यङ्गारकाविति परपीडकत्वोक्तिः । दीप्ताग्निसदृशे इति क्रौर्यातिशयोक्तिः ॥ ६२ ॥ अदर्शयन् राक्षसा इति शेषः । सर्वान् सर्वविधान् । तद्वान्तरभेदतो विविधान् । बहून्विपुलान् । वराहान् वराहविकारान् । बभक्ष भक्षयामास । बुभुक्षितो मांसमदन् बुभुक्षाशान्त्यर्थं मांसमदन्नित्यर्थः । तृषितः शोणितं पिबन् तृष्णाशान्त्यर्थं शोणितं पिबन्नित्यर्थः । पुनराप्यायनार्थं मेदःकुम्भान् मद्यं च पपौ । कुम्भपरिमितमेदांसीत्यर्थः ॥ ६३–६४ ॥ समुत्पेतुरितिपूर्वं कुम्भकर्णभयादन्तर्धायस्थिताः । इदानीं तृप्तत्वेन शान्तक्रोधत्वात् प्रकाशमाजग्मुरित्यर्थः ॥ ६५ ॥ निद्रया अविशदे अप्रसन्ने ईषदुन्मीलिते नेत्रे यस्य स तथोक्तः ॥६६॥ बोधनात् अप्रबोध्यबोधनात् ॥६७॥ राज्ञः रावणस्य सुकुशलं कच्चित् । एष राजा च भयवान्न किं भययुक्तो न भवति हि ॥६८॥ एवं संशय्य पुनर्निश्चिनोति—अथवेति ॥ तत्र हेतुमाह—यदर्थमिति । यदर्थं यद्भयनिवृत्त्यर्थं ॥ ६९ ॥ शातयिष्ये शातयिष्यामि छेत्स्यामीत्यर्थः । " शद्ऌ शातने " इति धातोर्णिचि " शदेरगतौ तः " इति तादेशः ।

[ पा० ] १ ख. ङ. छ. झ. ञ. ट. जितवज्रसारौ. २ ङ. झ. ट. प्रवुद्धस्तु. ३ ङ.—ट. युगान्तेसर्वभूतानिकालस्येवदिधक्षतः. ४ ख. सहस्रकुंभसंपूर्णशोणितंतृषितःपिबन् । मदकुंभान्मद्यकुंभान्कुंभकर्णस्तदाऽपिबत्. ५ क. ख. ङ. च. छ. झ. ञ. ट. भयंवानेहकिंचन. ज. भयंवानेहविद्यते. ६ घ. महद्भयमुपस्थितं. ७ ङ. झ. ट. दारयिष्ये. ८ ङ. झ. ट. शीतयिष्ये. ख. शोषयिष्येऽथवा.

न ह्यल्पकारणे सुप्तं बोधयिष्यति [1]मां गुरुः ॥ तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ॥ ७१ ॥
एवं ब्रुवाणं संरब्धं [2]कुम्भकर्णं महाबलम् ॥ यूपाक्षः सचिवो राज्ञः कृताञ्जलिरुवाच ह ॥ ७२ ॥
न नो दैवकृतं किंचिद्भयमस्ति कदाचन ॥ मानुषान्नो भयं राजंस्तुमुलं संप्रबाधते ॥ ७३ ॥
न दैत्यदानवेभ्यो वा भयम[3]स्ति हि तादृशम् ॥ यादृशं मानुषं राजन्भयमस्मानुपस्थितम् ॥ ७४ ॥
वानरैः पर्वताकारैर्लङ्केयं परिवारिता ॥ सीताहरणसंतप्ताद्रामान्नस्तुमुलं भयम् ॥ ७५ ॥
एकेन वानरेणेयं पूर्वं दग्धा महापुरी ॥ कुमारो निहतश्चाक्षः सानुयात्रः सकुञ्जरः ॥ ७६ ॥
स्वयं रक्षोधिपश्चापि पौलस्त्यो देवकण्टकः ॥ [4]मृतेति संयुगे मुक्तो रामेणादित्यते[5]जसा ॥ ७७ ॥
यन्न देवैः कृतो राजा नापि दैत्यैर्न दानवैः ॥ कृतः स इह रामेण विमुक्तः प्राणसंशयात् ॥ ७८ ॥
स यूपाक्षवचः श्रुत्वा भ्रातुर्युधि पराजयम् ॥ कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥ ७९ ॥
सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणम् ॥ राघवं च रणे [6]हत्वा पश्चाद्द्रक्ष्यामि रावणम् ॥ ८० ॥
राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः ॥ रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितम् ॥ ८१ ॥

तत्तस्य वाक्यं ब्रुवतो निशम्य सगर्वितं रोषविवृद्धदोषम् ॥
महोदरो नैर्ऋतयोधमुख्यः कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ८२ ॥

रावणस्य वचः श्रुत्वा गुणदोषौ विमृश्य च ॥ पश्चादपि महाबाहो शत्रून्युधि विजेष्यसि ॥ ८३ ॥
महोदरवचः श्रुत्वा राक्षसैः परिवारितः ॥ कुम्भकर्णो महातेजाः संप्रतस्थे महाबलः ॥ ८४ ॥
[7]तं समुत्थाप्य भीमाक्षं भीमरूपपराक्रमम् ॥ राक्षसास्त्वरिता जग्मुर्दशग्रीवनिवेशनम् ॥ ८५ ॥

---

॥ ७० ॥ अल्पकारणे अल्पकार्यनिमित्तं । गुरुः अग्रजः । आख्यात कथयत । अर्थतत्त्वेन तत्त्वार्थेन याथार्थ्येनेति यावत् ॥ ७१—७२ ॥ दैवकृतं इन्द्रादिकृतं । नः अस्मान् । मानुषाज्जातं तुमुलं भयं संप्रबाधत इत्यन्वयः ॥ ७३ ॥ वाशब्दार्थोनुक्तसमुच्चयार्थः । देवेभ्यश्चेत्यर्थः । मानुषं मनुष्यादागतं ॥ ७४–७५ ॥ इन्द्रादिभिरपि दुष्पीडमिदं नगरं कथं वानरैः पीड्यत इत्यत्राह—एकेनेत्यादि ॥ सानुयात्रः सानुगः । एकेनैव महती पीडा कृता । किं पुनरनेकैरिहागतैरिति भावः ॥ ७६ ॥ मृतेति । हे मृतेत्युक्त्वा । वस्तुतस्तु मृतेत्यविभक्तिकनिर्देशः । मृत इति कृत्वेत्यर्थः । मृतप्राय इति मत्वेत्यर्थ इत्यप्याहुः ॥ ७७ ॥ यत् य इत्यर्थः । प्राणसंशयादिति ल्यब्लोपे पञ्चमी । यो राजा देवादिभिरपि प्राणसंशयं नीत्वा मुक्तो न कृतः स रावणो रामेण प्राणसंशयं नीत्वा अद्य विमुक्तः कृत इत्यर्थः । यद्वा राजा देवादिभिरपि यत् न कृतः न प्रापितः । तत् रामेण कृतः प्राणसंशयाद्विमुक्तश्चेत्यर्थः ॥ ७८ ॥ पराजयं पराजयबोधकं ॥ ७९—८१ ॥ सगर्वितं सगर्वं । रोषविवृद्धदोषं क्रोधविवृद्धदुर्नयं । कुम्भकर्णमिति शेषः ॥ ८२—८३ ॥ संप्रतस्थे प्रस्थातुमुपचक्रमे । "शयनादुत्पपात ह" त्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८४—

---

**ति०** संयुगेमुक्तः जीवन्मृतइत्युक्त्वेतिशेषः ॥ ७७ ॥ **ति०** यन्नकृतः यामवस्थांनप्रापितः सरामेणकृतः तामवस्थांप्रापितः । प्राणसंशयात् तयावस्थयाप्राप्तोविमुक्तश्च ॥ ७८ ॥ **ती०** सलक्ष्मणंराघवंहरिसैन्यंचहत्वा । वस्तुतस्तु सलक्ष्मणंराघवंविनेतिशेषः । हरिसैन्यंहत्वारावणंद्रक्ष्यामीतिसंबन्धः ॥ ८० ॥ **ती०** वस्तुतस्तु रामलक्ष्मणयोरितिसंबन्धार्थेषष्ठी । रामलक्ष्मणसंबन्धिहरीणांमांसशोणितैः राक्षसांस्तर्पयिष्यामि स्वयमपिहरीणांशोणितंपास्यामीतिसंबन्धः ॥ ८१ ॥ **स०** रोषविवृद्धदोषं रोषेण रामात्पराजयजन्यकोपेनविवृद्धः दोषः आत्मश्लाघनरूपोयस्यतं ॥ ८२ ॥

[ **पा०** ] १ घ. ङ. झ. ट. मादृशं. क. ग. मांभृशं. छ. ज. ञ. मांप्रभुः. २ क. ख. ङ. ट.—कुंभकर्णमरिन्दमं. ३ घ. ङ. झ. ट. भयमस्तिनन क्वचित्. ख. ग. भयमस्तिहिनक्वचित्. ४ ग. ङ.—व्रजेति. ५ ङ.—ट. वर्चसा. ६ ङ. च. झ. ञ. ट. जित्वाततोद्रक्ष्यामि. ७ ङ. झ. ट. सुप्तमुत्थाप्य.

ततो गत्वा दशग्रीवमासीनं परमासने ॥ ऊचुर्बद्धाञ्जलिपुटाः सर्वे एव निशाचराः ॥ ८६ ॥
प्रबुद्धः कुम्भकर्णोयं भ्राता ते राक्षसर्षभ ॥ कथं तत्रैव निर्यातु द्रक्ष्यस्येनमिहागतम् ॥ ८७ ॥
रावणस्त्वब्रवीद्धृष्टो राक्षसांस्तानुपस्थितान् ॥ द्रष्टुमेनमिहेच्छामि यथान्यायं च पूज्यताम् ॥ ८८ ॥
तथेत्युक्त्वा तु ते सर्वे पुनरागम्य राक्षसाः ॥ कुम्भकर्णमिदं वाक्यमूचू रावणचोदिताः ॥ ८९ ॥
द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुङ्गवः ॥ गमने क्रियतां बुद्धिर्भ्रातरं संप्रहर्षय ॥ ९० ॥
कुम्भकर्णस्तु दुर्धर्षो भ्रातुराज्ञाय शासनम् ॥ तथेत्युक्त्वा महाबाहुः शयनादुत्पपात ह ॥ ९१ ॥
प्रक्षाल्य वदनं हृष्टः स्नातः परमभूषितः ॥ पिपासुस्त्वरयामास पानं बलसमीरणम् ॥ ९२ ॥
ततस्ते त्वरितास्तस्य राक्षसा रावणाज्ञया ॥ मद्यकुम्भांश्च विविधान्क्षिप्रमेवोपहारयन् ॥ ९३ ॥
पीत्वा घटसहस्रे द्वे गमनायोपचक्रमे ॥ ईषत्समुत्कटो मत्तस्तेजोबलसमन्वितः ॥
कुम्भकर्णो बभौ हृष्टः कालान्तकयमोपमः ॥ ९४ ॥
भ्रातुः स भवनं गच्छन्रक्षोगणसमन्वितः ॥ कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ९५ ॥

स राजमार्गं वपुषा प्रकाशयन्सहस्ररश्मिर्धरणीमिवांशुभिः ॥
जगाम तत्राञ्जलिमालया वृतः शतक्रतुर्गेहमिव स्वयंभुवः ॥ ९६ ॥
तं राजमार्गस्थममित्रघातिनं वनौकसस्ते सहसा बहिः स्थिताः ॥
दृष्ट्वाप्रमेयं गिरिशृङ्गकल्पं वितत्रसुस्ते हरियूथपालाः ॥ ९७ ॥
केचिच्छरण्यं शरणं स्म रामं व्रजन्ति केचिद्व्यथिताः पतन्ति ॥
केचिद्दिशः स्म व्यथिताः प्रयान्ति केचिद्भयार्ता भुवि शेरते स्म ॥ ९८ ॥
तमद्रिशृङ्गप्रतिमं किरीटिनं स्पृशन्तमादित्यमिवात्मतेजसा ॥
वनौकसः प्रेक्ष्य विवृद्धमद्भुतं भयार्दिता दुद्रुविरे ततस्ततः ॥ ९९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

॥ ८५ ॥ गत्वा रावणनिवेशनं गत्वा । तत ऊचुरित्यन्वयः ॥ ८६ ॥ तत्रैव निर्यातु वा इहागतमेनं द्रक्ष्यसि वा । कथं, कथं करोत्विति संबन्धः ॥ ८७ ॥ पूज्यतां एष इति शेषः ॥ ८८—९१ ॥ बलसमीरणं बलवर्धनं ॥ ९२ ॥ रावणाज्ञया त्वरितास्ते क्षिप्रं उपहारयन् उपाहारयन्निति संबन्धः ॥ ९३ ॥ ईषत्समुत्कटः पानेन ईषन्मदोत्कटः । मत्तः स्वभावेनोन्मत्तश्चेत्यर्थः । कालान्तकयमोपमः काले प्रलयकाले योन्तकः संहारको यमस्तत्सदृश इत्यर्थः ॥ ९४ ॥ रक्षोबलं राक्षससेना ॥ ९५ ॥ तत्र राजमार्गे । अञ्जलिमालया पौरजनकृतयेति शेषः ॥ ९६ ॥ यूथपाला इत्यत्र चकारो द्रष्टव्यः । अन्यथा तच्छब्दोतिरिच्येत ॥ ९७—९८॥ आत्मतेजसा शरीरकान्त्या ॥ ९९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

ति० आत्मतेजसाऽऽदित्यंस्पृशन्तमिवतत्सदृशमितियावत् । प्रायोदिनद्वयेनास्यजागरः ॥ ९९ ॥ इतिषष्टितमःसर्गः ॥ ६० ॥

[ पा० ] १ ङ. च. छ. झ. ज. ट. तेऽभिगम्य. २ ग. ङ.—ट. द्रक्ष्यसेतमिहागतं. ३ ग. छ. ज. झ. ट. परमहर्षितः. ४ घ. तेगत्वा. ५ ङ. ट. त्वरितास्तत्र. ६ ग.—ट. मद्यंभक्ष्यांश्च. ७ झ. ट. सहयूथपालैः. ८ ङ. छ. झ. ट. पतन्ति.

## एकषष्टितमः सर्गः ॥ ६१ ॥

लङ्कायांराजमार्गेगच्छन्तंकुंभकर्णमवलोकयतारामेण विभीषणंप्रति तत्स्वरूपप्रश्नः ॥ १ ॥ विभीषणेन रामंप्रति कुंभकर्णस्वरूपनिरूपणम् ॥ २ ॥ रामेणनीलंप्रति रणायसेनासज्जीकरणनियोजनम् ॥ ३ ॥

ततो रामो महातेजा धनुरादाय वीर्यवान् ॥ किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ १ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं पर्वताकारदर्शनम् ॥ क्रममाणमिवाकाशं पुरा नारायणं प्रभुम् ॥
सतोयाम्बुदसंकाशं काञ्चनाङ्गदभूषणम् ॥ २ ॥
दृष्ट्वा पुनः प्रदुद्राव वानराणां महाचमूः ॥ ३ ॥
विद्रुतां वाहिनीं दृष्ट्वा वर्धमानं च राक्षसम् ॥ सविस्मयमिदं रामो विभीषणमुवाच ह ॥ ४ ॥
कोसौ पर्वतसंकाशः किरीटी हरिलोचनः ॥ लङ्कायां दृश्यते वीर सविद्युदिव तोयदः ॥ ५ ॥
पृथिव्याः केतुभूतोसौ महानेकोत्र दृश्यते ॥ यं दृष्ट्वा वानराः सर्वे विद्रवन्ति ततस्ततः ॥ ६ ॥
आचक्ष्व मे महान्कोसौ रक्षो वा यदि वाऽसुरः ॥ न मयैवंविधं भूतं दृष्टपूर्वं कदाचन ॥ ७ ॥
स पृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा ॥ विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत् ॥ ८ ॥
येन वैवस्वतो युद्धे वासवश्च पराजितः ॥ सैष विश्रवसः पुत्रः कुम्भकर्णः प्रतापवान् ॥
अस्य प्रमाणात्सदृशो राक्षसोन्यो न विद्यते ॥ ९ ॥
एतेन देवा युधि दानवाश्च यक्षा भुजङ्गा पिशिताशनाश्च ॥
गन्धर्वविद्याधरकिन्नराश्च सहस्रशो राघव संप्रभग्नाः ॥ १० ॥
शूलपाणिं विरूपाक्षं कुम्भकर्णं महाबलम् ॥ हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः ॥ ११ ॥
प्रकृत्या ह्येष तेजस्वी कुम्भकर्णो महाबलः ॥ अन्येषां राक्षसेन्द्राणां वरदानकृतं बलम् ॥ १२ ॥
एतेन जातमात्रेण क्षुधार्तेन महात्मना ॥ भक्षितानि सहस्राणि सत्त्वानां सुबहून्यपि ॥ १३ ॥
तेषु संभक्ष्यमाणेषु प्रजा भयनिपीडिताः ॥ यान्तिस्म शरणं शक्रं तमप्यर्थं न्यवेदयन् ॥ १४ ॥

---

अथ रामेण कुम्भकर्णस्वरूपप्रश्नः विभीषणेन तदुत्तरं च क्रियत एकषष्टितमे—तत इत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ तं दृष्ट्वा धनुरादाय पुनर्विशेषेण ददर्शेति योजना । महाकायं उन्नतकायं । पर्वताकारदर्शनं । दृश्यत इति दर्शनं शरीरं । पर्वतवत्स्थूलशरीरमित्यर्थः । काञ्चनाङ्गदभूषणं काञ्चनमयाङ्गदभूषणं । अतएव सतोयाम्बुदः वर्षुकमेघः तत्सदृशं ॥ १—॥ २ ॥ दृष्ट्वेत्यर्धं ॥ कुम्भकर्णमिति शेषः ॥ ३ ॥ सविस्मयमिति क्रियाविशेषणं । वर्धमानमिति । कामरूपत्वादिति भावः ॥ ४ ॥ हरिलोचनः कपिलेक्षणः । "हरिर्ना कपिले त्रिषु" इत्यमरः ॥ ५—८ ॥ सैष इत्यत्र "सोचि लोपे चेत्पादपूरणं" इति सुलोपः । प्रमाणं स्थौल्यौन्नत्ये ॥ ९ ॥ संप्रभग्नाः अभज्यन्त ॥ १० ॥ विरूपाक्षं विकटाक्षं । मोहिताः भ्रान्ताः ॥ ११ ॥ प्रकृत्या तेजस्वी स्वप्रभावेन बलवान् । न तु वरप्रदानेनेत्यर्थः । अन्येषां रावणादीनां भवतीति शेषः ॥ १२ ॥ प्रकृत्या तेजस्वित्वमुपपादयति—एते-

---

**ती०** रामः पुरा आकाशंक्रममाणंनारायणमिव पर्वताकारदर्शनंतंराक्षसश्रेष्ठंदृष्ट्वा धनुरादाय किरीटिनंमहाकायंकुंभकर्णंददर्शेतियोजना । यद्वा तंदृष्ट्वेतिश्लोकोभिन्नंवाक्यं । आकाशंक्रममाणंप्रभुंनारायणमिवपर्वताकारदर्शनंतंराक्षसश्रेष्ठंदृष्ट्वारामोयत्तोबभूवेतिशेषः ॥ १—२ ॥ **स०** हरिलोचनः सूर्यसदृशरक्तलोचनोवा । **शि०** किंच हरिलोचनः रिपुस्वास्थ्यापहारकनेत्रविशिष्टः ॥ ५ ॥ **स०** शूलपाणिंविरूपाक्षं विरूपेविकृतेअक्षिणीयस्यसतथातं । विरूपाक्षं शूलपाणिंरुद्रमिवेतिवा ॥ ११ ॥

[ **पा०** ] १ ग. ङ. झ. ट. नारायणंयथा. २ झ. ट. सविस्मितमिदं. ३ ङ. झ. ट. पृथिव्यां. ४ ङ. झ. ट. सुमहान्. ५ ङ. छ. झ. ट. बालेन.

स कुंभकर्णं कुपितो महेन्द्रो जघान वज्रेण शितेन वज्री ॥
स शक्रवज्राभिहतो महात्मा चचाल कोपाच्च भृशं ननाद ॥ १५ ॥
तस्य नानद्यमानस्य कुंभकर्णस्य धीमतः ॥ श्रुत्वाऽतिनादं वित्रस्ता भूयो भूमिर्वितत्रसे ॥ १६ ॥
तत्र कोपान्महेन्द्रस्य कुंभकर्णो महाबलः ॥ विकृष्यैरावताद्दन्तं जघानोरसि वासवम् ॥ १७ ॥
कुंभकर्णप्रहारार्तो विजज्वाल स वासवः ॥ ततो विषेदुः सहसा देवब्रह्मर्षिदानवाः ॥ १८ ॥
प्रजाभिः सह शक्रश्च ययौ स्थानं स्वयंभुवः ॥ कुंभकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः ॥ १९ ॥
प्रजानां भक्षणं चापि देवानां चापि धर्षणम् ॥ आश्रमध्वंसनं चापि परस्त्रीहरणं भृशम् ॥ २० ॥
एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः ॥ अचिरेणैव कालेन शून्यो लोको भविष्यति ॥ २१ ॥
वासवस्य वचः श्रुत्वा सर्वलोकपितामहः ॥ रक्षांस्यावाहयामास कुंभकर्णं ददर्श ह ॥ २२ ॥
कुंभकर्णं समीक्ष्यैव वितत्रास प्रजापतिः ॥ दृष्ट्वा विश्वास्य चैवेदं स्वयंभूरिदमब्रवीत् ॥ २३ ॥
ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः ॥ तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ॥ २४ ॥
ब्रह्मशापाभिभूतोथ निपपाताग्रतः प्रभोः ॥ ततः परमसंभ्रान्तो रावणो वाक्यमब्रवीत् ॥ २५ ॥
विवृद्धः काञ्चनो वृक्षः फलकाले निकृत्यते ॥ न नप्तारं स्वकं न्याय्यं शप्तुमेवं प्रजापते ॥ २६ ॥
न मिथ्यावचनश्च त्वं स्वप्स्यत्येष न संशयः ॥ कालस्तु क्रियतामस्य शयने जागरे तथा ॥ २७ ॥
रावणस्य वचः श्रुत्वा स्वयंभूरिदमब्रवीत् ॥ २८ ॥
शयिता ह्येष षण्मासानेकाहं जागरिष्यति ॥ एकेनाह्ना त्वसौ वीरश्चरन्भूमिं बुभुक्षितः ॥
व्यात्तास्यो भक्षयेल्लोकान्संक्रुद्ध इव पावकः ॥ २९ ॥

नेत्यादिना ॥ १३—१५ ॥ नानद्यमानस्य अतिशयेन नदतः । वित्रस्ता भूमिः भूयो वितत्रसे उत्तरोत्तरं भीताऽभूत् ॥ १६ ॥ तत्र तदानीं । विकृष्य उत्पाट्य ॥ १७ ॥ विजज्वाल चुकोपेति यावत् ॥ १८ ॥ ते शक्रादयः । प्रजापतेः प्रजापतये ॥ १९ ॥ दौरात्म्यं प्रपञ्चयति—प्रजानामित्यादि ॥ २० ॥ एवं इदानींक्रियमाणप्रकारेण । यदि भक्षयिष्यतीत्यन्वयः ॥ २१ ॥ प्राधान्याद्वासवग्रहणं । कुम्भकर्णं तेष्विति शेषः ॥ २२ ॥ इदं रक्षः इदं वक्ष्यमाणमिति इदंशब्दद्वयनिर्वाहः । विश्वास्य प्रलोभ्य । सान्त्वपूर्वकं समीपमानीयेत्यर्थः ॥ २३ ॥ पौलस्त्येन विश्रवसा । तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे इत्ययंशापः "स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् । एवमस्त्विति तच्चोक्त्वा प्रहृष्टास्ते दिवौकसः" इति तपश्चर्यानन्तरप्रार्थनालब्धबहुवार्षिकनिद्रासमनन्तरकालभावीत्यवगन्तव्यं । अन्यथा मृतकल्पः शयिष्यस इति शप्तस्य तपश्चर्याद्यसंभवात् ॥ २४ ॥ प्रभोः रावणस्य ॥ २५ ॥ काञ्चनः काञ्चनवत् स्पृहणीयः । चम्पकवृक्षो वा । विवृद्धः वर्धितः। फलकाले पुष्पकाले निकृत्यते छिद्यते । नप्तारं पौत्रं ॥२६॥ कालः कालनियमः ॥२७—२८॥ षण्मासानित्येतदर्वाङ्निषेधपरं । अन्यथा नव षट् सप्त चाष्टौ च मासानिति पूर्वोक्त-

**स०** आवाहयामास आकर्षणमन्त्रेणाजुहाव ॥ २२ ॥ **स०** काञ्चनोवृक्षः उदुंबरादिः । फलकाले यद्यपिनीरसं जन्त्वादिदूषितंचफलं । तथापि वृद्धः वर्धितःननिकृत्यतेयथातन्निकर्तनमन्याय्यं । तथा स्वकंनप्तारं पौत्रं । एवंशप्तुमन्याय्यं न्यायादपेतं । "काञ्चनः काञ्चनारेस्याच्चंपकेनागकेसरे । उदुंबरेचपुन्नागे" इतिविश्वः । "विषवृक्षोपिसंवर्ध्यस्वयंछेत्तुमसांप्रतं" इत्यादेस्तादृशोपिनच्छेद्यः । अयंतुकाञ्चनमयोवृक्षः फलकाले फलद्वाराकाञ्चनदानकालइतिवा ॥ २६ ॥ **ति०** जाग्रणे जागरणे । गुणाभावआर्षः । कालः कालनियमः ॥ २७ ॥ **स०** षण्मासान् विशेषणसमासः । तन्मध्ये नजागरणं । निद्रायांदिनाधिक्यंतुनानिष्टं । विस्तरः प्रागुपपादितोऽनुसंधेयः । षद्व मासानितिभिन्नंवापदं । **ति०** जागरणंत्वेकाहमेव । सत्यत्याहितेकार्येइतिशेषः । अतएवेन्द्रलो.

[ **पा०** ] १ ङ. च. छ. झ. ञ. ट. रक्षसः. २ ङ. झ. ट. वित्रस्ताःप्रजाभूयोवितत्रसुः. ३ झ. शशंसुस्तेदिवौकसां. ङ. ट. धर्षणंचदिवौकसां. ४ ङ. झ. ट. तथा. ५ क. ङ. च. झ. ञ. ट. कुंभकर्णमथाश्वस्तःस्वयंभूः. ६ ग. ङ. झ. ट. जाग्रणे. ७ ङ. झ. ट. संवृद्धइव.

सोसौ व्यसनमापन्नः कुंभकर्णमबोधयत् ॥ त्वत्पराक्रमभीतश्च राजा संप्रति रावणः ॥ ३० ॥
स एष निर्गतो वीरः शिबिराद्भीमविक्रमः ॥ वानरान्भृशसंक्रुद्धो भक्षयन्परिधावति ॥ ३१ ॥
कुंभकर्णं समीक्ष्यैव हरयोद्य प्रविद्रुताः ॥ कथमेनं रणे क्रुद्धं वारयिष्यन्ति वानराः ॥ ३२ ॥
उच्यन्तां वानराः सर्वे यन्त्रमेतत्समुच्छ्रितम् ॥ इति विज्ञाय हरयो भविष्यन्तीह निर्भयाः ॥ ३३ ॥
विभीषणवचः श्रुत्वा हेतुमत्सुमुखेरितम् ॥ उवाच राघवो वाक्यं नीलं सेनापतिं तदा ॥ ३४ ॥
गच्छ सैन्यानि सर्वाणि व्यूह्य तिष्ठस्व पावके ॥ द्वाराण्यादाय लङ्कायाश्चर्याश्चाप्यथ संक्रमान् ॥३५॥
शैलशृङ्गाणि वृक्षांश्च शिलाश्चाप्युपसंहर ॥ तिष्ठन्तु वानराः सर्वे सायुधाः शैलपाणयः ॥ ३६ ॥
राघवेण समादिष्टो नीलो हरिचमूपतिः ॥ शशास वानरानीकं यथावत्कपिकुञ्जरः ॥ ३७ ॥
ततो गवाक्षः शरभो हनुमानङ्गदस्तथा ॥ शैलशृङ्गाणि शैलाभा गृहीत्वा द्वारमभ्ययुः ॥ ३८ ॥
रामवाक्यमुपश्रुत्य हरयो जितकाशिनः ॥ पादपैरर्दयन्वीरा वानराः परवाहिनीम् ॥ ३९ ॥
ततो हरीणां तदनीकमुग्रं रराज शैलोद्यतदीप्तहस्तम् ॥
गिरेः समीपानुगतं यथैव महन्महाम्भोधरजालमुग्रम् ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

विरोधात् ॥ २९ ॥ सोसौ रावणः ॥ ३० ॥ शिबिरात् स्वनिलयात् । भक्षयन् परिधावति भक्षणहेतोः परिधाविष्यति । "लक्षणहेत्वोः क्रियायाः" इति शतृप्रत्ययः । वर्तमानसामीप्यादिना भविष्यदर्थे लट् ॥ ३१—३२ ॥ यन्त्रं विभीषिका । समुच्छ्रितं उन्नतं ॥ ३३ ॥ सुमुखेरितं सुमुखं यथा भवति तथा ईरितं उक्तं ॥ ३४ ॥ गच्छेत्यादिश्लोकद्वयं ॥ आदाय स्वीकृत्य । आवृत्येति यावत् । उपसंहर राशीकुरु । युद्धसाधनशिलादिकामिदानीमेव संपादयेत्यर्थः । तिष्ठन्तु वानराः सर्वे सायुधाः शैलपाणय इति पाठः । सायुधाः खड्गाद्यायुधवन्तः ॥ ३५—३८ ॥ परवाहिनीं नगररक्षार्थं बहिश्चरन्तीं । यद्वा कुम्भकर्णं दृष्ट्वा पलायमानान्वानरान्प्रत्यनुद्रुतां परवाहिनीमित्यर्थः ॥ ३९ ॥ शैलोद्यतदीप्तहस्तं शैलोद्यताः उद्यतशैलाः । महन्महाम्भोधरजालं । महत् गुरु महाम्भोधरजालं मेघजालमित्यर्थः ॥ ४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

---

कजयायरावणस्यकुंभकर्णेनसहगमनेप्रथमदिनेमधुपुरेवासउक्तः । द्वितीयदिनेकैलासे । यत्ररंभायांबलाद्रावणस्यप्रवृत्तिः । तदनन्तरं "कुंभकर्णस्तुदुष्टात्मानानाप्रहरणोद्यतः" इत्यादिनातृतीयदिवसादिषुयुद्धमुक्तं । तेनयुद्धप्रसङ्गेअनेकदिनमपिजागरणंप्रतीयते । स० अनत्यन्तसमाहितमानसंरावणमेकस्मिन्नेवदिनेबहुकार्यकारीभविष्यतीतिवदन्सुमुखीकरोतीत्याह—एकेनेति ॥ २९ ॥ ति० पुनारामःपृच्छति—कथमेनमिति ॥ ३२ ॥ ति० विभीषणउत्तरमाह—उच्यन्तामिति । समुच्छ्रितं रावणेनमाययाविभीषिकार्थंनिर्मितंकिंचिद्यन्त्रमात्रं अतोनकिंचिदेतदित्येववानराउच्यन्तां मयास्वामिभिश्च । नतुरावणानुजत्वादिकमित्यर्थः । एवंचकार्यसिद्धिरित्याह—इतीति । इह एतस्मिन्विषये । शि० ननुवानरस्वास्थ्यार्थंकिंकर्तव्यमित्यतआह—उच्यन्तामिति । समुच्छ्रितं अतिप्रवृद्धं । एतत् प्रदृश्यमानंरक्षः यन्त्रं मत्समीपेसंकुचिततेजोभविष्यतीतिशेषः । इति सर्वेवानराउच्यन्तां । इतिभवदुक्तंहरयोविज्ञायनिर्भयाः भविष्यन्ति ॥ ३३ ॥ ति० यथापूर्वंद्वारनिरोधेनियुङ्क्ते—गच्छेति । अनेनरावणपलायनोत्तरंमध्येऽवहारःसूचितः ॥ ३५ ॥ ति० शैलशृङ्गादीन्युपसंहरन् उपसंहरन्तः संचिन्वन्तः । भवन्तस्तिष्ठन्त्वितिशेषः ॥ ३६ ॥ एकषष्टितमःसर्गः ॥ ६१ ॥

[ पा० ] १ ङ. झ. ट. प्रतीक्ष्यैव. २ ङ. च. छ. झ. ट. प्रदुद्रुवुः. ३ क. ख. ग. ङ. च. ज.—ट. त्सुमुखोद्गतं. ४ ग. ङ. छ. झ. ञ. ट. श्चाप्युपसंहरन्. ५ ङ. छ. ज. झ. ट. शैलोद्यतवृक्षहस्तं. ख. शैलोद्यतदीर्घहस्तं. ग. दीप्तोद्यतशैलहस्तं.

# द्विषष्टितमः सर्गः ॥ ६२ ॥

कुंभकर्णेन रावणगृहमेत्यतच्चरणप्रणामपूर्वकं सपरिष्वङ्गंतद्दत्तवरासने समुपवेशनम् ॥ १ ॥ रावणेनतंप्रति प्रकृतनिखिलवृत्तान्तनिवेदनपूर्वकं रामादिविजयेननिजरक्षणप्रार्थना ॥ २ ॥

स तु राक्षसशार्दूलो निद्रामदसमाकुलः ॥ राजमार्गं श्रिया जुष्टं ययौ विपुलविक्रमः ॥ १ ॥
राक्षसानां सहस्रैश्च वृतः परमदुर्जयः ॥ गृहेभ्यः पुष्पवर्षेण कीर्यमाणस्तदा ययौ ॥ २ ॥
स हेमजालविततं भानुभास्वरदर्शनम् ॥ ददर्श विपुलं रम्यं राक्षसेन्द्रनिवेशनम् ॥ ३ ॥
स[1] तत्तदा सूर्य इवाभ्रजालं प्रविश्य रक्षोऽधिपतेर्निवेशम् ॥
ददर्श दूरेऽग्रजमासनस्थं स्वयंभुवं शक्र इवासनस्थम् ॥ ४ ॥
भ्रातुः स भवनं गच्छन्[2]रक्षोगणसमन्वितम्[3] ॥ कुंभकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ५ ॥
सोभिगम्य गृहं भ्रातुः कक्ष्यामभिविगाह्य च ॥ ददर्शोद्विग्नमासीनं विमाने पुष्पके गुरुम् ॥ ६ ॥
अथ दृष्ट्वा दशग्रीवः कुंभकर्णमुपस्थितम् ॥ तूर्णमुत्थाय संहृष्टः सन्निकर्षमुपानयत् ॥ ७ ॥
अथासीनस्य पर्यङ्के कुंभकर्णो महाबलः ॥ भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ॥ ८ ॥
उत्पत्य[4] चैनं मुदितो रावणः परिषस्वजे ॥ स भ्रात्रा संपरिष्वक्तो यथावच्चाभिनन्दितः ॥ ९ ॥
कुंभकर्णः शुभं दिव्यं प्रतिपेदे वरासनम् ॥ स तदासनमाश्रित्य कुंभकर्णो महाबलः ॥
संरक्तनयनः कोपाद्रावणं वाक्यमब्रवीत् ॥ १० ॥
किमर्थमहमादृत्य त्वया राजन्विबोधितः ॥ शंस कस्माद्भयं तेऽस्ति कोऽद्य प्रेतो भविष्यति ॥ ११ ॥
भ्रातरं रावणः क्रुद्धं कुंभकर्णमवस्थितम् ॥ ईषत्तु[5] परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् ॥ १२ ॥
अद्य[6] ते सुमहान्कालः शयानस्य महाबल ॥ सुखित[7]स्त्वं न जानीषे मम रामकृतं भयम् ॥ १३ ॥

---

अथ कुम्भकर्णं प्रति रावणस्य सान्त्ववचनं द्विषष्टितमे—स त्वित्यादि ॥ निद्रामदसमाकुलः निद्रया अकालोत्थितत्वेनानुवर्तमानया मदेन मद्यपानकृतेन च समाकुलः । गृहेभ्यः । निर्गतेनेति शेषः ॥१—२॥ हेमजालविततं स्वर्णमयगवाक्षविततं । भानुभास्वरदर्शनं दृश्यत इति दर्शनं रूपं । भानुवत्प्रकाशमानमित्यर्थः ॥३॥ दूरे कक्ष्यान्तरप्रदेशे । ददर्श । उन्नतपुष्पकवत्त्वादितिभावः ॥४—६॥ सन्निकर्षं समीपं ॥ ७ ॥ कृत्यं मया कर्तव्यं ॥ ८—१० ॥ आदृत्य स्थितेनेति शेषः । शंसेति । तमिति शेषः । प्रेतो भविष्यति मृतो भविष्यति ॥ ११ ॥ ईषत्परिवृत्ताभ्यामित्यनेन ईषत्कोपो लक्ष्यते ॥ १२ ॥ ईषत्त्वमेव विवृणोति—

---

**स०** गृहेभ्यः तत्स्थितस्त्रीकरेभ्यः यद्वा गृहेभ्यःपरभार्याभ्यः । "गृहिणीगृहमुच्यते" इतिवचनात् । राक्षसानांगृहेभ्यइत्यप्यन्वयोवा ॥२॥ **स०** अभ्रजालं जलसत्तादशायामिन्द्रनीलखचनात् तदभावदशायांवज्रैश्वतन्निदर्शनतोचितेतिनभानुभास्वरेतिविरोधः । अथवा अग्रजं रावणं अभ्रजालमिवददर्शेत्यन्वयः ॥ ४ ॥ **स०** समुदितोरावणः उत्पत्य आसनादुत्थायेत्यर्थः । संधिरार्षः इतिनागोजिभट्टः । समुदितंयथाभवतितथाउत्पत्य । सुप्सुपेतिसमासऐकपद्यंज्ञेयं । मुदितः । अत् पत्येतिच्छेदः । अत् आश्चर्यंयथाभवतितथा पतित्वाऽत्पत्य । व्याख्यातंचाद्भुतपदव्याख्यावसरे अदित्याश्चर्यार्थकमव्ययमितीतिवा ॥ ९ ॥ **स०** रोषेणपरिवृत्ताभ्यां नेत्राभ्यामुपलक्षितं क्रुद्धंभ्रातरंकुंभकर्णंरावणोऽब्रवीदितिनागोजिभट्टः । रोषेणपरिवृत्ताभ्यां नेत्राभ्यां पार्श्वद्वयवर्तिनेत्रत्वेनद्विवचनंपूर्वंभुजाभ्यामितिवत् । तदुपलक्षितोवानरोवाक्यमुवाचेत्यन्वयोवा । अस्मिन्पक्षेक्रुद्धपदंनाधिकं ॥ १२ ॥ **स०** सुमहान्कालः । प्रागस्माभिर्व्याख्यातरूपः । यत्तुनागोजिभट्टेन 'सुमहानित्यनेन ब्रह्मकृतावधिभूतषण्मासादप्यधिकःकालोगतइतिसूच्यते । "शयिताह्येषषण्मासानेकाहंजागरिष्यते" इतितुषण्मासादर्वाग्जागरणाभावपरं "मन्त्रंकृत्वाप्रसुप्तोऽयमितस्तुनवमेऽहनि" इतिपद्यंतुप्रक्षिप्तंतत्राहःपदंमासपरंवेत्युक्तं । अन्यथा षण्मासादर्वाक्कदापिजागरणाभावेनतावत्कालस्यत-

**[ पा० ]** १ ख. ततस्तदा. २ ग. घ. ङ. झ. गत्वारक्षोगण. ३ क. ग.—ञ. समन्वितः. ४ ङ. च. छ. झ. ञ. ट. पुनस्समुदितोत्पत्यरावणः. ५ ङ. च. झ. ञ. ट. रोषेणपरि. ६ ङ. झ. ट. अयंते. ७ ङ. झ. ट. सुप्तस्त्वं.

एष दाशरथी[1] रामः सुग्रीवसहितो बली ॥ समुद्रं[2] सबलस्तीर्त्वा मूलं नः परिकृन्तति ॥ १४ ॥
हन्त पश्यस्व लङ्कायां वनान्युपवनानि च ॥ सेतुना सुखमागम्य[3] वानरै[4]कार्णवीकृतम् ॥ १५ ॥
ये रक्षसां मुख्यतमा हतास्ते वानरैर्युधि ॥ वानराणां क्षयं युद्धे न पश्यामि कदाचन[5] ॥ १६ ॥
न चापि वानरा युद्धे जितपूर्वाः कदाचन ॥ १७ ॥
तदेतद्भयमुत्पन्नं त्रायस्वेमां[6] महाबल ॥ नाशय त्वमिमानद्य तदर्थं[7] बोधितो भवान् ॥ १८ ॥
सर्वक्षपितकोशं च स त्वमभ्यवपद्य[8] माम् ॥ त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ॥ १९ ॥
भ्रातुरर्थे महाबाहो कुरु कर्म सुदुष्करम् ॥ मयैवं नोक्तपूर्वो हि कंचिद्[9]भ्रातः परंतप ॥ २० ॥
त्वय्यस्ति तु मम स्नेहः परा संभावना च मे ॥ दैवासुरेषु युद्धेषु बहुशो राक्षसर्षभ ॥
त्वया देवाः प्रतिव्यूह्य निर्जिताश्चासुरा[10] युधि ॥ २१ ॥
तदेतत्सर्वमातिष्ठ वीर्यं भीमपराक्रम[11] ॥ न हि ते सर्वभूतेषु दृश्यते सदृशो बली ॥ २२ ॥
कुरुष्व मे प्रियहितमेतदुत्तमं यथाप्रियं प्रियरण बान्धवप्रिय ॥

---

अद्येत्यादिना ॥ सुमहान्कालः नवदिनपरिमितः । गत इति शेषः ॥ १३ ॥ मूलं मूलबलं । परिकृन्तति बाधतइत्यर्थः ॥ १४ ॥ मूलकृन्तनमुपपादयति—हन्तेति ॥ लङ्कायां वनान्युपवनानि च सर्वे । सेतुना सुखमागम्य स्वनिर्मितसेतुमात्रेण सुखमागम्य । रामेण । वानरैकार्णवीकृतं वानररूपैकार्णवीकृतं । पश्यस्व । आत्मनेपदमार्षं । यद्वा स्वलङ्कायामिति च्छेदः । आत्मीयलङ्काद्वीपइत्यर्थः ॥ १५—१७ ॥ तदेतत् एतादृशं । भयमुत्पन्नं । अस्माद्भयादिमां पुरीं त्रायस्व । इमान् वानरान् नाशय । तदर्थं नाशनार्थं ॥ १८ ॥ सर्वक्षपितकोशं क्षपितसर्वैश्वर्यं । "कोशोस्त्री कुड्मले खड्गपिधानेर्थौघदिव्ययोः" इत्यमरः । अभ्यवपद्य जानीहीत्यर्थः । बालवृद्धावशेषितामित्यतिशयोक्तिः । मूलबलाद्युत्सादनस्य वक्ष्यमाणत्वात् ॥ १९ ॥ कञ्चिदिति प्रश्ने । कदाचिदपि नोक्तपूर्वोसीत्यर्थः । कश्चिदिति पाठे त्वदन्यः कश्चिदपि नैवमुक्तपूर्वइत्यर्थः ॥ २० ॥ संभावना आदरः । दैवासुरेषु देवासुरसंबन्धिषु । प्रतिव्यूह्य विभज्य । असुराः असुराअपीत्यर्थः ॥ २१ ॥ आतिष्ठ अवलम्बस्व ॥ २२ ॥ यथाप्रियं यथास्नेहं ।

---

त्स्वापेनियतत्वात्ततोऽर्वाङ्मासद्वयादिमध्येएतत्प्रवृत्तौसुमहानित्युक्तेरसंगत्यापत्तेः । अनेनमन्त्रंकृत्वासुप्तस्याष्टनवमासरूपः कालोगतइतिगम्यते । अनेनापियुद्धस्यषण्मासाधिककालव्यापितासूचिताभवतीतिज्ञायते इति उत्तरत्रवक्ष्यामइत्युक्तमुक्तं तदसंगतं । सुमहान्कालइत्यस्यगतेश्चिन्तितत्वात् । मन्त्रकालेविनायासंस्वतएवजागरणदिनएवकुंभकर्णागमनरामागमनानन्तरंनवमेऽहनिप्रयत्नउत्थानंचसंभवतः । युद्धस्यषण्मासादधिककालकल्पनंचास्मदुक्तक्रमेणातन्त्रमूलकं । षण्मासादर्वाक्कदापिजागरणाभाववादस्तु स्वयमेवजागरणाभावपरः । प्रयत्नेतुजागरणस्यषण्मासानन्तरमियतआयासस्यासंभावितत्वरूपसंभवद्युक्तिकत्वात् । सीतायाः स्वजीवनस्यमासद्वयावधित्वकथनरूपस्फुटतरबाधकाच्च । अन्यथारामागमनानन्तरमपियुद्धस्यबहुकालावधिकत्वेनमध्येत्वदुक्तःसमयोतिक्रान्तोतोमांभजेतिमध्येमध्येकथयाभाव्यत्वाच्च । क्वापियुद्धदिनेयत्तायाअनुक्तत्वान्मदुक्तप्रकारएवकिंनस्यादितितुदुराशामात्रं यावन्नपद्मपुराणीयपुष्करखण्डगताष्टत्रिंशाध्यायस्थः "अत्रयुद्धंमहद्वृत्तंचैत्रशुक्लत्रयोदशीम् । अष्टचत्वारिंशतिदिनंयत्रासौरावणोहतः" इतिश्लोकोनावलोकितस्तावदितिचतुरस्रं ॥ १३ ॥ **स०** वानराएवएकः अखण्डः अर्णवःसमुद्रोयेनतत् । कृतं कर्मपश्येत्यन्वयः । वनानि महान्ति । उपवनानि अणूनि कृतानि । विटपोत्पाटात् । रामेणवानरैकार्णवंकृतं । 'अस्मदीयंगुणार्णवं' इत्यनुव्याख्यानसुधायांअर्णवइवाचरतीत्यर्णवमिति कृते अर्णवतेःपचाद्यचिकृतेअर्णवशब्दस्त्रिलिङ्गः साधुरित्युक्तेः साधु । कृतंवानरैकार्णवंपश्येत्यन्वयेतुनक्लेशः ॥ १५ ॥ **स०** बालवृद्धावशेषितां । बालाः स्तनंधयाः । वृद्धाः युद्धानर्हाः । बहूनांयूनांसत्वेपीयमुक्तिः कुंभकर्णस्यकारुण्याच्छीघ्रंसमरधरणीप्रवेशार्थं ॥ १९ ॥ इतिद्विषष्टितमःसर्गः ॥ ६२ ॥

**[ पा० ]** १ ङ. झ. ट. दाशरथिःश्रीमान्सुग्रीव. २ झ. ट. समुद्रंलङ्घयित्वातुकुलंनः. ३ क. ङ. झ. ट. मागत्य. ४ क. ख. ग. ङ. छ.—ट. रैकार्णवंकृतं. ५ क. ग. ङ. झ. ट. कथंचन. ६ ङ. झ. ट. त्रायस्वेह. घ. त्रायस्वत्वं ७ ख. च. छ. ञ. यदर्थं. ८ ङ. झ. ट. मभ्युपपद्य. ९ झ. ञ. ट. कश्चित्. १० ङ. झ. ट. श्चामरायुधि. ११ च. छ. विपुलविक्रम.

स्वतेजसा विधम सपत्नवाहिनीं शरद्धनं पवन इवोद्यतो महान् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

कुंभकर्णेन रावणंप्रति नीतिशास्त्रार्थानुवादपूर्वकंप्रकृतापत्प्राप्तेस्तदनालोचनहेतुकत्वोक्तिः ॥ १ ॥ रावणेनकुंभकर्णंप्रति सकोपंगतार्थानुशोचनस्यानौचित्योक्तिपूर्वकं विपन्नार्थसमीकरणस्यसुहृल्लक्षणत्वोक्त्या शत्रुजयायनिजपराक्रमोपयोजननियोजनम् ॥ २ ॥ कुंभकर्णेन रावणंप्रति ससान्त्वनंयुद्धेरामादिवधप्रतिज्ञानम् ॥ ३ ॥

तस्य राक्षसराजस्य निशम्य परिदेवितम् ॥ कुंभकर्णो बभाषेदं वचनं प्रजहास च ॥ १ ॥
दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिर्णये ॥ हितेष्वनभिरक्तेन सोयमासादितस्त्वया ॥ २ ॥
शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः ॥ निरयेष्वेव पतनं यथा दुष्कृतकर्मणः ॥ ३ ॥
प्रथमं वै महाराज कृत्यमेतदचिन्तितम् ॥ केवलं वीर्यदर्पेण नानुबन्धो विचारितः ॥ ४ ॥
यः पश्चात्पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः ॥ पूर्वं चापरकार्याणि न स वेद नयानयौ ॥ ५ ॥
देशकालविहीनानि कर्माणि विपरीतवत् ॥ क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ६ ॥
त्रयाणां पञ्चधा योगं कर्मणां यः प्रपश्यति ॥ सचिवैः समयं कृत्वा स सभ्ये वर्तते पथि ॥ ७ ॥

आवयोः प्रीत्यनुरूपमित्यर्थः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विषष्टितमःसर्गः ॥ ६२ ॥

---

अथ कुम्भकर्णबुद्धिस्त्रिषष्टितमे–तस्येत्यादि ॥ परिदेवितं पूर्वोक्तवचनानां परिदेवनतुल्यत्वात् परिदेवितत्वं । कुम्भकर्णो वचनं बभाषे जहास चेत्यत्र व्यत्ययः कार्यः ।उक्त्वा जहासेति वार्थः ॥ १ ॥ पुरा मन्त्रनिर्णये क्रियमाणे । अस्माभिः यो दोषो दृष्टः शत्रुभिस्त्वापद्भविष्यतीति निश्चितः । हितेषु हितपरेषु । अनभिरक्तेन असक्तेन । हितपरवचनमशृण्वतेत्यर्थः । त्वया सोयं दोष आसादितः । पूर्वमेव चिन्तिता विपत् प्राप्तेत्यर्थः ॥ २ ॥ पापस्य सीताहरणरूपस्य कर्मणः । फलं त्वां शीघ्रं अभ्युपेतं प्राप्तं । "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति न्यायात् । अत्रोदाहरणमाह–निरयेष्विति । दुष्कृतकर्मणः महापातकिनः पुरुषान् । निरयेष्वेव पतनं यथा प्राप्नोति तद्वत् । एवकारेणापरिहार्यत्वमुच्यते ॥ ३ ॥ हे महाराज । केवलं वीर्यदर्पेण एतत्कृत्यं सीताहरणरूपं कार्यं वै । प्रथमं सीताहरणात्पूर्वं । न चिन्तितं साध्वसाधु वेति त्वया न विचारितं । अनुबध्नातीत्यनुबन्धः दोषोत्पादः । "दोषोत्पादेऽनुबन्धः स्यात्" इत्यमरः ॥ ४ ॥ प्रथमं विचार्य पश्चात् कर्म कर्तव्यमिति प्रेक्षावतां कृत्यं, त्वया तु तद्विपरीतं कृतमित्याह–य इति ॥ ऐश्वर्यं आस्थितः प्राप्तः । यः पुमान् पूर्वकार्याणि कार्यारम्भात्पूर्वं कर्तव्यानि मन्त्रणादीनि कुर्यात् । अपरकार्याणि उत्तरकाले विचार्याणि च पूर्वं कुर्यात् । सः नयानयौ नीत्यनीती न वेद ॥ ५ ॥ एवं देशकालानुरोधेन कर्म कर्तव्यमित्युक्तं, तदननुरोधे दोषमाह–देशेति ॥ देशकालविहीनानि क्रियमाणानि । अदेशे अकाले च कृतानि कर्माणि। विपरीतवत् देशकालवैकल्याद्विपरीतकर्माणीव । अप्रयतेषु मन्त्रानध्ययनादिना अपूतेषु अपात्रेषु हवींषीव दुष्यन्ति विफलानि भवन्तीत्यर्थः ॥ ६ ॥ देशकालानुरोधस्य फलमाह–त्रयाणामिति ॥ सचिवैः मन्त्रिभिः सह । समयं निश्चयरूपं सिद्धान्तं कृत्वा । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । त्रयाणां

---

**स०** दं दातारंरावणंप्रति बभाषेजहासच । विभीषणमाल्यवदाद्युक्तंनश्रुतमतइयंदशेतिदशाननंनिरीक्ष्यहासइतिभावः । "दंदानेंछेदेचदातरि" इतिविश्वः । बभाषेऽथेत्यपिक्कचित्पाठः ॥ १ ॥ **शि०** अनुबन्धः सीतारामयोः परस्परंप्रीतिः । नविचारितः । तत्फलमेवेदमुपस्थितमितिभावः ॥ ४ ॥ **ती०** हवींषिचपुरोडाशादीनि । अप्रयतेष्विव असावधानजनेष्विव अरुत्विजनेष्वितियावत् ॥ **ति०** अप्रयतेषु असावधानेषु असंस्कृतेष्वग्निषुचहवींषीव ॥ ६ ॥

**[ पा० ]** १ ग. ङ. झ. ट. व्यथय. २ ख. घ.—छ. झ. ञ. ट. ष्वनभियुक्तेन. ३ क. ख. घ.—ट. चोत्तरकार्याणि. ४ ख. ङ. च. छ. झ. ञ. ट. प्रपद्यते. ५ क. ङ. झ. ट. सम्यग्वर्तते.

**यथागमं च यो राजा समयं विचिकीर्षति ॥ बुध्यते सचिवान्बुद्ध्या सुहृदश्चानुपश्यति ॥ ८ ॥**
**धर्ममर्थं च कामं च सर्वान्वा रक्षसां पते ॥ भजेत पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥ ९ ॥**
**त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते ॥ राजा वा राजमात्रो वा व्यर्थं तस्य बहुश्रुतम् ॥ १० ॥**
**उपप्रदानं सान्त्वं वा भेदं काले च विक्रमम् ॥ योगं च रक्षसांश्रेष्ठ तावुभौ च नयानयौ ॥ ११ ॥**
**काले धर्मार्थकामान्यः संमन्त्र्य सचिवैः सह ॥ निषेवेतात्मवाँल्लोके न स व्यसनमाप्नुयात् ॥ १२ ॥**
**हितानुबन्धमालोच्य कार्याकार्यमिहात्मनः ॥ राजा सहार्थतत्त्वज्ञैः सचिवैः स हि जीवति ॥ १३ ॥**
**अनभिज्ञाय शास्त्रार्थान्पुरुषाः पशुबुद्धयः ॥ प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥ १४ ॥**

उत्तममध्यमाधमकर्मणां । तत्र आत्मोदयपरज्यानिसंभवसमये क्रियमाणं दण्डोपयोगि यानमुत्तमं कर्म । आत्मपरयोः बलसाम्ये क्रियमाणं संधानं मध्यमं कर्म । परोदयात्मज्यानिसमये क्रियमाणं दानपूर्वसमाश्रयणमधमं कर्म । तेषां पञ्चधा योगं । कर्मणामारम्भोपायः । पुरुषद्रव्यसंपत् । देशकालविभागः । विनिपातप्रतीकारः । कार्यसिद्धिश्चेत्युक्तैः पञ्चभिर्योगं । यद्वा त्रयाणां उत्तममध्यमाधमभावेन त्रिविधानां कर्मणां । पञ्चधा योगं देशकालात्मद्रव्यप्रयोजनसंबन्धवशात् पञ्चविधं संबन्धं । यः पश्यति सः सभ्ये साधौ । "सभ्यः सामाजिके साधौ"इति रत्नमाला । पथि नीतिमार्गे वर्तते । सम्यङ्नीतिफलं प्राप्नोतीत्यर्थः ॥ ७ ॥ यथागमं नीतिशास्त्रमनतिक्रम्य । यो राजा । समयं कार्यनिर्णयं । चिकीर्षति । सचिवांश्च बुध्यते सचिवैः सहालोचयतीति यावत् । सुहृदश्चानुपश्यति सुहृद्भिः सह विचारयतीति यावत् । स सभ्ये पथि वर्तत इति पूर्वेणान्वयः ॥ ८ ॥ धर्ममर्थं कामं च प्रत्येकं वा । त्रीणि द्वन्द्वानि वा । धर्मार्थौ अर्थधर्मौ कामार्थौ वा । सर्वान्वा । कालेषु विहितेषु प्रातर्मध्याह्नसायाह्नेषु भजेत । अकाले न सेवेतेति भावः । एतदुक्तं भवति । प्रातःकाले धर्मो विहितः, तं तदा सेवेत । मध्याह्ने अर्थो विहितः, तं तदा सेवेत । सायंकाले कामो विहितः, तं तदा सेवेतेति । यद्वा प्रातःकाले स्वकालविहितं धर्मं मध्याह्ने विहितमर्थं च सेवेत । मध्याह्ने स्वकालविहितमर्थं प्रातर्विहितं धर्मं च सेवेत । सायंकाले स्वकालविहितं कामं मध्याह्नविहितमर्थं च सेवेत । अथवा सायंकाले स्वविहितं कामं प्रातर्मध्याह्नयोर्विहितौ धर्मार्थौ च सेवेतेति । केवलकामं सर्वकालेष्वपि सेवमानः पुरुषाधम एवेत्यभिसंधिः ॥ ९ ॥ एवं कर्तव्यमुक्त्वा तदकर्तारं निन्दति—त्रिष्विति ॥ एतेषु पूर्वोक्तेषु त्रिषु भजनेषु धर्मार्थकामेषु वा । यच्छ्रेष्ठं प्रत्येकभजनं धर्मो वा । तच्छ्रुत्वा । यो राजा वा राजमात्रो वा राजसदृशो वा । न बुध्यते आचरितुं न जानाति । तस्य बहुश्रुतं शास्त्रश्रवणं व्यर्थं । अनुष्ठानपर्यवसानाभावादिति भावः । एवं सामान्यरूपया अप्रस्तुतप्रशंसया त्रिवर्गेषु श्रेष्ठं धर्मं परित्यज्य जघन्यं काममेवाश्रितस्य ते शास्त्रश्रवणं समुद्रघोषमात्रमासीदिति प्रस्तुतोऽर्थोऽवगम्यते ॥ १० ॥ अकाले काम इवाकाले विक्रमोपि त्याज्य इत्याह—उपप्रदानमित्यादिश्लोकद्वयेन ॥ काले तत्तदुचितकाले । उपप्रदानं प्रतिपक्षिणः समीपं गत्वा द्रविणादिप्रदानं । सान्त्वं समीचीनभाषणं । भेदं मित्रादिवर्गस्य द्वैधीकरणं । विक्रमं दण्डं च । प्रत्येकं तेषां योगं समवायं च । तौ पूर्वोक्तौ नयानयौ । तेषां निर्वाहप्रकारान् धर्मार्थकामांश्च सचिवैः संमन्त्र्य । काले पूर्वोक्तकाले । आत्मवान् वशीकृतमनस्कः । यो निषेवेत स लोके व्यसनं नाप्नुयात् ॥ ११—१२ ॥ हितेति ॥ अत्र कार्यमित्यध्याहारः । निषेवेतेत्यनुषङ्गः । यो राजा अर्थतत्त्वज्ञैः सचिवैः सह । हितानुबन्धं हितोदर्कं । आत्मनः कार्याकार्यं कर्तव्याकर्तव्यं । आलोच्य निश्चित्य । कार्यमेव निषेवेत सः इह लोके जीवतीत्यर्थः । हीत्यनेनायमर्थो लोकप्रसिद्ध इत्यवगम्यते । हितानुबन्धकार्याकार्यानालोचनात्त्वेवं व्यसनमापन्नमिति भावः ॥ १३ ॥ एवं सामान्येन राजानमधिक्षिप्य मन्त्रिणोप्यधिक्षिपति—अनभिज्ञायेति॥ शास्त्रार्थान् नीतिशास्त्रार्थान् । अनभि-

[ पा० ] १ ङ. ज. झ. ट. सचिवैर्बुद्ध्या. २ क.—ट. भजते. ३ ख. च. छ. ज. तात्मवान्राजानस. ४ ख. ङ. झ. ट. मालोक्यकुर्यात्कार्यं. ५ ङ. च. ञ. सर्वार्थतत्त्वज्ञैः. ६ घ. ङ. च. झ. ञ. ट. सचिवैर्बुद्धिजीविभिः.

अशास्त्रविदुषां तेषां न कार्यमहितं वचः ॥ अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम् ॥ १५ ॥
अहितं च हिताकारं धाष्टर्याज्जल्पन्ति ये नराः ॥ अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषणाः॥१६॥
विनाशयन्तो भर्तारं सहिताः शत्रुभिर्बुधैः ॥ विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ १७ ॥
तान्भर्ता मित्रसंकाशानमित्रान्मन्त्रनिर्णये ॥ व्यवहारेण जानीयात्सचिवानुपसंहितान् ॥ १८ ॥
चपलस्येह कृत्यानि सहसाऽनुप्रधावतः ॥ छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ १९ ॥
यो हि शत्रुमभिज्ञाय नात्मानमभिरक्षति ॥ अवाप्नोति हि सोनर्थान्स्थानाच्च व्यवरोप्यते ॥ २० ॥
यदुक्तमिह ते पूर्वं क्रियतामनुजेन च ॥ तदेव नो हितं कार्यं यदिच्छसि च तत्कुरु ॥ २१ ॥
तत्तु श्रुत्वा दशग्रीवः कुंभकर्णस्य भाषितम् ॥ भ्रुकुटिं चैव संचक्रे क्रुद्धश्चैनमभाषत ॥ २२ ॥

ज्ञाय गुरुमुखादश्रुत्वा । वेषेण पुरुषाः पशुबुद्धयः आहारनिद्रादिमात्राभिज्ञाः । भ्रान्तेन राज्ञा । मन्त्रेषु राजकार्यविचारेषु । अभ्यन्तरीकृताः मन्त्रयितृत्वेन वृताः सन्तः । प्रागल्भ्यात् ऊहापोहौ विना केवलधाष्टर्यात् । वक्तुमिच्छन्ति । नतु सम्यक् संगतं निश्चित्य वदन्तीत्यर्थः ॥ १४ ॥ अशास्त्रेति । शास्त्रानभिज्ञानां तेषां मन्त्रिणां । अहितं वचः अर्थशास्त्रानभिज्ञानां । अथापि विपुलां श्रियमिच्छतां राज्ञां न कार्यं । राजभिस्तदुक्तप्रकारो नानुष्ठेय इत्यर्थः ॥१५॥ न केवलं तद्वचनाश्रवणं, मन्त्रेषु बहिष्कार्याश्च त इत्याह—अहितमिति ॥ वस्तुतः अहितं हिताकारं हितमिवापाततः प्रतीयमानमर्थं । धाष्टर्यात् शास्त्रज्ञानं विना केवलप्रागल्भ्यात् । ये जल्पन्ति अक्रमेण वदन्ति । कृत्यदूषणाः कार्यदूषकास्ते । अवेक्ष्य पूर्वमेव परीक्ष्य । मन्त्रबाह्याः मन्त्रबहिर्भूताः कर्तव्याः ॥ १६ ॥ न केवलमहितवचनं, विपरीतं च कुर्वन्तीत्याह—विनाशयन्त इत्यादि ॥ मन्त्रिणः दुर्मन्त्रिणः । बुधैः उपायज्ञैः । शत्रुभिः सहिताः प्रेरिताः । विनाशयन्तः विनाशार्थं । इह प्रयोजनविषये । विपरीतानि विपरीतफलकानि कृत्यानि । भर्तारं कारयन्ति ॥१७॥ दुर्मन्त्रित्वनिर्णयोपायमाह—तानिति ॥ उपसंहितान् उपजापितान् । उत्कोचप्रदानादिना शत्रुभिर्भेदं प्रापितान् । मित्रसंकाशान् मित्रवद्भावयतः कार्येऽमित्रान्सचिवान् । व्यवहारेण व्यामिश्रभाषणेन । जानीयात् ॥ १८ ॥ स्वयमसमर्था विपरीतबुद्धयो मन्त्रिणः किं करिष्यन्तीत्यत्राह—चपलस्येति ॥ इह प्रस्तुते कार्ये विषये । कृत्यानि उपसंहितमन्त्रिप्रेरितानि कार्याणि । सहसा अचिरेण । अनुप्रधावतः दुर्मन्त्रिषु मन्त्रित्वमनुसरतः । चपलस्य झटिति कार्ये प्रवर्तमानस्य राज्ञः । छिद्रं रन्ध्रं । अन्ये शत्रवः । क्षिप्रं प्रपद्यन्ते स्वीकुर्वन्ति । कथमिव । द्विजाः पक्षिणः । "दन्तविप्राण्डजा द्विजाः" इत्यमरः । क्रौञ्चस्य स्कन्दशक्तिविदारितस्य क्रौञ्चाख्यपर्वतस्य । खमिव रन्ध्रमिव पण्डिताः शत्रवः उत्कोचप्रदानादिना वशीकृतैर्मन्त्रिभिः कुत्रचिच्चापलकार्ये राजानं प्रापय्य तदेव रन्ध्रमासाद्य अन्तः प्रविशन्तीतिभावः ॥ १९ ॥ एवं कपटवृत्तेः शत्रोः स्वरूपापरिज्ञाने राजा विपद्यत इत्याह—यो हीति ॥ यो हि राजा । शत्रुं वञ्चनपरं । अविज्ञाय मन्त्रव्यवहारादिना अविज्ञाय । आत्मानं च नाभिरक्षति दुर्मन्त्रिनिरासादिना नात्मानं प्रकृतौ स्थापयति । सोऽर्थानवाप्नोति । स्थानात् राजासनात् । व्यवरोप्यते प्रच्याव्यते । इयता ग्रन्थेन तव कामव्यसनात् कुमन्त्रिवचनाच्चेयमापदिति दर्शितं ॥ २०—२१ ॥ क्रुद्धः सन् भ्रुकुटिं ऊर्ध्वाकु-

**स०** अधुनापिवर्जनीयानेवाह—**विनाशयन्तइति** । शताहेतौ । भर्तारं स्वस्वामिनं । बुधैः अविज्ञमन्त्रिकत्वज्ञानैः शत्रुभिः स्वराजविद्वेषिभिः । विपरीतानि राजमरणराज्यहरणादिकारणानिकृत्यानिकारयन्ति । तेमन्त्रिणो निन्दितमन्त्रिणः मन्त्रबाह्याःकर्तव्याइत्यन्वयः ॥ "भूमनिन्दाप्रशंसासु" इत्युक्तेर्निन्दायाममयमिनिः । 'केचित्सुमन्त्रिण' इत्यादिनागोजिभट्टव्याख्यानं बुधमन्त्रिमुखशब्दयोजनाज्ञानदारिद्र्येणेतिज्ञेयं । तथास्वरक्षणंकुर्वन्तीतिशेषइतिविशेषोपितन्मूलकएव । प्रकरणाननुकूलताचबालानामपिभासतइत्यनादरणीयंतदितिदिक् ॥ **ति०** केचनदुर्मन्त्रिणः । भर्तारंत्वांनाशयंतः । हेतौशता ।

**[ पा० ]** १ ङ. झ. ट. अवश्यंमन्त्र. २ ङ. ज.—ट. कृत्यदूषकाः. ३ ङ. झ. ञ. ट. क्षिप्रमन्ये. ४ घ. ङ. झ. ट. पूर्वंप्रिययामेऽनुजेनच. च. पूर्वंप्रिययाह्यनुजेनच. ज. पूर्वंक्रियतांमेऽनुजेनच. ५ ङ. च. झ. ञ. ट. हितंवाक्यं. क. ख. घ. हितंराजन्. ६ ख. एतच्छ्रुत्वा.

मान्यो गुरुरिवाचार्यः किं मां त्वमनुशाससि ॥ किमेवं वाक्छ्रमं कृत्वा काले युक्तं विधीयताम् ॥२३॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्याश्रयेण वा ॥ नाभिपन्नमिदानीं यद्व्यर्थास्तस्य पुनः कथाः ॥ २४ ॥
अस्मिन्काले तु यद्युक्तं तदिदानीं विधीयताम् ॥ गतं तु नानुशोचन्ति गतं तु गतमेव हि ॥२५॥
ममापनयजं दोषं विक्रमेण समीकुरु ॥ यदि खल्वस्ति मे स्नेहो विक्रमं वावगच्छसि ॥
यदि वा कार्यमेतत्ते हृदि कार्यतमं मतम् ॥ २६ ॥
स सुहृद्यो विपन्नार्थं दीनमभ्यवपद्यते ॥ स बन्धुर्योपनीतेषु साहाय्यायोपकल्पते ॥ २७ ॥
तमथैवं ब्रुवाणं तु वचनं धीरदारुणम् ॥ रुष्टोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह ॥ २८ ॥
अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् ॥ कुंभकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥
[ शृणु राजन्नवहितो मम वाक्यमरिंदम ] ॥ २९ ॥
अलं राक्षसराजेन्द्र संतापमुपपद्य ते ॥ रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि ॥ ३० ॥
नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव ॥ तमहं नाशयिष्यामि यत्कृते परितप्यसे ॥ ३१ ॥

तन्भ्रुवं चक्रे । एनमभाषत चेत्यन्वयः ॥ २२ ॥ हे कुम्भकर्ण । त्वं मान्यः बहुमानार्हः । आचार्यः आचारप्रवर्तकः गुरुरिव मां मान्यमाचार्यं गुरुं । अनुशाससि शिक्षसे । आर्षः शप् । वैपरीत्यमेवाचरसीत्यर्थः । एवं वचनं तवायुक्तमिति भावः । अफलं चेदं वचनमित्याह—किमेवमिति । एवं उक्तप्रकारेण । वाक्छ्रमं कृत्वा । प्रयासैकफलां वाचमुक्त्वेत्यर्थः । किं फलं । किमपि प्रयोजनं नास्तीत्यर्थः । नीतिकालस्यातीतत्वादिति भावः । काले नयमार्गातीतकाले । यद्युक्तं पराक्रमरूपं । तत् विधीयतां क्रियतां ॥२३॥ पूर्वमनालोच्य कृतस्य निमित्तमाह—विभ्रमादिति ॥ विभ्रमात् अनीतौ नीतिबुद्ध्या । चित्तमोहात् ज्ञानानुदयात् । बलवीर्याश्रयेण । बलवीर्ययोराश्रयणेन । गर्वेणेति यावत् । यत्कार्यं नाभिपन्नं न कृतं । तस्य पुनः कथाः पुनः पुनः कथनानि। इदानीं अतीतकाले । व्यर्थाः ॥ २४ ॥ इदानीं सद्यः । गतंतु गतमेव । न तत्पुनरायास्यतीति भावः ॥ २५ ॥ ममेत्यादिसार्धश्लोक एकान्वयः ॥ दोषं वैषम्यं । शत्रुभिराक्रमणमितियावत् । समीकुरु समतयाकुरु । वैषम्यसमता नाम वैषम्यनाश एव । खलु वाक्यालङ्कारे । मे मयि यदि स्नेहोऽस्ति स्वकीयं विक्रमं यदि वा अवगच्छसि । स्वपराक्रममज्ञात्वैव नीत्युपन्यासस्त्वया कृत इति भावः । एतत् युद्धरूपं कार्यं । ते हृदि कार्यतमं अवश्यकर्तव्यं । मतं इष्टं । अवश्यकर्तव्यत्वेन मन्यसे चेदित्यर्थः । तदा समीकुर्वित्यन्वयः ॥ २६ ॥ इदानीं साहाय्याकरणे तव बन्धुत्वमेव भज्येतेति सदृष्टान्तमाह—स इति ॥ विपन्नार्थं विपन्नः शङ्कितापायः अर्थः प्रयोजनं यस्य तं । दीनं मलिनमनस्कं पुरुषं । यः सुहृत् अभ्यवपद्यते अभितः प्राप्नोति । सदा सन्निधत्त इत्यर्थः । स एव सुहृत् । यो बन्धुः अपनीतेषु विषमितनीतिषु पुरुषेषु । साहाय्यायोपकल्पते साहाय्याय प्रभवति । स एव बन्धुः । सर्वं वाक्यं सावधारणमिति न्यायात् ॥ २७ ॥ धीरदारुणं यदि वा कार्यमित्युक्त्या धीरं सुहृदित्याद्युक्त्या दारुणं निष्ठुरं । रुष्टोयमिति विज्ञाय । भ्रुकुटिबन्धनेनानुमायेत्यर्थः ॥ २८ ॥ उक्तमेवार्थं प्रपञ्चयन्नाह—अतीवेति । अतीव क्षुभितेन्द्रियमित्यनेन रुष्टपदं व्याख्यातं । परिसान्त्वयन्नित्यनेन श्लक्ष्णपदं ॥ २९ ॥ ते त्वया । संतापं । उपपद्य प्राप्य । अलं । संतापो न कर्तव्य इत्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः । स्वस्थो भव । स्वर्गस्थो भवेत्यर्थान्तरं ॥ ३० ॥ नैतन्मनसि कर्तव्यं विभ्रमाच्चित्तमोहाद्वेत्युक्तं मनसि न कर्तव्यमित्यर्थः ।

तवनाशनिमित्तं विपरीतानिकृत्यानिकारयन्ति । केचित्सुमन्त्रिणः दुर्मन्त्रफलं तवनाशंपश्यन्तोबुधैः सर्वज्ञैस्तवशत्रुभिःसहिताः स्वरक्षणंकुर्वन्तीतिशेषः ॥१७॥ ति० प्रियया मन्दोदर्या । मेऽनुजोविभीषणः । समानार्थेचतयोर्वाक्येइतिमन्दोदरीवाक्यं नपृथगुक्तं । स्वमतिसदृशमतित्वान्मेऽनुजइत्युक्तं ॥२५॥ स० धीरदारुणं । धीरं अधुनापि । दारुणं वचनाकरणेक्रूरं । एवंवचनं ब्रुवाणं रावणं । धीरदारुणमितिवचनविशेषणंवा । धीरेषुदारुणमितिवा । श्लक्ष्णं रावणमनसःश्लक्ष्णत्वेनभविष्यद्यथातथा उवाच ॥ २८ ॥

[ पा० ] १ ङ. झ. ट. यद्युक्तंतद्विधीयतां. २ ङ. झ. ट. विचिन्त्यतां. ३ ङ. झ. ट. दुःखं. ४ ख. ङ. च. ज.—ट. मभ्युपपद्यते. ५ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते.

अवश्यं तु हितं वाच्यं सर्वावस्थं मया तव ॥ बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥ ३२ ॥
सदृशं यत्तु कालेऽस्मिन्कर्तुं स्निग्धेन बन्धुना ॥ शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥ ३३ ॥
अद्य पश्य महाबाहो मया समरमूर्धनि ॥ हते रामे सह भ्रात्रा द्रवन्तीं पैरवाहिनीम् ॥ ३४ ॥
अद्य रामस्य तद्दृष्ट्वा मयाऽऽनीतं रणाच्छिरः ॥ सुखी भव महाबाहो सीता भवतु दुःखिता ॥३५॥
अद्य रामस्य पश्यन्तु निधनं सुमहत्प्रियम् ॥ लङ्कायां राक्षसाः सर्वे ये ते निहतबान्धवाः ॥ ३६ ॥
अद्य शोकपरीतानां स्वबन्धुवैधकारणात् ॥ शत्रोर्युधि विनाशेन करोम्यास्रप्रमार्जनम् ॥ ३७ ॥
अद्य पर्वतसंकाशं ससूर्यमिव तोयदम् ॥ विकीर्णं पश्य समरे सुग्रीवं प्लवगोत्तमम् ॥ ३८ ॥
कथं त्वं राक्षसैरेभिर्मया च परिरक्षितः ॥ जिघांसुभिर्दाशरथिं वैध्यसे त्वमिहानघ ॥ ३९ ॥
अथ पूर्वं हते तेन मयि त्वां हन्ति राघवः ॥ नाहमात्मनि संतापं गच्छेयं राक्षसाधिप ॥ ४० ॥

यत्कृते यस्य रामस्य कृते । अर्थान्तरं तु मयि जीवति सति एतन्मनसि न कर्तव्यं । यद्यहं जीविष्यामि तदा एवं न कर्तव्यं । अहमेव न जीविष्यामीत्यर्थः । यत्कृते यस्य मम कृते । परितप्यसे अयं सुखेन जीवन् मत्कार्यं न करोतीति परितप्तोसि । तं मां रामेण नाशयिष्यामीति ॥ ३१ ॥ तर्हि किमर्थमेवमुक्तमित्यत्राह—अवश्यमित्यादि ॥ बन्धुभावात् सामान्यस्नेहात् विशेषतोभ्रातृस्नेहाच्च । सर्वावस्थं रोषहर्षादिसर्वावस्थावस्थितमित्यर्थः । अवश्यं वाच्यं ते हितं मयाऽभिहितं ॥ ३२ ॥ अस्मिन्काले आपत्काले । स्निग्धेन बन्धुना यत्कर्तुं सदृशं युक्तं । तादृशं कदनं मया क्रियमाणं पश्य । अत्र शत्रुकर्तृकं कदनमित्यर्थान्तरं ॥ ३३ ॥ अद्येति । अर्थान्तरं । हे पर ज्येष्ठ, मया सह समरमूर्धनि हते भग्ने सति रामे रामनिमित्तं । द्रवन्तीं आगच्छन्तीं वाहिनीं पश्येति॥३४॥ अद्य रामस्येति । अर्थान्तरं । मया सह रामस्य रणाद्धेतोः । आनीतं दूरे क्षिप्तं । शिरः मच्छिरः । दृष्ट्वा सुखी भव । तदानीं मयि रोषत्यागादिति भावः । सीता दुःखिता भवतु । सर्वलोकमातृत्वादितिभावः ॥ ३५ ॥ अद्य रामस्य पश्यन्त्विति । अर्थान्तरं । रामस्येति कर्तरि षष्ठी । रामकर्तृकं मन्निधनं ये निहतबान्धवाः ते राक्षसाः पश्यन्तु । "न दुःखं पञ्चभिःसह" इति न्यायादिति भावः । उत्तरश्लोकेप्येवमेव योजना ॥ ३६–३७ ॥ ससूर्यमिव तोयदमिति । रुधिराक्ततया ससूर्यप्रकाशं मेघमिव स्थितमित्यर्थः ॥ ३८ ॥ ससैन्यं दाशरथिं जिघांसुभिः एभिः राक्षसैः मया च परिरक्षितस्त्वं कथं रामेण वध्यस इति योजना । अर्थान्तरं । जिघांसुभिः हननेच्छामात्रवद्भिः । पराक्रमासमर्थैरित्यर्थः । कथं परिरक्षितः । प्रत्युत वध्यस इति । अत्र विभीषणः क्व गत इति कुम्भकर्णस्य प्रश्नः मया धिक्कृतो गत इति रावणस्योत्तरं च क्वचित् कोशे दृश्यते तत्पूर्वापरविरुद्धं ॥३९॥ अत्र अथशब्दः प्रक्रमान्तरे । मयि हते सति हि पश्चात्त्वां रामो हन्ति हनिष्यति । अहं च आत्मनि स्वस्मिन् । संतापं शत्रुपरिभवजं । न कदाचिदपि गच्छेयं । न केनचिद्धन्तुं शक्य इत्यर्थः । अतः कुतस्ते भयमिति भावः । अर्थान्तरं । अहमात्मनि विषये संतापं न गच्छेयं न गच्छामि । "व्यत्ययो बहुलं" इति लकारव्यत्ययः । मन्निधनं नानुशोचामीत्यर्थः । किंतु मयि हते सति । अथ राघवस्त्वां हन्ति हनिष्य-

**ति०** सर्वावस्थां सुखदुःखादिसर्वावस्थांगतं प्राप्तं । त्वांप्रतीतिशेषः । "विष्णोरभक्तिकावस्थासर्वावस्थेतिगीयते" इत्यन्ये ॥ ३२ ॥
**ती०** "अद्यपश्यमहाबाहोमयासमरमूर्धनि" इत्यारभ्यश्रीराममुद्दिश्यकुंभकर्णोक्तपरुषवाक्यानांप्रातीतिकार्थःस्पष्टः । वस्तुतस्तुयद्यपिकुंभकर्णोरावणप्रीतयेपिवाश्रीरामनिष्ठुरभाषणेप्रीतयेपिवाप्रवृत्तः । तथापिकुंभकर्णवाणीप्रकारान्तरेणनिस्सरति । 'अद्यपश्यमहाबाहोमयेत्यादिना 'शत्रूणांकदनंपश्यक्रियमाणंमया'इत्युक्तलया तदयुक्तं । किंतुसीतादुःखसंपादकरामहननेनास्मदादीन्विशोकान्कुर्विंतिरावणशङ्कायांतन्नशक्यमितिव्यङ्ग्योक्त्यापरिहरति—अद्यपश्येतिसार्धश्लोकचतुष्टयेन । व्यङ्ग्योक्त्यर्थंएषुश्लोकेषुविद्यमानक्रियापदा-

[ **पा०** ] १ च. छ. ञ. ट. सर्वावस्थासुतेमया. ङ. झ. सर्वावस्थांगतंमया. २ क. ग.—च. ज.—ट. हरिवाहिनीं. ३ ग. ङ. झ. वधशोचिनां. ४ ञ. शोणितोक्षितं. ५ ङ. झ. परिसान्वितः. ६ ख. घ.—ट. व्यथसेत्वंसदाऽनघ. क. व्यथसेराक्षसेश्वर. ७ क. ख. ग. च. छ. ज. अद्यपूर्वं. घ. अद्यपूर्वंगतेतेन. ङ. झ. ञ. ट. मांनिहत्यकिलत्वांहिनिहनिष्यतिमिराघवः.

**कामं त्विदानीमपि मां व्यादिश त्वं परंतप ॥ न परः प्रेषणीयस्ते युद्धायातुलविक्रम ॥ ४१ ॥**
**अहमुत्सादयिष्यामि शत्रूंस्तव [1]महाबल ॥ ४२ ॥**
**यदि शक्रो यदि यमो यदि पावकमारुतौ ॥ तानहं योधयिष्यामि कुबेरवरुणावपि ॥ ४३ ॥**
**गिरिमात्रशरीरस्य शितशूलधरस्य मे ॥ नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाच्च पुरंदरः ॥ ४४ ॥**
**अथ वा त्यक्तशस्त्रस्य मृद्गतस्तरसा रिपून् ॥ न मे प्रतिमुखे स्थातुं कश्चिच्छक्तो जिजीविषुः ॥ ४५ ॥**
**नैव शक्त्या न गदया नासिना निशितैः[2] शरैः ॥ हस्ताभ्यामेव संरब्धो[3] हनिष्याम्यपि वज्रिणम् ॥ ४६ ॥**
**यदि मे मुष्टिवेगं स राघवोऽद्य सहिष्यते ॥ ततः पास्यन्ति बाणौघा रुधिरं राघवस्य तु ॥ ४७ ॥**
**[ [4]अचिन्तयित्वा बाणौघान्रुधिरं राघवस्य च ॥ लक्ष्मणस्य च पास्यामि चिरकालं पिपासितः ॥ ४८ ॥**
**चिन्तया बाध्यसे[5] राजन्किमर्थं मयि तिष्ठति ॥ सोहं शत्रुविनाशाय तव निर्यातुमुद्यतः ॥ ४९ ॥**
**मुञ्च रामाद्भयं [6]राजन्हनिष्यामीह संयुगे ॥ राघवं लक्ष्मणं चैव सुग्रीवं च महाबलम् ॥**
**हनुमन्तं च रक्षोघ्नं लङ्का येन प्रदीपिता ॥ ५० ॥**
**हरींश्चापि[7] हनिष्यामि संयुगे समवस्थितान् ॥ असाधारणमिच्छामि तव दातुं महद्यशः ॥ ५१ ॥**
**यदि चेन्द्राद्भयं राजन्यदि वाऽपि स्वयंभुवः ॥ ५२ ॥**
**अपि देवाः शयिष्यन्ते क्रुद्धे मयि महीतले ॥ यमं च शमयिष्यामि भक्षयिष्यामि पावकम् ॥**
**आदित्यं पातयिष्यामि सनक्षत्रं महीतले ॥ ५३ ॥**
**शतक्रतुं वधिष्यामि पास्यामि वरुणालयम् ॥ पर्वतांश्चूर्णयिष्यामि दारयिष्यामि मेदिनीम् ॥ ५४ ॥**
**दीर्घकालं प्रसुप्तस्य कुंभकर्णस्य विक्रमम् ॥ अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्वशः ॥ ५५ ॥**
**नन्विदं[8] त्रिदिवं सर्वमाहारस्य न पूर्यते ॥ ५६ ॥**
**वधेन ते दाशरथेः सुखार्हं[9] सुखं समाहर्तुमहं [10]व्रजामि ॥**

तीति संतापं गच्छामीति ॥ ४० ॥ इदानीमपि इदानीमेव । युद्धाय व्यादिश । ते त्वया । परः अन्यः । न प्रेषणीयः ॥ ४१ ॥ अहमित्यर्धमेकं वाक्यं ॥४२॥ उक्तं विवृणोति यदीति ॥ ४३—४४ ॥ मृद्गतः प्रहरतः । प्रतिमुखे अग्रे ॥ ४५—४६ ॥ यदीति । रामः प्रथमं मे मुष्टिप्रहारमेव न सहिष्यते । कुतो मां प्रहरिष्यतीति भावः ॥ ४७—४८ ॥ उद्यतः अस्मीति शेषः ॥ ४९ ॥ मुञ्चेत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ अर्थान्तरं । रामात् भयं अस्तीति शेषः । हनिष्यामीत्येतन्मुञ्चेति । दातुं खण्डितुमित्यर्थान्तरं ॥ ५०—५१ ॥ यदि चेत्यर्धं ॥ इन्द्रात् स्वयंभुवश्च । भयं यद्यस्ति तदपि मोचयिष्यामीत्युपस्कार्यं ॥ ५२—५५ ॥ त्रिदिवं त्रिलोकी । आहारस्य न पूर्यते आहाराय न पूर्यते । न पर्याप्तमित्यर्थः ॥ ५६ ॥ सुखार्हं उत्तरो-

नांवीप्साऽनुसंधेया । तदित्थंयोजना । रामेहतेसतिद्रवन्तींहरिवाहिनींअद्यपश्यपश्य रणादानीतंरामस्यशिरोदृष्ट्वात्वंसुखीभव सुखीभव । सीतादुःखिताभवतुभवतु । शत्रुपक्षेहतेसतितेशोकोनभविष्यतिनभविष्यति । लङ्कायांयेहतबान्धवाराक्षसाः तेरामनिधनंपश्यन्तु । शोकपरीतानामास्रप्रमार्जनंकरोमिकरोमि । अतोहेभ्रातःरावण एतत्सर्वंनसंगतमितिभावः । किंचायंदुष्टराक्षससमागमः त्वद्वधायभविष्यतीत्याशयेनाह—**कथमिति** । कथं कथंचिदित्यर्थः । मयारक्षितोपित्वंदाशरथिंजिघांसुभिः राक्षसैर्वध्यसएवेतिसंबन्धः ॥ कथमिति । दाशरथिंजिघांसुभिःराक्षसैःपरिरक्षितःकथंपद्यसइतिसंबन्धः । अद्यपूर्वमिति । अहमात्मनिविषयेसंतापंनगच्छामि । किंतु तेनमयिपूर्वंहतेसति । अद्यैवराघवस्त्वांहन्ति हनिष्यतीतिसंतापंगच्छामीत्यर्थः ॥ ३४—४६ ॥ **रामानु०** राघवोमुष्टिवेगंयदिसहिष्यति ततः राघवस्यबाणौघाः मेरुधिरंपास्यन्ति । राघवोमुष्टिवेगंनस-

**[ पा० ]** १ ङ. झ. ट. महाबलान्. २ च. छ. ञ. नेषुभिःशितैः. ३ ङ. झ. ञ. संरभ्य. ४ अयंश्लोकः क. ख. घ. च. छ. ञ. पाठेषुदृश्यते ५ ङ. च. झ. ञ. ट. तप्यसे. ६ ङ.—ट. घोरंनिहनिष्यामि. ७ ङ.—ट. हरींश्चभक्षयिष्यामि. ८ क. ख. ङ. च. ज. झ. ट. नत्विदंत्रिदिवंसर्वमाहारोममपूर्यते. ९ ङ.—ट. सुखावहंसुखं. १० ख. यतिष्ये.

निहत्य रामं सह लक्ष्मणेन खादामि सर्वान्हरियूथमुख्यान् ॥ ५७ ॥
रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कृत्यानि विनीयतां ज्वरः ॥
मयाऽद्य रामे गमितेयमक्षयं चिराय सीता वशगा भविष्यति ॥ ५८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुःषष्टितमः सर्गः ॥ ६४ ॥

महोदरेणकुंभकर्णंप्रति व्यभिचारप्रदर्शनेनसुकृतदुष्कृतयोःसुखदुःखहेतुत्वनियमनिरसनेन मन्त्रिभिःसहालोचनपूर्वकत्वोक्त्याचसीताहरणस्य न्याय्यत्वसमर्थनम् ॥ १ ॥ तथा रामस्ययुद्धेनदुर्जयत्वसमर्थनेन रावणंप्रति स्वबुद्धिपरिकल्पितकपटोपायप्रदर्शनपूर्वकं तेनैवसीतावशीकरणस्यसुकरत्वोक्तिः ॥ २ ॥

तदुक्तमतिकायस्य बलिनो बाहुशालिनः ॥ कुंभकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १ ॥
कुंभकर्ण कुले जातो धृष्टः प्राकृतदर्शनः ॥ अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥ २ ॥
न हि राजा न जानीते कुंभकर्ण नयानयौ ॥ त्वं तु कैशोरकाद्धृष्टः केवलं वक्तुमिच्छसि ॥ ३ ॥
स्थानं वृद्धिं च हानिं च देशकालविभागवित् ॥ आत्मनश्च परेषां च बुध्यते राक्षसर्षभः ॥ ४ ॥
यत्त्वशक्यं बलवता कर्तुं प्राकृतबुद्धिना ॥ अनुपासितवृद्धेन कः कुर्यात्तादृशं बुधः ॥ ५ ॥

त्तरसुखावहं । ते वधेन दाशरथेः सुखावहमित्यर्थान्तरं ॥ ५७ ॥ मया निमित्तेन रमस्वेत्यादौ काकुः । इयमक्षयमिति च्छेदः । रामे विषये गमिता इयं सीता चिराय वशगा भविष्यतीत्यर्थान्तरं ॥ ५८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

अथ मन्त्रिकृतानयमसहमानो महोदरः कुम्भकर्णं निर्भर्त्सयति–तदुक्तमित्यादिना ॥ उक्तं सूचनं विना कण्ठरवेण दर्शितं । अतिकायस्य महाशरीरस्य । प्रतिवचनानर्हत्वद्योतनाय विशेषणानि ॥ १ ॥ मन्त्रिभिः सहाविचार्यैव रावणेनाकार्यं कृतमिति अहमसहाय एव रामादिभिर्योत्स्यामीतिच यदुक्तं कुम्भकर्णेन तदुभयं दूषयितुमाह—कुम्भकर्णेत्यादिना ॥ कुले जातोपि प्राकृतदर्शनः क्षुद्रबुद्धिः । केवलं धृष्टः न तु शास्त्रज्ञ इत्यर्थः । अवलिप्तः गर्वितः । त्वं सर्वत्र कार्ये । कृत्यं मन्त्ररूपं । तद्वेदितुं न शक्नोषि ॥ २ ॥ 'केवलं वीर्यदर्पेण नानुबन्धो विचारितः, । न स वेद नयानया''वित्यादिना रावणोद्देशेन कुम्भकर्णोक्तं दूषयति–न हीत्यादिना ॥ राजा नयानयौ न जानीत इति न । जानीत एवेत्यर्थः । किशोरः बालः तस्य भावः कैशोरकं तस्मात् बाल्यात् । केवलं धृष्टः न तु शास्त्रज्ञानेनेति भावः ॥ ३ ॥ देशकालविभागवित् विविक्तादिमन्त्रोचिततद्भिन्नयोः देशयोः तथा मन्त्रोचितानुचितयोश्च कालयोर्विभागं वेत्तीति तथोक्तः । राक्षसर्षभः रावणः । आत्मनः शत्रूणां च वृद्धिं हानिं स्थानं समतां च बुध्यते । रावणो देशकालविभागाद्यनभिज्ञ इति त्वयोक्तं न युक्तमिति भावः ॥ ४ ॥ लोके कापुरुषेणापि यत्कर्तुमनर्हं तादृशं कर्म विवेकी रावणः कथं कुर्यादित्यभिप्रेत्याह—यत्त्विति ॥ बलवता केवलशौर्यावलम्बिना । प्राकृतबुद्धिना यत्कर्तुं शक्यं तादृशं

हिष्यतइतिभावः ॥ ४७ ॥ इतित्रिषष्टितमःसर्गः ॥ ६३ ॥

**स०** बलवता बलवानहमित्यभिमानवता । प्राकृतबुद्धिनापियत्कर्तुमशक्यंअयोग्यं । हेअनुपासितवृद्ध कुंभकर्ण । इनकः इन एवेनकः अस्मत्स्वामी । बुधः ज्ञानी तादृशंप्राकृतबुद्धिभिरननुष्ठीयमानंस्वयोग्यंकुर्यात् । शक्यमितिपाठे तादृशेनापिकर्तुंशक्यंबुधः कस्तादृशंकुर्यादित्यर्थः । अनुपासितवृद्धश्चासाविनश्च तत्संबुद्धिः । स्वाम्यनुजत्वान्मध्येकोपेनस्वध्वंससाध्वसाद्वा तमभिमुखीकर्तुमेव-

[ पा० ] १ ङ. झ. ट. राजन्पिबचाद्यवारुणीं. २ ङ.—ट. कृत्यानिविनीयदुःखं. क. ख. घ. कृत्यान्यपनीयतां. ३ झ. ञ. ट. विधानवित्. ४ ङ. झ. ट. नरः.

**यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान् ॥ अनुबोद्धुं[1] स्वभावे तान्नहि[2] लक्षणमस्ति[3] ते ॥ ६ ॥**
**कर्म चैव हि सर्वेषां कारणानां प्रयोजकम्[4] ॥ श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥ ७ ॥**
**निश्श्रेयसफलावेव धर्मार्थावितरावपि ॥ अधर्मानर्थयोः प्राप्तिः फलं च प्रत्यवायिकम् ॥ ८ ॥**
**ऐहलौकिकपारत्रं[5] कर्म पुंभिर्निषेव्यते ॥ कर्माण्यपि तु कल्यानि लभते काममास्थितः ॥ ९ ॥**

कर्म बुधः कः कुर्यात् न कोपि कुर्यात् । किमुत रावण इति भावः ॥ ५ ॥ धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य, "शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः" इत्यादिना सीताहरणरूपात्पापात्त्वायमनर्थः प्राप्त इति यदुक्तं कुम्भकर्णेन तदपि धर्माधर्मयोर्हिताहितफलनियमाभावान्न संगच्छत इति प्रतिपादयितुमाह—यांस्त्वित्यादिना ॥ पृथगाश्रयान् पृथक्कारणान् भिन्नफलान् । धर्मार्थकामान् ब्रवीषि । तान् स्वभावे अनुबोद्धुं स्वरूपतो ज्ञातुं । लक्षणं लक्ष्यतेनेनेति लक्षणं प्रमाणं । तव नास्तीत्यर्थः । सुखफलदयागादिधर्मानुष्ठानदशायां तात्कालिकशरीरायासजनितदुःखदर्शनात् दुःखजनकपरद्रव्यापहरणाद्यधर्माचरणसमयेतात्कालिकसुखदर्शनाच्च । अर्थकामयोरप्येवंदर्शनाच्च कर्मणामनियतफलकत्वान्नियतफलकत्वे न किंचित्प्रमाणमुपलभ्यत इत्यर्थः ॥ ६ ॥ तदेव प्रदर्शयति—कर्म चेत्यादिना ॥ सर्वेषां कारणानां स्वर्गनरकरूपाणां फलानां कर्मैव प्रयोजकं साधकं । जात्येकवचनं । किंतु अत्र कर्मजाते पापीयसामपि कर्मणां श्रेयः फलं भवति ॥ ७ ॥ उक्तमेवार्थं विशदयति—निःश्रेयसेति ॥ धर्मार्थौ धर्मार्थसाधनभूते कर्मणी । इतरौ अधर्मानर्थसाधनभूते कर्मणी च । निःश्रेयसफलौ एतानि चतुर्विधानि निःश्रेयसकराण्येव । किंतु कदाचिदधर्मानर्थयोः प्रत्यवायिकं । अश्रेयइति यावत् । प्रत्यवायोस्मिन् कारणतयास्तीति प्रत्यवायिकं । "अत इनिठनौ" इति ठन् । प्राप्यत इति प्राप्तिः फलं । कर्मणि क्तिन्प्रत्ययः । एतेनाधर्मानर्थयोः श्रेयस्तदितरच्चोभयं फलं भवतीत्युक्तं ॥ ८ ॥ एवं धर्माधर्मयोरव्यवस्थितफलत्वमुक्त्वा कामस्यापि तदाह—ऐहलौकिकेति ॥ ऐहलौकिकं इहलोकोपयोगि । पारत्रं परलोकोपयोगि च कर्म पुंभिर्निषेव्यते । तत्फलं चानुभूयते । तथैव

मुक्तिः । अनुपासितवृद्धेन अतएवप्राकृतबुद्धिनेति तीर्थोनागोजिभट्टश्च ॥ ५ ॥ **ति०** सर्वेषांकारणानां सुखसाधनानां त्रिवर्गलक्षणानां । कर्मैव प्रयोजनं प्रयोजकमुत्पादकं । नह्यक्रियस्यकश्चनपुरुषार्थोधर्मादिः ॥ ७ ॥ **ति०** तत्रपुरुषप्रयत्नसाध्येष्वप्येषु धर्मार्थयोःकामात्कश्चिद्विशेषोस्तीत्याह—निश्श्रेयसेति । धर्मार्थौ निश्श्रेयसफलावेवसन्तौ कामनाविशेषेणेतरावपि स्वर्गाभ्युदयफलावपिभवतः । अत्रधर्मशब्देनार्थनिरपेक्षोजपध्यानादिः । अर्थशब्देनचार्थसाध्योयागदानादिः । " यज्ञोदानंतपश्चैवपावनानिमनीषिणाम् " इतिभगवद्वचनात् । तेषांचित्तशुद्धिद्वारामोक्षसाधनत्वमस्ति । कामस्तुनकदापिनिश्श्रेयसफलइतिभावः । तयोरपरमपिकामाद्विशेषमाह—अधर्मानर्थयोरिति । जपादिरूपेक्रियामयेवा नित्यधर्मेलुप्तेसत्यधर्मानर्थौप्राप्तौभवतः । तयोश्चसतोः प्रात्यवायिकंविहिताकरणप्रयुक्तप्रत्यवायजन्यंफलंपुंसःप्राप्तंभवति । नतुकाम्याकरणेप्रत्यवायइतिभावः ॥ **स०** अर्थः तद्व्ययसाध्ययागादिः । तौ निष्कामनयानुष्ठितौ निश्श्रेयसफलौ मोक्षप्रापकौ । तावेव इतरौ कामनयानुष्ठितौ इतरौ स्वर्गैहिकसंपदादिप्रापकौ भवतः । तथाविरुद्धकामनया कर्तव्यलोपादिनाऽधर्मघटनेवघटनानर्थस्यापिभवेत् । तयोरधर्मानर्थयोःसतोः प्रात्यवायिकं प्रत्यवायजन्यं । फलं अनिष्टं प्राप्तंभवति । यथाविहिताकरणेप्रत्यवायस्तथाकाम्याकरणे नप्रत्यवायइतितदपेक्षयातौविशिष्टाविति । भगवत्सेवादिकामनाप्यकामनैवेति सा धर्ममध्यएवगणनीयेति नहठवादीयभीमकामप्रशंसाविरोधइतिबोध्यं ॥ ८ ॥ **ति०** कीदृशंतत्फलंतत्राह—ऐहलौकिकेति । इहलोकेपरत्रचभवंकर्म कर्मफलं । इहऋणदारिद्र्यादिरूपं । परत्रनरकयातनादिरूपं । निषेव्यते अनुभूयते एवंधर्मफलमपि । अथकामस्यधर्मार्थाभ्यांवैलक्षण्यमाह—**कर्माणीति** । कामं तत्पुरुषार्थसिद्धिमुद्दिश्यकर्माणियत्नेनस्थितोऽनुतिष्ठन्नपिकल्यानिशुभानितुविशिष्यात्रापिसाक्षाल्लभतेनतुधर्मार्थवत्कालान्तरे लोकान्तरेवा । एवंचधर्मार्थकामाएकेनैवसेव्याः । धर्मविरुद्धोयदिकामस्तदासस्वतपोविक्रमादिनासमाधेयः । "नहिभिक्षुकाःसन्तीतिस्थाल्योनाधिश्रियन्ते " इतिन्यायादितिभावः । **स०** पुंभिः पुरुषैः । रावणस्यप्रस्तुतत्वात्पुंभिरित्युक्तिः । सर्वैःस्त्रीपुंसैरित्यर्थः । ऐहलौकिकं इहलोकेभवं । अनुशतिकादित्वादुभयपदवृद्धिः । कर्म तत्फलं अङ्गचित्तवैकल्यादिकं । पारक्यं परशब्दात् " तद्धितः " इतिबहुवचनज्ञापितः क्यप् । कित्वाद्वृद्धौचपारक्यमितिभवति । यातनादिरूपं निषेव्यते । ऐहलौकिकंपारक्यंशुभमप्येवं । कामोधर्मार्थाभ्यांविलक्षणफलकइत्यालपति—कर्मा-

**[ पा० ]** १ ङ. झ. ट. अवबोद्धुं. २ ङ.—ट. स्वभावेननहि. ३ ङ. झ. ञ. ट. मस्तितान्. ४ ग. ङ.—ट. प्रयोजनं. ५ क. ख. ङ. झ. ट. ठ. पारक्यं.

**तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः ॥ शत्रौ हि साहसं यत्स्यात्किमिवात्रापनीयताम् ॥ १० ॥**
**एकस्यैवाभियाने तु हेतुर्यः प्रकृतस्त्वया ॥ तत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥ ११ ॥**

काममास्थितः यथेच्छाचारोपि कल्यानि कर्माणि कल्याणानि कर्मफलानि लभते । अतो विहितमेव शुभप्रदं, निषिद्धं तु तथा न भवतीति नियमो नास्तीत्यर्थः ॥ ९ ॥ धर्मादीनां फलनियमो नास्ति, सर्वं सर्वस्य फलमित्यस्मिन्पक्षे स्थित्वा रावणेन सीताहरणं कृतमस्माभिश्चानुमतमित्याह—तत्र क्लृप्तमिति ॥ तत्र राज्ञा कामसेव्यपि सुखानि लभत इति मते स्थितेन राज्ञा । इदं कार्यं सीताहरणरूपं कार्यं । हृदि क्लृप्तं हृदि चिन्तितं । नः अस्माकमपि । मतं संमतं । शत्रौ शत्रुविषये यत् साहसं स्यात् । अत्र अस्मिन्साहसकर्मणि किमिवापनीयते । न किंचित्क्रियते इत्यर्थः ॥ १० ॥ एवं रावणस्याविमृश्यकारित्वपक्षं प्रतिक्षिप्य कुम्भकर्णस्यैकस्यैवाभियानपक्षं निरस्यति—एकस्येत्यादिना ॥ एकस्यासहायस्य । अभियाने युद्धाय निर्गमे ।

ण्यपीति । कामंपुरुषार्थमुद्दिश्य कर्माणि आस्थितः अनुतिष्ठन् कल्यानि फलप्रापणसमर्थानि । तत्फलानीतियावत् । लभते प्राप्नोति । धर्मादिविरुद्धइतिनत्याज्यः कामोपितुमध्येनुष्ठिततपसाबलेनवा धर्माविरुद्धीकर्तुंसुसंपादः । “ नहिमृगाआयान्तीतिबीजानिनोप्यन्ते ” इतिनीतेरितिभावः ॥ ९ ॥ **ति०** यत्तुतीर्थेनोक्तं धर्माधर्मयोर्हिताहितसाधनत्वंनिश्चितत्वपरदाराहरणरूपाधर्माद्राज्ञो दुःखमित्युक्तं तद्धर्माधर्मयोर्हिताहितफलनियमाभावादसंगतमित्याह—यांस्तुधर्मार्थेति । पृथगाश्रयान् पृथक्फलजनकान्वदसि । तान्स्वभावेनावबोद्धुं स्वरूपतोज्ञातुं । लक्ष्यतेऽनेनेतिलक्षणंकारणंच नास्ति । सुखफलकयागादिधर्मानुष्ठानेपितात्कालिकशरीरायासदर्शनात् दुःखजनकपरदारगमनादावपितात्कालिकसुखदर्शनाच्चेतिभावः । तदेवप्रदर्शयति—**कर्मचेति** । सर्वेषांकारणानांसुखानामित्यर्थः । कर्म कर्ममात्रं प्रयोजनं प्रयोजकं । साधकमित्यर्थः । अत्र अस्मिन्पुण्यकर्मणि । फलं भवति अश्रेयोपीतिशेषः । पापीयसांकर्मणांश्रेयःसुखंचफलंभवति । एतदेवविशदयति—**निश्श्रेयसेति** । धर्मार्थौ तत्साधनीभूतेकर्मणी । इतरौ अधर्मानर्थौ । तत्साधनीभूतेकर्मणीइतियावत् । निश्श्रेयसफलावेव । चतुर्विधकर्माण्यपिश्रेयस्कराण्येवेत्यर्थः । किंतु कदाचिदधर्मानर्थयोःप्रात्यवायिकंप्रत्यवायकारणकंदुःखं फलंसुखंच । प्राप्यतइतिप्राप्तिः । कर्मणिक्तिन् । प्राप्यंभवतीत्यर्थः । एतेनाधर्मानर्थयोःसुखदुःखोभयफलत्वमुक्तं । धर्मार्थयोरव्यवस्थितफलत्वमुक्त्वाकामस्याप्याह—ऐहलौकिकेति । इहलोकपरलोकोपयोगिकर्मधर्मार्थरूपंनिषेव्यते तत्फलं चानुभूयते । तथाकाममास्थितोपि यथेच्छाचारोपि । कल्यानि शुभानि । कर्माणि कर्मफलानि । लभते । एवंचविहितमेवशुभदंनिषिद्धमशुभदमितिनियमोनेतिभावः । एतत्पक्षानुसारेणैवसीताहरणंरावणेनकृतमस्माभिश्चानुमतमित्याह—**तत्रेति** । तथासतीदंकार्यंसीताहरणरूपंराज्ञाहृदिनिश्चितमस्माभिरनुमतंच । किंचशत्रुविषयेरावणेनयत्साहसंकृतं तत्किमिव नकिमपीत्यर्थः । अत्र साहसविषये । अपनीयतां पृथक्कृत्यप्रदर्श्यतां । अत्रपक्षेरावणेनाविचार्यकृतंकिमपिदर्शयितुंनशक्यमित्यर्थइतिपञ्चश्लोकीव्याख्यानं तन्न । धर्माद्दुःखस्याधर्मात्सुखस्यसर्वासंमतत्वात् । यदप्युक्तंयागादौ नान्तरीयकंदुःखमिति तन्नतस्यधर्मस्यफलं । किंतु प्राक्तनकर्मान्तरस्यैव । एवमधर्मविषयेपि । अनयारीत्यासर्वंपलालप्रायतयादूष्यतांमतिमद्भिरित्यलम् ॥ **स०** अनभिज्ञायशास्त्रार्थमित्यादिना दुर्मन्त्रिणस्त्याज्याइतियदुक्तंतत्परिहरति—**तत्रेति** । धर्मार्थकामानामेकानुष्ठेयत्वेतन्मुखबन्धेननिश्चितेराज्ञैकेनापिकामार्थावाप्तौप्रयत्नोनुष्ठेयइति । इदं कार्यं सीताहरणादिकंकामार्थरूपमितिराज्ञाहृदिक्लृप्तं कर्तव्यत्वेनमनःपूर्वकंक्लृप्तंनिश्चितं । मन्त्रिणामस्माकंचमतं । अतोराजनीवयुवराजेष्वपिनाचातुरी । साहसंकृतमित्युक्तंदोषंदूरीकरोति—शत्राविति । शत्रौ शत्रुविषये । यत्साहसं हि कर्तव्यत्वेनप्रसिद्धं । अत्र एतदवस्थायांनकिमिवापनीयते अनयीक्रियते । तस्यशत्रुत्वात्तत्रसाहसंसंभावितानुष्ठेयत्वमेवेति नकोप्यनयोनेनानुष्ठितइतिभावः । यत्तु “ नागोजिभट्टेन यत्तुतीर्थेनोक्तमितिपञ्चश्लोकीव्याख्यानमनूद्य तन्न धर्माद्दुःखस्याधर्मात्सुखस्यसर्वासंमतत्वात् । यदप्युक्तंयागादौनान्तरीयकंदुःखमितितन्नतस्यधर्मस्यफलं । किंतुप्राक्तनकर्मान्तरस्यैव । एवमधर्मविषये । अनयारीत्यासर्वंपलालप्रायतयादूष्यतांमतिमद्भिरित्यलमित्यालपितं तत्तत्तात्पर्यापर्यालोचनयेतिज्ञेयं । तथाहि । अधर्मात्सुखस्य धर्माद्दुःखस्यसर्वासंमतत्वादित्याद्योनानवद्यः । तेननसुखंवादुःखंवापारत्रिकं तत्रापिमुख्यंमोक्षसदसन्मुक्तिगंविवक्षितं । किंतूभयमप्यैहिकं पुनरावृत्तिलोकगंच । धर्मस्यदुःखहेतुत्वं यथार्थवचनंधर्मइतिजानद्भिर्निलीनज्ञातचोरबोधनेनमहानर्थऐहिकोनुभूतइति ज्ञातस्थितिचोरावचनदीपादितैलपानादिलोकमूषकाद्यनुष्ठिताधर्मस्यपुरुषार्थप्रापकत्वेत्येवमादिरर्थोबहुपुराणादिदृष्टइतिस्वव्यतिरिक्तनैकमात्रसंमतमिदंप्रमेयमिति क्वसर्वासंमतिः । एवमसांमत्येचास्तिककामुकादयोनामशास्त्रकृदुदाहृताअधिकारिणोनसन्तीत्यभ्युपगन्तव्यंस्यात् । यागादौ नान्तरीयकंदुःखमिति तन्नतस्यधर्मस्यफलंकिंतुप्राक्तनकर्मान्तरस्यैवेत्यादिकं भगवद्भक्तिरहितकृतक्रतुविवक्षया । “ धर्मोभवत्यधर्मोपियोनभक्तैःकृतोहरे । पापंभवतिधर्मोपिकृतोभक्तैस्तवाच्युत ” इत्यादिमानमनुसृत्यतीर्थऊचिवानितितुच्छीकृतंवेदितव्यमितिदिक् ॥ १० ॥ **ति०** प्राहृतः उक्तः ॥ ११ ॥

[ **पा०** ] १ ङ. झ. ट. यत्तत्किमिवा. २ ङ. झ. ट. प्राहृतस्त्वया.

येन पूर्वं जनस्थाने बहवोऽतिबला हताः ॥ राक्षसा राघवं तं त्वं कथमेको जयिष्यसि ॥ १२ ॥
ये पुरा निर्जितास्तेन जनस्थाने महौजसः ॥ राक्षसांस्तान्पुरे सर्वान्भीतानद्यापि पश्यसि ॥ १३ ॥
तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम् ॥ सर्पं सुप्तमिवाबुध्य प्रबोधयितुमिच्छसि ॥ १४ ॥
ज्वलन्तं तेजसा नित्यं क्रोधेन च दुरासदम् ॥ कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥ १५ ॥
संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने ॥ एकस्य गमनं तत्र न हि मे रोचते भृशम् ॥ १६ ॥
हीनार्थः सुसमृद्धार्थं को रिपुं प्राकृतं यथा ॥ निश्चित्य जीवितत्यागे वशमानेतुमिच्छति ॥ १७ ॥
यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम ॥ कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥ १८ ॥
एवमुक्त्वा तु संरब्धः कुंभकर्णं महोदरः ॥ उवाच रक्षसां मध्ये रावणं लोकरावणम् ॥ १९ ॥
लब्ध्वा पुनस्त्वं वैदेहीं किमर्थं संप्रजल्पसि ॥ यदीच्छसि तदा सीता वशगा ते भविष्यति ॥२०॥
दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः ॥ रुचिरश्चेत्स्वया बुद्ध्या राक्षसेश्वर तं शृणु ॥ २१ ॥
अहं द्विजिह्वः संह्रादी कुंभकर्णो वितर्दनः ॥ पञ्च रामवधायैते निर्यान्तीत्यवघोषय ॥ २२ ॥
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः ॥ जेष्यामो यदि ते शत्रून्नोपायैः कृत्यमस्ति नः ॥२३॥
अथ जीवति नः शत्रुर्वयं च कृतसंयुगाः ॥ ततस्तदभिपत्स्यामो मनसा यत्समीक्षितम् ॥ २४ ॥
वयं युद्धादिहेष्यामो रुधिरेण समुक्षिताः ॥ विदार्य स्वतनुं बाणै रामनामाङ्कितैः शितैः ॥ २५ ॥

यो हेतुः बलपराक्रमरूपः । त्वयाप्रकृतः प्रस्तावितः । तत्रापीत्यपिशब्देन पूर्वं निराकृतः पक्षः समुच्चीयते । यदनुपपन्नं अयुक्तं । असाधु अहितं च । तद्वक्ष्यामि ॥ ११ ॥ अनुपपत्तिमुपपादयति—येनेति ॥१२॥ असाधुत्वं दर्शयति—ये पुरेति ॥ तान् तज्जातीयानित्यर्थः ॥ १३ ॥ संक्रुद्धं सिंहमिव संक्रुद्धसिंहसदृशं तमबुध्य अबुध्वा । सुप्तं सर्पमिव प्रबोधयितुमिच्छसीत्यन्वयः ॥ १४ ॥ असह्यं सोढुमशक्यं । अपरिहार्यपराक्रममित्यर्थः । आसादयितुं आसादितुं ॥ १५ ॥ यत्र शत्रोः प्रतिसमासने प्रतिमुखस्थितौ इदं सर्वं बलं संशयस्थं भवति । तत्र एकस्य तव गमनं न रोचते ॥ १६ ॥ हीनार्थः हीयमानबलः । कः पुमान् जीवितत्यागे विषये । निश्चित्य निश्चयं कृत्वा । समृद्धार्थं वर्धमानबलं रिपुं प्राकृतं यथा क्षुद्रपुरुषमिव । वशमानेतुमिच्छतीत्यन्वयः । जीवितत्यागे निश्चयोस्ति चेत्तंप्रति युद्धाय याहीत्यर्थः ॥ १७ ॥ यस्य मनुष्येषु सदृशो नास्ति । किंतु देवयोः इन्द्रविवस्वतोः इन्द्रसूर्ययोस्तुल्येन तेन रामेणेति शेषः । योद्धुं कथमाशंससे । वक्तुमेव न शक्यं किमुत कर्तुमिति शेषः ॥ १८—॥ १९ ॥ लब्ध्वेत्यादिश्लोकद्वयमेकान्वयं ॥ संप्रजल्पसि बहुविधं भाषसे । अद्येति शेषः । यदीच्छसि । वक्ष्यमाणोपायमिति शेषः । तदा तदैव । मे मया । उपस्थानं स्वयमेव समीपागमनं । रुचिरः प्रियः । स्वया बुद्ध्या शृणु । नतु परबुद्धिमनुसरेत्यर्थः ॥ २०—२२ ॥ उपायैः सीताहरणोपायैः । कृत्यं साध्यं । नास्ति । सिद्धे साधनायोगादिति भावः ॥ २३ ॥ अथ जीवति यदि जीवतीत्यर्थः । ततः तदा । समीक्षितं आलोचितं । यत् तत् अभिपत्स्यामः । करिष्याम इति यावत् ॥ २४ ॥ तत्किमित्यत्राह—वयमित्यादि ॥ वयं बाणैः स्वतनुं विदार्य रामेण विदारितां कारयित्वा । रुधिरेण समुक्षिताः रामनामाङ्कितैः शरैः सह युद्धादिहेष्याम इति योजना ।

स० इन्द्रविवस्वतोः एकदेहमाश्रितयोरित्यभूतोपमेयं । अन्यथेन्द्रादीनामेतदादिपराभवस्यबहुवारमनुभवान्ननिदर्शनार्हतेतिबोध्यं ॥ १८ ॥ शि० शरैः विघातकैः ॥ स० वयंयुद्धात्स्वतनुंबाणैः स्वयमेवविदार्य रामनामाङ्कितैःशरैः रुधिरेणसमुक्षिताइव इहैष्यामः ॥ बाणैःशरैरितिपुनरुक्तिकृत्यमनालोचयतातीर्थेनेवनागोजिभट्टेनापि रामनामाङ्कितशरताडितानांमहोदरादीनांजीवतां

[ पा० ] १ ङ. झ. ट. बलास्तदा । राक्षसाराघवंध्वस्ताः. २ च. झ. ञ. ट. पूर्वं. ३ ङ. झ. ञ. ट. सुप्तमहोबुध्वा. ४ ख. ङ. झ. ट. निश्चितं. ५ क. ख. च छ. त्रिलोकेषु. ६ क. ङ. झ. ट. संरब्धं. ७ ग. ङ. छ. झ. ञ. ट. पुरस्ताद्वैदेहीं. ख. ज. पुनस्त्वांवैदेहीं. ८ ङ. झ. ट. किमर्थंत्वंविलंबसे. च. छ. ञ. किमर्थंपरितप्यसे. ग. घ. किमर्थंत्वंप्रजल्पसि. ९ ङ. च. झ. ञ. ट. राक्षसेन्द्रततःशृणु. १० क. ग.—ट. ततस्समभि. ११ क. ख. ग. ङ.—ट. शरैः.

भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः ॥ तव पादौ ग्रहीष्यामस्त्वं नः कामं प्रपूरय ॥ २६ ॥
ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव ॥ हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः ॥ २७ ॥
प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिंदम ॥ भोगांश्च परिवारांश्च कामांश्च वसु दापय ॥ २८ ॥
ततो माल्यानि वासांसि वीराणामनुलेपनम् ॥ [1]पेयं च बहु योधेभ्यः स्वयं च मुदितः पिब ॥२९॥
ततोस्मिन्बहुलीभूते कौलीने सर्वतो गते ॥ भक्षितः ससुहृद्रामो राक्षसैरिति विश्रुते ॥ ३० ॥
प्रविश्याश्वास्य चापि त्वं सीतां रहसि सान्त्वय ॥ धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय ॥ ३१ ॥
अनयोपधया राजन्[2]भयशोकानुबन्धया ॥ अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति ॥ ३२ ॥
[3]रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा ॥ नैराश्यात्स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ॥ ३३ ॥
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता ॥ त्वय्यधीनं सुखं ज्ञात्वा सर्वथोपगमिष्यति ॥ ३४ ॥

एतत्सुनीतं मम दर्शनेन रामं हि दृष्ट्वैव भवेदनर्थः ॥
इहैव ते सेत्स्यति मोत्सुको भूर्महानयुद्धेन सुखस्य लाभः ॥ ३५ ॥
[4]अदृष्टसैन्यो ह्यनवाप्तसंशयो रिपू[5]नयुद्धेन जयन्[6]नराधिपः ॥
यशश्च [7]पुण्यं च महन्महीपते [8]श्रियं च कीर्तिं च चिरं[9] समश्नुते ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

इदं च रामयुद्धं कृतमिति सीतासमाश्वासाय ॥२५॥ ततः आगमनानन्तरं । रामो लक्ष्मणश्च रिपुः निःशेषं भक्षित इति तव पादौ ग्रहीष्यामः । त्वं संतोषातिशयव्यञ्जनार्थं नः कामं प्रपूरय । अभीष्टं पारितोषिकं देहीत्यर्थः ॥ २६ ॥ गजस्कन्धेन गजस्कन्धगतपुरुषेण ॥ २७ ॥ नामेत्यलीके । परिवारान् दासदासीः गजाश्वादीन्परिच्छदान्वा । “ स्याज्जङ्गमे परीवारः ” इत्यमरः । कामान् काम्यमानानभीष्टान् । वसु सुवर्णं ॥ २८—२९ ॥ तत इत्यादिश्लोकद्वयं ॥ कौलीने लोकवादे । “ स्यात्कौलीनं लोकवादे ” इत्यमरः । कौलीनमेव विशदयति—भक्षित इति । प्रविश्य । समीपं गत्वेत्यर्थः । आश्वास्य रामात्ययजं शोकं निवार्य । सान्त्वय मयि प्रीतिं कुर्वित्येवं सान्त्ववादं कथयेत्यर्थः । धनैः सुवर्णैः ॥ ३०—३१ ॥ उपधया कपटोपायेन । भयशोकानुबन्धया संपादितसीताभयशोकेनेत्यर्थः । अकामा पूर्वं त्वदनभिलाषिणी ॥ ३२ ॥ स्त्रीलघुत्वात् स्त्रीचापलात् ॥ ३३ ॥ त्वय्यधीनं त्वयि विषये अधीनं परतन्त्रं । उपगमिष्यति । त्वामिति शेषः ॥ ३४ ॥ उक्तमर्थं निगमयति—एतदिति ॥ एतत् मम दर्शनेन बुद्ध्या । सुनीतं निर्णीतं । रामं दृष्ट्वा स्थितस्य तव अनर्थो भवेत् । मोत्सुको भूः मा रणोत्सुको भूः । अयुद्धेन युद्धव्यतिरिक्तासनबलेन । प्रसज्यप्रतिषेधेपि समासस्येष्टत्वात्साधुः ॥ ३५ ॥ तदेवायुद्धं स्तौति—अदृष्टेति ॥ अदृष्टसैन्यः अदृष्टशत्रुसैन्यः । अतएवानवाप्तसंशयः अप्राप्तप्राणसंदेहः । अयुद्धेन

---

प्रत्यावृत्तौक्षसंपादितपुण्यमेवनिमित्तमित्यभिप्रेतं । “ रामंहिदृष्ट्वैवभवेदनर्थ” इतिसर्गोपान्त्यश्लोकीयानर्थोवधइतिस्वव्याख्यानंपूर्वोत्तराविमर्शमूलंचेतिमतिमद्भिःसंतोष्टव्यं ॥ २५ ॥ **ति०** बहुदेयं देहीतिशेषः । मुदितःपिब मुदितइवपिब मैरेयमितिशेषः ॥२९॥ **ती०** अनयोपधया अनेनकपटोपायेन । भयशोकानुबन्धया संपादितभयशोकयेत्यर्थः । अनयोपधयेत्यादिश्लोकत्रयस्यवास्तवार्थे महोदरवाणी प्रकारान्तरेणनिस्सरति—**अनयेति** । नष्टनाथागमिष्यतीत्यत्र नष्ट न अथ आगमिष्यतीतिच्छेदः । अथेत्यप्यर्थे । हेनष्ट रावण । अकामा विष्णुकामासीता । अनयोपधयापि त्वद्वशंनागमिष्यतीत्यर्थः ॥ ३२ ॥ **स०** अयुद्धेन विनायुद्धं । एतेन सीतालाभानन्तरंकृतकार्यःशरणंव्रजेतिसूच्यतइतिज्ञेयं ॥ ३५ ॥ इतिचतुःषष्टितमःसर्गः ॥ ६४ ॥

[ **पा०** ] १ ङ. झ. ञ. ट. देयंचबहु. ग. देयंचबहुधातेभ्यः. २ ङ.—ट. भूयश्शोकानु. ३ च. छ. झ. ट. रमणीयंहि. ४ ग. ङ. च. ज.—ट. अनष्टसैन्यो. ५ ङ. च. झ. ट. रिपुंत्वयुद्धेनजयञ्जनाधिप. ६ छ. ज. ञ. न्नराधिप. ७ क. ख. च. छ. ज. सौख्यंचमहान्महीपतिः. ८ ख. च. छ. ञ. श्रियंसमृद्धांच. ८ ग. सुखं.

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

कुंभकर्णेन महोदरभर्त्सनपूर्वकंरावणंप्रतिरामवधप्रतिज्ञानेन रणायनिर्याणोक्तिः ॥ १ ॥ रावणेन कुंभकर्णस्यनानाभरणैरलङ्कारपूर्वकं रणायप्रेषणम् ॥ २ ॥ कुंभकर्णेन स्वप्रस्थानसमयप्रादुर्भूतदुर्निमित्तालक्षीकारेणैव रणायनिर्याणम् ॥ ३ ॥

स तथोक्तस्तु निर्भर्त्स्य कुंभकर्णो महोदरम् ॥ अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १ ॥
सोहं तव भयं घोरं वधात्तस्य दुरात्मनः ॥ रामस्याद्य प्रमार्जामि निर्वैरो हि सुखी भव ॥ २ ॥
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः ॥ पश्य संपाद्यमानं तु गर्जितं युधि कर्मणा ॥ ३ ॥
न मर्षयति चात्मानं संभावयति नात्मना ॥ अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४ ॥
विक्लबानामबुद्धीनां राज्ञा पण्डितमानिनाम् ॥ शृण्वता सादितमिदं त्वद्विधानां महोदर ॥ ५ ॥
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः ॥ राजानमनुगच्छद्भिः कृत्यमेतद्धि सादितम् ॥ ६ ॥
राजशेषा कृता लङ्का क्षीणः कोशो बलं हतम् ॥ राजानमिममासाद्य सुहृच्चिह्नममित्रकम् ॥ ७ ॥
एष निर्याम्यहं युद्धमुद्यतः शत्रुनिर्जये ॥ दुर्नयं भवतामद्य समीकर्तुमिहाहवे ॥ ८ ॥

---

जयन् युद्धव्यतिरिक्तोपायेन जयन्नित्यर्थः । महत् पुण्यं पुण्यफलं सुखं। श्रियं श्रीमत्प्रियालाभेन जनितां संपदं। कीर्तिं प्रसादं। विस्तारं वा। "कीर्तिः प्रसादे यशसि कर्दमे विस्तृतावपि" इति रत्नमाला। महीपते इति संबोधनं। सीतानुरागाभावेन नैराश्याद्रामः स्वयं विनश्यतीति महोदरहृदयम् ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुःषष्टितमः सर्गः॥६४॥

अथ युद्धाय कुम्भकर्णनिर्याणं पञ्चषष्टितमे—स तथोक्तस्त्वित्यादि ॥ निर्भर्त्स्य गर्जन्तीत्यादिवक्ष्यमाणप्रकारेणेति शेषः ॥ १ ॥ प्रमार्जामि । निवर्तयिष्यामीत्यर्थः । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ २ ॥ वृथा कर्मणा विना । मया तु कर्मणा संपाद्यमानं गर्जितं पश्य । गर्जितानुसारेण कर्म करोमीत्यर्थः ॥ ३ ॥ शूराः परकृतामवमानोक्तिं । न मर्षयति न मर्षयन्ति न सहन्ते। आत्मना स्वयं। आत्मानं न संभावयति न संभावयन्ति न बहुमन्यन्ते। उभयत्रापि व्यत्ययेनैकवचनं । किंतु अदर्शयित्वा अप्रकाश्य। आत्मपौरुषमनुक्त्वेत्यर्थः। दुष्करमपि कर्म कुर्वन्ति ॥ ४ ॥ विक्लबानामिति । अत्र पञ्चम्यर्थे षष्ठी। सादितमिति भावे निष्ठा। विक्लबेभ्यः कातरेभ्यः। अबुद्धिभ्यः पण्डितमानिभ्यः त्वद्विधेभ्यः। शृण्वता राज्ञा। इदमीदृशं। सादितं प्राप्तंभवति ॥ ५ ॥ इदंशब्दनिर्दिष्टं दर्शयति—युद्ध इति ॥ युद्धे कापुरुषैः युद्धभीरुभिरित्यर्थः। राजानमनुगच्छद्भिः राजेच्छानुसारिभिरित्यर्थः। एतत् प्रकृतयुद्धपर्यवसायि सीताहरणकृत्यं। सादितं संपादितं ॥ ६ ॥ राजशेषेति। अत्राप्यनुगच्छद्भिः भवद्भिरित्यनुषञ्जनीयं। सुहृच्चिह्नं सुहृद्व्यपदेश्यं । अमित्रकं भवताममित्रभूतं । इमं राजानमासाद्य अनुगच्छद्भिः भवद्भिः लङ्का राजशेषा कृता। अकार्यप्रवृत्तो राजा यैर्न निवार्यते स तेषाममित्र इत्यभिप्रायेण अमित्रकमित्युक्तं ॥ ७ ॥ दुर्नयं समीकर्तुं शत्रुनिर्जये । तद्विनाश इत्यर्थः। उद्यतः उद्युक्तः सन्। युद्धं युद्धभूमिं प्रति। एष निर्यामि।

---

ती० सोहमित्यस्यवास्तवार्थस्तु दुरात्मनः दुष्टेष्वप्यात्मबुद्धिः अनुग्रहरूपायस्यरामस्याहं रामदासोहंयद्यपि। तथापि तस्यप्रसिद्धस्य प्रहस्तमुखराक्षससमूहस्येत्यर्थः। वधात्तव घोरंभयमुपस्थितमितिशेषः। तत्प्रमार्जामि अपनयामि। त्वं निर्वैरःसन् सुखीभवेतिसंबन्धः ॥२॥ ति० आत्मनाआत्मानंसंभावयितुं श्लाघयितुंनमर्षयन्ति नसहन्ते। नेच्छन्तीतियावत् ॥ ४ ॥ ति० अशूरस्वरूपवैक्लब्यादिगुणानां त्वद्वचः युद्धनिवृत्तिपरं रोचते नतुवीराणामित्यर्थः। शृण्वतांसादितमिदंत्वद्विधानामितिपाठे विक्लबत्वादिगु-

[ पा० ] १ ख. ञ. एवमुक्तस्तु. २ ख. च. ज. ञ. निर्वैरस्त्वं. ३ झ. ञ. ट. संभावयितुमात्मना. ४ क. शूरस्तुकुरुते कर्मदुष्करं. ५ क. ख. घ.—ट. राज्ञां. ६ ख. ङ. च. झ. ञ. ट. रोचतेत्वद्वचोनित्यंकथ्यमानंमहोदर. ७ ङ. झ. ट. सर्वं कृत्यंविनाशितं. क.—घ. कृत्यमेतद्विघातितं. च. ञ. कृत्यमेतद्विनाशितं. ८ क. ख. ज.—ट. कर्तुंमहाहवे.

एवमुक्तवतो वाक्यं कुंभकर्णस्य धीमतः ॥ प्रत्युवाच ततो वाक्यं प्रहसन्राक्षसाधिपः ॥ ९ ॥
महोदरोयं रामात्तु परित्रस्तो न संशयः ॥ न हि रोचयते तात युद्धं युद्धविशारद ॥ १० ॥
कश्चिन्मे त्वत्समो नास्ति सौहृदेन बलेन च ॥ गच्छ शत्रुवधाय त्वं कुंभकर्ण जयाय च ॥ ११ ॥
[1]तस्मात्तु भयनाशार्थं भवान्संबोधितो मया ॥ अयं हि कालः सुहृदां राक्षसानामरिंदम ॥ १२ ॥
[2]तद्गच्छ शूलमादाय पाशहस्त इवान्तकः ॥ वानरान्राजपुत्रौ च भक्षयादित्यतेजसौ ॥ १३ ॥
समालोक्य तु ते रूपं विद्रविष्यन्ति वानराः ॥ रामलक्ष्मणयोश्चापि हृदये प्रस्फुटिष्यतः ॥ १४ ॥
एवमुक्त्वा म[3]हाराजः कुंभकर्णं महाबलम् ॥ पुनर्जातमिवात्मानं मेने राक्षसपुङ्गवः ॥ १५ ॥
कुंभकर्णबलाभिज्ञो जानंस्तस्य पराक्रमम् ॥ बभूव मुदितो राजा शशाङ्क इव निर्मलः ॥ १६ ॥
इत्येवमुक्तः संहृष्टो निर्जगाम महाबलः ॥ १७ ॥

राज्ञस्तु वचनं श्रु[4]त्वा कुम्भकर्णः समुद्यतः ॥ आददे निशितं शूलं वेगाच्छत्रुनि[5]बर्हणम् ॥ १८ ॥
[6]सर्वकालायसं दीप्तं तप्तकाञ्चनभूषणम् ॥ इ[7]न्द्राशनिसमं भीमं वज्रप्रतिमगौरवम् ॥ १९ ॥
देवदानवगन्धर्वयक्षकिन्नरसूदनम् ॥ रक्तमाल्यं महाधाम स्वतश्चोद्गतपावकम् ॥ २० ॥
आदाय निशितं शूलं शत्रुशोणितरञ्जितम् ॥ कुंभकर्णो महातेजा रावणं वाक्यमब्रवीत् ॥ २१ ॥
गमिष्याम्यहमेकाकी तिष्ठत्विह बलं [8]मम ॥ अद्य [9]तान्क्षुभितान्क्रुद्धो भक्षयिष्यामि वानरान् ॥
कुंभकर्णवचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ २२ ॥

सैन्यैः परिवृतो गच्छ शूलमुद्गरपाणिभिः ॥ वानरा हि महात्मानः शीघ्रा[10]ः सुव्यवसायिनः ॥२३॥
एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम् ॥ तस्मात्परमदुर्धर्षैः सैन्यैः परिवृतो व्रज ॥
[11]रक्षसामहितं सर्वं शत्रुपक्षं निषूदय ॥ २४ ॥

अथासनात्समुत्पत्य स्रजं मणिकृतान्तराम् ॥ आबबन्ध महातेजाः कुंभकर्णस्य रावणः ॥ २५ ॥
अङ्गदान्यङ्गुलीवेष्टान्वराण्याभरणानि च ॥ हारं च शशिसंकाशमाबबन्ध महात्मनः ॥ २६ ॥
दिव्यानि च सुगन्धीनि माल्यदामानि रावणः ॥ [12]श्रोत्रे चासंजयामास श्रीमती चास्य कुण्डले ॥२७॥

अद्यैव निर्यास्यामीत्यर्थः ॥ ८–११ ॥ तस्मात् भवतो निःसमत्वात् । संबोधितः प्रबोधितः । अयं हि कालः । युद्धायेतिशेषः ॥ १२–१४ ॥ पुनर्जातमिव मेने । जेष्यत्ययमिति विश्वासादितिभावः ॥ १५—१६ ॥ इत्येवमित्यर्धं ॥ निर्जगाम निर्गन्तुमुद्युक्तः ॥ १७— ॥ १८ ॥ सर्वकालायसं बहुकार्ष्णायसमयमित्यर्थः ॥ १९ ॥ महाधाम महातेजः । स्वतश्चोद्गतपावकं क्रौर्यात्स्वत एवोत्पन्नाग्निकणं ॥ २०—२२ ॥ महात्मानः महाबुद्धयः । शीघ्राः वेगवन्तः । सुव्यवसायिनः दृढनिश्चयाः ॥ २३—२४ ॥ स्रजं काञ्चनमालां । कुम्भकर्णस्य आबबन्ध कुम्भकर्णे आबबन्धेत्यर्थः ॥ २५ ॥ अङ्गुलीवेष्टान् अङ्गुलीयकानि ॥२६॥ आसञ्जयामास । बबन्धेत्यर्थः । अत्र केयूरादीनामप्युपलक्षणं । काञ्चनाङ्गदकेयूरेत्यनुवादात् ॥ २७ ॥

णानांत्वद्विधानांवचःशृण्वतां इदंसादितं ईदृशंदुःखंप्राप्तंभवतीत्यर्थइतितीर्थः ॥ ५ ॥ **ती०** समालोक्येत्यस्यवास्तवार्थस्तु तेरूपंसमालोक्य रामलक्ष्मणयोःसंबन्धिनोवानराः विद्रविष्यन्ति । प्रस्फुटिष्यतः द्यावापृथिव्याविविशेषः । अतोहृदयेयुद्धगमनायमतिंकुर्वित्यर्थः ॥ १४ ॥ **स०** मणयःकृताः अन्तरेयस्याःसा तां । स्रजं मालां ॥ २५ ॥ **स०** माल्यदामानि पुष्पमालाः । "माल्यं

[ **पा०** ] १ ख. ङ.—ट. शयानःशत्रुनाशार्थं. २ झ. संगच्छ. क. ख. घ. ङ. च. ट. त्वंगच्छ. ३ क. ख. ङ. च. झ. ट. महातेजाः. ४ ङ. झ. ट. श्रुत्वायोद्धुमुद्यक्तवांस्तदा. ५ क. ग.—झ. निबर्हणः. ६ ङ. झ. ट. सर्वकालायसं. ७ ङ. च. छ. झ. ट. इन्द्रनीलसमप्रख्यं. ८ क. च. छ. महत्. ९ क. ङ. च. छ. झ. ञ. ट. तान्क्षुधितः. १० ङ. झ. ट. शूराः. ११ ख. च. छ. ञ. रक्षस्वरक्षसांपक्षं. १२ ग. ङ. च. झ. ट. गात्रेषुसज्जयामासश्रोत्रयोश्चास्य. ख. छ. अङ्गेष्वासञ्जयामास.

काञ्चनाङ्गदकेयूरनिष्काभरणभूषितः ॥ कुंभकर्णो बृहत्कर्णः सुहुतोऽग्निरिवाबभौ ॥ २८ ॥
श्रोणीसूत्रेण महता मेचकेन व्यराजत ॥ अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २९ ॥
स काञ्चनं भारसहं निवातं विद्युत्प्रभं दीप्तमिवात्मभासा ॥
आबध्यमानः कवचं रराज संध्याभ्रसंवीत इवाद्रिराजः ॥ ३० ॥
सर्वाभरणसर्वाङ्गः शूलपाणिः स राक्षसः ॥ त्रिविक्रमकृतोत्साहो नारायण इवाबभौ ॥ ३१ ॥
भ्रातरं संपरिष्वज्य कृत्वा चाभिप्रदक्षिणम् ॥ प्रणम्य शिरसा तस्मै संप्रतस्थे महाबलः ॥ ३२ ॥
निष्पतन्तं महाकायं महानादं महाबलम् ॥ तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः ॥ ३३ ॥
शङ्खदुन्दुभिनिर्घोषैः सैन्यैश्चापि वरायुधैः ॥ तं गजैश्च तुरङ्गैश्च स्यन्दनैश्चाम्बुदस्वनैः ॥ ३४ ॥
अनुजग्मुर्महात्मानं रथिनो रथिनां वरम् ॥ ३५ ॥
सर्पैरुष्ट्रैः खरैरश्वैः सिंहद्विपमृगद्विजैः ॥ अनुजग्मुश्च तं घोरं कुंभकर्णं महाबलम् ॥ ३६ ॥
स पुष्पवर्षैरवकीर्यमाणो धृतातपत्रः शितशूलपाणिः ॥
मदोत्कटः शोणितगन्धमत्तो विनिर्ययौ दानवदेवशत्रुः ॥ ३७ ॥
पदातयश्च बहवो महानादा महाबलाः ॥ अन्वयू राक्षसा भीमा भीमाक्षाः शस्त्रपाणयः ॥ ३८ ॥
रक्ताक्षाः सुमहाकाया नीलाञ्जनचयोपमाः ॥ शूलानुद्यम्य खड्गांश्च निशितांश्च परश्वधान् ॥ ३९ ॥
[1]बहुव्यामांश्च परिघान्गदाश्च मुसलानि च ॥ तालस्कन्धांश्च [2]विपुलान्क्षेपणीयान्दुरासदान् ॥ ४० ॥
अथान्यद्वपुरादाय दारुणं रोम[3]हर्षणम् ॥ निष्पपात महातेजाः कुंभकर्णो महाबलः ॥ ४१ ॥
धनुःशतपरीणाहः स षट्छतसमुच्छ्रितः ॥ रौद्रः शकटचक्राक्षो महापर्वतसन्निभः ॥ ४२ ॥
संनिपत्य च रक्षांसि दग्धशैलोपमो महान् ॥ कुंभकर्णो महावक्त्रः प्रहसन्निदमब्रवीत् ॥ ४३ ॥
अद्य वानरमुख्यानां [4]तानि यूथानि भागशः ॥ निर्दहिष्यामि संक्रुद्धः [5]शैलभानिव पावकः ॥ ४४ ॥
नापराध्यन्ति मे कामं वानरा वनचारिणः ॥ जातिरस्मद्विधानां सा पुरोद्यानविभूषणम् ॥ ४५ ॥
पुररोधस्य मूलं तु राघवः सहलक्ष्मणः ॥ हते तस्मिन्हतं सर्वं तं [6]वधिष्यामि संयुगे ॥ ४६ ॥
एवं तस्य ब्रुवाणस्य कुम्भकर्णस्य राक्षसाः ॥ नादं चक्रुर्म[7]हाघोरं कम्पयन्त इवार्णवम् ॥ ४७ ॥

—२८ ॥ अमृतोत्पादने नद्ध इति निमित्तसप्तमी । भुजङ्गेन वासुकिना ॥ २९ ॥ भारसहं आयुधादिभिः प्रहारेप्यशिथिलमित्यर्थः । दृढमिति वाऽर्थः । यद्वा उपनीतायां तुलायां स्थाप्यमानान्बहून्भारान् सहत इति भारसहः । अनेकभारपरिमाण इत्यर्थः । निवातं वातप्रवेशनिवारकं । निरन्तरमिति यावत् । आत्मभासा कवचकान्त्या । यद्वा निवातं शस्त्राभेद्यं । "निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत्" इत्यमरः । आबध्यमानः आबध्नन् । आर्षविकरणव्यत्ययेन श्यन्प्रत्ययः ॥३०॥ सर्वाभरणसर्वाङ्गः सर्वाभरणयुक्तसर्वाङ्गः । त्रिविक्रमकृतोत्साहः त्रिषु विक्रमेषु पदन्यासेषु कृतोत्साहः ॥३१–३५॥ सर्पैरिति । सर्पादीनां महाशरीराणां वाहनत्वं संभवतीति बोध्यं । द्विपाः गजाः । द्विजाः हंसादयः ॥३६॥ मदोत्कटः स्वाभाविकमदेन मत्तः । "मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः ॥ ३७–३९ ॥ बहुव्यामान् अनेकव्यामप्रमाणान् । "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरं" इत्यमरः । तालस्कन्धान् तालकाण्डान् ॥४०–४१॥ धनुःशतपरीणाहः धनुःशतविशालः । षट्छतसमुच्छ्रितः षट्छतधनुरुच्छ्रायः । संनिपत्य स्वानुगमनायोद्युक्तानां राक्षसानां समीपं गत्वेत्यर्थः ॥ ४२—४४ ॥ सा जातिः वानरजातिः । अस्मद्विधानां क्रीडापराणां ॥ ४५—४७ ॥

[ पा० ] १ ङ. झ. ट. भिन्दिपालांश्चपरिघान्. २ घ. विपुलान्प्रासान्. ३ क. ख. ग. ङ. च. झ. ञ. ट. घोरदर्शनं. ४ ङ. च. छ. ञ. महायूथानि. ख. नानायूथानि. ५ ङ. झ. ट. पतङ्गानिव. ६ ख. च. छ. ञ. वधिष्याम्यतोयुधि. ७ ग. महाघोराः. ख. च. ञ. महायोधाः.

तस्य निष्पततस्तूर्णं कुम्भकर्णस्य धीमतः ॥ बभूवुर्घोररूपाणि निमित्तानि समन्ततः ॥ ४८ ॥
उल्काशनियुता मेघा बभूवुर्गर्दभारुणाः ॥ ससागरवना चैव वसुधा समकम्पत ॥ ४९ ॥
घोररूपाः शिवा नेदुः सज्वालकबलैर्मुखैः ॥ मण्डलान्यपसव्यानि बबन्धुश्च विहङ्गमाः ॥ ५० ॥
निष्पपात च मालेव गृध्रोस्य पथि गच्छतः ॥ प्रास्फुरन्नयनं चास्य सव्यो बाहुश्च कम्पते ॥ ५१ ॥
निपपात तदा चोल्का ज्वलन्ती भीमनिस्स्वना ॥ आदित्यो निष्प्रभश्चासीन्न प्रवाति सुखोऽनिलः ॥५२॥
अचिन्तयन्महोत्पातानुत्थितान्रोमहर्षणान् ॥ निर्ययौ कुम्भकर्णस्तु कृतान्तबलचोदितः ॥ ५३ ॥
स लङ्घयित्वा प्राकारं पद्भ्यां पर्वतसन्निभः ॥ ददर्शाभ्रघनप्रख्यं वानरानीकमद्भुतम् ॥ ५४ ॥
ते दृष्ट्वा राक्षसश्रेष्ठं वानराः पर्वतोपमम् ॥ वायुनुन्ना इव घना ययुः सर्वा दिशस्तदा ॥ ५५ ॥

तद्वानरानीकमतिप्रचण्डं दिशो द्रवद्भिन्नमिवाभ्रजालम् ॥
स कुम्भकर्णः समवेक्ष्य हर्षान्ननाद भूयो घनवद्घनाभः ॥ ५६ ॥
ते तस्य घोरं निनदं निशम्य यथा निनादं दिवि वारिदस्य ॥
पेतुर्धरण्यां बहवः प्लवङ्गा निकृत्तमूला इव सालवृक्षाः ॥ ५७ ॥
विपुलपरिघवान्स कुम्भकर्णो रिपुनिधनाय विनिस्सृतो महात्मा ॥
कपिगणभयमाददत्सुभीमं प्रभुरिव किङ्करदण्डवान्युगान्ते ॥ ५८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ॥ ६६ ॥

लङ्काप्राकारोल्लङ्घनेनरणायाभ्यागच्छतःकुंभकर्णस्य गिरिसदृशपृथुतरशरीरावलोकनमात्रेण नीलनलादिभिर्भयात्पलायनम् ॥ १ ॥ अङ्गदेन नानाप्रकारैःपरिसान्त्वितैस्तैः पुनःप्रत्यावर्तनेन तरुशिलादिपरिग्रहणेन कुंभकर्णप्रत्यभियानम् ॥ २ ॥

स लङ्घयित्वा प्राकारं गिरिकूटोपमो महान् ॥ निर्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ॥ १ ॥

घोररूपाणि अत्यन्तघोराणि ॥ ४८ ॥ गर्दभारुणाः गर्दभवदव्यक्तरागाः । " अव्यक्तरागस्त्वरुणः " इत्यमरः ॥ ४९—५० ॥ गच्छतोस्य उपरिप्रदेशे गृध्रो मालेव निष्पपातेत्यन्वयः । गृध्र इति जात्येकवचनं । सव्यशब्दो लिङ्गव्यत्ययेन नयनशब्देनापि संबध्यते । कम्पते अकम्पत ॥ ५१॥ उल्का मेघनिर्गतज्वालाविशेषः ॥ ५२—५३ ॥ अभ्रघनः अभ्रसंघातः ॥ ५४—५७ ॥ प्रभुः अन्तकः । किंकरदण्डवान् किंकरोमीत्यवस्थायी सचेतनो दण्डः तद्वान् ॥ ५८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

अथ कुम्भकर्णयुद्धप्रवृत्तिः—स इत्यादि ॥ १ ॥

मालाप्रसूनयोः " इत्यभिधानात् ॥ २७ ॥ ति० विपुलपरिघवानिति । शूलवदिदमप्यस्यायुधं । किङ्करदण्डवान् किङ्कराः संहारपरिकराःकालदण्डाअस्यसन्तितथा । युगान्तेप्रभुःकालाग्निरुद्रइवविनिस्सृतः ॥ स० विपुलपरिघवान् विपुलंपरिघादपीतिविपुलपरिघं शूलं तद्वान् । परिघोरोषः । " रोषेचपरिघोमतः " इतिविश्वः । तद्वानितिवा । इदमप्यस्यायुधमितिनागोजिभट्टव्याकरणं तथा प्रभुविशेषणमितितीर्थव्याख्यानंचानुक्तानुवादत्वेन दण्डस्यनियतायुधस्यपृथग्ग्रहणान्नैरर्थक्याच्चक्रमादुपेक्ष्ये । दण्डोस्यास्तीति दण्डवान् । करोदण्डवान्यस्येतिबहुव्रीहिः । प्रभुः संहारसमर्थोयमः । किं इति कपिगणभयंआददद्दिव सुभीमं द्रष्टॄणामपियथाभवतितथानिस्सृतइतिसंबन्धः । " किंकराः संहारपरिकराः कालदण्डाअस्यसन्तीतिकिंकरदण्डवान्" । "किंकरोमीत्युपस्थितदण्डोस्यास्तीती" तिक्रमान्नागोजिभट्टतीर्थौ बिन्दुसन्दोहविचार्यव्याख्यावक्ताराविल्यलम् ॥ ५८ ॥ इतिपञ्चषष्टितमःसर्गः ॥ ६५ ॥

[ पा० ] १ क. ख. च. ञ. उल्काशनिमुचो. २ ज. बभूवुर्भृशदारुणाः. ग. घ. च. छ. झ. विनेदुर्गर्दभा. ३ ख. च. छ. ज. ञ. गृध्रोस्यशूलाग्रेपथि. घ. ङ. झ. ट. गृध्रोस्यशूलेवैपथि. ४ क. ग.—ट. बाहुरकंपत. ५ ङ. झ. सददर्शघनप्रख्यं. ६ ख. च. छ. ञ. तंदृष्ट्वावानरश्रेष्ठाराक्षसं. ७ क. ग. घ. पर्वतोपमाः. ८ क. ख. च. छ. ञ. विनिर्गतो. ९ घ. मादिशन्सुभीमः.

स ननाद महानादं समुद्रमभिनादयन् ॥ [1]जनयन्निव [2]निर्घातान्विधमन्निव पर्वतान् ॥ २ ॥
तमवध्यं मघवता यमेन वरुणेन वा ॥ प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ ३ ॥
[3]तांस्तु विप्रद्रुतान्दृष्ट्वा [4]वालिपुत्रोऽङ्गदोऽब्रवीत् ॥ नलं नीलं गवाक्षं च [5]कुमुदं च महाबलम् ॥ ४ ॥
[6]आत्मानमत्र विस्मृत्य वीर्याण्यभिजनानि च ॥ क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ॥ ५ ॥
साधु सौम्या निवर्तध्वं किं प्राणान्परिरक्षथ ॥ नालं युद्धाय वै रक्षो महतीयं विभीषिका ॥ ६ ॥
महतीमुत्थितामेनां राक्षसानां विभीषिकाम् ॥ विक्रमाद्विधमिष्यामो निवर्तध्वं प्लवङ्गमाः ॥ ७ ॥
कृच्छ्रेण तु समाश्वस्य संगम्य च ततस्ततः ॥ [7]वृक्षाद्रिहस्ता हरयः [8]संप्रतस्थू रणाजिरम् ॥ ८ ॥
ते निवृत्य तु [9]संक्रुद्धाः कुम्भकर्णं वनौकसः ॥ निजघ्नुः परमक्रुद्धाः समदा इव कुञ्जराः ॥ ९ ॥
प्रांशुभिर्गिरिशृङ्गैश्च शिलाभिश्च महाबलः ॥ पादपैः पुष्पिताग्रैश्च हन्यमानो न [10]कम्पते ॥ १० ॥
[11]तस्य गात्रेषु पतिता भिद्यन्ते [12]शतशः शिलाः ॥ पादपाः पुष्पिताग्राश्च भग्नाः पेतुर्महीतले ॥ ११ ॥
सोपि सैन्यानि संक्रुद्धो वानराणां महौजसाम् ॥ ममन्थ परमायत्तो वनान्यग्निरिवोत्थितः ॥ १२ ॥
लोहिताद्रास्तु बहवः शेरते वानरर्षभाः ॥ निरस्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः ॥ १३ ॥
लङ्घयन्तः प्रधावन्तो वानरा नावलोकयन् ॥ १४ ॥
केचित्समुद्रे पतिताः [13]केचिद्गगनमाश्रिताः ॥ वध्यमानास्तु ते वीरा राक्षसेन बलीयसा ॥ १५ ॥
सागरं येन ते तीर्णाः पथा तेन प्रदुद्रुवुः ॥ १६ ॥
ते स्थलानि तथा निम्नं विषण्णवदना भयात् ॥ ऋक्षा [14]वृक्षान्समारूढाः [15]केचित्पर्वतमाश्रिताः ॥१७॥
ममज्जुरर्णवे केचिद्गुहाः केचित्समाश्रिताः ॥ [16]निषेदुः प्लवगाः केचित्केचिन्नैवावतस्थिरे ॥ १८ ॥
[ केचिद्भूमौ निपतिताः केचित्सुप्ता मृता इव ] ॥ तान्समीक्ष्याङ्गदो भग्नान्वानरानिदमब्रवीत् ॥१९॥
अवतिष्ठत युध्यामो निवर्तध्वं प्लवङ्गमाः ॥ भग्नानां वो न पश्यामि [17]परिगम्य महीमिमाम् ॥
स्थानं सर्वे निवर्तध्वं किं प्राणान्परिरक्षथ ॥ २० ॥

विधमन् दहन् ॥२—४॥ अभिजनानि प्रशस्तकुलानि ॥ ५ ॥ विभीषिका भयजनकः कृत्रिमपुरुषवेषः ॥ ६—८ ॥ परमक्रुद्धा इति कुञ्जरविशेषणं ॥ ९ ॥ प्रांशुभिः उन्नतैः । महाबलः कुम्भकर्णः ॥ १०—११ ॥ ममन्थ । ददाहेत्यर्थः ॥ १२ ॥ निरस्ताः उत्क्षिप्ताः ॥ १३ ॥ लङ्घयन्त इत्यर्धं ॥ नावलोकयन् नावालोकयन् । पृष्ठदेशमित्यर्थः ॥ १४ ॥ केचित्ते वानरा इति योजना ॥ १५ ॥ सागरमित्यर्धं ॥ ते वानराः ॥ १६ ॥ स्थलानि अतिधावनयोग्यान्देशान् उन्नतप्रदेशान्वा । आश्रिता इत्यन्वयः ॥ १७ ॥ निषेदुः भूमौ पतिता इव तस्थुः ॥ १८—१९ ॥ परिगम्य प्रदक्षिणीकृत्येत्यर्थः । स्थानं न पश्यामीत्यन्वयः

स० विजयन् विजयमानः । जयतीतिजयन् । विशिष्टश्चासौजयंश्चेतिसतथेतिवा । ति० निर्घातान् अशनिघोषान् ॥ २ ॥ स० हेसौम्याः क्रौर्यप्रदर्शनकालेपितदप्रकाशकाइतीर्ष्ययासंबोधनं । प्राणान् किंपरिरक्षथ स्वामिकामिताकरणेनजीवनंधिगिति भावः । इदंरक्षः अस्माभिःसहयुद्धंकर्तुंनालं नसमर्थं । महतीविभीषिका महद्भिभीषणं । भावेण्वुल् ॥ ६ ॥ स० बहवःशिलाः " वोतोगुणवचनात् " इत्युकारान्तस्त्रीलिङ्गोबहुशब्दः ॥ ११ ॥ स० इमांमहींपरिक्रम्यापिस्थितानां स्थानं निर्भयस्थलं । नप-

[ पा० ] १ ङ. झ. ट. विजयन्निव. २ क. ग. घ. च. छ. ज. निर्घोषान्. ३ च. छ. ञ. तान्वीरःप्रद्रुतान्दृष्ट्वा. क. ग. घ. ज. तांस्तुविद्रवतोदृष्ट्वा. ४ क. ग. घ. ङ. झ. ट. राजपुत्रोऽङ्गदो. ५ क. कुमुदंगन्धमादनं. ६ ख. ङ. च. झ. ट. आत्मनस्तानिविस्मृत्य. ग. आत्मानमथविस्मृत्य. ७ ङ. झ. ट. वृक्षान्गृहीत्वाहरयः. ८ क.—ङ. झ. ट. संप्रतस्थूरणाजिरे. च. छ. युद्धार्थंसंप्रतस्थिरे. ९ ख. ग. ङ.—ट. संरब्धाः. १० च. छ. ञ. बुध्यते. ११ छ. अस्य. १२ झ. बहवः. १३ ग. केचित्सुप्ता मृताइव. १४ क. ख. वृक्षानुपारूढाः. १५ च. छ. ञ. गोपुच्छास्त्वाश्रितागुहाः. १६ क. ख. घ. निपेतुःकेचिदवटेकेचित्. १७ झ.—ट. परिक्रम्य.

निरायुधानां द्रवतामसङ्गगतिपौरुषाः ॥ दारा ह्युपहसिष्यन्ति स वै घातस्तु जीविनाम् ॥ २१ ॥
कुलेषु जाताः सर्वे स्म विस्तीर्णेषु महत्सु च ॥ क गच्छथ भयत्रस्ता हरयः प्राकृता यथा ॥ २२ ॥
अनार्याः खलु यद्भीतास्त्यक्त्वा वीर्यं प्रधावत ॥ २३ ॥
विकत्थनानि वो यानि तदा वै जनसंसदि ॥ तानि वः क नु यातानि सोदग्राणि महान्ति च॥२४॥
भीरुप्रवादाः श्रूयन्ते यस्तु जीवति धिक्कृतः ॥ मार्गः सत्पुरुषैर्जुष्टः सेव्यतां त्यज्यतां भयम् ॥२५॥
शयामहेऽथ निहताः पृथिव्यामल्पजीविताः ॥ दुष्प्रापं ब्रह्मलोकं वा प्राप्नुमो युधि सूदिताः ॥२६॥
संप्राप्नुयामः कीर्तिं वा निहत्वा शत्रुमाहवे ॥ जीवितं वीरलोकस्य मोक्ष्यामो वसु वानराः ॥२७॥
न कुम्भकर्णः काकुत्स्थं दृष्ट्वा जीवन्गमिष्यति ॥ दीप्यमानमिवासाद्य पतङ्गो ज्वलनं यथा ॥ २८ ॥
पलायनेन चोद्दिष्टाः प्राणान्रक्षामहे वयम् ॥ एकेन बहवो भग्ना यशो नाशं गमिष्यति ॥ २९ ॥

---

॥ २० ॥ असङ्गगतिपौरुषाः अप्रतिबद्धपराक्रमा इति वानरसंबोधनं । निरायुधानां द्रवतां निरायुधेषु द्रवत्सु । यद्वा निरायुधानां द्रवतां दारास्तान् अपहसिष्यन्तीति । सः अपहासः घातः मृतिः ॥ २१ ॥ सर्वे । वयमिति शेषः । विस्तीर्णेषु ज्ञातिपरम्परया विततेषु । महत्सु प्रशस्तेषु ॥ २२ ॥ अनार्या इत्यर्धं । यद्यस्मात् भीताः प्रधावत पलायथ । तस्मादनार्याः खलु ॥ २३ ॥ सोदग्राणि उदग्रतायुक्तानि । महान्ति भूयांसीत्यर्थः ॥२४॥ यस्तु धिक्कृतो जीवति तद्विषये भीरुप्रवादाः । भीरुत्वापवादाः । श्रूयन्ते । सत्पुरुषैः शूरैः । जुष्टः सेवितः ॥ २५ ॥ सत्पुरुषजुष्टो मार्गः क इत्यपेक्षायामाह—शयामह इत्यादि ॥ युद्धमरणं हि सत्पुरुषजुष्टो मार्ग इत्यर्थः । समरान्निवृत्य पलायितानामपि मरणस्यावश्यंभावित्वप्रदर्शनार्थमल्पजीविता इत्युक्तं । समरानिवर्तिनां वीराणां तु मरणजीवनयोरुभयोरपि श्रेयस्करत्वं प्रतिपादयति—दुष्प्रापमिति । निहत्वा निहत्य । जीवितमिति । वीरलोकस्य वीराणां लोको ब्रह्मलोकः तस्य वसु मूल्यभूतं जीवितं मोक्ष्यामः ॥ २६—२७ ॥ दीप्यमानं ज्वलनमिव राममासाद्य कुम्भकर्णः पतङ्गो यथेति यथेवशब्दयोर्निर्वाहः ॥ २८ ॥ उद्दिष्टाः व्यपदिष्टाः । बहवो वयमनेन कुम्भकर्णेन भग्नाः पलायनेन प्राणान् रक्षामहे

---

श्यामि । राज्ञआज्ञातादृशीत्यत्रावस्थानेकुंभकर्णतोमरणं । गतवतांसुग्रीवतइतिनानिवर्तनेनिर्वृतिर्भवतामितिभावः ॥ २० ॥ **स०** निरायुधानां रिपुमुक्तायुधानङ्कितानां । क्रमतां गृहंप्रतिद्रवतां । सुजीवतां सज्जीवनवतां ॥ २१ ॥ **ति०** "हतोवाप्राप्स्यसिस्वर्गं जित्वावाभोक्ष्यसेमहीम्" इत्याशयवानाह—**शयामहइतिश्लोकद्वयेन** । यदिदैवगत्यानिहताःशयामहे तदाकुयोधिभिर्दुष्प्रापंब्रह्मलोकंप्राप्नुयामः । वाशब्दोव्यवस्थितविकल्पे । शत्रुमाहवेनिहत्वा निहत्य । कीर्तिं वाप्राप्नुयामः । उक्तमर्थंदार्ढ्यायपुनराह—**निहताइति** । निहताश्चेद्वीरलोकस्य वीरैःसूर्यद्वाराप्राप्यस्यब्रह्मलोकस्यवसु धनं हिरण्यगर्भभूमानन्दं । भोक्ष्यामः अनुभविष्यामः । "जीवितंवीरलोकस्यभोक्ष्याम" इतिपाठोपाङ्कः । नापितत्रार्थसामञ्जस्यं । तत्रहिब्रह्मलोकस्य वसु मूल्यभूतंजीवितंमोक्ष्यामइत्यर्थंतीर्थआह । **स०** ब्रह्मलोकं वीरस्वर्गसंज्ञं । एतेन "हतोवाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीं" इतिगीताचैतदुक्तमेवार्थंवदतीतिसूचितं । शत्रुमितिजातावेकवचनं । मुख्यदशमुखविवक्षयैकवचनंवा । आहवइत्युभयान्वयि । तैर्निहताः वीरलोकस्य वीरप्राप्यस्वर्गस्य । वसु तत्रभोग्यंधनादि तेनाधिकमानन्दंभोक्ष्यामः । पूर्वमव्यवहितकपिवरान्प्रतिवचनं । इदंतदपेक्षयादूरवर्तिनउपागतान्प्रतिवचनमित्यधिकारिभेदान्नपुनर्वचनदोषः । यत्परिहारार्थंदार्ढ्यार्थमित्युक्तिरप्यपेक्षितास्यादितिमन्तव्यं ॥ २६—२७ ॥ **ति०** ननुकथमपिजयप्रत्याशाभावेनस्थित्यानप्रयोजनमतआह—नकुंभकर्णइति ॥ **स०** नकुंभकर्णइत्येकदापदंयथाकुंभकर्णभिन्नस्तत्सदृशःप्रहस्तादिः तथा पतङ्गोज्वलनमिवकुंभकर्णःकाकुत्स्थंदृष्ट्वाजीवन्नगमिष्यति ॥ २८ ॥ **स०** उद्दिष्टाः अत्रायंतिष्ठत्वत्रायंतिष्ठत्वितिनामाङ्कितायदिवयंप्राणान्रक्षामहे रक्षामः । तर्हि एकेनबहवोभग्नाइतियशः प्राक्संपादिताकीर्तिः नाशंगमिष्यति ॥ **ति०** उद्दिष्टाः महावीरेषुगणिताः । बहवोवयमेकेनभग्नाः पलायनेनयदिप्राणान्रक्षामहे तदायशोनाशंगमिष्यति । यद्वा उद्दिष्टाः एतेपलायिताइतिजनैर्निर्दिष्टाइत्यर्थः ॥ २९ ॥ इतिषट्षष्टितमःसर्गः ॥ ६६ ॥

[ **पा०** ] १ ठ. क्रमतां. २ ङ. झ. ट. ह्युपहसिष्यन्ति. क. परिहसिष्यन्ति. ३ झ. ठ. घातस्सुजीवतां. ४ ग. गच्छध्वं. ५ घ. मोघानियुध्यतांजनसंसदि. ङ. झ. ट. भवद्भिर्जनसंसदि. ६ ङ. झ. हतानिच. ७ झ. भीरोःप्रवादाः. ख. घ. भीरुप्रवादाश्श्रुत्वाचयोजीवतिधिगस्तुतं. ८ ङ. झ. ट. प्राप्नुयामोब्रह्मलोकंदुष्प्रापंचकुयोधिभिः. ९ ङ.—ट. अवाप्नुयामः. १० घ. तंहत्वा. ११ ग. ङ. च. झ. ञ. ट. निहतावीरलोकस्यभोक्ष्यामो. १२ च. छ. ञ. पतङ्गइवपावकं.

एवं ब्रुवाणं तं शूरमङ्गदं कनकाङ्गदम् ॥ द्रवमाणास्ततो वाक्यमूचुः शूरविगर्हितम् ॥ ३० ॥
कृतं नः कदनं घोरं कुम्भकर्णेन रक्षसा ॥ न स्थानकालो गच्छामो दयितं जीवितं हि नः ॥ ३१ ॥
एतावदुक्त्वा वचनं सर्वे ते भेजिरे दिशः ॥ भीमं भीमाक्षमायान्तं दृष्ट्वा वानरयूथपाः ॥ ३२ ॥
द्रवमाणास्तु ते वीरा अङ्गदेन वलीमुखाः ॥ सान्त्वैश्चैवानुमानैश्च ततः सर्वे निवर्तिताः ॥ ३३ ॥
प्रहर्षमुपनीताश्च वालिपुत्रेण धीमता ॥ आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ॥ ३४ ॥

ऋषभशरभमैन्दधूम्रनीलाः कुमुदसुषेणगवाक्षरम्भताराः ॥
द्विविदपनसवायुपुत्रमुख्यास्त्वरिततराभिमुखं रणं प्रयाताः ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

कुंभकर्णे वानरसेनामध्येकेषांचिद्भक्षणेनकेषांचित्पाणितलाभिघातेन विक्षोभपूर्वकंसंचरमाणे हनुमता शैलशृङ्गेणतत्ताडनम् ॥ १ ॥ तत्प्रहारक्षुभितेनकुंभकर्णेन हनुमतोवक्षसि शूलाभिघातेनविह्वलताप्रापणपूर्वकं नीलादिभिरायोधनम् ॥ २ ॥ तेषु कुंभकर्णपीडामसहमानेष्वङ्गदेन गिरिशिखरेणकुंभकर्णशिरस्ताडनम् ॥ ३ ॥ तेन मुष्टिघातेनाङ्गदस्यमोहप्रापणपूर्वकं सुग्रीवंप्रत्यभियानम् ॥ ४ ॥ सुग्रीवेण शैलशृङ्गताडितेनकुंभकर्णेन तद्वधायशूलेसमुत्सृष्टे हनुमता तच्छूलस्यनिजजानुसमारोपणेनभञ्जनम् ॥ ५ ॥ कुंभकर्णेन स्वपातितशैलशृङ्गप्रहारेणपतितमूर्च्छितस्यसुग्रीवस्यग्रहणेन लङ्काप्रवेशः ॥ ६ ॥ लङ्काजनैः कुंभकर्णोपरिहर्षेणपुष्पगन्धोदादिवर्षणे तत्सेकेनप्रबुद्धाप्यायितेनसुग्रीवेण खरनखरकराग्रैर्दन्तैश्च कुंभकर्णकर्णनासच्छेदनपूर्वकं वियतिसमुत्पतनेन रामपार्श्वागमनम् ॥ ७ ॥ ततःक्रोधात्परावृत्यरणाङ्गणमागतेनकुंभकर्णेन मध्येस्वेनसहयोधितवतोलक्ष्मणस्यश्लाघनेन रामंप्रत्यभियानम् ॥ ८ ॥ रामकुंभकर्णयोर्वीरवादपूर्वकंमहायुद्धम् ॥ ९ ॥ रामेण बाणचतुष्टयेनकुंभकर्णस्यबाहुपादच्छेदपूर्वकं शरान्तरेणशिरश्छेदनम् ॥ १० ॥ कुंभकर्णवधानन्तरं देवर्ष्यादिभिस्सहवानरैः सहर्षं श्रीरामपूजनम् ॥ ११ ॥

ते निवृत्ता महाकायाः श्रुत्वाऽङ्गदवचस्तदा ॥ नैष्ठिकीं बुद्धिमासाद्य[2] सर्वे संग्रामकाङ्क्षिणः ॥ १ ॥
समुदीरितवीर्याश्च[3] समारोपितविक्रमाः ॥ पर्यवस्थापिता वाक्यैरङ्गदेन वलीमुखाः[4] ॥ २ ॥
प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः ॥ चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥ ३ ॥
अथ वृक्षान्महाकायाः सानूनि सुमहान्ति च ॥ वानरास्तूर्णमुद्यम्य कुम्भकर्णमभिद्रुताः[5] ॥ ४ ॥

---

यदि ततो यशो नाशं गमिष्यतीति योजना ॥ २९ ॥ शूरं पराक्रमवन्तं । कनकाङ्गदं उत्साहातिशयेन प्रकाशितस्वर्णाङ्गदं ॥ ३० ॥ कदनं मर्दनं । दयितमिष्टं ॥ ३१—३२ ॥ अनुमानैः सालगिरिभेदनादिदृष्टान्तपुरस्कृतैर्युक्तिविशेषैः ॥ ३३ ॥ आज्ञाप्रतीक्षाः सुग्रीवाद्याज्ञाप्रतीक्षाः ॥ ३४ ॥ त्वरिततराभिमुखं त्वरिततरं अभिमुखं चेति क्रियाविशेषणं । अत्र वायुपुत्रस्तु न पलाय्य निवृत्तः । किंतु ऋषभादिभिर्मिलित्वा कुम्भकर्णेन सह युद्धार्थं निवृत्त इति ज्ञेयं ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

ते निवृत्ता इत्यादि, वानरास्त्यक्तजीविता इत्यन्तमेकं वाक्यं ॥ नैष्ठिकीं निष्ठा नाशः तत्संबन्धिनीं । मरणव्यवसायिनीमित्यर्थः । समुदीरितवीर्याः कथितात्मपराक्रमाः । समारोपितविक्रमाः समवलम्बितपराक्रमाः । मरणनिश्चयहेतुमाह—त्यक्तजीविता इति ।

---

**कतक०** अत्रसर्गविच्छेदोऽसांप्रदायिकः । एकप्रकरणत्वाद्वृत्तभेदाभावाच्च ॥ १ ॥ **स०** समारोपितविक्रमाः समारोपितः

**[ पा० ]** १ ङ. च. झ. ञ. ट. सान्त्वनैश्चानुमानैश्च. घ. सान्त्वनैरनुमानैश्च. २ क. ख. ग. ङ.—ट. मास्थाय. ३ क. ग.—ट. वीर्यास्ते. ४ ङ. झ. ट. बलीयसा. ५ ख. ग. घ. छ.—ट. मभिद्रवन्.

स कुम्भकर्णः संक्रुद्धो गदामुद्यम्य वीर्यवान् ॥ अर्दयन्सुमहाकायः समन्ताद्व्याक्षिपद्रिपून् ॥ ५ ॥
शतानि सप्त चाष्टौ च सहस्राणि च वानराः ॥ प्रकीर्णाः शेरते भूमौ कुम्भकर्णेन पोथिताः ॥ ६ ॥
षोडशाष्टौ च दश च विंशत्रिंशत्तथैव च ॥ परिक्षिप्य च बाहुभ्यां खादन्विपरिधावति ॥
भक्षयन्भृशसंक्रुद्धो गरुडः पन्नगानिव ॥ ७ ॥
कृच्छ्रेण च समाश्वस्ताः संगम्य च ततस्ततः ॥ वृक्षाद्रिहस्ता हरयस्तस्थुः संग्राममूर्धनि ॥ ८ ॥
ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः ॥ दुद्राव गिरिशृङ्गाभं विलम्ब इव तोयदः ॥ ९ ॥
तं समुत्पत्य चिक्षेप कुम्भकर्णस्य वानरः ॥ तमप्राप्तो महाकायं तस्य सैन्येऽपतत्तदा ॥ १० ॥
ममर्दाश्वान्गजांश्चापि रथांश्चैव नगोत्तमः ॥ तानि चान्यानि रक्षांसि पुनश्चान्यद्गिरेः शिरः ॥ ११ ॥
तच्छैलशृङ्गाभिहतं हताश्वं हतसारथि ॥ रक्षसां रुधिरक्लिन्नं बभूवायोधनं महत् ॥ १२ ॥
रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः ॥ शिरांसि नदतां जह्रुः सहसा भीमनिस्स्वनाः ॥ १३ ॥
वानराश्च महात्मानः समुत्पाट्य महाद्रुमान् ॥ रथानश्वान्गजानुष्ट्रान्राक्षसानभ्यसूदयन् ॥ १४ ॥
हनुमाञ्शैलशृङ्गाणि वृक्षांश्च विविधान्बहून् ॥ ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः ॥ १५ ॥
तानि पर्वतशृङ्गाणि शूलेन स बिभेद ह ॥ बभञ्ज वृक्षवर्षं च कुम्भकर्णो महाबलः ॥ १६ ॥

ततो हरीणां तदनीकमुग्रं दुद्राव शूलं निशितं प्रगृह्य ॥
तस्थौ ततोस्यापततः पुरस्तान्महीधराग्रं हनुमान्प्रगृह्य ॥ १७ ॥
स कुम्भकर्णं कुपितो जघान वेगेन शैलोत्तमभीमकायम् ॥
स चुक्षुभे तेन तदाऽभिभूतो मेदार्द्रगात्रो रुधिरावसिक्तः ॥ १८ ॥
स शूलमाविध्य तडित्प्रकाशं गिरिं यथा प्रज्वलिताग्रशृङ्गम् ॥
बाह्वन्तरे मारुतिमाजघान गुहोचलं क्रौञ्चमिवोग्रशक्त्या ॥ १९ ॥
स शूलनिर्भिन्नमहाभुजान्तरः प्रविह्वलः शोणितमुद्वमन्मुखात् ॥
ननाद भीमं हनुमान्महाहवे युगान्तमेघस्तनितस्वनोपमम् ॥ २० ॥

---

जीवनाशारहिता इत्यर्थः ॥ १—४ ॥ व्याक्षिपत् अपातयत् ॥ ५ ॥ प्रकीर्णाः शिथिलावयवाः । पोथिताः हिंसिताः । कुम्भकर्णस्यैकेन व्यापारेण शतादिसंघरूपेण पतिता इत्यर्थः ॥ ६ ॥ परिक्षिप्य परिगृह्य । खादन् भक्षयन् । पन्नगान् भक्षयन्निवेति गरुडविशेषणं ॥ ७ ॥ हरयः बलवन्त इति शेषः । संगम्य संभूय ॥ ८ ॥ विशेषेण लम्बत इति विलम्बः । पचाद्यच् । गिरिशृङ्गाभं गिरिशृङ्गवदुन्नतं ॥ ९ ॥ तं कुम्भकर्णं । समुत्पत्य समीपमागत्य । कुम्भकर्णस्य कुम्भकर्णाय ॥ १० ॥ ममर्देत्यादि त्रिपादश्लोकः ॥ तानि प्रसिद्धानि । रक्षांसि ममर्देति पूर्वेणान्वयः । पुनश्चेति पादश्लोकः । अन्यत् गिरेः शृङ्गं चिक्षेपेति योज्यं ॥ ११ ॥ तच्छैलशृङ्गाभिहतं अनन्तरप्रयुक्तशैलशृङ्गाभिहतसैन्यं । आयोधनं युद्धं ॥ १२ ॥ कालान्तकः प्रलयकालरुद्रः ॥ १३ ॥ अभ्यसूदयन् अघ्नन् ॥ १४—१६ ॥ दुद्राव द्रावयामास ॥ १७ ॥ मेदार्द्रेत्यत्र संधिरार्षः ॥ १८ ॥ आविध्य भ्रामयित्वा । गुहः स्कन्दः ॥ १९ ॥ प्रविह्वलः प्रमुह्यन् । युगान्तेति ।

---

भीत्यागतःपुनरङ्गदोज्जीवितः विक्रमोयेषांते ॥ २ ॥ स० गदां माययासृष्टां । माययागदात्वेनदर्शनाद्गदापदेनशूलंवाग्राह्यं । पूर्वोत्तरवाक्यसंवादात् ॥ ५ ॥ स० आयोधनं युद्धमण्डलं ॥ १२ ॥ स० मेघस्तनितस्वनोपमं । अत्रस्तनितशब्दोध्वनिमात्रपरः । नवि-

[ पा० ] १ ङ. च. झ. ट. धर्षयन्समहा. २ ङ. झ. ट. ताडिताः. च. छ. योधिताः. ३ घ. शैलेन्द्रमिव. ४ घ. समासाद्य. ग. ङ. झ. समुत्पाट्य. क. च. छ. ञ. ट. समुत्क्षिप्य. ५ क. ग. घ. ङ. झ. ञ. ट. कुंभकर्णाय. ६ क. ख. घ. च. महाशैलस्तस्य. ७ ङ. झ. गजोत्तमान्. ८ ङ. झ. ट. मुद्रमन्नुषा.

ततो विनेदुः सहसा प्रहृष्टा रक्षोगणास्तं व्यथितं समीक्ष्य ॥
प्लवङ्गमास्तु व्यथिता भयार्ताः प्रदुद्रुवुः संयति कुम्भकर्णात् ॥ २१ ॥
ततस्तु नीलो बलवान्पर्यवस्थापयन्बलम् ॥ [1]प्रविचिक्षेप शैलाग्रं कुम्भकर्णाय धीमते ॥ २२ ॥
तमापतन्तं संप्रेक्ष्य मुष्टिनाऽभिजघान ह ॥ मुष्टिप्रहाराभिहतं तच्छैलाग्रं व्यशीर्यत ॥ २३ ॥
सविस्फुलिङ्गं सज्वालं निपपात महीतले ॥ २४ ॥
ऋषभः शरभो नीलो गवाक्षो गन्धमादनः ॥ पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् ॥ २५ ॥
शैलैर्वृक्षैस्तलैः पादैर्मुष्टिभिश्च महाबलाः ॥ कुम्भकर्णं [3]महाकायं सर्वतोऽभिप्रदुद्रुवुः ॥ २६ ॥
स्पर्शानिव प्रहारांस्तान्वेदयानो न विव्यथे ॥ ऋषभं तु महावेगं बाहुभ्यां परिषस्वजे ॥ २७ ॥
कुम्भकर्णभुजाभ्यां तु पीडितो वानरर्षभः ॥ निपपातर्षभो भीमः [4]प्रमुखाद्वान्तशोणितः ॥ २८ ॥
मुष्टिना शरभं हत्वा जानुना नीलमाहवे ॥ आजघान गवाक्षं तु तलेनेन्द्ररिपुस्तदा ॥ २९ ॥
पादेनाभ्यहनत्क्रुद्धस्तरसा गन्धमादनम् ॥ दत्तप्रहारव्यथिता मुमुहुः शोणितोक्षिताः ॥ ३० ॥
निपेतुस्ते तु मेदिन्यां निकृत्ता इव किंशुकाः ॥ तेषु वानरमुख्येषु पतितेषु महात्मसु ॥
वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ॥ ३१ ॥
तं शैलमिव शैलाभाः सर्वे ते प्लवगर्षभाः ॥ समारुह्य समुत्पत्य [5]ददंशुश्च महाबलाः ॥ ३२ ॥
तं नखैर्दशनैश्चापि मुष्टिभिर्जानुभिस्तथा ॥ कुम्भकर्णं [6]महाकायं ते जघ्नुः प्लवगर्षभाः ॥ ३३ ॥
स वानरसहस्रैस्तैराचितः पर्वतोपमः ॥ रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥ ३४ ॥
बाहुभ्यां वानरान्सर्वान्प्रगृह्य सुमहाबलः ॥ भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ ३५ ॥
प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसन्निभे ॥ नासापुटाभ्यां निर्जग्मुः कर्णाभ्यां चैव वानराः ॥३६॥
भक्षयन्भृशसंक्रुद्धो हरीन्पर्वतसन्निभः ॥ बभञ्ज वानरान्सर्वान्संक्रुद्धो राक्षसोत्तमः ॥ ३७ ॥
मांसशोणितसंक्लेदां भूमिं कुर्वन्स राक्षसः ॥ चचार हरिसैन्येषु कालाग्निरिव मूर्च्छितः ॥ ३८ ॥
वज्रहस्तो यथा शक्रः पाशहस्त इवान्तकः ॥ शूलहस्तो बभौ सङ्ख्ये कुम्भकर्णो महाबलः ॥ ३९ ॥
यथा शुष्कान्यरण्यानि ग्रीष्मे दहति पावकः ॥ तथा वानरसैन्यानि कुम्भकर्णो विनिर्दहत् ॥ ४० ॥

युगान्तमेघस्य स्तनितरूपो यः स्वनः तत्तुल्यमिति क्रियाविशेषणं ॥ २० ॥ कुम्भकर्णात् भयार्ता इत्यन्वयः । संयति युद्धे ॥ २१ ॥ पर्यवस्थापयन्बलमिति । पलायमानान् सन्निवर्तयन्नित्यर्थः ॥ २२ ॥ व्यशीर्यत शीर्णमभूत् ॥ २३—२५ ॥ पादैः प्रहारोद्यतैः । सर्वत्रोपलक्षणे तृतीया ॥ २६ ॥ स्पर्शानिव सुखस्पर्शानिव । सुखमर्दनमिव जानन्नित्यर्थः ॥ २७ ॥ प्रेति छेदः । मुखात् वान्तशोणितः प्रणिपपातेत्यन्वयः । "व्यवहिताश्च" इत्युपसर्गस्य व्यवहितप्रयोगः । वान्तशोणितः उद्गीर्णरक्तः ॥ २८—३१ ॥ समारुह्य समुत्पत्य । समुत्पत्य समारुह्येति क्रमः ॥ ३२—३३ ॥ आचितः व्याप्तः । आत्मरुहैः वृक्षैः ॥ ३४—३६ ॥ भक्षयन् बभञ्ज । भक्षणार्थं बभञ्जेत्यर्थः ॥ ३७ ॥ मांसशोणितसंक्लेदां मांसशोणितसंसिक्तामित्यर्थः ॥ ३८—३९ ॥ विनिर्दहत् विनिरदहत् ॥ ४० ॥

यतेऽउपमायस्यतन्नोपमं । मेघस्तनितंस्वनेनोपमंयस्मिन्कर्मणितद्यथाभवतितथा । मेघध्वन्यपेक्षयाऽधिकंयथाभवतितथाननाद ॥२०॥ **स०** स्पर्शानिव कुसुममालादिस्पर्शानिव । वेदयानः स्वार्थेणिच् । जानन् । तदेवाह—**नविव्यथइति** ॥ २७ ॥ **स०** प्रमु-

**[ पा० ]** १ क. ग. घ. च. छ. ञ. नीलश्चिक्षेप. २ ख. च. छ. ञ. मुष्टिभिर्जानुभिस्तदा. ३ ङ. झ. ट. महाकायं निजघ्नुस्सर्वतोयुधि. ज. महाकायंसर्वतोऽभिनिजघ्निरे. ४ क. ख. ग. ङ.—ट. प्रमुखागतशोणितः. ५ ङ. झ. ट. ददंशुः प्लवगर्षभाः. ६ च. छ. झ. ञ. ट. महाबाहुं.

ततस्ते वध्यमानास्तु हतयूथा[1] विनायकाः ॥ वानरा भयसंविग्ना विनेदुर्[2]विस्वरं भृशम् ॥ ४१ ॥
अनेकशो वध्यमानाः कुम्भकर्णेन वानराः ॥ राघवं शरणं जग्मुर्व्यथिताः खिन्नचेतसः ॥ ४२ ॥
प्रभग्नान्वानरान्दृष्ट्वा वज्रहस्त[3]सुतात्मजः ॥ अभ्यधावत वेगेन कुम्भकर्णं महाहवे ॥ ४३ ॥
शैलशृङ्गं महद्गृह्य विनदंश्च मुहुर्मुहुः ॥ त्रासयन्राक्षसान्सर्वान्कुम्भकर्णपदानुगान् ॥ ४४ ॥
चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि ॥ ४५ ॥
स तेनाभि[4]हतोत्यर्थं गिरिशृङ्गेण मूर्धनि ॥ कुम्भकर्णः प्रजज्वाल कोपेन महता तदा ॥ ४६ ॥
सोभ्यधावत वेगेन वालिपुत्रम[5]मर्षणः ॥ कुम्भकर्णो महानादस्त्रासयन्सर्ववानरान् ॥
शूलं ससर्ज वै रोषादङ्गदे स महाबलः ॥ ४७ ॥
तमापतन्तं बुद्ध्वा तु युद्धमार्गविशारदः ॥ लाघवान्मोचयामास बलवान्वानरर्षभः ॥ ४८ ॥
उत्पत्य चैनं सहसा तलेनोरस्यताडयत् ॥ स तेनाभिहतः कोपात्प्रमुमोहाचलोपमः ॥ ४९ ॥
स लब्ध[6]संज्ञो बलवान्मुष्टिमावर्त्य राक्षसः ॥ अपहासेन चिक्षेप विसंज्ञः स पपात ह ॥ ५० ॥
तस्मिन्प्लवगशार्दूले विसंज्ञे पतिते भुवि ॥ तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ॥ ५१ ॥
तमापतन्तं संप्रेक्ष्य कुम्भकर्णं महाबलम् ॥ उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥ ५२ ॥
पर्वताग्रं समुत्क्षिप्य समाविध्य महाकपिः ॥ अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥ ५३ ॥
तमापतन्तं संप्रेक्ष्य कुम्भकर्णः प्लवङ्गमम् ॥ तस्थौ वि[7]कृतसर्वाङ्गो वानरेन्द्रसमुन्मुखः ॥ ५४ ॥
कपिशोणितदिग्धाङ्गं भक्षयन्तं प्लवङ्गमान् ॥ कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥ ५५ ॥
पातिताश्च त्वया वीराः कृतं कर्म सुदुष्करम् ॥ भक्षितानि च सैन्यानि प्राप्तं ते परमं यशः ॥ ५६ ॥
त्यज[8] तद्वानरानीकं प्राकृतैः किं करिष्यसि ॥ सहस्वैकनिपातं मे पर्वतस्यास्य राक्षस ॥ ५७ ॥
तद्वाक्यं हरिराजस्य सत्त्वधैर्यसमन्वितम् ॥ श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥ ५८ ॥
प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजःसुतः ॥ श्रुतपौरुषसंपन्नः कस्माद्गर्जसि वानर ॥ ५९ ॥

---

विनायकाः विगतनायकाः ॥ ४१–५३ ॥ समुन्मुखः अभिमुखः ॥ ५४—५८ ॥ प्रजापतेरिति । इदमत्रैतिह्यमनुसंधेयं । पुरा किल ब्रह्मणो जृम्भमाणस्य वदनादृक्षरजा नाम वानरो जातः । स कदाचित्पर्यटन् ब्रह्मलोकेप्सरोरूपकारिणि कस्मिंश्चित्सरसि निमज्याप्सरोरूपमभजत् । तां दृष्ट्वा काममोहिताविन्द्रादित्यौ हस्तेन युगपद्गृह्णीतां । तत्रान्तरे तयोः क्षुभितं रेतोऽपतत् । तत्र द्वौकुमारावभवतां । वाले पतनाद्वाली ग्रीवायां पतनात्सुग्रीवः । तं दृष्ट्वा प्रहस्य ब्रह्मा अप्सरोरूपधारिणमृक्षरजसं यथापूर्वरूपप्राप्तये कुमारौ गृहीत्वा अन्यस्मिन्वानररूपकारिणि सरसि निमज्जेत्यभ्यधात् । सोपि तथा कृत्वा कुमाराभ्यां सह वानररूपमभजदृक्षरजाः । तत्पुत्रौ वालिसुग्रीवाविति । तदनेन प्रकारेण सुग्रीवः प्रजापतेः पौत्रः ऋक्षरजसः पुत्रश्च । काश्यपात्प्रजापतेर्विवस्वान्

---

स्वागतशोणितः कुंभकर्णप्रमुखतएवागतंशोणितंयस्यसः । एतेनाप्रतिष्ठाप्रतिमतासूच्यते ॥ २८ ॥ **स०** वानराभयसंविग्नाइति पदमेकं । वानराणांसंघोवानरं । तस्ययदभयं भयाभावः क्षेमइतियावत् । तदर्थंसंविग्नाः । कोवाकथंवारक्षतीतिचिन्ताताः । नराभयेति वेतिपदं । हेनराभय मनुष्यमध्येऽभय रामेति हतयूथावाविनेदुरितिवा ॥ ४१ ॥ **स०** वज्रहस्तात्मजात्मजः इन्द्रपुत्रवालिपुत्रोङ्गदः ॥ ४३ ॥ **ति०** तदा पतन्तं । पुंस्त्वमार्षं ॥ **स०** तमापतन्तंशूलं दुष्टवधार्थप्रयुक्तकीलवाञ्छूलस्तं ॥ " शूलोदुष्टवधार्थायकीलवान् " इतिविश्वः । पुंस्त्वमतःसंभवि । लाघवादापतन्तमात्मानंतत्तस्माच्छूलात्मोचयामासमुक्तमकरो-

**[ पा० ]** १ ङ. झ. ञ. ट. हतयूथाःप्लवङ्गमाः. २ ङ. झ. ट. विनेदुर्विकृतैःस्वरैः. ३ झ.—ठ. वज्रहस्तात्मजात्मजः. ४ क. च. झ. हतोमूर्ध्निशैलेनेन्द्ररिपुस्तदा. ५ क. ख. घ.—ट. ममर्षणं. ६ क. घ.—ट. लब्धसंज्ञोतिबलोमुष्टिंसंगृह्य. ७ च. छ. झ. ट. विवृतसर्वाङ्गः. ८ घ. त्यज्यतांवानरानीकं.

स कुम्भकर्णस्य वचो निशम्य व्याविध्य शैलं सहसा मुमोच ॥
तेनाजघानोरसि कुम्भकर्णं शैलेन वज्राशनिसन्निभेन ॥ ६० ॥
तच्छैलशृङ्गं सहसा विशीर्णं भुजान्तरे तस्य तदा विशाले ॥
ततो विषेदुः सहसा प्लवङ्गा रक्षोगणाश्चापि मुदा विनेदुः ॥ ६१ ॥
स शैलशृङ्गाभिहतश्चुकोप ननाद कोपाच्च विवृत्य वक्त्रम् ॥
व्याविध्य शूलं च तडित्प्रकाशं चिक्षेप हर्यृक्षपतेर्वधाय ॥ ६२ ॥
तत्कुम्भकर्णस्य [1]भुजप्रविद्धं शूलं शितं काञ्चनधामजुष्टम् ॥
क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां बभञ्ज वेगेन सुतोऽनिलस्य ॥ ६३ ॥
कृतं भारसहस्रस्य शूलं कालायसं महत् ॥ बभञ्ज [2]जानुन्यारोप्य प्रहृष्टः प्लवगर्षभः ॥ ६४ ॥
शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी ॥ हृष्टा ननाद बहुशः [3]सर्वतश्चापि दुद्रुवे ॥
[ [4]बभूवाथ परित्रस्तो राक्षसो विमुखोऽभवत् ॥ ६५ ॥]
सिंहनादं च ते चक्रुः [5]प्रहृष्टा वनगोचराः ॥ मारुतिं [6]पूजायांचक्रुर्दृष्ट्वा शूलं तथागतम् ॥ ६६ ॥
स तत्तदा भग्नमवेक्ष्य शूलं चुकोप रक्षोधिपतिर्महात्मा ॥
उत्पाट्य लङ्कामलयात्स शृङ्गं जघान सुग्रीवमुपेत्य तेन ॥ ६७ ॥
स शैलशृङ्गाभिहतो विसंज्ञः पपात भूमौ युधि वानरेन्द्रः ॥
तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः [7]प्रहृष्टास्त्वथ यातुधानाः ॥ ६८ ॥
[8]तमभ्युपेत्याद्भुतघोरवीर्यं स कुम्भकर्णो युधि वानरेन्द्रम् ॥
जहार सुग्रीवमभिप्रगृह्य यथाऽनिलो [9]मेघमतिप्रचण्डः ॥ ६९ ॥
स तं महामेघनिकाशरूपमुत्पाट्य गच्छन्युधि कुम्भकर्णः ॥
रराज मेरुप्रतिमानरूपो मेरुर्यथाभ्युच्छ्रितघोरशृङ्गः ॥ ७० ॥

---

विवस्वतः सुग्रीव इत्यन्ये ॥ ५९ ॥ व्याविध्य तोलयित्वा ॥ ६०—६३ ॥ भारसहस्रस्य भारसहस्रेण कृतं जानुन्यारोप्य बभञ्जेत्यन्वयः ॥ ६४ ॥ सर्वतः सर्वस्मात्प्रदेशात् । दुद्रुवे आजगाम ॥ ६५—६६ ॥ सुग्रीवमुपेत्य तेन शृङ्गेण जघान । त्रिकूटशिखरस्थलङ्काद्वारे स्थित्वा युध्यतः कुम्भकर्णस्य प्रदेशान्तरस्थलङ्कामलयशृङ्गोत्पाटनं कथमुपपद्यत इति चेत् तदनुगुणप्रमाणशरीरत्वान्न दोषः । लङ्कामलयशब्देन त्रिकूटं वोपचर्यते ॥ ६७–६९ ॥ अभ्युच्छ्रितं उन्नतं । स्वाकारसादृश्याय प्रथमं मेरूपादानं । द्वितीयं तु

---

दितिवा । बलवान्यःशूलस्तमापतन्तं । बलवानङ्गदः ॥ ४८ ॥ स० जानु मा आरोप्य तत् आहृष्टः इतिच्छेदः । तत् शूलं । जानु आरोप्य जानुनिनिधाय । तत् सुग्रीवोपरिपतनं मा इतिबभञ्ज । प्लवङ्गमोहनुमान् आहृष्टः अतिहृष्टः ॥ बहुपुराणादिष्वियं कथा सुग्रीवग्रहणानन्तरं कक्ष्यानिक्षिप्तकपिपतिर्यदालङ्कानिलयासस्त्रीपुंसजनैस्तुहिनसलिलमाल्यैःसेचितः तस्मान्मोचितःसुग्रीवकरोत्कृत्तगृहीतघोणाकर्णउत्पपात तदामक्षिकोपमः पाक्षिकनीतिंलौकिकीमनुसृत्यानुसृत्यचतंगतोहनुमांस्तदातन्मुक्तंसुग्रीवाशक्यपरिहारंशूलंबभञ्जेतिश्रूयते । अत्रव्यत्यस्यकथनंलेखकप्रमादतः । श्लोकाश्चैतेऽनन्तरंपठनीयाइतिवा " कुर्युःक्वचिच्चव्यत्यासं " इतिकविकृतएवायंहनुमत्पराक्रमक्रमवर्णनपरायत्तचित्ततयाव्यत्यासइतिवाज्ञेयम् । ननुभारतेवनपर्वणि " हृत्वाकर्णौष्ठनासिकं " इत्युक्तेरत्रकर्णनासिकोक्तिःकथमितिचेन्न । नासिकोत्कर्तनकालएवौष्ठद्वयस्यतयासहागमनंज्ञातुंसुशकमित्यत्रानुक्तिः स्पष्टप्रतिपत्त्य-

[ पा० ] १ झ. भुजप्रणुन्नं. २ क. ङ. च. छ. झ. ञ. ट. जानुमारोप्यतदाहृष्टःप्लवङ्गमः. ३ ज. सर्वतश्चमहास्वनं. ४ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ५ ख. ग. प्रहृष्टवदनास्तदा. ६ ख. च. छ. ञ. पूजयामासुः. ७ ख.—ट. प्रहृष्टायुधि. ८ घ.—छ. झ. ञ. ट. समभ्युपेत्य. ९ ङ. च. छ. झ. ञ. ट. मेघमिव.

[1]ततस्तमुत्पाट्य जगाम वीरः संस्तूयमानो युधि [2]राक्षसेन्द्रैः ॥
शृण्वन्निनादं त्रिदशालयानां प्लवङ्गराजग्रहविस्मितानाम् ॥ ७१ ॥
ततस्तमादाय तदा स मेने हरीन्द्रमिन्द्रोपममिन्द्रवीर्यः ॥
अस्मिन्हृते सर्वमिदं हृतं स्यात्सराघवं सैन्यमितीन्द्रशत्रुः ॥ ७२ ॥
विद्रुतां वाहिनीं दृष्ट्वा वानराणां ततस्ततः ॥ कुम्भकर्णेन सुग्रीवं गृहीतं चापि वानरम् ॥ ७३ ॥
हनुमांश्चिन्तयामास मतिमान्मारुतात्मजः ॥ एवं गृहीते सुग्रीवे किं कर्तव्यं मया भवेत् ॥ ७४ ॥
यद्वै न्याय्यं मया कर्तुं [3]तत्करिष्यामि सर्वथा ॥ भूत्वा पर्वतसंकाशो नाशयिष्यामि राक्षसम् ॥ ७५ ॥
मया हते संयति कुम्भकर्णे महाबले मुष्टिविकीर्णदेहे ॥
विमोचिते वानरपार्थिवे च भवन्तु हृष्टाः प्लवगाः समस्ताः ॥ ७६ ॥
अथवा स्वयमप्येष मोक्षं प्राप्स्यति [4]पार्थिवः ॥ गृहीतोऽयं [5]यदि भवेत्रिदशैः सासुरोरगैः ॥ ७७ ॥
मन्ये न तावदात्मानं बुध्यते वानराधिपः ॥ शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥ ७८ ॥
अयं मुहूर्तात्सुग्रीवो लब्धसंज्ञो महाहवे ॥ आत्मनो वानराणां च यत्पथ्यं तत्करिष्यति ॥ ७९ ॥
मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः ॥ अप्रीतिश्च भवेत्कष्टा कीर्तिनाशश्च शाश्वतः ॥ ८० ॥
तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं [6]पार्थिवस्य तु ॥ भिन्नं च वानरानीकं तावदाश्वासयाम्यहम् ॥ ८१ ॥
इत्येवं चिन्तयित्वा तु हनुमान्मारुतात्मजः ॥ भूयः संस्तम्भयामास वानराणां महाचमूम् ॥ ८२ ॥
स कुम्भकर्णोथ विवेश लङ्कां स्फुरन्तमादाय महाकपिं तम् ॥
विमानचर्यागृहगोपुरस्थैः [7]पुष्पाग्र्यवर्षैरवकीर्यमाणः ॥ ८३ ॥
लाजगन्धोदवर्षैस्तु सिच्यमानः शनैः शनैः ॥ राजमार्गस्य शीतत्वात्संज्ञामाप महाबलः ॥ ८४ ॥
ततः स संज्ञामुपलभ्य कृच्छ्राद्बलीयसस्तस्य भुजान्तरस्थः ॥
अवेक्षमाणः पुरराजमार्गं विचिन्तयामास मुहुर्महात्मा ॥ ८५ ॥
एवं गृहीतेन कथं नु नाम शक्यं मया संप्रतिकर्तुमद्य ॥
तथा करिष्यामि यथा हरीणां भविष्यतीष्टं च हितं च कार्यम् ॥ ८६ ॥

---

सुग्रीवधारणकालिकसादृश्याय ॥ ७० ॥ उत्पाट्य उद्धृत्य । त्रिदशालयानां स्वर्गिणां ॥ ७१ ॥ बलवान्कुंभकर्णो युद्धे पतितं सुग्रीवं किमर्थं हृतवानित्यत्राह—ततस्तमादायेति ॥ ७२—७६ ॥ सासुरोरगैः सुरैः गृहीतोप्ययं मोक्षं प्राप्तुं शक्नोति । किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७७ ॥ तर्हि मोचयित्वास्मानं किमिति न निवर्तत इत्यत्राह—मन्य इत्यादिना ॥ तावदित्यवधारणे । आत्मानमेव न बुध्यतइत्यर्थः । पथ्यं हितं ॥ ७८—७९ ॥ कृच्छ्रगतः स्वामी भृत्येनावश्यं मोचनीय एवेत्याशङ्क्याह—मया त्विति ॥ ८० ॥ तावत् सुग्रीवागमनपर्यन्तं ॥ ८१ ॥ संस्तम्भयामास गमनान्निवर्तयामास ॥ ८२ ॥ पुष्पाग्र्यवर्षैः श्लाघ्यपुष्पवृष्टिभिः ॥ ८३—८५ ॥ संप्रतिकर्तुं सम्यक् प्रतिकर्तुं ।

---

र्थंतत्रोक्तिरितिसंभवात् ॥ ६४ ॥ **ति०** लाजगन्धोदवर्षैःसिच्यमानः दैवगत्यामोहनिवृत्तये । सुग्रीवइतिशेषः ॥ **स०** लाजगन्धोदवर्षैः लाजमत्रोशीरं । गन्धसाहचर्यात् । सिच्यमानइतिस्वारस्याच्च । “ उशीरेलाजमुद्दिष्टं ” इतिविश्वः ॥ ८४ ॥ **स०** पुररा-

**[ पा० ]** १ ङ. झ. ञ. ट. ततस्तमादाय. २ ग. घ. ङ. झ. ट. राक्षसेन्द्रः. ३ ङ. छ. झ. ट. करिष्याम्यसंशयं. ४ ङ. झ. ट. वानरः. ५ ञ. युधिभवेत्. ६ ङ. झ. ट. मोक्षितस्यतु. क. ख. घ. च. छ. ञ. पार्थिवस्यनः. ७ ख. सलाजपुष्पैः. ८ ङ. छ. झ. ट. रभिपूज्यमानः.

ततः कराग्रैः सहसा समेत्य राजा हरीणाममरेन्द्रशत्रुम् ॥
खरैश्च कर्णौ दशनैश्च नासां ददंश पार्श्वेषु च कुम्भकर्णम् ॥ ८७ ॥
स कुम्भकर्णो हृतकर्णनासो विदारितस्तेन विमर्दितश्च ॥
रोषाभिभूतः क्षतजार्द्रगात्रः सुग्रीवमाविध्य पिपेष भूमौ ॥ ८८ ॥
स भूतले भीमबलाभिपिष्टः सुरारिभिस्तैरभिहन्यमानः ॥
जगाम खं वेगवदभ्युपेत्य पुनश्च रामेण समाजगाम ॥ ८९ ॥
कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः ॥ रराज शोणितैः सिक्तो गिरिः प्रस्रवणैरिव ॥ ९० ॥
शोणितार्द्रो महाकायो राक्षसो भीमविक्रमः ॥ युद्धायाभिमुखो भूयो मनश्चक्रे महाबलः ॥ ९१ ॥
अमर्षाच्छोणितोद्गारी शुशुभे रावणानुजः ॥ नीलाञ्जनचयप्रख्यः ससंध्य इव तोयदः ॥ ९२ ॥
गते तु तस्मिन्सुरराजशत्रुः क्रोधात्प्रदुद्राव रणाय भूयः ॥
अनायुधोस्मीति विचिन्त्य रौद्रो घोरं तदा मुद्गरमाससाद ॥ ९३ ॥
ततः स पुर्याः सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् ॥
[ तेनैवं रूपेण बभञ्ज रुष्टः प्रहारमुष्ट्या च पदेन सद्यः ॥ ]
बभक्ष रक्षो युधि कुम्भकर्णः प्रजा युगान्ताग्निरिव प्रदीप्तः ॥ ९४ ॥
बुभुक्षितः शोणितमांसगृध्नुः प्रविश्य तद्वानरसैन्यमुग्रम् ॥
चखाद रक्षांसि हरीन्पिशाचानृक्षांश्च मोहाद्युधि कुम्भकर्णः ॥ ९५ ॥
यथैव मृत्युर्हरते युगान्ते स भक्षयामास हरींश्च मुख्यान् ॥ ९६ ॥
एकं द्वे त्रीन्बहून्क्रुद्धो वानरान्सह राक्षसैः ॥ समादायैकहस्तेन प्रचिक्षेप त्वरन्मुखे ॥ ९७ ॥
संप्रस्रवंस्तदा मेदः शोणितं च महाबलः ॥ वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान् ॥ ९८ ॥
ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम् ॥ ९९ ॥
कुम्भकर्णो भृशं क्रुद्धः कपीन्खादन्प्रधावति ॥ १०० ॥
शतानि सप्त चाष्टौ च विंशत्रिंशत्तथैव च ॥ संपरिष्वज्य बाहुभ्यां खादन्विपरिधावति ॥ १०१ ॥

अन्यथा अद्येति पुनरुक्तिः स्यात् ॥८६॥ खरैः तीक्ष्णैः । कराग्रैः कर्णौ समेत्य संहृत्य दशनैः नासांचददंश । पार्श्वेषु कपोलयोरंसयोरुदरान्तरयोश्च पादाभ्यां विददारेति शेषः ॥ ८७ ॥ विमर्दितः संपीडितः ॥ ८८—८९ ॥ प्रस्रवणैः निर्दरैः ॥ ९० ॥ अभिमुखः सन् युद्धाय मनश्चक्र इति संबन्धः ॥ ९१—॥ ९५ ॥ शोणितमांसगृध्नुः शोणितमांसलोलुपः ॥ ९६–९७ ॥ संप्रस्रवन् तालुभ्यामुद्वमन् । शोणितं मेदश्च भक्षितवानरसंबन्धि ॥ ९८ ॥ त इत्यर्धं ॥ गतिं शरणं ॥ ९९ ॥ कुम्भकर्ण इत्यर्धं ॥ प्रधावति

ज़मार्गमवेक्षमाणः अनेनानेनाहमानीतइतिमतिर्जातेतिसूच्यते ॥ ८५ ॥ **ति०** नीलाञ्जनेत्यनेन निध्यञ्जनादिव्यावृत्तिः ॥ ९२ ॥ **ति०** रक्षआदेरपिखादनेहेतुः—**मोहादिति** । मद्यादिनेवरक्तपानजमदवैवश्यादितिभावः ॥ ९५ ॥ **स०** संप्रस्रवदित्युभयान्वयि । ताडितवानरदेहात् । भक्षयामास अपिबत् । अब्भक्षोवायुभक्षइतियथा । वानरांश्चचखादेत्यर्थः । 'संप्रस्रवत् । अडभावआर्षः । भक्षितवानरसंबन्धिशोणितादि' इतितीर्थनागोजिभट्टौ ॥९८॥ **स०** गतिं गम्यस्थानं । शरणमितियावत् ॥ ९९ ॥

[ पा० ] १ ङ. झ. ट. शत्रोः. २ घ. चिच्छेदकर्णौ. ३ ङ. छ. झ. ट. ददंशपादैर्विददारपार्श्वौ. ४ ङ. च. छ. झ. ट. रदैर्नखैश्च. ५ ख. ङ.—ट. कन्दुकवज्जवेन. ६ क. ख. ग, ङ—ट. महात्मा. ७ इदमर्धं क. ख. घ. च. छ. ञ. पाठेषुदृश्यते. ८ झ.—ट. संप्रस्रवत्तदा.

[ मेदोवसाशोणितदिग्धगात्रः कर्णावसक्तग्रथितान्त्रमालः ॥
ववर्ष शूलानि सुतीक्ष्णदंष्ट्रः कालो युगान्तस्थ इव प्रवृद्धः ] ॥ १०२ ॥
तस्मिन्काले सुमित्रायाः पुत्रः परबलार्दनः ॥ चकार लक्ष्मणः क्रुद्धो युद्धं परपुरंजयः ॥ १०३ ॥
स कुम्भकर्णस्य शरान्शरीरे सप्त वीर्यवान् ॥ निचखानाददे बाणान्विससर्ज च लक्ष्मणः ॥ १०४ ॥
[ पीड्यमानस्तदस्त्रं तु विशेषं तत्स राक्षसः ॥ ततश्चुकोप बलवान्सुमित्रानन्दवर्धनः ॥ १०५ ॥
अथास्य कवचं शुभ्रं जांबूनदमयं शुभम् ॥ प्रच्छादयामास शरैः संध्याभ्रमिव मारुतः ॥ १०६ ॥
नीलाञ्जनचयप्रख्यः शरैः काञ्चनभूषणैः ॥ आपीड्यमानः शुशुभे मेघैस्सूर्य इवांशुमान् ॥ १०७ ॥
ततः स राक्षसो भीमः सुमित्रानन्दवर्धनम् ॥ सावज्ञमेव प्रोवाच वाक्यं मेघौघनिस्स्वनः ॥ १०८ ॥
अन्तकस्याप्यकष्टेन युधि जेतारमाहवे ॥ युध्यता मामभीतेन ख्यापिता वीरता त्वया ॥ १०९ ॥
प्रगृहीतायुधस्येह मृत्योरिव महामृधे ॥ तिष्ठन्नप्यग्रतः पूज्यः किमु युद्धप्रदायकः ॥ ११० ॥
ऐरावतं समारूढो वृतः सर्वामरैः प्रभुः ॥ नैव शक्रोपि समरे स्थितपूर्वः कदाचन ॥ १११ ॥
अद्य त्वयाऽहं सौमित्रे बालेनापि पराक्रमैः ॥ तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम् ॥ ११२ ॥
यत्तु वीर्यबलोत्साहैस्तोषितोऽहं रणे त्वया ॥ राममेवैकमिच्छामि हन्तुं यस्मिन्हते हतम् ॥ ११३ ॥
रामे मयाऽत्र निहते येऽन्ये स्थास्यन्ति संयुगे ॥ तानहं योधयिष्यामि स्वबलेन प्रमाथिना ॥ ११४ ॥
इत्युक्तवाक्यं तद्रक्षः प्रोवाच स्तुतिसंहितम् ॥ मृधे घोरतरं वाक्यं सौमित्रिः प्रहसन्निव ॥ ११५ ॥
यस्त्वं शक्रादिभिर्देवैरसह्यः प्राप्य पौरुषम् ॥ तत्सत्यं नान्यथा वीर दृष्टस्तेऽद्य पराक्रमः ॥ ११६ ॥
एष दाशरथी रामस्तिष्ठत्यद्रिरिवाचलः ॥ इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ] ॥ ११७ ॥
अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः ॥ राममेवाभिदुद्राव दारयन्निव मेदिनीम् ॥ ११८ ॥
अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् ॥ कुम्भकर्णस्य हृदये ससर्ज निशिताञ्शरान् ॥ ११९ ॥
तस्य रामेण विद्धस्य सहसाऽभिप्रधावतः ॥ अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ॥ १२० ॥
रामास्त्रविद्धो घोरं वै नदन्राक्षसपुङ्गवः ॥ अभ्यधावत संक्रुद्धो हरीन्विद्रावयन्रणे ॥ १२१ ॥
तस्योरसि निमग्नाश्च शरा बर्हिणवाससः ॥ [ रेजुर्नीलाद्रिकटके नृत्यन्त इव बर्हिणः ] ॥ १२२ ॥
हस्ताच्चापि परिभ्रष्टा पपातोर्व्यां महागदा ॥ आयुधानि च सर्वाणि विप्राकीर्यन्त भूतले ॥ १२३ ॥

प्राधावत् । उत्तरश्लोकेप्येवमेव ॥ १००—११९ ॥ अर्चिषः ज्वालाः ॥ १२०—१२१ ॥ बर्हिणवाससः बर्हिणं बर्हिपत्रं वासो वासःस्थानं येषां ते तथोक्ताः । ॥ १२२ ॥ आयुधानि खड्गादीनि ॥ १२३ ॥

**ति०** कर्णावसक्तेत्यनेनाधोभागएवकर्णलुञ्छनंसुग्रीवेणकृतमितिगम्यते । कर्णावसक्ताः ग्रथिताः परस्परसंलग्नाः अन्त्रमालाः यस्यसः ॥ **स०** अवसक्ताः वानरशरीरान्मोचिताः ग्रथिताः स्वयमेवग्रन्थीभूयस्थिताः अन्त्रमालाः गलेयस्यसः । कर्णः श्रवणालुः इतरदूरोदीरितश्रवणपटुः । "कर्णःश्रवणालौ"इतिविश्वः । शूलानि मायासृष्टानि । निरायुधत्वमुद्गरायुधत्वमात्रोक्तेः । चलचारुकुण्डलः कुण्डलालङ्कृतंशिरइतिवक्ष्यमाणग्रन्थविरोधपरिहारं तद्व्याख्यावसरेकरिष्यामः ॥ १०२ ॥ **ति०** पीड्यमानःसराक्षसः तदस्त्रं विशेषं अस्त्रान्तरेणविगतशेषंचकारेत्यर्थः ॥ १०५ ॥ **स०** यद्यपि 'नीलाञ्जनचयप्रख्यः शरैः काञ्चनभूषणैः' इतिदार्ष्टान्तिकानुसारेण दृष्टान्तेपि मेघःसूर्यैरिवेतिवक्तव्यं । तथापि कवयितुर्मेलनमात्रेतात्पर्यं नसर्वसाम्यइतिज्ञेयं ॥ १०७ ॥ **ति०** अभ्यधावत । तंराममंविसृज्येतिशेषः ॥ १२१ ॥ **स०** कटके अद्रिनितंबे । बर्हिणोमयूराः नृत्यन्तीवरेजुः ॥ १२२ ॥ **स०** गदा मायामयीवा आयुधसामान्यवाचित्वाद्गदापदस्य तेनमुद्गरग्रहणंवेति । "आयुधेगदा"इतिविश्वः । आयुधान्यपिमायामयानि ॥ १२३ ॥

[ **पा०** ] १ अयंश्लोकः क. ख. ङ.—ट. पाठेषुदृश्यते. २ ख. ग. ङ. च. छ. झ. ट. चान्यान्विससर्ज. ३ पीड्यमानस्तदस्त्रन्नित्यादयःलक्ष्मणंसनिशाचरइत्यन्ताःश्लोकाः क. घ.—ट. पाठेषुअधिकादृश्यन्ते. ४ क. ग.—ट. अङ्गारमिश्राः. ५ इदमर्धं क. घ. च. छ. पाठेषुदृश्यते. ६ ख. ङ. झ. ञ. ट. गदाचोर्व्यांपपातह.

स निरायुधमात्मानं यदा मेने महाबलः ॥ मुष्टिभ्यां चरणाभ्यां च चकार कदनं महत् ॥ १२४ ॥
स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ॥ रुधिरं प्रतिसुस्राव गिरिः प्रस्रवणं यथा ॥ १२५ ॥
स तीव्रेण च कोपेन रुधिरेण च मूर्च्छितः ॥ वानरान्राक्षसानृक्षान्खादन्विपरिधावति ॥ १२६ ॥
अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः ॥ चिक्षेप राममुद्दिश्य बलवानन्तकोपमः ॥ १२७ ॥
अप्राप्तमन्तरा रामः सप्तभिस्तैरजिह्मगैः ॥ शरैः काञ्चनचित्राङ्गैश्चिच्छेद पुरुषर्षभः ॥ १२८ ॥
तन्मेरुशिखराकारं द्योतमानमिव श्रिया ॥ द्वे शते वानरेन्द्राणां पतमानमपातयत् ॥ १२९ ॥
तस्मिन्काले स धर्मात्मा लक्ष्मणो वाक्यमब्रवीत् ॥ कुम्भकर्णवधे युक्तो योगान्परिमृशन्बहून् ॥१३०॥
नैवायं वानरान्राजन्नापि जानाति राक्षसान् ॥ मत्तः शोणितगन्धेन स्वान्परांश्चैव खादति ॥ १३१ ॥
साध्वेनमधिरोहन्तु सर्वे ते वानरर्षभाः ॥ यूथपाश्च यथा मुख्यास्तिष्ठन्त्वस्य समन्ततः ॥ १३२ ॥
अप्ययं दुर्मतिः काले गुरुभारप्रपीडितः ॥ प्रपतन्राक्षसो भूमौ नान्यान्हन्यात्प्लवङ्गमान् ॥ १३३ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ॥ ते समारुरुहुर्हृष्टाः कुम्भकर्णं प्लवङ्गमाः ॥ १३४ ॥
कुम्भकर्णस्तु संक्रुद्धः समारूढः प्लवङ्गमैः ॥ व्यधूनयत्तान्वेगेन दुष्टहस्तीव हस्तिपान् ॥ १३५ ॥
तान्दृष्ट्वा निर्धुतान्रामो दुष्टोऽयमिति राक्षसः ॥ समुत्पपात वेगेन धनुरुत्तममाददे ॥ १३६ ॥
क्रोधताम्रेक्षणो वीरो निर्दहन्निव चक्षुषा ॥ राघवो राक्षसं रोषादभिदुद्राव वेगितः ॥
यूथपान्हर्षयन्सर्वान्कुम्भकर्णभयार्दितान् ॥ १३७ ॥
स चापमादाय भुजङ्गकल्पं दृढज्यमुग्रं तपनीयचित्रम् ॥
हरीन्समाश्वास्य समुत्पपात रामो निबद्धोत्तमतूणबाणः ॥ १३८ ॥
स वानरगणैस्तैस्तु वृतः परमदुर्जयः ॥ लक्ष्मणानुचरो रामः संप्रतस्थे महाबलः ॥ १३९ ॥
स ददर्श महात्मानं किरीटिनमरिंदमम् ॥ शोणिताप्लुतसर्वाङ्गं कुम्भकर्णं महाबलम् ॥ १४० ॥
सर्वान्समभिधावन्तं यथा रुष्टं दिशागजम् ॥ मार्गमाणं हरीन्क्रुद्धं राक्षसैः परिवारितम् ॥ १४१ ॥
विन्ध्यमन्दरसंकाशं काञ्चनाङ्गदभूषणम् ॥ स्रवन्तं रुधिरं वक्त्राद्वर्षमेघमिवोत्थितम् ॥ १४२ ॥
जिह्वया परिलिह्यन्तं शोणितं शोणितेक्षणम् ॥ मृद्नन्तं वानरानीकं कालान्तकयमोपमम् ॥ १४३ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तानलवर्चसम् ॥ विस्फारयामास तदा कार्मुकं पुरुषर्षभः ॥ १४४ ॥

---

कदनं वानराणामिति शेषः ॥१२४–१२५॥ मूर्च्छितः व्याप्तः ॥ १२६—१२८ ॥ द्वे शते उद्दिश्य पतमानं गच्छन्तं । अपातयत् । शरैरिति शेषः ॥ १२९ ॥ योगान् परिमृशन् उपायान् विचारयन् ॥ १३०—१३१ ॥ यथा यथायोग्यं ॥ १३२ ॥ भारः वानरारोहणरूपः ॥ १३३—१३५ ॥ निर्धुतानिति ह्रस्व आर्षः ॥ १३६ ॥ क्रोधताम्रेत्यादिसार्धश्लोकमेकं वाक्यं ॥ १३७ ॥ निबद्धोत्तमतूणबाणः निबद्धोत्तमबाणतूण इत्यर्थः ॥ १३८—१३९ ॥ स ददर्शेत्यादिचतुःश्लोक्येकान्वया ॥ १४०—१४२ ॥ कालान्तकयमोपमं । रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वेतिवदेकस्यैवावस्थाभेदात्कालादिनामभेदः । यद्वा काले युगान्तकाले अन्तको नाशको यमः उपमा यस्य स तथोक्तः

---

स० निरायुधंमेने भागवत्स्वेच्छयैवमायासृष्टिरिन्द्रजिदादौ । तथात्रेच्छाभावादेवनैरायुध्यमितिमन्तव्यं ॥ १२४ ॥ ति० योगान् उपायान् । अनेनवधकालेलक्ष्मणसाहित्यंरामस्यगम्यते ॥ १३० ॥ ति० लक्ष्मणानुचरः । बहुव्रीहिः । लक्ष्मणसहितः ॥१३९॥

[ पा० ] १ ग. ङ.—ठ. कराभ्यांच. २ ङ. छ. झ. ट. भरताग्रजः. ३ क.—घ. च.—ट. राममब्रवीत्. ४ ख. च. सर्वैर्वेहरयोऽद्भुतं. ५ ङ. झ. ट. अद्यायं. ६ ङ. झ. ट. प्रचरन्राक्षसो. ७ झ. समारूढैः. ८ क.—च. झ. ट. बलार्दितान्. ९ क. ङ. झ. ट. दुर्जयैः. १० ख.—ट. शोणिताव्रतरक्ताक्षं.

स तस्य चापनिर्घोषात्कुपितो राक्षसर्षभः ॥ अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ॥ १४५ ॥
ततस्तु वातोद्धतमेघकल्पं भुजङ्गराजोत्तमभोगबाहुम् ॥
तमापतन्तं धरणीधराभमुवाच रामो युधि कुम्भकर्णम् ॥ १४६ ॥
आगच्छ रक्षोधिप मा विषादमवस्थितोऽहं प्रगृहीतचापः ॥
अवेहि मां शक्रसपत्न रामं मया मुहूर्ताद्भविता विचेताः ॥ १४७ ॥
रामोऽयमिति विज्ञाय जहास विकृतस्वनम् ॥ अभ्यधावत संक्रुद्धो हरीन्विद्रावयन्रणे ॥
पातयन्निव सर्वेषां हृदयानि वनौकसाम् ॥ १४८ ॥
प्रहस्य विकृतं भीमं स मेघस्तनितोपमम् ॥ कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् ॥ १४९ ॥
नाहं विराधो विज्ञेयो न कबन्धः खरो न च ॥ न वाली न च मारीचः कुम्भकर्णोऽहमागतः ॥१५०॥
पश्य मे मुद्गरं घोरं सर्वकालायसं महत् ॥ अनेन निर्जिता देवा दानवाश्च पुरा मया ॥ १५१ ॥
विकर्णनास इति मां नावज्ञातुं त्वमर्हसि ॥ स्वल्पाऽपि हि न मे पीडा कर्णनासाविनाशनात् ॥१५२॥
दर्शयेक्ष्वाकुशार्दूल वीर्यं गात्रेषु मे लघु ॥ ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम् ॥ १५३ ॥
स कुम्भकर्णस्य वचो निशम्य रामः सुपुङ्खान्विससर्ज बाणान् ॥
तैराहतो वज्रसमप्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥ १५४ ॥
यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च ॥
ते कुम्भकर्णस्य तदा शरीरे वज्रोपमा न व्यथयां प्रचक्रुः ॥ १५५ ॥
स वारिधारा इव सायकांस्तान्पिबञ्शरीरेण महेन्द्रशत्रुः ॥
जघान रामस्य शरप्रवेगं व्याविध्य तं मुद्गरमुग्रवेगम् ॥ १५६ ॥
ततस्तु रक्षः क्षतजानुलिप्तं वित्रासनं देवमहाचमूनाम् ॥
विव्याध तं मुद्गरमुग्रवेगं विद्रावयामास चमूं हरीणाम् ॥ १५७ ॥
वायव्यमादाय ततो वरास्त्रं रामः प्रचिक्षेप निशाचराय ॥
समुद्गरं तेन जघान बाहुं स कृत्तबाहुस्तुमुलं ननाद ॥ १५८ ॥
स तस्य बाहुर्गिरिशृङ्गकल्पः समुद्गरो राघवबाणकृत्तः ॥
पपात तस्मिन्हरिराजसैन्ये जघान तां वानरवाहिनीं च ॥ १५९ ॥

॥ १४३—१४६ ॥ मा मां । अविषादं आगच्छेत्यन्वयः । यद्वा विषादं मा गच्छ । मरणेन शरीरभरणक्लेशं त्यजेत्यर्थः । आङ् उपसर्गमात्रं ॥१४७—१४८॥ विकृतमित्यादिविशेषणत्रयं क्रियाविशेषणं ॥ १४९—१५० ॥ पश्य मे मुद्गरमिति । यद्यपि निरायुधत्वं पूर्वमुक्तं तथाप्यद्य मुद्गरं गृहीतवानिति ज्ञेयं । सर्वकालायसं बहुलायसमयमित्यर्थः॥१५१—१५२॥लघु क्षिप्रं । दृष्टपौरुषविक्रमं दृष्टबलपराक्रमम् ॥ १५३ ॥ चुक्षुभ इति । क्षोभोत्र मानसः ॥ १५४ ॥ यैः सायकैरिति । सालभेदकस्य वालिविनाशकस्य च बाणस्यैकत्वेपि बहुवचनं तद्वर्ग्याणामनेकत्वादुपपद्यते ॥१५५॥ शरीरेण पिबन् । शरीरनिमग्नबाण इत्यर्थः । जघान मोघीचकार ॥ १५६ ॥ विव्याध अचालयत्

ति० भुजङ्गराजस्यशेषस्योत्तमोभोगः तद्वद्बाहुर्यस्यसः ॥ १४६ ॥ ति० रामोयमितिविज्ञाय रामवचसेतिशेषः ॥ १४८ ॥ स० यद्यपि 'एकेषुणा—भित्वाचतान्स'इत्यादिष्वेकएवसप्ततालपाटकोविपाठउक्तः तथापिकुंभकर्णमहत्त्ववर्णनंराममाहात्म्योपयोगीति यैरित्याद्युक्तिः । तदवयवबाहुल्याद्वा "अदितिःपाशान्" इत्यादिवद्वा बहुवचनं । नव्यथयांप्रचक्रुः । आर्षोऽयमामन्तव्यवहि॰

[ पा० ] १ झ. धारोद्धत. २ ङ. छ. झ. ट. राक्षसवंशनाशनंयस्त्वंमुहूर्तात्. ३ क. च. भवान्मुहूर्ताद्भविता. ४ ग. विजिताः. ५ ङ. छ. झ. ट. मेऽनघ. ६ ग. ङ. छ. झ. शरीरंवज्रोपमानंव्यथयां. ७ क. ग.—ट. व्याविध्यतं.

ते वानरा भग्नहतावशेषाः पर्यन्तमाश्रित्य तदा विषण्णाः ॥
प्रवेपिताङ्गा ददृशुः सुघोरं नरेन्द्ररक्षोधिपसन्निपातम् ॥ १६० ॥
स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्महान्निकृत्ताग्र इवाचलेन्द्रः ॥
उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ॥ १६१ ॥
स तस्य बाहुं सहसालवृक्षं समुद्यतं पन्नगभोगकल्पम् ॥
ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ॥ १६२ ॥
स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरिसन्निकाशः ॥
विवेष्टमानोऽभिजघान वृक्षाञ्शैलाञ्शिला वानरराक्षसांश्च ॥ १६३ ॥
तं छिन्नबाहुं समवेक्ष्य रामः समापतन्तं सहसा नदन्तम् ॥
द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ॥ १६४ ॥
तौ तस्य पादौ प्रदिशो दिशश्च गिरीन्गुहाश्चैव महार्णवं च ॥
लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ॥ १६५ ॥
निकृत्तबाहुर्विनिकृत्तपादो विदार्य वक्रं बडबामुखाभम् ॥
दुद्राव रामं सहसाऽभिगर्जन्राहुर्यथा चन्द्रमिवान्तरिक्षे ॥ १६६ ॥
अपूरयत्तस्य मुखं शिताग्रै रामः शरैर्हेमपिनद्धपुङ्खैः ॥
स पूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमोह चापि ॥ १६७ ॥
अथाददे सूर्यमरीचिकल्पं स ब्रह्मदण्डान्तककालकल्पम् ॥
अरिष्टमैन्द्रं निशितं सुपुङ्खं रामः शरं मारुततुल्यवेगम् ॥ १६८ ॥
तं वज्रजाम्बूनदचारुपुङ्खं प्रदीप्तसूर्यज्वलनप्रकाशम् ॥
महेन्द्रवज्राशनितुल्यवेगं रामः प्रचिक्षेप निशाचराय ॥ १६९ ॥
स सायको राघवबाहुचोदितो दिशः स्वभासा दश संप्रकाशयन् ॥
सधूमवैश्वानरदीप्तदर्शनो जगाम शक्राशनिवीर्यविक्रमः ॥ १७० ॥
स तन्महापर्वतकूटसन्निभं विवृत्तदंष्ट्रं चलचारुकुण्डलम् ॥

॥ १५७—१५९ ॥ सन्निपातं द्वन्द्वयुद्धं ॥ १६०—१६१ ॥ ऐन्द्रास्त्रयुक्तेन ऐन्द्रास्त्रमन्त्राभिमन्त्रितेन ॥ १६२ ॥ विवेष्टमानः विवर्तमानः ॥ १६३ ॥ प्रगृह्य युगपत्संधाय ॥ १६४ ॥ विनाशयन्तौ दिगादीन् प्रतिध्वनयन्तौ ॥ १६५ ॥ दुद्राव राममिति । ऊरुशेषाभ्यामिदं । अन्यथेदं गमनं वक्ष्यमाणं पतनं च न संभवतः । राहुर्यथेति । चन्द्रमिव स्थितं रामं राहुर्यथा तथा कुम्भकर्ण इत्यर्थः ॥ १६६—१६७ ॥ अरिष्टं रिपूणामशुभप्रदं । "अरिष्टे तु शुभाशुभे" इत्यमरः ॥ १६८–१६९ ॥ वैश्वानरः अग्निः ॥ १७०–१७१ ॥

तत्प्रयोगः ॥ १५५ ॥ ति० करेण कृत्ततरेण ॥ १६१ ॥ ति० चुकूज अवर्णनशब्देनेतिशेषः ॥ १६७ ॥ ति० शक्राशन्योरिव शक्राशनेरिववाभीमोविक्रमोयस्यतंकुंभकर्णजगाम ॥ १७० ॥ ति० चले गते चारुणी रमणीयेकुण्डलेयस्मात्तच्चलचारुकुण्डलं ॥

[ पा० ] १ क. ग. ङ. च. छ. झ. ट. ततस्य. २ ङ. च. झ. ट. गिरेर्गुहाश्चैव. ३ ङ. झ. मुमूर्च्छचापि. ४ क. ङ. च. छ. झ. ञ. ट. विधूमवैश्वानरभीमदर्शनो. ५ ङ. झ. ट. भीमविक्रमं. ६ दिव्यंमघवतादत्तंज्वलन्तमिवतेजसा । अवारणीयंविशिखंगिरीणामपिदारणम् ॥ १ ॥ भयङ्करममित्राणांज्ञातीनांनन्दिवर्धनम् । सुपर्वाणंसुपर्वाग्रंशत्रूणांभयवर्धनम् ॥ २ ॥ तंसायकमुपादायविकृष्यचमहाबलः । ससर्जकुंभकर्णस्यवधायशरमुत्तमम् ॥ ३ ॥ सविसृष्टोबलवतारामेणनिशितःशरः । कुंभकर्णस्यहृदयंभित्त्वाधरणिमाविशत् ॥ ४ ॥ ससायकःइति १७० श्लोकानन्तरमेतेचत्वारःश्लोकाः क. ख. पुस्तकयोरधिकादृश्यन्ते. ७ ख. घ. ङ. च. छ. झ. ट. सुवृत्तदंष्ट्रं.

चकर्त रक्षोधिपतेः शिरस्तथा यथैव वृत्रस्य पुरा पुरंदरः ॥ १७१ ॥
कुम्भकर्णशिरो भाति कुण्डलालङ्कृतं महत् ॥ आदित्येऽभ्युदिते रात्रौ मध्यस्थ इव चन्द्रमाः ॥१७२॥
तद्रामबाणाभिहतं पपात रक्षःशिरः पर्वतसन्निकाशम्[1] ॥
बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ॥ १७३ ॥
न्यपतत्कुम्भकर्णोथ स्वकायेन निपातयन् ॥ प्लवङ्गमानां कोट्यश्च परितः संप्रधावताम् ॥ १७४ ॥
तच्चातिकायं हिमवत्प्रकाशं रक्षस्ततस्तोयनिधौ पपात[2] ॥
ग्राहान्वरान्मीनवरान्भुजङ्गान्ममर्द भूमिं च तदा विवेश ॥ १७५ ॥
तस्मिन्हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे ॥
चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ॥ १७६ ॥
ततस्तु देवर्षिमहर्षिपन्नगाः सुराश्च भूतानि सुपर्णगुह्यकाः ॥
सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ॥ १७७ ॥

कुंभकर्णेति । कर्तनवेगादुद्गतं गगने स्थितं । रात्रौ आदित्ये अदितिदेवताके पुनर्वसुनक्षत्रे तारकाद्वयात्मके । अभ्युदिते तन्मध्यगतश्चन्द्रमा इव बभावित्यर्थः ॥ १७२ ॥ चर्याः प्राकारोपान्तक्लृप्तभटसंचाराईप्रदेशाः ॥ १७३ ॥ कोट्यः कोटीः ॥ १७४ ॥ रक्षः कबन्धरूपं । भूमिं तदा विवेश । भूमिमस्पृश-

**स०** वृत्रस्य त्वष्टृपुत्रस्य चलच्चारुकुण्डलंशिरः पुरापुरन्दरइव सः रामः रक्षोधिपतेःशिरश्चकर्तेत्यन्वयः ॥ १७१ ॥ **ति०** कुण्डलाभ्यामलङ्कृतं विनाकृतं । "अलंभूषणपर्याप्तिशक्तिवारणवाचकं" इत्यमरः । कुंभकर्णस्यशिरः अरात्रौ प्रातःकाले । आदित्ये उदिते गगनमध्यस्थचन्द्रमाइवनिष्प्रभंभातीत्यर्थः ॥ अयंश्लोकःप्रक्षिप्तइतिबहवः ॥ **स०** भातिकुण्डलालङ्कृतं भयाकान्त्या कुण्डलालङ्कृतंयदन्यच्छिरः तदतिक्रम्यवर्ततेतत्तथा । सद्यःपातात्कान्तिर्नगतेतिभावः । "अतिलङ्घनेऽपिच" इतिविश्वः । यद्वा कुण्डलालं कुण्डइतिकुण्डेआस्यपिठरेलालायस्यतत् । पातालसंनिभमितिपूर्वमुक्तेः । "कुण्डंपिठरे" इतिविश्वः । कृतं कालविशेषेण । अतएवाप्रकाशोयुज्यते । कुण्डलाभ्यां विनाकृतमितिद्वावपि । यत् रात्रौमध्यस्थः योग्यतयागगनमध्यस्थः । चन्द्रमाइवाभात् । तदिदानीं आदित्येसूर्येऽभ्युदितेमध्यस्थोऽधमः कान्त्या चन्द्रमाइवभाति । मध्यस्थे न्यायमार्गस्थे । आदित्यइवादित्येरामरूपेवा । तद्वंशसंभूतत्वात्तस्मिन्रामेऽभ्युदितेसतिचन्द्रमाइवभातीतिशेषः । कुण्डलवत्सर्पवदलङ्कृतंभाति । यथाऽहिःकुण्डलीकुण्डलंचेतिवचनात् । कर्णशून्यत्वेनोचितंतदौपम्यं । आदित्ये अदितिदेवताकेपुनर्वसुनक्षत्रेरात्रावभ्युदितेसतितन्मध्यस्थश्चन्द्रमाइवभातीति तथाअरात्रौदिवेतितीर्थनागोजिव्याख्यानेप्रक्रमानानुगुण्यात् एवंद्वितीयमपि आदित्योदयानन्तरं अरात्रावहनीत्यवक्तव्यत्वादुपेक्षणीये ॥ १७२ ॥ **ति०** उच्चंप्राकारं लङ्कायाइतिशेषः । शिरः कर्तनवेगोत्थितंलङ्कायांपपात । देहस्तुकर्तनवेगविलुठन्समुद्रेपपात । यद्यपि "तंब्रह्मास्त्रेणसौमित्रिर्ददाराद्रिवरोपमम् । सपपातमहावीरोदिव्यास्त्राभिहतोरणे । तंदृष्ट्वावृत्रसंकाशंकुंभकर्णंतरस्विनम् । गतासुंपतितंभूमौराक्षसाःप्राद्रवन्भयात् ।" इतिमहाभारतोक्त्यालक्ष्मणतःकुंभकर्णवधःप्रतीयते । तथापिनविरोधः । रामलक्ष्मणाभ्यांमिलित्वातद्वधकरणात् । अतएव पूर्वंलक्ष्मणानुचरइत्यत्रलक्ष्मणसहितइतिव्याख्यातं । प्राधान्यात्त्वत्ररामस्यैवतद्धन्तृत्वोक्तिः । लक्ष्मणसाहित्येनहननात्तु व्यासोलक्ष्मणस्यहन्तृत्वमुक्तवान् ॥ **स०** "ब्राह्मेणास्त्रेणसौमित्रिर्ददाराद्रिवरोपमम्" इति भारतेवनपर्वणिमार्कण्डेयोपाख्यानेलक्ष्मणात्कुंभकर्णवधउक्तोत्रतुरामादतोविरोधइतिचेत्सत्यं । सुमित्रायाअपत्यंहिसौमित्रिः । तस्याश्चलक्ष्मणादपिप्रेमपदंरामइतितदपत्यत्वेनोक्तोव्यासेनदाशरथिरितिवा भाषात्रयेणोक्तेर्भारतइवान्यत्राभावाद्गुह्यभाषयाराममाबोधयदितिवा पुंव्यत्यासोपि "शतंदुर्योधनादींस्तेधनञ्जयशरैर्हतान् । दर्शयिष्यामि" इतिकृष्णेनकृष्णांप्रत्युदीरितेवचसिभीमसेनशरैर्हतानितिवक्तव्येधनञ्जयेत्युक्तिवद्ग्राह्यः । "मयैववध्यौ भवतं त्रिजन्मसु" इतिभगवतोक्तत्वात् हिरण्याक्षहिरण्यकशिप्वोः शिशुपालदन्तवक्रयोश्च नृसिंहयदुसिंहाभ्यांहतत्वदर्शनाच्च "रामलक्ष्मणाभ्यांमिलित्वातद्वधकरणात्" इत्यादिनागोजिभट्टविरोधसमाधिकथनंकथमितिचिन्त्यम् ॥ १७३ ॥ **स०** तोयनिधौपपात । खण्डशःखण्डनेनतोयनिधौप्रक्षेपोपि हर्यृक्षासुसाधः । प्रक्षेप्यश्चोत्तरकार्यंद्रक्ष्येतिस्वयमेवपतन्देहो महात्मनामरयोपिसहायकारिणइतिनीतिंसूचितवानितिमन्तव्यम् ॥ १७५ ॥ **स०** भूश्चचाल भूमिधराश्चचेलुः ॥ १७६ ॥ भूतानि आकाशादीनि । स्वकार्यप्रतिबन्धकत्वात्तद्वधेनतेषांतोषः । सोप्यभिमानिविवक्षयाभूभूधरादि-

[ पा० ] १ ख. च. छ. पर्वतकूटकल्पं. २ क.—ट. रक्षस्तदापयोनिधौ.

ततस्तु ते तस्य वधेन भूरिणा मनस्विनो नैर्ऋतराजबान्धवाः ॥
विनेदुरुच्चैर्व्यथिता रघूत्तमं हरिं समीक्ष्यैव यथा [1]सुरार्दिताः ॥ १७८ ॥
स देवलोकस्य तमो निहत्य सूर्यो यथा राहुमुखाद्विमुक्तः ॥
तथा [2]व्यभासीद्भुवि वानरौघे निहत्य रामो युधि कुम्भकर्णम् ॥ १७९ ॥
प्रहर्षमीयुर्बहवस्तु वानराः प्रबुद्धपद्मप्रतिमैरिवाननैः ॥
अपूजयन्राघवमिष्टभागिनं हते रिपौ भीम[3]बले दुरासदे ॥ १८० ॥
स कुम्भकर्णं [4]सुरसङ्घमर्दनं महत्सु युद्धेषु पराजितश्रमम् ॥
ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ॥ १८१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

कुंभकर्णश्रवणमात्रेण पतितमूर्च्छितेन रावणेन संज्ञाधिगमानन्तरं तत्प्रतिशोचनपूर्वकं बहुधाविलापः ॥ १ ॥

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ॥ राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १ ॥
राजन्स कालसंकाशः संयुक्तः कालकर्मणा ॥ विद्राव्य वानरीं सेनां भक्षयित्वा च वानरान् ॥ २ ॥
प्रतपित्वा मुहूर्तं च प्रशान्तो रामतेजसा ॥ कायेनार्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥ ३ ॥
[5]निकृत्तकण्ठोरुभुजो विक्षरन्रुधिरं बहु ॥ रुद्ध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ ४ ॥
कुम्भकर्णस्तव भ्राता काकुत्स्थशरपीडितः ॥ [6]लगण्डभूतो विकृतो दावदग्ध इव द्रुमः ॥ ५ ॥

---

दित्यर्थः ॥ १७५—१७८ ॥ वानरौघे वानरौघमध्ये ॥ १७९ ॥ प्रबुद्धपद्मप्रतिमैरिति । प्रतिमाशब्दोत्र रूपवचनः नतु सदृशवचनः इवशब्दप्रयोगात् । इष्टभागिनं जयरूपेष्टभाजं ॥ १८० ॥ पराजितश्रमं त्यक्तश्रमं । अत्र सर्गे अधिकाः केचन श्लोकाः क्वापि क्वापि दृश्यन्ते ते न व्याख्याताः । अस्मिन्सर्गे सार्धषट्षष्ट्युत्तरशतश्लोकाः ॥ १८१ ॥ इति श्रीगोविन्दराज विरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

कुम्भकर्णवधश्रवणेन रावणस्य प्रलापः—कुम्भकर्णमित्यादि ॥ अत्र रावणायेत्यत्र यकारो गायत्र्या अष्टादशाक्षरं । सप्तदशसहस्रश्लोका गताः ॥ १ ॥ कालकर्मणा कालस्य मृत्योः कर्मणा । मरणरूपक्रिययेति यावत् । यद्वा काले कर्मणा कालकर्मणा । परिपक्वकर्मणेत्यर्थः ॥ २ ॥ प्रतपित्वा पराक्रम्य, एतदारभ्य श्लोकत्रयमेकान्वयं ॥ अर्धप्रविष्टेन अर्धेन कबन्धमात्रेण प्रविष्टेन । कायेन समुद्रं रुद्ध्वा । शरीरेण उत्तमाङ्गेन । द्वारं रुद्ध्वा । लगण्डभूतः पिण्डीभूतः । "लगण्डोऽजगर" इत्येके । विकृतः विकृतशरीरः ।

---

वत् ॥ १७७ ॥ **स०** भूरिणा महता वधेन । वधस्यमहत्त्वंतु कुंभकर्णपराक्रमानङ्कुरीकरणेन । भूरिणा अच्युतेन तत्कृतेनेतियावत् । " भूरिर्ब्रह्माच्युतेशेषु " इतिविश्वः । अमनस्विनः खिन्नमानसाः । हरिं सिंहं । यथामतङ्गजाःगजाःसमीक्ष्यव्यथितानदन्ति तथानेदुः ॥ १७८ ॥ **ति०** देवलोकस्य आकाशस्य । मध्येइतिशेषः । व्यभासीत् विशेषेणभातिस्म ॥ **स०** सत् एव लोकस्य इतिविभागः । लोकस्य उत्तराधरलोकस्य सत् तमः तत्रत्यमितिभावः । निहत्यैवसूर्योयथा । किंच यथाराहुमुखाद्विमुक्तःसूर्यो भाति तथाव्यभासीत् ॥ १७९ ॥ **ति०** अत्रदिनद्वयेनकुंभकर्णोत्थानं ततः सप्तमवासरेवधइति भाद्रपदपूर्णिमायामेतद्वधइतिपाद्मसंमतिपूर्वकमग्रे स्फुटीभविष्यति ॥ १८१ ॥ इतिसप्तषष्टितमःसर्गः ॥ ६७ ॥

**ति०** अगण्डभूतः " अशिरःपाणिपादस्तुकबन्धोऽगण्डउच्यते " ॥ **स०** अगण्डभूतः कुंभकर्णचिह्नरहितीभूतः । " गण्डःप्र-

[ **पा०** ] १ झ. मतंगजाः. ख. पुरासुराः. २ ङ.—ट. व्यभासीद्धरिसैन्यमध्ये. ३ ङ. झ. ट. बलेनृपात्मजं. ४ ख. ङ. झ. ञ. ट. सुरसैन्यमर्दनं. ५ ङ. झ. ट. निकृत्तनासाकर्णेनविक्षरद्रुधिरेणच. ६ ङ.—ट. अगण्डभूतोविवृतो.

तं श्रुत्वा निहतं सङ्ख्ये कुम्भकर्णं महाबलम् ॥ रावणः शोकसंतप्तो मुमोह च पपात च ॥ ६ ॥
पितृव्यं निहतं दृष्ट्वा देवान्तकनरान्तकौ ॥ त्रिशिराश्चातिकायश्च रुरुदुः शोकपीडिताः ॥ ७ ॥
भ्रातरं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः ॥ ८ ॥
ततः कृच्छ्रात्समासाद्य संज्ञां राक्षसपुङ्गवः ॥ कुम्भकर्णवधाद्दीनो विललाप स रावणः ॥ ९ ॥
हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल ॥ त्वं मां विहाय वै दैवाद्यातोसि यमसादनम् ॥ १० ॥
मम शल्यमनुद्धृत्य बान्धवानां महाबल ॥ शत्रुसैन्यं प्रताप्यैकस्त्वं मां संत्यज्य गच्छसि ॥ ११ ॥
इदानीं खल्वहं नास्मि यस्य मे दक्षिणो भुजः ॥ पतितो यं समाश्रित्य न बिभेमि सुरासुरात् ॥१२॥
कथमेवंविधो वीरो देवदानवदर्पहा ॥ कालाग्निरुद्रप्रतिमो रणे रामेण वै हतः ॥ १३ ॥
यस्य ते वज्रनिष्पेषो न कुर्याद्व्यसनं सदा ॥ स कथं रामबाणार्तः प्रसुप्तोसि महीतले ॥ १४ ॥
एते देवगणाः सार्धमृषिभिर्गगने स्थिताः ॥ निहतं त्वां रणे दृष्ट्वा निनदन्ति प्रहर्षिताः ॥ १५ ॥
ध्रुवमद्यैव संहृष्टा लब्धलक्षाः प्लवङ्गमाः ॥ आरोक्ष्यन्ति हि दुर्गाणि लङ्काद्वाराणि सर्वशः ॥ १६ ॥
राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया ॥ कुम्भकर्णविहीनस्य जीविते नास्ति मे रतिः ॥१७॥
यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवम् ॥ ननु मे मरणं श्रेयो न चेदं व्यर्थजीवितम् ॥ १८ ॥
अद्यैव तं गमिष्यामि देशं यत्रानुजो मम ॥ न हि भ्रातॄन्समुत्सृज्य क्षणं जीवितुमुत्सहे ॥ १९ ॥
देवा हि मां हसिष्यन्ति दृष्ट्वा पूर्वापकारिणम् ॥ कथमिन्द्रं जयिष्यामि कुम्भकर्ण हते त्वयि ॥२०॥
तदिदं मामनुप्राप्तं विभीषणवचः शुभम् ॥ यदज्ञानान्मया तस्य न गृहीतं महात्मनः ॥ २१ ॥
विभीषणवचो यावत्कुम्भकर्णप्रहस्तयोः ॥ विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः ॥ २२ ॥
तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ॥ यन्मया धार्मिकः श्रीमान्स निरस्तो विभीषणः ॥२३॥

---

रामतेजसा प्रशान्त इत्यन्वयः ॥ ३—१० ॥ मम बान्धवानां च शल्यं शोकमित्यर्थः ॥ ११ ॥ सुरासुरात् सुरासुरेभ्यः ॥ १२—१५ ॥ लब्धलक्षाः लब्धावसराः ॥ १६—१७ ॥ भ्रातृहन्तारं न हन्मि यदि तदा इदं व्यर्थजीवितं श्रेयःनच । नैवेत्यर्थः । किंतु मरणमेव श्रेयो नन्विति संबन्धः ॥ १८ ॥ भ्रातॄनिति बहुवचनं पूजार्थं ॥ १९—२१ ॥ कुम्भकर्णप्रहस्तयोरयं दारुणो विनाशः यावत् यदा समुत्पन्नः ततआरभ्य विभीषणवचो मां व्रीडयतिपीडयतीत्यर्थः

---

वीणेचिह्नेस्यात् " इतिविश्वः । अतएवविकृतः । विवृतइतिपाठे रक्षोभिरपरिवृतइतिवा विभिः काकगृध्रादिभिर्वृतइतिवार्थः ॥५॥ **ति०** देवान्तकादयोरावणपुत्राः ॥ ७ ॥ **ति०** महोदरमहापार्श्वौ विमातृजौभ्रातरौतस्य ॥ ८ ॥ **स०** ममशल्यं रामरूपं । बान्धवानांमध्येमहाबल । " बान्धवानांचशल्यमनुद्धृत्येत्यन्वयइतिनागोजिभट्टव्याख्यायामश्रुतचशब्दाध्याहारइव ममशल्यमित्यनेनमुख्यरावणशल्येनसशल्यानाममुख्यानांपृथग्ग्रहणायोगश्चेतिदोषौप्रादुष्यातामितिज्ञेयं ॥ ११ ॥ **स०** अहंना पुमान्नास्मि । नपुंसकप्रायइत्यर्थः । सुरासुरात् सुराश्चासुराश्चसुरासुरं । तस्मात् । " येषांचविरोधःशाश्वतिकः " इत्येकवद्भावः । समाहारोवा । नेत्यावर्तते । नबिभेमि । नास्मि मृतप्रायइतिवा ॥ १२ ॥ **स०** दर्पहा दर्पंहन्ति हनिष्यतिवादर्पहा । " नियमेभूतइत्याश्रयणाद्वर्तमानेभविष्यतिवाकालेचोपपदान्तरेपिभवत्येव पुरुषंहन्तिहनिष्यतिवा " इतितत्वबोधिन्युक्तेः । प्रकृतिनियमपक्षेअदेवदानवदर्पनविद्यतेदेवदानवानांदर्पोयेनतत्संबुद्धिः अदेवदानवदर्पहा शोकप्रकाशकःशब्दः ॥ १३ ॥ **स०** भ्रातॄनिति । एकस्यमुख्यस्यभ्रातुर्गमनेनानेकप्रकारेणस्वदौर्बल्यमायातमितिद्योतयतिबहुवचनेन । खरादीन्मृतान्स्मृत्वावा विभीषणकुबेराभ्यांबहिष्कृताभ्यांसहमृतमेकंसंस्मृत्यवाबहुवचनं । उत्सृज्यपदस्वारस्यादिवोत्तरत्र " सनिरस्तोविभीषणः " इतितदनुतापस्वारस्याच्च ॥ १९ ॥ इत्यष्टषष्टितमःसर्गः ॥ ६८ ॥

[ **पा०** ] १ ख.—च. झ. ञ. श्रुत्वा. २ ङ. झ. ट. विललापाकुलेन्द्रियः. ३ घ. ङ. झ. ट. मतिः.

इति बहुविधमाकुलान्तरात्मा कृपणमतीव विलप्य कुम्भकर्णम् ॥
न्यपतदथ दशाननो भृशार्तस्तमनुजमिन्द्ररिपुं हतं विदित्वा ॥ २४ ॥
[ [1]ततस्तु संदीपितकोपवह्निर्निशाचराणां च महाबलश्च ॥
तदाऽपतद्भ्रातृविनाशनार्तो मुहुर्मुहुश्चैव विनिश्वसन्बली ॥ २५ ॥]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ॥ ६९ ॥

कुंभकर्णनिधनाकर्णनेनविषीदन्तंरावणंप्रति त्रिशिरोनाम्नातत्सुतेन रामादिवधप्रतिज्ञानेनसमाश्वासनपूर्वकमतिकायादिभिर्भ्रातृभिःसह रणायनिर्याणम् ॥ १ ॥ वानरकृतराक्षसक्षपणरुष्टेन तुरगाधिष्ठितेननरान्तकेन वानरवाहिनीविध्वंसने सुग्रीवनियोगादङ्गदेन सतुरगनरान्तकहननम् ॥ २ ॥

एवं विलपमानस्य रावणस्य दुरात्मनः ॥ [2]श्रुत्वा शोकाभितप्तस्य त्रिशिरा वाक्यमब्रवीत् ॥ १ ॥
एवमेव महावीर्यो हतो नस्तातमध्यमः ॥ न तु सत्पुरुषा राजन्विलपन्ति यथा भवान् ॥ २ ॥
नूनं त्रिभुवनस्यापि पर्याप्तस्त्वमसि प्रभो ॥ स कस्मात्प्राकृत इव शोचस्यात्मानमीदृशम् ॥ ३ ॥
ब्रह्मदत्ताऽस्ति ते शक्तिः कवचः सायको धनुः ॥ सहस्रखरसंयुक्तो रथो मेघस्वनो महान् ॥ ४ ॥
त्वयाऽसकृद्विशस्त्रेण विशस्ता देवदानवाः ॥ स सर्वायुधसंपन्नो राघवं शास्तुमर्हसि ॥ ५ ॥
कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणम् ॥ उद्धरिष्यामि ते शत्रून्गरुडः पन्नगानिव ॥ ६ ॥
शम्बरो देवराजेन नरको विष्णुना यथा ॥ तथाऽद्य शयिता रामो मया युधि निपातितः ॥ ७ ॥
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः ॥ पुनर्जातमिवात्मानं [3]मन्यते कालचोदितः ॥ ८ ॥
श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ ॥ अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिताः ॥ ९ ॥
ततोऽहमहमित्येव गर्जन्तो नैर्ऋतर्षभाः ॥ रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ॥ १० ॥

॥ २२—२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

अथातिकायनिर्गमः—एवमित्यादि ॥ १ ॥ तातमध्यमः तातेषु मध्यमः मध्यमपितेत्यर्थः । एवमेव महावीर्यः त्वदुक्तप्रकारेणैव महावीर्यः । हतः । दैवादिति शेषः ॥ २ ॥ ईदृशमिति शोकक्रियाविशेषणं । आत्मानं उद्दिश्येति शेषः ॥ ३ ॥ ब्रह्मदत्तेत्यादिश्लोकद्वयमेकान्वयं ॥ विशस्त्रेण निरायुधेन ॥ ४—६ ॥ नरकोत्र सिंहिकायां विप्रचित्तेर्जातेषु वातापिप्रमुखेष्वन्यतमः । "वातापिर्नमुचिश्चैव इल्वलः सृमरस्तथा । अन्धको नरकश्चैव कालनाभस्तथैव च" इत्युक्तेः ॥ ननु कृष्णहतो भूसुतो नरकासुरः । तस्य वाल्मीकिप्रबन्धनिर्माणकाले असंजातत्वात् ॥ ७—८ ॥ श्रुत्वा त्रिशिरस इत्यादि ॥ त्रिशिरसो वचनं स्वेषामपि तुल्यत्वाद्देवान्तकादयोपि युद्धोद्युक्ता बभूवुरित्यर्थः ॥ ९—१० ॥ अन्तरिक्षे गतं गमनं येषां तेऽन्तरिक्षगताः

ति० विलपमानस्य विलपतः । श्रुत्वा विलापमितिशेषः ॥ १ ॥ स० शंबरोयमन्यःकामशत्रोः ॥ ७ ॥ ति० ननुकुंभकर्णासाध्येऽर्थेकथंरावणस्यतस्माज्जयप्रत्याशयासंतोषस्तत्राह—कालचोदितइति । तन्नाशप्रवृत्तकालात्मकभगवत्प्रेरणयापुनस्तस्ययुद्धबु-

[ पा० ] १ अयंश्लोकः ज. पाठेदृश्यते. २ घ. गिरंश्रुत्वाभितप्तस्य. ङ. झ. श्रुत्वाशोकाभिभूतस्य. ३ क. ख. ग. च. छ. ज. ट. मन्यतेरावणस्तदा.

अन्तरिक्षगताः सर्वे सर्वे मायाविशारदाः ॥ सर्वे त्रिदशदर्पघ्नाः सर्वे च रणदुर्जयाः ॥ ११ ॥
सर्वे सुबलसंपन्नाः सर्वे विस्तीर्णकीर्तयः ॥ सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥
देवैरपि सगन्धर्वैः सकिन्नरमहोरगैः ॥ १२ ॥
सर्वे च विदुषो वीराः सर्वे युद्धविशारदाः ॥ सर्वे प्रवरविज्ञानाः सर्वे लब्धवरास्तथा ॥ १३ ॥
स तैस्तदा भास्करतुल्यवर्चसैः सुतैर्वृतः शत्रुबलप्रमर्दनैः ॥
रराज राजा मघवान्यथाऽमरैर्वृतो महादानवदर्पनाशनैः ॥ १४ ॥
स पुत्रान्संपरिष्वज्य भूषयित्वा च भूषणैः ॥ आशीर्भिश्च प्रशस्ताभिः प्रेषयामास संयुगे ॥ १५ ॥
युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावणः ॥ [ महापार्श्वं प्रमत्तं वा भ्रातरं च महोदरम् ॥ ]
रक्षणार्थं कुमाराणां प्रेषयामास संयुगे ॥ १६ ॥
तेऽभिवाद्य महात्मानं रावणं रिपुरावणम् ॥ कृत्वा प्रदक्षिणं चैव महाकायाः प्रतस्थिरे ॥ १७ ॥
सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः ॥ निर्जग्मुर्नैर्ऋतश्रेष्ठाः षडेते युद्धकाङ्क्षिणः ॥ १८ ॥
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः ॥ १९ ॥
ततः सुदर्शनं नाम नीलजीमूतसन्निभम् ॥ ऐरावतकुले जातमारुरोह महोदरः ॥ २० ॥
सर्वायुधसमायुक्तं तूणीभिश्च स्वलंकृतम् ॥ रराज गजमास्थाय सवितेवास्तमूर्धनि ॥ २१ ॥
हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् ॥ आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ॥ २२ ॥
त्रिशिरा रथमास्थाय विरराज धनुर्धरः ॥ सविद्युदुल्कः शैलाग्रे सेन्द्रचाप इवाम्बुदः ॥ २३ ॥
त्रिभिः किरीटैः शुशुभे त्रिशिराः स रथोत्तमे ॥ हिमवानिव शैलेन्द्रस्त्रिभिः काञ्चनपर्वतैः ॥ २४ ॥
अतिकायोपि तेजस्वी राक्षसेन्द्रसुतस्तदा ॥ [ हयोत्तमसमायुक्तं सर्वायुधसमन्वितम् ॥ ]
आरुरोह रथश्रेष्ठं श्रेष्ठः सर्वधनुष्मताम् ॥ २५ ॥
सुचक्राक्षं सुसंयुक्तं स्वनुकर्षं सुकूबरम् ॥ तूणीबाणासनैर्दीप्तं प्रासासिपरिघाकुलम् ॥ २६ ॥
स काञ्चनविचित्रेण मुकुटेन विराजता ॥ भूषणैश्च बभौ मेरुः किरणैरिव भासयन् ॥ २७ ॥

---

॥ ११ ॥ देवादिभिः सह समरमासाद्य पराजिता न श्रूयन्त इत्यन्वयः ॥ १२ ॥ विदुषः विद्यावन्तः । प्रवरविज्ञानाः उत्कृष्टशास्त्रज्ञानाः ॥१३॥ तुल्यवर्चसैरित्यत्र समासान्त आर्षः ॥ १४ ॥ आशीर्भिः सहेति शेषः॥ १५ ॥ युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावण इति ॥ अत्र युद्धोन्मत्तौ महोदरमहापार्श्वपर्यायनामानौ रावणभ्रातरौ । एतौ परत्र प्रकाशयिष्येते ॥ १६ ॥ रिपून् रावयतीति रिपुरावणः ॥ १७ ॥ सर्वौषधीभिः । " कुष्टं मांसी हरिद्रे द्वे मुरा शैलेयचन्दने । वचाचम्पकमुस्ताश्च सर्वौषध्यो दश स्मृताः" इत्युक्ताभिः आयुधप्रहारनिवर्तिकाभिः ओषधीभिरित्याहुः । समालभ्य समालिप्य ॥ १८–२० ॥ अस्तमूर्धनीत्येतदुत्तरक्षणे विनाशसूचनाय ॥ २१–२३ ॥ त्रिभिः काञ्चनपर्वतैः शिखरभूतैर्हिमवानिवेत्यर्थः ॥ २४ ॥ अतिकाय इत्यादिश्लोकद्वयमेकान्वयं ॥ सुसंयुक्तं सुदृढं । स्वनुकर्षं । " अनुकर्षो दार्वधःस्थं" इत्यमरः । सुकूबरं शोभनयुगंधरं । " कूबरस्तु युगंधरः " इत्यमरः ॥ २५—२६ ॥ किरणैः भासयन्

---

व्युपरमः ॥ ८ ॥ ति० शत्रूणांबलस्यश्रीणांचार्दनैरित्यर्थैश्रियार्दनैरित्यार्षं ॥ १४ ॥ स० युद्धोन्मत्तंचमत्तंच तदपरपर्यायवाच्यौमहापार्श्वमहोदरौ । ' षडेते ' इति वक्ष्यमाणत्वात् । एतौचप्रसिद्धमहापार्श्वमहोदराभ्यांभिन्नौज्ञेयौ । तद्युद्धस्यपुनर्वक्ष्यमाण-

[ पा० ] १ ख.—छ. झ. ट. सर्वेसमरदुर्मदाः. २ झ. ञ. ट. श्रियार्दनैः. ३ इदमर्धं घ. ज. पाठयोर्दृश्यते. ४ क. ख. ग. ङ.—ट. सुदर्शनंनाग. ५ ख. ग. ङ. झ. ञ. ट. समायुक्तस्तूणीभिश्चाप्यलंकृतः. ६ क. ग. ङ.—ट. सज्वालस्सेन्द्रचापः. ७ इदमर्धं क. ख. पाठयोर्दृश्यते. ८ क. ख. घ.—ड. प्रभाभिरिवभासयन्.

स रराज रथे तस्मिन्राजसूनुर्महाबलः ॥ वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ॥ २८ ॥
हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम्[1] ॥ मनोजवं महाकायमारुरोह नरान्तकः ॥ २९ ॥
गृहीत्वा प्रासमुल्काभं विरराज नरान्तकः ॥ शक्तिमादाय तेजस्वी गुहः शिखिगतो यथा ॥ ३० ॥
देवान्तकः समादाय परिघं वज्रभूषणम् ॥ परिगृह्य गिरिं दोर्भ्यां वपुर्विष्णोर्विडम्बयन् ॥ ३१ ॥
महापार्श्वो महाकायो गदामादाय वीर्यवान् ॥ विरराज गदापाणिः कुबेर इव संयुगे ॥ ३२ ॥
[2]प्रतस्थिरे महात्मानो बलैरप्रतिमैर्वृताः ॥ सुरा इवामरावत्या बलैरप्रतिमैर्वृताः ॥ ३३ ॥
तान्गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिस्वनैः ॥ [3]अनुजग्मुर्म[4]हात्मानो राक्षसाः प्रवरायुधाः ॥ ३४ ॥
ते विरेजुर्महात्मानः कुमाराः सूर्यवर्चसः ॥ किरीटिनः श्रिया जुष्टा ग्रहा दीप्ता इवाम्बरे ॥ ३५ ॥
प्रगृहीता बभौ तेषां [5]शस्त्राणामावलिः सिता ॥ शारदाभ्रप्रतीकाशा हंसावलिरिवाम्बरे ॥ ३६ ॥
मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ॥ ३७ ॥
इति कृत्वा मतिं वीरा निर्जग्मुः संयुगार्थिनः ॥ ३८ ॥
जगर्जुश्च प्रणेदुश्च चिक्षिपुश्चापि सायकान् ॥ [6]जगृहुश्चापि ते वीरा निर्यान्तो युद्धदुर्मदाः ॥ ३९ ॥
[7]क्ष्वेलितास्फोटनिनदैश्चचाल च वसुंधरा ॥ रक्षसां सिंहनादैश्च [8]पुस्फोटेव तदाऽम्बरम् ॥ ४० ॥
तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः ॥ ददृशुर्वानरानीकं समुद्यतशि[9]लानगम् ॥ ४१ ॥
हरयोपि महात्मानो ददृशुर्नैर्ऋतं बलम् ॥ हस्त्यश्वरथसंबाधं किङ्किणीशतनादितम् ॥ ४२ ॥
नीलजीमूतसंकाशं समुद्यतमहायुधम् ॥ दीप्तानलरविप्रख्यैः सर्वतो नैर्ऋतैर्वृतम् ॥ ४३ ॥
तद्दृष्ट्वा बलमायातं लब्धलक्षाः प्लवङ्गमाः ॥ समुद्यतमहाशैलाः सं[10]प्रणेदुर्महाबलाः ॥
अमृष्यमाणा रक्षांसि प्रतिनर्दन्ति वानराः ॥ ४४ ॥
ततः समुद्धुष्टरवं निशम्य रक्षोगणा वानरयूथपानाम् ॥
अमृष्यमाणाः परहर्षमुग्रं महाबला भीमतरं विने[11]दुः ॥ ४५ ॥
ते राक्षसबलं घोरं प्रविश्य हरियूथपाः ॥ विचेरुरुद्यतैः शैलैर्नगाः शिखरिणो यथा ॥ ४६ ॥
केचिदाकाशमाविश्य केचिदुर्व्यां प्लवङ्गमाः ॥ रक्षस्सैन्येषु सं[12]क्रुद्धाश्चेरुर्द्रुमशिलायुधाः ॥
द्रुमांश्च विपुलस्कन्धान्गृह्य वानरपुङ्गवाः ॥ ४७ ॥

भासमानः । मेरुरिव बभावित्यन्वयः ॥ २७-३० ॥ देवान्तक इति ॥ अत्रापि विरराजेति संबध्यते । देवान्तकः परिघमादाय समुद्रमथने गिरिं मन्दरगिरिं । परिगृह्य तिष्ठतो विष्णोर्वपुर्विडम्बयन् विरराज ॥ ३१—३६ ॥ मरणं वेत्यर्धे निर्जग्मुरित्युपस्कार्यं ॥ ३७ ॥ इति कृत्वेत्यर्धे ॥ इत्थं कर्तव्यमित्येवंरूपां मतिं कृत्वेत्यर्थः ॥ ३८ ॥ जगर्जुः मेघध्वनिं चक्रुः । प्रणेदुः सिंहनादंचक्रुः । चिक्षिपुः क्षेपवचनान्यूचुः । सायकान् जगृहुरित्यन्वयः ॥ ३९—४३ ॥ लब्धलक्षाः लब्धपराक्रमविषयाः ॥ ४४—४६ ॥ संचारप्र-

त्वात् ॥ १६ ॥ **ति०** सुसंयुक्तं सुसंयुक्ताश्वं ॥ २६ ॥ **ति०** निश्चित्य निश्चयेन मरणंशत्रुपराजयंवा । करिष्यामइतिशेषः ॥ **स०** शत्रूणांपराजयंनिश्चित्य शत्रूणांमरणंवाभवेदितिमतिंकृत्वासंयुगार्थिनःसन्तःनिर्जग्मुः ॥ ३७—३८ ॥ **ति०** चिक्षिपुः शत्रुविषयाक्षेपवचनान्यूचुः ॥ ३९ ॥ **ति०** क्ष्वेलितास्फोटितानांच तैरित्यर्थः ॥ ४० ॥ **ती०** रक्षस्सैन्येषुविषयेसंक्रुद्धाःकेचित्प्लवङ्गमाः द्रुमशिलायुधाःसन्तः आकाशमाविश्यचेरुः । केचिद्वानरपुङ्गवाः विपुलस्कन्धान्द्रुमान् गृह्य गृहीत्वा । उर्व्यांचेरुरितियोजना

[ **पा०** ] १ ङ. झ. हेमभूषणं. २ क. ग. घ. ङ. ट. तेप्रतस्थुर्महा. ३ घ. ङ. झ. अनुपेतुः. ४ क. घ. च. छ. ञ. ट. महाकायाराक्षसाः. ५ ङ. झ. वस्त्राणामावलिःशिवा. ६ ग. ङ. झ. ट. जगृहुश्चमहात्मानोनिर्याताः. ७ ङ. झ. क्ष्वेलितास्फोटितानांचसंचचालेवमेदिनी. ८ ङ. झ. ञ. ट. संस्फोटितमिवांबरं. ९ क. ख. ज. ञ. ट. शिलायुधं. १० घ.—छ. झ. ञ. ट. संप्रणेदुर्मुहुर्मुहुः. ११ ङ.—झ. ट. प्रणेदुः. १२ ङ. झ. ञ. ट. संक्रुद्धाःकेचिद्द्रुम.

तद्युद्धमभवद्धोरं रक्षोवानरसंकुलम् ॥ ४८ ॥
ते पादपशिला[1]शैलैश्चक्रुर्वृष्टिमनूपमाम् ॥ बाणौघै[2]र्वार्यमाणाश्च हरयो भीमविक्रमाः ॥ ४९ ॥
सिंहनादान्विनेदुश्च रणे वानरराक्षसाः ॥ शिलाभिश्चूर्णयामासुर्यातुधानान्प्लवङ्गमाः ॥ ५० ॥
निजघ्नुः संयुगे क्रुद्धाः कवचाभरणावृतान् ॥ केचिद्रथगतान्वीरान्गजवाजिगतानपि ॥ ५१ ॥
निजघ्नुः सहसाप्लुत्य यातुधानान्प्लवङ्गमाः ॥ शैलशृङ्गाचिताङ्गाश्च मुष्टिभिर्वान्तलोचनाः ॥ ५२ ॥
चेरुः पेतुश्च नेदुश्च तत्र राक्षसपुङ्गवाः ॥ राक्षसाश्च शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान् ॥ ५३ ॥
शूलमुद्गरखड्गैश्च जघ्नुः प्रासैश्च शक्तिभिः ॥ अन्योन्यं पातयामासुः परस्परजयैषिणः ॥ ५४ ॥
रिपुशोणितदिग्धाङ्गास्तत्र वानरराक्षसाः ॥ ततः शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसैः ॥ ५५ ॥
मुहूर्तेनावृता भूमिरभव[3]च्छोणिताप्लुता ॥ विकीर्णपर्वताकारै रक्षोभिररिमर्दनैः ॥
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः ॥ ५६ ॥
आक्षिप्ताः क्षिप्यमाणाश्च [4]भग्नशूलाश्च वानरैः ॥ पुनरङ्गैस्तथा चक्रुरासन्ना युद्धमद्भुतम् ॥ ५७ ॥
वानरान्वानरैरेव जघ्नुस्ते रजनीचराः ॥ राक्षसान्राक्षसैरेव जघ्नुस्ते वानरा अपि ॥ ५८ ॥
आक्षिप्य च शिलास्तेषां निजघ्नू राक्षसा हरीन् ॥ तेषां चाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः ॥५९॥
निजघ्नुः [5]शैलशूलास्त्रैर्बिभिदुश्च परस्परम् ॥ सिंहनादान्विनेदुश्च रणे वानरराक्षसाः ॥ ६० ॥
छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः ॥ रुधिरं प्रस्रुतास्तत्र रससारमिव द्रुमाः ॥ ६१ ॥
रथेन च रथं चापि वारणेनैव वारणम् ॥ ६२ ॥
हयेन च हयं केचिन्निजघ्नुर्वानरा रणे ॥ प्रहृष्टमनसः सर्वे [6]प्रगृहीतमनःशिलाः ॥ ६३ ॥
हरयो राक्षसाञ्जघ्नुर्द्रुमैश्च बहुशाखिभिः ॥ तद्युद्धमभवद्धोरं रक्षोवानरसंकुलम् ॥ ६४ ॥
क्षुरप्रैरर्धचन्द्रैश्च भल्लैश्च निशितैः शरैः ॥ राक्षसा वानरेन्द्राणां [7]चिच्छिदुः पादपाञ्शिलाः ॥ ६५ ॥
[8]विकीर्णैः पर्वताग्रैश्च द्रुमैश्छिन्नैश्च संयुगे ॥ हतैश्च कपिरक्षोभिर्दुर्गमा वसुधाऽभवत् ॥ ६६ ॥
ते वानरा गर्वितहृष्टचेष्टाः संग्राममासाद्य भयं विमुच्य ॥
युद्धं तु सर्वे [9]सह राक्षसैस्तैर्नानायुधाश्चक्रुरदीनसत्त्वाः ॥ ६७ ॥

कारमेवाह—केचिदित्यादिसार्धश्लोक एकान्वयः ॥ द्रुमशिलायुधा इति स्वभावोक्तिः ॥४७—४८॥ अनूपमां अनुपमां ॥४९—५६॥ आक्षिप्ताःक्षिप्यमाणाश्चेति नियुद्धप्रकारकथनं । अङ्गैः हस्तपादादिभिः ॥ ५७—६०॥ छिन्नवर्मतनुत्राणाः छिन्नवर्मरूपतनुत्राणाः। रुधिरं प्रस्रुताः स्रुतवन्तः । मुमुचुरिति यावत् । रससारं निर्यासं ॥ ६१—६४ ॥ शिलाः शिलाश्चेत्यर्थः ॥ ६५—६६ ॥ गर्वितं हृष्टं च यथा भवति तथा

॥ ४७ ॥ **ती०** शैलशृङ्गाचिताङ्गाः गिरिशिखरैर्व्याप्तदेहाः । मुष्टिभिः मुष्टिप्रहारैः । वान्तलोचनाः बहिर्निर्गतलोचनाः ॥ ५२ ॥ **स०** छिन्नवर्मतनुत्राणाः छिन्नानि वर्मचतनुश्चत्राणंशरणंचेत्येतानियेषांते । 'त्राणंरक्षितेशरणेपिच' इतिविश्वः ॥ ६१ ॥ **ति०** पर्वतास्तैः निरस्तपर्वतैः द्रुमच्छिन्नैः छिन्नद्रुमैः । विकीर्णा व्याप्ता ॥ ६६ ॥

[ पा० ] १ क. ख. मनुत्तमां. २ ग. शैलशृङ्गनिपातैश्चमुष्टिभिश्चतलेनच. ३ ग. ङ. च. ज.—ट. च्छोणितोक्षिता. ४ ङ. झ. ट. भग्नशैलैश्च. च. ट. भग्नशैलाश्चवानराः. घ. भग्नशूलाश्चराक्षसाः. ५ ङ. झ. शैलशृङ्गैश्चबिभिदुश्च. क. ख. ञ. शैलशूलास्त्रैश्चिच्छिदुश्च. ६ क. ख. ग. ङ. ज. ट. प्रगृहीतमहाशिलाः. ७ ङ. ज. झ. ट. बिभिदुः. ८ ङ. ज. झ. ञ. विकीर्णाः पर्वतास्तैश्चद्रुमच्छिन्नैश्च. ९ ग. युधिराक्षसैस्तैः.

तस्मिन्प्रवृत्ते तुमुले विमर्दे प्रहृष्यमाणेषु वलीमुखेषु ॥
निपात्यमानेषु च राक्षसेषु महर्षयो देवगणाश्च नेदुः ॥ ६८ ॥
ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य ॥
नरान्तको वानरराजसैन्यं महार्णवं मीन इवाविवेश ॥ ६९ ॥
स वानरान्सप्त शतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद ॥
एकक्षणेनेन्द्ररिपुर्महात्मा जघान सैन्यं हरिपुङ्गवानाम् ॥ ७० ॥

ददृशुश्च महात्मानं हयपृष्ठे प्रतिष्ठितम् ॥ चरन्तं हरिसैन्येषु विद्याधरमहर्षयः ॥ ७१ ॥
स तस्य ददृशे मार्गो मांसशोणितकर्दमः ॥ पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥ ७२ ॥
यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुङ्गवाः ॥ तावदेतानतिक्रम्य निर्बिभेद नरान्तकः ॥ ७३ ॥
ज्वलन्तं प्रासमुद्यम्य संग्रामाग्रे नरान्तकः ॥ ददाह हरिसैन्यानि वनानीव विभावसुः ॥ ७४ ॥
यावदुत्पाटयामासुर्वृक्षाञ्शैलान्वनौकसः ॥ तावत्प्रासहताः पेतुर्वज्रकृत्ता इवाचलाः ॥ ७५ ॥
दिक्षु सर्वासु बलवान्विचचार नरान्तकः ॥ प्रमृद्नन्सर्वतो युद्धे प्रावृट्काले यथाऽनिलः ॥ ७६ ॥
न शेकुर्धावितुं वीरा न स्थातुं स्पन्दितुं भयात् ॥ उत्पतन्तं स्थितं यान्तं सर्वान्विव्याध वीर्यवान् ॥७७॥
एकेनान्तककल्पेन प्रासेनादित्यतेजसा ॥ भिन्नानि हरिसैन्यानि निपेतुर्धरणीतले ॥ ७८ ॥
वज्रनिष्पेषसदृशं प्रासस्याभिनिपातनम् ॥ न शेकुर्वानराः सोढुं ते विनेदुर्महास्वनम् ॥ ७९ ॥
पततां हरिवीराणां रूपाणि प्रचकाशिरे ॥ वज्रभिन्नाग्रकूटानां शैलानां पततामिव ॥ ८० ॥
ये तु पूर्वं महात्मानः कुम्भकर्णेन पातिताः ॥ ते स्वस्था वानरश्रेष्ठाः सुग्रीवमुपतस्थिरे ॥ ८१ ॥
विप्रेक्षमाणः सुग्रीवो ददर्श हरिवाहिनीम् ॥ नरान्तकभयत्रस्तां विद्रवन्तीमितस्ततः ॥ ८२ ॥
विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकम् ॥ गृहीतप्रासमायान्तं हयपृष्ठे प्रतिष्ठितम् ॥ ८३ ॥
अथोवाच महातेजाः सुग्रीवो वानराधिपः ॥ कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् ॥ ८४ ॥
गच्छ त्वं राक्षसं वीरो योसौ तुरगमास्थितः ॥ क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय ॥ ८५ ॥
स भर्तुर्वचनं श्रुत्वा निष्पपाताङ्गदस्ततः ॥ अनीकान्मेघसंकाशान्मेघानीकादिवांशुमान् ॥ ८६ ॥
शैलसंघातसंकाशो हरीणामुत्तमोऽङ्गदः ॥ रराजाङ्गदसन्नद्धः सधातुरिव पर्वतः ॥ ८७ ॥
निरायुधो महातेजाः केवलं नखदंष्ट्रवान् ॥ नरान्तकमभिक्रम्य वालिपुत्रोऽब्रवीद्वचः ॥ ८८ ॥
तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि ॥ अस्मिन्वज्रसमस्पर्शं प्रासं क्षिप ममोरसि ॥ ८९ ॥

चेष्टन्त इति गर्वितहृष्टचेष्टाः । नानायुधाः गृहीतराक्षसायुधा इत्यर्थः ॥ ६७ ॥ विमर्दे युद्धे ॥ ६८–६९ ॥ जघानेति । इत्थमिति शेषः ॥ ७०–७३ ॥ ज्वलन्तं ज्वलन्तमिव स्थितं । विभावसुः वह्निः ॥ ७४–७५ ॥ प्रमृद्नन् मर्दयन् ॥ ७६ ॥ न शेकुरिति । यतो हेतोरुत्पतन्तं स्थितं यान्तं च विव्याध अतः स्पन्दनादौ न शेकुरित्यर्थः ॥ ७७–८० ॥ कुम्भकर्णेन पातितानां नीलादीनामुत्तरत्र पौरुषकथनसांगत्यायैषां लब्धसंज्ञत्वमाह—ये त्विति ॥ ८१—८५ ॥ मेघसंकाशादिति निबिडत्वलक्षणसमानधर्मप्रयुक्तेयमुपमा । मेघानीकादित्यत्र तु निष्क्रमणापादानत्वधर्मप्रयुक्तेत्युपमाद्वयस्य निर्वाहः ॥ ८६ ॥ संघातः निबिडसंवेशः ।

ती० तस्यमार्गः तेनयुद्धार्थंगतोमार्गइत्यर्थः । पतितैर्वानरैरभिसंवृतःसन् । मांसशोणितकर्दमःसन् ददृशइतिसंबन्धः ॥ ७२ ॥
स० नखदंष्ट्रं प्राण्यङ्गत्वादेकवद्भावः । तद्वान् ॥ ८८ ॥

[ पा० ] १ ङ. झ. ट. भाषितुं. ख. च. ञ. द्रवितुं. २ ङ. च. झ. ञ. ट. भग्नानि. ३ क.—ट. दृष्ट्वोवाच. ४ घ. ङ. झ. ञ. ट. गच्छैनं. ५ क. ख. घ. वालिपुत्रोङ्गदोब्रवीत्. ६ क. ख. च. ञ. ट. तिष्ठलं. ७ क. ख. च. ञ. ट. हरिभिःकिं.

अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः ॥ संदश्य दशनैरोष्ठं विनिश्वस्य भुजङ्गवत् ॥ ९० ॥
अभिगम्याङ्गदं क्रुद्धो वालिपुत्रं नरान्तकः ॥९१ ॥
प्रासं समाविध्य तदाऽङ्गदाय समुज्ज्वलन्तं सहसोत्ससर्ज ॥
स वालिपुत्रोरसि वज्रकल्पे बभूव भग्नो न्यपतच्च भूमौ ॥ ९२ ॥
तं प्रासमालोक्य तदा विभग्नं सुपर्णकृत्तोरगभोगकल्पम्[1] ॥
तलं समुद्यम्य स वालिपुत्रस्तुरङ्गमं तस्य जघान मूर्ध्नि ॥ ९३ ॥
निमग्नतालुः स्फुटिताक्षितारो निष्क्रान्तजिह्वोचलसन्निकाशः ॥
स तस्य वाजी निपपात भूमौ तलप्रहारेण विशीर्णमूर्धा ॥ ९४ ॥
नरान्तकः क्रोधवशं जगाम हतं तुरङ्गं पतितं निरीक्ष्य ॥
स मुष्टिमुद्यम्य महाप्रभावो जघान शीर्षे युधि वालिपुत्रम् ॥ ९५ ॥
अथाङ्गदो मुष्टिविभिन्नमूर्धा[2] सुस्राव तीव्रं रुधिरं भृशोष्णम् ॥
मुहुर्विजज्वाल मुमोह चापि संज्ञां समासाद्य विसिष्मिये च ॥ ९६॥
अथाङ्गदो वज्रसमानवेगं[3] संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् ॥
निपातयामास तदा महात्मा नरान्तकस्योरसि वालिपुत्रः॥ ९७ ॥
स मुष्टिनिष्पिष्टविभिन्नवक्षा[4] ज्वालावमच्छोणितदिग्धगात्रः ॥
नरान्तको भूमितले पपात यथाऽचलो वज्रनिपातभग्नः ॥ ९८ ॥
अथान्तरिक्षे त्रिदशोत्तमानां वनौकसां चैव महाप्रणादः ॥
बभूव तस्मिन्निहतेऽग्र्यवीरे[5] नरान्तके वालिसुतेन सङ्ख्ये ॥ ९९ ॥
अथाङ्गदो राममनःप्रहर्षणं सुदुष्करं तत्कृतवान्हि[6] विक्रमम् ॥
विसिष्मिये सोप्यतिवीर्यविक्रमः[7] पुनश्च युद्धे स बभूव हर्षितः ॥ १०० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

अङ्गदसन्नद्धः सन्नद्धाङ्गदः ॥ ८७–९० ॥ अभिगम्येति । अयमुत्तरशेषः ॥ ९१—९७ ॥ ज्वालारूपेण वमता उद्गच्छता शोणितेन दिग्धगात्रः ॥ ९८–९९ ॥ तत्कृतवानित्यत्र तदित्यव्ययं पदं । तस्मादित्यर्थः । अङ्गदः हि यस्मात् । सुदुष्करं अतएव राममनःप्रहर्षणं विक्रमं कृतवान् । तस्मादित्यर्थः । विसिष्मिये । सोपीत्यत्र तच्छब्देन राममनःप्रहर्षणमित्यत्र गुणीभूतो रामशब्दः परामृश्यते । हर्षितः विस्मितेन रामेण श्लाघया तोषितः । स च अङ्गदश्च पुनः युद्धे बभूव । युद्धविषये सन्नद्धो बभूवेत्यर्थः ॥ १०० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

**कतक०** अत्रसर्गविच्छेदोबहुषुपुस्तकेषुनदृश्यतइत्यस्माभिरपिनकृतः । पूर्वोत्तरवाक्ययोरेककर्तृकयुद्धवर्णनात् ॥ १०० ॥ इत्येकोनसप्ततितमःसर्गः ॥ ६९ ॥

**[ पा० ]** १ ङ. झ. वीर्यकल्पं. २ ङ. झ. ट. मुष्टिविशीर्णमूर्धा. ३ ङ. झ. ट. मृत्युसमान. ४ ङ.—झ. निर्भिन्ननिमग्नवक्षाः. ५ क. ख. ग. न्निहतेऽतिवीर्ये. ६ क. ख. ग. ङ. झ. ञ. ट. तंकृतवान्हि. ७ ङ. च. झ. ञ. ट. सोप्यथ भीमकर्मा.

## सप्ततितमः सर्गः ॥ ७० ॥

हनुमन्नीलाभ्यांक्रमेणदेवान्तकयुद्धोन्मत्तयोर्वधः ॥ १ ॥ त्रिशिरसामुष्ट्यभिहतेनहनुमतातदीयखड्गाक्षेपेणतच्छिरस्त्रयकर्तनम् ॥ २ ॥ ऋषभनाम्नावानरवरेणमत्तनाम्नोराक्षसस्यवधः ॥ ३ ॥

नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैर्ऋतर्षभाः ॥ देवान्तकस्त्रिमूर्धा च पौलस्त्यश्च महोदरः ॥ १ ॥
आरूढो मेघसंकाशं वारणेन्द्रं महोदरः ॥ वालिपुत्रं महावीर्यमभिदुद्राव वीर्यवान् ॥ २ ॥
भ्रातृव्यसनसंतप्तस्तथा देवान्तको बली ॥ आदाय परिघं दीप्तमङ्गदं समभिद्रवत् ॥ ३ ॥
रथमादित्यसंकाशं युक्तं परमवाजिभिः ॥ आस्थाय त्रिशिरा वीरो वालिपुत्रमथाभ्ययात् ॥ ४ ॥
स त्रिभिर्देवदर्पघ्नैर्नैर्ऋतेन्द्रैरभिद्रुतः ॥ वृक्षमुत्पाटयामास महाविटपमङ्गदः ॥ ५ ॥
देवान्तकाय तं वीरश्चिक्षेप सहसाऽङ्गदः ॥ महावृक्षं महाशाखं शक्रो दीप्तमिवाशनिम् ॥ ६ ॥
त्रिशिरास्तं प्रचिच्छेद शरैराशीविषोपमैः ॥ स वृक्षं कृत्तमालोक्य उत्पपात तदाऽङ्गदः ॥ ७ ॥
स ववर्ष ततो वृक्षाञ्शैलांश्च कपिकुञ्जरः ॥ तान्प्रचिच्छेद संक्रुद्धस्त्रिशिरा निशितैः शरैः ॥ ८ ॥
परिघाग्रेण तान्वृक्षान्बभञ्ज च सुरान्तकः ॥ त्रिशिराश्चाङ्गदं वीरमभिदुद्राव सायकैः ॥ ९ ॥
गजेन समभिद्रुत्य वालिपुत्रं महोदरः ॥ जघानोरसि संक्रुद्धस्तोमरैर्वज्रसन्निभैः ॥ १० ॥
देवान्तकश्च संक्रुद्धः परिघेण तदाऽङ्गदम् ॥ उपगम्याभिहत्याशु व्यपचक्राम वेगवान् ॥ ११ ॥
स त्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत्समभिद्रुतः ॥ न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥ १२ ॥
स वेगवान्महावेगं कृत्वा परमदुर्जयः ॥ तलेन भृशमुत्पत्य जघानास्य महागजम् ॥ १३ ॥
तस्य तेन प्रहारेण नागराजस्य संयुगे ॥ पेततुर्लोचने तस्य विननाद स वारणः ॥ १४ ॥
विषाणं चास्य निष्कृष्य वालिपुत्रो महाबलः ॥ देवान्तकमभिप्लुत्य ताडयामास संयुगे ॥ १५ ॥
स विह्वलितसर्वाङ्गो वातोद्धूत इव द्रुमः ॥ लाक्षारससवर्णं च सुस्राव रुधिरं मुखात् ॥ १६ ॥
अथाश्वास्य महातेजाः कृच्छ्राद्देवान्तको बली ॥ आविध्य परिघं घोरमाजघान तदाऽङ्गदम् ॥ १७ ॥
परिघाभिहतश्चापि वानरेन्द्रात्मजस्तदा ॥ जानुभ्यां पतितो भूमौ पुनरेवोत्पपात ह ॥ १८ ॥
तमुत्पतन्तं त्रिशिरास्त्रिभिर्बाणैरजिह्मगैः ॥ घोरैर्हरिपतेः पुत्रं ललाटेऽभिजघान ह ॥ १९ ॥
ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुङ्गवैः ॥ हनुमानपि विज्ञाय नीलश्चापि प्रतस्थतुः ॥ २० ॥
ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा ॥ तद्रावणसुतो धीमान्बिभेद निशितैः शरैः ॥ २१ ॥
तद्बाणशतनिर्भिन्नं विदारितशिलातलम् ॥ सविस्फुलिङ्गं सज्वालं निपपात गिरेः शिरः ॥ २२ ॥
ततो जृम्भितमालोक्य हर्षाद्देवान्तकस्तदा ॥ परिघेणाभिदुद्राव मारुतात्मजमाहवे ॥ २३ ॥

पौलस्त्य इति त्रिमूर्धविशेषणं । न तु महोदरस्य । देवान्तकादयस्त्रयश्चुक्रुशुरिति संबन्धः ॥ १—२ ॥ समभिद्रवत् समभ्यद्रवत् ॥ ३–१० ॥ व्यपचक्राम पश्चादाजगाम ॥११—१२॥ अस्य महोदरस्य॥१३॥ तस्य अङ्गदस्य। तस्य नागराजस्येति द्वितीयतच्छब्दान्वयः ॥ १४ ॥ महाबलः वालिपुत्रः अस्य महोदरवाहनस्य गजस्य विषाणं निष्कृष्य अभिप्लुत्य वेगेन सन्निपत्य । देवान्तकं ताडयामासेति संबन्धः ॥ १५—२२ ॥ जृम्भितं भग्नमिति यावत् । जृम्भितं तद्ध-

[ पा० ] १ ङ. ज.—ट. समभिद्रुत्य. २ क. ख. ङ. झ. ट. मभिद्रुत्य. ३ ङ. झ. ञ. ट. महत्. ४ क. च.—ट. वेगादाजघान. ५ ङ. च. झ. ञ. ट. सविजृंभित. ६ क.—च. झ. ञ. ट. देवान्तकोबली.

तमापतन्तमुत्प्लुत्य हनुमान्मारुतात्मजः ॥ आजघान तदा मूर्ध्नि वज्रकल्पेन मुष्टिना ॥ २४ ॥
शिरसि प्रहरन्वीरस्तदा वायुसुतो बली ॥ नादेनाकम्पयच्चैव राक्षसान्स महाकपिः ॥ २५ ॥

स मुष्टिनिष्पिष्टविकीर्णमूर्धा निर्वान्तदन्ताक्षिविलम्बिजिह्वः ॥
देवान्तको राक्षसराजसूनुर्गतासुरुर्व्यां सहसा पपात ॥ २६ ॥
तस्मिन्हते राक्षसयोधमुख्ये महाबले संयति देवशत्रौ ॥
क्रुद्धस्त्रिमूर्धा निशिताग्रमुग्रं ववर्ष नीलोरसि बाणवर्षम् ॥ २७ ॥

महोदरस्तु संक्रुद्धः कुञ्जरं पर्वतोपमम् ॥ भूयः समधिरुह्याशु मन्दरं रश्मिवानिव ॥ २८ ॥
ततो बाणमयं वर्षं नीलस्योरस्यपातयत् ॥ गिरौ वर्षं [1]तडिच्चक्रचापवानिव तोयदः ॥ २९ ॥

ततः शरौघैरभिवर्ष्यमाणो विभिन्नगात्रः कपिसैन्यपालः ॥
नीलो बभूवाथ निसृष्टगात्रो विष्टम्भितस्तेन महाबलेन ॥ ३० ॥
ततस्तु नीलः प्रतिलभ्य संज्ञां शैलं समुत्पाट्य सवृक्षषण्डम् ॥
ततः समुत्पत्य भृशोग्रवेगो महोदरं तेन जघान मूर्ध्नि ॥ ३१ ॥
ततः स [2]शैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्विपेन ॥
विपोथितो भूमितले गतासुः पपात वज्राभिहतो यथाऽद्रिः ॥ ३२ ॥

पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे ॥ हनुमन्तं च संक्रुद्धो विव्याध निशितैः शरैः ॥ ३३ ॥
स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः ॥ त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ ३४ ॥
तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं [3]महाकपिः ॥ विससर्ज रणे तस्मिन्रावणस्य सुतं प्रति ॥ ३५ ॥
तमापतन्तमाकाशे द्रुमवर्षं प्रतापवान् ॥ त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ ३६ ॥
ततो हनूमानुत्प्लुत्य हयांस्त्रिशिरसस्तदा ॥ विददार नखैः क्रुद्धो गजेन्द्रं मृगराडिव ॥ ३७ ॥
अथ शक्तिं [4]समादाय कालरात्रिमिवान्तकः ॥ चिक्षेपानिलपुत्राय त्रिशिरा रावणात्मजः ॥ ३८ ॥
दिवः क्षिप्तामिवोल्कां तां शक्तिं क्षिप्तामसंगताम् ॥ गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥ ३९ ॥
तां दृष्ट्वा घोरसंकाशां शक्तिं भग्नां हनूमता ॥ प्रहृष्टा वानरगणा विनेदुर्जलदा इव ॥ ४० ॥
ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः ॥ [5]निजघान तदा व्यूढे वायुपुत्रस्य वक्षसि ॥ ४१ ॥
खड्गप्रहाराभिहतो हनूमान्मारुतात्मजः ॥ आजघान त्रिशिरसं तलेनोरसि वीर्यवान् ॥ ४२ ॥
स तलाभिहतस्तेन [6]स्रस्तहस्तायुधो भुवि ॥ निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ४३ ॥
स तस्य पततः खड्गं समाच्छिद्य महाकपिः ॥ ननाद गिरिसंकाशस्त्रासयन्सर्वनैर्ऋतान् ॥ ४४ ॥

---

नुर्दंष्ट्रेत्यादिवत् ॥ २३—२९ ॥ निसृष्टगात्रः शिथिलगात्रः । विष्टम्भितः स्तब्धीकृतः । एतन्निसृष्टत्वे हेतुः ॥ ३०—३१ ॥ विपोथितः हिंसितः ॥ ३२—३९ ॥ घोरसंकाशां भयंकरप्रकाशां ॥ ४० ॥ व्यूढे विशाले ॥ ४१—४२ ॥ त्यक्तचेतनः मूर्च्छित

---

**ती०** निर्वान्तदन्ताक्षिविलंबिजिह्वः दन्ताक्षीणिचविलंबिजिह्वाचतथा । निर्वान्ताः बहिर्निर्गताःदन्तादयोयस्येतितथा ॥ २६ ॥ **ति०** भूयःसमधिरुह्येति । युद्धागमनवेलायामारूढगजस्याङ्गदेनहतत्वादितिभावः ॥ २८ ॥ **ति०** तटिच्चक्रंचापमिन्द्रधनुश्चयस्यास्तिसः ॥ **स०** तटितांविद्युतांचक्रंसमूहोयस्मिंस्तत् ॥ २९ ॥ **ती०** असंगतां अनिवारितां ॥ **स०** असंगतां स्वसमीपमप्राप्तां

[ **पा०** ] १ ङ. ञ. ठ. तडिच्चक्रंसगर्जन्निवतोयदः. २ घ.—ञ. शैलाभिनिपात. ३ ङ. च. झ. ञ. ट. तदाकपिः. ४ ङ. च. झ. ञ. ट. समासाद्य. ५ घ. ङ. झ. निचखानतदाखड्गंवानरेन्द्रस्यवक्षसि. ख. च. ञ. ट. निजघानचखड्गेन. ग. निजघानतदावेगाद्वानरेन्द्रस्य. ६ क.—ङ. ज.—ट. स्रस्तहस्तांबरो.

अमृष्यमाणस्तं घोषमुत्पपात निशाचरः ॥ उत्पत्य च हनूमन्तं ताडयामास मुष्टिना ॥ ४५ ॥
तेन मुष्टिप्रहारेण संचुकोप महाकपिः ॥ कुपितश्च निजग्राह किरीटे राक्षसर्षभम् ॥
[ हनुमान्त्रोषताम्राक्षो राक्षसं परवीरहा ] ॥ ४६ ॥
स तस्य शीर्षाण्यसिना शितेन किरीटजुष्टानि सकुण्डलानि ॥
क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य त्वष्टुः सुतस्येव शिरांसि शक्रः ॥ ४७ ॥
तान्यायताक्षाण्यगसन्निभानि प्रदीप्तवैश्वानरलोचनानि ॥
पेतुः शिरांसीन्द्ररिपोर्धरण्यां ज्योतींषि मुक्तानि यथाऽर्कमार्गात् ॥ ४८ ॥
तस्मिन्हते देवरिपौ त्रिशीर्षे हनूमता शक्रपराक्रमेण ॥
नेदुः प्लवङ्गाः प्रचचाल भूमी रक्षांस्यथो दुद्रुविरे समन्तात् ॥ ४९ ॥
हतं त्रिशिरसं दृष्ट्वा तथैव च महोदरम् ॥ हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥ ५० ॥
चुकोप परमामर्षी मत्तो राक्षसपुङ्गवः ॥ जग्राहार्चिष्मतीं घोरां गदां सर्वायसीं शुभाम् ॥ ५१ ॥
हेमपट्टपरिक्षिप्तां मांसशोणितफेनिलाम् ॥ विराजमानां वपुषा शत्रुशोणितरञ्जिताम् ॥ ५२ ॥
तेजसा संप्रदीप्ताग्रां रक्तमाल्यविभूषिताम् ॥ ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ ५३ ॥
गदामादाय संक्रुद्धो मत्तो राक्षसपुङ्गवः ॥ हरीन्समभिदुद्राव युगान्ताग्निरिव ज्वलन् ॥ ५४ ॥
अथर्षभः समुत्पत्य वानरो रावणानुजम् ॥ मत्तानीकमुपागम्य तस्थौ तस्याग्रतो बली ॥ ५५ ॥
तं पुरस्तात्स्थितं दृष्ट्वा वानरं पर्वतोपमम् ॥ आजघानोरसि क्रुद्धो गदया वज्रकल्पया ॥ ५६ ॥
स तयाऽभिहतस्तेन गदया वानरर्षभः ॥ भिन्नवक्षाः समाधूतः सुस्राव रुधिरं बहु ॥ ५७ ॥
स संप्राप्य चिरात्संज्ञामृषभो वानरर्षभः ॥ [ क्रुद्धो विस्फुरमाणोष्ठो महापार्श्वमुदैक्षत ॥ ५८ ॥
स वेगवान्वेगवदभ्युपेत्य तं राक्षसं वानरवीरमुख्यः ॥
संवर्त्य मुष्टिं सहसा जघान बाह्वन्तरे शैलनिकाशरूपः ॥ ५९ ॥
स कृत्तमूलः सहसेव वृक्षः क्षितौ पपात क्षतजोक्षिताङ्गः ॥
तां चास्य घोरां यमदण्डकल्पां गदां प्रगृह्याशु तदा ननाद ॥ ६० ॥

---

इत्यर्थः ॥४३—४६॥ त्वष्टुः सुतः विश्वरूपः । "विश्वरूपो वै त्वाष्ट्रः पुरोहितः" इत्यादि श्रुतिप्रसिद्धः ॥ ४७ ॥ मुक्तानि अनुभूतपुण्यफलानि । अर्कमार्गात् आकाशात् ॥ ४८—४९ ॥ हतं त्रिशिरसमित्यादि चतुश्श्लोक्येकान्वया । मत्तः महापार्श्वः । मत्त इति महापार्श्वस्य नामान्तरं । मांसशोणितफेनिलामिति युद्धकालिकरूपं । शत्रुशोणितरञ्जितामिति पूर्वकालिकरूपं । महापद्मः पुण्डरीकाह्वयदिग्गजः ॥ ५०—५४ ॥ मत्तानीकं मत्तानीक इति च महापार्श्वस्य नामान्तरं ॥ ५५–५६ ॥ समाधूतः कम्पितः

---

॥ ३९ ॥ शि० भूमिश्चचाल हर्षेणचकंपे ॥ ४९ ॥ ति० युद्धोन्मत्तंमहोदरं तथैवच हतमितिशेषः । एतद्वधोहनूमताकृतइत्यनुवादबलाद्द्रष्टव्यं ॥ ५० ॥ इतिसप्ततितमःसर्गः ॥ ७० ॥

[ पा० ] १ इदमर्धं. क.—घ. च. पाठेषुदृश्यते. २ ङ. झ. दृष्ट्वायुद्धोन्मत्तंतथैवच. क. ग. च. छ. ज. ञ. ट. दृष्ट्वामहोदरमथापिच. घ. महापार्श्वंतथैवच. ३ क. ग. च. ज. ञ. ट. महापार्श्वोनिशाचरः. ४ क. च. छ. ज. ञ. ट. शोणितलेपनां. घ. शोणितलेपितां. ५ ग. घ. ङ. ज. झ. ट. विपुलां. ६ क. घ. ङ. च. झ. ट. शोणिततर्पितां. ख. शोणितरूषितां. ज. पक्षभयंकरां. ७ क. च. ज. ञ. ट. महापार्श्वोनिशाचरः. ८ क. ख. च. ञ. ट. वरुणात्मजः. ९ क. च. ज. ञ. महापार्श्वमुपा. १० झ. वानरेश्वरः. ११ क्रुद्धोविस्फुरमाणोष्ठइत्यादयःधातेभइवाद्रिराजइत्यन्ताःश्लोकाः क. ख. ङ. च. झ. ञ. ट. पाठेषु अधिकाद्दृश्यन्ते.

मुहूर्तमासीत्स गतासुकल्पः प्रत्यागतात्मा सहसा सुरारिः ।
उत्पत्य संध्याभ्रसमानवर्णस्तं वारिराजात्मजमाजघान ॥ ६१ ॥
स मूर्च्छितो भूमितले पपात मुहूर्तमुत्पत्य पुनः ससंज्ञः ।
तामेव तस्याद्रिवराद्रिकल्पां गदां समाविध्य जघान संख्ये ॥ ६२ ॥
सा तस्य रौद्रा समुपेत्य देहं रौद्रस्य देवाध्वरविप्रशत्रोः ॥
बिभेद वक्षः क्षतजं च भूरि सुस्राव धात्वंभ इवाद्रिराजः] ॥ ६३ ॥

[1]अभिदुद्राव वेगेन गदां तस्य महात्मनः ॥ ६४ ॥
गृहीत्वा तां गदां भीमामाविध्य च पुनः पुनः ॥ [2]मत्तानीकं महात्मानं जघान रणमूर्धनि ॥६५॥
स स्वया गदया भग्नो विशीर्णदशनेक्षणः ॥ निपपात ततो मत्तो वज्राहत इवाचलः ॥ ६६ ॥
विशीर्ण[3]नयने भूमौ गतसत्त्वे गतायुषि ॥ पतिते राक्षसे तस्मिन्विद्रुतं राक्षसं बलम् ॥ ६७ ॥
[ [4]उन्मत्तस्तु तदा दृष्ट्वा गतासुं भ्रातरं रणे ॥ चुकोप परमक्रुद्धः प्रलयाग्निसमद्युतिः ॥ ६८ ॥

ततः समादाय गदां स वीरो वित्रासयन्वानरसैन्यमुग्रम् ॥
दुद्राव वेगेन तु सैन्यमध्ये दहन्यथा वह्निरतिप्रचण्डः ॥ ६९ ॥

आपतन्तं तदा दृष्ट्वा राक्षसं भीमविक्रमम् ॥ शैलमादाय दुद्राव गवाक्षः पर्वतोपमः ॥ ७० ॥
जिघांसू राक्षसं भीमं तं शैलेन महाबलः ॥ आपतन्तं तदा दृष्ट्वा उन्मत्तोपि महागिरिम् ॥ ७१ ॥
चिच्छेद गदया वीरः शतधा तत्र संयुगे ॥ चूर्णीकृतं गिरिं दृष्ट्वा रक्षसा कपिकुञ्जरः ॥ ७२ ॥
विस्मितोऽभून्महाबाहुर्जगर्ज च मुहुर्मुहुः ॥ उन्मत्तस्तु सुसंक्रुद्धो ज्वलन्तीं राक्षसोत्तमः ॥ ७३ ॥
गदामादाय वेगेन कपेर्वक्षस्यताडयत् ॥ स तया गदया वीरस्ताडितः कपिकुञ्जरः ॥ ७४ ॥
पपात भूमौ निस्संज्ञः सुस्राव रुधिरं बहु ॥ पुनः संज्ञामथास्थाय वानरः स समुत्थितः ॥ ७५ ॥
तलेन ताडयामास ततस्तस्य शिरः कपिः ॥ तेन प्रताडितो वीरो राक्षसः पर्वतोपमः ॥ ७६ ॥
विस्रस्तदन्तनयनो निपपात महीतले ॥ सुस्राव रुधिरं सोष्णं गतासुश्च ततोऽभवत् ] ॥ ७७ ॥

तस्मिन्हते भ्रातरि रावणस्य तन्नैर्ऋतानां बलमर्णवाभम् ॥
त्यक्तायुधं [5]केवलजीवितार्थं दुद्राव भिन्नार्णवसन्निकाशम् ॥ ७८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

॥५७—६३॥ गदामभिदुद्राव गदां ग्रहीतुं दुद्रावेत्यर्थः ॥ ६४—७७ ॥ केवलजीवितार्थं यशोरहितजीवनार्थं । भिन्नार्णवसन्निकाशमिति क्रियाविशेषणं ॥७८॥

इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

---

[ पा० ] १ ञ. सोभिदुद्राव. क. अभिजग्राह. २ च. ज. ञ. महापार्श्वमहानादो. ङ. झ. ट. मत्तानीकंमहात्मास. ३ कं. ङ. झ. ट. विशीर्णनयनोभूमौगतसत्वोगतायुषः. ४ उन्मत्तस्त्वित्यादयः गतासुश्चततोऽभवत्. इत्यन्ताःश्लोकाःक.—ट. पाठेषुन दृश्यन्ते. औत्तराहपाठएवोपलभ्यन्ते. ५ ग. केवलजीविताशं.

## एकसप्ततितमः सर्गः ॥ ७१ ॥

भ्रातृनिधनरुष्टे अतिकायेसेनामध्यप्रविष्टे तस्मिन्कुंभकर्णत्वभ्रमेण वानरेषुभयाद्विद्रवमाणेषु रामेण तद्गथायुधादिवर्णनपूर्वकंविभीषणंप्रति तत्स्वरूपप्रश्नः ॥ १ ॥ विभीषणेनरामंप्रति विस्तरेणतत्पराक्रमादिनिवेदनम् ॥ २ ॥ अतिकायेनरामंप्रति गर्वोक्त्यायुद्धप्रार्थने लक्ष्मणेन तत्प्रतिरोधनम् ॥ ३ ॥ ततस्तयोर्वीरवादपुरस्सरंसमारंभः ॥ ४ ॥ लक्ष्मणेनास्त्रप्रत्यस्त्रप्रयोगपूर्वकं निशिततरशरगणप्रयोगेपि ब्रह्मवरादभेद्यकवचएवसत्यतिकाये अन्तरिक्षेऽन्तर्हितवायुवचनाद्ब्रह्मास्त्रेण तच्छिरश्छेदनम् ॥ ५ ॥

स्वबलं व्यथितं दृष्ट्वा तुमुलं रोमहर्षणम् ॥ भ्रातॄंश्च निहतान्दृष्ट्वा शक्रतुल्यपराक्रमान् ॥ १ ॥
पितृव्यौ चापि संदृश्य समरे संनिषूदितौ ॥ युद्धोन्मत्तं च मत्तं च भ्रातरौ राक्षसर्षभौ ॥ २ ॥
चुकोप च महातेजा ब्रह्मदत्तवरो युधि ॥ अतिकायोद्रिसंकाशो देवदानवदर्पहा ॥ ३ ॥
स भास्करसहस्रस्य संघातमिव भास्वरम् ॥ रथमास्थाय शक्रारिरभिदुद्राव वानरान् ॥ ४ ॥
स विस्फार्य महच्चापं किरीटी मृष्टकुण्डलः ॥ नाम विश्रावयामास ननाद च महास्वनम् ॥ ५ ॥
तेन सिंहप्रणादेन नामविश्रावणेन च ॥ ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६ ॥
ते दृष्ट्वा देहमाहात्म्यं कुम्भकर्णोऽयमुत्थितः ॥ भयार्ता वानराः सर्वे संश्रयन्ते परस्परम् ॥ ७ ॥
ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे ॥ भयाद्वानरयूथास्ते विद्रवन्ति ततस्ततः ॥ ८ ॥
तेऽतिकायं समासाद्य वानरा मूढचेतसः ॥ शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ॥ ९ ॥
ततोतिकायं काकुत्स्थो रथस्थं पर्वतोपमम् ॥ ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥ १० ॥
स तं दृष्ट्वा महात्मानं राघवस्तु विसिष्मिये ॥ वानरान्सान्त्वयित्वाऽथ विभीषणमुवाच ह ॥ ११ ॥
कोसौ पर्वतसंकाशो धनुष्मान्हरिलोचनः ॥ युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ॥ १२ ॥
य एष निशितैः शूलैः सुतीक्ष्णैः प्रासतोमरैः ॥ अर्चिष्मद्भिर्वृतो भाति भूतैरिव महेश्वरः ॥ १३ ॥
कालजिह्वाप्रकाशाभिर्य एषोतिविराजते ॥ आवृतो रथशक्तीभिर्विद्युद्भिरिव तोयदः ॥ १४ ॥
धनूंषि चास्य सज्यानि हेमपृष्ठानि सर्वशः ॥ शोभयन्ति रथश्रेष्ठं शक्रचाप इवाम्बरम् ॥ १५ ॥

---

स्वबलमित्यादि । भ्रातरौ अन्योन्यं भ्रातरौ ॥ १–४ ॥ मृष्टकुण्डलः शुद्धकुण्डलः ॥ ५–६ ॥ माहात्म्यं महत्त्वं । उत्थित इत्यनन्तरमितिकरणं द्रष्टव्यं ॥ ७–११ ॥ हरिलोचनः सिंहदृष्टिः ॥ १२–१३ ॥ रथशक्तीभिः

---

ति० भ्रातरौ अन्योन्यंभ्रातरौ ॥ एतदुक्तिःपरस्परसौहार्दातिशयप्रदर्शनाय ॥ २ ॥ ति० परस्परंसंश्रयन्ते । रक्षणार्थमिति शेषः ॥ ७ ॥ ती० तेतस्यरूपमालोक्यतेविद्रवन्तीतितच्छब्दद्वयान्वयः ॥ ति० तेरूपमालोक्य तेइव वानराइव विद्रवन्तीतितच्छब्दद्वयनिर्वाहः । इवेतिशेषः ॥ स० तेवानराः विद्रवन्ति व्यद्रवन् । वानरयोधास्ते वानरयोधाअस्तायस्मिंस्तस्मिन्रणमण्डले । अस्तं भावेक्तः । वानरयोधानामसनेसतित्रायकाभावात्ततस्ततोव्यद्रवन्नितिभावः । येयेतस्यरूपमालोक्यस्थितास्तेतेसर्वेततस्ततोविद्रवन्तीत्यन्वयेन तेद्वयंसार्थकमितिवा । नचभिन्नार्थगतयोस्तेशब्दयोःकथमैकस्थल्यसंपादनेनवीप्सात्वमितिवाच्यं । 'येयजत्रायईज्याः' इत्यादिवदन्वयमुखेनैकस्थल्योपपत्तेः । 'ते रूपमालोक्य तइव वानराइवविद्रवन्तीतितच्छब्दद्वयनिर्वाहः । इवेतिशेषः' इतिनागोजिभट्टः । तेतस्यरूपमालोक्य ते विद्रवन्तीतितच्छब्दद्वयस्यनिर्वाहइतितीर्थश्च । द्वयोर्भावोबिन्दुविभावनीयः ॥ ८ ॥ स० हरिलोचनः सिंहदृष्टिर्मर्कटदृष्टिर्वा हरिष्वेवलोचनंयस्येतिवा ॥ १२ ॥ स० यः कइत्यर्थः । 'यतश्चोदेतिसूर्यः' इत्यादिव-

[ पा० ] १ ङ. झ. संनिपातितौ. २ ङ. च. ज. झ. ञ. मारुह्य. ३ घ. ङ. झ. महाकायं. ४ क. ख. ङ. झ. ञ. ट. राघवस्तुसुविस्मितः. घ. राघवस्तस्यविस्मितः. ५ ख. घ. एषभुविराजते.

क एष रक्षःशार्दूलो रणभूमिं विराजयन् ॥ अभ्येति रथिनां श्रेष्ठो रथेनादित्यतेजसा ॥ १६ ॥
ध्वजशृङ्गप्रतिष्ठेन राहुणाभिविराजते ॥ सूर्यरश्मिनिभैर्बाणैर्दिशो दश विराजयन् ॥ १७ ॥
त्रिणतं मेघनिर्ह्रादं हेमपृष्ठमलङ्कृतम् ॥ शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥ १८ ॥
सध्वजः सपताकश्च सानुकर्षो महारथः ॥ चतुःसादिसमायुक्तो मेघस्तनितनिस्वनः ॥ १९ ॥
विंशतिर्दश चाष्टौ च तूण्योस्य रथमास्थिताः ॥ कार्मुकानि च भीमानि ज्याश्च काञ्चनपिङ्गलाः ॥ २० ॥
द्वौ च खड्गौ रथगतौ पार्श्वस्थौ पार्श्वशोभितौ ॥ चतुर्हस्तत्सरुयुतौ व्यक्तहस्तदशायतौ ॥ २१ ॥
रक्तकण्ठगुणो धीरो महापर्वतसन्निभः ॥ कालः कालमहावक्त्रो मेघस्थ इव भास्करः ॥ २२ ॥
काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभते ॥ शृङ्गाभ्यामिव तुङ्गाभ्यां हिमवान्पर्वतोत्तमः ॥ २३ ॥
कुण्डलाभ्यां तु यस्यैतद्भाति वक्त्रं शुभेक्षणम् ॥ पुनर्वस्वन्तरगतं पूर्णं बिम्बमिवैन्दवम् ॥ २४ ॥
आचक्ष्व मे महाबाहो त्वमेनं राक्षसोत्तमम् ॥ यं दृष्ट्वा वानराः सर्वे भयार्ता विद्रुता दिशः ॥२५॥
स पृष्टो राजपुत्रेण रामेणामिततेजसा ॥ आचचक्षे महातेजा राघवाय विभीषणः ॥ २६ ॥
दशग्रीवो महातेजा राजा वैश्रवणानुजः ॥ भीमकर्मा महोत्साहो रावणो राक्षसाधिपः ॥ २७ ॥
तस्यासीद्वीर्यवान्पुत्रो रावणप्रतिमो रणे ॥ वृद्धसेवी श्रुतिधरः सर्वास्त्रविदुषां वरः ॥ २८ ॥
अश्वपृष्ठे रथे नागे खड्गे धनुषि कर्षणे ॥ भेदे सान्त्वे च दाने च नये मन्त्रे च संमतः ॥ २९ ॥
यस्य बाहू समाश्रित्य लङ्का वसति निर्भया ॥ तनयं धान्यमालिन्या अतिकायमिमं विदुः ॥ ३० ॥
एतेनाराधितो ब्रह्मा तपसा भावितात्मना ॥ अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः ॥ ३१ ॥
सुरासुरैरवध्यत्वं दत्तमस्मै स्वयंभुवा ॥ एतच्च कवचं दिव्यं रथश्चैषोर्कभास्वरः ॥ ३२ ॥
एतेन शतशो देवा दानवाश्च पराजिताः ॥ रक्षितानि च रक्षांसि यक्षाश्चापि निषूदिताः ॥ ३३ ॥
वज्रं विष्टम्भितं येन बाणैरिन्द्रस्य धीमतः ॥ पाशः सलिलराजस्य रणे प्रतिहतस्तथा ॥ ३४ ॥
एषोतिकायो बलवान्राक्षसानामथर्षभः ॥ रावणस्य सुतो धीमान्देवदानवदर्पहा ॥ ३५ ॥
तदस्मिन्क्रियतां यत्नः क्षिप्रं पुरुषपुङ्गव ॥ पुरा वानरसैन्यानि क्षयं नयति सायकैः ॥ ३६ ॥

रथस्थिताभिः शक्तिभिः ॥ १४–१६॥ ध्वजशृङ्गप्रतिष्ठेनेति ॥ अनेन राहुध्वजोयमित्युक्तं ॥ १७ ॥ त्रिणतं त्रिषुआद्यन्तयोर्मध्ये च नतं । मेघनिर्ह्रादं मेघतुल्यज्यास्वनं । हेमपृष्ठं हेमलिप्तपार्श्वमित्यर्थः । धनुः रथस्थेभ्यः अन्यत् करधृतमिदं ॥ १८ ॥ ध्वजः असाधारणकेतनं । पताका साधारणी । अनुकर्षः रथाधःस्थदारु । चतुःसादिसमायुक्तः चतुःसारथियुक्तः ॥ १९ ॥ कार्मुकाणि धनुर्भेदा इति न पौनरुक्त्यं ॥ २० ॥ पार्श्वशोभितौ पार्श्वाभ्यां शोभितौ । चतुर्हस्तत्सरुयुतौ चतुर्हस्तप्रमाणत्सरुयुक्तौ । "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः । व्यक्तहस्तदशायतौ व्यक्तौ च तौ हस्तदशायतौ चेति तथा ॥ २१ ॥ रक्तकण्ठगुणः रक्तकण्ठमाल्यः । कालमहावक्त्रः कालस्येव महावक्त्रं यस्य स तथोक्तः । काल इव महावक्त्र इति वा ॥ २२—२७ ॥ तस्येत्यादिश्लोकद्वयं ॥ नये युक्तौ । मन्त्रे विचारे ॥ २८–३३ ॥ वज्रमित्यादिश्लोकद्वयं ॥ विष्टम्भितं निश्चलीकृतं । राक्षसानामथर्षभ इत्यत्राथशब्दः कार्त्स्न्ये ॥ ३४—३५ ॥ पुरा नयति

यच्छब्दःकिमर्थे ॥ १३ ॥ स० उभाभ्यांकुण्डलाभ्यां एकैकस्मिन्कर्णेउभाभ्यां । अतोनोभाभ्यामधिकं ॥ २४ ॥ ती० अश्वरथगजस्थानांक्रमेणप्रतिनियतायुधान्याह—खड्गेधनुषिकर्षणइति । कृष्यतेऽनेनेतिकर्षणःपाशादिः । तोमरभेदोवा ॥ २९ ॥

[ पा० ] १ ङ. च. झ. ट. खड्गौचपार्श्वस्थौप्रदीप्तौपार्श्वशोभितौ. २ क.—च. झ. ञ. ट. त्सरुचितौ. ३ ङ. झ. कुण्डलाभ्यामुभाभ्यांचभातिवक्त्रंसुभीषणं. ४ ग. च. झ. ञ. ट. गतःपरिपूर्णोनिशाकरः. क. ख. घ. ङ. गतःप्रतिपूर्णोनिशाकरः. ५ ङ. च. झ. ञ. ट. महात्माहि, ग. महेष्वासो. ६ ग.—ट. बले. ७ झ. ञ. ट. नागपृष्ठे. ८ ङ. ट. कर्मणि. ९ ङ. च. झ. ञ. ट. भवति. १० ग. ङ. झ. ञ. ट. धीमता.

ततोतिकायो बलवान्प्रविश्य हरिवाहिनीम् ॥ विस्फारयामास धनुर्ननाद च पुनः पुनः ॥ ३७ ॥
तं भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरम् ॥ अभिपेतुर्महात्मानो ये प्रधाना वनौकसः ॥ ३८ ॥
कुमुदो द्विविदो मैन्दो नीलः शरभ एव च ॥ पादपैर्गिरिशृङ्गैश्च युगपत्समभिद्रवन् ॥ ३९ ॥
तेषां वृक्षांश्च शैलांश्च शरैः काञ्चनभूषणैः ॥ अतिकायो महातेजाश्चिच्छेदास्त्रविदां वरः ॥ ४० ॥
तांश्चैव सर्वान्स हरीञ्शरैः सर्वायसैर्बली ॥ विव्याधाभिमुखः सङ्ख्ये भीमकायो निशाचरः ॥ ४१ ॥
तेऽर्दिता बाणवर्षेण भग्नगात्राः प्लवङ्गमाः ॥ न शेकुरतिकायस्य प्रतिकर्तुं महारणे ॥ ४२ ॥
तत्सैन्यं हरिवीराणां त्रासयामास राक्षसः ॥ मृगयूथमिव क्रुद्धो हरिर्यौवनदर्पितः ॥ ४३ ॥

स राक्षसेन्द्रो हरिसैन्यमध्ये नायुध्यमानं निजघान कंचित् ॥
उपेत्य रामं सधनुः कलापी सगर्वितं वाक्यमिदं बभाषे ॥ ४४ ॥
रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कंचन योधयामि ॥
यैश्चास्ति कश्चिद्व्यवसाययुक्तो ददातु मे क्षिप्रमिहाद्य युद्धम् ॥ ४५ ॥
तत्तस्य वाक्यं ब्रुवतो निशम्य चुकोप सौमित्रिरमित्रहन्ता ॥
अमृष्यमाणश्च समुत्पपात जग्राह चापं च ततः स्मयित्वा ॥ ४६ ॥

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् ॥ पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४७ ॥
पूरयन्स महीं शैलानाकाशं सागरं दिशः ॥ ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन्रजनीचरान् ॥ ४८ ॥
सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा ॥ विसिष्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९ ॥
अथातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् ॥ आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ५० ॥
बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः ॥ गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥ ५१ ॥
न हि मद्बाहुसृष्टानामस्त्राणां हिमवानपि ॥ सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५२ ॥
सुखप्रसुप्तं कालाग्निं निबोधयितुमिच्छसि ॥ न्यस्य चापं निवर्तस्व मा प्राणाञ्जहि मद्गतः ॥ ५३ ॥
अथ वा त्वं प्रतिष्टब्धो न निवर्तितुमिच्छसि ॥ तिष्ठ प्राणान्परित्यज्य गमिष्यसि यमक्षयम् ॥५४॥
पश्य मे निशितान्बाणानरिदर्पनिषूदनान् ॥ ईश्वरायुधसंकाशांस्तप्तकाञ्चनभूषणान् ॥ ५५ ॥
एष ते सर्पसंकाशो बाणः पास्यति शोणितम् ॥ मृगराज इव क्रुद्धो नागराजस्य शोणितम् ॥
इत्येवमुक्त्वा संक्रुद्धः शरं धनुषि संदधे ॥ ५६ ॥

नेष्यतीत्यर्थः ॥ ३६–३८ ॥ समभिद्रवन् । आगमशासनस्यानित्यत्वादडभावः ॥ ३९—४० ॥ अभिमुखः स्थित इति शेषः ॥ ४१—४२ ॥ हरिः सिंहः ॥ ४३ ॥ कलापी तूणीरवान् । "कलापो भूषणे बर्हे तूणीरे संहतावपि" इत्यमरः । सगर्वितं सगर्वं ॥ ४४ ॥ व्यवसायः उत्साहः ॥ ४५ ॥ स्मयित्वा अनादृत्य । "ष्मिङ् अनादरे" इति धातुः ॥ ४६—४७ ॥ त्रासयन् अभूदिति शेषः ॥ ४८ ॥ प्रतिभयं । "भयंकरं प्रतिभयं" इत्यमरः ॥ ४९–५२ ॥ निबोधयितुं ज्वलयितुं । मा जहि मा हिंसीः । "हन्तेर्जः" इति जादेशः । मद्गतः मां प्राप्तः ॥५३॥ प्रतिष्टब्धः प्रतिमुखं स्थितः ॥ ५४ ॥ ईश्वरायुधं

स० यौवनदर्पितइतिराक्षसविशेषणं । नमृगयूथमथनेसिंहस्यतारुण्यमपेक्षितं । स्वप्नेपिवा चित्रितस्यवासिंहस्यदर्शनमात्रेणगजादिमारकस्यकियान्मृगवधस्तस्येतितत्रतस्यासंभवदन्वयत्वात् । "सिंहीगर्भविनिस्सृतंतदुपरिक्रोधात्पतन्तंशिशुं" इत्यादिकवितापि नानुकूलानागोजिभट्टस्यास्माकमिवेतिदिक् ॥ ४३ ॥ स० अयुध्यमानंकंचननजघान । एतेनश्रुतधरइत्यादिनासूचितंधर्मिष्ठत्वं ध्वनितं ॥ ४४ ॥ ति० यस्यशक्तिरस्ति व्यवसाययुक्तश्चयः सयुद्धंददातु ॥ ४५ ॥

[ पा० ] १ क. ख. घ. ङ. ज. झ. ट. मुखान्सङ्ख्ये. २ क. ङ.—ट. विशारदः. ३ क. ख. घ. ङ. झ. ञ. ट. यस्यास्तिशक्तिर्व्यवसाय. ४ ङ. झ. ञ. ट. महींसर्वामाकाशं.

श्रुत्वाऽतिकायस्य वचः सरोषं सगर्वितं संयति राजपुत्रः ॥
स संचुकोपातिबलो बृहच्छ्रीरुवाच वाक्यं च ततो महार्थम् ॥ ५७ ॥
न वाक्यमात्रेण भवान्प्रधानो न कत्थनात्सत्पुरुषा भवन्ति ॥
मयि स्थिते धन्विनि बाणपाणौ निदर्शय स्वात्मबलं दुरात्मन् ॥ ५८ ॥
कर्मणा सूचयात्मानं न विकत्थितुमर्हसि ॥ पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥ ५९ ॥
सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः ॥ शरैर्वा यदि वाऽप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ६० ॥
ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः ॥ मारुतः कालसंपक्वं वृन्तात्तालफलं यथा ॥ ६१ ॥
अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः ॥ पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥ ६२ ॥
बालोऽयमिति विज्ञाय न माऽवज्ञातुमर्हसि ॥ ६३ ॥
बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे॥ बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिभिः क्रमैः ॥६४॥
लक्ष्मणस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ॥ अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ॥ ६५ ॥
ततो विद्याधरा भूता देवा दैत्या महर्षयः ॥ गुह्यकाश्च महात्मानस्तद्युद्धं द्रष्टुमागमन् ॥ ६६ ॥
ततोतिकायः कुपितश्चापमारोप्य सायकम् ॥ लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ॥ ६७ ॥
तमापतन्तं निशितं शरमाशीविषोपमम् ॥ अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ६८ ॥
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम् ॥॥ अतिकायो भृशं क्रुद्धः पञ्च बाणान्समाददे ॥ ६९ ॥
ताञ्शरान्संप्रचिक्षेप लक्ष्मणाय निशाचरः ॥ तानप्राप्ताञ्शरैस्तीक्ष्णैश्चिच्छेद भरतानुजः ॥ ७० ॥
[ पञ्चभिः पञ्च चिच्छेद पावकार्कसमप्रभैः ॥ ]
स ताञ्छित्त्वा शरैस्तीक्ष्णैर्लक्ष्मणः परवीरहा ॥ आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥ ७१ ॥
तमादाय धनुःश्रेष्ठे योजयामास लक्ष्मणः ॥ विचकर्ष च वेगेन विससर्ज च वीर्यवान् ॥ ७२ ॥
पूर्णायतविसृष्टेन शरेण नतपर्वणा ॥ ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ॥ ७३ ॥
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः ॥ ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले ॥ ७४ ॥
राक्षसः प्रचकम्पे च लक्ष्मणेषुप्रपीडितः ॥ रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम् ॥ ७५ ॥
चिन्तयामास चाश्वास्य विमृश्य च महाबलः ॥ साधु बाणनिपातेन श्लाघनीयोसि मे रिपुः ॥७६॥

त्रिशूलं ॥ ५५—५७ ॥ कत्थनात् आत्मश्लाघनात् । सत्पुरुषाः शूरपुरुषाः ॥५८—६०॥ वृन्तात् प्रसवबन्धनात् । "वृन्तं प्रसवबन्धनं" इत्यमरः ॥ ६१ ॥ बाणशल्यान्तरोत्थितमिति । बाणशल्यान्तराणि बाणशल्यकृतान्यन्तराणि ॥ ६२—६३ ॥ मृत्युं जानीहि । मामिति शेषः ॥ ६४—६६ ॥ सायकं चापमारोप्य बाणं धनुषि संधायेत्यर्थः । संक्षिपन्निव बाणवेगेनान्तरावस्थितमाकाशं ग्रसन्निवेत्यर्थः ॥ ६७—७२ ॥ पूर्णायतेन पूर्णाकृष्टेन । विसृष्टेन क्षिप्तेन । नतपर्वणा निलीनपर्वणा । ऋजुनेति यावत् ॥ ७३ ॥ अक्तः लिप्तः ॥ ७४ ॥ त्रिपुरगोपुरं त्रिपुरद्वारं ॥ ७५ ॥ चिन्तयामासेत्यादिश्लोकद्वयमेकान्वयं ॥ विमृश्य करणीयं निर्धार्य । बाणनिपातेन मे साधु श्लाघनीयो रिपुरसीति । एवं लक्ष्मणं विधाय अभिधाय । आस्यं

स० बृहच्छ्रीः महाकान्तिः । मनस्वी प्रशस्तमनाः । द्वाभ्यामप्यभीततांद्योतयति ॥ ५७ ॥ स० शूरस्तुसएव ॥ ५९ ॥ स० रथमास्थितइत्यनेन प्रतियोध्रपेक्षयामहासाहितीसहिततांद्योतयति ॥ ६० ॥ स० कालसंयुक्तं पक्वतादशापन्नं । अन्यत्रमृत्युकालसंयुक्तं ॥ ६१ ॥ ति० बालेनेति । वामनेनेत्यर्थः ॥ ६४ ॥

[ पा० ] १ ङ. झ. ट. मनस्वीउवाच. २ ङ. झ. ट. बृहच्छ्रीः. क. महात्मा. ३ ङ.—ट. कालसंयुक्तं. ४ क. ग. ङ. च. झ. ञ. ट. ददृशुस्तदा. ५ इदमर्धं ख. च. छ. पाठेषुदृश्यते. ६ क. घ. ङ. झ. ञ. ट. विससर्जचसायकं. ७ ग. विश्रम्यच.

विधायैवं विनम्यास्यं[1] नियम्य च भुजावुभौ ॥ स रथोपस्थमास्थाय रथे च प्रचचार ह ॥ ७७ ॥
एकं त्रीन्पञ्च सप्तेति सायकान्राक्षसर्षभः ॥ आददे संदधे चापि विचकर्षोत्ससर्ज च ॥ ७८ ॥
ते बाणाः कालसंकाशा राक्षसेन्द्रधनुश्च्युताः ॥ हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ॥ ७९ ॥
ततस्तान्राक्षसोत्सृष्टाञ्शरौघान्राघवानुजः ॥ असंभ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥ ८० ॥
ताञ्शरान्युधि संप्रेक्ष्य निकृत्तान्रावणात्मजः ॥ चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ॥ ८१ ॥
स संधाय महातेजास्तं बाणं सहसोत्सृजत् ॥ ततः[2] सौमित्रिमायान्तमाजघान स्तनान्तरे ॥ ८२ ॥
अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि ॥ सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ॥ ८३ ॥
स चकार तदाऽऽत्मानं विशल्यं सहसा विभुः ॥ जग्राह च शरं तीक्ष्णमस्त्रेणापि च संदधे ॥८४॥
आग्नेयेन तदाऽऽस्त्रेण योजयामास सायकम् ॥ स जज्वाल तदा बाणो धनुष्यस्य महात्मनः ॥८५॥
अतिकायोपि तेजस्वी सौरमस्त्रं[3] समादधे ॥ तेन बाणं भुजङ्गाभं हेमपुङ्खमयोजयत् ॥ ८६ ॥
तदस्त्रं ज्वलितं घोरं लक्ष्मणः शरमाहितम् ॥ अतिकायाय चिक्षेप कालदण्डमिवान्तकः ॥ ८७ ॥
आग्नेयेनाभिसंयुक्तं दृष्ट्वा बाणं निशाचरः ॥ उत्ससर्ज तदा बाणं दीप्तं सूर्यास्त्रयोजितम् ॥ ८८ ॥
तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः ॥ तेजसा संप्रदीप्ताग्रौ क्रुद्धाविव भुजङ्गमौ ॥ ८९ ॥
तावन्योन्यं विनिर्दह्य पेततुः पृथिवीतले ॥ निरर्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ ॥
[ तौ[4]उभौ दीप्यमानौ स्म नभ्राजेते महीतले[5] ] ॥ ९० ॥
ततोतिकायः संक्रुद्धस्त्वस्त्रमैषीकमुत्सृजत्[6] ॥ तत्प्रचिच्छेद सौमित्रिरस्त्रेणैन्द्रेण वीर्यवान् ॥ ९१ ॥
ऐषीकं निहतं दृष्ट्वा रुषितो[7] रावणात्मजः ॥ याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ॥ ९२ ॥
ततस्तदस्त्रं चिक्षेप लक्ष्मणाय निशाचरः ॥ वायव्येन तदस्त्रेण निजघान स लक्ष्मणः ॥ ९३ ॥
अथैनं शरधाराभिर्धाराभिरिव तोयदः ॥ अभ्यवर्षत्सुसंक्रुद्धो लक्ष्मणो रावणात्मजम् ॥ ९४ ॥
तेऽतिकायं समासाद्य कवचे वज्रभूषिते[8] ॥ भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥ ९५ ॥
तान्मोघानभिसंप्रेक्ष्य लक्ष्मणः परवीरहा ॥ अभ्यवर्षन्महेषूणां[9] सहस्रेण महायशाः ॥ ९६ ॥
स वृष्यमाणो बाणौघैरतिकायो महाबलः ॥ अवध्यकवचः सङ्ख्ये राक्षसो नैव विव्यथे ॥ ९७ ॥
[ शरं[10] चाशीविषाकारं लक्ष्मणाय व्यपासृजत् ॥ स तेन विद्धः सौमित्रिर्मर्मदेशे शरेण ह ॥
मुहूर्तमात्रं निस्संज्ञो ह्यभवच्छत्रुतापनः ॥ ९८ ॥

विनम्य भुजौ नियम्य वशे स्थापयित्वा । रथोपस्थमास्थाय रथेन प्रचचार हेति संबन्धः ॥ ७६—७७॥ इति उक्तप्रकारेण ॥ ७८–८३ ॥ अस्त्रेण अस्त्रमन्त्रेण । संदधे योजयामास ॥ ८४ ॥ आग्नेयेनेत्यादि । पूर्वोक्तस्यैव विवरणं ॥ ८५ ॥ समादधे अनुसंदधे ॥८६॥ आहितं संहितं ॥ ८७—८९ ॥ भस्मकृतौ भस्मतया

**ति०** आत्मानंविशल्यंचकारेत्यत्रहेतुः **विभुरिति** । विष्ण्वंशत्वानुसंधानवानित्यर्थः ॥ **स०** विशल्यं तद्बाधारहितं । तत्रहेतुर्विभुरिति ॥ ८४ ॥ **ति०** दीप्यमानौ तादृशावपि परस्पराभिघातान्नभ्राजेते ॥ **स०** निरर्चिषौ निष्प्रभौ । भस्मकृतौ भस्मकुर्वातेइतितथा । पृथिवीतलेपतितौ नभ्राजेते । महीतलेविद्यमानौतौमोक्तारौलक्ष्मणातिकायावपि दीप्यमानौ प्राक् हतोऽयमितिपरस्परंजयप्रकाशौनभ्राजेतेस्म मोघीभूतबाणावित्यभ्राजनंयुक्तमितिभावः । अतोनपुनरुक्तिः । महाहवेइत्यपिक्वचित्पाठः ॥ ९० ॥ **ति०** त्वाष्ट्रंत्वष्टृदेवताकमैषीकाख्यं ॥ ९१ ॥

**[ पा० ]** १ ङ. झ. ट. विदार्यास्यंविनम्यचमहाभुजौ. २ ख.—ट. तेनसौमित्रिं. ३ ङ. च. झ. ञ. ट. रौद्रमस्त्रं. ४ इदमर्धं ग. घ. ङ. झ. ञ. ट. पाठेषुदृश्यते. ५ क. ख. च. महाहवे. ६ झ. ञ. ट. त्वाष्ट्र. ७ क. ग. घ. ङ. झ. ट, कुमारो. ८ ग. हेमभूषिते. ९ क. ग.—च. झ. अभ्यवर्षतबाणानां. १० शरंचाशीविषाकारमित्यादयः तस्यरक्षसइत्यन्ताः श्लोकाःऔत्तराहपाठएवदृश्यन्तेनतुप्राचीनकोशेषु.

ततः संज्ञामुपालभ्य चतुर्भिः सायकोत्तमैः ॥ निजघान हयान्सङ्ख्ये सारथिं च महाबलः ॥ ९९ ॥
ध्वजस्योन्मथनं कृत्वा शरवर्षैररिंदमः ॥ असंभ्रान्तः स सौमित्रिस्ताञ्शरानभिलक्षितान् ॥
मुमोच लक्ष्मणो बाणान्वधार्थं तस्य रक्षसः ] ॥ १०० ॥
न शशाक रुजं कर्तुं युधि तस्य शरोत्तमः ॥ १०१ ॥
अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ॥ ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ॥ १०२ ॥
ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ॥ अवध्य एष ह्यन्येषामस्त्राणां कवची बली ॥१०३॥

ततस्तु वायोर्वचनं निशम्य सौमित्रिरिन्द्रप्रतिमानवीर्यः ॥
समाददे बाणममोघवेगं तद्ब्राह्ममस्त्रं सहसा नियोज्य ॥ १०४ ॥
तस्मिन्महास्त्रे तु नियुज्यमाने सौमित्रिणा बाणवरे शिताग्रे ॥
दिशश्च चन्द्रार्कमहाग्रहाश्च नभश्च तत्रास चचाल चोर्वी ॥ १०५ ॥
तं ब्रह्मणोस्त्रेण नियोज्य चापे शरं सुपुङ्खं यमदूतकल्पम् ॥
सौमित्रिरिन्द्रारिसुतस्य तस्य ससर्ज बाणं युधि वज्रकल्पम् ॥ १०६ ॥
तं लक्ष्मणोत्सृष्टममोघवेगं समापतन्तं ज्वलनप्रकाशम् ॥
सुवर्णवज्रोत्तमचित्रपुङ्खं तदातिकायः समरे ददर्श ॥ १०७ ॥
तं प्रेक्षमाणः सहसाऽतिकायो जघान बाणैर्निशितैरनेकैः ॥
स सायकस्तस्य सुपर्णवेगस्तदाऽऽतिकायस्य जगाम पार्श्वम् ॥ १०८ ॥
तमागतं प्रेक्ष्य तदाऽऽतिकायो बाणं प्रदीप्तान्तककालकल्पम् ॥
जघान शक्त्यृष्टिगदाकुठारैः शूलैर्हुलैश्चाप्यविपन्नचेताः ॥ १०९ ॥
तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीप्तः ॥
प्रगृह्य तस्यैव किरीटजुष्टं ततोतिकायस्य शिरो जहार ॥ ११० ॥

तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रपीडितम् ॥ पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १११ ॥
तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणम् ॥ बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥ ११२ ॥
ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः ॥ विनेदुरुच्चैर्बहवः सहसा विस्वरैः स्वरैः ॥ ११३ ॥
ततस्ते त्वरितं याता निरपेक्षा निशाचराः ॥ पुरीमभिमुखा भीता द्रवन्तो नायके हते ॥ ११४ ॥

प्रहर्षयुक्ता बहवस्तु वानराः प्रबुद्धपद्मप्रतिमाननास्तदा ॥
अपूजयँल्लक्ष्मणमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ ११५ ॥

---

कृतौ ॥ ९०—१०३ ॥ ब्राह्ममस्त्रं ब्रह्मास्त्रमन्त्रं । नियोज्य जपित्वेति यावत् ॥ १०४ ॥ दिशश्चेत्यादौ तत्रसुरिति विपरिणम्यानुषज्यते ॥ १०५ ॥ नियोज्य जपित्वा । तस्य यमदूतकल्पमित्यन्वयः ॥ १०६—१०८ ॥ हुलैः द्विफलपत्राग्रायुधविशेषैः । "हुलं द्विफलपत्राग्रं" इति वैजयन्ती ॥ १०९—११२ ॥ विस्वरैः विस्वररूपैः ॥ ११३ ॥ निरपेक्षाः युद्धानपेक्षाः ॥ ११४ ॥ प्रबुद्धेत्यत्र प्रसन्नत्वे तात्पर्यं । इष्टस्य

---

स० सशिरस्त्राणं समुकुटं । अयमेवभारतोक्तकुंभकर्णाभिधोलक्ष्मणहतः । 'बृहत्तनुःकुंभवदेवकर्णावस्येत्यतोनामचकुंभकर्णः' इत्यारभ्य 'तेनातिकायःप्रवरोस्त्रवित्सु' इत्यन्तेनतात्पर्यमाचार्यवर्याःप्रत्यपीपदन्निति तथैवभारतार्थोनुसंधेयः । प्रपञ्चितश्चायमर्थो-

[ पा० ] १ क. ग.—ट. नरोत्तमः. २ क. च. ञ. सतस्यवायोः. ३ क. ङ. च. ज.—ट. ररासचोर्वी. ४ ङ. च. झ. ञ. ट. विवृद्धवेगं. ५ ग. घ. ङ. ज. झ. ट. स्तथातिवेगेनजगाम. ६ ज. शूलैश्चितैः. घ. ङ. झ. ट. शूलैःशरैः. ७ ङ. छ. झ. ञ. ट. श्चाप्यविपन्नचेष्टः. ८ घ. ङ. झ. ञ. ट. ततस्तत्परितोयाताः. ख. घ. ततस्तत्त्वरितंयान्ति.

[ अतिबलमतिकायमभ्रकल्पं युधि विनिपात्य स लक्ष्मणः प्रहृष्टः ॥
त्वरितमथ तदा स रामपार्श्वं कपिनिवहैश्च सुपूजितो जगाम ] ॥ ११६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

## द्विसप्ततितमः सर्गः ॥ ७२ ॥

अतिकायनिधनश्रवणविषण्णेनरावणेन धूम्राक्षप्रभृतिबन्धुजनस्मरणेनतच्छोचनपूर्वकं राक्षसान्प्रतिविशेषतो नगरादिरक्षण-नियोजनपूर्वकं भवनप्रवेशः ॥ १ ॥

अतिकायं हतं श्रुत्वा लक्ष्मणेन महौजसा ॥ उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ॥ १ ॥
धूम्राक्षः परमामर्षी धन्वी शस्त्रभृतां वरः ॥ अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥ २ ॥
एते महाबला वीरा राक्षसा युद्धकाङ्क्षिणः ॥ जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥ ३ ॥
निहतास्ते महावीर्या रामेणाक्लिष्टकर्मणा ॥ राक्षसाः सुमहाकाया नानाशस्त्रविशारदाः ॥
अन्ये च बहवः शूरा महात्मानो निपातिताः ॥ ४ ॥
प्रख्यातबलवीर्येण पुत्रेणेन्द्रजिता मम ॥ यौ हि तौ भ्रातरौ वीरौ बद्धौ दत्तवरैः शरैः ॥ ५ ॥
यन्न शक्यं सुरैः सर्वैरसुरैर्वा महाबलैः ॥ मोक्तुं तद्बन्धनं घोरं यक्षगन्धर्वकिन्नरैः ॥ ६ ॥
तन्न जाने प्रभावैर्वा मायया मोहनेन वा ॥ शरबन्धाद्विमुक्तौ तौ भ्रातरौ रामलक्ष्मणौ ॥ ७ ॥
ये योधा निर्गताः शूरा राक्षसा मम शासनात् ॥ ते सर्वे निहता युद्धे वानरैः सुमहाबलैः ॥ ८ ॥
तं न पश्याम्यहं युद्धे योऽद्य रामं सलक्ष्मणम् ॥ शासयेत्सबलं वीरं ससुग्रीवविभीषणम् ॥ ९ ॥
अहो नु बलवान्रामो महदस्त्रबलं च वै ॥ यस्य विक्रममासाद्य राक्षसा निधनं गताः ॥ १० ॥
तं मन्ये राघवं वीरं नारायणमनामयम् ॥ तद्भयाद्धि पुरी लङ्का पिहितद्वारतोरणा ॥ ११ ॥

जयस्य भागः प्राप्तिः सोऽस्यास्तीतीष्टभागी तं ॥११५-११६॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

अथ रावणचिन्ता—अतिकायमित्यादि ॥ १-४ ॥ प्रख्यातेत्यादिश्लोकत्रयमेकं वाक्यं ॥ वीरौ यौ भ्रातरौ खरदूषणादिवधेन प्रसिद्धौ तावपि बद्धौ । तदेव बन्धनं वर्णयति—यदिति ॥ यद्बन्धनं सुरादिभिः मोक्तुं मोचयितुं । अशक्यं तद्बन्धनं घोरं । भ्रातरौ तौ शरबन्धाद्विमुक्ताविति यत् तत्प्रभावादिषु केन वा जातं न जान इत्यन्वयः । प्रभावः सामर्थ्यं । माया व्यामोहकारिणी विद्या । मोहनं औषधादिकं ॥५-९ ॥ अहो न्वित्यादिश्लोकद्वयमेकान्वयं ॥ पिहितद्वारतोरणा द्वारं अन्तर्द्वारं तोरणंबहिर्द्वारं ॥१०-११॥

स्माभिःप्राक्ततोनुसंधेयः ॥ १११ ॥ ति० त्रिशिरोतिकायदेवान्तकनरान्तकमहोदरमहापार्श्वानांषड्भिर्दिनैर्भाद्राश्विनकृष्णषष्ठ्यन्तेनवधइत्यग्रेस्पष्टम् ॥ ११६ ॥ इत्येकसप्ततितमःसर्गः ॥ ७१ ॥

ती० प्रख्यातबलवीर्येणेत्यादिश्लोकत्रयमेकंवाक्यं । यौखरदूषणादिनिरासकौतौभ्रातरौ इन्द्रजिता दत्तवरैःशरैर्बद्धौ । यद्बन्धनं सुरासुरादिभिःप्रत्येकंमोक्तुंमोचयितुंनशक्यं । तद्बन्धनं घोरैः प्रचण्डैः सर्वैःसमुदितैरपिमोक्तुंनशक्यं । तौरामलक्ष्मणौ प्रभावैः । सहजसामर्थ्यैः मायया विचित्रशक्त्या मोहनेन बन्धकनागपाशमोहनेनवा । शरबन्धाद्विमुक्तौ तन्नजानइतियोजना ॥ ५-७ ॥ स० अनामयं कार्यवाचकपदेनकारणंदोषोगृह्यते । निर्दोषं नारायणं ॥ ११ ॥ इतिद्विसप्ततितमःसर्गः ॥ ७२ ॥

[ पा० ] १ ख. ङ. च. झ. ञ. ट. महात्मना. २ ङ. झ. ञ. ट. सर्वशस्त्रभृतां. ३ ङ झ. ट. ससैन्यास्तेहतावीरारामेण. ग. घ. ससैन्यास्तेमहावीर्यारामेण. ख. ससैन्यास्तेमहाकायारामेण. ४ छ. ञ. घोरंसर्वैःसमुदितैरपि. ङ. झ. ट. घोरंयक्षगन्धर्वपन्नगैः. ५ ङ. झ. ट. नाशयेत्सबलं. ६ क. ग. घ. ङ. झ. ञ. ट. सुबलवान्.

अप्रमत्तैश्च सर्वत्र गुप्तै रक्ष्या पुरी त्वियम् ॥ १२ ॥
अशोकवनिकायां च यत्र सीताऽभिरक्ष्यते ॥ निष्क्रामो वा प्रवेशो वा ज्ञातव्यः सर्वथैव नः ॥ १३ ॥
यत्र यत्र भवेद्गुल्मस्तत्र तत्र पुनः पुनः ॥ सर्वतश्चापि तिष्ठध्वं स्वैः स्वैः परिवृता बलैः ॥ १४ ॥
द्रष्टव्यं च पदं तेषां वानराणां निशाचराः ॥ प्रदोषे वाऽर्धरात्रे वा प्रत्यूषे वाऽपि सर्वतः ॥ १५ ॥
नावज्ञा तत्र कर्तव्या वानरेषु कदाचन ॥ द्विषतां बलमुद्युक्तमापतत्किंस्थितं सदा ॥ १६ ॥
ततस्ते राक्षसाः सर्वे श्रुत्वा लङ्काधिपस्य तत् ॥ वचनं सर्वमातिष्ठन्यथावत्तु महाबलाः ॥ १७ ॥
स तान्सर्वान्समादिश्य रावणो राक्षसाधिपः ॥ मन्युशल्यं वहन्दीनः प्रविवेश स्वमालयम् ॥ १८ ॥
ततः स संदीपितकोपवह्निर्निशाचराणामधिपो महाबलः ॥
तदेव पुत्रव्यसनं विचिन्तयन्मुहुर्मुहुश्चैव तदा व्यनिश्वसत् ॥ १९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ॥ ७३ ॥

देवान्तकादिवधश्रवणेनविषीदतिदशानने तंप्रतीन्द्रजिता रामादिवधप्रतिज्ञानेनसमाश्वासनपूर्वकं रथारोहणेनरणायनिर्याणम्॥१॥ तथा रणाङ्गणेहुतवहेहवनपूर्वकं रथारोहणेनान्तरिक्षेऽन्तर्हितेनसता नानाप्रहरणगणैः कपिकुलशकलीकरणपूर्वकं ब्रह्मास्त्रप्रयोगेण सकलवानरवाहिन्यासहरामलक्ष्मणयोर्मोहप्रापणम् ॥ २ ॥

ततो हतान्राक्षसपुङ्गवांस्तान्देवान्तकादित्रिशिरोतिकायान् ॥
रक्षोगणास्तत्र हतावशिष्टास्ते रावणाय त्वरितं शशंसुः ॥ १ ॥
ततो हतांस्तान्सहसा निशम्य राजा मुमोहाश्रुपरिप्लुताक्षः ॥
पुत्रक्षयं भ्रातृवधं च घोरं विचिन्त्य राजा विपुलं प्रदध्यौ ॥ २ ॥
ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे संपरिपुप्लुवानम् ॥
रथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥ ३ ॥

---

एवं रामप्रभावं सप्रपञ्चमुक्त्वा सैन्यं प्रति पुरीरक्षणं नियमयति—अप्रमत्तैरित्यादिना ॥ गुप्तैः स्वयं कृतरक्षणैः । गुल्मैरिति वा पाठः ॥ १२ ॥ यत्र सीता अभिरक्ष्यते तत्र अशोकवनिकायां । निष्क्रामः निर्गमः प्रवेशो वा । नः अस्माभिः । ज्ञातव्यः । मदनुज्ञां विना न कोपि जनो निर्गमयितव्यो नापि प्रवेष्टव्य इत्यर्थः ॥ १३ ॥ गुल्मः सेनासन्निवेशः ॥ १४ ॥ द्रष्टव्यमित्यादिश्लोकद्वयमेकान्वयं ॥ पदं व्यवसितं । दर्शनप्रकारमाह—द्विषतामिति । द्विषतां बलं स्थितं किं । उद्युक्तं उद्यतं किं । आपतन्तं । लिङ्गादिव्यत्यय आर्षः । आपतत् किमिति सदा द्रष्टव्यमित्यर्थः । आपतत्किमिति पाठः सुशोभनः ॥ १५—१९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

अथ ब्रह्मास्त्रबन्धस्त्रिसप्ततितमे—ततो हतानित्यादि ॥ १ ॥ पूर्वं कुम्भकर्णादिवधः सामान्येन श्रुतः संप्रत्याप्तैः सविशेषं श्रुत इत्याह—तत इति ॥ पूर्वोक्तसर्वानुवादो वा ॥ २ ॥ संपरिपुप्लुवानं । लटः

---

**रामानु०** अत्रदेवान्तकादित्रिशिरोतिकायान् हतांस्त्वरितंशशंसुः घोरंपुत्रक्षयंभ्रातृवधंचविचिन्त्यविपुलंप्रदध्यावितिचाभि॰
**[ पा० ]** १ ङ. झ. ञ. ट. सैन्यैःपरिवृता. २ ख. च. ञ. ट. वहन्दीनंप्रविवेशनिवेशनं. ग. घ. वहंस्तीव्रंप्रविवेश. ३ ख. न्मुहुर्मुहुर्निश्वसितिसदीर्घं. ४ क. ग. ङ. झ. ट. विनिश्वसन्. ५ ख. ङ. झ. ञ. ट. त्वरिताः.

न तात मोहं प्रतिगन्तुमर्हसि यत्रेन्द्रजिज्जीवति राक्षसेन्द्र ॥
[ तद्बाणनिर्भिन्नविकीर्णदेहाः प्राणैर्विमुक्ताः समरे पतन्ति ॥ ]
नेन्द्रारिबाणाभिहतो हि कश्चित्प्राणान्समर्थः समरेऽभिपातुम् ॥ ४ ॥
पश्याद्य रामं सह लक्ष्मणेन मद्बाणनिर्भिन्नविकीर्णदेहम् ॥
गतायुषं भूमितले शयानं शितैः शरैराचितसर्वगात्रम् ॥ ५ ॥
इमां प्रतिज्ञां शृणु शक्रशत्रोः सुनिश्चितां पौरुषदैवयुक्ताम् ॥
अद्यैव रामं सह लक्ष्मणेन सन्तर्पयिष्यामि शरैरमोघैः ॥ ६ ॥
अद्येन्द्रवैवस्वतविष्णुमित्रसाध्याश्विवैश्वानरचन्द्रसूर्याः ॥
द्रक्ष्यन्तु मे विक्रममप्रमेयं विष्णोरिवोग्रं बलियज्ञवाटे ॥ ७ ॥
स एवमुक्त्वा त्रिदशेन्द्रशत्रुरापृच्छ्य राजानमदीनसत्त्वः ॥
समारुरोहानिलतुल्यवेगं रथं खरश्रेष्ठसमाधियुक्तम् ॥ ८ ॥
तमास्थाय महातेजा रथं हरिरथोपमम् ॥ जगाम सहसा तत्र यत्र युद्धमरिन्दमः ॥ ९ ॥
तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः ॥ संहर्षमाणा बहवो धनुःप्रवरपाणयः ॥ १० ॥
गजस्कन्धगताः केचित्केचित्प्रवरवाजिभिः ॥ [ व्याघ्रवृश्चिकमार्जारैः खरोष्ट्रैश्च भुजङ्गमैः ॥ ११ ॥
वराहश्वापदैः सिंहैर्जम्बुकैः पर्वतोपमैः ॥ शशहंसमयूरैश्च राक्षसा भीमविक्रमाः ]॥ १२ ॥
प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधरः ॥ [ भुशुण्डिमुद्गरायष्टिशतघ्नीपरिघायुधः ] ॥ १३ ॥
स शङ्खनिनदैः पूर्णैर्भेरीणां चापि निस्वनैः ॥ जगाम त्रिदशेन्द्रारिः स्तूयमानो निशाचरैः ॥ १४ ॥
स शङ्खशशिवर्णेन छत्रेण रिपुसूदनः ॥ रराज प्रतिपूर्णेन नभश्चन्द्रमसा यथा ॥ १५ ॥
अवीज्यत ततो वीरो हैमैर्हेमविभूषितैः ॥ चारुचामरमुख्यैश्च मुख्यः सर्वधनुष्मताम् ॥ १६ ॥
[ स तु दृष्ट्वा विनिर्यान्तं बलेन महता वृतम् ॥ राक्षसाधिपतिः श्रीमान्रावणः पुत्रमब्रवीत् ] ॥१७॥
त्वमप्रतिरथः पुत्र त्वया वै वासवो जितः ॥ किं पुनर्मानुषं धृष्यं निहनिष्यसि राघवम् ॥
तथोक्तो राक्षसेन्द्रेण प्रत्यगृह्णान्महाशिषः ] ॥ १८ ॥
ततस्त्विन्द्रजिता लङ्का सूर्यप्रतिमतेजसा ॥ रराजाप्रतिवीरेण द्यौरिवार्केण भास्वता ॥ १९ ॥
स संप्राप्य महातेजा युद्धभूमिमरिन्दमः ॥ स्थापयामास रक्षांसि रथं प्रति समन्ततः ॥ २० ॥

शानजादेशः ॥ ३ ॥ यत्र यदा । इन्द्रारिः इन्द्रजित् ॥४—५॥ पौरुषदैवयुक्तां पुरुषबलदैवबलयुक्तां । सन्तर्पयिष्यामि पूरयिष्यामि ॥६—७॥ खरश्रेष्ठसमाधियुक्तं खरश्रेष्ठसंबन्धयुक्तं । खरश्रेष्ठैः समाधिना समाधानेन च युक्तमिति वा ॥ ८ ॥ हरिरथः सूर्यरथः । "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु " इत्यमरः । युद्धमिति । कर्तव्यमिति शेषः ॥ ९ ॥ तं प्रस्थितमित्यादिश्लोकद्वयमेकान्वयं ॥ १०—१५ ॥ हैमैः हेमदण्डैः । हेमविभूषितैः हेमशलाकायुक्तैः ॥१६—१९॥ रथं प्रति

धानात् पूर्वरावणेनातिकायवधएवश्रुतइत्यवगम्यते । यद्वा पूर्वोक्तानुवादः ॥१॥ ति० पौरुषदैवयुक्तां पौरुषेण सहजशौर्यबलेन । दैवबलेन भगवद्ब्रह्मबलेनच युक्तांक्रियमाणां । आदिकर्मणिक्तः ॥६॥ ति० युद्धभूमिं युद्धजयसंपादकहोमसाधनभूमिं निकुंभिला-

[ पा० ] १ इदमर्धं घ. पाठेदृश्यते. २ ख. ङ. झ. ञ. ट. विष्णुरुद्र. ३ क.—ट. समास्थाय. ४ ग. च. छ. ञ. युद्धभूमिमरिंदमः. ख. यत्रयुद्धंप्रवर्तते. ५ ङ.—ट. त्परमवाजिभिः. ६ इदमर्धत्रयं. ङ.—ट. पाठेषुदृश्यते. ७ ङ.—ट. काकहंसमयूरैश्च. ८ इदमर्धं च. ञ. पाठयोर्दृश्यते. ९ ग. घ. ङ. झ. ट. त्रिदशेन्द्रारिराजिवेगेनवीर्यवान्. ख. छ. ञ. त्रिदशेन्द्रारिर्महासैन्येनवीर्यवान्. १० ख. च. छ. ज. ञ. निशिपूर्णेन. ११ इदंश्लोकद्वयं औत्तराहपाठएवदृश्यतेनतुदाक्षिणात्यप्राचीनकोशेषु.

ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः ॥ [1]जुहाव राक्षसश्रेष्ठो [2]मन्त्रवद्विधिवत्तदा ॥ २१ ॥
स हविर्लाजसं[3]स्कारैर्माल्यगन्धपुरस्कृतैः ॥ जुहुवे [4]पावकं तत्र राक्षसेन्द्रः प्रतापवान् ॥ २२ ॥
शस्त्राणि शरपत्राणि समिधोथ विभीतकाः ॥ लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥२३॥
स तत्राग्निं समास्तीर्य शरपत्रैः सतोमरैः ॥ छागस्य [5]कृष्णवर्णस्य गलं जग्राह जीवतः ॥ २४ ॥
सकृदेव समिद्धस्य विधूमस्य महार्चिषः ॥ बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥ २५ ॥
प्रदक्षिणावर्तशिखस्तप्तका[6]ञ्चनभूषणः ॥ हविस्तत्प्रतिजग्राह पावकः [7]स्वयमास्थितः ॥ २६ ॥
सोऽस्त्रमाहारयामास [8]ब्राह्ममिन्द्ररिपुस्तदा ॥ धनुश्चात्मरथं चैव [9]सर्वं तत्राभ्यमन्त्रयत् ॥ २७ ॥
तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके ॥ [10]सार्धं ग्रहेन्दुनक्षत्रैर्वितत्रास नभस्स्थलम् ॥ २८ ॥

स पावकं पावकदीप्ततेजा हुत्वा महेन्द्रप्रतिमप्रभावः ॥
सचापबाणासिरथाश्वसूतः [11]खेऽन्तर्दधेत्मानम[12]चिन्त्यरूपः ॥ २९ ॥

ततो हयरथाकीर्णं पताकाध्वजशोभितम् ॥ निर्ययौ राक्षसबलं नर्दमानं युयुत्सया ॥
[ [13]अशोभत बलं घोरं किङ्किणीशतनादितम् ॥ ३० ॥
ते शरैर्बहुभिश्चित्रैस्तीक्ष्णवेगैरलंकृतैः ॥ तोमरैरङ्कुशैश्चापि वानराञ्जघ्नुराहवे ॥ ३१ ॥
रावणिस्तु ततः क्रुद्धस्तान्निरीक्ष्य निशाचरान् ॥ हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥३२॥
ततस्ते राक्षसाः सर्वे [14]नर्दन्तो जयकाङ्क्षिणः ॥ अभ्यवर्षंस्ततो घोरान्वानराञ्शरवृष्टिभिः ॥ ३३ ॥
स तु नालीकनाराचैर्गदाभिर्मुसलैरपि ॥ रक्षोभिः संवृतः सङ्ख्ये वानरा[15]न्विचकर्त ह ॥ ३४ ॥

रथसिद्धिमुद्दिश्य ॥ २० ॥ विधिवत् क्रमवत् ॥२१॥ हविर्लाजसंस्कारैः संस्कृतहविर्लाजैः ॥ २२ ॥ शस्त्राणि आयुधानि । शरपत्राणि काशपत्रस्थानीयानि । तानि परिस्तरणान्यासन्नित्यर्थः । शरमयं बर्हिस्तृणातीत्यभिचारे काशश्चोदितः । अत्र त्वभिचारविशेषे तत्स्थाने शस्त्राणि कृतानीति बोध्यं । विभीतकाः कलिद्रुमविकाराः । " वैभीतक इध्मः " इति श्रुतेः । वासांसि स्वधार्याणि । यद्वा शस्त्राणि तोमरादीनि शरपत्राणि च । बर्हींष्यासन्निति शेषः । शरपत्रैः सतोमरैरित्यनुवादात् । कार्ष्णायसं स्रुवं । कृतमिति शेषः ॥ २३ ॥ तत्र युद्धभूमौ । आस्तीर्य परिस्तीर्य ॥ २४ ॥ सकृत्समिद्धस्य एकदा समिद्भिर्ज्वलितस्य । लिङ्गानि उक्तसकृत्समिद्धत्वविधूमत्वमहार्चिष्ट्वानि । विजयं यान्यदर्शयन् । पूर्वमिति शेषः ॥ २५ ॥ प्रदक्षिणेति । प्रदक्षिण आवर्तो भ्रमिर्यासां ताः शिखा यस्येति विग्रहः । स्वयमास्थितः स्वयमास्थावान् । स्वयमुत्थित इति पाठे पुरुषरूपेणोत्थित इत्यर्थः ॥ २६ ॥ आहारयामास आजुहाव । अभ्यमन्त्रयत् अभिमन्त्रितवान् ॥ २७ ॥ वितत्रास चचाल ॥२८॥ आत्मानं अन्तर्दधे अन्तर्धापयामास । अन्तर्भावितण्यर्थोयं । खेऽन्तर्दधेत्मानमित्यत्र आर्षं पूर्वरूपत्वं । अचिन्त्यरूपः अचिन्त्यमन्त्रशक्तिः ॥ २९—३१ ॥ रावणिस्त्विति ॥ उवाचेति शेषः ॥ ३२ ॥ ततः तस्माद्रावणिवचनात् । द्वितीयस्ततःशब्दः पश्चाच्छब्दार्थः ॥ ३३ ॥ नालीकः विशालाग्रशरः । रक्षोभिः संवृतः रक्षोगणमध्यत उपरिस्थित इत्यर्थः । अन्यथा

स्थानमित्यर्थः ॥ २० ॥ ति० हुतभोक्तारं अग्निं । विधिः तत्कल्पोक्तप्रकारः ॥ २१ ॥ ति० तस्मिन्नस्त्रे आहूयमाने तदस्त्रमन्त्रदैवतेत्रिमूर्तिरहस्यलक्षणेक्रियमाणावाहनेतदुद्देशेनतन्मन्त्रेणपावकेहूयमानेचसतिसार्कादिकंनभस्स्थलंतत्रासेतिनायमर्थवादः ॥ २८ ॥ ति० ततइति यागसमाप्त्यनन्तरं । तद्यागभूमेरित्यर्थः ॥ ३० ॥

[ पा० ] १ ङ. झ. ञ. ट. जुहुवे. २ ङ. झ. ञ. ट. विधिवन्मन्त्रसत्तमैः. ३ ख. ङ.—ठ. लाजसत्कारैः. ४ ख. च. छ. ज. ञ. ट. पावकंदीप्तं. ५ ख. ग. घ. च. ज. ञ. सर्वकृष्णस्य. ६ क. ग. ङ. छ. झ. ञ. ट. काञ्चनसंनिभः. ७ क.—ट. स्वयमुत्थितः. ८ क. ग. ङ.—ट. ब्राह्ममस्त्रविशारदः. ९ च. छ. झ. ञ. ट. कवचंचाभ्यमन्त्रयत्. १० क.—च. झ. ञ. ट. सार्कग्रहेन्दुनक्षत्रं. ११ ख. ग. छ. खेऽन्तर्दधेराक्षसराजसूनुः. १२ ङ. झ. ञ. ट. मचिन्त्यवीर्यः. १३ इदमर्धं क. ख. ग. पाठेषुदृश्यते. १४ ङ. झ. ट. गर्जन्तो. १५ ग. ङ. ज. झ. ट. न्विचकर्षह.

ते वध्यमानाः समरे वानराः पादपायुधाः ॥ अभ्यद्रवन्त सहिता रावणिं रणकर्कशम् ॥ ३५ ॥
इन्द्रजित्तु ततः क्रुद्धो महातेजा महाबलः ॥ वानराणां शरीराणि व्यधमद्रावणात्मजः ॥ ३६ ॥
शरेणैकेन च हरीन्नव पञ्च च सप्त च ॥ चिच्छेद समरे क्रुद्धो राक्षसान्संप्रहर्षयन् ॥ ३७ ॥
स शरैः सूर्यसंकाशैः शातकुम्भविभूषितैः ॥ वानरान्समरे वीरः प्रममाथ सुदुर्जयः ॥ ३८ ॥
ते भिन्नगात्राः समरे वानराः शरपीडिताः ॥ पेतुर्मथितसङ्कल्पाः सुरैरिव महासुराः ॥ ३९ ॥
तं तपन्तमिवादित्यं घोरैर्बाणगभस्तिभिः ॥ अभ्यधावन्त संक्रुद्धाः संयुगे वानरर्षभाः ॥ ४० ॥
ततस्तु वानराः सर्वे भिन्नदेहा विचेतसः ॥ व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥ ४१ ॥
रामस्यार्थे पराक्रम्य वानरास्त्यक्तजीविताः ॥ नर्दन्तस्तेऽभिवृत्तास्तु समरे सशिलायुधाः ॥ ४२ ॥
ते द्रुमैः पर्वताग्रैश्च शिलाभिश्च प्लवङ्गमाः ॥ अभ्यवर्षन्त समरे रावणिं पर्यवस्थिताः ॥ ४३ ॥
तद्द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ॥ व्यपोहत महातेजा रावणिः समितिञ्जयः ॥ ४४ ॥
ततः पावकसंकाशैः शरैराशीविषोपमैः ॥ वानराणामनीकानि बिभेद समरे प्रभुः ॥ ४५ ॥
अष्टादशशरैस्तीक्ष्णैः स विद्ध्वा गन्धमादनम् ॥ विव्याध नवभिश्चैव नलं दूरादवस्थितम् ॥ ४६ ॥
सप्तभिस्तु महावीर्यो मैन्दं मर्मविदारणैः ॥ पञ्चभिर्विशिखैश्चैव गजं विव्याध संयुगे ॥ ४७ ॥
जाम्बवन्तं तु दशभिर्नीलं त्रिंशद्भिरेव च ॥ सुग्रीवमृषभं चैव सोङ्गदं द्विविदं तथा ॥
घोरैर्दत्तवरैस्तीक्ष्णैर्निष्प्राणानकरोत्तदा ॥ ४८ ॥
अन्यानपि तदा मुख्यान्वानरान्बहुभिः शरैः ॥ अर्दयामास संक्रुद्धः कालाग्निरिव मूर्च्छितः ॥४९॥
स शरैः सूर्यसंकाशैः सुमुक्तैः शीघ्रगामिभिः ॥ वानराणामनीकानि निर्ममन्थ महारणे ॥ ५० ॥
आकुलां वानरीं सेनां शरजालेन मोहिताम् ॥ हृष्टः स परया प्रीत्या ददर्श क्षतजोक्षिताम् ॥ ५१ ॥
पुनरेव महातेजा राक्षसेन्द्रात्मजो बली ॥ संसृज्य बाणवर्षं च शस्त्रवर्षं च दारुणम् ॥
ममर्द वानरानीकमिन्द्रजित्त्वरितो बली ॥ ५२ ॥

स्वसैन्यमुत्सृज्य समेत्य तूर्णं महारणे वानरवाहिनीषु ॥
अदृश्यमानः शरजालमुग्रं ववर्ष नीलाम्बुधरो यथाऽम्बु ॥ ५३ ॥
ते शक्रजिद्बाणविशीर्णदेहा मायाहता विस्वरमुन्नदन्तः ॥
रणे निपेतुर्हरयोऽद्रिकल्पा यथेन्द्रवज्राभिहता नगेन्द्राः ॥ ५४ ॥

---

खेन्तर्दध इति पूर्वोक्तं विरुध्येत । विचकर्त हिंसितवान् ॥ ३४ ॥ रावणिं रावणिमुक्तायुधागमनप्रदेशं ॥ ३५—३८ ॥ मथितसंकल्पाः नाशितमनोरथाः ॥ ३९—४१ ॥ त्यक्तजीविताः त्यक्तजीवितेच्छाः । अभिवृत्ताः अभिमुखं प्रवृत्ताः । तुरवधारणे ॥ ४२—४३ ॥ व्यपोहत वारयामास ॥ ४४—४५ ॥ अष्टादशेत्यादिसार्धश्लोकत्रयमेकान्वयं ॥ दत्तवरैः वरदत्तैः ॥ ४६—४८॥ अन्यानिति ॥ मूर्च्छितः प्रवृद्धः ॥ ४९—५० ॥ परया प्रीत्या हृष्टः उद्धतः ॥ ५१ ॥ पुनरेवेत्यादिसार्धश्लोकमेकं वाक्यं ॥ खड्गादीनि शस्त्राणि । अत्र द्वितीयबलिशब्दो वरदानबलवत्तावाचकः । प्रथमो वीर्यवत्तावाचकः ॥ ५२ ॥ स्वसैन्यं

**रामानु०** रावणिं रावणिमुक्तायुधागमनप्रदेशं । खेन्तर्दधेइत्यभिधानात् ॥ **स०** अथवापरीक्षाकृतेमन्त्राणांतदान्तर्धानं । यथायथंस्वेच्छानुसारेणप्रत्यक्षीभवनमप्रत्यक्षीभवनंचसंभवीतिरावणिमित्याद्युक्तिःसंभवतीतिवाज्ञेयं ॥ ३५ ॥ **शि०** निवृत्ताः इहलोकसुखेच्छारहिताः ॥ ४२ ॥ **ती०** रावणिमभ्यवर्षन्त रावणिसंचारप्रदेशमभ्यवर्षन्तेत्यर्थः । तस्यादर्शनात् ॥ ४३ ॥

[ पा० ] १ ङ. झ. ञ. ट. अभ्यवर्षन्तसहसारावणिंशैलपादपैः. २ क. ङ. झ. ञ. ट. बिभेद. ३ ङ. झ. ट. तेपतन्तमिवा. ञ. प्रपतन्तमिवा. ४ ट. स्तेनिवृत्तास्तु. ५ ख. ग. प्रहरतांमहत्. ६ ङ. झ. ञ. ट. पीडितां.

ते केवलं संददृशुः शिताग्रान्बाणान्रणे वानरवाहिनीषु ॥
मायानिगूढं तु सुरेन्द्रशत्रुं न[1] चावृतं राक्षसमभ्यपश्यन् ॥ ५५ ॥
ततः स रक्षोधिपतिर्महात्मा सर्वा दिशो बाणगणैः शिताग्रैः ॥
प्रच्छादयामास रविप्रकाशैर्विषादयामास[2] च वानरेन्द्रान् ॥ ५६ ॥
स शूलनिस्त्रिंशपरश्वधानि व्याविध्य दीप्तानलसन्निभानि ॥
सविस्फुलिङ्गोज्ज्वलपावकानि ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ॥
[ गदाश्च[3] शक्तीः परिघं शतघ्नीर्ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ] ॥ ५७ ॥
ततो ज्वलनसंकाशैः शरैर्वानरयूथपाः[4] ॥ ताडिताः शक्रजिद्बाणैः प्रफुल्ला इव किंशुकाः ॥ ५८ ॥
तेऽन्योन्यमभिसर्पन्तो निनदन्तश्च विस्वरम् ॥ राक्षसेन्द्रास्त्रनिर्भिन्ना निपेतुर्वानरर्षभाः ॥ ५९ ॥
उदीक्षमाणा गगनं केचिन्नेत्रेषु ताडिताः ॥ शरैर्विविशुरन्योन्यं[5] पेतुश्च जगतीतले ॥ ६० ॥
हनुमन्तं च सुग्रीवमङ्गदं गन्धमादनम् ॥ जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ ६१ ॥
मैन्दं च द्विविदं नीलं गवाक्षं[6] गजगोमुखौ ॥ केसरिं हरिलोमानं विद्युद्दंष्ट्रं च वानरम् ॥ ६२ ॥
सूर्याननं ज्योतिमुखं तथा दधिमुखं हरिम् ॥ पावकाक्षं नलं चैव कुमुदं चैव वानरम् ॥ ६३ ॥
प्रासैः शूलैः शितैर्बाणैरिन्द्रजिन्मन्त्रसंहितैः ॥ विव्याध हरिशार्दूलान्सर्वांस्तान्राक्षसोत्तमः ॥ ६४ ॥
स वै गदाभिर्हरियूथमुख्यान्निर्भिद्य बाणैस्तपनीयपुङ्खैः ॥
ववर्ष रामं शरवृष्टिजालैः सलक्ष्मणं भास्कररश्मिकल्पैः ॥ ६५ ॥
स बाणवर्षैरभिवर्ष्यमाणो धारानिपातानिव तानचिन्त्य ॥
समीक्षमाणः परमाद्भुतश्री रामस्तदा लक्ष्मणमित्युवाच ॥ ६६ ॥
असौ पुनर्लक्ष्मण राक्षसेन्द्रो ब्रह्मास्त्रमाश्रित्य सुरेन्द्रशत्रुः ॥
निपातयित्वा हरिसैन्यमुग्रमस्मान्[7]शरैरर्दयति प्रसक्तः ॥ ६७ ॥
स्वयम्भुवा दत्तवरो महात्मा खमास्थितोन्तर्हितभीमकायः ॥
कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥ ६८ ॥

स्वसैन्योपरिभागं ॥ ५३—५४ ॥ मायानिगूढं अतएव आवृतं अप्रकाशं ॥ ५५—५७ ॥ ततो ज्वलनेत्यादिश्लोकद्वयमेकान्वयं ॥ शरैः तीक्ष्णैरित्यर्थः ॥ ५८—५९ ॥ विविशुरन्योन्यं अन्योन्योपर्यालम्बनार्थं पेतुरित्यर्थः ॥ ६० ॥ हनुमन्तमित्यादिचतुःश्लोक्येकान्वया ॥ ६१ ॥ केसरिमित्यार्षं ॥ ६२—६४ ॥ गदाभिरित्येतत् पूर्वोक्तप्रासादीनामुपलक्षणं ॥६५॥ बाणवर्षैः बाणनिरन्तरपातैः । अभिवर्ष्यमाणः अभितः पात्यमानः स रामः । तान् बाणवर्षान् । धारानिपातानिव लघूनचिन्त्य । बाणवर्षं तृणीकृत्येत्यर्थः । अत्र हेतुमाह—परमेति । अत्यन्ताश्चर्यकरधैर्यसमृद्धिः सन् लक्ष्मणं समीक्षमाणः स्वस्वभावावलम्बनेन ब्रह्मास्त्रप्रतिक्रियां कर्तुमुद्युक्तमिङ्गितैरभिवीक्षमाणः सन्नित्युवाच ॥ ६६ ॥ असौ ब्रह्मास्त्रं ब्रह्मास्त्रमन्त्रं । आश्रित्य । प्रहरन्निति शेषः ॥ ६७ ॥ नष्टदेहः अदृष्टदेहः । तत्र हेतुः—अन्तर्हितभीमकाय इति ॥ ६८ ॥

[ पा० ] १ ख. घ.—ठ. नचान्तर्तराक्षस. क. ग. नराक्षसेन्द्रात्मजमभ्यपश्यन्. २ ख. घ. ङ. छ.—ट. विदारयामासच. ३ इदमर्धं क. पाठेऽधिकंदृश्यते. ४ क. ख. ग. च. ज. शितैर्वानर. ५ ग.—छ. झ. ञ. ट. शनैर्विविशुः. ६ ङ. छ. झ. ट. गवाक्षंगवयंतथा. ७ ङ. झ. ट. हरिसैन्यमस्मान्शितैःशरैरर्दयतिप्रसक्तं.

मन्ये स्वयम्भूर्भगवानचिन्त्यो यस्यैतदस्त्रं प्रभवश्च योऽस्य ॥
बाणावपातांस्त्वमिहाद्य धीमन्मया सहाव्यग्रमनाः सहस्व ॥ ६९ ॥
प्रच्छादयत्येष हि राक्षसेन्द्रः सर्वा दिशः सायकवृष्टिजालैः ॥
एतच्च सर्वं पतिताग्र्यशूरं न भ्राजते वानरराजसैन्यम् ॥ ७० ॥
आवां तु दृष्ट्वा पतितौ विसंज्ञौ निवृत्तयुद्धौ गतरोषहर्षौ ॥
ध्रुवं प्रवेक्ष्यत्यमरारिवासमसौ [1]समादाय रणाग्रलक्ष्मीम् ॥ ७१ ॥
ततस्तु ताविन्द्रजिदस्त्रजालैर्बभूवतुस्तत्र तथा विशस्तौ ॥
स चापि तौ तत्र विदर्शयित्वा ननाद हर्षाद्युधि राक्षसेन्द्रः ॥ ७२ ॥
स तत्तदा वानरसैन्यमेवं रामं च सङ्ख्ये सह लक्ष्मणेन ॥
वि[2][3]षादयित्वा सहसा विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ॥ ७३ ॥
[ सं[4]स्तूयमानः स तु यातुधानैः पित्रे च सर्वं हृषितोऽभ्युवाच ॥ ] ७४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

## चतुःसप्ततितमः सर्गः ॥ ७४ ॥

विभीषणेनेन्द्रजिदस्त्रबद्धमुग्धसेनासमाश्वासनपूर्वकं हनुमतासहोल्कापाणिनासता सेनामध्येऽन्वेषणेनजांबवदन्तिकोपसर्पणम् ॥१॥ विभीषणेनकुशलंपृष्टेनजांबवता तंप्रति मन्दस्वरेणहनुमत्कुशलप्रश्ने हनुमताजांबवन्तंप्रति सप्रणाममात्मनोऽभिमतकरणेनियोजनप्रार्थना ॥ २ ॥ तेन तंप्रति सराघवहरिसेनासमुज्जीवनाय हिमवद्गिरिसंनिकृष्टमहौषधिपर्वतान्मृतसंजीवन्यादिदिव्यौषधिसमानयनचोदना ॥ ३ ॥ हनुमताहिमवन्तमेत्य तत्रनानापुण्यस्थानावलोकनपूर्वकमोषधिगिरिमेत्य तदोषधिगवेषणम् ॥ ४ ॥ हनुमता स्वावलोकनेनौषधिभिस्तिरोधाने क्रोधादोषधिगिरेरेवसमुत्पाटनेन वेगाल्लङ्कांप्रत्यागमनम् ॥५॥ पर्वतपाणौहनुमति संनिकृष्टमात्रेणदिव्यौषधिगन्धाघ्राणनमात्रेणराघवाभ्यांसहविगतमोहैर्विशल्यैश्च वानरगणैस्तदोषधिगन्धमारुतसंस्पर्शमात्रेणसमुज्जीवितैर्हतपूर्ववानरैःसह हर्षात्समुद्घोषणम् ॥ ६ ॥ हनुमता पुनरोषधिगिरेर्हिमवद्गिरिंप्रति प्रापणम् ॥ ७ ॥

तयोस्तदा सादितयो रणाग्रे मुमोह सैन्यं हरिपुङ्गवानाम् ॥
सुग्रीवनीलाङ्गदजाम्बवन्तो न चापि किंचित्प्रतिपेदिरे ते ॥ १ ॥

---

तर्हि तत्र प्रतिक्रिया कर्तव्येत्यत्राह—मन्य इति ॥ स्वयम्भूः अचिन्त्यः अचिन्त्यप्रभाव इति मन्ये । तत्र हेतुमाह—यस्येति । एतदस्त्रं यस्य यद्देवताकं । यः अस्यास्त्रस्य प्रभवः उत्पत्तिकारणं । सोचिन्त्यः । तर्ह्यावाभ्यां किं कर्तव्यमित्यत्राह—बाणेति । धीमन् आपत्सु न चलितव्यमिति ज्ञानिन् ॥ ६९–७० ॥ गतरोषहर्षौ मूर्च्छिताविति यावत् । अमरारिवासं लङ्कां । रणाग्रलक्ष्मीं विजयलक्ष्मीं । अग्रपदेन रणमूललक्ष्मीर्न ग्रहीतुं शक्येत्युच्यते । एतेन मूलघातः कर्तुं न शक्यत इत्युच्यते ॥ ७१ ॥ विशस्तौ पीडितौ । तौ पतितौ विदर्शयित्वा दृष्ट्वा ननाद ॥ ७२–७४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

अथ ब्रह्मास्त्रबन्धविमुक्तिश्चतुःसप्ततौ—तयोरित्यादि

---

ति० नन्वदृष्टदेहस्यापिसंहारसाधनैः शब्दवेध्यादिदिव्यास्त्रैर्हननंकार्यमितिचेन्न । भगवतोब्रह्मणआज्ञायामारुतिनेवास्माभिरपिपालनौचित्येनैतत्सहनस्यैवौचित्यादित्याशयेनाह—मन्यइति ॥ स० मयासहसहस्व एतेनतत्सहनेममसामर्थ्यमदनुग्रहात्तवसहनमितिध्वन्यते ॥ ६९ ॥ इतित्रिसप्ततितमःसर्गः ॥ ७३ ॥

[ पा० ] १ ङ. झ. ट. समासाद्य. २ क. ख. ङ.—ट. विषादयित्वा. ३ ङ. झ. ट. निषूदयित्वा. ४ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते.

तत्रो विषण्णं समवेक्ष्य सैन्यं विभीषणो बुद्धिमतां वरिष्ठः ॥
उवाच शाखामृगराजवीरानाश्वासयन्नप्रतिमैर्वचोभिः ॥ २ ॥
मा भैष्ट नास्त्यत्र विषादकालो यदार्यपुत्रौ ह्यवशौ विषण्णौ ॥
स्वयम्भुवो वाक्यमथोद्वहन्तौ यत्सादिताविन्द्रजिदस्त्रजालैः ॥ ३ ॥
[ [1]विभीषणस्तत्र वराद्विधातुरसादितोस्त्रेण निरीक्षमाणः ॥
सेनां हरीणां द्रुहिणास्त्रदूनां स्वस्थं हनूमन्तमुवाच दृष्ट्वा ] ॥ ४ ॥
तस्मै तु दत्तं परमास्त्रमेतत्स्वयम्भुवा ब्राह्मम[2]मोघवेगम् ॥
तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोत्र विषादकालः ॥ ५ ॥

ब्राह्ममस्त्रं ततो धीमान्मानयित्वा तु मारुतिः ॥ विभीषणवचः श्रुत्वा [3]हनुमांस्तमथाब्रवीत् ॥ ६ ॥
[4]एतस्मिन्निहते सैन्ये वानराणां तरस्विनाम् ॥ यो यो धारयते प्राणांस्तं तमाश्वासयावहे ॥ ७ ॥
तावुभौ युगपद्वीरौ हनुमद्राक्षसोत्तमौ ॥ उल्काहस्तौ तदा रात्रौ रणशीर्षे विचेरतुः ॥ ८ ॥
भिन्नलाङ्गूलहस्तोरुपादाङ्गुलिशिरोधरैः ॥ स्रवद्भिः क्षतजं गात्रैः [5]प्रस्रवद्भिस्ततस्ततः ॥ ९ ॥
पतितैः पर्वताकारैर्वानरैरभिसङ्कुलाम् ॥ शस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुन्धराम् ॥ १० ॥
सुग्रीवमङ्गदं नीलं शरभं गन्धमादनम् ॥ [6]गवाक्षं च सुषेणं च वेगदर्शिनमाहुकम् ॥ ११ ॥
मैन्दं नलं ज्योतिमुखं [7]द्विविदं पनसं तथा ॥ [8]एतांश्चान्यांस्ततो वीरौ ददृशाते हतान्रणे ॥ १२ ॥
सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् ॥ अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः ॥ १३ ॥

सादितयोः अवसादितयोः । किंचिन्न प्रतिपेदिरे । मूढा बभूवुरित्यर्थः ॥ १—२ ॥ आर्यपुत्रौ अवशौ विषण्णाविति यत् । अत्र विषादकालो नास्ति विषादहेतुकालो नास्ति । कुतः । स्वयम्भुवो वाक्यम् उद्वहन्तौ मानयन्तौ इन्द्रजिदस्त्रजालैः सादितौ सादिताविव वर्तमानाविति यत् । ततः । मा भैष्टेत्यर्थः ॥३—४॥ उक्तमेवार्थं विशदयति–तस्मा इति ॥ ५ ॥ मानयित्वा मुहूर्तमात्रं ब्रह्मास्त्रपरवशः स्थित्वा ॥ ६—८ ॥ भिन्नलाङ्गूलेत्यादिश्लोकद्वयमेकान्वयम् ॥ स्रवद्भिः मूत्रयद्भिः ॥ ९—१० ॥ सुग्रीवमित्यादिश्लोकद्वयमेकान्वयं ॥ आहुक इति कश्चिद्यूथपः । गवाक्षं च सुषेणं च वेगदर्शिनमाहुकमिति पाठः । हतान् हतप्रायान् । प्रहृतानिति वा ॥ ११—१२ ॥ वानराणां यूथपवानराणामित्यर्थः । सुग्रीवाङ्गदादिभिः सह पाठात् ॥ अह्नः पञ्चमशेषेण पञ्चमभागेन । प्रातःसङ्गवमध्याह्नापराह्णसायाह्नसंज्ञाः षण्नाडिकात्मकाः अह्नः पञ्च भागाः सन्ति । तेषु पञ्चमेन सायाह्नसंज्ञेन नाडीषट्केनेत्यर्थः । स्वयम्भुवो वल्लभेन इन्द्रं

**स०** शाखामृगराजाश्चतेवीराश्च तान् । शाखामृगराजेषुवीराश्चेतिवा । ' सप्तमीशौण्डैः ' इतियोगविभागात्समासः । तेन नपूर्वापरेतिवीरशब्दस्यपूर्वनिपातः । आद्यपक्षेतुएकवीरइतिवद्बाहुलकात्परनिपातः ॥ २ ॥ **ति०** अत्र अस्यामवस्थायां । विषादकालः विषादावसरोनास्ति । कुतस्तत्राह—**यदिति** । यद्यस्मात्स्वयंभुवोवाक्यमुद्वहन्तौ तदाज्ञांपरिपालयन्तौ । अतएवविवशौ अस्त्रप्रयोगप्रवृत्तिरहितौ । अथानन्तरं तस्मादेवेन्द्रजितासादिताविति‌यत् तस्माद्विषण्णावेव नतुप्राणपीडावन्तौ । अतोमाभैष्ट । यद्वा एतावविवशौ विषण्णावितियत् तत्रविषयेमाभैष्ट । एतयोर्विषण्णयोरस्मान्कोवारक्षिष्यतीतिशत्रुभ्योभयंमाभूत् । अत्रएतद्विषयेविषादकालोनास्ति । यद्यस्मात्स्वयंभुवोवाक्यं मन्त्ररूपं उद्वहन्तौ मानयन्तौ इन्द्रजिदस्त्रजालैःसादितौ सादिताविव यतोब्रह्मसंमाननार्थंस्वयमेवपतिताविति माभैष्टेत्यर्थः ॥ ३ ॥ **ति०** तदारात्राविव्यनेन सप्तम्यांरात्रावयमस्त्रप्रयोगइतिसूचितं ॥ ८ ॥ **ति०** सप्तषष्टिकोटिवानरहननेसामर्थ्यमाह—वल्लभेनेति । स्वयंभूवल्लभेनब्रह्मास्त्रेण अपरिमितप्राणिहननसमर्थेन हतमितिभगवद्वैभव—

[ **पा०** ] १ अयंश्लोकः क. ख. पाठयोरधिकोदृश्यते. २ ङ.—ट. ममोघवीर्यं. ३ क. ग.—ट. हनूमानिदमब्रवीत्. ४ ङ. झ. ट. अस्मिन्नस्त्रहते. घ. एतस्मिन्नन्तरे. ५ क.—ङ. ज. झ. प्रस्रवद्भिःसमन्ततः. ख. च. छ. ट. प्रस्रवद्भिरिवाचलैः. ६ क. ख. घ.—ञ. जांबवन्तंसुषेणं च. ७ क. घ. ङ. झ. ट. द्विविदंचापिवानरं. ८ क. ग.—ट. विभीषणोहनूमांश्चददृशाते.

सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् ॥ मार्गते जाम्बवन्तं स हनुमान्सविभीषणः ॥ १४ ॥
स्वभावजरया युक्तं वृद्धं शरशतैश्चितम् ॥ प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ॥ १५ ॥
दृष्ट्वा तमुपसंगम्य पौलस्त्यो वाक्यमब्रवीत् ॥ कच्चिदार्य शरैस्तीक्ष्णैः प्राणा न ध्वंसितास्तव ॥१६॥
विभीषणवचः श्रुत्वा जाम्बवानृक्षपुङ्गवः ॥ कृच्छ्रादभ्युद्गिरन्वाक्यमिदं वचनमब्रवीत् ॥ १७ ॥
नैर्ऋतेन्द्र महावीर्य स्वरेण त्वाऽभिलक्षये ॥ पीड्यमानः शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ॥ १८ ॥
अञ्जना सुप्रजा येन मातरिश्वा च नैर्ऋते ॥ हनुमान्वानरश्रेष्ठः प्राणान्धारयते क्वचित् ॥ १९ ॥
श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः ॥ आर्यपुत्रावतिक्रम्य कस्मात्पृच्छसि मारुतिम् ॥२०॥
नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे ॥ आर्य संदर्शितः स्नेहो यथा वायुसुते परः ॥ २१ ॥
विभीषणवचः श्रुत्वा जाम्बवान्वाक्यमब्रवीत् ॥ शृणु नैर्ऋतशार्दूल यस्मात्पृच्छामि मारुतिम् ॥२२॥
तस्मिञ्जीवति वीरे तु हतमप्यहतं बलम् ॥ हनुमत्युज्झितप्राणे जीवन्तोपि वयं हताः ॥ २३ ॥
धरते मारुतिस्तात मारुतप्रतिमो यदि ॥ वैश्वानरसमो वीर्ये जीविताशा ततो भवेत् ॥ २४ ॥
ततो वृद्धमुपागम्य नियमेनाभ्यवादयत् ॥ गृह्य जाम्बवतः पादौ हनुमान्मारुतात्मजः ॥
[ अहमस्मि हरिश्रेष्ठः शाधि मां यच्चिकीर्षितम् ] ॥ २५ ॥
श्रुत्वा हनुमतो वाक्यं तथापि व्यथितेन्द्रियः ॥ पुनर्जातमिवात्मानं मन्यते स्मर्क्षपुङ्गवः ॥ २६ ॥
ततोऽब्रवीन्महातेजा हनुमन्तं स जाम्बवान् ॥ आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि ॥ २७ ॥
नान्यो विक्रमपर्याप्तस्त्वमेषां परमः सखा ॥ त्वत्पराक्रमकालोयं नान्यं पश्यामि कंचन ॥ २८ ॥
ऋक्षवानरवीराणामनीकानि प्रहर्षय ॥ विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ॥ २९ ॥
गत्वा परममध्वानमुपर्युपरि सागरम् ॥ हिमवन्तं नगश्रेष्ठं हनुमन्गन्तुमर्हसि ॥ ३० ॥
ततः काञ्चनमत्युच्चमृषभं पर्वतोत्तमम् ॥ कैलासशिखरं चापि द्रक्ष्यस्यरिनिषूदन ॥ ३१ ॥
तयोः शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम् ॥ सर्वौषधियुतं वीर द्रक्ष्यस्योषधिपर्वतम् ॥ ३२ ॥
तस्य वानरशार्दूल चतस्रो मूर्ध्नि संभवाः ॥ द्रक्ष्यस्योषधयो दीप्ता दीपयन्त्यो दिशो दश ॥ ३३ ॥

---

जिता । ब्रह्मास्त्रेण वा ॥ १३—१६ ॥ वाक्यं वाक्योपयोगि स्वरं ॥ १७—१८ ॥ धारयत इत्यत्र काकुः । किं धारयत इत्यर्थः ॥ १९ ॥ श्रुत्वेत्यादिश्लोकद्वयमेकं वाक्यं ॥ २०—२४ ॥ मारुतात्मजः हनुमान् वृद्धं जाम्बवन्तं उपागम्य । नियमेन श्रोत्रहस्तसंस्पर्शव्यत्यस्तहस्तत्वादिरूपेण सह । जाम्बवतः पादौ गृह्य गृहीत्वा अभ्यवादयत् । स्वनामोच्चारणपूर्वकं युगपत्पादावग्रहीदित्यर्थः ॥ २५ ॥ वाक्यं हनुमानहमस्मीत्यभिवादनवाक्यं । तथा व्यथितेन्द्रियोपि हनुमतो वाक्यं श्रुत्वा ऋक्षपुङ्गवः जाम्बवान् आत्मानं पुनर्जातं मन्यते स्मेति संबन्धः ॥२६—२७॥ विक्रमपर्याप्तः पर्याप्तविक्रमः । विक्रमपूर्ण इति यावत् अन्यं पराक्रमितारं ॥ २८—२९ ॥ परमं दीर्घं । उपर्युपरिसागरं सागरस्य समीपोपरि प्रदेशे । "उपर्यध्यधसः सामीप्ये" इति सामीप्ये द्विर्वचनं । "धिगुपर्यादिषु त्रिषु द्वितीया" इति द्वितीया ॥ ३० ॥ ऋषभं ऋषभाख्यं । पर्वतोत्तमं शिखरमित्यर्थः ॥ ३१—३२॥ तस्येत्यादिश्लोकत्रयमेकान्वयं ॥ ओषधयः ओषधीः । दीपयन्त्यः दीपयन्तीः । व्यत्ययेन द्वितीयार्थे प्रथमा । मृतं सञ्जीवयतीति मृतसञ्जीवनी । जीवनानन्तरं संचारक्षमतायै विशल्यं करोतीति विशल्यकरणी । विशल्ये कृते त्वचः सन्धानं करोतीति स-

---

मेवैतदितिभावः ॥ १३ ॥ ति० मार्गते विशिष्येत्यर्थः । तस्यबहुज्ञत्वादुपायप्रश्नार्थमितिभावः ॥ १४ ॥ स० अवश्यंस्नेहेनपाणिंसंगृह्याह—नेति । हेआर्य तथाकिंनदर्शितः । पूर्वंलक्ष्मणेनसहरामस्यनिर्देशादेकसत्त्वेपिद्वयंनास्तीतिप्रतीत्यारामानतिक्रमणेपि

[ पा० ] १ ङ. झ. ट. विद्धगात्रः. २ ङ. झ. ट. सुव्रत. ३ ङ. झ. ट. मृतावयं. ४ इदमर्धं ज. पाठेदृश्यते.

मृतसञ्जीवनीं चैव विशल्यकरणीमपि ॥ सावर्ण्यकरणीं चैव सन्धानकरणीं तथा ॥ ३४ ॥
ताः सर्वा हनुमन्गृह्य क्षिप्रमागन्तुमर्हसि ॥ आश्वासय हरीन्प्राणैर्योज्य गन्धवहात्मज ॥ ३५ ॥
श्रुत्वा जाम्बवतो वाक्यं हनुमान्हरिपुङ्गवः ॥ आपूर्यत बलोद्धर्षैस्तोयवेगैरिवार्णवः ॥ ३६ ॥
स पर्वततटाग्रस्थः पीडयन्पर्वतोत्तमम् ॥ हनुमान्दृश्यते वीरो द्वितीय इव पर्वतः ॥ ३७ ॥
हरिपादविनिर्भग्नो निषसाद स पर्वतः ॥ न शशाक तदाऽऽत्मानं सोढुं भृशनिपीडितः ॥ ३८ ॥
तस्य पेतुर्नगा भूमौ हरिवेगाच्च जज्वलुः ॥ शृङ्गाणि च व्यशीर्यन्त पीडितस्य हनूमता ॥ ३९ ॥
तस्मिन्संपीड्यमाने तु भग्नद्रुमशिलातले ॥ न शेकुर्वानराः स्थातुं घूर्णमाने नगोत्तमे ॥ ४० ॥
सा घूर्णितमहाद्वारा प्रभग्नगृहगोपुरा ॥ लङ्का त्रासाकुला रात्रौ प्रनृत्तेवाभवत्तदा ॥ ४१ ॥
पृथिवीधरसंकाशो निपीड्य धरणीधरम् ॥ पृथिवीं क्षोभयामास सार्णवां मारुतात्मजः ॥ ४२ ॥
आरुरोह तदा तस्माद्धरिर्मलयपर्वतम् ॥ मेरुमन्दरसंकाशं नानाप्रस्रवणाकुलम् ॥ ४३ ॥
नानाद्रुमलताकीर्णं विकासिकमलोत्पलम् ॥ सेवितं देवगन्धर्वैः षष्टियोजनमुच्छ्रितम् ॥ ४४ ॥
विद्याधरैर्मुनिगणैरप्सरोभिर्निषेवितम् ॥ नानामृगगणाकीर्णं बहुकन्दरशोभितम् ॥ ४५ ॥
सर्वानाकुलयंस्तत्र यक्षगन्धर्वकिन्नरान् ॥ हनुमान्मेघसंकाशो ववृधे मारुतात्मजः ॥ ४६ ॥
पद्भ्यां तु शैलमापीड्य बडबामुखवन्मुखम् ॥ विवृत्योग्रं ननादोच्चैस्त्रासयन्निव राक्षसान् ॥ ४७ ॥
तस्य नानद्यमानस्य श्रुत्वा निनदमद्भुतम् ॥ लङ्कास्था राक्षसाः सर्वे न शेकुः स्पन्दितुं भयात् ॥४८॥
नमस्कृत्वाऽथ रामाय मारुतिर्भीमविक्रमः ॥ राघवार्थे परं कर्म समीहत परन्तपः ॥ ४९ ॥

स पुच्छमुद्यम्य भुजङ्गकल्पं विनम्य पृष्ठं श्रवणे निकुञ्च्य ॥
विवृत्य वक्रं बडबामुखाभमापुप्लुवे व्योमनि चण्डवेगः ॥ ५० ॥
स वृक्षषण्डांस्तरसाऽऽजहार शैलाञ्शिलाः प्राकृतवानरांश्च ॥
बाहूरुवेगोद्धतसंप्रणुन्नास्ते क्षीणवेगाः सलिले निपेतुः ॥ ५१ ॥

न्धानकरणी । ततो व्रणकृतवैवर्ण्यं विहाय प्रदेशान्तरसावर्ण्यं करोतीति सावर्ण्यकरणी ॥ ३३—३५ ॥ बलोद्धर्षैः बलोत्कर्षैः । आपूर्यत पूर्णोभूत् ॥ ३६ ॥ पर्वततटाग्रस्थः त्रिकूटशिखरस्थः । पर्वतोत्तमं त्रिकूटं ॥ ३७ ॥ हरीति । हरिः हनुमान् ॥ ३८ ॥ तस्य त्रिकूटस्य । नगाः वृक्षाः । हरिवेगात् हनुमतो हिमवदुत्तरप्रदेशस्थौषधिपर्वतपर्यन्तगमनोचितशक्त्यास्थानवेगात् । जज्वलुश्च । वेगोद्धर्षजवह्निनेत्यर्थः पीडितस्य पर्वतस्येति शेषः ॥३९॥ न शेकुरिति । त्रिकूटतटस्य युद्धरङ्गत्वात् । घूर्णमाने कम्पमाने॥४०॥ प्रनृत्तेवाभवत् त्रिकूटाग्रनिर्मितत्वात्तस्याः ॥ ४१—४२॥ आरुरोहेत्यादिश्लोकत्रयमेकान्वयं ॥ मलयपर्वतमित्यत्र लङ्कामलय उच्यते ॥४३—४६॥ त्रासयन् त्रासनार्थं ननाद । "लक्षणहेत्वोः—" इति शतृप्रत्ययः । स्वागमनपर्यन्तं राक्षसनिर्गमनं मा भूदिति तेषां त्रासनार्थं ननादेति भावः । इवशब्दो वाक्यालंकारे ॥ ४७—४८ ॥ नमस्कृत्वाथ रामायेति अयं प्रारीप्सितकर्मसमाप्तये सम्यगिष्टदेवतानमस्कारः ॥ ४९ ॥ स पुच्छमिति पुच्छोद्यमनेनोत्साहातिरेक उक्तः । पृष्ठविनमनेनाकाशगमनानुकूलप्राणवायुनिरोध उक्तः। श्रवणनिकुञ्चनेन बलोद्दीपनं । मुखव्यादानेनाभिनिवेशः ॥५०॥ प्राकृतवानरान् त्रिकूटवननित्यवासिनः । आजहार उज्जहार । अस्यैवानुवादो बाह्विति । बाहूरुवेगोद्धतसंप्रणुन्नाः बाहूर्वोर्वेगेन उद्धताः उन्मूलिताः

तदतिक्रमणमितिशङ्कांवारयितुंराघवइतिपृथगुक्तिः ॥ २१ ॥ ति० सुवर्णकरणीं स्वर्णसमानवर्णस्वदेहादेःकरणीं ॥ ३४ ॥

[ पा० ] १ ग. ङ. झ. ट. सुवर्णकरणींचैवसंधानींचमहौषधीं. क. ख. घ. च. छ. ञ. सवर्णकरणींचैवसंधानींचमहौषधीं. २ ख. ञ. प्रतिगन्तुंत्वमर्हसि. ३ ङ. झ. बलोद्धर्षैर्वायुवेगैरिवा. ४ क. श्रीमान्हरिः. ५ क. न्मेरुसंकाशो. ६ ङ. झ. ट. शैलमाविध्य. ७ क. ग. ङ. झ. ट. राक्षसव्याघ्रानशेकुः.

स तौ प्रसार्योरगभोगकल्पौ भुजौ भुजङ्गारिनिकाशवीर्यः ॥
जगाम मेरुं नगराजमग्र्यं दिशः प्रकर्षन्निव वायुसूनुः ॥ ५२ ॥
स सागरं घूर्णितवीचिमालं तदा भृशं भ्रामितसर्वसत्त्वम् ॥
समीक्षमाणः सहसा जगाम चक्रं यथा विष्णुकराग्रमुक्तम् ॥ ५३ ॥
स पर्वतान्वृक्षगणान्सरांसि नदीस्तटाकानि पुरोत्तमानि ॥
स्फीताञ्जनान्तानपि संप्रवीक्ष्य जगाम वेगात्पितृतुल्यवेगः ॥ ५४ ॥
आदित्यपथमाश्रित्य जगाम स गतक्लमः ॥ हनुमांस्त्वरितो वीरः पितृतुल्यपराक्रमः ॥ ५५ ॥
जवेन महता युक्तो मारुतिर्मारुतो यथा ॥ जगाम हरिशार्दूलो दिशः शब्देन पूरयन् ॥ ५६ ॥
स्मरञ्जाम्बवतो वाक्यं मारुतिर्वातरंहसा ॥ ददर्श सहसा चापि हिमवन्तं महाकपिः ॥ ५७ ॥
नानाप्रस्रवणोपेतं बहुकन्दरनिर्झरम् ॥ श्वेताभ्रचयसंकाशैः शिखरैश्चारुदर्शनैः ॥
शोभितं विविधैर्वृक्षैरगमत्पर्वतोत्तमम् ॥ ५८ ॥
स तं समासाद्य महानगेन्द्रमतिप्रवृद्धोत्तमघोरशृङ्गम् ॥
ददर्श पुण्यानि महाश्रमाणि सुरर्षिसङ्घोत्तमसेवितानि ॥ ५९ ॥
स ब्रह्मकोशं रजतालयं च शक्रालयं रुद्रशरप्रमोक्षम् ॥
हयाननं ब्रह्मशिरश्च दीप्तं ददर्श वैवस्वतकिङ्करांश्च ॥ ६० ॥
वज्रालयं वैश्रवणालयं च सूर्यप्रभं सूर्यनिबन्धनं च ॥
ब्रह्मासनं शङ्करकार्मुकं च ददर्श नाभिं च वसुन्धरायाः ॥ ६१ ॥
[ विघ्नेश्वरं तत्र सनन्दिकेशं स्कन्दं वृतं देवगणैर्ददर्श ॥
उमां सुदुर्गामथ कन्यकाभिर्विलासयन्तीं ददृशेऽग्र्यवीर्यः ] ॥ ६२ ॥

संप्रणुन्नाः । दूरं प्रेरिताः । क्षीणवेगाः क्रमेण क्षीणवेगाः सन्तः ॥५१॥ मेरुं कैलासपार्श्ववर्तिनं । अस्ति ह्यन्यो हिमवदन्तर्वर्ती मेरुः । यद्वा मेरुं मेरूपलक्षितदिशि स्थितं नगराजं हिमवन्तं । यद्वा मेरुमुद्दिश्य जगाम । उत्तरांदिशमुद्दिश्य जगामेत्यर्थः । यद्वा मेरुं मेरुसदृशं । प्रकर्षन् कम्पयन् ॥ ५२—५३ ॥ जनान्तान् जनपदान् ॥ ५४ ॥ पूर्वमुपर्युपरिसागरमित्युक्त्वा आदित्यपथं आकाशं ॥ ५५—५६ ॥ स्मरन् जाम्बवत इति जाम्बवद्वाक्यस्मरणं औषधिपर्वतमतीत्य वेगातिशयेनान्यत्र गमननिवृत्त्यर्थं । वातरंहसा । उपलक्षित इति शेषः ॥ ५७—५९ ॥ दृष्टानामाश्रमाणां नामान्यनुक्रामति—स ब्रह्मकोशमित्यादिना ॥ ब्रह्मणश्चतुर्मुखस्य कोशो गृहं । "कोशोस्त्री कुड्मलेर्थौघे गुह्यदेशेण्डशीर्षयोः । गृहे देहे पुस्तकौघपेट्यामसिपिधानके" इति रत्नमाला । रजतालयं कैलासं । शक्रस्य इन्द्रस्य । स्थानं आश्रमस्थानं । रुद्रशराः प्रमोक्ष्यन्ते लीलार्थं यस्मिन् तद्रुद्रशरप्रमोक्षं स्थानं । हयाननं हयग्रीवाराधनस्थानं । ब्रह्मशिरः रुद्रनिकृत्तब्रह्मशिरःप्रक्षेपस्थानं । वैवस्वतकिङ्करान् विवस्वत्संबन्धिकिङ्करान् । ग्रामण्यादीन् मासान्तपरिचारकान् विश्रमार्थमत्र स्थितान् ॥ ६० ॥ वज्रालयमिति । इन्द्राय ब्रह्मणा वज्रप्रदानस्थानं । सूर्यप्रभमिति वैश्रवणालयविशेषणं । सूर्यनिबन्धनं छायादेवीप्रीतये विश्वकर्मणा शाणारोपणाय सूर्यनिबन्धनस्थानं । ब्रह्मासनं देवगणसंदर्शनाय कृतं ब्रह्मणः सिंहासनं । ब्रह्मणामृषीणामासनं स्थानं वा । शङ्कर-

ति० रजतालयं हिरण्यगर्भापरमूर्तेरजतनाभेःस्थानं । ब्रह्मशिरः ब्रह्मास्त्रदेवता । तत्स्थानं ॥६०॥ ति० सूर्यनिबन्धनं सूर्याणांयत्रस्थानेनिबन्धनंसमावेशः तत्स्थानं । अतएवतत्सूर्यप्रभं । ब्रह्मालयं चतुर्मुखब्रह्मस्थानं ॥ ६१ ॥

[ पा० ] १ ङ. झ. ट. न्पक्षिगणान्. २ ङ. झ. मारुतिर्वातरंहसा. ३ क. ख. ग. ङ.—ट. नादयन्. ४ ङ. झ. ञ. ट. मारुतिर्भीमविक्रमः. ५ ख. ङ. छ. झ. ञ. ट. हेमशृङ्गं. ६ घ. ञ. ब्रह्मलोकं. ७ ङ. झ. ठ. वह्न्यालयं. ८ ङ. झ. ट. ब्रह्मालयं. ९ अयंश्लोकः क. ख. च. छ. पाठेषुदृश्यते.

कैलासमग्र्यं हिमवच्छिलां च तथर्षभं काञ्चनशैलमग्र्यम् ॥
संदीप्तसर्वौषधिसंप्रदीप्तं ददर्श सर्वौषधिपर्वतेन्द्रम् ॥ ६३ ॥
स तं समीक्ष्यानलरश्मिदीप्तं विसिष्मिये वासवदूतसूनुः ॥
आवृत्य तं चौषधिपर्वतेन्द्रं तत्रौषधीनां विचयं चकार ॥ ६४ ॥
स योजनसहस्राणि समतीत्य महाकपिः ॥ दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥ ६५ ॥
महौषध्यस्ततः सर्वास्तस्मिन्पर्वतसत्तमे ॥ विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥ ६६ ॥
स ता महात्मा हनुमानपश्यंश्चुकोप कोपाच्च भृशं ननाद ॥
अमृष्यमाणोऽग्निनिकाशचक्षुर्महीधरेन्द्रं तमुवाच वाक्यम् ॥ ६७ ॥
किमेतदेवं सुविनिश्चितं ते यद्राघवे नासि कृतानुकम्पः ॥
पश्याद्य मद्बाहुबलाभिभूतो विकीर्णमात्मानमथो नगेन्द्र ॥ ६८ ॥
स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् ॥
विकीर्णकूटज्वलिताग्रसानुं प्रगृह्य वेगात्सहसोन्ममाथ ॥ ६९ ॥
स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान्ससुरासुरेन्द्रान् ॥
संस्तूयमानः खचरैरनेकैर्जगाम वेगाद्गरुडोग्रवेगः ॥ ७० ॥
स भास्कराध्वानमनुप्रपन्नस्तं भास्कराभं शिखरं प्रगृह्य ॥
बभौ तदा भास्करसन्निकाशो रवेः समीपे प्रतिभास्कराभः ॥ ७१ ॥
स तेन शैलेन भृशं रराज शैलोपमो गन्धवहात्मजस्तु ॥
सहस्रधारेण सपावकेन चक्रेण खे विष्णुरिवार्पितेन ॥ ७२ ॥

कार्मुकं तत्स्थानमित्यर्थः । नाभिं पातालप्रवेशरन्ध्रं ॥ ६१—६२ ॥ ब्रह्मादिस्थानेषु रजताळयमिति परिगणितमपि जाम्बवदुपदिष्टप्रकारेण दर्शनाय पुनराह—कैलासमिति ॥ हिमवच्छिला नाम कैलासपार्श्वे कश्चिच्छिलाविशेषः । ऋषभं ऋषभाख्यमौषधिपर्वतं । काञ्चनशैलं पूर्वं मेरुमित्युक्तं । संदीप्तसर्वौषधिसंप्रदीप्तं संदीप्ताभिः रात्रौ ज्वलन्तीभिः सर्वाभिः ओषधीभिः तृणज्योतिर्भिः संप्रदीप्तं सम्यक्प्रकाशमानं । सर्वौषधिपर्वतेन्द्रं मृतसञ्जीवन्यादिसर्वौषधियुक्तपर्वतेन्द्रं । ददर्श ॥ ६३ ॥ वासवदूतः वायुः वासवादेशेन मेघप्रेरकत्वात् । अतएवाभिषेकसमये इन्द्रेण प्रेरितो हारं रामायोपाहरत् । विचयं अन्वेषणं ॥ ६४ ॥ अतीत्य अतीत्यापीत्यर्थः । अनेन श्रमरहितत्वमुक्तं ॥ ६५ ॥ ततः तस्य हनुमतः । अदर्शनं ॥ ६६ ॥ ताः ओषधीः ॥ ६७ ॥ राघवे कृतानुकम्पो नासीति यत् एतत् एवं सुविनिश्चितं यदि तर्हि आत्मानमथो विकीर्णं पश्येति संबन्धः ॥ एतच्छ्लोकानन्तरमित्युक्त्वेत्यध्याहार्यं ॥ ६८ ॥ सनागं सगजं । उन्ममाथ उत्पाटयामास ॥ ६९—७० ॥ भास्काराध्वानं अन्तरिक्षं । भास्कराभशिखरग्रहणात् स्वयं भास्करसन्निकाशत्वाच्च सूर्यसमीपस्थः प्रतिसूर्य इव बभावित्यर्थः ॥ ७१ ॥ सहस्रधारेण । आर्पितेन

**ति०** हिमवच्छिलां भगवतोरुद्रस्यतपस्समाधिपीठं ॥ ६३ ॥ **ति०** वासवस्यमेघस्वरूपिणोदेवराजस्यदूतः प्रेरकः वायुरित्यर्थः ॥ **स०** वासवोदूतःप्रोक्तकारीयस्यसतस्य । सूनुः ॥६४॥ **ति०** योजनसहस्राणि सहस्रशब्दोऽनेकोपलक्षणं ॥ **स०** योजनसहस्राणि पञ्चाशत्सहस्रयोजनानि ॥ ६५ ॥ **ति०** रवेःसमीपइत्यनेन सूर्योदयोत्तरमेतदानयनमितिलभ्यते ॥ **सं०** रवेस्समीपेबभौ । अनेनसूर्योदयोत्तरंगमनानयनेइतिलभ्यते ॥ ७१ ॥ **स०** खे हस्तात्मकेइन्द्रिये । अर्पितेन । खेआकाशेयथातथाबभावितिवा ॥७२॥

**[ पा० ]** १ क. विष्णुरिवोद्धतेन.

तं वानराः प्रेक्ष्य विनेदुरुच्चैः स तानपि प्रेक्ष्य मुदा ननाद ॥
तेषां समुत्कुष्टरवं निशम्य लङ्कालया भीमतरं विनेदुः ॥ ७३ ॥
ततो महात्मा निपपात तस्मिञ्शैलोत्तमे वानरसैन्यमध्ये ॥
हर्युत्तमेभ्यः शिरसाऽभिवाद्य विभीषणं तत्र स सस्वजे च ॥ ७४ ॥
तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ॥
बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ ७५ ॥
सर्वे विशल्या विरुजः क्षणेन हरिप्रवीरा निहताश्च ये स्युः ॥
गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव संप्रबुद्धाः ॥ ७६ ॥
यदाप्रभृति लङ्कायां युध्यन्ते कपिराक्षसाः ॥ तदाप्रभृति मानार्थमाज्ञया रावणस्य च ॥ ७७ ॥
ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः ॥ हताहतास्तु क्षिप्यन्ते सर्वे एव तु सागरे ॥ ७८ ॥
ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवीर्यः ॥
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ ७९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

हस्तेर्पितेन । सपावकेन अग्निज्वालावता । चक्रेण विष्णुरिव रराज ॥ ७२ ॥ तं वानरा इत्यनेन दूरादेव गन्धाघ्राणेन सर्वे जीविता इति गम्यते ॥ ७३ ॥ शैलोत्तमे त्रिकूटशिखरे ॥ ७४—७५ ॥ विशल्यकरण्या विशल्याः । सन्धानकरण्या विरुजः । ये पूर्वं निहतास्तेपि सुप्ता निशान्तेष्विव संप्रबुद्धाः । अनेन सावर्ण्यसिद्धिरप्युक्ता ॥ ७६ ॥ तर्हि निहता राक्षसाः किं न प्रबुद्धा इत्यत्राह—यदाप्रभृतीति ॥ मानार्थं हतानां राक्षसानां इयत्तया अपरिज्ञानार्थं । मृतशरीरसंख्याप्रतिपत्त्यर्थंवा । पूर्वयोजनायामर्थशब्दो निवृत्तिपरः । "अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । परैः परिच्छिद्य ज्ञानं मा भूदित्येवमर्थमिति भावः । हताहताः मुमूर्षावस्थाः । किं पुनर्मृता इति भावः । "क्तेन नञ्विशिष्टेनानञ्" इति कर्मधारयः । यद्वा यदा यदा ये ये हताः तदा तदा ते ते क्षिप्ता इत्यर्थः ॥ ७७—७९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुःसप्ततितमःसर्गः ॥ ७४ ॥

---

**स०** विनेदुः । अनेन वातमात्रस्पर्शेनगात्रस्मृतिररोगताचकपीनांजातेइतिध्वन्यते । तेषां सच तेच ते । तेषां हनुमद्वानराणां ॥ ७३ ॥ **ति०** मानार्थं अर्थशब्दोनिवृत्तिवाची । शत्रूणांहतराक्षसेयत्ताज्ञानाभावार्थमित्यर्थः । तत्परिज्ञानेत्ववशिष्टबलस्याल्पीयस्त्वं ज्ञात्वावानरालङ्कांप्रविशेयुः । तेमाप्रवेक्ष्यन्नित्येतदर्थोऽयंरावणस्येश्वरेच्छयाविचारः ॥ ७७ ॥ **स०** सागरोपरिगिरिशिखरंपरिगृह्योत्प्लवनेतदन्तस्स्थानांरक्षसामनुज्जीवनंचनगन्धस्यान्तःप्रवेशासामर्थ्यात् । किंनामयादोभीरक्षसांभक्षितत्वात् । निलयनमात्रेणहनुमत्कृतपर्वतोत्पाटनतःएतदनिष्टकार्यसाधनेऽयमुत्तरत्रकिंकुर्यादितिभीतेर्वा । "भीषास्माद्वातःपवते" इत्यादेःरामविरुद्धकार्यकरणभीतेरिवात्मजप्रीतेर्वावायुर्ननिनायनीरनायकमध्येगन्धमितिवेतिज्ञेयम् । ओषधीनामर्थिनंज्ञात्वाऽदर्शनंगताइत्यनेनज्ञानिलोक्तेरनुसंधानादिकंसंभवतीतिसुघटोऽयमर्थः ॥ ७८ ॥ **ति०** ओषधीशैलमितिदीर्घआर्षः ॥ आश्विनकृष्णाष्टम्यामिदं ॥ **स०** ओषधीशैलः तद्वत्पर्वतः । तं । तत्रत्यएववेगात् हिमवन्तंस्वस्थानं । तं उत्कृत्तशैलभागं । निनाय प्रापयामास । "संस्थितएवतत्र" इत्यन्यत्रोक्तेः । पुनः प्रक्षेपानन्तरं रामेणसमाजगामसंगतोभूत् । प्रथमेन्द्रजिद्युद्धएवादृष्टतद्दृष्ट्यै 'इदमंभोगृहीत्वातु' इत्यारभ्य 'चकारनेत्रयोःशौचं' इतिगर्भीकृत्य "क्षणेनातीन्द्रियाण्येषांचक्षूंषि" इत्यनेन वनपर्वोक्ता 'अनेनदृष्टोऽहमितिस्मदुष्टः' इत्यन्यत्ररीत्यन्तरेणोक्ताचकथाऽनुक्तिर्नदोषायेतिनीतेरविरुद्धेतिचसंग्राह्येतिज्ञेयं । ओषधीतिदीर्घार्षतालेखनंनिर्बीजं । अत्रैवबहुस्थलेषु ओषध्यइतिपूर्वमुक्तेः । लेखनंयदिकर्तव्यंतर्हितत्रैवकर्तव्यं । ईकारान्तत्वेनसमाधानंतत्रेवात्रापिसममितिनस्वरसम् ॥ ७९ ॥ इतिचतुस्सप्ततितमःसर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

सुग्रीवनियोगेन वानरैरात्रौलङ्कादहनम् ॥ १ ॥ ततोरावणाज्ञयाकुंभकर्णात्मजाभ्यांकुंभनिकुंभाभ्यां यूपाक्षादिभिः सेनयाचसह वानरान्प्रतिरणायनिर्याणम् ॥ २ ॥ वानरराक्षससैन्ययोर्महायुद्धम् ॥ ३ ॥

ततोऽब्रवीन्महातेजाः सुग्रीवो वानराधिपः ॥ अर्थ्यं विज्ञापयंश्चापि हनुमन्तमिदं वचः ॥ १ ॥
यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः ॥ नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ २ ॥
ये ये महाबलाः सन्ति लघवश्च प्लवङ्गमाः ॥ लङ्कामभ्युत्पतन्त्वाशु गृह्योल्काः प्लवगर्षभाः ॥
[हरयो हरिसंकाशाः प्रदग्धुं रावणालयम् ॥ ३ ॥]
ततोस्तंगत आदित्ये रौद्रे तस्मिन्निशामुखे ॥ लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः ॥ ४ ॥
उल्काहस्तैर्हरिगणैः सर्वतः समभिद्रुताः ॥ आरक्षस्था विरूपाक्षाः सहसा विप्रदुद्रुवुः ॥ ५ ॥
गोपुराट्टप्रतोलीषु चर्यासु विविधासु च ॥
प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् ॥ तेषां गृहसहस्राणि ददाह हुतभुक्तदा ॥ ६ ॥
प्रासादाः पर्वताकाराः पतन्ति धरणीतले ॥ अगरुर्दह्यते तत्र वरं च हरिचन्दनम् ॥ ७ ॥
मौक्तिका मणयः स्निग्धा वज्रं चापि प्रवालकम् ॥
क्षौमं च दह्यते तत्र कौशेयं चापि शोभनम् ॥ ८ ॥

एवं हनुमदानीतौषधिपर्वतगन्धमात्रेण समागतप्राणेषु सर्वेषु विशल्येषु समुत्थितेषु सुग्रीवः स्वातिसन्धानजनितकोपातिरेकेण सद्यो निःशेषं लङ्कानिर्दहनं हनुमते नियमयति—तत इत्यादि ॥ अर्थ्यं अर्थादनपेतं । प्रयोजननियतं वाक्यं विज्ञापयन् । रामायेति शेषः । ततो हनुमन्तमब्रवीदिति योजना । यद्वा अर्थ्यं विज्ञापयन् विशेषेण ज्ञापयन् ॥ १ ॥ इदानींलङ्कादाहोपदेशे निमित्तमाह—यत इति ॥ उपनिर्हारं उपनिष्क्रमणं । युद्धाय निर्गमनमिति यावत् । हतपुत्रादित्वेनानुत्साहाद्रावणो न निर्गमिष्यतीति भावः । अत्र आग्रहेण प्रेतनिर्यापनरूढनिर्हारपदप्रयोगः । दातुं कर्तुमिति यावत् । धातूनामनेकार्थत्वात् । उपनिर्हारशब्दः उपनिष्क्रम्य युद्धपरो वा ॥ २ ॥ लघवः वेगवन्तः । उत्पतन्तु प्राकारमुत्प्लुत्य गच्छन्तु ॥ ३ ॥ ततइति । ननु पूर्वमुल्काहस्तौ तदा रात्रावित्युक्तं । अत्र आदित्यास्तमयसमय इति गम्यते अतो विरुद्धमिति चेन्नविरोधः । आदित्येस्तं गत इति प्रकाशाभावोक्तिः । निशामुख इति रात्रेः प्रथमयाम उच्यते । रौद्र इति विशेषणात् यामान्तत्वेन गाढान्धकारत्वमुच्यते । हनुमांश्च महाद्भुतवेगशालितया मुहूर्तमात्रेण प्रस्थायौषधिपर्वतमानीय तं पुनस्तत्र निक्षिप्यागतवानिति तस्य वेगातिशयश्च प्रतिपादितो भवति ॥ ४ ॥ आरक्षस्थाः गुल्मस्थाः नगररक्षिणो वा । आरक्षो दुर्गरक्षिणां स्थानं । तत्रस्था वा । "त्रिष्वारक्षस्तु रक्षणे" इति रत्नमाला । विरूपाक्षाः राक्षसाः ॥ ५ ॥ गोपुरं पुरद्वारं । अट्टन्ति हिंसन्ति योधा एषु स्थित्वेत्यट्टाः प्राकाराग्रस्थितगृहाणि । "स्यादट्टः क्षौममस्त्रियां" इत्यमरः । प्रतोल्यः वीथ्यः । चर्याः अवान्तरवीथ्यः । ते वानराः । ससृजुः क्षिप्तवन्तः । तेषां वानराणां संबन्धी हुतभुगित्यन्वयः ॥ ६ ॥ दहनकार्यं प्रपञ्चयति—प्रासादा इत्यादि ॥ तत्र प्रासादेषु । दह्यते अदह्यत । व्यत्ययेन भूतार्थे लट् । वरं सुगन्धं ॥ ७ ॥ मौक्तिका इत्यादिचतुःश्लोक्येकान्वया ॥ सर्वत्र अदह्यतेत्यस्य

**कतक०** तस्मादिदानीं उपनिर्हारं पुररक्षां । दातुं संपादयितुं । नार्हति ॥ **ति०** उपनिर्हारं युद्धावहारं । अस्माकंदातुंनार्हतीत्यर्थः । अनेनान्यदायुद्धावहारोजातइतिज्ञायतेइत्यन्ये ॥ **शि०** किंच उपनिर्हारं मृतपुत्राद्युद्देश्यकजलं । दातुंनार्हति अवकाशोनदातव्यइतितात्पर्यम् ॥ २ ॥ **ति०** ततोस्तमिति । पूर्वदिवसापररात्रिशेषेउल्काहस्ताभ्यांहनुमद्विभीषणाभ्यांजांबवदन्वेषणं । ततस्तन्नियोगतउषसिपर्वताहरणायगमनं । अथाहरणं । पुनश्चतत्प्रापणंपुनरागमनमितित्रिंशद्घटिकामध्येसर्वं । ततःपुनःप्रदोषे हनुमदादीनांलङ्कादाहगमनमितिकतकादयः ॥४॥ **स०** आरक्षं रक्षणीयंद्वारादि । तत्रतिष्ठन्तीत्यारक्षस्थाः । "आरक्षंरक्षणीयेस्यात्" इतिविश्वः ॥ ५ ॥ **ति०** अट्टः गृहोपरितनंगृहं ॥ ६ ॥

आविकं विविधं चौर्णं काञ्चनं भाण्डमायुधम् ॥ नानाविकृतसंस्थानं वाजिभाण्डपरिच्छदौ ॥ ९ ॥
गजग्रैवेयकक्ष्याश्च रथभाण्डाश्च संस्कृताः ॥ तनुत्राणि च योधानां हस्त्यश्वानां च वर्म च ॥ १० ॥
खड्गा धनूंषि ज्या बाणास्तोमराङ्कुशशक्तयः ॥ रोमजं वालजं चर्म व्याघ्रजं चाण्डजं बहु ॥ ११ ॥
मुक्तामणिविचित्रांश्च प्रासादांश्च समन्ततः ॥ विविधानस्त्रसंयोगानग्निर्दहति तत्र वै ॥ १२ ॥
नानाविधान्गृहच्छन्दान्ददाह हुतभुक्तदा ॥ आवासान्राक्षसानां च सर्वेषां गृहगर्धिनाम् ॥ १३ ॥
हेमचित्रतनुत्राणां स्रग्दामाम्बरधारिणाम् ॥ शीधुपानचलाक्षाणां मदविह्वलगामिनाम् ॥ १४ ॥
कान्तालम्बितवस्त्राणां शत्रुसंजातमन्युनाम् ॥ गदाशूलासिहस्तानां खादतां पिबतामपि ॥ १५ ॥
शयनेषु महार्हेषु प्रसुप्तानां प्रियैः सह ॥ त्रस्तानां गच्छतां तूर्णं पुत्रानादाय सर्वतः ॥ १६ ॥
तेषां शतसहस्राणि तदा लङ्कानिवासिनाम् ॥ अदहत्पावकस्तत्र जज्वाल च पुनः पुनः ॥ १७ ॥

---

यथायथं विपरिणामेनान्वयः । मणयः उपात्तमौक्तिकादिव्यतिरिक्ताः । क्षौमकौशेययोरुपादानभेदात् भेदः । 'वाल्कं क्षौमादि । कौशेयं कृमिकोशोत्थं' इत्युभयत्राप्यमरः । शोभनं शोभमानं । आविकं अविरोमनिर्मितं कम्बलं । और्णं मेषादिरोमनिर्मितं कम्बलं "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः । भाण्डं उपकरणं । आभरणादि वा । "भाण्डं तु भूषायां नादे पात्राश्वभूषयोः । मार्जने कलशादौ च वणिङ्मूलधनेपि च" इति रत्नमाला । नानाविकृतसंस्थानं नानाविधविकारवद्विचित्रसन्निवेशमिति भूषणादिसर्वविशेषणं । वाजिभाण्डपरिच्छदौ अश्वालंकारपल्ययनादिपरिबर्हौ । भाण्डशब्देनैवाश्वाभरणसिद्धावपि कर्णावतंसादिवत् साहित्यबोधनार्थं वाजिपदं । गजानां ग्रैवेयकानि कण्ठभूषणानि । कक्ष्याः इभबन्धिन्यः । "ग्रैवेयकं कण्ठभूषा" । "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्युभयत्राप्यमरः । संस्कृताः उत्तेजिताः । योधानां तनुत्राणि वर्माणि । हस्त्यश्वानां वर्म अयःकांस्यादिनिर्मितं । रोमजं अविमेषादिरोमभिन्नरोमनिर्मितं कम्बलादि । वालजं चामरादि । चर्मसंस्तरणं खेटकं वा । व्याघ्रजं वैयाघ्रं नखवालादि । अण्डजं कस्तूरिकादिद्रव्यं ॥ ८–११ ॥ प्रासादाः पर्वताकारा इत्यत्र केवलप्रासादाः । अत्र मुक्तादिखचिताः । अस्त्रसंयोगान् संयुज्यन्त इति संयोगाः सङ्घाताः तान् । तत्र लङ्कायां ॥ १२ ॥ गृहच्छन्दान् स्वस्तिकादिगृहविन्यासान् । गृहगर्धिनां गृहस्थानां ॥ १३ ॥ हठोपनतत्वेन खेदातिशयं व्यञ्जयितुं तेषां व्यासङ्गं दर्शयति—हेमेत्यादिना ॥ हेमचित्रतनुत्राणां हेममयाद्भुतवर्मणां । "आलेख्याश्चर्ययोश्चित्रं" इत्यमरः । वर्मग्रहणव्यासक्तानामित्यर्थः । स्रग्दामानि पुष्पमालाः । दामशब्दो हारपरः । स्रग्दामशब्देनानेकसरनिर्मितपुष्पमालोच्यत इत्याचार्याः । अत्र सर्वत्रापि व्यासङ्ग एव तात्पर्यं । शीधुपानचलाक्षाणां मद्यपानलोलदृष्टीनां । अतएव मदविह्वलगामिनां मदेन मन्दगामिनां । कान्तालम्बितवस्त्राणां आलम्बितवस्त्रकान्तानां । रतिपराणामिति यावत् । शत्रुषु संजातमन्युनां संजातक्रोधानां । दीर्घाभाव आर्षः । खादतां मांसादिकं भक्षयतां । पिबतां मद्यपानं कुर्वतां । शीधुपानेत्यत्र मद्यपानकार्यमुक्तं । क्षीरादिकं पिबतामिति वा । महार्हेष्विति विशेषणेन सुप्त्यतिशयहेतुरुक्तः । प्रियैः दारैरिति विशेष्यं । तेषां एवं व्यासक्तानां । शतसहस्राणीति संख्यासंख्येययोरभेदेन निर्देशः । अनेकशतसहस्रराक्षसानित्यर्थः । पुनः पुनरित्यनेन तद्बुधि-

---

स० "भाण्डशब्दोलङ्कारमात्रवाची रथभाण्डेत्युक्तेः । अतएववाजिभाण्डेत्यत्र वाजिग्रहणंचरितार्थं । अश्वालङ्कारवाचित्वेतुतद्वैयर्थ्यं स्पष्टमेव । तत्त्वेपिकर्णावतंसादिवत्साहित्यबोधनार्थतत्रसः । रथभाण्डेत्यत्रतुलाक्षणिकइत्यन्ये" इतिनागोजिभट्टव्याख्याया-भिन्नानुपूर्वीमत्वाअपिवस्तुतोर्थैनैकतावत्यास्तीर्थव्याख्यायाअपि "भाण्डंभूषणमात्रेपि—नादेपात्रेतुरङ्गाणांभूषणे" इतिविश्वः स्वानवलोकननिमित्ततांस्पष्टमाचष्टइतिननआयासोपेक्षितः ॥ १० ॥ स० प्रियैः प्रियाश्चप्रियाणिचप्रियाणि कान्तापत्यानि तैः । "नपुंसकमनपुंसकेन" इत्येकशेषः । पुत्रानादायगच्छतां निरग्निकस्थलंप्रति ॥ १६ ॥ लङ्कानिवासिनांशतसहस्राणिगृहाण्यदहत्

[ पा० ] १ क.—ट. भाण्डपरिच्छदं. २ ख. घ. ङ. झ. ट. नस्त्रसंघातान्. ३ ङ. झ. ट. गृहांश्चित्रान्.

सारवन्ति महार्हाणि गम्भीरगुणवन्ति च ॥ हेमचन्द्रार्धचन्द्राणि चन्द्रशालोन्नतानि च ॥ १८ ॥
रत्नचित्रगवाक्षाणि साधिष्ठानानि सर्वशः ॥ मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरम् ॥ १९ ॥
क्रौञ्चबर्हिणवीणानां भूषणानां च निस्वनैः ॥ नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः ॥ २० ॥
ज्वलनेन परीतानि तोरणानि चकाशिरे ॥ विद्युद्भिरिव नद्धानि मेघजालानि घर्मगे ॥ २१ ॥
ज्वलनेन परीतानि निपेतुर्भवनान्यथ ॥ वज्रिवज्रहतानीव शिखराणि महागिरेः ॥ २२ ॥
विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गनाः ॥ त्यक्ताभरणसर्वाङ्गा हा हेत्युच्चैर्विचुक्रुशुः ॥ २३ ॥
तानि निर्दह्यमानानि दूरतः प्रचकाशिरे ॥ हिमवच्छिखराणीव दीप्तौषधिवनानि च ॥ २४ ॥
हर्म्याग्रैर्दह्यमानैश्च ज्वालाप्रज्वलितैरपि ॥ रात्रौ सा दृश्यते लङ्का पुष्पितैरिव किंशुकैः ॥ २५ ॥
हस्त्यध्यक्षैर्गजैर्मुक्तैर्मुक्तैश्च तुरगैरपि ॥ बभूव लङ्का लोकान्ते भ्रान्तग्राह इवार्णवः ॥ २६ ॥
अश्वं मुक्तं गजो दृष्ट्वा क्वचिद्भीतोपसर्पति ॥ भीतो भीतं गजं दृष्ट्वा क्वचिदश्वो निवर्तते ॥ २७ ॥
लङ्कायां दह्यमानायां शुशुभे स महार्णवः ॥ छायासंसक्तसलिलो लोहितोद इवार्णवः ॥ २८ ॥
सा बभूव मुहूर्तेन हरिभिर्दीपिता पुरी ॥ लोकस्यास्य क्षये घोरे प्रदीप्तेव वसुन्धरा ॥ २९ ॥
नारीजनस्य धूमेन व्याप्तस्योच्चैर्विनेदुषः ॥ स्वनो ज्वलनतप्तस्य शुश्रुवे दशयोजनम् ॥ ३० ॥
प्रदग्धकायानपरान्राक्षसान्निर्गतान्बहिः ॥ सहसाऽभ्युत्पतन्ति स्म हरयोथ युयुत्सवः ॥ ३१ ॥
उद्घुष्टं वानराणां च राक्षसानां च निस्स्वनः ॥ दिशो दश समुद्रं च पृथिवीं चान्वनादयत् ॥ ३२ ॥

रवसास्नेहेनाधिकज्वालोच्यते ॥ १४—१७ ॥ रावणस्य पुनर्धननाशं व्यञ्जयितुमुत्तमगृहदहनं दर्शयति—सारवन्तीत्यादिना ॥ सारवन्ति श्रेष्ठधनवन्ति । "सारो बले स्थिरांशेर्थे पुमान्न्याय्ये वरे त्रिषु" इति रत्नमाला । गम्भीराणि महातल्पवन्ति । गुणवन्ति सौन्दर्यवन्ति । हेमचन्द्रार्धचन्द्राणि हेमकृतानि चन्द्राकाराण्यर्धचन्द्राकाराणि चेत्यर्थः । चन्द्रशालाभिः शिरोगृहैः उन्नतानि । "चन्द्रशाला शिरोगृहं" इत्यमरः । साधिष्ठानानि शय्यासनादिसहितानि । स्पृशन्तीव दिवाकरं । सूर्यपथपर्यन्तोन्नतानीत्यर्थः । क्रौञ्चादयो लीलार्थं गृहेषु संवर्धिताः ॥ १८–२० ॥ घर्मोस्माद्गच्छतीति घर्मगः वर्षाकाल इत्यर्थः । घर्मगे निदाघे गच्छतीति शेष इत्यप्याहुः । घर्मशब्देन घर्मान्तो लक्ष्यते । तं गच्छति प्राप्नोतीति घर्मगः वर्षादिरित्यपरे । वस्तुतो घर्मगे ग्रीष्म इत्येवार्थः । लङ्कायां दह्यमानायां सन्तापे च समन्ततः प्रसरति दह्यमानतोरणादीनि निदाघप्ररूढसविद्युन्मेघतुल्यानीत्यर्थः ॥ २१ ॥ ज्वलनेन परीतानि निपेतुरित्यस्य वज्रिवज्रहतानीवेत्युत्तरार्धं ॥ २२ ॥ त्यक्ताभरणसर्वाङ्गाः सर्वाङ्गाभरणान्यपि त्यक्त्वेत्यर्थः ॥ २३ ॥ तानि पूर्वश्लोके प्रस्वापाधिकरणतयोपात्तानि विमानानि । दीप्तौषधिवनानि प्रकाशिततृणज्योतिर्वनानि ॥ २४ ॥ ज्वालाप्रज्वलितैः ज्वालाविशिष्टैरित्यर्थः ॥ २५ ॥ हस्त्यध्यक्षैः हस्तिपकैः । मुक्तैः निगलान्मोचितैः । मुक्तैश्च तुरगैरपीत्यत्राप्यश्वाध्यक्षैरित्यध्याहार्यं । लोकान्ते प्रलये ॥ २६—२७ ॥ छायासंसक्तसलिलः प्रतिबिम्बसंक्रान्तजलः । लोहितोदकः । उदादेश आर्षः ॥ २८—२९ ॥ नारीति । नारीजनस्यातिसाहसिकत्वाद्दशयोजनस्वनश्रवणं ॥ ३०—३१ ॥ उद्घुष्टं उद्घोषः । भावे क्तः ॥ ३२ ॥

॥ १७ ॥ स० गंभीरगुणवन्ति । गंभीरेतिभावप्रधाननिर्देशः । गांभीर्यमेवगुणस्तद्वन्ति ॥ १८ ॥ स० दिवाकरंस्पृशन्तीव अत्युच्चानीतियावत् । एतेनरात्रावपिदग्धसज्वालोपरिभागोगभस्तिमानिव । तदधःप्रदेशस्तत्स्पर्शीवेतिस्पृशन्तीत्युक्तिरितिवा ॥ १९ ॥ ति० विमानं सप्तभूमिप्रासादः ॥ २३ ॥ स० लोहितोदः लोहितंरक्तवर्णं उदंयस्यसः । उदकशब्दपर्यायोऽयमुदशब्दः । तेनासंज्ञात्वात्कथमुदादेशइतिशङ्कानवकाशः ॥ २८ ॥

[ पा० ] १ ङ. छ. झ. ञ. ट. परीतानिगृहाणिप्रचकाशिरे. २ ङ. छ. झ. ञ. दावाग्निदीप्तानियथाशिखराणि. ३ ख. प्रतप्तकायान्. छ. ज. विदग्धकायान्.

विशल्यौ तु महात्मानौ तावुभौ रामलक्ष्मणौ ॥ असंभ्रान्तौ जगृहतुस्तदोभे धनुषी वरे ॥ ३३ ॥
ततो विष्फारयानस्य रामस्य धनुरुत्तमम् ॥ बभूव तुमुलः शब्दो राक्षसानां भयावहः ॥ ३४ ॥
अशोभत तदा रामो धनुर्विष्फारयन्महत् ॥ भगवानिव संक्रुद्धो भवो वेदमयं धनुः ॥ ३५ ॥
उद्घुष्टं वानराणां च राक्षसानां च निस्स्वनम् ॥ ज्याशब्दस्तावुभौ शब्दावति रामस्य शुश्रुवे ॥३६॥
वानरोद्घुष्टघोषश्च राक्षसानां च निस्स्वनः ॥ ज्याशब्दश्चापि रामस्य त्रयं व्याप दिशो दश ॥ ३७॥
तस्य कार्मुकमुक्तैश्च शरैस्तत्पुरगोपुरम् ॥ कैलासशृङ्गप्रतिमं विकीर्णमपतद्भुवि ॥ ३८ ॥
ततो रामशरान्दृष्ट्वा विमानेषु गृहेषु च ॥ सन्नाहो राक्षसेन्द्राणां तुमुलः समपद्यत ॥ ३९ ॥
तेषां सन्नह्यमानानां सिंहनादं च कुर्वताम् ॥ शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत ॥ ४० ॥
आदिष्टा वानरेन्द्रास्तु सुग्रीवेण महात्मना ॥ आसन्नद्वारमासाद्य युध्यध्वं प्लवगर्षभाः ॥ ४१ ॥
यश्च वो वितथं कुर्यात्तत्रतत्र ह्युपस्थितः ॥ स हन्तव्यो हि संप्लुत्य राजशासनदूषकः ॥ ४२ ॥
तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु ॥ स्थितेषु द्वारमासाद्य रावणं मन्युराविशत् ॥ ४३ ॥
तस्य जृम्भितविक्षेपाद्व्यामिश्रा वै दिशो दश ॥ रूपवानिव रुद्रस्य मन्युर्गात्रेष्वदृश्यत ॥ ४४ ॥
स निकुम्भं च कुम्भं च कुम्भकर्णात्मजावुभौ ॥ प्रेषयामास संक्रुद्धो राक्षसैर्बहुभिः सह ॥ ४५ ॥
यूपाक्षः शोणिताक्षश्च प्रजङ्घः कम्पनस्तथा ॥ निर्ययुः कौम्भकर्णिभ्यां सह रावणशासनात् ॥ ४६ ॥
शशास चैव तान्सर्वान्राक्षसान्सुमहाबलान् ॥ नादयन्गच्छतात्रैव जयध्वं शीघ्रमेव च ॥ ४७ ॥
ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः ॥ लङ्काया निर्ययुर्वीराः प्रणदन्तः पुनः पुनः ॥ ४८ ॥
रक्षसां भूषणस्थाभिर्भाभिः स्वाभिश्च सर्वशः ॥ चक्रुस्ते सप्रभं व्योम हरयश्चाग्निभिः सह ॥ ४९ ॥

विशल्यौ निर्गलितशरीरनिमग्नशरफलकौ । तदोभे धनुषी वरे इति पाठः ॥ ३३ ॥ विष्फारयानस्य ध्वनयतः । "विष्फारो धनुषः स्वानः" इत्यमरः । "स्फुरतिस्फुलत्योर्निर्निविभ्यः" इति षत्वं । मुगभाव आर्षः ॥ ३४ ॥ वेदमयं धनुः वेदोक्तलक्षणं धनुः । "कृत्तिवासाः पिनाकी" इति श्रुत्या प्रतिपादितमहिमेति वाऽर्थः ॥ ३५ ॥ रामस्य ज्याशब्दः वानराणामुद्घुष्टं राक्षसानां निस्स्वनं च तावुभावतीत्य शुश्रुवे ॥ ३६ ॥ वानरोद्घुष्टघोषः वानरोत्पादितघोषः ॥ ३७—३८ ॥ तुमुलः अधिकः ॥ ३९ ॥ सन्नह्यमानानां कक्ष्याबन्धनादियुद्धसन्नाहं कुर्वतां । रौद्री प्रलयरात्रिः ॥ ४० ॥ आदिष्टा इत्यादिश्लोकद्वयमेकान्वयं ॥ अन्ते इतिकरणं बोध्यं । व इति निर्धारणे षष्ठी । वितथं कुर्यात् । मच्छासनमितिशेषः । आसन्नद्वारं रावणान्तःपुरासन्नमध्यकक्ष्याद्वारं । तत्रतत्र युद्धभूमौ उपस्थितः ॥ ४१—४३ ॥ जृम्भितविक्षेपात् गात्रविनामविस्तारात् । व्यामिश्राः व्याकुलाः । अभवन्निति शेषः । दिशः दिक्स्थिताः । रुद्रस्य कालाग्निरुद्रस्य गात्रे योरूपवान् मन्युः स इव रावणोऽलक्ष्यत ॥ ४४—४६ ॥ अत्रैव अस्मिन्गृह एवारभ्य । सिंहनादं नादयन् नादयन्तः कुर्वन्तः । गच्छत । नादयन्नित्यत्र "व्यत्ययो बहुलं" इति बहुवचनविषये एकवचनं ॥ ४७ ॥ ज्वलितेति । आयुधानां ज्वलितत्वं युद्धयात्रासु शिक्षाविशेषप्रदर्शनात् । लङ्काया इति पञ्चमी ॥ ४८ ॥ स्वाभिः स्वासाधारणीभिः । रक्षसां भूषणस्थाभिः भाभिश्च ।

स० वेदमयं वेदात्मकं तदभिमान्यभिमानिकं । भारतेकर्णपर्वान्तर्गतशल्यदुर्योधनसंवादे "संवत्सरोधनुस्तद्वै" "तस्यसंवत्सरोधनुः" इत्युक्तिस्त्वेकस्यानेकेऽभिमानिनोभवन्तीतिनविरुणद्धि ॥ ३५ ॥ स० वानरोद्घुष्टशब्दः वानरकृतशब्दजशब्दः । राक्षसानांचनिस्स्वनः रामस्यज्याशब्दश्चेत्येतत्त्रितयं दशदिशोव्याप व्यापत् । एतच्छब्दद्वयाधरीकरणंचद्वयोस्तस्यचसमव्यापनाभावेऽसंभावितं । सतितस्मिन्नौत्कट्यानौत्कट्येविदितेभवतइत्यतिक्रमणव्यापनेसंभवतइतिनपूर्वोत्तरविरोधः ॥ ३७ ॥

[ पा० ] १ ठ. वानरोद्घुष्टशब्दश्च. २ क. ख. ङ. ज.—ट. राक्षसागच्छतायैवसिंहनादंचनादयन्.

तत्र ताराधिपस्याभा ताराणां च तथैव च ॥ तयोराभरणस्था च बलयोर्द्यामभासयन् ॥ ५० ॥
चन्द्राभा भूषणाभा च ग्रहाणां ज्वलतां च भा ॥ हरिराक्षससैन्यानि भ्राजयामास सर्वतः ॥ ५१ ॥
तत्र चोर्ध्वं प्रदीप्तानां गृहाणां सागरः पुनः ॥ भाभिः संसक्तपातालश्चलोर्मिः शुशुभेऽधिकम् ॥५२॥
पताकाध्वजसंसक्तमुत्तमासिपरश्वधम् ॥ भीमाश्वरथमातङ्गं नानापत्तिसमाकुलम् ॥ ५३ ॥
दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम् ॥ तद्राक्षसबलं घोरं भीमविक्रमपौरुषम् ॥ ५४ ॥
ददृशे ज्वलितप्रासं किङ्किणीशतनादितम् ॥ हेमजालाचितभुजं व्यामिश्रितपरश्वधम् ॥ ५५ ॥
व्याघूर्णितमहाशस्त्रं बाणसंसक्तकार्मुकम् ॥ गन्धमाल्यमधूत्सेकसंमोदितमहानिलम् ॥
घोरं शूरजनाकीर्णं महाम्बुधरनिस्वनम् ॥ ५६ ॥
तद्दृष्ट्वा बलमायान्तं राक्षसानां सुदारुणम् ॥ संचचाल प्लवङ्गानां बलमुच्चैर्ननाद च ॥ ५७ ॥
जवेनाप्लुत्य च पुनस्तद्बलं रक्षसां महत् ॥ अभ्ययात्प्रत्यरिबलं पतङ्गा इव पावकम् ॥ ५८ ॥
तेषां भुजपरामर्शव्यामृष्टपरिघाशनि ॥ राक्षसानां बलं श्रेष्ठं भूयस्तरमशोभत ॥ ५९ ॥
तत्रोन्मत्ता इवोत्पेतुर्हरयोथ युयुत्सवः ॥ तरुशैलैरभिघ्नन्तो मुष्टिभिश्च निशाचरान् ॥ ६० ॥
तथैवापततां तेषां कपीनामसिभिः शितैः ॥ शिरांसि सहसा जह्रू राक्षसा भीमदर्शनाः ॥ ६१ ॥
दशनैर्हृतकर्णाश्च मुष्टिनिष्कीर्णमस्तकाः ॥ शिलाप्रहारभग्नाङ्गा विचेरुस्तत्र राक्षसाः ॥ ६२ ॥
तथैवाप्यपरे तेषां कपीनामभिलक्षिताः ॥ प्रवीरानभितो जघ्नू राक्षसानां तरस्विनाम् ॥ ६३ ॥
[ अभिपेतुर्महाकायाः प्रतियुक्ता महाबलाः ॥ राक्षसा वानरान्रोषादसिबाणगदाधराः ॥ ६४ ॥

व्योम सेनामध्याकाशं ॥ ४९ ॥ तदानीं चन्द्रोदयात्पुनः प्रकाशातिशयमाह—तत्रेति ॥ तत्र तदानीं । ताराधिपस्याभा ताराणां चाभा तयोर्बलयोराभरणस्था भा च द्यां आकाशं । अभासयन् ॥ ५० ॥ दह्यमानलङ्कागृहप्रकाशैः पुनरपि स प्रकाशोवर्धतेत्याह—चन्द्रेति ॥ ५१ ॥ संसक्तपातालः पातालपर्यन्तं संसक्तः ॥ ५२ ॥ पताकेत्यादिसार्धचतुःश्लोक्येकान्वया ॥ चलत्पटा पताका । मत्स्यादिचिह्नितं ध्वजं । उत्तमासिपरश्वधं । परश्वधोसिरूपः कुठाररूपश्चास्ति । तत्रासिरूपपरश्वधोसिपरश्वधः । तेन वक्ष्यमाणयोः खड्गपरश्वधयोर्नपौनरुक्त्यं । ज्वलितप्रासमित्यत्र प्रासशब्दः क्षेप्तव्ये ह्रस्वकुन्ते वर्तते । तेन तस्यापि न पौनरुक्त्यं । पत्तयः पदातयः । तेषां नानात्वं वेषायुधादिभेदात् । प्रासस्य ज्वलितत्वं युद्धागमनसमये शिक्षाविशेषप्रदर्शकक्रियासंबन्धात् । किङ्किणीशतनादितं रथगजादिकिङ्किणीशतनादितं । हेमजालाचितभुजं हेमाभरणजालाबद्धभुजं । व्यावेष्टितपरश्वधं मदेन चालितपरश्वधं । शस्त्रं उक्तव्यतिरिक्तायुधं । बाणसंसक्तकार्मुकमिति । दीप्तशूलगदाखड्गप्रासतोमरकार्मुकमित्यत्र यत्पूर्वोक्तं कार्मुकं तद्भङ्गे पुनरादातुं पृष्ठे बद्धमपरमिदं कार्मुकमिति ज्ञेयम् । गन्धेति । गन्धः चन्दनादिः गन्धमाल्याभ्यां मधूत्सेकेन वीरपाणरूपमधुसेवनेन च संमोदितमहानिलं वासितमहावातं ॥ ५३—५६ ॥ आयान्तमिति पुंल्लिङ्गमार्षं । संचचाल अभिमुखं जगाम ॥ ५७—५८ ॥ तेषामिति ॥ भुजपरामर्शव्यामृष्टपरिघाशनि सन्ततभुजस्पर्शेन उत्तेजितपरिघवज्रं ॥ ५९–६२ ॥ कपीनां अभिलक्षिताः प्रसिद्धाः । कपिप्रवरा इत्यर्थः ॥ ६३–६४ ॥ कपीनां

स० ग्रहाणां नवानां । " उक्तश्लोकस्यैवव्याख्यानंचन्द्राभेत्यादि " इति नागोजिभट्टव्याख्यानं पूर्वश्लोकेताराधिपताराताद्बलद्वयभाकर्तृकाकाशकर्मकभासनोक्तेः अत्रचन्द्रभूषणग्रहभाकर्तृकहरिराक्षससैन्यकर्मकभासनोक्तेरसंगतम् ॥ ५१ ॥ इतिपञ्चसप्ततितमः सर्गः ॥ ७५ ॥

[ पा० ] १ झ. ञ. ट. ग्रहाणां. २ घ. तत्रचन्द्रप्रदीप्तानां. ज. त्रिकूटोर्ध्वप्रदीप्तानां. ङ. झ. ञ. ट. तत्रचार्धप्रदीप्तानां. ३ ङ. झ. ट. संसक्तसलिलः. ४ क. ख. ङ. छ. झ. ञ. ट. भूयःपरमशोभत. ५ झ. ञ. ट. भीमविक्रमाः. ६ ख. ङ. छ. झ. ञ. ट. मुष्टिभिर्भिन्नमस्तकाः. ७ अयंश्लोकः क. ख. पाठयोर्दृश्यते.

तथैवाप्यपरे तेषां कपीनामसिभिः शितैः ॥ हरिवीरान्निजघ्नुश्च घोररूपा निशाचराः ॥ ६५ ॥
घ्नन्तमन्यं जघानान्यः पातयन्तमपातयत् ॥ गर्हमाणं जगर्हेऽन्यो दशन्तमपरोऽदशत् ॥ ६६ ॥
देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः ॥ किं क्लेशयसि तिष्ठेति तत्रान्योन्यं बभाषिरे ॥ ६७ ॥
वि[1]प्रलम्बितवस्त्रं च विमुक्तकवचायुधम् ॥ समुद्यतमहाप्रासं य[2]ष्टिशूलासिसंकुलम् ॥
प्रावर्तत महारौद्रं युद्धं वानररक्षसाम् ॥ ६८ ॥
वानरान्दश सप्तेति राक्षसा जघ्नुराहवे ॥ राक्षसान्दश सप्तेति वानराश्चाभ्यपातयन् ॥ ६९ ॥
वि[3]स्रस्तकेशवसनं विध्वस्तकवचध्वजम् ॥ बलं राक्षसमालम्ब्य वानराः पर्यवारयन् ॥ ७० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः ॥ ७६ ॥

अङ्गदेन कंपनप्रजङ्घयोर्वधः ॥ १ ॥ मैन्दद्विविदाभ्यां यूपाक्षशोणिताक्षयोर्वधः ॥ २ ॥ सुग्रीवेणकुंभवधः ॥ ३ ॥

प्रवृत्ते संकुले त[4]स्मिन्घोरे वीरजनक्षये ॥ अङ्गदः कम्पनं वीरमाससाद रणोत्सुकः ॥ १ ॥
आहूय सोऽङ्गदं कोपात्ताडयामास वेगितः ॥ गदया कम्पनः पूर्वं स चचाल भृशाहतः ॥ २ ॥
स संज्ञां प्राप्य तेजस्वी चिक्षेप शिखरं गिरेः ॥ अर्दितश्च प्रहारेण कम्पनः पतितो भुवि ॥ ३ ॥
ततस्तु कम्पनं दृष्ट्वा शोणिताक्षो हतं रणे ॥ रथे[5]नाभ्यपतत्क्षिप्रं तत्राङ्गदमभीतवत् ॥ ४ ॥
सोऽङ्गदं निशितैर्बाणैस्तदा विव्याध वेगितः ॥ शरीरदारणैस्तीक्ष्णैः कालाग्निसमविग्रहैः ॥ ५ ॥
क्षुरक्षुरप्रैर्नाराचैर्वत्सदन्तैः शिलीमुखैः ॥ कर्णिशल्यविपाठैश्च बहुभिर्निशितैः शरैः ॥ ६ ॥
अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रः प्रतापवान् ॥ ध[6]नुरुग्रं रथं बाणान्ममर्द तरसा बली ॥ ७ ॥

---

मध्ये हरिवीरान् वीरहरीन् । निजघ्नुः ॥ ६५-६६ ॥ देहीति । अन्यो वीरः प्रहरणमत्र देहीति बभाषे । अन्यो ददातीति बभाषे । अपरः पुनः ददामीति बभाषे । आत्मानं आयासेन किं क्लेशयसि तिष्ठेत्यन्यो बभाषे । तत्रैवमन्योन्यं बभाषिरे ॥ ६७ ॥ विप्रलम्बितवस्त्रमित्यादि सर्वं क्रियाविशेषणं ॥ ६८ ॥ वानरान् दश सप्तेति । राक्षसाः दश सप्तेत्यनेन प्रकारेण वानरान् जघ्नुः । वानराश्च दश सप्तेत्यनेन प्रकारेण राक्षसानभ्यपातयन्निति संबन्धः ॥ ६९ ॥ आलम्ब्य वेगेन धावमानं प्रतिष्टभ्य । ततः परितोऽवारयन् ॥ ७० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

अथ कुम्भवधः षट्सप्ततितमे—प्रवृत्त इत्यादि ॥ संकुले निरन्तरे ॥ १ ॥ आहूय स्पर्धयित्वा । "ह्वेञ् स्पर्धायां शब्दे च" इति धातोर्ल्यप् । वेगितः संजातवेगः । तारकादित्वादितच् । सः अङ्गदः ॥ २ ॥ चिक्षेप कम्पनोरसीति शेषः ॥ ३ ॥ कम्पनं हतमित्यन्वयः । तत्र कम्पनयुद्धस्थाने । अभीतवत् । अभीतमिति क्रियाविशेषणं ॥ ४ ॥ कालाग्निसमविग्रहैः कालाग्नितुल्याकारैरित्यर्थः ॥ ५ ॥ क्षुरेत्यादि । क्षुरः नापितशस्त्राकारमुखः । क्षुरप्रः अर्धचन्द्राकृतिः । नाराचः शल्यकः । वत्सदन्तैः वत्सदन्ताकारमुखैः । शिलीमुखैः कङ्कपत्राकारमुखैः । उभयपार्श्वकृतकर्णः कर्णी । अर्धनाराचः शल्यः । विपाठः करवीरपत्राग्र-

---

ति० अभीतवत् अभीतार्हं ॥ ४ ॥

[ पा० ] १ झ. विप्रलंभितशस्त्रंच. २ क. घ. ङ. छ. झ. ञ. ट. मुष्टिशूलासिकुन्तलं. ३ झ. विप्रलंभितवस्त्रंच. ४ ख. ज. युद्धेतस्मिन्वीर. ५ ख. रथेनाभ्यद्रवत्. ६ क. ग.—ञ. धनुरुग्रं.

शोणिताक्षस्ततः क्षिप्रमसिचर्म समाददे ॥ उत्पपात [1]दिवं क्रुद्धो वेगवानविचारयन् ॥ ८ ॥
तं क्षिप्रतरमाप्लुत्य परामृश्याङ्गदो बली ॥ करेण तस्य तं खड्गं समाच्छिद्य ननाद च ॥ ९ ॥
तस्यांसफलके खड्गं निजघान ततोऽङ्गदः ॥ यज्ञोपवीतवच्चैनं चिच्छेद कपिकुञ्जरः ॥ १० ॥
तं प्रगृह्य महाखड्गं विनद्य च पुनः पुनः ॥ वालिपुत्रोऽभिदुद्राव [2]रणशीर्षेऽपरानरीन् ॥ ११ ॥
[3]आयसीं तु गदां वीरः प्रगृह्य कनकाङ्गदः ॥ शोणिताक्षः [4]समाविध्य तमेवानु पपात ह ॥ १२ ॥
प्रजङ्घसहितो वीरो यूपाक्षस्तु ततो बली ॥ रथेनाभिययौ क्रुद्धो वालिपुत्रं महाबलम् ॥ १३ ॥
[ [5]प्रजङ्घस्तु महावीरो यूपाक्षसहितो बली ॥ गदयाऽभिययौ क्रुद्धो वालिपुत्रं महाबलम् ] ॥ १४ ॥
तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजङ्घयोः ॥ विशाखयोर्मध्यगतः पूर्णचन्द्र [6]इवाभवत् ॥ १५ ॥
अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च ॥ तस्य तस्थतुरभ्याशे [7]परस्परदिदृक्षया ॥ १६ ॥
अभिपेतुर्महाकायाः प्रतियत्ता महाबलाः ॥ राक्षसा [8]वानरान्रोषादसि[9]चर्मगदाधराः ॥ १७ ॥
त्रयाणां वानरेन्द्राणां त्रिभी राक्षसपुङ्गवैः ॥ संसक्तानां महद्युद्धमभवद्रोमहर्षणम् ॥ १८ ॥
ते तु वृक्षान्समादाय संप्रचिक्षिपुराहवे ॥ खड्गेन प्रतिचिच्छेद तान्प्रजङ्घो महाबलः ॥ १९ ॥
[10]रथानश्वान्द्रुमैः शैलैस्ते प्रचिक्षिपुराहवे ॥ शरौघैः प्रतिचिच्छेद तान्यूपाक्षो [11]निशाचरः ॥ २० ॥
सृष्टान्द्विविदमैन्दाभ्यां द्रुमानुत्पाट्य वीर्यवान् ॥ बभञ्ज गदया मध्ये शोणिताक्षः प्रतापवान् ॥२१॥
उद्यम्य विपुलं खड्गं [12]परमर्मनिकृन्तनम् ॥ प्रजङ्घो वालिपुत्राय अभिदुद्राव वेगितः ॥ २२ ॥
तमभ्याशगतं दृष्ट्वा वानरेन्द्रो महाबलः ॥ आजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ २३ ॥
बाहुं चास्य सनिस्त्रिंशमाजघान स मुष्टिना ॥ वालिपुत्रस्य घातेन स पपात क्षितावसिः ॥ २४ ॥
तं दृष्ट्वा पतितं भूमौ [13]खड्गमुत्पलसन्निभम् ॥ मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ २५ ॥
ललाटे स महावीर्यमङ्गदं वानरर्षभम् ॥ आजघान महातेजाः स मुहूर्तं चचाल ह ॥ २६ ॥
स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् ॥ प्रजङ्घस्य शिरः [14]कायात्खड्गेनापातयत्क्षितौ ॥ २७ ॥
स यूपाक्षोऽश्रुपूर्णाक्षः पितृव्ये निहते रणे ॥ अवरुह्य रथात्क्षिप्रं क्षीणेषुः खड्गमाददे ॥ २८ ॥

सदृशः ॥ ६—७ ॥ असिश्चर्म चेत्यसिचर्म । एकवद्भावः । उत्पपात । रथादिति शेषः ॥ ८ ॥ परामृश्य प्रगृह्य ॥ ९ ॥ चिच्छेद । छिन्नस्तु न मृतः ॥ १० ॥ अपरान् प्रजङ्घादीन् ॥ ११ ॥ तमेव अङ्गदमेव ॥ १२—१४ ॥ तयोरिति । यूपाक्षस्य दूरस्थत्वादनुक्तिः ॥ १५ ॥ परिरक्षन्तौ । मातुलत्वादिति भावः । परस्परदिदृक्षया । स्वानुरूपप्रतिभटराक्षसजिज्ञासयेत्यर्थः ॥ १६ ॥ प्रतियत्ताः प्रतियत्नवन्तः । गुणाधानं प्रतियत्नः । आरोपितवीर्या इत्यर्थः ॥ १७—१९ ॥ रथानश्वान् । प्रतीति शेषः ॥ २० ॥ उत्पाट्य सृष्टानित्यन्वयः ॥ २१ ॥ वालिपुत्राय वालिपुत्रं हन्तुं । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ॥ २२ ॥ वानरेन्द्रः अङ्गदः ॥ २३ ॥ सनिस्त्रिंशं सखड्गं ॥ २४ ॥ उत्पलसन्निभं । नीलो-

[ पा० ] १ ङ. झ. ट. तदाक्रुद्धो. क. ग. छ. ज. दिवंक्षिप्रं. घ. ततःक्षिप्रं. २ झ. रणशीर्षे. ३ आयसींतुगदांवीरः, प्रजङ्घसहितोवीरो, इत्यनयोःश्लोकयोःपौर्वापर्यं ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ४ क. घ. ङ. ज.—ट. समाश्वस्य. ५ अयंश्लोकः झ. पाठेदृश्यते. ६ ङ. ज. झ. ट. इवाबभौ. ७ क. ग. परस्परजिगीषया. ख. घ. परस्परजिघृक्षया. ८ क. घ. वानरेन्द्रांस्तानसि. ९ ग. ङ. च. झ. ञ. ट. बाणगदाधराः. १० ङ. झ. ट. रथान्सर्वान्द्रुमाञ्शैलांस्ते. ११ ख.—च. झ. ट. महाबलः. १२ ख. घ. ङ. च. झ. ञ. ट. मर्मविदारणं. क. ग. ज. मर्मविकर्तनं. १३ क.—ट. खड्गंमुसलसंनिभं. १४ ख. कोपाद्दारयामासवीर्यवान्. च. छ. ञ. कायाद्दारयामासवीर्यवान्. ग. घ. कायात्पातयामासवीर्यवान्. ङ. झ. ट. कायात्पातयामासमुष्टिना. क. कायात्ताम्रश्मश्रुजहारह.

तमापतन्तं संप्रेक्ष्य यूपाक्षं द्विविदस्त्वरन् ॥ आजघानोरसि क्रुद्धो [1]जग्राह च बलाद्बली ॥ २९ ॥
गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलः ॥ आजघान गदाग्रेण वक्षसि द्विविदं ततः ॥ ३० ॥
स गदाभिहतस्तेन चचाल च महाबलः ॥ उद्यतां च पुनस्तस्य जहार द्विविदो गदाम् ॥
[ [2]तया च गदया क्षिप्रं तयोरुरसि ताडयत् ] ॥ ३१ ॥
[3]एतस्मिन्नन्तरे वीरो मैन्दो वानरयूथपः ॥ यूपाक्षं ताडयामास तलेनोरसि वीर्यवान् ॥ ३२ ॥
[ [4]एतस्मिन्नन्तरे मैन्दो द्विविदाभ्याशमागमत् ॥ ] तौ शोणिताक्षयूपाक्षौ प्लवङ्गाभ्यां तरस्विनौ ॥
चक्रतुः समरे तीव्रमाकर्षोत्पाटनं भृशम् ॥ ३३ ॥
द्विविदः शोणिताक्षं तु विददार नखैर्मुखे ॥ निष्पिपेष च वेगेन क्षितावाविध्य वीर्यवान् ॥ ३४ ॥
यूपाक्षमपि संक्रुद्धो मैन्दो वानरयूथपः ॥ पीडयामास बाहुभ्यां स पपात हतः क्षितौ ॥ ३५ ॥
हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तदा ॥ जगामाभिमुखी सा तु कुम्भकर्णसुतो यतः ॥ ३६ ॥
आपतन्तीं च वेगेन कुम्भस्तां सान्त्वयच्चमूम् ॥ ३७ ॥
अथोत्कृष्टं महावीर्यैर्लब्धलक्षैः प्लवङ्गमैः ॥ निपातितमहावीरां दृष्ट्वा रक्षश्चमूं ततः ॥
कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥ ३८ ॥
स धनुर्धन्विनां श्रेष्ठः प्रगृह्य सुसमाहितः ॥ मुमोचाशीविषप्रख्याञ्शरान्देहविदारणान् ॥ ३९ ॥
तस्य तच्छुशुभे भूयः सशरं धनुरुत्तमम् ॥ विद्युदैरावतार्चिष्मद्द्वितीयेन्द्रधनुर्यथा ॥ ४० ॥
आकर्णाकृष्टमुक्तेन जघान द्विविदं तदा ॥ तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ॥ ४१ ॥
सहसाऽभिहतस्तेन विप्रमुक्तपदः स्फुरन् ॥ निपपाताद्रिकूटाभो विह्वलः प्लवगोत्तमः ॥ ४२ ॥
मैन्दस्तु भ्रातरं दृष्ट्वा भग्नं तत्र महाहवे ॥ अभिदुद्राव वेगेन प्रगृह्य महतीं शिलाम् ॥ ४३ ॥
तां शिलां तु प्रचिक्षेप राक्षसाय महाबलः ॥ बिभेद तां शिलां कुम्भः प्रसन्नैः पञ्चभिः शरैः ॥४४॥
सन्धाय चान्यं सुमुखं शरमाशीविषोपमम् ॥ आजघान महातेजा वक्षसि द्विविदाग्रजम् ॥ ४५ ॥
स तु तेन प्रहारेण मैन्दो वानरयूथपः ॥ मर्मण्यभिहतस्तेन पपात भुवि मूर्छितः ॥ ४६ ॥
अङ्गदो मातुलौ दृष्ट्वा [6]पतितौ तु महाबलौ ॥ अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम् ॥ ४७ ॥

---

त्पलसमानकान्तिमित्यर्थः । महाबलः प्रजङ्घः ॥२५—३२ ॥ प्लवङ्गाभ्यां मैन्दद्विविदाभ्यां । आकर्षोत्पाटनं आकर्षणताडने । अन्योन्यमिति शेषः ॥ ३३—३६ ॥ आपतन्तीमित्यर्धं ॥ सान्त्वयत् असान्त्वयत् ॥ ३७ ॥ अथेत्यादिसार्धश्लोक एकान्वयः ॥ लब्धलक्षैः अप्रतिद्वन्द्विभिः ॥ ३८–३९ ॥ विद्युदैरावताभ्यां अर्चिष्मत् । ज्यास्थानीया विद्युत् । बाणस्थानीयमैरावतं । ऐरावतं नाम दीर्घेन्द्रधनुः । " इन्द्रायुधंशक्रधनुस्तद्दीर्घमृजुरोहितं । ऐरावतं च " इति वैजयन्ती । एवंभूतं द्वितीयमिन्द्रधनुरिव स्थितं । ऐरावतादिसंयोग उत्पातकाले भवति । अभूतोपमावा ॥ ४० ॥ हाटकं स्वर्णं । पत्रिणा बाणेन । पत्रवाससा वासःस्थानीयकङ्कपत्रेण ॥ ४१ ॥ विप्रमुक्तपदः शिथिलपदविन्यासः । स्फुरन् चलन् । विह्वलः

---

**ती०** उत्कृष्टंरक्षः कुंभः । महावीर्यैः तेजस्विभिः । लब्धलक्षैरप्रतिद्वन्द्वैः । प्लवङ्गमैर्निपातितमहावीरांचमूंदृष्ट्वा रणेदुष्करंकर्मचक्रइति संबन्धः ॥ ३८ ॥ **ति०** तस्य कुंभस्य । तत्सशरंधनुः विद्युदैरावतसंबन्धतोर्चिष्मत् भासमानं द्वितीयेन्द्रधनुर्यथा परमिन्द्रधनुरिव भूयःशुशुभे । विद्युच्छरस्थानीया । ऐरावतोऽभ्रमातङ्गः । तस्येन्द्रधनुषासंबन्धात् ॥ ४० ॥

· **[ पा० ]** १ ग. जग्राहबलवान्बली. २ इदमर्धं क. ख. च. छ. पाठेषुदृश्यते. ३ अयंश्लोकः ङ. झ. ट. पाठेषुनदृश्यते. ४ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ५ ख. विद्रुतान्राक्षसान्दृष्ट्वाकुंभः. ६ ग. ङ. झ. ट. मथितौतु. ख. छ. ञ. व्यथितौतुमहाहवे.

तमापतन्तं विव्याध कुम्भः पञ्चभिरायसैः ॥ त्रिभिश्चान्यैः शितैर्बाणैर्मातङ्गमिव तोमरैः ॥ ४८ ॥
सोऽङ्गदं विविधैर्बाणैः कुम्भो विव्याध वीर्यवान् ॥ अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः ॥ ४९ ॥
अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रो न कम्पते ॥ शिलापादपवर्षाणि तस्य मूर्ध्नि ववर्ष ह ॥ ५० ॥
स प्रचिच्छेद तान्सर्वान्बिभेद च पुनः शिलाः ॥ कुम्भकर्णात्मजः श्रीमान्वालिपुत्रसमीरितान् ॥ ५१ ॥
आपतन्तं च संप्रेक्ष्य कुम्भो वानरयूथपम् ॥ भ्रुवोर्विव्याध बाणाभ्यामुल्काभ्यामिव कुञ्जरम् ॥
तस्य सुस्राव रुधिरं पिहिते चास्य लोचने ॥ ५२ ॥
अङ्गदः पाणिना नेत्रे पिधाय रुधिरोक्षिते ॥ सालमासन्नमेकेन परिजग्राह पाणिना ॥ ५३ ॥
संपीड्य चोरसि स्कन्धं करेणाभिनिवेश्य च ॥ किंचिदभ्यवनम्यैनमुन्ममाथ यथा गजः ॥ ५४ ॥
तमिन्द्रकेतुप्रतिमं वृक्षं मन्दरसन्निभम् ॥ समुत्सृजन्तं वेगेन पश्यतां सर्वरक्षसाम् ॥
स बिभेद शितैर्बाणैः सप्तभिः कायभेदनैः ॥ ५५ ॥
अङ्गदो विव्यथेऽभीक्ष्णं ससाद च मुमोह च ॥ ५६ ॥
अङ्गदं व्यथितं दृष्ट्वा सीदन्तमिव सागरे ॥ दुरासदं हरिश्रेष्ठं रामायान्ये न्यवेदयन् ॥ ५७ ॥
रामस्तु व्यथितं श्रुत्वा वालिपुत्रं रणाजिरे ॥ व्यादिदेश हरिश्रेष्ठाञ्जाम्बवत्प्रमुखांस्ततः ॥ ५८ ॥
ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम् ॥ अभिपेतुः सुसंक्रुद्धाः कुम्भमुद्यतकार्मुकम् ॥ ५९ ॥
ततो द्रुमशिलाहस्ताः कोपसंरक्तलोचनाः ॥ रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः ॥ ६० ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ कुम्भकर्णात्मजं वीरं क्रुद्धाः समभिदुद्रुवुः ॥ ६१ ॥
समीक्ष्यापततस्तांस्तु वानरेन्द्रान्महाबलान् ॥ आववार शरौघेण नगेनेव जलाशयम् ॥ ६२ ॥
तस्य बाणपथं प्राप्य न शेकुरतिवर्तितुम् ॥ वानरेन्द्रा महात्मानो वेलामिव महोदधिः ॥ ६३ ॥
तांस्तु दृष्ट्वा हरिगणाञ्शरवृष्टिभिरर्दितान् ॥ अङ्गदं पृष्ठतः कृत्वा भ्रातृजं प्लवगेश्वरः ॥ ६४ ॥
अभिदुद्राव वेगेन सुग्रीवः कुम्भमाहवे ॥ शैलसानुचरं नागं वेगवानिव केसरी ॥ ६५ ॥
उत्पाट्य च महाशैलानश्वकर्णान्धवान्बहून् ॥ अन्यांश्च विविधान्वृक्षांश्चिक्षेप च महाबलः ॥ ६६ ॥
तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदाम् ॥ कुम्भकर्णात्मजः शीघ्रं चिच्छेद निशितैः शरैः ॥ ६७ ॥

विवशः सन् ॥ ४२–४७ ॥ तोमरैः अङ्कुशैः ॥ ४८ ॥ अकुण्ठधारैः अभग्नाग्रैः । निशितैः उत्कृष्टैः । तीक्ष्णैः अयोमयैः । "तीक्ष्णं गरे मृधे लोहे" इति रत्नमाला ॥ ४९ ॥ न कम्पते नाकम्पत ॥ ५० ॥ तान् वृक्षान् प्रचिच्छेद शिलाः बिभेदेत्यन्वयः ॥ ५१—५३ ॥ संपीड्येति । एकहस्तस्य नेत्रपिधानव्यापृतत्वादेकहस्तेनोत्पाटनासम्भवादुरसि संपीड्येत्युक्तं । अभिनिवेश्य । अभिगृह्येत्यर्थः ॥ ५४—५९ ॥ रिरक्षिषन्तः रक्षितुमिच्छन्तः ॥ ६०—६१ ॥ जलाशयं जलप्रवाहं । नगेनेव वृक्षेणेव । वृक्षौघपरोयं शब्दः ॥ ६२ ॥ अतिवर्तितुं अतिक्रम्याभिमुख्येन गन्तुं ॥ ६३ ॥ तांस्त्वित्यादिश्लोकद्वयमेकान्वयं ॥ अङ्गदं पृष्ठतः कृत्वा । अन्यथा हन्यादिति भावः । शैलसानुचरं शैलसानुचरत्वेनातिबलं । "गिरिचर इव नागः प्राणसारं बिभर्ति" इति कालिदासोक्तेः

ति० भ्रातृजं भ्रातृपुत्रं । प्लवगेश्वरः सुग्रीवः । एतदन्तमष्टमीरात्रौयुद्धं । अतःपरंनवमीदिनयुद्धं ॥ ६४ ॥

[ पा० ] १ ख. आकर्णमुक्तैर्निशितैः. क. च. छ. ञ. ट. अकुण्ठधारैर्विशिखैस्तीक्ष्णैः. २ ङ. झ. ट. मुन्ममाथमहारणे. ३ घ. विव्यथेतीक्ष्णंपपातस. ङ. झ. ट. विव्यथेऽभीक्ष्णंसपपात. ४ ङ. झ. ट. हरिश्रेष्ठाराघवाय. ५ ग. घ. छ. ज. दृष्ट्वा. ६ क. ख. ग. राक्षसेन्द्रोमहाबलान्. च. ञ. राक्षसेन्द्रोमहाबलः. ७ क. वेलयेवजलाशयं. ८ क. ग. घ. बाणरयं. ९ झ. शेकुरपिवीक्षितुं. १० ङ. झ. अभिदुद्रावसुग्रीवः. कुंभकर्णात्मजंरणे. च. छ. ञ. ट. अभिदुद्राववेगेनकुंभकर्णात्मजंरणे. ११ क. महावेगःसोश्वकर्णान्.

अभिलक्षेण तीव्रेण कुम्भेन निशितैः शरैः ॥ [1]आचितास्ते द्रुमा रेजुर्यथा घोराः शतघ्नयः ॥ ६८ ॥
द्रुमवर्षं तु तच्छिन्नं दृष्ट्वा कुम्भेन वीर्यवान् ॥ वानराधिपतिः श्रीमान्महासत्त्वो न विव्यथे ॥ ६९ ॥
[2]निर्भिद्यमानः सहसा सहमानश्च ताञ्शरान् ॥ कुम्भस्य धनुराक्षिप्य बभञ्जेन्द्रधनुष्प्रभम् ॥ ७० ॥
अवप्लुत्य ततः शीघ्रं कृत्वा कर्म सुदुष्करम् ॥ अब्रवीत्कुपितः कुम्भं भग्नशृङ्गमिव द्विपम् ॥ ७१ ॥
निकुम्भाग्रज वीर्यं ते बाणवेगवदद्भुतम् ॥ सन्नतिश्च प्रभावश्च तव वा रावणस्य वा ॥ ७२ ॥
प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम ॥ एकस्त्वमनुजातोसि पितरं [3]बलवृत्ततः ॥ ७३ ॥
त्वामेवैकं महाबाहुं [4]चापहस्तमरिंदमम् ॥ त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः ॥ ७४ ॥
विक्रमस्व [5]महाबुद्धे कर्माणि मम [6]पश्यतः ॥ ७५ ॥
वरदानात्पितृव्यस्ते सहते देवदानवान् ॥ कुम्भकर्णस्तु वीर्येण सहते च सुरासुरान् ॥ ७६ ॥
धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च ॥ त्वमद्य रक्षसां लोके श्रेष्ठोसि बलवीर्यतः ॥ ७७ ॥
महाविमर्दं [7]समरे मया सह तवाद्भुतम् ॥ अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ७८ ॥
कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम् ॥ पातिता हरिवीराश्च [8]त्वया वै भीमविक्रमाः ॥ ७९ ॥
उपालम्भभयाच्चापि नासि वीर मया हतः ॥ कृतकर्मा परिश्रान्तो विश्रान्तः पश्य मे बलम् ॥८०॥
तेन सुग्रीववाक्येन सावमानेन मानितः ॥ [9]अग्नेराज्याहुतस्येव तेजस्तस्याभ्यवर्धत ॥
ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा ॥ ८१ ॥
गजाविवाहितमदौ निश्वसन्तौ मुहुर्मुहुः ॥ अन्योन्यगात्रग्रथितौ [10]कर्षन्तावितरेतरम् ॥
सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात् ॥ ८२ ॥
तयोः पादाभिघाताच्च निमग्ना चाभवन्मही ॥ व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः ॥८३ ॥

---

॥ ६४—६७ ॥ अभिलक्षेण अभिगतलक्ष्येण । आचिताः सर्वतो नीरन्ध्रतया व्याप्ताः । शतघ्नयः शतघ्न्यः । शङ्कुचिता आयुधविशेषाः ॥ ६८—७१ ॥ निकुम्भाग्रजेति । वीर्यस्य बाणवेगवत्त्वं तद्धेतुत्वात् । सन्नतिः राक्षसेषु विनयः राक्षसप्रावण्यं वा । कम्पनप्रजङ्घयूपाक्षशोणिताक्षमारकाणामङ्गदमैन्दद्विविदानां निराकरणाद्राक्षसप्रावण्योक्तिः । तव वा रावणस्य वा । रावणतुल्या तव सन्नतिरित्यर्थः ॥ ७२ ॥ पितरमनुजातोसि पित्रा सदृशोसीत्यर्थः । बलवृत्ततः बलव्यापारेण ॥ ७३ ॥ नातिवर्तन्ते न धर्षयन्तीत्यर्थः ॥ ७४ ॥ विक्रमस्वेत्यर्धं ॥ कर्माणि युद्धकर्माणि प्रति । विक्रमस्व पराक्रमं कुरु । युद्धकर्मसिद्ध्यर्थं पराक्रमं कुर्वित्यर्थः ॥ ७५ ॥ पितृव्यः रावणः । वरदानात् देवदानवान् सहते । कुम्भकर्णस्तु वीर्येण शारीरबलेन । सुरासुरान् सहते । रोद्धुं शक्नोतीत्यर्थः । त्वं तु ताभ्यामुभाभ्यां तान् सहस इति भावः ॥ ७६–७७ ॥ महाविमर्दं महाप्रहारं ॥ ७८–७९ ॥ उपालम्भभयात् बहुभिः सह युद्धेन श्रान्तो हत इत्यपवादभयात् ॥ ८० ॥ सावमानेन मानितः । बहुमानेन व्याजेनावमानित इत्यर्थः । तस्य तथावमानितस्य कुम्भस्य ॥ ८१ ॥ गजावित्यादिसार्धश्लोक एकान्वयः ॥ आहितमदौ आहितमदचेष्टौ । अन्योन्यगात्रग्रथितौ अन्योन्यसंश्लिष्टगात्रौ । परिश्रमात् युद्धजनितश्रमात् । मुखतः सधूमां ज्वालां विसृ-

---

ति० संनतिः स्वजनप्रावण्यं ॥ ७२ ॥ स० पित्रपेक्षयाकीर्तिरधिकेतिवक्तुं पितामहपौत्रयोःप्रह्लादबल्योर्ग्रहणं । वैरिसंहारेवृत्रघ्नोपमा । धनिकत्वाप्रधृष्यत्वयोःकुबेरवरुणोपमतेतिज्ञेयम् ॥ ७३ ॥ स० उपालंभभयात् बहुभिर्युध्वाश्रान्तमेकलमवधीदश्रान्तइत्यपवादभयात् ॥ ८० ॥ स० सावमानेन अन्तरवमानगर्भेण बहिःस्तुतिरूपेणवाक्येनमानितः ॥ ८१ ॥

[पा०] १ ङ. च. छ. ञ. ट. अर्दितास्ते. २ ङ. झ. सविध्यमानः. ३ ङ. च. छ. झ. ञ. ट. बलवत्तरं. क. बलवीर्यतः. ४ क. ख. ग. ङ.—ट. शूलहस्तं. ५ क. ग. ञ. महायुद्धे. ६ ङ. झ. ट. पश्यच. ७ ङ. संहत्यमया. ८ ख.—च. झ. ञ. ट. त्वयैते. ९ ङ. छ. झ. ञ. राज्यहुतस्येव. १० झ. घर्षन्तावितरे.

ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि ॥ पातयामास वेगेन दर्शयन्नुदधेस्तलम् ॥ ८४ ॥
ततः कुम्भनिपातेन जलराशिः समुत्थितः ॥ विन्ध्यमन्दरसंकाशो विससर्प समन्ततः ॥ ८५ ॥
ततः कुम्भः समुत्पत्य सुग्रीवमभिपत्य च ॥ आजघानोरसि क्रुद्धो वज्रवेगेन मुष्टिना ॥ ८६ ॥
तस्य चर्म च पुस्फोट [1]बहु सुस्राव शोणितम् ॥ स च मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले ॥ ८७ ॥
[2]तदा वेगेन तत्रासीत्तेजः प्रज्वलितं मुहुः ॥ वज्रनिष्पेषसञ्जाता ज्वाला मेरौ यथा गिरौ ॥
[ [3]मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ॥ ८८ ॥
[4]स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः ॥ मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ ८९ ॥
अर्चिः सहस्रविकचं रविमण्डलसप्रभम् ॥ स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् ॥ ९० ॥
स तु तेन प्रहारेण विह्वलो [5]भृशताडितः ॥ निपपात [6]तदा कुम्भो गतार्चिरिव पावकः ॥ ९१ ॥
मुष्टिनाऽभिहतस्तेन निपपाताशु राक्षसः ॥ लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ९२ ॥
कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना ॥ बभौ रुद्राभिपन्नस्य यथा रूपं गवां पतेः ॥ ९३ ॥

तस्मिन्हते भीमपराक्रमेण प्लवङ्गमानामृषभेण युद्धे ॥
मही सशैला सवना चचाल भयं च रक्षांस्यधिकं विवेश ॥ ९४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## सप्तसप्ततितमः सर्गः ॥ ७७ ॥

हनुमता निकुंभहननम् ॥ १ ॥

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् ॥ प्रदहन्निव कोपेन वानरेन्द्रमवैक्षत ॥ १ ॥
ततः स्रग्दामसन्नद्धं दत्तपञ्चाङ्गुलं शुभम् ॥ आददे परिघं वीरो नगेन्द्रशिखरोपमम् ॥ २ ॥

---

जन्तौ । बभूवतुरिति शेषः ॥ ८२—८३ ॥ दर्शयन्नुदधेस्तलं । कुम्भो यथा उदधितलं पश्येत्तथा वेगेन पातयामासेत्यर्थः ॥ ८४ ॥ विससर्प अभ्यवर्धत ॥ ८५—८६ ॥ पुस्फोट विभिन्नं । सः मुष्टिः । सुग्रीवस्यास्थिमण्डले । प्रतिजघ्ने प्रतिहतः । मोघो बभूवेत्यर्थः । स च मुष्टिर्महावेग इति पाठः ॥ ८७ ॥ वेगेन कुम्भवेगेन । तत्र सुग्रीववक्षसि । तेजः संघट्टजं । प्रज्वलितमासीत् । वज्रनिष्पेषसञ्जाता इन्द्रेण पक्षच्छेदकाले वज्रसंघट्टजन्येत्यर्थः ॥ ८८ ॥ संवर्तयामास चकारेत्यर्थः ॥ ८९ ॥ अर्चिःसहस्रविकचं अर्चिःसहस्रावृतमित्यर्थः । अतएव रविमण्डलसप्रभं ॥ ९०—९२ ॥ गवां पतेः सूर्यस्य ॥ ९३—९४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

अथ निकुम्भवधः सप्तसप्ततितमे—निकुम्भ इत्यादि ॥ १ ॥ तत इत्यादिश्लोकद्वयमेकान्वयं ॥

---

**रामानु०** शतयोजनविस्तीर्णत्रिकूटशिखरमध्येयुध्यन्सुग्रीवः कुंभंलङ्काद्वीपतलेलवणांभसिपातयामासेत्यभिधानात्सुग्रीवस्यापरिमेयबलवत्ताद्योत्यते ॥ ८४ ॥ **स०** समुत्थितः ऊर्ध्वमुत्थितः । विन्ध्यमन्दरसंकाशः तत्सदृशतरङ्गवान् । समन्ततोविससर्प ॥ ' विन्ध्यमन्दरसंकाशःकुंभः ततोजलात्समुत्पत्येत्यन्वयइतिनागोजिभट्टव्याख्यात्वर्थाप्रतिपत्त्या ॥ ८५ ॥ **स०** रुद्राभिपन्नस्य स्ववरतःसूर्यमनुविमानेनगच्छतोसुरस्ययाने तेनासहमानेनपातितेसतिसतीपतिस्तंपातयामासेतिपौराणिक्याकथयारुद्राभिपन्नताज्ञेया ॥ ९३ ॥ इतिषट्सप्ततितमः सर्गः ॥ ७६ ॥

**[ पा० ]** १ घ. ङ. ज.—ट. संजज्ञेचापिशोणितं. क. ख. ग. च. संजज्ञेचास्य. २ ग.—च. झ. ञ. ट. तस्यवेगेन. ३ इदमर्धं क. ख. च. छ. पाठेषुदृश्यते. ४ क. सतथाऽभिहतः. ५ ङ. छ. ज. झ. ट. भृशपीडितः. ६ घ. तदाभूमौ.

हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् ॥ यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३ ॥
तमाविध्य महातेजाः शक्रध्वजसमं तदा ॥ विननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४ ॥
उरोगतेन निष्केण भुजस्थैरङ्गदैरपि ॥ कुण्डलाभ्यां च चित्राभ्यां मालया च विचित्रया ॥ ५ ॥
निकुम्भो भूषणैर्भाति तेन स परिघेण च ॥ यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान् ॥ ६ ॥
परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः ॥ प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७ ॥
नगर्या विटपावत्या गन्धर्वभवनोत्तमैः ॥ सह चैवामरावत्या सर्वैश्च भवनैः सह ॥ ८ ॥
सतारग्रहनक्षत्रं सचन्द्रं समहाग्रहम् ॥ निकुम्भपरिघाघूर्णं भ्रमतीव नभःस्थलम् ॥ ९ ॥
दुरासदश्च संजज्ञे परिघाभरणप्रभः ॥ कपीनां स निकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥ १० ॥
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् ॥ हनुमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली ॥ ११ ॥
परिघोपमबाहुस्तु परिघं भास्करप्रभम् ॥ बली बलवतस्तस्य पातयामास वक्षसि ॥ १२ ॥
स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः ॥ विशीर्यमाणः सहसा उल्काशतमिवाम्बरे ॥ १३ ॥
स तु तेन प्रहारेण विचचाल महाकपिः ॥ परिघेण समाधूतो यथा भूमिचलेऽचलः ॥ १४ ॥
स तदाऽभिहतस्तेन हनुमान्प्लवगोत्तमः ॥ मुष्टिं संवर्तयामास बलेनातिमहाबलः ॥ १५ ॥
तमुद्यम्य महातेजा निकुम्भोरसि वीर्यवान् ॥ अभिचिक्षेप वेगेन वेगवान्वायुविक्रमः ॥ १६ ॥
ततः पुस्फोट चर्मास्य प्रसुस्राव च शोणितम् ॥ मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ॥१७॥
स तु तेन प्रहारेण निकुम्भो विचचाल ह ॥ स्वस्थश्चापि निजग्राह हनुमन्तं महाबलम् ॥ १८ ॥
विचुक्रुशुस्तदा संख्ये भीमं लङ्कानिवासिनः ॥ निकुम्भेनोद्यतं दृष्ट्वा हनुमन्तं महाबलम् ॥ १९ ॥
स तदा ह्रियमाणोपि कुम्भकर्णात्मजेन ह ॥ आजघानानिलसुतो वज्रकल्पेन मुष्टिना ॥ २० ॥

स्रग्दामसन्नद्धं स्रक्समूहनिबद्धं । दत्तपञ्चाङ्गुलं चन्दनकुङ्कुमादिनार्पितपञ्चाङ्गुलमुद्रामुद्रितं । अथवा क्रियाविशेषणमेतत् । दत्तपञ्चाङ्गुलं यथा तथा आददे । परिक्षिप्तं परिणद्धं ॥ २—४ ॥ उरोगतेनेत्यादिश्लोकद्वयमेकान्वयं ॥ निष्कः पदकं । भूषणैः हारादिभिः । भाति स्म । " लट् स्मे " इति भूते लट् । स्तनयित्नुमान् गर्जितवान् । " स्तनयित्नुस्तु गर्जिते मेघे " इति रत्नमाला । इन्द्रधनुःस्थाने परिघः । विद्युत्स्थाने भूषणानि । विननादेति पूर्वश्लोकोक्तो विनादः स्तनयित्नुस्थान इति नोपमेयन्यूनता ॥ ५—६ ॥ वातग्रन्थिः आवहादिसप्तवातस्कन्धः । सघोषः ससिंहनाद इति निकुम्भविशेषणं परिघविशेषणं वा ॥ ७ ॥ नगर्येत्यादिश्लोकद्वयमेकान्वयं॥ विटपावत्या अलकया। अत्रापि सहेति शेषः । भवनैः अमरभवनैः । ताराः अश्विन्यादयः। ग्रहाः बुधादयः । नक्षत्राणि अश्विन्यादिभिन्नानि। महाग्रहाः शुक्रादयः। अत्र रात्रित्वात्सूर्यो नोक्तः । निकुम्भपरिघाघूर्णं । अत्र परिघशब्देन तद्वात उपलक्ष्यते । इवशब्दो वाक्यालंकारे ॥ ८—९ ॥ परिघेणाभरणैश्च प्रभातीति परिघाभरणप्रभः । यद्वा परिघाभरणान्येव प्रभा यस्य स तथा । कपीनां दुरासदो जज्ञ इति संबन्धः ॥ १० ॥ राक्षसा इति । प्रबलेषु प्रजङ्घादिषु हतेषु दुर्बलैर्भवद्भिः किमर्थं युद्धाय प्रयत्नः कृत इति निकुम्भः कुप्येदिति राक्षसानां भयं वेदितव्यं । विवृत्य विस्तार्य । प्रमुखतः अग्रे ॥११॥ परिघोपमबाहुः निकुम्भः ॥ १२ ॥ व्यूढे विशाले । उल्काशतमिव बभाविति ॥ १३ ॥ भूमिचले भूकम्पे ॥ १४ ॥ संवर्तयामास । चकारेत्यर्थः ॥ १५—१८ ॥ भीमं विचुक्रुशुः । हनुमद्ग्रहणहर्षादिति भावः । उद्यतं

ती० परिघान्तरणप्रभः परिघान्तकृतरणरक्तप्रभइत्यर्थः ॥ १० ॥

[ पा० ] १ ख. घ. ङ. च. ट. शक्रध्वजसमौजसं. २ च. छ. परिघान्तरणप्रभः. ३ ग. ङ. झ. ट. क्रोधेन्धनोनिकुंभाग्निः. ४ ङ. झ. ञ. ट. नचचाल. ५ क. ख. घ. ङ. छ. झ. ञ. ट. तत्रपुस्फोट. ६ ख. ग. ङ. च. झ. ट. मेघेविद्युदिवो. ७ घ. सर्वेभीमं क. हृष्टाभीमं. ८ क. ज. ञ. निकुंभेनोद्धतं. घ. निकुंभेनार्दितं.

आत्मानं मोचयित्वाऽथ क्षितावभ्यवपद्यत ॥ हनुमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २१ ॥
निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष ह ॥ उत्पत्य चास्य वेगेन पपातोरसि वीर्यवान् ॥ २२ ॥
परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् ॥ उत्पाटयामास शिरो भैरवं नदतो महत् ॥ २३ ॥
[ अथ[1] देवास्सगन्धर्वा विद्याधरमहोरगाः ॥ आकाशचारिणस्सर्वे अप्सरोभिः सहामराः ॥ २४ ॥
हनूमन्तं महाबाहुं वायुपुत्रमरिंदमम् ॥ प्रशंसन्तः परैर्वाक्यैः प्रसूनैरभ्यपूजयन् ] ॥ २५ ॥
अथ विनर्दति सादिते निकुम्भे पवनसुतेन रणे बभूव युद्धम् ॥
दशरथसुतराक्षसेन्द्रसून्वोर्भृशतरमागतरोषयोः सुभीमम् ॥ २६ ॥
व्यपेते तु जीवे निकुम्भस्य हृष्टा विनेदुः प्लवङ्गा दिशः सस्वनुश्च ॥
चचालेव चोर्वी पफालेव च द्यौर्भयं राक्षसानां बलं चाविवेश ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## अष्टसप्ततितमः सर्गः ॥ ७८ ॥

रावणप्रेरणया समरायनिस्सरतिमकराक्षे राक्षसैस्तत्समयसमुद्भूतदुर्निमित्तनिरीक्षणेपि तदलक्षीकरणेनरणाय तदनुसरणम् ॥ १ ॥

निकुम्भं च[3] हतं श्रुत्वा कुम्भं च विनिपातितम् ॥ रावणः परमामर्षी प्रजज्वालानलो यथा ॥ १ ॥
नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्छितः ॥ खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥ २ ॥
गच्छ पुत्र मयाऽऽज्ञप्तो बलेनाभिसमन्वितः ॥ राघवं लक्ष्मणं चैव जहि तांश्च[4] वनौकसः ॥ ३ ॥

---

गृहीतं ॥ १९—२० ॥ क्षितावभ्यवपद्यत स्थितः ॥ २१ ॥ निक्षिप्य भूमौ पातयित्वा । परमायत्तः अतिप्रयासयुक्तः । उत्पत्य ऊर्ध्वमुद्गत्य । उरसि वेगेन पपात ॥ २२ ॥ बाहुभ्यां शिरोधरां परिगृह्य परिवर्त्य । शिर उत्पाटयामास ॥ २३—२५ ॥ उत्तरसर्गद्वयार्थं संग्रहेण दर्शयति—अथेति ॥ विनदति निकुम्भे पवनसुतेन सादिते सति । दशरथसुतराक्षसेन्द्रसून्वोः । राममकराक्षयोः । युद्धं बभूव । पुष्पिताग्रावृत्तं । उत्तरत्र भुजङ्गप्रयातं ॥ २६ ॥ दिशः सस्वनुः प्रतिध्वनिं चक्रुः । पफालेव पुस्फोटेव । बलं कर्म । भयं कर्तृ ॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

अथ मकराक्षनिर्गमोऽष्टसप्ततितमे, प्रथमपक्षे अयं दशम्यां प्रातः, द्वितीयपक्षे तु दशम्यां प्रातरारभ्य कम्पनवधप्रहस्तवधरावणमुकुटभङ्गकुम्भकर्णप्रबोधतद्वधाः, अथापराह्णे ब्रह्मास्त्रबन्धः, रात्रौ तन्मोक्षलङ्कादहनकुम्भनिकुम्भयूपाक्षशोणिताक्षप्रजङ्घकम्पनमकराक्षवधाः—निकुम्भं चेत्यादि ॥ १ ॥ परिमूर्छितः

---

स० निनदति नानाप्रकारेणकथयतिनिकुंभे दशरथसुतराक्षसेन्द्रसून्वोः दशसुदिक्षुरथोगमनंअप्रतिहतंयस्य तस्यवायोः । " रथः स्यात्स्यन्दनेकायेचरणेच " इतिविश्वः । सुतोहनुमान् । राक्षसेन्द्रसूनुर्निकुंभः । तयोःभृशतरमागतरोषयोः यद्युद्धंबभूव तस्मिन्रणे पवनसुतेनसादितेसति राक्षसानांबलं भयमाविवेशेत्याकर्षः । " अनेनवक्ष्यमाणकथोपक्षेपः " इत्युभौ । तत्र " व्यपेतेतुजीवे " इत्यादिकमसंगतमिवदृश्यते । अस्मत्पक्षेदशरथशब्दएकएवगौणार्थइतिमन्तव्यं । दशरथसुतोस्यास्तीतिदशरथसुतइतिवा । पवनसुतेनरणेनिकुंभेसादितेसति युद्धं नञ्मात्राध्याहारः । नबभूव । परपक्षेरणकर्तुरभावादितिवा ॥ २६ ॥ स० सामान्यतोभयमित्युक्तं । तत्रविशेषमाह—व्यपेतइति । जीवेव्यपेते शरीरादपगते ॥ ति० एतदन्तंनवमीदिनयुद्धं ॥२७॥ इतिसप्तसप्ततितमःसर्गः ॥७७॥

[ पा० ] १ इदंश्लोकद्वयं क. च. छ. पाठेषुदृश्यते. २ ङ. झ. ञ. ट. निनदति. ३ ग. ङ. चहतंदृष्ट्वा. क. ख. घ. च. छ. ञ. निहतंश्रुत्वा. झ. ट. निहतंदृष्ट्वा. ४ क. ग.—ट. तौसवनौकसौ.

रावणस्य वचः श्रुत्वा शूरमानी खरात्मजः ॥ बाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरः ॥ ४ ॥
सोभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् ॥ निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥ ५ ॥
समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीदिदम् ॥ रथश्चानीयतां शीघ्रं सैन्यं चाहूयतां त्वरात् ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः ॥ स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् ॥ ७ ॥
प्रदक्षिणं रथं कृत्वा आरुरोह निशाचरः ॥ सूतं संचोदयामास शीघ्रं मे रथमावह ॥ ८ ॥
अथ तान्राक्षसान्सर्वान्मकराक्षोऽब्रवीदिदम् ॥ यूयं सर्वे प्रयुध्यध्वं पुरस्तान्मम राक्षसाः ॥ ९ ॥
अहं राक्षसराजेन रावणेन महात्मना ॥ आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १० ॥
अद्य रामं वधिष्यामि लक्ष्मणं च निशाचराः ॥ शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११ ॥
अद्य शूलनिपातैश्च वानराणां महाचमूम् ॥ प्रदहिष्यामि संप्राप्तः शुष्केन्धनमिवानलः ॥ १२ ॥
मकराक्षस्य तच्छ्रुत्वा वचनं ते निशाचराः ॥ सर्वे नानायुधोपेता बलवन्तः समागताः ॥ १३ ॥
ते कामरूपिणः सर्वे दंष्ट्रिणः पिङ्गलेक्षणाः ॥ मातङ्गा इव नर्दन्तो ध्वस्तकेशा भयानकाः ॥ १४ ॥
परिवार्य महाकाया महाकायं खरात्मजम् ॥ अभिजग्मुस्ततो हृष्टाश्चालयन्तो वसुन्धराम् ॥ १५ ॥
शङ्खभेरीसहस्राणामाहतानां समन्ततः ॥ क्ष्वेलितास्फोटितानां च ततः शब्दो महानभूत् ॥ १६॥
प्रभ्रष्टोथ करात्तस्य प्रतोदः सारथेस्तदा ॥ पपात सहसा चैव ध्वजस्तस्य च रक्षसः ॥ १७ ॥
तस्य ते रथयुक्ताश्च हया विक्रमवर्जिताः ॥ चरणैराकुलैर्गत्वा दीनाः सास्रमुखा ययुः ॥ १८ ॥
प्रवाति पवनस्तस्मिन्सपांसुः खरदारुणः ॥ निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ १९ ॥
तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यवत्तमाः ॥ अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥२०॥

घनगजमहिषाङ्गतुल्यवर्णाः समरमुखेष्वसकृद्गदासिभिन्नाः ॥
अहमहमिति युद्धकौशलास्ते रजनिचराः परितः समुन्नदन्तः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

---

व्याप्तः ॥ २—५ ॥ त्वरात्त्वरया ॥६॥ प्रत्यपादयत् प्रापयत् ॥ ७ ॥ आवह चोदय । अत्रेतिकरणं द्रष्टव्यं ॥ ८ ॥ अथतानित्यादिचतुःश्लोक्येकान्वया ॥ ९—॥१२॥ समागताः समाजग्मुः ॥१३॥ ते कामरूपिण इत्यादिश्लोकद्वयमेकान्वयं ॥ १४—१६ ॥ करात्तस्य आत्तकरस्य वशीकृतकरस्य । लघुहस्तस्येति यावत् ॥१७॥ विक्रमवर्जिताः विविधपदन्यासविरहिताः । प्रथमसमाकुलैश्चरणैर्गत्वा पश्चाद्ययुरित्यर्थः॥१८॥ सपांसुः अतएव खरदारुणः खरः परुषः दारुणो भयंकरश्च ॥१९॥ तानीत्यादिश्लोकद्वयमेकान्वयं । असकृद्गदासिभिन्ना इत्यनेन शौर्यातिशयः सूचितः । युद्धकौशलाः युद्धकुशलाः । स्वार्थेण् । अहमहमिति वदन्तः । अचिन्त्य निर्गता इति पूर्वेण संबन्धः ॥२०—२१॥ इति श्रीगो-

---

स० यद्यपिकुंभवधःप्रागितिकुंभंनिकुंभंचेतिवक्तव्यं । तथापिनिकुंभोतिबलवानितिवाऽत्यव्यवहितोनिकुंभवधइतिवानिकुंभग्रहणं प्रागितिमन्तव्यं ॥ १ ॥ स० त्वरात् त्वरया । त्वरयाअततीति त्वरात् । तस्यसंबुद्धिरितिवा ॥ ६ ॥ स० खराणांक्रूराणामपि दारुणः ॥ १९ ॥ इत्यष्टसप्ततितमःसर्गः ॥ ७८ ॥

[ पा० ] १ झ. पुत्रोब्रवीद्वचः. २ ख. ङ. च. छ. झ. ञ. ट. रथआनीयतांशीघ्रंसैन्यंत्वानीयतां. ३ क. ख. तद्बलंचोदयामासस्यन्दनेनसहद्रुतं. ४ ख.—ट. शीघ्रंवै. ५ ङ. ग. झ. संप्राप्तां. ६ ङ झ. क्रूरादंष्ट्रिणः. क. ख. ग. च. छ. ज. ञ. ट. शूरादंष्ट्रिणः. ७ ङ. झ. चालयन्तोनभस्स्थलं. ८ घ. ङ. छ. झ. ञ. ट. तत्रशब्दो. ९ ख. ङ. च. छ. ञ. ट. सहसाभूमौ. १० ग. झ. तस्मिन्पांसुभिः. ११ झ. परिबभ्रमुर्मुहुस्ते. क. ख. ग. च. ञ. ट. परिबभ्रमुर्नदन्तः. ज. परितस्थुरुन्नदन्तः.

# एकोनाशीतितमः सर्गः ॥ ७९ ॥

राममकराक्षयोर्वीरवादपुरस्सरंसमरारंभः ॥ १ ॥ रामेणमकराक्षक्षपणम् ॥ २ ॥

निर्गतं मकराक्षं ते दृष्ट्वा वानरयूथपाः ॥ आप्लुत्य सहसा सर्वे योद्धुकामा व्यवस्थिताः ॥ १ ॥
ततः प्रवृत्तं सुमहत्तद्युद्धं रोमहर्षणम् ॥ निशाचरैः प्लवङ्गानां देवानां दानवैरिव ॥ २ ॥
वृक्षशूलनिपातैश्च [1]शिलापरिघपातनैः ॥ अन्योन्यं मर्दयन्ति स्म तदा कपिनिशाचराः ॥ ३ ॥
[2]शक्तिखड्गगदाकुन्तैस्तोमरैश्च निशाचराः ॥ पट्टिशैर्भिन्दिपालैश्च बाणपातैः समन्ततः ॥ ४ ॥
पाशमुद्गरदण्डैश्च [3]निर्घातैश्चापरे तदा ॥ कदनं [4]कपिवीराणां चक्रुस्ते रजनीचराः ॥ ५ ॥
बाणौघैरर्दिताश्चापि खरपुत्रेण वानराः ॥ संभ्रान्तमनसः सर्वे दुद्रुवुर्भयपीडिताः ॥ ६ ॥
तान्दृष्ट्वा राक्षसाः सर्वे [5]द्रवमाणान्वलीमुखान् ॥ नेदुस्ते सिंहवद्धृष्टा राक्षसा जितकाशिनः ॥ ७ ॥
विद्रवत्सु तदा तेषु वानरेषु समन्ततः ॥ रामस्तान्वारयामास शरवर्षेण राक्षसान् ॥ ८ ॥
वारितान्राक्षसान्दृष्ट्वा मकराक्षो निशाचरः ॥ क्रोधानलसमाविष्टो वचनं चेदमब्रवीत् ॥ ९ ॥
तिष्ठ राम मया सार्धं [6]द्वन्द्वयुद्धं ददामि ते ॥ त्याजयिष्यामि ते प्राणान्धनुर्मुक्तैः शितैः शरैः ॥१०॥
यत्तदा दण्डकारण्ये पितरं हतवान्मम ॥ [7]मदग्रतः स्वकर्मस्थं दृष्ट्वा रोषोभिवर्धते ॥ ११ ॥
दह्यन्ते [8]भृशमङ्गानि दुरात्मन्मम राघव ॥ यन्मयासि न दृष्टस्त्वं तस्मिन्काले [9]महावने ॥ १२ ॥
दिष्ट्याऽसि दर्शनं राम मम त्वं प्राप्तवानिह ॥ काङ्क्षितोसि क्षुधार्तस्य सिंहस्येवेतरो मृगः ॥ १३ ॥
अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः ॥ ये त्वया [10]निहता वीराः सह तैश्च समेष्यसि ॥ १४ ॥
बहुनाऽत्र किमुक्तेन शृणु राम वचो मम ॥ पश्यन्तु सकला लोकास्त्वां मां चैव रणाजिरे ॥१५॥
अस्त्रैर्वा गदया वाऽपि बाहुभ्यां वा [11]महाहवे ॥ अभ्यस्तं येन वा राम तेनैव युधि वर्तताम् ॥ १६ ॥

विन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टसप्ततितमःसर्गः॥७८॥

---

अथ मकराक्षवध एकोनाशीतौ—निर्गतमिति ॥ १—३ ॥ शक्तीत्यादिश्लोकद्वयमेकान्वयं ॥ निखातैः आयुधविशेषैः । निर्घातैरिति पाठे अशनिभिरित्यर्थः । केचिन्निशाचराः शक्तिखड्गादिभिः अपरे रजनीचराः पाशमुद्गरादिभिश्च कदनं चक्रुरिति योजना ॥ ४—६ ॥ राक्षसा जितकाशिन इति भिन्नं वाक्यं । जितं जयः तेन काशन्त इति तथोक्ता जितकाशिनः। बभूवुरिति शेषः । अन्यथा द्वितीयराक्षसपदवैयर्थ्यं स्यात् ॥ ७—१० ॥ स्वकर्मस्थं वधकर्मस्थं । यथा पिता हतस्तथा वध्यमित्यर्थः । यद्वा क्षात्रधर्मकर्मानुतिष्ठन्तमित्यर्थः । स्वकर्मस्थमिति सुतरामकृत्यनिरतमिति वार्थः ॥ ११ ॥ तस्मिन्काले महावने यद्यस्मान्न दृष्टोसि तस्मान्ममाङ्गानि दह्यन्ते । तदानीमेव दृष्टश्चेत्प्रतीकारेण तापः शाम्येदित्यर्थः ॥ १२–१५ ॥ महाहवे निमित्ते । येन वा अन्येनायुधेनाभ्यस्तं

---

शि० निशाचराः निशायामेवभोजनशीलाः । रजनीचराः राक्षसाः ॥ ४ ॥ शि० स्वकर्मस्थं स्वकर्मनिरतं । राक्षसवधपरायणमित्यर्थः ॥ स० स्वकर्मस्थं राक्षसधर्मनिरतं । सु सम्यक् अकर्मस्थंतत्रनिरतमितिरामविशेषणंवा ॥ ति० मदग्रतःस्वकर्मस्थं दृष्ट्वेतिपाठे मदग्रतस्तिष्ठन्तमितिशेषः ॥ ११ ॥

[ पा० ] १ ङ. झ. ट. गदापरिघपातनैः. २ क. शक्तिशूलगदाखड्गैः. ३ च. छ. ञ. ट. निर्घातैश्चवरायुधैः. ख. शूलैश्चान्यैर्वरायुधैः. ४ झ. कपिसिंहानां. ख. ङ. कपिसैन्यानां. घ. कपिमुख्यानां. ५ क. ख. घ.—छ. झ. ञ. द्रवमाणान्वनौकसः. ६ झ. द्वन्द्वयुद्धंभविष्यति. घ. द्वन्द्वयुद्धंतुदेहिमे. ७ घ. ङ. झ. तदग्रतः. ख. त्वामग्रतः. ८ ख. ममचाङ्गानि. ९ ख. महाहवे. १० ग.—ट. निहताःशूराः. ११ च.—ञ. रणाजिरे.

मकराक्षवचः श्रुत्वा रामो दशरथात्मजः ॥ अब्रवीत्प्रहसन्वाक्यमुत्तरोत्तरवादिनम् ॥ १७ ॥
कत्थसे किं वृथा रक्षो बहून्यसदृशानि तु ॥ न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ॥ १८ ॥
चतुर्दशसहस्राणि रक्षसां[1] त्वत्पिता च यः ॥ त्रिशिरा दूषणश्चैव दण्डके निहता मया ॥ १९ ॥
स्वाशितास्तव मांसेन गृध्रगोमायुवायसाः ॥ भविष्यन्त्यद्य वै पाप तीक्ष्णतुण्डनखाङ्कुराः[2] ॥ २० ॥
[[3]रुधिरार्द्रमुखा हृष्टा रक्तपक्षाण्डजाश्च ये ॥ खे गता वसुधायां च भ्रमिष्यन्ति समन्ततः] ॥ २१ ॥
राघवेणैवमुक्तस्तु[4] खरपुत्रो[5] निशाचरः ॥ बाणौघानमुचत्तस्मै[6] राघवाय रणाजिरे ॥ २२ ॥
ताञ्शराञ्शरवर्षेण रामश्चिच्छेद नैकधा ॥ निपेतुर्भुवि ते[7] च्छिन्ना रुक्मपुङ्खाः सहस्रशः ॥ २३ ॥
तद्युद्धमभवत्तत्र समेत्यान्योन्यमोजसा ॥ रक्षसः खरपुत्रस्य सूनोर्दशरथस्य च ॥ २४ ॥
जीमूतयोरिवाकाशे शब्दो ज्यातलयोस्तदा ॥ धनुर्मुक्तः स्वनोत्कृष्टः श्रूयते च रणाजिरे ॥ २५ ॥
देवदानवगन्धर्वाः किन्नराश्च महोरगाः ॥ अन्तरिक्षगताः सर्वे द्रष्टुकामास्तदद्भुतम् ॥ २६ ॥
विद्धमन्योन्यगात्रेषु द्विगुणं वर्धते परम्[8] ॥ कृतप्रतिकृतान्योन्यं कुरुतां तौ[9] रणाजिरे ॥ २७ ॥
राममुक्तांस्तु बाणौघान्राक्षसस्त्वच्छिनद्रणे ॥ रक्षोमुक्तांस्तु रामो वै नैकधा प्राच्छिनच्छरैः ॥२८॥
बाणौघैर्विततः सर्वा दिशश्च प्रदिशस्तथा[10] ॥ संछन्ना वसुधा चैव समन्तान्न प्रकाशते ॥ २९ ॥
ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद रक्षसः[11] ॥ अष्टाभिरथ नाराचैः सूतं विव्याध राघवः ॥ ३० ॥
भित्त्वा[12] शरै रथं रामो रथाश्वान्[13]समपातयत् ॥ विरथो वसुधां[14] तिष्ठन्मकराक्षो निशाचरः ॥ ३१ ॥
[15]तत्तिष्ठद्वसुधां रक्षः शूलं जग्राह पाणिना ॥ त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभम् ॥ ३२ ॥
[ [16]दुरवापं महच्छूलं रुद्रदत्तं भयंकरम् ॥ जाज्वल्यमानमाकाशे संहारास्त्रमिवापरम् ॥
यं दृष्ट्वा देवताः सर्वा भयार्ता विद्रुता दिशः ] ॥ ३३ ॥
विभ्राम्य तु महच्छूलं प्रज्वलत्तं निशाचरः ॥ स क्रोधात्प्राहिणोत्तस्मै राघवाय महाहवे[17] ॥ ३४ ॥
तमापतन्तं ज्वलितं खरपुत्रकराच्च्युतम् ॥ बाणैस्तु[18] त्रिभिराकाशे शूलं चिच्छेद राघवः ॥ ३५ ॥
स च्छिन्नो[19] नैकधा शूलो दिव्यहाटकमण्डितः ॥ व्यशीर्यत महोल्केव रामबाणार्दितो भुवि ॥ ३६ ॥
तच्छूलं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ साधु साध्विति भूतानि व्याहरन्ति नभोगता ॥ ३७ ॥

---

तेनैव युधि वर्ततां । भवानिति शेषः ॥ १६ ॥ उत्तरोत्तरवादिनं । बहुप्रलापिनमित्यर्थः ॥ १७ ॥ युद्धेन विना प्रहारेण विना ॥ १८–१९ ॥ स्वाशिताः सुष्ठु आशितवन्तः ॥ २०–२४ ॥ ज्यातलयोः शब्दः ज्यातलयोः संघर्षजः शब्दः । स्वनोत्कृष्टः स्वनेपूत्कृष्टः ॥ २५—२६ ॥ विद्धं वेधनं । वर्धते अवर्धत । कृतप्रतिकृतान्योन्यं कृतस्य प्रतिकृतं ययोस्तौ तादृशावन्योन्यं यस्मिन्युद्धकर्मणि तत्तथोक्तं । कुरुतां अकुरुतां । युद्धमिति शेषः ॥ २७—३० ॥ वसुधां तिष्ठत् वसुधायामतिष्ठत् ॥ ३१ ॥ वसुधां वसुधायां ॥ ३२—३६ ॥ तच्छूलमिति । नभोगता नभोगतानि । "सुपां सुलुक्—" इत्यादिना आकारादेशः

---

ति० भित्वारथं भङ्क्त्वेत्यर्थः । हत्वाअश्वानित्यसंधिपाठः । वसुधास्थः अभूदितिशेषः ॥ ३१ ॥ ति० शूलोऽर्धचांदिः ॥ ३४ ॥

[ पा० ] १ ख. घ. ज. राक्षसास्त्वत्पिताच. २ क. ख. ङ.—ञ. नखाङ्कुशाः. ३ अयंश्लोकः क. ख. च. छ. ञ. पाठेषुदृश्यते. ४ क. ग. एवमुक्तस्तुरामेण. ५ ख. घ.—छ. झ. ञ. मकराक्षोमहाबलः. ६ ख. नसृजत्तस्मै. ७ क.—छ. झ. ञ. विच्छिन्नाः. ज. तेभिन्नाः. ८ च. छ. ज. ट. बलं. ९ ग. च. ज. कुर्वातांतौ. १० क.—घ. च. छ. विदिशस्तथा. ११ क. ग. घ. ङ. झ. संयुगे. १२ झ. भित्वारथंशरैरामोहत्वाअश्वानपातयत्. १३ घ. ङ. ज. ञ. ट. रथादश्वानपातयत्. च. रथानश्वानपातयत्. १४ ग. ञ. ट. वसुधास्थस्समकराक्षो. १५ क. उत्तिष्ठत्. १६ इदमर्धत्रयं क. ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. १७ क. ग. घ. ङ. झ. ञ. ट. महात्मने. १८ घ.—छ. झ. ञ. ट. बाणैश्चतुर्भिराकाशे. १९ ङ. झ. भिन्नो. क. छिन्नस्तुत्रिधा.

तं दृष्ट्वा निहतं शूलं मकराक्षो निशाचरः ॥ मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३८ ॥
स तं दृष्ट्वा पतन्तं वै प्रहस्य रघुनन्दनः ॥ पावकास्त्रं ततो रामः सन्दधे तु शरासने ॥ ३९ ॥
तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे ॥ संछिन्नहृदयं तत्र पपात च ममार च ॥ ४० ॥
दृष्ट्वा ते राक्षसाः सर्वे मकराक्षस्य पातनम् ॥ [1]लङ्कामेवाभ्यधावन्त रामबाणार्दितास्तदा ॥ ४१ ॥
दशरथनृपपुत्रबाणवेगै रजनिचरं निहतं खरात्मजं तम् ॥
ददृशुरथ सुरा भृशं प्रहृष्टा गिरिमिव वज्रहतं यथा विकीर्णम् ॥ ४२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## अशीतितमः सर्गः ॥ ८० ॥

मकराक्षक्षयश्रवणविषण्णरावणचोदितेनेन्द्रजिता हुतभुजिहवनपूर्वकं सायुधरथारोहणेनान्तरिक्षेऽन्तर्हितेनसता रामादिषुशरवर्षणम् ॥ १ ॥ लक्ष्मणेन रामंप्रति ब्रह्मास्त्रप्रयोगेणसकलरक्षःकुलक्षपणप्रतिज्ञानपूर्वकमभ्यनुज्ञानयाचने रामेण सान्त्वनेनतंप्रतिषेधनपूर्वकं यत्रकुत्रगतस्यापितस्यवधप्रतिज्ञानपूर्वकमुपायपर्यालोचनम् ॥ २ ॥

मकराक्षं हतं श्रुत्वा रावणः समितिंजयः ॥ क्रोधेन महताऽऽविष्टो दन्तान्कटकटापयन् ॥ १ ॥
कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन् ॥ आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ॥ २ ॥
जहि वीर महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥ अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥ ३ ॥
त्वमप्रतिमकर्माणमिन्द्रं जयसि संयुगे ॥ किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ॥ ४ ॥
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः ॥ यज्ञभूमौ स विधिवत्पावकं जुहवेन्द्रजित् ॥ ५ ॥
जुह्वतश्चापि तत्राग्निं रक्तोष्णीषधराः स्त्रियः ॥ आजग्मुस्तत्र संभ्रान्ता राक्षसो यत्र रावणिः ॥ ६ ॥
शस्त्राणि शरपत्राणि समिधोथ विभीतकाः ॥ लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ ७ ॥
सर्वतोग्निं समास्तीर्य शरपत्रैः सतोमरैः ॥ छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ ८ ॥

---

॥ ३७—४१ ॥ गिरिमिव वज्रहतं यथेति । द्वे अप्यव्ययपदे संभूयैकार्थमेवाचक्षाते । पक्षद्वयेपि मकराक्षवधेन दशममहः समाप्तं ॥ ४२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनाशीतितमः सर्गः ॥ ७९ ॥

अथेन्द्रजिन्निर्गमोशीतितमे—मकराक्षमित्यादि । आविष्टः अभूदिति शेषः ॥ १—३ ॥ जयसि अजैषीः । पुनःशब्दस्त्वर्थे । मानुषौ पुनः मानुषौ तु । संयुगे दृष्ट्वापि न वधिष्यसि किं दर्शनमात्रेण वधिष्यस्येवेत्यर्थः ॥ ४ ॥ जुहव जुहाव । वृद्ध्यभाव आर्षः ॥ ५ ॥ जुह्वतइति भावलक्षणे षष्ठी । रक्तोष्णीषधराः । ऋत्विग्धारणार्थं रक्तोष्णीषाण्यानयन्त्य इत्यर्थः । "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इति श्रुतेः । संभ्रान्ताः त्वरावत्यः । समयातिक्रमो मा भूदिति त्वरया उष्णीषाण्यानिन्युरित्यर्थः ॥ ६ ॥ शस्त्राणि अभवन्निति शेषः । शरपत्राणि गुन्द्रपत्राणि । गुन्द्रश्च काशजातीयः । "गुन्द्रस्तेजनकः शरः" इत्यमरः । शस्त्राणि तोमराणि । सतोमरैरित्यनुवादात् । शस्त्राणि शरपत्राणि च परिस्तरणान्यभवन् । विभीतकाः समिधः इध्मानि अभवन् । वासांसि ऋत्विगुष्णीषवासांसि लोहितान्यभवन् । कार्ष्णायसं स्रुव-

---

ति० प्रधावन्त प्राधावन्त ॥ नवम्यांपूर्वरात्रेऽस्यवधः ॥ ४१ ॥ इत्येकोनाशीतितमःसर्गः ॥ ७९ ॥

[ पा० ] १ ख. ग. ङ. च. छ. झ. ञ. ट. लङ्कामेव प्रधावन्त रामबाणभयार्दिताः. ज. लङ्कामेवाभिधावंस्ते.

सकृदेव समिद्धस्य विधूमस्य महार्चिषः ॥ बभूवुस्तानि लिङ्गानि विजयं दर्शयन्ति च ॥ ९ ॥
प्रदक्षिणावर्तशिखस्तप्तहाटकसन्निभः ॥ हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः ॥ १० ॥
हुत्वाऽग्निं तर्पयित्वा च देवदानवराक्षसान् ॥ आरुरोह रथश्रेष्ठमन्तर्धानगतं शुभम् ॥ ११ ॥
स वाजिभिश्चतुर्भिश्च बाणैश्च निशितैर्युतः ॥ आरोपितमहाचापः शुशुभे स्यन्दनोत्तमः ॥ १२ ॥
जाज्वल्यमानो वपुषा तपनीयपरिच्छदः ॥ मृगैश्चन्द्रार्धचन्द्रैश्च सरथः समलङ्कृतः ॥ १३ ॥
जाम्बूनदमहाकम्बुर्दीप्तपावकसन्निभः ॥ बभूवेन्द्रजितः केतुर्वैडूर्यसमलङ्कृतः ॥ १४ ॥
तेन चादित्यकल्पेन ब्रह्मास्त्रेण च पालितः ॥ स बभूव दुराधर्षो रावणिः सुमहाबलः ॥ १५ ॥
सोभिनिर्याय नगरादिन्द्रजित्समितिंजयः ॥ हुत्वाऽग्निं राक्षसैर्मन्त्रैरन्तर्धानगतोऽब्रवीत् ॥ १६ ॥
अद्य हत्वा रणे यौ तौ मिथ्या प्रव्राजितौ वने ॥ जयं पित्रे प्रदास्यामि रावणाय रणार्जितम् ॥१७॥
अद्य निर्वानरामुर्वीं हत्वा रामं सलक्ष्मणम् ॥ करिष्ये परमप्रीतिमित्युक्त्वाऽन्तरधीयत ॥ १८ ॥
आपपाताथ संक्रुद्धो दशग्रीवेण चोदितः ॥ तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विन्द्ररिपू रणे ॥ १९ ॥
स ददर्श महावीर्यौ नागौ त्रिशिरसाविव ॥ सृजन्ताविषुजालानि वीरौ वानरमध्यगौ ॥ २० ॥
इमौ ताविति संचिन्त्य सज्यं कृत्वा च कार्मुकम् ॥ सन्ततानेषुधाराभिः पर्जन्य इव वृष्टिमान् ॥२१॥
स तु वैहायसं प्राप्य सरथो रामलक्ष्मणौ ॥ अचक्षुर्विषये तिष्ठन्विव्याध निशितैः शरैः ॥ २२ ॥
तौ तस्य शरवेगेन परीतौ रामलक्ष्मणौ ॥ धनुषी सशरे कृत्वा दिव्यमस्त्रं प्रचक्रतुः ॥ २३ ॥
प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ ॥ तमस्त्रैः सूर्यसंकाशैर्नैव पस्पृशतुः शरैः ॥ २४ ॥
स हि धूमान्धकारं च चक्रे प्रच्छादयन्नभः ॥ दिशश्चान्तर्दधे श्रीमान्नीहारतमसा वृताः ॥ २५ ॥
नैव ज्यातलनिर्घोषो न च नेमिखुरस्वनः ॥ शुश्रुवे चरतस्तस्य न च रूपं प्रकाशते ॥ २६ ॥

---

मासीत् ॥ ७—८ ॥ विजयं दर्शयन्ति विजयसूचकानि ॥ ९—१० ॥ अन्तर्धानगतं अन्तर्धानशक्तियुक्तं ॥ ११—१२ ॥ मृगैः मृगाकारप्रतिमाभिः । चन्द्रैः चन्द्राकारैः । अर्धचन्द्रैः रचनाविशेषैः ॥१३॥ जाम्बूनदमहाकम्बुः सौवर्णमहावलययुक्तः । "कम्बुर्ना वलये शङ्खे" इत्यमरः ॥ १४—१५ ॥ राक्षसैः निर्ऋतिदेवताकैः । अन्तर्धानगतः अन्तर्धानशक्तिं प्राप्तः । अतः इत्युक्त्वान्तरधीयतेत्यनेन न विरोधः ॥ १६ ॥ अद्य हत्वेत्यादिश्लोकद्वयमेकान्वयं । अद्य निर्वानरामिति । पितुरित्यध्याहारः । पितुः परमप्रीतिं परमप्रीतिं प्रति । पितुः प्रीतिमुद्दिश्येत्यर्थः । अद्य सलक्ष्मणं रामं हत्वा उर्वीं निर्वानरां करिष्य इति संबन्धः ॥ १७—१९ ॥ नागौ त्रिशिरसाविवेति दृष्टान्तेन रामलक्ष्मणयोर्महापुरुषलक्षणपृथुलोन्नतभुजशिरस्कत्वं द्योत्यते । सृजन्तौ स्रक्ष्यन्तौ । सकलराक्षसक्षयकारिणावित्यर्थः ॥ २० ॥ सन्ततान ववर्ष ॥ २१ ॥ वैहायसं विहायसा गमनं ॥ २२—२४ ॥ नभः प्रच्छादयन् । हेतौ शतृप्रत्ययः । अन्तर्धापयामासेत्यर्थः । धूमान्धकारमिति नीहारतमसावृता इति च पूर्वमेवोत्पातकलुषत्वमुच्यते । घनान्धकारे घनका-

---

**ति०** राक्षसांस्तर्पयित्वा । अभिचारयागीयानितिशेषः ॥११॥ **शि०** मिथ्या निरर्थंयौवनेप्रव्राजितौ आगतौ ॥ **स०** मिथ्याप्रव्राजितौ कपटविरक्ताचारौ ॥ १७ ॥ **ति०** यत्त्वेवमादिवचसांरामस्तुतिपरतयाक्लेशेनव्याख्यनंतद्वृथैव । कवेःकविनिबद्धवक्तुश्चतथातात्पर्याभावादिति । एतत्सजातीयवालिवाक्यावसरेनिरूपितं ॥ १८ ॥ **स०** त्रिशिरसौ एकत्रतूणी अपरत्रचापकोटिः मध्ये शिरश्चेतित्रिशिरसावित्यर्थः । नागौ सर्पौ । तोयंसृजन्तौनागौ मेघौत्रिशिरसौचेत्ताविवसृजन्तावितिवा । "नागःक्रूराचारेषुतोयदे" इतिविश्वः ॥ २० ॥ **ति०** वैहायसरथः आकाशगामीरथोयस्यसः । अचक्षुर्विषयेतिष्ठन् । इदंयुद्धंतद्रात्रावेवमध्यरात्रे ॥ २२ ॥ **रामानु०** घनान्धकारे घनयुक्तान्धकारवन्निबिडे ॥ **ती०** घनान्धकारे सान्द्रतिमिरे । शरवर्षमिव उदकवर्षमिव ॥

[ पा० ] १ क.—च. झ. ञ. ट. शरहोमसमिद्धस्य. ज. चरुहोमसमिद्धस्य. २ क. च. ज. ञ. यान्यदर्शयन्. ३ च. ज. झ. रणेऽधिकं. ४ क. ख. कृत्वानिर्वानरां. ५ ख. नागौनिश्श्वसिताविव. ६ ङ. झ. ञ. सतुवैहायसरथोयुधितौ. ७ ख. विरथौ.

घनान्धकारे तिमिरे शरवर्षमिवाद्भुतम् ॥ स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः ॥ २७ ॥
स रामं सूर्यसंकाशैः शरैर्दत्तवरो भृशम् ॥ विव्याध समरे क्रुद्धः सर्वगात्रेषु रावणिः ॥ २८ ॥
तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ ॥ हेमपुङ्खान्नरव्याघ्रौ तिग्मान्मुमुचतुः शरान् ॥ २९ ॥
अन्तरिक्षे समासाद्य रावणिं कङ्कपत्रिणः ॥ निकृत्य पतगा भूमौ पेतुस्ते शोणितोक्षिताः ॥ ३० ॥
अतिमात्रं शरौघेण पीड्यमानौ नरोत्तमौ ॥ तानिषून्पततो भल्लैरनेकैर्निचकृन्ततुः ॥ ३१ ॥
यतो हि ददृशाते तौ शरान्निपततः शितान् ॥ ततस्तु तौ दाशरथी ससृजातेऽस्त्रमुत्तमम् ॥ ३२ ॥
रावणिस्तु दिशः सर्वा रथेनातिरथः पतन् ॥ विव्याध तौ दाशरथी लघ्वस्त्रो निशितैः शरैः ॥३३॥
तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैः सुसंहितैः ॥ बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ३४ ॥
नास्य वेद गतिं कश्चिन्न च रूपं धनुः शरान् ॥ न चान्यद्विदितं किंचित्सूर्यस्येवाभ्रसंप्लवे ॥ ३५ ॥
तेन विद्धाश्च हरयो निहताश्च गतासवः ॥ बभूवुः शतशस्तत्र पतिता धरणीतले ॥ ३६ ॥
लक्ष्मणस्तु सुसंक्रुद्धो भ्रातरं वाक्यमब्रवीत् ॥ ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥ ३७ ॥
तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् ॥ ३८ ॥
नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ॥ अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ॥
पलायन्तं प्रमत्तं वा न त्वं हन्तुमिहार्हसि ॥ ३९ ॥
अस्यैव तु वधे यत्नं करिष्यावो महाबल ॥ आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान् ॥ ४० ॥
तमेनं मायिनं क्षुद्रमन्तर्हितरथं बलात् ॥ राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥ ४१ ॥

यद्येष भूमिं विशते दिवं वा रसातलं वाऽपि नभःस्थलं वा ॥
एवं निगूढोपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ॥ ४२ ॥
इत्येवमुक्त्वा वचनं महात्मा रघुप्रवीरः प्लवगर्षभैर्वृतः ॥
वधाय रौद्रस्य नृशंसकर्मणस्तदा महात्मा त्वरितं निरीक्षते ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अशीतितमः सर्गः ॥ ८० ॥

---

लिमवति ॥ २५—२९ ॥ पतगाः पक्षिणो भूत्वा । तथा वेगवन्त इत्यर्थः ॥ ३०—३३ ॥ सुसंहितैः सुष्ठु निर्मितैः ॥ ३४ ॥ अभ्रसंप्लवे मेघावरणे ॥ ३५—३८ ॥ प्रच्छन्नं युद्धभीत्या प्रच्छन्नं । पलायन्तं पलायमानं ॥ ३९ ॥ आदेक्ष्यावः प्रयोक्ष्यावः । अस्त्रान् अस्त्राणि । लिङ्गव्यत्यय आर्षः ॥४०–४१॥ भूमिं भूविवरं । विशते । आत्मनेपदमार्षं । दिवं स्वर्गं ॥ ४२ ॥ प्लवगर्षभैः वृतः निरीक्षते । उपायं

---

**शि०** घने निबिडे अन्धकारे दृष्ट्युपघातके । तिमिरे तमसि ॥ २७ ॥ **ति०** दत्तवरैः वरदत्तैः ॥ २८ ॥ **स०** " रक्षतीत्येव विश्वासस्तदीयोहमितिस्मृतिः । शरणागतिरेषास्यात् " इत्याद्युक्तशरणागतिमान् ॥ **ति०** अयुध्यमानत्वादिषड्प्रकाराणामपि सर्वरक्षउद्देशेनब्रह्मास्त्रसंधानेवधोभवति । नतुतद्युज्यतइत्यर्थः । अन्ततोविभीषणस्यापिनाशप्रसङ्गइत्याशयः ॥ ३९ ॥ **ति०** माययान्तर्हितमेनमेवहन्तुंघोरानाशीविषोपमानस्त्राण्यादेक्ष्यावः । अदृष्टवधोस्मदेकसाध्यः । दृष्टस्यतुवधईषत्करोवानराणामपीत्याह—राक्षसमिति । यदिदर्शनंस्यात्तदादृष्ट्वा दर्शनमात्रेणहनुमदादयः एनंराक्षसंनिहनिष्यन्ति । दृष्ट्वावानरयूथपाइत्यत्र तद्दर्शनोपायोभारतेउक्तः ' इदमंभोगृहीत्वातुराजराजस्यशासनात् । गुह्यकोऽभ्यागतःकश्चित्त्वत्सकाशमरिंदम । इदमंभःकुबेरस्तेमहाराजः प्रयच्छति । अन्तर्हितानांभूतानांदर्शनार्थंपरंतप । अनेनमृष्टनयनोभूतान्यन्तर्हितान्युत । भवान्द्रक्ष्यतियस्मैचप्रदास्यतिनरःसच " इतिविभीषणवाक्येन ॥ ४१ ॥ **रामानु०** भूमिं भूविवरं । विशते । आत्मनेपदमार्षं । दिवं स्वर्गं । एतत् उपरितनलोकानामुपलक्षणं । रसातलं एतदधस्तनलोकानामुपलक्षणं ॥ ४२ ॥ इत्यशीतितमःसर्गः ॥ ८० ॥

**पा०** ] १ क. ख. घ. ङ. ज.—ट. शिलावर्षमिवा. २ ख. ग. ङ. छ. झ. ञ. ट. दैत्तवरैः. ३ ङ. छ. झ. ञ. ट. शोणिताप्लुताः. ४ ङ. छ. झ. ञ. ट. दीप्यमानौ.

# एकाशीतितमः सर्गः ॥ ८१ ॥

इन्द्रजिताऽन्तर्हितस्यापि स्वस्यवधनिर्धारणरूपरामभावविज्ञानेन भयाल्लङ्काप्रवेशः ॥ १ ॥ तथा शत्रुवधाययजननिर्धारणेन तदन्तरायपरिहृतये रामव्यामोहनायस्वनिर्मितमायासीतायारथारोपणपूर्वकं पश्चिमद्वारान्निर्गतेन हनुमदग्रे खड्गेनमायासीताच्छेदनम् ॥ २ ॥

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः ॥ सन्निवृत्त्याहवात्तस्मात्संविवेश पुरं ततः ॥ १ ॥
सोनुस्मृत्य वधं तेषां राक्षसानां तरस्विनाम् ॥ क्रोधताम्रेक्षणः शूरो निर्जगाम महाद्युतिः ॥ २ ॥
स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः ॥ इन्द्रजित्तु महावीर्यः पौलस्त्यो देवकण्टकः ॥ ३ ॥
इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ॥ रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा ॥ ४ ॥
इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं ततः ॥ बलेन महताऽऽवृत्य तस्या वधमरोचयत् ॥ ५ ॥
मोहनार्थं तु सर्वेषां बुद्धिं कृत्वा सुदुर्मतिः ॥ हन्तुं सीतां व्यवसितो वानराभिमुखो ययौ ॥ ६ ॥
तं दृष्ट्वा त्वभिनिर्यान्तं नगर्याः काननौकसः ॥ उत्पेतुरभिसंक्रुद्धाः शिलाहस्ता युयुत्सवः ॥ ७ ॥
हनुमान्पुरतस्तेषां जगाम कपिकुञ्जरः ॥ प्रगृह्य सुमहच्छृङ्गं पर्वतस्य दुरासदम् ॥ ८ ॥
स ददर्श हतानन्दां सीतामिन्द्रजितो रथे ॥ एकवेणीधरां दीनामुपवासकृशाननाम् ॥ ९ ॥
परिक्लिष्टैकवसनाममृजां राघवप्रियाम् ॥ रजोमलाभ्यामालिप्तैः सर्वगात्रैर्वरस्त्रियम् ॥ १० ॥
तां निरीक्ष्य मुहूर्तं तु मैथिलीत्यध्यवस्य तु ॥ बभूवाचिरदृष्टा हि तेन सा जनकात्मजा ॥ ११ ॥
तां दीनां मलदिग्धाङ्गीं रथस्थां दृश्य मैथिलीम् ॥ बाष्पपर्याकुलमुखो हनुमान्व्यथितोऽभवत् ॥१२॥

---

चिन्तयति सेत्यर्थः ॥ ४३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अशीतितमः सर्गः ॥ ८० ॥

---

अथ मायासीतावध एकाशीतितमे—विज्ञायेत्यादि । अत्र तृतीयाक्षरभूतो यकारो गायत्र्या एकोनविंशतितमाक्षरं । अष्टादशसहस्रश्लोकागताः ॥ १ ॥ तेषां कुम्भकर्णादीनां ॥ २ ॥ निकुम्भिलायां दुर्जयास्त्रबललाभाय होतुकामस्तावत्पर्यन्तं रामलक्ष्मणयोर्युद्धोद्योगं मन्दीकर्तुं मायामारिप्समाणो रामलक्ष्मणयोः कुपितत्वेन दुरासदत्वात् सीतास्वरूपाभिज्ञस्यान्यस्याभावाद्धनुमते मायां दर्शयितुं पश्चिमद्वारेण निर्गत इत्याह—स पश्चिमेनेत्यादिना ॥ ३ ॥ दृष्ट्वा विचिन्त्य । पश्चिमद्वारनिष्क्रान्तस्य रामलक्ष्मणदर्शनासंभवात् । मायां परव्यामोहकरीं शक्तिं । प्रादुष्करोत् प्रादुर्भावयामास ॥ ४ ॥ आवृत्य स्थितेन बलेन । युक्त इति शेषः । युक्ते रथे सीतां स्थाप्य ततस्तस्या वधमरोचयदिति संबन्धः ॥ ५—८ ॥ स ददर्शेत्यादिश्लोकद्वयमेकान्वयं । अमृजां अनुद्वर्तनां । अनलंकारामिति वा । "मृजू शौचालंकारयोः" इति धातोर्भिदादित्वादङ् । सर्वगात्रैः उपलक्षितां ॥ ९—१० ॥ अध्यवस्य निश्चित्य । विषण्ण इति शेषः । निश्चये हेतुमाह—बभूवेति ॥ ११ ॥ दृश्य दृष्ट्वा

---

ति० मायां परव्यामोहकरींशक्तिं । प्रादुष्करोत् प्रादुर्भावयामास । निकुंभिलांगन्तुकामःपश्चिमेनद्वारेणनिर्गच्छन् स्वगमनविघातकरामलक्ष्मणयोर्युद्धोद्योगंदृष्ट्वातन्निवारणार्थंमायांप्रकटितवानित्याशयः ॥ स० तुशब्दोन्तर्गच्छन्नितिविशेषार्थः ॥ ४ ॥ ति० इन्द्रजित्त्विर्ति । इदंरात्रिशेषे परदिनेदशम्यांवेतिबोध्यं ॥ ५ ॥ स० यापूर्वंआचिरदृष्टा बहुतिथमवलोकिता । साजनकात्मजा वानेतिमुहूर्तं निरीक्ष्य आलोच्य तामध्यवस्य सैवेतिनिश्चित्य । अहिते दुःखे बभूव दुःखितोऽभूदितियावत् । अचिरदृष्टा अल्पकालव्यवधानेनदृष्टेतिवा ॥ ११ ॥

[ पा० ] १ क. ङ. ज. तस्मात्प्रविवेशपुरीं. ख. ग. घ. झ. ट. तस्मात्प्रविवेशपुरं. २ घ.—छ. झ. ञ. ट. निर्जगामाथरावणिः. ३ ङ. च. छ. झ. ञ. ट. सर्वेतेकाननौकसः.

अब्रवीत्तां तु शोकार्तां निरानन्दां तपस्विनीम् ॥ सीतां रथस्थितां दृष्ट्वा राक्षसेन्द्रसुताश्रिताम् ॥
किं समर्थितमस्येति चिन्तयन्स महाकपिः ॥ १३ ॥
सह तैर्वानरश्रेष्ठैरभ्यधावत रावणिम् ॥ १४ ॥
तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्च्छितः ॥ कृत्वा विकोशं निस्त्रिंशं मूर्ध्नि सीतां परामृशत् ॥ १५ ॥
तां स्त्रियं पश्यतां तेषां ताडयामास रावणिः ॥ क्रोशन्तीं राम रामेति मायया योजितां रथे ॥१६॥
गृहीतमूर्धजां दृष्ट्वा हनुमान्दैन्यमागतः ॥ शोकजं वारि नेत्राभ्यामसृजन्मारुतात्मजः ॥ १७ ॥
तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम् ॥ अब्रवीत्परुषं वाक्यं क्रोधाद्रक्षोधिपात्मजम् ॥ १८ ॥
दुरात्मन्नात्मनाशाय केशपक्षे परामृशः ॥ ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः ॥ १९ ॥
धिक्त्वां पापसमाचारं यस्य ते मतिरीदृशी ॥ नृशंसानार्य दुर्वृत्त क्षुद्र पापपराक्रम ॥
अनार्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण ॥ २० ॥
च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली ॥ किं तवैषापराद्धा हि यदेनां हन्तुमिच्छसि ॥ २१ ॥
सीतां च हत्वा न चिरं जीविष्यसि कथंचन ॥ वधार्हकर्मणाऽनेन मम हस्तगतो ह्यसि ॥ २२ ॥
ये च स्त्रीघातिनां लोका लोकवध्येषु कुत्सिताः ॥ इह जीवितमुत्सृज्य प्रेत्य तान्प्रतिपत्स्यसे ॥२३॥
इति ब्रुवाणो हनुमान्सायुधैर्हरिभिर्वृतः ॥ अभ्यधावत संक्रुद्धो राक्षसेन्द्रसुतं प्रति ॥ २४ ॥
आपतन्तं महावीर्यं तदनीकं वनौकसाम् ॥ रक्षसां भीमवेगानामनीकं तु न्यवारयत् ॥ २५ ॥
स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम् ॥ हरिश्रेष्ठं हनूमन्तमिन्द्रजित्प्रत्युवाच ह ॥ २६ ॥
सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः ॥ तां हनिष्यामि वैदेहीमद्यैव तव पश्यतः ॥ २७ ॥

॥ १२ ॥ अब्रवीदित्याद्यर्धत्रयमेकान्वयं । सीतां रथे स्थापितवतोस्य किं समर्थितं को वाभिप्राय इति चिन्तयन्नब्रवीत् । इतिर्वचनचिन्तनयोः साधारणः ॥ १३ ॥ सह तैरित्यर्धं । हनुमानिति शेषः ॥ १४ ॥ मूर्च्छितः व्याप्तः ॥ १५ ॥ पश्यतां तेषां । अनादरे षष्ठी । मायया परमोहनशक्त्या ॥ १६—१८ ॥ केशपक्षे केशसमूहे । "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः । परामृशः अस्पृशः ॥ १९ ॥ धिगित्यादिसार्धश्लोक एकान्वयः । ईदृशी । जुगुप्सितेत्यर्थः । नृशंस निर्दय । अनार्य असज्जन । दुर्वृत्त दुराचार । क्षुद्र अल्पबुद्धे । पापः अधर्म्यः पराक्रमो यस्य स पापपराक्रमः । उक्तमनार्यत्वं कार्यतो दर्शयति—अनार्यस्येति । ईदृशं जुगुप्सितं कर्म अनार्यस्यैव भवति । हे निर्घृण निर्दय, ते घृणा जुगुप्सा नास्ति । "जुगुप्सा करुणा घृणा" इत्यमरः ॥ २० ॥ अपराधिषु घृणा न कर्तव्या । अत एव एनां हन्मीत्याशङ्क्यापराधलेशोप्यस्यां नास्तीत्याह—च्युतेति । गृहात् स्वसदनात् । चकारात् परिचारकेभ्यश्च । अनेन बन्धुमुखादपराधकरणं नास्तीत्युक्तं । राज्यात् राज्योपकरणाच्च । अनेन सेनामुखेन नापराध इत्युक्तं । रामहस्तात् रक्षकहस्ताच्च । तन्मुखादप्यपराधप्रसक्तिर्नास्तीत्युक्तं । मैथिली आचारप्रधानकुले जाता । अनेनापराधस्वरूपमेव न जानातीत्युक्तं । यत् येनापराधकार्येण । एनां हन्तुमिच्छसि तादृशं किं प्रयोजनमुद्दिश्य । अपराद्धा अपराधं कृतवती । कर्तरि क्तः ॥ २१—२२ ॥ हे लोकवध्य, एषु चतुर्दशलोकेषु । स्त्रीघातिनां ये कुत्सिता लोकाः तान् इह जीवितमुत्सृज्य प्रेत्य यातनाशरीरं प्राप्य । प्रतिपत्स्यसे । प्राप्स्यसीत्यर्थः ॥ २३ ॥ सायुधैः सहननसाधनैः ॥ २४ ॥ अनीकं अनीकं च ॥२५—

ति० मूर्ध्नि तत्स्थेकेशपाशे । स्पृष्ट्वेतिशेषः ॥ १५ ॥ ति० येलोकवध्यैः चोरादिभिरपिकुत्सिताः अतिदुःखितयापरिहृताः ॥२३॥
ति० आपतन्तमितिलिङ्गव्यत्ययआर्षः ॥ ती० रक्षसामनीकंकर्तृ ॥ २५ ॥

[ पा० ] १ ग. घ. सीतांप्रधर्षयत्. क. सीतांप्रकर्षयत्. ङ. च. छ. झ. ञ. ट. सीतामकर्षयत्. २ झ. लोकवध्यैश्च.

इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर ॥
सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणम् ॥ २८ ॥
न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम ॥ पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ॥ २९ ॥
[ ताटकाया वधं रामः किमर्थं कृतवान्पुरा ॥ तदहं हन्मि रामस्य महिषीं जनकात्मजाम् ] ॥ ३० ॥
तमेवमुक्त्वा रुदतीं सीतां मायामयीं तदा ॥ शितधारेण खड्गेन निजघानेन्द्रजित्स्वयम् ॥ ३१ ॥
यज्ञोपवीतमार्गेण भिन्ना तेन तपस्विनी ॥ सा पृथिव्यां पृथुश्रोणी पपात प्रियदर्शना ॥
तामिन्द्रजित्स्वयं हत्वा हनुमन्तमुवाच ह ॥ ३२ ॥
मया रामस्य पश्येमां कोपेन च निषूदिताम् ॥ एषा विशस्ता वैदेही विफलो वः परिश्रमः ॥ ३३ ॥
ततः खड्गेन महता हत्वा तामिन्द्रजित्स्वयम् ॥ हृष्टः स रथमास्थाय विननाद महास्वनम् ॥ ३४ ॥
वानराः शुश्रुवुः शब्दमदूरे प्रत्यवस्थिताः ॥ व्यादितास्यस्य नदतस्तद्दुर्गं संश्रितस्य च ॥ ३५ ॥
तथा तु सीतां विनिहत्य दुर्मतिः प्रहृष्टचेताः स बभूव रावणिः ॥
तं हृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपाः सहसा प्रदुद्रुवुः ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

## द्व्यशीतितमः सर्गः ॥ ८२ ॥

इन्द्रजिता मायासीताच्छेदनानन्तरं हनुमतावानरान्प्रति सीतानिधनाद्युद्धस्यवैफल्योक्त्या प्रतिनिवर्तनपूर्वकं तैस्सह रामसमीपगमनम् ॥ १ ॥ अत्रान्तरेलब्धावकाशेनेन्द्रजिता निकुंभिलामेत्ययागारंभः ॥ २ ॥

श्रुत्वा तु भीमनिर्ह्रादं शक्राशनिसमस्वनम् ॥ वीक्षमाणा दिशः सर्वा दुद्रुवुर्वानरर्षभाः ॥ १ ॥
तानुवाच ततः सर्वान्हनुमान्मारुतात्मजः ॥ विषण्णवदनान्दीनांस्त्रस्तान्विद्रवतः पृथक् ॥ २ ॥
कस्माद्विषण्णवदना विद्रवध्वे प्लवङ्गमाः ॥ त्यक्तयुद्धसमुत्साहाः शूरत्वं क्व नु वो गतम् ॥ ३ ॥
पृष्ठतोऽनुव्रजध्वं मामग्रतो यान्तमाहवे ॥ शूरैरभिजनोपेतैरयुक्तं हि निवर्तितुम् ॥ ४ ॥

---

२८ ॥ न हन्तव्या इति यत् ब्रवीषि तत्रोत्तरं शृण्विति वाक्यशेषः ॥ २९—३१ ॥ यज्ञोपवीतमार्गेण भिन्ना । मार्गशब्दः प्रकारवचनः । यज्ञोपवीतधारणप्रकारेण भिन्नेत्यर्थः । यज्ञोपवीतमादाय भिन्नेति पाठान्तरं । पूर्वं मूर्धजेषु गृहीतामादाय । यज्ञोपवीतभिन्ना यज्ञोपवीतं यथा भवति तथा भिन्ना । यज्ञोपवीतप्रकारेण भिन्नेत्यर्थः ॥ ३२—३४ ॥ व्यादितास्यस्य व्यात्तास्यस्य । तद्दुर्गं व्यूहीकृतराक्षसपरिवेष्टनरूपं ॥ ३५ ॥ हृष्टरूपं अत्यन्तहृष्टं । विषण्णरूपाः अत्यन्तं विषण्णाः ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

अथेन्द्रजितो निकुम्भिलायां होमारम्भः—श्रुत्वेत्यादि ॥ शक्राशनिसमस्वनं शक्राशनिस्वनसममित्यर्थः ॥ १—२ ॥ विद्रवध्वे विद्रवथ । आत्मनेपदमार्षं ॥ ३ ॥ अनुव्रजध्वं अनुव्रजत । पदव्यत्ययआर्षः

---

**रामानु०** रामस्येमां रामसंबन्धिनीं । राममहिषीमितियावत् ॥ ३३ ॥ **ति०** तद्दुर्गं खेचररथरूपंदुर्गं ॥ ३५ ॥ इत्येकाशीतितमः सर्गः ॥ ८१ ॥

[ पा० ] १ अयंश्लोकः क. ख. ग. च. छ. ञ. पाठेषुदृश्यते. २ ङ. छ. झ. ञ. ट. पश्येमांप्रियांशस्त्रनिषूदितां. ख. पश्येमांसीतांकोपेनसूदितां. ३ ख. तद्युद्धं. ४ ख. छ. ञ. ट. समभिप्रदुद्रुवुः.

एवमुक्ताः सुसंहृष्टा वायुपुत्रेण वानराः ॥ शैलशृङ्गाण्यगांश्चैव जगृहुर्हृष्टमानसाः ॥ ५ ॥
अभिपेतुश्च गर्जन्तो राक्षसान्वानरर्षभाः ॥ परिवार्य हनूमन्तमन्वयुश्च महाहवे ॥ ६ ॥
स तैर्वानरमुख्यैश्च हनुमान्सर्वतो वृतः ॥ हुताशन इवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ७ ॥
स राक्षसानां कदनं चकार सुमहाकपिः ॥ वृतो वानरसैन्येन कालान्तकयमोपमः ॥ ८ ॥
स तु कोपेन चाविष्टः शोकेन च महाकपिः ॥ हनुमान्रावणिरथेऽपातयन्महतीं शिलाम् ॥ ९ ॥
तामापतन्तीं दृष्ट्वैव रथः सारथिना तदा ॥ विधेयाश्वसमायुक्तः सुदूरमपवाहितः ॥ १० ॥
तमिन्द्रजितमप्राप्य रथस्थं सहसारथिम् ॥ विवेश धरणीं भित्त्वा सा शिला व्यर्थमुद्यता ॥ ११ ॥
पातितायां शिलायां तु रक्षसां व्यथिता चमूः ॥ निपतन्त्या च शिलया राक्षसा मथिता भृशम् ॥१२॥
तमभ्यधावञ्छतशो नदन्तः काननौकसः ॥ १३ ॥
ते द्रुमांश्च महावीर्या गिरिशृङ्गाणि चोद्यताः ॥ क्षिपन्तीन्द्रजितः संख्ये वानरा भीमविक्रमाः ॥१४॥
वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः ॥ शत्रूणां कदनं चक्रुर्नेदुश्च विविधैः स्वरैः ॥ १५ ॥
वानरैस्तैर्महावीर्यैर्घोररूपा निशाचराः ॥ वीर्यादभिहता वृक्षैर्व्यवेष्टन्त रणाजिरे ॥ १६ ॥
स्वसैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् ॥ प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ ॥ १७ ॥
स शरौघानवसृजन्स्वसैन्येनाभिसंवृतः ॥ जघान कपिशार्दूलान्स बहून्दृष्टविक्रमः ॥ १८ ॥
शूलैरशनिभिः खड्गैः पट्टिशैः कूटमुद्गरैः ॥ ते चाप्यनुचरास्तस्य वानराञ्जघ्नुरोजसा ॥ १९ ॥
सस्कन्धविटपैः सालैः शिलाभिश्च महाबलः ॥ हनुमान्कदनं चक्रे रक्षसां भीमकर्मणाम् ॥ २० ॥
स निवार्य परानीकमब्रवीत्तान्वनौकसः ॥ हनुमान्सन्निवर्तध्वं न नः साध्यमिदं बलम् ॥ २१ ॥
त्यक्त्वा प्राणान्विचेष्टन्तो रामप्रियचिकीर्षवः ॥ यन्निमित्तं हि युध्यामो हता सा जनकात्मजा ॥२२॥
इमंमर्थं हि विज्ञाप्य रामं सुग्रीवमेव च ॥ तौ यत्प्रतिविधास्येते तत्करिष्यामहे वयम् ॥ २३ ॥
इत्युक्त्वा वानरश्रेष्ठो वारयन्सर्ववानरान् ॥ शनैः शनैरसंत्रस्तः सबलः सन्न्यवर्तत ॥ २४ ॥
ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः ॥ स होतुकामो दुष्टात्मा गतश्चैत्यनिकुम्भिलाम् ॥ २५ ॥
निकुम्भिलामधिष्ठाय पावकं जुहुवेन्द्रजित् ॥ २६ ॥
यज्ञभूम्यां तु विधिवत्पावकस्तेन रक्षसा ॥ हूयमानः प्रजज्वाल मांसशोणितभुक्तदा ॥ २७ ॥
सोर्चिःपिनद्धो ददृशे होमशोणिततर्पितः ॥ सन्ध्यागत इवादित्यः सुतीव्रोऽग्निः समुत्थितः ॥२८॥

॥ ४—१० ॥ व्यर्थमुद्यता व्यर्थं प्रयुक्ता ॥११—१३॥ इन्द्रजितः इन्द्रजितं प्रति ॥ १४—१८ ॥ शूलैरशनिभिरिति अशनेरायुधत्वं शक्तिविशेषात् ॥१९—२०॥ न साध्यं साधयितुमयोग्यं । प्रयोजनाभावादितिभावः । तदेवाह—त्यक्त्वेति ॥ २१—२४ ॥ चैत्यनिकुम्भिलां चैत्ये विद्यमानं निकुम्भिलाख्यदेवतायतनमित्यर्थः ॥ २५ ॥ निकुम्भिलामित्यर्धं । जुहव जुहाव ॥ २६—२७ ॥ होमशोणितं शोणितहोमः

स० धरणीं भित्त्वा व्यर्थं इन्द्रजिद्धननरूपार्थरहितंयथाभवतितथा । तामेव याविवेश साशिला पुनरुद्यता उपर्यायाता । एवं शिलायांपातितायांसत्यां रक्षसांचमूःसेनाव्यथिता अन्तर्गताचोत्थितापुनःकिंकरोतीतिव्यथांप्राप्ता । भृशंनिपतन्त्यातयाशिलयाच राक्षसाभृशंमथिताइत्यन्वयः । एकेतु व्यर्थमुद्यतासाशिलाऽभूत् धरणींचाविवेश । हनुमताशिलायांपातितायांरक्षसांचमूर्व्यथिता । तयाचनिपतन्त्याशिलयाराक्षसामथिताइत्यन्वयंमन्वते ॥११॥ स० नः इदंबलं साध्यं विनियोज्यंन । साध्यंफलमस्यास्तीतितद्वा ॥ २१ ॥ इदमर्थं पदमेकं । अयंचासावर्थश्चइदमर्थस्तं ॥२३॥ ति० दशम्यांपूर्वाह्णेनिकुंभिलागमनं । निकुंभिलां चैत्यंतदाख्यदेवालयंवटवृक्षंवा ॥ २५ ॥ ति० होमशोणितभुक् होमार्थमाहुतित्वेनप्रक्षिप्तशोणितभुक् ॥ २७ ॥ इतिद्व्यशीतितमःसर्गः ॥ ८२ ॥

[ पा० ] १ ठ. इदमर्थं. २ क. ख. ङ. च. छ. झ. ञ. ट. राघवौ. ३ ङ. झ. ट. ततोगत्वापावकः. ४ ग. ङ. छ. झ. ञ. ट. होमशोणित.

अथेन्द्रजिद्राक्षसभूतये तु जुहाव हव्यं विधिना विधानवित् ॥
दृष्ट्वा व्यतिष्ठन्त च राक्षसास्ते महासमूहेषु नयानयज्ञाः ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्व्यशीतितमः ॥ ८२ ॥

---

## त्र्यशीतितमः सर्गः ॥ ८३ ॥

हनुमन्मुखादिन्द्रजित्कृतमायासीतामारणश्रवणजशोकेनपतितमूर्च्छितंसुरभिसलिलसेकसमुद्बोधितंरामंप्रति लक्ष्मणेन नास्तिक्यवादाश्रयणेन धर्मादिनिरसनेनपौरुषप्रशंसनपूर्वकं पुनः क्षमापणेनरिपुवधप्रतिज्ञानेन समाश्वासनम् ॥ १ ॥

[1]राघवश्चापि विपुलं तं राक्षसवनौकसाम् ॥ श्रुत्वा सङ्ग्रामनिर्घोषं जाम्बवन्तमुवाच ह ॥ १ ॥
सौम्य नूनं हनुमता क्रि[2]यते कर्म दुष्करम् ॥ श्रूयते हि य[3]था भीमः सुमहानायुधस्वनः ॥ २ ॥
तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः ॥ क्षिप्रमृक्षपते तस्य कपिश्रेष्ठस्य युध्यतः ॥ ३ ॥
ऋक्षराजस्त[4]थोक्तस्तु स्वेनानीकेन संवृतः ॥ आगच्छत्पश्चिमं द्वारं हनुमान्य[5]त्र वानरः ॥ ४ ॥
अथायान्तं हनूमन्तं ददर्शर्क्षपतिः पथि ॥ वानरैः कृतसङ्ग्रामैः श्वसद्भिरभिसंवृतम् ॥ ५ ॥
दृष्ट्वा पथि हनूमांश्च तदृक्षबलमुद्यतम् ॥ नीलमेघनिभं भीमं स[6]न्निवार्य न्यवर्तत ॥ ६ ॥
स तेन हरिसैन्येन सन्निकर्षं महायशाः ॥ शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत् ॥ ७ ॥
समरे युध्यमानानामस्माकं प्रे[7]क्षतां पुरः ॥ जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः ॥ ८ ॥
उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिन्दम ॥ तदहं भवतो वृत्तं विज्ञापयितुमागतः ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्च्छितः ॥ निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ १० ॥
तं भूमौ देवसंकाशं पतितं प्रेक्ष्य राघवम् ॥ अभिपेतुः समुत्पत्य सर्वतः कपिसत्तमाः ॥ ११ ॥
असिञ्चन्सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः ॥ प्रदहन्त[8]मनासाद्यं सहसाऽग्निमि[9]वोच्छिखम् ॥ १२ ॥
तं लक्ष्मणोथ बाहुभ्यां परिष्वज्य सुदुःखितः ॥ उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ॥ १३ ॥
शुभे वर्त्मनि तिष्ठन्तं त्वामार्य विजितेन्द्रियम् ॥ अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥१४॥

---

॥ २८ ॥ नयानयज्ञाः शास्त्रीयाशास्त्रीयविदः ॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

अथ मायासीतावधमूर्च्छितरामसान्त्वनं त्र्यशीतितमे—राघवश्चापीत्यादि ॥ जाम्बवन्तं यदृच्छया सन्निहितं ॥ १ ॥ यथा यतः ॥ २—६ ॥ हरिसैन्येन सह । सन्निकर्षं । रामस्येति शेषः ॥ ७—११॥ उच्छिखं उद्गतज्वालं । "अर्चिर्हेतिः शिखा स्त्रियां" इत्यमरः ॥ १२ ॥ हेत्वर्थसंयुतं हेतुरुपपत्तिः । अर्थः प्रयोजनं । हेतुरूपोर्थोभिधेयो हेत्वर्थ इति वा ॥१३॥ एवं सीताहननश्रवणजनितमनवधिकमधैर्यमाश्रयन्तं राममाश्वासयितुं लक्ष्मणोन्वारुह्यवादेन धर्माधर्मयोः

---

**शि०** देवसंकाशं देवानामपिप्रकाशकंराघवं ॥ ११ ॥ **ति०** शुभइति । " तदद्यविपुलंवीरदुःखमिन्द्रजिताकृतम् । कर्मणा व्यपनेष्यामितस्मादुत्तिष्ठराघव " इतियुद्धायपौरुषावलंबनेनप्रोत्साहयिष्यन् केवलधर्मावलंबनमप्रयोजकमितिप्रतिपादयत्यनेनवाक्यसमूहेन ॥ **स०** शुभेवेदविहितेवर्त्मनिमार्गेतिष्ठन्तंत्वां अनर्थेभ्यः दुःखेभ्यः । त्रातुंधर्मोयस्मान्नशक्नोति तस्मान्निरर्थकइतियोजना ॥ आर्यविजितेन्द्रियमितिपदमेकंवा । आर्यार्थेपित्रर्थेविजितेन्द्रियं राज्यादिविषयस्पृहारहितत्वाद्विजितमनस्कं "नाहमर्थपरो-

[ पा० ] १ घ. राघवेन्द्रोपि. २ क. ग. घ. ङ. झ. ट. कृतंकर्मसुदुष्करं. ३ घ. महाभीमः. ४ ज. स्तथाकर्तुं. ख. ङ. च. छ. झ. ञ. ट. स्तथेत्युक्त्वा. ५ घ. न्यत्रतिष्ठति. ६ च. संनिवार्याभ्यवर्तत. ७ ङ. झ प्रेक्षतांचसः. ८ ग. घ. मसह्यंच. ९ ख. ङ.—ट. मिवोत्थितं.

**भूतानां स्थावराणां च जङ्गमानां च दर्शनम् ॥ यथास्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥१५॥**
**यथैव स्थावरं व्यक्तं जङ्गमं च तथाविधम् ॥ नायमर्थस्तथा युक्तस्त्वद्विधो न विपद्यते ॥ १६ ॥**

स्वरूपं खण्डयन्नीतिशास्त्रानुसारेण बलमेव प्रधानतयालम्ब्यतामित्याह—शुभइत्यादिना सर्गशेषेण ॥ पितृवाक्यपरिपालनादिरूपे शुभे वर्त्मनि तिष्ठन्तं । स्थिरतया तदनुतिष्ठन्तमित्यर्थः । विजितेन्द्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपर्यपि मनःकालुष्याभावेन विजितेन्द्रियं त्वां । निरर्थकः अवस्तुभूतः । अप्रामाणिक इति यावत् । शशविषाणवत् केवलव्यवहारमात्रावलम्बनो धर्मः अनर्थेभ्यः व्यसनेभ्यः । त्रातुं व्यसनानि निवारयितुं । न शक्नोति । "सति धर्मिणि धर्माश्चिन्त्यन्ते" इति न्यायादिति भावः । निरर्थकमेव त्वया पितृवचनपरिपालनमारब्धं । आदावेव मयोक्तमिति भावः । धर्म इत्युपलक्षणं । अधर्मोपि निरर्थकः सन् रावणमर्थेभ्यो न निवारयितुं शक्नोतीत्यर्थः ॥ १४ ॥ ननु कथमनयोरप्रामाणिकत्वमित्यपेक्षायां तत्र किं प्रत्यक्षं प्रमाणं उतानुमानं अथ शब्दो वा, नाद्य इत्याह—भूतानामिति ॥ स्थावराणां जङ्गमानां च भूतानां पदार्थानां । यथा दर्शनं प्रत्यक्षत उपलम्भनं अस्ति । तथा धर्माधर्मयोः दर्शनं न अस्तीत्यनुषङ्गः । तेन अदर्शनेन । धर्मोऽधर्मश्च नास्तीति मे मतिः निर्णयः ॥ १५ ॥ उक्तमेवार्थं प्रत्यक्षानुग्राहकेण तर्केण द्रढयति—यथेति ॥ यथैव स्थावरं व्यक्तं प्रत्यक्षत उपलब्धं । जङ्गमं च तथाविधं व्यक्तं भवति । अयं धर्माधर्मरूपोर्थः तथा युक्तो न भवति, तथा प्रत्यक्षो न भवतीत्यर्थः । यदि कश्चिद्धर्मोऽधर्मो वार्थः प्रत्यक्षसिद्धः स्यात् तर्हि स जङ्गमतया वा स्थावरतया दृश्येत । नच दृश्यते । तस्मान्नासौ प्रत्यक्ष इति भावः । किंच त्वद्विधो न विपद्यते । धर्मस्य प्रत्यक्ष-

देविलोकमावस्तुमुत्सहे । विद्धिमामृषिभिस्तुल्यंकेवलंधर्ममास्थितम् " इत्युक्तेःकेवलंधर्मावलंबिनंत्वां सधर्मः । उर्वरितंपूर्ववत् । इदानींधर्मएवंविधोपिस्वसमयेरक्षतीतिसकर्तव्यएवेत्यान्तरङ्गिकभावपक्षेप्यन्वेतुंशक्यतेश्लोकः । तथाहि । अनर्थेभ्यः एवंविधेभ्यः । धर्मस्त्वांत्रातुंशक्नोति । यतःस ननिरर्थकइति ॥१४॥ **ती०** ननुप्रामाणिकस्यधर्मस्यकथमनुपादेयत्वमित्याशङ्क्यतत्सद्भावेकिमनुमानं प्रमाणमुतप्रत्यक्षमितिद्वेधाविकल्प्य धर्मोस्ति फलदर्शनादित्यनुमानपक्षं फलादर्शनान्नास्तीतिपूर्वश्लोकेनिराकृत्येदानींप्रत्यक्षंनिराकर्तुमाह—भूतानामिति । भूतत्वं सत्यत्वं । भूतानां सत्यानामित्यर्थः । स्थावराणांजङ्गमानांचदर्शनंप्रत्यक्षंयथास्ति तथाधर्मस्यदर्शनंनास्तियतः तेनकारणेनधर्मोनास्तीतिमेमतिरितिसंबन्धः ॥ **ति०** एवंधर्मपदार्थमङ्गीकृत्य तस्यार्थत्वंनास्तीत्यनुभवात्प्रदर्श्य इदानींधर्मपदार्थएवनास्ति । फलानुमेयताहितस्योक्ता । फलंचसुखं । प्रकृतेचसुखान्वयव्यतिरेकयोर्धर्मेऽभावेननतेनतदनुमानमित्याह—भूतानामिति । स्थावराणांजङ्गमानांचपश्वादिरूपाणांभूतानांदर्शनं सुखापरोक्षदर्शनंयथास्तितथाधर्मोनास्ति असामर्थ्यादनधिकाराच्च । तस्माद्धर्मःसुखसाधनत्वव्याप्तोनेतिमेमतिः । जन्मान्तरादिकंनास्त्येवेतिबौद्धमतेनेयमुक्तिः । नहितंविनाजायमानस्यापि तत्करणकत्वमितिभावः । यत्तु यथास्थावरादीनांदर्शनात्तत्सत्तातथाधर्मस्यदर्शनाभावाद्धर्मोनास्तीतिव्याचक्षते । तन्न । योग्यानुपलंभस्यैवाभावसाधकत्वात् । धर्मस्यचपिशाचादिवदयोग्यत्वात् ॥ **स०** धर्मोवर्ततइतिप्रवादमात्रतस्तंसिद्धवत्कृत्यवैफल्यमात्रंतस्योक्त्वावस्तुतस्तु यतःसफलानुमेयस्तदेवनास्तीतिसएवनास्तीत्याह—भूतानामिति । स्थावराणां महीरुहादीनां । जङ्गमानां प्राणिनां । एतदादीनांभूतानां ।.यथाप्रत्यक्षतोदर्शनंयथास्तीतिसन्तः । एतेन तथाधर्मःप्रात्यक्षिकइतिसनास्त्येवेतिचार्वाकमतंप्रसञ्जयतोमेमतिः । यत्तुस्वयंसुखापरोक्षदर्शनंयथास्तीतिव्याख्याय यत्तु " यथास्थावरादीनांदर्शनात्तथाधर्मस्यदर्शनाभावाद्धर्मोनास्तीतिव्याचक्षते " तन्न । योग्यानुपलंभस्यैवाभावसाधकत्वाद्धर्मस्यपिशाचादिवदयोग्यत्वादितिनागोजिभट्टेनव्याख्यातंतत्तुचार्वाकमतावलंबनेनपूर्वपक्षप्रसञ्जनमेवतीर्थाभिप्रेतमितिनसमञ्जसमिवाश्रुतसुखशब्दाध्याहारेणाध्याहृतस्यापिस्थावरपदार्थान्वयायोग्यत्वेनमौलदर्शनपदास्वारस्याच्चाप्ययुक्तं । नतथादर्शनमित्येतावताधर्मस्तेत्वद्विषये न नास्तीतिमेमतिः । तेनपिशितलोचनानवगमेनधर्मोनास्तीतिमेमतिः । पूर्वपक्षमात्रंप्रसञ्जितं । वस्तुतस्तु कालसहायेव्यक्तोभवतिधर्मइतिभावः ॥१५॥ **ती०** उक्तमेवार्थंसतर्कंविशदयति—**यथैवेति** । स्थावरंयथैवव्यक्तं प्रत्यक्षतउपलब्धं जङ्गमंचतथाविधंव्यक्तंभवति । अयंधर्मरूपोर्थः तथायुक्तोनभवति । प्रत्यक्षोनभवतीत्यर्थः । तेननास्तीतिमेमतिरित्यनुषङ्गः । नन्वप्रत्यक्षत्वमात्रेणधर्मनिरासोनोपपद्यते । अतीन्द्रियस्यापिवस्तुनःसद्भावादित्याशङ्क्यबाधकतर्केणनिराकरोति—**त्वद्विधइति** । अतीन्द्रियोपिधर्मोयदिस्यात् तर्हित्वद्विधः नविपद्यते नविपद्येत । नचैवं तस्मान्नास्ति धर्मइत्यर्थः ॥ **ति०** यथा यस्मात् स्थावरंव्यक्तं धर्मप्रसक्तिरहितमपिसुखीतिव्यक्तंतथाविधं स्थावरवद्धर्मानधिकृतंजङ्गमंपश्वाद्यपि सुखीतिव्यक्तं । एतेनव्यतिरेकःखण्डितः । अन्वयमपिखण्डयति । नतथायुक्तः अयमर्थःसुखरूपोन । सर्वात्मनाधर्मयुक्तस्त्वद्विधो धर्मस्यसुखान्वये नविपद्यते नविपन्नःस्यात् । दृश्यतेचविपत्तिरित्यन्वयोपिनास्ति । अनेनतदंशेजन्मान्तरीयधर्मकल्पनापिपरास्ता ।

यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत् ॥ भवांश्च धर्मयुक्तो वै नैवं व्यसनमाप्नुयात् ॥ १७ ॥
तस्य च व्यसनाभावाद्व्यसनं च गते त्वयि ॥ धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ १८ ॥
धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः ॥ यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ १९ ॥
यदि धर्मेण युज्येरन्नाधर्मरुचयो जनाः ॥ धर्मेण चरतां धर्मस्तथा चैषां फलं भवेत् ॥ २० ॥
यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ॥ क्लिश्यन्तेऽधर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥ २१ ॥
वध्यन्ते पापकर्माणो यद्यधर्मेण राघव ॥ वधकर्महतो धर्मः स हतः कं वधिष्यति ॥ २२ ॥
अथवा विहितेनायं हन्यते हन्ति वा परम् ॥ विधिरालिप्यते तेन न स पापेन कर्मणा ॥ २३ ॥

सिद्धतया सद्भावे त्वद्विधः धार्मिकः विपत्तिं नाप्नुयात् । रावणश्चार्थं न प्राप्नुयादित्यपि द्रष्टव्यं ॥ १६ ॥ नाप्यनुमानं धर्माधर्मयोः प्रमाणमित्याह—यदीति ॥ यद्यधर्मो भूतो भवेत् तदा अधर्मयुक्तो रावणः नरकं व्रजेत् व्यसनं गच्छेत् । यदि धर्मो भूतो भवेत् तदा धर्मयुक्तो भवांश्च एवं व्यसनं नाप्नुयात् । व्यसनाव्यसनरूपकार्याभ्यां हि धर्माधर्मावनुमेयौ । न तथा संभवति । धार्मिकतयाऽभिमते त्वयि व्यसनदर्शनात् । अधार्मिकतयाभिमते रावणे व्यसनादर्शनाच्च । साध्यवति पक्षे हेत्वभावात् स्वरूपासिद्धो हेतुरित्यर्थः ॥ १७ ॥ विरुद्धत्वाच्च सुखदुःखयोः कार्ययोर्न धर्माधर्मानुमापकत्वमित्याह—तस्य चेति ॥ तस्य चाधर्मिष्ठस्य रावणस्य व्यसनाभावात् । व्यसनाभावशब्देन सुखं लक्ष्यते । सुखसद्भावादित्यर्थः । त्वयि च परमधार्मिके व्यसनं दुःखं । गते सति धर्मः अधर्मो भवति अधर्मफलप्रदो भवति । चकारादधर्मोपि धर्मफलाभ्युदयप्रदो भवतीति लभ्यते । अत एव परस्परविरोधिनौ स्वाभावव्याप्तहेतुकावित्यर्थः ॥ १८ ॥ व्यभिचाराद्व्याप्यत्वासिद्धत्वाद्वा न ताभ्यां तदनुमानमित्याह—धर्मेणेत्यादिना निरर्थकावित्यन्तेन ॥ उपलभेदित्यत्र काकुः । धर्मेण धर्मानुष्ठानेन धर्मं धर्मफलं सुखं । उपलभेत् । अधर्मतः अधर्मानुष्ठानेन । अधर्मफलं दुःखं उपलभेत् । उपलभेतेति मन्यसे किमित्यर्थः । एवमनूद्य तत्र दूषणमाह—यदीति । येष्वधर्मः प्रतिष्ठितः । ये अधार्मिका इति यावत् । ते अधर्मेण अधर्मफलेन । यदि युज्येयुः युज्येरन् । नाधर्मरुचयो जनाः । धर्मरुचय इति यावत् । "द्वौ नञौ प्रकृतमर्थं गमयतः" इति न्यायात् । ते धर्मेण धर्मफलेन । यदि युज्येरन्, तदा धर्मेण चरतामेषां जनानां । धर्मः धर्मफलं सुखं । भवेत् । चकारात् अधर्मेण चरतां दुःखं भवेदिति सिद्धम् । न चैवमित्याह—यस्मादिति । अनेन च हिताहितप्राप्तिलक्षणकार्ययोरनियतत्वेन व्याप्त्यभावान्न ताभ्यां धर्माधर्मावनुमातुं शक्याविति व्याप्यत्वासिद्धिर्व्यभिचारो वा दर्शितः ॥ १९—२१ ॥ शब्दोपि न धर्माधर्मयोः प्रमाणमित्याह—वध्यन्त इति ॥ हे राघव । पापकर्माणः पापिनः । अधर्मेण कर्मरूपेण । वध्यन्ते यदि बाध्यन्ते चेत् । वधकर्म वधकर्मरूपोऽधर्मः । धर्मस्याप्युपलक्षणं । हतः त्रिक्षणावस्थायित्वेन ध्वस्तो भवति । शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वात् । हतः सः कं वधिष्यति । कं श्रेयसि नियोक्ष्यतीत्यपि द्रष्टव्यं । धर्माधर्मयोः क्रियारूपयोः क्षणिकत्वेन कालान्तरभाविफलजनकत्वासंभवात् बाधितविषयो वेदो ग्रावप्लवनादिवाक्यवदुपचरितार्थक इतिभावः ॥ २२ ॥ कर्मणः क्षणध्वंसित्वेपि तदाराधिता देवतैव फलप्रदेत्यत्राह—अथवेति ॥ विहितेन विधिना । देवतयेत्यर्थः । अयं जनः । हन्यते बाध्यते । परं अन्यं । हन्ति वा बाधते वा । एवं यदि तेन पापेन कर्मणा पापफलभूतदुःखेन । विधिरेव आलिप्यते संबध्यते । सः प्रयोज्यकर्ता

साधनत्वसिद्धावेवतत्कल्पनावसरात् । अतोऽयमर्थोधर्मरूपोन नास्त्येव ॥ १६ ॥ ति० इदानींधर्मादिस्वरूपमेवदुर्निरूपमितिवक्तुं किंव्यापाररूपौवातज्जन्यातिशयरूपौवेतिविकल्पे नाद्यइत्याह—वध्यन्तइति । पापकर्माणःपुरुषाः यद्यधर्मेणक्रियाशरीरेणवध्यन्ते तदाक्रियायात्रिक्षणावस्थायित्वाच्चतुर्थक्षणेस्वतएववधकर्मणा नाशक्रिययाहतोनष्टोऽधर्मःस्वयंहतः असन्भूत्वाकंहन्तव्यंवधिष्यति । यद्वा वधकर्मरूपोधर्मः चतुर्थक्षणेहतः नष्टः । स्वयमसन्सन्कंवधिष्यति । वधकर्मेत्युपलक्षणं ॥ २२ ॥ ति० द्वितीयंदूषयति अथवेति । विहितेन विहितश्येनाद्यनुष्ठानजातिशयेनान्यदीयेन । अयंपुरुषोहन्यते । स्वीयेनवाऽन्यंहन्ति । एवंसतिविधिः

[ पा० ] १ ङ. झ. ट. धर्मसंयुक्तोनैव. २ क. ङ. झ. ट. चागते.

**अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता ॥ कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्शन ॥ २४ ॥**
**यदि सत्स्यात्सतां मुख्य नासत्स्यात्तव किंचन ॥ त्वया यदीदृशं प्राप्तं तस्मात्सन्नोपपद्यते ॥ २५ ॥**
**अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते ॥ दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥ २६ ॥**
**बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमे ॥ धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥ २७ ॥**

नालिप्यते । अस्य न्यायस्य पुण्यकर्मण्यपि तुल्यत्वात् सुखेनापि प्रयोज्यो न संबध्यते । यदि हि सत्कर्माराधितः असत्कर्माप्रीतो वा ईश्वरः धर्माधर्मशब्दवाच्यः स्यात्, तर्हि स एव सुखदुःखभागी कारयिता स्यात् । न तु प्रयोज्य इति भावः ॥ २३ ॥ ननु यथा स्वतन्त्रो राजा लीलार्थं कामपि मर्यादां प्रवर्त्य तदनुवर्तिनमनुगृह्णाति तदतिलङ्घिनं निगृह्णाति च । तथेश्वरोपि त्वाज्ञारूपकर्मानुष्ठायिनमनुगृह्णाति तदननुष्ठायिनं विपरीतानुष्ठायिनं च निगृह्णातीति चेन्न । स हि किं स्वार्थमनुगृह्णाति उत परार्थं । नाद्यः । अवाप्तसमस्तकामस्यावाप्तव्याभावात् । न द्वितीयः । कंचन विरिंचनं कंचनाकिंचनं च वितन्वतस्तस्य पक्षपातनैर्घृण्यापत्तेः । तत्तत्कर्मानुगुणतया सृष्टेर्न पक्षपातादिप्रसक्तिरिति चेन्न । समीचीने कर्मण्यप्रवर्तयतस्तस्य सर्वज्ञस्य निर्दयत्वापत्तेः । अनादिकर्मप्रवाहकृतपूर्वपूर्वकर्मानुगुण्येन पुनः पुनः सदसतोः कर्मणोः पुरुषं प्रवर्तयतीति चेत्, तर्हि कस्यचिन्नियमेन दुःखं कस्यचिन्नियमेन सुखं च स्यात् । नच तथा दृश्यते, अनियमदर्शनात् । तर्हि कर्मजन्योऽपूर्वरूपोतिशयः फलप्रदो धर्म इत्याशङ्क्याह—अदृष्टेति ॥ हे अरिविकर्शन । प्रतिक्रियते परप्रतिपत्तिर्जन्यत इति प्रतिकारो लिङ्गं । अदृष्टप्रतिकारेण अदृष्टलिङ्गेन अनुमानागम्येनेत्यर्थः । अव्यक्तेन अप्रत्यक्षेण । असता सता असद्भूतेन अग्नीन्द्रादिवदर्थवादवाक्येनागम्येन । धर्मेण अपूर्वाख्येन परं श्रेयः कथं प्राप्तुं शक्यं । न शक्यमित्यर्थः ॥ २४ ॥ उक्तमेवार्थं पुनस्तर्केण दृढीकरोति—यदीति ॥ हे सतां मुख्य । यदि सत् स्यात् । धर्माख्यं वस्त्विति शेषः । धार्मिकस्य तव असत् अनिष्टं । किंचन न स्यात् । तर्कस्य विपर्यये पर्यवसानमाह—त्वयेति । यत् यस्मात्कारणात्, त्वया ईदृशं दुःसहं व्यसनं प्राप्तं । तस्मात्सन्नोपपद्यते । असदेवभवतीत्यर्थः । कार्यानुपलम्भादपूर्वाख्यधर्मो न कल्प्यइत्यर्थः ॥ २५ ॥ ननु न कार्यानुपलम्भमात्रादर्थस्याभावो निश्चेतुं शक्यः, अतीन्द्रियोच्छेदापत्तेः । किंतु सहकारिसंपत्तौ सत्यां कार्यानुपलम्भः कारणत्वाभावं साधयति । सहकारि च पौरुषं । अतस्तदभावात्फलानुदय इत्यत आह—अथवेति । दुर्बलः बलरहितः निरपेक्षतया कार्याक्षमः । अतएव क्लीबः कातरः स्वतःकार्यकरणासमर्थः । धर्मः बलमनुवर्तते । कार्योत्पादनेपौरुषमपेक्षत इत्यर्थः । एवंचेद्दुर्बलो हृतमर्यादः स्वातन्त्र्येण फलप्रदत्वमर्यादाहीनो धर्मः प्राधान्येन न सेव्य इति मे मतिः ॥ २६ ॥ प्रधानभूतं बलमेवाश्रयणीयमित्याह—बलस्येति ॥ पराक्रमे कार्यसाधनेविषये, बलस्य धर्मः गुणभूतो यदि चेत् उपसर्जनभूतो यदि स्यात्, तदा यथेदानीं धर्मे वर्तसे तथा

विहितानुष्ठानजातिशयएव तेनपापेनकर्मणाहत्यारूपेणलिप्यते । नसकर्मानुष्ठातापुरुषः । हत्यायास्तदकर्तृकत्वात् । नहिस्वोत्पादितपुत्रकृतहत्यापितरंस्पृशति । एवंतस्यकर्मजातिशयस्वातन्त्र्यमभ्युपेत्यात्मालेपउक्तः । एतेन कर्मकरणसंतुष्टस्येश्वरस्यफलदत्वमित्यपास्तं । तस्यैवलेपप्रसङ्गात् । अत्रपक्षेविहितेनेत्यस्यविहितकर्मसंतुष्टेनेश्वरेणेत्यर्थः ॥ २३ ॥ **ति०** एवमतिशयस्यघातकत्वमङ्गीकृत्यात्मालेपउक्तः । इदानींघातकत्वमेवनास्तीत्याह—**अदृष्टेति** । अदृष्टप्रतिकारेण अचेतनतयाज्ञातस्वकर्तव्यशत्रुप्रतीकारेण । अथस्वाश्रयचेतनद्वारातज्ज्ञानमितिचेत्तत्राह—अव्यक्तेन स्वाश्रयभूतात्मनोप्रत्यक्षतयाप्रत्यक्षरूपाव्यक्तेन । अतएव असता असत्कल्पेनसतावर्तमानेनापिधर्मेणकर्मजन्यातिशयेनकथंपरंवध्यस्वरूपंप्राप्तुंशक्यं । अप्राप्यपरंहन्तीतिचेदसंबन्धाविशेषात्सर्वहननप्रसङ्गः । अयंहन्तृकृतकर्मजातिशयोवध्यनिष्ठएवेतिचेदन्यधर्मेणान्यस्यधार्मिकत्वप्रसङ्गः । कर्तृनिष्ठत्वेतूक्तदोषइतिभावः ॥ **शि०** नदृष्टः अचेतनत्वादज्ञातःप्रतिकारः विघातनंयेन । अतएवाव्यक्तेन अप्रकाशमानेन । अतएवासता असत्सदृशेन । सता विद्यमानेनापि धर्मेण कर्मजन्यातिशयरूपविशिष्टेनपरंवध्यादिस्वरूपंप्राप्तुंज्ञातुमित्यर्थः । कथंशक्यं नशक्यमित्यर्थः ॥ २४ ॥ **ति०** तुल्यन्यायाच्छुभकर्मजातिशयोप्यसन्नेवेतिध्वनितमर्थंतर्केणदृढीकरोति—**यदीति** । हेसतांमुख्य सत्पुरुषश्रेष्ठ यदिसत्कर्मजन्यमदृष्टंसत्स्यात् तदा तव किञ्चन किंचिदपि । असत् अशुभं दुःखंनस्यात् । उक्तस्यतर्कस्यविपर्ययपर्यवसानमाह । त्वयाचेदीदृशंदुःखंप्राप्तं । तस्मात्तत् सदि-

[ पा० ] १ च. धर्मेणरिपुकर्शन.

**अथ चेत्सत्यवचनं धर्मः किल परंतप ॥ अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥ २८ ॥**
**यदि धर्मो भवेद्भूतो अधर्मो वा परन्तप ॥ न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥ २९ ॥**
**अधर्मसंश्रितो धर्मो विनाशयति राघव ॥ सर्वमेतद्यथाकामं काकुत्स्थ कुरुते नरः ॥ ३० ॥**
**मम चेदं मतं तात धर्मोऽयमिति राघव ॥ धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ॥ ३१ ॥**

धर्ममुत्सृज्य धर्मप्राधान्यमुत्सृज्य । धर्म इव बलेपि वर्तस्व ॥ २७ ॥ एवं सामान्येन धर्मे दूषितेपि सत्यवचनरूपधर्मविशेषस्य रामेण प्राधान्येनानुरोधात्तत्पृथग्दूषयति—अथेति ॥ हे परंतप । सत्यवचनं धर्मः किल अथ चेदेवं चेत्, अनृतः त्वामभिषेक्ष्यामीत्युक्त्वा तदकरणेन सत्यत्वरहितः । अनृतमिति पाठे वदन्निति शेषः । त्वयि सकलकल्याणगुणाश्रये ज्येष्ठपुत्रे । अकरुणः राज्याद्वनंप्रति निष्कासनान्निर्दयः । अतो बन्धयोग्यः पिता त्वया पितृवचनं करिष्यामीति कृतप्रतिज्ञेनत्वया । किंन बद्धः किं न नियमितः । सर्वप्रजासन्निधौ राममभिषेक्ष्यामीत्युक्तं प्राथमिकं पितृवचनं परित्यज्य पाश्चात्यं वनगमनविषयं पितृवचनं करिष्यामीति कृतप्रतिज्ञेन त्वया पालयता सत्यवचनमपि सम्यक् पालितमितिभावः ॥ २८ ॥ धर्माधर्मयोः सद्भावेपि राज्ञा धर्मोऽधर्मो वा नियमेन नानुष्ठातव्यः । किंतु तत्तत्कालप्रयोजनानुगुण्येनोभावपि कर्तव्यावित्यत्र शिष्टाचारं प्रमाणयति—यदीति ॥ भूतो अधर्मो वेत्यत्र वृत्तानुरोधाय सन्ध्यभावः । यदि धर्मो भवेद्भूतः । यदि केवलं धर्म एवानुष्ठेयत्वेन प्राप्तो भवेत् । तदा वज्री शतक्रतुः मुनिं विश्वरूपं हत्वा इज्यां न कुर्यात्, किन्त्विज्यामेव कुर्यात् । अधर्मो वा । केवलमधर्मो वा । यद्यनुष्ठेयः स्यात्, तदा शतक्रतुः वज्री मुनिं हत्वा इज्यां न कुर्यात्, किंतु हननमेव कुर्यात् । क्षत्रधर्मनिष्ठेनेन्द्रेण धर्माधर्मयोरनुष्ठितत्वाद्राज्ञा यथाकालमुभयमपि कर्तव्यमिति भावः । यान्येतानि देवक्षत्राणीन्द्रो वरुणः पर्जन्यो यम ईशान इतीन्द्रस्य क्षत्रियत्वं श्रूयते ॥ २९ ॥ इदानीमभ्युपगमवादेनैकान्ततो धर्माधर्मयोरेकस्याश्रयणमनर्थपर्यवसायीत्याह—अधर्मेति ॥ अधर्मसंश्रितो धर्मः अधर्मसहितो धर्मः । धर्मश्चाधर्मश्चेत्यर्थः । विनाशयति कर्तारमिति शेषः । नियमेन पृथक् पृथगनुष्ठीयमानौ धर्माधर्मौ कर्तारं विनाशयतः । अत एवैतत्सर्वं धर्माधर्मात्मकं सर्वं कर्मजातं यथाकामं तत्तत्कालोचितं । अनियमेन नरः कुरुते । कुर्यादित्यर्थः ॥ ३० ॥ अस्मिन्नर्थे न मे संदेह इत्याह—ममेति ॥ हे तात अनुकम्प्य । "तातोनुकम्प्ये पितरि" इति रत्नमाला । इदं याथाकाम्येनाचरणं यदस्ति । अयं धर्म इति मम

तिनोपपद्यते ॥ २५ ॥ **ति०** किंच सत्यस्यापिधर्मत्वाद्धर्मपक्षपातिनाभवतासत्यधर्मएवादौकिमितिसम्यङ्नानुष्ठितः । येनैवमनर्थोनवृत्तःस्यादित्याह—अथचेदिति । अथ पक्षान्तरे । हेपरंतप त्वयासत्यवचनं पितृवचनाङ्गीकाररूपसत्यपरिपालनंधर्मोनुष्ठीयतइति चेत्तदात्वयिज्येष्ठेउक्तस्याभिषेकवचनस्याकरणेयदनृतंराज्ञःप्राप्तं तेनानृतेनराजात्वयाविनाभूतः । मृतइतिशेषः । अतस्तेनराज्ञोऽभिषेककरणरूपसत्येनत्वंबद्धःकिंन भवेरितिशेषः । प्रथमोक्तंराज्ञोभिषेकवचनरूपंसत्यंनपरिपालितं । तत्परिपालनेत्वयाविनाभूतत्वासंभवेनपितृमरणंनस्यात् । एवमाद्यनर्थश्चनवृत्तःस्यादितिभावः । " अनृतंत्वय्यकरणेकिंनबद्धस्त्वयाविना " इतिसर्वत्रपाङ्कःपाठइति कतकः । तीर्थस्तु " अनृतंत्वय्यकरुणःकिंनबद्धस्त्वयापिता " इतिपठित्वासत्यस्यधर्मत्वेत्वय्यभिषेकविषयमनृतंवदन्राज्यान्निष्कासनादकरुणःपितात्वयाकिंनबद्धइतिव्याचष्टे । तदयुक्तं । पितृबन्धनस्यसत्यवचनपरिपालनरूपत्वाभावात् ॥ **स०** अथखलुचेदिति निपातसमुदायोयद्यर्थे । हेपरंतप सत्यवचनंयदिधर्मस्तर्हिअनृतः नविद्यतेऋतंसत्यवचनंयस्यसतथा । सभायांत्वामभिषेक्ष्यामीति वचनंदत्वावनंप्रतिप्रेषितवानित्यसत्यवचनः । सुकुमारशरीरःसीतयासहकथंप्रवेक्ष्यतीतित्वयित्वद्विषये अकरुणःपितादशरथः सत्यवाक्यत्वेनकर्तुंकिंनबद्धः । तत्प्रतिज्ञायाएवप्रथमत्वात् । यत्तुनागोजिभट्टेन "अनृतंत्वय्यकरणेकिंनबद्धस्त्वयाविना" इतिपाठान्तरंधरतातीर्थस्तु " अनृतस्त्वय्यकरुणःकिंनबद्धःपितात्वया " इतिपठित्वेत्यादिनासर्वमनूद्य तदयुक्तं पितृबन्धनस्यसत्यवचनपरिपालनरूपत्वाभावादितिदूषणं तदसंगतं । तस्यपितृबन्धनएवतात्पर्याभावात् । किंनबद्धः किमर्थंननियमितइतितेनोक्तत्वेनासदनुवादत्वात् ॥ २८ ॥ **ति०** यदिदमुक्तंयथोचितकालदेशमुभयमनुष्ठेयमितिममतं । नन्वेवंधर्मस्यतवापिसंमतत्वेकिमितिमेदु.खमतआह—धर्ममूलमिति । अर्थमूलंराज्यमुत्सृजतात्वया धर्मस्यमूलं अर्थरूपंछिन्नं । अतस्त्वंक्लेशवानितिभावः । यत्तुतीर्थेन ' अधर्मःसंश्रितोधर्मःकर्तारंविनाशयति । तस्माद्यथाकामंतत्कालौचित्येनोभयमप्यनुष्ठेयमिदमेव । यथाकाम्येनोभयाचरणमेवधर्मइतिममतं ।

[ **पा०** ] १ ङ. झ. ट. अनृतंत्वय्यकरणे. २ च. ञ. ट. तदाछिन्नं. घ. त्वयाछुप्तं. ख. तथाच्छिन्नं.

अर्थेभ्यो हि विवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ॥ क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ३२ ॥
अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः ॥ व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ३३ ॥
सोयमर्थं परित्यज्य सुखकामः सुखैधितः ॥ पापमारभते कर्तुं ततो दोषः प्रवर्तते ॥ ३४ ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ॥
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ३५ ॥
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् ॥
यस्यार्थाः स महाभागो यस्यार्थाः स महागुणः ॥ ३६ ॥

अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया ॥ राज्यमुत्सृजता वीर येन बुद्धिस्त्वया कृता ॥ ३७ ॥
यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् ॥ अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥ ३८ ॥
हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः ॥ अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ ३९ ॥
येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् ॥ तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥ ४० ॥

मतं सिद्धान्त इत्यर्थः । एवं प्रथमं धर्म एवाप्रामाणिक इत्युक्तं । पश्चात्कथंचित्प्रामाणिकत्वसंभवेपि न तस्य प्राधान्यमित्युक्तं । इदानीमप्राधान्येनापि धर्मस्तव न संभवति, मूलाभावादित्याह—धर्ममूलमित्यादिना । धर्मस्य मूलं कारणं अर्थरूपं, तदा प्राप्तकाले, राज्यमुत्सृजता त्वया छिन्नं । मूलच्छेदात्तव कथं धर्म इत्यर्थः ॥ ३१ ॥ तदेव धर्ममूलत्वमर्थस्य प्रतिपादयति—अर्थेभ्य इति ॥ ततस्ततः प्रजापालनाय प्रदेयषड्भागकरप्रदानादिकारणात् । संवृत्तेभ्यः प्राप्तेभ्यः । क्रमाद्विवृद्धेभ्योऽर्थेभ्यः सर्वाः क्रियाः यज्ञदानादिक्रियाः । प्रवर्तन्ते । पर्वतेभ्य इत्युपमानेन मूलधनव्ययमकृत्वैवार्थमूलतया दानादिक्रियाः कार्या इत्युक्तं ॥ ३२ ॥ व्यतिरेकमुखेनापि तदेव प्रतिपादयति—अर्थेनेत्यादिना ॥ कुसरितः अल्पसरितः ॥ ३३ ॥ न केवलमर्थपरित्यागेन धर्मासंभवः किंतु दोषप्राप्तिरपीत्याह—सोयमिति ॥ सुखैधितः पूर्वं सुखेन संवर्धितः । सोयं अर्थपरित्यागी अर्थं प्राप्तं परित्यज्य सुखकामः सन्, पापं अन्यायेनार्थार्जनं सुखसाधनभूतधनसंपादनार्थं स्तेयादिपापं आरभते । ततः तेन कर्मणा । दोषः प्रवर्तत इत्यर्थः ॥ ३४ ॥

यस्यार्थास्तस्य मित्राणीत्यादिश्लोकद्वयं क्वचित्पठ्यते ॥ पुमान् पुंस्त्ववान् । अन्यः स्त्रीप्रायइत्यर्थः । महाभागः महाभाग्यः । महागुणः शीलादिगुणवान् ॥ ३५—३६ ॥ अर्थस्य परित्यागे एते पूर्वोक्तगुणप्रतियोगिनो निर्मित्रत्वादयो दोषाः, प्रव्याहृताः स्पष्टमुक्ताः । राज्यमुत्सृजता त्वया येनगुणेन बुद्धिः अर्थपरित्यागविषया कृता तं गुणं जान इत्यर्थः । यद्वा राज्यमुत्सृजता त्वया । येन कारणेनार्थपरित्यागे बुद्धिः कृता तेन कारणेन एते दोषाः मया प्रव्याहृता इत्यर्थः ॥ ३७ ॥ धर्मकामार्थाः धर्मकामप्रयोजनानि । प्रदक्षिणं अनुकूलं । प्रतिष्ठितमिति वा पाठः । व्यतिरेकमुखेनाप्याह—अधनेनेति । अधनेन धनं विना अर्थकामेनापि । विचिन्वता अर्थार्जनव्यापारं कुर्वता पुरुषेण । अर्थः श्रेयः । न शक्यं न साधयितुं शक्यं । अव्ययमेतत् । "शक्यमरविन्दसुरभिः" इति प्रयोगात् ॥ ३८ ॥ न केवलमर्थकामावेव धनमूलौ, अन्येपि तथेत्याह—हर्ष इति ॥ प्रवर्तन्ते प्रकृष्टा निवर्तन्ते । शोभन्तइत्यर्थः । असतो निर्धनस्य शमदमौ हि धनलाभे निवर्तेते ॥ ३९ ॥ न केवलमामुष्मिकश्रेयःसाधनभूतोर्थः, किंतु ऐहिकश्रेयःसाधनं

इतिव्याख्यातं । तत्तूपहसनीयमेवव्युत्पन्नैरित्यलम् ॥ ३१ ॥ ति० अथार्थस्यधर्ममूलत्वमेवप्रतिपादयति । अर्थेभ्यइति । ततस्ततःसंवृत्तेभ्यः नानादेशादाहृतेभ्यः । अतएवप्रवृत्तेभ्योर्थेभ्यःसर्वाःक्रियाः योगप्रधानाः भोगप्रधानाश्चप्रवर्तन्ते । निष्कामतयाकृतायोगप्रधानाभवन्ति । सकामतयाकृताभोगप्रधानाइत्यर्थः ॥ ३२ ॥ स० चरतां "चर गतिभक्षणयोः" । गत्यर्थानांज्ञानार्थत्वाज्ज्ञानिनां । धर्मचारिणामपितेषामृष्यादिजनानांयेषामर्थानामभावादयंलोकः ऐहिकसुखं । नश्यति । तेऽर्थास्त्वय्यपिनदृश्यन्ते । चरतां भक्षयतांराक्षसानां । अयंलोकोजनः धर्मचारिणांतेषांयेभ्योनश्यति तेऽर्थास्त्वयिनदृश्यन्तइतिवा । दुर्दिनं मेघच्छन्नदिनं

[ पा० ] १ ङ. च. झ. ट. विमुक्तस्य. २ ख. सगुणान्वितः. ङ. च. छ. झ. ञ. ट. सगुणाधिकः. ३ क. ख. प्रतिष्ठितं.

त्वयि प्रव्राजिते वीर गुरोश्च वचने स्थिते ॥ रक्षसाऽपहृता भार्या प्राणैः प्रियतरा तव ॥ ४१ ॥
तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् ॥ कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥ ४२ ॥
उत्तिष्ठ नरशार्दूल दीर्घबाहो दृढव्रत ॥ किमात्मानं महात्मानमात्मानं नावबुध्यसे ॥ ४३ ॥
अयमनघ तवोदितः प्रियार्थं जनकसुतानिधनं निरीक्ष्य रुष्टः ॥
सहयगजरथां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्काम् ॥ ४४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

## चतुरशीतितमः सर्गः ॥ ८४ ॥

रामसमीपमुपागतवता लक्ष्मणमुखाद्रामशोककारणमवगतवताचविभीषणेन रामंप्रति इन्द्रजिन्निहतसीतायामायामयत्वोक्त्या समाश्वासनम् ॥ १ ॥ तथेन्द्रजितानिकुंभिलायांहोमारंभस्य होमसमाप्तौतस्यदुर्जयत्वस्यच निवेदनेन तद्वधाय लक्ष्मणप्रेषणप्रार्थना ॥ २ ॥

राममाश्वासयाने तु लक्ष्मणे भ्रातृवत्सले ॥ निक्षिप्य गुल्मान्स्वस्थाने तत्रागच्छद्विभीषणः ॥ १ ॥

---

चेति व्यतिरेकमुखेन प्रतिपादयन् तादृशोर्थस्त्वयि नास्तीत्याह—येषामिति ॥ येषां चरतामित्यनादरे षष्ठी । येषां चरतां यांश्चरतो विद्यमानानर्थाननादृत्य धर्मचारिणां केवलं धर्ममाचरतां । अयं लोको नश्यति । ऐहिकसुखं नास्तीत्यर्थः । ते तादृशाः सुखसाधनभूताः अर्थाः दुर्दिनेषु मेघच्छन्नदिनेषु । " मेघच्छन्नेऽह्नि दुर्दिनं " इत्यमरः । सूर्यादयो ग्रहाः यथा न दृश्यन्ते, तथा त्वयि न दृश्यन्ते । सकलश्रेयःसाधनभूता अर्थास्त्वया नादृताइत्यर्थः ॥ ४० ॥ अर्थहेतुभूतराज्यपरित्यागेन पितृवचनपरिपालनरूपकेवलधर्मावलम्बनेन च प्राप्तं दोषमाह—त्वयीति ॥ प्राणैः प्राणेभ्यः । प्राणैस्तुल्यं प्रियतरेति वाऽर्थः ॥ ४१ ॥ एवं गते किं करणीयमित्यत्राह—तदद्येति ॥ भवत्कर्मणाप्राप्तंदुःखं मत्कर्मणा व्यपनेष्यामीत्यर्थः । कृतप्रतिक्रियया तद्दुःखं निवारयिष्यामीति भावः ॥ ४२ ॥ एवं भक्तिवादानुक्त्वा क्षमापणं विदधाति—उत्तिष्ठेति ॥ आत्मानं स्वं । महात्मानं महाबुद्धिं । आत्मानं परमात्मानं । किं नावबुध्यसे । तस्मात् भवतः शोककारणं नास्तीति हृदयम् ॥ ४३ ॥ अयं अहं तव विधेयत्वेन सन्निहितः, तव प्रियार्थं उदितः उद्युक्तः उत्पन्नो वा । अनेन दुःखं व्यपनेष्यामीत्येतद्विवृतं ॥ ४४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

अथेन्द्रजिद्वधोपायदर्शनं—राममाश्वासयान इत्यादि ॥ आश्वासयाने आश्वासयमाने । आगमशासनस्यानित्यत्वान्मुगभावः । अनेन पूर्वोक्तवादा भ्रातृवात्सल्यात्तदाश्वासनार्था नतु परमार्था इत्युक्तं । पूर्वोक्तयुक्तिपरिहारस्तु, " हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि

---

॥ ४० ॥ **स०** राज्यत्यागाचातुर्यमूलमेतदित्याह—**त्वयीति** ॥ ४१ ॥ **ति०** अतःपरमेतावदेवकर्तव्यंकिमतीतार्थानुशोचनेनेत्याह—तदद्येति । कर्मणापौरुषेणअहमेवव्यपनेष्यामि । तस्मान्मत्प्रोत्साहनार्थमुत्तिष्ठ ॥ ४२ ॥ **शि०** हेमहात्मन् महात्मानं सर्वप्रवर्तकं । आत्मानं स्वस्वरूपं । कुतोनावबुध्यसे । एतेनतवैवेच्छयासर्वजातमितिसूचितं ॥ ४३ ॥ **ती०** सीतानिधनश्रवणजनितदुःखार्दितोहमितःपरंकिमपिकर्तुंनशक्नोमीत्याशङ्कयतर्ह्यहमेवकरिष्यामिमांनियोजयेत्याशयेनाह—**अयमिति** । अयमहंतव प्रियार्थमुद्यतःत्वन्नियोजितसेवांकर्तुमेवाहमुत्पन्नइत्यर्थः । अतःजनकसुतानिधनंनिरीक्ष्यरुष्टःसन् लङ्कांविनिपातयामीत्यर्थः । यद्वा सकलशास्त्रार्थतत्वज्ञस्त्वंकिमर्थमेवंधर्माधर्मखण्डनंकरोषि । शक्तश्चेच्छौर्यंप्रदर्शयेत्यतआह—अयमिति । जनकसुतानिधनंनिरीक्ष्य रुष्टःसन् अयमहंधर्माधर्मखण्डनरूपमर्थं उदितः उक्तवानस्मि । इतःपरंतवप्रियार्थं तवप्रिया या सीता तदर्थं सीतानिधनप्रतिकारार्थंलङ्कांविनिपातयामीत्यर्थः ॥ ४४ ॥ इतित्र्यशीतितमःसर्गः ॥ ८३ ॥

**[ पा० ]** १ ट. महात्मानंमहात्मन्नावबुध्यसे. २ क. ख. ग. ट. अहमनघ. च. अयमहमद्य. ३ ङ. च. झ. ञ. ट. माश्वासमानेतु.

नानाप्रहरणैर्वीरैश्चतुर्भिः सचिवैर्वृतः ॥ नीलाञ्जनचयाकारैर्मातङ्गैरिव यूथपः ॥ २ ॥
सोभिगम्य महात्मानं राघवं शोकलालसम् ॥ वानरांश्चैव ददृशे बाष्पपर्याकुलेक्षणान् ॥ ३ ॥
राघवं च महात्मानमिक्ष्वाकुकुलनन्दनम् ॥ ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमासितम् ॥ ४ ॥
व्रीडितं शोकसंतप्तं दृष्ट्वा रामं विभीषणः ॥ अन्तर्दुःखेन दीनात्मा किमेतदिति सोब्रवीत् ॥ ५ ॥
विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान् ॥ लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुतः ॥ ६ ॥
हतामिन्द्रजिता सीतामिह श्रुत्वैव राघवः ॥ हनुमद्वचनात्सौम्य ततो मोहमुपागतः ॥ ७ ॥
कथयन्तं तु सौमित्रिं सन्निवार्य विभीषणः ॥ [पुष्कलार्थमिदं वाक्यं विसंज्ञं राममब्रवीत् ॥ ८ ॥]
मनुजेन्द्रार्तरूपेण यदुक्तं च हनूमता ॥ तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥ ९ ॥
अभिप्रायं तु जानामि रावणस्य दुरात्मनः ॥ सीतां प्रति महाबाहो न च घातं करिष्यति ॥ १० ॥
याच्यमानस्तु बहुशो मया हितचिकीर्षुणा ॥ वैदेहीमुत्सृजस्वेति न च तत्कृतवान्वचः ॥ ११ ॥
नैव साम्ना न दानेन न भेदेन कुतो युधा ॥ सा द्रष्टुमपि शक्येत नैव चान्येन केनचित् ॥ १२ ॥
[ मायामयीं महाबाहो तां विद्धि जनकात्मजाम् ॥ ] वानरान्मोहयित्वा तु प्रतियातः स राक्षसः ॥
चैत्यं निकुम्भिलां नाम यत्र होमं करिष्यति ॥ १३ ॥

नार्चयेत्" इति मनूक्तरीत्या प्रेक्षणीयः । गुल्मान् सेनासन्निवेशान् । स्वस्थाने स्वकार्यकरणार्थं ॥ १—२ ॥ सोभिगम्येति । अत्र राघवपदं लक्ष्मणपरं । उत्तरश्लोके रामदर्शनस्य वक्ष्यमाणत्वात् । ददृशे ददर्श ॥ ३—४ ॥ सः विभीषणः रामं दृष्ट्वा दीनात्मा दीनमनस्कःसन् । अन्तर्दुःखेन अबहिःप्रकटितदुःखविकारेण उपलक्षितःसन् अब्रवीत् ॥ ५ ॥ लक्ष्मणोवाचेत्यत्र छान्दसः सुलोपः । मन्दार्थं अल्पार्थं । संगृहीतार्थमित्यर्थः ॥ ६—७ ॥ कथयन्तमित्यर्धं ॥ मध्ये निवारणोक्तिः सर्वस्य वृत्तान्तस्य स्वेनावगतत्वात् । विभीषणः उवाचेति शेषः ॥ ८—९ ॥ करिष्यति । रावण इति शेषः ॥ १० ॥ तत्र हेतुमाह—याच्यमान इत्यादिना ॥ ११ ॥ सा साम्ना द्रष्टुमपि नैव शक्येत । दानेनापि द्रष्टुं न शक्येत । भेदेनापि द्रष्टुं न शक्येत । युधा दण्डेन कुतो द्रष्टुमपि शक्येत । अन्येन मायोपायेन केनचिद्द्रष्टुमपि नैव शक्येत॥१२॥ कथं तर्हीन्द्रजिता हतेत्याशङ्क्य मायेयमित्याह—वानरानित्यादिना ॥ मोहयित्वा । लङ्कायां स्वव्यतिरिक्तस्य योद्धुरभावात् स्वस्मिन्कर्मव्याकुले वानराः प्रहरेयुः यज्ञश्च विच्छिद्येत । विच्छिन्ने च तस्मिन् ब्रह्मवरानुसारेण स्वस्य विनाशो भविष्यतीति

**स०** आर्तरूपेण दीनसदृशेन । सागरस्यशोषणं अगस्त्यादिसमावेशाभावदशायांयथाऽयुक्तं तथेदमयुक्तंमन्ये ॥ **शि०** सागरस्यशोषणमिति । एतेन तत्कालेऽगस्त्यकर्तृकसागरशोषणंनप्रसिद्धमितिध्वनितं ॥ ९ ॥ **ति०** कथमयुक्तंतत्राह—अभिप्रायंत्विति । सीतांप्रति सीतामुद्दिश्यवर्तमानंतदभिप्रायं सर्वनाशेपिसीतानत्याज्येत्येवंरूपंजानामिच । अतोघातंनकरिष्यति । सीतायाइतिशेषः ॥ **स०** हतासीतेत्यभिहितंश्रुतवतोदुःखंकथयकथमयुक्तमित्यतोवक्ति—**अभिप्रायमिति** । सीतांप्रति तामुद्दिश्यदुरात्मनोपिरावणस्याभिप्रायंजानामि । कोसावभिप्रायइत्यतआह—नचेति । सीतायाइतिशेषः । सीतांप्रतिसीतायाघातंनचकरिष्यतीतिदुरात्मनोरावणस्याभिप्रायंजानामि । अद्यवाश्वोवाऽहमपिहतःस्यांनत्यजेयंजानकींपाक्षिक्यादुराशयापिदुराशयोननाशयतीतितदभिप्रायंजानामीतिभावः ॥ १० ॥ **स०** हेस्व स्वकीय भ्रातरितियावत् । सीतामुत्सृजेतियाच्यमानः नचतत् मद्याचितप्रमेयकंवचःकृतवान् ॥ ११ ॥ **स०** सातुस्वनिमित्तमशेषनक्तंचरनाशोभावीत्येवरावणकरग्रहंप्राप्ताकुपिताचेत्सद्योनाशयेदितिवक्तुंतद्गुणानाह—नैवेति । युधा युद्धेन । क्विबन्तः । अन्येनकेनापिवञ्चनाद्युपायेन । किंचसीताऽन्येनकेनापिकेनाप्युपायेनद्रष्टुमेवाशक्या कुतस्तस्याहरणपूर्वकंवधइत्याहेतिपद्यमवतारयतानागोजिभट्टेन समग्रंरामायणंद्वादशवारंश्रुतवतःसीतायारामस्यचकोनुबन्धइतिप्रश्न-

[ **पा०** ] १ क.—ट. श्चतुर्भिरभिसंवृतः. २ ङ. झ. ट. यूथपैः. ३ क. ख. सोभिवाद्य. ४ ज. व्रीडितःशोकसंतप्तो. ५ ख. धर्मात्मा. ६ ङ. च. झ. ञ. ट. मुपाश्रितः. ७ इदमर्धं क. ख. घ.—ट. पाठेषुदृश्यते. ; ८ क—ट. यदुक्तस्त्वं. ९ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. १० ङ. झ. ट. निकुंभिलामद्यप्राप्य.

हुतवानुपयातो हि देवैरपि सवासवैः ॥ दुराधर्षो भवत्येव सङ्ग्रामे रावणात्मजः ॥ १४ ॥
तेन मोहयता नूनमेषा माया प्रयोजिता ॥ विघ्नमन्विच्छता तत्र वानराणां पराक्रमे ॥ १५ ॥
ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते ॥ त्यजेमं नरशार्दूल मिथ्या सन्तापमागतम् ॥
सीदते हि बलं सर्वं दृष्ट्वा त्वां शोककर्शितम् ॥ १६ ॥
इह त्वं स्वस्थहृदयस्तिष्ठ सत्वसमुच्छ्रितः ॥ लक्ष्मणं प्रेषयास्माभिः सह सैन्यानुकर्षिभिः ॥ १७ ॥
एष तं नरशार्दूलो रावणिं निशितैः शरैः ॥ त्याजयिष्यति तत्कर्म ततो वध्यो भविष्यति ॥ १८ ॥
तस्यैते निशितास्तीक्ष्णाः पत्रिपत्राङ्गवाजिनः ॥ पतत्रिण इवासौम्याः शराः पास्यन्ति शोणितम् ॥१९॥
तं सन्दिश महाबाहो लक्ष्मणं शुभलक्षणम् ॥ राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ॥ २० ॥

मनुजवर न कालविप्रकर्षो रिपुनिधनं प्रति यत्क्षमोऽद्य कर्तुम् ॥
त्वमतिसृज रिपोर्वधाय वाणीममररिपोर्मथने यथा महेन्द्रः ॥ २१ ॥
समाप्तकर्मा हि स राक्षसाधिपो भवत्यदृश्यः समरे सुरासुरैः ॥
युयुत्सता तेन समाप्तकर्मणा भवेत्सुराणामपि संशयो महान् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

---

## पञ्चाशीतितमः सर्गः ॥ ८५ ॥

सीताशोकाकुलतयाविभीषणभाषितमनवधारितवतोरामस्यचोदनया पुनर्विभीषणेन तंप्रति इन्द्रजितं प्रतिनिकुंभिलायां होमसमाप्तौ सर्वदुर्जयत्वरूपब्रह्मवरदानप्रकारस्य ब्रह्मणैवोक्तस्यहोमापरिसमाप्तेस्तद्वधहेतुत्वस्यच निवेदनेन तद्वधायानुजनियोजनप्रार्थना ॥ १ ॥ रामचोदनया लक्ष्मणेनेन्द्रजिद्वधायविभीषणादिभिःसह निकुंभिलांप्रतिप्रस्थानम् ॥ २ ॥

तस्य तद्वचनं श्रुत्वा राघवः शोककर्शितः ॥ नोपधारयते व्यक्तं यदुक्तं तेन रक्षसा ॥ १ ॥

---

मत्वा वञ्चनमितिभावः ॥ १३—१४ ॥ अन्विच्छता चिन्तयता ॥ १५ ॥ तत् होमरूपं कर्म ॥ १६ ॥ सैन्यानुकर्षिभिः सैन्यपालैः ॥ १७ ॥ तत्कर्म होमकर्म । णिजन्तत्वाद्विकर्मकत्वं ॥ १८ ॥ एते लक्षणीयाः । पत्रिपत्राणि पक्षिपक्षाः, तेषामङ्गानि बर्हाणि, तैः वाजिनः वेगवन्तः ॥ १९—२० ॥ यद्यस्मात्कारणात् रिपुनिधनं प्रति कालविप्रकर्षः कालविलम्बः । अद्य कर्तुं न क्षमः। तत्तस्मात् । त्वं रिपुवधाय वाणीमतिसृज । आज्ञापयेत्यर्थः । यथा महेन्द्र इत्यापन्मात्रेदृष्टान्तः ॥ २१—२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥

---

अथेन्द्रजिद्वधाय लक्ष्मणनिर्गमनं—तस्य तद्वचन-

---

नीतिरुपार्जितेतिसंतोष्टव्यं ॥ १२ ॥ **शि०** एषलक्ष्मणः रावणिं तत् मायाजनकहवनरूपंकर्म । त्याजयिष्यति । ततः तस्माद्धेतोः । वध्योभविष्यति । इन्द्रजिदितिशेषः । रावणेःकर्मत्वंतुकृतपूर्वीकटमित्यत्रेव पूर्वकटरूपकर्माविवक्षयाऽकर्मकत्वेनाविवक्षितकर्माणोपियथाऽकर्मकत्वेनगृह्यन्ते तथाऽकर्मकत्वेनशब्देन्दुशेखरादौनिरूपितं ॥ १८ ॥ **ति०** तस्मात्त्वंरिपोर्वधायलक्ष्मणमतिसृज प्रेषय । यथादिविजरिपुमथनेअमरेन्द्रोवज्रमतिसृजतितथेत्यर्थः ॥ २१ ॥ **स०** प्रेष्यप्रेषणावश्यंभावितासूचनायपुनरुक्तीकरोति—**समाप्तकर्मेति** । सुराणामपिसंशयः प्राणसंशयः । पूर्वंसुरासुरैरितिप्रकृतत्वात्सुरासुराणांसंशयइतिवाच्यं । तथापिकेचिदेवदेवपक्षिणोसुराएतद्वेष्याः । इतरेत्वेतत्कूटघटिताएवेतिसुराणामित्येवोक्तमितिमन्तव्यं ॥ २२ ॥ इतिचतुरशीतितमःसर्गः ॥ ८४ ॥

[ पा० ] १ ख. ङ. च. झ. ट. भवत्येष. २ ङ. झ. ट. त्यजैनं. ३ च. ज. कङ्कपत्राङ्ग. ४ क. घ. ङ. ज.—ट. तत्संदिश. ५ ङ. झ. वधायवज्रंदिविजरिपोर्मथने. क. ज. वधायवाणीमसुरपुरोन्मथने. ञ. वधायवज्रममर.

ततो धैर्यमवष्टभ्य रामः परपुरञ्जयः ॥ विभीषणमुपासीनमुवाच कपिसन्निधौ ॥ २ ॥
नैर्ऋताधिपते वाक्यं यदुक्तं ते विभीषण ॥ भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ॥ ३ ॥
राघवस्य वचः श्रुत्वा वाक्यं वाक्यविशारदः ॥ यत्तत्पुनरिदं वाक्यं बभाषे स विभीषणः ॥ ४ ॥
यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् ॥ तत्तथाऽनुष्ठितं वीर त्वद्वाक्यसमनन्तरम् ॥ ५ ॥
तान्यनीकानि सर्वाणि विभक्तानि समन्ततः ॥ विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः ॥ ६ ॥
भूयस्तु मम विज्ञाप्यं तच्छृणुष्व महायशः ॥ ७ ॥
त्वय्यकारणसन्तप्ते सन्तप्तहृदया वयम् ॥ त्यज राजन्निमं शोकं मिथ्या सन्तापमागतम् ॥ ८ ॥
तदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्धनी ॥ उद्यमः क्रियतां वीर हर्षः समुपसेव्यताम् ॥ ९ ॥
प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः ॥ रघुनन्दन वक्ष्यामि श्रूयतां मे हितं वचः ॥१०॥
साध्वयं यातु सौमित्रिर्बलेन महता वृतः ॥ निकुम्भिलायां संप्राप्य हन्तुं रावणिमाहवे ॥ ११ ॥
धनुर्मण्डलनिर्मुक्तैराशीविषविषोपमैः ॥ शरैर्हन्तुं महेष्वासो रावणिं समितिंजयः ॥ १२ ॥
तेन वीर्येण तपसा वरदानात्स्वयंभुवः ॥ अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः ॥ १३ ॥
स एष सह सैन्येन प्राप्तः किल निकुम्भिलाम् ॥ यद्युत्तिष्ठेत्कृतं कर्म हतान्सर्वांश्च विद्धि नः ॥ १४ ॥
निकुम्भिलामसंप्राप्तमहुताग्निं च यो रिपुः ॥ त्वामाततायिनं हन्यादिन्द्रशत्रोः स ते वधः ॥
वरो दत्तो महाबाहो सर्वलोकेश्वरेण वै ॥ १५ ॥
इत्येवं विहितो राजन्वधस्तस्यैष धीमतः ॥ वधायेन्द्रजितो राम संदिशस्व महाबल ॥
हते तस्मिन्हतं विद्धि रावणं ससुहृज्जनम् ॥ १६ ॥

मित्यादि ॥ व्यक्तं नोपधारयते । हृदि सम्यङ्निधातुं नाशकदित्यर्थः ॥ १—२ ॥ ते त्वया ॥ ३ ॥ यत्तत्पुनरिति । यद्वाक्यं पूर्वमुक्तवान् तदिदं पुनर्बभाष इत्यन्वयः ॥ ४ ॥ यथाज्ञप्तमित्याद्युक्तिः रामस्य व्याकुलत्वनिवारणाय ॥५—७॥ सन्तापं सन्तापं च। मिथ्येति शोकसन्तापयोर्विशेषणं । सन्तापः शोककार्यमिति तयोर्भिदा ॥८॥ उद्यमः उत्साहः॥९—१२॥ ब्रह्मशिरः ब्रह्मशिरःसंज्ञकमस्त्रं । तुरङ्गमशब्दो रथस्याप्युपलक्षणं । प्राप्तं । होमद्वारेति शेषः ॥१३॥ यदीति। यदि च निकुम्भिलाया उत्तिष्ठेत्, यदि कर्म कृतं स्यात् । तदा हतान् विद्धीत्यन्वयः ॥ १४ ॥ तर्हि कथं स वध्य इत्यत्राह—निकुम्भिलामित्यादिसार्धश्लोक एकान्वयः । यो रिपुः । अहुताग्निं असमप्तहोमं । निकुम्भिलामसंप्राप्तं निकुम्भिलाख्यन्यग्रोधमूलस्थानमसंप्राप्तं च । तमप्रविष्टन्यग्रोधमित्युत्तरसर्गे वक्ष्यति । आततायिनं शस्त्रपाणिं रिपुवधोद्यतं च त्वां यो हन्यात् हिंस्यात्, सः इन्द्रशत्रोस्ते वधो मारक इति सर्वलोकेश्वरेण ब्रह्मणा वरो दत्त इति योजना । "वध हतौ" इति धातोः पचाद्यचि वध इति रूपं । यद्यप्येतच्छापवचनमिव प्रतिभाति । तथापि निकुम्भिलाप्राप्तिहोमयोर्विघ्नाभावे अवध्य इति पर्यवसानाद्वररूपत्वं द्रष्टव्यं ॥ १५ ॥ इत्येवमित्यादिसार्धश्लोक एकान्वयः ॥ इत्येवंप्रकारेण । एषः होमविघ्नकारी तस्य इन्द्रजितः वधः मारकः । विहितः

**स०** उपासीनं समीपस्थकपिसंनिधौ सीतावार्ताकथकहनुमत्संनिहितकपिसंनिधाने । वक्तृवक्त्रदर्शनंपुनःपुनःखेदोद्बोधकमिति सूच्यतेऽनेन ॥ २ ॥ **स०** शोकपरायत्ततया श्रुतमश्रुतप्रायमितिविवक्षितंब्रूहीत्यवादीदितिभावः ॥ ३ ॥ **स०** अकारणसंतप्ते मिथ्यावार्तोत्थितेत्यकारणंसंतप्तेसति । वयंसंतप्तहृदयाः । 'अस्मदोद्वयोश्च' इतिवयमितिबहुवचनं । अस्मदादयइत्याद्यर्थोवा । मिथ्येतिभिन्नंपदं । संतापं सं अत्यन्तं तापयतिपार्श्वस्थानस्मानितिसतथातं । मिथ्या मिथ्याभूतसीतावधश्रवणजत्वान्मिथ्याभूतं । आगतंशोकंत्यज ॥ ८ ॥ **स०** यद्यस्मात् शत्रुहर्षविवर्धिनी तस्मादियंचिन्तात्यज्यतामित्यन्वयः ॥ ९ ॥ **स०** यदिसीताप्राप्तव्या । निशाचराश्चयदिहन्तव्यास्तर्हि हेवीरउद्यमःक्रियतां । त्वया हर्षःसमुपसेव्यताम् ॥ १० ॥ **स०** यदिकृतंकर्मनिमित्तीकृत्योत्तिष्ठेत्

**[ पा० ]** १ झ. ञ. ट. यदियं. २ ग. ङ. च. झ. ट. संप्राप्तं. ३ क. ख. घ. ज. निर्मुक्तैःशरैराशीविषोपमैः. ४ घ. इतंहन्तुं. ५ ङ. झ. ट. मकृताग्निंच. ६ घ. संदिशास्य. ७ ङ. ज.—ट. महाबलं. ८ ख. ङ. झ. ञ. ट. ससुहृद्गणं.

विभीषणवचः श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १७ ॥
जानामि तस्य रौद्रस्य मायां सत्यपराक्रम ॥ स हि ब्रह्मास्त्रवित्प्राज्ञो महामायो महाबलः ॥
करोत्यसंज्ञान्सङ्ग्रामे देवान्सवरुणानपि ॥ १८ ॥
तस्यान्तरिक्षे चरतो रथस्थस्य महायशः ॥ न गतिर्ज्ञायते तस्य सूर्यस्येवाभ्रसंप्लवे ॥ १९ ॥
राघवस्तु रिपोर्ज्ञात्वा मायावीर्यं दुरात्मनः ॥ लक्ष्मणं कीर्तिसंपन्नमिदं वचनमब्रवीत् ॥ २० ॥
यद्वानरेन्द्रस्य बलं तेन सर्वेण संवृतः ॥ हनुमत्प्रमुखैश्चैव यूथपैः सह लक्ष्मण ॥ २१ ॥
जाम्बवेनर्क्षपतिना सहसैन्येन संवृतः ॥ जहि तं राक्षससुतं मायाबलविशारदम् ॥ २२ ॥
अयं त्वां सचिवैः सार्धं महात्मा रजनीचरः ॥ अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ॥ २३ ॥
राघवस्य वचः श्रुत्वा लक्ष्मणः सविभीषणः ॥ जग्राह कार्मुकश्रेष्ठमत्यद्भुतपराक्रमः ॥ २४ ॥
सन्नद्धः कवची खड्गी सशरो हेमचापधृत् ॥ रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥ २५ ॥
अद्य मत्कार्मुकोन्मुक्ताः शरा निर्भिद्य रावणिम् ॥ लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ॥ २६ ॥
अद्यैव तस्य रौद्रस्य शरीरं मामकाः शराः ॥ विधमिष्यन्ति भित्त्वा तं महाचापगुणच्युताः ॥ २७॥
स एवमुक्त्वा द्युतिमान्वचनं भ्रातुरग्रतः ॥ स रावणिवधाकाङ्क्षी लक्ष्मणस्त्वरितो ययौ ॥ २८ ॥
सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् ॥ निकुम्भिलामभिययौ चैत्यं रावणिपालितम् ॥२९॥
विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ ॥ ३० ॥
वानराणां सहस्रैस्तु हनुमान्बहुभिर्वृतः ॥ विभीषणश्च सामात्यस्तदा लक्ष्मणमन्वगात् ॥ ३१ ॥
महता हरिसैन्येन सवेगमभिसंवृतः ॥ ऋक्षराजबलं चैव ददर्श पथि विष्ठितम् ॥ ३२ ॥
स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः ॥ राक्षसेन्द्रबलं दूरादपश्यद्व्यूहमास्थितम् ॥ ३३ ॥
स तं प्राप्य धनुष्पाणिर्मायायोगमरिन्दमः ॥ तस्थौ ब्रह्मविधानेन विजेतुं रघुनन्दनः ॥ ३४ ॥

---

ब्रह्मणा क्लृप्तः । तस्मात् तस्य इन्द्रजितो वधाय संदिशस्व । अस्मासु कंचिदिति शेषः ॥ १६—१८ ॥ तस्य प्रसिद्धस्येति सूर्यविशेषणं द्वितीयं तस्येति पदं । अभ्रसंप्लवे मेघावरणे ॥ १९–२० ॥ यद्वानरेन्द्रस्येत्यादिश्लोकत्रयमेकान्वयं ॥ जाम्बवेन जाम्बवता । सहसैन्येन सैन्यसहितेन । " वोपसर्जनस्य " इति विकल्पेन सभावाभावः । संवृतः । त्वमिति शेषः ॥ २१–२७ ॥ असत्यपि कर्तृभेदे क्रियाभेदमाश्रित्य स इति द्विरुक्तिः। स एवमुक्त्वा स ययाविति निर्वाहः। वस्तुतस्तु स लक्ष्मणः । सः तादृशवीरवेषविशिष्ट एवेत्यर्थः । यद्वा सरावणिवधाकाङ्क्षीत्येकं पदं । रावणिना सहवर्तन्त इति सरावणयः निकुम्भिलास्था राक्षसाः । तेषां वधाकाङ्क्षीत्यर्थः ॥ २८—३३ ॥ स तं प्राप्येत्यादिश्लोकद्वयमेकान्वयं ॥ ब्रह्मविधानेन निकुम्भिलामसंप्राप्तमित्यादिनोक्तब्रह्मवरदानप्रकारेण । मायायोगं मायारूपोपायं । तं इन्द्रजितं विजेतुं प्राप्य तस्थौ । मायायागमिति पाठे मायायागं जेतुं नाश-

---

तदा नःसर्वान्हतान्विद्धि ॥ १४ ॥ ति० मायानामभिज्ञातस्य तद्विषयज्ञानवतः । अभिज्ञस्तस्येतिपाठेप्ययमेवार्थः ॥ शि० अभिज्ञेतिपाठे तृतीयान्तत्वात्सहितइत्यध्याहार्यं ॥ २३ ॥ ति० वामचापभृत् वामहस्तेनचापभृत् ॥ २५ ॥ ति० ब्रह्मविधानेन " निकुंभिलामसंप्राप्तः " इत्याद्युक्तब्रह्मवरदानप्रकारेणतंविजेतुंतस्थौ ॥ कतक० ब्रह्मविमानेनेतिपाठान्तरं । ब्रह्मविमानेन ब्रह्मणोभगवतस्तेजोंऽशोऽहमस्मीतिविशिष्यजायमानेनध्यानेनशत्रुंजेतुंतस्थौ । संकटकालेतादृशध्यानस्यतस्यनिसर्गसिद्धत्वात् ॥ ३४ ॥ इतिपञ्चाशीतितमःसर्गः ॥ ८५ ॥

[ पा० ] १ ख. ङ. च. झ. ञ. ट. ज्ञायतेवीर. २ ङ. झ. अभिज्ञातस्यमायानां. ट. अभिज्ञस्तस्यमायानां. ३ क. घ. ङ. ज.—ट. मन्यद्भीमपराक्रमः. ख. मन्यद्धोरपराक्रमः. ४ झ. ञ. ट. वामचापभृत्. ५ ङ. च. झ. ञ. ट. सामात्योलक्ष्मणंत्वरितंययौ. ६ क.—ङ. ज.—ट. ससंप्राप्य.

विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ अङ्गदेन च वीरेण तथाऽनिलसुतेन च ॥ ३५ ॥
विविधममलशस्त्रभास्वरं तद्ध्वजगहनं विपुलं महारथैश्च ॥
प्रतिभयतममप्रमेयवेगं तिमिरमिव द्विषतां बलं विवेश ॥ ३६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

## षडशीतितमः सर्गः ॥ ८६ ॥

निकुंभिलासमीपगमनावसरेलक्ष्मणंप्रतिविभीषणेन समीपस्थराक्षससैन्यप्रदर्शनपूर्वकं वानरैस्सहतद्विक्षोभे यागापरिसमाप्तावेवेन्द्रजिन्निर्गमनोक्तिः ॥ १ ॥ लक्ष्मणेन वानरैस्सह राक्षससेनाविक्षोभारंभे कुपितेनेन्द्रजिता यागापरिसमाप्तावेवनिकुंभिलातोनिर्गमनेन वानरैस्सहयुद्धारंभः ॥ २ ॥ हनुमता विशेषतोराक्षससेनाविध्वंसने क्रोधादिन्द्रजितातदभिद्रवणम् ॥ ३ ॥

अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः ॥ परेषामहितं वाक्यमर्थसाधकमब्रवीत् ॥ १ ॥
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते ॥ एतदायोध्यतां शीघ्रं कपिभिः पादपायुधैः ॥ २ ॥
अस्यानीकस्य महतो भेदने यत लक्ष्मण ॥ राक्षसेन्द्रसुतोप्यत्र भिन्ने दृश्यो भविष्यति ॥ ३ ॥
स त्वमिन्द्राशनिप्रख्यैः शरैरवकिरन्परान् ॥ अभिद्रवाशु यावद्वै नैतत्कर्म समाप्यते ॥ ४ ॥
जहि वीर दुरात्मानं मायापरमधार्मिकम् ॥ रावणिं क्रूरकर्माणं सर्वलोकभयावहम् ॥ ५ ॥
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः ॥ ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ॥ ६ ॥
ऋक्षाः शाखामृगाश्चापि द्रुमाद्रिनखयोधिनः ॥ अभ्यधावन्त सहितास्तदनीकमवस्थितम् ॥ ७ ॥
राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः ॥ उद्यतैः समवर्तन्त कपिसैन्यजिघांसवः ॥ ८ ॥
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् ॥ शब्देन महता लङ्कां नादयन्वै समन्ततः ॥ ९ ॥
शस्त्रैश्च बहुधाकारैः शितैर्बाणैश्च पादपैः ॥ उद्यतैर्गिरिशृङ्गैश्च घोरैराकाशमावृतम् ॥ १० ॥
ते राक्षसा वानरेषु विकृताननबाहवः ॥ निवेशयन्तः शस्त्राणि चक्रुस्ते सुमहद्भयम् ॥ ११ ॥
तथैव सकलैर्वृक्षैर्गिरिशृङ्गैश्च वानराः ॥ अभिजघ्नुर्निजघ्नुश्च समरे राक्षसर्षभान् ॥ १२ ॥
ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः ॥ रक्षसां वध्यमानानां महद्भयमजायत ॥ १३ ॥

---

यितुं । तं देशं प्राप्य तस्थावित्यन्वयः ॥ ३४–३५ ॥ प्रतिभयतमं अतिशयेन भयंकरं ॥ ३६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चाशीतितमःसर्गः ८५॥

अथेन्द्रजिद्युद्धारम्भः—अथ तस्यामित्यादि ॥ तस्यामवस्थायां निकुम्भिलासमीपगमनावसरे । अर्थसाधकं । स्वानामिति शेषः॥१॥ आयोध्यतां हन्यतां । शीघ्रमिति । विलम्बे यागः समाप्येतेति भावः॥२॥ यत यतस्व । अत्र राक्षसानीके ॥३—५॥ शुभलक्षणः सुहृद्वचनसारग्राहित्वलक्षणयुक्तः ॥ ६—७ ॥ कपिसैन्यजिघांसवः कपिसैन्यं हन्तुमिच्छवः ॥ ८ ॥ संप्रहारः युद्धं ॥ ९–१० ॥ शस्त्रनिवेशनविकृताननबाहुत्वरूपक्रियाभेदात् तच्छब्दद्वयनिर्वाहः ॥ ११—

---

ती० मायापरमधार्मिकं परमधार्मिकवत्प्रतीयमानं ॥ स० मायापरमधार्मिकं माययापरमधनुर्धारिणंवा । मायापरं अधार्मिकमितिवा ॥ ५ ॥

[ पा० ] १ ङ. झ. ट. गहनंमहारथैश्च. २ ङ. झ. ञ. ट. कपिभिश्चशिलायुधैः. ३ ङ. झ. ट. तस्यानीकस्य. ४ ख रवकिरस्तह. ५ क. ख. च. मायाधरं. ६ ङ. झ. ञ. शरवर्षेण. ७ झ. ञ. ट. अभ्यवर्तन्तसमरेकपिसैन्य. ८ ङ. च. झ. ञ. ट. सर्वराक्षसान्. ९ ङ. च. झ. ट. युध्यमानानां.

स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम् ॥ उदतिष्ठत दुर्धर्षस्तत्कर्मण्यननुष्ठिते ॥ १४ ॥
वृक्षान्धकारान्निर्गत्य जातक्रोधः स रावणिः ॥ आरुरोह रथं सज्जं पूर्वयुक्तं स राक्षसः ॥ १५ ॥
स भीमकार्मुकधरः कालमेघसमप्रभः ॥ रक्तास्यनयनः क्रुद्धो बभौ मृत्युरिवान्तकः ॥ १६ ॥
दृष्ट्वैव तु रथस्थं तं पर्यवर्तत तद्बलम् ॥ रक्षसां भीमवेगानां लक्ष्मणेन युयुत्सताम् ॥ १७ ॥
तस्मिन्काले तु हनुमानुद्यम्य सुदुरासदम् ॥ धरणीधरसंकाशो महावृक्षमरिन्दमः ॥ १८ ॥
स राक्षसानां तत्सैन्यं कालाग्निरिव निर्दहन् ॥ चकार बहुभिर्वृक्षैर्निस्संज्ञं युधि वानरः ॥ १९ ॥
विध्वंसयन्तं तरसा दृष्ट्वैव पवनात्मजम् ॥ राक्षसानां सहस्राणि हनुमन्तमवाकिरन् ॥ २० ॥
शितशूलधराः शूलैरसिभिश्चासिपाणयः ॥ शक्तिभिः शक्तिहस्ताश्च पट्टिशैः पट्टिशायुधाः ॥ २१ ॥
परिघैश्च गदाभिश्च चक्रैश्च शुभदर्शनैः ॥ शतशश्च शतघ्नीभिरायसैरपि मुद्गरैः ॥ २२ ॥
घोरैः परश्वधैश्चैव भिन्दिपालैश्च राक्षसाः ॥ मुष्टिभिर्वज्रकल्पैश्च तलैरशनिसन्निभैः ॥
अभिजघ्नुः समासाद्य समन्तात्पर्वतोपमम् ॥ २३ ॥
तेषामपि च संक्रुद्धश्चकार कदनं महत् ॥ २४ ॥
स ददर्श कपिश्रेष्ठमचलोपममिन्द्रजित् ॥ सूदयन्तममित्रघ्नममित्रान्पवनात्मजम् ॥ २५ ॥
स सारथिमुवाचेदं याहि यत्रैष वानरः ॥ क्षयमेष हि नः कुर्याद्राक्षसानामुपेक्षितः ॥ २६ ॥
इत्युक्तः सारथिस्तेन ययौ यत्र स मारुतिः ॥ वहन्परमदुर्धर्षं स्थितमिन्द्रजितं रथे ॥ २७ ॥
सोभ्युपेत्य शरान्खड्गान्पट्टिशांश्च परश्वधान् ॥ अभ्यवर्षत दुर्धर्षः कपिमूर्ध्नि स राक्षसः ॥ २८ ॥
तानि शस्त्राणि घोराणि प्रतिगृह्य स मारुतिः ॥ रोषेण महताऽऽविष्टो वाक्यं चेदमुवाच ह ॥२९॥
युध्यस्व यदि शूरोसि रावणात्मज दुर्मते ॥ वायुपुत्रं समासाद्य जीवन्न प्रतियास्यसि ॥ ३० ॥
बाहुभ्यां प्रतियुध्यस्व यदि मे द्वन्द्वमाहवे ॥ वेगं सहस्व दुर्बुद्धे ततस्त्वं रक्षसां वरः ॥ ३१ ॥
हनुमन्तं जिघांसन्तं समुद्यतशरासनम् ॥ रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३२ ॥

---

१३ ॥ तत्कर्मणि तस्मिन्होमकर्मणि ॥ १४ ॥ वृक्षान्धकारात् नीरन्ध्रवृक्षषण्डादित्यर्थः । सज्जं आयुधादिभिः । पूर्वयुक्तं पूर्वमेव युक्ताश्वं । सराक्षसः राक्षससहितः ॥ १५ ॥ अन्तकः अन्तकरः ॥ १६ ॥ पर्यवर्तत परितोतिष्ठत् ॥ १७ ॥ तस्मिन्नित्यादि ॥ आदावेकं वृक्षमुद्यम्य निर्दहन्सन् पश्चात् बहुभिर्वृक्षैस्तद्रक्षोबलं निःसंज्ञं चकारेत्यन्वयः ॥ १८—२० ॥ अवाकिरन्नित्युक्तं प्रपञ्चयति—शितेत्यादि ॥ शितशूलधरा इत्यादिविशेषणेन येषां येष्वस्त्रेष्वत्यन्तपाटवमस्ति तैस्ते अवाकिरन्निति गम्यते । परिघैरित्यादौ परिघपाणयइत्याद्यूह्यं । शुभदर्शनैरित्यनेन तैक्ष्ण्यमुपलक्ष्यते । पर्वतोपमं हनुमन्तमिति शेषः ॥ २१—२३ ॥ तेषामित्यर्धे ॥ संक्रुद्धः । हनुमानिति शेषः ॥२४—२५॥ हि यस्मात्कारणात् । उपेक्षितः एषः नः अस्माकं संबन्धिनां राक्षसानां क्षयं कुर्यात् । अतः एष वानरो यत्र । वर्तत इति शेषः । तत्र याहीतीदं वचः सारथिमुवाचेत्यन्वयः ॥ २६ ॥ वहन् प्रापयन् ॥ २७ ॥ सोभ्युपेत्येति । अत्रापि क्रियाभेदात् तच्छब्दस्य द्विःप्रयोगः ॥ २८—३० ॥ द्वन्द्वं द्वन्द्वयुद्धं । ददासीति शेषः । यदि ददासि तर्हि शस्त्राणि त्यक्त्वा बाहुभ्यां प्रतियुध्यस्वेत्यन्वयः । ततः तदानीं द्वन्द्वयुद्धकाले

---

ति० वृक्षान्धकारात् निकुंभिलाक्षेत्रीयात् । इदंनिस्सरणंदशम्यांसायाह्ने ॥ १५ ॥ इतिषडशीतितमः सर्गः ॥ ८६ ॥

[ पा० ] १ ङ. झ. ट. स्सकर्मण्यननु. २ ङ. झ. ट. सुसंयतं. ३ क. ख. घ. ङ. च. ज.—ट. कार्मुकशरः. ४ क. ख. ग. ङ. च. ज. झ. ट. कृष्णाञ्जनचयोपमः. ५ ज. युयुत्सया. ६ ङ. च. झ. कुन्तैश्च. ७ ग. घ. च. ज. ञ. ट. वज्रवेगैश्च. ८ क. ख. सूदयानमसंत्रस्तं. घ. च. ज. ट. सूदयानममित्रघ्नं. ९ क.—च. झ. ञ. पट्टिशासिपरश्वधान्. १० घ. रावणिंदुष्टमाचष्टे.

यः स वासवनिर्जेता रावणस्यात्मसंभवः ॥ स एष रथमास्थाय हनुमन्तं जिघांसति ॥ ३३ ॥
तमप्रतिमसंस्थानैः शरैः शत्रुविदारणैः ॥ जीवितान्तकरैर्घोरैः सौमित्रे रावणिं जहि ॥ ३४ ॥
इत्येवमुक्तस्तु तदा महात्मा विभीषणेनारिविभीषणेन ॥
ददर्श तं पर्वतसन्निकाशं रणे[1] स्थितं भीमबलं नदन्तम् ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

---

## सप्ताशीतितमः सर्गः ॥ ८७ ॥

विभीषणेनलक्ष्मणंप्रतिनिकुंभिलायांन्यग्रोधतरुप्रदर्शनपूर्वकंतत्रहोमसमाप्ताविन्द्रजितोदुर्जयत्वोक्त्यान्यग्रोधतलप्रवेशात्प्रागेवतद्वधचोदना ॥ १ ॥ लक्ष्मणेनरणायसमाहूतेनेन्द्रजितातत्पार्श्वस्थंविभीषणंप्रतिभ्रातृपक्षपरित्यागेनपरपक्षसमाश्रयणादिदोषोत्कीर्तनपूर्वकं गर्हणम् ॥ २ ॥ विभीषणेनतंप्रतिरावणदोषोद्घाटनपूर्वकं तत्त्यागस्यन्याय्यत्वोक्त्यातद्गर्हणम् ॥ ३ ॥

एवमुक्त्वा तु सौमित्रिं जात[2]हर्षो विभीषणः ॥ धनुष्पाणिनमादाय त्वरमाणो जगाम[3] ह ॥ १ ॥
अविदूरं ततो गत्वा प्रविश्य च महद्वनम् ॥ दर्शयामास[4] तत्कर्म लक्ष्मणाय विभीषणः ॥ २ ॥
नीलजीमूतसंकाशं न्यग्रोधं भीमदर्शनम् ॥ तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३ ॥
इहोपहारं भूतानां बलवान्रावणात्मजः ॥ उपहृत्य ततः पश्चात्सङ्ग्राममभिवर्तते ॥ ४ ॥
अदृश्यः सर्वभूतानां ततो भवति राक्षसः ॥ निहन्ति समरे शत्रून्बध्नाति च शरोत्तमैः ॥ ५ ॥
तमप्रविष्टन्यग्रोधं बलिनं रावणात्मजम् ॥ विध्वंसय शरैस्तीक्ष्णैः[5] सरथं साश्वसारथिम् ॥ ६ ॥
तथेत्युक्त्वा महातेजाः सौमित्रिर्मित्रनन्दनः ॥ बभूवावस्थितस्तत्र चित्रं विस्फारयन्धनुः ॥ ७ ॥
स रथेनाग्निवर्णेन बलवान्रावणात्मजः ॥ इन्द्रजित्कवची धन्वी[6] सध्वजः प्रत्यदृश्यत ॥ ८ ॥
तमुवाच महातेजाः पौलस्त्यमपराजितम् ॥ समाह्वये त्वां समरे सम्यग्युद्धं प्रयच्छ मे ॥ ९ ॥
एवमुक्तो महातेजा मनस्वी रावणात्मजः ॥ अब्रवीत्परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥ १० ॥
इह त्वं जातसंवृद्धः साक्षाद्भ्राता पितुर्मम ॥ कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ॥ ११ ॥

---

॥ ३१—३२ ॥ यः सः । प्रसिद्धो य इत्यर्थः ॥३३॥ अप्रतिमसंस्थानैः अनुपमसन्निवेशैः करवीरपत्राद्याकारैरित्यर्थः ॥ ३४ ॥ अरिविभीषणेन शत्रुभयंकरेण ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

---

अथेन्द्रजिद्विभीषणसंवादः—एवमुक्त्वेत्यादि ॥ धनुष्पाणिनमिति नकारान्तत्वमार्षम् ॥ १ ॥ अविदूरमिति ॥ तत्कर्म होमकर्मस्थानम् ॥ २—३ ॥ उपहारं बलिं । उपहृत्य कृत्वा । ओदनपाकं पचतीतिवत् । ततः तस्माद्देशात् ॥ ४—५ ॥ अप्रविष्टन्यग्रोधं रावणात्मजं विध्वंसय । पुनः प्रवेशात्पूर्वमेव विध्वंसयेत्यर्थः ॥ ६—८ ॥ महातेजा इति लक्ष्मणो विशेष्यः । सम्यग्युद्धं अमायायुद्धं ॥ ९ ॥ मनस्वी दृढमनस्कः ॥ १० ॥ इह लङ्कायां । जातसंवृद्धः । "पूर्वकाल—" इत्यादिना पूर्वकालार्थवाचिनो जातशब्दस्य उत्तरकालार्थवाचिना संवृद्धशब्देन सह समासः । पुत्रस्य पुत्राय । "क्रुधद्रुह—" इत्यादिना चतुर्थीनियमात् । राक्षसेत्यनेन साजात्यमपि न दृष्ट-

---

[ पा० ] १ ख. ग. घ. ज. ञ. रथेस्थितं. ङ. च. झ. ट. रथस्थितं. २ घ. जातरोषो. ३ क.—च. ज. झ. ट. जगामसः. ४ ङ. च. झ. ट. अदर्शयत. ५ ङ. झ. शरैर्दीप्तैः. ६ ङ. झ. खड्गी.

न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते ॥ प्रमाणं न च सौदर्यं न धर्मो धर्मदूषण ॥ १२ ॥
शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः ॥ यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ १३ ॥
नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरम् ॥ क्व च स्वजनसंवासः क्व च नीचपराश्रयः ॥ १४ ॥
गुणवान्वा परजनः स्वजनो निर्गुणोपि वा ॥ निर्गुणः स्वजनः श्रेयान्यः परः पर एव सः ॥ १५ ॥
यः स्वपक्षं परित्यज्य परपक्षं निषेवते ॥ स स्वपक्षे क्षयं प्राप्ते पश्चात्तैरेव हन्यते ॥ १६ ॥
[ तस्माच्छृणुष्व दुर्बुद्धे राक्षसानां कुलाधम ॥ त्वां गृह्य बन्धुरूपेण रामो बुद्धिमतांवरः ॥
ज्ञात्वोपायं त्वया पूर्वं जेतुमस्मान्स राघवः ॥ १७ ॥
जित्वाऽस्मान्युधि शक्तश्चेत्पश्चात्त्वां च वधिष्यति ॥ शत्रुस्त्वमसि रामस्य रावणस्यानुजोसि यत् ॥१८॥]
निरनुक्रोशता चेयं यादृशी ते निशाचर ॥ स्वजनेन त्वया शक्यं परुषं रावणानुज ॥ १९ ॥
इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः ॥ २० ॥
अजानन्निव मच्छीलं किं राक्षस विकत्थसे ॥ राक्षसेन्द्रसुतासाधो पारुष्यं त्यज गौरवात् ॥ २१ ॥
कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मणाम् ॥ गुणोयं प्रथमो नृणां तन्मे शीलमराक्षसम् ॥ २२ ॥
न रमे दारुणेनाहं न चाधर्मेण वै रमे ॥ भ्रात्रा विषमशीलेन कथं भ्राता निरस्यते ॥ २३ ॥
धर्मात्प्रच्युतशीलं हि पुरुषं पापनिश्चयम् ॥ त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ॥ २४ ॥
हिंसापरस्वहरणे परदाराभिमर्शनम् ॥ त्याज्यमाहुर्दुराचारं वेश्म प्रज्वलितं यथा ॥ २५ ॥

---

वानसीति व्यज्यते ॥ ११ ॥ प्रमाणं मर्यादानियामकं ॥ १२ ॥ शोच्यत्वादौ हेतुमाह—यस्त्वमिति ॥ १३ ॥ शिथिलया कोमलया, तुच्छया वा । अन्तरं तारतम्यं ॥ १४ ॥ ननु परस्य नीचत्वाभावान्न भवदुक्तदोष इत्यत्राह—गुणवानिति ॥ १५ ॥ तदेव वैषम्यं स्वरूपतो दर्शयति—य इति ॥ १६—१८ ॥ इयं होमविघातपूर्वकं लक्ष्मणस्य न्यग्रोधप्रवेशकरणरूपा । निरनुक्रोशता निर्दयता, यादृशी यथा घोरा तादृशं परुषं निर्दयत्वं । स्वजनेन बन्धुभूतेन त्वयैव कर्तुं शक्यं नान्येनेत्यर्थः । यद्वा स्वजने विषये त्वया न शक्यं न कर्तव्यं । अनुचितं कृतमिति भावः ॥ १९—२० ॥ गौरवात् । गुरोर्भावो गौरवं । पितृव्यत्वादित्यर्थः ॥ २१ ॥ रक्षसां कुले यद्यप्यहं जातः । तत् तथापि । मे शीलं अराक्षसं अक्रूरं । अयं मे शीलाख्यो गुणः नृणां सत्पुरुषाणां । प्रथमः मुख्यः ॥ २२ ॥ तन्मे शीलमराक्षसमित्युक्तमेव दर्शयति—न रम इति ॥ दारुणेन कर्मणा न रमे । अधर्मेण परपीडाकरेण च कर्मणा न रमे । न केवलं मय्येव दोषः रावणेपीत्याह—भ्रात्रेति । निरस्यते । 'त्वां तु धिक्कुलपांसनं' इति वचनेनेत्यर्थः ॥ २३ ॥ इन्द्रजिदुक्तस्वदोषपरिहाराय परित्यागहेतून् रावणदोषानाह—धर्मादित्यादिना ॥ २४ ॥ हिंसा च परस्वहरणं च ते हिंसापरस्वहरणे । हिंसादिरूपं दुराचाररूपं कर्म त्याज्यमाहुः । तद्युक्तस्त्याज्य इत्यर्थः ॥२५॥

---

स० एकैकएवप्रयोजकःप्रीतावेतन्मध्येऽन्यत्र । तेसर्वेपित्वय्यन्यथाजाताइत्याह—नज्ञातित्वमित्यादिना । जातिः राक्षसजातिः । प्रमाणं ज्येष्ठविरोधेनविरोध्याश्रयोनसंपाद्यइतिप्रवेदयत्प्रमाणं । सौदर्यं सोदरत्वं । त्रयाणामपिकैकसीपुत्रत्वात् । नचपद्मपुराणे— " निकषा पुत्रमाहूय " " निकषाचाब्रवीद्रामं " इत्युक्तेःभागवतोत्तरकाण्डादौकैकसीपुत्रत्वंकथितंतदसंगतमितिवाच्यं । तस्याएवनामान्तरंतदित्यविरोधः ॥ १२ ॥ शि० निर्गुणोपिस्वजनःश्रेयान्भवति । परोयःसगुणोपिसपरएव । स्वकुलेनसहविरोधेभिन्न एवभवतीत्यर्थः ॥१५॥ ती० नृणां सज्जनानां । यःप्रथमः मुख्यः । गुणः सात्त्विकत्वं । तत् मे अराक्षसं अक्रूरंशीलं ममगुणइत्यर्थः ॥ २२ ॥ ती० नरमइति । दारुणेनकर्मणानरमे । अधर्मेणचनरमे अन्यथा विषमशीलेन रावणाद्विलक्षणशीलेनभ्रात्रामया कथमयं भ्राता रावणः निरस्यते ॥ २३ ॥

[ पा० ] १ ङ. च. झ. ट. यातै. २ तस्माच्छृणुष्वेत्यादयःअनुजोसियदित्यन्ताःश्लोकाः क. ख. ग. छ. ज. पाठेषु दृश्यन्ते. ३ ग. ङ. ज.—ट. गुणोयः. ४ घ. छ.—ट. परस्वहरणेयुक्तंपरदाराभिमर्शकं त्याज्यमाहुर्दुरात्मानं.

परस्वानां च हरणं परदाराभिमर्शनम् ॥ सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ॥ २६ ॥
महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः ॥ अभिमानश्च कोपश्च वैरित्वं प्रतिकूलता ॥ २७ ॥
एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः ॥ गुणान्प्रच्छादयामासुः पर्वतानिव तोयदाः ॥ २८ ॥
दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ॥ नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता ॥२९॥
अतिमानी च बालश्च दुर्विनीतश्च राक्षस ॥ बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ॥ ३० ॥
अद्य ते व्यसनं प्राप्तं किं मां त्वमिह वक्ष्यसि ॥ प्रवेष्टुं न त्वया शक्यो न्यग्रोधो राक्षसाधम ॥३१॥
धर्षयित्वा च काकुत्स्थौ न शक्यं जीवितुं त्वया ॥ युध्यस्व नरदेवेन लक्ष्मणेन रणे सह ॥
हतस्त्वं देवताकार्यं करिष्यसि यमक्षये ॥ ३२ ॥
निदर्शय स्वात्मबलं समुद्यतं कुरुष्व सर्वायुधसायकव्ययम् ॥
न लक्ष्मणस्यैत्य हि बाणगोचरं त्वमद्य जीवन्सबलो गमिष्यसि ॥ ३३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

## अष्टाशीतितमः सर्गः ॥ ८८ ॥

लक्ष्मणेन्द्रजितोर्वीरवादपुरस्सरंसमरप्रवर्तनम् ॥ १ ॥

विभीषणवचः श्रुत्वा रावणिः क्रोधमूर्च्छितः ॥ अब्रवीत्परुषं वाक्यं वेगेनाभ्युत्पपात ह ॥ १ ॥
उद्यतायुधनिस्त्रिंशो रथे सुसमलंकृते ॥ कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥ २ ॥
महाप्रमाणमुद्यम्य विपुलं वेगवद्दृढम् ॥ धनुर्भीमं परामृश्य शरांश्चामित्रशातनान् ॥ ३ ॥
तं ददर्श महेष्वासो रथे सुसमलङ्कृतः ॥ अलङ्कृतममित्रघ्नं राघवस्यानुजं बली ॥
हनुमत्पृष्ठमासीनमुदयस्थरविप्रभम् ॥ ४ ॥

---

सुहृदामतिशङ्का सुहृत्स्वविश्वासः ॥ २६ ॥ दोषवत्तया यदि त्याज्यत्वं, तर्ह्यभिजनविद्यादिगुणवत्तया किमिति न ग्राह्यत्वमित्यत आह—महर्षीणामिति सार्धश्लोकद्वयमेकान्वयं ॥ अभिमानः गर्वः । वैरित्वं बद्धवैरत्वं । प्रतिकूलता परश्रेयोद्वेषित्वं । तथा चाभिजनविद्यादिगुणवत्त्वेपि परस्त्रीहरणादिदोषदूषिततया विषसंपृक्तमधुवन्न ग्राह्योयमिति भावः ॥२७–२८॥ नेयमस्तीत्यादि ॥ उत्तरक्षणे अवश्यं न शिष्यतीत्यर्थः ॥ २९–३१ ॥ देवताकार्यं यमदूतरूपदेवताकार्यं । नरकयातनानुभवं वा ॥ ३२–३३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

अथेन्द्रजिल्लक्ष्मणयुद्धं—विभीषणवच इत्यादि ॥ अभ्युत्पपात अभिमुखमुज्जगाम ॥ १ ॥ कीदृग्भूतोऽभ्युज्जगामेत्यत्राह—उद्यतेत्यादिश्लोकद्वयेन ॥ सुसमलंकृते सुष्ठु समन्तात् अलंकृते । महाप्रमाणं महादीर्घं, धनुरुद्यम्य शरान् परामृश्य गृहीत्वा । अभ्युज्जगाम अब्रवीच्चेत्यन्वयः । अमित्रान् शत्रून् शातयन्ति खण्डयन्तीत्यमित्रशातनान् ॥ २—३ ॥ रथे स्थित

---

ति० प्रतिकूलता हितवक्तृषुप्रतिकूलबुद्धिता ॥२७॥ ति० अत्रहतः यमक्षयं यमगृहंगतःसन् देवताकार्यं सर्वदेवानां संतोषरूपं । करिष्यसि ॥ ३२ ॥ इतिसप्ताशीतितमःसर्गः ॥ ८७ ॥

ति० उद्यतायुधनिस्त्रिंशः उद्यतायुधोनिस्त्रिंशोनिर्घृणश्चेत्यर्थइतिकतकः । उद्यतान्यायुधानिनिस्त्रिंशश्चयेनसः । गोबलीवर्दवत्प्रयोगइत्यन्ये ॥ स० उद्यतानिचतान्यायुधानिच । तैर्निस्त्रिंशोनिर्दयः । " निस्त्रिंशोनिर्दयेखङ्गे " इतिविश्वः । गोबलीवर्दन्याय-

[ पा० ] १ ङ. झ. ट. यमक्षयं. २ ङ. झ. ट. क्रोधेन. ३ ङ. झ. धनुर्भीमबलोभीमंशरांश्चामित्रनाशनान्. ४ घ.—छ. झ. ञ. ट. रथस्थःसमलंकृतः. ५ ख.—ङ. झ. ञ. ममित्रघ्नोरावणस्यात्मजोबली.

उवाचैनं समारब्धः सौमित्रिं सविभीषणम् ॥ तांश्च वानरशार्दूलान्पश्यध्वं मे पराक्रमम् ॥ ५ ॥
अद्य मत्कार्मुकोत्सृष्टं शरवर्षं दुरासदम् ॥ मुक्तं वर्षमिवाकाशे वारयिष्यथ संयुगे ॥ ६ ॥
अद्य वो मामका बाणा महाकार्मुकनिस्सृताः ॥ विधमिष्यन्ति गात्राणि तूलराशिमिवानलः ॥ ७॥
तीक्ष्णसायकनिर्भिन्नाञ्[1]शूलशक्त्यष्टितोमरैः ॥ अद्य वो गमयिष्यामि सर्वानेव यमक्षयम् ॥ ८ ॥
क्षिपतः शरवर्षाणि क्षिप्रहस्तस्य मे युधि ॥ जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः ॥ ९ ॥
रात्रियुद्धे मया पूर्वं वज्राशनिसमैः शरैः ॥ शायितौ स्थो मया भूमौ विसंज्ञौ सपुरस्सरौ ॥ १० ॥
स्मृतिर्न तेऽस्ति वा मन्ये [2]व्यक्तं वा यमसादनम् ॥ आशीविष[3]मिव क्रुद्धं यन्मां [4]योद्धुं व्यवस्थितः ॥११॥
तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं [5]लक्ष्मणस्तदा ॥ अभीतवदनः क्रुद्धो रावणिं वाक्यमब्रवीत् ॥ १२ ॥
उक्तश्च दुर्गमः पारः कार्याणां राक्षस त्वया ॥ कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ॥१३॥
स त्वमर्थस्य हीनार्थो दुरवापस्य केनचित् ॥ व[6]चो व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते ॥ १४ ॥
अन्तर्धानगतेनाजौ यस्त्वयाऽऽचरितस्तदा ॥ तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ १५ ॥
[8]यथा बाणपथं प्राप्य स्थितोऽहं तव राक्षस ॥ दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे ॥ १६॥
एवमुक्तो धनुर्भीमं परामृश्य महाबलः ॥ ससर्ज निशितान्बाणानिन्द्रजित्समितिंजयः ॥ १७ ॥
ते निसृष्टा महावेगाः शराः सर्पविषोपमाः ॥ संप्राप्य लक्ष्मणं पेतुः श्वसन्त इव पन्नगाः ॥ १८ ॥

इति शेषः । अलंकृतं स्वतेजसा भूषितं । हनुमत्पृष्ठमासीनमित्यनुवादेन हनुमान् पूर्वं राक्षसैर्युद्ध्वा इन्द्रजित्यागते लक्ष्मणं स्वपृष्ठभागमारोप्य स्थितवानिति गम्यते । उदयस्थरविप्रभमित्यनेन हनुमतः काञ्चनाकृतित्वं लक्ष्मणस्य रविवर्णत्वं चोक्तं ॥ ४ ॥ उवाचैनमिति त्रिपादश्लोक एकान्वयः ॥ एतत् 'अब्रवीत्परुषं' इति पूर्वोक्तस्य विवरणं नभवति । तद्विभीषणमात्रंप्रति । इदं तु सर्वान्प्रति । तच्च परुषं । इदं तु पराक्रमविषयं । समारब्धः संरब्धः ॥ ५ ॥ मुक्तं मेघमुक्तं । वारयिष्यथेत्येतत् सापहासोक्तिः ॥ ६ ॥ वः युष्माकं । विधमिष्यन्ति धक्ष्यन्ति ॥ ७ ॥ तीक्ष्णसायकेति लुप्तविभक्तिकं पदं । तीक्ष्णसायकैरित्यर्थः । शूलशक्त्यष्टितोमरैरित्यत्र शक्तियष्टितोमरैरित्यर्थः । सन्धिरार्षः । तीक्ष्णसायकैः शूलशक्त्यष्टितोमरैश्च निर्भिन्नान् वः युष्मान् । यमक्षयं यमनिलयं । गमयिष्यामीत्यन्वयः ॥ ८ ॥ जीमूतस्येति नादमात्रे दृष्टान्तः ॥ ९ ॥ आग्रहातिशयेन मयेति द्विरुक्तिः ॥ १० ॥ यन्मां योद्धुं व्यवस्थितः अतः स्मृतिर्नास्तीति वा मन्ये । अथवा यमसादनं यमप्रापणं । व्यक्तं प्रत्यक्षं प्रत्यासन्नमिति यावत् । यद्वा सादनं सदनं । स्वार्थेण् प्रत्ययः ॥ ११ ॥ अभीतवदनः भयविकृतिशून्यवदनः ॥ १२ ॥ दुर्गमः दुर्लभः । कार्याणां यमप्रापणादीनां । पारः निर्वाहः । उक्तश्च उक्त एव, न कृतः । अतो दुर्बुद्धिरसीत्यर्थः । कस्तर्हि बुद्धिमानित्यत आह—कार्याणामिति । कार्याणां कर्मणां, आचरणेनेत्यर्थः ॥ १३ ॥ अर्थस्येति तादर्थ्यसंबन्धे षष्ठी । अर्थस्य वचः प्रयोजनार्थं वचः ॥ १४ ॥ दृष्टेप्यस्मत्पराक्रमे कथमित्थं कथ्यत इत्याशङ्क्य मायामयत्वान्न स वीरसंमत इत्याह—अन्तर्धानेति ॥ आजौ युद्धे ॥ १५ ॥ प्रत्यक्षेणापि योद्धुं शक्तोस्मीत्यत आह—यथेति ॥ यथा स्थितोस्मि तथैव, तत्तेजः पूर्वकृततेजः । दर्शयस्वेत्यन्वयः ॥ १६—१७ ॥ सर्पविषोपमाः सर्पविषवत् घोराः ।

श्चागतिकागतिः ॥ २ ॥ **ति०** एवमपियन्मांयोद्धुमुपस्थितोसि तत्प्रायःपूर्वस्यतेस्मृतिर्नास्ति । वा अथवा । व्यक्तंयातोयमक्षयं । आदिकर्मणिक्तः । यमक्षयं यमगृहं प्रयातुमुपक्रान्तोसि ॥ ११ ॥ **ति०** अभीतवदनः निर्भयप्रवृत्ताभिवदनव्यवहारः ॥ **स०** अभीतवदनः भीतं भीतिस्तद्वान्अनःप्राणोयस्यसः । सनभवतीत्यभीतवदनः । भीतस्यवदनं भीतवदनं । नविद्यतेभीतवदनंयस्य सवा ॥ १२ ॥ **ती०** हेदुर्मते हीनार्थः । शत्रुविजयरूपप्रयोजनहीनःसत्वं केनचित् केनापिदुरवापस्य अर्थस्यविजयरूपप्रयोजन-

[ पा० ] १ झ. शक्त्यृष्टि. २ ङ. झ. ट. व्यक्तंयातोयमक्षयं. ३ क. ख. घ. ङ. च. झ. ञ. विषसमं. ४ ख. ङ.—ट. योद्धुमुपस्थितः. ५ ङ. झ. ट. राघवस्तदा. ६ ङ. झ. ञ. ट. वाचाव्याहृत्य. ७ ख. तदा. ८ ङ. झ. ञ. ट. स्थितोस्मि.

शरैरतिमहावेगैर्वेगवान्रावणात्मजः ॥ सौमित्रिमिन्द्रजिद्युद्धे विव्याध शुभलक्षणम् ॥ १९ ॥
स शरैरतिविद्धाङ्गो रुधिरेण समुक्षितः ॥ शुशुभे लक्ष्मणः श्रीमान्विधूम इव पावकः ॥ २० ॥
इन्द्रजित्त्वात्मनः कर्म प्रसमीक्ष्याधिगम्य च ॥ विनद्य सुमहानादमिदं वचनमब्रवीत् ॥ २१ ॥
पत्रिणः शितधारास्ते शरा मत्कार्मुकच्युताः ॥ आदास्यन्तेऽद्य सौमित्रे जीवितं जीवितान्तगाः॥२२॥
अद्य गोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण ॥ गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया ॥ २३ ॥
[ अद्य यास्यति सौमित्रे कर्णगोचरतां तव ॥ तर्जनं यमदूतानां सर्वभूतभयावहम् ] ॥ २४ ॥
क्षत्रबन्धुं सदाऽनार्यं रामः परमदुर्मतिः ॥ भक्तं भ्रातरमद्यैव त्वां द्रक्ष्यति मया हतम् ॥ २५ ॥
विशस्तकवचं भूमौ व्यपविद्धशरासनम् ॥ हृतोत्तमाङ्गं सौमित्रे त्वामद्य निहतं मया ॥ २६ ॥
इति ब्रुवाणं संरब्धं परुषं रावणात्मजम् ॥ हेतुमद्वाक्यमर्थ्यं लक्ष्मणः प्रत्युवाच ह ॥ २७ ॥
वाग्बलं त्यज दुर्बुद्धे क्रूरकर्मासि राक्षस ॥ अथ कस्माद्वदस्येतत्संपादय सुकर्मणा ॥ २८ ॥
अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस ॥ कुरु तत्कर्म येनाहं श्रद्दध्यां तव कत्थनम् ॥ २९ ॥
अनुक्त्वा परुषं वाक्यं किंचिदप्यनवक्षिपन् ॥ अविकत्थन्वधिष्यामि त्वां पश्य पुरुषाधम ॥ ३० ॥
इत्युक्त्वा पञ्च नाराचानाकर्णापूरिताञ्शितान् ॥ निजघान महावेगाँल्लक्ष्मणो राक्षसोरसि ॥ ३१ ॥
सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ॥ नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ॥ ३२ ॥
स शरैराहतस्तेन सरोषो रावणात्मजः ॥ सुप्रयुक्तैस्त्रिभिर्बाणैः प्रतिविव्याध लक्ष्मणम् ॥ ३३ ॥
स बभूव तदा भीमो नरराक्षससिंहयोः ॥ विमर्दस्तुमुलो युद्धे परस्परजयैषिणोः ॥ ३४ ॥
उभौ हि बलसंपन्नावुभौ विक्रमशालिनौ ॥ उभावपि सुविक्रान्तौ सर्वशस्त्रास्त्रकोविदौ ॥
उभौ परमदुर्जयावतुल्यबलतेजसौ ॥ ३५ ॥
युयुधाते तदा वीरौ ग्रहाविव नभोगतौ ॥ ३६ ॥
बलवृत्राविवाभीतौ युधि तौ दुष्प्रधर्षणौ ॥ युयुधाते महात्मानौ तदा केसरिणाविव ॥ ३७ ॥
बहूनवसृजन्तौ हि मार्गणौघानवस्थितौ ॥ नरराक्षससिंहौ तौ प्रहृष्टावभ्ययुध्यताम् ॥ ३८ ॥

पेतुः । भूमाविति शेषः ॥ १८ ॥ शरैरिति । अतिविव्याधेत्यन्वयः । "व्यवहिताश्च" इति व्यवहितप्रयोगः ॥ १९—२० ॥ अधिगम्य फलवत्त्वेन दृष्ट्वा ॥ २१—२५ ॥ विशस्तेति । विशस्तं भिन्नं कवचं यस्य तं त्वां रामो द्रक्ष्यतीत्यनुषङ्गेण योजना ॥ २६—२७ ॥ अथ इदानीं ॥ २८—३१ ॥ सुपत्रवाजिताः सुपत्रैः संजातवेगाः ॥ ३२—३३ ॥ विमर्दः संघर्षः ॥ ३४ ॥ उभौ हीत्यादिसार्धश्लोक एकान्वयः ॥ सुविक्रान्तौ सुष्ठुपराक्रमौ ॥ ३५ ॥ युयुधाते इत्याद्यर्धं ॥ ३६ ॥ बलशब्दो बलशत्रिवन्द्र-

स्यसंबन्धिवचोव्याहृत्य कृतार्थोस्मि कृतकृत्योस्मीतिजानीषइतियोजना ॥ १४ ॥ ती० पत्रिणःशितधाराइत्यादिश्लोकचतुष्टयस्य श्रुतार्थःस्पष्टः । वास्तवार्थस्तुहेसौमित्रे मत्कार्मुकच्युताःशराः अप्रयोजकशराइत्यर्थः । तेतवशितधाराः जीवितान्तकाःपत्रिणः । मत्तःजीवितमादास्यन्तइतिसंबन्धः ॥ अद्येति । हेलक्ष्मण त्वामुद्दिश्य मया लक्ष्म्या लङ्कैश्वर्येणसहगतासुं मामितिशेषः । गोमाय्वादयःनिपतन्त्विति संबन्धः ॥ क्षत्रबन्धुमिति । सदानार्यमित्यत्रसदा न आर्यमितिच्छेदः । हेसदान दानसहित दानशीलेत्यर्थः । क्षत्रबन्धुं क्षत्रस्यराघवस्यबन्धुं । अतःभ्रातरं अतएवार्यंमयाअहतंत्वां परमदुर्मतिः परमदुष्टेष्वपिमतिःअनुग्रहरूपायस्यसःरामः अद्यद्रक्ष्यतीतिसंबन्धः ॥ विशस्तेति । हेसौमित्रे त्वां विनेतिशेषः । विशस्तकवचं हृतोत्तमाङ्गं मयानिहतंसैन्यंत्वितिशेषः । रामोद्रक्ष्यतीतिपूर्वेणसंबन्धः ॥ २२—२६ ॥

[ पा० ] १ अयंश्लोकः ज. पाठेदृश्यते. २ घ. मन्वर्थं. ङ. च. छ. झ. ञ. ट. मर्थज्ञोलक्ष्मणः. ३ ङ. च. छ. झ. क्रूरकर्मन्हि. ४ ङ.—ट. श्रद्धेयं. ५ ख. त्वामद्यपुरुषान्तक. ग. ङ. झ. त्वांपश्यपुरुषादन. घ. ज. ञ. ट. त्वांपश्यपुरुषादक. ६ क. ख. पावकाः. ७ क.—घ. परस्परवधैषिणोः. ८ ङ. झ. ट. विक्रान्तौबलसंपन्नावुभौ. ९ झ. नरराक्षसमुख्यौतौ.

सुसंप्रहृष्टौ नरराक्षसोत्तमौ जयैषिणौ मार्गणचापधारिणौ ॥
परस्परं तौ प्रववर्षतुर्भृशं शरौघवर्षेण बलाहकाविव ॥ ३९ ॥
अभिप्रवृद्धौ युधि युद्धकोविदौ शरासिचण्डौ शितशस्त्रधारिणौ ॥
अभीक्ष्णमाविव्यधतुर्महाबलौ महाहवे शम्बरवासवाविव ॥ ४० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

## एकोननवतितमः सर्गः ॥ ८९ ॥

लक्ष्मणेन्द्रजितोर्महायुद्धम् ॥ १ ॥

ततः शरं दाशरथिः संधायामित्रकर्शनः ॥ ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ॥ १ ॥
तस्य ज्यातलनिर्घोषं स श्रुत्वा रावणात्मजः ॥ विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ २ ॥
तं विवर्णमुखं दृष्ट्वा राक्षसं रावणात्मजम् ॥ सौमित्रिं युद्धसंयुक्तं प्रत्युवाच विभीषणः ॥ ३ ॥
निमित्तान्यनुपश्यामि यान्यस्मिन्रावणात्मजे ॥ त्वर तेन महाबाहो भग्न एष न संशयः ॥ ४ ॥
ततः संधाय सौमित्रिर्बाणानग्निशिखोपमान् ॥ मुमोच निशितांस्तस्मिन्सर्पानिव महाविषान् ॥ ५ ॥
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः ॥ मुहूर्तमभवन्मूढः सर्वसंक्षुभितेन्द्रियः ॥ ६ ॥
उपलभ्य मुहूर्तेन संज्ञां प्रत्यागतेन्द्रियः ॥ ददर्शावस्थितं वीरं वीरो दशरथात्मजम् ॥ ७ ॥
सोभिचक्राम सौमित्रिं रोषात्संरक्तलोचनः ॥ अब्रवीच्चैनमासाद्य पुनः स परुषं वचः ॥ ८ ॥
किं न स्मरसि तद्युद्धे प्रथमे मत्पराक्रमम् ॥ निबद्धस्त्वं सह भ्रात्रा यदा भुवि विवेष्टसे ॥ ९ ॥
युवां खलु महायुद्धे शक्राशनिसमैः शरैः ॥ शायितौ प्रथमं भूमौ विसंज्ञौ सपुरस्सरौ ॥ १० ॥
स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनम् ॥ गन्तुमिच्छसि यस्मात्त्वं मां धर्षयितुमिच्छसि ॥ ११ ॥

---

परः । नामैकदेशे नामग्रहणात् ॥ ३७—३८ ॥ शरौघः मेघपक्षे जलौघः । शरशब्दो हि जलवाची । शरधिरिति समुद्रपर्यायात् ॥ ३९—४० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

अथ लक्ष्मणेन्द्रजितोः सुमहान्संप्रहारः—ततः शरमित्यादि ॥ १—२ ॥ सौमित्रिं प्रति उद्दिश्य ॥ ३ ॥ अस्मिन् यानि मुखवैवर्ण्यस्तब्धत्वादीनि निमित्तानि अनुपश्यामि, तैरयं भग्न इति जाने । तेन कारणेन त्वर त्वरस्व ॥ ४–५ ॥ सर्वसंक्षुभितेन्द्रियः संक्षुभितसर्वेन्द्रियः ॥ ६—८ ॥ त्वं भ्रात्रा सह निबद्ध इति यत् प्रथमे तद्युद्धे तस्मिन्युद्धे । मत्पराक्रमं त्वन्निबन्धनरूपं । न स्मरसि किं । यदा यत्र युद्धकाले । विवेष्टसे विवेष्टितवानसि ॥ ९ ॥ तमेव पराक्रमं विशिनष्टि—युवामिति ॥ १० ॥ व्यक्तं

---

ति० " नरराक्षसमुख्यौतौ " इत्युत्तरंश्लोकद्वयंभिन्नवृत्तंप्रक्षिप्तं । तदुत्तरंसर्गविच्छेदश्चासंप्रदायः । तयोर्युद्धस्यैवाग्रेसत्त्वेनप्रकरणान्तराभावादितिकतकः ॥ स० सुसंप्रहृष्टावित्यादिश्लोकद्वयंसर्गव्यवच्छेदकत्वेनप्रक्षिप्तमितिसंप्रदायः ॥ ४० ॥ इत्यष्टाशीतितमःसर्गः ॥ ८८ ॥

स० यानि पराजयकालेतत्सूचकत्वेनगृहीतव्याप्तिकानि तानिनिमित्तानि वदनवैवर्ण्यादीनि अस्मिन्ननुपश्यामि । त्वर त्वरस्व ॥ ४ ॥ स० विषवैद्यः विषोल्बणान् सर्पान्पेव्यायथामुञ्चति तथाऽऽशीविषोपमान् शरान् । मुमोच । सर्पान् अनयतिचेष्टयतीतिसर्पान् विषवैद्यः । विषोल्बणान् सर्पानिवेतिवा । अस्मिन्पक्षेनाध्याहारः ॥ ५ ॥

[ पा० ] १ सुसंप्रहृष्टाविति, अभिप्रवृद्धावितिचश्लोकद्वयं झ. पाठेनदृश्यते. अत्रसर्गविच्छेदश्चनोपलभ्यते. २ ङ. झ. ञ. ट. शरान्दाशरथिः. ३ झ. ञ. ट. शरानाशीविषोपमान्. ४ ङ. च. झ. ट. विषोल्बणान्. ५ क. ङ. च. छ. झ. ट. युधिविचेष्टसे.

यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः ॥ अद्य[1] ते दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ १२ ॥
इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् ॥ दशभिस्तु हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ १३ ॥
ततः शरशतेनैव सुप्रयुक्तेन वीर्यवान् ॥ क्रोधाद्द्विगुणसंरब्धो निर्बिभेद विभीषणम् ॥ १४ ॥
तद्दृष्ट्वेन्द्रजिता कर्म कृतं रामानुजस्तदा ॥ अचिन्तयित्वा प्रहसन्नैतत्किंचिदिति ब्रुवन् ॥
मुमोच स शरान्घोरान्संगृह्य नरपुङ्गवः ॥ १५ ॥
अभीतवदनः क्रुद्धो रावणिं[2] लक्ष्मणो युधि ॥ नैवं रणगताः शूराः प्रहरन्ते निशाचर ॥ १६ ॥
लघवश्चाल्पवीर्याश्च सुखा हीमे शरास्तव ॥ नैवं शूरास्तु युध्यन्ते समरे जयकाङ्क्षिणः[3] ॥
इत्येवं तं ब्रुवाणस्तु[4] शरवर्षैरवाकिरत् ॥ १७ ॥
तस्य बाणैः सुविध्वस्तं कवचं हेमभूषितम् ॥ व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरात् ॥ १८ ॥
विधूतवर्मा नाराचैर्बभूव स कृतव्रणः ॥ इन्द्रजित्समरे वीरैः[5] प्ररूढ इव सानुमान् ॥ १९ ॥
ततः शरसहस्रेण संक्रुद्धो रावणात्मजः ॥ बिभेद समरे वीरं लक्ष्मणं भीमविक्रमः ॥ २० ॥
व्यशीर्यत महादिव्यं कवचं लक्ष्मणस्य च ॥ कृतप्रतिकृतान्योन्यं बभूवतुरभिद्रुतौ[6] ॥ २१ ॥
अभीक्ष्णं निश्श्वसन्तौ तौ युध्येतां तुमुलं युधि ॥ शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥ २२ ॥
सुदीर्घकालं तौ वीरावन्योन्यं निशितैः शरैः ॥ ततक्षतुर्महात्मानौ रणकर्मविशारदौ ॥ २३ ॥
बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ ॥ तौ शरौघैस्तदा कीर्णौ निकृत्तकवचध्वजौ ॥
स्रवन्तौ रुधिरं चोष्णं जलं प्रस्रवणाविव ॥ २४ ॥
शरवर्षं ततो घोरं मुञ्चतोर्भीमनिस्स्वनम् ॥ सासारयोरिवाकाशे नीलयोः कालमेघयोः ॥ २५ ॥
तयोरथ महान्कालो व्यत्ययाद्[7]युध्यमानयोः ॥ न च तौ युद्धवैमुख्यं श्रमं वाऽप्युपजग्मतुः ॥ २६ ॥
अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः ॥ शरानुच्चावचाकारानन्तरिक्षे बबन्धतुः ॥ २७ ॥
व्यपेतदोषमस्यन्तौ लघु चित्रं च सुष्ठु च ॥ उभौ तौ तुमुलं घोरं चक्रतुर्नरराक्षसौ ॥ २८ ॥
तयोः पृथक्पृथक्भीमः शुश्रुवे तलनिस्वनः[8] ॥ प्रकम्पयञ्जनं घोरो निर्घात[9] इव दारुणः ॥ २९ ॥
स तयोर्भ्राजते शब्दस्तदा समरसक्तयोः ॥ सुघोरयोर्निष्टनतो[10]र्गगने मेघयोर्यथा ॥ ३० ॥

---

नूनमित्यर्थः ॥ ११—१३ ॥ क्रोधाद्द्विगुणसंरब्ध इति । लक्ष्मणादिविषयरोषापेक्षया विभीषणविषये द्विगुणं कुपित इत्यर्थः ॥ १४ ॥ तद्दृष्ट्वेत्यादिसार्धश्लोक एकान्वयः ॥ नैतत्किंचिदिति ब्रुवन् एतदकिंचित्करमिति ब्रुवन्नित्यर्थः ॥ १५ ॥ अभीतवदन इत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ अकिंचित्करत्वमेवाह—नैवमिति ॥ १६—१८ ॥ प्ररूढः प्ररूढवृक्षः ॥ १९—२० ॥ कृते प्रतिकृतं अन्योन्यं यस्मिन् कर्मणि तत्तथोक्तं ॥ २१ ॥ युध्येतां अयुध्येतां ॥ २२ ॥ ततक्षतुः अन्योन्यं बभञ्जतुः ॥ २३ ॥ यत्तौ यत्नवन्तौ ॥ २४ ॥ शरवर्षमित्यादिश्लोकद्वयमेकान्वयं ॥ सासारयोः सधारापातयोः । "धारासंपात आसारः" इत्यमरः ॥ २५—२७ ॥ व्यपेतदोषं व्यपगतमोहत्वदोषं । अस्यन्तौ बाणान्क्षिपन्तौ ॥ २८—३० ॥

---

स० व्यवस्थितः युद्धार्थंनिश्चितः सन् । तिष्ठ । व्यवस्थितः अवस्थितस्संस्त्वांदर्शयिष्यामीतिवा । अनेनपूर्वंवदन्तर्धानंनास्तीतिसूच्यते ॥ १२ ॥ ति० प्रत्यूषेभानुमानिवक्षतजरक्तवर्णत्वादितिभावः ॥ १९ ॥ स० उच्चावचाकारान् अनेकप्रभेदविशिष्टाकारान् ॥ २७ ॥

[ पा० ] १ क. ख. घ.—छ. झ. ञ. ट. अचलां. २ ज. रावणिंवाक्यमब्रवीत्. क. ख. रावणिंलक्ष्मणोब्रवीत्. च. रावणिंलक्ष्मणोवदत्. ३ ङ. झ. ञ. ट. युद्धकाङ्क्षिणः. ४ ङ. च. झ. ञ. ट. ब्रुवन्धन्वीशरैरभिववर्षह ख. वदन्वीरःशरैरभिववर्षह. ५ ङ. झ. ट. वीरः प्रत्यूषेभानुमानिव. ६ ख. च. ट. ररिंदमौ. ७ ग. ङ.—ट. व्यतीयात्. ८ झ. ञ. ट. तुमुलस्वनः. ९ ङ. झ. ट. सकंपंजनयामासनिर्घातइव. १० ङ. झ. ञ. ट. निस्स्वनतोः.

सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ ॥ प्रसुस्रुवाते रुधिरं कीर्तिमन्तौ जये धृतौ ॥ ३१ ॥
ते गात्रयोर्निपतिता रुक्मपुङ्खाः शरा युधि ॥ असृङ्दिग्धा विनिष्पत्य विविशुर्धरणीतलम् ॥ ३२ ॥
अन्ये सुनिशितैः शस्त्रैराकाशे संजघट्टिरे ॥ बभञ्जुश्चिच्छिदुश्चान्ये तयोर्बाणाः सहस्रशः ॥ ३३ ॥
स बभूव रणो घोरस्तयोर्बाणमयश्चयः ॥ अग्निभ्यामिव दीप्ताभ्यां सत्रे कुशमयश्चयः ॥ ३४ ॥
तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः ॥ सपुष्पाविव निष्पत्रौ वने शाल्मलिकिंशुकौ ॥ ३५ ॥
चक्रतुस्तुमुलं घोरं सन्निपातं मुहुर्मुहुः ॥ इन्द्रजिल्लक्ष्मणश्चैव परस्परवधैषिणौ ॥ ३६ ॥
लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् ॥ अन्योन्यं तावभिघ्नन्तौ न श्रमं प्रत्यपद्यताम् ॥ ३७ ॥
बाणजालैः शरीरस्थैरवगाढैस्तरस्विनौ ॥ शुशुभाते महावीर्यौ प्ररूढाविव पर्वतौ ॥ ३८ ॥
तयो रुधिरसिक्तानि संवृतानि शरैर्भृशम् ॥ बभ्राजुः सर्वगात्राणि ज्वलन्त इव पावकाः ॥ ३९ ॥
तयोरथ महान्कालो व्यत्ययाद्युध्यमानयोः ॥ न च तौ युद्धवैमुख्यं श्रमं वाऽप्युपजग्मतुः ॥ ४० ॥
अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य ॥
प्रियहितमुपपादयन्महौजाः समरमुपेत्य विभीषणोऽवतस्थे ॥ ४१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ॥ ९० ॥

विभीषणेन्द्रजितोर्युद्धम् ॥ १ ॥ हनुमदादीनांराक्षसैस्सहमहायुद्धम् ॥ २ ॥ पुनर्लक्ष्मणेन्द्रजितोर्युद्धम् ॥ ३ ॥ लक्ष्मणेनेन्द्रजित्सारथिवधः ॥ ४ ॥ प्रमाथिप्रमुखवानरैर्हयहननपूर्वकमिन्द्रजिद्रथविमथनम् ॥ ५ ॥

युध्यमानौ तु तौ दृष्ट्वा प्रसक्तौ नरराक्षसौ ॥ प्रभिन्नाविव मातङ्गौ परस्परवधैषिणौ ॥ १ ॥
तौ द्रष्टुकामः संग्रामे परस्परगतौ बली ॥ शूरः स रावणभ्राता तस्थौ संग्राममूर्धनि ॥ २ ॥
ततो विस्फारयामास महद्धनुरवस्थितः ॥ उत्ससर्ज च तीक्ष्णाग्रान्राक्षसेषु महाशरान् ॥ ३ ॥

धृतौ अवहितौ ॥ ३१—३२ ॥ तयोः अन्ये केचन बाणाः आकाशे सुनिशितैः शस्त्रैः संजघट्टिरे संघट्टिताः । अन्ये बाणाः बाणान् सहस्रशः बभञ्जुः । चिच्छिदुश्चेति संबन्धः ॥ ३३ ॥ रणः घोरो बभूव । यस्मिन् तयोर्बाणमयश्चयः सत्रे दीप्ताभ्यामग्निभ्यां सहितः कुशमयश्चय इवासीत् । अग्नी गार्हपत्याहवनीयौ ॥ ३४—३५ ॥ सन्निपातं युद्धं ॥ ३६ ॥ प्रत्यपद्यतां प्रत्यपद्येतां ॥ ३७—३८ ॥ बभ्राजुः । आर्षं परस्मैपदं ॥ ३९—४१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

अथेन्द्रजितो रथभङ्गः—युध्यमानौ त्वित्यादिश्लोकद्वयमेकान्वयं ॥ प्रभिन्नौ मत्तमातङ्गाविव परस्परगतौ परस्परं युद्धार्थं सङ्गतौ । तौ लक्ष्मणेन्द्रजितौ प्रथमं द्रष्टुकामः स विभीषणस्तौ दृष्ट्वा संग्राममूर्धनि योद्धुं तस्थावित्यन्वयः । स्वयं प्रथमं युद्धं कर्तुमुद्युक्तोपि तयोर्बलाधिक्यं द्रष्टुं तूष्णीं स्थितः । तयोर्बलतौल्ये दृष्टे स्वस्य रामविषयकिञ्चित्कारार्थमिदानीं युद्धाय तस्थावित्यर्थः ॥ १—२ ॥ धनुः तादात्विकं

ती० समरपरिश्रमं समरेपरिश्रमोयस्तं । इन्द्रजितमितिशेषः ॥ ४१ ॥ इत्येकोननवतितमःसर्गः ॥ ८९ ॥

[ पा० ] १ ङ.—ट. असृग्दिग्धाविनिष्पेतुर्विविशुः. २ क. ख. ग. ङ.—ट. परस्परजयैषिणौ. ३ क. ग. ङ. च. झ. ञ. व्यतीयात्. ४ ख. च. छ. झ. ञ. ट. न्महात्मा.

ते शराः शिखिसंकाशा निपतन्तः समाहिताः ॥ राक्षसान्दारयामासुर्वज्राणीव महागिरीन् ॥ ४ ॥
विभीषणस्यानुचरास्तेऽपि शूलासिपट्टिशैः ॥ चिच्छिदुः समरे वीरान्राक्षसान्राक्षसोत्तमाः ॥ ५ ॥
राक्षसैस्तैः परिवृतः स तदा तु विभीषणः ॥ बभौ मध्ये प्रहृष्टानां कलभानामिव द्विपः ॥ ६ ॥
ततः संचोदयानो वै हरीन्रक्षोरणप्रियान् ॥ उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७ ॥
एकोऽयं राक्षसेन्द्रस्य परायणमिव स्थितः ॥ एतच्छेषं बलं तस्य किं तिष्ठत हरीश्वराः ॥ ८ ॥
अस्मिन्विनिहते पापे राक्षसे रणमूर्धनि ॥ रावणं वर्जयित्वा तु शेषमस्य हतं बलम् ॥ ९ ॥
प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः ॥ कुम्भकर्णश्च कुम्भश्च धूम्राक्षश्च निशाचरः ॥ १० ॥
जम्बुमाली महामाली तीक्ष्णवेगोशनिप्रभः ॥ सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११ ॥
संह्रादी विकटो निघ्नस्तपनो दम एव च ॥ प्रघासः प्रघसश्चैव प्रजङ्घो जङ्घ एव च ॥ १२ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् ॥ विद्युज्जिह्वो द्विजिह्वश्च सूर्यशत्रुश्च राक्षसः ॥ १३ ॥
अकम्पनः सुपार्श्वश्च चक्रमाली च राक्षसः ॥ कम्पनः सत्त्ववन्तौ तौ देवान्तकनरान्तकौ ॥ १४ ॥
एतान्निहत्यातिबलान्बहून्राक्षससत्तमान् ॥ बाहुभ्यां सागरं तीर्त्वा लङ्घ्यतां गोष्पदं लघु ॥ १५ ॥
एतावदेव शेषं वो जेतव्यमिह वानराः ॥ हताः सर्वे समागम्य राक्षसा बलदर्पिताः ॥ १६ ॥
अयुक्तं निधनं कर्तुं पुत्रस्य जनितुर्मम ॥ घृणामपास्य रामार्थे निहन्यां भ्रातुरात्मजम् ॥ १७ ॥
हन्तुकामस्य मे बाष्पं चक्षुश्चैव निरुध्यति ॥ तमेवैष महाबाहुर्लक्ष्मणः शमयिष्यति ॥
वानरा घ्नत संभूय भृत्यानस्य समीपगान् ॥ १८ ॥
इति तेनातियशसा राक्षसेनाभिचोदिताः ॥ वानरेन्द्रा जहृषिरे लाङ्गूलानि च विव्यधुः ॥ १९ ॥
ततस्ते कपिशार्दूलाः क्ष्वेलन्तश्च मुहुर्मुहुः ॥ मुमुचुर्विविधान्नादान्मेघान्दृष्ट्वेव बर्हिणः ॥ २० ॥
जाम्बवानपि तैः सर्वैः स्वयूथैरपि संवृतः ॥ अश्मभिस्ताडयामास नखैर्दन्तैश्च राक्षसान् ॥ २१ ॥
निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः ॥ परिवव्रुर्भयं त्यक्त्वा तमनेकविधायुधाः ॥ २२ ॥
शरैः परशुभिस्तीक्ष्णैः पट्टिशैर्यष्टितोमरैः ॥ जाम्बवन्तं मृधे जघ्नुर्निघ्नन्तं राक्षसीं चमूम् ॥ २३ ॥
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् ॥ देवासुराणां क्रुद्धानां यथा भीमो महास्वनः ॥ २४ ॥

किंचित् । विभीषणस्य केवलगदापाणित्वात् ॥ ३ ॥ वज्राणि अशनयः ॥ ४—७ ॥ परायणं गतिः ॥ ८—९ ॥ उक्तानुक्तांश्च राक्षसान् युद्धे हतान्कांश्चित्परिगणयत्युत्साहनाय—प्रहस्त इत्यादिना श्लोकपञ्चकेन ॥ अकम्पनः कम्पनश्च राक्षसौ सर्वत्र निहत इत्यनेनान्वयः । देवान्तकनरान्तकावित्यत्र निहताविति विपरिणामः कार्यः ॥ १०—१४ ॥ एतान् राक्षससत्तमान् निहत्य स्थितानां भवतां इन्द्रजितो हननं, बाहुभ्यां सागरं तीर्त्वा स्थितस्य पुंसो गोष्पदतरणमिव सुकरमिति निदर्शना । बाहुभ्यां सागरं तीर्त्वेव एतानतिबलान् बहून् राक्षससत्तमान् निहत्य स्थितैः भवद्भिः गोष्पदमिव लघु इन्द्रजिद्धननरूपं स्वल्पं कार्यं लङ्घ्यतामित्यन्वयः ॥ १५ ॥ एतावदेव इन्द्रजिन्मात्रमेव ॥१६॥ जनितुः जनयितुः । पितृव्यस्येत्यर्थः ॥ १७ ॥ बाष्पं कर्तृ । चक्षुः निरुध्यति निरुणद्धि ॥ १८—२३ ॥ यथा भीम इति । महास्वनो देवानां संप्रहारो यथा तथे-

ति० निहन्यां हननोपायप्रवर्तनेनेतिभावः ॥१७॥ शि० ननुतर्हित्वयैवनिहन्यतां किंलक्ष्मणयुद्धेनेत्यतआह—हन्त्विति ॥१८॥

[ पा० ] १ ग. ङ.—ट. वज्राइव. २ ख. च. छ. ञ. प्रसुप्तानां. ग. ङ. झ. ट. प्रहृष्टानां. ३ ङ. झ. ट. संचोदमानोवै. च. संचोदयामास. ४ ख. ङ.—ट. वधप्रियान्. ५ ङ. झ. तास्मिंश्चनिहते. ६ ख. ग. च. छ. ञ. महाबलः. ७ ङ. च. झ. ञ. ट. मन्दएवच. ८ ङ. झ. परिभर्त्स्यभयं.

हनुमानपि संक्रुद्धः सालमुत्पाट्य वीर्यवान् ॥ [ स लक्ष्मणं स्वयं पृष्ठादवरोप्य महामनाः ॥ ]
रक्षसां कदनं चक्रे समासाद्य सहस्रशः ॥ २५ ॥
स दत्त्वा तुमुलं युद्धं पितृव्यस्येन्द्रजिद्युधि ॥ लक्ष्मणं परवीरघ्नं पुनरेवाभ्यधावत ॥ २६ ॥
तौ प्रयुद्धौ तदा वीरौ मृधे लक्ष्मणराक्षसौ ॥ शरौघानभिवर्षन्तौ जघ्नतुस्तौ परस्परम् ॥ २७ ॥
अभीक्ष्णमन्तर्दधतुः शरजालैर्महाबलौ ॥ चन्द्रादित्याविवोष्णान्ते यथा मेघैस्तरस्विनौ ॥ २८ ॥
न ह्यादानं न संधानं धनुषो वा परिग्रहः ॥ न विप्रमोक्षो बाणानां न विकर्षो न विग्रहः ॥ २९ ॥
न मुष्टिप्रतिसंधानं न लक्ष्यप्रतिपादनम् ॥ अदृश्यत तयोस्तत्र युध्यतोः पाणिलाघवात् ॥ ३० ॥
चापवेगविनिर्मुक्तबाणजालैः समन्ततः ॥ अन्तरिक्षे हि संछन्ने न रूपाणि चकाशिरे ॥ ३१ ॥
लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम् ॥ अव्यवस्था भवत्युग्रा ताभ्यामन्योन्यविग्रहे ॥३२॥
ताभ्यामुभाभ्यां तरसा विसृष्टैर्विशिखैः शितैः ॥ निरन्तरमिवाकाशं बभूव तमसाऽऽवृतम् ॥ ३३ ॥
तैः पतद्भिश्च बहुभिस्तयोः शरशतैः शितैः ॥ दिशश्च प्रदिशश्चैव बभूवुः शरसंकुलाः ॥ ३४ ॥
तमसा संवृतं सर्वमासीद्भीमतरं महत् ॥ अस्तं गते सहस्रांशौ संवृतं तमसेव हि ॥ ३५ ॥
रुधिरौघमहानद्यः प्रावर्तन्त सहस्रशः ॥ क्रव्यादा दारुणा वाग्भिश्चिक्षिपुर्भीमनिस्वनम् ॥ ३६ ॥

त्यर्थः ॥ २४ ॥ हनुमानिति । अत्र हनुमतो युद्धकथनात् किंचिद्विश्रमार्थं तस्य पृष्ठादवरूढो लक्ष्मण इत्यवगम्यते । सहस्रशः कदनमित्यन्वयः ॥२५–२८॥ न ह्यादानमित्यादिश्लोकद्वयमेकान्वयं ॥ आदानं बाणस्य तूणादुद्धरणं । संधानं उद्धृतस्य बाणस्य धनुष्यवस्थापनं । धनुषो वा परिग्रहः सव्यापसव्यत्वेन कार्मुकग्रहणं । बाणानां विप्रमोक्षः विसर्जनं । विकर्षः आकर्णग्रहणं । विग्रहः आलीढाद्यवस्थानविशेषः, सावष्टम्भावस्थानं वा, धनुर्ज्यादीनां प्रविभागो वा । "विग्रहः समरे काये विरोधप्रविभागयोः" इति विश्वः । मुष्टिप्रतिसंधानं ज्याकार्मुकयोर्मुष्टिबन्धनं । लक्ष्यप्रतिपादनं लक्ष्यप्रापणं । लक्ष्यवेध इति यावत् ॥ २९—३० ॥ रूप्यन्त इति रूपाणि वस्तूनि । बाणव्यतिरेकेण न किंचित्तदानीं दृश्यत इति भावः ॥ ३१ ॥ लक्ष्मण इति ॥ लोकव्यवहारानुसारेणात्र क्रियाकारकसंबन्धः । लक्ष्मणो रावणिं रावणिश्चापि लक्ष्मणं प्राप्य ताभ्यामन्योन्यविग्रहे अन्योन्याभिभवे । उग्रा अव्यवस्था भवति । अन्योन्यप्राप्तावयमेनं निगृह्णाति अयं वा एनमिति निश्चयो नाभवदित्यर्थः । यद्वा रावणिं लक्ष्मणो रावणिश्चापि लक्ष्मणं प्राप्य अयुध्येतामिति शेषः । ताभ्यां तथा युद्धं कुर्वद्भ्यां । अन्योन्यविग्रहे परस्परप्रहारे क्रियमाणे । उग्रा अव्यवस्था भवति । क्षणे क्षणे जयपराजयनियमो नाभूदित्यर्थः ॥ ३२—३३ ॥ तैः पतद्भिरित्यादिश्लोकद्वयमेकान्वयं ॥ शरशतैः निमित्तभूतैः । महत् अत्यन्तं ॥ ३४—३५ ॥ चिक्षिपुः चक्रुः ॥ ३६ ॥

**ति०** लक्ष्मणं पृष्ठादवरोप्य विश्रमार्थंस्वारूढंलक्ष्मणंभूमाववस्थाप्यविभीषणसहायार्थंहनुमान्कदनंचक्रे ॥ २५ ॥ **ती०** उष्णान्ते वर्षादौचन्द्रादित्याविवस्थितौ तरस्विनौ वेगवन्तौ । महाबलौलक्ष्मणेन्द्रजितौ मेघैर्यथा मेघैरिव । शरजालैरभीक्ष्णं अन्तर्दधतुः अदृश्यौबभूवतुः ॥ २८ ॥ **ति०** उग्राऽव्यवस्था तत्तद्बाणैरयुध्यद्वानरराक्षसवधरूपा भवति अभवदित्यर्थः । यत्तु " अयमेनं निगृह्णाति सएनंवेत्यनिश्चयरूपाव्यवस्था " इतिव्याख्यानं तच्चिन्त्यं । तस्याअव्यवस्थायाउग्रत्वस्यनिरूपयितुमशक्यत्वादुग्रेति विशेषणवैयर्थ्याच्च ॥ **स०** लक्ष्मणोरावणिंप्राप्य रावणिरपिलक्ष्मणंप्राप्येत्येवंस्थिताभ्यांताभ्यां अन्योन्यविग्रहेयुद्धे उग्रा दुःखकारणत्वात्क्रूरा अव्यवस्था इममिदानींजेष्यामीतिसंकल्पासिद्धिरूपाभवति अभूत् । एवंचोक्तरीत्याऽव्यवस्थायाउग्रत्वेसंभवतिसति । " उग्रत्वस्यनिरूपयितुमशक्यत्वात् " इतियन्नागोजिभट्टेनोक्तं तदसंगतं । उग्रत्वस्यनिरूपयितुमशक्यत्वादित्यनेनैववैयर्थ्यलाभे उग्रेतिविशेषणवैयर्थ्याच्चेतिदूषणान्तरतयाकथनंत्वसंगततरमितिज्ञेयं ॥ ३२ ॥ **स०** शरसंकुलाः जलसंकुलाः वर्षाकालेदिशःप्रदिशश्चयथातथा शरशतैःसंकुलाइतिबुद्ध्याविवेकेनान्वयः ॥ ३४ ॥

[ **पा०** ] १ घ.—ट. सानुमुत्पाट्यपर्वतात्. २ इदमर्धं ङ.—ट. पाठेषुदृश्यते. ३ क. ङ. झ. ञ. ट. दुरासदः. घ. दुरावारः. ख. शतशोथ. ४ ङ. च. झ. ञ. ट. स्वेन्द्रजिद्बली. ५ ङ. झ. ञ. परवीरघ्नः. ६ क. ख. ग. च. छ. भीमनिस्वनाः. ङ. झ. ट. भीमनिस्वनान्.

न तदानीं ववौ वायुर्न च जज्वाल पावकः ॥ स्वस्त्यस्तु लोकेभ्य इति जजल्पुश्च महर्षयः ॥
संपेतुश्चात्र संप्राप्ता[1] गन्धर्वाः सह चारणैः ॥ ३७ ॥
अथ राक्षससिंहस्य कृष्णान्कनकभूषणान् ॥ शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् ॥ ३८ ॥
ततोऽपरेण भल्लेन शितेन[2] निशितेन च ॥ संपूर्णायतमुक्तेन सुपत्रेण[3] सुवर्चसा ॥ ३९ ॥
महेन्द्राशनिकल्पेन सूतस्य विचरिष्यतः ॥ स तेन बाणाशनिना तलशब्दानुनादिना ॥
लाघवाद्राघवः श्रीमाञ्शिरः कायादपाहरत् ॥ ४० ॥
स यन्तरि महातेजा हते मन्दोदरीसुतः ॥ स्वयं सारथ्यमकरोत्पुनश्च धनुरस्पृशत् ॥
तदद्भुतमभूत्तत्र सामर्थ्यं पश्यतां युधि ॥ ४१ ॥
हयेषु व्यग्रहस्तं तं विव्याध निशितैः शरैः ॥ धनुष्यथ पुनर्व्यग्रे हयेषु मुमुचे शरान् ॥ ४२ ॥
छिद्रेषु[4] तेषु बाणेषु सौमित्रिः शीघ्रविक्रमः[5] ॥ अर्दयामास बाणौघैर्विचरन्तमभीतवत्[6] ॥ ४३ ॥
निहतं सारथिं दृष्ट्वा समरे रावणात्मजः ॥ प्रजहौ समरोद्धर्षं विषण्णः स बभूव ह ॥ ४४ ॥
विषण्णवदनं दृष्ट्वा राक्षसं हरियूथपाः ॥ ततः परमसंहृष्टा लक्ष्मणं चाभ्यपूजयन् ॥ ४५ ॥
ततः प्रमाथी शरभो रभसो गन्धमादनः[7] ॥ अमृष्यमाणाश्चत्वारश्चक्रुर्वेगं हरीश्वराः ॥ ४६ ॥
ते चास्य हयमुख्येषु तूर्णमुत्पुत्य[8] वानराः ॥ चतुर्षु समहावीर्या निपेतुर्भीमविक्रमाः ॥ ४७ ॥
तेषामधिष्ठितानां तैर्वानरैः पर्वतोपमैः ॥ मुखेभ्यो रुधिरं रक्तं[9] हयानां समवर्तत ॥
ते हया मथिता भग्ना व्यसवो धरणीं गताः ॥ ४८ ॥
ते निहत्य हयांस्तस्य प्रमथ्य च महारथम् ॥ पुनरुत्पत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः[10] ॥ ४९ ॥
स हताश्वादवप्लुत्य रथान्मथितसारथेः[11] ॥ शरवर्षेण सौमित्रिमभ्यधावत रावणिः ॥ ५० ॥
ततो महेन्द्रप्रतिमः स लक्ष्मणः पदातिनं तं निशितैः[12] शरोत्तमैः ॥
सृजन्तमाजौ निशिताञ्शरोत्तमान्भृशं तदा बाणगणैर्न्यवारयत्[13] ॥ ५१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे नवतितमः सर्गः ॥ ९० ॥

---

अत्र युद्धस्थले । पूर्वं संप्राप्ताः गन्धर्वाः चारणैः सह संपेतुः । अन्यत्र गता इत्यर्थः । अतिघोरयुद्धदर्शनभयादिति भावः ॥ ३७—३८ ॥ ततोऽपरेणेत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ संपूर्णायतमुक्तेन संपूर्णाकृष्टमुक्तेन ॥ ३९—४२ ॥ छिद्रेषु रन्ध्रेषु । बाणेषु बाणप्रयोगेषु । शीघ्रविक्रम इत्यन्वयः ॥४३॥ समरोद्धर्षं युद्धगर्वं ॥ ४४—४६ ॥ समहावीर्याः महावीर्यसहिताः ॥ ४७ ॥ रक्तं शोणितं ॥ ४८—५० ॥ पदातिनं पदाभ्यामापतन्तं गच्छन्तं । "अत सातत्यगमने" इत्यस्माण्णिनिः ॥ ५१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवतितमः सर्गः ॥ ९० ॥

---

**ति०** संपूर्णायतमुक्तेन संपूर्णआकर्णपर्यन्तं आयतेन आकृष्टेन ततोमुक्तेन ॥ ३९ ॥ **ति०** तलशब्दानुनादिना तलं ज्याघातवारणं तस्यज्याघट्टनजोयश्शब्दः तस्यानुनादोयस्यास्तितेन ॥ ४० ॥ **स०** निहतैर्हयोत्तमैः तन्निमित्तंपदातिनं ॥ ५१ ॥ इति नवतितमःसर्गः ॥ ९० ॥

[ पा० ] १ ङ. झ. ञ. संतप्ताः. २ क. ग.—ट. पीतेन. ३ घ. सुपर्वेण. ४ क. ख. घ.—ट. छिन्नेषुतेषुबाणौघैः. ग. भिन्नेषुतेषुबाणौघैः. ५ ख.—ट. शीघ्रकृत्तमः. ६ ङ. झ. ञ. ट. समरेविचरन्तं. क. संक्रुद्धोविचरन्तं. ७ घ. गवयोगन्ध. ८ ख. ग. ङ. च. झ. ञ. ट. मुत्पत्य. ९ ख. ग. ङ. ज.—ट. व्यक्तं. १० घ. लक्ष्मणदृक्पथि. ११ झ. मथितसारथिः. १२ घ. ङ. च. झ. ञ. ट. निहतैर्हयोत्तमैः. १३ ख. ङ.—ट. बाणगणैर्व्यदारयत्. क. वज्रसमैर्व्यदारयत्.

# एकनवतितमः सर्गः ॥ ९१ ॥

लक्ष्मणेनेन्द्रजिद्वधः ॥ १ ॥

स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः ॥ इन्द्रजित्परमक्रुद्धः संप्रजज्वाल तेजसा ॥ १ ॥
तौ धन्विनौ जिघांसन्तावन्योन्यमिषुभिर्भृशम् ॥ विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २ ॥
निबर्हयन्तश्चान्योन्यं ते राक्षसवनौकसः ॥ भर्तारं न जहुर्युद्धे संपतन्तस्ततस्ततः ॥ ३ ॥
ततस्तान्राक्षसान्सर्वान्हर्षयन्रावणात्मजः ॥ [1]स्तुवानो हर्षमाणश्च इदं वचनमब्रवीत् ॥ ४ ॥
तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः ॥ नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ॥ ५ ॥
[2]धृष्टं भवन्तो युध्यन्तु हरीणां मोहनाय वै ॥ अहं तु रथमास्थाय आगमिष्यामि [3]संयुगम् ॥ ६ ॥
तथा भवन्तः कुर्वन्तु यथेमे काननौकसः ॥ [4]न युध्येयुर्[5]दुरात्मानः प्रविष्टे नगरं मयि ॥ ७ ॥
इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः ॥ प्रविवेश पुरीं लङ्कां रथहेतोरमित्रहा ॥ ८ ॥
स रथं भूषयित्वा तु रुचिरं हेमभूषितम् ॥ [6]प्रासासि[7]शतसंपूर्णं युक्तं परमवाजिभिः ॥ ९ ॥
अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना ॥ आरुरोह महातेजा रावणिः समितिंजयः ॥ १० ॥
स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः ॥ निर्ययौ नगरात्तूर्णं कृतान्तबलचोदितः ॥ ११ ॥
सोभिनिष्क्रम्य नगरादिन्द्रजित्परवीरहा ॥ अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२ ॥
ततो रथस्थमालोक्य सौमित्री रावणात्मजम् ॥ वानराश्च महावीर्या राक्षसश्च विभीषणः ॥
विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः ॥ १३ ॥
रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् ॥ पातयामास बाणौघैः शतशोथ सहस्रशः ॥ १४ ॥
स मण्डलीकृतधनू रावणिः समितिंजयः ॥ हरीनभ्यहनत्क्रुद्धः परं लाघवमास्थितः ॥ १५ ॥
ते वध्यमाना हरयो नाराचैर्भीमविक्रमाः ॥ सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः ॥ १६ ॥
ततः समरकोपेन ज्वलितो रघुनन्दनः ॥ चिच्छेद कार्मुकं तस्य दर्शयन्पाणिलाघवम् ॥ १७ ॥
सोन्यत्कार्मुकमादाय सज्यं चक्रे त्वरन्निव ॥ तदप्यस्य [9]त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ॥ १८ ॥
अथैनं छिन्नधन्वानमाशीविषविषोपमैः ॥ विव्याधोरसि सौमित्री रावणिं पञ्चभिः शरैः ॥ १९ ॥
ते तस्य कायं निर्भिद्य महाकार्मुकनिस्सृताः ॥ निपेतुर्धरणीं बाणा रक्ता इव महोरगाः ॥ २० ॥

---

अथेन्द्रजितद्वधः--स हताश्व इत्यादि ॥ १ ॥ विजयेनेति प्रयोजने तृतीया । विजयायेत्यर्थः । अभिनिष्क्रान्तौ बभूवतुरिति शेषः । गजवृषाविव गजश्रेष्ठाविव । यद्वा किंचिद्धीनबलत्वादिन्द्रजितो वृषभतुल्यत्वं ॥ २ ॥ संपतन्तः परितः संचरन्त इत्यर्थः ॥ ३ ॥ स्तुवानः स्तुवन् । आर्षः शानच् ॥ ४--५ ॥ मोहनाय मन्निर्गमनापरिज्ञानाय ॥ ६--८ ॥ स रथमित्यादिश्लोकद्वयमेकान्वयं भूषयित्वा स्वतेजसा भूषयित्वा । आप्तोपदेशिना हितोपदेशिना ॥ ९--१२ ॥ तत इत्यादिसार्धश्लोक एकान्वयः ॥ ततः तस्माद्युद्धप्रदेशात् ॥ १३--१७ ॥ त्वरन्निवेति । इवशब्दो वाक्यालंकारे । निरकृन्तत

---

**ती०** विजयेन विजयहेतुना । अभिनिष्क्रान्तौ अभिमुखावधावतां ॥ २ ॥ **शि०** वनौकसोवञ्चयित्वा तज्ज्ञानविषयत्वमप्राप्येत्यर्थः । रथहेतोर्लङ्कांविवेश ॥ ८ ॥ **ति०** हयज्ञेन अश्वहृदयज्ञेन ॥ **स०** आप्तश्चासौ उपदेशोस्यास्तीत्याप्तोपदेशी । साम-

[ **पा०** ] १ ङ. च. छ. झ. ट. स्तुन्वानो. क. ख. स्वयंप्रहर्षमाणश्च. २ घ. हृष्टाभवन्तो. ३ ङ. झ. ञ. ट. संयुगे. ४ क. ज. नबुध्येयुः. ५ ग. ङ. झ. ट. महात्मानः. ६ क. चापासि. ७ ङ. च. झ. शरसंयुक्तं. ८ ङ. झ. ट. त्परमौजसा. ९ च. ञ. ट. शितैर्बाणैः.

स [1]भिन्नवर्मा रुधिरं वमन्वक्त्रेण रावणिः ॥ जग्राह कार्मुकश्रेष्ठं दृढज्यं बलवत्तरम् ॥ २१ ॥
स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः ॥ ववर्ष शरवर्षाणि वर्षाणीव पुरन्दरः ॥ २२ ॥
मुक्तमिन्द्रजिता तत्तु शरवर्षमरिन्दमः ॥ अवारयदसंभ्रान्तो लक्ष्मणः सुदुरासदम् ॥ २३ ॥
दर्शयामास च तदा रावणिं रघुनन्दनः ॥ असंभ्रान्तो महातेजास्तदद्भुतमिवाभवत् ॥ २४ ॥
ततस्ताग्राक्षसान्सर्वांस्त्रिभिरेकैकमाहवे ॥ अविध्यत्परमक्रुद्धः शीघ्रास्त्रं संप्रदर्शयन् ॥
राक्षसेन्द्रसुतं चापि बाणौघैः समताडयत् ॥ २५ ॥
सोतिविद्धो बलवता शत्रुणा [2]शत्रुघातिना ॥ असक्तं प्रेषयामास लक्ष्मणाय बहूञ्शरान् ॥ २६ ॥
तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद [3]रघुनन्दनः ॥ सारथेरस्य च रणे रथिनो [4]रथसत्तमः ॥
शिरो जहार धर्मात्मा भल्लेनानतपर्वणा ॥ २७ ॥
असूतास्ते हयास्तत्र रथमूहुरविक्लबाः ॥ मण्डलान्यभि[5]धावन्तस्तदद्भुतमिवाभवत् ॥ २८ ॥
अमर्षवशमापन्नः सौमित्रिर्दृढविक्रमः ॥ प्रत्यविध्यद्धयांस्तस्य शरैर्वि[6]त्रासयन्रणे ॥ २९ ॥
[7]अमृष्यमाणस्तत्कर्म रावणस्य [8]सुतो बली ॥ विव्याध दशभिर्बाणैः सौमित्रिं [9]तममर्षणम् ॥ ३० ॥
ते तस्य वज्रप्रतिमाः शराः सर्पविषोपमाः ॥ विलयं जग्मुराहत्य कवचं काञ्चनप्रभम् ॥ ३१ ॥
अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः ॥ ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित् ॥
अविध्यत्परमक्रुद्धः शीघ्रास्त्रं च प्रदर्शयन् ॥ ३२ ॥
[10]तैः पृषत्कैर्ललाटस्थैः शुशुभे रघुनन्दनः ॥ रणाग्रे समरश्लाघी [11]त्रिशृङ्ग इव पर्वतः ॥ ३३ ॥
स [12]तथा ह्यर्दितो बाणै राक्षसेन [13]महामृधे ॥ तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः ॥
विकृष्येन्द्रजितो युद्धे वदने शुभकुण्डले ॥ ३४ ॥
लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ ॥ अन्योन्यं [14]जघ्नतुर्बाणैर्विशिखैर्भी[15]मविक्रमौ ॥ ३५ ॥
ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ ॥ रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ ॥ ३६ ॥

---

अच्छिनत् ॥ १८–२३ ॥ दर्शयामास पराक्रममिति शेषः ॥२४॥ ततस्तानित्यादिसार्धश्लोक एकान्वयः ॥ शीघ्रास्त्रं शीघ्रमस्त्रं ॥ २५ ॥ असक्तं अव्यासङ्गं अविलम्बितं वा ॥ २६ ॥ तानप्राप्तानित्यादिसार्धश्लोक एकान्वयः ॥ रथिनोस्य रावणेः सारथेरित्यन्वयः ॥ २७ ॥ अविक्लबाः अनाकुलाः । शिक्षापाटवातिशयादिति मन्तव्यं ॥ २८—३० ॥ विलयं नाशं ॥ ३१ ॥ अभेद्येत्यादिसार्धश्लोकः ॥ अभेद्यकवचमित्यनेन पूर्वकवचस्य भग्नत्वात् कवचान्तरं धृतमिति गम्यते । शीघ्रास्त्रं च प्रदर्शयन् । आत्मनः शीघ्रास्त्रत्वं प्रदर्शयन्नित्यर्थः ॥ ३२ ॥ समरं श्लाघत इति समरश्लाघी । समरप्रिय इत्यर्थः । पृषत्कैः बाणैः ॥ ३३ ॥ स तथेत्यादिसार्धश्लोकएकान्वयः ॥ विकृष्य धनुराकृष्य ॥ ३४ ॥ लक्ष्मणेन्द्रजिताविति । विशिखैः विविधशिखैः । करवीरपत्राद्याकाराग्रैरि-

---

र्थ्यादाप्तिमूलत्वमुपदेशस्यलभ्यते । तेन ॥ १० ॥ **रामानु०** भिन्नवर्मेति । अनेनपुनश्चकवचान्तरमपिस्वीकृतवानित्यवगम्यते ॥ २१ ॥ **रामानु०** दर्शयामासेति । हस्तलाघवमितिशेषः ॥ रावणिंहस्तलाघवंदर्शयामासेतिसंबन्धः ॥ २४ ॥ **ति०** ननुकथं सर्वराक्षसाःइन्द्रजितियुध्यतित्रिभिस्त्रिभिर्बाणैर्वेद्धुंशक्यास्तत्राह—शीघ्रास्त्रमिति । प्रयोगमात्रेणसर्ववेधकमस्त्रंशीघ्रास्त्रं । यद्वा भावप्रधानो निर्देशः । अस्त्रविषयकशीघ्रप्रयोगसामर्थ्यरूपंशीघ्रास्त्रत्वंसंप्रदर्शयन्नित्यर्थः ॥ २५ ॥ **ति०** रथसत्तमोलक्ष्मणः ॥ २७ ॥

[ पा० ] १ ङ. झ. छिन्नधन्वा. २ क. ग. घ. शत्रुतापिना. ३ ङ. झ. ट. परवीरहा. ४ ख. ञ. ट. रघुसत्तमः. ५ क. ख. ङ. च. झ. ञ. ट. धावन्ति. ६ घ. विव्यथयन्रणे. ७ क. ङ. झ. अमर्षमाणः. ८ ङ. झ. सुतोरणे. ९ ङ. झ. ञ. रोमहर्षणं. १० च. सपृषत्कैः. ११ घ. त्रिकूटइव. १२ ख. घ. ङ. च. झ. ञ. ट. तथाप्यर्दितो. १३ ख. महाहवे. १४ ङ. झ. जघ्नतुर्वीरौविशिखैः. १५ क. ख. ज. ट. भीमविक्रमैः.

तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ ॥ घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये ॥ ३७ ॥
ततः समरकोपेन [1]संयुक्तो रावणात्मजः ॥ विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे ॥ ३८ ॥
अयोमुखैस्त्रिभिर्विद्ध्वा राक्षसेन्द्रं विभीषणम् ॥ एकैकेनाभिविव्याध तान्सर्वान्हरियूथपान् ॥ ३९ ॥
तस्मै दृढतरं क्रुद्धो जघान गदया हयान् ॥ विभीषणो महातेजा रावणेः स दुरात्मनः ॥ ४० ॥
स हताश्वादवप्लुत्य [2]रथान्निहतसारथेः ॥ [3]रथशक्तिं महातेजाः पितृव्याय मुमोच ह ॥ ४१ ॥
तामापतन्तीं संप्रेक्ष्य सुमित्रा[4]नन्दवर्धनः ॥ चिच्छेद निशितै[5]र्बाणैर्दशधा साऽपतद्भुवि ॥ ४२ ॥
तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः ॥ वज्रस्पर्शसमान्पञ्च ससर्जोरसि मार्गणान् ॥ ४३ ॥
ते तस्य कायं [6]निर्भिद्य रुक्मपुङ्खा निमित्तगाः ॥ बभूवुर्लोहितादिग्धा रक्ता इव महोरगाः ॥ ४४ ॥
स [7]पितृव्याय संक्रुद्ध इन्द्रजिच्छरमाददे ॥ उत्तमं रक्षसां मध्ये यमदत्तं [8]महाबलः ॥ ४५ ॥
तं समीक्ष्य महातेजा महेषुं तेन संहितम् ॥ लक्ष्मणोप्याददे बाणमन्यं भीमपराक्रमः ॥ ४६ ॥
कुबेरेण स्वयं स्वप्ने [9]यस्मै दत्तं महात्मना ॥ दुर्जयं दुर्विषह्यं च सेन्द्रैरपि सुरासुरैः ॥ ४७ ॥
तयोस्ते धनुषी श्रेष्ठे बाहुभिः परिघोपमैः ॥ विकृष्यमाणे बलवत्क्रौञ्चाविव चुकूजतुः ॥ ४८ ॥

ताभ्यां तौ धनुषी श्रेष्ठे संहितौ सायकोत्तमौ ॥
विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया ॥ ४९ ॥

तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ ॥ मुखेन मुखमाहत्य संनिपेततु[10]रोजसा ॥ ५० ॥
सन्निपातस्तयोरासीच्छरयोर्घोररूपयोः ॥ सधूमविस्फुलिङ्गश्च [11]तज्जोग्निर्दारुणोऽभवत् ॥ ५१ ॥
तौ महाग्रहसंकाशावन्योन्यं सन्निपत्य च ॥ संग्रामे शतधा यान्तौ मेदिन्यां विनिपेततुः ॥ ५२ ॥
शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि ॥ व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितौ तदा ॥ ५३ ॥
सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ॥ ५४ ॥
रौद्रं महेन्द्रजिद्युद्धे व्यसृजद्युधि निष्ठितः ॥ तेन तद्विहतं त्वस्त्रं वारुणं परमाद्भुतम् ॥ ५५ ॥
ततः क्रुद्धो महातेजा इन्द्रजित्समितिंजयः ॥ आग्नेयं संदधे दीप्तं स लोकं संक्षिपन्निव ॥ ५६ ॥
सौरेणास्त्रेण तद्वीरो लक्ष्मणः प्रत्यवारयत् ॥ ५७ ॥
अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः ॥ आसुरं शत्रुनाशाय घोरमस्त्रं समाददे ॥ ५८ ॥

---

त्यर्थः ॥ ३५—३६ ॥ जये कृतभावावित्यन्वयः ॥ ३७—४० ॥ रथशक्तिं रथेऽवस्थितां शक्तिं ॥ ४१—४२ ॥ दृढधनुः दृढधन्वा । समासान्तविधेरनित्यत्वात्साधुः ॥४३॥ निमित्तगाः लक्ष्यगाः । "वेध्यं लक्ष्यं शरव्यं च निमित्तं च समं विदुः" इति निघण्टुः ॥ ४४ ॥ रक्षसां मध्ये आददे इत्यन्वयः ॥ ४५ ॥ तं समीक्ष्येत्यादिश्लोकद्वयमेकान्वयं ॥ महात्मना अप्रमेयबुद्धिना । भाविवृत्तान्तज्ञेनेति यावत् ॥ ४६—४९ ॥ सन्निपेततुः संघर्षं प्राप्तौ ॥ ५० ॥ तज्जः सन्निपातजः ॥ ५१—५५ ॥ संक्षिपन् संहरन् ॥ ५६ ॥ सौरेण सूर्यदेवताकेन । "सूर्यतिष्यागस्त्य" इत्यादिना यलोपः ॥ ५७-५८ ॥

---

ति० अमितात्मना अपरिच्छिन्नमाहात्म्येन ॥ ४७ ॥ ति० महाग्रहः अङ्गारकशन्यादिः ॥ ५२ ॥ ति० व्रीडितौ स्वस्वप्रयुक्तशरस्यमोघत्वदर्शनेनसंजातलज्जौ । यद्यपिरावणेरेवव्रीडायुक्ता । लक्ष्मणस्यतुतद्बाणनिवारणायप्रयोक्तुःसार्थक्यसत्त्वेनव्रीडाभावः । तथापितन्निराकरणपूर्वकंरिपुवधपर्यन्तव्यापारेणोपादानात्तदभावेनतस्यापिलज्जेतिबोध्यं । छत्रिन्न्यायेनद्विवचनप्रयोगइतिकतकः ।

[ पा० ] १ ख. संक्रुद्धो. २ ख. ङ. च. झ. ञ. ट. रथान्मथितसारथिः. क. ग. घ. रथान्निहतसारथिः. ३ क. ख. ङ. च. ज.—ट. अथशक्तिं. ४ क. ख. घ. ज. नन्दिवर्धनः. ५ ख. घ. च. ञ. बाणैःशतधा. ६ ख. ङ. च. झ. ट. भित्त्वातत्. ७ क. ख. ङ. झ. पितृव्यस्य. ८ ङ. झ. ञ. ट. महाबलं. ९ क. ख. ग. ङ. च. झ. ञ. ट. यद्दत्तममितात्मना. १० क. रञ्जसा. ११ ख. च. तत्राग्निः. ग. ततोग्निः.

तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूटमुद्गराः ॥ शूलानि च भुशुण्ड्यश्च गदाः खड्गाः परश्वधाः ॥ ५९ ॥
तद्दृष्ट्वा लक्ष्मणः सङ्ख्ये घोरमस्त्रमथासुरम् ॥ अवार्यं सर्वभूतानां सर्वशत्रुविनाशनम् ॥
माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ॥ ६० ॥
तयोः सुतुमुलं युद्धं संबभूवाद्भुतोपमम् ॥ गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ ६१ ॥
भैरवाभिरुते भीमे युद्धे वानररक्षसाम् ॥ भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ ६२ ॥
ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः ॥ शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ६३ ॥
अथान्यं मार्गणश्रेष्ठं संदधे राघवानुजः ॥ हुताशनसमस्पर्शं रावणात्मजदारणम् ॥ ६४ ॥
सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् ॥ सुवर्णविकृतं वीरः शरीरान्तकरं शरम् ॥ ६५ ॥
दुरावारं दुर्विषहं राक्षसानां भयावहम् ॥ आशीविषविषप्रख्यं देवसङ्घैः समर्चितम् ॥ ६६ ॥
येन शक्रो महातेजा दानवानजयत्प्रभुः ॥ पुरा देवासुरे युद्धे वीर्यवान्हरिवाहनः ॥ ६७ ॥
तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ॥ शरश्रेष्ठं धनुःश्रेष्ठे नरश्रेष्ठोऽभिसंदधे ॥ ६८ ॥
संधायामित्रदलनं विचकर्ष शरासनम् ॥ सज्यमायम्य दुर्धर्षं कालो लोकक्षये यथा ॥ ६९ ॥
संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् ॥ लक्ष्मीवाँल्लक्ष्मणो वाक्यमर्थसाधकमात्मनः ॥ ७० ॥
धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि ॥ पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ॥ ७१ ॥
इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् ॥ लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥
ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा ॥ ७२ ॥
स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ॥ प्रमथ्येन्द्रजितः कायात्पातयामास भूतले ॥ ७३ ॥
तद्राक्षसतनूजस्य छिन्नस्कन्धं शिरो महत् ॥ तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ॥ ७४ ॥
हतस्तु निपपाताशु धरण्यां रावणात्मजः ॥ कवची सशिरस्त्राणो विध्वस्तः सशरासनः ॥ ७५ ॥
चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः ॥ हृष्यन्तो निहते तस्मिन्देवा वृत्रवधे यथा ॥ ७६ ॥

---

तस्मादिति । असुरास्त्रप्रयोगाद्धेतोः । चापात् इन्द्रजिद्धनुषोपादानात् । कूटमुद्गरादयो विनिष्पेतुरित्यन्वयः । भुशुण्ड्यः मुसलविशेषाः ॥ ५९ ॥ तद्दृष्ट्वेत्यादिसार्धश्लोक एकान्वयः ॥ क्रियाद्वयार्थं तदस्त्रमिति द्विरुक्तिः ॥ ६०—६१ ॥ भैरवाभिरुते भयंकरशब्दे ररक्षुः । जय जयेत्याद्युक्तिभिरित्यर्थः ॥६२—६४ ॥ सुपत्रमित्यादिचतुःश्लोक्येकान्वया ॥ अनुवृत्ताङ्गं वर्तुलस्वरूपं । सुसंस्थितं सुसंस्थानं । सुवर्णविकृतं सुवर्णविचित्रितं । हरिवाहनः हरितवर्णाश्वः । ऐन्द्रमस्त्रं ऐन्द्रास्त्रमन्त्रयोजितं ॥ ६५—६८ ॥ अमित्रदलनं शत्रुनाशनं । कालः यमः ॥ ६९—७१ ॥ इत्युक्त्वेत्यादिसार्धश्लोक एकान्वयः ॥ बाणमैन्द्रास्त्रमन्त्रेण समायोज्य ससर्जेत्यन्वयः । एको लक्ष्मणशब्दो लक्ष्मीयुक्तवचनः । "लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान्" इत्यमरः ॥ ७२ ॥ सः बाणः ॥ ७३—७४ ॥ कवचीति । कवचादिभिः सह विध्वस्तः हतः

---

जातरोषौ रामाविशेषेविभीषणेबाणः प्रयुक्तइतिलक्ष्मणस्यरोषः । लक्ष्मणस्तंपरिहृतवानितिरावणेरोषः ॥ ५३ ॥ ति० संनिहितैतदस्त्रेणैवायंवध्यइतिनिश्चित्यैन्द्रास्त्रंसंदधइत्याह—अथेति । अत्रप्रत्यस्त्रंरावणेर्ब्रह्मशापवशान्नबुद्ध्यारूढं । वस्तुतोस्यप्रत्यस्त्रंनास्त्येवेति कतकः ॥ ६४ ॥ स० ऐन्द्रमस्त्रं । अनेनेन्द्रजितोहननंतत्पराजितेन्द्रदेवताकेनास्त्रेणकुर्वंल्लक्ष्मणःस्वपक्षस्थेन्द्रापप्रथावारयामासेति ध्वन्यते ॥ ६८ ॥ ति० अर्थसाधकमात्मनः कार्यसिद्धिहेतुभूतं इदं वक्ष्यमाणवचनंअस्त्राधिष्ठात्रींदेवतांप्रत्यब्रवीत् ॥ ७० ॥ स० पौरुषे पराक्रमे । अप्रतिद्वन्द्वः असदृशोयदि तर्हितेनसत्येन तमेनंजहि । अनेनरामगुणशपथपुरस्सरमस्त्रमोचनादस्यास्त्रस्याप्रति-

[ पा० ] १ ख. ङ. च. झ. ञ. ट. घोरमस्त्रंसुदारुणं. २ ख. च. शत्रुविदारणं. ३ क. ख. च. ट. रुतैर्भीमे. ४ घ. विकृतंघोरं. ५ क. ख. ग. ङ. झ. ञ. ट. दुर्विषहं. ६ ख. दानवानर्दयन्मुहुः. ७ ङ. च. झ. अथैन्द्रं. ८ क. ख. ङ. च. झ ञ. तच्छिरः. ९ ङ. झ. हतस्सनिपपाताथ. १० ङ. झ. विप्रविद्धशरासनः. ११ क. ङ. झ. हृष्यन्ते.

अथान्तरिक्षे दे[1]वानामृ[2]षीणां च महात्मनाम् ॥ अ[3]भिजज्ञे च सन्नादो गन्धर्वाप्सरसामपि ॥ ७७ ॥
पतितं तमभिज्ञाय राक्षसी सा महाचमूः ॥ वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ॥ ७८ ॥
वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः ॥ लङ्कामभिमुखाः सस्रुर्नष्टसंज्ञाः प्रधाविताः ॥ ७९ ॥
दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः ॥ त्यक्त्वा प्रहरणान्सर्वे पट्टिशासिपरश्वधान् ॥ ८० ॥
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः ॥ समुद्रे पतिताः केचित्केचित्पर्वतमाश्रिताः ॥ ८१ ॥
हतमिन्द्रजितं दृष्ट्वा शयानं समरक्षितौ ॥ राक्षसानां सहस्रेषु न कश्चित्प्रत्यदृश्यत ॥ ८२ ॥
यथास्तंगत आदित्ये नावतिष्ठन्ति रश्मयः ॥ तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ॥ ८३ ॥
शान्तरश्मिरिवादित्यो निर्वाण इव पावकः ॥ स[4] बभूव महातेजा व्यपास्तगतजीवितः ॥ ८४ ॥
प्र[6]शान्तपीडाबहुलो न[5]ष्टारिष्टः प्रतापवान् ॥ बभूव लोकः पतिते राक्षसेन्द्रसुते तदा ॥ ८५ ॥
हर्षं च शक्रो भगवान्सह सर्वैः सुरर्षभैः ॥ जगाम निहते तस्मिन्राक्षसे पापकर्मणि ॥ ८६ ॥
आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः ॥ नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः ॥ ८७ ॥
ववृषुः पुष्पवर्षाणि तदद्भुतमभूत्तदा ॥ प्र[6]शशंसुर्हते तस्मिन्राक्षसे क्रूरकर्मणि ॥
शुद्धा आपो दिशश्चैव जहृषुर्दै[7]त्यदानवाः ॥ ८८ ॥
आजग्मुः पतिते तस्मिन्सर्वलोकभयावहे ॥ ऊचुश्च सं[8]हिताः सर्वे देवगन्धर्वदानवाः ॥
विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥ ८९ ॥
ततोऽभ्यनन्दन् संहृष्टाः समरे हरियूथपाः ॥ तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुङ्गवम् ॥ ९० ॥
विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः ॥ विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् ॥ ९१ ॥
क्ष्वेलन्तश्च नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे ॥ ९२ ॥
लाङ्गूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः ॥ लक्ष्मणो जयतीत्येवं वाक्यं विश्रावयंस्तदा ॥ ९३ ॥
अन्योन्यं च समाश्लिष्य कपयो हृष्टमानसाः ॥ चक्रुरुच्चावचगुणा राघ[9]वाश्रयजाः कथाः ॥ ९४ ॥

धरण्यां निपपातेत्यन्वयः ॥ ७५—८३ ॥ व्यपास्तगतजीवितः व्यपास्तो विक्षिप्ताङ्गो गतजीवितश्च, सः शान्तरश्मिरादित्य इव । निर्वाणः शान्तः । पावक इव च बभूव । निस्तेजस्कोऽभूदित्यर्थः ॥ ८४ ॥ प्रशान्तेति । इदमारभ्य लोकविशेषणं । प्रशान्तपीडाबहुलः प्रशान्तबहुलपीडः । प्रतापवान् सूर्यप्रकाशवान् । पूर्वं भयेन मन्दसूर्यत्वात् ॥ ८५—८६ ॥ अप्सरोभिर्गन्धर्वैश्च कृतनर्तनगानजन्यस्वनः शुश्रुव इत्यर्थः । नृत्यद्भिरित्यत्र ङीब्भावः आर्षः ॥ ८७ ॥ ववृषुरिति । अत्रापि देवाः कर्तारः । ववृषुः प्रशशंसुश्च ॥ ८८ ॥ आजग्मुरित्यादिसार्धश्लोक एकान्वयः ॥ देवगन्धर्वदानवाः आजग्मुः विचरन्त्वित्यूचुश्चेति संबन्धः ॥ ८९—९२ ॥ विश्रावयन् व्यश्रा-

हतताज्ञेया ॥ ७१ ॥ **रामानु०** गतजीवितःसः शान्तरश्मिरादित्यइव बभूव । निर्वाणःपावकइवव्यपास्त अतिष्ठदितिसंबन्धः ॥ **ति०** व्यपास्तोविशेषधर्मैः । अतएवगतजीवितः ॥ **शि०** व्यपास्तेन धर्मत्यागेन गतजीवितः ॥ **स०** व्यपास्तेन स्वेनपूर्वमलक्ष्यतयानिरस्तेनलक्ष्मणेन गतंजीवितंयस्यसतथा ॥ ८४ ॥ **ति०** देवदानवाः दानवानामपितच्छत्रुत्वात्तेषामपिहर्षः ॥ ८८ ॥ **ति०** लब्धलक्षाः प्राप्तहर्षावसराः । रलयोरभेदात्प्राप्तरक्षणाइत्यपि । रघुसुतं रघुवंशजं ॥ ९२ ॥ इत्येकनवतितमः सर्गः ॥ ९१ ॥

**[ पा० ]** १ क. ग. घ. ङ. झ. भूतानां. २ ख. च. ञ. ट. मृषीणांभावितात्मनां. ग. मृषीणांचमहास्वनः. ३ ङ. झ. जज्ञेऽथजयसन्नादो. ४ ज. अतिष्ठत्समहातेजाः. ५ क. ग—च. ज.—ट. विनष्टारिः. ६ क. ख. ङ. च. झ. ञ. ट. प्रशशामहते. ७ झ. दैवदानवाः. ८ ख. ङ. च. ज.—ट. सहितास्तुष्टादेव. ९ ङ. झ. ट. राघवाश्रयसत्कथाः.

तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म ॥
परममुपलभन्मनःप्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ९५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

## द्विनवतितमः सर्गः ॥ ९२ ॥

इन्द्रजिद्विजयहृष्टेनलक्ष्मणेन विभीषणादिभिः सह रामसमीपमेत्य तच्चरणयोः प्रणामः ॥१॥ विभीषणमुखाल्लक्ष्मणकृतेन्द्रजिद्वधश्रवणहृष्टेनरामेण लक्ष्मणस्यनिजाङ्कारोपणेनपरिष्वङ्गपूर्वकं प्रशंसनम् ॥ २ ॥ रामप्रेरणयासुषेणेनेन्द्रजिद्बाणविशल्यीकृतानांलक्ष्मणादीनां समुचितचिकित्सयाविशल्यीकरणम् ॥ ३ ॥

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः ॥ बभूव हृष्टस्तं हत्वा शक्रजेतारमाहवे ॥ १ ॥
ततः स जाम्बवन्तं च हनुमन्तं च वीर्यवान् ॥ संनिहत्य[1] महातेजास्तांश्च सर्वान्वनौकसः ॥ २ ॥
आजगाम ततस्तीव्रं यत्र सुग्रीवराघवौ ॥ विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ॥ ३ ॥
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ॥ तस्थौ भ्रातृसमीपस्थ[2] इन्द्रस्येव बृहस्पतिः ॥ ४ ॥
निष्टनन्निव[3] चागम्य राघवाय महात्मने ॥ आचचक्षे तदा वीरो[4] घोरमिन्द्रजितो वधम् ॥ ५ ॥
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ॥ न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ६ ॥
श्रुत्वैतत्तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम् ॥ प्रहर्षमतुलं लेभे रामो वाक्यमुवाच ह[5] ॥ ७ ॥
साधु लक्ष्मण तुष्टोसि कर्मणा सुकृतं कृतम् ॥ रावणेर्हि विनाशेन जितमित्युपधारय ॥ ८ ॥
स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनम् ॥ लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान् ॥ ९ ॥

---

वयन् ॥ ९३—९४ ॥ असुकरं दुष्करं । सर्वेषां प्राणप्रतिष्ठापकमिति वा । प्रियसुहृदः सर्वप्रियसुहृदः । उपलभन्नित्यत्र अडात्मनेपदाभावावार्षौ । देवाः इन्द्ररिपुं विनिहतं निशम्य परमं मनःप्रहर्षं उपलभन् उपालभन्त । अथ असुकरं तत् इन्द्रजिद्धननं । प्रियसुहृदः लक्ष्मणस्य । कर्म कृतिविषयभूतं । अभिवीक्ष्य हृष्टाः विस्मिताः । आसन्निति शेषः । "विस्मितप्रतिघातयोश्चेति वक्तव्यं" इति हृषेः पाक्षिक इडभावः । देवाश्चारणादिमुखेन प्रथममिन्द्रजिद्धननं श्रुत्वा संतुष्टाः सन्तः पश्चात्तस्यात्यन्ताशक्यत्वादतथ्यं मन्वाना युद्धभूमिमागत्य तत्प्रत्यक्षीकृत्य विस्मिता आसन्निति भावः ॥ ९५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

---

अथ लक्ष्मणश्लाघनं—रुधिरक्लिन्नगात्रेत्यादि ॥१॥ तत इत्यादिश्लोकद्वयमेकान्वयं ॥ सन्निहत्य संघीभूय । अवष्टभ्य युद्धपारवश्यादवलम्ब्य ॥ २—३ ॥ इन्द्रस्येव बृहस्पतिरिति पारतन्त्र्यमात्रे साम्यं ॥ ४ ॥ निष्टनन् अव्यक्ताक्षरंवदन्नित्यर्थः । इवशब्दो वाक्यालंकारे । आयासस्याभिनयनमात्रेणालीकत्वद्योतनाय वा ॥ ५ ॥ रामसन्निधौ संकोचवता लक्ष्मणेनाविशेषेणेन्द्रजिद्वधकथनाद्विभीषणः स्पष्टतयाह—रावणेरिति ॥ यद्वा लक्ष्मणेन सूचनयोक्तावपि हर्षप्रकर्षेण विभीषणः पुनराह—रावणेरिति ॥ ६ ॥ महावीर्यो राम इत्यन्वयः ॥ ७ ॥ सुकृतं कृतं सुकर्तव्यं कृतं । कर्मणा युद्धकर्मणा ॥ ८ ॥ स तमित्यादिश्लोकद्वयमेकान्वयं ॥ आरोप्य आरोपणायाकृष्य । अवपीडितं शल्यपीडितं । गाढं यथा भवति तथेति वा । क्रिया-

---

ति० संनिपत्य संगृह्य ॥ २ ॥ ति ० अभिक्रम्य प्रदक्षिणीकृत्य शक्रस्येन्द्रानुजोयथा यथोपेन्द्रइन्द्रसमीपेतिष्ठति तद्वत् ॥४॥

[ पा० ] १ क. ख. घ.—ट. संनिपत्य. २ ङ. ज. झ. ट. समीपस्थःशक्रस्येन्द्रानुजोयथा. ३ च. निश्वसन्निवचागत्य. ङ. झ. ञ. ट. निष्टनन्निवचागत्य. ४ क. ख. घ. ट. महावीरो. ५ ङ. झ. वाक्यंचेदमुवाचह.

उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् ॥ भ्रातरं लक्ष्मणं स्निग्धं पुनःपुनरुदैक्षत ॥ १० ॥
शल्यसंपीडितं शस्तं निश्श्वसन्तं तु लक्ष्मणम् ॥ रामस्तु दुःखसंतप्तस्तदा निश्श्वसितो भृशम् ॥ ११ ॥
मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य च त्वरन् ॥ उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभः ॥ १२ ॥
कृतं परमकल्याणं कर्म दुष्करकर्मणा ॥ अद्य मन्ये हते पुत्रे रावणं निहतं युधि ॥
अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि ॥ १३ ॥
रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे ॥ छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः ॥ १४ ॥
विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे ॥ अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः ॥ १५ ॥
निरमित्रः कृतोस्म्यद्य निर्यास्यति हि रावणः ॥ बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् ॥ १६ ॥
तं पुत्रवधसंतप्तं निर्यान्तं राक्षसाधिपम् ॥ बलेनावृत्य महता निहनिष्यामि दुर्जयम् ॥ १७ ॥
त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे ॥ न दुष्प्रापा हते त्वद्य शक्रजेतरि चाहवे ॥ १८ ॥
स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः ॥ रामः सुषेणं मुदितः समाभाष्येदमब्रवीत् ॥ १९ ॥
सशल्योयं महाप्राज्ञ सौमित्रिर्मित्रवत्सलः ॥ यथा भवति सुस्वस्थस्तथा त्वं समुपाचर ॥ २० ॥
विशल्यः क्रियतां क्षिप्रं सौमित्रिः सविभीषणः ॥ ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् ॥ २१ ॥
ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा ॥ तेऽपि सर्वे प्रयत्नेन क्रियन्तां सुखिनस्त्वया ॥ २२ ॥
एवमुक्तस्तु रामेण महात्मा हरियूथपः ॥ लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधिम् ॥ २३ ॥
स तस्या गन्धमाघ्राय विशल्यः समपद्यत ॥ तथा निर्वेदनश्चैव संरूढव्रण एव च ॥ २४ ॥
विभीषणमुखानां च सुहृदां राघवाज्ञया ॥ सर्ववानरमुख्यानां चिकित्सां स तदाऽकरोत् ॥ २५ ॥
ततः प्रकृतिमापन्नो हृतशल्यो गतव्यथः ॥ सौमित्रिर्मुदितस्तत्र क्षणेन विगतज्वरः ॥ २६ ॥
तथैव रामः प्लवगाधिपस्तदा विभीषणश्चर्क्षपतिश्च जाम्बवान् ॥
अवेक्ष्य सौमित्रिमरोगमुत्थितं मुदा ससैन्याः सुचिरं जहर्षिरे ॥ २७ ॥

भेदात्तमिति द्विरुक्तिः ॥ ९—१० ॥ शल्यसंपीडितमित्यादिश्लोकद्वयमेकान्वयं ॥ शस्तं प्रहृतं । निश्वसितः स्वयंकृतनिश्वासः । त्वरन् संस्पृश्य । त्वरा च प्रहारव्यथापनयनायेति भावः ॥ ११—१२ ॥ कृतमित्यादिसार्धश्लोकः ॥ दुष्करकर्मणा त्वयेति शेषः ॥ १३ ॥ व्यपाश्रयः आलम्बनं ॥ १४ ॥ अहोरात्रैस्त्रिभिरिति । एकादशीद्वादशीत्रयोदशीभिरित्यर्थः ॥ १५ ॥ निरमित्र इत्यादि श्लोकद्वयमेकान्वयं ॥ १६—१७ ॥ नाथेन याचमानेन । "नाथृयाच्ञायां" इत्यस्मात्पचाद्यच् ॥ १८ ॥ समाभाष्य आमन्त्र्य ॥ १९ ॥ समुपाचर चिकित्सां कुरु ॥ २० ॥ विशल्य इति श्लोकद्वयमेकान्वयं ॥ ऋक्षवानरसैन्यानामिति निर्धारणे षष्ठी ॥ २१—२२ ॥ नस्तः नासिकायां ॥ २३ ॥ निर्वेदनः वेदनारहितः ॥ २४—२६ ॥ मुदा युक्तमिति शेषः । मुदा युक्तं सौमित्रिमवेक्ष्य इति जहर्षिर इति संबन्धः । जहर्षिर इत्यत्र

ति० हेलक्ष्मण नाथेन । उपलालनार्थेनाथशब्दप्रयोगः ॥ १८ ॥ ति० विशल्यइति । ओषधिपर्वतानयनोत्तरमोषध्यःसुषेणेनसंगृह्यस्थापिताइत्यनेनज्ञायते ॥ २४ ॥ इतिद्विनवतितमःसर्गः ॥ ९२ ॥

[ पा० ] १ ग. घ. क्षयोरणे. २ ङ. च. ज.—ट. हृतेतस्मिञ्शक्र. ३ ख. सुषेणमुद्दिश्यसमाहूयेदं. ४ ङ. झ. विशल्योयं महाप्राज्ञः. ५ ख. ङ. झ.—ट. समुदाचर. ६ ङ. झ. सौमित्रिर्मित्रवत्सलः. ७ च. ञ. ट. ततो. ८ घ. ङ. झ. ञ. ट. वीर्यवान्. ९ च. ञ. ट. परमं.

अपूजयत्कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा ॥
हृष्टा बभूवुर्युधि यूथपेन्द्रा निपातितं शक्रजितं निशम्य ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

---

## त्रिनवतितमः सर्गः ॥ ९३ ॥

लक्ष्मणकृतेन्द्रजिद्वधश्रवणमुग्धेनरावणेनेन्द्रजितंप्रति शोचनपूर्वकं बहुधाविलापः ॥ १ ॥ तथामन्त्रिणःप्रति स्वप्रतापप्रशंसनेन रामादिवधप्रतिज्ञानम् ॥ २ ॥ तथा सीतावधप्रतिज्ञानेनाशोकवनिकांप्रतिजवादभिधावनम् ॥ ३ ॥ तदवलोकनभीतयासीतया बहुधाविलापः ॥ ४ ॥ अत्रान्तरे सुपार्श्वनाम्नासचिवेन युक्त्युपन्यासेनसान्त्वनपूर्वकं सीतावधोद्यमात्प्रतिनिवर्तनेन गृहंप्रतियापनम् ॥ ५ ॥

ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितं हतम् ॥ आचचक्षुरभिज्ञाय दशग्रीवाय सव्यथाः ॥ १ ॥
युद्धे हतो महाराज लक्ष्मणेन तवात्मजः ॥ विभीषणसहायेन मिषतां नो महाद्युतिः ॥ २ ॥
शूरः शूरेण संगम्य संयुगेष्वपराजितः ॥ लक्ष्मणेन हतः शूरः पुत्रस्तु विबुधेन्द्रजित् ॥
गतः स परमाँल्लोकाञ्शरैः संताप्य लक्ष्मणम् ॥ ३ ॥
स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् ॥ घोरमिन्द्रजितः सङ्ख्ये कश्मलं चाविशन्महत् ॥ ४ ॥
उपलभ्य चिरात्संज्ञां राजा राक्षसपुङ्गवः ॥ पुत्रशोकार्दितो दीनो विललापाकुलेन्द्रियः ॥ ५ ॥
हा राक्षसचमूमुख्य मम वत्स महारथ ॥ जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशं गतः ॥ ६ ॥

---

गुण आर्षः ॥ २७—२८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विनवतितमः सर्गः ॥ ९२ ॥

अथ सीतावधोद्योगपर्यन्तो रावणस्य पुत्रशोकातिशय उच्यते—ततः पौलस्त्यसचिवा इत्यादि ॥ पौलस्त्यसचिवाः रावणागारवर्तिनः सहायभूताः । इन्द्रजितंहतं श्रुत्वा स्वयमभिज्ञाय साभिज्ञानं दृष्ट्वा । सव्यथाःसन्तो रावणाय आचचक्षुः आचचक्षिरे । अथवा अभिज्ञायेति चतुर्थी । पूर्वमेव यज्ञविघ्नेन निश्चिततद्वधायेत्यर्थः । अवज्ञायेति पाठेपि चतुर्थीपक्षे अयमेवार्थः । पक्षान्तरे साक्षात्कारपर्यन्तदर्शनं प्राप्येत्यर्थः ॥ १ ॥ मिषतां नः अस्मासु पश्यत्सु सत्स्वित्यर्थः । अनन्तरयोजनायामस्मासु जीवत्स्वित्यर्थः । अनादरे षष्ठी ॥ २ ॥ शूर इत्यादिसार्धश्लोक एकान्वयः ॥ क्रियाभेदाच्छूरपदद्वयं । विबुधेन्द्रजित् देवेन्द्रजित् ॥ ३ ॥ दारुणं करुणं । घोरं तीक्ष्णं । कश्मलं मूर्च्छा । "मूर्च्छा तु कश्मलं मोहः" इत्यमरः

---

ति० सचिवाः अवशिष्टसुपार्श्वादिमन्त्रिणः । अवज्ञाय अवक्षिप्ता ज्ञा ज्ञानंयस्यतस्मै । पुत्रवधवृत्तान्तज्ञानरहितायेत्यर्थः । तीर्थस्तु अवज्ञाय अभिज्ञाय दृष्ट्वा पूर्वंश्रुत्वापश्चाद्युद्धभूमिंगत्वाप्रत्यक्षीकृत्याचचक्षुरित्यर्थमाह । स० जानाति यः स ज्ञः सनभवतीत्यवज्ञः एतद्वार्तानभिज्ञस्तस्मै । लक्ष्मणेनावज्ञायहतइत्युत्तरत्रान्वयोवा । एतावतापिनसीताप्रदानप्रज्ञातवेतितमवज्ञाय तिरस्कृत्येतिवा । शि० अवज्ञाय सर्वसत्पुरुषानादरकर्त्रेदशग्रीवाय ॥ १ ॥ ति० मिषतांनइति । योद्धृराक्षसैर्दर्शनाच्छत्रिन्यायेनबोध्यं । स० अत्याप्तैर्दृष्टत्वात्तैस्सहाद्रष्टृभिरपि मिषतांनइत्युक्तिःसंभवति ॥ २ ॥ स० हेविबुध इतउत्तरंकर्तव्यज्ञान । इन्द्रजित् विबुधैःसहित इन्द्रस्तंजयतीतिसतथावा । विबुधान्देवान् इन्द्रंचजयतीतिनागोजिभट्टव्याख्यानंतु सर्वथापीन्द्रशब्दस्यपूर्वनिपातस्यावर्जनीयत्वादुपेक्ष्यं । देवदेवेन्द्रोभयप्राधान्यास्वारस्याच्च । अस्मत्पक्षे "सहयुक्तेऽप्रधाने" इतिदेवाप्राधान्येन्द्रपारम्यलाभस्वारस्यात् ॥ ३ ॥

[ पा० ] १ ङ. च. झ. ञ. ट. चेन्द्रजितोवधं. २ ङ—ट. स्वज्ञाय. ३ घ. राक्षसाः. ङ. झ. सत्वराः. ४ क.—च. ज. झ ट. पुत्रस्ते. ५ ख. ग. ङ. झ. संतर्प्य. ६ ख. ङ. झ. ट. प्राविशन्महत्.

ननु त्वमिषुभिः क्रुद्धो भिन्द्याः कालान्तकावपि ॥ मन्दरस्यापि शृङ्गाणि किं पुनर्लक्ष्मणं युधि ॥७॥
अद्य वैवस्वतो राजा भूयो बहुमतो मम ॥ येनाद्य त्वं महाबाहो संयुक्तः कालधर्मणा ॥ ८ ॥
एष पन्थाः सुयोधानां सर्वामरगणेष्वपि ॥ यः कृते हन्यते भर्तुः स पुमान्स्वर्गमृच्छति ॥ ९ ॥
अद्य देवगणाः सर्वे लोकपालास्तथर्षयः ॥ हतमिन्द्रजितं श्रुत्वा सुखं स्वप्स्यन्ति निर्भयाः ॥ १० ॥
अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना ॥ एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ॥११॥
अद्य नैर्ऋतकन्यानां श्रोष्याम्यन्तःपुरे रवम् ॥ करेणुसङ्घस्य यथा निनादं गिरिगह्वरे ॥ १२ ॥
यौवराज्यं च लङ्कां च रक्षांसि च परंतप ॥ मातरं मां च भार्यां च क्व गतोसि विहाय नः ॥१३॥
मम नाम त्वया वीर गतस्य यमसादनम् ॥ प्रेतकार्याणि कार्याणि विपरीते हि वर्तसे ॥ १४ ॥
स त्वं जीवति सुग्रीवे लक्ष्मणे च सराघवे ॥ मम शल्यमनुद्धृत्य क्व गतोसि विहाय नः ॥ १५ ॥
एवमादिविलापार्तं रावणं राक्षसाधिपम् ॥ आविवेश महान्कोपः पुत्रव्यसनसंभवः ॥ १६ ॥
प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः ॥ दीप्तं संदीपयामासुर्घर्मेऽर्कमिव रश्मयः ॥ १७ ॥
ललाटे भ्रुकुटीभिश्च संगताभिर्व्यरोचत ॥ युगान्ते सह नक्रैस्तु महोर्मिभिरिवोदधिः ॥ १८ ॥
कोपाद्विजृम्भमाणस्य वक्त्राद्व्यक्तमभिज्वलन् ॥ उत्पपात स भूयोग्निर्वृत्रस्य वदनादिव ॥ १९ ॥
स पुत्रवधसंतप्तः शूरः क्रोधवशं गतः ॥ समीक्ष्य रावणो बुद्ध्या वैदेह्या रोचयद्वधम् ॥ २० ॥
तस्य प्रकृत्या रक्ते च रक्ते क्रोधाग्निनाऽपि च ॥ रावणस्य महाघोरे दीप्ते नेत्रे बभूवतुः ॥ २१ ॥
घोरं प्रकृत्या रूपं तत्तस्य क्रोधाग्निमूर्च्छितम् ॥ बभूव रूपं क्रुद्धस्य रुद्रस्येव दुरासदम् ॥ २२ ॥
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नस्रबिन्दवः ॥ दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥ २३ ॥
दन्तान्विदशतस्तस्य श्रूयते दशनस्वनः ॥ यन्त्रस्यावेष्ट्यमानस्य महतो दानवैरिव ॥ २४ ॥
कालाग्निरिव संक्रुद्धो यां यां दिशमवैक्षत ॥ तस्यां तस्यां भयत्रस्ता राक्षसाः संविलिल्यिरे ॥२५॥

॥ ४—६ ॥ नन्वित्यामन्त्रणे । कालान्तकौ यमस्य मूर्तिभेदौ ॥ ७ ॥ भूयः अतिशयेन । कालधर्मणा मरणेन । आर्षोनिच् समासान्तः । संयुक्तः संयोजितः ॥ ८ ॥ युद्धमरणस्य सर्वाकाङ्क्षितत्वाद्युद्धहतं त्वां न शोचामीत्याह—एष इति ॥ एषः युद्धमरणरूपः पन्थाः ॥ एवं यशस्यत्वादशोच्यत्वमुक्त्वा स्वर्ग्यत्वादशोच्यत्वमाह—य इति ॥ ९—११ ॥ लोकास्त्रय इत्युक्तावपि पृथिव्याः पृथगुपादानं प्राधान्यात् । यथा ब्राह्मणा आगता वसिष्ठोप्यागत इत्यादौ ॥ १२ ॥ नः सर्वानिति योजनीयं ॥ १३—१६ ॥ प्रकृत्या कोपनमित्यस्य विवरणं दीप्तमिति । पुत्रस्य पुत्रसंबन्धिन्यः । पुत्रविषया इत्यर्थः । आधयः शोकाः । पुनः भूयः । संदीपयामासुः कोपयामासुः । अर्कपक्षे क्रूरयामासुरित्यर्थः ॥ १७ ॥ भ्रुकुटीभिरिति बहुवचनं दशशिरस्कत्वात् ॥ १८—२३ ॥ आवेष्ट्यमानस्य भ्राम्यमाणस्य । यन्त्रस्य तिलपीडनयन्त्रस्य । दानवैर्बलवद्भिरित्यर्थः ॥ २४ ॥ संविलिल्यिरे ।

**ती०** कालान्तकावपि कालः सर्वसंहारकः । अन्तकः कालाभिमानीपुरुषः ॥ ७ ॥ **स०** वैवस्वतोराजा प्रेतराजः । बहुमतः । एतादृशमपित्वांनिनायेतिश्लाघनीयइतिभावः । कालधर्मणा कालोमारणंधर्मोयस्यासौ कालधर्मा । तेन यमेनत्वमद्यसंयुक्तः मृतइतियावत् । **शि०** बहुभूयः अत्यधिकोमममतः ज्ञातः ॥ ८ ॥ **ति०** रावणंचसमाधिगमितिपाठे सम्यगाधिः समाधिः मनोव्यथा तांगच्छतीत्यर्थइतितीर्थः ॥ १६ ॥ **ती०** सपुत्रवधेत्यस्यप्रातीतिकार्थःस्पष्टः । वस्तुतस्तु—रावणः वैदेह्या हेतुभूतया वधं स्ववधंबुद्ध्यासमीक्ष्य इतःपरंरामोमामवश्यंवधिष्यतीतिनिश्चित्येत्यर्थः । अरोचयत् स्ववधमित्यनुषङ्गः ॥ २० ॥ **ति०** यन्त्रस्य

[ पा ] १ ख. ग. ङ. च. ज.—ट. दृष्ट्वासुखं. २ घ. मृतेनेन्द्रजिता. ३ ङ. झ. भार्याश्च. ४ ख. सर्वाणि. ५ क. ख. ग. च. सधूमोर्मिः. ङ. झ. ट. सधूमाग्निः. घ. विधूमोर्मिः. ६ ङ.—ट. व्यवस्थितं. ७ ङ. झ. ट. स्याकृष्यमाणस्य. ८ क. ख. ग. संनिलिल्यिरे.

तमन्तकमिव क्रुद्धं चराचरचिखादिषुम् ॥ वीक्षमाणं दिशः सर्वा राक्षसा नोपचक्रमुः ॥ २६ ॥
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः ॥ अब्रवीद्रक्षसां मध्ये संस्तम्भयिषुराहवे ॥ २७ ॥
मया वर्षसहस्राणि चरित्वा दुश्चरं तपः ॥ तेषु तेष्व[1]वकाशेषु स्वयंभूः परितोषितः ॥ २८ ॥
तस्यैव तपसो व्युष्टया प्रसादाच्च स्वयंभुवः ॥ नासुरेभ्यो न देवेभ्यो भयं मम कदाचन ॥ २९ ॥
कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम् ॥ देवासुरविमर्देषु न भिन्नं वज्र[2]शक्तिभिः ॥ ३० ॥
तेन मामद्य संयुक्तं रथस्थमिह संयुगे ॥ प्रतीयात्कोऽद्य मामाजौ साक्षादपि पुरन्दरः ॥ ३१ ॥
यत्तदाऽभिप्रसन्नेन सशरं कार्मुकं महत् ॥ देवासुरविमर्देषु मम[3] दत्तं स्वयंभुवा ॥ ३२ ॥
अद्य तूर्यशतैर्भीमं धनुरुत्थाप्यतां मम ॥ रामलक्ष्मणयोरेव वधाय परमाहवे ॥ ३३ ॥
स पुत्रवधसंतप्तः शूरः क्रोधवशं गतः ॥ समीक्ष्य रावणो बुद्ध्या [4]सीतां हन्तुं व्यवस्यत ॥ ३४ ॥
प्रत्यवेक्ष्य तु ताम्राक्षः सु[5]घोरो घोरदर्शनः ॥ दीनो दीनस्वरान्सर्वांस्तानुवाच निशाचरान् ॥ ३५ ॥
मायया मम वत्सेन वञ्चनार्थं वनौकसाम् ॥ किंचिदेव हतं तत्र सीतेयमिति दर्शितम् ॥ ३६ ॥
तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः ॥ वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम् ॥ ३७ ॥
इत्येवमुक्त्वा सचिवान्खड्गमाशु परामृशत् ॥ ३८ ॥
उ[6]द्धृत्य गुणसंपन्नं विमलाम्बरवर्चसम् ॥ निष्पपात स वेगेन सभार्यः सचिवैर्वृतः ॥ ३९ ॥
रावणः पुत्रशोकेन भृशमाकुलचेतनः ॥ संक्रुद्धः खड्गमादाय सहसा यत्र मैथिली ॥ ४० ॥
व्रजन्तं राक्षसं प्रेक्ष्य सिंहनादं प्रचुक्रुशुः ॥ ऊचुश्चान्योन्यमा[7]श्लिष्य संक्रुद्धं प्रेक्ष्य रा[8]क्षसाः ॥ ४१ ॥

---

स्तम्भादिव्यवहिता बभूवुरित्यर्थः ॥ २५ ॥ चिखादिषुं संहर्तुमिच्छुमित्यर्थः । नोपचक्रमुः नोपसेदुः ॥२६॥ संस्तम्भयिषुराहवे युद्धभीतान्राक्षसान् युद्धे स्थापयितुकामः । सनि द्विर्वचनाभाव आर्षः ॥ २७ ॥ अवकाशेषु तपःसमाप्तिषु ॥२८॥ व्युष्टया समृद्ध्या । "व्युष्टिः फले समृद्धौ च" इत्यमरः । भयाभावे हेतुमाह—कवचमिति ॥ यत् यस्मात् । कवचमस्ति तस्मादिति पूर्वेणान्वयः ॥ २९-३० ॥ तेन कवचेन । संयुक्तं रथस्थं मां इह संयुगे कः प्रतीयात् आभिमुख्येनागच्छेत् । अद्य मामाजौ साक्षात्पुरन्दरोपि न प्रतीयादिति च योज्यं । अर्थसिद्धौ नञ् । क्रियापदमस्त्येव । अनेवंव्याख्याने अद्य मामाजाविति पुनरुक्तं स्यात् ॥ ३१ ॥ यत्तदेत्यादिश्लोकद्वयमेकान्वयं ॥ देवासुरविमर्देषु विमर्दकाल इत्यर्थः । अद्य तूर्यशतैरित्यनेन इतः पूर्वमिदं धनुर्न नीतमिति गम्यते ॥ ३२—३४ ॥ सुघोरः सुघोरप्रकृतिः ॥३५॥ माययेत्यादिश्लोकद्वयमेकान्वयं ॥ सीतेयमिति दर्शितं किंचित् अलीकमेवेत्यर्थः ॥ ३६—३७ ॥ इत्येवमित्यर्धं ॥ परामृशत् आददे ॥ ३८ ॥ उद्धृत्येत्यादिश्लोकद्वयमेकं वाक्यं ॥ गुणसंपन्नं माल्यालंकृतं । विमलाम्बरवर्चसं विमलाकाशसदृशं । खड्गमादाय कोशादुद्धृत्य । यत्र मैथिली तं देशंप्रति निष्पपातेत्यन्वयः ॥ ३९—४० ॥ व्रजन्तमित्यादिसार्धश्लोकत्रयमेकान्वयं ॥ रत्नानि श्रेष्ठवस्तूनि । "रत्नं स्वजाति-

---

मन्दररूपमथनयन्त्रस्य । वासुकिना करणेन । दानवैः कृष्यमाणस्य मथनतः क्षीराब्धिमथनंकुर्वतोमन्दरस्येव ॥२४॥ **स०** तेन कवचेन । संयुक्तं संयुगे संयुगार्थं । रथस्थं इहाद्य मां आजौ रणभूमौ कःप्रतीयात् नकोपि । देवाधिपश्चेदागच्छेदित्यतआह—साक्षादिति । साक्षात्पुरन्दरश्चेदप्यद्यनप्रतीयादितिशेषः । तेननपुनरुक्तिः ॥३१॥ **ती०** वस्तुतस्तु सीतांहन्तुं गन्तुं सीतादर्शनार्थंगन्तुंव्यवस्यतेत्यर्थः । 'हनहिंसागत्योः' इति धातुः ॥ ३४ ॥ **ति०** क्षत्रबन्धुं वस्तुतोऽक्षत्रियं । **ती०** माययेत्यादिश्लोकद्वयस्यवास्तवार्थस्तु—ममवत्सेन बालेनापिसता इन्द्रजिता वनौकसांवञ्चनार्थं इयंसीतेतिकिंचिदेवालीकमेवहतंदर्शितं । अहं क्षत्रबन्धुं क्षत्राणांबन्धुंपरमात्मंराममनुव्रतां वैदेहीं तथ्यंयथाभवतितथानाशयिष्यामि यदितदिदमात्मानंप्रत्यप्रियमेवस्यात् । अतःकरिष्ये इतरराक्षससंतो-

**[ पा० ]** १ घ. तेषुचकालेषु. २ ङ. झ. वज्रमुष्टिभिः. ३ ख. च. मयाप्राप्तंस्वयंभुवा. ४ ख. वैदेह्यारोचयद्वधं. ५ ख. च. सुघोरान्घोरदर्शनात. क. ज. ञ. ट. सुघोरोघोरदर्शनान्. ६ ङ. झ. ट. उत्प्लुत्य. ख. घ. उद्गृह्य. ७ क. ख. ग. ङ. च. झ. ञ. ट. मालिङ्ग्य. घ. मालोक्य. ८ ङ. च. झ. ञ. ट. राक्षसं.

अथैनं तावुभौ दृष्ट्वा भ्रातरौ प्रव्यथिष्यतः ॥ लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः ॥४२॥
बहवः शत्रवश्चापि संयुगेषु निपातिताः ॥ त्रिषु लोकेषु रत्नानि भुङ्क्ते चाहृत्य रावणः ॥
विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि ॥ ४३ ॥
तेषां संजल्पमानानामशोकवनिकां गताम् ॥ अभिदुद्राव वैदेहीं रावणः क्रोधमूर्च्छितः ॥ ४४ ॥
वार्यमाणः सुसंक्रुद्धः सुहृद्भिर्हितबुद्धिभिः ॥ अभ्यधावत संक्रुद्धः खे ग्रहो रोहिणीमिव ॥ ४५ ॥
मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता ॥ ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम् ॥ ४६ ॥
[1]तं निशाम्य सनिस्त्रिंशं व्यथिता जनकात्मजा ॥ निवार्यमाणं बहुशः सुहृद्भि[2]रनुवर्तिनम् ॥
सीता दुःखसमाविष्टा विलपन्तीदमब्रवीत् ॥ ४७ ॥
यथाऽयं मामभिक्रुद्धः समभिद्रवति स्वयम् ॥ वधिष्यति सनाथां मामनाथामिव दुर्मतिः ॥ ४८ ॥
बहुशश्चोदयामास भर्तारं मामनुव्रताम् ॥ भार्या [3]भव रमस्वेति प्रत्याख्यातो ध्रुवं मया ॥ ४९ ॥
सोयं ममानुपस्थाने व्यक्तं नैराश्यमागतः ॥ क्रोधमोहसमाविष्टो निहन्तुं मां समुद्यतः ॥ ५० ॥
अथवा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ ॥ मन्निमित्तमनार्येण समरेऽद्य निपातितौ ॥ ५१ ॥
[ [4]भैरवो हि महान्नादो राक्षसानां श्रुतो मया ॥ बहूनामिह हृष्टानां तथा विक्रोशतां प्रियम् ॥ ]
अहो धिङ्मन्निमित्तोयं विनाशो राजपुत्रयोः ॥ ५२ ॥
अथवा पुत्रशोकेन अ[5]हत्वा रामलक्ष्मणौ ॥ विधमिष्यति मां रौद्रो राक्षसः पापनिश्चयः ॥ ५३ ॥
हनूमतोपि यद्वाक्यं न कृतं क्षुद्रया मया ॥ ५४ ॥
यद्यहं तस्य पृष्ठेन तदा यायामनिन्दिता ॥ नाद्यैवमनुशोचेयं भर्तुरङ्कगता सती ॥ ५५ ॥
मन्ये तु हृदयं तस्याः कौसल्यायाः फलिष्यति ॥ एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥५६॥
सा हि जन्म च बाल्यं च यौवनं च महात्मनः ॥ धर्मकार्यानुरूपं च रुदन्ती संस्मरिष्यति ॥५७॥
निराशा निहते पुत्रे दत्त्वा श्राद्धमचेतना ॥ अग्निमारोक्ष्यते नूनमपो वाऽपि प्रवेक्ष्यति ॥ ५८ ॥
धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् ॥ यन्निमित्तमिदं दुःखं कौसल्या प्रतिपत्स्यते ॥ ५९ ॥
इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम् ॥ रोहिणीमिव चन्द्रेण विना ग्रहवशं गताम् ॥ ६० ॥
एतस्मिन्नन्तरे तस्य अमात्यो बुद्धिमाञ्शुचिः ॥ सुपार्श्वो नाम मेधावी [6]राक्षसो राक्षसेश्वरम् ॥
[7]निवार्यमाणं सचिवैरिदं वचनमब्रवीत् ॥ ६१ ॥

श्रेष्ठेपि" इत्यमरः ॥ ४१—४४ ॥ ग्रहः अङ्गारकः ॥ ४५—४७ ॥ यथा यस्मादित्यर्थः ॥ ४८—४९ ॥ अनुपस्थाने अनुपस्थानात् ॥ ५० ॥ तौ निहत्य तेन निस्त्रिंशेन सह प्रवेशनमपि संभवतीत्यभिप्रायेणाह—अथवेत्यादि ॥ ५१—५२ ॥ अत्र निमित्तान्तरमाशङ्कते—अथवा पुत्रशोकेनेति ॥ अहत्वा हन्तुमशक्तो भूत्वा ॥ ५३ ॥ हनूमत इत्यर्धं ॥ क्षुद्रया विचारमूढया ॥ ५४ ॥ यायामनुशोचेयमिति "हेतुहेतुमतोर्लिङ्"इति लिङ् ॥ ५५ ॥ प्रथमपक्षानुसारेण शोचति—मन्य इति ॥ ५६ ॥ धर्मकार्यानुरूपं धर्मकार्यानुरूपत्वं ॥ ५७ ॥ अचेतना मूर्च्छिता ॥ ५८—५९ ॥ मैथिलीं दृष्ट्वा रावणमब्रवीदित्यन्वयः ॥ ६०—

षार्थंतस्याःकिंचित् दुःखमितिशेषः ॥ ३६—३७ ॥ **ति०** निवार्यमाणमप्यनिवर्तिनं । अनुवर्तिनमितिपाठे अभिमुखमागच्छन्तं ॥ ४७ ॥ **ति०** यदाश्रोष्यते तदा फलिष्यति स्फुटिष्यति । यदिरामोपिहन्यतइतिशेषः ॥ ५६ ॥ **ति०** सुपार्श्वोनामामात्यः शुचिः शुद्धव्रतः । तदितरसचिवैरेवंवक्तुमयोग्यमितिनिवार्यमाणोपि रावणंप्रतीदमब्रवीत् । अस्यैवाविन्ध्यइतिनामान्तरं । अत एवभारते "अशोकवनिकास्थांतांरामदर्शनलालसाम् । खड्गमादायदुष्टात्माजवेनापिपपातह । तद्बुद्ध्वातस्यदुर्बुद्धेरविन्ध्यःपापनिश्च-

[पा०] १ ख. सानिशम्य. २ झ. रनिवर्तिनं. ३ क. ख. ग. ङ. च. झ. ञ. ट. ममभवस्वेति. ४ अयंश्लोकः क. ख. ङ. च. झ. ञ. ट. पाठेषुदृश्यते. ५ क. घ. हत्वातौ. ६ क. ख. ग. ङ. च. झ. ञ. ट. रावणंराक्षसेश्वरं. ७ झ. निवार्यमाणः.

कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज ॥ हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य हि ॥ ६२ ॥
वेदविद्याव्रतस्नातः स्वकर्मनिरतः सदा ॥ स्त्रियाः कस्माद्वधं वीर मन्यसे राक्षसेश्वर ॥ ६३ ॥
मैथिलीं रूपसंपन्नां प्रत्यवेक्षस्व पार्थिव ॥ त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज ॥ ६४ ॥
अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् ॥ कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥ ६५ ॥
शूरो धीमान्रथी खड्गी रथप्रवरमास्थितः ॥ हत्वा दाशरथिं रामं भवान्प्राप्स्यति मैथिलीम् ॥ ६६ ॥
स तद्दुरात्मा सुहृदा निवेदितं वचः सुधर्म्यं प्रतिगृह्य रावणः ॥
गृहं जगामाथ ततश्च वीर्यवान्पुनः सभां च प्रययौ सुहृद्वृतः ॥ ६७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

---

## चतुर्नवतितमः सर्गः ॥ ९४ ॥

रामेण रावणमूलबलवधः ॥ १ ॥

स प्रविश्य सभां राजा दीनः परमदुःखितः ॥ निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १ ॥
अब्रवीच्च स तान्सर्वान्बलमुख्यान्महाबलः ॥ रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्षितः ॥ २ ॥
सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः ॥ निर्यान्तु रथसङ्घैश्च पादातैश्चोपशोभिताः ॥ ३ ॥
एकं रामं परिक्षिप्य समरे हन्तुमर्हथ ॥ वर्षन्तः शरवर्षेण प्रावृट्काल इवाम्बुदाः ॥ ४ ॥

---

६४ ॥ अभ्युत्थानं युद्धनिर्याणप्रारम्भं । चतुर्दशीं चतुर्दश्यां । अमावास्यां अमावास्यायां । अनेन त्रयोदशयुद्धदिनान्यतीतानीत्यवगम्यते । तथाहि "ततोस्तमगमत्सूर्यः संध्यया प्रतिरञ्जितः । पूर्णचन्द्रप्रदीपा च क्षपा समभिवर्तत" इति वचनात् । पौर्णमास्यां सुवेलाप्रवेशः । ततः कृष्णपक्षप्रथमायां युद्धस्यारम्भः । तस्यामेव रात्रौ नागपाशबन्धतद्विमोक्षौ । द्वितीयायां धूम्राक्षस्य वधः । तृतीयायां वज्रदंष्ट्रस्य । चतुर्थ्यामकम्पनस्य । प्रहस्तस्य पञ्चम्यां । षष्ठ्यां रावणमुकुटभङ्गः । सप्तम्यां कुम्भकर्णस्य वधः । अष्टम्यामतिकायादीनां । नवम्यां पुनरिन्द्रजिद्युद्धं । तस्यामेव रात्रौ कुम्भनिकुम्भादीनां वधः । दशम्यां मकराक्षस्य । एकादश्यां द्वादश्यां त्रयोदश्यां चेन्द्रजिद्वधः । वस्तुतस्तु नवम्यां युद्धारम्भात्तदारभ्य दिनद्वयेन रावणेन्द्रजिन्मूलबलव्यतिरिक्तराक्षसनिबर्हणात् एकादशीद्वादशीत्रयोदशीभिरिन्द्रजिद्वध इति चतुर्दश्यामभ्युत्थानवचनं युज्यत एव ॥ ६५—६७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥

---

अथ मूलबलयुद्धं—स प्रविश्येत्यादि ॥ १ ॥ रावणः प्राञ्जलिरिति । अनुनयार्थमञ्जलिकरणं ॥ २—३ ॥ परिक्षिप्य आवार्य । शरवर्षेण वृष्ट्या

---

यम् । शमयामाससंक्रुद्धंश्रूयतांयेनहेतुना" इत्युक्तं ॥ ६१ ॥ **स०** वैश्रवणानुज ऋषिवंशसंभवस्याधर्मप्रवृत्तिरनुचितेत्यनेनध्वन्यते ॥ ६२ ॥ **ति०** वेदविद्याग्रहापेक्षितब्रह्मचर्यव्रतपूर्वविद्यां गृहीत्वास्नातोगुरुकुलात्समावृत्तः तदनन्तरंदारग्रहणपूर्वकं नित्याग्निहोत्रादिस्वकर्मनिरतः ॥ ६३ ॥ **ती०** प्रत्यवेक्षस्व कालान्तरेमैथिलीवशगाभविष्यतीतिप्रत्यवेक्षस्वेत्यर्थः । **ति०** प्रत्यवेक्षस्व रामवधपर्यन्तमितिशेषः । त्वंतस्मिन्नेव राघवएवक्रोधमुत्सृज ॥ ६३ ॥ **रामानु०** रथी महारथइत्यर्थः ॥ ६६ ॥ इतित्रिनवतितमः सर्गः ॥ ९३ ॥

**स०** आहवेसर्वान्हतान्छ्रुत्वाऽनुत्साहान्युद्धायप्रोत्साहयितुंप्राञ्जलिर्भूत्वाऽब्रवीदित्यर्थः ॥ २ ॥ **स०** शरवर्षाणि जलवर्षाणि

[ **पा०** ] १ ग. ङ. च. झ. ञ. ट. तस्मिन्नेवसहास्माभिराहवे. २ घ. ङ. झ. ञ. चतुर्दशी. ३ ख. सन्नद्धःकवचीखड्गी. ४ ङ. झ. भीमंभवान्. ५ क.—घ. ञ. प्रवृष्टाः. ङ. च. झ. ट. प्रहृष्टाःशरवर्षाणि.

अथ वाऽहं शरैस्तीक्ष्णैर्भिन्नगात्रं महारणे ॥ भवद्भिः श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥ ५ ॥
इत्येतद्राक्षसेन्द्रस्य वाक्यमादाय राक्षसाः ॥ निर्ययुस्ते रथैः शीघ्रैर्नानानीकैः[1] सुसंवृताः ॥ ६ ॥
परिघान्पट्टिशांश्चैव शरखङ्गपरश्वधान् ॥ शरीरान्तकरान्सर्वे चिक्षिपुर्वानरान्प्रति ॥ ७ ॥
वानराश्च द्रुमाञ्शैलान्राक्षसान्प्रति चिक्षिपुः ॥ ८ ॥
स संग्रामो महान्भीमः सूर्यस्योदयनं प्रति ॥ रक्षसां वानराणां च तुमुलः समपद्यत ॥ ९ ॥
ते गदाभिर्विचित्राभिः प्रासैः खड्गैः परश्वधैः ॥ अन्योन्यं समरे जघ्नुस्तदा वानरराक्षसाः ॥ १० ॥
एवं प्रवृत्ते संग्रामे ह्युद्भूतं सुमहद्रजः ॥ रक्षसां वानराणां च शान्तं शोणितविस्रवैः ॥ ११ ॥
मातङ्गरथकूलाश्च वाजिमत्स्या ध्वजद्रुमाः ॥ शरीरसंघाटवहाः प्रसस्रुः शोणितापगाः ॥ १२ ॥
ततस्ते वानराः सर्वे शोणितौघपरिप्लुताः ॥ ध्वजवर्मरथानश्वान्नानाप्रहरणानि च ॥
आप्लुत्याप्लुत्य समरे राक्षसानां बभञ्जिरे ॥ १३ ॥
केशान्कर्णललाटांश्च नासिकाश्च प्लवङ्गमाः ॥ रक्षसां दशनैस्तीक्ष्णैर्नखैश्चापि न्यकर्तयन्[2] ॥ १४ ॥
एकैकं राक्षसं सङ्ख्ये शतं वानरपुङ्गवाः ॥ अभ्यधावन्त फलिनं वृक्षं शकुनयो यथा ॥ १५ ॥
तथा गदाभिर्गुर्वीभिः प्रासैः खड्गैः परश्वधैः ॥ निजघ्नुर्वानरान्घोरान्राक्षसाः पर्वतोपमाः ॥ १६ ॥
राक्षसैर्[3]युध्यमानानां वानराणां महाचमूः ॥ शरण्यं शरणं याता रामं दशरथात्मजम् ॥ १७ ॥
ततो रामो महातेजा धनुरादाय वीर्यवान् ॥ प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष ह ॥ १८ ॥
प्रविष्टं तु तदा रामं मेघाः सूर्यमिवाम्बरे ॥ नाभिजग्मुर्[4]महाघोरं निर्दहन्तं शराग्निना ॥ १९ ॥
कृतान्येव सुघोराणि रामेण रजनीचराः ॥ रणे रामस्य ददृशुः कर्माण्यसुकराणि च ॥ २० ॥
चालयन्तं[5] महानीकं विधमन्तं महारथान्[6] ॥ ददृशुस्ते न वै रामं वातं वनगतं यथा ॥ २१ ॥

---

हन्तुमर्हथेत्यन्वयः ॥ ४ ॥ स रामो यदि हन्तुं न शक्येत तथापि भवतां शरैः भिन्नगात्रः स्यात् तेन तस्य वधः सुकरो मे भवेदित्यभिप्रायेणाह—अथ वेति ॥ इदानीं यूयं तं हन्तुं न शक्ताश्चेदिदानीं तीक्ष्णैः शरैर्भवद्भिर्भिन्नगात्रं श्वो निहन्तास्मि ॥ ५—८ ॥ सूर्यस्योदयनं प्रति सूर्योदयमारभ्य अन्योन्यं जघ्नुरित्यत्र शिलावृक्षाणामप्युपलक्षणं । राक्षसेभ्योपहृतानि गदाखङ्गादीनि राक्षसानामिव वानराणामपि संभवन्तीति वा तथोक्तमिति ज्ञेयं ॥ ९—११ ॥ शरीराण्येव संघाटाः प्लवाः तान् वहन्तीति शरीरसंघाटवहाः ॥ १२ ॥ ततस्ते वानराः सर्वे शोणितौघपरिप्लुता इत्यारभ्य राक्षसानां बभञ्जिर इत्यन्तं सार्धश्लोक एकान्वयः ॥ १३ ॥ रक्षसां केशानिति क्रमेणान्वयः । न्यकर्तयन् चिच्छिदुः ॥ १४—१६ ॥ राक्षसैरिति ॥ वानरसेनाशरणागतिरियं । राक्षसैर्वध्यमानानामित्याकिंचन्यानन्यगतिकत्वोक्तिः । शरण्यमिति दयाद्युक्तिः । राममिति परत्वोक्तिः । दशरथात्मज इति सौलभ्योक्तिः ॥ १७—१९ ॥ कृतान्येव ददृशुः नतु क्रियमाणानीत्यर्थः ॥ २० ॥ न केवलं हस्तलाघवातिशयेन

---

बाणवर्षाणीतिनीरदसेनोभयपक्षेपिक्रमादर्थोबोध्यः । ति० शरवर्षाणि वर्षयतेति शेषः ॥ ४ ॥ ति० सूर्यस्योदयनंप्रति चतुर्दशीसूर्योदयमारभ्येत्यर्थः । त्रयोदशीरात्रिशेषेरावणस्यसीतासमीपगमनमितिबोध्यं ॥ ९ ॥ स० गदाभिरन्योन्यमित्यादितुनिहतराक्षसानामाच्छिद्यस्थापितैरिदानीमानीतैरितिवावानरैरिदानीमाच्छिन्नैर्गदादिभिरितिवाज्ञेयं । अथवा वानराश्चद्रुमाञ्छैलानिति पूर्वस्मादभिलषितविभक्त्यन्ततयानुकर्षः । ततश्चद्रुमादिभिर्गदादिभिश्चान्योन्यंजघ्नुरित्यन्वयःसंभवतिचायमर्थःसमसमरसमारंभसमयत्वादितिमन्तव्यम् ॥ १० ॥ स० शरीराण्येवसंघाटाः काष्ठनिचयाः । वहन्तीतिवहास्तेषांवहाः । तान्वहन्तीतिनागोजिभट्टविग्रहप्रदर्शनमदर्शनंज्ञापयतिकर्मण्यण्सूत्रस्य ॥ १२ ॥ स० वानराणांमहाचमूः तदभिन्नासेना ॥ १७ ॥

[ पा० ] १ ङ. झ. ञ. ट. नानानीकैश्चसंयुताः. २ ख. च. छ. ट. व्यदारयन्. घ. ङ. ज. झ. व्यकर्तयन्. ३ क.—ट. राक्षसैर्वध्यमानानां. ४ ख. ङ.—ट. नाधिजग्मुः. ५ घ. व्यथयन्तं. ६ ग. महाबलान्.

छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीडितम् ॥ बलं रामेण ददृशुर्न रामं शीघ्रकारिणम् ॥ २२ ॥
प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् ॥ इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २३ ॥
एष हन्ति गजानीकमेष हन्ति महारथान् ॥ एष हन्ति शरैस्तीक्ष्णैः पदातीन्वाजिभिः सह ॥२४॥
इति ते राक्षसाः सर्वे रामस्य सदृशात्रणे ॥ अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य ते ॥ २५ ॥
न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ॥ मोहिताः परमास्त्रेण गान्धर्वेण महात्मनः ॥ २६ ॥
ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः ॥ पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥ २७ ॥
भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः ॥ अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥ २८ ॥
शरीरनाभि सत्त्वार्चिः शरारं नेमिकार्मुकम् ॥ ज्याघोषतलनिर्घोषं तेजोबुद्धि गुणप्रभम् ॥ २९ ॥

कर्मणामदर्शनं रणसंचारलाघवातिशयेन कर्तारमपि न ददृशुरित्याह—चालयन्तमिति ॥ यथा चालनविधमनादिकार्यलिङ्गात् वायुरनुमितो भवति तद्वद्रामोप्यनुमितः। नतु प्रत्यक्षित इत्यर्थः ॥ २१ ॥ उक्तमर्थं विशदयति—छिन्नमिति ॥ छिन्नं खण्डितं। भिन्नं विदारितं। प्रभग्नं शकलीकृतं। शस्त्रपीडितं हृदयार्पितशल्यं ॥२२॥ इन्द्रियार्थेषु तिष्ठन्तं इन्द्रियार्थाननुतिष्ठन्तं अनुभवन्तं। तेनानुभवेनानुमीयमानमपि भूतात्मानं भूतस्य पञ्चभूतात्मकशरीरस्य आत्मानं जीवात्मानं। प्रजाः यथा न पश्यन्ति तथैव शरीरेषु प्रहरन्तं तेन प्रहारेणानुमीयमानमपि राघवं पुरतश्चक्षुषा नाद्राक्षुरित्यर्थः। यद्वा इन्द्रियार्थेषु प्रत्यक्षतोनुभूयमानेषु गन्धादिगुणेषु निराश्रयगुणावस्थानासंभवात् सौक्ष्म्येणानुवृत्तं भूतात्मानमिव पुष्पाद्यवयवभूतपृथिव्यादिस्वरूपमिवेत्यर्थः ॥ २३ ॥ एष हन्तीत्यादिश्लोकद्वयमेकान्वयं ॥ सदृशान् सादृश्येन प्रतीयमानान्। अन्योन्यं सादृश्यादेव हेतोर्जघ्नुश्चेत्यन्वयः ॥ २४—२५ ॥ राक्षसानां रामादर्शनकारणमाह—न त इति ॥ इदमुपलक्षणं। सादृश्यदर्शनमपि मोहनास्त्रेणेति द्रष्टव्यं। महात्मना महास्वभावेन ॥ २६ ॥ अदर्शनवत्सदृशदर्शनवच्चानेकत्वदर्शनं नास्त्रकृतं किंतु भीतिकृतमित्याह—ते त्विति ॥ तुशब्दः पूर्वस्माद्विशेषपरः। मारीचेनाप्युक्तं—"अपि रामसहस्राणि भीतः पश्यामि रावण" इति ॥ २७॥ भ्रमन्तीं रामस्य मण्डलाकारगतिविशेषेष्विति केचित्। निरन्तरज्याकर्षणादिति वयं। अलातचक्रप्रतिमां निर्ज्वालं काष्ठं निरन्तरभ्रमणेनान्तरालाग्रहणाच्चक्रत्वेन प्रतीयमानामिवेत्यर्थः ॥ २८ ॥ अथ तत्र समरसमये मण्डलीकृतकार्मुकं रामं सकलरिपुनिघातिसुदर्शनत्वेन रूपयति—शरीरेत्यादिना ॥ "ज्वाला-

ति० इति एषहन्तीत्यादिप्रकारेण कुपिताःसर्वेतेराक्षसाः रामस्यसदृशान् सदृशत्वेनप्रतीयमानान्। राक्षसान् रामसादृश्यादन्योन्यंजघ्नुः। "सदृशारावणस्यैतेरणेराक्षससत्तमाः" इतिपूर्वार्धपाठेरावणेनदेवासुरयुद्धादौसाक्षात्साह्यार्थंमूलबलतयातेषांदृष्टप्रत्ययानामत्यूर्जितबलानामेवसंगृहीतत्वात्तेषांरावणसादृश्यं। स० इति इत्याकारकज्ञानेन। तेसर्वेराक्षसाः एकसैन्यस्थाः रणेराघवास्त्रेणमोहिताःसन्तः रामस्यसदृशाबभूवुः। ततश्चराघवस्यसादृश्यात्कुपिताःसन्तः अन्योन्यं अयंरामइतिसरामइतिपरस्परं जघ्नुः ॥ २५ ॥ स० एतदेवविशदयति—नतइति। सैन्यैकदेशस्थाः रामं अरिवाहिनींगान्धर्वास्त्रेणदहन्तं स्वस्थानेस्थितंतेनास्त्रेणमहात्मना कर्त्रामोहिताःसन्तः नददृशिरे इतियोजना ॥ २६ ॥ स० तत्रैवसैन्यान्तरेवृत्तंरामचरितमाह—तइति। ते रावणप्रेरिताराक्षसाः। रामसहस्राणि विश्वरूपत्वाद्रामस्यतद्गृहीतान्यनन्तरामरूपाणीत्यर्थः। रणेपश्यन्ति। उक्तंचभगवत्पादैः "सएवसर्वत्रचदृश्यमानो विदिक्षुदिक्षुप्रजघानसर्वशः" इति। पुनःक्षणान्तरे एकमेवपश्यन्ति। उक्तंचसंग्रहरामायणे—"अपाङ्गमात्रेणजगन्नियन्तानन्वेकरूपोपिरिपून्निहन्यात्। स्वैश्वर्यमेवंचनिदर्शयन्हिसविश्वरूपोकृतविश्वरूपम्" इत्याद्यारभ्य "एकीचकाराथसरामदेवोदीपाभिमानीहियथाग्निदेवः" इत्यन्तेन। यत्तुभारते "मायावीचासृजन्मायांरावणोराक्षसाधिपः" "अथभूयोपिमायांसव्यदधाद्राक्षसाधिपः" इत्यादिनारावणमाययाऽनेकराक्षसरामलक्ष्मणरूपनिर्माणकथनं तदविरुद्धमित्यत्रापिग्राह्यं ॥ २७ ॥ ति० लाघवातिशयान्मण्डलीकृतकार्मुकंराक्षसान्निघ्नन्तंरामंकालचक्रेणोपमिनोति—शरीरेति। शरीरंमध्यदेहएवनाभिश्चक्रस्येवमध्यंयस्यतत्। सत्वं बलमेवार्चिर्ज्वालायस्यतत्। शराएवाराः मध्यकाष्ठानियस्यतत्। नेमिर्वलयाकारोऽवयवविशेषःतद्रूपंकार्मुकंयस्यतत्। तलंज्याघातवारणं तेनतज्जोघोषोलक्ष्यते। ज्याघोषतलघोषावेवनिर्घोषोध्वनिर्यस्यतत्। तेजः प्रतापः बुद्धिर्ज्ञानं तद्रूपौगुणावेवप्रभायस्यतत् ॥ २९ ॥

[ पा० ] १ घ. सारथीन्वाजिभिः.

**दिव्यास्त्रगुणपर्यन्तं निघ्नन्तं युधि राक्षसान् ॥ ददृशू रामचक्रं तत्कालचक्रमिव प्रजाः ॥ ३० ॥**
**अनीकं दशसाहस्रं रथानां वातरंहसाम् ॥ अष्टादश सहस्राणि कुञ्जराणां तरस्विनाम् ॥ ३१ ॥**

नेम्यरनाभ्यक्षपुरुषाङ्गं सुदर्शनं" इत्युक्तरीत्या चक्रं षडङ्गं भवति। तत्र कोदण्डचक्रमध्यस्थत्वाद्दृढत्वाच्च शरीरं नाभित्वेन दर्शयति—शरीरेति। नाभिः चक्रमध्योन्नतप्रदेशः। शरीरमेव नाभिर्यस्य तत्तथोक्तं। सत्त्वं बलमेवार्चिः ज्वाला यस्य तत् सत्त्वार्चिः। "वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियां" इत्यमरः। सत्त्वस्य परसन्तापहेतुत्वादर्चिष्ट्वेन निरूपणं। शरा एवाराणि चक्रमध्यशलाकाः यस्य तच्छरारं। सुदर्शनस्य सहस्रारत्वाच्छराणामरत्वरूपणेन युगपत्सहस्रशरसंधानं व्यज्यते। नेमिः आधारश्चक्रप्रान्तः। नेमिभूतं मण्डलीकृतकार्मुकं यस्य तत्कार्मुकनेमीत्यर्थः। एतेन मण्डलीकृतदशायामपि नाभिभूतरामशरीरपरिवेषेण धनुषो महोन्नतत्वमुच्यते। सुदर्शनस्य ज्वालामालया निरन्तरघोषवत्त्वाज्ज्यातलघोषं तद्घोषत्वेन रूपयति—ज्याघोषतलनिर्घोषमिति। तलं ज्याघातवारणं तेन तद्घोषो लक्ष्यते। ज्याघोषतलघोषावेव निर्घोषो यस्य तत्तथोक्तं। तेजः पराक्रम एव बुद्धिः अक्षं यस्य तत्तेजोबुद्धि। यथा "प्लवगसैन्यमुलूकजिता जितं" इत्यत्र उलूकशब्दो लक्षणया कौशिकशब्दं लक्षयित्वा इन्द्रजितमाह, तथा बुद्धिशब्दो बुद्धिजनकाक्षलक्षणया अक्षप्रदेशमाह। गुणः शरीरकान्तिः स एव प्रभा यस्य तत्तथोक्तं। दिव्यास्त्राणां गुणः शक्तिः माहात्म्यं वा तदेव पर्यन्तो धारा यस्य तद्दिव्यास्त्रगुणपर्यन्तं। निघ्नन्तं निघ्नत्। लिङ्गव्यत्यय आर्षः। किंच कालचक्रं ज्योतिश्चक्रमिव स्थितं। विष्णुपुराणे 'यत्र कालचक्रं प्रतिष्ठितं' इति प्रयोगात्। रामचक्रं उक्तरीत्या चक्रमिव स्थितं रामं ददृशुः। ननु यदि रामो मोहनास्त्रेण राक्षसान्संहरेत्तदेन्द्रजितोस्य को विशेषः। उच्यते। नात्र गान्धर्वास्त्रेण मोहनं कृतं। अपितु गान्धर्वप्रयोगे सति वेगातिशयेनाज्ञातस्वपरविभेदतया मोहिताः परस्परं जघ्नुः। यत्र रामो दृष्टः तत्क्षणे तत्र तस्यादर्शनाद्राममुद्दिश्य क्षिप्ताः शराः स्वकीयानेव घ्नन्ति। वेगातिशयादेव नानादिक्षु चक्षुःप्रसरे नानात्वेन दर्शनं। अतएव 'न रामं शीघ्रकारिण'मित्युक्तिः। कार्मुककोटेरलातचक्रप्रतिमत्वं रामस्य चक्रत्वरूपणं च प्रयोगशैघ्र्यादेव संगच्छते। अतएव सुग्रीवादयो मायाबलत्वं शङ्केरन्निति परिहरिष्यति—एतदस्त्रबलमिति। न ते ददृशिर इत्यस्य श्लोकस्यैवं योजना। गान्धर्वास्त्रेण दहन्तं रामं मोहिताः सन्तो न ददृशिरे। मोहोत्र वेगादग्रहणं। गान्धर्वास्त्रं दाहमात्रे हेतुरिति बोध्यं ॥२९–३०॥ अनीकमित्यादि॥ "एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरं॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः" इत्युक्तरीत्या दशसंख्यासंख्याता पत्तिः। पत्तितस्त्रिगुणं सेनामुखं। सेनामुखतस्त्रिगुणो गुल्मः। गुल्मतस्त्रिगुणो गणः। गणतस्त्रिगुणा वाहिनी। तत्त्रिगुणा पृतना। पृतनातस्त्रिगुणा चमूः। एवंच दशोनत्रिशताधिकसप्तसहस्रसंख्यालक्षणा चमूरनीकशब्देनोच्यते। सहस्राण्येव साहस्राणि दश साहस्राण्यस्मिन्सन्तीति दशसाहस्रं। रथानां दशसहस्राण्यनीकानीत्यर्थः। एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्यासंख्याता रथा इत्युक्तं भवति। रथाङ्कं ७ कोटि २९ लक्षं। अष्टादश सहस्राणीत्यनेन अनीकमित्येतद्विभक्तिविपरिणामेनानुषज्यते। अष्टादश सहस्राण्यनीकानीत्यर्थः। विंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसंख्यासंख्यातास्तरस्विनः कुञ्जरा इत्यर्थः। गजाङ्कं १३ कोटि १२ लक्ष २०००० सहस्रं। चतुर्दश सहस्राणीत्यत्रापि अनीकमित्येतद्विपरिणाम्यानुषञ्जनीयम्। चतुर्दश सहस्राण्यनीकानीत्यर्थः। षष्टिसहस्राधिकविंशतिलक्षोत्तरदशकोटिसंख्यासंख्याताः सारोहा वाजिन इत्यर्थः। तुरङ्ग १० कोटि २० लक्ष सहस्रं ६००००। पूर्णे शतसहस्रे द्वे अनीकानीत्यर्थः। अशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतकोटिसंख्यासंख्याताः पदातयो राक्षसा इत्यर्थः। पदाति १४५ कोटि ८० लक्षम्। वातरंहसामित्यादिविशेषण-

**स०** तत्सैन्यसंख्यामाह—**अनीकमिति**। अत्र एकोगजोरथश्चैकइत्याद्यारभ्यानीकगणनायांयावतीसंख्याभवति तावत्संख्याकानांरथानांपुनश्चदशसहस्रं। अनीकमित्येतद्विपरिणतंसत्सर्वत्रान्वेति। एवंचास्यसर्वस्यापिसैन्यस्यसंख्यानिर्णयस्तु "त्रिंशत्सहस्राणिमहौघकानामक्षौहिणीनामथषट्सहस्रं" इत्याचार्योक्तरीत्यानुसंधेयः ॥ ३१ ॥

चतुर्दश सहस्राणि सारोहाणां च वाजिनाम् ॥ पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम् ॥ ३२ ॥
दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः ॥ हतान्येकेन रामेण रक्षसां कामरूपिणाम् ॥ ३३ ॥
ते हताश्वा हतरथाः शान्ता विमथितध्वजाः ॥ अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ॥३४॥
हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम् ॥ आक्रीडमिव रुद्रस्य क्रुद्धस्य सुमहात्मनः ॥ ३५ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ साधु साध्विति रामस्य तत्कर्म समपूजयन् ॥ ३६ ॥
अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम् ॥ विभीषणं च धर्मात्मा हनूमन्तं च वानरम् ॥ ३७ ॥
जाम्बवन्तं हरिश्रेष्ठं मैन्दं द्विविदमेव च ॥ एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ ३८ ॥
निहत्य तां राक्षसवाहिनीं तु रामस्तदा शक्रसमो महात्मा ॥
अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ॥ ३९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

## पञ्चनवतितमः सर्गः ॥ ९५ ॥

तत्रतत्रराक्षसीभिस्सङ्घीभूय बन्धुनिधनशोकेन रावणगर्हणपूर्वकंविलापः ॥ १ ॥

तानि तानि सहस्राणि सारोहाणां च वाजिनाम् ॥ रथानां त्वग्निवर्णानां सध्वजानां सहस्रशः ॥ १ ॥
राक्षसानां सहस्राणि गदापरिघयोधिनाम् ॥ काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २ ॥
निहतानि शरैस्तीक्ष्णैस्तप्तकाञ्चनभूषणैः ॥ रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३ ॥

---

महिम्ना तद्भिन्ना रथगजतुरगपदातयोसंख्येया इति भावः । अत एवैवमनुसंदधते—"नागानामयुतं तुरङ्गनियुतं सार्धं रथानां शतं पादातं शतकोटि कर्तनविधावेकः कबन्धो रणे । एवं कोटिकबन्धकर्तनविधौ किंचिद्ध्वनिः किंकिणी यामार्धं परमात्मनो रघुपतेः कोदण्डघण्टारवः" इति ॥ कामरूपिणां रक्षसां संबन्धीनि । रथादिचतुरङ्गबलानि एकेन रामेण दिवसस्याष्टमेभागे पादोनघटिकाचतुष्टये निहतानीत्यन्वयः ॥ ३१—३४ ॥ हतैरिति । हतगजाद्युपलक्षितं सुमहात्मनो रामस्य तद्रणाजिरं रुद्रस्य आक्रीडं क्रीडास्थानं श्मशानमिव बभूव । आर्षं नपुंसकत्वं । "अचिरेण पुरी लङ्का श्मशानसदृशी भवेत्" इति पूर्वोक्तेः ॥ ३५—३६ ॥ अब्रवीच्चेत्यादिश्लोकद्वयमेकान्वयं ॥ प्रत्यनन्तरं समीपस्थं । क्षणेनानेन रक्षःप्रतिक्षेपजनितां मायावित्वशङ्कां वारयति—एतदस्त्रबलमिति । अत्रान्ते इतिकरणं द्रष्टव्यं । अस्त्रबलं अस्त्रप्रयोगशक्तिः । न त्वस्त्रमपि, 'गान्धर्वेण च गान्धर्वं' इति रावणादेरपि तत्संभवकथनात् । त्र्यम्बकस्य वा संहारकाले अस्तीति शेषः ॥ ३७—३८ ॥ संस्तूयत इति वर्तमाननिर्देशेन स्तुतेरव्याप्यविच्छिन्नत्वमुच्यते ॥ ३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

अथ राक्षसीनां प्रलापः—तानितानीत्यादिचतुःश्लोकी ॥ वाजिनामित्येतद्गजानामप्युपलक्षणं । सह-

---

ति० दिवसस्याष्टभागेन चतुर्दशीसंबन्ध्यन्त्यमुहूर्तद्वयेन ॥ ३३ ॥ ति० ममवात्र्यंबकस्यवा । अनेनस्वस्यविष्णुत्वंसूचितं ॥ ३८ ॥ इतिचतुर्नवतितमःसर्गः ॥ ९४ ॥

[ पा० ] १ क. ग. ङ.—ट. दिवसस्याष्टभागेन. २ ग. घ. आक्रीडभूमीरुद्रस्यक्रुद्धस्येवमहात्मनः. क. ख. ङ. च. छ. झ. ञ. ट. आक्रीडभूमिःक्रुद्धस्यरुद्रस्येवमहात्मनः. ज. आक्रीडभूमीरुद्रस्यक्रुद्धस्येवपिनाकिनः. ३ ग. घ. ङ. झ. ञ. ट. बलंभीमं. क. ख. बलंसर्वं. ४ ख. ङ. च. छ. झ. ञ. राक्षसराजवाहिनींरामः. घ. राक्षससंघवाहिनीं. ५ क. ग. ङ. प्रहृष्टः. ६ क. ख. ङ. च. छ. झ. ञ. ट. तानिनागसहस्राणि. ७ घ. परिघशोभिनां.

दृष्ट्वा श्रुत्वा च संभ्रान्ता हतशेषा निशाचराः ॥ राक्षसीश्च[1] समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४ ॥
विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः ॥ राक्षस्यः सह संगम्य दुःखार्ताः पर्यदेवयन् ॥ ५ ॥
कथं शूर्पणखा वृद्धा कराला निर्णतोदरी ॥ आससाद वने रामं कन्दर्पमिव[2] रूपिणम् ॥
सुकुमारं महासत्त्वं सर्वभूतहिते रतम् ॥ ६ ॥
तं दृष्ट्वा लोकनिन्द्या[3] सा हीनरूपा प्रकामिता ॥ कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् ॥
सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ७ ॥
जनस्यास्याल्पभाग्यत्वाद्वलिनी श्वेतमूर्धजा ॥ अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥ ८ ॥
राक्षसानां विनाशाय दूषणस्य खरस्य च ॥ चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥
तन्निमित्तमिदं वैरं रावणेन कृतं महत् ॥ ९ ॥
वधाय सीता सानीता दशग्रीवेण रक्षसा ॥ न च सीतां दशग्रीवः प्राप्नोति जनकात्मजाम् ॥
बद्धं बलवता वैरमक्षयं राघवेण च ॥ १० ॥
वैदेहीं प्रार्थयानं तं विराधं प्रेक्ष्य राक्षसम् ॥ हतमेकेन रामेण पर्याप्तं तन्निदर्शनम् ॥ ११ ॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥ निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ १२ ॥
खरश्च निहतः सङ्ख्ये दूषणस्त्रिशिरास्तथा ॥ शरैरादित्यसंकाशैः पर्याप्तं तन्निदर्शनम् ॥ १३ ॥
हतो योजनबाहुश्च कबन्धो रुधिराशनः ॥ क्रोधान्नादं नदन्सोथ पर्याप्तं तन्निदर्शनम् ॥ १४ ॥
जघान बलिनं रामः सहस्रनयनात्मजम् ॥ वालिनं मेरुसंकाशं[4] पर्याप्तं तन्निदर्शनम् ॥ १५ ॥
ऋश्यमूके वसञ्शैले[5] दीनो भग्नमनोरथः ॥ सुग्रीवः स्थापितो[6] राज्ये पर्याप्तं तन्निदर्शनम् ॥ १६ ॥
[एको[7] वायुसुतः प्राप्य लङ्कां हत्वा च राक्षसान् ॥ दग्ध्वा तां च पुनर्यातः पर्याप्तं तन्निदर्शनम् ॥१७॥
निगृह्य सागरं तस्मिन्सेतुं बद्ध्वा प्लवङ्गमैः ॥ वृतोऽतरत्तं यद्रामः पर्याप्तं तन्निदर्शनम् ॥ १८ ॥ ]
धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितम् ॥ युक्तं[8] विभीषणेनोक्तं मोहात्तस्य न रोचते ॥ १९ ॥
विभीषणवचः कुर्याद्यदि स धनदानुजः ॥ श्मशानभूता दुःखार्ता नेयं लङ्का पुरी[9] भवेत् ॥ २० ॥

---

स्त्रशः सहस्राणि । राक्षसीः राक्षसस्त्रियः । समागम्य चिन्तापरिप्लुताः । आसन्निति शेषः ॥ १—४ ॥ संगम्य संघीभूय । परस्परमालिङ्गिता इत्यर्थः ॥५॥ कथमित्यादिसार्धश्लोकमेकं वाक्यं ॥ कराला विकटा ॥ ६ ॥ तं दृष्ट्वेत्यादिसार्धश्लोकमेकं वाक्यं ॥ प्रकामिता सा कथं कामयामास ॥ ७ ॥ जनस्येत्यादिसार्धश्लोकद्वयमेकं वाक्यं ॥ वलयोस्याः सन्तीति वलिनी । पामादित्वान्नः । आर्षो ङीप् । अप्रतिरूपा अननुरूपा । तन्निमित्तं प्रधर्षणनिमित्तात् । शूर्पणखयाऽन्यथोक्तावपि तत्कामनादिकमकम्पनादिमुखात्सर्वैर्ज्ञातमिति ज्ञेयं ॥ ८—१० ॥ विराधं प्रेक्ष्य ज्ञात्वा स्थितानामस्माकं तत् विराधहननं । विरोधिनिरसनाय पर्याप्तं पूर्णं निदर्शनं ॥ ११ ॥ चतुर्दशेतिश्लोके पर्याप्तं तन्निदर्शनमित्यनुषज्यते ॥ उत्तरश्लोकेनैकवाक्यत्वे शरपदद्वयवैयर्थ्यं ॥ १२—१३ ॥ अथ खरवधानन्तरं । नादं शब्दं । नदन् कुर्वन् । सः

---

ति० वलिनी जरावशाज्जातवलिः । व्रीह्यादित्वादिनिः ॥ ८ ॥ शि० अक्षयंवैरंबलवताराघवेण । बद्धंरावणेनेतिशेषः । एतेनरावणस्यापिविघातोऽवश्यंभविष्यतीतिसूचितं ॥ १० ॥

[ पा० ] १ क. ग.—ट. राक्षस्यश्च. २ ख. ङ. च. छ. झ. ट. कंदर्पसमरूपिणं. ३ ग. ङ.—ट. लोकवध्या. ४ क.—ङ. छ. झ. ट. मेघसंकाशं. ५ ङ. झ. वसंश्चैवदीनो. ६ ङ. झ. ट. प्रापितो. ७ एतच्छ्लोकद्वयं क. पाठेदृश्यते. ८ घ. इत्थं. ९ ङ. झ. भविष्यति.

कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् ॥ अतिकायं च दुर्धर्षं लक्ष्मणेन हतं[1] पुनः ॥
प्रियं चेन्द्रजितं पुत्रं रावणो नावबुध्यते[2] ॥ २१ ॥
[ पुरा[3] हनुमता लङ्कां दग्धां लाङ्गूलवह्निना ॥ हतमक्षकुमारं च दृष्ट्वाऽसौ नावबुध्यते ॥ २२ ॥ ]
मम पुत्रो मम भ्राता मम भर्ता रणे हतः ॥ इत्येवं[4] श्रूयते शब्दो राक्षसानां[5] कुले कुले ॥ २३ ॥
रथाश्वाश्चाश्च नागाश्च हताः[6] शतसहस्रशः ॥ रणे रामेण शूरेण राक्षसाश्च पदातयः ॥ २४ ॥
रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः ॥ हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ॥२५॥
हतप्रवीरा रामेण निराशा जीविते वयम् ॥ अपश्यन्तो भयस्यान्तमनाथा विलपामहे ॥ २६ ॥
रामहस्ताद्दशग्रीवः शूरो दत्तमहावरः ॥ इदं भयं महाघोरमुत्पन्नं नावबुध्यते ॥ २७ ॥
न देवा न च गन्धर्वा न पिशाचा न राक्षसाः ॥ उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ॥ २८ ॥
उत्पाताश्चापि दृश्यन्ते रावणस्य[7] रणे रणे ॥ कथयिष्यन्ति रामेण रावणस्य निबर्हणम् ॥ २९ ॥
पितामहेन प्रीतेन देवदानवराक्षसैः ॥ रावणस्याभयं दत्तं मानुषेभ्यो न याचितम् ॥ ३० ॥
तदिदं मानुषं मन्ये प्राप्तं निस्संशयं भयम् ॥ जीवितान्तकरं घोरं रक्षसां रावणस्य च ॥ ३१ ॥
पीड्यमानास्तु बलिना वरदानेन रक्षसा ॥ दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ॥ ३२ ॥
देवतानां हितार्थाय महात्मा वै पितामहः ॥ उवाच देवताः सर्वा इदं तुष्टो महद्वचः ॥ ३३ ॥
अद्यप्रभृति लोकांस्त्रीन्सर्वे दानवराक्षसाः ॥ भयेन[8] प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् ॥ ३४ ॥
दैवतैस्तु समागम्य सर्वैश्चेन्द्रपुरोगमैः ॥ वृषध्वजस्त्रिपुरहा महादेवः प्रसादितः[9] ॥ ३५ ॥
प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् ॥ उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा ॥ ३६ ॥
एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान्पुरा ॥ भक्षयिष्यति नः[10] सीता राक्षसघ्नी सरावणान् ॥३७॥
रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः ॥ अयं निष्ठानको घोरः शोकेन समभिप्लुतः ॥ ३८ ॥
तं न पश्यामहे लोके यो नः शरणदो भवेत् ॥ राघवेणोपसृष्टानां कालेनेव युगक्षये ॥ ३९ ॥
नास्ति नः शरणं कश्चिद्[11]भये महति तिष्ठताम् ॥ दवाग्निवेष्टितानां हि करेणूनां यथा वने ॥ ४० ॥

प्रसिद्धः कबन्धः ॥ १४—२० ॥ नावबुध्यते रामप्रभावमिति शेषः ॥ २१—२२ ॥ कुले कुले गृहे गृहे । इदमपि राक्षसीवाक्यमेव ॥ २३–२५ ॥ वयमित्येतदपेक्षया अपश्यन्त इति पुँलिङ्गं । विलपामहे इत्यात्मनेपदमार्षं ॥ २६—२७ ॥ उपसृष्टं उपद्रुतं ॥ २८ ॥ कथयिष्यन्ति इतः परमपि कानिचिन्निमित्तानि प्रादुर्भूय कथयिष्यन्तीत्यर्थः । वर्तमाने तात्पर्यमित्यप्याहुः ॥ २९ ॥ देवदानवराक्षसैः देवदानवराक्षसेभ्यः ॥ ३० ॥ मानुषं मानुषादागतं । मन्ये मन्यामहे ॥ ३१ ॥ रक्षसा रावणेन । वरदानेन करणेन ॥ ३२—३३ ॥ दानवराक्षसा इत्युक्तेर्मन्दोदरीसंबन्धेन दानवाश्च केचिद्राक्षसैः सह तिष्ठन्तीति ज्ञेयम् ॥ ३४—३६ ॥ क्षुद्यथा दानवान्पुरेति । देवेभ्योऽमृतप्रदानानन्तरमिति बोध्यं । अस्मच्छब्दापेक्षया सरावणानित्युक्तिः ॥ ३७ ॥ निष्ठानकः नाश इत्याहुः ॥ ३८ ॥ पश्यामह इत्या-

**ति०** दानवाराक्षसाश्चभयेनप्रभृताः देवेभ्योभयंबिभ्राणाएवविचरिष्यन्ति । देवाःस्वतःपरतोवाअस्मान्पीडयिष्यन्तीतिभययुक्ता एवभविष्यन्तीत्यर्थः ॥ ३४ ॥ **ति०** एवंब्रह्मणःप्रसादात्सभयत्वमात्रंप्राप्तं । संहाराधिकृतरुद्रप्रसादेनतुनाशएवास्माकमित्याहुः—दैवतैरिति ॥ ३५ ॥ **रामानु०** अपनीतेन अपनयेन । निष्ठानको विनाशः ॥ ३८ ॥

**[ पा० ]** १ ज. निपातितं. २ घ. नानुमन्यते. ३ अयंश्लोकः च. छ. पाठयोर्दृश्यते. ४ क. ख. ग. ङ.—ट. इत्येष. ५ ख. ङ. च. ज. ट. राक्षसीनां. ६ ङ. झ. हताश्चापिपदातयः. ७ क. रावणस्यनिवेशने. ८ झ. ञ. ट. भयेनप्रभृताः. ख. तेभयैःप्रावृताः. ९ ङ. झ. प्रतोषितः. १० ङ. झ. नस्सर्वान्राक्षसघ्नी. ११ ङ. झ. किंचिद्भये.

प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना ॥ यत एव भयं दृष्टं तमेव शरणं गतः ॥ ४१ ॥
इतीव सर्वा रजनीचरस्त्रियः परस्परं संपरिरभ्य बाहुभिः ॥
[1]विषेदुरार्ता भयभारपीडिता विनेदुरुच्चैश्च तदा सुदारुणम् ॥ ४२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

## षण्णवतितमः सर्गः ॥ ९६ ॥

राक्षसीगणविलापश्रवणरुष्टेनरावणेन राक्षसान्प्रतिसंनाहनचोदनपूर्वकं स्वप्रतापप्रशंसनेन रामादिवधप्रतिज्ञानम् ॥ १॥ तथा महापार्श्वादिभिःसह रथाधिरोहणेनरणधरणिंगतेनतेन बाणगणैर्वानरगणविदारणम् ॥ २ ॥

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले ॥ रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १ ॥
स तु दीर्घं [2]विनिश्वस्य मुहूर्तं ध्यानमास्थितः ॥ बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २ ॥
संदश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः ॥ राक्षसैरपि दुर्दर्शः [3]कालाग्निरिव मूर्च्छितः ॥ ३ ॥
उवाच च समीपस्थान्राक्षसान्राक्षसेश्वरः ॥ [4]भयाव्यक्तकथस्तत्र निर्दहन्निव चक्षुषा ॥ ४ ॥
[5]महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ शीघ्रं वदत सैन्यानि निर्यातेति ममाज्ञया ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः ॥ चोदयामासुरव्यग्रान्राक्षसांस्तान्नृपाज्ञया ॥ ६ ॥
ते तु सर्वे तथेत्युक्त्वा राक्षसा घोरदर्शनाः ॥ कृतस्वस्त्ययनाः सर्वे रणायाभिमुखा ययुः ॥ ७ ॥
प्रतिपूज्य यथान्यायं रावणं ते [6]निशाचराः ॥ तस्थुः प्राञ्जलयः सर्वे भर्तुर्विजयकाङ्क्षिणः ॥ ८ ॥
अथोवाच प्रहस्यैतान्रावणः क्रोधमूर्च्छितः ॥ महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ ९ ॥

त्वनेपदमार्षं ॥ ३९—४० ॥ प्राप्तकालं उचितं । पौलस्त्येनविभीषणेन । इतः परं तस्यैव पौलस्त्यकुलप्रतिष्ठापकत्वात्तच्छब्दप्रयोगः । अत्र पितामहादिवरप्रदानवृत्तान्तो राक्षसीभिर्मन्दोदरीसकाशाच्छ्रुत इति ज्ञेयं । सा च ज्ञानवृद्धेति वक्ष्यते ॥४१—४२॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चनवतितमःसर्गः९५

अथ रावणिनिर्याणं—आर्तानामित्यादि ॥ परिदेवितं परिदेवितरूपं शब्दं ॥ १—२ ॥ संदश्येत्यादिश्लोकत्रयमेकान्वयं ॥ मूर्च्छितः अभिवृद्धः, कालाग्निरिव स्थितः । भयाव्यक्तकथः भयादव्यक्तवचनः । ममाज्ञया वदतेत्युवाचेत्यन्वयः । इमौ महोदरमहापार्श्वौ सचिवौ । पूर्वहतौ तु मत्तप्रमत्तापरपर्यायौ रावणभ्रातरौ ॥ ३—८ ॥ प्रहस्येति । शत्रुषु तृणी-

ति० प्राप्तकालं कालोचितं । यतएव यस्माद्रामादेव । भयंदृष्टंस्वमन्त्रशक्तिवैभवेनेतिशेषः ॥४१॥ इतिपञ्चनवतितमःसर्गः ॥९५॥

स० करुणं करुणयतीति करुणस्तं । परिदेवितं प्रलापात्मकं ॥ रामानु० भयाव्यक्तकथः स्वानिष्टभयेनास्पष्टराक्षसकथ इत्यर्थः । भयाव्यक्तकथानितिचपाठः । स० भयाव्यक्तकथः भयेनरामभीत्या अव्यक्तामन्दा कथा कथनंयस्यसः । भयाव्यक्तकथ इतिपाठे व्यक्ता अबहिःप्रकाश्यार्थस्यापिप्रकाशिकाकथायस्य । आच्छाद्यानाच्छादनहेतुर्भीतिरितिभावः ॥ ४ ॥ शि० ममाज्ञयासैन्यानि यूयंनिर्यात निर्यापयत निस्सारयत इतिमहोदरादीन् शीघ्रंवदत । यदितुसैन्यशब्देन रिपुसेनागृह्येत तदानान्तर्भावितणिच्कल्पना ॥ ५ ॥ स० भयार्दिताः गमनेरामतोभीतिः भीतिश्चागमनेरावणादितिभयार्दिताः । अव्यग्रान् सहगामिभामिनीवन्निर्णीतमरणत्वेनाव्यक्तान् । यत्तुनागोजिभट्टेनरावणप्रोत्साहनेनत्यक्तभयानितिव्याख्यातं तत्तु सुपार्श्वादीनांनेतॄणांयदाभयार्दिततोक्तापूर्वं तन्नियम्यानांराक्षसानांरावणप्रोत्साहनेनाव्यग्रत्वोक्त्यसंभवादुपेक्ष्यं ॥ ६ ॥ स० सर्वे हिंसकेरामे तद्विषयेरणाभिमुखाः सर्वे कृतस्वस्त्ययनाययुः ॥ ७ ॥ ति० क्रोधजोत्रप्रहासः । स० प्रहस्य रोदनापरपर्यायोऽयंहासः ॥ ९ ॥

[ पा० ] १ क. च. छ. ञ. विलेपुरार्ताः. ङ. झ. ट. विषेदुरार्तातिभयाभिपीडिताः. २ समुच्छ्वस्य. ३ ङ. झ. कालाग्निरिवमूर्तिमान्. ४ ङ. झ. ट. क्रोधाव्यक्तकथः. ख. भियाऽव्यक्तकथः. ५ क. ङ.—ट. महोदरंमहापार्श्वं. ६ क.—ट. महारथाः.

अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसन्निभैः ॥ राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥ १० ॥
खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा ॥ करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११ ॥
नैवान्तरिक्षं न दिशो न नद्यो नापि सागराः ॥ प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः ॥ १२ ॥
अद्य वानरमुख्यानां तानि यूथानि भागशः ॥ धनुषा शरजालेन विधमिष्यामि पत्रिणा ॥ १३ ॥
अद्य वानरसैन्यानि रथेन पवनौजसा ॥ धनुःसमुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १४ ॥
आकोशपद्मवक्त्राणि पद्मकेसरवर्चसाम् ॥ अद्य यूथतटाकानि गजवत्प्रमथाम्यहम् ॥ १५ ॥
सशरैरद्य वदनैः सङ्ख्ये वानरयूथपाः ॥ मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १६ ॥
अद्य युद्धप्रचण्डानां हरीणां द्रुमयोधिनाम् ॥ मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम् ॥ १७ ॥
हतो भर्ता हतो भ्राता यासां च तनया हताः ॥ वधेनाद्य रिपोस्तासां करोम्यस्रप्रमार्जनम् ॥ १८ ॥
अद्य मद्बाणनिर्भिन्नैः प्रकीर्णैर्गतचेतनैः ॥ करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १९ ॥
अद्य गोमायवो गृध्रा ये च मांसाशिनोऽपरे ॥ सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शरार्पितैः ॥२० ॥
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः ॥ अनुप्रयान्तु मां सर्वे येऽवशिष्टा निशाचराः ॥ २१॥
तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः ॥ बलाध्यक्षान्स्थितांस्तत्र बलं संत्वर्यतामिति ॥ २२ ॥
[[11]बलाध्यक्षस्य तच्छ्रुत्वा महापार्श्वस्य भाषितम् ॥ ] बलाध्यक्षास्तु संरब्धा[12] राक्षसांस्तान्गृहाद्गृहात् ॥
चोदयन्तः परिययुर्लङ्कायां[13] तु महाबलाः ॥ २३ ॥
ततो मुहूर्तान्निष्पेतू राक्षसा भीमदर्शनाः ॥ नर्दन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥ २४ ॥
असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः[14] ॥ शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥ २५ ॥
यष्टिभिर्विमलैश्चक्रैर्निशितैश्च परश्वधैः ॥ भिण्डिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः ॥ २६ ॥
[15]अथानयद्बलाध्यक्षः सत्वरो रावणाज्ञया ॥ [ [16]रथानां नियुतं साग्रं नागानां नियुतत्रयम् ॥ २७ ॥

कारात् ॥ ९—१० ॥ खरस्येत्यादिषु वधस्येति शेषः ॥ ११—१४ ॥ आकोशपद्मवक्त्राणि ईषद्विकसितपद्मभूतवक्त्राणि । पद्मकेसरवर्चसां वानराणामिति शेषः । प्रमथामि प्रमथ्नामि । श्नाभाव आर्षः ॥ १५—१८ ॥ गतचेतनैः गतप्राणैः । यत्नावेक्ष्यतलामिति । नैरन्ध्र्येण भूमौ वानरान्पातयिष्यामीत्यर्थः ॥ १९—२० ॥ कल्प्यतां आकल्प्यतां । अलंक्रियतामित्यर्थः ॥ २१—२२ ॥ संरब्धा इति । पुनःपुनराह्वानेप्यनागमनात्कुपिताइत्यर्थः । परिययुः प्रतिरथ्यं ययुरित्यर्थः ॥ २३ ॥ तत इत्यादिश्लोकत्रयमेकान्वयं ॥ हुलैः द्विफलपत्राग्रायुधविशेषैः । "हुलं द्विफलपत्राग्रं"इति वैजयन्ती । भुजैरित्याद्युपलक्षणे तृतीया ॥ २४—२६ ॥ 'अथानयद्बलाध्यक्षः सर्वतो रावणाज्ञया । द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं

स० यंरामं असादनंअसंहार्यमन्यध्वे तंराघवंलक्ष्मणंच । यमसादनं यमलोकं । "वस्तुतस्तु रामंलक्ष्मणंचविनाऽन्यानितिशेषः" इतितीर्थस्य एकस्याधिकपेरनाशादत्रैवपूर्वत्रोत्तरत्रचवास्तविकीवस्तुतस्तुभ्रान्तिरितिनमनस्तदवलोकनायासेनखेदनीयंविदा । यथा वानराणांनैरोग्यस्यमाविलेपितद्धननोक्तिस्तथारामपक्षेपिसंभवात्तस्याः ॥ १० ॥

[ पा० १ ख. धनुस्समुद्रनिर्मुक्तैः. २ क. ख. ग. ङ. ज.—ठ. व्याकोश. ३ घ. यूथप्रचण्डानां. ४ ङ. झ. ट. हतोभ्राता चयेषांवैयेषांचतनयोहतः. ५ ङ. झ. ट. स्तेषांकरोम्यश्रु. ६ ङ. झ. ट. अद्यकाकाश्चगृध्राश्च. ७ झ. शराहतैः. ग. घ. ज. शरार्दितैः क. सुशोणितैः. ८ ख. अद्यप्रयान्तु. ९ क. घ. ङ. झ. मांयुद्धे. १० ङ. झ. ञ. येत्रशिष्टाः. ११ इदमर्धं क. च. छ. पाठेषुदृश्यते. १२ ङ. च. ज.—ट. संयुक्ताराक्षसांस्तान्गृहेगृहे. १३ क. घ. ङ. ज.—ट. लङ्कांलघुपराक्रमाः. १४ ङ. झ. ञ. ट. मुसलैर्हलैः. ग. घ. मुसलैश्शरैः. १५ क. ग.—ट. अथानयन्बलाध्यक्षाश्चत्वारो. १६ रथानांनियुतमित्यादयः ज्वलन्तमिवपावकमित्यन्ताःश्लोकाः ग. ङ. च. छ. झ. पाठेषुदृश्यन्ते.

अश्वानां षष्टिकोट्यस्तु खरोष्ट्राणां तथैव च ॥ पदातयस्त्वसंख्याता जग्मुस्ते राजशासनात् ॥
बलाध्यक्षाश्च संस्थाप्य राज्ञः सेनां पुरस्स्थिताम् ॥ २८ ॥
एतस्मिन्नन्तरे सूतः स्थापयामास तं रथम् ॥ दिव्यास्त्रवरसंपन्नं नानालङ्कारभूषितम् ॥ २९ ॥
नानायुधसमाकीर्णं किङ्किणीजालसंयुतम् ॥ नानारत्नपरिक्षिप्तं रत्नस्तंभैर्विराजितम् ॥ ३० ॥
जांबूनदमयैश्चैव सहस्रकलशैर्वृतम् ॥ तं दृष्ट्वा राक्षसास्सर्वे विस्मयं परमं गताः ॥ ३१ ॥
तं दृष्ट्वा सहसोत्थाय रावणो राक्षसेश्वरः ॥ कोटिसूर्यप्रतीकाशं ज्वलन्तमिव पावकम् ॥]
द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम् ॥ ३२ ॥
आरुरोह रथं भीमो दी¹प्यमानं स्वतेजसा ॥ ३३ ॥
ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः ॥ रावणः सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम् ॥ ३४ ॥
[ ²ततश्चासीन्महानादस्तूर्याणां च ततस्ततः ॥ मृदङ्गैः पटहैः शङ्खैः कलहैः सह रक्षसाम् ॥ ३५ ॥
आगतो रक्षसां राजा छत्रचामरसंयुतः ॥ सीतापहारी दुर्वृत्तो ब्रह्मघ्नो देवकण्टकः ॥
योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः ॥ ३६ ॥
तेन नादेन महता पृथिवी समकंपत ॥ तं शब्दं सहसा श्रुत्वा वानरा दुद्रुवुर्भयात् ॥ ३७ ॥
रावणस्तु महाबाहुः सचिवैः परिवारितः ॥ आजगाम महातेजा जयाय विजयं प्रति ॥ ३८ ॥]
रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ ॥ विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ॥ ३९ ॥
ते तु ³हृष्टा विनर्दन्तो भिन्दन्त इव मेदिनीम् ॥ नादं घोरं विमुञ्चन्तो निर्ययुर्जयकाङ्क्षिणः ॥४०॥
ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः ॥ निर्ययावुद्यतधनुः कालान्तकयमोपमः ॥ ४१ ॥
ततः ⁴प्रजवनाश्वेन रथेन स महारथः ॥ द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ४२ ॥
ततो नष्टप्रभः सूर्यो दिशश्च तिमिरावृताः ॥ द्विजाश्च नेदुर्घोराश्च संचचालेव मेदिनी ॥ ४३ ॥
ववर्ष रुधिरं देव⁵श्चस्खलुस्तुरगाः पथि ॥ ध्वजाग्रे न्यपतद्गृध्रो विनेदुश्चा⁶शिवं शिवाः ॥ ४४ ॥
नयनं चास्फुरद्वामं स⁷व्यो बाहुरकम्पत ॥ विवर्णं वदनं चासीत्किंचिदभ्रश्यत स्वरः ॥ ४५ ॥
ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः ॥ रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ॥ ४६ ॥
अन्तरिक्षात्पपातोल्का निर्घातसमनिस्स्वना ॥ विनेदुरशिवा गृध्रा ⁸वायसैरनुनादिताः ॥ ४७ ॥
एतानचिन्तयन्घोरानुत्पातान्समुपस्थितान् ॥ निर्ययौ रावणो मोहा⁹द्वधार्थी कालचोदितः ॥ ४८ ॥
तेषां तु रथघोषेण राक्षसानां महात्मनाम् ॥ वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ॥ ४९ ॥
तेषां तु तुमुलं युद्धं बभूव कपिरक्षसाम् ॥ अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम् ॥ ५० ॥

---

रथंमिति पाठः ॥२७–३२॥ आरुरोहेत्यर्धमेकं वाक्यं॥ भीमः रावणः ॥ ३३ ॥ सत्त्वगाम्भीर्यात् बलातिशयात् ॥ ३४—४१ ॥ द्वारेणेति । उत्तरद्वारेणेत्यर्थः ॥ ४२ ॥ ततो नष्टप्रभ इत्यादिश्लोकचतुष्टयमेकान्वयं ॥ ४३–४५॥ रूपाणि दुर्निमित्तरूपाणि । ततः अनन्तरं । ततः उत्तरद्वारात् । निष्पततः निष्क्रमतः । सूर्यनष्टप्रभत्वादीनि रूपाणि जज्ञिर इतिसंबन्धः ॥ ४६–४९ ॥ आह्वयानानां आह्वयमानानां स्पर्धया

---

ति० अमायांसूर्योदयइदंरथारोहणं ॥ ३३ ॥ स० वायसैरभिमिश्रिताग्रध्राः पूर्वकेवलानां गृध्राणामत्रतुवायससंमिश्रितानामितिनपुनरुक्तिः ॥ ४७ ॥

[ पा० ] १ ग. च. छ. ञ. ट. दीप्यमानः. २ ततश्चासीदित्यादयःविजयंप्रतीत्यन्ताःश्लोकाः झ. पाठेदृश्यन्ते. ३ ङ. झ. ट. हृष्टाभिनर्दन्तो. ४ क. ङ. झ. ट. प्रजविताश्वेन. ५ ङ. च. झ. ञ. ट. चस्खलुश्चतुरङ्गमाः. ६ ङ. झ. ट. श्चाशिवाः, ७ ग.—छ. झ. ञ. ट. वामोबाहुः. ८ ङ. च. झ. ञ. ट. वायसैरभिमिश्रिताः. ९ ङ. झ. वधार्थी.

ततः क्रुद्धो दशग्रीवः शरैः काञ्चनभूषणैः ॥ वानराणामनीकेषु चकार कदनं महत् ॥ ५१ ॥
निकृत्तशिरसः केचिद्रावणेन वलीमुखाः ॥ केचिद्विच्छिन्नहृदयाः केचिच्छ्रोत्रविवर्जिताः ॥ ५२ ॥
निरुच्छ्वासा हताः केचित्केचित्पार्श्वेषु दारिताः ॥ केचिद्विभिन्नशिरसः केचिच्चक्षु[1]र्विवर्जिताः ॥५३॥
दशाननः क्रोधविवृत्तनेत्रो यतो यतोऽभ्येति रथेन संख्ये ॥
ततस्ततस्तस्य शरप्रवेगं सोढुं न शेकु[2]र्हरिपुङ्गवास्ते ॥ ५४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

## सप्तनवतितमः सर्गः ॥ ९७ ॥

सुग्रीवेण विरूपाक्षवधः ॥ १ ॥

तथा तैः कृत्तगात्रैस्तु दशग्रीवेण मार्गणैः ॥ बभूव वसुधा तत्र प्रकीर्णा हरिभि[3]स्तदा ॥ १ ॥
रावणस्याप्रसह्यं तं शर[4]संपातमेकतः ॥ न शेकुः सहितुं दीप्तं पतङ्गा[5] ज्वलनं यथा ॥ २ ॥
तेऽर्दिता[6] निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः ॥ पावकार्चिःसमाविष्टा दह्यमाना यथा गजाः ॥ ३ ॥
प्लवङ्गानामनीकानि महाभ्राणीव मारुतः ॥ स ययौ समरे तस्मिन्विधमन्रावणः शरैः ॥ ४ ॥
कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम् ॥ आससाद ततो युद्धे राघवं त्वरितस्तदा ॥ ५ ॥
सुग्रीवस्तान्कपीन्दृष्ट्वा भग्नान्विद्रवतो[7] रणे ॥ गुल्मे सुषेणं निक्षिप्य चक्रे युद्धे[8]ऽद्भुतं मनः ॥ ६ ॥
आत्मनः सदृशं वीरः स तं निक्षिप्य वानरम् ॥ सुग्रीवोऽभिमुखः शत्रुं प्रतस्थे पादपायुधः ॥ ७ ॥
पार्श्वतः पृष्ठतश्चास्य सर्वे[9] यूथाधिपाः स्वयम् ॥ अनुजह्रुर्महाशैलान्विविधांश्च महाद्रुमान् ॥ ८ ॥
स[10] नर्दन्युधि सुग्रीवः स्वरेण महता महान् ॥ पातय[11]न्विविधांश्चान्यां[12]ञ्जगामोत्तमराक्षसान् ॥ ९ ॥
ममन्थ[13] च महाकायो राक्षसान्वानरेश्वरः ॥ युगान्तसमये वायुः प्रवृद्धानगमानिव ॥ १० ॥
राक्षसानामनीकेषु शैलवर्षं ववर्ष ह ॥ अश्मवर्षं यथा मेघः पक्षिसङ्घेषु कानने ॥ ११ ॥
कपिराजविमुक्तैस्तैः शैलवर्षैस्तु राक्षसाः ॥ विकीर्णशिरसः पेतु[14]र्निकृत्ता इव पर्वताः ॥ १२ ॥
अथ संक्षीयमाणेषु राक्षसेषु समन्ततः ॥ सुग्रीवेण प्रभग्नेषु पतत्सु निनदत्सु च ॥ १३ ॥

---

आह्वयतां । आगमशासनस्यानित्यत्वान्मुगागमाभावः ॥ ५०—५१ ॥ निकृत्तशिरस इत्यादिश्लोकद्वयं ॥ ५२—५४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥

अथ विरूपाक्षवधः—तथा तैरित्यादि ॥ १ ॥ एकतः एकस्य अद्वितीयस्य ॥ २—५ ॥ अद्भुतमिति क्रियाविशेषणं ॥ ६—७ ॥ महाद्रुमान् उत्पाट्येति शेषः । उत्पाट्य अस्य पार्श्वतः पृष्ठतश्चानुजह्रुरिति संबन्धः । यथा महाराजे युद्धाय गच्छति । तदाऽऽयुधानि भृत्या आहरन्ति ॥ तथा वानरराजे युद्धाय निष्क्रामति तदायुधभूतान् शैलवृक्षादीन् समये दातुं वानरा आजह्रुरिति भावः ॥ ८—९ ॥ अगमान वृक्षान् । "पलाशी द्रुद्रुमागमाः" इत्यमरः ॥ १०—१२ ॥ संक्षीयमाणेषु हिंस्यमानेषु । "क्षि हिंसायां"

---

स० तेहरियूथपाः प्राकूये समरसमर्थत्वेनप्रमितास्ते ॥ ५३ ॥ इतिषण्णवतितमःसर्गः ॥ ९६ ॥

[ पा० ] १ ङ. च. झ. ञ. ट. चक्षुर्विनाकृताः. २ घ. नशक्तायुधिवानरेन्द्राः. झ.—ठ. नशेकुर्हरियूथपास्ते. ३ क. हरिभिर्हतैः. ४ ज. शरसंघातं. ५ ग. ज. पतङ्गाइवपावकं. ६ ङ. तेहतानिशितैः. ७ ख. ङ. च. छ. झ. ञ. ट. न्विद्रावितान्रणे ८ घ. ङ. छ.—ट. युद्धेद्रुतंमनः. ९ ङ. झ. ट. सर्वेवानरयूथपाः. १० ङ. झ. ञ. ट. ननर्दयुधि. ११ च. झ. ञ. ट. पोथयन्नपि. १२ ङ. च. छ. झ. ञ. ट. श्चान्यान्ममन्थोत्तम. १३ ङ. झ. ञ. ट. ममर्दच. १४ ङ. छ. झ. ञ. ट. पेतुर्विकीर्णाइव.

विरूपाक्षः स्वकं नाम धन्वी विश्राव्य राक्षसः ॥ रथादाप्लुत्य दुर्धर्षो गजस्कन्धमुपारुहत् ॥ १४ ॥
स तं द्विरदमारुह्य विरूपाक्षो महारथः ॥ विनदन्भीमनिर्ह्रादं वानरानभ्यधावत ॥ १५ ॥
सुग्रीवे स शरान्घोरान्विससर्ज चमूमुखे ॥ स्थापयामास चोद्विग्नान्राक्षसान्संप्रहर्षयन् ॥ १६ ॥
स तु विद्धः शितैर्बाणैः कपीन्द्रस्तेन रक्षसा ॥ चुक्रोध स महाक्रोधो वधे चास्य मनो दधे ॥ १७ ॥
ततः पादपमुद्धृत्य शूरः संप्रधनो हरिः ॥ अभिपत्य जघानास्य प्रमुखे तु महागजम् ॥ १८ ॥
स तु प्रहाराभिहतः सुग्रीवेण महागजः ॥ अपासर्पद्धनुर्मात्रं निषसाद ननाद च ॥ १९ ॥
गजात्तु मथितात्तूर्णमपक्रम्य स वीर्यवान् ॥ राक्षसोऽभिमुखः शत्रुं प्रत्युद्गम्य ततः कपिम् ॥ २० ॥
आर्षभं चर्म खड्गं च प्रगृह्य लघुविक्रमः ॥ भर्त्सयन्निव सुग्रीवमाससाद व्यवस्थितम् ॥ २१ ॥
स हि तस्याभिसंक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ विरूपाक्षाय चिक्षेप सुग्रीवो जलदोपमाम् ॥२२॥
स तां शिलामापतन्तीं दृष्ट्वा राक्षसपुङ्गवः ॥ अपक्रम्य सुविक्रान्तः खड्गेन प्राहरत्तदा ॥ २३ ॥
तेन खड्गप्रहारेण रक्षसा बलिना हतः ॥ मुहूर्तमभवद्वीरो विसंज्ञ इव वानरः ॥ २४ ॥
स तदा सहसोत्पत्य राक्षसस्य महाहवे ॥ मुष्टिं संवर्त्य वेगेन पातयामास वक्षसि ॥ २५ ॥
मुष्टिप्रहाराभिहतो विरूपाक्षो निशाचरः ॥ तेन खड्गेन संक्रुद्धः सुग्रीवस्य चमूमुखे ॥
कवचं पातयामास पद्भ्यामभिहतोपतत् ॥ २६ ॥
स समुत्थाय पतितः कपिस्तस्य व्यसर्जयत् ॥ तलप्रहारमशनेः समानं भीमनिस्स्वनम् ॥ २७ ॥
तलप्रहारं तद्रक्षः सुग्रीवेण समुद्यतम् ॥ नैपुण्यान्मोचयित्वैनं मुष्टिनोरस्यताडयत् ॥ २८ ॥
ततस्तु संक्रुद्धतरः सुग्रीवो वानरेश्वरः ॥ मोक्षितं चात्मनो दृष्ट्वा प्रहारं तेन रक्षसा ॥
स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ॥ २९ ॥
ततो न्यपातयत्क्रोधाच्छङ्खदेशे महत्तलम् ॥ ३० ॥
महेन्द्राशनिकल्पेन तलेनाभिहतः क्षितौ ॥ पपात रुधिरक्लिन्नः शोणितं च समुद्वमन् ॥
स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव ॥ ३१ ॥

इति धातुः ॥ १३—१७ ॥ संप्रधनः । बहुलग्रहणात् कर्तरि ल्युट् । प्रहर्तेत्यर्थः । प्रमुखे मुखे ॥ १८ ॥ धनुर्मात्रं धनुःप्रमाणं । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः"इत्यादिना मात्रच्प्रत्ययः ॥ १९ ॥ गजात्त्विति श्लोकद्वयमेकं वाक्यं ॥ व्यवस्थितं निश्चलतया स्थितं ॥ २०—२२ ॥ अपक्रम्य शिलापातपरिहारार्थमन्यतोपसृत्य प्राहरत् । सुग्रीवमिति शेषः ॥ २३—२५ ॥ मुष्टिप्रहारेत्यादिसार्धश्लोक एकान्वयः ॥ कवचमिति । अनेन सुग्रीवस्यापि कवचधारणमस्तीति गम्यते । पद्भ्यामिति । अभिहतः सन् पद्भ्यामपतदित्यन्वयः ॥ २६—२७ ॥ नैपुण्यात् शिक्षापाटवात् ॥ २८ ॥ ततस्त्विति सार्धश्लोकमेकं वाक्यं ॥ अन्तरं अवकाशं ॥ २९ ॥ तत इत्यर्धं ॥ शङ्खदेशे ललाटास्थिप्रदेशे । "शङ्खो निधौ ललाटास्थ्नि"इत्यमरः ॥ ३० ॥ महे-

ति० आर्षभं ऋषभकृत्तिपरिवीतंचर्मफलकं ॥ २१ ॥ ति० तस्यापि तेनापि । दत्तंप्रहारं संगृह्य गृहीत्वा ॥ २२ ॥ रामानु० सखड्गाभिहतोपतत् सखड्गश्चासावभिहतश्चसखड्गाभिहतः । विरूपाक्षप्रेरितखड्गसहितोपतदित्यर्थः । उत्तरत्रविरूपाक्षस्यमुष्टिनैवयुद्धाभिधानात् । ति० अभिहतःसुग्रीवः पद्भ्यामपतत् आकुञ्चितजानुरभवदित्यर्थः ॥ २६ ॥ इतिसप्तनवतितमः सर्गः ॥ ९७ ॥

[ पा० ] १ ङ. समत्तंद्विपमारुह्य. २ ङ. छ. झ. ञ. ट. ननर्दभीम. ३ ङ. झ. तस्यापिसंगृह्य. ४ ख. ङ. झ. ट. विरूपाक्षस्य. ५ ङ. झ. मभवद्भूमौ. ख. च. छ. ञ. ट. मभवद्दीनो. घ. मभवन्मूढो. ६ क. च. छ. ज. सखड्गाभिहतोपतत्. ट. पद्भ्यामभिहतोभवत्.

विवृत्तनयनं क्रोधात्सफेनं रुधिराप्लुतम् ॥ ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतम् ॥ ३२ ॥
स्फुरन्तं परिवर्तन्तं पार्श्वेन रुधिरोक्षितम् ॥ करुणं च विनर्दन्तं ददृशुः कपयो रिपुम् ॥ ३३ ॥
तथा तु तौ संयति संप्रयुक्तौ तरस्विनौ वानरराक्षसानाम् ॥
बलार्णवौ सस्वनतुः सुभीमं महार्णवौ द्वाविव भिन्नवेलौ ॥ ३४ ॥
विनाशितं प्रेक्ष्य विरूपनेत्रं महाबलं तं हरिपार्थिवेन ॥
बलं समस्तं कपिराक्षसानामुन्मत्तगङ्गाप्रतिमं बभूव ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

## अष्टनवतितमः सर्गः ॥ ९८ ॥

सुग्रीवेण महोदरवधः ॥ १ ॥

हन्यमाने बले तूर्णमन्योन्यं ते महामृधे ॥ सरसीव महाघर्मे सोपक्षीणे बभूवतुः ॥ १ ॥
स्वबलस्य विघातेन विरूपाक्षवधेन च ॥ बभूव द्विगुणं क्रुद्धो रावणो राक्षसाधिपः ॥ २ ॥
प्रक्षीणं तु बलं दृष्ट्वा वध्यमानं वलीमुखैः ॥ बभूवास्य व्यथा युद्धे प्रेक्ष्य दैवविपर्ययम् ॥
उवाच च समीपस्थं महोदरमरिंदमम् ॥ ३ ॥
अस्मिन्काले महाबाहो जयाशा त्वयि मे स्थिता ॥ जहि शत्रुचमूं वीर दर्शयाद्य पराक्रमम् ॥
भर्तृपिण्डस्य कालोऽयं निर्देष्टुं साधु युध्यताम् ॥ ४ ॥
एवमुक्तस्तथेत्युक्त्वा राक्षसेन्द्रो महोदरः ॥ प्रविवेशारिसेनां तां पतङ्ग इव पावकम् ॥ ५ ॥
ततः स कदनं चक्रे वानराणां महाबलः ॥ भर्तृवाक्येन तेजस्वी स्वेन वीर्येण चोदितः ॥ ६ ॥
वानराश्च महासत्त्वाः प्रगृह्य विपुलाः शिलाः ॥ प्रविश्यारिबलं भीमं जघ्नुस्ते रजनीचरान् ॥ ७ ॥
महोदरस्तु संक्रुद्धः शरैः काञ्चनभूषणैः ॥ चिच्छेद पाणिपादोरून्वानराणां महाहवे ॥ ८ ॥
ततस्ते वानराः सर्वे राक्षसैरर्दिता भृशम् ॥ दिशो दश द्रुताः केचित्केचित्सुग्रीवमाश्रिताः ॥ ९ ॥
प्रभग्नां समरे दृष्ट्वा वानराणां महाचमूम् ॥ अभिदुद्राव सुग्रीवो महोदरमनन्तरम् ॥ १० ॥
प्रगृह्य विपुलां घोरां महीधरसमां शिलाम् ॥ चिक्षेप च महातेजास्तद्वधाय हरीश्वरः ॥ ११ ॥
तामापतन्तीं सहसा शिलां दृष्ट्वा महोदरः ॥ असंभ्रान्तस्ततो बाणैर्निर्बिभेद दुरासदाम् ॥ १२ ॥

---

न्द्राशनीत्यादि सार्धश्लोकमेकं वाक्यं ॥ स्रोतोभ्यः नासादिनवद्वारेभ्यः ॥ ३१ ॥ विरूपाक्षतरं नेत्रोद्गमनेनात्यन्तविकटाक्षं ॥ ३२ ॥ स्फुरन्तं ऊर्ध्वमुत्पतन्तं । परिवर्तन्तं परिवर्तमानं ॥ ३३ ॥ भिन्नवेलौ विदीर्णवेलौ ॥ ३४ ॥ उन्मत्तगङ्गा उद्वेलगङ्गा ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

अथ महोदरवधः—हन्यमान इत्यादि ॥ सरसी इवेति वक्तव्ये सरसीवेति संधिरार्षः ॥ १—३ ॥ अस्मिन्काल इत्यादिसार्धश्लोक एकान्वयः ॥ भर्तृपिण्डस्येति संबन्धमात्रे षष्ठी । भर्तृपिण्डस्य निर्देष्टुं स्वामिदत्तवेतनमपाकर्तुमित्यर्थः ॥ ४—५ ॥ भर्तृवाक्येन चोदितः सन् स्वेन वीर्येण कदनं चक्र इत्यन्वयः ॥६—७॥ पाणिपादोरूनिति । एकवद्भावाभाव आर्षः ॥ ८—९ ॥ अनन्तरं समीपस्थं ॥ १०—१२ ॥

---

ती० सोपक्षीणे उपक्षीणं उपक्षयः तत्सहिते ॥ स० सूपक्षीणे अत्यन्तक्षीणे । सरसी वेतिपदं ॥ १ ॥

[ पा० ] १ ख. झ. सुभीमौ. २ ख.—च. झ. ट. सूपक्षीणे. ३ क. ङ. झ. सेनांसपतङ्गः. ४ ङ. झ. ट. सर्वराक्षसान्. ५ झ. ञ. ट. ठ. पाणिपादोरु. ६ ङ. झ. ट. राक्षसानांमहामृधे. ७ ङ. झ. ट. निर्बिभेदततःशिलां.

रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रधा ॥ निपपात शिला भूमौ गृध्रचक्रमिवाकुलम् ॥ १३ ॥
तां तु भिन्नां शिलां दृष्ट्वा सुग्रीवः क्रोधमूर्च्छितः ॥ सालमुत्पाट्य चिक्षेप राक्षसे रणमूर्धनि ॥१४॥
शरैश्च विददारैनं शूरः परपुरंजयः ॥ १५ ॥
स ददर्श ततः क्रुद्धः परिघं पतितं भुवि ॥ आविध्य तु स तं दीप्तं परिघं तस्य दर्शयन् ॥
परिघाग्रेण वेगेन जघानास्य हयोत्तमान् ॥ १६ ॥
तस्माद्धतहयाद्वीरः सोवप्लुत्य महारथात् ॥ गदां जग्राह संक्रुद्धो राक्षसोथ महोदरः ॥ १७ ॥
गदापरिघहस्तौ तौ युधि वीरौ समीयतुः ॥ नर्दन्तौ गोवृषप्रख्यौ घनाविव सविद्युतौ ॥ १८ ॥
ततः क्रुद्धो गदां तस्मै चिक्षेप रजनीचरः ॥ ज्वलन्तीं भास्कराभासां सुग्रीवाय महोदरः ॥ १९ ॥
गदां तां सुमहाघोरामापतन्तीं महाबलः ॥ सुग्रीवो रोषताम्राक्षः समुद्यम्य महाहवे ॥
आजघान गदां तस्य परिघेण हरीश्वरः ॥ २० ॥
पपात स गदोद्भिन्नः परिघस्तस्य भूतले ॥ २१ ॥
ततो जग्राह तेजस्वी सुग्रीवो वसुधातलात् ॥ आयसं मुसलं घोरं सर्वतो हेमभूषितम् ॥ २२ ॥
स तमुद्यम्य चिक्षेप सोप्यन्यां व्याक्षिपद्गदाम् ॥ भिन्नावन्योन्यमासाद्य पेततुर्धरणीतले ॥ २३ ॥
ततो भग्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः ॥ तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥ २४ ॥
जघ्नतुस्तौ तदाऽन्योन्यं नेर्दतुश्च पुनः पुनः ॥ तलैश्चान्योन्यमाहत्य पेततुर्धरणीतले ॥ २५ ॥
उत्पेततुस्ततस्तूर्णं जघ्नतुश्च परस्परम् ॥ भुजैश्चिक्षिपतुर्वीरावन्योन्यमपराजितौ ॥
जग्मतुस्तौ श्रमं वीरौ बाहुयुद्धे परंतपौ ॥ २६ ॥
आजहार ततः खड्गमदूरपरिवर्तिनम् ॥ राक्षसश्चर्मणा सार्धं महावेगो महोदरः ॥ २७ ॥
तथैव च महाखड्गं चर्मणा पतितं सह ॥ जग्राह वानरश्रेष्ठः सुग्रीवो वेगवत्तरः ॥ २८ ॥
तौ तु रोषपरीताङ्गौ नर्दन्तावभ्यधावताम् ॥ उद्यतासी रणे हृष्टौ युधि शस्त्रविशारदौ ॥ २९ ॥
दक्षिणं मण्डलं चोभौ सुतूर्णं संपरीयतुः ॥ अन्योन्यमभिसंक्रुद्धौ जये प्रणिहितावुभौ ॥ ३० ॥
स तु शूरो महावेगो वीर्यश्लाघी महोदरः ॥ महाचर्मणि तं खड्गं पातयामास दुर्मतिः ॥ ३१ ॥

---

गृध्रचक्रं गृध्रसमूहः ॥१३–१४॥ शरैरित्यर्धं ॥ शूरः महोदरः एनं च सालं च शरैः विददारेत्यन्वयः ॥१५॥ सः सुग्रीवः । आविध्येति । आदायेति शेषः । तस्य महोदरस्य दर्शयन् । पाणिलाघवमिति शेषः ॥ १६––१८ ॥ भास्कराभासां भास्करवद्भासमानां ॥ १९ ॥ गदां दृष्ट्वेति शेषः । समुद्यम्य । परिघमिति सिद्धं ॥ २० ॥ पपात स गदोद्भिन्न इत्यर्धं ॥ उभावपि परस्पराभिहतौ विशीर्णौ पेततुरिति भावः ॥ २१––२९ ॥ दक्षिणं प्रदक्षिणं चकारात् सव्यं च । सुतूर्णं संपरीयतुः अकुर्वतां ॥ ३० ॥ वीर्येण

---

स० गृध्रचक्रं शिलायाः शकलीभावात् ॥ १३ ॥ स० गोवृषप्रख्यौ वृषभश्रेष्ठसमौ ॥ १८ ॥ ती० गदापपात । सपरिघश्चउद्भिन्नइत्यर्थः ॥ २१ ॥ स० उद्यतासीरणइतिपदमेकं । उद्यतास्योः ईरणं परस्परंकंपनंतस्मिन्प्रहृष्टौ । युद्धेविशारदौ । अतो न रणपुनरीरणं ॥ २९ ॥ शि० ओः रुद्रस्येवभाययोस्तौ उभौ सुग्रीवमहोदरौ ॥ ३० ॥ स० दुर्मतिः ॥ असिरन्तर्गच्छेदितिज्ञानहीनः ॥ ३१ ॥

[ पा० ] १ ङ. झ. ट. चिक्षेपतंसचिच्छेदनैकधा. २ ङ. च. ञ. ट. परबलार्दनं झ. परबलार्दनः. ३ ङ. झ. पपाततरसाभिन्नः. ४ ङ. च. छ. झ. ञ. ट. नदन्तौच. ५ ङ. च. छ. झ. ट. मासाद्य. ६ ङ.—ट. जहारचतदाखड्गं. ७ छ. ञ. चर्मखड्गविशारदौ. ङ. झ. युद्धे शस्त्रविशारदौ.

लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः ॥ जहार सशिरस्त्राणं कुण्डलोपहितं शिरः ॥ ३२ ॥
निकृत्तशिरसस्तस्य पतितस्य महीतले ॥ तद्बलं राक्षसेन्द्रस्य दृष्ट्वा तत्र न तिष्ठते ॥ ३३ ॥
हत्वा तं वानरैः सार्धं ननाद मुदितो हरिः ॥ चुक्रोध च दशग्रीवो बभौ हृष्टश्च राघवः ॥ ३४ ॥
विषण्णवदनाः सर्वे राक्षसा दीनचेतसः ॥ विद्रवन्ति ततः सर्वे भयवित्रस्तचेतसः ॥ ३५ ॥

महोदरं तं विनिपात्य भूमौ महागिरेः कीर्णमिवैकदेशम् ॥
सूर्यात्मजस्तत्र रराज लक्ष्म्या सूर्यः स्वतेजोभिरिवाप्रधृष्यः ॥ ३६ ॥
अथ विजयमवाप्य वानरेन्द्रः समरमुखे सुरयक्षसिद्धसङ्घैः ॥
अवनितलगतैश्च भूतसङ्घैर्हरुषसमाकुलितैः स्तुतो महात्मा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

---

## एकोनशततमः सर्गः ॥ ९९ ॥

अङ्गदेनमहापार्श्वभङ्गः ॥ १ ॥

महोदरे तु निहते महापार्श्वो महाबलः ॥ सुग्रीवेण समीक्ष्याथ क्रोधात्संरक्तलोचनः ॥
अङ्गदस्य चमूं भीमां क्षोभयामास सायकैः ॥ १ ॥
स वानराणां मुख्यानामुत्तमाङ्गानि सर्वशः ॥ पातयामास कायेभ्यः फलं वृन्तादिवानिलः ॥ २ ॥
केषांचिदिषुभिर्बाहून्स्कन्धांश्चिच्छेद राक्षसः ॥ वानराणां सुसंक्रुद्धः पार्श्वं केषां व्यदारयत् ॥ ३ ॥
तेऽर्दिता बाणवर्षेण महापार्श्वेन वानराः ॥ विषादविमुखाः सर्वे बभूवुर्गतचेतसः ॥ ४ ॥
निरीक्ष्य बलमुद्विग्नमङ्गदो राक्षसार्दितम् ॥ वेगं चक्रे महाबाहुः समुद्र इव पर्वणि ॥ ५ ॥
आयसं परिघं गृह्य सूर्यरश्मिसमप्रभम् ॥ समरे वानरश्रेष्ठो महापार्श्वे न्यपातयत् ॥ ६ ॥
स तु तेन प्रहारेण महापार्श्वो विचेतनः ॥ ससूतः स्यन्दनात्तस्माद्विसंज्ञः प्रापतद्भुवि ॥ ७ ॥
सर्क्षराजस्तु तेजस्वी नीलाञ्जनचयोपमः ॥ निष्पत्य सुमहावीर्यः स्वाद्यूथान्मेघसंनिभात् ॥ ८ ॥
प्रगृह्य गिरिशृङ्गाभां क्रुद्धः सुविपुलां शिलाम् ॥ अश्वाञ्जघान तरसा स्यन्दनं च बभञ्ज तम् ॥ ९ ॥

---

श्लाघत इति वीर्यश्लाघी ॥ ३१ ॥ लग्नं चर्मलग्नं । उत्कर्षतः महोदरस्येति शेषः ॥ ३२ ॥ तत् शिरः । न तिष्ठते नातिष्ठत ॥ ३३–३४ ॥ विषण्णवदनाः अभवन्निति शेषः । अतः सर्वशब्दापौनरुक्त्यं ॥३५॥ लक्ष्म्या जयलक्ष्म्या ॥३६—३७॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥

अथ महापार्श्ववधः—महोदरेत्वित्यादि ॥ महोदरे सुग्रीवेण निहत इत्यन्वयः ॥ १—७ ॥ सर्क्षराज-

---

स० सर्वेसमप्यन्तं । हिंसायांसत्यां । भयं तत्साधनं ॥ ३५ ॥ ति० हर्षपदस्थाने हरुषेतिपाठश्छन्दोनुरोधात् ॥ बभूवेतिशेषः ॥ ३७ ॥ इत्यष्टनवतितमःसर्गः ॥ ९८ ॥

ति० सुग्रीवेणमहोदरेनिहतेसतितद्वधकर्तारंसुग्रीवंमहापार्श्वः समीक्ष्य ॥ स० सुग्रीवेण समीक्ष्य "लग्नमुत्कर्षतः खड्गं" इत्युक्तावसरं समीक्ष्य । महोदरेनिहतेसति क्रोधात्संरक्तलोचनोमहापार्श्वः चमूंक्षोभयामासेत्यन्वयः ॥ १ ॥

[ पा० ] १ ङ. छ. झ. ञ. ट. समाकुलितैर्निरीक्ष्यमाणः. २ च. ञ. ट. राक्षसः. ३ ङ. झ. बाहूंश्चिच्छेदाथसराक्षसः. ४ ञ. ट. सुसंरब्धः. ५ ङ. छ. झ. ट. केषांचिदाक्षिपत्. ६ ङ.—ट. निशम्य.

मुहूर्ताल्लब्धसंज्ञस्तु महापार्श्वो महाबलः ॥ अङ्गदं बहुभिर्बाणैर्भूयस्तं प्रत्यविध्यत ॥ १० ॥
जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे ॥ ऋक्षराजं गवाक्षं च जघान बहुभिः शरैः ॥ ११ ॥
जाम्बवन्तं गवाक्षं च स दृष्ट्वा शरपीडितौ ॥ जग्राह परिघं घोरमङ्गदः क्रोधमूर्च्छितः ॥ १२ ॥
तस्याङ्गदः प्रकुपितो राक्षसस्य तमायसम् ॥ दूरस्थितस्य परिघं रविरश्मिसमप्रभम् ॥ १३ ॥
द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवान् ॥ महापार्श्वस्य[1] चिक्षेप वधार्थं वालिनः सुतः ॥१४॥
स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः ॥ धनुश्च सशरं हस्ताच्छिरस्त्रं चाप्यपातयत् ॥ १५ ॥
तं समासाद्य वेगेन वालिपुत्रः प्रतापवान् ॥ तलेनाभ्यहनत्क्रुद्धः कर्णमूले सकुण्डले ॥ १६ ॥
स तु क्रुद्धो महावेगो महापार्श्वो महाद्युतिः ॥ करेणैकेन जग्राह सुमहान्तं परश्वधम् ॥ १७ ॥
तं तैलधौतं विमलं शैलसारमयं दृढम् ॥ राक्षसः परमक्रुद्धो वालिपुत्रे न्यपातयत् ॥ १८ ॥
तेन वामांसफलके भृशं प्रत्यवपादितम् ॥ अङ्गदो मोक्षयामास सरोषः स परश्वधम् ॥ १९ ॥
स वीरो वज्रसंकाशमङ्गदो मुष्टिमात्मनः ॥ संवर्तयत्सुसंक्रुद्धः पितुस्तुल्यपराक्रमः ॥ २० ॥
राक्षसस्य स्तनाभ्याशे मर्मज्ञो हृदयंप्रति ॥ इन्द्राशनिसमस्पर्शं स मुष्टिं विन्यपातयत् ॥ २१ ॥
तेन तस्य निपातेन राक्षसस्य महामृधे ॥ पफाल हृदयं चाशु स[2] पपात हतो भुवि ॥ २२ ॥
तस्मिन्निपतिते भूमौ तत्सैन्यं संप्रचुक्षुभे ॥ अभवच्च महान्क्रोधः समरे रावणस्य तु ॥ २३ ॥
वानराणां च[3] हृष्टानां सिंहनादश्च पुष्कलः[4] ॥ स्फोटयन्निव शब्देन लङ्कां साट्टालगोपुराम् ॥
महेन्द्रेणेव देवानां नादः समभवन्महान् ॥ २४ ॥

अथेन्द्रशत्रुस्त्रिदिवालयानां वनौकसां चैव महाप्रणादम् ॥
श्रुत्वा सरोषं युधि राक्षसेन्द्रः पुनश्च युद्धाभिमुखोऽवतस्थे ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

---

स्त्वित्यादिश्लोकद्वयमेकान्वयं ॥ ऋक्षराजः जाम्बवान् तेन सहितः सर्क्षराजः गवाक्षः । जाम्बवन्तं गवाक्षं चेत्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८—१० ॥ ऋक्षराजं जाम्बवन्तं त्रिभिर्बाणैराजघान । गवाक्षं च बहुभिः शरैर्जघानेत्यन्वयः ॥ ११—१२ ॥ तस्याङ्गद इत्यादिश्लोकद्वयमेकान्वयं ॥ दूरस्थितस्य तस्य वधार्थमित्यन्वयः ॥ १३—१७ ॥ तैलधौतं प्रतिदिनं तैलसेचनान्निष्कल्मषं । शैलसारमयं तद्वत्कठिनमित्यर्थः । दृढं अशिथिलं ॥ १८—१९ ॥ आसन इत्यस्य पितुस्तुल्यपराक्रम इत्यनेन संबन्धः । संवर्तयत् समवर्तयत् । भ्रामयामासेत्यर्थः ॥ २०—२३ ॥ स्फोटयन् दलयन् । वानराणां च सिंहनादः समभवत् । महेन्द्रेण सह देवानां नाद इव वानराणां च देवानां च नादः समभवदित्यर्थः । एतच्चानन्तरश्लोके स्फुटीभविष्यति ॥ २४—२५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

---

**ति०** तस्यरक्षसोहस्तात् सशरंधनुः चात् एकंहस्तंशिरस्त्राणं चापातयत् ॥ अतएवाग्रेवक्ष्यति—एकेनकरेणेति ॥ १५ ॥ **ति०** मोक्षयामास मोघीचकार ॥ १९ ॥ **ती०** संवर्तयत् समवर्तयत् बबन्धेत्यर्थः ॥ **स०** संवर्तयत्सुसंक्रुद्धइतिपदमेकं । संवर्तयंश्चासौसुसंक्रुद्धश्चसः । विन्यपातयत् ॥ २०—२१ ॥ **ति०** वानराणांसिंहनादः लङ्कांस्फोटयन्निवउदभूदितिशेषः । इन्द्रेणसह देवानामिव अङ्गदेनसहवानराणांसिंहनादःसमभवत् ॥ २४ ॥ इत्येकोनशततमः सर्गः ॥ ९९ ॥

[ पा० ] १ क. घ. ङ. च. झ. ट. महापार्श्वाय. २ ग. निपपात. ३ ख. ग. ङ. झ. ञ. ट. प्रहृष्टानां. ४ ङ. झ. नादःसुपुष्कलः.

## शततमः सर्गः ॥ १०० ॥

महोदरादिनिधनक्रुद्धेनरावणेन सूतंप्रति रामवधप्रतिज्ञानेनरथतुरगचोदनचोदनापूर्वकं लक्ष्मणातिक्रमणेनरामंप्रत्यभियानम् ॥ १ ॥ रामरावणाभ्यां विचित्रास्त्रनिकरप्रयोगेण समरप्रवर्तनम् ॥ २ ॥

महोदरमहापार्श्वौ हतौ दृष्ट्वा तु राक्षसौ ॥ तस्मिंश्च निहते वीरे विरूपाक्षे महाबले ॥
आविवेश महान्क्रोधो रावणं तं महामृधे ॥ १ ॥
सूतं संचोदयामास वाक्यं चेदमुवाच ह ॥ २ ॥
निहतानाममात्यानां रुद्धस्य नगरस्य च ॥ दुःखमेषोपनेष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ३ ॥
रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् ॥ प्रशाखा यस्य सुग्रीवो जाम्बवान्कुमुदो नलः ॥ ४ ॥
मैन्दश्च द्विविदश्चैव ह्यङ्गदो गन्धमादनः ॥ हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥ ५ ॥
स दिशो दश घोषेण रथस्यातिरथो महान् ॥ नादयन्प्रययौ तूर्णं राघवं चाभ्यवर्तत ॥ ६ ॥
पूरिता तेन शब्देन सनदीगिरिकानना ॥ संचचाल मही सर्वा सवराहमृगद्विपा ॥ ७ ॥
तामसं स महाघोरं चकारास्त्रं सुदारुणम् ॥ निर्ददाह कपीन्सर्वांस्ते प्रपेतुः समन्ततः ॥ ८ ॥
उत्पपात रजो घोरं तैर्भग्नैः संप्रधावितैः ॥ न हि तत्सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ ९ ॥
तान्यनीकान्यनेकानि रावणस्य शरोत्तमैः ॥ दृष्ट्वा भग्नानि शतशो राघवः पर्यवस्थितः ॥ १० ॥
ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् ॥ स ददर्श ततो रामं तिष्ठन्तमपराजितम् ॥ ११ ॥
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ॥ आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ॥
पद्मपत्रविशालाक्षं दीर्घबाहुमरिंदमम् ॥ १२ ॥
ततो रामो महातेजाः सौमित्रिसहितो बली ॥ वानरांश्च रणे भग्नानापतन्तं च रावणम् ॥
समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ॥ १३ ॥
विस्फारयितुमारेभे ततः स धनुरुत्तमम् ॥ महावेगं महानादं निर्भिन्दन्निव [10]मेदिनीम् ॥ १४ ॥
रावणस्य च बाणौघै रामविस्फारितेन च ॥ शब्देन राक्षसास्ते च पेतुश्च शतशस्तदा ॥ १५ ॥

---

अथ रामरावणयुद्धारम्भः शततमे—महोदरेत्यादि ॥ तस्मिन् विरूपाक्षे निहते सति पश्चान्महोदरमहापार्श्वौ हतौ दृष्ट्वा स्थितमिति शेषः ॥ १—८ ॥ सहितुं सोढुं । आर्ष इडागमः ॥ ९—१० ॥ तत इत्यादिसार्धश्लोकद्वयेन रामस्यापराजितत्वं निरवधिकसौन्दर्यनिधित्वेन वैरं विहाय निरन्तरानुभाव्यत्वं रावणस्य दुर्बुद्धित्वं अमृतप्रवाहमावर्तेनेव महता धनुर्वरेणावर्तितं श्रीरामदेहलावण्यामृतपूरमनवगाहमानस्य तस्य दौर्भाग्यं चोच्यते ॥ ११—१२ ॥ ततो राम इत्यादिसार्धश्लोक एकान्वयः ॥ हृष्टः चिराद्वैरी समागत इति संतुष्टः । कार्मुकं जग्राह ॥ १३ ॥ विस्फारयितुमारेभ इत्यादि विलम्बोक्त्या किमिदानीमपिवा नतोभविष्यति रावण इति रामस्य दयालुतोच्यते ॥ १४ ॥ रावणस्य बाणौघैः रामवि-

---

ति० हतौदृष्ट्वासरावणः क्रुद्धोजातइतिशेषः ॥ १ ॥ ति० मूलोच्छेदंकरिष्यामीत्याशयेनरामंसर्वाश्रयमहावृक्षत्वेननिरूपयति—रामवृक्षमिति । सीता पुष्पंयस्यसः । सचासौतेनैवपुष्पेण सर्वेषांवानराणांतत्तत्कर्मजफलप्रदस्तं । सुग्रीवादयः प्रशाखायस्यतं । प्रशाखासहितंहन्मीति शेषः ॥ रामानु० सीतापुष्पफलप्रदं सीता पुष्पंयस्यसः । सीतापुष्पश्चासौफलप्रदश्चतं ॥ ४ ॥ शि० तामसं राहुदेवताकमस्त्रं ॥ ८ ॥ रामानु० तेच वानराश्च ॥ १५ ॥

[ पा० ] १ ङ. झ. ट. दृष्ट्वासरावणः. २ ख. च. छ. ञ. ट. तस्मिन्विनिहते. ३ ङ.—झ. ट. दुःखमेवाप. ४ ख. घ. च. छ. ञ. ट. जांबवान्पनसो. ५ ज. एवमुक्त्वाथघोषेणरथस्यातिदिशोदश. ६ ङ. झ. ट. चाभ्यधावत. ७ ङ. झ. त्रस्तसिंहमृगद्विजा. ८ ङ. झ. रजोभूमौ. ९ ख. ग. च छ. ञ. निर्दहन्निव. १० ङ. रोदसी.

तयोः शरपथं प्राप्तो रावणो राजपुत्रयोः ॥ स बभौ च यथा राहुः समीपे शशिसूर्ययोः ॥ १६ ॥
तमिच्छन्प्रथमं योद्धुं लक्ष्मणो निशितैः शरैः ॥ मुमोच धनुरायम्य शरानग्निशिखोपमान् ॥ १७ ॥
तान्मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता ॥ बाणान्बाणैर्महातेजा रावणः प्रत्यवारयत् ॥ १८ ॥
एकमेकेन बाणेन त्रिभिस्त्रीन्दशभिर्दश ॥ लक्ष्मणस्य प्रचिच्छेद दर्शयन्पाणिलाघवम् ॥ १९ ॥
अभ्यतिक्रम्य सौमित्रिं रावणः समितिंजयः ॥ आससाद ततो रामं स्थितं शैलमिवाचलम् ॥२०॥
स सङ्ख्ये राममासाद्य क्रोधसंरक्तलोचनः ॥ व्यसृजच्छरवर्षाणि रावणो राघवोपरि ॥ २१ ॥
शरधारास्ततो रामो रावणस्य धनुश्च्युताः ॥ दृष्ट्वैवापततः शीघ्रं भल्लाञ्जग्राह सत्वरम् ॥ २२ ॥
ताञ्शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ॥ दीप्यमानान्महाघोरान्क्रुद्धानाशीविषानिव ॥ २३ ॥
राघवो रावणं तूर्णं रावणो राघवं तदा ॥ अन्योन्यं विविधैस्तीक्ष्णैः शरैरभिववर्षतुः ॥ २४ ॥
चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् ॥ बाणवेगात्समुत्क्षिप्तावन्योन्यमपराजितौ ॥ २५ ॥
तयोर्भूतानि वित्रेसुर्युगपत्संप्रयुध्यतोः ॥ रौद्रयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ २६ ॥
संततं विविधैर्बाणैर्बभूव गगनं तदा ॥ घनैरिवातपापाये विद्युन्मालासमाकुलैः ॥ २७ ॥
गवाक्षितमिवाकाशं बभूव शरवृष्टिभिः ॥ २८ ॥
महावेगैः सुतीक्ष्णाग्रैर्गृध्रपत्रैः सुवाजितैः ॥ शरान्धकारं तौ भीमं चक्रतुः समरं तदा ॥
गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥ २९ ॥
बभूव तुमुलं युद्धमन्योन्यवधकाङ्क्षिणोः ॥ अनासाद्यमचिन्त्यं च वृत्रवासवयोरिव ॥ ३० ॥
उभौ हि परमेष्वासावुभौ शस्त्रविशारदौ ॥ उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ॥ ३१ ॥
उभौ हि येन व्रजतस्तेनतेन शरोर्मयः ॥ ऊर्मयो वायुना विद्धा जग्मुः सागरयोरिव ॥ ३२ ॥
ततः संसक्तहस्तस्तु रावणो लोकरावणः ॥ नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥ ३३ ॥
रौद्रचापप्रयुक्तां तां नीलोत्पलदलप्रभाम् ॥ शिरसा धारयन्रामो न व्यथां प्रत्यपद्यत ॥ ३४ ॥

---

स्फारितेन च जातेन शब्देनेत्यर्थः ॥ १५ ॥ शशिसूर्ययोरिति । अमायामिति शेषः ॥ १६—१९ ॥ अभ्यतिक्रम्य एकस्यापि बाणस्य स्वस्मिन्नपतनाद्नादरेणातिक्रम्य ॥ २०–२५ ॥ यमान्तकनिकाशयोः यमतदन्तकौ यमरुद्रौ . तत्तुल्ययोः ॥ २६ ॥ गगनं संततं निबिडं बभूवेत्यन्वयः ॥ २७ ॥ गवाक्षितमित्यर्धं ॥ गवाक्षितं संजातगवाक्षं ॥ २८ ॥ महावेगैरित्यादिसार्धश्लोक एकान्वयः ॥ गृध्रपत्रैः हेतुभिः। सुवाजितैः संजातशोभनपक्षैः । बाणैरिति शेषः ॥ २९ ॥ अनासाद्यं इतः पूर्वं केनापि दुर्लभं । अचिन्त्यं रावणस्यैवं भविष्यतीति चिन्तानर्हं ॥ ३०—३१ ॥ येन येन मण्डलचारेण ॥ ३२ ॥ संसक्तहस्तः बाणप्रयोगासक्तहस्तः ॥ ३३—३४ ॥

---

**रामानु०** तयोरिति । अतिक्रूरस्वभावस्यरावणस्यरामलक्ष्मणयोः समीपागमनं अमावास्यायांराहोश्चन्द्रसूर्यसमीपागमनमिवेति कृत्वादृष्टान्तदार्ष्टान्तिकयोरैकरूप्यं ॥ १६ ॥ **ति०** तपने सूर्ये । अस्तंगतेचापिशब्दादस्ताचलंत्यक्त्वाउदयाद्रिंगतेपीत्यर्थः । दिवापीतियावत् । यत्तु यथाश्रुतरीत्यारात्रावपीतिव्याचक्षते तत्रनकश्चिच्चमत्कारः ॥ **स०** तपने सूर्येच अस्तं तन्नामकंपर्वतं । गतेसति । प्रदोषसमयइतियावत् । उत्थितौ महामेघाविव । चन्द्रादिकमाच्छाद्यसतिमिरीकरणंचमत्कारइति "नकश्चिच्चमत्कारः" इतिनागोजिभट्टोक्तिरेवनिश्चमत्कारा । यद्वा तपनेसूर्येसति अस्तंगतइवयथातथामहामेघाविवचक्रतुः । चापिशब्दादित्यादिचमत्कृत्यपेक्षया चमत्कृतिरतिचमत्कृतिर्वानवेतिकृतिनोविदांकुर्वन्तु ॥ सूर्येऽस्तंगतेचाप्युदितेइत्येतन्मध्येऽस्तंगतइत्यस्याधिक्येनावक्तव्यत्वाच्च ॥२९॥

**[ पा० ]** १ ङ. झ. शरान्धकारमाकाशंचक्रतुःप्रथमंतदा. २ क. ख. ग. च. छ. ञ. ट. परमंतदा. ३ ङ. झ. ञ. ट. युद्धविशारदौ.

अथ मन्त्रानभिजप्यन्रौद्रमस्त्रमुदीरयन् ॥ शरान्भूयः समादाय रामः क्रोधसमन्वितः ॥
मुमोच च महातेजाश्चापमायम्य वीर्यवान् ॥ ३५ ॥
[ तांञ्छरान्राक्षसेन्द्राय चिक्षेपाच्छिन्नसायकः ] ॥ ते महामेघसंकाशे कवचे पतिताः शराः ॥
अवध्ये राक्षसेन्द्रस्य न व्यथां जनयंस्तदा ॥ ३६ ॥
पुनरेवाथ तं रामो रथस्थं राक्षसाधिपम् ॥ ललाटे परमास्त्रेण सर्वास्त्रकुशलो रणे ॥ ३७ ॥
ते भित्त्वा बाणरूपाणि पञ्चशीर्षा इवोरगाः ॥ श्वसन्तो विविशुर्भूमिं रावणप्रतिकूलिताः ॥ ३८ ॥
निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्च्छितः ॥ आसुरं सुमहाघोरमस्त्रं प्रादुश्चकार ह ॥ ३९ ॥
सिंहव्याघ्रमुखांश्चान्यान्कङ्ककाकमुखानपि ॥ गृध्रश्येनमुखांश्चापि सृगालवदनांस्तथा ॥ ४० ॥
ईहामृगमुखांश्चान्यान्व्यादितास्यान्भयानकान् ॥ पञ्चास्याँल्लेलिहानांश्च ससर्ज निशिताञ्शरान् ॥४१॥
शरान्खरमुखांश्चान्यान्वराहमुखसंस्थितान् ॥ श्वानकुक्कुटवक्त्रांश्च मकराशीविषाननान् ॥ ४२ ॥
एतानन्यांश्च मायावी ससर्ज निशिताञ्शरान् ॥ रामं प्रति महातेजाः क्रुद्धः सर्प इव श्वसन् ॥४३॥
आसुरेण समाविष्टः सोस्त्रेण रघुनन्दनः ॥ ससर्जास्त्रं महोत्साहः पावकं पावकोपमः ॥ ४४ ॥
अग्निदीप्तमुखान्बाणांस्तथा सूर्यमुखानपि ॥ चन्द्रार्धचन्द्रवक्त्रांश्च धूमकेतुमुखानपि ॥ ४५ ॥
ग्रहनक्षत्रवक्त्रांश्च महोल्कामुखसंस्थितान् ॥ विद्युज्जिह्वोपमांश्चान्यान्ससर्ज निशिताञ्शरान् ॥ ४६ ॥
ते रावणशरा घोरा राघवास्त्रसमाहताः ॥ विलयं जग्मुराकाशे जग्मुश्चैव सहस्रशः ॥ ४७ ॥
तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ हृष्टा नेदुस्ततः सर्वे कपयः कामरूपिणः ॥
सुग्रीवप्रमुखा वीराः परिवार्य तु राघवम् ॥ ४८ ॥

---

शरान् रौद्रास्त्रप्रपञ्चरूपान्बाणान् मुमोचेत्यन्वयः । मुमोच च महातेजाश्चापमायम्य वीर्यवानिति पाठः । तदनन्तरं । ते महामेघसंकाश इति श्लोकः । तदनन्तरं पुनरेवेति श्लोकः । तदनन्तरं ते भित्त्वेति श्लोकात्पूर्वं ग्रन्थपतनमस्ति तदन्वेष्टव्यं ॥ ३५ ॥ अवध्ये अभेद्ये । व्यथां न जनयन् नाजनयन् ॥ ३६ ॥ ललाटे विषये ललाटमुद्दिश्येत्यर्थः । यद्वा परमास्त्राणि विव्याधेति शेषः ॥ ३७ ॥ ते अस्त्रविकृतिरूपाः शराः बाणरूपाणि रावणास्त्राणि । भित्त्वा रावणप्रतिकूलिताः रावणेन निवारिताः सन्तः भूमिं विविशुः ॥ ३८—३९ ॥ आसुरास्त्रं प्रपञ्चयति—सिंहेत्यादि श्लोकचतुष्टयेन ॥ लेलिहानान् सर्पान् । तदाकारानिति यावत् । श्वानशब्दोप्यस्ति । मकराशीविषाननानित्यत्रआशीविषशब्दः पञ्चास्यसर्पेतरसर्पपरः ॥४०—४३॥ पावकं पावकसंबन्धि ॥४४॥ पावकास्त्रं प्रपञ्चयति—अग्नीत्यादिश्लोकद्वयेन ॥ महोल्कामुखसंस्थितान् महोल्कामुखेन वर्तमानान् । विद्युज्जिह्वोपमान् विद्युदर्चिःसदृशान् ॥ "कणा जिह्वास्त-

---

स० अच्छिन्नसायकः अधाराविच्छेदशरः ॥ अवध्ये तद्भेदनद्वाराव्यथांनाजनयन् ॥३६॥ रामानु० परमास्त्रेण श्रेष्ठास्त्रमन्त्रेण । योजितान्बाणान्मुमोचेत्यध्याहर्तव्यं । समनन्तरश्लोकेबाणबहुलाभिधानात् ॥ ३७ ॥ रामानु० श्वसन्तः पञ्चशीर्षाः उरगाइव स्थितास्तेबाणाः रावणप्रतिकूलिताः रावणेनप्रत्यस्त्रेणखण्डिताः । अतएवबाणरूपाणिभित्वा भूमिंविविशुरितियोजना ॥ स० तेशराः बाणरूपाणि बाणं कार्यंरूपयन्तिसुन्दरीकुर्वन्तीतितानिकरायङ्गानिभित्त्वा पञ्चशीर्षाउरगाइव श्वसन्तः रावणप्रतिकूलिताः व्यंसिताः भूमिंविविशुः ॥ ३८ ॥ स० यदासुरमस्त्रंचकार प्रादुश्चकार तदेतान्ससर्ज ॥ ३९ ॥ पञ्चास्यान् सिंहमुखान् । पञ्चमुखान्शरानितिवा ॥ ४१ ॥ इतिशततमः सर्गः ॥ १०० ॥

[ पा० ] १ इदमर्धं झ. ञ. ट. ठ. पाठेषुपठ्यते. २ झ. ञ. ट. ठ. मन्यदस्त्रंचकारसः. ३ झ. कोकमुखानपि. ४ ङ. झ. सुग्रीवांभिमुखावीराःसंपरिक्षिप्यराघवं.

ततस्तदस्त्रं विनिहत्य राघवः प्रसह्य तद्रावणबाहुनिस्सृतम् ॥
मुदान्वितो दाशरथिर्महाहवे विनेदुरुच्चैर्मुदिताः कपीश्वराः ॥ ४९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

---

## एकोत्तरशततमः सर्गः ॥ १०१ ॥

रामरावणयोर्युद्धावसरे मध्येलब्धावकाशेनलक्ष्मणेन रावणंप्रतियोधनम् ॥ १ ॥ तत्रलक्ष्मणेन रावणस्यध्वजसारथिधनुश्छेदनम् ॥ २ ॥ विभीषणेन गदया रावणरथहयहननम् ॥ ३ ॥ लक्ष्मणेन रावणेनविभीषणजिघांसया क्षिप्तायाः शक्तेः शरैः शकलीकरणम् ॥ ४ ॥ ततो रावणक्षिप्तयामहत्याशक्त्या वक्षसिगाढाभिहतेनलक्ष्मणेन मूर्च्छयाभूमौपतनम् ॥ ५ ॥ ततः कोपाद्रामेणशरगणवर्षणे पुरस्स्थातुमशक्नुवतारावणेन पलायनम् ॥ ६ ॥

तस्मिन्प्रतिहतेऽस्त्रे तु रावणो राक्षसाधिपः ॥ क्रोधं च द्विगुणं चक्रे क्रोधाच्चास्त्रमनन्तरम् ॥ १ ॥
मयेन विहितं रौद्रमन्यदस्त्रं महाद्युतिः ॥ उत्स्रष्टुं रावणो घोरं राघवाय प्रचक्रमे ॥ २ ॥
ततः शूलानि निश्चेरुर्गदाश्च मुसलानि च ॥ कार्मुकाद्दीप्यमानानि वज्रसाराणि सर्वशः ॥ ३ ॥
मुद्गराः कूटपाशाश्च दीप्ताश्चाशनयस्तथा ॥ निष्पेतुर्विविधास्तीक्ष्णा वाता इव युगक्षये ॥ ४ ॥
तदस्त्रं राघवः श्रीमानुत्तमास्त्रविदां वरः ॥ जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५ ॥
तस्मिन्प्रतिहतेऽस्त्रे तु राघवेण महात्मना ॥ रावणः क्रोधताम्राक्षः सौरमस्त्रमुदैरयत् ॥ ६ ॥
ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च ॥ कार्मुकाद्भीमवेगस्य दशग्रीवस्य धीमतः ॥ ७ ॥
तैरासीद्गगनं दीप्तं संपतद्भिरितस्ततः ॥ पतद्भिश्च दिशो दीप्ताश्चन्द्रसूर्यग्रहैरिव ॥ ८ ॥
तानि चिच्छेद बाणौघैश्चक्राणि स तु राघवः ॥ आयुधानि च चित्राणि रावणस्य चमूमुखे ॥ ९ ॥
तदस्त्रं तु हतं दृष्ट्वा रावणो राक्षसाधिपः ॥ विव्याध दशभिर्बाणै रामं सर्वेषु मर्मसु ॥ १० ॥
स विद्धो दशभिर्बाणैर्महाकार्मुकनिस्सृतैः ॥ रावणेन महातेजा न प्राकम्पत राघवः ॥ ११ ॥
ततो विव्याध गात्रेषु सर्वेषु समितिंजयः ॥ राघवस्तु सुसंक्रुद्धो रावणं बहुभिः शरैः ॥ १२ ॥
एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली ॥ लक्ष्मणः सायकान्सप्त जग्राह परवीरहा ॥ १३ ॥
तैः सायकैर्महावेगै रावणस्य महाद्युतिः ॥ ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा ॥ १४ ॥

---

थार्चिषः" इति हलायुधः ॥ ४५—४८ ॥ तत् प्रसिद्धं । मुदान्वितः बभूवेति शेषः ॥ ४९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने शततमः सर्गः ॥ १०० ॥

---

अथ लक्ष्मणस्य शक्त्या पतनं—तस्मिन्नित्यादि ॥ क्रोधाच्चास्त्रमनन्तरमित्यत्रापि चक्र इत्यनुषज्यते ॥१॥ किं तदस्त्रमित्यपेक्षायामाह—मयेनेति ॥ रौद्रं रुद्रदेवताकं ॥ २ ॥ ततः शूलानीत्यादिश्लोकद्वयमेकान्वयं ॥ कूटपाशाः कपटपाशाः ॥ ३—७ ॥ चन्द्रसूर्यग्रहैरिवेति । तत्समानाकारैरित्यर्थः ॥ ८—१२ ॥ एतस्मिन्नन्तरइति । एवं रावणं प्रहृत्य क्षणं रामे विश्राम्यति सतीत्यर्थः । लक्ष्मणः पूर्वं युद्धे प्रवृत्तो मध्ये रामेण युद्धकरणादवसरप्रतीक्ष इत्यर्थः । एवमव्याख्याने कथमन्येन युध्यमानमन्यो युध्येतेति महान्दोषः स्यात् ॥ १३ ॥ गृहीतानां सप्तबाणानां विनियोगप्रकारमाह—तैः सायकैरित्यादिश्लोकत्रयेण ॥ तैः सायकैरिति षष्ठ्यर्थेतृतीया । तेषां सायकानां मध्ये

---

ति० मनुष्यः शीर्षेयस्यतम् । मनुष्यशीर्षयुक्तमित्यर्थइत्यन्ये ॥ १४ ॥

[ पा० ] १ क.—ट. मेहात्मा. २ च. छ. ज. तदस्त्रंनिहतंदृष्ट्वारावणो. ३ क्रोधंतंद्विगुणं. ४ ध. निहतंघोरं. ५ ङ. च. छ. झ. ज. ट. भीमं.

सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम् ॥ जहार लक्ष्मणः श्रीमान्नैर्ऋतस्य महाबलः ॥ १५ ॥
तस्य बाणैश्च चिच्छेद धनुर्गजकरोपमम् ॥ लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिर्निशितैः शरैः ॥ १६ ॥
नीलमेघनिभांश्चास्य सदश्वान्पर्वतोपमान् ॥ जघानाप्लुत्य गदया रावणस्य विभीषणः ॥ १७ ॥
हताश्वाद्वेगवान्वेगादवप्लुत्य महारथात् ॥ क्रोधमाहारयत्तीव्रं भ्रातरं प्रति रावणः ॥ १८ ॥
ततः शक्तिं महाशक्तिर्दीप्तां दीप्ताशनीमिव ॥ विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥ १९ ॥
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः ॥ अथोदतिष्ठत्सन्नादो वानराणां तदा रणे ॥ २० ॥
सा पपात त्रिधा च्छिन्ना शक्तिः काञ्चनमालिनी ॥ सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता ॥२१॥
ततः संभाविततरां कालेनापि दुरासदाम् ॥ जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा ॥ २२ ॥
सा वेगिता बलवता रावणेन दुरासदा ॥ जज्वाल सुमहाघोरा शक्राशनिसमप्रभा ॥ २३ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् ॥ प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥ २४ ॥
तं विमोक्षयितुं वीरश्चापमायम्य लक्ष्मणः ॥ रावणं शक्तिहस्तं वै शरवर्षैरवाकिरत् ॥ २५ ॥
कीर्यमाणः शरौघेण विसृष्टेन महात्मना ॥ स प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २६ ॥
मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ॥ लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २७ ॥
मोक्षितस्ते बलश्लाघिन्यस्मादेवं विभीषणः ॥ विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ॥ २८ ॥
एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा ॥ मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ॥ २९ ॥
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् ॥ मयेन मायाविहिताममोघां शत्रुघातिनीम् ॥ ३० ॥
लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा ॥ रावणः परमक्रुद्धश्चिक्षेप च ननाद च ॥ ३१ ॥
सा क्षिप्ता भीमवेगेन शक्राशनिसमस्वना ॥ शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्धनि ॥ ३२ ॥
तामनुव्याहरच्छक्तिमापतन्तीं स राघवः ॥ स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ॥ ३३ ॥
रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा ॥ मुक्ताऽऽशूरस्यभीतस्य लक्ष्मणस्य ममज्ज सा ॥ ३४ ॥
न्यपतत्सा महावेगा लक्ष्मणस्य महोरसि ॥ जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ॥ ३५ ॥

---

एकेन बाणेन ध्वजं, एकेन बाणेन सारथिशिरः, पञ्चभिर्धनुश्च चिच्छेदेत्यर्थः । निशितैः शरैरित्यत्र शरशब्दः काशदण्डविशेषमयत्वपरो बाणविशेषणं ॥ १४—१६ ॥ एवं धनुषि छिन्ने क्षणं तूष्णीं तिष्ठति रावणे विभीषणेन किंचित्कारमाह—नीलेति ॥ १७—२१ ॥ संभाविततरां चन्दनादिभिरर्चितां ॥ २२—२३॥ अभ्यवपद्यत तमाच्छाद्य स्वयमतिष्ठदित्यर्थः ॥ २४—२५ ॥ विमुखीकृतविक्रमः विमुखीकृतविभीषणविषयपराक्रमः ॥२६—२७॥ ते त्वया ॥२८॥ लोहितलक्षणा रुधिरचिह्ना । अनेन पूर्वमपि बहवो रिपवोऽनया हता इति व्यज्यते। लोहितलक्षणा सती यास्यतीति वा ॥ २९—३२ ॥ राघवः लक्ष्मणाय स्वस्त्यस्तु। त्वं हतोद्यमा नष्टहननोद्योगा मोघा भवेति तामनुव्याहरदित्यन्वयः ॥३३॥ क्षणाद्भस्मीकरणक्षमा शक्तिः रामेण मोघीकृता सती केवलमपतदित्याह—रावणेनेति ॥ मुक्तेति। आशु उरसि अभीतस्येति

---

ति० लोहितलक्षणा शत्रुरुधिरग्रहणस्वभावा ॥ २९ ॥ ति० आपतन्तींतांशक्तिं शक्त्यधिष्ठातृदेवतामुद्दिश्यानुव्याहरत् । तदेवाह—लक्ष्मणायस्वस्त्यस्तु । त्वंहतोद्यमा हतप्राणनाशोद्योगा । अतएवमोघा प्राणापहारांशेमोघाभव । तच्छक्तिस्तुपीडामात्रेचरितार्थास्त्वितिभावः । स्पर्शमात्रेणप्राणापहरणसामर्थ्ययुक्तायाः शक्तेरनेनस्ववाक्येनमोघीकरणात्स्वस्यसत्यसंकल्पत्वंसूचितं ॥ ३३ ॥ ति० अभीतस्यभगवत्तत्वानुसंधानेननिर्भयस्य ॥ ३४ ॥ ति० मुक्ता आशु उरसीतिच्छेदस्यगूढत्वात्स्पष्टमेवाहकविः—न्यपतदिति ॥ ३५ ॥

[ पा० ] १ क. ङ.—ट. हताश्वात्तुतदावेगादवप्लुत्य. २ ख. ङ. च. झ. ञ. ट. शक्तिःप्रदीप्तामशनीमिव. ३ ङ. च. झ. ट. महारणे. ४ ख. साग्रहीता. ५ क. ख. घ. ज. महात्मना. ङ. झ. दुरात्मना. ६ ङ. झ. ञ. ट. वज्राशनि.

ततो रावणवेगेन सुदूरमवगाढया ॥ शक्त्या निर्भिन्नहृदयः पपात भुवि लक्ष्मणः ॥ ३६ ॥
तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः ॥ भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥ ३७ ॥
स [1]मुहूर्तमनुध्याय [2]बाष्पव्याकुललोचनः ॥ बभूव संरब्धतरो युगान्त इव पावकः ॥ ३८ ॥
न विषादस्य कालोऽयमिति संचिन्त्य राघवः ॥ चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ॥
सर्वयत्नेन महता लक्ष्मणं [3]संनिरीक्ष्य च ॥ ३९ ॥
स ददर्श ततो रामः शक्त्या भिन्नं महाहवे ॥ लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम् ॥ ४० ॥
तामपि प्रहितां शक्तिं रावणेन बलीयसा ॥ यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम् ॥
अर्दिताश्चैव बाणौघैः क्षिप्रहस्तेन रक्षसा ॥ ४१ ॥
सौमित्रिं सा विनिर्भिद्य प्रविष्टा धरणीतलम् ॥ ४२ ॥
तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् ॥ बभञ्ज समरे क्रुद्धो बलवान्विचकर्ष च ॥ ४३ ॥
तस्य निष्कर्षतः शक्तिं रावणेन बलीयसा ॥ शराः सर्वेषु गात्रेषु पातिता मर्मभेदिनः ॥ ४४ ॥
अचिन्तयित्वा तान्बाणान्समाश्लिष्य च लक्ष्मणम् ॥ अब्रवीच्च हनूमन्तं [4]सुग्रीवं चैव राघवः ॥
लक्ष्मणं परिवार्येह तिष्ठध्वं वानरोत्तमाः ॥ ४५ ॥
पराक्रमस्य कालोऽयं संप्राप्तो मे चिरेप्सितः ॥ पापात्माऽयं दशग्रीवो वध्यतां पापनिश्चयः ॥
[5]काङ्क्षतः स्तोककस्येव घर्मान्ते मेघदर्शनम् ॥ ४६ ॥
अस्मिन्मुहूर्ते नचिरात्सत्यं प्रतिशृणोमि वः ॥ अरावणमरामं वा जगद्द्रक्ष्यथ वानराः ॥ ४७ ॥
राज्यनाशं वने वासं दण्डके परिधावनम् ॥ वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम् ॥ ४८ ॥
प्राप्तं दुःखं महद्घोरं क्लेशं च निरयोपमम् ॥ अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे ॥ ४९ ॥
यदर्थं वानरं सैन्यं समानीतमिदं मया ॥ सुग्रीवश्च कृतो राज्ये निहत्वा वालिनं रणे ॥ ५० ॥

---

पदानि । लक्ष्मणस्योरसि ममज्जेति संबन्धः ॥३४—३७॥ अनुध्याय तत्कालकर्तव्यं चिन्तयित्वा ॥ ३८ ॥ न विषादस्येति सार्धश्लोकमेकं वाक्यं । लक्ष्मणं सन्निरीक्ष्य महता सर्वयत्नेन रावणस्य वधे धृतः अवहितः सुतुमुलं युद्धं चक्र इत्यन्वयः । न केवलं सीताहरणात् किंतु लक्ष्मणदर्शनादपीति चशब्दार्थः ॥ ३९ ॥ कथं लक्ष्मणदर्शनं रावणवधकारणं भवतीत्यत्राह—स ददर्शेति ॥ तदानीं लक्ष्मणस्य तादृशशोच्यत्वदर्शनं रावणवधनिश्चयकारणं भवतीत्याशयः ॥४०॥ तामपीति ॥ अपिशब्दस्य यत्नतोपीत्युत्तरत्रान्वयः । बाणार्दितत्वेन सुतरां न शेकुरित्याह—अर्दिताश्चेति ॥४१॥ कारणान्तरमाह—सौमित्रिमिति ॥ ४२—४५ ॥ पराक्रमस्येत्यादिसार्धश्लोक एकान्वयः ॥ वध्यतामिति प्राप्तकाले लोट् । स्तोककस्य चातकस्य । "स्तोकक-श्चातकः समाः" इत्यमरः ॥ ४६ ॥ अस्मिन्मुहूर्ते तत्रापि न चिराद्द्रक्ष्यथेत्यन्वयः ॥ ४७ ॥ राज्यनाशमित्यादिश्लोकद्वयमेकान्वयं ॥ प्राप्तं पंपोपवनादौ । क्लेशं लक्ष्मणप्रहरणजन्यं ॥ ४८—४९ ॥ यदर्थमित्यादिश्लोकत्रयमेकान्वयं ॥ दृष्टिं दृष्टिविषयं । दृष्टौ विषं यस्यासौ दृष्टिविषः तस्य । केचिद्धि सर्पाः दर्शनमात्रेण मनुष्यान्मारयन्तीति प्रसिद्धिः ॥५०—

---

**स०** तदवस्थं साअवस्थायस्यतं ॥ ३७ ॥ **स०** इवेनकविः स्वतः सर्वविदोध्यानं लोकानुकृतितइतिसूचयति ॥ ३८ ॥ **ति०** समाश्लिष्येति । समाश्लेषोऽयंसकलपीडानिवृत्तिफलकः स्वतादात्म्यावभासनरूपः ॥ ३९ ॥ **ति०** राज्यनाशं राज्यनाशजनितंदुःखं । वनेवासं वनवासजनितंदुःखं । एवमुत्तरत्रापिदुःखविशेषणानि । क्लेशंचनिरयोपमंअतिजुगुप्सितंदुःखं लक्ष्मणप्रहारजनितमित्यर्थः ॥ ४८ ॥

**[ पा० ]** १ ङ. च. छ. झ. ञ. ट. मुहूर्तमिवध्यात्वा. २ घ. ङ. झ. बाष्पपर्याकुलेक्षणः. ३ ङ. झ. परिवीक्ष्यच. ४ ङ. झ. ट. सुग्रीवंचमहाकपिं. ५ ङ. झ. ञ. ट. काङ्क्षितंचातकस्येव. क. ख. च. छ. ज. काङ्क्षतश्चातकस्येव.

यदर्थं सागरः क्रान्तः सेतुर्बद्धश्च सागरे ॥ सोयमद्य रणे पापश्चक्षुर्विषयमागतः ॥ ५१ ॥
चक्षुर्विषयमागम्य नायं जीवितुमर्हति ॥ दृष्टिं दृष्टिविषस्येव सर्पस्य मम रावणः ॥ ५२ ॥
स्वस्थाः पश्यत दुर्धर्षा युद्धं वानरपुङ्गवाः ॥ आसीनाः पर्वताग्रेषु ममेदं रावणस्य च ॥ ५३ ॥
अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे ॥ त्रयो लोकाः सगन्धर्वाः सदेवाः सर्षिचारणाः ॥ ५४ ॥
अद्य कर्म करिष्यामि यल्लोकाः सचराचराः ॥ सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥
समागम्य सदा लोके यथा युद्धं प्रवर्तितम् ॥ ५५ ॥
एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः ॥ आजघान दशग्रीवं रणे रामः समाहितः ॥ ५६ ॥
अथ प्रदीप्तैर्नाराचैर्मुसलैश्चापि रावणः ॥ अभ्यवर्षत्तदा रामं धाराभिरिव तोयदः ॥ ५७ ॥
रामरावणमुक्तानामन्योन्यमभिनिघ्नताम् ॥ शराणां च शराणां च बभूव तुमुलः स्वनः ॥ ५८ ॥
ते भिन्नाश्च विकीर्णाश्च रामरावणयोः शराः ॥ अन्तरिक्षात्प्रदीप्ताग्रा निपेतुर्धरणीतले ॥ ५९ ॥
तयोर्ज्यातलनिर्घोषो रामरावणयोर्महान् ॥ त्रासनः सर्वभूतानां संबभूवाद्भुतोपमः ॥ ६० ॥
स कीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मताऽर्दितः ॥
भयात्प्रदुद्राव समेत्य रावणो यथाऽनिलेनाभिहतो बलाहकः ॥ ६१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

---

## द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

रामेणसुषेणंप्रति रावणशक्तिघातपतितलक्ष्मणप्रदर्शनपूर्वकं तस्यनिधनशङ्कया विषादेनबहुधाविलापः ॥ १ ॥ सुषेणेनरामंप्रति हेतूपन्यासेनलक्ष्मणप्राणधारणनिर्धारणोक्त्यासमाश्वासनपूर्वकं हनुमन्तंप्रति विशल्यकरण्याद्योषधिसमानयनचोदना ॥ २ ॥ ओषधिगिरिंगतेनहनुमता ओषधीनामन्तर्धानेकोपादुत्पाटनेनतच्छिखरस्यैव समानयनम् ॥ ३ ॥ सुषेणेननासान्यस्तमहौषधिक्षोदसमाघ्राणनमात्राद्विशल्येनलक्ष्मणेन स्वापादिव समुत्थानम् ॥ ४ ॥ सहर्षबाष्परामपरिष्वक्तेनलक्ष्मणेन तंप्रति सत्वरं रावणवधप्रार्थना ॥ ५ ॥

शक्त्या विनिहतं दृष्ट्वा रावणेन बलीयसा ॥ लक्ष्मणं समरे शूरं रुधिरौघपरिप्लुतम् ॥ १ ॥

५३ ॥ रामत्वं जगदेकवीरत्वं । आचार्यास्तु रामावतारप्रयोजनमित्याहुः ॥ ५४ ॥ अद्येत्यादिसार्धश्लोक एकान्वयः ॥ सदेवाः सचराचराः लोकाः जनाः । समागम्य संघीभूय । यथेदानीं युद्धं प्रवर्तितं तथा यावद्भूमिर्धरिष्यति तावत्कालं सदा नित्यशः । लोके यत्कर्म कथयिष्यन्ति तत्कर्माद्य करिष्यामीत्यन्वयः ॥५५—६१॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोत्तरशततमः सर्गः ॥ १०१ ॥

अथ लक्ष्मणसंजीवनं द्विशततमे—शक्त्या विनिहतमित्यादिश्लोकद्वयमेकं वाक्यं ॥ विसृजन्नेवेत्यादि-

---

ति० रामस्यरामत्वं रमयतीतिरामइतिव्युत्पत्त्यापराक्रमेणापिरमयितृत्वमुच्यते ॥ ती० रामस्यरामत्वं त्रींल्लोकान्सर्षिदेवान्धर्मेणसत्येनशौर्येणचरमयतीत्यन्वर्थरामत्वं । तदुचितंकर्माद्यकरिष्यामीतिभावः ॥ स० रामस्यममरामत्वंपश्यन्तु । अन्यथानामेदं त्यक्ष्यामीतिभावः ॥ ५४ ॥ ति० यावद्भूमिर्धरिष्यति प्राणिनः ॥ ५५ ॥ वराणां शराणां श्रेष्ठानांशराणां । चान्मुसलानां ॥ ५८ ॥ ति० भयात् भ्रातृपीडाजनितकोपेनसर्वथामांहनिष्यत्येवेतिभयादित्यर्थः ॥ इदंपलायनममासायंकाले ॥ ६१ ॥ इत्येकोत्तरशततमःसर्गः ॥ १०१ ॥

[ पा० ] १ क. ख. ङ. झ. ञ. सुखंपश्यत. २ ङ. च. छ. झ. ञ. ट. तथाप्रसिद्धैर्नाराचैः. ३ ज. अभ्यवर्षततंशैलं धाराभिरिव. ४ झ. ट. वराणांचशराणांच. घ. उद्यतानांशराणांच. ५ ङ. च. छ. झ. ञ. विच्छिन्नाविकीर्णाश्च. ६ ङ.—ट. विकीर्यमाणः.

स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः ॥ विसृजन्नेव बाणौघान्सुषेणं वाक्यमब्रवीत् ॥ २ ॥
एष रावणवीर्येण लक्ष्मणः पतितः क्षितौ ॥ सर्पवद्वेष्टते वीरो मम शोकमुदीरयन् ॥ ३ ॥
शोणितार्द्रमिमं वीरं प्राणैरिष्टतमं मम ॥ पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४ ॥
अयं स समरश्लाघी भ्राता मे शुभलक्षणः ॥ यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन च ॥ ५ ॥
लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ॥ सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥
अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव ॥ ६ ॥
चिन्ता मे वर्धते तीव्रा मुमूर्षा चोपजायते ॥ भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना ॥ ७ ॥
विनिष्टनन्तं दुःखार्तं मर्मण्यभिहतं भृशम् ॥ राघवो भ्रातरं दृष्ट्वा प्रियं प्राणं बहिश्चरम् ॥
दुःखेन महताऽऽविष्टो ध्यानशोकपरायणः ॥ ८ ॥
परं विषादमापन्नो विललापाकुलेन्द्रियः ॥ ९ ॥
न हि युद्धेन मे कार्यं नैव प्राणैर्न सीतया ॥ भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु ॥ १० ॥
किं मे राज्येन किं प्राणैर्युद्धे कार्यं न विद्यते ॥ यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः ॥ ११ ॥
देशे देशे कलत्राणि देशेदेशे च बान्धवाः ॥ तं तु देशं न पश्यामि यत्र भ्राता सदोहरः ॥ १२ ॥
[ किंनु राज्येन दुर्धर्ष लक्ष्मणेन विना मम ॥ कथं वक्ष्याम्यहं त्वंबां सुमित्रां पुत्रवत्सलाम् ॥
उपालंभं न शक्ष्यामि सोढुं दत्तं सुमित्रया ॥ १३ ॥
किंनु वक्ष्यामि कौसल्यां मातरं किंनु कैकयीम् ॥ भरतं किंनु वक्ष्यामि शत्रुघ्नं च महाबलम् ॥
सह तेन वनं यातो विना तेनागतः कथम् ॥ १४ ॥
इहैव मरणं श्रेयो न तु बन्धुविगर्हणम् ॥ १५ ॥
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि ॥ येन मे धार्मिको भ्राता निहतश्चाग्रतः स्थितः ॥ १६ ॥
हा भ्रातर्मनुजश्रेष्ठ शूराणांप्रवर प्रभो ॥ एकाकी किंनु मां त्यक्त्वा परलोकाय गच्छसि ॥ १७ ॥
विलपन्तं च मां भ्रातः किमर्थं नावभाषसे ॥ उत्तिष्ठ पश्य किं शेषे दीनं मां पश्य चक्षुषा ॥ १८ ॥
शोकार्तस्य प्रमत्तस्य पर्वतेषु वनेषु च ॥ विषण्णस्य महाबाहो समाश्वासयिता मम ॥ १९ ॥ ]
इत्येवं विलपन्तं तं शोकविह्वलितेन्द्रियम् ॥ विवेष्टमानं करुणमुच्छ्वसन्तं पुनः पुनः ॥
राममाश्वासयन्वीरः सुषेणो वाक्यमब्रवीत् ॥ २० ॥

वर्तमाननिर्देशेन रावणपलायनानन्तरं लक्ष्मणयोगक्षेमानुसंधाने अविलम्बः सूचितः ॥ १—२ ॥ उदीरयन् जनयन् ॥ ३ ॥ प्राणैः प्राणेभ्यः ॥ ४—५ ॥ लज्जतीवेत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ लज्जतीव । आर्षं परस्मैपदं । स्वप्नयाने स्वप्नगमने । स्वप्ने हि गच्छतां पुरुषाणां पादाः पश्चादाकृष्टा भवन्ति । भ्रातरं निहतं दृष्ट्वेति पूर्वशेषः ॥ ६—७ ॥ विनिष्टनन्तमित्यादिसार्धश्लोकमेकं वाक्यं ॥ विनिष्टनन्तं निश्वसन्तं । ध्यानशोकपरायणः अभूदिति शेषः ॥ ८ ॥ परं विषादमित्यर्धं ॥ राघव इत्यनुषञ्जनीयं ॥ ९ ॥ दृष्ट्वा स्थितस्येति शेषः ॥ १० ॥ यत्र यतः ॥ ११—२० ॥

**स०** सहोदरः तत्तुल्यः । पायसस्यकौसल्याविभागादुद्धृतस्यसुमित्रायैप्रदानान्निमित्ताद्वालक्ष्मणस्यसाहोदर्यं । सहोदरस्यमेलनं भवेत् असहोदरःसन्नेतादृशोभ्रातायत्रमिलेत्तंदेशंनपश्यामीत्यर्थोवा । भिन्नोदरेएतादृशंसौहार्दंदुर्लभमितिभावः ॥ १२ ॥

**[ पा० ]** १ झ. प्राणैःप्रियतरं. २ किंनुराज्येनेत्यादयः समाश्वासयितामममेत्यन्ताःश्लोकाः ङ. झ. ञ. ट. पाठेषुदृश्यन्ते. ३ इत्येवमित्यादीनां स्रस्तगात्रस्यभूतलइत्यन्तानांश्लोकानांस्थाने ङ. झ. ञ. ट. पाठेषु "राममेवंब्रुवाणंतुशोकव्याकुलितेन्द्रियम् । आश्वासयन्नुवाचेदंसुषेणःपरमंवचः । त्यजेमांनरशार्दूलबुद्धिंवैक्लब्यकारिणीम् । शोकसंजननींचिन्तांतुल्यांबाणैश्चमूमुखे ।

न मृतोऽयं महाबाहो लक्ष्मणो लक्ष्मिवर्धनः ॥ न चास्य विकृतं वक्त्रं नापि श्यावं न निष्प्रभम् ॥२१॥
सुप्रभं च प्रसन्नं च मुखमस्याभिलक्ष्यते ॥ पद्मरक्ततलौ हस्तौ सुप्रसन्ने च लोचने ॥ २२ ॥
एवं न विद्यते रूपं गतासूनां विशांपते ॥ दीर्घायुषस्तु ये मर्त्यास्तेषां तु मुखमीदृशम् ॥ २३ ॥
नायं प्रेतत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ॥ मा विषादं कृथा वीर सप्राणोऽयमरिन्दमः ॥ २४ ॥
आख्यास्यते प्रसुप्तस्य स्रस्तगात्रस्य भूतले ॥ सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः ॥ २५ ॥
एवमुक्त्वा[1] तु वाक्यज्ञः सुषेणो राघवं वचः ॥ [2]हनुमन्तमुवाचेदं हनुमन्तमभित्वरन् ॥ २६ ॥
सौम्य शीघ्रमितो गत्वा[3] शैलमोषधिपर्वतम् ॥ पूर्वं ते कथितो योसौ वीर जाम्बवता शुभः ॥२७ ॥
दक्षिणे शिखरे तस्य जातामोषधिमानय ॥ विशल्यकरणीं नाम विशल्यकरणीं शुभाम् ॥ २८ ॥
सवर्णकरणीं चापि तथा संजीवनीमपि ॥ संधानकरणीं चापि गत्वा शीघ्रमिहानय ॥
संजीवनार्थं वीरस्य लक्ष्मणस्य महात्मनः ॥ २९ ॥
इत्येवमुक्तो हनुमान्गत्वा चौषधिपर्वतम् ॥ चिन्तामभ्यगमच्छ्रीमानजानंस्तां महौषधिम् ॥ ३० ॥
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः ॥ इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥ ३१ ॥
अस्मिन्हि शिखरे जातामोषधीं तां सुखावहाम् ॥ प्रतर्केणावगच्छामि सुषेणोप्येवमब्रवीत् ॥ ३२ ॥
अगृह्य यदि गच्छामि विशल्यकरणीमहम् ॥ कालात्ययेन दोषः स्याद्वैक्लव्यं च महद्भवेत् ॥ ३३ ॥

श्यावं कपिशं । विवर्णमिति यावत् । "श्यावः स्यात्कपिशः" इत्यमरः ॥ २१—२४ ॥ मुहुर्मुहुः कम्पमानं हृदयमेनं सोच्छ्वासं सप्राणं । आख्यास्यते आचष्टे । लडर्थे लृट् ॥ २५—२६ ॥ सौम्य शीघ्रमित्यादि सार्धश्लोकत्रयमेकान्वयं ॥ ओषधिपर्वतं ओषधिपर्वताख्यं । द्वितीयो विशल्यकरणीशब्दो गुणवचनः । विशल्याः क्रियन्तेनयेति विशल्यकरणी तां ॥ २७—३० ॥ तस्य बुद्धिरित्यादिश्लोकत्रयमेकान्वयं । प्रतर्केण अन्तःकरणप्रसादादिना लिङ्गेन । सुषेणोप्येवमब्रवीदिति । "दक्षिणे शिखरे तस्य जातामोषधिमानय" इति सुषेणवचनं । अगृह्य यदि गच्छामि । पुनः सुषेणं प्रष्टुमिति भावः । दोषः लक्ष्मणहानिरूपः । वैक्लव्यं निष्पौरुषत्वं । अन्ते इतिकरणेन पूर्वमन्वयः

**ति०** अत्र द्वितीयोहनुशब्दः प्रशस्तहनुवचनः ॥ यद्वा हनुशब्दोज्ञानवाची । "ज्ञानवान्हनुमान्स्वतः" इतिशब्दार्णवे ॥ २६ ॥ **स०** अजानन् दृष्टपूर्वाणामप्योषधीनांपूर्ववन्निलीनानांज्ञानार्थं मार्गणेसमयोऽयंमयातीतोभवेद्भवेयंचराघवाश्लाघ्यइत्यजानन्निति वदन्सूचयतिकविरितिज्ञेयं । यत्तुनागोजिभट्टेन "पूर्वदृष्टानामप्यपरिचयेपुराणान्तरोक्तकालनेमियुद्धकृतचित्तचाञ्चल्यंहेतुरिति बोध्यमित्युक्तं तत्तुकालनेमिंहत्वागतवतश्चित्तप्राशस्त्यस्यैवसंभवदुक्तिकत्वादुपेक्ष्यं । यथोक्तमध्यात्मरामायणे "रामेणप्रेषितोवीरहनुमान्क्षीरसागरम् । गतोनेतुंलक्ष्मणस्यजीवनार्थंमहोदधिम् । कृत्वातच्चारवचनंराजाचिन्तापरोऽभवत् । जगामरात्रावेकाकी कालनेमिगृहंक्षणात्" इत्यारभ्य—"ततआगत्यमकरीमहाकायामहाकपिम् । त्वत्प्रसादादहंपाशान्मुक्तोह्यस्मिकपीश्वर । आश्रमेयस्तुतेदृष्टःकालनेमिर्महासुरः । रावणप्रहितोमार्गेविघ्नंकर्तुंतवानघ । मुनिवेषधरो नासौमुनिर्विप्रविहिंसकः । जहिदुष्टंगच्छशीघ्रं द्रोणाचलमनुत्तमम् । गच्छाम्यहंब्रह्मलोकंत्वत्स्पर्शाद्धूतकल्मषा" इतिगर्भीकृत्य—"गृहाणमत्तोमन्त्रंत्वंदेहिमेगुरुदक्षिणाम् । इत्युक्तो हनुमान्मुष्टिंदृढंबद्ध्वाहराक्षसम् । गृहाणदक्षिणामेतामित्युक्त्वानिजघानतम् । जघानमुष्टिनाकीर्णभग्नमूर्धाममारसः" इत्यन्तेन । "अदृष्ट्वाचौषधीस्तत्रगिरिमुत्पाट्यसर्वतः" इतिच । विष्णुहतादयमन्यःकालनेमिरितिज्ञेयम् ॥ ३० ॥ **स०** विशल्यकरणीं विशल्यः लक्ष्मणप्राणसंशयात्मकशल्यरहितोरामः क्रियतेअनया चतुर्विधयौषध्येतिसा सुषेणभाषितसर्वौषधिः । तामगृह्य अगृहीत्वा ।

**[ पा० ]** नैवपञ्चत्वमापन्नो लक्ष्मणोलक्ष्मिवर्धनः । नह्यस्यविकृतंवक्त्रंनचश्यामत्वमागतम् । सुप्रभंचप्रसन्नंचमुखमस्यनिरीक्ष्यताम् । पद्मपत्रतलौहस्तौसुप्रसन्नेचलोचने । नेदृशंदृश्यतेरूपंगतासूनांविशांपते । विषादं माकृथावीर सप्राणोयमरिंदम । आख्यातितुप्रसुप्तस्यस्रस्तगात्रस्यभूतले" इत्येतेश्लोकाः पाठभेदवत्तयादृश्यन्ते.

१ ङ. झ. ञ. ट. मुक्त्वामहाप्राज्ञः. २ ङ. ज.—ट. समीपस्थमुवाचेदंहनुमन्तंमहाकपिम्. ३ ध. याहिशैलं. ञ. ट. गत्वापर्वतंहिमहोदयं.

इति संचिन्त्य हनुमान्गत्वा क्षिप्रं महाबलः ॥ आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेः शिरः ॥३४॥
फुल्लनानातरुगणं समुत्पाट्य महाबलः ॥ गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥ ३५ ॥
स नीलमिव जीमूतं तोयपूर्णं नभःस्थलात् ॥ आपपात गृहीत्वा तु हनुमाञ्शिखरं गिरेः ॥ ३६ ॥
समागम्य महावेगः संन्यस्य शिखरं गिरेः ॥ विश्रम्य किंचिद्धनुमान्सुषेणमिदमब्रवीत् ॥ ३७ ॥
ओषधीं नावगच्छामि तामहं हरिपुङ्गव ॥ तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ॥ ३८ ॥
एवं कथयमानं तं प्रशस्य पवनात्मजम् ॥ सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधीम् ॥ ३९ ॥
विस्मितास्तु बभूवुस्ते रणे वानरराक्षसाः ॥ दृष्ट्वा हनुमतः कर्म सुरैरपि सुदुष्करम् ॥ ४० ॥
ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः ॥ लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतेः ॥ ४१ ॥
सशल्यस्तां समाघ्राय लक्ष्मणः परवीरहा ॥ विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥ ४२ ॥
तमुत्थितं ते हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् ॥ साधुसाध्विति सुप्रीताः सुषेणं प्रत्यपूजयन् ॥ ४३ ॥
एह्येहीत्यब्रवीद्रामो लक्ष्मणं परवीरहा ॥ सस्वजे स्नेहगाढं च बाष्पपर्याकुलेक्षणः ॥ ४४ ॥
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा ॥ दिष्ट्या त्वां वीर पश्यामि मरणात्पुनरागतम् ॥ ४५ ॥
न हि मे जीवितेनार्थः सीतया चापि लक्ष्मण ॥ को हि मे विजयेनार्थस्त्वयि पञ्चत्वमागते ॥४६॥
इत्येवं वदतस्तस्य राघवस्य महात्मनः ॥ खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ४७ ॥
तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम ॥ लघुः कश्चिदिवासत्त्वो नैवं वक्तुमिहार्हसि ॥ ४८ ॥
न हि प्रतिज्ञां कुर्वन्ति वितथां साधवोऽनघ ॥ लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम् ॥ ४९ ॥
नैराश्यमुपगन्तुं ते तदलं मत्कृतेऽनघ ॥ वधेन रावणस्याद्य प्रतिज्ञामनुपालय ॥ ५० ॥

---

कार्यः ॥ ३१—३३ ॥ इति संचिन्त्येत्यादिश्लोकद्वयमेकान्वयं ॥ समतोलयत् उदक्षिपत् ॥ ३४—३६ ॥ संन्यस्य सेनामध्ये निक्षिप्य ॥३७—४४॥ अब्रवीदित्यादिश्लोकद्वयमेकान्वयं ॥ ४५—४७ ॥ तां प्रतिज्ञां रावणं हत्वा विभीषणमभिषेक्ष्यामीत्येवंरूपां ॥४८—४९ ॥ नैराश्यं सीतायां विजये चोपेक्षां ॥ ५० ॥

---

यदिगच्छामि तदादोषः स्यात् लक्ष्मणप्राणप्रणाशेनप्रत्यवेयां । वैक्लब्यं अचातुर्यप्रयोजकचित्तलोलता । यत्तुनागोजिभट्टेन 'विशल्यकरणीपदंतन्मात्रपरंरूढ्याव्याख्याय, लक्ष्मणस्यसप्राणत्वादवश्यमपेक्षितांयद्यगृहीत्वाऽन्यांवातदाभासांगृहीत्वागच्छामितदा महद्वैक्लब्यं अचतुरात्वादिदोषः स्यात् । विचारकरणेतु कालात्ययेनलक्ष्मणस्यप्राणनाशोदोषः स्यात्' इतिव्याख्यातंतत्तु पूर्वंसुषेणेनचतसृणामोषधीनामानयनविषयेस्पष्टमुक्तेरेकमात्रानधिकारिकत्वाद्बहूनांवानराणामेतच्चतुष्टययोग्यावस्थावत्त्वोज्जीवनादिवैचित्र्यदर्शनाच्च 'ओषधीर्नावगच्छामि' इत्युत्तरत्रोक्तेश्चासंभावितम् ॥ ३३ ॥ **ति०** त्रिः प्रकंप्य स्वेनपुरास्थापितस्यापिपुनरुत्पाटनार्थंत्रिःकंपनं । पूर्वंसंगृहीतौषधीनांमूर्च्छितयूथपेषुव्ययात्पुनरस्यप्रेषणमितिबोध्यं ॥ **स०** हनुमद्बलेनप्राक्तोपिटङ्कितवदतिश्लेषात्रिःकंपनमितिमन्तव्यं ॥ ३४ ॥ **स०** नभस्तलादितिबहुषुपुस्तकेषुपाठः । यत्तुनागोजिभट्टः स्थलान्नभउत्पपातेतिव्याख्यातवान् तत्तु पञ्चम्येव साक्षादितिभ्रान्त्यैवयोजनाऽसामर्थ्येनचेतिज्ञेयं ॥ नभस्तलादितिल्यब्लोपनिमित्तापञ्चमी । नभस्तलंप्राप्योत्पपातेत्यन्वयः । स्थलशब्दोपिपदान्तरसापेक्षार्थइतिभ्वादिपदाभावाल्लक्षणयास्थलविशेषस्यकल्प्यत्वाच्च ॥ ३६ ॥ **रामानु०** "लक्ष्मणायददौनस्यंसुषेणः परमौषधं" इत्येतत्प्रकारेणेन्द्रजिद्युद्धेशल्यपीडितानांलक्ष्मणादीनांचिकित्सांकृतवतासंगृहीतौषधेनसुषेणेन "सौम्यशीघ्रमितोगत्वा शैलमोषधिपर्वतम्" इतिहनुमत्प्रेषणमनुपपन्नमिवप्रतीयसे । अत्रलक्ष्मणविभीषणादिचिकित्सायामोषधिजातंसर्वंविनियुक्तमितिपरिहारस्यवक्तुंशक्यत्वेपिअविस्मरणशीलस्यहनुमतः स्वेनैवाचिरस्थापितपर्वतविषयकंप्रतर्केणावगच्छामीत्यभिधानं त्रिःप्रकंप्योत्पाटनं चविरुद्धमिवप्रतीयते । अत्रपरिहारोविद्वद्भिश्चिन्तनीयः ॥ ४१ ॥ **स०** यंपूर्वमालिङ्ग्यबाष्पपर्याकुलेक्षणोऽभूत्तंगाढंसस्वजे ॥४४॥ **ति०** शिथिलयावाचाखिन्नः 'कोहिमेजीवितेनार्थः' इत्येवंरूपया रावणवधविभीषणराज्यदानप्रतिज्ञाशैथिल्यकरयावाचाखिन्नइत्यर्थः ॥ ४७ ॥ **स०** प्रतिज्ञां प्रतिज्ञायतइतिप्रतिज्ञा रावणवधादिः ॥ ४८ ॥

**[ पा० ]** १ ख. ग. श्रेष्ठमप्रकंप्योगिरेस्तटं. २ ग. घ. झ. ञ. गिरेस्तटं. ३ ङ. झ. ञ. ट. उत्पपात. ४ झ.—ट. ओषधीर्नावगच्छामिताअहं. ५ ङ. झ. ञ. ट. सर्वेवानरपुङ्गवाः, घ. ऋक्षवानरपुङ्गवाः. ६ च. छ, ञ. ट. सस्वजेगाढमालिङ्ग्य.

न जीवन्यास्यते शत्रुस्तव बाणपथं गतः ॥ नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥ ५१ ॥
अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः ॥ यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥ ५२ ॥
यदि वधमिच्छसि रावणस्य संख्ये यदि च कृतां त्वमिहेच्छसि प्रतिज्ञाम् ॥
यदि तव राजवरात्मजाभिलाषः कुरु च वचो मम शीघ्रमद्य वीर ॥ ५३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

## त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

रथान्तरारोहणेनपुनस्समरायसमागच्छतिरावणे इन्द्रेण रामाय मातलिसनाथनिजरथप्रेषणम् ॥ १ ॥ रथस्थाभ्यां रामरावणाभ्यामद्भुतयुद्धप्रवर्तनम् ॥ २ ॥ तदा लोकभयावहमहोत्पातप्रादुर्भावः ॥ ३ ॥

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः ॥ संदधे परवीरघ्नो धनुरादाय वीर्यवान् ॥
रावणाय शरान्घोरान्विससर्ज चमूमुखे ॥ १ ॥
अथान्यं रथमारुह्य रावणो राक्षसाधिपः ॥ अभ्यद्रवत काकुत्स्थं स्वर्भानुरिव भास्करम् ॥ २ ॥
दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ॥ आजघान महाघोरैर्धाराभिरिव तोयदः ॥ ३ ॥
दीप्तपावकसंकाशैः शरैः काञ्चनभूषणैः ॥ निर्बिभेद रणे रामो दशग्रीवं समाहितम् ॥ ४ ॥
भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः ॥ न समं युद्धमित्याहुर्देवगन्धर्वदानवाः ॥ ५ ॥
[ततो देववरः श्रीमाञ्श्रुत्वा तेषां वचोऽमृतम् ॥ आहूय मातलिं शक्रो वचनं चेदमब्रवीत् ॥ ६ ॥
रथेन मम भूमिष्ठं शीघ्रं याहि रघूत्तमम् ॥ आहूय भूतलं यातः कुरु देवहितं महत् ॥ ७ ॥
इत्युक्तो देवराजेन मातलिर्देवसारथिः ॥ प्रणम्य शिरसा देवं ततो वचनमब्रवीत् ॥ ८ ॥
शीघ्रं यास्यामि देवेन्द्र सारथ्यं च करोम्यहम् ॥ ततो हयैश्च संयोज्य हरितैः स्यन्दनोत्तमम् ॥९॥]
ततः काञ्चनचित्राङ्गः किङ्किणीशतभूषितः ॥ तरुणादित्यसंकाशो वैडूर्यमयकूबरः ॥ १० ॥

यास्यते यास्यति ॥५१॥ कृतकर्मा कृतसंचारः ॥५२॥ कृतां निर्व्यूढां ॥ ५३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

अथेन्द्ररथमारुह्य संग्रामस्त्रिशततमे—लक्ष्मणेनेत्यादि ॥ १—९ ॥ तत इत्यादिसार्धश्लोकत्रयमेकान्वयं ॥ कूबरः युगाधारदारु । "कूबरस्तु युगंधरः" इत्यमरः । काञ्चनापीडैः काञ्चनालंकारैः । श्वेतप्रकीर्णकैः श्वेतचामरैः । "चामरं तु प्रकीर्णकं" इत्यमरः । हरिभिः हरितवर्णैः । रुक्मवेणुध्वजः कनकदण्डध्वजः । देवराजरथ इति । य इति शेषः ।

ति० कृतकर्मा अद्यतनकर्तव्यांशेकृतलोकानुग्रहः । यावदस्तंनयातीत्यनेनाश्विनशुक्लप्रतिपद्येषावार्तेतिगम्यते । स० कृतकर्मा-लोककृतकर्मसाक्षी ॥ ५२ ॥ इतिद्व्युत्तरशततमःसर्गः ॥ १०२ ॥

स० धनुरादायबाणान्संदधे । चमूमुखेरावणाय तस्य ॥ १ ॥ स्वर्भानुः राहुः अत्रापिनागोजिभट्टेन "अथान्यंरथमास्थाय" त्यनेनरावणेनशुक्राज्ञयाजयनिमित्तंनिकुंभिलायामारब्धहोमकर्मणोवानरद्वाराहिंसनंपुराणान्तरोक्तमत्रानुसंधेयमितिसूचितमितिवदता "शीघ्रंशुक्रान्तिकंययौ" इत्यारभ्य— "प्रविश्यान्तःपुरेवेश्मन्यङ्गदोवेगवत्तरः । समानयत्केशपाशेधृत्वामन्दोदरींशुभाम् ।" इत्यादिं गर्भीकृत्य— "दृढंस्यन्दनमास्थाय" इत्यन्तमध्यात्मरामायणं संगृहीतमितिज्ञायते । तत्प्रामाण्येसंदिहतेमहान्तइतिनतदुक्तंज्ञापकं ।

[ पा० ] १ ङ. च. झ. ञ. ट. बाणवशंगतः. २ क.—ङ. झ. ञ. ट. राजसुताभिलाषआर्यकुरुच. ३ ख. ग. ङ. झ. मास्थाय. ४ ङ. च. छ. झ. ट. महाशैलंधाराभिरिव.. ५ ततोदेववरइत्यादयः स्यन्दनोत्तममित्यन्ताःश्लोकाः ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यन्ते.

सदश्वैः काञ्चनापीडैर्युक्तः श्वेतप्रकीर्णकैः ॥ हरिभिः सूर्यसंकाशैर्हेमजालविभूषितैः ॥
रुक्मवेणुध्वजः श्रीमान्देवराजरथो वरः ॥ ११ ॥
देवराजेन संदिष्टो रथमारुह्य मातलिः ॥ अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ॥ १२ ॥
अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः ॥ प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥ १३ ॥
सहस्राक्षेण काकुत्स्थ रथोयं विजयाय ते ॥ दत्तस्तव महासत्त्व श्रीमञ्शत्रुनिबर्हण ॥ १४ ॥
इदमैन्द्रं महच्चापं कवचं चाग्निसन्निभम् ॥ शराश्चादित्यसंकाशाः शक्तिश्च विमला शिता ॥ १५ ॥
आरुह्येमं रथं वीर राक्षसं जहि रावणम् ॥ मया सारथिना राजन्महेन्द्र इव दानवान् ॥ १६ ॥
इत्युक्तः संपरिक्रम्य रथं समभिवाद्य च ॥ आरुरोह तदा रामो लोकाँल्लक्ष्म्या विराजयन् ॥ १७ ॥
तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ रामस्य च महाबाहो रावणस्य च रक्षसः ॥ १८ ॥
स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः ॥ अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ १९ ॥
अस्त्रं तु परमं घोरं राक्षसं राक्षसाधिपः ॥ ससर्ज परमक्रुद्धः पुनरेव निशाचरः ॥ २० ॥
ते रावणधनुर्मुक्ताः शराः काञ्चनभूषणाः ॥ अभ्यवर्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः ॥ २१ ॥
ते दीप्तवदना दीप्तं वमन्तो ज्वलनं मुखैः ॥ राममेवाभ्यवर्तन्त व्यादितास्या भयानकाः ॥ २२ ॥
तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः ॥ दिशश्च संतताः सर्वाः प्रदिशश्च समावृताः ॥ २३ ॥
तान्दृष्ट्वा पन्नगान्रामः समापतत आहवे ॥ अस्त्रं गारुत्मतं घोरं प्रादुश्चक्रे भयावहम् ॥ २४ ॥
ते राघवशरा मुक्ता रुक्मपुङ्खाः शिखिप्रभाः ॥ सुपर्णाः काञ्चना भूत्वा विचेरुः सर्पशत्रवः ॥ २५ ॥
ते तान्सर्वाञ्शराञ्जघ्नुः सर्परूपान्महाजवान् ॥ सुपर्णरूपा रामस्य विशिखाः कामरूपिणः ॥ २६ ॥
अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः ॥ अभ्यवर्षत्तदा रामं घोराभिः शरवृष्टिभिः ॥ २७ ॥
ततः शरसहस्रेण राममक्लिष्टकारिणम् ॥ अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत ॥ २८ ॥
चिच्छेद केतुमुद्दिश्य शरेणैकेन रावणः ॥ पातयित्वा रथोपस्थे रथात्केतुं च काञ्चनम् ॥
ऐन्द्रानपि जघानाश्वाञ्शरजालेन रावणः ॥ २९ ॥
तं दृष्ट्वा सुमहत्कर्म रावणस्य दुरात्मनः ॥ विषेदुर्देवगन्धर्वा दानवाश्चारणैः सह ॥ ३० ॥

---

थोस्ति तमारुह्येत्युत्तरत्रान्वयः । संदिष्टः चोदितः । त्रिविष्टपात् स्वर्गात् ॥ १०—१२ ॥ प्रतोदः अश्वप्रेरणकाष्ठं ॥ १३ ॥ सहस्राक्षेणेत्यादिश्लोकद्वयमेकान्वयं ॥ इदमिति ॥ अत्र चापादिषु यथायोग्यं दत्त इत्येतल्लिङ्गवचनविपरिणामेन योजनीयं ॥ १४—१६ ॥ संपरिक्रम्य प्रदक्षिणीकृत्य । लोकान् लक्ष्म्या विराजयन् चन्द्रप्रभयेव स्वकान्त्या सर्वलोकान् प्रकाशयन्नित्यर्थः ॥ १७—२१ ॥ व्यादितास्याः व्याप्ताननाः । भयानकाः भयंकराः ॥ २२ ॥ दीप्तभोगैः दीप्तफणैः । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । प्रदिशः दिक्कोणाः ॥ २३ ॥ प्रादुश्चक्रे प्रयुयुजे ॥ २४ ॥ शिखिप्रभाः अग्निप्रभाः । सुपर्णाः गरुडाः ॥ २५—२८ ॥ चिच्छेदेत्यादिसार्धश्लोकमेकं वाक्यं ॥ केतुं ध्वजपटं । उद्दिश्य लक्षी-

---

अथान्यमित्यस्य पूर्वयुद्धकालेरथध्वजादीनांशैथिल्यादन्यमित्युक्तिसंभवेनोक्तार्थस्यासूचकत्वाच्च । ति० पूर्वरणात्पलायनोक्त्यारावणोद्देश्यकशरविसर्गस्यरणभूमावसंभवादाश्विनप्रतिपन्मध्याह्नेएतद्युद्धप्रवृत्तिः ॥ २ ॥ ति० देवराजेनसंदिष्टः शीघ्रंगच्छेत्याज्ञप्तो मातलिरित्यन्वयः । पूर्वाज्ञयावस्तुसज्जीकरणं । पुनराज्ञयामनुष्यलोकंप्रतिचलनमितिबोध्यम् ॥ १२ ॥ ति० द्वैरथं द्वौरथौययोस्तौ द्विरथौ । तयोरिदंद्वैरथं ॥ १८ ॥

[ पा० ] १ ख. च. छ. झ. ट. द्वैरथंरोम. २ ज. न्महाविषान्. ३ च. ज. ञ. केतुमिन्द्रस्य.

राममार्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः ॥ व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः ॥ ३१ ॥
रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा ॥ प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् ॥
समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः ॥ ३२ ॥
सधूमपरिवृत्तोर्मिः प्रज्वलन्निव सागरः ॥ उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरम् ॥ ३३ ॥
शस्त्रवर्णः सुपरुषो मन्दरश्मिर्दिवाकरः ॥ अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना ॥ ३४ ॥
कोसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम् ॥ आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ॥३५॥
दशास्यो विंशतिभुजः प्रगृहीतशरासनः ॥ अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥ ३६ ॥
निरस्यमानो रामस्तु दशग्रीवेण रक्षसा ॥ नाशक्नोदभिसंधातुं सायकान्रणमूर्धनि ॥ ३७ ॥
स कृत्वा भ्रुकुटिं क्रुद्धः किंचित्संरक्तलोचनः ॥ जगाम सुमहाक्रोधं निर्दहन्निव चक्षुषा ॥ ३८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

## चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

रामेण मातलिसमानीतेन्द्रशक्त्या रावणविसृष्टशूलविभेदनपूर्वकं रावणललाटोरसिबाणैः प्रहरणम् ॥ १ ॥

तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः ॥ सर्वभूतानि वित्रेसुः प्राकम्पत च मेदिनी ॥ १ ॥
सिंहशार्दूलवाञ्शैलः संचचाल चलद्द्रुमः ॥ बभूव चातिक्षुभितः समुद्रः सरितांपतिः ॥ २ ॥
खगाश्च खरनिर्घोषा गगने परुषा घनाः ॥ औत्पातिकानि नर्दन्तः समन्तात्परिचक्रमुः ॥ ३ ॥
रामं दृष्ट्वा सुसंक्रुद्धमुत्पातांश्च सुदारुणान् ॥ वित्रेसुः सर्वभूतानि रावणस्याभवद्भयम् ॥ ४ ॥
विमानस्थास्तदा देवा गन्धर्वाश्च महोरगाः ॥ ऋषिदानवदैत्याश्च गरुत्मन्तश्च खेचराः ॥ ५ ॥
ददृशुस्ते महायुद्धं लोकसंवर्तसंस्थितम् ॥ नानाप्रहरणैर्भीमैः शूरयोः संप्रयुध्यतोः ॥ ६ ॥
ऊचुः सुरासुराः सर्वे तदा विग्रहमागताः ॥ प्रेक्षमाणा महद्युद्धं वाक्यं भक्त्या प्रहृष्टवत् ॥ ७ ॥

---

कृत्य । रथात् रथावयवदण्डात् ॥ २९—३१ ॥ रामस्य तादृशदशादर्शनेन संजातानि दिव्यानि भौमानि च वैकृतान्याह—रामचन्द्रमसमित्यादिना ॥ प्राजापत्यं नक्षत्रं प्रजापतिदेवताकनक्षत्रभूतां रोहिणीं। बुधे रोहिणीं प्राप्ते जगत्पीडा भवतीति भावः ॥३२—३३ ॥ शस्त्रवर्णः असिश्यामः ॥ ३४ ॥ कोसलानां इक्ष्वाकूणां । विशाखायास्तन्नक्षत्रत्वमेतत्काण्डचतुर्थसर्गे दर्शितं ॥ ३५—३६ ॥ अभिसंधातुं धनुष्यारोपयितुं ॥ ३७ ॥ अथैतद्दर्शनेन रामकोपं दर्शयति—स कृत्वेति ॥ ३८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

अथ रावणस्य शूलोद्धरणं चतुःशततमे—तस्येत्यादि ॥ १—२ ॥ औत्पातिकानि उत्पातसूचकानि । नर्दन्तः गर्जन्तः ॥ ३—४ ॥ विमानस्था इत्यादिश्लोकद्वयमेकान्वयं । लोकसंवर्तस्य प्रलयस्येव संस्थितं संस्थानं यस्य तत्तथोक्तं ॥ ५—६ ॥ विग्रहमागताः विग्रहं युद्धं उद्दिश्यआगताः । युद्धं द्रष्टुमागता इत्यर्थः । यद्वा विग्रहमागताः रामरावणपक्षपातात् परस्परं कलहाय-

---

**ति०** एतेउत्पातारामस्यतथामनुष्यधर्मनटनसूचकाइतिबोध्यं ॥ ३७ ॥ **ती०** क्रुद्धः सरामः सुमहाक्रोधंजगाम । सुमहाक्रोधप्राप्तौ स्वजनार्तिर्भूतवैपरीत्यंरावणपराक्रमश्चनिमित्तं ॥ ३८ ॥ इतित्र्युत्तरशततमःसर्गः ॥ १०३ ॥

**स०** उत्तरग्रन्थेनसहैकःखण्डःएकोनसप्ततिश्लोकात्मासर्गइतिकेचिदाहुः । सर्गान्तिमश्लोकवृत्तादिभेदस्यप्रायिकत्वात् 'तस्यक्रुद्धस्य'इतिसर्गप्रारंभपद्यमिति केचित् ॥ १ ॥

[ पा० ] १ ख. ग. ङ.—ट. तदायुद्धं.

दशग्रीवं जयेत्याहुरसुराः समवस्थिताः ॥ देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ॥ ८ ॥
एतस्मिन्नन्तरे क्रोधाद्राघवस्य स रावणः ॥ प्रहर्तुकामो दुष्टात्मा स्पृशन्प्रहरणं महत् ॥ ९ ॥
वज्रसारं महानादं सर्वशत्रुनिबर्हणम् ॥ शैलशृङ्गनिभैः कूटैश्चितं दृष्टिभयावहम् ॥ १० ॥
सधूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम् ॥ अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ११ ॥
त्रासनं सर्वभूतानां दारणं भेदनं तदा ॥ प्रदीप्तमिव रोषेण शूलं जग्राह रावणः ॥ १२ ॥
तच्छूलं परमक्रुद्धो मध्ये जग्राह वीर्यवान् ॥ अनेकैः समरे शूरै राक्षसैः परिवारितः ॥ १३ ॥
समुद्यम्य महाकायो ननाद युधि भैरवम् ॥ संरक्तनयनो रोषात्स्वसैन्यमभिहर्षयन् ॥ १४ ॥
पृथिवीं चान्तरिक्षं च दिशश्च प्रदिशस्तथा ॥ प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ १५ ॥
अतिनादस्य नादेन तेन तस्य दुरात्मनः ॥ सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ १६ ॥
स गृहीत्वा महावीर्यः शूलं तद्रावणो महत् ॥ विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ १७ ॥
शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः ॥ तव भ्रातृसहायस्य सद्यः प्राणान्हरिष्यति ॥ १८ ॥
रक्षसामद्य शूराणां निहतानां चमूमुखे ॥ त्वां निहत्य रणश्लाघिन्करोमि तरसा समम् ॥
तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव ॥ १९ ॥
एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ २० ॥
तद्रावणकरान्मुक्तं विद्युज्ज्वालासमाकुलम् ॥ अष्टघण्टं महानादं वियद्गतमशोभत ॥ २१ ॥
तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम् ॥ ससर्ज विशिखान्रामश्चापमायम्य वीर्यवान् ॥ २२ ॥
आपतन्तं शरौघेण वारयामास राघवः ॥ उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः ॥ २३ ॥
निर्ददाह स तान्बाणान्रामकार्मुकनिस्सृतान् ॥ रावणस्य महाशूलः पतङ्गानिव पावकः ॥ २४ ॥
दृष्ट्वातान्भस्मसाद्भूताञ्शूलसंस्पर्शचूर्णितान् ॥ सायकानन्तरिक्षस्थान्राघवः क्रोधमाहरत् ॥ २५ ॥
स तां मातलिनाऽऽनीतां शक्तिं वासवनिर्मिताम् ॥ जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥ २६ ॥

माना इत्यर्थः । भक्त्या प्रेक्षमाणाः सन्तः प्रहृष्टवद्वाक्यमूचुरिति संबन्धः ॥ ७ ॥ तद्वाक्यं विविच्य दर्शयति—दशग्रीवमिति ॥ यद्यप्यसुराणामपि रावणो बाधकः तथापि देवानामतिशयो मा भूदित्यसूयया रावणं वर्धयन्तीति बोध्यम् ॥ ८ ॥ एतस्मिन्नन्तर इत्यादिश्लोकचतुष्टयमेकान्वयं ॥ राघवस्य क्रोधात् राघवविषयक्रोधात् । प्रहरणं आयुधं । स्पृशन् परामृशन् । किं वेदानीं ग्रहीतुमुचितमिति क्षणं चिन्तयन्नित्यर्थः । कूटैः शिखराकारैरयःशङ्कुभिः चितं युक्तमित्यर्थः । अतिरौद्रं रौद्रं शूलमतिवर्तमानं । अनासाद्यं शत्रुभिरप्रधृष्यं । कालेन यमेन दारणं क्रकचवत्कृन्तनं । भेदनं द्विधाकरणं । दुष्टात्मा रावणः राघवस्य क्रोधात् प्रहर्तुकामः महत्प्रहरणं स्पृशन्सन् वज्रसारत्वादिविशिष्टं शूलं रोषेण प्रदीप्त इव स्थितो रावणो जग्राहेति संबन्धः ॥ ९—१६ ॥ विनद्येति । पूर्वं शूलोद्यमनजनितोत्साहकृतो नाद उक्तः । इह प्रक्षेपजनितोत्साहकृतो नाद इति विवेकः ॥ १७—१८ ॥ रक्षसामित्यादिसार्धश्लोकमेकान्वयं ॥ त्वां विनिहत्य रक्षोभिः समं करिष्यामीत्यर्थः । "तुल्यार्थैः" इत्यादिना षष्ठी ॥ १९—२० ॥ विद्युज्ज्वाला विद्युत्सदृ-

स० यद्यपि पूर्वंसुरासुराइतिसमीरणाद्देवाराममथोचुरितिपूर्वंदेवाः पूर्वंदेवास्तुतदनन्तरमुदाहर्तव्याः । तथापि तेषांबाहुल्यात्तद्वाच्वायानैष्फल्यान्निर्देशमात्रेणमाननीयताभिप्रेणनाद्वाप्रथमतोनिर्देशः । तत्रापिसाधवोसुरारामपक्षपातिनःसन्तीतिविशेषद्योतनायव्युत्क्रमनिर्देशश्चेतिवारामपराजयरूपोव्युत्क्रमोन । अपितु निर्देशमात्रइतिज्ञापनायवाऽयंनिर्देशइतिज्ञेयम् ॥८॥ स० भ्रातृसहायस्य लक्ष्मणमात्रसहायकस्य मद्भ्रातृविभीषणसहायस्यवा ॥ १८ ॥

[ पा० ] १ क. ख. झ. ञ. ट. कूटैश्चित्तदृष्टि. २ च. छ. भयावहैः. ३ क. ख. ङ. च. छ. झ. ञ. ट. जग्राहयुधि. ४ ङ. झ. क्रोधमूर्च्छितः.

सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना ॥ नभः प्रज्वालयामास युगान्तोल्केव सप्रभा ॥ २७ ॥
सा क्षिप्ता राक्षसेन्द्रस्य तस्मिञ्शूले पपात ह ॥ भिन्नः शक्त्या महाञ्शूलो निपपात हतद्युतिः ॥
[ साधुसाध्विति भूतानि प्रशशंसू रघूत्तमम् ॥ २८ ॥ ]
निर्बिभेद ततो बाणैर्हयानस्य महाजवान् ॥ रामस्तीक्ष्णैर्महावेगैर्वज्रकल्पैः शितैः शरैः ॥ २९ ॥
निर्बिभेदोरसि ततो रावणं निशितैः शरैः ॥ राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ ३० ॥
स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः ॥ राक्षसेन्द्रः समूहस्थः फुल्लाशोक इवाबभौ ॥ ३१ ॥
स रामबाणैरभिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः ॥
जगाम खेदं च समाजमध्ये क्रोधं च चक्रे सुभृशं तदानीम् ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

---

## पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

रामेणरावणंप्रति सीताहरणरूपकुकर्मानुव्याहरणेनगर्हणपूर्वकं बाणगणाभिवर्षणम् ॥ १ ॥ रामबाणगणाभिघातनिर्विण्ण-तया कर्तव्यमूढेसतिरावणे तत्सारथिना रणाङ्गणादन्यतोरथापवाहनम् ॥ २ ॥

स तेन तु तथा क्रोधात्काकुत्स्थेनार्दितो रणे ॥ रावणः समरश्लाघी महाक्रोधमुपागमत् ॥ १ ॥
स दीप्तनयनो रोषाच्चापमायम्य वीर्यवान् ॥ अभ्यर्दयत्सुसंक्रुद्धो राघवं परमाहवे ॥ २ ॥
बाणधारासहस्रैस्तैः सतोयद इवाम्बरात् ॥ राघवं रावणो बाणैस्तटाकमिव पूरयत् ॥ ३ ॥
पूरितः शरजालेन धनुर्मुक्तेन संयुगे ॥ महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥ ४ ॥
स शरैः शरजालानि वारयन्समरे स्थितः ॥ गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान् ॥ ५ ॥
ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः ॥ निजघानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६ ॥
स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः ॥ दृष्टः फुल्ल इवारण्ये सुमहान्किंशुकद्रुमः ॥ ७ ॥
शराभिघातसंरब्धः सोपि जग्राह सायकान् ॥ काकुत्स्थः सुमहातेजा युगान्तादित्यतेजसः ॥
ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ ॥ शरान्धकारे समरे नोपालक्षयतां तदा ॥ ९ ॥
ततः क्रोधसमाविष्टो रामो दशरथात्मजः ॥ उवाच रावणं वीरः प्रहस्य परुषं वचः ॥ १० ॥

---

शज्वाला ॥२१--२८ ॥ बाणैः शब्दायमानैः। "अण बाण शब्दे" इत्यस्मात् पचाद्यच् । बाणशब्दः शरभेद-संज्ञेत्यप्याहुः ॥२९॥ पत्रिभिस्त्रिभिरिति प्रयोगभेदान्न-पुनरुक्तिः। पत्रिभिः पत्रवद्भिरित्येके ॥३०॥ समूहस्थः युद्धस्थः ॥ ३१ ॥ समाजे युद्धे ॥३२॥ इति श्रीगोवि-न्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुरुत्तरशततमः सर्गः ॥१०४॥

---

अथ श्रान्तस्य रावणस्य सूतेन रथापवाहनं पञ्च-शततमे-स तु तेनेत्यादि ॥ १--२ ॥ बाणधारास-हस्रैः हेतुभिः तोयद इव रावणः तैः धाराभूतैः बाणैः तटाकमिव रामं पूरयत् अपूरयत् ॥३--८॥ अन्योन्यं

---

**स०** बाणवद्भिः "वणशब्दे बाणेत्येके" इत्युक्तेःशब्दायमानैः । बाणवद्भिः केषुचित्प्रधानेषुसाक्षाज्ज्याविसृष्टेष्विषुषु तेभ्योपिराम-माहात्म्येननिस्सरन्तिबाणाइतिबाणानांबाणवत्त्वंसंभवतीतिवातथोक्तिः ॥ २९ ॥ **ति०** समूहस्थः समूहतयास्थितः । बहुशिरः-पाणित्वात्तथात्वं ॥ ३१ ॥ इतिचतुरधिकशततमःसर्गः ॥ १०४ ॥

**[ पा० ]** १ क. ङ.--ट. गतद्युतिः. ख. ग. महाद्युतिः. २ इदमर्धं क. ख. घ. छ. पाठेषुदृश्यते. ३ झ. ठ. रामः क्षिप्तैर्महावेगैर्बाणवद्भिरजिह्मगैः. ४ च. छ. ञ. ट. सुभृशंदशास्यः. ५ ङ.--ट. भृशं. ६ ख. ङ.--ट. दीप्तनयनोमर्षाच्चापमुद्यम्य.

मम भार्या जनस्थानादज्ञानाद्राक्षसाधम ॥ हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान् ॥ ११ ॥
मया विरहितां दीनां वर्तमानां महावने ॥ वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ॥ १२ ॥
स्त्रीषु शूर विनाथासु परदाराभिमर्शक ॥ कृत्वा कापुरुषं कर्म शूरोहमिति मन्यसे ॥ १३ ॥
भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित ॥ दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥ १४ ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च ॥ श्लाघनीयं यशस्यं च कृतं कर्म महत्त्वया ॥ १५ ॥
उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च ॥ कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत्फलम् ॥ १६ ॥
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते ॥ नैव लज्जाऽस्ति ते सीतां चोरवद्व्यपकर्षतः ॥ १७ ॥
यदि मत्सन्निधौ सीता धर्षिता स्यात्त्वया बलात् ॥ भ्रातरं तु खरं पश्येस्तदा मत्सायकैर्हतः ॥१८॥
दिष्ट्याऽसि मम दुष्टात्मंश्चक्षुर्विषयमागतः ॥ अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९ ॥
अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् ॥ क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥ २० ॥
निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण ॥ पिबन्तु रुधिरं तर्षाच्छरशल्यान्तरोत्थितम् ॥ २१ ॥
अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते ॥ कर्षन्त्वन्त्राणि पतगा गरुत्मन्त इवोरगान् ॥ २२ ॥
[ दुष्टोसि महतः कालाद्दिष्ट्या दृष्टिपथं गतः ॥ अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम् ] ॥२३॥
इत्येवं संवदन्वीरो रामः शत्रुनिबर्हणः ॥ राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥ २४ ॥
बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे ॥ रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ॥ २५ ॥
प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः ॥ प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥ २६ ॥
शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः ॥ भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥ २७ ॥
हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात् ॥ हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥ २८ ॥
यदा च शस्त्रं नारेभे न व्यकर्षच्छरासनम् ॥ नास्य प्रत्यकरोद्वीर्यं विक्लबेनान्तरात्मना ॥ २९ ॥
क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च ॥ न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः ॥ ३० ॥

---

नोपालक्ष्यतामित्यन्वयः ॥ ९—१० ॥ मम अज्ञानात् ममादर्शनात् त्वदविवेकादिति वा। ते त्वया॥ ११—१२ ॥ कापुरुषं कापुरुषसंबन्धि ॥ १३—१४ ॥ शूरेणेत्यादि सोपहासोक्तिः ॥ १५ ॥ उत्सेकेन गर्वेण ॥ १६—१९ ॥ शिरो ज्वलितकुण्डलमित्यनेन तदानीमन्तकाले रावण एकशिरस्कः स्थित इति गम्यते ॥ २० ॥ तर्षः पिपासा । शरशल्यान्तरोत्थितं शरशल्यक्षतविवरादुत्थितमित्यर्थः ॥ २१-२७॥ राघवात् राघवस्य । विभक्तिव्यत्यय आर्षः । विघूर्णहृदयः भ्रान्तहृदयः ॥ २८ ॥ यदा चेत्यादिश्लोकत्रयमेकान्वयं । यदा शस्त्रं नारेभे शस्त्रं न प्रयुक्तवान् । शरासनं च न व्यकर्षत् । यदा च विक्लबेन विवशेन। अन्तरात्मना मनसा हेतुना । अस्य रामस्य वीर्यं स्ववीर्यं च न प्रत्यकरोत् न प्रतिजघान । तेन रावणेन क्षिप्ताः शरा अपि विविधानि शस्त्राणि च न रणार्थाय वर्तन्ते । छेदनभेदनादिरणप्रयोजनं कर्तुं यदा नाशक्नुवन् । तदा मृत्युकाले अभिवर्ततः अभिवर्तमानस्य अस्य रावणस्य । रथनेता सूतः असंभ्रान्तः सन् तदवस्थं पूर्वोक्तावस्थं रावणं समीक्ष्य तस्य रथं युद्धात् युद्धस्थलात् शनैः । अपवाहयत् अपावाहयत् । अन्य-

---

ति० अज्ञानात् अविवेकात् मत्स्वरूपाज्ञानाच्च ॥ ११ ॥ शस्त्रंनारेभे मोक्तुंनारब्धवान् । शरासनंयदानचकर्ष । विक्लबेन चञ्चलेनान्तरात्मना उपलक्षितोयमितिमतीरामोनास्यरावणस्यविषये वीर्यंप्रत्यकरोत् तत्संहारायनप्रदर्शितवानितिभावः । अनेन प्रतिपक्षिणिग्लानिमति मतिमता तदमतेन नतत्रशस्त्रास्त्रप्रयोगःकर्तव्यइतिनीतिमादर्शितवान्रामइतिसूचितंभवति ॥ २९ ॥ स० रावणार्थायेतिपाठेऽर्थोनिवृत्तिरित्यर्थः ॥ ३० ॥

[ पा० ] १ ङ. झ. चौरवत्. २ ख. ङ. च. छ. ञ. ट. क्षिप्तस्यसायकैः. ३ अयंश्लोकः क. ख. च. छ. पाठेषुदृश्यते. ४ क.—ङ. झ. ञ. ट. मरणार्थाय. ५ ख. ङ. च. छ. ञ. कालोऽभ्यवर्तत.

सूतस्तु रथनेताऽस्य तदवस्थं समीक्ष्य तम् ॥ शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥ ३१ ॥
[ रामबाणविभिन्नाङ्गो रावणो राक्षसेश्वरः ॥ निरस्तविक्रमस्सङ्ख्ये रणे श्रान्तः पपात सः ॥ ३२ ॥
सूतस्तु व्यथितं बाणैः स्यन्दनस्थं निरीक्ष्य तम् ॥ तस्माद्रणादथोवाह रावणं हतपौरुषम् ॥ ३३ ॥
रथं च तस्याथ जवेन सारथिर्निवार्य भीमं जलदस्वनं तदा ॥
जगाम भीत्या समरान्महीपतिं निरस्तवीर्यं पतितं समीक्ष्य ॥ ३४ ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

## षडुत्तरशततमः सर्गः ॥ १०६ ॥

अपवाहितरथंसारथिंप्रति क्रुद्धेनरावणेनभर्त्सनम् ॥ १ ॥ सारथिना तंप्रति रथापवहनस्यसहेतुकत्वोक्त्यासमाश्वासनपूर्वकं तदाज्ञया पुनारामाग्रतोरथानयनम् ॥ २ ॥

स तु मोहात्सुसंक्रुद्धः कृतान्तबलचोदितः ॥ क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १ ॥
हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् ॥ भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २ ॥
विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् ॥ मामवज्ञाय दुर्बुद्धे स्वया बुद्ध्या विचेष्टसे ॥ ३ ॥
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ॥ त्वया शत्रोः समक्षं मे रथोऽयमपवाहितः ॥ ४ ॥
त्वयाऽद्य हि ममानार्य चिरकालसमार्जितम् ॥ यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥ ५ ॥
शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः ॥ पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ६ ॥
यस्त्वं रथमिमं मोहान्न चोद्वहसि दुर्मते ॥ सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७ ॥
न हि तद्विद्यते कर्म सुहृदो हितकाङ्क्षिणः ॥ रिपूणां सदृशं चैतन्न त्वयैतत्स्वनुष्ठितम् ॥ ८ ॥
निवर्तय रथं शीघ्रं यावन्नोपैति मे रिपुः ॥ यदि वाऽध्युषितो वाऽसि स्मर्यन्ते यदि वा गुणाः ॥ ९ ॥
एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना ॥ अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥ १० ॥

त्रानयदिति योजना ॥२९—३४॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ॥१०५॥

अथ रावणरथप्रत्यानयनं षड्शततमे—स तु मोहादित्यादि ॥ मोहात् अविवेकात् ॥ १ ॥ हीनवीर्यमिवेत्यादिश्लोकद्वयमेकान्वयं। यत्र यत्र इवशब्दो नास्ति तत्र तत्रानुषञ्जनीयः। हीनवीर्यमिव हीनबलमिव। अशक्तमिव निरुत्साहमिव। असत्त्वमिव अधीरमिव। तेजसा परिभवासहनेन ॥ २—३ ॥ मच्छन्दं मदभिप्रायं। "वशाभिप्राययोश्छन्दः" इत्यमरः ॥४॥ प्रत्ययः रावणस्य युधि पलायनं नास्तीति सर्वेषां विश्वासः। विनाशित इत्यस्य यशआदिषु लिङ्गविपरिणामः॥ ५॥ शत्रोः पश्यतः शत्रौ पश्यति ॥ ६ ॥ यः नोद्वहसि अभिमुखं न प्रापयसि किं त्वपवाहयसि। स त्वं उपस्कृतः परेणोत्कोचादिना वशीकृत इत्ययं प्रतितर्कः सत्यः प्रतिभाति ॥ ७ ॥ न त्वयैतत् स्वनुष्ठितमिति । त्वयानुष्ठितमेतत् नतु स्वनुष्ठितं तत् ॥ ८ ॥ अध्युषितः सहवासी। सुहृदिति यावत्। उपधयोपसर्पितो वा। गुणाः सत्काराः ॥९—१०॥

**स०** सूतः "सारथीरथिकंरक्षेत्संप्राप्तेप्राणसंकटे"इत्याद्युक्तिज्ञमर्यादावेदितृस्वान्तरात्मप्रेरितः । रथनेता सारथिः। 'सूतःप्रसूतेप्रेरितेपिच' इतिविश्वः ॥ ३१ ॥ इतिपञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

**रामानु०** अध्युषितः चिरकालंमत्समीपइतिशेषः। स्मर्यन्ते यदिवागुणाः मन्निष्ठाउपकर्तृत्वादिगुणाःस्मर्यन्ते यदि ॥ ९ ॥

[ **पा०** ] १ क. ख. ज. ट. निरीक्ष्यतं. २ रामबाणविभिन्नाङ्गइत्यादयः, पतितंसमीक्ष्येत्यन्ताःश्लोकाः ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यन्ते.

न भीतोसि न मूढोसि नोपजप्तोसि शत्रुभिः ॥ न प्रमत्तो न निस्स्नेहो विस्मृता न च सत्क्रिया ॥११॥
मया तु हितकामेन यशश्च परिरक्षता ॥ स्नेहप्रस्कन्नमनसा प्रियमित्यप्रियं कृतम् ॥ १२ ॥
नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतम् ॥ कश्चिल्लघुरिवानार्यो दोषतो गन्तुमर्हसि ॥ १३ ॥
श्रूयतां त्वभिधास्यामि यन्निमित्तं मया रथः ॥ नदीवेग इवाभोगे संयुगे विनिवर्तितः ॥ १४ ॥
श्रमं तवावगच्छामि महता रणकर्मणा ॥ न हि ते वीर सौमुख्यं प्रहर्षं वोपधारये ॥ १५ ॥
रथोद्वहनखिन्नाश्च त इमे रथवाजिनः ॥ दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६ ॥
निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः ॥ तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥ १७ ॥
देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च ॥ दैन्यं खेदश्च हर्षश्च रथिनश्च बलाबलम् ॥ १८ ॥
स्थलनिम्नानि भूमेश्च समानि विषमाणि च ॥ युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥ १९ ॥
उपयानापयाने च स्थानं प्रत्यपसर्पणम् ॥ सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २० ॥
तव विश्रमहेतोश्च तथैषां रथवाजिनाम् ॥ रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥
न मया स्वेच्छया वीर रथोऽयमपवाहितः ॥ २१ ॥
भर्तृस्नेहपरीतेन मयेदं यत्कृतं विभो ॥ २२ ॥
आज्ञापय यथातत्त्वं वक्ष्यस्यरिनिषूदन ॥ तत्करिष्याम्यहं वीर गतानृण्येन चेतसा ॥ २३ ॥
संतुष्टस्तेन वाक्येन रावणस्तस्य सारथेः ॥ प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥ २४ ॥
रथं शीघ्रमिमं सूत राघवाभिमुखं कुरु ॥ नाहत्वा समरे शत्रून्निवर्तिष्यति रावणः ॥ २५ ॥

नोपजप्तः उपजापं भेदं न गमितः । "भेदोपजापौ" इत्यमरः ॥ ११—१२ ॥ अस्मिन्नर्थे रथापवाहनरूपेर्थे कश्चित् कुत्रापि कुले जातः । लघुः अल्पबुद्धिः । अनार्यः दुष्टहृदय इव । मा दोषतः गन्तुं ज्ञातुं । नार्हसि । गत्यर्था ज्ञानार्थाः ॥ १३ ॥ यन्निमित्तं यत्कारणात् । "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति प्रथमा । आभोगे उन्नतप्रदेशे । आभोगान्नदीवेग इव रथः संयुगाद्विनिवर्तित इत्यर्थः । आभोगे संयुग इत्यत्र विभक्तिव्यत्ययः ॥ १४ ॥ सौमुख्यं सुमुखत्वं तन्मूलं प्रहर्षं ॥१५॥ रथेति अत्र आसन्निति शेषः ॥ १६ ॥ अभिपन्नेषु आविर्भूतेषु सत्सु । अप्रदक्षिणं प्रतिकूलं ॥१७॥ निमित्तानिकिमर्थं त्वया विचारणीयानीत्यतआह—देशेत्यादिना ॥ श्लोकत्रयमेकान्वयं । लक्षणानि शुभाशुभनिमित्तानि । इङ्गितानि मुखप्रसादवैगुण्यादीनि । दैन्यं अनुत्साहः । स्थलानि उन्नतप्रदेशाः । निम्नानि अवनतप्रदेशाः । समानि सर्वत्र समप्रदेशाः । विषमाणि निम्नोन्नतप्रदेशाः । युद्धकाल इति पूर्वोक्तानुवादः । अन्तरदर्शनं दृश्यत इति दर्शनं द्रष्टव्यं । द्रष्टव्यं रन्ध्रमित्यर्थः । अन्तरदर्शनं रन्ध्रदर्शनं कर्तव्यमित्यध्याहारो वा । उपयानं समीपगमनं । अपयानं पार्श्वतो गमनं । स्थानं स्थैर्येणावस्थानं । प्रत्यपसर्पणं अभिमुखस्थित्या पृष्ठतोपसरणं । रथकुटुम्बिना सारथिना ॥१८—२०॥ तवेत्यादिसार्धश्लोक एकान्वयः । तथा वाजिनां विश्रमहेतोश्चेत्यन्वयः । रौद्रं दुःसहं । वर्जयता अपनयता । हेतौ शतृप्रत्ययः । क्षमं युक्तं । स्वेच्छया अपनयननिमित्तं विना ॥२१॥ भर्तृस्नेहेत्यर्धं । मया यत्कृतं तदिदं भर्तृस्नेहपरीतेनैव कृतमित्यर्थः ॥ २२ ॥ यथातत्त्वं यत् कार्यस्वरूपं वक्ष्यसि तत्तथा गतानृण्येन आनृण्यं गतेन आनृण्यं कर्तव्यमिति कृतसंकल्पेन चेतसा मनसा । करिष्यामि ॥ २३—२४ ॥ निवर्तिष्यति

ती० यन्निमित्तं यस्मात्कारणात् । नदीवेगइवांभोभिः चन्द्रोदयादिनाप्रवृद्धसमुद्रांभोभिःनदीवेगइव संयुगाद्रथोविनिवर्तितः तच्छ्रूयतामितिसंबन्धः । नदीवेगइवाभोगइतिपाठे आभोगे उन्नतप्रदेशे पर्वताद्युन्नतप्रदेशेनदीवेगइवेत्यर्थः ॥ १४ ॥ इतिषडुत्तरशततमःसर्गः ॥ १०६ ॥

[पा० ] १ क. ग. ज. वीर. २ घ. ङ. छ. झ. ञ. ट. नय.

एवमुक्त्वा ततस्तुष्टो रावणो राक्षसेश्वरः ॥ ददौ तस्मै शुभं ह्येकं हस्ताभरणमुत्तमम् ॥ २६ ॥
श्रुत्वा रावणवाक्यं तु सारथिः संन्यवर्तत ॥ २७ ॥
ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान्स सारथिः ॥
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

## सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

अगस्त्यर्षिणा श्रीरामायरावणवधसौकर्यायादित्यहृदयस्तोत्रोपदेशः ॥ १ ॥ श्रीरामकृतादित्यहृदयजपतुष्टेनसूर्येण तंप्रति रावणवधत्वरणम् ॥ २ ॥

### आदित्यहृदयप्रारम्भः ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ॥ रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ॥ उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ २ ॥
रामराम महाबाहो शृणु गुह्यं सनातनम् ॥ येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥ ३ ॥

---

निवार्तिष्यते ॥२५—२७॥ महांश्चासौ रथश्च महारथ इति विग्रहः ॥ २८ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

अथादित्यहृदयोपदेशः ॥ ततो युद्धपरिश्रान्तमित्यादिश्लोकद्वयमेकान्वयं ॥ रणं द्रष्टुं दैवतैः समागम्य आगतः दैवतैः सहागतः अगस्त्यः युद्धपरिश्रान्तं उपस्थितं रावणं दृष्ट्वा कथमेनं परत्वप्रकटनं विना जेष्यामीति चिन्तया स्थितं चिन्तयन्तं च रामं दृष्ट्वा उपागम्याब्रवीत् ॥ १—२ ॥ राम रामेत्यादिश्लोकत्रयमेकान्वयं ॥ रामस्य चिन्ताविष्टत्वात् स्वादरातिशयात्कार्यत्वरया च द्विरुक्तिः । महाबाहो इत्यनेन पूर्वकृतपराक्रमप्रकटनं । सनातनं वेदवन्नित्यं । गुह्यं रहस्यं । शृणु । तदेव रहस्यमाह—आदित्यहृदयमित्यादि ॥ आदित्यस्य हृदयं आदित्यमनःप्रसादकमित्यर्थः । पुण्यं पठतां पुण्यवर्धकं । सर्वशत्रुविनाशेपि तुल्यायव्ययन्यायेन कस्यचिन्न जयः स्यात् न तथा भवतीदमित्याह—जयावहमिति । अक्षय्यं अक्षय्यफलकं । परमं शिवं परमपावनं । सर्वमङ्गलमाङ्गल्यं सर्वमङ्गलानामपि मङ्गलं । मङ्गलानां च मङ्गलमितिवत् । स्वार्थे यत्प्रत्ययः । सर्वश्रेयः-

---

ती० ततोयुद्धपरिश्रान्तमित्यादिश्लोकद्वयमेकंवाक्यं । रणंद्रष्टुंदैवतैःसहसमागम्यागतोऽगस्त्यः ततः सर्वात्रियुद्धपरिश्रान्तस्य रावणस्यरथेसूतेनरणादपनीतेसति तदन्तरं प्रोद्यतिचभास्करेयुद्धपरिश्रान्तंसमरेचिन्तयास्थितं रावणवधोपायचिन्तयोपलक्षितंरामं अग्रतः समनन्तरकाले। युद्धाय युद्धंकर्तुं समुपस्थितंरावणंचदृष्ट्वा तदा रावणमद्यैवजेष्यसि माचिन्तापरोभूः॥ किंतुस्ववीर्योपबृंहणायादित्यहृदयाख्येनस्तोत्रेण एनंसूर्यमुपतिष्ठस्वेतिस्तोत्रमुपदेक्ष्यन्नन्तरिक्षादवनिमुपगम्यराममब्रवीदित्यर्थः ॥१—२॥ ति० अथरावणवैभवंदृष्ट्वात्रस्तमिवभगवन्तंरामंभगवद्ब्रह्मदत्तरावणवैभवनिवर्तनस्यभगवद्ब्रह्मानुग्रहैकसाध्यत्वात्तदनुग्रहसिद्धयेविद्यामण्डलऋषिरगस्त्योब्रह्मरूपादित्यदेवताकत्वादादित्यहृदयाख्यंस्तोत्रमुपदिशतिस्मेत्याह—**ततोयुद्धेत्यादि** । अस्यस्तोत्रस्यागस्त्यऋषिः अनुष्टुप्छन्दः आदित्यहृदयभूतोभगवान्ब्रह्मादेवता । निरस्ताशेषविघ्नतयाब्रह्मविद्यासिद्धौसर्वत्रजयसिद्धौचविनियोगः । अस्यषडङ्गंप्रणवेन 'रश्मिमतेनमः' इत्यनेनवा । गायत्र्याषडङ्गमित्यन्ये । ततोयुद्धेत्यादि त्वरस्वेत्यन्तंस्तोत्रं । एवंभयनाटनं तन्मूलकमगस्त्यादुपदेशग्रहणंलोकानुग्रहाय । लोकस्यजयसाधनवस्तुप्रकाशनार्थमितितत्वं । युद्धपरिश्रान्तं अनेकाहोरात्रयुद्धपरिश्रान्तं तमिवस्थितं समरे समरविषये चिन्तया प्रबलोयमरिःकथंजेतव्यइतिचिन्तयायुक्तं । सारथिनापवाहितं । रावणं प्रातर्युद्धायअग्रतःरामसंमुखे समुपस्थितंदृष्ट्वास्थितं धनुरवष्टभ्यस्थितंरामं ॥ १ ॥ ति० सनातनं प्रवाहानादिभूतं अनेनस्वकल्पितत्वनिरासः ॥ ३ ॥

[ पा० ] १ क.—ट. तस्य. २ ख. ङ.—ट. भगवांस्तदा.

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ॥ जयावहं जपेन्नित्यमक्षय्यं[1] परमं शिवम् ॥ ४ ॥
सर्वमङ्गलमङ्गल्यं[2] सर्वपापप्रणाशनम् ॥ चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥
रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ॥ पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ॥ एष देवासुरगणाँल्लोकान्पाति गभस्तिभिः ॥ ७ ॥

साधनमित्यर्थः । सर्वपापप्रणाशनं सर्वपूर्वाघविनाशनं । चिन्ताशोकप्रशमनं आधिव्याधिनिवर्तकं । आयुर्वर्धनं विहितायुषोप्यधिकायुःप्रदं । उत्तमं जप्येषु श्रेष्ठं । आदित्यहृदयाख्यं स्तोत्रं जपेत् । आदित्यहृदयस्तोत्रजपे पुण्यादिवृद्धिर्भवति अतोऽवश्यं तत्कामस्तज्जपेदिति भावः ॥ ३—५ ॥ स्तोतव्यदेवतास्वरूपमाह—रश्मिमन्तमिति ॥ रश्मिमन्तं स्वर्णवर्णतया प्रशस्तकिरणं । समुद्यन्तं अर्धोदयादिकं विना सम्यगुदयं प्राप्नुवन्तं । इदं च ध्येयाभिप्रायेणोक्तं । न तु तदानीं सूर्योदयकालः । अगस्त्यागमनकालस्यापराह्णत्वात् । अतएव लक्ष्मणवचनं—"अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः । यावदस्तं न यात्येष कृतकर्मा दिवाकरः" इति ॥ विवस्ते आच्छादयति तेजोन्तरमिति विवस्वान् तं । स्वभासा सर्वतेजसामाच्छादकमित्यर्थः । भास्करं भाः करोतीति भास्करः । "दिवाविभानिशाप्रभाभास्कारा—"इत्यादिना टः सकारश्च । भुवनेश्वरं वर्षातपाभ्यां समस्तभुवननियन्तारं । पूजयस्व आदित्यहृदयेन तोषयस्वेत्यर्थः ॥ ६ ॥ ननु सत्सु देवतान्तरेषु कथमस्यैव पूज्यत्वं तत्राह—सर्वदेवात्मक इति ॥ सर्वदेवात्मकः सर्वदेवानामात्मा । स्वार्थे कः । "सूर्य आत्मा जगतस्तस्थुषश्च" इति श्रुतेः । रश्मिभिर्लोकाननुभावयतीति रश्मिभावनः । रश्मिभिः रक्षतीत्यर्थः । एतदेवाह—एष इति । देवासुरगणान् लोकान् देवासुरगणरूपाञ्जनानित्यर्थः । पाति रक्षति । "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतेः ॥ ७ ॥

**तनि०** आदित्यशब्देन तन्मण्डलमुच्यते । "यएषोन्तरादित्येहिरण्मयःपुरुषोदृश्यते"इत्यत्रादित्यशब्दवत् । तस्यहृदयं अन्तःतन्मण्डलमध्यवर्तीपुरुषः । यद्वा आदित्यः सूर्यः । तस्यहृदयं हृद्गतं । 'अयपयगतौ' इतिधातुः । "यआदित्येतिष्ठन् यआदित्यमन्तरोयमयति"इत्यादिश्रुतेः । तत्प्रतिपादनंस्तोत्रमित्यर्थः । **ति०** पुण्यं पुण्यजनकं । अनेनपारत्रिकंफलमुक्तं । सर्वशत्रुविनाशनं जयावहमित्यैहिकंफलं । जपं जप्यतइतिजपं स्तोत्रं । **स०** नित्यं अर्थतः । अक्षयं नविद्यतेक्षयोयस्मात् । परमं स्तोत्ररत्नं । शिवं मङ्गलरूपं ॥ ४ ॥ सर्वमङ्गलमाङ्गल्यं सर्वमङ्गलवस्तूनामपिमाङ्गल्यंयस्मादितितथा ॥५॥ रश्मिवन्तं रश्मयः ज्ञानरूपाःप्रकाशरूपाश्चतद्वन्तं । यवादिरयं । जपसमयेप्रणवादित्वंनमोन्तत्वंचसंपाद्यं । "जपे न्यासेनमोन्तस्तुस्वाहान्तोहोमकर्मणि" इत्यादेः । तथाच ॐ रश्मिमतेनमः' इतिमन्त्रनिष्पत्तिः । एवमुत्तरत्रापिज्ञेयं । समुद्यन्तं सृष्टिपालनादावुद्योगवन्तं । उदयपर्वतेसमुद्यन्तंवा । देवासुरनमस्कृतं सत्वप्रधानादेवाः । तमःप्रधानाअसुराः । उपलक्षणयारजःप्रधानामनुष्याअपिग्राह्याः । तैर्नमस्कृतं । भास्करं करोतीतिकरः भासांकरः भास्करः "तस्यभासासर्वमिदंविभाति"इत्यादेः । **तनि०** रश्मिमन्तं रश्मिशब्दोनित्यसूरिपरः । तद्वन्तं । तन्मध्येभासमानं । रश्मिं"रश्मीनांमध्येतपन्तं"इतिसुवर्णसूक्तोक्तेः । समुद्यन्तं नित्योदितदशावन्तं । यद्वा "यःपूर्व्यायवेधसे नवीयसे" इत्याद्युक्तरीत्यानवंनवमुदितमिवस्थितं । **ति०** रश्मिमन्तं पञ्चेन्द्रियद्वाराऽनेकज्ञानरश्मिमन्तं । रश्मिमतेनमः । समुद्यन्तंलोकान्क्रियासुप्रवर्तयन्तं । समुद्यतेनमः । एवंनमोन्ताएतेऽस्यनमस्कारार्चनमन्त्राइत्युच्यन्ते । भुवनानां मूलादिब्रह्मरन्ध्रान्तयोगाधारभूमीनां ईश्वरं अधिष्ठातारं । भूराद्यशेषभुवनानांप्रकाशकतयेश्वरंच । भुवनेश्वरायनमः । **शि०** विवस्वन्तं विवसुना विशेषमणिनाअन्व्यतेसंबध्यतेतं । नित्यंविशेषमणिधारिणमित्यर्थः । "वसु तोयेधनेमणौ" इतिकोशः ॥ ६ ॥ **तनि०** अत्रदेवासुरशब्दौ तत्तत्प्रकृतिपरौ । "दैवीसंपद्विमोक्षायनिबन्धायासुरीमता"इतिगीतोक्तेः । गभस्तिभिः तेजोलेशैः तेजोंशसंभवमित्युक्ततेजोलेशैः । **ती०** अस्यस्तोत्रस्यकथमेतावन्माहात्म्यमित्याशंक्यतत्प्रतिपाद्यस्यसर्वदेवतामयत्वात्संभवतीतितस्यसर्वदेवतामयत्वंप्रतिपादयति—सर्वदेवात्मकइत्यादिना । सर्वदेवात्मकः सर्वदेवशरीरः । "यःसर्वदेवेषुतिष्ठन्"इत्यादिश्रुतेः । तेजस्वी पराभिभवनसामर्थ्यवान् । रश्मिभावनः रश्मीन् नित्यमुक्तान्भावयतितत्सत्तांनिर्वहतीति तथोक्तः । तेषांभगवन्नित्येच्छाधीनसत्ताकत्वात् । "नित्यंप्रियास्तवतुकेचनतेहि नित्याः"इत्युक्तत्वात् । "एषदेवासुरगणाँल्लोकान्पातिगभस्तिभिः"इति "अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः" इत्युक्तरीत्यावृष्ट्यन्नदानेन "देवान्भावयतानेनतेदेवाभावयन्तुवः" इतिपुरोडाशादिदानेनचसर्वान्पातीत्यर्थः । "याभिरादित्यस्तपतिरश्मिभिस्ताभिः पर्जन्योवर्षति"इत्यादिश्रुत्युक्तरीत्यागभस्तिभिःपातीत्युक्तं । **ति०** रश्मिमदादिशब्दप्रतिपाद्यस्यब्रह्मत्वंस्फुटयन्नाह—सर्वेति । हि यस्मात्सर्वदेवोपादानकारणत्वादेषसर्वदेवात्मकः । इदंसर्वात्मकत्वोपलक्षणं ।

[ पा० ] १ झ. ञ. ट. जपंनित्यं. २ क. घ. ङ. छ.—ट. माङ्गल्यं.

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ॥ महेन्द्रो धनदः कालो यमः सोमो ह्यपां-पतिः ॥८॥
पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः ॥ वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥

सर्वदेवात्मकत्वमाह—एष ब्रह्मेत्यादिना ॥ अयमेव ब्रह्मादिसमस्तदेवताशरीरे वर्तत इत्यर्थः । प्रजापतिरिति जात्येकवचनं । नव प्रजापतय उच्यन्ते । कालशब्देन मृत्युरुच्यते । यमस्तु ततोन्यः । मरुतः आवहादिवायवः । वायुर्भूलोकसंचारी । प्राणः शरीरान्तःस्थो वायुः । ऋतुकर्तेति प्रभाकरविशेषणं ।

सर्वदेवात्मकायनमः । तेजस्वी सर्वभासनसमर्थतेजोयुक्तः । तेजस्विनेनमः । रश्मिभिः ज्ञानरश्मिभिः सर्ववस्तुजातं भावयति सत्तास्फूर्तिमत्संपादयतिसः । रश्मिभिर्योगिनोभावयति ब्रह्मलोकंप्रापयतीत्यर्थ इत्यन्ये । अत्रएषपातीत्युक्त्या सूर्यस्यपुरतःस्थितत्वनिर्देशेनसूर्योदयकालेएतत्स्तोत्रदानमितिलभ्यते । स० सर्वसत्ताप्रदत्वाचासावुपास्यइत्याह—सर्वेति । एषः सूर्यनारायणः । सर्वदेवात्मकः सर्वदेवसत्तानांभगवदधीनत्वात्तदात्मकत्वोक्तिः । सर्वदेवानामपि आत्मकं स्वरूपानन्दो यस्मादितिवा । शि० रश्मिभानां सूर्यकिरणदीप्तीनां अवनोरक्षकः । एषसूर्यान्तर्वर्तीरामः ॥ ७ ॥ ति० स्कन्दःसंसारदुःखंस्कन्नंकरोतीतिस्कन्दः । महेन्द्रोवरुणइतिपाठे वरुणोवरुणपदाभिधेयः । "वरुणोवारुणोवृक्षः" इतिसहस्रनामोक्तेः । ती० "यएषोन्तरादित्येहिरण्मयः पुरुषोदृश्यते"इत्युक्तयोगिजनसाक्षात्कारेणएषइतिपुनःपुनर्निर्देशः । ब्रह्मा चतुर्मुखशरीरः । "तवान्तरात्मानमर्चयेचान्येदेहिसंज्ञिताः"इतिशिवंप्रतिचतुर्मुखवचनात् । विष्णुः उपेन्द्रावतारः शिवः । शिवशरीरकः । "सब्रह्मासशिवःसहरिः सेन्द्रः" इत्युभयत्रापि श्रुतेः । स्कन्दः 'स्कन्दिर्गतिशोषणयोः' इतिधातोः शत्रून्शोषयतीतिस्कन्दः । षण्मुखशरीरकोवा । प्रजापतिः "प्रजापतिश्चरति गर्भे अन्तः" इत्युक्तप्रजापतिशब्दवाच्यः । महेन्द्रः स्वरूपतऐश्वर्यतश्चनिरवधिकः । "इन्द्रंनिचिक्युःपरमेव्योमन् इन्द्रोमायाभिः पुरुरूपईयते"इतिश्रुतेः । धनदः "अन्नादोवसुदान" इतिश्रुतिप्रसिद्धःसकलफलप्रदः । कालः जगत्संहारकः । "कालायमहाग्रासायवैनमः । अत्ताचराचरग्रहणात्" इतिश्रुतिसूत्राभ्यां 'अनादिर्भगवान्कालः'इतिपराशरस्मरणाच्च । यमः यमयति शिक्षयतीतियमः । 'यमोवैवस्वतोराजायस्तवैषहृदिस्थितः'इतिमनुस्मरणात् । सूते अमृतमितिसोमः । 'षु प्रसवैश्वर्ययोः'इतिधातुः । 'सोमःपवतेजनिता मतीनां जनितादिवः'इत्याद्युक्तसकलकारणसोमशब्दवाच्यः । अपांपतिः "आपोनाराइतिप्रोक्ताआपोवैनरसूनवः । अयनंतस्यताः पूर्वंतेननारायणःस्मृतः"इत्युक्तेः । 'अपएवससर्जादौ'इत्युक्तेश्चाप्छब्दवाच्यानांस्वामी ॥ ति० एषः 'एषोन्तरादित्येहिरण्मयः पुरुषः' इतिश्रुतेर्योगजनितसाक्षात्कारविषयःपुरोदृश्यमानश्च । ब्रह्मा निस्तुलैश्वर्यविद्यासृष्टत्वशक्तिः । ब्रह्मणेनमः । विष्णुः स्वसृष्टपरिपालनप्रयोजकतयापरिगृहीतविष्णुमूर्तिर्नारायणः । विष्णवेनमः । शिवः अपरिमितकल्याणपुण्यस्वभावः । मृगपरश्वादिचिह्नोभगवान्महादेवश्च । शिवायनमः । जीवज्योतिर्द्वारासर्वाणीन्द्रियाणिस्कन्दतीतिस्कन्दः । भगवान्मयूरवाहनश्च । स्कन्दायनमः । प्रजानां जन्यवस्तूनांस्वामी । स्वशक्तिद्वारासर्वोपादानत्वात् । दशयज्ञायुधचिह्नोभगवान्यज्ञेश्वरश्च । प्रजापतयेनमः । महेन्द्रः 'इदिपरमैश्वर्ये' "ऋन्सर्वधातुभ्यः" परमैश्वर्यकाष्ठांप्राप्तः । वज्रहस्तत्वादिचिह्नोदेवराजश्च । महेन्द्रायनमः । धनंचैतन्यंसर्वानुग्रहायसर्वेस्यान्तर्ददातिस्थापयतीतिधनदः । 'अन्नादोवसुदानः'इत्युक्तसकलफलदः । कुबेरश्च । धनदायनमः । कालः बुद्धिवृत्तिजातमपरोक्षतयाकलयतीतिकालः । मण्डलस्पन्दानुमेयक्रियापरिच्छेदकश्चकालः । कालायनमः । यमयतीतियमः सर्वान्तर्यामी । "यमोवैवस्वतोराजायस्तवैषहृदिस्थितः । तेनचेदविवादस्तेमागङ्गांमाकुरून्गमः ।" अविवादोऽभेदाभावइतिमनुः । पितृपतिश्च । यमायनमः । सोमः उमा उः केवलनिपातः । मा प्रभा उ सर्वदाप्रभयासहितःसोमोभगवानर्धनारीश्वरश्च । "सोमःपवतेजनिता मतीनां"इतिश्रुतेः सर्वकारणंसोमशब्दवाच्यं । उमयाशक्त्याप्रकृत्याख्ययासहितइत्यर्थमन्ये । सोमायनमः । आपःसत्त्वंचित्तात्मकं तस्यान्तःकरणोपाधिवशतोऽनन्तस्यपतिः वरुणश्च । अपांपतयेनमः ॥ स० एषः प्रत्यक्षमण्डलान्तर्वर्ती । ब्रह्मा बृंहयति वर्धयतिभक्तानितितथा । "सर्वंवेष्टयितृत्वाच्चविशिष्टबलतस्तथा । विष्णुरित्यभिधामर्ह्यसा नयुक्तादिवौकसाम्"इत्यैतरेयभाष्यदिशाप्यर्थोबोध्यः । शिवंमङ्गलमस्यास्तीतिशिवः । अर्शआद्यच् । शिवयतीतिवातथा । "तत्करोती"तिण्यन्तात्पचाद्यच् । "शःस्यान्नपुंसकेशास्त्रेयशसीन्द्रशरासने । तूष्णींगतेसुखे"इतिनानार्थरत्नमालोक्तेः । शंसुखमेषामस्तीतिशिनोमुक्ताः तान्वर्तयतीतिवा । स्कन्दनात् जलशोषणात् स्कन्दः । स्कन्दान्तर्गतत्वेनच्युतत्वात्स्कन्दः । "स्कन्नत्वात्स्कन्दतांप्राप्तः"इतिभारतदानधर्मोक्तेः ॥ प्रजापालकत्वात्प्रजापतिः । प्रकर्षेणजनयतीतिप्रजः । नविद्यतेपतिर्यस्यसोपतिः । प्रजश्चासावपतिश्चेतितथेतिवा ॥ ८ ॥ स० मनुः सर्वज्ञः । 'मनुअवबोधने'इतिधातुः । ती० पितरः अग्निष्वात्तादयः । सदावसन्तीतिवसवः । तेचाष्टौ । सिद्धिरेषामस्तीतिसाध्याः । अर्शआद्यच् । तेचद्वादश । अश्विनौ बडबारूपिण्यांआदित्यमहिष्यांसंज्ञयाऽश्वरूपयुक्तस्यादित्यस्यतस्यांजातावश्विनौ । म्रियन्तेन कदाचिदितिमरुतः । तेचवायुपुराणोक्ताः शुक्रज्योतिःप्रभृतय एकोनपञ्चाशत् । मननान्मनुः । 'नान्योतोस्तिमन्ता'इतिश्रुतेः । वाति सुरभीकरोतीतिवायुः । 'वा गतिगन्धनयोः' इतिधातुः । "सर्वगन्धःसर्वरसः"इतिश्रुतेः । वहतिहव्यमितिवह्निः 'वह्प्रापणे' । प्रजाप्राणः प्रजानांप्राणनहेतुः । इयर्तीतिऋतुः । 'ऋगतौ' । "ऋतुः सुदर्शनः कालः" इतिसहस्रनामपाठात् । कर्ता तेन

**आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ॥ सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥१०॥**

ऋतूनां वसन्तादीनां कर्ता एष प्रभाकरः ब्रह्मा चेत्यादिरीत्याऽन्वयः ॥ ८—९ ॥ एवमादित्यस्वरूपमुपदिश्य तद्विषयमादित्यहृदयस्तोत्रमुपदिशति—आदित्यः सवितेत्यादिना लोकसाक्षिण इत्यन्तेन ॥ तत्र आदित्यादिप्रथमान्तपदेषु त्वंपदमध्याहार्यं । अदितेरपत्यत्वेनावतीर्ण आदित्यः । "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यप्रत्ययः । अदितेः अखण्डिताया भूमेरयं पतिरित्यादित्यः । सूते जगदिति सविता । सुवति प्रेरयति जनान् कर्मणीति सूर्यः । "पू प्रेरण" इति धातोः "राजसूयसूर्य—" इति निपातनात् क्यप्प्रत्ययो रुडागमश्च ॥ खे गच्छतीति खगः । लोकोपकारार्थमाकाशे संचरन्नित्यर्थः । वर्षेण पुष्णाति जगदिति पूषा । श्वन्नुक्षन्नित्यादौ निपातितः । गभस्तयः किरणाः अस्य सन्तीति गभस्तिमान् । सुवर्णसदृशः सुवर्णवर्णः । "हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण" इति श्रुतेः । भातीति भानुः । "दाभाभ्यां नुः" इति नुप्रत्ययः । हिरण्यं रेतो यस्य स हिरण्यरेताः हिरण्मयब्रह्माण्डकर्तेत्यर्थः । अक्षराधिक्यमार्षत्वात् । दिवा करोतीति दिवाकरः, दिवा अह्नि प्राणिनः चेष्टां करोतीति वा दिवाकरः ॥ १० ॥

विनातृणाग्रमपिनचलतीतिकृत्वासर्वभूतान्तःप्रवेशेनसकलकर्मकर्ता । प्रभाकरः प्रकृष्टज्ञानसाधनं ॥ **ति०** पितरोबीजप्रदाः तद्रूपोयंसर्वेषांबीजप्रदः । "तासांब्रह्ममहद्योनिरहंबीजप्रदःपिता"इत्युक्तेः । बहुत्वंपूजार्थं । कव्यवाहनादयः पितृदेवताश्च । वसुरहमर्थः अष्टौ वसवश्च । साध्याः प्राधान्येनयोगिनः । प्रसाधनीयत्वात्साध्याः । देवगणविशेषाश्च । अश्विनौ अश्नोतेर्वन्प्रत्ययान्तोश्वशब्दः । सर्वव्याप्तौदेवभिषजौच । मरुत् 'मृङ्प्राणत्यागे' । अस्यधातोरुतिप्रत्ययान्तंरूपं । अनर्थमारकः । एकोनपञ्चाशत्संख्यमरुद्गणश्च । मनुतइतिमनुः सर्वज्ञः । आदिराजश्च । वातीतिवायुः 'वागतिगन्धनयोः' गतिर्ज्ञानंज्ञापनंच । ज्ञाताज्ञापकश्च । प्रपञ्चवृत्तिःप्राणश्च । वहेर्निः वह्निः । स्वेमहिम्निस्वयंप्रतिष्ठितोभूत्वास्वस्मिन्सर्वसारंवहतीतिवह्निः अग्निश्च । प्रजायन्तेजीवात्मनेतिप्रजाः । प्रकृष्टजनिमन्तोविभूत्यध्यायोक्ताः । देवाश्च । प्राणयतीतिप्राणः । "नप्राणेननापानेनमर्त्योजीवतिकश्चन । इतरेणतु जीवन्तियस्मिन्नेतावुपाश्रितौ"इतिश्रुतेः । प्राणयात्राप्रवर्तकः प्राणः । ऋतूनांज्ञानानांकर्ताउपादानं वसन्ताद्यृतुकर्तासंवत्सरात्मा कालश्च । प्रभाकरोभास्करवत् । शब्दस्याप्यर्थतादात्म्येनदेवतास्वरूपत्वाद्भास्करप्रभाकरयोःशब्दयोःशब्दभेदेनमूर्त्यन्तरत्वंज्ञेयं ॥९॥ **तनि०** सूर्यः स्थावरजङ्गमात्मकजगदन्तर्यामीसूर्यशब्दवाच्यः । "सूर्यआत्माजगतस्तस्थुषश्च"इतिश्रुतेः ॥ **ती०** अधुनास्तोत्रस्वरूपंदर्शयति—**आदित्यइत्यादिना** । अत्र प्रथमान्तेषुशब्देषुत्वंशब्दमध्याहृत्यत्वमादित्यस्त्वंसवितेत्येवंयोजनीयं । "यस्मात्सर्वमादत्तेतस्मादादित्यः"इत्यौपनिषदव्युत्पत्त्याअशेषविषयभोक्ता आदित्यइत्यर्थः । सविता सर्वस्यजगतः प्रसविता । सूते जगदितिवासविता । सुवतिप्रेरयतिजगदितिवासविता । सुवतिप्रेरयतिकर्मणीतिसूर्यः । सुष्ठुईरयतिप्रेरयतीतिवासूर्यः परमात्मा । प्रेरणसौष्ठवंचनिरुपाधिकत्वं । तच्चभगवतएव । 'अन्तःप्रविष्टःशास्ताजनानां'इत्यादिश्रुतेः । खं परमाकाशंगच्छतिअध्यास्तइतिखगः । 'योअस्याध्यक्षःपरमेव्योमन्'इतिश्रुतेः । पुष्णातीतिपूषा स्थितिकर्तेत्यर्थः । 'पुषपुष्टावि'तिधातुः । गभस्तिमान् गांदिशंव्याप्यभासयतिप्रकाशयतीतिगभस्तिः । 'भासृदीप्ता'वितिधातुः । पृषोदरादित्वात्साधुः । तथाचगभस्तिः सर्वव्यापिनीलक्ष्मीस्तद्वान् । लक्ष्मीनित्ययुक्तइत्यर्थः । नित्ययोगेमतुप् । लक्ष्म्याःसर्वव्यापित्वं "यथासर्वगतोविष्णुस्तथैवेयंद्विजोत्तम"इतिपराशरस्मरणात्सिद्धं । शोभनेपर्णेपक्षौयस्यससुपर्णःपरमात्मा । "द्वासुपर्णासयुजासखाया"इतिश्रुतेः । तपतीतितपनः । 'तपसन्तापे' । 'सुखसुप्तःपरंतपः' इतिस्मर्यते । सुवर्णसदृशइतिपाठेसुवर्णवर्णइत्यर्थः । "हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्वएवसुवर्णः"इतिश्रुतेः । भातीतिभानुः । 'तमेवभान्तं'इतिश्रुतेः । हिरण्यरेताः । हिरण्यं हिरण्मयं रेतः अण्डोत्पादकद्रव्यंयस्यसः । 'अपएवससर्जादौतासुवीर्यमवासृजत् । तदण्डमभवद्धैमंसहस्रांशुसमप्रभम् ।' इतिमनुस्मरणात् । अज्ञाननिवर्तनद्वारा दिवा द्युतिंज्ञानंकरोतिव्युत्पादयतीतिदिवाकरः । हरिदश्वः हरतिमनइतिहरित् मनोहरः अश्वःवाहनंगरुडोयस्यसः । पृषदश्वइतिवत् । सहस्रार्चिः अर्च्यतइत्यर्चिः । अर्चिश्शब्देन पूज्यमङ्गलगुणाउच्यन्ते । अनन्तकल्याणगुणइत्यर्थः । सप्तसप्तिः सप्ताख्यःसप्तिः अश्वोयस्यसः । "एकोअश्वोवहतिसप्तनामा" इतिश्रुतेः । अनेनकल्क्यवतारःसूचितः । मरीचिमान् म्रियन्तेशत्रवोऽनेनेतिमरीचिश्चक्रं । तद्वान् । उपलक्षणमेतत् । शङ्खचक्रगदाधरइत्यर्थः । तिमिरोन्मथनः ज्ञानोत्पत्तिप्रतिबन्धकदोषनिवर्तकः । "हृद्यन्तःस्थोह्यभद्राणिविधुनोतिसुहृत्सतां"इतिस्मरणात् । शंसुखमस्माद्भवतीतिशंभुः । 'विश्वाक्षंविश्वशंभुवं'इतिस्मरणात् ॥ त्वक्ष्णोति त्रिस्सप्तकृत्वःसक्षत्रियांभूमिमितित्वष्टा । 'तक्षूत्वक्षूतनूकरणे'इतिधातुः । अनेनपरशुरामावतारःसूचितः । मृतं अचेतनंब्रह्माण्डंजीवयतीतिमार्ताण्डः । 'जीवाजीवमजीवयत्' इतिभागवतोक्तेः । अंशुमान् अन्तर्बहिर्व्याप्तिमान् । 'अशूव्याप्तौ'इतिधातुः । 'अन्तर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः'इतिश्रुतेः । हिरण्यं सकलजगदुत्पादकसमष्टिजीवजातंगर्भेयस्यसः हिरण्यगर्भः । "हिरण्यगर्भःसमवर्तताग्रे"इतिश्रवणात् । तापत्रयतप्तानांविश्रमस्थानत्वाच्छिशिरः । तपनः 'तपसंतापे' स्वाश्रितविरोधिनांतापकारीत्यर्थः । सर्ववस्तुसाक्षात्कारहेतुभूतालोककर्ता । रूयतेस्तूयतेसर्वै-

**हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ॥ तिमिरोन्मथनः शंभुस्त्वष्टा मार्तण्ड[1] अंशुमान् ॥ ११ ॥**
**हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः ॥ अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥**

हरितः श्यामा अश्वा अस्य सन्तीति हरिदश्वः । सहस्रार्चिः सहस्रकिरणः । सप्तनामा सप्तिरश्वो यस्यासौ सप्तसप्तिः । "एको अश्वो वहति सप्तनामा" इति श्रुतेः । मरीचयोऽस्य सन्तीति मरीचिमान् । प्रकाशवानित्यर्थः । तिमिराण्युन्मथ्नातीति तिमिरोन्मथनः । शंसुखं भवत्यस्मादिति शंभुः । "डुप्रकरणे मितद्रुदिभ्य उपसंख्यानम्" इति डुः । सर्वाणि रूपाणि त्वष्टा । सर्वसंहारक इत्यर्थः । मृतेण्डे जातो मार्तण्डः । सर्वसंहारे तत्सृष्टये पुनः प्रादुर्भूत इत्यर्थः । अंशवोऽस्य सन्तीत्यंशुमान् । प्रकाशमान इत्यर्थः ॥ ११॥ हिरण्यं हिरण्मयाण्डं । "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्" इति स्मृतेः । तस्य गर्भो हिरण्यगर्भः । ब्रह्माण्डोदरवर्तीत्यर्थः । यद्वा हिरण्यं हितरमणीयं गर्भमन्तःकरणं यस्यासौ हिरण्यगर्भः । तापत्रयतप्तानां विश्रमस्थानत्वाच्छिशिरः । तपतीति तपनः । भासः करोतीति भास्करः । रूयते स्तूयते सर्वैरिति रविः । "अच इः" इतीप्रत्ययः । दिवा अग्निर्गर्भे यस्यासावग्निगर्भः । "उद्यन्तं वावादित्यमग्निरनुसमारोहति" इति श्रुतेः । अदितेः पुत्रः अदितेः पुत्रत्वेनावतीर्णः । शाम्यति स्वयमेव सायंकाल इति शङ्खः । "शिशिरं हिमं

रितिरविः । रौतिउपदिशतिवेदानितिवारविः । 'योवैवेदांश्चप्रहिणोतितस्मै'इतिश्रुतेः । अग्निःकालाग्निरुद्रोगर्भेयस्यसोऽग्निगर्भः । 'नारायणाद्रुद्रोजायते'इतिश्रुतेः । अदितेःपुमपत्यंपुरन्दरंत्रायतइत्यदितेः पुत्रः । शंसुखंखेआकाशेहृदयाकाशेयस्यसः शङ्खः । निरवधिकानन्दवानित्यर्थः । शिशिरनाशनः सूर्यरूपेणशिशिरंहिमंनाशयतीतितथा ॥ **ति०** आदित्यः अशेषविषयभोक्तामण्डलाभिमानीअदितिपुत्रश्च । सविता अन्तःकरणोपाधिनापरिमितचिदात्मवर्गस्रष्टा । रश्मिभिःपर्जन्यादिप्रवृत्त्यातत्तदन्नादिस्रष्टा । सर्तेःसूर्यः सर्वगः । 'सूर्यएकाकीचरति'इतिश्रुतेः । कर्मप्रेरकोवा । गभस्तिमान् रश्मिवत्समानार्थः । शब्दभेदान्मूर्तिभेदः । सुवर्णसदृशः 'आत्मलाभान्नपरंविद्यते'इतिश्रुतेः । सुवर्णसदृशनिधिलाभतुल्यकामः । यद्वा हिरण्यं तत्साधनंपारदएवरेतोयस्येत्यर्थः । अक्षराधिक्यमार्षं । दिवेत्यव्ययंप्रकाशवाचकं । प्रकाशंकरोतीतिदिवाकरः । हरितोदिशोऽश्नोतिव्याप्नोतीतिहरिदश्वः । श्यामवर्णाश्वश्च । सहस्राण्यनन्तानिअर्चींषिज्ञानानियस्यसः । यद्वा सहस्रसंख्याकान्यर्चींषिरश्मयोयस्यसः । सप्तसप्तिः सप्तशीर्षण्याःप्राणा इन्द्रियाणिद्वेचक्षुषीद्वेश्रोत्रेद्वेनासिकेवाक्चैकेति "सप्तप्राणाःप्रभवन्तितस्मात्"इतिश्रुतेः । सप्तप्राणानांसप्तिःप्रवृत्तिर्यतःसः । सप्तसंख्याश्वश्च । मरीचिमच्छब्दोगभस्तिमच्छब्देनव्याख्यातः। अज्ञानलक्षणंतिमिरमुन्मथ्नातीतितिमिरोन्मथनः अन्धकारनाशनश्च ॥ हिरण्यगर्भः सकलजगदुत्पत्तिस्थितिलयकर्ता । ब्रह्मविष्णुरुद्ररूपोहिरण्यगर्भः । "भगवतेहिरण्यगर्भायनमः'इतिद्वादशाक्षरीआदित्यहृदयरहस्यमितिकतकः । शिशिरःशीतःसुखस्वभावः । तपनः 'तपऐश्वर्ये' स्वभावतएवसर्वेश्वरइत्यर्थः । दितिर्नाशोनविद्यतेयस्यास्साऽदितिर्ब्रह्मविद्या । तस्याःपुत्रः तल्लभ्यत्वात् । आदित्यश्च । शंचखंचशंखः । परमानन्दगगनात्मेत्यर्थः । शिशिरंजाड्यंमन्दबुद्धित्वं नाशयतीतिशिशिरनाशनः । हिमनाशकश्च ॥ **स०** आदित्यः आदौ अनादिकालमारभ्यवर्तमाने त्ये आनन्दज्ञानेयस्यसः । तिश्च यंच त्ये। 'आनन्दंतीतिवैवदेत्। येतिज्ञानंसमुद्दिष्टं'इतिसत्यशब्दव्याख्यापरभागवततात्पर्यात् । 'अदभक्षण'इत्यतआदिनोराक्षसाः । तांस्त्यजतीतिवा । त्यजविसर्गइत्यतोडःकर्तरि । "आदिनोराक्षसाःप्रोक्ताः" इतिभागवततात्पर्ये । अदितेरपत्यमितिवा । वामनरूपेणादित्यपत्यत्वाच्छ्रीपतेरादित्यता । आदितएवत्योऽव्याप्तः । तनोतेर्ड्यः । आदौविद्यमानइतिवा । सुवति सतःसत्कर्मणि असतोऽसत्कर्मणिचप्रेरयतीतिवा । 'षूप्रेरण'इतितौदादिकात्क्यपोरुट् । सूरिगम्यत्वात् ज्ञानिप्राप्यत्वाच्चेतिवा । निर्वचनत्वाद्रेफेकारलोपः । "सूर्यःससूरिगम्यत्वात्"इतीशावास्यभाष्योक्तेः । शंसुखंभावयतीतिशंभुः । यत्तुतीर्थनागोजिभट्टाभ्यां शंभवत्यस्मादितिव्युत्पत्तिप्रदर्शनंकृतं तत्तुमुकुटस्वामिव्याख्यानवत्कर्तरिक्तोभिधानेनापादानेडुप्रत्ययाभावादयुक्तं । मार्तण्डः मृतेअश्वत्थामास्त्रेणतत्प्राये परीक्षित्पेऽश्यण्डेभवतीतिसतथा । कृष्णरूपी । शकन्ध्वादिरयं । मार्ताण्डइतिवा । 'पुनर्मार्ताण्डमाभरत्'इतिमन्त्रात् । 'अथमार्तण्डमार्ताण्डौ'इतिनामनिधानाच्छब्दार्णवाच्च । मार्तण्डोवराहरूपीतिवा । 'मार्तण्डस्तपनेक्रोडे'इतिविश्वः । सूर्यान्तर्गतत्वाद्वा । सएवमार्ताण्डकः ॥ अग्निगर्भः अग्निर्गर्भेयस्यसः । 'उद्यन्तंवावादित्यमग्निःसमारोहति'इत्यादेर्मन्त्रवर्णात् । अग्नेर्गर्भः । 'अग्नौक्रियावतांविष्णुः'इत्यादेः । शंखः शंसुखं खं आकाशमिवव्याप्तंयस्य । शंसुखरूपाणिखानिइन्द्रियाणियस्येतिवा ॥ **शि०** हरिदश्वः हरेःसुग्रीवस्य देनराज्यप्रदानेनश्वयतिवर्धते ॥ मरीचयः उपलक्षणतयामरीचिप्रभृतयोमुनयोऽस्यसन्ति सेवकत्वेनेतिमरीचिमान् ॥ तक्षति महान्तमपिस्वीयानामपराधंतनूकरोतिनगणयतीत्यर्थः । त्वष्टा ॥ हिरण्योहिरण्यगर्भोगर्भेबालकइवयस्यसः । शिशिरः सर्वतापरहितत्वान्नित्यंविलक्षणशैत्यविशिष्टः ॥ अह्नोदिवसस्यतदुपलक्षितकालमात्रस्यकरःप्रवर्तकः । नरविःप्रकाशकोय-

[ पा० ] १ ङ. झ. ट. मार्तण्डकोंशुमान्.

**व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः ॥ घनवृष्टिरपां-मित्रो विन्ध्यवीथी प्लवङ्गमः ॥ १३ ॥**
**आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः ॥ कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥**

नाशयतीति शिशिरनाशनः ॥ १२ ॥ व्योम्नो नाथो व्योमनाथः । तमः राहुं भेत्तुं शीलमस्यास्तीति तमोभेदी । ऋग्यजुःसाम्नां पारं गच्छतीति ऋग्यजुःसामपारगः । "ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः" इति श्रुतेः । घना वृष्टिर्यस्मादसौ घनवृष्टिः । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः । अत एवापां मित्रः । पुल्लिङ्गत्वमार्षं । दक्षिणायने विन्ध्यो वीथी संचारभूमिर्यस्यासौ विन्ध्यवीथिः । प्लवं यथा तथा गच्छतीति प्लवङ्गमः । विन्ध्यवीथीप्लवङ्गम इत्येकपदत्वेन पाठे विन्ध्यवीथी गगनमार्गः ॥ १३ ॥ आतपोस्यास्तीत्यातपी । मण्डलं वृत्ताकारो बिम्बोस्यास्तीति मण्डली । मृत्युः विरोधिनिवर्तकः । उदयसमये पिङ्गलवर्णत्वात् पिङ्गलः । सर्वानपि मध्याह्ने तापयतीति सर्वतापनः । कविः पण्डितः । व्याकरणादिसर्वशास्त्रप्रवर्तक इत्यर्थः । विश्वः विश्वनिर्वाहकः । महान्ति तेजांसि यस्य स

स्यारविः स्वयंप्रकाशइत्यर्थः ॥ १०—१२ ॥ **ती०** व्योमनाथः तामसाहङ्काररूपेणाकाशस्रष्टेत्यर्थः । "आत्मनआकाशः संभूतः"इतिश्रुतेः । तमः भक्तानांतमोगुणंभिनत्तीतितमोभेदी । ऋग्यजुस्सामपारगः सकलवेदपर्यवसानभूमिः । "वेदैश्चसर्वैरहमेववेद्यः"इतिश्रुतेः । घनवृष्टिः घनावृष्टिः सकलकर्मफलरूपायस्मात्सः । 'अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच' ।—'फलमतउपपत्तेः'इत्यादिप्रमाणात् । अपांमित्रः महार्णवशायी । 'यमन्तःसमुद्रेकवयोऽवयन्ति'इत्यादिश्रुतेः । विन्ध्यवद्दुर्गमायांवीथ्यांसुषुम्नामार्गेप्लवंशीघ्रंगमयतीतिविन्ध्यवीथीप्लवङ्गमः । मुक्तप्रापकइत्यर्थः । 'सएनान्ब्रह्मगमयति—हार्दानुगृहीतशताधिकया'इत्यादिश्रवणात् । आतपी आसमन्तात्तपःजगन्निर्माणसंकल्पोस्यास्तीत्यातपी । 'तपआलोचने'इतिधातुः । 'यस्यज्ञानमयंतपः'इतिश्रुतेः । मण्डयतेऽनेनेतिमण्डलंकौस्तुभादिः अस्यास्तीतिमण्डली । 'मडिभूषायां'इतिधातुः । मृत्युः । अत्रमृत्युशब्दः प्रकृतवाची । मृत्युशरीरकइत्यर्थः । 'यस्यमृत्युःशरीरं'इतिश्रुतेः । पिङ्गतिमिलतीतिपिङ्गलः । 'पिङ्गमेलने'इतिधातुः । मेलनंसुशीलस्यैवसंभवति । अतःपिङ्गलः । सौशील्यंनाममहात्मनोमूढैःसहनीरन्ध्रेणसंश्लेषः । सर्वतापः युगपत्सकलाण्डसंहारकः । कविः विदिताखिलवेद्यः । 'यःसर्वज्ञःसर्ववित्' इतिश्रुतेः । विश्वः विश्वशरीरकः । "विश्वमेवेदंपुरुषः"इतिश्रुतेः । महातेजाः महत् निरवधिकंतेजः पराभिभवनसामर्थ्यंयस्यसः । रक्तः सर्वरञ्जकः । सर्वभवोद्भवः भवतीतिभवःकार्यवर्गः । सर्वोत्पत्तिहेतुरित्यर्थः । यद्वा सर्वेषांभवःसंसारो यस्मादुद्भवतिसतथा । नक्षत्रग्रहताराणामधिपः नक्षत्रग्रहताराणामन्तर्यामीत्यर्थः । "यश्चन्द्रतारकमन्तरोयमयती" इत्यादिश्रुतेः । विश्वभावनः विश्वस्थितिहेतुः । "द्यौःसचन्द्रार्कनक्षत्रंखंदिशोभूर्महोदधिः । वासुदेवस्यवीर्येणविधृतानिमहात्मनः"इतिश्रवणात् । तेजसामपितेजस्वी प्रशस्ततेजस्कइत्यर्थः । 'येनसूर्यस्तपतितेजसेद्धः'इतिश्रुतेः । 'सूर्यस्यापिभवेत्सूर्यः'इत्युक्तत्वाच्च । द्वादशात्मन् द्वादशमण्डलान्तर्वर्तिन् । ते तुभ्यंनमोस्तु ॥ **ति०** अपांसात्त्विकानांमित्रः चैतन्यदानेनोपकर्ता । जलानामुत्पादकश्च । विन्ध्यवीथी सूर्यमार्गः तेनशीघ्रगन्तात्त्व विन्ध्यवीथीप्लवङ्गमः । मृत्युः सर्वमृत्युसंपादकः । 'अमुमाहुःपरंमृत्युं' इतिश्रुतेः । पिङ्गलः पिङ्गलनाडीप्रवर्तनेनकर्ममार्गप्रवर्तकइत्यर्थः । पीतवर्णश्च । द्वादशात्मन् द्वादशमासस्वरूप । प्रागनुक्रान्तसर्वमूर्तिरूपायतुभ्यंनम इत्यर्थः । द्वादशात्मनेनमः ॥ **शि०** कविः इच्छामात्रेणगद्यपद्यादिनिर्माता ॥ **स०** विन्ध्यवीथीप्लवङ्गमः विन्ध्यस्ययावीथी अगस्त्यमुखतोदक्षिणभागेसंपादितातस्यांद्रुतगन्तेतिवा । यथोक्तंभारतेवनपर्वण्यागस्त्ये—'सूर्याचन्द्रमसोर्मार्गेनक्षत्राणांगतिंतथा । मार्गमिच्छाम्यहंदत्तंभवतापर्वतोत्तम । दक्षिणामभिगन्तास्मिदिशंकार्येणकेनचित् । यावदागमनंमह्यंतावत्त्वंप्रतिपालय । निवृत्तेमयिशैलेन्द्रततोवर्धस्वकामतः'इत्यादिना ॥ विश्वः जगत्प्रविष्टः । 'विशप्रवेशने' इत्यस्मात् ' अशूप्रुषिलटिकणिखटिविशिभ्यःक्वन्'ति क्वन्प्रत्ययेतस्यकित्त्वाद्गुणाभावेचरूपं ॥ 'तत्सृष्ट्वातदेवानुप्राविशत्'इतिश्रुतेः । सर्वत्रप्रविष्टत्वात् ज्ञानरूपत्वाद्विश्वः । 'विशप्रवेशन'इति धातोःक्विप्रत्ययः । 'वागतिगन्धनयो'रितिधातोर्डप्रत्ययः । विट्चतद्वचेतिविग्रहः । 'विवेशभूतानिचराचराणि—विज्ञानमानन्दं ब्रह्म'इतिचश्रुतेः । विःपक्षीगरुडस्तेनश्वयतिगच्छतीतिवा । विशेषेणश्वयति व्याप्नोतीतिवा । विशेषेणवर्धतइतिवा । 'टुओश्विगतिवृद्ध्यो'रितिधातुव्याख्यानात् । विश्वंवायुंअन्तर्यामितयावर्तयतीतिवा । विश्वशब्दोपपदात् 'वृतुवर्तने'इत्यतोडः । 'लोपः समाने' इतिवलोपः । "गुहाशयांनिहिताःसप्तसप्त"इतिवत् । विश्वंजगद्वर्तयतीतिवा । विश्वस्यकारणत्वाद्वा । 'कार्यकारणयोरेकशब्दव्यवहृतिर्भवेत्' इतिशब्दनिर्णये । जीवनियामकत्वाद्वा । 'शरीरेषुप्रविष्टत्वाद्विश्वोजीवउदीर्यते । जीवस्यतदधीनत्वाद्विष्णुर्विश्वइतिस्मृतः' इत्युक्तेः । प्रत्यहंसुप्तौमोक्षेप्रलयेचभूतान्यत्रप्रविशन्तीतिवा । 'यत्प्रयन्त्यभिसंविशन्ति'इतिश्रुतेः । विशिष्टसुखज्ञानरूपत्वाद्विशिष्टसुखबलरूपत्वाद्वा । 'विश्वंसुबलरूपत्वात्'इत्युक्तेः । अत्रप्रमाणेसुशब्दःसुखवाची । 'स्वित्यानन्दःसमुद्दिष्टः'इत्युक्तेः । सर्वभवोद्भवः

[ पा० ] १ ख. ग. घ. रविर्विश्वो.

**नक्षत्रग्रहताराणामधिपो विश्वभावनः[1] ॥ तेजसामपि तेजस्वी द्वादशात्मन्नमोस्तु ते ॥ १५ ॥**
**नमः पूर्वाय गिरये पश्चिमे[2] गिरये नमः ॥ ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥**
**जयाय जयभद्राय हर्यश्वाय[3] नमोनमः ॥ नमोनमः सहस्रांशो आदित्याय नमोनमः ॥ १७ ॥**
**नम उग्राय वीराय सारङ्गाय नमोनमः ॥ नमः पद्मप्रबोधाय मार्ताण्डाय[4] नमोनमः ॥ १८ ॥**

महातेजः । रक्तः सर्वेष्वनुरक्तः । सर्वेषां भवः संसारः उद्भवत्यस्मादिति सर्वभवोद्भवः ॥ १४ ॥ नक्षत्राणां ग्रहाणां ताराणां चाधिपः । विश्वं भावयति स्थापयतीति विश्वभावनः । तेजसामग्न्यादीनां तेजसामपि तेजस्वी प्रशस्ततेजाः । द्वादश आत्मानो मूर्तयो यस्य स द्वादशात्मा । ते च दर्शिताः स्मृतौ—"इन्द्रो धाता भगः पूषा मित्रोथ वरुणोर्यमा । अर्चिर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च" इति ॥ एवंभूतस्त्वमसि । अतस्तुभ्यं नम इति योजना ॥ १५ ॥ नमः पूर्वायेत्यादिश्लोकषट्कमेकान्वयं ॥ पूर्वाय गिरये पूर्वभागस्थगिर्युपलक्षिताय । पश्चिमे गिरये पश्चिमभागस्थपर्वतोपलक्षिताय । जयाय उपासकानां जयकराय । जयतीति जयः जयी तस्मा इति वा । जयभद्राय जयभद्रयोः प्रदात्रे । हर्यश्वाय श्यामाश्वाय । अत्र स्तुतित्वान्नपुनरुक्तिश्चिन्त्या । आदरातिशयेन नमःशब्दस्य द्विरुक्तिः । उग्राय अनुपासकानामुग्राय । विविधमीरयति प्रेरयति प्राणिनश्चेष्टयतीति वीरः तस्मै । सारं शीघ्रं गच्छतीति सारङ्गः तस्मै । एकेन निमिषार्धेन द्विसहस्रयोजनं गच्छतीति पुराणप्रसिद्धिः । ब्रह्मेशानाच्युतेशाय ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशाय । परब्रह्मरूपत्वेन स्तूयते "असावादित्यो ब्रह्म" इति श्रुतिः । अथवा ब्रह्मेशानयोः ब्रह्मरुद्रयोः अच्युतेशः अच्युतनियन्ता । सर्वापत्स्वपि पालक इत्यर्थः । 'वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदाता' इत्यर्थः । ब्रह्मेशायाच्युतेशायेत्यपि पाठः । तस्मै । आदित्यरूपं वर्चो दीप्तिर्यस्य तस्मै आदित्यवर्चसे । भा अस्यास्तीति भास्वान् तस्मै । सर्वभक्षाय सर्वसंहर्त्रे । अतएव तस्मिन्समये रौद्राय वपुषे । तमः अन्धकारं हन्तीति तमोघ्नः । आश्रितशत्रून् हन्तीति शत्रुघ्नः । अमितः अपरिच्छिन्नः आत्मा स्वरूपं यस्यासौ अमितात्मा । कृतघ्नं हन्तीतिकृतघ्नघ्नः । देवाय दीप्यमानाय । तप्तचामीकराभाय हिरण्यवपुषे । वह्नये अग्निरूपेण हव्यवाहनाय । विश्वं जगत् कर्म कर्तव्यं यस्य तस्मै विश्वकर्मणे । सर्वजगत्कर्त्रे इत्यर्थः । लोकसाक्षिणे लोकानां जनानां अन्तर्यामि-

जगद्व्यापित्वात्सर्वः । 'सर्वंसमाप्नोषिततोसिसर्वः' इतिगीतोक्तेः । भवोद्भवेतिश्रुतिस्थपदानुवादः । मङ्गलरूपत्वाद्भवः । उद्भवः उद्गतसंसृतिः । उद्गमनंचात्रात्यन्ताभावोविवक्षितः । सचासौसच । विश्वभावनः विश्वभावोविश्वत्वं जगदभेदइतियावत् । न यस्यसविश्वभावनइतिवा ॥ १३—१५ ॥ **ती०** पूर्वायगिरये विष्णुपुराणोक्तरीत्यातत्तद्गिर्यन्तर्यामिणेइत्यर्थः । ज्योतिर्गणानांपतये ज्योतिर्गणानांमुक्तानांपतयेस्वामिने । सूर्यपर्यायनामानिसर्वाण्यपितदन्तर्यामिपर्यवसितानीतिहृदिनिधायाह—**दिनाधिपतयइत्यादि** । जयाय जयतीतिजयः अप्रतिहतपराक्रमस्तस्मै । जयन्त्यनेनभक्ताःसंसारमितिवाजयः । जयभद्राय उपासकानांरोगपापादिजयंभद्रंकल्याणंचप्रयच्छतीतिजयभद्रः । हर्यश्वाय हरिःहनुमान् अश्वःवाहनंयस्यसः । अनेनरामावतारःसूचितः । आदरातिशयेननमःपदस्यद्विरुक्तिः । सहस्राण्यंशवोजीवायस्यससहस्रांशुः । 'ममैवांशोजीवलोकेजीवभूतः' इतिस्मरणात् ॥ **ति०** जयाय ब्रह्मलोकान्तसकलजयप्रदाय जयाख्यब्रह्मद्वारपालमूर्तयेच । जयभद्राय ब्रह्मलोकादिजयप्राप्यंयद्भद्रं भूमानन्दस्तदात्मकाय । जयभद्राख्यद्वितीयद्वारपालमूर्तयेच । इमावेवशापवशतोऽवतीर्णौरावणकुंभकर्णौ । हर्यश्वोहरिदश्वपर्यायः । आदित्येतिनाम्नःप्राधान्यबोधनायतस्यद्विरुक्तिः ॥ **स०** ज्योतिर्गणानां अग्न्यादिप्रकाशकवस्तूनांपतये । अलुकूषष्ठ्याः । तेनघिसंज्ञोपपत्तिः । आक्रोशश्च सर्वसुपर्ववर्यस्यज्योतिर्गणमात्रपतित्वोक्तावितिज्ञेयं । दिनाधिपतये दिनाधिपस्यसूर्यस्य पतिः आनन्दोयस्मादितिसवा ॥ १६—१७ ॥ **ती०** उग्राय अनुपासकानामुग्ररूपाय । विविधमीरयतिप्रेरयतिप्राणिनश्चेष्टयतीतिवीरस्तस्मै । सारंशीघ्रंगच्छतीतिसारङ्गः । यद्वा सारग्राहिणे । यद्वा हंसावताराय । यद्वा सारंप्रणवःतेनप्रतिपाद्यतइतिसारङ्गः ब्रह्मेशानाच्युतेशाय ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणां ईशःस्वामी । परब्रह्मणस्तादृशत्वात् । "सृष्टिस्थित्यन्तकरिणींब्रह्मविष्णुशिवात्मिकां । ससंज्ञांयातिभगवानेकएवजनार्दनः ।" इतिस्मरणात् । सर्वभक्षाय सर्वयज्ञभोक्त्रे । सर्वसंहर्त्रेवा । 'यस्यब्रह्मचक्षत्रंचोभेभवतओदनः'इतिश्रुतेः । शत्रुसंहारा-

[ पा० ] १ घ. रश्मिभावनः. २ ख. ङ. झ. ञ. ट. पश्चिमायाद्रयेनमः. घ. पश्चिमायनमोनमः. ३ घ. हरिदश्वायतेनमः- ४ ङ. झ. ञ. ट. प्रचण्डायनमोस्तुते.

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ॥ भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥
तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ॥ कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥
तप्तचामीकराभाय वह्नये विश्वकर्मणे ॥ नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥
नाशयत्येष वै भूतं तदेव सृजति प्रभुः ॥ पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ॥ एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥
वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च ॥ यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥ २४ ॥

तया सुकृतदुष्कृतकर्मसाक्षिणे ॥ १६—२१ ॥ एवमादित्यहृदयमुपदिश्य पुनरपितत्प्रतिपाद्यदेवतांस्तौति —नाशयतीत्यादिना श्लोकत्रयेण ॥ भवतीति भूतं जगत् नाशयति । महाप्रलये पुनस्तदेव सृजति । अत्ययकालनिवृत्तौ । प्रभुः पालकः । पालकत्वमेव प्रपञ्चयति—पायतीति । पायति शोषयति । "पै शोषणे" इति धातुः । सुप्तेषु भूतेषु प्राणिषु परिनिष्ठितः अन्तर्यामित्वेन स्थितः जागर्ति । सकलयज्ञकर्तृत्वफलप्रदत्वान्याह—एष इति ॥ वेदवेद्यत्वमाह—वेदा इति ॥ सर्वकर्मसमाराध्यत्वमाह—क्रतव इति । क्रतुफलप्रदत्वमाह—क्रतूनामिति । लौकिककर्मफलप्रदत्वमाह—यानीति । तेषामिति शेषः । सर्वः सर्वात्मको रविरेव प्रभुर्नियन्ता ॥ २२—२४ ॥

र्थंउग्रायवपुषे । अनेननृसिंहावतारःसूचितः । शत्रुघ्नाय शत्रुसंहर्त्रे । जितहृषीकायेत्यर्थः । अमितात्मने अपरिमितमहिम्ने । कृतघ्नान्हन्तीतिकृतघ्नघ्नाय । देवाय स्वयंप्रकाशाय । तप्तचामीकराभाय हिरण्मयपुरुषाय । वह्नये वसूनांपावकइतिस्मरणात् । हरय इतिपाठे हरत्यशेषमज्ञानंतत्कार्यंचेतिहरिः । विश्वकर्मणे विश्वंकर्मकार्यंयस्यसः । "सर्वकर्मासर्वकामः"इतिस्मृतेः । तमोभिनिघ्नाय तूलाज्ञाननाशकाय । रुचये रोचतइतिरुचिस्तस्मै । घृणयेलोकसाक्षिणेइतिपाठे—'घृक्षरणदीप्त्योः'इतिधातोः स्वयंप्रकाशैकतानत्वात् घृणिः । लोकसाक्षिणे सर्वसाक्षिणे । 'सर्वदेवात्मकोह्येष'इत्यारभ्यघृणयेलोकसाक्षिणेइत्येतदन्ताः अष्टोत्तरशतसंख्याआदित्यहृदयतोत्रनाममन्त्रावेदितव्याः ॥ **स०** वीराय विक्रान्ताय । विंगरुडंगम्यस्थानंप्रतीरयतीतिवा विगतःईरःप्रेरकोयस्येतिवा विविधमीरयतीतिवावीरस्तस्मै । अरैःसहवर्ततइतिसारंकालचक्रं । तद्गमयतीतिसारंगः । द्वितीयायाअलुक् । लोकसारंस्वात्मानंजनान्प्रतिगमयतिज्ञापयतीतिवासारंगः । पद्मप्रबोधाय कमलविकासकाय । पद्मोगजेन्द्रस्तस्यप्रबोधोगजत्वेपिजन्मान्तरानुस्मृतिर्यस्मात् । 'हर्यर्चनानुभावेनयद्गजत्वेप्यनुस्मृतिः'इतिभागवतोक्तेः । ब्रह्मेशानाच्युतेशाय ब्रह्मेशानयोःअच्युतश्चासावीशश्च नित्याच्युतस्वामीत्यर्थः । ब्रह्माचईशश्चअनोवायुश्च नच्यवतइत्यच्युता श्रीश्चब्रह्मेशानाच्युताः । तदीशइतिवा । सर्वभक्षाय सर्वंचराचरंभक्षयतीतिसतथा । 'अत्ताचराचरग्रहणात्'इतिसूत्रात् 'सर्ववाअत्ती'तिश्रुतेश्च । सर्वाःहिंसकाः तद्भक्षायेतिवा । रुद्राय तदन्तर्गताय । रोगद्रावकायवा । 'रुजंद्रावयतेयस्माद्रुद्रस्तस्माज्जनार्दनः'इत्युक्तेः । निर्वचनत्वाद्गकारलोपः । वपुषे वंज्ञानंसद्गतिंवा असाधारण्येनन्यायेन तत्पुष्णातीतिवपुट् । तस्मै । विश्वकर्मणेव्याप्तव्यापाराय । विनागरुडेनशुवतिगच्छतीतिविशुः । विपूर्वात्सौत्राच्छुवतेरौणादिकोड्डुः । नविद्यतेकर्मबन्धकंयस्येतिवा नविद्यतेक्लिष्टंकर्मेतिवा अकर्मा । विशुश्चासावकर्माचेतिवा विश्वंकर्मयस्येतिवा । 'हरिरक्लिष्टकारित्वादकर्मा'इतिवचनात् । 'नकृतेत्वत्क्रियतेकिंचनारे'इतिश्रुतेः । **ति०** रुद्दुःखंतन्मूलौरागद्वेषौतन्मूलाज्ञानंचविद्रावयतीतिरुद्रस्तस्येदंरौद्रं अज्ञानसंहारसमर्थज्ञानाकारायेत्यर्थः । शत्रुर्देहाहंभावः । निजतत्वभगवदनुसंधानजसौख्येनतस्यशातनात्तस्यहन्ता । रिपुकृणगदादिहन्ताच । कृतघ्नघ्नाय कृतं चेतनत्वलक्षणंभगवत्कृतमुपकारंघ्नन्तिविस्मरन्तियेतेकृतघ्नाः भगवद्विमुखाअज्ञाःसंसारिणः । तान्संसारानर्थप्रापणेनहन्तिताद्दशाय ॥ १८—२१ ॥ **ति०** एषइत्युक्तार्थः । भूतंप्रपञ्चं प्रतिसुप्ति नाशयति भूतंप्राणिजातंतत्तदायुरन्तेनाशयति । स्वदिनान्तेचनाशयति । तेन । तमेवोक्तमेवोक्तभूतंजागरादावहरादौचसृजति । प्रभुः प्रकर्षेणस्वशक्तिवैभवेनसकलप्रपञ्चात्मनाभवतीतिप्रभुः । सकलप्रपञ्चस्यसाक्षादधिष्ठाताच । पायतिशोषयतिगभस्तिभिः । पायतेनमः । तपतिनाशयति । तपतेनमः । वर्षतिसृजति । वर्षतेनमः ॥ २२ ॥ एषकरणेषु सुप्तेषु उपरतेषुस्वयमनुपरतशक्तिर्नित्यचिद्रूपोजागर्ति । निजमण्डलादर्शनतःप्राणिषुसुषुप्तेषु । तदगोचरदेशस्थेस्वमण्डलेजागर्तिच । सुप्तेषुजाग्रतेनमः । भूतेषुपरिनिष्ठितः अन्तर्यामितयास्थितः । अग्नयः पञ्चेन्द्रियलक्षणाःपञ्चाग्नयः तेषुहोत्रंहोमः तत्तद्विषयानुभवरूपः । अग्निहोत्रिणां बाह्याभ्यन्तराग्निहोत्रानुष्ठातृणांप्राप्यंयत्स्वर्गापवर्गरूपंफलंतत्प्रदश्च ॥ २३ ॥ **ति०** देवाः क्रतुदेवाः 'अष्टौवसवः एकादशरुद्रा'इत्यादिक्रमेणोपदिष्टास्त्रयस्त्रिंशद्देवाः । क्रतवः सोमाद्यश्वमेधान्ताः । क्रतुफलं श्रुत्युक्तंस्वर्गादि । किंचसर्वेषुलोकेषुप्राणिषुयानिकृत्यानिक्रियास्त-

[ पा० ] १ ङ. झ. ञ. ट. सूराय. २ ङ. झ. ञ. हरयेविश्व. ३ च. छ. घृणये. क. ग. घ. रवयेलोक. ४ क. घ. ज. सृजतेपुनः. ५ ख. ङ. च. छ. झ. ञ. ट. देवाश्च.

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ॥ कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ॥ एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥
अस्मिन्क्षणे महाबाहो रावणं त्वं वधिष्यसि ॥ एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥२७॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ॥ धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ॥ त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ॥ सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३० ॥
अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ॥
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

इदानीं स्तोत्रस्य फलमाह—एनमिति ॥ कृच्छ्रेषु कष्टेषु । कान्तारेषु भयेषु दुर्गममार्गेषु । भयहेतुषु सत्सु । कश्चिदित्यधिकारिनियमाभावो दर्शितः ॥ २५–२७ ॥ एतच्छ्रुत्वेत्यादिश्लोकद्वयमेकान्वयं ॥ त्रिराचम्येत्यन्त्याचमनमाद्याचमनस्याप्युपलक्षणं । धारयामास । जप्त्वेत्यत्र आदित्यहृदयमिति शेषः ॥ २८—२९ ॥ युद्धाय युद्धं कर्तुं । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । सर्वयत्नेन सर्वप्रकारेण यत्नेन ॥ ३० ॥ प्रहृष्यमाणः प्रहृष्यन् । पुलकित इति यावत् । निशिचरपतिरिति । "तत्पुरुषे कृति बहुलं" इति सप्तम्या अलुक् । रविः आत्मानं स्तुवन्तं रामं निरीक्ष्य मुदितमनाः स्तोत्रेण संतुष्टमनाः प्रहृष्यमाणः सन् निशिचरपतेः संक्षयं विदित्वा अनुगृह्य सुरगणमध्यगतः सन् त्वर रावणवधं प्रति त्वरस्वेति वचोऽवदत् । अत्र सुरगणमध्यगत इत्यनेन युद्धदर्शनार्थं स्वमण्डलादवतीर्य रामसमीपे गगने स्थित्वा स्तोत्रफलमनुगृहीतवानित्युच्यते । ननूत्तरत्र ब्रह्मरुद्रादयः सर्वे एकवाक्यतया भवान्नारायणो देव इत्यादिना विष्णोरेव सर्वस्मात्परत्वं महता ग्रन्थेन प्रतिपादितवन्तः । अत्र सूर्यस्यैव सर्वोत्तरत्वमुच्यते कथमिदं संगच्छते । उच्यते । यथा मधुविद्यायामादित्यस्य परतया प्रतिपादनेपि तदन्तर्यामिण्येव परमात्मनि मधुविद्यायास्तात्पर्यमिति बादरायणो ब्रह्ममीमांसायामुक्तवान् । तथास्य मन्त्रस्यादित्यान्तर्यामिविषयतया सर्वमिदं संगच्छते । नारायणपरत्वं ह्युपक्रमप्रभृत्योपसंहारमविवादमिति पूर्वमेव बहुलं प्रतिपादितम् । ब्रह्मेशानाच्युतेशायेत्येतदपि मूर्तित्रयस्य परमात्मजन्यत्वादुपपद्यते । अयं च सर्गः केषुचित्कोशेषु न दृश्यते । उडारिणा न व्याख्यातश्च । आरम्भात्प्रभृति प्रबन्धप्रतिपादितनारायणपरत्वविरुद्धं चात्र प्रतिभाति सूर्यपरत्वं । अस्मिंश्चकाण्डे त्रिंशदुत्तरशतसर्गा उडारिणा गणिताः एतदन्तर्भावे एकत्रिंशदुत्तरशतसर्गास्तेन गणिता भवेयुः ॥ ३१ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

त्साधनानिचऋत्विग्यजमानसमिदाज्यपश्वादीनि । तैर्निजभक्तद्विजानांसंघटनेपरमप्रभुः परमसमर्थः । परमसमर्थायभगवतेब्रह्मणेनमः ॥ **स०** एवंपञ्चविंशत्युत्तरशतसंख्याभगवत्पूजारहस्यनाममन्त्राइतिकतकः । 'सर्वदेवात्मकोह्येषइत्यारभ्य—लोकसाक्षिणे' इत्यन्ताष्टोत्तरशतसंख्याएवादित्यहृदयस्तोत्रनाममन्त्राइतितीर्थः । कविनातुस्पष्टमिदंमुद्रणंनकृतमितिव्युत्पत्तिवितत्यायथायथंनामानिज्ञेयानिं । निरुक्तिवैचित्र्याच्चफलाधिक्यसंभवादितिमन्तव्यं ॥ २४ ॥ **ति०** एवंकथितस्यस्तोत्रस्यफलमाह—एनमिति आदित्यहृदयस्तवंकीर्तयन्नापदादिषुकश्चिदपिद्विजोनावसीदति नदुःखनिमग्नोभवति । यद्वा एनं आदित्यहृदयार्थभूतंसूर्यं । आपदादिनिमित्तेषुउक्तैर्नाममन्त्रैःविशिष्यकीर्तयन् स्तुवन् नावसीदति । अत्र आपत् अकालमृत्युः । कृच्छ्रं ज्वरादिदुःखं । भयं चोरादिनिमित्तं ॥ २५ ॥ **ति०** इदं शीघ्रसिद्धिकरंस्तोत्रं जप्त्वा हृष्टात्मा प्रातर्युद्धायागतंरावणंप्रेक्ष्यजयार्थंमनसाभगवन्तं अगमत् ध्यातवान् ॥ २९—३० ॥ इतिसप्तोत्तरशततमःसर्गः ॥ १०७ ॥

[ पा० ] १ च. छ. ज. जप्त्वात्रिः. झ. ञ. ट. जप्त्वेदं. २ झ. ञ. ट. जयार्थं.

# अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

स्वाभिमुखसमागच्छद्दशमुखरथावलोकिनादाशरथिना चोदितेनमातलिना दशमुखमुखाभिमुखतया निजरथचोदना ॥१॥ ततोनिजसमरसमालोकनकुतूहलेन गगनाङ्गणमलंकुर्वाणेसुरमुखसुजनगणे निजविजयपरपराजयसूचकनिमित्तोदयदर्शिना दाशरथिना हर्षेणसमरोद्यमनम् ॥ २ ॥

स रथं सारथिर्हृष्टः परसैन्यप्रधर्षणम् ॥ गन्धर्वनगराकारं समुच्छ्रितपताकिनम् ॥ १ ॥
युक्तं परमसंपन्नैर्वाजिभिर्हेममालिभिः ॥ युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम् ॥ २ ॥
ग्रसन्तमिव चाकाशं नादयन्तं वसुन्धराम् ॥ प्रणाशं परसैन्यानां स्वसैन्यानां प्रहर्षणम् ॥
रावणस्य रथं क्षिप्रं चोदयामास सारथिः ॥ ३ ॥
तमापतन्तं सहसा स्वनवन्तं महास्वनम् ॥ रथं राक्षसराजस्य नरराजो ददर्श ह ॥ ४ ॥
कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा ॥ [ दीप्यमानमिवाकाशे विमानं सूर्यवर्चसम् ॥ ]
तडित्पताकागहनं दर्शितेन्द्रायुधायुधम् ॥ शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् ॥ ५ ॥
तं दृष्ट्वा मेघसंकाशमापतन्तं रथं रिपोः ॥ गिरेर्वज्राभिमृष्टस्य दीर्यतः सदृशस्वनम् ॥ ६ ॥
विस्फारयन्वै वेगेन बालचन्द्रनतं धनुः ॥ उवाच मातलिं रामः सहस्राक्षस्य सारथिम् ॥ ७ ॥
मातले पश्य संरब्धमापतन्तं रथं रिपोः ॥ ८ ॥
यथापसव्यं पतता वेगेन महता पुनः ॥ समरे हन्तुमात्मानं तथा तेन कृता मतिः ॥ ९ ॥
तदप्रमादमातिष्ठन्प्रत्युद्गच्छ रथं रिपोः ॥ विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् ॥ १० ॥

अथ रावणदुर्निमित्तानि—स रथमित्यादिसार्धश्लोकत्रयमेकान्वयं ॥ अत्र द्वितीयसारथिशब्दः अनेकविशेषणव्यवधानात् पूर्वोक्ताविस्मरणाय । गन्धर्वनगराकारं गन्धर्वनगरसदृशं । तल्लक्षणमुक्तं मिहिरेण—"चित्रवर्णं चित्ररूपप्राकारगृहगोपुरम् । अलंकृतमनेकाभैर्वितानध्वजतोरणैः ॥ गन्धर्वनगरं दन्तिनृवाजिक्षययुद्धकृत् । दृश्यते चेन्महद्युद्धमन्योन्यं धरणीभुजां" इति ॥ युद्धोपकरणैः धनुःकवचादिभिः । पताकायुक्ताः ध्वजाः तैर्मालन्त इति पताकाध्वजमाली तं । "मल मल्ल धारणे" इत्यस्माण्णिनिः । ग्रसन्तमिव । स्वविस्तारेणेति भावः । प्रणाशयतीति प्रणाशं ॥१-३॥ स्वनवन्तं शब्दवन्तं । महास्वनं । प्रतिध्वनियुक्तमित्यर्थः ॥ ४ ॥ कृष्णवाजिसमायुक्तमित्यादिसार्धश्लोकत्रयमेकान्वयं ॥ रौद्रेण उग्रेण । तडित्पताकागहनं तडित्तुल्यपताकावनं । दर्शितेन्द्रायुधायुधं दर्शितानीन्द्रायुधसदृशानि आयुधानि येन तं । यद्वा दर्शितेन्द्रायुधानि स्वप्रभाविशेषविरचितेन्द्रचापान्यायुधानि यस्मिन् दृश्यन्ते तादृशं । यद्वा आयुधं धनुः दर्शितेन्द्रधनुस्तुल्यधनुष्कं । धारासारं धारासमूहमित्यर्थः । वज्राभिमृष्टस्य वज्राहतस्य । अतएव दीर्यतः भिद्यमानस्य । बालचन्द्रनतं आरोपितमौर्वीकत्वेन बालचन्द्रवन्नतं ॥ ५—७ ॥ मातले इत्यर्धमेकं वाक्यं ॥ संरब्धं वेगवन्तं ॥ ८ ॥ यथापसव्यमिति । यथा आ अपसव्यमिति छेदः । अपसव्यं अप्रदक्षिणं यथा स्यात्तथा महता वेगेन पुनः आपतता आगच्छता तेन रावणेन समरे आत्मानं हन्तुं मतिः कृता । अपसव्यतया गमनं विनाशद्योतकमित्यर्थः ॥ ९ ॥ तत् अपसव्यगमनस्य विनाशहेतुत्वात्, अप्रमादमातिष्ठन् सावधानतामवलम्बमानः । अपसव्यतां परिहरन्नित्यर्थः । रिपोः रथं प्रत्युद्गच्छ ॥ १० ॥

**ति०** परमसंपन्नैः परमैःरथवहनोचिताश्वगुणैर्जवादिभिःसंपन्नैः । **स०** परमेतिभावप्रधानं परमत्वेनसंपन्नैः उत्तमैः ॥ २ ॥ **रामानु०** पताकायुक्तश्चासौध्वजश्चपताकाध्वजः । पताकाध्वजश्चमालाश्चपताकाध्वजमालं । तदस्यास्तीतिपताकाध्वजमालीतेन । द्वितीयरथसारथिशब्दावनेकविशेषणव्यवधानात्पूर्वोक्ताविस्मरणार्थौतदनुवादकावेव । **स०** सारथिर्मातलिःयंरथंचोदयामासतंप्रति रावणस्यसारथिःरथंप्रचोदयामासेत्यन्वयेनानयोरथसारथिशब्दयोःपुनरुक्तताभीत्याऽनुवादतांगीकरणप्रयासउभयोरफलः ॥ ३ ॥

**[ पा० ]** १ ग. परमसंहृष्टैः. २ इदमर्धं. क. ख. ङ. च. झ. ट. पाठेषुदृश्यते.

अविक्लबमसंभ्रान्तमव्यग्रहृदयेक्षणम् ॥ रश्मिसंचारनियतं प्रचोदय रथं द्रुतम् ॥ ११ ॥
कामं न त्वं समाधेयः पुरन्दररथोचितः ॥ युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये ॥ १२ ॥
परितुष्टः स रामस्य तेन वाक्येन मातलिः ॥ प्रचोदयामास रथं सुरसारथिसत्तमः ॥ १३ ॥
अपसव्यं ततः कुर्वन्रावणस्य महारथम् ॥ चक्रोत्क्षिप्तेन रजसा रावणं व्यवधानयत् ॥ १४ ॥
ततः क्रुद्धो दशग्रीवस्ताम्रविस्फारितेक्षणः ॥ रथप्रतिमुखं रामं सायकैरवधूनयत् ॥ १५ ॥
धर्षणामर्षितो रामो धैर्यं रोषेण लम्भयन् ॥ जग्राह सुमहावेगमैन्द्रं युधि शरासनम् ॥
शरांश्च सुमहातेजाः सूर्यरश्मिसमप्रभान् ॥ १६ ॥
तदोपोढं महद्युद्धमन्योन्यवधकाङ्क्षिणोः ॥ परस्पराभिमुखयोर्दृप्तयोरिव सिंहयोः ॥ १७ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ समेयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ॥ १८ ॥
समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः ॥ रावणस्य विनाशाय राघवस्य जयाय च ॥ १९ ॥
ववर्ष रुधिरं देवो रावणस्य रथोपरि ॥ वाता मण्डलिनस्तीक्ष्णा ह्यपसव्यं प्रचक्रमुः ॥ २० ॥
महद्गृध्रकुलं चास्य भ्रममाणं नभःस्थले ॥ येनयेन रथो याति तेनतेन प्रधावति ॥ २१ ॥
संध्यया चावृता लङ्का जपापुष्पनिकाशया ॥ दृश्यते संप्रदीप्तेव दिवसेऽपि वसुंधरा ॥ २२ ॥
सनिर्घाता महोल्काश्च संप्रचेरुर्महास्वनाः ॥ विषादयंस्ते रक्षांसि रावणस्य तदाहिताः ॥ २३ ॥
रावणश्च यतस्तत्र संचचाल वसुंधरा ॥ रक्षसां च प्रहरतां गृहीता इव बाहवः ॥ २४ ॥
ताम्राः पीताः सिताऽश्वेताः पतिताः सूर्यरश्मयः ॥ दृश्यन्ते रावणस्याङ्गे पर्वतस्येव धातवः ॥२५॥

अविक्लबं अदीनं । असंभ्रान्तं अप्रमादं । अव्यग्रहृदयेक्षणं अव्याकुलमनोनयनं । रश्मिसंचारनियतं नियतरश्मिसंचारं । एतानि क्रियाविशेषणानि ॥ ११ ॥ न समाधेयः नोपदेष्टव्यः । अत्र हेतुः—पुरन्दररथोचित इति । अभ्यस्तपुरन्दररथ इत्यर्थः ॥ १२—१३ ॥ रावणस्य महारथमपसव्यं कुर्वन् स्वरथस्यापसव्यतां परिहरन्नित्यर्थः । चक्रोत्क्षिप्तेन रथचक्रोत्थापितेन रजसा रावणं व्यवधानयत् व्यवहितमकरोत् ॥१४॥ रथप्रतिमुखं सर्वथाभिमुखं । अवधूनयत् प्राहरत् ॥ १५ ॥ धर्षणेत्यादिसार्धश्लोकमेकं वाक्यं ॥ धैर्यं रोषेण लम्भयन् रोषेण निवृत्तधैर्यं इत्यर्थः । ऐन्द्रं मातलिनानीतं शरासनं शरांश्च जग्राहेति योजना ॥ १६ ॥ उपोढं प्रवृत्तं ॥ १७ ॥ द्वैरथं द्वाभ्यां रथाभ्यां प्रवर्तितं युद्धं ॥ १८ ॥ समुत्पेतुरिति । अत्रोत्पातानां राघवजयसूचकत्वं रावणवधद्वारा ॥ १९ ॥ देवः पर्जन्यः । मण्डलिनो वाताः वात्याः । अपसव्यं अप्रदक्षिणं । प्रचक्रमुः चेरुः ॥ २० ॥ अस्य रावणस्य रथो येन मार्गेण याति स्म तेन मार्गेण महत् गृध्रकुलं नभःस्थले भ्रममाणं सत् प्रधावति स्म । अनेन रावणस्यासन्नमरणत्वं सूचितम् । तदुक्तं शकुनार्णवे—"आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे" इति ॥२१॥ जपापुष्पनिकाशया संध्यया लङ्का आवृता । अतएव वसुंधरा लङ्कापर्यन्तभूमिः रात्रावग्निना संप्रदीप्तेव दिवसेपि संप्रदीप्ता दृश्यत इत्यर्थः ॥२२॥ सनिर्घाता महोल्काः संप्रचेरुः । ते उल्काः लिङ्गव्यत्ययः । रावणस्याहिताः प्रतिकूलाः सन्तः रक्षांसि विषादयन् व्यषादयन् ॥ २३ ॥ यतः यत्र रावणो गतः तत्र वसुंधरा संचचाल । रावणसमीप एव भूकम्पो जात इत्यर्थः । गृहीता इव बाहवः । कैश्चिद्गृहीता बाहवो यथा प्रहर्तुं न क्षमन्ते तथाभूवन्नित्यर्थः ॥ २४ ॥ सिता अश्वेताश्च सिताश्वेताः । पर्वतस्येवेति । पर्वतस्याङ्गे धातव

ति० अविक्लबलादिचतुर्गुणयुक्तंयथातथाद्रुतंरथंप्रचोदय । अविक्लबलमभीरुत्वं । असंभ्रान्तत्वंरणक्षोभादक्षुभितचित्तत्वं । अव्यग्रमश्वीयहृदयेक्षणंयत्र । रश्मिसंचारनियतं रश्मिसंचारेनैपुण्यं तत्तत्कालानुगुण्येनसंयमनमोचनव्यवस्थावत्त्वं । स० प्रचोदनक्रियान्वयद्वाराविक्लबलादीनांचतुर्णांसारथौतत्कर्तरिसंगततामन्तव्या ॥ ११ ॥ ती० ऐन्द्रंशरासनं 'इदिपरमैश्वर्ये'इतिधातोरिन्द्रः परमात्मा । तदीयंनिजायुधंजग्राहेत्यर्थः ॥ १६ ॥

[ पा० ] १ ङ. झ. रावणस्याग्रे. क. ग. ज. रावणस्याङ्के.

गृध्रैरनुगताश्चास्य वमन्त्यो ज्वलनं मुखैः ॥ प्रणेदुर्मुखमीक्षन्त्यः संरब्धमशिवं शिवाः ॥ २६ ॥
प्रतिकूलं ववौ वायू रणे पांसून्समाकिरन् ॥ तस्य राक्षसराजस्य कुर्वन्दृष्टिविलोपनम् ॥ २७ ॥
निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः ॥ दुर्विषह्यस्वना घोरा विना जलधरस्वनम् ॥ २८ ॥
दिशश्च प्रदिशः सर्वा बभूवुस्तिमिरावृताः ॥ पांसुवर्षेण महता दुर्दर्शं च नभोऽभवत् ॥ २९ ॥
कुर्वन्त्यः कलहं घोरं शारिकास्तद्रथं प्रति ॥ निपेतुः शतशस्तत्र दारुणं दारुणारुताः ॥ ३० ॥
जघनेभ्यः स्फुलिङ्गांश्च नेत्रेभ्योऽश्रूणि संततम् ॥ मुमुचुस्तस्य तुरगास्तुल्यमग्निं च वारि च ॥ ३१ ॥
एवंप्रकारा बहवः समुत्पाता भयावहाः ॥ रावणस्य विनाशाय दारुणाः संप्रजज्ञिरे ॥ ३२ ॥
रामस्यापि निमित्तानि सौम्यानि च शुभानि च ॥ बभूवुर्जयशंसीनि प्रादुर्भूतानि सर्वशः ॥ ३३ ॥
निमित्तानि च सौम्यानि राघवः स्वजयाय च ॥ दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम् ॥ ३४ ॥
ततो निरीक्ष्यात्मगतानि राघवो रणे निमित्तानि निमित्तकोविदः ॥
जगाम हर्षं च परां च निर्वृतिं चकार युद्धे ह्यधिकं च विक्रमम् ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

## नवोत्तरशततमः सर्गः ॥ १०९ ॥

रामरावणयोः समसमरः ॥ १ ॥

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा ॥ सुमहद्द्वैरथं युद्धं सर्वलोकभयावहम् ॥ १ ॥
ततो राक्षससैन्यं च हरीणां च महद्बलम् ॥ प्रगृहीतप्रहरणं निश्चेष्टं समतिष्ठत ॥ २ ॥

इवेति योजना ॥ २५ ॥ गृध्रैरनुगताः गृध्रसहिता इत्यर्थः । शिवाः गोमायवः मुखैर्ज्वलनं वमन्त्यः सत्यः अस्य रावणस्य मुखमीक्षन्त्यः । रावणाभिमुखा इत्यर्थः । संरब्धं कुपितं अशिवं अमङ्गलं च यथा भवति तथा प्रणेदुः । गृध्राणां साहित्यमात्रं नतु ज्वलनवमनादिकं ॥ २६ ॥ वायुः रणे पांसून् समाकिरन् तेन तस्य रावणस्य दृष्टिविलोपनं दृष्टिप्रतिघातं कुर्वन् प्रतिकूलं अभिमुखं ववौ ॥ २७ ॥ इन्द्राशनयः उल्काशनयः । उल्काशन्योः स्वरूपमुक्तं मिहिरेण—"उल्का शिरसि विशाला निपतन्ती वर्धते च तनुपुच्छा । अशनिः स्वनेन महता युक्ता नृगजाश्वतरुपशुमुखेषु ॥ निपतति विदारयन्ती धरातलं चक्रसंस्थाना" इति ॥ २८—२९ ॥ तद्रथं प्रति तद्रथोपरि ॥ ३० ॥ तुरगाः जघनेभ्यः स्फुलिङ्गान् नेत्रेभ्यः अश्रूणि च मुमुचुः । एवमग्निं च वारि च तुल्यं यथा भवति तथा मुमुचुः ॥ ३१—३२ ॥ एवं रावणपराजयसूचकदुर्निमित्तान्युक्तानि । इदानीं रामजयसूचकनिमित्तान्याह—रामस्यापीति ॥ सौम्यानि मनोज्ञानि । शुभानि शुभोदर्काणि । अत एव जयशंसीनि निमित्तानि प्रादुर्बभूवुः सत्तां लेभिरे । रामविषये किंचित्कारो हि सत्तालाभहेतुः ॥३३॥ जयाय निमित्तानि जयसूचकनिमित्तानीत्यर्थः ॥ ३४॥ रणे आत्मगतानि आत्मार्थं प्रादुर्भूतानि । हर्षं पुलकं निर्वृतिं सुखं च जगाम ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

द्वैरथं द्वाभ्यां रथाभ्यां प्रवृत्तं युद्धं प्रवृत्तमिति योजना ॥ १ ॥ निश्चेष्टं समतिष्ठत । युद्धाद्भुतदर्शन-

ति० परमसंहृष्टः लक्ष्मणोमातलिर्वेतिशेषः ॥ ३४ ॥ इत्यष्टोत्तरशततमःसर्गः ॥ १०८ ॥

[ पा० ] १ क. ख. ङ.—ट. न्समुत्किरन्. २ क.—ट. राघवस्स्वजयायवै. ३ च. छ. ज. सक्रूरं. घ. तत्क्रूरं. ४ ङ. झ. ट. समवर्तत.

संप्रयुद्धौ ततो दृष्ट्वा बलवन्नरराक्षसौ ॥ व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः ॥ ३ ॥
नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः ॥ सर्पन्तं प्रेक्ष्य संग्रामं नाभिजग्मुः परस्परम् ॥ ४ ॥
रक्षसां रावणं चापि वानराणां च राघवम् ॥ पश्यतां विस्मिताक्षाणां सैन्यं चित्रमिवाबभौ ॥ ५ ॥
तौ तु तत्र निमित्तानि दृष्ट्वा रावणराघवौ ॥ कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीतवत् ॥ ६ ॥
जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः ॥ धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा ॥ ७ ॥
ततः क्रोधाद्दशग्रीवः शरान्संधाय वीर्यवान् ॥ मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितम् ॥ ८ ॥
ते शरास्तमनासाद्य पुरन्दररथध्वजम् ॥ रथशक्तिं परामृश्य निपेतुर्धरणीतले ॥ ९ ॥
ततो रामोऽभिसंक्रुद्धश्चापमायम्य वीर्यवान् ॥ कृतप्रतिकृतं कर्तुं मनसा संप्रचक्रमे ॥ १० ॥
रावणध्वजमुद्दिश्य मुमोच निशितं शरम् ॥ महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा ॥ ११ ॥
[ रामश्चिक्षेप तेजस्वी केतुमुद्दिश्य सायकम् ॥ ] जगाम स महीं छित्त्वा दशग्रीवध्वजं शरः ॥
स निकृत्तोपतद्भूमौ रावणस्य रथध्वजः ॥ १२ ॥
ध्वजस्योन्मथनं दृष्ट्वा रावणः सुमहाबलः ॥ [ क्रोधजेनाग्निना सङ्ख्ये प्रदीप्त इव पावकः ॥ ]
संप्रदीप्तोऽभवत्क्रोधादमर्षात्प्रदहन्निव ॥ १३ ॥
स रोषवशमापन्नः शरवर्षं महद्वमन् ॥ रामस्य तुरगान्दीप्तैः शरैर्विव्याध रावणः ॥ १४ ॥
ते विद्धा हरयस्तत्र नास्खलन्नापि बभ्रमुः ॥ बभूवुः स्वस्थहृदयाः पद्मनालैरिवाहताः ॥ १५ ॥
तेषामसंभ्रमं दृष्ट्वा वाजिनां रावणस्तदा ॥ भूय एव सुसंक्रुद्धः शरवर्षं मुमोच ह ॥ १६ ॥
गदाश्च परिघाश्चैव चक्राणि मुसलानि च ॥ गिरिशृङ्गाणि वृक्षांश्च तथा शूलपरश्वधान् ॥ १७ ॥
मायाविहितमेतत्तु शस्त्रवर्षमपातयत् ॥ तुमुलं त्रासजननं भीमं भीमप्रतिस्वनम् ॥ १८ ॥

---

कुतूहलादिति भावः ॥ २ ॥ एतदेव विवृणोति द्वाभ्यां—संप्रयुद्धावित्यादि ॥ संप्रयुद्धौ सम्यग्योद्धुमुपक्रान्तौ । कर्मणि क्तः । बलवत् अत्यन्तं व्याक्षिप्तहृदयाः युद्धदर्शनसक्तचित्ताः ॥ ३ ॥ भुजैरित्युपलक्षणे तृतीया ॥ ४ ॥ रावणं पश्यतां विस्मिताक्षाणां विकसितनेत्राणां रक्षसां सैन्यं राघवं पश्यतां विस्मिताक्षाणां वानराणां सैन्यं च चित्रमिवाबभौ ॥ ५ ॥ निमित्तानि दुर्निमित्तानि शुभनिमित्तानिचेत्यर्थः । कृतबुद्धी निश्चितबुद्धी ॥ ६ ॥ निश्चयमेवाह—जेतव्यमिति ॥ जयोवश्यंभावीति । मर्तव्यमिति । मरणमवश्यंभावीति । आवश्यकत्वार्थे तव्यः । धृतौ धैर्यवन्तौ ॥ ७—८ ॥ रथशक्तिं रथबलं । परामृश्य प्राप्य । रथशक्तिप्रघातेन ध्वजमनासाद्य निपेतुरित्यर्थः ॥ ९ ॥ संप्रचक्रमे उद्युक्तवान् । संकल्पितवानित्यर्थः ॥ १० ॥ असह्यं दुर्दर्शमित्यर्थः ॥११॥ सः शरः ध्वजं छित्त्वा जगाम न तु केवलं जगाम ॥१२॥ क्रोधादमर्षाच्च प्रदहन्निव प्रदहन्नग्निरिव संप्रदीप्तः ज्वलितः अभवत् ॥ १३ ॥ शरवर्षं वमन् वमन्निवेत्यर्थः ॥ १४ ॥ हरयः हरितवर्णाः । इन्द्राश्वत्वादिति भावः ॥ १५—१६ ॥ गदाश्चेति । मुमोचेत्यनुषज्यते ॥ १७ ॥ धनुषा कथं गदादिमोचनमित्यत्राह—मायेति ॥ शस्त्रवर्षं गदादिवर्षं । मायाविहितं आश्चर्यकरशक्तिकृतं । तुमुलं नानाविधमित्यर्थः ॥ १८ ॥

---

ति० विस्मिताक्षाणां विस्मयपरवशेन्द्रियाणां ॥ ५ ॥ ति० निश्चयमाह—जेतव्यमिति मर्तव्यमिति । मृत्युरूपशत्रौप्रहर्तव्यमित्यर्थ इतिकतकः । स० स्ववीर्यसर्वस्वमित्यत्ररावणसंहारकारणंयावत्तावदत्रसर्वस्वपदेनरामपक्षेग्राह्यं । अन्यत्रानुपचरितोर्थः ॥७॥

[ पा० ] १ झ. तस्थुःप्रेक्ष्यचसर्वेतेनाभिजग्मुः. ङ.च. छ. ट. तस्थुः प्रेक्ष्यचर्तसर्वेनाभि. ग. घ. तस्थुःप्रेक्ष्यचसर्वेतन्नाभि. ख. ज. तस्थुःप्रेक्ष्यचसंग्रामंनाभि. २ ख. ङ. च. छ. झ. ञ. ट. माकृष्य. ३ इदमर्धं ङ. च. छ. झ. ञ. ट. पाठेषुदृश्यते. ४ च. छ. झ. ञ. ट. भित्त्वा. ५ ख. ङ. च. छ. ञ. ट. पाठेष्विदमर्धंदृश्यते. ६ ख. ङ. च. छ. झ. ञ. ट. शरवर्षंववर्षह. ७ ङ. झ. ञ. ट. तेदिव्याहरयः.

तद्वर्षमभवद्युद्धे नैकशस्त्रमयं महत् ॥ विमुच्य राघवरथं समन्ताद्वानरे बले ॥ १९ ॥
सायकैरन्तरिक्षं च चकाराशु निरन्तरम् ॥ सहस्रशस्ततो बाणानश्रान्तहृदयोद्यमः ॥
मुमोच च दशग्रीवो निःसङ्गेनान्तरात्मना ॥ २० ॥
व्यायच्छमानं तं दृष्ट्वा तत्परं रावणं रणे ॥ प्रहसन्निव काकुत्स्थः संदधे सायकाञ्शितान् ॥ २१ ॥
स मुमोच ततो [1]बाणान्रणे शतसहस्रशः ॥ तान्दृष्ट्वा रावणश्चक्रे [2]स्वशरैः खं निरन्तरम् ॥ २२ ॥
ततस्ताभ्यां [3]प्रमुक्तेन शरवर्षेण भास्वता ॥ शरबद्धमिवाभाति द्वितीयं भास्वदम्बरम् ॥
[ [4]चक्राते तौ शरौघाभ्यां निरुच्छ्वासमिवांबरम् ] ॥ २३ ॥
नानिमित्तोऽभवद्बाणो नातिभेत्ता न निष्फलः ॥ २४ ॥
अन्योन्यमभिसंहत्य निपेतुर्धरणीतले ॥ तथा विसृजतोर्बाणान्रामरावणयोर्मृधे ॥ २५ ॥
[5]प्रायुध्यतामविच्छिन्नमस्यन्तौ सव्यदक्षिणम् ॥ चक्रतुश्च शरौघैस्तौ निरुच्छ्वासमिवाम्बरम् ॥ २६ ॥
[ नान्तरं[6] ददृशे किंचित्पश्यद्भिरनिमेषणम् ॥ भूमिष्ठैः कपिरक्षोभिः खस्थैर्वा देवदानवैः ] ॥ २७ ॥
रावणस्य हयान्रामो हयान्रामस्य रावणः ॥ जघ्नतुस्तौ तथाऽन्योन्यं कृतानुकृतकारिणौ ॥ २८ ॥
एवं तौ तु सुसंक्रुद्धौ चक्रतुर्युद्धमद्भुतम् ॥ मुहूर्तमभवद्[8]युद्धं तुमुलं रोमहर्षणम् ॥ २९ ॥
प्रयुध्यमानौ समरे महाबलौ शितैः शरै रावणलक्ष्मणाग्रजौ ॥
ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे ॥ ३० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

---

नैकशस्त्रमयं अनेकशस्त्रप्रचुरं तद्वर्षं क्रोधातिशयेन प्रयुक्तं रामशरैर्निवारणाल्लक्ष्यभूतं राघवरथं विमुच्य वानरबले अभवत् । तत्रापतदित्यर्थः ॥ १९ ॥ सायकैरित्यादि सार्धश्लोक एकान्वयः ॥ ततः दशग्रीवः अश्रान्तहृदयोद्यमः अविच्छिन्नोत्साहः सन् निःसङ्गेन अव्यासक्तेन अन्तरात्मना मनसा उपलक्षितः सहस्रशो बाणान् मुमोच । सायकैरन्तरिक्षं च निरन्तरं चकार ॥ २० ॥ व्यायच्छमानं व्यायच्छन्तं । यत्नं कुर्वन्तं रणे तत्परं सक्तं । प्रहसन्निव संदधे अनायासेन संदधे ॥ २१—२२ ॥ शरवर्षेण भास्वत् अम्बरं शरबद्धं द्वितीयमम्बरमिवाभाति स्म ॥ २३ ॥ नानिमित्त इत्यर्धं ॥ अनिमित्तः लक्ष्यविशेषोद्देशरहितः । अतिभेत्ता अपेक्षितप्रमाणादधिकभेत्ता । निष्फलः लक्ष्ये पतितोपि प्रयोजनाकारी ॥ २४ ॥ तथा विसृजतोः उक्तप्रकारेण विसृजतोः । अत्र बाणा इत्यध्याहार्यं ॥ २५ ॥ अस्यन्तौ शरान् क्षिपन्तौ । इवशब्दो वाक्यालंकारे । निरुच्छ्वासं उच्छ्वासावकाशरहितं ॥ २६—२७ ॥ रावणस्येति । अत्र जघानेति वचनविपरिणामेनानुषज्यते । तौ अन्योन्यं कृतानुकृतकारिणौ कृतप्रतिक्रियाकारिणौ सन्तौ । तथा जघ्नतुः । हय इवान्यत्रापि सारथ्यादौ जघ्नतुरित्यर्थः ॥ २८—२९ ॥ प्रयुध्यमानाविति । यदा बभूवतुरित्युपस्कार्यं ॥ ३० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

---

ति० रथशक्तिं दिव्यरथवैभवं रथावयवविशेषंवापरामृश्यप्राप्यतन्महिम्ना केवलं धरणीतले पेतुः ॥ ९ ॥ ति० निस्सङ्गेन प्राणाशासङ्गरहितेन ॥ २० ॥ ति० तुमुलंरोमहर्षणं । एतदनन्तरं 'प्रयुध्यमानौसमरेमहाबलौशितैःशरैरावणलक्ष्मणाग्रजौ । ध्वजावपातेनसराक्षसाधिपोभृशंप्रचुक्रोधतदारघूत्तमे ।' इत्येकंश्लोकंप्रक्षिप्यात्रसर्गावच्छेदंकुर्वन्ति । तदयुक्तं पश्चादपितुमुलयुद्धस्यैवसत्त्वादेकप्रकरणत्वाच्च । अनवच्छेदस्यैवबहुषुपुस्तकेषुदर्शनाच्चेतिकतकः ॥ २९ ॥ इतिनवोत्तरशततमःसर्गः ॥ १०९ ॥

[ पा० ] १ च. छ. ञ. बाणाञ्शतशोथसहस्रशः. २ ख. च. ञ. विशिष्टैः. ३ ख. ङ. च. छ. ञ. ट. प्रयुक्तेन. झ. नियुक्तेन. ४ च. छ. ञ. द्वितीयमिवचांबरं. ५ इदमर्धं क. ख. च. पाठेषुदृश्यते. ६ ङ. ज. झ. ट. प्रायुध्येतां. ७ अयंश्लोकः क. ख. च. छ. पाठेषुदृश्यते. ८ ङ.—ट. युद्धमुत्तमं.

## दशोत्तरशततमः सर्गः ॥ ११० ॥

रामेण रावणस्यैकैकशिरश्छेदे पुनः पुनः शिरोन्तरप्ररोहे एकोत्तरशतवारं तावच्छिरसांछेदनम् ॥ १ ॥

तौ तदा युध्यमानौ तु समरे रामरावणौ ॥ ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥ १ ॥
अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ ॥ परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥
परस्परवधे युक्तौ घोररूपौ बभूवतुः ॥ २ ॥
मण्डलानि च वीथीश्च गतप्रत्यागतानि च ॥ दर्शयन्तौ बहुविधां [1]सूतसारथ्यजां गतिम् ॥ ३ ॥
अर्दयन्रावणं रामो राघवं चापि रावणः ॥ गतिवेगं समापन्नौ प्रवर्तननिवर्तने ॥ ४ ॥
[2]क्षिपतोः शरजालानि तयोस्तौ स्यन्दनोत्तमौ ॥ चेरतुः संयुगमहीं सासारौ [3]जलदौ यथा ॥ ५ ॥
दर्शयित्वा तथा तौ तु गतिं बहुविधां रणे ॥ परस्परस्याभिमुखौ पुनरेवावतस्थतुः ॥ ६ ॥
धुरं धुरेण रथयोर्वक्रं वक्रेण वाजिनाम् ॥ पताकाश्च पताकाभिः समेयुः स्थितयोस्तदा ॥ ७ ॥
रावणस्य ततो रामो धनुर्मुक्तैः शितैः शरैः ॥ चतुर्भिश्चतुरो [4]दीप्तैर्हयान्प्रत्यपसर्पयत् ॥ ८ ॥
स क्रोधवशमापन्नो हयानामपसर्पणे ॥ मुमोच निशितान्बाणान्राघवाय [5]निशाचरः ॥ ९ ॥
सोतिविद्धो बलवता दशग्रीवेण राघवः ॥ जगाम न विकारं च न चापि व्यथितोऽभवत् ॥ १० ॥
चिक्षेप च पुनर्बाणा[6]न्वज्रपातसमस्वनान् ॥ सारथिं वज्रहस्तस्य समुद्दिश्य [7]निशाचरः ॥ ११ ॥
मातलेस्तु महावेगाः शरीरे पतिताः शराः ॥ न सूक्ष्ममपि संमोहं व्यथां वा प्रददुर्युधि ॥ १२ ॥
तया धर्षणया क्रुद्धो मातलेर्न तथाऽऽत्मनः ॥ चकार शरजालेन राघवो विमुखं रिपुम् ॥ १३ ॥
विंशतं त्रिंशतं षष्टिं शतशोथ सहस्रशः ॥ मुमोच राघवो वीरः सायकान्स्यन्दने रिपोः ॥ १४ ॥

अथ रावणशिरश्छेदः—तौ तदेत्यादि ॥ समरे युद्धभूमौ । तदा उत्पातकाले । अन्तरात्मना अन्तःकरणेन उपलक्षितानि ॥ १ ॥ अर्दयन्तावित्यादिसार्धश्लोकद्वयमेकान्वयं ॥ अर्दयन्तौ परस्परं पीडयन्तौ । रथयोः क्रोधादिकं रथिकद्वारा । मण्डलानि मण्डलगतीः । गतप्रत्यागतानि शत्रुरथं प्रति गमनं गतं पुनः स्थानं प्रत्यागमनं प्रत्यागतं तयोरावृत्त्या बहुवचनं । एवंप्रकारेण बहुविधां सूतसारथ्यजां सूतस्य यत् सारथ्यं सारथिकर्म तज्जां । गतिं संचारं दर्शयन्तौ तयोः रथौ घोररूपौ बभूवतुः ॥ २—३ ॥ रावणमर्दयन् रामो राघवमर्दयन् रावणश्चोभौ प्रवर्तननिवर्तने तद्रूपं गतिवेगं समापन्नौ । बभूवतुरिति शेषः ॥ ४ ॥ सासारौ सजलधारौ ॥ ५ ॥ तथा गतिं पूर्वोक्तगतिभेदं ॥ ६ ॥ धुरं युगं । धुरेण । अकारान्तत्वमार्षं । स्थितयोः युद्धे गतिं विना स्थितयोः । तयोरिति शेषः ॥ ७ ॥ प्रत्यपसर्पयत् न्यवर्तयत् ॥ ८ ॥ अपसर्पणे विषये ॥९॥ विकारं वेदनासूचकमुखविकारं ॥१०॥ वज्रपातोशनिपातः ॥ ११ ॥ सूक्ष्मं अल्पं ॥ १२ ॥ यथा मातलेः तया धर्षणया क्रुद्धः तथा आत्मनो धर्षणया न क्रुद्धः । एवं क्रुद्धो रिपुं विमुखं चकार ॥ १३ ॥ विंशतमिति ॥ इकारलोपश्छान्दसः ॥१४॥

स० यौपरस्परमभिक्रुद्धौ परस्परवधेयुक्तौ समरे अर्दयन्तौरामरावणौ । तयोःस्यन्दनोत्तमावित्यन्वयः । मञ्चाःक्रोशन्तीतिवद्गौणोवाप्रयोगः । सारथ्यंतत्कर्म । सूतं सम्यक्संबद्धं चिराभ्यस्तमितियावत् ॥ २—३ ॥ ति० प्रत्यपसर्पयत् प्रत्यपसर्पणंनामात्यक्ताभिमुख्यानामेवपश्चार्धेनापसर्पणं ॥ ८ ॥ स० व्यथांनप्रददुः श्रीरामसांनिध्यात् । यत्तुनागोजिभट्टेन देवत्वेनदिव्यशक्तिमत्त्वात् अपसर्पणकालेरावणेनप्रक्षिप्तानामतिवेधासामर्थ्याच्चेतिव्याख्यातं । तत् यदा इन्द्रादीनां दशाननदत्ता वित्ता तदाकियानयं यन्तेति वृत्तेसतिसमग्ररामायणंश्रुत्वापिसीता रामस्यकिंभाविनीत्याभाणकमनुकरोति ॥ १२ ॥

[ पा० ] १ ग. ङ. च. छ. झ. ट. सूतौसारथ्यजां. २ ख.—छ. ञ. ट. क्षिपन्तौशर. ३ क.—ट. जलदाविव. ४ क. ख. घ—ट. दीप्तान्हयान्. ५ ङ. च. झ. ञ. ट. दशाननः. ६ ङ. झ. ट. न्वज्रसारसम. ७ ङ. च. झ. ञ. ट. दशाननः.

रावणोपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः ॥ गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ १५ ॥
तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् ॥ १६ ॥
गदानां मुसलानां च परिघाणां च निस्वनैः ॥ शराणां पुङ्खपातैश्च क्षुभिताः सप्त सागराः ॥१७॥
क्षुब्धानां सागराणां च पातालतलवासिनः ॥ व्यथिताः पन्नगाः सर्वे दानवाश्च सहस्रशः ॥ १८ ॥
चकम्पे मेदिनी कृत्स्ना सशैलवनकानना ॥ भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः ॥ १९ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ चिन्तामापेदिरे सर्वे सकिन्नरमहोरगाः ॥ २० ॥
स्वस्ति गोब्राह्मणेभ्यस्तु लोकास्तिष्ठन्तु शाश्वताः ॥ जयतां राघवः सङ्ख्ये रावणं राक्षसेश्वरम् ॥२१॥
एवं जपन्तोपश्यंस्ते देवाः सर्षिगणास्तदा ॥ रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ २२ ॥
गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् ॥ २३ ॥
गगनं गगनाकारं सागरः सागरोपमः ॥ रामरावणयोर्युद्धं रामरावणयोरिव ॥
एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ॥ २४ ॥
ततः क्रुद्धो महाबाहू रघूणां कीर्तिवर्धनः ॥ संधाय धनुषा रामः क्षुरमाशीविषोपमम् ॥ २५ ॥
रावणस्य शिरोच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् ॥ तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥ २६ ॥

रथस्थः रथे निश्चलतया स्थित इत्यर्थः ॥ १५ ॥ तत्प्रवृत्तमित्यर्धमेकं वाक्यं ॥ १६ ॥ निस्वनैः वेगजैरिति शेषः ॥१७॥ क्षुब्धानामिति ॥ क्षुब्धेषु सागरेष्वित्यर्थः ॥ १८–२२ ॥ गन्धर्वेति ॥ गन्धर्वाप्सरसामित्यर्धानन्तरं गगनं गगनाकारमिति श्लोकः । तदनन्तरं एवं ब्रुवन्त इत्यर्धं । गन्धर्वाप्सरसां संघाः अनूपमं अनुपमं युद्धं दृष्ट्वा गगनं गगनाकारमित्येवं ब्रुवन्तः सन्तः पुनर्ददृशुरित्यन्वयः । अनुपमत्वमेवाह—गगनमिति ॥ यथा गगनसागरयोः सदृशवस्त्वन्तराभावः तथा रामरावणयुद्धस्य सदृशं युद्धं किंचिन्नास्तीत्यर्थः । सदृशान्तरनिवृत्तिफलकोनन्वयालंकारः । रामरावणं रामरावणसंबन्धि ॥२३–२४॥ ततः क्रुद्ध इत्यादिसार्धश्लोकपञ्चकमेकं वाक्यं ॥ क्षुरं क्षुराग्रबाणं । शिरः अच्छिन्दत् अच्छिनत् । एकवचनात्तदानीं रावण एकशिरा एव युद्धमकरोदिति गम्यते । अतएव वक्ष्यति—विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषिताविल्यादिना । छिन्नमात्रं तु तच्छीर्षमिति । तच्छीर्षे छिन्ने तदानीमेवेत्यर्थः । एकशतं छिन्नं एकोत्तरशतवारं छिन्नमित्यर्थः । पुनः पुनः शिरश्छेदनं चिरतृषितशरतृष्णानिवृत्त्यर्थं । जीवितक्षये विषये, अन्तः अवधिः निश्चयो वा, न दृश्यते

**ती०** श्लोकद्वयमेकंवाक्यं । यथागगनसागरयोःसदृशवस्त्वन्तराभावाद्गगनंगगनेनैवोपमीयते सागरःसागरेणैवोपमीयते तथैवरामरावणयुद्धं रामरावणयोर्युद्धमिवाभवदित्येवंब्रुवन्तोगन्धर्वादयः रामरावणंरामरावणयोस्संबन्धितद्युद्धंददृशुरित्यन्वयार्थौ । सागरंसागरोपममितिपाठे आर्षोलिङ्गव्यत्ययः । अनन्वयश्चात्रालङ्कारः । तदुक्तंकाव्यप्रकाशिकायां 'एकस्यैवोपमानोपमेयत्वेऽनन्वयोमतः' इति । राहोःशिरइतिवदभेदेपिभेदव्यवहारः । **ति०** वचनप्रकारमाह—गन्धर्वाप्सरसामिति । अनूपममितिदीर्घआर्षः । दृष्ट्वायुद्धमनूपममित्युत्तरंसागरंचांबरप्रख्यमंबरंसागरोपमम्' इतिपाठे सागरंनैल्यवैपुल्यादिना । अंबरप्रख्यं आकाशतुल्यं इतिवक्तुं शक्यं । एवमंबरमपिसागरोपममितिशक्यं । रामरावणयोर्युद्धंतु तदतिरिक्तादृशयुद्धासंभवात्स्वतुल्यमित्येववक्तुंशक्यं । तेनानुपमत्वं फलतीत्यनन्वयोत्रालङ्कारः । पूर्वार्धेतूपमेयोपमेतिकतकः । सागरशब्देलिङ्गव्यत्ययआर्षः । अर्धर्चादित्वात्सः । गगनंगगनाकारंसागरः सागरोपमः ।' इतिपाठेऽर्धद्वयेप्यनन्वयएवेतिबोध्यं । एवंब्रुवन्तोगन्धर्वादिसंघास्तद्युद्धंददृशुः । रामरावणं तत्कर्तृकमित्यर्थः । **स०** अनूपमं दीर्घआर्षः । उ उत्कृष्टा उपमा सर्वसाम्यं । नविद्यतेउपमायस्येतिवा । सागरं तत्समूहः ॥ २३—२४ ॥ **ति०** शिरोच्छिन्दत् एकैकशइतिशेषः । सकृद्दशशिरसांछेदेतुनपुनःप्ररोहइतिकतकः । तस्यैवसदृशं यद्भूमौपतितं तस्यैवसदृशमित्यर्थः । **स०** शिरः एकवचनंजातावेकवचनमत्रोत्तरत्रच 'दशास्योविंशतिभुजःप्रगृहीतशरासनः । अदृश्यतदशग्रीवोमैनाकइवपर्वतः ।' इतीव 'तस्योत्तमाङ्गदशकंयुगपन्न्यकृन्तत् । कृत्तानितानिपुनरेवसमुत्थितानि' इत्याचार्यैरप्युक्तेः । पद्मपुराणेच 'दशग्रीवस्यचिच्छेदशिरांसि

**[ पा० ]** १ क. ख. ज. झ. प्रत्यर्पयत्. २ ङ. झ. ञ. ट. तत्प्रयुक्तंपुनर्युद्धं. ३ ङ. झ. ट. सागरंचांबरप्रख्यमंबरंसागरोपमम्. ४ क. ख. ज. रोमहर्षणं. ५ ङ. च. छ. झ. ञ. ट. क्रोधान्महाबाहुः. ६ च. छ. झ. ञ. ट. शरं.

तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः ॥ तत्क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ॥ २७ ॥
द्वितीयं रावणशिरश्छिन्नं संयति सायकैः ॥ छिन्नमात्रं तु तच्छीर्षं पुनरन्यत्स्म दृश्यते ॥ २८ ॥
तदप्यशनिसंकाशैश्छिन्नं रामेण सायकैः ॥ एवमेकशतं छिन्नं शिरसां तुल्यवर्चसाम् ॥ २९ ॥
न चैव रावणस्यान्तो दृश्यते जीवितक्षये ॥ ३० ॥
ततः सर्वास्त्रविद्वीरः कौसल्यानन्दवर्धनः ॥ मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः ॥ ३१ ॥
मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः ॥ क्रौञ्चावने विराधस्तु कबन्धो दण्डकावने ॥ ३२ ॥
[यैः साला गिरयो भग्ना वाली च क्षुभितोऽम्बुधिः ॥] त इमे सायकाः सर्वे युद्धे प्रात्ययिका मम ॥
किंनु तत्कारणं येन रावणे मन्दतेजसः ॥ ३३ ॥
इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे ॥ ववर्ष शरवर्षाणि राघवो रावणोरसि ॥ ३४ ॥
रावणोपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः ॥ गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ ३५ ॥
तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् ॥ अन्तरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि ॥ ३६ ॥
देवदानवयक्षाणां पिशाचोरगरक्षसाम् ॥ पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥ ३७ ॥
नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् ॥ रामरावणयोर्युद्धं विराममुपगच्छति ॥ ३८ ॥

नादृश्यत ॥ २५—३१ ॥ मारीच इत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ क्रौञ्चावने कबन्धः । दण्डकावने विराध इत्यन्वयः । प्रात्ययिकाः विश्वस्ताः । त इमे रावणे विषये मन्दतेजसः अल्पशक्तिकाः । अभवन् । तत्कारणं किं नु न जानामीति शेषः ॥ ३२—३५ ॥ त्रिकूटशिखरे युध्यतोस्तयोराग्रहकृतगतिवशेन अन्तरिक्षे भूमौ च पुनश्च गिरिमूर्धनि त्रिकूटशिखरे च तन्महद्युद्धं प्रवृत्तमित्यर्थः ॥ ३६ ॥ देवदानवेति॥ " यस्य च भावेन " इति भावलक्षणे षष्ठी । सर्वरात्रं अहोरात्रमित्यर्थः । सप्तरात्रमित्यपपाठः । वक्ष्यमाणदिनसंख्याविरोधात् । यद्वा सर्वरात्रमित्यपपाठः। सप्तरात्रमित्येव सम्यक्पाठः । फाल्गुनचतुर्दश्यां हनुमता लङ्कादाहः। पौर्णमास्यां रामस्य समुद्रतीरप्राप्तिः। प्रथमाद्वितीयातृतीयासु दर्भशयनं । अष्टम्यां सुवेलारोहणं । नवम्यां युद्धारम्भ इति सप्तरात्रं रामरावणयुद्धमिति । इदं च इतस्तु नवमेह्नीत्यत्र विस्तृतं ॥३७॥ नैवरात्रमिति ॥ "कालाध्वनोरत्यन्तसंयोगे"

रघुनन्दनः । समुत्थितानिबहुशोवरदानान्ममांबिके' इति ॥२६॥ **ति०** एवमेवशतंछिन्नमितिपाठः । तुल्यवर्चसां तुल्याकारणां । शिरसांशतं रामेणच्छिन्नं । एवंचभगवतःसर्वतोभद्रंचक्रपदशतंरामेणरावणीयशिरश्शतकमलैः पूजितमितिकतकः ॥ २९ ॥ **ति०** क्रोञ्चावटे क्रौञ्चवनसंबन्धिनिअवटे श्वभ्रे । **स०** यैरितिजातौबहुवचनं । येन । एकेषुणेतिप्रतिज्ञाकालउक्तेः । वालीचभग्नइत्यन्वयः ॥ ३२ ॥ **ति०** प्रात्ययिकाः अमोघत्वेननिश्चिताः ॥ ३३ ॥ **ति०** अन्तरिक्षेचेत्यादि । रथयोःकामगत्वात्तत्रतत्रकियत्कालंस्थितेरितिभावः ॥ ३६ ॥ **ती०** देवादीनांपश्यतांसतांसप्तरात्रंमहद्युद्धमवर्ततेतिसंबन्धः । अगस्त्यागमनात्प्रागेवसिद्धस्ययुद्धस्यायमनुवादः । अस्मिन्पाठेसप्तरात्रकृतरामरावणयुद्धस्यास्मिन्रामायणे अश्रूयमाणत्वेनानुपपन्नत्वाच्च । सर्वरात्रमवर्ततेतिपाठःसम्यक् सर्वरात्रं अहोरात्रमित्यर्थः ॥ **ति०** सर्वरात्रं जातावेकवचनं । तेनानेकाहोरात्रानित्यर्थः । वस्तुतःशवर्गेसकारस्तृतीयः । तेनत्रयउच्यन्ते । यवर्गेचवकारश्चतुर्थः । तेनचत्वारउच्यते । मिलित्वासप्तरात्रमित्यर्थः । सप्तरात्रमेवचतयोर्द्वैरथंयुद्धमितिवक्ष्यमाणपाद्मकालिकापुराणयोःस्पष्टमितिदिक् ॥ ३७ ॥

[ पा० ] १ ज. छिन्नमात्रेतुतच्छीर्षे. २ ङ. च. छ. झ. ञ. ट. पुनरेवप्रदृश्यते. ३ ङ.—ट. रामस्य. ४ ङ. झ. क्रौञ्चावटे. घ. च. छ. ज. ट. क्रौञ्चारण्ये. ५ क. ङ. च. छ. झ. ञ. ट. पाठेष्विदमर्धंदृश्यते. ६ घ. ञ. ट. सप्तरात्रमवर्तत. ७ ज. मधिगच्छति.

दशरथसुतराक्षसेन्द्रयोर्जयमनवेक्ष्य रणे स राघवस्य ॥
सुरवररथसारथिर्महात्रणगतमेनमुवाच वाक्यमाशु ॥ ३९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥

---

## एकादशोत्तरशततमः सर्गः ॥ १११ ॥

रावणस्य पूर्वपूर्वस्मिञ्शिरसिछिन्नेछिन्नेपि पुनः पुनः शिरोन्तरप्ररोहेसति मातलिसमुद्बोधितेन रामेण ब्रह्मास्त्रेण रावणहृदयविभेदनम् ॥ १ ॥ रावणेहते हर्षादिन्द्रादिभी रामरथोपरिपुष्पवर्षणम् ॥ २ ॥ सुग्रीवविभीषणादिभिर्हर्षाच्छ्रीरामाभिपूजनम् ॥ ३ ॥

अथ संसारयामास राघवं मातलिस्तदा ॥ अजानन्निव किं वीर त्वमेनमनुवर्तसे ॥ १ ॥
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ॥ विनाशकालः कथितो यः सुरैः सोद्य वर्तते ॥ २ ॥
ततः संसारितो रामस्तेन वाक्येन मातलेः ॥ जग्राह सशरं दीप्तं निश्वसन्तमिवोरगम् ॥ ३ ॥
यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ॥ ब्रह्मदत्तं महाबाणममोघं युधि वीर्यवान् ॥ ४ ॥
ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा ॥ दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ५ ॥
यस्य वाजेषु पवनः फले पावकभास्करौ ॥ शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६ ॥
जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् ॥ तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ॥ ७ ॥
सधूममिव कालाग्निं दीप्तमाशीविषं यथा ॥ परनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ॥ ८ ॥
द्वाराणां परिघाणां च गिरीणामपि भेदनम् ॥ नानारुधिरसिक्ताङ्गं मेदोदिग्धं सुदारुणम् ॥ ९ ॥

---

इति द्वितीया ॥ ३८ ॥ दशरथेति । निर्धारणे षष्ठी । दशरथसुतराक्षसेन्द्रयोः रामरावणयोर्मध्ये । राघवस्य जयमनवेक्ष्य महान् महाबुद्धिरित्यर्थः । सुरवररथसारथिः एनं रामं उवाच ॥३९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने दशोत्तरशततमःसर्गः ॥११०॥

अथ रावणवधः—अथ संस्मारयामासेत्यादिश्लोकद्वयमेकान्वयं ॥ अजानन्निव ब्रह्मास्त्रमजानन्निव एनं रावणं अनुवर्तसे अस्त्रस्य प्रत्यस्त्रप्रयोगमात्रं करोषि । विनाशकालः मानुषेण वध इत्युक्तः कालः ॥ १—२ ॥ ततः संस्मारित इत्याद्येकादश श्लोका एकान्वयाः ॥ ३—४ ॥ प्रथमं पूर्वं दण्डकारण्ये । ब्रह्मदत्तमित्येतद्विवृणोति—ब्रह्मणेत्यादिना ॥ ५ ॥ यस्य वाजेष्विति । पवनादीनामधिदेवतात्वेनावस्थानं । फले शल्ये । तेजसा सारांशेन कृतं ॥ ६—८ ॥ द्वाराणां रिपुगोपुराणां । नानारुधिरेति वध्यासुरभेदात् ।

---

**ति०** तयोर्मध्येराघवस्यजयमनवेक्ष्याऽदृष्ट्वासुरवरस्यसारथिरिति । रणेरतोरणरतः । रणरतश्चासौरामश्च ॥ ३९ ॥ इतिदशोत्तरशततमःसर्गः ॥ ११० ॥

**स०** संस्मारयामास रावणस्यब्रह्मास्त्रवध्यतामितिशेषः । अजानन्निवेत्यनेन रामस्यसार्वज्ञ्यंसूचयति ॥ १ ॥ **ति०** अस्यबाणस्य ब्रह्मानुग्रहवैशिष्ट्यमाह—यस्येति । वाजेषु वेगसाधनपक्षेषु । तत्रतत्रपवनादीनामधिदेवतात्वेनावस्थानंबोध्यं । शरीरं मध्यभागः । आकाशमयं आसमन्तात्काशतेप्रकाशतेइत्याकाशोब्रह्माभगवान् भूताकाशोवा । तेनव्याप्तिसामर्थ्यं । पवनवत्त्वेनगतिसामर्थ्यं । पावकादिमत्त्वेनदुस्सहत्वं । तर्हिलघुःस्यात्तत्राह—**गौरवे इति** ॥ ६ ॥ **रामानु०** द्वाराणां पुरद्वाराणां गोपुराणामितियावत् ॥

**[ पा० ]** १ क. ख. च.—ञ. राक्षसेन्द्रयोस्तयोर्जयं. २ ज. रणेपराजयंच. ३ क.—ट. मेहात्मारणरतराममुवाच. ४ ख. च. छ. ञ. विनाशःकथितोरामसुरैःसोद्यप्रवर्तते. ५ ङ. झ. ट. यंतस्मै. ६ ज. मादाय. ७ क. ख. ङ. च. झ. ञ. ट. माशीविषोपमं. ८ झ. नरनागाश्व. ख. ङ. छ. ञ. ट. रथनागाश्व. ९ ग. ङ. च. छ. झ. ञ. ट. दिग्धाङ्गं.

वज्रसारं महानादं नानासमितिदारणम् ॥ सर्ववित्रासनं भीमं श्वसन्तमिव पन्नगम् ॥ १० ॥
कङ्कगृध्रबलानां च गोमायुगणरक्षसाम् ॥ नित्यं भक्ष्यप्रदं युद्धे यमरूपं भयावहम् ॥ ११ ॥
नन्दनं वानरेन्द्राणां रक्षसामवसादनम् ॥ वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥ १२ ॥
तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् ॥ द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥ १३ ॥
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ॥ वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥ १४ ॥
तस्मिन्संधीयमाने तु राघवेण शरोत्तमे ॥ सर्वभूतानि वित्रेसुश्चचाल च वसुंधरा ॥ १५ ॥
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् ॥ चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥ १६ ॥
स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः ॥ कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥ १७ ॥
स विसृष्टो महावेगः शरीरान्तकरः शरः ॥ बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥ १८ ॥
रुधिराक्तः स वेगेन जीवितान्तकरः शरः ॥ रावणस्य हरन्प्राणान्विवेश धरणीतलम् ॥ १९ ॥
स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः ॥ कृतकर्मा निभृतवत्स्वतूणीं पुनरागमत् ॥ २० ॥
तस्य हस्ताद्धतस्याशु कार्मुकं तत्ससायकम् ॥ निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ २१ ॥
गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः ॥ पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २२ ॥
तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः ॥ हतनाथा भयत्रस्ताः सर्वतः संप्रदुद्रुवुः ॥ २३ ॥
नर्दन्तश्चाभिपेतुस्तान्वानरा द्रुमयोधिनः ॥ [ दशग्रीववधं दृष्ट्वा सर्वलोकप्रियं प्रियम् ॥ २४ ॥]
दशग्रीववधं दृष्ट्वा विजयं राघवस्य च ॥ अर्दिता वानरैर्हृष्टैर्लङ्कामभ्यपतन्भयात् ॥
गताश्रयत्वात्करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २५ ॥
ततो विनेदुः संहृष्टा वानरा जितकाशिनः ॥ वदन्तो राघवजयं रावणस्य च तद्वधम् ॥ २६ ॥
अथान्तरिक्षे व्यनदत्सौम्यस्त्रिदशदुन्दुभिः ॥ दिव्यगन्धवहस्तत्र मारुतः ससुखो ववौ ॥ २७ ॥
निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि ॥ किरन्ती राघवरथं दुरवापा मनोरमा ॥ २८ ॥
राघवस्तवसंयुक्ता गगनेऽपि च शुश्रुवे ॥ साधुसाध्विति वागग्र्या दैवतानां महात्मनाम् ॥ २९ ॥

---

मेदः मांसविशेषः ॥ ९ ॥ वज्रसारं वज्रतुल्यदार्ढ्यं । नानासमितिदारणं कपटयुद्धस्यापि निवर्तकं । सर्ववित्रासनत्वे हेतुः—भीममिति । दीप्तं श्वसन्तमिति भेदादुपमानभेदः ॥१०—११॥ बलाः गृध्रविशेषाः । रक्षसां पिशाचसहचारिणां । यमरूपं यमतुल्यं यथा भवति तथा भयावहमिति वित्रासनाद्भेदः । गरुत्मतः वाजैः पत्रैः । वाजितं संजातपत्रं । गरुडपत्रकृतपत्रमित्यर्थः ॥ १२ ॥ लोकानां मध्ये उत्तमेषुं प्रहर्षकरमात्मन इत्यन्तस्य जग्राहेत्यनेन संबन्धः ॥ १३ ॥ ततः ग्रहणानन्तरं तं इषुं संदधे ॥ १४—१५ ॥ रावणाय चिक्षेपेत्यन्वयः ॥ १६ ॥ वज्रिबाहुविसर्जितो वज्र इवेत्यन्वयः ॥ १७—१९ ॥ निभृतवत् विनीतवत् ॥ २० ॥ प्राणैः सह जीवितात् प्राणधारणयत्नात् भ्रश्यमानस्य तस्य हस्तात् ससायकं कार्मुकं पपात ॥ २१—२३ ॥ नर्दन्तश्चेत्यर्धमेकं वाक्यं ॥२४॥ दशग्रीवेत्यादिसार्धश्लोक एकान्वयः ॥ मुखैः उपलक्षिताः । राक्षसा इति शेषः ॥ २५ ॥ तद्वधं तं वधं ॥ २६—२८ ॥ राघवस्तवसंयुक्ता वा-

---

परिवाणामित्येतत्सर्वायुधानामप्युपलक्षणं ॥ ९ ॥ ति० नानासमितिदारणमित्यन्वर्थनाम भगवत्कृतरामबाणस्य ॥ १० ॥ ति० इक्ष्वाकूरामः । तत्पक्षाणांभयनाशनं । तमुत्तमेषुमभिमन्त्र्येत्यनेनान्वयः ॥ १३ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. गृध्रबकानांच. २ ध. यमरूपं. ३ ङ. झ. ट. संत्रेसुश्चचाल. ४ ज. महाघोरः. ५ क. ङ. च. छ. झ. ञ. ट. पुनराविशत्. ६ ङ. झ. चापिसायकं. ट. तस्यसायकं. ७ इदमर्धं घ. पाठेदृश्यते. ८ क. ङ. च. छ. झ. ञ. ट. हताश्रयत्वात्. ख. गताश्रयारात्रिचराबाष्प. ९ ख. च. छ. ञ. व्यनदद्घोषवान्देवदुन्दुभिः. १० ख. घ. ङ. झ. ञ. ट. सुसुखोववौ. ज. सुसुखंववौ. ११ ग. ङ. च. छ. झ. ञ. ट. मनोहरा.

आविवेश [1]महाहर्षो देवानां चारणैः सह ॥ रावणे निहते रौद्रे सर्व[2]लोकभयंकरे ॥ ३० ॥
ततः सकामं सुग्रीव[3]मङ्गदं च महाबलम् ॥ चकार राघवः प्रीतो[4] हत्वा राक्षसपुङ्गवम् ॥ ३१ ॥

ततः प्रजग्मुः प्रशमं मरुद्गणा दिशः प्रसेदुर्विमलं नभोऽभवत् ॥
मही चकम्पे [5]न हि मारुतो ववौ स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३२ ॥
ततस्तु [6]सुग्रीवविभीषणादयः सुहृद्विशेषाः सहलक्ष्मणास्तदा ॥
समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं [7]विधिना ह्यपूजयन् ॥ ३३ ॥
स तु निहतरिपुः [8]स्थिरप्रतिज्ञः स्वजनबलाभिवृतो [9]रणे रराज ॥
रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो [10]यथेन्द्रः ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

गित्यन्वयः ॥ २९ ॥ चारणैःसह चारणैः सहितान् देवानित्यर्थः ॥ ३० ॥ तत इति । सुग्रीववद्युवराजत्वेन प्रत्युपकारायाङ्गदेनापि रावणवधस्य काङ्क्षितत्वात्सकामत्वं ॥ ३१ ॥ प्रशमं प्रसादं । मरुद्गणाः देवगणाः । मही न चकम्पे महीकम्पाभावस्य शुभसूचकत्वादित्याहुः । रावणवधपर्यन्तं सकम्पा स्थिता मही तद्वधानन्तरं निष्कम्पाऽभवदिति चाहुः । ववौ सुखमिति शेषः ॥ ३२ ॥ सुहृद्विशेषाः जाम्बवदादयः । हिशब्दः पादपूरणे । विजयेन हृष्टा इत्यन्वयः । विधिना क्रमेण ॥ ३३—३४ ॥ फाल्गुनामावास्यायां रावणवधः । यद्वा चैत्रशुद्धप्रतिपदि शिष्टामावास्यायां प्रातःकाले रावणवधः । पूर्वं सर्वरात्रमवर्ततेत्युक्तेः ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

**ति०** महीनचकंपे मारुतोनववौ क्रूरइतिशेषः । 'महीचकंपेनहि' इतिपाठे मारुतोववौ सुखइतिशेषः । स्थिरप्रभश्चेति । अनेनाश्विनशुक्लनवम्यांयामावशेषदिनइतिबोधितं ॥ ३२ ॥ **ति०** अत्रयुद्धदिवसगणनायांकतकतीर्थौ । पूर्वंसुवेलारोहणदिने 'ततोस्तमगमत्सूर्यःसन्ध्ययाप्रतिरञ्जितः । पूर्णचन्द्रप्रदीप्ताचक्षमासमतिवर्तते' इत्युक्तेस्तद्दिनंचतुर्दशीपूर्णिमान्यतरदितिस्पष्टं । ततःकृष्णप्रतिपदियुद्धारंभः । तस्यामेवरात्रौनागपाशबन्धतद्विमोक्षौ । द्वितीयायांधूम्राक्षवधः । तृतीयायांवज्रदंष्ट्रस्य । चतुर्थ्यामकंपनस्य । पञ्चम्यांप्रहस्तस्य । षष्ठ्यांरावणभङ्गः । सप्तम्यांकुंभकर्णवधः । अष्टम्यामतिकायादेः । नवम्यामिन्द्रजितोब्रह्मास्त्रप्रयोगः । दशम्यां दिवानिकुंभवधः । तद्रात्रौमकराक्षवधः । एकादश्यादित्रयोदश्यन्तदिनत्रयेणेन्द्रजिद्वधः । चतुर्दश्यांमूलबलवधः । अमायांरावणयुद्धारंभतद्वधावितिपञ्चदशदिनानिसर्वयुद्धमिति । अत्रेदंवक्तव्यं—केयंकृष्णप्रतिपन्माघकृष्णस्यवाचैत्रकृष्णस्यवा । नाद्यः । चैत्रेपुष्यनक्षत्रेऽयोध्यातोवनंप्रतिरामस्यप्रस्थानमितिस्पष्टमयोध्याकाण्डे । चैत्रेपुष्यश्चशुक्लपक्षएव । तत्रापिनवम्यादिदिनत्रयएवेति स्पष्टमेवज्योतिषादौ । तत्रनवमी रिक्तात्वादभिषेकायोग्या । दशम्येवतुपूर्णात्वाद्योग्या । एवंच चैत्रशुक्लदशम्यांप्रस्थानं । तत्रमाघकृष्णामायांयुद्धसमाप्तौतदुत्तरपञ्चम्यांभरद्वाजाश्रमागमनं । 'पूर्णेचतुर्दशेवर्षेपञ्चम्यांलक्ष्मणाग्रजः । भरद्वाजाश्रमंप्राप्यववन्देनियतोमुनिम्' इतिवक्ष्यमाणत्वात् । तत्रचनचतुर्दशवर्षसमाप्तिरितिभगवतःप्रतिज्ञाहानिः । 'पूर्णेचतुर्दशेवर्षे' इत्युक्तेरसंगतिश्च । युद्धोत्तरंतावत्कालंलङ्कायामवस्थानस्यालाभाच्च । चैत्रशुक्लपञ्चम्यांतत्रागमनेपिपञ्चदिनन्यूनतैवेतितद्धानिस्तदवस्थैव । तदुत्तरद्वितीयदिन एवायोध्याप्रवेशस्यलभात् अमान्तमानेन चैत्रकृष्णोत्तरपञ्चम्यांतदाश्रमगतावपि चतुर्दशवर्षतोबहुदिनाधिक्येन चतुर्दशवर्षसमाप्तिदिनेअयोध्यानागमेमयाप्राणादेयाइतिभरतप्रतिज्ञाहानिः । साचप्रतिज्ञाचित्रकूटेरामसंनिधावित्ययोध्याकाण्डान्तेस्पष्टम् । एतेन चैत्रकृष्णप्रतिपदियुद्धारंभः । तच्छुक्लप्रतिपदिरावणसंस्कारइतितीर्थोक्तश्चैत्रकृष्णस्येत्यन्त्योपिपरास्तः । पूर्णिमान्तमानेनतिथिबद्धद्वादशमासैर्वर्षगणनेपञ्चदिनानांन्यूनत्वात् । अमान्तमानेनचैत्रकृष्णग्रहणेबहुदिनाधिक्यं । सावनमानेनषष्ट्युत्तरत्रिशतदिनैर्वर्षगणनेतुतिथिबद्धवर्षात्तत्रषड्दिनाधिक्येनचतुर्दशवर्षाणां चतुरशीत्यहोरात्रवृद्ध्याबहुदिनन्यूनतैव । किंचमहाभारतेयुधिष्ठिरवनवासेत्रयोदशवर्षमितेकिञ्चित्कालादर्वागेवतेषांप्राकट्येदुर्योधनेनतदसमाप्तावेषांप्राकट्येनपुनस्तावत्पर्यन्तमेतैर्वनवासःकर्तव्योभविष्य-

**[ पा० ]** १ क.—ट. महान्हर्षो. २ ख. ङ. च. छ. झ. ञ. ट. भयावहे. ३ क. ख. ङ. झ. ट. मङ्गदंचविभीषणं. ४ ग. श्रीमान्हत्वा. ५ झ. नच. ६ ङ. च. छ. झ. ञ. ट. सुग्रीवविभीषणाङ्गदाः. ७ ख.—ट. विधिनाभ्यपूजयन्. ८ ख. च. छ. ञ. कृतप्रतिज्ञः. ९ ङ. झ. ट. रणेबभूव. १० झ. महेन्द्रः.

तीतिभीष्मंप्रत्युक्तेभीष्मवाक्यंविराटपर्वणि—'पञ्चमेपञ्चमेवर्षेद्वौमासावुपजायतः । एषामप्यधिकामासाः'पञ्चचद्वादशक्षपाः । त्रयोदशानांवर्षाणामितिमेधीयतेमतिः । सर्वंयथावच्चरितंयद्यदेभिःप्रतिश्रुतम् । एवमेतद्ध्रुवंज्ञात्वाततोबीभत्सुरागतः । सर्वेचैवमहात्मानः सर्वेधर्मार्थकोविदाः । येषांयुधिष्ठिरोराजाकस्माद्धर्मेऽपराध्नुयुः ।' इति । एवंचेदशव्यवहारेतिथिबद्धद्वादशमासैरेववर्षगणनाधिकमासगणनाचोचितैव । एवंचाधिकमासगणनायांधर्माहानौन्याय्यत्वेचस्थितेकस्माद्रामस्तानुपेक्षेत भरतोवातान्नगणयेत् । एवंचामान्तमानेन चतुर्दशी । याऽऽश्विनकृष्णेपूर्णिमान्तमानेनकार्तिककृष्णेषष्ठ्यांतत्समाप्तिरित्यायाति । अन्यथाचैत्रशुक्लदशम्यामारब्धस्यवनवासस्यषष्ठ्यांचतुर्दशवर्षसमाप्तिर्नकथमप्युपपद्यते । तद्गणनेत्वेकादशदिनन्यूनषण्मासानांचतुर्दशवर्षेषुवृद्धावुपपद्यत एवसा । तस्माद्वादशदसमाप्त्युत्तरंत्रयोदशेकिञ्चिद्व्यतीतेअरण्यकाण्डोक्तास्मद्रीत्याफाल्गुनाष्टम्यांरावणकृतसीतापहारः । ततश्चतुर्दशेकिञ्चिद्व्यतीतेरामस्यलङ्कासमीपगनमं । 'वर्ततेदशमोमासोद्वौतुशेषौप्लवङ्गम' इतिसीतोक्तिःसावनमानेनस्वहरणदिनतःकालगणनया । तत्र 'पूर्णचन्द्रप्रदीप्ताचे'तिरामोक्त्यापौषशुक्लचतुर्दश्यांपूर्णिमायांवात्रिकूटशिखरप्राप्तीरामस्य । किंचहनूमतोलङ्काप्रवेशोत्तरंसीतादर्शनकाले 'हिमव्यपायेनचशीतरश्मिरभ्युत्थितोनैकसहस्ररश्मिः'इतिवाक्येन 'द्वौमासौरक्षितव्यौमेयोऽवधिस्तेमयाकृतः' इतिरावणवाक्येन मार्गशुक्लदशम्युत्तरंहनुमतोलङ्काप्रवेशोदिनद्वयान्तरेलभ्यतइतिनिरूपितंसुन्दरकाण्डे । ततोमार्गकृष्णेऽष्टम्यांराघवप्रस्थानस्यान्यत्रोक्तत्वेनपौषपूर्णिमात्वमेवोचितंतत्प्राप्तिदिनस्य । ततोदशपञ्चदिनानिसेनानिवेशदूतप्रेषणादिनागतानि । ततोयुद्धारंभः तत्रतदारभ्य भाद्रश्रावणोभयामान्तंलङ्कापुराद्बहिःसेनयोःसंकुलंयुद्धं । ततोबहुराक्षसक्षयेणभीताराक्षसालङ्कांप्रविष्टाइतितद्दिनेऽवहारः । तदुत्तरप्रतिपदिरात्राविन्द्रजित्कृतशरबन्धइत्यादि । अतएवशरबद्धराघवदर्शनकालेसीतावाक्यं—'तीर्त्वासागरमक्षोभ्यंभ्रातरौगोष्पदेहतौ'इति । अनेनबहुदिनयुद्धेनबहुषुराक्षसेषुक्षयितेषुकतिपययूथपरूपेऽत्यल्पावशिष्टेसैन्येतयोःशरबन्धइतिलभ्यते । तथा 'अयंतेसुमहान्कालः शयानस्यमहाबल'इतिकुंभकर्णंप्रतिरावणोक्त्यासांप्रतंतन्निद्रायाःषण्मासाधिकत्वप्रतीतेरप्येवमेवोचितम् । निरूपितंचैतत्प्राक्सेतुबन्धादिवृत्तान्तंत्वंनजानीषइतिकुंभकर्णप्रतिरावणोक्त्यापूर्वमन्त्रकरणोत्तरंमध्येजागरणाभावस्यप्रतीतेः । किंचशरबन्धदिनंनकृष्णप्रतिपत् । तस्याःपूर्णिमोत्तरत्वेनसंपूर्णरात्रौचन्द्रसत्तया 'तस्मिंस्तमसिदारुणे'इत्याद्युक्तेरसंगत्यापत्तेः । अतःसाशुक्लप्रतिपद्वाच्या । एवंचामान्तपक्षमात्रंयुद्धमित्यस्यात्यन्तमसङ्गत्यापत्तिः । यत्तु—अमायामेवरावणवधइति तत्तुनयुक्तं । इन्द्रजिद्वधोत्तरं 'अभ्युत्थानंत्वमद्यैवकृष्णपक्षचतुर्दशीम् । कृत्वानिर्याह्यमावास्यांविजयायबलैर्वृतः' इतिरावणंप्रतिसुपार्श्वस्योक्त्याचतुर्दश्यांरावणप्रेषितबलवधोत्तरममायांनिर्गतरावणेनरामलक्ष्मणयोर्युद्धेरात्रौलक्ष्मणस्यशक्तिघातोत्तरंरावणलङ्काप्रवेशस्योक्ततयाततोलक्ष्मणचिकित्सोत्तरंपुनारामरावणयुद्धस्यवाल्मीकिनैवस्पष्टमुक्ततयातदसंभवात् । किंचादित्यहृदयस्य 'आदित्यंप्रेक्ष्यजप्त्वेदंपरंहर्षमवाप्तवान्'इत्यनेनसूर्यदर्शनोत्तरंजपस्योक्ततयारावणमरणोत्तरं 'स्थिरप्रभश्चाप्यभवद्दिवाकरः'इत्युक्त्यादिवातद्वधप्रतीत्याचचिरकालयुद्धोत्तरंलक्ष्मणेशक्तिघातस्य तदर्थमोषधिपर्वतानयनस्यचोक्तत्वेनामारात्रौशक्तिघातप्रतीत्यारणाद्रावणापगमस्यप्रतीत्याचतद्विरोधात् । तथापाद्मे—'ततोजज्ञेमहायुद्धंसंकुलंकपिरक्षसाम् । मध्याह्नेप्रथमंयुद्धंप्रारब्धंप्रतिपद्यभूत् । प्रतिपदि शुक्लप्रतिपदीत्यर्थः । उक्तयुक्तेः 'ततोनिशिसमागम्यमायावीशक्रजिद्बली । बबन्धनागपाशैस्तौराघवौचहरिव्रजान्' । ततः चिरकालासंकुलयुद्धोत्तरं । अन्यथातस्यांनिशीत्येववदेत् । अग्रेद्वितीयेऽह्निषष्ठ्यामितिचोक्त्यादारुणेतमसीतिरामायणोक्त्याचभाद्रश्रावणोभयोत्तरप्रतिपद्येतदितिबोध्यं । 'वैनतेयस्तदाभ्येत्यतानिचास्त्राण्यमोचयत् । द्वितीयेऽहनिधूम्राक्षंहनुमान्निजघानवै । तृतीयेऽह्निवज्रदंष्ट्रंखड्गाच्चिच्छेदचाङ्गदः । जघानहनुमान्भूयश्चतुर्थेऽहन्यकंपनम् । प्रहस्तंपञ्चमीतिथ्यांनीलश्चिच्छेदमूर्धनि । रावणःपरिभूतोऽभूत्षष्ठ्यांरामेणधन्विना । अथलङ्केश्वरःखिन्नःकुंभकर्णंसहोदरम् । शैलमुद्गरघाताश्वधावनाद्यैरबोधयत् । जघानतंकुंभकर्णंरामःसप्तमवासरे'' । इदंबोधनंदिनद्वयेन । तंबोधितंकुंभकर्णंसप्तमवासरे बोधनोत्तरंसप्तमवासरेइत्यर्थः । यत्तुबोधनंषष्ठ्यांरात्रौ सप्तम्यांचैतद्वधइति । तन्न । तदुत्थापनेउक्तस्यातिप्रयासस्यरात्रिमात्रेणासंभवात् । रावणमन्दिरगमनकालेसूर्यप्रभयारावणमन्दिरस्यातिभास्वरत्ववर्णनेनमन्त्रादिनासप्तम्यांयुद्धासंभवात् इन्द्रजितो दिनत्रयेणवधोस्ययामषट्केनेत्यस्यासंगतत्वाच्च । एवंचभाद्रपूर्णिमायामेतद्वधः । ''जघानलक्ष्मणोन्येद्युरतिकायंदशास्यजम् । बबन्धान्येद्युरिन्द्रारिर्ब्रह्मास्त्रेणनृपौकपीन् । हनूमतासमानीतोमहौषधमहीधरः । तस्यानिलस्पर्शवशात्सर्वेएतेसमुत्थिताः । अन्येद्युःकपिराट्कुंभनिकुंभवायुजोऽवधीत् । तस्यांनिशिरघुश्रेष्ठोजघानमकरेक्षणम् । मायासीतावधंचक्रेशक्रजिद्रणमूर्धनि । तेनखिन्नोऽभवद्राम आश्वस्तोलक्ष्मणेनसः । त्रयोदशाहेसौमित्रिस्त्रिदिनंयोधयन्बली । जघानशक्रजेतांररामध्यानेनहेतुना'' अन्येद्युः अन्येषुदिवसेषु । अत्रातिकायग्रहणंत्रिशिरोदेवान्तकनरान्तकमहोदरमहापार्श्वोपलक्षणं । लक्ष्मणग्रहणमङ्गदहनूमतोरप्युपलक्षणम् । एवंषड्भिर्दिनैः षण्णांवधः। पूर्वक्रमेणैवतद्वधोक्तेः। अन्येद्युः सप्तम्यां । पर्वतानयनमष्टम्यां । अन्येद्युर्नवम्यां तस्यांनिशि नवमीरात्रौ । तदन्तेमायासीतावधः । ततोदशमीचतुर्थयाममारभ्यत्रयोदशीचतुर्थयामपर्यन्तमिन्द्रजिद्वधः । ''ततोऽवधीन्मूलबलंचतुर्दश्यांरघूद्वहः । दर्शेथनिर्ययौराजायोद्धुंरामेणसंयुगे । चतुरङ्गबलैःसार्धमन्त्रिभिर्दशकन्धरः । छत्रचामरसंयुक्तःसर्वाभरणभूषितः । महारथगतोद्वारादुत्तरान्निर्ययौबहिः । आगतोरक्षसांराजाब्रह्मघ्नोदेवकण्टकः । योद्धुंरघुवरेणेतिशुश्रुवेकलहध्वनिः । तत्रयुद्धंसमभवद्वानराणांचरक्षसाम् । रामरावणयोश्चैवतथासौमित्रिणासह । शक्तिंचिक्षेपसंक्रुद्धःसोनुजंप्रतिरावणः । वक्षसाधारयामाससौमित्रिस्तांवियद्गताम् । तयास बाध्यमानःसन्पपातधरणीतले । हनूमताजीवितोऽभूदोषध्यानयनात्पुनः । ततःक्रुद्धोमहातेजाराघवोराक्षसान्तकः । जघानराक्षसा-

न्सर्वाञ्छरैःकालान्तकोपमैः । भयात्प्रदुद्रावरणेलङ्कांप्रतिनिशाचरः । जगद्राममयंपश्यन्निर्वेदात्स्वगृहंविशत् । निकुंभिलांततःप्राप्य होमंचक्रेजिगीषया । ध्वंसितंवानरेन्द्रैस्तदभिचारात्मकंरिपोः । पुनरुत्थायपौलस्त्योरामेणसहयोधितुं । दिव्यंस्यन्दनमारुह्यराक्षसैर्निर्ययौबहिः" इदंनिर्गमनमाश्विनशुक्लप्रतिपदि । "ततःशतमखोदिव्यंरथंहर्यश्वसंयुतम् । राघवायस्वसूतेनप्रेषयामासभक्तिमान् । तंतुमातलिनानीतमारुह्यरथसत्तमम् । स्तूयमानःसुरगणैर्युयुधेतेनरक्षसा । ततोयुद्धमभूद्धोरंरामरावणयोर्महत् । सप्ताह्निकमहोरात्रं शस्त्रास्त्रैरतिभीषणैः ।"इति । ततः मातलिरथागमनदिनोत्तरं । एवंचनवम्यांतद्वधः । तदुक्तंकालिकापुराणे—"रामस्यानुग्रहार्थं वैरावणस्यवधायच । रात्रावेवमहादेवीब्रह्मणाबोधितापुरा । ततस्तुत्यक्तनिद्रासानन्दायामाश्विनेसिते । जगामनगरींलङ्कांयत्रासीद्राघवःपुरा"आगतइतिशेषः । इदंचागमनंरात्र्यन्ते । तदेवमातलिरथागमनं । "तत्रगत्वामहादेवीतदातौरामलक्ष्मणौ । युद्धेनयोजयामासस्वयमन्तर्हितांबिका । राक्षसानांवानराणांजग्ध्वासामांसशोणितम् । रामरावणयोर्युद्धंसप्ताहंसान्ययोजयत् । व्यतीतेसप्तमेरात्रेनवम्यांरावणंततः । रामेणघातयामासमहामायाजगन्मयी । यावत्तयोःस्वयंदेवीयुद्धकेलिमुदैक्षत । तावत्तुअष्टरात्राणिसर्वैर्देवैः सुपूजिता । निहतेरावणेवीरेनवम्यांसकलैःसुरैः । विशेषपूजांदुर्गायाश्चक्रेलोकपितामहः ।" सकलैःसुरैरित्यस्यसहेतिशेषः । रामरावणबाणैस्तुयुद्धंचावेक्ष्यभीतिदम् । तृतीयायांतुलङ्कायाःपूर्वोत्तरदिशिस्थितम् । स्वातिनक्षत्रयुक्तायांभीतंसुरबलंमहत् । शान्त्यर्थं वारयामासदेवेन्द्रोवचनाद्धरेः" । शान्त्यर्थं भयशान्त्यर्थं । "ततस्तुश्रवणेनाथदशम्यांचण्डिकांशुभाम् । विसृज्यचक्रेशान्त्यर्थंबलनीराजनंहरिः ।" रिपुजनितभयशान्त्यर्थमित्यर्थः । "नीराजितबलःशक्रस्तत्ररामंसलक्ष्मणम् । संभाष्यप्रययौस्वर्गंसहदेवैःशचीपतिः । इतिवृत्तंपुराकल्पेमनोःस्वायंभुवेऽन्तरे । पुराकल्पेयथावृत्तंप्रतिकल्पंतथैवतु । प्रवर्ततेस्वयंदेवीदैत्यानांनाशनायवै ।" स्वायंभुवमन्वन्तररूपेपुराकल्पेइत्यर्थः । प्रतिकल्पं प्रतिमन्वन्तरमित्यर्थः । जलप्लवसामान्येनतत्रापिकल्पव्यवहारात् । "प्रतिकल्पंभवेद्रामोरावणश्चापिराक्षसः । तथैवजायतेयुद्धंतथैवत्रिदशागमः । एवंरामसहस्राणिरावणानांतथैवच । भवितव्यानिभूतानि तेषुदेवीप्रवर्तते । तांपूजन्तिसुराःसर्वेबलंनीराजयन्तिच । तथैवचनराःसर्वेकुर्युःपूजांतथाविधि । बलनीराजनंराजाकुर्याद्बलविवृद्धये ।" इति । इयंचब्रह्मबोधितामहादेव्यग्नौप्रविष्टासीतैवभगवच्छक्तिरूपेतिप्रतिभाति । अतएवब्रह्मवैवर्तेप्रथमेंशविभागे प्रतिकल्पंविष्णोश्चरितंकीदृशमितिनारदप्रश्नेब्रह्मवाक्यं— "सएवभगवान्नूनंप्रतिमन्वन्तरंमुने । वधायदुष्टदैत्यानांभूमिभारकृतांभुवि । कलिद्वापरयोःसंधौभविष्यतिनसंशयः । प्रतिकल्पंत्वेवमेवभविष्यतिनसंशयः ।" इति । " सहस्रकृत्वोरामोपिभविताब्रह्मणोदिने " इतिब्रह्मवैवर्तेप्रथमविभागस्थेराधांप्रतिकृष्णवाक्ये । दिनइतिजातावेकवचनं । दिनेष्वित्यर्थः । पूर्वंप्रतिमन्वन्तरमित्युक्तेः । प्रतिचतुर्युगंरामावतारइतितुनयुक्तं । चतुर्विंशतितमचतुर्युग्यांरामावतारस्याष्टाविंशतितमचतुर्युग्यांकृष्णावतारस्यहरिवंशेपुराणान्तरेचप्रसिद्धत्वादितिदिक् । आग्निवेश्यरामायणमितिप्रसिद्धग्रन्थेतु—"रामःपञ्चदशेवर्षेषड्वर्षामपिमैथिलीम् । उपयेमेत्वयोध्यायां द्वादशाब्दानुवाससः । सप्तविंशतिमेवर्षेवनवासमकल्पयत् । अष्टादशतुवर्षाणिसीतायास्तुतदाऽभवन् । त्रिरात्रमुदकाहारश्चतुर्थेऽह्निफलाशनः । पञ्चमेचित्रकूटेतुरामोवासमकारयत् । अथत्रयोदशेवर्षेपञ्चवट्यांमहामनाः । रामोविरूपयामासघोरांशूर्पणखांवने । ततोमाघेसिताष्टम्यांमुहूर्तेवृन्दसंज्ञके । राघवाभ्यांविनासीतांजहारदशकन्धरः । माघेशुक्लचतुर्दश्यामितिपाठान्तरं । मार्गशुक्लदशम्यांतुवसन्तींरावणालये । संपातिर्दशमेमासेआचख्यौवानरेषुताम् । एकादश्यांमहेन्द्राग्रात्पुप्लुवेशतयोजनम् । तद्रात्रिशेषेसीतायादर्शनंहिहनूमतः । द्वादश्यांशिंशुपावृक्षेहनूमान्पर्यवस्थितः । तस्यांनिशायांसीतायाविश्वासालापसत्कथाः । अक्षादिभिस्त्रयोदश्यांततोयुद्धमवर्तत । वधोह्यक्षकुमारस्यवनविध्वंसनंतथा । ब्रह्मास्त्रेणचतुर्दश्यांबद्धःशक्रजिता कपिः । वह्निनापुच्छयुक्तेनलङ्कायादहनंतथा । पौर्णमास्यांमहेन्द्राद्रौपुनरागमनंकपेः । मार्गासितप्रतिपदःपञ्चभिःपथिवासरैः । पुनरागम्यषष्ठेऽह्निध्वस्तंमधुवनंचतैः । सप्तम्यांप्रत्यभिज्ञानदानंशुद्धिनिवेदनं । अष्टम्युत्तरफल्गुन्यांमुहूर्तेविजयाभिधे । मध्यंप्राप्तेसहस्रांशौप्रस्थानंराघवस्यतु । वासरेसप्तमेंभोधौस्कन्धावारनिवेशनम् । पौषशुक्लप्रतिपदस्तृतीयायावदंबुधेः । उपस्थानंससैन्यस्यराघवस्यबभूवह । विभीषणश्चतुर्थ्यांवैरामेणसहसंगतः । समुद्रतरणार्थायप्रवृत्तोमन्त्रउद्गमः । प्रायोपवेशनंचक्रेरामोदिनचतुष्टयम् । समुद्रवरलाभश्चसेतूपायप्रकीर्तनम् । सेतोर्दशम्यामारंभस्त्रयोदश्यांसमापनम् । चतुर्दश्यांसुवेलाग्रेरामःसैन्यंन्यवेशयत् । पौर्णमास्याद्द्वितीयान्तंत्रिदिनैःसैन्यतारणम् । तृतीयायादशम्यन्तंमन्त्रोगुल्मनिवेशने । शुकसारणयोःसैन्यप्राप्तिरेकादशीदिने । माघेसितायांद्वादश्यांसैन्यसंख्याकृतातुवै । सारणेनकपीनांतुसारासारोपवर्णनम् । त्रयोदश्याद्यमांयावल्लङ्कायांदिवसैस्त्रिभिः । रावणःसैन्यसंख्यानंरणायोत्साहनंतथा । ययावथाङ्गदोदूत्यंमाघशुक्लादिवासरे । माघशुक्लद्वितीयादिदिनैःसप्तभिरेवतु । रक्षसांवानराणांचयुद्धमासीत्सुदारुणम् । माघशुक्लनवम्यांतुरात्राविन्द्रजितारणे।रामलक्ष्मणयोर्नागपाशैर्बन्धोबभूवह । नागपाशविमोक्षार्थंदशम्यांगरुडोभ्यगात् । अत्रावहारःकथितोदशम्यादिदिनद्वयम् । द्वादश्यामाञ्जनेयेनधूम्राक्षस्यवधःकृतः । त्रयोदश्यांतुतेनैवनिहतोकंपनोरणे । माघशुक्लचतुर्दश्यायावत्कृष्णादिवासरम् । त्रिदिनेनप्रहस्तस्यनीलेनविहितोवधः । माघासितद्वितीयायाश्चतुर्थ्यन्तंत्रिभिर्दिनैः । रामेणतुमुलेयुद्धेरावणोद्रावितोरणात् । पञ्चम्यास्त्वष्टमीयावद्रावणेनप्रबोधितः । कुंभकर्णःसमुत्तस्थावत्रयुद्धंचतुर्दिनम् । कुंभकर्णोदिनैःषड्भिर्नवम्यास्तुचतुर्दशीम् । रामेणनिहतोयुद्धेबहुवानरभक्षकः । अमावास्यादिनेशोकादवहारोबभूवह । फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तदिनैस्ततः । नरान्तकप्रभृतयोनिहताःपञ्चराक्षसाः । पञ्चम्याःसप्तमीयावदतिकायवधस्त्र्यहात् । अष्टम्याद्द्वादशीयावन्निहतौदिनपञ्चकात् ।

## द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

दुःखाद्रावणंप्रतिशोचनपूर्वकं विलपन्तंविभीषणंप्रति रामेणसमाश्वासनपूर्वकं रावणस्यौर्ध्वदैहिककरणाभ्यनुज्ञानम् ॥ १ ॥

**भ्रातरं निहतं दृष्ट्वा शयानं रामनिर्जितम् ॥ शोकवेगपरीतात्मा विललाप विभीषणः ॥ १ ॥**
**वीर विक्रान्तविख्यात विनीत नयकोविद ॥ महार्हशयनोपेत किं शेषेऽद्य हतो भुवि ॥ २ ॥**
**विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ ॥ मुकुटेनापवृत्तेन भास्कराकारवर्चसा ॥ ३ ॥**
**तदिदं वीर संप्राप्तं[1] मया पूर्वं समीरितम् ॥ काममोहपरीतस्य यत्ते[2] न रुचितं वचः ॥ ४ ॥**
**यन्न दर्पात्प्रहस्तो वा नेन्द्रजिन्नापरे जनाः ॥ न कुम्भकर्णोतिरथो नातिकायो नरान्तकः ॥**
**न स्वयं त्वममन्येथास्[3]तस्योदर्कोऽयमागतः ॥ ५ ॥**
**गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः ॥ गतः सत्त्वस्य संक्षेपः प्रस्तावानां[4] गतिर्गता ॥ ६ ॥**

अथ भ्रातृवधदर्शनेन हठात्प्रवृत्तं प्रकृतिसंबन्धकृतं शोकं सोढुमशक्नुवन्विभीषणो विलपति—भ्रातरमित्यादि ॥ शयानं शयानमिव स्थितं । शोकवेगपरीतात्मा शोकवेगेन परीतमनस्कः । वेगशब्देन हठकृतः शोक इति द्योत्यते ॥ १ ॥ विनीत विद्यासुशिक्षित । विक्षिप्येत्यस्य श्लोकस्य पूर्वश्लोकेनान्वयः । भुजावित्यनेनान्त्ययुद्धे द्विभुजस्थितिर्गम्यते । मुकुटेन उपलक्षितइति शेषः । अपवृत्तेन पतनवेगादीषच्चलितेन ॥ २—३ ॥ मया पूर्वं समीरितं यद्वचः काममोहपरीतस्य ते न रुचितं नेष्टमासीत् । तदिदं वचः संप्राप्तं त्वयानुभूतमित्यर्थः ॥ ४ ॥ यदित्यादिसार्धश्लोक एकान्वयः ॥ यत्पापकर्म प्रहस्तो दर्पात् नामन्यतेति विपरिणामेनानुषज्यते । एवं सर्वत्र योजनीयं । अतिरथ इत्यतिकायविशेषणं । अमन्येथाः अमन्यथाः । एतमार्षं । तूर्णीकृतवानसीत्यर्थः । तस्य सीताहरणरूपस्य उदर्कः फलमागतं ॥ ५ ॥ सुनीतानां नयानां । सेतुः मर्यादा । धर्मस्य विग्रहः विरोधः । यद्वा अधर्मस्येति छेदः । विग्रहः देहः । यद्वा धर्मस्य विग्रहः देहः । एषोग्निहोत्री च महातपाश्चेत्यादिना रावणस्य धार्मिकत्वकथनात् । सत्त्वस्य बलस्य संक्षेपः संग्रहः । प्रस्तावानां प्रकृष्टस्तुतीनां ।

निकुंभकुंभावूर्ध्वंतुमकराक्षश्चतुर्दिनैः । फाल्गुनस्यद्वितीयायांकृष्णेशक्रजिताजितम् । तृतीयायास्तुसप्तम्यांहरयःपञ्चवासरात् । ओषध्यानयनेव्यग्रास्तदासीदवहारकः । तत्रत्रयोदशीयावद्दिनैःषड्भिस्तुशक्रजित् । लक्ष्मणेनहतोयुद्धेविघ्नितोऽभिचरन्क्रमात् । चतुर्दश्यांदशग्रीवरणदीक्षाविधिक्रमात् । अमावास्यांययौवीरोयुद्धायदशकंधरः । चैत्रशुक्लप्रतिपदःपञ्चमीदिनपञ्चकैः । रावणस्यप्रधानानांयुध्यतामभवत्क्षयः । चैत्रषष्ठ्यष्टमीयावन्महापार्श्वादिमारणम् । चैत्रशुक्लनवाम्यांतुसौमित्रेःशक्तिभेदनम् । द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः । दशम्यामवहारोभूद्रात्रौयुद्धंनृरक्षसोः । एकादश्यांतुरामार्थेरथोमातलिसारथिः । अष्टादशदिनैरामोद्वैरथेरावणं वधीत् । द्वादश्याःशुक्लपक्षस्ययावत्कृष्णचतुर्दशीम् । माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम् । अष्टाशीतिदिनंयुद्धंमध्येपञ्चदशाहकम् । युद्धावहारंसंग्रामस्त्रिसप्ततिदिनान्यभूत् । संस्कारोरावणादीनाममावास्यादिनेऽभवत् । वैशाखादितिथौरामःसुवेलंपुनरागमत् । अभिषिक्तोद्वितीयायांलङ्काराज्येविभीषणः । सीताशुद्धिस्तृतीयायांदेवेभ्योवरलंभनम् । वैशाखस्यचतुर्थ्यांतुरामःपुष्पकमास्थितः । पूर्णेचतुर्दशेवर्षेपञ्चम्यांमाधवस्यतु । भरद्वाजाश्रमंरामःससीतःपुनरागमत् । नन्दिग्रामेतुषष्ठ्यांवैभरतेनसमागतः । सप्तम्यामभिषिक्तोसावयोध्यायांरघूत्तमः । जानकीरामसहितारावणस्यनिवेशने । मनुमासान्स्थितापक्षदशवासरसंयुते'' इति । तत्तुसर्वांशेअनिश्चितप्रामाण्यं । कालिकापुराणादिविरोधात् । इदंकल्पान्तरविषयमितिनयुक्तं । तद्विरोधादेव । तस्मात्क्रियाविरोधेपुराणेषूपसंहारएवन्याय्यः । शाखान्तरोक्ताङ्गोपसंहारवत् । यथाकुंभकर्णवधोत्ररामेणोक्तः भारतेलक्ष्मणेन । तादृशेविषये नतुकल्पभेदेनव्यवस्था । जन्मविषयएवतुहरिवंशोक्तासेतिबोध्यम् ॥ ३४ ॥ इत्येकादशोत्तरशततमःसर्गः ॥ १११ ॥

ति० सुहस्तानां वीराणां ॥ ६ ॥

[पा०] १ ङ. च. छ. झ. ञ. ट. यन्मयापूर्वमीरितं. २ ङ. झ. ञ. ट. यत्तन्नरुचितंतव. ३ ङ. झ. ञ. ट. बहुमन्येथाः. च. छ. किंतुमन्येथाः. ग. तत्तुमन्येथाः. ४ ङ. झ. ट. सुहस्तानां.

आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः ॥ चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः ॥
अस्मिन्निपतिते भूमौ वीरे शस्त्रभृतांवरे ॥ ७ ॥
किं शेषमिव लोकस्य हतवीरस्य सांप्रतम् ॥ रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु ॥ ८ ॥
धृतिप्रवालः प्रसहाग्र्यपुष्पस्तपोबलः शौर्यनिबद्धमूलः ॥
रणे महाराक्षसराजवृक्षः संमर्दितो राघवमारुतेन ॥ ९ ॥
तेजोविषाणः कुलवंशवंशः कोपप्रसादापरगात्रहस्तः ॥
इक्ष्वाकुसिंहावगृहीतदेहः सुप्तः क्षितौ रावणगन्धहस्ती ॥ १० ॥
पराक्रमोत्साहविजृम्भितार्चिर्निश्श्वासधूमः स्वबलप्रतापः ॥
प्रतापवान्संयति राक्षसाग्निर्निर्वापितो रामपयोधरेण ॥ ११ ॥
सिंहर्क्षलाङ्गूलककुद्विषाणः पराभिजिद्गन्धनगन्धहस्ती ॥
रक्षोवृषश्चापलकर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥ १२ ॥

गतिः विषयः ॥ ६ ॥ आदित्य इत्यादिसार्धश्लोक एकान्वयः ॥ अस्मिन्निपतिते आदित्यः पतित इत्याद्यभेदातिशयोक्तिः । चित्रभानुः वह्निः । "सूर्यवह्नी चित्रभानू" इत्यमरः । व्यवसायो निरुद्यमः । रावणसदृशाश्रयाभावाद्व्यवसायः उत्साहशक्तिः । निर्व्यापारोभूदित्यर्थः ॥ ७ ॥ राक्षसशार्दूले रावणे पांसुषु प्रसुप्त इव स्थिते । मृत इति यावत् । सांप्रतं हतवीरस्य लोकस्य किमिव शेषं । सर्वं शून्यमभूदित्यर्थः ॥ ८ ॥ धृतिरेव प्रवालो यस्य स तथा । धैर्यं हि वृक्षस्य पल्लववत् प्रथमफलं । प्रसहत इति प्रसहः। पचाद्यच् । भावप्रधानो निर्देशः । स एव अग्र्यपुष्पं श्रेष्ठपुष्पं यस्य स तथा । प्रसहनं हि पुष्पवत्कार्यफलस्य अव्यवहितहेतुः । तप एव बलं स्थैर्यांशो यस्य स तथा । शौर्यमेव निबद्धमूलं निश्चलमूलं यस्य स तथा । शौर्यमूलत्वात्तपःप्रभृतीनां सर्वेषां ॥ ९ ॥ तेजः पराक्रम एव विषाणो यस्य स तथा । तेजो हि विषाणवत् परमर्मभेदि । कुलवंशवंशः कुलं पितृपितामहादयः तेषां वंशः सर्गः स एव वंशः पृष्ठावयवविशेषो यस्य स तथा । "वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेपि च" इत्युभयत्रापि विश्वः । कुलेन हि वंशेनेव स्वाश्रितधारणं । कोप एवापरगात्रं शिरोव्यतिरिक्तशरीरं यस्य स तथा । प्रसाद एव हस्तो यस्य स तथा । कोपस्य बहुत्वादपरगात्रत्वेन रूपणं । इक्ष्वाकुः रामः स एव सिंहः तेन अवगृहीतदेहः रावणगन्धहस्ती रावण एव मत्तगजः क्षितौ सुप्तः । मृत इत्यर्थः ॥ १० ॥ पराक्रमोत्साहावेव विजृम्भितार्चिः विस्तृतज्वालः । निश्वास एव धूमो यस्य स तथा । स्वबलप्रतापः स्वबलोष्णः । प्रतापवान् तेजस्वी । राक्षसाग्निः रामपयोधरेण निर्वापितः ॥ ११ ॥ सिंहर्क्षा राक्षसाः ते एव लाङ्गूलककुद्विषाणानि यस्य स तथा । "सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणो मताः" इति निघण्टुः । यद्वा सिंहर्क्षं मूलानक्षत्रं तच्च राक्षसनक्षत्रं । यथाह ज्योतिषे काश्यपः— "अग्निर्मघा विशाखा च आश्लेषा शततारका । धनिष्ठा चित्रया युक्ता ज्येष्ठा मूला च राक्षसाः" इति ॥ तत्संबन्धाद्राक्षसा अपि तच्छब्देनोच्यन्ते । राक्षससमृद्धेर्गर्वहेतुत्वेन लाङ्गूलादित्वेन रूपणं । परानभिजयतीति पराभिजित् । गन्धने परोत्सादने गन्धहस्ती मुख्यः । "गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने" इति विश्वः । चापलं विषयलौल्यं तदेव

ती० प्रसहाग्र्यपुष्पः प्रसहतइतिप्रसहः । पचाद्यच् । भावप्रधानोनिर्देशः । प्रसहः प्रसहत्वं तदेवाग्र्यपुष्पंयस्यसः । प्रसवाग्र्यपुष्पइतिपाठे प्रसवः सन्तानं ॥ ९ ॥ स० पराभिजिद्गन्धनगन्धहस्ती परानभिजयन्तीतिपराभिजितः । तद्गन्धने हिंसायां गन्धहस्ती मत्तगजतुल्यः । चापलकर्णचक्षुः चापलं चञ्चलंकर्णचक्षुर्यस्यसः । कर्णयोश्चापलं अश्राव्यशूर्पणखादिप्रलपितश्रवणेनतत्रचित्तप्रणिधानं । चक्षुषोःअनवलोकनीयपरदारसौन्दर्यदर्शनं ॥ १२ ॥

[ पा० ] १ ङ. झ. गतसत्वस्य. ग. ज. ट. हतवीर्यस्य. २ क. ङ. ज. झ. प्रसभाग्र्य. ३ घ. इक्ष्वाकुसिंहेनगृहीतदेहः. ४ ङ. झ. गन्धवाहः.

वदन्तं हेतुमद्वाक्यं परिमृष्टार्थनिश्चयम् ॥ रामः शोकसमाविष्टमित्युवाच विभीषणम् ॥ १३ ॥
नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः ॥ अत्युन्नतमहोत्साहः पतितोऽयमशङ्कितः ॥ १४ ॥
नैवं विनष्टाः शोच्यन्ते क्षत्रधर्ममवस्थिताः ॥ वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे ॥ १५ ॥
येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता ॥ तस्मिन्कालसमायुक्ते न कालः परिशोचितुम् ॥१६॥
नैकान्तविजयो युद्धे भूतपूर्वः कदाचन ॥ परैर्वा हन्यते वीरः परान्वा हन्ति संयुगे ॥ १७ ॥
इयं हि पूर्वैः संदिष्टा गतिः क्षत्रियसंमता ॥ क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥१८॥
तदेवं निश्चयं दृष्ट्वा तत्त्वमास्थाय विज्वरः ॥ यदिहानन्तरं कार्यं कल्प्यं तदनुचिन्तय ॥ १९ ॥
तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः ॥ उवाच शोकसंतप्तो भ्रातुर्हितमनन्तरम् ॥ २० ॥

योऽयं विमर्देषु न भग्नपूर्वः सुरैः समेतैः सह वासवेन ॥
भवन्तमासाद्य रणे विभग्नो वेलामिवासाद्य यथा समुद्रः ॥ २१ ॥
अनेन दत्तानि सुपूजितानि भुक्ताश्च भोगा निभृताश्च भृत्याः ॥
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि ॥ २२ ॥
एषोहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्र्यवीर्यः ॥
एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥ २३ ॥

कर्णचक्षुषी यस्य स तथा । रक्षोवृषः रावणवृषभः क्षितीश्वरव्याघ्रेण रामशार्दूलेन हतः अवसन्नः मृतः ॥ १२ ॥ परिमृष्टार्थनिश्चयं कृतार्थनिश्चयं ॥ १३ ॥ अयं निश्चेष्टः निर्विक्रमः न विनष्टः अपि त्वयं समरे चण्डविक्रमः अत्युन्नतमहोत्साहः । अशङ्कितः पतितः विनष्टः ॥ १४ ॥ यदि समरे विक्रम्य नष्टः ततः किमित्यत्राह—नैवमित्यादि ॥ ये वृद्धिं परलोकवृद्धिं आशंसमानाः आकाङ्क्षमाणाः सन्तः रणाजिरे निपतन्ति । क्षत्रधर्ममवस्थिताः शूरधर्मेव्यवस्थिताः । एवं विनष्टाः ते न शोच्यन्ते ॥ १५ ॥ न केवलं समरमरणादेव न शोच्यत्वं किंतु यशःप्रत्यासक्त्यापीत्याह येनेति ॥ येन वित्रासिताः तस्मिन् रावणे कालसमायुक्ते शोचितुं न कालः नावसरः । तद्विषये शोको न युक्तः । वीरस्वर्गगमनादिति भावः ॥ १६ ॥ तथापि मरणे सति कथं न शोचितव्यमित्याशङ्क्य जयवत्पराजयोपि न शोकस्थानमित्याह—नैकान्तेति ॥ एकान्तविजयः न भूतपूर्वः इतः पूर्वं न भूतः । अनैकान्त्यमुपपादयति—परैर्वेति ॥ १७ ॥ क्षत्रधर्मपर्यालोचनेनापि न शोच्य इत्याह—इयं हीति ॥ क्षत्रियः शूरः ॥ १८ ॥ दृष्ट्वा ज्ञात्वा । तत्त्वमास्थाय परमार्थबुद्धिमवलम्ब्य । जनिमतामवश्यं मृत्युं ज्ञात्वेत्यर्थः । विज्वरः निःशोकः । यत् कार्यं कर्म । कल्प्यं अनुष्ठेयं । तदनुचिन्तय । कल्यमिति पाठे यत् कार्यं कल्यं । योग्यमित्यर्थः । "कल्यो योग्यश्च ते समाः" इति निघण्टुः ॥ १९—२० ॥ विमर्देषु समरेषु । अनेन महावीरतया सम्यक् संस्कारमर्हतीत्युक्तं ॥२१॥ धर्मशीलत्वाच्च तदर्हतीत्याह—अनेनेति ॥ दत्तानि दानानि कृतानि । सुपूजितानि गुरुदैवतानीति शेषः । निभृताः नितरां भृताः । यापितानि सफलीकृतानीत्यर्थः ॥ २२ ॥ आहिताग्न्यादित्वाच्च तदर्हतीत्याह—एषोहिताग्निरिति ॥ हिताग्निः आहिताग्निः । संधिरार्षः । वेदान्तं गच्छति जानातीति वेदान्तगः । कर्मसु चाग्र्यवीर्यः कर्मशूर इत्यर्थः । प्रेतगतस्य प्रेतत्वं गतस्य । इच्छामि । पुत्राणां विनष्टत्वेन भ्रातु-

स० यमःशङ्कितोभीतोयस्मादितिवा ॥ १४ ॥ ति० अयंसमरेनिश्चेष्टः अशक्तोभूत्वानविनष्टः । अपिचण्डविक्रमत्वादिगुणएक-एवायमशङ्कितोमृत्युशङ्कारहितएवदैवात्पतितः ॥ १५ ॥ ति० कालसमायुक्ते कालधर्मसंबद्धे । एवंदुर्गुणयुक्तस्यमरणमेवसम्यगितिभावः ॥ १६ ॥ ति० वनीपकेषुयाचकेषु । अनेनदत्तानि ॥ २२ ॥

[ पा० ] १ क.—ट. परिदृष्टार्थ. २ क.—ङ. ज.—ट. क्षत्रधर्मेव्यव. ३ क.—घ. च. छ. ञ. ट. अस्मिन्काल. ४ ङ. झ. ट. समस्तैः. ५ झ. दत्तानिवनीपकेषु. ६ क. ङ. झ. निपातितानि.

स तस्य वाक्यैः करुणैर्महात्मा संबोधितः साधु विभीषणेन ॥
आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ॥ २४ ॥
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ॥ क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

## त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

रावणान्तःपुराङ्गनाभीरणाङ्गणमेत्य तदङ्गपरिष्वङ्गेणबहुधाविलापः ॥ १ ॥

रावणं निहतं श्रुत्वा राघवेण महात्मना ॥ अन्तःपुराद्विनिष्पेतू राक्षस्यः शोककर्शिताः ॥ १ ॥
वार्यमाणाः सुबहुशो वेष्टन्त्यः क्षितिपांसुषु ॥ विमुक्तकेश्यो दुःखार्ता गावो वत्सहता इव ॥ २ ॥
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः ॥ प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥ ३ ॥
राजपुत्रेतिवादिन्यो हा नाथेति च सर्वशः ॥ परिपेतुः कबन्धाङ्कां महीं शोणितकर्दमाम् ॥ ४ ॥
ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः ॥ करेण्व इव नर्दन्त्यो विनेदुर्हतयूथपाः ॥ ५ ॥

रेवाधिकारित्वादिति भावः ॥ २३ ॥ करुणैरित्यनेन दुःखातिशयादिदानीमेवमुक्तमिति द्योत्यते । वक्ष्यति हि नाहमस्य संस्कारं करिष्यामीति । स्वर्गीयं स्वर्गाय हितं । आधानं अन्त्येष्टिसंज्ञिकं कर्म ॥ २४ ॥ वैरातिरेकात् संस्कारे मम द्वेष इति न शङ्कनीयमित्याह–मरणेति ॥ मरणानन्तरमपि वैरकरणं निष्प्रयोजनमित्याह–निर्वृत्तमिति । प्रयोजनं सीतालाभरूपं । अस्य संस्कारः यायजूकोचितसंस्कारः । क्रियतां। ममाप्येष यथा तव । तव यथा भ्राता तथा ममापि भ्राता । मद्भ्रातृभूतस्य तव भ्रातृत्वात् । त्वमस्य दोषं दृष्ट्वा न करोषि चेदहमेव करिष्यामि। भ्रातृषु येनकेनापि कर्तव्यमिति भावः । अत्र श्लोके न इति गायत्र्यक्षरं । अत्राचार्या व्याचख्युः । मरणान्तानि वैराणि ऋषिजनस्थानभ्रंशमैथिलीहरणमत्प्राणभूतजटायुविध्वंसनप्रभृतिमद्द्वेषाचरणमितः परं कर्तुं न शक्नोति हीति भावः । निर्वृत्तं नः प्रयोजनं। यदि वा रावणः स्वयमिति वदता मयास्य विषये किंचिच्छुभं कर्तव्यमिति मनसि कृतं । तदनेन 'द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्'इति वदता प्रतिहतं । तत्करणस्येदानीमवसरः संजात इति भावः । क्रियतामस्य संस्कारः । मत्कृतहितप्रतिषेधानर्हावस्था इदानीमस्य संजाता अतोयं न त्याज्यः । अतः परं यत्कर्तव्यं तत्कार्यमेव । ममाप्येष यथा तव । अयं मच्चित्तानुकूलो जातः अतो मन्मित्रभूतो भवानपि तमनुवर्तितुमर्हति । अथवा एषः तव यथा तथा ममापि । अस्य संस्कारस्तव यथा प्राप्तः तथा ममापीत्यर्थः । भवानस्य संस्कारं न करोति चेदहमेव करोमि । बन्धुषु येन केनापि कर्तव्यं खल्विदं तद्दूरे तिष्ठ अहमेव करिष्यामीत्यर्थ इति ॥२५॥
इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

अथ रावणान्तःपुरस्त्रीविलापः—रावणमित्यादिश्लोकद्वयमेकान्वयं ॥ वत्सहताः हतवत्साः ॥१—२॥ उत्तरेणेत्यादिश्लोकद्वयमेकान्वयं ॥ शोणितैः कर्दमो यस्यास्तां शोणितकर्दमां ॥ ३—४ ॥ हतयूथपा इति करेणुविशेषणं । अतएव नर्दन्त्यः करेण्व इव विने-

**ती०** तवयथा ममापितथा । ममापिस्नेहविषयइत्यर्थः ॥ अतःसंस्क्रियतां शङ्कांमाकुर्वितिभावः ॥ **स०** निर्वृत्तं निष्पन्नं । तद्वधस्यैवप्रयोजनरूपत्वात् ॥ तथामम । तवममचसौभ्रात्रादितिभावः ॥ २५ ॥ इतिद्वादशोत्तरशततमःसर्गः ॥ ११२ ॥

**ति०** गावइति । अयमत्याप्तवियोगजशोकमात्रेदृष्टान्तः ॥ २ ॥

[ पा० ] १ च. सुसंधितः. २ घ. ज. झ. दृष्ट्वा. ३ ङ. ज. झ. ट. वेष्टन्त्योरणपांसुषु. ४ क.—ट. आर्यपुत्रेति. ५ ज. ट. नरेजुर्हत.

ददृशुस्तं महावीर्यं महाकायं महाद्युतिम् ॥ रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥ ६ ॥
ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु ॥ निपेतुस्तस्य गात्रेषु च्छिन्ना वनलता इव ॥ ७ ॥
बहुमानात्परिष्वज्य काचिदेनं रुरोद ह ॥ चरणौ काचिदालिङ्ग्य काचित्कण्ठेऽवलम्ब्य च ॥ ८ ॥
उद्धृत्य च भुजौ काचिद्भूमौ स्म परिवर्तते ॥ हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९ ॥
काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती ॥ स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १० ॥
एवमार्ताः पतिं दृष्ट्वा रावणं निहतं भुवि ॥ चुक्रुशुर्बहुधा शोकाद्भूयस्ताः पर्यदेवयन् ॥ ११ ॥
येन वित्रासितः शक्रो येन वित्रासितो यमः ॥ येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२ ॥
गन्धर्वाणामृषीणां च सुराणां च महात्मनाम् ॥ भयं येन महद्दत्तं सोयं शेते रणे हतः ॥ १३ ॥
असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योपि वा तथा ॥ न भयं यो विजानाति तस्येदं मानुषाद्भयम् ॥१४॥
अवध्यो देवतानां यस्तथा दानवरक्षसाम् ॥ हतः सोयं रणे शेते मानुषेण पदातिना ॥ १५ ॥
यो न शक्यः सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा ॥ सोयं कश्चिदिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥ १६ ॥
एवं वदन्त्यो बहुधा रुरुदुस्तस्य ताः स्त्रियः ॥ भूय एव च दुःखार्ता विलेपुश्च पुनः पुनः ॥ १७ ॥
अशृण्वता[2] च सुहृदां सततं हितवादिनाम् ॥ मरणायाहृता सीता घातिताश्च[3] निशाचराः ॥ १८ ॥
एताः सममिदानीं ते वयमात्मा च पातिताः ॥ ब्रुवाणोपि हितं वाक्यमिष्टो भ्राता विभीषणः ॥
धृष्टं परुषितो मोहात्त्वयाऽऽत्मवधकाङ्क्षिणा ॥ १९ ॥
यदि निर्यातिता ते स्यात्सीता रामाय मैथिली ॥ न नः स्याद्व्यसनं घोरमिदं मूलहरं महत् ॥ २० ॥
वृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत् ॥ वयं चाविधवाः सर्वाः सकामा न च शत्रवः ॥२१॥
त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् ॥ राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् ॥२२॥
न कामकारः कामं वा तव राक्षसपुङ्गव ॥ दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ॥ २३ ॥
वानराणां विनाशोऽयं रक्षसां च महाहवे ॥ तव चैव महाबाहो दैवयोगादुपागतः ॥ २४ ॥
नैवार्थेन न कामेन विक्रमेण न चाज्ञया ॥ शक्या दैवगतिर्लोके निवर्तयितुमुद्यता ॥ २५ ॥

---

दुरित्यन्वयः ॥ ५—७ ॥ बहुमानादित्यादिश्लोकत्रयमेकान्वयं ॥ परिवर्तते वेष्टते । ईक्षती ईक्षमाणा ॥ ८—१० ॥ चुक्रुशुरिति । क्रोशः निरक्षरध्वनिः । परिदेवनं साक्षरशब्दः ॥ ११—१३ ॥ मानुषाद्भयं । जातमिति शेषः ॥ १४—१५ ॥ कश्चिदि वयः कश्चित्पुरुष इव लम्भितः प्रापितः ॥ १६—१७ ॥ सुहृदां सुहृद्भ्यः । पञ्चम्यर्थे षष्ठी । वचनमितिवाशेषः । अशृण्वता त्वया ॥ १८ ॥ एताः वयं ते राक्षसाः आत्मा च समं युगपत् इदानीं पातिताः । मारिताइत्यर्थः । इष्टः प्रीतिमान् ॥ १९ ॥ यदीत्यादिश्लोकद्वयमेकान्वयं ॥ ते त्वया । निर्यातिता प्रत्यर्पिता । मूलहरं मूलभूतत्वत्पर्यन्तहरं । यदि सीता निर्यातिता स्यात्तदा भ्राता विभीषणो वृत्तकामः निष्पन्नमनोरथः भवेत् । स्ववाक्यकरणादिति भावः । तथा रामः मित्रकुलं कुलमित्रं । शत्रवः देवादयः ॥२०—२१॥ तुल्यमिति । युगपदित्यर्थः ॥ २२ ॥ एवं रावणस्वेच्छाचरणस्य राक्षसनाशहेतुतामभिधाय संप्रति तन्निरासपूर्वकं दैवकारितत्वं दर्शयति—न कामकार इति ॥ कामकारः स्वच्छन्दकरणं कामं प्रकामं । नास्ति । कुतः दैवं चेष्टयते सर्वं हतं दैवेन हन्यते । दैवेन हतमन्येन हन्यते ॥ २३—२४ ॥ उद्यता कार्योन्मुखी दैवगतिः अर्थादिना न निवर्तयितुं शक्या ।

---

स० असत्वः अल्पबलइत्यर्थः । अनुदराकन्येत्यत्रेव । मर्त्येन स्वकर्तृकमरणयोग्येनरामेण । लंभितः प्रापितः मृत्युं यमंप्रतीतिवा ॥ १६ ॥ स० दैवं अदृष्टप्रेरकोहरिरेव । सर्वं चराचरं चेष्टयते चेष्टयति । अतोऽन्येषां तत्स्वातन्त्र्यभ्रमइत्यर्थः । दैवेनहतमेव केनचिन्निमित्तेनहन्यते नत्वन्यथा ॥ २३ ॥ इति त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

[ पा० ] १ ख. च. छ. ञ. निहतंदृष्ट्वा. २ च. अशृण्वतातु. ३ ङ. झ. राक्षसाश्चनिपातिताः.

विलेपुरेवं दीनास्ता राक्षसाधिपयोषितः ॥ कुरर्य इव दुःखार्ता बाष्पपर्याकुलेक्षणाः ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रयोदशोत्तरशततमः सर्गः ॥ ११३॥

---

## चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

मण्डोदर्या रणाङ्गणेरावणानुशोचनपूर्वकं शोकेनबहुधाविलापः ॥ १ ॥ विभीषणेन रामाज्ञया यथाविधिरावणसंस्करणम् ॥ २ ॥

तासां विलपमानानां तथा राक्षसयोषिताम्[1] ॥ ज्येष्ठा[2] पत्नी प्रिया दीना भर्तारं समुदैक्षत ॥ १ ॥
दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा ॥ पतिं मण्डोदरी तत्र कृपणा[3] पर्यदेवयत् ॥ २ ॥
ननु नाम महाभाग[4] तव वैश्रवणानुज ॥ क्रुद्धस्य प्रमुखे स्थातुं त्रसत्यपि पुरन्दरः ॥
ऋषयश्च महीदेवा[5] गन्धर्वाश्च यशस्विनः ॥ ३ ॥
ननु नाम तवोद्वेगाच्चारणाश्च दिशो[6] गताः ॥ स त्वं मानुषमात्रेण रामेण युधि निर्जितः ॥
न व्यपत्रपसे राजन्किमिदं राक्षसर्षभ ॥ ४ ॥
कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम् ॥ अविषह्यं जघान त्वां मानुषो वनगोचरः ॥ ५ ॥
[ [7]जहि वीर महावीर्यौ विस्मितौ रामलक्ष्मणौ ॥ ६ ॥ ]
मानुषाणाम[8]विषये चरतः कामरूपिणः ॥ विनाशस्तव रामेण संयुगे नोपपद्यते ॥ ७ ॥
न चैतत्कर्म रामस्य श्रद्दधामि चमूमुखे ॥ सर्वतः समुपेतस्य तव तेनाभिमर्शनम्[9] ॥ ८ ॥
[10]यदैव च जनस्थाने राक्षसैर्बहुभिर्वृतः ॥ खरस्तव हतो भ्राता तदेवासौ न मानुषः ॥ ९ ॥

---

कामेन स्वेच्छया ॥ २५ ॥ कुरर्यः क्रौञ्च्यः ॥ २६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

---

अथ मण्डोदरीप्रलापादि—तासामित्यादि ॥ विलपमानानां विलपन्तीनां । तथा विलपमानानामित्यन्वयः । दीना सती समुदैक्षत ॥ १ ॥ मण्डोदरी मण्डनभूतोदरी । कृशोदरीति यावत् । "मडि भूषायां" इति धातोर्भावे कप् प्रत्ययः । मण्डं सारं सुन्दरमिति यावत् । तादृशोदरीत्येके । मण्डा पृथुपिपीलिका तस्या इव उदरं यस्याः सा मण्डोदरीत्यप्याहुः ॥ २ ॥ यद्यपि समरमरणं शूराणां श्लाघ्यमिति न वीरपत्नी तच्छोचितुमर्हा, तथाप्यसमानान्मानुषात्प्राप्तमिदं लज्जावहमिति शोचति—ननु नाम तवेत्यादिना सार्धश्लोकेन ॥ नाम प्रसिद्धौ । महीदेवाः ब्राह्मणाश्च । त्रस्यन्तीत्यनुषङ्गः । स कथं मानुषेण जित इति शेषः ॥ ३ ॥ ननु नामेत्यादिसार्धश्लोक एकान्वयः ॥ चारणाश्च आकाशचारिणश्च । न व्यपत्रपसे । मानुषविजयेनेति शेषः । किमिदं किमेवमवस्थानकारणमित्यर्थः ॥ ४ ॥ वीर्येण त्रैलोक्यमाक्रम्य श्रियान्वितं त्वां मानुषस्तत्रापि वनगोचरः कथं जघान । अद्भुतमित्यर्थः ॥ ५—६ ॥ तदेवासंभावितत्वं निरूपयति—मानुषाणामिति ॥ अविषये अगम्यदेशे ॥ ७ ॥ सर्वतः समुपेतस्य सर्वयुद्धोपकरणैः पूर्णस्य । तव तेन रामेण अभिमर्शनं आक्रमणमिति यत् एतद्रामस्य न श्रद्दधामि रामसंबन्धिकर्मेति न श्रद्दधामि ॥ ८ ॥ रावणवधस्य मानुषे-

---

स० त्रस्यतिस्म ॥ ३ ॥ स० उद्वेगात् तंप्राप्य । शोकातिशयाद्विवेकाभावादनुदाहार्यस्यापिकृष्यादेरद्वेषिणोप्युद्वेगोक्तिरिति

[ पा० ] १ ख. च. छ. ञ. ट. रावणयोषितां. २ ख. ङ. झ. ञ. ज्येष्ठपत्नी. ३ ज. कृपणं. ४ क.—ट. महाबाहो. ५ ख. च. छ. ञ. महात्मानो. ङ. झ. ट. महान्तोपि. ६ घ. नभोगताः. ७ इदमर्धं घ. पाठेदृश्यते. ८ ङ. ज. मनुष्याणां. ९ झ. तेनाभिमर्षणं. १० यदैवचजनस्थानइत्यादिश्लोकद्वयं ग. ङ. झ. ञ. ट. पाठेषु इन्द्रियाणिपुराजित्वेतिश्लोकानन्तरंदृश्यते.

यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि ॥ प्रविष्टो हनुमान्वीर्यात्तदैव व्यथिता वयम् ॥ १० ॥
यदैव वानरैर्घोरैर्बद्धः सेतुर्महार्णवे ॥ तदैव हृदयेनाहं शङ्के रामममानुषम् ॥ ११ ॥
अथवा रामरूपेण कृतान्तः स्वयमागतः ॥ मायां तव विनाशाय विधायाप्रतितर्किताम् ॥ १२ ॥
अथवा वासवेन त्वं धर्षितोसि महाबल ॥ वासवस्य कुतः शक्तिस्त्वां द्रष्टुमपि संयुगे ॥
[ [1]महाबलं महावीर्यं देवशत्रुं महौजसम् ॥ १३ ॥ ]
व्यक्तमेष महायोगी परमात्मा सनातनः ॥ अनादिमध्यनिधनो महतः परमो महान् ॥ १४ ॥

णाकृतत्वे केन कृतः स्यादित्याशङ्क्य पक्षान्तरमुपक्षिपति—यदैवेत्यादिना ॥ ९—११ ॥ एवं सामान्यतो रामस्यामानुषत्वं प्रतिपाद्य उत्तरोत्तरोत्कृष्टयमेन्द्रादिदेवताविशेषत्वं प्रतिपादयति—अथवेत्यादिना ॥ मायां सीतारूपां । अप्रतितार्किताम् अपरिमेयरूपलावण्यां ॥ १२—१३ ॥ यदैवेत्यादिना सामान्यतउपन्यस्तममानुषत्वमेकत्र व्यवस्थापयितुमाह—व्यक्तमित्यादिना ॥ महायोगित्वादिगुणविशिष्टो यो विष्णुः स एवैष राम इति स्त्रीवचनमुखेनैव विष्णोः सर्वदेवतापारम्यं भगवान्वाल्मीकिर्व्यवस्थापयति । महान् योगः लोकरक्षणोपायचिन्ता सोस्यास्तीति महायोगी । परमश्चासावात्मा च परमात्मा । सर्वजीवात्मभ्य उत्कृष्ट इत्यर्थः । परमत्वमस्य कथमित्याशङ्क्य षड्भावविकाररहितत्वादित्याह—सनातन इति। सदास्तित्वयुक्त इत्यर्थः।अनादिमध्यनिधनः जन्मवृद्धिविनाशशून्यः। शाश्वतः अपक्षयरहितः। ध्रुवः परिणामरहितः । एतैर्विशेषणैर्जीवगतषड्भावविकारशून्यत्वमुक्तं । तथोक्तं विष्णुपुराणे—"अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः। वर्जितः शक्यते वक्तुं यः सदास्तीति केवल" इति॥ परमात्मशब्दार्थं विवृणोति—महतः परमो महानिति । महान् इन्द्रादिः । तस्मान्महान् ब्रह्मादिः । तस्मादपि महानित्यर्थः । स्थानविशेषेणापि परमत्वमाह—तमस इति ॥ तमसः प्राकृतमण्डलस्य परमः परस्तादप्राकृते वैकुण्ठे विद्यमानः । "आदित्यवर्णं तमसः परस्तात्" "आदित्यवर्णं तमसस्तु पारे" इति श्रुतेः । सर्वत्र व्याप्तस्य कथं तत्रावस्थानमित्याशङ्क्य विग्रहद्वारेत्याह—शङ्खेत्यादिना । सदा शङ्खचक्रधारणप्रयोजनमाह—धाते-

ज्ञेयं ॥ ४ ॥ तनिश्लोकी व्यक्तमेषः परिशेषतःप्रमाणेननिश्चितोदशग्रीवहन्तारामः महायोगी महासन्नहनः आश्रितत्राणसंना-
हवान् । महायोगी विविधविचित्रजगन्निर्माणोपायचतुरः । महायोगी 'बहुस्यांप्रजायेयेति' इत्याद्युक्तबहुभवनसंकल्पवान् ।
'सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाःप्रजाः' इतिमनुस्मरणात् । महायोगी जगन्निर्माणोपयुक्तप्रकृतिपुरुषकारकर्मसंसर्ग-
वान् । महायोगी शरणागतरक्षणादिष्वसंचाल्ययुक्तिमान् । 'योगःसन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । परमात्मा चेत-
नाचेतनशरीरः । सकलशरीरत्वप्रसक्तदोषासंस्पर्शमाह—**सनातनइति** । अनादिमध्यनिधनः आदिमध्यान्तशून्यः । "महतः
परमोमहान्—अणोरणीयान्महतोमहीयान्" इत्याद्युक्तपरममहत्त्ववान् । तमसःपरमः 'अक्षरात्परतःपरः "यस्मात्क्षरमतीतो-
ऽहमक्षरादपिचोत्तमः" इतिश्रुतिस्मृतिभ्यां । तमसःपरमः "आदित्यवर्णंतमसःपरस्तात्" इत्युक्तपरमपदवासी । धाता भूतभ-
विष्यद्वर्तमानकालावच्छिन्नसकलजगन्निर्माता । "सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत्" इतिश्रुतेः । धाता स्थितिकर्ता ।
साचस्थितिरनेकरूपाजगद्विविधकरणेन । "डुधाञ् धारणपोषणयोः" इतिधातोः धारणं प्रशासनाधीनलोकत्वं । 'एतस्यवाअ-
क्षरस्यप्रशासने' इत्यादिश्रुतेः । एवंकारणस्वरूपमुपास्यं तदुपयुक्तागुणाश्चोक्ताः । अथदिव्यमङ्गलविग्रहयोगमाह—शङ्खचक्रगदा-
धरइति । अनेनोपास्यत्वानुगुणशरणागतविरोधिनिरसनजागरूकत्वमुक्तं । श्रीवत्सवक्षाः श्रीवत्सकौस्तुभादीनांनित्यत्वाद्रुद्रादिवैल-
क्षण्यमुक्तं । नित्यश्रीरिति । नित्या अनपायिनीश्रीर्यस्यसः । अत्रविग्रहनित्यत्वमेवोक्तं स्वरूपनित्यत्वस्यसाधारणप्राप्तत्वात् ।
नित्यैवैषाजगन्मातेतियावत् । श्रीसंबन्धादुत्तेजितपराभिभवनसामर्थ्यमाह—अजेयइति । "अप्रमेयंहितत्तेजोयस्यसाजनकात्मजा"
इतिह्युक्तं । अजेयः उपायव्यतिरिक्तैर्जेतुमशक्यः । 'अप्रधृष्यश्चसंग्रामेसेन्द्रैरपिसुरासुरैः' इत्याद्युक्तरीत्याजेतुमशक्यः । शाश्वतः
त्रिविधपरिच्छेदरहितः विकारशून्यश्च । ध्रुवः अप्रकंप्यः । अत्रधातेतिरूढ्याविशेषणनिर्देशः । "अनादिनिधनोधाता" इतिस-
हस्रनामपाठात् । नित्यश्रीरितिच ॥ **ती०** महायोगी स्वाभाविकज्ञानशक्तियुक्तः "परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबल-
क्रियाच" इतिश्रुतेः । **शि०** सनातनः सनंब्रह्माणमातनोतीतिसनातनः । सत्यपरानाक्रमते अतिसत्यवक्तेत्यर्थः ॥ **स०** सना-
दनः दस्तकारस्यनिर्वचनत्वात् । नादेन वेदवादादिनासहितःसनादः । सएवसनादनः । सएवसनातनः । यथोक्तंगीतातात्पर्येना-

[ पा० ] १ अयंश्लोकः झ. पाठेनदृश्यते. २ इदमर्धं क. ग. घ. ज. झ. पाठेषुदृश्यते.

तमसः परमो धाता शङ्खचक्रगदाधरः ॥ श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥ १५ ॥
मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः ॥ सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः ॥ १६ ॥
सर्वलोकेश्वरः साक्षाल्लोकानां हितकाम्यया ॥ सराक्षसपरीवारं हतवांस्त्वां महाद्युतिः ॥ १७ ॥
इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया ॥ स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः ॥ १८ ॥
क्रियतामविरोधश्च राघवेणेति यन्मया ॥ उच्यमानो न गृह्णासि तस्येयं व्युष्टिरागता ॥ १९ ॥
अकस्माच्चाभिकामोसि सीतां राक्षसपुङ्गव ॥ ऐश्वर्यस्य विनाशाय देहस्य स्वजनस्य च ॥ २० ॥
अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते ॥ सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् ॥२१॥
वसुधायाश्च वसुधां श्रियः श्रीं भर्तृवत्सलाम् ॥ सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् ॥ २२॥
आनयित्वा तु तां दीनां छद्मनाऽऽत्मस्वदूषण ॥ अप्राप्य चैव तं कामं मैथिलीसंगमे कृतम् ॥
पतिव्रतायास्तपसा नूनं दग्धोसि मे प्रभो ॥ २३ ॥
तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम् ॥ देवा बिभ्यति ते सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २४ ॥

ति । धाता पोषकः । "डुधाञ् धारणपोषणयोः" इत्यस्मात्तृच् । सर्वदा रक्षणार्थमायुधधारणमित्यर्थः । तथोक्तमभियुक्तैः—"पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः" इति ॥ तस्य सर्वेश्वरत्वद्योतकं लक्षणमाह—श्रीवत्सवक्षा इति । श्रीकरो वत्सः श्रीवत्सः स च रक्तवर्णो मत्स्यविशेषः सः वक्षसि दक्षिणे यस्य स श्रीवत्सवक्षाः । जगद्रक्षणोपयोगिपुरुषकारसंबन्धमाह—नित्यश्रीरिति । नित्या अनपायिनी श्रीर्यस्यासौ नित्यश्रीः । "विष्णोः श्रीरनपायिनी" इत्यन्यत्रोक्तेः । अत एवाजय्यः जेतुमशक्यः । "क्षय्यजय्यौ शक्यार्थे" इति निपातनात् । एष रामः एवंभूतः परमात्मा व्यक्तं निश्चितमिति संबन्धः ॥१४—१५॥ एवंभूतस्य परमात्मनः किमर्थमेवं व्यापार इत्यत्राह द्वाभ्यां—मानुषमित्यादि ॥ सर्वलोकेश्वरः सर्वलोकानां नियन्ता अनिष्टनिवृत्तीष्टप्रापणयोः कर्ता । विष्णुः विष्णुसकाशादविनाशित्ववरं परिहर्तुं मानुषं वपुः आस्थाय परिगृह्य साक्षात् अव्यवधानेन लोकानां हितकाम्यया लोकहितेच्छया सर्वलोकविरोधिनं त्वां हतवान् । व्यक्तमित्यत्रानुषज्यते ॥ १६—१७ ॥ त्वद्दोषकृत एवायं वध इत्याह—इन्द्रियाणीति ॥१८॥ एवं सर्वज्ञा त्वं पूर्वं किमिति नोक्तवतीत्यत्राह—क्रियतामिति ॥ न गृह्णासि नागृह्णाः । व्युष्टिः फलं । "व्युष्टिः फले समृद्धौ च" इत्यमरः ॥ १९ ॥ अकस्मान्निर्हेतुकं सीतामुद्दिश्य अभिकामोसि अभिलाष्यसि तां प्रति त्वदभिलाषोऽयुक्त इत्यर्थः ॥२०॥ अयुक्ततामेवाह—अरुन्धत्या इति ॥ विशिष्टां उत्कृष्टां । मान्यामित्यनेन न केवलमरुन्धत्यादिवत्पातिव्रत्यमात्रं किंतु मातृत्वं चेत्युच्यते । असदृशं अनुचितं ॥ २१ ॥ सा पतिव्रता चेत् किमर्थं न दग्धवतीत्यत्राह—वसुधाया इत्यादिसार्धश्लोकद्वयेन ॥ वसुधायाश्च वसुधां अत्यन्तक्षमावतीमित्यर्थः । श्रीमित्यत्र इयङभाव आर्षः । सर्वसंपदधिष्ठात्रीमित्यर्थः । भर्तृवत्सलां पतिव्रतां । सर्वानवद्याङ्गीं अनवद्यसर्वाङ्गीं । अरण्ये विजने स्थितामिति शेषः । दीनां त्वदनभिलाषिणीमित्यर्थः । छद्मना मारीचमुखेन आनयित्वा । तं पूर्वमुक्तं । पतिव्रतायास्तस्यास्तपसा दग्धोसि । मे प्रभो इत्यनेन अस्य सर्वस्य मद्दौर्भाग्यमेव निमित्तमिति द्योत्यते । आत्मस्वदूषणेत्यनेन निजस्वभूताया मम त्यागे त्वद्दूषणमेवहेतुः न त्वसत्सौन्दर्यहानिरित्युच्यते ॥ २२—२३ ॥ तनुमध्यमां धर्षयन्सन् त्वं तदैव न दग्ध इति यत् तेन माहात्म्येन त्वत्तो देवा बिभ्यती-

देनसहवर्ततइतिसनादनः । सएवसनातनः । 'निषेधविधिपात्रत्वात्सनातनइतिस्मृतः' इति ॥ १४—१५ ॥ **ति०** सराक्षसपरीवारं राक्षसरूपपरीवारसहितं । हतवानितिशेषः ॥ १७ ॥ **ती०** श्लोकान्तर्भूतस्यरावणस्यहननेसर्वलोकेश्वरस्यरामस्यवैषम्यनैर्घृण्येनस्तइत्याशयेनाह—इन्द्रियाणीति ॥ **ति०** देवशत्रुंभयावहमित्यनेनभगवतोवैषम्यनैर्घृण्येपरिहृते । अवतारप्रयोजनंरावणवधप्रयोजनंचदेवभयनिवृत्तिरूपंदर्शितं । पुरा भगवदुद्देशेनतपोनुष्ठानकाले ॥ १८ ॥ **ति०** मान्यां उपास्यदेवतां ॥ २१ ॥ **शि०** विजने

[ **पा०** ] १ क. ख. ङ. च. छ. झ. ञ. ट. रूपमास्थाय. २ ङ.—ट. श्रीमाँल्लोकानां. ३ झ. परीवारंदेवशत्रुंभयावहं.

अवश्यमेव लभते फलं पापस्य कर्मणः ॥ घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः ॥ २५ ॥
शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते ॥ विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ॥ २६ ॥
सन्त्यन्याः प्रमदास्तुभ्यं रूपेणाभ्यधिकास्ततः ॥ अनङ्गवशमापन्नस्त्वं तु मोहान्न बुध्यसे ॥ २७ ॥
न कुलेन न रूपेण न दाक्षिण्येन मैथिली ॥ मयाऽधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे ॥२८॥
सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः ॥ तव तावदयं मृत्युर्मैथिलीकृतलक्षणः ॥ २९ ॥
सीतानिमित्तजो मृत्युस्त्वया दूरादुपाहृतः ॥ ३० ॥
मैथिली सह रामेण विशोका विहरिष्यति ॥ अल्पपुण्या त्वहं घोरे पतिता शोकसागरे ॥ ३१ ॥
कैलासे मन्दरे मेरौ तथा चैत्ररथे वने ॥ देवोद्यानेषु सर्वेषु विहृत्य सहिता त्वया ॥ ३२ ॥
विमानेनानुरूपेण यायाम्यतुलया श्रिया ॥ पश्यन्ती विविधान्देशांस्तांस्तांश्चित्रस्रगम्बरा ॥
भ्रंशिता कामभोगेभ्यः साऽस्मि वीर वधात्तव ॥ ३३ ॥
सैवान्येवास्मि संवृत्ता धिग्राज्ञां चञ्चलाः श्रियः ॥ ३४ ॥
हा राजन्सुकुमारं ते सुभ्रु सुत्वक्समुन्नसम् ॥ कान्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः ॥ ३५ ॥
किरीटकूटोज्ज्वलितं ताम्रास्यं दीप्तकुण्डलम् ॥ मदव्याकुललोलाक्षं भूत्वा यत्पानभूमिषु ॥ ३६ ॥
विविधस्रग्धरं चारु वल्गुस्मितकथं शुभम् ॥ तदेवाद्य तवेदं हि वक्त्रं न भ्राजते प्रभो ॥ ३७ ॥
रामसायकनिर्भिन्नं सिक्तं रुधिरविस्रवैः ॥ विशीर्णमेदोमस्तिष्कं रूक्षं स्यन्दनरेणुभिः ॥ ३८ ॥

ति संबन्धः । भीता देवाः कथं ते धर्षणफलं दाहं दद्युरिति भावः ॥ २४ ॥ कर्ता घोरं पापस्य फलं काले पर्यागते प्राप्ते अवश्यं लभते नात्र संशयः ॥ २५ ॥ पापं दुःखं ॥ २६ ॥ तुभ्यं तव । ततः तस्याः सीतायाः । न बुध्यसे । अभ्यधिकत्वमिति शेषः ॥ २७ ॥ मैथिली मया कुलेन तुल्या अधिका वा न इत्येवं योज्यं । दाक्षिण्येन विद्यासामर्थ्येन ॥ २८ ॥ अलक्षणः निर्निमित्तः । मैथिल्याः कृतं मैथिलीकृतं मैथिल्यानयनमित्यर्थः । तदेव लक्षणं निमित्तं यस्य स तथा ॥२९—३१॥ कैलास इत्यादि-सार्धश्लोकद्वयमेकान्वयं ॥ याहं कैलासादिषु विहृत्य विमानेन विविधान्देशान्पश्यन्ती यामि अथ सा भ्रंशिताऽस्मीत्येवं संबन्धः ॥ ३२—३३ ॥ सैवेत्यर्धं ॥ सैव एवमुक्तभोगैव । अन्येव अस्पृष्टभोगेव ॥ ३४ ॥ एवं रावणस्य मतिं राज्यश्रियं च निन्दित्वा भर्तृसौन्दर्यवैपरीत्यं शोचति—हा राजन्नित्यादिश्लोकचतुष्टय-मेकान्वयं ॥ सुत्वक् स्निग्धत्वक् । समुन्नसं समुन्नत-नासिकं । कान्तिः प्रभा । श्रीः सौन्दर्यं । द्युतिः तेजः । किरीटकूटोज्ज्वलितं शिखरतुल्यकिरीटविरा-जितं । ताम्रास्यं रक्ताधरमित्यर्थः । चारु सुन्दरं तव यद्वक्त्रं मदव्याकुललोलाक्षं भूत्वा अभ्राजत तदेवेदं वक्त्रमद्य न भ्राजते । अप्रकाशनिमित्तमाह—रामेति ॥ विस्रवैः प्रवाहैः । मेदः वसा । मस्तिष्कं मांस-

विरुद्धजनसहिते ॥ २२ ॥ **शि०** मैथिली कुलादिनामयालक्ष्म्या अधिकैव नतुतुल्या । तदितिमोहात् मोहंप्राप्यविद्यमानोपित्वं नबुध्यसे काक्काबुध्यसएवेत्यर्थः । एतेन पूजाबुद्ध्यैवतस्याःस्वीकारस्त्वयाकृतइतिसूचितं ॥ २८ ॥ **ति०** सैवाहंसौभाग्यलक्षणवत्येव तववधादन्येव विधवेवसंवृत्तेत्यर्थः । अत्रान्येवेतीवकारेणदेवस्थित्या । वस्तुतोऽवैधव्यंसूचितं ॥ ३४ ॥ **ति०** कान्तिराह्लादकारी-प्रभा । तयाचन्द्रतुल्यं । श्रीरुज्ज्वलता । तयापद्मवत् । द्युतिः पराभिभवसामर्थ्यंतेजः । तेनरवितुल्यं ॥ ३५ ॥ **स०** ननुश्रीम-न्महाभारतेवनपर्वणि ‘ शरीरधातवोह्यस्यमांसंरुधिरमेवच । नेशुर्ब्रह्मास्त्रनिर्दग्धंनचभस्माप्यदृश्यत ’ इतिरावणशरीरभस्मनोप्यद-र्शनोक्तेःकथमेवंतच्छिरोवर्णनमितिचेन्न । ब्रह्मास्त्रनिर्दग्धंमांसंरुधिरंचेत्येतेअस्यशरीरंधातवोनेशुः अदर्शनंगताः । ब्रह्मास्त्रदाहेदेह-स्यभस्मदृश्येत कथंशरीरस्यदर्शनमित्यतआह—नचेति । भस्मापि भस्मतु नदृश्यते विचित्रोऽयंदाहइतिभारतस्यैतदर्थकताङ्गीका-रेणाविरोधोपपत्तेः । तथाचोक्तमाचार्यैः “बाणेनवज्रसदृशेनसभिन्नहृत्कोरक्तंवमन्न्यपतदाशुमहाविमानात्” इति । तथैवचपाद्मोत्त-

[ पा० ] १ झ. भर्तःपर्यागते. क. घ. नूनंपर्यागते. २ ज. पापःपापं. ३ क. रूपेणाप्रतिमाभुवि. ४ च. छ. कीर्तिश्री.

हा पश्चिमा मे संप्राप्ता दशा वैधव्यकारिणी[1] ॥ या मयाऽऽसीन्न संबुद्धा कदाचिदपि मन्दया॥३९॥
पिता दानवराजो मे भर्ता मे राक्षसेश्वरः ॥ पुत्रो मे शक्रनिर्जेता इत्येवं[2] गर्विता भृशम् ॥ ४० ॥
दृप्तारिमर्दनाः शूराः प्रख्यातबलपौरुषाः ॥ अकुतश्चिद्भया नाथा ममेत्यासीन्मतिर्दृढा ॥ ४१ ॥
तेषामेवंप्रभावानां युष्माकं राक्षसर्षभ ॥ कथं भयमसंबुद्धं मानुषादिदमागतम् ॥ ४२ ॥
स्निग्धेन्द्रनील[3]नीलं तु प्रांशुशैलोपमं महत् ॥ केयूराङ्गदवैडूर्यमुक्तादामस्रगुज्ज्वलम् ॥ ४३ ॥
कान्तं विहारेष्वधिकं दीप्तं संग्राममूमिषु ॥ [ विनीतं[4] गुरुपूजासु शान्तं शङ्करपूजने ॥ ]
भात्याभरणभाभिर्यद्विद्युद्भिरिव तोयदः ॥ ४४ ॥
तदेवाद्य शरीरं ते तीक्ष्णैर्नैकैः[5] शरैश्चितम् ॥ पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते ॥ ४५ ॥
श्वाविधः शललैर्यद्वद्बाणैर्लग्नैर्निरन्तरम् ॥ स्वर्पितैर्मर्मसु भृशं संछिन्नस्नायुबन्धनम् ॥
क्षितौ निपतितं राजञ्[6]श्यावं रुधिरसच्छवि ॥ ४६ ॥
वज्रप्रहाराभिहतो विकीर्ण इव पर्वतः ॥ ४७ ॥
हा स्वप्नः सत्यमेवेदं त्वं रामेण कथं हतः ॥ त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः ॥४८॥
त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्वेगदं महत् ॥ जेतारं लोकपालानां क्षेप्तारं शंकरस्य च ॥ ४९ ॥
दृप्तानां निगृहीतारमाविष्कृतपराक्रमम् ॥ लोककक्षोभयितारं च नादै[7]र्भूतविराविणम् ॥ ५० ॥

---

विशेषः ॥ ३५—३८ ॥ मे वैधव्यकारिणी ते पश्चिमावस्था मृतिः संप्राप्ता ॥ ३९ ॥ अस्थिरस्य देहस्य विनाशः कुतो न संबुद्ध इत्यत्राह—पितेति ॥ दानवराजः मयः ॥ ४०—४१ ॥ तेषामिति ॥ तेषु युष्मास्वेवंप्रभावेष्वित्यर्थः । मयस्य मरणाभावेपि इदानीमकार्यकरत्वादेवमुक्तं । असंबुद्धं पूर्वमचिन्तितं ॥ ४२ ॥ स्निग्धेत्यादि सार्धश्लोकचतुष्टयमेकान्वयं ॥ प्रांशुशैलः उन्नतशैलः । अङ्गदवैडूर्यं वैडूर्यमयाङ्गदमिति केयूराद्भेदः । यच्छरीरं भाति आलिङ्गनयोग्यमभूत् । तदेव शरीरं दुर्लभसंस्पर्शं सत् पुनः परिष्वक्तुं न शक्यते । दुर्लभसंस्पर्शत्वमुपपादयति—श्वाविधः इत्यादिना ॥ श्वाविधं शल्यमृगस्य शललैः तल्लोमभिः यद्वत् यथा । कण्टकाकारश्वाविल्लोमतुल्यैरिति शरविशेषणं । मर्मसु स्वर्पितैः क्षिप्तैः । तत्रैव मर्मसु निरन्तरं लग्नैरिति योजना । श्यावं कपिशवर्णं । "श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् । 'श्यावः स्यात्कपिशः" इत्युभयत्राप्यमरः । स्नायवः धमन्यः । रुधिरसच्छवि रुधिरतुल्यकान्ति । स्वकान्तिं विहाय रुधिरकृतकान्त्यन्तरमित्यर्थः ॥४३—४६॥ वज्रेत्यर्धं ॥ असीति शेषः ॥ ४७ ॥ इदं ते मरणं स्वप्नः स्वप्नानुभवविषयः । सत्यमेव नात्र संशयः । तत्र हेतुमाह—त्वमिति । तत्रापि हेतुमाह—त्वं मृत्योरिति ॥ ४८ ॥ त्रैलोक्येत्यादि हतप्रियेत्यन्तं श्लोकाष्टकमेकं वाक्यं ॥ एवंभूतं भर्तारं दृष्ट्वा या इमं देहं धारयामि साहं स्थिरास्मि वज्रसारमय्यस्मि । कथमन्यथा न शीर्येदिति भावः । महदिति त्रैलोक्यवसुविशेषणं । यद्वा त्रैलोक्योद्वेगदं महद्वसु महत् यथा भवति तथा त्रैलोक्योद्वेगदमिति वा । उद्वेगो भयसंभ्रमः । शंकरस्य क्षेप्तारं कैलासचलनद्वारा । स्वयूथाः स्वबन्धवः निवातकवचा नाम केचनासुराः । तेषां संग्रहीतारं तैः सख्यकृतमित्यर्थः । स्वजनस्य स्वाश्रितजनस्य धर्मव्यवस्था आचारव्यवस्था । यज्ञकर्मभेत्तृत्वकथनेनातीव स्वतन्त्रत्वमुक्तं । कन्यानामिति । स्त्रीमात्रमुच्यते । स्वजनस्य नेतारमिति । पूर्वत्रानिष्टनिवर्तकत्वमुक्तं । अत्रेष्टप्रापकत्वं । भीमकर्मणां

---

रखण्डे " सगतासुर्महादैत्यःपपातचममारच " इत्यादि ॥ ३८ ॥ स० मुक्ताहारस्रगुज्ज्वलं मुक्तानांहाराः । स्रजः इतरामणिमय्यः । ताभिरुज्ज्वलं । यद्वा मुक्तानांहारः परस्परसंघर्षजंयुद्धमिव । स यासांताःस्रजोमुक्तामालाः । तदुज्ज्वलं । 'हारोमुक्ताव-

[ पा० ] १ ङ. च. छ. झ. ञ. वैधव्यदायिनी. २ क.—ट. इत्यहं. ३ ख. च. छ. ञ. नीलसदृशं. ज. ट. नीलसंकाशं. ४ इदमर्धं क. ख. घ. छ. ञ. पाठेषुदृश्यते. ५ ङ. च. छ. झ. ञ. शललैर्युक्तलग्नैर्बाणैः. ६ ख. श्यामंशरीरंरुधिरच्छवि. ७ ङ. झ. साधुभूतविदारणं.

ओजसा दृप्तवाक्यानां वक्तारं रिपुसन्निधौ ॥ स्वयूथभृत्यवर्गाणां गोप्तारं भीमकर्मणाम् ॥ ५१ ॥
हन्तारं दानवेन्द्राणां यक्षाणां च सहस्रशः ॥ निवातकवचानां च संग्रहीतारमीश्वरम् ॥ ५२ ॥
नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च ॥ धर्मव्यवस्थाभेत्तारं मायास्रष्टारमाहवे ॥ ५३ ॥
देवासुरनृकन्यानामाहर्तारं ततस्ततः ॥ शत्रुस्त्रीशोकदातारं नेतारं स्वजनस्य च ॥ ५४ ॥
लङ्काद्वीपस्य गोप्तारं कर्तारं भीमकर्मणाम् ॥ अस्माकं कामभोगानां दातारं रथिनांवरम् ॥ ५५ ॥
एवंप्रभावं भर्तारं दृष्ट्वा रामेण पातितम् ॥ स्थिराऽस्मि या देहमिमं धारयामि हतप्रिया ॥ ५६ ॥
शयनेषु महार्हेषु शयित्वा राक्षसेश्वर ॥ इह कस्मात्प्रसुप्तोसि धरण्यां रेणुपाटलः ॥ ५७ ॥
यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजिद्युधि ॥ तदास्म्यभिहता तीव्रमद्य त्वस्मिन्निपातिता ॥ ५८ ॥
नाहं बन्धुजनैर्हीना हीना नाथेन तु त्वया ॥ विहीना कामभोगैश्च शोचिष्ये शाश्वतीः समाः ॥५९॥
प्रपन्नो दीर्घमध्वानं राजन्नद्यासि दुर्गमम् ॥ नय मामपि दुःखार्तां न जीविष्ये त्वया विना ॥६०॥
कस्मात्त्वं मां विहायेह कृपणां गन्तुमिच्छसि ॥ दीनां विलपितैर्मन्दां किंवा मां नाभिभाषसे ॥६१॥
दृष्ट्वा न खल्वसि क्रुद्धो मामिहानवकुण्ठिताम् ॥ निर्गतां नगरद्वारात्पद्भ्यामेवागतां प्रभो ॥ ६२ ॥
पश्येष्टदार दारांस्ते भ्रष्टलज्जावकुण्ठितान् ॥ बहिर्निष्पतितान्सर्वान्कथं दृष्ट्वा न कुप्यसि ॥ ६३ ॥
अयं क्रीडासहायस्तेऽनाथो लालप्यते जनः ॥ न चैनमाश्वासयसे किं वा न बहुमन्यसे ॥ ६४ ॥
यास्त्वया विधवा राजन्कृता नैकाः कुलस्त्रियः ॥ पतिव्रता धर्मपरा गुरुशुश्रूषणे रताः ॥
ताभिः शोकाभितप्ताभिः शप्तः परवशं गतः ॥ ६५ ॥
त्वया विप्रकृताभिर्यत्तदा शप्तं तदागतम् ॥ ६६ ॥
प्रवादः सत्य एवायं त्वां प्रति प्रायशो नृप ॥ पतिव्रतानां नाकस्मात्पतन्त्यश्रूणि भूतले ॥ ६७ ॥
कथं च नाम ते राजँल्लोकानाक्रम्य तेजसा ॥ नारीचौर्यमिदं क्षुद्रं कृतं शौण्डीर्यमानिना ॥ ६८ ॥

---

स्वशिरोहवनादीनां ॥ ४९—५७ ॥ शस्तः हतः । तदा अभिहता प्रहृता । अद्य अस्मिन् त्वद्धनने सति तीव्रं निपातिता । मारितेत्यर्थः ॥ ५८ ॥ बन्धुजनैः हीनाहं न शोचिष्ये यदि त्वं स्थितः स्याः । किंतु त्वया हीना अत एव कामभोगैर्हीना शोचिष्य इति योजना ॥ ५९ ॥ दीर्घमध्वानं वीरस्वर्गं ॥ ६० ॥ विलपितैः प्रलापैः । दीनां मन्दां अभाग्यां ॥६१॥ अनवकुण्ठितां अनावरणां । इहागतामित्यन्वयः ॥ ६२ ॥ इष्टदारेति संबुद्धिः । भ्रष्टलज्जावकुण्ठितान् हीनलज्जावकुण्ठितान् ॥६३॥ नाथो लालप्यत इति पाठे अनाथ इति छेदः ॥६४॥ यास्त्वयेत्यादिसार्धश्लोक एकान्वयः॥ परवश परवशत्वं । शत्रुवशत्वमिति यावत् ॥ ६५ ॥ त्वयेत्यर्थ ॥ त्वया विप्रकृताभिः परिभूताभिः । तदा भर्तृवधकाले यच्छप्तं तत् आगतं फलदमासीदित्यर्थः ॥ ६६ ॥ पतिव्रतानामश्रूणि अकस्मान्निर्हेतुकतया भूतले न पतन्ति । पतन्ति चेत् किंचित्कुर्वन्त्येव । इत्येवं प्रायशः प्रवादः जनवार्ता । त्वां प्रत्येव सत्यः यथार्थो जातः । पतिव्रतानामास्रपातकरणमनर्थावहमित्येवं जनवादः तथा कुर्वति त्वयि दृष्टफल आसीदित्यर्थः ॥ ६७ ॥ शौण्डीर्यमानिना

---

लौयुद्धे ' इतिविश्वः ॥ ४३ ॥ स० शस्तः विशस्तः । अभिहता अभिघातमात्रंप्राप्ता । अद्यतु निपातितास्मि । सतित्वयिमयि जायेततनयइत्याशासंभवादभिहतमात्रता मारणेइन्द्रजितः । इदानींतवनाशान्नाऽऽशाऽवकाशमासादयतीतिनिपातितेतिसंभवतीतिभावः ॥ ५८ ॥ स० शाश्वतीःसमाः यावदायुः ॥ ५९ ॥ स० नयमां नवियतेयमोयस्याःसा तामपिमां । नय त्वयासहेतिशेषः । इतितान्त्रिकोर्थः ॥ ६० ॥

[ पा० ] १ घ. शक्रस्यशोक. २ ख. च. छ. नेतारंनिजसैनिकान्. ३ च. छ. हर्तारंबद्धवैरिणां. ४ ख. च. छ. ञ. स्थितास्म्यहंदेहं. ५ ङ. झ. ञ. रेणुगुण्ठितः. ६ क.—ट. साहं. ७ ख. घ.—ञ. नवर्तिष्ये. ८ ङ. झ. खल्वभिक्रुद्धो. ९ ङ. झ. गुण्ठनान्.

अपनीयाश्रमाद्रामं यन्मृगच्छद्मना त्वया ॥ आनीता रामपत्नी सा तत्ते कातर्यलक्षणम् ॥ ६९ ॥
कातर्यं च न ते युद्धे कदाचित्संस्मराम्यहम् ॥ तत्तु भाग्यविपर्यासान्नूनं ते पक्वलक्षणम् ॥ ७० ॥
अतीतानागतार्थज्ञो वर्तमानविचक्षणः ॥ मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निश्वस्य चायतम् ॥ ७१ ॥
सत्यवाक्स महाभागो देवरो मे यदब्रवीत् ॥ सोयं राक्षसमुख्यानां विनाशः पर्युपस्थितः ॥
कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना ॥ ७२ ॥
निर्वृत्तस्त्वत्कृतेऽनर्थः सोयं मूलहरो महान् ॥ त्वया कृतमिदं सर्वमनाथं रक्षसां कुलम् ॥ ७३ ॥
न हि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः ॥ स्त्रीस्वभावात्तु मे बुद्धिः कारुण्ये परिवर्तते ॥ ७४ ॥
सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः ॥ आत्मानमनुशोचामि त्वद्वियोगेन दुःखिता ॥७५॥
सुहृदां हितकामानां न श्रुतं वचनं त्वया ॥ भ्रातॄणां चापि कार्त्स्न्येन हितमुक्तं त्वयाऽनघ ॥७६॥
हेत्वर्थयुक्तं विधिवच्छ्रेयस्करमदारुणम् ॥ विभीषणेनाभिहितं न कृतं हेतुमत्त्वया ॥ ७७ ॥
मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तदा ॥ न श्रुतं वीर्यमत्तेन तस्येदं फलमीदृशम् ॥ ७८ ॥
नीलजीमूतसंकाश पीताम्बर शुभाङ्गद ॥ स्वगात्राणि विनिक्षिप्य किं शेषे रुधिराप्लुतः ॥
प्रसुप्त इव शोकार्तां किं मां न प्रतिभाषसे ॥ ७९ ॥
महावीर्यस्य दक्षस्य संयुगेष्वपलायिनः ॥ यातुधानस्य दौहित्रं किं च मां नाभ्युदीक्षसे ॥ ८० ॥
उत्तिष्ठोत्तिष्ठ किं शेषे प्राप्ते परिभवे नवे ॥ अद्य वै निर्भया लङ्कां प्रविष्टाः सूर्यरश्मयः ॥ ८१ ॥
येन सूदयसे शत्रून्समरे सूर्यवर्चसा ॥ वज्रो वज्रधरस्येव सोयं ते सततार्चितः ॥ ८२ ॥
रणे शत्रुप्रहरणो हेमजालपरिष्कृतः ॥ परिघो व्यवकीर्णस्ते बाणैश्छिन्नः सहस्रधा ॥ ८३ ॥
प्रियामिवोपगुह्य त्वं शेषे समरमेदिनीम् ॥ अप्रियामिव कस्माच्च मां नेच्छस्यभिभाषितुम् ॥ ८४ ॥
धिगस्तु हृदयं यस्या ममेदं न सहस्रधा ॥ त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम् ॥ ८५ ॥

---

शूरमानिना ॥ ६८ ॥ त्वया कर्त्रा मृगच्छद्मना मृगरूपकपटोपायेन । कातर्यलक्षणं कातर्यसूचनं ॥६९॥ ते युद्धे कातर्यं कदाचिदपि न स्मरामि न जानामीत्यर्थः । एवमकातरप्रकृतेस्तव भाग्यविपर्यासात् यत्कातर्यं चौर्यरूपमस्ति तत् पक्वलक्षणं पक्वत्वलक्षणं विनाशज्ञापकमिति यावत् । महतो हीनकृत्यं हानिकरमिति लोकप्रवादादिति भावः ॥ ७० ॥ अतीतेत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ देवरो यदब्रवीत् अयं तद्वाक्यार्थभूतो विनाशः प्रसङ्गिना प्रसक्तेन व्यसनेन हेतुना पर्युपस्थितः ॥ ७१—७२ ॥ त्वत्कृते त्वन्निमित्तं । निर्वृत्तः प्रवृत्तः ॥ ७३ ॥ कारुण्ये दैन्ये ॥ ७४—७५ ॥ कार्त्स्न्येनोक्तं हितं त्वया न श्रुतमित्यनुषज्यते ॥ ७६ ॥ हेत्वर्थयुक्तं युक्तिप्रयोजनाभ्यां युक्तं । विधिवत् शास्त्रोक्तप्रकारवत् । श्रेयस्करं हितभूतं । अदारुणं सान्त्वपूर्वकं । विभीषणेनाभिहितं वचनं त्वया हेतुमद्युक्तिमद्यथा भवति तथा न गृहीतं । ज्ञातित्वेन मद्व्यसनं काङ्क्षसे इत्यादिना हेतूपपादनपूर्वकं न गृहीतमित्यर्थः ॥ ७७ ॥ मारीचकुम्भकर्णाभ्यां सह मम पितुर्मयस्य वाक्यं न श्रुतं । तस्य अश्रवणस्य ईदृशं फलं । आगतमिति शेषः । अत्रानुवादान्मयोप्यस्तीत्यवगन्तव्यं ॥ ७८ ॥ नीलेत्यादि सार्धश्लोक एकान्वयः ॥ विनिक्षिप्य भूमौ प्रसार्य प्रसुप्त इव शेषे, शोकार्तां मां च किमिति न प्रतिभाषस इत्यन्वयः ॥ ७९ ॥ यातुधानस्य माल्यवतः । सुमालिनो वा । तत्संबन्धकीर्तनमप्रतिहतकुलप्रभावप्रकटनार्थं ॥ ८०—८१ ॥ येनेत्यादिश्लोकद्वयमेकान्वयं ॥ ते त्वया । सततार्चितः बाणैः रामबाणैश्छिन्नः वज्रधरस्य वज्र इव स्थितः ते परिघः अद्य विशीर्णः ॥ ८२—८४ ॥ यस्या मम हृदयं न फलते न स्फुटति । तादृशीं मां धिगित्यन्वयः

---

[ पा० ] १ ङ. झ. साअपनीयचलक्ष्मणं. २ ट. महाबाहुर्देवरो. ३ क.—ट. अयं. ४ ङ. झ. राक्षसंकुलं. ५ ङ. च. छ. झ. ञ. ट. त्वद्विनाशेन. ६ ख. ङ. झ. ञ. ट. मुक्तंदशानन. ७ ङ. च. छ. झ. ञ. नकृतं. ८ ङ. झ. ञ. किंमांनप्रतिभाषसे.

इत्येवं विलपन्त्येव बाष्पव्याकुललोचना ॥ स्नेहावस्कन्नहृदया देवी मोहमुपागमत् ॥ ८६ ॥
कश्मलाभिहता सन्ना बभौ सा रावणोरसि ॥ संध्यानुरक्ते जलदे दीप्ता विद्युद्दिवासिते ॥ ८७ ॥
तथागतां समुत्पत्य सपत्न्यस्ता भृशातुराः ॥ पर्यवस्थापयामासू रुदन्त्यो रुदतीं भृशम् ॥ ८८ ॥
न ते सुविदिता देवि लोकानां स्थितिरध्रुवा ॥ दशाविभागपर्याये राज्ञां चञ्चलया श्रिया ॥ ८९ ॥
इत्येवमुच्यमाना सा सशब्दं प्ररुरोद ह ॥ स्नापयन्ती त्वभिमुखौ स्तनावस्राम्बुविस्रवैः ॥ ९० ॥
एतस्मिन्नन्तरे रामो विभीषणमुवाच ह ॥ संस्कारः क्रियतां भ्रातुः स्त्रियश्चैता निवर्तय ॥ ९१ ॥
तं प्रश्रितस्ततो रामं श्रुतवाक्यो विभीषणः ॥ विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः ॥
रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत ॥ ९२ ॥
त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा ॥ नाहमर्होस्मि संस्कर्तुं परदाराभिमर्शिनम् ॥ ९३ ॥
भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः ॥ रावणो नार्हते पूजां पूज्योपि गुरुगौरवात् ॥ ९४ ॥
नृशंस इति मां कामं वक्ष्यन्ति मनुजा भुवि ॥ श्रुत्वा तस्यागुणान्सर्वे वक्ष्यन्ति सुकृतं पुनः ॥९५॥
तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वरः ॥ विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदम् ॥ ९६ ॥
तवापि मे प्रियं कार्यं त्वत्प्रभावाच्च मे जितम् ॥ अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वरः ॥९७॥
अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः ॥ तेजस्वी बलवाञ्शूरः संयुगेषु च नित्यशः ॥ ९८ ॥

॥ ८५ ॥ अवस्कन्नहृदया विलीनहृदया ॥ ८६ ॥ कश्मलेन अभिहता मूर्च्छिता । सन्ना कृशा ॥८७—८८ ॥ नेत्यादिश्लोकद्वयमेकान्वयं ॥ दशाविभागपर्याये दशानां बाल्यकौमारयौवनवार्धकाद्यवस्थानां विभागस्य भेदस्य पर्याये प्राप्तौ विषये लोकानामध्रुवा स्थितिः राज्ञां चञ्चलया श्रिया सह ते त्वया । सुविदिता नेति काकुः । सुविदितैवेत्यर्थः । लोकानां स्थितिरध्रुवेति राज्ञां श्रीश्चञ्चलेति च त्वया सुविदितैवेत्यर्थः । उच्यमाना बन्धुवृद्धादिभिरिति शेषः । अभिमुखौ उन्नतौ ॥ ८९—९१ ॥ प्रश्रितः विनयान्वितः । विमृश्य 'एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात्' इत्युक्तमङ्गीकृतं विचिन्त्येत्यर्थः । रामस्यैवानुवृत्त्यर्थं रामेणानुज्ञातोस्मि चेत्तदा करिष्यामि नान्यथेत्येवमनुवृत्त्यर्थं ॥ ९२ ॥ त्यक्तेति । त्यक्तो धर्मो व्रतं च येन तं । अनृतं अनृतवादिनं ॥ ९३ ॥ गुरुगौरवात् गुरुरिति गौरवात् । पूज्योपि उक्तदोषान्मत्तः पूजां नार्हति ॥ ९४ ॥ भ्रातुः संस्काराकरणे त्वां नृशंसं लोका वक्ष्यन्तीत्याशङ्क्य वदन्तु नाम त एव पुनस्तद्गुणं विचारयन्तो मां युक्तकारिणं वक्ष्यन्तीत्याह—नृशंस इति ॥ संस्काराकरणे नृशंस इति मां कामं मनुष्या वक्ष्यन्ति । तस्य रावणस्य । अगुणान् दोषान् । श्रुत्वा असंस्कुर्वता विभीषणेन सुकृतं शोभनं कृतमिति वक्ष्यन्तीत्यर्थः ॥ ९५ ॥ परमप्रीतः सत्यवचनकथनादिति भावः । अप्रीत इति वा छेदः ॥ ९६ ॥ दोषसद्भावेपि गुणबाहुल्यादयं संस्कारयोग्य इत्याह—तवापीत्यादिना ॥ तव त्वया । मे प्रियमपि प्रियमेव । कार्यं । चो हेतौ । यस्मात्कारणात् त्वत्प्रभावात् मे मया जितं तस्मान्मया त्वं क्षमं हितमेव वाच्यः । मत्प्रियत्वात् त्वद्धितत्वाच्च रावणसंस्कारः क्रियतामित्यर्थः । यद्वा तवापि मे प्रियं कार्यं मद्वैरिणो रावणस्यासंस्करणं नाम मम पियं तवापि कर्तव्यमेव । त्वत्प्रभावाच्च मे जितं पूर्वं च तस्य जयसाहाय्यरूपं प्रियं त्वया कृतं । तथाप्यवश्यं तु क्षमं वाच्यः । यदर्हं तत्र नियोजनीयोसीत्यर्थः ॥ ९७ ॥ दोषिणः कथमर्हत्वमित्याशङ्क्य गुणाधिक्यादित्याह—अधर्मे-

ति० सुग्रीवस्येवतवापिप्रियं राज्याभिषेकलक्षणं । मयाकार्यं कर्तव्यं । हि यतःत्वत्प्रभावान्मयाजितं । तस्मादवश्यंक्षमं अभिषेकसंपादनयोग्यंयत्कृत्यं प्रेतनिर्हारलक्षणं तन्मयात्वंवाच्यः ॥ ९७ ॥

[ पा० ] १ ङ. झ. ञ. ट. विद्युदिवोज्ज्वला. २ ङ. झ. स्नापयन्तीतदाऽस्रेणस्तनौवक्त्रंसुनिर्मलं. ३ ङ. च. छ. झ. ञ. ट. नाहमर्हामि. ४ क.—घ. च. छ. ञ. ट. मांराम. ५ ग. ङ. झ. वाक्यकोविदः.

शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ॥ महात्मा बलसंपन्नो रावणो लोकरावणः ॥ ९९ ॥
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ॥ क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ १००॥
[1]त्वत्सकाशाद्दशग्रीवः संस्कारं विधिपूर्वकम् ॥ [2]प्राप्तुमर्हति धर्मज्ञ त्वं यशोभाग्भविष्यसि ॥ १०१ ॥
राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ॥ [3]संस्कारेणानुरूपेण योजयामास रावणम् ॥ १०२ ॥
[ [4]स प्रविश्य पुरीं लङ्कां राक्षसेन्द्रो विभीषणः ॥ रावणस्याग्निहोत्रं तु निर्यापयति सत्वरम् ॥१०३॥
शकटान्दारुरूपाणि अग्नीन्वै याजकांस्तथा ॥ तथा चन्दनकाष्ठानि काष्ठानि विविधानि च ॥१०४॥
अगरूणि सुगन्धीनि गन्धांश्च सुरभींस्तथा ॥ मणिमुक्ताप्रवालानि निर्यापयति राक्षसः ॥ १०५ ॥
आजगाम मुहूर्तेन राक्षसैः परिवारितः ॥ ततो माल्यवता सार्धं क्रियामेव चकार सः ॥ १०६ ॥
सौवर्णीं शिबिकां दिव्यामारोप्य क्षौमवाससम् ॥ रावणं राक्षसाधीशमश्रुपूर्णमुखा द्विजाः ॥
तूर्यघोषैश्च विविधैः स्तुवद्भिश्चाभिनन्दितम् ॥ १०७ ॥
पताकाभिश्च चित्राभिः सुमनोभिश्च चित्रिताम् ॥ उत्क्षिप्य शिबिकां तां तु विभीषणपुरोगमाः ॥
दक्षिणाभिमुखाः सर्वे गृह्य काष्ठानि भेजिरे ॥ १०८ ॥
अग्नयो दीप्यमानास्ते तदाऽध्वर्युसमीरिताः ॥ शरणाभिगताःसर्वे पुरस्तात्तस्य ते ययुः ॥ १०९ ॥
अन्तःपुराणि सर्वाणि रुदमानानि सत्वरम् ॥ पृष्ठतोऽनुययुस्तानि प्लवमानानि सर्वतः ॥ ११० ॥
रावणं प्रयते देशे स्थाप्य ते भृशदुःखिताः ॥] चितां [5]चन्दनकाष्ठानां पद्मकोशीरसंवृताम् ॥
ब्राह्मया [6]संवेशयांचक्रू राङ्कवास्तरणावृताम् ॥ १११ ॥
[7]वर्तते वेदविहितो राज्ञो वै पश्चिमः क्रतुः ॥ प्रचक्रू राक्षसेन्द्रस्य पितृमेधम[8]नुक्रमम् ॥ ११२ ॥
वेदिं च [9]दक्षिणप्राच्यां यथास्थानं च पावकम् ॥ पृषदाज्येन [10]संपूर्णं स्रुवं सर्वे प्रचिक्षिपुः ॥ ११३॥

त्यादिना ॥ ९८ ॥ संयुगेष्वपराजितत्वमुदाहरति—शतक्रत्विति ॥ ९९ ॥ गुणबाहुल्येपि त्वद्वैरी कथं संस्कार्य इत्यत्राह—मरणेति ॥ यथायं तव बन्धुस्तथा ममापि त्वद्वत् बन्धुरेवायमित्यर्थः ॥ १०० ॥ यशोभागिति । पापकारिणमपि संस्कृतवानिति यशस्तव भविष्यतीत्यर्थः ॥ १०१ ॥ अनुरूपेण यायजूकानुगुणेन । अत्र संस्कारारम्भात् स्त्रीनिवर्तनमर्थसिद्धं ॥ १०२—११० ॥ चन्दनकाष्ठानां संबन्धिनीं । पद्मकमुशीरं च गन्धद्रव्यं प्रसिद्धं । ब्राह्मया वेदोक्तप्रक्रियया । रङ्कुः मृगविशेषः तत्संबन्धि चर्म राङ्कवं तदेवास्तरणं तेनावृतां चितां संवेशयाञ्चक्रुः योजयाञ्चक्रुः । रावणं ऋत्विज इति च शेषः ॥ १११ ॥ पश्चिमः क्रतुः अन्त्येष्टिः । वर्तते अवर्तत । चितानिर्माणानन्तरमन्तिमेष्टिं चक्रुरित्यर्थः । राक्षसेन्द्रस्य पितृमेधं पितृमेधसंस्कारं च अनुक्रमं यथाक्रमं प्रचक्रुः ॥ ११२ ॥ संग्रहेणोक्तं संस्कारं प्रपञ्चयति—वेदि-

ति० त्वच्छत्रुत्वादसंस्कार्यइतिचेत्तत्राह **मरणान्तानीति** । नः सात्विकानामस्माकं । प्रयोजनं वैरनिर्यातनरूपं । निर्वृत्तं संपन्नं । अतःपरंनवैरप्रयोजनमस्ति ॥ यदेवं अतः अस्य संस्कारःक्रियतामिति । एषयथातवभ्रातासंस्कारादिनातवानुग्राह्यः तथा ममाप्यनुग्राह्यएव । चतुर्विधमुक्तिष्वेकापिनास्य । तदुक्तंविष्णुपुराणे । “ हिरण्यकशिपोर्विष्णुरयमित्येवंनमनस्यभूत् । दशाननत्वेप्यनङ्गपराधीनतयाजानकीसमासक्तचेतसोदाशरथिरूपदर्शनमेवासीत् । नायमच्युतइत्यासक्तिः । विपद्यतोन्तःकरणस्यमानुषबुद्धिरेवकेवलमभूत् ” इति । अतएव रावणकुंभकर्णयोःशिशुपालदन्तवक्ररूपेणजन्मश्रूयते । नहिभगवत्सालोक्यंप्राप्तयोरपिजन्म भवति । किंतु ब्रह्मणासहमुक्तिरेवेतिसिद्धान्तः ॥ १०० ॥ **ति०** यशोभागिति । रामवाक्येनत्यक्तवैरोभ्रातरंसंस्कृतवानितिख्यातिरेवभविष्यतीत्यर्थः ॥ १०१ ॥ **ति०** द्विजाः राक्षसद्विजाः ॥१०७॥ **ति०** वेदिंचेत्यादि । दक्षिणाप्राचीं चितायादक्षिणाप्राग्दे-

**[ पा० ]** १ क. ख. घ.—ट. त्सकाशान्महाबाहोसंस्कारं. २ क.—घ. च. छ. झ. ञ. क्षिप्रमर्हति. ३ झ. संस्कारयितुमारेभेभ्रातरंरावणंहतं. ४ सप्रविश्यपुरींलङ्कामित्यादयः स्थाप्यतेभृशदुःखिताइत्यन्ताःश्लोकाः झ. पाठेदृश्यन्ते. ५ ङ. झ. ञ. ट. चन्दनकाष्ठैश्चपद्मकोशीरचन्दनैः. ६ ङ. झ. ट. संवर्तयामासू. ७ इदमर्धं झ. पाठेनदृश्यते. ८ क.—ट. मनुत्तमं. ९ ङ. च. झ. ञ. ट. दक्षिणप्राचीं. १० ज. पूर्णेनस्रुवंस्कन्धेप्रचि. क.—घ. च. छ. पूर्णेस्रुवंसर्वेप्रचि. ङ. झ. ञ. ट. संपूर्णस्रुवंस्कन्धेप्रचि.

पादयोः शकटं प्रादुरन्तरूर्वोरुलूखलम् ॥ दारुपात्राणि सर्वाणि अरणिं चोत्तरारणिम् ॥ ११४ ॥
दत्त्वा तु मुसलं चान्यद्यथास्थानं विचक्षणाः ॥ शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ११५ ॥
तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ॥ परिस्तरणिकां राज्ञो घृताक्तां समवेशयन् ॥ ११६ ॥
गन्धैर्माल्यैरलंकृत्य रावणं दीनमानसाः ॥ विभीषणसहायास्ते वस्त्रैश्च विविधैरपि ॥
लाजैश्चावकिरन्ति स्म बाष्पपूर्णमुखास्तदा ॥ ११७ ॥
ददौ च पावकं तस्य विधियुक्तं विभीषणः ॥ ११८ ॥
स्नात्वा चैवार्द्रवस्त्रेण तिलान्दूर्वाभिमिश्रितान् ॥ उदकेन च संमिश्रान्प्रदाय विधिपूर्वकम् ॥११९॥
प्रदाय चोदकं तस्मै मूर्ध्ना चैनं नमस्य च ॥ ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा पुनःपुनः ॥
गम्यतामिति ताः सर्वा विविशुर्नगरं तदा ॥ १२० ॥
प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः ॥ रामपार्श्वमुपागम्य तदाऽतिष्ठद्विनीतवत् ॥ १२१ ॥

मित्यादिना ॥ दक्षिणप्राच्यां चिताया आग्नेयभागे वेदिं तत्र यथास्थानं पावकं च त्रेताग्निं च प्रचक्रुरित्यनुषज्यते । वेद्यां पश्चिमे गार्हपत्यं प्राच्यामाहवनीयं दक्षिणतो दक्षिणाग्निं च स्थापयामासुरित्यर्थः । पृषदाज्येन दधिमिश्रघृतेन । "पृषदाज्यं सदध्याज्यं" इत्यमरः । संपूर्णं स्रुवं होमपात्रं प्रचिक्षिपुः प्रतिपत्त्यर्थं चितायामिति शेषः ॥ ११३ ॥ यज्ञपात्रान्तराणामपि प्रतिपत्तिं दर्शयति—पादयोरित्यादिना श्लोकत्रयेण ॥ शकटं सोमराजानयनशकटम् । उलूखलं यज्ञीयव्रीह्यवहननसाधनं । अन्यत् स्थाल्यादिकं दारुपात्रादिकं । यथास्थानं दत्त्वा । शास्त्रदृष्टेन वेदविहितेन महर्षिविहितेन स्मृत्युक्तेन विधिना क्रमेण तत्र चितासमीपे मेध्यं पवित्रं पशुं छागं हत्वा । हननं होमपर्यन्तस्याप्युपलक्षणं । परिस्तरणिकां परिस्तरणानि । जात्येकवचनं । समवेशयन् चिक्षिपुरित्यर्थः ॥ ११४—११६ ॥ अथ शवालंकारमाह—गन्धैरित्यादिसार्धश्लोकमेकं वाक्यं ॥ अवकिरन्ति चितामिति शेषः ॥ ११७ ॥ अथ संस्कारमाह—ददाविति ॥ तस्य तस्मै रावणाय । विधियुक्तं मन्त्रयुक्तं ॥ ११८ ॥ स्नात्वेत्यादि गम्यतामितीतिपर्यन्तं किंचिदधिकं श्लोकद्वयमेकान्वयं ॥ दूर्वोदकमिश्रितान तिलान् प्रेतावाहनार्थं भूमौ प्रदाय तत्र तस्मै रावणाय उदकं दत्त्वा ताः स्त्रियः गम्यतामिति पुनः पुनः सान्त्वमुक्त्वा अनुनयामास पुरीं प्रापयामास ॥११९—१२० ॥ ताः सर्वा इत्युत्तरवाक्यादि ॥ रामपार्श्वमुपागम्येति । रणशिरसि हतत्वेन रावणस्याशौचाभावादागतः अतएवोत्तरदिने राज्याभिषेकोऽयोध्यागमनं चानुष्ठितं । प्रथमायां रावणसंस्कारः ॥

शेइत्यर्थः । यथास्थानंपावकंचप्रचक्रुः "दक्षिणपूर्वदेशेआहवनीयंनिदधाति । उत्तरपश्चिमेगार्हपत्यं । दक्षिणपश्चिमेदक्षिणाग्निं ।" इतिसूत्रोक्तस्थानमनतिक्रम्येत्यर्थः ॥ पृषदाज्येनसंपूर्णेनोपलक्षितंस्रुवंस्कन्धे स्कन्धदेशेप्रचिक्षिपुः । यद्यपि 'नासिकेस्रुवौ' इत्यापस्तंबेनोक्तं । तथापिसूत्रान्तरात्स्कन्धेपिनिक्षेपःस्रुवस्यबोध्यः । तथा "पादयोःशकटमूर्वोरुलूखलं" इतिचसूत्रान्तरादेवबोध्यं । स० स्रुवं स्कन्धे स्वस्कन्धेघृतांविचिक्षिपुः । नासिकयोरितिशेषः । "नासिकेस्रुवौ" इत्यापस्तंबोक्तेः । ऋष्यन्तरसूत्रान्तरंवास्कन्धइत्यत्रोत्तरत्रचोहनीयंवा ॥ ११३ ॥ ति० दारुपात्रादिसर्वंसूत्रोक्ततत्तत्स्थानेदत्त्वाऽन्यंमुसलं चातुर्मास्यमुसलंयथास्थानंदत्वाच विचक्रमुः पितृमेधंचक्रुः ॥ ११५ ॥ ती० अनुस्तरणिकां घृताक्तांसमवेशयन् । अनुस्तरणिकांराजगवीं । राजगवीमालभ्यतच्चर्मणायजमानमास्तृतवन्तइत्यर्थः । 'यथामृतायानुस्तरणींघ्नन्ति' इतिश्रुतेः ॥ ति० परिस्तीर्यतेमुखमनयेतिपरिस्तरणिका वपा । तांराक्षसेन्द्रस्यमुखेसमवेशयन् । 'वपास्यमुखंप्रौर्णोति' इतिसूत्रात् ॥ ११६ ॥ ति० विधिपूर्वकंप्रदाय स्थितइतिशेषः । ननु "निहतंरावणंदृष्ट्वारामेणाक्लिष्टकर्मणा । तत्यजुस्तंमहाभागंपञ्चभूतानिरावणम् । शरीरधातवोह्यस्यमांसंरुधिरमेवच । नेशुर्ब्रह्मास्त्रनिर्दग्धानचभस्माप्यदृश्यत" इतिमहाभारतउक्तत्वेनकथमस्यवाल्मीकिनास्मशानानयनपूर्वकंदाहउक्तइतिचेन्न । तस्यरामबाणतेजोवर्णनविषयेऽत्युक्त्यलङ्कारपरत्वादितिवदन्ति ॥ ११९ ॥ ति० गम्यतामित्युवाचेत्यर्थः । रावणपत्नीरितिशेषः ॥ अयंसंस्कारो नवम्यामेवसायंकाले ॥ १२० ॥

[ पा० ] १ च. छ. अनुस्तरणिकां. २ च. छ. झ. ञ. ट. तिलान्दर्भविमिश्रितान्. ३ ग. ङ. झ. ञ. ट. सान्त्वयित्वा. ४ ङ. झ. ट. प्रविष्टासुपुरींस्त्रीषुराक्षसेन्द्रोविभीषणः. ५ क. तदातिष्ठत्कृताञ्जलिः.

रामोपि सह सैन्येन ससुग्रीवः सलक्ष्मणः ॥ हर्षं लेभे रिपुं हत्वा यथा[1] वृत्रं शतक्रतुः ॥ १२२ ॥
[ ततो[2] विमुक्त्वा सशरं शरासनं महेन्द्रदत्तं कवचं च तन्महत् ॥
विमुच्य रोषं रिपुनिग्रहात्ततो रामः स सौम्यत्वमुपागतोऽरिहा ] ॥ १२३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥११४॥

## पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

लक्ष्मणेन रामाज्ञया विभीषणस्यलङ्काराज्येऽभिषेचनम् ॥ १ ॥ रामेण मैथिलींप्रति निजविजयकुशलनिवेदनाय हनुमत्प्रेषणम् ॥ २ ॥

ते रावणवधं[3] दृष्ट्वा देवगन्धर्वदानवाः ॥ जग्मुः स्वैःस्वैर्विमानैस्ते कथयन्तः शुभाः कथाः ॥ १ ॥
रावणस्य वधं घोरं राघवस्य पराक्रमम् ॥ सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितम्[4] ॥ २ ॥
अनुरागं च वीर्यं च सौमित्रेर्लक्ष्मणस्य[5] च ॥ [ पतिव्रतात्वं[6] सीताया हनूमति पराक्रमम् ॥]
कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् ॥ ३ ॥
राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम्[7] ॥ अनुज्ञाय[8] महाभागो मातलिं प्रत्यपूजयत् ॥ ४ ॥
राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः ॥ दिव्यं तं रथमास्थाय दिवमेवारुरोह[9] सः ॥ ५ ॥
तस्मिंस्तु दिवमारूढे सुरसारथिसत्तमे[10] ॥ राघवः परमप्रीतः सुग्रीवं परिषस्वजे ॥ ६ ॥
परिष्वज्य च सुग्रीवं लक्ष्मणेन[11] प्रचोदितः ॥ पूज्यमानो हरिश्रेष्ठैराजगाम बलालयम् ॥ ७ ॥

॥ १२१—१२३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

अथ विभीषणाभिषेकः—ते रावणवधमित्यादि ॥ अत्र क्रियाभेदात्तच्छब्दद्वयं ॥ १ ॥ शुभाः कथाः कथयन्त इत्यस्यैव विवरणं—रावणस्य वधमित्यादि ॥ मन्त्रितं मन्त्रं । सौमित्रेरिति तन्मातुः श्लाघनव्यञ्जनाय अस्य जननी हि भाग्यवतीति ॥ २—३ ॥ इन्द्रदत्तं इन्द्रप्रेरितं । शिखिप्रभं अग्निप्रभं । प्रत्यपूजयत् उपचचार ॥ ४—६ ॥ प्रचोदितः विज्ञप्तः ।

**स०** सौम्यत्वमुपागतः । एतेनक्रोधमुपादातुंहातुंचशक्तोरामइतिस्वातन्त्र्यंद्योत्यते ॥१२३॥ इतिचतुर्दशोत्तरशततमःसर्गः ॥११४॥

**ति०** सुग्रीवस्यमन्त्रितं सेनासंमेलनसीतान्वेषणादिसर्वकार्यसाधकमन्त्रसामर्थ्यं ॥ २ ॥ **ति०** अनुज्ञाप्य रथंनयेत्याज्ञांदत्वा । यद्यपिभारतेसीतायाआगमनोत्तरंरथादवतरणंभगवतउक्तं । तथापितत्रपौर्वापर्यक्रमेतात्पर्याभावान्नक्षतिः । **स०** शिखिप्रभं अग्नितेजसं । ननुवनपर्वणि " दृष्ट्वारामंतुजानक्यासंगतंशक्रसारथिः । उवाचपरमप्रीतःसुहृन्मध्यइदंवचः । देवगन्धर्वयक्षाणांमानुषासुरभोगिनाम् । अपनीतंत्वया दुःखमिदंसत्यपराक्रम । सदेवासुरगन्धर्वायक्षराक्षसपन्नगाः । कथयिष्यन्तिलोकास्त्वांयावद्भूमिर्धरिष्यति । इत्येवमुक्त्वानुज्ञाप्यरामंशस्त्रभृतांवरम् । संपूज्यापाक्रमत्तेनरथेनादित्यवर्चसा " इतिसीतासंगमनानन्तरंरथस्यसमातलेःप्रेषणोक्तेरत्र पूर्वमेवतदुक्तेर्विरोधइतिचेत्सत्यं । भारतस्योत्तरत्वात्तदनुसारेणकथोद्धापउत्तरत्रात्रकार्यः । मातलिना दृष्टसीतारामसंगमेनगमनेसर्ववार्तायाइन्द्रंप्रतिप्रतिवक्तुंसुशकत्वगुणलाभाच्च । अथवासंकोचेनकथांकथयितुर्बादरायणस्यननिर्भरःपौर्वापर्यविषयइत्येवमुक्तिः । रावणहननानन्तरंसीतासंगत्यन्तरायस्यान्तराभावान्मातलिनास्वनाथंप्रतिप्रतिबोधयितुंशक्यत्वाच्चेतिवासमाधिरवधेयः ॥४॥ **ति०** अथ त्रिभिर्दिनैर्दशरात्रैकादशाहद्वादशाहकर्तव्यक्रियासमाप्तौ । चतुर्थेऽहनीत्यर्थः ॥ नात्रदशाहमाशौचमितिभ्रमितव्यं । "उद्यतैराहवे शस्त्रैःक्षत्रधर्ममृतस्यतु । सद्यःसंतिष्ठतेयज्ञस्तथाशौचमितिस्थितिः " इतिमनूक्तेः ॥ ७ ॥

**[ पा० ]** १ ङ. झ. वृत्रंवज्रधरोयथा. २ अयंश्लोकः ङ. झ. ञ. ट. पाठेषुदृश्यते. ३ च. छ. वधंदृष्ट्वा. ४ क. च. मित्रतां. ५ ख. ङ. च. झ. ञ. ट. मारुतेर्लक्ष्मणस्यच. ६ इदमर्धं ङ. झ. ट. पाठेषुदृश्यते. ७ ख. ग. च. शशिप्रभं. ८ झ. अनुज्ञाप्य. ९ ङ. झ. दिवमेवोत्पपातह. १० ङ. झ. सरथेरथिनांवरः. ११ च. छ. लक्ष्मणेनाभिचोदितः. क. ख. ङ. झ. ट. लक्ष्मणेनाभिवादितः.

[1]अब्रवीच्च तदा रामः [2]समीपपरिवर्तिनम् ॥ सौमित्रिं [3]सत्यसंपन्नं [4]लक्ष्मणं दीप्ततेजसम् ॥ ८ ॥
विभीषणमिमं सौम्य लङ्कायामभिषेचय ॥ अनुरक्तं च भक्तं च मम चैवोपकारिणम् ॥ ९ ॥
एष मे परमः कामो यदीमं रावणानुजम् ॥ लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥ १० ॥
एवमुक्तस्तु सौमित्री राघवेण महात्मना ॥ तथेत्युक्त्वा तु संहृष्टः सौवर्णं घटमाददे ॥ ११ ॥
तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ॥ आदिदेश महासत्त्वान्समुद्रसलिलानये ॥ १२ ॥
इति [5]शीघ्रं ततो गत्वा वानरास्ते [6]महाबलाः ॥ आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ॥ १३ ॥
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ॥ घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ १४ ॥
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥ विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् ॥
अभ्यषिञ्चत्स धर्मात्मा शुद्धात्मानं विभीषणम् ॥ १५ ॥
[[7]अभ्यषिञ्चंस्तदा सर्वे राक्षसा वानरास्तदा ॥ प्रहर्षमतुलं गत्वा तुष्टुवू राममेव हि]॥ १६ ॥
तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः ॥ दृष्ट्वाऽभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् ॥
[[8]राघवः परमां प्रीतिमाजगाम सलक्ष्मणः] ॥ १७ ॥
स तद्राज्यं महत्प्राप्य रामदत्तं विभीषणः ॥ प्रकृतीः सान्त्वयित्वा च ततो रामसुपागमत् ॥१८॥
अक्षतान्मोदकाँल्लाजान्दिव्याः सुमनसस्तदा ॥ आजह्रुरथ संहृष्टाः पौरास्तस्मै निशाचराः ॥ १९ ॥
स तान्गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत् ॥ [9]मङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् ॥ २० ॥

---

बलालयं शिबिरं ॥ ७ ॥ सत्यसंपन्नत्वादिविशेषणं यथोक्तकारित्वद्योतनाय ॥ ८ ॥ विभीषणमित्यादिश्लोकद्वयमेकान्वयं । लङ्कायामभिषेचय लङ्कायां गत्वाऽभिषेचय । समुद्रतीरएव लङ्काराज्याभिषेके कृतेपि पुनर्विधानं रावणसिंहासनेभिषेकार्थं । अनुरक्तमित्यनेन मित्रकृत्यमुक्तं । भक्तमित्यनेन दास्यकृत्यं । उपकारिणमित्यनेनानुरागभक्त्योः कार्यपर्यवसानमुक्तं । परमःकामइत्यनेन शरणागतविभीषणाभिमतपरिपूरणमेव विजयस्य प्रधानप्रयोजनमित्यवगम्यते ॥ ९—१० ॥ घटमिति जात्येकवचनं ॥ ११ ॥ आनये आनयने। हस्त इत्यत्रापि जात्येकवचनं । वानरेन्द्राणामिति बहुवचनप्रयोगात् ॥ १२ ॥ इतीति । आदेशाद्धेतोरित्यर्थः । "इति हेतुप्रकरणप्रकारादिसमाप्तिषु"इत्यमरः । वानरा वानरोत्तमा इति वचनं वानरोत्तमत्वेपि मानुषत्वव्यावर्तनाय । समुद्रात् समुद्रेभ्यः ॥ १३—१४ ॥ लङ्कायामित्यादिसार्धश्लोकएकान्वयः । अनेन रामनिदेशानन्तरमेव लक्ष्मणो विभीषणादिभिः सह लङ्कां प्रविष्टवानित्यवगम्यते । मन्त्रदृष्टेन मन्त्रेषु वेदेषु दृष्टेन स्पष्टमवगम्यमानेन विधिना प्रकारेण । शुद्धात्मानमित्यनेन रामाज्ञया अभिषेकमङ्गीकृतवान् । परमार्थस्तु रामकैङ्कर्य एवासक्तोभूदित्यवगम्यते । आज्ञाकैङ्कर्यं हि कर्तव्यं ॥ १५—१७ ॥ प्रकृतीः अमात्यप्रभृतीन् । सान्त्वयित्वा पुत्रमित्रादिविनाशजशोकापनोदनं कृत्वा । राममुपागमत् । लक्ष्मणेन सहेति शेषः ॥ १८—१९ ॥ मङ्गलमर्हतीति मङ्गल्यं । मङ्गलप्रयोजनमित्यर्थः । मङ्गलं हरिद्रादिमङ्गलद्रव्यं । सर्वं उक्ताक्षतादिभिन्नं । रामाय

---

**स०** लङ्कायां तत्सिंहासनइतिशेषः । एतेन पूर्वविभीषणाभिषेकेपिसाक्षात्सिंहासनएवेदानींकरणान्नदोषइतिज्ञेयं ॥ ९ ॥ **स०** हस्ते जातावेकवचनं । समुद्रसलिलं पूर्वादिचतुस्समुद्रसलिलंप्रतिचतुर्दिग्गतमप्युदकंस्वल्पंस्वल्पमस्मिन्प्रस्थाप्यानयतेतिव्यादिदेश । उत्तरत्रैकंघटमित्युक्तेःपङ्क्तीभूयातिद्रुतमानयनार्थं बहूनामाज्ञापनं ॥ १२ ॥ **स०** समुद्रात् चतुस्समुद्र्याः । तस्यराज्याभिषेकोपयुक्तत्वस्यरामाद्यभिषेकस्थलेकथनात् । अन्यथा दक्षिणसमुद्रस्यातिसमीपगतत्वेनतदानेतॄणांबहुलकथनस्यमनोजवानितिविशेषणस्यवैयर्थ्यंस्यात् ॥ १३ ॥ इतिपञ्चदशोत्तरशततमःसर्गः ॥ ११५ ॥

**[ पा० ]** १ ङ. झ. अथोवाचसकाकुत्स्थः. २ घ. समीपेसमुपस्थितं. ३ घ. ट. सौम्यसंपन्नं. क. ग. च. छ. ञ. सत्वसंपन्नं. ङ. झ. मित्रसंपन्नं. ४ ङ. झ. ट. लक्ष्मणंशुभलक्षणं. ५ क. ख. च.—ञ. अतिशीघ्रं. ६ ङ. झ. मनोजवाः. ७ अयंश्लोकः ङ.—झ. पाठेषुदृश्यते. ८ इदमर्धं क. ङ. झ. ञ. ट. पाठेषुदृश्यते. ९ घ. ङ झ. माङ्गल्यं.

कृतकार्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम् ॥ प्रतिजग्राह तत्सर्वं तस्यैव प्रियकाम्यया ॥
[ [1]तत्प्रगृह्य परां प्रीतिं जगाम सहलक्ष्मणः ] ॥ २१ ॥
ततः शैलोपमं वीरं प्राञ्जलिं [2]पार्श्वतः स्थितम् ॥ अब्रवीद्राघवो वाक्यं हनुमन्तं प्लवङ्गमम् ॥ २२ ॥
अनुमान्य महाराजमिमं सौम्य विभीषणम् ॥ [ [3]प्रविश्य नगरीं लङ्कां कौशलं ब्रूहि मैथिलीम् ] ॥२३॥
गच्छ सौम्य पुरीं लङ्कामनुज्ञाप्य यथाविधि ॥ प्रविश्य रावणगृहं विजयेनाभिनन्द्य च ॥ २४ ॥
वैदेह्यै मां कुशलिनं ससुग्रीवं सलक्ष्मणम् ॥ आचक्ष्व [4]जयतांश्रेष्ठ रावणं च मया हतम् ॥ २५ ॥
प्रियमेतदुदाहृत्य मैथिल्यास्त्वं हरीश्वर ॥ प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चदशोत्तरशततमः सर्गः ॥११५॥

---

## षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

हनुमताऽशोकवनमेत्यसीतांप्रति रामसंदेशनिवेदनपूर्वकं कृतागसांराक्षसीनां हिंसनाभ्यनुज्ञानप्रार्थना ॥ १ ॥ सीतया तदागसां परप्रयोज्यत्वाभिधानेन ऋक्षप्रोक्तश्लोकानुवादेनक्षमाप्रशंसनपूर्वकं तन्निषेधनम् ॥ २ ॥ सीतया स्वस्यरामावलोकनाभिलाषं निवेदितेनहनुमता तत्समाश्वासनपूर्वकं पुनारामसमीपगमनम् ॥ ३ ॥

इति प्रतिसमादिष्टो हनुमान्मारुतात्मजः ॥ प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १ ॥
[ [5]प्रविश्य च पुरीं लङ्कामनुज्ञाप्य विभीषणम् ॥ ततस्तेनाभ्यनुज्ञातो हनुमान्वृक्षवाटिकाम् ॥
संप्रविश्य यथान्यायं सीताया विदितो हरिः ] ॥ २ ॥
प्रविश्य च महातेजा रावणस्य निवेशनम् ॥ ददर्श [6]मृजया हीनां सातङ्कामिव रोहिणीम् ॥
वृक्षमूले निरानन्दां राक्षसीभिः समावृताम् ॥ ३ ॥
निभृतः प्रणतः प्रह्वः सोभिगम्याभिवाद्य च ॥ ४ ॥
दृष्ट्वा तमागतं देवी हनुमन्तं महाबलम् ॥ तूष्णीमास्त तदा दृष्ट्वा [7]स्मृत्वा प्रमुदिताऽभवत् ॥ ५ ॥

---

लक्ष्मणाय च न्यवेदयत् ॥ २० ॥ तस्यैव प्रियकाम्यया न तु स्वभोगेच्छया ॥ २१—२२ ॥ अनुमान्येत्यादिसार्धश्लोकत्रयमेकान्वयं । विभीषणमनुमान्य लङ्कां गच्छ । विभीषणमनुज्ञाप्य रावणगृहं प्रविश्य । विजयेन विजयकथनेन । अभिनन्द्य सीतां तोषयित्वा । वैदेह्यै मां कुशलिनमाचक्ष्वेति संबन्धः । संदेशं सीतावाचिकं ॥ २३—२६ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चदशोत्तरशततमः सर्गः ॥११५॥

---

अथ हनुमत्सीतासंवादः—इति प्रतिसमादिष्ट इत्यादि । मारुतात्मज इत्यनेन वेगातिशय उच्यते । पूज्यमान इति । मार्गप्रदर्शनादिभिः पूज्यमानत्वं ॥ १—२ ॥ प्रविश्येत्यादिसार्धश्लोक एकान्वयः । मृजया शरीरसंस्कारेण । सातङ्कां सग्रहपीडां ॥ ३ ॥ निभृत इत्यर्धं । अभिगम्य समीपं प्राप्य । अभिवाद्य स्वनाम संकीर्त्य । प्रणतः कृतप्रणामः सन् । निभृतः निश्चलः । प्रह्वः प्रकर्षेण संकुचितगात्रः । स्थित इति शेषः । आचार्यास्तु करणत्रयेणापि निश्चलो बभूवेत्यर्थं इति प्राहुः ॥ ४ ॥ तं दृष्ट्वा विस्मृत्य प्रथमं तूष्णीमास्त । पुनर्दृष्ट्वा स्मृत्वा प्रमुदिताऽभवत् । यद्वा सामान्यतो दृष्ट्वा तूष्णीमास्त । ततो विशेषतो दृष्ट्वा स्मृत्वा

---

**स०** दृष्ट्वा रामविजयादिकंदृष्ट्वैवसमागतं नतुश्रुत्वा एतादृशंहनुमन्तंदृष्ट्वातदातूष्णीमास्त किंवदिष्यतिवेति । स्मृत्वा रामानयनादिकंयथाप्रतिज्ञंतेनकृतंस्मृत्वाहृष्टाचाभवत् । एवमर्थांगीकारादेवदृष्ट्वेत्यनेनपौनरुक्त्यं ॥ ५ ॥

**[ पा० ]** १ इदमर्धं ग. झ. पाठयोर्दृश्यते. २ ग. ङ. झ. प्रणतंस्थितं. च. ञ. ट. पुरतःस्थितं. ३ इदमर्धं ङ. झ. पाठयोर्दृश्यते. ४ ङ. झ. ञ. वदतांश्रेष्ठ. ५ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ६ क. ख. च. छ. ज. शशिनाहीनां. ७ ङ. झ. स्मृत्वाहृष्टाऽभवत्तदा.

सौम्यं दृष्ट्वा मुखं तस्या हनुमान्प्लवगोत्तमः ॥ रामस्य वचनं सर्व[1]माख्यातुमुपचक्रमे ॥ ६ ॥
वैदेहि कुशली रामः सहसुग्रीवलक्ष्मणः ॥ विभीषणसहायश्च हरीणां सहितो बलैः ॥ ७ ॥
कुशलं चाह सिद्धार्थो हतशत्रुररिंदमः ॥ ८ ॥
विभीषणसहायेन रामेण हरिभिः सह ॥ निहतो रावणो देवि लक्ष्मणस्य नयेन च ॥ ९ ॥
पृष्ट्वा तु कुशलं रामो वीरस्त्वां रघुनन्दनः ॥ अब्रवीत्परमप्रीतः कृतार्थेनान्तरात्मना ॥ १० ॥
प्रियमाख्यामि ते देवि त्वां तु भूयः सभाजये ॥ दिष्ट्या जीवसि [2]धर्मज्ञे जयेन मम संयुगे ॥११॥
[ तव[3] प्रभावाद्धर्मज्ञे महान्रामेण संयुगे ॥ ] ल[4]ब्धो नो विजयः सीते स्वस्था भव गतव्यथा ॥
[5]रावणश्च हतः शत्रुर्लङ्का चेयं वशे स्थिता ॥ १२ ॥
मया ह्यलब्धनिद्रेण दृढेन तव निर्जये ॥ [6]प्रतिज्ञैषा विनिस्तीर्णा बद्ध्वा सेतुं महोदधौ ॥ १३ ॥
संभ्रमश्च [7]न गन्तव्यो वर्तन्त्या रावणालये ॥ विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतम् ॥ १४ ॥
तदाश्वसिहि [8]विश्वस्ता स्वगृहे परिवर्तसे ॥ अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥ १५ ॥
एवमुक्ता समुत्पत्य सीता शशिनिभानना ॥ प्रहर्षेणावरुद्धा सा [9]व्याजहार न किंचन ॥ १६ ॥
[10]अब्रवीच्च हरिश्रेष्ठः सीतामप्रतिजल्पतीम् ॥ किं[11]नु चिन्तयसे देवि किंनु मां नाभिभाषसे ॥ १७ ॥
एवमुक्ता हनुमता सीता [12]धर्मे व्यवस्थिता ॥ अब्रवीत्परमप्रीता [13]हर्षगद्गदया गिरा ॥ १८ ॥
प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् ॥ प्रहर्षवशमापन्ना निर्वाक्याऽस्मि क्षणान्तरम् ॥ १९ ॥
न हि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम ॥ [14]मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् ॥ २० ॥

---

हनुमानिति ज्ञात्वा प्रमुदिताऽभवत् । अथवा तं दृष्ट्वा स्मृत्वा प्रत्यभिज्ञाय । प्रमुदिताऽभवत् । प्रमोदातिरेकेण स्तब्धा सती तूष्णीमास्तेत्यर्थः ॥ ५ ॥ सौम्यं निजदर्शनेन विकसितं ॥ ६—१० ॥ रामसंदेशवाक्यमाह—प्रियमाख्यामीत्यादिश्लोकद्वयमेकान्वयं । हे देवि, ते प्रियमाख्यामि । त्वां तु भूयः भूयिष्ठं । सभाजये प्रीणये । धर्मज्ञे पातिव्रत्यधर्मज्ञे । त्वं दिष्ट्या जीवसि । अन्यथा मम जयो व्यर्थ एव स्यादिति भावः । मम जयेन मत्पराक्रमेण । नः संयुगे जयो लब्धः । गतव्यथा सती स्वस्था भवेति योजना ॥ ११–१२ ॥ हे सीते तव निर्जये शत्रुहस्तात्तव विमोचने । दृढेन एकाग्रचित्तेन । अतएव अलब्धनिद्रेण मया महोदधौ सेतुं बद्ध्वा एषा प्रतिज्ञा रावणं हनिष्यामीति प्रतिज्ञा । विनिस्तीर्णा प्रतिपालितेत्यर्थः ॥ १३ ॥ संभ्रमः व्यग्रता । वर्तन्त्या वर्तमानया ॥ १४ ॥ यस्मात् स्वगृहे परिवर्तसे तस्माद्विश्वस्ता सती आश्वसिहि विश्रान्ता भव । निवृत्तखेदा भवेत्यर्थः । अयं विभीषणः ॥ १५ ॥ समुत्पत्य हर्षेण समुत्थाय । अवरुद्धा अवरुद्धव्यापारा ॥ १६–१८ ॥ क्षणान्तरं क्षणमात्रं । निर्वाक्यास्मि । हर्षावरुद्धव्यापारत्वादिति भावः ॥ १९ ॥ निर्वाक्यास्मीत्यत्र हेत्वन्तरमाह–न हीत्यादि । सदृशं प्रत्यभिनन्दनं प्रति-

---

**स०** तवप्रभावात् त्वत्पातिव्रत्यमाहात्म्यात् । तत्स्तुतिकालत्वादेवमुक्तिः । तव त्वत्संबन्धिनारामेण । प्रभावात् स्वसामर्थ्यात् । अयंविजयोलब्धइतिवा ॥ १२ ॥ **स०** अत्रेदानीमभावेपिकालान्तरेदेशान्तरेदीयतामित्यतआह—नचेति । पृथिव्यांनास्तीत्यनेन ममभातुर्गृहेऽभावेपिभर्तुर्गृहेसहभोगरूपमस्तीतिसूचयति ॥ २० ॥

**[ पा० ]** १ इदमर्धं ङ. झ. पाठयोर्नदृश्यते. २ घ. धर्मज्ञेयत्नेमहतिसंयति. क. च. छ. धर्मज्ञेजयोमेप्रतिगृह्यतां. ३ इदमर्धं ङ. झ. पाठयोर्दृश्यते. ४ ङ. झ. लब्धोयंविजयः. ५ ख. च. ञ. रावणोनिहतःपापःसहामात्यसुतोमृधे. ६ ख. च. छ. प्रतिज्ञापालितादेवि. ७ क. ख. ङ. च. छ. झ. ञ. ट. नकर्तव्यो. ८ ङ. झ. विस्रब्धं. ९ ङ. झ. ट. व्याहर्तुंनशशाकह. १० ङ. झ. ट. ततोऽब्रवीद्धरिवरः. ११ ङ. च. छ. झ. ट. किंत्वंचिन्तयसे. १२ ङ. झ. धर्मपथेस्थिता. १३ ङ. झ. बाष्पगद्गदया. १४ ङ. झ. आख्यानकस्यभवतोदातुं.

न हि पश्यामि तत्सौम्य पृथिव्यामपि वानर ॥ सदृशं मत्प्रियाख्याने तव दातुं भवेत्समम् ॥२१॥
हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ॥ राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितुम् ॥२२॥
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ॥ गृहीतप्राञ्जलिर्वाक्यं सीतायाः प्रमुखे स्थितः ॥ २३ ॥
भर्तुः प्रियहिते युक्ते भर्तुर्विजयकाङ्क्षिणि ॥ स्निग्धमेवंविधं वाक्यं त्वमेवार्हसि भाषितुम् ॥ २४ ॥
तवैतद्वचनं सौम्ये सारवत्स्निग्धमेव च ॥ रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥ २५ ॥
अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः ॥ हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम् ॥ २६ ॥
तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा ॥ ततः शुभतरं वाक्यमुवाच पवनात्मजम् ॥ २७ ॥
अतिलक्षणसंपन्नं माधुर्यगुणभूषितम् ॥ बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् ॥ २८ ॥
श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः ॥ बलं शौर्यं श्रुतं सत्त्वं विक्रमो दाक्ष्यमुत्तमम् ॥२९॥
तेजः क्षमा धृतिर्धैर्यं विनीतत्वं न संशयः ॥ एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः ॥३०॥
अथोवाच पुनः सीतामसंभ्रान्तो विनीतवत् ॥ प्रगृहीताञ्जलिर्हर्षात्सीतायाः प्रमुखे स्थितः ॥३१॥

प्रियवचनं ॥ २० ॥ सदृशंप्रदेयवस्त्वपि नपश्यामीत्याह—न हीत्यादिना । अत्र अपिशब्देन अन्तरिक्षस्वर्गौ समुच्चीयेते । त्रिष्वपि लोकेषु न पश्यामि । यत् मत्प्रियाख्याने विषये तव दातुं समं अत्यन्तसदृशं भवेत् ॥ २१ ॥ उक्तंविवृणोति—हिरण्यमिति । हिरण्यं रजतं । "रजतꣳहिरण्यं"इति श्रुतेः । त्रिषु लोकेषु राज्यं त्रिलोकविषयराजत्वं । नैतदर्हति भाषितुं । हिरण्याद्येतत्सर्वमपि प्रियाख्यानसमत्वेन भाषितुंनार्हतीत्यर्थः ॥ २२ ॥ प्रमुखे अग्रे ॥ २३ ॥ प्रतिप्रियवचनं न पश्यामीत्यस्योत्तरमाह—भर्तुरिति । एवंविधं स्निग्धं वाक्यं भाषितुं त्वमेवार्हसि नान्या । अनेन सर्वोत्तरं प्रीतिप्रियवचनं मह्यं दत्तमित्युक्तं भवति ॥ २४ ॥ प्रियाख्यानसदृशं प्रदेयं वस्तु नास्तीत्यस्योत्तरमाह—तवेति । एतत् प्रत्यभिनन्दनं न पश्यामीत्येतत् । सारवत् प्रत्यभिनन्दनवचनराहित्यकथनेन मद्वचनस्य निरवधिकप्रीतिजनकत्वकथनान्महातात्पर्यवत् । स्निग्धं मयि प्रीतिपुरःसरं । एतद्वचनश्रवणेनैव मया सर्वोत्तरं वस्तु समुपलब्धमिति भावः ॥ २५ ॥ पूर्वमेव लब्धदेवराज्यादिकस्य तत्प्रदानं निरर्थकमित्याशयेनाह—अर्थत इति । रामं विजयिनं पश्यामीति यत् अस्मात् अर्थतः प्रयोजनात् । देवराज्यादयो गुणाः उत्कर्षाः प्राप्ताः । रामविजयदर्शनमेव राज्यादिकमित्यर्थः ॥ २६—२७ ॥ नानृग्वेदेत्यादिना राम इव स्वयमपि तद्वाक्यसौष्ठवं प्रशंसति—अतीति । अतिलक्षणसंपन्नं आकाङ्क्षायोग्यतासन्निधिमत्पदवत्त्वरूपवाक्यलक्षणसंपन्नं । "बहुव्याहरताऽनेन न किंचिदपशब्दितं" इत्युक्तशब्दसाधुत्वसंपन्नं । माधुर्यगुणभूषितं " संश्रवे मधुरंवाक्यम्" इत्युक्तरीत्या श्रवणमात्रेणानन्दजनकत्वरूपमाधुर्यगुणभूषितं । अष्टाङ्गया "ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः " इत्युक्ताष्टाङ्गयुक्तया बुद्ध्या युक्तं । तादृशबुद्धिपूर्वकमित्यर्थः ॥ २८ ॥ न केवलं वाक्यतः गुणतोपि श्लाघ्योसीत्याह—श्लाघनीय इत्यादिना श्लोकद्वयेन । अनिलस्य श्लाघनीयः पुत्रः । अनिलादपि संजीवनकर इत्यर्थः । संजीवनं चानृशंस्यधर्मादित्याह—परमधार्मिक इति । बलं प्रयाससहिष्णुत्वं । शौर्यं युद्धोत्साहः । श्रुतं शास्त्रज्ञानं । " श्रुतं शास्त्रावधृतयोः " इत्यमरः । सत्वं शारीरः सारः । विक्रमः पराक्रमः । दाक्ष्यं सामर्थ्यं । उत्तममिति सर्वविशेषणं । तेजः पराभिभवनसामर्थ्यं । क्षमा अपराधसहिष्णुत्वं । धृतिः प्रभावः । धैर्यं क्षोभके सत्यक्षोभ्यत्वं । विनीतत्वं विनयवत्त्वं । विशिष्टनीतिमत्त्वं वा । एते चान्ये च दयादयो बहवो गुणाः त्वय्येव शोभनाः त्वामाश्रयमधिगम्य शोभमाना भवन्ति । न संशयः नाहमसतो गुणानारोप्य स्तौमीत्यर्थः ॥ २९—३१ ॥

शि० तत्रबलं शरीरसामर्थ्यं । सत्वमिन्द्रियसामर्थ्यं । विक्रमःपादविक्षेपविशेषइतिनपौनरुक्त्यं । श्लोकद्वयमेकान्वयि ॥ २८ ॥
ति० असंभ्रान्तः खुत्याऽविकृतचित्तः । विनीतवत् विनीतार्हं ॥ ३१ ॥ इतिषोडशोत्तरशततमःसर्गः ॥ ११६ ॥

[ पा० ] १ ङ. झ. ट. दत्वाभवेत्सुखं. २ ग. ङ. झ. ज. ट. एतन्नार्हति. ३ ङ. झ. ट. त्वमेवार्हस्यनिन्दिते.

इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे ॥ हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा ॥३२॥
क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम् ॥ घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः ॥
राक्षस्यो दारुणकथा वरमेतत्प्रयच्छ मे ॥ ३३ ॥
मुष्टिभिः पाणिभिः सर्वाश्चरणैश्चैव शोभने ॥ इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ॥ ३४ ॥
घातैर्जानुप्रहारैश्च दशनानां च पातनैः ॥ भक्षणैः कर्णनासानां केशानां लुञ्चनैस्तथा[1] ॥ ३५ ॥
नखैः शुष्कमुखीभिश्च दारणैर्लङ्घनैर्हतैः ॥ [ [2]विभिन्नशङ्खग्रीवांसपार्श्वकैश्च कलेबरैः ॥ ]
निपात्य हन्तुमिच्छामि तव विप्रियकारिणीः[3] ॥ ३६ ॥
[4]एवंप्रकारैर्बहुभिर्विप्रकारैर्यशस्विनि ॥ हन्तुमिच्छाम्यहं देवि तवेमाः कृतकिल्बिषाः ॥ ३७ ॥
एवमुक्ता हनुमता वैदेही जनकात्मजा ॥ उवाच धर्मसहितं हनुमन्तं यशस्विनी ॥ ३८ ॥
राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया ॥ विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥ ३९ ॥
भाग्यवैषम्ययोगेन[5] पुरादुश्चरितेन च ॥ मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ॥ ४० ॥
प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् ॥ दासीनां रावणस्याहं मर्षयामीह दुर्बला ॥ ४१ ॥
आज्ञप्ता रावणेनैता[6] राक्षस्यो मामतर्जयन् ॥ हते तस्मिन्न कुर्युर्हि[7] तर्जनं वानरोत्तम ॥ ४२ ॥
अयं व्याघ्रसमीपे तु पुराणो धर्मसंस्थितः ॥ ऋक्षेण गीतः श्लोको मे तन्निबोध प्लवङ्गम ॥ ४३ ॥

इदं तु मे प्रियाख्यानपारितोषिकत्वेन देयमित्यर्थयते—इमा इत्यादिना । सार्धश्लोकद्वयमेकान्वयं । क्लिश्यन्तीं पतिदेवतां त्वां प्रति या राक्षस्यो दारुणकथा अब्रुवन् । पुरा याभिस्त्वं तर्जिता इमा राक्षस्यः राक्षसीः । यद्यनुमन्यसे हन्तुमिच्छामि । एतद्वरं मे प्रयच्छेति संबन्धः ॥ ३२—३३ ॥ हननप्रकारं स्वक्रोधानुरूपं दर्शयति—मुष्टिभिरित्यादिना । श्लोकत्रयमेकान्वयं । घातैः प्रहारैः । भक्षणैः खादनैः । लुञ्चनैः उन्मूलनैः । शुष्कमुखीभिः नखैः । दारणैः पीडनैः । कपोलताडनैर्वा । लङ्घनैः उत्प्लुत्योपरिपातनैः । हतैः हस्तैस्ताडनैः । निपात्य भूमौ पातयित्वा । मुष्ट्यादिभिर्हन्तुमिच्छामीत्यन्वयः ॥ ३४—३६ ॥ उक्तमर्थमावश्यकत्वज्ञापनाय पुनरपि संग्रहेण याचते—एवमिति ॥ ३७ ॥ धर्मसहितमिति क्रियाविशेषणं ॥ ३८ ॥ राजसंश्रयवश्यानां राजसेवापरवशानां । अतएव पराज्ञया कुर्वन्तीनां राजचोदितकार्यं कुर्वन्तीनां । विधेयानां चोदिताकरणे दण्डार्हाणां । रावणस्य दासीनां दासीभ्यः । कः कुप्येत् ॥ ३९ ॥ भाग्यवैषम्ययोगेन भाग्यविपर्यययोगेन । भाग्यस्यापरिपक्वतयेत्यर्थः । पुरादुश्चरितेन च पूर्वकृतदुष्कृतेन च एतत्तर्जनभर्त्सनादिकं प्राप्यते । तत्र हेतुमाह—स्वकृतमिति । हि यस्मात् । स्वकृतमुपभुज्यते स्वकृतकर्मफलं प्राप्यते लोकैः । अतो मयापि भुज्यत इत्यर्थः ॥ ४० ॥ रावणस्य दासीनां एतत्तर्जनादिकं । दशायोगात् अवस्थायोगात् । अनुभवयोग्यकालसंबन्धादिति यावत् । प्राप्तव्यमिति मया निश्चितं । दुर्बला पूर्वमेतादृशापन्निवारककर्मकरणाशक्ता । अतोहमिह राक्षसीविषये मर्षयामीति संबन्धः । दुर्बला कृपापरवशा वा । हते रावणे दौर्बल्यान्तराभावात् । परदुःखसहिष्णुत्वमेव हि तदानीं दौर्बल्यं ॥ ४१ ॥ राक्षसीनामपराधस्य राजाज्ञामूलकत्वमन्वयव्यतिरेकाभ्यां दर्शयति—आज्ञप्ता इति ॥ ४२ ॥ अथासां स्वातन्त्र्येणापकारकरणमभ्युपेत्य तथापि क्षन्तव्यमित्यत्र इतिहासं दर्शयति—अयमिति । पुरा किल कश्चिद्व्याधो व्याघ्रेणानुसृतो वृक्षमारूढः । वृक्षमूलगतो व्याघ्रो वृक्षोपरि स्थितमृक्षं वन्यमृगाणामस्माकं जात्या शत्रुरेषः । तस्मादेनं वृक्षात्पातयेत्यब्रवीत् । एवमुक्तो भल्लूकः स्ववासस्थानगतमेनं न पात-

[ पा० ] १ ख. च. छ. ञ. ट. कृन्तनैः. २ इदमर्धं क. ख. च. छ. ञ. पाठेषुदृश्यते. ३ क. ख. ञ. विप्रियकारिकाः. ४ एवंप्रकारैरित्यादिश्लोकद्वयस्यस्थाने एवंप्रकारैर्बहुभिःसंप्रहार्ययशस्विनि । घातयेतीव्ररूपाभिर्याभिस्त्वंतर्जितापुरा । इत्युक्ता साहनुमताकृपणादीनवत्सला । हनूमन्तमुवाचेदंचिन्तयित्वाविमृश्यच । इतिश्लोकद्वयं ङ. झ. पाठयोर्दृश्यते. ५ ङ. झ. वैषम्यदोषेणपुरस्ताद्दुष्कृतेनच. ६ ङ. झ. ट. राक्षसेनेहराक्षस्यस्तर्जयन्तिमां. ७ ख. ङ. च. झ. ञ. नकुर्वन्ति.

न परः पापमादत्ते परेषां पापकर्मणाम् ॥ समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥ ४४ ॥
पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम ॥ कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ ४५ ॥
लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् ॥ कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥ ४६ ॥
एवमुक्तस्तु हनुमान्सीतया वाक्यकोविदः ॥ प्रत्युवाच ततः सीतां रामपत्नीं यशस्विनीम् ॥ ४७ ॥
युक्ता रामस्य भवती धर्मपत्नी यशस्विनी ॥ प्रतिसंदिश मां देवि गमिष्ये यत्र राघवः ॥ ४८ ॥
एवमुक्ता हनुमता वैदेही जनकात्मजा ॥ अब्रवीद्द्रष्टुमिच्छामि भर्तारं वानरोत्तम ॥ ४९ ॥
तस्यास्तद्वचनं श्रुत्वा हनुमान्मारुतात्मजः ॥ हर्षयन्मैथिलीं वाक्यमुवाचेदं महाद्युतिः ॥ ५० ॥
पूर्णचन्द्राननं रामं द्रक्ष्यस्यार्ये सलक्ष्मणम् ॥ स्थिरमित्रं हतामित्रं शचीव त्रिदशेश्वरम् ॥ ५१ ॥
तामेवमुक्त्वा राजन्तीं सीतां साक्षादिव श्रियम् ॥ आजगाम महावेगो हनुमान्यत्र राघवः ॥ ५२ ॥
[ सपदि हरिवरस्ततो हनूमान्प्रतिवचनं जनकेश्वरात्मजायाः ॥
कथितमकथयद्यथाक्रमेण त्रिदशवरप्रतिमाय राघवाय ] ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

---

यिष्यामि । तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप। तदनन्तरं त्वां रक्षिष्यामि सुप्तमृक्षं पातयेति व्याघ्रेण चोदितः सन् व्याधस्तमृक्षमपातयत् । स त्वभ्यासवशेन शाखान्तरमवलम्ब्य नापतत् । तदनु कृतापराधमेनं पातयेति पुनः पुनर्व्याघ्रेणोच्यमानोपि भल्लूको बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी गाथा ॥ ४३ ॥ तत्रत्यं श्लोकं पठति—न पर इति । सुग्रीवं प्रति रामः कपोतोपाख्यानमिव हनुमन्तमुद्दिश्य देव्यपि स्वाभिप्रेतेर्थे ऋक्षगीतं प्रमाणयतिस्म । परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वतां । परः प्राज्ञः पुरुषः पापं प्रत्यपकाररूपं नादत्ते नाङ्गीकरोति । न करोतीत्यर्थः । समयः आचारः अपकर्तृष्वपि प्रत्यपकारवर्जनरूपः । रक्षितव्यस्तु रक्षितव्य एव । तथाहि सन्तश्चारित्रभूषणाः । सद्भिश्चारित्रभूषणैरिति वा पाठः ॥ ४४ ॥ अथ देव्या अभयप्रदानश्लोकः—पापानामिति । पापानां वा शुभानां वा त्वदभिप्रायेण पापानां वा अस्मदभिप्रायेण शुभानां वा । तदेव ममोद्देश्यं 'दोषो यद्यपितस्यस्यात्' इतिवत् । मलिनस्य हि स्नानमपेक्षितं । तासां पापत्वादेवास्मदपेक्षा । किं शुभानामस्माभिः । तत्पुण्यानामेव तद्रक्षकत्वात् । तस्मात्तत्पापमेवास्माकमुद्देश्यं । ननु तर्हि दण्ड्या दण्डनीयाः नादण्ड्या इति धर्मशास्त्रं भवतीमासाद्य भज्येतेत्याशङ्क्य दुष्टोपि शरणागतो रक्षणीय इति विशेषशास्त्रं भवन्तमासाद्य किं भञ्जनीयमित्याह—वधार्हाणामिति । वधार्हाणामपीत्यर्थः । सप्तम्यर्थे षष्ठी । प्लवङ्गम अनभिलषितमेवाभिलषितवान् खलु भवान् । तेषु । आर्येण महता पुरुषेण । करुणं दयाकार्यं । तिष्ठतु । पुण्यं पापं च इदानीमेतद्दयनीयदशां पश्य । यद्वा शुभानामिति दृष्टान्तार्थं । शुभेषु वधार्हेषु यथा करुणं कार्यं तथा पापेषु वधार्हेष्वपि कार्यमित्यर्थः । सापराधादण्डनेतिप्रसङ्गःस्यादित्याशङ्क्याह—न कश्चिन्नापराध्यतीति । सर्वोप्यपराध्यतीत्यर्थः ॥ ४५ ॥ रक्षसां स्वजातिप्रयुक्तहिंसादेरदोषावहत्वाच्छास्त्रोक्तदण्डविषयत्वं नास्तीत्याह—लोकेति । अशोभनं दण्डनं ॥४६—४७॥ रामस्य युक्ता । किं पुनर्मद्विधो जन इति स्वस्योत्तमशरणत्वं प्रतिपादितवतो रामस्य शरण्यत्वादिगुणवत्तया सदृशीत्यर्थः । अनेन सर्गेण सीताया दयालुत्वं अपराधसहिष्णुत्वं घटकत्वं चोक्तमिति ध्येयम् ॥४८—५३॥ इच्छामीत्यत्र इतिकरणं द्रष्टव्यं ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

---

[ पा० ] १ ङ. च. ज. ञ. ट. कारुण्यमार्येण. २ झ. रामपत्नीमनिन्दितां. ३ ङ. झ. गुणान्विता. ४ ङ. झ. द्रक्ष्यसयथ. ५ क. ग.—ट. स्थितमित्रं. ख. हितमित्रं. ६ ङ. झ. शचीवेन्द्रंसुरेश्वरं. ७ ङ. च. छ. झ. ञ. ट. महातेजाहनुमान्. ८ अयंश्लोकः ङ.—ट. पाठेषुदृश्यते.

## सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

हनुमन्मुखात्सीतायाः स्वमुखावलोकनाभिलाषंनिवेदितेनरामेण विभीषणंप्रति स्नातालंकृतायाःसीतायाः स्वसमीपनयनचोदना ॥ १ ॥ विभीषणेन सीतायाः शिबिकारोपणेनरामसमीपप्रापणावसरे सरणिगतवानरगणदूरापसारणे तंप्रतिरामेण सरोषोपालम्भं पादचारेणसीतानयनचोदना ॥ २ ॥ तथासमागतयासीतया सुहृद्गणमध्यगतश्रीरामचन्द्रमुखावलोकनेन हर्षाधिगमः ॥ ३ ॥

स उवाच महाप्राज्ञमभिगम्य प्लवङ्गमः ॥ रामं वचनमर्थज्ञो वरं सर्वधनुष्मताम् ॥ १ ॥
यन्निमित्तोऽयमारम्भः कर्मणां च फलोदयः ॥ तां देवीं शोकसंतप्तां मैथिलीं द्रष्टुमर्हसि ॥ २ ॥
सा हि शोकसमाविष्टा बाष्पपर्याकुलेक्षणा ॥ मैथिली विजयं श्रुत्वा तव हर्षमुपागमत् ॥ ३ ॥
पूर्वकात्प्रत्ययाच्चाहमुक्तो विश्वस्तया तया ॥ भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणम् ॥ ४ ॥
एवमुक्तो हनुमता रामो धर्मभृतां वरः ॥ अगच्छत्सहसा ध्यानमीषद्बाष्पपरिप्लुतः ॥ ५ ॥
दीर्घमुष्णं विनिश्वस्य मेदिनीमवलोकयन् ॥ उवाच मेघसंकाशं विभीषणमुपस्थितम् ॥ ६ ॥
दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् ॥ इह सीतां शिरस्स्नातामुपस्थापय मा चिरम् ॥ ७ ॥
एवमुक्तस्तु रामेण त्वरमाणो विभीषणः ॥ प्रविश्यान्तःपुरं सीतां स्वाभिः स्त्रीभिरचोदयत् ॥ ८ ॥
[ ततः सीतां महाभागां दृष्ट्वोवाच विभीषणः ॥ मूर्ध्नि बद्धाञ्जलिः श्रीमान्विनीतो राक्षसेश्वरः ॥९॥]
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ॥ यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ १० ॥
एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम् ॥ अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ॥ ११ ॥
तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः ॥ यदाह राजा भर्ता ते तत्तथा कर्तुमर्हसि ॥ १२ ॥

अथ सीतानयनं—स उवाचेत्यादि ॥१॥ आरम्भः उद्योगः । कर्मणां सेतुबन्धादिव्यापाराणां । फलोदयः रावणविजयश्च यन्निमित्तः यस्याः सीताया लाभार्थः। तां द्रष्टुमर्हसि ॥ २—३ ॥ पूर्वकात् पूर्वोत्पन्नात् । प्रत्ययात् विश्वासात् ॥ ४ ॥ रामः ईषद्बाष्पपरिप्लुतः सन् सहसा ध्यानमागच्छत् । रावणभवनोषितसीतापरिग्रहे महान् लोकापवादो भवेत् निर्दोषायास्तस्याः परित्यागे महान् दोषः स्यादित्येवं कार्यदौस्थ्यात् किं कर्तव्यमिति चिन्तयामासेत्यर्थः ॥ ५ ॥ निःश्वासदैर्घ्येण चिन्तादैर्घ्यं गृह्यते । औष्ण्येन कथं क्लिष्टां तां पुनः क्लेशयिष्यामीत्यन्तस्तापो व्यज्यते । भूमिं समवलोकयन्निति चिन्तापारवश्याभिनयः । मेघसंकाशमित्यनेन सीतानयने कृतत्वरत्वमुच्यते ॥ ६ ॥ दिव्याङ्गरागामिति । अलंकृत्यानयनादेशः उत्तरकालिकपरुषभाषणार्हताप्रतिपादनाय । नहि तादृशदशापन्नां दीनां परुषं भाषितुं युज्यते । तच्च तस्या न परित्यागार्थं किंतु चतुर्मुखादिदेवतामुखेन तस्याः पातिव्रत्यं ख्यापयितुं । मा चिरं बिलम्बो न कार्य इत्यर्थः ॥ ७ ॥ एवमित्यादिश्लोकद्वयमेकान्वयं । स्वाभिः स्त्रीभिरचोदयत् निजस्त्रीमुखेनाचोदयत् ॥ ८—११ ॥ प्रत्युवाच स्त्रीमुखेनेति शेषः । यथानियोगं कर्तव्यत्वे हेतुद्वयम्—राजा भर्तेति ॥ १२ ॥

ति० ध्यानमगच्छत् । वस्तुतोमुख्यसीतालाभोमेःकथंस्यादितिचिन्तात्र ॥ ५ ॥ ति० दिव्याङ्गरागामिति । तैस्तस्यारूपाधिक्याभिव्यक्तावीदृश्यर्थेऽयंमेउद्यमइतिसर्वाञ्ज्ञापयितुमेवंवादः ॥ ७ ॥ स० स्वाभिः स्त्रीभिः सरमात्रिजटादिभिः । सीतामवादयत् । राजस्त्रीत्वात्साक्षादसंभाषणमितिज्ञेयं ॥ ८ ॥ ती० भर्तात्वांद्रष्टुमिच्छतीति । स्वाभिःस्त्रीभिरचोदयदिति पूर्वेण संबन्धः ॥ १० ॥ ति० तस्यास्तद्वचनं स्नानाद्यनङ्गीकारवचनं । यथारामआह तथाकर्तुमर्हसि । "तांदृष्ट्वाचारुसर्वाङ्गींयानस्थांशोककर्शिताम् । मलोपचितसर्वाङ्गींजटिलांकृष्णवाससम् । उवाचरामोवैदेहींपरामर्शविशङ्कितः । " इति। भारतेतु मलोपचितेत्यर्धेपूर्वमितिशेषः ॥

[ पा० ] १ ख. प्राज्ञमभिवाद्य. ङ. झ. ट. प्राज्ञःसोभिवाद्य. २ ङ. झ. ट. रामंकमलपत्राक्षं. ३ ख. च. छ. ञ सीतां तांशोक. ४ ङ. झ. श्रुत्वाद्रष्टुंत्वामभिकाङ्क्षति. ५ ज. विश्वसितस्तदा. ६ ङ. झ. द्रष्टुमिच्छामिभर्तारमितिपर्याकुलेक्षण. ७ क. घ. ज. रवादयत्. ८ घ. ङ. च. छ. झ. ञ. ट. पाठेष्वयंश्लोकोदृश्यते.

**तस्य तद्वचनं श्रुत्वा मैथिली भर्तृदेवता ॥ भर्तृभक्तिव्रता साध्वी तथेति प्रत्यभाषत ॥ १३ ॥**
**ततः सीतां शिरःस्नातां[1] युवतीभिरलंकृताम् ॥ महार्हाभरणोपेतां महार्हाम्बरधारिणीम् ॥ १४ ॥**
**आरोप्य शिबिकां दीप्तां परार्ध्याम्बरसंवृताम् ॥ रक्षोभिर्बहुभिर्गुप्तामाजहार[2] विभीषणः ॥ १५ ॥**
**सोऽभिगम्य महात्मानं ज्ञात्वाऽपि ध्यानमास्थितम् ॥ प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥१६॥**
**तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् ॥ हर्षो[3] दैन्यं च रोषश्च त्रयं राघवमाविशत्[4] ॥ १७ ॥**
**ततः[5] पार्श्वगतं दृष्ट्वा सविमर्शं विचारयन् ॥ विभीषणमिदं वाक्यमहृष्टं[6] राघवोऽब्रवीत् ॥ १८ ॥**
**राक्षसाधिपते सौम्य नित्यं मद्विजये रत ॥ वैदेही सन्निकर्षं मे शीघ्रं समुपगच्छतु ॥ १९ ॥**
**स[7] तद्वचनमाज्ञाय राघवस्य विभीषणः ॥ तूर्णमुत्सारणे[8] यत्नं कारयामास सर्वतः ॥ २० ॥**
**कञ्चुकोष्णीषिणस्तत्र वेत्रजर्जरपाणयः ॥ उत्सारयन्तः[9] पुरुषाः समन्तात्परिचक्रमुः ॥ २१ ॥**
**ऋक्षाणां वानराणां च राक्षसानां च सर्वशः ॥ वृन्दान्युत्सार्यमाणानि दूरमुत्तस्थुरन्ततः[10] ॥ २२ ॥**
**तेषामुत्सार्यमाणानां सर्वेषां[11] ध्वनिरुत्थितः ॥ वायुनोद्वर्तमानस्य[12] सागरस्येव निस्स्वनः ॥ २३ ॥**
**उत्सार्यमाणांस्तान्दृष्ट्वा[13] समन्ताज्जातसंभ्रमान् ॥ दाक्षिण्यात्तदमर्षाच्च वारयामास राघवः ॥ २४ ॥**
**संरब्धश्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव ॥ विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥ २५ ॥**
**किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः ॥ निवर्तयेममुद्योगं[14] जनोऽयं स्वजनो मम ॥ २६ ॥**
**न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः ॥ नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥२७॥**
**व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे ॥ न क्रतौ न विवाहे च दर्शनं दुष्यति स्त्रियाः ॥ २८ ॥**

अङ्गीकारेहेतुद्वयं भर्तृदेवता भर्तृभक्तिव्रतेति ॥ १३—१५ ॥ ज्ञात्वापि विभीषणागमनं विदित्वापि । अनेन चिन्तानुवृत्तिरुक्ता ॥ १६ ॥ तामिति । रावणवधपूर्वकसीतागमेन हर्षः । रावणभवनोषितत्वेन दैन्यं रोषश्च । अत्र रोषो भाविशपथोपयोगित्वादारोपित इति द्रष्टव्यं ॥ १७ ॥ सविमर्शं विचारयन् सवितर्कं चिन्तयन् । अहृष्टमिति क्रियाविशेषणं विभीषणविशेषणं वा ॥ १८—१९ ॥ उत्सारणे जननिवारणे ॥ २० ॥ कञ्चुकेति । कञ्चुकं वारबाणं । उष्णीषं शिरोवेष्टनं । वेत्रेण जर्जराः सदावलम्बनजनितपारुष्याः पाणयो येषां ते ॥२१॥ उत्तस्थुः अपचक्रमुः ॥ २२ ॥ उद्वर्तमानस्य उज्जृम्भमाणस्य ॥ २३ ॥ दाक्षिण्यात् वानरेषुदाक्षिण्यात् । अमर्षात् उत्सारणासहनात् ॥ २४ ॥ चक्षुषा प्रदहन्निवेति लोचनाभ्यां पिबन्निवेत्युक्तादरपात्रभूतस्य विभीषणस्यैवंविधदर्शनविषयताकरणं स्वजननिग्रहासहिष्णुत्वात् । सीताविषयसमारोपितरोषविशेषाद्वा ॥ २५—२६ ॥ तिरस्क्रियाः तिरस्करिण्यः । राजसत्काराः उत्सारणादिकं । वृत्तं आचारः ॥ २७ ॥ व्यसनेषु इष्टजनवियोगेषु । कृच्छ्रेषु राज्यक्षोभादिषु । युद्धे युद्धभूमौ

**स०** ननुभारते “ तांदृष्ट्वाचारुसर्वाङ्गींयानस्थांशोककर्शिताम् । मलोपचितसर्वाङ्गींजटिलांकृष्णवाससम् ” इत्युक्तेःकथमत्रैवंकथनमितिचेदुच्यते । स्वच्छन्देनाङ्गशोधनाद्यभावेनभारतेमलोपचितेत्याद्युक्तिः । अत्रतु रामाज्ञयातस्यजातत्वेनप्रतिकर्मणासंयुक्तामित्याद्युक्तिः । अथवा भारतवचनोत्तरार्धे हनुमद्वचनेनमलोपचितसर्वाङ्गींसंस्मरतोरामस्यतथैवदर्शनमितिपूर्वमेतादृशीमितिवार्थाङ्गीकारेणवाऽविरोधोपपत्तेः ॥१२॥ **स०** वहनोचितैः राजावरोधयानवहनोचितैः । राक्षसैः वृद्धैरविन्ध्यादिभिः । उक्तंचभारते— “ ततःसीतांपुरस्कृत्येत्यारभ्य—अविन्ध्योनामसुप्राज्ञोवृद्धामात्योविनिर्ययौ ” इति ॥ १५ ॥ **ति०** रोषं सर्वानर्थमूलयाऽनयाकिलसुहृद्भ्रातृकेणेदंबहुदुःखमनुभूतमितिरोषः ॥ १७ ॥

**[ पा० ]** १ ख. ङ. झ. स्नातांसंयुक्तांप्रतिकर्मणा. २ ङ. झ. ट. सीतांराक्षसैर्वहनोचितैः ॥ राक्षसैर्बहुभिर्गुप्तां. ३ ङ. झ. रोषंहर्षंचदैन्यंचराघवःप्रापशत्रुहा. ४ ज. राघवमागतं. ५ ङ. झ. ट. ततोयानगतांसीतां. ६ क. घ. ङ. ज—ट. वाक्यमहृष्टो. ख. वाक्यंप्रहृष्टो. ७ ख. ङ. च. छ. झ. ञ. ट. तस्यतद्वचनंश्रुत्वा. ८ ङ. झ. तूर्णमुत्सारणंतत्र. ९ ङ. झ. उत्सारयन्तस्तान्योधान्. १० ङ. झ. ञ. ट. दूरमुत्तस्थुरन्ततः. ११ ङ. झ. ट. निस्स्वनस्सुमहानभूत्. १२ झ. वायुनोद्धूयमानस्य. १३ ङ. झ. माणान्दृष्ट्वाथजगत्यांजात. १४ ङ. झ. मुद्वेगं.

सैषा युद्धगता चैव कृच्छ्रे च महति स्थिता ॥ दर्शनेऽस्या न दोषः स्यान्मत्समीपे विशेषतः ॥२९॥
[ विसृज्य शिबिकां तस्मात्पद्भ्यामेवापसर्पतु ॥ समीपे मम वैदेहीं पश्यन्त्वेते वनौकसः ] ॥ ३० ॥
तदानय समीपं मे शीघ्रमेनां विभीषण ॥ सीता पश्यतु मामेषा सुहृद्गणवृतं स्थितम् ॥ ३१ ॥
एवमुक्तस्तु रामेण सविमर्शो विभीषणः ॥ रामस्योपानयत्सीतां सन्निकर्षं विनीतवत् ॥ ३२ ॥
ततो लक्ष्मणसुग्रीवौ हनुमांश्च प्लवङ्गमः ॥ निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥ ३३ ॥
कलत्रनिरपेक्षैश्च इङ्गितैरस्य दारुणैः ॥ अप्रीतमिव सीतायां तर्कयन्ति स्म राघवम् ॥ ३४ ॥
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली ॥ विभीषणेनानुगता भर्तारं साऽभ्यवर्तत ॥ ३५ ॥
सा वस्त्रसंरुद्धमुखी लज्जया जनसंसदि ॥ रुरोदासाद्य भर्तारमार्यपुत्रेति भाषिणी ॥ ३६ ॥
विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता ॥ उदैक्षत मुखं भर्तुः सौम्यं सौम्यतरानना ॥ ३७ ॥

अथ समपनुदन्मनःक्लमं सा सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य ॥
वदनमुदितपूर्णचन्द्रकान्तं विमलशशाङ्कनिभानना तदानीम् ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

---

## अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

रामेणसीतांप्रति रावणवधावधिप्रयासस्य निजापयशःप्रमार्जनप्रयोजकत्वोक्तिपूर्वकं तच्चारित्रशुद्धिसंदेहरूपहेतूक्त्या तत्परिग्रहानभिरोचनवचनम् ॥ १ ॥

तां तु पार्श्वस्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् ॥ हृदयान्तर्गतक्रोधो व्याहर्तुमुपचक्रमे ॥ १ ॥
एषाऽसि निर्जिता भद्रे शत्रुं जित्वा मया रणे ॥ पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ॥ २ ॥
गतोस्म्यन्तममर्षस्य धर्षणा संप्रमार्जिता ॥ अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥ ३ ॥
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ॥ अद्य तीर्णप्रतिज्ञत्वात्प्रभवामीह चात्मनः ॥ ४ ॥

---

॥ २८ ॥ कृच्छ्रे वक्ष्यमाणाग्निप्रवेशे ॥ २९—३१ ॥ सविमर्शः कृच्छ्रशब्दप्रयोगात्साशङ्कः ॥३२—३३॥ व्यथायां हेतुमाह—कलत्रेति ॥ ३४ ॥ अवलीयन्ती संकुचन्ती ॥ ३५—३६ ॥ विस्मयात् अघटितरामपुनर्दर्शनाद्विस्मयः । प्रियस्य दर्शनेन प्रहर्षः । स्नेहः स्वाभाविकः । उदीक्षणकालिकमुखप्रसादमाह—सौम्येति ॥ ३७ ॥ उदितपूर्णचन्द्रेत्यनेन कोपरक्तत्वमुक्तं। विमलशशाङ्केत्यनेन उत्तरकालिकक्षयः सूच्यते ॥३८॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

अथ रामपरुषोक्तिः—तां तु पार्श्वस्थितामित्यादि । प्रह्वां लज्जया नम्रां ॥ १ ॥ एषेति प्रत्यक्षेण दर्शयति । भद्रे इत्यसंबन्धनिवेदकसंबोधनं । पौरुषाद्यदनुष्ठेयं तदेव कृतं । नतु त्वल्लाभाय यत्नः कृत इति भावः ॥ २ ॥ अन्तं फलं । उद्धृतौ निर्मूलितौ ॥ ३ ॥ आत्मनः प्रभवामि स्वतन्त्रो भवामि ॥ ४ ॥

---

स० मनःक्लमंसमपनुदत् यद्वदनं तदुदीक्ष्यशशाङ्कनिभाननासीदित्यन्वयः ॥ एतेनसमपनुददित्यस्यसमपानुददित्याख्याततयाव्याख्यानंनागोजिभट्टस्यान्वयाप्रतिभासमूलं ॥ ३८ ॥ इतिसप्तदशोत्तरशततमःसर्गः ॥ ११७ ॥

[ पा० ] १ ङ. झ. ट. सैषाविपद्गताचैवकृच्छ्रेणचसमन्विता. २ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ३ क. ङ. च. छ. झ. ट. तदासीत्. ४ ख. च. छ. ट. गतद्वेषो.

या त्वं विरहिता नीता चलचित्तेन रक्षसा ॥ दैवसंपादितो दोषो मानुषेण मया जितः ॥ ५ ॥
संप्राप्तमवमानं यस्तेजसा न प्रमार्जति ॥ कस्तस्य पुरुषार्थोस्ति पुरुषस्याल्पतेजसः ॥ ६ ॥
लङ्घनं च समुद्रस्य लङ्कायाश्चावमर्दनम् ॥ सफलं तस्य तच्छ्लाघ्यं महत्कर्म हनूमतः ॥ ७ ॥
युद्धे विक्रमतश्चैव हितं मन्त्रयतश्च मे ॥ सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ॥ ८ ॥
निर्गुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः ॥ विभीषणस्य भक्तस्य सफलोद्य परिश्रमः ॥ ९ ॥
इत्येवं ब्रुवतस्तस्य सीता रामस्य तद्वचः ॥ मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १० ॥
पश्यतस्तां तु रामस्य भूयः क्रोधो व्यवर्धत ॥ प्रभूताज्यावसिक्तस्य पावकस्येव दीप्यतः ॥ ११ ॥
स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः ॥ अब्रवीत्परुषं सीतां मध्ये वानररक्षसाम् ॥ १२ ॥
यत्कर्तव्यं मनुष्येण धर्षणां परिमार्जता ॥ तत्कृतं सकलं सीते शत्रुहस्तादमर्षणात् ॥ १३ ॥
निर्जिता जीवलोकस्य तपसा भावितात्मना ॥ अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ॥१४॥
विदितश्चास्तु ते भद्रे योऽयं रणपरिश्रमः ॥ स तीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ १५ ॥
रक्षता तु मया वृत्तमपवादं च सर्वशः ॥ प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिरक्षता ॥ १६ ॥
प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता ॥ दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ॥ १७ ॥

---

मया विरहिता या त्वं चलचित्तेन रक्षसा नीता । तया त्वया हेतुभूतया दैवसंपादितः दोषः अवमानः । मानुषेण प्रमार्जितः । दैवकृतं पुरुषयत्नेन निवारितमिति भावः ॥ ५ ॥ धर्षणाया अमार्जने दोषमाह—संप्राप्तमिति । प्रमार्जति प्रमार्ष्टि ॥ ६ ॥ इदानीं हनुमदादिपौरुषस्यापि धर्षणावमार्जनहेतुत्वमाह—लङ्घनं चेत्यादिना । समुद्रस्य लङ्घनं लङ्काया अवमर्दनं इत्येवंरूपं हनुमतः श्लाघ्यं कर्मचाद्य सफलं । धर्षणापरिमार्जनेन सफलमित्यर्थः ॥ ७ ॥ मन्त्रयतः चिन्तयतः ॥ ८ ॥ निर्गुणमिति ॥ तस्येत्यध्याहार्यं ॥ ९ ॥ तद्वचः नैराश्येनोक्तं वचः । तस्य ब्रुवतः । तस्मिन् ब्रुवति सति ॥ १० ॥ पावकस्येति । पावकस्य क्रोधोतीव ज्वलनं ॥ ११ ॥ तिर्यक्प्रेक्षितलोचनः तिर्यक्प्रेक्षणं पुरतः सीतादर्शनासहिष्णुत्वकृतं ॥१२॥ यत्कर्तव्यमित्यादित्रिपादश्लोक एकान्वयः ॥ हे सीते धर्षणां परिमार्जता । "मृजेरजादौ विभाषा वृद्धिः" इति वृद्धिः । मनुष्येण यत्कर्तव्यं तत् सकलं कृतं । शत्रुहस्तादमर्षणादित्युत्तरशेषः ॥ १३ ॥ भावितात्मना ध्यातात्मस्वरूपेण । अगस्त्येन । इल्वलाक्रान्तत्वाज्जीवलोकस्य दुराधर्षा दुःसंचारा दक्षिणा दिगिव । अमर्षणात् अमर्षाद्धेतोः । शत्रुहस्तान्मया त्वं निर्जितेति संबन्धः ॥ १४ ॥ योयं रणपरिश्रमः सुहृदां वीर्यात्तीर्णः निर्व्यूढः सः त्वदर्थं मया न कृत इति विदितोस्तु ॥ १५ ॥ तर्हि किमर्थमेष परिश्रम इत्यत आह—रक्षतेति ॥ अत्र मया रणपरिश्रमः कृत इत्यनुषज्यते । वृत्तं रक्षता अपवादं न्यङ्गं अयशस्यं च परिरक्षता परिहरता निवारयता । मया रणपरिश्रमः कृतः ॥ १६ ॥ परगृहवासेन प्राप्तचारित्रसंदेहा त्वं नेत्रातुरस्य दीप इव प्रतिकूलासि । अनेनोपमानेन वस्तुतः सीताया दोषो नास्ति । स्वसंदेहेनाहं प्रतिकूलीकरोमीति व्यज्य-

---

स० हृदयप्रियां मनोहरां । श्रीवत्साश्रितरमारूपत्वाद्वा । एतादृशदैन्यदर्शनंस्वीकारहेतुः । जनवादः जनापवादः । द्विधा ग्राह्यावात्याज्यावेति ॥ ति० तद्रूपदर्शनादङ्गीकारबुद्धिः । जनवादभयात्त्यागबुद्धिः । भावसंधिरत्र ॥ इदंव्याख्यानद्वयंपाठान्तरस्यश्लोकद्वयस्य ॥ ११ ॥ इत्यष्टादशोत्तरशततमस्सर्गः ॥ ११८ ॥

[ पा० ] १ ग. दशग्रीवेणरक्षसा. २ ङ. झ. कस्तस्यपौरुषेणार्थोमहताप्यल्पचेतसः. ३ क. ख. घ. ङ. ज.—ट. तच्छ्लाघ्यमद्यकर्म. ४ पश्यतस्तांत्वित्यादिश्लोकद्वयस्यस्थाने पश्यतस्तांतुरामस्यसमीपेहृदयप्रियां । जनवादभयाद्राज्ञोबभूवहृदयंद्विधा । सीतामुत्पलपत्राक्षींनीलकुञ्चितमूर्धजां । अवदद्वैवरारोहांमध्येवानररक्षसां । इतिश्लोकद्वयं ङ. झ. पाठयोर्दृश्यते. ५ ख. च. छ. ञ. ट. मयापितत्कृतंसीते. ङ. झ. तत्कृतंरावणंहत्वामयेदंमानकाङ्क्षिणा. ६ ख. सीतेतवतुभद्रंतेयोयो. ७ ङ. झ. ट. परिमार्जता-

तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे ॥ एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥ १८ ॥
कः पुमान्हि कुले जातः स्त्रियं परगृहोषिताम् ॥ तेजस्वी पुनरादद्यात्सुहृल्लेख्येन चेतसा ॥ १९ ॥
रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा ॥ कथं त्वां पुनरादद्यां कुलं व्यपदिशन्महत् ॥ २० ॥
तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया ॥ नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ॥२१॥
इति प्रव्याहृतं भद्रे मयैतत्कृतबुद्धिना ॥ लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथासुखम् ॥ २२ ॥
सुग्रीवे वानरेन्द्रे वा राक्षसेन्द्रे विभीषणे ॥ निवेशय मनः सीते यथा वा सुखमात्मनः ॥ २३ ॥
न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् ॥ मर्षयेत चिरं सीते स्वगृहे पर्यवर्तिनीम् ॥ २४ ॥
ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मैथिली ॥
मुमोच बाष्पं सुभृशं प्रवेपिता गजेन्द्रहस्ताभिहतेव सल्लकी ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

---

## एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

सीतयारामंप्रति स्वचारित्रशुद्धिप्रतिज्ञापूर्वकं लक्ष्मणंप्रत्यग्निप्रवेशनिर्धारणोक्त्याऽग्निकुण्डनिर्माणचोदना ॥ १ ॥ ततोरामेङ्गिताभिज्ञलक्ष्मणनिर्मिताग्निकुण्डे सशपथंप्रवेशः ॥ २ ॥

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् ॥ राघवेण सरोषेण भृशं प्रव्यथिताऽभवत् ॥ १ ॥
सा तदश्रुतपूर्वं हि जने महति मैथिली ॥ श्रुत्वा भर्तृवचो रूक्षं लज्जया व्रीडिताऽभवत् ॥ २ ॥
प्रविशन्तीव गात्राणि स्वान्येव जनकात्मजा ॥ वाक्छल्यैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ॥ ३ ॥
ततो बाष्पपरिक्लिष्टं प्रमार्जन्ती स्वमाननम् ॥ शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥ ४ ॥
किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ॥ रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥ ५ ॥
न तथाऽस्मि महाबाहो यथा त्वमवगच्छसि ॥ प्रत्ययं गच्छ मे येन चारित्रेणैव ते शपे ॥ ६ ॥

---

ते ॥ १७—१८ ॥ सुहृल्लेखेन सुहृल्लेखा रणरणकं सुहृल्लेखामर्हतीति सुहृल्लेख्यं तेन । रणरणकातिशययुक्तेनेत्यर्थः ॥ १९ ॥ व्यपदिशन् कीर्तयन् ॥ २० ॥ तदर्थं कुलार्थं । अभिष्वङ्गः आसक्तिः । अनुरागो वा ॥ २१ ॥ इति प्रव्याहृतमित्यादिश्लोकद्वयमेकान्वयं ॥ अत्र लक्ष्मणादौ मनःकरणं नाम अनाथाया रक्षकत्वेन तत्तद्गृहे वर्तनं । भर्त्रा परित्यक्तायाः स्त्रियो बन्धुगृहे वासविधानात् । "न स्त्री स्वातन्त्र्यमर्हति" इति स्मृतेः । न त्वत्रान्यथा ग्रहीतुं युक्तं । महापुरुषेण तादृशोक्त्ययोगात् ॥ २२—२४ ॥ सल्लकी गजभक्ष्यलताविशेषः ॥ २५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

---

अथ सीताग्निप्रवेशः—एवमुक्त्वा त्विति ॥ १ ॥ जने महति महाजनमध्ये लज्जया व्रीडिता । अतिनम्रमुखी बभूवेत्यर्थः ॥ २ ॥ गात्राणि प्रविशन्ती संकुचन्तीत्यर्थः ॥ ३—४ ॥ असदृशं त्वया वक्तुं मया श्रोतुं चायोग्यं । रूक्षं परुषं । अतएव श्रोत्रदारुणं श्रवणकटु ॥ ५ ॥ चारित्रेण ममेति शेषः । ते तुभ्यं । "श्लाघह्नुङ्स्थाशपां—" इति संप्रदानत्वं । सुकृतेन शपमाना त्वां शापं ज्ञापयामीत्यर्थः ॥ ६ ॥

---

[ पा० ] १ ग. ङ. झ. ट. त्सुहृल्लोभेन. २ ङ. झ. शत्रुघ्नेवाथसुग्रीवेराक्षसेवाविभीषणे. ३ ङ. झ. ट. पर्यवस्थितां. ४ ङ. झ. ट. मानिनी. ५ ख. सुवेपिता. ६ ख.—ट. वल्लरी. ७ ख. च. छ. ट. भृशंप्रव्यथिताऽभवत्. ८ क. ख. ङ. च. छ. झ. ट. मेखेन.

**पृथक्स्त्रीणां प्रचारेण [1]जातिं त्वं परिशङ्कसे ॥ [2]परित्यजेमां शङ्कां तु यदि तेऽहं परीक्षिता ॥ ७ ॥**
**यद्यहं गात्रसंस्पर्शं गताऽस्मि विवशा प्रभो ॥ कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ८ ॥**
**मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते ॥ पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥ ९ ॥**
**सह [3]संवृद्धभावाच्च संसर्गेण च मानद ॥ यद्यहं ते न विज्ञाता हता तेनास्मि शाश्वतम् ॥ १० ॥**
**प्रेषितस्ते यदा वीरो हनुमानवलोककः ॥ लङ्कास्थाऽहं त्वया वीर किं तदा न विसर्जिता ॥ ११ ॥**
**प्रत्यक्षं वानरेन्द्रस्य त्वद्वाक्यसमनन्तरम् ॥ त्वया संत्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥ १२ ॥**
**न वृथा ते श्रमोऽयं स्यात्संशये न्यस्य जीवितम् ॥ सुहृज्जनपरिक्लेशो न चायं निष्फलस्तव ॥१३॥**
**त्वया तु नरशार्दूल क्रोधमेवानुवर्तता ॥ लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥ १४ ॥**
**[4]अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात् ॥ मम वृत्तं च वृत्तज्ञ बहु तेन पुरस्कृतम् ॥ १५ ॥**
**न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ॥ मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥१६॥**
**एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी ॥ [5]अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥ १७ ॥**
**चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ॥ [6]मिथ्योपघातोपहता नाहं जीवितुमुत्सहे ॥ १८ ॥**
**[7]अप्रीतस्य गुणैर्भर्तुस्त्यक्ताया जनसंसदि ॥ या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥ १९ ॥**

---

स्त्रीमात्रसाधारण्येन नाहं द्रष्टव्येत्याह—पृथक्स्त्रीणामिति ॥ पृथक्स्त्रीणां प्राकृतस्त्रीणां । प्रचारेण आचारेण हेतुना । सर्वामपि स्त्रीजातिं तथात्वेन शङ्कसे । अहं ते त्वया । यदि परीक्षिता ज्ञातस्वभावा तर्हीमां शङ्कां त्यज ॥ ७ ॥ त्वयि ज्ञातस्वभावायामपि रावणाङ्गस्पर्शलक्षणो दोषस्त्यागहेतुरित्याशङ्क्याह–यद्यहमित्यादि। यद्यपि अहं विवशा सती गात्रसंस्पर्शं गतास्मि तथापि तत्र मे कामकारः स्वेच्छाचरणं । नास्ति । तर्हि कस्यात्रापराध इत्यत्राह–दैवं तत्रेति ॥ ८ ॥ मदधीनं परैर्ग्रहीतुमशक्यं । यद्धृदयं तत्तु तस्मिन्काले त्वयि वर्तते अवर्तत । पराधीनेषु परैर्ग्रहीतुं शक्येषु गात्रेषु विषये । अनीश्वरा अस्वतन्त्रा । अहं किं करिष्यामि किं कुर्यां ॥ ९ ॥ स्वभावपरिज्ञानहेतुभूतसहसंवर्धनसंसर्गावपि प्रत्ययं यदि नोत्पादयतः तर्हि न किमपि ते प्रत्ययमुत्पादयितुं शक्नुयादित्याशयेनाह–सह संवृद्धेति ॥ सह संवृद्धभावात् स्वभावपरिज्ञानहेतुना सह संवर्धनेन संसर्गेण संश्लेषेण च यद्यहं ते न विज्ञाता । ततः मत्स्वभावाज्ञानेन शाश्वतं अत्यर्थं । हतास्मि ॥ १० ॥ अवलोककः अवलोकितुं । अन्वेष्टुमिति यावत् । " तुमुन्ण्वुलौ क्रियायां क्रियार्थायां " इति ण्वुल्प्रत्ययः ॥ ११ ॥ तदात्वे को विशेष इत्यत आह—प्रत्यक्षमिति ॥ १२ ॥ एवं कृते न केवलं ममैव व्यथाभावः तव त्वत्सुहृदां च जयार्थप्रयासोपि न स्यादित्याह—न वृथेति ॥ जीवितं संशये न्यस्य कृतोयं श्रम इत्यर्थः ॥ १३—१४ ॥ अपदेशेन जनकात् जनकमपदिश्येत्यर्थः ॥ १५—१७ ॥ मिथ्योपघातः मिथ्यापवादः ॥१८॥ गुणैरप्रीतस्य विद्यमानैः पातिव्रत्यादिगुणैरपि अप्रीतस्य भर्तुस्त्यक्ताया मे या गन्तुं क्षमा गतिः प्रत्ययजननार्थं या योग्या गतिः । तं हव्यवाहनं प्रवेक्ष्य इति योजना ॥ १९ ॥

---

**स०** पृथक्स्त्रीणां मूर्खस्त्रीणां । पृथग्जनशब्दस्यमूर्खेप्रयोगवदयंप्रयोगः । यद्वा स्त्रीणांपृथक्त्वंनाम पतिबुद्धिविरुद्धबुद्धिमत्त्वं । विभिन्नयोरपिमत्यैक्येनैक्यव्यवहारदर्शनात् । तथाच स्वैरिणीनामितिफलितोर्थः । प्रचारेण आचारेण । जातिं सर्वस्त्रीसमूहं । यदि ते त्वयाऽहं परीक्षितास्यां तदेमांशङ्कांएकस्यायत्रक्वापिदुष्टत्वे सर्वाअपितादृश्यइतिविपरीतसंभावनां त्यज त्यक्ष्यसि ॥७॥ **ति०** स्वतोदोषजनकं कर्मतुमेनास्तीत्याह—**मदधीनमिति** । परैर्ग्रहीतुमशक्यमित्यर्थः । पराधीनेषु परैर्ग्रहीतुंशक्येषु दैवाधीनेषुच। यस्यास्छायास्मि तदधीनानिगात्राणि । तयैवतदर्थमेवैषांनिर्माणात् । हृदयंतुतदीयमेवात्रापीतिभावः ॥ ९ ॥ **ति०** तदाकिंनत्वयाविसर्जिता पुनरङ्गीकाराभावंकिमितिनश्राविता ॥११॥ **ति०** तदोक्तौ कोविशेषस्तत्राह—**प्रत्यक्षमिति** । एवंचतदैवजीवत्यागेएतावत्पर्यन्तंमहतीत्वद्वियोगव्यथानस्यादितिभावः ॥ १२ ॥ **ति०** जीवितंसंशयेन्यस्य युद्धेजयस्यसंदिग्धत्वात् ॥ १३ ॥

**[ पा० ]** १ क. ख. घ.—ट. जातित्वं. २ ङ. झ. परित्यजैनां. ३ ङ. झ. ट. संवृद्धभावेन. ४ ङ. झ. ञ. ट. अपदेशोमे. ५ ङ. झ. ट. उवाचलक्ष्मणं. ६ ङ. च. छ. झ. ञ. ट. मिथ्यापवादोपहता. ७ ङ. झ. ट. अप्रीतेनगुणैर्भर्त्रा.

एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा ॥ अमर्षवशमापन्नो राघवाननमैक्षत ॥ २० ॥
स विज्ञाय ततश्छन्दं रामस्याकारसूचितम् ॥ चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥ २१ ॥
[ न हि रामं तदा कश्चित्कालान्तकयमोपमम् ॥ अनुनेतुमथो वक्तुं द्रष्टुं वाऽप्यशकत्सुहृत् ॥२२॥ ]
अधोमुखं तदा रामं शनैः कृत्वा प्रदक्षिणम् ॥ उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥ २३ ॥
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ॥ बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥ २४ ॥
यथा मे हृदयं नित्यं नापसर्पति राघवात् ॥ तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥२५॥
यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः ॥ तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥२६॥
कर्मणा मनसा वाचा यथा नातिचराम्यहम् ॥ राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ॥ २७ ॥
आदित्यो भगवान्वायुर्दिशश्चन्द्रस्तथैव च ॥ अहश्चापि तथा संध्ये रात्रिश्च पृथिवी तथा ॥
यथाऽन्येपि विजानन्ति तथा चारित्रसंयुताम् ॥ २८ ॥
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ॥ विवेश ज्वलनं दीप्तं निस्सङ्गेनान्तरात्मना ॥ २९ ॥
जनः स सुमहांस्त्रस्तो बालवृद्धसमाकुलः ॥ ददर्श मैथिलीं तत्र प्रविशन्तीं हुताशनम् ॥ ३० ॥
सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा ॥ पपात ज्वलनं दीप्तं सर्वलोकस्य सन्निधौ ॥ ३१ ॥
ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम् ॥ सीतां कृत्स्नास्त्रयो लोकाः पुण्यामाज्याहुतीमिव ॥ ३२॥
प्रचुक्रुशुः स्त्रियः सर्वास्तां दृष्ट्वा हव्यवाहने ॥ पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे ॥ ३३ ॥
ददृशुस्तां त्रयो लोका देवगन्धर्वदानवाः ॥ शप्तां पतन्तीं निरये त्रिदिवाद्देवतामिव ॥ ३४ ॥
तस्यामग्निं विशन्त्यां तु हाहेति विपुलः स्वनः ॥ रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥ ३५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनविंशत्युत्तरशततमः सर्गः ॥११९॥

---

अमर्षवशं दैन्यवशं ॥ २० ॥ आकारः भ्रूसंज्ञादिः । मते सिद्धान्ते । स्थित इति शेषः ॥२१—२२॥ अधोमुखमिति ॥ पतिव्रतायाः कथं निर्व्याजं प्रत्ययं पश्यामीति लज्जया मुखदर्शने दाक्षिण्यं भविष्यतीति बुद्ध्या चावनतमुखं । शनैः रामानुभवेन मन्दं यथा तथा ॥ २३—२५ ॥ यथा शुद्धचारित्रामेव मामन्यायेन दुष्टां जानाति । तथा चेत् अदुष्टां दुष्टेति जानाति चेत् । पावकः पातु । रामस्य मयि दोषज्ञानं यथार्थं चेत्पात्वित्यर्थः ॥ २६—२७ ॥ आदित्य इत्यादिसार्धश्लोक एकान्वयः ॥ आदित्यादयोन्ये च यथा मां चारित्रसंयुतां विजानन्ति तथा मां पातु पावक इति संबन्धः ॥ २८ ॥ परिक्रम्य प्रदक्षिणीकृत्य । निःसङ्गेन शरीरे निरभिलाषेण । अन्तरात्मना मनसा । उपलक्षणे तृतीया ॥ २९—३१ ॥ आज्याहुतीमिवेत्यादिदृष्टान्तेन देव्याः परमपावनत्वं द्योत्यते ॥ ३२ ॥ वसोर्धारां संततां घृतधारां । अनेनाग्न्युज्जृम्भणं गम्यते ॥३३॥ देवाः स्वर्गवासिनः । गन्धर्वा भूलोकवासिनः । दानवाः पातालवासिनः । सकलभोगार्हरूपवत्याः सीतायाः अनलप्रवेशस्यानर्हत्वान्निरयपतनानर्हस्वर्गीयदेवतादृष्टान्तः ॥ ३४ ॥ अद्भुतोपमः अद्भुततुल्यः । रावणागमनमारभ्य एतावत्पर्यन्तं सीतायाः परमभागवतभूतलक्ष्मणापचार-

---

ति० राघवःशुद्धचारित्रां अदुष्टामेवमांयदिदुष्टांजानाति अर्हंतथाचेत् अदुष्टाचेत् पावकोमांसर्वतःपातु केशांबरादिकमपिमाधाक्षीदित्यर्थः ॥२६॥ ति० सातप्तेत्यादि । एतदर्थमेवस्नातायाअलङ्कारयुतायाआनयनंकारितं ॥ ३१ ॥ ति० सर्वाणिरूपाणि सर्वाणि भूतानि । "सर्वाणिरूपाणिविचित्यधीरः" इत्यादौतद्बोधकतयाप्रसिद्धोरूपशब्दः ॥३२॥ इत्येकोनविंशत्युत्तरशततमःसर्गः ॥११९॥

[ पा० ] १ ङ. झ. ट. मनश्छन्दं. २ अयंश्लोकः ङ. झ. ञ. ट. पाठेषुदृश्यते. ३ ङ. झ. ञ. ट. मैथिलींदीप्तां. ४ क. ख. छ. ञ. ददृशुस्तांविशालाक्षींपतन्तींहव्यवाहनं. ५ सीतांसर्वाणिरूपाणिरुक्मवेदिनिभांतदा. ६ ङ. झ. ट. ऋषयोदेवगन्धर्वा यज्ञेपूर्णाहुतीमिव.

## विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

सीतायामग्निंप्रविष्टायां विमानगणैर्व्योमाङ्गणमलंकुर्वाणैर्ब्रह्मरुद्रादिसुरगणैः श्रीरामंप्रति सीतायास्तस्यचक्रमेणलक्ष्मीनारायणस्वरूपत्वनिवेदनेनानेकप्रकारैःस्तवनपूर्वकं सीतात्यागस्यायुक्तत्वकथनम् ॥ १ ॥

**ततो हि दुर्मना रामः श्रुत्वैवं वदतां गिरः ॥ दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १ ॥**
**ततो वैश्रवणो राजा यमश्चामित्रकर्शनः ॥ सहस्राक्षो महेन्द्रश्च वरुणश्च परंतपः ॥ २ ॥**
**षडर्धनयनः श्रीमान्महादेवो वृषध्वजः ॥ कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥ ३ ॥**
**एते सर्वे समागम्य विमानैः सूर्यसन्निभैः ॥ आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४ ॥**
**ततः सहस्ताभरणान्प्रगृह्य विपुलान्भुजान् ॥ अब्रुवंस्त्रिदशश्रेष्ठाः प्राञ्जलिं राघवं स्थितम् ॥ ५ ॥**
**कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः ॥ उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥**
**कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे ॥ ६ ॥**
**ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः ॥ त्रयाणां त्वं हि लोकानामादिकर्ता स्वयंप्रभुः ॥ ७ ॥**
**रुद्राणामष्टमो रुद्रः साध्यानामसि पञ्चमः ॥ अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी ॥ ८ ॥**

फलमुपपादितं । वस्तुतः सीताया रावणागमनकाले अग्नौ प्रविष्टत्वात्तस्याः पुनर्गमनार्थं मायासीताया रावणगृहीताया अग्नौ प्रवेश इत्यप्याहुः ॥ ३५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

---

अथ रामस्तवः—ततो हीत्यादि ॥ दुर्मनाः दुःखितमनाः । दध्यौ मनसा ध्यानं कृतवान् ॥१॥ तत इत्यादिश्लोकत्रयमेकं वाक्यं ॥ २—४ ॥ प्रगृह्य उद्धृत्य ॥ ५ ॥ कर्तेत्यादि ॥ पूर्वं ब्रह्मणः अद्वारकं कर्तृत्वं । अत्र सद्वारकं कर्तृत्वमिति न विरोधः । सर्वज्ञस्त्वं कथमज्ञ इवोपेक्षस इति भावः । देवगणश्रेष्ठं ब्रह्मादिदेवगणश्रेष्ठं ॥ ६ ॥ आत्मस्वरूपमेवाह—ऋतधामेत्यादिश्लोकत्रयमेकं वाक्यं ॥ ऋतधामाख्यो वसुरित्यर्थः । प्रजापतिः प्रजास्वामीति वसुविशेषणं । आदिकर्ता । अण्डाधिपतिपर्यन्ताद्वारकसृष्टिकर्तेत्यर्थः । स्वयं प्रभवतीति स्वयंप्रभुः । अनियाम्य इत्यर्थः । रुद्राणां मध्ये अष्टमो रुद्रः तथा साध्यानामित्यत्रापि । अन्ते प्रलये, आदौ सृष्टेः प्राक्च दृश्यसे । अनेनोत्पत्तिविनाशराहित्यमुक्तं । एवं सर्वज्ञः सर्वशक्तिः सर्वेश्वरोपि सन् अज्ञ इव विदेहकुले प्रादुर्भूतां सीतां

---

**ति०** एवंवदतां हाहेतिवदतां । प्राकृतस्त्रीवत्सीताएतदनर्हेतितद्वियोगतोबाष्पव्याकुललोचनोभूत्वा मुहूर्तंदध्यौ किमुक्तं किंकृतं किंचातःपरंकर्तव्यमितिचिन्तापरोबभूव ॥ १ ॥ **ति०** अत्रावसरेदिक्पालसहितोरुद्रोहिरण्यगर्भश्चरामानुग्रहायसमागताविल्याह—ततइति ॥ २ ॥ **ति०** षडर्धनयनः त्रिनेत्रइत्यर्थः ॥ सर्वलोकस्य ब्रह्मलोकपर्यन्तंसर्वलोकवर्तिपदार्थानांस्रष्टा । ब्रह्मविदां चतुर्मुखप्रजापतिविष्णुदेवराजादिदिक्पालवसिष्ठाद्यृषितत्सन्तानजब्राह्मणाब्रह्मविदः । तेषांवरोज्येष्ठोहिरण्यगर्भः । 'योवैब्रह्माणंविदधाति पूर्वं योवैवेदांश्चप्रहिणोतितस्मै ' इतिश्रुतेः । ' हिरण्यगर्भःसमवर्तताग्रे ' इतिश्रुतेश्च ॥ ३ ॥ **ति०** प्रगृह्य उद्यम्य । भारतेतु—अग्निप्रवेशंसीतायाअनुक्त्वारामस्यचारित्रसंदेहेसीतादुःखंदृष्ट्वावाय्वग्निवरुणाद्युक्त्यैवसीताङ्गीकारउक्तः । तत्रानुक्तोप्यग्निप्रवेशोमध्येद्रष्टव्यइत्याहुः । पाद्मेतु—" सातेनगर्हितासाध्वीविवेशज्वलनंतदा । " इत्युक्तं ॥ ५ ॥ **ति०** कर्तासर्वस्येति । मनुष्यदेहेराघवे सर्वलोककर्तृत्वाद्युक्तिर्मूलस्वरूपाभिप्रायेण । ज्ञानविदामौपनिषदज्ञानवतां । देवगणा इन्द्रादयः तेषां श्रेष्ठं । ' विष्णुमुखावैदेवाः ' इतिश्रुतेः ॥ **स०** मूलरूपावताररूपेषुभेदस्य ' एकमेवनेहनानास्तिकिंचन—पूर्णमदः ' इत्यादिश्रुतिनिषिद्धत्वेनसर्वथानिर्विशेषत्वमेवमन्तव्यमित्याह—कर्तेति । अन्यथादाशरथौ ' कर्तासर्वस्यलोकस्य ' इत्याद्ययुक्तंस्यात् ॥ ६ ॥ **स०** इदानींरामस्यविभूतिरूपाणिवक्तुंतद्विभूतीनां " नान्तोस्तिममदिव्यानांविभूतीनांपरंतप " इत्याद्युक्तरीत्याऽनन्तत्वेनसामस्त्येनवक्तुमशक्यत्वात्प्राधान्येनाह—ऋतधामेति । वसूनांमध्येपूर्वंत्वं ऋतधामानामवसुः । विभूतिरूपेणतत्रसंनिहितइत्यर्थः । एवमुत्तरत्रप्रजापतीनांमध्यइतिपूरणीयं ॥ अष्टमःमहादेवाख्यः कैलासवासीशंकरोत्रविवक्षितः । पञ्चमोवीर्यवान्नाम ॥ ७ ॥ **ति०** विराड्रूपंवर्णयति । **अश्विनौचेत्यादि** ॥ **स०** इदानींसंकुच्यविश्वरूपमाह—अश्विनाविति । कर्णयोर्दिग्देवतानामिवाश्विनोरप्यभिमानादियमुक्तिः

[ पा० ] १ ङ. झ. ट. यमश्चपितृभिस्सह. २ ङ. झ. ट. वरुणश्चजलेश्वरः. ३ क. ग. ङ. झ. ज्ञानविदांविभुः.

अन्ते चादौ च लोकानां दृश्यसे त्वं परंतप ॥ उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा ॥ ९ ॥
इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः ॥ अब्रवीत्रिदशश्रेष्ठान्रामो धर्मभृतां वरः ॥ १० ॥
आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ॥ योहं यस्य यतश्चाहं भगवांस्तद्ब्रवीतु मे ॥ ११ ॥
इति ब्रुवन्तं[1] काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ॥ अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम ॥ १२ ॥
भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः ॥ एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ १३ ॥
अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव ॥ लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥१४॥

किमर्थमुपेक्षस इत्यर्थः ॥ ७—९ ॥ लोकपालैः लोकरक्षकैः ॥ १० ॥ ब्रह्मादिभिः सामान्यतः स्तूयमानोपि सर्वदेवपूजनीयाच्चतुर्मुखात् स्वप्रभावं लोके प्रख्यापयितुं स्वसौशील्यं दर्शयति—आत्मानमिति ॥ आत्मानं मानुषं मन्ये । परत्वापेक्षया मानुषत्वाभिनय एव ममाभिमत इत्यर्थः । अत्रापि विशेषमाह—राममिति । रामं रामनामकं । ततोप्यतिशयमाह—दशरथात्मजमिति । अवतारापेक्षया चक्रवर्तिपुत्रत्वमेव प्रियतममिति भावः । स्वस्य विष्णववतारत्वं सुग्रीवादिभिरनवगतमिति तत्प्रतिपत्त्यर्थं स्वस्वरूपं पृच्छति—योहमिति । योहमिति स्वरूपप्रश्नः । यस्येति संबन्धिप्रश्नः । यतइति प्रयोजनप्रश्नः । भगवांस्तद्ब्रवीत्विति । चक्रवर्तिपुत्रत्वमेव ममात्यन्तप्रियतमं । स्वयं सर्वज्ञतया ममानभिमतमपि परत्वं प्रकटयत्वित्यर्थः । आकारगोपनविवरणस्यानभिमतत्वेपि स्वयमनुमतिदानं रावणनिरसनेन निष्पन्नकार्यतया ॥११—१२॥ स्वरूपप्रश्नोत्तरमाह—भवानिति ॥ नाराः अयनं यस्यासौ नारायणः । "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः" इति मनुस्मरणात् । तेन जगत्कारणत्वमुक्तं । "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी" इति श्रुतेः । अवाप्तसमस्तकामस्य जगद्व्यापारानुपपत्तिं परिहरति—देव इति । दीव्यतीति देवः क्रीडाप्रवृत्तः । लीलायाः प्रयोजनत्वात्परिपूर्णस्यापि व्यापारः संभवतीति भावः । एवं परत्वासाधारणं नामधेयमुक्त्वा पत्नीवैशिष्ट्यमाह—श्रीमानिति । नित्यं श्रीरस्यास्तीति श्रीमान् । नित्ययोगे मतुप् । असाधारणमायुधमाह—चक्रायुध इति । स्वरूपवैलक्षण्यमाह—विभुरिति । व्यापक इत्यर्थः । फलितं रक्षकत्वमाह—एकशृङ्गो वराह इति । प्रलयोदधिसंप्लवे वराहरूपं कृत्वा भूमेरुद्धारक इत्यर्थः । "उद्धृतासि वराहेण" इति श्रुतेः । अनिष्टनिवर्तकत्वमाह—भूतभव्यसपत्नजिदिति । भूताः सपत्नाः मधुकैटभादयः भव्याः सपत्नाः शिशुपालादयः तान् जयतीति तथोक्तः ॥ १३ ॥ अथ सर्वविद्योपसंहारार्थमाह—अक्षरमित्यादि ॥ न क्षरतीत्यक्षरं अश्नोति व्याप्नोतीति वा अक्षरं । "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इति श्रुतेः । भवानित्यनुषज्यते । अक्षरं भवान् । एवमुत्तरत्राप्यनुषञ्जनीयं । बृहति बृंहयतीति च ब्रह्म । "बृहति बृंहयति तस्मादुच्यते

॥८॥ **ती०** दिक्पालैःस्तूयमानोपितैःपूजनीयाच्चतुर्मुखादात्मस्वरूपगुणविभूतीःस्वजनेषुप्रख्यापयितुंस्वसौशील्यंवर्णयति—**आत्मानमिति** । यः यत्स्वरूपः । यस्य यदीयः । यतः प्रयोजनाद्धेतोः उत्पन्नः ॥ **तनि०** अत्रसंप्रदायोदाहरणं । शङ्खचक्रगदापाणे इत्युक्त्यापरत्वव्यञ्जकतयातत्रानादरेणाधःकृतमुखत्वं द्वारकानिलयेत्यवतारोल्लेखनेनकिंचिदुत्तानमुखत्वं गोविन्दपुण्डरीकाक्षेतिगोपालपुत्रत्वश्रवणेनपरत्वापेक्षयावसुदेवपुत्रत्वमेवाभिमतमितिविकसिताक्षत्वंचव्यज्यतइति ॥ ११ ॥ **तनि०** श्रीमानिति नित्ययोगेमतुप् । भवान्श्रीमानिति 'सीतालक्ष्मीर्भवान्विष्णुः' इत्युक्तश्रियःपतित्वंनित्यानपायित्वंचदर्शितं । एकशृङ्गोवराहः सवराहो रूपंकृत्वेतिश्रुत्युक्तोवराहस्त्वं ॥ **ती०** नारायणः नराणांसमूहोनारं । तस्यायनं प्राप्यभूतः । देवः स्वप्रकाशः । एकशृङ्गोवराहः आदिवराहः । तस्यैकशृङ्गतास्कान्देदर्शिता "दंष्ट्रयापर्वतेन्द्राणांचलनंकृतवान्महत् । ततस्तंतुष्टुवुर्देवाएकशृङ्गत्वसिद्धये । एकशृङ्गवराहोभूत्तदाप्रभृतिमाधवः" इति ॥ **ति०** भूतभव्यसपत्नजित् भूतभव्यकालरूपोयःसपत्नः जनिमृतिहेतुत्वात् । तंजयतिसः । नित्यइतियावत् ॥ **स०** भूतभव्यसपत्नजित् भूताः हिरण्याक्षहिरण्यकशिप्वादयः । भव्याः शिशुपालदन्तवक्रकंसादयः । वर्तमानरावणखरदूषणादिशत्रुजयस्यप्रत्यक्षसिद्धत्वादनुक्तिः । यद्वा भूतभव्यशब्देनजन्ममरणहेतूकालावुच्येते । तद्रूपसपत्नजित् । आद्यन्तशून्यइत्यर्थः । मध्यकालजयस्यपूर्वोत्तरकालजयेनैवसिद्धेरनुक्तिः ॥ १३ ॥ **ति०** लोकानां धर्माधिकृतप्राणिनां त्वमेवपर-

[ पा० ] १ क. ख. घ.—ट. ब्रुवाणं.

**शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ॥ अजितः खड्गधृद्विष्णुः कृष्णश्चैव बृहद्बलः ॥ १५ ॥**
**सेनानीर्ग्रामणीश्च त्वं बुद्धिः सत्त्वं क्षमा दमः ॥ प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥ १६ ॥**
**इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ॥ शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ॥ १७ ॥**

परं ब्रह्म " इति श्रुतिनिर्वचनात् । सत्यं अविपर्यस्तं । षड्भावविकारशून्यमित्यर्थः । अस्ति जायते परिणमते विवर्धते अपक्षीयते विनश्यतीति षड्भावविकाराः । मध्ये चान्ते चेति । चकारादादौ चेत्यर्थः । वर्तमानमिति शेषः । नित्यत्वमुक्तमनेन । लोकानां परो धर्मः सिद्धरूपो धर्मः । सर्वलोकश्रेयःसाधनीभूत इत्यर्थः । विष्वद्रीची सर्वगता सेना यस्य सः विष्वक्सेनः । सर्वस्वामीत्यर्थः । चतुर्भुजः युगपच्चतुर्विधपुरुषार्थप्रद इत्यर्थः ॥ १४ ॥ शृङ्गविकारः शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा । " धनुषश्च " इत्यनङादेशः । अनेन रक्षणोपकरणवत्त्वमुक्तं । हृषीकाणां इन्द्रियाणां ईशः नियन्ता । सर्वेन्द्रियाकर्षकदिव्यविग्रह इत्यर्थः । पुरु सनोतीति पुरुषः । " षणु दाने " इत्यस्माद्धातोर्डप्रत्ययः । बहुप्रद इत्यर्थः । यद्वा पुरि हृदयगुहायां शेत इति पुरुषः । " पुरि शयं पुरुषमीक्षते " इति निर्वचनश्रुतेः । यद्वा येन जगत्पूर्णं स पुरुषः । "तेनेदं पूर्णं पुरुषेण सर्वं" इति श्रुतेः । यद्वा पुरातनत्वात् पुरुषः । " पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वं " इति श्रुतेः । पुरुषेभ्यः क्षराक्षरेभ्यः उत्तमः पुरुषोत्तमः । " यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति हि गीयते । यद्वा पुरुषेषु उत्तमः पुरुषोत्तमः । सप्तमीति योगविभागान्नागोत्तमादिवत्समासः । कैश्चिदपि न जित इत्यजितः । आश्रितसंरक्षणे कदाचिदपि भङ्गं न प्राप्नोतीत्यर्थः । खड्गं नन्दकाख्यं धरतीति खड्गधृत् । विष्णुः व्यापनशीलः । यो दयापदं प्राप्नोति तं तदा तत्रैव स्थितो रक्षतीत्यर्थः । कृष्णः भूनिर्वृतिहेतुः । " कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः " इति निर्वचनात् । बृहत् बलं धारणसामर्थ्यं यस्य सः बृहद्बलः ॥ १५ ॥ सेनां नयतीति सेनानीः । देवसेनानिर्वाहक इत्यर्थः । ग्रामं नयतीति ग्रामणीः । दिव्यजनपदादिपालक इत्यर्थः । बुद्धिः सत्त्वं क्षमा दम इति बुद्ध्यादिप्रवर्तक इत्यर्थः । "न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तं"इति वचनात् । "महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति श्रुतेश्च । प्रभवत्यस्माज्जगदिति प्रभवः उत्पत्तिस्थानं । सर्वोपादानमित्यर्थः । अप्ययः सर्वजगल्लयस्थानं । "कृष्ण एव हि भूतानामुत्पत्तिरपि चाप्ययः"इति श्रुतेः । उपेन्द्रः इन्द्रानुजत्वेन प्रथममवतीर्णः । मधुसूदनः वेदापहारकदैत्यसंहारी ॥१६॥ इन्द्रस्य कर्मेव कर्म यस्य स इन्द्रकर्मा । "तं विष्णुरन्वतिष्ठत"इति श्रुतेः । महेन्द्रः निरतिशयैश्वर्यसंपन्नः । पद्मं नाभौ यस्य स पद्मनाभः । ममापि जनक इत्यर्थः । वक्ष्यति हि—"पद्मे दिव्येर्कसंकाशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितं" इति । रणे अन्तं शत्रुनाशं करोतीति रणान्तकृत् । शरण्यं शरणार्हं । तदुचितज्ञानशक्तिदयादिसंपन्नमित्यर्थः । शरणं रक्षणोपायं "उपाये गृहरक्षित्रोः शब्दः शरणमित्ययं" इति वचनात् । "सर्वस्य शरणं सुहृत्"

मोधर्मः ॥ " यज्ञोवैविष्णुः " इत्यादिश्रुतेरश्वमेधान्तधर्मस्त्वमेव ॥ १४ ॥ **ती०** शार्ङ्गधन्वा कालरूपंशार्ङ्गं धनुर्यस्यसः । पुरूणिफलानिसनोतीतितथा । 'षणु दाने' । पुरि हृदयपुण्डरीकेशेतइतिपुरुषः । पूर्णत्वाद्वापुरुषः । 'तेनेदंपूर्णंपुरुषेणसर्वं' इतिश्रुतेः । अजितः गुणैरैश्वर्येणचकेनाप्यजितः । विद्यामयंनन्दकाख्यंखड्गंधारयतीतिखड्गधृत् ॥ बृहद्बलः बृहन्तिवानरबलानियस्येतितथा ॥१५॥ **तनि०** क्षमा क्षमानिर्वाहकः । 'कीर्त्याःकीर्तिःक्षमाक्षमा' इत्युक्तत्वात् । दमः इन्द्रियजेता । प्रभावः उत्पत्तिमत्कार्यवर्गशरीरः । स्थूलचिदचिद्विशिष्टस्यकार्यत्वात् । ' बहुस्यां ' इत्यादिश्रुतेः ॥ **स०** इनेनपत्यासहिताःसेनाःहिरण्यगर्भमारभ्ययवसावसानाजीवास्तान् आसमन्तान्नयतीतिवा सेनानीः । सर्वं सर्वान्तर्यामी ॥ क्षमा भजकापराधसहनं । दमः इन्द्रियनिग्रहः । धर्माणांधर्मिणाऽभेदादियमुक्तिः ॥ प्रभवाप्ययौ सृष्टिविनष्टी । कार्यकारणभावापन्नत्वादयंवैलोकोमहानाम्नीत्यादिवच्छब्दसांकर्यं ॥ १६ ॥ **तनि०** इन्द्रस्येवकर्मयस्यसइन्द्रकर्मा । वृत्रादिवधस्येन्द्रान्तर्यामिकर्तृकत्वात् । महर्षयः अलौकिकतत्वसाक्षात्कारसमर्थाः । तत्रापिदिव्याः अवताररहस्यादिविशेषज्ञानवन्तोवाल्मीकिप्रभृतयः । यद्वा नित्यसूरयः । ' तद्विप्रासोविपन्यवोजागृवाँसः ' इति श्रुतेः ॥ **ति०** ' प्रजापतिरिन्द्रमसृजत ' इतिश्रुतेः इन्द्रः कर्म सृष्टिर्यस्य सः इन्द्रकर्मा ॥ **स०** रणान्तकृत् रणेअन्तः निर्णयः

[ पा० ] १ ठ. सर्वं.

**सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षभः ॥ त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः ॥**
**सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ॥ १८ ॥**
**त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परंतपः ॥ प्रभवं निधनं वा ते न विदुः को भवानिति ॥ १९ ॥**
**दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च ॥ दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ॥ २० ॥**
**सहस्रचरणः श्रीमाञ्शतशीर्षः सहस्रदृक् ॥ त्वं धारयसि भूतानि वसुधां च सपर्वताम् ॥ २१ ॥**
**अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः ॥ त्रीँल्लोकान्धारयन्राम देवगन्धर्वदानवान् ॥ २२ ॥**

इति श्रुतेः।महर्षयः अलौकिकतत्त्वसाक्षात्कारसमर्थाः। दिव्या महर्षयः सनकादयः । "यत्रर्षयः प्रथमजा ये पुराणा" इत्युक्ता नित्यसूरयो वा । नित्यनिर्दोषा वेदा वा ॥ १७ ॥ सहस्रशृङ्ग इत्यादिसार्धश्लोक एकान्वयः ॥ सहस्रशृङ्गः सहस्रशाखारूपशृङ्गः । शतजिह्वः अनेकविधचोदनारूपजिह्वः । ऋषभः कर्मणामालोचयिता । " ऋष आलोचने " इति धातुः । महांश्चासावृषभश्च महर्षभः । एवंभूतो वेदात्मा त्वमित्यर्थः । आदिकर्ता समष्टिकर्ता । अनेन व्यष्टिकर्तुः स्वस्यव्यावृत्तिः । स्वयंप्रभुः अनन्यप्रेर्यः । "न तस्येशे कश्चन"इति श्रुतेः । सिद्धानां मुक्तानां । साध्यानां "यत्र पूर्वे साध्याः सन्ति देवा" इत्युक्तानां नित्यानामाश्रयः साम्यभोगप्रदः । पूर्वजः आश्रितापेक्षायाः पूर्वं तद्रक्षणाय जनितः ॥ १८ ॥ सर्वकर्मसमाराध्यत्वमाह—त्वं यज्ञ इति ॥ त्वं यज्ञः । "यज्ञो वै विष्णुः"इति श्रुतेः । यज्ञनिर्वाहकपशुहविराज्यस्रुक्स्रुवादिशरीरको यज्ञाराध्येन्द्रादिशरीरकश्चेत्यर्थः । "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतं" इति हि गीयते । वषट्कार इत्युपलक्षणं । आश्रावयेति चतुरक्षरम्अस्तुश्रौषडिति चतुरक्षरम् यजेति द्व्यक्षरम् ये यजामह इति पञ्चाक्षरमित्युक्तानां सप्तदशाक्षराणां । तैराराध्य इत्यर्थः । तथोक्तं—"चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु"इति ॥ ओंकारः प्रणववाच्यः । "ओमित्येकाक्षरं ब्रह्म"इति श्रुतेः । परन्तपः उत्कृष्टतप इत्यर्थः । उत्कृष्टतपःसमाराध्य इति यावत्। ते प्रभवं निधनं वा न विदुः, वेदा वैदिकाश्च को भवानिति च न विदुः । अपरिच्छिन्नमहिमत्वात् । "क इत्था वेद यत्र सः" इति श्रुतेः ॥१९॥ सर्वान्तर्यामित्वमाह—दृश्यस इति ॥ योगिभिरिति शेषः । अनेन संबन्धप्रश्नस्योत्तरमुक्तं ॥ २० ॥ पुरुषसूक्तार्थमाह—सहस्रेति ॥ अत्र शतशब्दः सहस्रवाचकः । "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"इति श्रुतेः । श्रीमानिति भूपतित्वस्याप्युपलक्षणं । "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ "इत्युत्तरनारायणोक्तेः । अथ सर्वाधारत्वमाह—त्वमिति । भूतानीति भूव्यतिरिक्तमहाभूतपरं । अनेनाधाराधेयभावसंबन्ध उक्तः ॥ २१ ॥ दैनंदिनप्रलयवृत्तान्तमाह—अन्त इति ॥ पृथिव्या अन्ते विनाशे । महानुरगः शेषो यस्य सः शेषशायी सन् । धारयन् कुक्षौ धारयन् दृश्यसे ।

अवश्यंयुद्धेसंनद्धाःस्यामेतियेषांतेरणान्ताः । तान्कर्तयति छिनत्तीतिकृत् ॥ १७ ॥ **तनि०** वेदात्मा वेदपुरुषान्तर्यामी । पूर्वजः 'पूर्वमेवाहमिहासं' इतिश्रुतेः । हिर्हेतौ । आदिकर्तृत्वेपूर्वजत्वंहेतुरित्यर्थः । सिद्धाद्याश्रयत्वेचायमेवहेतुः ॥ **ती०** सहस्रशृङ्गोवेदात्मा सहस्रशाखसामवेदस्वरूपः । 'सहस्रंसामवर्त्म'इतिप्रसिद्धेः । 'वेदानांसामवेदोस्मि' इतिस्मृतेः । शतजिह्वः नित्यनैमित्तिककाम्यरूपसामान्यविशेषचोदनारूपशतजिह्वः । शतशीर्षइति वा पाठः । आदिकर्ता ब्रह्मादीनामपिकर्ता । स्वयंप्रभुः अनन्यप्रेर्यः । साध्यन्ते आराध्यन्तइतिसाध्याः । तेषांसिद्धानांमुक्तानामपि आश्रयःप्राप्यः । पूर्वजः सृष्टेःपूर्वमपिस्थितः ॥ **कतक०** महर्षभः श्रेष्ठतमः शिशुमारप्रजापतिरूपइत्यर्थः ॥ **ति०** सिद्धानां आरूढानां । साध्यानां आरुरुक्षूणां । आश्रयः प्राप्यः । पूर्वजश्चासि 'अहमस्मिप्रथमजाऋतस्य ' इत्यादिश्रुतेः ॥ १८ ॥ **ती०** नविदुःकोभवानिति इदंतयानविदुरित्यर्थः ॥ १९ ॥ **तनि०** सर्वान्तर्यामित्वमाह—दृश्यसइति पण्डितैरितिशेषः । 'भूतानिविष्णुर्भुवनानिविष्णुर्वनानिविष्णुर्गिरयोदिशश्च । नद्यःसमुद्राश्चसएवसर्वंयदस्तियन्नास्तिचविप्रवर्य ॥ ' इतिहिस्मर्यते ॥ **ती०** सर्वात्मतयास्तौति—**दृश्यसइति** । सर्वभूतेषुगोषुच अन्तर्यामितयादृश्यसे । गोब्राह्मणयोर्विश्वान्तर्वर्तित्वेपिपृथगभिधानंविशिष्टाविर्भावस्थानतया । एवंसर्वजङ्गमान्तर्यामितामभिधायस्थावरान्तर्यामितामाह—दिक्ष्विति ॥ २० ॥ **ती०** इदानींसंकर्षणात्मनास्तौति—**अन्तइति** । महोरगः संकर्षणइत्यर्थः ॥ २२ ॥

[ **पा०** ] १ ङ. झ. ञ. ट. शतशीर्षो. २ ङ. च. छ. झ. ञ. ट. परात्परः. ३ ङ. झ. ट. नोविदुः. ४ ङ. झ. नदीषुच. ५ ञ. महोरगे.

अहं ते हृदयं राम जिह्वा देवी सरस्वती ॥ देवा गात्रेषु रोमाणि निर्मिता ब्रह्मणः प्रभो ॥ २३ ॥
निमेषस्ते भवेद्रात्रिरुन्मेषस्ते भवेद्दिवा ॥ संस्कारास्तेऽभवन्वेदा न तदस्ति त्वया विना ॥ २४ ॥
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ॥ अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ॥ २५ ॥
त्वया लोकास्त्रयः क्रान्ताः पुराणे विक्रमैस्त्रिभिः ॥ महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरम् ॥२६॥
सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः ॥ वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥ २७ ॥
तदिदं नः कृतं कार्यं त्वया धर्मभृतां वर ॥ निहतो रावणो राम प्रहृष्टो दिवमाक्रम ॥ २८ ॥
अमोघं बलवीर्यं ते अमोघस्ते पराक्रमः ॥ अमोघं दर्शनं राम न च मोघः स्तवस्तव ॥ २९ ॥

---

मार्कण्डेयादिभिरिति शेषः ॥ २२ ॥ अथ 'अङ्गान्यन्या देवताः' इत्युक्तसर्वदेवाद्यात्मकत्वं दर्शयति—अहं त इत्यादिना ॥ हृदयं वक्षः । ब्रह्मणः परब्रह्मणः । ते देवा गात्रेषु स्थिताः रोमाणीव स्थिताः तद्वदविनाभूताः ॥२३॥ दिवा अहः । वेदाः संस्काराः निःश्वसितभूता इत्यर्थः । "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादि श्रुतेः । किं बहुना संग्रहेणोच्यत इत्याह—न तदस्ति विना त्वयेति । यत्त्वया विनाभूतं त्वदनन्तर्यामिकं । तन्नास्तीत्यर्थः ॥२४॥ एवं निषेधश्रुत्यर्थमुक्त्वा "सर्वं खल्विदं ब्रह्म, तत्त्वमसि" इत्यादिसामानाधिकरण्यश्रुत्यर्थमाह—जगदिति ॥ सर्वं जगत् ते शरीरं तव नियमेन आधेयं विधेयं शेषभूतं चेत्यर्थः । इदमेव हि शरीरलक्षणं । एवं जगतस्त्वच्छरीरत्वाच्छरीरगतविशेषणानित्वद्विशेषणानीत्याह—स्थैर्यमिति । वसुधातलं वसुधातलस्थैर्यं । "काठिन्यवान्यो बिभर्ति तस्मै भूम्यात्मने नमः" इति विष्णुपुराणोक्तेः । अग्निः अग्नितापः । ते कोपः । सोमः सोमगतप्रसादः । ते प्रसादः त्वत्प्रसाद इत्यर्थः ॥ २५ ॥ त्वया त्रिविक्रमेण । पुराणे पूर्वकाले । लोकाक्रमणफलमाह—महेन्द्र इति । राजा कृतः । त्रैलोक्यस्येति शेषः ॥ २६ ॥ प्रयोजनप्रश्नस्योत्तरमाह—वधार्थमिति ॥ २७—२९ ॥

---

**ति०** हेराम त्रींल्लोकान्धारयंस्त्वंविराट् । नारायणोसीत्यर्थः । एतेन यतश्चाहमुत्पन्नइतिप्रश्नस्योत्तरंदत्तं । एवंदेहत्वमुपदिश्यदेहित्वमुपदिशति—**अहंतेहृदयमिति** । हेराम ते रामोपग्रहस्य तवहृदयं सर्वाधारभूतं आन्तरं त्वदात्मतत्वमहमेवज्ञानस्वरूपः । महाकाशइवघटाकाशस्य । तवजिह्वामन्निर्मिता । वाग्देवीसरस्वती । **स०** तेहृदयं प्रीतिपात्रं । हृदयमाश्रितइति । सरस्वती जिह्वा तदाश्रिता । देवी द्योतमाना । देवाः रोमाणि तत्रस्थाओषध्याद्यभिमानिनः । एवंगात्रेषुअवयवेषु देवाः वाय्वादयः । ब्रह्मणा मया ॥ २३ ॥ **स०** निमेषोन्मेषौ रात्रिर्दिनंच । स्मृतेतिपुराणप्रसिद्धिमाह ॥ वेदास्तवसंस्काराःसंस्क्रियन्तेलोकाएभिरितिसंस्काराः कर्तव्याकर्तव्यव्यापारव्यवस्थापकाः ॥ २४ ॥ **तनि०** त्वयालोकास्त्रयःक्रान्ताइति बलेःप्रतिग्रहीतेत्यर्थः । एतेन वामनावतारोव्यञ्जितः । विक्रमैःपादविन्यासैस्त्रिभिःक्रान्ताइति त्रिविक्रमावतारःकथितः । 'इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं' इतिश्रुतेः । पुराणे पूर्वकाले । महेन्द्रोराजाकृतः । बलिनापदान्निर्यासितइन्द्रः पुनस्त्वयाराजाकृतइत्यर्थः ॥ २६ ॥ **तनि०** भगवदवतारेषुलक्ष्म्याअनुवृत्तिमाह—सीतेति । कृष्णः भविष्यत्कृष्णावतारश्चत्वमेवेत्यर्थः । प्रजापतिः प्रजापतिशब्दवाच्यस्त्वमेव । अवतारप्रयोजनमाह—वधार्थमिति । मानुषीं मनुष्यसंस्थानरूपां । तनुं अप्राकृतशरीरं । **स०** प्रजापतिः सर्वप्रजापालकः । कृष्णः प्रलयेसर्वंजगत्स्वस्मिन्कर्षतीतितन्नामकोविष्णुर्देवोभगवान् । "कृष्णोमुक्तैरिज्यते" इतिमूलरूपेपिकृष्णशब्दप्रयोगात् । मानुषींतनुं कौसल्यादेहं । भगवद्देहस्यचिदानन्दमात्रत्वस्यस्थितत्वात् ॥ २७ ॥ **ति०** अथवृत्तानुष्ठानानुवादपूर्वकंवर्तिष्यमाणकर्तव्यमाह—निहतइति । रावणोनिहतः । एवंचावतारकार्यंनिर्वृत्तं । अतःपरंमहाराज्येनकिंचित्कालंप्रहृष्टःसन्दिवं परनाकाख्यंब्रह्मलोकमाक्रम प्राप्नुहि । एवंसिद्धकार्यत्वात्तेवीर्यंबलं अमोघं । तन्मूलाःपराक्रमाश्च नमोघाः ननिष्फलाः । अपितुसफलाएवेत्यर्थः ॥ **स०** दिवं वैकुण्ठं ॥ २८ ॥ **ति०** अथरामस्यसर्वोपास्यत्वंसर्वाभीष्टसिद्धिप्रदत्वंचाह—अमोघमिति । हेराम तेदर्शनं एवंमूर्तेस्तेदर्शनंसुग्रीवादीनाममोघं । एवंकालान्तरेश्रुत्वा चित्तत्वद्द्रष्टॄणामप्यमोघंऐहिकामुष्मिकसकलफलसाधनं । तवसंस्तवः रामनारायणेत्येवंरूपः अमोघः सकलेष्टदः । येचत्वयिभक्तिमन्तः सोहमेवेतिगौणवृत्त्यात्वदुपासकाः तवाहमितिवोपासकाः तेप्यमोघं संसारमार्गमतिक्रान्ताः सत्यसंकल्पत्वादिमन्तःसन्तोमल्लोकप्राप्तिरूपामोघफलाभविष्यन्ति । किंपुनर्येसर्वात्मनात्वदभेदध्यानवन्त इत्यर्थः ॥ २९ ॥

**[ पा० ]** १ ठ. ब्रह्मणा. २ ङ. झ. ट. रुन्मेषोदिवसस्तथा. ३ ङ. झ. नैतदस्ति. ४ ख. घ. ङ. झ. ट. पुरास्त्रैर्विक्रमैः.

अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः ॥ ३० ॥
ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ॥ प्राप्नुवन्ति सदा कामानिह लोके परत्र च ॥ ३१ ॥
इममार्षं स्तवं नित्यमितिहासं पुरातनम् ॥ ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

---

## एकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

मूर्तीभूय सीतायाः स्वाङ्कारोपणपूर्वकंकुण्डादुद्गतेनाग्निना रामंप्रति सीतायानिर्दोषत्वोद्घोषणेन तत्स्वीकारचोदना ॥ १ ॥
रामेणापि सीतायाअदोषत्वोत्कीर्तनपूर्वकमग्निप्रवेशोपेक्षणस्य लोकापवादपरिजिहीर्षामूलकत्वोक्त्या तत्स्वीकारः ॥ २ ॥

एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम् ॥ अङ्केनादाय वैदेहीमुत्पपात विभावसुः ॥ १ ॥
स विधूय चितां तां तु वैदेहीं हव्यवाहनः ॥ उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥ २ ॥
तरुणादित्यसंकाशां तप्तकाञ्चनभूषणाम् ॥ रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम् ॥ ३ ॥
अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम् ॥ ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ॥ ४ ॥
अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ॥ ५ ॥

---

अमोघा इत्यर्धं ॥ अमोघाः अप्रतिबद्धफलाः ये त्वयि भक्तिमन्तः ते अविलम्बेन फलमभिमतं लभन्त इति इदं चावतारस्यैकं प्रयोजनं ॥ ३० ॥ इदमेव विवृणोति—य इति ॥ त्वामुद्दिश्येति शेषः । अनेन सर्वस्मादपि तपःप्रभृतेः रामभक्तिरेव परो धर्म इत्युक्तं । काम्यन्त इति कामाः भोगोपकरणानि । इह लोके परत्र च प्राप्नुवन्ति । सदेत्यनेन यावच्छरीरपातमत्र भोगान् भुक्त्वा शरीरावसाने परलोके सर्वान्कामान्प्राप्नुवन्तीत्यर्थः ॥ ३१ ॥ ये रामभक्तिं कर्तुमदक्षास्तेषामिदं स्तोत्रमेव तादृशफलप्रदमित्याह—इममिति ॥ ऋषिः वेदः तत्संबन्ध्यार्षं । अतएव पुरातनं । पराभवः पुनरावृत्तिः ॥ ३२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

---

विभावसुः अग्निः ॥ १ ॥ विधूय चितां शिथिलीकृत्य । मूर्तिमान् मनुष्यविग्रहवान् ॥ २ ॥ तरुणादित्येत्यादिश्लोकद्वयमेकान्वयं ॥ तथारूपां प्रवेशकालिकरूपवतीं । मनस्विनीं प्रसन्नमनस्कामित्यर्थः ।

---

**ति०** इदानींतत्परैतत्स्तोत्रपाठफलमुपदिशति—**इममिति** । ऋषिर्वेदः । तदुक्तसगुणनिर्गुणब्रह्मविद्याप्रतिपादकत्वात् । एवंभूतं ब्रह्मविद्यास्तवं येकीर्तयिष्यन्ति तेषांपराभवः परैः इहामुत्रलोकशत्रुभिःपुत्रदारादिभिःपापैश्चाभिभवःआक्रमणं नास्ति नभविष्यतिच ॥ **स०** ऋषिः वेदद्रष्टा । तद्दृष्टत्वादार्षोवेदः । तत्तुल्यंस्तवंस्तोत्रं । इतिहासं अनादिसिद्धकथाविषयत्वात् । पराभवः बाह्याभ्यन्तरशत्रुतिरस्करणंनास्ति ॥ ३२ ॥ इतिविंशत्युत्तरशततमःसर्गः ॥ १२० ॥

**ति०** पितामहसमीरितं शुभं परमशोभनं । निजब्रह्मत्वप्रतिपादकंवाक्यं । श्रुत्वा ध्यात्वाचप्रसन्नतयाऽवस्थानकालेइतिशेषः । अङ्केनादाय 'रयिंचपुत्रांश्चादादग्निर्मह्य'इतिश्रुत्यर्थमपरोक्षमेवसंपादयन्नित्यर्थः ॥ **स०** शुभं स्वाभिलषितसीतारघुवरसंयोगसाधनत्वात् । अङ्केन आरोपितकलंकेनपतितांसीतां आदाय स्वयंस्वीकृत्य । अङ्केनस्वदक्षिणोत्सङ्गेनआदाय । तस्यपुत्रीभागत्वात् । यथोक्तं 'भागोहिदक्षोदुहितुःस्नुषायाः'इति । अग्निपातानन्तरंजीवनेऽग्निजातत्वप्राप्त्यातत्पुत्रीत्वस्योचितत्वात् । अन्यथाअङ्केनेतिव्यर्थं । विभावसुरग्निः ॥ १ ॥ **स०** मूर्तिमान्'चत्वारिश्रृङ्गात्रयोअस्यपादाः'इत्याद्युक्तलक्षणशरीरवान् ॥ २ ॥ **स०** रक्तांबरधरां पूर्वविद्यमानपीतवस्त्रंविसर्जयित्वाविभीषणेनदत्तरक्तवस्त्रधरां ॥ ३ ॥ **स०** हेराम यापूर्वंरावणहरणकालेमयि प्रविश्यकैलासंगता सैषातेत्वदीयानिजपत्नी । अस्यांपापंत्वच्छङ्कितंनविद्यते । अत्रयद्वक्तव्यंतत्सर्वमरण्यकाण्डव्याख्यायांकूर्मपुराणाद्युदाहरणेनोक्तंपुरस्तात् ॥ **ति०** तदा दानसमये । लोकस्य मनोवाक्कायैर्लोककृतपुण्यपापकर्मणः । साक्षी साक्षाद्द्रष्टा । सर्वदेहान्तर्वैश्वानरात्मनानित्यप्रतिष्ठितत्वादितिभावः । एषा या मयिरावणहरणकालेप्रविष्टासैव । एवंहिकूर्मपुराणानुसारेणव्याख्यातं । तच्चप्राङ्नि-

[ पा० ] १ क. ख. घ.—ट. विधूयाथ. २ क. शुक्लांबर. ३ ङ. झ. ट. तथारूपामनिन्दितां.

एषा ते राम वैदेही पापमस्यां न विद्यते ॥ ६ ॥
नैव वाचा न मनसा नानुध्यानान्न चक्षुषा ॥ सुवृत्ता वृत्तशौण्डीर न त्वामतिचचार ह ॥ ७ ॥
रावणेनापनीतैषा वीर्योत्सिक्तेन रक्षसा ॥ त्वया विरहिता दीना विवशा निर्जनाद्वनात् ॥ ८ ॥
रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा ॥ रक्षिता राक्षसीसंघैर्विकृतैर्घोरदर्शनैः ॥ ९ ॥
प्रलोभ्यमाना विविधं भर्त्स्यमाना च मैथिली ॥ नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना ॥ १० ॥
विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव ॥ न किंचिदभिधातव्यमहमाज्ञापयामि ते ॥ ११ ॥
ततः प्रीतमना रामः श्रुत्वैतद्वदतां वरः ॥ दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १२ ॥
एवमुक्तो महातेजा द्युतिमान्दृढविक्रमः ॥ अब्रवीत्त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ॥ १३ ॥
अवश्यं त्रिषु लोकेषु न सीता पापमर्हति ॥ दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा ॥ १४ ॥
बालिशः खलु कामात्मा रामो दशरथात्मजः ॥ इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ॥१५॥
अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीम् ॥ अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥ १६ ॥
प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः ॥ उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम् ॥ १७ ॥
इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा ॥ रावणो नातिवर्तेत वेलामिव महोदधिः ॥ १८ ॥
न हि शक्तः स दुष्टात्मा मनसाऽपि हि मैथिलीम् ॥ प्रधर्षयितुमप्राप्तां दीप्तामग्निशिखामिव ॥१९॥

अङ्के कृत्वा अङ्केनादायेत्यर्थः ॥ ३—५ ॥ एषा या पूर्वं मयि प्रविष्टा सैषेत्यर्थः । एतेन मायासीताग्निं प्रविष्टा साक्षात्सीताग्निना दत्तेति प्रत्युक्तं । ते त्वदीयेत्यर्थः । एनां परिगृहाणेति शेषः ॥६॥ पापाभावमेवोपपादयति—नैवेत्यादिना ॥ अनुध्यानात् संकल्पात् । अत्यन्ताभिमतां देवीं निर्दोषां जानन्नपि स्ववृत्तावद्यत्वपरिहारार्थं वह्निं प्रावेशयदिति संतोषातिशयाद्वृत्तशौण्डीरेति संबोधनं ॥ ७ ॥ एतत्संमतिं विना कथं रावणः समानीतवानित्यत्राह—रावणेनेत्यादि ॥ ८ ॥ विवशा नीतेत्यत्र लिङ्गं दर्शयति—रुद्धेति ॥ त्वयि चित्तं यस्याः सा त्वच्चित्ता । त्वमेव परायणमुत्तमगतिर्यस्याः सा त्वत्परायणा ॥ ९–१० ॥ विशुद्धभावां विशुद्धहृदयां । अभिधातव्यं मद्वचनस्योत्तरमिति शेषः ॥ ११ ॥ दध्यौ न वृथैव सीता त्यक्तेत्यचिन्तयत् ॥ १२–१३ ॥ वस्तुतो निर्दोषत्वेपि अपवादोस्तीत्याह—अवश्यमिति ॥ १४ ॥ अपवादपरिहारार्थमयं मम प्रयत्न इत्याह—बालिश इति ॥ अविशोध्येति । परिग्रह इति शेषः ॥ १५ ॥ अनन्यहृदयां मय्येव सक्तहृदयां । मच्चित्तपरिवर्तिनीं मच्चित्तानुवर्तिनीं । त्यक्तस्वव्यापारामित्यर्थः । जनकात्मजामिति हेतुगर्भविशेषणं । जनकपुत्र्याः किमाचारसंपत्तिर्वक्तव्येति भावः ॥ १६ ॥ तर्हि किमर्थमुपेक्षितवानसीत्यत्राह—प्रत्ययार्थमिति ॥ प्रत्ययार्थं विश्वासजननार्थमित्यर्थः । सत्यसंश्रयः सत्यैकाश्रयः । यथावद्वृत्तप्रवर्तनाकाङ्क्षीत्यर्थः ॥ १७ ॥ एतादृशसुन्दरीं रावणः कथं नेक्षेतेत्यत्राह—इमामपीति ॥ १८ ॥ दृष्टान्तान्तरमाह—न हीति ॥ अप्राप्तां प्रधर्षणानर्हां ॥ १९ ॥

रूपितं । पापं रावणस्पर्शरूपमपि ॥ ५—६ ॥ ति० तद्रक्षोनाचिन्तयत नागणयत । तत्रहेतुरन्तरात्मनस्त्वद्गतत्वं । एवंचयत्प्रतिबिंबस्याप्येवंव्यवस्था तद्बिंबस्यशुद्धत्वेकिंवक्तव्यमितिध्वनिः ॥ १० ॥ ति० नाकिंचिदिति । मन्नियोगानन्तरंप्रतिग्राह्यानवेतिसन्देहोनगृह्णामीतिनिषेधश्चनकर्तव्यइत्यर्थः । कुतएवंतत्राह—आज्ञापयामितइति । एवमुक्तिस्तुरामेणस्वस्वरूपाज्ञानननटनात्तदनुसारेणरुद्रमूर्तेर्भगवतोग्नेरपीतिमन्तव्यं ॥ ११ ॥ ति० मच्चित्तपरिरक्षिणीं मद्गतचित्तत्वेनात्मनोदोषपरिरक्षिणीं । स० मच्चित्तपरिरक्षिणीं मन्मनोनुकूलां ॥ १६ ॥

[ पा० ] १ ङ. झ. ञ. ट. नैवबुद्ध्यानचक्षुषा. २ ङ. झ. ञ. वृत्तशौटीर्यनत्वामत्यचरच्छुभा. ३ ग. च. छ. ञ. निर्जनेवने. ङ. झ. निर्जनेसति. ४ ङ. झ. ट. राक्षसीभिश्चघोराभिर्घोरबुद्धिभिः. ५ ङ. झ. गृह्णीष्वमैथिलीं. ६ क. ख. ङ. च. छ. झ. ट. सीतापावनमर्हति. ७ ख. ट. सीतांमच्चित्तपरिरक्षिणी. ८ ञ. कर्मणा.

नेयमर्हति चैश्वर्यं रावणान्तःपुरे शुभा ॥ अनन्या हि मया सीता भास्करेण प्रभा यथा ॥ २० ॥
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा ॥ न हि हातुमियं शक्या कीर्तिरात्मवता यथा ॥२१॥
अवश्यं तु मया कार्यं सर्वेषां वो वचः शुभम् ॥ स्निग्धानां लोकमान्यानामेवं च ब्रुवतां हितम् ॥२२॥
इतीदमुक्त्वा विदितं महाबलैः प्रशस्यमानः स्वकृतेन कर्मणा ॥
समेत्य रामः प्रियया महाबलः सुखं सुखार्होऽनुबभूव राघवः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकविंशत्युत्तरशततमः सर्गः ॥१२१॥

## द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

महेश्वरेण रामप्रशंसनपूर्वकंतंप्रतिविमानस्थदशरथप्रशंसनेन तन्नमनचोदना ॥ १ ॥ दशरथेन स्वप्रणामिनोरामस्याङ्कारोपणेन सप्रशंसनपरिष्वङ्गमाशीर्वचनम् ॥ २ ॥ तथा रामप्रार्थनया कैकेयीशापापवदनपूर्वकं सीतालक्ष्मणौप्रति सप्रशंसनं रामसेवानुशासनेनस्वर्गगमनम् ॥ ३ ॥

एतच्छ्रुत्वा शुभं वाक्यं राघवेण सुभाषितम् ॥ इदं शुभतरं वाक्यं व्याजहार महेश्वरः ॥ १ ॥
पुष्कराक्ष महाबाहो महावक्षः परन्तप ॥ दिष्ट्या कृतमिदं कर्म त्वया शस्त्रभृतांवर ॥ २ ॥
दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः ॥ अपावृत्तं त्वया संख्ये राम रावणजं भयम् ॥ ३ ॥
आश्वास्य भरतं दीनं कौसल्यां च यशस्विनीम् ॥ कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ॥ ४ ॥

तथाप्येषा तादृशमैश्वर्यं कथं जह्यात्तत्राह—नेयमिति । रावणैश्वर्यं नेयमर्हति किंतु ममैश्वर्यमर्हतीत्यर्थः । तत्र हेतुमाह—अनन्येति । मया अनन्या अभिन्ना । अविनाभूतेति यावत् ॥ २० ॥ अहमपि तया अनन्य इत्याह—विशुद्धेति ॥ २१ ॥ सीतापरिग्रहे भवद्वचनं तु प्रधानहेतुरित्याह—अवश्यमिति ॥ वचनकरणे स्नेहः सर्वपूज्यत्वं हितोपदेष्टृत्वं च हेतुरित्यर्थः ॥ २२ ॥ विदितं स्वेन विदितं । इदं उक्तं वचनं । उक्त्वा स्वकृतेन कर्मणा करणेन महाबलैः कर्तृभिः प्रशस्यमानः प्रियया समेत्य सीतां स्वसमीपमानीयेत्यर्थः ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

देवकार्यस्य कृतत्वात्त्रिदिवमाक्रमेति ब्रह्मणोक्तत्वाल्लोके धर्मसंस्थापनपरं रामहृदयं जानन् रुद्रस्तदनुमन्यते—एतच्छ्रुत्वेत्यादि ॥ १ ॥ पुष्कराक्ष पुण्डरीकाक्ष । अनेन तस्य "यथा कप्यासं पुण्डरीकमेवमक्षिणी, पुरुषः पुण्डरीकाक्ष" इति श्रुतिस्मृतिभ्यामुदीरितस्य परब्रह्मासाधारणचिह्नस्य रामे रुद्रेण प्रतिपादनाद्रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परब्रह्मेत्युक्तं । श्रीनिवासत्वेन महावक्षस्त्वं । दिष्ट्या भाग्येन । अस्माकमिति शेषः ॥ २ ॥ उक्तमेव विवृणोति—दिष्ट्येति ॥ सर्वस्य लोकस्य रावणजं भयमेव प्रवृद्धं तमः अपावृत्तं निरस्तं ॥ ३ ॥ आश्वास्येत्यादिश्लोकत्रयमेकान्वयं ॥ यशस्विनीमिति कैकेयीविशेषणं । तन्मूलत्वाद्रावणवधस्य तस्या यशस्वित्वं । लक्ष्मणमातरमित्यनेन सा लक्ष्मणस्नेहाद्विशेषतो वन्द्ये-

ति० वैक्लव्यं कातर्यपीडां । अनन्याहीति । 'अर्धोवाएषआत्मनोयत्पत्नी' इतिश्रुतेः ॥ शक्तिशक्तिमतोरभेदाच्च । अनेनाग्निदत्तायारावणस्पर्शाद्यभावःस्पष्टमेवोक्तः ॥ २० ॥ इत्येकविंशत्युत्तरशततमःसर्गः ॥ १२१ ॥

ति० एतद्वाक्यंश्रुत्वा युष्मदाज्ञयासीतामङ्गीकरोम्येवेत्युक्तवाक्यंश्रुत्वा । ततः सीताग्रहणनियोगानुष्ठानानन्तरं ॥ स० अनुभाषितं स्ववचनमनुसृत्यभाषितं । ततः तदनन्तरं । शुभतरं रामवाक्यस्यशुभत्वोक्तेः तद्वच्युत्पादकवाक्येनप्रकृतोपयोगिनाऽतिशुभेनभवितव्यमितिशुभतरमित्युक्तमितिभावः ॥ १ ॥ स० दीनं पितृनाशेन त्वददर्शनेन च । कैकेयींचाश्वास्य अनेन रामप्रा-

[ पा० ] १ ङ. झ. वैक्लव्यं. २ ङ. झ. ट. भास्करस्य. ३ ङ. झ. ट. नविहातुंमयाशक्या. ४ ख. घ. ङ. झ. ञ. ट. वचोहितं. ५ ग. घ. लोकपालानामेवं. ६ ङ. झ. ट. इत्येवमुक्त्वाविजयीमहाबलः. ख. इत्येवमुक्त्वावचनंमहाबलं. ७ ङ. च. छ. झ. ढ. राघवेणानुभाषितं. ८ ङ. च. छ. झ. ट. ततःशुभतरं. ९ ख. ङ. च. छ. झ. ट. धर्मभृतांवर.

प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनम् ॥ इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ॥ ५ ॥
इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः ॥ ब्राह्मणेभ्यो धनं दत्त्वा त्रिदिवं गन्तुमर्हसि ॥ ६ ॥
एष राजा विमानस्थः पिता दशरथस्तव ॥ काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥ ७ ॥
इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः ॥ लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ ८ ॥
महादेववचः श्रुत्वा काकुत्स्थः सहलक्ष्मणः ॥ विमानशिखरस्थस्य प्रणाममकरोत्पितुः ॥ ९ ॥
दीप्यमानं स्वया लक्ष्म्या विरजोम्बरधारिणम् ॥ लक्ष्मणेन सह भ्रात्रा ददर्श पितरं विभुः ॥१०॥
हर्षेण महताऽऽविष्टो विमानस्थो महीपतिः ॥ प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ॥ ११ ॥
आरोप्याङ्कं महाबाहुर्वरासनगतः प्रभुः ॥ बाहुभ्यां संपरिष्वज्य ततो वाक्यं समाददे ॥ १२ ॥
न मे स्वर्गो बहुमतः संमानश्च सुरर्षिभिः ॥ त्वया राम विहीनस्य सत्यं प्रतिशृणोमि ते ॥ १३ ॥
अद्य त्वां निहतामित्रं दृष्ट्वा संपूर्णमानसम् ॥ निस्तीर्णवनवासं च प्रीतिरासीत्परा मम ॥ १४ ॥
कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर ॥ तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥१५॥
त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् ॥ अद्य दुःखाद्विमुक्तोसि नीहारादिव भास्करः ॥१६॥
तारितोहं त्वया पुत्र सुपुत्रेण महात्मना ॥ अष्टावक्रेण धर्मात्मा तारितो ब्राह्मणो यथा ॥ १७ ॥

---

त्युक्तं । अयोध्यायां सुहृज्जनं नन्दयित्वेत्यन्वयः । वंशं पुत्रपौत्रादिपरम्परां । इक्ष्वाकूणां कुले इक्ष्वाकुकुलनिमित्तं । स्थापयित्वा । प्राप्य चानुत्तमं यश इति तुरगमेधफलोक्तिः । आश्वास्येत्यादिना " दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके" इत्यवतारात्पूर्वं तत्कृतां प्रतिज्ञामनुसृत्यरुद्रेणोक्तं ॥४—६ ॥ एष इत्यादिश्लोकद्वयमेकान्वयं ॥ देवदेहपरिग्रहेणापरिज्ञायमानत्वात् पुरस्थितोप्येष इत्यङ्गुल्या निर्दिश्यते । मानुषेलोके गुरुरित्यनेन, " पिता पुत्रेण पितृमान् योनियोनौ'इति श्रुतिरुपबृंहिता ॥ ७—१० ॥ हर्षेणेत्यादिश्लोकद्वयमेकान्वयं ॥ पुत्रं रामं ॥ ११—१२ ॥ सुरर्षिभिः संमानः देवर्षिभिः संमानोपि ॥ १३—१४ ॥ हृदये स्थितानि । न विस्मरामीत्यर्थः । तेन दुःखितोभूवमिति सूचितं ॥ १५ ॥ सलक्ष्मणमित्यनेन द्वितीयपरिष्वङ्गे लक्ष्मणोपि विषयीकृत इत्युच्यते ॥ १६ ॥ तारितोहं त्विति ॥ कहोलो नाम ऋषिरष्टावक्रेण तारित इतीयं कथा भार-

---

वण्यस्यैवतदमात्सर्यस्यचनिस्सीमतयास्वानुभूतत्वेनैतदाश्वासनाशंसनंनमुधामाधवस्तनुयादितिद्योतयति ॥ ४ ॥ **ति०** तुरगमेधेनेष्ट्वा भगवन्तंप्रजापतिमितिशेषः । अनुत्तमंयशः 'महद्यशः' इत्यादिकंप्रजापतिनाम । 'तस्यनाममहद्यशः' इतिश्रुतेः । अश्वमेधफलंचतत्प्राप्तिरेव । 'प्रजापतिंवाएषईप्सतीत्याहुः, योश्वमेधेनयजते' इतिश्रुतेरितिकतकः । त्रिदिवं भूस्वःपदापेक्षया तृतीयंदिवंब्रह्मलोकं ॥ **स०** तुरगमेधेन अश्वमेधेन । इष्ट्वा संपूज्य । स्वात्मानमितिशेषः । अनुत्तमं महत् । यशः कीर्तिविशेषं । 'दिक्षुयानाद्यशःप्रोक्तं' इतिच्छान्दोग्यभाष्योक्तेः । प्राप्य त्रिदिवं श्वेतद्वीपानन्तासनवैकुण्ठाख्यप्रकाशमानलोकत्रयं । अनुत्तमं यशः तन्नामकंप्रजापतिं स्वमेवेष्ट्वा हेप्राप्य सर्वैःसर्वकर्मभिःप्राप्यराम । शिष्टमविशिष्टं । 'तस्यनाममहद्यशः'—'प्रजापतिंवाएषईप्सतियोश्वमेधेनयजते' इतिश्रुतिभ्यां ॥ ६ ॥ **स०** मानुषेलोके लीलागृहीतमानुषदेहविषये । तवपिता । मानुषेलोके मनुष्यलोकइतिवा । किंचिद्व्यत्यस्ताकारतयाएषइत्यङ्गुल्यानिर्देशइतिज्ञेयं । गुरुस्तवेतिरामसंबोधनं । गुरुस्तव ब्रह्मादिमहाजनस्तुत्य । एतेननगुर्विति तवेतिचाधिकमितिमन्तव्यं । गुरुस्तवमहायशाइतिदशरथविशेषणंवा । गुरुस्तवेषु बहुभिःस्तुतेषुमहायशाः तदपेक्षयाऽतियशस्वीतिवा । 'जनिताचोपनेताचयश्चविद्यांप्रयच्छति । अन्नदाताभयत्रातापञ्चैतेपितरःस्मृताः' इतिगुरुत्वस्यपितृपदार्थतानतिरेकात् ॥ ७ ॥ **स०** सुरर्षिभैःसमानः बहुमानसहितोपियोऽहं तस्यमेस्वर्गोनबहुमतः ॥ १३ ॥ **स०** अष्टावक्रेण तन्नामकपुत्रेण । जनकसभायांस्वपितृपराजयकारिणंबन्दिनंजित्वाकहोलोब्राह्मणः तन्नामकोष्टावक्रपितायथातारितस्तथा । तदुक्तंभारतेवनपर्वणि—'कहोलउवाच । इत्यर्थमिच्छन्तिसुताञ्जना जनक कर्मणा । यदहंनाशकंकर्तुंतत्पुत्रःकृतवान्मम ।' इति ॥१७॥

[ पा० ] १ ख. ग. ङ. छ. झ. ट. मयोध्यांच. २ ङ. च. छ. झ. ट. आरोप्याङ्के. ३ घ. महाबुद्धिर्वरा. ४ ख. ग. ङ. छ. झ. ञ. ट. समानश्चसुरर्षिभैः. ५ ङ. च. छ. झ. ञ. ट. कहोळोब्राह्मणोयथा.

इदानीं तु विजानामि यथा सौम्य सुरेश्वरैः ॥ वधार्थं रावणस्येदं विहितं पुरुषोत्तम ॥ १८ ॥
सिद्धार्था खलु कौसल्या या त्वां राम गृहं गतम् ॥ वनान्निवृत्तं संहृष्टा द्रक्ष्यत्यरिनिषूदन ॥१९॥
सिद्धार्थाः खलु ते राम नरा ये त्वां पुरीं गतम् ॥ जलार्द्रमभिषिक्तं च द्रक्ष्यन्ति वसुधाधिपम् ॥२०॥
अनुरक्तेन बलिना शुचिना धर्मचारिणा ॥ इच्छामि त्वामहं द्रष्टुं भरतेन समागतम् ॥ २१ ॥
चतुर्दश समाः सौम्य वने निर्यापितास्त्वया ॥ वसता सीतया सार्धं लक्ष्मणेन च धीमता ॥२२॥
निवृत्तवनवासोसि प्रतिज्ञा सफला कृता ॥ रावणं च रणे हत्वा देवास्ते परितोषिताः ॥ २३ ॥
कृतं कर्म यशः श्लाघ्यं प्राप्तं ते शत्रुसूदन ॥ भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥
इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत् ॥ २४ ॥
कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ॥ सपुत्रां त्वां त्यजामीति यदुक्ता केकयी त्वया ॥ २५ ॥
स शापः केकयीं घोरः सपुत्रां न स्पृशेत्प्रभो ॥ २६ ॥
स तथेति महाराजो राममुक्त्वा कृताञ्जलिम् ॥ लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह ॥२७॥
रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ॥ कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ॥ २८ ॥
धर्मं प्राप्स्यसि धर्मज्ञ यशश्च विपुलं भुवि ॥ रामे प्रसन्ने स्वर्गं च महिमानं तथैव च ॥ २९ ॥
रामं शुश्रूष भद्रं ते सुमित्रानन्दवर्धन ॥ रामः सर्वस्य लोकस्य शुभेष्वभिरतः सदा ॥ ३० ॥
एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः ॥ अभिगम्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥ ३१ ॥
एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म निर्मितम् ॥ देवानां हृदयं सौम्य गुह्यं रामः परन्तपः ॥ ३२ ॥

तोक्ता ॥१७॥ रावणस्य वधार्थं सुरेश्वरैरिदमभिषेकविघ्नादिकं कर्म यथा विहितं तथा इदानीमेव जानामि। पुरुषोत्तमेत्यनेन भवान्विष्णुरेव रावणवधार्थं मनुष्यत्वंगत इत्युच्यते ॥१८॥ सिद्धार्था कृतार्था। मम स्वर्गसुखादपि तस्याः सुखमधिकमिति भावः॥१९—२०॥ अनुरक्तेनेति ॥ अवश्यं राम भरतं प्राप्नुहीति भावः ॥ २१—२४ ॥ कैकेय्या भरतस्य च कैकेय्यां भरते चेत्यर्थः । संबन्धसामान्ये षष्ठी । यस्मादुक्ता तस्मात् प्रसादं कुर्विति संबन्धः ॥ २५ ॥ स शाप इत्यर्धमेकं वाक्यं ॥ शापः संबन्धविच्छेदरूपः ॥ २६—२७ ॥ सीतया सह रामं शुश्रूषतेत्यन्वयः ॥ २८ ॥ स्वर्गं सुखं। लक्ष्मणस्यापि विष्णववतारत्वं न जानाति दशरथः । महिमानं महत्त्वं ॥२९—३०॥ रामस्य सर्वोत्तमत्वं शिष्टाचारेण दर्शयति—एत इति । अर्चन्तीतिणिजभाव आर्षः । एत इति हस्तनिर्देशेन रुद्रोप्यन्तर्गतः ॥ ३१ ॥ देवानां हृदयं सर्वदेवान्तर्यामी । वेदानामिति पाठे वेदतात्पर्यभूतं । उभयथाप्यग्नीन्द्रादिरूपेण सर्वकर्मसमाराध्यमित्यर्थः । गुह्यं साक्षादुपनिषद्वेद्यं । अव्यक्तं भक्तिशून्यैर्दुर्ज्ञेयं । अक्षरं षड्भावविकाररहितं । तदेतत् ब्रह्म रामः रामरूपेण निर्मितं । रामरूपेणावतीर्णं । इति उक्तं । ब्रह्मादिभि-

ति० पिहितं पुरुषोत्तमं आच्छादितं । मत्पुत्रत्वेनेतिशेषः ॥ १८ ॥ स० रामेप्रसन्ने ‘ किमलभ्यंभगवतिप्रसन्नेश्रीनिकेतने ’ इत्यादेः ॥ २९ ॥ ति० एतत् रामरूपंवस्तु । तज्जानीहीतिशेषः । यद्देवानांहृदयमुक्तं ‘ देवानांहृदयंब्रह्मान्वविन्दत् ’ इतिश्रुत्यादेवहृदयत्वेनोपदिष्टं । तथादेवानांगुह्यं । ‘ एतद्वैमहोपनिषदंदेवानांगुह्यं ’ इतिश्रुत्यादेवगुह्यत्वेनोपदिष्टं । ब्रह्मसंमितं ब्रह्मणा ‘ अन्तरस्मिन्निमेलोकाः ’ इत्यादिश्रुत्याप्रतिपादितं । अक्षरं अशेषजगत्कारणतयानित्यंयद्ब्रह्मास्तिब्रह्मशब्दतन्त्रे ॥ ३२ ॥ ति०

[ पा० ] १ ङ. छ. झ. ञ. ट. रावणस्येहपिहितंपुरुषोत्तमं. ख. रावणस्येहप्रापितंपुरुषोत्तमं. २ क.—ञ. द्रक्ष्यतेशत्रुसूदन. ट. द्रक्ष्यतेशत्रुसूदनं. ३ ङ. ट. राज्येनैवाभिषिक्तंच. झ. राज्येचैवाभिषिक्तंचद्रक्ष्यन्ते. ४ ङ. ब्रह्मचारिणा. ५ ङ. झ. ट. मत्प्रीत्यालक्ष्मणेनच. ६ घ. निवृत्तवनवासश्च. ७ ग. वाक्यमभाषत. ८ ङ. ञ. ट. तथोत्तमं. झ. तथोत्तरं. ९ ङ. झ. ट. हितेष्वभिरतः. छ. ञ. सुखेष्वभिरतः. १० ङ. झ. ञ. अभिवाद्य. ११ घ. महात्मानंस्तुवन्ति. १२ ख. ग. घ. छ. ञ. मव्यग्रं. १३ ङ. झ. ञ. ट. ब्रह्मसंमितं.

अवाप्तं धर्मचरणं यशश्च विपुलं त्वया ॥ रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ॥ ३३ ॥
स तथोक्त्वा महाबाहुर्लक्ष्मणं प्राञ्जलिं स्थितम् ॥ उवाच राजा धर्मात्मा वैदेहीं वचनं शुभम् ॥३४॥
कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति ॥ रामेण त्वद्विशुद्ध्यर्थं कृतमेतद्धितैषिणा ॥ ३५ ॥
[ सुदुष्करमिदं पुत्रि तव चारित्रलक्षणम् । कृतं यत्तेऽन्यनारीणां यशो ह्यभिभविष्यति ] ॥ ३६ ॥
न त्वं सुभ्रु समाधेया पतिशुश्रूषणं प्रति ॥ अवश्यं तु मया वाच्यमेष ते दैवतं परम् ॥ ३७ ॥
इति प्रतिसमादिश्य पुत्रौ सीतां तथा स्नुषाम् ॥ इन्द्रलोकं विमानेन ययौ दशरथो ज्वलन् ॥३८॥
[ विमानमास्थाय महानुभावः श्रिया च संहृष्टतनुर्नृपोत्तमः ॥
आमन्त्र्य पुत्रौ सह सीतया च जगाम देवप्रवरस्य लोकम् ॥ ३९ ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

---

## त्रयोविंशत्युत्तरशततमः सर्गः ॥ १२३ ॥

इन्द्रेण रामप्रार्थनयातंप्रति मृतविकलाङ्गवानरगणानांपुनर्जीवनावैकल्यस्वालयवर्तिसरित्तरुसार्वकालिकसलिलफलसमृद्धिसंभवरूपवरदानपूर्वकं सुरगणैः सहस्वर्गगमनम् ॥ १ ॥ रामेण सुरपतिसमुज्जीविताविकलवानरनिकरैः सह हर्षाधिगमः ॥ २ ॥

प्रतियाते तु काकुत्स्थे महेन्द्रः पाकशासनः ॥ अब्रवीत्परमप्रीतो राघवं प्राञ्जलिं स्थितम् ॥ १ ॥
अमोघं दर्शनं राम तवास्माकं परन्तप ॥ प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेच्छसि ॥ २ ॥

---

रिति शेषः ॥ ३२—३६ ॥ न समाधेया नोपदेष्टव्या ॥ ३७—३९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

अथेन्द्रानुशासनं—प्रतिप्रयात इत्यादि ॥ काकुत्स्थे दशरथे । महेन्द्रः लब्धमहेन्द्रभावः ॥ १ ॥ तवास्माकं दर्शनं । अस्मत्कर्तृकं दर्शनं दशरथपुत्रकामेष्टिकालिकं । अमोघं रावणवधपर्यन्तं जातमित्यर्थः । तेन प्रीतियुक्तत्वेन यत् प्रत्युपकाररूपं कार्यमिच्छसि

---

एवंभूतोरामोब्रह्मादिभिस्त्वत्समक्षमेवोक्तः । अतएनंशुश्रूषतात्वयासर्वधर्माचरणंप्राप्तं । ब्रह्मज्ञधर्मेसर्वधर्मान्तर्भावस्यसंवर्गविद्यायामुक्तत्वादितिभावः ॥ ३३ ॥ इतिद्वाविंशत्युत्तरशततमःसर्गः ॥ १२२ ॥

**ति०** काकुत्स्थेदशरथे । महेन्द्रः तत्सहितोब्रह्मेत्यर्थः । सत्यसंकल्पत्वस्यतस्मिन्नेवप्रसिद्धेः । वानराणांसंकल्पमात्रेणोत्थानस्य वक्ष्यमाणत्वात् । भारतेपि " ततस्तेब्रह्मणाप्रोक्ततथेतिवचनेतदा । समुत्तस्थुर्महाराजवानरालब्धचेतसः " । इत्युक्तं पाद्मेपि ' पितामहवरात्तूर्णंजीवयामासतान्नृप ' प्राञ्जलिंस्थितंराघवंप्रतीतिशेषः ॥ **स०** महेन्द्रःपाकशासनइत्यत्रमहेन्द्रशब्देनसर्वस्वामित्वेनब्रह्माग्राह्यः । अत्रोत्तरश्लोकेषुचविद्यमानाःपाकशासनादयःशब्दाअर्शआद्यजन्ताः । तथाच पाकशासनसहितोब्रह्मोवाचेति लभ्यते । अतोनभारतादिविसंवादः । यथोक्तंभारते—" तमुवाचततोब्रह्मादेवैःशक्रपुरोगमैः । कौसल्यामातरिष्टांस्तेवरानद्यददामिकान् । वव्रेरामःस्थितिंधर्मेशत्रुभिश्चापराजयम् । राक्षसैर्निहतानांचवानराणांसमुत्थितिम् । ततस्तेब्रह्मणाप्रोक्तेतथेतिवचनेतदा । समुत्तस्थुर्महाराजवानरालब्धचेतसः ' इति । पाद्मेच—'पितामहवरात्तूर्णंजीवयामासतान्नृप ' इति । ननुभ्रूविभ्रममात्रेणचराचरजगत्स्रष्ट्यादिकर्तूरामस्यकथंब्रह्मवराद्वानरोज्जीवनादिकमितिचेदुच्यते । प्रादुर्भावेषुब्रह्ममाननार्थंब्रह्मणेदत्तस्यवरस्यरक्षणार्थंचतथानटनस्यावश्यकत्वान्नेदमनुपपन्नं । यथोक्तंशान्तौमोक्षधर्मेषु ' मयासृष्टःपुराब्रह्मा ' इत्यारभ्य ' अनुशास्यस्त्वयाब्रह्मन्नियोज्यश्चसुतोयथा । एतांश्चान्यांश्चरुचिरान्ब्रह्मणेऽमिततेजसे । अहंदत्वावरान्प्रीतोनिवृत्तिपरमोऽभव ' इतिभगवद्वचनं । एतेनप्राञ्जलिंस्थितं'

[ **पा०** ] १ झ. एवंशुश्रूषताव्यग्रं. ञ. ट. रामंशुश्रूषताव्यग्रं. २ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ३ ङ. झ. ट. सत्वंकामं. ४ ङ. झ. ट. सीतांचराघवः. ५ ङ. झ. ट. दशरथोनृपः. ६ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते. ७ क.—ट. प्रतिप्रयाते. ८ ङ. झ. ट. नरर्षभ. ९ ङ. झ. ट. न्मनसेप्सितं.

[1]एवमुक्तस्तु काकुत्स्थः प्रत्युवाच कृताञ्जलिः ॥ लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ ३ ॥
यदि प्रीतिः समुत्पन्ना मयि [2]सर्वसुरेश्वर ॥ वक्ष्यामि [3]कुरु ते सत्यं वचनं वदतां वर ॥ ४ ॥
मम हेतोः पराक्रान्ता ये गता यमसादनम् ॥ ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ५ ॥
[4]मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः ॥ मत्प्रिये[5]ष्वभियुक्ताश्च न मृत्युं [6]गणयन्ति च ॥
त्वत्प्रसादात्समेयुस्ते वरमेतदहं वृणे ॥ ६ ॥
नीरुजो निर्व्रणांश्चैव संपन्नबलपौरुषान् ॥ गोलाङ्गूलांस्तथैवर्क्षान्द्रष्टुमिच्छामि मानद ॥ ७ ॥
अकाले चापि [7]मुख्यानि मूलानि च फलानि च ॥ नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥ ८ ॥
श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः ॥ महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिलक्षणम् ॥ ९ ॥
महानयं वरस्तात त्वयोक्तो रघुनन्दन ॥ द्विर्मया नोक्तपूर्वं हि तस्मादेतद्भविष्यति ॥ १० ॥
[8]समुत्थास्यन्ति हरयो ये हता युधि राक्षसैः ॥ ऋक्षाश्च सहगोपुच्छा निकृत्ताननबाहवः ॥ ११ ॥
नीरुजो निर्व्रणाश्चैव संपन्नबलपौरुषाः ॥ समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा ॥ १२ ॥
सुहृद्भिर्बान्धवैश्चैव ज्ञातिभिः स्वजनैरपि ॥ सर्वे एव समेष्यन्ति संयुक्ताः परया मुदा ॥ १३ ॥
अकाले पुष्पशबलाः फलवन्तश्च पादपाः ॥ भविष्यन्ति महेष्वास नद्यश्च सलिलायुताः ॥ १४ ॥
सव्रणैः प्रथमं [9]गात्रैः संवृत्तैर्निर्व्रणैः पुनः ॥ १५ ॥
ततः समुत्थिताः सर्वे सुप्त्वेव हरिपुङ्गवाः ॥ बभूवुर्वानराः सर्वे [10]किमेतदिति विस्मिताः ॥ १६ ॥
ते सर्वे वानरास्तस्मै राघवायाभ्यवादयन् ॥ १७ ॥
काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः ॥ [11]ऊचुस्ते प्रथमं स्तुत्वा स्तवार्हं सहलक्ष्मणम् ॥ १८ ॥
गच्छायोध्यामितो वीर विसर्जय च वानरान् ॥ मैथिलीं सान्त्वयस्वैनामनुरक्तां तपस्विनीम् ॥१९॥

तद्ब्रूहि । केचित्तु त्वत्कर्तृकमस्मद्विषयं दर्शनमित्यर्थ इत्याहुः ॥ २—५ ॥ मत्कृत इत्यादिसार्धश्लोकमेकं वाक्यं ॥ मत्प्रियेषु अभियुक्ता निरताः । समेयुरित्यत्र पुत्रैर्दारैश्चेत्यावर्तनीयं ॥ ६ ॥ नीरुजः निष्पीडान् ॥ ७ ॥ विमलाः विमलोदकाः ॥ ८ ॥ प्रीतिर्लक्ष्यतेनेनेति प्रीतिलक्षणं प्रीतिव्यञ्जकं ॥ ९ ॥ महानयं वर इति वरस्य महत्त्वं इतस्ततो विप्रकीर्णकरचरणपुच्छादिस्वस्वसंस्थानसंधानलोकान्तरगतानयनादिरूपाघटितार्थघटितत्वं । द्विर्मयानोक्तपूर्वमिति । उक्तवचनस्य विपरीतं वचनान्तरं नोक्तपूर्वमित्यर्थः ॥ १०—१३ ॥ पुष्पशबलाः पुष्पैर्नानावर्णाः । सलिलायुताः सलिलैर्व्याप्ताः ॥ १४ ॥ ये निहताः सव्रणास्तेषां निर्व्रणत्वमनुगृह्णाति—सव्रणैरिति ॥ प्रथमं वरदानात्पूर्वं सव्रणैः अथ निर्व्रणैः संवृत्तैः निर्व्रणीभूतैः गात्रैरुपलक्षिताः । वानरा भविष्यन्तीत्यनुकृष्य योजना ॥ १५ ॥ तत इति । अत्र क्रियाभेदात्सर्वेशब्दद्वयं । किमेतदिति । युद्धे मृतस्य कथमेवं जीवनमित्यर्थः ॥ १६—१८ ॥ गच्छायोध्यामित्यादिसार्धश्लोक-
इत्यादिसमाहितं ॥ १ ॥ रामानु० राघवायाभ्यवादयन् राघवमभ्यवादयन्नित्यर्थः । व्यत्ययेनद्वितीयार्थेचतुर्थी । द्वितीयांयांविभीषणाभिषेकसीताप्राप्तिदेवताप्रस्थापनानि ॥ १७ ॥

[ पा० ] १ एवमुक्तस्तुकाकुत्स्थइतिश्लोकस्यस्थाने एवमुक्तोमहेन्द्रेणप्रसन्नेनमहात्मना । सुप्रसन्नमनाहृष्टोवचनंप्राहराघवः. इतिश्लोको ङ. झ. ट. पाठेषुदृश्यते. २ ङ. झ. ट. विबुधेश्वर. ३ ख. घ.—ट. कुरुमे. ४ मत्कृतेविप्रयुक्ताइत्यर्धात्परं—तान्प्रीतमनसस्सर्वान्द्रष्टुमिच्छामिमानद । विक्रान्ताश्चापिशूराश्चनमृत्युंगणयन्तिच । कृतयत्नाविपन्नाश्चजीवयैतान्पुरन्दर । इत्यर्धत्रयं क. ख. ङ. च. छ. झ. ञ. ट. पाठेष्वधिकंदृश्यते. ५ ख. घ.—ट. ष्वभिरक्ताश्च. ६ छ. झ. ञ. गणयन्तिते. क. ङ. ट. गणयन्तिये. ७ क. ङ. छ. झ. ञ. ट. पुष्पाणि. ८ ङ. च. छ. झ. ञ. ट. समुत्तिष्ठन्तुतेसर्वेहतायेयुधि. ९ ङ. झ. ट. गात्रैरिदानींनिर्व्रणैःसमैः. १० ख. ङ. छ. झ. ञ. किंत्वेतदिति. ११ ङ. झ. ञ. ट. अब्रुवन्परमप्रीताःस्तुत्वारामंसलक्ष्मणं. ख. छ. ऊचुस्तेप्राञ्जलिंरामंसहसीतंसलक्ष्मणं.

शत्रुघ्नं च महात्मानं मातॄः सर्वाः परन्तप ॥ १९ ॥
भ्रातरं पश्य भरतं त्वच्छोकाद्व्रतधारिणम् ॥ अभिषेचय चात्मानं पौरान्गत्वा प्रहर्षय ॥ २० ॥
एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह ॥ विमानैः सूर्यसंकाशैर्हृष्टा जग्मुः सुरा दिवम् ॥२१॥
अभिवाद्य च काकुत्स्थः सर्वांस्तांस्त्रिदशोत्तमान् ॥ लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ॥२२॥
ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी ॥
श्रिया ज्वलन्ती विरराज सर्वतो निशाप्रणीतेव हि शीतरश्मिना ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रयोविंशत्युत्तरशततमः सर्गः ॥१२३॥

---

## चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥

विभीषणेन रात्रौसुखसुप्तोत्थितंरामंप्रति प्रभातेस्वीयवस्त्राभ्यङ्गाङ्गरागाद्युपचाराङ्गीकरणप्रार्थना ॥ १ ॥ रामेणतंप्रति सुग्रीवादीनांतदुपचारकरणचोदनपूर्वकं भरतेनविना भोगाननुभवनरूपस्वीयव्रतनिवेदनेनसहायोध्यांप्रति गमनत्वरानिवेदनम् ॥ २ ॥ विभीषणेनतंप्रति पुष्पकविमानेनसत्वरमयोध्याप्रापणप्रतिज्ञानपूर्वकं लङ्कायांद्वित्रदिनावस्थानप्रार्थनेनसह तत्समीपंप्रतिपुष्पकानयनम् ॥ ३ ॥

तां रात्रिमुषितं रामं सुखोत्थितमरिन्दमम् ॥ अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ १ ॥
स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च ॥ चन्दनानि च दिव्यानि माल्यानि विविधानि च ॥२॥
अलंकारविदश्चेमा नार्यः पद्मनिभेक्षणाः ॥ उपस्थितास्त्वां विधिवत्स्नापयिष्यन्ति राघव ॥
प्रतिगृह्णीष्व तत्सर्वं मदनुग्रहकाम्यया ॥ ३ ॥
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् ॥ हरीन्सुग्रीवमुख्यांस्त्वं स्नानेनाभिनिमन्त्रय ॥ ४ ॥
स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः ॥ सुकुमारो महाबाहुः कुमारः सत्यसंश्रवः ॥ ५ ॥

---

र्धश्लोकद्वयमेकान्वयं ॥ त्वच्छोकात् त्वद्वियोगशोकात् ॥ १९—२१ ॥ वासमाज्ञापयत् वानराणामिति शेषः ॥ २२ ॥ प्रणीता प्रकाशिता ॥ २३ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोविंशत्युत्तरशततमः सर्गः ॥ १२३ ॥

---

अथ रामस्य विभीषणसत्कारः—तां रात्रिमित्यादि । तां रात्रिं । यस्मिन्दिने ब्रह्मादयो निर्जग्मुः तां रात्रिमित्यर्थः ॥ १ ॥ स्नानानीत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ स्नानानि स्नानीयजलानि । अत्र सर्वत्रेमानीत्यनुषज्यते । अङ्गरागाणि कुङ्कुमादीनि । माल्यानि स्रजः । विधिवत् सोपचारमित्यर्थः ॥ २—३ ॥ सुग्रीवमुख्यान् सुग्रीवप्रमुखानेव हरीन् । स्नानेन स्नानेन हेतुना । अभिनिमन्त्रय ॥ ४ ॥ त्वां विनातेषामामन्त्रणे किंकारणमित्यतआह—सत्विति ॥ सः सर्वदा मनसि परिवर्तमानः । धर्मात्मा ताम्यति । धर्माचरणेनैव ताम्यतीति भावः । मम हेतोः मह्रा-

---

**ति॰** येप्यमृतवृष्ट्याइन्द्रेणसर्वसमुत्थानंकृतमितिवदन्तितत्पक्षेपिरावणसंस्कारदिनेसर्वरक्षसांदाहादिसंस्कारपूर्वकंभस्मनः समुद्रेप्रक्षेपान्नतदुत्थानशङ्का । पूर्वंयुद्धकालएवमृतानांसमुद्रेप्रक्षेपइतिमूलएवपूर्वमुक्तत्वाच्च । अन्येतु सश्लोकस्तत्राधुनिकप्रक्षिप्तः । नह्योषधिगन्धमात्रेणसर्वेषांविशल्यता । किंतुचूर्णीकृत्यतस्यदानेनेतिप्रागेवोक्तं । तथाचतदभावान्नतेषांविशल्यता । मृतानांगन्धाघ्राणाभावाच्च । रावणस्यतथाऽऽज्ञायाअश्रवणाच्चेत्याहुः ॥ २३ ॥ इतित्रयोविंशत्युत्तरशततमःसर्गः ॥ १२३ ॥

**शि॰** सुखोदितं सुखकथनविशिष्टंयथाभवतितथा उषितंरामंजयंपृष्ट्वाऽब्रवीत् ॥ **स॰** सुखोदितं सुखमुदितं उदयःस्वप्रबोधः

**[ पा॰ ]** १ ङ. झ. ट. एवमुक्त्वासहस्राक्षोरामंसौमित्रिणासह । विमानैःसूर्यसंकाशैर्ययौहृष्टःसुरैस्सह. २ ख. सुखसुप्तमरिंदमं. ङ. झ. ञ. ट. सुखोदितं. घ. च. सुखोषितं. ३ ङ. च. छ. झ. ञ. ट. विदश्चैताः. ४ घ. न्सुग्रीवमिश्रांस्त्वं. ५ ङ. झ. ट. महाबाहुर्भरतः.

तं विना केकयीपुत्रं भरतं धर्मचारिणम् ॥ न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ॥ ६ ॥
इत एव पथा क्षिप्रं प्रतिगच्छामि तां पुरीम् ॥ अयोध्यामागतो ह्येष पन्थाः परमदुर्गमः ॥ ७ ॥
एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ॥ अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज ॥८॥
पुष्पकं नाम भद्रं ते विमानं सूर्यसन्निभम् ॥ मम भ्रातुः कुबेरस्य रावणेनाहृतं बलात् ॥ ९ ॥
हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम् ॥ त्वदर्थे पालितं चैतत्तिष्ठत्यतुलविक्रम ॥ १० ॥
तदिदं मेघसंकाशं विमानमिह तिष्ठति ॥ तेन यास्यसि यानेन त्वमयोध्यां गतज्वरः ॥ ११ ॥
अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् ॥ वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदम् ॥ १२ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि ॥१३॥
प्रीतियुक्तस्य मे राम ससैन्यः ससुहृद्गणः ॥ सत्क्रियां विहितां तावद्गृहाण त्वं मयोद्यताम् ॥१४॥
प्रणयाद्बहुमानाच्च सौहृदेन च राघव ॥ प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ॥ १५ ॥
एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् ॥ रक्षसां वानराणां च सर्वेषां चोपशृण्वताम् ॥ १६ ॥
पूजितोऽहं त्वया सौम्य साचिव्येन परन्तप ॥ सर्वात्मना च चेष्टाभिः सौहृदेनोत्तमेन च ॥ १७ ॥
न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर ॥ तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ॥ १८ ॥

भार्थमित्यर्थः । सत्यसंश्रयः । "चतुर्दशे हि संपूर्णे वर्षेहनि रघूत्तम । न द्रक्ष्यामि यदि त्वां हि प्रवेक्ष्यामि हुताशनं" इति कृतप्रतिज्ञः ॥ ५ ॥ तं विना स्नानोपकरणं विना । स्नानं कथं कार्यं । केकयीपुत्रं मध्यमाम्बा तस्मिन् यद्दुःखमकरोत् तत्किं मयापि कर्तव्यं । भरतं राज्ञा मया च विरहितं राज्यं सम्यक्कृतवन्तं । धर्मचारिणं मद्वियोगेन बहुव्रतपरे तस्मिन् कथं मया व्रतत्यागः कर्तुं युक्त इति भावः । न मे स्नानं बहुमतं । प्रथमं मे स्नानमेव नेष्टं कथं तदनन्तरभावीनि वस्त्रादीनि ॥ ६ ॥ इत एवेति । अनेन पथा येनाहमागतस्तेनेत्यर्थः । एष इति हस्तनिर्देशपूर्वकमुच्यते । अयोध्यां आगतः प्राप्तः अयमयोध्यामार्गः । तेन क्षिप्रं तां प्रति गच्छामीत्यर्थः । परमदुर्गमः अतिदूरत्वादिति भावः ॥ ७ ॥ मार्गस्य परमदुर्गमत्वमात्रं परिहर्तुमाह—एवमुक्तस्त्विति । अह्ना त्वामित्यादिसार्धश्लोकत्रयमेकान्वयं ॥ किं रावणेन चौर्येणापहृतमित्यत्राह—आहृतं निर्जित्येति । तर्हि कुबेराय समागताय तत्किमर्थं न दत्तमित्यत्राह—त्वदर्थ इति ॥ त्वदर्थे त्वद्गमनार्थे । पालितमिति । न दत्तमित्यर्थः । यद्वा त्वदर्थे त्वत्पूजार्थमेव । मेघसंकाशमिति वेगे दृष्टान्तः ॥ ८—११ ॥ स्नानाकरणे द्वित्रदिनमात्रस्थितिं याचते—अहं त इत्यादिनाचतुःश्लोक्येकान्वया । गुणान् भक्त्यादिगुणान् । सर्वकामैः भूषणादिभिः । विहितां मया कृतां । उद्यतां । इतः परं नोद्योगः कार्यः येन विलम्बः स्यात् । किंतु पूर्वमेव समुद्युक्तामित्यर्थः । निर्बन्धदोषं परिहरति—प्रणयादिति । प्रणयात् मद्वाक्यमवश्यं श्रोष्यतीति विस्रम्भात् । बहुमानात् त्वत्कृतलालनात् । सौहृदेन भक्त्या । प्रसादयामि प्रार्थयामि ॥ १२—१५ ॥ उपशृण्वताम् उपशृण्वत्सु । भावलक्षणे षष्ठी ॥ १६ ॥ साचिव्येन साहाय्येन । चेष्टाभिः पौरुषैः । सर्वात्मना पूजित इत्यन्वयः ॥ १७ ॥ न खल्वेतदित्यातिश्लोकद्वयमेका-

सूर्योदयोवायस्यतं । सुखप्रबुद्धमित्यर्थः । जयंपृष्ट्वा जयेतिशब्दमुक्त्वा ॥ १ ॥ ति० लङ्कायांवर्तमानस्यापिपुष्पकस्यात्युन्नतत्वेनबहिःस्थितैरपिदृश्यमानत्वादिदमितिप्रत्यक्षवन्निर्देशः ॥ ११ ॥ स० हेराम प्रीतियुक्तस्यपुरुषस्य शास्त्रविहितां मयाउद्यतांकार्यतयाउद्युक्तां सत्क्रियां । मे अव्ययं । मत्तः । गृहाण । मे ममेतिवा । नचरामेत्यस्यामन्त्रितत्वेनाविद्यमानवद्भावेनापदत्वेनपदात्परत्वाभावात्कथंमइत्यादेशइतिवाच्यं । सत्क्रियामितिपदात्परत्वेनादेशसंभवात् ॥ शि० प्रीतियुक्तस्यमे प्रार्थनयेतिशेषः । मया उद्यतां प्रक्लृप्तां । विहितां उचितां सत्क्रियांगृहाण ॥ १४ ॥

[ पा० ] १ ज. नवस्त्राभरणानिच. २ ङ. झ. ट. एतत्पश्ययथाक्षिप्रं. ३ ङ. झ. ट. अयोध्यांगच्छतोह्येष. ४ ङ. झ. ट. रावणेनबलीयसा. ५ ङ. झ. येन. ६ ज. गतव्यथः. ७ ङ. छ. झ. ञ. ट. प्रीतियुक्तस्यविहितांससैन्यस्ससुहृद्गणः । सत्क्रियां राममेतावत्. ८ क.—ङ. झ. ट. सर्वेषामेवशृण्वतां. ९ ख. ग. ङ.—ट. त्वयावीर. १० झ. ट. सौहार्देनपरेणच.

मां निवर्तयितुं योसौ चित्रकूटमुपागतः ॥ शिरसा याचतो यस्य वचनं न कृतं मया ॥ १९ ॥
कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ॥ गुरूंश्च सुहृदश्चैव पौरांश्च तनयैः सह ॥ २० ॥
उपस्थापय मे क्षिप्रं विमानं राक्षसेश्वर ॥ कृतकार्यस्य मे वासः कथं स्विदिह संमतः ॥ २१ ॥
अनुजानीहि मां सौम्य पूजितोस्मि विभीषण ॥ मन्युर्न खलु कर्तव्यस्त्वरितं त्वाऽनुमानये ॥२२॥
राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः ॥ तं विमानं समादाय तूर्णं प्रतिनिवर्तत ॥ २३ ॥
ततः काञ्चनचित्राङ्गं वैडूर्यमयवेदिकम् ॥ कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् ॥ २४ ॥
पाण्डुराभिः पताकाभिर्ध्वजैश्च समलंकृतम् ॥ शोभितं काञ्चनैर्हर्म्यैर्हैमपद्मविभूषितम् ॥ २५ ॥
प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षितम् ॥ घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् ॥ २६ ॥
यन्मेरुशिखराकारं निर्मितं विश्वकर्मणा ॥ बहुभिर्भूषितं हर्म्यैर्मुक्तारजतसंनिभैः ॥ २७ ॥
तलैः स्फाटिकचित्राङ्गैर्वैडूर्यैश्च वरासनैः ॥ महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २८ ॥
उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ॥ निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ २९ ॥
[ तत्पुष्पकं कामगमं विमानमुपस्थितं भूधरसंनिकाशम् ॥
दृष्ट्वा तदा विस्मयमाजगाम रामस्ससौमित्रिरुदारसत्वः ॥ ३० ॥ ]
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥

---

न्वयं ॥ विभीषणवचनाकरणे हेतुमाह—तं त्विति ॥ १८ ॥ त्वरायां हेतुमाह—शिरसेति ॥ १९ ॥ कौसल्यामिति । अत्रापि द्रष्टुं त्वरते मे मन इति संबध्यते । पौरांश्च तनयैः सहेत्यत्र पौरैरेव तनयशब्दोन्वेति ॥२०॥ द्वित्रदिनान्यत्र स्थातव्यमित्यस्योत्तरमाह—कृतेति । निर्वर्तितचतुर्दशवर्षप्रव्राजनस्य कृतकार्यस्य मे इह लङ्कायां । वासः संमतः कथं स्वित् । न संमत इत्यर्थः । अन्यथा भरतस्याग्निप्रवेशादिति भावः ॥ २१ ॥ पूजितोस्मि विमानप्रदानेनेति शेषः । प्रदत्तत्वेन स्वत्वादुत्तरत्र कुबेराय प्रेषयिष्यति । मन्युः दैन्यं कोपो वा । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः । त्वरितं उक्तप्रकारेण त्वरावन्तं मामिति संबन्धः । यद्वा त्वरितं यथा भवति तथा अनुमानये । अनुमतिं कारये ॥ २२ ॥ राघवस्य वचः श्रुत्वेत्यादिश्लोकचतुष्टयमेकं वाक्यं ॥ प्रतिनिवर्तत प्रतिन्यवर्तत । काञ्चनचित्राङ्गं काञ्चनमयचित्रावयवं । कूटागारैः मण्डपैः । परिक्षिप्तं व्याप्तं । रजतप्रभं । रजतशब्देनात्र विशदत्वमुच्यते । पताकाभिः केवलध्वजैः । ध्वजैः सचिह्नैः । हर्म्यैः अवान्तरराजगृहैः । हेमपद्मानि लम्बमानानि तैर्विभूषितं । प्रकीर्णं व्याप्तं । मुक्तामणिगवाक्षितं मुक्तामणिनिर्मितगवाक्षयुक्तं । घण्टाजालैः परिक्षिप्तं चतुर्षु पार्श्वेषु किङ्किणीजालयुक्तं । कोणेषु घण्टाजालयुक्तं । अतएव मधुरस्वनं ॥२३—२६ ॥ यन्मेर्वित्यादिश्लोकत्रयमेकान्वयं ॥ मुक्तारजतसन्निभैः तद्वन्निर्मलैरित्यर्थः । स्फाटिकचित्राङ्गैः स्फटिकमयचित्रावयवैः । महाधनैः महामूल्यैः ॥२७—३०॥इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥

---

स० आजुहाव मनोनुकूलगतिमत्त्वात्तस्य ॥ २३ ॥ इतिचतुर्विंशत्युत्तरशततमःसर्गः ॥ १२४ ॥

[ पा० ] १ ङ. झ. ट. गुरूंचसुहृदंचैवपौराञ्जानपदैःसह. २ ङ. झ. ट. कर्तव्यःसखेत्वांचानुमानये. ख. च. छ. ज. कर्तव्यस्त्वरितंयानमानय. ३ ङ. झ. ट. एवमुक्तस्तुरामेणराक्षसेन्द्रोविभीषणः । विमानंसूर्यसंकाशमाजुहावत्वरान्वितः. ४ ख. ङ. च. झ. ञ. ट. हैमपद्मविभूषितैः. ५ घंटाजालैरित्यर्धस्यस्थाने घ. पाठे घंटाजालैःपरिक्षिप्तंसर्वतःस्यन्दनोत्तमं । स्निग्धगंभीरनिर्घोषंसर्वतोमधुरस्वनं इत्येकःश्लोकोदृश्यते. ६ ख. ग. ङ.—ट. तंमेरु. ७ ङ. झ. ट. बृहद्भिर्भूषितं. ८ ङ. झ. ट. रजतशोभितैः. ९ अयंश्लोकः ङ. झ. ट. पाठेषुदृश्यते.

# पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥

विभीषणेनरामंप्रति स्वसमानीतपुष्पकप्रदर्शनपूर्वकं स्वकर्तव्यनिवेदनप्रार्थना ॥ १ ॥ रामेणतंप्रति वानरकृतोपकारस्मारणपूर्वकं वस्त्रालंकारादिभिस्तत्संमाननचोदना ॥ २ ॥ तथा विभीषणेनपूजितेषुसत्सुतेषु सीतालक्ष्मणाभ्यांसह पुष्पकारोहणेन सुग्रीवविभीषणादीनां स्वस्वावासेषुसुखावस्थानचोदनपूर्वकं स्वस्यायोध्यागमनाभ्यनुज्ञानयाचनम् ॥ ३ ॥ तथा सुग्रीवविभीषणादिभिः स्वेषामयोध्याऽऽगमनेन स्वाभिषेकावलोकनकुतूहलनिवेदने स्वाज्ञयापुष्पकारूढैस्तैस्सहायोध्यांप्रति प्रस्थानम् ॥ ४ ॥

उपस्थितं तु तं दृष्ट्वा पुष्पकं पुष्पभूषितम् ॥ अविदूरस्थितो रामं प्रत्युवाच विभीषणः ॥ १ ॥
स तु बद्धाञ्जलिः प्रह्वो विनीतो राक्षसेश्वरः ॥ अब्रवीत्त्वरयोपेतः किं करोमीति राघवम् ॥ २ ॥
तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः ॥ विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३ ॥
कृतप्रयत्नकर्माणो विभीषण वनौकसः ॥ रत्नैरर्थैश्च विविधैर्भूषणैश्चापि पूजय ॥ ४ ॥
सहैभिरजिता लङ्का निर्जिता राक्षसेश्वर ॥ हृष्टैः प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिभिः ॥ ५ ॥
त इमे कृतकर्माणः पूज्यन्तां सर्ववानराः ॥ धनरत्नप्रदानेन कर्मैषां सफलं कुरु ॥ ६ ॥
एवं संमानिताश्चैते मानार्हा मानद त्वया ॥ भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ७ ॥
त्यागिनं संग्रहीतारं सानुक्रोशं यशस्विनम् ॥ सर्वे त्वामवगच्छन्ति ततः संबोधयाम्यहम् ॥ ८ ॥
हीनं रतिगुणैः सर्वैरभिहन्तारमाहवे ॥ त्यजन्ति नृपतिं सैन्याः संविग्नास्तं नरेश्वरम् ॥ ९ ॥
एवमुक्तस्तु रामेण वानरांस्तान्विभीषणः ॥ रत्नार्थैः संविभागेन सर्वानेवाभ्यपूजयत् ॥ १० ॥
ततस्तान्पूजितान्दृष्ट्वा रत्नैरर्थैश्च यूथपान् ॥ आरुरोह ततो रामस्तद्विमानमनुत्तमम् ॥ ११ ॥

अथ वानरसेनासंमाननं—उपस्थितमित्यादि ॥ तं दृष्ट्वा दर्शयित्वा । तत्कृत्वेति वा पाठः । प्रत्युवाच विमानमागतमितीति शेषः । स त्विति द्वितीयश्लोकसंग्रहो वायं श्लोकः ॥ १ ॥ त्वरयोपेतः आदरोपेत इत्यर्थः । किं करोमीति । इतःपरं किं करवाणीत्यर्थः ॥ २ ॥ लक्ष्मणस्योपशृण्वतः लक्ष्मणसंमतिपूर्वकमित्यर्थः ॥ ३ ॥ प्रयत्नकर्म प्रयत्नसाध्यं कर्मेत्यर्थः । अर्थैः प्रयोजनैः वस्त्रादिभिरित्यर्थः ॥ ४ ॥ अजिता पूर्वं सुरादिभिरप्यजिता । तव लङ्काराज्यप्राप्तिरेव तदधीनेत्यर्थः । हृष्टैः मयि प्रीतिमद्भिरित्यर्थः ॥ ५ ॥ त इम इत्यर्थोक्तं भङ्ग्यन्तरेणाह—धनरत्नेति ॥ ६ ॥ निर्वृताः सुखिताः । निर्वृत्ता इति पाठे निष्पन्नाः । परिपूर्णा इति यावत् ॥ ७ ॥ अर्थव्ययेन खेदो मा भूदित्याह—त्यागिनमिति ॥ संग्रहीतारं धनप्रदानेन मित्रसंग्रहकारिणमित्यर्थः । संग्रहार्थं त्यागित्वमुक्त्वा दयया त्यागित्वमाह—सानुक्रोशमिति । यशस्विनं त्यागकृतयशोवन्तं । संबोधयामि न तु चोदयामीत्यर्थः ॥ ८ ॥ सैनिकसंमानाकरणे दोषमाह—हीनमिति ॥ नृपतिं स्वामिनमपि । रतिगुणैः प्रीतिकरैरौदार्यादिगुणैः हीनं । अभिहन्तारं हिंसनशीलं । प्रसादं विना क्रोधैकनिरतमिति यावत् । तं नरेश्वरं सैन्याः संविग्नाः आहवे त्यजन्तीति योजना ॥ ९ ॥ संविभागेन यथार्हमंशकल्पनया । समतया प्रदाने अधिकानां कोपप्रसङ्गादिति भावः ॥ १० ॥ तत इत्यादिश्लोकद्वयमेकान्वयं ॥ ततः पूजानन्तरं ततः पूजादर्शनादेव हेतोरिति ततःशब्दद्वययोजना ।

ति० सर्ववानरपूजार्थंदिनद्वयंवासः । भारतेपि "ततस्तीरेसमुद्रस्ययत्रशिश्येसपार्थिवः । तत्रैवोवासधर्मात्मासहितस्तत्रवानरैः । अथैतान्वानरान्दृष्ट्वासंमान्याभिपूज्यच । विसर्जयामासतदारत्नैःसंतोष्यसर्वशः ।" इत्युक्तं ॥ १० ॥

[ पा० ] १ ङ. झ. ट. तत्कृत्वा. २ ग. ङ. झ. ट. अविदूरेस्थितो. ३ ङ. झ. बद्धाञ्जलिपुटोविनीतो. ४ ङ. झ. ट. कर्माणःसर्वएववनौकसः. ५ ङ. झ. ट. विविधैःसंपूज्यन्तांविभीषण. ६ ङ. झ. ट. सहामीभिस्त्वयालङ्का. ७ ङ. झ. कर्माणः सवनौकसः. ख. च. ञ. ट. कर्माणःपूज्यन्तांसाधुवानराः. ८ ङ. च. झ. ञ. ट. नन्द्यमानायथात्वया. ९ ङ. झ. जितेन्द्रियं. १० क. घ. यतस्त्वां. ११ ङ. झ. ट. सेनात्यजतिसंविग्नान्नृपतिंतंनरेश्वर.

अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ॥ लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ १२ ॥
अब्रवीच्च विमानस्थः पूजयन्सर्ववानरान् ॥ सुग्रीवं च महावीर्यं काकुत्स्थः सविभीषणम् ॥ १३ ॥
मित्रकार्यं कृतमिदं भवद्भिर्वानरोत्तमाः ॥ अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥ १४ ॥
यत्तु कार्यं वयस्येन सुहृदा वा परन्तप ॥ कृतं सुग्रीव तत्सर्वं भवताऽधर्मभीरुणा ॥
किष्किन्धां प्रतियाह्याशु स्वसैन्येनाभिसंवृतः ॥ १५ ॥
स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ॥ न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः ॥१६॥
अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम ॥ अभ्यनुज्ञातुमिच्छामि सर्वांश्चामन्त्रयामि वः ॥१७॥
एवमुक्तास्तु रामेण वानरास्ते महाबलाः ॥ ऊचुः प्राञ्जलयो रामं राक्षसश्च विभीषणः ॥ १८ ॥
अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् ॥ उद्युक्ता विचरिष्यामो वनानि नगराणि च ॥१९॥
दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च ॥ अचिरेणागमिष्यामः स्वान्गृहान्नृपतेः सुत ॥ २० ॥
एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः ॥ अब्रवीद्राघवः श्रीमान्ससुग्रीवविभीषणान् ॥ २१ ॥
प्रियात्प्रियतरं लब्धं यदहं ससुहृज्जनः ॥ सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ २२ ॥
क्षिप्रमारोह सुग्रीव विमानं वानरैः सह ॥ त्वमध्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥ २३ ॥
ततस्तत्पुष्पकं दिव्यं सुग्रीवः सह सेनया ॥ अध्यारोहत्त्वरञ्शीघ्रं सामात्यश्च विभीषणः ॥ २४ ॥
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ॥ राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ॥ २५ ॥
ययौ तेन विमानेन हंसयुक्तेन भास्वता ॥ प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् ॥ २६ ॥
ते सर्वे वानरा हृष्टा राक्षसाश्च महाबलाः ॥ यथासुखमसंबाधं दिव्ये तस्मिन्नुपाविशन् ॥ २७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥

---

लज्जमानां सदस्यङ्कारोहणाय लज्जन्तीं । रामेणाङ्कारोपणं च स्त्रीसहायरहितत्वात् । धनुष्मता रामधनुर्धारिणा ॥ ११—१३ ॥ अब्रवीच्चेत्यत्र संग्रहेणोक्तं विवृणोति–मित्रेत्यादिना ॥ वानरान्प्रत्याह–मित्रेति ॥ १४ ॥ सुग्रीवं प्रत्याह–यत्त्वित्यादिना ॥ सुहृदा शोभनहृदयेन । वाशब्द एवकारार्थः । अधर्मभीरुणेति च्छेदः ॥ १५ ॥ विभीषणं प्रत्याह–स्वेति ॥ स्वराज्ये वस । न तु परकीयं रावणवदाक्रमितव्यं । अतो जनस्थानरक्षिणः समानेतव्या इति भावः ॥ १६—१८ ॥ उद्युक्ताः सावधानाः । जनपदपीडामकुर्वन्त इत्यर्थः ॥ १९—२१ ॥ प्रियात्प्रियतरमिति ॥ सीतालाभः प्रियं । भरतदर्शनं प्रियात्प्रियं । भवद्भिः सह पुरप्रवेशः प्रियात्प्रियतरमित्यर्थः ॥ २२—२३ ॥ शीघ्रं शीघ्रगमिति विमानविशेषणं । त्वरन्निति सुग्रीवविशेषणात् ॥ २४ ॥ आसनं वाहनं ॥ २५ ॥ हंसयुक्तेन प्रतिमारूपहंसयुक्तेन । प्रतीतः श्लाघितः ॥ २६ ॥ यथासुखमसंबाधमिति पदद्वयेन दिव्यस्य पुष्पकस्य अपेक्षितावकाशप्रदत्वं गम्यते

---

स० अधर्मभीरुणा कृतप्रतिकरणाभावप्रत्यवायरूपाधर्मभीरुणा ॥ १५ ॥ ति० मुद्युक्ताः हर्षयुक्ताः ॥ १९ ॥ स० खगतेन आकाशगतेन । हंसयुक्तेन वाहकत्वेननिर्मितहंसप्रतिमायुक्तेन । सुन्दरकाण्डेराक्षसपिशाचादीनांतद्वाहकत्वोक्तिस्तुलीलयारावणनियुक्तराक्षसादीनपेक्ष्य । वस्तुतस्तु तद्विमानदेवस्यैवताद्दशशक्तिमत्त्वेनस्वेच्छयैवान्यनिरपेक्षेणगतिरितिज्ञेयं ॥ प्रतीतः प्रसिद्धः ॥ २६ ॥ इतिपञ्चविंशत्युत्तरशततमःसर्गः ॥ १२५ ॥

[ पा० ] १ ङ. झ. ञ. ट. मनस्विनीं. २ ङ. झ. ट. स्निग्धेनचहितेनच. ३ ख. सेन्द्रास्सर्वैर्मरुद्गणाः. ४ ङ. झ. ट. प्राञ्जलयस्सर्वे. ख. च. ञ. प्राञ्जलयोभूत्वा. ५ क. ङ. छ. झ. ञ. ट. मुद्युक्ताः. ६ ङ. झ. ञ. ट. अचिरादागमिष्यामः. ७ ङ. झ. ट. अब्रवीद्वानरान्रामस्ससुग्रीव. ८ ङ. झ. ट. ततस्सपुष्पकं. ९ ङ. झ. ट. सहवानरैः. १० ङ. झ. ट. आरुरोहमुदायुक्तः. ख. च. छ. ञ. आरुरोहततःश्रीमान्. ११ ङ. झ. ट. खगतेनविमानेन. १२ ख. ङ. च. छ. झ. ञ. ट. वानरर्क्षाश्च.

## षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥

पुष्पकस्थेनरामेण सीतांप्रति लंकाकिष्किन्धयोर्मध्येविद्यमानयुद्धभूमिसेतुप्रभृतीनां प्रदर्शनम् ॥ १ ॥ किष्किन्धांदृष्टवत्यासीतया ताराप्रभृतिवानरनारीणांसहानयनंप्रार्थितेनरामेण सुग्रीवेणतासामानयनम् ॥ २ ॥ तथा पुनःसीतांप्रति किष्किन्धायोध्ययोर्मध्यस्थपंपादिप्रदर्शनपूर्वकमयोध्याप्रदर्शनम् ॥ ३ ॥ सीतयासुग्रीवादिभिश्च सहर्षकौतुकमयोध्यादर्शनम् ॥४॥

अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् ॥ उत्[1]पपात महामेघः श्वसनेनोद्धतो यथा ॥ १ ॥
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ॥ अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ २ ॥
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् ॥ लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥ ३ ॥
एतदायोधनं पश्य मांसशोणितकर्दमम् ॥ हरीणां राक्षसानां च सीते विशसनं महत् ॥ ४ ॥
[2]अत्र दत्तवरः शेते प्रमाथी राक्षसेश्वरः ॥ तव हेतोर्विशालाक्षि रावणो निहतो मया ॥ ५ ॥
कुम्भकर्णोत्र निहतः प्रहस्तश्च निशाचरः ॥ धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥ ६ ॥
विद्युन्माली हतश्चात्र सुषेणेन महात्मना ॥ ७ ॥
लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे ॥ अङ्गदेनात्र निहतो विकटो नाम राक्षसः ॥ ८ ॥
विरूपाक्षश्च [3]दुर्धर्षो महापार्श्वमहोदरौ ॥ अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः ॥ ९ ॥
[ [4]त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरावुभौ ॥ १० ॥
निकुंभश्चैव कुंभश्च कुंभकर्णात्मजो बली ॥ वज्रदंष्ट्रश्च दंष्ट्रश्च बहवो राक्षसा हताः ॥ ११ ॥
मकराक्षश्च दुर्धर्षो मया युधि निपातितः ॥ अकंपनश्च निहतः शोणिताक्षश्च वीर्यवान् ॥ १२ ॥
यूपाक्षश्च प्रजंघश्च निहतौ तु महाहवे ॥ विद्युज्जिह्वोत्र निहतो राक्षसो भीमदर्शनः ॥ १३ ॥
यज्ञशत्रुश्च निहतः सुप्तघ्नश्च महाबलः ॥ सूर्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथाऽपरः ॥ १४ ॥ ]
अत्र मण्डोदरी नाम भार्या तं पर्यदेवयत् ॥ सपत्नीनां सहस्रेण [5]सास्रेण परिवारिता ॥ १५ ॥
एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने ॥ यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् ॥ १६ ॥
एष सेतुर्मया बद्धः सागरे [6]सलिलार्णवे ॥ तव हेतोर्विशालाक्षि नलसेतुः सुदुष्करः ॥ १७ ॥

॥ २७ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥

---

अथ विलासेन सीतायै तत्तद्देशप्रदर्शनं–अनुज्ञातंत्वित्यादि ॥ १ ॥ मैथिलीं राजपुत्रीत्वेन लालनीयत्वोक्तिः ॥ २—३ ॥ आयोधनं युद्धभूमिं । विशस्यन्तेस्मिन्निति विशसनं । अधिकरणे ल्युट् ॥ ४ ॥ दत्तवरः ब्रह्मणा दत्तवरः । प्रमाथी हिंसकः शेते । भस्मस्वरूपेणेत्यर्थः॥५॥ प्रहस्तश्चेत्यत्र नीलेनेत्यध्याहार्यं ॥ ६ ॥ विद्युन्मालीति । पूर्वमनुक्तमप्यत्रानुवादाद्ग्राह्यं । एवं विकट इत्यत्रापि ॥ ७—१५ ॥ तीर्थं उत्तरणस्थानं । यत्र तीर्थे तां रात्रिं सागरतरणरात्रिं ॥ १६ ॥ सागरे सगरखानिते । सलिलेति क्षीरोदादिव्यावृत्तिः । एष सेतुः नलसेतुः नलबद्धः । "षिञ् बन्धने" इति धातुः । एतेन नलसेतुः सेतुरित्युक्त्या पूर्वकल्पकृतसेत्वन्तरं व्यावर्त्यते इति प्रत्युक्तं । पूर्वमेव

ति० एषइतितद्दाहभूमिप्रदर्शनं । अग्रेपिसर्वत्रतत्तद्युद्धभूमिप्रदर्शनमेव । अत्युच्चस्थलाद्विमानस्यसर्वयुद्धभूमिप्रत्यक्षंयुगपत् ॥ स० एषइति प्रत्यक्षसिद्धलङ्कापतित्वेनप्रस्तुतः । अत्रशेते अशयत ॥ ५ ॥ रामानु० "अङ्गदेनात्रनिहतोविकटोनामराक्षसः"

[ पा० ] १ ख. ङ.—ट. हंसयुक्तंमहानादमुत्पपातविहायसं. २ क. ग.—ट. एषदत्तवरः. ३ ख.—ट. दुष्प्रेक्षो. ४ त्रिशिराश्चातिकायश्चेत्यादयः. ब्रह्मशत्रुस्तथापरइत्यन्ताःश्लोकाः क. ख. ङ.—ट. पाठेषुदृश्यन्ते. ५ ख. ङ. ज.—ट. साग्रेण. ६ ख. ङ.—ट. लवणार्णवे.

पश्य सागरमक्षोभ्यं वैदेहि वरुणालयम् ॥ अपारमभिगर्जन्तं शङ्खशुक्तिनिषेवितम् ॥ १८ ॥
हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ॥ विश्रमार्थं हनुमतो भित्त्वा सागरमुत्थितम् ॥ १९ ॥
एतत्कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥ २० ॥
एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ॥ सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् ॥
एतत्पवित्रं परमं महापातकनाशनम् ॥ २१ ॥
अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः ॥ २२ ॥

सेतुसत्त्वे पुनः सेतुकरणवैयर्थ्यात् ॥ १७ ॥ अपारं मध्ये द्वीपभूतपाररहितं ॥ १८ ॥ हिरण्यनाभं मैनाकं ॥ १९ ॥ एतदित्यर्धं ॥ कुक्षौ मध्ये । सेतूपरीति शेषः । स्कन्धावारनिवेशनं स्कन्धावारनिवेशनरूपस्थानं । स्कन्धावारः शिबिरं ॥ २० ॥ एतत्त्वित्यादिसार्धश्लोकमेकं वाक्यं ॥ पूजितं पूजितुमर्हं । पूर्वं सेतोर्दक्षिणकोटिरुक्ता । अत्रोत्तरकोटिरिति ज्ञेयं । अनुगृह्णाति—एतदिति । पवित्रं पावनं । महापातकनाशनं च । भविष्यतीति शेषः ॥ २१ ॥ एवं लङ्कामारभ्य सेतुबन्धपर्यन्तमुक्त्वा तत उत्तरे दर्भशयनस्थानं निर्दिशति—अत्र पूर्वमिति ॥ महादेव इति समुद्रराज उच्यते औचित्यात् । प्रभुः समुद्रजलाधिष्ठाता । प्रसादमकरोत् सागरं शोषयिष्यामीति कुपितस्य मे प्रसादं प्रसन्नत्वं । अकरोत् । "प्रसादस्तु प्रसन्नता" इत्यमरः । न त्वत्र रुद्रो महादेवः । तेन पूर्वं प्रसादकरणानुक्तेः । पूर्वोक्तानामेव ह्यत्रानुवादः कृतः । न चाङ्गदेन विकटनिरसनस्य पूर्वमनुक्तत्वेपि यथानुवादात्तत्सिद्धिः तथात्रापि भविष्यतीति वाच्यं तद्वदत्राविरोधाभावात् । उपलभ्यते हि विरोधः । तथाहि । तत्र प्रसादः किं सेतुनिर्माणकाले वा पुनरागमनकाले वा । नाद्यः । प्रसादकरणहेतुरावणवधादेरभावात् पूर्वसिद्धसमुद्रप्रसादेनैवोपपत्तेश्च महादेवसमाख्यायाः समुद्रप्रसादश्रुत्या बाधितुं युक्तत्वाच्च । न द्वितीयः । पूर्वशब्दविरोधात् । नच पूर्वमित्यस्य पूर्वकल्प इत्यर्थ इति वाच्यं । "आत्मानं मानुषं मन्ये" इति वदता सुग्रीवादिसन्निधौ स्वस्य विष्णववतारत्वद्योतकपूर्ववृत्तोद्घाटनानौचित्यात् । पूर्वकल्पकृतसेतुसद्भावे पुनस्तन्निर्माणवैयर्थ्यात् । किंच अत्रेतिपदस्य पूर्वश्लोकोक्तनलकारितसेतुपरामार्शित्वमेवोचितं । नतु पूर्वकल्पकृतसेतुपरामार्शित्वं । तस्य सद्भावेप्यन्तरितत्वसंभवात् । ननु पुराणान्तरानुसारात्तदर्थपरत्वं युक्तं । तथाहि कूर्मपुराणे—"सेतुमध्ये महादेवमीशानं कृत्तिवाससम् । स्थापयामास वै लिङ्गं पूजयामास राघवः ॥ तस्य देवो महादेवः

इत्यनुक्तस्यविकटस्यात्रनिहतत्वानुवादादन्येप्येतादृशाबहवोनिहताइत्यवगम्यते ॥ ८ ॥ स० मैनाकस्यैवहिरण्यनाभइतिनामान्तरमितिप्राग्व्याख्यातं । काञ्चनं तद्वर्णं तत्प्रचुरंवा । पूर्वंसागरंभित्वाहनुमतोविश्रमार्थमुत्थितं इदानीमस्मद्दर्शनार्थमुत्थितमित्यर्थः । तेनहनुमद्दर्शनानन्तरंपुनःसागरप्रवेशोक्तिरुपपन्ना । हिरण्यनाभोत्थितिस्थलप्रदर्शनंवा ॥ १९ ॥ स० अत्र तीरे । पूर्वं सेतुबन्धप्रारंभसमये । महादेवः पूजितःसन् प्रसादं निर्विघ्नंसेतुसमाप्तिशत्रुवधाद्युपयोग्यनुग्रहं अकरोत् । तत्स्थलंसीतायैप्रदर्श्यविमानादवतीर्यतत्रलिङ्गस्थापनंरामश्चकार । क्षेत्रस्यत्रैनेत्रत्वात्प्राक्तत्प्रार्थनायुक्ता । अतःपूर्वमित्युक्तिरनुग्रहमात्रविषयिणी । नतुप्रतिष्ठापनपरेतिमन्तव्यं ॥ यथोक्तमाग्नेयपुराणेएकोत्तराशीत्यध्याये— "धन्योस्मिकृतकृत्योस्मिपूज्योस्मिपुरुषोत्तम । यदद्राक्षं सुदुर्दर्शंत्वद्रूपंयोगिपुङ्गवैः । त्वदाज्ञयामयापूर्वंत्वद्भक्तिविमुखंहरे । शैवंपाशुपतंलैङ्गमसच्छास्त्रंप्रवर्तितम् । तदिदानींमहापापंदिव्यरूपस्यदर्शनात् । सर्वंविनष्टमेवेशतवरामप्रसादतः । तरेयमेवत्वन्मायांत्वन्नामस्मरणादहम् । तथाअनुगृहाणत्वंयथास्यात्संततं स्मृतिः । रामः । रावणोऽयंमहापापीगोब्राह्मणवधेरतः । नित्यंवैपरदारार्थीवैदिकाचारदूषकः । एतद्गामात्सकृत्पार्श्वेयदघंप्रतिपद्यते । तदघंसर्वतीर्थेषुस्नानेनापिननश्यति । अब्रह्मण्यस्यलुब्धस्यमूर्खस्याशास्त्रवेदिनः । भूमिराक्रम्यतेयेनसोपिस्यात्तादृशःक्षणात् । त्यजेद्देशंकृतयुगेत्रेतायांग्रहमेवच । द्वापरेकुलमेकंतुकर्तारंतुकलौयुगे । एतद्देशविशुद्ध्यर्थमत्रसंनिहितःसदा । मयात्रस्थापितेलिङ्गेभुक्तिमुक्तिप्रदोभव । श्रीकृष्णः । इतिरामस्यतद्वाक्यंश्रुत्वातत्वार्थसंयुतं । कृताञ्जलिर्दाशरथिंप्रहसन्परमेश्वरः । श्रीमहादेवः । सर्वभृत्सर्वभूतस्थःसर्वात्मासर्ववत्सलः । त्वमेवरामविश्वात्मन्विडंबयसिलीलया । त्वद्वाक्यमेवधार्यमेतथाप्यार्यमहाविभो । यदुक्तं तत्तथैवास्तुत्वन्नाम्नास्थापयेहमाम् । इत्युक्त्वातंपरिक्रम्यप्रणम्याथययौहरः । सखेपश्यन्तियेलिङ्गंरामनाथइतिश्रुतम् । ततःसंसारिणोनस्युःसत्यंसत्यंवदाम्यहम् । सेतुबन्धस्थितंलिङ्गंयेसेवन्तेसकृत्कलौ । महापातकलक्षाद्वामुच्यतेनात्रसंशयः । कुरुक्षेत्रेयजेद्य-

[ पा० ] १ ख. ङ. छ. झ. ञ. ट. शुक्तिसमाकुलं. २ क. घ. दयार्थंयोहनुमतोहित्वासागरमुत्थितः.

**अत्र राक्षसराजोऽयमाजगाम विभीषणः ॥ २३ ॥**

पार्वत्या सह शङ्करः । प्रत्यक्षमेव भगवान्दत्तवान्वरमुत्तमम् ॥ ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः । महापातकसंयुक्तास्तेषां पापं विनश्यति ॥ अन्यानि चैव पापानि तीरे तत्र महोदधेः । दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥ यावत्स्थास्यन्ति तरवो यावदेव च मेदिनी । यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥ स्नानं दानं जपः श्राद्धं भविष्यत्यक्षयं ततः । स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥ इत्युक्त्वा भगवान्वाचं परिष्वज्य च राघवम् । सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ” इति ॥ पाद्मे पुराणेपि—रामः पुष्पकादवरुह्य महादेवं प्रतिष्ठापितवान् सोस्मै प्रसन्नोभूदित्युच्यते । एतादृशपुराणवचनानुसारेणायं श्लोको लिङ्गप्रतिष्ठां बोधयतीति । मैवं । उक्तदोषानिस्तारात्, इतिहासो हि परिग्रहातिशयात्, ग्रन्थसौष्ठवाच्च, इतिहासपुराणं पञ्चममित्यादावधिकाक्षरत्वेपि पूर्वप्रयोगेणाभ्यर्हितत्वाच्च पुराणेभ्यो गरीयानिति ‘ वेदः प्राचेतसादासीत् ’ इति वेदमयत्वोक्त्या चतुर्मुखवरप्रदानमूलतया च प्रबलतरः । तद्विरोधे तामसपुराणवचनानि न प्रमाणानि । किंच पुराणं सर्गप्रतिसर्गादिष्वन्यपरमिति नेतिहासवत्पुरावृत्तकथने तात्पर्यवत् । अथवा, अस्मिन्सर्गे श्लोकाः प्रायशो व्यत्यस्ता दृश्यन्ते इत्युडारिप्रभृतिभिरुक्तं । तथा चेदमर्धं अत्र मण्डोदरीति श्लोकानन्तरं पठितव्यं । तत्र च महादेवप्रसादः स्वपितृदर्शनमेव । अतएव भरतं प्रति हनुमत्प्रेषणावसरे वक्ष्यति—‘ महादेवप्रसादाच्च पित्रा मम समागमम् ’ इति । पुराणान्तरं तु माहात्म्यप्रतिपादनपरं बोध्यमिति संक्षेपः ॥ २२ ॥ अत्र राक्षसराज इति ॥

ज्ञानश्वमेधादिकाञ्छतम् । यत्फलंलभतेसद्यःसेतुलिङ्गस्यदर्शनात् । अभक्ष्याश्यसमिद्वर्णीयोनग्निरमखोगृही । योवनीचरिरंसुः स्याद्यतिर्योभैक्षभुग्भवेत् । एतेसर्वेचपापिष्ठादंभात्स्वाश्रमदूषकाः । दृष्ट्वारामेश्वरंलिङ्गंसद्यःपूताभवन्तिहि । कावेर्यांतुतुलास्नानंयःकुर्याद्रङ्गसंनिधौ । भवेत्तस्यकृतार्थस्यरामेश्वरनिरीक्षणम् ।” इत्यादि । कूर्मपुराणेचैकोनविंशेऽध्याये—“सेतुमध्येमहादेवमीशानंकृत्तिवाससम् । स्थापयामासलिङ्गस्थंपूजयामासराघवः । तस्यदेवोमहादेवःपार्वत्यासहशङ्करः । प्रत्यक्षमेवभगवान्दत्तवान्वरमुत्तमम् । येत्वयास्थापितंलिङ्गंद्रक्ष्यन्तीहद्विजातयः । महापातकसंयुक्तास्तेषांपापंविनश्यतु । अन्यानिचैवपापानिस्नातस्यात्रमहोदधौ । दर्शनादेवलिङ्गस्यनाशंयान्तिनसंशयः । यावत्स्थास्यन्तिगिरयोयावदेवचमेदिनी । यावत्सेतुश्चतावच्चस्थास्याम्यप्यतिरोहितः । स्नानंदानंतपःश्राद्धंभविष्यत्यक्षयंमहत् । स्मरणादेवलिङ्गस्यदिनपापंप्रणश्यति । इत्युक्त्वाभगवान्साक्षात्परिष्वज्यचराघवम् । सनन्दीसगणोरुद्रस्तत्रैवान्तरधीयत ।” इति । स्कान्देसेतुमाहात्म्येत्रिचत्वारिंशेऽध्याये—‘रावणस्यसदाविप्रायत्पापंमयिविद्यते । तस्यमेनिष्कृतिंब्रूतरावणस्यवधस्यच । यत्कृत्वातेनपापेनमुच्येयंमुनिपुङ्गवाः । मुनयऊचुः । सत्यव्रतजगन्नाथजगद्रक्षाधुरंधर । सर्वलोकोपकारार्थंकुरुरामशिवार्चनम् । गन्धमादनशृङ्गेस्मिन्महापुण्येविमुक्तिदे । शिवलिङ्गंप्रतिष्ठाप्यलोकसंग्रहकाम्यया । कुरुरामदशग्रीववधदोषापनुत्तये । लिङ्गस्थापनजंपुण्यंचतुर्वक्त्रोपिभाषितुं । नशक्नोतिसतैर्वक्तुंकिंपुनर्मनुजेश्वराः। इत्यारभ्य मध्येहनुमत्प्रेषणादिप्रकारमुक्त्वा सुमुहूर्तेकिंचिदवकाशमासादयतिहनुमतिचिरायतिच “रामराममहाबाहोकालोयातिहिसांप्रतम् । जानक्यायत्कृतंलिङ्गंसैकतंलीलयाविभो । तल्लिङ्गंस्थापयस्वाद्यमहालिङ्गमनुत्तमम् । इत्येवंसहितोरामःसीतयासहसत्वरम् । मुनिभिःसहितःप्रीत्याकृतकौतुकमङ्गलः । ज्येष्ठमासेसितेपक्षेसप्तम्यांबुधहस्तयोः । होरान्तेचव्यतीपातेकन्याचन्द्रेवृषेरवौ । दशयोगेमहापुण्येगन्धमादनपर्वते । सेतुमध्येमहादेवंलिङ्गरूपधरंहरम् । ईशानंकृत्तिवसनंगङ्गाचन्द्रकलाधरम् । रामोवैस्थापयामासशिवलिङ्गमनुत्तमम् । लिङ्गस्थंपूजयामासराघवस्तंसईश्वरम् । लिङ्गस्थःसमहादेवःपार्वत्यासहशंकरः । प्रत्यक्षमेवभगवान्दत्तवान्वरमुत्तमम् । सर्वलोकशरण्यायराघवायमहात्मने । त्वयात्रस्थापितंलिङ्गंयेपश्यन्तिरघूद्वह । महापातकयुक्ताश्चतेषांपापंप्रणश्यति । सर्वाण्यपिहिपापानिधनुष्कोटौनिमज्जनात् । दर्शनाद्रामलिङ्गस्यपातकानिमहान्त्यपि । विलयंयान्तिराजेन्द्ररामचन्द्रनसंशयः । प्रादादेवंहिरामायवरंपूर्णायशङ्करः ।” इत्यादि । नागोजिभट्टस्तु पूर्वमागमनसमयएवाहभूतपतिप्रतिष्ठापनं । ‘अत्र सेतुमूले । पूर्वं सेतुबन्धनात्पूर्वंविभुर्महादेवःमम रामस्यप्रसादमकरोत् मत्स्थापितत्वेनात्रस्थितोभूत् । सेतोर्निर्विघ्नतासिद्ध्यैसमुद्रप्रसादानन्तरंशिवस्थापनं रामेणकृतमितिगम्यते । अत्रस्थलेमहात्मनःसागरस्थतीर्थेसेतुनिर्माणमूलप्रदेशत्वात्सेतुबन्धइतिख्यातं भविष्यतीतिशेषः । ’ इति । इदंतुपुरुपुराणानवलोकनमूलमित्युपेक्ष्यं । तीर्थस्तु—‘महदितिजलं । तद्रूपीदेवोमहादेवःसमुद्रः । तदाहवैजयन्ती ‘गंभीरं गहनंरत्नंगह्वरंशरणंवपुः । स्नेहः स्नेह्यंमहच्छुद्धंवरुणंसर्वतोमुखम् । पातालंस्वादुदिव्यंचतानिपञ्चादशाप्सुच’इति । यद्वामहादेवमूर्तिष्वन्यतमत्वात्समुद्रस्य महादेवशब्देनात्रसमुद्रएवोच्यते । पूर्वं सेतुबन्धात्पूर्वं । प्रसादमकरोत् जलोपरिसेतुधारणरूपमकरोत् । यद्वा प्रसादं स्वसंनिधानरूपं । ‘दर्शयामासचात्मानंसमुद्रःसरितांपतिः ।’ इत्युक्तत्वात् महादेवःसमुद्रएवेतिव्याचख्यौ । सोपितद्वन्माननीयः । केचित्तुअत्रपुरु

एषा सा दृश्यते सीते किष्किन्धा चित्रकानना ॥ सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः ॥२४॥
अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालिपालिताम् ॥ अब्रवीत्प्रश्रितं वाक्यं रामं प्रणयसाध्वसा ॥२५॥
सुग्रीवप्रियभार्याभिस्ताराप्रमुखतो नृप ॥ अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम् ॥
गन्तुमिच्छे सहायोध्यां राजधानीं त्वयाऽनघ ॥ २६ ॥
एवमुक्तोथ वैदेह्या राघवः प्रत्युवाच ताम् ॥ एवमस्त्विति किष्किन्धां प्राप्य संस्थाप्य राघवः ॥
विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह ॥ २७ ॥
ब्रूहि वानरशार्दूल सर्वान्वानरपुङ्गवान् ॥ स्वदारसहिताः सर्वे ह्ययोध्यां यान्तु सीतया ॥ २८ ॥
तथा त्वमपि सर्वाभिः स्त्रीभिः सह महाबल ॥ अभित्वरस्व सुग्रीव गच्छामः प्लवगेश्वर ॥ २९ ॥
एवमुक्तस्तु सुग्रीवो रामेणामिततेजसा ॥ वानराधिपतिः श्रीमांस्तैश्च सर्वैः समावृतः ॥ ३० ॥
प्रविश्यान्तःपुरं शीघ्रं तारामुद्वीक्ष्य भाषत ॥ ३१ ॥

---

अत्र समुद्रराजप्रसादप्रदेशादुत्तरतः ॥ २३ ॥ पम्पावनमधुवनाद्यपेक्षया चित्रकाननेत्युक्तिः ॥ २४ ॥ प्रणयसाध्वसा प्रणययुक्तसाध्वसवती। प्रणतसाध्वसेति पाठे उपनतसाध्वसा। सुग्रीवादिसन्निधानात्प्रणयसाध्वसेति प्रथमभाषणरूपत्वाद्वा ॥ २५ ॥ सुग्रीवेत्यादिसार्धश्लोक एकान्वयः ॥ अहं ताराप्रमुखतः ताराप्रमुखाभिः सुग्रीवप्रियभार्याभिः सह अन्येषां वानरेन्द्राणां स्त्रीभिश्च परिवृता सती त्वया सह अयोध्यां गन्तुं इच्छे इच्छामीति संबन्धः । आत्मनेपदमार्षम् ॥ २६ ॥ एवमित्यादिसार्धश्लोक एकान्वयः ॥ एवमस्त्विति सीतां प्रत्युवाच । अथ किष्किन्धां प्राप्य विमानं संस्थाप्य सुग्रीवं प्रेक्ष्योवाचेति संबन्धः ॥२७॥ यान्त्वित्यत्र इतिकरणं द्रष्टव्यं । सीतया निमित्तभूतया । सीताप्रियार्थमित्यर्थः ॥ २८ ॥ तथा त्वमपीति अत्र याहीति विपरिणामेन संबन्धः । अभित्वरस्व । किष्किन्धायां विलम्बो न कार्य इत्यर्थः ॥ २९ ॥ सर्वैः समावृतो वानराधिपतिरुक्त इत्यन्वयः ॥ ३० ॥ प्रविश्येति ॥ अर्धमेकं वाक्यं । प्रवेशः सुग्रीवस्यैव

---

त्रपुभिन्नंत्रपुसदृक्सुवर्णं । तद्वर्णौऊरूयस्याःसातथातत्संबुद्धिःहेसीते । अम्महादेवोवरुणइतिव्याचक्षाणानोदाहृतवैजयन्त्यवलोका इवाम्महादेवइत्येकपदोपरिपरिदर्शितसाहसाउदाहृतबहुपुराणश्रवणविकलादुराग्रहग्रहगृहीतास्ततोप्यवमवरुणकरुणपात्रतांसोढ्वापिरामस्यसदाशिवप्रसादंस्वरसतःपद्यपद्यायातमवधूयविधुशेखरमवमन्यन्त इत्युपेक्ष्याः । 'यच्छौचनिस्सृतसरित्प्रवरोदकेनतीर्थेनमूर्ध्न्यधिधृतेनशिवःशिवोभूत् । सेशंपुनाज्जगदिदंयदर्हणांभःसद्यःपुनातिसहचन्द्रललामलोकान्'इत्यादिभागवतादुदाहृतपुराणेषुच 'लोकसंग्रहकाम्यया'इत्याद्युक्तेश्चलीलेयंराघवस्येतिसर्वंचतुरश्रं। **शि०** अत्र अस्मिन्सेतुमूलभूतदेशे। महादेवः महाशंभुः। प्रसादं अतिप्रीतिं अकरोत्। एतेन नीलादिवन्महादेवोपिसेतुबन्धनसाहाय्यंकृतवानितिसूचितं। तेनशिवस्यरामेऽतिप्रीतिःसूचिता । अतएवस्वसाहाय्यसूचनार्थमिदानीमपितत्रतस्यस्थितिःप्रसिद्धा । यद्वा अत्र अस्मिन्देशे । महादेवः प्रसादं प्रकर्षेणसादंप्राप्तिं स्वनित्यस्थितिमित्यर्थः । अकरोत् सेतुरक्षणार्थममाज्ञयात्रैवस्थितइत्यर्थः । नचप्रसन्नतादौरूढस्यप्रसादशब्दस्यकथमुक्तोर्थइतिवाच्यं । योगवृत्तिस्वीकारेबाधकाभावात्। अतएव यौगिकार्थमादायपङ्कजशब्दादीनांशुक्तिकादौप्रवृत्तिःप्रदर्शितानैयायिकादिभिः । रामकर्तृकशिवस्थापनं पुराणेषुविस्तरतोनिरूपितं । अतएव 'शंभोःप्रीत्यैयोमयाकारिधर्मःस्वेस्वेकालेमाननीयोभवद्भिः । नानावर्णान्भाविनोभूमिपालान्भूयोभूयोयाचतेरामचन्द्रः" इतिरामकृतस्ताम्रपत्रलिखितः स्वतोविदीर्णदेवालयैकदेशान्निस्सृतः इदानीन्तनसार्वभौमेनवाराणसींप्रेषितः श्लोकोपिसंगच्छते । ननुपूर्वमनुक्तेरिदंनयुक्तमितितुनभ्रमितव्यं । पूर्वमनुक्तत्वेप्यनयैवोक्त्यापूर्ववृत्तस्यानुमानेनपूर्वोक्त्यभावस्याकिञ्चित्करत्वेनयुक्तत्वेबाधकाभावात्। अतएवजयन्तमारीचवृत्तादीनांपूर्वमनुक्तत्वेप्युत्तरत्रोक्तिर्नायुक्तम् । यद्वा अत्रस्थितःसन्महादेवः प्रसादं संशयास्पदीभूतरावणसाहाय्यगमननिरोधमकरोत्। तथाचमेदिनी " मूलेप्रत्यन्तशैलेचप्रसादस्त्ववरोधने " इति । एतेन पूर्वंशंभुप्रसादानुक्त्याऽयमर्थोनयुक्तइत्याद्युक्तयआपाततोरमणीयाइतिदिक् ॥२२॥ **ती०** प्रणतसाध्वसेतिपाठे प्रणेतुं उपनेतुं प्राप्तं साध्वसंययासा । **शि०** प्रणयस्यसाधुनाशोभनतया असतिप्रकाशतेसा प्रणयसाध्वसा । **स०** प्रणयसाध्वसा । प्रणयःस्नेहः । साध्वसं यथेच्छंकथनेकिंवदिष्यतिवारामइतिचिरंप्रियवियोगेनतत्स्वभावपरिज्ञानशून्यायाइवस्थितायाभयंच । प्रणयपूर्वंसाध्वसंयस्याःसा ॥ २५ ॥ **ति०** गन्तुमिच्छे इच्छामि । अत्रैतदर्थमेकदिनवासः । अतएवभारतेऽङ्गदस्ययौवराज्याभिषेकोप्येतद्दिनउक्तः ॥ २६ ॥ वानराणांनारीणांसह ताभिःसहेत्यर्थः । षष्ठ्यार्षी ॥ २७ ॥

[ पा० ] १ क.—ट. त्वयासह. २ क. ङ.—ञ. ट. मुद्वीक्ष्यसोब्रवीत्.

प्रिये त्वं सह नारीभिर्वानराणां महात्मनाम् ॥ राघवेणाभ्यनुज्ञाता मैथिलीप्रियकाम्यया ॥ ३२ ॥
त्वर त्वमभिगच्छामो गृह्य वानरयोषितः ॥ अयोध्यां दर्शयिष्यामः सर्वा दशरथस्त्रियः ॥ ३३ ॥
सुग्रीवस्य वचः श्रुत्वा तारा सर्वाङ्गशोभना ॥ आहूय चाब्रवीत्सर्वा वानराणां तु योषितः ॥ ३४ ॥
सुग्रीवेणाभ्यनुज्ञाता गन्तुं सर्वैश्च वानरैः ॥ मम चापि प्रियं कार्यमयोध्यादर्शनेन च ॥ ३५ ॥
प्रवेशं चापि रामस्य पौरजानपदैः सह ॥ विभूतिं चैव सर्वासां स्त्रीणां दशरथस्य च ॥ ३६ ॥
तारया चाभ्यनुज्ञाता सर्वा वानरयोषितः ॥ नेपथ्यं विधिपूर्वेण कृत्वा चापि प्रदक्षिणम् ॥
अध्यारोहन्विमानं तत्सीतादर्शनकाङ्क्षया ॥ ३७ ॥
ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ॥ ऋश्यमूकसमीपे तु वैदेहीं पुनरब्रवीत् ॥ ३८ ॥
दृश्यतेऽसौ महान्सीते सविद्युदिव तोयदः ॥ ऋश्यमूको गिरिश्रेष्ठः काञ्चनैर्धातुभिर्वृतः ॥ ३९ ॥
अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ॥ समयश्च कृतः सीते वधार्थं वालिनो मया ॥ ४० ॥
एषा सा दृश्यते पम्पा नलिनी चित्रकानना ॥ त्वया विहीनो यत्राहं विललाप सुदुःखितः ॥४१॥
अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ॥ अत्र योजनबाहुश्च कबन्धो निहतो मया ॥ ४२ ॥
दृश्यते च जनस्थाने सीते श्रीमान्वनस्पतिः ॥ यत्र युद्धं महद्वृत्तं तव हेतोर्विलासिनि ॥
रावणस्य नृशंसस्य जटायोश्च महात्मनः ॥ ४३ ॥
खरश्च निहतो यत्र दूषणश्च निपातितः ॥ त्रिशिराश्च महावीर्यो मया बाणैरजिह्मगैः ॥

नतु वानराणां । भाषत अभाषत ॥ ३१ ॥ नारीभिः स्त्रीभिः सह अनुज्ञाता । अयोध्यागमनं प्रतीति शेषः। त्वं च वानरस्त्रियश्चानुज्ञाता इत्यर्थः । नारीणामिति पाठे तृतीयार्थे षष्ठी ॥ ३२ ॥ गृह्य गृहीत्वा । आनीयेति यावत् । दर्शयिष्यामः द्रक्ष्यामः । दशरथस्त्रियः दशरथस्त्रियश्च ॥ ३३ ॥ सर्वाङ्गशोभनेत्यनेन पूर्वं स्वयमलंकृतवतीति गम्यते ॥ ३४ ॥ सुग्रीवेणेत्यादिश्लोकद्वयमेकान्वयं ॥ सुग्रीवेण सर्वैर्वानरैः स्वस्वभर्तृभिर्वानरैः सह अयोध्यां गन्तुमभ्यनुज्ञाताः । यूयमिति शेषः । न केवलं सुग्रीवानुज्ञामात्रं मत्प्रियार्थं च भवतीभिरागन्तव्यमित्याह—मम चापीति । अयोध्यादर्शनेन मम यत्प्रियं तद्भवतीभिः सहागत्य कार्यमित्यर्थः । रामस्य प्रवेशं च दशरथस्य स्त्रीणां विभूतिं ऐश्वर्यं च । द्रक्ष्याम इति शेषः ॥३५—३६॥ तारयेत्याद्यर्धत्रयमेकान्वयं ॥ नेपथ्यं अलंकारं । विधिपूर्वेण मङ्गलालम्भनादिविधिपूर्वकमित्यर्थः । अत्रालंकरणाह्वानादिना दिनमेकं गतमित्याहुः । प्रदक्षिणं कृत्वा । विमानस्येति शेषः । प्रादक्षिण्येन गमनमात्रमत्र विवक्षितं । अतिविपुलस्य तस्य सद्यः प्रदक्षिणासंभवात् ॥ ३७ ॥ उत्थितमित्यनेन तारागमनपर्यन्तं भूमौ विमानं स्थितमिति ज्ञायते ॥ ३८—३९ ॥ समयः संकेतः ॥ ४० ॥ विललाप । लिङुत्तमैकवचनं ॥ ४१—४२ ॥ दृश्यते चेत्यादिसार्धश्लोकमेकं वाक्यं ॥ श्रीमान् वनस्पतिः जटायुनिवासभूतो वटः । तस्य श्रीमत्त्वं महात्मना जटायुषाधिष्ठितत्वात् ॥ ४३ ॥ खरश्चेत्यादिसार्धश्लोक

**रामानु०** सुग्रीवेणाभ्यनुज्ञाताः वयमितिशेषः । वानरैश्चाभ्यनुज्ञाताः यूयमितिशेषः । ममचापिप्रियंकार्यमित्यत्रभवतीभिरिति शेषः । **स०** अयोध्यादर्शनेनभवतीभिर्ममप्रियंकार्यं ॥ ३५ ॥ **स०** अध्यारोहन् । ननुपूर्वंरामस्यनागपाशबन्धसमयेरामदर्शनार्थं विमानेनानीतांसीतांप्रति तवपतिश्चेन्नजीवतितर्हिनेदंविमानंत्वांवहेदितिसरमावाक्येनपुष्पकस्याविधवावाहकत्वनियमोक्त्याकथमत्रताराया विमानारोहणमितिचेदुच्यते । सरमावाक्यंनसीतायाविधवात्वपुरस्कारेणविपक्षेयानारोहनिषेधपरं । किंतु दृश्यमानरामस्यमरणेतवाशुचित्वेननेदंत्वामावहेदित्येवंपरं । यद्वा उक्तनियमाङ्गीकारेपिनक्षतिः । तारायारामवाक्यात्सुग्रीवपतिकत्वेनवाविमानारोहसंभवात् । "पुत्रिण्यविधवा" इतिस्मृतेःपुत्रेणवातस्याअविधवात्वंबोध्यं ॥ ३७ ॥ **ती०** ताभिःसहोत्थितमित्यनेन चतुर्थ्यांकिष्किंधायामुषित्वापञ्चम्यांततःप्रस्थानमित्यवगम्यते । उपरिपञ्चम्यां भरद्वाजाश्रमप्रवेशस्यवक्ष्यमाणत्वात् ॥ ३८ ॥
इतिषड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥

[ **पा०** ] १ ङ. छ. झ. ञ. ट. नारीणांवानराणां. २ ख. प्रवेशंचापिपश्यामःपौर. ३ ङ. च. छ. झ. ञ. ट. दृश्यतेऽसौ.

एतत्तदाश्रमपदमस्माकं वरवर्णिनि ॥ ४४ ॥
पर्णशाला तथा चित्रा दृश्यते शुभदर्शना ॥ यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् ॥ ४५ ॥
एषा गोदावरी रम्या प्रसन्नसलिला शिवा ॥ अगस्त्यस्याश्रमो ह्येष दृश्यते पश्य मैथिलि ॥ ४६ ॥
दीप्तश्चैवाश्रमो ह्येष सुतीक्ष्णस्य महात्मनः ॥ ४७ ॥
वैदेहि दृश्यते चात्र शरभङ्गाश्रमो महान् ॥ उपयातः सहस्राक्षो यत्र शक्रः पुरन्दरः ॥ ४८ ॥
अस्मिन्देशे महाकायो विराधो निहतो मया ॥ ४९ ॥
एते हि तापसावासा दृश्यन्ते तनुमध्यमे ॥ अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरप्रभः ॥
अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी ॥ ५० ॥
असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते ॥ [1]यत्र मां केकयीपुत्रः प्रसादयितुमागतः ॥ ५१ ॥
एषा सा यमुना दूराद्दृश्यते चित्रकानना ॥ ५२ ॥
भरद्वाजाश्रमो यत्र श्रीमानेष प्रकाशते ॥ ५३ ॥
एषा त्रिपथगा गङ्गा दृश्यते वरवर्णिनि ॥ नानाद्विजगणाकीर्णा संप्रपुष्पितकानना ॥ ५४ ॥
शृङ्गिबेरपुरं चैतद्गुहो यत्र समागतः ॥ ५५ ॥
एषा सा दृश्यते सीते सरयूर्यूपमालिनी ॥ नानातरुशताकीर्णा संप्रपुष्पितकानना ॥ ५६ ॥
एषा सा दृश्यतेऽयोध्या राजधानी पितुर्मम ॥ अयोध्यां कुरु वैदेहि प्रणामं पुनरागता ॥ ५७ ॥
ततस्ते वानराः सर्वे [2]राक्षसश्च विभीषणः ॥ [3]उत्पत्योत्पत्य ददृशुस्तां पुरीं शुभदर्शनाम् ॥ ५८ ॥
ततस्तु तां पाण्डुरहर्म्यमालिनीं विशालकक्ष्यां गजवाजिसंकुलाम् ॥
पुरीमयोध्यां ददृशुः प्लवङ्गमाः पुरीं महेन्द्रस्य यथाऽमरावतीम् ॥ ५९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥

---

एकान्वयः ॥ तत् पञ्चवटीति प्रसिद्धं ॥४४—४५॥ एषा गोदावरीति । अयमेव पाठः सम्यक् । एषा मन्दाकिनीति पाठे अगस्त्याश्रमसमीपे मन्दाकिनीति काचिन्नद्यस्तीति ज्ञेयं । एतच्छ्लोकात्पूर्वं पर्णशालेति श्लोकः पठनीयः ॥ ४६ ॥ दीप्तश्चेत्यर्धं ॥ ४७ ॥ पुराणि शत्रुशरीराणि शत्रुपुराणि वा दारयतीति पुरन्दरः ॥ ४८ ॥ अस्मिन्देश इत्यर्धं ॥ ४९ ॥ एते हीत्यादिसार्धश्लोक एकान्वयः ॥ तापसावासाः । अस्माभिर्दश वर्षाणि यत्रोषितमिति भावः । तापसी अनसूया ॥ ५०—५१ ॥ एषा सेत्यर्धं ॥ ५२ ॥ भरद्वाजेत्यर्धं ॥ यत्र भरद्वाजाश्रमः । पूर्वं दृष्ट इति शेषः । श्रीमान् स एष प्रदेशः प्रकाशते । अदूरवर्तितया सम्यग्दृश्यते ॥ ५३ ॥ वरवर्णिनीति सीतासंबोधनं ॥ ५४ ॥ शृङ्गिबेरपुरमित्यर्धं ॥ यत्र गुहः समागतः तच्छृङ्गिबेरपुरं एतदित्यन्वयः ॥ ५५ ॥ यूपमालिनी इक्ष्वाकुभिस्तीरे यागानन्तरं कीर्त्यर्थं शिलाभिः कृतयूपवतीत्यर्थः ॥ ५६ ॥ अयोध्यामिति । उद्दिश्येति शेषः । विमानस्याकाशगतत्वेन दूरस्था अपि गङ्गाशृङ्गिबेरपुरसरय्वयोध्या दृष्टा इति बोध्यम् । भरद्वाजाश्रमे हि तदा स्थितिः ॥ ५७—५८ ॥ पाण्डुरेत्यादिस्वभावोक्तिः ॥ ५९ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षड्विंशत्युत्तरशततमः सर्गः १२६

---

[ पा० ] १ ङ. झ. ट. अत्रमां. २ ङ. छ. झ. ञ. राक्षसाःसविभीषणाः. ३ ङ. झ. ट. संहृष्टास्तांपुरींददृशुस्तदा.

## सप्तविंशत्युत्तरशततमः सर्गः ॥ १२७ ॥

रामेण भरद्वाजाश्रममेत्य तंप्रत्यभिवादनपूर्वकं भरतादिकुशलप्रश्नः ॥ १ ॥ तेन तंप्रति सकलजनकुशलनिवेदनपूर्वकं स्वस्यतपसैव तस्यपुरास्वाश्रमनिर्गमप्रभृतिपुनरागमनावधिकालमध्यवृत्तवृत्तान्तपरिज्ञाननिवेदनेनसह स्वीयातिथ्यस्वीकारेणपरेद्युरयोध्यागमनचोदना ॥ २ ॥ तथा रामप्रार्थनया वानरनिकरभोगायायोध्याध्वगततरुकुलेषु स्वतपोमहिम्नाऽमृतकल्पफलकुलनिष्पादनम् ॥ ३ ॥

**पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः ॥ भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥ १ ॥**

अथ भरद्वाजाश्रमवासः—पूर्ण इति ॥ पूर्णे चैत्रशुद्धपञ्चम्यामयोध्यातो निर्गमनं । तदारभ्य चतुर्दशवर्षे पूर्णे सति पञ्चम्यां चैत्रशुद्धपञ्चम्यां । तथा हि चैत्रशुद्धपञ्चम्यां निर्गमः । तद्रात्र्यां तमसातीरे निवासः । षष्ठ्यां शृङ्गिबेरपुरे । सप्तम्यां वनस्पतिमूले । अष्टम्यां भरद्वाजाश्रमे । नवम्यां यमुनातीरे । दशम्यां रामश्चित्रकूटं गमिष्यतीति गुहचारमुखेन विदितवृत्तान्तस्य सुमन्त्रस्य सायाह्ने अयोध्याप्रवेशः । तद्रात्रावेव दशरथस्य निर्याणं । एकादश्यां राज्ञस्तैलद्रोण्यां निक्षेपः । द्वादश्यां भरतं प्रति दूतप्रेषणं । ते च दूता मार्गे त्रयोदशीं चतुर्दशीं चापनीय पौर्णमास्यां रात्रौ केकयनगरं प्रविविशुः । प्रतिपदि भरतस्यायोध्यां प्रत्यागमनं । तत्र च मार्गे सप्त रात्रीरुषित्वा अष्टमे दिने त्वरातिशयेनाहोरात्रमागत्य नवम्यां सूर्योदये भरतस्यायोध्याप्रवेशः । तस्यामेव दशरथसंस्कारः । तदहरारभ्य त्रयोदशदिने वैशाखशुद्धपञ्चम्यां तत्पूर्वदिने च भरतेन राज्ञः श्राद्धकर्मकरणं । षष्ठ्यां तद्देशीयाचारसिद्धं दहनदेशशोधनं । सप्तम्यां मार्गशोधनाय कर्मान्तिकप्रेषणं । कर्मान्तिकैश्च दशमीपर्यन्तं चतुर्दिनं मार्गशोधनं । एकादश्यां भरतस्य रामसकाशं प्रति गमनं । तद्रात्रौ गङ्गातीरे निवासः । द्वादश्यां भरद्वाजाश्रमे । त्रयोदश्यां रामसमागमः । चतुर्दशीपौर्णमासीप्रतिपत्सु चित्रकूटे भरतस्य निवासः । वैशाखबहुलद्वितीयायां भरतस्यायोध्यां प्रति प्रयाणम् । चतुर्थ्यामयोध्याप्रवेशः । इत्येवं सार्धमासे गते वैशाखबहुलपञ्चम्यां रामस्य चित्रकूटान्निर्गमः अत्र्याश्रमप्रवेशश्च । एवमाश्रममण्डलवासेन सह सार्धमासेषु दशसंवत्सरेषु गतेषु अवशिष्टकाले पञ्चवटीवासे तत्र त्रयोदशवर्षेषु गतेषु ततश्चतुर्दशे वर्षे चैत्रमासे सीताहरणम् । वैशाखे सुग्रीवदर्शनम् । आषाढे वालिवधः । आश्वयुजे सैन्योद्योगः । फाल्गुने प्रायोपवेशः । फाल्गुनशुद्धचतुर्दश्यां लङ्कादाहः । फाल्गुनामावास्यायां रावणवधः । चैत्रशुद्धप्रतिपदि रावणसंस्कारादि । द्वितीयायां विभीषणाभिषेकः, सीताप्राप्तिर्देवताप्रस्थानानि च । तृतीयायां लङ्कातो निर्गमः । चतुर्थ्यां किष्किन्धायां वासः । पञ्चम्यां भरद्वाजाश्रमे वासः । अत्र वक्तव्योपपत्तयस्तत्र तत्र प्रदर्शिताः । अस्मिन् प्रकारे हनुमत्सन्निधाने, 'द्वौ मासौ रक्षितव्यौ मे' इति रावणवचनं सीतासान्त्वनपरम् । 'मासादूर्ध्वं न जीविष्ये' इति सीतावचनं तु सम्यक् संगच्छते । मासशब्दस्य वर्तमानमासपरत्वं चासकृदुक्तम् । रावणेन दश मासा गताः अविशिष्टौ द्वौ मासावित्युक्तिर्मधुपानमत्ततयाऽविवेककृता । सीताया मासादूर्ध्वमिति वचनं तु वर्तमानमासपरमिति विवेकः । भरद्वाजाश्रमं प्राप्येत्यनेन महतां स्थानमपि प्राप्यमित्यु-

ती० 'पूर्णेचतुर्दशेवर्षेपञ्चम्यांलक्ष्मणाग्रजः । भरद्वाजाश्रमंप्राप्य' इत्यनेनेदंप्रतिपाद्यते । फाल्गुनपूर्णिमायांसुवेलारोहणं । अत्रप्रमाणं 'ततोस्तमगमत्सूर्यःसन्ध्ययाप्रतिरञ्जितः । पूर्णचन्द्रप्रदीपाचक्षपासमभिवर्तत'इतिवचनं । ततोपरेद्युःकृष्णपक्षप्रथमायांयुद्धस्यप्रारंभः । तस्यामेवरात्रौनागपाशबन्धमोक्षौ । द्वितीयायांवज्रदंष्ट्रस्यवधः । चतुर्थ्यांमकराक्षस्यवधः । वस्तुतस्तुदशम्यामेवकुंभनिकुंभमकराक्षाणांवधः । एकादशीमारभ्यपुनरिन्द्रजितस्त्रिरात्रंयुद्धं । लक्ष्मणेनत्रयोदश्यामिन्द्रजिद्वधः । अत्रचप्रमाणं—'अहोरात्रैस्त्रिभिर्वीरःकथंचिद्विनिपातितः ।' इत्येतद्वचनं । चैत्रशुक्लप्रथमायांरावणस्यसंस्कारः । द्वितीयायांविभीषणस्याभिषेकः । तृतीयायांदेवीसमागमः । 'तांरात्रिमुषितंरामं' इत्युक्तत्वाच्चतुर्थ्यांप्रतिप्रयाणंकिष्किन्धाप्राप्तिश्च । पञ्चम्यांभरद्वाजाश्रमप्राप्तिरिति । अस्यांपञ्चम्यांचतुर्दशवर्षस्संपूर्णः । 'चतुर्दशेहिसंपूर्णेवर्षेऽहनिरघूत्तम । नद्रक्ष्यामियदित्वांतुप्रवेक्ष्यामिहुताशनम् । तथेतिचप्रतिज्ञाय संपरिष्वज्यसादरम्' इत्येतदत्रप्रमाणं । षष्ठ्यांनन्दिग्रामंप्राप्यजटाविशोधनंकृत्वाऽयोध्याप्राप्तिः । सप्तम्यांपुष्यनक्षत्रेश्रीरामचन्द्रस्य पट्टाभिषेकइत्येवंक्रमोवेदितव्यः ॥ १ ॥

सोपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् ॥ शृणोषि कच्चिद्भगवन्सुभिक्षानामयं पुरे ॥
कच्चिच्च युक्तो भरतो जीवन्त्यपि च मातरः ॥ २ ॥
एवमुक्तस्तु रामेण भरद्वाजो महामुनिः ॥ प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् ॥ ३ ॥
पङ्कदिग्धस्तु भरतो जटिलस्त्वां प्रतीक्षते ॥ पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे ॥ ४ ॥
त्वां पुरा चीरवसनं प्रविशन्तं महावनम् ॥ स्त्रीतृतीयं च्युतं राज्याद्धर्मकामं च केवलम् ॥ ५ ॥
पदातिं त्यक्तसर्वस्वं पितुर्वचनकारिणम् ॥ सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम् ॥ ६ ॥
दृष्ट्वा तु करुणा पूर्वं ममासीत्समितिंजय ॥ कैकेयीवचने युक्तं वन्यमूलफलाशिनम् ॥ ७ ॥
सांप्रतं सुसमृद्धार्थं समित्रगणबान्धवम् ॥ समीक्ष्य विजितारिं त्वां मम प्रीतिरनुत्तमा ॥ ८ ॥
सर्वं च सुखदुःखं ते विदितं मम राघव ॥ ९ ॥
यत्त्वया विपुलं प्राप्तं जनस्थानवधादिकम् ॥ ब्राह्मणार्थे नियुक्तस्य रक्षितुः सर्वतापसान् ॥ १० ॥
रावणेन हृता भार्या बभूवेयमनिन्दिता ॥ मारीचदर्शनं चैव सीतोन्मथनमेव च ॥ ११ ॥
कबन्धदर्शनं चैव पम्पाभिगमनं तथा ॥ सुग्रीवेण च ते सख्यं यच्च वाली हतस्त्वया ॥ १२ ॥
मार्गणं चैव वैदेह्याः कर्म वातात्मजस्य च ॥ विदितायां च वैदेह्यां नलसेतुर्यथा कृतः ॥ १३ ॥
यथा वा दीपिता लङ्का प्रहृष्टैर्हरियूथपैः ॥ सपुत्रबान्धवामात्यः सबलः सहवाहनः ॥ १४ ॥
यथा विनिहतः संख्ये रावणो देवकण्टकः ॥ [ यथा च निहते तस्मिन्रावणे देवकण्टके ] ॥
समागमश्च त्रिदशैर्यथा दत्तश्च ते वरः ॥ १५ ॥

क्रम् । नियतः नियतकरणत्रयः ॥ १ ॥ स इत्यादि-सार्धश्लोक एकान्वयः ॥ सुभिक्षानामयं । भिक्ष्यन्त इति भिक्षाः अन्नानि भिक्षाणां समृद्धिः सुभिक्षं । समृद्धावव्ययीभावः । आमयस्याभावोनामयं । प्रसज्य-प्रतिषेधेपि समासस्येष्टत्वात्साधुः । सुभिक्षं चानामयं चेति विग्रहः । अनामयं आरोग्यं । "अनामयं स्यादारोग्यं" इत्यमरः । युक्तः प्रजापालने समाहितः ॥ २ ॥ प्रहृष्टवत् प्रहृष्टं । क्रियाविशेषणं । स्मितपूर्वं । सर्वज्ञोप्यजानान इव पृच्छतीति स्मितं । यद्वा किं भरतः प्रजापालनसंतुष्टो वर्तत इति प्रश्नसारं मत्वा परतन्त्रे तस्मिन् कथमित्थं संभवतीति स्मितकरणं ॥ ३ ॥ अतएव तदनुरूपमुत्तरयति—पङ्केति ॥ स्नानाभावात्पङ्कदिग्धत्वं । स्नानाभावेपि नित्यानुष्ठानं दीक्षितवद्गौणस्नानेन । स्नानाभावे निमित्तमाह—जटिल इति । जटिलः जटावान् । पिच्छादित्वादिल-च् । जटिलानां वारुणस्नानं निषिद्धमिति भावः । "कथंन्वपररात्रेषु सरयूमवगाहते" इत्याद्युक्तिस्तु कादाचित्कस्नानपरत्वेप्युपपद्यते । यद्वा सदाऽनास्तृतभूमिशयनादिना वा तादृशत्वं । एवं व्रतनिष्ठो भरतस्ते पादुके राज्याय पुरस्कृत्य त्वां प्रतीक्षते । त्वदागमनाकाङ्क्षया वर्तत इत्यर्थः । कच्चिच्च युक्तो भरत इत्यस्योत्तरमुक्त्वा जीवन्त्यपि च मातर इत्यस्योत्तरमाह—सर्वं चेति । तव गृहे यद्यदस्ति तत्सर्वं कुशलं क्षेमयुक्तं । जीवन्त्यपि चेति समुच्चाय्य पृष्टाः सर्वे मातृपरिचारकादयो जीवन्तीत्यर्थः ॥ ४ ॥ त्वां पुरेत्यादिश्लोकत्रयमेकं वाक्यं ॥ पुराचीरवसनं पुरातनचीरवसनं। अतो न पूर्वपदेन पौनरुक्त्यं । करुणा दुःखं। परदुःखदुःखित्वं हि करुणा ॥ ५—७ ॥ सांप्रतं इदानीं तु त्वां समीक्ष्य । स्थितस्येति शेषः । प्रीतिः । जातेति शेषः । अनुत्तमेत्यनेन देवकार्यकरणहेतुत्वात्पूर्वमपि काचित्प्रीतिरासीदिति द्योत्यते ॥ ८ ॥ सर्वमित्यर्धं ॥ सुखं पञ्चवटीवासादिकृतं । दुःखं सीताहरणजं ॥ ९ ॥ यत्त्वयेत्यादिसार्धश्लोकषट्कमेकान्वयं। ब्राह्मणार्थे ऋषिजनरक्षणार्थे। नियुक्तस्य तैर्याचितस्य।

[ पा० ] १ ङ. छ. झ. ञ. ट. आज्ञावशत्वेभरतो. २ ख. ङ.—ट. पितृनिर्देशकारिणं. ३ ङ. झ. ट. जनस्थाननिवासिना. ४ च. छ. ञ. तस्योन्मथनमेवच. ५ झ. ट. रावणोबलदर्पितः. ङ. च. छ. ञ. रावणोवरदर्पितः. घ. रावणोलोककण्टकः. ६ इदमर्धं ख. ग. ङ.—ट. पाठेषुदृश्यते.

सर्वं ममैतद्विदितं तपसा धर्मवत्सल ॥ [ संपतन्ति च मे शिष्याः प्रवृत्त्याख्याः पुरीमितः ॥१६॥]
अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर ॥ अर्घ्यमद्य गृहाणेदमयोध्यां श्वो गमिष्यसि ॥ १७ ॥
तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः ॥ बाढमित्येव संहृष्टो धीमान्वरमयाचत ॥ १८ ॥
अकाले फलिनो वृक्षाः सर्वे चापि मधुस्रवाः ॥ फलान्यमृतकल्पानि बहूनि विविधानि च ॥
भवन्तु मार्गे भगवन्नयोध्यां प्रति गच्छतः ॥ १९ ॥
तथेति च प्रतिज्ञाते वचनात्समनन्तरम् ॥ अभवन्पादपास्तत्र स्वर्गपादपसन्निभाः ॥ २० ॥
निष्फलाः फलिनश्चासन्विपुष्पाः पुष्पशालिनः ॥ शुष्काः समग्रपत्रास्ते नगाश्चैव मधुस्रवाः ॥
सर्वतो योजना त्रीणि गच्छतामभवंस्तदा ॥ २१ ॥
ततः प्रहृष्टाः प्लवगर्षभास्ते बहूनि दिव्यानि फलानि चैव ॥
कामादुपाश्नन्ति सहस्रशस्ते मुदान्विताः स्वर्गजितो यथैव ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तविंशत्युत्तरशततमः सर्गः ॥ १२७ ॥

---

## अष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

भरद्वाजाश्रमस्थेनरामेण हनुमन्तंप्रति गुहेस्वागमननिवेदनचोदनयासह नन्दिग्रामगंभरतंप्रति स्वागमननिवेदनादिचोदना ॥ १ ॥ हनुमता गुहभरतयोः श्रीरामसंदेशनिवेदनम् ॥ २ ॥

अयोध्यां तु समालोक्य चिन्तयामास राघवः ॥ चिन्तयित्वा हनूमन्तमुवाच प्लवगोत्तमम् ॥ १ ॥

---

अतएव रक्षितुः खरादिवधमुखेन पालयितुः । तव भार्या हृता बभूवेति यत् तच्चेति योजना । हृता हर्तुमीप्सिता । आशंसायां क्तः । अतो न सीतोन्मथनमित्यनेन पौनरुक्त्यं । वरः मृतवानरजीवनादिः ॥ १०—१६ ॥ वरं दद्मि ददामि । अत्र आश्रमे । अद्य अर्घ्यं पूजां । गृहाणेति संबन्धः ॥ १७ ॥ तस्येत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ बाढमिति प्रतिगृह्य तस्मिन् दिने तत्र पूजामङ्गीकृत्येत्यर्थः । धीमान् अद्यात्र स्थित्वा भरतं प्रति दूतप्रेषणमुचितमिति ज्ञानवानित्यर्थः । मधूनि स्रवन्तीति मधुस्रवाः । गच्छतः ममेति शेषः । मयि गच्छति सतीत्यर्थः । भवन्तु । अत्रेतिकरणं बोध्यं । इति वरमयाचतेति संबन्धः ॥ १८—१९ ॥ तथेति चेत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ योजना योजनानि । "सुपां सुलुक्" इत्यादिना पूर्वसवर्णादेशः । अत्यन्तसंयोगे द्वितीया । गच्छतां वानराणां फलिनश्चासन्निति क्रमेणान्वयः । इदं चोत्तरदिनकार्यं सौकर्याय ऋषिणा दर्शितं ॥ २०—२१ ॥ ते प्रस्थिताः । स्वर्गजितो यथा स्वर्गिण इव ॥ २२ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तविंशत्युत्तरशततमः सर्गः ॥ १२७ ॥

---

अथ भरतं प्रति हनुमत्प्रेषणमष्टाविंशत्युत्तरशततमे—अयोध्यां त्विति ॥ अर्धमेकं वाक्यं । समालोक्य

---

**ति०** इतः मदाश्रमात् । मेशिष्याः प्रवृत्त्याख्याः तवप्रवृत्तिमुदन्तं आचक्षते प्रवृत्त्याख्याः । तथाभूताःसन्तः तवपुरीं अयोध्यां । संपतन्ति । अतस्त्वत्पुरीवृत्तान्तोपिज्ञायतइतिशेषः ॥ १६ ॥ इतिसप्तविंशत्युत्तरशततमस्सर्गः ॥ १२७ ॥

**ति०** पञ्चम्यांचतुर्दशवर्षस्यपूर्णत्वात्तद्दिनेभरद्वाजाश्रमेविलंबस्यप्राप्तत्वाच्चतुर्दशसमाप्तौ यदित्वांनपश्यामितदाहुताशनंप्रवेक्ष्यामीति भरतोक्तेर्भरतस्यस्वागमननिवेदनायहनूमत्प्रेषणंकृतवानित्याह—अयोध्यांत्विति । समालोक्य भरद्वाजाश्रमेविमानादवतरणसमयइ-

[ पा० ] १ क. ख. ङ.—ट. पाठेष्विदमर्धंदृश्यते. २ ख. ङ. च. छ. झ. ट. संहृष्टःश्रीमान्वर. ३ ग. ङ.—ट. योजनास्तिस्रो. ४ ख. ङ. च. छ. झ. ट. मुदेव. ५ अस्यश्लोकस्यस्थाने. क. ख. ङ.—ट. पाठेषु अयोध्यांतुसमालोक्यचिन्तयामास राघवः । प्रियकामःप्रियंरामस्ततस्त्वरितविक्रमः । चिन्तयित्वाततोदृष्टिंवानरेषुन्यपातयत् । उवाचधीमांस्तेजस्वीहनूमन्तंप्लवंगमम् । अयोध्यांत्वरितोगत्वाशीघ्रंप्लवगसत्तम । इत्यर्धपञ्चकंदृश्यते.

जानीहि कच्चित्कुशली जनो नृपतिमन्दिरे ॥ २ ॥
शृङ्गिबेरपुरं प्राप्य गुहं गहनगोचरम् ॥ निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ॥ ३ ॥
[1]श्रुत्वा तु मां कुशलिनमरोगं विगतज्वरम् ॥ भविष्यति गुहः प्रीतः स ममात्मसमः सखा ॥ ४ ॥
अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च ॥ निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ॥ ५ ॥
भरतस्तु त्वया वाच्यः कुशलं वचनान्मम ॥ सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ॥ ६ ॥
हरणं चापि वैदेह्या रावणेन बलीयसा ॥ सुग्रीवेण च [2]संसर्गं वालिनश्च वधं रणे ॥ ७ ॥
मैथिल्यन्वेषणं चैव यथा चाधिगता त्वया ॥ लङ्घयित्वा [3]महातोयमापगापतिमव्ययम् ॥ ८ ॥
[4]उपयानं समुद्रस्य सागरस्य च दर्शनम् ॥ यथा च कारितः सेतू रावणश्च यथा हतः ॥ ९ ॥
वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च ॥ महादेवप्रसादाच्च पित्रा मम समागमम् ॥ १० ॥
उपयातं च मां सौम्य [5]भरतस्य निवेदय ॥ सह राक्षसराजेन [6]हरीणां प्रवरेण च ॥ ११ ॥
एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा ॥ स च ते वेदितव्यः स्यात्सर्वं यच्चापि मां प्रति ॥ १२ ॥
जित्वा शत्रुगणान्रामः प्राप्य चानुत्तमं यशः ॥ उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ १३ ॥
ज्ञेयाश्च सर्वे वृत्तान्ता भरतस्येङ्गितानि च ॥ तत्त्वेन मुखवर्णेन दृष्ट्या [7]व्याभाषणेन च ॥ १४ ॥

---

समालोच्येत्यर्थः। आश्रमस्थस्य तदवलोकनासंभवात्। चिन्तयामास । कर्तव्यमिति शेषः ॥ १ ॥ जानीहीत्यर्धं ॥ नृपतिमन्दिरे जनः मात्रादिः ॥ २ ॥ गहनगोचरं वनचारिणं ॥ ३ ॥ गुहाय निवेदनस्य प्रयोजनमाह—श्रुत्वा त्विति ॥ विगतज्वरं मद्विश्लेषचिन्ताज्वररहितं यथा तथा भविष्यतीति क्रियाविशेषणं । आत्मसमः हीनजातिमनवेक्ष्य प्रेमातिशयेन गुहमिक्ष्वाकुकुलीनममन्यत ॥ ४ ॥ प्रवृत्तिं वृत्तान्तं ॥ ५ ॥ सिद्धार्थं निर्व्यूढपितृवचनपरिपालनरूपप्रयोजनं ॥ ६ ॥ हरणमित्यादिश्लोकपञ्चकमेकान्वयं ॥ रणे सुग्रीववालिनोर्युद्धे । वालिनो वध इत्यर्थः ॥७॥ यथा चेति। महातोयं अव्ययं । आपगापतिं लङ्घयित्वा त्वया सीता यथा अधिगता तथा शंसेत्यन्वयः ॥ ८ ॥ समुद्रस्योपयानं समुद्रं प्रति गमनमित्यर्थः । संबन्धसामान्ये षष्ठी । समीपयानं वा । सागरस्य समुद्रराजस्य ॥ ९ ॥ ब्रह्मणा वरुणेन चेति सहार्थे तृतीया । अनेन महेन्द्रेण वानरसमुत्थापनरूपवरप्रदाने ब्रह्माद्यनुमतिरस्तीति द्योतितं । पित्रा मम समागममित्येतदन्तस्य शंसेति पूर्वेण संबन्धः ॥ १० ॥ उपयातमिति । अन्यथा चतुर्थ्यामेव चतुर्दशवर्षातिक्रमात् सोऽग्निं प्रविशेदिति भावः । सौम्येत्यनेन मन्दं मन्दं कथय । अन्यथा हठान्मदागमनश्रवणे हर्षोऽस्य उन्मस्तको भवेदिति भावः ॥ ११ ॥ त्वमेव राज्यं पालयेति मयोक्ते भरतस्तदङ्गीकरोति न वेति तदाकारस्त्वया ज्ञातव्य इत्याह—एतच्छ्रुत्वेति ॥ एतत् उपयानं । आकारं मुखप्रसादादिकं । मां प्रति यत् इङ्गितचेष्टादिकं ॥ १२ ॥ जित्वा शत्रुगणानित्यादिश्लोकद्वयमेकान्वयं ॥ एतच्छ्लोकान्ते इत्युक्त्वेत्यध्याहर्तव्यं । ज्ञेया इति श्लोकेन पूर्वोक्तमेव विशेष्यते । तत्त्वेनेत्यस्य ज्ञेया इत्यनेन संबन्धः । अत्रापि पूर्ववद्राज्यं पालयेति मदुक्तिं भरतः किमङ्गीकरोतीति परीक्षस्वेतिभावः । अन्यथा भरतप्रकृतेः रामप्रकृतेश्च विरुद्धं स्यात् । यावेवमूचतुः । "न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः" इति "यावन्न चरणौ भ्रातुः

---

तिभावः । सुग्रीवादीनांसम्यक्छिष्टाचारकरणायसुहृष्टरूपतदाकारज्ञानायचपूर्वंहनुमत्प्रेषणं । अतएवपाद्मे पञ्चम्यामेवविसृष्टहनुमत्प्रवेशसमयेभरतवर्णनमेवंकृतं । 'अग्निप्रवेशेसोद्योगकालेभ्रातुरनागमात् । न्यवेदयत्तदातस्मैश्रीरामागमनोत्सवम्' इति । किंच प्रियकामइति । सुग्रीवादीनांप्रियकामः अयोध्यायांसर्वेतत्प्रियपूरणकामः । तेषांप्रियंयथाभवतितथाचिन्तयामास कर्तव्यजातमितिशेषः ॥ १ ॥

[ पा० ] १ क. श्रुत्वासमां. २ क. घ. ङ. च. ज.—ट. संवादं. ३ क. तमक्षोभ्यमापगापतिं. ४ ख. उपासनं. ५ क. च—ट. भरताय. ६ क. ङ. झ. ञ. ट. हरीणामीश्वरेणच. ७ ङ. च. छ. झ. ञ. ट. व्याभाषितेनच.

सर्वकामसमृद्धं हि हस्त्यश्वरथसंकुलम् ॥ पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः ॥ १५ ॥
संगत्या भरतः श्रीमान्राज्यार्थी चेत्स्वयं भवेत् ॥ प्रशास्तु वसुधां कृत्स्नामखिलां रघुनन्दनः ॥१६॥
तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर ॥ यावन्न दूरं याताः स्म क्षिप्रमागन्तुमर्हसि ॥ १७ ॥
इति प्रतिसमादिष्टो हनुमान्मारुतात्मजः ॥ मानुषं धारयन्रूपमयोध्यां त्वरितो ययौ ॥ १८ ॥
अथोत्पपात वेगेन हनुमान्मारुतात्मजः ॥ गरुत्मानिव वेगेन जिघृक्षन्भुजगोत्तमम् ॥ १९ ॥
लङ्घयित्वा पितृपथं भुजगेन्द्रालयं शुभम् ॥ गङ्गायमुनयोर्मध्यं संनिपातमतीत्य च ॥ २० ॥
शृङ्गिबेरपुरं प्राप्य गुहमासाद्य वीर्यवान् ॥ स वाचा शुभया हृष्टो हनुमानिदमब्रवीत् ॥ २१ ॥
सखा तु तव काकुत्स्थो रामः सत्यपराक्रमः ॥ सहसीतः ससौमित्रिः स त्वां कुशलमब्रवीत् ॥२२॥
पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः ॥ भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवम् ॥ २३ ॥
एवमुक्त्वा महातेजाः संप्रहृष्टतनूरुहः ॥ उत्पपात महावेगो वेगवानविचारयन् ॥ २४ ॥
सोपश्यद्रामतीर्थं च नदीं वालुकिनीं तथा ॥ गोमतीं तां च सोपश्यद्भीमं सालवनं तथा ॥

पार्थिवव्यञ्जनान्वितौ ॥ शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति " इति च ॥ १३—१४ ॥ ननु किं परीक्षणीयं सर्वस्यापि राज्याधिपत्यकाङ्क्षित्वादित्याशङ्क्याह—सर्वेति ॥ पितृपितामहशब्दौ कुलपरम्परोपलक्षकौ । पितृपितामहेभ्य आगतं । उत्तरपदवृद्धिरार्षी । नावर्तयेत् नाकर्षेत् । कस्य भरतादन्यस्यैवेत्यर्थः ॥ १५ ॥ एवं भरतेङ्गिते ज्ञाते तव किं कर्तव्यमित्यत्राह—संगत्येति । संगत्या अस्मत्संगत्या । यद्यपि पूर्वं सर्वात्मना न राज्यपालनमङ्गीकरोमीत्युक्तं । तथापि चतुर्दशवर्षपर्यन्तं मद्विरहातुरतया मद्दर्शनजहर्षप्रकर्षातिरेकेण त्वमभिषिक्तो भवेति मदुक्तिमङ्गीकरिष्यति किमिति भावः । भरतः मत्प्रीत्यर्थं पूर्वं राज्यभारमङ्गीकृतवान् खलु । स्वयं श्रीमान् स्वाभाविकपारतन्त्र्यश्रीमान् । भवेदित्याशंसायां लिङ् । प्रशास्तु वसुधां कृत्स्नां । तातो मदभिषेकसंभ्रमं न लब्धवान् । अहं तु भरताभिषेकमहोत्सवमनुभवेयं । अतएव ह्ययोध्याकाण्डेपि शनैर्जगाम सापेक्ष इत्युक्तं । भरताभिषेकदर्शनसापेक्ष इत्यर्थः । अखिलां खिलरहितां । समृद्धजनामित्यर्थः । कथमसौ भरणक्षम इत्यत्राह—रघुनन्दन इति । त्रैलोक्यभरणक्षमकुलोद्भूत इत्यर्थः ॥ १६ ॥ बुद्धिं मत्संनिधाने कथंचिद्राज्यमङ्गीकरिष्यतीति बुद्धिं व्यवसायं सर्वात्मना नाङ्गीकरिष्यतीति व्यवसायं च ज्ञात्वा अङ्गीकरिष्यति चेदस्मादेशाद्यावद्दूरं न याताः स्म तावदागन्तुमर्हसि । अन्यथा नागच्छेति भावः । अत एव हनुमानपि तस्य व्यवसायं ज्ञात्वा नागतवानिति ज्ञेयं । केचित्तु भरतभावज्ञोपि रामः सर्वात्मना सुरक्तोपि राज्ञा परीक्षणीय इति लोके राजनीतिप्रवर्तनायैवमतिशङ्कावचनमुक्तवान् । वस्तुतः स्वस्य झटिति गमने भरतस्य हर्ष उन्मस्तको भवेदिति । तस्मात्सत्त्वाय हनुमन्तं प्रेषितवान् । तदाशयज्ञो हनुमानपि रामागमनमुक्त्वा भरतेन सहैवागतवानित्याहुः ॥ १७ ॥ प्रतिसमादिष्टः प्रतिकूलं समादिष्टः । अहृदयं समादिष्ट इत्यर्थः । ययौ यातुमुद्युक्तः ॥१८॥ अथ उद्योगानन्तरं । वेगेन जिघृक्षन्निवेत्यन्वयः ॥१९॥ लङ्घयित्वेत्यादिश्लोकद्वयमेकान्वयं ॥ पितृपथं स्वपितृपथं । वायुमार्गमित्यर्थः । भुजगेन्द्रालयमिति गङ्गायमुनासंगमविशेषणं ॥ २०—२२ ॥ पञ्चमीं पञ्चमीसंबन्धिनीं । अद्य रजनीं एतां रजनीं । उषित्वा । निर्गतमिति शेषः । भरद्वाजाभ्यनुज्ञातं । प्रातरिति शेषः । अद्यैव अचिरेणैव ॥ २३ ॥ संप्रहृष्टतनूरुहः । सकललोकानन्दकारिरामप्रत्यागमनं मया श्रावयितव्यं लब्धमित्यस्माद्धेतोरिति भावः । महावेगः महावेगस्वभावः । वेगवान् तादात्विकवेगवान् । अविचारयन् मार्गस्थवनगिरिनदीसौन्दर्यादिकमगणयन्निति भावः ॥ २४ ॥ सोपश्यदित्यादिसार्धश्लोकमेकं वाक्यं ॥

स० संगत्या चिरकालपरिचयेन कैकेयीसंगत्यावा । यदिकैकेयीवत्स्वयमपिराज्येनार्थीभवेत्तर्हि सएववसुधांशास्तु वयंयत्रक्वापितपसाकालंनेष्यामइतिशेषः ॥ १६ ॥ इत्यष्टाविंशत्युत्तरशततमस्सर्गः ॥ १२८ ॥

[ पा० ] १ क.—ट. राज्येनार्थीस्वयं. २ ङ. च. झ. ञ. ट. यमुनयोर्भीमंसमतीत्यसमागमं. क. ख. घ. ज. यमुनयोर्भीमंसंनिपातं. ३ ग.—छ. झ. ञ. ट. महावेगाद्वेगवान्. ज. महावेगोहनुमान्. ४ क. घ. ज. तांनदींवालुकींतदा. ग. तांनदींवालुकांतदा. ५ क. ख. ङ. छ. झ. ञ. ट. वरूथिनीमतींचैवभीमं.

प्रजाश्च बहुसाहस्राः स्फीताञ्जनपदानपि ॥ २५ ॥
स गत्वा दूरमध्वानं त्वरितः कपिकुञ्जरः ॥ आससाद द्रुमान्फुल्लान्नन्दिग्रामसमीपगान् ॥ २६ ॥
स्त्रीभिः सपुत्रैर्वृद्धैश्च रममाणैरलंकृतान् ॥ सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ॥ २७ ॥
क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ॥ ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥ २८ ॥
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम् ॥ फलमूलाशिनं दान्तं तापसं धर्मचारिणम् ॥ २९ ॥
समुन्नतजटाभारं वल्कलाजिनवाससम् ॥ नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् ॥ ३० ॥
पादुके ते पुरस्कृत्य शासन्तं वै वसुन्धराम् ॥ चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ॥ ३१ ॥
उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः ॥ बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः ॥ ३२ ॥
न हि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम् ॥ परि भोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलम् ॥३३॥
तं धर्ममिव धर्मज्ञं देहवन्तमिवापरम् ॥ उवाच प्राञ्जलिर्वाक्यं हनुमान्मारुतात्मजः ॥ ३४ ॥
वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् ॥ अनुशोचसि काकुत्स्थं स त्वां कुशलमब्रवीत् ॥ ३५ ॥
प्रियमाख्यामि ते देव शोकं त्यक्ष्यसि दारुणम् ॥ अस्मिन्मुहूर्ते भ्रात्रा त्वं रामेण सह सङ्गतः ॥३६॥
निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् ॥ उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ ३७ ॥

रामतीर्थं परशुरामतीर्थं । तां प्रसिद्धां । प्रजाः कोसलजनपदस्थाः ॥२५॥ स गत्वेत्यादिश्लोकद्वयमेकान्वयं ॥ फुल्लान् फुल्लपुष्पान् । स्त्रीभिः सपुत्रैर्वृद्धैश्च । स्त्रीबालवृद्धाविशेषेण सर्वेषामानन्दकरत्वादिति भावः । सुराधिपस्य उपवने नन्दनवने चैत्ररथे च स्थितान् द्रुमान् यथा तत्सदृशानित्यर्थः ॥ २६—२७ ॥ क्रोशमात्रे त्वित्यादिश्लोकपञ्चकमेकान्वयं ॥ क्रोशमात्रे घटिकाद्वयमात्रे घटिकाद्वयगन्तव्यभूमौ । क्रोशलक्षणमुक्तं ज्यौतिषदर्पणे—"यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोङ्गुलैः षड्गुणितैश्चतुर्भिः । हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषां" इति । दीनं रामादर्शनेन ॥ २८ ॥ दान्तं बहिरिन्द्रियनिग्रहशालिनं ॥ २९ ॥ समुन्नतजटाभारमिति ॥ पूर्वं जटावत्त्वोक्तिः अत्र तद्भारस्य समुन्नतत्वोक्तिरिति वैषम्यं । वल्कलाजिनवाससमित्युत्तरीयोक्तिः । अतश्चीरकृष्णाजिनाम्बरमित्यनेन न पुनरुक्तिः । नियतं नियतवाचं । भावितात्मानं ध्यातात्मानमिति मनोनियमोक्तिः ॥३०॥ ते पूर्वं रामेण दत्ते । चातुर्वर्ण्यस्य चतुर्वर्णरूपस्य । स्वार्थे ष्यञ् । लोकस्य जनस्य ॥ ३१ ॥ युक्तैः सन्नद्धैः । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः ॥३२॥ भ्रातृवियोगाद्भरतस्य वल्कलादिधारणमस्तु अमात्यादीनां तत् किंनिमित्तमित्याशङ्क्य तत्र कारणमाह—न हीति ॥ राजपुत्रं भरतं परिवर्जयित्वा भोक्तुं समीचीनवस्त्राभरणादीन्यनुभवितुं न व्यवस्यन्ति व्यवसायं न कुर्वन्ति । "अपपरी वर्जने" इति परेः कर्मप्रवचनीयसंज्ञा । आचार्याः प्राहुः परि परितो वर्तमाना अपि पौराः । भरतं भोक्तुं अनुभवितुं । द्रष्टुमिति यावत् । न व्यवस्यन्ति व्यवसायं न कुर्वन्ति । तद्दर्शने निराशा भवन्तीत्यर्थः । तत्र हेतुमाह—राजपुत्रमिति । रामविरहानन्तरक्षणे मृतस्य पुत्रः खल्वयं । अद्य रामानागमने किमयमस्माभिर्लभ्यत इति भावः । हेत्वन्तरमाह—धर्मवत्सलं धर्मार्थतया स्वासत्यागे पितृसदृशमित्यर्थः । चतुर्दशे वर्षे पूर्णेपि रामागमनादर्शनात् प्राणत्यागे व्यवसितं भरतमालोकयतां पौराणां खेदातिशयोनेन श्लोकेन सूच्यते ॥ ३३ ॥ देहवन्तमपरं धर्ममिव स्थितं । द्वितीय इवशब्दो वाक्यालंकारे ॥ ३४—३५ ॥ संगतः भविष्यसीति शेषः । अत्रापरिचितत्वाद्भरतं हनुमान्नावन्दत । यद्वा प्राञ्जलिरिति पदं वन्दनपूर्वकाञ्जलिपरं । अथवा भरतदशादर्शनेन प्रियाख्याने क्षणविलम्बेपि प्राणहानिशङ्कया सति कुड्य इति न्यायेन वन्दनोद्देश्यवस्तुनि शीर्यमाणे किं वन्दनेनेति तदुज्जीवकं प्रियाख्यानमेवाकरोत् । यद्वा तद्दशादर्शनेन स्वरूपं विसस्मार ॥ ३६ ॥ समृद्धार्थः संपूर्णमनोरथः ॥ ३७ ॥

[ पा० ] १ क. ङ. च. झ. साहस्रीः. २ क. ग. च. ज. समीपजान्. ३ ङ. च. झ. सपुत्रैःपौत्रैश्चरममाणैःस्वलंकृतैः. ४ ङ. च. छ. झ. ञ. ट. प्रशासन्तं. ५ ङ. च. छ. झ. ञ. ट. धर्मवत्सलाः. ६ घ. ङ. झ. ञ. ट. देहबन्धं. ७ घ. वीर.

लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ॥ सीता समग्रा रामेण महेन्द्रेण यथा शची ॥ ३८ ॥
एवमुक्तो हनुमता भरतो भ्रातृवत्सलः ॥ पपात सहसा हृष्टो हर्षान्मोहं जगाम ह ॥ ३९ ॥
ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः ॥ हनुमन्तमुवाचेदं भरतः प्रियवादिनम् ॥ ४० ॥
अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य संभ्रमात् ॥ सिषेच भरतः श्रीमान्विपुलैरास्रबिन्दुभिः ॥४१॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ॥ प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ॥४२॥
गवां शतसहस्रं च ग्रामाणां च शतं परम् ॥ सुकुण्डलाः शुभाचारा भार्याः कन्याश्च षोडश ॥४३॥
हेमवर्णाः सुनासोरूः शशिसौम्याननाः स्त्रियः ॥ सर्वाभरणसंपन्नाः संपन्नाः कुलजातिभिः ॥४४॥
निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदद्भुतोपमम् ॥
प्रहर्षितो रामदिदृक्षयाऽभवत्पुनश्च हर्षादिदमब्रवीद्वचः ॥ ४५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

---

## एकोनत्रिंशदुत्तरशततमः सर्गः ॥ १२९ ॥

हनुमता भरतप्रश्नेनतंप्रति रामस्यनगरनिर्गमप्रभृतिपुनर्भरद्वाजाश्रमागमनावधिकालमध्यवृत्ततदीयसर्ववृत्तान्तनिवेदनम् ॥ १ ॥

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ॥ शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ॥ एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २ ॥
राघवस्य हरीणां च कथमासीत्समागमः ॥ कस्मिन्देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥ ३ ॥
स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ॥ आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४ ॥
यथा प्रव्राजितो रामो मातुर्दत्तो वरस्तव ॥ यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५ ॥

---

समग्रा संपूर्णमनोरथा । उपयात इति शेषः ॥३८॥ हृष्टः पपात हर्षान्मोहं जगामहेत्यनेन वार्ताश्रवणमात्रेणैतादृशावस्थे भरते झटिति रामागमने कावस्था भवेदिति ऋषिर्विस्मयते ॥३९-४०॥ भरतः कपिमालिङ्ग्य । अशोकजैः शोकजभिन्नैः । प्रीतिमयैः आनन्दजैरित्यर्थः । विपुलैः गुरुभिः ॥४१॥ देवो वेत्यादिश्लोकत्रयमेकान्वयं ॥ परिगृहीतमनुष्यदेहेपि हनुमति तेजोविशेषात्संशयः । अनुक्रोशात् दयया प्रियं ब्रुवतस्ते प्रियाख्यानस्य प्रियवचनस्य पारितोषिकत्वेन गवादिकं ददामि । भार्याः भरणार्हाः । कन्याः अनूढाःस्त्रियः ॥ ४२—४४ ॥ रामदिदृक्षया उपलक्षितो भरतः । अद्भुता उपमा यस्य तत् अद्भुतोपमं । निरुपममित्यर्थः । तद्रामगमनं । कपिप्रवीरस्य कपिप्रवरात् निशम्य । नटस्य शृणोतीतिवत्षष्ठी । प्रहर्षितोभवत् ॥ ४५ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

---

बहूनीत्यादिश्लोकद्वयमेकान्वयं ॥ बहूनि वर्षाणि वनं गतस्येति संबन्धः । वर्षशतादपीत्यत्रेतिकरणं द्रष्टव्यं । वर्षशतात्परमिति शेषः ॥ १—२ ॥ राघवस्येति । अत्र वानरसमागमप्रश्नेन पूर्वं भरतः सामान्यतो वानरसेनासन्नाहं श्रुतवानिति गम्यते । किमाश्रित्य किं प्रयोजनमवलम्ब्य ॥ ३ ॥ बृस्यां तपस्विसमुचितासने । "व्रतिनामासनं बृसी" इत्यमरः ॥ ४ ॥ वक्ष्यमाणवृत्तान्ते प्रामाण्यसिद्धये तत्पूर्ववृत्तं संग्रहेणानुवदति—यथेत्यादिना ॥ अत्र यथेत्यस्य येन प्रकारेणेत्यर्थः । मातुः मात्रे राज्येन निमन्त्रित इत्यन्व-

---

[ पा० ] १ क. ख. ग. ङ.—ट. भरतःकैकयीसुतः. २ ङ. झ. ट. मोहमुपागमत्. ३ क. भवतःप्रियं. ४ ग.—ट. तदाद्भुतोपमं. ५ क. घ. च. ञ. भातिमां. ६ ङ. झ. ट. दत्तौवरौतव.

यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात्प्रभो ॥ त्वयाऽयोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम् ॥६॥
चित्रकूटं गिरिं गत्वा राज्येनामित्रकर्शन ॥ निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७ ॥
स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् ॥ आर्यस्य पादुके गृह्य यथाऽसि पुनरागतः ॥ ८ ॥
सर्वमेतन्महाबाहो यथावद्विदितं तव ॥ त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९ ॥
अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् ॥ परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ॥ १० ॥
तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगायुतम् ॥ प्रविवेशाथ विजनं सुमहद्दण्डकावनम् ॥ ११ ॥
तेषां पुरस्ताद्बलवान्गच्छतां गहने वने ॥ निनदन्सुमहानादं विराधः प्रत्यदृश्यत ॥ १२ ॥
तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् ॥ निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३ ॥
तत्कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ ॥ सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४ ॥
शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः ॥ अभिवाद्य मुनीन्सर्वाञ्जनस्थानमुपागमत् ॥ १५ ॥
ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता ॥ १६ ॥
ततो रामेण संदिष्टो लक्ष्मणः सहसोत्थितः ॥ प्रगृह्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ १७ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ हतानि वसता तत्र राघवेण महात्मना ॥ १८ ॥
एकेन सह संगम्य रणे रामेण सङ्गताः ॥ अह्नश्चतुर्थभागेन निःशेषा राक्षसाः कृताः ॥ १९ ॥
महाबला महावीर्यास्तपसो विघ्नकारिणः ॥ निहता राघवेणाजौ दण्डकारण्यवासिनः ॥ २० ॥
राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे ॥ २१ ॥
[ दूषणं चाग्रतो हत्वा त्रिशिरास्तदनन्तरम् ॥ ] ततस्तेनार्दिता बाला रावणं समुपागता ॥ २२ ॥
रावणानुचरो घोरो मारीचो नाम राक्षसः ॥ लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ २३ ॥
अथैनमब्रवीद्रामं वैदेही गृह्यतामिति ॥ अहो मनोहरः कान्त आश्रमो नो भविष्यति ॥ २४ ॥
ततो रामो धनुष्पाणिर्धावन्तमनुधावति ॥ स तं जघान धावन्तं शरेणानतपर्वणा ॥ २५ ॥
अथ सौम्य दशग्रीवो मृगं याते तु राघवे ॥ लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा ॥ २६ ॥

---

यः । अमित्रकर्शनेत्यनेन राज्यकरणसामर्थ्ये स्वस्यसत्यपि ज्येष्ठानुवृत्त्यर्थं निमन्त्रित इति गम्यते ॥५—९॥ समुद्भ्रान्तेति । अपूर्वपुरुषदर्शनेनेति भावः । परिद्यूनं परितप्तं ॥ १० ॥ तत् प्रसिद्धं । हस्तिभिः वनगजैः मृदितं ॥११—१२॥ निखाते अवटे । प्रक्षिपन्ति स्मेति बहुवचनेन सीतयाऽपि तत्र किंचित्साहाय्यं कृतमिति गम्यते ॥१३—१५॥ ततः पश्चादित्यर्धं ॥१६॥ कर्णनासमित्यत्र प्राण्यङ्गत्वादेकवद्भावः ॥ १७—१८ ॥ संगताः पार्थक्येन विना सर्वे राक्षसाः परस्परं मिलिताः सन्तः । एकेन रामेण सह संगम्यः निःशेषाः कृता इत्यन्वयः । अह्नश्चतुर्थभागेनेत्यत्रअह्नश्चतुर्थो यामः । तस्य भागः त्रिपादघटिकान्यूनार्धांशः तेन । अन्यथा अर्धाधिकमुहूर्तेनेति पूर्वोक्तविरोधः प्रसज्येत ॥ १९ ॥ महाबला इति श्लोके तपसो विघ्नकारिण इत्युक्त्या राक्षसहननं तपोविघ्नशान्त्यर्थमिति दर्शितं ॥ २० ॥ राक्षसा इत्यर्धं ॥ २१ ॥ तत इत्यर्धं ॥ बाला मूर्खा । "मूर्खेऽर्भकेपि बालः स्यात्" इत्यमरः ॥ २२—२३ ॥ एनं रामं । गृह्यतां मृग इति शेषः ॥ २४—२५ ॥ निष्क्रान्त इति । क्रूरत्वान्निष्क्रान्तिकारणानुक्तिः । अतएवाह काम-

---

स० कर्णश्चनासाचकर्णनासं । पुनःकर्णश्चनासाचकर्णनासं । कर्णनासंचकर्णनासंचकर्णनासे । अतःप्राण्यङ्गताप्रयुक्तैकवद्भावाभावः कथमितिशङ्कानवकाशः ॥ १७ ॥ शि० अयंमृगः नः आश्रमः खेलनाश्रयोभविष्यति ॥ २४ ॥

[ पा० ] १ ङ. च. छ. झ. ट. मृगाकुलं. २ इदमर्धं क. ख. ङ.—ट. पाठेषुदृश्यते. ख. दूषणश्चहतोमूर्खस्त्रिशिराः. ३ क. ख. घ. च. छ. ज. ट. सारामब्रवीद्दृष्ट्वावैदेही. ङ. झ. ञ. सारामब्रवीद्दृष्ट्वावैदेही. ४ ङ. झ. ट. अयंमनोहरः ५ ङ.—ट. धनुष्पाणिर्मृगंतमनु.

जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ॥ त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् ॥ २७ ॥
प्रगृह्य सीतां सहसा जगामाशु स रावणः ॥ २८ ॥
ततस्त्वद्भुतसंकाशाः स्थिताः पर्वतमूर्धनि ॥ सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः ॥
ददृशुर्विस्मितास्तत्र रावणं राक्षसाधिपम् ॥ २९ ॥
[ [1]ततः शीघ्रतरं गत्वा तद्विमानं मनोजवम् ॥ आरुह्य सह वैदेह्या पुष्पकं स महाबलः ॥ ]
प्रविवेश ततो लङ्कां रावणो लोकरावणः ॥ ३० ॥
तां सुवर्णपरि[3]क्रान्ते शुभे महति वेश्मनि ॥ प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः ॥ ३१ ॥
तृणवद्भाषितं तस्य तं च नैर्ऋतपुङ्गवम् ॥ अचिन्तयन्ती वैदेही अशोकवनिकां गता ॥ ३२ ॥
न्यवर्तत ततो रामो मृगं हत्वा महावने ॥ निवर्तमानः काकुत्स्थोऽदृष्ट्वा गृध्रं [4]प्रविव्यथे ॥ ३३ ॥
गृध्रं हतं [5]ततो दग्ध्वा रामः प्रियसखं पितुः ॥ मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः ॥
गोदावरीमन्वचरद्वनोद्देशांश्च पुष्पितान् ॥ ३४ ॥
आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् ॥ ३५ ॥
ततः कबन्धवचनाद्रामः सत्यपराक्रमः ॥ ऋश्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ॥ ३६ ॥
तयोः समागमः पूर्वं प्रीत्या हार्दो व्यजायत ॥ भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा ॥ ३७ ॥
इतरेतरसंवादात्प्रगाढः प्रणयस्तयोः ॥ ३८ ॥
[6]रामस्य बाहुवीर्येण स्वराज्यं प्रत्यपादयत् ॥ वालिनं समरे हत्वा महाकायं महाबलम् ॥ ३९ ॥
सुग्रीवः स्थापितो राज्ये सहितः सर्ववानरैः ॥ रामाय प्रतिजानीते राजपुत्र्याश्च मार्गणम् ॥ ४० ॥
आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ॥ दश कोट्यः प्लवङ्गानां सर्वाः प्रस्थापिता दिशः ॥ ४१ ॥

न्दकः—" प्रियं पथ्यं च तथ्यं च वदेद्धर्मार्थमेव च । अश्राव्यमयशस्यं च परोक्षे कटु चोत्सृजेत् " इति ॥ २६ ॥ तरसा बलात्कारेण । ग्रहः अङ्गारक इति यावत् ॥ २७—२८ ॥ ततस्त्वित्यादिसार्धश्लोक एकान्वयः ॥ अद्भुतसंकाशाः अद्भुताकाराः ॥२९—३० ॥ सुवर्णपरिक्रान्ते सुवर्णानुलिप्ते ॥ ३१ ॥ तस्य रावणस्य । भाषितं तृणवत् । मत्वेति शेषः । तं च नैर्ऋतपुङ्गवं अचिन्तयन्ती वैदेही अशोकवनिकां गता । तत्रैव स्थितेत्यर्थः ॥ ३२ ॥ अदृष्ट्वेति च्छेदः । सीतामिति शेषः । सीतां गृध्रं चादृष्ट्वा प्रविव्यथ इत्यन्वयः ॥३३॥ गृध्रमित्यादिसार्धश्लोक एकान्वयः॥ ततो वैदेहीं मार्गमाणो राघवः पितुः प्रियसखं हतं गृध्रं दग्ध्वा गोदावरीं तद्वनोद्देशांश्चान्वचरत् । पुष्पितानित्यनेन पुष्पलोभेन किं सीताऽत्र गतेति मतिर्व्यज्यते ॥ ३४ ॥ आसेदतुरित्यर्धमेकं वाक्यं ॥ राघवाविति शेषः ॥३५—३६॥ तयोः रामसुग्रीवयोः । पूर्वं दर्शनात्प्रागेव । हार्दः समागमः मानसः संबन्धः । व्यजायत । मनसा परस्परं सख्यमाचकाङ्क्षाते इत्यर्थः । सुग्रीवस्य कुतः सख्यापेक्षेत्यत्र आह—भ्रात्रेति ॥ ३७ ॥ इतरेतरसंवादात् अन्योन्यप्रयोजनकथनात् प्रणयः । प्रगाढः अतिशयितः । अभूत् ॥ ३८ ॥ रामस्येति । अत्र सुग्रीव इति शेषः । सुग्रीवः रामस्य बाहुवीर्येण वालिनं हत्वा स्वराज्यं प्रत्यपादयत् समपादयदिति संबन्धः ॥३९॥ राज्ये स्थापितः सुग्रीवः सर्ववानरैः सहितोभूत् । रामायेति । सुग्रीव इति शेषः । प्रतिजानीते प्रतिज्ञातवान् ॥ ४० ॥ आदिष्टाः मार्गणायादिष्टाः दिशः प्रस्थापिताश्च ॥ ४१ ॥

ति० सुवर्णपरिष्कारे सुवर्णप्राकारे ॥ ३१ ॥ स० रामः स्वराज्यं स्वेनद्रव्येणसहितंचतद्राज्यंचेतितत् । राज्ञिमृतेसमरेस्वस्वामिकमितिस्वराज्यंवा । प्रत्यपादयत् दत्तवान् ॥ ३९ ॥

[ पा० ] १ ख. ङ. च. छ. झ. ञ. ट. पाठेष्विदंपद्यंदृश्यते. २ ङ. च. झ. ट. राक्षसेश्वरः. ३ झ. परिष्कारे. ४ ङ. झ. ञ. ट. सविव्यथे. ५ ङ. च. झ. ञ. ट. तदादृष्ट्वारामःप्रियतरं. ६ ङ. च. छ. झ. ट रामःस्वबाहु.

तेषां नो विप्रकृष्टानां विन्ध्ये पर्वतसत्तमे ॥ भृशं शोकाभितप्तानां महान्कालोऽत्यवर्तत ॥ ४२ ॥
भ्राता तु गृध्रराजस्य संपातिर्नाम वीर्यवान् ॥ समाख्याति स्म वसतिं सीताया रावणालये ॥४३॥
सोहं शोकपरीतानां दुःखं तज्ज्ञातिनां नुदन् ॥ आत्मवीर्यं समास्थाय योजनानां शतं प्लुतः ॥४४॥
तत्राहमेकामद्राक्षमशोकवनिकां गताम् ॥ कौशेयवस्त्रां मलिनां निरानन्दां दृढव्रताम् ॥ ४५ ॥
तया समेत्य विधिवत्पृष्ट्वा सर्वमनिन्दिताम् ॥ अभिज्ञानं च मे दत्तमर्चिष्मान्स महामणिः ॥४६॥
[ मां दृष्ट्वा मैथिली हृष्टा प्रशशंसे च जीवितम् ॥ ४७ ॥
रावणस्य मनःकान्तामशोकवनिकां तदा ॥ विध्वंसयित्वा समरे हत्वा राक्षसपुङ्गवान् ॥ ४८ ॥
लङ्कां च भस्मसात्कृत्वा प्रहृष्टेनान्तरात्मना ॥] अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥४९॥
मया च पुनरागम्य रामस्याक्लिष्टकर्मणः ॥ अभिज्ञानं मया दत्तमर्चिष्मान्स महामणिः ॥ ५० ॥
श्रुत्वा तु मैथिलीं हृष्टस्त्वाशशंसे च जीवितम् ॥ जीवितान्तमनुप्राप्तः पीत्वाऽमृतमिवातुरः ॥५१॥
उद्योजयिष्यन्नुद्योगं दध्रे कामं वधे मनः ॥ जिघांसुरिव लोकान्ते सर्वाँल्लोकान्विभावसुः ॥ ५२ ॥
ततः समुद्रमासाद्य नलं सेतुमकारयत् ॥ अतरत्कपिवीराणां वाहिनी तेन सेतुना ॥ ५३ ॥
प्रहस्तमवधीन्नीलः कुम्भकर्णं तु राघवः ॥ लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥ ५४ ॥
स शक्रेण समागम्य यमेन वरुणेन च ॥ महेश्वरस्वयंभूभ्यां तथा दशरथेन च ॥ ५५ ॥
तैश्च दत्तवरः श्रीमानृषिभिश्च समागतः ॥ सुरर्षिभिश्च काकुत्स्थो वराँल्लेभे परन्तपः ॥ ५६ ॥
स तु दत्तवरः प्रीत्या वानरैश्च समागतः ॥ पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५७ ॥
तं गङ्गां पुनरासाद्य वसन्तं मुनिसन्निधौ ॥ अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५८ ॥

तेषां स्थापितानां विप्रकृष्टानां बहुकालविलम्बितानां । यद्वा स्वयंप्रभाबिले प्रविष्टतया दूरं गतानां ॥४२-४३॥ ज्ञातिनामिति नकारान्तत्वमार्षं । प्लुतः समुद्र इति शेषः ॥४४॥ तत्र रावणालये ॥ ४५ ॥ अनिन्दितां सीतां । सर्वं वृत्तान्तं पृष्ट्वा । प्रच्छिर्द्विकर्मकः । पृष्ट्वा स्थिताय मे मह्यं । सः प्रसिद्धः । महामणिः अभिज्ञानं । दत्तं ॥४६—४९॥ क्रियाभेदान्मयाशब्दद्वयं प्रयुक्तं॥५०॥ जीवितमाशशंसे ततः पूर्वं जीविते निराशः स्थित इति व्यक्तं । जीवितान्तं प्राप्तः, आतुरः अमृतं पीत्वा यथा जीवितमाशास्ते तथेत्यर्थः ॥ ५१ ॥ उद्योगमुद्योजयिष्यन् उद्योगं कुर्वन् । ओदनपाकं पचतीतिवत् । विभावसुः अग्निः ॥ ५२ ॥ नलं सेतुमकारयत् नलेन सेतुमकारयत् ॥ ५३—५७ ॥ पुनर्गङ्गामासाद्य मुनिसन्निधौ भरद्वाजसमीपे अध्यवसन्तं तं अविघ्नं यथा भवति तथा श्वः पुष्ययोगेन द्रष्टुमर्हसि । पुष्ययोगलाभार्थं अद्य गङ्गातीरे रामः स्थित इति

**स०** यद्वा ज्ञातं भावेक्तः ज्ञानं संपातिमुखतएषामस्तितेज्ञातिनस्तेषां । **शि०** तज्ज्ञातिनां संपातिवचनेनसीतास्थितिज्ञानवतां । दुःखं अतिदुर्गमलङ्कायां सीतायाःस्थितत्वेनसीतादर्शनाशक्यताज्ञानजनितखेदंनुदन् । एतेनज्ञातिनामित्यत्रदीर्घाभावआर्षइतिभट्टाद्युक्तिश्चिन्त्या ॥ ४४ ॥ **रामानु०** मेमया समहामणिः रामदत्ताभिज्ञानस्याङ्गुलीयकरूपत्वेपितद्युक्तमणिप्राधान्यान्मणिशब्दप्रयोगः ॥ ४६ ॥ **स०** आतुरोरोगी । जीवितान्तं आसन्नप्राणविनाशमनुप्राप्तः अमृतं मृतिहरमौषधंपीत्वायथाजीवनं लब्धमितिशंसतितथेत्यर्थः ॥ ५१ ॥ **ति०** उद्युज्यतेजयोऽनेनेत्युद्योगं बलं । तत् उद्योजयिष्यन् प्रोत्साहयिष्यन् । **स०** लङ्कावधे तत्संहारे । लङ्कामवतीतितदवोरावणः तस्य धं बन्धनंतस्मिन्वा । 'धंबन्धने'इतिविश्वः ॥ ५२ ॥ **ति०** मुनिसंनिधावध्यवसन्तंश्वोद्रष्टुमर्हसि । आश्विनशुक्लचतुर्दश्यामश्विनीतद्वर्षे इतिषष्ठ्यांपुष्यस्यसंभवः । पूर्णिमायामश्विन्यामप्येकर्क्षक्षयेणवा ॥ ५८ ॥ इत्येकोनत्रिंशदुत्तरशततमः सर्गः ॥ १२९ ॥

**[ पा० ]** १ ङ.—ट. वसतींसीतांरावणमन्दिरे. २ क. ङ.—ट. अभिज्ञानंमयादत्तंरामनामाङ्कुलीयकं. ३ मांदृष्ट्वेत्यादयः प्रहृष्टेनान्तरात्मनेत्यन्ताः श्लोकाः क. च. ज. पाठेषुदृश्यन्ते. ४ ग.—छ. झ. ञ. ट. तांमैथिलीं. ५ ख. पीत्वौषधमिवा. ६ क. ख. ग. ङ.—ञ. लङ्कावधेमनः. ७ ङ. च. छ. झ. ट. समागतैः. ८ क. घ. ज. मुनिभिश्च. ९ क. ग. ङ.—ञ. तांगङ्गां.

ततस्तु सत्यं हनुमद्वचो महन्निशम्य हृष्टो भरतः कृताञ्जलिः ॥
उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः ॥ ५९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकोनत्रिंशदुत्तरशततमः सर्गः ॥ १२९ ॥

## त्रिंशदुत्तरशततमः सर्गः ॥ १३० ॥

हनुमतोरामागमनंश्रुतवताभरतेन शत्रुघ्नंप्रत्ययोध्यामार्गशोधननगरालंकरणगणिकागणतूर्यसेवादिसहितनागरिकजनप्रत्युद्गमनादिचोदनचोदना ॥ १ ॥ कौसल्यादिभिः सकलनागरिकैश्चसह सवाद्यघोषंप्रत्युद्गतवताभरतेन रामागमनानुपलंभखेदेन हनुमन्तंप्रति तत्रहेतुप्रश्ने तेनतंप्रति तदागमनचिह्ननिवेदनसमयसमागतविमानप्रदर्शनम् ॥ २ ॥ पुष्पकावलोकनहर्षेणसमुद्घुष्यत्सुपौरनिकरेषु भरतेचदूरादभिवन्दमाने रामेण स्वाज्ञयाधरणितलमवतीर्णेपुष्पके भरतस्यसमारोपणम् ॥ ३ ॥ तथा पुनर्निजचरणप्रणामिनोभरतस्य सहर्षंपरिष्वङ्गः ॥ ४ ॥ भरतेन लक्ष्मणसमागमपूर्वकं सीताचरणप्रणामः ॥ ५ ॥ शत्रुघ्नेन सीतारामलक्ष्मणचरणप्रणामः ॥ ६ ॥ रामेण कौसल्यादिमातृप्रभृतिपादाभिवादनम् ॥ ७ ॥ रामेण पुनर्विमानेनभरताश्रममेत्य कुबेरंप्रति पुष्पकप्रेषणम् ॥ ८ ॥

श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः ॥ हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥ १ ॥
दैवतानि च सर्वाणि चैत्यानि नगरस्य च ॥ सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥ २ ॥
सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा ॥ सर्वे वादित्रकुशला गणिकाश्चापि संघशः ॥
अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम् ॥ ३ ॥
भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ॥ विष्टीरनेकसाहस्राश्चोदयामास वीर्यवान् ॥ ४ ॥
समीकुरुत निम्नानि विषमाणि समानि च ॥ स्थलानि च निरस्यन्तां नन्दिग्रामादितः परम् ॥ ५ ॥
सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा ॥ ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वशः ॥ ६ ॥
समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ॥ शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति ॥ ७ ॥
स्रग्दामभिर्मुक्तपुष्पैः सुगन्धैः पञ्चवर्णकैः ॥ राजमार्गमसंबाधं किरन्तु शतशो नराः ॥ ८ ॥

भावः ॥ ५८ ॥ सत्यं अविरुद्धभङ्ग्या सत्यत्वेन ज्ञातं । मनोरथ इत्यनन्तरमितिकरणं द्रष्टव्यं ॥५९॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनत्रिंशदुत्तरशततमः सर्गः ॥ १२९ ॥

परमानन्दं परमानन्दकरं । वच इति शेषः ॥१॥ चैत्यानि चतुष्पथमण्डपान् । अर्चन्तु अर्चयन्तु ॥२॥ सूता इत्यादिसार्धश्लोक एकान्वयः ॥ सूताः स्तुतिशीलाः । वैतालिकाः बन्दिनः ॥ ३ ॥ भरतस्येत्यादिश्लोकपञ्चकमेकान्वयं ॥ विष्टीः भृतिं विना कर्मकरान् । नन्दिग्रामादितः परं । अयोध्यापर्यन्तमित्यर्थः। अन्ये पुरुषाः हिमवच्छीतेन वारिणा सिञ्चन्तु । ततः सेचनानन्तरं लाजादिभिः किरन्तु । रथ्याः समुच्छ्रितपताकाः कुर्वन्त्विति शेषः । सूर्यस्योदयनं प्रति सूर्यस्योदयमारभ्य । यावत्सूर्योदयमिति वा । स्रजः मालिकाः तासां दामभिः पङ्क्तिभिः । मुक्तपुष्पैः असूत्रबद्धपद्मकुवलयादिभिश्च वेश्मानि शोभयन्तु । सुगन्धैः पञ्चवर्णकैः पञ्चविधवर्णद्रव्यचूर्णैः । राजमार्गे किरन्तु । राजमार्गे वर्णद्रव्यचूर्णैः नानाविधलतापद्मादिचित्ररेखाः कुर्वन्त्वित्यर्थः ॥ ४—८ ॥

स० परमानन्दं परमआनन्दोजन्यत्वेनयस्यतत् वचइतिशेषः ॥ १ ॥ ति० विरलपुष्पबन्धाः स्रजः । निबिडपुष्पबन्धं दाम ।

[ पा० ] १ ख. ङ. च. छ. झ. ञ. ट. ततस्सवाक्यैर्मधुरैर्हनूमतोनिशम्य. २ ज. देवालयाश्चसर्वाणिचैत्यानिनगराणिच. ३ ज. शशिनिभाननं. ४ घ. च. छ. स्रग्दाममुक्तपुष्पैश्चसुवर्णरजतैरपि. ख. ङ. झ. ट. स्रग्दाममुक्तपुष्पैश्चसुवेर्णैः. ज. स्रग्दाममुक्तपुष्पैश्चसुगन्धैः.

राजदारास्तथाऽमात्याः सैन्याः सेनागणाङ्गनाः ॥ ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः॥९॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः ॥ अशोको मन्त्रपालश्च सुमन्त्रश्चापि निर्ययुः ॥
मत्तैर्नागसहस्रैश्च शातकुम्भविभूषितैः ॥ १० ॥
अपरे हेमकक्ष्याभिः सगजाभिः करेणुभिः ॥ निर्ययुस्तुरगाक्रान्तै रथैश्च सुमहारथाः ॥ ११ ॥
शक्त्यृष्टिप्रासहस्तानां सध्वजानां पताकिनाम् ॥ तुरगाणां सहस्रैश्च मुख्यैर्मुख्यनरान्वितैः ॥
पदातीनां सहस्रैश्च वीराः परिवृता ययुः ॥ १२ ॥
ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः ॥ कौसल्यां प्रमुखे कृत्वा सुमित्रां चापि निर्ययुः ॥१३॥
कैकेय्या सहिताः सर्वा नन्दिग्राममुपागमन् ॥ १४ ॥
कृत्स्नं च नगरं तत्तु नन्दिग्राममुपागमत् ॥ १५ ॥
अश्वानां खुरशब्देन रथनेमिस्वनेन च ॥ शङ्खदुन्दुभिनादेन संचचालेव मेदिनी ॥ १६ ॥
द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैः सनैगमैः ॥ माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः ॥ १७ ॥
शङ्खभेरीनिनादैश्च बन्दिभिश्चाभिवन्दितः ॥ आर्यपादौ गृहीत्वा तु शिरसा धर्मकोविदः ॥ १८ ॥
पाण्डुरं छत्रमादाय शुक्लमाल्योपशोभितम् ॥ शुक्ले च वालव्यजने राजार्हे हेमभूषिते ॥ १९ ॥
उपवासकृशो दीनश्चीरकृष्णाजिनाम्बरः ॥ भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः ॥
प्रत्युद्ययौ ततो रामं महात्मा सचिवैः सह ॥ २० ॥
समीक्ष्य भरतो वाक्यमुवाच पवनात्मजम् ॥ २१ ॥
कच्चिन्न खलु कापेयी सेव्यते चलचित्तता ॥ न हि पश्यामि काकुत्स्थं राममार्यं परन्तपम् ॥

अथ परेद्युः प्रातः रामभक्त्यतिशयेन सर्वेषां निर्गमनं दर्शयति—राजदारा इत्यादिना ॥ श्रेणीमुख्याः श्रेणीमुखाः । तथा गणाः । श्रेणी श्रेणय इति यावत् । अत्र श्लोके निर्ययुरिति वक्ष्यमाणमनुषज्यते ॥ ९ ॥ अमात्यान्विशिष्य दर्शयति—धृष्टिरित्यादिना ॥ सार्धश्लोक एकान्वयः । अत्र धृष्ट्यादयो गजारूढा ययुरित्यर्थः ॥ १० ॥ अपरे राजान्तरङ्गाः पुरुषाः करेणुभिर्निर्ययुः ॥ ११ ॥ शक्तीत्यादिसार्धश्लोक एकान्वयः ॥ उक्तविशेषणानां तुरगाणां सहस्रैः पदातीनां सहस्रैश्च परिवृता वीरा ययुः ॥ १२ ॥ प्रमुखे अग्रे ॥१३॥ कैकेय्येति । अत्र भरतेनोपेक्षया-नाहूतत्वात् पश्चान्निर्गत्य कैकेय्या नन्दिग्रामप्राप्तिकाले साहित्यमुच्यते ॥ १४ ॥ कृत्स्नमित्यर्धं । अत्र नगरशब्देन तत्रत्यजना लक्ष्यन्ते ॥ १५ ॥ संचचाल कम्पितेव ॥ १६ ॥ अथोक्तपरिवारैः सह भरतस्य नन्दिग्रामान्निर्गमं दर्शयति—द्विजातिमुख्यैरित्यादिभिः सार्धैश्चतुर्भिः श्लोकैः ॥ ततो महात्मा भरतः सर्वैर्वृतः प्रत्युद्ययाविति वाक्यार्थः । सनैगमैः सवणिग्भिः । "वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमरः । मन्त्रिभिः वसिष्ठादिभिः । सचिवैः सुमन्त्रादिभिः । आर्यपादौ रामपादुके । हेमभूषिते हेमदण्डभूषिते । तत्पूर्वं श्रवणादिहर्षमागतः । श्रवणात्पूर्वं तु नास्य हर्षोभूदित्यर्थः ॥ १७—२० ॥ समीक्ष्येत्यर्धं ॥ समीक्ष्य समन्ताद्रामगमनं निरीक्ष्य ॥ २१ ॥ कच्चिदित्यादि सार्धश्लोक एकान्वयः ॥ कच्चिदिति प्रश्ने ।

मुक्तपुष्पाणि बन्धनरहितानि पुष्पाणि ॥ ८ ॥ स० सेनाङ्गनागणाः सपतिकयोषिज्जनाः सुवासिन्यइतियावत् । सेनोपयुक्तानपत्याङ्गनासंघाइतिवा । 'वंध्याभार्याबहुप्रदोराजा' इत्यादेः । सेनागणाः अङ्गनागणा इतिवा ॥ ९ ॥ स० रामपादौ तच्चिह्नितत्वात्तत्त्वेनव्यपदेशः पादुके ॥ १८ ॥ स० प्रत्युद्ययौ अनेनेदृशींदशामापन्नस्यापिभरतस्यतस्यागमनवार्तैवश्रमशामिकेतिद्योत्यते ॥ २० ॥ स० 'यावन्नदूरयातोस्मिक्षिप्रमागन्तुमर्हसि'इत्यत्र भारतेचवनपर्वणि 'लक्षयित्वेङ्गितंसर्वंप्रियंतस्मैनिवेद्यच । वायुपुत्रेपुनः

[ पा० ] १ अयंश्लोकः क.—ट. पाठेषु अभिनिर्यान्तुरामस्येत्यर्धात्पूर्वंदृश्यते. २ क.—ट. सेनाङ्गनागणाः. ३ ङ. च. झ. ञ. ट. सध्वजैःसुविभूषितैः. ४ क. ङ. च. छ. झ. मुख्यतरान्वितैः. ५ ठ. रामपादौ.

कच्चिन्न खलु दृश्यन्ते वानराः कामरूपिणः ॥ २२ ॥
अथैवमुक्ते वचने हनुमानिदमब्रवीत् ॥ अर्थं[1] विज्ञापयन्नेव भरतं सत्यविक्रमम् ॥ २३ ॥
सदाफलान्कुसुमितान्वृक्षान्प्राप्य मधुस्रवान् ॥ भरद्वाजप्रसादेन मत्तभ्रमरनादितान् ॥ २४ ॥
तस्य चैष वरो दत्तो वासवेन परन्तप ॥ ससैन्यस्य तथाऽऽतिथ्यं कृतं सर्वगुणान्वितम् ॥ २५ ॥
निस्स्वनः श्रूयते भीमः प्रहृष्टानां वनौकसाम् ॥ मन्ये वानरसेना सा नदीं तरति गोमतीम् ॥२६॥
रजोवर्षं समुद्भूतं पश्य वालुकिनीं प्रति ॥ मन्ये सालवनं रम्यं लोलयन्ति प्लवङ्गमाः ॥ २७ ॥
तदेतद्दृश्यते दूराद्विमलं चन्द्रसन्निभम् ॥ विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितम् ॥
रावणं बान्धवैः सार्धं हत्वा लब्धं महात्मना ॥ २८ ॥
तरुणादित्यसंकाशं विमानं रामवाहनम् ॥ धनदस्य प्रसादेन दिव्यमेतन्मनोजवम् ॥ २९ ॥
एतस्मिन्भ्रातरौ वीरौ वैदेह्या सह राघवौ ॥ सुग्रीवश्च महातेजा राक्षसश्च विभीषणः ॥ ३० ॥
ततो हर्षसमुद्भूतो निस्स्वनो दिवमस्पृशत् ॥ स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तिते ॥ ३१ ॥
रथकुञ्जरवाजिभ्यस्तेऽवतीर्य महीं गताः ॥ ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे ॥ ३२ ॥
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ॥ स्वागतेन यथार्थेन ततो राममपूजयत् ॥ ३३ ॥
मनसा ब्रह्मणा सृष्टे विमाने भरताग्रजः ॥ रराज पृथुदीर्घाक्षो वज्रपाणिरिवापरः[2] ॥ ३४ ॥
ततो विमानाग्रगतं भरतो भ्रातरं तदा ॥ ववन्दे प्रयतो[3] रामं मेरुस्थमिव भास्करम् ॥ ३५ ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ॥ हंसयुक्तं महावेगं निष्पपात[4] महीतले ॥ ३६ ॥

---

सेव्यते । त्वयेति शेषः । तत्र हेतुमाह—न हीति । रामस्य दूरागमनेपि नासीरचारिणः कपयो दृश्येरन् तेषां कामरूपित्वेन स्वरूपेणादर्शनेपि रूपान्तरेण वा दृश्येरन् । तदपि नास्तीत्यर्थः ॥ २२ ॥ अर्थं विलम्बहेतुं । " अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु "इति वैजयन्ती ॥ २३ ॥ भरद्वाजप्रसादेन सदाफलानिति संबन्धः । प्राप्य वानराः हृष्यन्तीति च शेषः ॥२४॥ ससैन्यस्य रामस्य वासवेन एष वरो दत्तः अकालफलित्ववरो दत्तः । तथा सर्वगुणान्वितं आतिथ्यं मधुस्रवत्वरूपं भरद्वाजेन कृतं । अतोऽकालफलित्वं मधुस्रवत्वं च वनस्य युक्तमित्यर्थः ॥ २५ ॥ एवं विलम्बहेतुमुक्त्वा समीपागमनचिह्नं दर्शयति—निस्स्वन इति ॥ इदानीं वानरसेना गोमतीं नदीं तरतीति मन्ये । यस्मात् भीमो निस्स्वन इति भावः ॥ २६ ॥ ततोपि सन्निकर्षमाह—रज इति ॥ समुद्भूतं रजोवर्षं पश्य । तस्माद्वालुकिनीं नदीं प्रति यातीति मन्ये ॥ क्षिप्रं वानरसेनाया अनागमने हेतुमाह—मन्य इति ॥ तस्मात्तस्याः विलम्बः ॥ २७ ॥ विमानं तु दृश्यत इत्याह—तदेतदिति ॥ पुष्पकं विमानं पुष्पकाख्यं विमानम् ॥ २८ ॥ दिव्यं मनोजवं तरुणादित्यसंकाशं रामवाहनमेतद्विमानं । प्रसादेन धनदस्य ब्रह्मप्रसादेन धनदस्य लब्धमित्यर्थः । " परेण तपसा लेभे यत्कुबेरः पितामहात् " इति सुन्दरकाण्डोक्तेः ॥ २९ ॥ एतस्मिन्निति ॥ आसत इति शेषः ॥ ३०—३२ ॥ यथार्थेन स्वागतेन चतुर्दशे वर्षे पूर्णे अवश्यमागमिष्यामीति प्रतिज्ञानुसारिणा स्वागमनेनेत्यर्थः । अपूजयत् अश्लाघयत् ॥ ३३—३६ ॥

---

प्राप्तेनन्दिग्राममुपागमत् ' इत्युक्तेः पाद्मेपि ' पुनरागत्यकाकुत्स्थंहनुमान्तसर्वमब्रवीत्' इत्युक्तेश्चमध्येपुनारामंगत्वोक्त्वाचभरतरीतिं पुनर्हनुमान्भरतमुपागतइतिकथा 'कच्चिन्नखलुकापेयी' इत्यतःपूर्वमनुसंधेया । कापेयी कपिसंबन्धिनीचलचित्तता । नसेव्यतेकश्चित् । कुतस्तवशङ्केत्यतआह—नहीति । पश्चादायातुनश्चार्यः किंकपयोपिनोपयाताःपुरतइतिपृच्छति—**कच्चिदिति** ॥ २२ ॥ **ती०** मनसाब्रह्मनिर्मितं विश्वकर्मणामनसाब्रह्मार्थंनिर्मितं । **ति०** ब्रह्मनिर्मितं ब्रह्मणा स्रष्टृत्वसाम्याद्विश्वकर्मणा ॥ २८ ॥

**[ पा० ]** १ ङ. झ. ञ. ट. अर्थ्यं. २ ख. ग. ङ. च. छ. झ. ञ. रिवामरः. ३ ख. घ. ङ. च. ज.—ट. प्रणतो. ४ क. ख. ग. च.—ट. निपपात.

आरोपितो विमानं तद्भरतः सत्यविक्रमः ॥ राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥ ३७ ॥
तं समुत्थाप्य काकुत्स्थश्चिरस्याक्षिपथं गतम् ॥ अङ्के भरतमारोप्य मुदितः परिषस्वजे ॥ ३८ ॥
ततो लक्ष्मणमासाद्य वैदेहीं[1] चाभ्यवादयत् ॥ अभिवाद्य[2] ततः प्रीतो भरतो नाम चाब्रवीत् ॥३९॥
सुग्रीवं केकयीपुत्रो जाम्बवन्तं तथाऽङ्गदम् ॥ मैन्दं च द्विविदं नीलमृषभं परिषस्वजे ॥ ४० ॥
सुषेणं च नलं चैव गवाक्षं गन्धमादनम् ॥ शरभं पनसं चैव भरतः परिषस्वजे ॥ ४१ ॥
ते कृत्वा मानुषं रूपं वानराः कामरूपिणः ॥ कुशलं पर्यपृच्छंस्ते प्रहृष्टा भरतं तदा ॥ ४२ ॥
अथाब्रवीद्राजपुत्रः सुग्रीवं वानरर्षभम् ॥ परिष्वज्य महातेजा भरतो धर्मिणां वरः ॥ ४३ ॥
त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव पञ्चमः ॥ सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम् ॥ ४४ ॥
विभीषणं च भरतः सान्त्ववाक्यमथाब्रवीत्[3] ॥ दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करम् ॥४५॥
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ॥ सीतायाश्चरणौ पश्चाद्विनयादभ्यवादयत्[4] ॥ ४६ ॥

आरोपित इति । अत्र भरतस्य विमानारोपणं सर्वेषां प्रदर्शनार्थमिति बोध्यं ॥ ३७—३८ ॥ लक्ष्मणमासाद्य कृतनमस्कारं लक्ष्मणमालिङ्गनेन संभाव्य । इदं च लक्ष्मणस्य कनिष्ठत्वात् । लक्ष्मणेन चिकीर्षितो नमस्कारो रामसन्निधौ भरतेन प्रतिषेधित इति चाहुः । वैदेहीं चाभ्यवादयत् । चकारो रामनमस्कारं समुच्चिनोति । "न संख्ये भरतानुजः" इत्युक्तेः । "सीतामादाय गच्छ त्वमग्रतो भरताग्रज" इत्यत्र बहुव्रीहिरित्युक्तं । न च वैपरीत्यं शङ्क्यम् । 'पुष्ये जातस्तु भरतः, सार्पे जातौ तु सौमित्री' इति जन्मक्रमोक्तेः । पायसप्रदाने विवाहे च प्राथम्यं तत्र परिहृतं । लक्ष्मणासादनानन्तरं सीतानमस्काराभिधानात् सीता तारादिभिः सह रामसमीप एव किंचिदन्यत्र स्थितेत्यवगम्यते ॥ ३९—४१ ॥ मानुषं रूपं कृत्वा स्थिता इति शेषः ॥ ४२—४६ ॥

ति० लक्ष्मणमासाद्य वन्दमानंलक्ष्मणंपरिष्वङ्गादिनासंभाव्य । 'अन्येद्युःपाञ्चजन्यात्माकैकेय्यांभरतोऽभवत् । तदन्येद्युःसुमित्रायामनन्तात्माचलक्ष्मणः । सुदर्शनात्माशत्रुघ्नोद्वौजातौयुगपत्प्रिये ।' इतिपाद्मेशिवोक्तेः । वैदेहीं अभ्यवादयत् अभ्यवन्दत् । परेतु—यद्यपिलक्ष्मणोभरतात्कनिष्ठोवयसा । स्पष्टंचेदंजन्मप्रकरणे । तथापिज्येष्ठानुवर्तनेनस्वापेक्षयाऽधिकगुणत्वेनस्वव्यवहारेण ज्येष्ठानुवृत्तिरेवंकर्तव्येतिभरतंप्रत्युपदेशदानेनचगुरुत्वबुद्ध्यातस्यनतिरुचितैव । किंच कौसल्यायैप्रथमंदत्तपायसांशजत्वाल्लक्ष्मणस्य ज्येष्ठत्वंततोहिकैकेय्यैपायसार्धदानंतदंशजश्चशत्रुघ्नइतिसएवभरतात्कनिष्ठः । अतएववैदेहींचेतिचकारः स्वरसतःसंगच्छते । अतएवशत्रुघ्नकृतोलक्ष्मणनमस्कारउपपद्यते । तयोर्युगपदुत्पन्नत्वादित्याहुः । स० ततः रामनमनानन्तरं । लक्ष्मणं आसाद्य प्राप्य । सीतांचासाद्यनामच भरतोऽहंभोअभिवादयामीतिस्वनामाब्रवीत् । अथाभ्यवादयत् ननाम । अत्रसंप्रदायद्वयं । तथाहि । भरतोज्येष्ठः कनिष्ठोलक्ष्मणइति वैपरीत्येनचेति । लक्ष्मणआसाद्यस्वयंतेनसत्कृतस्तमालिङ्ग्य अथवैदेहीमभ्यवादयत् । 'अन्येद्युः पाञ्चजन्यात्माकैकेय्यांभरतोभवत् । तदन्येद्युः सुमित्रायामनन्तात्मासलक्ष्मणः । सुदर्शनात्माशत्रुघ्नोद्वौजातौयुगपत्प्रिये' इतिपाद्मेशिववचनात् । 'ततोदाशरथिर्वीरोधर्मज्ञोलोकविश्रुतः । भरतोलक्ष्मणश्चैवशत्रुघ्नश्चमहाबलः' इतिकूर्मपुराणेलक्ष्मणात्प्राग्भरतग्रहणाच्चात्रापितत्रतत्रभरतज्यैष्ठ्यस्यस्पष्टप्रतिभानाच्चभरतज्यैष्ठ्यंकेचिन्मन्वते । अन्येतु लक्ष्मणंवैदेहींचासाद्याभ्यवादयदित्यन्वयेविनामूलपीडांलक्ष्मणज्यैष्ठ्यावगतेरुदाहृतपुराणादेस्तदन्येद्युरित्यस्यएतदन्यत्वंतस्यैवतदन्यत्वमेतस्येतितत्पूर्वेदिनस्यापितत्परेद्युश्शब्दवाच्यतासंभवात् । एतावद्राघवकीर्तिहेतुत्वात्कैकेय्यास्तत्पुत्रत्वेनप्रथमतउक्तिसंभवाच्च । पायससंविभागेनापिलक्ष्मणज्यैष्ठ्यस्यैवसंभवद्युक्तिकत्वात् । भरतस्यादितोग्रहणंतुक्काचित्कमितिबहुलस्थललक्ष्मणप्रागुक्तिपर्यावर्तनचतुरैर्भरतज्यैष्ठ्यवादिभिरनायासेनसमाधातुंशक्यंनवयंयतामहेतत्रेतिपायसस्योदरप्रवेशविवक्षयायुगपदित्युक्त्युपपत्तेरितिचमन्यन्ते । अत्रवक्तव्यं । प्रकरणानुरोधेनास्माभिःपूर्वंव्याख्यातमनुसन्धेयम् । शि० भरतोलक्ष्मणमासाद्य अभ्यवादयत् लक्ष्मणेनप्रणाममकारयत् । हेतुमतिणिच् । अथवैदेहीमासाद्य अभ्यवादयत् अवन्दत । अत्रस्वार्थेणिच् । उभयार्थलाभस्तुशब्दावृत्त्या ॥ ३९ ॥ ति० पञ्चमोभ्राता भ्रातृविषयकपञ्चत्वसंख्यापूरणः । सौहृदात् तत्पूर्वकोपकारात् ॥ ४४ ॥

[ पा० ] १ क.—ङ. छ. झ. ट. वैदेहींचपरंतपः. २ ङ.—ट. अथाभ्यवादयत्प्रीतो. ३ ज. सान्त्वयन्वाक्यमब्रवीत्. ४ क. घ. ज. पश्चाद्ववन्देविनयान्वितः. ङ. च. छ. झ. ञ. ट. वीरोविनयादभ्यवादयत्.

रामो मातरमासाद्य विषण्णां शोककर्शिताम् ॥ जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ॥४७॥
अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ॥ स मातृश्च ततः सर्वाः पुरोहितमुपागतम् ॥४८॥
स्वागतं ते महाबाहो कौसल्यानन्दवर्धन ॥ इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् ॥ ४९ ॥
तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः ॥ व्याकोशानीव पद्मानि ददर्श भरताग्रजः ॥ ५० ॥
पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् ॥ चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥
अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ॥ ५१ ॥
एतत्ते रक्षितं राजन्राज्यं निर्यातितं मया ॥ अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ॥ ५२ ॥
यस्त्वां पश्यामि राजानमयोध्यां पुनरागतम् ॥ अवेक्षतां भवान्कोशं कोष्ठागारं पुरं बलम् ॥
भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥ ५३ ॥
तथा ब्रुवाणं भरतं दृष्ट्वा तं भ्रातृवत्सलम् ॥ मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः ॥ ५४ ॥
ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः ॥ ययौ तेन विमानेन ससैन्यो भरताश्रमम् ॥ ५५ ॥
भरताश्रममासाद्य ससैन्यो राघवस्तदा ॥ अवतीर्य विमानाग्रादवतस्थे महीतले ॥ ५६ ॥
अब्रवीच्च तदा रामस्तद्विमानमनुत्तमम् ॥ वह वैश्रवणं देवमनुजानामि गम्यताम् ॥ ५७ ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ॥ उत्तरां दिशमागम्य जगाम धनदालयम् ॥ ५८ ॥
[ विमानं पुष्पकं दिव्यं संगृहीतं तु रक्षसा ॥ अगमद्धनदं वेगाद्रामवाक्यप्रचोदितम् ] ॥ ५९ ॥

पुरोहितस्यात्मसमस्य राघवो बृहस्पतेः शक्र इवामराधिपः ॥
निपीड्य पादौ पृथगासने शुभे सहैव तेनोपविवेश राघवः ॥ ६० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिंशदुत्तरशततमः सर्गः ॥ १३० ॥

---

मनो मातुः प्रसादयन्निति पूर्वं त्वद्वाक्यं नाश्रौषमिति त्वया मनस्तापो न कार्य इत्येवं प्रसन्नामकरोदित्यर्थः ॥ ४७ ॥ यशस्विनीं । रावणजयस्य तन्मूलत्वात् । सर्वैः प्रशस्यमानामित्यर्थः । पुरोहितं वसिष्ठं । अभिवाद्येत्यनुषज्यते । अभिवाद्योपागमदित्यन्वयः ॥ ४८—५१ ॥ एतत्त इत्यादिसार्धश्लोकद्वयमेकान्वयं ॥ हे राजन् मया रक्षितं न्यासत्वेन पालितं एतद्राज्यं ते निर्यातितं तुभ्यं निवेदितं । कोष्ठागारं धान्यशाला । दशगुणत्वं रामनिर्गमनकालिककोशापेक्षया ॥ ५२—५३ ॥ मुमुचुरिति । स्वकुलीनेष्वेतादृशभ्रातृवृत्त्यदर्शनादिति भावः ॥ ५४ ॥ भरताश्रमं नन्दिग्रामं ॥ ५५—५६ ॥ गम्यतामित्यनन्तरमितिकरणं बोध्यं ॥ ५७ ॥ दिशमागम्य दिशमुद्दिश्य ॥ ५८—५९ ॥ आत्मसमस्य स्वानुरूपस्य । पृथगासने तेन सहैवोपविवेश । पृथगासने युगपदे-

---

**रामानु०** कैकेय्यायशस्विनीमितिविशेषणंदेवकार्यहेतुभूतत्वादृषिःप्रायुङ्क्त । **ति०** यशस्विनीं अस्यामनोदार्ढ्येनराजानरकात्तारितः । देवाब्रह्मर्षयश्चपरमंसुखंप्राप्ताः । रामस्यचयशोजातं । अतएषायशस्विन्येव । **स०** यशस्विनीं भरतरूपसत्पुत्रप्रसवित्रीतिकीर्तिमतीं । 'सूत्वातुभरतंनैषागच्छेतनिरयानिति ।' इत्यादेः । स्वयशस्साधनीभूतेतियशस्विनीतिवा ॥ ४८ ॥ **ति०** पुरोहितस्येति । वसिष्ठपुत्रस्यसुयज्ञस्येत्यर्थः । आत्मसमस्येति पाठान्तरं । ब्रह्मज्ञत्वादितिभावः । वसिष्ठस्येत्यर्थइतितीर्थः ॥ ६० ॥ इतित्रिंशदुत्तरशततमःसर्गः ॥ १३० ॥

**[ पा० ]** १ ङ. झ. ञ. ट. विवर्णां. २ क. ग. ङ. च. झ. ञ. ट. प्रहर्षयन्. ३ ज. तदासर्वाःपुरोहितमुपागमत्. ४ ङ. च. छ. एतत्तेसकलंराज्यंन्यासंनिर्यातितं. ५ ङ. च. छ. झ. ञ. ट. दिशमुद्दिश्य. ६ ख. ग. ङ. च. छ. झ. ञ. ट. पाठेष्वयं श्लोकोदृश्यते. ७ ङ. झ. ट. स्यात्मसखस्य. ८ क. ग. ङ. च. छ. झ. ट. वीर्यवान्.

# एकत्रिंशदधिकशततमः सर्गः ॥ १३१ ॥

भरतेनरामंप्रति हेतूक्तिपूर्वकंराज्यस्वीकारप्रार्थना ॥ १ ॥ तत्प्रार्थनासफलीकृतवतारामेण भरतलक्ष्मणाभ्यांसह जटाशोधनमाङ्गलिकाभ्यङ्गस्नानालंकरणादिकरणपूर्वकं भरतप्रेर्यमाणरथारोहणेन पौरनारीनरनिकरैर्मानुषवेषधारिभिर्वानरतन्नारीनिकरैरप्यनुगम्यमानेन राजोपचारैरुपचर्यमाणेनचसताऽयोध्याप्रवेशेन राजवीथीपरिक्रमणेनदशरथगृहप्रवेशः ॥ २ ॥ वामदेवादिमहर्षिभिस्सहितेनवसिष्ठेन श्रीसीतयासहश्रीरामभद्रस्य भद्रतररत्नपीठोपवेशनपूर्वकं नानामणिगणखचितसुवर्णघटपूर्णहनुमदादिसमानीतनदीसमुद्रशुभसलिलैः पट्टाभिषेकः ॥ ३ ॥ रामेण निजराज्याभिषेकोत्सवे ब्राह्मणादिभ्योनानामणिगणादिवितरणम् ॥ ४ ॥ सुग्रीवादीनां यथार्हसंमानम् ॥ ५ ॥ सीतया हनुमते रामानुमत्यास्वकण्ठस्थहारप्रदानम् ॥ ६ ॥ श्रीरामेण विभीषणसुग्रीवादीनांयथार्हसंमाननेनस्वस्वावासप्रेषणपूर्वकं भरतस्ययौवराज्याभिषेकः ॥ ७ ॥ श्रीरामेणाश्वमेधादियजनपूर्वकं सुखेनप्रजापरिपालनम् ॥ ८ ॥

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः[1] ॥ बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १ ॥
पूजिता मामिका माता दत्तं राज्यमिदं मम ॥ तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २ ॥
धुरमेकाकिना न्यस्तामृषभेण बलीयसा ॥ किशोरवद्गुरुं भारं न वोढुमहमुत्सहे ॥ ३ ॥
वारिवेगेन महता भिन्नः[2] सेतुरिव क्षरन् ॥ दुर्बन्धनमिदं[3] मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४ ॥
गतिं खर इवाश्वस्य हंसस्येव च वायसः ॥ नान्वेतुमुत्सहे राम[4] तव मार्गमरिन्दम ॥ ५ ॥

---

वोपविविशतुरित्यर्थः ॥ ६० ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिंशदुत्तरशततमः सर्गः ॥१३०॥

एवं पुष्पकं धनदाय प्रेषयित्वा वसिष्ठेन च समागम्य भरतानुज्ञां विना नायोध्या प्रवेष्टव्येति तात्पर्येण नन्दिग्राम एवासनोपविष्टे रामे निविष्टेषु च पौरवर्गेषु सन्निहितासु च मातृषु तादात्विकसूक्ष्मेङ्गितदर्शननिपुणो भरतः स्वहृदयमग्रजाय निवेदयति—शिरस्यञ्जलिमित्यादिना ॥ शिरस्यञ्जलिमाधायेत्यनेन पूर्वकृता प्रपत्तिः स्मार्यते। अनन्यगतिकत्वसूचिका मुद्रा ह्यञ्जलिः। कैकेय्यानन्दवर्धन इत्यनेन भरतवचने कैकेयीसन्तोषो मुखप्रसादादिनाऽवगम्यत इति द्योत्यते ॥ १ ॥ रामस्य राज्यपरिग्रहे अपरिहार्यं हेतुं दर्शयति—पूजितेति ॥ मामिका मत्संबन्धिनी माता पूजिता। राज्यपरित्यागपूर्वकवनवासाङ्गीकारेण त्वया तोषिता। अनन्तरमिदं राज्यं मम मयि चित्रकूटे दत्तं। तद्राज्यं त्वं यथा येन प्रकारेण। ममाददाः तेन प्रकारेण तुभ्यं ददामि। न्यासरूपेण मयि स्थापितं राज्यं न्यासरूपत्वाप्रहाणेनैव पुनर्ददामीत्यर्थः ॥ २ ॥ अयोध्यायां राज्यभोगान् यथाकामं भोक्ष्ये राज्यं त्वमेव परिपालयेत्याकाङ्क्षायामाह—धुरमिति ॥ यद्वा पुनरर्थनपर्यन्तं न्यासधारणे नदोष इत्याशङ्क्याह—धुरमिति ॥ एकाकिना असहायेन। बलीयसा ऋषभेण न्यस्तां धुरं किशोरवत् बालवत्स इव। गुरुं भारं वोढुं नोत्सहे ॥ ३ ॥ तर्हि कथमेतावत्पर्यन्तं सोढमित्यत आह—वारीति ॥ महता वारिवेगेन भिन्नः अतएव क्षरन् बहिर्निःसरन् जलसेतुरिव इदं राज्यच्छिद्रं छिद्रवद्राज्यं असंवृतं संवरणरहितं सत् दुर्बन्धनं मन्ये। यथा महता वारिवेगेन भिन्नः क्षरन् सेतुर्वारिवेगाहतिनिरोधकतृणपुलशाखापुञ्जादिसंवरणं विना न बद्धुं शक्यते। एवं बहुविधच्छिद्रं राज्यमपि मन्त्रगोपनादिराजगुणावरणं विना पालितुं न शक्यमिति भावः ॥ ४ ॥ अहमिव भवानपि लोकान् गुणैर्वशीकरोत्वित्यत्राह—

---

[ पा० ] १ क. ख. घ. ङ. छ. झ. कैकेयीनन्दिवर्धनः. २ च. ज. भिन्नसेतुरिव. ३ क. ज. दुर्बन्धमिवमन्येऽहं. ४ ख. घ.—छ. झ, ट. वीरतव.

यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने ॥ [1]महांश्च सुदुरारोहो महास्कन्धप्रशाखवान् ॥ ६ ॥
शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् ॥ तस्य नानुभवेदर्थं यस्य हेतोः [2]स रोप्यते ॥ ७ ॥
एषोपमा महाबाहो [3]त्वदर्थं वेत्तुमर्हसि ॥ यद्यस्मान्मनुजेन्द्र त्वं [4]भक्तान्भृत्यान्न शाधि हि ॥ ८ ॥
जगदद्याभिषिक्तं त्वामनुपश्यतु [5]सर्वतः ॥ प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९ ॥
तूर्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिस्वनैः ॥ मधुरैर्गीतशब्दैश्च प्रति[6]बुध्यस्व राघव ॥ १० ॥
यावदावर्तते चक्रं यावती च वसुन्धरा ॥ तावत्त्वमिह [7]सर्वस्य स्वामित्व[8]मनुवर्तय ॥ ११ ॥
भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः ॥ तथेति प्रतिजग्राह निषसा[9]दासने शुभे ॥ १२ ॥
ततः शत्रुघ्नवचनान्निपुणाः श्मश्रु[10]वर्धकाः ॥ सुखहस्ताः सुशीघ्राश्च राघवं [11]पर्युपासत ॥ १३ ॥
पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले ॥ सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १४ ॥

गतिमिति ॥ ५ ॥ तर्हि ममैवोपोद्बलेन भवानेव राज्यं परिपालयत्वित्याशङ्क्य तर्हि तातेन भवत्पोषणं विफलं स्यादित्याह—यथा चेत्यादिश्लोकत्रयेण ॥ अन्तर्निवेशने आरोपितः उप्तः वृक्षः महान् जातः सुदुरारोहो महास्कन्धप्रशाखवान् पुष्पितोपि भूत्वा फलानि न प्रदर्शयन् यथा शीर्येत अफलो भवति । यथा च यस्य फलस्य हेतोर्येन रोप्यते सः रोपयिता तस्य वृक्षस्य अर्थं तत्फलं । नानुभवेत् । मनुजेन्द्र भक्तान् भृत्यान् अस्मान्न शाधि यदि । महाबाहो एषोपमा त्वदर्थमुक्तेति वेत्तुमर्हसीति योजना । अत्र वृक्षरामयोरारोपयितृदशरथयोश्च उपमानोपमेयभावः । बीजावापस्य पुत्रेष्ट्यादेश्च महास्कन्धस्य सभ्रातृकत्वस्य च प्रशाखवत्त्वस्य सुग्रीवादिमित्रगणस्य च पुष्पाणां कल्याणगुणानां च राज्याकरणस्य फलाभावस्य च साम्यं द्योत्यते ॥ ६—८ ॥ भवतस्तु राज्यपरिपालने महती शक्तिरित्याह—जगदिति ॥ ९ ॥ सर्वभोगार्हस्त्वमेव भोगान् भुङ्क्ष्वेत्याह—तूर्येति । काञ्चीनूपुरनिस्वनैरित्यनेन प्रबोधकललितनृत्यं गम्यते ॥ १० ॥ मध्ये स्वस्य राज्याशानुद्गमं द्योतयन्नाह—यावदिति ॥ चक्रं ज्योतिश्चक्रमिति यावत् । यावती यावत्कालस्थितिः। तावत् तावत्कालम् । सर्वस्य राज्यस्य स्वामित्वमनुवर्तय । स्वामित्वानुवर्तनं हि पालनमेव ॥११॥ निषसादेति । भरत इति शेषः ॥१२॥ श्मश्रुवर्धकाः श्मश्रुकर्तकाः । "वर्धनछेदनेथ द्वे आनन्दनसभाजने" इत्यमरः । सुशीघ्राः अभिषेकमुहूर्तातिलङ्घनं विना शीघ्रं कर्तुं समर्थाः । उपासत श्मश्रूण्यवर्धन्त । भरतलक्ष्मणापेक्षया श्मश्रुवर्धकानां बहुवचनं । राघवमिति भरतलक्ष्मणयोःप्रदर्शनार्थं ॥ १३ ॥ पूर्वमित्यादिश्लोकद्वयमेकान्वयं ॥ "न मे स्नानं बहुमतं तं विना केकयीसुतं" इत्युक्त्वा प्रथमं स्नानं भरतस्य सुग्रीवस्यापि किष्किन्धानिर्गमनप्रभृतिस्नानाभावादद्य स्नानं । तथा विभीषणस्यापि

ती० एतदुक्तंभवति—केनचित्कुटुंबिनाकुटुंबार्थंसमारोपितोवृक्षःपुष्पितोभूत्वायदिनफलेत् तदातस्यकुटुंबस्यतद्वृक्षानप्रयोजनंभवेत् । एवंपित्राजनितःसर्वगुणसंपन्नोयदित्वंलोकंनरक्षेःतदालोकस्यत्वयानप्रयोजनमिति । स० यथाचारोपितः बीजावापादिद्वारा । अन्तर्निवेशनेमूलस्य भूम्यन्तर्निवेशने जाते मूलप्रवेशने जाते । वृक्षोमहाञ्जातः । भाविसंज्ञांगृहीत्वेयमुक्तिः । महास्कन्धः प्रशाखवान् । 'शाखावेदविभागेचपादपाङ्गेन्तिकेपिच' इतिविश्वात्प्रशाखावानितियद्यपिवक्तव्यं । तथापि 'अपिमाषंमषंकुर्याच्छन्दोभङ्गंनकारयेत्' इत्युक्तेर्ह्रस्वः । यद्वा महास्कन्धः प्रकृष्टाःशाखायस्यसप्रशाखःमहास्कन्धः । तद्वान्जातः । पुष्पितः । तारकादिरयं । यस्यहेतोःयेनकारणेनआरोपितः ॥ ६ ॥

[ पा० ] १ ङ. च. छ. झ. ञ. ट. महानपिदुरारोहो. २ ख. च. छ. झ. ञ. सरोपितः. ३ ख. ङ.—ञ. त्वमर्थं. ४ ग. ङ. झ. ञ. ट. भर्ताभृत्यान्नशाधिहि. ५ ख. ङ. च. छ. झ. ञ. ट. राघव. ज. सर्वशः. ६ क. ख. ग. ङ.—ट. बुध्यस्वशेष्वच. ७ ख.—च. झ. ञ. ट. लोकस्य. ८ क. ज. मभिवर्तय. ९ क. दासनेचसः. १० ख. ङ. ज.—ट. वर्धनाः. क. कर्तकाः. ११ क. ङ. च. झ. ञ. ट. पर्यवारयन्.

विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः ॥ महार्हव[1]सनो रामस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५ ॥
प्रतिकर्म च रामस्य कारयामास वीर्यवान् ॥ लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६ ॥
प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः ॥ आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥ १७ ॥
ततो वानरपत्नीनां सर्वासामेव शोभनम् ॥ चकार यत्नात्कौसल्या प्रहृष्टा [2]पुत्रलालसा ॥ १८ ॥
ततः शत्रुघ्नवचनात्सुमन्त्रो नाम सारथिः ॥ योजयित्वाऽभिचक्राम रथं सर्वाङ्गशोभनम् ॥ १९ ॥
[3]अर्कमण्डलसंकाशं दिव्यं दृष्ट्वा [4]रथोत्तमम् ॥ आरुरोह महाबाहू [5]रामः सत्यपराक्रमः ॥ २० ॥
सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती ॥ स्नातौ [6]दिव्यनिभैर्वस्त्रैर्जग्मतुः शुभकुण्डलौ ॥ २१ ॥
[7]वराभरणसंपन्ना ययुस्ताः शुभकुण्डलाः ॥ सुग्रीवपत्न्यः सीता च द्रष्टुं नगरमुत्सुकाः ॥ २२ ॥
अयोध्यायां तु सचिवा राज्ञो दशरथस्य ये ॥ पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥ २३ ॥
अशोको विजयश्चैव [8]सुमन्त्रश्चैव सङ्गताः ॥ मन्त्रयन्रामवृद्ध्य[9]र्थमृद्ध्यर्थं नगरस्य च ॥ २४ ॥
सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः ॥ कर्तुमर्हथ रामस्य यद्यन्मङ्गलपूर्वकम् ॥ २५ ॥
इति ते मन्त्रिणः सर्वे संदिश्य तु पुरोहितम् ॥ नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६ ॥
हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः ॥ प्रययौ रथमास्थाय रामो नगरमुत्तमम् ॥ २७ ॥
जग्राह भरतो रश्मीञ्शत्रुघ्नश्छत्रमाददे ॥ लक्ष्मणो [10]व्यजनं तस्य मूर्ध्नि [11]संपर्यवीजयत् ॥ २८ ॥
श्वेतं च वालव्यजनं [12]जग्राह पुरतः स्थितः ॥ अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ॥ २९ ॥
ऋषिसङ्घैस्तदाऽऽकाशे देवैश्च समरुद्गणैः ॥ स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ ३० ॥

---

लङ्कानिर्गमनप्रभृतिस्नानाभावात् । शत्रुघ्नस्य स्नानाश्रवणमधिकर्तृत्वेन तदानीमवसराभावात् । पूर्वं व्रतग्रहणानुक्तेश्च । "नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोनघ" इति संक्षेपोक्तेरत्रापि शत्रुघ्नस्नानमर्थसिद्धमित्याहुः । जटाशोधनं शुद्धकेशीकरणं । स्नात इति कर्तरिक्तः । नानावर्णपुष्पयुक्तत्वेन चित्रमाल्यत्वं । कुङ्कुमकर्पूरकस्तूर्यादिवस्तुभेदेन चित्रानुलेपनत्वं । महार्हवसनं पीताम्बरं । श्रिया इति अलंकारश्रिया । तत्र सिंहासने ज्वलन् प्रकाशमानः तस्थौ ॥ १४—१५ ॥ प्रतिकर्म हाराद्यलंकरणं । इक्ष्वाकुकुलवर्धनः शत्रुघ्नः ॥ १६ ॥ आत्मनैव स्वयमेव ॥ १७ ॥ शोभनं प्रतिकर्मेत्यर्थः ॥ १८—२० ॥ दिव्यनिभैः दिव्यवस्त्रसदृशैः वस्त्रैरुपलक्षिताविति शेषः ॥ २१—२२ ॥ अयोध्यायामिति । गत्वेति शेषः । मन्त्रयामासुः अभिषेकोपयोगिमङ्गलद्रव्यसंपादनार्थं एवं कर्तव्यमिति मन्त्रयामासुः ॥ २३ ॥ उक्तमर्थं विवृणोति—अशोक इति ॥ मन्त्रयन् अमन्त्रयन् ॥ २४ ॥ सर्वमित्यादिश्लोकद्वयमेकान्वयं ॥ अर्हथेति पूजायां बहुवचनं ॥ २५—२६ ॥ हरियुक्तं हरितवर्णयुक्ताश्वयुक्तं ॥ २७ ॥ जग्राहेत्यादिश्लोकद्वयमेकान्वयं ॥ रश्मीन् जग्राह सारथ्यमकरोत् । लक्ष्मण इति । पुरतः स्थितो लक्ष्मणः व्यजनं तालवृन्तकं । मूर्ध्नि संपर्यवीजयत् । श्वेतं वालव्यजनं च जग्राह । अहं सर्वं करिष्यामीति त्वरया उभयग्रहणं । अपरं चन्द्रसंकाशमित्यत्र जग्राहेत्यनुषज्यते ॥२८—२९॥ समरुद्गणैः सवायुगणैः । रामस्य मधुर-

---

[ पा० ] १ ख. ङ. च. छ. झ. ञ. ट. वसनोपेतस्तस्थौ. २ ख. ङ.—ट. पुत्रवत्सला. ३ घ. ङ. च. छ. झ. ञ. ट. अग्न्यर्कामलसंकाशं. ४ क. ख. ङ. च. छ. झ. ञ. ट. रथंस्थितं. ५ ख. ङ. च. छ. झ. ञ. ट. रामःपरपुरंजयः. ६ क. ज. दिव्यांबरधरौजग्मतुः. ७ ख. घ.—छ. झ. ञ. ट. सर्वाभरणजुष्टाश्चययुः. ८ ख. ङ. च. छ. झ. ञ. ट. सिद्धार्थाश्चसमाहिताः. ९ ङ. च. छ. झ. ञ. ट. वृद्ध्यर्थंवृत्त्यर्थंनगरस्यच. १० क. घ. व्यजने. ११ च. छ. ञ. संवीजयत्तदा. ङ. झ. ट. संवीजयंस्तदा. १२ क. ग. ङ. च. छ. झ. ञ. ट. जगृहेपरितःस्थितः, ख. जग्राहोपरिसंस्थितं.

ततः शत्रुञ्जयं नाम कुञ्जरं पर्वतोपमम् ॥ आरुरोह महातेजाः सुग्रीवः प्लवगर्षभः ॥ ३१ ॥
नवनागसहस्राणि ययुरास्थाय वानराः ॥ मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ॥ ३२ ॥
शङ्ख[1]शब्दप्रणादैश्च दुन्दुभीनां च निस्वनैः ॥ प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ॥ ३३ ॥
ददृशुस्ते समायान्तं राघवं सपुरस्सरम् ॥ वि[2]राजमानं वपुषा रथेनातिरथं तदा ॥ ३४ ॥
ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः ॥ अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ॥३५॥
अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः ॥ श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥ ३६ ॥
स पुरोगामिभिस्तूर्यैस्तालस्वस्तिकपाणिभिः ॥ प्रव्याहरद्भिर्मुदितैर्मङ्गलानि ययौ वृतः ॥ ३७ ॥
अक्षतं जातरूपं च गावः कन्यास्तथा द्विजाः ॥ नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ॥ ३८ ॥
सख्यं च रामः सुग्रीवे प्रभावं चानिलात्मजे ॥ वानराणां च तत्कर्म राक्षसानां च तद्बलम् ॥
विभीषणस्य संयोगमाचचक्षे च मन्त्रिणाम् ॥ ३९ ॥
श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ॥ ४० ॥
द्युतिमानेतदाख्याय रामो वानरसंवृतः ॥ हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ॥ ४१ ॥
ततो ह्यभ्युच्छ्रयन्पौराः पताकास्ते गृहे गृहे ॥ ४२ ॥
ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ॥ ४३ ॥
अथाब्रवीद्राजसुतो भरतं धर्मिणां वरम् ॥ अर्थोपहितया वाचा मधुरं रघुनन्दनः ॥ ४४ ॥
पितुर्भवनमासाद्य प्र[3]विश्य च महात्मनः ॥ कौसल्यां च सुमित्रां च कैकेयीम[4]भिवाद्य च ॥ ४५ ॥
यच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् ॥ मुक्तावैडूर्यसंकीर्णं सुग्रीवाय निवेदय ॥ ४६ ॥
तस्य तद्वचनं श्रुत्वा भरतः सत्यविक्रमः ॥ पाणौ गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ॥ ४७ ॥

ध्वनिः रावणनिरसनापदानकथनध्वनिः ॥३०–३२॥ शङ्खशब्दप्रणादैः शङ्खशब्दैः । जनहर्षप्रणादैश्चेत्यर्थः ॥ ३३ ॥ ये नगरं प्रविश्य वसिष्ठं पुरस्कृत्य रामाभिषेकममन्त्रयन् ते सुमन्त्रादयः ॥ ३४—३५ ॥ प्रकृतिभिः पौरजनैः ॥ ३६ ॥ तूर्यैः तूर्यवादकैः । स्वस्तिको वाद्यविशेषः । मङ्गलानि प्रव्याहरद्भिः मङ्गलपाठकैः ॥ ३७ ॥ अक्षतं जातरूपमिति ॥ हरिद्रया जातरूपमक्षतं । वहद्भिरिति शेषः ॥ ३८ ॥ सख्यं चेत्यादिसार्धश्लोकमेकं वाक्यं ॥ सख्यं जातमिति शेषः । मन्त्रिणां मन्त्रिभ्यः ॥ ३९ ॥ श्रुत्वेत्यर्धं । श्रुत्वा सुग्रीवसख्यादिकमिति शेषः ॥ ४०—४१ ॥ अभ्युच्छ्रयन् अभ्युदश्राययन् । उन्नम्य स्थापितवन्तः ॥ ४२ ॥ ऐक्ष्वाकेत्यर्धं । राम इति शेषः ॥ ४३ ॥ अथाब्रवीदित्यादिश्लोकद्वयमेकान्वयं । अथ रघुनन्दनः महात्मनः पितुर्भवनमासाद्य प्रविश्य च कौसल्याप्रभृतीरभिवाद्य च भरतमब्रवीदिति योजना॥४४–४५ साशोकवनिकं अन्तःपुरोद्यानसहितं ॥ ४६—४७ ॥

ति० शङ्खशब्दप्रणादैः शङ्खशब्दैर्जनानां हर्षप्रणादैश्चेत्यर्थः । तदुक्तंपाद्मे—'आगतोरावणद्वेषीकुंभकर्णखरान्तकः । अतिकायेन्द्रजिच्छेत्तामहर्षिजनरक्षकः । समाप्तदेवताकार्यःसीतेशोलक्ष्मणानुजः । सत्यैकनिरतःशास्तापरदारसहोदरः । सुग्रीवराज्यदोधन्वीरावणानुजराज्यदः । शरणागतसंत्राताधर्मस्थापनतत्परः । रामोदाशरथिःश्रीमान्भगवान्भरताग्रजः । शरण्योरामइत्येवं शुश्रुवेकाहलध्वनिः' । इति ॥ ३३ ॥ ति० पितुर्भवनमासाद्यतत्रमहात्मनःसुग्रीवादीन्मुख्यान्प्रवेश्य कौसल्याद्याअभिवादय । वानरैरितिशेषः । इतिभरतमब्रवीदितिसंबन्धः । तत्रपूर्वंसुग्रीवादिप्रवेशबीजमुक्तंपाद्मे—'स्वंश्रीमद्भवनंरामोभक्तपादाब्जरेणुभिः । शुद्धीकर्तुमनाराजाहनूमन्तमकल्मषम् । विभीषणंचसुग्रीवंगृहंप्रावेशयत्तदा ।' इति । आपाततस्तुकौसल्यादिप्रणामकरणंफलमितिभाति । आन्तरंमुख्यंतुपाद्मोक्तंबोध्यं । पूर्वंतुरामेणैकान्तएवतद्वन्दनंकृतं नतुसर्वसमक्षमितिगम्यते ॥ ४५ ॥

[ पा० ] १ घ. शङ्खभेरीप्रणादैश्च. ख. शङ्खवंशप्रणादैश्च. २ च. विभ्राजमानं. ३ झ. प्रवेश्यच. ४ झ. मभिवादय.

ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च ॥ गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ॥ ४८ ॥
उवाच च महातेजाः सुग्रीवं राघवानुजः ॥ अभिषेकाय रामस्य दूतानाज्ञापय प्रभो ॥ ४९ ॥
सौवर्णान्वानरेन्द्राणां चतुर्णां चतुरो घटान् ॥ ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥ ५० ॥
यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् ॥ पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥ ५१ ॥
एवमुक्ता महात्मानो वानरा वारणोपमाः ॥ उत्पेतुर्गगनं शीघ्रं गरुडा इव शीघ्रगाः ॥ ५२ ॥
जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः ॥ ऋषभश्चैव कलशाञ्जलपूर्णानथानयन् ॥ ५३ ॥
नदीशतानां पञ्चानां जलं कुम्भेषु चाहरन् ॥ ५४ ॥
पूर्वात्समुद्रात्कलशं जलपूर्णमथानयत् ॥ सुषेणः सत्त्वसंपन्नः सर्वरत्नविभूषितम् ॥ ५५ ॥
ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरत् ॥ रक्तचन्दनशाखाभिः संवृतं काञ्चनं घटम् ॥ ५६ ॥
गवयः पश्चिमात्तोयमाजहार महार्णवात् ॥ रत्नकुम्भेन महता शीतं मारुतविक्रमः ॥ ५७ ॥
उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ॥ आजहार स धर्मात्मानलः सर्वगुणान्वितः ॥ ५८ ॥
ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् ॥ अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह ॥
पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥ ५९ ॥

---

विविशुः । परिचारिका इति शेषः ॥ ४८—५० ॥ हे वानराः चतुर्णां सागराम्भसां चतुर्भिः सागराम्भोभिः पूर्णैर्घटैः उपलक्षिताः प्रत्यूषसमये यथा प्रतीक्षध्वं यथास्मान् प्रतीक्षिष्यध्वे तथा कुरुतेति योजना । सागरजलानयननियोगो नदीजलानयननियोगस्याप्युपलक्षकः ॥ ५१—५३ ॥ जलपूर्णानथानयन्नित्युक्तमेवार्थं विवृणोति—नदीशतानामिति ॥ ५४ ॥ एवं जाम्बवद्धनुमद्वेगदर्श्यृषभैर्नदीजलानयनमुक्त्वा सुषेणर्षभगवयानलैः सागरजलानयनं दर्शयति—पूर्वादिति ॥५५॥ ऋषभो दक्षिणादिति । अयं चर्षभः पूर्वस्मादन्यः ॥५६–५८॥ तत इत्यादिसार्धश्लोक एकान्वयः । तत् प्रसिद्धं । तज्जलं तेषां

---

**ति०** जांबवांश्चेति । अत्रचकारैः सुषेणगवयादिपञ्चशतवानरपरिग्रहः । तद्वक्ष्यति—'नदीशतानांपञ्चाना'मिति । अतएवसुषेणगवययोःसमुद्रजलाहर्तृत्वेनवक्ष्यमाणेननविरोधः ॥५३॥ **स०** सुषेणश्चतुर्णामाज्ञानन्तरमाज्ञापितः । एवंगवयोपि । अतोनपूर्वोक्तिविरोधः ॥ ५५ ॥ **ति०** आनिलः हनुमान् । **स०** उत्तरसमुद्रस्यबहुदूरगतत्वेनशीघ्रंतस्माज्जलमानिनायेतिगरुडानिलविक्रमइतितत्स्तुतिः । आनिलः अनिलसुतः ॥ ५८ ॥

[ पा० ] १ क. ङ. च. छ. झ. ञ. ट. जलंकुंभैरुपाहरन्. २ कं. ङ. च. छ. झ. ञं. ट. चन्दनकर्पूरैः. ३ ङ. झ. ञ. ट. धर्मात्मानिलः.

# श्रीरामस्य पट्टाभिषेकघट्टः ।



ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह ॥ रामं रत्नमये पीठे सहसीतं न्यवेशयत् ॥ ६० ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ॥ ६१ ॥
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ॥ सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ६२ ॥
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा ॥ योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टाः सनैगमैः ॥ ६३ ॥

---

नदीसागराणां जलं ॥ ५९-६२ ॥ ते वसिष्ठादयः । ऋत्विगादिभिः सहाभ्यषिञ्चन्निति योजना ॥ ६३ ॥

---

[ पा० ] १ च. छ. झ. ञ. ट. ससीतंसंन्यवेशयत्. ङ. ससीतंसमवेशयत्. २ क. ख. ङ. च. छ. झ. ञ. ट. वसिष्ठो विजयश्चैव. ३ क. घ. ङ. झ. ञ. ट. कात्यायनोगौतमश्च वामदेवस्तथैवच. ४ ङ. च. छ. झ. ञ. ट. संप्रहृष्टैः. ज. संप्रहृष्टाः-सनैगमाः.

सर्वौषधिरसैर्दिव्यैर्दैवतैर्नभसि स्थितैः ॥ चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च संगतैः ॥ ६४ ॥
[ ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् ॥ अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ॥ ६५ ॥
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः ॥ सभायां हेमक्लृप्तायां शोभितायां महाजनैः ॥
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः ॥ ६६ ॥
नानारत्नमये पीठे कल्पयित्वा यथाविधि ॥ किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना ॥
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ॥ ६७ ॥ ]
छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् ॥ श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥
अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ॥ ६८ ॥
मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ॥ राघवाय ददौ वायुर्वासवेन प्रचोदितः ॥ ६९ ॥
सर्वरत्नसमायुक्तं मणिरत्नविभूषितम् ॥ मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः ॥ ७० ॥
प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ अभिषेके तदर्हस्य तदा रामस्य धीमतः ॥ ७१ ॥
भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥ गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥ ७२ ॥
सहस्रशतमश्वानां धेनूनां च गवां तथा ॥ ददौ शतं वृषान्पूर्वं द्विजेभ्यो मनुजर्षभः ॥ ७३ ॥
त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ॥ नानाभरणवस्त्राणि महार्हाणि च राघवः ॥ ७४ ॥
अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम् ॥ सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः ॥ ७५ ॥
वैडूर्यमणिचित्रे च वज्ररत्नविभूषिते ॥ वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ ॥ ७६ ॥
मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् ॥ सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् ॥ ७७ ॥
अरजे वाससी दिव्ये शुभान्याभरणानि च ॥ अवेक्षमाणा वैदेही प्रददौ वायुसूनवे ॥ ७८ ॥
अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ॥ अवैक्षत हरीन्सर्वान्भर्तारं च मुहुर्मुहुः ॥ ७९ ॥

सर्वौषधिरसैरित्यत्रापि अभ्यषिञ्चंस्त इत्यनुषज्यते ॥६४—६८॥ शतपुष्करां शतपद्मां ॥६९॥ सर्वरत्नैः नवरत्नैः समायुक्तं । मणिरत्नेन मणिश्रेष्ठेन नायकेन मध्ये विराजन्तं । मुक्ताहारं मुक्ताप्रचुरहारं ददौ । वायुरित्यनुषज्यते ॥ ७०—७१ ॥ पूर्वं रामविश्लेषे 'अपि वृक्षाः परिम्लाना' इत्युक्तावस्थं वस्तुजातं रामसंश्लेषे तादृगवस्थां विहाय प्रहृष्टतममभूदित्याह—भूमिरिति ॥ ७२ ॥ धेनूनां नवप्रसूतिकानां "धेनुः स्यान्नवसूतिका" इत्यमरः । पूर्वं हिरण्यदानादेः पूर्वं सुग्रीवादिभ्यः पूर्वं वा ॥ ७३—७४ ॥ मणिविग्रहां मणिप्रचुरां ॥ ७५ ॥ धृतिमान् प्रीतिमान् ॥ ७६ ॥ सीतायै प्रददौ हनुमते दातव्यमित्याशयेन ददौ ॥७७॥ अरजे निर्मले। अकारान्तत्वमार्षं। अवेक्षमाणा भर्तारमिति शेषः। स्त्रियाः स्वातन्त्र्याभावात् भर्त्रनुज्ञां काङ्क्षितवतीति भावः॥७८॥हारं रामदत्तं। सदसि मह्यं हारप्रदानं कस्मैचित् पारितोषिकतया दापयितुमिति निश्चित्य अयं हारःएषु कस्मै देय इत्याशयेनावैक्षतेत्यर्थः

स० वपुषा रामशरीरेण ज्वलन्तीं शतपुष्करांकाञ्चनींसुवर्णरूपिणींमालां । अनेनकायकान्तिरधिकेतिसूचितंभवति । यथोक्तं संग्रहे—'परस्परालंक्रियतेतिमिथ्यासभूषणंसर्वविभूषणानाम्'इति ॥ ६९ ॥

[ पा० ] १ ङ. छ. झ. सर्वदेवैश्च. २ ब्रह्मणानिर्मितमित्यादयः समयोक्ष्यतराघवइत्यन्ताःश्लोकाः क. ख. ङ.—ञ. पाठेषुदृश्यन्ते. ३ क. ख. ङ. च. ज. झ. ञ. महाधनैः. ४ क. च. छ. ज. ऋलिग्भिर्ऋषिभिश्चैव. ५ क. ज. सहितेनाभिषेचितः. ६ क. मणिविद्रुमभूषितं. ७ ङ. च. छ. झ. ञ. ट. चन्द्ररश्मिविभूषिते.

तामिङ्गितज्ञः संप्रेक्ष्य बभाषे जनकात्मजाम् ॥ प्रदेहि सुभगे हारं यस्य तुष्टासि भामिनि ॥
[1]पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि सर्वशः ॥ ८० ॥
ददौ सा वायुपुत्राय तं हारमसितेक्षणा ॥ हनुमांस्तेन हारेण शुशुभे वानरर्षभः ॥
चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाऽचलः ॥ ८१ ॥
ततो द्विविदमैन्दाभ्यां नीलाय च परन्तपः ॥ सर्वान्कामगुणान्वीक्ष्य प्रददौ वसुधाधिपः ॥ ८२ ॥
सर्व[2]वानरवृद्धाश्च ये चान्ये वानरेश्वराः ॥ वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८३ ॥
विभीषणोथ सुग्रीवो हनुमाञ्जाम्बवांस्तथा ॥ सर्ववानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८४ ॥
यथार्हं पूजिताः सर्वैः कामै रत्नैश्च पुष्कलैः ॥ प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ ८५ ॥
न[3]त्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः ॥ विसृष्टाः पार्थिवेन्द्रेण किष्कि[4]न्धामभ्युपागमन् ॥ ८६ ॥
सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् ॥ [ पू[5]जितश्चैव रामेण किष्किन्धां प्रा[6]विशत्पुरीम् ] ॥८७॥
[ रा[7]मेण सर्वकामैश्च यथार्हं प्रतिपूजितः ] ॥ ल[8]ब्ध्वा कुलधनं राजा लङ्कां प्रा[9]याद्विभीषणः ॥ ८८ ॥

॥ ७९ ॥ तामिङ्गितज्ञ इत्यादिसार्धश्लोक एकान्वयः । यस्य यस्मिन् । पौरुषं बलं समुद्रलङ्घनेन । विक्रमो लङ्कादहनेन । बुद्धिः अशोकवनिकाप्रवेशेन । सर्वशः सर्वाणि यस्मिन् सन्तीति यस्य संतुष्टासि तस्मै देहीति योजना । अन्यथा अन्येषां निन्दोक्तिरेव स्यात् ॥८०—८१ ॥ कामगुणान् काम्यन्त इति कामाः प्रार्थनीयाः गुणाः येषां ते तान् आभरणादिवस्तुविशेषान् ॥८२—८३॥ विभीषणोथेति। अत्र संभावितपरिगणने प्रथमं कीर्तनाल्लब्ध्वा कुलधनमित्यनुवादाच्च आदावेव विभीषणः संभावित इति बोध्यं॥८४—८६॥ सुग्रीव इत्यर्धं॥अत्रापि वचनव्यत्ययेन किष्किन्धामभ्युपागमदित्यनुषज्यते॥८७॥ लब्ध्वेत्यर्धं। कुलधनं इक्ष्वाकुकुल-

**रामानु०** कुलधनं इक्ष्वाकुकुलधनंश्रीरङ्गसंज्ञकंविमानमितिसन्तोवदन्ति । विभीषणकुलक्रमागतं लङ्काराज्यमितिकेचित् । **ती०** अत्रकुलधनशब्देनपूर्वमेवरामाभ्यनुज्ञातंराक्षसकुलधनं लङ्काराज्यंलब्ध्वेतिऋषिणानुवादःक्रियते । केचित्तु कुलधनमित्यत्रकुलधनशब्दस्यार्थं इक्ष्वाकुकुलदैवतंरङ्गविमानमितिवर्णयन्ति । तन्नोपपद्यते । कुतः कुलधनमित्यत्रेक्ष्वाकुकुलधनस्याश्रूयमाणत्वात् । अवतारसमाप्तिसमयेविभीषणायइक्ष्वाकुकुलदैवतरङ्गविमानदानस्योत्तरश्रीरामायणेवक्ष्यमाणत्वाच्च । तथाहिविभीषणंप्रतिश्रीरामवचनं—'किंचान्यद्वक्तुमिच्छामिराक्षसेन्द्रमहाबल । आराधयजगन्नाथमिक्ष्वाकुकुलदैवतम्' इति । पाद्मपुराणेचावतारसमाप्तिसमये समागतंविभीषणंप्रतिश्रीरामवचनं 'यावच्चन्द्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी । तावद्रमस्वराज्यस्थःकालेममपदंव्रज । इत्युक्त्वाप्रददौ तस्मैस्वविश्लेषासहिष्णवे । श्रीरंगशायिनंस्वार्च्यमिक्ष्वाकुकुलदैवतम् । रङ्गंविमानमादायलङ्कांप्रायाद्विभीषणः' इत्यवतारसमाप्तिकालेरङ्गविमानदानश्रवणात् । कुलधनशब्देनराक्षसकुलधनंलङ्काराज्यमेवोक्तमितिवेदितव्यमिति । **स०** कुलधनं कुलस्य इक्ष्वाकुकुलस्यधनरूपं श्रीरामं लब्ध्वा सखित्वेनेतिशेषः । यत्तुकुलधनं इक्ष्वाकुकुलधनरूपं श्रीरङ्गविमानमितिव्याख्यानं तत्तुपाद्मवचनविरुद्धं । तथाहिपाद्मपुराणेउत्तरखण्डेकालाख्यब्रह्मदूतसंवादलक्ष्मणपरित्यागादिकमुक्त्वा 'अभिप्रायंतुरामस्यज्ञात्वाचारमुखात्तदा । आजग्मुर्वानराऋक्षाराजानोराक्षसाद्विजाः । विभीषणोगुहोनीलः' इत्यादिनाविभीषणादीनांपुनरागमनंचोक्त्वापरलोकगमनप्रस्तावे 'अथोवाचमहातेजाराक्षसेन्द्रंविभीषणम् । राज्यंप्रशाधिधर्मेणमद्वाक्यंमावृथाकृथाः । यावच्चन्द्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी । तावद्रमस्व

**[ पा० ]** १ पौरुषंविक्रमोबुद्धिः ददौसावायुपुत्राय इत्यर्धद्वयस्यस्थाने ङ. च. छ. झ. ञ. ट. पाठेषु अथसावायुपुत्रायतं हारमसितेक्षणा । तेजोधृतिर्यशोदाक्ष्यंसामर्थ्यंविनयोनयः । पौरुषंविक्रमोबुद्धिर्यस्मिन्नेतानिसर्वशः । इत्यर्धत्रयं पौर्वापर्यभेदेन अधिकैकार्धवत्तयाचदृश्यते. २ क. वानरयोधाश्च. ३ क. ख. घ. ङ. च. ज. झ. ट. दृष्ट्वासर्वे. ४ ङ. झ. ञ. ट. किष्किन्धां समुपागमन्. ५ इदमर्धं क. झ. पाठयोर्दृश्यते. ६ क. प्राविशद्बली. ७ इदमर्धं. औत्तराहपाठएवदृश्यते. ८ लब्ध्वाकुलधनमित्यर्धात्पूर्वं. क. ख. घ. च.—ट. पाठेषु विभीषणोपि धर्मात्मा सहतैर्नैर्ऋतर्षभैः इत्यर्धमधिकंदृश्यते. ९ क. ख. घ. च.—ट. प्रायान्महायशाः.

स राज्यमखिलं शासन्निहतारिर्महायशाः ॥ राघवः परमोदारः शशास परया मुदा ॥ ८९ ॥
उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥ ९० ॥

आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन ॥
तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमुद्वहस्व ॥ ९१ ॥
सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ॥
नियुज्यमानोपि च यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ९२ ॥

पौण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् ॥ अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवर्षभः ॥ ९३ ॥
राज्यं दश सहस्राणि प्राप्य वर्षाणि राघवः ॥ शताश्वमेधानाजह्रे सदश्वान्भूरिदक्षिणान् ॥ ९४ ॥
आजानुलम्बबाहुः स महास्कन्धः प्रतापवान् ॥ लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥९५॥

---

धनं श्रीरङ्गविमानमिति संप्रदायः ॥ ८८ ॥ शासन् दुष्टनिग्रहं कुर्वन् शशास बुभुज इत्यर्थः । धातूनामनेकार्थत्वात् ॥ ८९—९० ॥ 'लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धरां' इति पूर्वाभिषेकारम्भे भरतासन्निधाने प्रतिज्ञानात् 'रामो द्विर्नाभिभाषत' इति नियमाल्लक्ष्मणमेव यौवराज्ये नियुङ्क्ते—आतिष्ठेति । पूर्वराजैः मन्वादिभिः अध्युषितां । आतिष्ठ पालय । पितृभिः पितृपितामहप्रपितामहैः या धृता तां धुरं मया तुल्यं यथा भवति तथा यौवराज्ये स्थित्वा उद्वहस्व ॥ ९१ ॥ यौवराज्ये नियुज्यमानः यौवराज्यमङ्गीकुरुष्वेति नियम्यमानः। पर्यनुनीयमानः पुनःपुनरनुनयेन पृच्छ्यमानः सन्नपि च सर्वात्मना सर्वप्रकारेणापि यदा योगं संमतिं नोपैति । स्वशेषत्वविरुद्धत्वज्ञानाज्ज्येष्ठे भरते विद्यमाने स्वस्य तदनुचितत्वज्ञानाच्चेति भावः । तदा भरतं अत्यन्तपरतन्त्रं यौवराज्ये अभ्यषिञ्चत् ॥ ९२ ॥ पौण्डरीकेति । अत्रोत्तरक्रत्वारम्भोक्तिर्वनवासात्परमग्न्याधानपूर्वकं पूर्वक्रतवोपि रामेण

---

राज्यस्थःकालेममपदंव्रज । इत्युक्त्वाप्रददौतस्मैस्वविश्लेषासहिष्णवे । श्रीरङ्गशायिनंस्वार्च्यमिक्ष्वाकुकुलदैवतम् । रङ्गंविमानमादायलङ्कांप्रायाद्विभीषणः' इतिवचनात् । नचस्कान्दपुराणेउमासंहितायांद्वादशाध्यायेऽभिषेकोत्सवप्रस्तावे 'उषित्वावत्सरंसर्वेराक्षसावानरास्तथा । अनुज्ञातोराघवेणलङ्कांप्रायाद्विभीषणः । मध्याह्नेविष्णुपूजार्थंकावेर्यामध्यतोहरिम् । निधायविधिवत्स्नानंनित्यंसर्वं समाप्यच । मञ्जूषामध्यगंविष्णुंपूजयामासभक्तितः । तस्मिन्क्षणेपरिणतंविमानंप्रणवाकृति' इत्यादिनाऽभिषेकानन्तरमेवश्रीरङ्गनाथविमानदानस्योक्तत्वात्तद्रीत्यात्रापितदेवग्राह्यमितिवाच्यं । स्कान्दवचनानांसंकुचितकथाप्रबन्धरूपत्वेनागामिनींकथांपुरस्तादेवाकथयदितिस्वीकारेबाधकाभावात् । अन्यथापूर्वमेवतद्दानेश्रीरामस्यस्वकुलदैवश्रीरङ्गनाथानर्चनेनैवैकादशसहस्राब्दावस्थानापत्तेः । नचेष्टापत्तिरेवेतिवाच्यं । पाद्मेसर्वत्रनित्याह्निकप्रस्तावेश्रीरङ्गनाथार्चनस्यवर्णितत्वात् । यथोक्तंपाद्मे नित्याह्निके—'गृहंगत्वाऽनलेहुत्वानत्वाश्रीरङ्गशायिनम् ।' इति । तथान्यत्र 'उत्थायकृतमध्याह्नस्नानोरङ्गेद्रसमार्पितम् । भुक्त्वाऽन्नं' इत्यादिपूर्वोदाहृतपाद्मवचननिरवकाशत्वस्यस्फुटत्वाच्च । अतउक्तएवार्थइत्यलम् ॥ ८८ ॥ **ती०** आत्मनासहवनवासदुःखानुभवाद्राज्येसहसुखानुभवार्थं लक्ष्मणंप्रतियौवराज्यप्रार्थनेतिभावः ॥ ९१ ॥ **स०** सर्वात्मनासर्वप्रकारेण पर्यनुनीयमानः मयासहचिरंवनवासप्रयासानुभवाद्यौवराज्यसौख्यमनुभुङ्क्ष्वेतिपुनःपुनःप्रार्थितोपि सौमित्रिः योगं यौवराज्याधिपत्यं । यदानोपैति ज्येष्ठेभरतेसतिनाहंतदर्हइतिस्वीकरोतिज्येष्ठत्वात्त्वमेवयौवराज्यंकुर्वितिबहुशःनियुज्यमानोपिउक्तोपि भरतोबहुक्लेशभागितिसएवतत्करोत्वितिवा योगं यदानोपैति ततोनन्तरंभुवियौवराज्ये भरतमभ्यषिञ्चत् ॥ ९२ ॥ **ति०** पौण्डरीकाश्वमेधेत्याद्युत्तरकाण्डार्थसंक्षेपः । पौण्डरीकाश्वमेधाभ्यामिति सामान्यतउक्त्वातत्रैवविशेषमाह—वाजिमेधेनचासकृदिति ॥ ९३ ॥

**[ पा० ]** १ ख. च. ञ. रराज. २ ङ. झ. ट. तुल्यंयथात्वंपितृभिःपुरस्तात्तैयौवराज्ये. ३ क. ख. घ.—ज. ट. नियुज्यमानोभुवि. ४ ङ. च. झ. ञ. ट. वाजिमेधेन. ५ घ. यज्ञैरिष्टवानाप्तदक्षिणैः. क. ख. ङ. च. झ. ञ. ट. यज्ञैरयजत्पार्थिवात्मजः. ६ क. छ.—ट. आजानुलम्बिबाहुः.

राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् ॥ ईजे बहुविधैर्यज्ञैः ससुहृज्ज्ञातिबान्धवः ॥ ९६ ॥
न पर्यदेवन्विधवा न च व्यालकृतं भयम् ॥ न व्याधिजं भयं वाऽपि रामे राज्यं प्रशासति ॥९७॥
निर्दस्युरभवल्लोको नानर्थः कंचिदस्पृशत् ॥ न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ ९८ ॥
सर्वं मुदितमेवासीत्सर्वो धर्मपरोऽभवत् ॥ राममेवानुपश्यन्तो नाभ्यहिंसन्परस्परम् ॥ ९९ ॥
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ॥ निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ १०० ॥
रामो रामो राम इति प्रजानामभवन्कथाः ॥ रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ १०१ ॥
नित्यपुष्पा नित्यफलास्तरवः स्कन्धविस्तृताः ॥ काले वर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥१०२॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः ॥ स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः ॥१०३॥
आसन्प्रजा धर्मरता रामे शासति नानृताः ॥ सर्वे लक्षणसंपन्नाः सर्वे धर्मपरायणाः ॥ १०४ ॥
दश वर्षसहस्राणि दश वर्षशतानि च ॥ भ्रातृभिः सहितः श्रीमान्रामो राज्यमकारयत् ॥ १०५ ॥
धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ॥ आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥
यः पठेच्छृणुयाल्लोके नरः पापाद्विमुच्यते ॥ १०६ ॥
पुत्रकामस्तु पुत्रान्वै धनकामो धनानि च ॥ लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ॥ १०७ ॥

---

कृता इत्यस्योपलक्षणं ॥ ९३—९५ ॥ चापीति निपातसमुदायोवधारणार्थोऽभिन्नक्रमः । ससुहृज्ज्ञातिबान्धव एवेत्यर्थः ॥ ९६ ॥ न पर्यदेवन्निति । नपर्यदेवयन्नित्यर्थः ॥ ९७—९८ ॥ राममेवेति । अन्योन्यनिर्मूलनवैरे सत्यपि राममुखं म्लानं भविष्यतीति मत्वा परस्परं नाभ्यहिंसन् । परमधार्मिकं राममेवानुचिन्तयन्तोऽन्योन्यवैरं प्रजहुरित्यर्थः ॥ ९९—१०५॥ अथ रामायणपठने फलं दर्शयति—धन्यमित्यादिसार्धश्लोकमेकं वाक्यं॥ ऋषिः वेदः तत्संबन्धि । वेदोपबृंहणमिति यावत् । पुरा अवतारात्पूर्वं । रामोत्तरतापनीयमूलत्वेन पुरातनमितिवार्थः । यद्वा पुरा सर्वकविभ्यः पूर्वं । न त्ववतारात्पूर्वमित्यर्थः । "प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः। चकार चरितं कृत्स्नं विचित्रपदमात्मवान्"इति रामे प्राप्तराज्ये सति चकारेत्युपक्रमात् "रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान्" इति राज्यप्राप्तिपर्यन्तं भूततया निर्दिश्य ततः परं ब्रह्मलोकं प्रयास्यतीत्येतदन्तं भविष्यत्तयानिर्देशात् 'कोन्वस्मिन्सांप्रतं लोके' इत्यादौ सांप्रतशब्दप्रयोगात् "रामभूतं जगदभूद्रामे राज्यं प्रशासति"इति सकललोकविदितरामविषयप्रश्नानुपपत्तेः सर्वथा परिहृतत्वात्। 'इतिहासं पुरातनम्'इत्यस्य आदिकाव्यत्वात्सङ्गतेरन्येषामपि विरोधाभासानां सुपरिहार्यत्वाच्चायमेवार्थः ॥१०६॥ पुत्रकामस्त्वित्यादिसार्धश्लोकद्वयमेकं वाक्यं॥ रामाभिषेचनं रामाभिषेकावधिकं । अधितिष्ठति

---

**स०** धर्मात्मापि साक्षाद्यज्ञपुरुषनारायणात्मापि । यदर्थंक्रत्वादिकरणं तदात्मासन्नपीतियावत् । लोकशिक्षार्थाइतिभावः । राघवः बहुविधैर्यज्ञैरीजे "स्वात्मानंयज्ञपुरुषंयज्ञेनायजताथसः।" इत्यादेः ॥ ९६ ॥ **स०** दशवर्षशतानिचेत्यनेनैकादशसहस्रसंख्यालभ्यते अस्याएवमानभेदात् 'एवंत्रयोदशसहस्र—' इत्याद्युक्तिरितिनविरोधः ॥ १०५ ॥ **ति०** रामाभिषेचनं तदवधिकमित्यर्थः

[ पा० ] १ ङ. झ. ट. ससुतभ्रातृबान्धवः. क. ख. घ. च. ज. ञ. ससुहृद्भ्रातृबान्धवः. २ क ङ.—ट. भयंचासीद्रामे. ३ ङ.—ट. नानर्थंकश्चित्. ४ ङ. झ. ट. कामवर्षीच. ५ ङ. छ. झ. ञ. ट. धर्म्यं. ६ क. ख. च.—ट. यःशृणोतिसदालोकेनरःपापात्प्रमुच्यते.

महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ राघवेण यथा माता सुमित्रा लक्ष्मणेन च ॥ १०८ ॥
भरतेनेव कैकेयी जीवपुत्रास्तथा स्त्रियः ॥ [ भविष्यन्ति सदानन्दाः पुत्रपौत्रसमन्विताः ] ॥१०९॥
श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ॥ रामस्य विजयं चैव सर्वमक्लिष्टकर्मणः ॥ ११० ॥
शृणोति य इदं काव्यमार्षं वाल्मीकिना कृतम् ॥ श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥१११॥
समागमं प्रवासान्ते लभते चापि बान्धवैः ॥ प्रार्थितांश्च वरान्सर्वान्प्राप्नुयादिह राघवात् ॥ ११२ ॥
श्रवणेन सुराः सर्वे प्रीयन्ते संप्रशृण्वताम् ॥ विनायकाश्च शाम्यन्ति गृहे तिष्ठन्ति यस्य वै ॥११३॥
विजयेत महीं राजा प्रवासी स्वस्तिमान्व्रजेत् ॥ स्त्रियो रजस्वलाः श्रुत्वा पुत्रान्सूयुरनुत्तमान् ॥११४॥
पूजयंश्च पठंश्चेममितिहासं पुरातनम् ॥ सर्वपापात्प्रमुच्येत दीर्घमायुरवाप्नुयात् ॥ ११५ ॥
प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ॥ ११६ ॥
रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा ॥ प्रीयते सततं रामः स हि विष्णुः सनातनः ॥११७॥
आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ॥ [ साक्षाद्रामो रघुश्रेष्ठः शेषो लक्ष्मण उच्यते ] ॥११८॥

कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्च मुख्याः सुखमुत्तमं च ॥
श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥ ११९ ॥
आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं सुखं च ॥
श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ॥ १२० ॥
[ वस्त्रेण दिव्येन धनेन चैव धान्येन भूम्याभरणेन वेश्मना ॥
संतर्पयेद्वाचकमर्थजालैर्न चेत्फलं विन्दति वित्तशाठ्यकृत् ॥ १२१ ॥ ]

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ॥ प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १२२ ॥
देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात्तथा ॥ रामायणस्य श्रवणात्तुष्यन्ति पितरस्तथा ॥ १२३ ॥

---

आक्रम्य तिष्ठतीत्यर्थः । माता कौसल्या । जीवपुत्राः भवन्तीति शेषः ॥ १०७—११० ॥ शृणोति य इत्यादिश्लोकद्वयमेकान्वयं ॥ दुर्गाणि दारिद्र्यादीनि ॥ १११—११२ ॥ विनायकाः विघ्नकरा ग्रहाः ॥ ११३—११५ ॥ ब्राह्मणवत् क्षत्रियस्यापि पाठप्राप्तौ नियममाह—प्रणम्येति । वैश्यादीनां कैमुतिकसिद्धं ब्राह्मणात् प्रणमनपूर्वकं श्रवणं ॥ ११६—११९॥ सौभ्रातृकं सौभ्रातृकरं सुखं सुखकरं ॥ १२०—१२३॥

---

॥ १०७ ॥ ती० संप्रशृण्वतां संक्षिप्य शृण्वतां । ति० विनायकाः विघ्नकारिणोदेवगणविशेषाः । स० विनायकाः विघ्नाः । 'विनायकस्तुहेरम्बेविघ्नेताक्ष्यैजिनेगुरौ' इतिविश्वः ॥ ११३ ॥ ति० स्त्रियोरजस्वलाः शुद्धिस्नानानन्तरंषोडशदिनावधि ॥ ११४ ॥

[ पा० ] १ इदमर्धं औत्तराहपाठएवदृश्यते. २ ङ. च. छ. झ. ञ. ट. काव्यंपुरा. ३ ङ.—ट. समागम्यप्रवासान्तेरमन्तेसहबान्धवैः. ४ ख. घ.—ट. तेप्रार्थितान्वरान्सर्वान्प्राप्नुवन्तीह. ५ ङ. परिशृण्वतां. ६ ङ. च. छ. झ. ञ. ट. स्वस्तिमान्भवेत्. ७ इदमर्धं औत्तराहपाठेदृश्यते. ८ ख. घ.—ट. शुभंच. ९ अयंश्लोकः क. पाठेदृश्यते.

भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् ॥ लेखयन्तीह च नरास्तेषां वासस्त्रिविष्टपे ॥ १२४॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां युद्धकाण्डे श्रीरामपट्टाभिषेको नाम एकत्रिंशदुत्तरशततमः सर्गः ॥ १३१ ॥

इति युद्धकाण्डः समाप्तः ॥ ६ ॥

---

संहितातुल्यत्वात् संहितेति व्यपदेशः ॥ १२४ ॥ इति श्रीगोविन्दराजविरचिते श्रीमद्रामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकत्रिंशदुत्तरशततमःसर्गः ॥ १३१ ॥
इत्थं श्रीमच्छठारेश्चरणसरसिजद्वन्द्वसेवातिरेकाद्दुद्भूतोद्दामबोधः कुशिकसुतकुलाम्पतेरोषधीशः । श्रीमान्गोविन्दराजो वरदगुरुसुतो भावनाचार्यवर्यप्रेम्णैव प्रेर्यमाणो व्यतनुत विपुलां युद्धकाण्डस्य टीकाम् ॥ १ ॥

---

ती० रामस्यसंहितांरामायणमित्यर्थः । संहितालक्षणसप्तकाण्डवत्सादृश्यादस्यसंहितेतिव्यपदेशः । लेखयन्ति चकाराल्लिखन्तिच । ति० अत्रफलश्रुतिश्लोकाःकतकव्याख्यानेनोपलभ्यन्ते ॥ १२४ ॥ इत्येकत्रिंशदधिकशततमःसर्गः ॥ १३१ ॥

---

इदं युद्धकाण्डं कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३५ सन १९१३.